# शब्दकल्पद्रुमः/मुखबन्धनं





*ॐ ब्रह्म*

*सत्यात् नास्ति परो धर्म्मः ।*

**शब्दकल्पद्रुमः**

अर्थात्

एतद्देशस्थसमस्तकोषाशेषशास्त्रसङ्कलिताकारादिवर्णक्रमविन्यस्तशब्द-तल्लिङ्ग-नानार्थ-पर्य्याय-प्रमाण-प्रयोग-घातु-तदनुबन्धाभिधेय-सहित-तत्तच्छब्दप्रसङ्गोत्थित-वेद-वेदाङ्ग-वेदान्त-न्याय-पुराणेतिहास-सङ्गीत-शिल्प-सूपकारशास्त्र-ज्योतिष-तन्त्राख्यान-काव्यालङ्कार-च्छन्दःप्रभृतिनाम-लक्षणोदाहरण-द्रव्यगुण-रोगनिदानौषध-स्मृत्युक्तव्यवस्थादिसंयुक्त-सर्वदर्शनमतानुसारि-संस्कृताभिधानग्रन्थः ।

**स्यार-राजा-राधाकान्तदेव-बाहादुरेण्**

**विरचितः**

पाणिनिमतानुसारि-प्रत्येकशब्दव्युत्पत्ति-मूलग्रन्थातिरिक्तबहुलशब्दार्थ-प्रमाण-प्रयोग-पर्य्याय-धातुपदोदाहरणादिभिः नूतनसङ्कलितबहुलशब्द-तदर्थ-तत्प्रमाण-प्रयोगादिसहित-सुप्रशस्तपरिशिष्टेन च सार्द्धम् ।

**श्रीवरदाप्रसाद-वसुना तदनुजेन श्रीहरिचरण-वसुना च्**

अशेषशास्त्रविशारदकोविदवृन्दसाहाय्येन संपरिवर्द्धितः नागराक्षरैः प्रकाशितश्च ।

**प्रथमो भागः**

**कलिकाता-राजधान्यां**

व्याप्तिस्तमिसनयन्त्रे मुद्रितः, ७१ न० पाथुरियाघाट-स्थितभवनात् प्रकाशितश्च । शकाब्दाः १८०८ । [फगे-३३२+ १]

---

## मुखबन्धनं ।

### तत्रादौ मङ्गलाचरणश्लोकाः ।

| | |
|---|---|
| योऽद्वैतसच्चिदानन्दपरब्रह्मेति कीर्त्तितः ।<br>उपासकानां कार्य्यार्थं कृपया पञ्चधाभवत् ॥<br>शक्तिः शिवस्तथा सूर्य्यो गणेशो विष्णुरेव च ।<br>अशेषविघ्ननाशाय भक्तिश्रद्धासमन्वितः ॥ | साष्टाङ्गं तं प्रणम्यादौ शिष्टाचारानुसारतः ।<br>राजावाहादुरोपाधि-श्रीराधाकान्त-देवजः ॥<br>परेषामुपकाराय शब्दकल्पद्रुमाभिधं ।<br>कोषं नव्यक्रमयुतं कृतवान् बहुयत्नतः ॥<br>ग्रन्थसमाप्तौ मङ्गलाचरणवीजं । |

संस्कृतग्रन्थानामेतादृशी रीतिः सर्व्वत्र प्रचलिता यन्मङ्गलाचरण-श्लोकानुक्रमणिकादिकं ग्रन्थादावेव लेखनीयं भवितुमर्हति । किन्त्वस्मिन् कोषे तन्नाचरितं । तस्यैतत्कारणं । उक्तश्लोकादि-रचन-प्रागेव प्रथम-काण्डादि-मुद्राङ्कन-समापनमात्रेण तल्लिप्सवो स्वदेशविदेशीयमहात्मानः पुनः पुनः प्रार्थयित्वा सर्व्वमेव गृहीतवन्तः । इदानीं एतत्कोषस्य प्रथमादिकाण्डं नोपस्थितं । तेन हेतुना एतन्मङ्गलाचरणादि-रूप-मुखबन्धनं शेषकाण्डपुरोवत्ति कृतं । किन्त्वेतद्ग्रन्थारम्भे अथ शब्दकल्पद्रुमो मुद्र्यते इति लिखनेन मङ्गल-वाचकाथ-शब्दप्रयोगादेव एतत्कोषस्य मङ्गलाचरण-सिद्धिर्जाता । तदुक्तं श्राद्धतत्त्व-धृतश्रुतौ, --

“ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्वा विनिर्यातौ तेन माङ्गलिकाबुभौ” ॥

**ग्रन्थरचनप्रयोजनं ।**

अष्टादशसंख्यकासु शास्त्रीयभाषासु संस्कृतभाषा गीर्व्वाणवाणी । अतः सव्वात्कृष्टा सर्व्वत्र समरूपा सर्व्वजनमान्या च । देवैरृषिभिश्च तद्भाषया अष्टादशविद्याः प्रणीताः । किन्त्वस्मिन् भारतवर्षे उक्तविद्या-सम्बन्धि-पारिभाषिक-शब्दादीनां प्रकाशक-कोषो न प्राप्यते । ते च तत्तद्भाष्य-टीकादिभिरेव चरितार्था भवन्ति । किञ्च महा-महोपाध्यायैः प्राचीन-नवीन-कवि-कोविदगणैः पद्येन पर्य्यायनानार्थ-युक्त-बहुविधाभिधानरचना कृता । किन्तु तत्तद्-ग्रन्थीयैकार्थ-शब्दसंग्रहस्य वर्गस्मरणाभावात् प्रयोजनीय-पर्य्याय-शब्दप्राप्तिः सुदुष्करी । एवं अनेकार्थ-शब्दसंग्रहस्य एकादि-षडक्षर-पर्य्यन्त-कान्तादि-हान्तशब्द-निवद्ध-निखिल-श्लोकानां पाठव्यतिरेकेण प्रार्थनीय-नानार्थ-शब्द-निर्गमोऽतिदुर्गमश्च । विशेषतः तत्तदेकैक-कोषे समग्र-शब्दार्थयोर्लाभाभावः ।
इत्यादि-दोषमहमालोच्य परोपकाराय पठद्दशावधि-वर्त्तमानकाल-पर्य्यन्तं बहुतरपरिश्रमै-र्धीरवर-निकर-साहाय्यैरेतद्देशप्राप्य-समस्तकोष-वेद-वेदान्तवेदाङ्गभाष्य-व्याकरण-च्छन्दोज्योतिष-साहित्य-नाटक-काव्यालङ्कार-वैद्यक-सङ्गीत-न्याय-सांख्य-पातञ्जल-वैशेषिक-मीमांसा-स्मृति-पुराणेतिहास-तन्त्रा-
गम-निगम-शिल्प-सूपकार-नीतिशास्त्र-कुलाचार्य्य-गोस्वामि-ग्रन्थादिभ्यः शब्दसमूहं संगृह्य कविकल्पद्रुम-नामक-धातुपाठ-ग्रन्थात् धातुनिवहञ्च सङ्कलय्य सकलशब्द-धात्वर्थानामनायासेन लाभार्थं विना पद्येन वर्णव्यवस्याक्रमेण शब्दकल्पद्रुमाभिधानाभिनवाभिधानं कृतवान् । इमं सप्तकाण्डात्मक-वृहत्कोषं स्वीयकोष-व्ययेन मुद्राङ्कयित्वा मुद्राव्यतिरेकेणनानादिग्देशीय-विशिष्ट-पात्रेभ्यो बन्धुवर्गेभ्यो याचकेभ्यश्च दत्तवान ॥

**ग्रन्थस्य नामकारणं ।**

एतत्कोषस्य शब्दकल्पद्रुम-नाम-करण-कारणमेतत् । स्वर्गीय-कल्पद्रुम-सन्निधाने यो यत् प्रार्थयते तस्य तत्प्राप्ति-र्भवत्येव । मत्कृतमर्त्त्यीय-शब्दकल्पद्रुम-समीपे यानि यानि समीहित-शब्दादीनि प्रार्थयन्ते तानि तान्यवश्यं प्राप्नुवन्ति । अतः कल्पवृक्ष-सादृश्यमेव नामकारणं । प्राचीनसंग्रहकृद्भिरपि स्वकृतग्रन्थानां कल्पद्रुम-कल्पतरु-कल्पलता-प्रभृति नामधेयं कृतं । तत्सदृशार्थक-कामधेनु-चिन्तामण्यादि-पुस्तकानि च प्रचलन्ति एतद्ग्रन्थस्य
वृक्षरूपकत्वात् अस्य स्वण्डस्य काण्डेति संज्ञां कृतवान् ॥

**अथ ग्रन्थपरिपाटी ।**

अतः परमहमेतत्कोषस्यानुक्रमं विशेष-नियमञ्च विवृणोमि । निखिलाभिधानिक-शास्त्रिक-लौकिक-व्यवहारिक-साधुशब्दानां धातुगणानाञ्च झटिति प्राप्तये तेषामानुपूर्व्विकाकारादि-क्षकारान्त-पञ्चाशद्वर्णानां यथाक्रमं सूचीं कृत्वा विन्यासमकुर्व्वं । तत्र प्रथमं स्वरवर्णादिशब्दानां परे हलवर्णादि-शब्दानां शेषे युक्ताक्षरादि-शब्दानाञ्च वर्णक्रमेणैव यथास्थानं प्रथमा-विभक्त्यन्ततत्वेन संस्थापनमकार्य्यं । पदसाधने येषामन्त्याक्षराणां विकारो लोपो वा अभवत् ते वर्णास्तत्तच्छब्दोपरि विन्यस्ताः । अनुस्वार-विसर्गाणां षोडश-स्वरान्तर्गततत्वेन तदुभयवदाद्य-वर्णयुक्त-शब्दान् स्वरवर्णस्थलाभिषिक्तान् चकार ।
तत्पश्चात् प्रत्येक-शब्दस्य लिङ्गं प्रत्येक-धातोरनुबन्धञ्च निर्णीतवान् । येषां धातूनामनुबन्धो नास्ति तत्स्थानं विन्दुयुक्तमथवा शुन्यमास्ते । तदनन्तरं सकल-शब्दानामर्थवाचक-पदानि प्रथमाविभक्त्यन्ततत्वेन एवं समस्त-धात्वर्थवाचक-पदानि सप्तमीविभक्त्यम्ततत्वेन लिखितानि । प्रत्येक-प्रसिद्ध-शब्दोत्तरं

तदीयपर्य्यायाः देशभाषाश्च तथा प्रत्येक-धात्वर्थानन्तरं तट्टीका धातुदीपिकोक्तव्याख्यापदादीनि विहितानि सर्व्वशेषे तेषां प्रमाणानि तदभावे तत्प्रयोगाः तद्विरहे तद्व्युत्पत्ति-र्लिखिता ॥

वर्णमालायां च वर्ग्य-जकारान्तःस्थयकारौ मूर्द्धन्य-णकार-दन्त्यनकारौ वर्ग्यवकारान्तःस्थवकारौ तालव्यशकार-मूर्द्धन्यषकारदन्त्यसकाराः सन्ति ।

एतदखिल-वर्णादि-शब्दानां धातूनाञ्च प्रभेदं कृत्वा सूचीपूर्व्वकं यथास्थानं संस्थापनं कृतवान् । वङ्गदेशे उक्तवर्णानामुच्चारण-भेदाभावः । विशेषतो वकार-
द्वयस्याकारोच्चारणयोर्भेदो नास्ति पश्चिमादिदेशे वर्त्तते । किन्तु मुग्धबोधटीकायां दुर्गादासविद्यावागीशधृता वकार-भेदिकैकप्राचीनकारिकास्ति । सा यथा, --
"उदूटौ यत्र विद्येते यो वः प्रत्ययसन्धिजः । अन्तःस्थं तं विजानीयात्तदन्यो वर्ग्य उच्यते" ॥

एतत्कारिकया सकलवकार-प्रभेदो न भवति । इति हेतोरहं धातूनां शब्दाकरत्वादोष्ठ्यदन्त्य-वकारादिधातुद्वारा पदसाधनं कृत्वा बहु-प्रयत्नै-

र्वकारद्वय-भेदं प्रकाशितवान् रेफयुक्तवर्णन्तु रवर्णात् परं शब्द-सूचीमध्ये विन्यस्तवान् ॥

पूर्व्वतन-कोषकार-वर्गैः स्वस्वकोषे धातुसञ्चयो न कृतः शब्दमात्रसंग्रहः कृतः । किन्तु शब्दानामुत्पत्ति-स्थानं धातुः । अतएवाहं सर्व्वोत्तम-

वोपदेवीय-धातुपाठ-कविकल्पद्रुमात् (१७५४) चतुःपञ्चाशदधिक-सप्तदशशत-संख्यक-धातून् सङ्कलय्य एतत्कोषान्तर्गतान् कृतवान् । तत्र
१३२ अकारान्त धातवः । २४ आकारान्त-धातवः । १९ इकारान्त-धातवः । २५ ईकारान्त-धातवः । ३३ उकारान्त-धातवः । १३ ऊकारान्त-धातवः ।
२१ ऋकारान्त धातवः । १६ ॠकारान्त-धातवः । ६ एकारान्त-धातवः । २५ ऐकारान्त-धातवः । ५ ओकारान्त-धातवः । ५९ ककारान्त-धातवः ।
२१ खकारान्त धातवः । २७ गकारान्त-धातवः । २० घकारान्त-धातवः । ५० चकारान्त-धातवः । १९ छकारान्त-धातवः । ७२ जकारान्त-धातवः ।
३ झकारान्त धातवः । ७१ टकारान्त-धातवः । २३ ठकारान्त-धातवः । ७६ डकारान्त-धातवः । १ ढकारान्त-धातुः । ५० णकारान्त-धातवः ।
३१ तकारान्त धातवः । २८ थकारान्त-धातवः । ७९ दकारान्त-धातवः । ३७ धकारान्त-धातवः । २८ नकारान्त-धातवः । ६४ पकारान्त-धातवः ।
१५ फकारान्त धातवः । ४५ बकारान्त-धातवः । ३९ भकारान्त-धातवः । ३३ मकारान्त-धातवः । ३१ यकारान्त-धातवः । ४२ रान्त-धातवः ।
९३ लकारान्त धातवः । ६८ वकारान्त-धातवः । ३९ तालव्यशकारान्त-धातवः । ११६ मूर्द्धन्यषकारान्त-धातवः । ६५ दन्त्यसकारान्त-धातवः ।
५० हकारान्त-धातवः । ४२ सौत्र-धातवः सन्ति । एषां मध्ये संख्याया एकष्ठकारान्त-धातुरेवमेको लकारान्त-धातुर्नास्ति । सौत्र-धातूनां नियत-प्रयोगाभावः ।
एतत्समुदाय-धातुर्गणभेदे विभक्तोभूतस्तस्माद्धेतोर्धातु-पाठस्य गणसंज्ञा अभवत् । तन्मध्ये प्रसिद्ध-गणा दश । अवान्तर-गणा अनेके विद्यन्ते । यथा, --
भ्वाद्यदादी जुहोत्यादिर्दिवादिः स्वादिरेव च । तुदादिश्च रुधादिश्च तनक्र्यादि-चुरादयः ॥
इति दुर्गादास-विद्यावागीश-कृत-कविकल्पद्रुम-टीका धातुदीपिका ॥ उक्तगणे वोपदेव-विप्रेण अकाराद्यादि-धातुपाठ-क्रमेण अकारान्तादि-धातु-सकलं कथितवान् । किन्त्वहमेतत्क्रमानुगमनमकृत्वा निजकोष-रीत्यनुसारेण शब्दसूचीमध्ये धातुगणान् लिखितवान् ॥
साङ्केतिकवर्णचिह्नादीनां विवरणं ।

एतत्पुस्तकस्य प्रतिपत्रस्य प्रत्येक-पृष्ठ-मध्यस्थाने युग्मरेखा-प्रदानेन द्विभागं कृत्वा तद्भागद्वये शब्दादिर्लिखितः । तस्यान्तिम-शब्दादेर्व्वर्णं त्र्यक्षर-

पर्य्यन्तं उक्तभागद्वयोपरि विन्यस्तमभवत् । तदृष्टिमात्रेण यदक्षर-पर्य्यन्त-शब्द-स्तत्पृष्ठारूढो भूतस्तद्बोधो भविष्यति । तेनेष्ट-शब्दानामनायासेन लाभो भविता ॥

पुंलिङ्गस्य सङ्केतः "पुं" । स्त्रीलिङ्गस्य संक्षेपः "स्त्री" । क्लीवलिङ्गस्य चिह्नं "क्ली" । वाच्यलिङ्गस्य अर्थात् त्रिलिङ्गस्य लक्ष्म "त्रि" । एवम-

व्ययशब्दस्यैक-देशस्य "व्य" इत्यक्षरस्य ग्रहणं कृतं ॥

यस्मिन् स्थले एक-शब्द-घटकी-भूत-बहुवर्णाः पंक्तिद्वये पतितास्तज्ज्ञापनार्थं तत्प्रथमपंक्तिशेषे एका क्षुद्र-समरेखा (-) प्रदत्ता भूता ॥

एकार्थ-शब्दस्योत्तरं एवं प्रमाणस्य पूर्व्वं एका विषम-रेखा (।) प्रदत्ता । भिन्नार्थक-शब्दस्य एवं प्रमाणस्य परं विषम-रेखाद्वयं (॥) विन्यस्तं । प्रथमकाण्डे क्वचिदस्य व्यतिक्रमो जातः ॥

समानार्थक-द्वि-त्र्यादि-शब्देष्वेकस्थले उपस्थितेषु तदुत्तरं तज्ज्ञापकं एवम्प्रकार-वेष्टन-चिह्नं “}” दत्तं ॥

विशेषवृत्तान्तसमापनात् परं विशेष-शब्दार्थारम्भात् पूर्व्वञ्च पुष्पाकारचिह्नं (*) कृतं । एवं विस्तारित-विषयान्तर्गत-प्रकरणभेदस्थले पुष्पा-कारेणाङ्कितं ॥

येषां प्रसिद्ध-शब्दानामुत्तरं तत्पर्य्याय-शब्दा लिखितास्तत्संख्यानामङ्कपातः कृतः । तत्रोक्त-प्रसिद्ध-शब्दमेकत्वेन गणयित्वा तत्पर्य्याये द्व्यादि-संख्याङ्काः स्थापिताः ॥

पूर्व्वोदित-चतुःपञ्चाशदधिक-सप्तदशशत-धातूनां षट्चत्वारिंशदनुबन्धवर्णानां फलानि लिख्यन्ते ॥

---

- **अः** -- अनुबन्धेषु मध्ये अकारः सुखोच्चारणार्थः । यथा धक्क नक्क क नाशने इति ॥
- **आः** -- निष्ठाभावादि-कर्म्मवेट् । आकारेतो धातोर्भावे आदिकर्म्मणि च विहिताया निष्ठाया वा इटित्यर्थः । यथा ञिमिदा स्नेहे भावादिढे वेति मिन्नं मेदितं तेन । प्रमिन्नः प्रमेदितः सः । भावादिकर्म्मभ्यामन्यत्र निष्ठाया न इम् इत्यर्थः । यथा आदित इति मिन्नः मिन्नवान् ॥
- **इः** -- नुन्वान् । वदिङ् नुत्यभिवादयोः । अतएवेदितो नुन् वन्द्यते विष्णुः ॥
- **इर्** -- वा आङ्वान् । च्युतिर् क्षरणे इरितस्तु वेति अच्युतत् अच्योतीत् ॥
- **ईः** -- अनिड्निष्ठः । दीपीङ् यृ दीपने । नेमडीश्वीति दीप्तः दीप्तवान् ॥
- **उः** -- क्त्वावेट् । चमु भक्षणे । पु क्लिशुदित इम् इति चमित्वा चान्त्वा ॥
- **ऊः** -- वेट्कः । यस्य सामान्यविधिना इम्विहितः ऊदितः परस्य तस्य वा इम् इत्यर्थः । षिधू शिवे शास्त्रे । वेमूदिदिति असेधीत् असैत्सीत् ॥
- **ऋः** -- चङ्यह्रस्वः । चङि ञेः परे अङि परे अह्रस्वः ह्रस्वाभाववान् । यथा ढौकृङ्गत्यां । ञ्यङ्युङस्व इत्यत्र ऋदिद्वर्जनात् अडूढौकत् ॥
- **ॠः** -- वा चङि अह्रस्वः इत्यनुवर्त्तते । कणॄ आर्त्तस्वरे । भ्रज भ्रासेति अचीकणत् । अचकाणत् । येषां सप्तम-स्वरानुबन्धः कैश्चित् पठ्यते कैश्चिन्न पठ्यते तेषां ह्रस्व-विकल्पनार्थोऽयमनुबन्धः ॥
- **ऌः** -- अङ्वान् । औगमॢ गत्यां । शासॢद्युत्पुषादेरिति अगमत् ॥
- **एः** -- सिचि अवृद्धिः । सिचि ट्यांविहितसौ । ए कट् वृतौ वृषि । हसादेः सेम इत्यत्र एदिद्वर्जनात् अकटीत् ॥
- **ऐः** -- यजादिः स्यात् । यजै ञौ देवार्च्चने । व्यथग्रहेति जिः इयाज । ग्रहस्वपाद्योरिति इज्यात् ॥
- **ओः** -- निष्ठातनः । निष्ठायास्तो निष्ठातः निष्ठातो नो यस्मात् स निष्ठातनः । रुजो शौ भङ्गे । सूल्वाद्योदिदिति रुग्नः रुग्नवान् ॥
- **औः** -- अनिट् । औ गमॢ गत्यां । वसोरस्येत्यत्र औदिद्वर्जनात् गन्ता ॥
- **कः** -- चुरादिः । गणत्क संख्याने । चुर्भ्यो ञिर्व्वेति गणयति ॥
- **किः** -- चुरादिर्व्वा । पक्षे गणान्तरनियमाभावात् भ्वादिरित्यर्थः । युज कि संयमे योजयति योजति । यद्यपि चुरादिभ्यो ञिर्व्विकल्प्यते तथाप्य-न्येषामनुरोधादिदमुक्तं । अन्येषां मते तु चुरादिभ्यो ञिर्नित्यः । तत्रापि युजप्रभृतिभ्यो वेति । स्वमते तु चुर्भ्यो ञिर्व्वेत्यत्र वाशब्दस्य व्यव-स्थावाचित्वात् चुरादिभ्यो ञिर्नित्यः । अत्र युज-प्रभृतिभ्यो वेति ॥
- **गः** -- क्र्यादिः । डु क्री ञ ग द्रव्यपर्य्यये । दिवसुतुदेति क्रीणाति ॥
- **गिः** -- प्वादिरपि । अपिशब्दात् क्र्यादिश्च । पू ञ गि शोधे । प्वादेः स्व इतिह्रस्वः पुनाति । अपूः स ल्वादिः । पूवर्ज्जितः स प्वादिर्ल्वादिश्च स्यात् । लू ञगि छिदि लुनाति । सूल्वाद्योदिदिति लूनः लूनवान् । कॄ गॄ ज्या ग्लाहाल्वादेरिति लूनिः ॥
- **घः** -- रुदादिः । लघिर रुद रोदे । रुद्भ्योऽयोहस्रस्येम इति रोदिति । रुदाद्यस्तीति ईम् अरोदीत् ॥

- **ङः** -- तङ्वान् कर्त्तरि । कर्त्तरि वाच्ये तङ्वान् आत्मनेपदी । एध ङ वृद्धौ । नवशः पमे इति एधते ॥
- **जः** -- ज्वलाद्यः । ज्वल ज्म चलत्विषोः । दूनीभूज्वलाद्येति णः ज्वालः । पक्षे पचादित्वादन् ज्वलः । एवं कुच ज रोधपर्क्ककौटिल्यलेखने । दूनीभू-

  ज्वलाद्येति णः कोचः । पक्षे कृ गृ ज्ञा प्रीति कः कुचः ॥

- **झः** -- ज्वलाद्यः । इति केचित् ॥
- **ञः** -- आत्मने । आत्मने आत्मार्थं फलवति कर्त्तर्य्यात्मनेपदं अफलवति परस्मैपदमिति शेषः यज ञौ देवार्च्चायां यजते यजमानः यजति याजकः ।

  चूरादेस्तु स्वार्थविहित-ञेर्ञकारेण ञित्वेऽपि उभयपदं न स्यात् अन्यथा स्यम ञक् वितर्के इत्यादे ञानुबन्धो व्यर्थः स्यात् ॥

- **ञिः** -- अद्यक्तः । अद्य वर्त्तमाने क्तो यस्मात् स अद्यक्तः । ञि ष्ठा स्थाने । ज्ञार्च्चेच्छार्थञीच्छीलादेरिति स्थितो विष्णुस्तिष्ठतीत्यर्थः ॥
- **टुः** -- साथुः । ट्वृ ङ वेप चलने । द्वितोऽथुरिति वेपथुः ॥
- **ठः** -- फणादिः । इति केचित् ॥
- **डुः** -- त्रिमग्युतः । कृ ञ द डु कृतौ । ड्वितस्तज्जे इति कृत्रिमं ॥
- **णः** -- फणादिः । फण ण निस्नेहे । तॄ फल भजेति फेणतुः पफणतुः फेणिथ पफणिथ ॥
- **तः** -- अदन्तः । अदन्तानां पृथग्वर्गविधानेनैव ज्ञाने सिद्धे तानुबन्धोऽनभ्यासानामङ्कादिषु कान्तत्वादिभ्रमनिरासार्थः ।
- **दः** -- तनादिः । तन दु ञ विस्तृतौ । तन्भ्यः शुविति तनोति । सेर्लुक् तथासोरिति अतत अतनिष्ट अतथाः अतनिष्ठाः । वनतनाद्यनिमामिति प्रतत्य ॥
- **धः** -- रुधादिकः । रुधिर्धौ ञि ञ आवृतौ । दिवसु तुदेति रुणद्धि ॥
- **नः** -- स्वादिः । षु ञ्ण सन्धाक्लेदपीडमन्थे । दिवसु तुदेति सुनोति ॥
- **पः** -- मुचादिः । मुचॢ श प ञौ मोक्षे । नुग्रधोमुचामिति मुञ्चति ॥
- **भः** -- शमादिः । शमुभिर्य शमे । यन्योशमादीति शाम्यति ॥
- **मिः** -- घटादिः । निचिन्नमोर्दीर्घो वा । दीर्घो दीर्घवान् । घट य म ङ चेष्टे । ञीन्नमोस्तुर्घश्चेति अघटि अघाटि घटं घटं घाट घाटं । निचि

  ह्रस्वः मोऽनुवर्त्तते । निचि ञौ ह्रस्वः ह्रस्ववान् । घटादि जनीति घटयति ॥

- **मिः** -- वा । निचि ह्रस्व इत्यनुवर्त्तते । फण मि ण गतौ । वा सम यम फणेति फणयति फाणयति ॥
- **यः** -- दिवाद्यः । दिव्यु जिगीषेच्छादौ । दिवसु तुदेति दीव्यति ॥
- **रः** -- वैदिकः । वेदेष्वेव प्रयुज्यन्ते नतु भाषायामित्यर्थः । गार्लिस्तुतौ जन्मनि । जगाति ॥
- **लः** -- अदादिकः । अद्लौ भक्षे । लुगद्भ्योऽपः अत्ति ॥
- **लिः** -- ह्वादिः । ह्वादेरदाद्यन्तर्गणत्वेन ख्यातत्वाददादित्वसूचकानुबन्धो न कृतः । अथवा लुः स्वपादिश्च लिह्वादिरित्येकं वाक्यं । लु लि एतदुभयानुबन्धौ

  धातू क्रमात् स्वपादिह्वादीस्तः । चकारस्योभयत्र सम्बन्धाददादी चेत्यर्थः । ह्वादिः पृथक्मण इत्येके । अतएव पठन्ति च ।
  "ह्वाद्यदादी जुहोत्यादिर्दिवादिः स्वादिरेव च । तुदादिश्च रुधादिश्च तनक्र्यादिचुरादयः" ॥ इति ।
  हुलि होमेऽदने । ह्वादी रे द्विः जुहोति ।

- **लुः** -- स्वपादिश्च । चकाराददादिश्च । स्वमते स्वपादेः प्रयोजनं नास्ति । दरिद्रतीत्यादौ स्वपादित्वादजादौ सार्व्वधातुके । आद्युदात्तत्वमिति वोपदेवः ॥
- **वः** -- वृतादिः । वृत ङ व लृ वर्त्तने । बृद्भ्योनेम पे इति तेनैव परस्मैपदे वर्त्स्यति विवृत्सति । आत्मनेपदे तु वर्त्तिष्यते विवर्त्तिषते । अन्यत्र विवर्त्तिषा

  विवृत्सा ॥

- **शः** -- तुदादिकः । तुदौ ञ श व्यथे । दिवसुतुदेति तुदति ॥
- **शिः** -- कुटादिश्च । चकारात् तुदादिश्च । कुटां नुव्री ञ्णिति इति नियमात् कुट शि कौटिल्ये इत्यादीनां अकुटीत् इत्यादौ न गुणः । णू शि स्तवने

  इत्यादीनां अनुवीदित्यादिषु न वृद्धिः । अगुणत्वादुव् च ॥

- **षः** -- कृदङवान् । आख्यातिकस्याङोऽप्राप्त्यर्थं कृदिति विशेषणं । स्वमते तूभयत्र ङ एव । डु ञौ श पच पाके । भीषि चिन्तीति पचा ॥

- **क्षः --** जक्षादिः । जक्ष क्ष लु घ भक्षहासयोः । द्विरुक्त जक्षादीति द्विसंज्ञायां शचन्तस्य व्रिदचोऽद्वेरिति न नुण् जक्षत् । क्लीवे जस्शसोस्तु द्वेः शतुर्नुण् इति जक्षति जक्षन्ति । आख्यातिकेऽन्तोऽन्तो द्वेरिति जक्षति । अनुस् सिद्वेरिति अजक्षुः । इति धातुदीपिकायां अनुवन्धफलनिरूपणं ॥

---

**आदिकोषविवरणं ।**

सर्व्वेषां कोषाणामादि अग्निपुराणोक्ताभिधानं । तत्रादौ स्वर्गपातालादिवर्गः । ततोऽव्ययवर्गः । ततो नानार्थवर्गः । ततो भूपुराद्रिवनौषधिसिंहा-

दिवर्गाः । ततो नृब्रह्मक्षत्रविट्शूद्रवर्गाः । शेषे सामान्यानि नामलिङ्गानि सन्तीति मया दृष्टं । अमरसिंहस्तु उक्ताग्निपुराणीयाभिधानस्य कस्यचित् कस्यचित् वर्गस्य व्यतिक्रमं कृत्वा तत्रोदित-सामान्य-नामलिङ्गानां विशेष्य-निघ्न-वर्गसङ्कीर्णवर्गाविति संज्ञां स्थापयित्वा अन्ते लिङ्गादिसंग्रहवर्गस्य योगं कृत्वा
स्वीयकोषं रचितवान् । एवं जटाधरोऽपि अमरकोषस्यानुकरणं कृतवान् । इति विरलप्रचारः ॥

**प्राप्तकोषादिनामानि ।**

अत्राभिधाने मत्प्राप्तयद्यत्कोषादितः शब्दादयः संगृहीतास्तेषां संज्ञाः पश्चाल्लिख्यन्ते ॥

| | |
|---|---|
| अमरसिंहकृतं . . नामलिङ्गानुशासनं . १<br>अजयपालकृतः . . नानार्थसंग्रहः . . २<br>गदसिंहकृता . . नानार्थध्वनिमञ्जरी . ३<br>चक्रपाणिदत्तकृता . . शब्दचन्द्रिका . . ४<br>जटाधराचार्य्यकृतः . . पर्य्यायनानार्थकोषः . ५<br>दण्डाधिनाथकृता . . नानार्थरत्नमाला . ६<br>दुर्गादासविद्यावागीशकृता . धातुदीपिका . . ७<br>धनञ्जयकविकृता . . नाममाला . . ८<br>धरणिदासब्राह्मणकृतः . सारसंग्रहनामकानेकार्थसमुच्चयः ९<br>बरसिंहकाश्मीरपण्डितकृतः . निर्घण्टुराजः अर्थात् राजनिर्घण्टः १०<br>नारायणदासकविराजकृतः . राजवल्लभः . . ११<br>पद्मनाभदत्तद्विजकृतः . भूरिप्रयोगः . . १२ | पुरुषोत्तमदेवकृतः . . एकाक्षरकोषः . . १३<br>तत्कृतः . . द्विरूपकोषः . . १४<br>पुरुषोत्तम देवकृतः . . त्रिकाण्डशेषः . . १५<br>तत्कृता . . हारावली . . १६<br>भावमिश्रकृतः . . भावप्रकाशः . . १७<br>मथुरेशपण्डितकृता . . शब्दरत्नावली . . १८<br>महेश्वरवैद्यकृतः . . विश्वप्रकाशः . . १९<br>मेदिनीकरवैद्यकृतः . . नानार्थशब्दकोषः . २०<br>रामेश्वरशर्म्मकृता . . शब्दमाला . . २१<br>रत्नमालाकरवैद्यकृता . आयर्वेदार्णवोत्थितपर्य्यायरत्नमाला २२<br>वोपदेवविप्रकृतः . . कविकल्पद्रुमः . . २३<br>श्रीनन्दनभट्टाचार्य्यकृतं . वर्णाभिधानं . . २४<br>श्रीरामशर्म्मकृतः . . उणादिकोषः . . २५<br>सिद्धान्तकौमुदीसंक्षिप्तसारकारकृते उणादिवृत्ती . २६२७<br>हलायुधभट्टकृता . . अभिधानरत्नमाला . २८<br>हेमचन्द्रजैनकृतः . . अभिधानचिन्तामणिः . २९ |

**अप्राप्तकोषनामानि ।**

एतद्भिन्नानेकप्राचीनाभिधानानि सन्ति । यद्यपि तानि मया अप्राप्तानि तथापि तेषां मध्ये बहुकोषाणां प्रयोगप्रमाणानि अमरटीकाधृतानि

आसादितानि । एवं विश्वमेदिनीकोषे तत्सकलाभिधानानां शब्दाः समाहृताः । उक्तकोषद्वयशब्दानां शब्दकल्पद्रुमाभ्यन्तरितत्वेन वक्ष्यमाणसमस्त-प्राचीनकोषाणां शब्दाः एतत्कोषान्तर्गता भूताः ।

**विश्वधृतप्राचीनकोषाः ।**

| भोगीन्द्र . . १<br>कात्यायन . . २<br>साहसाङ्क . . ३ | वाचस्पति . . ४<br>व्याडि . . ५<br>विश्वरूप . . ६ | मङ्गल . . ७<br>शुभाङ्क . . ८<br>वोपालित . . ९ | भागुरिरचितकोषाः . १० |
|---|---|---|---|

**मेदिनीधृतप्राचीनकोषाः ।**

| उत्पलिनी . १<br>शब्दार्णवः . . २<br>संसारावर्त्तः . ३<br>नाममालाख्यः . ४<br>वररुचि . . ५<br>शश्वत् . . ६ | रन्तिदेव . . ७<br>रत्नापरनामहर . ८<br>गोवर्द्धन . . ९<br>रभसपाल . . १०<br>रुद्र . . ११<br>अमरदत्त . . १२ | गङ्गाधर . . १३<br>वाभट . . १४<br>माधव . . १५<br>धर्म्म . . १६<br>तारपाल . . १७<br>वामन . . १८ | चन्द्र . . १९<br>विक्रमादित्य . २०<br>गोमिराचतकोषाः . २१<br>पाणिनिपदानुशासनञ्च . २२ |
|---|---|---|---|

**एतदन्ये वलहड्डप्रभृतिकृतकोषाः सन्ति ॥**

**लब्धालब्धामरकोषटीकानामानि ।**

अमरकोषश्च भृशप्रामाणिकः व्युत्पादकश्च । तस्मात् बहूतरटीकाकारैस्तस्य नानाविधा टीका कृता । तन्मध्ये कतिपयलब्धटीकानां प्रमाणानि शब्दकल्पद्रुमे दत्तानि । किन्तु तत्समुदायटीकाकृन्नामानि टीकानामधेयानि चाहं व्यक्तीकरोमि ॥

| क्षीरस्वामो . १<br>सुभूतिः . . २<br>हड्डचन्द्रः . . ३<br>कलिङ्गः . . ४<br>कोङ्कटः . . ५<br>सर्व्वधरः . . ६<br>राजदेवः . . ७<br>गोवर्द्धनः . . ८<br>द्राविडः . . ९<br>भोजराजः . .<br>१० | माधवी . . ११<br>मधुमाधवी . . १२<br>सर्व्वानन्दः . . १३<br>अभिनन्द . . १४<br>मल्लिनाथः . . १५<br>रायमुकुटमणिः .<br>१६<br>नीलकण्ठः . . १७<br>अरुणः . . १८<br>भगीरथः . . १९<br>जयादित्यः . . २० | कोलाहलाचार्य्यः . २१<br>शवरस्वामी . २२<br>रामतर्कवागीशः . २३<br>नयनानन्दः . . २४<br>विद्याविनोदः . २५<br>रघुनाथचक्रवर्त्ती . २६<br>व्याख्यामृतः . २७<br>टीकासर्व्वस्वः . २८<br>सन्देहभञ्जिका . २९<br>रामाश्रमापरनामभानुदीक्षित-<br>कृता व्याख्यासुधीः . ३० | अच्युतोपाध्यायकृतव्याख्या-<br>प्रदीपः . . ३१<br>मथुरेशविद्यालङ्कारकृता<br>सारसुन्दरी . ३२<br>नारायणचक्रवर्त्तिकृता<br>पदार्थ-<br>कौमुदी . . ३३<br>रमानाथविद्यावाचस्पतिकृत-<br>त्रिकाण्डविवेक . ३४<br>भरतमल्लिककृता मुग्धवोध<br>सम्मता टीका . ३५<br>एतद्भिन्ना अपि टीका वर्त्तन्ते ॥ |
|---|---|---|---|

अत्राहृतविषयवृन्दं शब्दसिन्धुदुस्तरत्वञ्च विज्ञापयामि ।

कोषगणातिरिक्तनानाशास्त्रोक्तशब्दप्रमाणप्रयोगोपाख्यानादीनि । चातुर्वेदिकषाड्दर्शनिकमतविवरणपदार्थकर्म्मोपासनाज्ञानकाण्डब्रह्मनिरूपण-

वेदाङ्गशिक्षादीनि । शाब्दिककाव्यालङ्कारिकछान्दसिकसूत्रवृत्तिमात्रानामलक्षणोदाहरणचित्रकाव्यनवरसरतिवन्धादयः । श्रौतस्मार्त्तयज्ञमलमासादि-
लक्षणदायभागाशौचसंस्कारप्रायश्चित्तोद्वाहतिथिकृत्यजन्माष्टमीदुर्गोत्सवाष्टादशविवादपद-चतुष्पादव्यवहारैकादश्याद्यु
पवासनिर्णयतडागभवनवृषोत्सर्गव्रतप्र-
तिष्ठापरीक्षाज्योतिःशुभाशुभदिनादिवास्तुयागदीक्षाह्निकाचारमासकृत्यपुरुषोत्तमादिमाहात्म्य
श्राद्धशूद्रकृत्यकर्म्मविपाकद्वादशयात्राधिकरणदत्तकव्यवस्था-
दयः ।
पौराणिकतान्त्रिकवर्णतत्त्वषट्कर्म्मस्नानतर्पणपूजामुद्रामन्त्रयन्त्रजपहोमवलिध्यानस्तवकवचमाहात्म्यभुवनस्वर्गनरकदेतवादानवतीर्थावतारनदनदीदे-
शभेदपीठपर्वतवृक्षराजनीतिवर्णाश्रमधर्म्मवर्णसङ्करद्रव्यशुद्धिमहादाननिधिरत्नाद्युत्पत्तिसृष्टिप्रलयदुर्गपुरमन्दिरश्रीमूर्त्तिनिर्म्माणप्रमाणादीनि । ज्यौतिषिक-
सैद्धान्तिकवारतिथिनक्षत्रयोगकरणसंक्रान्तिमासर्त्तुपक्षवर्षायनजातफलाकालग्रहणनष्टचन्द्रधूमकेतुस्त्रीपुरुषादिशुभाशुभलक्षणशकुनस्वरोदयगणिताङ्कक्षेत्र-
व्यवहारराशिचक्रभुगोलखगोलदृग्गोलवर्णनादीनि । आयुर्वेदीयजन्मक्रमशारीरस्थानरोगनिदानपूर्वरूपसम्प्राप्त्युपशयचिकित्सौषधद्रव्यगुणपाचनजारणमा-
रणपथ्यापथ्यनाडीमूत्रजिह्वापरीक्षापञ्चकर्म्मष{??}सोत्पत्त्याख्यानादयः ।
मान्धर्ववेदीयनृत्यगीतवाद्यस्वरताललयतानमानग्रामश्रुतिमूर्च्छनारागरागिणीत-
त्पुत्रतद्वार्य्यागानसमयध्रुवकगमकनायकनायिकानिरूपणादीनि ।
युक्तिकल्पतरुग्रन्थीयनीतिद्वन्द्वनगरीवास्तुराजगृहविशेषसामान्यासनोपकरणालङ्कारास्त्र-
यात्रायुक्तयः तथा चतुष्पदद्विपदनिष्पदयानोद्देशाः । पत्रकौमुदीयपत्रप्रमाणभङ्गरचनलेखननयनपठनचिह्नकोणच्छेदनपदन्यास श्रीशब्दविन्यासप्रश-
स्तिप्रकरणादीनि । कुलाचार्य्यादिग्रन्थीयब्राह्मणवैद्यकायस्थानामुत्पत्तिवंशगोत्रप्रवरपर्य्यायश्रोत्रियकुलीनमौलिकगोष्ठीपतिनिर्णयादीनि च
शब्दकल्पद्रुमस्य
सप्तकाण्डे मया समाहृतानि । यान्यवशिष्टानि तानि परिशिष्टे प्रवक्ष्यामि । तत्तद्ग्रन्थनामानि बाहुल्यभिया नोक्तानि । तथापि शब्दसमुद्रस्य
पारगमनं दुष्करतरं । तदुक्तं कलापमुग्धबोधटीकाधृतश्लोके ।

**अहञ्च भाष्यकारश्च कुशग्रीयधियावुभौ । नैव शब्दाम्बुधेः पारं किमन्ये जडबुद्धयः ॥**

## परिशिष्टकरणकारणम् ।

अस्मिन् सप्तकाण्डात्मकशब्दकल्पद्रुमपुस्तके ये ये शब्दार्थप्रमाणप्रयोगादयः पूर्व्वं प्राप्त्यभाबेन न संगृहीताः । अथबा भ्रमवशात् पतिताः । एवं

यस्य यस्य रोगस्य निदानमात्रं लिखितं तत्तदौषधानि न विबृतानि । एवं येषां शब्दानां अमरातिरिक्तकोषोक्तपर्य्यायशब्दसङ्कलनं न कृतं । एवं
दीकारोत्तरक्षकारादिवर्णयुक्तकतिपयशब्दानां मुद्राङ्ककप्रमादेन स्खलनं जातं । एवं अकाराद्यादिबर्ग्यवकारादिपर्य्यन्तधातूनां तत्तट्टीकाधृतपदोदाहर-
णादयः पुरा न लिखिताः । एतत्सर्वमवशिष्टं परिशिष्टमध्ये लिपिबद्धीकरिष्यामि । अतःपरमेतत्परिशिष्टीयापुनरुक्तशब्दादीन् प्रानुदितसप्तका-
ण्डीयशब्दसूचीमध्ये यथास्थानं स्थापयित्वा ग्रन्थसमाप्तौ मङ्गलाचरणबीजं परिशिष्टकरणकारणञ्च हित्वा एतन्मुखबन्धनं प्रथमकाण्डस्य पूर्व्वं योजयित्वा
पुनर्मुद्राङ्कने कृते एष कोषः सुसम्पू र्णे भविष्यति । किञ्च पश्चिमदेशीयलोकानां महोपकाराय देवनागराक्षरेण एतत्कोषमुद्राङ्कनार्थं पाश्चात्या
मद्बन्धुवर्गा ममान्तिके बहुशः प्रार्थयन्ते । किन्तु तत्प्रार्थनापूरणे मदीयायुषोऽनुकूलतायां सन्दिहानो विवृत्तोऽस्मि । यद्यपि कश्चित् बिपश्चित्
किम्बा विषयी स्वीयलाभार्थं मत्कृतैतद्ग्रन्थाधिकारं यथारीति गृहीत्वा अस्मिन् कर्म्मणि प्रवर्त्तेत तत्र ममापत्तिर्नास्तीति ॥

शाके वह्निसमुद्रशैलधरणीमानेऽरुणे कर्कटे, याते खाग्निमिताब्दतः परमसौ मत्शब्दकल्पद्रुमः ।
काण्डैः सप्तभिरन्वितो भगवतोऽनुक्रोशतः, पूर्णतां प्राप्तो दूषणमस्ति किञ्चिदिह चेत् तत् क्षम्यतां साधुभिः ॥

**अथ सर्व्वोपासकसम्मतमङ्गलाचरणोनविंशतिपद्यानि ।**

वेदा वदन्ति यं सत्यमानन्दमद्बितीयकम् ।
तथामृतञ्चैकरूपमवाङ्मनसगोचरम् ॥
सर्वातीतं सर्वगतं चिदेकरसमेव च
देशकालापरिच्छिन्नमपादमपि शीघ्रगम् ॥
सर्वग्रहमपाणिञ्च सर्वेषां दर्शकं तथा ।
अचक्षुषमपि श्रोत्रहीनं श्रोतारकं पुनः ॥
अचिन्त्यमपि सर्वज्ञं सर्वेषाञ्च नियामकम् ।
सर्वशक्तियुतं सृष्टिस्थितिप्रलयकारकम् ॥ १ ॥
तथौपनिषदा यं हि शुद्धबुद्धस्वभावकम् ॥ २ ॥
कथयन्त्यादिविद्वांसं सिद्धं यं कापिला विदुः ॥ ३ ॥
क्लेशकर्म्मविपाकाशयापरामृष्टमेव यं ।
निर्म्माणकायमास्थाय सम्प्रदायप्रवर्त्तकम् ॥
तथानुग्राहकमपि प्रभाषन्ते पतञ्जलाः ॥ ४ ॥
लोकवेदविरुद्धैर्यं निर्लेपञ्च स्वतन्त्रकम् ॥
महापाशुपताः सर्वे ब्रुवन्ति सततं भुबि । ५ ।
शैवाः शिवं यं वदन्ति वैष्णवाः पुरुषोत्तमम् ॥ ६ । ७ ॥
पितामहमिति प्राञ्चः पौराणिकजना विदुः । ८ ।
याज्ञिका यज्ञपुरुषं सर्वज्ञमिति सौगताः ॥ ९ । १० ॥
निरावरणमित्येव प्रलपन्ति दिगम्बराः । ११ ।
यमुपास्यत्वरूपेण देशितं हि निरन्तरम् ॥
मीमांसका वै भाषन्ते चार्वाकाः प्रवदन्ति यं ।
लोकानां व्यवहारेण सिद्धं सन्ततमेव च ॥ १२ । १३ ॥
यावदुक्तोपपन्नं हि न्यायज्ञाः सम्प्रचक्षते । १४ ।
शिल्पिनो विश्वकर्म्मेति यं भणन्ति सुनिश्चितम् ॥ १५ ॥
शाक्ता वदन्ति यं नित्यामाद्याप्रकृतिरूपिणीम् । १६ ।
सौरास्तेजोमयं सूर्य्यं गाणपत्या गणेश्वरम् ॥ १७ । १८ ॥
रामानुजा यं वदन्ति विशिष्टाद्वैतबादिनः ।
लक्ष्मीनारायणं भक्ताधीनं नित्यशरीरिणम् ॥ १९ ॥
निम्बादित्यास्तथा माध्वाचार्य्याद्या द्वैतवादिनः ।
विष्णुं सशक्तिं सन्मूर्त्तिं यमाहुर्भक्तवत्सलम् ॥ २० ॥
रामानन्दा रामचन्द्रं भक्तानुग्रहकारकम् ।
सीतया सहितं प्रोचुर्यं नित्यं नित्यविग्रहम् ॥ २१ ॥
श्रीमन्माध्वानुयायि श्रीनित्यानन्दादिवंशजाः ।
गोस्वामिनो नन्दसूनुं श्रीकृष्णं प्रवदन्ति यं ॥ २२ ॥
कायेन मनसा वाचा भक्त्या च प्रणिपत्य तम् ।
श्रीराधाकान्तदेवेन राज्ञातिशययत्नतः ।
शब्दादीन्यवशिष्टानि संगृह्य बहुशास्त्रतः ।
परिशिष्टः शब्दकल्पद्रुमस्य क्रियतेऽधुना ॥

**अथ ग्रन्थप्रतिज्ञानवश्लोकाः ।**

शब्दकल्पद्रुमग्रन्थे मप्तकाण्डमयेऽखिले ।
येषामेव हि शब्दार्थपर्य्यावाणां तथैव च ॥
प्रमाणानां प्रयोगाणां धातुमम्बन्धिनां पुनः ।
पदोदाहरणानाञ्च चिकित्सानां गदस्य च ॥
न संग्रहोऽभवत् पूर्वग्रन्थे कारणकूटतः ।
तेषां सङ्कलनञ्चास्मिन् परिशिष्टे करोम्यहम् ॥
तथा वेदनिघण्टाख्यः पञ्चाध्यायसमन्वितः ।
वैदिकानाञ्च शब्दानामतिप्राचीनकोषकः ॥
तस्यात्र देशे विरलप्रचारत्वेन तद्धृतः ।
पर्य्यायशब्दसन्दोहः केनापि कोषकारिणा ॥
न संगृहीतस्तद्धेतोर्दुरूहोऽश्रुत एव च ।
प्रायो वैदिकशब्दार्थो बोधगम्यो भवेन्नहि ॥
अतस्तत्प्रथमाध्याये द्बितीये च तृतीयके ।
येषां स्थितानां शब्दानां पर्य्यायान् परिशिष्टगान् ॥
करिष्याम्यस्य निम्ने हि तेषां वर्गस्तु नाम च ।
तथा सङ्ख्या विलिख्यन्ते लोकानां ज्ञानहेतवे ॥
चतुर्थे पञ्चमाध्याये यदस्ति पदवृन्दकम् ।
तत्पर्य्यायस्य बोधस्य चाभावान्नात्र गृह्यते ॥

**तत्र प्रथमाध्याये ४१४ नामानि यथा ।**

वर्गः -- नाम -- सङ्ख्या
१ पृथिवीनामधेयानि .. २१
२ हिरण्यनामानि . . १५
३ अन्तरीक्षनामानि . १६
४ साधारणनामानि . ६
५ रश्मिनामानि . . १५
६ दिङ्नामानि . . ८
७ रात्रिनामानि . . २३
८ रात्र्युपनामानि . १६
९ अहर्नामानि . . १२
१० मेघनामानि . . ३०
११ वाङ्नामानि . . ५७
१२ उदकनामानि . १००
१३ नदीनामानि . . ३७
१४ अश्वनामानि . . २६
१५ आदिष्टोपयोजनानि १०
१६ ज्वलतिकर्म्माणः . ११
१७ ज्वलतो नामधेयानि ११
इति वेदनिघण्टौ प्रथमाध्यायः ॥

द्वितीयाध्याये ५१६ नामानि ।
वर्गः नाम सङ्ख्या
१ कर्म्मनामानि . . २६
२ अपत्यनामानि . १५
३ नृनामानि . . २५
४ बाहुनामानि . . २२

वर्गः नाम सङ्ख्या
५ अङ्गुलिनामानि . २२
६ कान्तिकर्म्माणः . १८
७ अन्ननामानि . . २८
८ अत्तिकर्म्माणः . १०
९ बलनामानि . . २८
१० घननामानि . . २८
११ गोनामानि . . ९
१२ क्रुध्यतिकर्म्माणः . १०
१३ क्रोधनामानि . . ११
१४ गतिकर्म्माणः . . १२२
१५ क्षिप्रनामानि . . २६
१६ अन्तिकनामानि . ११
१७ संग्रामनामानि . ४६
१८ व्याप्तिकर्म्माणः . १०
१९ बधकर्म्माणः . . ३३
२० वज्रनामानि . . १८
२१ ऐश्वर्य्यकर्म्माणः . ४
२२ ईश्वरनामानि . ४
इति वेदनिघण्टौ द्वितीयाध्यायः ॥

तृतीयाध्याये ४१० नामानि ।
वर्गः नाम सङ्ख्या
१ बहुनामानि . . १२
२ ह्रस्वनामानि . . ११
३ महन्नामानि . . २५

वर्गः नाम सङ्ख्या
४ गृहनामानि . . २२
५ परिचरणकर्म्माणः . १०
६ सुखनामानि . . २०
७ रूपनामानि . . १६
८ प्रशस्यनामानि . १०
९ प्रज्ञानामानि . . ११
१० सत्यनामानि . . ६
११ पश्यतिकर्म्माणः . ८
१२ उत्तराणि पदानि सर्व्व-पदसमाम्नानाय . ९
१३ उपमानामानि . १२
१४ अर्च्चतिकर्म्माणः . ४४
१५ मेधाविनामानि . २४
१६ स्तोतृनामानि . . १३
१७ यज्ञनामानि . . १५
१८ ऋत्विङ्नामानि . ८
१९ याच्ञाकर्म्माणः . १७
२० दानकर्म्माणः . . १०
२१ अध्येषणाकर्म्माणः . ४
२२ स्वपितिकर्म्माणः . २
२३ कूपनामानि . . १४
२४ स्तेननामानि . . १४
२५ निर्णीतान्तर्हितनामधे-यानि . . . ६
२६ दूरनामानि . . ५

वर्गः नाम सङ्ख्या
२७ पुराणनामानि . ६
२८ नूतननामानि . . ६
२९ दिश उत्तराणि नामानि २६
३० द्यावापृथिव्योर्नामधेयानि २४
इति वेदनिघण्टौ तृतीयाध्यायः ॥

चतुर्थाध्याये २७८ पदानि ।
वर्गः पदं सङ्ख्या
१ जहा इत्यादिपदानि ६२
२ सस्निमित्यादिपदानि ८४
३ आशुशुक्षणिरित्यादि-पदानि . . १३२
इति वेदनिघण्टौ चतुर्थाध्यायः ॥

पञ्चमाध्याये १५१ पदानि ।
वर्गः पदं सङ्ख्या
१ अग्निरित्यादिपदानि ३
२ द्रविणोदा इत्यादि-पदानि . . १३
३ अश्व इत्यादिपदानि . ३६
४ वायुरित्यादिपदानि . ३२
५ श्येन इत्यादिपदानि . ३६
६ अश्विनावित्यादिपदानि ३१
इति वेदनिघण्टौ पच्चमाध्यायः ॥

**अथ ग्रन्थस्यानुक्रमणिकादिलेखनाभावकारणं वृत्तद्वयम् ।**

ग्रन्तस्यानुक्रमणिका साङ्केताक्षरलक्ष्म च ।
परिशिष्टस्य करणे कारणादिकमेव हि ॥

पूर्वे सप्तमकाण्डीयमुखबन्धे प्रकीर्त्तितम् ।
अतो न लिख्यतेऽत्रैव पुनरुक्तिभयान्मया ॥

**अथादर्शपत्राणां वल्मीकमक्षणजन्यमनस्तापतन्निवारणहेतुपञ्चपद्यानि ।**

| इदानीं परिशिष्टीयबहुलादर्शपत्रिकाः । | तापो जामातृदौहित्रगणैरेव निवारितः ॥ |
| --- | --- |
| यन्त्रालयसमुत्पन्नवल्मीकगणभक्षिताः ॥ | यतस्ते परिशिष्टीयशब्दैरन्यैश्च संयुतम् । |
| अतस्तद्गतशब्दानां नाभवन्मुद्रयाङ्कनम् । | देवनागरवर्णेन शब्दकल्पद्रुमं पुनः ॥ |
| तच्चेद्भूतं तदा ग्रन्थबाहुल्यं समजायत ॥ | मुद्राङ्कितं प्रकुर्वन्ति यत्नेनातिशयेन च । |
| किन्तु सांप्रतमादर्शनाशजन्यो मनोगतः । | तस्य प्रकाशाल्लोकानामुपकारो भविष्यति ॥ |

---

**अथ ग्रन्थकर्त्तुर्व्वंशवर्णश्लोकाः ।**

आसीत् श्रीहरिदेवाख्यः श्रीहरेरंशरूपकः ।
कायस्थानां कुले देववंशस्योद्भवहेतुकः ॥
मुर्शिदावादनगरासन्ने स्वजनपालकः ।
कर्णस्वर्णनामधेयसमाजे वासकारकः ॥
सदा हरिपदाम्भोजयुगलध्यानकारकः ।
मौद्गल्यगोत्रजातानामेष वीजाभिधानकः ॥ १ ॥
तस्य दुर्गावरो नाम सुतः सर्वगुणान्वितः । २ ।
तस्माद्विश्वेश्वरो जातस्तस्य विघ्नेश्वरः सुतः ॥ ३ । ४ ॥
सदानन्देन संपूर्णः पूर्णानन्दोऽभवत्ततः । ५ ।
खानोपाधिस्तत्तनयः पीताम्वर इति स्मृतः ॥
अदभ्रशालिशालित्वाद्धान्यपीताम्बरेति च ।
विख्यातो भूवि सर्वत्र गोष्ठीपतिवरः स च ॥ ६ ॥
पृथ्वीधरस्तत्तनूजस्तस्माच्च कुरुनन्दनः । ७ । ८ ।
चत्वारस्तनयास्तस्य चतुर्द्देशनिवासिनः ॥
प्रथमः शिवदासाख्यश्चौखण्डिख्यातिसंयुतः ।
मलुयीनामके देशे वासस्तेन सदा कृतः ॥
नित्यानन्दो द्वितीयस्तु रायोपाधिः सुविश्रुतः ।
कृतसौदपुरावासो नित्यानन्देन पूरितः ॥
चतुर्भुजस्तृतीयो यः सोऽपि रायेत्युदाहृतः ।
तालाग्रामकृतावासश्चतुर्भुजपदाश्रितः ॥
चतुर्थः श्रीनाथरायो धुले पुरकृतायनः ।
सदा श्रीनाथचरणाम्भोजार्च्चनपरायणः ॥ ९ ॥
नित्यानन्दात्मजः श्रीमान् श्रीमन्तेतिसमीरितः ॥ १० ॥
चण्डीवरस्तस्य पुत्रश्चण्डिकापूजने रतः ॥ ११ ॥
तज्जातः परमानन्दः परमानन्ददायकः ॥ १२ ॥
काशीनाथश्च विजयावल्लभस्तत्कुमारकः ।
ज्येष्ठस्तु मल्लिकोपाधी रायोपाधिः कनिष्ठकः । १३ ।
विजयावल्लभाज्जातः कृष्णानन्दोद्विजार्च्चकः ॥ १४ ॥
रघुनन्दनदेवस्तत्तनयः परिकीर्त्तितः । १५ ।
विद्याधरस्तस्य सूनू रायेतिख्यातिमागतः ॥
आदौ नाज्राग्रामवासी निताडावासकृत्ततः । १६ ।
तस्यात्मजो हरिहरो जातो हरिहराश्रितः ॥ १७ ॥
षट् सुतास्तस्य विज्ञेयाः सर्वलोकप्रशंसिताः ।
ज्येष्ठस्तु यादवानन्दः सदा यादवसेविता ॥
द्वितीयोरामचन्द्राख्यस्तृतीयो लक्ष्मणो मतः ।
देवीदासस्तुरीयोऽभृत् मजुम्दार उपाधितः ॥
परोपकारनिरतः सदा बन्धुभिरावृतः ।
मुडागाछादिदेशानां कानुन्गोपदमागतः ॥
म च तस्मिन् जनपदे कर्णस्वर्णसमाजतः ।
उत्थाय वासमकरोत् पुत्त्रदारादिभिर्यतः ॥
दुर्गादासः पञ्चमस्तु सदा दुर्गाप्रपूजकः ।
षष्ठस्तु माधवानन्दः सर्वानन्दप्रदायकः ॥ १८ ॥
देवीदासमजुम्दारतनयाः षट् प्रजाभृतः ।
गौरीकान्तो ज्येष्ठपुत्त्रः स च वंशविवर्ज्जितः ॥
चण्डीशरणसंज्ञस्तु मध्यमश्चण्डिकार्च्चकः ।
तृतीयः पुण्डरीकाक्षः सहस्राक्षश्चतुर्थकः ॥
महावज्जङ्गतो यो हि पदे पैत्र्ये नियोजितः ।
सरकारोपाधियुतो राजेन्द्रः पञ्चमः सुतः ॥
कामारपोलग्रामान्तर्वासस्तेन विनिर्म्मितः ।
कनिष्ठो रुक्मिणीकान्तो बहुभिर्ज्ञातिभिर्बृतः ॥
मुडागाछाप्रदेशे तु पञ्चग्रामे ह्यधिष्ठितः ।
स च केशवरायस्य क्षत्रियस्य विशेषतः ॥
अप्राप्तव्यवहारस्य विख्यातस्य समन्ततः ।
तद्देशाधिपते राज्ये नवावेन नियोजितः ॥
अपश्यद्व्यवहारांश्च तद्राज्यशासने रतः ।
अतोऽस्मिन् भूतले लोकैर्व्यवहर्त्तेति कीर्त्तितः ॥ १९ ॥
तस्यैव तु कनिष्ठस्य चत्वारो देहसम्भवाः ।
धार्म्मिकाः कर्म्मकुशला लोके संप्राप्तगौरवाः ॥
ज्येष्ठो रामेश्वरः पैत्र्यं पदं प्राप्तः कृतश्रमः ।
महावज्जङ्गतस्तेषु कृष्णरामस्तु मध्यमः ॥
राजारामस्तृतीयस्तु तेषां रुद्रेश्वरोऽन्तिमः ।
अनपत्यतया सोऽपि रुद्राराधकसत्तमः ॥ २० ॥
रामेश्वरस्य षट् पुत्रास्तेषां ज्येष्ठो महागुणः ।
रामचन्द्रस्तथा रामचरणो मध्यमः पुनः ॥
तृतीयो रघुन्नाथाख्यः श्रीरामस्तु तुरीयकः ।
रामकेशवनामा च पश्चमः केशवार्च्चकः ॥
बलरामाभिधः षष्ठो बलवान् बलिनां यतः ।
एषां ज्येष्ठः कनिष्ठश्च वंशाभावमुपागतः ॥ २१ ॥
मध्यमो रामचरणो गुणैर्बहुभिरन्वितः ।
व्यवहर्त्तोपाधियुक्तो गोविन्दपुरसंस्थितः ॥
स च हिज्लीतमोलिप्तमहिषादलदेशतः ।
लवणस्य तथा राज्ञः करादाने नियोजितः ॥
कटकादिप्रदेशस्य महावज्जङ्गतस्ततः ।
देवानीसंज्ञकपदं प्राप्तवान् बहुमानितः ॥
बहुलैर्वर्गिभिः सार्द्धं मेदिनीपुरमध्यतः ।
संग्रामं तुमुलं कृत्वा रणमध्ये निपातितः ॥ २१ ॥
देवानरामचरणव्यवहर्तृमहाशयात् ।
समुत्पन्नास्त्रयः पुत्रा अशेषकुशलालयात् ॥

व्यवहर्त्तापाधियुक्तो रामसुन्दर आदिमः ।
बिद्यान्नौषधदानेन गणनीयः स चाग्रिमः ॥
पञ्च कोटादिदेशे सोऽभवदध्यक्षसत्तमः ।
माणिक्यचन्द्रदेबश्च मध्यमः पुण्यकृत्तमः ॥
अङ्कर्षिधरणीचन्द्रमाणे हिजरिहायने ।
दिल्लीश्वरप्रसादेन सम्प्राप्तौ तौ शुभक्षणे ॥
फर्माननामकलिपिं रायोपाधिं तथैव च ।
मन्सवानां सहस्रं सादिपञ्चशतमेव च ॥ * ॥
कनिष्ठो नबकृष्णाख्यदेवो जातो गुणाकरः ।
आसीत् किलकिलारूपामरावत्यां पुरन्दरः ॥
रूपबान् धनबान् मान्यो वदान्यः पण्डिताश्रयः ।
कुलशीलादिसम्पन्नो गोष्ठीपतिमहाशयः ॥
रसेषुसिन्धुशुभ्रांशुमाने इंरेजिहायने ।
कोम्पानिना मुन्सिपदे नियुक्तोऽसौ शुभे दिने ॥
सोऽभबत् कारणं तेषां बङ्गराज्यस्य शासने ।
ततः किलकिलापुर्य्यां वाणिज्यकार्य्यसाधने ॥
स्थितान् इंरेजनिचयान् नवावो वलमाश्रितः ।
सेराजद्दौलाभिधानो दूरीकृत्य गतस्ततः ॥
अथ तत्परवर्षे तु कर्णेल् क्लाइव् महावलः ।
आगत्य नवकृष्णेन मुन्सिना सहितः किल ॥
योद्धुं ययौ नवावेन सार्द्धं स्ववलसंवृतः ।
गत्वा पलाशिग्रामे स युद्धं कृत्वाजयत् ततः ॥
धरणीरसवाजीन्दुमित इंरेजिवत्सरे ।
कासमालीखाननामा नवावोऽभूत्ततः पुरे ॥
स एवेंरेजपक्षीयान् प्रधानराजपूरुषान् ।
निहत्य साधयामास निखिलान् स्वमनोरथान् ॥
मेजर् आदम् ततः शीघ्रं सार्द्धं तेनैव मुन्सिना ।
गत्वा तूदयनालायां रणं कृत्वा दुरात्मना ॥
विजित्य वलवन्तं तं नवावं सेनया संह ।
निष्कण्टकमिदं राज्यं कृतवान् स भयापहः ॥
बाणर्तुसिन्धुशशभृन्मितैंरेजिवत्सरे ।
भूत्वा गवर्णरो लार्ड क्लाइव् किलकिलापुरे ॥
समेत्य मुन्सिना सार्द्धं परामृष्य च विस्तरं ।
जाफरालीखानसंज्ञं नवावं मतिमत्तरं ॥
वङ्गदेशस्य च सुवादारं कृत्वा ततः परं ।
मोजफ्फर्जङ्गनामानमतिबुद्धिमतां वरं ॥
तं नायेवसुवादारं चकार गुणसागरं ।
पञ्चविंशतिलक्षन्तु मुद्राणां कृतवान् स्थिरं ॥
तयोर्व्ययार्थं प्रत्यब्दं ततः क्लाइव् गुणाकरः ।
तेनैव मुन्सिना सार्द्धं दिल्लीं गत्वा च सत्वरः ॥
सूजाद्दौला नामकेन स सन्धिमकरोत् सदा ॥
अङ्काब्धिचन्द्रभूमाने हिज्रिसंवत्सरे ततः ।
शौषालस्य द्वितीयाहे नवकृष्णाय तोषतः ॥
श्रीशाहालम्वादशाहो फर्मानाख्यं लिपिं मुदा ।
दत्तवान् यत्र लिखितं दिल्लीशेन सुसम्पदा ॥
सहस्रपञ्चकञ्चैव मन्सवानां हि सादिनां ।
सहस्रत्रितयं वीर्य्ययुतानां शीघ्रगामिनां ॥
उत्तमं शिविकायानं झल्लरेण सुशोभितं ।
नकाराख्यं वाद्ययन्त्रं ध्वजं तोगेतिनामितं ॥
राजवाहादुरोपाधिं मानवृद्धियशस्करं ।
कृपया दत्तवानस्मै बहुमानपुरःसरं ॥
सुजाद्दौला नवावस्य समीपात् राजयोग्यकं ।
खेलातनामकं प्राप्तो वसनं भूषणादिकं ॥
तस्मिन् वर्षे स भूपालो नवकृष्णोऽतिधीमते ।
नवद्वीपाधिपश्रीलकृष्णचन्द्राय भूभृते ॥
महाराजेन्द्रवाहादुरोपाधिं मानवृद्धितः ।
दापयामास शाहालम् वादशाहसमीपतः ॥
ततः स सहितो लार्ड क्लाइवेन महात्मना ।
काशीधाम समागम्य बभूवासौ महामनाः ॥
महाराजोपाधिकश्रीबलवन्ताह्वयेन च ।
सिंहेन हि सुवे वाराणस्याः सुनियमं स च ॥
कृत्वा विश्वेश्वरस्याग्रे नाट्यमन्दिरमध्यतः ।
नबकृष्णेश्वरं लिङ्गं स्थापयामास भक्तितः ॥
ततः पाट्नानामदेशे महाराजेन तत्र च ।
शेतावरायेण सह सुवे वेहारकस्य च ॥
कृत्वा सुनियमं तत्र तेनैब सहितो हि सः ।
कलिकाताख्यनगरे समायातो गतालसः ॥
ततस्तुष्टमनाः क्लाइव् कोम्पानेर्द्दत्तवान् पदं ।
देवानीसंज्ञकं तस्यै राज्ञे बहुलमानदं ॥
रसर्तुसिन्धुभूमाने इंरेजिहायने पुनः ।
शाहालम्वादशाहस्य प्रागुक्तस्य महात्मनः ॥
समीपतः फर्मानाख्यलिपिमानीय यत्नतः ।
तस्मै राज्ञे ददौ प्रीत्या प्रीतये तस्य धीमतः ॥
यत्रास्तीदं विलिखितं दिल्लीशेन सता स्वयं ।
मन्सवानां षट्सहस्रं सहस्राणां चतुष्टयं ॥
सादिनाञ्च महाराजोपाधिमस्मै प्रदत्तबान् ।
एवं सुवर्णघटितं पदकञ्च ददौ महान् ॥
यत्र मुद्रितपारस्यभाषयास्तीति वर्णितं ।
इंरेजकोम्पानिकर्म्मोत्तमरुपेण साधितं ॥
पश्यतो वादशाहस्य समीपात् सननामके ।

राजोपाधेस्तथा वाहादुरोपाधेस्तथैव च ।
भूपालनवकृष्णाभिधानवाहादुराय च ॥
दातुं दयाभबत् लार्ड क्लाइवस्य महामतेः ।
तम्मया सहितं चिह्नं कोम्पानेस्तन्महीभृते ॥
दत्तं तथा दशविधं खेलातं वस्त्ररूपकं ।
किरीटं कुण्डलं रत्नभूषां हारञ्च मौक्तिकं ॥
फलकं करवालञ्च दण्डं चामरमुत्तमं ।
मयूरपुच्छव्यजनं घटीयन्त्रं मनोरमं ॥
हस्त्यश्वं झल्लरैर्युक्तं शिविकायानमेव च ।
लार्ड क्लाइव् ददौ राज्ञे सदा हितकराय च ॥
एवं सिपाइसंज्ञानां नृणां तद्दूरपालने ।
आज्ञां दत्त्वा तस्य हस्तं गृहीत्वा तु वरासने ॥
हस्तिपृष्ठे समारोह्य पुरं प्रेरितवांस्ततः ।
हस्त्यश्वपत्तिनिकरैर्ब्बहुदीनैश्च संवृतः ॥
स च राजा रौप्यमुद्रां क्षिपन् मार्गेति हर्षतः ।
विवेश स्वं पुरं रम्यं सर्व्वलोकैः प्रशंसितः ॥
समुद्ररसवाजीन्दुमाने इंरेजिहायने ।
स लार्ड क्लाइवो मेस्तर् वार्लेष्टाय महात्मने ॥
राज्यभारं समर्प्याथ स्वस्थाने प्रस्थितोऽभवत् ।
चकार च महाराजो देवानीकर्म्म पूर्ब्बवत् ॥
तस्यास्मिन् समये माता मृता विष्णोः पदं गता ।
अनेकलक्षमुद्राभिस्तेनाद्या तत्क्रिया कृता ॥
ततः कोम्पानिसंक्रान्तं कर्म्म त्यक्त्वा स भूपतिः ।
पारमार्थिकचिन्तायां नियुक्तोऽभून्महामतिः ॥
अथ कोम्पानिना गिर्जानिर्म्माणार्थं प्रयाचितः ।
मूल्यं विनार्थितां भूमिं दत्तवानतिमोदतः ॥
वसुसिन्धुमुनिक्षौणीमाने इंरेजिहायने ।
मुतानुट्यादिकं ग्रामं प्राप्तवानिह पत्तने ॥
तेनैव तस्य राज्ञस्तु धनिविज्ञानिमानिनः ।
प्रजा भूता हि बहुला एतन्नगरवासिनः ॥
समुद्रवसुभूमीन्दुमाने वङ्गाख्यकाब्दके ।
हेष्टिंस् गवर्णरश्चाक्लावर्द्धमानाभिधानके ॥
देशे तञ्च महाराजं साजाओलीतिनामके ।
कार्य्ये नियोजयामास स गत्वा तत्र देशके ॥
राज्यस्य शासनञ्चैवं राज्ञो राज्ञ्यास्तथैव च ।
समग्रविषयस्यैव सुन्दरं नियमं स च ॥
कृत्वा राजकरान् सर्व्वानादाय बहुकृच्छ्रतः ।
खालिसानामके स्थानेऽर्पितवान् सुसमाहितः ॥
एवं रसवसुक्षौणीन्दुमे वङ्गाख्यवर्षतः ।
महाराजाधिराजो यस्तेजश्चन्देतिसंज्ञितः ॥

तथा सप्तशतं मुद्राः सप्तविंशतिकाधिकाः ॥
ऋणं कृत्वा महाभागो महाराजसकाशतः ।
राज्ञः करं राजकोषे प्रेषयामास यत्नतः ॥
ततो गबर्णरस्यैव ह्यनुमत्यनुसारतः ।
खालिसासंज्ञकात् स्थानात् महाराजोऽतिवाधितः ॥
क्रमशः क्रमशश्चैव मुद्रास्ताः प्रतिवर्षतः ।
आदानमकरोत् राजाधिराजस्योपकारतः ॥
रामर्षिशशिभूमाने वङ्गसंवत्सरे स च ।
श्रीमद्राधावल्लभस्य सेवनार्थं चिराय च ॥
दत्तवान् वल्लभपुरं कृत्वा देवोत्तरं मुदा ।
श्रीमन्नन्ददुलालस्य सेवार्थमपि सर्व्वदा ॥
आनर्पुरेतिख्यातायां पर्गणायां प्रयत्नतः ।
चारग्रामं तथा देवोत्तरं कृत्वा ददौ ततः ॥
तथाग्रद्वीपतः श्रीमद्गोपीनाथं मनोहरं ।
विग्रहं वल्लभपुरात् श्रीराधाबल्लभं परं ॥
एवञ्च खड्दहग्रामात् श्रीश्यामसुन्दराह्वयं ।
श्रीमन्नन्ददुलालाख्यं शाँड़वनाग्रामतः स्वयं ॥
स्वकं पुरं समानीय स राजा बहुयत्नतः ।
विधिवोधितरुपेण चिरं संसेव्य संयतः ॥
नानाविधानलङ्कारान् मुक्तावज्रबिभूषितान् ।
तापनीयान् मणिमयान् दत्त्वा प्रेरितवांश्च तान् ॥
पिपीतकाख्यद्वादश्यां समाहूयाथ पण्डितान् ।
दानमानैः पुरस्कृत्य दिग्विदिक्षु समाश्रितान् ॥
श्रीमद्गोपीनाथसंज्ञं श्रीगोविन्दं तथा परं ।
विग्रहं संप्रतिष्ठाप्याकरोदाराधनं वरं ॥
वेहालाग्राममारभ्य कुलपीं यावदुत्तमं ।
स स्वव्ययेन पन्थानं कृतबान् सर्व्वतः समं ॥
तथा स्वकीयपुरतः पुरोऽतिशयविस्तृतं ।
चकार राजपन्थानं मञ्जुलं सुपरिष्कृतं ॥
नेत्राम्बराब्धिभूमाने शकसंज्ञकहायने ।
कुलाचार्य्यान् बुधगणांश्चानीय स्वनिकेतने ॥
स च द्वाविंशपर्य्यायिमुख्यानां बहुयत्नतः ।
कुलीनानामेकयायीमकरोद्भूरिदानतः ॥
आम्नायाम्बरपक्षेन्दुमानेऽसौ वङ्गवत्सरे ।
विहाय देहमगमत्पादाम्भोजयुगं हरेः ॥ २२ ॥

रामसुन्दरदेवस्य रायख्यातियुतस्य च ।

अशेषगुणसम्पन्नाः पुत्रा जाता हि पञ्च च ॥
कृष्णमोहनदेवस्तु तेषां ज्येष्ठः प्रकीर्त्तितः ।
व्रजम्येहनदेवो यः स धीमान् मध्यमः स्मृतः ॥

| | |
|---|---|
| चतुःसप्ततिसाहस्राधिकाष्टलक्षमुद्रिकाः । | गोपीमोहनदेवश्च तृतीयो भुवि विश्रुतः ।<br>भूपतेर्नवकृष्णस्य स एव दत्तकः सुतः ॥ |

चतुर्थो निरपत्योऽभूद्देवो गोलोकमोहनः ।
कनिष्ठो वैष्णवोऽपुत्रो देवो भुवनमोहनः ॥ * ॥
माणिक्यचन्द्ररायस्य द्वौ सुतौ च तयोः पुनः ।
ज्येष्ठो राधाकृष्णदेवो निरपत्यो महागुणः ॥
गोपीकृष्णाख्यदेवस्तु कनिष्ठो देवतार्च्चकः ।
शुद्धाचारः कृती दान्तो बुद्धिमान् वंशकारकः ॥ २३ ॥

पुत्राबुभौ महाराजनवकृष्णस्य चाग्रिमः ।

गोपीमोहनदेवस्तु तयोर्यः स च दत्रिमः ॥
कौन्सेलाध्यक्षजान् इष्टे विल्साभिधानकस्य च ।
एवमादिमजेन्रेल् जान् कार्णकस्य तथैव च ॥
गवर्णरमेक्फार्शनस्य देवानीसंज्ञकं पदं ।
स प्राप्य तत्र कर्त्तव्यं कृतवानतिमानदं ॥
तथात्र मत्स्यविपणेर्व्वर्त्मार्थं बहुमूल्यकं ।
कोम्पानये ददौ स्थानं सर्व्वेषां हितकारकं ॥
अङ्केन्दुपक्षभूमाने वङ्गसंज्ञकहायने ।
पौत्रोद्वाहार्थमाहूय स तु यत्नात् शुभे दिने ॥
कुलाचार्य्यान् कुलीनांश्च गृहीत्वा तत्सुसम्मतिं ।
कनिष्ठषड्भ्रातृजयोः कुलयोश्चिरसंस्थितिं ॥
कृतवानथ मात्रा स तुलापुरुषदानकं ।
कारयामास यत्नेन यथोक्तविधिपूर्ब्बकं ॥
ततश्च मातृकृत्ये स सूवर्णदानसागरं ।
कृत्वा ददौ द्विजाग्र्येभ्यस्तानाहूय च सादरं ॥
रामाग्निनागभूमाने इंरेजाब्दे स मानदं ।
गवर्णरस्य कारुण्यात् प्राप्तवानुत्तमं पदं ॥
राजबाहादुरोपाधिं सूवर्णाम्बरसप्तकं ।
अनेकरत्नघटितं शिरोभूषणयुग्मकं ॥
तथा सन्मौक्तिकं हारं फलकं करवालकं ।
शस्त्रिषट्सङ्ख्यपत्तीनां शिविकाग्रगमार्थकं ॥
आज्ञाञ्च प्राप्तवान् सोऽपि बहुसम्मानपूर्ब्बकं ।
चिरमाध्यादिरहितः कृत्वा राज्यमकण्टकं ॥
वह्निवेदाक्षिशशमृन्माने वङ्गाख्यहायने ।
सौरचैत्रे शुक्लपक्षस्यैकादश्यां तिथौ दिने ॥
अर्द्धं नारायणक्षेत्रेऽन्यार्द्धं कारणजीवने ।
देहस्याधायात्मजनैर्गीयमाने जनार्द्दने ॥
भावयन्निष्टदेवस्य रूपं हृदयसंस्थितं ।
ज्ञानतः स महीपालः संप्राप्तोऽथ मृतोऽमृतं ॥ * ॥
कनिष्ठो राजकृष्णाख्य औरसो गुणिमानकृत् ।
राजाग्रगण्यो मान्यश्च वदान्यो गानशास्त्रवित् ॥
स च त्रयोविंशसंख्यपर्य्यायाणां महात्मनां ।
कुलीनानन्दजनकं चकार कीर्त्तिलाभतः ॥
यथा चैतन्यदेवेन कृतं नगरकीर्त्तनं ।
तथा राज्ञा कृतञ्चेति जनाः कुर्व्वन्ति कीर्त्तनं ।
रामाग्निवसुशुभ्रांशुमाने इंरेजिवत्सरे ।
गङ्गातीरे ज्ञानपूर्व्वं मृतोऽगात् हरिमन्दिरे ॥ २३ ॥
कृष्णमोहनदेवस्य तनयौ द्वौ सुशीलकौ ।
राजनारायणाख्यानश्रीनारायणदेवकौ ॥ * ॥
व्रजमोहनदेवस्याप्युभौ पुत्रौ तयोः परः ।
धार्म्मिको रामरत्नाख्यो हरनारायणोऽवरः ॥ * ॥
गोपीकृष्णस्य देवस्य पुत्राश्चत्वार एव च ।
तेषां ज्येष्ठस्तु गोपालकृष्णोऽतिसात्त्विकः स च ॥
श्रीलगोकुलकृष्णस्तु मध्यमो गुणसागरः ।
वाङ्गालवेङ्कं नायेवदेवानीकर्म्मतत्परः ॥
गोपेन्द्रकृष्णगोपेशकृष्णौ सन्तानवर्ज्जितौ ।
तृतीयकतुरीयौ च वाल्ये देहान्तरं गतौ ॥ २४ ॥

वाणाम्बरषिभूमानसमायां शकभूपतेः ।

गोपीमोहनदेवस्य गोष्ठीपतिमहीपतेः ॥
श्रीराधाकान्तदेवेति नाम्ना पुत्रोऽभ्यजायत ।
वङ्गविद्यां तथा हिन्दीं पारसीमारवीं ततः ॥
इंरेजीं संस्कृतञ्चैवाधीतवान् सोऽतियत्नतः ।
तथा चतुर्धुरीणस्य गोपीकान्तस्य धीमतः ॥
सर्व्वाग्रमान्यस्य गोष्ठीपतेर्म्मौलिकराजतः ।
सिंहेत्युपाधियुक्तस्य प्रपौत्रीं स उपायत ॥
गोष्ठीपतिरभूत्तेन कुलाचार्य्यादिसम्मतः ।
वङ्गेंलण्डफ्रान्सजर्म्मान्डेन्मार्कादिप्रदेशतः ॥
रुषियांमेरिकासंज्ञदेशानाञ्चैव मध्यतः ।
विद्यादिविषयाणान्तु सभानां सभ्यतामितः ॥
एवं धर्म्मसभायाश्च तथान्यासां सभापतिः ।
बभूव बहुसम्मानपूर्ब्बकं स महामतिः ॥
स वाणाग्नीभशशभृन्मित इंरेजिवत्सरे ।
प्राप्तः किलकिलानामनगरेऽस्मिन् मनोहरे ॥
गवर्णरस्यैवेच्छातो माजिष्ट्रेटीयकं पदं ।
यदेवैकान्तमान्यानां गुणिनामपि मानदं ॥
मुन्यग्निनागभूमाने ऐरेजाब्दे तु पैतृकं ।
राजोपाधिञ्च कौन्सेलात् वसनं भूषणादिकं ॥
मानवर्द्धनपत्रेण सहितं बहुमूल्यकं ।
तथा गवर्णरस्यैव सभायामादिपीठकं ॥
प्राप्तवानतिदुष्प्राप्यं यल्लोके मानदायकं ।
अङ्कवेदाक्षिभूमाने वङ्गाब्दे विधिपूर्ब्बकं ॥

| | |
|---|---|
| कुलीनानामेकयार्यीं कृतवान् गुणशालिनां ॥<br>तथा कुलप्रदीपाख्यं कूलशास्त्रं प्रयत्नतः । | गयातीर्थप्रयाणार्थं प्रस्थितः पथिमध्यतः ।<br>मुर्शिदावादनगरे श्रीनवावसभाङ्गतः ॥ |

सम्मानितः स च समादरतस्तत्समीपतः ।
राजार्हं हेमवसनं सप्तकं सप्तरूपतः ॥
होमाख्यपक्षिपुच्छेन युक्तं युग्मं किरीटकं ।
कुण्डलं मौक्तिकं हारं फलकं करवालकं ॥
यत् सदा भूपतीनां हि भूरिसम्भ्रमवर्द्धकं ।
प्राप्तवांस्तत्तु दुष्प्राप्यं बहुसम्मानपूर्ब्बकं ॥
अथेन्दुरसपक्षाब्जमाने वङ्गाख्यहायने ।
पौत्रोद्वाहोपलक्षेण सभां कृत्वा शुभे दिने ॥
समाहूय कुलाचार्य्यान् कुलीनान् पण्डितान् स च ।
कायस्थानां चतुर्विंशपर्य्यायाणां तथैव च ॥
सुमुख्यानां कुलीनानां कनिष्ठानाञ्च सर्वशः ।
एवं षड्भ्रातृजातानामेकयार्थीं चकार सः ॥
तत्पत्रिकां कारिकायाः पुस्तकञ्चापि मुद्रितं ।
कुलीनघटकादिभ्यः कृत्वा तेन समर्पितं ॥
पाठशालाध्यापनाय ग्रन्थनिर्म्माणहेतुतः ।
स्कुलवुक् सोसाइटीनाम या सभास्मिन् प्रदेशतः ॥
स तदर्थं नीतिकथा वांलाशिक्षादिपुस्तकं ।
कृतवान् हेक्मते आश्जार् वृक्षायुर्व्वेदवाचकं ॥
पुस्तं पारस्यभाषात इंरेजीभाषया पुनः ।
अनुवाद्य ग्रेटवृटन्देशे राज्ञो महात्मनः ॥
स च राइयल् एसियाटिक् समाजे प्रेरयत्ततः ।
तत्र मुद्राङ्कितं कृत्वा तत्शतं परिमाणतः ॥
अनुवादकसान्निध्ये तस्यैव दर्शनार्थतः ।
कृपया प्रेषयामासुस्तत्सदःस्थाः प्रयत्नतः ॥
तथाहु वव्ययायासकालसम्पादनीयकं ।
शब्दकल्पद्रुमाख्याभिधानञ्च सप्तकाण्डकं ॥
परोपकृतये कृत्वा गुणिभ्योऽभबदपिता ।
यत्प्राप्यालोक्य सन्तुष्टाः सर्व्वदेशीयपण्डिताः ॥
प्रत्येवे पेरयामासुः सुख्यातिपत्रिकादिकं ।
विशेषता दिनेमारराज्येशोहेमहारकं ॥
स्वीयास्यचिह्नसंयुक्तपदकोत्तमधारकं ।
प्रीत्या संप्रेषयामास राज्ञोऽर्थे मानदायकं ॥
पुनस्तदभिधानस्य परिशिष्टमतिश्रमात् ।
निर्म्मार्य मुद्रितं तेन प्रदानार्थं बहुव्ययात् ॥ २४ ॥
अत्रैव कथयामीमं इतिहामं पुरातनं ।
मङ्क्षेपेण च तद्राज्ञो लोकविस्मयकारणं ॥
नागवेदाष्टभूमाने इंरेजाब्दे हि वैरिणा ।
टाकौग्रामनिवामेन केनचित् ख्यातमुन्सिना ॥
दुष्टेनाभीष्टसिद्ध्यर्थं दण्डपारूष्यसंज्ञके ।
विवादस्य पदे मान्यजनानां माननाशके ॥
हुग्लीग्रामस्य मेजिष्ट्रेट् नामकेनाविचारतः ॥
पोलिस्सुप्रिण्टेनडेण्टसंज्ञकस्य समीपतः ।
क्रुधा तन्मिथ्यापवादः पत्रेण प्रकटीकृतः ॥
तेन सेक्रेटरिद्वारा गवर्णराय वेदितः ।
सोऽपि तैर्ब्बहुधा चेष्टां कृतवान् तद्दमार्थतः ॥
किन्तु सेशन्जजाख्यस्य प्राड्विवाकस्य धीमतः ।
अतिसूक्ष्मविचारेण राजा निर्द्दोषतां गतः ॥
तस्माद्विपक्षपक्षाणां क्रूराणाञ्च विशेषतः ।
तेषामुद्यमभङ्गेन लज्जाधिक्यमजायत ॥
तेन सर् हर्वर्ट मेडाक् डेपिउटी गवर्णरः ।
स्नेहेनाक्लिन्नहृदयः सदयश्चातिसत्वरः ॥
आह्बानार्थं तस्य राज्ञः प्रेषयामास पत्रकं ।
स चानीय स्वभबने तञ्च सम्मानपूर्ब्बकं ॥
सान्त्वयित्वा जयात्तस्मै धन्यवादं प्रदत्तवान् ।
एवं गवर्णरो जेनरेल् लार्डडेल्हौसिरात्मवान् ॥
स्वदेशयानसमये सभामध्येऽतिहर्षितः ।
तद्राज्ञो दक्षिणं हस्तं गृहीत्वातिप्रयत्नतः ॥
लार्डेन च तथा लेडी केनिङ्गेन सहोत्सुकः ।
साक्षात् तं कारयामास मानिनां मानवर्द्धकः ॥
पूर्ब्बोक्तमिथ्याभियोगे दण्डार्हकरणाय च ।
उद्योगजन्यदोषस्याप्यकरोत् क्षालनं स च ॥
स तु मुन्सी पुनरपि दण्डपारुष्यवादतः ।
फरासडाङ्गानगरे पलायित्वा मृतस्ततः ॥
राजकृष्णस्य नृपतेर्जाता बसुमिताः सुताः ।
शिवकृष्णो नृपो ज्येष्ठो यस्यास्ति शिवतुल्यता ॥
रूपवान् गुणवांश्चापि कार्लीकृष्णस्तु मध्यमः ।
दयालुर्बुद्धिमान् मान्यो धार्म्मिको मानवोत्तमः ॥
इंरेजीभाषया सोऽपि महानाटकनामकं ।
तथा रसलसेत्याख्यमिं रेजानाञ्च पुस्तकं ॥
वङ्गीयभाषया चैवानुवादमकरोत्ततः ।
राजवाहादुरोपाधिं प्राप्तो गवरन्भेण्टतः ॥
देवीकृष्णोऽतिसरलो देवभक्तस्तृतीयकः ।
अपूर्ब्बगुणसंयुक्त्रोऽपूर्ब्बकृष्णस्तुरीयकः ॥
देवान् कुङर् नामधेयं ग्रन्थं स चोर्दुभाषया ।
निर्म्माणं कृतवान् सोऽपि निजायासव्ययेच्छया ॥
ततो माधवकृष्णस्तु सुशीलः पुत्रवर्ज्जितः ।
पञ्चमो देवताभक्तः सोऽल्पे वयसि संस्थितः ॥
कृतवान् स च वेतालपञ्चविंशतिनामकं ।
ग्रन्थं पारस्यभाषातोऽनुवादं यत्नपूर्वकं ॥
षष्ठः कमलकृष्णस्तु दैवे पैत्र्ये सदा रतः ।

| कारितो मिथ्याभियोगस्तस्य निर्द्दोषभूभृतः । | कार्य्ये बहुगुणोपेतस्तथा पण्डितमण्डितः ॥ |
|---|---|

एवं गङ्गासागरयोः सङ्गमे तेन निर्म्मितं ।
श्रीमत्कपिलदेवस्य मन्दिरं सुपरिष्कृतं ॥
तुलापुरुषदानञ्च श्रीमद्भागवतस्य च ।
पारायणं वागवाजारस्य घट्टे तथैव च ॥
शिवस्य स्थापनं मात्रा कारयामास सोत्सुकः ।
बहुवित्तव्ययेनैव कुलकीर्त्तिविवर्द्धकः ॥
नरेन्द्रकृष्णेतिसंज्ञो यः सुतः स तु सप्तमः ।
रूपवान् गुणवांश्चैव नरेन्द्रेण पुनः समः ॥
स च डेपिउटीमेजिष्ट्रेट् बभूव सदाशयः ।
यो हि यादवकृष्णस्तु कनिष्ठोऽतिदयामयः ॥
तेन देवान् मोश्फकाख्यं पुस्तकञ्चोर्दुभाषया ।
निर्म्माय मुद्रितं तच्च कृत्वा दत्तं निजेच्छया ॥
गयाधाममृतः सोऽपि पुत्रहीनोऽमृतं गतः ।
चन्द्रेषुपक्षभूमाने वङ्गसंज्ञकवर्षतः ॥
राजराधाकान्तदेवसाहाय्येन मुदान्वितैः ।
स्वपर्य्यायकुलीनानामेकयायी कृता च तैः ॥ २४ ॥
श्रीराधाकान्तदेवस्य राजवाहादुरस्य च ।
त्रयः सुताः सिद्धगोष्ठीपतयः स्वकुलेषु च ॥
यतो गोष्ठीपतेः पुत्रा दौहित्राश्च विशेषतः ।
तेषां ज्येष्ठः श्रीमहेन्द्रनारायण इतीरितः ॥
देवब्राह्मणभक्तः स वुद्धिमांश्च गुणान्वितः ।
मध्यमः श्रीलराजेन्द्रनारायण इति श्रुतः ॥
धार्म्मिकः सत्यवादी स कर्म्मदक्षश्च सत्तमः ।
यस्तु श्रीदेवेन्द्रनारायणो देवः स चान्तिमः ॥
व्यवहारज्ञानयुतः प्रतापादिसमन्वितः ।
मन्त्रणादाननिपुणो धीमान् धीमद्भिरावृतः ॥
एते भारतवर्षीयगवर्णरसमाजतः ।
तत्र यानस्याधिकारं कुमारोपाधिकं ततः ॥
पञ्चप्रकारं वसनं भूषणञ्च मनोरमं ।
त्रयः सहोदराः सर्व्वे प्रत्येके लेभिरे समं ॥ २५ ॥
जाताः पुत्रास्त्रयः श्रीमत्शिवकृष्णस्य भूभृतः ।
तेषां श्रीयुतभूपेन्द्रकृष्णो ज्येष्ठः प्रकीर्त्तितः ॥
चत्वारस्तनयाः श्रीलकालीकृष्णस्य भूपतेः ।
तेषां ज्येष्ठः श्रीहरेन्द्रकृष्ण इत्यभिधीयते ॥
वभूव यो डेपिउटीमेजिष्ट्रेटिपदे स्थितः ।
श्रीदेवीकृष्णदेवस्य तनयौ द्वौ च धीमतः ॥
श्रीमदानन्दकृष्णो यस्तयोर्ज्येष्ठः स च स्मृतः ।
श्रीयुतापूर्ब्बकृष्णस्य चत्वारस्तनयास्ततः ॥
श्रेष्ठो ज्येष्ठः श्रीकुमारकृष्णेतिख्यातिसंयुतः ।
श्रीमन्नरेन्द्रकृष्णो यः सम्भूतास्तस्य देहतः ॥
त्रयः पुत्रास्तेषु मध्ये ज्येष्ठपुत्रोऽभवत् पुनः ।
श्रीमद्व्रजेन्द्रकृष्णेति नाम्ना ख्यातः सुलक्षणः ॥ २५ ॥
राजनारायणस्यैव देवोपाधियुतस्य च ।
पुत्रोऽभवज्जगत्कृष्णनामेदानीं मृतः स च ॥
श्रीनारायणदेवस्य त्रयः पुत्रा गुणैर्युताः ।
तेषां ज्येष्ठः श्रीप्रसन्ननारायण इति श्रुतः ॥
गवरन्मेण्टस्य तोशाखानायां प्रथमं स हि ।
अध्यक्षोऽभूत्तत्र कर्म्मनिर्व्वाहकरणेन हि ॥
तस्मै गवर्णरो लार्डहार्डिञ्जः कृपयान्वितः ।
रायवाहादुरोपाधिं दत्तवानतितोषतः ॥
ततो मुरशिदावादे नवावस्य समीपतः ।
नेजामतस्य देवानीं प्राप्तवान् वहुभाग्यतः ॥
तत्रापि च नवावंस्य सन्निधौ लब्धवानयं ।
राजवाहादुरोपाधिमेकान्तमानतः स्वयं ॥ २५ ॥
गोपालकृष्णदेवस्य पुत्राश्चत्वार एव तु ।
श्रीलश्रीकृष्णदेवो यः सर्व्वेषामग्रजः स तु ॥
श्रीमद्गोकुलकृष्णस्य तनयौ द्वौ महात्मनः ।
श्रीमन्नृपेन्द्रकृष्णस्तु ज्येष्ठोऽतिनन्दिवर्द्धनः ॥ २५ ॥
श्रीमन्महेन्द्रादिनारायणदेवस्य धीमतः ।
नाद्यापि तनयो जातो ग्रहवैगुण्यदोषतः ॥
तथा श्रीयुतराजेन्द्रनारायणस्य कायतः ।
श्रीमद्गिरीन्द्रादिनारायणः पुत्रो व्यजायत ॥
एवं श्रीयुक्तदेवेन्द्रनारायणशरीरतः ।
संजातश्च श्रीव्रजेन्द्रनारायणेतिसंज्ञितः ॥ २६ ॥
श्रीमद्भूपेन्द्रकृष्णस्य पुत्रो जातोऽतिसुन्दरः ।
श्रीजितेन्द्रियकृष्णेतिख्यातियुक्तः प्रियङ्करः ॥
श्रीमद्धरेन्द्रकृष्णस्य तनयश्चातिशोभनः ।
श्रीमद्वरेन्द्रकृष्णोऽग्रजातः सरसिजाननः ॥ २६ ॥
जगत्कृष्णस्यात्मजस्तु ज्येष्ठोऽभूदतिशीलवान् ।
श्रीमत्तारणकृष्णेतिनाम्ना ख्यातोऽतिवुद्धिमान् ॥
श्रीलप्रसन्नादिनारायणस्य सुत उत्तमः ।
श्रीमद्भूपेन्द्रादिनारायणः शशधरोपमः ॥ २६ ॥
इत्येकादिकषड्विंशपुरुषान्तातिनिर्म्मला ।
देववंशावली या सा समाप्ता मौलिकातुला ॥

:द्वितीय उदकेन्धनः पर्य्यग्ज्वलनशीलो वाडवः ।

तृतीय उभयेन्धनः पर्य्यग्ज्वलनशीलः भुक्तस्या-
हारस्य रसादिपरिणामनिमित्तञ्च विद्युदादिश्च ।
इति विजयरक्षितोपरि सन्देहभञ्जिका ॥ * ॥
अपिच, --
"मन्दस्तीक्ष्णोऽथ विषमः समश्चेति चतुर्विधः ।
कफपित्तानिलाधिक्यात्तत्साम्याज्जाठरोऽनलः"
॥
तषां कार्य्यं यथा, --
"विषमोवातजान्रोगान् तीक्ष्णः पित्तनिमित्तजान् ।
करोत्यग्निस्तथा मन्दो विकारान् कफसम्भवान् ॥
समासमाग्नेरशिता मात्रा सम्यग्विपच्यते ।
स्वल्पापि नैव मन्दाग्नेर्विषमाग्नेस्तु देहिनः ॥
कदाचित् पच्यते सम्यक् कदाचिच्च न पच्यते ।
तीक्ष्णाग्निरिति तं विद्यात् समाग्निः श्रेष्ठ उच्यते" ॥
इति माधवकरः ॥ अत्यन्ततीक्ष्णाग्निरेव हि भस्म-
क उच्यते । स तु आहाराभावे शोणितादीन् धा-
तून् पाचयित्वा आशु मारयति । इति रक्षितः ॥ *
॥
(देहजन्याग्नेः नादोत्पादकत्वं यथा सङ्गीतदर्पणे, --
"आत्मना प्रेरितं चित्तं वह्निमाहन्ति देहजम् ।
ब्रह्मग्रन्थिस्थितं प्राणं स प्रेरयति पावकः ॥
पावकप्रेरितः सोऽथ क्रमादूर्द्ध्वपथे चरन् ।
अतिसूक्ष्मध्वनिं नाभौ हृदि सूक्ष्मं गले पुनः ॥
पुष्टं शीर्षे त्वपुष्टञ्च कृत्रिमं वदने तथा ।
आविर्भावयतीत्येवं पञ्चधा कीर्त्त्यते बुधैः ॥
नकारं प्राणनामानं दकारमनलं विदुः ।
जातः प्राणाग्निसंयोगात्तेन नादोऽभिधीयते"
अग्नेः सर्व्वसाक्षित्वादि यथा रामायणे, --
"त्वमग्ने सर्व्वदेवानां शरीरान्तरगोचरः ।
त्वं साक्षी मम देहस्थस्त्राहि मां देवमत्तम" ।
यथा च भारते, --
"आदित्यचन्द्रावनिलोऽनलश्च ।
दौर्भूमिरापो हृदयं यमश्च ॥
अहश्च रात्रिश्च उभे च सन्ध्ये ।
धर्म्मश्च जानाति नरस्य वृत्तम्" ॥

आचारमग्निकार्य्यञ्च
सन्ध्योपासनमेव च" ॥
इति मनुः ।)

**अग्निकाष्ठं**, क्ली, (अग्नि + काष्ठं ।) अगुरु । इति

राजनिर्घण्टः ॥

**अग्निकुक्कुटः**, पुं, (अग्नेः कुक्कुटैव ।) ज्वलदग्नि-

तृणोल्का । ज्वलन्त नुडा इति
ख्यातः । इति
त्रिकाण्डशेषः ॥

**अग्निकोणं**, क्ली, (अग्नेः अग्निदेवेन अधिष्ठितमित्यर्थः

कोणं ।) पूर्ब्बदक्षिणकोणं ।
तत्कोणाधिपतिरग्निः ।
इति ज्योतिषं ॥ यथा हलायुधधृतं,
--
"गत्त्वैव तीर्थं कर्त्तव्यं श्राद्धं
तत्प्रीतिहेतुकम् ।
पूर्ब्बाह्णेऽप्यथवा प्रातर्देशे स्यात्
पूर्ब्बदक्षिणे" ॥
पूर्ब्बदक्षिणे अग्निकोणे । इति
प्रायश्चित्ततत्त्वं ॥

**अग्निक्रीडा**, स्त्री, (अग्निभिः क्रीडा ।) अग्निखेला ।

खधूपादित्यागः । आतशवाजीति
ख्याता ॥

**अग्निगर्भः**, पुं, (अग्निः गर्भे अभ्यन्तरे यस्य सः ।)

अग्निजारवृक्षः । सूर्य्यकान्तमणिः ।
इति राजनि-
र्घण्टः ॥ (शमीवृक्षः । त्रि ।
अग्नियुक्तगर्भविशिष्टः ।
यथा, -- "अग्निगर्भां शमीमिव" ।
इति शाकुन्तले ।)

दिकं सप्तजिह्वशब्दे द्रष्टव्यं ॥
(योगविशेषः ।
यथा, --
"सप्तषष्ट्यादितिथयः
सोमवारादिभिर्युताः ।
अग्निजिह्वाः सप्त योगा
मङ्गलेष्वतिगर्हिताः" ॥
इति । योगशास्त्रे ।)

**अग्निदमनी**, स्त्री, (अग्नेः जठरानलस्य दमनी ।)

क्षुपविशेषः । अस्य पर्य्यायः ।
वह्निदमनी २
बहुकण्टका ३ वह्निकण्टारिका ४
गुच्छफला
५ क्षुद्रफला ६ क्षुद्रदुःस्पर्शा ७
क्षुद्रकण्टारिका
८ मर्त्येन्द्रमाता ९ दमनी १० ।
अस्या गुणाः ।
कटुत्वं । उष्णत्वं । रूक्षत्वं ।
वातकफगुल्म-
प्लीहनाशित्वं । रुचिकरत्वं ।
अग्निदीपनत्वं । हृद्य-
त्वञ्च । इति राजनिर्घण्टः ॥

**अग्निदीपनः**, त्रि, (अग्नेः जठरानलस्य दीपनः ।)

अग्निवर्द्धकः ।
जठराग्निकारकौषधविशेषः । यथा
रसेन्द्रचिन्तामणौ, --
"पारदामृतलवङ्गगन्धकं,
भागयुग्ममरिचेन मिश्रितम् ।
तत्र जातिफलमर्द्धभागिकं,
तित्तिडीफलरसेन मर्दितम् ॥
बह्निमान्द्यदशवक्त्रनाशनो,
रामवाण इति विश्रुतो रसः ।
संग्रहग्रहणिकुम्भकर्णक-

अस्य सर्व्वप्रथमाराध्यत्वं ऋग्वेदस्य सर्व्वप्रथमसूक्ते
ऊक्तं यथा, -- "अग्निमीले पुरोहितम्" । इत्यादि ।
विष्णुः । सूर्य्यः ।) अग्निकोणाधिपतिः । इत्यमरः ।
चित्रकवृक्षः । रक्तचित्रकः । मल्लातकः । निम्बुकः ॥
पित्तं । स्वर्णं । इति राजनिर्घण्टः ।

**अग्निकः**, पुं, (अग्नि + सादृश्ये कप्रत्ययः) इन्द्रगोप-
नामरक्तवर्णकीटः । इति हेमचन्द्रः ॥

**अग्निकणः**, पुं, (अग्नेः कणः । अग्नि + कण ।) अग्नि-
कणा । स्फुलिङ्गः । इत्यमरः ॥

**अग्निकारिका**, स्त्री, (अग्नि + कारिका ।) अग्नि-
कार्य्यं । इति हेमचन्द्रः ॥

**अग्निकार्य्यं**, क्ली, (अग्नि + कार्य्यं ।) अग्नावग्नेर्वा कार्य्यं ।
हविर्दानादिपूर्ब्बकाग्निज्वालनं । तत्पर्य्यायः ।
अग्नीन्धनं २ अग्नीध्रा ३ अग्निकारिका ४ ।
इति हेमचन्द्रः ॥ (होमादौ हविर्दानादिपूर्ब्बका-
ग्निज्वालनां अग्नौ सायं प्रातः समिद्धोमानुष्ठान ।
यथा --
"उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः ।

**अग्निगर्भा**, स्त्री, (अग्निः गर्भे यस्याः सा ।)
महाज्योतिष्मतीवृक्षः । इति राजनिर्घण्टः ॥
(शमीवृक्षः ।)

**अग्निचित्**, पुं, (अग्निं चितवान् स्वयम् इति चि
चयने । अग्नौ चेरिति क्विप् तुगागमश्च ।)
अग्निहोत्री । साग्निकः । इत्यमरः ॥ (यथा
रघुवंशे --
"विदधे विधिमस्य नैष्ठिकं ।
यतिभिः सार्द्धमनग्निमग्निचित्" ।)

**अग्निजः**, पुं, (अग्नि + जन् + ड ।) अग्निजारवृक्षः ।
इति राजनिर्घण्टः ॥ (त्रि ।
अग्निजातमात्रे ।)

**अग्निजातः**, पुं, (अग्नेः जातः । अग्नि + जन् + क्त ।)
अग्निजारवृक्षः । इति राजनिर्घण्टः ।
(त्रि । अग्नि-
जातमात्रे ।)

**अग्निजारः**, पुं, (अग्नि + जार, अग्निं जठराग्निं जार-
यति परिपाकशक्तिं प्रदाय वर्द्धयति जॄ कर्म्म-
ण्यण् इति पाणिनिसूत्रं)
औषधविशेषः । अस्य
पर्य्यायः । अग्निनिर्य्यासः २
अग्निगर्भः ३ अग्निजः
४ वडवाग्निमलः ५ जरायुः ६
अर्णवोद्भवः ७
अग्निजातः ८ अग्निजालः ९
सिन्धुफलः १० ।
अस्य गुणाः । कटुत्वं । उष्णत्वं ।
कफवायुसन्निपा-
मामवातखरदूषणं जयेत् ॥
दीयते तु शणकानुमानतः,
सद्य एव जठराग्निदीपनः" ।
"हरीतकी तथा शुण्ठी भक्ष्यमाणा गुडेन वा ।
सैन्धवेन युता वा स्यात् सातत्येनाग्निदीपनी" ॥
इति च भावप्रकाशः ॥

**अग्निदीप्ता**, स्त्री, (अग्नि + दीप्ता) महाज्यो-
तिष्मतीवृक्षः । इति राजनिर्घण्टः ॥
(त्रि । वह्नि-
ज्वलितः । यथा, -- "नापि
कर्ण्याकारफलकैः
बाणैः नापि विषाक्तैः
नाप्यग्निदीप्तफलकैः" इति
कुल्लूकभट्टः ।)

**अग्निदेवा**, स्त्री, (अग्निः देवः अधिष्ठात्री देवता
अस्या इति) कृत्तिकानक्षत्रं । इति
हेमचन्द्रः ॥
(पुं, अग्निदेवः अग्निरूपो देवः ।
अग्निः देवः
अस्य इति विग्रहे त्रि । अग्निपूजकः ।)

**अग्निनिर्य्यासः**, पुं, अग्निजारवृक्षः । इति राज-
निर्घण्टः ॥

**अग्निप्रस्तरः**, पुं, अग्निजनकपाषाणः । चकमकोर
पाथर इति भाषा ॥

**अग्निवर्द्धनं**, क्ली, (अग्नेः जठरानलस्य वर्द्धनं वृद्धि-
कारकम् ।) जठराग्निवृद्धिकारकम् ।
तथा, --
"जीरकं रुचिकृत् स्वर्य्यं गन्धाढ्यं
कफवातनुत् ।

तशूलातिशीतरोगनाशित्वं ।

पित्तप्रदत्वञ्च । इति

राजनिर्घण्टः ॥

**अग्निजालः**, पुं, (अग्नि + जाल ।) अग्निजारवृक्षः ।

इति राजनिर्घण्टः ॥

**अग्निज्वाला**, स्त्री, (अग्नेरिव ज्वाला यस्याः । अग्नेः

ज्वाला इति वा ।) जलपिप्पली ।

धातकी-

वृक्षः । इति राजनिर्घण्टः ॥

अग्निशिखा ॥

(लाङ्गलिकी ।)

**अग्निजिह्वा**, स्त्री, (अग्नेः जिह्वा ।) लाङ्गली-

वृक्षः । विषलाङ्गला इति भाषा ।

इति राज-

निर्घण्टः ॥ अग्नेः

काल्यादिसप्ताच्चींषि । इति

जटाधरः ॥ अग्नेः सप्तशिखाः ।

तासां नामा-

पाके च कटुतीक्ष्णोष्णं

लघुपित्ताग्निवर्द्धनम्” ॥

इति राजवल्लभः ॥

**अग्निभं**, क्ली, (अग्निरिव भाति इति । अग्नि +

भा + क ।) स्वर्णं । इति

राजनिर्घण्टः ॥

**अग्निभूः**, पुं, (अग्नेर्भवतीति । अग्नि + भू + क्विप् ।)

कार्त्तिकेयः । इत्यमरः ॥ (पुरा किल

तारका-

सुरेण उत्पीडितानां देवानां रक्षार्थं

शिवेन

:अग्निरूपं स्ववीजं वह्निमुखे क्षिप्तं । तेन अग्निना

कृत्तिकासु क्षिप्तं । ताश्च
दैवागतगर्भरक्षार्थं
शरवनं प्रविश्य प्रसूताः । तेन
अग्निभूरिति
कार्त्तिकेयः । जले क्ली । इति
वेदपुराणे ॥ यथाह
मनुः, --
"अग्नौ दत्ताहुतिः
सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः
प्रजाः" ॥

**अग्निभूतिः**, पुं, (अग्नि + भू + क्ति ।) बौद्धभेदः ।

सच शेषजैनाचार्य्यशिष्यः । इति
हेमचन्द्रः ॥

**अग्निमणिः**, पुं, सूर्य्यकान्तमणिः । इति जटाधरः ॥

**अग्निमन्थः**, पुं, (अग्निं मथ्नाति इति । मन्थ विलो-

डने । कर्म्मणि अण् ।)
गणिकारिकावृक्षः ।
इत्यमरः ॥ (यथा वैद्यके, --
"अग्निमन्थः श्वयथुहृद् वीर्य्योष्णः
कफवातहृत् ।
पाण्डुनुत् कटुकस्तिक्तस्तुवरो
मधुरोऽग्निदः" ॥
अग्निमन्थकुसुमशाकस्तु --
"अग्निमन्थभववालसुनीता
सप्तरात्रमुदके सुसाधिता ।
तक्रतप्तघृतयुक्तपाचिता
हिङ्गुना जनितवासवासिता" ॥
अपिच --

**अग्निवीजं**, क्ली, (अग्निः वीजं उत्पत्तिस्थानं यस्य तत् ।

अग्नेः स्वर्णस्य उत्पत्तिं यथाह मनुः, --
"अपामग्नेश्च संयोगात् हेमं रूप्यञ्च निर्बभौ ।
तस्मात् तयोः स्वयोन्येव निर्णेको
गुणवत्तरः" ॥)
स्वर्णं । इति त्रिकाण्डशेषः ॥

**अग्निवीर्य्यं**, क्ली, (अग्नेः वीर्य्यं सारैव ।) स्वर्णं ।

इति राजनिर्घण्टः ॥ (त्रि, अग्नितुल्यद्रव्ये) ।

**अग्निशिखं**, क्ली, (अग्नेरिव शिखा केशरः अस्य ।)

स्वर्णं । इति राजनिर्घण्टः ॥ कुङ्कुमं ।
कुसुम्भपुष्पं ।
इति मेदिनी ॥ (जाङ्गलिवृक्षः) ।

**अग्निशिखः**, पुं, (अग्नेरिव शिखा रक्तवर्णः केशरः

अस्य ।) कुसुम्भवृक्षः । कुङ्कुमं । दीपः ।
बाणः ।
इति शब्दरत्नावली ॥

**अग्निशिखा**, स्त्री, (अग्नेरिव शिखा केशरः अस्याः ।)

लाङ्गलिकीवृक्षः । विषलाङ्गला इति भाषा ।
वृक्षविशेषः । तस्य पर्य्यायः । विशल्या १
अ-
नन्ता २ फलिनी ३ शक्रपुष्पी ४ । इत्यमरः
॥
(अग्नेः शिखा ।) ज्वाला । आगुनेर शिष इति
भाषा ॥

**अग्निशेखरं**, क्ली, (अग्नेरिव शेखरं केशरः अस्य ।)

कुङ्कुमं । इति राजनिर्घण्टः ॥

**अग्निष्टोमः**, पुं, (अग्नीनां स्तोमः । अग्नेः स्तुत्-

स्तोमसोमा इति षः ।) यज्ञविशेषः । इति
शब्दरत्नावली ॥ तस्य विधिः । ज्योतिष्टोमेन
स्वर्गकामो यजेतेति
वाक्यविहितज्योतिष्टोमना-

तृतीयभागे उत्थाय प्रयोगारम्भः कार्य्यः
। तत्र
पात्रासादनं । पात्राणि च ग्रहाश्चमसाः
स्थाल्य-
श्चेति । तत्र ग्रहपात्राणि वितस्तिमात्राणि
उलूखलाकाराणि । ऊर्द्धपात्राणि
चमसपात्राणि
तावत्परिमितान्येव तिर्य्यगाकृतीनि
कोणचतु-
ष्टयविशिष्टानि धारणार्थदण्डयुक्तानि ।
स्थाल्यो
मार्त्तिक्यः । तत आरभ्य
सोमलताकण्डनेन
सोमरसं निष्कास्य निष्कास्य
ग्रहैश्चमसैश्च होमः
कर्त्तव्यः । तत्र सूर्य्योदयानन्तरं
आग्नेयपशुयागः
कर्त्तव्यः । एवमुक्थ्यपर्य्यायान्ते कृते
प्रातःसवन-
समाप्तिः । ततो मध्यन्दिनसवनं । तत्र
दक्षिणा-
दानं । दक्षिणा च द्वादशोत्तरशतं गावः ।
तत-
स्तृतीयसवनं । इत्थं
प्रातःसवनमाध्यन्दिनसवन-
तृतीयसवनरूपसवनत्रयात्मकः
अग्निष्टोमः प्र-
धानयागः । इतरेऽङ्गयागाः ।
तृतीयसवनसमा-
प्त्युत्तरमवभृथयागः । उदके
वरुणदेवताकपुरो-
डाशहोमः । तदनन्तरमनुबन्ध्या
पशुयागः ।
तत्र गौः पशुः । तस्य कलिनिषिद्धत्वात्
तस्य

"अग्निमन्थोऽथ हृद्यश्च त्रिदोषशमनः
सरः । ।
आध्मानच्छर्द्दिहा
शोथचक्षूरोगविषापहः" ॥)

**अग्निमारुतिः**, पुं, (अग्नौ जठराग्निविषये मारुतिः

हनूमान् इव । तस्य जठराग्नौ
वातापिप्रभृतयो
राक्षसाः भस्मीभूता आसन् । इत्यसौ
अग्निमा-
रुतिरुच्यते) अगस्त्यमुनिः । इति
हेमचन्द्रः ॥

**अग्निमुखः**, पुं, (अग्निः मुखं यस्य, बहुव्रीहिः ।)

देवता । ब्राह्मणः । इति मेदिनी ॥
चित्रकवृक्षः ।
भल्लातकः । इति विश्वः ॥ (क्ली ।
अग्नेः पञ्चसु
मुखेषु ।)

**अग्निमुखी**, स्त्री, (अग्निरिव मुखं यस्याः । बहु-

व्रीहिः ।) भल्लातकी (भेला) ।
इत्यमरः ॥ ला-
ङ्गलिकी । इति राजनिर्घण्टः ॥

**अग्निरक्षणं**, क्ली, (अग्नेः रक्षणम् । षष्ठीतत्पुरुषः ।)

अग्न्याधानं । अग्निहोत्रं । इति
हेमचन्द्रः ॥

**अग्निरजाः**, [स्] पुं, (अग्नेः रजः स्फुलिङ्गैव ॥

इन्द्रगोपाख्यकीटः । इति हेमचन्द्रः
॥ (क्ली --
अग्निवीर्य्यं । स्वर्णं) ।

**अग्निरुहा**, स्त्री, मांसरोहिणी । इति राजनिर्घण्टः ॥

**अग्निवर्द्धकः**, त्रि, (अग्निं जठरानलं वर्द्धयति इति)

मकयागविशेषस्य गुणविकारोऽग्निष्टोमो नाम ।
तस्य कालो वसन्तः । तत्राधिकारी
अधीतवेद
आहिताग्निश्च । द्रव्यं सोमः । देवता
इन्द्रवाय्वा-
दयः । ऋत्विजः षोडशः । तेषाञ्च चत्वारो
गणाः ।
होतृगणः १ अध्वर्य्युगणः २ ब्रह्मगणः ३
उद्गातृ-
गणः ४ । एकैकस्य गणस्य चत्वारश्चत्वारः
। तत्र
होतृगणे होता १ प्रशास्ता २ अच्छावाकः ३
ग्रावस्तोता ४ । अध्वर्य्युगणे अध्वर्य्युः १
प्रति-
प्रस्थाता २ नेष्टा ३ उन्नेता ४ । ब्रह्मगणे ब्रह्मा
१
ब्राह्मणाच्छंशी २ अग्नीतृ ३ पोता ४ ।
उद्गातृ-
गणे उद्गाता १ प्रस्तोता २ प्रतिहर्त्ता ३ सु-
ब्रह्मण्यः ४ । स च पञ्चाहसाध्यः । प्रथमदिने
दीक्षा दीक्षणीयादितदङ्गानुष्ठानं । तत्र द्वितीय-
दिवसे प्रायणीययागः सोमलताक्रयणं । ततो
द्वितीयतृतीयचतुर्थदिवसेषु प्रातःकाले
सायंकाले
च प्रवर्ग्योपसन्नामकयागानुष्ठानं ।
चतुर्थदिवसे
प्रवर्ग्योद्वासनानन्तरं अग्नीषोमीयपश्वनुष्ठानं ।
तत्र यस्य यजमानस्य गृहे
पितृपितामहप्रपिता-
महानां मध्ये केनापि वेदो नाधीतोऽग्निष्टोमो
वा न कृतः स दुर्ब्राह्मणो भवति । तस्य दौ-
र्ब्राह्मण्यपरिहारायाश्विनपशुः कर्त्तव्यः ।
यस्य
यजमानस्य पितृपितामहप्रपितामहानां मध्ये
केनापि सोमपानं न कृतं स्यात् तस्य
सोमपान-
विच्छेददोषपरिहारार्थमैन्द्राग्नपश्वनुष्ठानं
कर्त्तव्यं ।

च नित्यत्वात् तत् स्थाने आमीक्षायागः
। तत
उदयनीया तत उदवसानीया । सा च
पञ्चम-
दिवसे यावद्रात्रि कर्त्तव्या ।
तत्समाप्तावग्निष्टोम-
यागसमाप्तिः ।
इत्यग्निष्टोमयागीयपदार्थकला-
सूची ॥

**अग्निष्ठः**, पुं, (अग्नौ तिष्ठतीति । अग्नि + स्था + कः) ।

लौहमयतण्डुलादिभर्जनपात्रं । इति
त्रिकाण्ड-
शेषः ॥ (कडा इति भाषा) ।

**अग्निसखः**, पुं, (अग्नेः सखा इति समासे राजाहः-

सखिभ्यष्टच् इति समासान्तष्टच् ।)
वायुः ।
वायुसखोऽग्निरिति दर्शनात् ॥

**अग्निसन्दीपनं**, त्रि, (अग्नेः सन्दीपनम् । सम् +

दीप् + ल्युट् ।) वह्निवर्द्धकौषधादि ।
यथा, --
"एला त्वङ्नागपुष्पाणां
मात्रोत्तरविवर्द्धिता ।
मरिचं पिप्पली शुण्ठी चतुःपञ्चषड्उत्तरा
॥
द्रव्याण्येतानि यावन्ति तावती
सितशर्करा ।
चूर्णमेतत् प्रयोक्तव्यमग्निसन्दीपनं परं" ॥
इति भावप्रकाशः ॥
अपि च ।
"अग्निसन्दीपनं हृद्यं लबणार्द्रकभक्षणं" ।
इति राजवल्लभः ॥

**अग्निसम्भवः**, पुं, (अग्निः सम्भवो यस्य सः । अग्नि-

अग्नि + वृध् + ण्वुल् ।)
अग्निवृद्धिकारकौषधा-
दिः । आग्नेयः । इति वैद्यकं ॥

**अग्निवल्लभः**, पुं, (अग्नेः वल्लभः उद्दीपकत्वात् प्रियः ।)

सालवृक्षः । रालः । इति
राजनिर्घण्टः ॥

**अग्निवाहः**, पुं, (अग्नेः वाहः ।) धूमः । इति त्रि-

काण्डशेषः ॥ (छागः) ।

**अग्निबाहुः**, पुं, (अग्नेः बाहुरिव ।) धूमः । इति

जटाधरः ॥ (प्रियव्रतपुत्त्रः ।
स्वायम्भुवमनुपुत्त्रः ।)

**अग्निवित्**, पुं, (अग्निं वेत्ति इति विदः क्विप् ।)

अग्निचित् । अग्निहोत्री । इति
हेमचन्द्रः ॥
(अग्निसंस्कारज्ञः ।)

इत्थं त्रयाणां पशूनां युगपदालम्भपक्षे
एकस्मि-
न्नेव यूपे त्रयाणां पशूनां बन्धनं । इत्थं पशु-
त्रयानुष्ठानं चतुर्थदिवसे तस्मिन्नेव दिने वा

+ सम् + भू + अप् ।) अरण्यकुसुम्भः ।
इति राज-
निर्घण्टः ॥ (कार्त्तिकेयः । त्रि ।
अग्निसमुत्पन्नः ।)

**अग्निसहायः**, पुं, (अग्नेः जठरानलस्य सहायः

उद्दीपकः । कपोतमांसस्य
अग्निवर्द्धकत्वात् ।)
वनकपोतः । इति राजनिर्घण्टः ॥ (अग्नेः
सहायः
बन्धुः । वायुः ।)

**अग्निसारं**, क्ली, (अग्नेरिव सारः बलं यस्य ।)

रसाञ्जनं । इति राजनिर्घण्टः ॥

**अग्निस्तम्भनं**, क्ली, (अग्नेः स्तम्भनम् । षष्ठीतत्-

पुरुषः ।) मन्त्रौषधिद्वारा
अग्नेर्दाहिकाशक्ति-
निवारणं । तद्यथा, --
“मालूरस्य वासां गृह्य जलौकां तत्र
पेषयेत् ।

:हस्तौ तु लेपयेत्तेन अग्निस्तम्भनमुत्तमं ॥

मालूरस्य स्थाने मानुषस्य इति वा पाठः ॥ १ ॥
शाल्मलीरसमादाय खरमूत्रे निधापितं ।
अग्न्यागारे क्षिपेत्तेन अग्निस्तम्भनमुत्तमं ॥ २ ॥
वायसी उदरं गृह्य मण्डूकवसया सह ।
गुटिकां कारयेत्तेन ततोऽग्निं प्रक्षिपेद्वशी ॥
एवमेतत् प्रयोगेण अग्निस्तम्भनमुत्तमं ॥ ३ ॥
रक्तपाटलमूलन्तु अवष्टब्धञ्च मूलकैः ॥
दिव्यं स्तम्भयते क्षिप्रं पयःपिण्डं जलान्तकं ॥ ४ ॥
मुण्डीतका वचा कुष्ठं मरीचं नागरं तथा ॥
चर्व्वित्वा च इमं सद्यो जिह्वया ज्वलनं लिहेत् । ५ ।
गोरोचनां भृङ्गराजं चूर्णीकृत्य घृतं समं ॥
दिव्यस्तम्भश्च पीत्वा स्यान्मन्त्रेणानेन वै तथा" । ६ ।
ओमह्यं अग्निस्तम्भनं कुरु । इति गारुडे १८६ अध्यायः ॥

**अग्निस्वात्ताः**, पुं, (अग्निना सुष्ठु यथा स्यात् एवम्
आत्ताः भक्षिताः, श्रौतस्मार्त्ताग्निदग्धा इत्यर्थः ।
मन्वादिस्मृतिषु मूद्र्द्धर्व्वन्यषकारवान् एव पाठः ।
मूद्र्द्धर्व्वन्यादेशस्तु न युक्तः ।)
मरीचिपुत्त्रपितृगण-
विशेषः । नित्यबहुवचनान्तशब्दोऽयं । इति
शब्दमाला, --
काले आरम्भणीयः । तत्र शतहोमे सूर्य्यो देवता सायंकाले अग्निर्देवता ।
आधानानन्तरं
प्रथमपौर्णमास्यां दर्शपूर्णमासयागारम्भः क-
र्त्तव्यः । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति
विधिवाक्यं । तत्र षड्यागाः । पौर्णमास्यां त्रयः । अमायां त्रयः ।
पौर्णमास्यामाग्नेयाग्नी-
षोमीयोपांशुयागास्त्रयो यागाः ।
अमावस्या-
यामाग्नेयैन्द्रदधिपयो यागास्त्रयः ।
तत्रामायां
कर्त्तव्ययागत्रयस्य दर्शपदं नामधेयं ।
पौर्ण-
मास्यां कर्त्तव्ययागत्रयस्य पूर्णमासपदं नाम-
धेयं । दर्शश्च पूर्णमासश्च दर्शपूर्णमासाविति
द्वन्द्वः । पौर्णमासयागस्य प्राथमिकत्वेऽपि अल्पा-
च्तरमिति पाणिनीयानुशासनानुसारेण दर्श-
शब्दस्याल्पाच्कत्वात् पूर्ब्बनिपातः ।
दर्शपूर्ण-
मासावपि यावज्जीवं कार्य्यौ । तत्रापि त्रयाणां
वर्णानामुपरि
लिखितान्धत्वाद्यधिकारप्रतिबन्ध-
कीभूतदोषसम्बन्धाभाववतां
कृताग्निधानानां स-
पत्नीकानामधिकारः । सामान्यतः पर्ब्बण्यारम्भः
प्रतिपदि याग इति परिभाषा । तत्राकृत-

**अग्नीन्धनं**, क्ली, (अग्नौ इन्धनम् । अग्नि + इन्ध् +
करणे ल्युट् ।) अग्निकार्य्यं ।
हविर्द्धानादिपूर्ब्ब-
काग्निज्वालनं । इति हेमचन्द्रः ॥ यथाह मनुः --
"अग्नीन्धनं भैक्षचर्य्यामधः शय्यां गुरोर्हितम् ।
आसमावर्त्तनात् कुर्य्यात् कृतोपनयनो द्विजः" ॥

**अग्न्यस्त्रं**, क्ली, (अग्निमयम् अस्त्रम् । कर्म्मधारयः ।)
आग्नेयास्त्रं । अग्निघटितास्त्रं ।
वन्दूककामान
इत्यादिभाषा ॥

**अग्न्याधानं**, क्ली, (अग्नेः आधानं । अग्नि + आ +
धा + ल्युट् ।) श्रुतिविहिताग्निसंस्कारः । अग्नि-
रक्षणं । अग्निहोत्रं । इति हेमचन्द्रः ॥

**अग्न्यालयः**, पुं, (अग्नेः आलयः ।) यज्ञाग्न्याधार-
कुण्डं । इति जटाधरः ॥

**अग्न्युत्पातः**, पुं, (अग्नेः उत्पातः ।) आकाशादिषु
अग्निविकारः । धूमकेतूल्कापातादिः । अग्नि-
निष्ठोत्पातो वा । स तु मन्त्रादिद्वारा अग्ने-
र्दाहशक्तिनिवारणं । तत्पर्य्यायः ।
उपाहितः २ ।
इत्यमरस्तट्टीका च ॥

**अग्रं**, क्ली, (अग्यते अगति वा । अग कुटिलायां

"विराट्सुताः सोमसदः साध्यानां
पितरः स्मृताः ।
अग्निस्वात्ताश्च देवानां मारीच्या
लोकविश्रुताः" ॥
इति मनुः ।

**अग्निहोत्रं**, क्ली, (अग्नये होत्रम् अत्र इति
बहुव्रीहिः ।) यज्ञविशेषः । तत् द्विविधं ।
माससाध्यं यावज्जीवनसाध्यञ्च ।
द्वितीये वि-
शेषोऽयं । तदग्नौ यावज्जीवं प्रत्यहं
प्रातः
सायं हवनं । तदग्निना यागकर्त्तुर्दाहश्च
। इति
स्मृतिः ॥ तत्र क्रमो यथा ।
ब्राह्मणक्षत्त्रिय-
वैश्यानां कृतदारपरिग्रहाणां
काणत्वान्धत्व-
वधिरत्वपङ्गुत्वादिदोषरहितानां
वर्णक्रमेण वस-
न्तग्रीष्मशरत्सु अग्न्याधानं विहितं ।
अग्न-
यस्त्रयः गार्हपत्यः १ दक्षिणाग्निः २
आहवनीयः
३ । एषामाधानं नाम देशविशेषे
तत्तन्मन्त्रैः
स्थापनं । तेष्वग्निषु सायंकाले
प्रातःकाले चा-
ग्निहोत्रहोमः कर्त्तव्यः । अग्निहोत्रं नाम
होमस्य
नामधेयं । अग्नये होत्रं होमो यस्मिन्
कर्म्म-
णीति व्यधिकरणबहुव्रीहिः । तत्र
द्रव्याणि
दश । पयः १ दधि २ यवागूः ३ घृतं ४
ओदनः
५ तण्डुलाः ६ सोमरसः ७ मांसं ८
तैलं ९ माषाः
सोमयागस्य यजमानस्य
पौर्णमास्यामाग्नेयपुरो-
डाशयागः आज्येनोपांशुयाजयागः ।
अमायान्तु
आग्नेयपुरोडाशयागः ऐन्द्राग्नपुरोडाशयागः
।
कृतसोमयागस्य यजमानस्य तु
पौर्णमास्यामा-
ग्नेयपुरोडाशयागः आज्येनोपांशुयाजयागः
अग्नी-
षोमीयपुरोडाशयागः । अमायान्तु
आग्नेयपुरो-
डाशयागः ऐन्द्रपयोयागः
ऐन्द्रदधियागश्चेति
त्रयः । तत्र ऋत्विजश्चत्वारः । अध्वर्य्युः
१ ब्रह्मा
२ होता ३ अग्नीदिति ४ ।
यजुर्वेदकर्म्मकर्त्ता
अध्वर्य्युः । ऋग्यजुःसामवेदत्रयकर्म्मकर्त्ता
ब्रह्मा ।
ऋग्वेदकर्म्मकर्त्ता होता । अग्नीत्तु प्रायशो-
ऽध्वर्य्योरेवानुयायी तत्प्रेरितकर्म्मकर्त्ता ।
पुरो-
डाशो व्रीहितण्डुलैर्यवतण्डुलैर्वा कर्त्तव्यः ।
अग्नि-
होत्रवद्येन द्रव्येणारम्भः कृतस्तेनैव द्रव्येण
याव-
ज्जीवं यागः कर्त्तव्यः ।
आरम्भवेलायामिच्छैव
नियामिकेत्यादिदिङ्यात्रमिदं । इति
यजुर्वेदः ॥ * ॥
यज्ञाग्निसञ्चयः । तत्पर्य्यायः । अग्न्याधानं
२ अ-
ग्निरक्षणं ३ । इति हेमचन्द्रः ॥

**अग्निहोत्रः**, पुं, अग्निः । घृतं । इति मेदिनी ॥

**अग्निहोत्री**, [न्] पुं, (अग्निहोत्रम् अस्यास्तीति ।
गतौ ऋज्रेन्द्रेति साधु ।) उपरिभागः ।
आगा
इति भाषा । अस्य पर्य्यायः । शिरः २
शिखरं ३-
इत्यमरः ॥ पुरस्तात् । अवलम्बनं ।
पलपरि-
माणं । प्रान्तं । समूहः । इति मेदिनी ॥
(भिक्षाविशेषः । ग्रासचतुष्टयम् ।
"ग्रासप्र-
माणा भिक्षास्यादग्रं ग्रासचतुष्टयम्" ॥
इति
स्मृतेः ।)

**अग्रः**, त्रि, श्रेष्ठः । उत्तमः । इत्यमरः ॥ प्रधानं ।
अधिकः । प्रथमः । इति मेदिनी ॥

**अग्रगण्यः**, त्रि, (अग्रे गण्यः । गणसङ्ख्याने, यत् ।)
अग्रेगणनीयः । यथा, --
"शमनभवनयाने यद्भवानग्रगण्यः" ।
इति महानाटकं ॥

**अग्रगामी**, [न्] त्रि, (अग्रे गच्छतीति । अग्र +
गम् + णिन् ।) अग्रे गमनकर्त्ता ।
अग्रेसरः ।
इति हेमचन्द्रः ॥

**अग्रजः**, पुं, (अग्रे जात इति सप्तम्यां जनेः डः ।)
ज्येष्ठभ्राता । तत्पर्य्यायः । पूर्ब्बजः २
अग्रियः ३ ।
इत्यमरः ॥ (यथाह मनुः, --
"सर्व्वेषां
धनजातानामाददीताग्र्यमग्रजः" ।)
ब्राह्मणः । इति हेमचन्द्रः ॥ अग्रे जाते त्रि
॥

**अग्रजङ्घा**, स्त्री, (अग्रा जङ्घा अवयवावयविनोर-
भेदात् (कर्म्मधारयः । अथवा जङ्घाया
अग्रं षष्ठी-

१० । सम्प्रति कलियुगे पयसा तण्डुलैर्यवाग्वा
च होम-शिष्टाचारप्रसिद्धः । तत्र एक ऋत्विक्
नित्यं होमः यजमानेन वा कर्त्तव्यः ऋत्विजा वा
कारयितव्यः । अमावास्यायान्तु रात्रौ यवा-
गूद्रव्येण यजमानेनैव कर्त्तव्यः । स चाग्निहोत्र-
होमः आरम्भप्रभृति यावज्जीवनं कर्त्तव्यः ।
प्रथमदिने पूर्ब्बोक्तानां दशानां द्रव्याणां मध्ये
सम्प्रति प्रचलद्रूपाणाञ्च मध्ये येन द्रव्येण
प्रथमाग्निहोत्रहोमः कृतः तेनैव द्रव्येण या-
वज्जीवनं कर्त्तव्यः । प्रथमहोमश्च यस्मिन्
दिने अग्न्याधानं कृतं तस्मिन् दिने सायं-
अत इनिठनावितीनिः ।)
अग्निहोत्रयागकर्त्ता ।
तत्पर्य्यायः । अग्निवित् २ आहिताग्निः ३ । इति
हेमचन्द्रः ॥ अग्निचित् ४ । इत्यमरः ॥ साग्निकः
५ । इति पुराणं ॥
(“अग्निहोत्र्यपविध्याग्नीन् ब्राह्मणः कामकारतः ।
चान्द्रायणं चरेन्मासं वीरहत्यासमं हि तत्” ॥
इति मनुः ।)

**अग्नीध्रः**, पुं, (अग्नि + इन्ध + रन् ।) ऋत्विग्विशेषः ।

तस्य कर्म्माग्निरक्षणं । इत्यमरः ॥ (अग्निद्वारा
वरणीयो ऋत्विग्विशेषः । काम्यायां प्रियव्रतात्
उत्पन्नो नृपभेदः । स्वायम्भुवमनुपुत्त्रो राजभेदः ।)

**अग्नीध्रा**, स्त्री, अग्निकार्य्यं । हविर्द्धानादिपूर्ब्बकाग्नि-

ज्वालनं । इति हेमचन्द्रः ॥

तत् राजदन्तादित्वात् परनिपातः)
प्रतिजङ्घा ।
जङ्घाग्रभागः । इति हेमचन्द्रः ॥

**अग्रजन्मा**, [न] पुं, (अग्रे जन्म यस्य स बहुव्रीहिः,)

(जन् + भावे मनिन्) ब्राह्मणः ॥ इत्यमरः ॥
“अध्यापनमध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहश्चैव षट्कर्म्माण्यग्रजन्मनः” ॥
मनुः । ज्येष्ठभ्राता । ब्रह्मा । इति विश्वः ॥

**अग्रजातकः**, पुं, (अग्रे जातं जन्म यस्य स बहुव्रीहिः,

(जन् + भावे क्तः) ब्राह्मणः । समासान्त कः इति
शब्दरत्नावली ॥

**अग्रजातिः**, पुं, (अग्रे जातिर्जन्म यस्य सः) (जन् +
भावे क्तिन्) ब्राह्मणः । इति
हेमचन्द्रः ॥

**अग्रणीः**, त्रि, (अग्रे नीयतेऽसौ अग्र + नी + क्विप्
अग्रग्रामाभ्याञ्च इति पाणिनिसूत्रेण
णत्वं ।)
(वह्नौ च पुं, यथा चास्याग्रणीत्वं
तथाग्निशब्दे
निरुक्तव्याख्यायामुक्तम्) अग्रिमः ।
श्रेष्ठः । इति
हेमचन्द्रः ॥

**अग्रतः**, [स्] (अग्रे अग्र + सप्तम्यर्थे तस् अव्यं)
अग्रे । प्रथमे । तत्पर्य्यायः । पुरतः
२ पुरः ३ ।
इत्यमरः ॥

**अग्रतःसरः**, त्रि, (अग्रतः अग्रे सरति गच्छति यः
सः अग्रतः + सृ + टः । स्त्रियां
ङीप् अग्रतः-
सरी) (पुरोऽग्रतोऽग्रेषु सर्त्तेः इति
पाणिनि-
सूत्रम्) अग्रगामी । इत्यमरः ॥

**अग्रदानी**, [न्] पुं, (अग्रे दानं प्रेतोद्देशेन तिला-
द्यर्पणं ग्राह्यत्वेन विद्यतेऽस्य अग्र +
दान + विद्य-
मानार्थे इन्) पतितब्राह्मणविशेषः ।
स च प्रेत-
सम्प्रदानकषडङ्गतिलादिद्रव्यग्राही
। यथा, --
“लोभी विप्रश्च शूद्राणामग्रे दानं
गृहीतवान् ।
व्रीहिकालयोरिति सूत्रेण हा + ल्युट्
युक् च ।)
मासविशेषः । तस्य व्युत्पत्तिर्यथा, --
“हायनस्या-
ग्रोऽग्रहायणः निपातनात्
परनिपातनत्वञ्च” ।
इत्यमरटीकायां भरतः ॥
मार्गशीर्षमासः । इति
शब्दरत्नावली ॥ अस्य पर्य्यायः
आग्रहायणिके
जातफलं तत्कृत्यञ्च मार्गशीर्षे
द्रष्टव्यम् ॥

**अग्राह्यं**, त्रि, (न ग्राह्यं ग्रहणीयं ग्रह + कर्म्मणि
।
ण्यत् ग्रहणायोग्ये) अग्रहणीयं ।
ग्रहणायोग्यं
यथा, --
“अग्राह्यं शिवनैवेद्यं पत्रं पुष्पं फलं
जलं ।
सालग्रामशिलास्पर्शात् सर्व्वं याति
पवित्रतां” ॥
इति तिथ्यादितत्त्वं ॥

**अग्रिमः**, त्रि, (अग्रे भवः अग्र + डिमन्) प्रधानं
।
उत्तमः । इति हेमचन्द्रः ॥ ज्येष्ठः ।
अग्रजः ।
इति जटाधरः ॥

**अग्रिमा**, स्त्री, (अग्रे भवा अग्र + डिमन्) लवणी-
फलं । लोणा इति ख्याता । इति
शब्दचन्द्रिका ॥

**अग्रियं**, त्रि, (अग्रे भवम् अग्र + घ) प्रधानं । इत्य-
मरः ॥

इति देवलः । दिधिषूर्दीर्घोकारान्तोऽपि ॥

**अग्रेवणं**, क्ली, (वनस्याग्रे राजदन्तादित्वात् पर-
निपातः अलुक् । वनं पुरगे आदित्वात् णत्वम् ।)
वनस्याग्रभागः । इति शब्दमाला ॥

**अग्रेसरः**, त्रि, (अग्रे सरति गच्छतीति अग्रे + सृ +
टः ।) अग्रे गमनकर्त्ता । तत्पर्य्यायः । पुरोगः
२ प्रष्ठः ३ अग्रतःसरः ४ पुरःसरः ५ । इत्य-
मरः ॥ अग्रगामी ६ अग्रसरः ७ अग्रगः ८ पुरो-
गमः ९ पुरोगामी १० । इति हेमचन्द्रः ॥

**अग्रेसरिकः**, त्रि, (अग्रेसरणं गमनम् अग्रे + सृ +
भावे अप् अग्रेसरे गमने प्रसृतः अग्रेसर + ठन्
अग्रगामिनि ।) अग्रगामी । इति त्रिकाण्डशेषः ॥

**अग्र्यः**, त्रि, (अग्रे भवः अग्र + यत् ।) प्रधानं ।
उत्तमः इत्यमरः । ज्येष्ठभ्रातरि पुं इति तट्टी-
कायां रमानाथः ॥

**अघ** इ ङ गतौ (अघि गतौ कर्म्मणि लट् ते इदितो
नुम् धातोरिति पाणिनिसूत्रेण नुम् अङ्घ्यते ।
कर्त्तरि लट् ते अङ्घते) । निन्दायां । आरम्भे ।
जवे । इति कविकल्पद्रुमः ॥ जवो वेगगतिः । इ
अङ्घ्यते । ङ अङ्घते वायुर्वेगेन गच्छतीत्यर्थः ।
जवे एव कैश्चित् पठ्यते । इति दुर्गादासः ॥

**अघ** त् क तत्कृतौ । इति कविकल्पद्रुमः ॥ तत्-
कृतिः पापकृर्तिः । अघयति व्याधः । कर्म्मणो-
ऽर्थमध्यपाठादकर्म्मकोऽयं । तथा च, --
“धातोरर्थान्तरे वृत्ते धात्वर्थेनोपसङ्ग्रहात् ।
प्रसिद्धेरविवक्षातः कर्म्मणोऽकर्म्मिका क्रिया” ॥
इति गोयीचन्द्रः ॥ धात्वर्थेन सह कर्म्मण उप-
सङ्ग्रहादित्यर्थः । क्रमेणोदाहरणानि । नदी
वहति क्षरतीत्यर्थः । अघयति व्याधः । भवति
घटः । आहते जनः । इति दुर्गादासः ॥

**अघं**, क्ली, (अघ पापकरणे चुरां अघयति अघ +

ग्रहणे मृतदानानामग्रदानी बभूव सः” ॥
इति ब्रह्मवैवर्त्तपुराणं ॥ तत्पर्य्यायः । आग्रहा-
रिकः २ । इति स्मृतिः ॥

**अग्रपर्णी**, स्त्री, (अग्रे पर्णं पत्रं यस्याः सा जाति-
त्वात् ङीप्) अजलोमावृक्षः । इति रत्नमाला ॥
आलकुशी इति केचित् ॥
अग्रमांसं, क्लो, (अग्रं प्रधानं मन्यते ज्ञायते यत्
अग्र + मन् + स । पृषोदरादित्वात् दीर्घः ।)
हृदयं । इत्यमरः ॥
उदरमध्यवर्त्तिमांसवर्द्धन-
रूपरोगविशेषः । इति वैद्यकं ॥

**अग्रयानं**, क्ली, (अग्रं प्रथमं यानं सनागमनं)
नासीरं । सेनाग्रगमनं । इति हेमचन्द्रः ॥

**अग्रलोहिता**, स्त्री, (अग्रमग्रभागः लोहितं रक्त-
वर्णं यस्याः सा बहुव्रीहिः) चिल्लीशाकं । इति
राजनिर्घण्टः ॥

**अग्रवीजः**, पुं, (अग्रं शाखाग्रं वीजमुत्पत्तिकारणं
यस्य सः बहुव्रीहिः । कलम इति भाषायाम्)
वीजाग्रवृक्षमात्रं । स च कुरण्टादिः । इति
हेमचन्द्रः ॥

**अग्रसन्धानी**, स्त्री, (अग्रे फलभोगात्पूर्ब्बं सन्धीयते

**अग्रियः**, पुं, (अग्रे भव अग्र + घ) अग्रजः । ज्येष्ठ-
भ्राता । इत्यमरः ॥

**अग्रीयं**, त्रि, (अग्रे भवः अग्र + छ) प्रधानं । इत्य-
मरः ॥ अग्रजे पुं, । इति तट्टीकायां रमानाथः ॥

**अग्रुः**, स्त्री, (अङ्ग्यते द्रव्यं गृह्यतेऽनया अगि + क्रु
ऊङुत इति स्त्रियां वा ऊङ् । निपातनात्
नलोपः ।) अङ्गुलिः ।
वेदप्रचुरप्रयोगोऽयं ॥

**अग्रेगाः**, पुं, अग्रगामी । इति मुग्धबोधव्याकरणं ॥

**अग्रेगूः**, पुं, (अग्रे गच्छति यः अग्रे + गम् + क्विप्
ऊचगमादीनामित्युपसङ्ख्यानमिति पाणिनिवा-
र्त्तिकेन मलोपः अकारस्य ऊकारः ।) अग्र-
गामी । इत्युणादिवृत्तिः ॥

**अग्रेदिधिषुः**, पुं, (दिधिं धैर्य्यं स्यति इन्द्रियदौर्ब्ब-
ल्यात् त्यजति दिधि + सो + अब्धुदृनकूजम्बु-
कम्बुककेलूकर्कन्धूदिधिषु इत्युणादिसूत्रेण कु ष-
त्वञ्च दिधिषुः पुनर्भूर्योषित् अग्रे गणनीया दि-
धिषुः द्विरूढा स्त्री यस्य सः बहु० हलदन्तात्
सप्तम्याः संज्ञायामिति पाणिनिसूत्रेण अलुक्
पुनर्भूविवाहकारिणि जने) द्विरूढैव यस्य कुटु-
णिच् + अच् ।) पापं । दुःखं । व्यसनं । इत्यमरः ॥

**अघमर्षणं**, त्रि, (अघं पापं मृष्यते उत्पन्नत्वेऽपि
नाशनेन कर्म्माक्षमत्वात् सह्यतेऽनेन अघ + मृष्
+ करणेल्युट् ।) पापनाशनं । सर्व्वपापध्वंसि-
जप्यं । इत्यमरः ॥ (उत्पन्नपापनाशार्थं जप्ये मन्त्र-
भेदे यथा सन्ध्यामन्त्रे द्रुपदादिवेत्यादि) अश्वमेध-
यज्ञाङ्गावभृथस्नानमन्त्रः । वैदिकसन्ध्यान्तर्गत-
मन्त्रकरणकाघ्रातजलप्रक्षेपरूपपापनाशकक्रिया-
विशेषः । इति स्मृतिः ॥ तान्त्रिकसन्ध्यायान्तु, --
“षडङ्गन्यासमाचर्य्य वामहस्ते जलं ततः ।
गृहीत्वा दक्षिणेनैव संपुटं कारयेद्बुधः ॥
शिववायुजलपृथ्वीवह्निवीजैस्त्रिधा पुनः ।
अभिमन्त्र्य च मूलेन सप्तधा तत्त्वमुद्रया ॥
निःक्षिपेत् तज्जलं मूर्द्ध्नि शेषं दक्षे निधाय च ।
इडयाकृष्य देहान्तःक्षालितं पापसञ्चयं ॥
कृष्णवर्णं तदुदकं दक्षनाड्या विरेचयेत् ।
दक्षहस्ते च तन्मन्त्री पापरूपं विचिन्त्य च ॥
पुरतो वज्रपाषाणे निक्षिपेदस्त्रमुच्चरन्” ॥
इति तन्त्रसारः ॥

**अघवान्**, [त्] त्रि, (अघं पापं विद्यतेऽस्य अघ +
मतुप्) अघविशिष्टः । पापी ॥

अन्विष्यते कार्य्यमनया अग्र + सम् + धा + करणे ल्युट् स्त्रियां ङीप्) यमपञ्जिका । जीवानां शुभाशुभकर्म्मलिखितं यमस्य पुस्तकं । इति त्रिकाण्डशेषः ॥

**अग्रसरः**, त्रि, (अग्रे सरति गच्छति अग्र + सृ + टः ।) अग्रेसरः । अग्रगामी । इति हेमचन्द्रः ॥ (यथा, -- "अग्रेसरोजघन्यानां" ।) इति भट्टिकाव्ये ।

**अग्रहः**, पुं, (नास्ति ग्रहः गार्हस्थाश्रमस्वीकारो यम्य सः बहुव्रीहिः । वानप्रस्थे । नास्ति ग्रहो ज्ञानं यस्य सः ।) ज्ञानशून्ये च । वानप्रस्थः । इति त्रिकाण्डशेषः ॥ अगृह इति पाठे गार्हस्थाश्रमवहिर्भूतः ॥

**अग्रहायणः**, पुं, (हायनम्य वर्षस्य अग्रः । हश्च

म्बिनी स द्विजः । द्विज इत्युपलक्षणं । दिधिषुः परपूर्ब्बाग्रे दिधिषुस्ततपुरन्ध्रिकः । इति सामान्येन नाममालादर्शनात् । द्वितीयवारविवाहितपुत्रादिमती गृहिणीर स्वामी इति भाषा । इत्यमरः ॥

**अग्रेदिधिषुः**, स्त्री, (प्रागनूढज्येष्ठभगिन्याः प्रागूढकनिष्ठभगिन्यां । अग्रे प्रथमे ज्येष्ठायां भगिन्यां विद्यमानायां गणनीया दिधिषुः ज्येष्ठा विवाहकालासहनरूपधैर्य्यलोपकारिणीति विग्रहे शाकपार्थिवादित्वात् समासः मध्यपदलोपश्च ।) अविवाहितज्येष्ठभगिनीसत्त्वे अग्रे विवाहिता कनिष्ठा । यथा, -- "ज्येष्ठायां विद्यमानायां कन्यायामुह्यतेऽनुजा । सा चाग्रे दिधिषुर्ज्ञेया पूर्ब्बा च दिधिषुः स्मृता" ॥

**अघासुरः**, पुं, (अघनामा असुरः शाकपार्थिवादि-
त्वात् समासः मध्यपदलोपश्च)
अघनामासुरः ।
स च कंसराजसेनापतिः । इति
श्रीभागवतं ॥

**अघोः**, [स्] व्य, सम्बोधनं । यथा अघो यज इति
बोपदेवः ॥

**अघोरः**, पुं, (न घोरः सौम्यरूपः "या ते रुद्र !
शिवा तनुरघोरा पापनाशिनी" इति वेदः
।)
महादेवः । इति शिवचतुर्द्दशीव्रतपूजायां
॥
अतिभयानके अभयानके च त्रि ॥

**अघोरा**, स्त्री, (नास्ति घोरा भयानका मूर्त्तिर्यस्याः ।
अतिभयानका इति व्युत्पत्त्यर्थः)
भाद्रकृष्णचतु-
र्द्दशी । यथा, --
"भाद्रे मास्यसिते पक्षे अघोराख्या
चतुर्द्दशी ।
तस्यामाराधितः स्थाणुर्नयेच्छिवपुरं
ध्रुवं" ॥
इति स्मृतिः ॥

**अघोषः**, त्रि, (नास्ति घोषः शब्दो यत्र बहुव्रीहिः
शब्दशून्ये, न अल्पः घोषः शब्दो यत्र
बहुव्रीहिः
अल्पध्वनियुक्ते । तथाहि, --
"तत्सादृश्यमभावश्च तदन्यत्वं
तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट्
प्रकीर्त्तिताः" ॥

दोषो गुणसन्निपाते निमज्जतीन्दोः
किरणेष्वि-
वाङ्कः । इति कुमारसम्भवे ।)

**अङ्कतिः**, पुं, (अच्यते पूज्यतेऽसौ अन्च + कर्म्मणि
अति न्यङ्क्वादीनाञ्च इति
पाणिनिसूत्रेण चस्य
कः । वायुपक्षे अञ्चति गच्छति इति
व्युत्पत्त्या)
ब्रह्मा । अग्निः । अग्निहोत्री । इति
विश्वः ॥ वायुः ।
इति त्रिकाण्डशेषः ॥

**अङ्कनं**, क्ली, (अङ्क + णिच् भावे ल्युट्) सङ्ख्यासंस्थानं ।
चिह्नयुक्तीकरणं । आँकन् दागन इति
भाषा ।
चिह्नकरणं । यथा पराशराङ्गिरसौ ।
"अन्यत्राङ्कनलक्ष्माभ्यां
वाहनिर्म्मोचने कृते ।
सायं संयमनार्थन्तु न
दुष्येद्रोधबन्धयोः" ॥
अङ्कनं त्रिशूलादिचिह्नकरणं । लक्ष्म
स्थिरचिह्न-
करणं । इति प्रायश्चित्ततत्त्वं ॥

**अङ्कपालिका**, स्त्री, (अङ्कपालि + स्वार्थे कः स्त्रिया-
माप् ।) आलिङ्गनं । इति शब्दमाला
॥

**अङ्कपाली**, स्त्री, (अङ्केन क्रोडेन पालयति अङ्क + पा
+ अलि स्त्रियां वा ङीप् पक्षे
अङ्कपालिः ।) आलि-
ङ्गनं । धात्री । वेदिकाख्यगन्धद्रव्यं ।
तस्य नामा-
न्तरं कोटिः । इति मेदिनी ॥

अङ्क + उशच् स्त्रियां ङीप् । न्यङ्कादीनाञ्च
इति
चस्य कः ।) जिनानां
चतुर्विंशतिशासनदेव्यन्त-
र्गतदेवीविशेषः । इति हेमचन्द्रः ॥

**अङ्कूरः**, पुं, (अङ्क + खर्जूरादित्वात् ऊरच् वा उरच्)
अङ्कुरः । अभिनवोद्भिद् । इति हेमचन्द्रः ॥

**अङ्कूषः**, पुं क्ली, (अङ्क्यते हस्तिचालनार्थमाहन्यतेऽनेन
अङ्क + ऊषच् करणे) अङ्कुशः ।
इत्युणादिकोषः ॥

**अङ्कोटः**, पुं, (अङ्क + ओटच्) अङ्कोठवृक्षः । इति
रत्नमाला ॥

**अङ्कोठः**, पुं, (अङ्क्यतेऽनुभूयतेऽसौ अङ्क + ओठच्)
वृक्षविशेषः । आकोड इति ख्यातः । धल-
आँकूडा इति केचित् । अस्य पर्य्यायः ।
निकोचकः २ । इत्यमरः ॥ निकोठकः ३
लिको-
चकः ४ । इति भरतः ॥ अङ्कोलकः ५ बोधः
६ नेदिष्ठः ७ दीर्घकीलकः ८ । इति
जटाधरः ॥
अङ्कोटः ९ रामठः १० । इति रत्नमाला ॥
कोठरः ११ रेची १२ गूढपत्रः १३ गुप्तस्नेहः
१४ पीतसारः १५ मदनः १६ गूढवल्लिका
१७ पीतः १८ ताम्रफलः १९ दीर्घकीलः
२०
गुणाढ्यकः २१ कोलकः २२ लम्बकर्णः
२३ गन्ध-
पुष्पः २४ रोचनः २५ विशानतैलगर्भः २६
। अस्य
गुणाः । कटुत्वं । स्निग्धत्वं ।
विषलूतादिदोष-

इति स्मरणात् ।) आभीरशून्यदेशादिः । शब्द-
रहितः । अल्पध्वनियुक्तः । कलापादिव्याकरणस्य
संज्ञाविशेषे पुं । स त वर्गप्रथमद्बितीयवर्णाः
शषसाश्च ॥

**अघ्न्यः**, पुं, (न हन्ति विनाशयति स्रष्टृत्वात् न +
हन् + कर्त्तरि यक् । निपातनात् साधु ।) ब्रह्मा ।
इत्युणादिकोषः ॥

**अघ्न्या**, स्त्री, (न हन्यते या हन् + कर्म्मणि यक्
स्त्रियामाप् । पतिं वो अघ्न्यानां धनूनाम्
इति वेदः ।
"अबध्याञ्च स्त्रियं प्राहुस्तिर्य्यग्योनिगतामपि" ॥
इति निषेधात् ।) स्त्रीगवी । इत्यमरः ॥

**अङ्क** त् क पदे । लक्ष्मणि । इति कविकल्पद्रुमः ॥
कण्ठ्यवर्गाद्योपधः । पदं सङ्ख्यासंस्थानं । लक्ष्म
चिह्नयुक्तक्रिया । तथा च, --
"अर्थक्रियैव धातूनां कर्तृव्यापारलक्ष्मणा ।
आत्मनिष्ठं क्रियार्थत्वं धात्वर्थेष्वक्रियात्मसु" ॥
इति वोपदेवः ॥
"अङ्कयत्यरिसैन्यानि युधि पृष्ठेषु शायकैः" ।
इति हलायुधः ॥ अङ्कयति अङ्कापयति । इति
दुर्गादासः ॥

**अङ्कः**, पुं, (अङ्कयति चिह्नयति, अङ्क + अच्)
चिह्नं । (स्वनामकाङ्कां निचखान शायकं इति

**अङ्कलोड्यः**, पुं, (अङ्केन लोड्यतेऽसौ लोड + ण्यत्)
चिञ्चोटकवृक्षः । चैँच्को इति भाषा । चिञ्चो-
डमूल इति केचित् ॥ अस्य गुणाः । गुरुत्वं ।
अजीर्णकारित्वं । शीतलत्वञ्च । इति राजव-
ल्लभः ॥

**अङ्कितः**, त्रि, (अङ्क + क्त ।) लाञ्छितः । चिह्नितः ।
इति व्याडिः ॥

**अङ्की**, स्त्री, (अङ्कः + स्त्रियां ङीप् ।) अङ्क्यः ।
मृदङ्गविशेषः । इति शब्दरत्नाकली ॥

**अङ्कुरः**, पुं, (अङ्क + उरच्) वीजोद्भवः । नूतनोत्पन्न-
तृणादिः । (दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा । इति शाकु,
न्तले । अस्य पर्य्यायः । अभिनवोद्भिद् २ । इत्य-
मरः ॥ उद्भेदः ३ प्ररोहः ४ (चूताङ्कुरास्वाद-
कषायकण्ठः ॥ इति कुमारसम्भवे ।) अकुरः ५ ।
इति राजनिर्घण्टः । रोहः ६ अङ्क्रः ७ । इति
हेमचन्द्रः ॥ जलं । रक्तं । लोम । इति मे-
दिनी ॥

**अङ्कुरकः**, पुं, (अङ्क्यते तृणादिभिर्न्निर्म्मीयतेऽसौ अङ्क

नाशित्वं । कफवायुहारित्वं । सूतशुद्धिकारित्वं ।
रेचकत्वञ्च ॥ * ॥ तत्फलगुणाः । शीतलत्वं ।
स्वादुत्वं । श्लेष्मनाशित्वं । गुरुत्वं । बलकारित्वं ।
धातुपोषकत्वं । विरेचकत्वं । वातपित्तदाहक्षय-
दुष्टरक्तनाशित्वञ्च । इति राजनिर्घण्टः ॥

**अङ्कोलः**, पुं, (अङ्क्यतेऽनुभूयतेऽसौ अङ्क + ओलच्)
अङ्कोठवृक्षः । आकोड यस्य प्रसिद्धिः । इत्यम-
रटीकायां स्वामी ॥

**अङ्कोलकः**, पुं, (अङ्कोल + स्वार्थे कः) अङ्कोठवृक्षः ।
इति जटाधरः ।

**अङ्कोलिका**, स्त्री, आलिङ्गनं । इति शब्दमाला ॥

**अङ्कोल्लसारः**, पुं, (अङ्कोल्लस्य सारः षष्ठीतत्
स्थिरांशः ।) स्थावरविषप्रभेदः । इति हेमचन्द्रः ॥

**अङ्क्यः**, पुं, (अङ्क्यते वाद्यते हरीतक्याकृतिर्वाद्य-
विशेषः यः । अङ्क + ण्यत् ।) हरीतक्याकृतिमृदङ्गः ।
पाखओयाज इति भाषा । इत्यमरः ॥ तदुक्तं, --
"सार्द्धतालत्रयायामश्चतुर्द्दशाङ्गुलाननः ।
हरीतक्याकृतिर्यः स्यादङ्क्योऽङ्के स हि वाद्यते ॥
इति भरतः ॥ (अपराधिविशेषाणां ललाटादिषु
राज्ञा अङ्कनीयः । मनुः, --
"प्रायश्चित्तन्तु कुर्व्वाणाः सर्व्वे वर्णा यथोदितं ।
नाङ्क्या राज्ञा ललाटे स्युर्दाप्यास्तूत्तमसाहसं" ॥)

रघुवंशे ।) क्रोडं । (सपत्नीतनयं दृष्ट्वा तमङ्कारोह-
णोत्सुकं । इति विष्णुपुराणे ॥)
रूपकविशेषः ।
अपराधः । रेखा । विभूषणं । समोपं ।
स्थानं ।
नाटकांशः । इति मेदिनी ॥
(प्रत्यक्षनेतृचरितो
रसभावससुज्ज्वलः । भवेदगूढशब्दार्थः क्षुद्र-
चूर्णकसंयुतः ॥
अन्तर्निष्क्रान्तनिखिलपात्रोऽङ्क
इति कीर्त्तितः । इति साहित्यदर्पणे) । चित्र-
युद्धं । इति विश्वः ॥ शरीरं ।
इत्युणादिकोषः ॥
नवसङ्ख्या । इति ज्योतिषं ॥
(कुचभूषायां ।
प्रकरणे । अगे । कटिप्रदेशे । कलङ्के ।
एको हि

+ उरच् ततः स्वार्थे क) नीडः ।
पक्षिवासस्थानं ।
इति शब्दमाला ॥

**अङ्कुशः**, पुं क्ली, (अङ्क्यते हस्तिचालनार्थमाहन्यते-
ऽनेन अङ्क + उशच् ।)
हस्तिचालनार्थलोहमय-
वक्राग्रास्त्रं । डाङ्गश इति भाषा ।
तत्पर्य्यायः ।
श्टणिः २ । इत्यमरः ॥ सृणिः ३ ।
इति तट्टीका ॥
अङ्कूषः ४ । इत्युणादिकोषः ॥
(रामायणे, --
“उष्ट्रान् हयान् खरान् नागान्
जघ्नुर्दण्डकषाङ्कुशैः ॥
कम्पना अङ्कुशा भल्लाः कालचक्रा
गदास्तथा” ॥)

**अङ्कुशदुर्धरः**, पुं, (अङ्कुशेन दुर्ध्रियते दुर्द्दम्यतेऽसौ
दुर् + धृ + कर्म्मणि खल् ।)
दुरन्तहस्ती । इति
त्रिकाण्डशेषः ॥

**अङ्कुशी**, स्त्री, (अच्यते आराध्यतेऽसौ बौद्धविशेषैः

**अङ्ग**, त् क पदे । (अङ्गयति चेष्टयति अङ्ग + णिच्
अच् ।) लक्ष्मणि । इति कविकल्पद्रुमः ॥ कण्ठ्य-
वर्गतृतीयोपधः । पदं सङ्ख्यासंस्थानं । लक्ष्म
चिह्नयुक्तक्रिया । तथा च ।
अर्थक्रियैव धातूनां कर्तृव्यापारलक्ष्मणा ।
आत्मनिष्ठं क्रियार्थत्वं धात्वर्थेष्वक्रियात्मसु ॥
इति बोपदेवः । अङ्गयति अङ्गापयति, इति
दुर्गादासः ॥

**अङ्ग**, व्य सम्बोधनं । इत्यमरः ॥ (रामायणे, --

"अङ्गावेक्षस्व सौमित्रे कस्येमां मन्यसे चमूं" ।

पुनरर्थः ।

**अङ्गं**, क्ली, शरीरादेरेकदेशः । आं इति हिन्दी-

भाषा । तत्पर्य्यायः । अवयवः २ प्रतीकः ३ अप-

घनः ४ । इत्यमरः ॥ गात्रं । (शृङ्गारतिलके, --

"अङ्गानि चम्पकदलैः स विधाय धाता" ।)

अप्रधानं । (साहित्यदर्पणे, --

"एक एव भवेदङ्गी शृङ्गारो वीर एव वा ।

अङ्गमन्ये रसाः सर्व्वे कार्य्यनिर्वहणेऽद्भुतं" ॥

उपायः । इति मेदिनी ॥ (अङ्ग्यते विषयो बुध्यते

अनेन अङ्ग + करणे घञ् इति व्युत्पत्त्या) मनः ।

अङ्गं मनसि काये चेत्यमिधानान्तरदर्शनात् ।

यथा । "हिरण्यगर्भाङ्गभुवं मुनिं हरिरिति

माघः" ॥ वेदाङ्गशास्त्राणि षट् । यथा, --

"शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चयः ।

ज्योतिषामयनञ्चैव वेदाङ्गानि षडेव तु" ॥

शिक्षा १ कल्पः २ व्याकरणं ३ निरुक्तं ४ ज्यो-

तिषं ५ छन्दः ६ । इत्यमरः ॥ अङ्गस्य लक्षणं

यथा ।

तदीयप्रधानफलजनकव्यापारजनकत्वे सति

तदीयप्रधानफलाजनकत्वं । इति तिथ्यादितत्त्व-

टीका ॥

**अङ्गणं**, क्ली, (अङ्ग्यते गम्यते अत्र + अधिकरणे ल्युट्

पृषोदरादित्वाण्णत्वम्) अङ्गनं । चत्वरं । इत्यमर-

टीकायां भरतः ॥ (देवीमाहात्म्ये, विमानं हंस-

सयुक्तमेतत्तिष्ठतितेऽङ्गने ।)

**अङ्गतिः**, पुं, (अङ्ग्यते सेवायै गम्यते अगि + कर्म्मणि

अति । ब्रह्मणि विष्णौ अग्नौ च ।) ब्रह्मा । विष्णुः ।

अग्निः । अग्निहोत्री । इति शब्दरत्नावली ॥

(अग्निहोत्रिपक्षे तु कर्त्तरि अति । अङ्ग्यते गम्यते

ऽनेन इति व्युत्पत्त्या वाहने ।)

**अङ्गदं**, क्ली, (अङ्गं द्यति व्यथयति अङ्ग + दो + कः

उपपदसमासः) केयूरं । ताड वाजू इत्यादि

भाषा । इत्यमरः ॥ (रामायणे, --

"धूयमानैश्च वासोभिः श्लक्ष्णैरङ्गदमूषणैः" ।)

**अङ्गदः**, पुं, (अङ्गं द्यति युद्धकाले अवखण्डयति

अङ्ग + दो + कर्त्तरि कः) कपिभेदः । स च बालि-

नामवानरराजपुत्त्रः । इति मेदिनी ॥ (रामायणे, --

"कुमदं पञ्चदशभिर्जाम्बवन्तञ्च सप्तमिः ।

अशीत्या बालिनः पुत्रमङ्गदं बिभिदे शरैः" ॥

**अङ्गदा**, स्त्री, अङ्गंदेहं ददाति स्वस्वामिनि समर्पयति

या अङ्ग + दा + कर्त्तरि कः स्त्रियामाप्) दक्षिण

दिघस्तिभार्य्या । इति मेदिनीकरहेमचन्द्रौ ॥

**अङ्गरक्तः**, पुं, (रक्तं रक्तवर्णं अङ्गं यस्य स बहुव्रीहिः

वाहिताग्न्यादिषु इति सूत्रेण परं पूर्व्वं वा नि-

पात्यते ।) वृक्षविशेषः । गुण्डारोचनी इति

ख्यातः । तत्पर्य्यायः । पिकाक्षः २ रोचनी ३

लघुपत्रकः ४ । इति शब्दचन्द्रिका ॥ कम्पिल्लः

५ कर्कशः ६ चन्द्रः ७ रक्ताङ्गः ८ । इत्यमरः ॥

**अङ्गरक्षिणी**, स्त्री, अङ्गं रक्षति पालयति या अङ्ग +

रक्ष + णिनि ।) अङ्गत्राणं । साँजोया इति

भाषा । तत्पर्य्यायः । जालिका २ जालप्राया ३

आयसी ४ । इति हेमचन्द्रः ॥

**अङ्गरागः**, पुं, रज्यतेऽङ्गमलङ्क्रियतेऽनेन रन्ज +

करणे घञ् घञि च भावकरणयोरिति नलोपो-

वृद्धिश्च । अङ्गस्य रागः षष्ठीतत्पुरुषः ।) गात्र-

रञ्जनं । अङ्गे चन्दनादिलेपनं । तत्पर्य्यायः । विलेपनं

२ । इति हेमचन्द्रः ॥ (रामायणे, --

"स्नानानि चाङ्गरागांश्च माल्यानि विविधानि च" ।)

**अङ्गराट्**, पुं, (अङ्गे तद्देशे राजते यः अङ्ग + राज् +

क्विप् उपपदसमासः) ।

अङ्गदेशाधिपतिः । स च

**अङ्गः**, पुं, स्वनामख्यातदेशः । इति हेमचन्द्रः ॥ मे-
दिनीकारमते नित्यबहुवचनान्तशब्दोऽयं । देश-
विशेषः । यथा, --
“वैद्यनाथं समास्भ्य भुवनेशान्तगं शिवे ।
तावदङ्गाभिधो देशो यात्रायां न हि दुंष्यते ॥
इति शक्तिसङ्गमतन्त्रे ७ पटलः ॥ (अयञ्च देशः
सरष्वाः सङ्गमे अवस्थितः, अत्र महादेवस्य
हुङ्कारेण कामस्य अङ्गत्यागात् अयं अङ्गनाम्ना
ख्यातः । यथा रामायणे, --
“अनङ्ग इति विख्यातस्ततःप्रभृति राघव ।
स चाङ्गविषयः श्रीमान् यत्राङ्गं स मुमोच ह” ॥

**अङ्गः**, त्रि, (अङ्गं विद्यतेऽस्य अङ्ग + अर्श आद्यच्
तथा मेदिन्यां अङ्गं गात्रे प्रतोकोपाययोः पुं भूम्नि-
नीवृति । क्लीवैकत्वे त्वप्रधाने त्रिष्वङ्गवति चा-
न्तिके इति मेदिनी ।) अङ्गविशिष्टः । निकटः ।
इति मेदिनी ॥

**अङ्गग्रहः**, पुं, (ग्रह + भावे अप् । अङ्गानां रो-
गादिना ग्रहः वेदना) गात्रवेदना । इति वै-
द्यकं ॥

**अङ्गजं**, क्ली, (अङ्गे जायते अङ्ग + जन् + सप्तम्यां
जनेर्ड इति पाणिनिसूत्रेण डः कर्त्तरि) रक्तं ।
इति मेदिनी ॥ शरीरजे वाच्यलिङ्गं ॥

**अङ्गजः**, पुं, पुत्रः । केशः । कामः । मदः । इति
विश्वमेदिन्यौ ॥ मदस्थाने गदः । इति काचि-

**अङ्गनं**, क्ली, अङ्गनभूमिः । आङ्गन् उठान इति
भाषा । तत्पर्य्यायः । चत्वरं २ अजिरं ३ ।
इत्यमरः ॥ अङ्गणं ४ । इति तट्टीका ॥ प्राङ्गणं ।
(रामायणे, --
“महाराजाङ्गनं शूराः प्रविशन्तु महोदयं” ।)
५ । यानं । गमनं । इति मेदिनी ॥

**अङ्गना**, स्त्री, प्रशस्तानि अङ्गानि अस्या इति
अङ्गात् कल्याण इति नः । कामिनी । सुन्दराङ्गी
स्त्री । इति मेदिनी । (मनुः --
“ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः” ।)
सार्व्वभौमनाम्न उत्तरदिग्गजस्य पत्नी । इत्य-
मरः ॥
वृषकर्कटकन्यावृश्चिकमकरमीनराशयः ।
इति ज्योतिषतत्त्वम् ॥

**अङ्गनाप्रियः**, पुं, (अङ्गनानां प्रियः प्रीतिप्रदः । स्त्रि-
यश्च अशोकपुष्पेण स्वीयमङ्गमलङ्कुर्व्वन्ति इति
लोके प्रसिद्धिः । अङ्गनाया दक्षिणदिक्पत्न्याः
प्रियः इतिव्युत्पत्त्या तत्स्वामिनि) अशोकवृक्षः ।
इति शब्दमाला ॥

**अङ्गपालिः**, पुं, (अङ्गेन पाल्यते संश्लिष्यतेऽनेन अङ्ग
+ पा + अलिः) आलिङ्गनं । इति त्रिकाण्डशेषः ॥
स्त्रियां डीप् वेदिकाख्यगन्धद्रव्ये ।)

**अङ्गमर्द्दः**, पुं, (अङ्गं मर्द्दयति यः अङ्ग + मर्द्द + कर्म्म-
ण्यण् उपपदसमासः ।) अङ्गमर्द्दनकारकभृत्यः ।
कर्णः । इति हेमचन्द्रः ॥ (दशरथसखः लोम-
पादश्च रामायणे, --
“सख्यं तस्याङ्गराजेन भविष्यति महात्मनः ।
कन्या चास्य महाभागा शान्ता नाम भविष्यति ॥
अङ्गराजेऽनपत्यस्तु लोमपादो भविष्यति ।
स राजानं दशरथं प्रार्थयिष्यति भूमिपः” ॥

**अङ्गलोड्यः**, पुं, (अङ्गेन अङ्गुल्यादिना लोड्यते छि-
द्यतेऽसौ लोडि + कर्म्मणि यत् अङ्गेन लोड्यः तृती-
यातत् पुरुषः । अङ्कलोड्य इति पाठे अङ्केन तद्-
वृक्षस्थितचिह्नविशेषेण लोड्यः अनुमेयः धातूना-
मनेकार्थत्वादत्र लोडिधातुरनुमानार्थः ।) चिञ्चाट-
कतृणं । इति रत्नमाला ॥ अङ्कलोड्य इति च पाठः ॥

**अङ्गवः**, पुं, अङ्गे स्वदेहे वाति अतिशुष्कत्वात् लीन-
मिव भवति अङ्ग + वा + कर्त्तरि कः । शुष्कफलं ।
इति शब्दचन्द्रिका ॥

**अङ्गविकृतिः**, पुं, (अङ्गानां विकृतिर्व्विकारो यस्मात्
बहुब्रीहिः ।) अपस्माररोगः । इति राजनिर्घण्टः ॥

**अङ्गविक्षेपः**, पुं, (वि + क्षिप् + भावे घञ् । अङ्गस्य
विक्षेपः एकस्थानादन्यस्थाने चालनं षष्ठीतत्पुरुषः

न्मेदिनी ॥ (स्त्रीणां यौवने
सात्त्विकभावविशेषः ।
यथा साहित्यदर्पणे, --
"यौवने
सत्त्वजास्तासामष्टाविंशतिसंख्यकाः ।
अलङ्कारास्तत्र भावहावहेलास्त्रयोऽङ्गजाः
॥

**अङ्गजा**, स्त्री, कन्या । अङ्गाज्जात इत्यस्मात् स्त्रि-

यामाप् ॥

तत्पर्य्यायः । संवाहकः २ । इति हेमचन्द्रः
॥ अङ्ग-
मर्द्दकः ३ । इति त्रिकाण्डशेषः ॥ अङ्गमर्द्दो
४ ।
इति हलायुधः ॥

**अङ्गमर्द्दकः**, पुं, (अङ्गस्य मर्द्दकः संवाहकः षष्ठी-

तत् ।) अङ्गमर्द्दः । इति त्रिकाण्डशेषः ॥

**अङ्गमर्द्दी** [न्] पुं, अङ्गं साधु मर्द्दयति संवाहयति

यः अङ्ग + मर्द्द + णिनि ।) अङ्गमर्द्दः । इति
हला-
युधः ॥

अङ्गहारोऽङ्गविक्षेप इत्यमरः ।)
अङ्गहारः । अ-
ङ्गचालनरूपनृत्यं । इत्यमरः ॥

**अङ्गवैकृतं**, क्ली, (विकृति + प्रज्ञादिभ्यश्च इति स्वार्थे

अण् अङ्गस्य वैकृतम्) आकारः ।
इङ्गितं । इति
जटाधरः

**अङ्गसंस्कारः**, पुं, (अङ्गस्य सस्कारः शोभा षष्ठी-

तत् । सम् + कृ + भावे घञ्
संपर्य्युपेभ्यः इत्या-
दिना इति सुट् ।) कुङ्कुमादिना
शरीरशोभा-
धानरूपसंस्कारः । इति भरतः ॥
स्नानोद्वर्त्त-
नादिः । इति स्वामी ॥
शरीरसंस्कारमात्रं ।
इत्यन्ये ॥
स्वेदादिकृतदौर्गन्ध्यहरणाय
चन्दनादिना
उद्वर्त्तनानुलेपनादिः । इति
सारसुन्दरी ॥ तत्-
पर्य्यायः । परिकर्म्म २ । इत्यमरः
॥ प्रतिकर्म्म ३ ।
इति क्वचित् पाठः ॥

**अङ्गहारः**, पुं, (अङ्गानां हारः एकस्थानादन्यस्थाने

:चालनं षष्ठीतत्पुरुषः ।) अङ्गानां स्थानात् स्थानान्त-
रनयनं । तत्पर्य्यायः । अङ्गविक्षेपः २ । इत्यमरः ॥
अङ्गहारिः ३ । इति तट्टीका ॥ स्थिरहस्तपर्य्य-
स्तकादिको द्वात्रिंशत्प्रकारः । इति मधुः ॥
वृश्चिकभ्रमरादिद्वात्रिंशद्रूपः । इति रायः । अङ्गु-
ल्यादिविन्यासस्त्रिं शद्रूपः । इति कौमुदी ॥

**अङ्गहारिः**, पुं, (अङ्गानि ह्रियन्ते चाल्यन्तेऽत्र अङ्ग
+ हृ + इञ् अजादिभ्यश्च इति पाणिनिसूत्रेण
अधिकरणे इञ् । रङ्गभूमिः, नृत्यभूमिश्च ।) अङ्ग-
हारः । इति भरतधृतहड्डचन्द्रः ॥

**अङ्गहीनः**, त्रि, (अङ्गेन हीनः रहितः तृतीया तत्-
पुरुषः । हा + कर्म्मणि क्तः ।) अवयवरहितः ।
अङ्गहानिविशिष्टः । (यथा, याज्ञवल्क्यः, --
“कालकर्म्मात्मवीजानां दोषैर्मातुस्तथैव च ।
गर्मस्य वैकृतं दृष्टमङ्गहीनादि जन्मतः ॥)
अङ्गहीनं क्रियाहीनं विधिहीनञ्च यद्भवेत्” ॥
इति स्मृतिः ॥ कामदेवे पुंलिङ्गः ॥

**अङ्गाधिपः**, पुं, (अङ्गस्य देशविशेषस्य अधिपः षष्ठी-
तत्पुरुषः ।) अङ्गदेशाधिपतिः । स च कर्णः । इति
दानोक्तेः तत्प्रियत्वं ।) प्रबालः । इति राज-
निर्घण्टः ॥

**अङ्गारकुष्ठकः**, पुं, (अङ्गारवर्ण्णं कुष्ठमिव कन्) हि-
तावली । इति राजनिर्घण्टः ॥

**अङ्गारधानिका**, स्त्री, (अङ्गाराणि धीयन्ते धार्य्यन्ते-
ऽत्र धा + अधिकरणे ल्युट् स्त्रियां ङीप् । अङ्गा-
राणां धानी ततः स्वार्थे कः । पक्षे अङ्गार-
धानी ।) अङ्गारधारणपात्रं । आङ्टा इति
ख्याता । साँजाल इति केचित् । तत्पर्य्यायः ।
अङ्गारशकटी २ हसन्ती ३ हसनी ४ । इत्य-
मरः ॥

**अङ्गारपरिपाचितं**, क्ली, (अङ्गारेण परिपाच्यते परि
+ पच् + स्वार्थे णिच् ततः कर्म्मणि क्तः ।) अङ्गार-
पक्वं । शूलविद्धाङ्गारदग्धमांसं । कावाव इति
ख्यातं । इति शब्दचन्द्रिका ॥

**अङ्गारपर्णः**, पुं, (अङ्गारवत् पर्णं पत्र यस्य स बहु-
व्रीहिः । वनभेदे । सोऽस्यास्ति ततः अर्श आद्यच्
तत्स्वामी) चित्ररथगन्धर्व्वः । इति महामारतं ॥

**अङ्गारपुष्पः**, पुं, (अङ्गारवत् रक्तवर्णं पुष्पं यस्य सः

**अङ्गिरा**, [स्] पुं, (अङ्गति ब्रह्मणो मुखान्निःसरति
अगि गतौ + अस् इरस् च) मुनिविशेषः । स च
ब्रह्मणो मुखाज्जातः । तस्य भार्य्या कर्द्दममुनि-
कन्या श्रद्धा । पुत्त्रः उतथ्यः १ वृहस्पतिः २ ।
कन्या सिनीवाली १ कुहूः २ राका ३ अनु-
मतिः । ४ । इति श्रीभागवतं ॥

**अङ्गी**, [न्] त्रि, (अङ्गं विद्यतेऽस्य अङ्ग + मत्वर्थे इन् ।)
अङ्गविशिष्टः । अवयवी । यथा येनाङ्गेनाङ्गी
विकृतो भण्यते तस्मादङ्गाच्च त्रि । इति मुग्ध-
बोधटीकायां दुर्गादासः ॥ प्रधानं । मुख्यः ।
यथा । “यद्यङ्गी स्याद्रसान्तरे” । इति ध्वनि-
कारः ॥

**अङ्गीकारः**, पुं, (अङ्गीति च्च्यन्तं तत्पूर्ब्बकात् कृ +
घञ्) स्वीकारः । तत्पर्य्यायः । सम्बित् २ आगूः ३
प्रतिज्ञानं ४ नियमः ५ आश्रवः ६ संश्रवः ७
अभ्युपगमः ८ समाधिः ९ प्रतिश्रवः १० । इत्य-
मरः ॥

**अङ्गीकृतं**, त्रि, (अङ्गोति च्च्यन्तं तत्पूर्ब्बकात् कृ +
कर्म्मणि क्तः) स्वीकृतं तस्य पर्य्यायः । ऊरीकृतं २

भूरिप्रयोगः ॥

**अङ्गारः**, पुं, क्ली, (अगि + आरन् इदितो नुम्धातो-

रिति नुम् ।) दग्धकाष्ठखण्डं । तत्तु निरग्नि
साग्नि च । कयला आङ्गरा इति भाषा । तत्-
पर्य्यायः । अलातं २ उल्मूकं ३ । इत्यमरः ॥
आलातं ४ उल्मूकं ५ । इति तट्टीका ।
(“घृतकुम्भसमा नारी तप्ताङ्गारसमः पुमान्” ।)

**अङ्गारः**, पुं, (रक्तं रक्तवर्णमङ्गं यस्य स बहुव्रीहिः

पृषोदरादित्वात् साधु ।) मङ्गलग्रहः ।
इति मेदिनी ॥
हितावली । इति वैद्यकं ॥

**अङ्गारकः**, पुं, (अङ्गार + स्वार्थ कः ।) मङ्गलग्रहः

इत्यमरः, --
(“धरात्मजः कुजो भौमो भूमिजोभूमिनन्दनः ।
अङ्गारको यमश्चैव सर्व्वरोगापहारकः” ॥
इति वराहपुराणम् ।) (रामायणे, --
“दिवीव ग्रहयोर्घोरं वुधाङ्गारकयोर्महत् ।
कौशलानाञ्च नक्षत्रं ज्येष्ठा मैत्राग्निदैवतं ।
आक्रम्याङ्गारकस्तस्थौ विशाखामपि चाम्बरे” ॥)
अङ्गारः । कुरुण्टकवृक्षः । इति मेदिनी ॥ भृङ्ग-
राजः । इति राजनिर्घण्टः ॥

**अङ्गारतैलं**, क्ली, (अङ्गारेण पक्वं तैलं शाकपार्थि-

वादित्वात् समासः । मध्यपदलोपश्च) स्वनाम-
बहुव्रीहिः ।) इङ्गुदीवृक्षः । जियापुता । इति
ख्यातः । इति रत्नमाला ॥

**अङ्गारमञ्जी**, स्त्री, (अङ्गारवत् रक्तवर्णा मञ्जी मञ्जरी

यस्याः सा बहुव्रीहिः । समासान्तविधेरनित्यत्वात्
कबभावः ।) करञ्जविशेषः । इति शब्दरत्नावली ॥
अस्य नामान्तरं अङ्गारमञ्जरी ॥

**अङ्गारवल्लरी**, स्त्री, करञ्जविशेषः । इत्यमरः ।

भार्गी । गुञ्जा । इति राजनिर्घण्टः ॥

**अङ्गारवल्ली**, स्त्री, (अङ्गारवत् रक्तवर्णा वल्ली कर्म्म-

धारयः । गुञ्जालता, स्वार्थे कन् अङ्गारवल्लिका ।)
महाकरञ्जः । भार्गी । इति राजनिर्घण्टः ॥

**अङ्गारशकटी**, स्त्री, (शक्नोति वोढुं शकटं । शकट

+ स्त्रियां ङीप् अल्पार्थे शकटी । अङ्गारस्य
शकटी षष्ठीतत्पुरुषः । आङ्टा इति भाषा ।
धुनाची इति) अङ्गारधानिका । इत्यमरः ॥

**अङ्गारिः**, स्त्री, (अङ्गारमस्या अस्ति अङ्गार + अत

इन् ठनाविति ठन् तस्य इ कः पृषोदरादित्वात्
कलोपः) अङ्गारधानिका । इति जटाधरः ॥

**अङ्गारिका**, स्त्री, (अङ्गारवत् रक्तवर्णा अङ्गार +

इवार्थे कन् स्त्रियां टाप्) इक्षुकाण्डं । पलाश-
उररीकृतं ३ आश्रुतं ४ प्रतिज्ञातं ५ संगीणं ६
विदितं ७ संश्रुतं ८ समाहितं ९ उपश्रुतं १०
उपगतं ११ प्रतिश्रुतं १२ अभ्युपगतं १३ ।
इत्यमरः ॥

**अङ्गुरिः**, स्त्री, (अगि गतौ + उ णिच् रलयोरेकत्व-

स्मरणात् लस्य रत्वम्) पाणिपादाङ्गली । इत्यु-
णादिकोषः ॥

**अङ्गुरिः**, स्त्री, (अङ्ग + उणिच् पक्षे ङीप्) अङ्गुली ।

इत्यमरटीका ॥

**अङ्गुरीयः**, पुं, क्ली, (अङ्गरेरिदं तत्र भवं वा अङ्गुरि

+ छः तस्य ईयः) अङ्गुलीयकं । आङ्गुटी इति
भाषा । अङ्गुलौ भवं अङ्गुलीयं मनीषादित्वात्
लस्य रः । इति भरतः ॥ (यथा रामायणे, --
“ददौ चास्य तदा प्रीतः स्वनामाङ्काभिचिह्नितं ।
अङ्गुरीयमभिज्ञानं राजपुत्र्याः परन्तपः” ॥)

**अङ्गुरीयकं**, क्ली, पुं, (स्वार्थे कः) अङ्गुलीयकं । इत्य-

मरटीकायां मुकुटादयः ॥ रामायणे, --
“रामनामाङ्कितञ्चेदं प्रगृहाणाङ्गुरीयकं” ।

**अङ्गुलः** पुं, (अङ्ग + उन् अङ्गौ हस्ते लीयते अङ्गु +

ली + डः) हेमचन्द्रः ॥ अङ्गुली ॥ इत्यमरटीकायां

ख्यातपक्वतैलं । तस्य पाकप्रकारो गुणश्च ।
यथा, --
“मूर्व्वा लाक्षा हरिद्रे द्वे मञ्जिष्ठा सेन्द्रवारुणी ।
वृहती सैन्धवं कुष्ठं रास्ना मांसी शतावरी ॥
आरनालाढकेनैव तैलप्रस्थं विपाचयेत् ।
तैलमङ्गारकं नाम सर्व्वज्वरविमोक्षणं” ॥
इति सुखबोधः ॥

**अङ्गारकमणिः**, पुं, (रक्तवर्ण्णत्वादङ्गारकवत् मणिः

अथवा अङ्गारकस्य मणिः षष्ठीतत्पुरुषः । माणिक्यं
भास्करे देयं चन्द्रे मुक्तां प्रदापयेत्
प्रबालञ्च कुजे
दद्यादित्यादिना तत्कृताशुभप्रतिकाराय प्रबाल-
कलिका । इति मेदिनी ॥ (अङ्गारमस्या अस्ति
अङ्गार + मत्वर्थे ठन् तस्य इ कः स्त्रियां टाप्
इति व्युत्पत्त्या अङ्गारपात्रम् ।)

**अङ्गारिणी**, स्त्री, (अङ्गारमस्या अस्ति अङ्गार +

मत्वर्थे इन् स्त्रियां ङीप् ।)
अङ्गारधानिका ।
भास्करत्यक्ता दिक् । (सूर्य्यत्यक्ततया अङ्गारवत्
रक्तवर्ण्णा दिक् ।) इति मेदिनी ॥

**अङ्गारितं**, क्ली, (अङ्गारमिवाचरति अङ्गार + क्विप्

ततः क्तः ।) पलाशकलिकोद्गमः । (अङ्गारं क-
रोति अङ्गार + णिच् कर्म्मणि क्तः । मत्वर्थे इतच्
वा दग्धप्रायकाष्ठं) दग्धे त्रि । इति विश्वः ।

**अङ्गिका**, स्त्री, कञ्चुकः । काँचली इति ख्याता ।

इति हेमचन्द्रः ॥
रमानाथः ॥ अष्टयवपरिमाणं । इत्यमरटीकायां
वाचस्पतिः ॥
(अष्टसंख्यकयवोदरपरिमाणे यवो-
दरैरङ्गुलमष्टसंख्यैरिति
भास्कराचार्य्योक्तेः न० ।)
(यथा रामायणे, --
“न ह्यविद्ध्वं तयोर्गात्रे बभूवाङ्गुलमन्तरं” ।)

**अङ्गुलिः**, स्त्री, (अङ्ग + उलिच्) करशाखा । आङ्गुल

इति भाषा । (यथा मनुः, --
“कायमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः” ।)
गजकर्णिका । हस्तिशुण्डाग्रमागः । इति हेम-
चन्द्रः ॥ अङ्गुष्ठः । इत्युणादिकोषः ॥

**अङ्गुलितोरणं** क्ली, (अङ्गुलेः तोरणं वहिर्द्वारमिव

षष्ठीतत्पुरुषः) चन्दनादिद्वारा ललाटे कृतोऽर्द्ध-
चन्द्रः । इति हारावली ॥

**अङ्गुलिमुद्रा**, स्त्री, (अङ्गुलेः मुदं लक्षणया धारयितु-
र्हर्षं राति ददाति या अङ्गुलिमुद् + रा + कर्त्तरि
कः) साक्षरोर्म्मिका । प्रभुनाम्ना स्वनाम्ना वा अ-
ङ्कितमङ्गुरीयकं । छापेर आङ्गुटी मोहरखोदा
आङ्गुटी इति भाषा । इत्यमरः ॥

**अङ्गुलिमुद्रिका**, स्त्री, (अङ्गुलिमुद्रा + स्वार्थे कः)
अङ्गुलिमुद्रा । इत्यमरटीकायां रमानाथः ॥

**अङ्गुलिमोटनं**, क्ली, (अङ्गुल्योर्म्मोटनं मर्द्दनं यस्मिन्
तत् बहुव्रीहिः)
अङ्गुलिद्वयमर्द्दनजातशब्दः । आ-
ङ्गुलमट्कान इति भाषा । तत्पर्य्यायः । पुच्छटी २ ।
इति त्रिकाण्डशेषः ॥ स्वच्छटी ३ अङ्गुलिसन्देशः ४ ।
इति हारावली ॥ मुचुटी ५ । इति जटाधरः ॥
मुचुटीतु मुष्टिपर्य्याये हेमचन्द्रेण लिखिता ।

**अङ्गुलिसन्देशः**, पुं, (अङ्गुल्या आङ्गुलिध्वनिना सन्देशः
मोटनं षष्ठीतत्पुरुषः सम् + दिश् + भावे घञ्)
अङ्गुलिमोटनं । इति हारावली ॥

**अङ्गुली**, स्त्री, (अङ्ग + उलिच् स्त्रियां वा ङीप् पक्षे
अङ्गुलिः) शरीरावयवविशेषः । आङ्गुल इति
भाषा । (रामायणे, --

**अङ्घः**, [स्] क्ली, (अङ्घ्यते दुर्गतिं गच्छत्यनेन अघि
+ सर्व्वधातुभ्योऽसुन् इति असुन्) अंहः । पापं ।
इत्युणादिकोषः ॥ (सूर्य्यशतके, --
"विदधतु घृणयः शीघ्रमङ्घोविघात" ।)

**अङ्घिः**, पुं, (अङ्घ्यते गच्छत्यनेन अघि + करणे इक्)
अङ्घ्रिः । इति विश्वः ॥

**अङ्घ्रिः**, पुं, (अङ्घ्यते गच्छत्यनेन अघि + करणे रिः)
पादः । (सूर्य्यशतके, --
"शीर्णघ्राणाङ्घ्रिपाणीन्" ।)
वृक्षमूलं । इति त्रिकाण्डशेषः ॥
अङ्घ्रिनाम, [न्] क्ली, (अङ्घ्रिरूपेण नमते जलाद्या-
कर्षणेन कल्पते यत् अङ्घ्रि + नम् + अन् णिच्च)
वृक्षमूलं । इति हेमचन्द्रः ॥

**अङ्घ्रिनामकः**, पुं, (अङ्घ्रिनाम + स्वार्थे कः) वृक्ष-
मूलं । इत्यमरः ॥

**अङ्घ्रिपः**, पुं, (अङ्घ्रिणा पिबति अङ्घ्रि + पा + ड)
वृक्षः । इति हेमचन्द्रः ॥

**अङ्घ्रिपर्णी**, स्त्री, (अङ्घ्रिवत् पर्ण्णं पत्रं यस्याः सा
बहुव्रीहिः स्त्रियां ङीप्) पृश्निपर्णी । चाकुलिया
इति ख्याता । इत्यमरटीकायां रमानाथः ॥

**अङ्घ्रिवल्लिका**, स्त्री, (अङ्घ्रिवत् वल्लिः उपमिति-
लेशे द्वयोः स्तम्भ इति मेदिनी) पृथिवी । इति
शब्दरत्नावली ॥

**अचलत्विट्**, [ष्] पुं, (अचला स्थिरा त्विट् यस्य सः
बहुव्रीहिः) कोकिलः । इति शब्दचन्द्रिका ॥

**अचलभ्राता**, [ऋ] पुं, बौद्धगणाधिपविशेषः । स
तु शेषजैनाचार्य्यस्य एकादशशिष्यान्तर्गतः । इति
हेमचन्द्रः ॥

**अचला**, स्त्री, (न चला नञ्समासः) पृथिवी । इति
मेदिनी ॥ यथा रामायणे, --
"पृथिवीमपि कामं तं ससागरवनाचलां" ।

**अचिरद्युतिः**, स्त्री, (अचिरा क्षणस्थायिनी द्युतिः
कान्तिर्यस्याः सा बहुव्रीहिः) विद्युत् । इति त्रि-
काण्डशेषः ॥

**अचिरप्रभा**, स्त्री, (अचिरा क्षणस्थायिनी प्रभा
कान्तिर्यस्याः सा बहुव्रीहिः) विद्युत् । इति हेम-
चन्द्रः ॥

**अचिररोचिः**, [स्] स्त्री, (अचिरा रोचिः कान्ति-
र्यस्याः सा बहुव्रीहिः) विद्युत् । इति जटाधरः ॥

**अचिरा**, स्त्री, (अचिं ज्ञानोपदेशं राति ददाति
या अचि + रा + कर्त्तरि क उपपदसमासः अच्
+ भावे इक्) अर्हतां मातृविशेषः । इति हेम-
चन्द्रः ॥

"कनिष्ठायामप्यङ्गुल्यां भ्रातुर्मम स राक्षसः ॥
ज्वालाङ्गुलीभिर्भगवान् विष्टभ्यः स हुताशनः" ॥)
तत्पर्य्यायः । करशाखा २ । इत्यमरः ॥ (अङ्गुलिः ३
अङ्गुरिः ४ अङ्गुरी ५ अङ्गुलः ६ ।) इति तट्टीका ॥
सा क्रमेण पञ्चधा, यथा -- अङ्गुष्ठः १ तर्ज्जनी २
मध्यमा ३ अनामिका ४ कनिष्ठा ५ इत्यमर-
जटाधरौ ॥ हस्तिशुण्डाग्रं । इति मेदिनी ॥

**अङ्गुलीकः**, पुं, क्ली, (अङ्गुल्यां कायते निधीयते-
ऽसौ अङ्गुली + कै + घञर्थे कर्म्मणि कः) अङ्गु-
लीयकं । इति त्रिकाण्डशेषः ॥

**अङ्गुलीपञ्चकं**, क्ली, (पञ्चानामङ्गुलीनां समाहारः
द्विगुसमासः राजदन्तादित्वात् पञ्चशब्दस्य पर-
निपातः) हस्तस्य पञ्चाङ्गुलानि यथा, -- अङ्गुष्ठः १
प्रदेशिनी २ मध्यमा ३ अनामिका ४ कनिष्ठिका
५ । इति राजनिर्घण्टः ॥

**अङ्गुलीयः**, पुं, क्ली, (अङ्गुल्या अयं तत्रभवो वा अङ्गुली
+ छ तस्य ईयः) अङ्गुलीयकं । इत्यमरटीका ॥

**अङ्गुलीयकं**, क्ली पुं, (अङ्गुलीय + स्वार्थे कः) अ-
ङ्गुलिभूषणं । आङ्गुटी इति भाषा । तत्पर्य्यायः ।
कर्म्मधारयः । स्वार्थेकः) चित्रपर्णीवृक्षः । चाकुलिया
इति भाषा । इत्यमरः ॥ अस्या रूपान्तरं अङ्घ्रि-
वल्लिः अङ्घ्रिवल्ली ॥

**अच** इ पूजायां । इति कविकल्पद्रुमः ॥ इ अ-
ञ्चते । अञ्चु गतिपूजनयोरिति पूजार्थो यः स
एवायं । इदित् पाठः पूजायां नलोपाभावात् ।
उदनुबन्धाभावश्च क्षुधवसपजार्थाञ्चेत्यादिना क्त्वा-
प्रत्ययस्य निष्ठायाश्च नित्येम्बिधानात् । इति दुर्गा-
दासः ॥

**अच** इ ञ गतौ । म्लिष्टोक्तौ । इति कविकल्प-
द्रुमः ॥ इ अञ्च्यते । ञ अञ्चति अञ्चते । इति
दुर्गादासः ॥

**अच** उ ञ गतौ म्लिष्टोक्तौ । इति कविकल्प-
द्रुमः ॥ अचति अचते । उ अचित्वा (उदितो
वा इतीडभावपक्षे) अक्त्वा । म्लिष्टोक्तिरव्यक्त-
शब्दः । इति दुर्गादासः ॥

**अचण्डी**, स्त्री, (चडि कोपने पचाद्यच् इदित्त्वात्
नुम् स्त्रियां ङीप् न चण्डी नञ्समासः) सुशीला
गौः । शान्त गाइ इति भाषा । तत्पर्य्यायः
सुकरा २ । इत्यमरः ॥ अकोपना स्त्री ॥

**अचलः**, पुं, (चलति यः चल् + पचाद्यच् न चलः
नञ्समासः) पर्व्वतः । (रामायणे, --

**अचिरांशुः**, स्त्री, (अचिराः क्षणस्थायिनः अंशवः
किरणा प्रभाः यस्याः सा बहुव्रीहिः ।) विद्युत् । इति
हलायुधः ॥ अचिरात् व्य अचिरं । शीघ्रं । अविलम्बं । यथा, --
"अचिरादुपकर्त्तुराचरे-
दथवात्मौपयिकीमुपक्रियां" ।
इति नैषधं ॥

**अचिराभा**, स्त्री, (अचिरा क्षणस्थायिनी आभा दी-
प्तिर्यस्याःसा बहुव्रीहिः) विद्युत् । इति हारावली ॥

**अचेतनः**, त्रि, (नास्ति चेतना ज्ञानं यस्य स बहु-
व्रीहिः) चेतनारहितः । चैतन्यशून्यः । अज्ञानः ।
यथा, --
"कामार्त्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु" ।
इति मेघदूतकाव्यं ॥ सेन्द्रियं चेतनं द्रव्यं निरि-
न्द्रियमचेतनं । इति चरकः ॥

**अचैतन्यं**, क्ली, (न चैतन्यं चेतना नञ्तत्पुरुषः)
निश्चेतना । चेतनाभावः । अज्ञानं ।
यथा, --
"अचैतन्यमिदं विश्वं चैतन्यं देवमेव यत् ।
न जानन्त्यपि शास्त्रज्ञा भ्रमन्त्येव हि केवलं" ॥
इति चैतन्यचन्द्रामृतं ॥ तद्वति त्रि ॥

**अच्छं**, व्य, (न च्छयति सम्मुखत्वात् दृष्टिं नावृणोति
न छो + घञर्थे कः नञ्तत्पुरुषः) आभिमुख्यं ।
साम्मुख्यं । इति मेदिनी ॥

**अच्छः**, त्रि, (न च्छयति निर्म्मलत्वात् दृष्टिं नावृणोति

ऊर्म्मिका २ । इत्यमरः ॥ अङ्गुरीयकं ३ अङ्गु-
रीयः ४ अङ्गुलीयः ५ । इति तट्टीका ॥ करा-
रोटः ६ अङ्गुलीकः ७ । इति त्रिकाण्डशेषः ॥
पुंसि प्रमाणं । अयं मैथिल्यभिज्ञानं काकुत्स्थस्या-
ङ्गुरीयकः । इति भट्टिः ॥

**अङ्गुलीसम्भूतः**, पुं, (अङ्गुल्यां सम्भूतः जातः सप्तमी-

तत्पुरुषः) नखः । इति राजनिर्घण्टः ॥

**अङ्गुष्ठः**, पुं, (अङ्गौ हस्ते मुख्यत्वेन तिष्ठति यः अङ्गु

+ कर्त्तरि कः अम्बाम्बगोभू इत्यादिना षत्वम्)
वृद्धाङ्गुलिः । इत्यमरः । वुडो आङ्गुल इति भाषा ।
(मनुः, --
"अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते" ।)

**अङ्गूषः**, पुं, (अङ्गति गच्छति अगि + ऊषन्)

नकुलः । बाणः । इत्युणादिकोषः ॥

"आससाद ततो रामं स्थितं शैलमिवाचलं" ।)
कीलकः । इति मेदिनी ॥ अकम्पे त्रि ॥ (शिवः,
स्थिरः । यदुक्तं, --
"न स्वरूपात् न सामर्थ्यात्
नच ज्ञानादिकात् गुणात् ।
चलनं विद्यते यस्ये-
त्यचलः कीर्त्तितोऽच्युतः" ॥
अविकारी, कूटस्थः) ।

**अचलकीला**, स्त्री, (अचलः सुमेरुपर्व्वतः कीलः

स्तम्भस्वरूपो यस्याः सा बहुव्रीहिः ।
कीलो

नञ् + छो + कर्त्तरि कः उपपदसमासः)
स्वच्छः ।
निर्म्मलः । इत्यमरः ॥ (अमरुशतके, अच्छकपोल-
मूलगलितैः) ।

**अच्छः**, पुं, (न च्छ्यति निम्मलत्वात् दृष्टिं नावृणोति

न + छो + कर्त्तरि कः उपपदसमासः)
स्फटिकः ।
भालूकः । इति मेदिनी ॥

**अच्छभल्लः**, पुं, (अच्छा निर्म्मलाः भल्लाः शस्त्राणीव
नखा यस्य सः बहुव्रीहिः यथा -- मेदिन्यां भल्लः
स्यात् पुंसि भल्लूके शस्त्रभेदे पुनर्द्वयोः) भालूकः ।
इत्यमरः । तट्टीकाकारमते अच्छो भल्लश्चेति
शब्दद्वयमपि ॥

**अच्छा**, स्त्री, (अःविष्णुश्छायते आच्छाद्यतेऽनया, च्छो +
करणे अङ् । अस्य विष्णोः छा आच्छादनं षष्ठी-
तत्पुरुषः । अकारो वासुदेवः स्यादित्येकाक्षरीय-
कोषे ।) विष्णोराच्छादनं । इति मुग्धबोधव्याकरणं ॥

**अच्छिद्रं**, त्रि, (नास्ति छिद्रं यत्र बहुव्रीहिः) छिद्र-
रहितं । दोषाभावविशिष्टं । यथा शातातप-
पराशरौ । --
"अच्छिद्रमिति यद्वाक्यं वदन्ति क्षितिदेवताः ।
प्रणम्य शिरसा ग्राह्यमग्निष्टोमफलैः समं" ॥
इति श्राद्धतत्त्वं ॥

**अच्छिद्रावधारणं**, क्ली, (अच्छिद्रस्य दोषरहित-
कर्म्मणः अवधारणं निश्चयः) दोषरहितकर्म्म-
निश्चयः । तज्ज्ञापकवाक्यं । यथा, --
ततः कर्म्ममात्रप्राप्ताच्छिद्रावधारणं कुर्य्यात् ।
तथाच शातातपपराशरौ । --
"अच्छिद्रमिति यद्वाक्यं वदन्ति क्षितिदेवताः ।
प्रणम्य शिरसा ग्राह्यमग्निष्टोमफलैः समं" ॥
इति श्राद्धतत्त्वं ॥
अपि च । वशिष्ठः ।

**अज** क्षेपे । गतौ । इति कविकल्पद्रुमः ॥ अजति ।
इति दुर्गादासः ॥

**अज** इक भासि (अजि दीप्तौ चुरा इदित्वान्नुम् ।)
इति कविकल्पद्रुमः ॥ इक अञ्जयति । भासि
दीप्तौ । इति दुर्गादासः ॥

**अजः**, पुं, (न जायते नोत्पद्यते यः नञ् + जन् + अन्ये-
ष्वपि दृश्यत इति कर्त्तरि डः उपपदसमासः ।)
("न हि जातो न जायेऽहं न जनिष्ये कदाचन ।
क्षेत्रज्ञः सर्व्वभूतानां तस्मादहमजः स्मृतः" ॥
इति भारते ।
"योमामजमनादिञ्च वेत्ति लोकमहेश्वरम्" ।
इति भगवद्गीतायाम् ।) ब्रह्मा । विष्णुः । शिवः ।
कामदेवः । सूर्य्यवंशीयराजविशेषः । स च रघु-
राजपुत्त्रः दशरथपिता च । मेषः । इति ज्यो-
तिषं ॥ माक्षिकधातुः । इति हेमचन्द्रः ॥ जन्म-
रहिते वाच्यलिङ्गः । छागः । इति मेदिनी ॥ तत्-
परीक्षा । यथा, --
"नक्षत्राणां विभेदेन नराणान्तु गणत्रयं ।
तेषां शुभाय निर्द्दिष्टं पशुवस्तत्रयं बलौ ॥
ये कृष्णाः शुचयश्छागाः पशवोऽन्ये तथैव च ।
देवजातिमिरुत्सृज्यास्ते सर्व्वार्थोपसिद्धये ॥
ये पीता हरिता वापि नरजातेरुदीरिताः ।
ये शुक्लाश्च महान्तो वा रक्षोजातेः शुभप्रदाः ॥
यो मोहादथवाज्ञानाद्बलिमन्यं प्रयच्छति ।
बध एव फलं तस्य नान्यत् किञ्चित् फलं भवेत्" ॥
इति युक्तिकल्पतरुः ॥

**अजकर्णः**, पुं, (अजस्य छागस्य कर्णवत् पत्रं यस्य सः)
असनवृक्षः । इति रत्नमाला ॥ यथा वैद्यके ।
("अजकर्णः कटुस्तिक्तः कषायोष्णो व्यपोहति ।

**अजगन्धिनी**, स्त्री, (अजगन्धोऽस्यास्ति अजगन्ध +
मत्वर्थे इन् स्त्रियां ङीप्) अजशृङ्गीवृक्षः । इति
रत्नमाला ॥

**अजगरः**, पुं, (अजं गिरति ग्रसते यः गॄ + पचाद्यच्
अजस्य गरः षष्ठी तत्पुरुषः) स्वनामख्यातवृहत्-
सर्पः । तत्पर्य्यायः । शयुः २ वाहसः ३ । इत्यमरः ॥

**अजगवं**, क्ली, (अजयोर्विष्णुब्रह्मणोर्गं त्रिपुरासुरबधे
गीतं षष्ठी तत्पुरुषः । तादृशं गीतं वाति सम्ब-
ध्नाति यत् अजग + वा + कर्त्तरि क उपपद-
समासः । "गञ्चगीतञ्च गौश्चैव गूश्चधेनुः सरस्वती"
इत्येकाक्षरीयकोषे) पिनाकः । शिवधनुः । इत्य-
मरः ॥ तस्य रूपान्तरं । अजकवं । अजकावं ।
अजीकवं । अजगावं ॥

**अजगावं**, क्ली, (अजयोर्व्विष्णुब्रह्मणोर्गं गीतं षष्ठी
तत्परुषः । तादृशं गीतमवति सम्पादयति यत्
अजग + अव + कर्म्मण्यण् उपपदसमासः) शिव-
धनुः । इति शब्दमाला ॥

**अजजीविकः**, पुं, (अजः जीविका जीवनोपायो यस्य
सः) अजाजीवी । छागपालकः । तत्पर्य्यायः ।
जावालः २ । इति हेमचन्द्रः ॥

"ततः शान्तिं प्रकुर्व्वीत अवधारणवाचनं"
।
अवधारणं अच्छिद्रावधारणं । इति
तिथ्यादि-
तत्त्वं ॥ तद्वाक्यं यथा, -- अद्यामुके मासि
अमुक-
पक्षे अमुकतिथौ
मत्कृतैतदमुककर्म्माच्छिद्रमस्तु ॥

**अच्छिन्नं**, त्रि, (छिद + कर्म्मणि क्तः न छिन्नं नञ्-
समासः) छेदरहितं । अकर्त्तितं । यथा
गर्गः, --
"श्रुत्वा पुत्त्रस्य वै जन्म कृत्वा वेदोदिताः
क्रियाः ।
अच्छिन्ननालं पश्येत्तं दत्त्वा रुक्मं
फलान्वितं" ॥
इति शुद्धितत्त्वं ॥
अपि च । शङ्खः ।
"अश्रद्दधानः पापात्मा
नास्तिकोऽच्छिन्नसंशयः ।
हेतुनिष्ठश्च पञ्चैते न तीर्थफलभागिनः" ॥
अच्छिन्नसंशयः फलोपायेतिकर्त्तव्यतासु
निश्चय-
शून्यः । इति प्रायश्चित्ततत्त्वं ॥

**अच्युतः**, पुं, (न च्यवते स्वरूपतो न गच्छति यः
नित्य इति यावत् । च्यु + कर्त्तरि क्तः न
च्युतः नञ्-
समासः । पीताम्बरोऽच्युतः शार्ङ्गीत्यमरः)
विष्णुः ।
इत्यमरः ॥ (यथा कुमारसम्भवे, --
तत्रावतीर्य्या-
च्युतदत्तहस्तः ।) स्थिरे त्रि ॥
सोऽन्त्यवेलायामेत-
त्त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि
प्राणसंशित-
मसीति छान्दोग्योपनिषत् ।

**अच्युताग्रजः**, पुं, (अच्युतस्य अग्रजः) बलरामः । इत्य-
मरः ॥ इन्द्रः । इति हेमचन्द्रः ॥

कफपाण्डुश्रुतिगदान् मेहकुष्ठविषव्रणान्" ॥)

**अजकर्णकः**, पुं, (अजकर्णः + स्वार्थेकः) सालवृक्षः ।
इति राजनिर्घण्टः ॥

**अजकवः**, पुं, क्ली, (अजो विष्णुश्च कः ब्रह्मा च द्वन्द्वः
तौ वाति शिवः त्रिपुरासुरबधे प्रीणयत्यनेन
अज
क + वा + करणे कः । "कः प्रजापतिरुद्दिष्टः
को
वायुरिति शब्दित" इत्येकाक्षरीयकोषे) शिव-
धनुः । इति त्रिकाण्डशेषः ॥

**अजकावः**, पुं, क्ली, शिवधनुः । इति त्रिकाण्डशेषः ॥

**अजगन्धा**, स्त्री, (अजस्य गन्धवत् गन्धो यस्याः सा)
वनयवानी । तत्पर्य्यायः । अजमोदा २ ।
खराश्वा ३
कारवी ४ । इति रत्नमाला ॥ उग्रगन्धा ५ ।
इत्य-
मरः ॥ वृक्षविशेषः । ववरी इति हिन्दीभाषा ॥
इति मदनविनोदः ॥ तिलौणि इति
राजनिर्घण्टः ॥
तत्पर्य्यायः । वस्तगन्धा ३ खरपुष्पा ४ अवि-
गन्धिका ५ उग्रगन्धा ६ ब्रह्मगर्भा ७ ब्राह्मो ८
पूति-
मयूरिका ९ । अस्या गुणाः । कटुत्वं । उष्णत्रं ।
वातगुल्मोदररोगवर्णव्रणार्त्तिशूलनाशित्वं ।
पीता
चेदञ्जने हिता । इति राजनिर्घण्टः ॥

**अजगन्धिका**, स्त्री, (अजस्य गन्धः षष्ठीतत्पुरुषः
तद्वत् गन्धोऽस्यास्ति अजगन्ध + मत्वर्थे ठन्
ठस्येक
इति ठस्य इकः) वर्व्वरीवृक्षः । इत्यमरः ॥
वावरि-
इति भाषा ।

**अजटा**, स्त्री, (नास्ति जटा यस्याः सा)
भूम्यामलकी ।
इति राजनिर्घण्टः ॥ तस्या रूपान्तरं ।
अजडा ।
अज्झटा ॥

**अजडा**, स्त्री, (अजडां जाड्याभावं सम्पादयति या अज-
डा + करोत्यर्थे णिच् ततः पचाद्यच्)
कपिकच्छुः ।
आलकुशी इति भाषा ॥ इति
राजनिर्घण्टः ॥

**अजथ्या**, स्त्री, (अजानां समूहः अज + थ्यन् स्त्रियां
टाप् अजसमूहः । तद्वन्नानावर्ण्णत्वात्)
स्वर्ण्ण-
यूथिका । इति दीक्षिताः ॥

**अजदण्डी**, स्त्री, (अजस्य ब्रह्मणो यज्ञाय दण्डः काष्ठ-
मस्याःसा स्त्रियां ङीप् ।
ब्रह्मदण्डीवृक्षकाष्ठेनयज्ञ-
विधानात् ।) ब्रह्मदण्डीवृक्षः इति
राजनिर्घण्टः ॥

**अजनकः**, त्रि, (न जनकः नोत्पादकः नञ्समासः । जन-
यति जन् + णिच् ण्वुल्) अनुत्पादकः ।
अजन्मदः ।
अस्रष्टा । अकारकः ॥

**अजननिः**, पुं, (न + जन् + आक्रोशे नञ्यनिरिति
सूत्रेण निन्दायां भावे अनिः ।
तस्याजननिरेवास्तु
जननीक्लेशकारिण इति
प्रसिद्धप्रयोगोऽप्यस्ति)
जन्मराहित्यं । उत्पत्त्यभावः । अकरणिः
। शापः ।
यथा । अजननिरस्तु तस्य ।
इत्यमरटीकायां
रायमुकुटः ॥

**अच्युतावासः**, पुं, (ओष्यते वासः क्रियतेऽत्र आ +

वस् + अधिकरणे घञ् यद्वा अच्युतस्य

आवासः ।

‘अश्वत्थः सर्व्ववृक्षाणां देवर्षीणाञ्च

नारदः’ इति

भगवद्गीतायाम् ।) अश्वत्थवृक्षः ।

इति राजनिर्घण्टः ॥

**अजन्यं**, क्ली, (न जन्यते सम्पाद्यते केनापि न + जन्

णिच् यत्) उत्पातः ।

शुभाशुभसूचकभूकम्पादिः ।

इत्यमरः ॥ अजननीये त्रि ॥

**अजपः**, पुं, (अप्रशस्तं जपति पठति यः । जप् + पचा-

द्यच न जपः नञ्समासः ।) असदध्येता

। कुपाठकः ।

इति हेमचन्द्रः ॥ (अजं पाति रक्षति यः

+ अज +

पा + कर्त्तरि क उपपदसमासः)

छागपालकः ।

यथा, --

“ओषधीर्नामरूपाभ्यां जानते ह्यजपा

वने” ।

इति चरकः ॥

**अजपा**, स्त्री, (न जप्यते नोच्चार्य्यतेऽसौ अपितु श्वास-

:प्रश्वासयोर्गमनागमनागमनाभ्यां सम्पाद्यते जप् + घ-
ञर्थे कः स्त्रियां टाप् नजपा नञ्समासः ।)
हंसमन्त्रः । यथा, --
“वियदर्द्धेन्दुललितस्तदादिसर्गसंयुतः ।
अजपाख्यो मनुः प्रोक्तो द्व्यक्षरः सुरपादपः” ॥
* ॥
अस्य देवतार्द्धनारीश्वरमूर्त्तिः । यथा, --
“उद्यद्भानुस्फुरिततडिंदाकारमूद्र्ध्वाम्बिकेशं
पाशाभीतिं वरदपरशुं संदधानं कराब्जैः ।
दिव्याकल्पैर्नवमणिमयैः शोभितं विश्वमूलं
सौम्याग्नेयं वपुरवतु नश्चन्द्रचूडं त्रिनेत्रं” ॥
इति तन्त्रसारः ॥ * ॥ स्वाभाविकनिःश्वासप्र-
श्वासरूपेण जीवजप्यहंसमन्त्रः ।
तथाच दक्षिणामूर्त्तिसंहितायां ।
“अथ वक्ष्ये महेशानि प्रत्यहं प्रजपेन्नरः ।
मोहबन्धं न जानाति मोक्षस्तस्य न विद्यते ॥
श्रीगुरोः कृपया देवि ज्ञायते जप्यते यदा ।
उच्छ्वासनिःश्वासतया तदा बन्धक्षयो भवेत् ॥
उच्छ्वासैरेव निःश्वासैर्हंस इत्यक्षरद्वयं ।
तस्मात् प्राणस्य हंसाख्य आत्माकारेण
संस्थितः ॥
नाभेरुच्छ्वासनिःश्वासात् हृदयाग्रे व्यवस्थितः ।
षष्टिश्वासैर्भवेत् प्राणः षट्प्राणा नाडिका मता ॥
षष्टिनाड्या ह्यहोरात्रं जपसंख्याक्रमो मतः ।
एकविंशतिसाहस्रं षट्शताधिकमीश्वरि ॥
जपते प्रत्यहं प्राणी सान्द्रानन्दमयीं परां ।
उत्पत्तिर्जपमारम्भो मृत्युस्तत्र निवेदनं ॥
विना जपेन देवेशि जपो भवति मन्त्रिणः ।
अजपेयं ततः प्रोक्ता भवपाशनिकृन्तनी” ॥
अन्यत्रापि ।
“षट्शतानि दिवारात्रौ सहस्राण्येकविंशतिं ।
एतत्संख्यान्वितं मन्त्रं जीवो जपति सर्व्वदा” ॥
* ॥
सन्ध्यावन्दनहीना । इति महाभारतं ॥

**अजभक्षः**, पुं, (अजानां भक्षः खाद्यः षष्ठीतत्पुरुषः ।
भक्ष + कर्म्मणि घञ् ।) वर्व्वूरवृक्षः । इति राज-
निर्घण्टः ॥

हस्तिकारवी ७ गन्धपत्रिका ८ मायूरी ९
शि-
खिमोदा १० मोदाढ्या ११ वह्निदीपिका
१२
ब्रह्मकोशी १३ विशाली १४ हयगन्धा १५
उग्र-
गन्धिका १६ मोदिनी १७ फलमुख्या
१८ वि-
शल्या १९ । अस्या गुणाः । कटुत्वं ।
उष्णत्वं ।
रूक्षत्वं । रुचिकारित्वं ।
कफवायुशूलाध्मानारुचि-
जठरामयनाशित्वञ्च । इति राजनिर्घण्टः
॥ य-
मानी । यथा, --
“अजमोदा खराश्वा च मयूरो
दीप्यकस्तथा ।
तथा ब्रह्मकुशा प्रोक्ता कारवी लोचमस्तकः
॥
अजमोदा कटुस्तीक्ष्णा दीपनी
कफवातनुत् ।
उष्णा विदाहिनी हृद्या वृष्या बलकरी लघुः
॥
नेत्रामयकृमिच्छर्द्दिहिध्मवस्तिरुजो हरेत्”
॥ * ॥
अथ खुरासानीयवानीनामगुणाः ।
“पारसीययवानी तु यवानीसदृशी गुणैः ।
विशेषात्पाचनी रूक्षा ग्राहिणी मादिनी
गुरुः” ॥
इति भावप्रकाशः ॥

**अजमोदिका**, स्त्री, (अजं मोदयति हर्षयति या ।
मुद् + णिच् ण्वुल् स्त्रियां टाप् । अजस्य
मोदिका
षष्ठीतत्पुरुषः) यवानी । इति वैद्यकं ॥

**अजम्भः**, पुं, (न सन्ति जम्भा दन्ता यस्य सः)
(सूर्य्ये
च) भेकः । इति शब्दरत्नावली ॥ न सन्ति

यस्य सः) वृक्षविशेषः । गुयाशिषा ।
शूया-
शिम्बी इति च भाषा । तत्पर्य्यायः ।
शिखी २
केशी ३ महाह्रस्वा ४ अग्रपर्णी ५ । इति
रत्न-
माला ॥

**अजशृङ्गी**, स्त्री, (अजस्य छागस्य शृङ्गमिव फलं
यस्याः सा स्त्रियां ङीप्) वृक्षविशेषः ।
गा-
डरशिङ्गी मेढाशिङ्गी । इति ख्याता ।
तत्प-
र्य्यायः । विषाणी २ । इत्यमरः ॥
विषाणिका ३
चक्रश्रेणी ४ अजगन्धिनी ५ मौर्व्वी ६
नेत्रौ-
षधी ७ आवर्त्तिनी ८ । इति रत्नमाला
॥ मेष-
शृङ्गी ९ वर्त्तिका १० सर्पदंष्ट्रिका ११
चक्षुष्या १२
तिक्तदुग्धा १३ पुत्रशृङ्गी १४ कर्णिका
१५ । अस्या
गुणाः । कटुत्वं तिक्तत्वं ।
कफार्शःशूलशोथश्वास-
हृद्रोगविषरोगकासकुष्ठनाशित्वं ।
चक्षुर्हितका-
रित्वञ्च ॥ तत्फलस्य गुणाः । तिक्तत्वं ।
उष्णत्वं ।
कटुत्वं कफवायुनाशित्वं ।
जठरानलरुचिकारित्वं ।
हृद्यत्वं । लवणाम्लरसत्वञ्च । इति
राजनिर्घण्टः ॥
(यथा सुश्रुते, --
“अजगन्धाश्वगन्धा च काला सरलया
सह ।
एकैषिकाजशृङ्गी च प्रलेपः
श्लेष्मशोथहृत्” ॥

**अजमीढः**, पुं, (अजः छागः यज्ञे मीढः सिक्तो यत्र

सः तद्देशाधिपः अजमीढ + अण् संज्ञापूर्ब्बक-
वृद्धेरनित्यत्वात् वृद्ध्यभावः ।) राजा युधिष्ठिरः
।
इति त्रिकाण्डशेषः ॥

**अजमोदा**, स्त्री, (अजानां खाद्यतया मोदो हर्षो

यस्याः सा अजानां मोदो गन्ध इव गन्धो
यस्याः
सा) यवानिका । तत्पर्य्यायः । उग्रगन्धा २
ब्रह्म-
दर्भा ३ यवानिका ४ ॥ इत्यमरः । यमानी
द्विविधा ।
एका क्षेत्रयमानी सा अजमोदेत्येव ख्याता ।
अपरा यमानीत्येव ख्याता । अविशेषात् द्वयो-
रपीति सुभूतिः ॥ केचित्तु अजमोदादिद्वयं वन-
यमान्यां । ब्रह्मदर्भादिद्वयं यमान्यामित्याहुः
उग्रगन्धाजमोदाख्या स्मृतक्षेत्रयमानिकेति । य-
मानी दीपको दीप्यो भूतिकश्च यमानिकेति च
रत्नमाला ॥ इति भरतः ॥ * ॥ वैद्यके तु वन-
यमानी इति ख्याता । तत्पर्य्यायः । खराह्वा २
वस्तमोदा ३ मर्कटी ४ मोदा ५ गन्धदला ६

जम्भा दन्ता अस्य ॥

**अजयः**, पुं, (जि + भावे अच् न जयः नञ्समासः
।)

पराजयः । यथा, --
“सुखदुःखे समे कृत्वा लाभालाभौ
जयाजयौ” ।
इति भगवद्गीता ॥
राढदेशप्रसिद्धनदविशेषः ॥

**अजया**, स्त्री, (न जीयते पराजीयतेऽसौ जि +

कर्म्मणि अच् स्त्रियां टाप् न जया
नञ्समासः ।)
विजया । भाङ्ग सिद्धि इति ख्याता । इति
राज-
निर्घण्टः ॥

**अजय्यं**, त्रि, (जेतुमशक्यं जि + कर्म्मणि “क्षय्य
जय्यौ

शक्यार्थे इति यत्” न जय्यं नञ्समासः ।)
जेतुम-
शक्यं । अजेयं । इति मुग्धबोधव्याकरणं ॥
(यथा
रघुवंशे, -- “राज्ञामजय्योऽजनि
पुण्डरीकः” ।)

**अजरः**, त्रि, (जॄ + भावे अङ् गुणः स्त्रियां टाप्,

नास्ति जरा जीर्णावस्था यस्य सः)
जरारहितः ।
वार्द्धक्यशून्यः । यथा, --
“अजरामरवत् प्राज्ञो विद्यामर्थञ्च
चिनायेत्” ।
इति हितोपदेशः ॥

**अजरा**, स्त्री, (नास्ति जरा यस्याः सा ।) जीर्ण-

फञ्जीलता । वृद्धदारकप्रभेदः । गृहकन्या ।
घृत-
कुमारीति ख्याता । इति राजनिर्घण्टः ॥

**अजर्य्यं**, क्ली, (न जीर्य्यति जॄ + कर्त्तरि अजर्य्यं
सङ्गत-

**अजस्रं**, क्ली, (नञ् + जस् +
नमिकम्पिस्म्यजस इत्या-

दिना र नञ्समासः) निरन्तरं । सततं ।
इत्यमरः ॥
(यथा रघुवंशे, “अजस्रदीक्षाप्रयतस्य
मद्गुरोः
क्रियाविघाताय कथं प्रवर्त्तसे” ।)

**अजहत्स्वार्था**, स्त्री, (न जहत् न त्यजन् स्वार्थो
यां

वृत्तिं यद्वा न जहती स्वार्थं या लक्षणा
सा ।)
लक्षणाख्यवृत्तिविशेषः ।
उपादानलक्षणा । स्वी-
यार्थात्यागिनी लक्षणा । यथा । कुन्ताः
प्रवि-
शन्तीत्यत्र कुन्तधारिपुरुषे लक्षणा
इत्यलङ्कार-
शास्त्रं ॥

**अजहल्लिङ्गः**, पुं, (न जहत् लिङ्गं यं शब्दं यद्वा न

जहत् लिङ्गं यः शब्दः इति ।)
विशेषणभूतोऽपि
स्वलिङ्गात्यागी शब्दः । इति व्याकरणं
॥

**अजहा**, स्त्री, (न जहाति परित्यजति शुकान्,
अनु-

पसर्गाल्लिम्पविन्दधारिपारि वेद्येजिचेति
साति-
साहिभ्यश्च इति पाणिनिसूत्रेण
चकारस्य
अनुक्तसमुच्चयार्थात् शः द्वित्वं नञ्तत्,
स्त्रियां
टाप्) शूकशिम्बी । इत्यमरटीकायां
स्वामी ॥
अत्याज्ये त्रि ॥

**अजा**, स्त्री, (न जायते नोत्पद्यते अपि तु
उत्पद्यते

न + जन् + कर्त्तरि ड नञ् समासः ।
अत्र नञ्-

मिति सूत्रेण यत् । तेन सङ्गतमार्य्येण रामाजर्य्यं

द्रुतमिति भट्टिः) सङ्गतं । सौहार्दं । इति हेम-

चन्द्रः ॥ अजरार्हे त्रि ॥ (यथा रघुवंशे, --

“मृगरजय्य जरसोपदिवृमदेहबन्धाय

पुनर्बबन्ध” ।

**अजलम्बनं**, क्ली, (अज इव लम्ब्यते कृष्णवर्णत्वात्

ज्ञायतेऽसौ लम्ब + कर्म्मणि ल्युट्)

स्रोतोञ्जनं ।

इति शब्दचन्द्रिका ॥

**अजलोमा**, [न्] पुं, (अजस्य लोमेव लोम मञ्जरी

शब्दः शिरश्चालने । आद्याशक्तिपक्षे नञ्निषे-

धार्थः, अजामेकां लोहितशुक्लकृष्णां नमाम इति

साङ्ख्यतत्त्वकौमुद्यां ।) छागी ।

इत्यमरः ॥ माया ।

आद्या शक्तिः । इति पुराणं ॥

(“अजामेकां लो-

हितकृष्णशुक्लां बह्वीः प्रजाः सृजमानां सरू-

पाम् अजो ह्येको जुषमाणोऽनुशेते जहात्येनां

भुक्तभोग्यामजोऽन्यः” -- इति श्वेताश्वतरोपनि-

षद् ॥) ओषधिभेदः । (यथा सुश्रुते, --

“अजा महौषधी ज्ञेया

शङ्खकुन्देन्दुपाण्डुरा” ।)

**अजागरः**, पुं, (न जागरयति सेवनेन लोकान्

निद्रापयति यः, जागृ + णिच्

जाग्रोऽविचिण

:नोङित्सु इति गुणः ततः पचाद्यच् नञ्समासः ।)

भृङ्गराजवृक्षः । इति शब्दरत्नावली ॥
जागरण-
रहिते त्रि ॥

**अजाजी**, स्त्री, (अजेन वीयते अत्युत्कटगन्धतया

त्यज्यतेऽसौ अज् + इञ् अजादिभ्यश्च इति कर्म्मणि
इञ् । अजेन आजिः तृतीया तत् । स्त्रियां
वाङीप्) श्वेतजौरकः । कृष्णजीरकः । काकोदुम्ब-
रिका । इति राजनिर्घण्टः ॥

**अजाजीवः**, पुं, (अजेन अजव्यवसायेन आजीवति

सम्यक् प्राणान् धारयति यः, आ + जीव + पचा-
द्यच् अजेन आजीवः तृतीयातत्पुरुषः) जावालः ।
छागोपजीवी । इत्यमरः ॥

**अजातः**, त्रि, (जन् + कर्त्तरि क्तः न जातः नञ्-

समासः ।) अजन्मविशिष्टः । अनुत्पन्नः । यथा ।
अजातपक्षा इव मातरं खगाः । इति श्रीभागवतं ॥
(यथा दायभागे, --
"ये जाता येऽप्यजाता वा ये च गर्भे व्यवस्थिताः ।
वृत्तिंतेऽपि हि काङ्क्षन्ति वृत्तिलोपोविगर्हितः" ॥)

**अजातशत्रुः**, पुं, (अजातः सर्व्वप्रियत्वात् अनुत्पन्नः

शत्रुर्यस्य सः) राजा युधिष्ठिरः । इति हेमचन्द्रः ॥
(यथा महाभारते, --

इति भाषा तत्पर्य्यायः । नीलवुह्ना २ नील-
पुष्पी ३ अतिलोमशा ४ नीलिनी ५ छगलान्त्री ६
अन्तःकोठरपुष्पी ७ । इति रत्नमाला ॥ वस्तान्त्री ।
वृद्धदारकः । इति राजनिर्घण्टः ॥

**अजापालकः**, त्रि, (अजानां पालकः रक्षकः षष्ठी-

तत्पुरुषः) अजाजीवी । छागरक्षकः । इति
शब्दरत्नावली ॥

**अजितं**, त्रि, (न जितं न पराजितं नञ्समासः ।

जि + कर्म्मणि क्तः) अनिर्जितं । इति हेमचन्द्रः ॥
अतिपराजितश्च ॥

**अजितः**, पुं, (न जितः न केनापि पराजित ऐश्व-

र्य्येण । "वेधाः शार्ङ्गोऽजितः कृष्णो दृढः शङ्क-
र्षणोऽच्युत" इति सहस्रनाम पर्य्यये ।) विष्णुः ।
बुद्धः । तीर्थकृज्जैनविशेषः । इति हेमचन्द्रः ॥
शिवः । इति तस्य सहस्रनाममध्ये पठितः ॥

**अजिनं**, क्ली, (अजति धूल्यादि आवृणोति यत्

अज् + कर्त्तरि इनन् बाहुल्यात् अजेर्व्यद्यञ् पोश्च
इति नवी आदेशः) (अजाजिनं शोणितविन्दु-
वर्षि चेति कुमारसम्भवे) चर्म्म । ब्रह्मचार्य्यादि-
धार्य्यकृष्णसारादित्वक् । इत्यमरः ॥ जिनभिन्ने
वाच्यलिङ्गं ।

**अजिनपत्रा**, स्त्री, (अजिनं चर्म्म पत्रं पक्षो यस्याः

**अजीर्णं**, क्ली, (जॄ + क्तः, न जीर्णं नञ्समासः) अपाकः ।

तत्पर्य्यायः । वायुगण्डः २ अन्तर्वमिः ३ पलता-
शयः ४ । इति त्रिकाण्डशेषः ॥ अथाजीर्णस्य
विप्रकृष्टं निदानमाह । अत्यम्बुपानाद्विषमाश-
नाच्च सन्धारणात् स्वप्नविपर्य्ययाच्च । कालेऽपि
सात्म्यं लघु चापि भुक्तमन्नं न पाकं भजते नरस्य ॥
सन्धारणात् क्षुद्वातमूत्रपुरीषादीनां । स्वप्नविप-
र्य्ययात् दिवाशयनाद्रात्रौ जागरणात् । लघु
चापीत्यपिशब्दात् स्निग्धोष्णादिगुणयुक्तमपि ॥ * ॥
अन्यच्च ।
"ईर्षाभयक्रोधपरिप्लुतेन
लुब्धेन रुग्दैन्यनिपीडितेन ।
प्रद्वेषयुक्तेन च सेव्यमान-
मन्नं न सम्यक् परिपाकमेति" ॥
परिप्लुतेन व्याप्तेन । उक्तकारणेभ्योऽतिमात्र-
भोजनं विशेषादजीर्णस्य कारणमजीर्णञ्च बहु-
व्याधीनां कारणमित्याह ।
"अनात्मवन्तः पशुवद्भुञ्जते येऽप्रमाणतः ।
रोगानीकस्य ते मूलमजीर्णं प्राप्नुवन्ति हि" ॥
अनात्मवन्तः अबुद्धिमन्तः । रोगानीकस्य विसू-
च्यादेः । मूलं कारणं ॥ * ॥ अन्यच्च ।
"प्रायेणाहारवैषन्यादजीर्णं जायते नृणां ।
तन्मूलो रोगसंघातस्तद्विनाशाद्विनश्यति" ॥
तद्विनाशाद्विनश्यति अजीर्णविनाशात् विनश्यति
रोगसंघात इत्यर्थः । यद्वा तत् अजीर्णं आशात्
भक्षणात् विना भक्षणाभावे विनश्यति निवर्त्तते

"अजातशत्रुमासाद्य कुन्ती
वचनमब्रवीत्" ।)
(शिवः । काशीपुत्त्रः । शमीकपुत्त्रः ।)
(यथा हरिवंशे,
"श्यामपुत्त्रः शमीकस्तु शमीको
राज्यमावहत् ।
जुगुप्समानो भोजत्वाद्राजसूयमवाप सः
।
अजातशत्रुः शत्रूणां जज्ञे तस्य
विनाशनः" ॥)
(विम्बिसारपुत्त्रः स च
शाक्यमुनिसमकालोनः ॥)

**अजातारिः**, पुं, (अजातः सर्व्वप्रियत्वात् अनुत्पन्नः
अरिः शत्रुर्यस्य सः) राजा युधिष्ठिरः ।
इति
भूरिप्रयोगः ॥

**अजातौल्वलिः**, पुं, (अजया उपजीवी तौल्वलिः
मुनिविशेषः शाकपार्थिवादित्वात्
समासः मध्य-
पदलोपश्च । तुल्वलस्यापत्यं तुल्वल +
अत इञिति
इञ्) अजोपजीविमुनिविशेषः । इति
मध्यपद-
लोपिकर्म्मधारयसमासे सुपद्मव्याकरणं
॥ तुल्वल-
स्यापत्यं तौल्वलिः अजोपजीवी चासौ
तौल्वलि-
श्चेति । इति तट्टीका ॥

**अजादनी**, स्त्री, (अजेन तृप्त्यर्थमद्यते भक्ष्यतेऽसौ
अद् + कर्म्मणि ल्युट् स्त्रियां ङीप्
अजस्य अदनी
खाद्या षष्ठीतत्पुरुषः) क्षुद्रदुरालभा ।
इति राज-
निर्घण्टः ॥

**अजानेयः**, पुं, (अजवत् शिववृषवत् यथास्थानमारो-
सा) चर्म्मचटिका । चामचिका इति ख्याता
।
तत्पर्य्यायः । जतुका २ । इत्यमरः ॥
जतूका ३ ।
इति तट्टीका ।

**अजीनपत्री**, स्त्री, (अजीनं चर्म्म पत्रं यस्याः सा
गौरादित्वात् ङीष्) जतुका । इति
राजनिर्घण्टः ॥

**अजिनयोनिः**, पुं, (अजिनानां चर्म्मणां योनिः
आकरः षष्ठीतत्पुरुषः । योनिः
स्त्रीपुंसयोश्चस्यादा-
करे स्मरमन्दिरे इति मेदिनी) हरिणः ।
इत्यभरः ॥

**अजिरं**, क्ली, (अजति गृहान्निःसरति यत्र अज +
अधिकरणे किरच् । उठान इति भाषा ।
अजति
गच्छति यः इति वायुः । अजति गच्छति
क्षण-
भङ्गरमिति यावत् इति शरीरं । अजन्ति
इन्द्रि-
याणि गच्छन्त्यत्र इति व्युत्पत्त्या विषयः ।)
चत्वरं ।
(यथा विष्णुपुराणे, --
"पुनश्च भरतस्याभूदाश्रमस्योटजाजिरे" ।)
वायुः । शरीरं । मण्डूकः । विषयः । इति
मेदिनी ॥

**अजिह्मं**, त्रि, (जिहि वक्रतायां जिहि + मक् न
जिह्मं नञ्समासः) अवक्रं । सरलं ॥
इत्यमरः ॥
भेके पुं । इति शब्दरत्नावली ॥ (यथा मनुः,
--
"अजिह्मामशठां शुद्धां जीवेत्
ब्राह्मणजीविकां" ।)

**अजिह्मगः**, पुं, (अजिह्मं सरलं गच्छति यः अजिह्म
+ गम् + डः उपपदसमासः) बाणः ।
इत्यमरः ॥
इत्यर्थः ॥ * ॥ अजीर्णस्य सामान्यस्य
लक्षणमाह ।
"ग्लानिर्गौरवमाटोपो भ्रमो मारुतमूढता ।
विबन्धोऽतिप्रवृत्तिर्वा सामान्याजीर्णलक्षणं"
॥
मारुतमूढता वायोरवरोधः । विबन्धः मला-
प्रवृत्तिः ॥ * ॥ सन्निकृष्टकारणैः सहितानजी-
र्णस्य भेदानाह ।
"आमं विदग्धं विष्टब्धं
कफपित्तानिलैस्त्रिभिः" ।
त्रिभिरित्येकशो न तु मिलितैः ।
"अजीर्णं केचिदिच्छन्ति चतुर्थं रसुशेषतः"
॥
केचित् सुश्रुतादयः ॥ रसशेषतः भुक्तस्य
पक्वस्य
सारभूतो यो द्रवः स रसः सोऽपि पच्यते ।
भुक्तस्य
पक्वस्य सारभूतो यो द्रवः स चापक्वः स
रस-
शेषः तस्मात् चतुर्थमजीर्णं नत्वामाजीर्णं ॥ *
॥
नन्वामाजीर्णाद्रसशेषस्य को भेद उच्यते ।
आमं
मधुरतागतमपक्वं अन्नमेव । रसशेषस्तु
भुक्तस्य
पक्वस्य सारभूतो यो द्रवः स चापक्व इति
भेदः ।
अजीर्णं पञ्चमं केचित् निर्द्दोषं दिनपाकि च ।
निर्द्दोषं गौरवभ्रमशूलादिदोषाजनकं । दिन-
पाकि च आहारोऽहोरात्रेण पाकं यातीति
स्वभावः । यत्तु
मात्राकालसात्म्यादिदोषाद्दिनान्तरे
पाकं याति तद्दिनपाकि । अतएव याममध्ये न
भोक्तव्यमिति वचनं, --
वदन्ति षष्ठं चाजोर्णं प्राकृतं प्रतिवासरं" ।
प्राकृतं अविकारकं । प्रतिवासरं प्रतिदिन-
भावि । भुक्तं यावन्नजीर्णं
तावदजीर्णमित्युच्यते ।

हिणं नयति प्रापयति । आ + नी +
कृत्यल्युटो
बहुलमिति सूत्रेण कर्त्तरि यत् ।
अजश्छागे
हरिब्रह्मधातुस्मरहरे वृषे इति मेदिनी)
उत्तम-
घोटकः । तत्पर्य्यायः । हयोत्तमः २
वाताश्व-
जात्यः ३ । इति त्रिकाण्डशेषः ॥
अजानेयः ४
कुलीनः ५ । इत्यमरः ॥ निर्भये त्रि ।
इति त्रि-
काण्डशेषः ॥

**अजान्त्री**, स्त्री, (अजस्य अन्त्रमिव देहबन्धनमिव

अन्त्रं तदाकारमञ्जरी यस्याः सा
षिद्गौरादि-
भ्यश्च इति ङीष्) वृक्षविशेषः ।
नीलवर्णवोना

अवक्रगे वाच्यलिङ्गः ॥ (यथा रामायणे, --
“ते तस्य कायं निर्भिद्य रक्तपुङ्खा अजिह्मगाः
।
निष्पेतुर्लोहितादिग्धा रक्ता इव महोरगाः ॥
न ह्यबिद्धं तयोर्गात्रे बभूवांगुलमन्तरं ।
नानिर्भिन्नं न चाध्वस्तमपि सूक्ष्ममजिह्मगैः”
॥)

**अजिह्वः**, पुं, (नास्ति जिह्वा यस्य सः) भेकः ।

इति त्रिकाण्डशेषः ॥ जिह्वारहिते त्रि ॥

एतदभिधानस्य प्रयोजनं पाकार्थं
वामपार्श्वशयन-

:प्रियशब्दादिसेवनादिकं । न चात्राहारस्य नि-
षेधः । प्रातराशे त्वजीर्ण्णे तु सायमाशो न दुष्य-
तीति वचनेन सायमाशस्यावश्यं कर्त्तव्यत्वात् ॥ * ॥
आमाजीर्ण्णस्य लक्षणमाह, --
"तत्रामे गुरुतोत्क्लेशः शोथो गण्डाक्षिकूटगः ः
उद्गारश्च यथाभुक्तमविदग्धः प्रवर्त्तते" ॥
गुरुता उदराङ्गयोः । उत्क्लेशः उपस्थितं वमन-
मिव । अक्षिकूटोऽक्षिपुटकः । अविदग्धः अनम्लो
निर्गन्धश्च ॥ * ॥ विदग्धाजीर्ण्णस्य लक्षणमाह, --
"विदग्धे भ्रमतृण्मूर्च्छापित्ताच्च विविधा रुजः ।
उद्गारश्च सधूमाम्लः स्वेदो दाहश्च जायते" ॥
विविधा रुजः औषचोषदाहादयः ॥ * ॥ विष्टब्धा-
जीर्ण्णस्य लक्षणमाह, --
"विष्टब्धे शूलमाध्मानं विविधा वातवेदनाः ।
मलवाताप्रवृत्तिश्च स्तम्भो मोहोऽङ्गपीडनं" ॥
वातवेदनाः तोदभेदादयः ॥ स्तम्भो गात्राणां ।
मोहो मूर्च्छा ॥ * ॥ रसशेषाजीर्ण्णस्य लक्षणमाह,
"रसशेषेऽन्नविद्वेषो हृदयाशुद्धिगौरवे" ॥ * ॥
एतस्य उपद्रवानाह, --
"मूर्च्छा प्रलापो वमथुः प्रसेकः सादनं भ्रमः ।
उपद्रवा भवन्त्येते मृतिश्च रसशेषतः" ॥ * ॥

तस्यालसकमाचष्टे तृष्णोद्गारौ च यस्य तु" ॥
आनह्यते आध्मायते । प्रताम्येत् ग्लायति । परि-
कूजति आर्त्तनादं करोति । कुक्षौ अजीर्ण्णेन
निरूद्धो मारुतः उपरि धावति हृदयकण्ठादिकं
गच्छतीत्यर्थः । काश्यपस्त्वाह, --
"नाधो याति न चाप्युद्र्ध्वमाहारो न च पच्यते ।
कोष्ठे स्थितोऽलसीभूतस्ततोऽसावलसः स्मृतः" ॥
विसूच्यलसयोररिष्टमाह, --
"यः श्यावदन्तौष्ठनखोऽल्पसंज्ञः
छद्द्यर्द्दितोऽभ्यन्तरयातनेत्रः ।
क्षामस्वरः सर्व्वविमुक्तसन्धि-
र्ययान्नरः सोऽपुनरागमाय" ॥
सर्व्वविमुक्तसन्धिः सर्व्वे विमुक्ताः शिथिलीभूताः
सन्धयो यस्य सः ॥ * ॥ विलम्बिकाया लक्षण
माह, --
"दुष्टञ्च भुक्तं कफमारुताभ्यां
प्रवर्त्तते नोद्र्ध्वमधश्च यत्र ।
विलम्बिकां तां भृशदुश्चिकित्सा-
माचक्षते शास्त्रविदः पुराणाः" ॥
भृशदुश्चिकित्सां प्रत्याख्यायोपचरणीयम् । इय-
मसाध्यैबेति जेज्जटः ॥ * ॥ जीर्ण्णस्याहारस्य
लक्षणमाह, --
"उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितं ।
लघुता क्षुत्पिपासे च जीर्ण्णाहारस्य लक्षणं" ॥ * ॥
अथ चिकित्सा, --

विचूर्ण्णितां शीतजलेन भुक्त्वा
भुक्त्वामशङ्को मितमन्नकाले ॥
विदह्यते यस्य तु भुक्तमात्रं
दंदह्यते हृच्च गलश्च यस्य ।
द्राक्षां सितामाक्षिकसम्प्रयुक्तां
लिढ्वाभयां चातिसुखं लभेत ॥
त्रिकटुकमजमोदा सैन्धवं जीरके द्वे
समधरणधृतानामष्टमो हिङ्गुभागः ।
प्रथमकवलभुक्तं सर्पिषा चूर्ण्णमेत-
ज्जनयति जठरेऽग्निं वातरोगांश्च हन्ति" ॥
अजमोदात्र यवानी । अन्तःसंमार्ज्जकत्वात् । जी-
रके द्वे शुक्लं कृष्णञ्च । धरणमत्र मानं । तेन
समधरणं धृतानां तुल्यमानं गृहीतानां शुण्ठ्या-
दीनां भागाः सप्त । तत्राष्टमो भागो हिङ्गुनः ।
हिङ्ग्वष्टकम् ॥ * ॥
"शुद्धं सूतं गन्धकञ्च पलमानं पृथक् पृथक् ।
हरीतकी च द्विपला नागरस्त्रिपलः स्मृतः ॥
कृष्णा च मरिचं तद्वत् सिन्धूत्थं त्रिपलं मतं ।
चतुष्पला च विजया मर्द्दयेन्निम्बुकद्रवैः ॥
पुटानि सप्त देयानि घर्म्ममध्ये पुनः पुनः ।
अजीर्णारिरयं प्रोक्तः सद्यो दीपनपाचनः ॥
भक्षयेद्द्विगुणं भक्ष्यं पाचयेद्भेदयेदपि ।
अजीर्णारिः ॥ * ॥
"द्वौ क्षारौ चित्रकं पाठा करञ्जं लवणानि च ।
सूक्ष्मैलापत्रकं भार्गो कृमिघ्नं हिङ्गु पौष्करं ॥
शटी दार्व्वो त्रिवृन्मुस्तं वचा चेन्द्रयवास्तथा ।
वृक्षाम्लं जीरकं धात्री श्रेयसी चोपकुञ्चिका ॥
अम्लवेतसमम्लीका यवानी देवदारु च ।
अभयातिविषा श्यामा हपुषारग्वधं समं ॥
तिलमुष्ककशिग्रूणां कोकिलाक्षपलाशयोः ।
क्षाराणि लौहकिट्टञ्च तप्तं गोमूत्रसेचितं ॥
सूक्ष्मचूर्णानि कृत्वा तु समभागानि कारयेत् ।
मातुलुङ्गरसेनैतद्भावयेद्दिवसत्रयं ॥
दिनत्रयन्तु शुक्लेन तथार्द्रकरसेन च ।
अत्यग्निकारकं चूर्णं प्रदीप्ताग्निसमप्रभं ॥

अतिशयितेभ्यः आमाद्यजीर्णेभ्यो
विसूच्यादिरो-
गानाह, --
“आमं विदग्धं विष्टब्धमित्यजीर्णं
यदीरितं ।
विसूच्यलसकौ तस्माद्भवेच्चापि
विलम्बिका” ॥
नात्र यथासङ्ख्यं तदा
विष्टब्धाद्विलम्बिका भवितु
मर्हति । सा च कफवाताभ्यां
भवतीत्येकैकतो-
ऽजीर्णाद्विसूच्यादित्रयोत्पत्तिः ॥ * ॥
विसूच्यादि-
निरुक्तिमाह, --
“सूचीभिरिव गात्राणि
तदुत्सन्तिष्ठतेऽनिलः ।
यत्राजीर्णेन सा वैद्यैर्व्विसूचीति
निगद्यते” ॥ * ॥
विसूच्या निदानमाह, --
“न तां परिमिताहारा लभन्ते
विदितागमाः ।
मूढास्तामजितात्मानो
लभन्तेऽशनलोलुपाः” ॥
विदितागमाः ज्ञातायूर्व्वेदाः ॥ * ॥
विसूच्या लक्षण-
माह, --
“मूर्च्छातिसारोवमथूः पिपासा
शूलं भ्रमोद्वेष्टनजृम्भदाहाः ।
वैवर्ण्यकम्पौ हृदये रूजश्च
भवन्ति तस्यां शिरसश्च भेदः” ॥
उद्वेष्टनं हस्तपादयोः । शिरसो भेदः
शिरःशूलं ॥
विसूच्या उपद्रवानाह, --
“निद्रानाशोऽरतिः कम्पो मूत्राघातो
विसंज्ञता ।
अमी उपद्रवा घोरा विसूच्याः पञ्च
दारुणाः” ॥
अमी उपद्रवा घोरा अमी निद्रानाशादयः
उप-

“हरीतकी तथा शुण्ठी भक्ष्यमाणा गुडेन वा
।
सैन्धवेन युता वा स्यात्
सातत्येनाग्निदीपनी ॥
गुडेन शुण्ठीमथवोपकुल्यां
पथ्यां तृतीयामथ दाडिमं वा ।
आमेष्वजीर्णेषु गुदामयेषु
वर्च्चो विवन्धेषु च नित्यमद्यात् ॥
व्योषं दन्ती त्रिवृच्चित्रं कृष्णामूलं
विचूर्ण्णितं ।
तच्चूर्णं गुडसंमिश्रं भक्षयेत् प्रातरुत्थितः
॥
एतद्गुडाष्टकं नाम वलवर्णाग्निवर्द्धनं ।
शोथोदावर्त्तशूलघ्नं प्लीहपाण्ड्वामयापहं
॥
सर्व्वचूर्णसमो गुडो देयः । केचित्तु द्विगुणं
गुडं
दत्त्वा गुटिकां कुर्व्वन्ति । रेचकोऽयं योगः ।
गुडाष्टकम् ॥ * ॥
दहनाजमोदसैन्धवनागरमरि-
चानि चाम्लतक्रेण । सप्ताहादग्निकरं
पाण्ड्वर्शो-
नाशनं परमं ॥ औषधमित्यध्याहार्य्यं, --
“तत्रामे वमनं कार्य्यं विदग्धे लङ्घनं हितं ।
विष्टब्धे स्वेदनं शस्तं रसशेषे शयीत च ॥
वचा लवणतोयेन बान्तिरामे प्रशस्यते ॥
कणासिन्धवचाकल्कं पीत्वा वा शिशिर
म्भसा ॥
जलमत्र सरावमात्रं । वचा कर्षार्द्धमिता ।
सैन्धवं
कर्षार्द्धमितं । द्वयोश्चूर्णयुतेन जलेन
पीतेन ।
“कणादिकल्कं वा पीत्वा वान्तिरामे
प्रशस्यते”
इत्यनेनान्वयः ॥ * ॥
“धान्यनागरसिद्धं वा तोयं दद्याद्विचक्षणः ।
आमाजीर्णप्रशमनं शूलघ्नं वस्तिशोधनं ॥
भवेद् यदि प्रातरजीर्णशङ्का
तदाभयां नागरसैन्धवाभ्यां ।

उपयुक्तं विधानेन नाशयत्यचिराद्गदान् ।
अजीर्णमथ गुल्मांश्च प्लीहानं गुदजानि च ॥
उदराण्यन्त्रवृद्धिञ्च अष्ठीलां वातशोणितं ।
प्रणुदत्युल्वनान्दोषान्नष्टमग्निं प्रदीपयेत् ॥
द्वौ क्षारौ स्वर्ज्जिका यवक्षारश्च ।
लवणाणिपञ्च ।
वृक्षाम्लं विषाम्बिल इति लोके । श्रेयसी हरी-
तकी । उपकुञ्चिका मगरैला ।
अम्लवेतसाभावे
चुक्रं दातव्यं । श्यामा साण्ड । मुष्ककः मोष
इति
लोके । कोकिलाक्षः कोइलषा इति लोके ।
वृहदग्निमुखचूर्णं ॥ * ॥
“स्नुह्यर्कचित्रकैरण्डवरुणं सपुनर्णवं ।
तिलापामार्गकदलीपलाशं तित्तिली तथा ॥
गृहीत्वा ज्वालयेदेतत् प्रस्थं भस्माखिलञ्च
तत् ।
जलाढके विपक्तव्यं यावत् पादावशेषितं ॥
सुप्रसन्नं विनिःस्राव्य लवणप्रस्थसंयुतं ।
पक्कं निर्धूमकठिनं सूक्ष्मचूर्णोकृतं पुनः ॥
यवानीजोरकव्योषस्थूलजीरकहिङ्गभिः ।

| द्रवाः सर्व्वेषामेव रोगाणां घोरा भयङ्कराः ।<br>विसूच्याः पञ्च दारुणा विसूच्यास्तु पञ्चापि यदि<br>स्युस्तदा दारुणाः प्राणभयङ्कराः ॥ * ॥ अलसक-<br>लक्षणमाह, --<br>“कुक्षिरानह्यतेऽत्यर्थं प्रताम्येत् परिकूजति ।<br>निरूद्धो मारूतश्चैव कुक्षावुपरि धावति ॥<br>वातवर्चो निरोधश्च यस्यात्यर्थं भवेदपि । | | |
|---|---|---|

:पृथगर्द्धपलैरेभिश्चूर्नितैस्तत् विमिश्रयेत् ॥

आर्द्रकस्य रसेनापि भावयेच्छोषयेत् पुनः ।
शीतोदकेन तच्चूर्णं पिवेत् प्रातर्हि मात्रया ॥
तस्मिन् जीर्णेऽन्नमश्नीयाद्युषैर्जाङ्गलजै रसैः ।
ईषदम्लैः सलवणैः
सुखोष्णैर्वह्निदीपनैः ॥
एतेनाग्निर्व्विवर्द्धेत बलमारोग्यमेव च ।
तत्रानुपानं शस्तं हि तक्रं वा भोजनं हितं ॥
मन्दाग्न्यर्शोविकारेषु वातश्लेष्मामयेषु च ।
सर्व्वाङ्गशोथरोगेषु शूलगुल्मोदरेषु च ॥
अश्मर्य्यां शर्क्करायाञ्च
विन्मूत्रानिलरोगिषु ।
वेश्वानरक्षारः ॥ * ॥
"सामुद्रं लवणं ग्राह्यमष्टकर्षमितं बुधैः ।
सौवर्च्चलं पञ्चकर्षं
विडसैन्धवधान्यकं ॥
पिप्पली पिप्पलीमूलं पत्रकं
कृष्णजीरकं ।
तालीशं केशरं चव्यमम्लवेतसकं तथा ॥
द्विकर्षमात्राण्येतानि प्रत्येकं
कारयेद्बुधः ।
मरिचं जीरकं विश्वमेकैकं कर्षमात्रकं ॥
दाडिमं स्याच्चतुःकर्षं त्वगेले
चार्द्धकर्षके ।
एतच्चूर्णीकृतं सर्व्वं लवणं
भास्कराभिधं ॥
भक्षयेच्छाणमानं
तत्तक्रमस्तुककाञ्जिकैः ।
वातश्लेष्मभवं गुल्मं प्लीहानमुदरं क्षयं ॥

त्रिसप्ताहप्रयोगेण जायते नात्र संशयः ।
ज्वालामुखीचूर्णं ॥ * ॥ अथ अजीर्णे रसाः, --
"द्विपलं गन्धकं शुद्धं पलमेकन्तु पारदं ।
मृतं लोहं तथा ताम्रं कर्षद्वयमितं पृथक् ॥
संचूर्ण्य सर्व्वं संमिश्य द्रावयित्वाग्नियोगतः ।
सम्यग्द्रुतं समस्तं तत्पञ्चाङ्गुलदले क्षिपेत् ॥
पुनः संचूर्ण्य तत्सर्व्वं लोहपात्रे निधाय च ।
जम्बीरस्य रसं तत्र पूतं पलशतं क्षिपेत् ॥
चुल्ल्यां निवेश्य तद्यत्नात् मृदुना वह्निना पचेत् ।
रसे तस्मिन् घनीभूते तत्संशोष्य विचूर्णयेत् ॥
पञ्चकोलकषायस्य चुक्रेण सहितस्य च ।
भावनास्तत्र दातव्याः पञ्चाशत्संख्यया शनैः ॥
भृष्टटङ्कनचूर्णेन तुल्येन सह मेलयेत् ।
मरिचेनापि तुल्येन तदर्द्धेन विडेन च ॥
भावयेत् सप्तकृत्वस्तच्चणकाम्लजलेन च ।
ततः संशोष्य संपिष्य कूपीमध्ये निधापयेत् ॥
रसः क्रव्यादनामायं भैरवानन्दयोगिना ।
उक्तः सिंहलराजाय बहुमांसाशिने पुरा ॥
भक्षयेद्भोजनस्यान्ते माषद्वयमितं रसं ।
भक्षयित्वा रसं पश्चात् पिवेत्तक्रं ससैन्धवं ॥
अतीवगुरु यद्भुक्तमतिमात्रमथापि वा ।
तत्सर्व्वं जीर्य्यति क्षिप्रं रसस्यैतस्य भक्षणात् ॥
शूलं गुल्मञ्च विष्टम्भं प्लीहानमुदरं तथा ।
रसः क्रव्यादनामायं विनिहन्ति न संशयः"
क्रव्यादो रसोऽजीर्णे ॥ * ॥
रसेन्द्रचिन्तामणौ रस-
रत्नप्रदीपे रसप्रदीपे च ॥
"क्षारत्रयं सूतगन्धौ पञ्चकोलमिदं शुभं ।
सर्ब्बैस्तुल्या जया भृष्टा तदर्द्धा शिग्रुजा जटा ॥
एतत् सर्व्वं जयाशिग्रुवह्निमार्क्कवजैर्द्रवैः ।
भावयेत्रिदिनं घर्म्मे ततो लघुपुटे क्षिपेत् ॥

भञ्जयेद्द्विगुणं भक्ष्यं पाचयेद्रेचयेदपि ।
अजीर्णारिः ॥ * ॥
"पारदामृतलवङ्गगन्धकं
भागयुग्ममरिचेन मिश्रितं ।
तत्र जातिफलमर्द्धभागिकं
तित्तिडीफलरसेन मर्द्दितं ॥
वह्निमान्द्यदशवनाक्त्रशनो
रामवाण इति विश्रुतो रसः ।
सङ्ग्रह ग्रहणि कुम्भकर्णक-
मामवातखरदूषणं जयेत् ॥
दीयते तु चणकानुमानतः
सद्य एव जठराग्निदीपनः ।
रोचकः कफकुलान्तकारकः
श्वासकासवमिजन्तुनाशनः ॥
पाराभाग १ विषभाग १ लवङ्गभाग १ गन्धक-भाग १ मरिचभाग ८ जायफलभाग २ । राम-वाणरसोऽजीर्णे ॥ * ॥
रसेन्द्रचिन्तामणौ, --
"पलं चिञ्चाक्षारः पलपरिमितं पञ्चलवणं द्वयं सम्यक्पिष्टं भवति लघु निम्बुफलरसैः ।
ततस्तप्तं
तस्मिन् पलपरिमितं शङ्खशकलं क्षिपेद्वारान् सप्त द्रवति तदनेनैव विधिना ॥ पलप्रमाण कटुकत्रयञ्च पलार्द्धमानेन च हिङ्गुभागः । विषं पलद्वादशभागयुक्तं तावान्रसो गन्धक एष चोक्तः --
"बदरास्थिप्रमाणेन वटीमेतस्य कारयेत् ।
भक्षयेत् सर्व्वदा सा स्यात्
सर्व्वाजीर्ण्णप्रशान्तये ॥
सर्व्वोदरेषु शूलेषु विसूच्यां विविधेषु च ।
अग्निमान्द्येषु गुल्मेषु सदा शङ्खवटी हिता" ॥
शङ्खवटी अजीर्ण्णे ॥ * ॥ रसप्रदीपे, --
"स्नुगर्क्कचिञ्चापामार्गरम्भातिलपलाशजान् ।
लवणान् भिषगादद्यात् प्रत्येकं पलमात्रया ॥
लवणानि पृथक् पञ्च ग्राह्याणि पलमात्रया ।
स्वर्ज्जिका च यवक्षारष्टङ्कणं त्रितयं पलं ॥
सर्व्वं त्रयोदशपलं सूक्ष्मचूर्णं विधाय तु ।
निम्बूफलरसे प्रस्थसंमिते तत् परिक्षिपेत् ॥

अर्शांसि ग्रहणीं कुष्ठं विवन्धञ्च भगन्दरं
।
शूलं शोथं श्वासकासावामदोषञ्च
हृद्रुजं ॥
अश्मरीं शर्कराञ्चापि पाण्डुरोगं
कृमीनपि ।
मन्दाग्निं नीशयेदेतद्द्वीपनं पाचनं परं
॥
हिताय सर्व्वलोकानां
भास्करेणैतदीरितं ।
हन्यात् सर्व्वाण्यजीर्णानि
भुक्तमात्रमसंशयं ॥
निम्बु रसादिकं दत्त्वा
गुटिकामप्यकेकुर्व्वन्ति" ॥
अथ दाडिमस्य वीजानां चूर्णं
कर्षचतुष्टयमितं
देयं । भास्करलवणचूर्णं ॥ * ॥
सैन्धवं समूलमगधा
चव्यानलनागरं पथ्या । क्रमवृद्धि
मग्निवृद्ध्यै वड-
वानलनामचूर्णं स्यात् ॥
वडवानलचूर्णं ॥ * ॥ पथ्या-
नागरकृष्णाकरञ्जविल्वाग्निभिः
सितातुल्यैः । वड-
वानल इब जरयति बहुगुर्व्वपि भोजनं
चूर्णं
द्वितीयं वडवानलचूर्णं ॥ * ॥
"एलात्वङ्नागपुष्पाणां
मात्रोत्तरविवर्द्धिता ।
मरिचं पिप्पली शुण्ठी चतुःपञ्च
षड्डुत्तरं ॥
द्रव्याण्येतानि यावन्ति तावती
सितशर्करा ।
चूर्णमेतत् प्रयोक्तव्यमग्निसन्दीपनं परं"
॥
समशर्करचूर्णं ॥ * ॥
"इन्द्रासनं सप्तपलं त्रिफलायाः
पलत्रयं ।
सप्तधार्द्रद्रवैर्घृष्टो रसो ज्वालानलो भवेत् ।
निष्कोऽस्य मधुना लीढोऽनुपानं गुडनागरं ॥
हन्त्यजीर्णमतीसारं ग्रहणीमग्निमार्द्दवं ।
श्लेष्महृल्लासवमनमालस्यमरूचिं जवात्" ॥
पञ्चकोलं, --
पिप्पली पिप्पलीभूलं चव्यचित्रकनागरं ।
जयात्र
विजया । मार्क्कवो भृङ्गराजः । लघुपुटे
गजपुटे ।
आर्द्रमार्द्रकं । निष्कः टङ्कः । ज्वालानलो
रसो-
ऽजीर्णे ॥ * ॥ रसप्रदीपे, --
"टङ्कणं रसगन्धौ च समं भागत्रयं विषात् ।
कपर्द्दः स्वर्ज्जिकाक्षारौ मागधी विश्वभेषजं
॥
पृथक् पृथक् कर्षमात्रं वसुभागमिहोषणं ।
जम्बीराम्लैर्द्दिनं घृष्टं भवेदग्निकुमारकः ॥
विसूचीशूलवातादिवह्निमान्द्यप्रशान्तये" ।
क्षारीयवक्षारः । अग्निकुमारोरसो विसूच्याद्य-
जीर्णे ॥ * ॥ रसेन्द्रचिन्तामणौ, --
"शुद्धसूतं गन्धकञ्च पलमानं पृथक् पृथक् ।
हरीतकी च द्विपला नागरस्त्रिपलः स्मृतः ॥
कृष्णा च मरिचं तद्वत् सिन्धूत्थं त्रिपलं मतं ।
चतुष्पला च विजया मर्दयेन्निम्बुकद्रवैः ॥
पुटानि सप्त देयानि घर्म्ममध्ये पुनः पुनः ।
अजीर्णारिरयं प्रोक्तः सद्यो दीपनपाचनः ॥
तत्र शङ्खस्य शकलं पलं वह्नौ प्रताप्य तु ।
वारान्निर्व्वापयेत् सप्त सर्व्वं द्रवति तद्यथा ॥
नागरं त्रिपलं ग्राह्यं मरिचञ्च पलद्वयं ।
पिप्पली पलमाना स्यात् पलार्द्धं भृष्टहिङ्गुनः ॥
ग्रन्थिकं चित्रकं चापि यवानी जीरकं तथा ।
जातीफलं लवङ्गञ्च पृथक् कर्षद्वयोन्मितं ॥
रसोगन्धो विषञ्चापि टङ्कणञ्च मनःशिला ॥
एतानि कर्षमात्राणि सर्व्वं संचूर्ण्य मिश्रयेत् ।
शरावार्द्धेन चुक्रेण संनीय वटिकाञ्चरेत् ॥
माषप्रमाणां सा वैद्यैर्वृहच्छङ्खवटी स्मृता ॥
सर्ब्बाजीर्ण्णप्रशमनी सर्व्वशूलनिवारिणी ।
विसूच्यलसकादीनां सद्यो भवति नाशिनी" ॥
वृहच्छङ्खवटिका अजीर्ण्णे ॥ * ॥
"टङ्कणकणामृतानां सहिङ्गुलानां समभागाः ।
मरिचस्य भागयुगलं निम्बुनीरैर्व्वटी कार्य्या ॥
वटिकां कलायसदृशीमेकां द्वे वा समश्नीयात् ।

| | | |
|---|---|---|
| पलत्रयं त्र्यूषणस्य सितायाश्च चतुःपलं ॥<br>अमृता शतपुत्री च तथा कृष्णापराजिता ।<br>आसां चूर्णं समादाय पलमात्रं पृथक् पृथक् ॥<br>भावयेदेकतः सर्व्वं भृङ्गराजरसेन तु ।<br>स्वभाविकमिदं चूर्णं स्निग्धभाण्डे विनिक्षिपेत् ॥<br>विलिहन् मधुसर्पिभ्यां मन्दाग्नेः सहसा नरः ।<br>मुच्यते ग्रहणीरोगात् गुदरोगात् सजाठरात् ॥<br>मेहं कुष्ठञ्च वीसर्पवातरोगान् सशोणितान् ।<br>न चात्र परिहारोऽस्ति भोजनं सर्व्वकामिकं ॥<br>रोगानीकप्रशान्त्यर्थं मुनिभिः परिकीर्त्तितं ।<br>अस्याभ्यासात् बलं वीर्य्यं पुष्टिदृष्टियशस्तथा ॥ | | |

:सत्वरमजीर्णशान्त्यै वह्नेर्वृद्ध्यै कफध्वस्त्यै” ॥

अजीर्णकण्टको रसः ॥ * ॥

“जलपीतमपामार्गमूलं हन्याद्विसूचिकां ।

सतैलं कारवेल्ल्यम्बु विधुनोति विसूचिकां ॥

बालमूलस्य निःक्वाथः पिप्पलोचूर्णसंयुतः ।

विसूचीनाशनः श्रेष्ठो जठराग्निविवर्द्धनः ॥

विल्वनागरनिःक्वाथो हन्याच्छर्द्दिविसूचिकां ।

विल्वनागरकैडर्य्यक्वाथस्तदधिको गुणैः” ॥

कैडर्य्यं कट्फलम्, --

“व्योषं करञ्जस्य फलं हरिद्रे

मूलं समावाप्य च मातुलुङ्ग्याः ।

छायाविशुष्का गुटिकाः कृतास्ता

हन्युर्व्विसूचीं नयनाञ्जनेन” ॥

मातुलुङ्गी मधुकर्क्कटी । अनुभूतमिदम्, --

“अपामार्गस्य पत्राणि मरिचानि समानि च ।

अश्वस्य लालया पिष्टान्यञ्जनाद् घ्नन्ति सूचिकां ॥

विसूच्यामतिवृद्धायां तक्रं दधिसमं जलं ।

नारिकेलाम्बु पेयं वा प्राणत्राणाय योजयेत् ॥

त्वक्पत्ररास्नागुरुशिग्रुकुष्ठै-

रम्लप्रपिष्टैः सवचाशताह्वैः ।

उद्वर्त्तनं खल्लिविसूचिकाघ्नं

तैलं विपक्वञ्च तदर्थकारि” ॥

त्वक्तैलम् ॥ * ॥

“कुष्ठसैन्धवयोः कल्कः चुक्रं तैलं तु तच्छृतं ।

विसूच्या मर्दनं तेन खल्लीशूलनिवारणम्” ॥

कुष्ठतैलम् ॥ * ॥

“पिपासायां तथोत्क्लेशे लवङ्गस्याम्बु शस्यते ।

जातीफलस्य वा शीतं शृतं भद्रघनस्य वा ॥ * ॥

उत्क्लेशलक्षणम्, --

“अलं पनसपाकाय फलं कदलसम्भवं ।

कदलस्य तु पाकाय बुधैरभिहितं घृतं ॥

घृतस्य परिपाकाय जम्बीरस्य रसो हितः ।

नारिकेलफलतालवीजयोः

पाचकं सपदि तण्डुलं विदुः ।

क्षीरमाशु सहकारपाचनं

चारमज्जनि हरीतकी हिता ॥

मधूकमालूरनृपादनानां

परूषखर्ज्जूरकपित्थकानां ।

पाकाय पेयं पिचुमर्द्दवीजं

घृतेऽपि तक्रेऽपि तदेव देयं ॥

खर्ज्जूरशृङ्गाटकयोः प्रशस्तं

विश्वौषधं कुत्र च भद्रसुस्तं ।

यज्ञाङ्गवोधिद्रुफलेषु शीतं

प्लक्षे तथा वार्य्युषितं प्रणीतं ॥

तण्डुलेषु पयसः पयो हितं

दीप्यकन्तु चिपिटे कणायुतं ।

षष्टिका दधिजलेन जीर्य्यते

कर्क्कटी च सुमनेषु गीर्य्यते” ॥

सुमनेषु गोधूमेषु । गीर्य्यते कथ्यते ।

“गोधूभमाषहरिमन्थसतीलमुद्ग-

पाको भवेत् झटिति मातुलपुत्त्रकेण ।

खण्डञ्च खण्डयति माषभवं त्वजीर्णं

तैलं कुलत्थमथवा विदधाति जीर्णं” ॥

मातुलपुत्त्रकः धत्तूरफलं । --

“कङ्गुश्यामाकनीवाराः

कुलत्थश्चाविलम्बितं ।

दध्नो जलेन जीर्य्यन्ति वैदलाः काञ्जिकेन तु ॥

पिष्टान्नं शीतलं वारि कृशरान् सैन्धवं पचेत् ।

माषेण्डरी निम्बमूलं पायसं मुद्गयूषकैः” ॥

वटोवेशवाराल्लवङ्गेन फेणीशमं पर्पटः

शिग्रुवीजेन

याति । कणामूलतो

लड्डुकापूपशष्टाविपाको

चञ्चूकसिद्धार्थकवास्तुकानां

गायत्रिसारक्वथितेन पाकः” ॥

चञ्चूकं चेचूरु इति लोके । गायत्री खदिरः ।

“पलङ्किकाकेमुककारवेल्ली-

वार्त्ताकुवंशाङ्कुरमूलकानां ॥

उपोदिकालावुपटोलकानां

सिद्धार्थको मेघरवस्य पक्ता” ॥

मेघरवः चवराई इति लोके । --

“विपच्यते शूरणकं गुडेन

तथालुकं तण्डुलजोदकेन ।

पिण्डालुकं जीर्य्यति कोरदूषात्

कसेरुपाकः किल नागरेण ॥

लवणस्तण्डुलतोयात्

सर्पिर्जम्बीरकाद्यम्लात् ।

मरिचादपि तच्छीघ्रं पाकं यात्येव

काञ्जिकात्तैलं ॥

क्षीरं जीर्य्यति तक्रेन तद्गव्यं

कोष्णमण्डकात् ।

माहिषं माणिमन्थेन शङ्खचूर्णेन तद्दधि” ॥

मण्डकः माण्डे इति लोके, --

“रसाला जीर्य्यति व्योषात् खण्डं

नागरभक्षणात्

सिता नागरमुस्तेन तथेक्षुश्चार्द्रकारसात् ।

ञरामिरागैरिकचब्दनाभ्या-

मभ्येति शीघ्रं मुनिभिः प्रणीतं ।

उष्णेन शीतं शिशिरेण चोष्णं

जीर्णो भवेत् क्षारगणस्तथाम्लैः” ॥

इरा मदिरा ।

“तप्तं तप्तं हेम वा तारमग्नौ

तोये क्षिप्तं सप्तकृत्वस्तदम्भः ।

पीत्वाजीर्णं तोयजातं निहन्या-

त्तत्र क्षौद्रं भद्रयुक्तं विशेषात्” ॥

तत्र तोयाजीर्णे । इति

जठराग्निविकाराजीर्ण-

विसूचिकालसविलम्बिकाचिकित्सा । इति भाव-

प्रकाशः ॥

"उत्क्लिश्यान्नं न निर्गच्छेत्
प्रसेकष्ठीवनेरितं ।
हृदयं पीड्यते चास्य तमुत्क्लेशं
विनिर्दिशेदिति ॥
सरुग्वानद्धमुदरमम्लपिष्टैः प्रलेपयेत् ।
दारुहैमवतीकुष्ठशताह्वाहिङ्गुसैन्धवैः" ॥
हैमवती श्वेतवचा । दारुषट्कम् ॥ * ॥
"तक्रेण युक्तं यवचूर्णमुष्णं
सक्षारमार्त्तिं जठरे निहन्यात् ।
स्वेदो घटैर्व्वा बहुवास्पपूर्णै-
रुष्णैस्तथान्यैरपि पाणितापैः ॥
विलम्बिकालसकयोरयमेव क्रियाक्रमः ।
अतण्वैतयोरुक्तं पृथक् नेह चिकित्सितम् ॥
तद्भस्मकं गुरुस्निग्धसान्द्रमन्दहिमस्थिरैः ।
अन्नपानैर्नयेच्छान्तिं पित्तघ्नैश्च विरेचनैः ॥
अत्युद्धताग्निशान्त्यै माहिषदधिदुग्धसर्पींषि ।
संसेवेतयवागूं समधूच्छिष्टां ससर्पिष्कां ।
असकृत् पित्तहरणं पायसं प्रतिभोजनं ॥
श्यामात्रिवृद्धिपक्वञ्च पयोदद्याद्विरेचनं ॥
यत् किञ्चित् मधुरं मेध्यं श्लेष्मलं गुरु
भीजनं ।
सर्व्वं तदत्यग्निहितं भुक्त्वा प्रस्वपनं दिवा"
॥
सिततण्डुलं सितकमलं छागीक्षीरेण पायसं
सिद्धं । भुक्त्वा घृतेन पुरुषो
द्वादशदिवसाद्बुभु-
क्षितो भवेत् ॥ * ॥ अथ विशिष्टद्रव्याजीर्णे
विशि-
ष्टपाचनद्रव्यमाह, --

भवेच्छष्कुली मण्डयोश्च ॥ वेशवारः वेगर
इति
लोके । तद् यथा । --
"स्ने हो निशाहिङ्गुलवङ्गकैला-
धान्याकजीरार्द्रकनागराणि ।
अम्लोषणं सैन्धवपूर्णमन्ने
यथोचितं संस्कृतये प्रणीतम्" ॥ इति ॥
शट्टा शट्टकः पानकविशेषः । मण्डः माण्डे
इति लोके । --
"किमत्र चित्रं वहुमत्स्यमास
भोजी सुखी काञ्जिकपानतः स्यात् ।
इत्यद्भुतं केवलवह्निपक्व-
मांसेन मत्स्यः परिपाकमेति ॥
आममाम्रफलं मीने तद्बीजं पिशिते हितं ।
कूर्म्ममांसं यवक्षाराच्छीघ्रं पाकमुपैति हि ॥
कपोतपारावतनीलकण्ठ
कपिञ्जलानां पिशितानि भुक्त्वा ।
काशस्य मूलं परिपीय पिष्टं
सुखी भवेन्ना वहुशो हि दृष्टं ॥
कपोतो धवलः पाण्डुः ।
"शाकानि सर्व्वाण्यपि यान्ति
पाकं क्षारेण सद्यस्तिलनालजेन ।

**अजीवः**, त्रि, (नास्ति जीवः आत्मा यस्य स
बहुव्रीहिः)

मृतः । अवसन्नः । इति त्रिकाण्डशेषः ॥

**अजीवनिः**, स्त्री, (नञ् + जीव + आक्रोशेनञ्यनि

रिति सूत्रेण अनिः) जीवनाभावः ।
अकरणिः ।
शापः । यथा । तस्याजननिरेवास्तु ।
इत्यमर-
टीकायां भरतः ॥ अजीवनिस्तव भूयात् ।
इति
मुग्धवोधं ॥

**अजुगुप्सितः**, त्रि, (गुप् + सन् + क्त न जुगुप्सित

नञ् समासः) अनिन्दितः । यथा, --
"उपवेश्य तु तान्
विप्रानासनेष्वजुगुप्सितान् ।
गन्धमाल्यैः सुरभिभिरर्च्चयेद्देवपूर्व्वकं" ॥
इति मानवे ३ अध्याये २०९ श्लोकः ॥

**अजेयः**, त्रि, (न जेयः नञ् समासः) इति नञ्
पूर्व्वक-

जिधातोः कर्म्मणि यत्प्रत्ययः । अजेतव्यः
। अ-
जयनीयः । यथा । --
"अजेयस्त्वञ्च संग्रामे ममापि हि भविष्यति"
।
इति स्कान्दे काशीखण्डे २३ अध्यायः ।

**अज्येष्ठवृत्तिः**, पुं, (ज्येष्ठस्य वृत्तिः आचरणं षष्ठो-

तत्पुरुषः नास्ति ज्येष्ठवृत्तिः ज्येष्ठाचरणं
यस्य
सःबहुव्रीहिः) ज्येष्ठवृत्तिरहितः । भ्रातृषु
पितृ-
वद्वर्त्तनाभाववान् । यथा, --

:"योज्येष्ट्यो ज्येष्ठवृत्तिः स्यान्मातेव स पितेव सः ।
अज्येष्ठवृर्त्तिर्यस्तु स्यात् स सम्पूज्यस्तु बन्धुवत्" ॥
इति मानवे ९ अध्याये ११० श्लोकः ॥ यो ज्येष्ठ्योऽनुजेषु पितृवद्वर्त्तेत स पितेव मातेव
अगर्हणीयो भवति । यः पुनस्तथा न वर्त्तेत स
मातुलादिवदर्च्चनीयः । इति तट्टीकायां कुल्लूक-
भट्टः ।

**अजैकपात्,** [द्] पुं, (अजस्य छागस्य एकः पाद इव
पादो यस्य सः बहुव्रीहिः अलोपः) एकादश-
रुद्रान्तर्गतरुद्रविशेषः । इति शब्दमाला ॥ (हरि-
वंशे, --
"अजैकपादहिव्रघ्न स्त्वष्टा रुद्राश्च भारत ।
एकादशैते कथिता रुद्रास्त्रिभुबणेश्वराः" ॥)

**अजैकपादः**, पुं, (अजस्य छागस्य एकः पाद इव पादो-
यस्य सः विकंल्पे अलोपः) रुद्रविशेषः । इति
जटाधरः ॥ छन्दोऽनुरोधादसन्धिरपि विष्णुपुराणे
चन्द्रकलापप्रस्तावे अजएकपादिति ॥ (यथा
भारते । --
"अजैकपादहिव्रध्नो विरूपाक्षः सुरेश्वरः ।
जयन्तो बहुरूपश्च त्र्यम्बकोऽप्यपराजितः ।
इति श्रीभागवतं ॥ वेदान्तमते सदसद्भ्यामनि-
र्व्व चनीयं त्रिगुणात्मकं भावरूपं ज्ञानविरोधि
यत्किञ्चित् । ज्ञानरहिते त्रि ॥ (यथा मनुः --
अज्ञानात् वारुणीं पीत्वा संस्कारेणैव शुद्धति ।
अज्ञानात्प्राश्य विण्मूत्रं ।
अज्ञानात् वालभावाच्च साक्ष्यं वितथमुच्यते ॥)

**अञ्चतिः**, पुं, (अञ्चति गच्छति यः अञ्च + कर्त्तरि
अति) वायुः । इति त्रिकाण्डशेषः ॥

**अञ्चलः**, पुं, (अञ्चति प्रान्तभागं गच्छति अञ्च +
अलच्) वस्त्रप्रान्तभागः । आँचल इति भाषा ।
इति हलायुधः ॥ (यथा साहित्यदर्पणे । --
"ऊरुः कुरङ्गकदृशश्चञ्चलचेनाञ्चलोभाति" ॥

**अञ्चितः**, त्रि, (अञ्च + कर्म्मणि क्तः नाञ्चोः पूजाया-
मिति नलोपाभावः) पूजितः । इत्यमरः ॥ (यथा
रघुवंशे । --
"उभावलञ्चक्रतुरञ्चिताभ्यां
तपोवनावृत्तिपथं गताभ्यां ॥)

**अञ्चितभ्रूः**, स्त्री, (अञ्चिते उत्कृष्टे भ्रुवौ यस्याः सा
बहुव्रीहिः) सुन्दरभ्रूयुक्तनारी । इति स्त्रीपर्य्याये
राजनिर्घण्टः ॥

**अञ्जनं**, क्ली, (अन्ज + भावे ल्युट्, कज्जले तु गम्य-
माने करणे ल्युट्) म्रक्षणं । गमनं । व्यक्तीकरणं ।
इत्यनट् प्रत्ययान्तान्जधात्वर्थः । कज्जलं । तत्तु
षड्विधं । यथा, --
"सौवीरं जाम्बलं तुत्थं मयूरश्रीकरं तथा ।
दर्व्विका नीलमेघश्च अञ्जनानि भवन्ति षट् ॥
तल्लक्षणानि यथा" --
"स्रवद्रूपन्तु सौवीरं जाम्बलं प्रस्तरं तथा ।
मयूरश्रीकरं रत्नं मेघनीलन्तु तैजसं ॥
घृष्ट्वा निगाह्य चैतानि शिलायां तैजसेऽथवा ।
शते यः अन्ज + कर्त्तरि ल्युट्)
पश्चिमदिघस्ती ।
अञ्जयति रवेणशुभाशुभे सूचयति अन्ज + णिच् +
ल्युट्) ज्येष्ठी । जेठी इति भाषा । इति विश्व-
मेदिन्यौ, (दिवा नतु प्रयोक्तव्यं नेत्रयोस्तीक्ष्ण-
मञ्जनं । विरेकदुर्बलादृष्टिरादित्यं प्राप्य सीदति ॥
इति आगमः) ।

**अञ्जनकेशी**, स्त्री, (अञ्जनवत् केशोयस्याः सा बहु-
व्रीहिः स्त्रियां ङीप् यत्संयोगेन केशस्य कृष्णता
भवेत्) हट्टविलासिनीनामगन्धद्रव्यं ।
इत्यमरः ॥

**अञ्जना**, स्त्री, (अनक्ति स्वकान्त्या शोभते अन्ज + युच्
कर्त्तरि) वानरीविशेषः । सा च हनूमन्माता ।
इति मेदिनी ॥ (रामायणे, --
"अञ्जनेति परिख्याता पत्नी केशरिणः कपेः ।
अभिशापक्षयाज्जाता पुनश्च दिवि चारिणी" ॥)

**अञ्जनाधिका**, स्त्री, (अञ्जनात् कज्जलादधिका कृष्ण-
वर्ण्णा) अञ्जनिका । इति हेमचन्द्रः ॥

**अञ्जनावती**, स्त्री, (अञ्जनं विद्यतेऽस्याः अतिकृष्णवर्ण्ण-
त्वात् अञ्जन + मतुप् स्त्रियां ङीप्) मतौ च वह्व
चोञ्जनाजरादीनामिति दीर्घः मस्य वः) सुप्रतीक-
नामदिग्गजभार्य्या । इत्यमरः ॥

वैवस्वतश्च सावित्रोहरोरुद्रा इमे
स्मृताः”)

**अज्जुका**, स्त्री, (अर्ज्जयति नायकादर्थमुपार्ज्जयति
या अर्ज्जि + समिक स इति
बाहुलकादुकन्
रस्य ज) नाट्योक्तौ वेश्या । इत्यमरः ॥
(एसा
अज्जु आ हि अ एन किम्पि आलिहन्ती
चिट्ठदि
मृच्छकटिके ।)

**अज्झटा**, स्त्री, (करट इति वत् उज्झति सर्व्वदोषान्
नाशयति या उज्झ + कर्त्तरि अटन्
स्त्रियां टाप्
पृषोदरादित्वात् उकारस्य अः । यद्वा,
अदव्यय-
माश्चर्य्ये अत् आश्चर्य्यकारी झटः
सञ्जातोऽस्याः ।
अत्ति क्विप् झटति झटसं घाते अच् ।
टाप् । अ-
च्चासौ झटा च वा ॥
(“अम्लं समधुरं तिक्तं कषायं कटुकं
सरम् ।
चक्षुष्यं सर्व्वदोषघ्नं
वृष्यमामलकीफलम्” ॥
इति सुश्रुते ।) भूम्यामलकी । इत्यमरः
॥

**अज्झलं**, क्ली, उज्झति अस्त्रं वारयति या उज्झ +
कर्त्तरि अलच् पृषोदरादित्वात् उकारस्य
अकारः) फलकं । ढाल इति ख्यातं ।
इति
हेमचन्द्रः ॥ (पुं, अङ्गारः, कोकिलः ।)

**अज्ञः**, त्रि, (ज्ञा + कर्त्तरि कः नज्ञः नञ्समासः ।)
जडः । मूर्खः । इत्यमरः । (यदुक्तं, --
प्रदद्यात् सर्व्वदेवेभ्यो देवीभ्यश्चापि पुत्रक ॥
घृततैलादियोगेन ताम्रादौ दीपवह्निना ।
यदञ्जनं जायते तु दर्व्विका परिकीर्त्तिता ॥
सर्व्वाभावे तु तां दद्यात् देवीभ्यो दर्व्विकाञ्जनं ।
महामाया जगद्धात्री कामाख्या त्रिपुरा तथा ।
आप्नुवन्ति महातोषं षड्भिरेभिः सदाञ्जनैः ॥
विधवा नाञ्जनं कुर्य्यात् महामायार्थमुत्तमं ।
नादत्ते त्वञ्जनं देवी वैष्णवी विधवाकृतं ॥
न मृत्पात्रे योजयेत्तु साधको नेत्ररञ्जनं ।
न पूजाफलमाप्नोति मृत्पात्रविहिताञ्जनैः ॥
चतुर्व्वर्गप्रदो धूपः कामदं नेत्ररञ्जनं ।
तस्माद्द्वयमिदं दद्याद्देवेभ्यो भक्तितो नरः” ॥
इति कालिकापुराणे ६८ अध्यायः ॥ अस्य
गुणः ।
तारानैर्म्मल्यकारित्वं ।
निर्म्मलचन्द्रतुल्यनिराकुल-
दृष्टिकारित्वञ्च । इति राजवल्लभः ॥ सौवीरा-
ञ्जनं । रसाञ्जनं । अक्तिः । मसी । इति हेभ-
चन्द्रः ॥ अग्निः इति विश्वः ॥
आलङ्कारिकभाषया
व्यञ्जनाख्यवृत्तिः । यथा, --
“अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनं ॥
इति काव्यप्रकाशः ॥

**अञ्जनः**, पुं, (अनक्त्वि प्रतीच्यां दिशि रक्षकत्वेन प्रका-

**अञ्जनिका**, स्त्री, (अञ्जनम् अञ्जनवत् वर्णोविद्यतेऽस्याः
सा अञ्जन + अर्शआद्यच् स्त्रियां टाप्
स्वार्थे कः ।)
ज्येष्ठीविशेषः आँजनाइ इति । आञ्जिना
इति च
भाषा तत्पर्य्यायः । अञ्जनाधिका २
हालिनी
३ हलाहलः ४ । इति हेमचन्द्रः ॥
क्षुद्रमूषिका ।
इति जटाधरः ॥

**अञ्जनी**, स्त्री, (अनक्ति चन्दनकुम्कुमादिभिः शोभते
अन्ज + कर्त्तरि ल्युट् स्त्रियां ङीप्)
लेप्यनारी ।
चन्दनादिलेपनयोग्या । इति विश्वमेदिन्यौ
॥
कटुकावृक्षः । कालाञ्जनीवृक्षः । इति
राज-
निर्घण्टः ।

**अञ्जलिः**, पुं, (अन्ज + अलि श्रवणाञ्जलिपुटपेय-
मिति बेणीसंहारनाटके) हस्तसम्पुटः ।
आँज्ला
इति भाषा । कुडवपरिमाणं । इति मेदिनी
॥
(यथा रामायणे । न प्रभातं त्वयेच्छामि
निशे
नक्षत्रभूषिते । क्रियतां मे दया भद्रे
मयाऽयं-
रचितोऽञ्जलिः) ॥

**अञ्जलिका**, स्त्री, (अञ्जलि + स्वार्थे क) वालमूषिका ।
इति जटाधरः ॥ अञ्जनिका । इति च
पाठः ॥

**अञ्जलिकारिका**, स्त्री, (अञ्जलेः कारिका) लज्जालु-
लता । इति राजनिर्घण्टः ॥ पुत्तलिका ।
इति

“अज्ञो भवति वै वालः पिता भवति मन्त्रदः ।
अज्ञं हि वालमित्याहुः पिवेत्येव तु मन्त्रदं” ॥
यथा चाज्ञेऽफलं दानं तथा विप्रोऽनृचोऽफलः ।
इदं शरणमज्ञानां ।
“अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणोवराः ।
धारिभ्यो ज्ञानिनः श्रेष्ठा ज्ञानिभ्यो व्यवसायिनः ॥”)

**अज्ञानं**, क्ली, (ज्ञा + भावे ल्युट् नज्ञानं नञ्समासः)

विरुद्धज्ञानं । तत्पर्य्यायः । अविद्या २ अहम्मतिः
३ । इत्यमरः ॥ सृष्टिकाले व्रह्मा प्रथमं पञ्च-
प्रकारमज्ञांनं ससर्ज । यथा । तमः १ मोहः २
महामोहः ३ तामिस्रं ४ अन्धतामिस्रं ५ ।

हेमचन्द्रः ॥

**अञ्जसः**, त्रि, (अञ्ज + असच्) अवक्रः । ऋजुः ॥

इति हेमचन्द्रः ।

**अञ्जसा** व्य (अञ्जं गतिं विलम्बम्बा स्यति नाश-

यति अञ्ज + सो + कर्त्तरि का) द्रुतं, शीघ्रं, यथार्थं, प्रकृतं, इत्यमरः । (यथामनुः, --
“आसमाप्तेः शरीरस्य यस्तु शुश्रूषते गुरुं ।
स गच्छत्यञ्जसा विप्रो ब्रह्मणः सद्म शाश्वतं” ॥)

**अञ्जिः**, पुं, (अन्ज + इन् । तिलकादिचिह्नम्) प्रेष-

णिकः । प्रेरकः । इत्युणादिकोषः ॥

**अञ्जिष्ठः**, पुं, (अनक्ति स्वतेजोभिर्जगत् प्रकाशयति

:अञ्ज + इष्ठ ।) सूर्य्यः । इत्युणादिकोषः ॥

**अञ्जीरं**, क्ली, (अञ्ज + भावे इञ् स्त्रियां वा ङीप् अ-

ञ्जीम् अग्निकारित्वादि गुणं राति ददाति अञ्जी

आतोऽनुपसर्गे इति कर्त्तरि कः । अथवा अञ्ज +

ईरम्) स्वनामख्यातफलवृक्षबिशेषः । आँजिर +

इति पेयारा इति च भाषा । तत्पर्य्यायः । मञ्जुलं २

काकोदुम्बरिकाफलं ३ । अस्य गुणाः । शीत-

लत्वं । स्वादुत्वं । गुरुत्वं ।

वायुपित्तरक्तकृमिशूल-

हृत्पीडाकफमुखवैरस्यनाशित्वं ।

अग्निकारित्वञ्च ।

लघ्वञ्जीरं तस्मादल्पगुणं । इति

राजवल्लभराज-

निर्घण्टौ ॥

**अटनं**, क्ली, (अट् + भावे ल्युट्) भ्रमणं । (यथा सर्व्व-

ज्ञत्वमधीश्वरत्वमगमत् त्वां माञ्च भिक्षाटनं ।

इति घण्टाकर्णः ॥)

**अटनिः**, स्त्री, (अटति तथा गच्छति यत्र अट् +

अधिकरणे अनि) धनुरग्रभागः । धनुकेर हुल्

इति भाषा । इत्युणादिकोषः ॥

**अटनी**, स्त्री, (अटनि + स्त्रियाम्बा ङीप्) अटनिः ।

धनुष्कोटिः । इत्यमरः ॥ (यथा उत्तरचरिते ।

ध्वनदगुरूगुणाटणीकृतकरालकोलाहलं) ॥

**अटरुषः**, पुं, पतत्यनेन वासकवृक्षः । इत्यमरः ॥

**अटरूषः**, पुं, (अटति मृत्युग्रासे पतत्यनेन अट +

घञर्थे कः । अटं कासाख्यरोगं रोषति नाशयति

रुष् + कर्त्तरि कः । अथवा रूष् + कर्त्तरि कः

अटस्य रूषो वा षष्ठीतत्पुरुषः । वासकः कास-

नाशक इति वैद्यके) वासकवृक्षः ।

इत्यमरटीकायां

रणगृहं । इति कौटिल्यः । अट्टेति

ख्यातगृह-

विशेषः । इति कोङ्कटः ॥

प्राकारमण्डपस्योपरि

शाला । इति केचित् ॥

हर्म्म्यादिवातकुटिका ।

इति केचित् ॥ मण्डपोपरि हर्म्म्यपृष्ठं । इति

केचित् ॥ प्राकारधारणार्थोऽभ्यन्तरे

क्षौमाख्यो-

ऽट्टः । इति भट्टः ॥ अतिशयः । इति

मेदिनी ॥

हट्टः इति हेमचन्द्रः ॥

**अट्टट्ट** व्य (वीप्सायाद्विर्व्वचनम् शकन्ध्वादित्वात् पररू-

पत्वमस्य अट्टट्टहासमशिवं शिवदूती चकार

हेति चण्डी) अत्युच्चं । इति जटाधरः ॥

**अट्टनं** (क्ली) चक्रफलास्त्रं । इति त्रिकाण्डशेषः ॥

**अट्टहासः**, पुं, महत्तरो हासः । शब्दयुक्तहास्यं ।

इति हेमचन्द्रः ॥ (यथा देवीमाहात्म्ये । देवी-

ननादोच्चैः साट्टहासं मुहूर्म्मुहुः ॥

त्र्यम्बकस्याट्ट-

हासः ॥ मेघदूते) ॥

**अट्टहासकः**, पुं, (अट्टं सातिशयं हासकः अतिश्वेत-

पुष्पत्वात् हास्यकारीव द्वितीयातत्

पुरूषः) कुन्द-

पुष्प वृक्षः । इति राजनिर्घण्टः ॥

**अट्टहासी** [न्] पुं, (अट्टं सदानन्दत्वात् सातिशयं

हसति अट्ट + हस + णिनि उपपद समासः)

शिवः । इति हेमचन्द्रः ॥

**अट्टालः**, पुं, (अट्टवत् प्रासादगृहवत् अलति भवति

द्रुमः ॥ र वैदिकः । न अड्नोति । इति दुर्गा-

दासः ॥

**अड** उद्यमे । (भ्वादिं सेट् परं ।) इति कविकल्प-

द्रुमः ॥ अडति लोकः सुखाय । इति

दुर्गादासः ॥

**अड्ड** अभियोगे । इति कविकल्पद्रुमः ॥ मूर्द्धन्यवर्ग-

तृतोयोपधः । (भ्वादिं सेट् परं अड्ड + सन् लट्

तिप्) अडिड्डिषति । क्विपि

संयोगान्तलोपे अड् ।

अभियोगः समाधानं । अड्डति पक्षं

विद्वान् ।

अभि समन्तात् योगोऽभियोग इति

गोविन्द-

भट्टः ॥ इति दुर्गादासः ।

**अण** रवे । इति कविकल्पद्रुमः ॥ अणति । रवः

शब्दः । इति दुर्गादासः ॥

**अण** य ङ जीवने । प्राणने । इति कविकल्पद्रुमः ॥

य ङ अण्यते जनो दुःखेन जीवतीत्यर्थः । इति

दुर्गादासः ॥

**अणकः**, त्रि, (अण् + अच् कुत्सायां कन्) कुत्सितः

अधमः । इत्यमरः ॥

**अणव्यं**, क्ली, (अणोः सुक्ष्मशस्यस्य चीनादिकस्य भवन

मुत्पत्तिस्थानमिति यावत् अणु + यत्)

आणवीनं

(अणोः, सूक्ष्मशस्यस्य चीनादिकस्य

भवनमुत्पति-

रायमुकुटः ॥

**अटविः**, स्त्री, (अटति वाद्‌र्ध्वक्ये गच्छति यत्र अट् + अधिकरणे अवि पञ्चाशति वनं ब्रजेदिति ।) वनं । इति रायमुकुटः ॥

**अटवी**, स्त्री, (अटवि + स्त्रियां ङीप्) वनं । इत्यमरः । (यथा रामायणे । आनर्त्ताँश्चैव मार्गध्वं कान्ताराण्यटवीस्तथा) ॥

**अटा**, स्त्री, (अट् + भावे अङ् ततष्टाप्) पर्य्यटनं । भ्रमणं । इति रत्नकोषः नीलकण्ठश्च ॥

**अटाट्या**, स्त्री, (पौनः पुन्येन अटनं भ्रमणम् अट् + सूचिसूत्रिमूत्र्यट्यर्त्तीत्यादिना यङ् + भावे अ । स्त्रियां टाप्) पर्य्यटनं । इत्यमरः ॥ पुनःपुनर्भ्रमणं । अतिशयभ्रमणं । इति व्याकरणं ॥) अट्ट क तौच्छ्ये । अनादरे । इति कविकल्पद्रुमः ॥ टद्व-यान्तः । क अट्टयति । एकटकार उति रामः ॥ तौच्छ्यमल्पीभावः । इति दुर्गादासः ॥

**अट्ट** ङ अतिक्रमे । वधे । इति कविकल्पद्रुमः ॥ मूद्‌र्ध्वन्यवर्गाद्योपधः । ङ अटिट्टिषते दन्त्यवर्गाद्योपधः । ङ अतिट्टिषते । दन्त्यवर्गतृतीयोपधः । ङ अड्डितिषते खलं राजा । इति दुर्गादासः ॥

**अट्टं**, क्ली, (अट्ट + अच्) शुष्कं । भक्तं । अन्नं । इति मेदिनी भूरिप्रयोगश्च ॥

**अट्टः**, पुं, (अट्टते एकं गृहमतिक्रम्य यत्र गृहे गच्छति अट्ट + अधिकरणे घञ्) क्षौमः । इत्यमरः ॥ हर्म्म्यादिगृहं । इति भरतः ॥ प्राकाराग्रस्थित-अल + अच्) प्राकारादुप्ररितनमुन्नतस्थानं । इति श्रीधरस्वामी ॥ यथा । भज्यमानपुरोद्यानप्राकाराट्टालगोपुरं । इति श्रीभागवतं ॥

**अट्टालकः**, पुं, (अट्टवत् प्रासादगृहवत् अलति भवति अंल् + अच् स्वार्थे कन्) उपरितनगृहं । अट्टालिकोपरि गृहं । तत्पर्य्यायः । क्षौमः २ अट्टः ३ । इति हेमचन्द्रः ॥

**अट्टालिका**, स्त्री, (अट्टाल + स्वार्थे कन् स्त्रियां टाप्) राजगृहं । तत्पर्य्यायः । नृपागारं २ हर्म्म्यं ३ सौधं ४ धवलागारं ५ । इति जटाधरः ॥ (राजतरङ्गिनी, अटित्वाट्टालिकादिभ्यो देशेभ्यः ।)

**अट्टालिकाकारः**, पुं, (अट्टालिकां करोति यः अट्टालिका + कृ + अण् उपपद समासः प्रासादकारकः) शूद्रागर्भे चित्रकारौरसजातजातिविशेषः । तस्य कर्म्म गृहनिर्म्माणादि । राज इति थैकर इति च भाषा । "कुलटायाञ्च शूद्रायां चित्रकारस्य वीर्य्यतः । वभूवाट्टालिकाकारः पतितो जारदोषतः" । इति ब्रह्मवैवर्त्तपुराणं ॥

**अट्या**, स्त्री, (अटनम् अट् + भावे क्यप् स्त्रियां टाप् समस्या इति वत्) परिभ्रमणं । पर्य्यटनं । इत्यमरटीकायां रायमुकुटः ॥ यथा, --

स्थानमिति यावत् अण् + घञ् तस्य इनः आदिवृद्धिश्च) । अणधान्योत्पादकक्षेत्रं । इति रायमुकुटः ॥

**अणिः**, पुं, स्त्री (अणति शब्दायते अण् + इन् स्त्रियां वा ङीप्) अक्षाग्रकीलकः । रथचक्राग्रस्थित कीलः । इत्यमरः ॥ अश्रिः । सूच्याद्यग्रभागः । सीमा । इति मेदिनी ॥ तस्य रूपान्तरं । अणी । आणिः (अणति शब्दायते अण् + इञ्, अजादिभ्यश्च इति इञ्, आजि इति वत्) । इत्यमरटीका ॥

**अणिमा** [न्] पुं, (अणु + भावे इमनिच । अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा ईशित्वञ्च वशित्व ञ्च तथा कामावसायिता इनि सांख्यतत्त्व कौमुद्याम्) अणोर्भावः । अणुत्वं । सूक्ष्मता । इति व्याकरणं । अष्टविधैश्वर्य्यमध्ये ऐश्वर्य्यविशेषः । इत्यमरः ॥ यत्प्रभावात् देवाः सिद्धाश्च सूक्ष्मीभूय सर्व्वत्र विचरन्ति कैश्चिदपि न लक्ष्यन्ते । इति तट्टीका ॥ ("अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा । ईशित्वञ्च वशित्वञ्च तथा कामावसायिता" ॥ इति आगमः ।)

"तौर्य्यत्रिकं वृथाठ्या च कामजो दशको गणः" ।

इति स्मृतिः ॥

**अठ** इ ङ गतौ इति कविकल्पद्रुमः ॥ इ (कर्म्मणि)

अण्ठ्यते ङ अण्ठते । इति दुर्गादासः ॥

**अठ** गते । इति कविकल्पद्रुमः ॥ अठति । इति दुर्गादासः ॥

**अड** र न व्याप्तौ (स्वादिं सेट् ।) इति कविकल्प-

**अणीयः**, [स्] त्रि, अतिशयेन अणुः अणु + ईयसुन्)

अत्यल्पं । अतिसूक्ष्मं । इत्यमरः ॥

(यथा मनुः, --

"प्रशासितारं सर्व्वेषामणीयांसमणोरपि ।

रुक्माभं स्वप्नधीगम्यं विद्यात् तं पुरुषं परं" ॥)

**अणु**, त्रि, (अणति सूक्ष्मत्वं गच्छति अण् + उन् ।

लवलेसशकलाणवः इत्यमरः) क्षुद्रं ।

सूक्ष्मं । इति

मेदिनी ॥

**अणुः**, पुं, (अण् + उन्) लेशः । व्रीहिविशेषः ।

सूक्ष्मधान्यं । चिना इत्यादि भाषा ।

इत्यमरः ।

(यथा मनुः । न गृह्णीयात् शुल्कमण्वप्रि ॥)

**अणुकः**, त्रि, (अणुप्रकारः अणु + स्थूलादित्वात्

:प्रकारार्थे कन् । अणुप्रकारे, अणुशब्दार्थे ची-
नादिधान्ये) चतुरः । निपुणः । अल्पः ।
स्तोकः ।
इति मेदिनी ॥

**अणुभा**, स्त्री, (अणुः सूक्ष्मा भा दीप्तिर्य्यस्याः सा बहु-
व्रीहिः) विद्युत् । इति त्रिकाण्डशेषः ॥

**अणुरेवती**, स्त्री, (अणुः सूक्ष्मा रेवती नक्षत्रमिव ।)
दन्तीवृक्षः । इति राजनिर्घण्टः ॥

**अणुव्रीहिः**, पुं, (अणुः सूक्ष्मः व्रीहिः, कर्म्मधारयः,
चीनादि ।) सूक्ष्मधान्यं । तत्पर्य्यायः ।
प्रसातिका २ ।
इति रत्नमाला ॥

**अण्डं**, क्ली, (अम् संयोगे भावे क्विप् अमं संयोगं
डयन्ते गच्छन्त्यनेन अम् + डी + करणे डः
।
पुंसोऽवयवभेदे मुष्के, पक्षिडिम्बे ।
"तदण्डमभव-
द्धैमं सहस्रांशुसमप्रममिति" मनुः ।)
पक्ष्यादि-
प्रादुर्भावककोषः । अण्डा । डिम् । इति
भाषा ।
तत्पर्य्यायः । पेशी २ कोषः ३ । इत्यमरः ॥
पेशिः
४ कोशः ५ पेशीकोषः ६ । इति तट्टीका ॥
डिम्बः ७ । इति मेदिनी ॥
मत्स्यपक्षिकूर्म्माण्डानां
गुणाः, --
("नातिस्निग्धानि वृष्याणि स्वादुपाकरसानि
च ।
वातघ्नान्यतिशुक्राणि गुरूण्यण्डानि
पक्षिणाम्" ॥
इति वैद्यके ॥)
स्वादुत्वं । कटुपाकित्वं । रुचिशुक्रकारित्वं ।
वात-

**अण्डजा**, स्त्री, (अण्डे जायते इति अण्ड + जन् +
कर्त्तरि ड, उपपदसमासः, स्त्रियां टाप्
।) मृग-
नाभिः । कस्तूरी । इति विश्वमेदिनीहेम-
चन्द्राः ॥

**अण्डालुः**, पुं, (अण्डं विद्यते अस्य अण्ड + मत्वर्थे-
आलुच्) मत्स्यः । इति शब्दचन्द्रिका ॥

**अण्डीरः**, पुं, (अण्ड + मत्वर्थे ईरन्, विशिष्टसामर्थ्य-
वान् ।) पुरुषः । शक्तः । इति मेदिनी ॥

**अण्वी**, स्त्री, (अणु + वोतोगुणवचनादिति पक्षे
ङीप्) अङ्गुलिः । अस्याः प्रचुरप्रयोगो
वेदे ।
क्षीणा ॥

**अत**, इ बन्धने (इदित्वात् नुम् भ्वादिं सेट् परं)
इति कविकल्पद्रुमः ॥ अतीति बन्धे ।
शेषो दीर्घा-
दिरित्यन्यः । अतएव अन्त्यते ईन्त्यते ।
स्वमते तु
अन्त्यते इन्त्यते । छन्दोऽनुरोधादुभयत्र
इकारः ॥
इति दुर्गादासः ॥

**अत** ई बन्धने । इति कविकल्पद्रुमः ॥

**अत** सातत्यगते । इति कविकल्पद्रुमः ॥ सातत्यगतं
नैरन्तर्य्येण भ्रमणं प्रापणञ्च । अतति
वायुः ।
अतति सूर्य्यो गगनं प्राप्नोतीत्यर्थः ।
इति दुर्गा-
दासः ।

**अतः**, [स्] व्य, (एतस्मात्, एतद् + एतदोऽशिति
कौमुद्यामुणादिवृत्तिः ॥ वल्कलनिर्म्मितवस्त्रं
।
अस्त्रं । यथा -- "अतसः क्षौमं प्रहरणं
वायुश्चेति
धातुवृत्तौ" माधवः ॥

**अतसी**, स्त्री, (अत् + असच्, स्त्रियां ङीप् ।) कृष्ण-
पुष्पक्षुद्रवृक्षभेदः । मसिना इति ख्याता ।
तत्-
पर्य्यायः । चणका २ उमा ३ क्षौमी ४
रुद्रपत्नी
५ सुवर्च्चला ६ । इति रत्नमाला ॥
पिच्छिला ७
देवी ८ मदगन्धा ९ मदोत्कटा १० क्षुमा ११
हैमवती १२ सुनीला १३ नीलपुष्पिका १४
।
अस्या गुणाः । उष्णत्वं । तिक्तत्वं ।
वातहारित्वं ।
श्लेष्मपित्तकारित्वञ्च । अस्यास्तैलस्य
गुणाः । मधु-
रत्वं । पिच्छिलत्वं । मदगन्धित्वं । कषायत्वं
। वायु-
कफकासनाशित्वं ॥ स्वादुत्वं । उष्णत्वं ।
अम्लत्वं ।
पाके कटुत्वञ्च । इति राजवल्लभराजनिर्घण्टौ
॥
यथा, --
"अतसी नीलपुष्पी च पार्ब्बती स्यादुमा क्षमा
।
अतसी मधुरा तिक्ता स्निग्धा पाके कटुर्गुरुः ।
उष्णा दृक्शुक्रवातघ्नी कफपित्तविनाशिनी"
॥
इति भावप्रकाशः ॥ शणवृक्षः । इत्यमर-
टीका ॥

**अति**, व्य, प्रशंसा । (अत् + इ । पूजायां । अतिरति-
क्रमणे चेति । अत्यादयः क्रान्ताद्यर्थे इति
पाणिनि-

श्लेष्मनाशित्वञ्च । इति राजवल्लभः ॥ मुष्कः । वीर्य्यं । इति विश्वः ॥ मृगनाभिः । इति केचित् ॥

**अण्डकः**, पुं, (अण्ड + स्वार्थे कन्) अण्डकोषः । इति हेमचन्द्रः ॥

**अण्डकोटरपुष्पी**, स्त्री, (अण्डवत् कोटरे अभ्यन्तरे पुष्पं यस्याः सा बहुव्रीहिः, स्त्रियां ङीप् ।) अजान्त्री-वृक्षः । नीलरास्ना । नीलवुह्ना इति ख्याता । इति काचिद्रत्नमाला ॥ अन्तःकोठरपुष्पी इत्यपि पाठः ॥

**अण्डकोशः**, पुं, (अण्डस्य मुष्कस्य कोशः, षष्ठीतत् ।) अण्डकोषः । इत्यमरटीका ॥

**अण्डकोषः**, पुं, (अण्डस्य मुष्कस्य कोषः, षष्ठीतत्-पुरुषः ।) स्वनामख्यातशरीरावयवविशेषः । तत्प-र्य्यायः । मुष्कः २ वृषणः ३ । इत्यमरः ॥ अण्डं ४ पेलं ५ अण्डकः ६ । इति हेमचन्द्रः ॥ वीजपेशिका ७ । इति राजनिर्घण्टः ॥ सीमा ८ । इति जटाधरः ॥ फलकोषकः ९ । इति त्रिकाण्डशेषः ॥ फलं १० । इति रामायणं ॥ कोषकोषकमुष्काण्डवृषणा अण्ड-कोषकः । सीमा च पेलसीमानौ फलमित्यपि कुत्रचित् ॥ इति शब्दरत्नावली ॥

**अण्डकोषकः**, पुं, (अण्डकोष + स्वार्थे कन्) अण्ड-कोषः । इति शब्दरत्नावली ॥

**अण्डजः**, पुं, (अण्डे जायते अण्ड + जन् + कर्त्तरि, ड पञ्चम्यर्थे तस् एतद्शब्दस्य अशादेशः) कारणं । अपदेशः । निर्द्देशः । इति विश्वः ॥

**अतएव**, व्य, (एतद् + तस् पञ्चम्यर्थे तस् । एतदः अन् इति एकारस्य अकारः ।) अस्मादेव । एतत्कारणेनैव । अनेनैव हेतुना । यथा, --
“अतएव महेशानि रलयोः समता भवेत्” । इति सारदातिलकटीकायां राघवभट्टः ॥ अतएव पं । इति वोपदेवः ॥

**अतटः**, पुं, (तट्यते आहन्यते जलेन इति तट् + घ-ञर्थे कः, तटंजलप्रपातस्थानं न विद्यते अस्य बहु-व्रीहिः) पर्ब्बतस्योच्चस्थानं । तत्पर्य्यायः । प्रपातः २ भृगुः ३ । इत्यमरः ॥ (यथा शाकुन्तले । मनो-रथानामतटप्रपातः ॥)

**अतर्कः**, पुं, (तर्क्यतेऽनेन तर्क + घञर्थेकः । तर्कस्तर्क हेतुः स नास्ति यस्य स बहुव्रीहिः) अहेतुकः । शुष्क-तर्कपरः । इति महाभारते दानधर्म्मः ॥

**अतलं**, क्ली, (नास्ति तलं गाधभागो यस्य तत् बहु-व्रीहिः । अतलस्पर्शमिति व्युत्पत्त्यर्थः ।) प्रथमखण्ड-पातालं । भूरिप्रयोगः ॥

**अतलस्पर्शः**, त्रि, (नास्ति तलस्य अधोभागस्य स्पर्शो-यस्य स बहुव्रीहिः ।) अगाधः । अतिगभीरः) इत्यमरः ॥ सूत्रम् ।) प्रकर्षं । लङ्घनं । इति विश्वमेदिन्यौ ॥ अतिशयं । क्रान्तं । पूजनं । असम्भावना । इति दुर्गादासः । प्रादिर्विंशत्युपसर्गान्तर्गतोऽयं ॥

**अतिकथः**, त्रि, (कथामतिक्रान्तः कुगतिप्रादय इति समासः । कथनायोग्यं ।) अश्रद्धेयः । नष्टः । इति मेदिनी ॥ नष्टधर्म्मः । इति हेमचन्द्रः ॥

**अतिकथा**, स्त्री, (अत्युत्कृष्टा कथा कर्म्मधारयः ।) अपार्थवाक्यं । व्यर्थभाषणं । इति विश्वः हेम-चन्द्रश्च ॥

**अतिकन्दकः**, पुं, (अतिरिक्तः कन्दो मूलं यस्य कप्) हस्तिकन्दवृक्षः । इति राजनिर्घण्टः ॥

**अतिकेशरः**, पुं, (अतिरिक्ताः केशराः किञ्जल्काः यस्य सः ।) कुब्जकवृक्षः । इति राजनिर्घण्टः ॥

**अतिक्रमः**, पुं, (अतिक्रान्तः क्रमः नियमः, अति क्रम् + भावे घञ् वृद्ध्यभावः) क्रमोल्लङ्घनं । तत्-पर्य्यायः । अतिपातः २ (अति पत् + भावे घञ्) उपात्ययः ३ पर्य्यायः ४ । अभिक्रमः । रणे शत्रून् प्रति अभीतयोधादेर्गमनं । इत्यमरः ॥

**अतिक्रान्तः**, त्रि, (अति + क्रम् + कर्त्तरिक्तः) कृताति-क्रमः । कृतक्रमोल्लङ्घनः । राजानमतिक्रान्ता अतिराजी । इति वोपदेवः ॥ अतीतः । यथा । बेगे तु समतिक्रान्ते गतोऽयमिति लक्ष्यते । इति रक्षितः ॥

**अतिक्रामकः**, त्रि, अतिक्रमकर्त्ता । क्रमोल्लङ्घकः । अतिपूर्ब्बक्रमधातोः कर्त्तरि णकः ॥

| | | |
|---|---|---|
| उपपदसमासः) पक्षी । सर्पः । मत्स्यः । कृकलासः । इति विश्वमेदिन्यौ ॥ अण्डजातमात्रे त्रि । इत्यमरः ॥ (“अण्डजाः पक्षिणः सर्पा नक्रा मत्स्याश्च कच्छपाः । यानि चैवंप्रकाराणि स्थलजान्यौदकानि च” ॥ इति मनुः ।) | **अतलस्पृक्** [श्] त्रि, (न तलं गाधभागः नञ्समासः, तत् स्पृशति यः अतल + स्पृश् + कर्त्तरि क्विन् अतलस्पर्शकारी । कर्म्मणि क्विन् तत् स्पृश्यते येन ।) अतलस्पर्शः । तत्पर्य्यायः । आस्था २ आस्थागं ३ अस्ताघं ४ अगाधं ५ । इति हेमचन्द्रः ॥ **अतसः**, पुं, (अतति सततं गच्छति यः अत् + कर्त्तरि असच्, स्त्रियां ङीष् ।) (अतसीवृक्षविशेषः) वायुः । इत्युणादिकोषः ॥ आत्मा । इति सिद्धान्त- | **अतिगण्डः**, पुं, (गण्डमतिक्रान्तः अत्यादयः क्रान्ता-द्यर्थे ।) विष्कुम्भादिसप्तविंशतियोगमध्ये षष्ठयोगः । तत्र जातफलं । “कलिप्रियो वेदविनिन्दकश्च धूर्त्तः कृतघ्नो गलरोगयुक्तः । |

:सरोमदेहः पुरुषोऽतिदीर्घः
प्रकाण्डगण्डस्त्वतिगण्डजन्मा” ॥
इति कोष्ठोप्रदीपः ।

**अतिगन्धः**, पुं, (अतिरिक्तो गन्धो यस्य सः ।) भूत-
तृणं । चम्पकः । मुद्गरवृक्षः । गन्धकः । इति
राजनिर्घण्टः ॥ (अतिगर्व्वितः ।)

**अतिगन्धालुः**, पुं, (अतिगन्धो विद्यतेऽस्य अति-
गन्ध + मत्वर्थे आलु । अतिशयितगन्धयुक्ते) पुत्र-
दात्रीलता । इति राजनिर्घण्टः ॥

**अतिगर्व्वितः**, त्रि, (अति अधिको गर्व्वः कर्म्मधारयः
सोऽस्य जातः अतिगर्व्व + इतच् ।) महाहंकृतः ।
अतिशयगर्व्वयुक्तः । तत्पर्य्यायः । समुन्नद्धः २ ।
इति हलायुधः ॥

**अतिगुहा**, स्त्री, (गुहामतिक्रान्ता कुगतिप्रादीति
समासः ।) पृश्निपर्णीविशेषः । क्षुद्रचाकुलिया इति
भाषा । इति रत्नमाला ॥ गुहातिक्रामके त्रि ॥

**अतिचरा**, स्त्री, (गन्धविस्तारेण स्वस्थानमतिक्रम्य
चरति गच्छतीव अति चर + कर्त्तरि अच्
स्त्रियां टाप्) पद्मचारिणीवृक्षः । स्थलपद्मिनी ।
इत्यमरः ॥ राजनिर्घण्टश्च ॥

**अतिचारः**, पुं, (अतिक्रम्य चरणं गमनम् अति + चर
+ भावे घञ् ।) शीघ्रगमनं । अतिक्रम्य गमनं ।
कुजादिपञ्चग्रहाणां राशिभोगकालासमाप्तौ
जागरो जागरणं यस्य सः ।
अतिजागरणयुक्ते त्रि ।)
नीलक्रौञ्चः । कालवकः । इति
राजनिर्घण्टः ॥

**अतिडीनं**, क्ली, (डी + भावे क्तः तस्य नः । अत्यन्त
डीनं गमनं कर्म्मधारयः ।) पक्षिणां प्रचण्डगमनं ।
इति महाभारतं ॥

**अतितीव्रा**, स्त्री, (अतिशयेन तीव्रा) गण्डदूर्व्वा ।
इति राजनिर्घण्टः ॥

**अतिथिः**, पुं, कुशपुत्रः । स च श्रीरामचन्द्रस्य पौत्रः ।
इति मेदिनी ॥ कोपः । इति विश्वः ॥

**अतिथिः**, त्रि, (अतति सातत्येन गच्छति न तिष्ठति
अत् + इथिन्) अज्ञातपूर्ब्बगृहागतव्यक्तिः । इति
श्रीधरस्वामी ॥ अतिथ् इति भाषा । तत्पर्य्यायः ।
आगन्तुः २ आवेशिकः ३ गृहागतः ४ । इत्य-
मरः ॥ स्त्रीलिङ्गे आवेशिकी ५ अतिथी ६ । इति
तट्टीकासारसुन्दरी ॥ आगान्तुः ७ । इति हड्ड-
चन्द्रः । प्रघूर्णः ८ अभ्यागतः ९ प्राघूर्णिकः १० । इति
हेमचन्द्रः ॥ प्राघुणिकः ११ । इति विश्वः ॥
प्राघुणः १२ । इति त्रिकाण्डशेषः ॥ * ॥ तस्य
लक्षणं । यस्य न ज्ञायते नाम न च गोत्रं न च
स्थितिः । अकस्मात् गृहमायाति सोऽतिथिः
त्वध्वंसपूर्ब्बकपरस्वत्त्वोत्पत्तिः, कर्म्मधारयः ।) बहु-
दानं । अपरिमितदानं । यथा, --
“अतिदाने बलिर्बद्धः अतिमाने च कौरवाः ।
अतिरूपे हृता सीता सर्व्वमत्यन्तगर्हितम् ॥
इति चाणक्यः ॥

**अतिदिष्टः**, त्रि, (अति + दिश् + क्तः । अन्यधर्म्मा-
णामन्यत्रारोपणमतिदेशः यथा, -- “तिङ्शित्
सार्व्वधातुकमित्यातिदेशिकसूत्रम् ।) अतिदेशवि-
शिष्टः । यथा, -- “न समानगोत्रां भार्य्यां विन्दे-
तेत्यनेन शूद्रस्यापि सगोत्रा कथं न निषिध्यते”
इति चेदत्र उपदिष्टातिदिष्टगोत्रस्यैव निषेधो
नत्वतिदिष्टातिदिष्टशूद्रगोत्रादेः ।
इत्युद्वाहतत्त्वं ॥

**अतिदीप्यः**, पुं, (अत्यन्तं दीप्यते विचित्रवर्णतया
आत्मना प्रकाशते अति + दीप् + कर्त्तरि ण्यत् ।)
रक्तचित्रकवृक्षः । इति राजनिर्घण्टः ॥

**अतिदेशः**, पुं, (अति + दिश् + भावे घञ्) अन्य-
धर्म्मस्यान्यत्र आरोपणं । यथा, -- “इण्वदिकः”
इत्यादिः । इति दुर्गादासः ॥ कारिका यथा, --
“प्रकृतात् कर्म्मणो यस्मात् तत्समानेषु कर्म्मसु ।
धर्म्मोऽतिदिश्यते येन अतिदेशः स उच्यते” ॥
इति मलमासतत्त्वम् ॥ स तु पञ्चविधः । शास्त्रा-
तिदेशः । १ यथा, -- “नित्येन तुल्यं शेषं स्यात्

राश्यन्तरगमनं । तत्र पूर्ब्बराशिगमने वक्राति-
चारः । परराशिगमने अतिचारः । एतौ गुरो-
श्चेदकालो भवति । गुरुस्तु यदि पुनः पूर्ब्बराशिं
नायाति तदा महातिचारः । तेन लुप्तसम्बत्सरो
भवति । ग्रहाणां स्वभोज्यमानराशावपि वक्रा¯ति-
चारौ भवतः ॥ तत्र नाकालः । इति स्मृति-
ज्योतिषे ॥

**अतिच्छत्रः**, पुं, (छाद्यते आच्छाद्यतेऽनेन छद् +

णिच् + करणे ष्ट्रन् । अतिक्रान्तश्छत्रम् इति
व्युत्पत्त्या छत्रातिक्रमकारी ।) भूततृणं । इति
राजनिर्घण्टः ॥ जलतृणविशेषः । अरुणवर्णकुल्या-
खाडा इति ख्यातः । इति रत्नमाला ॥ छत्रा ।
काटछाति । भुँइछाति । पोयालछाति इति
ख्याता । इत्यमरः ॥

**अतिच्छत्रकः**, पुं, (अति + छत्र + स्वार्थे कन्)

छत्रवृक्षः । छातारियाविष इति ख्यातः । तस्य
मूले पत्रे वचाकारः कटुरसश्च । इति रत्नमाला ॥
भूततृणं । इति राजनिर्घण्टः ॥

**अतिच्छत्रा**, स्त्री, (छत्रमतिक्रान्ता, अत्यादय इति

समासः ।) अवाक्पुष्पी । मौरी इति ख्याता ।
इत्यमरः ॥ शताह्वा । शलुपा इति प्रसिद्धा । इति
रत्नमाला ॥ (छत्रातिछत्रे लाङ्गलीं जटिलां ब्रह्म-
चारिणीं ॥ इति सुश्रुते ॥)

**अतिजवः**, त्रि, (अतिशयितो जवो वेगो यस्य सः ।)

प्रोच्यते बुधैः ॥ * ॥ तस्य निवर्त्तने
गृहस्थस्य दोषः
यथा, --
"अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते ।
स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति" ॥
इति पुराणं ॥ * ॥ तस्य ग्रहणकालः । "ततो
गोदोहमात्रन्तु कालं तिष्ठेद्गृहाङ्गने । अति-
थिग्रहणार्थाय तदूर्द्ध्वं वा यदृच्छया" ॥ इति
विष्णुपुराणं ॥ * ॥ गोदोहकालश्च मुहूर्त्ताष्टम-
भागः । यथा । "आचम्य च ततः कुर्य्यात् प्राज्ञो
द्वारावलोकनं । मुहूर्त्तस्याष्टमं भागमुद्वीक्ष्यो
ह्यतिथिर्भवेत्" ॥ इति मार्कण्डेयपुराणं ॥ * ॥ तस्य
मूर्खत्वादिविचारो नास्ति । "प्रियो वा यदि वा
द्वेष्यो मूर्खः पतित एव वा । संप्राप्ते वैश्वदेवान्ते
सोऽतिथिः स्वर्गसंक्रमः" ॥ इति शातातपः ॥ * ॥
तस्य वेदादयो न प्रष्टव्याः ।
"स्वाध्यायगोत्रचरणमपृष्ट्वापि तथा कुलं ।
हिरण्यगर्भबुद्ध्या तं मन्येताभ्यागतं गृही" ॥
इति विष्णुपुराणं ॥ * ॥ तस्य देशादौ पृष्टे दोषः ।
"देशं नाम कुलं विद्यां पृष्ट्वा योऽन्नं प्रयच्छति ।
न स तत्फलमाप्नोति दत्त्वा स्वर्गं न गच्छति" ॥
इति स्मृतिः ॥ * ॥ अतिथये शक्त्यनुसारेण
दातव्यं ।

इत्यत्र तुल्यशब्देन अतिदेशः" । १ । कार्य्याति-
देशः २ यथा, -- "अप्रयाजास्ताः इत्यत्र कार्य्येण
निषेधेन दर्शपौर्णमासधर्म्मातिदेशः" । २ । निमि-
त्तातिदेशः ३ यथा, -- "विकृतौ मौद्गचरुयागे
ब्रीहिंकार्य्यकारिणि मुद्गे ब्रीहिकार्य्यनिमित्तत्वात्
धर्म्माः प्रोक्षणादयः कल्प्यन्ते" । ३ । व्यपदेशा-
तिदेशः ४ यथा, -- "मासमग्निहोत्रं जुहोति
इत्यत्र माससाध्यायनाख्ययागे अग्निहोत्रपदव्यप-
देशात् अग्निहोत्रधर्म्मातिदेशः" । ४ । "रूपा-
तिदेशः" ५ यथा, -- "यजमानाद्भिन्नो यूपः इत्य-
त्र यूपे यजमानादन्यत्वरूपावगमात् यजमान-
धर्म्मस्य तदीयपरिमाणस्यातिदेशः" । इति श्राद्ध-
विवेकटीकायां श्रीकृष्णः ॥

**अतिनु**, त्रि, (कुगतिप्रादीतिसमासः । गोस्त्रियोरुप-

सर्जनस्येति ह्रस्वः ।) अतीतनौकं । नावमतिक्रान्तं ।
नाबोत्तीर्णं । इत्यमरः । तस्य पुंस्त्रीलिङ्गयोः
अतिनौः इति रूपं ॥

**अतिपतनं**, क्ली, (अति + पत् + भावे ल्युट्) अत्ययः ।

अतिक्रमणं । इति शब्दरत्नावली ॥

**अतिपन्थाः** [न्] पुं, (अत्युत्कृष्टः पन्थाः कर्म्मधारयः ।

अतेः पूजार्थत्वान्न समासान्तप्रत्ययः ।)
सन्मार्गः ।
सुपथः । इत्यमरः ॥

**अतिपत्रः**, पुं, (अतिवृहत् पत्रं यस्य सः बहुव्रीहिः ।)

अतिशीघ्रगामी । अतिवेगवान् ।
(दवयदतिजबेन
प्राप्तमुर्व्वीविभागं ॥ इति भट्टिकाव्ये) ॥
तत्प-
पर्य्यायः । जङ्घालः २ । इत्यमरः ॥
जङ्घिलः ३
अतिबलः ४ । इति तट्टीका ॥

**अतिजागरः**, पुं, (जामृ + भावे घञ् अतिशयितो

"भोजनं हन्तकारं वा अग्रं भिक्षामथापि वा
।
अदत्त्वा नैव भोक्तव्यं यथा विभवमात्मनः"
॥
इति मार्कण्डेयपुराणं ॥ * ॥
भिक्षादिलक्षणं ।
"ग्रासप्रमाणा भिक्षास्यादग्रं ग्रासचतुष्टयं ।
अग्राच्चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः"
॥
इति मार्कण्डेयपुराणम् ॥ इत्याह्निकतत्त्वं ॥

**अतिथिपूजनं**, क्ली, (अतिथेः पूजनं सेवा षष्ठीतत्-

पुरुषः ।) अतिथिसेवा । आतिथ्यक्रिया ।
तत्प-
र्य्यायः । नृयज्ञः २ । इति हेमचन्द्रः ॥

**अतिदानं**, क्ली, (दा + भावे ल्यट्, अत्यन्तं दानं स्वस-

हस्तिकन्दवृक्षः । शाकवृक्षः । इति
राजनिर्घण्टः ॥

**अतिपातः**, पुं, (अति + पत् + भावे घञ्) अति-

क्रमः । उपात्ययः । पर्य्ययः । इत्यमरः ॥
(यथा
शाकुन्तले -- न चेदन्यकार्य्यातिपातः) ॥

**अतिपातकं**, क्ली, (अतिदुष्टतया अन्यत् पातकं

पापमतिक्रान्तं प्रादिसमासः ।)
नवविधपापमध्ये
गुरुतरपातकं । तत् त्रिविघं । पुंसः
मातृदुहितृ-

:स्नुषागमनजन्यं । स्त्रियास्तु पुत्रपितृश्वशुरगमन-
जन्यं । इति प्रायश्चित्तविवेकः ॥

**अतिबलः**, त्रि, (अतिशयितं बलं यस्य सः बहु-
व्रीहिः ।) प्रबलः । अतिशयबलवान् । प्रकृष्टबल-
विशिष्टः । इति मेदिनी ॥ (विजृम्भमाणोऽतिबलः
प्रत्यबुध्यत राक्षसः ॥ इति रामायणम्) ॥

**अतिबला**, स्त्री, अत्यन्तं बलं यस्याः सः बहु-
व्रीहिः ।) विश्वामित्रेण रामाय दत्ते अस्त्रविद्या-
विशेषे यथा, --
"गृहाण द्वे इमे विद्ये बलामतिबलां तथा" ।
इत्यादि रामायणे ।) पीतबला । पीतवर्णवाडियाला
इति ख्याता । पिटारणी । इति मदनविनोदः ॥
गुरशकरीभेदः । इति राजनिर्घण्टः ॥ तत्पर्य्यायः ।
बलिका २ बल्या ३ विकङ्कता ४ वाद्यपुष्पिका ५
घण्टा ६ शीता ७ शीतपुष्पा ८ भूरिचला ९
वृष्यगन्धिका १० । तस्या गुणाः । तिक्तत्वं । कटुत्वं ।
वातकृमिनाशित्वं । दाहतृष्णाविषच्छर्द्दिक्लेदोप-
शमकारित्वञ्च । इति राजनिर्घण्टः ॥

**अतिभारगः**, पुं, (अतिभारेण वेगेन गच्छति अति-
भार + गम् + कर्त्तरि ड, उपपदसमासः ।) (खरः ।
(कणिकारान् कुरुवकान् चम्पकानतिमुक्तकान् ॥
इति रामायणे) ॥

**अतिमोदा**, स्त्री, (अत्यन्तो मोदो गन्धो यस्याः सा ।)
नवमल्लिका । इति राजनिर्घण्टः ॥

**अतिरसा**, स्त्री, अत्यन्तो रसो यस्याः सा ।) मूर्व्वा-
लता । रास्ना । क्लीतनकं । इति राजनिर्घण्टः ॥

**अतिरिक्तः**, त्रि, (अति रिच् + कर्त्तरि क्तः । श्रेष्ठे भिन्ने
शून्ये च । भावे क्तः, अतिरेके आधिक्ये च ।)
अधिकः । अतिशयितः । तत्पर्य्यायः । समधिकः २ ।
इत्यमरः ॥

**अतिरेकः**, त्रि, (अति रिच् + भावे घञ् । आधिक्ये
श्रेष्ठत्वे च ।) अतिशयः । यथा, --
"सम्पूर्णे तूभयोर्ज्ञेयमतिरेके परेऽहनि" ।
इति तिथ्यादितत्त्वं ॥

**अतिरोगः**, पुं, (अत्यन्तोरोगः व्याधिः अति रुज् +
भावे घञ् ।) क्षयव्याधिः । इति राजनिर्घण्टः ॥

**अतिरोमशः**, पुं, (अतिशयितं रोम तदेव विद्यतेऽस्य
अतिरोमन् + मत्वर्थे श) वनच्छागलः । इति
हारावली ॥ वृहत्वानर इति केचित् ॥ अति-
शयलोमयुक्ते त्रि ॥

**अतिलोमशा**, स्त्री, (अतिशयितं लोम अतिलोमन् +
मत्वर्थे श, स्त्रियां टाप् ।) नीलबुह्ना । इति रत्न-
माला ॥

**अतिवर्त्तुलः**, पुं, (अतिशयितो वर्त्तुलः कर्म्मधारयः ।)
कलाय विशेषः । वाँटुला कडाइ इति भाषा । इति

**अतिविस्रब्धनवोढा**, स्त्री, (अतिविस्रब्धा अति-
प्रश्रययुक्ता नवोढा प्रणयिनी नायिका इति यावत्
कर्म्मधारयः ।) स्वीयान्तर्गतमध्यनायिकाभेदः । तस्याः
लक्षणं । नायकातिशयप्रश्रययुक्ता । अस्याश्चेष्टा ।
सधैर्य्यसापराधनायके वक्रोक्तिः । अधैर्य्यसापरा-
धनायके परुषवाक् । इति रसमञ्जरी ॥

**अतिवृष्टिः**, स्त्री, (अतिशयेन वृष्टिः वर्षणं ।) अति-
शयवृष्टिः । ईतिविशेषः । स तु महद्वर्षणरूपः
कृषीणामुत्पातः । यथा, --
"अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः ।
प्रत्यासन्नाश्चराजानः षडेता ईतयः स्मृताः ॥
इति पराशरः ॥

**अतिवेलं**, क्ली, (वेलां मर्य्यादां कूलं वा अतिक्रान्तं
प्रादिसमासः, ह्रस्वः ।) अतिशयिते त्रि ।
इत्यमरः ॥
(जलमतिवेलं पयोराशेः ॥ नीतिमाला) ।

**अतिव्यथा**, स्त्री, (अत्यन्ता व्यथायातना कर्म्मधारयः ।
व्यथ + भावे अङ् स्त्रियां टाप् ।) अतिशययातना ।
तीव्रवेदना । इति शब्दरत्नावली ॥

**अतिव्याप्तिः**, स्त्री, (अतिशयेन व्याप्तिर्व्यापनं ।) अतिशय-
व्यापनं । अलक्ष्ये लक्षणस्य गमनं । यथा साध्या-
भाववदवृत्तित्वमिति व्याप्तिलक्षणे धूमवान् वह्नि-
रित्यत्र धूमाभावाधिकरणह्रदवृत्तित्वाभावमादाय
अतिव्याप्तिः । इति तार्किकाः ॥ स्वाव्यवहित-
प्राक्क्षणावच्छेदेन रविभुज्यमानराशीयरवि-

अश्वतरः । गर्द्दभात् वडवाजातः अश्वभेदः ।) खे-
सरः । खचर इति भाषा । इति राज-
निर्घण्टः ॥

**अतिभीः**, पुं, (अतिबिभेत्यस्याः अति भी + अपा-
दाने क्विप् ।) वज्रज्वाला । इति हलायुधः ॥

**अतिभूमिः**, स्त्री, (अतिशयिता भूमिर्म्मर्य्यादा
कर्म्मधारयः, अतिमर्य्यादा ।) आधिक्यं । यथा । प्राप्य
मन्मथमदादतिभूमिं दुःसहस्तनभराः सुरतस्येति
माघः ॥ अतिशयितभूमिः ॥

**अतिमङ्गल्यः**, पुं, (अतिमङ्गलाय हितः अतिमङ्गल
+ यत् ।) विल्ववृक्षः । इति रत्नमाला ॥ अतिशय-
मङ्गलजनके त्रि ॥

**अतिमर्य्यादः**, त्रि, (मय्यादामतिक्रान्तः प्रादि-
समासः ।) अतिशयितः । इति हेमचन्द्रः ॥ अति-
शये क्ली ॥

**अतिमात्रं**, क्ली, (मात्रामल्पमतिक्रान्तं प्रादि-
समासः ।) अतिशयः । तद्युक्ते त्रि । इत्यमरः ॥
(यथा शाकुन्तले ।
अतिमात्रलोहिततलौ बाहू घटोत्क्षेपणात् ॥)

**अतिमुक्तः**, (पुं) माधवीलता । इत्यमरः ॥ तिनिश-
वृक्षः । इति हेमचन्द्रः ॥

**अतिमुक्तः**, त्रि, (अतिशयेन मुक्तः निर्व्वाणमुक्तिं गतः
अति + मुच् + कर्त्तरि क्तः, निर्व्वाणमुक्तिविशिष्टः ।)
रत्नमाला ॥ अस्य गुणाः सतीलशब्दे द्रष्टव्याः ॥

**अतिवादः**, पुं, (अति + वद् + भावे घञ् ।) अभि-
वादः । परुषोक्तिः । इत्यमरटीकायां रमानाथः ॥
("अतिवादांस्तितिक्षेत नावमन्येत कञ्चनः ।
नचेमं देहमाश्रित्य वैरं कुर्व्वीत केनचित् ॥
मनुः ।)

**अतिविकटः**, पुं, (अतिशयितो विकटः भीषणः)
दुष्टहस्ती । इति शब्दमाला ॥ अतिकराले त्रि ॥

**अतिविषा**, स्त्री, (विषमतिक्रान्ता प्रादिसमासः । वा
विषमतिक्रान्तं यया बहुव्रीहिः ।) वृक्षविशेषः ।
आतैष । आतैच इति भाषा । तत्पर्य्यायः । विश्वा
२ विषा ३ प्रतिविषा ४ उपविषा ५ अरुणा ६
शृङ्गी ७ महौषधं ८ । इत्यमरः ॥ काश्मीरा ९
श्वेता १० । इति रत्नमाला ॥ श्वेतकन्दा ११
भृङ्गी १२ भङ्गुरा १३ विरूपा १४ श्यामकन्दा
१५ विषरूपा १६ वीरा १७ माद्री १८ श्वेत-
वचा १९ अमृता २० । इति राजनिर्घण्टः ॥ तस्या
गुणाः । पाचकत्वं । ग्राहित्वं । दोषनाशित्वञ्च ।
इति राजवल्लभः ॥ कटुत्वं । कफपित्तज्वरामा-
तिसारकासविषच्छर्द्दिनाशित्वञ्च ।
"त्रिविधातिविषा ज्ञेया शुक्ला कृष्णा तथारुणा ।
रसवीर्य्यविपाकेषु निर्व्विषेव गुणाधिका" ॥
इति राजनिर्घण्टः ॥
"विषा त्वतिविषा विश्वा शृङ्गी प्रतिविषारुणा ।
शुक्लकन्दा चोपविषा भङ्गुरा व्रणवल्लभा ॥
विषा सोष्णा कटुस्तिक्ता पाचनी दीपनी हरेत् ।
कफपित्तातिसारामविषकासवमिक्रिमीन्" ॥
इति भावप्रकाशः ॥

संयोगविशिष्टस्वान्तिमक्षणकत्वं मलमासत्वं
भानुलङ्घिते अतिव्याप्तिवारणाय औत्पातिकभिन्न-
त्वेन विशेषणीयं । इति मलमासतत्त्वटीका ॥
मुख्यफलजनकव्यापारजनकत्वे सति मुख्यफला-
जनकत्वं अङ्गत्वं घटादावतिव्याप्तिवारणाय सत्यन्तं
इति तिथ्यादितत्त्वटीका च ॥

**अतिशक्तिता**, स्त्री, (अतिशयिता शक्तिः कर्म्मसाधन-
सामर्थ्यं यस्य बहुव्रीहिः, तस्य भावः तल् स्त्रियां
टाप्) विक्रमः । महाबलं । इत्यमरः ॥

**अतिशक्तिभाक्** [ज्] पुं, (अतिशयिता शक्तिः कर्म्म
साधनसामर्थ्यं कर्म्मधारयः । तां भजते अतिशक्ति
+ भज् + कर्त्तरि ण्विः, उपपदसमासः ।) अति-
शयशक्तिविशिष्टः । अतिसमर्थः । सवीर्य्यमतिशक्ति-
भाक् । इत्यमरः ॥

**अतिशयः**, पुं, (अति + शी + अच्) अधिकः । तत्-
पर्य्यायः । भरः २ अतिवेलं ३ भृशं ४ अत्यर्थं ५
अतिमात्रं ६ उद्गाढं ७ निर्भरं ८ तीव्रं ९
एकान्तं १० नितान्तं ११ गाढं १२ वाढं १३
दृढं १४ । इत्यमरः ॥ अतिमर्य्यादः १५ उत्-
कर्षः १६ । इति हेमचन्द्रः ॥ बलवत् १७ सुष्ठु १८
किमुत १९ सु २० अतीव २१ अति २२ । इत्य-
व्ययवर्गे अमरः ॥ अतिरिक्तः २३ समधिकः २४ ।
इति विशेष्यनिघ्नवर्गे अमरः ॥

**अतिशयनं**, क्ली, (अति + शी + भावे ल्युट्) अति-

निष्कलः । निःसङ्गः ।

इतिविश्वमेदिन्यौ ॥ प्राप्त-

निर्व्वाणः ॥

**अतिमुक्तकः**, पुं, (मुच् + भावे क्त, आतशयेन मुक्तं

बन्धशैथिल्यं यस्य सः बहुव्रीहिः, कप्

।) तिनिश-

वृक्षः । इत्यमरः ॥ तिन्दुकवृक्षः ।

पुष्पवृक्षविशेषः ।

तत्पर्य्यायः । पुण्ड्रकः २ मल्लिनी ३

भ्रमरा-

नन्दा ४ कामुककान्ता ५ । तस्य

गुणाः । कषायत्वं ।

शीतलत्वं । श्रमनाशित्वं ।

पित्तदाहज्वरोन्माद-

हिक्वाच्छर्द्दिनिवारकत्वञ्च । इति

राजनिर्घण्टः ॥

शयः । तद्युक्ते त्रि । इत्यमरटीकायां रमानाथः

।

(शयनमतिक्रान्तं अत्यादीतिसमासः ।

अतिक्रान्त

शयनम् ॥)

**अतिशायनं**, क्ली, (अति शी + स्वार्थे णिच् भावे

:ल्युट् ।) अतिशयनं । इति शब्दरत्नावली ॥ (आ-

धिक्यं । प्रकर्षः । प्रशंसा ।)

**अतिशोभनः**, त्रि, (अतिशोभते अति + शुभ +

कर्त्तरि ल्युः ।) अतिशयशोभायुक्तः ।

अतिप्रशस्यः ।

श्रेष्ठः । इत्यमरः ॥

**अतिसर्ज्जनं**, क्ली, (अतिशयेन सर्जनं दानं अति +

सृज् + भावे ल्युट्) अतिशयदानं ।

तत्पर्य्यायः ।

विलम्भः २ । इत्यमरः ॥ दानं । बधः ।

इति मेदिनी ॥

(विधुरां ज्वलनातिसर्ज्जनात् ननु मां

प्रापय पत्यु-

रन्तिकं ॥ इति कुमारसम्भवे ॥)

**अतिसारः**, पुं, (अतिशयेन मलं द्रवीकृत्य सरति

निःसारयति अति + सृ +

व्याधिमत्स्यबलेष्विति

वक्तव्यमिति वार्त्तिकसूत्रेण कर्त्तरि घञ्

वृद्धिः

दीर्घश्च ।) बहुद्रवमलनिःसरणरोगः ।

तत्पर्य्यायः ।

अन्नगन्धिः २ उदरामयः ३ । इति

त्रिकाण्डशेषः ॥

अतीसारः ४ । इति वैद्यकं ॥ * ॥ तस्य

निदानं ।

"गुर्व्वतिस्निग्धरूक्षोष्णद्रवस्थूलातिशीतलैः

।

विरुद्धाध्यशनाजीर्णैर्व्विषमैश्चापि भोजनैः ॥

स्नेहाद्यैरतियुक्तैश्च मिथ्यायुक्तैर्व्विषैर्भयैः ।

शोकाद्दुष्टाम्बुमद्यातिपानैः सात्म्यर्त्तुपर्य्ययैः

॥

जलाभिरमणैर्व्वेगविघातैः क्रिमिदोषतः ।

नृणां भवत्यतीसारो लक्षणं तस्य वक्ष्यते"

॥

संप्राप्तिर्यथा, --

लङ्घनएव दोषदुःसहपिपासायां दोषपाकार्थं

षडङ्गविधिनार्द्धश्रृतं योगचतुष्टयमाह, --

"धान्योदीच्यश्टतं तोयं

तृष्णादाहातिसारिणे ।

ह्रीवेरश्टङ्गवेराभ्यां मुस्तपर्पटकेन वा ॥

मुस्तोदीच्यश्टतं शीतं प्रदातव्यं पिपासवे ।

हितं लङ्घनमेवादौ पूर्ब्बरूपेऽतिसारिणः ॥

कार्य्यं वानशनस्यान्ते प्रद्रवं लघुभोजनं ।

पथ्यादारुवचामुस्तैर्नागरातिविषान्वितैः ॥

आमातीसारनाशाय क्वाथमेभिः पिबेन्नरः ।

पथ्यादिक्वाथः ॥ * ॥

"पाठाहिङ्ग्वजमोदोग्रापञ्चकोलाब्दजं रजः

।

उष्णाम्बुपीतं सरुजं जयत्यामं ससैन्धवं ॥"

पाठादिचूर्णं ॥ * ॥

"हरीतकीं सातिविषां हिङ्ग सौवर्च्चलां वचां

।

सैन्धवञ्चापि संपिष्य पाययेदुष्णवारिणा ॥

आमातिसारं योगोऽयं पाचयित्वा

चिकित्सति ।

आमातिसारो योगेन यद्येतेन न शाम्यति ।

न तं योगशतेनापि चिकित्सति चिकित्सकः

॥"

चिकित्सति अपनयति ।

हरीतक्यादिकल्कः ॥ * ॥

"वत्सकातिविषा विल्वमुस्तबालकजं श्टतं

।

अतीसारं जयेत् सामं चिरजं रक्तशूलजित्

॥"

वत्सकादिक्वाथः ॥ * ॥

"एरण्डरससंपिष्टं पक्वमामञ्च नागरं ।

आमातिसारशूलघ्नं दीपनं पाचनं परं ॥"

नागरस्य पुटपाकः कल्कश्च ॥ * ॥

"धान्यबालकविल्वाब्दनागरैः पाचितं जलं

।

आंमशूलविबन्धघ्नं पाचनं नित्यसेवितं ॥"

धान्यपञ्चकं ॥ * ॥

"मोचरसमुस्तनागरपाठारलुधातकीकुसुमैः

।

चूर्णं मथितसमेतं रुणद्धि गङ्गाप्रवाहमपि"

॥

अरलुः श्योणाकः । मथितं निर्ज्जलं दधि

वस्त्रपूतं ।

गङ्गाधरचूर्णं ॥ * ॥

"मुस्तावत्सकवीजं मोचरसो

विल्वधातकीलोध्रं ।

गुडमथितसंप्रयुक्तं गङ्गामपि वेगवाहिनीं

रुन्ध्यात्" ॥

द्वितीयं गङ्गाधरचूर्णं ॥ * ॥

"मुस्तारलुकशुण्ठीमिर्धातकीलोध्रबालकैः

।

विल्वमोचरसाभ्याञ्च पाठेन्द्रयववत्सकैः ॥

आम्रवीजसमङ्गातिविषायुक्तैर्बिचूर्णितैः ।

मधुतण्डुलपानीयपीतैर्नश्येत् प्रवाहिकां ॥

सर्व्वेऽतिसारा ग्रहणी प्रशमं याति वेगतः ।

वृद्धगङ्गाधरं चूर्णं रुन्ध्याद्गीर्ब्बाणवाहिनीं

॥"

समङ्गा लज्जालुः । वृद्धगङ्गाधरचूर्णं ॥ *

॥

अङ्कोटमूलकल्कः तण्डुलपयसा

समाक्षिकः पीतः ।

सेतुरिव वारिवेगं झटिति रुन्ध्यादतोसारं"

॥

अङ्कोठकल्कः ॥ * ॥

"कुटजत्वग्बलामाद्रो द्रोणनीरे पचेत्

भिषक् ।

पादशेषं श्टतं नीत्वा वस्त्रपूतं पुनः पचेत् ॥

लज्जालुर्धातकी विल्वं पाठा

मोचरसस्तथा ।

मुस्तं प्रतिविषा चैव चूर्णान्येषां पलं पलं ॥

निक्षिप्य विपचेत्तावत् यावत् दर्व्वी

प्रलिप्यते ।

जलेन छागदुग्धेन पीतो मण्डे न वा जयेत्

॥

“संशम्यापां धातुरग्निं प्रवृद्धः
शकृन्मिश्रो वायुनाधः प्रणुन्नः ।
सरत्यतीवातिसारं तमाहु-
र्व्याधिं घोरं षड्विधं तं वदन्ति ॥
एकैकशः सर्व्वशश्चापि दोषैः
शोकेनान्यः षष्ठ आमेन चोक्तः” ॥ * ॥
पूर्ब्बरूपं यथा, --
“हृन्नाभिपायूदरकुक्षितोद-
गात्रावसादानिलसन्निरोधाः ।
विट्सङ्ग आध्मानमथाविपाको
भविष्यतस्तस्य पुरःसराणि ॥”
इति माधवकरः ॥ अथ सामान्यातिसारस्य
चिकित्सामाह ।
“आमपक्वक्रमं हित्वा नातिसारक्रिया यतः
।
अतोऽतिसारे सर्व्वस्मिन्नामं पक्वञ्च
लक्षयेत् ॥
क्रमशश्चिकित्सा । तत्रामपक्वयोर्लक्षणं ।
“संसृष्टमानैर्दोषैस्तु न्यस्तमप्सु निमज्जति
।
पुरीषं भृशदुर्गन्धि पिच्छिलं चामसंज्ञितं ॥
एतान्येव तु लिङ्गानि विपरीतानि यस्य वै ।
लाघवञ्च विशेषेण तत्तु पक्वं विनिर्द्दिशेत् ॥
न च संग्राहणं दद्यात् पूर्ब्बमामातिसारिणे ।
अकाले संगृहीतो हि विकारान्कुरुते बहूग्
॥
दण्डकालसकाध्मानग्रहण्यर्शोभगन्दरान् ॥
शोथं पाण्ड्वामयं प्लीहगुल्ममेहोदरज्वरान्
॥
डिम्भस्थः स्थविरस्थश्च
वातपित्तात्मकश्च यः ।
क्षीणधातुबलस्यापि बहुदोषोऽतिविश्रुतः ॥
आमोऽपि स्तम्भनोयः स्यात् पाचनान्मरणं
भवेत् ।
लङ्घनमेकं मुक्त्वा न चान्यदस्तीह
भेषजंबलिनः ।
समुदीर्णदोषनिचयं तत् पाचयते तथा
शमयेत् ॥

“पित्ते धान्यचतुष्कन्तु शुण्ठीत्यागाद्वदन्ति
हि ।
रक्तेऽपि पित्तसाधर्म्याद्धितं धान्यचतुष्टयं ॥”
धान्यचतुष्कं ॥ इति आमातिसारस्य
चिकित्सा ॥ * ॥
“सलोध्रं धातकीविल्वं
मुस्ताम्रास्थिकलिङ्गकं ।
पिबेन्माहिषतक्रेण पक्वातीसारनाशनं ॥”
लोध्रादिचूर्णं ॥ * ॥
“अम्बष्ठा धातकी लोध्रं समङ्गा पद्मकेशरं ।
मधुकारलुविल्वच्च पक्वातीसारहा गणः
॥”
अरलुः श्यीणाकः । पाठादिर्गणः ॥ * ॥
“समङ्गा धातकीपुष्पं मञ्जिष्ठा लोध्रएव च ।
शाल्मलीवेष्टको लोध्रो दाडिमद्रुफलत्वचौ ॥
आम्रास्थिमध्यं लोध्रञ्च विल्वमध्यं प्रियङ्गु
च ।
मधूकं श्टङ्गवेरञ्च दीर्घवृन्तत्वगेव च ॥
चत्वार एते योगाः स्युः
पक्वातिसारनाशनाः ।
ते योगा उपयोग्याः स्युः
सक्षौद्रास्तण्डुलाम्बुना ॥”
समङ्गात्र लज्जालुः । शाल्मलीवेष्टको
मोचरसः ।
दाडिमस्य द्रुमफलयोस्त्वचौ ।
प्रियङ्गोर्नपुंसंकत्वमत्र
फले वर्त्तमानत्वा त् शृङ्गवेरमत्र शुण्ठी ।
दीर्घवृन्तः
श्योणाकः तस्य त्वक् । समङ्गादीनि
चत्वारि चूर्णानि ॥
“कञ्चटजम्बूदाडिमश्टङ्गाटकपत्रविल्ववर्हिष्ठं
। जल-
धरनागरसहितं गङ्गामपि वेगवाहिनीं
रुन्ध्यात्” ॥
कञ्चटं चवराई शाकस्य भेदः ।
कञ्चटादिभि-
श्चतुर्भिः पत्रशब्दः सम्बध्यते । वर्हिष्ठं
बालकं
गङ्गाधरक्वाथः ॥ * ॥

घोरान् सर्व्वानतीसारान् नानावर्णान्
सवेदनान् ।
असृग्दरं समस्तञ्च तथार्शांसि प्रवाहिकां
॥”
कुटजावलेहः ॥ * ॥
“कृत्वालबालं सुदृढं पिष्टैरामलकैर्मिषक् ।
आर्द्रकस्य रसेनाशु पूरयेन्नामिमण्डलं ॥
नदीवेगोपमं घोरं प्रवृद्धं दुर्द्धरं नृणां ।
सद्योऽतिसारमजयं नाशयत्येष योगराट् ॥
पाठा पिष्टा च गोदध्ना तथा
मध्यत्वगाम्रजा ।
अतीसारं व्यथादाहयुक्तं हन्त्युदरे धृता ॥
* ॥
अथ वातातिसारस्य लक्षणं ।
“अरुणं फेनिलं रूक्षमल्पमल्पं मुहुर्मुहुः ।
शकृदामं सरुक्छब्दं मारुतेनातिसार्य्यते”
॥
अरुणमीषद्रक्तं । शकृत् पुरीषं । सरुक्छब्द
शब्दो गुदे । तत्साहचर्य्यात् रुगपि गुद एव
बोद्धव्या ॥ * ॥ तस्य चिकित्सा ।
“वचा चातिविषा मुस्तं वीजानि कुटजस्य
च ।
श्रेष्ठः कषाय एतेषां वातातिसारशान्तये” ॥
* ॥
अथ पित्तातीसारस्य लक्षणं ।
“पित्तात् पीतं शकृद्रक्तं दुर्गन्धि हरितं द्रुतं ।
गुदपाकतृषामूर्च्छादाहयुक्तं प्रवर्त्तते” ॥ *
॥
तस्य चिकित्सा ।
“विल्वशक्रयवाम्भोदबालकातिविषाकृतः
।
कषायोहन्त्यतीसारं सामं पित्तसमुद्भवं” ।
विल्वादिकषायः ॥ * ॥
“रसाञ्जनं सातिविषं कुटजस्य पलं त्वचं ।
धातकीशृङ्गवेरञ्च पाययेत्तण्डुलाम्बुना ॥
निहन्ति मधुना पीतं पित्तातीसारमुल्वणं ।
अग्निं सन्दीपयत्येतत् शूलमाशु निवारयेत्
॥

:रक्तातीसारस्य संप्राप्तिमाह, --

“पित्तकृन्ति यदात्यर्थं द्रव्याण्यश्नाति पैत्तिके ।
तद्दोषाज्जायते शीघ्रं रक्तातीसार उल्वणः ॥ * ॥”
तस्य चिकित्सा ।
वत्सकतरुत्वगार्द्रा दाडिमफलसम्भवा त्वक् च ।
त्वगयुगलं पलमानं विपचेदष्टांशसम्मिते तोये ॥
अष्टमभागं शेषं क्वाथं मधुनापिबेत् पुरुषः ।
रक्तातिसारमुल्वणमतिशयितं नाशयेन्नियतं ॥
कुटजदाडिमक्वाथः ॥ * ॥
“कुटजातिविषा मुस्तं बालकं लोध्रचन्दनं ।
धातकी दाडिमं पाठा क्वाथमेषां समाक्षिकं ॥
पिबेद्रक्तातिसारे तु दाहशूलामसंयुते ।
कुटजादिकषायोऽयं सर्व्वातीसारनाशनः ॥”
चन्दनमत्र रक्तचन्दनं कुटजादिक्वाथः ॥ * ॥
“गुडेन भक्षयेद्विल्वं रक्तातीसारनाशनं ।
आमशूलविबन्धघ्नं कुक्षिरोगहरं परं ॥”
विल्वं सुस्विन्नं बालविल्वगर्भं शीतं तत्स्वेदनोदकं
चानुपेयं । गुडविल्वं ॥ * ॥
“जम्व्वाम्रामलकीनान्तुकुट्टयेत् पल्लवान् नवान् ।
संगृह्य स्वरसं तेषां अजाक्षीरेण योजयेत् ॥”
तत्पिबेन्मधुना युक्तं रक्तातीसारनाशनं ।
जम्व्वादिस्वरसः ॥ * ॥
“निष्क्वाथ्य मूलममलं गिरिमल्लिकायाः
सम्यक् पलद्वितयमम्बुचतुःशरावे ।
तत्पादशेषसलिलं खलु शोषणीयं
क्षीरे पलद्वयमिते कुशलैरजायाः ॥
प्रक्षिप्य माषकानष्टौ मधुनस्तत्र शीतले ॥
रक्तातिसारी तत्पीत्वा नैरुज्यं क्षिप्रमाप्नुयात्” ॥
प्रविष्टं स्वेदयेन्मन्दं मूषकस्यामिषेण हि ॥”
मूषकस्यामिषेण काञ्जिकेनोत्स्विन्नेन एरण्ड-
पत्रादिस्थापितेन स्वेदयेत् ।
“मूषकस्याथ वसया पायुं सम्यक् प्रलेपयेत् ।
गुदभ्रंशामिधो व्याधिः प्रणश्यति न संशयः ॥
चाङ्गेरीकोलदध्यम्लक्षारनागरसंयुतं ।
घृतं विपक्वं पातव्यं गुदभ्रंशगदापहं ॥
चाङ्गेरी चतुष्पत्रा अम्ललोनिका तस्याः स्वरसः
कोलस्य क्वाथः दध्यम्लं दधिरूपमम्लं एतत्रयं
मिलितं घृताच्चतुर्गुणं । क्षारनागरयोः कल्कः ।
चाङ्गेरीघृतं ॥ * ॥
“कोमलं पद्मिनीपत्रं यः खादेच्छर्करान्वितं ।
एतन्निश्चित्य निर्द्दिष्टं न तस्य गुदनिर्गमः ॥
पद्मिनीपत्रं पुरैनिपत्रं तत्संशोष्य संचूर्ण्य शर्करा
युक्तं खादेत् । अयन्तु गुदभ्रंशोऽतीसारं विनापि
भवति । ततः क्षुद्ररोगेषु लिखितः । अत्र तु
गुदस्य दाहपाकव्यथाप्रसङ्गात् भ्रंशोऽपि
लिखितः ।
चिकित्सा तूभयत्र तुल्यैव ॥ * ॥ अथ श्लेष्माति-
सारस्य लक्षणं ॥
“श्वेतं स्निग्धं घनं विस्रं शीतलं मन्दवेदनं ।
गौरवारुचिसंयुक्तं श्लेष्मणा सार्य्यते शकृत् ॥
विस्रं स्यादामगन्धि यत् ॥ * ॥ अथ तस्य
चिकित्सा ।
“श्लेष्मातिसारे प्रथमं हितं लङ्घनपाचनं ।
योज्यश्चामातिसारघ्नो यथोक्तो दीपनो गणः ॥
चव्यञ्चातिविषा कुष्ठं बालविल्वं सनागरं ।
वत्सकत्वक्फले पथ्या
छर्द्दिश्लेष्मातिसारनुत्” ॥
चव्यादिक्वाथः ॥ * ॥
“हिङ्गु सौवर्च्चलं व्योषमभयातिविषा वचा ।
पीतमुष्णाम्बुना चूर्णमेषां श्लेष्मातिसारनुत् ॥”
हिङ्ग्वादिचूर्णं ॥ * ॥
सर्व्वजं हन्त्यतीसारं ज्वरञ्चापि तथा वमिं ।
सशूलोपद्रवं श्वासं कासं वापि सुदुस्तरं ॥
पञ्चमूल्यत्र सामान्या पित्ते योज्या कनीयसी ।
वाते पुनर्ब्बलासे च सा योज्या महती मता” ॥
वर्हिष्ठं बालकं । पञ्चमूल्यादिक्वाथः ॥ * ॥
“अभया नागरं मुस्तं गुडेन सह योजितं ।
चतुःसमेयं गुटिका
स्यात्त्रिदोषातिसारनुत् ॥
आमातिसारमानाहं सविबन्धं विसूचिकां ।
कृमीनरोचकं हन्याद्दीपयत्याशु चानलं” ॥
चतुःसमो मोदकः ॥ * ॥
“तत्कालाकृष्टकुटजत्वचं तण्डुलवारिणा ।
पिष्टां चतुःपलमितां जम्बुपल्लववेष्टितां ॥
सूत्रेण बद्ध्वा गोधूमपिष्टेन परिवेष्टितां ।
लिप्ताञ्च घनपङ्केन निर्द्दहेद्गोमयाग्निना ॥
अङ्गारवर्णाञ्च मृदं दृष्ट्वा वह्नेः समुद्धरेत् ।
ततो रसं समादाय शीतं क्षौद्रयुतं पिबेत् ॥
उक्तः कृष्णात्रिपुत्रेण पुटंपाकस्तु कौटजः ।
जयेत् सर्व्वानतीसारान् दुस्तरान् सुचिरोत्थितान्
कुटजपुटपाकः ॥ * ॥
“कुटजत्वक्कृतः क्वाथो वस्त्रपूतो घनीकृतः ।

कुटजक्षीरं ॥ * ॥
“पीत्वा शतावरीकल्कं पयसा क्षीरभुग् जयेत्
।
रक्तातिसारं पीत्वा वा तया सिद्धं घृतं नरः
॥”
शतावरीक्लल्कस्तद्धृतञ्च ॥ * ॥
“गोदुग्धनवीनतन्तु मधुना सितया सह ॥
लीढं रक्तातिसारे तु ग्राहकं परमं मतं” ॥
नबनीतावलेहः ॥ * ॥
“पीतं मधुसितायुक्तं चन्दनं तण्डुलाम्बुना ।
रक्तातिसारजिद्रक्तपित्ततृड्दाहमेहनुत्” ॥
चन्दनमत्र श्वेतं । चन्दनकल्कः ॥ * ॥
“विरेकैर्बहुभिर्यस्य गुदं पित्तेन दह्यते ।
पच्यते वा तयोः कार्य्यं सेकप्रक्षालनादिकं”
॥
आदिशब्देन लेपादिग्रहः ।
“पटोलयष्टीमधुकक्काथेन शिशिरेण हि ।
गुदप्रक्षालनं कार्य्यं तेनैव गुदसेचनं ॥
दाहे पाके हितं छागीदुग्धं सक्षौद्रशर्करं ।
गुदस्य क्षालने सेके युक्तं पाने च भोजने ॥
गुदस्य दाहपाकयोः ।
“गुदनिःसरणे प्रोक्तं चाङ्गेरीघृतमुत्तमं ।
अतिप्रवृत्त्या महती भवेद्यदि गुदव्यथा ।
स्विन्नमूषकमांसेन तदा संस्वेदयेद्गुदं ॥
अथ गोधूमचूर्णस्य संनीतस्य तु वारिणा ।
साब्ज्यस्य गोलकं कृत्वा मृदु संस्वेदयेद्गुदं
॥
(गुदव्यथायां) गुदभ्रंशे
गुदंस्नेहैरभ्यज्यान्तःप्रवेशयेत् ।

“कृमिशक्रवचाविल्वपेशीधान्याककट्फलं ।
एषां क्वाथं भिषग्दद्यात् अतीसारे बलासजे” ॥
विडङ्गादिक्वाथः ॥ * ॥ अथ
द्विदोषजातिसाराणां
लक्षणानि चिकित्सा च ।
“द्विदोषलक्षणैर्विद्यादतीसारं द्विदोषजं ।
तेषां चिकित्सा प्रोक्तैव विशिष्टा च निगद्यते ॥
कट्फलं मधुकं लोध्रत्वक् दाडिमफलस्य च ।
सतण्डुलजलं चूर्णं वातपित्तातिसारनुत्” ॥
वातपित्तातिसारे ॥ * ॥
“चित्रकातिविषा मुस्तं बालविल्वं सनागरं ।
वत्सकत्वक्फलं पथ्या
वातश्लेष्मातिसारनुत्” ॥
वातश्लेष्मातिसारे ॥ * ॥
“मुस्ता सातिविषामूर्ब्बा वचाचकुटजः समाः ।
एषां कषायः सक्षौद्रः पित्तश्लेष्मातिसारनुत्”
॥
पित्तश्लेष्मातिसारे ॥ अथ
सन्निपातातिसारस्य लक्षणं ।
“तन्द्रायक्तो मोहसादास्यशोषी
वर्च्च कुर्य्यान्नैकरूपं तृषार्त्तः ।
सर्व्वोद्भूते सर्व्वलिङ्गोपपत्तिः
कृच्छ्रोऽसाध्यो बालवृद्धाबलानां” ॥
अथ तस्य चिकित्सा ॥ * ॥
“पञ्चमूलीबलाविल्वगुडूचीमुस्तनागरैः ।
पाटाभूनिम्बवर्हिष्ठकुटजत्वक्फलैः शृतं ॥

स लीढोऽतिविषायुक्तः
स्यात्त्रिदोषातिसारनुत् ॥
इच्छन्त्यत्राष्टमांशेन
क्वाथाददतिविषारजः ।
प्रक्षिपेद्वा चतुर्थांशमिति केचिद्वदन्ति
हि” ॥
कुठजावलेहः ॥ * ॥
“पलमङ्कोटमूलस्य पाठां दार्व्वीञ्च
तत्समां ।
पिष्ट्वा तण्डुलतोयेन
वटकानक्षसम्मितान् ॥
छायाशुष्कांश्च तान् कुर्य्यात्तेष्वेकं
तण्डुलाम्बुना ।
पेषयित्वा प्रदद्यात्तं पानाय गदिने
भिषक् ॥
वातपित्तकफोद्भुतान् द्वन्द्वजान्
सान्निपातिकान् ।
हन्यात् सर्व्वानतीसारान् वटकोऽयं
प्रयोजितः” ॥
अङ्कोठवटकः ॥ * ॥ अथागन्तुजस्य
शोकाति-
सारस्य संप्राप्तिपूर्ब्बकं लक्षणमाह ।
तैस्तैर्भावैः शोचतोऽल्पाशनस्य
वाष्पोष्मा वै वह्निमाविश्य जन्तोः ।
कोष्ठं गत्वा क्षोभयेत् तस्य रक्तं
तच्चाधस्तात् काकणन्तीप्रकाशं ॥
निर्गच्छेद्वै विड्विमिश्रं ह्याविड्वा
निर्गन्धं वा गन्धवद्वातिसारः ।
शोकोत्पन्नो दुश्चिकित्स्योऽतिमात्रं
रोगो वैद्यैः कष्ट एष प्रदिष्टः ॥
अयमर्थः ।
तैस्तैर्भावैर्बन्धुवित्तक्षयादिभिः शोचतः
शोकं
कुर्व्वतः । जन्तोः प्राणिनः । वाष्पोष्मा
वाष्पः शोकज-
देहोष्मणा जनितं नेत्रनासागलादिषु
जलं तेन स-
हितः उष्मा शोकजं देहतेजः । स कोष्ठं
गत्वा वह्नि-

| | | |
|---|---|---|
| | | माविश्य जठराग्निं मन्दीकृत्य । वाष्पसाहित्यादुष्म- णापिवह्नेर्मन्दीभाव इति नदोषः । वह्नेर्मन्दीभावादेव अल्पाशनस्येति जन्तोर्विशेषणं । ततस्तस्य जन्तोः रक्तं क्षोभयेत् स्वस्थानाच्चालयेत् । इति संप्राप्तिः ॥ अथ लक्षणं । तच्च रक्तं अधस्तात् गुदात् काक- णन्तीप्रकाशं गुञ्जाफलसदृशं विड्विमिश्रं गन्ध- वच्च । अविट् निर्गन्धं वा निर्गच्छेत् । शोकोत्प- न्नोऽतिसारः अतिमात्रं दुश्चिकित्स्यः । शोकाप- |

:नोदनं विना केवलेन भेषजेन प्रतिकर्त्तुमशक्य-
त्वात् । एषोऽतिसारः वैद्यैः कष्टः कष्टेन
साध्यः ।
प्रदिष्टः कथित इत्यर्थः ॥ * ॥
अथागन्तुजत्वेन
साम्यात् भयातिसारस्यापि
संप्राप्तिपूर्ब्बकं लक्षण-
मत्रैवाह ।
"भयेन क्षोभिता दोषा दूषयन्ति मलं
यदा ।
तदातिसार्य्यते तन्तु क्षिप्रमुष्णजलप्लवं
॥
वातपित्तातिसारस्य प्रायो लिङ्गैः
समन्वितं ।
न भयोपशमाच्छर्म्म यस्मिन् स्यात् स
भयात्स्मृतः ॥
प्लवत इति प्लवं जले प्लवमानं । ननु
भयाति-
सारस्य कथमागन्तुजत्वमयमपि दोषज
एव ।
यत आह । भयेन क्षोभिता दूषिता दोषा
मलं
दूषयन्ति । तन्मलमतिसरति । अत्र
पूर्ब्बमेव
दोषसम्बन्धः । उच्यते ।
"रागद्वेषभयात् ये च ते स्युरागन्तवो
गदाः" ।
इति वचनाद्भयातीसार आगन्तुज एव ।
श्लोकस्य
त्वयमर्थः । भयेनैव हेतुभूतेन दोषा
वातपित्त-
कफा अतीसारणाय क्षोभिताः
सञ्चालिताः न
दूषिता भयेन त्रयाणामपि दोषाणां
दूषणासम्भ-
वात् । अतिसर्त्तुं चलिता वातपित्तकफा
मलं
आमातिसारस्य चिकित्सा पूर्ब्बमुक्तैव ॥
* ॥
"शोथघ्नीन्द्रयवाः पाठा विडङ्गातिविषा
घनाः ।
क्वथिताः सोषणाः पीताः
शोथातिसारनाशनाः" ॥
शोथघ्नी पुनर्नवा । उषणं मरिचं ।
सशोथातो-
सारे ॥ * ॥
"आम्रास्थिमध्यमालूरफलक्वाथः
समाक्षिकः ।
शर्करासहितो हन्यात् छर्द्यतीसारमुल्वणं
॥"
मालूरफलं विल्वफलं ।
"कषायो भृष्टमुद्गस्य सलाजमधुशर्करः
।
निहन्याच्छर्द्यतीसारं तृष्णादाहं ज्वरं
भ्रमं" ॥
छर्द्यतीसारे ॥ * ॥
"दध्ना ससारेण समाक्षिकेण
भुञ्जीत निःसारकपीडितस्तु ।
सुतप्तकुप्यक्वथितेन चापि
क्षीरेण शीतेन मधुप्लुतेन" ॥
निःसारकः निढाही इति लोके ।
सुतप्तकुप्य-
क्वथितेन ।
सुतप्तसुवर्णरजतेतरलोहनिर्व्वापण-
क्वथितेन । भुञ्जीत पथ्यमिति शेषः ॥
निःसा-
रके ॥ * ॥
"दीप्ताग्निर्न्निष्पुरीषो यः सार्य्यते फेनिलं
शकृत् ।
स पिबेत् फाणितं शुण्ठीं दधि तैलं पयो
घृतं ॥
बला विश्वाश्टतं क्षीरं गुडतैलानुयोजितं ।
दीप्ताग्निं पाययेत् प्रातः सुखदं
वर्च्चसक्षये" ॥
पुरीषक्षये ॥ * ॥
तत्र रुक्षप्रभवा वातजा । स्नेहप्रभवा कफजा ।
तु
शब्दात्तीक्ष्णोष्णप्रभवा पित्तजा रक्तजा च ।
तासा-
मतीसारवदादिशेच्च लिङ्गं क्रमं चामविपक्वताञ्च
।
क्रमं चिकित्सां ॥ * ॥ तस्याश्चिकित्सामाह ।
"विल्वपेशी गुडं लोध्रं तैलं मरिचसंयुतं ।
लीढ्वा प्रवाहिकाक्रान्तः सत्वरं सुखमाप्नुयात्"
॥
विल्वादिरवलेहः ॥ * ॥
"धातकीवदरीपत्रकपित्थरसमाक्षिकं ।
सलोध्रमेकतो दध्ना पिबेन्निर्व्वाहिकार्द्दितः" ॥
एकतः प्रत्येकं दध्ना पिबेदित्यर्थः । निर्व्वाहिका
प्रवाहिका । धातक्यादिः ॥ * ॥ अथ असाध्या-
तिसारिणोलक्षणमाह ।
"पक्वजाम्बवसंकाशं यकृत्खण्डनिभं तनुं ।
घृततैलवसामज्जवेसवारपयोदधि ।
मांसधावनतोयाभं कृष्णं नीलारुणप्रभं ॥
कुणपं सकृदालोक्य नातिसारमुपक्रमेत् ।
तृष्णादाहारुचिश्वासहिक्वापार्श्वास्थिशूलिनं" ॥
संमूर्च्छारतिसंमोहयुक्तं पक्ववलीगुदं ।
प्रलापयुक्तञ्च भिषक् वर्ज्जयेदतिसारिणं ॥
संमूर्च्छा
सकलेन्द्रियमनसां स्वस्वविषयग्रहणाशक्तिहेतुर-
वस्थाविशेषः । संमोहः विकृतमतित्वं ।
"असंवृतगुदं क्षीणं शूलाध्मानैरुपद्रुतं ।
गुदे पक्वे गतोष्माणमतीसारिणमुत्सृजेत् ॥
असंवृतगुदं गुदसंवरणाक्षमं ।
गुदे पक्वे गतोष्माणं गुदपाकारम्भके पित्ते
विद्यमानेऽपि शीतगात्रं नष्टाग्निं वा ।
"श्वासशूलपिपासार्त्तं क्षीणं ज्वरनिपीडितं ।
विशेषेण नरं वृद्धमतीसारो विनाशयेत् ॥
शोथं शूलं ज्वरं तृष्णां श्वासं कासमरोचकं ।
छर्द्दिमुर्च्छाञ्च हिक्वाञ्च दृष्ट्वातिसारिणं त्यजेत् ॥
हस्तपादाङ्गुलीसन्धिप्रपाको मूत्रनिग्रहः ।
पुरीषस्योष्णतातीव मरणायातिसारिणां ॥
अतीसारी राजरोगी ग्रहणीरोगवानपि ।

दूषयन्ति तत् सर्व्वं वातपित्तकफमलं भयेनैवाति-
सार्य्यते । पश्चाद्वातसम्बन्धो भयाद्वायुरिति वच-
नात् । अतएव भयातिसारे वातहर्य्येव क्रिया
कथितेति समाधिः ॥ * ॥ अथ तयोश्चिकित्सा ।
"भयशोकसमुद्भूतौ ज्ञेयौ वातातिसारवत् ।
तयोर्व्वातहरी कार्य्या हर्षणाश्वासनैः क्रिया" ॥
वातातिसारवत् वातातिसारलक्षणैः । तयो-
श्चिकित्सा च हर्षणाश्वासनपूर्ब्बिका वातहरी
कार्य्या ॥ * ॥ अथामातीसारस्य संप्राप्तिपूर्ब्बकं
लक्षणमाह ।
"अन्नाजीर्ण्णात् प्रद्रुताः क्षोभयन्तो-
दोषाः कोष्ठे धातुसंघान् मलांश्च ।
नानावर्णं नैकशः सारयन्ति
शूलोपेतं षष्ठमेनं वदन्ति ॥
अन्नं भुक्तं तदजीणं चेति कर्म्मधारये अन्नाजीर्णं
तस्मात् प्रद्रुता उपद्रुताः । क्षोभयन्तः चाल-
यन्तः । नैकश इत्यत्र नाकादित्वान्नाक्षरविप-
र्य्ययः । नन्वामेन दोषा दूष्यन्ते गुर्व्वादिभक्ष-
णादिभिरिव ते चातीसारमुत्पादयन्ति । नत्वाम-
मेवातीसारमुत्पादयति । तेनामातीसारोऽपि
दोषज एव किमर्थमयं पृथगुच्यते । उच्यते । आ-
मातीसारस्य चिकित्साविशेषार्थं सम्प्राप्तिपूर्ब्बको

"तुलां संकुट्य विल्वस्य पचेत् पादावशेषितं ।
सक्षीरं साधयेत्तैलं श्लक्ष्णपिष्टैरिमैः समैः ॥
विल्वं सधातकीकुष्ठं शुण्ठी रास्ना पुनर्नवा ।
देवदारु वचा मुस्तं लोध्रमोचरसान्वितं ॥
एभिर्मृद्वग्निना पक्वं ग्रहण्यर्शोऽतिसारनुत् ।
विल्वतैलमिति ख्यातमत्रिपुत्त्रेण भाषितं ॥
ग्रहण्यर्शोऽधिकारे ये स्नेहाः समुपदर्शिताः ।
प्रयोज्यास्तेऽतिसारेऽपि त्रयाणां तुल्यहेतुता" ॥
त्रयाणां ग्रहण्यर्शोऽतिसाराणां । विल्वतैलं ॥ * ॥
अथातिसारभेदस्य प्रवाहिकाव्याधेः संप्राप्ति-
पूर्ब्बकलक्षणमाह ।
"वायुः प्रवृद्धो निचितं बलासं
नुदत्यधस्तादहिताशनस्य ।
प्रवाहतोऽल्पं बहुशो मलाक्तं
प्रवाहिकां तां प्रवदन्ति तज्ज्ञाः" ॥
अस्यायमर्थः । अहिताशनस्य अतिशयेन वातल-
भक्ष्यभोजिनः । प्रवृद्धो वायुः प्रवाहतः कण्ठ-
हृद्गलेन सशब्दं वायुमपानमार्गेण त्यजतः ।
निचितं सञ्चितं । बलासं कफं । मलाक्तं पुरी-
षयुक्तं अल्पं । बहुशः वारंवारं । अधस्तात्
गुदमार्गेण । नुदति प्रेरयति । तज्ज्ञाः पुरा-
णा वैद्याः । तां प्रवाहिकां । प्रवदन्ति कथ-
यन्ति ॥ * ॥

मांसाग्निबलहीनो यो दुर्लभं तस्य जीवनं ॥
बाले वृद्धे त्वसाध्योऽयं लिङ्गैरेतैरुपद्रुतः ।
अपि यूनामसाध्यः स्यादतिदुष्टेषु धातुषु" ॥
एतैर्लिङ्गैः पर्व्वोक्तैः पक्वजाम्बवसंकाशत्वादिभिः
॥ * ॥
अथातिसारयुक्तस्य लक्षणं ।
"यस्योच्चारं विना मूत्रं सम्यग्वायश्च गच्छति ।
दीप्ताग्नेर्लघु कोष्ठस्य स्थितस्तस्योदरामयः" ॥
उच्चारं पुरीषं विना स्थितः निवृत्त उदरामयो-
ऽत्रातिसारः ॥ * ॥ अथातीसारिणो वर्ज्जनीया-
न्याह ।
"स्नानावगाहनाभ्यङ्गगुरुस्निग्धादिभोजनं ।
व्यायाममग्निसन्तापमतीसारी विवर्ज्जयेत्" ॥
स्नानमुद्धृतजलेन । अवगाहनं नद्यादौ । इत्यती-
साराधिकारः । इति भावप्रकाशः ॥

**अतिसारकी**, [न्] त्रि, (अतिसार + स्वार्थे कन्
ततो मत्वर्थे इन्) सातिसारः । अतिसाररोग-
युक्तः । उदरामयी । इत्यमरः ॥

**अतिसाम्या**, स्त्री, (साम्यं समतामतिक्रान्ता अत्या-
दीति समासः अतुल्यस्थलयुक्ता इति यावत् ।)

लक्षणविशेषः पृथगुक्तः । कः स
चिकित्साविशेष-
स्तमाह । अतिसारेषु सर्व्वेष्वेव
संग्राहकमौषध-
मुक्तमामातीसारे तु ग्राहकं बिरुद्धं । यत
उक्तं ।
“नामे संग्राहकं विद्यादतीसारे कदाचन
।
संगृहीतो बलादामो विकारान् कुरुते
बहून्” ॥
इति । बलाद्भेषजबलात् । विकारान्
ग्रहण्या-
ध्मानशूलगुल्मशोथोदरज्वरादीन् ॥ *
॥ तस्य
चिकित्सा ।
“वत्सकातिविषा शुण्ठी
विल्वहिङ्गुयवाम्बुदाः ।
चित्रकेण युता एषां क्वाथ
आमातिसारनुत्” ॥

तस्या वातजादिभेदेन रूपमाह ।
“प्रवाहिका वातकृता सशूला
पित्तात् सदाहा सकफा कफाच्च ।
सशोणिता शोणितसम्भवाच्च
ताः स्नेहरूक्षप्रभवा मतास्तु” ॥

:लतायष्टिमधु । इति राजनिर्घण्टः ॥ अस्या गुणाः
क्लीतनकशब्दे द्रष्टव्याः ॥ (यष्टिमधु इति भाषाः ।)

**अतिस्फिरः**, त्रि, (स्फायी ओप्याया बृद्धौ अति + स्फाय + स्फायितञ्चिवञ्चिशकीत्यादिसूत्रेण रक् पृषोदरादित्वात् आयभागस्य इ अतिवृद्धः) अतिस्फूर्त्तिशाली । तत्पर्य्यायः । स्फेष्ठः २ । इति जटाधरः ॥

**अतिहसितं**, क्ली, (अतिशयेन हसितं हास्यं हस् + भावे क्तः ।) अतिशयहास्यं । इति जटाधरः ॥ (ज्येष्ठानां स्मितहसिते मध्यानां विहसितावहसिते च । नीचानामपहसितं तथातिहसितञ्च षड्भेदाः ॥ "मधुरस्वरं विहसितं सांसशिरःकम्पनमवहसितं । अपहसितं सास्राक्षं विक्षिप्ताङ्गं भवत्यतिहसितं" ॥ इति साहित्यदर्पणे ॥)

**अतिहासः**, पुं, (अतिशयेन हासः हास्यम् अति + हस् + भावे घञ् ।) सशब्दहासः । तत्पर्य्यायः । अनुस्यूतः २ । इति हेमचन्द्रः ॥

**अतीतं**, त्रि, (अति + इण् + क्तः) भूतकालः । तत्र तिस्रो घी टी ठी विभक्तयो भवन्ति । यथा भवद्भूतभव्ये त्रिशः क्याद्याः । क्याद्याः क्तयस्तिस्रस्तिस्रः क्रमाद्वर्त्तमानातीतभविष्यत्सु कालेषु स्युः । इति मुग्धबोधव्याकरणं ॥ तस्य लक्षणादि यथा । वर्त्तमानध्वंसप्रतियोगित्वमतीतत्वं । लङ्लुङोरती-
"अतुल्यमहसा साकं मम रामेण विग्रहः" । इति भट्टिः ॥

**अतुष्टिकरं**, त्रि, (तुष्टिं सन्तोषं करोति तुष्टि + कृ + कर्त्तरि टच् उपपदसमासः स्त्रियां ङीप् अतुष्टिकरी ।) सन्तोषाजनकं । यथा मनुः, -- "अनिर्दशञ्च प्रेतान्नं अतुष्टिकरमेव च" ॥ इत्याह्निकतत्वं ।

**अतृप्तिः**, स्त्री, (तृप् + भावे क्तिन् न तृप्तिः सन्तोषः नञ्समासः । बहुव्रीहौ तु तृप्तिरहितः असन्तोषकरः ।) तृप्त्यभावः । अपरितुष्टिः । अन्नाभिलाषः । यथा, -- "उष्मातृप्तितमः प्रवेशदहनं कद्वम्लतिक्ता रसा । वर्णः पाण्डुविवर्जितः क्वथितताकर्म्माणिपित्तस्यवै" इति रक्षितः ॥ अतृप्ते त्रि ॥

**अतेजः**, [स्] क्ली, (न तेजः तेजोविरोधितमः नञ्समासः ।) छाया इति राजनिर्घण्टः ॥ तेजोरहिते त्रि ॥

**अत्कः**, पुं, शरीरावयवः । अङ्गं । इत्युणादिकोषः ॥

**अत्कः**, त्रि, (अतति सततमनित्यतया विकारं गच्छति अत् + कन् अतति सततं गच्छति अत् + कन्) पथिकः । पान्थः । इत्युणादिकोषः ॥

**अत्टङ**, अतिक्रमे । बधे । इति कविकल्पद्रुमः ॥ दन्त्यवर्गाद्योपधः । ङ अतिट्टिषते । इति दुर्गादासः ॥

**अत्ता**, स्त्री, (अतति सततं स्नेहं संबध्नाति अत् + तक् स्त्रियां टाप् ।) माता । ज्येष्ठा भगिनी । इत्यमरटीकायां रमानाथः ॥ अत्ता माताग्रजस्वसा । इति नानार्थकोषः ॥ प्राकृतभाषायां श्वश्रूः । इति साहित्यदर्पणटीका ॥

**अत्तिः**, स्त्री, (अत्यते सततं कर्म्मणि सम्बध्यतेऽनया,

**अत्यन्तः** सुकुमारः, पुं, (अत्यन्तः सुकुमारः कर्म्मधारयः ।) कङ्गुनीवृक्षः । इति राजनिर्घण्टः ॥

**अत्यन्तिकः**, पुं, (अत्यन्तं गच्छति अत्यन्त + ठन् ठस्येक इति ठस्य इकः अति सातिशयमन्तिकं कर्म्मधारयः, अतिनिकटम् ।) अतिशयभ्रमणकर्त्ता । अत्यन्तगामी । इति हेमचन्द्रः ॥

**अत्यन्तोनः**, त्रि, (अन्तस्यात्ययः अव्ययीभावसमासः । अत्यन्तं गामी द्वितीयातत्पुरुषः । लक्ष्मों परम्परीणां त्वमत्यन्तीनत्वमुन्नये इति भट्टिः ।) भृशङ्गामी । अतिशयगमनशीलः । इत्यमरः ॥

**अत्यम्लं**, क्ली, (अत्यन्तः अम्लोरसः फलपत्रादौ यस्य सः ।) वृक्षाम्लं । इति राजनिर्घण्टः ॥ तेँतुल इति भाषा ॥

**अत्यम्लपर्णी**, स्त्री, (अत्यम्लं पर्णं पत्रं यस्याः सा जातित्वात् ङीप् ।) लताविशेषः । तत्पर्य्यायः । तीक्ष्णा २ कण्डुरा ३ वल्लिशूरणः ४ करवडवल्ली ५ वयस्था ६ अरण्यवासिनी ७ । अस्य गुणाः । तीक्ष्णाम्लत्वं । प्लीहशूलविनाशित्वं । वातहारित्वं । अग्निरुचिकारित्वं । गुल्मश्लेष्मरोगापहारित्वञ्च । इति राजनिर्घण्टः ॥

तत्वं । लिट्क्वसोर्व्वक्तुः परोक्षत्वं
अतीतत्वञ्च ।
लुङोऽतीतत्वं क्रियातिक्रमश्च ।
कुतश्चिद्वैगुण्यात्
क्रियानिष्पत्तिः क्रियातिक्रमः ।
क्तक्तवत्वोरती-
तत्वं । इति सारमञ्जरी ॥

**अतीतः**, त्रि, (अति इण् कर्त्तरिक्तः ।) गतः । भूतः ।

अतिक्रान्तः । यथा, --
"न नस्यं न्यूनसप्ताब्दे नातीताशीतिवत्सरे"
।
इति वैद्यकपरिभाषा ॥ सङ्गीतशास्त्रमते
मान-
प्रभेदः ॥

**अतीन्द्रियं**, त्रि, (इन्द्रियमतिक्रान्तम् अत्यादीति

समासः ।) अप्रत्यक्षं । प्रत्यक्षाविषयं ।
इन्द्रिया-
गोचरं । इन्द्रियाग्राह्यं । इत्यमरः ॥
("योऽसावतीयन्द्रयग्राह्यःसूक्ष्मोऽव्यक्तः
सनातनः" ।
इति मनुः ।
"अतीन्द्रियेष्वप्युपपन्नदर्शनो
बभूव भावेषु दिलीपनन्दनः" ॥ इति रंघुवंशे
॥)

**अतीव**, व्य, (अत्येव इव अवधारणे प्रादिसमासः,

अवधृतातिशयेऽत्यन्तातिशये च ।)
अतिशयः ।
इत्यमरः ॥
("अहं हि कारणं श्रुत्वा वैरस्यातीवमानद" ॥
इति रामायणे ॥)

**अतीसारः**, पुं, अतिसाररोगः । इति वैद्यकं ॥

**अतुलः**, पुं, (नास्ति तुला सादृश्यं यस्य सः ।) तिल-

वृक्षः । इति शब्दचन्द्रिका । तुलनारहिते त्रि
॥
("राक्षसेन्द्रप्रभावेण श्रिया चातुलया तथा"
॥

अत् करणे क्तिन् माता च ।) नाट्योक्तौ ज्येष्ठा
भगिनी । इति शब्दरत्नावली ।

**अत्तिका**, स्त्री, (अत्ति + स्वार्थे कन्) अन्तिका ।

नाट्योक्तौ ज्येष्ठा भगिनी । इति भरतः द्विरूप-
कोषश्च ।

**अत्नुः**, पुं, (अतति सततं गच्छति अत् + कर्त्तरि न

वायुः सततगन्ता पथिकः ।) सूर्य्यः ।
इत्युणादि-
कोषः ॥

**अत्यः**, पुं, (अतति शीघ्रं गच्छति अत् + कर्त्तरि

यत्,
क्वचिदपवादविषयेऽप्युत्सर्गोऽप्यभिनिविशते
इति न्यायात् अन्यथा हलन्तात् ण्यति आत्य
इति
स्यात् द्रुतगामी अश्वः ।) अश्वः ।
वैदिकशब्दोऽयं ॥

**अत्यन्तं**, क्ली, (अन्तं सीमामतिक्रान्तम् अत्यादीति

समासः ।) अतिशयः । यथा । अत्यन्तं कठिनौ
तथापि हृदयानन्दाय वक्षोरुहौ । इति नरहरि-
कविः ॥

**अत्यन्तकोपनः**, त्रि, (अत्यन्तं कोपनः क्रोधशीलः

द्वितीयातत्, कुप् + कर्त्तरि युच् ।) अतिशय-
क्रोधी । तत्पर्य्यायः । चण्डः २ । इत्यमरः ॥

**अत्यन्तगामी**, [न्] त्रि, (अत्यन्तं शीघ्रं गच्छति

अत्यन्त + गम् + णिनि उपपदसमासः ।) अति-
शयगमनशीलः । अतिशीघ्रगमनकर्त्ता । तत्प-
र्य्यायः । अत्यन्तिकः २ । इति हेमचन्द्रः ॥

**अत्यम्ला**, स्त्री, (अत्यन्तः अम्लरसो यस्याः सा

स्त्रियां टाप्) वनवीजपूरः । मधुरलेवु
। मधुटावा
इति ख्याता । इति रत्नमाला ॥

**अत्ययः**, पुं, (अति + इण् + भावे अच् ।) मृत्युः ।

अतिक्रमः । दण्डः । दोषः । कृच्छ्रं ।
इत्यमरः ॥
("जीवितात्ययमापन्नो योऽन्नमत्ति
यतस्ततः ।
आकाशमिव पङ्केन न स पापेन
लिप्यते ॥
इति मनुः ॥)

**अत्यर्थं**, क्ली, (अर्थमतिक्रान्तं अत्यादीति समासः ।)

अतिशयः । तद्विशिष्टे वाच्यलिङ्गं ।
इत्यमरः ॥ ।
("लक्ष्मणो राममत्यर्थमुवाच
हितकाम्यया" ।
इति रामायणे ॥)

**अत्यल्पं**, त्रि, (अत्यन्तमल्पं मनाक् ।) यत्किञ्चित् ।

अतिसूक्ष्मं । तत्पर्य्यायः । अल्पिष्ठं
२ अल्पीयः ३
कणीयः ४ अणीयः ५ । इत्यमरः ॥

**अत्याकारः**, पुं, (अति आधिक्येन आकारः तिर-

स्कारः । आ + कृ + भावे घञ् ।)
अतिशयितः ।
आकारो देहः कर्म्मधा । वृहद्देहः ।
अतिशयितः
आकारो यस्य सः तद्विशिष्टः ।)
न्यक्कारः । तिर-
स्कारः । इति हेमचन्द्रः ॥

**अत्याचारं**, क्ली, (आचारमतिक्रान्तं अत्यादीति

इति रामायणे ॥)

**अतुल्यं**, त्रि, (न तुल्यं सदृशं नञ्समासः ।) निस्तुल्यं ।

अनुपमं । असाम्यं । असदृशं । यथा, --

समासः ।) विरुद्धाचरणं ।

आचारमतिक्रम्य इत्य-

व्ययीभावसमासनिष्पन्नं ॥

**अत्याचारः**, पुं, (अति अनुचित आचारः कर्म्मधा ।)

अनुचिताचारः । असङ्गताचरणं ।

आचारोल्ल-

ङ्घनं । अन्यायः ॥ (अति अनुचितः

आचार आच-

रणं यस्य सः अन्यायाचरणकारी ।)

**अत्याज्यं**, त्रि, (त्यक्तुं न शक्यं अति त्यज् + शक्यार्थे-

ण्यत्, कुत्वाभावः ।) त्यागानर्हं ।

अत्यक्तव्यं । अत्य-

जनीयं । यथा, यत्तु

पतितस्त्रीगमनस्य लघुत्वं

प्रायश्चित्तविवेककृद्भिरुक्तं

तदत्याज्यापरं । इति

प्रायश्चित्ततत्त्वं ॥

**अत्यालः**, पुं, (अति अत्याशयेन आ चतुर्द्दिक्षु अलति
भूषति अति + आ + अल + कर्त्तरि अच् ।
लालचिता इतिभाषा) रक्त्वचित्रकवृक्षः ।
इति
राजनिर्घण्टः ॥

**अत्याशा**, स्त्री, (अतिशयेन आशा) अतिशयाशा ।
अत्यन्तस्पृहा । असम्भावनीयवाञ्छा, ।
यथा, --
“अत्याशाभिरुपागताध्वगगणान् धन्वावनौ
ता-
पितान्नोयत्तर्पयितुं क्षमोऽस्मि मम
तद्दुःखेर्मनो
दूयते” । इत्युद्भटः ॥

**अत्याहारी** [न्] त्रि, अतिपूर्ब्बाङ्पूर्ब्बहृधातोः
कर्त्तरि णिन् प्रत्ययनिष्पन्नः ।
अतिशयाहारकर्त्ता ।
बह्वाशी । अपरिमितभोजी ॥

**अत्याहितं**, क्ली, (अत्यन्तमाधीयते तन्निवारणाय
चित्तं निधीयते ऽत्र अति आ + धा +
क्तोऽधि-
करणे द्रव्यगतिप्रत्यवसानार्थेभ्यश्च इति
सूत्रेण क्त
अधिकरणे) महाभीतिः । अतिशयभयं ।
जीवा-
नपेक्षि कर्म्म । जीवनाशारहितसाहसकर्म्म ।
इत्य-
मरः ॥ (अत्याहितं किमपि राक्षसकर्म्म
कुर्य्यात् ।
इति रामायणं ।)

**अत्युक्तिः**, स्त्री, (अतिशयेन उक्तिः कथनम् अति +
वच् + भावे क्तिन्) आरोपितकथनं । अति-
शयोक्तिः । असम्भवोक्तिः । अलङ्कारविशेषः
। यथा ।
“मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं
क्रतुं ।
प्रचेतसं वशिष्टञ्च भृगुं नारदमेव च”
॥)

**अत्रिजातः**, पुं, (अत्रेर्जात उत्पन्नः पञ्चमीतत्पुरुषः ।)
चन्द्रः । द्विजन्मा । यथा, --
“अत्रिजातस्य या मूर्त्तिः शशिनः
सज्जनस्य च ।
क्व सा चैवात्रिजातस्य तमसो
दुर्जनस्य च” ॥
इति त्रिविक्रमभट्टः ॥

**अत्रिदृग्जः**, पुं, (अत्रेः दृक् चक्षुः षष्ठीतत्पुरुषः तस्या
जातः अत्रि दृक् + जन् + ड
उपपदसमासः ।)
चन्द्रः । इति हेमत्रन्द्रः ॥

**अत्रिनेत्रजः**, (पुं,) चन्द्रः । इति जटाधरः ॥

**अत्रिनेत्रप्रसूतः**, पुं, (अतिनेत्रात् प्रसूतः पञ्चमी-
तत्पुरुषः) चन्द्रः । इति हलायुधः ॥

**अत्रिनेत्रभूः**, पुं, (अत्रिनेत्रात् भवति यः अत्रिनेत्र +
भू + कर्त्तरि क्विप्) चन्द्रः । इति
त्रिकाण्डशेषः ॥

**अत्रिभारद्वाजिका**, स्त्री, अत्रिश्च भरद्वाजश्च द्वन्द्वः
तयीः स्त्रीपुंसयोर्म्मैथुनात् जाता
अत्रि भर-
द्वाज + “द्वन्द्वाद्वुन् वैरमैथनयोरिति”
वुन् तस्य
अकः स्त्रियां टाप्) अत्रिभारद्वाजी
विवाहः ।
इति शब्दरत्नावली ॥

**अद** इ बन्धे । (भ्वादि परस्मैपदी सेट् इदित्) इति
कविकल्पद्रुमः ॥ इ अन्द्यते । इति
दुर्गादासः ॥

**अद** ल औ भक्षणे (अनिट् परस्मेपदी अदादि ।)
इति कविकल्पद्रुमः ॥ ल अत्ति । औ अत्ता
।
गणकृतमनित्यमिति न्यायात् शपःस्थितौ
अद-
तीत्यपीति वररुचिः । इति दुर्गादासः ॥

**अदः** [स्] त्रि, (न दस्यते अङ्गु इदन्तया अङ्गलिरुत्-
क्षिप्यते यत्र न + दस् + बाहुल्यात् क्विप्
त्रि-
लिङ्गत्वञ्च ।) एतत् । पुरोवर्त्ति । एइ इति
भाषा ।
परं । परोक्षभूतं । इति मेदिनी । सेइ इति
भाषा ।

**अदत्तं**, त्रि, (न दत्तम् उत्सृष्टं नञ्समासः नञत्र
अप्राशस्त्ये यथा कारिकायां ।
“तत् सादृश्यमभावश्च तदन्यत्वं तदल्पता
।
अप्राशस्त्यं विरोधश्च नञ्र्थाः षट्
प्रकीर्त्तिताः” ॥
इति ।) अन्यायेन दत्तं । यथा । यत्
पुनरन्या-
येन दत्तं तददत्तं । षोडशप्रकारमपि
प्रत्याहर्त्त-
व्यमेव इत्यर्थादुक्तं भवति । नारदेन च ।
दत्तं
सप्तविधं प्रोक्तमदत्तं षोडशात्मकमिति
प्रतिपाद्य
दत्तादत्तयोः स्वरूपं विवृतं ।
“अदत्तन्तु भयक्रोधशोकवेगरूजान्वितैः ।
तथोत्कोचपरीहासव्यत्यासच्छलयोगतः ॥

"अत्युक्तिरद्भुतातथ्यशौर्य्योदार्य्यादिवर्णनं । त्वयि दातरि राजेन्द्र याचकाः कल्पशाखिनः" ॥ इति चन्द्रालोकः ॥

**अत्युहः**, पुं, (अतिशयेन ऊहते स्वजनितकृष्ण- वर्ण्णकण्ठं यथा तथा शब्दायते यः अति + ऊह + कर्त्तरि अच् । अतिशयितः ऊहस्तर्कः प्रादीति समासः, अतितर्कः) कालकण्ठः । दात्यूहपक्षी । इति मेदिनी ॥ अतिशयवितर्कः ॥ (अत्यूहा नीलिकायां स्त्री कलकण्ठखगे पुमान् ॥ इति- मेदिनी ॥)

**अत्युहा**, स्त्री, (अतिशयितः ऊहः पुष्पोत्कर्षेण तर्को यस्याः सा स्त्रियां टाप्) नीलिका । शेफालिका । इति मेदिनी ॥

**अत्र**, व्य, एतद् + सप्तम्यर्थे त्रल् एतद्शब्दस्य अशा- देशः) एतस्मिन् । एखाने इति भाषा । एतच्छब्दस्य सप्तप्यास्त्रादेशे रूपोऽयं ॥ (अपि सन्निहितोऽत्र कुलपतिः ॥ इति शाकुन्तले ॥)

**अत्रभवान्**, [त्], त्रि, (एतद् + अन्येभ्योऽपीति प्रथ- मार्थे त्रल् अत्र अयुं भव न् व र्म्मधारयः ।) पूज्यः । श्लाघ्यः । मान्यः । नाटकेऽस्य प्रचुरप्रयोगः । इति हेमचन्द्रः ॥ (नूनमत्रभवतः शराकृतिं सर्व्व- थायमनुयाति सायकः ॥ इति भारविः ॥)

**अत्रिः**, पुं, (अत्ति स्म एकगण्डूषेणैव सर्व्वमेव गङ्गा-

**अथ**, व्य, (अर्थ + ड पृषोदरादित्वात् रस्य लोपः ।) मङ्गलं । अनन्तरं । आरम्भः । प्रश्नः । कार्त्स्न्यं । इत्यमरः ॥ अधिकारः । संशयः । विकल्पः । समु- च्चयः । इति मेदिनी ॥ (अथ तस्य विवाहकौतकं ललितं बिभ्रत एव पार्थिवः ॥ इति रघुवंशे ॥)

**अथकिं** (अर्थं पूर्ब्बोक्तं वाक्यं कवते स्वीकरोति अर्थ + कु + डिम् पृषोदरादित्वात् वस्य लोपः । अर्थो ऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु इत्यमरः ।) व्य, स्वीकारः । इति शब्दरत्नावली ॥

**अथर्व्व** [न्] क्ली, (अथ लोकमङ्गलाय अर्ब्ब्यते प्रस्तू- यते यत् अथ + अर्ब्ब + कर्म्मणि अनिप् शकान्ध्वा- दित्वात् पररूपं । मङ्गलानन्तरारम्भप्रश्नकार्य्ये- ष्वथो अथ इत्यमरः) वेदविशेषः । इति मेदिनी ॥ तत्तु चतुर्थवेदः नवशाखायुक्तः । अस्य विवरणं वेदशब्दे द्रष्टव्यं ॥

**अथर्व्वणः**, पुं, (अथर्ब्ब विद्यतेऽस्य न प्रत्ययः ।) शिवः । इति त्रिकाण्डशेषः ॥

**अथर्व्वणिः**, पुं, (अथर्व्ववेदं नयति ज्ञानविषयं प्राप- यति अथर्व्वन् + नी + कर्त्तरि क्विप् । पृषोदरा- दित्वात् ह्रस्वः) अथर्ब्बवेदज्ञब्राह्मणः । पुरोहितः ।

बालमूढास्वतन्त्रार्त्तमत्तोन्मत्तापवर्जितं । कर्त्ता ममेदं कर्म्मेति प्रतिलाभेच्छया च यत् ॥ अपात्रे पात्रमित्युक्ते कार्य्यं वा धर्म्मसंहिते । यद्दत्तं स्यादविज्ञानाददत्तमिति तत् स्मृतमिति ॥ अयमर्थः । भयेन वन्दिग्राहादिभ्यो दत्तं । क्रोधेन पुत्रादिवैरनिर्यातनायान्यस्मै दत्तं । पुत्रवियोगा- दिनिमित्तशोकाविष्टेन दत्तं । उत्कोचेन कार्य्य- प्रतिबन्धनिरासार्थमधिकृतेभ्यो दत्तं । परिहासे- नोपहासेन दत्तं । एकः स्वद्रव्यमन्यस्मै ददात्यन्यो- ऽपि तस्मै ददातीति दानव्यत्यासः । छलयोगतः शतदानमभिसन्धाय सहस्रमिति परिभाष्य ददाति । बालेनाप्राप्तषोडशवर्षेण । मूढेन लोक- वेदानभिज्ञेन । अस्वतन्त्रेण पुत्रदासादिना । आर्त्तेन रोगाभिभूतेन मत्तेन मदनीयप्रमत्तेन । उन्मत्तेन वातिकाद्युन्मादग्रस्तेन । अपवर्जितं दत्तं । तथायं मदीयमिदं कर्म्म करिष्यतीति प्रतिलाभे- च्छया दत्तं । अचतुर्वेदाय चतुर्वेदोऽहमित्युक्तवते दत्तं । यज्ञं करिष्यामीति धनं लबध्वा द्यूतादौ विनियुञ्जानाय दत्तमित्येवं षोडशप्रकारमपि दत्त- मदत्तमित्युच्यते । प्रत्याहरणीयत्वात् । आर्त्त-

जलं पीतवान् अद् + कर्त्तरि तृन् दस्य तः ।
“मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
ब्रह्मणोः मानसाः पुत्त्राः वशिष्ठश्चेति सप्त
ते” ॥
इति) सप्तर्षिमध्ये ऋषिविशेषः । स च
ब्रह्मण-
श्चक्षुषो जातः । तस्य भार्य्या
कर्दममुनिकन्या
अनसूया । पुत्त्रः दत्तः १ दुर्व्वासाः २
चन्द्रश्च ३ ।
इति श्रीभागवतं ॥ (यथा मनुः, --

इति मेदिनी ॥

**अथर्व्वा** [न्] पुं, (अथ लोकमङ्गलाय अर्ब्बति वेदवि-

शेषं प्रस्तौति अथ + अर्ब्ब + अनिप्
शकन्ध्वादि-
त्वात् पररूपं) ब्राह्मणः । इति
मेदिनी ॥ (कृतपद-
पंक्तिरथर्वणेव वेदः ॥ इति भारविः)
॥

**अथो**, व्य, (अर्थ + डो पृषीदरादित्वात् रलोपः)

मङ्गलं । आनन्तर्य्यं । समुच्चयः ।
प्रश्नः । आरम्भः ।
कात्स्न्र्यं । अधिकारः । संशयः ।
विकल्पः । इति
मेदिनी ॥
(“स्त्रियो रत्नान्यथो विद्या धर्म्मः
शौचं सुभाषितं ।
विविधानि च शिल्पानि समादेयानि
सर्व्वतः” ॥
इति मनुः ॥)

दत्तस्यादत्तत्वं धर्म्मकार्य्य व्यतिरिक्तविषयं
।
“सुस्थेनार्त्तेन बा दत्तं श्रावितं
धर्म्मकारणात् ।
अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः
॥
इति कात्यायनस्मरणात् । यः पुनः षोडश-
प्रकारमप्यदत्तं गृह्णाति यश्चादेयं प्रयच्छति
।
तयोर्दण्डो नारदेनोक्तः ।
“गृह्णात्यदत्तं यो लोभात् यश्चादेयं
प्रयच्छति ।
अदेयदायको दण्ड्यस्तथा
दत्तप्रतीच्छकः” ॥
इति मिताक्षरा ॥ कन्यकानां त्वदत्तानां ।
इति
कात्यायनः ॥
“नह्यदत्तां महीं पित्रा भरतः शास्तु
मिच्छति”
इति रामायणं ।)

**अदत्ता**, स्त्री, (न दत्ता नोत्सृष्टा नञ्समासः, नञत्र
निषेधार्थः ।) अविवाहिता । इति
स्मृतिः ।

**अदनं**, क्ली, (अद् भोजने भावे ल्युट् ।) भक्षणं ।
भोजनं । इति हेमचन्द्रः ॥
(“इन्धनार्थमशुष्काणां
द्रुमाणामवपातनं ।
आत्मार्थञ्च क्रियारम्भो
निन्दितान्नादनं तथा” ॥
इति मनुः ।)

**अदभ्रः**, त्रि, (दन्भ + रक् । दभ्रमल्पं नदभ्रं नञ्-
समासः ।) प्रचुरः । बहुः । इत्यमरः
॥ (अदभ्र-
दर्भामविशय्य स स्थलीं जहासि
निद्रामशिवैः शि-
वारुतैः ॥ इति किराताज्र्जुनीयं ॥)

**अदर्शनं**, क्ली, (दृश् दर्शने, भावे ल्युट्, नञ्समासः ।)
दर्शनाभावः । (अदर्शनञ्च ते वीर भूयो
मां ताप-
यिष्यति ॥ इति रामायणं ।)
असाक्षात् । दृष्ट्य-
गोचरं । तत्पर्य्यायः । विनाशः २ ।
इत्यमरः ।
(व्याकरणमते लोपः यथा
ऋग्वेदप्रातिशाख्ये, --
“विवृत्तिषु प्रत्ययादेरदर्शनम्” । इति
।)

**अदलः**, पुं, (न दल्यते भिद्यते यत्, न दल् + घञर्थे
कन् ।) हिज्जलवृक्षः । इति
शब्दचन्द्रिका ॥ दल-
वासनाजन्यं । तत्त्वज्ञाननाश्यं ।
भोगनाश्यञ्च ।
धर्म्माधर्म्मभेदेन तत् द्विविधं ।
धर्म्मस्तु स्वर्गादि-
कारणं । गङ्गास्नानयागादिजन्यः ।
कर्म्मनाशाज-
लादिस्पर्शनाश्यश्च । अधर्म्मस्तु
नरकादिकारणं ।
प्रायश्चित्तादिनाश्यश्च । इति
भाषापरिच्छेदः ॥

**अदृष्टः**, त्रि, (न दृष्टः ।) अकृतदर्शनः । अवीक्षितः ।
“अदृष्टे दर्शनोत्कण्ठा दृष्टे
विच्छेदभीरुता” ।
इति रसतरङ्गिण्यां भानुदत्तः ॥

**अदृष्टवान्,** [त्] त्रि, (अदृष्टं भाग्यं विद्यतेऽस्य,
अदृष्टं मतुप् ।) भाग्यवान् । कपालिया
इति
भाषा । (स्त्रियां ङीप् अदृष्टवती) ।

**अदृष्टिः**, स्त्री, (न दृष्टिः नञ्समासः ।) प्रतिकूला
दृष्टिः । कुत्सिता दृष्टिः ।
सरोषवक्रदृष्टिः । कुटि-
लचक्षुः । असौम्याक्षि ।
वक्रदृष्टियुक्तचक्षुः ।
इत्यमरः ॥

**अदृष्टिका**, स्त्री, (विरुद्धा दृष्टिः नञ्समासः ।
नञत्र विरोधार्थे, स्वार्थे कन् स्त्रियां
टाप् ।)
सरोषवक्रदृष्टिः । इति शब्दरत्नावली
॥

**अदेवमातृकः**, पुं, (देवो वृष्ट्यम्बु माता मातृतुल्यो
नरापचारान्नियतमुपसर्गः प्रवर्त्तते ॥
ततोऽपचारान्नियतमपवर्ज्जन्ति देवताः ।
ताः सृजन्त्यद्भुतां स्तांस्तु दिव्यनाभसभूमिजान्
॥
त एव त्रिविधा लोके उत्पाता देवनिर्म्मिताः ।
विचरन्ति विनाशाय रूपैः सम्बोधयन्ति च” ॥
तांश्च परं न दर्शयेदित्याह विष्णुः ॥ नोत्पातं
दर्शयेदिति ॥ * ॥ तत्र वेलानक्षत्रमण्डलनिरूपणं
।
यथा दीपिकायां ॥
“प्राक्द्वित्रिचतुर्भगेषु द्युनिशोरद्भुतेषु सर्व्वेषु ।
अनिलाग्निशक्रवरुणा मण्डलपतयः शुभाशुभैश्च
॥
बेलामण्डलं ॥ * ॥
“अर्य्यम्नादिचतुष्कचन्द्रतुरगादित्येषु वायुर्भवेत्
।
देवेज्याजविशाखयाम्ययुगले पित्रद्वये चानलः ॥
विश्वादित्रयधातृमैत्रयुगलेष्विन्द्रो भवेन्मण्डलः ।
सर्पोपान्त्यमृगान्त्यमूलयुगलेशानेष्वपामीश्वरः ॥
पवनदहनौ नेष्टौ योगस्तयोरतिदुष्करः ।
सुरपवरुणौ शस्तौ योगस्तयोरतिशोभनः ॥
सवरुणमरुन्मिश्रः शक्रस्तथाग्निसमायुतः ।
फलविरहितः सेन्द्रो वायुस्तथाग्नियुतोऽम्बु पः ॥
यन्मण्डलेऽद्भुतं जातं शान्तिस्तद्देवताश्रया ।
तथा शान्तिद्वयं कार्य्यं मण्डलद्वयजाद्भुते” ॥ *
॥
विष्णुधर्म्मोत्तरे ।
“ग्रहर्क्षवैकृतं दिव्यं आन्तरीक्षं निबोध मे ।
उल्कापातो दिशां दाहः परिवेशस्तथैव च ॥
गन्धर्व्वनगरञ्चैव वृष्टिश्च विकृता तथा ।
एवमादीनि लोकेऽस्मिन् नाभसानि विनिर्द्दिशेत्
॥
चरस्थिरभवं भौमं भूकम्पमपि भूमिजं ।
जलाशयानां वैकृत्यं भौमं तदपि कीर्त्तितं ॥
भौमञ्चाल्पफलं ज्ञेयं चिरेण परिपच्यते ।
नाभसं मध्यफलदं मध्यकालफलप्रदं ॥

रहिते त्रि ॥

**अदला**, स्त्री, (नास्ति दलं पत्रं यस्याः सा ।) घृत-

कुमारी । इति शब्दचन्द्रिका ॥

**अदाता**, त्रि, (न दाता नञ्समासः । दा + तृच् ।)

कृपणः । दानशक्तिरहितः । यथा, --
"अदाता पुरुषस्त्यागी स्वधनं त्यज्य
गच्छति" ।
इति प्राचीनाः ॥
("कालेऽदाता पिता वाच्यो
वाच्यश्चानुपयन् पतिः ।
मृते भर्त्तरि पुत्रस्तु
वाच्योमातुररक्षिता" ॥
इति मनुः ॥)

**अदान्तः**, त्रि, (न दान्तः नञ्समासः ।) तपःक्लेशा-

सहिष्णुः । अकृतवाह्येन्द्रियनिग्रहः ।
इति
पुराणं ॥

**अदितिः**, स्त्री, (दितिभिन्ना अदितिः । नञो दाञो

डितिरिति
शाकटायनोक्तेर्डितिप्रत्ययान्तो वा ।
अदनाददितिः वा ।)
दक्षप्रजापतिकन्या । सा
कश्यपपत्नी । देबमाता च । इति
त्रिकाण्डशेषः ॥
भूमिः । अखण्डः । इति
शब्दरत्नावली ॥

**अदितिनन्दनः**, पुं, (अदितेर्नन्दनः पुत्रः, षष्ठीतत्-

पुरुषः ।) देवता । इत्यमरः ॥

**अदृक्**, [श्] त्रि, (नास्ति दृक् चक्षुर्यस्य सः ।)

दृष्टिरहितः । अन्धः । इत्यमरः ॥

यत्र सः, समासान्तः कः, ततो
नञ्समासः ।)
देवमातृकभिन्नदेशः । नदीमातृकदेशः
। यथा ।
(वितन्वति क्षेममदेवमातृकाः ॥ इति
भारविः ॥)

**अद्गः**, पुं, (अद्यते भुज्यते यत्, अद् कर्म्मणि गन् ।)

घृतं । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**अद्टङ** ङ अतिक्रमे बधे । इति कविकल्पद्रुमः ॥

दन्त्यवर्गतृतीयोपधः । (अड्डितुं
अतिक्रमितु-
मिच्छति -- अद्ट् + सन् + लट् ते ।)
ङ अड्टि-
टिषते । इति दुर्गादासः ॥

**अद्ड**, अभियोगे । इति कविकल्पद्रुमः ॥ दन्त्यवर्ग-

तृतीयोपधः । (अड्डितुं
अभियोक्तुमिच्छति
अद्ड् + सन् + लट् तिप् ।)
अड्डिडिषति । क्विपि
संयोगान्तलोपे अद् । अभियोगः
समाधानं ।
अड्डति पक्षं विद्वान् । अभि समन्तात्
योगो-
ऽभियोगः इति गोविन्दभट्टः ॥ इति
दुर्गादासः ॥

**अद्धा**, व्य, (अतं सततं गमनं ज्ञानं वा दधाति अत् +

धा + क्विप् ।) यथार्थं । तत्पर्य्यायः ।
तत्त्वं २
अञ्जसा ३ । इत्यमरः ॥ (अद्धा श्रियं
पालित-
सङ्गराय प्रत्यर्पयिष्यत्यनघां स साधुः
॥ इति रघुः ।)

दिव्यं तीव्रफलं ज्ञेयं शीघ्रकारि तथैव च ॥ * ॥
शीतोष्णता विपर्य्यासऋतूनां रिपुजं भयं ॥
पुष्पे फले च विकृते राज्ञो मृत्युं तथादिशेत् ।
अकालप्रभवा नार्य्यः कालातीताः प्रजास्तथा ॥
विकृताः प्रसवाश्चैव युग्मप्रसवनं तथा ।
हीनाङ्गा अधिकाङ्गाश्च जायन्ते यदि वा त्रयः ॥
पशवः पक्षिणश्चैव तथैव च सरीसृपाः ।
विनाशं तस्य देहस्य कुलस्य च विनिर्दिशेत् ॥ *
॥
प्रदोषे कुक्कुटारावो हेमन्ते चापि कोकिलाः ।
अर्कोदयेऽर्काभिमुखश्वारावो नृभयं दिशेत् ॥
उलूको वसते यत्र निपतेद्वा तथा गृहे ।
ज्ञेयो गृहपतेर्मृत्युर्धननाशस्तथैव च ॥
गृध्रः कङ्कः कपोतश्च उलूकः श्येन एब च ।
चिल्लश्च चर्म्मचिल्लश्च भासः पाण्डर एव च ॥
गृहे यस्य पतन्त्येते गेहं तस्य विपद्यते ।
पक्षान्मासात्तथा वर्षान्मृत्युः स्याद्गृहमेधिनः ॥
पत्न्याः पुत्त्रस्य वा मृत्युर्द्रव्यञ्चापि विनश्यति ।
ब्राह्मणाय गृहं दत्त्वा दत्त्वा तन्मूल्यमेव वा ॥
गृह्णीयाद्यदि रोचेत शान्तिञ्चेमां प्रयोजयेत् ।
मांसास्थीनि समादाय श्मशानाद्गृध्रवायसाः ॥
श्वा श्टगालोऽथ वा मध्ये पु रस्य प्रविशन्ति चेत्
।
विकिरन्ति गृहादौ च श्मशानं सा मही भवेत् ॥

**अदृश्यं**, त्रि, (दृश् + कर्म्मणि क्यप् न दृश्यं, नञ्-

समासः ।) अदर्शनीयं । अद्रष्टव्यं ।

“यथा, --

कन्याद्रेरतिकोमला

त्रिभुवनव्याप्ताप्यदृश्याजनैः” ।

इत्युद्भटः ॥

**अदृष्टं**, क्ली, (न दृष्टं नञ्समासः ।) अग्निजलादि-

द्वारा जातं भयं । इत्यमरः ॥

जन्मान्तरीय-

संस्कारः । भाग्यं । यथा ।

“अदृष्टमप्यर्थमदृष्ट-

वैभवात् करोति सुप्तिर्जनदर्शनातिथिं

॥ इति

श्रीहर्षः ॥ तत्तु आत्मनोऽतीन्द्रियगुणः

। इदं

**अद्भुतं**, क्ली, अपूर्ब्बं । तत्पर्य्यायः । विस्मयः २

आश्चर्य्यं ३ चित्रं ४ । तद्विशिष्टे

वाच्यलिङ्गं ।

इत्यमरः ॥

**अद्भुतं**, त्रि, (अततीति अत् + क्विप् आकस्मिकार्थ-

मव्ययं तथा भाति-भा + डुतच् ।)

आश्चर्य्यं ।

तत्पर्य्यायः । इङ्गं २ । इति जटाधरः

॥ * ॥ अथा-

द्भुतं । अद्भुतसागरे

आथर्व्वणाद्भुतवचनं । प्रकृति-

विरुद्धमद्भुतमापदः प्राक् प्रबोधाय

देवाः सृज-

न्तीति । तेन आपज्ज्ञानाय

भूम्यादीनां पूर्ब्बं

स्वभावप्रच्यवोदेवकर्तृकोऽद्भुत इति ॥

एवञ्च बुधो-

दयपर्ब्बग्रहणादीनां गणितागतत्वेन

प्रकृतानामपि

यदुत्पातत्वं तद्भाक्तं ।

तत्कारणञ्च गर्गसंहितावार्हस्पत्ययोः

॥

“अतिलोभादसत्याद्वा

नास्तिक्याद्वाप्यधर्म्मतः ।

:चौरेण हन्यते लोकः परचक्रसमागमः ।
संग्रामश्च महाघोरो दुर्भिक्षं मरकं तथा ॥
अद्भुतानि प्रसूयन्ते तत्र देशस्य विद्रवः ।
अकाले फलपुष्पाणि देशविद्रवकारणं” ॥
* ॥
मत्स्यपुराणे ।
“अतिवृष्टिरनावृष्टिर्दुर्भिक्षादिभयं मतं ।
अनृतौ तु दिनादूद्ध्र्वं वृष्टिर्ज्ञेया भयाय च
॥
निरभ्रे वाथ रात्रौ वा श्वेतं याम्योत्तरेण तु
।
इन्द्रायुधं ततो दृष्ट्वा उल्कापातं तथैव च
॥
दिग्दाहपरिवेशौ च गन्धर्व्वनगरं तथा ॥
परचक्रभयं विद्यात् देशोपद्रवमेव च” ॥
भासो वनकुक्कुटः ॥ * ॥
कंसनिधनसूचनेहरिवंशः, --
“वक्रमङ्गारकश्चक्रे चित्रायां घोरदर्शनः ।
चलत्यपर्ब्बणि मही गिरीणां शिखराणिच”
॥ * ॥
बाणोत्पाते स एव ।
“दक्षिणां दिशमास्थाय धूमकेतुः स्थितो
भवेत् ।
वक्रमङ्गारकश्चक्रे कृत्तिकासु भयङ्करः” ॥
* ॥
कृत्यचिन्तामणौ ।
“त्यक्ताशौचविवेकतत्त्ववसुधा लोकाः
क्षुधापीडिताः ।
विप्रा वेदहतास्तथा प्रचलिता
बह्वाशिनोदुःखिताः ।
क्षौणी मन्दफला नृपाश्च
विकलाःसंग्रामघोरा मही
प्रेताघातदुरन्तपीडिततरा
देवेज्यराह्वोर्युतौ ॥
रक्ते शस्त्रोद्योगो मांसास्थिवसादिभिर्मरकः
।

पञ्चगव्यं पञ्चरत्नं पञ्चामृतं सपल्लवं ॥
पञ्चवृक्षकषायञ्च निःक्षिप्यावाहयेत् ततः ।
पूजयेद्गन्धपुष्पाद्यैर्लोकपालांस्तथा ग्रहान्
॥
मृत्युञ्जयेन मन्त्रेण समिद्भिः खादिरैः शुभैः ।
तिलैर्व्याहृतिभिर्होममष्टोत्तरसहस्रकं” ॥
पल्ली गृहगोधिका ।
मृत्युञ्जयमन्त्रस्त्र्यम्बकमन्त्रः ।
इति विद्याकरः ॥ * ॥
गर्गसंहितावार्हस्पत्ययोः ।
“ये तेषु शान्तिं कुर्व्वन्ति न ते यान्ति
पराभवं ।
ये तु न प्रतिकुर्व्वन्ति क्रियया श्रद्धयान्विताः
॥
दाम्भिक्याद्वाविमोहाद्वा
विनश्यन्त्येवतेऽचिरात्” ॥ * ॥
अत्र निमित्तनिश्चयवतोऽधिकारः । अन्यथा
दोषः । इत्याह मत्स्यपुराणं, --
“भिन्नमण्डलवेलायां ये भवंन्त्यद्भुताः
क्वचित् ।
तत्र शान्तिद्वयं कार्य्यं निमित्ते सति नान्यथा
।
निर्निमित्तकृता शान्तिर्निमित्तमुपपादयेत् ।
एतच्च तत्तद्विशेषविहितशान्तिविषयं ।
अन्यथा
वेलामण्डलसन्देहे शान्तिर्न स्यात्
साधारण-
शान्तिश्च निर्विषया स्यात् । अतएवोक्तं
योगि-
याज्ञवल्क्येन, --
“यत्र यत्र च संकीर्णमात्मानं मन्यते द्विजः ।
तत्र तत्र तिलैर्होमो गायत्र्या समुदाहृतः ॥
गायत्र्या प्रयतः शुद्धः सर्व्वपापैः प्रमुच्यते ।
शान्तिकामश्च जुहुयात् गायत्रीमक्षतैः शुचिः
॥
हन्तुकामश्च नृपतेर्घृतेन जुहुयात् शुचिः ।

प्रतीयादित्येक इति । धर्म्मशेषान्
श्रुतिस्मृति-
सदाचारेष्वप्रसिद्धानिति
नारायणोपाध्यायाः ।
भूदोहश्च पात्रं विना भूमौ गोस्तनं
निष्पोड्य
दुग्धोत्सर्गः । चैत्यः पूज्यत्वेन ख्यातो
ग्रामस्य
वृक्षः । तथा च बाणोत्पाते हरिवंशः, -
-
“अनेकशाखश्चैत्यश्च निपपात
महीतले ।
अर्च्चितः सर्व्वकन्याभिर्दानवानां
महात्मनां ॥”
उषतीमकल्याणीं । अतिवादश्च
पूज्यमतिक्रम्य
भाषणं ॥ * ॥ मत्स्यपुराणं, --
“काकस्यैकरवश्रावः प्रभाते
दुःखदायकः ।
काको मैथुनकासक्तः श्वेतो वा यदि
दृश्यते ॥
उलूको वसते यत्र निपतेद्वा तथा गृहे ।
ज्ञेयो गृहपतेर्मृत्युर्धननाशस्तथैव च ॥
* ॥”
वराहसंहितायां, --
क्रीडानुरक्तो रतिमांसलुब्धो
भीतो रुजार्त्तः पतितो विहङ्गः ।
नासौ गृहस्थस्य विनाशहेतु-
र्दोषः समुत्पद्यत आहुरार्य्याः ॥ * ॥
अद्भुतशान्तिमाह मात्स्ये, --
“गृहे पक्षिविकारेषु कुर्य्याच्चामरतर्पणं
।
देवाः कपोता इति वा जप्तव्यं
सप्ततिर्द्विजैः ॥
गावश्च देया विविधा द्विजानां
सकाञ्चना वस्त्रयुगोत्तरीयाः ।
एवं कृते पापमुपैति शान्तिं

धान्यहिरण्यत्वकफलकुसुमाद्ये वर्षिते
भयं विद्यात् ॥
अङ्गारपांशुवर्षे विनाशमुपयाति तन्नगरं ।
उपलं विना जलधरैर्विकृता वा यदा
प्राणिनो वृष्ट्या ॥
छिद्रं वाप्यतिवृष्टिं शस्यानामीतिसंजननं”
॥ * ॥
बुधकौशिकसम्बादे ।
“पल्ल्याः प्रपाते च फलं शरटस्य प्ररोहणे
।
शीर्षे राजश्रियोऽव्याप्तिर्भाले चैश्वर्य्यमेव च
।
कर्णयोर्भूषणावाप्तिर्नेत्रयोर्बन्धुदर्शनं ॥
नासिकायाञ्च सौगन्ध्यं वक्त्रे
मिष्टान्नभोजनं ।
कण्ठे चैव श्रियोऽवाप्तिर्भुजयोर्विभवो भवेत्
॥
धनलाभो बाहुमूले करयोर्धनवृद्धयः ।
स्तनमूले च सौभाग्यं हृदि सौख्यविवर्द्धनं
॥
पृष्ठे नित्यं महीलाभः पार्श्वयोर्बन्धुदर्शनं ।
कटिद्वये वस्त्रलाभो गुह्ये मृत्युसमागमः ॥
जङ्घे चार्थक्षयो नित्यं गुदे रोगभयं भवेत् ।
उर्व्वोस्तु वाहनावाप्तिर्जानुजङ्घेऽर्थसंक्षयः
॥
वामदक्षिणयोः पादोर्भ्रमणं नियतं भवेत् ।
पल्ल्याः प्ररोहणे चैव पतने शरटस्य च ॥
व्यत्यासाच्च फलञ्चैव तद्वदेवं प्रजायते ।
पल्ल्याः प्ररोहणं रात्रौ शरटस्य प्रपातनं ॥
निधनार्थाय भवति व्याधिपोडाविपर्य्यये ।
पतनानन्तरञ्चैवारोहणं यदि जायते ॥
पतने फलमुत्कृष्टं रोहणेऽन्यत् फलं भवेत्
।
आरोहणञ्चोर्द्ध्वक्त्रे अधोवक्त्रे च पातनं
॥
भवेदिष्टफलं तस्य तत्फलं जायते ध्रुवं ।
स्पृष्टमात्रेण यः मद्यः सचेलं जलमाविशेत्
॥

सावित्र्याशान्तिहोमांश्च कुर्य्यात् पर्ब्बसु
नित्यशः ॥
प्रणवब्याहृतिभ्याञ्च स्वाहान्ता होमकर्म्मणि
।
प्रतिलोमा प्रयोक्तब्या फट्कारान्ताभिचारके
॥ * ॥
विश्वामित्रेणापि निमित्तसन्देहे
कृच्छ्रादीन्युक्तानि ।
यथा, --
“कृच्छ्रचान्द्रायणादीनि शुद्ध्यभ्युदयकारणं
।
प्रकाशे च रहस्ये च संशयेऽनुक्तकेऽस्फुटे ॥
* ॥
मार्कण्डेयपुराणं ।
“दिग्देशजनसामान्यं नृपसामान्यमात्मनि ।
नक्षत्रग्रहसामान्यं नरो भुङ्क्ते शुभाशुभं ॥
परस्पराभिवादश्च ग्रहदोषेषु जायते” ॥
तथा, --
“तस्माच्छान्तिपरः प्राज्ञो
लोकवादरतस्तथा ॥
लोकवादांश्च शान्तीश्च ग्रहपीडासु कारयेत्
।
भूदोहानुपवासांश्च शस्तं चैत्याभिवन्दनं ॥
कुर्य्यात् होमं तथा दानं श्राद्धं क्रोधविवर्जनं
।
अद्रोहं सर्व्वभूतेषु मैत्रीं कुर्य्याच्च पण्डितः ॥
वर्जयेदुषतीं वाचमतिवादांस्तथैव च ।
ग्रहपूजाञ्च कुर्व्वीत सर्व्वपीडासु मानवः ॥
एवं शाम्यन्त्यशेषाणि घोराणि द्विजसत्तम ।
प्रयतानां मनुष्याणां ग्रहर्क्षोत्थान्यनेकशः” ॥
* ॥
लोकवादाश्च तत्रैवोक्ताः । यथा, --
“आकाशाद्देवतानाञ्च देव्यादीनाञ्च सौहृदात्
।
पृथिव्यां प्रतिलोके च लोकवादा इति
स्मृताः ॥”
ते च सर्व्वभूतडाकिन्याद्यभिभवशान्त्यर्थं
लौकि-

मृगैर्द्विजैर्व्वा विनिवेदितं यत् ॥”
द्विजैः पक्षिभिः । अपिवा अन्यैरपि ॥
* ॥ भुज-
बलभीमे ।
“एको वृषस्त्रयो गावः सप्ताश्वा नव
दन्तिनः ।
सिंहप्रसूतिका गावः कथिताः
स्वामिघातकाः ॥ * ॥”
मत्स्यपुराणे ।
“अङ्गे दक्षिणभागे तु शस्तं विष्फुरणं
भवेत् ।
अप्रशस्तं तथा वामे पृष्ठस्य हृदयस्य
च ॥
लाञ्छनं पिटकं चैव ज्ञेयं विष्फूर्जितं
तथा ।
विपर्य्ययेण विहितं सर्व्वं स्त्रीणां फलं
तथा” ॥ * ॥
अनिष्टचिह्नोपगमे द्विजानां काय्यं
सुवर्णेन च
तर्पणं स्यात् । शङ्खः ।
“दुःस्वप्नानिष्टदर्शनादौ घृतं
हिरण्यञ्च दद्यात्” इति । मात्स्ये ।
“नमस्ते सर्व्वलोकेश नमस्ते
भृगुनन्दन ।
कवे सर्व्वार्थसिद्ध्यर्थं गृहाणार्घ्यं
नमोऽस्तुते ॥
एवं शुक्रोदये कुर्व्वन् यात्रादिषु च
भारत ।
सर्व्वान् कामानवाप्नोति विष्णुलोके
महीयते ॥
नमस्तेऽङ्गिरसां नाथ वाक्पतेऽथ
वृहस्पते ।
क्रूरग्रहैः पीडितानाममृताय नमो नमः
॥
संक्रान्तावपि कौन्तेय
यात्रास्वभ्युदयेषु च ॥
कुर्व्वन् वृहस्पतेः पूजां सर्व्वान्
कामान् समश्नुते” ॥

| | | |
|---|---|---|
| पञ्चगव्यप्राशनञ्च कुर्य्यादर्कावलोकनं ।<br>पल्लीरूपं सुवर्णस्य रक्तवस्त्रेण वेष्टयेत् ॥<br>पूजयेद्गन्धपुष्पाद्यैस्तदग्रे पूर्णकुम्भके । | कौषधमन्त्रादयः<br>विषहरीमङ्गलचण्डिकागीतादयः<br>चैत्यवृक्षादौ क्षेत्रपालदेवतापूजा च । तथा-<br>चापस्तम्बः । स्त्रीभ्योऽवरवर्णेभ्यो<br>धर्म्मशेषान् | वैष्णवामृते व्यासः ।<br>“ग्रहयज्ञैः शान्तिकैश्च किं<br>क्लिश्यन्ति नरा द्विज ।<br>महाशान्तिकरः श्रीमांस्तुलस्या<br>पूजितो हरिः ॥<br>उत्पातान् दारुणान् पुंसां<br>दुर्निमित्ताननेकशः ।<br>तुलस्या पूजितो भक्त्या<br>महाशान्तिकरो हरिः ॥”<br>अत्र ब्रह्मपुराणीयो मन्त्रः ।<br>“नमस्ते बहुरूपाय विष्णवे परमात्मने<br>स्वाहा” |

:इति ॥ * ॥ छन्दोगपरिशिष्टं । अथातो रज-

स्वलाभिगमने गोऽश्वभार्य्यासु गमने
यमजजनने
विजातीयजनने वा
काककङ्कगृध्रवकश्येनभास-
चिल्लकपोतानां गृहप्रवेशे मानुषस्योपरि
विश्रा-
मणे एषामेव क्रियमाणे गृहद्वारारोहणे वाद्भु-
तेषु कल्पदृष्टेन विधिनाग्निमुपसमाधाय
प्राय-
श्चित्ताज्याहुतीर्ज्जुहोति अद्भुताय अग्नये
स्वाहा
सोमाय विष्णवे रुद्राय वायवे सूर्य्याय
मृत्यवे
विश्वेभ्यो देवेभ्यः स्वाहेति
स्थालीपाकवृतान्य
दिति ॥ * ॥ कपोतं विशेषयति शौनकः ।
"रक्तपादः कपोताख्यः अरण्यौकाः
शुकच्छविः ।
स चेच्छालां विशेच्छालासमीपञ्च व्रजेद्यदि
॥
अन्येषु गृहमध्ये वा वल्मीकस्योद्गमादिषु"
।
कल्पदृष्टेन विधिना गृह्योक्तेन ।
प्रायश्चित्ताः
ज्याहुतीः अद्भुतदोषप्रशमनार्था
सप्ताज्याहुतीः ।
अद्भुताय अग्नये स्वाहा इत्यादिमन्त्रैः । तत्र
स्थालीपाकेतिकर्त्तव्यतायां
पायसचरुभिरेतेभ्यो
देवेभ्यो जुहुयात् । छन्दोगपरिशिष्टं ।
पश्चात्
घृतपायसेन ब्राह्मणान् भोजयित्वा गोवरं
दत्त्वा
शान्तिर्भवतीति । गोवरं गोश्रेष्ठं दक्षिणां तां
गां

गीतवादित्रनिर्घोषो वनपर्ब्बतसानुषु ।
शस्यवृद्धिरसोत्पत्तिरपापाः शरदि स्मृताः ॥ *
॥
शीतानीलतुषारत्वं नर्द्दनं मृगपक्षिणां ।
रक्षोयक्षादिसत्त्वानां दर्शनं वागमानुषी ॥-
दिशो धूमान्धकाराश्च शलभा वनपर्ब्बताः ।
उच्चैः सूर्य्योदयास्तत्वं हेमन्ते शोभना मताः ॥
* ॥
हिमपातानिलोत्पातविरूपाद्भुतदर्शनं ।
दृष्ट्वाञ्जनाभमाकाशं तारोल्कापातपिञ्जरं ॥
चित्रा गर्भोद्भवाः स्त्रीषु गोऽजाश्वमृगपक्षिणां ।
पत्राङ्कुरलतानाञ्च विकाराः शिशिरे शुभाः ॥
ऋतुस्वभावजा ह्येते दृष्टाः स्वर्त्तौ शुभावहाः ।
ऋतावन्यत्र चोत्पाता दृष्टास्ते भृशदारुणाः" ॥
* ॥
उन्मत्तानाञ्च या गाथाः शिशूनाञ्चेष्टितञ्च यत् ।
स्त्रियो यच्च प्रभाषन्ते तत्र नास्ति व्यतिक्रमः ॥
पूर्ब्बं चरति देवेषु पश्चाद्गच्छति नुइषान् ।
नादेशिता वाग्वदति सत्या ह्येषा सरस्वती ॥ *
॥
वृहस्पतिः, --
"ज्योतिर्ज्ञानं तथोत्पातमविदित्वा तुये नृणां ।
श्रावयन्त्यर्थलोभेन विनेयास्तेऽपि यत्नतः ॥
विनेया दण्डनीयाः । इति ज्योतिस्तत्त्वं ॥

**अद्भुतः**, पुं, शृङ्गारादिनवरसानां मध्ये रसविशेषः ।

तस्य स्थायिभावो विस्मयः । देवता गन्धर्ब्बः ।
वर्णः पीतः । आलम्बनं लोकातीतवस्तु ।
उद्दीपनं
तद्गुणमहिमा । अनुभावाः स्तम्भस्वेदरोमाञ्च-
गद्गदस्वरविभ्रमनेत्रविकाशादयः । अस्य
व्यभि-
चारिभावाः वितर्कावेगसम्भ्रान्तिहर्षादयः । इति
साहित्यदर्पणं ॥

**अद्भुतस्वनः**, पुं, (अद्भुतः अतिशयितः स्वनः शब्दो

यस्य सः ।) महादेवः । इति त्रिकाण्डशेषः ।

गौः इति संक्षिप्तसारपरिशिष्टं ।

**अद्यावधि**, क्ली, (अद्य अवधिः सीमा यस्य तत् ।) अ-

द्यारभ्य । आजि इस्तक । इति
भाषा । वर्त्तमान-
दिवसपर्य्यन्तं । आजि नागाइत
इति भाषा ॥

**अद्रिः**, पुं, (अदिशदीति क्रिन् ॥) सूर्य्यः । पर्ब्बतः ।

वृक्षः । इत्यमरः ॥
परिमाणविशेषः । इति शब्द-
रत्नावली ॥ (शाखी । मानभेदः
। सप्ताङ्कः ।
पर्ब्बतमूषिका ॥)

**अद्रिकर्णी**, स्त्री, (पर्ब्बतमूषिकायाः कर्णवत् पुष्प-

मध्यस्थपत्रं यस्याः सा स्त्रियां
ङीप् ।) अपराजिता ।
इति राजनिर्घण्टः ॥

**अद्रिकीला**, स्त्री, (अद्रयः कीलाः स्तम्भवत् यस्या

सा पृथिवो ।) भूमिः । इति
त्रिकाण्डशेषः ॥

**अद्रिजं**, क्ली, (अद्रौ जातं इति जनेर्डः ।) शिलाजतु

इति रत्नमाला ॥
पर्ब्बतजातवस्तुनि त्रि ॥

**अद्रिजा**, स्त्री, (अद्रेर्जाता इति जनेर्ड ततष्टाप्,

पार्ब्बती ।) दुर्गा । इति हेमचन्द्रः
॥ सैंहलीवृक्षः ।
इति राजनिर्घण्टः ॥

**अद्रितनया**, स्त्री, (अद्रेः तनया ।) पार्ब्बतो । यथा --

कृत्वा दोषशान्तिर्भवतीति । तथाचोक्तं, --
“गौर्विशिष्टतमा लीके वेदेष्वपि निगद्यते ।
न ततोऽन्यद्वयं यस्मात्
तस्माद्गौर्वरमुच्यते” ॥ * ॥
छन्दोगपरिशिष्टं । यस्त्वेषामन्यतममापन्नः
प्राय-
श्चित्तं न कुर्य्यात् तस्य गृहपतेर्म्मरणं
सर्व्वस्वनाशो
वा भवति तस्मात् प्रायश्चित्तं कर्त्तव्यं
कर्म्मापवर्गे
वामदेव्यगानं शान्तिः शान्तिरिति । अपवर्गे
समाप्तौ । वामदेव्यगानं शान्तिः कर्त्तव्या
आवृत्ति-
प्रकरणसमाप्त्यर्था । वार्हस्पत्ये ।
शमयन्त्यासप्ता-
हात् कम्पादिकृतं निभित्तमाश्वेव ।
अतिवर्षणोः
पवासव्रतदीक्षाजप्यहवनानि ॥ * ॥ वराहः
।
ये च न दोषं
जनयन्त्युत्पातांस्तानृतुस्वभावकृतान् ।
ऋषिपुत्त्रकृतैः श्लोकैर्विद्यादेभिः
समासोक्तैः ॥
तथा च मत्स्यपुराणं ।
“वज्राशनिमहीकम्पसन्ध्यानिर्घातनिस्वनाः
।
परिवेशरजोधूमरक्तार्कास्तमयोदयाः ॥
द्रुमेभ्योऽथ रसस्नेहमधुपुष्पफलोद्गमाः ।
गोपक्षिमदवृद्धिश्च शिवाय मधुमाधवे ॥ *
॥
तारोल्कापातकलुषं कपिलार्केन्दुमण्डलं ।
अनग्निज्वलनं स्फोटं धूमरेणुनिराकुलं ॥
रक्तपद्मारुणा सन्ध्या नभः क्षुब्धार्णवोपमं ।
सरिताञ्चाम्बुसंशोषं दृष्ट्वा ग्रीष्मे शुभं वदेत्
॥ * ॥
शक्रायुधपरीवेशौ विद्युच्छुष्कविरोहणं ।
कम्पोद्वर्त्तनवैकृत्यं रसनं दरणं क्षितेः ॥
नद्युदपानसरसां वृष्ट्यद्ध्वर्या भवनप्लवाः ।

(अद्भुतः स्वन इति कर्म्मधारये आश्चर्य्यशब्दः)
।

**अद्भुतसारः**, पुं, (अद्भुतः अतिकठिनः सारः स्थिरांशो
यस्य सः ।) खदिरसारः ॥ इति केचित् ॥

**अद्मनिः**, पुं, (अत्ति भक्षयति सर्व्वान् अदेर्मुट्
चेत्यनिः ।) अग्निः । इत्युणादिकोषः ॥

**अद्मरः**, त्रि, (अद् भक्षणे, सृघस्यदः क्मरच् ।)
भक्षकः । भक्षणपरः । इत्यमरः ॥

**अद्य** व्य, (सद्यपरुत् परार्य्यैषम इति इदमोऽश्-
भावो द्यश्च निपात्यते ॥) वर्त्तमानदिनं । आजि
इति भाषा । इत्यमरः ॥

**अद्यतनः**, पुं, (सायञ्चिरमित्यादिना ट्युट्युलौ तुटच् ॥)
कालविशेषः । स च भाष्यमते दुर्गसिंहमते च
पूर्ब्बरात्रिशेषदण्डचतुष्टयावधिकपररात्रिसार्द्धया-
मपर्य्यन्तः ।
पूर्ब्बरात्रिशेषार्द्धावधिपररात्रिप्रथमा-
र्द्धपर्य्यन्तो वा । भर्तृहरिक्रमदीश्वरमते
पूर्ब्बरात्रि-
शेषप्रहरावधिपररात्रिप्रथमप्रहरपर्य्यन्तः । अद्य
जातवस्तनि त्रि ॥

**अद्यश्वीनं**, त्रि, (अद्य श्वस् + ख तस्य ईन टिश्चलोप
।)
आसन्नमरणादि । अद्य श्वो वा भवति अद्यश्वीनं
मरणं । इति संक्षिप्तसारव्याकरणपरिशिष्टं ॥

**अद्यश्वोना**, स्त्री, (अद्यश्वस् + “अद्यश्वीनावष्टब्धे”
इति सूत्रेण ख तस्य ईन टिलोपश्च स्त्रियां
टाप् ।) आसन्नप्रसवा अद्यश्वो वा सूते
अद्यश्वीना-

एषोऽहमद्रितनयामुखपद्मजन्मेति
काव्यप्रकाशः ॥
(अथैनमद्रेस्तनया शुशोच ॥
इति रघुः ॥)

**अद्रिनन्दिनी**, स्त्री, (अद्रेर्नन्दिनी ।
पार्ब्बती ।) दुर्गा ॥
हिमालयाद्रिजातत्वात् ॥

**अद्रिभिद्**, पुं, (अद्रीन् पर्ब्बतान् भिनत्ति
अद्रि +
भिद् + क्विप् तुक् ।) इन्द्रः ।
इति त्रिकाण्डशेषः ॥

**अद्रिभूः**, पुं, (त्रि, अद्रौ भवति अद्रि + भू
+ क्विप् ।
पर्ब्बतजातमात्रे ।)
आखुकर्णीलता । इति राज-
निर्घण्टः ॥

**अद्रिराजः**, पुं, (अद्रीनां राजा इति
समासे राजाह ॥
खखिभ्यष्टच् ।) हिमालयपर्ब्बतः
। इति हेमचन्द्रः ।

**अद्रिसारः**, पुं, (अद्रेः सारः स्थिरांशः ।)
लौहः ।
इति रत्नमाला ॥

**अद्रीशः**, पुं, (अद्रेः ईशः) शिवः ।
हिमालयः । इति
धरणी ॥

**अद्वयः**, पुं, (नास्ति द्वयं द्वित्वं यस्य ।)
बुद्धः ।
इति हेमचन्द्रः ॥ (आत्मा ।
अद्वैतवादी ।)

**अद्वयवादी**, [न्] पुं, (अद्वयं सर्व्वमेव
चित्-
स्वरूपं नात्मनोऽन्यत् किञ्चनेति
वदति अद्वय +

पतनञ्चाद्रिगेहानां वर्षासु न भयावहं" ॥

हरिवंशे वर्षावर्णनायां, --

"क्वचित् कन्दरहासाढ्यं शिलीन्ध्राभरणं

क्वचित्" ।

इति दर्शनात् वर्षासु शिलीन्ध्रोद्गमो न

भया-

वहः ॥ * ॥

"दिव्यस्त्रीभूतगन्धर्व्वविमानाद्भुतदर्शनं ।

ग्रहनक्षत्रताराणां दर्शनञ्च दिवाम्बरे ॥

वद् + णिनि । वैदान्तिकः ।)

बुद्धः । इत्यमरः ॥

**अद्वारं**, क्ली, (अप्रशस्तं प्रवेशायोग्यं द्वारं ।) द्वार-

व्यतिरिक्तप्रदेशः । यथा --

"अद्वारेण च नातीयाद् ग्रामं वा

वेश्म बावृतं ।

रात्रौ च वृक्षमूलानि दूरतः

परिवर्ज्जयेत् ॥"

इति मानवे ४ अध्याये ७३

श्लोकः ॥ प्राचीराद्या-

वृतं ग्रामं गृहञ्च

द्वारव्यतिरिक्तप्रदेशेन प्राका-

रादिलङ्घनं कृत्वा न विशेत् ।

रात्रौ च वृक्ष-

मूलावस्थानं दूरतस्त्यजेत् ।

इति तट्टीकायां

कुल्लूकभट्टः ॥ द्वाररहिते त्रि ॥

**अद्वितीयः**, त्रि, (न विद्यते द्वितीयं यस्य ।) द्वितीय-

रहितः । (सदेव

सौम्येदमग्रआसीदेकमेवा-

द्वितीयं इति श्रुतेः ।) अतुल्यः ।

यथा, --

एकमेवाद्वितीयं ब्रह्म । इति

वेदान्तः ॥ नचाश्वि-

:नेयः सहि नाद्वितोयः । इति नैषधं ॥

**अद्वैतः**, त्रि, (द्विधाभेदमितः प्राप्तः । द्वित + स्वार्थे

अण् न द्वेतः । द्वितीयरहितः ।) एकः ।
यथा, --
यदद्वैतं ब्रह्मोपनिषदि तदप्यस्य तनुभा ।
इति
श्रीचैतन्यचरितामृतं ॥

**अद्वैतः**, पुं, (द्विधाभेदमितः प्राप्तः तृतीयातत्, प्रज्ञा-

दित्वात् स्वार्थे अण् ततोभिन्नः नञ्समासः
।) द्वैत-
रहितः विष्णः । यथा, --
“विष्णुमानन्दमद्वैतं विज्ञानं सर्व्वगं प्रभुं ।
प्रणमामि सदा भक्त्या चेतसा हृदयालयं
॥”
इति गारुडे २३८ अध्यायः ॥ * ॥
शिवावतार-
विशेषः । यथा, --
“नित्यानन्दो भक्तरूपो व्रजे यः
श्रीहलायुधः ।
भक्तावतार आचार्य्योऽद्वैतो यः
श्रीसदाशिवः ॥ * ॥”
तत्पित्रादिविवरणं यथा, --
“महादेवस्य मित्रं यः कुवेरो गुह्यकेश्वरः ।
कुवेरपण्डितः सोऽद्य जनकोऽस्य विदांवरः
॥
पुरा कुवेरः कैलासे सिध्यसाध्यनिषेविते ।
जजाप परमं मन्त्रं शैवं श्रीशिववल्लभः ॥
ततो दयालुर्भगवान् वरं वृण्विति सोऽब्रवीत्
।
ततः कुवेरो वरयामास त्वं मे सुतो भव ॥
प्रार्थितस्तेन देवेशो वरदेशः सदाशिवः ।
जन्मजन्मान्तरे पुत्त्र प्राप्स्यामि पुत्त्रतां तव
॥
इति प्राप्य वरं कष्टं कियन्तं कालमास्थितः
।

**अधःक्षिप्तः**, त्रि, (अधः अधोभागे क्षिप्तः पतितः ।)

अधस्त्यक्तवस्तु । इति जटाधरः ॥

**अधमः**, त्रि, (अव पालने + अम, वस्य धादेशः ।)

न्यूनः । निन्दितः । अपकृष्टः ।
तत्पर्य्यायः । निकृष्टः २
प्रतिकृष्टः ३ अर्व्वा ४ रेफः ५ याप्यः ६
अवमः ७
कुत्सितः ८ अवद्यः ९ कुपूयः १०
खेटः ११ गर्ह्यः १२
अणकः १३ । इत्यमरः ॥ रेपः १४
अरमः १५
अणकः १६ अनकः १७ । इति तट्टीका
॥ (या-
च्ञा मोघा वरमधिगुणे नाधमे
लब्धकामा । इति
मेघदूते) ॥

**अधमः**, पुं, (अव पालने + अम, वस्य धादेशः ।) उप-

पतिभेदः । तस्य लक्षणं ।
भयदयालज्जाशून्यत्वं ।
कामक्रीडाविषये
कर्त्तव्याकर्त्तव्याविचारकत्वञ्च ।
इति रसमञ्जरी ॥

**अधमभृतकः**, त्रि, (अधम + भृ + क्त + स्वार्थे कन् ।)

(अधमः । निकृष्टः । भृतकः । भृत्यः ।)
अधम-
भृत्यः । नीचदासः ।
दौवारिकभारवाहकादयः ॥

**अधमर्ण**, त्रि, (अधम + ऋण ऋणविषये अवश्य

देयविषये अधमः निन्दितः
राजदन्तादित्वात्

पर्य्यायः । रदनच्छदः २ दशनवासः ३
। इत्यमरः ॥
परन्तु द्वयोरपि ओष्ठाधरप्रयोगः यथा ।
रदन-
च्छदौ दशनवाससी उभयत्र वर्त्तेते तथा
ओष्ठा-
धरावपि उभयत्रेति नयनानन्दः ॥
रायमुकुटो-
ऽप्याह उपरिवर्त्ती अधोवर्त्ती च ओष्ठः
अधरो-
ऽप्येवं । पुरुषस्य रक्ताधरः प्रशस्तः ।
यथा, --
“पाणिपादतलौ रक्तौ नेत्रान्तरनखानि च
।
तालुकोऽधरजिह्वा च सप्त रक्तं प्रशस्यते
॥”
स्त्रियास्तु यथा, --
“पाटलावर्त्तुलः स्निग्धो
रेखाभूषितमध्यभूः ।
सीमन्तिनीनामधरो राज्ञां चैव प्रियो
भवेत् ॥
श्यामः स्थूलोऽधरोष्ठः स्यात्
वैधव्यकलहप्रदः ।
मसृणो मत्तकाशिन्याश्चोत्तरोष्ठः
सुभोगदः ॥”
इति सामुद्रकं ॥

**अधरः**, त्रि, (न धरः नञ्समासः । नीचः ।) अधः ।

तलं । हीनः । अपकृष्टः । इति मेदिनी ॥
हीन-
वादी । इति हेमचन्द्रः ॥ (यथा
शाकुन्तले ।
पिबसि रतिसर्व्वस्वमधरं ।) ॥

**अधरतः**, व्य, [स्] (अधर + तसिल् प्रथमापञ्चमीसप्त-

कार्य्यादीशवशात् सोऽद्याद्वैतस्य
जनकोऽभवत् ॥
योगमाया भगवती गृहिणी तस्य साम्प्रतं ।
सीतारूपेणावतीर्णा श्रीनाम्नी तत्प्रकाशतः
॥
तस्य पुत्त्रोऽच्युतानन्दः कृष चैतन्यवल्लभः
।
श्रीमत्पण्डितगोस्वामिशिष्यप्रिय इति श्रुतं
॥
यः कार्त्तिकेयः प्रागासीदिति जल्पन्ति
केचन" ।
इति गौरगणोद्देशदीपिका ॥

**अद्वैतवादी**, [न्] त्रि, (अद्वैतं "चिदेव सत्यं नान्यत्

किञ्चिन" इति वदति, अद्वैत + वद् + णिनि
उप-
पदसमासः ।) एकब्रह्मवादी । तस्य मतं
यथा, --
ब्रह्मैव सत्यं प्रत्यक्षादिसिद्धं विश्वं ब्रह्मणि
आरो-
पितं । यथा रज्जुः रज्जुस्वरूपाज्ञानात्
सर्पवत्
प्रतिभाति । तथा ब्रह्मस्वरूपाज्ञानात् विश्वं
वस्तुवत् प्रतिभाति प्रकृतिर्ज्जोवश्चापि
पर्य्यवसाने
ब्रह्मैव ब्रह्मान्यत् सद्वस्तु नास्ति । अत्र
प्रमाणं
शारीरिकसूत्रस्य
शङ्कराचार्य्यकृतभाष्यतट्टीकाक-
ल्पतरुभाषरत्नप्रभादि ॥

**अधः** [स्] व्य, (अधरस्य अधादेशः ततः असिच्
।)

तलं । नीचं । अधोभागः । यथा, --
"लोकानुपर्य्युपर्य्यास्तेऽधोऽधोऽध्यधि च
माधवः" ।
इति वोपदेवः ॥ पातालं । योनिः । इति
त्रिकाण्ड-
शेषः ॥

परनिपातः । वा अधमं
ऋणमवश्यदेयत्वेन विद्यते
यस्य ।) ऋणगृहीता । ऋणी । इत्यमरः
॥ खा-
तक इति भाषा ।
("अधमर्णार्थसिद्ध्यर्थमुत्तमर्णेन
चोदितः ।
दापयेत् धनिकस्यार्थमधमर्णात्
विभावितं ॥
अपह्नवेऽधमर्णस्य देहीत्युक्तस्य संसदि
।
अभियोक्ता दिशेद्देश्यं करणं
वान्यदुद्दिशेत्" ॥
इति मनुः ।) ॥

**अधमर्णिकः**, त्रि, (अधममवश्यदेयत्वेन निन्दितं

ऋणं । तदेव दातृत्वेन विद्यते अस्य ।
अधमर्ण +
अत इनिठनाविति ठन् । तस्य इक ।)
अधमर्णः ।
यथा, --
"ग्रहीतानुक्रमाद्दाप्यो धनिनामधमर्णिकः
।
दत्त्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरं ॥"
इति मिताक्षरा ॥
("यै यैरुपायैरर्थं स्वं
प्राप्नुयादुत्तमर्णिकः ।
तैस्तैरुपायैः संगृह्य दापयेदधमर्णिकं" ॥
इति मनुः ।) ॥

**अधमा**, स्त्री, (अधम + स्त्रियां टाप् ।)
स्वीयाद्यन्त-

र्गतनायिकाभेदः । अस्या लक्षणं ।
हितकारि-
प्रियतमे अहितकारित्वं । अस्याः क्रिया
अधमा ।
अस्या निष्कारणकोपत्वात् चण्डीति
नाम । इति
रसमञ्जरी ॥

म्यर्थवृत्तौ ।) अधस्तात् । अधोभागः ।
इति
हलायुधः ॥

**अधरमधु**, क्ली, (अधरस्य मधु षष्ठीतत् ।)
वक्त्रासवः ।

अधरामृतं । अधररसः । इति
त्रिकाण्डशेषः ॥

**अधरस्तात्** व्य, अधरतः । इति हलायुधः ॥

**अधरस्मात्**, व्य, (अधर + अस्ताति विकल्पे
अधरस्य

अधादेशः ।) अधस्तात् । अधरात् ।
दिग्वाचक-
शब्दात् दिग्देशकालवाच्ये
प्रथमापञ्चमीसप्तमीनां
स्थाने तात् प्रत्ययोभवति । इति
व्याकरणं ॥

**अधरा**, स्त्री, (न धरा नञ्समासः ।) अधोदिक्

इति व्याकरणं ॥ नीचा । यथा ।
अधराथ कृता
ययैव सा । इति नैषधं ॥

**अधरात्**, व्य, अधरतः । अधरेण । अधरस्तात्
।

इत्यमरटीका ॥

**अधरामृतं**, क्ली, (अधरस्य अमृतम् ।)
अधरसुधा ।

यथा, --
"सिञ्चाङ्ग नस्त्वदधरामृतपूरकेण
हासावलोककलगीतजहृच्छयाग्निं ।
नो चेद्वयं विरहजाग्न्युपयुक्तदेहा
ध्यानेन याम पदयोः पदवीं सखे ते ॥"
इति श्रीभागवते १० स्कन्धे २९
अध्यायः ॥

**अधरीणः**, त्रि, (अधरःकृतः तिरस्कृतः अधर +

ख तस्य ईन ।) धिक्कृतः । तिरस्कृतः
। इति

**अधःपुष्पी**, स्त्री, (अधः अधोमुखं पुष्पं यस्याः । अधस् + पुष्प + ङीप् ।) गोजिह्वा । इति राज-
निर्घण्ठः ॥ तृणविशेषः । हेठाहुली । चोर-
खडिका । भाँटुइ इति भाषा । तत्पर्य्यायः । अवाक्-
पुष्पो २ मङ्गल्या ३ अमरपुष्पिका ४ । इति रत्न ।
माला ॥

**अधमाङ्गं**, क्ली, (अधमम् अङ्गं कर्म्मधारयः ।) पादः । चरणः । इति शब्दचन्द्रिका ॥

**अधरं**, क्ली पुं, (न ध्रियते कामुकस्य धैर्य्यं न तिष्ठति यत्र, न + धृ + पुंसि संज्ञायां घः प्रायेणेति
अधिकरणे घः ।) स्मरागारं । रतिगृहं । योनि-
रिति यावत् । इति शब्दरत्नावली त्रिकाण्ड-
शेषश्च ॥

**अधरः**, पुं, (न ध्रियतेऽसौ धृ + अच् ततो नञ्-समासः ।) मुखावयवविशेषः । नावो ठोँट । इति
भाषा । ओष्ठः । उपर ठोँट । इति भाषा । तयोः
जटाधरः ॥

**अधरेण**, व्य, (अधरे देशे अधरस्यां दिशि वा अधर + एनप् ।) अधोदिग्देशकालः । अधो-
दिक्देशकाले । इति व्याकरणं ॥

**अधरेद्यु**, [स्] व्य, (अधरे परे दिवसे अधर + एद्युस् ।) अधरदिवसः । परदिनं । इति शब्द-
रत्नावली ॥

**अधर्म्मः**, पुं, (ध्रियतेऽनेन धृ + मनिन् ततो नञ्-समासः, नञत्र विरोधार्थः ।) धर्म्मविरोधो । स
तु ब्रह्मणः पृष्ठाज्जातः । इति श्रीभागवतं ॥ पापं ।

:अपराधः । श्रुतिस्मृतिविरुद्धाचारः । यथा, --

"अधर्म्मेणैधते राजन् ततो भद्राणि पश्यति ।
ततः सपत्नान् जयति समूलस्तु विनश्यति ॥"
इति महाभारतम् ।
("अधर्म्ममिदमत्यन्तं कथं भीष्मोऽनुमन्यते" ।
इति महाभारतं ॥)

**अधर्म्मी**, [न्] त्रि, (अधर्म्मः पापं विद्यतेऽस्य ।)
अधार्म्मिकः । अधर्म्मात्मा ।
अधर्म्मशब्दादस्त्यर्थे इन् ॥

**अधश्चरः**, पुं, (अधश्चरति इति अधस् + चर + अच् ।)
चौरः । इति हारावली ॥ अधोगामिनि त्रि ॥

**अधश्चौरः**, पुं, (अधः चौरः । अधस् + चुर +
अच् + स्वार्थे अण्) नीचचौरः ।
सिँदालचोर
इति भाषा । इति केचित् ॥

**अधस्तात्** व्य, (अधर + अस्ताति ।) अधोभागः ।
इति हलायुधः ॥ (तस्याधस्तात् वयमपि रता-
स्तेषु पर्णोटजेषु । इति उत्तरचरितं ।) (तथा
"निमज्जतोऽधस्तादज्ञौ दातृप्रतीच्छकौ" ॥ इति
मनुः ।) पश्चाद्भागः । इत्यमरटीका ॥ रतिगृहं ।
भगं । इति त्रिकाण्डशेषः ॥

**अधामार्गवः**, पुं, (न धीयतेऽसौ अधाः न + धा +

"विषयो विशयश्चैव पूर्ब्बपक्षस्तथोत्तरं ।
निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतं" ॥
विषयो विचारार्हवाक्यं ।
विशयोऽस्यायमर्थो न
वेति संशयः । पूर्ब्बपक्षः
प्रकृतार्थविरोधितर्कोप-
न्यासः । उत्तरं
सिद्धान्तानुकूलतर्कोपन्यासः ।
निर्णयो महावाक्यार्थतात्पर्य्यनिश्चयः ।
एवं क्रमेण
विवेचनमत्राधिक्रियते इत्यधिकरणं ।
इति ति-
थ्यादितत्त्वं ॥
अधिक्रियतेऽर्थाद्विचारोऽस्मिन्नने-
नेति वा अधिकरणं
वेदविचारग्रन्थात्मिका मी-
मांसा । सा च द्विधा कर्म्ममीमांसा
ब्रह्ममी-
मांसा चेति ।
कर्म्मकाण्डवेदविचारग्रन्थः कर्म्म-
मीमांसा जैमिनिप्रणीता सैव
मीमांसात्वेन प्र-
सिद्धा पूर्ब्बमीमांसा इत्युच्यते ।
ब्रह्मकाण्डवेद-
विचारग्रन्थश्च ब्रह्ममीमांसा
वेदव्यासप्रणीता सा
च वेदान्तत्वेन प्रसिद्धा उत्तरमीमांसा
इत्युच्यते ।
इत्थञ्च मीमांसापदमपि
करणाधिकरणव्युत्पत्त्या
ग्रन्थपरं ज्ञेयं । भावव्युत्पत्त्या तु
विचारपूर्ब्बक-
निर्णयपरमिति । यत्तु अधिक्रियते
विचारोऽस्मै

कुशलः ॥ व्याप्तिः ४ यथा तिलेषु तैलं ।
सकले
स्थितः ॥ * ॥

**अधिकर्द्धिः**, त्रि, (अधिका ऋद्धिः सम्पत्तिर्यस्य
सः ।) अतिशयसम्पत्तियुक्तः । तत्पर्य्यायः । स-
मृद्धः २ । इत्यमरः ॥

**अधिकर्म्मिकः**, पुं, (अधिकृत्य हट्टं कर्म्मणि प्रभवति
अधिकर्म्मन् + ठन् तस्य इक) हट्टाध्यक्षः । इति
हेमचन्द्रः ॥ हाटेर दारोगा इति भाषा ।

**अधिकाङ्गं**, क्ली, (अङ्गादधिकं मयूरव्यंसकादित्वात्
समासः ।) सकञ्चुकाः मध्ये यद्बध्नन्ति तत् । क-
ञ्चुकादिदार्ढ्यार्थं शूरैर्मध्यकाये
निबध्यपट्टिकादि ।
तत्पर्य्यायः । सारसनं २ । इत्यमरः ॥ विंशत्य-
ङ्गुल्याद्यतिरिक्ताङ्गविशिष्टे त्रि ॥ (यथा मनुः । --
"नोद्वहेत् कपिलां कन्यां
नाधिकाङ्गीं न रोगिणीं" ॥)

**अधिकारः**, पुं, (अधि + कृ + घञ् ।) राजादीनां
चामरधूननच्छत्रधारणादिव्यापारः ।
तत्पर्य्यायः ।
प्रक्रिया २ । इत्यमरः ॥ प्रकरणं । यथा नैमि-
त्तिकोऽयं प्रायश्चित्ताधिकार इति मिताक्षरा ॥
स्वामित्वं । यथा "सर्व्वे स्युरधिकारिणः" इति
स्मृतिः ॥ अधिकृतदेशादिः । यथा निजाधिकारः
भिन्नाधिकारः इत्यादि बहवः शिष्टप्रयोगाः ॥
(यथा मनुः । --

क्विप् । तादृशं मार्गं वाति गच्छति । अधा + मार्ग + वा + कः ।) (अपामार्गः । इति क्षीरस्वामी ।) धामार्गववृक्षः । इत्यमरटीकायां रायमुकुटः ॥

**अधार्म्मिकः**, त्रि, (धर्म्मं चरति । धर्म्म + ठक् । न धार्म्मिकः ।) अधर्म्मी । अधर्म्मात्मा । पापी । तत्पर्य्यायः । आधार्म्मिकः २ । इति त्रिकाण्डशेषः ॥ यथा, --
"यस्तु पञ्च महायज्ञविहीनः स निराकृतः ।
अधार्म्मिकः स्याद्वृषलः अवकीर्णी क्षतव्रती" ॥
इति जटाधरः ॥ अतो नाधार्म्मिके वसेद्ग्रामे ।
इति कुल्लूकभट्टश्च ॥

**अधि** व्य, (न धीयते धार्य्यते । नञ् + धा + कि ।) प्रादिविंशत्युपसर्गमध्ये उपसर्गविशेषः । अस्यार्थः । उपरिभागः । इति दुर्गादासः ॥ अधिकारः । ईश्वरः । इति मेदिनी ॥ अधिकं । यथा अधिमासः अधिको मासः इत्यर्थः । इति स्मृतिः ॥

**अधिः**, पुं, आधिः । मनःपीडा । इत्यमरटीकायां भरतः ॥

**अधिकं**, क्ली, (अधि + स्वार्थे कन् ।) काव्यालङ्कारभेदः । तस्य लक्षणं । अधिकं पृथुलाधारादाधेयाधिक्यवर्णनं ॥ ..

इति व्युत्पत्त्या अधिकरणं मीमांसासिद्धान्त इत्युदीच्येनाभिहितं तन्न । सिद्धान्तस्याधिकरणचरमावयवत्वेनाधिकरणाङ्गत्वात् अधिकरणत्वानुपपत्तेः । यथा न्यायमते निगमनस्य न्यायावयवत्वं न तन्मात्रस्य न्यायत्वं तथेहापीति सुधीभिर्भाव्यं । तस्य चाधिकरणस्य पञ्चाङ्गानि । तदुक्तं, --
"विषयोऽविषयश्चैव पूर्ब्बपक्षस्तथोत्तरं ।
निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतं" ॥
विषयो विचारार्हवाक्यं । यथा । खादिरे पशुं बध्नाति खादिरं वीर्य्यकामस्य यूपं कुर्व्वीत इत्यादि संयोगपृथक्त्वाधिकरणादेः । एवं विषयो निश्चयस्तद्भिन्नस्तद्विरोधी वा अविषयः संशयः । तदुक्तं, --
"विशब्दश्च विशेषार्थः सिनोतिर्बन्धनार्थकः ।
विशेषेण सिनोतीति विषयोऽर्थनियामकः" ॥
नियामकः कोटिनिश्चायकतया विशेषदर्शनात्मकव्याप्यवत्त्वादिनिश्चय एव । एवमेव न्यायगुरुन्यायवागीशभट्टाचार्य्यचरणाः ॥ अन्ये तु विशय इति विपूर्ब्बस्य शेतेः संशयार्थकत्वमालोच्य तालव्यमध्यपाठं वदन्तः विशयः संशयः इति व्याच-

"तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयो नान्यस्य कस्यचित्" ॥)

**अधिकारी**, [न्] त्रि, (अधिकरोति अधि + कृ + नन्द्यादित्वात् णिनि ।) प्रभुः । स्वामी । अधिपतिः । अधिकारविशिष्टः । स्वत्ववान् । इति स्मृतिः ॥ यथा, --
"इष्टापूर्त्तं द्विजातीनां धर्म्मः सामान्य उच्यते ।
अधिकारी भवेत् शूद्रः पूर्त्ते धर्म्मे न वैदिके" ॥
इति मलमासतत्त्वं ॥ अपिच ।
"स्नातोऽधिकारी भवति दैवे पैत्रे च कर्म्मणि" ।
इत्याह्निकाचारतत्त्वं ॥ वेदान्तमते विधिवदधीतवेदाङ्गत्वेन आपाततोऽधिगताखिलवेदार्थोऽस्मिन् जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जनपुरःसरं नित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन निर्गतनिखिलकल्मषतया नितान्तनिर्म्मलस्वान्तः साधनचतुष्टयसम्पन्नः प्रमाता । इति वेदान्तसारः ॥ * ॥ धनाधिकारिणो दायभागशब्दे द्रष्टव्याः ॥ * ॥ श्रीमूर्त्त्यादीनां वेशकर्त्ता । इति लोकप्रसिद्धं ॥

**अधिकारी**, [न्] पुं, (अधिकरोति अधि + कृ + नन्द्यादित्वात् णिनि ।) वेदान्तशास्त्रवेत्ता । अधिगताखिलवेदार्थनितान्तनिर्म्मलस्वान्तः साधनचतुष्टयसम्पन्नः प्रमाता । इति वेदान्तसारः ॥ पुरुषः । इति राजनिर्घण्टः ॥

याधिक्यवर्णनं । उदाहरणं यथा ।
ब्रह्माण्डानि
जले यत्र तत्र मान्ति न ते गुणाः ॥ इति
कुव-
लयानन्दे अप्पेयदीक्षितः ॥

**अधिकः**, त्रि, (अध्यारूढ एव अधि + स्वार्थे कन् ।)

अतिरिक्तः । अनेकः । इति हेमचन्द्रः
। (पुमान्
पुंसोऽधिके शुक्रे । स्त्री भवत्यधिके
स्त्रियाः । इति
मनुः ।)

**अधिकरणं**, क्ली, (अधि + कृ + अधिकरणे ल्युट् ।)

एकन्यायोपपादनं । इति हेमचन्द्रः ॥
अधि-
क्रियते अत्र ।
विषयादिपञ्चावयवविवेचनोपेत-
ग्रन्थः । यथा, --
क्षते तत्र विपूर्ब्बशेतेः संशयार्थकत्वे
मानमनु-
सन्धेयं । संशयः अस्यायमर्थो न
वेत्याकारकः ।
पूर्ब्बपक्षः सिद्धान्तविरुद्धतर्कोपन्यासेन
सिद्धान्त-
विरुद्धसंशयैककोटिव्यवस्थापनं ।
उत्तरं प्रकृत-
सिद्धान्तानुकूलतर्कोपन्यासेन
प्रकृतसिद्धान्तसिद्ध-
संशयापरकोटिव्यवस्थापनं । निर्णयः
सिद्धान्तसिद्ध-
विचार्य्यवाक्यतात्पर्य्यावधारणं ।
कर्म्ममीमांसा-
धिकरणानि सहस्रसंख्यकानि
जैमिनिप्रणीतानि
शास्त्रदीपिकादौ
पार्थसारथिमिश्रादिभिर्बहुधा
विवृतानि । इति
चन्द्रशेखरकृततत्त्वसम्बोधिनी ॥ * ॥
व्याकरणमते आधाररूपकारकं ।
तच्चतुर्व्विधं ।
सामीप्यं १ यथा गङ्गायां घोषः ।
कालिन्द्यां
रेमे ॥ आश्लेषः २ यथा दिवि देवाः ।
कानने
रेमे ॥ विषयः ३ यथा शास्त्रे निपुणः ।
केलौ

**अधिकृतः**, पुं, (अधि + कृ + क्तः ।) अध्यक्षः । आय-

व्ययावेक्षकः ॥ इत्यमरः ॥ (आचार
इत्यधिकृतेन
मया गृहीता या वेत्रयष्टिरवरोधगृहेषु राज्ञः ।
इति शाकुन्तले ।) कृताधिकारद्रव्ये
वाच्यलिङ्गः ।

**अधिक्रमः**, पुं, (अधि + क्रम् + घञ् वृद्ध्यभावः ।)

आक्रमणं । इति हेमचन्द्रः

**अधित्यका**, स्त्री, (अधिरूढा पर्ब्बतोपरिभागम्
अधि + त्यकन् स्त्रियां टाप् ।)
पर्ब्बतोपरिभूमिः ।
इत्यमरः ॥ (उपत्यकाद्रेरासन्ना
भूमिरूर्द्ध्वमधि-
त्यका ॥ अमरकोषः । यथा रघुवंशे, --
"अधि-
त्यकायामिव धातुमय्यां लोध्रद्रुमं सानुमतः
प्र-
फुल्लं" ॥)

**अधिपः**, त्रि, (अधिपाति रक्षति अधि + पा + क ।)
अधिपतिः । स्वामी । इत्यमरः ॥ राजा ।
इति
त्रिकाण्डशेषः ॥ (यथा रघुवंशे -- अथ
प्रजा-
नामधिपः प्रभाते ॥)

**अधिपतिः**, पुं, (अधिपाति रक्षति अधि + पा +
डति ।) प्रभुः । स्वामी । इति हलायुधः ॥
(यथा
रघुवंशे । "वचो निशस्याधिपतिर्दिवौकसां"
॥)

**अधिभूः**, पुं, (अधि + भू + कर्त्तरि क्विप ।) स्वामी
।
प्रभुः । इत्यमरः ॥

**अधिमासः**, पुं, (मासात् रविसंक्रान्तिमासादधिक
मयूरव्यंसकादित्वात् समासः ।)
रविसंक्रान्ति-
द्वयमध्यवर्त्तिचान्द्रमासः ।
रविसंक्रान्तिशून्यशुक्ल-
प्रतिपदादिदर्शान्तमासः । तत्पर्य्यायः ।
अधिक-
मासः २ असंक्रान्तमासः ३ मलमासः ४
मलि-

**अधिवचनं**, क्ली, (अधि + वच् + ल्युट् ।
पक्षपातेन
कथनं । "अधिकं वचनं पक्षपातेन वचनं"
इति
माधवाचार्य्यः ।) नाम । संज्ञा । इति
त्रिकाण्ड-
शेषः ॥

**अधिवासः**, पुं, (अधि + वस् + घञ् ।) निवासः ।
धूपनादिभिः संस्कारः । इति मेदिनी ॥
तद्-
द्रव्याणि । मृत्तिका १ गन्धः २ शिला ३
धान्यं ४
दूर्व्वा ५ पुष्पं ६ फलं ७ दधि ८ घृतं ९
स्वस्तिकं
१० सिन्दूरं ११ शङ्खः १२ कज्जलं १३
रोचना १४
श्वेतसर्षपः १५ स्वर्णं १६ रौप्यं १७ ताम्रं
१८
चामरं १९ दर्पणं २० दीपः २१
प्रशस्तपात्रं २२ ।
इति भवदेवः ॥ क्वचित् पुस्तके
श्वेतसर्षपस्थाने
सिद्धान्नं क्वचिच्च चामरस्थाने ।
तत्रानुष्ठानं ।
ँदुर्गापूजादोलयात्रायागादौ पूर्ब्बदिने
सायंकाले
आचारात् संस्कारकर्म्मणि तद्दिने पूर्ब्बाह्णे
मन्त्रं
पठित्वा क्रमेणोक्तद्रव्याणि आदौ देवादीनां
ललाटे
पश्चाद्भूमौ स्पर्शयित्वा प्रशस्तपात्रे
स्थापयित्वा
तत्पात्रं पूब्बाक्तक्रमेण वारत्रयं स्पर्शयेत् ।
द्रव्य-
विशेषेण संस्कारः । तत्र
यजुर्व्वेदोक्तमन्त्रा-

"ॐ दधिक्राव्नोऽकार्षं जिष्णोरश्वस्य
वाजिनः ।
सुरभिणो मुखाकरोत्
प्रणतायुंषितार्षत्" । ९ ।
घृतं गृहीत्वा, --
"ॐ तेजोसि शुक्रमस्यमृतमसि
धामनामासि
प्रियं देवानामनाधृष्टं देवयजनमसि" ।
१० ।
स्वस्तिकं गृहीत्वा, --
"ॐ स्वस्तिन इन्द्रो वृद्धश्रवाः
स्वस्तिनः पूषा
विश्ववेदाः स्वस्तिन स्ताक्ष्र्यो
रिष्टनेमिः स्वस्ति-
नो वृहस्पतिर्दधातु" । ११ ।
सिन्दूरं गृहीत्वा, --
"ॐ सिन्धोरिव प्राध्वने शूघनासो
वातप्रमीय
पतयन्तु घृतस्य धारा अरुषोण वाजी
काष्ठा-
भिन्दन्नुतिमिभिः पिन्नमानः" । अत्र
"वातप्रमीय
पतयन्ति जह्वा" । इत्यपि पठन्ति ।
१२ ।
शङ्खं गृहीत्वा, --
"ॐ प्रतिश्रुत्काया अर्त्तनं घोषाय
भयमन्ताय
बहुवादिनमनन्ताय मूकं
शब्दायाडम्बराघातं
महसे वीणावादं क्रोशाय
तूणबद्धमवरस्पराय
शङ्खध्वं वनाय वनपमन्यतोऽरण्याय
दावपं" । १३ ।
कज्जलं गृहीत्वा, --
"ॐ समिद्धोऽञ्जन क्रदरं मतीनां
घृतमग्ने मधु-

म्लुचः ५ विनामकः ६ नपुंसकः ७ । इति मल-
मासतत्त्वं ॥

**अधिमांसकः**, पुं, (अधिकं मांसं यत्र सः, समासान्तः
कः ।) दन्तरोगविशेषः । यथा, --
“दन्तरुक् पश्चिमे दन्ते
महान् शोथो महान् रुजः ।
लालास्रावी कफकृतो
विज्ञेयः सोऽधिमांसकः” ॥
इति भावप्रकाशः ॥ अस्य चिकित्सा दन्तरोग-
शब्दे द्रष्टव्या ॥

**अधिरथः**, पुं, (रथमधिरूढः अत्यादीति समासः ।)
कर्णपिता । स तु सूतजातिः । तस्य कर्म्म
सारथ्यं । यथा । विवेशाधिरथो रङ्गं यष्टिप्राणो
ह्वयन्निव । इति महाभारतं ॥ (यथा हरिवंशे ।
“सत्यकर्म्मसुतश्चापि सूतस्त्वधिरथस्तु वै ।
यः कर्णं प्रतिजग्राह तेन कर्णस्तु सूतजः” ॥)

**अधिराज्यभाक्**, पुं, (अधिकं राज्यं कर्म्मधारयः, तत्-
भजते अधिराज्य + भज् + ण्वि उपपदसमासः ।)
अधिराट् । यथा । अत्यन्यान् पृथिवीपालान्
पृथिव्यामधिराज्यभाक् । इति महाभारतं ।

**अधिराट्**, [ज्] पुं, (आधिक्येन राजते अधि +
राज् + कर्त्तरि क्विप् ।) सम्राट् । चक्रवर्त्ती । इति
महाभारतं ॥ (यथा रघुवंशे । इति प्रगल्भं
स्त्रयोविंशतिद्रव्याणि च यथा । तैलहरिद्रां
गृहीत्वा, --
“ॐ कोसि कतमोसि कस्मै त्वा काय त्वा सुश्लोकः
सुमङ्गलः सत्यराजन् । अनया तैलहरिद्रया
अस्य शुभाधिवासनमस्तु । एवं सर्व्वत्र” । १ ।
गन्धं गृहीत्वा, --
“ॐ गन्धद्वारां दुराधषां नित्यपुष्णां करीषिणीं ।
ईश्वरीं सर्व्वभूतानां त्वामिहोपाह्वये श्रियं” । २ ।
महीं गृहीत्वा, --
“ॐ भूरसि भूमिरस्य दितिरसि विश्वधाया
विश्वस्य भुवनस्य धत्रों पृथिवीं यच्छ पृथिवीं
दृ¤ह पृथिवीं माहि¤सीः” । ३ ।
पुनर्गन्धेन गन्धद्वारामिति ।
शिलां गृहीत्वा, --
“ॐ प्रपर्ब्बतस्य वृषभस्य पृष्ठान्नावश्चरन्ति स्वसि
च इत्यानाः ता आवृत्र नधरा गुदक्ता अहिं
बुध्न्यमनुरीयमानाः । विष्णोर्व्विक्रमणमसि विष्णो-
र्व्विक्रान्तमसि विष्णोः क्रान्तमसि” । ४ ।
धान्यं गृहीत्वा, --
“ॐ धान्यमसि धिनुहि देवान् धिनुहि यज्ञं
धिनुहि यज्ञपतिं धिनुहि भां यज्ञन्यं” । ५ ।
दूर्व्वां गृहीत्वा, --
“ॐ काण्डात् काण्डात् प्ररोहन्ती परुषः परुषः
परिएवानो दूर्ब्बे प्रतनु सहस्रेण शतेन च” । ६ ।
पुष्पं गृहीत्वा, --
मत् पिन्नमानः वाजीवहन् वाजिनं जातवेदो
देवानां वक्षिप्रियमासधस्थं” । १४ ।
रोचनां गृहीत्वा, --
“ॐ युञ्जन्ति ब्रध्नमरुषं चरन्तं परितस्थुषः रोचन्ते
रोचना दिवि” । १५ ।
सिद्धान्नं गृहीत्वा, --
“ॐ अन्नपते अन्नस्य नो धेह्यनमीवस्य शुष्मिणः ।
प्रदातारं तार्य्यऊर्जं नो धेहि द्विपदे शं चतु-
ष्पदे । सिद्धान्नमत्र आतपतण्डुलाः” । १६ ।
काञ्चनं गृहीत्वा, --
“ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः
पतिरेक आसीत् । सदाधारः पृथिवीं द्यामु-
तैषां कस्मै देवाय हविषा विधेम । १७ ।”
रजतं गृहीत्वा, --
“ॐ तेजोसि शुक्रमस्यमृतमसि धामनामासि
प्रियं देवानामनाधृष्टं देवयजनं” । १८ ।
ताम्रं गृहीत्वा, --
“ॐ असौ यस्ताम्रोरुण उतवभ्रुः सुमङ्गलः ये
चैनं¤ रुद्रा अभितो दिक्षु श्रिताः सहस्रशो
वैषा¤ हेलैमहे” । १९ ।
सिद्धार्थं गृहीत्वा, --
“ॐ रक्षोहनो बलगहनः प्रोक्षामि वैष्णवान्
रक्षोहनो बलगहनो बलयामि वैष्णवान् रक्षो-

| | | |
|---|---|---|
| पुरुषाधिराजो मृगाधिराजस्य वचो निशम्य ।)<br>**अधिरोहिणी**, स्त्री, (अधिरोहः आरोहणं तदेव<br>साधनत्वेन विद्यदेऽस्य अधि + रोह + इन्<br>स्त्रियां<br>ङीप् ।) (अधिरोहणी इति पाठे अधिरुह्यते<br>अनया अधि + रुह + करणे ल्युट् स्त्रियां<br>ङीप् ।)<br>वंशकाष्ठादिनिर्म्मितारोहणमार्गः । सिँडि<br>इति<br>भाषा । तत्पर्य्यायः । निःश्रेणिः २ ।<br>इत्यमरः ॥<br>निःश्रेणी ३ । इति तट्टीका ॥ अधिरोहणो<br>इत्यपि<br>पाठः ॥ | "ॐ श्रीश्च ते लक्ष्मीश्च पत्न्या अहोरात्रे<br>पार्श्वे<br>नक्षत्राणि रूपमश्विनौ व्यात्तं इष्णुन्निशान<br>मुम्म-<br>इशान सर्व्वलोकम्मैशान" । ७ ।<br>फलं गृहीत्वा, --<br>"ॐ याः फलिनीर्या अफला अपुष्पा<br>याश्च<br>पुष्पिणीः वृहस्पतिप्रसूतास्ता नो<br>मुञ्चन्त्व¤-<br>हसः" । ८ ।<br>दधि गृहीत्वा, -- | हनो बलगहनोऽवस्तृणामि वैष्णवान्<br>रक्षोहनौ<br>वनगहना उपधामि वैष्णवी रक्षोहनौ<br>वनगहनौ<br>पर्य्यहामि वैष्णवी वैष्णवमसि<br>वैष्णवास्थ" । २० ।<br>दर्पणं गृहीत्वा, --<br>"ॐ आकृष्णेन रजसा वर्त्तमानो<br>निवेशयन्नमृतं<br>मर्त्यञ्च हिरण्ययेन सविता रथेना<br>देवोयाति<br>भुवनानि पश्यन्" । २१ ।<br>दीपं गृहीत्वा, -- |

:"ॐ अग्न आयाहि वीतये गृणानो हव्यदातये

निहोता सत्सु वर्हिषि" । २२ ।

सर्व्वद्रव्ययुक्तडल्लकं गृहीत्वा, --

"ॐ प्रतिपदसि प्रतिपदे त्वा अनुपदसि

अनुपदे

त्वा सम्पदसि सम्पदे त्वा तेजोसि तेजसे

त्या । २३ ।

इति यजुर्व्वेदीयदुर्गोत्सवपद्धतिः ॥ * ॥

सामवेदि-

नामधिवासमन्त्रास्तत्तद्द्रव्याणि च यथा ।

प्रथमं

गन्धेन, --

"ॐ भद्रा इन्द्रस्य रातयः योऽस्य कामं

विधतो

नरोषति मनोदानाय चोदयन्" । १ ।

"ॐ महित्रीणामवरस्तु द्युक्षमित्रस्यार्यम्नः

दुरा-

धर्षं वरुणस्य" । २ ।

इति मह्या ।

पुनर्गन्धेन, --

"ॐ भद्रा इन्द्रस्य रातयः इत्यादि" । ३ ।

"ॐ वित्वदापो न पर्ब्बतस्य

पृष्ठादुक्थेभिरग्रे

जनयन्त देवाः तत्वागिरः ॥ सुष्टुतयो

वाजयत्या

जिन्नगिर्व्वहो जिग्युरस्वाः" । ४ ।

इति शिलया ।

"ॐ धानावन्तं करम्भिण

मपूप्यवन्तमुक्थिनं

इन्द्रप्रातर्जुषस्वनः" । ५ ।

इति धान्येन ।

"ॐ जज्जायथा मपूर्ब्ब्य मघवन्

वृत्रहत्याय ।

तत्पृथिवी मप्रथयस्तदस्तभ्ना उतो

दिवम्" । ६ ।

इति दूर्व्वया ।

जातो जनिमान्योजसा

प्रतिभागन्नदीधिमः" । १५ ।

इति रोचनया ।

"ॐ प्रणीउषा अपूर्ब्बा व्युत्सति प्रिया

दिवस्तुषे

वा मश्विना वृहत्" । १६ ।

इति सिद्धार्थेन ।

"ॐ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य

काम्यं । सनिं

मेधा मयासिषं" । १७ ।

इति काञ्चनेन ।

"ॐ यद्वर्च्चोहिरण्यस्य यद्वा वर्च्चो

गवामुत । सत्यस्य

ब्रह्मणो वर्च्चस्तेन मा संसृजामसि" ।

१८ ।

इति रौप्येण ।

"ॐ रन्महांसि सूर्य्य वडादित्य महां

असि

महस्ते सतो महिमापनिष्ट समह्ना

देवमहां

असिः" । १९ ॥

इति ताम्रेण ।

"ॐ मनज्योतिर्जुषतामाज्यस्य

वृहस्पतिर्यज्ञमिमं

तनोत्वरिष्टं । यज्ञं समिमं दधातु विश्वे

देवाः स

इह मादयन्ता मों प्रतिष्ठ" । २० ।

इति दीपेन ।

"ॐ आदित्य प्रयतस्य वेत्तसो ज्योतिः

पश्यन्ति

वासरं पावाय दिव्यं तोदिवि" । २१ ।

इति दर्पणेन ।

"ॐ उद्यल्लोकानरोचय प्रभभूतमरोचय

होइ

इमान् लोकानरोचय होइ

विश्वभूतमरोचय ।

**अधीतः**, त्रि, (अधि + इङ् + कर्म्मणि क्तः ।) कृता-

ध्ययनः । पठितः । यथा, --

"अधीते शतसाहस्रमनन्तं वेदपारगे" ।

इति स्मृतिः ॥ पठितशास्त्रं । पाठे क्ली ॥

**अधीतिः**, स्त्री, (अधि + इङ् + भावे क्तिन् ।) अध्य-

यनं । पठनं । इति जटाधरः ॥

**अधीती**, [न्] त्रि, (अधीतमनेन अधीत + इन् ।)

अध्ययनविशिष्टः । कृताध्ययनः । इति

व्याक-

रणं ॥

**अधीनः**, त्रि, (इनं प्रभुमधिगतः अत्यादीति समासः ।)

परवशः । तत्पर्य्यायः । निघ्नः २ आयत्तः

३-

अस्वच्छन्दः ४ गृह्यकः ५ । इत्यमरः ॥

(यथा

कुमारसम्भवे, --

"त्वदधीनं खलु देहिनां सुखं" ॥)

**अधीरः**, त्रि, (न धीरः स्थिरः नञ्समासः ।) चञ्चलः ।

इति हलायुधः ॥ कातरः । इत्यमरः ॥

(यथा

नागानन्दे, --

"निर्व्याजं विधुरेष्वधीर इति

मां येनाभिधत्ते भवान्" ॥)

**अधीरा**, स्त्री, (न धीरा क्षणस्थायिनी, नञ्समासः ।)

विद्युत् । इति हारावली ॥ मानावस्थायां

मध्या-

प्रगल्भनायिकयोर्भेदः ॥ तस्या लक्षणं ।

अव्यङ्ग-

"ॐ पवमान व्यश्नुहि
रश्मिभिर्व्वाजसातमः ।
दधत्स्तोत्रे सुवीर्य्यम्" । ७ ।
इति पुष्पेण ।
"ॐ इन्द्रन्नरोने मथिता हवन्ते यत्पार्य्या
युञ्जते
धियस्ताः शूरो नृषाता श्रवसश्च कामत्वा
गोमति
व्रजे भजात्वन्नः" । ८ ।
इति फलेन ।
"ॐ दधिक्राव्नोऽकारिषं जिष्णोरश्वस्य
वाजिनः
सुरभिणो मुखाकरोत् प्रणतायुंषि
तारिर्षत्" । ९ ।
इति दध्ना ।
"ॐ घृतवती भुवनानामधिश्रियोर्व्वी
पृथ्वी म-
धुदुघे सुपेशसा द्यावा पृथिवी वरुणस्य
धर्म्मणा
विष्कभितेऽजरे भूरिरेतसा" । १० ।
इति घृतेन ।
"ॐ अस्ति सोमोऽयं सुतः पिबन्त्यस्य
मरुतः
उतस्वराजोऽश्विना" । ११ ।
इति स्वस्तिकेन ।
"ॐ सिन्धीरुच्छ्वासे पतयन्तमुक्षणं
हिरण्यपावा
पशुमप्सु गृभ्नते" । १२ ।
इति सिन्दूरेण ।
"ॐ स्वसुन्वयो वसूनां यो राया मानेता य
इ-
डानां सोमो यः सुक्षितीनां" । १३ ।
इति शङ्खेन ।
"ॐ अञ्जते व्यञ्जते समञ्जते क्रतुं रिहन्ति
मध्वा-
भ्यञ्जते" । १४ ।
इति कज्जलेन ।
होहा ऐवात्र धर्म्मो ज्योतीषि" । २२ ।
इति प्रशस्तपात्रेण । प्रशस्तपात्रं
पूर्ब्बोक्तसर्व्वद्रव्य-
स्थापितैकपात्रं । इति
सामवेदीयदुर्गोत्सव-
पद्धतिः ॥

**अधिवासनं**, क्ली, (अधिवासयति स्थापयति देवता

अनेन अधि + वस् + णिच् + करणे
ल्युट् ।) अधि-
वासः । गन्धमाल्यादिभिः
संस्कारकरणं । इत्य-
मरः ॥ (अनया तैलहरिद्रया अस्याः
शुभाधि-
वासनमस्तु ॥ इति दुर्गोत्सवपद्धतिः
॥)

**अधिविन्ना**, स्त्री, (अधिविद्यते लभ्यतेऽसौ, अधि +

विद् + कर्म्मणिक्तः स्त्रियां टाप् ।)
अध्यूढा । प्रथम-
विवाहिता स्त्री ।
कृतानेकविवाहस्वामिनः आ-
पेक्षिकप्रथमोढा भार्य्या । इत्यमरः ॥
("अधिविन्नस्त्रियै दद्यादाधिवेदनिकं
समं" ॥
इति मनुः ।)

**अधिश्रयणी**, स्त्री, (अधि श्रियते पच्यतेऽत्र अधि +

श्रि + अधिकरणे ल्युट् स्त्रियां ङीप् ।)
चुल्ली ।
इत्यमरः ॥ चुला इति भाषा ।

**अधिष्ठानं**, क्ली, (अधिष्ठीयतेऽत्र अधि + स्था +

अधिकरणे ल्युट् ।) नगरं । चक्रं ।
प्रभावः । अ-
ध्यासनं । अवस्थानं । इत्यमरः ॥
(यथा रामा-
कोपप्रकाशकत्वं । मध्याधीरायाः
परुषवाक् कोप-
प्रकाशिका ॥
प्रौढाधीरायास्तर्ज्जनताडनादिकं
कोपप्रकाशं । सा द्विधा । ज्येष्ठा कनिष्ठा च
।
इति रसमञ्जरी ॥

**अधीशः**, त्रि, (अधिक ईशः कर्म्मधारयः ।) अधि-

पतिः । प्रभुः । इति हलायुधः ॥ (यथा
पञ्चतन्त्रे, --
"चन्द्रे मण्डलसंस्थेविगृह्यते राहुणा
दिनाधीशः ॥)

**अधीश्वरः**, त्रि, (अधिक ईश्वरः कर्म्मधारयः ।) प्रण-

ताशेषसामन्तः । महाराजः । चक्रवर्त्ती ।
इत्य-
मरः ॥

**अधुतं**, त्रि, अकम्पितं । धुञ्नकम्पे इत्यस्मात्

कर्म्मणि क्तः, पश्चान्नञ्समासः ।
दीर्घमध्योऽपि ॥

**अधुना**, व्य, (अस्मिन् काले इदम्शब्दस्य रूपमिति

निपातनात् ।) अम्मिन्काले । इदानीं ।
सम्प्रति ।
इत्यमरः ॥

**अधुनातनं**, त्रि, (अधुना भवम् अधुना + ट्यु तुट्च ।)

इदानीन्तनं । वर्त्तमानकालवृत्ति ।
एतत्कालीनं ।
इति व्याकरणं ॥

**अधृतः**, पुं, (धृ क्तः, न धृतः नञ्समासः ।) विष्णुः: ।

इति तस्य सहस्रनाममध्ये पठितः ।
अकृतधारण-
वस्तुनि त्रि ॥

“ॐ श्रायन्त इव सूर्य्यं विश्वेदिन्द्रस्य भक्षत वसूनि

यणे, --
“यद्भयात् सम्परित्यज्य
स्वमधिष्ठानमृद्धिमत् ।
कौलासं पर्ब्बतश्रेष्ठमध्यास्ते
नरवाहनः” ॥)

**अधिक्षिप्तः**, त्रि, (अधि + क्षिप् + कर्म्मणि क्तः ।)

प्रतिक्षिप्तः । इत्यमरः ॥ प्रेरितः । इति
भरतः ॥
प्रणिहितः । स्थापितः । कुत्सितः ।
भर्त्सितः । इति
मेदिनी ॥

**अधृष्टः**, त्रि, (धृष् + क्तः, न धृष्टः नञ्समासः ।)

सलज्जः । तत्पर्य्यायः । अप्रगल्भः २ ।
इति शब्द-
रत्नावली ॥ शारदः ३ अप्रतिभः ४ । इति
जटा-
धरः ॥ शालीनः ५ । इत्यमरः ॥

**अधृष्यः**, त्रि, (धृष् + कर्म्मणि क्यप् ।) प्रगल्भः ।

अधर्षणीयः । इति मेदिनी ॥ (यथा
रघुवंशे, --
“भीमकान्तैर्नृपगुणैः स बभूवोपजीविनां ।
अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः”
।)

**अधृष्या**, स्त्री, (न + धृष् + संज्ञायां क्यप् । यस्यां

:स्नाने पराभवो न भवति तादृशी नदी ।) नदी-
विशेषः । इति मेदिनी ॥

**अधैर्य्यः**, त्रि, (नास्ति धैर्य्यं यस्य सः ।) धीरताशून्यः ।
धैर्य्याभावे क्ली । यथा, --
“धैर्य्याधैर्य्यपरिग्रहग्रहिलयोरेणीदृशोः
प्रीतये” ।
इति भानुभट्टः ॥

**अधोऽंशुकं**, क्ली, (अधः नीचदेशस्थम् अंशुकं वस्त्रं,
कर्म्मधारयः ।) परिधानवस्त्रं । इत्यमरः ॥

**अधोघण्टा**, स्त्री, (अधः अधोदेशादारभ्य घण्टेव
फलं यस्याः सा ।) अपामार्गः । इति
रत्नमाला ॥

**अधोजिह्विका**, स्त्री, (अल्पा जिह्वा कन् स्त्रियां टाप्,
अधः अधरा जिह्विका कर्म्मधारयः ।)
तालु-
मूलस्थक्षुद्रजिह्वा । इति हारावली ॥
आल्जिव
इति भाषा ।

**अधोभुवनं**, क्ली, (अधः नीचदेशस्थं भुवनं लोकः
कर्म्मधारयः ।) पातालं । इत्यमरः ॥

**अधोमर्म्म**, [न्] क्ली, (अधः अधरं मर्म छिद्रं ।)
गुह्यद्वारं । इति हेमचन्द्रः ॥

**अधोमुखः**, त्रि, (अधोमुखं यस्य सः ।) अधोवदनः ।
पातालमुखः । तत्पर्य्यायः । अवाङ्मुखः २
। इत्य-
मरः ॥ अवाचीनः ३ । इति जटाधरः ॥
अधो-
मुखनक्षत्रगणो यथा, --
रमानाथः ॥ कर्म्मसु प्रत्ययः इति नयनानन्दः
॥
अशक्ये बलोद्यमः । इति केचित् ॥ उद्योगोद्यमौ
चात्र । इति भरतः ॥

**अध्यशनं**, क्ली, (अधिकमशनं भोजनं कर्म्मधारयः ।)
अजीर्णे भोजनं । यथा । अजीर्णे भुज्यते यत्तु
तदध्यशनमुच्यते । इति भावप्रकाशः ॥

**अध्यक्षः**, पुं, (अध्यक्ष्णोति समन्तात् व्याप्नोति
अधि + अक्ष् + अच् ।) (छत्रधारणादि
व्यवहारे-
ष्वधिकृतः । व्यापकः ।) क्षीरिकावृक्षः । इति
शब्दरत्नावली ॥

**अध्यक्षः**, त्रि, (अक्षमिन्द्रियमधिगतः प्रादि-
समासः ।) प्रत्यक्षः । इन्द्रियजन्यज्ञानं ।
(यदध्यक्षेण जगतां वयमारोपितास्त्वया ॥
इति कुमारसम्भवे ।) अधिकृतः ।
आयव्ययादिनिरीक्षकः । इत्यमरः ॥

**अध्यापकः**, त्रि, (अधि + इङ् + णिच् + ण्वुल् ।)
अध्यापनकर्त्ता । पाठगुरुः । अध्यापयिता ।
तत्प-
र्य्यायः । उपाध्यायः २ । इत्यमरः ॥

**अध्यापनं**, क्ली, (अधि + इङ् + णिच् + भावे ल्युट् ।)
पाठनं । विद्यादानं । ब्राह्मणानां
षट्कर्म्मान्तर्गत-
कर्म्मेदं । इति शब्दरत्नावली ॥ (यथा मनुः, --
“अध्यापनमध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रश्चैव षटकर्म्माण्यग्रजन्मनः” ॥)

**अध्यायः**, पुं, (अधि + इङ् + भावे घञ् अध्ययनम् ।)
वेदपुराणादिपरिच्छेदः । ग्रन्थसन्धिः ।
तन्नामान्त-
राणि यथा । सर्गः । वर्गः । परिच्छेदः । उद्घातः
।

**अध्याहारः**, पुं, (अधि + आ + हृ + भावे घञ् ।)
तर्कः । ऊहः । इत्यमरः ॥
अस्पष्टार्थस्य शब्दा-
न्तरेण स्पष्टीकरणं ।
आकाङ्क्षासमापकपदानु-
सन्धानं ।
वाक्यसम्पूर्णार्थपदयोजनं ।
युक्तिप्राप्तस्य
पदान्तरमुदाहृत्य व्यक्तीकरणं ।
इति तट्टीका ॥

**अध्युष्टः**, त्रि, (अधि + वस् + क्तः, आगमशास-
विघेरनित्वात् इडागमाभावः ।
कृत्तद्धितसमा-
साश्च अभिधाननियामका इति
प्रसिद्धेः ।) सार्द्ध-
त्रिसङ्ख्या । ३ ॥ साडे तिन इति
भाषा ।
यथा, --
अवाप्य स्वां भूमिं
भुजगनिभमध्युष्ठवलयं ।
इति आनन्दलहरी ॥

**अध्युष्ट्रः**, पुं, (उष्ट्रमधिगतः प्रादिसमासः ।) उष्ट्र-
युक्तरथः । उष्ट्रवाह्यप्रेङ्खा । इति
हारावली ॥

**अध्यूढः**, पुं, (अधि + वह् + क्तः ।) महेश्वरः । इति
मेदिनी ॥ (अधिरोपितः । समृद्धः
। अभ्युदय-
शाली ।)

**अध्यूढः**, त्रि, (आधिक्येन वृद्धिं गतः अधि + वह +

"अश्लेषवह्नियमपित्र्यविशाखयुक्तं
पूर्ब्बत्रयं शतभिषा च नवाप्युडूनि ।
एतान्यधोमुखगणानि शुभानि नित्यं
विद्यार्घ्यभूमिखननेषु च शोभितानि" ॥
इति ज्योतिःसारसंग्रहः ।

**अधोमुखा**, स्त्री, (अधोमुखं यस्याः सा, स्त्रियां
टाप् ।) गोजिह्वावृक्षः । इति राजनिर्घण्टः
॥

**अधोवायुः**, पुं, (अधः अधरः वायः कर्म्मधारयः ।)
अपानवायुः । यथा, --
"क्षुतेऽधोवायुगमने जृम्भणे जपमुत्सजेत्"
।
इति तन्त्रसारे योगिनीहृदयं ॥

**अधोक्षजः**, पुं, (अधः ज्ञातृत्वाभावात् हीनम् अक्षजं
प्रत्यक्षज्ञानं यस्य सः । अक्षात् इन्द्रियात्
जायते
अक्ष + जन् ड, पञ्चमीतत् ।) विष्णुः ।
इत्यमरः ॥
(यथा महाभारते । अधो न क्षीयते जातु
यस्मा-
त्तस्मादधोक्षजः ।)

**अध्यग्नि**, क्ली, (अग्नेः समीपे अव्ययीभावः ।) विवाह-
काले अग्निसमीपे स्त्रियै दत्तं धनादि ।
यथा, --
"विवाहकाले यत् स्त्रीभ्यो दीयते
ह्यग्निसन्निधौ ।
तदध्यग्निकृतं सद्भिः स्त्रीधनन्तु
प्रकीर्त्तितं" ॥
इति दायभागे कात्यायनः ॥

**अध्यण्डा**, स्त्री, (अधिकमण्डं वीजं यस्याः सा,
स्त्रियां टाप्) कपिकच्छुः । इत्यमरः ॥
आल्कुशी

अङ्कः । संग्रहः । उच्छ्वासः । परिवर्त्तः ।
पटलः ।
काण्डं । स्थानं । प्रकरणं । पर्व्व । आह्निकं ।
इति
त्रिकाण्डशेषः ॥ स्कन्धः । स्तवकः । उल्लासः
।
पादः । उद्योतः । विरचनं । इत्याद्यपि ॥
यदुक्तम् ।
("सर्गोवर्गपरिछेदोद्घाताध्यायाङ्कसंग्रहाः ।
उच्छ्वासः परिवर्त्तश्च पटलः काण्डमेव च ॥
स्यानं प्रकरणं चैव पर्व्वोल्लासाह्निकानि च ।
पुराणादौ परिच्छेदा अनेके परिकीर्त्तिताः ॥")

**अध्यारूढः**, त्रि, (अधि + आङ् + रुह् + क्तः ।)
समारूढः । कृतारोहणः । अभ्यधिकः । अति-
शयः । इति मेदिनी ॥

**अध्यारोपः**, पुं, (अधि + आ + रह् + णिच्भावे अच् ।)
वस्तुन्यवस्तुत्वारोपः ।
सच्चिदानन्दानन्ताद्वयब्रह्मणि
अज्ञानादिसकलजडसमूहस्यारोपणमित्यर्थः ।
अ-
सर्पभूतरज्जौ सर्पारोपवत् । इति वेदान्तसारः
॥

**अध्यावाहनिकं**, क्ली, (अध्यावाहनं पितृगृहात्
स्वामिगृहागमनं तत्काले लब्धं अध्यावाहन +
लब्धार्थे ठन् तस्य इकः । अधि + आ + वह् +
णिच् ल्युट् ।) स्त्रीधनविशेषः । यथा, --
"यत् पुनर्लभते नारी नीयमाना हि पैतृकात् ।
अध्यावाहनिकं नाम तत् स्त्रीधनमुदाहृतं ॥"
इति दायभागे कात्यायनः ॥

**अध्याहरणं**, क्ली, (अधि + आ + हृ + भावे ल्युट् ।)
अध्याहारः । तर्कणं । ऊहनं । इति शब्द-
रत्नावली ॥

क्तः ।) अधिकवृद्धियुक्तः । समृद्धः
। इति धरणी ॥

**अध्यूढा**, स्त्री, (अधि + वह + कर्म्मणि क्तः, स्त्रियां
टाप् ।) प्रथमविवाहिता स्त्री,
कृतसापत्निका ।
कृतानेकविवाहस्य प्रथमोढा स्त्री ।
इत्यमर-
मेदिनीकरौ ॥

**अध्येषणा**, स्त्री, (अधि + इष् + णिच् + भावे युच,
स्त्रियां टाप् ।) याच्ञा । इति
हेमचन्द्रः ॥ आराध्य-
स्यादरपूर्ब्बकं कर्म्मणि
नियुक्तकरणं । गुर्व्वादेः
सत्कारपूर्ब्बकं क्वचिदर्थे नियोजनं
। तत्पर्य्यायः ।
सनिः २ । इत्यमरः ॥ सनी ३ ।
इति तट्टीका ॥

**अध्वगः**, पुं, (अध्वना पथा गच्छति अध्वन् + गम् +
डः, उपपदसमासः ।) पथिकः ।
इत्यमरः ॥ उष्ट्रः ।
इति त्रिकाण्डशेषः ॥ सूर्य्यः । इति
हेमचन्द्रः ॥
खेसरः । इति राजनिर्घण्टः ॥
खचर इति भाषा ।

**अध्वगभोग्यः**, पुं, (अध्वगेन पथिकेन भोग्यः, अना-
यासलभ्यफलत्वात्,
तृतीयातत्पुरुषः ।) आम्रा-
तकवृक्षः । इति त्रिकाण्डशेषः ॥

**अध्वगा**, स्त्री, (अध्वन् + गम् + डः, उपपदसमासः ।
स्त्रियां टाप् ।) गङ्गा । इति
त्रिकाण्डशेषः ॥

इति भाषा । भूम्यामलकी । इति रत्नमाला ॥

**अध्ययनं**, क्ली, (अधि + इङ् + भावे ल्युट् ।) गुरुमुखा-

दानुपूर्ब्बीश्रवणं । पठनं । ब्राह्मणस्य षट्कर्म्मा-

न्तर्गतमिदं । इति शब्दरत्नावली ॥

**अध्यवसायः**, पुं, (अधि + अव + सो + भावे घञ् ।)

उत्साहः । इत्यमरः ॥ कर्म्मसु सुकरः प्रत्ययः ।

इति मधुः ॥ कर्म्मसु दृढयत्नकारको भावः । इति

**अध्वजा**, स्त्री, (अध्वनि जायते अध्वन् + जन् + डः,

उपपदसमासः, स्त्रियां टाप् ।)

स्वर्णुलीवृक्षः ।

इति राजनिर्घण्टः ॥

**अध्वनीनः**, त्रि, (अध्वनि साधुः अध्वन् + ख तस्य

ईण ।) पथिकः । इत्यमरः ॥

**अध्वन्यः**, त्रि, (अध्वनि साधः अध्वन् + यत् ।)

पथिकः । इत्यमरः ॥ (अध्वन्येन विमुक्तकण्ठमखिलां

रात्रिं तथा क्रन्दित ॥ इति अमरुशतकं ॥)

**अध्वरः**, पुं, (अध्वानं सन्मार्गं राति ददाति अध्वन् +

रा + कः उपपदसमासः ।) यज्ञः । वसुभेदः ।

सावधानः । इति मेदिनी ॥ (“तमध्वरे विश्वजिति

क्षितीशं” । इति रघुवंशे ।)

**अध्वरथः**, पुं, (अध्वैव रथो गमनसाधनं यस्य सः ।)

पथरथः । अध्वगमनोपयुक्तरथः । तत्पर्य्यायः ।

परिघातिकः २ । इति हेमचन्द्रः ॥

**अध्वर्य्युः**, पुं, (अध्वरं यज्ञं यौति सम्पादयति अध्वर +
युु + कर्त्तरि क्विप्, पृषोदरादित्वात् तुम्भावः
रस्याकारलोपः, होमकारी ऋत्विक् ।) यजुर्वेद-
वेत्ता । इत्यमरः ॥ (यथा कुमारसम्भवे, --
“विवाहयज्ञे विततेऽत्र यूय-
मध्वर्य्यवः पूर्ब्बवृता मयेति” ।)

**अध्वशल्यः**, पुं, (अध्वनि पथि शल्यमिव आचरति
सकण्टकतया अध्वशल्य + क्विप् ततोऽच् ।) अपा-
मार्गः । इति राजनिर्घण्टः ॥

**अध्वा** [न्] पुं, (अत्ति गमनेन बलं नाशयति, अद् +
बाहुल्यात् क्वनिप्, पृषोदरादित्वात् दकारस्य धः ।)
पन्थाः । कालः । संस्थानं । अवस्कन्दः । इति
मेदिनी ॥ शास्त्रं । स्कन्धः । इति च पाठान्तरं ॥
अध्वगमनजन्यगुणः । मेदःकफस्थूलतासौकुमार्य्य-
नाशित्वं । इति राजवल्लभः ॥

**अध्वान्तशात्रवः**, पुं, (अध्वान्तस्य वर्त्मसीमायाः
शात्रवः शत्रुवत्, षष्ठीतत्पुरुषः ।) श्योनाक-
वृक्षः ॥ इति शब्दचन्द्रिका ॥

**अन** घ लु प्राणने । जीवने । इति कविकल्पद्रुमः ॥
घ लु अनिति लोको जीवति इत्यर्थः । इति दुर्गा-
दासः ॥

ततः स्वार्थे कः ।) चित्तं । मनः । इति शब्द-
रत्नावली ॥

**अनङ्गासुहृत्** [द्] पुं, (अनङ्गस्य कामदेवस्य असु-
हृत् शत्रुः शिवललाटाग्निना तद्देहभस्मीकर-
णात् ।) शिवः । इति हेमचन्द्रः ॥

**अनच्छः**, त्रि, (न अच्छः निर्म्मलः ।) आविलः । अनि-
र्म्मलः । इत्यमरः ॥

**अनञ्जनं**, क्ली, (नास्ति अञ्जनं स्वमूर्त्तिप्रकाशो यस्य
तत्, निराकारत्वात्, अन्ज + भावे ल्युट् ।) आ-
काशं । इति शब्दचन्द्रिका ॥ अञ्जनशून्ये त्रि ॥
(यथा साहित्यदर्पणे, --
“नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः” ।)

**अनडुज्जिह्वा**, स्त्री, (अनडुहो वृषभस्य जिह्वेव जिह्वा
पत्रं यस्याः सा स्त्रियां टाप् ।) गोजिह्वावृक्षः ।
इति राजनिर्घण्टः ॥

**अनडुही**, स्त्री, (अनडुह् + गौरादित्वात् ङीष् पक्षे
आम् ।) अनड्वाही । इति हेमचन्द्रः ॥ गाइ इति
भाषा ।

**अनड्वान्**, [डुह्] पुं, (अनडुह् + प्रथमैकवचनम् ।)
वृषः । एँडे इति भाषा । तत्पर्य्यायः । गौः २

**अनन्तः**, त्रि, (नास्ति अन्तः सीमा विनाशो वा
यस्य सः ।) अन्तरहितः । अनवधिः । अशेषः ।
असीमः । इत्यमरो मेदिनी च ॥ (यथा कुमार-
सम्भवे । -- “अनन्तरत्नप्रभवस्य यस्य” ।)

**अनन्तजित्**, पुं, (जयतीति जि + कर्त्तरि क्विप्, अ-
नन्तो नाम जित् जयी बौद्धविशेषः शाकपार्थि-
वादित्वात् समासः मध्यपदलोपश्च ।) जिनानां
चतुर्व्विंशत्यन्तर्गतचतुर्द्दशजिनः । तत्पर्य्यायः । अ-
नन्तः २ । इति हेमचन्द्रः ॥

**अनन्ततीर्थकृत्**, पुं, (अनन्तानि असङ्ख्यानि तीर्थानि
शास्त्राणि कर्म्मधारयः, तानि कृतवान् अनन्त-
तीर्थ + कृ + क्विप्, उपपदसमासः ।) अनन्तजित् ।
इति हेमचन्द्रः ॥ (अनन्तजित् नाम जिनः ॥)

**अनन्तरं**, त्रि, (नास्ति अन्तरमवकाशो यस्य तत् ।)
अनवकाशं । अन्तररहितं । तत्पर्य्यायः ॥ अव्य-
वहितं २ संसक्तं ३ अपटान्तरं ४ । इति हेम-
चन्द्रः ॥ पश्चादर्थे क्ली ॥ (पश्चात् । ततःपरं । यथा
रघुवंशे, -- “पितुरनन्तरमुत्तरकोशलान्” ॥)

**अनन्तविजयः**, पुं, (विजयतेऽनेन वि + जि + करणे
अच्, ततोऽनन्तानामसङ्ख्यानां शत्रूणां शब्देन
विजयः विजयसाधनम् षष्ठीतत्पुरुषः ।) युधिष्ठिर-
राजस्य शङ्खः । इति श्रीभगवद्गीता ॥

**अन** ङ य प्राणने । जीवने । इति कविकल्पद्रुमः ॥

य ङ अन्यते । इति दुर्गादासः ॥

**अनंशुमत्फला**, स्त्री, (न अंशुमत् मोचान्तर्व्वर्त्ति-

तया सूर्य्यकिरणशून्यं फलं यस्याः सा ।) अंशु-

मत्फला । कदली । इति जटाधरः ॥

**अनः** [स्] क्ली, (अनिति जीवत्यनेन जीविको-

पायत्वात् अन् + असुन् ।) शकटं ।

इत्यमरः ॥

(यथा मनुः, --

“होता वापि हरेदश्वमुद्गाता

चाप्यनःक्रये” ।)

अन्नं । इत्युणादिकोषः ॥ जननी । जन्म । जन्मी ।

इति कोषान्तरं ॥

**अनकः**, त्रि, (अन् + अच् + कुत्सायां कन् ।) अणकः ।

अधमः । इत्यमरटीकायां भरतः ॥

**अनगारः**, पुं, (नास्ति अगारं गृहं यस्य सः, गृह-

स्थाश्रमशून्यः ।) ऋषिः । मुनिः । इति

हेमचन्द्रः ॥

अगारशून्ये वाच्यलिङ्गः ॥

**अनग्निः**, पुं, (नास्ति श्रौतः स्मार्त्तो वा अग्निर्यस्य

सः ।) श्रौतस्मार्त्तकर्म्महीनः ॥ इति

महाभारते

दानधर्म्मः ॥ (अनाहिताग्निर्ब्राह्मणः ।

यथाह मनुः,

“अग्नीनात्मनि वैतानान् समारोप्य

यथाविधि ।

अनग्निरनिकेतः

स्यान्मुनिर्मूलफलाशनः” ॥)

**अनघः**, त्रि, (नास्ति अघं पापं यस्य सः ।) अपापः ।

भद्रः ३ बलीवर्द्दः ४ दम्यः ५ दान्तः

६ स्थिरः ७

बली ८ उक्षा ९ ककुद्मान् १० ऋषभः

११

वृषभः १२ वृषः १३ धुर्य्यः १४

धुरीयः १५

धौरेयः १६ शाङ्करः १७ शिववाहनः

१८ रोहिणी-

रमणः १९ वोढा २० गोनाथः २१

सौरभेयकः २२ ।

इति राजनिर्घण्टः ॥ (यथा मनुः, --

“अजमेषावनड्वाहं खरं

हत्वैकहायनम्” ॥)

**अनड्वाही**, स्त्री, (अनडुह् + गौरादित्वात् ङीष्,

आमागमश्च आमभावपक्षे केवलं ङीष्

।) अन-

डुही । स्त्रीगवी । इति हेमचन्द्रः ॥ गाइ

इति

भाषा ।

**अनद्यः**, पुं, (अद् + कर्म्मणि ण्यत् संज्ञापूर्ब्बकविधे-

रनित्यत्वात् वृद्ध्यभावः, न अद्यः

अप्रशस्तखाद्यः,

नञ्समासः, नञत्र अप्राशस्त्ये ।)

गौरसर्षपः ।

इति राजनिर्घण्टः ॥

**अनधिगतः**, त्रि, (अधि + गम् + कर्म्मणि क्तः, न

अधिगतः ज्ञातः, नञ्समासः ।

गतभिन्नः प्राप्त-

भिन्नः ।) अनवगतः । यथा, -- “अरे

विद्वन्मन्या-

ह्यनधिगतवेदार्थविभवाः” । इति

भगवद्वाक्य-

मिति प्रामाणिकाः ॥

**अनध्यंक्षः**, त्रि, (अक्षमिन्द्रियमधिगतः प्रादि-

**अनन्तवीर्य्यः** पुं, (अनन्तमसीमं वीर्य्यं तेजो यस्य सः ।)

भाविकल्पे जिनानां

चतुर्व्विंशत्यन्तर्गतत्रयोविंश-

तीर्थकरजिनः । इति हेमचन्द्रः ॥

**अनन्तव्रतं**, त्रि, (अनन्तस्य तन्नामकदेवस्य व्रतं षष्ठी-

तत्पुरुषः ।)

भाद्रशुक्लचतुर्दशीकर्त्तव्यमनन्तदेवस्य

व्रतं । तद्विधिर्यथा । भविष्ये, --

“अनन्तव्रतमेतद्धि सर्व्वपापहरं शुभं ।

सर्व्वकामप्रदं नृणां स्त्रीणाञ्चैव युधिष्ठिर ॥

तथा शुक्लचतुर्द्दश्यां मासि माद्रपदे भवेत् ।

तस्यानुष्ठानमात्रेण सर्व्वपापं प्रणश्यति” ॥ *

॥

व्रतारम्भप्रतिष्ठयोर्वर्ज्ज्यकालमाह ज्योतिषे, --

“गुरोर्भृगोरस्तबाल्ये वार्द्धके सिंहगे गुरौ ।

वक्रिजीवाष्टविंशेऽह्नि गुर्व्वादित्ये दशाहिके ॥

पूर्ब्बराशावनायातातिचारिगुरुवत्सरे ।

प्राग्राशिगन्तृजीवस्य चातिचारे त्रिपक्षके ॥

कम्पाद्यद्भुतसप्ताहे नीचस्थेज्ये मलिम्लुचे ।

भानुलङ्घितके मासि क्षये राहुयुते गुरौ ॥

पौषादिकचतुर्म्मासे चरणाङ्कितवर्षणे ।

एकेनाह्ना चैकदिने द्वितीयेन दिनत्रये ॥

तृतीयेन तु सप्ताहे माङ्गल्यानि शुभान्विताः ।

विद्यारम्भकर्णवेधौ चूडोपनयनोद्वहान् ॥

तीर्थस्नानमनावृत्तं तथानादिसुरेक्षणं ।

परीक्षारामयज्ञांश्च पुरश्चरणदीक्षणे ॥

व्रतारम्भप्रतिष्ठे च गृहारम्भप्रवेशने ।

प्रतिष्ठारम्भणे देवकूपादेर्व्वर्ज्जयन्ति हि ॥

द्वात्रिंशद्दिवसाश्चास्ते जीवस्य भार्गवस्य च ।

द्वासप्ततिर्म्महत्यस्ते पादास्ते द्वादशक्रमात् ॥

अस्तात् प्राक् परयोः पक्षं गुरोर्वार्द्धकबालते ।

पक्षंवृद्धो महास्ते तु भृगुर्बालो दशाहिकः ॥

पादास्ते तु दशाहानि वृद्धोबालो दिनत्रयं” ॥

* ॥

निर्म्मलः । मनोज्ञः । इति मेदिनी ॥
(यथा
शाकुन्तले --
“अखण्डं पुण्यानां फलमिव च
तद्रूपमनघं” ॥)

**अनङ्गं**, क्ली, (नास्ति अङ्गमवयवो यस्य तत् ।)

आकाशं । मनः । इति मेदिनी ।

**अनङ्गः**, पुं, (नास्ति अङ्गं कायो यस्य सः ।) कामदेवः ।

इत्यमरः ॥ (यथा मेदिनी । “अनङ्गो
मदनेऽनङ्ग-
माकाशमनसोरपि” ॥) अङ्गरहिते
वाच्यलिङ्गः ॥

**अनङ्गकं**, क्ली, (नास्ति अङ्गमाकारो यस्य तत्,

समासः, प्रत्यक्षः तद्भिन्नः नञ्समासः
।) अप्र-
त्यक्षः । इत्यमरटीकायां रमानाथः ॥
अध्यक्षभिन्नः ॥

**अनन्तं**, क्ली, (नास्ति अन्तः सीमा यस्य तत् ।)

आकाशं । इत्यमरः ॥ अभ्रकं । इति
राज-
निर्घण्टः ॥

**अनन्तः**, पुं, (नास्ति अन्तः विनाशो यस्य सः, तथाहि

भागवते “लोके नष्टे द्विपरार्द्धावसाने
भवानेकः
शिष्यते शेषसंज्ञः” ।) विष्णुः । इति
मेदिनी ॥ बल-
देवः । अनन्तजिन्नाम जिनः । इति
हेमचन्द्रः ॥
शेषनागः । इत्यमरः ॥ वासुकिः । इति
शब्द-
माला ॥ सिन्दुवारवृक्षः । इति
राजनिर्घण्टः ॥

:"मध्याह्ने भोज्यवेलायां समुत्तीर्य्य सरित्तटे" ।

दवर्श शीला सा स्त्रीणां समूहं रक्तवाससां ॥
चतुर्द्दश्यामर्च्चयन्तं भक्त्या देवं पृथक् पृथक्" ।
इति भविष्योत्तरीयान्मध्याह्नव्यापिनी तिथि-
र्ग्राह्येति वाच्यं । पूर्ब्बाह्णो वै देवानामिति श्रुत्या-
दिभिः पूर्ब्बाह्णे दैवकृत्यविधानात् । विध्यसम-
भिव्याहृतार्थवादेन तद्बाधायोगात् किन्तु तस्यैव
गौणकालबोधकं तत् । कालमाधवीयोऽप्येवं ।
भविष्येऽपि पूजाविधायको मध्याह्नो नोक्तः ।
यथा, --
"कृत्वा दर्भमयानन्तं वारिधान्यां निवेश्य च ।
पूजयेद्गन्धपुष्पाद्यैर्नैवेद्यैर्विविधैरपि ॥
चतुर्द्दशफलैर्मूलैर्जलजैः कुसुमैरपि ।
यवगोधूमशालीनां चूर्णैनैकतरस्य च ॥
कृत्वा पूपद्वयं तस्मै दद्यादेकं घृतान्वितं ।
स्वयमेकन्तु भुञ्जीत करे बद्ध्वा सुडोरकं ॥
चतुर्दशग्रन्थियुक्तं कुङ्कुमेन विलेपितं ।
सुविन्यस्तं विष्णु नामप्रतिग्रन्थिसमन्वितं ।
चतुर्दशसूत्रमयं सूत्रं कार्पासमेव च" ॥ * ॥
पूजाडोरकबन्धनमन्त्रस्तु रत्नाकरे, --
"अनन्तसंसारमहासमुद्रे
मग्नान् समभ्युद्धर वासुदेव ।
अनन्तरूपिन् विनियोजयस्व
अनन्तरूपाय नमो नमस्ते" ॥
इति मन्त्रमुक्त्वा ।
"अनेन डोरकं बद्ध्वा भोक्तव्यं सुस्थमानसैः" ।
इत्यर्द्धं भविष्योत्तरीयं कालकौमुद्यां लिखित-
मिति ॥ * ॥ तथा, --
"पापोऽहं पापकर्म्माहं पापात्मा पापसम्भवः ।
त्राहि मां पुण्डरीकाक्ष सर्व्वपापहरो भव ॥
अद्य मे सफलं जन्म जीवितञ्च सुजीवितं ।
यत्तवाङ्घ्रियुगाब्जाग्रे मूर्द्धा मे भ्रमरायते" ॥
इत्याभ्यां नमस्कुर्य्यात् । अनन्तकथामप्यत्र शृ-
ण्वन्ति । इति तिथ्यादितत्त्वं ॥ * ॥ * ॥ अथ
प्रयोगः । आचम्य स्वस्तिवाच्य सङ्कल्पं कुर्य्यात्, --
"अद्य भाद्रे मासि शुक्ले पक्षे चतुर्दश्यां तिथा-

"ॐ शक्रः सुरपतिश्चैव वज्रहस्तो
महाबलः ।
ऐरावतगजारूढः सहस्राक्षो
नमोऽस्तु ते" ॥
ततो वृहत्पात्रे जलं संस्थाप्य हस्तं
दत्त्वा समुद्र-
मावाहयेत्, --
ॐ गङ्गेचेत्यादिनावाह्य समुद्रं
पूजयेत् ॥ * ॥
ततो भूतशुद्ध्यादिप्राणायामान्तं
कृत्वा अनन्तं
ध्यायेत्, --
"ॐ दिव्यसिंहासनासीनं देवेशं
गरुडध्वजं ।
शुक्लवर्ण्णं चतुर्बाहुं
नागयज्ञोपवीतिनं ॥
शङ्खचक्रगदापद्मधरं पीताम्बरं विभुं
।
श्रिया वाण्या च संश्लिष्टं
किरीटादिसमुज्ज्वलं ॥
फणाशतसमायुक्तं जगन्नाथं
जगद्गुरुं ।
अनन्तं चिन्तयेद्देवं
नारदाद्यैरुपस्तुतं" ॥
एवं ध्यात्वा स्वशिरसि पुष्पं दत्वा
मानसोपचारैः
संपूज्य अर्घ्यं संस्थाप्य ।
आं हृदयाय नमः एवं षडङ्गानि
विन्यस्य पुन-
र्ध्यात्वावाहयेत् ।
"ॐ आगच्छानन्त देवेश पत्नीभ्यां
बाहनान्वित ।
गन्धर्व्वादिगणोपेत सान्निध्यमिह
कल्पय" ॥
ततः पूजयेत् ।
पाद्यं गृहीत्वा, --

तत आवरणदेवताः पूजयेत् ।
ॐ गणेशाय नमः । एवं
लोकपालेभ्यः । नव-
ग्रहेभ्यः । अष्टवसुभ्यः ।
एकादशरुद्रेभ्यः । द्वादशा-
दित्येभ्यः । अनन्तादिनागेभ्यः ।
मत्स्यादिदशाव-
तारेभ्यः । मासेभ्यः । ऋतुभ्यः ।
वत्सरेभ्यः ।
धर्म्माय । अधर्म्माय । ज्ञानाय ।
अज्ञानाय ।
वैराग्याय । अवैराग्याय । ऐश्वर्य्याय
। अनैश्वर्य्याय ।
शिवाय । दुर्गायै । पृथिव्यै । गङ्गायै ।
यभुनायै ।
महालक्ष्म्यै । सरस्वत्यै । गरुडाय ।
शङ्खाय । चक्राय ।
गदायै । पद्माय । कौस्तुभाय ।
सूर्य्यमण्डलाय ।
सोममण्डलाय । वह्निमण्डलाय ।
वायुमण्डलाय ।
सर्व्वेभ्यो देवेभ्यः । सर्व्वाभ्यो
देवीभ्यः ॥ * ॥
ततः स्तुतिं पठेत्, --
"ॐ अनन्तसंसारमहासमुद्रे
मग्नं समभ्युद्धर वासुदेव ।
अनन्तरूपिन् विनियोजयस्व
अनन्तरूपाय नमो नमस्ते ॥
नमोऽस्त्वनन्ताय सहस्रमूर्त्तये
सहस्नपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते
सहस्रकोटीयुगधारिणे नमः ॥
हृदिस्थं सर्व्वदेवानां इन्द्रियाणां
गुणातिगं ।
सर्व्वपापहरं देवं प्रणमामि जनार्द्दनं
॥

वारभ्य अमुकगोत्रः श्रीअमुकः धनधान्यपुत्र-पौत्राद्यनवच्छिन्नसन्ततिप्राप्तिकामः श्रीविष्णु-प्रीतिकामो वा चतुर्दशवर्षपर्य्यन्तं भगवदनन्त-भट्टारकपूजाचतुर्दशग्रन्थियुक्तडोरकरमूलबन्धन-कथाश्रवणब्राह्मणसं प्रदानकातपसिततण्डुलप्रस्थ-द्वयघटितपूपाद्ध्र्वोपकल्पनतदर्द्धात्मकर्तृकभोजन-रूपमनन्तव्रतमहं करिष्ये” इति सङ्कल्प्य सूक्तं पठेत् ॥ * ॥ ततो गुण्डिकया अष्टदलपद्मं निर्म्माय तन्मध्ये घटमारोप्य शालग्रामं वा चतुर्दिक्षु ध्वजां निवेश्य यथोक्तविधिना गणेशनवग्रहदिक्-पालशिवदुर्गालक्ष्मीनारायणपूजां कृत्वा शक्रं ध्या-येत्, -- “ॐ महेन्द्रं मत्तैरावतस्कन्धस्थं सहस्रनय-नोज्वलं । मणिकाञ्चनघटितनानालङ्कारभूषितं वज्रहत्तं शच्यन्वितं देवगन्धर्व्वगणैर्वृतं मुनिगणैः स्तूयमानं” ॥ एवं ध्यात्वा महेन्द्राय नमः एवं कमेण संपूज्य प्रणमेत्, --

“ॐ पाद्यं गृहाण देवेश
सुरासुरमनोहरं ।
तुष्टो मे भव देवेश नरसिंह नमोऽस्तु ते” ॥
अर्घ्यं गृहीत्वा, --
“अर्घ्यं गृहाण देवेश
सुगन्धिकुङ्कुमान्वितं ।
दूर्व्वाक्षतसमायुक्तं नमस्ते
विश्वमूर्त्तये” ॥
आचमनीयं गृहीत्वा, --
“ॐ इदमाचमनीयन्ते
दिव्यतोयोद्भवं प्रभो ।
भक्त्या दत्तं मयानन्त नमस्ते
पन्नगाधिप” ॥
एवं मधुपकं पुनराचमनीयं स्नानीयं वस्त्रयुग्मञ्च
दद्यात् ॥ * ॥
गन्धः, --
“ॐ गन्धोऽयं देवदेवेश
कुड्कुमागुरुसम्भवः ।
यथाशक्त्या मया दत्तो देवेश
प्रतिगृह्यतां” ॥
पुष्पं, --
“ॐ पुष्पं गृहाण भोऽनन्त
सुगन्धिद्रव्यमुत्तमं ।
पद्मनाभ नमस्तेऽस्तु कुशलं कुरु
सर्व्वदा” ॥
धूपः, --
“ॐ धूपोऽयं ते महाभाग
दशाङ्गोऽगुरुणा सह ।
मया दत्तः प्रभो विष्णो गृह्यतां
सुरनायक” ॥
दीपः, --
“ॐ दीपं गृहाण भोऽनन्त
जाज्वल्यमानमद्भतं ।
त्वं गृहाण सदा देव रक्ष मां
घोरसागरात्” ॥
यज्ञोपवीतं, --

अनन्तरूपेण बिभर्षि पृथ्वीं
अनन्तलक्ष्मीं विदधासि तुष्टः ।
अनन्तभोगान् प्रददासि तुष्टः
अनन्तमोक्षं पुरुषे प्रहृष्टः ॥
प्रणमामि हृषीकेशं वासुदेवं जगद्गुरुं ।
सृष्टिस्थितिविनाशानां कर्त्तारं
प्रणमाम्यहं ॥
राक्षसानामरिं नौमि नौमि
दैत्यविमर्द्दकं ।
जगतां हितकर्त्तारं नौमि पङ्केरुहेक्षणं ॥
जन्मजन्मकृतं यच्च
बाल्ययौवनवार्द्धके ।
वृद्धिमाप्नोतु तत् पुण्यं पापं हर
हलायुध ॥
भक्तिहीनं क्रियाहीनं मन्त्रहीनं
यदर्च्चितं ।
यथोद्दिष्टासिमां पूजां परिपूर्णां
कुरुष्व मे ॥
पापोऽहं पापकर्म्माहं पापात्मा
पापसम्भवः ।
त्राहि मां पुण्डरीकाक्ष हरे
संसारसागरात्” ॥
ततो घटस्थजलेन संप्रोक्ष्य करमूले डोरकं
समर्पयेत् ।
“ॐ इदं डोरमनन्ताख्यं
चतुर्द्दशगुणात्मकं ।
सर्व्वदेवमयं बिष्णो स्वकरे
धारयाम्यहं” ॥
ततो भोज्यमुत्सृजेत् ॥ * ॥
ततः कथां शृणुयात् ।
यथा, --
अरण्यवासमुषितो युधिष्ठिरनृपो
वशी ।
प्राप्तस्त्रैलोक्यनाथेन कृष्णेन
परमात्मना ॥

| | | |
|---|---|---|
| | "ॐ ऋग्यजुःसाममन्त्रेण त्रिवृत्तं पठ्मयोनिना ।<br>सावित्रीग्रन्थिसंयुक्तमुपवीतं तवानघ" ॥<br>नैवेद्यं, --<br>"ॐ नानाभक्ष्यसमायुक्तं चतुर्द्दशफलैर्युतं ।<br>भक्त्या सम्पादितं देव सपूपं गृह्यतां विभो" ॥ * ॥<br>ततो बलभद्रं संपूज्य स्तुतिं कुर्य्यात्, --<br>"ॐ बलभद्रं महात्मानं हलिनं लाङ्गलायुधं ।<br>कादम्बरीमदोन्मत्तं नमामि बलदेवकं" ॥ | कथोकथनं जातं तयोस्तत्र प्रियाप्रियं ।<br>विशेषेण च गोविन्दं पप्रच्छ च युधिष्ठिरः ॥ * ॥<br>युधिष्ठिर उवाच ।<br>केन व्रतेन देवेश वाञ्छितं प्राप्यते फलं ।<br>निष्पापाः सकला लोकाः भवन्ति जन्मजन्मनि ॥ * ॥<br>श्रीकृष्ण उवाच । |

:अस्ति व्रतमनन्ताख्यं यत्कृतं सुरसद्मनि ।

इन्द्राद्यैर्लोकपालैश्च तन्मे कथयतः शृणु ॥
शुक्लपक्षे चतुर्द्दश्यां मासि भाद्रपदे तथा ।
तस्यानुष्ठानमात्रेण सर्व्वपापं प्रणश्यति ॥ * ॥
युधिष्ठिर उवाच ।
कृष्ण कोऽयं त्वयाख्यातो योऽनन्त इति संज्ञितः ।
कोऽयं शेषश्च नागश्च अनन्तस्तक्षकः स्मृतः ॥
परमञ्चोत्तमं वापि उताहो ब्रह्म उच्यते ।
क एषोऽनन्तसंज्ञो वै तन्मे ब्रूहि जनार्द्दन ॥ * ॥
श्रीकृष्ण उवाच ।
अनन्त इत्यहं पार्थ मम रूपं निबोध तत् ।
आदित्यगतिरूपेण यः काल उपपद्यते ॥
कलाकाष्ठामुहूर्त्तादिदिनरात्रिव्यवस्थया ।
पक्षो मास ऋतुर्व्वर्षं युगकल्पव्यवस्थया ॥
सोऽहं कालोऽवतीर्णोऽस्मि भुवो भारावतारणात् ।
दानवानां विनाशाय वसुदेवतनूद्भवं ॥
अनन्तं विद्धि मां पार्थ कृष्णं विष्णुं हरिं शिवं ।
ब्रह्माणं भास्करं शेषं सर्व्वव्यापिनमीश्वरं ॥
प्रत्ययार्थं मया पार्थ विश्वरूपं निबोध तत् ।
पूर्ब्बमेव महाबाहो योगिध्येयमनुत्तमं ॥ * ॥
यधिष्ठिर उवाच ।
अनन्तव्रतमाहात्म्यं विधिं विधिविदां वर ।
किं पुण्यं किं फलं तस्य अनुष्ठानञ्च तस्य किं ॥
केन वा तत्कृतं पूर्ब्बं लोके केन प्रकाशितं ।
तत्सर्व्वं बहु विस्तार्य्य ब्रूहि नारायण प्रभो ॥ * ॥
श्रीकृष्ण उवाच ।
आसीत्पुरा कृतयुगे सुमन्तुर्नाम वै द्विजः ।

ततो दैववशात्तत्र कौण्डिन्यः समुपागतः ।
मुनिश्रेष्ठो महाभागः कुलीनो धर्म्मतत्परः ॥
मनसा चिन्तयामास सुमन्तुः सुतपाः सुधीः ।
अस्मै भाग्यवशाच्छीला प्रतिपाद्या प्रयत्नतः ॥
इति कृत्वा मतिं विप्रो ददौ कन्यां शुभे दिने ।
कन्यामलङ्कृतां साध्वीं शीलां चन्द्रनिभाननां ॥
गृह्योक्तवेदविधिना विवाहमकरोत्तदा ।
ततो होमादिकं कर्म्म समाप्य समये मुनिः ॥
सुमन्तुः कर्कशां प्राह जामात्रे देहि दक्षिणां ।
सफलं कुरु मे दानं प्रिये मुनिकुलोद्भवे ॥
दक्षिणारहितं कर्म्म निष्फलं जायते यतः ।
सा तु तद्वचनं श्रुत्वा कर्कशा कुपिताभवत् ॥
सुमन्तुं भर्त्सयामास कर्कशैर्व्वचनैः पतिं ।
अलङ्कारं समानीय स्वकीयञ्चापि बन्धनं ॥
निक्षिप्य निभृते स्थाने कर्कशान्यगृहं ययौ ।
सुमन्तुश्चातिदीनात्मा लज्जितश्चाभवत्तदा ॥
यत्किञ्चिदर्थयोग्यञ्च द्रव्यमानीय यौतुकं ।
जामात्रे प्रददौ विप्रः परिचार्य्य पुनः पुनः ॥

पुनर्जगाम तेनैव गोरथेन समन्विता ॥
तेनानन्तप्रसादेन गृहं गोधनसङ्कुलं ।
तदाश्रमं श्रिया युक्तं धनधान्यसमन्वितं ॥
विविधातिथिसम्पूर्णं नानारत्नैर्व्विभूषितं ।
वराश्वमत्तमातङ्गमहिषैर्गोधनान्वितं ॥
शीला च मणिकाञ्चीभिर्मुक्ताभरणभूषिता ।
दिब्याङ्गी शीलसम्पन्ना सावित्रीप्रतिमा यथा ॥
कदाचिदुपविष्टा सा वह्निकुण्डं समागता ।
कौण्डिन्योऽपि विशेद्रोषात् दृष्ट्वा डोरमनन्तकं ।
शीलायाः करमूले च बद्धमेव प्रयत्नतः ।
पप्रच्छ क्रोधवचसा भृकुटीकुटिलं मुखं ॥
किमिदं डोरकं हस्ते बद्ध्वा भार्य्येऽत्र तिष्ठसि ।
प्रमेयः कस्य देवस्य दुर्ब्बुद्धे ब्रूहि सत्वरं ॥ * ॥
शीलोबाच ।
अनन्तं देवदेवस्य प्रमेयं डोरकं शुभं ।
करे बद्धं विधानेन शृणु मे वचनं प्रभो ॥
प्रसादाद् यस्य देवस्य भुङ्क्ते सुविपुलं धनं ।
न जानासि कथं नाथ तदेवं जगदीश्वरं ॥
शीलावाक्यं ततः श्रुत्वा कौण्डिन्यः कुपितोऽभवत् ।
कोऽसावनन्तसंज्ञो वै न श्रुतोऽपि वरानने ॥
इत्युक्त्वाकृष्य कुपितो भुजाड्डोरमनन्तकं ।
क्षिप्तं ज्वालाकुले वह्नौ निर्भर्त्स्य बहुधा प्रियां ॥
ततः सा संभ्रमात् शीला हाहा कृत्वा प्रधाविता ।
वह्नेः सूत्रं समादाय क्षीरमध्ये ततोऽक्षिपत् ॥
ततस्तया करे वामे पुनर्बद्धं सुडोरकं ।
अनन्ताक्षेपदोषेण दारिद्र्यं पतितं गृहे ॥

वशिष्ठगोत्रजो विद्वान् शीलवान् विजितेन्द्रियः ॥
पत्नी तस्याभवद्दीक्षा सती सत्यव्रते स्थिता ।
चारित्रशीलसम्पन्ना सुरूपा भृगुवंशजा ॥
तस्याः कालेन संजाता दुहिता सर्व्वलक्षणा ।
शीला नाम्ना सुशीला सा वर्द्धते पितृवेश्मनि ॥
माता तस्यास्तु कालेन ज्वरदाहप्रपीडिता ।
समागत्य नदीतोये मृता स्वर्गपुरं ययौ ॥
कृतं सुमन्तुना तस्याः कर्म्म यत् पारलौकिकं ।
ततः सुमन्तुः संत्यज्य दुःखं शोकं क्रमात् पुनः ।
नापत्नीको गृही धर्म्मं कर्त्तुमर्हति वै क्वचित् ।
इति सञ्चिन्त्य मनसा विवाहोत्सुकमानसः ॥
देवलस्य मुनेः कन्यां कर्कशां परिणीतवान् ।
सा कर्कशातिदुःशीला सदा निष्ठुरभाषिणी ॥
कोपना प्रतिकूला च निर्ल्लज्जा कलहप्रिया ।
अदक्षा गृहकृत्येषु दक्षा भोजनकर्म्मणि ॥
कलहेन तु सन्तुष्टा रुष्टा बन्धुजनान् प्रति ।
सा तु शीला पितुर्गेहे वर्द्धिता च दिने दिने
करोति सखिभिः सार्द्धं शिशुक्रीडामनुत्तमां ।
गृहान्तरस्थलद्वारदेहलीतोरणादिषु ॥
चतुरङ्गकवर्णैश्च रक्तपीतसितासितैः ।
स्वस्तिकं पठ्मशङ्खौ च मण्डयन्ती पुनः पुनः ॥
कुर्व्वन्ती प्रत्यहं बाला देवतातिथिपूजनं ।
गृहकृत्ये सदा दक्षा पितुरत्यन्तवल्लभा ॥
कालेन कियता विप्रस्तां दृष्ट्वा यौवनोद्गतां ।
कस्मै देया मया कन्या इति चिन्तान्वितोऽभवत् ॥

ततो विवाहं निर्व्वर्त्त्य कौण्डिन्योऽपि निजाश्रमं ।
गोयाने तां समारोप्य शीलामादाय वै ययौ ॥
ततः सा पथि गच्छन्ती शीला चन्द्रनिभानना ।
मध्याह्ने भोज्यवेलायां समुत्तीर्य्य सरित्तटे ॥
ददर्श शीला नारीणां समूहं व्रतचारिणां ।
पुंसां वृन्दञ्च तत्रैव रक्तपीताम्बरासनं ॥
चतुर्द्दश्यामर्चयन्तं भक्त्यानन्तं पृथक् पृथक् ।
दृष्ट्वा समूहं नारीणां सती पप्रच्छ सादरं ॥
विनयावनता साध्वी प्रणिपत्य सुरेश्वरं ।
किमिदं क्रियते कार्य्यं भवतीभिस्तदुच्यतां ॥ * ॥
स्त्रिय ऊचुः ।
भाद्रे मासि सिते पक्षे उत्थिते वासवध्वजे ।
आराधिते महेन्द्रे च ध्वजाकारासु यष्टिषु ॥
नत्वा सरसि यः स्नात्वा अनन्तार्च्चनमारभेत् ।
कृत्वा दर्भमयं देवं वारिवाजसमन्वितं ॥
अनन्तं देवदेवेशं चतुर्ब्बाहुं किरीटिनं ।
अतसीपुष्पसंकाशं काञ्चनाङ्गदभूषणं ॥
शङ्खचक्रगदाशार्ङ्गं विविधायुधधारिणं ।
एह्येहि भगवन् कृष्ण तव यज्ञः प्रवर्त्तते ॥

न कैश्चित् वर्ण्यते लोकैः सोऽपि विप्रो युधिष्ठिर ।
गात्रे मलिनता प्राप्ता चक्षुर्निद्रां तथैव च ॥
शून्यानि गृहरूपाणि दग्धानि वह्निना क्वचित् ।
निरीक्ष्य स्वपुरं विप्रश्चिन्तयामास चेतसा ॥
अथ शीला विवर्णा सा दुःखिता पतिदोषतः ।
विचचार पुरों सर्व्वां शून्यागारसमन्वितां ॥
अथ कौण्डिन्यविप्रस्य संजाता बुद्धिरुत्तमा ।
ममापि दुष्कृतं कर्म्म कृतं वा मे विगर्हितं ॥
अनन्ताक्षेपदोषेण ममापि गतिरीदृशी ।
अनन्तं यत्र पश्यामि तत्र यास्यामि दुर्म्मतिः ॥
ततो जगाम कौण्डिन्यो वनं व्याघ्रादिसङ्कुलं ।
व्रतस्यान्वेषणं कर्त्तुं पादौ द्रष्टुं तथा हरेः ॥
विह्वलः स ययौ मार्गे जनजन्तुविवर्ज्जिते ।
तत्रापश्यच्च तं वृक्षं फलपुष्पसमन्वितं ॥
वर्ज्जितं पक्षिसङ्घातैः कीटैश्चैव विशेषतः ।
तमपृच्छत् त्वयानन्तः क्वचिद्दृष्टो महाद्रुम ॥
स चोवाच महाबृक्षो नानन्तं वेद्मि भो द्विज ।
ततो गच्छन् ददर्शाग्रे तृणमध्ये सवत्सिकां ॥
तृणमध्ये प्रधावन्ती न खादति न जिघ्रति ।
हे महाधेनुके ब्रूहि किमनन्तस्त्वयेक्षितः ॥
सवत्सा तमुवाचाथ नानन्तं वेद्मि हे द्विज ।
ततो गच्छन् ददर्शाग्रे वृषश्रेष्ठं वने स्थितं ॥
तमपृच्छदयं विप्रः अनन्तो वीक्षितस्त्वया ।
वृषभस्तमुवाचेदं विषण्णं ब्राह्मणं प्रति ॥
यद्यनन्तमहं जाने तदा मे गतिरीदृशी ।
ततो व्रजन् ददर्शाग्रे गर्द्दभं कुञ्जरं तथा ॥

|  |  |  |
| --- | --- | --- |
|  | वारिधान्यां तथानन्तं भगवन्तं नियोजयेत् ।<br>मण्डले पुष्पनैवेद्यं धूपवस्त्रानुलेपनं ॥<br>दत्त्वा च पूजयेद्भक्त्या अनन्तं विश्वरूपिणं ।<br>पिष्टकार्थं व्रीहिचूर्णं यवगोधूमयोश्च वा ॥<br>एतेषां प्राप्यते यत्तु तद्ग्राह्यं प्रस्थसंज्ञितं ।<br>अर्द्धं विप्राय दातव्यमर्द्धमात्मनि योजयेत् ॥<br>पूजयित्वा तथा देवं गन्धपुष्पैर्यथाक्रमं ।<br>श्रुत्वा कथां ततस्तस्य कुङ्कमाक्तं सुडोरकं ॥<br>चतुर्द्दशग्रन्थियुक्तं नारी वामकरे न्यसेत् ।<br>पुमांस्तु दक्षिणे बाहौ तदानन्तं प्रपूजयेत् ॥<br>निर्व्वर्त्त्य पूजां देवस्य पूपं भुक्त्वा यथासुखं ।<br>विसृज्य दक्षिणां दत्त्वा प्रणम्य च यथासुखं ॥<br>शीला श्रुत्वा वचस्तासां यथा ताभिरुदाहृतं ।<br>व्रतं चकार सा बाहौ बद्ध्वा डोरकमुत्तमं ॥<br>पूपप्रस्थञ्च सा कृत्वा भुक्त्वा चैव तथैव च । |  |

:नानामायाप्रचरन्तं मदगर्ज्जनदर्पितं ।

स तं दृष्ट्वा द्विजोऽपृच्छदनन्तं दृष्टवान् किमु ॥
प्रत्युत्तरमुवाचेदं नानन्तं वेद्मि हे द्विज ।
ततो व्रजन् ददर्शाग्रे रम्यं पुष्करिणीद्वयं ॥
अन्योन्यजलसंघातैर्व्वीचिभिरुपशोभितं ।
शुभैः कुमुदकह्लारैः कमलोत्पलशोभितं ॥
भ्रमरैश्चक्रवाकैश्च हंसकारण्डवैर्युतं ।
तमपृच्छत् द्विजोऽनन्तो भवतीभ्याञ्च लक्षितः ॥
पुष्करिण्यावूचतुस्तं न जानीवो हरिं क्वत्तित् ।
निपपात ततो विप्रो हाहा कृत्वा रुदन् भुवि ॥
किं करोमि क्व गच्छामि कथं पश्यामि तं विभुं ॥ * ॥
ततः कृपालुहृदयो देवेशो देवपूजितः ॥
तत्क्षणाद्भगवान् विष्णुर्द्विजप्रत्यक्षमागतः ।
वृद्धब्राह्मणरूपेण प्रोवाच वचनं द्विजं ॥
उत्तिष्ठोत्तिष्ठ विप्रेन्द्र त्यज दुःखं सुखी भव ।
अनन्तं दर्शयिष्यामि कृष्णं विष्णुं हरिं शिवं ॥
ब्राह्मणं तं समादाय पातालवर्त्मना पुरीं ।
तां पुरीं दर्शयामास ततश्चान्तर्द्दधे द्विजः ॥
स तां ददर्श कौण्डिन्यः पुरीं त्रैलोक्यदुर्ल्लभां ॥
दिव्यनारीनरैर्युक्तां मणिरत्नविभूषितां ॥
सुवर्णरचितां सर्व्वां वेष्टितां तक्षकादिभिः ।
तत्रापश्यत् स कौण्डिन्यो देवदेवमनन्तकं ॥
बिश्वरूपं जगन्नाथं चतुर्ब्बाहुं किरीटिनं ।
शङ्खचक्रगदापठ्मधारिणं गरुडध्वजं ॥
दक्षिणे विलसल्लक्ष्मीं वामे क्रीडत्सरस्वतीं ।
सप्तफणासमायुक्तं दिव्यसिंहासनेस्थितं ॥
एवं रूपं जगन्नाथं दृष्ट्वा भक्त्या स्तुतिः कृता ।
जगाम भूमौ शिरसा अनन्तस्य समीपतः ॥
नमोऽस्त्वनन्ताय सहस्रमूर्त्तये
सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते
सहस्रकोटीयुगधारिणे नमः ॥

कृपया कथयस्वाद्य पथि दृष्टो मया विभो ।
श्रीअनन्त उवाच ।
यश्चाम्रवृक्षो दृष्टो हि विप्रो विद्यासु गर्व्वितः ।
उपस्थिताय शिष्याय विद्यां यस्मान्न दत्तवान् ॥
तेन कर्म्मविपाकेन वृक्षत्वं प्राप्य तिष्ठति ।
वृषभो यस्त्वया दृष्टो लोभकर्म्मकृतः पुरा ॥
दत्तं पर्य्युषितं द्रव्यं स्वादु भुक्तं स्वयं यतः ।
वृषभत्वं समासाद्य ततस्तिष्ठति निर्ज्जने ॥
विप्राय वसुधां दत्त्वा निष्फलां शस्यवर्ज्जितां ।
तेनासौ गोत्वमासाद्य तृणमध्ये प्रधावति ॥
धर्म्माधर्म्मौ विजानीयाद्यत्तत् पुष्करिणीद्वयं ।
गर्द्दभोऽज्ञानसम्पन्नः कुञ्जरो मदगर्व्वितः ॥
ब्राह्मणोऽसावनन्तोऽहं यस्त्वया दर्शितो मुने ।
एतत्ते कथितं सर्व्वं गच्छ विप्र निजाश्रमं ॥
पुनः समृद्धिस्ते विप्र भविष्यति न संशयः ।
भुक्त्वा भोगांश्च विपुलान् संप्राश्यसि महत् पदं ॥
इति दत्त्वा वरं तस्मै तत्रैवान्तरधीयत ।
कौण्डिन्योऽपि गृहं तत्वा करोति व्रतमुत्तमं ॥

**अनन्यवृत्तिः**, त्रि, (न अन्या वृत्तिरस्य इति ।)

एकमात्रवृत्तिः । तत्पर्य्यायः । एकतानः २ एकाग्रः ३
एकायनः ४ एकसर्गः ५ एकाग्र्यः ६ एकायन
गतः ७ । इत्यमरः ॥

**अनपायी**, [न्] त्रि, (नास्ति अपायः विनाशोऽस्य

इति, न + अपाय + इनि ।) निश्चलः । अपाय-
शून्यः । अनश्वरः । यथा, --
“अनपायिभिरस्माभिर्गुप्तायाश्च गृहे प्रभो” ।
इति श्रीभागवतं ॥
(“अनपायिनि संश्रयद्रुमे गजभग्ने पतनाय वल्लरी” ।
इति कुमारे ॥)

**अनभिज्ञः**, त्रि, (अभि जानाति इति अभिज्ञः,

अभि + ज्ञा + कः, न अभिज्ञ इति नञ्समासः ।)
मूर्खः । प्रज्ञारहितः । बुद्धिहीनः । यथा, --
“धिक्त्वां चूततरो परापरपरिज्ञानानभिज्ञो भवान्”
इति भ्रमराष्टकं ॥

**अनभिलाषः**, पुं, (न अभिलाष इति नञ्समासः ।)

अरुचिः । इति राजनिर्घण्टः ॥ अनिच्छा ॥ (त्रि,
नास्ति अभिलाषो यस्य इति समासे अभिलाष-
शून्यः ।)

**अनमः**, पुं, (नमति प्रणमति इति नमः, नम् +

पचाद्यच्, न नमः अनम इति नञ्समासः ।)

अज्ञानेन मया देव यत् कृतं पापकर्म्मणा ।
तत्सर्व्वं कृपया शंस क्षमस्व मधुसूदन ॥ * ॥
अथ कौण्डिन्यविप्रस्य स्ततिं श्रुत्वा जनार्द्दनः
।
प्रसन्नो भगवान्देवश्चानन्तोऽनन्तरूपधृक् ॥
कथं मे प्रियमाख्यातमिहागच्छेति भूसुर ॥ *
॥
अनन्त उवाच ।
तुष्टोऽहं ब्राह्मणश्रेष्ठ भक्त्या तव विशेषतः ।
वरं गृहाण विप्रेन्द्र तुष्टोऽस्मि त्यज विस्मयं ॥
* ॥
कौण्डिन्य उवाच ।
स्वकर्म्मफलभोगेन यां यां योनिं व्रजाम्यहं ।
तस्यां तस्यां हृषीकेश हरिभक्तिर्दृढास्तु मे ॥
अतिप्रमादान्मोहाद्वा यन्मया दुष्कृतं कृतं ।
तदागः क्षम्यतां नाथ प्रणमामि पुनः पुनः ॥
श्रुत्वानन्तस्तु तद्वाक्यं ददौ तस्मै वरत्रयं ।
दारिद्रनाशनं धर्म्मं विष्णुलीकं तथाक्षयं ॥ * ॥
कौण्डिन्य उवाच ।
पूर्णो मनोरथो देव मम चाद्य विशेषतः ।
किञ्चित् पृच्छामि देवेश तन्मे ब्रूहि जगत्पते ॥
कश्चूतः को वृषः का गौः किन्तत्
पुष्करिणीद्वयं ।
कः खरः कुञ्जरः को वा को वा वृद्धद्विजोत्तमः
॥

अनन्ताख्यं महापुण्यं वर्षाणाञ्च
चतुर्द्दशं ।
शीलया सह धर्म्मात्मा सुखं भुक्त्वा
मनोरथान् ॥
विष्णुलोकं समासाद्य रराज शीलया
सह ।
अनन्ताख्यव्रतेनेह समाप्तेनैव पार्थिव
॥
सर्व्वपापविनिर्म्मुक्ता यास्यन्ति
परमां गतिं ।
एवमेवं हि नियमात्
स्त्रियोऽनन्तव्रतान्नृप ॥
पुत्रपौत्रधनैर्युक्ता भुक्त्वा भोगान्
मनोरथान् ।
विष्णुलोकमाप्नुवन्ति
यावच्चन्द्रदिवाकरौ” ॥
इति भविष्यपुराणे अनन्तव्रतं समाप्तं
॥

**अनन्तशीर्षा**, स्त्री, (अनन्तानि बहूनि शीर्षाणि
शिरांसि यस्याः सा ।) वासुकिपत्नी
। इति
शब्दमाला ॥

**अनन्ता**, स्त्री, (नास्ति अन्तो यस्याः सा ।) पार्व्वती ।
पृथिवी । अग्निशिखावृक्षः ।
श्यामालता । दूर्व्वा ।
पिप्प्यली । दुरालभा । हरीतकी ।
आमलकी ।
गुडुची । इति मेदिनी ॥ यवासः ।
श्वेतदूर्व्वा ।
नीलदूर्व्वा । अग्निमन्थवृक्षः । इति
राजनिर्घण्टः ॥
अनन्तमूलं । तत्पर्य्यायः । गोपवल्ली
२ काराला ३
सुगन्धा ४ भद्रवल्लिका ५ भद्रा ६
नागजिह्वा ७ ।

ब्राह्मणः । इति त्रिकाण्डशेषः ॥

**अनमितम्पचः**, त्रि, (मितं परिमितं पचति इति,
मित + पच् + खच्, न मितम्पच इति
अमित-
म्पचः, न अमितम्पच इति
अनमितम्पचः, नञ्-
समासः ।) मितम्पचः । कृपणः ।
इत्यमरटीकायां
रमानाथः ॥

**अनम्बरः**, पुं, (नास्ति अम्बरं परिधेयं यस्य सः ।)
बौद्धविशेषः । इति सिद्धान्तशिरोमणौ
गो-
लाध्यायः ॥

**अनयः**, पुं, (अयः शुभावहोविधिस्तद्भिन्नः नञ्-
समासः ।) दैवं । अशुभं । व्यसनं । विपद्
। इति
मेदिनी ॥
(“अनयो नयसम्पन्ने यत्र ते विकृता
मतिः” ।
इति रामायणे ।)

**अनर्गलं**, त्रि, (नास्ति अर्गलं प्रतिबन्धो यस्य तत् ।)
निरर्गलं । प्रतिबन्धकरहितं । तत्पर्य्यायः
। अवाधं २
उच्छृङ्खलं ३ उद्दाम ४ नियन्त्रितं ५
निरङ्कुशं ६ ।
इति हेमचन्द्रः ॥
(“ततः परं तेन मखाय यज्वना
तुरङ्गसुत्सृष्टमनर्गलं पुनः ।
इति रघुवंशे ।)

**अनर्थकं**, क्ली, (नास्ति अर्थः यस्य तत्, समासान्तः
कः ।) निरर्थकं । अर्थशून्यवाक्यं ।
तत्पर्य्यायः ।

इति रत्नमाला ॥ गोपी ८ श्यामा ९ शारिवा १० उत्पलशारिवा ११ । इत्यमरः ॥ गोप्यादि-पञ्चश्यामलतायां नागजिह्वायां इति केचित् । गोप्यादित्रयं श्यामलतायां अनन्तोत्पलशारिवेति द्वयं अनन्तमूले इति केचित् । इति तट्टीकायां भरतः ॥ तस्या गुणाः । मलबन्धकारित्वं । रक्त-पित्तनाशित्वं । शीतलत्वञ्च । इति राजबल्लभः ॥

**अनन्यगतिकः**, त्रि, (नास्ति अन्या गतिः यस्य ।

समासान्तः कः ।) गत्यन्तररहितः । एकाश्रयः ।
“अनन्यगतिके जने विगतपातके चातके
यथारुचि तथा कुरु प्रिय तथापि नान्यं भजे” ।
इत्युद्भटः ॥

**अनन्यजः**, पुं, (नास्ति अन्यत् यस्मात् सः अनन्यो

विष्णः, तस्मात् जात इति, अनन्य + जन् + ड ।) कामदेवः । इत्यमरः ॥

अबद्धं २ । इत्यमरः ॥ अबध्यं ३ । इति तट्टीका ॥

**अनलः**, पुं, (नास्ति अलः बहुदाह्यवस्तुदहनेऽपि

तृप्तिर्यस्य सः, कृत्तिकानक्षत्रे, वत्सरे भगवति वासुदेवे ।) अग्निः । वसुभेदः । इति मेदिनी ॥ चित्रकः । रक्तचित्रकः । भल्लातकः । पित्तं । इति राजनिर्घण्टः ॥

**अनलप्रभा**, स्त्री, (अनलस्य वह्नेः प्रभेव प्रभा यस्याः

:सा ।) ज्योतिष्मतीलता । इति राजनिर्घण्टः ॥

**अनलप्रिया**, स्त्री, (अनलस्य अग्नेः प्रिया षष्ठीतत् ।)

अग्निभार्य्या । आग्नेयी । इति जटाधरः ॥

**अनलिः**, पुं, (अनिति अंन् + पचाद्यच् अनः तन्मधु-

पानेन जीवनधारयिता अलिः भ्रमरो यत्र सः ।)

वकवृक्षः । इति त्रिकाण्डशेषः ॥

**अनवधानं**, क्ली, (न अवधानं मनोयोगः नञ्-

समासः ।) चित्तस्याविक्षेपः । अमनोयोगः । अ-

प्रणिधानं । इति हलायुधः ॥ तद्विशिष्टे त्रि ॥

**अनवधानता**, स्त्री, (नास्ति अवधानं मनोयोगो

यस्य सः, तस्य भावः ततस्तल् स्त्रियां टाप् ।)

मनोयोगशून्यता ।

चित्तस्यानन्यविषयाभावत्वं ।

कार्य्ये अनवहितत्वं । तत्पर्य्यायः । प्रमादः २ ।

इत्यमरः ॥

"कर्त्तव्याकरणं यत्र समर्थस्य क्वचिद्भवत् ।

उच्यते द्वितयं तत्र प्रमादोऽनवधानता" ॥

इति शब्दरत्नावली ॥

**अनवरः**, त्रि, (न अवरः, नञ्समासः ।) अकनिष्ठः ।

अन्यूनः । श्रेष्ठः । प्रधानः । यथा, --

"सोऽयमिन्द्रादनवरो वासुदेवाच्च भारत" ।

इति विराटपर्व्व ॥

**अनवरतं**, क्ली, (अव + रम् + भावे क्तः, नास्ति अव-

रतं विरतिर्यत्र तत् ।) निरन्तरं । तत्पर्य्यायः ।

सततं २ अनारतं ३ अश्रान्तं ४ सन्ततं ५ अवि-

रतं ६ अनिशं ७ नित्यं ८ अजस्रं ९ प्रसक्तं १०

("एवमप्यनवस्था स्याद् या

मूलक्षतिकारिणी" ।

इति काव्यप्रकाशे ।)

**अनवस्थानः**, पुं, (न अवस्थानमवस्थितिर्यस्य सः ।)

वायुः । इति राजनिर्घण्टः ॥

अवस्थितिशून्ये त्रि ॥

(चञ्चलः । अव्यवस्थितः ।)

**अनवस्थितिः**, स्त्री, (न अवस्थितिः अवस्थानं नञ्-

समासः ।) चापल्यं । चाञ्चल्यं ।

अस्थिरता ।

अधैर्य्यं । इति हेमचन्द्रः ॥

**अनशनं**, क्ली, (अश् भावे ल्युट्, न अशनं भोजनं,

नञ्समासः ।) भोजनाभावः । उपवासः । इति

हलायुधः ॥ तद्वति त्रि ॥ (प्रायोपवेशनं । "तदह-

मनशनं कृत्वा प्रातः प्राणानुत्सृजामि" । इति

पश्चतन्त्रे ।)

**अनश्वरं**, त्रि, (नश् + कर्त्तरि वरच् न नश्वरं, नञ्-

समासः ।) सनातनं । नित्यं । ध्रुवं ।

शाश्वतं ।

इति हेमचन्द्रः ॥

("मत्वा विश्वमनश्वरं निविशते

संसारकारागृहे" ।

इति वैराग्यशतके ।)

**अनसूया**, स्त्री, (असु कण्ड्वादित्वात् यक् + भावे अ,

स्त्रियां टाप्, न असूया नञ्समासः ।) असूया-

भावः । तस्या लक्षणं यथा वृहस्पतिः ।

योग्या कण्टकव्याप्तत्वात्, नञ्समासः ।) कण्ट-

कारीवृक्षः । इति रत्नमाला ॥

अनाक्रमणवि-

शिष्टे त्रि ॥

**अनागतं**, त्रि, (आङ् + गम् + कर्त्तरि क्तः, न आगतं

नञ्समासः ।) भविष्यत् । इति

राजनिर्घण्टः ॥

अनायातं । अनुपस्थितं । अज्ञातं ।

यथा --

("तावद्भयस्य भेतव्यं

यावद्भयमनागतं" ।

इति पञ्चतन्त्रे ।)

"अनागतादिलिङ्गेन न

स्यादनुमितिस्तदा" ।

इति भाषापरिच्छेदः ॥

**अनागतार्त्तवा**, स्त्री, (न आगतमप्राप्तमार्त्तवं स्त्री-

पुष्पविकाशनं यस्याः सा, स्त्रियां टाप् । ऋतु +

अण् ।) अप्राप्तऋतुका । अरजस्का ।

तत्पर्य्यायः ।

गौरी २ नग्निका ३ । इत्यमरः ॥

**अनाचारः**, पुं, (न कुत्सित आचारः नञ्समासः ।

नञत्र अप्राशस्त्ये अभावार्थे तु

आचाराभावः ।)

कदाचारः । अशुद्धाचारः ।

श्रुतिस्मृतिविरुद्ध-

कर्म्मकरणं । यथा, --

"सर्व्वदेशेष्वनाचारः पथि

ताम्बूलचर्व्वणं" ॥

इति स्मृतिः ॥ तद्विशिष्टे त्रि ॥

**अनातपः**, पुं, (आङ् + तप् + अच्, आतपस्य रौद्रस्या-

आसक्तं ११ अनद्धं १२ । इति जटाधरः ॥
तद्विशिष्टे वाच्यलिङ्गं । इत्यमरः ॥
("अनवरतधनुर्ज्यास्फालनक्रूरकर्म्मा" ।
इति शाकुन्तले ।)

**अनवराद्ध्यः**, त्रि, (अवरमद्ध, कर्म्मधारयः, तत्र भवः,
अवराद्ध + यत्, ततो नञ्समासः ।) उत्तमः ।
प्रधानः । इत्यमरः ॥

**अनवलम्बः**, त्रि, (नास्ति अवलम्बः आश्रयो यस्य
सः ।) अवलम्बनशून्यः । निराश्रयः । यथा, --
"न परं पथि पक्षपातिता-
नवलम्बे किमु मादृशेऽपि सा" ।
इति नैषधं ॥

**अनवसरः**, त्रि, (नास्ति अवसरः अवकाशो यस्य
सः ।) निरवकाशः । अवसराभावे पुं । यथा, --
"अतर्क्यैश्वर्य्ये त्वय्यनवसरदुःस्था
हतधियः" ।
इति महिम्नः स्तोत्रं ॥

**अनवस्करं**, त्रि, (अव अधोवर्त्मना कीर्य्यते क्षिप्यते
अव + कृ + अप्, "वर्च्चस्कोऽवस्कर इति सुडा-
गमः" नास्ति अवस्करो मलं यस्य तत् ।)
निर्म्मलं । शोधितं । इत्यमरः ॥

**अनवस्था**, स्त्री, (अव + स्था भावे अङ्, न अवस्था अव-
स्थानं नञ्समासः ।) तर्कविशेषः । तस्य लक्षणं ।
अप्रामाणिकानन्तप्रवाहमूलकप्रसङ्गत्वं ।
यथा, --
"घटत्वं यदि यावद्घटहेतुवृत्ति स्यात्
घटान्यवृत्ति
स्यात्" । इति तार्किकाः ॥ उपपाद्योपपाद-
कयोरविश्रान्तिः । इति मीमांसकाः ।
दशाभावः ।
"न गुणान् गुणिनो हन्ति स्तौति
मन्दगुणानपि ।
नान्यदोषेषु रमते सानसूया प्रकीर्त्तिता"
॥
इत्येकादशीतत्त्वं ॥ अत्रिमुनिपत्नो ।
इति गारुडे
२९ अध्यायः ॥ कर्द्दममुनिकन्या । इति श्रीभा-
गवतं ॥ असूयाशून्ये त्रि ॥

**अनहंवादी**, [न्] त्रि, (अहमिति गर्व्वं वदति यः,
अहं + वद् + णिनि, उपपदसमासः, ततो नञ्-
समासः । अहमित्यव्ययं ।) गर्व्वरहितः
।
"मुक्तसङ्गोऽनहंवादी
धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्व्विकारः कर्त्ता
सात्विक उच्यते" ।
इति श्रीभगवद्गीता । अनहंवादी
गर्व्वरहितः ।
इत्याह्निकतत्त्वं ॥

**अनहङ्कृतिः**, स्त्री, (न अहङ्कृतिः अहङ्कारः नञ्-
समासः ।) अहङ्काराभावः । तत्पर्य्यायः
। अशोचः
२ । इति त्रिकाण्डशेषः ॥ (त्रि नास्ति
अहङ्कृतिः
यस्य इति समासे अहङ्कारशून्यः ।)

**अनक्षः**, त्रि, अक्षिहीनः । अन्धः । न विद्येते
अक्षिणी यस्य इत्यर्थे ष प्रत्ययः ।
अक्षभिन्नः ॥

**अनक्षरं**, क्ली, (न सन्ति प्रशस्तानि अक्षराणि
यत्र तत् ।) दुर्व्वचनं । इति भरतः ॥
अवचनार्हं ।
इति मधुः ॥ गालिप्रभृति ।
गुणाक्षेपकदोषावि-
भावः नञ्समासः ।) रौद्राभावः ।
छाया । इति
राजनिर्घण्टः ॥ (त्रि छायाविशिष्टे ।
"खल्वाटोदिवसेश्वरस्य किरणैः
सन्तापिते मस्तके ।
वाञ्छन् देशमनातपं विधिवशात्
विल्वस्य मूलं
गतः" ॥ इति नीतिशतके ।)

**अनातुरः**, त्रि, (न आतुरः रोगी नञ्समासः ।)
अरोगी । यथा, --
"तेषामनातुराः पूर्ब्बे वातलाद्याः
सदातुराः" ।
इति चरकः । ("भेजे धर्म्ममनातुरः" ।
इति
रघुवंशे ।)

**अनाथः**, त्रि, (नास्ति नाथः आश्रयो यस्य सः ।)
प्रभुहीनः । नाथशून्यः । यथा, --
"वना वना वनाथवत् स्वजीवना
वनाभवत्" ।
इति नलोदयः ।
("नाथवन्तस्त्वया लोकास्त्वमनाथा
विपद्यसे" ।
इति उत्तरचरिते ।)

**अनादरः**, पुं, (आ + दृ + भावे अप्, न आदरः नञ्-
समासः ।) निरादरः । तत्पर्य्यायः ।
परिभवः २
परिभावः ३ तिरस्क्रिया ४ रीढा ५
अवमानना ६
अवज्ञा ७ अवहेलं ८ असूक्षणं ९ ।
इत्यमरः ॥
असुक्षणं १० असुर्क्षणं ११ असूर्क्षणं
१२ । इति
भरतः ॥ ("गुणेषु रागो
व्यसनेष्वनादरः" । इति

स्थित्यभावः ॥

ष्कारिवाक्यं । इति केचित् ॥

तत्पर्य्यायः । अवाच्यं

२ । इत्यमरः ॥

**अनक्षि**, क्ली, (अप्रशस्तमक्षि नेत्रं, नञ्समासः ।)

कुत्सितचक्षुः । तत्पर्य्यायः ।

असौम्याक्षि २ । इति

हेमचन्द्रः ॥

**अनाकुलः**, त्रि, (न आकुलः नञ्समासः ।) स्थिरः ।

एकाग्रः । अव्याकुलः । अव्यग्रः । इति

जटाधरः ।

("अनाकुलाऽविक्लवा च सुसम्भ्रान्ता

च मे मतिः" ।

इति रामायणे ।)

**अनाक्रान्ता**, स्त्री, (कैरपि न आक्रान्ता आक्रमितुम-

पञ्चतन्त्रं ।)

**अनादिः**, त्रि, (नास्ति आदिः कारणं यस्य

सः ।) आदिरहितः । उत्पत्तिशून्यः ।

स्वयम्भूः ।

यथा, --

"अनादिरादिर्गोविन्दः

सर्व्वकारणकारणं" ।

इति ब्रह्मसंहिता ॥

**अनादृतः**, त्रि, (आ + दृ + कर्म्मणि क्तः, न आदृतः

नञ्समासः ।) निरादरः । अवज्ञातः ।

अव-

मानितः । इति हेमचन्द्रः ॥

:("सव्व तस्यादृता धर्म्मा यस्यैते त्रय आदृताः ।
अनादृतास्तु यस्यैते
सर्व्वास्तस्याफलाः क्रियाः" ॥
इति मनुः ।)

**अनामकं**, क्ली, (अनम् अन् + घञर्थे कः, अनं
जीवनं आमयति, रोगग्रस्तं
करोति, अम् + णिच्
+ ण्वुल् अनस्य आमकं
षष्ठीतत्पुरुषः ।) अर्शो-
रोगः । इति शब्दरत्नावली ॥
मलमासे पुं । इति
मलमासतत्त्वं ॥ दुर्नामके
निर्नामके च त्रि ।

**अनामयं**, क्ली, (आ + अम् + भावे घञ्, आमं रुग्ना-
वस्थां याति प्राप्नोत्यनेन, आम
+ या क, आम-
यस्य अभावः अव्ययीभावः ।)
रोगाभावः आरोग्यं ।
इत्यमरः ॥
("ब्राह्मणं कुशलं पृच्छेत्
क्षत्रबन्धुमनामयं" ।
इति मनुः ।) तद्विशिष्ट त्रि ॥

**अनामा**, [न्] पुं, (नास्ति ब्रह्मशिरश्छेदनसाधन-
तया अप्रशस्तं नाम यस्य सः ।
अनया अङ्गुल्या
शिवेन ब्रह्मशिरश्छिन्नं । इति
पुराणे ।) अना-
मिकाङ्गुली । इति शब्दरत्नावली
॥

**अनामिका**, स्त्री, (नास्ति ब्रह्मशिरश्छेदनसाधनतया

**अनार्य्यः**, त्रि, (ऋ + ण्यत्, न आर्य्यः श्रेष्ठः, नञ्-
समासः ।) अश्रेष्ठः । यथा, --
"अनार्य्यजुष्टमस्वर्ग्यमकीर्त्तिकरमर्ज्जुन" ।
इति श्रीभगवद्गीता ॥

**अनार्य्यकं**, क्ली, (नास्ति आर्य्यो यत्र देशे तादृशार्य्या-
वर्त्तभिन्नदेशे भवं अनार्य्य + कन् ।)
अगुरुकाष्ठं ।
इति राजनिर्घण्टः ॥

**अनार्य्यजं**, क्ली, (नास्ति आर्य्यो यत्र देशे तादृशार्य्या-
वर्त्तभिन्नदेशे जायते यत्, अनार्य्य + जन् +
ड,
उपपदसमासः ।) अगुरु । इति हेमचन्द्रः ॥

**अनार्य्यतिक्तः**, पुं, (अनार्य्यप्रियश्चासौ तिक्तश्चेति
शाकपार्थिवादिः ।) भूनिम्बः । इत्यमरः ॥
चिराता
इति भाषा ।

**अनालोचितः**, त्रि, (न आलोचितः कर्त्तव्यतया अव-
धारितः ।) अकृतालोचनः ।
इतिकर्त्तव्यतयान-
वधारितः । अविवेचितः । यथा, --
"किं करोमि प्रतिज्ञा मे यदनालोचिता
पुरा" ।
इति देवीमाहात्म्यं ॥

**अनाविलः**, त्रि, (न आविलः, नञ्समासः ।)
आविलशून्यः । निर्म्मलः । इति हलायुधः
॥ (स्वच्छः,
स्वास्थ्यकरः ।)
("पद्मगन्धि शिवं वारि सुखं शीतमनाविलं"
।
इति रामायणे ।

गतचतुर्थचक्रं, तत् तु हृदयस्थकादिठान्तवर्ण-
युक्तोद्यदादित्यसन्निभद्वादशदलपद्माकारं,
तन्मध्ये
अयुतसूर्य्यसमप्रभशब्दब्रह्ममयबाणलिङ्गमस्ति ।
"शब्दोब्रह्ममयः शब्दोऽनाहतो यत्र दृश्यते ।
अनाहताख्यं तत्पद्मं मुनिभिः परिकीर्त्तितं" ॥

**अनाहारः**, पुं, (आ + हृ + भावे घञ् ततो नञ्-
समासः ।) भोजनाभावः । यथा, --
"ऋतावनाहारतया भयेनेति" चरकः ॥

**अनाहूतः**, त्रि, (आ + ह्वे + कर्म्मणि क्तः ततो नञ्-
समासः ।) अकृताह्वानः । अनिमन्त्रितः । यथा,
--
"अनाहूतैरेत्य प्रचुरगुणलोभेन भवतः" ।
इत्युद्भटः ॥ ह्रस्वमध्योऽपि यथा --
"अनाहुता अप्यभियान्ति सौहृदं" ।
इति श्रीभागवतं ॥

**अनिगीर्णः**, त्रि, (नि + गॄ + क्तः ततो नञ्समासः ।)
अनुक्तः । यथा, --
"विषयस्यानिगीर्णस्यान्यतादात्म्यप्रतीतिकृत्"
।
इति साहित्यदर्पणं ॥

**अनिच्छुः**, त्रि, (इष् + कर्त्तरि उ विन्दुरिच्छुरिति
सूत्रेण निपातनात् साधु ।) अनिच्छाविशिष्टः ।
अनाकाङ्क्षी । अस्पृहः । इच्छतीति इच्छुः ततो
नञ्समासः ॥

**अनित्यः**, त्रि, (नि + त्यप् ततो नञ्समासः ।)
नश्वरः । अस्थायी । जन्यवस्तु । यथा, --
"धर्म्मो नित्यः सुखदुःखेऽप्यनित्ये ।
जीवो नित्यो हेतुरस्याप्यनित्यः" ।
इति महाभारते भारतसावित्री ॥

**अनिन्दितः**, त्रि, (निदि + कर्म्मणि क्तः ततो नञ्-
समासः ।) निन्दारहितः । अगर्हितः ।
तत्पर्य्यायः ।

प्रशस्तं नाम यस्याः सा । स्त्रियां डाप् ततः स्वार्थे कन् टाप् च ।) कनिष्ठामध्यमयोर्मध्य-वर्त्त्यङ्गुली । इत्यमरः ॥ ("वस्त्रान्तानामिकाकेश-नखरोमदशास्पृशः" । इति सुश्रुते ॥)

**अनायत्तः**, त्रि, (आ + यत् + क्तः, न आयत्तः नञ्-समासः ।) अवशीभूतः । अनधीनः । यथा, -- "एतावज्जन्मसाफल्यं यदनायत्तवृत्तिता ।" इति हितोपदेशः ॥

**अनायासः**, पुं, (आ + यस् + घञ् ततो नञ्समासः ।) अक्लेशः । तस्य लक्षणं यथा । वृहस्पतिः ॥ "शरीरं पीड्यते येन सुशुभेनापि कर्म्मणा । अत्यन्तं तन्न कुर्व्वीत अनायासः स उच्यते" ॥ इत्येकादशीतत्त्वं ॥ श्रमव्यतिरेकः । यत्नाभावः । यथा, -- "अनायासेन मरणं विना दैन्येन जीवनं । अनाराधितगोविन्दचरणस्य कथं भवेत्" ॥ इति प्रामाणिकाः ॥

**अनायासकृतं**, त्रि, (अनायासेन अक्लेशेन कृतं तृतीयातत्पुरुषः ।) अनायासेन यत् क्रियते स्म तत् । विना यत्नेन कृतं । तत्पर्य्यायः । फाण्टं २ । "जाङ्गलं शस्यसम्पन्नमार्य्यप्रायमनाविलम्" । इति मनुः ।)

**अनावृतः**, त्रि, (आ + वृ + कर्म्मणि क्तः न आवृतः, नञ्समासः ।) आवरणशून्यः । अनाच्छादितः । यथा । "अनावृतत्वाद्बहिरन्तरं न ते" । इति श्रीभागवतं ॥

**अनावृष्टिः**, स्त्री, (न आवृष्टिर्वर्षणं, नञ्समासः ।) ईतिविशेषः । वर्षणाभावः । इति स्मृतिः ॥ शुका इति भाषा । ("अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः । प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः" ॥ इति प्रसिद्धम् ।)

**अनाश्यः**, त्रि, (पाणिनिमते तु नश् + णिच् कर्म्मणि यत् ततो नञ्समासः ।) नाशायोग्यः । नशधातो-र्घ्यणि नञ्समासः ॥

**अनासिकः**, त्रि, (नास्ति नासिका यस्य सः ।) नासिकारहितः । तत्पर्य्यायः । विखः २ विख्रुः ३ विग्रः ४ । इति हेमचन्द्रः ॥

**अनाहतं**, क्ली, (आ + हन् + क्तः नास्ति आहतं छेदो यस्य तत् ।) तन्त्रोक्तषट्चक्रान्तर्गतचतुर्थ-चक्रं । तत्तु हृदयस्थकादिठान्तवर्णयुक्तोद्यदादित्य-सन्निभद्वादशदलपद्माकारं । तन्मध्ये अयुतसूर्य्य-प्रणाय्यः २ साधुः ३ । इति त्रिकाण्डशेषः ॥ ("अनन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा । निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान् विवर्जयेत्" ॥ इति मनुः ॥)

**अनिपुणः**, त्रि, (न निपुणः पटुः नञ्समासः ।) अप्रवीणः । अविज्ञः । अपटुः । यथा, -- "यः शास्त्रादिष्वनिपुणः श्रद्धावान् स तु मध्यमः" । इति भक्तिरसामृतसिन्धुः ॥

**अनिमिषः**, पुं, स्त्री, (नास्ति निमिषः निमेषः चक्षु-स्पन्दनं यस्य सः ।) देवता । मत्स्यः । इत्यमरः ॥ (निमेषरहितः । स्थिरदृष्टिः । सावधानः । अप्र-मत्तः । "सुरेषु नापश्यदवैक्षताक्ष्णो-र्नृपे निमेषं निजसम्मुखे सति" । इति नैषधे ।)

**अनिमिषाचार्य्यः**, पुं, (अनिमिषाणांदेवानां आचार्य्यः गुरुः षष्ठीतत् ।) वृहस्पतिः । देवगुरुः । इति शब्दरत्नावली ॥

**अनिमेषः**, पुं, (नास्ति निमेषः चक्षुःस्पन्दनं यस्य सः ।) देवता । मत्स्यः । इति हेमचन्द्रः ॥

**अनियतं**, त्रि, (नि + यम् + क्तः, न नियतं नञ्-समासः ।) अनित्यं । अस्थायि । यथा, -- "रत्यादयोऽप्यनियते रसे स्युर्व्यभिचारिणः" । इति साहित्यदर्पणं ॥ "रिष्टं त्रिविधं मुनयो निय-तमनियतं योगजञ्च" । इति ज्योतिषं ॥

इत्यमरः ॥

**अनारतं**, क्ली, (आ + रम् + क्तः, ततो नञ्समासः ।)

अनवरतं । सततं । नित्यं ।
इत्यमरः ॥
(“अनारतं तेन पदेषु लम्भिताः ।
विभज्य
सम्यग्विनियोगसत्क्रिया” ॥
इति किराताज्जुनीये ।)

**अनारम्भः**, पुं, (आ + रभ् + भावे घञ्, ततो नञ्-

समासः ।) आरम्भाभावः ।
यथा, --
“न कर्म्मणामनारम्भान्नैष्कर्म्म्यं
पुरुषोऽश्नुते” ।
इति भगवद्गीता ॥

**अनार्जवं**, क्ली, (ऋजोर्भावः ऋजु + भावे अण्, ततो

नञ्समासः ।) रोगः । इति
राजनिर्घण्टः ॥
ऋजुत्वाभावः ।

समप्रभशब्दब्रह्मयबाणलिङ्गमस्ति । इति
तन्त्र-
सारः ॥

**अनाहतं**, त्रि, (आ + हन् + भावे क्तः, न सन्ति

आहतानि छेदक्षालनभोगा यस्य तत् ।)
नूतन-
वस्त्रं । छेदक्षालनभोगरहितवस्त्रं । इत्यमरः
॥
अगुणितं । इत्यङ्कशास्त्रं ॥ अकृताघातं ॥
(अक्षतः ।
आघातरहितः । अक्षुब्धः ।
तन्त्रोक्तषट्चक्रान्त-

**अनियमः**, पुं, (न नियमः, नञ्समासः ।) नियमा-

भावः । अनिश्चयः । अनिर्द्धारः । यथा, --

"गुरुषष्ठञ्च पादानां शेषेष्वनियमो मतः" ।

इति छन्दोमञ्जरी ॥ तद्विशिष्टे त्रि ॥

**अनिराकृतः**, त्रि, (निर् + आ + कृ कर्म्मणि क्तः,

ततो नञ्समासः ।) अनिवारितः । यथा, --

"अनिराकृततापसम्पदं

फलहीनां सुमनोभिरुज्झितां" ।

इति माघः ॥

**अनिरुद्धं**, क्ली, (नि + रुध् + भावे क्तः, नास्ति निरुद्धं

यस्मात् तत् ।) सन्दानं ।

पश्वादिबन्धनरज्जुः ।

इति त्रिकाण्डशेषः ॥

**अनिरुद्धः**, पुं, (न निरुध्यतेऽसौ नि + रुध् + कर्म्मणि

क्तः, ततो नञ्समासः ।) कामदेवपुत्त्रः ।

तत्-

पर्य्यायः । उषापतिः २ ब्रह्मसूः ३

विश्वकेतुः ४ ।

इत्यमरः ॥ स तु

भगवतश्चतुर्व्यूहान्तर्गतादिव्यूहः ।

तस्मात् सृष्टिर्भवति यथा, --

"तमसो ब्रह्मसम्भूतं तमोमूलामृतात्मकं ।

तद्विश्वभावसंज्ञान्तं पौरुषीं तनुमाश्रितं ॥

सोऽनिरुद्ध इति प्रोक्तस्तत् प्रधानं

प्रचक्षते ।

तदव्यक्तमिति ज्ञेयं त्रिगुणं नृपसत्तम ॥

विद्यासहायवान् देवो विश्वक्सेनो हरिः

प्रभुः ।

अप्स्वेव शयनञ्चक्रे निद्रायोगमुपागतः ॥

जगतश्चिन्तयन् सृष्टिं महानात्मगुणः

स्मृतः" ।

इति महाभारते मोक्षधर्म्मः ॥

व्वाच्यः । वाक्यागम्यः । यथा,

"सदसद्भ्यामनिर्व्वच-

नीयं त्रिगुणात्मकं भावरूपं ज्ञानविरोधि

यत्-

किञ्चिदिति वदन्ति" । इत्यज्ञानलक्षणे

वेदान्त-

सारः ॥

**अनिर्व्वाहः**, पुं, (निर् + वह् + भावे घञ्, ततो

नञ्समासः ।) निर्व्वाहाभावः ।

अनिष्पत्तिः ।

असङ्गतिः । यथा । मुख्यार्थबाधे तद्योगे

इति

कारिकायां मुख्यार्थस्यान्वयबाधोऽपि

तात्पर्य्य-

विषयस्यान्वयस्य

मुख्यार्थतावच्छेदकरूपेणानिर्व्वाह

एव । इति काव्यप्रकाशटीकायां महेश्वरः

॥

**अनिर्व्विण्णः**, त्रि, (निर् + विद् + क्तः, ततो नञ्-

समासः ।) निर्व्वेदशून्यः । वव्रे

निर्व्विण्णमानस

इत्यत्र निर्व्विण्णं विरक्तं इति

देवीमाहात्म्यटीका

तद्भिन्नः अविरक्तः विषयासक्त इति यावत्

॥

निर्व्विण्णोतिममत्वेन इत्यत्र निर्व्विण्णो

दुःखितः

इति देवीमाहात्म्यटीका तद्भिन्नः

अदुःखितः ॥

बहुव्रीहौ तु अतिदुःखितः ॥

**अनिर्वृतिः**, स्त्री, (नि निर्वृतिः, स्वाच्छन्द्यं, नञ्-

समासः ।) निर्वृत्यभावः । दरिद्रता ।

यथा ।

"अनिर्वृतिनिशाचरी मम गृहान्तरालं

गता" ।

समासः ।) अनभिलषितः । अवाञ्छितः ।

यथा,

"इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो

भवेत्" ।

इति साहित्यदर्पणं ॥

**अनिष्टा**, स्त्री, (इष् + क्त, + टाप्, नञ्समासः ।)

नागबला । इति राजनिर्घण्टः ॥

**अनिष्णातः**, त्रि, (नि + स्ना + कर्त्तरि क्तः, न

निष्णात इति नञ्समासः ।) अकुशलः ।

अप्र-

वीणः । अनभिज्ञः । अकृती । निपूर्ब्बात्

स्नाल

शोधने इत्यस्मात् कर्त्तरि क्ते नञ्समासः ॥

**अनिष्पन्नः**, त्रि, (पाणिनिमते तु नि + स्ना + कर्त्तरि

क्तः, निनदीभ्यां स्नातेः कौशले इति षत्वं,

ततो

नञ्समासः ।) निष्पत्तिरहितः । असमाप्तः ।

असम्पूर्णः । निर्पूर्ब्बकपदधातोः कर्म्मणि क्ते

निष्पन्नः पश्चान्नञ्समासः ॥

**अनिक्षुः**, पुं, (इक्षुसदृशः नञ्समासः, नञत्र सादृश्ये ।

"तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।

अप्राशस्त्यं विरोधश्च नञर्थाः षट्

प्रकीर्त्तिताः" ॥

इति कारिकायां ।)

इक्षुविशेषः । आनाखु । खाकडा इति

ख्यातः ।

तत्पर्य्यायः । इक्षुतुल्या २ इक्षुरालिका ३

इक्ष्वा-

लिका ४ । इति रत्नमाला ॥

**अनीकः**, पुं, क्ली, (नास्ति नीः स्वर्गप्रापको यस्मात् ।

कप्, अर्द्धर्च्चादित्बात् पुंस्त्वं क्लीवत्वञ्च ।)

युद्धं,

**अनिरुद्धः**, त्रि, (नि + रुध् + कर्म्मणि क्तः, ततो
नञ्समासः ।) रोधशून्यः । अप्रतिबद्धः । चरः ।
इति विश्वः ॥

**अनिरुद्धपथं**, क्ली, (अनिरुद्धः प्रतिबन्धरहितः पन्था
यत्र सः ।) आकाशं । इति शब्दचन्द्रिका ॥ अरुद्ध-
वर्त्म ॥

**अनिरुद्धभाविनी**, स्त्री, (अनिरुद्धस्य कामपुत्त्रस्य
भाविनी पत्नी, षष्ठीतत् ।) उषा । सा च काम-
पुत्त्रपत्नी । बाणराजकन्या । इति शब्दरत्नावलो ॥

**अनिर्णयः**, पुं, (निर् + नी + भावे अच्, ततो नञ्-
समासः ।) अनिर्द्धारः । अनिश्चयः । निर्पूर्ब्बक-
नीञ्धातोरलि नञ्समासः ॥

**अनिर्धारितः**, त्रि, (निर् + धृ + णिच् कर्म्मणि क्तः,
ततो नञ्समासः ।) अकृतनिर्धारणः । अनि-
श्चितः । यथा ।
"अनिर्धारितैकत्वानेकत्वविशेषस्य
पूर्ब्बरूपमात्रस्य व्यक्तस्य व्याधिलिङ्गत्वं" । इति
रोगपूर्ब्बरूपलक्षणे रक्षितः ॥

**अनिर्म्मलः**, त्रि, (न निर्म्मलः परिष्कृतः नञ्-
समासः ।) मलिनः । आविलः । अपरिष्कृतः ।
निर्म्मलाभावे क्ली ॥

**अनिर्म्माल्या**, स्त्री, (निर् + मल् + ण्यत् स्त्रियां टाप्,
इत्युद्भटः ॥

**अनिलः**, पुं, (अनिति जीवत्यनेन अन् + इलच् ।)
वायुः । इत्यमरः ॥ वसुविशेषः । इति मेदिनी ॥
(शरीरस्थप्राणादिवायुः । वातरोगः । स्वाति-
नक्षत्रं ।)

**अनिलघ्नकः**, पुं, (अनिलं वातरोगं हन्ति इति,
अनिल + हन् + टक् + स्वार्थे कन् ।) विभीतक-
वृक्षः । इति राजनिर्घण्टः ॥

**अनिलसखः**, पुं, (अनिलस्य सखा इति राजाहः-
सखिभ्यष्टच् इति समासान्तः टच् ।) अग्निः ।
इति हेमचन्द्रः ॥

**अनिलान्तकः**, पुं, (अनिलस्य अन्तकः ।) इङ्गुदी-
वृक्षः । इति राजनिर्घण्टः ॥

**अनिलामयः**, पुं, (अनिलः वात एव आमयः रोगः,
रूपकसमासः ।) वातरोगः । इति राजनिर्घण्टः ॥

**अनिर्लोचितः**, त्रि, (न निर्लोचित इति नञ्समासः,
निर् + लोचि + क्त ।) अनालोचितः । अविवे-
चितः । यथा, --
"अनिर्लोचितकार्य्यस्य वाग्जालं वाग्मिनो वृथा" ।
इति माघः ॥

**अनिशं**, क्ली, (निशा रात्रिः, उपचारात् व्यापार-
राहित्यम्, नास्ति निशा यस्मिन् तत्, क्रिया-
सैन्यं । इति मेदिनी ॥

**अनीकस्थः**, पुं, (अनीके युद्धे तिष्ठति, अनीक +
स्था + कर्त्तरि डः, उपपदसमासः ।) रणगतः ।
संग्रामस्थः । हस्तिशिक्षाविचक्षणः । राजरक्षकः ।
चिह्नं । वीरमर्द्दलकः । इति मेदिनी ॥ जयढाक
इति भाषा ।

**अनीकिनी**, स्त्री, (अनीको रणोऽस्ति प्रयोजनत्वेन
अस्या इति, अनीक + इनि + स्त्रियाम् ।) सैन्य-
संख्याविशेषः । तद्यथा । ६५६१ अश्वाः । २१८७
हस्तिनः । १०९३५ पदातयः । २१८७ रथाः ।
समुदायेन सप्तत्यधिकाष्टशताधिकसहस्राधिका-
युतद्वयं । २१८७० अक्षौहिणोदशमांशेयं । इत्य-
मरभरतौ ॥

**अनीचिदर्शी**, [न्] पुं, (नीचात् नीचकार्य्यात्
अन्यत्, नञ्समासः, तदेव विद्यतेऽस्य अनीच +
इन्, तादृशसत्कर्म्मशालिजनवत् पश्यति अनीची
+ दृश + णिनि, उपपदसमासः ।) बुद्धभेदः ।
इति त्रिकाण्डशेषः ॥

**अनीतिः**, स्त्री, (न नीतिः, नञ्समासः ।) दुर्नीतिः ।
अन्यायः । अत्याचारः । यथा, --
"विष्टयो व्यतिपाताश्च ये चान्येऽनीतिसम्भवाः" ।
इति वामनपुराणं ॥

**अनीशः**, पुं, (नास्ति ईशः नियन्ता यस्य सः ।)

ततो नञ्समासः ।) पृक्कानामकौषधिः । इति
शब्दरत्नावली ॥

**अनिर्व्वचनीयः**, त्रि, (निर् + वच् + कर्म्मणि अनीयः,
ततो नञ्समासः ।) निर्व्वचनायोग्यः । अनि-

विशेषणत्वे अस्य क्लीवत्वं, द्रव्यविशेषणत्वे तु
त्रिलिङ्गत्वं ।) अनवरतं । सततं । इत्यमरः ॥
(“निजमैक्षि मन्दमनिशं निशितैः क्रशितं शरीर-
मशरीरशरैः” । इति माघे ।)

**अनिश्चितः**, त्रि, (निर् + चि + कर्म्मणि क्तः, न
निश्चित इति नञ्समासः ।) निश्चयरहितः ।
अनिरूपितः । अनिर्णीतः । यथा, “कवय
आनतकन्धरचित्ताः कश्मलं ययुरनिश्चिततत्त्वाः” ।
इति श्रीभागवतं ॥

**अनिष्टः**, त्रि, (इष् + कर्म्मणि क्तः, न इष्ट इति नञ-

विष्णुः । इति तस्य सहस्रनाममध्ये पठितः ॥
ईश्वरभिन्ने त्रि । यथा, --
“अनीशो वा कुर्य्याद्भुवनजनने कः परिकरं” ।
इति पुष्पदन्तः ॥

**अनु**, व्य, उपसर्गविशेषः । अस्यार्थाः । पश्चात् ।
सादृश्यं । लक्षणं । वीप्सा । इत्थम्भावः । भागः ।

:हीनः । सहार्थः । आयामः । समीपं । परिपाटी ।

इति मेदिनी ॥ पुनरर्थः । इति मुग्धबोधटीकायां दुर्गादासः ॥

**अनुकः**, त्रि, (अनु कामयते, अनु + कन् । का-

मुकः । कामी । इत्यमरः ॥

**अनुकम्पा**, स्त्री, (अनु + कम्प् + भावे अः, स्त्रियां

टाप् ।) दया । कृपा । इत्यमरः ॥ ("भूतानुकम्पा तव चेदियं गौरेका भवेत् स्वस्तिमती त्वदन्ते" । इति रघुवंशे ।)

**अनुकम्प्यः**, त्रिः (अनुकम्पामर्हति अनुकम्पा +

अर्हार्थे यत् । अथवा अनु + कम्प् णिच् + कर्म्मणि यत् ।) तरस्वी । वेगवान् । इति हारावली ॥ कृपायोग्यः । दयापात्रं । "अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति" । इति काव्यप्रकाशः ॥ ("दुहितरमनुकम्प्यामद्रिरादाय दोर्भ्यां" ।) इति कुमारसम्भवे ।)

**अनुकरणं**, क्ली, (अनु + कृ + ल्युट् ।) अनुकारः ।

सदृशीकरणं । व्याकरणमते तत् द्विविधं । यत्रार्थ-रहितकेवलशब्दस्य सदृशकरणं तत् शब्दानु-करणं १ । यत्रार्थविशिष्टस्य सदृशकरणं तदर्थानु-

त्यर्थे णिच् पचाद्यच् ।) अप्रतिकूलः । दक्षिणः । सहायः । यथा, "मयानुकूलेन नभस्वतेरितं" । इति श्रीभागवतं ॥

**अनुकूलः**, पुं, (अनुकूलयति केवलस्वपत्नीं सुखयति,

अनुकूल + करोत्यर्थे णिच् अच् ।) पतिभेदः । तस्य लक्षणं । "सदा पराङ्गनापराङ्मुखत्वे सति स्वस्त्र्यनुरक्तत्वं" । इति रसमञ्जरी ॥ (यथा साहित्यदर्पणे, -- "एकस्यामेव नायिकायामासक्तोऽनुकूलनायकः । किन्त्वन्येऽपि जना वदन्ति सुभगोऽप्यस्याः प्रियो नान्यतो दृष्टिं निक्षिपतीति विश्वमियता मन्या-महे दुःस्थितं" ।)

**अनुकूलता**, स्त्री, (अनुकूलस्य भावः, अनुकूल +

भावे तल् स्त्रियां टाप् ।) आनुकूल्यं । तत्पर्य्यायः । दाक्षिण्यं २ । इति हेमचन्द्रः ॥ (अनुग्रहः । दया । प्रसादः । "सुहृदिव प्रकटय्य सुखप्रदां प्रथममेकरसामनुकूलतां" । इति उत्तरचरिते ।)

**अनुकूला**, स्त्री, (अनुकूल + स्त्रियां टाप् ।) दन्ती-

वृक्षः । इति राजनिर्घण्टः ॥

**अनुक्रमः**, पुं, (क्रममनुगतः, प्रादिसमासः ।) यथा-

गतमेव अभिधावलम्बने नापि तस्य भावात्" । इति पञ्चमोल्लासे काव्यप्रकाशकारः ॥

**अनुगवीनः**, पुं, (गोः पश्चात् अव्ययीभावः अनुगु +

खः, तस्य ईनः ।) गोपः । गोरक्षकः । गोः पश्चात् यथेष्टगामी । इति संक्षिप्तसारव्याकरणपरिशिष्टं ।

**अनुगमः**, पुं, (अनु + गम् + भावे अप् ।) पश्चाद्ग-

मनं । उपसर्पणं । यथा, -- "कृते तु दीयते गत्वा त्रेतायामाहुताय वै । द्वापरे याचमानाय कलौ त्वनुगमान्विते" ॥ इति स्मृतिः ॥ न्यांयमते येन रूपेण तावत्पदार्थ-ग्रहः तदेव रूपं तावत्पदार्थानुगमकं तस्य क्रिया ॥

**अनुगमनं**, क्ली, (अनु साहित्येन गमनं, अनु + गम् +

भावे ल्युट् ।) सहगमनं । यथा, "अष्टौ लोक-पाला आदित्यचन्द्रानिलाग्न्याकाशभूमिजलहृद-यावस्थितान्तर्यामिपुरुषयमदिनरात्रिसन्ध्याधर्म्माः ! यूयं साक्षिणो भवत ज्वलच्चितारोहणेन भर्तृ-शरीरानुगमनमहं करोमि" । इति शुद्धितत्त्वं ॥

**अनुगामी**, [न्] त्रि, (अनुगच्छति, अनु + गम् +

णिनि ।) कामंगामी । इति हेमचन्द्रः ॥ सह-चरः २ । पश्चाद्गामी ३ । यथा, -- "दृष्ट्वा श्रियमिवायान्तीं ब्रह्माणमनुगामिनी" । इति रामायणं ॥

**अनुग्रहः**, पुं, (अनु + ग्रह् + अप् ।) दुःखदूरकर-

णेच्छा । अनिष्टवारणपूर्ब्बकेष्टसाधनं । तत्पर्य्यायः । अभ्युपपत्तिः २ । इत्यमरः ॥ ("विजपोन्मत्तनिःस्वानामकुत्सापूर्ब्बकं हि यत् । पूरणं दानमानाभ्यामनुग्रह उदाहृतः" ॥ इत्युक्तलक्षणा दारिद्र्यादिजनितदुःखहरणेच्छा । ("महाननुग्रहो मे स्यादाज्ञप्तस्य महात्मना" । इति रामायणे ।)

**अनुचरः**, त्रि, (अनु साहित्येन चरति गच्छति,

अनु + चर + ट ।) सहचरः । सहायः । इत्य-

करणं २ । इति
गोयीचन्द्रदीकोपरि विद्यालङ्कार-
टीप्पनी ॥

**अनुकर्षः**, पुं, (अनुकृष्यते स्वसम्बद्धेन चक्रेण, अनु +
कृष + घञ् ।) रथाधःस्थितकाष्ठं
। इत्यमरः ॥
रथेर तला इति भाषा ।
रथस्याधस्तनभागे यद्द्वा-
रुधारणकाष्ठं तिष्ठति
यतोऽधश्चक्रं उपरि पट्ट-
कर्म्म यत्र चक्रं
तदनुकर्षशब्दवाच्यं । इति भरतः
।
आकर्षणं । इति मेदिनी ॥

**अनुकर्षणं**, क्ली, (अनु + कृष् + भावे ल्युट् ।) अव-
कर्षणं । आकर्षणं । इति मेदिनी
॥

**अनुकर्षा**, [न्] पुं, (अनु + कृष् + अन् ।) अनु-
कर्षः । रथाधःस्थितकाष्ठं ।
इत्यमरटीकायां
रायमुकुटः ॥

**अनुकल्पः**, पुं, (अनुकल्प्यते गौणत्वेन विधीयते,
अनु + कृप् + णिच् + अच् ।)
मुख्यकल्पादधमः ।
गौणकल्पः ।
मुख्यस्थानापन्नप्रतिनिधिः ।
यथा,
"व्रीह्यभावे नीवारैर्यजेत" ।
इत्यमरभरतौ ॥
("प्रभुः प्रथमकल्पस्य
योऽनुकल्पेन वर्त्तते ।
न साम्परायिकं तस्य
दुर्म्मतेर्विद्यते फलं" ॥

क्रमं । तत्पर्य्यायः । आनुपूर्ब्बी २
परिपाटी ३
आवृत् ४ पर्य्यायः ५ । इत्यमरः ॥
प्रतिसंक्रमणं ।
अनुक्रमणिका । यथा, --
"द्वादशे तु पुराणोक्तसर्व्वार्थानुक्रमः
कृतः ।
प्रथमस्कन्धमारभ्य प्राधान्येन
समासतः" ॥
इति श्रीभागवते १२ स्कन्धे १२
अध्यायटीकायां
श्रीधरस्वामी ॥
("कनिंष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च
।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात्"
इति याज्ञवल्क्यः ।)

**अनुक्रमणिका**, स्त्री, (अनुक्रम्यते उत्तरोत्तरं परि-
पाट्या आरभ्यतेऽनया, अनु + क्रम +
करणे ल्युट्,
स्त्रियां ङीप्, ततः स्वार्थे कन् स्त्रियां
टाप् ।)
भूमिका । ग्रन्थादेर्मूखबन्धः ।
पुराणादेरुक्तविव-
रणस्य संक्षेपेण पुनः कथनं । इति पुराणं
॥
("अनुक्रमणिकाध्यायं वृत्तान्तानां
सपर्ब्बणाम्" ।
इति महाभारते ।)

**अनुक्रोशः**, पुं, (अनु + क्रुश् + घञ् ।) करुणा । दया ।
इत्यमरः ॥ ("सौहार्दाद्वा विधुर इति वा
मय्यनु-
क्रोशबुद्ध्या" । इति मेघदूते ।)

**अनुगः**, त्रि, (अनुगच्छति, अनु + गम् + डः ।)
पश्चाद्गामी । अनुचरः । अनुसरः ।
तत्पर्य्यायः ।

मरः ॥ दासः । इति हलायुधः ॥ ("अनुचरेण
धनाधिपतेरथो" । इति भारविः ।
"पैतृकं वाञ्छतो राज्यं पार्थस्यानुचरा व्यधुः" ।
इति रामायणं ।)

**अनुच्छिष्टः**, त्रि, (उत् + शिष् + क्त, नञ्समासः ।)
उच्छिष्टभिन्नः । पवित्रः । इति हलायुधः ॥
("लक्ष्म्या निमन्त्रयाञ्चक्रे तमनुच्छिष्टसम्पदा" ।
इति रघुवंशे ।)

**अनुजं**, क्ली, प्रपौण्डरीकनामसुगन्धिद्रव्यं । इति
राजनिर्घण्टः ॥

**अनुजः**, पुं, (अनु पश्चात् जायते, अनु + जन् + ड ।)
कनिष्ठभ्राता । तत्पर्य्यायः । जघन्यजः २ कनिष्ठः ३
यवीयान् ४ अवरजः ५ । इत्यमरः ॥ कनीयान् ६
यविष्ठः ७ । इति जटाधरः । जघन्यः ८ । इति
शब्दरत्नावली ॥

**अनुजा**, स्त्री, (अनु पश्चात् जाता, अनु + जन् + ड +
स्त्रियां टाप् ।) कनिष्ठा भगिनी । यथा, --
"भ्रातस्तवानुजाताहं भुङ्क्ष्व भक्तमिदं पयः" ।
इति तिथ्यादितत्त्वं ॥

इति मनुः ।)

**अनुकामीनः**, त्रि, (कामस्य इच्छायाः सदृशं, सादृ-

श्यार्थे अव्ययीभावः, ततो

गच्छतीत्यर्थे खः तस्य

ईनः ।) कामङ्गामी ।

स्वेच्छागमनशीलः । इत्य-

मरः ॥

**अनुकारः**, पुं, (अनु + कृ + घञ् ।) सदृशीकरणं ।

सदृशरूपवेशभाषाद्याविष्करणं ।

तत्पर्य्यायः ।

अनुहारः २ । इत्यमरः ॥ उपमा

३ । इति हेम-

चन्द्रः ॥

(“भवेदभिनयोऽवस्थानुकारः स

चतुर्व्विधः” ।

इति साहित्यदर्पणे ।)

**अनुकूलः**, त्रि, (अनुकूलं करोति, अनुकूल + करो-

अन्वक् २ अन्वक्षः ३ अनुपदः ४ ।

इत्यमरः ॥

सेवकः ५ । दासः ६ । इति हलायुधः ॥

(“येषां शास्त्रानुगा बुद्धिर्न ते मुह्यन्ति

भारत” ।

इति महाभारते ।)

**अनुगतः**, त्रि, (अनुगच्छति अनु + गम् + कर्त्तरि

क्तः ।) अनुगः । आश्रितः । अधीनः ।

पश्चाद्गतः ।

यथा, --

“आगच्छद् यत्र काकुत्स्थः स्वर्गाय

समुपस्थितः ।

विमानवरकोटीभिर्देवैरनुगतस्तदा” ॥

इति रामायणं ॥ नियतः । यथा, “न च

तदनु-

**अनुजीवी**, [न्] त्रि, (अनुजीवति, अनु + जीव् +
णिनि ।) दासः । तत्पर्य्यायः । सेवकः २
अर्थी ३ ।
इत्यमरः ॥ अनुचरः । इति हलायुधः ॥
(“अनु-
जीविना पराधिकारचर्च्चा न कर्त्तव्या” ।
इति
हितोपदेशः ।)

**अनुज्ञा**, स्त्री, (अनु + ज्ञा + भावे अङ् ।) आज्ञा
।
अनुमतिः । यथा, “नाग्न्योर्न ब्राह्मणयोर्न
गुरु-
शिष्ययोरन्तरा व्यपेयात् अनुज्ञया तु
व्यपेयात्” ।
इति तिथ्यादितत्त्वं ॥

**अनुतरं**, क्ली, (अनुतीर्य्यते नदी उत्तीर्य्यते
अनेन,
अनु + तॄ + अप् ।) आतरः । तरपण्यं ।
इत्यमर-
टीकायां रायमुकुटः ॥ पाराणी कडी ।
इति
भाषा ।

**अनुतर्षः**, पुं, (अनु + तृष् + भावे घञ् ।) तृष्णा ।
अभिलाषः । मद्यपानपात्रं । इति मेदिनी
॥

**अनुतर्षणं**, क्ली, (अनु + तृष् + करणे ल्युट् ।)
चषकः ।
सुरापानपात्रं । इत्यमरः ॥

**अनुतापः**, पुं, (अनु + तप् + भावे घञ् ।) पश्चा-
त्तापः । इत्यमरः ॥ पस्तान इति भाषा ।
(“चिरसम्मोहशयनादुत्थितस्य य
आत्मनः ।
हाहाकारोऽनुतापः स्यात्
स्वकर्म्मस्मृतिसम्भवः” ॥
“पारावत खलु शिलाकणमात्रभोगी
कामी भवेदनुदिनं वद कोऽत्र हेतुः” ।
इति श्रीचैतन्यदेवः ॥

**अनुद्रुतं**, क्ली, (अनु + द्रु + क्तः ।) तालविशेषः ।
स
तु द्रुतार्द्धो मात्राचतुर्थभागो वा । यथा, --
“अर्द्धमात्रं द्रुतं ज्ञेयं द्रुतार्द्धञ्चाप्यनुद्रुतं” ।
इति शब्दरत्नावली ॥ अनुधाविते त्रि ।
यथा, --
“अनुद्रुतः संयति येन केवलं
बलस्य शत्रुः प्रशशंस शीघ्रतां” ।
इति माघः ॥

**अनुधावनं**, क्ली, (अनु + धाव् + भावे ल्युट् ।)
पश्चा-
द्धावनं । अनुसन्धानं । यथा, --
“तस्मिन् कुरङ्गशावाक्षी मुहुश्चित्तं निवारय
।
न तन्मनस्तवाधीनं वृथा तत्रानुधावनं” ॥
इत्युद्भटः ॥

**अनुनयः**, पुं, (अनु + नी + भावे अच् ।) विनयः ।
(“कथं नु शक्योऽनुनयोमहर्षे-
र्विश्राणनाच्चान्यपयस्विनीनाम्” ।
इति रघुवंशे ।) तत्पर्य्यायः । प्रणिपातः २
प्र-
णतिः ३ । इति हेमचन्द्रः ॥ (सदाचारः ।
क्रोधो-
पनयः ।
“एवं रामवचः श्रुत्वा लक्ष्मणानुनयं तथा”
।
इति रामायणं ।)

**अनुपदं**, क्ली, (अनु पश्चात् पद्यते गच्छति, अनु
+
पद् + पचाद्यच् ।) अनुगः । पश्चाद्गामी ।
इत्य
युक्तं निरुक्तं परिधेः प्रमाणं” ॥
इति सिद्धान्तशिरोमणौ गोलाध्यायः ॥

**अनुपातकं**, क्ली, (पातयति निरयं प्रेरयति, पत् +
णिच् + ण्वुल् । पातकं ब्रह्महत्यादि
तत्सदृशं
प्रादिसमासः ।
वेदनिन्दादिजन्यपापविशेषः ।
तानि च विष्णुना दर्शितानि, यथा, --
“यागस्थस्य
क्षत्त्रियस्य वैश्यस्य च
रजस्वलायाश्चान्तर्व्वत्न्याश्चा-
त्रिगोत्रायाश्चाविज्ञातस्य गर्भस्य
शरणागतस्य च
घातनं ब्रह्महत्यासमानमिति” ।)
महापातक-
सदृशपापविशेषः ।
तत् पञ्चत्रिंशत्प्रकारं, यथा, --
समुत्कर्षे मिथ्यावचनं १
तत् द्विविधं । आत्मगामि ।
असूयापूर्ब्बकपरगामि च ।
राजगामि पैशुन्यं १
पितुर्मिथ्यादोषकथनं १
एतत्त्रयं ब्रह्महत्यासमं ॥ ३
वेदत्यागः । स तु अधीतवेदविस्मरणं । १
वेदनिन्दा १
कौटसाक्ष्यं १
तद्द्विविधं । ज्ञातस्याकथनं ।
मिथ्याकथनञ्च ।
सुहृद्बधः १
स तु ब्राह्मणव्यतिरिक्तमित्रबधः ।
ज्ञानपूर्ब्बकाभ्यासेन गर्हितान्नस्य अर्थात्
अन्त्य-
जान्नस्य भक्षणं १
ज्ञानपूर्ब्बकाभ्यासेन गर्हिताद्यस्य अर्थात्
छत्रा-
कादेर्भक्षणं १

इति सद्भावे ।)

("ख्यापनेनानुतापेन तपसाध्ययनेन च ।
पापकृन्मुच्यते पापात् तथा दानेन
चापदि" ॥
इति मनुः ।)

**अनुत्तमः**, त्रि, (नास्ति उत्तमः उत्कृष्टो यस्मात् सः ।)

श्रेष्ठः । प्रधानः । इत्यमरः ॥
("श्रुतिस्मृत्युदितं धर्म्ममनुतिष्ठन् हि
मानवः ।
इह कीर्त्तिमवाप्नोति प्रेत्य चानुत्तमं
सुखम्" ।
इति मनुः ।) नञ्समासे तु अधमः ॥

**अनुत्तरं**, त्रि, (नास्ति उत्तरं प्रधानं यस्मात्, न

उत्तरं इति नञ्समासो वा ।) मुख्यं । इति
हेमचन्द्रः ॥ श्रेष्ठं । प्रतिजल्पविवर्जितं ।
प्रत्युत्तर-
हीनं । इति मेदिनी ॥ स्थिरं । इति धरणी
॥
अधः । दक्षिणदिक् । इत्यमरटीकायां
स्वामी ॥
प्रत्युत्तराभावे क्ली । यथा, "भवत्यवज्ञा
च भव-
त्यनुत्तरात्" । इति नैषधं ॥

**अनुदग्रः**, त्रि, (नास्ति उदग्रं उन्नतं यस्मात्, न उदग्रः

इति वा ।) अनुच्चः । बहुव्रीहौ तु
अत्युच्चः ॥

**अनुदात्तः**, पुं, (उत् + आ + दा + क्त, न उदात्तः

इति नञ्समासः ।) वेदगाने नीचस्वरः ।
यथा,
"उदात्तश्चानुदात्तश्च स्वरितश्च त्रयः
स्वराः" ।
इति शब्दरत्नावली ॥
("उच्चैरुदात्तः, नीचैरनुदात्तः, समाहारः
स्वरितः"
इति पाणिनिः ।)

मरः ॥ (व्य, पदस्य पश्चात् इति
अव्ययीभावे
अन्वक् । अनन्तरं । अव्यवहितोत्तरकालं
।
"अमोघाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः
।
आशिषामनुपदंसमस्पृशत्
दर्भपाटिततलेन पाणिना" ।
इति रघुवंशे ।)

**अनुपदी**, [न्] त्रि (अनुपदमन्वेष्टा अनुपद + इन् ।)

अन्वेष्टा । अन्वेषणकर्त्ता । इति हलायुधः
॥

**अनुपदीना**, स्त्री, (अनुपद + अनुपदं बद्धा इत्यर्थे

खः तस्य ईनः स्त्रियां टाप् ।)
पदायतोपानत् ।
इत्यमरः ॥ वुट् इत्यादिभाषा ।

**अनुपमः**, त्रि, (नास्ति उपमा सादृश्यं यस्य सः ।)

उपमाशून्यः । उत्तमः । इति मेदिनी ॥
(सर्व्वोत्-
कृष्टः । सादृश्यरहितः ।
"बलं प्रमाणं शक्तिश्च परैरनुपमं मम" ।
इति रामायणे ।)

**अनुपमा**, स्त्री, (नास्ति उपमा सादृश्यं यस्याः सा ।)

कुमुदनामदिग्गजयोषा । इत्यमरः ॥
सुप्रतीक-
नामदिग्गजस्त्री । "भवेदनुपमा
सुप्रतीकिन्यां
स्त्री त्रिषूत्तमे" । इति मेदिनी ॥

**अनुपातः**, पुं, (अनु + पत् + भावे घञ्, अनुरूपः

त्रैराशिकेन पातः । पाटिगणितोक्तेन
त्रैराशिकेन
युक्तः संख्यापातः ।) पश्चात्पतनं ।
पूर्ब्बाङ्कपातानु-
सारेण अपराङ्कपातः । यथा, --

एतत् षड्विधं सुरापानसमं ॥ ६
निक्षेपहरणं १
नरहरणं १
अश्वहरणं १
रजतहरणं १
भूमिहरणं १
हीरकहरणं १
मणिहरणं १
एतानि सप्त स्वर्णस्तेयसमानि ॥ ७
सपीण्डस्त्रीगमनं १
कुमारीगमनं १
अन्त्यजागमनं १
सख्युः स्त्रीगमनं १
औरसेतरपुत्रस्त्रीगमनं १
पुत्रस्यासवर्णस्त्रीगमनं १
एतानि षट् विमातृगमनसमानि ॥ ६
मातृष्वसृगमनं १
पितृष्वसृगमनं १
श्वश्रूगमनं
मातुलानीगमनं
शिष्यस्त्रीगमनं

**अनुदारः**, त्रि, (न उदार इति नञ्समासः नास्ति

उदारो यस्मात् इति वा ।) अतिशयदाता
।
अदाता । अतिमहान् । अमहान् ।
अनुगत-
दारः । यथा, "यस्मिन् प्रसीदसि पुनः स
भव-
त्युदारोऽनुदारश्च" । इति मम्मटभट्टः ॥

**अनुदिनं**, क्ली, (दिने दिने इनि वीप्सायामव्ययी-

भावः ।) प्रतिदिनं । प्रत्यहं । यथा, --

"पुरान्तरं चेदिदमुत्तरं स्यात्
तदक्षविश्लेषलवैस्तदा किं ।
चक्रांशकैरित्यनुपातयुक्त्या

:भगिनीगमन १

आचार्य्यभार्य्यागमनं १
शरणागतागमनं १
राज्ञीगमनं १
प्रव्रजितागमनं १
धात्रीगमनं १
साध्वीगमनं १
वर्णोत्तमागमनं १
एतानि त्रयोदश गुर्व्वङ्गना-
गमनसमानि ॥ १३
इति प्रायश्चित्तविवेकसङ्ग्रहः ॥ ३५

**अनुपानं**, क्ली, (अनु + पा + कर्म्मणि ल्युट् ।) औष-

धाङ्गपेयविशेषः । औषधेन सह
तत्पश्चाद्वा
पीयते यत् । यथा, --
"अनुपानविशेषेण करोति विविधान्
गुणान्" ।
इति वैद्यकं ॥

**अनुपुष्पः**, पुं, (पुष्पमनुगतः तत्पुष्पविकसनेनैव तत्प्र-

काशात् प्रादिसमासः ।) शरः । इति
शब्द-
चन्द्रिका ॥

**अनुप्रासः**, पुं, (रसाद्यनुगतत्वेन प्रकर्षेण वर्णानामासः

न्यासः, अनु + प्र + अस् + घञ् ।)
तुल्यवर्ण-
विन्यासः । यथा, --
"वर्णसाम्यमनुप्रासः" इति
काव्यप्रकाशः ॥
"वर्णावृत्तिरनुप्रासः पदे पादे
विधीयते" ।
इति काव्यचन्द्रिका । अस्य विवरणं
अलङ्कार-
अधिकारिविषयसम्बन्धप्रयोजनानि ।
वैद्यकमते
वातादिदोषाणामप्राधान्यं ॥

**अनुबन्धी**, स्त्री, (अनुबध्यते अतिनिश्वासेन व्याप्रि-

यतेऽनया, अनु + बन्ध + करणे घञ्, ततो
गौरा-
दित्वात् ङीष् ।) हिक्वा । तृष्णा । इति
मेदिनी ॥
("अनुबन्धः शिशौ दोषे पादे
मुख्यानुयायिनि ।
विनश्वरे प्रकृत्यादौ प्रवृत्तस्यानुवर्त्तने ॥
अनुबन्धी तु हिक्वायां तृष्णायामपि
योषिति" ।
इति मेदिनी ।)

**अनुबोधः**, पुं, (अनु + बुध् + णिच् + भावे अच् ।)

गन्धोद्दीपनं न्यूनपूर्ब्बगन्धस्य चन्दनादेः
प्रयत्न-
विशेषेण पुनः पूर्ब्बसौगन्धोत्पादनं ।
तत्पर्य्यायः ।
प्रबोधनं २ । इत्यमरः ॥ पश्चाद्बोधः ॥

**अनुभवः**, पुं, (अनु + भू + भावे अप् ।) स्मृतिभिन्न-

ज्ञानं । अनुमानादि । धारावाहिज्ञानं ।
तत्प-
र्य्यायः । उपलम्भः २ इत्यमरः ॥

**अनुभावः**, पुं, (अनुभावयति बोधयत्यनेन, अनु + भू

+ णिच् करणे अच् ।) प्रभावः । कोषदण्डजं
तेजः । सतां मतिनिश्चयः । सतां
अभिप्रायस्य
निश्चयः । निश्चयमात्रेऽपि । भावबोधकः ।
रत्यादि-
सूचकगुणक्रियादिः । स च
लोचनचातुर्य्यभ्रूक्षेप-
निधायोरसि संशुद्धा प्रविशेत् जातवेदसं" ॥
इति ब्रह्मपुराणं ॥ ब्राह्मण्या निषेधमाह,
स्मृतिः ।
"पृथक् चितिं समारुह्य न विप्रा गन्तुमर्हति"
॥
सहमरणं । मृतभर्त्रा सह ज्वलच्चितारोहण-
पूर्ब्बकं स्त्रिया मरणं । यथा, --
"भर्त्रानुमरणं काले याः कुर्व्वन्ति तथाविधाः
।
कामात्क्रोधाट्भयान्मोहात्सर्व्वाः पूता
भवन्ति ताः" ॥
इति महाभारतं ॥

**अनुमा**, स्त्री, (अनु + मा + भावे अङ् ।) अनु-

मितिः । अनुमानं । इति त्रिकाण्डशेषः ॥

**अनुमानं**, क्ली, (अनु + मा + ल्युट् ।) अनुमिति-

करणं । अनुमितिः । इति चिन्तामणिः ॥
तत्पर्य्या-
यः । अनुमा २ इति त्रिकाण्डशेषः ॥

**अनुमानोक्तिः**, स्त्री, (अनुमानेन उक्तिः कथनं तत्-

पुरुषः ।) तर्कः । ऊहः । इति हलायुधः ॥

**अनुमितिः**, स्त्री, (अनु + मा + क्तिन् ।) अनुभव-

विशेषः ।
व्याप्तिविशिष्टपक्षधर्म्मताज्ञानजन्यज्ञानं ।
यथा, -- "धूमदर्शनाद्वह्निमान् पर्व्वत
इत्याकार-
ज्ञानं । अस्या व्यापारकारणं परामर्शः ।
अस्याः
कारणं व्याप्तिज्ञानं" । इति भाषापरिच्छेदः ॥

**अनुमोदितं**, त्रि, (अनु + मुद् + णिच् + कर्म्मणि

क्तः ।) कृतानुमोदनं । अनुमतं । यथा, --
"भवता यद्व्यवसितं तन्मे साध्वनुमोदितं" ।
इति श्रीभागवतं ॥

शब्दे द्रष्टव्यम् ॥ ("वर्णसाम्यरूपः शब्दालङ्कार-
विशेषः, अत्र वर्णानामेव सादृश्यं ज्ञेयं, स्वर-
मात्रेऽपि सादृश्यं वैचित्र्याभावात् न गणितं । स
तु पञ्चविधः, छेकानुप्रासो वृत्त्यनुप्रासः श्रुत्यनु-
प्रासोऽन्त्यानुप्रासो लाटानुप्रासश्चेति । अनुप्रासः
शब्दसाम्यं वैषम्येऽपि स्वरस्य यत्" । इति सा-
हित्यदर्पणे ।)

**अनुप्लवः**, पुं, (अनु साहित्येन प्लवते गच्छति, अनु +
प्लु + पचाद्यच् ।) सहायः । अनुचरः । इत्यमरः ॥
("सानुप्लवः प्रभुरपि क्षणदाचराणाम्" । इति
रघुवंशे ।)

**अनुबन्धः**, पुं, (अनु + बन्ध् + यथासम्भवं भावादौ
घञ् ।) दोषोत्पत्तिः । प्रकृत्यादिः । आदिशब्देन
प्रत्ययागमादेशाः । विनश्वरः । उच्चरितप्रध्वंसी
इत्संज्ञको वर्णः ॥ मुख्यानुयायिशिशुः । विवाहा-
मन्त्रणयात्रादिषु मुख्यं पित्रादिकमनुयाति यः ।
मुख्यानुयायी शिशुश्चेति द्वयं स्वतन्त्रमिति स्वामी ।
प्रकृतस्यानुवर्त्तनं । प्रक्रान्तस्य अनिवर्त्तनं । इत्य-
मरभरतौ ॥ दोषोत्पादे यथा, --
"अनुबन्धं बुद्ध्वास्य दण्डो विधीयतामिति" ।
मुखरागादिरूपः । एवमन्यत्रापि ।
इत्यमरभरतौ ॥
(स्थिरता । निर्द्धारः । अवश्यम्भाविता ।
तेजः ।
यथा, --
"नरपतिकुलभूत्यैर्गर्भमाधत्त राज्ञी
गुरुभिरभिनिविष्टं लोकपालानुभावैः" ।
इति रघुवंशे ।)

**अनुभूतिः**, स्त्री, (अनुभवनं अनु + भू + क्तिन् ।)
अनुभवः । सा चतुर्व्विधा । प्रत्यक्षं १ अनुमितिः २
उपमितिः ३ शाब्दबोधः ४ । इति भाषा
रिच्छेदः ॥

**अनुभूताद्यविस्मृतिः**, स्त्री, (अनुभूतादीनिव्याकरणा-
दीनां पदपदार्थप्रभृतीनि न विस्मर्य्यन्तऽनया, न
+ वि + स्मृ + करणे क्तिन् ।) संस्कारः । अनु-
भूतानां स्मृतानाञ्च अविस्मृतिर्यस्मात् स भाव-
नाख्यसंस्कार इति यावत् ॥

**अनुमतकर्म्मकारी**, [न्] त्रि, (अनुमतमनुज्ञातं
कर्म्म कर्म्मधारयः, तत्करोति यः अनुमतकर्म्म +
कृ + णिनि उपपदसमासः ।) लिखितपत्राद्यनु-
सारेण कर्म्मकर्त्ता । आज्ञया कार्य्यकर्त्ता च ॥ इति
व्यवहारकाण्डं ॥ अछी इति आरवी भाषा ।

**अनुमतिः**, स्त्री, (अनु + मन् + भावे क्तिन् । कला-
हीनत्वेऽपि पूर्णिमाविहितयागादिकरणाय अनु-
ज्ञायतेऽस्यां अनु + मन् + अधिकरणे क्तिन् ।)
("गान्धर्व्वेण विवाहेन बह्व्योऽथ मुनिकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चानुमोदिताः" ॥
इति शाकुन्तले ।)

**अनुयायी**, [न्] त्रि, (अनुयाति पश्चात् गच्छति,
अनु + या + णिनि ।) सदृशः । पश्चाद्गामी ।
यथा । मुख्यानुयायिनि शिशावित्यनुबन्धशब्दार्थे
अमरः ॥

**अनुयुक्तः**, पुं, (अनु + युज् + क्तः ।) भृतकाध्येता ।
इति महाभारतं । (अभियुक्तः । निन्दितः । जिज्ञा-
सितपदार्थः । कृतप्रश्नः ।)

**अनुयोक्ता**, [ऋ] पुं, (अनु + युज् + तृच् ।) भृत-
काध्यापकः । इति महाभारतं ॥ (प्रश्नकर्त्ता ।)

**अनुयोगः**, पुं, (अनु + युज् + घञ् ।) प्रश्नः । इत्यमरः ॥

**अनुयोगकृत्**, पुं, (अनुयोगं प्रश्नविषयसन्देहं कृन्तति
छिनत्ति, अनुयोग + कृत् + क्विप् ।) आचार्य्यः ।
इति हेमचन्द्रः ॥

**अनुयोजनं**, क्ली, (अनु + युज् + णिच् + ल्युट् ।) प्रश्नः ।
इति हेमचन्द्रः ॥

**अनुयोज्यं**, त्रि, (अनुयुज्यते नियुज्यते, अनु +
युज् + शक्यार्थे ण्यत् ।) निन्दार्हं । अनुपूर्ब्बक-
निन्दार्थयुजधातोः कर्म्मणि यप्रत्ययः ॥ (प्रष्टव्यः ।
जिज्ञास्यः ।
"ममेदमिति यो ब्रूयात् सोऽनुयोज्यो यथाविधिः"

विनश्वरे यथा । औट् टकारानुबन्धे लोपः ॥
प्रकृतस्यानुवर्त्तने यथा ।
भोक्तुमनुबन्धः कृतः ।
शिशौ यथा । "बालकानुबन्धेन यात्राभङ्गो
माभूत्" । इत्यमरटीकासारसुन्दरी ॥ * ॥ बन्धः ।
इति मेदिनी ॥ आरम्भः । इति शब्दरत्नावली ॥
लेशः । इति त्रिकाण्डशेषः ॥ * ॥ वेदान्तमते

सम्मतिः । अनुज्ञा । न्यूनेन्दुकला पूर्णिमा । चतु-
र्द्दशीयुक्ता पूर्णिमा । इति मेदिनी ॥
("कुह्वै चैवानुमत्यै च प्रजापतय एव च ।
सहद्यावापृथिव्योश्च तथा
स्विष्टकृतेऽन्ततः" ॥
इति मनुः ।)

**अनुमरणं**, क्ली, (अनु + मृ + भावे ल्युट् ।) पश्चा-

न्मरणं । भर्त्तरि मृते तत्पादुकादिकमादाय ज्वल-
च्चितारोहणपूर्ब्बकं स्त्रिया मरणं । यथा --
"देशान्तरमृते पत्यौ साध्वी तत्पादुकाद्वयं ।
इति मनुः ।)

**अनुरक्तः**, त्रि, (अनु + रन्ज + कर्त्तरि क्तः ।) आ-

सक्तः । अनुरागयुक्तः । यथा, --
"अनुरक्तो गुणान् ब्रूते विरक्तो दूषणानि च" ।
इत्युद्भटः ॥

**अनुरञ्जनं**, क्ली, (अनु + रन्ज + भावे ल्युट् ।)

अनुरागः । हर्षजननं । यथा, -- विश्वेषामनु-
रञ्जनेन जनयन्नानन्दमिन्दीबरेति जयदेवः ॥
(प्रीतिजननं । आह्लादनं । आराधनं । "युक्तः
प्रजानामनुरञ्जने स्यास्तस्मात् यशो यत् परमं
धनं
वः" । इति उत्तरचरिते ।)

**अनुरतः**, त्रि, (अनु + रम् + कर्त्तरि क्तः ।) अनु-

रागविशिष्टः । प्रीतः । अनुरक्तः । अनुपूर्ब्बरम-
धातोः कर्त्तरि क्तः ॥
("धर्म्मानुरतमत्यर्थं शान्तं सूनृतभाषिणम्" ।
इति भारते) ॥

**अनुरतिः**, स्त्री, (अनु + रम् + भावे क्तिन् ।) अनु-

रागः । इति हेमचन्द्रः ॥

**अनुरागः**, पुं, (अनु + रन्ज + भावे घञ् ।) प्रीतिः ।

आसक्तिः । तत्पर्य्यायः । रतिः २ रागः ३
अनु-
तिः ४ । इति हेमचन्द्रः ॥
("कण्टकितेन प्रथयति मय्यनुरागं कपोलेन" ।
इति शाकुन्तले ।)

**अनुरागी**, [न्] त्रि, (अनु + रन्ज + कर्त्तरि घिनुण

कुत्वं निपातनात् नलोपश्च ।) अनुरागविशिष्टः
।
अनुरक्तः । इति शब्दरत्नावली ॥

**अनुराधा**, स्त्री, (राधां विशाखामनुगता, कुगति-

प्रादयैति सूत्रेण समासः ।) सप्तदशनक्षत्रं ।
तस्या रूपं । सर्पाकृतिसप्ततारामयं । इति
कालि-
दासः । "बलिनिभताराचतुष्टयात्मकं" । इति
दीपिकाटीका ॥ अस्या अधिदेवता मित्रः । तत्र
जातफलं । यथा, --
"सत्कीर्त्तिकान्तिश्च सदोत्सवः स्या-
ज्जेता रिपूणाञ्च कलाप्रवीणः ।
वेति अच् ।) यथाक्रमं । अविलोमः ।
यथा, --
"वर्णमाला समाख्याता
अनुलोमविलोमिका" ।
इति तन्त्रसारे नारदवचनं ॥
(क्रमानुगतः । अनु-
कूलः ।
"जडानप्यनुलोमार्थान् प्रवाचः
कृतिनां गिरः" ।
इति शिशुपालबधे ।)

**अनुलोमजः**, त्रि, (अनुलोमेन यथाक्रमेण जातः,

अनुलोम + जन + डः,
उपपदसमासः) । अनु-
लोमजातः । अप्रतिलोमजः । यथा ।
ब्राह्मणात्
क्षत्रियागर्भजातः । क्षत्रियात्
वैश्यायां जातः ।
इत्यादि उत्तमादधमायां जातः । यथा,
--
"सङ्कीर्णयोनयो ये तु
प्रतिलोमानुलीमजाः ।
अन्योऽन्यव्यतिषक्ताश्च तान्
प्रवक्ष्याम्यशेषतः" ॥
इति मनुः ॥

**अनुवत्सरः**, पुं, (अनुकूलोवत्सरः, दानादिविशेषाय ।)

वर्षः । इति हेमचन्द्रः ॥
संवत्सरादिपञ्चकान्तर्गत-
वत्सरविशेषः । अस्मिन् वर्षे
धान्यदाने महाफलं ।
शकाब्दात् पञ्चभिर्हृते यः शेषस्तिष्ठति
तेन
एकादिक्रमेणसं-परि-इदा-अनु-उदा-
पूर्ब्बकवत्सर-
संज्ञका वत्सरा भवन्ति । इति
मलमासतत्त्वं ॥
सिंहावलोकितो यथा । वावगोर्दान्ते
इत्यस्मात्
दान्त इति पदस्य
ऋक्यगित्यन्तेषूपस्थितिः ॥
मण्डूकप्लुतिर्यथा । टा भिस् ङे
ङसीत्यस्मात्
अत इति पदस्य
आक्तिमभवीत्यत्रोपस्थितिः ॥
गङ्गास्रोतो यथा । लेः सि औ
जसित्यस्मात्
लेरिति पदस्य तद्धितपर्य्यन्तेषूपस्थितिः
॥ इति
मुग्धबोधटीकायां दुर्गादासः ॥ (अनुवर्त्तनं
। अनु-
सरणं । अनुमोदनं । अनुरञ्जनं ।
"अमङ्गलाभ्यासरतिं विचिन्त्यतं
तवानुवृत्तिं न च कर्त्तुमुत्सहे" ।
इति कुमारसम्भवे । अनुकरणं । "यासां
सत्यपि
सद्गुणानुसरणे दोषानुवृत्तिः परा" । इति
सा-
हित्यदर्पणे ।
"कान्तानुवृत्तिचातुर्य्यमपि अनुशिक्षितं
वत्सेन" ।
इति उत्तरचरिते ।)

**अनुव्रजनं**, क्ली, (अनु + व्रज + भावे ल्युट् ।) अनु-

व्रज्या । गृहागतानां शिष्टानां गमनसमये
किय-
द्दूरपर्य्यन्तपश्चाद्गमनरूपशिष्टाचारः ।
आग वा-
डान इति भाषा । यथा, --
"आयान्तमग्रतो गच्छेत् गच्छन्तं
तमनुव्रजेत्" ।
इति तन्त्रसारे निगमकल्पद्रुमः ॥

**अनुशयः**, पुं, (अनु + शी + भावे अच्, शयं हस्त-

स्यात्सम्भवे यस्य किलानुराधा
सम्पत्प्रमादौ विविधौ भवेतां ॥”
इति कोष्ठीप्रदीपः ॥

**अनुरूपः**, त्रि, (रूपमनुगतः प्रादिसमासः ।) तुल्य-
रूपः । सदृशः । यथा, --
“देबानामनुरूपा हि चरन्त्येते महीतले” ।
इति रामायणं ॥ (तुल्यगुणः । योग्यः ।
“तस्यामात्मानुरूपायामात्मजन्मसमुत्सुकः” ।
इति रघुवंशे ।) ॥

**अनुरोधः**, पुं, (अनु + रुध् + घञ् ।) आराध्या-
देरिष्टसम्पादनं । उपरोधः । (“तदनुरोधात्
कठोरगर्भामपि बधूं जानकीं विमुच्य गुरुजन-
स्तत्र गतः” । इति उत्तरचरिते ।) तत्पर्य्यायः
।
अनुवर्त्तनं २ । इत्यमरः ॥

**अनुलापः**, पुं, (अनु वारं वारं लपनं, अनु + लप् +
भावे घञ् ।) पुनः पुनः कथनं । पुनरुक्तिः ।
इत्यमरः ॥

**अनुलेपनं**, क्ली, (अनु + लिप् + भावे ल्युट् ।) पात्रे
गन्धद्रव्यादिलेपनं । तद्द्रव्यञ्च । तस्य गुणाः ।
प्रीत्योजःशुक्रवृद्धिकारित्वं ।
घर्म्मदौर्गन्ध्यतन्द्रा-
तापश्रमनाशित्वञ्च । इति राजवल्लभः ॥
(“निर-
स्तमाल्याभरणानुलेपनाः” । इति ऋतुसंहारे
।)

**अनुलोमः**, पुं, (अनुपूर्ब्बात् लोमशब्दात् अच्, प्रत्यन्व-

**अनुवर्त्तनं**, क्ली, (अनु + वृत् + भावे ल्युट् ।) अनु-
रोधः । इत्यमरः ॥ व्याकरणमते
पूर्ब्बलक्षण-
स्थितषदादेरनुवृत्तिः ॥ (पश्चाद्गमनं
। अनुसरणं ।
“इदानीं तदाज्ञानुवर्त्तनं उचितम्” ।
इति हि-
तोपदेशः ।)

**अनुवाकः**, पुं, (अनूच्यते अनु + वच् + घञ्, कुत्वं ।)
ऋग्यजुःसामसमूहः । इत्यमरः ॥
वेदविशेषः ।
इति सुभूतिः ॥ (“जेतुं जैत्रानथ खलु
जपन् सूक्त-
सामानुवाकान्” । इति महावीरचरिते
।)

**अनुवादः**, पुं, (अनु + वद् + घञ् ।) कुत्सितार्थवाक्यं ।
इति शब्दरत्नावली ॥ पुनरुक्तिः ।
उक्तस्य पुनः-
कथनं । यथा, --
“विरोधे गुणवादः
स्यादनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा
मतः” ॥
इति शुद्धितत्त्वटीका ॥
वाचारम्भनमात्रं । यथा, --
“विनानुवादं न च तन्मनीषितं
सम्यग्यतस्त्यक्तमुपाददत् पुमान्” ।
इति श्रीभागवतं ॥

**अनुवासनं**, क्ली, (अनु + वास + सौरभ्ये भावे ल्युट् ।)
स्नेहनं । धूपनं । इति हेमचन्द्रः ॥
स्नेहवस्तिः ।
यथा, --
“अथानुवासनं
स्नेहवस्तिधूपनयोरपि” ।

मनुगतः प्रादिसमासः, हस्तानुगते त्रि ।)
दीर्घ-
द्वेषः । पूर्ब्बवैरता । अनुतापः । इत्यमरः
। (“अनु-
शयादनुरोदिमि चोत्सुकः” ।
“अनुशयदुःखायेदं
हतहृदयं सम्प्रति विबुद्धम्” । इति
शाकुन्तले ।)
द्वेषः । अनुबन्धः । इति मेदिनी ॥ (क्रोधः
। पश्चा-
त्तापादिकारणात् विप्रतिपत्तिः । यथा, --
“क्रयविक्रयानुशयो विवादः
स्वामिपालयोः” ।
इति मनुः ।)

**अनुशयाना**, स्त्री, (अनु + शी + शानच्, अनुताप-
कर्त्तरि त्रि ।) परकीयान्तर्गतनायिकाभेदः
।
तस्या लक्षणं । इष्टहानिजनितानुतापवती
। सा
त्रिधा । वर्त्तमानसङ्केतस्थानविघट्टनेन १
भावि-
सङ्केतस्थानाभावशङ्कया २
स्वानधिष्ठितसङ्केतस्थाने
भर्त्तुर्गमनानुमानेन ३ । इति रसमञ्जरी ॥

**अनुशयी**, स्त्री, (अनुशय्यते अनुतप्यतेऽनया, अनु +
शी + अच्, गौरादित्वात् ङीष् ।)
क्षुद्ररोगान्त-
र्गतपादरोगविशेषः । तस्य लक्षणं ।
यथा, --
“गम्भीरामल्पसंरम्भां सवर्णामुपरिस्थितां
।
पादस्यानुशयीं तान्तु
विद्यादन्तःप्रपाकिनीं” ॥
इति माधवकरः ॥ तच्चिकित्सा यथा, --
“हरेदनुशयीं वैद्यः क्रियया
श्लेष्मविद्रधेः” ।

इति मेदिनी ॥

“द्विधा वस्तिः परिज्ञेयो

निरूहश्चानुवासनं ।

कषायाद्यैर्निरूहः स्यात्

स्नेहाद्यैरनुवासनं” ॥

इति वैद्यकं ॥

**अनुवृत्तिः** स्त्री, (अनु + वृत् + क्तिन् । अनुवर्त्तनं ।

अनुरोधः । इति । हेमचन्द्रः ।

व्याकरणमते, --

“पूर्ब्बसूत्रस्थितपदस्य

परसूत्रेषूपस्थितिः” । तत्प-

र्य्यायः । अधिकारः २ । सा त्रिविधा

यथा, --

“सिंहावलोकिताख्यश्च

मण्डूकप्लुतिरेव च ।

गङ्गास्रोत इति ख्यातः

अधिकारास्त्रयो मताः” ॥

इति भावप्रकाशः ॥

**अनुशयी**, [न्] त्रि, (अनु + शी + इनि ।) दण्ड-

वत्प्रणामैश्चरणमूले शेते यः । यथा । “यं संपद्य

जहात्यजामनुशयी सुप्तः कुलायं यथा” । इति

श्रीभागवतं ॥ (अत्यर्थमासक्तः ।

अनुरक्तः । पश्चा-

त्तापयुक्तः । अनुशोचनपरः ।)

**अनुशरः**, पुं, (अनुशृणाति हिनस्ति, अनु + शृ +

पचाद्यच् ।) राक्षसः । इति शब्दमाला ॥

**अनुशासनं**, क्ली, (अनु + शास् + भावे ल्युट् ।) आ-

देशः । आज्ञा । यथा, --

"इत्येते ब्रह्मणः पुत्त्रा

आश्रुत्यात्मानुशासनं" ।

इति श्रीभागवतं ॥ व्युत्पादनं । यथा

नामलिङ्गानु-

शासनमित्यमरः ॥ (उपदेशः ।

नियोगकरणं ।

"अहिंसयैव भूतानां कार्य्यं

श्रेयोनुशासनम्" ।

इति मनुः ।)

**अनुशीलनं**, क्ली, (अनु पौनःपुन्येन शीलनमभ्यासः,

अनु + शीलि + भावे ल्युट् ।)

पुनःपुनरभ्यासः ।

मुहुः सेवनं । यथा, --

"आनुकूल्येन कृष्णानुशीलनं

भक्तिरुत्तमा" ।

इति भक्तिरसामृतसिन्धुः ॥

**अनुशोचनं**, क्ली, (अनु + शुच् + भावे ल्युट् ।)

अनुशोचना । तत्पर्य्यायः । मन्युः २

शोकः ३

शुक् ४ । इति जटाधरः ॥

**अनुषङ्गः**, पुं, (अनु + सन्ज + भावे घञ् ।) कारुण्यं ।

दया । इति हलायुधः ॥

एकत्रान्वितपदस्यान्य-

त्रान्वयः । यथा ।

कोषोबलञ्चापहृतमित्यादौ

बलान्वितापहृतस्य कोषेऽन्वयः ॥ न्याये

उपनय-

स्थायम्पदस्य निगमनेऽनुषङ्गः । यथा ।

बह्निर्व्याप्य-

धूमवांश्चायं तस्माद्वह्निमान् ॥ प्रसङ्गः ।

अन्योद्देशेन

**अनुसन्धानं**, क्ली, (अनु + सम् + धा भावे ल्युट् ।)

अन्वेषणं । चेष्टा ।

इत्यादिकाव्यानुसन्धानबला-

दिति काव्यप्रकाशः ॥

**अनुसारः**, पुं, (अनु + सृ + भावे घञ् ।) अनुसरणं ।

अनुयानं । अनुक्रमः । यथा, --

"अथ लौहविधिं वक्ष्ये लौहशास्त्रानुसारतः"

।

इति वैद्यकसुखबोधः ॥

**अनुहार**, पुं, (अनु + हृ + घञ् ।) अनुकारः । सदृशी-

करणं । सदृशरूपवेशभाषाद्याविष्करणं ।

इत्य-

मरः ॥ उपमा । इति हेमचन्द्रः ॥

("तद्रूपाननुहारस्तु हेतौ सत्यप्यतद्गुणः" ।

इति साहित्यदर्पणे ।)

**अनुक्षणं**, क्ली, (क्षणे क्षणे वीप्सायामव्ययीभावः ।)

प्रतिक्षणं । सर्व्वदा । अनवरतं । क्षणशब्दस्य

वीप्सार्थानुपसर्गेणाव्ययीभावसमासः ॥

**अनूकं**, क्ली, (अनु + उच् + घञर्थे कः, न्यङ्क्वादीनाञ्च

इति कुत्वम् ।) कुलं । वंशः । शीलं ।

स्वभावः ।

इति मेदिनी ॥

**अनूकः**, पुं, (अनु + उच् + घञर्थे कः, न्यङ्क्वादीनाञ्च

इति कुत्वम् ।) गतजन्म । पूर्ब्बजन्म । इति

मेदिनी ॥

(वंशः । कुलं । स्वभावः । शीलं ।

"अनूकं तु कुले शीले पुंसि स्यात्

गतजन्मनि" ।

इति मेदिनी ।)

**अनूचानः**, पुं, (अनु + ब्रु + लिट् तस्य कानच् ।)

**अनूनकं**, त्रि, (नऊनं, नञ्समासः, ततः स्वार्थे कन् ।)

सकलं । पूर्णं । अखण्डं । इत्यमरः ॥

**अनूपं**, त्रि, (अनुगता आपोऽत्र, समासान्त अच्,

अस्य उत्वं ।) जलबहुलदेशः ।

जलप्लावितस्थानं ।

तत्पर्य्यायः । जलप्रायं २ । इत्यमरः ॥

अस्य गुणाः ।

शीतलत्वं । स्निग्धत्वं ।

वातश्लेष्मकारित्वं । गुरुत्वञ्च ।

इति राजवल्लभः ॥ एतद्देशीयजलगुणाः ।

गुरुत्वं ॥

घनत्वं । पिच्छिलत्वं । मधुरत्वं ।

श्लेष्मजनकत्वं ।

स्निग्धत्वं । अग्निनाशित्वं ।

प्रमेहगलगण्डश्लीप-

दच्छर्द्दिप्रभृतिरोगकारित्वञ्च । इति

राजनिर्घण्टः ।

**अनूपः**, पुं, (अनुगता आपोऽत्र, प्रादिभ्यो धातुजस्य

वाच्योवाचोत्तरपदलोपश्चेति बहुव्रीहिः)

महिषः ।

इति त्रिकाण्डशेषः ॥ (जलप्रायः ।

जलबहुलः ।

बह्वम्बुयुक्तः । "अनूपो महिषे

नाम्बुप्रायदेशे तु

वाच्यवत्" । इति मेदिनी ॥)

**अनूपजं**, क्ली, (अनूपे जलप्रायदेशे जायते, अनूप +

जन् + डः उपपदसमासः ।) आर्द्रकं ।

इति राज-

निर्घण्टः ॥

**अनूपदेश**, पुं, (अनूपः जलप्रायः देशः कर्म्मधारयः ।)

जलप्रायदेशः । तस्य लक्षणं यथा, --

प्रवृत्तावन्यस्यापि सिद्धिः । यथा, --
"नित्यक्रियां तथा चान्ये ह्यनुषङ्गफलां श्रुतिं" ।
इति स्मृतिः ॥

**अनुष्टुप्**, [भ्] स्त्री, (अनु सततं स्तुभ्यतेऽनया, अनु + स्तुन्भ + क्विप् षत्वं ।) सरस्वती । इति शब्दरत्नावली ॥ अष्टाक्षरपदं छन्दः । सा तु समार्द्धसमविषमवृत्तभेदेन त्रिधा तत्र शेषस्य प्रायिकप्रयोगः । तस्य लक्षणं ।
"पञ्चमं लघु सर्व्वत्र सप्तमं द्विचतुर्थयोः ।
गुरु षष्ठन्तु पादानां शेषेष्वनियमो मतः" ॥
इति छन्दोमञ्जरी ॥ अस्याः प्रस्ताराः २५६ । इति पिङ्गलः ॥

**अनुष्ठानं**, क्ली, (अनु + स्था + भावे ल्युट्) । कर्म्मारम्भः । करणं । यथा, --
"कृता श्रीभवदेवेन कर्म्मानुष्ठानपद्धती" ।
(उपपादनं । व्यवस्थापनं । उपयोगिता । आनुरूप्यं । कार्य्यकरणं । अभ्यासः । अनुशीलनं । चर्च्चा ।
"उपपत्तिपरित्यक्तशास्त्रानुष्ठानमोहितैः" ।
इति राजतरङ्गिणी ।
"अस्य नित्यमनुष्ठानं सम्यक् कुर्य्यादतन्द्रित" ।
इति मनुः ।
शास्त्रविहितकर्त्तव्यादिसम्पादनम् ।
"किन्त्वनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति" ।
इति उत्तरचरिते ।)

साङ्गवेदविचक्षणः । शिक्षादिषडङ्गसहितवेदवेत्ता । इत्यमरः ॥
("इदमूचुरनूचानाः प्रीतिकण्टकितत्वचः" ।
इति कुमारसम्भवे ।
"ऋषयश्चक्रिरे धर्म्मं योऽनूचानः स नो महान्" ।
इति मनुः ।)

**अनूचानः**, त्रि, (अनु + वच् + लिट् तस्य कानच् । वेदस्यानुवचनं कृतवान्, उपेयिवानित्यादिना साधु ।) विनीतः । सविनयः । इति मेदिनी ॥
(साङ्गवेदविचक्षणः ।
"अनूचानो विनीते स्यात् साङ्गवेदविचक्षणेः" ।
इति मेदिनी ॥
शिक्षाकल्पादिषडङ्गसहितवेदाध्ययनकारी, यथा,
"इदमूचुरनूचानाः प्रीतिकण्ठकितत्वचः" ।
इति कुमारसम्भवे ।
"ऋषयश्चक्रिरे धर्म्मं योऽनूचानः स नो महान्" ।
इति मनुः) ॥

**अनूढः**, त्रि, (वह + कर्म्मणि क्तः संप्रसारणं ततो नञ्समासः ।) अविवाहितः । आइवड इति भाषा । यथा, --
"परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात्" ।
इत्यमरः ॥

**अनूद्यं**, त्रि, (अनु + वद् + क्यप् संप्रसारणं ।) अनुवाद्यं । अनुवदनीयं । अवदनीये ह्रस्वमध्यं । इति संक्षिप्तसारव्याकरणं ॥

**अनूनं**, त्रि (न ऊनं, नञ्समासः ।) अखण्डं । समग्रं । पूर्णं । इति जटाधरः ॥ (अहीनः । अन्यूनः ।

"नदीपल्वलशैलाद्यफुल्लोत्पलकुलैर्युतः ।
हंससारसकारण्डचक्रवाकादिसेवितः ॥
सरोवराहमहिषरुरुरोहिकुलाकुलः ।
प्रभूतद्रुममुख्याढ्यो नानाशस्यफलान्वितः ॥
अनेकशालिकेदारकदलीक्षुविभूषितः ।
अनूपदेशो ज्ञातव्यो वातश्लेष्ममयार्त्तिमान्" ॥
इति भावप्रकाशः ॥

**अनूरुः**, पुं, (नास्ति ऊरू यस्य सः ।) सूर्य्यसारथिः । अरुणः । इत्यमरः ॥ (ऊरुहीनः ।) ॥

**अनूरुसारथिः**, पुं, (अनूरुः अरुणः सारथिः रथचालको यस्य सः ।) सूर्य्यः । यथा, --
"गतं तिरश्चीनमनूरुसारथेः" ।
इति माघः ॥

**अनृजुः** त्रि, (न ऋजुः सरलः, नञ्समासः ।) असरलः । शठः । इत्यमरः ॥
("न पाणिपादचपलो न नेचचपलोऽनृजुः" ।
इति मनुः ।)

**अनृणी**, [न्] त्रि, (ऋणं विद्यतेऽस्य, ऋण + इनि ऋणी, नञ्समासः ।) अऋणी । अधारी । यथा, --
"एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् ।
पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा सोऽनृणी भवेत्" ॥
इत्याह्निकतत्त्वं ॥ ऋणाभावविशिष्टः । यथा यक्ष उवाच ।
"को मोदते किमाश्चर्य्यंकः पन्थाः का च वार्त्तिका ।
वद मे चतुरः प्रश्नान् मृता जीवन्तु बान्धवाः" ॥

**अनुष्णं**, क्ली, (न उष्णं नञ्समासः ।) उत्पलं ।

इति राजनिर्घण्टः ॥

**अनुष्णः**, त्रि, (न उष्णः, नञ्समासः ।) अलसः ।

इत्यमरः ॥ उष्णभिन्नः शीतलः बहुव्रीहौ तु
अत्युष्णः ॥

**अनुष्णवल्लिका**, स्त्री, (अनुष्णा शीतला वल्लीव कर्म्म-

धारयः ।) नीलदूर्व्वा । इति राजनिघण्टः ॥

"इमामनूनां सुरभेरवेहि" । इति रघुवंशे ।)

युधिष्ठिर उवाच ।
"पञ्चमेऽहनि षष्ठे वा शाकं पचति स्वे गृहे ।
अनृणी चाप्रवासी च स वारिचर मोदते ॥
अहन्यहनि भूतानि गच्छन्तीह यमालय ।
शेषाः स्थिरत्वमिच्छन्ति किमाश्चर्य्यमतःपर ॥
तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना
नैको मुनिर्यस्य मतं प्रमाण ।

:धर्म्मस्य तत्त्वं निहितं गुहायां

महाजनो येन गतः स पन्थाः ॥

अस्मिन् महामोहमये कटाहे

सूर्य्याग्निना रात्रिदिवेन्धनेन ।

मासर्त्तुदर्व्वीपरिघट्टनेन

भूतानि कालः पचतीति वार्त्ता” ॥

इति मुद्राङ्कितमहाभारते वनप्रर्व्वणि ३१२ अ-

ध्यायः ॥ अपि च ।

“देवानामनृणी जन्तुर्यज्ञैर्भवति मानवः” ।

इत्यादि शुद्धतत्त्वं ।

**अनृतं**, क्ली, (न ऋतं नञ्समासः ।) कृषिः ।

मिथ्या । इत्यमरः ॥ विवाहादिपञ्चकेष्वनृतं न

पापजनकं । यथा, --

“विवाहकाले रतिसंप्रयोगे

प्राणात्यये सर्व्वधनापहारे ।

विप्रस्य चार्थे ह्यनृतं वदेत

पञ्चानृतान्याहुरपातकानि” ॥

इति महाभारते कर्णपर्ब्बणि अर्जुनं प्रति श्रीकृष्ण-

वचनं ॥

**अनेकं**, त्रि, (एकस्मात् अन्यत् नञ्समासः ।) एक-

त्वातिरिक्तसंख्यानं तद्विशिष्टञ्च । बहु । यथा, --

“अनेकराजन्यरथाश्वसङ्कुलं” ।

इति भारविः ॥

**अनेकजः**, पुं, (अनेकं जायते, अनेक + जन् + डः

उपपदसमासः ।) पक्षी । इति त्रिकाण्डशेषः ॥

बहुजाते त्रि ॥

**अनेकधा**, व्य, (अनेक + प्रकारार्थे धा ।) अनेक-

प्रकारं । बहुधा । यथा, --

“पाटीसूत्रोपमं वीजं गूढमित्यवभाषते ।

कता । एकस्य भावः ऐक्यं

पश्चान्नञ्समासः ॥

**अनो**, व्य, (न नी डो) निषेधार्थः । अभावः । इत्य-

मरटीकायां नीलकण्ठः ॥

**अनोकहः**, पुं, (अनसः शकटस्य अकं गमनं षष्ठी-

तत्, तत् हन्ति अनोक + हन् + डः ।)

वृक्षः ।

इत्यमरः ॥

(“पृक्तस्तुषारैर्गिरिनिर्झराणा-

मनोकहाकम्पितपुष्पगन्धी” ।

इति रघुवंशे ।)

**अन्च** उ गतिपूजनयोः । इति मुग्धबोधे वोपदेवः ॥

**अन्च** उ पूजने । गमने । म्लिष्टोक्तौ । इति कवि-

कल्पद्रुमः ॥ उ अञ्चित्वा अङ्क्त्वा ।

म्लिष्टोक्तिर-

व्यक्तशब्दः । इति दुर्गादासः ॥

**अन्च** क व्यक्तौ । इति कविकल्पद्रुमः ॥ व्यक्तिरिह

विशेषणं । क अञ्चयति बुद्धिं सुधीः ।

विशिनष्टी-

त्यर्थः । इति दुर्गादासः ॥

**अन्ज** उ ध ञि व्यक्तौ । गतौ । म्रक्षणे । इति कवि-

कल्पद्रुमः ॥ उ अञ्जिष्यति अङ्क्ष्यति ।

ध अनक्ति ।

ञि अक्तोस्ति । व्यक्तिः स्फुटीकरणं ।

“शरीरभाजां भवदीयदर्शनं

व्यनक्ति कालत्रितयेऽपि योग्यतां” ।

इति माघः ॥ अनक्ति गात्रं तैलेन जनः ।

इति

दुर्गादासः ॥

यथा । “शुद्धान्तसम्भोगनितान्ततुष्टे” ।

इति

नैषधम् । इति भरतः ॥ “दाक्षिण्येन

ददाति

वाचमुचितामन्तःपुरेभ्यो यदा” ।

इत्यभिज्ञान

शकुन्तलम् ॥

**अन्तःपुराध्यक्षः**, पुं, (अन्तःपुरस्य अध्यक्षः रक्षकः,

षष्ठीतत्पुरुषः ।) राज्ञामन्तःपुररक्षकः ।

तल्ल-

क्षणं यथा, --

“वृद्धः कुलोद्गतः शक्तः पितृपैतामहः

शुचिः ।

राज्ञामन्तःपुराध्यक्षो विनीतश्च

तथेष्यते” ॥

इति युक्तिकल्पतरुः ॥

**अन्तःसत्वा**, स्त्री, (अन्तर्मध्ये सत्त्वं प्राणी सारो वा

यस्याः सा, स्त्रियां टाप् ।) भल्लातकः ।

इति

शब्दचन्द्रिका ॥ गर्ब्भवती ।

अन्तरुदरमध्ये सत्वं

प्राणी यस्याः सा ॥

**अन्तःस्वेदः**, पुं, (अन्तः मध्ये स्वेदः मदजलं यस्य सः ।)

हस्ती । इति त्रिकाण्डशेषः ॥

**अन्तकः**, पुं, (अन्तं विनाशं करोति, अन्त + करो-

त्यर्थे णिच् ततो ण्वुल् ।) यमः । इत्यमरः ।

(“ऋषिप्रभावात् मयि नान्तकोऽपि प्रभुः

प्रहर्तुं

किमुतान्यहिंस्राः” । इति रघुवंशे ।)

**अन्तगः**, त्रि, (अन्तं पारं गच्छति, अन्त + गम् + डः,

नास्ति गूढमगूढानां नैव षोढेत्यनेकधा” ॥
इति लीलावती ॥ अनेकवारार्थेऽपि
क्वचित्प्रयोगः ॥

**अनेकपः**, पुं, (अनेककाभ्यां मुखशूण्डाभ्यां पिबति,
अनेक + पा + कः, उपपदसमासः ।) हस्ती
इत्यमरः ॥

**अनेकाश्रितगुणः**, पुं, (अनेकानि आश्रितः, द्वितीया-
श्रितातीत इत्यादिना समासः, तादृशः गुणः
कर्म्मधारयः ।) बहुनिष्ठगुणः । तद्यथा ।
संयोगः १
विभागः २ द्विपृथक्त्वादिः ३
एकत्वान्यसङ्ख्या ४ ।
इति सिद्धान्तमुक्तावली ॥
(“संयोगश्च वियोगश्च सङ्ख्या
द्वित्वादिकास्तथा ।
द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिता गुणाः”
।
इति भाषापरिच्छेदे ।)

**अनेडमूकः**, त्रि, (नास्ति एडः वधिरः मूकः वाक्-
शक्तिरहितश्च यस्मात् सः ।) धूर्त्तः । शठः
।
श्रुतिवाग्विहीनः । इति मेदिनी ॥ काला
वोवा
इति भाषा ।

**अनेहाः**, [स्] पुं, (न ह्नन्यते, न + हन् + असुन्
पृषोदरादित्वात् हन् स्थाने एहादेशः, ततः
सौकृते अनङादेशः ।) कालः । समयः ।
इत्यमरः ॥
(“तस्थुस्तस्यान्तिके
द्रोहश्छिद्रानेहःप्रतीक्षिणः” ।
इति राजतरङ्गिणी ।)

**अनैक्यं**, क्ली, (न एक भावे व्यञ् ।) ऐक्याभावः ।
अने-

**अन्तं**, क्ली, (अम् + तन् ।) स्वरूपं । स्वभावः ।
इति
मेदिनी त्रिकाण्डशेषश्च ॥

**अन्तं**, क्ली, पुं, (अम् + तन् ।) शेषः । इति
मेदिनी ॥
तत्पर्य्यायः । जघन्यं २ चरमं ३ अन्त्यं
४ पाश्चात्यं ५
पश्चिमं ६ । इत्यमरः ॥

**अन्तः**, पुं, (अम् + तन् ।) नाशः । इत्यमरः ॥
स्वरूपः ।
प्रान्तः । सीमा । निश्चयः । अवयवः ।
इति
हेमचन्द्रः ॥

**अन्तः**, त्रि, (अम् + तन् ।) अन्तिकः । निकटः ।
इति मेदिनी ॥ अतिमनोहरः । इति
विश्वः ॥

**अन्तःकरणं**, क्ली, (अन्तर्मध्यवर्त्ति करणं
ज्ञानसाधनं,
कर्म्मधारयः, कृ + करणे ल्युट् ।)
अन्तरिन्द्रियं ।
धीन्द्रियं । तत्पर्य्यायः । मनः २ निगुः २
। इति
त्रिकाण्डशेषः ॥ अस्य
कार्य्यभेदान्नामचतुष्टयं,
यथा, --
“मनो बुद्धिरहङ्कारश्चित्तं करणमान्तरं ।
संशयो निश्चयो गर्व्वः स्मरणं विषया
अमी” ॥
इति वेदान्तः ॥ (अस्योत्पत्तिर्यथा, --
“मिलितैस्तु
तैः अन्तःकरणमेकं स्यात्” इति । तैः
पञ्चभूतस्थ-
सत्त्वांशैर्मिलितैः अन्तःकरणं
भवतीत्यर्थः ।
“धनुर्भृतोऽप्यस्य दयार्द्रभाव-
माख्यातमन्तःकरणैर्विशङ्कैः” ।
इति रघुवंशे ।)

उपपदसमासः ।) अन्तगामी । पारगः ।
यथा,
“वेदान्तगोब्राह्मणः स्यात् क्षत्रियो विजयी
भवेत्”
इति महाभारते विष्णुसहस्रनामफलं ॥
मृतः ।
अन्तं नाशं गच्छतीति ॥

**अन्ततः**, [स्] व्य, (अन्त + तस् ।) सम्भावना ।
अवयवः । पञ्चम्यर्थं । शासनं । इति
विश्वः ॥
(शेषादारभ्य । प्रान्तभागेन । अग्रभागेन ।
“वैश्योऽद्भिः प्राशिताभिश्चशूद्रः
स्पृष्टाभिरन्ततः”
इति मनुः ।)

**अन्तर्**, व्य, (अम् + अरन् तुडागमश्च ।) मध्यं ।
प्रान्तं । स्वीकारः । इति विश्वः ॥

**अन्तरं**, क्ली, (अन्तं राति ददाति, अन्त + रा +
कः,
उपपदसमासः ।) अवकाशः । अवधिः ।
परि-
धानं । अन्तर्धानं । भेदः । तादर्थ्यं ।
अवसरः ।
मध्यं । अन्तरात्मा । छिद्रं । आत्मीयः ।
विना ।
वहिः । इत्यमरः ॥ सदृशः । इति तट्टीका
मेदिनी
च ॥ * ॥ अवकाशे यथा ।
“मृणालसूत्रान्तरमप्य-
लभ्यं” । इति कुमारसम्भवे ॥ अवधौ
यथा ।
“निरन्तराभ्यन्तरवातवृष्टिषु” ॥ परिधाने
यथा ।
अन्तरे शाटकाः परिधानीया इत्यर्थः ॥
अन्तर्द्धौ
यथा, “पर्ब्बतान्तरितो रविः” ॥ भेदे
यथा, --
“यदन्तरं सर्षपशैलराजयो-

**अन्तःकुटिलः**, पुं, (अन्तरभ्यन्तरे कुटिलः वक्रः ।)

शङ्खः । इति राजनिर्घण्टः ॥

कुटिलान्तःकरणे त्रि ॥

**अन्तःपुरं**, क्ली, (अन्तर्मध्यवर्त्ति पुरं मृहं, कर्म्म-

धारयः ।) राज्ञः स्त्रीगृहं । तत्पर्य्यायः । अव-

रोधनं २ अवरोधः ३ शुद्धान्तः ४ । इत्यमरः ॥

अन्तःपुरादयो राजदारेष्वपि तात्स्थ्यात् वर्त्तन्ते ।

र्यदन्तरं वायसवैनतेययोः” ।

इति रामायणं ॥ तादर्थ्ये यथा ।

त्वामन्तरेण ऋणं

गृहीतं त्वदर्थमित्यथेः ॥ छिद्रेयथा ।

“प्रहरेदन्तरे

रिपुं” ॥ आत्मीये यथा । “अयमत्यन्तरो मम” ॥

विनार्थे यथा । “हरे

त्वदालोकनमन्तरेण” ॥

वहिरर्थे यथा । अन्तरे चण्डालगृहा वाह्या

इत्यर्थः ॥ अवसरे यथा । “अत्रान्तर च कुलटा

कुलवर्त्मपातेत्थादि” ॥ मध्येयथा ।

“आवयोर-

न्तरे जाताः पर्ब्बताः परितो द्रुमाः” ॥

सदृशे

:यथा “हकारस्य घकारोऽन्तरतमः” । इति
भरतः ॥

**अन्तरङ्गः**, त्रि, (अन्तः सदृशं अङ्गं यस्य सः ।)
आत्मीयः । स्वसम्पर्कः । यथा, --
“चरमगिरिकुरङ्गी शृङ्गकण्डूयनेन
स्वपिति सुखमिदानीमन्तरङ्गः कुरङ्गः” ।
इति कालिदासः ॥

**अन्तरा**, व्य, (अन्तरेति अन्तर + इन् + डा, टिभाग-
लोपः ।) वर्ज्जनं । विना । यथा, --
(“न द्रक्ष्यामः पुनर्जातु धार्म्मिकं
राममन्तरा” ।
इति रामायणे ।) मध्यं । निकटं । इति
मेदिनी ॥

**अन्तरापत्या**, स्त्री, गर्ब्भिणी । अन्तरे उदरमध्ये
अपत्यं यस्याः सा ॥

**अन्तरायः**, पुं, (अन्तरं व्यवधानं एति, अन्त + इन्
+ अच्, षष्ठीतत्पुरुषः ।) विघ्नः । इत्यमरः
॥
(“स चेत् स्वयं कर्म्मसु धर्म्मचारिणां
त्वमन्तरायो भवसि च्युतो विधिः” ।
इति रघुवंशे ।)

**अन्तरालं**, क्ली, (अन्तरा मध्यं लाति, अन्तरा + ला
+ कः ।) मध्यप्रदेशः । अभ्यन्तरं ।
इत्यमरः ॥
(“मुहुरन्तरालभुवमस्तगिरिः सवितुश्च
योषिद-
मिमीत दृशा” । इति माघः । “उदेति
भानुर्ग-
गनान्तराले” । इति पद्यमाला ।)

**अन्तरालकं**, क्ली, (अन्तराल + स्वार्थे कन् ।)
अभ्यन्तरं । इति राजनिर्घण्टः ॥

षष्ठीतत् ।) आकाशजलं । दिव्योदकं ।
इति
राजनिर्घण्टः ॥

**अन्तरे**, व्य (अन्तरेति अन्तर + इण् + विच् तस्य
लोपः ।) मध्यं । अभ्यन्तरं । इत्यमरः ॥

**अन्तरेण**, व्य (अन्तरेति अन्तर + इण + णः तस्य
नेत्वं पृषोदरादित्वात् ।) मध्यं । विना ।
व्यति-
रेकः । इत्यमरः ॥

**अन्तर्गडः**, त्रि, (अन्तर्मध्ये गडुः ग्रीवाप्रदेशजातगल-
मांसपिण्डमिव निरर्थकः ।) निरर्थकः ।
वृथा ।
इति हेमचन्द्रः ॥
(“काव्यान्तर्गडुभूता या सा तु नेह
प्रशस्यते” ।
इति साहित्यदर्पणे ।)

**अन्तर्गतं**, त्रि, (अन्तः अन्तकरणात् गतं, अथवा
अन्तर्मध्ये गतं प्राप्तम् ।) विस्मृतं ।
मध्यप्राप्तं ।
इति हेमचन्द्रः ॥ (“अन्तर्गतशवे ग्रामे” ।
इति मनुः ।
“सागरान्तर्गताः केचित्केचित्
पर्ब्बतमाश्रिताः” ।
इति रामायणम् । आभ्यन्तरः ।
हृदयमध्यस्थितः ।
अन्तःकरणस्थः ।
“अन्तर्गतप्रार्थनमन्तिकस्थं” ।
इति शाकुन्तले ।
“आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च
।
नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः”
॥

खड्किकाद्वारं । यथा, --
“प्रच्छन्नमन्तर्द्वारञ्च पक्षद्वारं तदुच्यते” ।
इति शवरस्वामी ॥

**अन्तर्भूतः**, त्रि, (अन्तर्मध्ये भूतः स्थितः, अन्तर् +
भू + कर्त्तरि क्तः ।) गुणीभूतः । अन्तःस्थः
। अन्त-
रस्थः । अन्तर्गतः । यथा, --
“स एव भगवान् विष्णुरन्तर्भूतः
सनातनः” ।
इति पद्मपुराणे माघमाहात्म्यं ॥

**अन्तर्म्मनाः**, [स्] त्रि, (वाह्यव्यापारशून्यतया अन्त-
र्गमनः चेतो यस्य सः ।) दुर्म्मनाः ।
विमनाः ।
व्याकुलचेताः । इत्यमरः ॥

**अन्तर्यामी**, [न्] पुं, (अन्तर्मध्ये यमयति स्वस्व-
कार्य्येषु इन्द्रियादीनि नियोजयति, अन्तर्
+
यम् + णिच् + उपपदसमासः ।)
अन्तःकरण-
नियामकः । तत्पर्य्यायः । आत्मा २ जीवः
३ पुरुषः ४
पुद्गलः ५ ईश्वरः ६ । इति त्रिकाण्डशेषः
॥ विशु-
द्धसत्वप्रधानाज्ञानोपहितचैतन्यं । इति
वेदान्त-
सारः ॥ मनोगतज्ञे त्रि ॥
(“अन्तराविश्य भूतानि
योबिभर्त्त्यात्मकेतुभिः ।
अन्तर्यामीश्वरः साक्षात् पातु नो यद्वशे
स्फुटम्” ।

**अन्तर्वंशिकः**, पुं, (वंशः स्वावलम्बनयष्टिर्विद्यतेऽस्य,
वंश + ठक् तस्य इकः, अन्तः नृपान्तःपुरे
वंशिक

**अन्तरितं**, त्रि, (अन्तरं इतं प्राप्तं द्वितीयातत्, अथवा अन्तरं व्यवधानं जातमस्य, अन्तर + तार-
कादित्वात् इतच् ।) अन्तर्द्धानप्राप्तं । व्यवहितं ।
तत्पर्य्यायः । प्रसृतं २ । इति त्रिकाण्डशेषः ।
व्यवकलिताङ्कः । वाकि इति भाषा । इति लीला-
वती ॥

**अन्तरिक्षं**, क्ली, (अन्तर्मध्ये ऋक्षाणि नक्षत्राणि यस्य
तत्, पृषोदरादित्वात् ऋकारस्य इकारः । अन्त-
रीक्षमिति पाठे ऋकारस्य ईकारः ।) अन्त-
रीक्षं । आकाशं । इति छान्दसं । इत्यमरटीकायां
पुरुषोत्तमजातरूपसुभूतिरायादयः ॥
(“अन्तरिक्षगतांश्चैव मुनीन् देवांश्च पीडयेत्” ।
इति मनुः ।)

**अन्तरीपं**, क्ली, पुं, (अन्तर्गता आपोऽत्र, तत्, समा-
सान्तः अः, द्व्यन्तरुपसर्गेभ्य इति अपईदादेशः ।)
द्वीपं । इत्यमरः ॥

**अन्तरीयं**, क्ली, (अन्तरस्य परिधानस्य इदं अन्तर्
+ छः तस्य ईयः ।) अधोवस्त्रं । परिधानवस्त्रं ।
इत्यमरः ॥
(“नाभौ धृतञ्च यद्वस्त्रं आच्छादयति जानुनी ।
अन्तरीयं प्रशस्तं तत् अच्छिन्नमुभयोस्तयोः” ॥
इत्येवं लक्षणं)

**अन्तरीक्षं**, क्ली, (अन्तर्मध्ये ऋक्षाणि नक्षत्राणि यस्य
इति मनुः ।)

**अन्तर्गृहं**, क्ली, (गृहस्य मध्ये, अव्ययीभावः ।) गृह-
मध्यं । इति नानार्थेकोष्ठशब्दार्थे अमरः ॥ घरेर
भितर इति भाषा । (वाराणसीस्थे सप्तावरणवति
स्थानविशेषे ।
“अन्यस्थाने कृतं पापं वाराणस्यां विनश्यति ।
वाराणस्यां कृतं पापं पञ्चक्रोश्यां विनश्यति ॥
पञ्चक्रोश्यां कृतं पापं अन्तर्गृहे विनश्यति” ।
इति काशीमाहात्म्यम् ।)

**अन्तर्जठरं**, क्ली, (जठरस्य उदरस्य मध्ये अव्ययी-
भावः ।) कुक्षिमध्यं । कोष्ठं । इत्यमरः ॥

**अन्तर्दधनं**, क्ली, (अन्तर्मध्ये दध्यते मत्तता क्रियते-
ऽनेन, अन्तर् + दध् + करणे ल्युट् ।) सुरावीजं ।
इति शब्दचन्द्रिका ॥

**अन्तर्दाहः**, पुं, (अन्तर्मध्ये दाहः सन्तापः ।) कोष्ठसन्ता-
पः । शरीराभ्यन्तरज्वाला । इति राजनिर्घण्टः ॥

**अन्तर्द्धा**, स्त्री, (अन्तर्द्धानं, अन्तर् + धा + भावे
अङ् स्त्रियां टाप् ।) अन्तर्द्धानं । इत्यमरः ॥

**अन्तर्द्धानं**, क्ली, (अन्तर्धानं, अन्तर् + धा +
भावे ल्युट् ।) आच्छादनं । इति शब्दरत्नावली ॥
तत्पर्य्यायः । अन्तर्द्धा २ व्यवधा ३ अन्तर्द्धिः ४
यष्टिधारी नियुक्तः पुरुषः ।)
अन्तःपुराधिकृतः अन्तःपुराध्यक्षः । इत्यमरः ॥

**अन्तर्व्वत्नी**, स्त्री, (अन्तर्गर्भमध्यस्थमपत्यं विद्यते-
ऽस्याः, अन्तर् + मतुप्, अन्तर्व्वत्पतिवतोर्नुक्
इति ङीप्नुगागमौ ।) गर्भिणी । इत्यमरः ॥
(“तस्यामेवास्य यामिन्यामन्तर्वत्नी प्रजावती ।
सुतावसूत सम्पन्नौ कोषादण्डाविव क्षितिः” ॥
इति रघुवंशे ।)

**अन्तर्व्वमिः**, पुंः (अन्तः कुक्षिमध्यात् वमयति उद्गार-
यति अन्तर् + वम् + णिच् + इक् कृष्यादिभ्य
इति बाहुल्यात् इक् ।) अपाकः । अजीर्णः ।
इति त्रिकाण्डशेषः ॥

**अन्तर्व्वाणिः**, त्रि, (अन्तः अन्तःकरणे वाणी शास्त्र-
विहिता वाक् यस्य सः, ह्रस्वः ।) शास्त्रवित् ।
शास्त्रज्ञः । इत्यमरः ॥

**अन्तर्व्विगाहनं**, क्ली, (अन्तर्मध्ये विगाहनं प्रवेश,
अन्तर् + वि + गाह् + ल्युट् ।) प्रवेशनं । इति
हेमचन्द्रः ॥

**अन्तर्व्वेदी**, स्त्री, (अन्तः पृथ्वीमध्यस्थतया वेदीव ।
अन्तर्वेदि इति पाठे अन्तर्मध्ये वेदिर्यत्र देशे सः ।)
ब्रह्मावर्त्तदेशः । गङ्गायमुनयोर्म्मध्यदेशः । आ-
प्रयागहरिद्वारपर्य्यन्तदेशः । दोयाव इति पश्चिम-

तत्, पृषोदरादित्वात् ऋकारस्य ईकारः ।)

गगनं । इत्यमरः ॥ अभ्रकधातुः । इति राज-

निर्घण्टः ।

**अन्तरीक्षजल**, क्ली, (अन्तरीक्षस्य आकाशस्य जलं

अपवारणं ५ अपिधानं ६ तिरोधानं ७ पिधानं ८

छदनं ९ । इत्यमरः ॥

("अन्तर्द्धानं स्मृतिः कान्तिर्दृष्टिः श्रोतज्ञता तथा"

इति याज्ञवल्क्यः ।)

**अन्तर्द्धिः**, पुं, (अन्तर्द्धानम् अन्तर् + धा + भावे कि ।)

अन्तर्द्धानं । इत्यमरः ॥

**अन्तर्द्वारं**, क्ली, (अन्तर्गृहमध्यस्थं द्वारं ।) प्रकोष्ठ-

द्वारं । इति भरतः ॥ गृहाभ्यन्तरद्वारं । गृहा-

भ्यन्तरप्रकोष्ठादिद्वारं जालद्वारं वा । इति स्वामी ॥

तत्पर्य्यायः । प्रच्छन्नं २ । इत्यमरः ॥ पक्षद्वारं

देशे ख्याता । तत्पर्य्यायः । शशस्थली २ । इति

त्रिकाण्डशेषः ॥

**अन्तर्हासः**, पुं, (अन्तरव्यक्तोहासः हास्यं ।) अव्यक्त-

हासः । गूढहास्यं । तत्पर्य्यायः । उद्वर्द्धनं २ । इति

त्रिकाण्डशेषः ॥ तद्वति त्रि ॥

("ततोऽन्तर्हासविका-

समुखः स तदुचितमाचचार" । इति पञ्चतन्त्रं ।

"सान्तर्हासं कथितमसकृत् पृच्छतश्च त्वया मे" ।

इति मेघदूतम् ।)

**अन्तर्हितं**, त्रि, (अन्तर् + धा + क्तः ।) लुक्कायितं ।
गुप्तं । तत्पर्य्यायः । संवीतं २ रुद्धं ३ आवृतं ४ संवृतं ५ पिहितं ६ छन्नं ७ स्थगितं ८ अपवारितं ९ तिरोधानं १० । इति हेमचन्द्रः ॥ (“अन्तर्हिते शशिनि सैव कुमुद्वतीमे दृष्टिं न नन्दयति संस्मरणीयशोभा” । इति शाकुन्तले ।)

**अन्तवासी**, [न्] पुं, (अन्तेऽध्येतुमध्यापकसमीपे वसति, अन्त + वस् + णिनि उपपदसमासः ।) अन्तेवासी । शिष्यः । इत्यमरटीकायां भरतः ॥

**अन्तशय्या**, स्त्री, (अन्ताय नाशाय शय्या शयनं शी + भावे क्यप् । स्त्रियां टाप्) भूमिशय्या । मृत्युः । श्मशानं । इति मेदिनी ॥ (“अन्तशय्या मृतौ भूमिशय्यायां पितृकानने” । इति मेदिनी ।)

**अन्तावशायी**, [न्] पुं, (अन्ते नीचजातितया ग्रामसीमायामवशेते तिष्ठति, अन्त + अव + शी + णिनि उपपदसमासः ।) चण्डालः । मुनिविशेषः । इति हेमचन्द्रः ॥ नापितः । इत्यमरः ॥

**अन्तिः**, स्त्री, (अन्त्यते ज्येष्ठभगिनीत्वेन सम्बध्यतेऽसौ, अन्त + करोत्यर्थे णिच् + इक् । अन्तिकेति-

**अन्तेवासी**, [न्] पुं, (अन्ते विद्यामध्येतुमध्यापकसमीपे वसति । चण्डालपक्षे तु नीचजातितया ग्रामप्रान्ते वसति शयवासेत्यलक्, अन्त + वस् + णिनि ।) शिष्यः । (“कृशाश्वान्तेवासी कुशिकपतिराज्ञापयति वः” । इति महावीरचरिते । “तात ! प्राचेतसान्तेवासी लवोऽभिवादयते” । इति उत्तरचरिते ।) चण्डालः । इत्यमरः ॥ प्रान्तस्थायिनि त्रि ॥ इति विश्वः ॥

**अन्त्यं**, क्ली, (अन्ते भवं, अन्त + यत् ।) दशसागरसंख्या । सहस्रलक्षकोटिः । इति लीलावती ॥ द्वादशलग्नं । इति ज्योतिषं ॥

**अन्त्यः**, त्रि, (अन्ते भवः, अन्त + यत् ।) अन्ते भवः । शेषोत्पन्नः । अधमः । जघन्यः । इति मेदिनी ॥ (अन्तिमः । चरमः । शेषः । “असह्यपीडं भगवन् ऋणमन्त्यमवेहि मे” । इति रघुवंशे ।)

**अन्त्यः**, पुं, (अन्ते भवः अन्त + यत् ।) मुस्ता । इति मेदिनी ॥ मुता घास इति भाषा । म्लेच्छः । इति प्रायश्चित्ततत्त्वं ॥

**अन्त्यजः**, पुं, (अन्त्यो भूत्वा जायते, अन्त्य + जन् +

“निषादस्त्री तु चण्डालात् पुत्रमन्त्यावसायिनं । श्मशानगोचरं सूते वाह्यानामपि गर्हितम्” ॥ इति मनुः ।)

**अन्त्येष्टिः**, स्त्री, (अन्त्या अन्ते भवा इष्टिः, कर्म्मधारयः ।) चरमसंस्कारः । स तु शवदाहादिरूपः । यथा, -- “सपिण्डादिभिदाशौचसंक्षेपोऽन्त्येष्टिपद्धतिः” । इति शुद्धितत्त्वप्रतिज्ञायां स्मार्त्तभट्टाचार्य्यः ॥ तत्प्रयोगो दाहशब्दे द्रष्टव्यः ॥ तदनन्तरं पूरकपिण्डप्रमाणं पिण्डशब्दे द्रष्टव्यं ॥ तस्य प्रयोगोऽत्र लिख्यते । ततः पिण्डदानं तत्र क्रमः । तण्डुलप्रसृतिद्वयं द्विः प्रक्षाल्य ऐशान्यां दिशि सुखिन्नं पचेत् । ततः पवित्रपाणिः प्राचीनावीती पातितवामजानुर्दक्षिणामुखो हस्तप्रमाणां चतुरङ्गुलोच्छ्रायां दक्षिणप्लवां पिण्डिकां कृत्वा तदुपरि रेखां कृत्वा दर्भानास्तीर्य्य तिलान् प्रक्षिप्य । ॐ अमुकगोत्रप्रेतामुकदेवशर्म्मन्नवनेनिक्ष्व इत्यास्तीर्णकुशोपरि सतिलजलेनावनेजयेत् । ततस्तिलमधुघृतादिमिश्रं तप्तपिण्डं गृहीत्वा अद्यामुकगोत्रस्य प्रेतस्यामुकदेवशर्म्मणः एतत् प्रथमपिण्डं पूरकं इत्यवने जनस्थाने दद्यात् । ततः पिण्डपात्रक्षालनजलेन पुनरवनेजयेत् । ॐ अमुकगोत्रप्रेतामुकदेवशर्म्मन्नेतत्ते ऊर्णातन्तुमयं वासः । ततः आममृण्मयपात्रे जलाञ्जलिं पिण्डसमीपे स्थापयेत् । गन्धं माल्यञ्च यथाशक्ति दद्यात् । वाष्पपर्य्यन्तं पिण्डं पश्यंस्तिष्ठेत् । ततः पिण्डादिकं जले क्षिपेत् । कालेऽप्यकृतचूडोपनयनानां अनूढकन्यानाञ्च कुशास्तरणं विनेति शेषः । एवं कृतचूडानामुपनयनकालात् प्राक् दर्भोपरि पिण्डदानं । उपनयनकाले आगते त्वकृतोपनयनानां दर्भोपरि पिण्डदानं । एवं अष्टवर्षविवाहकाले आगते ऊढस्त्रीणां दर्भोपरि पिण्डदानं । रात्रावाचम्य दक्षिणामुखः प्राचीनावीती पातितवाम-

पाठे स्वार्थे कन् स्त्रियां टाप् ।) नाट्योक्तौ ज्येष्ठा भगिनी । इति शब्दरत्नावली ॥ (अन्तिका भगिनी ज्येष्ठेत्यमरः ।) समीपे व्य । यथा । "मुग्धप्रभीत- वदुपेयतुरन्तिमात्रोः" । इति श्रीभागवतं ॥

**अन्तिकं**, त्रि, (अन्तः सामीप्येन विद्यतेऽस्य, अन्त + ठन् तस्य इकः ।) निकटं । इत्यमरः ॥ सामीप्ये क्ली । इति धरणी ॥ ("अन्तर्गतप्रार्थनमन्ति- कस्थं" । "स्वनसि मृदुकर्णान्तिकचरः" । इति शाकुन्तले । "ननु मां प्रापय पत्युरन्तिकम्" । इति कुमारसम्भवे ।)

**अन्तिकतमः**, त्रि, (अतिशयेन अन्तिकः, अन्तिक + तम ।) अतिनिकटः । तत्पर्य्यायः । नेदिष्ठः २ । इत्यमरः ॥ नेदीयान् ३ अन्तितमः ४ । इति जटाधरः ॥

**अन्तिका**, स्त्री, (अन्तः नाट्याय अभिनेतृसामीप्य- मस्याः अस्ति, अन्त + ठन् तस्य इकः स्त्रियां टाप् ।) नाट्योक्तौ ज्येष्ठा भगिनी । इत्यमरः ॥ तत्पर्य्यायः । अत्तिका २ अर्त्तिका ३ । इति तट्टीका । चुल्ली । शातलानामौषधं । इति मे- दिनी ॥ चामारकषा इति ख्याता । डः ।) शूद्रः । इति हलायुधः ॥ रजकादिसप्त- जातयः । यथा, -- "रजकश्चर्म्मकारश्च नटो वरुड एव च । कैवर्त्तमेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः" ॥ इति यमवचनं ॥ जघन्यजे त्रि ॥

**अन्त्यजन्मा**, [न्] पुं, (अन्त्यं ब्राह्मणक्षत्त्रियविशां जन्मानन्तरं जन्म यस्य सः ।) चतुर्थवर्णः । शूद्रः । इति रत्नावली ॥ ("प्रतिग्रहस्तु क्रियते शूद्रादप्यन्त्यजन्मनः" । इति मनुः ।)

**अन्त्यजातिः**, पुं, (अन्त्या जातिर्जन्म यस्य सः ।) चाण्डालादिः । यथापस्तम्बः । "अन्तजातिरविज्ञातो निवसेद्यस्य वेश्मनि । स वै ज्ञात्वा तु कालेन कुर्य्यात्तत्र विशोधनं ॥ चान्द्रायणं पराको वा द्विजातीनां विशोधनं । प्राजापत्यन्तु शूद्राणां तथा संसर्गदूषणे ॥ यैस्तत्र भुक्तं पक्वान्नं कृच्छ्रं तेषां विनिर्द्दिशेत् । तेषामपि च यैर्भुक्तं तेषामर्द्धं विधीयते" ॥ इति प्रायश्चित्ततत्त्वं ॥

**अन्त्यभं**, क्ली (अन्त्यं शेषस्थितं भं नक्षत्रं कर्म्म- धारयः ।) रेवतीनक्षत्रं । मीनराशिः । इति ज्योतिषं ॥

जानुः त्रिकाष्ठिकोपरि मृण्मयपात्रे उदकं तथा पात्रान्तरे क्षीरं निधाय प्रेतात्र स्नाहि पिब चेदं क्षीरमिति ब्रूयात् । तदेकरात्रमावश्यकं दशरात्रं फलभूयस्त्वार्थमिति । द्वितीयपिण्डादिषु द्वितीयं पिण्डं पूरकं इत्यादिविशेषः । द्वितीय- पिण्डे मृण्मयपात्रद्वये जलाञ्जलिद्वयं । तृतीयादि- पिण्डे पात्रादिवृद्धिः । येन पञ्चपञ्चाशत् पा- त्राण्यञ्जलयश्च तावन्ति । त्र्यहाशौचप्रथमदिने पिण्डानां त्रयं । द्वितीयदिने चतुष्टयं । तृतीये त्रयं । प्रथममेकं द्वितीये चतुष्टयं । तृतीये पञ्चमं वा कल्पः । चतुरहाशौचे प्रथमचतुर्थयोर्द्वौ द्वौ । द्वितीयतृतीययोस्त्रयस्त्रयः । पञ्चाहाशौचे तु प्र- थमपञ्चमदिनयोरेकैकशः पिण्डः । द्वितीयचतु- र्थयोर्द्वौ द्वौ । तृतीये चत्वारः । षडहाशौचे द्वि- तीयचतुर्थदिनयोस्त्रयस्त्रयः । शेषेष्वेकैकः । सप्ता- हाशौचे तृतीयचतुर्थपञ्चमदिनेषु द्वौ द्वौ । शेषे- ष्वेकैकः । अष्टाहाशौचे चतुर्थपञ्चमदिनयोर्द्वौ द्वौ । शेषेष्वेकैकः । नवाहाशौचे तु पञ्चमदिने द्वौ । शेषेष्वेकैकः । पक्षिणीद्व्यहाशौचयोस्त

("अन्तिकं निकटे वाच्यलिङ्गं स्त्री शातलौषधौ ।
चुल्यां ज्येष्ठभगिन्याञ्च नाट्योक्त्या कथ्यतेऽन्तिका" ॥
इति मेदिनी ।)

**अन्तिकाश्रयः**, पुं, (अन्तिकस्य आश्रयः अवलम्बनं,
षष्ठीतत्पुरुषः ।) निकटाश्रयः ।
समीपस्थावल-
म्बनं । तत्पर्य्यायः । उपघ्नः २ ।
इत्यमरः ॥

**अन्तिमः**, त्रि, (अन्त + डिमच् ।) अन्ते भवः ।
चरमः । अन्त्यः । इति जटाधरः ॥
("अजातमृतमूर्खाणां वरमाद्यौ न चान्तिमः ।
सकृत् दुःखकरावाद्यावन्तिमस्तु पदे पदे" ॥
इति हितोपदेशः ।) अतिनिकटः ।
इत्यमर-
टीकायां नीलकण्ठः ॥

**अन्त्यवर्णः**, पुं, (अन्त्यः वर्णः जातिः कर्म्मधारयः ।)
शूद्रः । इति हेमचन्द्रः ॥

**अन्त्यावसायी**, [न्] पुं, (अन्त्यः सन् अवस्यति,
अन्त्य + अव + सो + णिनि
उपपदसमासः ।)
चाण्डालादिसप्तजातयः । यथा, --
"चाण्डालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा ।
मागधायोगवौ चैव
सप्तैतेऽन्त्यावसायिनः" ॥
इति अङ्गिराः ॥ (निषादस्त्रियां
चण्डालजातो
मुद्दाफरास इति ख्यातः
संकीर्णजातिविशेषः ।

:आद्यद्वितीयदिनयोः पञ्च पञ्च पिण्डाः । द्वादशा-

हाद्यशौचे नवदिनेषु नवपिण्डाः । शेषदिने दशमः
।
सद्यः शौचैकाहयोरेकाह एव दशपिण्डाः । अशौ-
चान्तमध्ये पिण्डो देयः रात्रावपि ॥ * ॥

गङ्गाम्भस्यस्थिप्रक्षेपप्रयोगस्तु । ततः
स्नात्वा-

चम्य उदङ्मुखः कुशत्रयजलान्यादाय ॐ
तत्सदित्यु-
च्चार्य्य अद्यामुकेत्यादि अमुकस्य एतदस्थिसम-
संख्यकवर्षसहस्रावच्छिन्नस्वर्गाधिकरणकमहीय-
मानत्वकामोऽमुकस्यैतान्यस्थिखण्डानि गङ्गायां
प्र-
क्षिपामीति सङ्कल्प्यापसव्यं कृत्वास्थीनि
पञ्चगव्येन
सिक्त्वा हिरण्यमध्वाज्यतिलैः संयोज्य
मृत्तिकापुटे
स्थापयित्वा दक्षिणहस्तेन तत्पुटकमादाय
दक्षिणां
दिशं पश्यन् ॐ नमोऽस्तु धर्म्मराजायेति वदन्
जलं प्रविश्य स मे प्रीतो भवत्वित्युक्त्वास्थि
प्रक्षि-
पेत् । ततो मज्जनं कृत्वोत्थाय सूर्य्यं दृष्ट्वा दक्षि-
णामुत्सृजेत् । इति शुद्धितत्त्वं ॥ * ॥ किञ्च
शातातपः ।
"जलमेकाहमाकाशे स्थाप्यं क्षीरञ्च मृण्मये" ।
पारस्करः । मृण्मये तां रात्रिं क्षीरोदके विहा-
यसि निदध्युः । प्रेतात्र स्नाहीत्युदकं पिब चेदं
क्षीरं । इदं रात्राविति गौडाः । गारुडे तु ।
"अपक्वे मृण्मये पात्रे दुग्धं दद्यात् दिनत्रयम्" ।
इत्युक्तं । हेमाद्रौ पाद्मे तु दशाहमुक्तं ।
"तस्मान्निधेयमाकाशे दशरात्रं पयो जलं ।
सर्व्वतापोपशान्त्यर्थमध्वश्रमविनाशनं" ॥
देवजानीये कारिकायां ।
"तत्र प्रेतोपकृतये दशरात्रमखण्डितं ।
कुर्य्यात् प्रदीपं तैलेन वारिपात्रञ्च मार्त्तिकं ॥

सन्धौ ग्रन्थिरूपं श्वयथुं कुर्य्यात् इत्यर्थः ॥ *
॥
उपेक्षिताया अन्त्रवृद्धेरवस्थामाह ।
"उपेक्षमाणस्य मरुद्विवृद्धि-
माध्मानरुक् स्तम्भवतीञ्च कुर्य्यात् ।
स पीडितोऽन्तः स्वनवान् प्रयाति
प्रध्मापयन्नेति पुनश्च मुक्तः ॥
उपेक्षमाणस्य वृद्धिमित्यर्थः । मरुद्वृद्धिं मुष्क-
वृद्धिं । आध्मानरुक् स्तम्भवतीं कुर्य्यात् ।
तत्रा-
ध्मानमुदरे रुक् वृद्धयोर्मुष्कयोः स्तम्भो गात्रे
तद्-
युक्तां कुर्य्यात् इत्यर्थः । भोजोऽप्याह ।
"अन्त्रं द्विगुणमादाय वातो नयति वंक्षणं ।
वंक्षणात्तद्रुजा युक्तं फलकोष्यां प्रपद्यते" ॥
स मुष्कवृद्धिः । अन्तः उदरे प्रध्मापयन् आग-
मनमार्गमुच्छूनं कुर्व्वन् एति प्रयाति ॥ * ॥ अ-
साध्यमाह ।
"यश्चान्त्रावयवश्लिष्टान्मुष्कयोर्व्वातसञ्चयात्
।
स्यादन्त्रवृद्धिः सोऽसाध्यो
वातवृद्धिसमाकृतिः" ॥
स कीदृक् स्यादित्याकाङ्क्षायामाह । वातवृद्धि-
समाकृतिः ॥ * ॥ सामीप्यादत्रैव ब्रध्नमाह ।
"अत्यभिष्यन्दिगुर्व्वन्नशुष्कपूत्यामिषाशनात् ।
करोति ग्रन्थिवच्छोथं दोषो वंक्षणसन्धिषु ॥
ज्वरशूलाङ्गसादाढ्यं तं ब्रध्नमिति निर्दिशेत्"
॥ * ॥
अथ वृद्धेश्चिकित्सा ।
"वृद्धावत्यासनं मार्गमुपवासं गुरूणि च ।
वेगाघातं पृष्ठयानं व्यायामं मैथुनं त्यजेत् ॥
वातवृद्धौ पिबेत् स्निग्धं यथाप्राप्तं विरेचनं ।
सक्षीरं वा पिबेत् तैलं मासमेरण्डसम्भवं ॥
गुग्गुल्वेरण्डजं तैलं गोमूत्रेण पिबेन्नरः ।
वातवृद्धिं जयत्याशु चिरकालानुबन्धिनीं ॥
पित्तग्रन्थिक्रमेणैनं पित्तवृद्धिमुपाचरेत् ।
जलौकाभिर्हरेद्रक्तं वृद्धौ पित्तसमुद्भवे ॥

रुवुतैलेन संयुक्तमन्त्रवृद्धिं
व्यपोहति" ।
रास्नादिक्वाथः ॥ * ॥
"गन्धर्व्वहस्ततैलेन वृषेणापि
युतं पिबेत् ।
विशालामूलजं चूर्णं वृद्धिं
हन्यान्न संशयः" ॥
विशाला इन्द्रवारुणी ॥ * ॥
"वचासर्षपकल्केन प्रलेपः
शोथनाशनः ।
शिग्रुत्वक्सर्षपैः पिष्टैः
शोथश्लेष्मानिलापहः ॥
शुद्धसूतं द्विधागन्धं
मृतान्येतानि योजयेत् ।
लोहं रङ्गं तथा ताम्रं
कांस्यञ्चाथ विशोधितं ।
तालकं तुत्थकं वापि तथा
शङ्खं वराटकं ॥
त्रिकटु त्रिफला चव्यं विडङ्गं
वृद्धदारकं ॥
कर्च्चूरं मागधीमूलं पाठां
सहवुषां वचां ।
एलावीजं देवकाष्ठं तथा
लवणपञ्चकं ॥
एलादिसमभागानि चूर्णयेदथ
कारयेत् ।
कषायेण हरीतक्या वटिकां
टङ्कसम्मितां ॥
एकां तां वटिकां यस्तु
निगिलेद्वारिणा सह ।
अण्डवृद्धिरसाध्योऽपि तस्य
नश्यति सत्वरं" ॥
वृद्धिवाधिकावटी ॥ * ॥ अथ
ब्रध्नस्य चिकित्सा ।
"भृष्टश्चैरण्डतैलेन सम्यक्
कल्कोऽभयाभवः ।

भोज्यात् भोजनकाले तु भक्तमुष्टिञ्च निर्व्वपेत् ।
नाभगोत्रेण सम्बुध्य धरित्र्यां पितृयज्ञवत्” ॥
इति निर्णयसिन्धौ ५ परिच्छेदः ॥

**अन्त्रं**, क्ली, (अन्त्यते कायः सम्बध्यतेऽनेन अति बन्धने करणे ष्ट्रन् ।) पुरीतत् । इत्यमरः ॥ आँतडी (आँत् इति भाषा । आँत् इति ख्यातः देहबन्धको नाडीभेदः ।
उक्ताः सार्द्धास्त्रयो व्यामाः पुंसामन्त्राणि सूरिभिः ।
अर्द्धव्यामेन हीनानि स्त्रीणामन्त्राणि निर्दिशेत् ॥
इति वैद्यकम् ।)

**अन्त्रवृद्धिः**, स्त्री, पुं, (अन्त्रजन्या वृद्धिः, शाक-पार्थिवादित्वात् समासः मध्यपदलोपश्च ।) रोग-विशेषः । तन्निदानादि यथा, --
“वातकोपिभिराहारैः शीततोयावगाहनैः ।
धारणे रणभाराध्वविषमाङ्गप्रवर्त्तनैः ॥
क्षोभणैः क्षोभितान्यैश्च क्षुद्रान्तावयवं यदा ।
पवनो द्विगुणीकृत्य स्वनिवेशादधो नयेत् ॥
कुर्य्याद्वंक्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुं तदा” ।
धारणं उपस्थितस्य वेगस्य । ईरणं अनुपस्थितस्य वेगस्य प्रेरणं ।
“विषमाङ्गप्रवर्त्तनं वक्रत्वेनाङ्गमोटनं” ।
अन्यानि क्षोभणानि च बलवद्विग्रहकठोरधनुरा-कर्षणादीनि । तैः क्षोभितः संदूष्य सञ्चालितः पवनः यदा क्षुद्रान्त्रावयवं द्विगुणीकृत्य स्वनिवेशा-दधो नयेत् । तदा वंक्षणसन्धिस्थः सन् वंक्षण-
चन्दनं मधुकं पद्ममुशीरं नीलमुत्पलं ॥
क्षीरपिष्टप्रलेपेन दाहशोथरुजापहं ॥
त्रिकटुः त्रिफलाक्वाथं सक्षारं लवणं पिबेत् ।
विरेचनमिदं श्रेष्ठं कफवृद्धिविनाशनं ॥
लेपनं कटुतीक्ष्णोष्णं स्वेदनं रूक्षमेव च ।
परिषेकोपनाहौ च सर्व्वमुष्णमिहेष्यते ॥
मुहुर्मुहुर्जलौकाभिः शोणितं रक्तजे हरेत् ।
पिबेद्विरेचनं वापि शर्कराक्षौद्रसंयुतं ॥
शीतमालेपनं सर्व्वं सर्व्वं पित्तहरं तथा ।
पित्तवृद्धिक्रमं कुर्य्यादामे पक्वे च रक्तजे ॥
स्वेदोमेदः समुत्थे तु लेपयेत् सुरसादिना ।
शिरो विरेचनद्रव्यैः सुखोष्णैर्मूत्रसंयुतैः ॥
संस्वेद्य मूत्रप्रभवं वस्त्रपट्टेन वेष्टयेत् ।
सीवन्याः पार्श्वतोऽधस्तात् विध्यद्व्रीहिमुखेन वै ॥
मुष्कशोथमगच्छन्त्यामन्त्रवृद्धौ विचक्षणः” ।
व्रीहिमुखेन शस्त्रविशेषेण । अगच्छन्त्यां अस्र-वत्यां ॥
“तैलमेरण्डजं पीत्वा बलासिद्धं पयोन्वित ।
आध्मानशूलोपचितामन्त्रवृद्धिं जयेन्नरः ॥
रास्नायष्ट्यमृतैरण्डवलारग्वधगोक्षुरैः ।
पटोलेन वृषेणापि विधिना विहितं मृतं ॥
कृष्णासैन्धवसंयुक्तो ब्रध्नरोगहरः परः ॥
अजाजीहवुषाकुष्ठं गोमेदवदरान्वितं ।
काञ्जिकेन तु संपिष्टं तल्लेपो ब्रध्नजित् परः” ॥
गोमेदं पत्रं । तथा च निर्घण्टौ धन्वन्तरिः ।
“पत्रं हलाह्वयं रामं गोमेदं वसनाह्वयं” ।
इतिवृद्धिब्रध्नधिकारः । इति भावप्रकाशः ॥

**अन्दिका**, स्त्री, (अन्दति नाट्याय ज्येष्ठभगिनीत्वं सम्बध्नाति, अदि + ण्वुल् स्त्रियां टाप् । नाट्योक्तौ ज्येष्ठभगिनी इत्यमरटीकायां ।) अन्तिका ।
चुल्ली । इत्यमरटीकायां नीलकण्ठः ॥ चुला इति भाषा ।

**अन्दुः**, स्त्री, (अन्द्यते बध्यतेऽनेन, अदि + करणे उण्बाहुल्यात् ।) हस्तिनिगडः । आँदुया इति भाषा । स्त्रीपादभूषणं । इति हेमचन्द्रो भूरिप्रयो-गश्च ॥ मल पञ्चम इत्यादि भाषा ।

**अन्दुकः**, पुं, (अन्द्यते बध्यतेऽनेन, अदि + करणे उण्, ततः स्वार्थे कन् ।) हस्तिपादबन्धनशृङ्खलः । तत्पर्य्यायः । निगडः २ । इत्यमरः ॥ पादालङ्कार-विशेषः । तत्पर्य्यायः । पादकटकः २ । इति त्रि-काण्डशेषः ॥

| | | **अन्दूः**, स्त्री, (अन्द्यते वध्यतेऽनेन, अदि + उण् ततः<br><br>ऊङुत इति स्त्रियां ऊङ् ।)<br>हस्तिपादवन्धन-<br>लौहनिगडः । आन्दुया इति<br>भाषा । स्त्रीपाद-<br>भूषञं । भल गुजरी इत्यादि<br>भाषा । इति<br>मेदिनी ॥ (निगडः । शृङ्खला ।<br>वन्धनरज्जुः ।<br>अन्दः स्त्रियां स्यान्निगडे प्रभेदे<br>भूषणस्य च । इति<br>मेदिनी ।)<br><br>**अन्दूकः**, पुं, (अन्दू + स्वार्थे कन्, पृषोदरादित्वात्<br><br>पक्षे केहण इति ह्रस्वाभावः ।<br>स्वार्थिकप्रत्ययाः<br>प्रकृतितो<br>लिङ्गवचनान्यतिक्रामन्ति इति<br>पुंस्त्व<br>मन्यथा अन्दूका इति स्यात्<br>।) अन्दूः । इत्यमर-<br>टीकायां स्वामी ॥ अन्धत् क<br>दृक्क्षये । इति<br>कविकल्पद्रुमः ॥ (पाणिनिमते<br>तु अन्धदृष्टि |
|---|---|---|

:विघाते चुरादि सेट् ।) दृक्क्षयो दृष्टिरहिती-

भावः । तेनाकर्म्मकोऽयं । सत्ताजीवनदर्पभीति-
शयनक्रीडानिवासक्षयाव्यक्तध्वाननभोगतिस्थिति-
जरालज्जाप्रमादोदये । मोहे खोटनवेगयुद्धदहन-
ख्यातिक्षरोन्मादके शुद्धिस्वेदपलायनभ्रमणके
शान्तौ प्लुतौ मज्जने ॥ दृप्तौ जागरशोषवक्रगम-
नोत्साहे मृतौ संशये म्लानौ मन्दगतौ च नृत्य-
पतने चेष्टाक्रुधौ रोदने । वृद्धौ हावकृतौ च
सिद्धिविरतौ हर्षोपवेशे बले कम्पोद्वेगनिमेषभङ्ग-
यतनाद्ये धातवोऽकर्म्मकाः ॥ दौर्बल्यादिषु चा-
र्थेषु वर्त्तमानास्तु धातवः । वाचका भावमात्रस्य
यतस्तस्मादकर्म्मकाः ॥ कौटिल्यादिषु चार्थेषु
प्रोक्ता
ये ते तु धातवः । तद्वद्भावेऽकर्म्मकाः स्युस्तद्वत्-
कृत्यां सकर्म्मकाः ॥ इति । अन्धयति अन्धापयति
वृद्धः । इति दुर्गादासः ॥

**अन्धं**, क्ली, (अन्ध + अच् ।) अन्धकारः ।

("सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा" ।
इति उत्तरचरिते ।) जलं । इति मेदिनी ।

**अन्धः**, त्रि, (अन्ध + अच् ।) चक्षुर्द्वयहीनः । आन्धा

आँध्ला इति हिन्दी भाषा । तत्पर्य्यायः । अ-
दृक् २ । इत्यमरः । ("वृद्धोऽन्धः पतिरेष मञ्चक-
गतः" । इति साहित्यदर्पणे ।
"अन्धो मत्स्यानिवाश्नाति स नरः कण्टकैः सह ।
यो भाषतेऽर्थवैकल्यमप्रत्यक्षं सभाङ्गतः" ।
इति मनुः ।)

**अन्धः**, [स्] क्ली, (अन्ध + असुन् ।) अन्नं । इत्य-

मरः ॥

**अन्धकः**, पुं, (अन्ध + ण्वुल् ।) देशभेदः । इति

शब्दरत्नावली ॥ नृपभेदः ।
("सुदंष्ट्रं च सुचारुं च कृष्णमित्यन्धकास्त्रयः" ।
इति हरिवंशे ।) असुरभेदः । इति महाभारतं ॥
("स व्रजत्यन्धवद्यस्मादनन्धोऽपि हि भारत ।
तमन्धकोऽयं नाम्नेति प्रोचुस्तत्र निवासिनः" ।

**अन्धकासुहृद्**, पुं, (अन्धकस्य असुरस्य असुहृत्,

नाशकतया शत्रुः, षष्ठीतत्पुरुषः ।) शिवः ।
इति
हेमचन्द्रः ॥

**अन्धकूपः**, पुं, (अन्धमन्धकारं करोति, अन्ध + करो-

त्यर्थे णिच् + पचाद्यच्, तादृशः कूपः ।)
सान्ध-
कारकूपः । इति त्रिकाण्डशेषः ॥ आँधुया
पात्कुया
इति भाषा ।
("मज्जत्यात्मा भक्तिहीनो महामोहमये भवे ।
अन्धकूपे निरालम्बश्छिन्नरज्जुर्यथा घटः" ॥
इति सद्भावे ।)

**अन्धतमसं**, क्ली, (अन्धयति, अन्ध + अच्, अन्धं

तमः कर्म्मधारयः, समासान्त अच् ।)
निविडा-
न्धकारं । इत्यमरः ॥
("प्रध्वंसितान्धतमसस्तत्रोदाहरणं रविः" ।
इति शिशुपालबधे ।)

**अन्धतामसं**, क्ली, (तम एव तामसं प्रज्ञादित्वात्

स्वार्थे अण् ।) निविडान्धकारं । महान्धकारं ।
इत्यमरटीकायां स्वामी ॥

**अन्धतामिस्रं**, क्लीं, (तमिस्रैव तामिस्रं, स्वार्थे अण्,

अन्धं निविडं तामिस्रं कर्म्मधारयः ।)
निविडा-
न्धकारमयनरकविशेषः ।
पञ्चप्रकाराज्ञानान्तर्ग-
ताज्ञानविशेषः । देहनाशे अहमेव मृतोऽस्मीति
बुद्धिः । इति भारतभागवते, --
("एकविंशतिविधनरकान्तर्गतद्वितीयनरकवि-
शेषः" स च निविडान्धकारमयः । "तस्यां
धर्म्म-
पत्न्यामन्धतामिस्रमभ्यध्यायत्" । इति
महावीर-

इति
श्राद्धतत्त्वधृतवशिष्ठवचनं ॥
तत्पर्य्यायः ।
भक्तं २ अन्धः ३ भिस्मा ४
ओदनं ५ दीदिविः ६ ।
इत्यमरः ॥ भिस्सा ७ । इति
तट्टीका ॥ क्रूरं ८ ।
इति राजनिर्घण्टः ॥ अट्टं ९
कसिपुः १० जीवातुः
११ । इति जटाधरः ॥ कूरं
१२ आपूपिकं १३
जीवन्तिः १४ प्रसादनं १५
। इति शब्दरत्ना-
वली ॥ * ॥ अस्य गुणाः ।
बुद्धिशुक्रप्रीतिपुष्टि-
धात्विन्द्रियबलकारित्वं ।
गुरुत्वं । क्षुधाक्षयरोग-
श्रमकार्श्यनाशित्वञ्च ॥ * ॥
नवान्नगुणाः । श्लेष्म-
कारित्वं । स्वादुत्वं ।
सुस्निग्धत्वं । वृंहणत्वं । गुरु-
त्वञ्च ॥ * ॥ पुराणान्नगुणाः ।
विरसत्वं । रूक्षत्वं ।
पथ्यत्वं । अग्निकारित्वञ्च ॥
* ॥ उष्णान्नगुणाः ।
प्रशंसनीयत्वं । हृद्यत्वं ।
अग्निकारित्वं । वायुश्लेष्म-
नाशित्वं ।
रक्तपित्तप्रकोपकारित्वञ्च ॥
* ॥ अत्यु-
ष्णान्नगुणः । बलनाशित्वं ॥
* ॥ शीतशुष्कान्नयो-
र्गुणः । दुर्ज्जरत्वं ॥ * ॥
अतिक्लिन्नान्नगुणः । ग्लानि-
कारित्वं ॥ * ॥
तण्डुलान्वितान्नगुणः ।
दुर्जरत्वं ॥ * ॥

इति हरिवंशे ।) मुनिविशेषः । इति याज्ञ-
वल्क्यः ॥ (दृष्टिहीनः । चक्षुर्द्वयहीनः ।
“अन्धकः कुब्जकश्चैव राजकन्या च त्रिस्तनी ।
त्रयोऽप्यन्यायतः सिद्धाः सम्मुखे कर्म्मणि स्थिते”
॥
इति पञ्चतन्त्रे ।)

**अन्धकरिपुः**, पुं, (अन्धकस्य असुरस्य रिपुः नाशक-
तया शत्रुः, षष्ठीतत्पुरुषः ।) शिवः । इत्यमरः ॥
श्लेषकाव्यादौ अन्धकारनाशकत्वात् सूर्य्याग्नि-
चन्द्रेषु च वर्त्तते ॥

**अन्धकारः**, पुं, क्ली, (अन्धमन्धकवत् करोति, अन्ध
+ कृ + अण् ।) तेजःसामान्याभावः । आँधार
इति भाषा । तत्पर्य्यायः । ध्वान्तं २ तमिस्रं ३
तिमिरं ४ तमः ५ । इत्यमरः ॥ (“अथान्धकारं
गिरिगह्वराणां” । इति रघुवंशे ।) भूच्छायं ६ ।
इति राजनिर्घण्टः ॥ महान्धकारे अन्धतमसं ।
७ सर्व्वव्यापकान्धकारे सन्तमसं । ८
अल्पान्धकारे
अवतमसं ९ । इत्यमरः ॥ अस्य गुणाः । भयदृष्टि-
तेजोऽवरोधकारित्वं । तिक्तत्वं । सर्व्वव्याधिकर-
त्वञ्च । इति राजवल्लभः ॥

चरिते ।)

**अन्धमूषिका**, स्त्री, (अन्ध दृष्टिविघाते, अन्ध + भावे
घञ्, अन्धं दृष्टिविघातं मुष्णाति तत्सेवनेन
नाश-
यति, मुष् + ण्वुल् पृषोदरादित्वात् दीर्घः
स्त्रियां
टाप् ।) देवताडवृक्षः । इति शब्दचन्द्रिका ॥

**अन्धाहिः**, पुं, स्त्री, (अन्धः अहिः सर्पैव ।) मत्स्य-
भेदः । इति त्रिकाण्डशेषः ॥ कुँचिया इति
ख्यातः ।

**अन्धिका**, स्त्री, (अन्ध + ण्वुल् स्त्रियां टाप् ।) द्यूत-
विशेषः । रात्रिः । इति मेदिनी ॥ सर्षपी । इति
हेमचन्द्रः ॥ स्त्रीविशेषः । चक्षूरोगविशेषः ।
इति
शब्दरत्नावली ॥

**अन्धुः**, पुं, (अन्ध + उण् ।) कूपः । इत्यमरः ॥

**अन्धुलः**, पुं, (अन्ध + उलच् ।) शिरीषवृक्षः इति
शब्दचन्द्रिका ॥

**अन्ध्रः**, पुं, (अन्धयति गीतेन मृगान् अन्धवत्
करोति, अन्ध + कर्त्तरि रः ।) व्याधः ।
मृगया-
जीवी । इति कश्चित् संग्रहकारः ।
(वैदिहिकात्
कारावरस्त्रियां जातो जातिविशेषः, स तु
सततं
ग्रामवहिर्वासी मृगयाजीवी च ।
“कारावरनिषादात् तु चर्म्मकारः प्रसूयते ।
वैदिहिकादन्ध्रमेदौ वहिर्ग्रामप्रतिश्रयौ” ॥
इति मनुः ।)

**अन्नं**, क्ली, (अद् + कर्म्मणि क्तः ।) स्विन्नतण्डुलं ।
यथा, --
“शस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते ।
आमं वितुषमित्युक्तं स्विन्नमन्नमुदाहृतं” ॥

जलधौतसद्योऽन्नगुणाः ।
शीघ्रपाकित्वं । हिमत्वं ।
लघुत्वञ्च ॥ * ॥
रात्रिस्थितजलयुक्तान्नगुणौ ।
त्रि-
दोषकोपकारित्वं । रूक्षत्वञ्च
॥ * ॥ भृष्टतण्डुलान्न-
गुणौ । लघुत्वं ।
अग्निप्रदीपनत्वञ्च । इति
राज-
वल्लभः ॥ * ॥ धान्यं । इति
राजनिर्घण्टः ॥ विष्णुः ।
इति तस्य सहस्रनामभध्ये
पठितं ॥ अदनीयद्रव्य-
मात्रं ॥ अन्नसाधनं यथा, --
“सुधौतांस्तण्डुलान्
स्फीतांस्तोये पञ्चगुणे पचेत् ।
तद्भक्तं प्रसृतं चोष्णं विषदं
गुणवन्मतं” ॥
तद्गुणाः ।
“भक्तं वह्निकरं पथ्यं तर्पणं
रोचनं लघु ।
अधौतमस्रुतं शीतं गुर्व्वरुच्यं
कफप्रदं” ॥
इति भावप्रकाशः ॥ * ॥
तद्दानफलं यथा, --
“वारिदस्तृप्तिमायाति
सुखमक्षय्यमन्नदः” ॥
अन्नस्य प्रजापतिर्द्देवता ।
अक्षयसुखप्राप्तिः फलं ।
प्रतिग्रहे मुष्टिग्रहणं । इति
शुद्धितत्त्वं ॥ अपि च,
“ब्रह्महत्याकृतं पापं
अन्नदानात् प्रणश्यति ।
अन्नदः पापकर्म्मापि पूतः
स्वर्गे महीयते” ॥
इति प्रायश्चित्ततत्त्वं ॥ * ॥
अथ प्रजापतिदैवतान्न-

| | | |
|---|---|---|
| | | दानावर्त्तः । तत्र अन्नदानस्तुतिः । ब्रह्मपुराणे । “अन्ने प्रतिष्ठिता लोका अन्नमाश्वक्षयं परं । तस्मादन्नं प्रशंसन्ति सदैव पितृमानवाः ॥ अन्नस्य हि प्रदानेन नरो याति परां गतिं । सर्व्वकामसमायुक्तः प्रेत्य चेहाधिकं शुभं” ॥ तथा, -- “अन्नमूर्ज्जस्वलं लोके दत्त्वोर्ज्जस्वी भवेन्नरः । सतां पन्थानमाश्रित्य सर्व्वपापैः प्रमुच्यते” ॥ महाभारते । “अन्नदः पशुमान् पुत्त्री धनवान् भोगवानपि । प्राणवांश्चापि भवति रूपवांश्च तथा नृप” ॥ तथा, -- “अन्नदस्य मनुष्यस्य बलमोजो यशांसि च । कीर्त्तिश्च वर्द्धते शश्वत्त्रिषु लोकेषु पाण्डव” ॥ आग्नेयपुराणे । अन्नस्तुत्यनन्तरं । “तस्मादन्नं सदा देहि श्रद्धया नृपसत्तम । |

:ब्रह्महत्यादिकं पापं अन्नदस्य प्रणश्यति” ॥

तथा, --

“अन्नदानात् परं दानं न भूतं न भविष्यति ।
पुण्यं यशस्यमायुष्यं बलपुष्टिविवर्द्धनं ॥
सर्व्वमन्नस्य दानेन भवतीति विनिश्चयः ।
महाकाञ्चनचित्राणि सेवितान्यप्सरोगणैः ॥
अन्नदस्योपतिष्ठन्ति विमानानि सुरालये ।
भक्ष्यभोज्यमयाः शैला दिव्यरूपाद्यलङ्कृताः ॥
हृष्टपुष्टजना नित्यमुपतिष्ठन्ति चाग्रतः ।
हस्त्यश्वरथयानैश्च क्रीडमानाश्च ते नराः” ॥

पद्मपुराणे ।

“आपर्ब्बतनदी वापी पृथिवी सर्व्वकामदा ।
विधिना तेन सा दत्ता योऽन्नं ददाति सर्व्वदा ।
क्षुधिते यः प्रयच्छेत अन्नं श्रद्धासमन्वितः ।
ब्रह्मणो भवने स वै ब्रह्मणा सह मोदते ॥
चान्द्रवारुणलोकाश्च याम्याः कौवेरकास्तथा ।
गोलोको ब्रह्मलोकश्च सर्व्वे चान्ने प्रतिष्ठिताः ॥
ददत् कन्यामलङ्कृत्य हस्त्यश्वञ्च महाधनं ।
अन्नदानस्य चैतानि कलां नार्हन्ति षोडशीं” ॥

विष्णुधर्म्मात्तरे ।

“यावतो ग्रसते ग्रासान् विद्वान् विप्रः सुसंस्कृतः ।
अन्नप्रदस्य तावन्तः क्रतवः परिकीर्त्तिताः” ॥ * ॥

अथान्नदानधर्म्माः । यमः ।

“आदरेण च भक्त्या च यदन्नमुपदीयते ।
एतदेवायने प्रोक्तं द्विगुणं पुण्यगौरवं ॥
अन्नं विना कृशाङ्गस्य दत्त्वान्नं देशकालतः ।
फलं पञ्चगुणं प्रोक्तं सर्व्वभावसमन्वित” ॥

सर्व्वभावसमन्वित इति सम्बोधनं । अत्र यज-
मानः प्राणिमात्रेभ्यो गृहीतोदपूर्णताम्रपात्रः उदङ्मुखः सङ्कल्प्य यथेष्टकालावधि अन्नं दद्यात् ।
तद्यथा । ॐ नन्दिपुराणोक्तप्राणिमात्रान्नदान-
फलप्राप्तिकामोऽहं प्राणिभ्योऽन्नं दास्ये । तदवधि
यथासम्भवं प्राणिमात्रेभ्यः स्वगृहे अन्यत्र वा
भक्तशालां कृत्वा अविच्छिन्नमन्नं देयं । अतएव
धार्म्मिकास्ताम्रपट्टविलिखितां भूमिं समुपकल्प्य
आचन्द्रार्कस्थायिनीं भक्तशालां ददाति ॥ * ॥

वायुपुराणे ।

“क्षिप्रमत्युष्णमक्लिष्टं दद्यादन्नं बुभुक्षिते ।
सव्यञ्जनं सदा स्निग्धं भक्ष्यं सत्कृत्य यत्नतः” ॥

क्षिप्रमतिथिप्राप्त्यनन्तरमेव । अक्लिष्टमनुपहतं । भक्ष्यमप्रतिषिद्धं ।

“तरुणादित्यसङ्काशं विमानं हंसवाहनं ।
अन्नदो लभते तिस्रः कल्पकोटीस्तथैव च ॥
अन्नदानात् परं दानं न भूतं न भविष्यति ।
अन्नाद्भूतानि जायन्ते जीवन्ति च न संशयः ॥
जीवदानात् परं दानं न किञ्चिदपि विद्यते ।
अन्नाज्जीवति त्रैलोक्यं त्रैलोक्यस्येह तत्फलं” ॥

बुभुक्षितेभ्योऽन्नं पूर्ब्बवत् संकल्प्य दद्यात् । मृष्टं संस्कृतं । सव्यञ्जनमन्नं पूर्ब्बवत् सङ्कल्प्य तद-
र्थिभ्यो दद्यात् । विष्णुधर्म्मोत्तरोक्तमृष्टान्नाकाङ्क्षि-
गोचरमृष्टान्नदानफलप्राप्तिकामोऽहं यथाशक्ति
मृष्टान्नार्थिभ्यो मृष्टमन्नं दास्ये । इति सङ्कल्प्य
मृष्टान्नार्थिनोऽनुसन्धाय तेभ्यो यथाशक्ति मृष्टान्नं
दद्यात् ॥ * ॥ तथान्नदानप्रकरणे ।

“सहस्रपरिवेशस्तु नरकन्तु न गच्छति ।
विमानेनार्कवर्णेन स्वर्गलोके महीयते” ॥

सहस्रपरिवेशः सहस्रायमनुष्येभ्योऽन्नप्रदः ॥ यथा-
सम्भवं सहस्राय मनुष्येभ्यो नित्यमन्नं पूर्ब्बवत्
सङ्कल्प्य दद्यात् । ॐ विष्णुधर्म्मोत्तरोक्तसहस्र-
परिवेशनफलप्राप्तिकामोऽहं यथासम्भवं सहस्राय
मनुष्येभ्यो व्यञ्जनादिसहितमन्नं दास्ये । इति
सङ्कल्प्य यथाशक्ति नानादिनैः सहस्रं मनुष्यान्
भोजयेत् । देवलः ।

“कृत्वापि पातकं कर्म्म यो दद्यादन्नमीप्सितं ।
ब्राह्मणानां विशेषेण स निहन्त्यात्मनस्तमः” ॥

विशेषेण इत्यभिधानात् अब्राह्मणेऽपि फलमेतद्-
भवत्येव । एवञ्च सामान्येनान्नदानमिदं । ईप्सित-
मित्यर्थिनं स्पृष्ट्वा यथायथमभिमतमन्नमुत्पाद्य

तत् प्रीणयति पात्राणि मामृतं मानवर्ज्जितं ॥
दुर्लभस्तु मुदा दाता मुदा भोक्ता च दुर्लभः ।
मुदा दाता च भोक्ता च तावुभौ स्वर्गगामिनौ ॥
योऽन्नं बहुमतं भुङ्क्ते यश्चान्नं नावमन्यते ।
यश्चान्नं प्रीतितो दद्यात् तस्यान्नमुपतिष्ठते ॥
प्रीतितोऽन्नञ्च यो दद्यात् गृह्णीयात्योऽभिपूज्य च ।
प्रीतितोऽक्षयमश्नाति पूजितः स्वर्गमश्नुते ॥
यो दद्याद्विप्रियेणान्नं यश्चान्नं नाभिनन्दति ।
तावुभौ नरके मग्नौ वसेतां शरदां शतं" ॥ * ॥
अथान्नदानविशेषफलविशेषपरिभाषा । कूर्म्मपुराणे ।
"गृहस्थायान्नदानेन फलं नाप्नोति मानवः ।
आममेवास्य दातव्यं दत्त्वाप्नोति परां गतिं" ॥
अन्नदानेन पक्वान्नदानेन फलं नाप्नोति । इति गृहस्थायामान्नदानेन यादृशं फलं तादृशं
पक्वान्नदानेन नाप्नोतीत्यर्थः । गृहस्थस्यामान्नदाने
सति तस्य पञ्चयज्ञनिष्पत्तेः ॥ * ॥
अथ सामान्यान्नदानं नन्दिपुराणे ।
"अन्नाद्भुतानि जातानि देवा ह्यन्नाद्यकाङ्क्षिणः ।
न तस्य पात्रादिविधिर्व्विना श्राद्धं प्रकीर्त्तितः" ॥
तथा, --
"अपि कीटपतङ्गानां शुनां चाण्डालयोनिनां ।
ॐ वायुपुराणोक्तान्नदानफलप्राप्तिकामोऽहं बुभु-
क्षितेभ्यः सव्यञ्जनं स्निग्धमन्नं दास्ये । एवं सङ्कल्प्य
बुभुक्षितानन्विष्य तेभ्यो यथोक्तमन्नं दद्यात् ॥ * ॥
महाभांरते ।
"श्रान्ताय क्षुधितायान्नं यः प्रयच्छति भूमिप ।
स्वायम्भुवं महत् स्थानं स गच्छति नराधिप" ॥
श्रान्ताय क्षुधितायान्नं पूर्ब्बवत् सङ्कल्प्य दद्यात् ।
ॐ स्वायम्भुवस्थानप्राप्तिकामोऽहं श्रान्ताय क्षुधि-
तायान्नं दास्ये । इति सङ्कल्प्य यथाकाले श्रान्तं
क्षुधितमनुसन्धायान्नं तस्मै दद्यात् ॥ * ॥ तथा, --
"सद्भ्यो ददाति यश्चान्नं सदैकाग्रमना नरः ।
न स दुर्गाण्यवाप्नोति ह्येवमाह पराशरः" ॥ अभीष्टसमये
सद्ब्राह्मणक्षत्त्रियवैश्यशूद्रेभ्योऽन्नं पूर्ब्बवत् सङ्कल्प्य दद्यात् । ॐ महाभारतोक्तस-
द्गोचरान्नदानफलप्राप्तिकामोऽहं सद्भ्योऽन्नं दास्ये ।
ततः प्रभृति अभिमतकाले सद्भ्यो ब्राह्मणादि-
भ्योऽन्नं दद्यात् ॥ * ॥ तथा, --
"यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्त्तते ।
श्रान्तायादृष्टपूर्ब्बाय तस्य पुण्यफलं महत्" ॥
अपरिक्लिष्टमनुपहतं । यथोक्तप्राणिनेऽन्नं पूर्ब्ब-
वत् सङ्कल्पयेत् । ॐ महापुण्यफलप्राप्तिकामोऽहं
तेभ्यःपूर्ब्बवत् सङ्कल्प्य दद्यात् । ॐ ब्राह्मणप्रमुख-
नानावर्णेभ्य आत्मीयतमःक्षयकामोऽहं यथासम्भवं
ईप्सितमन्नं दास्ये । ततः प्रभृति यथायथमुप-
स्थितेभ्य ईप्सितमन्नं दद्यात् । इत्यादि वल्लालसेन-
कृतदानसागरे अन्नदानावर्त्तः ॥

**अन्नः**, पुं, (अनित्यनेन अन + ननु, अद्यते इति
अद् + क्तः वा ।) सूर्य्यः । इति सिद्धान्तकौ-
मुदी ॥

**अन्नः**, त्रि, (अनित्यनेन अन + नन् ।) भुक्तः ।
खादितः । इति मेदिनी ॥

**अन्नकोष्ठकः**, पुं, (कोष्ठमिव, कोष्ठ + कन् अन्नस्य
तण्डुलादेः कोष्ठकः रक्षणस्थानं ।) तण्डुलादि-
रक्षणस्थानं । इति हेमचन्द्रः ॥ गोला करुइ
इत्यादि भाषा ।

**अन्नगन्धिः**, पुं, (अन्नस्येव अपक्वतया गन्धोयस्य
सः । उपमानाच्च इति पाणिनिसूत्रेण इच्
समासान्तः ।) उदरामयरोगः । इति त्रिकाण्ड-
शेषः ॥

**अन्नपूर्णा**, स्त्री, (अन्नं पूर्णं यस्याः सा राजदन्ता-
दित्वात् परनिपातः ।) स्वनामख्यातदेवीविशेषः
तन्मन्त्रादि यथा, --
"माया हृद्भगवत्यन्ते माहेश्वरिपदं ततः ।
अन्नपूर्णे ठयुगलं मनुः सप्तदशाक्षरः" ॥

| | | |
|---|---|---|
| दत्त्वान्नं लोकमाप्नोति प्राजापत्यं समासतः ॥<br>बान्धवेभ्योऽतिथिभ्योऽन्नं पुत्त्रेभ्योऽन्नं प्रयच्छतः ।<br>दीनान्धकृपणानाञ्च स्वर्गः स्यादन्नदायिनां ॥<br>ग्रासमात्रं नरो दत्त्वा अन्नानामन्नगृध्नवे ।<br>स्वर्गे वसेत् समानान्तु शतं भोगैर्म्मनोरमैः ॥<br>ग्रासे ग्रासे फलं ह्येतद्विधिवत् परिकीर्त्तितं । | श्रान्तायाध्वगाय अदृष्टपूर्ब्बायान्नं दास्ये । इति<br>सङ्कल्प्य यथाकालमध्वगमन्विष्य यथोक्तमन्नं तस्मै<br>दद्यात् । अत्राध्वनि वर्त्तते इति शतृनिर्द्देशात्<br>पथि गच्छते पथिकाय वर्त्मनि कुटीं कृत्वा तरु-<br>तले चान्नं दद्यात् ॥ * ॥ विष्णुधर्म्मोत्तरे ।<br>"मृष्टान्नं मानवो दत्त्वा मृष्टान्नार्थिनि काङ्क्षितं ।<br>अक्षयं फलमाप्नोति स्वर्गलोकञ्च गच्छति" ॥ | कल्पे च ।<br>"प्रणवाद्या यदा देवी तदा सप्तदशाक्षरी ।<br>अन्नप्रदा मोक्षदा च सदा विभवदायिनी ॥<br>मायाद्या च यदा देवी तदा सा सकलेष्टदा ।<br>श्रीवीजाद्यायदा देवी तदा सुखविवर्द्धिनो ॥<br>वाग्वीजाद्या यदा विद्या वागीशत्वप्रदायिनी ।<br>कामाद्या च यदा विद्या सर्व्वकामप्रदायिनी ॥<br>तारमायादिका विद्या भोगमोक्षैकदायिनी ।<br>माया श्रीयुग्मवीजाद्या सदा विभवदायिनी ॥ |

:श्रीमाया युग्मवीजाद्या सर्व्वसम्पत्तिपूरणी” ॥ * ॥

एषां पूजा प्रातःकृत्यादिपीठन्यासान्तं विधाय
हृत्पद्मस्य केशरेषु मध्येषु च भुवनेश्वरीपीठ-
मन्वन्तं पीठशक्तीर्न्यस्य ऋष्यादिन्यासं कुर्य्यात् ।
यथा शिरसि ब्रह्मणे ऋषये नमः । मुखे पङ्क्ति-
च्छन्दसे नमः । हृदि अन्नपूर्णायै देवतायै नमः ।
तत्रैव ।
“एतेषां मन्त्रराशीनां ऋषिर्ब्रह्मा उदाहृतः ।
पङ्क्तिः छन्दः समाख्यातं देवता चान्नपूर्णिका” ॥
ततः कराङ्गन्यासौ । ह्रीँ अङ्गुष्ठाभ्यां नमः । ह्रीँ
हृदयाय नमः । इत्यादि सर्व्वत्र मायावीजेन
कुर्य्यात् । तथा च निबन्धे ।
अङ्गानि मायया कुर्य्यात् ततो देवीं विचिन्तयेत् ।
कल्पे च ।
“यद्वीजाद्या भवेद्विद्या तद्वीजेनाङ्गकल्पना” ॥ * ॥ ।
ततो ध्यानं ।
“रक्तां विचित्रवसनां नवचन्द्रचूडा-
मन्नप्रदाननिरतां स्तनभारनम्रां ।
नृत्यन्तमिन्दुसकलाभरणं विलोक्य
हृष्टां भजे भगवतीं भवदुःखहन्त्री” ॥
एवं ध्यात्वा मानसैः संपूज्य शङ्खस्थापनं कुर्य्यात् ।
ततः सामान्योक्तपीठपूजां विधाय भुवनेश्वरी-

उद्यद्भानुसहस्राभे नयनत्रयभूषिते ।
चन्द्रचूडे महादेवि अन्नपूर्णे नमोऽस्तु ते ॥
विचित्रवसने देवि अन्नदानरतेऽनघे ।
शिवनृत्यकृतामोदे अन्नपूर्णे नमोऽस्तु ते ॥
साधकाभीष्टदे देवि भवदुःखविनाशिनि ।
कुचभारनते देवि अन्नपूर्णे नमोऽस्तु ते ॥
षट्कोणपद्ममध्यस्थे षडङ्गयवतीमये ।
ब्रह्माण्यादिस्वरूपे च अन्नपूर्णे नमोऽस्तु ते ॥
देवि चन्द्रकृतापीडे सर्व्वसाम्राज्यदायिनि ।
सर्व्वानन्दकरे देवि अन्नपूर्णे नमोऽस्तु ते ॥
इन्द्राद्यर्च्चितपादाब्जे रुद्रादिरूपधारिणि ।
सर्व्वसम्पत्प्रदे देवि अन्नपूर्णे नमोऽस्तु ते ॥
पूजाकाले पठेद्यस्तु स्तोत्रमेतत् समाहितः ।
तस्य गेहे स्थिरा लक्ष्मीर्जायते नात्र संशयः ॥
प्रातःकाले पठेद्यस्तु मन्त्रजापपुरःसरं ।
तस्य चान्नसमृद्धिः स्याद्वर्द्धमाना दिने दिने ॥
यस्मै कस्मै न दातव्यं न प्रकाश्यं कदाचन ।
प्रकाशात् कार्य्यहानिः स्यात्तस्माद्यत्नेन गोपयेत्” ॥
इत्यन्नपूर्णास्तोत्रं समाप्तं ॥ * ॥
अथ अन्नपूर्णाकवचं ॥
“कथिताश्चान्नपूर्णाया या या विद्याः सुदुर्ल्लभाः ।
कृपया कथिताः सर्व्वा श्रुताश्चाधिगता मया ॥
साम्प्रतं श्रोतुमिच्छामि कवचं यत् पुरोदितं ।
त्रैलोक्यरक्षणं नाम कवचं मन्त्रविग्रहं” ॥
ईश्वर उवाच ।
“शृणु पार्ब्बति वक्ष्यामि सावधानावधारय ।
त्रैलोक्यरक्षणं नाम कवचं ब्रह्मरूपकं ॥
ब्रह्मविद्यास्वरूपञ्च महदैश्वर्य्यदायकं ।
पाठनाद्धारणान्मर्त्यस्त्रैलोक्यैश्वर्य्यभाग्भवेत् ॥

पश्चिमे वरुणः पातु वायव्यां पवनोऽवतु ।
कुवेरश्चोत्तरे पातु मामैशान्यां शिवोऽवतु ॥
ऊर्द्ध्वाधः सततं पातु ब्रह्मानन्तो यथाक्रमात् ।
वज्राद्याश्चायुधाः पान्तु दशदिक्षु यथाक्रमात् ॥
इति ते कथितं पुण्यं त्रैलोक्यरक्षणं परं ।
यद्धृत्वा पठनाद्देवाः सर्व्वैश्वर्य्यमवाप्नुयुः ॥
ब्रह्मा विष्णुश्च रुद्रश्च कवचं धारणाद्यतः ।
सृजत्यवति हन्त्येव कल्पे कल्पे पृथक् पृथक् ॥
पुष्पाञ्जल्यष्टकं देव्यै मूलेनैव पठेत्ततः ।
युगायुतकृतायास्तु पूजायाः फलमाप्नुयात् ॥
प्रीतिमन्योन्यतः कृत्वा कमला निश्चला गृहे ।
वाणी वक्त्रे वसेत्तस्य सत्यं सत्यं न संशयः ॥
अष्टोत्तरशतं चास्य पुरश्चर्य्याविधिः स्मृतः ।
भूर्ज्जे विलिख्य गुलिकां स्वर्णस्थां धारयेद्यदि ॥
कण्ठे वा दक्षिणे बाहौ सोऽपि सर्व्वतपोमयः ।
ब्रह्मास्त्रादीनि शस्त्राणि तद्गात्रं प्राप्य पार्ब्बति ।
माल्यानि कुसुमान्येव भवन्त्येव न संशयः” ॥
इति भैरवतन्त्रे भैरवभैरवीसंवादे अन्नपूर्णाकवचं
समाप्तं । इति तन्त्रसारः ॥ * ॥ तस्याः स्तुत्यन्तरं
यथा । ॐ नमोऽन्नपूर्णायै ।
“ॐ नित्यानन्दकरी वराभयकरी सौन्दर्य्यरत्नाकरी
निर्धूताखिलघोरपावनकरी प्रत्यक्षमाहेश्वरी ।
प्रालेयाचलवंशपावनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ १ ॥

मन्त्रोक्तजयादिपीठमन्वन्तां पीठपूजां
विधाय पुन-
र्ध्यात्वा
आवाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं
वि-
धाय आवरणपूजामारभेत । यथा
केशरेष्वग्नि-
कोणे ह्रीँ हृदयाय नमः । नैरृते ह्रीँ
शिरसे
स्वाहा । वायव्ये ह्रीँ शिखायै वषट् ।
ऐशान्यां
ह्रीँ कवचाय हूँ । मध्ये नेत्रत्रयाय
वौषट् । चतु-
र्द्दिक्षु ह्रीँ अस्त्राय फट् । अष्टदलेषु
पूर्ब्बादिषु
ब्राह्म्यै माहेश्वर्य्यै कौमार्य्यै वैष्णव्यै
वाराह्यै इन्द्राण्यै
चामुण्डायै महालक्ष्म्यै
प्रणवादिनमोऽन्तेन पूज-
येत् । तत्रैव ।
“दलेषु पूजयेदेता ब्राह्म्याद्याः क्रमशः
सुधीः” ।
शूद्रस्य प्रणवश्चतुर्द्दशस्वरो
विन्दुयुक्तः ॥ कालिका-
पुराणे मन्त्रस्य सेतुकरणे उक्तत्वात् ।
तत इन्द्रा-
दीन् वज्रादींश्च पूजयित्वा धूपादि
विसर्ज्जनान्तं
कर्म्म समापयेत् ॥ * ॥ अस्य
पुरश्चरणजपः षोड-
शसहस्रसङ्ख्यः । तथा च ।
“यथाविधि जपेन्मन्त्रं
वसुयुग्मसहस्रकं ।
साज्येनान्नेन जुहुयात्तद्दशांशमनन्तरं”
॥
अयं मन्त्रः प्रणवादिरष्टादशाक्षरः ।
मायादिः
श्रीवीजादिश्च । तथा मायां विना
प्रणवादिः

त्रैलोक्यरक्षणस्यास्य कवचस्य ऋषिः शिवः
।
छन्दो विराडन्नपूर्णा देवता सर्व्वसिद्धिदा ॥
धर्म्मार्थकाममोक्षेषु विनियोगः प्रकीर्त्तितः ।
ह्रीँ नमो भगवत्यन्ते माहेश्वरिपदं ततः ।
अन्नपूर्णे ततः स्वाहा चैषा सप्तदशाक्षरी ॥
पातु मामन्नपूर्णा सा या ख्याता भुवनत्रये ।
विमाया प्रणवाद्यैषा तथा सप्तदशाक्षरी ॥
पात्वन्नपूर्णा सर्व्वाङ्गं रत्नकुम्भान्नपात्रदा ।
श्रीवीजाद्या तथा चैषा द्विरन्ध्रार्णा तथा मुखं
॥
प्रणवाद्या भ्रुवौ पातु कण्ठं वाग्वीजपूर्ब्बिका
।
कामवीजादिका चेषा हृदयन्तु महेश्वरी ॥
तारं श्रीँ ह्रीँ नमोऽन्ते च भगवति पदं ततः ।
माहेश्वरि पदं चान्नपूर्णे स्वाहेति पातु मे ॥
नाभिमेकोनविंशार्णा पायान्माहेश्वरी सदा ।
तारं माया रमा कामः षोडशार्णास्ततःपरं ॥
शिरःस्था सर्व्वदा पातु विंशत्यर्णात्मिका च
या ।
करौ पादौ सदा पातु रमा कामोध्रुवस्तथा ॥
ध्वजञ्च सर्व्वदा पातु विंशत्यर्णात्मिका च
या ।
अन्नपूर्णा महाविद्या ह्रीँ पातु भुवनेश्वरी ॥
शिरः श्रीँ ह्रीँ तथा क्लीञ्च त्रिपुटा पातु मे गुदं
।
षड्दीर्घभाजा वीजेन षडङ्गानि पुनन्तु मां ॥
इन्द्रो मां पातु पूर्ब्बे च वह्निकोणेऽनलोऽवतु
।
यमो मां दक्षिणे पातु नैरृत्यां निरृतिश्च मां ॥

नानारत्नविचित्रभूषणकरी हेमाम्बराडम्बरी
मुक्ताहारविलम्बमानविलसद्वक्षोजकुम्भान्तरी
।
काश्मीरागुरुवासिताङ्गसुचरी
काशीपुराधीश्वरी ।
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी
॥ २ ॥
योगानन्दकरी रिपुक्षयकरी धर्म्मैकनिष्ठाकरी
चन्द्रार्कानलभासमानलहरी त्रैलोक्यरक्षाकरी
।
सर्व्वैश्वर्य्यकरी तपःफलकरी
काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी
॥ ३ ॥
कैलासाचलकन्दरालयकरी गौरी उमा
शङ्करी
कौमारी निगमार्थगोचरकरी ॐकारवीजाक्षरी
।
मोक्षद्वारकवाटपाटनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी
॥ ४ ॥
दृश्यादृश्यविभूतिभावनकरी
ब्रह्माण्डभाण्डोदरी
लीलानाटकसूत्रभेदनकरी विज्ञानदीपाङ्कुरी ।
विश्वाधीशमनःप्रमोदनकरी
काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी
॥ ५ ॥
गुर्व्वी सर्व्वजनेश्वरी जयकरी
मातान्नपूर्णेश्वरी
नारीनीलसमानकुन्तलधरी
नित्यान्नदानेश्वरी ।
सर्व्वानन्दकरी सदा शिवकरी
काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी
॥ ६ ॥
आदिक्षान्तसमस्तवर्णनकरी चन्द्रप्रभा
भास्करी

| | | |
|---|---|---|
| कामादिः श्रीवीजादिः वाग्भवादिश्च सप्तदशा-<br>क्षरः । कवचे तथा प्रतिपादनात् । विशेषस्तु<br>यद्यद्वीजादिको<br>मन्त्रस्तेनैवाङ्गप्रकल्पना ॥ * ॥<br>अथान्नपूर्णास्तोत्रं ।<br>"नमः कल्याणदे देवि नमः शङ्करवल्लभे ।<br>नमो भक्तप्रिये देवि अन्नपूर्णे नमोऽस्तु ते ॥<br>नमो मायागृहीताङ्गि नमः शङ्करवल्लभे ।<br>माहेश्वरि नमस्तुभ्यमन्नपूर्णे नमोऽस्तु ते ॥<br>महामाये शिवधर्म्मपत्नीरूपे हरप्रिये ।<br>वाञ्छादात्रि सुरेशानि अन्नपूर्णे नमोऽस्तु ते ॥ | | काश्मीरात्रिपुरेश्वरीत्रिलहरी नित्याङ्कुरी शर्ब्बरी ।<br>कामाकाङ्क्ष्यकरी महोत्सवकरी<br>काशीपुराधीश्वरी<br>भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ ७ ॥<br>चन्द्रार्कानलकोटिपूर्णवदना बालार्कवर्णेश्वरी<br>चन्द्रार्काग्निसमानकुण्डलधरी<br>चन्द्रार्कविम्बाधरी ।<br>मालापुस्तकपाशकाङ्कुशधरी<br>काशीपुराधीश्वरी<br>भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ ८ ॥ |

:दर्व्वीपाकसुवर्णरत्नघटिका दक्षे करे संस्थिता

वामे चारुपयोधरी रसभरी
सौभाग्यमाहेश्वरी ।
भक्ताभीवृकरी फलप्रदकरी
काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी
मातान्नपूर्णेश्वरी ॥ ९ ॥
सर्व्वत्राणकरी महाभयहरी माता कृपासागरी
दाक्षानन्दकरी निरामयकरी विश्वेश्वरी
श्रीधरी ।
साक्षान्मोक्षकरी
सदाशिवकरोकाशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी
मातान्नपूर्णेश्वरी ॥ १० ॥
अन्नपूर्णे सदा पूर्णे शङ्करप्राणबल्लभे ।
ज्ञानवैराग्यसिद्ध्यर्थं भिक्षां देहि नमोऽस्तु
ते ॥ ११ ॥
इति श्रीशङ्कराचार्य्यविरचितमन्नपूर्णास्तोत्रं
स-
माप्तं ॥ क्वचित् पुस्तके शङ्कराचार्य्यस्थाने
वेदव्यास
इति पाठः ॥

**अन्नप्राशनं**, क्ली, (अन्नस्य प्राशनं भोजनं यस्मिन्

तत् । अन्न + प्र + अश + भावे ल्युट् ।) षष्ठे
मासि अष्टमे वा बालकस्य पञ्चमे मासि
सप्तमे
वा बालिकायाः प्रथमान्नभक्षणरूपसंस्कारः
। इति
स्मृतिः ॥ तस्य क्रमः । शोभनदिने
कृतस्नानः कृत-
वृद्धिश्राद्धः पिता शुचिनामानमग्निं संस्थाप्यं
विरूपाक्षजपान्तां कुशण्डिकां समाप्य
प्रकृत-
कर्म्मारम्भे प्रादेशप्रमाणां धृताक्तां समिधं
तूष्णी-
मग्नौ हुत्वा महाव्याहृतिहोमं कुर्य्यात् । ततः
कृतप्राशनमुत्सङ्गे मातुर्ब्बालन्तु तं न्यसेत् ॥
देवाग्रतोऽथ विन्यस्य शिल्पभाण्डानि
सर्व्वशः ।
शास्त्राणि चैव शस्त्राणि ततः पश्येत्तु लक्षणं
॥
प्रथमं यत् स्पृशेद्बालः शिल्पभाण्डं स्वयं
तथा ।
जीविका तस्य बालस्य तेनैव तु भविष्यति”
॥
इति ज्योतिस्तत्त्वं ॥

**अन्नमयकोषः**, पुं, (अन्नस्य विकारः अन्न + विका-

रार्थे मयट् । “आनन्दमयोऽभ्यासादिति”
शारी-
रकसूत्रे भाष्यकारेणोक्तम् ।) स्थूलशरीरं ।
इति
वेदान्तसारः ॥

**अन्नमलं**, क्ली, (अन्नस्य मलं षष्ठीतत्पुरुषः ।) मद्यं
।

यथा, --
“सुरा वै मलमन्नानां पुरीषं मलमुच्यते ।
तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां
पिबेत्” ॥
इति प्रायश्चित्तविवेकः ॥

**अन्नविकारः**, पुं, (अन्नस्य विकारः षष्ठीतत्पुरुषः ।)

शुक्रं । इति राजनिर्घण्टः ॥
(अन्नकृतशोणित-
मांसादिपरिणामजश्चरमधातुः । रेतः ।)

**अन्नादः**, पुं, (अन्नमत्ति भुङ्क्ते अन्न + अद् + अण् ।

विष्णुरन्नमन्नखादकश्च जगदभिन्नतया,
तथाहि
श्रुतौ “सदेव सौम्येदमग्र
आसीदेकमेवाद्वितीय-
मित्युपक्रम्य तदैक्षत बहु स्यां प्रजायेय
इत्यादि

**अन्यतरः**, त्रि, (अन्य + डतरच् ।) अन्यः ।
इत्यमरः ॥

भिन्नतरः । द्वयोर्मध्ये निर्द्धारितैकः ।
इति व्याक-
रणं ॥ दुयेर मध्ये एक इति भाषा ।
(“अधर्म्मेण च यः प्राह यश्चाधर्म्मेण
पृच्छति ।
तयोरन्यतरः प्रैति विद्वेषं
वाधिगच्छति” ॥
इति मनुः ।) न्यायमते
द्वयावच्छिन्नप्रतियोगिता-
कभेदः ॥

**अन्यतरेद्युः**, [स्] व्य, (अन्यतरस्मिन् दिवसे
निपा-

तनात् एद्युसादेशः ।) अन्यतरदिने ।
दिनद्वययो-
रेकतरदिने । इत्यमरः ॥

**अन्यत्र**, व्य, (अन्यस्मिन् + अन्य + त्रल् ।)
वर्ज्जनं ।

विना । यथा, --
“अन्यत्र निधनात् पत्युः पत्नी केशान्न
वापयेद्” ।
इति प्राचीनाः । पत्युर्निधनादन्यत्र
पतिमरणं
विनेत्यर्थः । स्थानान्तरं । यथा ।
“अन्यत्र यूयं कुसुमावचायं
कुरुध्वमत्रास्मि करोमि सख्यः” ।
इति काव्यप्रकाशः । (कार्य्यान्तरे ।
क्रियान्तरे ।
“मधुपर्के च यज्ञे च पितृदैवतकर्म्मणि
।
अत्रैव पशवो हिंस्या
नान्यत्रेत्यब्रवीन्मनुः” ॥
इति मनुः ।
विषयान्तरे । शास्त्रान्तरे ।

आज्येन तत्तन्मन्त्रैः पञ्चाहुतीर्जुहुयात् ।
ततः
पञ्चप्राणानां होमः । ततो महाव्याहृतिहोमं
कृत्वा प्रादेशप्रमाणां घृताक्तां समिधं
तूष्णीमग्नौ
हुत्वा प्रकृतं कर्म्म समाप्य उदीच्यं
शाट्यायन-
होमादिवामदेव्यगानान्तं कर्म्म निर्व्वर्त्य
मन्त्रेण
कुमारस्य मुखे अन्नं दद्यात् । ततः
कर्म्मकार-
यितृब्राह्मणाय दक्षिणां दद्यात् । इति
भवदेव-
भट्टः ॥ तस्य विहितदिनादि यथा, --
“ततोऽन्नप्राशनं षष्ठे मासि कार्य्यं यथाविधि
।
अष्टमे वाथ कर्त्तव्यं यद्वेष्टं मङ्गलं कुले” ॥
षष्ठ इति मुख्यः कल्पः प्रागुक्तन्यायात् ।
कृत्य-
चिन्तामणौ ।
“अन्नस्य प्राशनं कार्य्यं मासि षष्ठेऽष्टमे बुधैः
।
स्त्रीणान्तु पञ्चमे मासि सप्तमे प्रजगौ मुनिः ॥
द्वादशीसप्तमीनन्दारिक्तासु पञ्चपर्ब्बसु ।
बलमायुर्यशो हन्यात् शिशूनामन्नभक्षणं” ॥
भुजबलभीमे ।
“षष्ठे मासि निशाकरे शुभकरे रिक्तेतरे वा
तिथौ
सौम्यादित्यसितेन्दुजीवदिवसे पक्षे च
कृष्णेतरे ।
प्राजेशादिति
पौष्णवैष्णवयुगैर्हस्तादिषट्कोत्तरैः-
राग्नेयाप्पतिपित्र्यभैश्च नितरामन्नादिभक्षं
शुभं” ॥
युगैरिति प्राजेशादौ प्रत्येकं सम्बध्यते ।
तथा-
त्रापि तिथ्यादिविद्धमृक्षं विवर्ज्जयेत् ।
“ष्षद्वन्द्वधनुर्म्मीनकन्यालग्नेऽन्नभक्षणं ।
त्रिकोणाष्टकयूकान्त्यग्रहा यद्वत्तथाफलं ॥

शङ्करभाष्ये । “यज्ञान्तकृत्
यज्ञगृह्यमन्नमन्नाद
एव च” ।)
विष्णुः । इति तस्य सहस्रनाममध्ये पठितः
॥
अन्नभोक्तरि त्रि ॥ (परान्नभोजनकारी ।)

**अन्यः**, त्रि, (अन् + बाहुल्यात् यः ।) असदृशः ।

इति मेदिनी ॥ परः ।
(“चातकतापशरण्यो जलधरभिन्नो भवे
भवेत्को-
ऽन्यः” । इति नीतिमाला ।
“सोऽयमन्येन वेगादुद्दामेन
द्विरदपतिना सन्निपत्याभियुक्तः” ।
इति उत्तरचरिते ।) तत्पर्य्यायः । भिन्नः । २
अन्य-
तरः । ३ एकः । ४ त्वः । ५ इतरः ६ ।
इत्यमरः ॥
विलक्षणः । ७ । इति जटाधरः ॥ एकतरः
८ ।
नोमः ९ । इति शब्दरत्नावली ॥

**अन्यत्**, व्य, (अन् + बाहुल्यात् यत् ।) इतरं । भिन्नं
।

यथा देवदत्त आयातोऽन्यद्यज्ञदत्तः ।
“अन्यदेवास्य गाम्भीर्य्यमन्यद्धैर्य्यं महीयते”
।
इत्यादौ तु
क्लीवलिङ्गप्रथमैकवचनान्तान्यशब्द-
स्वीकारेणाप्युपपत्तिरिति बोध्यं ।

**अन्यतः**, [स्] व्य, (अन्य +
“सर्व्वविभक्तिभ्यस्तसि-

लिति” तसिल् ।) अन्यत्र । अन्यस्मात् ।
यथा --
“एकतो हि धिगमूमगुणज्ञा-
मन्यतः कथमदःप्रतिलम्भः” । इति नैषधं
॥

**अन्यतमः**, त्रि, (अन्य + डतमच् ।) भिन्नतमः ।

बहूनां मध्ये निर्द्धारितैकः । इति व्याकरणं ॥

“योऽनधीत्य द्विजो वेदमन्यत्र कुरुते
श्रमं ।
स जीवन्नेव शूद्रत्वमाशु गच्छति
सान्वयः” ॥
इति मनुः ।)

**अन्यथा**, व्य, (अन्येन प्रकारेण अन्य +
प्रकारार्थे

थाल् ।) परार्थः । मिथ्या । इति
मेदिनी ॥ दुष्टं ।
इति शब्दरत्नावली ॥ अन्यप्रकारं ।
इति व्याक-
रणं ॥
(“स्वभावो नोपदेशेन शक्यते
कर्त्तुमन्यथा” ।
इति पञ्चतन्त्रं । अन्यायेन ।
शास्त्रविरोधेन । अय-
थायथम् ।
“अमात्याः प्राड्विवाको वा यत्कुर्य्युः
कार्य्यमन्यथा ।
तत् स्वयं नृपतिः कुर्य्यात् तान्
सहस्रञ्च दण्डयेत्” ॥
इति मनुः ।)

**अन्यथासिद्धिः**, स्त्री, (अन्यथा अन्यप्रकारेण
सिद्धिः ।)

कार्य्याव्यवहितपूर्ब्बवर्त्तित्वे सति
कार्य्यानुत्पादकत्वं ।
सा पञ्चविधा । यथा । यत्कार्य्यं प्रति
कारणस्य
पूर्ब्बवर्त्तिता येन रूपेण गृह्यते
तत्कार्य्यं प्रति
तद्रूपमन्यथासिद्धं । यथा घटं प्रति
दण्डत्वं ॥ १ ॥
यस्य स्वातन्त्र्येण अन्वयव्यतिरेकौ न
स्तः किन्तु
कारणमादायान्वयव्यतिरेकौ
तदन्यथासिद्धं । यथा
घटं प्रति दण्डरूपं ॥ २ ॥ अन्यं प्रति
पूर्ब्बवर्त्तितां

| | | |
|---|---|---|
| दुष्टः शशधरो लग्नात् षष्ठाष्टस्थोऽन्नभक्षणे” ।<br>मार्कण्डेयः ।<br>“देवता पुरतस्तस्य पितुरङ्कगतस्य च ।<br>अलङ्कृतस्य दातव्यमन्नं पात्रे च काञ्चने ॥<br>मध्वाज्यकनकोपेतं प्राशयेत् पायसं ततः । | अनेकेर मध्ये एक इति भाषा ।<br>(“एषामन्यतमे स्थाने यः साक्ष्यमनृतं वदेत्<br>।<br>आसां महर्षिचर्य्याणां त्यक्त्वान्यतमया<br>तनुम्” ॥<br>इति मनुः ।) न्यायमते<br>अनेकभेदावच्छिन्नप्रति-<br>योगिताकभेदः ॥ | गृहीत्वैव यस्य यत्कार्य्यं प्रति<br>पूर्ब्बवर्त्तित्वं गृह्यते<br>तस्य तत्कार्य्यं प्रति अन्यथासिद्धत्वं ।<br>यथा घटा-<br>दिकं प्रति आकाशस्य ॥ ३ ॥<br>यत्कार्य्यजनकं प्रति<br>पूर्ब्बवर्त्तित्वं गृहीत्वैव यस्य यत्कार्य्यं<br>प्रति पूर्ब्बवर्त्तित्वं<br>गृह्यते तस्य तत्कार्य्यं प्रति<br>अन्यथासिद्धत्वं । यथा<br>कुलालपितुर्घटं प्रति ॥ ४ ॥<br>अवश्यक्लृप्तनियत-<br>पूर्ब्बवर्त्तिनएव कारणत्वसम्भवे<br>तद्भिन्नमन्यथा-<br>सिद्धं । यथा घटं प्रति रासभादिः ॥ ५<br>॥ इति<br>सिद्धान्तमुक्तावली ॥ |

**अन्यदा**, व्य, (अन्यस्मिन् काले अन्य + दा ।) काला-

न्तरे । अन्यसमये । यथा, --

"अन्यदा भूषणं पुंसः क्षमा

लज्जेव योषितः ।

पराक्रमः परिभवे वैजात्यं

सुरतेष्विव" ॥

इति माघः ॥

**अन्यपुष्टः**, पुं, (अन्यया स्वमातृभिन्नया पुष्टः ।)

कोकिलः । यथा, --

"अप्यन्यपुष्टाः प्रतिकूलशब्दाः

श्रोतुर्व्वितन्त्रीरिव ताड्यमानाः"

।

इति कुमारसम्भवे ॥

**अन्यपूर्व्वा**, स्त्री, (अन्यः पूर्व्वो यस्याः सा ।) पौनर्भवा

कन्या । एकस्मै वागादिना दत्ता

पुनरन्येन विवा-

हिता कन्या । सा सप्तधा यथा,

--

"सप्त पौनर्भवाः कन्या

वर्जनीयाः कुलाधमाः" ।

वाचा दत्ता मनोदत्ता

कृतकौतुकमङ्गला ॥

उदकस्पर्शिता या च या च

पाणिगृहीतिका ।

अग्निं परिगता या तु पुनर्भूप्रसवा

च या ॥

इत्येताः काश्यपेनोक्ता दहन्ति

कुलमग्निवत् ।

इत्युद्वाहतत्त्वं ॥

**अन्यभृत्**, पुं, (अन्यान् कोकिलान् बिभर्त्ति पालयति

"अन्यायेनापि यद्भुक्तं पित्रा पूर्ब्बतरैस्त्रिभिः ।

न तच्छक्यमपाकर्त्तुं क्रमात्त्रिपुरुषागतं" ॥

इति व्यवहारतत्त्वे नारदः ॥

**अन्याय्यः**, त्रि, (न्यायादनपेतः, न्याय + अनपेतार्थे

यत्, ततो नञ्समासः ।) अनुचितः । अयोग्यः ।

यथा, -- दृष्टार्थसत्त्वे अदृष्टकल्पनाया अन्याय्य-

त्वादित्यधिकरणमालायां माधवाचार्य्यः ॥ (अस-

ङ्गतः । गर्हितः । धर्म्मविरुद्धः । यक्तिविरोधी ।

"न्याय्यं सन्नेच्छते कर्त्तुमन्न्याय्यं वा करोति यः" ।

इति कात्यायनसंहिता ।)

**अन्यूनः**, त्रि, (नन्यूनः, नञ्समासः ।) न्यूनतारहितः ।

सम्पूर्णः । इति जटाधरः ॥

**अन्येद्यु**, [स्] व्य, (अन्यस्मिन् दिवसे निपातनात्

सिद्धम् ।) अन्यस्मिन्नहनि । दिवसान्तरे । अन्य-

दिने । इत्यमरः ॥

("अन्येदुरात्मानुचरस्य भावं

जिज्ञासमाना मुनिहोमधेनुः" ।

इति रघुवंशे ।)

**अन्योदर्य्यः**, पुं स्त्री, (अन्यस्याः स्वमातृभिन्नविमातु-

रुदरे जातः अन्योदर + यत् एकपितृकः भिन्न-

मातृको भ्राता ।) वैमात्रेयः । यथा, --

"अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्यो धनं हरेत्" ।

इति याज्ञवल्क्यः ॥ (अन्यमातृजः ।)

**अन्योन्यं**, त्रि, (अन्य + व्यतिहारार्थे द्वित्वं, ततः

पूर्ब्बपदात्परः सुश्च ।) उभयतः । तत्पर्य्यायः ।

इतरेतरं । २ परस्परं । ३ । इति हेमचन्द्रः ॥

("अन्योन्यप्रतिघातसङ्कुलचलत्कल्लोलकोलाहलैः"

इति उत्तरचरिते ।)

**अन्योन्याश्रयः**, त्रि, (अन्योन्यमाश्रयति, अन्योन्य +

आ + श्रि + पचाद्यच् ।) परस्परज्ञानसापेक्षज्ञा-

नाश्रयः । इति स्मार्त्ताः ॥ स्वग्रहसापेक्षग्रहसापेक्ष-

"मातुर्दुहितरोऽभावे दुहितृणां

तदन्वयः" ।

इति नारदः ।

"स जीवन्नेव शूद्धत्वमाशु गच्छति

सान्वयः" ।

इति मनुः ।) पदानां परस्पराकाङ्क्षा

योग्यता

च । इति दुर्गादासः ॥

परस्परसम्बन्धः । इति

रामतर्कवागीशः ॥

**अन्ववायः**, पुं, (अनु + अव + इण् + भावे अच् ।)

वंशः । कुलं । इत्यमरः ॥

("कथमेकान्ववायोऽय-

मस्माकं" । इति शाकुन्तले ।)

**अन्वष्टका**, स्त्री, (अष्टौ परिमाणान्यस्याः, अष्टन् +

कन्, इत्वाभावः, अष्टकामनुगता

प्रादिसमासः ।)

अष्टकापश्चात्तिथिः । सा तु

गौणचान्द्रपौषमाघ-

फाल्गुनाश्विनमासानां कृष्णनवमी ।

तत्र सा-

ग्नीनां मातृकश्राद्धं । इति श्राद्धविवेकः

॥ तत्र

साग्निकर्त्तव्यमातृपक्षश्राद्धं । यथा

शङ्खः ।

"पित्रादित्रिकपत्नीषु भोज्या मातृः

प्रतिद्विजाः ।

स्त्रीणामेव तु

तद्यस्मान्मातृश्राद्धमिहोच्यते" ॥

एतच्चान्वष्टकाश्राद्धं साग्निमात्रेण

कर्त्तव्यं ।

तथा च विष्णः ।

अन्वष्टकास्वष्टकावदग्नौ हुत्वा

अन्य + भृ + क्विप् ।) काकः । इति हेमचन्द्रः ॥ (कोकिलः ।)

**अन्यभृतः**, पुं, (अन्यया स्वमातृभिन्नया भृतः पालितः तृतीयातत्पुरुषः ।) कोकिलः । इति हलायुधः ॥ ("कलमन्यभृतासु भाषितं कलहंसीषु मदालसं गतं" । इति रघुः ।)

**अन्यमनस्कः**, त्रि, भिन्नचित्तः । अन्यमनाः । अन्यस्मिन् मनो यस्य स इति बहुव्रीहौ कप्रत्ययेन सिद्धः ॥ (विषयान्तरासक्तचित्ततया उपस्थित-कार्य्येऽनवहितहृदयः । अस्थिरः । चञ्चलचित्तः ।)

**अन्यवर्द्धितः**, त्रि, (अन्यया योषिता वर्द्धितः पुष्टः ।) अन्यपुष्टः । परैधितः । अन्येन प्रतिपालितः । इति जटाधरः ॥

**अन्यवादी**, [न्] त्रि, (अन्यत् पूर्ब्बस्वीकृतवाक्यात् भिन्नं वदति, अन्य + वद् + णिनि उपपदसमासः ।) इतरवादी । अस्थिरवादी । अन्यथावादी । यथा, -- "अन्यवादी क्रियाद्वेषी नोपस्थायी निरुत्तरः । आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः" ॥ इति व्यवहारतत्त्वे नारदः ॥

ग्रहकः । इति तार्किकाः ॥ तर्कविशेषः । तस्य लक्षणं । स्वापेक्षपेक्षितत्वनिबन्धनप्रसङ्गत्वं । अपेक्षा च ज्ञप्तौ उत्पत्तौ स्थितौ च ग्राह्या । तत्राद्या यथा । घटोऽयं यद्येतद्घटज्ञानजन्यज्ञान-विषयः स्यात् तदैतद्घटभिन्नः स्यात् । द्वितीया यथा । घटोऽयं यद्येतद्घटजन्यजन्यः स्यात् तदै-तद्घटजन्यभिन्नः स्यात् । तृतीया यथा । घटोऽयं यद्येतद्घटवृत्तिवृत्तिः स्यात् तथात्वेनोपलभ्येत । इति जगदीशः ॥

**अन्वक्** [च्] त्रि, (अनु पश्चात् अञ्चति गच्छति अनु + अञ्च + क्विन्) पश्चाद्गामी । इत्यमरः ॥ (अनु पदं । पश्चात् । "तां देवतापित्रतिथिक्रियार्था-मन्वक् ययौ मध्यमलोकपालः" । इति रघुवंशे ।)

**अन्वयः**, पुं, (अनु + इण् + भावे अच् ।) वंशः । कुलं । इत्यमरः ॥ ("तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः" । इति रघुवंशे । वंशपरम्परा । "रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन्" । इति रघुवंशे । "काव्यदेव्यभिधा शूरबधूः शुद्धान्वया" ॥ इति राजतरङ्गिणी । वंशजाताः पुत्त्रपौत्त्रादयः ।

मात्रे पितामह्यै प्रपितामह्यै पूर्ब्बवद्ब्राह्मणान् भोजयित्वा इति । अत्र होमत्वादेवाग्निप्राप्तेरग्नि-ग्रहणं तन्नियमार्थं । न चाग्नौ करणहोमे विप्र-पाण्यादेर्व्विधानादत्रापि तथेति वाच्यं । प्रकृती-भूतश्राद्धविध्युक्तस्याधारान्तरस्य विकृतीभूतश्राद्धे विशेषविहिताधारेण बाधात् । शरमयवर्हिषा कुशमयवर्हिर्बाधवत् । न वा लौकिकाग्नौ होमः । "न पैत्रयज्ञियो होमो लौकिकाग्नौ विधीयते" । इति मनुवचनेन निषेधात् । श्राद्धचिन्तामणा-वप्येवं । इति श्राद्धतत्त्वं ॥

**अन्वक्षः**, त्रि, (अनु + अक्ष + पचाद्यच् । अक्षमि-न्द्रियमनुगतम्, प्रादिसमासः, प्रत्यक्षे, अनुगते अनुपदे ।) पश्चाद्गामी । इत्यमरः ॥

**अन्वाधिः**, पुं, (अनु पश्चात् आधीयते न्यस्यते, अनु + आ + धा + कि ।) एकस्मिन् यदर्पितं वस्तु तेन पुरुषान्तरे अमुष्मिन् स्वामिनि त्वं दास्यसीति निक्षिप्तं तत् । इति विवादार्णवसेतुः ॥ कार्य्येषु वाचनेन अमुष्मिन् पुरुषे त्वं दद्या इति परिभाष्य यत् समर्पितं तत् । इति हलायुधः ॥ यथा, --

**अन्यशाखकः**, पुं, (अन्या स्वशाखेतरा शाखा यस्य सः,

समासान्तः कः ।) स्ववेदशाखामुत्सृज्यापरशाखा-श्रयकर्म्म कुर्व्वाणः । तत्पर्य्यायः । शाखारण्डः २ । इति हेमचन्द्रः ॥

**अन्यादृक्**, [श्] त्रि, (अन्यमिव पश्यति अन्य +

दृश् + क्विन्, उपपदसमासः । "दृक् दृशवतुषु" इति आकारः ।) अन्यप्रकारः । इति मुग्धबोध-व्याकरणं ॥

**अन्यादृशः**, त्रि, (अन्यैव पश्यति अन्य + दृश् + कञ्

आत्वञ्च ।) अन्यप्रकारः । इति मुग्धबोधव्याकरणं ॥

**अन्यायः**, पुं, (न्यायः । सङ्गतिः । युक्तिः । औचित्यं,

तस्मादन्यः नञ्समासः ।) न्यायभिन्नः । अनौ-चित्यं । अयुक्तिः । यथा, --

"अर्थमार्गणकार्य्येषु अन्यस्मिन् वचनान्मम । दद्यास्त्वमिति यो दत्तः स इहान्वाधिरुच्यते" ॥ इति कात्यायनः ॥ पुनर्बन्धकः । पश्चान्मानसी व्यथा । अनुपूर्ब्बकस्य आधिशब्दस्य इत्यर्थद्वयमपि सम्भवति ॥

**अन्वाधेयं**, क्ली, (अनु विवाहानन्तरमाधेयं समर्प-

णीयं, अनु + आ + धा + कर्म्मणि यत् ।) विवा-हानन्तरपितृमातृभर्तृकुललब्धस्त्रीधनं । यथा, --

"विवाहात् परतो यत्तु लब्धं भर्त्तृकुलात् स्त्रिया । अन्वाधेयं तदुक्तन्तु लब्धं बन्धुकुलात्तथा" ॥ इति कात्यायनः, --

**अन्वासनं**, क्ली, (अनु + आस् + ल्युट्) स्नेहवस्तिः ।

अनुशोचनं । उपासना । इति विश्वमेंदिन्यौ । शिल्पादिगृहं । इति हलायुधः ॥ (अनुवासनं ॥

:पश्चात् तापः ।)

**अन्वाहार्य्यं**, क्ली, (प्रतिमासमाहरणीयं, अनु + आ

+ हृ + ण्यत् ।) मासिकश्राद्धं । इत्यमरः ॥
तत्तु
प्रत्यमावास्याविहितं पार्ब्बणश्राद्धं
अकृतसपिण्डी-
करणस्य वत्सरान्ते प्रतिमासं यत् श्राद्धं
तदिति
केचित् । इति भरतः ॥
गोभिलगृह्योक्तकर्म्मणा-
माद्यङ्गश्राद्धं । तदन्ताङ्गदक्षिणा च । यथा, --
"यत् श्राद्धं कर्म्मणामादौ याचान्ते दक्षिणा
भवेत् ।
अमावास्यं द्वितीयं यदन्वाहार्य्यं विदुर्बुधाः"
॥
इति गोभिलगृह्यं ॥

**अन्वाहार्य्यकं** क्ली, (प्रतिमासमाहरणीयं, अनु +
आ

+ हृ + ण्यत्, ततः स्वार्थे कन् ।)
अन्वाहार्य्यं ।
यथा, --
"पिण्डान्वाहार्य्यकं श्राद्धं
कुर्य्यान्मासानुमासिकं" ।
इति मनुः ॥

**अन्वाहितं**, त्रि, (अनु + आ + धा + कर्म्मणि क्त ।)

यदेकस्य हस्ते निहितं द्रव्यं तेनापि
पश्चादन्यस्य
हस्ते स्वामिने देहीति निहितं तत् । इति
मिताक्षरा ॥
("याचितान्वाहितन्यासनिक्षेपादिष्वयं
विधिः" ।
इति याज्ञवल्क्यः, --
"एष एष विधिर्दृष्टो याचितान्वाहितादिषु" ॥

**अन्वेष्टा**, (ऋ) त्रि, (अनु + इष् + तृच् ।)
अन्वेषण-

कर्त्ता । तत्पर्य्यायः ॥ आनुपद्यः २ ।
इति हेम-
चन्द्रः ॥ ("अन्वेष्टारो ब्राह्मणाश्च
भ्रमन्ति शत-
शोमहों" । इति नलोपाख्यानं ।)

**अप**, व्य, (न पाति, न + पा + ड
"चादयोऽसत्त्वे"

इति निपातसंज्ञया
स्वरादिनिपातमव्ययमिति
अव्ययम् ।) उपसर्गविशेषः ।
अस्यार्थः । अनादरः ।
भ्रंशः । असाकल्यं । वैरूप्यं । त्यागः
। नञर्थः ।
इति दुर्गादासः ॥ अपकृष्टार्थः ।
वर्ज्जनार्थः ।
वियोगः । विपर्य्ययः । विकृतिः ।
चौर्य्यं । निर्द्देशः ।
हर्षः । इति मेदिनी ॥

**अपः**, [स्] क्ली, (आप् + असुन्,
पृषोदरादित्वात्

ह्रस्वः ।) यज्ञकर्म्म । इत्युणादिकोषः
।

**अपकर्म्म**, क्ली, (अपकृष्टं कर्म्म ।) दुष्क्रिया
। मन्द-

कर्म्म । अपकृष्टार्थापोपसर्गेण
कर्म्मशब्दस्य कर्म्म-
धारयसमासः ।

**अपकारः**, पुं, (अप + कृ + भावे घञ् ।)
द्रोहः ।

अनुपकारः । मन्दकरणं । इति
हलायुधः । (अ-

३ आमं । ४ असृतं । इति रत्नमाला ।
("अपक्वे लवणं दद्यात् पक्वे दद्यात्
मरीचकम्" ॥
इति आप्तवाक्ये ।)

**अपगतः**, त्रि, (अप + गम् + कर्त्तरि क्तः,
अपयाते

पलायिते च ।) मृतः । इति हेमचन्द्रः ।
गतः ।
दूरीभूतः । यथा, -- "तापोनापगतस्तृषा
न च
कृशा धूलो न धौता तनोः" इत्यादि
वल्लालसेनः ।

**अपगा**, स्त्री, (अधोमुखेन गच्छति, अप + गम्
+

कर्त्तरि डः, स्त्रियां टाप् ।) आपगा ।
नदी ।
इत्यमरटीकायां भरतः । (स्रोतस्वती
द्वीपवती
स्रवन्ती निम्नगापगा इत्यमरः ।)

**अपघनः**, पुं, (अपहृत्य मिलित्वा वियुज्यते,
अप +

हन् + "अपघनोऽङ्ग"-मिति
पाणिनिसूत्रेण अप्
हस्थाने घ ।) अवयवः । अङ्गं ।
इत्यमरः । ("घृणि-
भिरपघनैर्घघरव्यक्तघोषान्" । इति
सूर्य्यशतके ।)

**अपघातः**, पुं, अपहननं । अपकृष्टार्थापोपसर्गात्

हनधातोर्भावे घञ् हस्य घः नस्य तः ।
अपकृष्ट-
मृत्युफलकष्यापारः । अपहन्यते इति
व्युत्पत्त्या
अपपूर्व्वक हनधातोर्भावे घञ्प्रत्ययेन
निष्पन्नः ॥

इति नारदः ।) गच्छित द्रव्य ताहार
स्वामिके
दिते अन्यहस्ते अर्पणकरा इति भाषा ॥

**अन्वितः**, त्रि, (अनु + इण् + क्त ।) युक्तः । मिलितः ।

इति जटाधरः ॥ कृतान्वयपदादिः । यथा, --
“पदार्थान्तरैरन्वितानां सङ्केतो गृह्यते” ।
इति काव्यप्रकाशः ॥
(पदानां योग्यताकाङ्क्षादिरूपान्वयसहितः ।
परस्परं सम्बद्धः ।
“वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः” ॥
इति साहित्यदर्पणे ।)

**अन्विष्टः**, त्रि, (अनु + इष् + क्त ।) अन्वेषितः ।

कृतान्वेषणः । इत्यमरः ॥
(“यद्वायुरन्विष्टमृगैः
किरातैरासेव्यते भिन्नशिखण्डिवर्हः” । इति कुमा-
रसम्भवे ।)

**अन्वीतः**, त्रि, (अनु + ईङ गतौ + कर्त्तरि क्तः ।)

अन्वितः । युक्तः । इति जटाधरः ॥

**अन्वेषणं**, क्ली, (अनु + इष् + ल्युट्) अन्वेषणा ।

अनुसन्धानं । यथा । “सुग्रीवो राममित्रं क्व
जनकतनयान्वेषणे प्रेषितोऽहं” । इति महाना-
टकम् । (“दोषान्वेषणमेव मत्सरयुषां नैसर्गिको
दुर्ग्रहः” । इत्युद्भटः ।)

**अन्वेषणा**, स्त्री, (अनु + इष् + णिच् + भावे युच् तस्य

अनः ततः टाप् ।) तर्कादिना
यथाबोधितधर्माद्य-
निष्टसाधनं । असद्व्यवहारः ।
अत्याचारः । द्वेषः ।
“उपकर्त्रारिणा सन्धिर्न
मित्रेणापकारिणा ।
उपकारापकारौ हि लक्ष्यं
लक्षणमेतयोः” ।
इति माघः ।)

**अपकारगीः**, [र्] स्त्री, (अपकारेण गीः वाक्यं ।)

अपकारवाक्यं । भर्त्सनं । इत्यमरः ।

**अपकारी**, [न्] त्रि, (अपकरोति, अप + कृ +

णिनि ।) अपकारकः । द्रोहकः ।
यथा, --
“अपकारिणि चेत् क्रोधः क्रोधः क्रोधे
कथं न ते ।
धर्म्मार्थकाममोक्षाणां चतुर्णां
परिपन्थिनि” ॥
इत्युद्भटः । (अहितकारी ।
अनिष्टसाधकः ।
पीडकः । दुर्वृत्तः । कुकर्म्मकारी ।
“किं भक्तेनासमर्थेन किं
शक्तेनापकारिणा” ।
इति पञ्चतन्त्रम् ।)

**अपकृष्टं**, त्रि, (अप + कृष् + क्तः ।) जघन्यं । तत्-

पर्य्यायः । अधमं । २ निकृष्टं । ३
अणकं । ४ गर्ह्यं ।
५ अवद्यं । ६ काण्डं । ७ कुत्सितं ।
८ प्रतिकृष्टं ।
९ याप्यं । १० वेफः । ११ अवमं ।
१२ ब्रुवं । १३
खेटं । १४ पापं । १५ अपशब्दं ।
१६ कुपूयं । १७
चेलं । १८ अर्व्वचं । १९ । इति
हेमचन्द्रः ।

**अपचयः**, पुं, (अप + चि + भावे अच् । अपहरणं ।)

क्षतिः । हानिः । तत्पर्य्यायः । अपहारः
२ । इत्य-
मरः ॥ (पूजा सम्मानना । क्षयः ।
“देहस्यापचयो-
मतौ निविशते गाढो गृहेषु ग्रहः” । इति
शान्ति-
शतके ।)

**अपचायितः**, त्रि, (अप + चाय + कर्म्मणि क्तः ।) पूजितः । इत्यमरः ।

**अपचारः**, पुं, (अप + चर् + भावे घञ्, अपथ्य-

सेवनं ।) अहिताचरणं । यथा,
“योनिप्रदोषाच्च
भवन्ति शिश्ने पञ्चोपदंशा
विविधापचारैः” ।
इति माधवकरः ।
(“कृतापचारोऽपि
परैरनाविष्कृतविक्रियः ।
असाध्यं कुरुते कोपं प्राप्ते काले गदो
यथा” ॥
इति माघः ।)

**अपचितः**, त्रि, (अप + चाय + पूजार्थे कर्म्मणि क्तः ।

अपचितश्चेति पाणिनिसूत्रेन पक्षे
चायस्थाने
चिभाबः । अप + चि + क्तः ।) हीनः ।
व्ययितः ।
अवयवाद्यपचययुक्तः । क्षीणः । कृशः ।
“अपचित-
मपि गात्रं व्यायतत्वादलक्ष्यं” । इति
शाकुन्तले ।

**अपचितिः**, स्त्री, (अप + चि + भावे क्तिन् । हानिः ।

व्ययः । पूजा । निष्कृतिः । इति मेदिनी
। (क्षयः ।

न्वेषणं । अन्वेषणमात्रं । तत्पर्य्यायः परोष्टिः २
पर्य्येषणा ३ गवेषणा ४ । इत्यमरः ॥

**अन्वेषितः**, त्रि, (अनु + इष् + णिच् + कर्मणि क्त ।)

कृतान्वेषणः । तत्पर्य्यायः ॥ गवेषितः । २ अन्विष्टः ।
३ मार्गितः । ४ मृगितः । ५ इत्यमरः ॥ ६ परीष्टः ।
७ पर्य्येषितः । इति अन्वेषणापर्य्याये परीष्टि-
पर्य्येषणापददर्शनात् ॥

**अपक्रमः**, पुं, (अप + क्रम + भावे घञ्, "नोदात्तोप-

देशे मान्तस्येत्यादिना वृद्धिनिषेधः" ।) पलायनं ।
इत्यमरः ।

**अपक्रिया**, स्त्री, (अप् + कृ + भावे श ।) द्रोहः ।

अपकारः । इति हेमचन्द्रः ॥
(विपरीतप्रयोगः ।
"चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया" ।
इति माघः ।)

**अपक्रोशः**, पुं, (अप् + क्रुश् + भावे घञ् ।) निन्दनं ।

जुगुप्सनं । भर्त्सनं । इति शब्दरत्नावली ।

**अपक्वः**, त्रि, (न पच्यते, पच् + कर्म्मणि क्तः, ततो

नञ्समासः ।) पक्वभिन्नः । काँचा इति भाषा ।
यथा, --
"तैले विपर्य्ययं विद्यात् पक्वे चापक्व एव च" ।
इति वैद्यकपरिभाषा । तत्पर्य्यायः । २ असिद्धं ।

ध्वंसः । सम्मानना ।
"अहं त्वपचितिं भ्रातुः पितुश्च सकलामिमां" ।
इति रामायणे ।)

**अपच्छायः**, त्रि, (अपगता छाया यस्मात् सः ।)

देवः । उपदेवः । निष्प्रभः । अपगता छाया
यस्मात् इति बहुव्रीहौ ह्रस्वः ।
(अपकृष्टच्छाया-
विशिष्टः । पिशाचादिः ।
"अजाखुरं
खुरोत्सर्गमार्ज्जनीरेणुवज्जनैः ।
दीपखट्वापच्छायेव त्यज्यते निर्धनोजनः" ।)

**अपञ्चीकृतं**, क्ली, (अपञ्चात्मकं पञ्चात्मकं कृतं, पञ्च +

अभूततद्भावे च्वि कृ + क्तः, ततो नञ्समासः ।
सूक्ष्मभूतं ।
पञ्चीकृतभिन्नाकाशादिपञ्चभूतं । इति वेदान्तसारः ।

:(“पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितं ।

अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं

भोगसाधनं” ॥

इति पञ्चदश्यां ।)

**अपटान्तरं**, त्रि, (पटेन वस्त्रेण तिरस्करिण्या इति

यावत् अन्तरं व्यवधानं यत्र तत्, ततो नञ्-

समासः ।) आसन्नं । संसक्तं ।)

अपदान्तरं । अव्य-

वहितं । इत्यमरटीकायां स्वामी ॥

**अपटी**, स्त्री, (अल्पः पटः अल्पार्थे नञ्समासः,

गौरादित्वात् ङीष् ।) वस्त्रप्रावरणं । इति हेम-

चन्द्रः । कानात् । इति भाषा ।

(यवनिका । पर्द्दा ।

इत्यादि भाषा ।)

**अपटुः**, स्त्री, (न पटुः, नञ्समासः ।) व्याधितः ।

रोगी । इत्यमरः । पटुतारहितः ।

कार्य्याक्षमः ।

यथा, --

“सा क्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं

दोषैरन्यजनाश्रयैरपटवो जाताः स्म

इत्युद्धुतं” ।

इत्यमरुकविः ॥

**अपतर्पणं**, क्ली, (अप + तृप् + भावे ल्युट् । लङ्घनं ।

रोगादौ भोजनाभावः । इति हेमचन्द्रः । (अप-

गतं तर्पणं तृप्त्यभावो यस्य तत् ।

गतलोभः ।

तृप्तिशून्यः ।)

मासः । नास्ति पन्थाः प्रशस्तः मार्गो यत्र तत् ।

प्रशस्तवर्त्मशून्ये नगरादौ ।) अपन्थाः । मार्ग

एव यो न भवति तत् । इत्थमरः ।

योनिः । इति

शब्दरत्नावली । (विमार्गः । कुपथः ।

असम्मार्गः ।

साधुविगर्हितः पन्थाः । “अपथे पदमर्पयन्ति

हि श्रुतवन्तोऽपि रजोनिमीलिताः” ।

इति

रघुवंशे ।

“न कश्चित् वर्णानामपथमपकृष्टोऽपि

भजते” ।

इति शाकुन्तले ।)

**अपथ्यं**, त्रि, (पथ्ये वैद्योक्तभोजनादिनियमाय नीत्यु-

क्ताचाराय वा हितं यत् ततो

नञ्समासः ।)

पथ्यभिन्नं । अहितं । यथा, --

“यत्पथ्यं यदपथ्यञ्च वक्ष्यते

रक्तपित्तिनां” ।

इति पथ्यापथ्यग्रन्थः ।

**अपदानं**, क्ली, (अप + दैपशोधने भावे ल्युट्, विद्य-

मानार्थे अर्श आद्यच् । अथवा

अपदायति परि-

शुध्यत्वेन कर्म्मणां, अप + दैप् +

शोधने करणे

ल्युट् ।) अवदानं । वृत्तं कर्म्म । वृत्तिः

प्रवर्त्तनं

सा प्रशस्ता विद्यते यत्र तत् । यत्र

कर्म्मणि

**अपनयनं**, क्ली, (अप + नी + भावे ल्युट् ।) खण्डनं ।

दूरीकरणं । यथा, -- “इति श्रीशाम्बपुराणे

रो-

गापनयने श्रीसूर्य्यवक्त्रविनिर्गतस्तवराजः

समाप्तः”

इति ।

(“नातिश्रमापनयनाय यथा श्रमाय

राज्यं स्वहस्तधृतदण्डमिवातपत्रं” ।

इति शाकुन्तले ।)

**अपनोदनं**, क्ली, (अप + नुद् + भावे ल्युट् ।) खण्डनं ।

दूरीकरणं । यथा, --

“मानापनोदनविनोदनते

गिरीशे” । इति श्रीहर्षः । (अपनुदति दूरी-

करोति, अप + नुद् + कर्त्तरि बाहुल्यात्

ल्युटि ।)

खण्डकः । दूरीकारकः ।

“यथाश्वमेधः क्रुतुराट् सर्व्वपापापनोदनः

।

तथाघमर्षणं जप्यं सर्व्वपापापनोदनं” ।

इति मनुः ।)

**अपन्थाः**, [थिन्] पुं, (न पन्थाः, नञ्समासः,

समासान्तविधेरनित्यत्वात् अत्र

अजभावः ।) अ-

पथं । इत्यमरः ।

**अपपात्रितः**, त्रि, (अपकृष्टं पात्रं भोजनपात्रं यस्य

सः, येन जनेन भुक्ते भोजनपात्रमस्पष्टं

भवतीति

यावत् चण्डालादिः, अपपात्रः कृतः,

अपपात्र +

करोत्यर्थे णिच् + क्तः ।)

उत्कटदोषैर्ज्ञातिभि-

**अपत्यं**, क्ली, (न पतति वंशो यस्मात्, पत + बाहु-
ल्यात् यत्, ततो नञ्समासः ।) पुत्त्रः । कन्या ।
तत्पर्य्यायः । २ सन्तानः । ३ तोकं । ४ सन्ततिः ।
५ प्रसूतिः । इति जटाधरः ।
(“अस्मिंस्तु निर्गुणं गोत्रे नापत्यमुपजायते”) ।
इति हितोपदेशे ।
“महीभृतः पुत्रवतोऽपि दृष्टिं
तस्मिन्नपत्ये न जगाम तृप्तिं” ।
इति कुमारसम्भवे ।)

**अपत्यदा**, स्त्री, (अपत्यं गर्भं तत्सेवनेन ददाति,
अपत्य + दा + कर्त्तरि कः,
उपपदसमासः ।)
गर्भदात्रीवृक्षः । इति राजनिर्घण्टः ।

**अपत्यपथः**, पुं, (अपत्यस्य गर्भान्निःसारणस्य पन्था
मार्गः, षष्ठीतत्पुरुषः, समासान्त अच् ।) भगं ।
योनिः । इति हेमचन्द्रः ।

**अपत्यशत्रुः**, पुं, (अपत्यस्य शत्रुः, षष्ठीतत्पुरुषः ।)
कर्कटः । इति शब्दचन्द्रिका । काँकडा । इति
भाषा ।

**अपत्रपः**, त्रि, (अप + त्रप् + भावे अङ्, ।) त्रपा-
रहितः । निर्लज्जः । अपगता त्रपा यस्येति
बहुव्रीहौ आकारस्य ह्रस्वः ॥ (“सापत्रपः कुल-
गुरुर्विहितस्त्वया नः” । इति धनञ्जयविजय
व्यायोगे ।)
वृत्तिः सर्व्वैः प्रशस्यते तत् इत्यर्थः । इत्यमर-
टीकायां स्वामी ॥
(“गणयत्यपदानसम्मितां
भवतः सोऽपि न सत्क्रियामिमां” ।
इति शाकुन्तले ।)

**अपदान्तरः**, त्रि, (नास्ति पदान्तरं व्यवधानं यत्र
सः ।) अव्यवहितः । संयुक्तः ।
इत्यमरः । अभिन्न-
पदे क्ली । (सन्निकर्षः । सान्निध्यं । सामीप्यं ।
नैकट्यं ।)

**अपदिशं**, क्ली, व्य, (दिशोर्मध्ये, अव्ययीभावः, समा-
सान्त अच् ।) दिक्कोणः । दिशोर्मध्यं । तत्-
पर्य्यायः । विदिक् २ । इत्यमरः ।
(“क्लीवाव्ययं त्वपदिशं
दिशोर्मध्येविदिक् स्त्रियां” ।
इत्यमरः ।)

**अपदेशः**, पुं, (अप + दिश् + घञ् । स्थानं ।) निमित्तं ।
शरव्यं । स्वरूपाच्छादनं । तत्पर्य्यायः । २ व्याजः ।
३ लक्ष्यं । इत्यमरः ।
परानिष्टकारिभिन्नशठता ।
इति महाभारतटीका । (ख्यातिः । कीर्त्तिः ।
छलं ।
“रक्षापदेशान्मुनिहोमधेनो-
र्वन्यान् विनेष्यन्निव दुष्टसत्त्वान्” ।
इति रघुवंशे ।)

**अपध्वंसजः**, पुं, (अपध्वस्यतेऽनेन, अपध्वन्स +
र्भिन्नोदकीकृतः । यथा, -- अपपात्रितस्य रिक्थ-
पिण्डोदकानि निवर्त्तन्ते” । इति शुद्धितत्त्वे
शङ्खापस्तम्बौ ।

**अपभ्रंशः**, पुं, (अप + भ्रन्स + घञ् ।) ग्राम्यभाषा ।
अपभाषा । तत्पर्य्यायः । अपशब्दः २ ।
इत्यमरः ॥
पतनं । यथा, --
“अत्यारूढिर्भवति महतामप्यपभ्रंशनिष्ठा” ।
इत्यभिज्ञानशकुन्तलं ॥ (अधः पतनं ।
ध्वंसः ।
अधोगतिः ।)

**अपमः**, पुं, (अपकृष्टतया मीयते, अप + मा +
घञर्थे कः ।) क्रान्तिः । इति सिद्धान्तशिरोमणौ
गोलाध्यायः ॥

**अपमानं**, क्ली, (अप + मा + भावे ल्युट् ।) अनादरः ।
अमर्य्यादा । इति शब्दरत्नावली ॥
तत्पर्य्यायः ।
“स्यादवज्ञा परीहारः परिहारः पराभवः ।
अपमानं परिभवस्तिरस्कारस्तिरष्क्रिया ।
अवहेला च हेला म्यादवहेलनहेलने ।
क्षेपो निकारधिक्कारौ पर्य्यायः स्यादनादरे” ॥
इति शब्दरत्नावली ॥ * ॥ तस्य अप्रकाश्यत्वं
यथा, --
“अर्थनाशं मनस्तापं गृहे दुश्चरितानि च ।
वञ्चनञ्चापमानञ्च मतिमान्न प्रकाशयेत्” ॥
इति चाणक्यः ॥

**अपत्रपा**, स्त्री, (अपगता त्रपा अन्यतो लज्जा
यस्याः सा, स्त्रियां टाप् लज्जाहीना ।
लज्जा-
शून्या ।) अन्यतो लज्जा । परस्मात्
लज्जा । इत्य
मरः । लज्जामात्रं । इति रत्नकोषः ।

**अपत्रपिष्णुः**, त्रि, (अप + त्रप् + शीलार्थे कर्त्तरि
इष्णुच् ।) स्वभावसत्रपः । लज्जाशीलः
। इत्यमरः ।
लाजुक इति भाषा ।

**अपथं**, क्ली, व्य, (न प्रशस्तः पन्थाः मार्गः, नञ्स-
करणे घञ्, अपध्वंसो जातीनां
भिन्नतासम्पा-
दकः सङ्करस्तस्माज्जायते, अपध्वंस
+ जन् + ड,
उपपदसमासः ।) वर्णसङ्करः । यथा, -
-
“शूद्राणान्तु सधर्म्माणः
सर्व्वेऽपध्वंसजाः स्मृताः” ।
इति मनुः । (प्रतिलोमजातः ।
भिन्नवर्णसङ्गम-
जातः । करणादिसंकीर्णवर्णः ।)

**अपध्वस्तः**, त्रि, (अप + ध्वन्स + क्तः ।) परित्यक्तः ।
निन्दितः । चूर्णीकृतः । इति मेदिनी ।
(अति-
दुराचारः ।) परित्यक्तः । “अपध्वस्तः
परित्यक्ते
निन्दिते ऽप्यवचूर्णिते” । इति मेदिनी ।
(“अपमानं पुरस्कृत्य मानं कृत्वा तु
पृष्ठतः ।
स्वकार्य्यमुद्धरेत् प्राज्ञः कार्य्यध्वंसे हि
मूढता”) ॥

**अपमित्यकं**, क्ली, (अपमित्यपमानं स्वीकृत्य गृह्यते,
अप + मेङ् प्रणिमाने + क्त्वा तस्य ल्यप्,
“मय-
तेरिदन्यतरस्यामिति आस्याने इतक्,
ततः
कन् ।) ऋणं । इति हलायुधः ॥

**अपमृत्युः**, पुं, (अपकृष्टः रोगेणः विना मृत्युः मरणं

:कर्म्मधारयः ।) अपघातमरणं । विना रोगेण

मरणं । यथा, --

“अपमृत्युभयं नास्ति मृतो मोक्षमवाप्नुयात्” ।

इति देवीमाहात्म्यकीलकं ॥ यत्तु शुद्धितत्त्वे प्रोक्तं

पक्षिमत्स्यमृगदंष्ट्रिशृङ्गिनखिपतनानशनवज्राग्नि-

विषबन्धजलप्रवेशांस्त्रक्षतादिजन्यमरणं तदेवाप-

मृत्युरिति सुधीभिर्विभाव्यं ॥

**अपयानं**, क्ली, (अपा या + भावे ल्युट्) पलायनं ।

इत्यमरः ॥ प्रमाणं । प्रस्थानं । “मानस्य द्रुत-

मपयानमास्थितस्य” । इति माघः ।)

“अपयानेऽपि च भवान् समर्थोलघुविक्रमः” ।

इति रामायणे ।

**अपरं**, क्ली, (न पूर्य्यते, पृ + अप् ततो नञ्-

समासः ।) हस्तिपश्चाद्भागः । गजान्त्यजङ्घादि-

भागः । इति मेदिनी ॥

**अपरः**, त्रि, (न पृणाति प्रीणयति, पॄ + पचाद्यच,

ततो नञ्समासः ।) अन्यः । इतरः । अर्ब्बाचीनः

।

इति मेदिनी ॥

**अपरत्वं**, क्ली, (अपरस्य भावः भावे त्व ।) न्यायमते

तत् द्विविधं । दैशिकं कालिकञ्च । दैशिकं यथा ।

अल्पसूर्य्यसंयोगज्ञानजन्यगुणः ।

तस्यासमवायि-

कारणं दिक्संयोगः ॥ कालिकं यथा ॥ अल्प-

सूर्य्यपरिस्पन्दज्ञानजन्यगुणः । तस्यासमवायि-

कारणं कालपिण्डसंयोगः । तदुभयं अपेक्षाबुद्धि-

जन्यं । अपेक्षाबुद्धिनाशादेव तदुभयोर्नाशः । इति

सिद्धान्तमुक्तावली ॥

**अपरतिः**, स्त्री, (अप + रम् + भावे क्तिन् ।) निवृत्तिः ।

विरतिः । इति हेमचन्द्रः ॥ (अपगता रति

प्रीतिर्यस्य सः त्रि, प्रातिरहितः । अप्रकृष्टा

रतिः प्रीतिर्यस्य सः त्रि, कुत्सितप्रीतियुक्तः ।)

थींभूतस्य वा वाच्यस्याङ्गं रसादि

अनुरणनरूपं

वा । इति काव्यप्रकाशः ॥

तत्रैवोदाहरणं ।

“अयं स रसनोत्कर्षी

पीनस्तनविमर्द्दनः । नाभ्यूरु-

जघनस्पर्शी नीवीविस्रंसनः

करः” ॥ अत्र शृङ्गारः

करुणस्याङ्गमिति ॥

**अपराङ्मुखः**, पुं, (परा + अञ्च + क्विन्, पराक् मुखं

यस्य सः, ततो नञ्समासः ।)

अविमुखः । सं-

मुखीभूतः । यथा, --

“आहवेषु मिथोऽन्योन्यं

जिघांसन्तो महीक्षितः ।

युध्यमानाः परं शक्त्या स्वर्गं

यान्त्यपराङ्मुखाः” ॥

इति मानवे ७ अध्याये ८९

श्लोकः ॥

**अपराजितः**, पुं, (परा + जि + क्तः, ततो नञ्-

समासः ।) शिवः । विष्णुः ।

ऋषिविशेषः । अनि-

र्ज्जिते त्रि । इति मेदिनी ॥

**अपराजिता**, स्त्री, दुर्गा । जयन्तीवृक्षः । अशन-

पर्णी । इति मेदिनी ॥ स्वल्पफला

। विष्णुक्रान्ता ।

इति राजनिर्घण्टः ॥ शेफाली ।

शमीभेदः ।

शङ्खिनी । हपुषाभेदः । इति

वैद्यकं ॥ स्वनाम-

ख्यातपुष्पलताविशेषः ।

शुक्लनीलभेदेन सा द्विधा ।

निग्रहानुग्रहे चैव नृषु च क्रूरभाषणम्

कम्बलावरणञ्चैव परनिन्दा परस्तुतिः

।

अश्लीलभाषणं चैव

अधोवायुविमोक्षणम् ॥

शक्तौ गौणोपचारश्च अनिवेदितभक्षणं

।

तत्तत्कालोद्भवानाञ्च

फलादीनामनर्पणं ॥

विनियुक्तावशिष्टस्य प्रदानं

व्यञ्जनादिके ।

पृष्ठीकृत्यासनं चैव परेषामभिवादनं ॥

गुरौ मौनं निजस्तोत्रं देवतानिन्दनं

तथा

अपराधास्तथा

विष्णोर्द्वात्रिंशत्परिकीर्त्तिताः” ॥ * ॥

वाराहे ।

“द्वात्रिंशदपराधा ये कीर्त्त्यन्ते वसुधे

मया ।

वैष्णवेन सदा ते तु वर्जनीया

प्रयत्नतः ॥

ये वै न वर्जयन्त्येतान् अपराधान्

मयोदितान् ।

सर्व्वधर्म्मपरिभ्रष्टाः पच्यन्ते नरके

चिरं ॥

राजान्नभक्षणञ्चैकमापद्यपि भयावहं ।

ध्वान्तागारे हरेः स्पर्शः परं

सुकृतनाशनः ॥

तथैव विधिमुल्लङ्घ्य सहसा स्पर्शनं

हरेः ।

द्वारोद्घाटो विना वाद्यं

क्रोडमांसनिवेदनं ॥

पादुकाभ्यां तथा

विष्णोर्मन्दिरायोपसर्पणं ।

कुक्कुरोच्छिष्टकलनं

मौनभङ्गोऽच्युतार्च्चने ॥

**अपरपक्षः**, पुं, (अपरः शेषः पक्षः अथवा अपरः

शुक्लादितरः पक्षः, कर्म्मधारयः ।) कृष्णपक्षः । स तु पितृपक्षः । यथा । पूर्ब्बः पक्षो देवानाम-परः पक्षः पितॄणामिति श्रुतिः ॥ पक्षौ पूर्ब्बा-परौ शुक्लकृष्णौ मासस्तु तावुभौ । इत्यमरः ॥ मनुः । जथ श्राद्धममावास्यायां पितृभ्यो दद्यात् पञ्चमीप्रभृति वापरपक्षस्य यदहर्व्वा सम्पद्यते । इति श्राद्धतत्त्वम् * ॥

**अपररात्रः**, पुं, (रात्रेः अपरः शेषावयवः, एकदेशि-

समासः, अच् समासान्तः "रात्राह्नाहाः पुंसि" इति पुंस्त्वं ।) रात्रिशेषः । तत्पर्य्यायः । उच्चन्द्रः २ ।
इति त्रिकाण्डशेषः ॥

**अपरस्परं**, त्रि, (अपरे च परे च द्वन्द्वः, अपर-

स्पराः क्रियासातत्ये" इति सुडागमः, क्रिया-वतां साहित्ये ।) क्रियासातत्यं । कर्मनिरन्तरता । इत्यमरः ॥

**अपरा**, स्त्री, (न पूर्य्यतेऽस्मात्, पॄ + अपादाने अप्,

ततो नञ्समासः ।) जरायूः । इति मेदिनी ॥ पश्चिमदिक् । इति हेमचन्द्रः ॥

**अपराङ्गं**, क्ली, (अपरस्य रसादेरङ्गम्, षष्ठीतत्पुरुषः ।)

गुणीभूतव्यङ्ग्यप्रभेदः । यथा
अगूढमपरस्याङ्गमिति
भरतमुनिः ॥ अस्यार्थः । अपरस्य रसादेर्वाक्या-

तस्याः पर्य्यायः । आस्फोता २
गिरिकर्णी ।
३ विष्णुक्रान्ता ४ । इत्यमरः ॥
आस्फोटा ५ ।
इति तट्टीका ॥ गवाक्षी ६
अश्वखुरी ७ श्वेता
८ श्वेतभण्डा ९ गवादनी १० ।
इति रत्नमाला ॥
अद्रिकर्णी ११ कटभी १२
दधिपुष्पिका
१३ गर्द्दभी १४ सितपुष्पी १५
श्वेतस्पन्दा १६
भद्रा १७ सुपुत्री १८ विषहन्त्री
१९ नग-
पर्य्यायकर्णी २० अश्वाह्वादिखुरी
२१ । अस्या
गुणाः । हिमत्वं । तिक्त्वत्वं ।
पित्तोपद्रवविष-
दोषनाशित्वं । चक्षुर्हितत्वं ।
त्रिदोषशमताका-
रित्वञ्च । इति राजनिर्घण्टः ॥
शोथकासनाशित्वं ।
कण्ठहितकारित्वञ्च । इति
राजवल्लभः ॥
("दशम्यां च नरैः सम्यक्
पूजनीयाऽपराजिता ।
मोक्षार्थं विजयार्थञ्च
पूर्ब्बोक्तविधिना नरैः ।
नवमीशेषयुक्तायां
दशम्यामपराजिता ।
ददाति विजयं देवी पूजिता
जयवर्द्धिनी" ॥
इति स्कान्दे ।)

**अपराद्धपृषत्कः**, त्रि, (अपराद्धः लक्ष्यात् च्युतः पृषत्-

कोवाणो यस्य सः ।)
लक्ष्यच्युतशायकः । यस्य

तथा पूजनकाले च विड्उत्सर्गाय सर्पणं
।
श्राद्धादिकमकृत्वा च नवान्नस्य च
भक्षणं ॥
अदत्त्वा गन्धमाल्यादि धूपनं
मधुघातिनः ।
अकर्म्मण्यप्रसूनेन पूजनञ्च हरेस्तथा
॥
अकृत्वा दन्तकाष्ठञ्च कृत्वा निधुवनं
तथा ।
स्पृष्ट्वा रजस्वलां दीपं तथा मृतकमेव
च ॥
रक्तं नीलमधौतञ्च पारक्यं मलिनं पटं
।
परिधाय मृतं दृष्ट्वा विमुच्यापानमारुतं
॥
क्रोधं कृत्वा श्मशानञ्च गत्वा
भूत्वाप्यजीर्णभुक् ।
भक्षयित्वा क्रोडमांसं पिण्याकं
जालपादकं ॥
तथा कुसुम्भशाकञ्च तैलाभ्यङ्गं
विधाय च ।
हरेः स्पर्शो हरेः कर्म्मकरणं पातकावहं
॥ * ॥
किञ्च तत्रैव ।
मम शास्त्रं वहिष्कृत्य अस्माकं यः
प्रपद्यते ।
मुक्त्वा च मम शास्त्राणि शास्त्रमन्यत्
प्रभाषते ॥
मद्यपस्तु समासाद्य प्रविशेद्भवनं मम ।
यो मे कुसुम्भशाकेन प्रापणं कुरुते
नरः ॥
अपि च ।
"मम दृष्टेरभिमुखं ताम्बूलं चर्व्वयेत्तु
यः ।
कुरुवकपलाशस्थैः पुष्पैः
कुर्य्यान्ममार्च्चनं ॥

बाणो लक्ष्यात् च्युतः सः ।

इत्यमरः ॥

(“कृतहस्तः सुप्रयोगविशिखः कृतपुङ्खवत् ।

अपराद्धपृषत्कोऽसौ लक्ष्यात् यश्चुतसायकः” ॥

इत्यमरः ।)

**अपराधः**, पुं, (अप + राध् + भावे घञ् ।) अका-

र्य्यादिदोषः । तत्पर्य्यायः ॥

आगः २ मन्तुः ३ ।

इत्यमरः ॥ स च द्वात्रिंशद्विधो यथा । आगमे ।

“यानैर्व्वा पादुकैर्व्वापि गमनं भगवद्गृहे ।

देवोत्सवाद्यसेवा च अप्रणामस्तदग्रतः ॥

उच्छिष्टे वाथवाशौचे भगवद्दर्शनादिकं ।

एकहस्तप्रणामश्च तत्पुरस्तात् प्रदक्षिणं ॥

पादप्रसारणं चाग्रे तथा पर्य्यङ्कबन्धनम् ।

शयनं भक्षणं वापि मिथ्याभाषणमेव च ॥

उच्चैर्भाषामिथोजल्पो रोदनानि च बिग्रहः ।

ममार्च्चामासुरे काले यः करोति विमूढधीः ।

पाठाशनोपविष्टो यः पूजयेद्वा निरासनः ॥

वामहस्तेन मां धृत्वा स्नापयेद्वा विमूढधीः ।

पूजापर्य्युषितैः पुष्पैः ष्ठीवनं गर्व्वकल्पनं ॥

तिर्य्यक् पुण्ड्रधरो भुत्वा यः करोति ममार्चनं ।

याचितैः पत्रपुष्पाद्यैर्यः करोति ममार्चनं ॥

अप्रक्षालितपादो यः प्रविशेन्मम मन्दिरं ।

अवैष्णवस्य पक्वान्नं यो मह्यं विनिवेदयेत् ॥

अवैष्णवेषु पश्यत्सु मम पूजां करोति यः ।

अपूजयित्वा विघ्नेशं सम्भाष्य च कपालिनं ॥

नरः पूजान्तु यः कुर्य्यात् स्नपनञ्च नखाम्भसा ।

अमौनी घर्म्मलिप्ताङ्गो मम पूजां करोति यः ॥

:ज्ञेयाः परेऽपि बहवोऽपराधाः सदसंमतैः ।

आचारैः

शास्त्रविहितनिषिद्धातिक्रमादिभिः” ॥

* ॥

अथापराधशमनं ।

“संवत्सरस्य मध्ये च तीर्थे शौकरके

मम ।

कृतोपवासः स्नानेन गङ्गायां

शुद्धिमाप्नुयात् ॥

मथुरायां तथाप्येवं सापराधः

शुचिर्भवेत् ।

अनयोस्तीर्थयोरङ्के यः सेवेत् सुकृती

नरः ॥

सहस्रजन्मजनितानपराधान् जहाति

सः” ।

स्कान्दे ।

“अहन्यहनि यो मर्त्यो गीताध्यायन्तु

संपठेत् ।

द्वात्रिंशदपराधैस्तु अहन्यहनि मुच्यते”

॥

अत्र कार्त्तिकमाहात्म्ये ।

“तुलस्या कुरुते यस्तु

शालग्रामशिलार्चनं ।

द्वात्रिंशदपराधांश्च क्षमते तस्य

केशवः” ॥

तत्रैवान्यत्र ।

“द्वादश्यां जागरे विष्णोर्यः

पठेत्तुलसीस्तवं ।

द्वात्रिंशदपराधानि क्षमते तस्य केशवः

॥

यः करोति हरेः पूजां कृष्णशस्त्राङ्कितो

नरः ।

अपराधसहस्राणि नित्यं हरति केशवः”

॥

इति श्रीहरिभक्तिविलासे ८ विलासः ॥

रिव प्रवेशो भवेत् तव त्वनावृतत्वात्

अपरि-

च्छिन्नत्वेन वहिरन्तरभेदो नास्ति कुतः

प्रवेशः” ।

इति श्रीधरस्वामी ॥

**अपरिपक्वं**, त्रि, परिपाकरहितं । किञ्चित्पक्वं ।

परिपूर्ब्बपचधातोः कर्त्तरि क्ते तस्य वत्वे

चस्य च

कत्वे परिपक्वं ततो नञ्समासः ॥

**अपरिमितं**, त्रि, (परि + मा + क्त, ततो नञ्-

समासः ।) परिमाणरहितं ।

मानतुलासंख्याशून्यं ।

यथा, -- “अपरिमिता ध्रुवास्तनुभृतो यदि

सर्व्व-

गतास्तर्हि न शास्यतेति नियमो

ध्रुवनेतरथा” ।

इति श्रुत्यध्यायः ।

**अपरिम्लानः**, पुं, (परि + म्ला + क्त तस्य नत्वं,

ततो नञ्समासः ।) रक्ताम्लानवृक्षः । इति

राज-

निर्घण्टः ॥ म्लानिरहिते वाच्यलिङ्गः ॥

(नूतनः ।

अपरिशुष्कः । निर्म्मलः ।)

**अपरिष्कारः**, पुं, (“संपर्य्युपेभ्यः करोतौ भूषणे

इति” सुडागमः ।) परिष्काराभावः । अनि-

र्म्मलत्वं । तद्वति त्रि । परिपूर्ब्बकृधातोर्भावे

घञि

नञ्समासः ।

**अपरिष्कृतं**, त्रि, अमार्जितं । अनिर्म्मलं । अभूषितं ।

अनलङ्कृतं । परिपूर्ब्बकृधातोः कर्म्मणि क्ते

नञ्-

**अपर्य्युषितं**, क्ली, (परि + वस् + क्त, नञ्समासः ।)

अव्युष्टं । सद्योभवं । यथा नारसिंहे, --

“अपर्य्युषितनिश्छिद्रैः

प्रोक्षितैर्जन्तुवर्जितैः ।

स्वीयारामोद्भवैर्वापि पुष्पैः

संपूजयेद्धरिं” ॥

इत्याह्निकाचारतत्त्वम् ॥

**अपर्व्वदण्डः**, पुं, (अपर्ब्बः पर्ब्बरहितः ग्रन्थिशून्य

इति यावत् दण्डः कर्म्मधारयः ।)

रामशरतृणं ।

इति राजनिर्घण्टः ॥

**अपलं**, क्ली, (अपलाति अपराक्रमणं गृह्णाति येन,

अप + ला + करणे क । नास्ति पलं

मांसं यस्य

सः, मांसशून्यं ।) कीलकं । इति

शब्दमाला ॥

पलशून्ये त्रि ॥

**अपलपनं**, क्ली, अपलापः । अपोपसर्गात् लपधातो-

र्भवे अनट् प्रत्ययः ॥ (पाणिनिमतेतु

अप + लप् +

भावे ल्युट् ।)

**अपलापः**, पुं, (अप + लप् + भावे घञ् ।) सतोऽप्य-

सत्त्वेन कथनं । ज्ञातस्य गोपनं ।

तत्पर्य्यायः ।

२ निह्नुतिः । ३ अपह्नुतिः । ४

अपह्नवः । ५ निह्नवः ।

इति शब्दरत्नावली ॥ प्रेम । इति ।

मेदिनी ॥

**अपलाषिका**, स्त्री, (अप + लष् + भावे ण्वुल् ।)

**अपराह्णः**, पुं, (अह्नः अपरः एकदेशिसमासः,

समासान्तः टच्, अहःस्थाने अह्नादेशः ।) शेषं
अहः । दिनशेषभागः । इत्यमरः ।
("रामाणां रमणीयतां विदधति
ग्रीष्मापराह्णागमे"
इति अमरुशतके ।
"तथा श्राद्धस्य पूर्ब्बाह्णादपराह्णो
विशिष्यते" ।
इति मनुः ।) विकाल इति भाषा ।
तस्य भेदाः ।
द्विधा विभक्तदिनस्य शेषभागः ॥ त्रिधा विभ-
क्तदिनस्य तृतीयभागः ॥ स तु त्रिंशद्दण्डदिन-
माने विंशतिदण्डात् परं दशदण्डं यावत् । पञ्चधा
विभक्तदिनस्य चतुर्थभागः । स तु अष्टादश-
दण्डात् परं षड्दण्डं यावत् । इति
श्रुतिस्मृती ॥

**अपराह्णतनं**, त्रि, (अपराह्णे भवम् सप्तम्येकवच-

नान्त अपराह्ण + ट्यु तुट्च,
"स्वकालतनेषु काल-
नाम्न इति" पक्षे अलुक् ।)
अपराह्णभववस्तु ।
अपराह्णजातं । इति सिद्धान्तकौमुदी ॥

**अपराह्णेतनं**, त्रि, (अह्नोऽपरः एकदेशिसमासः,

तत्र भवम् अपराह्णे + ट्यु तुट्च,
"स्वकालतनेषु
कालनाम्न" इति पक्षे अलुक् ।)
अपराह्णतनं ।
इति सिद्धान्तकौमुदी ॥

**अपरिकलितः**, त्रि, (परि + कल् + कर्म्मणि क्तः,

समासः । यथा, --
"मलपूतिसमायुक्तश्लष्मविण्मूत्रपिच्छिलं ।
रेतोनिष्ठीवमानाभिः स्रवद्भिरपरिष्कृतं" ॥
इति कालिकापुराणे ५६ अध्यायः ॥

**अपरिहार्य्यं**, त्रि, (परि + हृ + कर्म्मणि ण्यत्, ततो

नञ्समासः ।) अपरिहरणीयं । अत्याज्यं ।
यथा,
"जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च
।
तस्मादपरिहार्य्येऽर्थे न त्वं शोचितुमर्हसि"
॥
इति श्रीभगवद्गीता ॥

**अपरूपं**, त्रि, (अपकृष्टं रूपं कर्म्मधारयसमासः ।)

अपकृष्टरूपं । विकृतरूपं । अपोपसर्गेण रूप-
शब्दस्य बहुव्रीहिसमासः ॥
कर्म्मधारयसमासे
क्ली ॥ लोके तु आश्चर्य्यमिति प्रसिद्धं ॥

**अपरेद्युः**, [स्] व्य, (अपरस्मिन् दिवसे दिवसस्य

एद्युशादेशः) । अपरेऽह्नि । अपरदिने । इत्य-
मरः ॥
("पूर्ब्बेद्यरपरेद्युर्व्वाश्राद्धकर्म्मण्युपस्थिते निम-
न्त्रयेत विप्रान् वै" इति स्मृतिः ।)

**अपर्णा**, स्त्री, (नास्ति पर्ण्णं तपस्यायां पर्णभक्षण-

वृत्तिर्व्वा यस्याः सा, टाप् ।)
दुर्गा । इत्यमरः ॥
("स्वयं विशीर्ण्णद्रुमपर्ण्णवृत्तिता
परा हि काष्ठा तपसस्तया पुनः ।
तदप्यपाकीर्णमतः प्रियंवदां
वदन्त्यपर्ण्णेति च तां पुराविदः" । इति कुमारस-
म्भवे ।)
तृष्णा । इति हेमचन्द्रः ॥

**अपवनं**, क्ली, (अपकृष्टं कृत्रिमत्वात् अल्पत्वाच्च वनं

कर्म्मधारयः ।) उपवनं । कृत्रिमवनं । इति
हेमचन्द्रः ॥

**अपवरकः**, पुं, (अपव्रियन्ते लोकाः सम्भज्यन्तेऽत्र,

अप + वृ + "ग्रहवृदृनिश्चिगमश्च" इति अप्,
ततः स्वार्थे कन्, अथवा अप + वृ + क्रादिभ्यः
संज्ञायां वुन् तस्य अकः ।) अन्तर्गृहं ।
तत्पर्य्यायः ।
२ गर्भागारं ३ वासौकः ४ शयनास्पदं । इति
हेमचन्द्रः ॥
("दीपोऽपवरकस्यान्तर्वर्त्तते तत्प्रभा
वहिः" ।)

**अपवर्गः**, पुं, (अपवृज्यते संसारः मुच्यतेऽनेन, अप

+ वृज् + घञ् कुत्वं ।) मोक्षः । त्यागः । क्रिया-
वसानसाफल्यं । कर्म्मफलं । इति
विश्वमेदिन्यौ ॥
क्रियान्तः । कार्य्यसमाप्तिः । इति जटाधरो रत्ना-
वली च ॥ पूर्णता । इति धरणी ॥
(निर्व्वाणं ।
मुक्तिः ।
"अपवर्गमहोदयार्थयोर्भुवमंशाविव धर्म्म-
योर्गतौ" इति रघुवंशे । समाप्तिः ।
शेषः ।
अवसानं ।
"क्रियापवर्गेष्वनुजीविसात्कृताः कृत-

ततो नञ्समासः ।) अज्ञातः । अदृष्टः । यथा, --
"अपरिकलितपूर्ब्बः कश्चमत्कारकारी
स्फुरति मम गरीयानेष माधुर्य्यपूरः ।
अयमहभपि हन्त प्रेक्ष्य यं लुब्धचेताः
सरभसमुपभोक्तुं कामये राधिकेव" ॥
इति ललितमाधवः ॥

**अपरिच्छन्नं**, त्रि, परिच्छदशून्यं । परिपूर्ब्बछदधातोः
कर्त्तरि क्ते नञ्समासः ॥

**अपरिच्छिन्नं**, त्रि, (परि + छिद् + क्त्व ततो नञ्-
समासः ।) परिच्छेदरहितं । असीम । वहिरन्तर-
शून्यं । यथा, -- "किञ्च परिच्छिन्नस्य नीडे पक्ष्यादे-
पत्रशून्ये त्रि ॥

**अपर्य्याप्तं**, त्रि, (परि + आप् + क्त, नञ्समासः ।)
पर्य्याप्तिशून्यं । असीम । असमर्थं । यथा, --
"अपर्य्याप्तं तदस्माकं बलं भीष्माभिरक्षितं ।
पर्य्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितं" ॥
इति श्रीभगवद्गीता ॥
ज्ञतामस्य वदन्ति सम्पदः" । इति भारविः ।)

**अपवर्ज्जनं**, पुं, (अप + वृज् + भावे ल्युट् ।) दानं ।
मोक्षः । त्यागः । इति मेदिनी ॥

**अपवादः**, पुं, (अप + वद् + भावे घञ् ।) आज्ञा ।
निम्दा । तत्पर्य्यायः । अवर्णः २ आक्षेपः ३
निर्व्वादः ४ परीवादः ५ उपक्रोशः ६ जुगुप्सा ७
कुत्सा ८ गर्हणं ९ इत्यमरः ॥
(वचनीयं । "लोका-
पवादाद्भयं" इति नीतिशतके । "देव्यामपि
हि वैदेह्यां सापवादो यतो जनः" । "हा कथं
सीतादेव्या ईदृशमचिन्तनीयं जनापवादं देवस्य
कथयिष्यामि" । इति उत्तरचरिते । आज्ञा ।
अनुमतिः । आदेशः । "ततोऽपवादेन पताकिनी-
पतेश्चचाल निर्हादवती महाचमूः" । इति भार

:विः ।) विश्वासः । इति मेदिनी ॥ विशेषः ।

बाधकः । यथा, --
“क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते” ।
इति कलापपरिशिष्टं ॥ रज्जुविवर्त्तस्य सर्पस्य
रज्जुमात्रत्ववत्
वस्तुविवर्त्तस्यावस्तुनोऽज्ञानादेः
प्रपञ्चस्य वस्तुमात्रत्वं । तदुक्तं ।
“सतत्त्वतोऽन्यथा प्रथा विकार इत्युदीरितः ।
अतत्त्वतोऽन्यथा प्रथा विवर्त्त इत्युदाहृतः” ॥
अस्य फलं । आभ्यां अध्यारोपापवादाभ्यां
तत्त्व-
म्पदार्थशोधनमपि सिद्धं भवति । इति वेदान्त-
सारः ॥

**अपवारणं**, क्ली, (अप + वृ + णिच् भावे ल्युट् ।)

व्यवधानं । अन्तर्द्धानं । इत्यमरः ॥

**अपवारितं**, त्रि, (अप + वृ + णिच्, कर्म्मणि क्तः ।)

अन्तर्हितं । इति हेमचन्द्रः ॥

**अपवित्रं**, त्रिः (पू + इत्रच्, ततो नञ्समासः ।)

पवित्रतारहितं । अशुद्धं । यथा, --
“अपवित्रः पवित्रो वा सर्व्वावस्थां गतोऽपि वा ।
यः स्मरेत् पुण्डरीकाक्षं सवाह्याभ्यन्तरः
शुचिः” ॥
इति स्मृतिः ॥ (अविशुद्धः । अनिर्म्मलः ।
दूषितः ।
मलिनः ।
“अपवित्रमिदं कर्म्म कृतं मोहान्धया तया” ।
इति रामायणे । “यदेष सारमेयोऽपवित्रः
स्कन्धा-
रुढो नीयते” । इति पञ्चतन्त्रे ।)

**अपविद्धः**, त्रि, (अप + व्यध् + क्तः ।) प्रत्याख्यातः ।

निराकृतः । इति हेमचन्द्रः ॥ (त्यक्तः ।
प्रतिक्षिप्तः ।
“कुवेरस्य मनःशल्यं शंसतीव पराभवं ।

“आभीरादिगिरः काव्येष्वपभ्रंश
इति स्मृतः ।
शास्त्रेषु संस्कृ
तादन्यदपभ्रंशतयोदितं” ॥
इति दण्डी ॥

**अपशुक्** [च्] पुं, (शुच् + भावे क्विप्, अपगता शुक्

शोको यस्य सः ।) आत्मा । यथा ।
“क उत्तम-
श्लोकगुणानुवादात् पुमान् विरज्येत
विनापशु-
घ्नात्” । इति श्रीभागवतं ॥

**अपशोकः**, पुं, (अपगतः शोको यस्मात् सः ।) अशो-

कवृक्षः । इति राजनिर्घण्टः ॥
(“शोकरहितः ।
दुःखहीनः ।
“हरप्रीतिकरो वृक्षो ह्यशोकः
शोकनाशनः ।
दुर्गाप्रीतिकरोऽसि त्वं मामशोकं
सदा कुरु” ॥
देवीपूजापद्धतिः ।)

**अपष्ठं**, क्ली, (अप + स्था + कः, अम्बाम्बागोसव्याप-

इत्यादिना षत्वं ।) अङ्कुशाग्रं । इति
हेमचन्द्रः ॥

**अपष्ठु**, व्य, (अप + स्था + “अपदुःसुभ्यः स्थः कुः,

इति कु, सुषमादित्वात् षत्वम् ।)
निरवद्यं । विप-
रीतं । शोभनं । इति शब्दमाला ॥

**अपष्ठुः**, पुं, (अप + स्था + कु, सुषमादित्वात् षत्वं ।)

**अपसलवि**, व्य, (अप + सल् + बाहुल्यात् अवि ।)

प्रदेशिन्यङ्गुष्ठयोरन्तरा । पितृतीर्थं ।
यथा ।
“प्रदेशिन्यङ्गुष्ठयोरन्तरा अपसलवि
अपसव्यं वा
तेन पितृभ्यो निदधाति” । इति
श्राद्धतत्त्वे भट्ट-
भाष्यधृतगृह्यं ॥

**अपसव्यं**, क्ली, (सव्यादपक्रान्तं, “निरादयो गता-

द्यर्थे पञ्चम्या” इति समासः ।)
अपसलवि । पितृ-
तीर्थं । इति श्राद्धतत्त्वे
भट्टभाष्यधृतगृह्यं ॥

**अपसव्यः**, त्रि, (सव्यादपक्रान्तः, “निरादयो गता-

द्यर्थे पञ्चम्या” इति समासः ।)
शरीरदक्षिण-
भागः । प्रतिकूलः । इति मेदिनी ॥
(विपरीतः ।
“वाता मण्डलिनश्चैनमपसव्यं
प्रचक्रमुः” ।
इति रामायणे ।)

**अपस्करः**, पुं, (अपकीर्य्यते, अप + कॄ + अप्,

“अपस्करो रथाङ्गमिति”
पाणिनिसूत्रेण सुडा-
गमः ।) रथाङ्गं । तच्च अक्षयुगचक्रादि
। इत्यमरः ॥
गुह्यद्वारं । विष्ठा । इति धरणी ॥

**अपस्नातः**, त्रि, (अपकृष्टत्वेन स्नातः अमङ्गलार्थत्वात्,

अपविद्धगदो बाहुर्भग्नशाख इव द्रुमः” ॥
इति कुमारसम्भवे । चूर्णीकृतः । दलितः ।
“मृदिताश्चापविद्धाश्च दृश्यन्ते कमलस्रजः” ।
इति रामायणे ।)

**अपविद्धपुत्रः**, पुं, (अपविद्धः पुत्त्रः, कर्म्मधारयः,)

द्वादशविधपुत्रमध्ये पुत्रविशेषः । स तु पोषणा-
द्यसमर्थमातापितृभ्यां त्यक्तः तयोरन्यतरमरणे
अन्यतरेण वा त्यक्तः अनन्तरं अन्येन गृहीत्वा
पुत्रत्वेन परिकल्पितः । यथा, --
“मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा ।
यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते” ॥
इति मनुः ॥

**अपविषा**, स्त्री, (अप अपगतं विषं यस्याः सा,

स्त्रियां टाप् ।) निर्व्विषीतृणं । इति राज-
निर्घण्टः ॥

**अपशदः**, पुं, (अप + शद् + कर्त्तरि अच् । अपसद

इति पाठे अप + सद् + अच् ।) अपसदः ।
नीचः
इत्यमरटीकायां भरतः ॥

**अपशब्दः**, पुं, (अप असंस्कृतः शब्दः, कर्म्म-

धारयः ।) असंस्कृ तशब्दः । अशास्त्रीयशब्दः
।
लौकिकशब्दः । ग्राम्यभाषा । तत्पर्य्यायः ।
अप-
भ्रंशः २ । इत्यमरः ॥
(“तएव शक्तिवैकल्यात् प्रमादालसतादिभिः ।
अन्यथोच्चारिताः शब्दा अपशब्दा इतीरिताः”
॥
इति हरिवंशे ।)

कालः । वामे त्रि । इति मेदिनी ॥
(समयः ।
असत्यः । विरुद्धार्थः । प्रतिकूलः ।
विपरीतः ।
“तव धर्म्मराज इति नाम
कथमिदमपष्ठु पठ्यते ।
भौमदिनमभिदधत्यथवा
भृशमप्रशस्तमपि मङ्गलं
जनाः ।” इति माघः । वामः ।
दक्षिणेतरः ।)

**अपष्ठुरं**, त्रि, (अप + स्था + कुरच्, सुषमादित्वात्

षत्वं ।) प्रतिकूलं । इति हेमचन्द्रः ॥

**अपष्ठुलं**, त्रि, (अप + स्था + कुरच्, रस्य लत्वं ।)

प्रतिकूलं । विपरीतं । इति
त्रिकाण्डशेषः ॥

**अपसदः**, पुं, (अपसीदति अपकृष्टत्वं प्राप्नोति,

अप + सद् + पचाद्यच् ।) नीचः ।
इतरलोकः ।
इत्यमरः ॥
(“विप्रस्य त्रिषु वर्णेषु
नृपतेर्वर्णयोर्द्वयोः ।
वैश्यस्य वर्णे चैकस्मिन्
षडेतेऽपसदाः स्मृताः” ॥
इति मनूक्ते अनुलोमवर्णस्त्रीजाते
वर्णसङ्करभेदे
मूर्द्धावसिक्तादौ पुं स्त्रीं ।)

**अपसरः**, पुं, (अप + सृ + भावे अच् ।) अपसरणं ।

स्थानात् स्थानान्तरगमनं ।
अपोपसर्गात् गत्यर्थ-
सृधातोर्भावे अल्प्रत्ययः ॥
(“निरन्वयोऽनपसरः प्राप्तः
स्याच्चौरकिल्विषं” ।

अप + स्ना + कर्त्तरि क्तः ।)
मृतमुदिश्यकृतस्नानो
जनः । इत्यमरः ॥
(“अपस्नातश्चानिष्पीडित-
मौलिरेव भवनमाजगाम” इति
हर्षचारेते ।)
संस्कारार्थं स्नापितो मृतः । इति
स्वामी ॥

**अपस्नानं**, क्ली, (अप + स्ना + भावे ल्युट् ।) मृत-

स्नानं । मृतोद्देशकस्नानं । इति
हेमचन्द्रः ॥ (अप-
वित्रस्नानं । स्नानावशिष्टजलेन स्नानं
। स्नानोदकं ।
स्नानावशिष्टं जलं ।
“उद्वर्त्तनमपस्नानं विण्मूत्रे रक्तमेव च
।
श्लेष्मनिष्ठूतवान्तानि नाधितिष्ठेत्तु
कामतः”
इति मनुः ।)

**अपस्मारः**, पुं, (अपस्मर्य्यते पूर्ब्बवृत्तं विस्मर्य्यतेऽनेन,

अप + स्मृ + करणे घञ् ।)
रोगविशेषः । मृगी
इति भाषा । तत्पर्य्यायः ।
अङ्गविकृतिः २ ला-
लाधः ३ भूतविक्रिया ४ । इति
राजनिर्घण्टः ॥ * ॥
तस्य सामान्यरूपं ।
“तमःप्रवेशः संरम्भो
दोषोद्रेकहतस्मृतेः ।
अपस्मार इति ज्ञेयो गदो
घोरश्चतुर्व्विधः” ॥ * ॥
तस्य निदानपूर्ब्बिका सम्प्राप्तिः ।
“चिन्ताशोकादिभिः क्रुद्धादोषा
हृत्स्रोतसि स्थिताः ।

इति मनुः ।)

**अपसर्ज्जनं**, क्ली (अप + सृज + भावे ल्युट् ।) मोक्षः ।

परित्यागः । दानं । इति भूरिप्रयोगः ॥ (बधः ।

हत्या । परिवर्जनं ।)

**अपसर्पः**, त्रि, (अपसर्पति, अप + सृप् + कर्त्तरि

अच् ।) चरः । हर्करा इति प्रसिद्धः । इत्य-

मरः ॥ (गूढचरः । स्पशः ।

“यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः ।

चारश्च गूढपुरुषश्चाप्तः प्रत्ययितस्त्रिषु” ॥

इत्यमरः ।

“सर्पाधिराजोरुभुजोऽपसर्पं पप्रच्छ भद्रं विजितारिभद्रः” ।

इति रघुवंशे ।)

कृत्वा स्मृतेरपध्वंसमपस्मारं प्रकुर्व्वते” ॥ * ॥

तस्य पूर्ब्बरूपं । यथा, --

“हृत्कम्पः शून्यता स्वेदो ध्यानं मूर्च्छा प्रमूढता ।

निद्रानाशश्च तस्मिंश्च भविष्यति भवत्यथ” ॥ * ॥

वातिकस्य रूपं ।

“कम्पते प्रदशेत् दन्तान् फेनोद्वामी श्वसित्यपि ।

परुषारुणकृष्णानि पश्येद्रूपाणि चानिलात्” ॥ * ॥

पैत्तिकस्य रूपं ।

“पीतफेनाङ्गवक्त्राक्षः पीतासृग्रूपदर्शनः ॥

सतृष्णोष्णानलव्याप्तलोकदर्शी च पैत्तिकः” ॥ * ॥

श्लैष्मिकरूपं ।

“शुक्लफेनाङ्गवक्त्राक्षः शीतहृष्टाङ्गजो गुरुः ।

पश्यन् शुक्लानि रूपाणि श्लैष्मिको मुच्यते चिरात्” ॥ *

त्रिदोषजरूपं ।

:"सर्व्वैरेभिः समस्तैश्च लिङ्गैर्ज्ञेयस्त्रिदोषजः" ॥ * ॥

असाध्यलक्षणं ॥
अपस्मारः स चासाध्यो यः
क्षीणस्यानवश्च यः ॥ * ॥
अरिष्टलक्षणं ।
"प्रस्फुरन्तं सुबहुशः क्षीणं प्रचलितभ्रुवं ।
नेत्राभ्याञ्च विकुर्व्वाणमपस्मारो
विनाशयेत्" ॥ * ॥
तस्य वेगकालः ।
"पक्षाद्वा द्वादशाहाद्वा मासाद्वा कुपिता
मलाः ।
अपस्माराय कुर्व्वन्ति वेगं किञ्चिदथांन्तरं
॥
देवे वर्षत्यपि यथा भूमौ वीजानि
कानिचित् ।
शरदि प्रतिरोहन्ति तथा
व्याधिसमुच्चयाः" ॥
इति माधवकरः ॥ * ॥ तस्य चिकित्सा ।
यथा, --
"तैलेन लशुनः सेव्यः पयसा च शतावरी
।
ब्राह्मीरसश्च मधुना सर्व्वापस्मारभेषजं ॥
* ॥
चूर्णैः सिद्धार्थकादीनां भक्षितैरथवापि तैः
।
गोमूत्रपिष्टैः सर्व्वाङ्गलेपैः
शाम्यत्यपस्मृतिः" ॥
सिद्धार्थकादिः उन्मादोक्तः ॥ * ॥
"शिग्रुकट्वङ्गकिणिहीनिम्बत्वग्रसपाचितं ।
चतुर्गुणे गवां मूत्रे तैलमभ्यङ्गने हितं" ॥
कट्वङ्गः शोनापाठा । किणिही चिरिचिरा
॥ * ॥
"निर्गुण्डीभववन्दाकनावनस्य प्रयोगतः ।
उपैति सहसा नाशमपस्मारो महागदः ॥
* ॥

धनस्वाम्यनुपयोगिव्ययः । इति दायभागः ॥ (वि
नाशः ।
"कर्णनासापहारेण भगिनी मे विरूपिता" ।
इति रामायणे । स्तेयं । यद्धान्यापहारादिकं कर्म्म
द्रव्यस्वामिसमक्षं बलात्कृतं तत्साहसं स्यात् ।
इति कल्लूकभट्टः । निह्नवः । "कथं वा आत्मनः
अपहारं करोमि" । इति शाकुन्तले ।)

**अपहारकः**, त्रि, (अप + हृ + ण्वुल् ।) अपहारी ।

अपहरणकर्त्ता । यथा, --
"परापवादनिरतः परद्रव्यापहारकः" ।
इति पुराणं ॥
("द्विविधान् तस्करान् विद्यात् परद्रव्यापहारकान्
प्रकाशांश्चाप्रकाशांश्च चारचक्षुर्महीपतिः" ॥
"अन्नहर्त्तामयावित्वं मौक्यं वागपहारकः ।
वस्त्रापहारकः श्वैत्रं पङ्गुतामश्वहारकः" ॥
इति मनुः । चौरः ।
"योऽन्यथा सन्तमात्मानमन्यथा सत्सु भाषते ।
स पापकृत्तमोलोके स्वेन आत्मापहारकः" ।
इति मनुः ।)

**अपहासः**, पुं, (अप + हस् + भावे घञ् ।) अका-

रणहास्यं । इति हेमचन्द्रः ॥

**अपह्नवः**, पुं, (अप + ह्नु + भावे अप् ।) अपलापः ।

स्नेहः । इति मेदिनी ॥
("ऋणे देये प्रतिज्ञाते पञ्चकं शतमर्हति ।
अपह्नवे तद्द्विगुणं तन्मनोरनुशासनम्" ॥
इति मनुः ।)

**अपह्नुतिः**, स्त्री, (अप + ह्नु + भावे क्तिन् ।) अप-

लापः । अपह्नवः । इति शब्दरत्नावली ॥ उप-
मेयासत्यकरणपूर्ब्बकोपमानसत्यताव्यवस्थापिका-
लङ्कृतिः । तस्या लक्षणं ।
"प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः" ।
उदाहरणं ।
"अवाप्तः प्रागल्भ्यं परिणतरुचः शेलतनये ।

**अपाक्**, [च्] त्रि, (अप + अञ्च + क्विन्, नलीपः ।)

दक्षिणदिग्भववस्तु ।
तत्पर्य्यायः । अपाचीनं २ ।
इति हेमचन्द्रः ॥

**अपाकः**, पुं, (पच + भावे घञ्,ततो नञ्समासः ।)

पाकाभावः । अजीर्णता ।
यथा, --
"अङ्गमर्द्दोऽरुचिस्तृष्णा
आलस्यं गौरवं ज्वरः ।
अपाकः
शून्यताङ्गानामामवातस्य
लक्षणं" ॥
इति माधवकरः ॥
पाकाभावविशिष्टे त्रि । यथा,
--
"गात्रप्रदेशे क्वचिदेव दोषाः
संमूर्च्छिता मांसमसृक्
प्रदूष्य ।
वृत्तं स्थिरं मन्दरुजं
महान्त-
मनल्पमूलं चिरवृद्ध्यपाकं"
॥
इति माधवकरः ॥

**अपाकशाकं**, क्ली, (न पच्यते, पच् + घञ्, नञ्-

समासः, अपाकः शाको
यस्य तत् ।) आर्द्रकं ।
इति राजनिर्घण्टः ॥

**अपाङ्गः**, पुं, (अपाञ्चति वक्रं गच्छति चक्षुर्यत्र, अप

+ अञ्च + अधिकरणे घञ्
।) नेत्रयोरन्तः । चक्षुः-
कोणः ।

मनोह्वा तार्क्ष्यविष्ठा वा शकृत् पारावतस्य च ।
अञ्जनाद्धन्त्यपस्मारमुन्मादञ्च विशेषतः” ॥
मनोह्वा मनःशिला । तार्क्ष्यो गरुडः । शकृत्
विष्ठा ॥ * ॥
“यः खादेत् क्षीरभक्ताशी माक्षिकेण वचारजः ।
अपस्मारं महाघोरं चिरोत्थं स जयेद्ध्रुवं” ॥
वचा घुरवच् ॥ * ॥
“कुष्माण्डकफलोत्थेन रसेन परिपेषितं ।
अपस्मारविनाशाय षष्ठ्याह्वं च पिबेत् त्र्यहं” ॥
त्र्यहमिति एतस्य पानाद्दिवसत्रयेणैवापस्मारोप-
शमो भवतीत्यभिप्रायः ॥ * ॥
“ब्राह्मीरसवचाकुष्ठशङ्खपुष्पीशृतं घृतं ।
पुराणं स्यादपस्मारोन्मादग्रहहरं परं” ॥
एतस्य प्रक्रिया । पुराणं गोघृतं प्रस्थमितं वचा-
कुष्ठशङ्खपुष्पीणां समुदितानां कुडवमितानां क-
ल्केन प्रस्थमितब्राह्मीरसपिष्टेन पचेत् । ब्राह्मी-
घृतं ॥ * ॥
“कुष्माण्डकरसे सर्पिरष्टादशगुणे पचेत् ।
यष्ट्याह्वकल्कं तत्पानमपस्मारविनाशनं” ॥
कुष्माण्डकघृतं ॥ * ॥
“द्वौ कीटमेषौ विधिवदानीय रविवासरे ।
कण्ठे भुजे वा संधार्य्य जयेदुग्रामपस्मृतिं” ॥
अयन्तु कीटो नदीतीरे सिकतामध्ये तिष्ठति ॥ * ॥

कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि ॥
अमुष्येयं मन्ये विगलदमृतस्यन्दिशिशिरे ।
रतिश्रान्ता शेते रजनिरमणी गाढमुरसि” ॥
इति काव्यप्रकाशः ॥
(“प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः ।
गोपनीयं कमप्यर्थं द्योतयित्वा कथञ्चन ॥
यदि श्लेषेणान्यथा वाऽन्यथयेत् साप्यपह्नुतिः” ।
इति साहित्यदर्पणे ।)

**अपांनाथः**, पुं, (अपां नाथः अलुक्समासः ।) समुद्रः । इति राजनिर्घण्टः ॥

**अपांनिधिः**, पुं, (निधीयतेऽत्र, नि + धा + अधि-करणे किः, अपां निधिः आधारः ।) समुद्रः । वारांनिधिः इति दर्शनात् ॥

**अपांपतिः**, पुं, (अपां पतिः, अलुक्समासः ।) समुद्रः । इत्यमरः ॥ वरुणः । अप्पतिरित्यमरेणोक्तत्वात् ॥

**अपांपित्तं**, क्ली, (अपां पित्तमिव तदुत्पन्नत्वात् तस्य पित्तत्वं, अलुक्समासः ।) अग्निः । इति शब्द-रत्नावली ॥ चित्रकवृक्षः । वह्निसंज्ञक इत्यमरे-णोक्तत्वात् ॥

(“चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं” ।
इति शाकुन्तले ।
“कुवलयदृशां लोललोलैरपाङ्गैः” ।
इति शान्तिशतके ।)
तिलकः । इत्यमरः ॥ अङ्ग-हीने त्रि । इति मेदिनी ॥

**अपाङ्गकः**, पुं, (अपकृष्टमङ्गं यस्य समासान्तः कः ।) अपामार्गवृक्षः । इति शब्दरत्नावली ॥ आपां इति भाषा । अङ्गहीने त्रि ॥

**अपाङ्गदर्शनं**, क्ली, (अपाङ्गेन नेत्रप्रान्तेन दर्शनं तृतीयातत्पुरुषः ।) कटाक्षः । इति हेमचन्द्रः ॥

**अपाची**, स्त्री, (अप + अञ्च + क्विन्, स्त्रियां ङीप् ।) दक्षिणदिक् । इति हलायुधः ॥

**अपाचीनं**, त्रि, (अपाच्यां दक्षिणस्यां दिशि भवं, अपाच् खः तस्य ईन ।) अपागर्थं । दक्षिणदिग्-भववस्तु । विपर्य्यस्तं । विपरीतं । इति विश्व-मेदिन्यौ ॥

**अपाच्यं**, त्रि, दक्षिणदिग्भववस्तु । अपाची दक्षिण-दिक् ततो भवार्थे ष्ण्यप्रत्ययः ॥ पचनायोग्यं । पच-धातोः कर्म्मणि घ्यणि पाच्यं पश्चान्नञ्समासः ॥

“शिग्रुकुष्ठजलाजाजीलशुनव्योषहिङ्गुभिः ।
वस्तमूत्रे शृतं तैलं नावनं स्यादपस्मृतौ” ॥
जलं बालकं । अजाजी जीरकः । वस्तः छागः ।
नावनं नस्यं ॥ * ॥ इत्यपस्माराधिकारः । इति
भावप्रकाशः ॥

**अपहारः**, पुं, (अप + हृ + भावे घञ् ।) अपचयः ।

हानिः । इत्यमरः ॥ अपहरणं । चौर्य्यं ।
संगोपनं ।

**अपाटवं**, क्ली, (पटोर्भावः पटु + भावे अण् नास्ति

पाटवं पटुता यत्र तत् ।)
रोगः । इति हेमचन्द्रः ॥
अपटुता । जडता ।
पटोर्भावः पाटवं ततो नञ्-
समासः ॥

**अपात्रं**, क्ली, (कुत्सितं पात्रं अप्राशस्त्ये नञ्समासः ।)

कुपात्रं । असत्पात्रं । यथा ।
“अपात्रे पातयेद्दत्तं
सुवर्णं नरकार्णवे” । इति
मलमासतत्त्वं ॥ (योग्य-
ताहीनं । निन्दितं ।
विद्यातपोहीनं । दानादि-
योग्यताहीनं ।
“विद्येव कन्यका मोहादपात्रे
प्रतिपादिता ।
यशसे न न धर्म्माय
जायेतानुशयाय तु” ॥
इति कथासरित्सागरे ।)

**अपात्रीकरणं**, क्ली, (अनपात्रं अपात्रं कुत्सितपात्रं

क्रियतेऽनेन, अपात्र + च्चि
+ कृ + करणे ल्यट् ।)
नवविधपापमध्ये
पापविशेषः । तच्चतुर्व्विधं ।

:निन्दितधनादानं १ वाणिज्यं २ शूद्रसेवनं ३ असत्य-
भाषणं ४ । इति प्रायश्चित्तविवेकः ॥
(“निन्दितेभ्यो धनादानं बाणिज्यं शूद्रसेवनं ।
अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणं” ॥
इति मनुः ।)

**अपादानं**, क्ली, (अपादीयते विश्लिष्यतेऽस्मात्, अप +
आ + दा + ल्युट् ।) यस्माद्वस्तुनो वस्त्वन्तरस्य चलनं
भवति तत् । षट्कारकमध्ये पञ्चमकारकं । तत्रै-
कादशार्थे पञ्चमी स्यात् यथा । यतोऽपायः । यथा
वृक्षात् पर्णं पतति १ । यतो भीः । यथा व्याघ्रात्
बिभेति २ । यतो जुगुप्सा । यथा पापात् जुगु-
प्सते धीरः ३ । यतः पराजयः । यथा सिंहात्
पराजयते हस्ती ४ । यतः प्रमादः । यथा धर्म्मात्
प्रमाद्यति नीचः ५ । यत आदानं । यथा भूपात्
धनमादत्ते विप्रः ६ । यतो भूः । यथा पितुः
पुत्त्रो जायते ७ । यतस्त्राणं । यथा व्याघ्रात् गां
रक्षति गोपः ८ । यतो विरामः । यथा जपाद्विर-
मति विप्रः ९ । यतोऽन्तर्द्धिः । यथा गुरोरन्तर्द्धत्ते
कटुमञ्जरिका २६ अघाटः २७ क्षरकः २८ पाण्डु-
कण्टकः २९ नालाकण्टः ३० कुब्जः ३१ । अस्य
गुणाः । तिक्तत्वं । उष्णत्वं । कटुत्वं । कफार्शःकण्डू-
दरामयविषरोगनाशित्वं । धारकत्वं । वान्तिकारि-
त्वञ्च । इति राजनिर्घण्टः ॥ अग्निवत्तीक्ष्णत्वं ।
क्लेदकारित्वं । स्रंसनत्वञ्च । इति राजवल्लभः ॥ * ॥
तत्फलगुणाः । रसे स्वादुत्वं । पाके दुर्ज्जरत्वं ।
विष्टम्भित्वं । वायुकारित्वं । रूक्षत्वं । रक्तपित्त-
प्रसादनत्वञ्च । इति भावप्रकाशः ॥ (अपामार्ग
ओषधोनां सर्व्वासामेक इद्वशीति अथर्व्ववेदः ।)

**अपाम्पतिः**, पुं, (अपां पतिः, अलुक्समासः ।) समुद्रः ।
इत्यमरः ॥ वरुणः । अप्पतिरित्यमरेणोक्तत्वात् ॥

**अपाम्पित्तं**, क्ली, (अपां पित्तमिव अलुक्समासः तदु-
त्पन्नत्वात् ।) अग्निः । इति शब्दरत्नावली ॥ चित्रक-
वृक्षः । वह्निसंज्ञक इत्यमरेणोक्तत्वात् ।

**अपायः**, पुं, (अप + इन् + भावे अच् ।) विश्लेषः ।
इति रामतर्कवागीशः ॥ चलनं । इति दुर्गादासः ॥
विनाशः । यथा, --
धारयः, अच् समासान्तः । अपगतमक्षि चक्षुः
कर्म्मधारयः, अच्, समासान्तः ।) प्रत्यक्षं । इति
त्रिकाण्डशेषः । कुत्सितचक्षुः । लोचनशून्यं ।
एतावर्थौ व्युत्पत्तिलब्धौ ॥

**अपि** व्य, (न पिबति पिगतौ क्विप्, आगमशास्त्रस्या-
नित्यत्वान्न तुक् ।) उपसर्गविशेषः । अस्यार्थाः ।
आहरणं । सम्भावनं । निन्दा । अनुज्ञा । अल्पत्वं ।
समुच्चयः । इति दुर्गादासः ॥ प्रश्नः । शङ्का । युक्त-
पदार्थः । कामाचारक्रिया । इति विश्वमेदिन्यौ ।
(“अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु”
इति पाणिनिसूत्रम्) ॥

**अपिगीर्णं**, त्रि, (अपि + गॄ + कर्म्मणि क्तः ।) स्तुतं ।
वर्णितं । इत्यमरः ॥

**अपिच्छिलः**, त्रि, (न पिच्छिलः नञ्समासः ।)
पैच्छिल्याभावविशिष्टः । पिच्छिलताशून्यः । यथा ।
“प्रमेहिणो यदा मूत्रमनाविलमपिच्छिलं” ।
इति माधवकरः ॥ (परिष्कृतः । अमलिनः ।
निर्मलः । गाढः ।)

**अपितु** व्य, (अपि + तु ।) यद्यर्थं । यद्यपि । इति
त्रिकाण्डशेषः ॥

**अपिधानं**, क्ली, (अपि + धा + भावे ल्युट् ।) आच्छा-
दनं । अन्तर्द्धानं । इत्यमरः ॥ (आवरणं । “द्वारे
पुरस्योद्घटितापिधाने” । इति कुमारसम्भवे ।

शिष्यः १० । यतो वारणं । यथा यवेभ्यो गां वारयति ११ । इति मुग्धबोधटीकायां दुर्गा-दासः ॥

**अपानं**, क्ली, (अपनयति मलादि निःसारयति, अप + अन् + णिच् + पचाद्यच् ।) मलद्वारं । तत्प-र्य्यायः । गुदं २ । पायुः ३ । इत्यमरः ॥ गुह्यं ४ । गुदवर्त्म ५ । इति जटाधरः ॥ तनुर्ह्रदः ६ । मार्गः ७ । इति शब्दरत्नावली ॥

**अपानः**, पुं, (अपानिति अधोदेशात् निःसरति, अप + अन् + अच् ।) गुदस्थवायुः । इत्यमरः ॥ अवाग्गमनवान् पाष्वादिस्थानवर्त्ती वायुः । इति वेदान्तसारः ॥ ("अधोनयत्यपानस्तु आहारञ्च नृणामधः । मूत्रशुक्रवहो वायुरपान इति कीर्त्त्यते" ॥ इत्युक्तलक्षणोऽवाग्गमनवान् कृकाटिकापृष्ठपार्श्व-पायूपस्थवृत्तिवायुः । गुदस्थवायुः ।) ("प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ" । इवि भगवद्गीता ।)

**अपापः**, त्रि, (नास्ति पापं यस्य सः ।) निष्पापः । पापशून्यः । यथा, -- "इयं दाशरथे सीता सुव्रता ब्रह्मचारिणी ।

"सा काशी त्रिपुरारिराजनगरी पायादपायाज्ज-गत्" । इति काशीखण्डं ॥

**अपारं**, क्ली, (नास्ति पारं यस्य तत् ।) अवारं । नद्यादेरर्व्वाक्पारं । इति हलायुधः ॥ असीमे त्रि ॥

**अपावृतं**, त्रि, (अप + आ + वृ + आच्छादने क्तः ।) पिहितं । आवृतं । स्वतन्त्रं । स्वाधीनं । इति मेदिनी ॥ (उद्घाटितं । अनावृतं । अपसारिता-वरणं । "यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतं" । इति गीता ।)

**अपावृत्तं**, त्रि, (अप + आ + वृत् + क्तः ।) लुठितं । इति हेमचन्द्रः ॥ लोटा । गडागडि इति भाषा । (अन्तरितं । परावृत्तं । निवृत्तं । "प्रतिग्रहादपावृत्तः सन्तुष्टो येन केनचित्" । इति महाभारते ।)

**अपाश्रयः**, पुं, (अपाश्रियते आच्छाद्यतेऽनेन, अप + आ + श्रि + करणे अच् ।) प्राङ्गणावरणं । सामियाना । चाँदोया इति भाषा । तत्पर्य्यायः । मत्तालम्बः २ प्रग्रीवः ३ मत्तवारणः ४ । इति हेमचन्द्रः ॥ आश्रयशून्ये त्रि ॥ (चन्द्रातपः ।

"शिलापिधाना काकुत्स्थ दुर्गं चास्याः प्रवेशनं" । इति रामायणे ।)

**अपिनद्धं**, त्रि, (अपि + नह् + कर्म्मणि क्तः, अस्य वालोपे पिनद्धञ्च ।) परिहितवस्त्रादि । तत्प-पर्य्यायः । आमुक्तः २ प्रतिमुक्तः ३ पिनद्धः ४ । इत्यमरः ॥

**अपीतः**, पुं, (पा + कर्म्मणि क्तः । न पीतः, नञ्-समासः ।) पीतभिन्नवर्णः । तद्विशिष्टे अकृतपाने च त्रि इति नञ्समस्तपीतशब्दस्यैतावर्थौ ॥

**अपीनसं**, क्ली, (अपीनाय अस्थूलत्वाय सीयते कल्पते, अपीन + सो + कर्म्मकर्त्तरिकः । पीनसात् रोग-विशेषात् भिन्नं नञ्समासः ।) पीनसरोगः । इति रभसः ॥ तद्रहिते त्रि ॥

**अपीव्यं**, त्रि, अतिसुन्दरं । यथा, -- "अपीव्यदर्शनं शश्वत् सर्व्वलोकनमस्कृतं । सन्तं वयसि कैशोरे भृत्यानुग्रहकातरं" ॥ इति श्रीभागवतं ॥

**अपुच्छा**, स्त्री, (नास्ति पुच्छमग्रभागो यस्याः सा, टाप् ।) शिंशपावृक्षः । इति शब्दचन्द्रिका ॥ (त्रि, लाङ्गूलहीनः । शिखरहीनः ।)

**अपुनर्भवः**, पुं, (न पुनर्भवति न पुनरुत्पद्यतेऽस्मात्, न पुनर् + भू + अपादाने अप्, मयूरव्यंसकादि-त्वात् समासः ।) मुक्तिः । कैवल्यं । इति हेम-चन्द्रः ॥ पुनर्जन्माभावः । यथा, -- "हेतौ लिङ्गे प्रशमने रोगाणामपुनर्भवे । ज्ञानं चतुर्विधं यस्य स राजार्हो भिषक्तमः" ॥

अपापा हि त्वया त्यक्त्वा
ममाश्रमसमीपतः” ॥
इति रामायणं ॥

**अपामार्गः**, पुं, (अपामृज्यते रोगो दूरीक्रियते अनेन,

अप + आ + मृज् + करणे घञ् ।)
वृक्षविशेषः ।
आपां इति भाषा । तत्पर्य्यायः ।
शैखरिकः २
धामार्गवः ३ मयूरकः ४ प्रत्यक्पर्णी ५
कीशपर्णी
६ किणिही ७ खरमञ्जरी ८ । इत्यमरः
॥ शैख-
रेयः ९ अधामार्गवः १० केशपर्णी
११ इति
तट्टीका ॥ स्थलमञ्जरी १२
प्रत्यक्पुष्पी १३ क्षार-
मध्यः १४ अधोघण्टा १५ शिखरी
१६ इति
रत्नमाला ॥ दुर्ग्रहः १७ अध्वशल्यः
१८ काण्डीरकः
१९ मर्कटी २० दुरमिग्रहः २१
वाशिरः २२
पराकपुष्पी २३ कण्टी २४
मर्कटपिप्पली २५

निराश्रयः । आश्रितः । अधीनः ।
“ब्राह्मणापाश्रयो नित्यमुत्कृष्टां
जातिमश्नुते” ।
इति मनुः ।)

**अपासङ्गः**, पुं, (अप + आ + सन्ज + घञ् ।) उपा-

सङ्गः । तूणः ।
इत्यमरटीकासारसुन्दरी ॥

**अपासनं**, क्ली, (अप + अस + भावे ल्युट् ।) मारणं ।

इत्यमरः ॥

**अपास्तं**, त्रि, (अप + अस + क्तः ।) निरस्तं । यथा ।

एतेन नातिसन्ध्यासमीपत इत्यनेन
राक्षसीवेला-
मात्रं निषिध्यते इति
मैथिलमतमपास्तं । इति
तिथ्यादितत्त्वं ॥

**अपाक्षं**, त्रि, (अक्षमिन्द्रियमपगतमनुगतमिति

यावत्, प्रादिसमासः । अपकृष्टमक्षि
चक्षुः कर्म्म-

इति चरकः ॥ (कर्त्तरि अचि तु पुनर्जन्मशून्यः
मुक्त-
इति यावत् ।)

**अपुष्पफलदः**, पुं, (अपुष्पं, पुष्पं विना फलं ददाति,

:अपुष्पफल + दा + कर्त्तरि कः, उपपदसमासः ॥)

पनसवृक्षः । इति राजनिर्घण्टः ॥
पुष्पव्यतिरेक-
जातफलवृक्षमात्रं ॥ (अहेतुकफलदातरि
त्रिं)

**अपूपः**, पुं, (न पूयते विशीर्य्यति, न + पूय + पः,

यलोपः ।) पिष्टकः । इत्यमरः ॥ गोधूमः ।
इति
राजजिर्घण्टः ॥
("वृथाकृसरसं यावं पायसापूपमेव च" ।
इति मनुः ।)

**अपूप्यः**, पुं, (अपूपाय हितः "विभाषा हविर-

पूपादिभ्यः" इति पाणिनिसूत्रेण यत् ।)
गोधूम-
चूर्णं । इति जटाधरः ॥ मयदा इति भाषा ।

**अपूरणी**, स्त्री, (न पूरयति पुष्पगन्धेन मनःप्रीतिं

पूर्णां करोति निर्गन्धत्वात्, पूर + णिच् +
कर्त्तरि
ल्युट्, स्त्रियां ङीप् तती नञ्समासः ।)
शाल्मलि-
वृक्षः । इति शब्दचन्द्रिका ॥

**अपूर्व्वं**, क्ली, (नास्ति पूर्व्वं पूर्व्वकालभवं दृष्टं यस्य

तत् ।) कर्म्मजन्यमदृष्टं । तत्पर्य्यायः ।
अनुशयः २
नियोगः ३ अतिशयः ४ कार्य्यं ५ प्रयोगः ६
।
इति स्मृतिः ॥ तच्चतुर्तिधं यथा । फलापूर्ब्बं
१
समुदायापूर्ब्बं २ उत्पत्त्यपूर्ब्बं ३ अङ्गापूर्ब्बं ४
। येन
स्वर्ग आरभ्यते तत् फलापूर्ब्बं ।
अमावास्यायां

सुपद्मटीकायां विष्णुमिश्रः ॥ आकाङ्क्षा
। यथा, --
"सा प्रक्रिया या कथमित्यपेक्षा" । इति
वेदा-
न्तटीकायां वाचस्पतिमिश्रः ॥
(आकाङ्क्षा । अभि
लाषः । आशा ।
"अपेक्षा भिक्षायामपि किमपि चेतः
स्त्रपयति" ।
इति शान्तिशतके । प्रयत्नः । अनुरागः
। सम्मा-
नना ।
"अलब्धं चैव लिप्सेत लब्धं
रक्षेदपेक्षया ।
रक्षितं वर्द्धयेच्चैव वृद्धं पात्रेषु निक्षिपेत्"
॥
इति मनुः । पर्य्यालोचनं । विचारः ।
अनुचि-
न्तनं ।
"सत्यामपि तपःसिद्धौ नियमापेक्षया
मुनिः" ।
इति रघुवंशे ।
"न क्षुद्रोऽपि प्रथमसुकृतापेक्षया
संश्रयाय" ।
इति मेघदूते ।)

**अपेक्षाबुद्धिः**, स्त्री, अनेकैकत्वंविषयकबुद्धिः । ना-

नैकत्वावगाहिबुद्धिः । अयमेकः
अयमेक इत्या-
कारबुद्धिः । इति भाषापरिच्छेदः ॥
("अनेकैकत्वबुद्धिर्या
सापेक्षाबुद्धिरुच्यते" इति
"अपेक्षाबुद्धिनाशाच्च नाशस्तेषां
निरूपितः"
इति च भाषापरिच्छेदे ।)

कर्म्मणि तुः ह्रस्वः ।) शरीरं । अङ्गं ।
इत्युणादि-
कोषः ॥ ("अथाप्नवे द्वितीये
यामाहुतिं जुहो-
ति" । इति शतपथब्राह्मणः ।)

**अप्नः**, [स्] क्ली, (आप् + असुन् नुट्
ह्रस्वश्च ।)

जलं । वेदप्रयोगोऽयं ॥

**अप्पतिः**, पुं, (अपां पतिः, षष्ठीतत्पुरुषः ।)
वरुणः ।

इत्यमरः ॥ समुद्रः । अपाम्पतिरिति
दर्शनात् ॥

**अप्पित्तं**, क्ली, (अपां पित्तमिव ।) अग्निः ।
इत्य-

मरः ॥ चित्रकवृक्षः । वह्निसंज्ञकत्वात्
॥

**अप्रकटः**, त्रि, (न प्रकटः व्यक्तः नञ्समासः
।)

अव्यक्तः । अप्रकाशः । यथा, --
"प्रकटाप्रकटा चेति लीला सेयं
द्विधोच्यते" ।
इति भागवतामृते पद्मपुराणं ॥ अस्य
विवरणं
लीलाशब्दे द्रष्टव्यं ॥

**अप्रकाण्डः**, पुं, (नास्ति प्रकृष्टः काण्डः
स्कन्धो यस्य

सः ।) काण्डरहितवृक्षः । स तु
झिण्टिकादिः ।
तत्पर्य्यायः । स्तम्बः २ गुल्मः ३ ।
इत्यमरः ॥

**अप्रकाशः**, पुं, (न प्रकाशः नञ्समासः ।)
प्रकाशा-

भावः । तत्पर्य्यायः । जनान्तिकं २ ।
इति त्रि-

त्र्याणां यागानामेकः समुदायः
पौर्णमास्यामपरः
तयोर्भिन्नकालवर्त्तिनोः
संहत्यफलापूर्ब्बारम्भायो-
गात्तदारम्भाय समुदायद्वयजन्यमपूर्ब्बद्वयं
कल्प-
नीयं । तयोरेकैकस्यारम्भाय
एकैकसमुदायवर्त्तिनां
त्र्याणां यागानां भिन्नक्षणवर्त्तित्वेन
संघातापत्त्य-
भावात् यागत्रयजन्यानि त्रीण्युत्पत्त्यपूर्ब्बाणि
क-
ल्पनीयानि ।
तेषाञ्चाङ्गोपकारमन्तरेणानिष्पत्ते-
रङ्गानां चानेकक्षणवर्त्तिनां संघातासम्भवात्
अ-
ङ्गापूर्ब्बाणि कल्पनीयानि । तत्र त्वयं
विभागः ।
इत्यधिकरणमाला ॥

**अपूर्व्वं**, त्रि, (नास्ति पूर्व्वं यस्य, न पूर्व्वः नञ्समासः ।)
आश्चर्य्यं । यथा, --
“अपूर्ब्बेयं हरेर्माया त्रिगुणा रज्जुरूपिणी ।
यया मुक्त्वो न चलति बद्धो धावति
धावति” ॥
इति उद्भटः ॥ पूर्ब्बदिग्देशकालभिन्नं ॥

**अपेतराक्षसी**, स्त्री, (अपेतः राक्षस इव पातकं
यस्याः सा, गौरादित्वात् ङीष् ।)
तुलसीवृक्षः ।
इति राजनिर्घण्टः ॥

**अपेयं**, त्रि, (पा + कर्म्मणि अर्हाद्यर्थे यत् ।) पाना-
योग्यं । अपानीयं । यथा, --
“मद्यमपेयमदेय-
मनिग्राह्यं” । इति तिथ्यादितत्त्वे उशनःसूत्रं
॥

**अपोगण्डः**, त्रि, (अपकृष्टकर्म्मणि वेदविहितकार्य्या-
दन्यकर्म्मणि गण्डः उद्यतः, गडि उद्यमे
+ पचा-
द्यच्, निपातनात् अपशब्दस्याकारस्य
उकारः,
अपसि कर्म्मणि गण्डः अतिभीरुत्वात्
त्याज्यः ।)
स्वभावतो न्यूनाधिकाङ्गविशिष्टः ।
तत्पर्य्यायः ।
पोगण्डः २ विकलाङ्गः ३ अङ्गहीनकः
४ । इति
शब्दरत्नावली ॥ शिशुः । वलिभः ।
त्रिवलियुक्तः ।
इति मेदिनी ॥ अतिभीरुः । इति विश्वो
हेम-
चन्द्रश्च ॥ द्वे स्वभावतो न्यूनाधिकाङ्गे
ऊनविंशत्य-
ङ्गुलीकैकविंशत्यङ्गुलीकादौ जने वर्त्तते
इत्यर्थः ।
विकलं स्वभावहीनं अङ्गमस्य
विकलाङ्गः । अप-
कृष्टं गच्छति अपोगण्डः । नाम्नीति
गमेर्डः नि-
पातनात् पस्य पोभावः ।
“अपोगण्डस्तु शिशुके विकलाङ्गे च
भीरुके” ।
इति विश्वः ॥ निपातनादपस्यादिलोपे
पोगण्डो-
ऽपि । पोगण्डो विकलाङ्गे स्यादिति
हलायुधः ॥
पोगण्डो विकलाङ्गकः । इति रत्नकोषः
। इति
तट्टीकायां भरतः ।

**अपोदिका**, स्त्री, (अपगतमुदकं यस्याः सा, स्त्रियां
काण्डशेषः ॥ (गुप्तः । अप्रकाशितः ।
गूढः ।
“द्विविधांस्तस्करान् विद्यात्
परद्रव्यापहारकान् ।
प्रकाशांश्चाप्रकाशांश्च
चारचक्षुर्महीपतिः” ॥
इति मनुः । न प्रकाशते इति
अप्रकाशः, पचा-
द्यच् । अन्धकारावृतः । अदृश्यः ।
“प्रकाशश्चाप्रकाशश्च लोकालोक
इवाचलः” ।
इति रघुवंशे । निहितः । प्रच्छादितः
। प्रोथितः ।
“यानि चैवंप्रकाराणि कालाद्भूमिर्न
भक्षयेत् ।
तानि सन्धिषु सीमायामप्रकाशानि
कारयेत्” ॥
इति मनुः । रहसि । परोक्षं ।
“नाततायिबधे दोषो हन्तुर्भवति
कश्चनः ।
प्रकाशं वा प्रकाशं वा
मन्युस्तम्मन्युमृच्छति” ॥
इति मनुः ।) तद्विशिष्टे त्रि ॥

**अप्रकृष्टः**, पुं, (न प्रकृष्टः नञ्समासः ।) काकः ।
इति शब्दरत्नावली ॥ अधमे त्रि ॥

**अप्रखरः**, त्रि, (न प्रखरः तीक्ष्णः नञ्समासः ।)
प्राखर्य्यरहितः । अतीक्ष्णः । तद्धर्म्मे
क्ली । खं
रातीति कः खरः प्रकृष्टः खरः
प्रखरस्ततो नञ्-
समासः । (मृदुः । शान्तः ।)

**अप्रगुणः**, त्रि, (न प्रकृष्टो गुणो धैर्य्यरूपो यस्य

("जलधिजलमपेयं पण्डिते निर्धनत्वं" ।)
("यैः कृतः सर्व्वभक्ष्योऽग्निरपेयश्च
महोदधिः ।
क्षयी चाप्यायितः सोमःको न नश्येत्प्रकोप्य
तान्" ॥
इति मनुः ।)

**अपेक्षणीयं**, त्रि, (अप + ईक्ष + कर्म्मणि अनीयर् ।)

अपेक्षायोग्यं । अपेक्ष्यं । अपेक्षितब्यं । यथा,
--
"आत्मा यत्नेन रक्ष्यो रणशिरसि पुनः
सोऽपि
नापेक्षणीयः" । इति नवरत्नमध्ये शङ्कुः ॥

**अपेक्षा**, स्त्री, (अप + ईक्ष + भावे अ, स्त्रियां

टाप् ।)
कार्य्यनिमित्तयोरन्योन्याभिसम्बन्धः । इति
टाप्, पृषोदरादित्वात् दित्त्वं ।)
उपोदिका ।
पूतिकाशाकं । इत्यमरटीकायां स्वामी
॥

**अपोहः**, पुं, (अप् + ऊह + भावे घञ् ।)
अपगत-

ऊहः । वितर्काभावः ।
शुश्रूषाद्यष्टधाधीगुणान्त-
र्गतषष्ठगुणः ।
("शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा
।
ऊहोऽपहोऽर्थविज्ञानं तत्त्वज्ञानं च
धीगुणाः") ॥
इति हेमचन्द्रः ॥ अतद्व्यावृत्तिः । इति
काव्य-
प्रकाशटीकायां महेश्वरः ॥

**अप्तः**, [स्] क्ली (आप्यते स्वर्गो लभ्यंतेऽनेन,
आप +

करणे तस ह्रस्वः ।) यज्ञकर्म्मः ।
इत्युणादिकोषः ॥

**अप्तुः**, पुं, (आप्यते भोगाय प्राप्यते यः, आप् +

सः, गुणमप्राप्तः प्रादिसमासः ततो
नञ्समासः ।)
व्याकुलः । व्यस्तः । इत्यमरः ॥

**अप्रतिकरः**, त्रि, (प्रति करोति विश्वासं
नोत्पा-

दयति प्रति + कृ + कर्त्तरि अच्, न
प्रतिकरः
ततो नञ्समासः ।) विश्वस्तः ।
विश्वासपात्रं ।
इति जटाधरः ॥

**अप्रतिपक्षः**, त्रि, अप्रतियोगी । विपक्षशून्यः ।

नास्ति प्रतिपक्षो यस्य इति
बहुव्रीहिसमास-
निष्पन्नः ॥

**अप्रतिभः**, त्रि, अप्रत्युत्पन्नमतिः । अप्रगल्भः
। नास्ति

प्रतिभा नवनवोन्मेषशालिनी प्रज्ञा
यस्य सः ।
इति प्रतिभान्वतशब्दार्थे भरतः ॥
(मृदुः । लज्जा-
शीलः । हतज्ञानः ।) (स्त्रियां
उत्तरस्याप्रतिपत्ति-

:रूपो निग्रहस्थानविशेषः, उत्तरार्हे परोक्तं बुद्ध्वा-
पि यत्रोत्तरामेये उत्तरं न प्रतिपद्यते तत्र अप्र-
तिभानिग्रहस्थानम् ।)

**अप्रतिरथं**, क्ली, (नास्ति प्रतिरथः समः मङ्गलार्थ-
त्वेन यस्य तत् ।) यात्रा । सामवेदः ।
मङ्गलं ।
इति भूरिप्रयोगत्रिकाण्डशेषौ ॥
(युद्धार्थयानं ।
युद्धसमये यात्राकृतमङ्गलं ।
"यद् यात्रा मङ्गलं साम तदप्रतिरथं
विदुः" ॥
इति हारावली ।)

**अप्रतिरथः**, पुं, (नास्ति प्रतिरथः प्रतियोद्धा यस्य
सः ।) योद्धा इति भूरिप्रयोगः ॥
तुल्ययोद्धृ-
रहितः । इति पुराणं ॥
("दौष्मन्तिमप्रतिरथं तनयं प्रसूय"
इति शाकुन्तले ।
"एतेषां तमसामिवाप्रतिरथैस्तेजोभिः"
।
इति महावीरचरिते ।)

**अप्रतिरूपकथा**, स्त्री, (नास्ति प्रतिरूपा अनुरूपा
कथा यस्यां सा ।) अप्रतिवचना वाक् ।
अतुल्या
कथा । तत्पर्य्यायः । सङ्गनिका २ ।
इति
त्रिकाण्डशेषः ॥

**अप्रतिष्ठः**, त्रि, अप्रतिष्ठितः । प्रतिष्ठारहितः ।

**अप्रयोगः**, पुं, (प्र + युज् + घञ्, ततो नञ्समासः)
प्रयोगाभावः । अनुल्लेखादिः । यथा ।
"उक्तार्था-
नामप्रयोगः" । इति दुर्गादासः ॥

**अप्रलम्बं**, क्ली, (प्र + लम्ब + घञ्, नञ्समासः ।)
अविलम्बं । शीघ्रं । इति हलायुधः ॥
तद्वति त्रि ।
(सत्वरः । विलम्बरहितः । झटिति ।)

**अप्रशस्तं**, त्रि, (प्र + शनस् + क्तः, नञ्समासः ।)
असत् । अश्रेष्ठं । अविहितं । यथा, --
"अप्रशस्तं निशि स्नानं राहोरन्यत्र
दर्शनात्" ।
इति तिथ्यादितत्त्वे पराशरः ॥
(मूत्रपुरीषादिकं ।
"अप्रशस्तन्तु कृत्वाप्सु मासमादीत
भक्षभुक्" ।
इति मनुः ।)

**अप्रसन्नं**, त्रि, (प्र + सद् + क्तः, नञ्समासः ।) आविलं ।
अनच्छं । इति शब्दरत्नावली ॥
अतुष्टं । यथा, --
"त्वयि प्रसन्ने परशर्म्मभिः किं
त्वय्यप्रसन्ने परशर्म्मभिः किं" ।
इति प्राचीनाः ॥ (अतुष्टः । अप्रफुल्लः
। विषण्णः ।
विरक्तः । प्रतिकूलः । "अप्रसन्नमनाः
किं नु सदा
मां प्रति वत्सलः" । इति रामायणे ।)

**अप्रसिद्धं**, त्रि, (प्र + सिध् + क्तः, नञ्समासः ।)
प्रसिद्धतारहितं । अविख्यातं । यथा,
--

**अप्राग्र्यं**, त्रि, (प्राग्र्यः प्रधानं नञ्समासः ।) अप्र-
धानं । इत्यमरः ॥

**अप्राचीनं**, त्रि, अपुरातनं । नव्यं । प्राचीतरदिग्-
जातं । प्राग्भवं प्राचीनं ततो नञ्समासः ॥

**अप्राप्तः**, त्रि, (प्र + आप् + कर्म्मणि क्तः, नञ्-
समासः ।) अलब्धः । यथा ।
"अप्राप्तप्रापको
विधिः" । इति सङ्कल्पकौमुदी दुर्गादासश्च
॥
(अनधिगतः ।
"अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः"
।
इति भाषापरिछेदे । अनुपस्थितः ।
अनागतः ।
न्यूनवयाः । अप्राप्तकालः ।
"उत्कृष्टायाभिरूपाय वराय सदृशाय च ।
अप्राप्तामपि तां तस्मै कन्यां दद्यात्
यथाविधि" ॥
इति मनुः ।)

**अप्राप्तव्यवहार**, पुं, (अप्राप्तः व्यवहारोयेन सः, अथवा
अप्राप्तः व्यवहारः व्यवहारयोग्यं वयो येन
सः ।)
व्यवहारानभिज्ञः । अप्राप्तवयस्कः ।
नावालग् इति
आरवी भाषा । यथा, --
"अप्राप्तव्यवहाराणां धनं व्ययविवर्ज्जितं ।
न्यसेयुर्बन्धुमित्रेषु प्रोषितानां तथैव च" ॥
इति दायतत्त्वधृतकात्यायनवचनं ॥ किञ्च ।
"गर्भस्थैः सदृशो ज्ञेयः अष्टमाद्वत्सरात्
शिशुः ।
बाल आषोडशाद्वर्षात् पोगण्डोऽपि निगद्यते
॥
परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते" ॥

नास्ति प्रतिष्ठा यस्येति बहुव्रीहौ ह्रस्वः । यथा ।
हयशीर्षपञ्चरात्रीयसङ्कर्षणकाण्डे ।
“सर्व्वसूक्तेषु कर्त्तव्या प्रतिष्ठा विधिना बुधैः ।
फलार्थिभिस्त्वप्रतिष्ठं
यस्मान्निष्फलमुच्यते” ॥
इति मठादिप्रतिष्ठातत्त्वं ॥
(“अप्रतिष्ठे रघज्येष्ठे का प्रतिष्ठा कुलस्य नः” ।
इति उत्तरचरिते ।)

**अप्रतुलं**, क्ली, (प्रकृष्टतुलाया अभावः, अव्ययीभावः ।)

प्रकृष्टपरिमाणाभावः । अनिर्वृतिरिति लोक-
प्रसिद्धिः । प्रकृष्टतुलारहिते त्रि । नास्ति प्रकर्षा
तुला यस्य धनादेः धनादेर्यस्य वा ॥

**अप्रत्ययः**, पुं, (प्रति + इन् + भावे अच्, ततोनञ्-

समासः । नास्ति प्रत्ययः विश्वासो यस्य वा) (स-
न्दहः । संशयः ।
“बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः” ॥
इति शाकुन्तले ।) प्रत्ययाभावः । अविश्वासः ।
यथा “दोषाणां सन्निधानं कपटशतमयं क्षेत्रम-
प्रत्ययानां” । इति श्रीशिह्लनः ।

**अप्रत्यक्षः**, त्रि, (अक्षमिन्द्रियं प्रतिगतः प्रादिसमासः,

न प्रत्यक्षः नञ्समासः ।) प्रत्यक्षशून्यः । इन्द्रिया-
गोचरः । तत्पर्य्यायः । अतीन्द्रियः २ । इत्यमरः ।
“लिङ्गं सामर्थ्यं रूढिगतं प्रसिद्धं न त्वप्रसिद्धं” ।
इति तिथ्यादितत्त्वं ॥ (“अप्यप्रसिद्धं यशसे हि
पुंसामनन्यसाधारणमेव कर्म्म” इति कुमारसम्भवे ।)

**अप्रस्तुतं**, त्रि, (न प्रस्तुतं नञ्समासः ।) अप्रक्रान्तं ।

प्रकरणाप्राप्तं । यथा, --
“अप्रस्तुतप्रशंसा सा या
चैव प्रंस्तुताश्रया” ।
इति काव्यप्रकाशः ॥ अप्रशंसितं । प्रपूर्ब्बस्तुत्यर्थ-
स्तुधातोः कर्म्मणि क्ते नञ्समासः ॥
“अप्रस्तुतप्रस्तुतयोर्द्दीपकन्तु निगद्यते ।
अथ कारकमेकं स्यादनेकासु क्रियासु चेत्” ॥
इति साहित्यदर्पणे ।)

**अप्रस्तुतप्रशंसा**, स्त्री, काव्यालङ्कारविशेषः । सा च

अप्राकरणिकस्यार्थस्य अभिधानेन प्राकरणिक-
स्याक्षेपः । तस्या लक्षणं ।
“अप्रस्तुतप्रशंसा सा या
चैव प्रस्तुताश्रया । सा च कार्य्ये निमित्ते सामान्ये
विशेषे प्रस्तुते सति” ।
“तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा” ॥
आद्याया उदाहरणं यथा, --
“याताः किन्न मिलन्ति सुन्दरि पुनश्चिन्ता त्वया
मत्कृते नो कार्य्यातितरां कृशासि कथयत्येवं
सवाष्पे मयि । लज्जामन्थरतारकेण निपतद्धा-
इति व्यवहारतत्त्वघृतनारदवचनं ॥

**अप्राप्तिः**, स्त्री, (प्र + आप् + भावे क्तिन्, नञ्-

समासः ।) अप्रापणं । अलाभः । तद्वति त्रि ।
यथा, --
“तदप्राप्तिमहादुःखविलीनाशेषपातका” ।
इति काव्यप्रकाशकारः ॥

**अप्राप्यं**, त्रि, (प्र + आप् + कर्म्मणि ण्यत्, नञ्-

समासः ।) अप्रापणीयम् । अप्राप्तव्यं । प्रपूर्ब्बादाप-
धातोः कर्म्मणि ये नञ्समासः ॥

**अप्रामाणिकः**, त्रि, (प्रमाणेन सिद्धः, प्रमाण + ठक्

तस्य इकः, नञ्समासः) प्रमाणानभिज्ञः । प्रमाणा-
सिद्धः । प्रामाण्यरहितः । यथा । “अतोऽवि-
भक्तार्जितत्वमात्रेण धनस्य साधारणत्वाभिधान-
मप्रामाणिकं” । इति दायभागः ॥

**अप्रामाण्यं**, क्ली, (प्रमाणस्य भावः, प्रमाण + भावे

ष्यञ्, नञ्समासः ।) प्रामाण्याभावः । यथा, --
“अप्रामाण्यं जनयति सदा
नन्दसूनोर्व्वियोगः” ।
इति पदाङ्कदूतं ॥

**अप्रियं**, त्रि, (प्री + कर्त्तरि कः, नञ्समासः ।)

अनभीष्टं । अनीप्सितं । अप्रीतिकरं । अहृद्यं ।
यथा, --
“सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात्
सत्यमप्रियं” । इति पुराणं ॥

**अप्रियवचः**, क्ली, (अप्रियं अप्रीतिकरं वचः वाक्यं

("किन्तु तस्य बलज्ञोऽहं भ्रातृरूपस्य वैरिणः ।
अप्रत्यक्षं च मे वीर्य्यं समये तव राघव" ॥)
प्रत्यक्षाभावे क्ली ॥

**अप्रधानं**, क्ली, (न प्रधानं, नञ्समासः ।) प्राधान्य-

रहितं । तत्पर्य्यायः । अप्राग्र्यं २ उपसर्ज्जनं ३ ।
इत्यमरः ॥ वाच्यलिङ्गोऽप्ययं । इति भरतः ॥

**अप्रमत्तः**, त्रि, (प्र + मद् + क्तः, ततोनञ्समासः ।)

अवधानविशिष्टः । सावधानः । यथा, --
"पापात् पराजितो दुःखादप्रमत्तो विधेः सतः" ।
इति वोपदेवः ॥

राश्रुणा चक्षुषा दृष्ट्वा मां हसितेन भाविमरणो-
त्साहस्त्वया सूचितः" ॥
इति काव्यप्रकाशः ॥ इतरासां उदाहरणानि
बाहुल्यान्नोक्तानि ॥

**अप्रहतं**, त्रि, (न प्रहन्यते स्म, प्र + हन् + क्तः,

नञ्समासः ।) अकृष्टभूमिः । खिला भूमिः ।
इत्यमरः ॥ (वस्त्रभेदः । तल्लक्षणं तथा, --
"ईषद्धौतं नवं श्वेतं सदशं यन्त्रधारितं ।
निर्नेजकाक्षालितं चाप्रहतं वास उच्यते" ॥
इति ।)

कर्म्मधारयः ।) निष्ठुरवाक्यं । इति पारुष्यशब्दार्थे
भरतः ॥

**अप्रिया**, स्त्री, (न प्रिया न प्रीतिकरी लोकानां,

नञ्समासः ।) शृङ्गीमत्स्यः । इति शब्दरत्नावली ॥
(अप्रीतिकरी नारी ।)

**अप्रीतं**, त्रि, प्रीतिरहितं । असन्तुष्टं । प्रीत्यर्थ-
प्रीधातोः कर्त्तरि क्ते नञ्समासः ॥

**अप्रेतराक्षसी**, स्त्री, (न प्रेता प्राप्ता राक्षसमिव
पातकं प्रादिसमासः, गौरादित्वात् ङीष् ।) अ-
पेतराक्षसी । तुलसी । इति रत्नमाला ॥

**अप्सरसः**, स्त्री, (अद्भ्यः समुद्रजलेभ्यः सरन्ति उद्-
यान्ति, अप् + सृ + असुन् ।) स्वर्व्वेश्याः । उर्व्वशी-
मेनकाद्याः । बहुवचनान्तोऽयं शब्दः । इत्यमरः ॥
(“अप्सु निर्मथनादेव रसात् तस्मात् वरस्त्रियः ।
उत्पेतुर्मनुजश्रेष्ठ तस्मादप्सरसोऽभवन्” ॥)

**अप्सरा**, स्त्री, स्वर्व्वेश्या । इति शब्दरत्नावली ।
(“स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सरा अपि” ।
इति शब्दार्णवे ।)

**अफलः**, त्रि, (नास्ति फलं वृक्षीत्पन्नं धर्म्मोत्पन्नं वा
यस्य सः ।) विफलः । निष्फलः । इति हेमचन्द्रः ॥
फलकाले अनुत्पन्नफलकवृक्षः । तत्पर्य्यायः । बन्ध्यः २
अवकेशी ३ । इत्यमरः ॥ झावुकवृक्षः । इति
शब्दचन्द्रिका ॥

**अफला**, स्त्री, (नास्ति फलं यस्या सा ।) भूम्यामलकी ।

**अफेनं**, क्ली, (निन्दितं फेनं निर्य्यासो यस्य तत् ।)
इति स्मृतिः । बधदण्डायोग्ये ब्राह्मणे च,
“बधः स्वर्व्वस्वहरणं पुरान्निर्वासनाङ्कने” ।
“तदङ्कच्छेदैत्युक्तो दण्ड उत्तमसाहसः ।
अविशेषेण सर्व्वेषामेष दण्डविधिः स्मृतः ॥
बधादृते ब्राह्मणस्य न बधं ब्राह्मणोऽर्हति” ॥
इति मिताक्षरायां ।)

**अबन्धः**, त्रि, (बन्ध + ण्यत्, न बन्ध्यः अफलः नञ्-
समासः ।) सफलः । फलकाले फलयुक्तवृक्षः ।
तत्पर्य्यायः । फलेग्रहिः २ । इत्यमरः ॥ फल-
ग्रहिः ३ । इति तट्टीका ॥ अमोघफलोदयः ४ ।
इति राजनिर्घण्टः ॥ (“इयेष सा कर्त्तुमबन्ध्य-
रूपतां” । इति कुमारसम्भवे । “याज्यमाशं-
सिताबन्ध्यप्रार्थनं” । “कर्म्मभिरप्यबन्ध्यैः” । इति
रघुवंशे ।)

**अबलं**, त्रि, (नास्ति बलं सामर्थ्यं यस्य तत् ।) बल-
रहितं । दुर्ब्बलं । यथा । “अबलस्वकुलाशिनो
झसान्” । इति नैषधं ॥

**अबलः**, पुं, (नास्ति बलं यस्य सः, क्षणभङ्गुरत्वात्
तस्य तथात्वं ।) वरुणवृक्षः । इति शब्दचन्द्रिका ॥

**अबला**, स्त्री, (नास्ति बलं यस्याः सा ।) नारी ।
रुत्पत्तिस्थानं यस्य सः ।) विधाता । ब्रह्मा । इत्य-
मरः ॥

**अब्जवाहनः**, पुं, (अब्जमिव शङ्खवत् शुभ्रं वाहनं
वृषो यस्य सः ।) शिवः । इति त्रिकाण्डशेषः ॥

**अब्जहस्तः**, पुं, (अब्जं पद्मं हस्ते यस्य सः ।) सूर्य्यः ।
इति हेमचन्द्रः ॥

**अब्जिनी**, स्त्री, (अब्जानां समूहः, अब्ज + पुष्करादि-
त्वात् इनि, स्त्रियां ङीप् ।) पद्मिनी । इति
राजनिर्घण्टः ॥ पद्मसमूहः । पठ्मलता । पद्मयुक्त-
देशः । इति नलिनीशब्दटीकायां भरतः ॥

**अब्जिनीपतिः**, पुं, (अब्जिन्याः पद्मसमूहस्य पतिः,
षष्ठीतत्पुरुषः ।) सूर्य्यः । इति हेमचन्द्रः ॥

**अब्दः**, पुं, (अबति सीमानं रक्षति अब + “अब्जा-
दय” इति दन् मेघपर्ब्बतविशेषपक्षे तु अपो
ददाति, अप् + दा + कर्त्तरि कः ।) वत्सरः ।
मेघः । मुस्ता । इति मेदिनी ॥ पर्ब्बतविशेषः ।
इति विश्वः ॥

**अब्दसारः**, पुं, (अब्दस्य मुस्तायाः सारः मूल-

वृक्षनिर्यासविशेषः । आफिं इति भाषा । तत्-
पर्य्यायः । खस्खसरसं २ निफेनं ३ अहिफेनकं ४
अस्य गुणाः । सन्निपातनाशित्वं । शुक्रबलमोह-
कारित्वञ्च ॥ तत्तु चतुर्व्विधं । एकं श्वेतवर्णं ।
अन्नजीर्णताकारकत्वान्नाम जारणं । द्वितीयं कृष्ण-
वर्णं । मृत्युकारकत्वान्नाम मारणं । तृतीयं पीतवर्णं ।
वयःस्तम्भनकारकत्वान्नाम धारणं । चतुर्थं कर्व्वूर-
वर्णं । मलसारकत्वान्नाम सारणं । इति राज-
निर्घण्टः ॥ (त्रि, फेनरहितः । "अनुष्णाभिरफेना-
भिरद्भिस्तीर्थेन धर्म्मवित्" । इति मनुः ।)

**अब** इ ङ शब्दे । इति कविकल्पद्रुमः ॥ इ अम्ब्यते ।
ङ अम्बते अम्बांपुत्त्रः । इति चतुर्भुजः दुर्गादासश्च ॥

**अबद्धं**, त्रि, (बन्ध + क्तः, नञ्समासः ।) प्रकृतानु-
पयोगिवचनं । समुदायार्थशून्यवाक्यं । अनर्थक-
कथा । इत्यमरः ॥ ("जरद्गवः कम्बलपादुकाभ्यां ।
द्वारि स्थितो गायति मङ्गलानि ॥
तं ब्राह्मणी पृच्छति पुत्त्रकामा ।
राजन् रुमायां लशुनस्य कोऽर्थः" ॥
इत्याद्यस्य विषयः । अनियन्त्रितः । स्वाधीनः ।
मुक्तः ।) बन्धनशून्यं ॥

इत्यमरः ॥ ("तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स
कामी" । इति मेघदूते ।)

**अबाधं**, त्रि, (नास्ति बाधा यस्य तत् ।) बाधशून्यं ।
अनिवारितं । तत्पर्य्यायः । निरर्गलं २ । इत्यमरः ।
अनर्गलं ३ उच्छृङ्खलं ४ उद्दाम ५ अनियन्त्रितं
६ निरङ्कुशं ७ । इति हेमचन्द्रः ॥ बाधा पीडा तया
हीनञ्च ॥ (अङ्कशास्त्रे त्रिभुजांशविशेषः । अस्फु-
टत्वं । अविष्पटता । जटिलीभावः ।)

**अबिन्धनः**, पुं, (आपएव इन्धनमुद्दीपनसाधनं
यस्य सः ।) वाडवाग्निः । इति सन्देहभञ्जिका ॥
("अबिन्धनं वह्निमसौ बिभर्त्ति" । इति रघुवंशे ।)

**अबोधः**, पुं, (बुध + भावे घञ्, नञ्समासः ।)
अज्ञानं । यथा । "निसर्गदुर्बोधमबोधविक्लवाः" ।
इति भारविः ॥ बहुव्रीहौ त्रि ॥ (अज्ञानः ।
मूढः ॥ अनभिज्ञः । हतबुद्धिः । किङ्कर्त्तव्यविमूढः ।)

**अब्ज**, क्ली, (अप्सुजायते, अप् + जन + कर्त्तरि डः,
उपपदसमासः ।) पद्मं । इति मेदिनी ॥ दशा-
र्व्वुदसंख्या । शतकोटिः । इति लीलावती ॥

**अब्जः**, पुं, (अद्भ्यः जायते, अप् + जन् + डः ।)
चन्द्रः । धन्वन्तरिः । निचुलवृक्षः । इति मेदिनी ॥

निर्य्यासः ।) कर्पूरभेदः । इति राजनिर्घण्टः ॥

**अब्धिः**, पुं, (आपो जलानि धीयन्तेऽत्र, अप् + धा
+ अधिकरणे किः, उपपदसमासः ।) समुद्रः ।
इत्यमरः ॥

**अब्धिकफः**, पुं, (अब्धेः समुद्रस्य कफ इव कफाकार-
तया तस्य तादृशत्वं ।) समुद्रफेनः । तत्पर्य्यायः ।
हिण्डीरः २ । फेनः ३ । इत्यमरः ॥

**अब्धिजौ**, पुं, (अब्धौ जायेते अब्धि + जन + कर्त्तरि
डः, उपपदसमासः ।) अश्विनीकुमारौ । द्विवचना-
न्तोऽयं शब्दः । इति हेमचन्द्रः ॥

**अब्धिद्वीपा**, स्त्री, (अब्धिसंख्याता लवणादिसप्त-
संख्याता द्वीपा यस्याः सा ।) पृथिवी । इति
त्रिकाण्डशेषः ॥

**अब्धिनगरी**, स्त्री, (अब्धेः समुद्रस्य सन्निहिता
नगरी ।) द्वारकापुरी । इति त्रिकाण्डशेषः ।

**अब्धिनवनीतकः**, पुं, (अब्धेः समुद्रस्य नवनीतमिव,
षष्ठीतत्पुरुषः ।) चन्द्रः । इति शब्दरत्नावली ॥

**अब्धिफेनः**, पुं, (अब्धेः समुद्रस्य फेनः, षष्ठीतत्पुरुषः ।)
समुद्रफेनः । इति राजनिर्घण्टः ॥

**अब्धिमण्डूकी**, स्त्री, (अब्धिं समुद्रं मण्डयति, अब्धि

**अबद्धकं**, त्रि, (बन्ध + क्तः, नञ्समासः, स्वार्थे कन् ।)

समुदायार्थशून्यवाक्यं । इति
शब्दरत्नावली ॥

**अबद्धमुखः**, त्रि, (न बद्धं नञ्समासः, अबद्धं यथा-

भिलाषकथनेन अप्रतिबद्धं मुखं यस्य
सः ।) अ-
प्रियवादी । दुर्म्मुखः । इत्यमरः ॥
(स्त्रियां वा
ङीप् अबद्धमुखी अबद्धमुखा) ।

**अबध्यं**, त्रि, (हन्तुमयोग्यं हन् + अर्हाद्यर्थे कर्म्मणि

यत्, "हनोवा बधच" इति बधादेशे ।
बधम-
र्हति इति बध्यः, न बध्यः, नञ्समासः
।) अन-
र्थकवाक्यं । बधायोग्यं । इति मेदिनी ॥
("अबद्धाञ्च स्त्रियं
प्राहुस्तिर्य्यग्योनिगतामपि" ।

**अब्जः**, पुं, क्ली, (अद्भ्यः जायते, अप् + जन + डः ।)

शङ्खः । इति मेदिनी ॥
(जलभवशुक्तिमुक्तादिकं ।)
"अब्जमश्ममयञ्चैव राजतञ्चानुपस्कृतं" ।
"अब्जेषु चैव रत्नेषु सर्व्वेष्वश्ममयेषु च" ।
इति मनुः ।)

**अब्जजः**, पुं, (अब्जात् विष्णुनाभिपद्मात् जायते,

अब्ज + जन् + कर्त्तरि डः ।) ब्रह्मा । इति
त्रि-
काण्डशेषः ॥

**अब्जभोगः**, पुं, (अब्जस्य शङ्खस्य भोग इव शरीर-

मिव भोगो यस्य सः ।) पद्मकन्दः । इति
शब्द-
चन्द्रिका ॥

**अब्जयोनिः**, पुं, (अब्जं विष्णुनाभिपद्ममेव योनि-

+ मण्ड + ऊक, स्त्रियां ङीष् ।)
मुक्तास्फोटः ।
शुक्तिः । इति हेमचन्द्रः ॥ झिनुक इति
भाषा ॥

**अब्धिशयनः**, पुं, (अब्धौ प्रलये समुद्रे शेते, शी +

बाहुल्यात् कर्त्तरि ल्युट्,
सप्तमीतत्पुरुषः ।) विष्णुः ।
इति हेमचन्द्रः ॥ (नारायणोहि प्रलये
अब्धौ
शेते, यदुक्तं, --
"आपो नारा इति प्रोक्ता आपो वै
नरसूनवः ।
ता यदस्यायनं पूर्ब्बं तेन नारायणः
स्मृतः" ।
इति मनुः ।)

**अब्ध्यग्निः**, पुं, (अब्धेः समुद्रस्य अग्निः, षष्ठीतत्पुरुषः ।)

वडवानलः । इति हेमचन्द्रः ॥

**अब्भक्षः**, पुं, (अपोभक्षयति, अप + भक्षि +

शिलिकामिभक्ष्याचरिभ्यो ण इति
कर्त्तरि णः,
उपपदसमासः ।) सर्पः । इति
त्रिकाण्डशेषः ।

**अब्भ्रं**, क्ली, (अपो बिभर्त्ति, अप् + भृ + कर्त्तरि

कः ।) मेघः । इत्यमरः । मुस्तातृणं ।
अभ्रकधातुः ।
इति राजनिर्घण्टः ॥

**अब्भ्रमातङ्गः**, पुं, (अब्भ्रस्य, मेघस्य अधिपः मा-

तङ्गः शाकपार्थिवादित्वात् समासः,
मध्यपद-
लोपश्च ।) ऐरावतः । इत्यमरः ॥

**अब्भ्रिः**, स्त्री, (अपः नौकामलापनयनाय बिभर्त्ति

धारयति, अप् + भृ + किः ।)
काष्ठकुद्दालः ।
नौकामलापनयनार्थकुद्दालाकृतिकाष्ठं ।
इत्यमरः ॥
(पण्यादिद्रव्याणां समष्टीकरणपात्रं ।
तीक्ष्णाग्रो
लोहेदण्डः ।
"अब्भ्रिं कार्ष्णायसीं दद्यात् सर्पं हत्वा
द्विजोतमः ।
पलालभारकं षण्डे सैसकञ्चैकमासकं" ॥
इति मनुः ।)

**अब्भ्रियं**, त्रि, (अभ्रे मेघे भवं, अभ्र + घ तस्य इय ।)

मेधोद्भववस्तु । इत्यमरः ॥

**अब्रह्मचर्य्यकं**, क्ली, (ब्रह्मचर्य्यविरोधि, विरोधे नञ्-

समासः । ततः स्वार्थे कन् ।) मैथुनं ।
इति
त्रिकाण्डशेषः ॥ ब्रह्मचर्य्यशून्ये त्रि ॥

**अब्रह्मण्यं**, क्ली, (ब्रह्मणि ब्राह्मणोचितकर्म्मणि

अहिंसादौ साधु, ब्रह्मण् + यत्,
नञ्समासः ।)
नाट्योक्तौनायं बध्य इत्याकारोक्तिः ।
अबधयाच्ञा ।
अभक्ष्यं चैव मे मांसं
त्वादृशैर्ब्रह्मचारिभिः" ॥
इति रामायणं ॥ (भोजनायोग्यं
वस्तु, भक्षणाय
मन्वादिभिः शास्त्रकारैः निषिद्धं
द्विजातिभिः वर्ज्ज-
नीयं वस्तु । तानि च यथा,
लशुनगृञ्जनपलाण्ड्वा-
ख्यानि त्रीणि स्थूलकन्दशाकानि
। विष्ठादिजातानि
तण्डुलीयादीनि च ।
लोहितवृक्षनिर्य्यासः । छेदनो-
द्भववृक्षनिर्य्यासः । शेलुफलं ।
गव्यं । पेयुषञ्च ।
देवाद्यनुद्देशेन आत्मार्थं पक्वाः
कृसरसंयावपाय-
सापूपाः । असंस्कृत पशुमांसं ।
नैवेद्यार्थमन्नानि
निवेदनात् प्राक् । हवींषि च
होमात् प्राक्
इत्यादि ।)

**अभाजनं**, क्ली, (न भाजनं, नञ्समासः ।) अपात्रं ।

अयोग्यं । यथा, --
"दीधीवेवीट्समः कश्चित्
गुणवृद्ध्योरभाजनं ।
क्विप्प्रत्ययनिभः कश्चिद्यत्र
सन्निहिते न ते" ॥
इति काव्यप्रकाशः ॥ पात्ररहिते
त्रि ॥

**अभावः**, पुं, (भू + भावेघञ, नञ्समासः ।) मरणं ।

असत्ता । इति विश्वमेदिनौ ॥
"अस्ति पुत्रो वशे यस्य
भृत्योभार्य्या तथैवच ।
शत्रुणाक्रान्तः । इत्यभिपन्नशब्दार्थे अमरः ॥
(अभियुक्तः ।)

**अभिग्रहः**, पुं, (अभि + ग्रह् + भावे अप् ।) अभि-

योगः । इत्यमरः ॥ कलहाह्वानं ।
अपचिकीर्षया
अतिक्रम्याक्रमणं । आभिमुख्येन
युद्धादिप्रवृत्तिः ।
इति तट्टीकायां भरतः ॥ गौरवं । अभिग्रहणं ।
इति मेदिनी ॥ लुट् इति भाषा । (चौर्य्यकरणं
।)

**अभिग्रहणं**, क्ली, (अभि + ग्रह + भावे ल्युट् ।)

अभिहारः । इत्यमरः ॥ चौर्य्यकरणं ।
सम्मुखे
हरणं । इति तट्टीकायां भरतः ॥ (साहसं ।
अपचिकीर्षया अतिक्रम्याक्रमणं ।)

**अभिघातः**, पुं, (अभि + हन् + भावे घञ् ।) दण्डा-

दिभिरभिहननं । आघातः । यथा, --
"अभिघाताभिचाराभ्यामभिषङ्गाभिशापतः"
।
इति माधवकरः ॥ प्रश्नादौ कवर्गादिवर्गाणां
पूर्ब्ब-
स्थितचतुर्थद्वितीयतृतीयचतुर्थवर्णाः क्रमेण
पर-
स्थितवर्गैकैकद्वित्रिवर्णयुक्ताः । तत्र क्ली ।
यथा --
"अभिघातं स्यात् पूर्ब्बं
वेदद्वित्र्यब्धिवर्णाश्चेत् ।
नगवर्गाणां परतो धरणीचन्द्रद्विरामाढ्याः" ॥
इति केरलग्रन्थः ॥ (प्रहारः । अभिहननं ।
आ-
घातः ।
"चञ्चद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य" ।

तत्पर्य्यायः । अबध्योक्तिः २ । इत्यमरः
॥ ("नेपथ्ये
अब्रह्मण्यमब्रह्मण्यं । अत्रान्तरे ब्राह्मणेन
मृतं
पुत्त्रमुत्क्षिप्य राजद्वारे
सोरस्ताडनमब्रह्मण्य-
मुद्घोषितं" ।
इति उत्तरचरिते । वेदविरुद्धं
अतिनिन्दितं कर्म्म ।
निरतिशयव्यसनशोकादिप्रकाशोक्तिरियं
।)

**अभ** इ ङ ध्वनौ । इति कविकल्पद्रुमः ॥ इ अम्भ्यते ।
ङ अम्भते । इति दुर्गादासः ॥

**अभयं**, क्ली, (भयस्याभावः इत्यव्ययीभावः, यद्वा नास्ति
भयं यस्मात् तत्, हरीतक्यां दुर्गामूर्त्तिभेदे
च
स्त्री ।) वीरणमूलं । इत्यमरः ॥ भयाभावः
।
("नातः परतरो धर्म्मो नृपाणां
यद्रणार्ज्जितं" ।
विप्रेभ्यो दीयते द्रव्यं प्रजाभ्यश्चाभयं
सदा" ।
इति याज्ञवल्क्यः ।
"योदत्वा सर्व्वभूतेभ्यः प्रव्रजत्यभयं गृहात्
।
तस्य तेजोमया लोका भवन्ति
ब्रह्मवादिनः" ॥
इति मनुः ।)
"प्रवृत्तिञ्च निवृत्तिञ्च कार्य्याकार्य्ये
भयाभये ।
बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थ
सात्त्विकी" ॥
इति श्रीभगवद्गीता ॥ भयरहिते त्रि । इति
विश्वः ॥

अभावे सति सन्तोषः
स्वर्गस्थोऽसौ महीतले" ॥
इति चाणक्यः ।
("अग्न्यभावे तु विप्रस्य
पाणावेवोपपादयेत् ।
साक्ष्यभावे
प्रणिधिभिर्व्वयोरूपसमन्वितैः" ॥
इति मनुः ।) द्रव्यादिषट्कभिन्नः
। स द्विविधः ।
संसर्गाभावः १ अन्योन्याभावश्च
२ । इति भाषा-
परिच्छेदः ॥ भावशून्यः भावः
स्थायिभावादिरिति
अलङ्कारशास्त्रं ॥

**अभावनीयः**, त्रि, अचिन्तनीयः । चौरादिकचिन्त-
नार्थभूधातोः कर्म्मण्यनीये
नञ्समासः ॥

**अभाषणं**, क्ली, (भाष् + ल्युट्, नञ्समासः ।) अक-
थनं । मौनं । इत्यमरः ॥

**अभि**, व्य, (न भाति, न + भा + कि ।) उपसर्ग-
विशेषः । अस्यार्थाः । समन्तात्
। उभयार्थः ।
वीप्सा । इत्थम्भावः । धर्षणं ।
इति दुर्गादासः ॥
अभिलाषः । आभिमुख्यं । इति
मेदिनी ॥ चिह्नं ।
इति वोपदेवहेमचन्द्रौ ॥

**अभिकः**, त्रि, (अभिकामयते इति अनुकाभिकेति
साधुः ।) कामी । कामुकः ।
इत्यमरः ॥

**अभिक्रमः**, पुं, (अभि + क्रम + घञ् । नोदात्तेति

इति वेणीसंहारे । सङ्घर्षणं । संमर्द्दः । पीडनं ।
क्लेशदानं । शोकक्षोभः ।
"सम्भवांश्च वियोनीषु दुःखप्रायासु नित्यशः
।
शीतातपाभिघातांश्च विविधानि भयानि च"
॥
इति मनुः । प्रतीकारः । अपसारणं ।)

**अभिघाती**, [न्] पुं, (आभिमुख्येन हन्ति, अभि +
हन् + णिनि ।) शत्रुः । इत्यमरः ॥ (विपक्षः ॥
आक्रमणकारी ।
"एकदा न विगृह्णीयात् बहून् राजाभिघातिनः
।
सदर्पोऽप्युरगः कीटैर्बहुभिर्नश्यति ध्रुवं" ॥
इति हितोपदेशे । पीडाजनकः ।
आघातकारी ।
"सुव्यवस्थितमन्त्रेण परमर्म्माभिघातिना ।
भवितव्यं नरेन्द्रेण न कामवशवर्त्तिना" ।
इति रामायणे । प्रतीकारः । अपसारणं ।)

**अभिघारः**, पुं, (अभि घार्य्यते समन्तात् वह्नौ
सिच्यते, अभि + घृ क्षरणे णिच् + अच् ।)
घृतं ।
इति राजनिर्घण्टः ॥

**अभिचरः**, पुं, (आभिमुख्येन सेवायै चरति, अभि +
चर् + ट ।) दासः । भृत्यः । इति हेमचन्द्रः ॥

**अभिचारः**, पुं, (आभिमुख्येन शत्रुबधार्थं चारः
कार्य्यकरणं अभि + चर + भावे घञ् ।)
हिंसा-
कर्म्म । इत्यमरः ॥
अथर्व्ववेदोक्तमन्त्रयेन्त्रादि-
निष्पादितमारणोच्चाटनादिहिंसात्मककर्म ।
इति
भरतः ॥
मारणादिफलकतान्त्रिकप्रयोगविशेषः ।
स षड्विधः । मारणं १ मोहनं २ स्तम्भनं ३

**अभयडिण्डिमः**, पुं, (अभयाय स्वयोद्धृभयाभावाय-

डिण्डिमः ।) युद्धढक्का । सङ्ग्रामपटहः । इति

त्रिकाण्डशेषः ॥

**अभया**, स्त्री, (नास्ति भयं यस्याः सा ।) हरीतकी ।

इत्यमरः ॥ चम्पादेशजातपञ्चशिरा हरीतकी । सा

नेत्ररोगे प्रशस्ता । इति राजवल्लभः ॥ (दुर्गा ।)

**अभक्ष्यं**, त्रि, (भक्ष + कर्म्मणि ण्यत्, नञ्समासः ।

अभक्षणीयं । अखाद्यं । यथा, --

"अधार्य्यं चर्म्म मे सद्भिः करिष्यसि किमस्थिभिः ।

वृद्ध्यभावः । अभिक्रम्यते कर्म्मणा प्रारभ्यते इति व्युत्पत्त्या कर्म्मारब्धफले प्रारम्भे च ।) अभीतयो-

धादेर्युद्धे शत्रुसम्मुखगमनं । आरोहणं । इति हेमचन्द्रः ॥

**अभिख्या**, स्त्री, (अभि + ख्या + अङ् ।) नाम ।

शोभा । कीर्त्तिः । इति मेदिनी ॥ आख्यानं ।

इति शब्दरत्नावली ॥ (शोभा । सौन्दर्य्यं । रमैति रघुवंशे । णीयता ।

"काप्यभिख्या तयोरासीत् व्रजतोः शुद्धवेशयोः" ।

"कामप्यमिख्यां स्फुरितैरपुष्य-

दासन्नलावण्यफलोऽधरोष्ठः" ।

इति कुमारसम्भवे । यशः ॥)

**अभिग्रस्तः**, त्रि, (अभि + ग्रस् + कर्म्मणि क्तः ।)

विद्वेषणं ४ उच्चाटनं ५ वशीकरणं ६ । इति तन्त्रसारः ॥ उपपातकविशेषः । इति प्रायश्चित्त-

विवेकः ॥ स तु श्येनादियज्ञेनानपराधस्य मारणं ।

इति कुल्लूकभट्टः ॥ यथा, --

:“हिंसौषधीनां स्त्र्याजीवोऽभिचारोमूलकर्मच” ।

इति मनौ ११ अध्यायः ॥ * ॥ अथाभिचारः ।
“ॐ विरुद्धे रूपिणि चण्डिके वैरिणममुकं देहि
देहि स्वाहा” । इति खड्गमभिमन्त्र्य
खड्गमन्त्रांश्च
पठित्वा खड्गं संपूज्य छागादिकममुकोऽसि
इति
वैरिनाम्नाभिमन्त्र्य रक्तसूत्रेण त्रिधा मुखं
बद्ध्वा
वैरिनाम्ना प्राणप्रतिष्ठां कृत्वा ।
“ॐ अयं स वैरी यो द्वेष्टि तमिमं पशुरूपिणं ।
विनाशय महादेवि स्फें स्फें खादय खादय” ॥
इति पठित्वा बलिशिरसि पुष्पं दत्त्वा बलिमन्त्रं
पठित्वा बलिं संपूज्य अद्याश्विने मासि महा-
नवम्यां अमुकगोत्रोऽमुकदेवशर्म्मा अमुकशत्रु-
नाशाय इमं छागं महिषं वा अमुकदैवतं भग-
वत्यै दुर्गायै तुभ्यमहं सम्प्रददे । इत्युत्सृज्य आं
क्रूं फट् इति छित्त्वा मूलं पठित्वा एतद्रुधिरं
दुर्गायै
नमः । इति रक्तं शिरश्च दत्त्वा अष्टाङ्गमांसै-
र्होमं मूलमन्त्रेण कुर्य्यादिति तन्त्रसारः ॥

**अभिचारी**, [न्] त्रि, (अभिचरति शत्रुबधार्थं

कर्म्म करोति, अभि + चर + णिनि ।) अभि-
चारकर्त्ता । तन्त्रादिशास्त्रोक्तानिष्टकारी ।
अभि-
पूर्ब्बचरधातोः कर्त्तरि णिन् ॥

**अभिजनः**, पुं, (अभिजायतेऽत्र, अभि + जन् +

आधारे घञ्, वृद्ध्यभावः ।) ख्यातिः ।
जन्मभूमिः ।
कुलश्रेष्ठः । वंशः । इति मेदिनी ॥ (अन्वयः ।
“अभिजनतपोविद्यावीर्य्यक्रियातिशयैर्निजैः” ।
इति महावीरचरिते ।
“कथं दशरथाज्जातः शुद्धाभिजनकर्म्मणः” ।
इति रामायणे ।)

भिजिति यदि सूतिर्भूपतिः
स्वस्ववंशे” ॥
इति कोष्ठीप्रदीपः ॥

**अभिज्ञः**, त्रि, (अभि साकल्येन जानाति, अभि +

ज्ञा + कर्त्तरि कः ।) प्रवीणः । निपुणः
। विज्ञः ।
इत्यमरः ॥ (बोद्धा । दक्षः । कुशलः ।
“अभिज्ञाश्छेदपातानां क्रियन्ते
नन्दनद्रुमाः” ।
“अनभिज्ञास्तमिस्राणां
दुर्द्दिनेष्वभिसारिकाः” ।
इति कुमारसम्भवे ।)

**अभिज्ञानं**, क्ली, (अभिज्ञायतेऽनेन, अभि + ज्ञा +

करणे ल्युट् ।) चिह्नं । इति हेमचन्द्रः
। (अङ्कः ।
लक्षणं ।
“एतस्मान्मां
कुशलिनमभिज्ञानदानाद्विदित्वा
मा कौलीनाच्चकितनयने
मय्यविश्वासिनी भूः” ।
इति मेघदूते । स्मृतिः । ज्ञानभेदः ।
“एवमुक्तस्तु रामेण हनूमान्
वानरर्षभः ।
पूर्ब्बवृत्तमभिज्ञानं भूयः
संप्रत्यभाषत” ॥
इति रामायणे ।
सोऽयमितिज्ञानसाधनं चिह्नं ।
स्मरणार्थमङ्गुरीयादिकं चिह्नं । “अयं
मैथिल्य-
भिज्ञानं काकुत्स्थस्याङ्गुरीयकः” ।
इति भट्टि-
काव्ये ।)

विषयस्पृहा । इत्यमरः ॥ परद्रव्ये
जिघृक्षा ।
दोषचिन्तापूर्ब्बकं परस्वे लिप्सा
इत्येके । विषय-
प्रार्थना । इति स्वामी । विषयस्य
लाभस्य स्पृहा
विषयस्पृहा विषयेन चौर्य्यादिना
स्पृहा इति
तृतीयासमासः इत्यन्ये ।
विषयिस्पृहेतिपाठे पर-
स्वविषये विषयितया स्पृहा
जिघृक्षामात्रं । इति
कश्चित् इति कौमुदी ।
इत्यमरटीकायां भरतः ॥
अभिलाषः । इति रायमुकुटः ॥

**अभिनन्दनः**, पुं, (अभिनन्दयति, अभि + नदि +

णिच् + ल्युट्) बुद्धविशेषः ।
चतुर्थस्तीर्थकरजिनो-
ऽयं । इति हेमचन्द्रः ॥
सर्व्वतोभावेनानन्दजनके
त्रि ॥

**अभिनयः**, पुं, (अभिनीयते हृद्गतक्रोधादिभावः

प्रकाश्यतेऽनेन अभि + नी + करणे
अच् ।) हृद्गत-
क्रोधादिभावाभिव्यञ्जकः ।
अङ्गुल्यादिना व्यक्ती-
कृतमनःकार्य्यं । तत्पर्य्यायः ।
व्यञ्जकः २ । इत्य-
मरः ॥ दृश्यकाव्यं । रङ्गादिभिर्नटैः
रामयुधिष्ठिरा-
दीनामवस्थानुकरणं । स चतुर्व्विधः
। आङ्गिकः १ ।

**अभिजातः**, त्रि, (अभिजन् + भावे क्तः, अभिमतं

प्रशस्तं जातं जन्म यस्य सः ।) सुन्दरः ।
न्याय्यः ।
इति विश्वः ॥ कुलजः । कुलीनः । बुधः ।
पण्डितः ।
इत्यमरः ॥ (श्रेष्ठवंशोद्भवः ।
“जात्यस्तेनाभिजातेन शूरः शौर्य्यवता कुशः ।
अमन्यतैकमात्मानमनेकं वशिनां बशी” ॥
इति रघुवंशे ।
“न म्लेच्छितव्यं यज्ञादौ स्त्रीषु नापकृतं वदेत् ।
मङ्कीर्णं नाभिजातेषु नाप्रबुद्धेषु संस्कृतं” ॥
इति मनुः । उचितः । उपयुक्तः । योग्यः ।
सुरूपः ।
मनोहरः । मान्यः । पूज्यः । धन्यः । श्लाघ्यः
।
भगवान् । समृद्धः ।)

**अभिजित्**, क्ली, (अभि + जि + क्विप् ।) दिवसस्या-

ष्टममुहूर्त्तं । कुतपकालैति प्रसिद्धं ॥ यथा, --
“अपराह्ने तु संप्राप्ते अभिजिद्रोहिणोदये ।
यदत्र दीयते जन्तोस्तदक्षयमुदाहृतं” ॥
इति मत्स्यपुराणं ॥ नक्षत्रविशेषः । तत्तु तार-
कात्रयात्मकशृङ्गाटकाकृति । उत्तराषाढायाः
शेषपञ्चदशदण्डाः श्रवणायाः प्रथमदण्डचतुष्टयं
एतदूनविंशतिदण्डात्मकमभिजिद्भवति ॥ इति
ज्योतिषं ॥ तत्र जातफलं ।
“अतिसुललितकान्तिः सम्मतः सज्जनानां
ननु भवति विनीतश्चारुकीर्त्तिः सुवेशः ।
द्विजवरसुरभक्तो व्यक्तवाङ्मानवः स्याद-

**अभितः**, [स्]व्य, (अभि + तसिल् ।) शीघ्रं ।
साकल्यं ।

आभिमुख्यं । उभयतः ।
“अङ्गान्ययाक्षीदभितः
प्रधानं” । इति भट्टिकाव्ये ।) समीपं ।
इति
मेदिनी ॥

**अभिधर्षणं**, क्ली, (अभि + धृष् + भावे ल्युट्
।)

रक्षःपिशाचभूतादेरभिषङ्गः । इति
महाभारतं ॥
सर्व्वतोभावेन धर्षणञ्च ॥

**अभिधा**, स्त्री, (अभि + धा + करणे भावे च
अङ्,

स्त्रियां टाप् ।) नाम । इति हेमचन्द्रः
॥ न्याय-
मते शब्दशक्तिः । मीमांसामते
विधिसमवेत-
विधिव्यापारीभूतपदार्थः । तस्या
लक्षणं । “स
मुख्योऽर्थस्तत्र मुख्यो
व्यापारोऽस्याभिधोच्यते” ।
इति काव्यप्रकाशः ॥ * ॥ तत्र
“सङ्केतितार्थस्य
बोधनादग्रिमाभिधा” । इति
साहित्यदर्पणं ॥ (आ-
ख्या । आह्वा । अभिधानं । नामधेयं
।)

**अभिधानं**, क्ली, (अभिधीयते अनेन, अभि
+ धा

+ करणे ल्युट् ।) नाम । इत्यमरः ॥
कथनं ।
यथा । “तवाभिधानाद्व्यथते
नताननः” । इति
भारविः ॥ शब्दकोषः । यथा ।
“कृत्तद्धितसमा-

वाचिकः २ । आहार्य्यः ३ ।
सात्त्विकः ४ । इति
साहित्यदर्पणं ॥ (“तामेतां
परिभावयन्त्वभिनयै-
र्विन्यस्तरूपा बुधाः शब्दब्रह्मविदः
कवेः परिणत-
प्रज्ञस्य वाणीमिमाम्” । इति
उत्तरचरिते ।)

**अभिनवः**, त्रि, (अभि + नु + भावे अप् ।)
नूतनः ।

इत्यमरः ॥
(“अभिनवमधुलोलुपस्त्वं
तथा परिचुम्ब्य चूतमञ्जरीम्” ।
इति शाकुन्तले ।)

**अभिनवोद्भित्** [द्] पुं, (अभिनवं यथातथा
उद्भि-

नत्ति उद्भिद्य जायते, अभिनव + उत्
+ भिद् +
कर्त्तरि क्विप् ।) अङ्कुरः । इत्यमरः
॥

**अभिनिर्मुक्तः**, पुं, (अभि साकल्येन
सायन्तनकार्य्येण

निर्मुक्तः ।) सूर्य्यास्तकालशायी ।
यस्मिन् सुप्ते
सूर्य्योऽस्तं याति सः । इत्यमरः ॥
(“सूर्य्येण ह्यभिनिर्मुक्तः
शयानोऽभ्युदितश्च यः ।
प्रायश्चित्तमकुर्व्वाणो युक्तः
स्यान्महतैनसा” ॥
इति मनुः ।)

**अभिनिर्याणं**, क्ली, (शत्रुमभिलक्षीकृत्य
निर्य्याणं

निर्गमः ।) विजिगीषोः प्रयाणं । यात्रा
। इत्य-
मरः ॥ (जिगीषया गमनं ।

सानामभिधानं नियामकं” । इति वोपदेवः ॥

(आख्या । नामधेयं ।

“आख्याह्व अभिधानञ्च नामधेयञ्च नाम च” ।

इत्यमरः । “शिखरिणि क्वनु नाम कियच्चिरं

किमभिधानमसावकरोत्तपः” । इति साहित्य-

दर्पणे । उक्तिः । उल्लेखः । निर्द्देशः ।)

**अभिधेयं**, क्ली, अभिधानं । नाम । (“इति प्रयो-

जनाभिधेयसम्बन्धाः” इति वोपदेवः ।) अभिधीयते

अनेनेति करणे यः ॥

**अभिधेयं**, त्रि, (अभि + धा + कर्म्मणि यत् ।) अभि-

धागम्यं । वाच्यं । प्रतिपाद्य । यथा । “इति प्रयो-

जनाभिधेयसम्बन्धाः” । इति वोपदेवः ॥

**अभिध्या**, स्त्री, (अभि + ध्यैङ + अङ् + टाप् ।) परस्वे

“यत्सेनयाभिनिर्य्याणं स्मृतं तदभिषेणनम्” ।

इति हलायुधः ।)

**अभिनिवेशः**, पुं, (अभि + नि + विश् + भावे घञ् ।)

मनःसंयोगविशेषः । मनोनिवेशः । आवेशः ।

शास्त्रादौ प्रवेशः । तत्पर्य्यायः । निबन्धः २ । इति

हेमचन्द्रः ॥ योगशास्त्रमते मरणजन्यभयजनका-

विद्याविशेषः ॥ (आग्रहः । अवश्यमिदं कर्त्तव्य-

मित्यादिरूपोऽध्यवसायः । दृढसङ्कल्पः ।

“इत्युक्तवन्तं जनकात्मजायां नितान्तरूक्षाभिनिवेशमीशं” ।

इति रघुवंशे । “अथानुरूपाभिनिवेशतोषिणा

कृताभ्यनुज्ञा गुरुणा गरीयसा” ।

:इति कुमारसम्भवे । आसक्तिः । अनुरागः ।

अभिलाषः । "बलीयान् खलु मेऽभिनिवेशः" ।
इति शाकुन्तले ।)

**अभिनिष्ठानः**, पुंः (अभि + नि + स्तन् + घञ्, अभि-
निसः स्तनः शब्दसंज्ञायां इति षत्वं ।) विसर्गः ।
अक्षरं । इति मेदिनी ॥

**अभिनीतः**, त्रि, (अभि + नी + क्तः ।) युक्तः ।
न्याय्यः । अतिसंस्कृतः । प्रशस्तो भूषितो वा ।
अमर्षी । क्रोधनः अक्षमावान् वा ।
इत्यमरः ॥
("अस्मिन्नेव प्रकरणे धनञ्जयमुदारधीः ।
अभिनीततरं वाक्यमित्युवाच युधिष्ठिरः" ।
इति महाभारते । विज्ञः । धीरः ।
"स भवान् वित्तसम्पन्नः स्थितः पथि निरत्यये ।
मित्रार्थमभिनीतत्वं यथावत् कर्त्तुमर्हसि" ।
इति रामायणे ।)

**अभिनेता**, [तृ] त्रि, (अभि + नी + कर्त्तरि तृच् ।)
अभिनयकर्त्ता । केचो संओयाला इत्यादि भाषा ।
इति नाटकप्रसिद्धं ॥

**अभिपन्नः**, त्रि, (अभि + पद् + कर्त्तरि क्तः ।) अप-
राद्धः । अपराधवान् । व्यापद्गतः । प्राप्तविपत्तिः ।
("दैत्याभिभूतस्य युवामवोढं मग्नस्य दोर्भिर्भुवनस्य भारम्" ।
इति भट्टिः ।)

**अभिभूतिः**, स्त्री, (अभि + भू + भावे क्तिन् ।) अ-
नादरः । अवज्ञा । इति शब्दरत्नावली । (परा-
भवः । पराजयः । मानभङ्गः । निकारः ।
"अभिभूतिभयादसूनतः सुखमुज्झन्ति न धाम मानिनः" ।
इति भारविः ।)

**अभिमतं**, त्रि, (अभि + मन् + कर्मणि क्तः ।) इष्टं ।
सम्मतं । यथा, --
"अभिमतफलशंसी चारु पुस्फोर बाहु-
स्तरुषु चुकुवुरुच्चैः पक्षिणश्चानुकूलाः" ।
इति भट्टिः ॥ (हृद्यः । प्रियः । हृदयङ्गमः ।
"स माधवेनाभिमतेन सख्या रत्या च साशङ्कमनुप्रयातः" ।
इति कुमारसम्भवे ।
"अनिशमपि मकरकेतुर्मनसो-
रुजमावहन्नभिमतो मे" ॥
इति शाकुन्तले ।)

**अभिमन्त्रणं**, क्ली, (अभि + मन्त्र + करणे ल्युट् ।)
आह्वानं । आकारणं । इति हेमचन्द्रः ॥ डाकन्
इति भाषा । (मन्त्रपाठेन संस्कारकरणं । यथा, --
"दत्त्वान्नं पृथिवीपात्रमिति पात्राभिमन्त्रणम्" ।
इति याज्ञवल्क्यः ।)

**अभिमन्थः**, पुं, (अभि मथ्यते चक्षुः पीड्यतेऽनेन,
अभि + मन्थ + करणे घञ् ।) चक्षूरोगः । इति

**अभिमातिः**, पुं, (अभि + मा + कर्त्तरि क्तिच् ।)
शत्रुः । इति हेमचन्द्रः ॥

**अभिमानः**, पुं, (अभि + मन् + भावे घञ् ।) अर्था-
दिना दर्पः । तत्पर्य्यायः । अहङ्कारः २ गर्ब्बः ३
ज्ञानं ४ बोधः ५ प्रणयः ६ प्रेमप्रार्थना ७
हिंसा ८ हननं ९ । इत्यमरभरतौ ॥ स्मयः १०
अवलेपः ११ दर्पः १२ अवश्यायः १३ टङ्कः १४ ।
इति जटाधरः ॥ अपि च ।
"गर्ब्बो मदोऽभिमानः स्यादहङ्कारस्त्वहङ्कृतिः ।
स्यादुद्धतमनस्कत्वे मानश्चित्तसमुन्नतिः ।
अहङ्कारस्य पर्य्याय इति केचित् प्रचक्षते" ॥
इति शब्दरत्नावली ॥

**अभिमानितं**, क्ली, (अभिमानः जातोऽस्य, अभि-
मानः + इतच् । अभिमान्यतेऽत्र, अभि + मन् +
णिच् + आधारे क्तः ।) सुरतं । मैथुनं । इति त्रि-
काण्डशेषः ॥ अभिमानयुक्ते त्रि ॥ (गर्व्वः । मदः ।
दर्पः ।)

**अभिमानी**, [न्] त्रि, (अभिमन्यते, अभि + मन्
+ णिनि ।) अभिमानयुक्तः । अभिमानग्रस्तः ।
यथा, --

अभिग्रस्तः । शत्रुणाक्रान्तः । इत्यमरः ॥ (स्वी-
कृतः । अङ्गीकृतः । अभिभूतः ।
पीडितः ।
"दाहप्रपाकौ शिशिराभिनन्दाः ।
पित्ताभिपन्नेनयने भवन्ति" ।
"दृष्टिर्दोषाभिपन्ना" । इति सुश्रुते ।)

**अभिप्रायः**, पुं, (अभि + प्र + इन् + भावे अच् ।)
इच्छाविशेषः । तत्पर्य्यायः । आशयः २ छन्दः ३ ।
इत्यमरः ॥ आकूतं ४ भावः ५ । इति
जटाधरः ।
(अभिसन्धिः । हृद्गतो भावः ।
"दुर्य्योधन ममाप्येतत् हृदि
संपरिवर्त्तते ।
अभिप्रायस्य पापत्वात् नैवं तु
विवृणोम्यहं" । इति मनुः ।)
इति महाभारते ।
"तेषां स्वं स्वमभिप्रायमुपलभ्य पृथक्
पृथक्" ।

**अभिप्रेतं**, त्रि, (अभि + प्र + इन् + क्तः ।) अभि-
प्रायविषयीभूतं । अभीष्टं । यथा, --
"कामाय तु हितं
काम्यमभिप्रेतार्थसिद्धये ।
पार्ब्बणेन विधानेन तदप्यक्तं
खगाधिप" ॥
इति भविष्यपुराणं ॥ (वाञ्छितः ।
सम्मतः ।)

**अभिभवः**, पुं, (अभि + भू + भावे अप् ।) गर्व्व-
नाशः । परिभवः । पराभवः । इति
शब्दरत्ना-
वली हेमचन्द्रश्च ॥ (पराजयः ।
तिरस्कारः ।
त्रिकाण्डशेषः ॥ अधिमन्थ इति वैद्यके पाठः
।
तस्य निदानसम्प्राप्तिरूपाणि ।
"वृद्धैरेतैरभिष्यन्दैर्नराणामक्रियावतां ।
तावन्तस्त्वधिमन्थाः स्युर्नयने तीव्रवेदनाः ॥
उत्पाट्यत इवात्यर्थं नेत्रं निर्म्मथ्यते तथा ।
शिरसोऽर्द्धञ्च तं विद्यादधिमन्थं स्वलक्षणैः"
॥
स तु चतुर्विधः । यथा । "हन्याद्दृष्टिं
श्लैष्मिकः
सप्तरात्रादधिमन्थो रक्तजः पञ्चरात्रात् ।
षड्रात्रा-
द्वै वातिकः संनिहन्यान्मिथ्याचारात् पैत्तिकः
सद्य एव" ॥ इति माधवकरः ॥

**अभिमन्युः**, पुं, (अभिमन्यते युद्धार्थं, अभि + मन् +
युच्, निपातनात् अनादेशाभावः ।)
अर्ज्जुनपुत्त्रः ।
स तु सुभद्रागर्भजातः । इति महाभारतं ॥

**अभिमरः**, पुं, (अभिम्रियतेऽस्मात्, अभि + मृ +
अप्) युद्धं । बधः । स्वसैन्यभय । इति
विश्व-
मेदिन्यौ ॥ बन्धनं । इति जटाधरः ॥
(संहारः ।
समरः । अवरोधः । स्वपक्षाद्भयं ।
सङ्केतस्थल-
निर्गमः । प्राणनिरपेक्षो यो द्रव्य हेतोः व्याडं
हस्तिनं वा योधयति सः अभिमरः इत्येके ।)

**अभिमर्द्दः**, पुं, (अभि + मृद् + भावे घञ् ।) अव-
मर्द्दः । पीडनं । सम्परायः । युद्धं । इति
मेदिनी ॥
(शत्रुकृतपीडनं । विपक्षराजस्य
उच्छेदसाधनं ।
"कृतोऽभिमर्द्दः कुरुभिः प्रसह्य" । इति महा-
भारते ।)
"कर्त्ता द्यूतच्छलानां
जतुमयशरणीद्दीपितः सो-
ऽभिमानी" । इति वेणीसंहारः ॥

**अभिमायः**, त्रि, (मायामविद्यामधिगतः, प्रादि-
समासः ।) इतिकर्त्तव्यतामूढः ।
अभिभूतः । इति
जटाधरः ॥

**अभिमुखं**, त्रि, (अभिगतो मुख । अत्यादयः क्रान्ता-
द्यर्थे द्वितीयया इति समासः ।)
सम्मुखं । इति
जटाधरः ॥

**अभियातिः**, पुं, (युद्धार्थमभिमुखं यातिः गमनं,
अभि + या क्तिच् ।) शत्रुः । इति
हेमचन्द्रः ॥

**अभियाती**, [न्] पुं, (युद्धार्थमभियानं गमनं, अभि
+ या + भावे क्तः; इनि ।) शत्रुः ।
इत्यमर-
टीकायां रायमुकुटः ॥

**अभियुक्तः**, त्रि, (अभि + युज् + क्तः ।) तत्परः । पर-
कर्तृकरुद्धः । इति मेदिनी ॥
("उद्दामेन द्विरदपतिना
सन्निपत्याभियुक्तः" ।
इति उत्तरचरिते ।
"अभियुक्तो यदा पश्येत् न
किञ्चिद्धितमात्मनः ।
युध्यमानस्तदा प्राज्ञो म्रियते रिपुणा
सह" ।
इति हितोपदेशे ।) स्मृतिशास्त्रमते
अभियोग-
विषयीभूतः । आसामी इति ख्यातः ।
तत्पर्य्यायः ।

“रघोरभिभवाशङ्कि चुक्षुभे द्बिषतां मनः” ।

इति रघुवंशे ।

“बलवानपि निस्तेजाः कस्य नाभिभवास्पदं” ।

इति हितोपदेशे ।)

**अभिभूतः**, त्रि, (अभि + भू + क्तः ।) ज्ञानरहितः ।

तत्पर्य्यायः । इतिकर्त्तव्यतामूढः २ विहस्तः ३ व्याकुलः ४ अभिमायः ५ विक्लवः ६ विह्वलः ७ ।

इति जटाधरः ॥ पराभूतः । भग्नदर्पः । तत्प-
र्य्यायः । आत्तगर्व्वः २ । इति जटाधरः ॥ आत्त-
गन्धः ३ । इत्यमरः ॥ अभिहतः ४ । इति
तट्टीका ॥

प्रत्यर्थी २ प्रतिवादी ३ । यथा, --

“अभियुक्तोऽभियोगस्य यदि कुर्य्यादपह्नवं ।

मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः” ॥

इति व्यवहारतत्त्वे नारदः ॥

**अभियोक्ता**, [ऋ] त्रि, (अभि + युज् + कर्त्तरि तृच् ।)

अभियोगकर्त्ता । विवादकर्त्ता । फरियादी इति ख्यातः । तत्पर्य्यायः । वादी २ अर्थी ३ । यथा, --

“अभियोक्ता प्रगल्भत्वात् वक्तुं नोत्सहते यदि ।

तदा कालः प्रदातव्यः कार्य्यशक्त्यनुरूपतः” ॥

इति व्यवहारतत्त्वे नारदः ॥

**अभियोगः**, पुं, (अभि + युज् + भावे घञ् ।) अप-

राधादियोजनं । अन्येन विरोधे
स्वार्थसम्बन्धितया
राजसमीपे कथनं । आद्वास नालिश इति
ख्यातः । यथा, --
"अभियोगमनिस्तीर्य्य नैनं प्रत्यभियोजयेत्" ।
इति याज्ञवल्क्यः ॥ युद्धार्थाह्वानं । इति राय-
मुकुटः ॥ अपकारकरणेच्छापूर्ब्बकाक्रमणं ।
तत्प-
र्य्यायः । अभिग्रहः २ । इत्यमरः ॥ उद्योगः ।
इति हेमचन्द्रः ॥
("स प्रापदप्राप्तपराभियोगं
नरेन्द्रगुप्तं नगरं महूर्त्तात्" ।
इति कुमारसम्भवे ।)

**अभिरामः**, त्रि, (अभिरमते मनोऽत्र, अभि + रम् +

आधारे घञ् ।) रुचिरः । सुन्दरः । इति हेम-
चन्द्रः ॥ (मनोहरः । मनोज्ञः । रमणीयः । आन-
न्दकरः ।
"मनोऽभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः" ।
इति रघुवंशे ।)

**अभिरूप**, पुं, (अभिलक्ष्यं रूपमस्य ।) पण्डितः । इति

हेमचन्द्रः ॥ कामदेवः । चन्द्रः । शिवः । विष्णुः ।
इति शब्दरत्नावली ॥

**अभिरूपः**, त्रि, (अभिरूपयति शास्त्रार्थं निरूप-

यति, अभिरूप + णिच् + अच् ।) मनोहरः ।
पण्डितः । इति मेदिनी ॥ ("इयं हि रसभाव-
विशेषदीक्षागुरोः विक्रमादित्यस्याभिरूपभूयिष्ठा
परिषद्" । इति शाकुन्तले ।)

**अभिलापः**, पुं, (अभिलप्यते मानसं कर्म्म कथ्यते-

ऽनेन, अभि + लप् + करणे घञ् ।) शब्दः । इति
त्रिकाण्डशेषः ॥ सङ्कल्पाङ्गवाक्यं । यथा ।
"काम्या-
भिलापसहितः कुशतिलजलत्यागरूपः सङ्कल्पः
शास्त्रार्थः" । इति प्रक्रमाधिकरणं ॥ (वचनं ।
कथनं । वाक्यं ।
"तथाभिलापसंसर्गयोग्यत्वविरहान्न च ।
सविकल्पकसंवेद्यः" । इति साहित्यदर्पणे ।)

**अभिलावः**, पुं, (अभि + लू + भावे घञ् ।) छेदनं ।

इत्यमरः ॥

गर्द्धनः ४ तृष्णक् ५ । इत्यमरः ॥ लोभी ६
विलासविभवानसः ७ । इति जटाधरः ॥
("जयमत्रभवान् नूनमरातिष्वभिलाषुकः" ।
इति भारविः ।)

**अभिलासः**, पुं, (अभि + लस् + भावे घञ् ।) अभि-

लाषः । इच्छा । इत्यमरटीकासारसुन्दरी ॥

**अभिवादः**, पुं, (अभि + वद + भावे घञ् ।) अप्रिय-

वाक्यं । तत्पर्य्यायः । पारुष्यं २ । इत्यमरः ॥
(वन्दना । प्रणतिः । प्रणामः ।
"अभिवादात्परं विप्रो ज्यायांसमभिवादयन् ।
असौनामाहमस्मीति स्वं नाम परिकीर्त्तयेत्" ॥
इति मनुः ।)

**अभिवादकः**, त्रि, (अभि + वद् + णिच् + ण्वुल् ।)

वन्दनशीलः । तत्पर्य्यायः । वन्दारुः २ ।
इत्यमरः ॥
अप्रियवक्ता । पारुष्यार्थाभिपूर्ब्बवदेः कर्त्तरि
णकः ॥
(प्रणामकारी । अभिवादनकारी ।
"आगतोऽस्मीत्युवाचैनं भवन्तमभिवादकः" ।
इति नलोपाख्यानं ।)

**अभिवादनं**, क्ली, (अभिमुखीकरणाय वादनं नामो-

च्चारणपूर्ब्बकनमस्कारः, अभि + वद् + णिच्
भावे
ल्युट् ।) नामोच्चारणपूर्ब्बकनमस्कारः । अभि-
वादये भो अमुकशर्म्माहमित्येवंरूपः । तत्तु पाद-
स्पर्शपूर्ब्बकनमस्कारः । तत्पर्य्यायः । पादग्रहणं
२ ।
इत्यमरः ॥
("अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि संप्रवर्द्धन्ते आयुर्विद्यायशोबलं" ॥
इति मनुः ।)

**अभिव्याप्तिः**, स्त्री, (अभि + वि + आप् + भावे

क्तिन् ।) सर्व्वत्रावस्थानं । सर्व्वतोवृत्तिः ।
तत्पर्य्यायः ।
संमूर्च्छनं २ । इत्यमरः ॥

**अभिशपनं**, क्ली, (अभि + शप् + भावे ल्युट् ।)

मिथ्याभिशंसनं । अभिशापः ।
अभिपूर्ब्बशपधातो-
र्भविऽनट् ॥

**अभिशस्तिः**, स्त्री, (अभि + शन्स + भावे क्तिन् ।)

लोकापवादः । इति हेमचन्द्रः ॥ ("स्यमन्तकं
च सत्राजिताय दत्त्वा मिथ्याभिशस्तिविशुद्धम्
अवाप" । इति विष्णुपुराणे ।) याच्ञा । इत्य-
मरः ॥

**अभिशापः**, पुं, (अभि + शप् + घञ् वृद्धिः ।) स्वर्ण-

स्तेयंत्वया कृतमित्यादिमिथ्यादूषणं वाक्यं ।
मिथ्या-
पवादः । तत्पर्य्यायः । मिथ्याभिशंसनं २ । इत्य-
मरः ॥ क्रोधात् द्विजादिभिर्दुःखाभिधारणं । इति
पुराणं ॥ ब्राह्मणगुरुवृद्धसिद्धानां अनिष्टाभिशं-
सनं । इति विजयरक्षितः ॥
("यस्याभिशापात् दुःखार्त्तो दुःखं विन्दति नैषधः"
।
इति नलोपाख्याने ।)

**अभिषङ्गः**, पुं, (अभि + सन्ज + घञ् उपसर्गादिति

षः ।) पराजयः । आक्रोशः । शपथः । इति मेदिनी
॥
मिथ्यापवादः । इति मथुरानाथः ॥ आलिङ्गनं ।
इत्यमरटीकायां रायमुकुटः ॥ सर्व्वतोभावेन
सङ्गः । इति हलायुधः ॥ भूताद्यावेशः । यथा, --
"अभिघाताभिचाराभ्यामभिषङ्गाभिशापतः" ।
इति माधवकरः ॥ (पराभवः । परिभूतिः ।
"जाताभिषङ्गो नृपतिर्निषङ्गा-
दुद्धर्त्तुमैच्छत् प्रसभोद्धृतारिः" ।
इति रघुवंशे ।
"तीव्राभिषङ्गप्रभवेन वृत्तिं
मोहेन संस्तम्भयतेन्द्रियाणां" ।
इति कुमारसम्भवे । शोकः । दुःखं । "अभि-
षङ्गजडं विजज्ञिवानिति शिष्येण किलान्वबोध-
यत्" । इति रघुः ।)

**अभिषवः**, पुं, (अभि + सु + अप्, गुणः षत्वञ्च ।

यज्ञः । स्नानं । मद्यसन्धानं । तत्तु चिरस्थापित
मदोत्पादकद्रव्यं । इति मेदिनी ॥ यज्ञस्नानं
सोमलतापानञ्च । तत्पर्य्यायः । सूत्या २ सवनं ३
।
इत्यमरः ॥
("भवेदभिषवः स्नाने मद्ये सन्धानयज्ञयोः" ।
इति मेदिनी)

**अभिषवं**, क्ली, काञ्जिकं । इति हलायुधः ॥ काँजि

**अभिलाषः**, पुं, (अभि + लष + भावे घञ् ।) लोभः ।

तत्पर्य्यायः । इच्छा २ आकाङ्क्षा ३ स्पृहा ४ ईहा ५ तृट् ६ वाञ्छा ७ लिप्सा ८ कामः ९ तर्षः १० मनोरथः ११ । इत्यमरः ॥ काङ्क्षा १२ कान्तिः १३
रुक् १४ रुचिः १५ दोहदः १६ अभिलासः १७ ।
इति शब्दरत्नावली ॥ श्रद्धा १८ तृष्णा १९ मतिः २०
छन्दः २१ । इति जटाधरः ॥ ("भव हृदय साभि-
लाषं सम्प्रति सन्देहनिर्णयो जातः" । इति शाकु-न्तले । "अतोऽभिलाषे प्रथमं तथाविधे" । इति रघुवंशे ।) सङ्गमेच्छा २२ । इति रसमञ्जरी ॥

**अभिलाषी**, [न्] त्रि, (अभि + लष् + णिनि ।)

अभिलाषयुक्तः । यथा, --
"जलाभिलाषी जलमाददानां
छायेव तां भूपतिरन्वगच्छत्" ।
इति रघुवंशे ॥

**अभिलाषुकः**, त्रि, (अभि + लष् + शीलार्थे उकञ् ।)

अभिलाषयुक्तः । तत्पर्य्यायः । लुब्धः २ गृध्नुः ३

**अभिशप्तः**, त्रि, (अभि + शप् + क्तः ।) प्राप्ताभि-

शापः । शापग्रस्तः । यथा, --
"न नामग्रहणं कुर्य्यात् कृपणस्य गुरोस्तथा ।
भार्य्याया अभिशप्तस्य जनकस्य विशेषतः" ॥
इति मेघदूतटीका ॥
("न क्रुध्यत्यपिशप्तोऽपि क्रोधनीयानि वर्ज्जयन्" ।
इति रामायणे । "अथ तेन निगृह्य विक्रिया-मभिशप्तः फलमेतदन्वभूत्" । इति कुमारसम्भवे ।)

**अभिशस्तः**, त्रि, (अभि + शन्स + क्तः ।) परस्त्रियां

परपुरुषे वा मैथुनं प्रति मिथ्यादूषितः । मैथुनं प्रति आहूतः । इति केचित् । उपपन्नपातकः । इति केचित् । मिथ्यादूषितमात्रं । इति केचित् । इति भरतः ॥ तत्पर्य्यायः । आक्षारितः २ क्षारितः
३ । इत्यमरः ॥ (प्राप्तापवादः । अभिपक्रुष्टः ।
"वत्सस्य ह्यभिशस्तस्य पुरा भ्रात्रा यवीयसा ।
नाग्निर्ददाह रोमाणि सत्येन जगतः स्पृशः" ॥
इति मनुः । विनिन्दितः । विगर्हितः । पातक-कर्त्ता ।
"पापरोग्यभिशस्तश्च दाम्भिको रसविक्रयीः" ।
इति मनुः ।)

इति भाषा ।

**अभिषुतं**, क्ली, (अभि + सु + क्तः षत्वं ।) काञ्जिकं ।

इत्यमरः ॥

**अभिषेकः**, पुं, (अभि + सिच् + भावे घञ् ।) स्नानं ।

इति त्रिकाण्डशेषः ॥
("एकदा सोऽभिषेकार्थमाजगाम महानदों" ।
इति विष्णुपुराणे ।
"निर्वृत्तपर्य्यन्यजलाभिषेकां ।
वासोवसानामभिषेकयोग्यं" ।
इति कुमारसम्भवे ।)
अथ ँदोलयात्राभिषेकद्रव्याणि लिख्यन्ते । शी-तलजलं १ गोमयं २ गोमूत्रं ३ दुग्धं ४ दधि ५ घृतं ६ कुशोदकं ७ शङ्खोदकं ८ चन्दनोदकं ९ कुङ्कुमोदकं १० फलोदकं ११ पुष्पोदकं १२ चन्दन-
पिष्टामलक्युद्वर्त्तनं १३ सुगन्धिजलं १४ तेनाष्ट-वारस्नानं तत्र द्वितीयसप्तमाष्टमवारेषु दुग्धघृत-

:मधुयोजनं । गन्धोदकं १५ । तेन पञ्चधा स्नानं ।

तीर्थजलं १६ गङ्गोदकं १७ वल्मीकतोयं १८
सर्व्वौषधिजलं १९ सहस्रधाराजलं २० घटो-
दकं २१ केषाञ्चिन्मते अष्टोत्तरशतघटोदकं ।
इति उत्कलखण्डं ॥ * ॥ अथ
वृहन्नन्दिकेश्वरपुरा-
णोक्तानि ँदुर्गापूजाभिषेकद्रव्याणि लिख्यन्ते ।
पिष्टामलकीयुक्तहरिद्रा १ । तया दर्पणप्रतिविम्बे
देवीमुद्वर्त्त्य यथाक्रमं वक्ष्यमाणप्रत्येकद्रव्येण मन्त्रं
पठित्वा स्नापयेत् । शुद्धजलं २ शङ्खजलं ३ गङ्गा-
जलं ४ गन्धोदकं ५ पञ्चगव्यं प्रत्येकं यथा --
गोमूत्रं ६ गोमयं ७ दुग्धं ८ दधि ९ घृतं १०
कुशोदकं ११ पञ्चामृतं १२ शिशिरोदकं १३
मधु १४ पुष्पोदकं १५ इक्षुरससागरोदके १६
सर्व्वौषधिमहौषधिजलं १७ पञ्चकषायोदकं १८
अष्टमृत्तिकाः १९ फलोदकं २० उष्णोदकं २१
सहस्रधाराजलं २२ अष्टकलसोदकं यथा । व्योम-
गङ्गाम्बुपूर्णाद्यकलसः २३ मेघतोयपूर्णद्वितीयक-
लसः २४ सारस्वततोयपूर्णतृतीयकलसः २५
सा-
गरोदकपूर्णचतुर्थकलसः २६ पद्मरेणुमिश्रितजल-
पूर्णपञ्चमकलसः २७ निर्झरोदकपूर्णषष्ठकलसः
२८
सर्व्वतीर्थाम्बुपूर्णसप्तमकलसः २९ शुद्धजलपूर्णा-
ष्टमकलसः ३० ॥ * ॥ नानापद्धतिषु द्रव्याणां
व्युत्-
क्रमपुनरुक्त्याधिक्यानि सन्ति यत्र यान्युक्तातिरि-
क्तद्रव्याणि तानि लिख्यन्ते । यथा । नदी १ नारि-
केल २ रत्न ३ वृष्टि ४ कर्पूर ५ चन्दन ६ अगुरु ७
स्वर्ण ८ रजत ९ गोरोचना १० कुङ्कुम ११
श्रीफल
१२ धान्य १३ दूर्व्वा १४ शर्करा १५ सरोवर १६
अस्त्र १७ गङ्गासागर १८ पञ्चशस्य १९ तिल २०
ह्रद २१ पुष्करिणी २२ कूप २३ फलमूल २४
अर्घ्य २५ घटचतुष्टय २६ -- जलानि । शीतलज-
लञ्च २७ ॥ तिलतैलं १ गन्धतैले २ ॥ नदीकूल १
वराहदन्त २ वेश्याद्वार ३ राजद्वार ४ वृषशृङ्ग ५
वल्मीक ६ चतुष्पथ ७ पारावार ८ देवद्वार ९
गङ्गा १० -- मृत्तिकाः ॥ गजदन्त ११ नद १२
उभय-
कूल १३ नागर १४ गोष्ठ १५ त्रिपथ १६ --
मृत्तिका इति केचित ॥ पञ्चामृतं प्रत्येकं सर्व्वौ-
षधिमहौषधी पृथक् ॥ पञ्चकषायाः प्रत्येकं ॥

वृं । मालसी १ मङ्गलोत्सवः १
दें । वाराडी १ इन्द्रविजयः १
कां । मालवः १ विजयः १
वृं । देवकीरी २ भुवनविजयः २
दें । मालवगौडः २ मङ्गलविजयः २
कां । ललिता २ दुन्दुभिः २
वृं । वाराडी ३ विजयः ३
दें । मालवः ३ देवोत्सवः ३
कां । विभाषा ३ दुन्दुभिः ३
वृं । देशालः ४ राजाभिषेकः ४
दें । देशालः ४ घनतालः ४
कां । भैरवी ४ वंशी ४
वृं । धानुषी ५ मधुरी ५
दें । मालवी ५ मधुकरः ५
कां । कोडा ५ इन्द्राभिषेकः ५
वृं । भैरवी ६ करतालः ६
दें । भैरवी ६ ढक्का ६
कां । वाराडी ६ शङ्खः ६
वृं । गुज्जरी ७ वंशी ७
दें । वसन्तः ७ शङ्खः ७
कां । वसन्तः ७ पञ्चशब्दः ७
वृं । वसन्तः ८ पञ्चशब्दः ८
दें । कोडा ८ मृदङ्गः ८
कां । धानुषी ८ विजयः ८
अथ देवप्रतिष्ठाभिषेकद्रव्याणि । नदी १ नद २
सागर ३ निर्झर ४ -मेघजलानि ५ पञ्चामृतं ६
कुशोदकसहितपञ्चगव्यं ७ अश्वखुर ८ गजदन्त ९
पर्ब्बत १० कुश ११ वल्मीकमृत्तिकाः १२
तिलतैलं
१३ घृतं १४ पञ्चकषायोदकं १५ आम्र १६ चम्पक
१७ शमी १८ पद्म १९ -- करवीरपुष्पाणि २०
तुलसी २१ कुन्द २२ -- श्रीफलपत्राणि २३ तिल-
कल्कशालितण्डुलविल्वपत्रामलकचूर्णान्यतममार्ज-
नद्रव्यं २४ उष्णोदकं २५ तीर्थोदकं २६ अष्टो-
त्तरशतकुम्भाः तदर्द्धंवा विंशतिर्व्वा एको वा २७ ।
बैदिकाष्टोत्तरशतपलेन लौकिकषष्ट्यधिकशत-
त्रयतोलकमितेन जलेन पृथक् पृथक् घटेन द्रव्य-
मालोड्य कार्य्यं ॥ अशक्तौ तु । वल्मीकमृत्तिका ।
गोमयं । शुष्कगोमयं । भस्मयुक्तपरिमितजलं ।
गन्धयुक्तजलञ्च । इति देवप्रतिष्ठातत्त्वं ॥ * ॥ अथ
राजाभिषेकद्रव्याणि । मृगचर्म्मास्तीर्णालङ्कृत-
स्वर्णभद्रासनं १ गङ्गायमुनासङ्गमजलं २ यावत्-

रणभूषिताष्टकन्याः २३ सर्व्ववादित्राणि २४
अ-
लङ्कृतवन्दी २५ । इति वाल्मीकरामायणे
अयो-
ध्याकाण्डं ॥ * ॥ अथ राजाभिषेकविधिः ।
पुरो-
हितो राज्ञः प्रजापालनाधिकारसिद्ध्यर्थं
परदिने-
ऽभिषेके कर्त्तव्ये पूर्ब्बदिने गणेशमातृकापूजन-
पुण्याहवाचननान्दीप्रभृति पूर्ब्बाङ्गं कुर्य्यात् ।
राजा
राज्ञी च नियमं कृत्वा उपवासं कुर्य्यात् । पर-
दिने अमात्यसामन्तसहितः पुरोहितः
कृतमङ्गल-
स्नानौ राज्ञीराजानौ
मणिकाञ्चनपृथिवीपुष्पाणि
स्पर्शयित्वा
नानारत्नचन्द्रातपोपशोभितमण्डप-
मध्ये व्याघ्रचर्म्माच्छादितासने उपवेशयेत् ।
ततः
पूर्ब्बोत्तरनीचां वेदीं कृत्वा तत्र स्वगृह्योक्तविधि-
नाग्निं संस्थाप्य घृताक्ताः
पलाशाश्वत्थशमीसमिधो
वैदिकैर्म्मन्त्रैर्जुहुयात् । तत औडुम्बरस्रुवेण
वैदि-
कमन्त्रैर्घृताहुतीर्जुहुयात् । ततः सर्व्वतोभद्रम-
ण्डपे
स्थापितस्वर्णरजतताम्रमृण्मयकलसस्थसर्व्वौ-
षधिपल्लवैलालवङ्गादि-
सुगन्धिद्रव्यसंवासितपुण्य-
नदीतोयं सुवर्णविभूषितशङ्खेन ऋत्विग्भिः सह
गृहीत्वा तूर्य्यघोषैर्मङ्गलपाठैः राजसूयवाजपेय-
महाभिषेकोक्तसूक्तमन्त्रैः सस्त्रीकं राजानं प्राङ्-
मुखं मूर्द्धिन कन्याभिः सहाभिषिञ्चेत् ।
ततोऽमा-
त्यादयः सर्व्वे अभिषिञ्चेयुः । ततः पुरोहित-
मन्त्रिसामन्तप्रकृतिपुरुषा अलङ्कृताभिः
कन्याभिः
सह
सुवासोगन्धमाल्याद्यलङ्कृतराज्ञीराज्ञोर्ललाटे
कुङ्कुमागुरुकस्तूर्य्यादिद्रव्यैस्तिलकं दद्युः ।
ततो
राज्ञो मूर्द्धिन किरीटं दत्वा छत्रचामरादिराज-

पञ्चामृतातिरिक्तमधुघृतदुग्धानि ॥ उद्वर्त्तनद्रव्ये केवलहरिद्रा इति केचित् ॥ तैलहरिद्रा इति केचित् ॥ गन्धपिष्टपञ्चशस्यचूर्णमिति केचित् ॥ कालीपुराणदेवीपुराणोक्तपद्धतिष्वपि तथा । तासां मध्ये पूर्ब्बोक्तातिरिक्तद्रव्याणि लिख्यन्ते । यथा । प्रबाल १ मरकत २ पद्मराग ३ मुक्ता ४ मा- णिक्य ५ वैदूर्य्य ६ पद्म ७ कह्लार ८ कुमुद ९ खण्ड १० अलक्त ११ वापी १२ रक्तचन्दन १३ नानातीर्थ १४ हरिद्रा १५ पिष्ट १६ शालि- तण्डुल १७ सिद्धार्थ १८ -- जलानि ॥ पञ्चतीर्थ- मृत् १ ॥ विष्णुतैलं १ ॥ उद्वर्त्तनद्रव्यं तैलहरिद्रा- युक्तामलकी १ ॥ * ॥ अथ वृहन्नन्दिकेश्वरदेवी- कालोपुराणपद्धत्युक्ताष्टकलसस्नानकालीनरागिणी रागवाद्यानि ॥
प रागरागिण्यौ । वाद्यं ।

पुण्यनदीजलं ३ पूर्ब्बमुखनदीजलं ४ पश्चान्मुखनदी-
जलं ५ तिर्य्यङ्नदीजलं ६ सर्व्वसमुद्रजलं ७ क्षी- रिवृक्षप्रबालयुक्तपद्मोत्पलविमिश्रितालङ्कृतकाञ्चन- पूर्णकुम्भाः ८ रुचकः ९ रोचना १० घृतं ११ मधु १२ दुग्धं १३ दधि १४ पुण्यतीर्थमृत्तिका १५ पुण्यतीर्थजलं १६ मङ्गलद्रव्यं १७ मणिदण्डश्वेत- चामरव्यजनं १८ माल्यभूषितश्वेतच्छत्रं १९ श्वेत- वृषः २० श्वेताश्वः २१ महागजवरेः २२ वराभ-

चिह्नद्रव्याणि समुपकल्पेयुः । ततो दुन्दुभिस्वस्ति-
पुण्याहचतुर्व्वेदधोषैः स्वकुलक्रमागतनाम्ना अमुक
त्वं राजा भव इत्युक्त्वा राजोपरि श्वेतकुसुम- लाजाक्षतादि विकिरेयुः । ततो वन्दिनो माग- धाश्च स्तुतिं कुर्य्युः । ततो ब्राह्मणा आशिषं कुर्य्युः । ततः अमात्यादयः राज्ञे उपायनानि दत्त्वा
नमस्कुर्य्युः । इति महाभारतादयः ॥ * ॥

**अभिषेणनं**, क्ली, (सेनया अभियानम् । सेना-
शब्दात् णिच्, ल्युट् । उपसर्गात् सुनोतीति षत्वम् ।) शत्रुं प्रति सेनासहितगमनं । सेनया सह करणभूतया वा विजिगीषोः शत्रोराभि- मुख्येन गमनं । इत्यमरभरतौ ॥ (“यत् सेनयाभि-
गमनमरौ तदभिषेणनम्” । इत्यमरः ।)

**अभिष्टुतं**, त्रि, (अभि + स्तु + कर्म्मणि क्तः ।)
वर्णितं । स्तुतं । इत्यमरः ॥ (“अभिष्टुतो विश्वसृजा
प्रसूनैः” । इति भागवतपुराणे ।)

**अभिष्यन्दः**, पुं, (अभि + स्यन्द + घञ् । “अनुविप-
र्य्यभिनिभ्यः स्यन्दतेरप्राणिषु” इति षत्वं ।) अति-
वृद्धिः । आस्रावः ।
“अलकामतिवाह्यैव वसतिं वसुसम्पदाम् ।
स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशितम्” ॥
इति कुमारसम्भवे ।) चक्षूरोगविशेषः । इति मेदिनी ॥ तस्य निदानं सम्प्राप्तिश्च । यथा, --
“उष्णाभितप्तस्य जलप्रवेशाद्-
दूरेक्षणात् स्वप्नविपर्य्ययाच्च ॥
स्वेदाद्रजोधूमनिषेवणाच्च

:छर्द्देर्विघाताद्वमनातियोगात् ॥

द्रवात्तथान्नान्निशि सेविताच्च
विण्मूत्रवातक्रमनिग्रहाच्च ।
प्रसक्तसंरोदनशोककोपा-
च्छिरोऽभिघातादतिमद्यपानात् ॥
तथा ऋतूनाञ्च विपर्य्ययेण
क्लेशाभिघातादतिमैथुनाच्च ।
वाष्पग्रहात् सूक्ष्मनिरीक्षणाच्च
नेत्रे विकारान् जनयन्ति दोषाः” ॥
स च चतुर्व्विधः । यथा, --
“वातात् पित्तात्
कफाद्रक्तादभिष्यन्दश्चतुर्व्विधः ।
प्रायेण जायते घोरः सर्व्वनेत्रामयाकरः ॥
निस्तोदनस्तम्भनरोमहर्ष-
संघर्षपारुष्यशिरोऽभितापाः ।
विशुष्कभावः शिशिराश्रुता च
वाताभिपन्ने नयने भवन्ति ॥
दाहप्रपाकौ शिशिराभिनन्दा
धूमायनं वाष्पसमुच्छ्रयश्च ।
उष्णाश्रुता पीतकनेत्रता च
पित्ताभिपन्ने नयने भवन्ति ॥
उष्णाभिनन्दा गुरुताक्षिशोथः
कण्डूपदेहावतिशीतता च ।
स्रावो बहुः पिच्छिल एव चापि
कफाभिपन्ने नयने भवन्ति ॥
ताम्राश्रुता लोहितनेत्रता च
राज्यः समन्तादतिलोहिताश्च ।
पित्तस्य लिङ्गानि च यानि तानि
रक्ताभिपन्ने नयने भवन्ति” ॥
इति माधवकरः ॥ तस्य चिकित्सा यथा, --
“द्वे पादमध्ये पृथुसन्निवेशे
शिरो गते द्वे बहुधा हि नेत्रे ।
ताः प्रोक्षणोत्सादनलेपनादीन्
पादप्रयुक्तान्नयनं नयन्ति” ॥
प्रोक्षणं सेचनं । उत्सादनं उद्वर्त्तनं ।
“मलोष्मसंघट्टनपीडनाद्यै-
स्ता दूषयन्ते नयनानि दुष्टाः ।
भजेन्महादृष्टिहितानि तस्मा-
दुपानदभ्यञ्जनधावनानि” ॥
मलं धूल्यादि । मलादिभिर्दुष्टाः ताः शिरानय-
नानि दूषयन्ते इत्यन्वयः ॥
“चक्षुष्याः शालयो मुद्गा यवा मांसन्तु जाङ्गलं
।
“सेकस्तु सूक्ष्मधाराभिः सर्व्वस्मिन्नयने हितः ।
मीलिताक्षस्य मर्त्यस्य प्रदेयश्चतुरङ्गुलः ॥
स चापि स्नेहनो वाते पित्ते रक्ते च रोपणः ।
लेखनस्तु कफे कार्य्यस्तस्य मात्रा विधीयते ॥
षडभिर्वाचां शतैः स्नेहे चतुर्भिस्तैस्तु रोपणे ।
तैस्त्रिभिर्लेखने कार्य्यः सेको नेत्रप्रसादने ॥
निमेषोन्मेषणे पुंसामङ्गल्याच्छोटिका तथा ।
गुर्व्वक्षरोच्चारणं वा वाङ्मात्रेयं स्मृता बुधैः” ॥
छोटिका टुटकी इति लोके ।
“सेकस्तु दिवसे कार्य्यो रात्रौ चात्यन्तिके गदे” ।
स यथा, --
“एरण्डदलमूलत्वक्शृतमाजं पयो हितं ।
सुखोष्णं नेत्रयोः सिक्तं वाताभिष्यन्दनाशनं ॥
पथ्याक्षामलखस्खसवल्कलकल्केन सूक्ष्मवस्त्रेण ।
कृत्वा पोटलिकां तामहिफेनोत्थद्रवेणाक्तां ॥
निदधीत लोचने स्यात् सर्व्वाभिष्यन्दसंक्षयः शीघ्रं ।
योगोऽयमृषिभिरुक्तो जगदुपकाराय कारुणिकैः ॥
भुक्त्वा पाणितलं घृष्ट्वा चक्षुषोर्यदि दीयते ।
अचिरेणैव तद्वारि तिमिराणि व्यपोहति ॥
स्नानं कृष्णतिलैश्चापि चक्षुष्यमनिलापहं ।
आमलैः सततं स्नानं परं दृष्टिबलावहं ॥
त्रिफलायाः कषायस्तु धावनान्नेत्ररोगजित् ।
कवलान्मुखरोगघ्नः पानतः कामलापहः” ॥ * ॥
अथाश्चोतनविधिः ।
“क्वाथक्षीरद्रवस्नेहविन्दूनां यत्तु पातनं ।
द्व्यङ्गुलोन्मीलिते नेत्रे प्रोक्तमाश्चोतनञ्च तत् ॥
विन्दवोऽष्टौ लेखनेषु रोपणे दशविन्दवः ॥
स्नेहने द्वादश प्रोक्तास्ते शीते कोष्णरूपिणः ।
उष्णे तु शीतरूपाः स्युः सर्व्वत्रैवैष निश्चयः ॥
वाते तिक्तं तथा स्निग्धं पित्ते मधुरशीतलं ।
कफे तिक्तोष्णरूक्षं स्यात् क्रमादाश्चोतनं हितं ॥
आश्चोतनानां सर्व्वेषां मात्रा स्याद्वाक्षतोन्मिता ।
ततः परं लोचनाभ्यां भेषजाय नयो मतः ॥
अश्चोतनं न कर्त्तव्यं निशायां केनचित् क्वचित्” ।
तद्यथा, --
“विल्वादिपञ्चमूलेन वृहत्येरण्डशिग्रुभिः ।
क्वाथ आश्चोतने कोष्णो वाताभिष्यन्दनाशनः ॥
त्रिफलाश्चोतनं नेत्रे सर्व्वाभिष्यन्दनाशनं” ॥ * ॥
अथ पिण्डीविधिः ।
“उक्तभेषजकल्कस्य पिण्डी च कोलमात्रया ।
वस्त्रखण्डेन संबद्धाभिष्यन्दव्रणनाशिनी ॥
स्निग्धोष्णा पिण्डिका वाते पित्ते सा शीतला मता ।
रूक्षोष्णा श्लेष्मणि प्रोक्ता विधिरुक्तो बुधैरयं” ॥
इति भावप्रकाशः ॥

**अभिष्यन्दिरमणं**, क्ली, (अभिष्यन्दः प्रधाननगर-
स्यातिवृद्ध्या तत्सन्निधाने स्थापनं स एव
विद्यते
ऽत्र इनि, रमतेऽत्र रम + आधारे ल्युट्, ततः
कर्म्मधारयः ।) प्रधाननगरसन्निहितनगरं । तत्प-
र्य्यायः । शाखानगरं २ । इति जटाधरः ॥

**अभिसन्तापः**, पुं, (अभिसन्ताप्यतेऽत्र, अभि + सम्
+ तप् + णिच् + आधारे अच् ।) युद्धं । इति
हलायुधः ॥
(“जन्यं स्यादभिसन्तापः संमदोविग्रहस्तथा” ।
इति हलायुधः ।)

**अभिसन्धानं**, क्ली, (अभि + सम् + धा + भावे ल्युट् ।)
वञ्चनं । प्रतारणं । इति हेमचन्द्रः ॥
(“पराभिसन्धानपरं यद्यप्यस्य विचेष्टितं ।
जिगीषोरश्वमेधाय धर्म्म्यमेव बभूव तत्” ॥
इति रघुवंशे ।)

**अभिसन्धिः**, पुं, (अभिसन्धानं अभि + सम + धा +
भावे किः ।) अभिसन्धानं । उद्देशः । यथा, --
“पितृन्नमस्ये दिवि ये च मूर्त्ताः,
स्वधाभुजः काम्यफलाभिसन्धौ ।
प्रदानशक्ताः सकलेप्सितानां,
विमुक्तिदा येऽनभिसंहितेषु” ॥
इति रुचिस्तवः ॥
(“अथ ते मुनयो दिव्याः प्रेक्ष्य हैमवतं पुरं ।
स्वर्गाभिसन्धिसुकृतं वञ्चनामिव मेनिरे” ॥
इति कुमारसम्भवे ।)

**अभिसम्पातः**, पुं, (अभिसम्पात्यते योद्धा यत्र, अभि
+ सम् + पत् + आधारे घञ् ।) युद्धं । इत्यमरः
॥

**अभिसरः**, पुं, (आभिमुख्येन सरति, अभि + सृ +
पचाद्यच् ।) सहायः । अनुचरः । इत्यमरः ॥
(“राजा राज्यवर्द्धनं महासामन्तैः कृत्वा साभि-
सरम् उत्तरापथं प्राहिणोत्” । इति हर्ष-
चरिते ।)

**अभिसर्ज्जनं**, क्ली, (अभि + सृज् + भावे ल्युट् ।)
दानं । बधः । इति धरणी ॥

**अभिसारः**, पुं, (अभि + सृ + आधारे घञ् ।) बलं ।

पक्षिमांसं विशेषेण वास्तूकं तण्डूलीयकं ॥
पटोलकर्कोटककारवेल्ल-
फलानि सर्पिःपरिपाचितानि ।
तथैव वार्त्ताकुफलं नवीनं
दृशोर्हितः स्वादु तथापि तिक्तः ॥
कट्वम्लगुरुतीक्ष्णोष्णमाषनिष्पावमैथुनं
मद्यवल्लूरपिण्याकमत्स्यशाकविरूढजं ।
विदाहीन्यन्नपानानि न हितान्यक्षिरोगिणः ॥
सेक आश्चोतनं पिण्डी विडालस्तर्पणं तथा ।
पुटपाकोऽञ्जनं चैभिः कल्कैर्नेत्रमुपाचरेत्” ॥ * ॥
कल्कविधिः । तत्र सेकविधिः ।

सा यथा, --
“एरण्डपत्रमूलत्वङ्भिर्निर्म्मिता वातनाशिनी ।
धात्री विरचिता पित्ते शिग्रुपत्रकृता कफे ॥
निम्बपत्रकृता पिण्डी पित्तश्लेष्महरी भवेत् ।
शुण्ठी निम्बदलैः पिण्डी सुखोष्णा स्वल्पसैन्धवा ॥
धार्य्या नेत्रेऽनिलश्लेष्मशोथकण्डूव्यथाहरी ।
त्रिफला पिण्डिका नेत्रे वातपित्तकफापहा” ॥
“पथ्याक्षामलखस्खसवल्कलकल्कोऽहिफेनजलयुक्तः ।
तेनविरचिता पिण्डी शमयति सकलानभिष्यन्दान्” ॥

युद्धं । सहायः । साधनं । इति धरणी ॥ स्त्री-
पुंसयोरन्यतरस्यान्यतरार्थं सङ्केतस्थलगमनं । इत्य-
लङ्कारशास्त्रं ॥ (“रतिसुखसारे गतमभिसारे
मदनमनोहरवेशं” । इति गीतगोविन्दे । “एवं
कृताभिसाराणां पुंश्चलीनां विनोदने” । इति
साहित्यदर्पणे ।)

**अभिसारिका**, स्त्री, (अभिसरति कान्तनिर्द्दिष्ट-
संकेतस्थानं गच्छति या, अभि + सृ + ण्वुल्,
स्त्रियां टाप् ।) स्वीयादिषोडशनायिकामध्ये अष्टा-
वस्थाविशिष्टाष्टनायिकान्तर्गतनायिकाभेदः अस्या
लक्षनं । सङ्केतस्थले स्वयं गमनकर्त्री एवं प्रिय-
गमनकारयित्री । अस्याश्चेष्टा । समयानुरूप-
भूषनं । शङ्का । बुद्धिनैपुण्यं । कपटसाहसादिः ।
सा त्रिविधा । दिवाभिसारिका १ ज्योत्स्नाभि-
सारिका २ अन्धकाराभिसारिका ३ । इति रस-
मञ्जरी ॥

:("कान्तार्थिनी तु या याति संकेतं साभिसारिका"

इत्युक्तलक्षणा कान्तप्रार्थनया स्वयं संकेतस्थान-
गामिनीस्वस्थाने वाकान्तानयनकारिणी नायिका ।
यदुक्तं दर्पणकारैः ।
"अभिसारयते कान्तं या मन्मथवशंवदा ।
स्वयं वाभिसरत्येषा धीरैरुक्ताभिसारिका" ॥)

**अभिहारः**, पुं, (अभि + हृ + घञ् ।) चौर्य्यं । सम्मुखे

हरणं । तत्पर्य्यायः । अभिग्रहणं २ । इत्यमरः ॥
सन्नहनं । कवचधारणं । अभियोगः । अपचिकीर्ष-
याभिगम्याक्रमणं । इति मेदिनी ॥ (साहसं । अपहरणं ।
"यस्याभिहारं कुर्य्याच्च स्वयमेव नराधिपः" ।
इति महाभारते ।)

**अभिहितं**, त्रि, (अभि + धा + कर्म्मणि क्तः ।)

उक्तं । कथितं । इत्यमरः ॥
("अर्थिनाभिहितोयोऽर्थः प्रत्यर्थी यदि तं तथा ।
सम्भोजिनी साभिहिता पैशाची दक्षिणा द्विजैः" ॥
इति मनुः ।)

**अभीकः**, पुं, (अभि + कन्, "अनुकाभिकाभीकाः

कामयिता" इति पाणिनिसूत्रम् ।) कविः । इति
मेदिनी ॥ स्वामी ॥ इति हलायुधः ॥ (पतिः ।
कामुकः । कामी ।
"ददृशे पर्णशालायां राक्षस्याभीकयाथ सः" ।
इति भट्टिकाव्ये ।
उत्सुकः । क्रूरः । निष्ठुरः । निर्भयः । निःशङ्कः ।
("अभीकः कामुके क्रूरे निर्भये त्रिषुना कवौ" ।
इति मेदिनी ।)

**अभीकः**, त्रि, (अभि + कन् ।) कामुकः । क्रूरः ।

उत्सुकः । निर्भयः । इति शब्दरत्नावली ॥

**अभीप्सितं**, त्रि, (अभ्याप्तुं प्राप्तुमिष्टं, अभि + आप्

+ सन् कर्म्मणि क्तः ।) वाञ्छितं । अभीष्टं । इत्यमरः ॥
("मेने मेनापि तत्सर्व्वं पत्युः कार्य्यमभीप्सितं" ।
इन्ति कुमारसम्भवे ।)

अश्वा स एषां सुसंस्कृता अभीशवः" । इति ऋक् ।
वेदेऽस्य प्रचुरप्रयोगः ॥ किरणं । इति हलायुधः ॥

**अभीशुः**, स्त्री, (अभितः अश्नुते व्याप्नोति, अभि +

अश + कर्त्तरि उन्, पृषोदरादित्वात् अलोपो
दीर्घः ।) अङ्गुलिः । वेदेऽस्य प्रचुरप्रयोगः ॥

**अभीषङ्गः**, पुं, (अभि + सन्ज घञ्, दीर्घः ।) आ-

क्रोशः । इत्यमरः ॥

**अभीषुः** पुं, (अभि + इष् + उ ।) किरणः । इत्यमरः ॥

कामः । अनुरागः । इति शब्दरत्नावली ॥

**अभीष्टं**, त्रि, (अभि + इष् + कर्म्मणि क्तः ।)

वाञ्छितं । तत्पर्य्यायः । अभीप्सितं २ हृद्यं ३
दयितं ४ वल्लभं ५ प्रियं ६ । इत्यमरः ॥
("प्राणायथात्मनोऽभीष्टा भूतानामपि ते तथा" ।
इति हितोपदेशः ।
"अभीष्टायामभूद्ब्रह्मन् पितुरत्यन्तवल्लभः" ।
इति विष्णुपुराणं ।)

**अभीष्टा**, स्त्री, (अभि + इष् + क्त, स्त्रियां टाप् ।)

रेणुकानामगन्धद्रव्यं । इति शब्दचन्द्रिका ॥
("ताम्बूलवल्ली ताम्बूली नागवल्लप्यथ द्विजा ।
हरेणुः रेणुका कौन्ती कपिला भस्मगन्धिनी ॥
ताम्बूल्यां कटुकाभीष्टा देवाभीष्टा गृहाशया" ।
इति शब्दचन्द्रिका ।)

**अभीक्ष्णं**, क्ली, (क्षणमभिगतं, प्रादिसमासः पृषो-

दरादित्वात् दीर्घः अलोपश्च ।) भृशं । नित्यं ।
तद्युक्तक्रिययोऽस्त्रि । इति मेदिनी ॥ (पुनः पुनः ।
शश्वत् । अविरतं । निरन्तरं । "उदीर्णरागप्रति-
रोधकं जनैरभीक्ष्णमक्षण्णतयातिदुर्गमः" । इति
माघः ॥
"इच्छन्त्यभीक्ष्णं क्षयमात्मनोऽपि
न ज्ञातयस्तुल्यकुलस्य लक्ष्मीं" ।
इति भट्टिकाव्ये ।)

**अभीक्ष्णं**, व्य, (अभि + क्ष्णु तेजने डमु, पृषोदरा-

दित्वात् दीर्घः "स्वरादिनिपातमव्ययम्" इति
अव्ययं ।) पुनः पुनः । अनारतं । इत्यमरः ॥

**अभुक्तः**, त्रि, (भुज् + भावे क्तः अर्श आद्यच् विद्य-

मानार्थे, नञ्समासः, वा भुज + कर्म्मणि क्तः,

**अभेद्यं**, क्लीं, (भेत्तुं न शक्यते, भिद् + शक्यार्थे ण्यत्,

नञ्समासः ।) हीरकं । इति राजनिर्घण्टः ॥
अभेदनीयवस्तुनि त्रि । यथा, --
"अस्त्राण्यनेकरूपाणि तथाभेद्यञ्च दंशनं" ।
इति देवीमाहात्म्यं ॥

**अभोजनं**, क्ली, (भुज् + भावे ल्युट्, नञ्समासः ।)

भोजनाभावः । उपवासः । यथा, --
"अजीर्णे भोजनं येषां जीर्णे येषामभोजनं ।
रात्रावभोजनं येषां तेषां नश्यन्ति धातवः" ॥
इति वैद्यकं ॥ (अनशनं ।
"वेदोदितानां नित्यानां कर्म्मणां समतिक्रमे ।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनं" ॥
इति मलमासतत्त्वं ।)

**अभ्यग्रं**, त्रि, (अभिमुखमग्रं यस्य तत् ।) समीपं ।

निकटं । इत्यमरः ॥

**अभ्यङ्गः**, पुं, (अभि + अन्ज घञ् कुत्वं ।) तैलमर्दनं ।

तत्पर्य्यायः । स्नेहनं २ । इति राजनिर्घण्टः ॥
यथा, --
"तैलमल्पं यदङ्गेषु न च स्याद्बाहुतर्पणं ।
सा मार्ष्टिः पृथगम्यङ्गो मस्तकादौ प्रकीर्त्तितः ॥
अभ्यङ्गमाचरेन्नित्यं स जराश्रमवातहा ।
शिरःश्रवणपादेषु तं विशेषेण शीलयेत्" ॥
इत्यायुर्व्वेदः ॥ * ॥ अस्य गुणाः । मार्दवकारित्वं ।
कफवातनाशित्वं । धातुपुष्टिजनकत्वं । त्वग्वर्णबल-
प्रदत्वञ्च ॥ पादाभ्यङ्गगुणाः । निद्राचक्षुर्हितकारित्वं ।
पादरोगनाशित्वञ्च ॥ पादगते द्वे शिरे चक्षुषि
सम्बद्धे स्तः अतश्चक्षुर्हितार्थिना पादाभ्यङ्गः कर-
णीयः ॥ कफग्रस्तकृतभेदवमनाजीर्णिभिर्नाभ्यङ्गः
करणीयः । इति राजवल्लभः ॥ * ॥ अपरञ्च ।
"मूर्द्ध्नि दत्तं यदा तैलं भवेत् सर्व्वाङ्गसङ्गतं ।
स्रोतोभिस्तर्पयेद्बाहू स चाभ्यङ्ग उदाहृतः" ॥
तत्पर्य्यायः । अम्यञ्जनं २ । इति शुद्धितत्त्वधृता-
युर्व्वेदः ॥ आभां इति भाषा ।

**अभ्यक्षः**, पुं, (अभि + अक्ष + अच्, पृषोदरादित्वात्

साध ।) तिलकल्कः । इति ऋग्वेदिश्राद्धप्रयोगः ॥

**अभ्यञ्जनं**, क्ली, (अभि + अन्ज + कर्म्मणि ल्युट् ।)

तैलं । इति हेमचन्द्रः ॥ अभ्यङ्गः । इति राज-

**अभीरः**, पुं, (अभीरयति गा अभिमुखीकृत्य गोष्ठं

नयति, अभि + ईर + णिच् + अच् ।) आभीरः । गोपः । इत्यमरटीकायां रमानाथः ॥

**अभीरुः**, पुं, (भी + कर्त्तरि शीलार्थे क्रुः ततो नञ्-

समासः ।) भैरवः । यथा, --
“अभीरुर्भैरवो भीरुर्भूतपो योगिनीपतिः” ।
इति वटुकभैरवस्तवः ॥ निर्भये त्रि ॥ (निर्भीकः ।
भयहीनः । निःशङ्कः । “स्थाने युद्धे च कुशलान-
भीरूनविकारिणः” । इति मनुः ।)

**अभीरुः**, स्त्री, (भी + कर्त्तरि क्रु शीलार्थे, नञ्-

समासः ।) शतमूली । इत्यमरः ॥

**अभीरुपत्री**, स्त्री, (भी + कर्त्तरि क्रु शीलार्थे, नञ्-

समासः, वा स्त्रियां ऊङ् असंकुचितपत्रत्वात् तस्यास्तथात्वं, न भीरूणि पत्राणि यस्याः सा, स्त्रियां ङीप् ।) शतमूली । इत्यमरः ॥

**अभीशुः**, पुं, (अभितः श्यति मुखं तनूकरोति, अभि

+ शो + कु, पृषोदरादित्वात् दीर्घः ।) प्रग्रहः । वाग्डोर इति भाषा । (“स्थिरा वसन्तु नेयोरथो
नञ्समासः ।) उपवासी । यथा, --
“अभुक्तस्य दिवानिद्रा पाषाणमपि जीर्य्यति” ।
इति वैद्यकं ॥ अकृतभोजनं वस्तु ॥ (भुक्ता ब्राह्मणाः
पीता गाव इति पाणिनिभाष्यम् । ‘नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि’ । इति पुराणम् ।)

**अभूमिः**, स्त्री, (न भूमिः, नञ्समासः ।) स्थाना-

भावः । अनाधारः । आश्रयाभावः । यथा ।
“अभूद-
भूमिः प्रतिपक्षजन्मनां भियाम्” इति माघः ॥
“नाभूद्‌भूमिः स्मरशायकानाम्” इति नैषधं ॥

**अभेदः**, त्रि, (नास्ति भेदो यस्य सः ।) भेदरहितः ।

अविशेषः । यथा, -- “अभेदः शिवरामयोः” इति पुराणं ॥ (तादात्म्यम् ।
“काकः कृष्णः पिकः कृष्णः स्त्वभेदः पिककाकयोः ।
वसन्ते समुपायाते काकः काकः पिकः पिकः” ॥
इति नीतिरत्ने । “भेदेऽप्यभेदः सम्बन्धे सम्बन्ध-
स्तद्विपर्य्ययौ” । इति साहित्यदर्पणे ।)
निर्घण्टः ॥ (तैलादिना शिरःसहितदेहमर्द्दनम् ।
“भोजनाभ्यञ्जनाद्दानात् यदन्यत् कुरुते तिलैः ॥
कृमिभूतः श्वविष्ठायां पितृभिः सह मज्जति” ॥
इति मनुः ।)

**अभ्यन्तरं**, क्ली, (अन्तरमभिगतं प्रादिसमासः ।)

मध्यं । तत्पर्य्यायः । अन्तरालं २ । इत्यमरः ॥
अन्तः ३ अन्तरं ४ अन्तरालकं ५ । इति राज-
निर्घण्टः ॥
(“प्राणापाणौ समौ कृत्वा नासाभ्यन्तरचारिणौ” ।
इति भगवद्गीता ।)

**अभ्यमितः**, त्रि, (अभि + अम् + क्तः ।) रोगी ।

इत्यमरः ॥

**अभ्यमित्रीणः**, पुं, (अमित्रस्याभिमुख्यं अव्ययीभाव-

समासः, अलङ्गामीत्यधिकारे अभ्यमित्र + ख तस्य ईनः ।) अभ्यमित्र्यः । इत्यमरः ॥

:("हरामि रामसौमित्री मृगी भूत्वा मृगद्युवौ ।

उद्योगमभ्यमित्रीणो यथेष्टं त्वञ्च सन्तनु" ॥

इति भट्टिः ।)

**अभ्यमित्रीयः**, पुं, (अमित्रस्य शत्रोराभिमुख्यं अव्य-

यीभावः, अभ्यमित्रमलङ्गामीत्यधिकारे अभ्यमित्र + छ तस्य ईयः ।) अभ्यमित्र्यः । इत्यमरः ॥

**अभ्यमित्र्यः**, पुं, (अभ्यमित्र + पूर्ब्बवत् यत् ।) स्वसा-

मर्थ्यवशेन शत्रुसम्मुखगमनकर्त्ता । युद्धस्थले शत्रुसम्मुखगामी । तत्पर्य्यायः । अभ्यमित्रीयः २ अभ्यमित्रीणः ३ । इत्यमरः ॥
("तमुद्यतनिशातासिं प्रत्युवाच जिजीविषुः ।
मारीचोऽनुनयंस्त्रासादभ्यमित्रीभवामि ते" ॥
इयि भट्टिकाव्ये ।)

**अभ्यर्णं**, त्रि, (अभि + अर्द्द + क्तः, आविदूर्य्ये इड-

भावः णत्वश्च ।) निकटं । इत्यमरः । (आसन्नः । निकटवर्त्ती । "तीव्रः स्मरसन्तापो न तथादौ बा-धते यथासन्ने । तपति प्रावृषि नितरामभ्यर्ण-जलागमो दिवसः" । इति रत्नावली । "उच्यन्तां सैनिकाः न कैश्चिदाश्रमाभ्यर्णभूमयः परिक्रा-म्यन्तां" । इति महावीरचरिते । समीपं । सन्नि-धानं । अन्तिकं । "अभ्यर्णे परिरभ्य निर्भरमुरः प्रेमान्धया राधया" । इति गीतगीविन्दे ।)

**अभ्यवकर्षणं**, क्ली, (अभि + अव + कृष् + भावे ल्युट् ।)

शल्यादेरुत्पाटनं । तत्पर्य्यायः । निर्हारः २ । इत्यमरः ॥

**अभ्यवस्कन्दः**, पुं, (अभि + अव + स्कन्द + घञ् ।)

निःशक्तीकरणाय शत्रुभिर्दीयमानः प्रहारः । तत्पर्य्यायः । अभ्यासादनं २ प्रपातः ३ धाटी ४ । इति हेमचन्द्रः ॥

**अभ्यवस्कन्दनं**, क्ली, (अभि + अव + स्कन्द + भावे

ल्युट् ।) निःशक्तीकरणाय शत्रुभिर्दीयमानः प्रहारः ।
शत्रुसम्मुखगमनं । इत्यमरभरतौ ॥

**अभ्यवहारः**, पुं, (अभि + अव + हृ + भावे घञ् ।)

भक्षणं । आहारः । इति हेमचन्द्रः ॥

**अभ्यवहृतं**, त्रि, (अभि + अव + हृ + क्तः ।) भुक्तं ।

खादितं । इत्यमरः ॥

"केनाभ्यसूया पदकाङ्क्षिणा ते ।
नितान्तदीर्घैर्जनिता तपोभिः" ।
इति कुमारसम्भवे ॥
"प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूयः" ।
इति मेघदूते ।)

**अभ्याकाङ्क्षितं**, क्ली, (अभि + आ + काङ्क्षि + भावे

क्तः, इदित्वान्नुम् ।) मिथ्याभियोगः । इति शब्द-रत्नावली ॥ मिछादाओया इति भाषा ।

**अभ्याख्यानं**, क्ली, (अभि + आ + ख्या + ल्युट् ।)

मिथ्याभियोगः । मिथ्याविवादः । शतं मे धारय-सीत्यादि मिथ्योद्भावनं । इत्यमरभरतौ ॥

**अभ्यागतः**, पुं, (अभि + आ + गम् + कर्त्तरि क्तः ।)

अतिथिः । इति हेमचन्द्रः ॥ "स च ज्ञातपूर्ब्ब-गृहागतः" इति श्रीधरस्वामी ॥
"बालो वा यदि वा वृद्धो युवा वा गृहमागतः ।
तस्य पूजा विधातव्या सर्व्वत्राभ्यागतो गुरुः" ॥
इति हितोपदेशे ।)

**अभ्यागमः**, पुं, (अभि + आ + गम् + अप् ।) समीपं ।

मारणं । युद्धं । वैरं । अभ्युत्थानं । इति विश्वः ॥
(घातः । प्रहारः । शत्रुता । विरोधः । समीपं । अन्तिकं । सन्निधानं ।
"अभ्यागमो विरोधाजिघाताभ्युद्गमनान्तिके" ।
इति मेदिनी ॥ सम्मुखागमनं । उपस्थितिः ।
"का त्वं शुभे कस्य परिग्रहो वा
किं वा मदभ्यागमकारणं ते" ।
इति रघुवंशे ।)

**अभ्यागारिकः**, त्रि, (अभ्यागारे तद्गतकर्म्मणि व्या-

पृतः, ठन् तस्य इकः ।) कुटुम्बव्यापृतः । पुत्र-दारादिपोषणव्यग्रः । इत्यमरः ॥

**अभ्यादानं**, क्ली, (अभि + आ + दा + भावे ल्युट् ।)

आरम्भः । इत्यमरः ॥ प्रथमारम्भः । इति राय-मुकुटः ॥

**अभ्यान्त**, त्रि, (अभि + आ + अम + कर्त्तरि क्तः

इडभावः, पक्षे अभ्यामितः ।) रोगी । इत्यमरः ॥

**अभ्यामर्दः**, पुं, (अभ्यामृद्यतेऽत्र, अभि + आ + मृद्

+ आधारे घञ् ।) संग्रामः । इत्यमरः ॥

अभिहारः । चौर्य्यं । इत्यमरटीका ॥ (अभि-ग्रहणं । भोजनं । आहारः ।)

**अभ्युत्थानं**, क्ली, (अभि + उत् + स्था + भावे ल्युट् ।)

गौरवं । इति हेमचन्द्रः ॥ आसनादेरुत्थानं । यथा, --
"यदा यदा च धर्म्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्म्मस्य तदात्मानं सृजाम्यहं" ॥
इति श्रीभगवद्गीता ॥ (ख्यातिः । कीर्त्तिः । यशः ।
गौरवेणोत्थानादिना प्रत्युद्गमनं । "अलमलम-भ्युत्थानेन, ननु सर्व्वस्याभ्यागतोगुरुरिति भवाने-
वास्माकं पूज्यः" । इति नागानन्दः ।
"नाभ्युत्थानं क्रिया यत्र नालापा मधराक्षराः ।
गुणदोषकथा नैव तस्य हर्म्ये न गम्यते" ॥
इति पञ्चतन्त्रे । अभ्युदयः । अभ्युन्नतिः ।
"नवाभ्युत्थानदर्शिन्यो ननन्दुः सप्रजाः प्रजाः" ॥
इति रघुवंशे । सूर्य्योदयः । उदयः । उद्भवः ।)

**अभ्युदयः**, पुं, (अभि + उत् + इन् + अच् ।) इष्ट-

लाभः । विवाहादिः । इति आभ्युदयिकशब्दार्थे श्राद्धतत्त्वं ॥ सर्व्वतोभावेनोदथः ।
अर्थाद्धनजनादि-
वृद्धिः । यथा, --
"राजन्नभ्युदयोऽस्तु वल्लनकवे हस्ते किमास्ते तव
श्लोकः कस्य कवेरमुष्य कृतिनस्तत् पट्यतां पद्यते ।
किन्त्वासामरविन्दसुन्दरदृशां
द्राक्ष्यामरान्दोलना-
दुद्वेल्लद्भजवल्लिकङ्कणझणत्कारः क्षणं वार्य्यतां" ॥
इत्यस्य पूर्ब्बार्द्धं वल्लनकविकर्णाटराजयोर्वाक्यं शेषार्द्धं कालिदासस्य ॥ (उन्नतिः । समृद्धिः ।
"विपदि धैर्य्यमथाभ्युदये क्षमा सदसि वाकपटुता युधि विक्रमः" । इति हितोपदेशे । पराक्रमः ।
वीर्य्यं । प्रभावः । "यद्बाहुदण्डाभ्युदयानुजीविनो यदुप्रवीराः" । इति भागवतपुराणं ।)

**अभ्युदितः**, त्रि, (अभि + उत् + इन् + क्तः ।) यस्मिन्

सुप्ते सूर्य्य उदेति सः । सूर्य्योदयकालशायी । इत्यमरः ॥ उदयप्राप्तः । यथा, --
"माघे मासि रटन्त्यापः किञ्चिदभ्युदिते रवौ ।

**अभ्यसनं**, क्ली, (अभि + अस + ल्युट् ।) अभ्यास-

करणं । पौनःपुन्येन करणं चिन्तनञ्च । यथा, --
"स्यादभ्यासोऽभ्यसनेऽन्तिके" । इति मेदिनी ॥
(अभ्यासः । पौनःपुन्येनैकक्रियाकरणं । पुनःपुनः
व्यावर्त्तनम् ।
"विद्यामभ्यसनेनेव प्रसादयितुमर्हसि" ।
इति रघुः ।
"स्वाध्यायाभ्यसनञ्चैव वाङ्मयं तप उच्यते" ।
इति गीता ।)

**अभ्यसूया**, स्त्री, (असू उपतापे हिंसायाञ्च, कण्ड्वा-

दित्वात् यक् + भावे अ स्त्रियामाप् ।) असूया ।
गुणेषु दोषारोपणं । यथा । "चैत्रस्य दानं ता-
मसं" । इत्यमरटीकायां भरतः ॥ ("अनिर्वृतं
भूतिषु गूढवैरं सत्कारकालेऽपि कृताभ्यसूयम्" ।
इति भट्टिकाव्ये" । ईर्ष्या । विद्वेषः । औद्धत्या-
दन्यगुणर्द्धोनामसहिष्णुता ।

**अभ्याशः**, त्रि, (आभिमुख्येनाश्यते व्याप्यतेऽनेन,

अशू व्याप्तौ करणे घञ् ।) समीपं । इत्यमरटी-
कायां रायमुकुटः ॥

**अभ्यासः**, पुं, (आभिमुख्येनास्यते क्षिप्यते, असुक्षेपे

कर्म्मणि घञ् ।) अभ्यसनं । आवृत्तिः । इति मे-
दिनी ॥ शराभ्यासः । तत्पर्य्यायः । खुरली २
योग्या
३ । इति त्रिकाण्डशेषः ॥ समीपे त्रि । इत्यमरः ।
चित्तस्यैकस्मिन्नभ्यन्तरे वाह्ये वा
प्रतिमादावालम्बने
सर्व्वतः समाहृत्य पुनः पुनः स्थापनमभ्यासः ॥
यथा, --
"अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय" ।
इति भगवद्गीताटीकायां नीलकण्ठः ॥

**अभ्यासादनं**, क्ली, (अभि + आ + सद् + णिच् +

ल्युट् ।) निःशक्तीकरणाय शत्रुभिर्दीयमानः प्रहारः
।
शत्रुसम्मुखगमनं । इत्यमरभरतौ ॥

**अभ्याहारः**, पुं, (अभि + आ + हृ + भावे घञ् ।)

ब्रह्मघ्नमपि चाण्डालं कं पतन्तं पुनीमहे" ॥
इति तिथ्यादितत्त्वं ॥ (अभितः सर्व्वतः उदति-
शयेन इतं गतं प्रातर्विहितं कर्म्मास्मादिति व्युत्-
पत्या सूर्य्योदयकाले निद्रया अननुष्ठिततत्कालो-
चितक्रियाकलापः ।)

**अभ्युपगतः**, त्रि, (अभि + उप + गम् + क्तः ।) स्वी-

कृतः । अङ्गीकृतः । इति हेमचन्द्रः ॥
("प्रियाभ्युपगते राज्ये पाण्डवा मधुसूदन ।
जिताः शकुनिना राज्यं तत्र किं मम दुष्कृतं" ॥
इति महाभारते । समीपागतः । अन्तिक-
समागतः । अनुमितः । निर्द्धारितः । सिद्धान्त-
तया निरूपितः । सदृशीभूतः । सन्निकृष्टः ।)

**अभ्युपगमः**, पुं, (अभि + उप + गम् + भावे अप् ।)

स्वीकारः । इत्यमरः ॥ निकटागमनं । इति
मेदिनी ॥ (अङ्गीकारः । प्रतिज्ञा । "प्रसीदेति
ब्रूयामिदमसति कोपे न घटते करिष्याम्येवं नो
पुनरिति भवेदभ्युपगमः" । इति रत्नावली ।
अनु-
मतिः । अनुमोदनं ।

:“सर्व्वदोषानभिष्वङ्गादान्मायसमतां गताः ।

युष्माकमभ्युपगमाः प्रमाणं पुण्यपापयोः” ।
इति महावीरचरिते ।)

**अभ्युपपत्तिः**, स्त्री, (अभि + उप + पद् + क्तिन् ।)

अनुग्रहः । इत्यमरः ॥ (अनिष्टनिवारणपूर्ब्बका-
भीष्टसम्पादनरूपोऽनुग्रहः । प्रसादः । “तदर्ह-
स्याभ्युपपत्या जीवितमस्या अवलम्बितुम्” ।
इति
शाकुन्तले । रक्षा । परित्राणं ।
“कामिनीषु विवाहेषु गवाम्भक्ष्ये तथेन्धने ।
ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकम्” ।
इति मनुः ।)

**अभ्युपायः**, पुं, (अभि + उप + इण + भावे अच् ।)

अङ्गीकारः । स्वीकारः । इति हेमचन्द्रः ॥ उपायः
।
यथा । “तत्स्वीकृतिव्यतिकरे क इहाभ्युपायः” ।
इति काव्यप्रकाशः ॥ (कौशलं ।
“अनेकैरभ्युपायैस्ते जिघांसन्ति स्म पाण्डवान्” ।
“निपुणेनाभ्युपायेन नगरं वारणावतं” ।
“निपुणेनाभ्युपायेन यद्ब्रवीमि तथा कुरु” ॥
इति महाभारते ।)

**अभ्युपायनं**, क्ली, (अभि + उप + इण् + ल्युट् ।) उपा-

यनं । उपढौकनद्रव्यं । यथा, --
“तावानय समं गोपैर्नन्दाद्यैः साभ्युपायनैः” ।
इति श्रीभागवतं ॥

**अभ्युपेतं**, त्रि, (अभि + उप + इण् + कर्म्मणि क्तः ।)

स्वीकृतं । उपगतं । यथा, --
“अहमभ्युपेतस्त्वामर्थिभावादिति मे विषादः” ।
इति रघुः ॥ (अङ्गीकृतः ।
“मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः” ।
इति मेघदूते ।)

**अभ्युषः**, पुं, (अभ्युष्यते अग्निना दह्यतेऽसौ अभि +

उष् + बाहुल्यात् कर्म्मणि कः ।) अभ्यूषः ।
पौलिः । इत्यमरटीकायां भरतः ॥

**अभ्यूषः**, पुं, (अभि + ऊष + बाहुल्यात् कर्म्मणि कः ।)

पाकावस्थागतकलायादिः । आरब्धपाकयवसर्ष-
पादिः । वह्निना ईषद्दग्धः चुट चुट शब्दवान् इति
केचित् ॥ दरदग्ध इति श्रीधरः ॥ तत्पर्य्यायः ।
आपक्कं २ पौलिः ३ । इत्यमरः ॥ अभ्युषः ४

र्थोपधः । अभ्रति । इति दुर्गादासः ।

**अभ्रं**, क्ली, (अपोबिभर्त्ति इति अप + भृ + क ।)

मेघः । आकाशं । स्वर्णं । अभ्रकधातुः । इति
मेदिनी ॥ उपधातुविशेषः । तस्योत्पत्तिनाम-
लक्षणगुणाः ।
“पुरा बधाय वृत्रस्य वज्रिणा वज्रमुद्धृतं ।
विस्फुलिङ्गास्ततस्तस्य गगने परिसर्पिताः ॥
ते निपेतुर्घनघ्वानाच्छिखरेषु महीभृतां ।
तेभ्य एव समुत्पन्नं तत्तद्गिरिषु चाभ्रकं ॥
तद्वज्रं वज्रजातत्वादभ्रमभ्ररवोद्भवात् ।
गगनाद्विलितं यस्माद्गगनञ्च ततो मतं ॥
विप्रक्षत्त्रियविट्शूद्रभेदात्तत् स्याच्चतुर्व्विधं ।
क्रमेणैव सितं रक्तं पीतं कृष्णञ्च वर्णतः ॥
प्रशस्यते सितं तारे रक्तं तत्तु रसायने ।
पीतं हेमनि कृष्णन्तु गदेषु भूतयेऽपि च ॥
पिनाकं दर्दुरं नागं वज्रञ्चेति चतुर्विधं ।
मुञ्चत्यग्नौ विनिःक्षिप्तं पिनाकं दलसञ्चयं ॥
अज्ञानाद्भक्षणात्तस्य महाकुष्ठप्रदायकं ।
दर्दुरं त्वग्निनिःक्षिप्तं कुरुते दर्दुरध्वनिं ॥
गोलकान् बहुशः कृत्वा स स्यान्मृत्युप्रदायकः ।
नागन्तु नागवद्वह्नौ फुत्कारं परिमुञ्चति ॥
तद्भक्षितमवश्यन्तु विदधाति भगन्दरं ।
वज्रन्तु वज्रवत्तिष्ठेत्तन्नाग्नौ विकृतिं व्रजेत् ॥
सर्व्वाभ्रेषु वरं वज्रं व्याधिवार्द्धक्यमृत्युहृत् ।
अभ्रमुत्तरशैलोत्थं बहुसत्वं गुणाधिकं ॥
दक्षिणाद्रिभवं स्वल्पसत्वमल्पगुणप्रदं” ॥ * ॥
मारिताभ्रगुणाः ।
“अभ्रं कषायं मधुरं सुशीत-
मायुष्करं धातुविवर्द्धनञ्च ।
हन्यात्त्रिदोषं व्रणमेहकुष्ठं
प्लीहोदरग्रन्थिविषकृमींश्च ॥”
“रोगान् हन्ति द्रढयति वपुर्वीर्य्यवृद्धिं विधत्ते
तारुण्याढ्यं रमयति शतं योषितां नित्यमेव ।
दीर्घायुष्कान् जनयति सुतान्विक्रमैः सिंहतुल्यान्
मृत्योर्भीतिं हरति सततं सेव्यमानं मृताभ्रं” ॥ * ॥
अशोधिताभ्रदोषाः ।
“पीडां विधत्ते विविधां नराणां
कुष्ठं क्षयं विदञ्च शोथं ।
हृत्पार्श्वपीडाञ्च करोत्यशुद्ध-
मभ्रं ह्यसिद्धं गुरुतापदं स्यात्” ॥ * ॥
अस्य शोधनविधिर्यथा ।
“कृष्णाभ्रकं धमेद्वह्नौ ततः क्षीरे विनिःक्षिपेत् ।

घृते जीर्णे तदभ्रन्तु सर्व्वयोगेषु योजयेत्” ॥ * ॥
तत्र धान्याभ्रस्य विधिः ।
“पादांशसलिलं युक्तमभ्रं बद्ध्वाथ कम्बले ।
त्रिरात्रं स्थापयेन्नीरे तत् क्लिन्नं मर्दयेत् करैः ॥
कम्बलाद्गलितं सूक्ष्मं बालुकारहितञ्च यत् ।
तद्धान्याभ्रमिति प्रोक्तमभ्रमारणसिद्धये” ॥
इति भावप्रकाशः ॥

**अभ्रंलिहः**, पुं, (अभ्रं लेढि स्पृशति, अभ्र + लिह

कर्त्तरि खश्, मुमागमः ।) वायुः । इति पाणिनिः ॥
(मेघस्पर्शी । अत्युच्चः ।
“अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः” ॥
इति मेघदूते ।)

**अभ्रकं**, क्ली, (अभ्र गतौ + ण्वुल्, तस्य अक ।)

स्वनामख्यातधातुः । आभ इति भाषा । तत्प-
र्य्यायः । गिरिजं २ अमलं ३ । इत्यमरः ॥
गिरिजामलं ४ गौर्य्यमिलं ५ । इति स्वामी ॥
गिरिजावीजं ६ गरजध्वजं ७ । इति वाचस्पतिः ॥
शुभ्रं ८ । इति जटाधरः ॥ घनं ९ व्योम १०
अब्दं ११ । इति रत्नमाला ॥ अभ्रं १२ भृङ्गं १३
अम्बरं १४ अन्तरीक्षं १५ आकाशं १६ बहु-
पत्रं १७ खं १८ अनन्तं १९ गौरीजं २० गौरी-
जेयं २१ । इति राजनिर्घण्टः ॥ अस्य गुणाः ।
रसायनत्वं । स्निग्धत्वं बलवर्णाग्निवर्द्धकत्वञ्च ।
इति राजवल्लभः ॥ अपि च । गुरुत्वं । हिमत्वं ।
बल्यत्वं । कुष्ठमेहत्रिदोषनाशित्वञ्च ॥ * ॥
तच्चतु-
र्व्विधं यथा, --
“श्वेतं पीतं लोहितं नीलमभ्रं
चातुर्व्विध्यं चातिभिन्नक्रियार्हं ।
श्वेतं तारे काञ्चने पीतरक्ते
नीलं व्याधिव्यग्रमग्र्यं गुणाढ्यं” ॥
इति मदनविनोदः ॥
(“अभ्रकस्तव वीजन्तु मम वीजन्तु पारदः ।
अनयोर्मेलनं देवि मृत्युदारिद्र्यनाशनं” ॥
इति चक्रदत्तः ।)

**अभ्रङ्कषः**, पुं, (अभ्रमाकाशं कषति गच्छति धातूना-

मनेकार्थत्वात् अभ्र + कष् + खच् + मुम् ।) वायुः
।
इति पाणिनिः ॥ (मेघस्पर्शी । अत्युन्नतः । अभ्रं-
लिहः ।

अभ्योषः ५ । इति भरतः ॥ * ॥ पोलिका । रोटी इति प्रसिद्धा । अस्या गुणाः । मधुरत्वं । गुरुत्वं । रोचकत्वं । बलकारित्वं । श्लेष्मवृद्धिजनकत्वं । पित्त-
रक्तप्रदायित्वञ्च ॥ * ॥ अङ्गारकृतायास्तस्या गुणाः ।
अग्निदीपनत्वं । वायुवृद्धिकारित्वं । लघुत्वं । बलकारित्वञ्च ।
“सा स्नेहयुक्ता चेत् घनाघनगुणान्विता” ।
इति राजनिर्घण्टः ॥ ईषत्पक्कं । यथा, --
“आपक्कमवपक्कं स्यादाभ्युषः पौलिपौलिके ।
अभ्यूषोऽभ्यौष इत्येते ईषत्पक्कयवादिषु” ॥
इति शब्दरत्नावली ॥

**अभ्योषः**, पुं, (अभ्युष्यते अग्निना दह्यतेऽसौ, अभि

+ ऊष + कर्म्मणि घञ् ।) अभ्यूषः । इत्यमरटी-
कायां भरतः ॥

**अभ्र** गत्यां । इति कविकल्पद्रुमः ॥ ओष्ठवर्गचतु-

भिन्नपत्रन्तु तत् कृत्वा तण्डुलीयाम्लजैर्द्रवैः ॥
भावयेदष्टयामं तदेवमभ्रं विशुध्यति” ॥ * ॥
तस्य मारणं यथा ॥
“कृत्वा धान्याभ्रकं तच्च शोधयित्वाथ मर्दयेत् ।
अर्कक्षीरैर्दिनं खल्ले चक्राकारञ्च कारयेत् ॥
वेष्टयेदर्कपत्रैश्च सम्यग्गजपुटे पचेत् ।
पुनर्म्मर्द्यं पुनः पाच्यं सप्तवारान् पुनः पुनः ॥
ततो वटजटाक्वाथैस्तद्वद्देयं पुटत्रयं ।
म्रियते नात्र सन्देहः प्रयोज्यं सर्व्वकर्म्मसु ॥
तुल्यं धृतं मृताभ्रेण लौहपात्रे विपाचयेत् ।

“सर्व्वङ्कषयशःशाखं रामकल्पतरुं कपिः ।
आदायाभ्रङ्कषं प्रायान्मङ्गलं फलशालिनं” ॥
इति भट्टिकाव्ये ।)

**अभ्रपिशाचः**, पुं, (अभ्रे आकाशे पिशाच इव । तस्य

छायात्मकत्वेन नीलवर्णतया पिशाचतुल्यत्वं ।)
राहुग्रहः । इति त्रिकाण्डशेषः ॥

**अभ्रपिशाचकः**, पुं, (अभ्रे पिशाच इव इवार्थे कन् ।)

राहुग्रहः । इति हारावली ॥

**अभ्रपुष्पं**, क्ली, (अभ्रं मेघ एव पुष्पं जलरूपफलस्य

निदानं यस्य तत्, तस्य मेघप्रभवत्वात् तथात्वं ।)
जलं । यथा, --
“अभ्रपुष्पमपि दित्सति शीतं
सार्थिना विमुखता यदभाजि” । इति नैषधं ॥

**अभ्रपुष्पः**, पुं, (अभ्रमिव शुभ्रं पुष्पं यस्य सः ।)
वेतसवृक्षः । इत्यमरः ॥

**अभ्रमः**, त्रि, (न भ्रमः भ्रान्तिः, नञ्समासः ।)
(भ्रमाभावः ।) भ्रमरहितः । अभ्रान्तः । नास्ति भ्रमो यस्येति बहुव्रीहिः ॥

**अभ्रमांसी**, स्त्री, (अभ्रमिव जटायां मांसमस्याः
सा गौरादीत्वात् ङीष् ।) आकाशमांसीलता । इति राजनिर्घण्टः ॥ (जटामांसी ।)

**अभ्रमातङ्गः**, पुं, (अभ्रस्य मेघस्य अधिष्ठाता
मातङ्गः, शाकपार्थिवादित्वात् समासः, मध्यपद-लोपश्च ।) ऐरावतः । इन्द्रहस्ती । इत्यमरः ॥ (स च समुद्रजातः पूर्ब्बदिङ्नागः ।)

**अभ्रमाला**, स्त्री, (अभ्राणां माला श्रेणी, षष्ठीतत्-
पुरुषः ।) मेघश्रेणी । मेघसमूहः । इति हला-युधः ॥ (घनघटा । कादम्बिनी ।)

**अभ्रमुः**, स्त्री, (न भ्राम्यति, भ्रम + उञ्, नञ्-
समासः, मान्तत्वात् वृद्ध्यभावः ।) ऐरावतस्त्री । सा पूर्ब्बदिघस्तिनी । इत्यमरः ॥

**अभ्रमुप्रियः**, पुं, (अभ्रमोः पूर्ब्बदिखस्तिन्याः प्रियः ।)
ऐरावतहस्ती । इति हेमचन्द्रः ॥ (अभ्रमातङ्गः ।)

**अभ्रमुवल्लभः**, पुं, (अभ्रमोः वल्लभः प्रियः ।) ऐरा-
वतहस्ती । इत्यमरः ॥

**अभ्ररोहं**, क्ली, (अभ्रात् मेघात् रोहः जन्म यस्य
तत्, तस्य मेघशब्दोत्पन्नत्वात् तथात्वं ।)
वैदूर्य्य-
मणिः । इति राजनिर्घण्टः ॥

**अभ्रवाटिकः**, पुं, (अभ्रस्येव वाटी वक्रता यस्याः सा,
समासान्तः कः, ह्रस्वः ।) आम्रातकः । इति राजनिर्घण्टः ॥

**अभ्रान्तः**, त्रि, (भ्रम् + कर्त्तरि क्तः, नञ्समासः ।)
भ्रान्तिशून्यः । यथा ।
“आप्ताः शिष्टा विबुद्धास्ते तेषां वाक्यमसशयम्”
इत्यत्र “यतोऽभ्रान्तबुद्धयः” । इति चरकटीका-कारः ॥ (यथार्थज्ञानयुक्तः । भ्रमणशून्यः । स्थिरश्च ।)

**अम** क् रोगे । क आमयति व्याधिर्लोकं । इति
दुर्गादासः ॥

**अम** गतौ । भजने । शब्दे । अमति । इति दुर्गा-
दासः ॥

**अम्**, व्य, (अम् + क्विप्, स्वरादित्वादव्ययत्वमस्य ।)
शीघ्रता । अल्पं । इति व्याडिः ॥

**अमं**, त्रि, (अम् + भावे घञ्, मान्तत्वान्न वृद्धिः,
अमो रोगो विद्यते अस्मात्, अर्शआद्यच्, प्रायेण अपक्वफलभक्षणेनरोगोत्पत्ते स्तस्य तथात्वं ।)
अपक्वफलादि । इति शब्दरत्नावली ॥ रोगे पुं ।
इति मुग्धबोधव्याकरणं ॥

**अमङ्गलं**, क्ली, (नास्ति मङ्गलं शुभं यस्मात् तत् ।)
अशुभसूचकं । तद्यथा --
“सार्द्धं सैन्यसमूहैश्च वाद्यभाण्डैरसङ्ख्यकैः ।
ददर्शामङ्गलं राजा पुरो वर्त्मनि वर्त्मनि ॥
ययौ तथापि समरं न जगाम गृहं पुनः ।
मुक्तकेशीं छिन्ननासां रुदन्तीञ्च दिगम्बरां ॥
कृष्णवस्त्रपरीधानामपरां विधवामपि ।
मुखदुष्टां योनिदुष्टां व्याधियुक्ताञ्च कुट्टिनीं ।
पतिपुत्त्रविहीनाञ्च डाकिनीं पुंश्चलीमहो ।
कुम्भकारं तैलकारं व्याधं सर्पोपजीविनं ॥
कुचेलमतिरुक्षाङ्गं नग्नं काषायवासिनं ।
अङ्गविक्रयिणञ्चैव कन्याविक्रयिणं तथा ॥
चितां दग्धशवं भस्म निर्व्वाणाङ्गारमेव च ।
सर्पक्षतनरं सर्पं गोधाञ्च शशकं विषं ॥
श्राद्धपात्रञ्च पिण्डञ्च मोटकं वानरं तथा ।
देवलं वृषवाहञ्च शूद्रश्राद्धान्नभोजिनं ॥
शूद्रान्नपाचकं शूद्रयाजकं ग्रामयाजकं ।
कुशपुत्तलिकाञ्चैव शवदाहनकारिणं ॥
शून्यकुम्भं भग्नकुम्भं तैलं लवणमस्थि च ।
कार्पासं कच्छपं चूर्णं कुक्कुरं शब्दकारिणं ॥
दक्षिणे च शृगालञ्च कुर्व्वन्तं भैरवं रवं ।
कपर्द्दकञ्च क्षौरञ्च छिन्नकेशं नखं मलं ॥
कलहञ्च विलापञ्च विलापकारिणं जनं ।
अमङ्गलं वदन्तञ्च रुदन्तं शोककारिणं ॥
मिथ्यासाक्षिप्रदातारं चौरञ्च नरघातिनं ।
पुंश्चलीपतिपुत्त्रञ्च पुंश्चल्योदनभोजिनं ॥
देवतागुरुविप्राणां वस्तुवित्तापहारिणं ।
अग्रदानिब्राह्मणञ्च तन्त्रमन्त्रोपजीविनं ॥
वैद्यञ्च रक्तपुष्पञ्चैवौषधं तुषमेव च ।
कुवार्त्तां मृतवार्त्ताञ्च विप्रशापञ्च दारुणं ॥
दुर्गन्धवातं दुःशब्दं राजा संप्राप वर्त्मनि ।
मनश्च कुत्सितं प्राणाः क्षुभिताश्च निरन्तरं ॥
वामाङ्गस्पन्दनं देहजाड्यं राज्ञो बभूव ह ।
तथापि राजा निःशङ्को दर्शं दर्शममङ्गलं” ॥
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ३५ अध्यायः ॥

**अमङ्गलः**, पुं, (नास्ति मङ्गलं यस्य) एरण्डवृक्षः ॥
इति शब्दचन्द्रिका ॥

**अमङ्गलः**, त्रि, (न मङ्गलः, नञ्समासः ।) मङ्गल-
शून्यः । अकुशलः । यथा । “अमङ्गलं रूपमिदं दधत् कथं” । इति विद्वन्मोदतरङ्गिणी ॥ मङ्गला-भावे क्ली । यथा । “अमङ्गलाभ्यासरतिं विचिन्त्य तं” । इति कुमारसम्भवः ॥

**अमङ्गल्यः**, त्रि, (मङ्गलाय हितः, मङ्गल + यत् ततो-
नञ्समासः ।) अमङ्गलजनकः । यथा, --
“अमङ्गल्यं शीलं तव भवतु नामैवमखिलं” ।
इति पुष्पदन्तः ॥ (अशुभकरः । अशिवसूचकः
“देवि ! मैवममङ्गल्यवादिनी भव” । इति नागा-नन्दः ।)

**अमण्डः**, पुं, (नास्ति मण्डो भक्तावशिष्टं भूषा वा
यस्य सः ।) एरण्डवृक्षः । इत्यमरः ॥ (मण्डहीन-भक्तादि । भूषणहीनश्च ।)

**अमतः**, पुं, (अम् रोगे + अतच्, अथवा मन् +
भावे क्तः, नास्ति मतमभिप्रायो यत्र सः । अथवा मन् + कर्म्मणि क्तः, नञ्समासः ।) रोगः । मृत्युः । कालः । इत्युणादिकोषः ॥

**अमतिः**, पुं, (अम् + अति ।) कालः । चन्द्रः । इति
मेदिनी ॥ दुष्टे त्रि । इति शब्दरत्नावली ॥
“अमतिः पुंसि काले च दुष्टे हिमकरेऽपि च” ।
इति शब्दरत्नावली । अबुद्धिः । अज्ञानं । अन-भिसन्धिः ।
“भुक्त्वातोऽन्नतमस्यान्नममत्या क्षपणं त्र्यहं ।
मत्या भुक्त्वा चरेत् कृच्छ्रं रेतोविण्मूत्रमेव च” ॥
इति मनुः ।)

**अमत्रं**, क्ली, (अमति भुङ्क्तेऽन्नमत्र, अम् भोजने
आधारे अत्रन् ।) पात्रं । अस्य भाषा अमित्ति ।

**अभ्रिः**, स्त्री, (अपो बिभर्त्ति, नौकामार्ज्जनार्थं धार-

यति, अप् + भृ + कर्त्तरि किः ।) काष्ठकुद्दालः । नौकामार्ज्जनार्थकुद्दालाकृतिकाष्ठं । इत्यमरः ॥ (तीक्ष्णाग्रो लोहदण्डः ।
"अभ्रिं कार्ष्णायसीं दद्यात् सर्पं हत्वाद्विजोत्तमः" ।
इति मनुः ।)

**अभ्रियः**, त्रि, (अभ्रे भवः, अभ्र + घ तस्य इय ।)

अभ्रोद्भववस्तु । तत्पर्य्यायः । मेघभवः २ । इत्य-मरः । (घनसम्भूतः । विद्युत् । मेघजलं । वज्रं । कुलिशं ।)

**अभ्री**, स्त्री, (अभ्रति मलं गच्छति अभ्र + इन्,

कृदिकारादिति पक्षे ङीष् ।) काष्ठकुद्दालः । इत्यमरटीकायां भरतः ॥

**अभ्रेषः**, पुं, (भ्रेष् चलने + घञ्, नञ्समासः ।)

उचितः । न्यायः । इत्यमरः ॥

**अभ्रोत्थं**, क्ली, (अभ्रात् मेघात् उत्तिष्ठति उद्भवति,

अभ्र + उत् + स्था + क ।) वज्रं । इति त्रिकाण्ड-
शेषः ॥

दत्तापहारिणं दस्युं हिंसकं सूचकं खलं ॥
पितृमातृविरक्तञ्च द्विजाश्वत्यविधातिनं ।
सत्यघ्नञ्च कृतघ्नञ्च स्थाप्यापहारिणं जनं ॥
विप्रद्रोहं मित्रद्रोहं क्षतं विश्वासघातकं ।
गुरुदेवद्विजानाञ्च निन्दकं स्वाङ्गघातकं ॥
जीवानां घातकञ्चैव स्वाङ्गहीनञ्च निर्द्दयं ।
व्रतोपवासहीनञ्च दीक्षाहीनं नपुंसकं ॥
गलितव्याधिगात्रञ्च काणं वधिरमेव च ।
पुक्कसं छिन्नलिङ्गञ्च सुरामत्तं सुरां तथा ॥
क्षिप्तं वमन्तं रुधिरं महिषं गर्द्दभं तथा ।
मूत्रं पुरीषं श्लेष्माणं कन्थिनं नृकपालिनं ॥
झञ्झावातं रक्तवृष्टिं वात्याञ्च वृक्षपातनं ।
वृकञ्च शूकरं गृध्रं श्येनं कङ्कञ्च भल्लुकं ॥
पाशञ्च शुष्ककाष्ठञ्च बायसं गन्धकं तथा ।

इत्यमरः ॥ (भाजनं । स्थानं । भोजनपात्रं ।)

**अमत्सरः**, पुं, अन्यशुभद्वेषाभावः । अत्र नञ्समासः ॥

मात्सर्य्यरहिते त्रि । अत्र बहुव्रीहिसमासः ॥

**अमनिः**, स्त्री, (अमति यात्यत्र, अम + आधारे

अनि ।) वर्त्म । पन्थाः । इत्युणादिकोषः ॥

**अमन्दः**, पुं, (न मन्दः विरोधे नञ्समासः ।) वृक्षः ।

इति शब्दचन्द्रिका ॥ मन्दभिन्ने त्रि । यथा ।
"पृष्ठभ्राम्यदमन्दमन्दरगिरिग्रावाग्रकण्डूयना-न्निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पान्तु वः ।" इति श्रीभागवतं ॥ (भीषणः । घोरः । अतिगभीरः ।
"आगुञ्जद्गिरिकुञ्जकुञ्जरघटाविस्तीर्णकर्णज्वरम् ज्यानिर्घोषममन्ददुन्दुभिरवैराध्मातमुज्जृम्भयन्" । इति उत्तरचरिते । प्रचुरः । बहुलः । अनल्पः ।

:"क्वणत्कनककिङ्किणीझणझणायितस्यन्दनै-

रमन्दमददुर्द्दिनद्विरदवारिदैरावृतः" ॥

इति उत्तरचरिते । "आनन्दममन्दमिमं कुवलय-

दलनोचने ददासि त्वं" । इति काव्यप्रकाशः ।

अजडः । कुशलः । उद्योगी ।)

**अममः**, पुं, (नास्ति ममेत्यभिमानो गृहादिषु यस्य ।)

भाविजिनविशेषः । इति हेमचन्द्रः ॥ ममताशून्ये

त्रि । (संसारमायारहितः । विषयासक्तिशून्यः ।

"अप्रयत्नः सुखार्थेषु ब्रह्मचारी धराशयः ।

शरणेव्वममश्चैव वृक्षमूलनिकेतनः" ॥

इति मनुः ।)

**अमरः**, पुं, (मृ + कर्त्तरि अच् नञ्समासः ।) देवः ।

इत्यमरः ॥

("विबभौ देवशङ्काशो वज्रपाणिरिवामरैः" ।

इति महाभारते ।

"फलं कर्म्मायत्तं किममरगणैः किञ्च विधिना" ।

इति शान्तिशतके ।)

कुलिशवृक्षः । अस्थिसंहारवृक्षः ॥ इति मेदि-

नी ॥ पारदः । इति राजनिर्घण्टः ॥ मृत्युरहि-

ते त्रि । यथा, --

"अजरामरवत् प्राज्ञो विद्यामर्थञ्च चिन्तयेत्" ।

इति हितोपदेशः ॥ अमरसिंहः । स चादिशा-

ब्दिकः नामलिङ्गानुशासननामककोषकारः विक्र-

मादित्यराजसभीयनवरत्नान्तर्गतरत्नविशेषश्च ।

यथा, --

"इन्द्रश्चन्द्रः काशकृस्ना पिषली शाकटायनः ।

पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः ॥

इति कविकल्पद्रुमः ॥

"धन्वन्तरिक्षपणकामरसिंहशङ्कु-

वेतालभट्टघटकर्परकालिदासाः ।

ख्यातो वराहमिहिरो नृपतेः सभायां

रत्नानि वै वररुचिर्नव विक्रमस्य" ॥

इति नवरत्नं ॥ स एव बौद्धमतावलम्बीति केचित् ॥

**अमरजः**, पुं, (अमर इव जायते, अमर + जन् +

डः ।) दुष्खदिरवृक्षः । इति राजनिर्घण्टः ॥

(कालस्कन्धः । पत्रतरुः ।)

**अमरदारुः**, पुं, (अमराणां दारुः, षष्ठीतत्पुरुषः ।)

देवदारुवृक्षः । इति राजनिर्घण्टः ॥

**अमरद्विजः**, पुं, (अमरपूजकोद्विजः शाकपार्थिवादि-

समासः ।) दूर्व्वा । गुडूची । इन्द्रपुरी । स्थूणा ।

जरायुः । इति मेदिनी ॥ इन्द्रवारुणीवृक्षः ॥

वटी-

वृक्षः । महानीलीवृक्षः । गृहकन्या । घृतकुमारी

इति ख्याता । इति राजनिर्घण्टः ॥ नाभिनाला ।

इति त्रिकाण्डशेषः ॥

**अमराद्रिः**, पुं, (अमराणां देवानामद्रिः पर्ब्बतः,

देवालयत्वात् तस्य तथात्वं ।) सुमेरुः । इति

जटाधरः ॥

**अमरावती**, स्त्री, (अमरा विद्यन्तेऽस्यां, अमर +

मतुप् मस्थाने व दीर्घश्च ।) इन्द्रनगरी ।

इत्यमरः ॥

अमराः सन्ति अस्यामिति मोङ्गझपादिति वतुः

नाम्न्यस्त्यर्थे इति दीर्घः । इति भरतः ॥ तत्प-

र्य्यायः । पूषभासा २ देवपूः ३ । इति जटाधरः

॥

महेन्द्रनगरी ४ अमरा ५ सुरपुरी ६ । इति

शब्दरत्नावली ॥ तद्वर्णनं यथा । शिवशर्म्मोवाच

।

"रमयन्ती मनोऽतीव केयं कस्येयमीशितुः ।

नयनानन्दसन्दोहदायिनी पूरनुत्तमा" ॥

गणावूचतुः ।

"शिवशर्म्मन् महाभाग सुतीर्थफलितद्रुम ।

लोकोऽत्र रमते विप्र सहस्राक्षपुरी त्वियं ॥

तपोबलेन महता निर्म्मिता विश्वकर्म्मणा ।

दिवापि कौमुदी यस्याः सौधश्रेणीश्रियं श्रयेत् ॥

यदा कलानिधिः क्वापि दर्शेऽदृश्यत्वमावहेत् ।

तदा स्वप्रेयसीं ज्योत्स्नां सौधेष्वेषु निगूहयेत् ॥

यदच्छभित्तौ वीक्ष्य स्वमन्ययोषिद्विशङ्किता ।

मुग्धानाशु विशेच्चित्रमपि स्वां चित्रशालिकां ॥

हर्म्येषु नीलमणिभिर्न्निर्म्मितेष्वत्र निर्भयं ।

स्वनीलिमानमाधाय तमोऽहःस्वपि तिष्ठति ॥

चन्द्रकान्तशिलाजालस्रुतमत्रामलं जलं ।

तत्र चादाय कलसैर्न्नेच्छन्त्यन्यजलं जनाः ॥

कुविन्दा न च सन्त्यत्र न च ते पश्यतो हराः

चेलान्यलङ्कृतीरत्र यतः कल्पद्रुमोऽर्पयेत् ॥

गणका नात्र विद्यन्ते चिन्ताविद्याविशारदाः ।

यतो जानाति सर्व्वेषां चिन्तां चिन्तामणिर्द्रुतं ॥

सूपकारा न सन्त्यत्र रसकर्म्मविचक्षणाः ।

दुग्धे सर्व्वरसानेका कामधेनुरतोऽनिशं ॥

कीर्त्तिरुच्चैःश्रवा यस्य सर्व्वतो वाजिराजिषु ।

सप्तापि लोकपाला ये त एनं समुपासते ।

नारदाद्यैर्मुनिवरैरयमाशीर्भिरीड्यते ॥

एतत्स्थैर्य्येण सर्व्वेषां लोकानां स्थैर्य्यमिष्यते ।

पराजयान्महेन्द्रस्य त्रैलोक्यं स्यात् पराजितं ॥

मनुजा दनुजा दैत्यास्तपस्यन्त्युग्रसंयमाः ।

गन्धर्व्वयक्षरक्षांसि महेन्द्रपदलिप्सवः ॥

सगराद्या महीपाला वाजिमेधविधायकाः ।

कृतवन्तो महायत्नं शक्रैश्वर्य्यं जिघृक्षवः ॥

निष्प्रत्यूहं क्रतुशतं यः कश्चित् कुरुतेऽवनौ ।

जितेन्द्रियोऽमरावत्यां स प्राप्नोति पुलोमजां ॥

असमाप्तक्रतुशता वसन्त्यत्र महीभुजः ।

ज्योतिष्टोमादिभिर्यागैर्ये यजन्त्यपि ते द्विजाः ॥

तुलापुरुषदानादिमहादानानि षोडश ।

ये यच्छन्त्यमलात्मानस्ते लभन्तेऽमरावतीं ॥

अक्लीववादिनो धीराः संग्रामेष्वपराङ्मुखाः ।

विक्रान्ता वीरशयने तेऽत्र तिष्ठन्ति भूभुजः ॥

इत्युद्देशात् समाख्याता महेन्द्रनगरीस्थितिः ।

यायजूका वसन्त्यत्र यज्ञविद्याविशारदाः ॥

एतस्या दक्षिणे भागे येयं दृश्येत पूः शुभा ।

इमामर्च्चिष्मतीं वीक्ष्य वीतिहोत्रपुरीं शुभां" ॥

इति स्कान्दे काशीखण्डे १० अध्यायः ॥

**अमर्त्यः**, पुं, (न मर्त्यः, इति नञ्समासः ।) देवता,

इत्यमरः ॥ (मरणधर्म्मरहितः । अक्षयः । अवि-

नश्वरः ।)

**अमर्त्यभुवनं**, क्ली, (अमर्त्यानां देवानां भुवनं वास-

स्थानं ।) स्वर्गः । इति हलायुधः ॥

**अमर्षः**, पुं, (मृष + भावे घञ्, नञ्समासः । नास्ति

मर्षः क्रोधो यस्य, त्रि, क्रोधशून्यः ।) क्रोधः ।

इत्यमरः ॥

("कश्चित्पितृबधामर्षात् पुनर्नोत्सादयिष्यति" ।

इति रामायणे । अक्षमा । असहिष्णुता । इष्ट-

घाते असहिष्णुत्वं ।

"यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।

हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः" ॥

इति भगवद्गीता ।)

**अमर्षणः**, त्रि, (मृष् + बाहुल्यात् कर्त्तरि ल्युट्

नञ्समासः ।) क्रोधी । इत्यमरः ॥ (क्रोधनः ।

कोपनस्वभावः । अतिसंक्रुद्धः । प्रक्रोपितः ।

"रघोवरष्टम्भमयेन पत्रिणा

हृदि क्षतोगोत्रभिदप्यमर्षणः" ।

त्वात् समासः, मध्यपदलोपश्च ।) देवलब्राह्मणः । इति त्रिकाण्डशेषः ॥ (देवाजीवः । देवपूजकः ।)

**अमरपुष्पकः**, पुं, (अमरमविशीर्णं पुष्पं यस्य समा-

सान्तः कः ।) काशतृणं । इति रत्नमाला ॥ केश्या ।
इति भाषा ।

**अमरपुष्पिका**, स्त्री, (अमरमशीर्णं पुष्पं यस्याः सा-

जातित्वात् स्त्रियां ङीप्, स्वार्थे कन् ।) अधः-
पुष्पीवृक्षः । इति रत्नमाला ॥

**अमररत्नं**, क्ली, (अमराणां रत्नमिव ।) स्फटिकः ।

इति राजनिर्घण्टः ॥

**अमरवल्लरी**, स्त्री, (अमरा छेदनेऽपि न म्रियमाणा

वल्लरी वल्ली ।) आकाशवल्ली । इति वैद्यकं ॥

**अमरा**, स्त्री, (न म्रियते मृ + कर्त्तरि अच्, नञ्-

रत्नमुच्चैःश्रवाश्चात्र हयानां पौरुषाधिकः ॥
ऐरावतो दन्तिराजश्चतुर्द्दन्तोऽत्र राजते ।
द्वितीय इव कैलासो जङ्गमः स्फाटिकोज्वलः ॥
तरुरत्नं पारिजातः स्त्रीरत्नं सोर्व्वशी त्विह ।
नन्दनं वनरत्नञ्च रत्नं मन्दाकिनी ह्यपां ॥
त्रयस्त्रिंशत् सुराणां या कोटिः श्रुतिसमीरिता ।
प्रतीक्षते सावसरं सेवायै प्रत्यहं त्विह ॥
स्वर्गेष्विन्द्रपदादन्यन्नविशिष्येत किञ्चन ।
यद्यत् त्रैलोक्यमैश्वर्य्यं न तत्तुल्यमनेन हि ॥
अश्वमेधसहस्रस्य लभ्यं विनिमयेन यत् ।
किन्तेन तुल्यमन्यत् स्यात् पवित्रमथवा महत् ॥
अर्च्चिष्मती संयमनी पुण्यवत्यमलावती ।
गन्धवत्यलकैशी च नैतत्तुल्या महर्द्धिभिः ॥
अयमेव सहस्राक्षस्त्वयमेव दिवस्पतिः ।
शतमन्युरयन्देवो नामान्येतानि नामतः ॥

इति रघुवंशे । असहनः । असहिष्णुः ॥ पर-
कृतापमानादेरसहनशीलः ।
“गत्वा ह्रदे वासुदेवेन सार्द्धं
अमर्षणं धर्षयतः सुतं मे” । इति महाभारते ।
“अमर्षणः शोणितकाङ्क्षया किं
पदा स्पृशन्तं दशति द्विजिह्वः” । इति रघुवंशे ।)

**अमलं**, क्ली, (नास्ति मलं यस्य तत् ।) अभ्रधातुः ।

निर्म्मले त्रि । इति मेदिनी ॥

**अमला**, स्त्री, (नास्ति मलं यस्याः सा, अथवा अम्

+ कलच् स्त्रियां टाप् ।) लक्ष्मीः । इति मेदिनी ॥
सातलावृक्षः । इति राजनिर्घण्टः ॥ भूम्यामलकी ।
इत्यमरः ॥ नाभिनाला । इति त्रिकाण्डशेषः ॥

**अमसः**, पुं, (अम गतिरोगादौ असच् ।) कालः ।
निर्ब्बोधः । रोगः । इत्युणादिकोषः ॥
(“अमसो वालिशे काले रोगभेदे पुमानयं” ।
इति अमरः ।)

**अमा**, व्य,, (न मा + का स्वरादित्वादव्ययं ।) सहार्थं ।
निकटं । इत्यमरः ॥

**अमा**, स्त्री, (न माति क्षयोदयविशेषं परिच्छिनत्ति,
मा + क, नञ्समासः ।) अमावस्या । इति
त्रिकाण्डशेषः ॥ चन्द्रमण्डलस्य षोडशकला ।
तथा
च स्कन्दपुराणीयप्रभासखण्डे ।
“अमा षोडशभागेन देवि प्रोक्ता महाकला ।
संस्थिता परमा माया देहिनां देहधारिणी” ॥
अस्यार्थः । चन्द्रमण्डलस्य षोडशभागेन
परिमिता
आधारशक्तिरूपा क्षयोदयरहितत्वात् नित्या
स्रक्सूत्रवत् सर्व्वानुस्यूता अमा नाम्नी
महाकला
पोक्ता । इति रघुनन्दनः ॥ (सह । सार्द्धं ।
समीपं ।
निकटं । अन्तिकं ।)

**अमांसः**, त्रि, (नास्ति मांसं यस्य सः ।) दुर्ब्बलः ।
इत्यमरः ॥ अल्पमांसयुक्तः । मांसरहितश्च ॥
(कृशः । क्षीणकायः । निरामिषभक्ष्यवस्तु ।)

**अमात्यः**, पुं, (अमा सह विद्यते, अमा + त्यप् ।)
मन्त्री । इत्यमरः ॥ तत्परीक्षा । यथा, --
“शान्तो विनीतः कुशलः सत्कुलीनः
शुभान्वितः ।
शास्त्रार्थतत्त्वगोऽमात्यो भवेद्भूमिभुजामिह” ॥
इति
युक्तिकल्पतरुः ॥
(“भृता हि पाण्डुनामात्या बलञ्च सततं भृतं ।
मान्यानन्यानमात्यांश्च ब्राह्मणाश्च तपोधनान्”
॥
इति महाभारते ।)

**अमाननं**, क्ली, (मन् + णिच् + भावे ल्युट्, नञ्-
समासः ।) अनादरः । न्यक्वारः । इति शब्द-
रत्नावली ॥
(“अतुष्टिदानं कृतपूर्ब्बनाशन-
यस्यां, अमा + वस + अधिकरणे गौरादित्वात्
ङीष् ।) अमावास्या । इति शब्दरत्नावली ॥

**अमावस्या**, स्त्री, (अमा साहित्येन वसतश्चन्द्रार्कौ
यस्यां, अमा + वस + आधारे ण्यत् स्त्रियां टाप् ।)
कृष्णपक्षान्ततिथिः । सा तु चन्द्रमण्डलस्य पञ्च-
दशकलाक्रियारूपा तत्क्रियोपलक्षितः कालो
वा । इति तिथ्यादितत्त्वं ॥ सूर्य्याचन्द्रमसोर्यः परः
सन्निकर्षः सामावस्या । इति गोभिलः ॥ परः
सन्निकर्षश्च उपर्य्यधोभावापन्नसमसूत्रपातन्यायेन
एकराश्यवच्छेदेन सहावस्थानरूपः । इति रघु-
नन्दनः ॥ तत्पर्य्यायः । अमावास्या २ । दर्शः ३
।
सूर्य्येन्दुसङ्गमः ४ । इत्यमरः ॥ पञ्चदशी ५ । इति
स्मृतिः ॥ अमावसी ६ । अमावासी ७ । इति
शब्दरत्नावली ॥ अमामसी ८ । अमामासी ९ ।
इत्यमरटीकायां रमानाथः ॥ सा दृष्टेन्दुकला
सिनीवाली १० । नष्टेन्दुकला च कुहूः ११ ।
इत्य-
मरः ॥ तद्व्यवस्थादि यथा । अथामावस्या । सा
च
प्रतिपद्युता ग्राह्या युग्मात् । वराहपुराणे
चाण्डालशपथे ।
“षष्ठ्यष्टम्यप्यमावास्या उभे पक्षे चतुर्द्दशी ।
अस्नातानां गतिं यास्ये यद्यहं नागमे पुनः” ॥
अतोऽत्र स्नानमावश्यकं । अतोऽत्र जीवत्पितृके-
णापि स्नातव्यम् ।
“अमास्नानं गयाश्राद्धं दक्षिणामुखभोजनं ।
न जीवत्पितृकः कुर्य्यात् कृते च पितृहा भवेत्” ॥
इति वचनं रागप्राप्तस्नाननिषेधकं ।
“भोगाय क्रियते यत्तु स्नानं यादृच्छिकं नरैः ।
तन्निषिद्धं दशम्यादौ नित्यनैमित्तिके न तु” ॥
इति त्रयोदशीप्रकरणोक्तवचनाच्च ॥ * ॥
पैठिनसिः । “न पर्ब्बसु तैलं क्षौरं मांसमभ्युपे-
यात् नामावास्यायां हरितमपि छिन्द्यात्” ।
इति ॥ * ॥
“पुष्ये तु जन्मनक्षत्रे व्यतीपाते च वैधृतौ ।
अमायाञ्च नदीस्नानं पुनात्यासप्तमं कुलं” ॥
अत्र दहत्याजन्मदुष्कृतमिति ज्योतिषे पाठः ॥ *
॥
व्यासः ।
“अमावास्यां भवेद्वारो यदि भूमिसुतस्य च ।
गोसहस्रफलं दद्यात् स्नानमात्रेण जाह्नवी” ॥
स्नानमन्त्रः ।
“करतोये सदानीरे सरित्श्रेष्ठे सुविश्रुते ।
पौण्ड्रान् प्लावयसे नित्यं पापं हर करोद्भवे” ॥
पौण्ड्रान् देशविशेषान् ॥ * ॥ मरीचिः ।
“मासे नभस्यमावास्या तस्यां दर्भचयो मतः ।
अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः” ॥
अत्र ।
“दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः ।
अयातयामान्येतानि नियोज्यानि पुनः पुनः” ॥
इति गृह्यपरिशिष्टवचनेनैव सिद्धौ श्रावणा-
मावास्याया उपादानं ।
“वार्षिकांश्चतुरो मासान्नाहरेत् कुशमृत्तिकाः ।
आददीत त्वभावेऽपि सद्यो यस्योपयोजनं” ॥
इति संवत्सरप्रदीपधृतशिवरहस्यीयस्यापवादक-
मिति ॥ विद्याकरधृतं ।
“सङ्ग्रहाद्वत्सरं यावत् शुद्धिः स्यादिध्मवर्हिषां ।
ततः परं न गृह्णीयात् जपादौ यज्ञकर्म्मणि” ॥ * ॥
संवत्सरप्रदीपे ।
“अमावास्यान्तु कन्यार्के तीर्थप्राप्तौ तथा नृप ।
कृत्वा श्राद्धं विधानेन दद्यात् षोडशपिण्डकं” ॥
तत्प्रमाणप्रयोगौ षोडशीशब्दे द्रष्टव्यौ ॥ * ॥
अमावास्यायामपि मलमासे श्राद्धाभावमाह
कौथुमिः ।
“संवत्सरातिरेको वै मासो यः स्यात्त्रयोदशः ।
तस्मिंस्त्रयोदशे श्राद्धं न कुर्य्यादिन्दुसंक्षये” ॥
सम्बत्सरप्रदीपे ।
“एकराशिस्थिते सूर्य्ये यदि दर्शद्वयं भवेत् ।
दर्शश्राद्धं तदादौ स्यान्न परत्र मलिम्लुचे” ॥
यत्तु ।
“जातकर्म्मणि यत् श्राद्धं दर्शश्राद्धं तथैव च ।
मलमासेऽपि तत्कार्य्यं व्यासस्य वचनं यथा” ॥
इति व्यासवचनं तत्पिण्डपितृयज्ञाख्यश्राद्धपरं ॥ *
॥
अमावास्याश्राद्धकालमाह छन्दोगपरिशिष्टं ।
“पिण्डान्वाहार्य्यकं श्राद्धं क्षीणे राजनि शस्यते ।
वासरस्य तृतीयांशे नातिसन्ध्यासमीपतः” ॥
पिण्डानां पितॄणां अन्वाहार्य्यं श्राद्धं मासैकतृप्ति-
जनकं यत्तत्तथा । तथा च मनुः ।
“पिण्डानां मासिकं श्राद्धमन्वाहार्य्यं विदुर्बुधाः” ।
राजनि चन्द्रे । शस्यत इत्यनेन क्वचिच्चन्द्रक्षया-
भावेऽपि अमावास्याश्राद्धं सूचितं । एतादृग्-
व्युत्पत्तेः साग्निनिरग्निसाधारणत्वात् वक्ष्यमाण-
कात्यायनोक्तरीत्या क्षीणास्तम्भितावर्द्धमानाभेदः

ममाननं दुश्चरितानुकीर्त्तनं ।
कथाप्रसङ्गेन च नामविस्मृति-
र्विरक्तभावस्य जनस्य लक्षणं” ॥
इति हितोपदेशे ।)

**अमानस्यं**, क्ली, (मानसाय मनसे हितं मानस + यत्,

नञ्समासः ।) दुःखं । पीडा । व्यथा । तद्युक्ते
त्रि । इत्यमरः ॥ आमनस्यं आमानस्यमपि
पाठः ॥

**अमान्यः**, त्रि, (मन् + कर्म्मणि ण्यत्, नञ्समासः ।)

अमाननीयः । अनादृत्यः । मान्यशब्दस्य नञा
समासः ॥

**अमामसी**, स्त्री, (अमा सह सूर्य्येण मासो यस्यां,

गौरादित्वात् ङीष् । पृषोदरादित्वात् ह्रस्वः ।)
अमावस्या । इत्यमरटीकायां रमानाथः ॥

**अमामासी**, स्त्री, (अमा सह सूर्य्येण मासो यस्यां,

गौरादित्वात् ङीष् ।) अमावस्या । इत्यमर-
टीकायां रमानाथः ॥

**अमायिकः**, त्रि, (न + माया + ठन्, तस्य इक ।)

मायारहितः । माया विद्यते यस्य स मायिकः
ततो नञा समासः ॥

**अमावसी**, स्त्री, (अमा साहित्येन वसतश्चन्द्रार्कौ

“सिनीवाली कुहूर्व्वापि यदि सोमदिने भवेत् ।
गोसहस्रफलं दद्यात् स्नानं यन्मौनिना कृतम्” ॥
सिनीवाली चतुर्द्दशीयुक्तामावास्या व्यस्तापि
प्रशस्ता एवमन्यत्रापि वारविशिष्टविधौ न युग्मा-
दरः निरवकाशत्वेन संशयायोगात् । एतच्च मौन-
मरुणोदयकालमारभ्य स्नानपर्य्यन्तं । न तु
स्नान-
कालमात्रे ।
तत्र,
“उच्चारें मेथुने चैव प्रस्रावे दन्तधावने ।
स्नाने भोजनकाले च षट्सु मौनं समाचरेत्” ॥
इति स्कान्देन तस्य सामान्यतः प्राप्तत्वात् ।
उच्चारे
पुरीषोत्सर्गे ॥ * ॥ स्मृतिः ।
“करतोयाजलं प्राप्य यदि सोमयुता कुहूः ।
अरुणोदयवेलायां सूर्य्यग्रहशतैः समा” ॥

साधारणः ॥ * ॥ यत्तु, --
“पितृयज्ञन्तु निर्व्वर्त्त्य विप्रश्चन्द्रक्षयेऽग्निमान् ।
पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यान्मासानुमासिकं” ॥
इति मनुवचनं तत्साग्निः पिण्डपितृयज्ञं निर्व्वर्त्य
मासानुमासिकं प्रतिमासिकं श्राद्धं कुर्व्वीते-
तिक्रमविधायकं । अत्रानुशब्दस्य वीप्सार्थकत्वं ।
तथा च ।
“लक्षणवीप्सेत्थम्भ्रतेष्वभिभगि परिप्रती ।
अनुरेषु सहार्थे च हीने उपश्च कथ्यते” ॥
चन्द्रक्षयेऽमावास्यायां न तु कात्यायनोक्तक्षये

:तथात्वे वर्द्धमानादौ प्रतिमासानुपपत्तेः । एवमेव

श्राद्धविवेकः । अतएव तत्रैवामावास्याव्यतिरिक्त-कृष्णपक्षविहितपार्ब्बणश्राद्धे ययास्तमिति वचनात् व्यवस्थेत्युक्तं । तत्र
साग्निकर्त्तव्यत्वाविशेषिता-
मावास्याव्यतिरेकाभिधानात् क्षीणादिभेदेन व्यवस्था साग्निनिरग्निसाधारणीत्यवगम्यते । एवञ्चामावास्यायां मृताहनिमित्तक औरसक्षेत्रजपुत्र-कर्त्तव्यपार्ब्बणे क्षीयमाणादिना न व्यवस्था किन्तु ययास्तमित्यनेन । एतद्विवृतं मलमासतत्त्वे ॥ * ॥
यत्तु दशममुहूर्त्तस्य मत्स्यपुराणोक्तापराह्णिकत्वेऽपि श्राद्धे तस्य त्यागः । पिण्डपितृयज्ञार्थ एवेति वासरतृतीयांशाभिधानं साग्निपरमेवेति परिशिष्टप्रकाशोक्तं तन्न युक्तं । पूर्ब्वाह्णोवै देवानां मध्यं दिनं मनुष्याणां अपराह्णः पितृणां इति श्रुत्या तन्मुहूर्त्तस्य मनुष्यकर्म्माङ्गत्वेन बोधनादेव श्राद्धे परित्यागः । एतच्छ्रुतिमूलकमेव वासरस्य तृतीयांश इत्युक्तं । वासरस्य तृतीयांशे त्रिधा विभक्तस्य दिनस्य तृतीयभागे नातिसन्ध्यासमीपत इति सन्ध्यासमीपैकमुहूर्त्त आपद्यपि वर्ज्जनीय इत्यर्थः
।
तेन ।
"प्रातःकालो मुहूर्त्तांस्त्रीन् सङ्गवस्तावदेव तु ।
मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्नस्ततः परं ॥
सायाह्नस्त्रिमुहूर्त्रः स्यात् श्राद्धं तत्र न कारयेत् ।
राक्षसी नाम सा वेला गर्हिता सर्व्वकर्म्मसु" ॥
इति मत्स्यपुराणे निषिद्धमुहूर्त्तत्रये आपदि मुहूर्त्तद्वयमभ्यनुज्ञातं अतिशब्दस्वरसात् । "त्रिमुहूर्त्तापि कर्त्तव्या पूर्ब्बा दर्शा च बह्वृचैः" । इति हारीतवचनाच्च । तेन पूर्ब्बदिने मुहूर्त्तत्रयमात्रलाभे परदिने वासरस्य तृतीयांशालाभे पूर्ब्बदिने एव श्राद्धं । एतेन नातिसन्ध्यासमीपत इत्यनेन राक्षसीवेलामात्रं निषिध्यत इति मैथिलमतमपास्तं । सर्व्वकर्म्मसु स्नानदानादिष्वपि अनापदीत्यर्थः । इति श्राद्धविवेकः ॥ तेनाशक्तौ तस्यामपि तत्करणं । अतएव पराशरः ।
"दिवाकरकरैः पूतं दिवास्नानं प्रशस्यते ।
अप्रशस्तं निशि स्नानं राहोरन्यत्र दर्शनात्" ॥
इति ॥ * ॥ दर्शद्वैधे कुत्र श्राद्धमित्याह छन्दोगपरिशिष्टे कात्यायनः ।
"यदा चतुर्द्दशीयामं तुरीयमनुपूरयेत् ।
अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते" ॥
चतुर्द्दशीयामं चतुर्द्दशीसम्बन्धिदिनयाममिति तनुदयात् । अतो यद्दिने वासरतृतीयांशे तादृशदर्शलाभस्तत्रैव श्राद्धं । मुहूर्त्तोनतिथेस्तु कर्म्मानर्हत्वान्न द्वैधावसरः । तथा च भविष्ये ।
"व्रतोपवासनियमे घटिकैका यदा भवेत् ।
सा तिथिः सकला ज्ञेया पित्रर्थे चापराह्णिकी" ॥
इति । अत्र च प्रागुक्तजावालिवचनोक्ता मुहूर्त्तात्मिका घटिका ग्राह्या योग्यत्वात् न त्वेकदण्डात्मिका वक्ष्यमाणरौहिणादिग्रहणे तथा दृष्टत्वाच्च । ततश्च पूर्ब्बोक्तद्वैधे
तद्दिवसीयचतुर्द्दश्य-
पेक्षया परदिने अमावास्या क्षीयमाणा न्यूनकालव्यापिनी न तु पूर्ब्बापरदिवसीययावच्चतुर्द्दश्यपेक्षया अनुपस्थितेः । एवं स्तम्भितावर्द्धमानयोरपि । तदैव पूर्ब्बदर्श एव श्राद्धं । स्वोक्तचन्द्रक्षयानुरोधात् । यदा त्रिंशद्दण्डात्मकदिवसे
चतु-
र्द्दश्यधिकचतुर्थयामपूरणे मुख्यापराह्णीयकिञ्चिन्न्यूनमुहूर्त्तलाभस्तदापि तदैवेत्यनेन
चन्द्रक्षयानु-
रोधात् पूर्ब्बदिने श्राद्धं न तु मुख्यापराह्णीयमुहूर्त्तलाभेऽपि परदिने । अत्र चन्द्रक्षयश्चतुर्द्दश्यष्टमयामात् प्रभृति अमावास्यासप्तमयामपर्य्यन्तमिति वक्ष्यते । तदैवेत्येव श्रवणात्तिथिद्वैधे
खण्ड-
विशेषो नियम्यते कर्म्मणि खण्डान्तरव्युदासाय । एवञ्च यत्र पूर्ब्बापरदिने वासरतृतीयांशीयमुख्यापराह्णे मुहूर्त्तोनदर्शलाभस्तत्रापि पूर्ब्बदिन
एव
श्राद्धं वासरतृतीयांशचन्द्रक्षयातिशब्दस्वरसात् । त्रिमुहूर्त्तापीत्यनुरोधाच्च । यत्र तु पूर्ब्बदिने त्रिमुहूर्त्तमात्रव्यापिन्यमावास्या परदिने तृतीयांशमुहूर्त्तव्यापिनी सती क्षीयमाणा तत्र परदिने चन्द्रक्षयाभावेऽपि मुख्यापराह्णलाभात् श्राद्धम् । अन्यथा, --
"यदा चतुर्दशीयामं तुरीयमनुपूरयेत्" ।
इति विशेषाभिधानं व्यर्थं स्यात् ॥ * ॥
अथ "यत्र पूर्ब्बाह्णे श्राद्धं तत्र यदहस्त्वेव चन्द्रमा न दृश्येत ताममावास्यां कुर्व्वीत" इति गोभिलविरोधः । तथाविधचतुर्दशीयुक्तामावास्यायाः सिनीवालीत्वेन प्रातश्चन्द्रदर्शनात् । तत्राह सएव
।
"यदुक्तं यदहस्त्वेव दर्शनं नेति चन्द्रमाः ।
तत्क्षयापेक्षया ज्ञेयं क्षीणे राजनि चेत्यपि" ॥
सूत्रप्राप्ततिथेः सिनीवालीत्वेनैव चन्द्रदर्शनप्राप्तेरित्यत आह स एव ।
"यच्चोक्तं दृश्यमानेऽपि तच्चतुर्दश्यपेक्षया ।
अमावास्यां प्रतीक्षेत तदन्ते वापि निर्व्वपेत्" ॥
दृश्यमानेऽप्येकदेति यदुक्तं तच्चतुर्द्दश्यां श्राद्धाय पूर्ब्बसूत्रममावास्यापदोपादानाच्चन्द्रक्षये सत्यममावास्याविषयं । इदं पुनरित्थम्भतचतुर्द्दशीविषयमिति श्राद्धविवेकः । तत् किममावास्यावच्चतुर्द्दशीत्यत्राह अमावास्यां प्रतीक्षेत उभयतिथिप्राप्तौ श्राद्धायामावास्या प्रतीक्षणीया । यत्र पूर्ब्बदिने दिवा साद्‌र्ध्वमुहूर्त्तमात्रे अमावास्या
पर-
दिने च साद्‌र्ध्वदशममुहूर्त्तमात्रे तत्र चोभयदिने श्राद्धयोग्यामावास्या न प्राप्यते तत्र तदन्त चतुर्द्दश्यन्ते निर्व्वपेत् दद्यात् ॥ * ॥ अत्रैव विषये साग्निनिरग्न्योर्व्विशेषमाह कालमाधवीये जाबालिः ।
"अपराह्णद्वयाव्यापी यदि दर्शस्तिथिक्षये ।
आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूर्म्मता" ॥
आदिशब्दादनुपनीतशूद्रयोर्ग्रहणं ॥ * ॥ क्षयमाह कात्यायनः ।
"अष्टमेऽंशे चतुर्द्दश्याः क्षीणो भवति चन्द्रमाः ।
अमावास्याष्टमांशे च ततः किल भवेदणुः" ॥
चतुर्द्दश्यष्टमे यामे चन्द्रमाः क्षीण चतुर्थभागोनकलावशिष्टो भवति । "अत्रेन्दुराद्यप्रहरेऽवतिष्ठते" इत्यादिस्वरसात् । अमावास्याष्टमे यामे चाणुर्भवति पुनरुत्पद्यते किलेत्यागमवार्त्तायां
तेन
अमावास्यायाः सप्तमे यामे कृत्स्नक्षय इत्यवगम्यते । "ततश्चान्त्यकलावयवनाशोत्पत्तिरेव
क्षयः
सा च सूक्ष्मतायां विनाशेऽप्यस्तीति"
श्राद्धविवेकः ॥
उत्पत्तिराद्यक्षणसम्बन्धः । तेन बिनाशस्यानन्तत्वेऽपि नातिव्याप्तिः ॥ * ॥ अत्र विशेषमाह
सएव ।
"आग्रहायण्यमावास्या तथा ज्यैष्ठस्य या भवेत् ।
विशेषमाभ्यां ब्रुवते चन्द्रचारविदो जनाः" ॥
आभ्यामिति ल्यब्लोपे पञ्चमी इमे प्राप्येत्यर्थः । चन्द्रचारविदो ज्योतिर्व्विदः । अत्र पौर्णमास्यान्तमास इति परिशिष्टप्रकाशः ॥ अत्र तीजं ब्रह्मपुराणीयतिथिकृत्यं । तथा च श्राद्धमधिकृत्य ब्रह्मपुराणं ।

द्दिनस्यामावास्यासम्बन्धेऽपि चतुर्द्दशीनिर्द्देशो-
ऽधिकेन व्यपदेशा भवन्तीति न्यायात् । तेन यदा
अमावास्याचतुर्द्दशीसम्बन्धिदिनस्य चतुर्थं प्रहरं
कृत्स्नं किञ्चिन्न्यूनं वा अनुपूरयेत् अत्रानुपूरये-
दित्यभिधानात् तुरीययामस्य पादोनदण्डद्वया-
न्यूनप्रथममुहूर्त्तस्य बहुकालत्वं प्रतीयते । एतेन
प्रहरत्रयाभ्यन्तरे किञ्चिदधिकप्रहरत्रये वा चतु-
र्द्दशी प्रतीयते । ततश्चोभयवासरीयतृतीयांश-
सम्बन्धिपञ्चधाविभक्तापराह्णमुहूर्त्तयोर्मुहूर्त्तान्न्यून-
दर्शलाभे द्वैधं न त्वेकदिनमात्रे तल्लाभे । तत्र
पूर्ब्बोक्तेन वासरस्य तृतीयांश इत्यनेनैव द्वैधा-

“यदहस्त्वेव चन्द्रमा न दृश्येतताममावास्यां
कुर्व्वीत” इति यद्गोभिलसूत्रं तच्चन्द्रक्षयाभिप्रा-
यिकम् । अन्यथा गोभिलीयतादृशसूत्रान्तरेण
सह पौनरुक्त्यापत्तेः । तस्मात् प्रथमसूत्रं कुहूपरं
तच्च वर्द्धमानापक्षे नियतं । क्षीणास्तम्भितयोस्तु
यथायोग्यमनुसरणीयम् । एवञ्च “यदहस्त्वेव
चन्द्रमा न दृश्येत ताममावास्यां कुर्व्वीत” इति
श्रुतिरेतत्समानार्थकं श्रुत्यन्तरं वा तदपि वर्द्ध-
मानादिपरं न तु कात्यायनवचनात्तत्र क्षयलक्षणा
कल्पतरुप्रभृतिभिरुक्तायुक्ता ।
“श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसि” ।
इति विरोधात् । क्षीण इति कात्यायनेन मया
यत् क्षीणे राजनीत्युक्तं तदपि क्षयाभिप्रायकम् ।
अथैवं दृश्यमानेऽप्येकदा इति यद्गोभिलस्य
सूत्रा-
न्तरं तद्व्यर्थम् । “यदहस्त्वेव” इत्यादि द्वितीय-

“पयोमूलफलैः शाकैः कृष्णपक्ष च सर्व्वदा” ।
अत्र कृष्णपक्षे चतुर्द्दशीव्यतिरिक्तायां यस्यां
कस्या-
ञ्चित् तिथौ श्राद्धविधानादमावास्यापि लभ्यत
इति ॥ * ॥ को विशेषैत्यत्राह स एव ।
“अत्रेन्दुराद्ये प्रहरेऽवतिष्ठते
चतुर्थभागोनकलावशिष्टः ।
तदन्त एव क्षयमेति कृत्स्न-
मेवं ज्योतिश्चक्रविदो वदन्ति” ॥
अत्र मासद्वये अमावास्यायां चतुर्थभागोनकला-
वशिष्टः चतुर्थभागोना या कला तयावशिष्टः
कलाभागत्रयमात्रः सन्नाद्ये प्रहरेऽवतिष्ठते ।
अर्थात्
चतुर्द्दश्यष्टमयामे क्षयारम्भ इति । तदन्त एव
अमावास्यान्तयाम एव क्षयं कृत्स्नमेति । अन्य-

:त्रामावास्या सप्तमयाम इति विशेषः । तेन मार्ग-
शीर्षज्यैष्ठयोरुभयदिने चन्द्रक्षयलाभे यद्यपि यदा
चतुर्द्दशीयाममिति वचनात् पूर्ब्बदिने एव श्राद्धं
प्राप्नोति तथापि तद्वचनं चन्द्रक्षयानुरोधमूल-
मिति । कृत्स्नक्षयानुरोधात् क्षीणायामपि पर-
त्रापराह्णलाभे श्राद्धं अन्यथैतद्विशेषाभिधानं व्यर्थं
स्यात् ॥ * ॥ अत्रापि विशेषान्तरमाह स एव ।
यस्मिन्नब्दे द्वादशैकश्च यव्यस्तस्मिंस्तृतीयया परि-
दृश्यो नोपजायेत । यव्यो मासः । तृतीयया
मात्रया चतुर्थभागोनकलया परिदृश्यश्चन्द्रो न
भवति किन्तु तदधिकन्यूनकलयेति । तेन मल-
मासयुताब्दे अन्यमासवदनयोरपि चतुर्द्दश्यन्तया-
मादि दर्शसप्तमयामपर्य्यन्तं क्षय इति । मलमास-
युताब्दस्तु एकस्मान्मलमासादब्दद्वयानन्तराब्द-
स्तृतीयेऽब्दे मलमासस्यावश्यम्भावादिति ॥ * ॥
चन्द्रक्षयानुरुद्धं क्षीणापक्षमुपसंहरति स एव ।
"एवं चारं चन्द्रमसो विदित्वा
क्षीणे तस्मिन्नपराह्णे च दद्यात्" ।
एवं चारं गतिविशेषं ॥ * ॥ स्तम्भितायां व्यव-
स्थामाह स एव ।
"सम्मिश्रा या चतुर्द्दश्या अमावास्याभवेत् क्वचित् ।
खर्व्वितां तां विदुः केचिदुपेध्वमिति चापरे" ॥
क्षीणायाः पूर्ब्बमुक्तत्वात् । वर्द्ध्वमानायाश्च वक्ष्य-
माणत्वात् अस्य वचनस्य स्तम्भितापरत्वं । खर्व्वितां
नीचां पितृलोकप्रापणानर्हां केचित् यजुर्व्वेदिनः ।
अपरे ऋग्वेदिनः तामेव उपेध्वमुपगच्छत श्राद्धा-
येति शेषः । उपेध्वमित्यत्र गताध्वामितिपाठे
गतः प्राप्तः पितृलोकप्रापणाय अध्वा अनयेति
गताध्वा प्रशस्तेत्यर्थः । "तस्माच्छन्दोगा उभया-
नुरोधादिच्छात उभयादरं कुर्व्वन्ति" इति का-
त्यायनस्वरसः ॥ * ॥ व्यक्तमाह लघुहारीतः ।

ह्णमुहूर्त्तद्वयपर्य्युदस्तेतरकालकुतपादिमुहूर्त्तपञ्चक-
रौहिणादिमुहूर्त्तचतुष्टयवासरतृतीयांशीयापरा-
ह्णमुहूर्त्तद्वयकालाः । यथाक्रममापत्सामान्यप्रशस्त-
प्रशस्ततर-प्रशस्ततमत्वेन ज्ञेयाः । एवमखण्डति-
थावपि नातिसन्ध्यासमीपत इति पूर्ब्बोक्तत्वात् ।
"सायाह्नस्त्रिमुहूर्त्तः स्यात् श्राद्धं तत्र न कारयेत्" ।
इति मत्स्यपुराणात् ।
"रात्रौश्राद्धं न कुर्ब्बीत राक्षसीकीर्त्तिता हि सा ।
सन्ध्ययोरुभयोश्चैव सूर्य्ये चैवाचिरोदिते" ॥
इति मनुवचनाभ्यां ।
"ऊद्‌र्ध्वं मुहूर्त्तात् कुतपात् यन्मूहूर्त्तचतुष्टयं ।
मुहूर्त्तपञ्चकं वापि स्वधाभवनमिष्यते" ॥
इति मत्स्यपुराणान्मुहूर्त्तपञ्चकमित्यत्र कुतपादिति
ल्यब्लोपे पञ्चमी कुतपमारभ्येत्यर्थः । ततस्तेनैव ।
"अपराह्णे तु सम्प्राप्ते अभिजिद्रौहिणोदये ।
यदत्र दीयते जन्तोस्तदक्षयमुदाहृतं" ॥
इत्युक्तं । "पूर्ब्बाह्णो वै देवानां मध्यं दिनं मनुष्याणां
अपराह्णः पितृणां" । इति श्रुतिः । वासरस्य
तृतीयांश इति कात्यायनवचनं ।
"सायाह्नस्त्रिमुहूर्त्तः स्यात् श्राद्धं तत्र न कारयेत्"
इत्येषामेकवाक्यत्वात् वासरतृतीयांशीयापराह्ण-
मुहूर्त्तद्वयस्य लाभः । इति तिथ्यादितत्त्वं ॥

**अमावासी**, स्त्री, (अमा साहित्येन चन्द्रार्कयोर्वासो
यत्र, गौरादित्वात् ङीष् ।) अमावस्या । इति
शब्दरत्नावली ॥

**अमावास्या**, स्त्री, (अमा सह चन्द्रार्कौ वसतो यत्र
तिथौ सा, अमा + वस + आधारे ण्यत्, स्त्रियां
टाप् । णित्वात् वृद्धिः ।) अमावसीतिथिः ।
इत्यमरः ॥

**अमित्रः**, पुं, (अमरोगे इत्रच् ।) शत्रुः । इत्यमरः ॥
(रिपुः । विपक्षः । शत्रुपक्षीयः । प्रतिकूलः ।
"मातृरूपे ममामित्रे नृशंसे राज्यकामुके ।
अमित्रो मित्ररूपेण भ्रातुस्त्वमसि लक्ष्मण" ॥
इति रामायणे ।)

**अमिषं**, क्ली, (अम् रोगे कर्म्मणि इषन्) लौकिक-
सुखं । इत्युणादिकोषः ॥ छलाभावः ॥ (न मिष-
श्छलं नञ्समासः, छलनाभावः । नास्ति मिषश्छलं
यस्य तत्, छलशून्यः ।)

**अमी**, [न्] त्रि, (अम् रोगे + भावे घञ्, मान्त-
सोरोत्त्वाभावे अकोऽकारस्य उत्त्वे अमुक इति
भवति अमुक इत्यागमिकं । इति क्रमदीश्वरः ॥
यथा, --
"अमुकामुकगोत्रैतत् तुभ्यमन्नं स्वधा नमः" ।
इति श्राद्धतत्त्वं ॥ (अभिवादये इति शब्दोच्चारणा-
नन्तरं अमुकनामाहमस्मीति स्वं नाम परिकी-
र्त्तयेत् । इति कुल्लूकभट्टः ।
"संनिवेशं प्रमाणञ्च स्वहस्तेन लिखेत् स्वयम् ।
मतं मेऽमुकपुत्रस्य अमुकस्य महीपतेः" ॥
इति नारदः ।)

**अमुक्तं**, क्ली, (मुच् + क्तः, न मुक्तः विरोधे नञ्-
समासः ।) छुरिकाविशेषः । इति हलायधः ॥
हातछुरी इति भाषा । मुक्तिरहिते अत्यक्ते च
त्रि ॥ (अप्राप्तमोचनः । अस्वतन्त्रः ।
"अमुक्ता भवता नाथ मुहूर्त्तमपि सा पुरा" ।
इति साहित्यदर्पणे ।
"अमुक्तो मानसैर्दुःखैरिच्छाद्वेषसमुद्भवैः" ।
इति महाभारते । खड्गादिकं । यदुक्तम्, --
"खड्गादिकममुक्तञ्च नियुद्धं विगतायुधम्" ।
इति ।)

**अमुत्र**, व्य, (अमुष्मिन् अदस् + त्रल् उत्त्वमत्वे ।)
जन्मान्तरं । परलोकः । इत्यमरः ॥ (अमुष्मिन्
इत्यर्थस्य वाचकः ।
"अनेनैवार्भकाः सर्व्वे नगरेऽमुत्र भक्षिताः" ।
इति कथासरित्सागरे । भवान्तरे । जन्मान्तरे ।
"तथैव यः क्षमाकाले क्षत्रियो नोपशाम्यति ।
अप्रियः सर्व्वभूतानां सोऽमुत्रेह च नश्यति" ।
"इच्छद्भिः सततं श्रेय इह चामुत्र चोत्तमं" ॥
इति महाभारते ।)

**अमुष्यपुत्त्रः**, पुं, स्त्री, (अमुष्य पुत्रः निपातनात् अलुक्
समासः ।) प्रख्यातवंशोद्भवः । कुलीनः । इति
जटाधरः ॥
("स्यादामुष्यायणस्त्वार्य्योऽमुष्यपुत्त्रो महाकुलः" ।
इति जटाधरः ।)

**अमूर्त्तः**, त्रि, (मूर्च्छ + क्तः, नञ्समासः ।) मूर्त्त-
भिन्नः । मूर्त्तिरहितः । यथा । सुज्ञाना अमूर्त्त-
त्वादिति वोपदेवः ॥ न्यायमते । आकाशं ।
कालः । दिक् । आत्मा । एषां सामान्यगुणाः

"त्रिमुहूर्त्तापि कर्त्तव्या पूर्ब्बा दर्शा च बह्वृचैः ।
कुहूरध्वर्य्युभिः कार्य्या यथेष्टं सामगीतिभिः" ॥
अत्र त्रिमुहूर्त्तेत्युपादानात् स्तम्भितायां पूर्ब्बदिने त्रिमुहूर्त्तमात्रलाभेऽपि बह्वृचानां श्राद्धं । न तु मुख्यापराह्णलाभादपि परदिने । सामगानां तत्राप्यनियमः । एतादृग्विषय एव उमयत्रापराह्णालाभेऽपीयं व्यवस्थेति श्राद्धविवेकः ॥ मुख्यापराह्णस्य एकदिनमात्रलाभेऽप्युभयदिनालाभात् ॥
॥ * ॥ वद्र्ध्वमानायां व्यवस्थामाह कात्यायनः ।
"वद्र्ध्वमानाममावास्यां लक्षयेदपरेऽहनि ।
यामांस्त्रीनधिकान् वापि पितृयज्ञस्ततो भवेत्" ॥
यामांस्त्रीनिति पूर्ब्बदिवसीययामत्रयन्यूनचतुर्द्दश्यपेक्षया । अथैवं वासरतृतीयांशानुरोधेन श्राद्धविधानात् कथममावास्याश्राद्धे पर्य्युदस्तरात्र्यादीतरकालपरिग्रहः । सत्यं । तिथिद्वैधे क्षीणादिभेदेन खण्डविशेषपरिग्रहाय वासरतृतीयांशापेक्षा अन्यथोभयदिने वासरतृतीयांशाप्राप्तौ श्राद्धलोपापत्तेः । प्रागुक्तनिरग्न्यादेः कुहूर्म्मतेत्यस्य निर्व्विषयतापत्तेश्च अतः पर्य्युदस्तेतरकालस्यापि परिग्रहः । यदा तु पूर्ब्बापरखण्डयोरन्यतरस्यैव परिग्रहस्तदा यथायोग्यं तत्रैव सायात्वात् वृद्ध्यभावः, अमो रोगो विद्यतेऽस्य, इन् ।) रोगी । यथा । अम्ययं । इति वोपदेवः ॥

**अमीवं**, क्ली, (अम + वन्, ईडागमः ।) पापं । दुःखं ।

यथा, --
"तं त्वाहं भवभीतानां प्रपन्नानां भयापहं ।
आपृच्छे शापनिर्म्मुक्तः पादस्पर्शादमीवहन्" ॥
इति श्रीभागवतं ॥
("न हि त्वमीदृशं कृत्वा तस्यामीवं दशानन ।
जीवितुं शक्यसि चिरं विषं पीत्वेव दुर्म्मतिः" ॥
इति रामायणे ।)

**अमुकं**, त्रि, बुद्धिस्थत्वोपलक्षिततत्तत्धर्म्मावच्छिन्नं ।

स्वस्ववृत्तिविशेषधर्म्मपुरस्कारेण तत्तद्वस्तुवाचकं । फलना इति भाषा । अदस्शब्दस्य अकि कृते संख्या १ परिमितिः २ पृथक्त्वं ३ संयोगः ४ विभागः ५ । आकाशस्य विशेषगुणः शब्दः । कालदिशोर्विशेषगुणो नास्ति आत्मनो विशेषगुणाः । बुद्धिः १ सुखं २ दुःखं ३ इच्छा ४ द्वेषः ५ यत्नः ६ भावनाख्यसंस्कारः ७ धर्म्मः ८
अधर्म्मः ९ । इति भाषापरिच्छेदः ॥ (रूपहीनः ।
आकृतिरहितः । वायुः । अन्तरीक्षञ्च । यदुक्तं, --
"सन्निवेश्यो नेत्रदृश्यो यस्य तन्मूर्त्तमुच्यते ।
क्षित्यम्बग्नित्रयं मूर्त्तममूर्त्तं त्वितरद्वयं" ॥ इति ।
"क्षितिर्जलं तथा तेजः पवनो मन एव च ।
परापरत्वमूर्त्तत्वक्रियायोगाश्रया अमी" ॥
इति भाषापरिच्छेदः ।)

**अमूदृशः**, त्रि, (पाणिनिमते तु, अमुमिव पश्यति,

अदस् + दृश् + कञ्, दस्थाने आत्वे कृते ततः

:ऊत्वमत्वे ।) एवंप्रकारः । एतद्रूपः । इति मुग्ध-
बोधं ॥ यथा, -- "अमूदृशी तत् कविवन्दि-
वर्णितैः" । इति नैषधं ॥

**अमूलकं**, त्रि, मूलरहितं । प्रमाणशून्यं । नास्ति मूलं
यस्येति बहुव्रीह्यर्थे कप्रत्ययः ॥

**अमूला**, स्त्री, (नास्ति मूलं शिफा यस्याः सा, स्त्रियां
टाप् ।) अग्निशिखावृक्षः । इति शब्दचन्द्रिका ॥
मूलरहिते त्रि । इति मुग्धबोधं ॥

**अमृणालं**, क्ली, (मृणालतुल्यं सादृश्ये नञ्समासः,
तस्य मृणालसदृशकोमलत्वात् तथात्वं ।)
वीरण-
मूलं । इत्यमरः ॥

**अमृतं**, क्ली, (मृ + भावे क्तः, नास्ति मृतं मरणं
यस्मात् तत्, तत्पायिनां मरणाभावात् तस्य
तथात्वं ।)
समुद्रोद्भवदेवभक्ष्यामरत्वजनकद्रव्यवि-
शेषः । यदा पृथुराजभयेन पृथ्वी गौर्भूता तदा
देवा इन्द्रं वत्सं कृत्वा हिरण्मयपात्रे अमृतरूप-
म्पयोऽदूदुहन् तच्च दुर्व्वाससः शापात् समुद्रमध्यं
गतं पश्चात् समुद्रमथने अमृतपूर्णकलसं मृहीत्वा
धन्वन्तरिरुत्थितः । इति भारतभागवते ॥ तत्-
पर्य्यायः ॥ पीयूषं २ सुधा ३ । इत्यमरः ॥
पेयूषं ४ । इति तट्टीकासारसुन्दरी ॥ * ॥
निर्जरं ५ । समुद्रनवनीतकं ६ । इति शब्दरत्ना-
वली ॥ जलं । धृतं ॥ यज्ञशेषद्रव्यं ॥ अयाचित-
वस्तु ॥ मुक्तिः । इति मेदिनी ॥ दुग्धं । औषधं ।
विषसामान्यं । वत्सनाभः । पारदः । इति राज-
निर्घण्टः ॥ अन्नं । धनं । स्वर्णं । भक्षणीयद्रव्यं ।
हृद्यं । स्वादुद्रव्यं । इति हेमचन्द्रः ॥

**अमृतः**, पुं, (मृ + कर्त्तरि क्तः, नञ्समासः ।) धन्व-
न्तरिः । देवता । इति मेदिनी । वाराहीकन्दः ।
वनमुद्गः । इति राजनिर्घण्टः ॥ सुन्दरः । अति-
हृद्यः । इति भरतधृतव्याडिः ॥ (आत्मा, यथा
महाभारते, --
"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥
महतः परमव्यक्तमव्यक्तादमृतः परः ।
अमृतान्न परं किञ्चित् सा काष्ठा सा परा गतिः" ॥
"अमृतफलं लघु वृष्यं सुखादु त्रीन् हरेद्दोषान् ।
देशेषु मुद्गलानां बहुलं तल्लभ्यते लोकैः" ॥
इति भावप्रकाशः ॥

**अमृतफला**, स्त्री, (अमृतवत् स्वादु फलं यस्याः सा,
स्त्रियां टाप् ।) द्राक्षा । आमलकी । इति राज-
निर्घण्टः ॥ (लघुखर्ज्जूरीवृक्षः । फलविशेषः ।
नासपाती । इति पारस्यभाषा ।

**अमृतवल्ली**, स्त्री, (अमृतवत् वल्ली, तस्या रोग-
नाशकत्वात् तथात्वं ।) गुडूची । इति रत्नमाला
॥

**अमृतरसा**, स्त्री, (अमृतवत् स्वादुः रसो यस्याः
सा, स्त्रियां टाप् ।) कपिलद्राक्षा । इति राज-
निर्घण्टः ॥ (पक्वान्नविशेषः ॥ सा च
"तृतीयभागखण्डेन मिश्रितं षष्टिपिष्टकं ।
शुभ्रमीषद्दधियुतं मर्द्दयेद्दृढपाणिना ॥
एवं समुद्धृतं कृत्वा स्थापयेद्रजनीमितं ।
ततोऽन्यस्मिन्नहनि तु चित्रितं निस्त्वचैस्तिलैः
॥
विधायापूपकं तेन तम्बिकायां घृते पचेत् ।
ततोऽमृतरसा जाता वातहृद्बलवर्द्धिनी" ॥
इति भावप्रकाशे ।)

**अमृतसम्भवा**, स्त्री, (सम् + भू + भावे अप्, अमृ-
तस्य मरणाभावस्य रोगाभावस्य इति यावत्
सम्भव उत्पत्तिर्यस्याः सा, स्त्रियां टाप् ।)
गुडूची ।
इति राजनिर्घण्टः ॥

**अमृतसारजः**, पुं, (अमृतस्य सारः तस्मात् जायते,
अमृतसार + जन् + डः, उपपदसमासः ।) गुडः
।
तवराजोद्भवखण्डः । इति राजनिर्घण्टः ॥

**अमृतसूः**, पुं, (अमृतं तुषारं सूते, अमृत + सू +
क्विप्, उपपदसमासः ।) (अमृतान् देवान् सूते,
अमृत + सू + क्विप्, उपपदसमासः ।) चन्द्रः ।
इति हेमचन्द्रः ॥ देवमातरि स्त्री । अमृतानां
देवानां सूः प्रसूतिः ॥

**अमृतसोदरः**, पुं, (अमृतस्य सोदरः सोदर्य्यः
तस्य एकस्थानादुत्पन्नत्वात् तथात्वं ।) घोटकः
।
विरेचने प्रशस्ता । इति राजवल्लभः ॥ (सूर्य्य-
दीधितिविशेषाः ।
("सौरीभिरिव नाडीभिरमृताख्याभिरम्मयः" ।
इति रघुवंशे ।)

**अमृतान्धः**, [स्] पुं, (अमृतमन्धः अन्नमिव तृप्ति-
करं यस्य सः ।) देवता । इत्यमरः ॥ (अमृतं सुधा
अन्धो भक्ष्यं यस्य सः ।)

**अमृताफलः**, पुं, (अमृतमिव फलं यस्य, पृषोदरादि-
त्वात् दीर्घः ।) पटोलः । इति द्रव्याभिधानं ॥

**अमृताशनः**, पुं, (अमृतं अश्नाति भुङ्क्ते, अश +
बाहुल्यात् कर्त्तरि ल्युट् । अमृतस्य अशनः,
षष्ठीतत्पुरुषः ।) देवता । इति हलायुधः ॥

**अमृताष्टकं**, क्ली, (अमृताप्रभृति अष्टकं यस्य तत् ।)
हरितक्याद्यष्टद्रव्यं । यथा, --
"अमृता कटुकारिष्टपटोलघनचम्दनं ।
नागरेन्द्रयवञ्चैतदमृताष्टकमीरितं ॥
क्वथितं सकणाचूर्णं पित्तश्लेष्मज्वरापहं ।
हृल्लासारोचकच्छर्द्दितृष्णादाहनिवारणं" ॥
इति भावप्रकाशः ॥

**अमृतासङ्गं**, क्ली, (अमृतस्येव आसङ्गो यस्य तत् ।)
तुत्थविशेषः । तत्पर्य्यायः । कर्परिकातुत्थं २
अञ्जनं ३ । इति हेमचन्द्रः ॥

**अमृताहरणः**, पुं, (अमृतमाहरति, मातृदास्याप-
नयनार्थं स्वर्गात् भूलोकं नयति, आ + हृ +
कर्त्तरि ल्युट्, ततः षष्ठीतत्पुरुषः ।) गरुडः ।
इति हारावली ॥ ("पुरा किल गरुडो मातु-
र्विनतायाः सपत्नीदास्यनिवारणार्थं सर्व्वदेवान्
विनिर्जित्य सोमरक्षकच्छेदनयन्त्रादिकञ्चातिक्रम्य
स्वर्गादमृतं नागकुलाय दातुमाहृतवान्" । इति
पौराणिकी कथा । महाभारतस्यादिपर्ब्बणि ।
"श्रुत्वा तमब्रुवन् सर्पा आहरामृतमोजसा ।
ततो दास्याद्विप्रमोक्षो भविता तव खेचर ! ॥
इत्युक्तो गरुडः सर्पैस्ततो मातरमब्रवीत् ॥
गच्छाम्यमृतमाहर्त्तुं भक्ष्यमिच्छामि वेदितुं ॥
. . .
स चक्रं क्षुरपर्य्यन्तमपश्यदमृतान्तिके ।
परिभ्रमन्तमनिशं तीक्ष्णधारमयस्मयं ॥
ज्वलनार्कप्रभं घोरं छेदनं सोमहारिणाम् ।
. . .

सूर्य्यः ॥ सुरपतिरिन्द्रः ॥ विष्णोः सहस्रनाममध्ये परिगणितो नामभेदः ॥) मरणरहिते त्रि । यथा । "अमृते जारजः कुण्डः" । इत्यमरः ॥

**अमृतजटा**, स्त्री, (अमृतवत् सुस्वादुर्जटा यस्याः सा ।) जटामांसी । इति राजनिर्घण्टः ॥

**अमृततरङ्गिणी**, स्त्री, (अमृतस्य पीयूषस्य तरङ्गिणी नदीव ।) ज्योत्स्ना । इति राजनिर्घण्टः ॥

**अमृतदीधितिः**, पुं, (अमृतवत् सन्तोषकारिण्यः दीधितयो यस्य सः ।) चन्द्रः । इति शब्दरत्नावली ॥
("अमृतदीधितिरेष विदर्भजे भजति तापम-
मुष्य" । इति नैषधे ।)

**अमृतफलं**, क्ली, पुं, (अमृतमिव स्वादु फलं ।) पारावतवृक्षः । पटोलः । इति राजनिर्घण्टः ॥ नासपाती । इति पारस्य भाषा । यथा । अथामृतफलं यदहकसातकाविलप्रभृतिदेशेषु नासपाती इति प्रसिद्धं । इति राजनिर्घण्टः ॥ (उच्चैःस्रवा अश्वः ।
"सुरादेवी समुत्पन्ना तुरगः पाण्डरस्तथा" । इति भारते ।)

**अमृतस्रवा**, स्त्री, (स्रवति इति स्रु + अप् । स्त्रियां टाप् । अमृतस्य स्रवा षष्ठीतत्पुरुषः ।) रुदन्ती-वृक्षः । लताविशेषः । तत्पर्य्यायः । वृक्षारुहा २ उपवल्लिका ३ घनवल्ली ४ सितलता ५ । अस्या गुणाः । पथ्यत्वं । ईषत्तिक्तत्वं । रसायनत्वं । व्रणनाशित्वं । विषकुष्ठामकामलाश्वयथुजयकारि-त्वञ्च । इति राजनिर्घण्टः ॥
("उक्तामृतस्रवा पथ्या ईषत्तिक्ता रसायनी ।
व्रणघ्नी विषकुष्ठामं कामलां श्वयथुं जयेत्" ॥
इति राजनिर्घण्टः ।)

**अमृता**, स्त्री, (नास्ति मृतं मरणं यस्याः सा ।) गुडूची । मदिरा । इन्द्रवारुणी । ज्योतिष्मती । गोरक्षदुग्धा । अतिविषा । रक्तत्रिवृत् । दूर्व्वा । आमलकी । हरीतकी । इति राजनिर्घण्टः ॥ तुलसी । इति शब्दमाला ॥ पिप्पली । इति मेदिनी ॥ चम्पादेशजस्थूलमांसा हरीतकी । सा
अच्छिन्नत्तरसा मध्ये सोममभ्यद्रवत्ततः ॥
समुत्पाट्यामृतं तत्र वैनतेयस्ततो बली ।
उत्पपात जवेनैव यन्त्रमुन्मथ्य वीर्य्यवान् ॥
… … .
एवं तदमृतं तेन हृतमाहृतमेव च ।
द्विजिह्वाश्च कृताः सर्पा गरुडेन महात्मना" ॥)

**अमृताह्वं**, क्ली, (अमृतमाह्वयते स्पर्द्धते, आ + ह्वे + कः, तस्य तुल्यस्वादत्वात् तथात्वं ।) लघुविल्वफलाकृतिखोरासानदेशजनासपातीना-मफलं । तत्पर्य्यायः । रुचिफलं २ । अस्य गुणाः । गुरुत्वं । वातनाशित्वं । स्वादुत्वं । अम्लत्वं । रुचिशुक्रकारित्वञ्च ॥ तल्लघुफलगुणाः । वृष्यत्वं । सुस्वादुत्वं । त्रिदोषनाशित्वञ्च । तत् मुद्गलदेशे

:बहुलं लभ्यते । इति भावप्रकाशः ॥

**अमृतोत्पन्नं**, क्ली, (अमृतं विषमिव उत्पन्नं नीलवर्ण-

त्वात् ।) खर्परीतुत्थं । इति राजनिर्घण्टः ॥

**अमृतोत्पन्ना**, स्त्री, (अमृतं मधु उत्पन्नं यस्याः सा,

"जातिकालसुखादिभ्यो निष्ठायाः परवचनमिति निष्ठायाः परनिपातः" ।) मक्षिका । इति राज-निर्घण्टः ॥

**अमृतोद्भवं**, क्ली, (अमृतं विषमिव उद्भवति कृष्ण-

वर्णत्वात्, उद् + भू + अप् ।) तुत्थं । खर्परीतुत्थं ।
इति राजनिर्घण्टः ॥

**अमेधाः**, [स्] पुं, (नास्ति मेधा यस्य सः, समा-

सान्तः असिच् ।) मूढः । मूर्खः । इति हेमचन्द्रः ॥
("नमः समस्मात् पूर्ब्बस्मा अन्तरस्मा अमेधषाम् ।
सुमेधसामन्तरस्मै सतां स्वस्मै स्वयम्भुवे" ।
इति वोपदेवः ।)

**अमेध्यं**, क्ली, (न मेध्यं पवित्रं विरोधे नञ्समासः ।)

पुरीषं । इति शब्दरत्नावली ॥ अपवित्रे त्रि ॥
(अपवित्रं । मलमूत्रादिकं वस्त ।
"नाग्निं मुखेनोपधमेत् नग्नां नेक्षेत च स्त्रियं ।
नामेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत्" ॥
इति मनुः ।)

**अमोघः**, त्रि, (न मोघो निष्फलः, नञ्समासः ।)

सफलः । अव्यर्थः । इति मेदिनी ॥ नदविशेषे पुं । इति शब्दरत्नावली ॥ (इष्टफलप्रदः ।
अबन्ध्यः ।
अविफलः ।
"यदमोघमपामन्तरुप्तं वीजमज त्वया" ।
इति कुमारसम्भवे ।
"अमोघाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः" ।
इति रघुवंशे ।

**अमोघा**, स्त्री, (न मोघा निष्फला, नञ्समासः ।)

पाटलिवृक्षः । विडङ्गं । इत्यमरः ॥ हरीतकी ।
इति मेदिनी ॥

**अम्ब** गतौ । (इति कविकल्पद्रुमः ।) ओष्ठ्यवर्गशेषो-

पधः । अम्बति । इति दुर्गादासः ॥

लब्धा ईर्ष्या यस्मात् तत्, सिंहवत् पृषोदरादि-त्वात् रवर्णविपर्य्ययेण साधु ।) भ्राष्ट्रः । भर्ज्जन-पात्रं । इत्यमरः ॥ युद्धं । इति मेदिनी ॥

**अम्बरीषः**, पुं, (अम्ब्यते पच्यते अत्र, निपातनात्

साधुः ।) विष्णुः । शिवः । इति त्रिकाण्डशेषः ॥ किशोरः । भास्करः । नृपभेदः । स तु सूर्य्य-वंशीयनाभागराजपुत्रः ।
("भगीरथसुतो राजा श्रुत इत्यभिविश्रुतः ।
नाभागस्तु श्रुतस्यासीत् पुत्रः परमधार्मिकः ॥
अम्बरीषस्तु नाभागिः सिन्धुद्वीपपिताऽभवत्" ॥
इति हरिवंशे ।) नरकभेदः ॥ आम्रातकवृक्षः ।
अनुतापः । इति मेदिनी ॥

**अम्बष्ठः**, पुं, (अम्बायां मातरि तिष्ठति, अम्बा +

स्था + कः, आम्बाम्बेति षत्वं, ङ्यापोः संज्ञाच्छन्द-
सोर्बहुलमिति ह्रस्वः, असवर्णाजातत्वात् तस्य तथात्वं ।) देशविशेषः । विप्राद्वैश्यायामुत्पन्नः ।
इति मेदिनी ॥ अयं चिकित्सावृत्तिः वैद्य इति ख्यातः । इत्यमरटीकायां भरतः ॥ हस्तिपकः ।
यथा, --
"अम्बष्ठाम्बष्ठ मार्गं नौ देह्यपक्राम मा चिरं" ।
इति श्रीभागवतं ॥ कायस्थजातिविशेषः । इति पश्चिमदेशे प्रसिद्धः ॥

**अम्बष्ठकी**, स्त्री, (अम्बष्ठं कायति स्वग्रहणार्थ-

माह्वयति, अम्बष्ठ + कै + कः, गौरादित्वात् ङीष् ।) लताविशेषः । आकनादि निमुखी इति च भाषा । तत्पर्य्यायः । पाठा २ अम्बष्ठा ३ कुचेली ४ पापचेलिका ५ एकाष्ठीला ६ वरा ७ तिक्ता ८ प्राचीना ९ एकोशिका १० वृका ११ ।
इति रत्नमाला ॥ विद्धकर्णी १२ स्थापनी १३ श्रेयसी १४ रसा १५ पापचेली १६ वनतिक्तिका १७ । इत्यमरः ॥ अविद्धकर्णी १८ अविद्धकर्णा १९ । इति तट्टीका ॥ अम्बष्ठिका २० यूथिका २१
विद्धकर्णिका २२ दीपनी २३ तिक्तपुष्पा २४ वृह-त्तिक्ता २५ शिशिरा २६ वृकी २७ मालती २८ देवी २९ वृत्तपर्णी ३० । इति राजनिर्घण्टः ॥
अस्या गुणाः । अतीसारशमनत्वं । लघुत्वं । त्रिदोष-
नाशित्वञ्च । इति राजवल्लभः ॥ तिक्तत्वं । गुरुत्वं ।

टाप् ।) अम्बष्ठा । आकनादि इति भाषा । इति राजनिर्घण्टः ॥ ब्राह्मणी । वामनहाटी इति प्रसिद्धा । इति रत्नमाला ॥

**अम्बा**, स्त्री, (अम्ब्यते स्नेहेनोपगम्यते, अबि गतौ +

घञ्, स्त्रियां टाप् ।) जननी । इति शब्दरत्नावली ॥
"अम्ब ! यत्त्वमिदं प्रात्थ प्रशमाय वचो मम" ।
"नान्यदत्तमभीप्सामि स्थानमम्ब स्वकर्म्मणा" ।
इति विष्णुपुराणे ।)
नाट्योक्तौ सैव । इत्यमरः ॥ पाण्डुराजमातुः स्वसा ।
इतिमहाभारतं ॥ अम्बष्ठा । इति राजनिर्घण्टः ।
दुर्गा । इति केचित् ॥

**अम्बालिका**, स्त्री, (अम्बेति शब्दं लाति गृह्णाति,

अम्बा + ला + कः, उपपदसमासः, ह्रस्वे अतैत्वं स्वार्थे कन्, स्त्रियां टाप् ।) माता । इति शब्द-रत्नावली ॥ अम्बष्ठा । इति राजनिर्घण्टः ॥ पाण्डु-
राजमाता । इति भारतं ॥ (काशीराजस्य कनि-ष्ठा दुहिता सा च विचित्रवीर्य्यपत्नी ।
"अम्बालिका च राजेन्द्र ! राजकन्या यवीयसी ।
अम्बिकाम्बालिके भार्य्ये प्रादाद्भ्रात्रे यवीयसे ॥
"भीष्मो विचित्रवीर्य्याय विधिदृष्टेन कर्म्मणा" ।
इति महाभारते ।)

**अम्बिका**, स्त्री, (अम्बा + स्वार्थे कन्, स्त्रियां टाप् ।)

दुर्गा ।
"ईप्सितार्थक्रियोदारं तेऽभिनन्द्य गिरेर्वचः ।
आशीर्भिरेधयामासुः पुरःपाकाभिरम्बिकाम्:" ॥
इति कुमारसम्भवे । माता । इति मेदिनी ॥
जैनदेवीविशेषः । इति हेमचन्द्रः ॥ कटुकीवृक्षः ।
इति शब्दचन्द्रिका ॥ अम्बष्ठा । इति राजनिर्घण्टः ॥
काशीराजस्य मध्यमादुहिता । विचित्रवीर्य्यस्य पत्नी । धृतराष्ट्रस्य माता ।
"अम्वा ज्येष्ठाऽभवत्तासामम्बिकात्वथ मध्यमा ।
अम्बिकाम्बालिके भार्य्ये प्रादाद्भ्रात्रे यवीयसे ॥
भीष्मो विचित्रवीर्य्याय विधिदृष्टेन कर्म्मणा" ।
इति महाभारते ।)

**अम्बिकेयः**, पुं, (पाणिनिमते तु अम्बिकाया अपत्यं

**अम्बकं**, क्ली, (अम्बति नक्षत्रपर्य्यन्तं गच्छति, अम्ब + ण्वुल् । वा अम्व्यते भूगर्भे प्राप्यते, अम्ब + कर्म्मणि घञ् स्वार्थे कन् ।) नेत्रं । इति हेमचन्द्रः ॥ "आसीनमासन्नशरीरपात- स्त्रियम्बकं संयमिनं ददर्श" । इति कुमारसम्भवे ।) ताम्रं । इति राजनिर्घण्टः ॥

**अम्बरं**, क्ली, (अबि शब्दे + भावे घञ्, अम्बः शब्दस्तं राति आदत्ते अम्ब + रा + कः ।) वस्त्रं । ("एवमुक्त्वा सुमित्रां सा विवर्णा मलिनाम्बरा" । इति रामायणे ।) आकाशं । ("दावाग्निः कथमम्बरे" इति साहित्यदर्पणे ।) कार्पासः । स्वनामख्यातसुगन्धिद्रव्यं । इति विश्वः ॥ अभ्रधातुः । इति राजनिर्घण्टः ॥

**अम्बरिषं**, क्ली, (अम्ब्यते पच्यतेऽत्र, अबि + अरिष वा दीर्घः निपातनात् ।) भर्ज्जनपात्रं । भाजना खोला । इति भाषा । इत्यमरटीकायां रमानाथः ॥

**अम्बरीषं**, क्ली, (अबि + गतौ + कर्म्मणि घञ्, अम्बा उष्णत्वं । वातपित्तज्वरपित्तदाहशूलनाशित्वं । भग्नसन्धानकारित्वञ्च । इति राजनिर्घण्टः ॥

**अम्बष्ठा**, स्त्री, (अम्बायां मातरि स्वोत्पत्तिस्थाने इति यावत्, तिष्ठति, अम्बा + स्था + कः, अम्बेत्यादिना षत्वम् पूर्ब्बवत् ह्रस्वः, स्त्रियां टाप् ।) क्षुपविशेषः । अम्बाडा इति ख्याता । अस्याः पर्य्यायः । बालिका २ बाला ३ शठाम्बा ४ अम्बालिका ५ अम्बिका ६ अम्बा ७ माचिका ८ दृढवल्का ९ मयूरिका १० गन्धपत्री ११ चित्रपुष्पी १२ श्रेयसी १३ मुखवाचिका १४ छिम्लपत्री १५ भूरिमल्ली १६ । अस्या गुणाः । कषायत्वं । अम्लत्वं । कफकण्ठरोगवातरोगवलाशनाशित्वं । रुच्यग्निकारित्वञ्च । इति राजनिर्घण्टः ॥ * ॥ पाठा । चाङ्गेरी । यूथिका । इत्यमरमेदिनीकरौ ॥

**अम्बष्ठिका**, स्त्री, (अम्बष्ठा + संज्ञायां कन्, स्त्रियां पुमान्, अम्बिका + ठक् तस्य इयः, वृद्ध्यभावः ।) गणेशः । कार्त्तिकेयः । धृतराष्ट्रराजः ॥ अम्बिकाया अपत्यमित्यर्थे ष्णेयः ॥

**अम्बिकेयकः**, पुं, (अम्बिकेय + स्वार्थे कन् ।) गणेशः । इति जटाधरः ॥

**अम्बु**, क्ली, (अबिशब्दे उण् ।) बालानामौषधिः । इत्यमरः ॥ बाला इति भाषा । जलं ("भुक्त्वा मृणालपटली भवता निपीतान्यम्बुनि यत्र नलिनानि निषेवितानि" । इति भाभिनीविलासे । "अम्बुजमम्बुनि जातं क्वचिदपि न जायतेऽम्बुजादम्बु" । इत्युद्भटः । "गाङ्गमम्बु सितमम्बु यामुनं" । इति काव्यप्रकाशे ।)

**अम्बुकण्टकः**, पुं, (अम्बुनि जले कण्टकैव, सादृश्यार्थे कन् ।) कुम्भीरः । इति त्रिकाण्डशेषः ॥

**अम्बुकिरातः**, पुं, (अम्बुनि जले किरातः व्याध इव ।) कुम्भोरः । इति त्रिकाण्डशेषः ॥

**अम्बुकीशः** पुं, (अम्बनि कीशः वानर इव ।) शिशु-

:मारजन्तुः । इति हेमचन्द्रः ॥ शुशुक इति भाषा ।

**अम्बुकूर्म्मः**, पुं, (अम्बुनः कूर्म्म इव) । शिशुमारः ।

इति हेमचन्द्रः ॥

**अम्बुकेशरः**, पुं, (अम्बुजातः केशरोऽस्य ।) छोलङ्ग-

वृक्षः । इति रत्नमाला ॥

**अम्बुचामरं**, क्ली, (अम्बुनः चामरमिव ।) शैवालं ।

इति जटाधरः ॥ शेयाला इति भाषा ।

**अम्बुजं**, क्ली, (अम्बुनि जायते, अम्बु + जन् + डः ।)

पद्मं । इति मेदिनी ॥ "इन्दीवरेण नयनं मुख-
मम्बुजेन" । इति शृङ्गारतिलके । "अम्बुजमम्बुनि
जातं क्वचिदपि न जायतेऽम्बुजादम्बु" । इत्युद्भटः
।)
वज्रं । इति त्रिकाण्डशेषः ॥

**अम्बुजः**, पुं, (अम्बुसमीपे जातः ।) हिज्जलवृक्षः ।

इत्यमरः ॥ (निचुलवृक्षः ॥
"अम्बुजं कमले क्लीवं हिज्जले तु पुभानयं" ।
इति शब्दरत्नावली
"अम्बुजो निचुले पुंसि कमले तु नपुंसकं" ।
इति मेदिनी ।)

**अम्बुजन्म**, [न्] क्ली, (अम्बुनो जन्मास्य ।) पद्मं ।

इति राजनिर्घण्टः ॥ (सारसविहङ्गः ॥ शङ्खः ।
त्रि, जलजातः । सलिलोद्भवः ।)

**अम्बुतालः**, पुं, (अम्बुनि जले तालयति प्रतिष्ठां

गच्छति अम्बु + तल + अच् ।) शैवालं । इति
त्रिकाण्डशेषः ॥

**अम्बुदः**, पुं, (अम्बु जलं ददाति, दा दाने + कः ।)

मेघः । इति रत्नमाला ॥ ("सदा मनोज्ञाम्बुदना-
दसोत्सुकम्" । इति ऋतुसंहारे । "शशाक
निर्व्वापयितुं न वासवः स्वतश्चुऽतं वह्निमिवाद्भिर-
म्बुदः" । इति रघवंशे ।) मुस्तकं । यथा । "कणी-
सविश्वानलदं सहाम्बुदं" । इति वैद्यकं ॥

**अम्बुधिः**, पुं, (अम्बूनि धीयन्तेऽत्र, अम्बु + धा +

कर्म्मण्यधिकरणे किः ।) समुद्रः । इति शब्द-
रत्नावली ॥ ("रे चाञ्चल्ययुषो मृगाः श्रितनगाः
कल्लोलमालाकुलामेतामम्बुधिगामिनीं व्यवसिताः
सङ्गाहितुं वा कथम्" । इति भामिनीविलासे ।
"सुरासुराश्च गन्धर्बाः क्षोभयामासुरम्बुधिम्" ।

**अम्बुभृत्**, पुं, (अम्बु बिभर्त्ति, अम्बु + भृ + क्विप् ।)

मेघः । मुस्तकं । इत्यमरः ॥ समुद्रः । इति
केचित् ॥

**अम्बुमात्रजः**, पुं, (अम्बुमात्रे अल्पजले जायते, जन

+ डः) शम्बूकः । शामुक इति हेमचन्द्रः ॥ इति
भाषा ।

**अम्बुरः**, पुं, (अम्बु + उरन् ।) द्वाराधःकाष्ठं । इति

हेमचन्द्रः ॥ गोवराट् इति भाषा ।

**अम्बुरुहा**, स्त्री, (अम्बुनि रोहति, अम्बु + रुह +

कः, ततष्टाप् ।) स्थलपद्मिनी । इति राज-
निर्घण्टः ॥

**अम्बुवाची**, स्त्री, (अम्बु तद्वर्षणं वाचयति सूचयति,

वच् + णिच् + अण्, उपपदसमासः, ङीप् ।)
ऋतु-
मती पृथ्वी । यथा, --
"यद्वारे यत्काले मिथुनसंक्रमणं भूतं
तद्वाराभ्यन्तरे
तावत्कालावधि
विंशत्यादिदण्डाधिकदिनत्रयमम्बु-
वाची । तत्राध्ययनं वीजवपनं न कार्य्यं । सर्प-
भयोपशमनाय दुग्धं पेयं" । इति कृत्यतत्त्वं ॥ * ॥
अपिच । ज्योतिषे ।
"रजोयुक् क्ष्माम्बुवाची च रौद्राद्यपादगे रवौ ।
तस्यां पाठो वीजवापो नाहिभीर्दुग्धपानतः ॥
मृगशिरसि निवृत्ते रौद्रपादेऽम्बुवाचो
ऋतुमति खलु पृथ्वी वर्ज्जयेत् त्रीण्यहानि ।
यदि वपति कृषाणः क्षेत्रमासाद्य वीजं
न भवति फलभागी शस्यचाण्डालपाकः" ॥
रजोयुक् क्ष्मा ऋतुमती पृथ्वी । मत्स्यसूक्ते ।
"धरण्यामृतुमत्याञ्च भूमिकम्पे तथैव च ।
अन्तरागमने चैव विद्यां नैव पठेद्बुधः" ॥
ज्योतिषे ।
"यस्मिन् वारे सहस्रांशुर्यत्काले भिथुनं व्रजेत् ।
अम्बुवाची भवेन्नित्यं पुनस्तत्कालवारयोः" ॥
इदन्तु प्रायिकं । इति तित्यादितत्त्वं ॥ * ॥
अन्यच्च ।
"यदार्द्रर्क्षं समादाय भानोर्म्मन्मथगामिता ।
पुनस्तत्स्थेनमादाय यजनं त्रिदिनं त्यजेत् ॥
काम्यनैमित्तिकञ्चैव यात्रां मन्त्रक्रियान्तथा ।
ऋतुमत्यां न कुर्व्वीत पूर्बसङ्कल्पितादृते ॥

स्वपाकं परपाकं वा अम्बुवाचीदिने तथा ।
भक्षणं नैव कर्त्तव्यं चाण्डालान्नसमं स्मृतं" ॥
इति संवत्सरप्रदीपे विष्णुरहस्यं ॥

**अम्बुवासिनी**, स्त्री, (अम्बुप्रधाने देशे वसति, वस्

+ णिनि ङीप् ।) पाटलावृक्षः । इति जटाधरः ॥

**अम्बुवासी**, स्त्री, (अम्बुप्रधाने देशे वासो यस्याः सा,

गौरादित्वात्, ङीष् ।) पाटलावृक्षः । इति राज-
निर्घण्टः ॥

**अम्बुवाहः**, पुं, (अम्बूनि वहति, अम्बु + वह् + अण्,

उपपदसमासः ।) मेघः । इति रत्नमाला ॥
("विश्वार्त्तिवारणसमार्चितजीवितोऽयं नाकर्णितः
किमु सखे भवताम्बुवाहः" ॥ इति भामिनी-
विलासे । "बिभ्राणमानीलरुचं पिशङ्गीर्जटास्तडि-
त्वन्तमिवाम्बुवाहं" । इति भारविः ।) मुस्तकं ।
मेघनामा इत्यमरेणोक्तत्वात् ॥

**अम्बुवाहिनी**, स्त्री, (अम्बूनि वहति स्थानान्तरं

नयति, अम्बु + वह + णिनि, उपपदसमासः,
ङीप् ।) काष्ठाम्बुवाहिनी । काष्ठादिकृतच्छिन्ना-
ग्रनौकाकृतिजलसेचनी । इत्यमरटीकायां मथु-
रानाथः ॥

**अम्बुवेतसः**, पुं, (अम्बुजातो वेतसः, कर्म्मधारयः,

मध्यपदलोपश्च ।) जलवेतसः । तत्पर्य्यायः ।
परि-
व्याधः २ विदुलः ३ नादेयी ४ । इत्यमरः ॥

**अम्बुशिरीषिका**, स्त्री, (अम्बुनि अल्पः शिरीषः,

अल्पार्थे कन् स्त्रीत्वम् ।) जलशिरीषवृक्षः ।
तत्पर्य्यायः । शिरौषिका २ टिण्टिणिका ३
दुर्ब्बला ४ वारिशिरीषिका ५ । अस्या गुणाः ।
त्रिदोषविषकुष्ठार्शोनाशित्वं । इति भावप्रकाशः ॥

**अम्बुसर्पिणी**, स्त्री, (अम्बुनि सर्पति अम्बु + सृप +

णिनि, उपपदसमासः ।) जलौकाः । इति
त्रिकाण्डशेषः ॥ जौँक् इति भाषा ।

**अम्बुसेचनी**, स्त्री, (अम्बूनि सिच्यन्ते अनया, अम्बु +

सिच् + करणे ल्युट्, ङीप् ।) अम्बुवाहिनी ।
नौकाजलसेचनपात्रं । इत्यमरटीकायां मथुरा-
नाथः ॥

**अम्बूकृतं**, त्रि, (अनम्बु अम्बु सम्पद्यमानं कृतं, अम्बु +

इति रामायणे ।)

**अम्बुधिस्रवा**, स्त्री, (अम्बुधि + स्रु + अप्, स्त्रियां

टाप् ।) गृहकन्या । घृतकुमारी इति ख्याता ।
इति राजनिर्घण्टः ॥

**अम्बुपः**, पुं, (अम्बूनि जलानि पाति पिबति वा,

अम्बु + पा + कः ।) चक्रमर्द्दकवृक्षः । इति शब्द-
चन्द्रिका ॥ (जलेश्वरः । वरुणः ।) शतभिषाख्यं
नक्षत्रं । त्रि, जलपानकारी ।)

**अम्बुपत्रा**, स्त्री, (अम्बूनि पत्रे यस्याः सा ।) उच्चटा-

वृक्षः । इति रत्नमाला ॥

**अम्बुप्रसादः**, पुं, (अम्बूनि प्रसादयति स्वच्छतां नयति

अम्बु + प्र + सद + णिच् + अच्, उपपदसमासः
।)
कतकवृक्षः । इति राजनिर्घण्टः ॥ निर्म्मली इति
ख्यातः ।

**अम्बुप्रसादनं**, क्ली, (अम्बूनि प्रसादयति, प्र + सद्

णिच् + ल्युट् ।) कतकवृक्षः । इति त्रिकाण्डशेषः
॥

न कुर्य्यात् खननं भूमेः सूच्यग्रेणापि शङ्करि ।
वीजानां वपनञ्चैव चतुर्व्विंशतियामकं ॥
प्रमादाद्वपनं कृत्वा गावस्तत्र प्रचारयेत् ।
कृच्छ्रं कुर्य्यात् तत्क्षणाच्च खननात्तिलकाञ्चनं”
॥
इति मत्स्यसूक्ते महातन्त्रे ५८ पटलः ॥ * ॥
अपरञ्च ।
“रवौ रुद्राद्यपादस्थे भूमेः संजायते रजः ।
तस्माद्दिनत्रयं यावत् वीजवापं परित्यजेत् ॥
चत्वारिंशल्लिप्तिकषड्भागयुतो रविर्यदा भवति ।
तत्राम्बुवाची ज्ञेया शिवर्क्षपादस्थितो यावत् ॥
दिग्भागशून्यलिप्तो गणितेन भवति रविर्यदा साप्तः
।
स भवति निर्गुणकालो द्बितीयपादाश्रयाद्रौद्रे” ॥
“न स्वाध्यायं वषट्कारं न देवपितृतर्पणं ।
हलानां वाहनञ्चैव वीजानां वपनं तथा” ॥
इति राजमार्त्तण्डः ॥ * ॥ अत्र पाकनिषेधो
यथा, --
“यतिनो व्रतिनश्चैव विधवा च द्विजस्तथा ।
अम्बुवाचीदिने चैव पाकं कृत्वा न भक्षयेत् ॥

कृ + क्त, अभूततद्भावे च्विः ।) श्लेष्मकणनिर्गम-
सहितवाक्यं । तत्पर्य्यायः । सनिष्ठीवं २ । इत्य-
मरः ॥ सथूत्कारं ३ । इति हेमचन्द्रः ॥ (सनि-
ष्ठीवमुखरावः । “दधति कुहकभाजामत्र भल्लक-
यूनामनुरसितगुरूणि स्त्यानमम्बूकृतानि” । इति
उत्तरचरिते ।)

**अम्ब्लः**, पुं, (अबि शब्दे क्लः ।) अम्लरसः । इत्यु-

णादिकोषः ॥ अम्बल । टक इति च भाषा ।

**अम्भः**, [स्] क्ली, (आप्यते, आप् + असुन् ।) जलं ।

बालनामौषधं । इत्यमरः ॥ लग्नादितश्चतुर्थराशिः
।
इति ज्योतिषं ॥ (अङ्कशास्त्रे चतुर्थसंख्या ।
वैदिकच्छन्दोभेदः ।)

**अम्भःसारं**, क्ली, (अम्भसां सारं ।) मुक्ता । इति

राजनिर्घण्टः ॥ अम्भस्सारमपि पाठः ॥

**अम्भःसूः**, पुं, (अम्भांसि सूते, सू + क्विप् ।) धूमः ।

इति हेमचन्द्रः ॥ अम्भस्सूरिति च पाठः ॥

**अम्भोजं**, क्ली, (अम्भसि जायते, अम्भस् + जन् + ड ।) पद्मं । इति शब्दरत्नाबली ॥ सारसपक्षी । पुष्कराह्व इत्यमरेणोक्तत्वात् । चन्द्रे पुं । यथा । "पिबन्तं त्वन्मुखाम्भोजच्युतं हरिकथामृतं" । इति श्रीभागवतं ॥ जलजाते त्रि ॥

**अम्भोजन्मजनिः**, पुं, (अम्भोजन्मनि विष्णुनाभिपद्मे जनिः जन्म यस्य सः ।) ब्रह्मा । यथा, -- "अम्भोजन्मजनिस्तदन्तरगतोवत्सानितोवत्सपान्" । इति श्रीभागवतं ॥

**अम्भोजयोनिः**, पुं, (अम्भोजं नारायणनाभिपद्मं योनिरुत्पत्तिस्थानं यस्य सः ।) ब्रह्मा । यथा, -- "सदनमुपगतोऽहं पूर्ब्बमम्भोजयोनेः" ॥ इति प्रबोधचन्द्रोदयः ॥

**अम्भोजिनी**, स्त्री, (अम्भोज + समूहार्थे इनि ततः ङीप् ।) पद्मलता । पद्मसमूहः । पद्मयुक्तदेशः । इति शब्दरत्नाबली । (पद्मिनी । नलिनी । "अ-म्भोजिनीवननिवासविलासहेतुं हंसस्य हन्तुमप-रामपि तां विधाता" । इति नीतिशतके ।)

**अम्भोदः**, पुं, (अम्भो जलं ददाति, अम्भस् + दा + कः ।) मेघः । मुस्तकं । इति शब्दरत्नावली ॥ (जलदानकर्त्तरि, त्रि ।)

**अम्भोधरः**, पुं, (अम्भः जलं धरति, धृ + अच् ।) मेघः । ("सशीकराम्भोधरमत्तकुञ्जरः" । इति ऋतुसंहारे ।) मुस्तकं । इति शब्दरत्नावली ॥

**अम्भोधिः**, पुं, (अम्भांसि धीयन्ते अत्र, धा + आधारे किः ।) समुद्रः । इति शब्दरत्नावली ॥ ("अयं रत्नाकरोऽम्भोधिरित्यसेवि धनाशया । धनं दूरेऽस्तु वदनमपूरि क्षारवारिभिः" ॥ इति साहित्यदर्पणे । "सम्भूयाम्भोधिमभ्येति महानद्यो नगापगाः" । इति माघः ।)

**अम्भोधिवल्लभः**, पुं, (अम्भोधेः वल्लभः, षष्ठीतत्पुरुषः ।) प्रबालः । इति राजनिर्घण्टः ॥

**अम्भोनिधिः**, पुं, (अम्भांसि निधीयन्तेऽत्र, अम्भस् + नि + धा + किः ।) समुद्रः । इति शब्दरत्नावली ॥ ("असूत सा नागबधूपभोग्यं ते पुनन्त्युरुकालेन दर्शनादेव साधवः" ॥ इति श्रीभागवतं ॥ ("सौरीभिरिव नाडीभिरमृताख्याभिरम्मयः" । इति रघुवंशे ।)

**अम्रः**, पुं, (अमति सौरभेण दूरं गच्छति, अम + रन् ।) आम्रवृक्षः । फले क्लीवं । इति शब्द-रत्नावली ॥

**अम्रातः**, पुं, (अम्लं रसं सर्व्वत्र पत्रपुष्पादौ अतति व्याप्नोति, अम्ल + अत + अण् वा लस्य रत्वं, पक्षे अम्लातः ।) आम्रातकवृक्षः ॥ इति शब्दमाला ॥

**अम्रातकः**, पुं, (अम्लं रसं सर्व्वत्र पत्रपुष्पादौ अतति व्याप्नोति अम्र + अत + अण् + स्वार्थे कन् ।) आम्रातकवृक्षः । इति त्रिकाण्डशेषः ॥ ("आम्राम्रातकजम्बूत्वक् कषाये विपचेद्बुधः । यवागूं शालिभिर्युक्तां तां भुक्त्वा ग्रहणीं जयेत्" ॥ इति शार्ङ्गधरः ॥)

**अम्लं**, क्ली, (अम + क्ल ।) तक्रं । इति राजनिर्घण्टः ॥

**अम्लः**, पुं, (अम + क्ल ।) षड्रसमध्ये रसविशेषः । टक इति भाषा । तोयाग्निगुणबाहुल्यादम्लः । इति सुश्रुतः । अस्य गुणाः । शाकवद्दोषकारित्वं । हृद्यत्वं । रुच्यग्निरक्तमांसकारित्वं । शीतलत्वं । वायुनाशित्वं । स्निग्धोष्णत्वं । कटुरसतोऽधिकोष्ण-वीर्य्यत्वं । जिह्वोद्वेगकारित्वञ्च । इति राजवल्लभः ॥ अस्य दन्तोद्वेगकारित्वगुणोऽप्यस्ति । अपि च । प्रीत्यग्निपटुताकारित्वं । प्रपाचनत्वं । इति राज-निर्घण्टः ॥ * ॥ तदतिशयभक्षणगुणाः । पाचकत्वं । पित्तश्लेष्मवान्तिक्लेदकारित्वं । लघुत्वं । उष्णत्वं । वहिःशीतत्वं । वायुनाशित्वञ्च । इति राजवल्लभः ॥ भ्रान्तितुष्टिकफपाण्डुदोषकार्श्यकासकारित्वं । इति राजनिर्घण्टः ॥ तद्वति त्रि । इत्यमरः ॥ * ॥ अम्लवेतसः । इति राजनिर्घण्टः ॥ (यदाह वा-भटः ॥ "अम्लः क्षालयते मुखम् । हर्षणो रोमदन्तानामक्षिभ्रुवनिकोचनः वृंहयति, जर्ज्जरयति, मनो बोधयति, इन्द्रियाणि दृढीकरोति, बलं बर्द्धयति, वातमनुलोमयति, हृदयं तर्पयति, आस्यं संस्रावयति, भुक्तमपकर्ष-यति, क्लेदं जनयति, प्रीणयति । लघुरुष्णः स्नि-ग्धश्च ॥ सएवंगुणोऽप्येकएवात्यर्थमुपयुज्यमानो दन्तान् हर्षयति, तर्पयति, संमीलयति अक्षिणी, संवीजयति लोमानि, कफं विलापयति, पित्त-मभिवर्द्धयति, रक्तं दूषयति, मांसं विदहति, कायं शिथिलीकरोति, क्षीण-क्षत-कृशदुर्ब्बलानां श्वयथुमापादयति । अपि च क्षताभिहत-दष्ट-दग्ध-भग्न-शून -- च्युतावमूत्रित-परिसर्पित-मर्द्दित-च्छिन्न-विद्धोत्पिष्टादीनि पाचयत्याग्नेयस्वभावात् परिदहति कण्ठमुरोहृदयञ्च" ॥ इति चरकः ॥)

**अम्लकः**, पुं, (अल्पोऽम्लः अल्पार्थे कन् ।) लकुच-वृक्षः । इति शब्दरत्नावली ॥ (लकुचशब्देऽस्य गुणादयो ज्ञातव्याः ॥)

**अम्लकाण्डं**, क्ली, (अम्लं काण्डं यस्य ।) लवणतृणं । इति राजनिर्घण्टः ॥

**अम्लकेशरः**, पुं, (अम्लः केशरो यस्य ।) मातुलुङ्गः । वीजपूरः । इति रत्नमाला ॥ (टावालेवु इति भाषा ।)

**अम्लचूडः**, पुं, (अम्ला चूडा शिखा यस्य ।) अम्ल-शाकः । इति राजनिर्घण्टः ॥

**अम्लजम्बीरः**, पुं, (अम्लो जम्बीरः ।) अम्लनिम्बूकः । इति राजनिर्घण्टः ॥

**अम्लनायकः**, पुं, (अम्लं रसं नयति, नी + ण्वुल् ।) अम्लवेतसः । इति राजनिर्घण्टः ॥

**अम्लनिशा**, स्त्री, (अम्लरसे निःशेषेण शेते, अम्ल +

मैनाकमम्भोनिधिबद्धसख्यं" ।
इति कुमारसम्भवे । विष्णोः सहस्रनाममध्ये परिगणितो नामभेदः, अम्भांसि देवमनुष्यादयो निधीयन्ते अस्मिन् इति व्यत्पत्त्या, नारायणस्य सर्व्वाश्रयत्वात् । "अम्भोनिधिरनन्तात्मा" । इति महाभारते ।)

**अम्भोराशिः**, पुं, (अम्भसां राशिरिव एकत्रोपचित-

त्वात् ।) समुद्रः । इति राजनिर्घण्टः ॥

**अम्भोरुहं**, क्ली, (अम्भसि रोहति, अम्भस् + रुह

+ कः ।) पद्मं । ("आस्ये पूर्णशशाङ्कता नयन-
योस्तादात्म्यमम्भोरुहां" । इति भामिनीविलासे ।)
सारसपक्षी । इत्यमरः ॥

**अम्मयं**, त्रि, (अपां विकारादि, अप् + मयट् ।)

जलविकारं । फेनादि । इत्यमरः ॥ जलमये त्रि ।
यथा, --
"न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ।

अम्लोऽग्निदीप्तिकृत् स्निग्धो हृद्यः पाचनरोचनः ॥
उष्णवीर्य्यो हिमस्पर्शः प्रीणनः क्लेदनो लघुः ।
करोति कफपित्तास्रं मूढवातानुलोमनम् ॥
सोऽत्यभ्यस्तस्तनोः कुर्य्याच्छैथिल्यं तिमिरं भ्रमं
।
कण्डुपाण्डुत्ववीसर्पशोफविस्फोटतृड्ज्वरान्" ॥
हारीतेन यदुक्तं तद्यथा, --
"जिह्वाक्लेदं जनयति तथा नेत्रनैर्म्मल्यकारी,
बीभत्सं वा जनयति तथा वातरोगापहारी ।
कण्डूकुष्ठक्षतरुजकरै लोलितः शोफिने स्या-
दम्लः प्रोक्तः पवनशमनोऽसृक्प्रकोपं तनोति" ॥
सुश्रुतश्चाह ॥ "अम्लो जरणः पाचनः
पवननिग्रहणो-
ऽनुलोमनः कोष्ठ-विदाही वहिःशीतः क्लेदनः प्रा-
यशोहृद्यश्चेति । सएवंगुणोप्येक
एवात्यर्थमुपसेव्य-
मानो दन्तहर्ष-नयन-सम्मीलन-रोमसंवेजनकफ-
विलयन-शरीरशैथिल्यान्यापादयति तथा क्षता-
भिहत-दग्ध-दष्ट-भग्न-रुग्न-शून-प्रच्युतावमूत्रित-
वि-
सर्पित-छिन्न भिन्न-विद्धोत्पिष्टादीनि पाचयत्या-
ग्नेयस्वभावात् परिदहति कण्ठमुरोहृदयञ्चेति" ॥
० ॥
"अम्लोरसो भक्तं रोचयति, अग्निं दीपयति, देहं

नि + शी + ड + स्त्रियां टाप् ।) शटी । इति
रा-
जनिर्घण्टः ॥

**अम्लपञ्चफलं**, क्ली । अम्लरसयुक्तपञ्चप्रकारफलं ।

तद्यथा । कोलं १ दाडिमं २ वृक्षाम्लं ३
चुक्रिका ४ अम्लवेतसं ५ ॥ मतान्तरे ।
जम्बीरं १
नारङ्गं २ अम्लवेतसं ३ तिन्तिडीकं ४ वीजपूरं
५ ।
इति राजनिर्घण्टः ॥
("कोलञ्च दाडिमञ्चैव वृक्षाम्लं चुक्रिका तथा ।
अम्लवेतसमित्येतदम्लपञ्चफलं स्मृतम्" ॥
"जम्बीरं नागरङ्गञ्च तथाम्लवेतसं पुनः ।
तिन्तिडीकं वीजपूरमम्लपञ्चफलं स्मृतम्" ॥)

**अम्लपत्रः**, पुं, (अम्लं पत्रं यस्य ।) अश्मन्तकवृक्षः ।

इति राजनिर्घण्टः ॥

**अम्लपत्री**, स्त्री, (अम्लं पत्रं यस्याः सा, ङीप् ।)

पलाशीलता । क्षुद्राम्लिका । इति
राजनिर्घण्टः ॥

**अम्लपूरं**, क्ली, (अम्लेन अम्लरसेन पूर्य्यते, पूर +

कर्म्मणि घञ् ।) वृक्षाम्लं । इति राजनिर्घण्टः
॥

**अम्लफलं**, क्ली, (अम्लं फलं यस्य ।) वृक्षाम्लं । इति

राजनिर्घण्टः ॥ तेतुल इति भाषा ।

**अम्लफलः**, पुं, (अम्लं फलं यस्य सः ।) आम्रवृक्षः ।

इति राजनिर्घण्टः ॥

**अम्लभेदनः**, पुं, (अम्लार्थं भिद्यतेऽसौ, अम्ल + भिद्

+ कर्म्मणि ल्युट् ।) अम्लवेतसः । इति राज-
निर्घण्टः ॥

**अम्लरुहा**, स्त्री, (अम्लाय रोहति, अम्ल + रुह् + क ।) मालवदेशजनागवल्लीभेदः । अस्या गुणाः ।
सुतीक्ष्णत्वं । मधुरत्वं । रुचिकारित्वं ।
हिमत्वं ।
दाहनाशित्वं । पित्तोद्रेकहरत्वं ।
अग्निबलसुखा-
मोदश्रीसौभाग्यविवर्द्धनत्वं । मदकारित्वं ।
गुल्मा-
ध्मानविबन्धनाशित्वञ्च । इति राजनिर्घण्टः ॥
("नाम्ना याऽम्लरुहा सुतीक्ष्णमधुरा रुच्या हिमा
दाहनुत् पित्तोद्रेदकहरा सुदीपनकरी बल्या सुखा
मोदिनी । स्त्रीसौभाग्यविवर्द्धिनी मदकरी ज्ञेया
सदा वल्लभा गुल्माध्मानविबन्धजित् च कथिता
सा मालवे तु स्मृता" ।)

**अम्ललोणिका**, स्त्री, (अम्लं रसं लाति गृह्णाति अम्ललः तम् ऊनयति हीनयति, अम्लल + ऊन + ण्वुल्, णत्वम् ।) क्षुद्रवृक्षविशेषः । आम-
रुल । इति भाषा । तत्पर्य्यायः । चाङ्गेरी २
चुक्रिका ३ दन्तशठा ४ अम्बष्ठा ५ । इत्यमरः ॥
अस्या गुणाः । कफवायुनाशित्वं ।
अग्निदीपनत्वं ।
ग्रहणीरोगे हितकारित्वञ्च । इति राजवल्लभः ॥
वस्त्रादिलग्नलौहचिह्नकषायरागनाशकगुणोऽप्य--
स्ति । राजनिर्घण्टोक्तगुणपर्य्यायौ क्षुद्राम्लिका-
शब्दे द्रष्टव्यौ । तत्पर्य्यायगुणाः ।
"चाङ्गेरी चुक्रिका दन्तशठाम्बष्ठाम्ललोणिका ।
अश्मन्तकस्तु शफरी कुशली चाम्लपत्रकः" ॥
क्वचित् पुस्तके कुशलीस्थाने शकली इति च
वीजपूरं च जम्बीरं निम्बल्मीकाम्लवेतसं ॥
वृक्षाम्लं हरिमन्थञ्च चाङ्गेरीत्यम्लवर्गकः" ॥)
"अम्लवेतसजम्बीरलुङ्गाम्लचणकाम्लकाः ।
नागरङ्गं तिन्तिडी च चिञ्चापत्रञ्च निम्बुकं ॥
चाङ्गेरी दाडिमञ्चैव करमर्द्दन्तथैव च ।
एष चाम्लगणः प्रोक्तो वेतसाम्लं सदोत्तमम्" ॥
इति वैद्यकरसेन्द्रसारसङ्ग्रहः ॥
"दाडिमामलकमातुलुङ्गाम्रातक-कपित्थ-करमर्द्द-
वरकोल-प्राचीनामलक-तिन्तिडीक-कोशाम्र-
भव्य-पारावत-वेत्रफल-लकुचाम्ल-वेतस-दन्तशठ-
दधि-तक्र-सुरा-शुक्त-सौवीरक-तुषोदक-धान्याम्ल-
प्रभृतीनि समासेनाम्लोवर्गः" ॥ इति सुश्रुतश्च ॥)

**अम्लवल्ली**, स्त्री, (अम्लरसवती वल्ली ।) त्रिपर्णिका-
नामकन्दविशेषः । इति राजनिर्घण्टः ॥

**अम्लवाटिका**, स्त्री, (अम्लस्य वाटिका स्थानमिव ।)
नागवल्लीभेदः । अस्या गुणाः । कटुत्वं ।
अम्लत्वं ।
तिक्तत्वं । रूक्षत्वं । उष्णत्वं ।
मुखपाककारित्वं ।
विदाहपित्तरक्तप्रकोपकारित्वं ।
विष्टम्भदातृत्वं ।
वायुनाशित्वञ्च । इति राजनिर्घण्टः ॥
(उक्तञ्च, --
"स्यादम्लवाटी कटुकाम्लतिक्ता
रूक्षा तथोष्णा मुखपाककर्त्री ।
विदाहपित्ताम्रविकोपिनी च
हिक्कानाहारुचिश्वासकासाजीर्णवमिप्रणुत् ।
कफवातामयध्वंसि छागमांसद्रवत्वकृत् ॥
चणकाम्लगुणं ज्ञेयं लौहसूचीद्रवत्वकृत्" ।
इति भावप्रकाशः ॥
("अम्लिकायाः फलं पक्वं तस्मादल्पान्तरं गुणैः ।
गुणैस्तैरेव संयुक्तं भेदनन्त्वम्लवेतसम्" ॥
इति च चरकः ॥)

**अम्लशाकं**, क्ली, (अम्लः शाको यस्य तत् ।) वृक्षाम्लं ।
चुक्रं । इति राजनिर्घण्टः ॥
(वृक्षाम्लशब्देऽस्य-
विशेषो द्रष्टव्यः ॥)

**अम्लशाकः**, पुं, (अम्लः शाको यस्य सः ।) अम्लद्रव्य-
विशेषः । तत्पर्य्यायः । शाकाम्लं २
शुक्ताम्लं ३
अम्लचुक्रिका ४ चिञ्चाम्लं ५ अम्लचूडः ६ चिञ्चा-
सारः ७ । अस्य गुणाः । अतिशयाम्लत्वं । वात-
नाशित्वं । कफदाहहारित्वञ्च । समशर्करा-
मिश्रितस्यास्य गुणः ।
दाहपित्तकफार्त्तिनाशित्वं ।
इति राजनिर्घण्टः ॥ (यदुक्तं, --
"अम्लशाकस्त्वतीवाम्लो वातघ्नः कफदाहनुत् ।
साम्येन शर्करामिश्रो दाहपित्तकफार्त्तिनुत्" ॥)

**अम्लसारं**, क्ली, (अम्लरस एव सारः यस्य तत् ।)
काञ्जिकं । इति राजनिर्घण्टः ॥

**अम्लसारः**, पुं, (अम्लरस एव सारः यस्य सः ।)
अम्लवेतसः । निम्बूकः । हिन्तालः । इति राज-
निर्घण्टः ॥

पाठः ।
"चाङ्गेरी दीपनी रुच्या लघूष्णा कफवातनुत् ।
पित्तलाम्ला ग्रहण्यर्शःकुष्ठातीसारनाशिनी" ॥
इति भावप्रकाशः ॥
("दीपनी चोष्णवीर्य्या च ग्राहिणी कफमारुते
।
प्रशस्यतेऽम्लचाङ्गेरी ग्रहण्यर्शोहिता च सा" ॥
इति चरकः ॥
"चाङ्गेरी कफवातघ्नी वह्निकृद् ग्रहणी हिता"
।
इति वैद्यकद्रव्यगुणः ॥
"चाङ्गेर्य्यम्लाग्निदीपनी" ।
"ग्रहण्यर्शोऽनिलश्लेष्महितोष्णा ग्राहिणी
लघुः" ॥
इति च वाभटः ॥
"ग्रहण्यर्शोविकारघ्नी साम्ला वातकफे हिता
।
उष्णा कषायमधुरा चाङ्गेरी चाग्निदीपनी" ॥
इति सुश्रुतश्च ।)

**अम्ललोणी**, स्त्री, अम्ललोणिका । चाङ्गेरी । इत्य-

मरटीका ॥

**अम्लवती**, स्त्री, (अम्लो रसो विद्यतेऽस्याः, अम्ल +

मतुप् मस्य वत्वम् ।) क्षुद्राम्लिका । इति राज-
निर्घण्टः ॥ आमरुल । इति भाषा ।

**अम्लवर्गः**, पुं, (अम्लानां अम्लरसप्रधानानां वर्गः ।)

अम्लगणः । यथा । चाङ्गेरी । लकुचं ।
अम्लवेतसं ।
जम्वोरकं । वीजपूरकं । नागरङ्गं । दाडिमं ।
कपित्थं । अम्लं । वीजाम्लकं । अम्बष्ठा ।
कर-
मर्दकं । निम्बूकं । इति राजनिर्घण्टः ॥ (मता-
न्तरे यथा, --
"आम्र आम्रातको धात्री लकुचं च कपित्थकं ।
नारङ्गं द्विविधा जम्बूः करमर्दं प्रियारकं ॥
दाडिमं पार्ब्बती द्राक्षा द्विधा वदरतूदकं ।
विष्टम्भदा वातनिवर्हणी च" ॥)

**अम्लवास्तूकं**, क्ली, (अम्लरसान्वितं वास्तूकं शाक-

भेदः ।) चुक्रं । इति राजनिर्घण्टः ॥

**अम्लवीजं**, क्ली, (अम्लस्य वीजं कारणं ।) वृक्षाम्लं ।

इति राजनिर्घण्टः ॥

**अम्लवृक्षं**, क्ली, (अम्लरसो वृक्षे यस्य ।) वृक्षाम्लं
।

इति राजनिर्घण्टः ॥ तँतुल इति भाषा ।

**अम्लवेतसः**, पुं, स्वनामप्रसिद्धः अम्लरसवृक्षविशेषः ।

चुकाशाक इति ख्यात इति केचित् ।
अम्ल-
कुचाइ इति ख्यात इति केचित् । इत्यमर-
टीकायां भरतः ॥ तत्पर्य्यायः । अम्लः २
बेधी ३
रसाम्लः ४ आम्लवेतसः ५ वेतसाम्लः ६
अम्ल-
सारः ७ शतबेधी ८ बेधकः ९ भीमः १०
भेदनः ११
भेद्री १२ राजाम्लः १३ अम्लभेदनः १४
अम्ला-
ङ्कुशः १५ रक्तसारः १६ फलाम्लः १७
अम्ल-
नायकः १८ सहस्रबेधी १९ वीराम्लः
२० गुल्म-
केतुः २१ वराभिधा २२ शङ्खद्रावी २३
मांस-
द्रावी २४ । इति राजनिर्घण्टः ॥ वराङ्गी
२५ ।
इति रत्नमाला ॥ चुक्रः २६ । इत्यमरः ॥
तत्फल-
गुणाः । अत्यम्लत्वं । कषायत्वं । उष्णत्वं
। वायु-
कफार्शःश्रमगुल्मनाशित्वं ।
अरुचिहारित्वञ्च ।
इति राजनिर्घण्टः ॥
छागमांसलौहसूचीद्रव-

**अम्लहरिद्रा**, स्त्री, (अम्लरसयुक्ता हरिद्रा ।) शटी ।

इति राजनिर्घण्टः ॥

**अम्लाङ्कुशः**, पुं, (अम्लं अङ्कुशाकारं अग्रं यस्य ।)

अम्लवेतसः । इति राजनिर्घण्टः ॥

**अम्लातकः**, पुं, (न म्लायति, म्लै + तन् स्वार्थे कन्,

नञ्समासः ।) अम्लानवृक्षः । इति
राजनिर्घण्टः ॥
अस्य गुणपर्य्यायौ राजतरुणीशब्दे ज्ञेयौ ॥

**अम्लानः**, पुं, (म्लै + क्तः ततो नञ्समासः ।) महा-

सहावृक्षः । इत्यमरभरतौ ॥ आँयला इति
ख्यातः ।

**अम्लानः**, त्रि, (म्लै + क्तः, न म्लानः नञ्समासः
।)

म्लानिरहितः । यथा, --
"अम्लानपङ्कजां मालां शिरस्युरसि
चापरां" ।
इति देवीमाहात्म्यं ॥ (स्वच्छः । परिष्कृतः
।
निर्म्मलः । उज्ज्वलः । प्रसन्नः । विशदः ।
प्रत्यग्रः ।
अपर्य्युषितः । अशुष्कः ।)

**अम्लानिनी**, स्त्री, (अम्लानानां पद्मानां समूहः ।

इनि ।) पद्मसमूहः । पद्मिनी । इति
त्रिकाण्ड-
शेषः ॥

**अम्लिका**, स्त्री, (अम्लैव, स्वार्थे कन् ।) तिन्तिडी
॥

इत्यमरः ॥ पलाशीलता । श्वेताम्लिका ।
क्षुद्रा-
म्लिका । इति राजनिर्घण्टः ॥
अम्लोद्गारः । इति इति वाभटः ।
मेदिनी ॥
("दीपनं भेदनं शुष्कमम्लिकाकोलयोः
फलं" ।
"अम्लिकायाः फलं पक्वं तस्मादल्पान्तरं
गुणैः" ॥

| | | |
|---|---|---|
| | कारित्वं । चणकाम्लवत् गुणकारित्वञ्च । इति<br>भावप्रकाशः ॥ आनाहरोगनाशित्वं । तत्पक्व-<br>फलगुणाः । दोषविनाशित्वं । गुरुत्वं । धारकत्वञ्च ।<br>इति राजवल्लभः ॥ तत्पर्य्यायगुणाः । “स्यादम्लवेतसश्चुक्रः शतबेधी सहस्रजित् ।<br>अम्लवेतसमत्यम्लं भेदनं लघु दीपनं ॥<br>हृद्रोगशूलगुल्मघ्नं पित्तलोहितदूषणं ।<br>रूक्षं विण्मद्यदोषघ्नं प्लीहोदावर्त्तनाशनं ॥ | इति चरकः ।<br>“अम्लिकायाः फलं पक्वं तद्वद्भेदि तु केवलं” ॥<br>इति सुश्रुतः ।) |

**अम्लिकावटकः**, पुं, (अम्लिकाया वटकः ।) अम्लिकां
स्वेदयित्वा जलेन सह मर्दयित्वा तत्सं
स्कृतजले
मग्नवटकः । अम्लवडा इति भाषा ।
अस्य गुणाः ।
रुच्यग्निकारित्वं । वटकगुणतुल्यगुणत्वञ्च
। इति
भावप्रकाशः ॥
(“अम्लिकां स्वेदयित्वा तु जलेन सह
मर्दयेत् ।
तन्नीरे कृतसंस्कारे वटकान्
मज्जयेज्जनः ।
अम्लिकावटकास्ते तु रुच्या
वह्निप्रदीपनाः ।
वटकस्य गुणैः पूर्ब्बैरेतेऽपि च
समन्विताः” ॥)

**अम्लीका**, स्त्री, अम्लिका । इत्यमरटीकायां राय-
मुकुटः ॥

**अम्लोटकः**, पुं, (अम्लं उटं पत्रं यस्य सः ।) अश्म-
न्तकवृक्षः । अम्लकुचाइ इति ख्यातः ।
इति
रत्नमाला ॥

**अय** ङ गतौ । (इति कविकल्पद्रुमः ॥) ङ अयते
।
इति दुर्गादासः ॥

**अयः**, पुं, (एति सुखमनेन, इण + करणे अच् ।)
शुभावहविधिः । मङ्गलानुष्ठानं । इत्यमरः
॥
(कल्याणदायकं दैवं ।
“स गुप्तमूलप्रत्यन्तः
शुद्धपार्ष्णिरयान्वितः” ।
इति रघुवंशे । नरकभेदः ।
अयःपानमप्यत्र ।
इति वैद्यकरसेन्द्रसारसङ्ग्रहः ॥)

एकवर्षे चतुःपञ्चपलमानक्रमेण तु ॥
षट्षष्टिवत्सरानेकदिनं स्यादयनं रवेः ।
एवं चतुःपञ्चदिनमयनारम्भणं क्रमात् ॥
व्युत्क्रमेण च तद्वत् स्यादुदग्यानं रवेर्ध्रुवं ।
कर्क्किसंक्रमणे तद्वदभितो दक्षिणायनं” ॥
इति ज्योतिस्तत्त्वं ॥

**अयनांशः**, पुं, (अयनस्य अंशः भागः ।) सूर्य्यगतिवि-
शेषस्य भागः । अथायनांशलग्नसाधनं ।
“लग्नं लग्नान्तरं कृत्वा अयनांशैः प्रपूरयेत् ।
खानलैर्हरते भागं मिश्रयित्वा दिने दिने” ॥
अस्यार्थः । लग्नं रामोगवेदैरित्याद्युक्तं
लग्नान्तरं
कृत्वा यथा मेषलग्नं ३ । ४७ लग्नान्तरं
वृषलग्नं
४ । १७ अत्रान्तरेण द्वयोराधिक्येन ३०
त्रिंशत्पलं
तच्चायनांशैः पूरयेत् ॥ अयनांशस्तु
जातकार्णवोक्तः ।
यथा, --
“शाकमेकाक्षिवेदोनं द्विः कृत्वा दशभिर्हरेत्
।
लब्धं हीनञ्च तत्रैव
षष्ट्याप्ताश्चायनांशकाः” ॥
इति । लब्धस्थाने लब्धेन इति पाठः
सिद्धान्त-
रहस्ये ॥ ते च इदानीं चैत्रस्यैकादशाहे
सम्भवात्
ऊनविंशतिसंख्यकाः । ते च पुनःखानलैः
३० त्रिं-
शता हरेत् । भागलब्धिस्तु ऊनविंशतिः
१९ ।
तच्च मेषलग्ने मिश्रयित्वा ४ । ६
षट्पलाधिक-
दण्डचतुष्टयात्मकं मेषलग्नं भवति । एवं
वृषादिक-
मूह्यं । किन्तु लग्नान्तरेण यत्राधिकं लभ्यते
तत्रा-

राजीवनाथो यद्यातिस्म द्रुतं स्यादुदयमनुदिवा-
रात्रमाहुर्वराहाः ॥ * ॥ लग्नं लग्नान्तरं कृत्वेति
प्रकारान्तरेण यदुक्तं तदपि पद्येन लिख्यते यथा
।
वेदोऽङ्गैः ४ । ६-रिभवेदैः श्रुति ४ । ४८-
रिषुरिभ-
पक्षैः ५ । २८ कुवेदैश्च बाणो ५ । ४१ बाणो
रामानलै ५ । ३३-रिन्द्रियमपि नवाक्षै ५ । २९
रिषुः सप्तरामैः ५ । ३७ बाणः शून्याब्धिने ५ ।
४०
षुर्धृतिभि ५ । १८ -- रिषुगुणैरब्धि ४ । ३५-
रष्टेष-
णाग्नी ३ । ५८ रामोऽश्वाद्रिस्तु ३ । ४७
सिद्धान्त-
जमतमयनांशादिदं लग्नमानं ॥
“चैत्रस्यैकादशाहे तु विषुवारम्भणं यदा ।
तदैतल्लग्नमानं हि ज्ञेयमन्यत्र साधनात्” ॥
इति ज्योतिषसंग्रहः ॥ (गतिः । गमनं । मार्गः ।
“अगस्त्यचिह्नादयनात् समीपं
दिगुत्तरा भास्वति सन्निवृत्ते” ।
इति रघुवंशे । स्थानं । भूमिः । समरसमार-
म्भकाले योधानां यथाप्रधानं यूद्धभूमौ पूर्ब्बाप-
रादिदिग्विभागेनावस्थितिस्थानं ।
सेनासन्निवेश-
विशेषरूपव्यूहप्रवेशमार्गः ।
“अयनेषु च सर्व्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व्व एव हि” ॥
इति भगवद्गीता । आश्रयः । विश्रामस्थानं ।
“आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं पूर्ब्बं तेन नारायणः स्मृतः” ॥
इति मनुः । गृहं । वसतिः । वासस्थानं । शास्त्रं
।
भावसाधनो ग्रन्थः ।
“शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चयः ।
ज्योतिषामयनञ्चैव वेदङ्गानि षडेव तु ॥
छन्दः पादौ तु वेदस्य हस्तः कल्पोऽथ कथ्यते
।
ज्योतिषामयनं नेत्रं निरुक्तं श्रोत्रमुच्यते” ॥

**अयः**, [स्] क्ली, (इणगतौ, असुन् ।) लौहं । इत्यमरः ॥

(गुडूच्यादिलौहं ॥

"आयुःप्रदाता बलवीर्य्यधाता,

रोगापहर्त्ता मदनस्य कर्त्ता ।

अयःसमानं न हि किञ्चिदस्ति,

रसायनं श्रेष्ठतमं नराणां" ॥ * ॥

"गुडूचीसारसंयुक्तं त्रिकत्रयसमन्त्वयः ।

वातरक्तं निहन्त्याशु सर्व्ववातहरं परं"

॥)

**अयनं**, क्ली, (अय + भावे ल्युट् ।) शास्त्रं । यथा, --

"ज्योतिषामयनं नेत्रं निरुक्तं

श्रोत्रमुच्यते" ।

इति तिथ्यादितत्त्वं ॥ पन्थाः । सूर्य्यस्य उत्तर-

दक्षिणदिग्गमनं । तद्यथा ।

माघादिषण्मासाः

उत्तरायणं । श्रावणादिषण्मासाः

दक्षिणायनं ।

इत्यमरः ॥ गमनं ।

गत्यर्थायधातोर्भावेऽनट् ॥

रविसंक्रान्तिविशेषः । यथा

भविष्यमात्स्यज्यो-

तिषेषु ।

"मृगकर्कटसंक्रान्ती द्वे तूदक्दक्षिणायने ।

विषुवती तुला मेषे गोलमध्ये तथापराः"

॥

मृगो मकरः । गोलो राशिचक्रं ।

देवीपुराणे,

"यावद्विंशकला मुक्ता तत्पुण्यं

चोत्तरायणे ।

निरंशे भास्करे दृष्टे दिनान्तं दक्षिणायने"

॥

तत्र स्नानदानादौ कोटिगुणफलं भवति । यथा

मात्स्ये ।

"अयने कोटिगुणितं लक्षं विष्णुपदीषु च

।"

इत्वादि ।

धिकं लग्नं भवति । एवं यत्र लग्नान्तरेण

हानि-

स्तत्र लग्नेऽपि हानिरिति निष्कर्षः ॥ * ॥

इदानीं

स्पष्टज्ञानार्थं पद्येन लिख्यते । बाणैवदो ४

। ५-

ऽष्टवैदैः श्रुति ४ । ४८-रिभनयनैरिन्द्रियं ५

। २८

-खाम्बुनेषु ५ । ४०-र्बाणो वेदानलैः ५ ।

३४

-खाग्निमिरिषु ५ । ३०-रिषुरङ्गाग्निने ५ ।

३६

षुःकुवेदै ५ । ४१-र्बाणोनागेन्दुभिस्तु ५ ।

१८

श्रुतिरपि रसरामै ४ । ३६-र्गुणाः सप्तबाणैः

३ । ५७

रामोऽश्वाद्भिस्तु ३ । ४७-

सिद्धान्तजमतमयनांशा-

दिदं लग्नमानं ॥ एतञ्च तमोलिप्तादिदेशीयं

प्रागुक्तायनांशसाधितं ॥ * ॥ अङ्गेन वेदो ४

। ६

मेषः स्यात् वसुवेदैः सुखं ४ । ४८ वृषः ।

मुनियुग्मैः

शरो ५ । २७ द्वन्द्वः व्योमाब्धिबाण ५ ।

४०-कर्कटः ॥

वेदरामैः शरः ५ । ३४ सिंहः

कन्याङ्कयुम्मपञ्चकः

५ । २९ । तुला ऋषिरामपञ्च ५ । ३७-

वृश्चिकः

खाब्धिपञ्चकः ५ । ४० ॥ नवचन्द्रबाण ५

। १९ --

धनुर्वेदरामैः सुखं ४ । ३४ मृगः । वसुपञ्च-

त्रयः ३ । ५८ कुम्भः ऋषिवेदत्रयो ३ ।

४७ झषः

॥ * ॥ शत्रुर्वेदश्च ४ । ६ मेषो नवसुखसुख

४-४९ । -गौर्मृत्युयुग्मैः शिवास्यो ५ । २८

द्वन्द्यो-

ऽङ्काप्यित्तवाणो ५ । ३९ हिमकरभवनो

राम-

इति कूर्म्मपुराणे ।)

**अयानयीनः**, पुं, शारः । यथा । अनुपदसर्व्वान्नायानयं

बद्धा भक्षयति नेयेषु । अयानयः स्थलविशेषः ।

तन्नेयः । अयानयीनः शारः । इति सिद्धान्त-

कौमुदी ॥

**अयन्त्रितः**, त्रि, (न यन्त्रितः, नञ्समासः ।) अबाधः ।

अनर्गलः । इति हेमचन्द्रः ॥ (अनियन्त्रितः ।

अनियमितः । स्वाधीनः ।

"सावित्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः ।

नायन्त्रितस्त्रिवेदोऽपि सर्व्वाशी सर्व्वविक्रयी" ॥

इति मनुः ।)

**अयस्कान्तः**, पुं, (अयस्सु कान्तः रमणीयः ।) लौह-

विशेषः । कान्तलोह इति ख्यातः । तत्प-

र्य्यायः । कान्तलोहं २ कान्तं ३ लौहकान्तकं

४ कान्तायसं ५ कृष्णलोहं ६ महालोहं ७ ।

अस्य गुणाः । तीक्ष्णत्वं । उष्णत्वं । रूक्षत्वं ।

पाण्डुशोथकफपित्तहरत्वं । रसायनत्वं । अनु-

त्तमत्वञ्च । स चतुर्व्विधः । भ्रामकः १ चुम्बकः

२ रोमकः ३ स्वेदकः ४ । एते रसायने उत्त-

रोत्तरगुणिनः ।

"क्रमेण

दार्ढ्याङ्गकान्तिकात्स्न्र्येनीरोगदायिनः" ।

इति राजनिर्घण्टः ॥ चुम्बकप्रस्तरोऽप्ययं ।

(चुम्बक

| “अयने विषुवे चैव शयने बोधने हरेः । अनध्यायस्तु कर्त्तव्यो मन्वादिषु युगादिषु” ॥ इति तिथ्यादितत्त्वं ॥ * ॥ सूर्य्यगतिविशेषः । यथा, -- “मृगसंक्रान्तितः पूर्ब्बं पञ्चात्तारादिनान्तरे । | रामैः कलम्बः ५ । ३३ । सिंहः कन्याब्जरामैरिषु ५ । ३१-रिषुजसुखाग्नीषु ५ । ३४-यूकोऽलिपृथ्वी ५ । ४१ वेदेशास्योऽष्टपृथ्वीस्मरहरमुख ५ । १८ कोदण्डमाहुर्वराहाः ॥ बन्धू रामश्च वेदो ४ । ३४ रविसुतभवनः पर्ब्बतः पञ्चरामः ३ । ५७ कुम्भो मीनश्च भुङ्क्ते गिरिसुखदहनं ३ । ४७ प्रत्यहं प्रक्रमेण । अस्तं यामित्रराशावनुदिनमवसाद्यञ्च | |
|---|---|---|

:इति ख्यातः प्रस्तरभेदः । चुम्बकपाथर इति

भाषा ।
“उमारूपेण ते यूयं संयमस्तिमितं मनः ।
शम्भोर्यतध्वमाक्रष्टुमयस्कान्तेन लौहवत्”
॥
इति कुमारसम्भवे ।)
(“ततः कोटिसहस्रैर्वा कान्तलौहं
महागुणं” ।
इति वैद्यकरसेन्द्रसारसङ्ग्रहः ॥)

**अयस्कार**, पुं, (अयोविकारं करोति, कृ + अण्

उपपदसमासः ।) प्रजङ्घाग्रः । जङ्घाग्रभागः
।
इति त्रिकाण्डशेषः ॥ लौहकारः ।
अयस्करोतीति
व्युत्पत्त्या ॥

**अयाः**, [स्] पुं, (इन् + असुन् ।) अग्निः । इत्यु-

णादिकोषः ॥

**अयाचकः**, त्रि, (याच + ण्वुल्, ततो नञ्समासः ।)

याच्ञारहितः । यथा । “यदि भवति स
दाता
याचकायाचकेषु” । इत्युद्भटः ॥
(भिक्षापराङ्मुखः ।
प्रार्थनाविमुखः ।)

**अयाचितं**, त्रि, (याच् + क्तः, नञ्समासः ।) याच्-

ञां विना लब्धवस्तु । अप्रार्थितं ।
इत्यमृतशब्दार्थे
मेदिनी ॥ (अनर्थितं ।
“अयाचितोपस्थितमम्बु
केवलं” । इति कुमारसम्भवे । “अमृतं
स्याद-
याचितं” । इति मनुः । “अयाचिताहृतं
ग्राह्य-
मपि दुष्कृतकर्म्मणः” । इति स्मृतिः ।)

**अयाचितः**, पुं, (याच् + क्तः, ततो नञ्समासः ।)

भरतः ॥ (छातिम इति ख्यातः सप्तच्छदवृक्षः ।
“अनेकराजन्यरथाश्वसङ्कुलं
तदीयमास्थाननिकेतनाजिरं ।
नयत्ययुग्मच्छदगन्धिरार्द्रतां
भृशं नृपोपायनदन्तिनां मदः” ॥
इति किरातार्ज्जुनीये ।)

**अयुतं**, क्ली, (न युतं, नञ्समासः ।) दशसहस्रसंख्या ।

इति हेमचन्द्रः ॥ १०००० दशहाजार इति
भाषा । (“नागानामयुतं तुरङ्गनियुतं सार्द्धं
रथानां शतं” । इति रामायणे ।)

**अयुतः**, त्रि, (न युतः, नञ्समासः ।) अमिश्रितः ।

अयुक्तः । यथा । अपृथग्भावोऽयुतासिद्धिः ।
इति चरकटीका ॥ (असंयुक्तः । असंश्लिष्टः ।
संयोगरहितः । पुसि स्वनामख्यातः राधिकस्य
पुत्रः स च क्रोधनस्य पिता ।)

**अये**, व्य, (इण + एच् ।) कोपः । विषादः । सम्भ्रमः ।

स्मरणं । इति मेदिनी ॥ सम्बोधनं । इति शब्द-
रत्नावली ॥ (कोमलामन्त्रणे । “अये कान्ते
मुग्धे-
चटुलनयने चन्द्रवदने” । इत्युद्भटः । “अये कथं
तातसारथिरश्वसेनः” । इति वेणीसंहारे ।)

**अयोगः**, पुं, (युज् + घञ्, नञ्समासः ।) विश्लेषः ।

विधुरः । कूटः । कठिनोद्यमः । इति मेदिनी ॥
वमनविरेचनादीनां प्रतिलोमप्रवृत्तिरल्पप्रवृ-
त्तिर्व्वा । यथा, --
“योगः सम्यक्प्रवृत्तिः स्यादतियोगोऽतिवर्त्तनं ।
अयोगः प्रातिलोम्येन न चाल्पं वा प्रवर्त्तनं” ॥
इति वैद्यकं ॥ (“तत्रासात्म्येन्द्रियार्थसंयोगो-
ऽयोगातियोगमिथ्यायोगादियुक्ता रूपरसादयः”
॥
इति माधवकरकृतरोगविनिश्चयग्रन्थे विजय-
रक्षितः ॥
“त्रीण्यायतनानीति अर्थानां कर्म्मणः कालस्य
चातियोगायोगमिथ्यायोगाः तत्रातिप्रभावतां
दृश्यानामतिमात्रं दर्शनमतियोगः ॥ सर्व्वशो-

“प्रसाधनोपचारज्ञमदासं दासजीवनं ।
सैरिन्ध्रं वागुरावृत्तिं सूते दस्युरयोगवे” ॥
इति मनुः ।)

**अयोगुडः**, पुं, (अयसा निर्म्मितो गुडः पिण्डः ।) लौह-

गुलिका । यथा, --
“वरमाशीविषविषं क्वथितं ताम्रमेव वा ।
पीतमत्यग्निसन्तप्ता भक्षिता
वाप्ययोगुडाः” ॥
इति चरकः ॥

**अयोग्रं**, क्ली, (अयोऽग्रे मुखे यस्य तत् ।) मुषलं
।

इत्यमरः ॥

**अयोघनः**, पुं, (अयांसि हन्यन्ते ताड्यन्तेऽनेन, हन +

अप् + घनादेशश्च ।) एकीभूतलौहपुञ्जः
। हातुडी
इति भाषा । तत्पर्य्यायः । लौहकूटं २ ।
इति
हेमचन्द्रः ॥
(“अयोघनेनाय इवाभितप्तं
वैदेहिबन्धोर्हृदयं विदद्रे” ।
इति रघुवंशे ।
“कुरु करे गुरुमेकमयोघनं
वहिरितो मुकुरुञ्च कुरुष्व मे” ।
इति नैषधं ।)

**अयोध्या**, स्त्री, (योद्धुमशक्या, युध + ण्युत्, नञ्-

समासः ।) श्रीरामनगरी । पश्चिमदेशे
अओद्
इति प्रसिद्धा । तत्पर्य्यायः । साकेतं २
कोशला
३ । इति हेमचन्द्रः ॥ उत्तरकोशला ४ ।
इति
त्रिकाण्डशेषः ॥ सा तु मोक्षदा पुरी ।
यथा, --

मुनिविशेषः । तत्पर्य्यायः । उपवर्षः २ हलभृतिः
३ कृतकोटिः ४ । इति त्रिकाण्डशेषः ॥

**अयानं**, क्ली, स्वभावः । इति हारावली ॥ अगमनं ।
गत्यर्थयाधातोर्भविऽनट् ततो नञ्समासः ॥

**अयि**, व्य, प्रश्नः । (इण + इन् ।) अनुनयः । सम्बो-
धनं । इति मेदिनी ॥ अनुरागे । ("अयि कठोर ! यशः किल ते प्रियं" । इति उत्तर-
चरिते । "अयि घनोरु ! पदानि शनैः शनैः:" ।
इति वेणीसंहारे । "अयि जीवितनाथ ! जीव-
सीत्यभिधायोत्थितया तया पुरः" । इति कुमार
सम्भवे ।)

**अयुक्छदः**, पुं, (अयुग्माः सप्त सप्त छदा अस्य ।)
सप्तपर्णवृक्षः । इति हेमचन्द्रः ॥

**अयुक्तं**, त्रि, (युज् + क्तः, नञ्समासः ।) अमि-
श्रितं । अनुचितं । यथा, --
"अयुक्तं यदिह प्रोक्तं प्रमादेन भ्रमेण वा" ।
इति दुर्गादासः ॥ (असंसक्तः ।
संयोगरहितः ।
अनियोजितः । यथा,
"अयुक्तचारा राजानो भविष्यन्ति कथं नु ते" ।
इति रामायणे । सर्व्वदा
विषयासक्तचित्ततया
कर्त्तव्येष्वनवहितः ।
"परावमन्ता विषयेषु सङ्गवान्,
न देशकालप्रविभागतत्त्ववित् ।
अयुक्तबुद्धिर्गुणदोषनिश्चये,
विपन्नराज्यो न चिरात् विपत्स्यसे" ॥
इति रामायणे ।)

**अयुग्मच्छदः**, पुं, (अयुग्माः सप्त सप्त छदा अस्य ।)

ऽदर्शनमयोगः अतिसूक्ष्मातिश्लिष्टातिविप्रकृष्ट-
रौद्रभैरवाद्भुतद्विष्टबीभत्सविकृतादिरूपदर्शनं ।
मिथ्यायोगः" ॥ इति चरकः ॥) योगो ध्यानं
तदभावः । योगो भेषजं तदभावश्च ॥ (विच्छेदः ।
मिथः संरूढगाढानुरागयोर्नायकनायिकयोर्गुरु-
जनपराधीनतया दैवगत्या वा
विप्रकर्षादन्योन्याद-
र्शनरूपदशाविशेषः, यदुक्तं दशरूपादर्शे ।
"तत्रायोगोऽनुरागेऽपि नवयोरेकचित्तयोः ।
पारतन्त्र्येण दैवाद्वा विप्रकर्षादसङ्गमः" ॥
अयञ्च पूर्ब्बराग इत्युच्यते । यदुक्तं दर्पणकारैः ।
"श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः ।
दशाविशेषो योऽप्राप्तौ पूर्ब्बरागः स उच्यते" ॥)

**अयोगवः**, त्रि, (अयैव कटिना गौर्वाणी यस्य
सः, अच् । अयोगं दुष्टयोगं वाति वा + कः ।)
वैश्यकन्यायां शूद्रादुत्पन्नसन्तानः । इति जटाधरः ॥
("शूद्रादयोगवः क्षत्ता चाण्डालश्चाधमो नृणाम् ।
वैश्यराजन्यविप्रास जायन्ते वर्णसङ्कराः" ॥
इति मनुः ।
शूद्रात् वैश्यायां जातः प्रतिलोमजः सङ्कीर्णवर्णः ।

"अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।
पुरी द्वारवती चैव सप्तैता मोक्षदायिकाः ॥
एतास्तु पृथिवीमध्ये न गण्यन्ते कदाचन ।
श्रीरामधनुरग्रस्था अयोध्या सा महापुरी" ॥
इति भूतशुद्धितन्त्रं ॥ * ॥ तद्वर्णनं यथा, --
"कोशलो नाम मुदितः स्फीतो जनपदो महान् ।
निविष्टः सरयूतीरे प्रभूतधनधान्यवान् ॥
अयोध्या नाम नगरी तत्रासील्लोकविश्रुता ।
मनुना मानवेन्द्रेण या पुरी निर्म्मिता स्वयम् ॥
आयता दश च द्वे च योजनानि महापुरी ।
श्रीमती त्रीणि विस्तीर्णा सुविभक्तमहापथा ॥
राजमार्गेण महता सुविभक्तेन शोभिता ।
मुक्तपुष्पावकीर्णेन जलसिक्तेन नित्यशः ॥
तान्तु राजा दशरथो महाराष्ट्रविवर्द्धनः ।
पुरीमावासयामास दिवि देवपतिर्यथा ॥
कपाटतोरणवतीं सुविभक्तान्तरापणां ।
सर्व्वयन्त्रायुधवतीमुषितां सर्व्वशिल्पिभिः ॥
सूतमागधसम्बाधां श्रीमतीमतुलप्रभां ।
उच्चाट्टालध्वजवतीं शतघ्नीशतसंकुलां ॥
बधूनाटकसंघैश्च संयुक्तां सर्व्वतः पुरीं ।
उद्यानाम्रवणोपेतां महतीं शालमेखलां ॥
दुर्गगम्भीरपरिखां दुर्गामन्यैर्दुरासदां ।
वाजिवारणसम्पूर्णां गोभिरुष्ट्रैः खरैस्तथा ॥
सामन्तराजसङ्घेश्च बलिकर्म्मभिरावृतां ।

| | | |
|---|---|---|
| विषमच्छदः । सप्तपर्णवृक्षः । इत्यमरटीकायां | | नानादेशनिवासैश्च बणिग्भिरुपशोभितां ॥ प्रासादैः रत्नविकृतैः पर्ब्बतैरिव शोभितां । कूटागारैश्च सम्पर्णामिन्द्रस्येवामरावतीं ॥ |

:चित्रामष्टापदाकारां वरनारीगणैर्युतां ।
सर्व्वरत्नसमाकीर्णां विमानगृहशोभितां ॥
गृहगाढामविच्छिद्रां समभूमौ निवेशितां ।
शालितण्डुलसम्पूर्णामिक्षुकाण्डरसोदकां ॥
दुन्दुभीभिर्मृदङ्गैश्च वीणाभिः पणवैस्तथा ।
नादितां भृशमत्यर्थं पृथिव्यां तामनुत्तमां ॥
विमानमिव सिद्धानां तपसाधिगतं दिवि ।
सुनिवेशितवेश्मान्तां नरोत्तमसमावृतां ॥
ये च बाणैर्न बिध्यन्ति विविक्तमपरापरं ।
शब्दबेध्यञ्च विततं लघुहस्ता विशारदाः ॥
सिंहव्याघ्रवराहाणां मत्तानां नदतां वने ।
हन्तारो निशितैः शस्त्रैर्बलाद्बाहुबलैरपि ॥
तादृशानां सहस्रैस्तामभिपूर्णां महारथैः ।
पुरीमावासयामास राजा दशरथस्तदा ॥
तामग्निमद्भिर्गुणवद्भिरावृतां
द्विजोत्तमैर्व्वेदषडङ्गपारगैः ।
सहस्रदैः सत्यरतैर्महात्मभि-
र्महर्षिकल्पैरृषिभिश्च केवलैः” ॥
इत्यार्षे रामायणे बाल्मीकीये बालकाण्डे पञ्चमः सर्गः ॥ * ॥
“तस्यां पुर्य्यामयोध्यायां वेदवित् सर्व्वसंग्रहः ।
दीर्घदर्शी महातेजाः पौरजानपदप्रियः ॥
इक्ष्वाकूणामतिरथो यज्वा धर्म्मपरो वशी ।
महर्षिकल्पो राजर्षिस्त्रिषु लोकेषु विश्रुतः ॥
बलवान्निहतामित्रो भित्रवान् विजितेन्द्रियः ।
धनैश्च सञ्चयैश्चान्यैः शक्रवैश्रवणोपमः ॥
यथा मनुर्महातेजा लोकस्य परिरक्षिता ।
तथा दशरथो राजा लोकस्य परिरक्षिता ॥
तेन सत्याभिसन्धेन त्रिवर्गमनुतिष्ठता ।
पालिता सा पुरी श्रेष्ठा इन्द्रेणेवामरावती ॥
तस्मिन् पुरवरे हृष्टा धर्म्मात्मानो बहुश्रुताः ।
नरास्तुष्टा धनैः स्वैः स्वैरलुब्धाः सत्यवादिनः ॥
नाल्पसन्निचयः कश्चित्तदा तस्मिन् पुरोत्तमे ।
कुटुम्बी यो ह्यसिद्धार्थोऽगवाश्वधनधान्यवान् ॥
कामी वा न कदर्य्यो वा नृशंसः पुरुषः क्वचित् ।
द्रष्टं शक्यमयोध्यायां नाविद्वान्न च नास्तिकः ॥
वर्णेष्वग्र्यचतुर्थेषु देवतातिथिपूजकाः ।
कृतज्ञाश्च वदान्याश्च शूरा विक्रमसंयुताः ॥
दीर्घायुषो नराः सर्व्वे धर्म्मं सत्यञ्च संश्रिताः ।
सहिताः पुत्त्रपौत्त्रैश्च नित्यं स्त्रीभिः पुरोत्तमे ॥
क्षत्त्रं ब्रह्ममुखं चासीद्वैश्याः क्षत्त्रमनुव्रताः ।
शूद्राः स्वकर्म्मनिरतास्त्रीन् वर्णानुपचारिणः ॥
सा तेनेक्ष्वाकुनाथेन पुरी सुपरिरक्षिता ।
यथा पुरस्तान्मनुना मानवेन्द्रेण धीमता ॥
योधानामग्निकल्पानां पेषलानाममर्षिणां ।
सम्पूर्णा कृतविद्यानां गुहा केशरिणामिव ॥
काम्बोजविषये जातैर्व्वाह्लीकैश्च हयोत्तमैः ।
वनायुजैर्नदीजैश्च पूर्णा हरिहयोत्तमैः ॥
विन्ध्यपर्ब्बतजैर्मत्तैः पूर्णा हैमवतैरपि ।
मदान्वितैरतिबलैर्मातङ्गैः पर्ब्बतोपमैः ॥
ऐरावतकुलीनैश्च महापद्मकुलैस्तथा ।
अञ्जनादपि निष्क्रान्तैर्वामनादपि च द्विपैः ॥
भद्रैर्मन्द्रैर्मृगैश्चैव भद्रमन्द्रमृगैस्तथा ।
भद्रमन्द्रैर्भद्रमृगैर्मृगमन्द्रैश्च सा पुरी ॥
नित्यमत्तैः सदा पूर्णा नागैरचलसन्निभैः ।
सा योजने द्वे च भूयः सत्यनामा प्रकाशते ॥
तां पुरीं स महातेजा राजा दशरथो महान् ।
शशास शमितामित्रो नक्षत्राणीव चन्द्रमाः ॥
तां सत्यनामां दृढतोरणार्गलां
गृहैर्व्विचित्रैरुपशोभितां शिवां ।
पुरीमयोध्यां नृसहस्रसंकुलां
शशास वै शक्रसमो महीपतिः” ॥
इत्यार्षे रामायणे वाल्मीकीये बालकाण्डे षष्ठः

**अरघट्टः**, पुं, (अरं शीघ्रं घट्यते चाल्यतेऽसौ, अर + घट्ट + अच् ।) महाकूपः । इत्यमरजटाधरौ ॥ (कूपात् जलनिःसारणार्थं घटीयन्त्रभेदः । कूपोपरिनिबद्ध-जलोत्तोलककाष्ठभेदः । “स कदाचिद्दायादैरुद्वे-जितोऽरघट्टघाटिकामारुह्य कूपात् क्रमेण नि-ष्क्रान्तः” । इति पञ्चतन्त्रे ।)

**अरघट्टकः**, पुं, (अरघट्ट + स्वार्थे कन् ।) महाकूपः । तत्पर्य्यायः । पादावर्त्तः २ । इति हेमचन्द्रः ॥

**अरजाः**, [स्] स्त्री, (रन्ज + असुन्, नलोपः नञ्-समासः ।) कन्या । कुमारी । इति हेमचन्द्रः ॥ रजोगुणरहिते त्रि ॥ (निर्म्मलः । धौतः । परि-ष्कृतः ।)

**अरटुः**, पुं, (अरं शीघ्रं अटति, अट् + उन् ।) अर-लुवृक्षः । इत्यमरटीकायां रायमुकुटः ॥

**अरणिः**, पुं, (ऋ + अनि ।) गणिकारिकावृक्षः । इति मेदिनी । सूर्य्यः । इति काशीखण्डं ॥

**अरणिः**, पुं, स्त्री, (ऋ + अनि ।) निर्म्मन्थ्यदारु । अग्निसाधनीभूतकाष्ठं । धर्षणद्वाराग्निजनककाष्ठं । इत्यमरः ॥ (अग्निमन्थनकाष्ठं । अग्न्युत्पादनाय यत्काष्ठं काष्ठान्तरेण घृष्यते तदरणिनामकं काष्ठं । “विपक्षवक्षोऽरणिमन्थनोत्थः प्रतापवह्नेरिव धूमलेखा” । इति धनञ्जयविजयव्यायोगे ।)

सर्व्वे नराश्च नार्य्यश्च धर्म्मशीलाः सुसंयताः ।
मुदिताः शीलवृत्ताभ्यां महर्षय इवामलाः ॥
नाकुण्डली नामुकुटी नास्रग्वी नाल्पभोगवान् ।
नामृष्टो न न लिप्ताङ्गो नासुगन्धश्च विद्यते ॥
नामृष्टभोजी नादाता नाप्यनङ्गदनिष्कधृक् ।
नाहस्ताभरणो वापि दृश्यते नाप्यनात्मवान् ॥
नानाहिताग्निर्नायज्वा न क्षुद्रो वा न तस्करः ।
कश्चिदासीदयोध्यायां न चावृत्तो न सङ्करः ॥
स्वकर्म्मनिरता नित्यं ब्राह्मणा विजितेन्द्रियाः ।
दानाध्ययनशीलाश्च संयताश्च प्रतिग्रहे ॥
नास्तिको नानृतो वापि न कश्चिदबहुश्रुतः ।
नासूयको न चाशक्तो नाविद्वान् विद्यते क्वचित्
॥
नाषडङ्गविदत्रास्ति नाव्रतो नासहस्नदः ।
न दीनः क्षिप्तचित्तो वा व्यथितो वापि कश्चन ॥
कश्चिन्नरो वा नारी वा नाश्रीमान्नाप्यरूपवान् ।
द्रष्टुं शक्यमयोध्यायां नापि राजन्यभक्तिमान् ॥

सर्गः ॥ युद्धायोग्ये त्रि ॥

**अयोमलं**, क्ली, (अयसो मलमिव ।) लौहमलं ।

इति राजनिर्घण्टः ॥ लोहार गु इति भाषा
।
तत्पर्य्यायः । मण्डूरं २ लौहकिट्टं ३ ।
तस्य गुणाः ।
"शतोद्‌र्ध्वमुतमं किट्टं मध्यञ्चाशीतिवर्षकं
।
अधमं षष्टिवर्षीयं ततो हीनं विषोपमं ॥
यल्लौहं यद्‌गुणं प्रोक्तं तत्किट्टञ्चापि
तद्‌गुणं" ।
इति वैद्यकं ॥
(अस्य शोधनमारणं यथा, --
"दग्ध्वाक्षकाष्ठैर्मलमायसन्तु,
गोमूत्रनिर्व्वापितमष्टवारान् ।
विचूर्ण्य लीढं मधुना चिरेण,
कुम्भाह्वयं पाण्डुगदं निहन्ति" ॥
इति वैद्यकरसेन्द्रसारसङ्ग्रहः ॥)

**अरं**, क्ली, (इयर्त्ति गच्छत्यनेन, ऋ + अच् ।) शीघ्रं ।

चक्राङ्गं । चाकार पाकि इति भाषा ।
शीघ्रगे
त्रि । इति मेदिनी ॥

**अरः**, पुं, (ऋ + अच् ।) जिनानां कालचक्रस्य द्वाद-

शांशः । स तु अवसर्पिण्याः षष्ठभागः ॥
जिना-
नामष्टादशतीर्थङ्करः । इति हेमचन्द्रः ॥

**अरकः**, पुं, (अ + ऋकन् ।) शैवालं । इति हारा-

वली ॥ पर्पटः । इति राजनिर्घण्टः ॥

**अरग्बधः**, पुं, आरग्बधवृक्षः । सोदालि इति

ख्यातः । इत्यमरटीकायां भरतः ॥
(अस्य गुणादयः
आरग्बधशब्दे ज्ञेयाः ।)

**अरणी**, स्त्री, अरणिः । इत्यमरटीकायां भरतः ॥

("विधिना मन्त्रयुक्तेन रूक्षाऽपि
मथिताऽपि च ।
प्रयच्छति फलं भूमिररणीव हुताशनम्" ॥
इति पञ्चतन्त्रे ।)

**अरणीकेतुः**, पुं, (अरणी केतुरस्य सः ।) अग्निमन्थ-

वृक्षः । इति राजनिर्घण्टः ॥

**अरण्यं**, क्ली, (अर्य्यते मृगैः, ऋ गतौ, अर्त्तेर्निश्चेति

अन्यः ।) वनं । इत्यमरः ॥ (मोक्षप्रदं
दण्ड-
कादिकं नवारण्यं । यदुक्तं, --
"दण्डकं सैन्धवारण्यं जम्बुमार्गञ्च पुष्करं ।
उत्पलावर्त्तकारण्यं नैमिषं कुरुजाङ्गलं ॥
हिमवानर्व्वुदश्चैव नवारण्यं विमुक्तिदं" ।)

**अरण्यः**, पुं, कट्‌फलवृक्षः । इति शब्दचन्द्रिका ॥

(स्वनामख्यातो रैवतस्य मनोः पुत्त्रः ।
यदुक्तं
हरिवंशे, --
"अरण्यश्च प्रकाशश्च निर्मोहः सत्यवान्
कृती ।
रैवतस्य मनोः पुत्त्राः पञ्चमश्चैतदन्तरं" ।)

**अरण्यकदली**, स्त्री, (अरण्यस्यैव कदली, षष्ठीतत्-

पुरुषः ।) गिरिकदली । इति राजनिर्घण्टः
॥
(वनकदली । इयं ग्रामादौ न जायते ।)

**अरण्यकार्पासी**, स्त्री, (अरण्ये कार्पासी, सप्तमी-

तत्पुरुषः ।) वनकार्पासी । तत्पर्य्यायः ।
वनजा २
भारद्वाजी ३ वनोद्भवा ४ । अस्या गुणाः ।
हिमत्वं । रूक्षत्वं । व्रणशस्त्रक्षतनाशित्वञ्च
।
इति राजनिर्घण्टः ॥

**अरण्यकुलत्थिका**, स्त्री, (अरण्यस्य कुलत्थिका, षष्ठी-

| | | तत्पुरुषः ।) कुलत्था । इति राजनिर्घण्टः<br>॥ वन-<br>कुलथी इति भाषा ।<br>**अरण्यकुसुम्भः**, पुं, (अरण्यस्य कुसुम्भः, षष्ठीतत्- |
|---|---|---|

:पुरुषः ।) वनकुसुम्भः । तत्पर्य्यायः । कौसुम्भः २

अग्निसम्भवः ३ । अस्य गुणाः पाके कटुत्वं । श्लेष्म-
नाशित्वं । अग्निवृद्धिकारित्वञ्च । इति राज-
निर्घण्टः ॥

**अरण्यघोली**, स्त्री, (अरण्यजा घोलो, कर्म्मधारयः ।)

वनघोली । पत्रशाकविशेषः । इति राजनिर्घण्टः ॥

**अरण्यचटकः**, पुं, (अरण्यस्य चटकः, षष्ठीतत्पुरुषः ।)

वनचटकः । तत्पर्य्यायः । धूसरः २ भूमिशयः ३ ।
अस्य गुणाः । शीतत्वं । लघुत्वं । शुक्रवृद्धि-
कारित्वं । बलप्रदत्वञ्च । इति राजनिर्घण्टः ॥
(अस्य मांसगुणा यथा राजनिर्घण्टे, --
"चटकास्रजं तु शीतं लघु वृष्यं बलप्रदं ।
तद्वच्चारण्यचटकं तत्तूष्णं लघुपथ्यदम्" ॥)

**अरण्यजार्द्रका**, स्त्री, (अरण्य जायते या, अरण्य +

जन् + ड, अरण्यजा आर्द्रका, कर्म्मधारयः ।)
वनार्द्रका । इति राजनिर्घण्टः । वन आदा इति
भाषा । अस्य गुणपर्य्यायौ ऐन्द्रशब्दे द्रष्टव्यौ ॥

**अरण्यजीरः**, पुं, (अरण्यस्य जोरः, षष्ठीतत्पुरुषः ।)

वनजीरः । इति राजनिर्घण्टः ॥ वनजीरा इति
भाषा ।

तां विन्ध्यवासिनीं स्कन्धषष्ठीमाराधयन्ति च ।
कन्दमूलफलाहारा लभन्ते सन्ततिं शुभां" ॥
कन्दं शूरणादि । मूलं तदितरत् । इति तिथ्या-
दितत्त्वं ॥

**अरण्यानी**, स्त्री, (अरण्य + आनुक् + स्त्रियां ङीष् ।

महत् अरण्यम् इत्यस्मिन् अर्थे इन्द्रवरुणेति
सूत्रस्थेन हिमारण्ययोर्महत्वैति वार्त्तिकेन अर-
ण्यशब्दस्य आनुगागमः, ततो ङीष् ।) महावनं ।
इत्यमरः ॥ ("अस्ति मगधदेशे चम्पकवती नामा-
रण्यानी" । इति हितोपदेशे ।)

**अरतत्रपः**, पुं, स्त्री, (अरता विरता त्रपा यस्य ।)

कुक्कुरः । इति त्रिकाण्डशेषः ॥ रत्यलज्जे त्रि ॥
(नास्ति रते शृङ्गारे त्रपा लज्जा यस्य सः ।)

**अरतिः**, पुं, (ऋ + अति ।) क्रोधः । इत्युणादिकोषः ॥

**अरतिः**, स्त्री, (रम् + क्तिन्, नञ्समासः ।) अनव-

स्थितचित्तत्वं । इति रक्षितः ॥ क्रीडाभावः । इति
कार्त्तिकः ॥ रतिविरहः । रतिशून्ये त्रि ॥
(विरक्तिः । प्रीतिविरहः । अनुरागराहित्यं ।
उत्साहहीनता । उद्यमाभावः । उद्योगराहित्यं ।
निश्चेष्टता । सुखाभावः । दुःखं । क्लेशः । औत्-
सुक्यं । उद्वेगः । इष्टवियोगात् चित्तस्याकुलीभावः ।
यदुक्तं, --

**अररुः**, पुं, (ऋ + अरु ।) शत्रुः । इति सिद्धान्त-

कौमुद्यामुणादिवृत्तिः ॥ (अस्त्रभेदः । स्वनाम-
ख्यातोऽसुरभेदः ।)

**अररे**, व्य, (अरं शीघ्रं राति, रा + के ।) त्वरान्वित-

सम्बुद्धिः । शीघ्रसम्बोधनं । इति शब्दरत्नावली ॥
(शीघ्रं प्रत्युत्तरलाभेच्छया कृते अतिव्यग्रतया सम्बोधने ।
"अरे विकारसम्बोधे अररे त्वरयान्विते" ।
इति शब्दरत्नावली ।)

**अरलुः**, पुं, (अरं लाति, ला + कु, ऋ + अरु +

रस्य ल ।) श्योनाकवृक्षः । इत्यमरः ॥ शोनागाछ
इति भाषा ।

**अरविन्दं**, क्ली, (अराकाराणि दलानि तत्सा-

दृश्यात् अराः, तान् विन्दति लभते इत्यर्थे विद्
+ श ।) पद्मं । सारसपक्षी । इत्यमरः ॥ ताम्रं ।
रक्तकमलं । नीलोत्पलं । इति राजनिर्घण्टः ॥
("उन्मीलितं तूलिकयेव चित्रं सूर्य्यांशुभिर्भिन्न-
मिवारविन्दम्" । इति कुमारसम्भवे ।
"अरविन्दमिदं वीक्ष्य खेलत्खञ्जनमञ्जुलं ।
स्मरामि वदनं तस्याश्चारुचञ्चललोचनम्" ॥
इति साहित्यदर्पणे ।)

**अरविन्दिनी**, स्त्री, (अरविन्द + इनि, ङीप् ।)

नलिनी । इति शब्दरत्नावली ॥ पद्मसमूहः ।
पद्माकरः । इति रत्नमाला ॥

**अरसिकः**, त्रि, (रसं वेत्ति, रस + ठन्, नञ्-

समासः ।) अरसज्ञः । अविदग्धः । यथा । "अर-
सिकेषु रसस्य निवेदनं शिरसि मा लिख मा
लिख मा लिख" ॥ इत्युद्भटः ॥

**अराजकः**, त्रि, (नास्ति राजा यत्र सः, कप् ।)

राजशून्यदेशादिः । यथा, --
"चौरप्रायं जनपदं हीनसत्वमराजकं" ।

**अरण्यधान्यं**, क्ली, (अरण्यस्य धान्यं, षष्ठीतत्पुरुषः ।)

नीवारः । इति राजनिर्घण्टः ॥ उडी धान इति भाषा ।

**अरण्यमक्षिका**, स्त्री, (अरण्यस्य मक्षिका, षष्ठी-

तत्पुरुषः ।) दंशः । इति शब्दरत्नावली ॥ डाँश इति भाषा ।

**अरण्यमुद्गः**, पुं, (अरण्यस्य मुद्गः, षष्ठीतत्पुरुषः ।)

मकुष्टकः । इति राजनिर्घण्टः ॥ वनमुग इति भाषा । (अस्य गुणाः मुकुष्टकशब्दे द्रष्टव्याः ।)

**अरण्यवायसः**, पुं, (अरण्यस्य वायसः, षष्ठीतत्-

पुरुषः ।) द्रोणकाकः । इति राजनिर्घण्टः ॥ दाँड काक इति भाषा ।

**अरण्यवासिनी**, स्त्री, (अरण्ये वसति या, अरण्य +

वस् + णिनि, स्त्रियां ङीप् ।) अत्यम्लपर्णी लता । इति राजनिर्घण्टः ॥

**अरण्यवास्तूकः**, पुं, (अरण्यस्य वास्तूकः, षष्ठीतत्-

पुरुषः ।) वनवास्तूकः । इति राजनिर्घण्टः ॥ वन वेतो इति भाषा । अस्य गुणपर्य्यायौ कुणञ्जर-शब्दे द्रष्टव्यौ ॥

**अरण्यशालिः**, पुं, (अरण्यभवः शालिः, कर्म्मधारयः

मध्यपदलोपश्च ।) नीवारः । वनधान्यं । इति राजनिर्घण्टः ॥

**अरण्यशूरणः**, पुं, (अरण्यजातः शूरणः, कर्म्म-

"स्वाभीष्टवस्त्वलाभेन चेतसो यानवस्थितिः ।
अरतिः सा तु विज्ञेया" । सुष्ठुताभावः । अस्वास्थ्यं ।
"श्रमोऽरतिर्विवर्णत्वं वैरस्यं नयनप्लवः" ।
इति सुश्रुते ।)

**अरत्निः**, पुं, (ऋ + कत्निः, रत्निः बद्धमुष्टिकरः, स

नास्ति यस्य ।) विस्तृतकनिष्ठाङ्गुलिमुष्टिकहस्तः । कुर्परः । इति मेदिनी ॥
("एकविंशतियूपास्ते एकविंशत्यरत्नयः" ।
इति रामायणे । कफोणिः । हस्तः । करतल-पार्श्वः । बद्धमुष्टिहस्तः । कील, घुसी इत्यादि भाषा ।
"पदा मूर्ध्नि महाबाहुः प्राहरत् विलपिष्यतः ।
तस्य जानु ददौ भीमो जघ्ने चैनमरत्निना" ॥
इति महाभारते ।)

**अरन्धनं**, क्ली, (न रन्धनं, अत्र अभावे नञ् ।) पाका-

भावः । तच्चु कन्यासंक्रान्त्यां कृतश्चेत् वृद्धारन्धनं कथ्यते । सौरभाद्रस्य यस्मिन् कस्मिन् दिने कृत-श्चेत् इच्छारन्धनमित्युच्यते । इति लोकप्रसिद्धं । तत्र प्रमाणं ।
"कर्कान्नमद्यात् सिंहाहे सिंहान्नं सिंहकन्ययोः ।
मनसाशेषनागेभ्यो दत्वा सर्व्वं निशोधितं" ॥
इत्याचारमार्त्तण्डधृतवचनं ॥

**अरमः**, त्रि, (न रम्यतेऽत्र, आधारे घञ् ।) अवमः ।

अधमः । इत्यमरटीकासारसुन्दरी ॥ (नीचः ।

इति श्रीभागवतं ॥ (नियन्तृहीनः । शासनकर्तृ-रहितः ।
"अराजके जनपदे दोषा जायन्ति वै सदा ।
उद्वृत्तं सततं लोकं राजा दण्डेन शास्ति वै" ॥
इति महाभारते ।)

**अराजकः**, पुं, (नास्ति राजा यत्र सः कप् ।) राज-

शून्यदेशादिः । यथा, --
"अराजके हि लोकेऽस्मिन् सर्व्वती विद्रुते भयात् ।
रक्षार्थमस्य सर्व्वस्य राजानमसृजत् प्रभुः" ॥
इति मानवे ७ अध्याये ३ श्लोकः ॥

**अरातिः**, पुं, (न राति ददाति सुखं, रा + क्तिच्,

नञ्समासः ।) शत्रुः । इत्यमरः ॥
("अरातिविक्रमालोकविकस्वरविलोचनः" ।
इति साहित्यदर्पणे ।
"अनेकयुद्धविजयी सन्धानं यस्य गच्छति ।
तत्प्रभावेन तस्याशु वशं गच्छन्त्यरातयः" ॥
इति पञ्चतन्त्रे ।)

**अरालं**, त्रि, (ऋ + विच्, अरमालाति, आ + ला

+ क ।) कुटिलं । वक्रं । इत्यमरः ॥
("अरालैः स्वाभाव्यादलिकरभकश्रीभिरलकैः" ।
इति आनन्दलहरी ।)

धारयः ।) वनशूरणः । इति राजनिर्घण्टः ॥ वन-

ओल इति भाषा ।

**अरण्यश्वा**, [न्] पुं, (अरण्ये श्वेव हिंस्रः ।) वृकः ।

इति हेमचन्द्रः ॥ नेक्डे वाघ इति भाषा ।

**अरण्यषष्ठी**, स्त्री, (अरण्याय गन्तुं षष्ठी, चतुर्थीतत्-

पुरुषः ।) ज्यैष्ठशुक्लषष्ठी । वाँटाषष्ठी इति भाषा ।

यथा राजमार्त्तण्डे, --

"ज्यैष्ठे मासि सिते पक्षे षष्ठी चारण्यसंज्ञिता ।

व्यजनैककरास्तस्यामटन्ति विपिने स्त्रियः ॥

निकृष्टः । हीनः ।)

**अररं**, त्रि, (ऋ + अरच् ।) कवाटं । इत्यमरः ॥

करीरकोषः । आच्छादनं । इति विश्वः ॥ (पुंसि

चर्म्मकर्त्तनच्छुरिकाभदः । यज्ञाङ्गं । युद्धं । रणः ।)

**अररिः**, पुं, क्ली, (ऋच्छति ऋ + विच्, अरमियर्त्ति

ऋ इनि ।) कपाटं । इति हेमचन्द्रः ॥

**अरालः**, पुं, (ऋ + विच्, अरमालाति, आ + ला
+ क ।) सर्ज्जरसः । मत्तहस्ती । इति मेदिनी ॥
वक्रहस्तः । इति शब्दरत्नावली ॥

**अराला**, स्त्री, (अराल + स्त्रियां टाप्) अधृष्टा ।
कुलटा । इति शब्दरत्नावली ॥

**अरिः**, पुं, (ऋ + इन् ।) शत्रुः । इत्यमरः ॥
(“उपकर्त्रारिणा सन्धिर्न मित्रेणापकारिणा” । इति मनुः ।)
इति हितोपदेशे ।
“अनन्तरमरिं विद्यादरिसेविनमेव च” ।
चक्रं । इति त्रिकाण्डशेषः ॥
खदिरभेदः । तत्पर्य्यायः । सन्दानिका २ दाली ३ खदिरपत्रिका ४ ।
अस्य गुणाः । कषायत्वं । कटुत्वं । तिक्तत्वं ।
रक्तार्त्तिपित्तनाशित्वञ्च । इति राजनिर्घण्टः ॥

**अरित्रं**, क्ली, (ऋच्छत्यनेन, ऋ + इत्र ।) कर्णः ।
हालि इति भाषा । तत्पर्य्यायः । केनिपातकः २ ।
इत्यमरः ॥ केनिपातः ३ । इति भरतः ॥ (“लोलैररित्रैश्चरणैरिवाभितः” । इति माघः ।)

**अरिन्दमः**, त्रि, (अरीन् शत्रून् कामादीन् वा दाम्यति
दमयति, दम् + अन्तर्भूतण्यर्थे खच् मुम्, उपपदसमासः ।) शत्रुदमनकारकः । इति मुग्धबोधव्याकरणं ।

तल्लक्षणमरिष्टं स्याद् रिष्टमप्यभिधीयते” ॥)
शुभं । इति मेदिनी ॥ उपद्रवः । तत्पर्य्यायः । उपलिङ्गः २ उपसर्गः ३ अजन्यं ४ ईतिः ५ उत्पातः ६ ।
इति हेमचन्द्रः ॥ (मद्यं । यथा । द्राक्षारिष्टं ।
दशसूलारिष्टं । वव्वूलारिष्टं ।
“अरिष्टं लघुपाकेन सर्व्वतश्च गुणाधिकम् ।
अरिष्टस्य गुणा ज्ञेया वीजद्रव्यगुणैः समाः” ॥
इति वैद्यके ।)
(“मरणचिह्नार्थे लक्षणं यथा । नियतमरणाख्यापकलिङ्गं ॥ इति माधवसंगृहीतरोगविनिश्चयग्रन्थटीकाकृद्विजयरक्षितः ॥ * ॥ तत्र प्रकृतवर्णोऽर्द्धशरीरे विकृतवर्णोऽर्द्धशरीरे द्वावपि वर्णौ मर्य्यादाविभक्तौ दृष्ट्वा यद्येवं सव्यदक्षिणविभागेन यद्येवं पूर्ब्बपश्चिमविभागेन यद्युत्तराधरविभागेन यद्यन्तर्वहिर्विभागेनातुरस्यारिष्टमिति विद्यात्” ॥ इति चरकः ।
“शरीरशीलयोर्यस्य प्रकृतेर्व्विकृतिर्भवेत् ।
तत्त्वरिष्टं समासेन व्यासतस्तु निबोध मे” ॥
इति च सुश्रुतः ॥)

**अरिष्टः**, पुं, (रिष हिंसायां कर्त्तरि क्त, नञ्समासः ।)
लशुनः । निम्बः । फेनिलवृक्षः । काकः । कङ्कपक्षी । इति मेदिनी । वृषभासुरः । इत्यनेकार्थध्वनिमञ्जरी ॥ मद्यविशेषः । इक्षुविकारसहिताभयाचित्रकदन्तीपिप्पल्यादिभूरिभेषजक्वाथादिसंस्कारवान् अरिष्टोऽभिधीयते । इति सुश्रुतटीका ॥
अस्य गुणः । अर्शःशोथग्रहणीकफरोगनाशित्वं ।
इति राजवल्लभः ॥
(“द्रवेषु चिरकालस्थं द्रव्यं यत्संहितं मवेत् ।
आसवारिष्टभेदैस्तत् प्रोच्यते भेषजोचितं ॥
यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः ।
अरिष्टः क्वाथसिद्धः स्यात्तयोर्मानिं पलोन्मितं” ॥
इति शार्ङ्गधरः ॥ गुणोऽस्य यथा चरकेणोक्तः ॥
“शोकार्शोग्रहणीदोषपाण्डुरोगारुचिज्वरान् ।
हन्त्यरिष्टः कफकृतान्रोगान् रोचनदीपनः ॥ * ॥
दन्तीचित्रकमूलानामुभयोः पञ्चमूलयोः ।
भागान् पलांशानापोथ्य जलद्रोणे विपाचयेत् ॥
त्रिफलाया दलानाञ्च प्रक्षिप्य त्रिपलं ततः ।
“अरिष्टकस्त्रिदोषघ्नो ग्रहजिद्गर्भपातनः” ।
इति । एतत्फलचूर्णैर्हि कुतपानां नेपालदेशीयकम्बलानामित्यर्थः प्रक्षालनात् शुद्धिर्भवतीति शास्त्रविदां मतम् । यदुक्तं मनुना,
“कौषेयाविकयोरूषैः कुतपानामरिष्टकैः ।
श्रीफलैरंशुपट्टानां क्षौमाणां गौरसर्षपैः” ॥
इति ।)

**अरिष्टतातिः**, त्रि, (अरिष्ट + तातिल् ।) क्षेमङ्करः । शुभङ्करः । इति भूरिप्रयोगः ॥ (स्त्री, शुभाशंसनं । सौभाग्यबुद्धिः । कुशलातिशय्यं । “तदत्रभवता निष्पन्नाशिषां काममरिष्टतातिमाशास्महे” । इति महावीरचरिते ।)

**अरिष्टदुष्टधीः**, त्रि, (अरिष्टेन मरणसूचकनिमित्तेन
दुष्टा धीरस्य ।)
आसन्नमरणसूचितलक्षणेन दूषितबुद्धिः । मरणकुबुद्धियुक्तः ।
तत्पर्य्यायः ।
विवशः २ । इत्यमरः ॥

**अरिष्टनेमिः**, पुं, (अरिष्टस्य नेमिः, षष्ठीतत्पुरुषः ।)
जिनानां चतुर्व्विंशत्यन्तर्गतद्वाविंशतितीर्थङ्करः ।
इति हेमचन्द्रः ॥ (विनतागर्भसम्भूतः स्वनामख्यातः कश्यपमुनिपुत्त्रः, यथा हरिवंशे,
“तार्क्ष्यश्चारिष्टनेमिश्च गरुडश्च महाबलः ।
अरुणश्चारुणिश्चैव विनतायाः सुताः स्मृताः” ॥

("यथाकामं यथोत्साहं
यथाकालमरिन्दम ।
सेविता विषयाः पुत्र यौवनेन मया तव"
॥
"ज्ञात्वा तु तद्‌गृहं सर्व्वमादीप्तं
पाण्डुनन्दनाः ।
सुरङ्गां विविशुस्तूर्णं मात्रा
सार्द्धमरिन्दमाः" ॥
इति महाभारते ।)

**अरिमर्दः**, पुं, (अरिं रोगरूपं शत्रुं मृद्‌नाति, मृद् + अण्, उपपदसमासः ।)
कासमर्दवृक्षः । इति
राजनिर्घण्टः ॥ (त्रि, शत्रुमर्द्दनकारी ।)

**अरिमेदः**, पुं, (अरेर्विट्खदिरस्येव मेदः सारः यस्य सः ।) वृक्षविशेषः । गुइया
वावला इति
भाषा । तत्पर्य्यायः । इरिमेदः २
रिमेदः ३
गोधास्कन्दः ४ अरिमेदकः ५
अहिमारः ६ पूति-
मेदः ७ अहिमेदकः ८ विट्खदिरः ९ ।
अस्य
गुणाः । कषायत्वं । उष्णत्वं । तिक्तत्वं
। भूत-
विनाशित्वं ।
शोथातिसारकासविषवैसर्पनाशि-
त्वञ्च । इति राजनिर्घण्टः ॥
(अस्य व्यवहारो यत्र तदौषधं यथा, --
"तुलां धृतां नीलसहाचरस्य,
द्रोणेऽम्भसः संश्रपयेद्‌थथावत् ।
पूर्त्वा चतुर्भागरसे तु तैलं,
पचेच्छनैरर्द्धपलप्रयुक्तैः ॥
कल्कैरनन्ताखदिरारिमेद-
जम्बाम्रयष्टीमधुकोत्पलानां ।
तत्तैलमाश्वेव धृतं मुखेन,
स्थैर्य्यं द्विजानां विदधाति सद्यः" ॥ *
॥
रसे चतुर्थशेषे तु पूते शीते समावपेत् ॥
तुलां गुडस्य तत्तिष्ठेत् मासार्द्धं घृतभाजने ।
तन्मात्रया पिबेन्नित्यं अर्शोभ्योऽपि प्रमुच्यते ॥
ग्रहणीपाण्डुरोगघ्नं वातवर्च्चोऽनुलोमनं ॥
दीपनञ्चारुचिघ्नञ्च दन्त्यरिष्टमिदं विदुः" ॥
इति दन्त्यरिष्टः । इति चरकः ॥
"अरिष्टो द्रव्यसंयोगसंस्कारादधिको गुणैः ।
बहुदोषहरश्चैव दोषाणां शमनश्च सः ॥
दीपनः कफवातघ्नः सरः पित्तविरोधनः ।
शूलाध्मानोदरप्लीहज्वराजीर्णार्शसां हितः" ॥
इति सुश्रुतश्च ॥)

**अरिष्टकः**, पुं, (अरिष्ट एव स्वार्थेक ।) फेनिलवृक्षः,
इति शब्दरत्नावली ॥ रीठाकरञ्ज इति ख्यातः ।
अरिष्टशब्दार्थोऽप्यत्र ॥ रिठा इति भाषा । (अस्य
गुणा यथा, --
वृष्णेः प्रपौत्रश्चित्रकस्य पुत्रः
स्वनामख्यातो राजा,
यथा, हरिवंशे,
"चित्रकस्याभवन् पुत्राः पृथुर्विपृथुरेव च ।
अश्वग्रीवोऽश्ववाहश्च सुपार्श्वकगवेषणौ ।
अरिष्टनेमिरश्वश्च सुधर्म्मा धर्म्मभृत्तथा"
॥
स्वनामख्यातः प्रजापतिः । यथा
रामायणे,
आदिकाले महाबाहो ये प्रजापतयोऽभवन्
।
दक्षो विवस्वानपरोऽरिष्टनेमिस्तथैव च ।
कश्यपश्च
महाभागस्तेषामासीदपश्चिमः" ॥)

**अरिष्टसूदनः**, पुं, (अरिष्टं तन्नामानमसुरं सूदयति यः, अरिष्टस्य सूदनः नाशक इति वा ।)
विष्णुः ।
इति त्रिकाण्डशेषः ॥ शुभाशुभनाशके त्रि
॥
(कृष्णः । स खलु माथुरे कल्पे
अरिष्टनामानमसुरं
सूदितवान् ।)

**अरिष्टा**, स्त्री, (अरिष्ट + स्त्रियां टाप् ।) कटुका ।
इति राजनिर्घण्टः ॥ कट्की इति भाषा ।
(स्वनाम-
ख्याता कश्यपपत्नी, सा हि सर्व्वान्
गन्धर्व्वान्
जनयामास । यथा, --
"अरिष्टा तु महासत्वान्
गन्धर्व्वानामितौजसः" ॥
इति हरिवंशे ।)

**अरुः**, [स्] पुं, (ऋ + उसि ।) सूर्य्यः ।
इत्युणादि-
कोषः ॥ रक्तखदिरः । इति राजनिर्घण्टः
॥

**अरुः**, [स्] पुं, क्ली, (ऋ + उस् ।) व्रणं । क्षतं ।
इत्यमरः ॥

महासहचरं तैलं ॥ इति
वैद्यकचक्रपाणिसंग्रहः ॥)

**अरिष्टं**, क्ली, (रिष हिंसायां कर्त्तरि क्त, नञ्-

समासः ।) सूतिकागृहं ।
("अरिष्टशय्यां परितो
विसारिणा सुजन्मनस्तस्य निजेन
तेजसा" । इति
रघुवंशे ।) अशुभं । तक्रं । मरणचिह्नं ।
(यदुक्तम्,
"रोगिणो मरणं यस्मादवश्यम्भावि
लक्ष्यते ।

**अरुः**, [स्] व्य, (ऋ + उसि ।) मर्म्म । सन्धि-

स्थानं । इत्युणादिकोषः ॥

**अरुचिः**, पुं, (न रुचिर्यत्र सः ।) रोगभेदः ।

स च सत्यभिलाषेऽभ्यवहारासामर्थ्यरूपः
। इति
रक्षितः ॥ तत्पर्य्यायः । अरोचकः २
अश्रद्धा ३
अनभिलाषः ४ । इति राजनिर्घण्टः ॥
("दोषैः पृथक् सह च चित्तविपर्य्ययाच्च,

:भक्तायनेषु हृदि चावतते प्रगाढं ।

नान्ने रुचिर्भवति तं भिषजो विकारं,
भक्तोपघातमिह पञ्चविधं वदन्ति” ॥
इति सुश्रुतः ।
अलङ्कारशास्त्रोक्तदशविधस्मर-
दशामध्ये परिगणितो
वस्तुवैराग्यरूपः स्मरदशा-
विशेषः, यथा साहित्यदर्पणे, --
“अङ्केष्वसौष्ठवं तापः पाण्डुता
कृशताऽरुचिः ।
अरुचिर्वस्तुवैराग्यं सर्व्वत्रारागिता
धृतिः” ॥

**अरुजः**, पुं, (रुजति, रुज् + क, नञ्समासः ।) आर-

ग्बधवृक्षः । इति राजनिर्घण्टः ॥
सोँदालि इति
भाषा । (स्वनामख्यातदानवविशेषः
।
“प्रह्लादोऽश्वशिराः कुम्भः संह्लादो
गगनप्रियः ।
अनुह्लादो हरिहरौ वराहः
संहरोऽरुजः” ॥
इति हरिवंशे ।)

**अरुणं**, क्ली, (ऋ + उनन् ।) कुङ्कुमं । सिन्दूरं । इति

राजनिर्घण्टः ॥

**अरुणः**, पुं, (ऋ + उनन् ।) सूर्य्यसारथिः । स तु

विनतापुत्रः गरुडज्येष्ठभ्राता च ।
तत्पर्य्यायः ।
सूरसूतः २ अनूरुः ३ काश्यपिः ४
गरुडाग्रजः ५
सूर्य्यः । अर्कवृक्षः । अव्यक्तरागः ।
ईषद्रक्तवर्णः ।
इत्यमरः । सन्ध्यारागः ।
शब्दरहितः । कपिल-

**अरुणोदयसप्तमी**, स्त्री, (अरुणोदयकाले पुण्य-

विशेषजनिका या सप्तमी ।) माघशुक्लसप्तमी ।
माकरी सप्तमी । यथा । भविष्ये ।
“सूर्य्यग्रहणतुल्या हि शुक्ला माघस्य सप्तमी ।
अरुणोदयवेलायां तस्यां स्नानं महाफलं ॥
माघे मासि सिते पक्षे सप्तमी कोटिभास्करा ।
दद्यात् स्नानार्घदानाभ्यामायुरारोग्यसम्पदः ॥
अरुणोदयवेलायां शुक्ला माघस्य सप्तमी ।
गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समा” ॥
कोटिभास्करा कोटिसप्तमीतुल्या । सूर्य्यग्रहण-
फलं स्नानजं सन्निहिते बुद्धिरन्तरङ्गा इति
न्यायात् । तेन बहुशतसूर्य्यग्रहणकालीनगङ्गा-
स्नानजन्यफलसमफलप्राप्तिः फलमत्र ज्ञेयं । अत्र
बहुशतसूर्य्यग्रहाणां प्रत्येकाधिकरणतासंसर्गे-
णान्वयात् कालानां स्नानानां तत्फलानामपि बहु-
शतत्वं लभ्यते । अतो नाप्रसिद्धिः ॥ * ॥ पूर्ण-
सप्तम्यां पूर्ब्बापरयोर्यत्रारुणोदयकाले सप्तमी तत्र
पूर्ब्बदिने तत्काले स्नानं ।
“चतस्रो घटिकाः प्रातरुणोदय उच्यते ।
यतीनां स्नानकालोऽयं गङ्गाम्भःसदृशः स्मृतः ॥
त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयं ।
नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते” ॥
इति कालमाधवीयधृतब्रह्मवैवर्त्तीयेन पूर्ब्बस्य तत्-
कालस्य पूर्णतिथिसम्बन्धिदिनकर्त्तव्यकर्म्माङ्गत्वेन
इतरस्य चेतराङ्गत्वेनाभिधानात् । अतएव दक्षेण
तत्कालमारभ्याह्निककृत्यमभिहितं ॥ * ॥ अत्रा-
रुणोदयकाले मुहूर्त्तान्यूनतिथिलाभ एव स्नानं ।
“व्रतोपवासस्नानादौ घटिकैका यदा भवेत् ।
उदये सा तिथिर्ग्राह्या श्राद्धादावस्तगामिनी” ॥
इति विष्णुधर्म्मोत्तरात् । अत्र घटिका मुहूर्त्तं
श्राद्धयोग्यकालानुरोधादिति वक्ष्यते । ब्रह्मवैवर्त्त-
वचने घटिका दण्डरूपा । षरवचने नाडीनामा-
द्यन्तचतुष्टयमित्येकवाक्यत्वात् ॥ * ॥ ये तु सूर्य्यो-
दयात् प्रागपि प्रातःस्नानविधानात् तत्रैव माघ-
सप्तम्याख्यगुणफलविधिर्लाघवादित्याहुस्तच्चिन्त्यं
।
प्रकरणान्यत्वे प्रयोजनान्यत्वं इति जैमिनिसूत्रेण
प्रकरणभेदे गुणविध्यसिद्धेः । अतएव कल्पतरु-

इति मनुवचनेनैकदाजस्रस्नाननिषेधात् ।
“धर्म्मविन्नाचरेत् स्नानमाह्निकञ्च पुनः
पुनः” ॥
इति मनुवचनाच्च । अतएव
नान्दीमुखप्रकरण-
शेषे प्रधानानामपि काम्यानां तत्तद्देशकाल-
विहितानां तन्त्रेणैव सिद्धिरिति
श्राद्धचिन्ता-
मणिः ॥ निष्कामविष्णुप्रीतिकामयोः सुतरां
सकृ-
दनुष्ठानं । गुणतारतम्यात् फलतारतम्यं
इति
न्यायेन फलं बोध्यं । तत्तु
इक्षुक्षीरगुडादिमाधुर्य्य-
भेदवन्निर्द्देष्टुमशक्यं ।
“पक्षान्तरेऽपि कन्यास्थे रवौ श्राद्धं
प्रशस्यत ।
कन्यागते पञ्चमे तु विशेषेणैव कारयेत्” ॥
इति हेमाद्रिधृतादित्यपुराणोक्तवत् ।
एतद्वचन-
प्रागर्द्धं कार्त्तिकमलमासाब्दविषयं ।
“देशकालाश्रमक्षेत्रद्रव्यदातृमनोगुणाः ।
सुकृशस्यापि दानस्य फलातिशयहेतवः”
॥
इति ब्रह्मपुराणोक्तवच्च ॥ * ॥ तीर्थभेदे
त्वेकदापि
नानास्नानं ।
“विषुवद्दिवसे प्राप्ते पञ्चतीर्थी विधानतः” ।
इति ब्रह्मपुराणादिवचनात् । “तीर्थभेदे
तन्त्र-
प्रसङ्गयोरसम्भवाच्च” । अतएव
गङ्गावाक्यावली-
तीर्थचिन्तामण्योः । यत्तु प्रयागे त्र्यहस्नाने
क्रोडी-
कृतेऽपि
माघसप्तमीस्नानादावसाधारणसङ्कल्पेन
पुनस्तथैव प्रातःस्नानाचरणं तद्युक्तं तदा
सकृत्-

वर्णः । कुष्ठभेदः । अरुणगुणविशिष्टे तु वाच्य-
लिङ्गः । इति मेदिनी ॥ पुन्नागवृक्षः । गुडः ।
इति राजनिर्घण्टः ॥
(कपिलवर्णयुक्तः । कृष्ण-
मिश्रितरक्तवर्णविशिष्टः ।
"कपोताङ्गारुणो धूमो दृश्यते विमलाम्बरे" ।
इति रामायणे ।)

**अरुणकमलं**, क्ली, (कृष्णसर्पैत्यादिवत् नित्यकर्म्म-

धारयः ।) रक्तोत्पलं । इति राजनिर्घण्टः ॥

**अरुणलोचनः**, पुं, (अरुणे रक्ते लोचने यस्य सः ।)

पारावतः । इति राजनिर्घण्टः ॥

**अरुणसारथिः**, पुं, (अरुणः गरुडाग्रजः सारथिर्यस्य

सः ।) सूर्य्यः । इति हेमचन्द्रः ॥

**अरुणा**, स्त्री, (अरुण + स्त्रियां टाप् ।) अतिविषा ।

श्यामा । मञ्जिष्ठा । त्रिवृता । इति मेदिनी ॥
इन्द्रवारुणी । गुञ्जा । इति राजनिर्घण्टः ॥ मुण्डि-
तिका । इति रत्नमाला ॥

**अरुणात्मजः**, पुं, (अरुणस्य आत्मजः, षष्ठीतत्पुरुषः ।)

जटायुपक्षी । इति त्रिकाण्डशेषः ॥

**अरुणावरजः**, पुं, (अरुणस्य अवरजः षष्ठीतत्पुरुषः ।)

गरुडः । इति हेमचन्द्रः
("अरुणावरजं श्रीमानारुरोह रणे हरिः ।
सुवर्णं स्वेन वपुषा सुपर्णं खेचरोत्तमम्" ॥
इति हरिवंशे ।)

रत्नाकरयोः ।
"य इच्छेद्विपुलान् भीगान् चन्द्रसूर्य्यग्रहोपमान् ।
प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ" ॥
इति । विष्णुस्मृतौ । "यथाहनि तथा प्रातर्नित्यं
स्नायादनातुरः" । इति नित्यस्नानप्रकरणात् प्रक-
रणान्तरास्नानात् प्रकरणान्तराधिकरणन्यायेन
काम्यस्नानान्तरमिदमप्युक्तं । न तु गुणफलविधिः ।
किन्तु काम्यकरणे प्रसङ्गान्नित्यसिद्धिरिति ॥ * ॥
अत्र माघमासनिमित्तकमाघसप्तमीनिमित्तक-
काम्यस्नानयोः प्रातर्विधानात् नैमित्तिकत्वेन प्राय-
श्चित्तवत् सकृदनुष्ठानं । "प्रधानस्याक्रिया यत्र
साङ्गं तत् क्रियते पुनः । तदङ्गस्याक्रियायान्तु
नावृत्तिर्न च तत्क्रिया" ॥ इति कात्यायनवचनात् ।
"न स्नानमाचरेद्भुक्त्वा नातुरो न महानिशि ।
न वासोमिः सहाजस्रं नाविज्ञाते जलाशये" ॥

स्नानस्यैव विहितत्वात् । अन्यथा तत्त्र्यहफल-
कामनायां तदानन्त्यापत्तेरित्युक्तं ॥ * ॥ स्नाने
परिपाटीमाह कृत्यकल्पलतायां विष्णुः । सप्त-
वदरपत्राणि सप्तार्कपत्राणि च शिरसि निधाय ।
"यद्यज्जन्मकृतं पापं मया सप्तसु जन्मसु ।
तन्मे रोकञ्च शोकञ्च माकरी हन्तु सप्तमी" ॥
इत्युच्चार्य्य स्नायादितिशेषः । रोकं छिद्रं । तिथि-
कृत्यस्य पौर्णमास्यन्तमासाङ्गकत्वात् माकरीपदं
मकरार्कारब्धचान्द्रमासीयतिथिपरं ।
"तिथिकृत्ये च कृष्णादिं व्रते शुक्लादिमेव च ।
विवाहादौ च सौरादिं मासं कृत्ये विनिर्द्दिशेत्" ॥
इति ब्रह्मपुराणान्मन्वन्तरादित्वेन तथा युक्त-
त्वाच्च । यथा मत्स्यपुराणे ।
"यस्मान्मन्वन्तरादौ तु रथमापुर्द्दिवाकराः ।
माघमासस्य सप्तम्यां तस्मात् सा रथसप्तमी ॥
अरुणोदयवेलायां तस्यां स्नानं महाफलं" ।
अतएव नारसिंहे रथ्याख्यायामित्युक्तं । यथा, --
"महानवम्यां द्वादश्यां भरण्यामपि चैव हि ।
तथाक्षयतृवीयायां शिष्यान्नाध्यापयेद्बुधः ॥
माघमासे तु सप्तम्यां रथ्याख्यायान्तु वर्ज्जयेत्" ।
द्वादश्यां शयनोत्थानद्वादश्यां । भरण्यां शक्रध्वज-
पातभरण्यामिति कल्पतरुः ॥ अत्र महानवम्यादि-

**अरुणोदयः**, पुं, (अरुणस्य बालादित्यस्य उदयो यत्र

सः ।) सूर्य्योदयात् पूर्ब्बं
मुहूर्त्तद्वयकालः । यथा, --
“चतस्रो घटिकाः प्रातररुणोदय
उच्यते ।
यतीनां स्नानकालोऽयं
गङ्गाम्भःसदृशः स्मृतः” ॥
इति ब्रह्मवैवर्त्तपुराणं ॥ (यदुक्तं, --
“रजनीशेषयामस्य
शेषार्द्धमरुणोदयः” । इति ।
“मृन् प्रशंसत्यजस्रं यो
घण्टाताडोऽरुणोदये” ।
इति मनुः ।)

साहचर्य्याच्चान्द्रत्वं प्रतीयते । अतएव
चतुर्द्दश-
मन्वन्तरादिगणने क्वापि न राश्युल्लेखः ।
यथा ।
भविष्यमत्स्ययोः ।
“अश्वयुक् शुक्लनवमी द्वादशी कार्त्तिकी
तथा ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥
फाल्गुनस्याप्यमावास्या पौषस्यैकादशी
तथा ।
आषाढस्यापि दशमी तथा माघस्य सप्तमी
॥

:श्रावणस्याष्टमी कृष्णा तथाषाढस्य पूर्णिमा ।
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता ॥
मन्वन्तरादयस्त्वेता
दत्तस्याक्षयकारिकाः” ।
अत्र अमावास्याष्टमीव्यतिरिक्ताः शुक्लाः पुनः-
पुनस्तथापदोपाकीर्त्तनादानात् ।
उपक्रमोपसंहा-
रयोः शुक्लत्वकीर्त्तनाच्च ॥ अत्र कामधेनौ तृतोया
चैव माघस्येति । कल्पतरौ तु तृतीया चैत्रमास-
स्येति लिखितं । अत्र पाठद्वैधे श्रीपतिरत्नमा-
लायां । “अश्वयुजि शुक्लनवमी द्वादश्यूर्ज्जे मधौ
तृतीया च” । इति पाठाच्चैत्रतृतीयैव ग्राह्या ।
श्रीदत्तोऽप्येवं । माघसप्तम्याश्चान्द्रत्वं सौरागमेऽपि ।
“अर्कपत्रैः सवदरैर्दूर्व्वाक्षतसचन्दनैः ।
अष्टाङ्गविधिना चार्घ्यं दद्यादादित्यतुष्टये ॥
माघेऽथ फाल्गुने वापि भवेद्वै माघसप्तमी ।
माकरीति च यत्प्रोक्तं
तत्प्रायोवृत्तिदर्शनात्” ॥
अष्टाङ्गविधिना ।
“योऽष्टाङ्गमर्घ्यमापूर्य्य भानोर्मूर्ध्नि निवेदयेत् ।
ताम्रपात्रार्घ्यदानेन पुण्यं दशगुणं स्मृतं” ॥
इति भविष्यपुराणीयेन । आदित्यपुराणे ।
“ऋक्षराशिविशेषेण यत्कर्म्म विहितं नरैः ।
दैवं वाप्यथवा पैत्र्यं तदन्यत्रापि दृश्यते” ॥ * ॥

न जिघ्रन्ति न शृण्वन्ति न पश्यन्ति
गतायुषः” ॥
यथा च सुश्रुते, --
“न पश्यति स नक्षत्रां यश्च देवीमरुन्धतीं ।
ध्रुवमाकाशगङ्गां वा तं वदन्ति गतायुषं” ॥)
सप्तपदीगमनानन्तरं जामाता मन्त्रं पाठयन् बधूं
तां दर्शयति च ॥

**अरुन्धतीजानिः**, पुं, (अरुन्धती जाया यस्य सः,
निङ् ।) वशिष्ठमुनिः । इति हेमचन्द्रः ॥

**अरुन्धतीनाथः**, पुं, (अरुन्धत्या नाथः, षष्ठीतत्-
पुरुषः ।) वशिष्ठमुनिः । इति
त्रिकाण्डशेषः ॥

**अरुष्कः**, पुं, (अरुर्म्मर्म्मस्थानं कायति पीडयति,
कै + क ।) भल्लातकवृक्षः । इति
शब्दरत्नावली ॥

**अरुष्करं**, क्ली, (अरुः करोति अरुः + कृ + ट, उप-
पदसमासः षत्वं ।) भल्लातकफलं । इति हेम-
चन्द्र ॥

**अरुष्करः**, पुं, (अरुः करोति, अरुः + कृ + ट, षत्वं
उपपदसमासः ।) भल्लातकवृक्षः । इति शब्द-
रत्नावली ॥

**अरुष्करः**, त्रि, (अरुः करोति, अरुः + कृ + ट,
षत्वं, उपपदसमासः ।) व्रणकरः ।
क्षतकारकः ।
इति मेदिनी ॥

**अरुहा**, स्त्री, (रोहति, रुह + क, नञ्समासः ।)

कट्वम्लमुष्णं विरसञ्च पूति
पित्तेन विद्याल्लवणञ्च वक्त्रं ।
माधुर्य्यपैच्छिल्यगुरुत्वशैत्य-
विबद्धसम्बन्धयुतं कफेन” ॥ इति माधवकरः ॥
अरोचकाः न भोजने रुचिमुत्पादयन्तीत्यरोचका
व्याधयः पञ्च वातजादिभेदैः ॥ * ॥ वातिकस्य ल-
क्षणमाह । परिहृष्टदन्तः अम्लभक्षणेनेव परि-
हृष्टो दन्तो यत्र सः । तथा कषायवक्त्रः । कषाय-
रसं वक्त्रं यत्र सः ॥ * ॥ पैत्तिकमाह ।
“कट्वम्लमुष्णं विरसञ्च पूति
पित्तेन विद्याल्लवणञ्च वक्त्रं” ।
कट्वम्लमित्यादिना विद्यादित्यन्तेन पैत्तिकस्य ल-
क्षणं ॥ * ॥ श्लैष्मिकमाह । लवणञ्च वक्त्रं कफज-
लक्षणेन पठनीयः । यतो विदग्धः श्लेष्मा लवण-
भावमुपैति ।
“माधुर्य्यपैच्छिल्यगुरुत्वशैत्य-
स्निग्धत्वदौर्गन्धयुतं कफेन” ।
पैच्छिल्यं मुखस्याभ्यन्तरे । स्निग्धत्वं वहिः ॥ * ॥
आगन्तुजमाह ।
“अरोचके शोकभयातिलोभात्
क्रोधाद्यहृद्याशुचिगन्धजे स्यात् ।
स्वाभाविकं चास्यमथारुचिश्च
त्रिदोषजे नैकरसम्भवेच्च” ॥
क्रोधादित्यादिशब्देनाहृद्ययोरशनरूपयोर्ग्रहणं ।
स्वाभाविकं । अविकृतरसं ॥ * ॥ त्रिदोषजमाह ।
नैकरसं अनेकरसमास्यं स्यात् । वातजादिभेदेन
मुखे विकृतिमभिधायान्यदेशे विकृतिमाह ।
“हृच्छूलपीडनयुतं पवनेन पित्तात्
तृड्दाहचोषबहुलं सकफप्रसेकं ।
श्लेष्मात्मकं बहुरुजं बहुभिश्च विद्यात्
वैगुण्यमोहजडताभिरथापरञ्च” ॥
हृच्छलपीडनयुतं हृदि शूलेन पीडनं तेन युतं ।

अर्घ्यमन्त्रस्तु ।
“जननी सर्व्वभूतानां सप्तमी सप्तसप्तिके ।
सप्तव्याहृतिके देवि ! नमस्ते रविमण्डले”
॥
प्रणाममन्त्रस्तु ।
“सप्तसप्तिवहप्रीत सप्तलोकप्रदीपन ।
सप्तम्यां हि नमस्तुभ्यं नमोऽनन्ताय
वेधसे” ॥
सप्तिरश्वः । इति तिथ्यादितत्त्वं ॥

**अरुणोपलः**, पुं, (अरुणः उपलः, कर्म्मधारयः ।)
रक्तवर्णमणिविशेषः । चुनी इति भाषा ।
तत्प-
र्य्यायः । पद्मरागः २ लोहितकः ३
लक्ष्मीपुष्पः ४ ।
इति हेमचन्द्रः ॥

**अरुन्तदः**, त्रि, (अरूंषि मर्म्माणि तुदति, तुद् +
खश् + मुम् च ।) मर्म्मपीडकः ।
तत्पर्य्यायः ।
मर्म्मस्पृक् २ । इत्यमरः ॥ (परुषः ।
कठोरः ।
श्रवणकटुः । “माकन्दं
मकरन्दतुन्दिलममुं गा-
हस्व काकः स्वयं कर्णारुन्तुदमन्तरेण
रुणितं
त्वां मन्महे कोकिलं” । इति
भामिनीविलासे ।
मर्म्मपीडाकरः ।
हृदयग्रन्थिरूपमर्म्मस्थानस्पर्श-
कारी । यथा,
“नारुन्तुदः स्यादार्त्तोऽपि न
परद्रोहकर्म्मधीः” ।
इति मनुः ।
“तीक्ष्णा नारुन्तुदा बुद्धिः कर्म्म शान्तं
प्रतापवत्” ।
इति माघः
“अरुन्तुदमिवालानमनिर्व्वाणस्य
दन्तिनः” ।
इति रघुवंशे ।)

भूधात्री । इति राजनिर्घण्टः ॥ भूमि
आमला
इति ख्याता ।

**अरूपः**, त्रि, (नास्ति रूपमस्य ।) रूपशून्यः ।
यथा । “अरूपवातातीसारादाविवारुण्यं”
। इति
रक्षितः ॥ कुत्सितरूपः ।
(“इमामरूपामसतीं भक्षयिष्याम
मानुषीम्” ।
इति रामायणे ।)

**अरूषः**, पुं, (ऋ + ऊषन् ।) सर्पविशेषः । इत्युणादि-
कोषः ॥ सूर्य्यः । इति
सिद्धान्तकौमुद्यामुणादि-
वृत्तिः ॥

**अरे**, व्य, (ऋ + ए ।) नीचसम्बोधनं । इति हेम-
चन्द्रः ॥ ओरे इति भाषा । अपाकृतिः ।
असूया ।
इति मेदिनी ॥ (रोषाह्वाने । अपकृतौ ।
“अरे
चेतोमीन ! भ्रमणमधुना यौवनजले त्यज
त्वं
स्वच्छन्दं युवतिजलधौ पश्यसि न किम्”
। इति
शान्तिशतके । “अरे अनुड्वन् !
निरपराधराज-
कुलकदन महापातकिन्
अशिष्टविकृतचेष्ट !”
इति महावीरचरिते ।)

**अरेरे**, व्य, (अरे + वीप्सायां द्विरुक्तिः ।) अधम-
सम्बोधनं । इति जटाधरः ॥ सक्रोधाह्वानं
। इति
शब्दमाला ॥

**अरोकः**, त्रि, (रुच् + घञ्, नञ्समासः ।) निष्प्रभः ।
दीप्तिरहितः । इत्यमरः ॥
रोकश्छिद्रन्तद्रहितश्च ॥

चोषः पार्श्वस्थिताग्निनेव सन्तापः ।
बहुभिस्त्रिभि-
र्दोषैः । बहुरुजं उक्तवातादिरोगयुक्तं । वैगुण्यं
मनसो व्याकुलत्वं । जडता शून्याङ्गता । अपरं
आगन्तुजं । भक्तद्वेषाभक्तच्छन्दौ
चरकसुश्रुताभ्या-
मरोचकत्वेनैव संगृहीतौ ॥ * ॥ वृद्धभोजस्त्वेषां
लक्षणानि पृथगाह ।
“प्रक्षिप्तन्तु मुखे चान्नं यत्र नास्वादते नरः ।
अरोचकः स विज्ञेयो भक्तद्वेषमतः शृणु” ॥
आस्वादते अन्नस्य मिष्टतां न प्राप्नोति । तदन्नं
मिष्टं न लगति इति यावत् ।
“चिन्तयित्वा तु मनसा दृष्ट्वा स्पृष्ट्वा च भोजनं ।
द्वेषमायाति योजन्तुर्भक्तद्वेषः स उच्यते ॥
कुपितस्य भयार्त्तस्य तथा भक्तनिरोधतः ।
यत्र नान्ने भवेच्छ्रद्धः सोऽभक्तच्छन्द उच्यते” ॥
* ॥
अथारोचकस्य चिकित्सा ।
“भोजनाग्रे सदा पथ्यं लवणार्द्रकभक्षणं ।
रोचनं दीपनं वह्नेर्जिह्वाकण्ठविशोधनं ॥ १ ॥
शृङ्गवेररसञ्चापि मधुना सह योजयेत् ।
अरुचिश्वासकासघ्नं प्रतिश्यायकफापहं ॥ २ ॥
पक्वाम्लिका सिता शीतवारिणा वस्त्रगालिता ।

| | | |
|---|---|---|
| **अरुन्धती**, स्त्री, (न रुन्धती ।) वशिष्ठपत्नी । तत्प-<br>र्य्यायः । अक्षमाला २ । इति हेमचन्द्रः ॥ सा<br>कर्दममुनिकन्या महासाध्वी । इति श्रीभागवतं ॥<br>आकाशे सप्तर्षिमध्ये वशिष्ठसन्निधौ तस्या उदयः ।<br>गतायुषस्तां नं पश्यन्ति । (यदुक्तं, --<br>"दीपनिर्व्वाणगन्धञ्च सुहृद्वाक्यमरुन्धतीं । | **अरोचकः**, पुं, (न रोचयति प्रीणयति, रुच् +<br>णिच् + ण्वुल्, नञ्समासः ।) रोगविशेषः ।<br>अरुचिरोग इति भाषा । तस्य निदानरूपे ।<br>"वातादिभिः शोकभयातिलोभ-<br>क्रोधैर्मनोघ्नाशनरूपगन्धः ।<br>अरोचकाः स्युः परिशिष्टदन्तः<br>कषायवक्त्रोऽस्य मतोऽनिलेन ॥ | |

:एलालवङ्गकर्पूरमरिचैरवधूलिता ॥

पानकस्यास्य गण्डूषं धारयित्वा मुखे मुहुः ।
अरुचिं नाशयत्येव पित्तं प्रशमयेत्तथा” ॥
अम्लिकापानं ॥ ३ ॥
“राजिका जीरको भृष्टो भृष्टं हिङ्गु सनागरं ।
सैन्धवं दधि गोः सर्व्वं वस्त्रपूतं प्रकल्पयेत् ॥
तावन्मात्रं क्षिपेत्तत्र यथा स्याद्रुचिरुत्तमा ।
तक्रमेतद्भवेत् सद्व्यो रोचनं वह्निवर्द्धनं” ॥
तक्रं ॥ ४ ॥
“गव्यमावर्त्तितं दुग्धं निबद्धं दधि माहिषं ।
एकीकृत्य पटे घृष्टं शुभ्रशर्क्करया समं ॥
एलालवङ्गकर्पूरमरिचैश्च समन्वितं ।
नाम्ना शिखरिणी कुर्य्यात् रुचिं
सकलवल्लभा ॥
शिखरिणी ॥ ५ ॥
द्वे पले दाडिमादष्टौ खण्डाद्व्योषंपलत्रयं ।
त्रिसुगन्धिपलञ्चैकं चूर्णमेकत्र कारयेत् ॥
तच्चूर्णं मात्रया भुक्तमरोचकहरं परं ।
दीपनं पाचनञ्च स्यात् पीनसज्वरकासजित्”
॥
दाडिमादिचूर्णं ॥ ६ ॥
“लवङ्गकक्कोलमुशीरचन्दनं
नतं सनीलोत्पलकृष्णजीरकं ।
जलं सकृष्णागुरुभृङ्गकेसरं
कणा सविश्वा नलदं सहैलया ॥
तुषारजातीफलवंशरोचना-
सिताभ्रभागाः सकलं विचूर्णितं ।
सुरोचनं तर्पणमग्निदीपनं
बलप्रदं वृष्यतमन्त्रिदोषजित् ॥
उरोविबन्धं तमकं गलग्रहं
सकासहिक्कारुचियक्ष्मपीनसं ।
ग्रहण्यतीसारमुरक्षतं तृषां
तथा प्रमेहान्निखिलान्निहन्ति हि” ॥
कक्कोलं फलं सुगन्धविशेषः । नतं तगरं ।
जलं
बालकं । भृङ्गं त्वक् । नलदमुशीरं । तुषारः
कर्पूरः ।

सतैलमाक्षिकास्त्वेते चत्वारः कवलग्रहाः
।
चतुरोऽरोचकान्
हन्युर्व्वाताद्येकजसर्व्वजान् ॥
कारवी मरिचाजाजी द्राक्षावृक्षाम्लदाडिमं ।
सौवर्च्चलं गुडं क्षौद्रं सर्व्वारोचकनाशनं ॥
वस्तिः समीरणे पित्ते विरेकं वमनं कफे ।
कुर्य्याद्धृद्यानुकूलानि हर्षणञ्च मनोघ्नजे”
॥
इति चरकोक्तास्यचिकित्सा ।
सनिदानलक्षणां चि-
कित्साञ्चाह ॥ * ॥ सुश्रुतः ।
“दोषैः पृथक् सह च चित्तविपर्य्ययाच्च,
भक्तायनेषु हृदि चावतते प्रगाढं ।
नान्नेऽरुचिर्भवति तं भिषजो विकारं,
भक्तोपघातमिह पञ्चविधं वदन्ति ॥
हृच्छूलपीडनयुतं विरसाननत्वं,
वातात्मके भवति लिङ्गमरोचके तु ।
हृद्दाहचोषबहुता मुखतिक्तता च,
मूर्च्छा सतृड् भवति पित्तकृते तथैव ॥
कण्डूगुरुत्वकफसंस्रवसादतन्द्राः,
श्लेष्मात्मके मधुरमास्यमरोचके तु ।
सर्व्वात्मके पवनपित्तकफा बहूनि,
रूपाण्यथास्य हृदये समुदीरयन्ति ॥
संरागशोकभयविप्लुतचेतसस्तु,
चिन्ताकृतो भवति सोऽशुचिदर्शनाच्च” ॥
* ॥
चिकित्सा यथा, --
“वाते वचाम्बु वमनं कृतवान् पिबेच्च,
स्नेहैः सुराभिरथवोष्णजलेन चूर्णं ।
कृष्णाविडङ्गयवभस्महरेणुभार्गी,
रास्नैलहिङ्गुलवणोत्तमनागराणां ॥
पित्ते गुडाम्बुमधुरैर्वमनं प्रशस्तं,
स्नेहः ससैन्धवसितामधुसर्पिरिष्टः ।
निम्बाम्बुवामितवतः कफजेऽनुपानं,
राजद्रुमाम्बुमधुना तु सदीप्यकं स्यात् ॥
चूर्णं यदुक्तमथवानिलजे तदेव,
सर्व्वैश्च सर्व्वकृतमेवमुपक्रमेत ॥

चूर्णीकृतानि यवशूकविमिश्रितानि ॥
क्षुद्रायुतानि वितरेन्मुखधावनार्थ-
मन्यानि तिक्तकटुकानि च भेषजानि ।
मुस्तादिराजतरुवर्गदशाङ्गसिद्धैः,
क्वाथैर्जयेन्मधुयुतैर्व्विविधैश्च लेहैः ॥
मूत्रासवैर्गुडकृतैश्च तथात्वरिष्टैः,
क्षारासवैश्च मधुमाधवतुल्यगन्धैः ।
स्यादेषएव कफवातहते विधिश्च,
शान्तिं गते हुतभुजि प्रशमाय तस्य ॥
इच्छाभिघातभयशोकहतेऽन्तरग्नौ,
भावान् भवाय वितरेत् खलु शक्यरूपान् ।
अर्थेषु चाप्यपचितेषु पुनर्भवाय,
पौराणिकैः श्रुतिपथैरनुमानयेत्तं ॥
दैन्यं गते मनसि बोधनमत्र शस्तं,
यद्यत् प्रियं तदुपसेव्यमरोचके तु ॥ * ॥
रसगन्धौ समौ शुद्धौ दन्तीक्वाथेन भावयेत्
।
जम्बीरस्य रसैर्वापि आर्द्रकस्य रसेन वा ॥
मातुलुङ्गस्य तोयेन तस्य मज्जरसैर्बुधः ।
पश्चाद्विशोष्य सर्व्वांस्तान्
टङ्गणञ्चावचारयेत् ॥
देवपुष्पं बाणमितं रसपादं मृतामृतं ।
मासमात्रञ्च तत् सर्व्वं नागरेण गुडेन वा ॥
सर्व्वारोचकशूलार्त्तिमामवातं सुदारुणं ।
सोऽयं निवारयत्याशु केशरी करिणं यथा” ॥
सुधानिधिरसः ॥ * ॥ इति
वैद्यकरसेन्द्रसार-
संग्रहः ॥)

**अर्क**, क, तापे । (चुरादि उभयपदी सेट् ।) स्तुतौ ।

इति कविकल्पद्रुमः ॥ एकककारः प्रकृतिः
पश्चा-
द्रेफनिमित्तकद्वित्वं विभाषया वक्तव्यं । तेन
क
अर्कयति अर्क्कयति एवं सर्व्वत्र । इति
दुर्गादासः ॥

**अर्कः**, पुं, (अर्च + कर्म्मणि घञ्, कुत्वम् ।) सूर्य्यः ।

लवङ्गादिचूर्णं ॥ ७ ॥ इत्यरोचकाधिकारः । इति
भावप्रकाशः ॥
(“यवागूः पञ्चकोलस्य कुलत्थाढक्ययूषकं ।
मुद्गयूषेण वा सम्यक् भक्तानां भोजनं हितं ॥
सहिङ्गुत्र्युषणाढ्यञ्च व्यञ्जनं संप्रशस्यते ।
अगस्तिघृतवत् श्रेष्ठं भोजनारोचकेष्वपि ॥
कारवेल्लं पटोलञ्च पलाण्डुः शुरणं शठी ।
लवणं धान्यकं श्रेष्ठं प्रलेहञ्च कटुत्रिकं ॥
शठीसर्षपवास्तूकं शतपुष्पा यमानिका ।
तुण्डीरकस्य मूलानां शाकं श्रेष्ठं प्रशस्यते ॥
गोधूमपुलिका श्रेष्ठा भृष्ट्वाङ्गारैररोचके ।
जाङ्गलानि च मांसानि भोजयेद्भिषगूत्तमः” ॥
इति हारीतोक्तपथ्यादिनियमः ॥ * ॥
“अरुचौ कवलो ग्राह्यो धूमाः समुखधावनाः ।
मनोज्ञमन्नपानञ्च हर्षणाश्वासनानि च ॥
कुष्ठसौवर्च्चलाजाजी शर्करामरिचं विडं ।
धात्रेलापद्मकोशीरपिप्पल्युत्पलचन्दनं ॥
लोध्रं तेजोवती पथ्या त्र्यूषणं सयवाग्रजं ।
आर्द्रा दाडिमनिर्य्यासाश्चाजाजी शर्करायुतः ॥

द्राक्षापटोलविडवेत्रकरीरनिम्ब-
मूर्व्वाभयाक्षवदरामलकेन्द्रवृक्षैः ।
वीजैः करञ्जनृपवृक्षभवैश्च पिष्टै-
र्लेहं पचेत् सुरभिमूत्रयुतं यथावत् ॥
मुस्तां वचां त्रिकटुकं रजनीद्वयञ्च,
भार्गीञ्च कुष्ठमथ निर्दहनीञ्च पिष्ट्वा ।
मूत्रेऽविजे द्विरदमूत्रयुते पचेद्वा,
पाठान्तगामतिविषां रजनीञ्च मुख्यां ॥
मण्डूकिमर्कममृताञ्च सलाङ्गलाख्यां,
मूत्रे पचेत्तु महिषस्य विधानविद्वा ।
एतान्न सन्ति चतुरो लिहतस्तु लेहान्,
गुल्मारुचिश्वसनकण्ठहृदामयाश्च ॥
सात्म्यान् स्वदेशरचितान् विविधांश्च भक्ष्यान्,
पानानि मूलफलषाडवरागयोगान् ।
अद्यादसांश्च विविधान् विविधैः प्रकारै-
र्भुञ्जीत वापि लघुरूक्षमनःसुखानि ॥
आस्थापनं विधिवदत्र विरेचनञ्च,
कुर्य्यान्मृदूनि शिरसश्च विरेचनानि ।
त्रीण्यूषणानि रजनीत्रिफलायुतानि,

इन्द्रः । ताम्रं । स्फटिकः । इति मेदिनी ॥
पण्डितः ।
इति शब्दरत्नावली ॥ ज्येष्ठभ्राता । इति दण्डा-
दिनाथः ॥ लक्षणया रविवारः । इति ज्योतिषं ॥
वृक्षविशेषः । आकन्द इति भाषा ।
तत्पर्य्यायः ।
क्षीरदलः २ पुच्छी ३ प्रतापः ४ क्षीरकाण्डकः
५ विक्षीरः ६ क्षीरी ७ खर्ज्जुघ्नः ८ शीतपुष्पकः
९ जम्भनः १० क्षीरपर्णी ११ विकीरणः १२
सदापुष्पः १३ सूर्य्याह्वः १४ आस्फोतकः १५ तूल-
फलः १६ शुकफलः १७ । इति राजनिर्घण्टः ॥
वसुकः १८ आस्फोतः १९ गणरूपः २० मन्दारः
२१ अर्कपर्णः २२ । इत्यमरः ॥ * ॥ अथ श्वेता-
र्कपर्य्यायः । अलर्कः १ राजार्कः २ प्रतापसः ३
गणरूपी ४ ॥ * ॥ अथ रक्तार्कपर्य्यायः । विश्वोरः
१ सदापुष्पी २ रूपिका ३ आदित्यपुष्पिका ४
दिव्यपुष्पिका ५ अर्कः ६ । इति रत्नमाला ॥
अस्य गुणाः । कटुत्वं । उष्णत्वं । अग्निकारित्वं ।
वातशोथव्रणार्शःकुष्ठक्रिमिनाशित्वञ्च । इति राज-
निर्घण्टः ॥ कफदोषनाशित्वं । तीक्ष्णत्वञ्च । अस्य
क्षीरगुणाः । क्रिमिदोषव्रणनाशित्वं । कुष्ठार्श-
उदररोगेषु हितकारित्वञ्च । इति राजवल्लभः ॥
तस्य पर्य्यायगुणाः ।

:श्वेतपुष्पः सदापुष्पः स बालार्कः प्रतापसः ॥

रक्तोऽपरोऽर्कनामा स्यादर्कपर्णो विकीरणः ।
रक्तपुष्पः शुक्लफलस्तथास्फोतः प्रकीर्त्तितः ॥
अर्कद्वयं सरं वातकुष्ठकण्डूविषव्रणान् ।
निहन्ति प्लीहगुल्मार्शःश्लेष्मोदरयकृत्कृमीन् ॥
शुक्लार्ककुसुभं वृष्यं लघु दीपनपाचनं ।
अरोचकप्रसेकार्शःकासश्वासनिवारणं ॥
रक्तार्कपुष्पं मधुरं सतिक्तं
कुष्ठकृमिघ्नं कफनाशनञ्च ।
अर्शो विषं हन्ति च रक्तपित्तं
संग्राहि गुल्मे श्वयथौ हितं तत् ॥
क्षीरमर्कस्य तिक्तोष्णं स्निग्धं सलवणं लघु ।
कुष्ठगुल्मोदरहरं श्रेष्ठमेतद्विरेचनं" ॥
इति भावप्रकाशः ॥ * ॥ निर्य्यासविशेषः ।
आरक
इति आरवीभाषा । तस्य विधिर्यथा, --
"द्रव्यकल्पः पञ्चधा स्यात् कल्कचूर्णं रसस्तथा ।
तैलमर्कः क्रमाज्ज्ञेयं यथोत्तरगुणं प्रिये ॥
पृथक् द्वन्द्वे सन्निपाते सङ्करेऽसाध्यरोगिणि ।
क्रमादेते प्रयोक्तव्या अन्यथा नु विनाशकाः ॥
आद्ये गुणा गुणाः सर्व्वे द्वितीयञ्च ततो लघु ।
तृतीयं शीघ्रकारि स्यात् चतुर्थं नातिदोषकृत् ॥
पञ्चमं दोषरहितं गुणसद्यःप्रकाशकं ।
पञ्चमस्य तु सामर्थ्यं स्वयं पञ्चाननोऽब्रवीत् ।
वर्षाणान्तु सहस्राणि कथ्यतेऽहर्निशं मया ।
सम्पूर्णो नैव जायेत कल्पोऽर्कस्य दशानन ॥ * ॥
पुंवारे पुरुषर्क्षे च दिवार्को यस्तु निर्म्मितः ॥
रमणीषु प्रदातव्यो विलोमात् पुंसु योजयेत् ॥
लोहचूर्णं गौरिकञ्च खटिका भृष्टमृत्तिका ।
मृत्तिकास्थिभवं चूर्णं काचं कीकसजं रजः ॥
एतानि समभागानि सर्व्वतुल्या च मृत्तिका ।
भ्रंशनीया पञ्चमूत्रैः खराश्वमहिषोद्भवैः ॥
गजाजसम्भवाभ्याञ्च शटितं तद्विशोषयेत् ।
त्रिवर्षाज्जायते सर्व्वमेकीभूतं दृशत्समं ॥
ततो निष्काश्य तच्चूर्णं कृत्वा पात्राणि निर्ममेत् ।
प्रशस्तं भोजनं तत्र सूचयेदन्नदूषणं ॥
महाविषस्य संयोगात्तस्य भङ्गं प्रजायते ।
सूचीविषादिसंयोगात् यत्र स्फोटा भवन्ति च ॥
तत्र क्षिप्तं क्षुद्रविषं पात्रं कृष्णं प्रजायते ।
एवं ज्ञात्वा तत्र दद्यान्न कदाचिद्विषादिकं ॥
विषादीनामर्कसिद्ध्यै कुर्य्यात् पात्रन्तु लोहजं ।
स्वर्णजं रौप्यजं वापि कुर्य्यात् पात्रमकल्मषं ॥
अथवा ताम्रजं कुर्य्यादन्तर्व्वङ्गविलेपितं ।
पात्रन्तु बुद्ध्वा कुर्व्वीत कषायो न भवेद्रसः ॥
द्रव्यान्तरस्य संयोगादर्कं तैलञ्च गर्भतः ।
सर्व्वेषां निःसरत्येव पाषाणस्यापि किं पुनः ॥
अनग्न्यर्कस्तथा तैलं गन्धतालादिसम्भवं ।
बेधकं सर्व्वधातूनां देहस्यापि च सिद्धिदं ॥
यस्तैलकरणे दक्षश्चार्कनिःसारणे क्षमः ।
तत्तत्सेवाकरो नित्यं स रोगैर्नैव बाध्यते ॥ * ॥
कुत्सितार्कस्तु यामेन द्वियामाभ्यान्तु मध्यमः ।
त्रिभिर्यामैर्भवेच्छ्रेष्ठः स एवार्कस्तु सिद्धिदः ॥
द्रव्यादधिकसौगन्ध्यं यस्मिन्नर्के प्रदृश्यते ।
जीर्णास्थिपात्रसङ्क्षिण्णो द्रव्यवर्णः प्रदृश्यते ॥
सेवेतार्कं प्रिये तस्माद्राजा परमधार्म्मिकः ॥
स्वस्थेऽपि वा रोगिणे वा याच्यतेऽर्केस्तु येन वा ।
ज्ञात्वा तल्लक्षणं दद्यादन्यथा ब्रह्महा भवेत् ॥ * ॥
वर्णस्वराणां प्रमितिं दूतोक्तस्य तु कारयेत् ।
शकैर्युक्ता विगुणिता त्रिभिर्भागं समाहरेत् ॥
एकशेषे गुणाः शीघ्रं द्विशेषे वर्द्धते गदः ।
त्रिशेषे मरणं वाच्यं स्वार्थं वाचयते यदि ॥
अर्कं तदैतत् विज्ञाय दद्यादर्कं न चान्यथा ।
गदिना तु यदा दूतः प्रेषितश्चेद्विचार्य्यते ॥
नपुंसकान्त्यैरूणास्तु स्वरा एकादश प्रिये ।
वर्णास्तित्सङ्ख्यका लेख्याः कठवाद्याश्च तत्तले ॥
एकादशसु कोष्ठेषु क्रमादङ्कान् प्रविन्यसेत् ।
रसास्त्रयो द्वयं वेदाः पर्ब्बता ऋतवः कृताः ॥
वह्नयः पृथिवी शून्यं चन्द्रमा इति च क्रमात् ।
विहाय जीवं दूतस्य नामाङ्काक्षरयोजनं ॥
एवमेवातुरे कृत्वा द्वयोरष्टावशेषितं ।
कृत्वाङ्कयोगं गदिनोऽधिके शेषे शुभं भवेत् ॥
समशेषे दीर्घरोगः न्यूनशेषे च तन्मृतिः ।
एतद्विचार्य्य दातव्यमन्यदप्यौषधं बुधैः ॥
चक्रद्वयन्तु योऽज्ञात्वा दद्यादर्कं विमोहितः ।
जायते त्वयशस्तस्य यथा मम मृते सति" ॥
इति श्रीलङ्कानाथकृतार्कचिकित्सायां यन्त्रविधि-
शतकं प्रथमं ॥ * ॥
"अथातः संप्रवक्ष्यामि निर्गमोऽर्कस्य भामिनि ।
पञ्चप्रकारद्रव्यस्य कुर्य्यान्निष्काशनं भिषक् ॥
अत्यन्तकठिनं चाद्यं कठिनञ्च द्वितीयकं ।
आर्द्रं तृतीयमुद्दिष्टं चतुर्थं वुल्वुलं भवेत् ॥
पञ्चमञ्च द्रवद्रव्यं तेषां विधिरथोच्यते ॥ * ॥
रसवच्चूर्णयेत् द्रव्यमत्यन्तकठिनन्तु यत् ॥
द्विगुणे निःक्षिपेत्तोये छायायां स्थापयेच्च तत् ।
यावच्छुष्कं भवेत्तोयं द्रव्यञ्च शिथिलं यथा ॥
ततः पुनः क्षिपेत्तोयं पूर्ब्बद्रव्यसमं भिषक् ।

यथा गन्धविनाशः स्यात् तथा संमर्दयेत्ततः ॥
लघुहस्तः कुलालोऽस्य कुर्य्याद्यन्त्रं सुनिर्म्मलं ।
यथेष्टां स्थालिकां कुर्य्यात् अङ्गुलप्रान्तसारिकां ॥
पृथुबुध्नोदराकारां द्व्यङ्गुलोत्सेधवेष्टनीं ।
सारिकान्ते तु परिधिं त्र्यङ्गुलोत्सेधशोभितां ॥
विनिर्मायाथ सार्य्यन्ते यथा शिल्पविनिर्म्मितां ।
छिद्रं कृत्वा नलं दद्याद्गजशुण्डसमं बुधः ॥
सारिकापरिधेरन्तस्तस्य कुर्य्यात् पिधानकं ।
अर्द्धनिम्बफलसमं परिधिं तस्य चान्ततः ॥
वेदाङ्गुलं मस्तकोद्‌र्ध्वं कार्य्यं तोयस्य धारणे ।
समर्थां तत्र नलिकां कुर्य्यात्तोयविमोचनीं ॥
तस्यैवान्तरतो लेप्या जीर्णास्थ्नां मृत्तिकाम्बुना ।
अथवा श्वेतकाचं तु सर्व्वदोषापनुत्तये ॥ * ॥
अथ वक्ष्ये तु जीर्णास्थिमृत्तिकाकरणं प्रिये ।
शिलाजतुस्थले कुर्य्यात् दीर्घगर्त्तं मनोहरं ॥
निक्षिपेत्तत्र नानास्थिसञ्चयं द्विचतुष्पदां ।
सर्जिक्षारं महाक्षारं मृत्क्षारं लवणानि च ॥
गन्धकोष्णजलं क्षेप्यं नानामूत्राणि तत्र वै ।
एवं कृत्वा मासषट्कं दद्यात् पाषाणमृत्तिकां ॥
कङ्कास्थ्यूद्‌र्ध्वं तदूद्‌र्ध्वन्तु कुर्य्याद्वह्नीष्टिकां शुभां ।

शङ्खकुन्देन्दुधवलोऽन्यथा पात्रान्तरे स्थितः ।
जिह्वोपरिगतः स्वादं दद्याद्द्रव्यभवन्तु यः ॥
तमेवार्कं विजानीयादन्यज्ज्ञेयं रसादिवत् ।
कृत्वा सुगन्धं दुर्गन्धमर्कं पुष्पादिभिः सुधीः ॥
गुणार्थं पश्चात् सेवेत ह्यन्यथापगुणो भवेत् ।
दुर्गन्धं भक्षयेदर्कं यदि मोहात् कथञ्चन ॥
तदास्य जायते ग्लानिर्व्वान्तिरालस्यकं तृषा ।
तद्दोषस्य विनाशाय कुर्य्याद्वान्तिमतन्द्रितः ॥
द्वीपोद्‌गमप्रसूनानां पिबेदर्कपलं जनः ।
चम्बेल्यर्कपलं वापि शीतार्त्तो मालतीभवं ॥ * ॥
अर्कनिष्काशनार्थाय क्रमाज्ज्ञेयाः षडग्नयः ।
धूमाग्निश्चैव दीपाग्निर्मन्दाग्निर्मध्यमस्तथा ॥
खराग्निश्च भडाग्निश्च तेषां वक्ष्यामि लक्षणं ।
विज्वालो यो धमशिखो धूमाग्निः स उदाहृतः ॥
ससारमतिशुष्कं यत् मुष्टिमध्ये समेष्यति ।
तत्काष्ठं काष्ठमित्याहुः खदिरादिसमुद्भवं ॥
द्वाभ्यां तस्य चतुर्थाभ्यां योऽग्निर्दीपाग्निरुच्यते ।
चतुरंशेन तेनैव मन्दाग्निः परिकीर्त्तितः ॥
अर्द्धीकृताभ्यां द्वाभ्यान्तु मध्यमाग्निरुदाहृतः ।
अर्द्धैस्तैः पञ्चभिः प्रोक्तः खराग्निः सर्व्वकर्म्मसु ॥
मस्तकावधिपात्रस्यं चतुर्दिक्षु क्रमेण च ।
प्रसरन्ति यदा ज्वालाः स भडाग्निरुदीरितः ॥

कृत्वाष्टप्रहरं तत्तु सूर्य्यचन्द्रकरैरलं ॥
संपूज्य गणपतिं सूर्य्यं भैरवं कुलदेवतां ।
निःक्षिपेदर्कयन्त्रे तत् क्षिप्त्वास्यार्कं समाहरेत् ॥
वर्षाधिकन्तु यत् द्रव्यमत्यन्तकठिनन्तु तत् ।
चन्दनादीनि सर्व्वाणि अत्यन्तकठिनानि च ॥
कीटैर्भुक्तं घुणैर्युष्टं यच्च गन्धविवर्ज्जितं ।
रहितं स्वरसेनापि नार्ककर्म्मणि योजयेत् ॥
यथार्केसंस्थितं द्रव्यं कुर्य्याद्भोक्तुस्तथा वपुः ।
अर्के तरुणभैषज्यं तस्मात् संयोजयेत् प्रिये ॥ * ॥
यवान्यजाजीत्रिकटुभूनिम्बादिकमौषधं ।
ज्ञेयं तत् कठिनं द्रव्यं तदर्कस्य विधिं शृणु ॥
द्विगुणं निःक्षिपेत्तोयं द्रव्ये तु कठिने मते ।
अष्टप्रहरिकं तच्च कुर्य्यात् पर्य्यायमेककं ॥
रक्षेत् द्रव्यं द्विगुणितं दृष्ट्वा देशे तु कौतुकं ।
पश्चात् दत्त्वार्कयन्त्रे तत् अर्कंनिष्काशयेच्छनैः ॥ * ॥
आर्द्रद्रव्यं द्विधाप्रोक्तं सरसं नीरसं तथा ।
सदुग्धं गुप्तरसकं द्विधा नीरसमुच्यते ॥
वास्तूकं सार्षपं शाकं निर्गुण्ड्येरण्डमार्षकं ।
धत्तूराद्यमिदं सर्व्वमार्द्रं सरसमुच्यते ॥
एषां नालान् चूर्णयित्वा विंशांशं निःक्षिपेज्जलं ।

| | | |
|---|---|---|
| | साार्द्धयामञ्च यामञ्च याममेकं मुहूर्त्तकं ।<br>मुहूर्त्तमात्रमित्येवमर्कार्थं वह्नयः स्मृताः ॥ * ॥<br>जीर्णास्थिपात्रे गृह्णीयादर्कं वा काचसम्भवे ।<br>पाषाणसम्भवे पात्रे कांस्यजेऽथ हिमस्थले ॥<br>पिबेदर्कमनिर्व्वापं पीत्वा ताम्बूलभक्षणं ।<br>कुर्य्यादनुक्तताम्बूले लवङ्गं भक्षयेत्ततः ॥<br>मर्दनादिषु सर्व्वत्र द्रव्यतैलं प्रयोजयेत् ।<br>अर्क एव प्रयोक्तव्यो भक्षणे न तु मर्दने ॥<br>ये ये द्रव्यगुणाः प्रोक्ताः सर्व्वे तेऽर्कसमाश्रिताः । | |

:मुहूर्त्तमुष्णे संस्थाप्य ग्राह्योऽर्को विबुधोत्तमैः ॥

पत्राणान्तु शतांशेन तुल्यतोयेन सेचयेत् ।
दद्यात् घटीमर्ककरां ततोऽर्कं कलयेच्छनैः ॥
वटाश्वत्थकरीराद्यमार्द्रद्रव्यन्तु नीरसं ।
विंशांशं निःक्षिपेत्तोयं जलं घर्म्मे च धारयेत् ॥
ततो निष्काशयेदर्कं क्रमवृद्ध्याग्निनोक्तवत् ।
सदुग्धन्तु द्विधा प्रोक्तं मृदु तीक्ष्णमिति क्रमात् ॥
सातलावज्रसेहुण्डसौरिण्याद्यास्तु तीक्ष्णकाः ।
खण्डानि तेषां कृत्वाथ निःक्षिपेत् पुष्कले जले ॥
दिनत्रयञ्च निष्काश्य तोयादीषच्च कुट्टयेत् ।
तदा न दृश्यते दुग्धं दद्यनात्तोयं रदांशकं ॥
निष्काशयेच्छनैरर्कं स तु तीक्ष्णार्कसंज्ञकः ।
दुग्धिकार्कक्षीरिण्याद्या मृदुदुग्धाः प्रकीर्त्तिताः ॥
जले चतुर्गुणे दद्यात्तान् घर्म्मे विनिवेशयेत् ।
यावज्जलस्योष्णता स्यात् ततो यन्त्रे विनिःक्षिपेत् ॥
आदावीषच्चूर्णयित्वा षष्ठांशजलसंयुतं ।
एवं द्रव्यं लक्षयित्वा स्वयुक्त्यार्कं विनिर्हरेत् ॥
खण्डीकृत्य च आमानां फलानां मृदुकायिनां ।
सरसानाञ्च गृह्णीयादर्कं तोयेन वर्ज्जितं ॥ * ॥
काष्ठोडम्बरिकादीनां आमानां दार्य्यभागिनां ।
कृत्वा स्वल्पानि खण्डानि अशीत्यंशं प्रदापयेत् ॥
पृथक् पृथक् च तुवरीं सर्जिक्षारञ्च सैन्धवं ।
दत्त्वा विमर्दयेत् सर्व्वं चत्वारिंशांशकं जलं ॥

तथा पुनः पुनः कार्य्यं जायते गन्धबारणं ॥
आयाति रोचको गन्धो भवेत्तद्वह्निदीपनं ॥ * ॥
सर्व्वेष्वर्कप्रयोगेषु गन्धपाषाणवासना ॥
अर्काणान्तु प्रदातव्या ते भवन्त्यर्कसम्भवाः ।
सर्व्वत्र वातरोगेषु महिषाक्षादिवासना ॥
महिषाक्षस्तथा रालं निर्य्यासः सर्ज्जकस्य च ।
कृष्णागुरुः कदम्बञ्च महिषाक्षादिपञ्चकं ॥
सर्व्वेषु पित्तरोगेषु चन्दनादिकवासना ।
सर्व्वेषु कफरोगेषु जटामांस्यादिवासनं ॥
चन्दनञ्च तथोशीरं कर्पूरो गन्धवाकुची ।
एलाकर्च्चूरगोहूलाः सप्तैते चन्दनादयः ॥
जटामांसी नखं पत्री लवङ्गं तगरं रसः ।
शिलाया गन्धपाषाणः सप्त मांस्यादिका अमी ॥
वासयेद्वा दशाङ्गेन त्रिदोषाप्तेन चार्ककं ।
नश्यन्ति यस्य धूपेन अवग्रहपिशाचकाः ॥
पञ्चाशद्गन्धपाषाणात् तावन्महिषगुग्गुलुः ।
चतुरंशं चन्दनञ्च जटामांसी च तावती ॥
त्रिभागः सर्ज्जकः सारस्तावदेव हि रालकं ।
उशीरं तु द्विभागं स्यात् घृतभृष्टं नखं समं ॥
कर्पूरो मृगनाभिश्च एकभागौ प्रकीर्त्तितौ ।
एष दशाङ्गधूपस्तु रुद्रस्यापि मनो हरेत् ॥ * ॥
पलाण्डुलशुनादीनां निर्गन्धीकरणं शृणु ।
उत्पाद्यान्तर्व्विषं सम्यक् तक्रमध्ये विनिःक्षिपेत् ॥
पर्य्यायमेकमत्यम्लमध्येऽस्मिन् विरसे सति ।
दद्यान्निष्काश्यान्यतक्रं कुर्य्यात्तच्चाष्टमांशकं ॥
द्रोणपुष्पीरसेऽप्येवं मूर्व्वापत्ररसेऽपि वा ।

मरिचं मृगनाभिश्च विदुर्गन्धाष्टकं त्विदं ॥
कार्य्यं पुष्पपिधानाद्यमर्कं निष्काशयेत्ततः ।
जायतेऽसौ महास्वादुः सुधासमरसः प्रिये ॥
दृढमांसस्य खण्डानि लघून्येव प्रकल्पयेत् ।
दद्याच्च तुवरीं तत्र लवङ्गं प्रोक्तया द्विशा ॥
क्षालयेदारनालेन त्रिवारं कोष्णवारिणा ।
क्षालयेत् सप्तवाराणि हरेदर्कन्तु पूर्ब्बवत् ॥
दृढमांसस्य खण्डानि कुर्य्यादतिलघूनि च ।
आलोड्य शङ्खद्रावेण क्षालयेत् पयसा पुनः ॥
सप्तवाराणि लवणं चयेत् पूर्ब्बवदेव हि ।
तद्दत्त्वा यन्त्रमध्ये तु हरेत् पूर्ब्बवदर्ककं ॥
सर्ज्जिक्षारं यवक्षारं श्वेतक्षारञ्च टङ्कणं ।
सौभाग्यक्षारकं सौरक्षारं शङ्खभवं तथा ॥
अर्कसेहुण्डपालाशक्षारञ्च तुवरी तथा ।
अपामार्गभवं क्षारं तथाष्टौ लवणानि च ॥
लवणाष्टकमेतच्च सैन्धवञ्च सुवर्च्चलं ।
विडं समुद्रसंजातं उद्भिदं रोमकं गडं ॥
कृत्वा सर्व्वाणि चैकत्र निम्बुनीरेण भावयेत् ।
एकविंशतिवाराणि काचकूप्यां विनिःक्षिपेत् ॥
नखांशनिम्बुरसकैः सर्व्वमार्द्रीकृतञ्च तत् ।
अधःसच्छिद्रपीठरीं मध्ये कूप्यां निवेशयेत् ॥
मृत्कर्पटसमायुक्तां सहेदग्निं यथाविधि ।
तस्याग्रे कूपिका योज्या दीर्घकण्ठा मनोहरा ॥
सा कूपिका तले स्थाप्या मेलयेच्च द्वयोर्म्मुखं ।
जलमुष्णं यथा न स्यात् तथा चापरकूपिका ॥
अग्नयः क्रमतो देया यामं यामञ्च पञ्च च ।
अनेनैव प्रकारेण क्षारार्काणां समुद्भवः ॥
दद्यादस्थीनि मांसानि शङ्खशुक्त्यादिकान्यपि ।
सर्व्वाण्यपि विलीयन्ते शङ्खद्रावे न संशयः ॥ * ॥
पारावताजचटकशशशूकरटिट्टिभाः ।

क्षिप्त्वा तत्कलसं धर्म्मे यामार्द्धेनोष्णता भवेत्
ततो यन्त्रे तु तद्दत्त्वा गृह्णीयादर्कमुत्तमं ॥
अतिपक्वफलानान्तु वीर्य्यतश्चार्कमाहरेत् ।
पुष्पार्कार्थं षोडशांशं जलं पुष्पेषु दापयेत् ॥
बहुवारफलादीनि चिल्लिकादीनि यानि च ।
क्षेप्याण्युक्तोदके तानि वुल्वुलत्वस्य शान्तये ॥
ततश्चत्वारिंशदंशं जलं दत्त्वा समाहरेत् ।
तेषामर्कमथ द्रावद्रव्यार्कोपाय उच्यते ॥
द्रवद्रव्योत्क्षेपशान्त्यै प्रोच्यते वापकल्पना ॥ * ॥
पिधानानि विचित्राणि तेषामन्तो न विद्यते ॥
शतपत्रप्रसूनैर्व्वा जात्युत्थैर्मालतीभवैः ।
गुलावपारिजातैश्च केतकीजैः समाचरेत् ॥
दुग्धे दध्नि रसे तक्रे क्षौद्रे तैले च सर्पिषि ।
मूत्रादौ देहतोये च चम्बेल्यादिपिधानकं ॥ * ॥
कान्तपाषाणसत्वस्य कृतं यन्त्रमनुत्तमं ।
निष्काशयेत् सर्व्वथार्कं द्रवद्रव्यस्य नान्यथा ॥
अथवा स्तम्भकं द्रव्यं दध्नस्तु नवनीतकं ।
वर्षदल्लीजलस्योक्ता मधूच्छिष्टन्तु सर्पिषः ॥
गोकण्ठकन्तु दुग्धस्य तथा मद्यस्य किण्वकं ।
तैलस्य तस्य पिण्याकं सर्व्वं घृतसमन्वितं ॥
यन्त्र दत्त्वा द्रवद्रव्यं ययोस्थालोनिवेशनं ।
तथा स्थलं स्थापयित्वा द्रवैर्यन्त्रं प्रपूरयेत् ॥
आच्छाद्यं सारकैः पूर्णं स्थालीं दद्यादधोमुखीं ।
तथा चाकर्षितः सर्व्वो द्रवः फेनं परित्यजेत् ॥ * ॥
दुर्गन्धिर्य्यो भवेदर्कन्तं कुर्य्यात् शुचिगन्धकं ।
मर्व्वेषामेव मांसानां दुर्गन्धानाञ्च सर्व्वशः ॥
घृताभ्यक्ता हिङ्गुजीरमेथिका राजिका कृता ।
त्रिपर्य्यायोत्तरं तत्तु रसोनं क्षालयेत् सुधीः ॥
हरिद्राराजिकातोये स्थाप्यं पर्य्यायमेककं ।
उष्णोदकेन संक्षाल्य पर्य्यायं वासयेत्ततः ॥
सहस्रपत्रीपुष्पैर्व्वा अभावे पल्लवैरपि ।
आलोडयेद्दशांशेन पञ्चांशेन च मस्तुना ॥
युक्तं कृत्वा याममात्रं स्थापयेत् प्रकटातपे ।
ततो निष्काशयेदक जात्यादिकपिधानितं ॥
अस्यार्कस्य सुगन्धेन एकदा मोहितो हरः ।
को जानाति रसोनस्य ह्यर्कोऽयमिति भूतले ॥
एकतः सर्व्व एवार्का मासार्कस्तु तथैकतः ।
मया स्वर्गे गृहीतस्तु प्राप्तं तत्र च नामृतं ॥
तदा प्रोक्तं शिवस्याग्रे मम धिग् जीवितं प्रभो ।
नीता वाथ प्रभुक्ता वा सुधा देवैर्मया श्रुतं ॥
न दृष्टा तत्र देवेश शिरश्छेदं करोम्यहं ।
ततः प्रसन्नो गिरिशो वाक्यं मां प्रति सोऽव्रवीत् ॥
दत्तं मया समस्तं ते देवाबध्यत्वमेव च ।
किन्ते कार्य्यन्तु सुधया सुधातोऽधिकरोचनं ॥ * ॥
संप्रवक्ष्यामि मांसार्कं मद्यस्यार्कं तथैव च ।
द्रव्याणां विजयादीनां लभ्यते यैः सुखं महत् ॥
मांसन्तु त्रिविधं ज्ञेयं मृदुलं कठिनं घनं ।
तेषामर्कं यथा प्रोक्तं यन्त्रान्निष्काशयेच्छनैः ॥
मृदुलं यद्भवेन्मांसं चत्वारिंशांशकं पटुः ।
स्थूलखण्डीकृते तस्मिन् दत्त्वा तत् क्षालयेच्छनैः ॥
षष्ट्यंशेनाष्टगन्धेन तद्विलोड्य च निःक्षिपेत् ।
रसमिक्षोरष्टमांशं तदभावे पयः क्षिपेत् ॥
जातीपत्रं लवङ्गञ्च त्वगेला नागकेशरं ।
क्षुद्रमत्स्यादिकाः सर्व्वे मांसेषु मृदुलाः स्मृताः ॥
मृगरोहितकाद्याश्च मत्स्याः शल्लकिसम्बराः ।
एते कठिनमांसाः स्युः पक्षिणो जलचारिणः ॥
गजकुम्भीरघण्टाद्याः सुगन्धा वर्करादयः ।
गोधा गोऽश्वा लुलापाद्याः घनमांसाः प्रकीर्त्तिताः ॥
अन्नादिसम्भवो योऽर्कस्तन्मद्यं परिकीर्त्तितं ।
तस्य भेदान् प्रवक्ष्यामि शटितं तत् समुद्धरेत् ॥
तद्वासनानिवृत्यर्थमष्टगन्धं प्रयोजयेत् ।
पूर्ब्बोक्तैर्धूपयेद्धूपैर्ज्जायते गन्धपर्ज्जितं ॥
अर्द्धं तत्र जलं देयं सिद्धे देयोऽष्टगन्धकः ।
तुषोदकैर्यवैरामैः सतुषैः सकलीकृतैः ॥
सौवीरन्तु यवैरामैः सतुषैः सकलीकृतैः ।
गोधूमैरपि सौवीरं जायते स्वल्पमादकं ॥
आरनालन्तु गोधूमैरामैः स्यान्निस्तषीकृतैः ।
धान्याम्लं शालिचूर्णादिकोद्रवादिकृतं भवेत् ॥
शण्डाकीराजिकायुक्तैः स्यान्मूलकदलद्रवैः ।
सर्षपस्वरसैर्व्वापि शालिपिष्टकसंयुतैः ॥
कन्दमूलफलादींश्च सस्नेहलवणानि च ।
एकीकृत्य कृतोऽर्को यस्तत्सूक्तमभिंधीयते ॥
पक्वौषधाम्बुसंसिद्धो योऽर्कस्तत् स्यादरिष्टकं ।
अरिष्टलघुपाकेन सर्व्वतश्च गुणाधिकं ॥
शालिपिष्टकपिष्टादिकृतौ योऽर्कः सुरा तु सा ।

| | | |
|---|---|---|
| नवीनायां हण्डिकायां दद्यात् द्रव्यं पुनः पुनः ॥<br>तत्र दद्यात्तदर्कस्तु यथा दुर्गन्धतां व्रजेत् । | | |

:पुनर्नवाशिवापिष्टैर्विहिता वाहनी स्मृता ॥

इक्षोः पक्वैरसैः सिद्धः सीधुः पक्वरसस्य च ।
आमैस्तैरेव यः सिद्धः स च शीतरसः स्मृतः ॥
पर्य्यायावाम्भवेन्मद्यं तामस्यं राक्षसप्रियं ।
मण्डलावाग्राजसन्तु तदूर्द्ध्वं सात्विकं भवेत् ॥
सात्विके गीतहास्यादि राजसे साहसादिकं ।
तामसे निन्द्यकर्म्माणि निद्राञ्च मदिरा चरेत् ॥
भङ्गादिमत्तद्रव्याणां यवानीपादयोगतः ।
अर्कं निष्काशयेद्धीमान् बोधकः स्यान्मदस्य सः ॥
धुस्तूरादिकवीजानि तक्रं पयसि निःक्षिपेत् ।
कण्ठशोषविबन्धादिरहितोऽर्को भवेत् सहि" ॥
इति श्रीलङ्कानाथकृतार्कचिकित्सायां यन्त्रशतकं
द्वितीयं ॥ * ॥
"अथातः संप्रवक्ष्यामि केवलार्कगुणान् प्रिये ।
हरीतक्याः शूलकृच्छ्रकामलानाहनाशनः ॥
विभीतकस्य तृट्छर्द्दिकफकासविनाशनः ।
आमलस्य त्रिदोषास्रपित्तमेहान् विनाशयेत् ॥
पिप्पल्याः श्वासकासामवातार्शोज्वरशूलहृत् ।
मरीचस्य कृमीन् श्वासं हरेत् सर्व्वान् गदानपि ॥
ग्रन्थिकस्य प्लीहगुल्मकफवातोदरापहः ।
चव्यार्कोऽत्यन्तरुचिकृत् विशेषाद्गुदजापहः ॥
अर्कस्तु गजपिप्पल्या वातश्लेष्माग्निमान्द्यनुत् ।
काकोल्याः शुक्रलः शीतः पित्तशोषज्वरापहः ॥
क्षीरकाकोलिकाजातो वृंहणो दाहवातहा ।
ऋद्ध्या बल्यस्त्रिदोषघ्नो रक्तपित्तविनाशनः ।
वृद्ध्या गर्भप्रदः शीतः क्षतकासक्षयापहः ॥
मधुयष्ट्याः केशकरः स्वर्य्यः पित्तानिलास्रजित् ।
जलयष्ट्या विषच्छर्दितृष्णाग्लानिक्षयापहः ॥
कम्पिल्लस्य विरेकी स्यात् मेहानाहविकारनुत् ।
आरम्बधस्य पित्ताम्लवातोदावर्त्तशूलहृत् ॥
कट्व्या मेहश्वासकासकृमिकुष्ठज्वरापहः ।
भूनिम्बस्य तृषाकुष्ठज्वरव्रणकृमिप्रणुत् ॥
भद्राया वस्तुपित्तास्रकृमिवीसर्पकुष्ठनुत् ।
मदनोत्थः छर्द्दनेन चातुर्थज्वरकादिहृत् ॥
रास्नोद्भवः समीरास्रवातशूलोदरापहः ।
नागभिन्नोद्भवो भोगिलुताद्याखुविकारहृत् ॥
माचिकाजस्तु पित्तास्रपक्वातीसारहा लघुः ।
तेजस्विन्याः श्वासकासकफहृद्वह्निदीपनः ॥
ज्योतिष्मत्या वान्तिकरो वह्निबुद्धिस्मृतिप्रदः ।
कुष्ठस्य हन्ति वातास्रकासकुष्ठमहत्कफान् ॥
पौष्करस्यारुचिश्वासान् विशेषात् पार्श्वशूलनुत् ।
हेमाह्वाया रेकवान्तिकरः कण्डूविनाशनः ॥
शृङ्ग्या हरेदूद्र्ध्ववातहिक्कातृष्णाक्षयस्वरान् ।
कट्फलोत्थः श्वासकासप्रमेहार्शोऽरुचोन् हरेत् ॥
भार्ग्या हरेत् कफश्वासपीनसज्वरमारुतान् ।
पाषाणभेदजो योनिरोगकृच्छ्रास्मगुल्महा ॥
धातकीजस्तृषासारविषक्रिमिविसर्पजित् ।
मञ्जिष्ठाजो विषश्लेष्मरक्तातीसारकुष्ठहा ॥
कुसुम्मजो वर्णकरो रक्तपित्तकफापहः ।
लाक्षाजः कृमिवीसर्पव्रणोरक्षतकुष्ठहा ॥
हरिद्राया मेहशोथत्वग्दोषव्रणपाण्डुनुत् ।
आरण्यकहरिद्रायाः कुष्ठवातास्रनाशनः ॥
मुद्गपर्ण्याः शोथदाहग्रहण्यर्शोऽतिसारहृत् ।
माषपर्ण्याः शुक्रकरो वातपित्तज्वरास्रजित् ॥
पञ्चाङ्गुलोद्भवः शूलशिरःपीडोदरापहः ।
रुवुकोत्थो व्रध्नश्वासकासकुष्ठाममारुतान् ॥
मन्दारजो वातकुष्ठकण्डूव्रणविषापहः ।
अर्कार्कः प्लीहगुल्मार्शःश्लेष्मोदरकृमीन् हरेत् ॥
वज्रीजो लेपतो हन्याद्व्रणशोथोदरव्रणान् ।
सातलोत्थः कफानाहपित्तोदावर्त्तशोथहा ॥
लाङ्गल्या लेपतो हन्यात् शोफास्रव्रणरुग्जितः ।
करवीरोद्भवो नेत्रकोपकुष्ठव्रणापहः ॥
चण्डालोत्थस्तु विषवत् भक्षणे लेपने सुहृत् ।
धत्तुरजो हरेत् क्लेशयूकाकृमिविषादिकं ॥
वासोद्भवी ज्वरच्छर्द्दिमेहकुष्ठक्षयापहः ।
पार्पटो हन्ति पित्तास्रभ्रमतृष्णाकफज्वरान् ॥
निम्बजो भ्रमतृट्कासज्वरारुचिवमिप्रणुत् ।
महानिम्बोद्भवो गुल्ममूषिकाविषनाशनः ॥
पारिभद्रोऽनिलश्लेष्मशोथमेदकृमिप्रणुत् ।
काञ्चनारो गण्डमालागुदभ्रंशव्रणापहः ॥
कोविदारस्तु पित्तास्रप्रदरक्षयकासहा ।
शौभाञ्जनार्को रुचिकृत् शुक्रलो ग्राहिदीपनः ॥
मधुशिग्रूद्भवो हन्यात् विद्रधिश्वयथुक्रिमीन् ।
शिग्रुजो विषहृन्नेत्र्यो नस्येनाश्वक्षिरोगहृत् ॥
गिरिकर्ण्याः कुष्ठशूलशोथव्रणविषापहः ।
सिन्धुवारोद्भवो हन्ति शूलशोथाममारुतान् ॥

चित्रकस्याग्निकृत् कासग्रहणीकृमिशोथहा ॥
यवान्याः पाचनो रुच्यो दीपनः शुक्रशूलहृत् ।
अजमोदोद्भवो वातकफहा वस्तिशोधनः ॥
पारसीकयवान्यास्तु ग्राही पाचनमादनः ।
जीरकस्य तु संग्राही गर्भाशयविशुद्धिकृत् ॥
कृष्णजीरस्य चक्षुष्यो गुल्मच्छर्द्यतिसारजित् ।
कारव्या बलकृत् ह्यर्को ज्वरघ्नः पाचनः सरः ॥
धान्यार्कस्य तृषादाहवमिश्वासत्रिदोषहृत् ।
शोथज्वरानिलश्लेष्मव्रणशूलाक्षिरोगहृत् ॥
मिश्रेयाया वह्निमान्द्ययोनिशूलकृमीन् हरेत् ।
ज्वालामरीचकस्यापस्मारभूतत्रिदोषहृत् ॥
मेथिकायाः श्लेष्मवातज्वरामकफनाशनः ।
वनमेथ्याः सर्व्वरोगान् हरेत् कुञ्जरवाजिनां ॥
चन्द्रशूरस्य हिक्कासृग्वातहृत् पुष्टिवर्द्धनः ।
हिङ्गुनः पाचनो रुच्यः कृमिशूलोदरापहः ॥
वचाया वह्निवमिकृत् विबन्धाध्मानशूलहृत् ।
पारसीकवचायास्तु भूतोन्मादबलं हरेत् ॥
कुलिञ्जनस्य स्वरकृत् हृत्कण्ठमुखशोधनः ।
स्थूलग्रन्थिभवश्चार्को विशेषात् कफकासनुत् ॥
द्वीपान्तरवचायास्तु हरेच्छूलं फिरङ्गकं ।
हपुषाया हरेत् प्लीहं विषं मोहञ्च दारुणं ॥
हपुषायाः समीरार्शोग्रहणीगुल्मशूलहृत् ।
विडङ्गस्योदरश्लेष्मकृमिवातविबन्धनुत् ॥
तुम्बुरोर्गुरुताश्वासकासप्लीहकृमीन् हरेत् ।
वंशरोचनजस्तृष्णाक्षयकासज्वरान् हरेत् ॥

कर्पूरकहरिद्रायाः सर्व्वकण्डूविनाशनः ।
दार्व्या विशेषतो लेपात् नेत्रकर्णास्यरोगनुत् ॥
रसाञ्जनोद्भवो नेत्रविकारव्रणदोषहृत् ।
वाकुच्याः कृमिविष्टम्भपाण्डुशोथकफापहः ॥
प्रपुन्नाटस्य हन्त्येव कण्डूदद्रुविषानिलान् ।
विषाजो दीप्तिकृत् पाके कफपित्तातिसारहा ॥
लोध्रजः शीतलो ग्राही चक्षुष्यः कफपित्तनुत् ।
वृहत्पत्रोद्भवो नेत्र्योदरातीसारशोथहृत् ॥
भल्लातकोद्भवो हन्यात् ज्वरोदरकृमिव्रणान् ।
गुडूच्या दीपनो ग्राही कासपाण्डुज्वरापहः ॥
ताम्बूल्या मुखदौर्गन्ध्यमलवातश्रमापहः ॥
वैल्वः श्लेष्महरो बल्यो लघुरुष्णश्च पाचनः ॥
गम्भारीजो भ्रमतृष्णाशूलार्शोविषदाहहृत् ।
पाटल्याश्छर्द्दिशोथास्रतृट्श्लेष्मारुचिदाहहा ॥
अग्निमन्थोद्भवः शोथकृमिपाण्डुबलासनुत् ।
श्येनाकजस्तु गुल्मार्शःकृमिहृद्वुचिदीप्तिकृत् ॥
शालिपर्ण्याः क्षतकृमिज्वरच्छर्द्यतिसारहा ।
पृश्निपर्ण्या ज्वरश्वासरक्तातीसारदाहजित् ॥
वार्त्ताक्या ज्वरवैरस्यमलारोचकशूलहा ।
कण्टकार्य्या गर्भकरः पाचनः कफकासहा ॥
गोक्षुरस्याश्मरीमेहकृच्छ्रहृद्रोगवातहा ।
जीवन्त्याः सारहृन्नेत्रदोषत्रितयनाशनः ॥

निर्गुण्ड्यर्को हरेज्जन्तुव्रणकुष्ठारुचीन् लघुः ।
कौटजो दीपनः शीतः कफतृष्णामकुष्ठजित् ॥
कारञ्जः कफगुल्मार्शोव्रणक्रिमिविषापहः ।
घृतकारञ्जको भेदी वातार्शःकृमिकुष्ठजित् ॥
करञ्ज्या वमिवातार्शःकृमिकुष्ठप्रमेहजित् ।
उच्चटार्कः केशकरो वातपित्तकफापहः ॥
गुञ्जाया हरते श्वासमुखशोषभ्रमज्वरान् ।
कपिकच्छूद्भवो वृष्यो वृंहणो वाजिकर्म्मकृत् ॥
मांसरोहिण्युद्भवस्तु वृष्यो दोषत्रयापहः ।
चिह्नः कुर्य्याद्धातुपुष्टिं तत्फलान्मारयेज्जनान् ॥
पुस्तकान्तरे चेल्हुरिति च पाठः ॥
कण्टकार्य्या दीपनः श्लेष्मशोथोदररुजं हरेत् ।
वैतसो हरते दाहं शोथार्शोयोनिरुग्व्रणान् ॥
जलवेतसजो ग्राही शीतो वातप्रकोपनः ॥
इज्जलार्कस्तु हरते चराचरविषं स्फुटं ॥
अङ्कोठकस्य शूलामशोथग्रहविषापहः ।
बलार्को ग्राही वातास्रपित्तास्रक्षतनाशनः ॥
अतिपूर्ब्बबलार्कस्तु मूत्रातीसारनाशनः ।
महाबलार्को हरते कृच्छ्रं वातानुलोमनः ॥
नागपूर्ब्बबलार्कस्तु मूर्च्छामोहहरः परः ।
लक्ष्मणार्कन्तु सेवेत बन्ध्यापि लभते सुतं ॥
स्वर्णवल्ल्याः शिरःपीडात्रिदोषान् हन्ति टुग्धदः
कार्पासार्कः कर्णसंस्थः कर्णरोगान् विनाशयेत् ॥
वंशजः कफपित्तघ्नः कुष्ठास्रव्रणशोथजित् ।
नलार्को वस्तियोन्यर्त्तिदाहपित्तविसर्पहृत् ॥
पाट्या जयेत् ज्वरच्छर्द्दिकुष्ठतीसारहृद्रुजः ।
श्वेतवृक्षोद्भवो रेकी पित्तजार्शोदरापहः ॥
शरपुङ्खोद्भवः प्लीहान् गुल्मव्रणविषापहः ।

| | | |
|---|---|---|
| समुद्रफेनजः शीतो लेखनः कफहृत् सरः ।<br>जीरकोत्थः शुक्रकफबलकृच्छीतलः समः ॥<br>आर्षभः पित्तदाहास्रकासवातक्षयापहः ।<br>महामेदोद्भवोऽर्कस्तु वृष्यस्तन्यः कफावहः ॥<br>महामेदोद्भवः शीतो रक्तपित्तज्वरप्रणुत् । | | |

:जवासजो मदभ्रान्तिपित्तासृक्कुष्ठकासजित् ॥

मण्डिजोऽत्यन्तबलकृत्
प्लीहमोहानिलार्त्तिजित् ।
अपामार्गभवश्छर्द्दिकफमेदोऽनिलापहः ॥
आरक्तापामार्गभवो धातुस्तम्भनकारकः ।
कोकिलाक्षभवः शीघ्रं सेकाच्छोफान्निवारयेत्
॥
अस्थिसंहारिकायास्तु भग्नसन्धानकृच्छिवे ।
कुमारिकाया उत्थोऽग्निदग्धविस्फोटकान्
जयेत् ॥
पुनर्नवायाः श्वेतायाः सर्व्वनेत्रामयापहः ।
पुनर्नवाया रक्ताया ग्राही पित्तास्रनाशनः ॥
प्रसारिण्या वातहरो वृष्यः सन्धानकृत् सरः
।
सारिवाया वह्निमान्द्यकासामविषनाशनः ॥
भृङ्गराजस्य दत्तोऽर्कः केश्यस्त्वच्यः
शिरोऽर्त्तिहृत् ।
शणपुष्पीलतायास्तु अर्कः पित्तकफान्तकः
॥
त्रायन्त्यर्कः शूलविषविलेपीज्वरनाशनः ।
मूर्व्वाया मोहहृद्रोगकण्डूकुष्ठज्वरापहः ॥
काकमाच्या नेत्रहितश्छर्दिहृद्रोगनाशनः ।
काकनासाभवो वामी शोथार्शश्चित्रकुष्ठहृत्
॥
काकजङ्घोद्भवो हन्यात्
ज्वरकण्डूविषक्रिमीन् ।
नागिन्यास्तु हरेच्छूलयोनिदोषवमिक्रिर्मीन् ॥
मेषशृङ्ग्याः श्वासकासव्रणश्लेष्माक्षिशूलहा
।
हंसपाद्या हन्ति शूलभूतरक्तविषव्रणान् ॥
सोमवल्ल्यास्त्रिदोषघ्नः क्षीरहृच्च रसायनः
।
आकाशवल्ल्याः शीतोऽर्कः
पित्तश्लेष्मामनाशनः ॥
पातालगरुडीजातोऽर्को वृष्यः पवनापहः ।
वृन्दावृक्षोद्भवोऽर्कस्तु विषरक्षोव्रणापहः ॥
वटपत्रीभवश्चोष्णो योनिमूत्रगदापहः ।

विधानं चतुर्थशतकं । नानारोगनिवारणार्थं
पञ्चमशतकं । विस्फोटकनिवारणार्थं षष्ठशतकं ।
क्षुद्ररोगादेर्निवारणं सप्तमशतकं । कार्म्मणं ना-
माष्टमशतकं । गणसंख्या नवमशतकं । धातु-
शुद्धिर्दशमशतकं । एतत् सर्व्वं अर्कप्रकाशे
रावणमन्दोदरीसंवादे अस्ति बाहुल्यभिया न
लिखितं ॥
(“अर्कक्षीरं सुधाक्षीरं तिक्ततुम्ब्याश्च पल्लवाः ।
करञ्जो वस्तमूत्रञ्च लेपनं श्रेष्ठमर्शसां” ॥
इति चक्रपाणिसङ्ग्रहः ॥ * ॥
“अर्कानर्ककरञ्जद्वयनागदन्तीमयूरकभार्गीरास्ने-
न्द्रपुष्पीक्षद्रश्वेतामहाश्वेतावृश्चिकाल्यलवणा
स्ता
पसवृक्षश्चेति” । इति अर्कादिगणः ॥
“अर्कादिको गणो ह्येष कफमेदोविषापहः ।
क्रिमिकुष्ठप्रशमनो विशेषाद्व्रणशोधनः” ॥
इति सुश्रुतः ॥)

**अर्ककान्ता**, स्त्री, (अर्कोऽर्ककिरणः कान्तोऽनुकूलो
यस्याः सा, कम् + क्तः स्त्रियां टाप् ।) आदित्त-
भक्ता । इति राजनिर्घण्टः ॥ हुडहुडिया इति
ख्याता । इति राजनिर्घण्टः ॥ (अस्या गुणा
आदित्यभक्ताशब्दे ज्ञातव्याः ॥)

**अर्कचन्दनं**, क्ली, (अर्कस्य प्रियं चन्दनं, षष्ठीतत्-
पुरुषः ।) रक्तचन्दनं । इति राजनिर्घण्टः ॥
(रक्त-
चन्दनशब्देऽस्य गुणावली ज्ञेया ॥)

**अर्कजौ**, पुं, (अर्काज्जायेते यौ, अर्क + जन् ड,
पञ्चमीतत्पुरुषः ।) अश्विनीकुमारौ । नित्यद्विव-
चनान्तशब्दोऽयं । इति हेमचन्द्रः ॥

**अर्कतनयः**, पुं, (अर्कस्य तनयः, षष्ठीतत्पुरुषः ।)
कर्णराजः । इति हेमचन्द्रः ॥ वैवस्वतमनुः ।
सावर्णिमनुः । शनिः । यमः । यमुनायां तपत्याञ्च
स्त्री । इति महाभारतं ।

**अर्कनन्दनः**, पुं, (अर्कस्य नन्दनः, षष्ठीतत्पुरुषः ।)
अर्कतनयः । इति त्रिकाण्डशेषः ॥

“अर्कपुष्पी क्रूरकर्म्मा पयस्या
जलकामुका ।
अर्कपुष्पी
कृमिश्लेष्ममेहचित्तविकारजित्” ॥
इति भावप्रकाशः ॥
राजनिर्घण्टोक्तपर्य्यायगुणाः
कुटुम्बिनीशब्दे द्रष्टव्याः ॥

**अर्कप्रिया**, स्त्री, (अर्कं प्रीणाति, प्री + क, अर्कस्य
प्रिया इति वा ।) जवा । इति
राजनिर्घण्टः ॥
(जवाशब्देऽस्य विशेषो ज्ञातव्यः ॥)

**अर्कबन्धुः**, पुं, (अर्कस्य बन्धुरिव ।) गौतमः । स च
इक्ष्वाकुकुलोद्भवशाक्यवंशीयबुद्धः ।
इत्यमरः ॥

**अर्कबान्धवः**, पुं, (बन्धुरेव बान्धवः, बन्धु + स्वार्थे अण्,
अर्कस्य बान्धवः, षष्ठीतत्पुरुषः ।)
अर्कबन्धुः
इति हेमचन्द्रः ॥

**अर्कभक्ता**, स्त्री, (अर्कस्य भक्ता, षष्ठीतत्पुरुषः ।)
आदित्यभक्तावृक्षः । इति
राजनिर्घण्टः ॥ हुड्-
हुडिया इति ख्याता ।

**अर्कमूला**, स्त्री, (अर्क इव विषधराणां दुःसहं मूलं
यस्याः सा ।) अर्कपत्रा । इति
रत्नमाला ॥ इशेर-
मूल इति भाषा ।

**अर्करेतोजः**, पुं, (अर्कस्य रेतसो जायते, अर्करेतस्
+ जन् + ड, उपपदसमासः ।)
सूर्य्यपुत्त्रविशेषः ।

हिङ्गुपत्र्या विबन्धार्शःश्लेष्मगुल्मानिलापहः ॥
वंशपत्र्याः पाचनोष्णो हृद्वस्तिगदसंघहृत् ।
मत्स्याक्ष्यर्को ग्राहिशीतकुष्ठपित्तकफास्रजित् ॥
सर्पाक्ष्या रोपणः सर्पवृश्चिकोन्दुरदंशहृत् ।
शङ्खपुष्प्या विषहरः स्मृतिकान्तिबलाग्निदः ॥
अर्कपुष्प्याः कृमिश्लेष्ममेहपित्तविकारजित् ।
लज्जालुकाया भगरुग्रक्तपित्तातिसारहृत् ॥
अलम्बु षासम्भवोऽर्कः कृमिपित्तकफापहः ।
दुग्धिकायाः कफहरो वृष्यस्तम्भी क्रिमिप्रणुत् ॥
भूम्यामल्याः कासतृष्णाकफपाण्डुक्षतापहः ।
ब्राह्म्या बुद्धिप्रदश्चार्कः षण्मासाभ्यासतः कविः ॥
ब्रह्ममण्डुकिका पाण्डुविषशोथज्वरान् हरेत् ।
द्रोणपुष्प्या ज्वरश्वासकामलाशोथजन्तुजित् ॥
सूर्य्यमुख्या हरेत् स्फोटयोनिरुक्कृमिपाण्डुताः ।
बन्ध्याकर्कोटिकाजातः सर्पदर्पव्रणापहः ॥
मार्कण्डिकाया दुर्गन्धविषगल्मोदरापहः ।
देवदाल्याः शूलगुल्मश्लेष्मार्शोवातजित् परः ॥
धत्तूरजो ग्राहिहिमो वह्निकृद्व्रणदाहहा ।
गोजिह्वाया मेहकासव्रणसारज्वरापहः ॥
नागपुष्प्याः सर्पविषसर्व्वग्रहनिवारणः ।
वेल्लन्तरो मूत्रघातास्मरीयोन्यनिलार्त्तिजित् ॥
छिक्कन्या वह्निरुचिकृदर्शःकुष्ठकृमिप्रणुत् ।
कौकुन्दरो ज्वरं रक्तं मुखशोषं कफं हरेत् ॥
सुदर्शनार्कश्चात्युष्णः कफशोथास्रवातजित्” ।
इति श्रीलङ्कानाथकृतार्कचिकित्सायामौषध्यर्क-

**अर्कपत्रः**, पुं, (अर्कः सूर्य्यैव तीक्ष्णं पत्रं यस्य सः ।) आदित्यपत्रवृक्षः इति राजनिर्घण्टः ॥

**अर्कपत्रा**, स्त्री, (अर्कः सूर्य्यैव तीक्ष्णं पत्रं यस्याः सा ।) वृक्षविशेषः । इशेर मूल इति भाषा । तत्पर्य्यायः । सुनन्दा २ अर्कमूला ३ विषापहा ४ । इति रत्नमाला ॥

**अर्कपर्णः**, पुं, (अर्क इव रक्तं पर्णमस्य सः ।) अर्क-वृक्षः । इत्यमरः ॥ आकन्द इति ख्यातः । (अस्य विशेषोऽर्कशब्दे ज्ञातव्यः ।)

**अर्कपादपः**, पुं, (अर्कः अर्कवृक्षैव तीक्ष्णः पादपः ।) निम्बवृक्षः । इति त्रिकाण्डशेषः ॥

**अर्कपुष्पिका**, स्त्री, (अर्कस्यार्कवृक्षस्य पुष्पमिव पुष्प-मस्याः सा, जातित्वात् ङीप् कप् ।) वृक्षभेदः । अर्कहुली हुलीपुष्पश्चेति ख्याता । तत्पर्य्यायः । पयस्या २ सूर्य्यवल्ली ३ सितपर्णो ४ । इति रत्न-माला ॥

**अर्कपुष्पी**, स्त्री, (अर्कस्यार्कवृक्षस्य पुष्पमिव पुष्प-मस्याः सा, जातित्वात् ङीप् ।) कुटुम्बिनीवृक्षः । तत्पर्य्यायगुणाः ।

तत्पर्य्यायः । रेवन्तः २ प्लगगः ३ हयवाहनः ४ । इति हेमचन्द्रः ॥

**अर्कवल्लभः**, पुं, (अर्कस्य वल्लभः, षष्ठीतत्पुरुषः ।) बन्धूकवृक्षः । इति राजनिर्घण्टः ॥ (बन्धूकवृक्ष-शब्देऽस्य गुणादयो ज्ञेयाः ॥)

**अर्कवेधं**, क्ली, (अर्केण विध्यते, अर्क + व्यध + पचाद्यच् ।) तालीशपत्रं । इति राजनिर्घण्टः ॥ (तालीशपत्रशब्देऽस्य गुणादिविवरणं ज्ञेयं ।)

**अर्कव्रतं**, क्ली, (अर्कस्य व्रतं, षष्ठीतत्पुरुषः ।) आ-रोग्यसप्तम्यादि सूर्य्यव्रतं । इति स्मृतिः ॥ सूर्य्यस्य जलशोषणवत्प्रजाकरग्रहणं । यथा, --
“अष्टौ मासान् यथादित्यस्तोयं हरति रश्मिभिः ।
तथा हरेत् करान्राष्ट्रान्नित्यमर्कव्रतं हि तत्” ॥
इति मनुः ।

**अर्कसूनुः**, पुं, (अर्कस्य सूनुः पुत्त्रः ।) यमः । इति हेमचन्द्रः ॥

**अर्कसोदरः**, पुं, (अर्कस्य सोदर इव हितकारी ।) ऐरावतहस्ती । इति हेमचन्द्रः ॥

**अर्कहिता**, स्त्री, (अर्काय हिता अनुकूला, चतुर्थी-तत्पुरुषः ।) आदित्यभक्तावृक्षः । इति राज-निर्घण्टः ॥ हुड्हुडिया इति ख्याता । (अस्याः विशेष आदित्यभक्ताशब्दे द्रष्टव्यः ॥)

विधानं तृतीयशतकं ॥ * ॥ अतःपरं
नानौषध-

**अर्काश्मा**, [न्] पुं, (अर्कस्य अनुगतः अश्मा, मध्य-
पदलोपी कर्म्मधारयः ।) अरुणोपलः
। (चुणि
इति ख्यातः प्रस्तरभेदः ।)
सूर्य्यकान्तमणिरिति
यावत् । इति हलायुधः ॥

**अर्काह्वः**, पुं, (अर्केण आहूयते यः, अर्क + आ +
ह्वे + अप् ।) अर्कवृक्षः । इत्यमरः ॥
आकन्द इति
भाषा ।

**अर्कोपलः**, पुं, (अर्कस्यानुगत उपलः, कर्म्मधारयः ।)
सूर्य्यकान्तमणिः । इति राजनिर्घण्टः
॥ (चुणि
इति ख्यातो रत्नभेदः ।
स्फटिकमणिः । “अका-

:पलोल्लसितवह्निभिरह्नि तप्तास्तीव्रं महाव्रतमिवात्र

चरन्ति वप्राः” । इति माघः ।)

**अर्गलं**, क्ली, स्त्री, (अर्ज + कलच्, कुत्वम् ।) कपाट-

बन्धककाष्ठविशेषः । इत्यमरः ॥ हुड्का तसला
इत्यादि भाषा ।
(“ससम्भ्रमेन्द्रद्रुतपातितार्गला
निमिलिताक्षीव भियामरावती” ।
इति काव्यप्रकाशे ।
“तां सत्यनाम्नीं दृढतोरणार्गलां
गृहैर्विचित्रैरुपशीभितां शिवां” ।
इति रामायणे ।
“अथानपोढार्गलमप्यगारं” । इति रघुः ।
प्रति-
बन्धः । प्रत्यवायः । अन्तरायः ।
“ईप्सितं तदवज्ञानात् विद्धिसार्गलमात्मनः”
।
इति रघुवंशे ।)
कल्लोले त्रि । इति मेदिनी ॥
देवीमाहात्म्यपाठ-
स्यादौ पाव्यस्तोत्रविशेषः ॥ यथा
मार्कण्डेय उवाच ।
“ब्रह्मन् केन प्रकारेण दुर्गामाहात्म्यमुत्तमं ।
शीघ्रं सिद्ध्यति तत्सर्व्वं कथयस्व महाप्रभो
॥
ब्रह्मोवाच ।
अर्गलं कीलकञ्चादौ पठित्वा कवचं पठेत् ।
जपेत् सप्तशतीं पश्चात् क्रम एष शिवोदितः
॥
अर्गलं दुरितं हन्ति कीलकं फलदं तथा ।
कवचं रक्षते नित्यं चण्डिका त्रितयं दिशेत् ॥
अर्गलं हृदये यस्य स चानर्गलवाक् सदा ।
कीलकं हृदये यस्य वशकीलितमानसः ॥
कवचं हृदये यस्य स वज्रहृदयः खलु ।
ब्रह्मणा निर्म्मितं पूर्ब्बं विनिश्चित्यापि
चेतसा” ॥
इत्यादि । तदाद्यश्लोको यथा, --

पचारभेदः । “अये वनदेवतेयं
फलकुसुमपल्लवा-
र्घेण मामुपतिष्ठते” । इति उत्तरचरिते ।
“स प्रत्यग्रैः कुटजकुसुभैः कल्पितार्घाय
तस्मै” ।
इति मेघदूते ।
“दूर्व्वासर्षपपुष्पाणां दत्वार्घं
पूर्णमञ्जलिम्” ।
इति याज्ञवल्क्यः ।)

**अर्घीशः**, पुं, (अर्घोऽस्त्यस्य इति अर्घी, तेषु ईशः ।)

शिवः । इति शब्दरत्नावली ॥

**अर्घ्यं**, त्रि, (अर्घ्यते पूज्यते, अर्ह + ण्यत्, न्यङ्क्वादी-

नाञ्चेति कुत्वं, अर्घमर्हति इति
पादार्घाभ्याञ्चेति
यत् वा ।) पूजनयोग्यं । पूज्यं । इति
मेदिनी ॥
अर्घ्यार्थं । तत्तु
पूजार्थदूर्व्वाक्षतचन्दनपुष्पमिश्रित-
वारि । इत्यमरः ॥
(“अनर्घ्यमर्घ्येण तमद्रिनाथः,
स्वर्गौकसामर्च्चितमर्च्चयित्वा” ।
इति कुमारसम्भवे ।
“अर्घ्यमर्घ्यमितिवादिनं नृपं,
सोऽनवेक्ष्य भरताग्रजो यतः” ।
इति रघुवंशे ।) अर्घार्थजलम् इति
अमरटीकायां
भरतः ॥ तत्तु सामान्यविशेषभेदेन
द्विविधं ।
तत्राद्यस्य क्रमः । स्ववामे
त्रिकोणवृत्तभूविम्बं
विलिख्याधारशक्तिं पूजयित्वा
अस्त्रमन्त्रेण पात्रं
प्रक्षाल्य मन्त्रेण जलेनापूर्य्याङ्कुशमुद्रया
मन्त्रेण,
सूर्य्यमण्डलात्तीर्थमावाह्य प्रणवेन
गन्धपुष्पाभ्यां

इति तिथ्यादितत्त्वं ॥
(“ब्रह्मचारी व्रती च स्यात् गुरुदेवद्विजार्च्चकः”
।
इति मनुः ।)

**अर्च्चनं**, क्ली, (अर्च्च + भावे ल्युट् ।) पूजनं । यथा, --

“धनधान्यकरं नित्यं गुरुदेवद्विजार्च्चनं” ।
इति राजवल्लभः ॥ पूजाद्रव्येत्रि । यथा, --
“अर्च्चकस्य तपोयोगात्
अर्च्चनस्यातिशायनात्” ।
इति तिथ्यादितत्त्वं ।

**अर्च्चना**, स्त्री, (अर्च्च + युच्, टाप् ।) पूजा । इति

जटाधरः ॥ गुरुदेवद्विजानां नित्यार्च्चनागुणाः
।
स्वर्गयश-आयुर्धनधान्यकारित्वं ।
अलक्ष्मीपाप-
नाशित्वञ्च । इति राजवल्लभः ॥

**अर्च्चा**, स्त्री, (अर्च्च + आधारे अङ् ।) पूजा । प्रतिमा
।

इति मेदिनी ॥ (देवादीनां पूजनं । “अर्च्चा चेत्
विधितश्च ते वद तदा किं मोक्षलाभक्लमैः” ॥
इति शिवशतके ।)

**अर्च्चिः**, स्त्री, (अर्च्च + इन् ।) अग्निशिखा । इति

सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥
(“आसीदासन्ननिर्व्वाणप्रदीपार्च्चिरिवोषसि” ।
इति रघुवंशे ।)

**अर्च्चिः**, [स्] स्त्री, क्ली, (अर्च्च + इसि ।) अग्निशिखा
।

किरणाः । इत्यमरः । दीप्तिः । इत्युणादिकोषः
॥
अयं शब्दः सान्त इदन्तश्च ॥ (“हर्म्याणां
हेमशृङ्ग-
श्रियमिव निचयैरर्च्चिषामादधानः” । “विरम
विरम वह्ने मुञ्च धूमानुबन्धं प्रकटयसि
किमुच्चै-
रर्च्चिषां चक्रवालम्” । इति रत्नावली ।)

"जय त्वं देवि चामुण्डे जय भूतापहारिणि !
।
जय सर्व्वगते देवि ! कालरात्रि नमोऽस्तु ते"
॥
तस्य शेषश्लोको यथा, --
"इदं स्तोत्रं पठित्वा च महास्तोत्रं पठेन्नरः ।
सप्तशतीं समाराध्य वरमाप्नोति सम्पदं" ॥
इत्यर्गलास्तोत्रं ॥

**अर्गलिका**, स्त्री, (क्षुद्रार्गला, अर्गला गौरादित्वात्

ङीष् स्वार्थे कन् ।) अल्पार्गला । इति
हेमचन्द्रः ॥
खिल इति भाषा ।

**अर्घ**, मूल्ये, (भ्वादि -- परं -- सकं सेट् ।) इति

कविकल्पद्रुमः ॥ अर्घति गां गोपः । इति
दुर्गा-
दासः । ("परीक्षका यत्र न सन्ति देशे
नार्घन्ति
रत्नानि समुद्रजानि" । इति पञ्चतन्त्रे ।)

**अर्घः**, पुं, (अर्घ + घञ् ।) मूल्यं ।

("कुर्य्युरर्घं यथापण्यं ततो विंशं नृपो हरेत्"
।
"मणिमुक्ताप्रबालानां लौहानां तान्तवस्य च
।
गन्धानाञ्च रसानाञ्च विद्यादर्घबलाबलम्" ॥
इति मनुः ।) पूजाविधिः । इत्यमरः ॥ अयं
शब्दः
सामगानां सर्व्वत्राभिलापे सयकारो
नपुंसकलिङ्गे-
नैव प्रयोज्यः अन्यवेदिनां निर्यकारः
पुंलिङ्गेन
प्रयोज्यः । इति श्राद्धतत्त्वं ॥
(दूर्व्वाक्षतसर्षप-
पुष्पादिविरचितोदेवब्राह्मणादिसम्मानार्थः
पूजो-

संपूज्य धेनुमुद्रां प्रदर्श्य प्रणवमष्टधा
दशधा वा
जपेत् ॥ अन्त्यस्य क्रमः । स्ववामे
त्रिकोणमण्डलं
कृत्वा तत्र त्रिपदिकामारोप्य अस्त्रेण
शङ्खं
प्रक्षाल्य तदुपरि संस्थाप्य मन्त्रेण
गन्धपुष्पाक्षत-
दूर्व्वादि तत्र निःक्षिप्य विमलजलेन
विलोम-
मातृकया मूलेन च पूरयेत्
ततस्त्रिपदिकायां
वह्निमण्डलपूजा शङ्खे सूर्य्यमण्डलपूजा
जले
सोममण्डलपूजा ततो मन्त्रेणाङ्कुशमुद्रया
सूर्य्यम-
ण्डलात्तीर्थमावाह्य मन्त्रेण
स्वहृदयाद्देवतां तत्रा-
वाह्य कूर्च्चमन्त्रेणावगुण्ठ्यास्त्रमन्त्रेण
गालिनीमुद्रां
प्रदर्श्य मन्त्रेण तज्जलं वीक्ष्य अङ्गमन्त्रैः
सकलीकृत्य
गन्धपुष्पाभ्यां देवतां संपूज्य तदुपरि
मत्स्यमुद्रया-
च्छाद्य मूलमन्त्रमष्टधा जप्त्वा धेनुमुद्रां
प्रदर्श्या-
स्त्रेण संरक्ष्य तस्मात् किञ्चित् जलं
प्रोक्षणीपात्रे
निःक्षिपेत् । इति तन्त्रसारः ॥

**अर्घ्यं**, क्ली, (अर्घ + यत् ।)
जरत्कारुमुनितपोवनतरू-

द्भतमधु । तस्य गुणाः ।
चक्षुरायुर्हितकारित्वं ।
आमवातकफपित्तनाशित्वञ्च । इति
राजवल्लभः ॥

**अर्च्च**, क, पूजे । (चुरादि -- सक -- सेट् ।) इति

कविकल्पद्रुमः ॥ क अर्च्चयति ।
गोवर्द्धनस्त्विम-

**अर्च्चितः**, त्रि, (अर्च्च + कर्म्मणि क्तः ।) पूजितः ।

इत्यमरः ॥ (पूजाविधिना सम्मानितः ।
"वेश्मन्येवं कृते तत्र गत्वा तान् परमार्च्चितान्"
।
"अर्च्चिताश्च नरैः पौरैः पाण्डवा भरतर्षभ" ।
इति महाभारते ।)

**अर्च्चिष्मान्**, [त्] पुं, (अर्च्चिर्विद्यतेऽस्य, अर्च्चिस् +

मतुप् ।) अग्निः । इति हेमचन्द्रः ॥ सूर्य्यः ।
अर्च्चिः-
शब्दात् अतिशये मतुप्रत्ययः ॥ (त्रि, दीप्तः ।
तेजो-
विशिष्टः । प्रभावान् ।) (स्वनामख्यातो
देवर्षिभेदः ।
यदुक्तं, हरिवंशे,
"अर्च्चिष्मांस्तम्बरुश्चैव भारिश्च वदतां वरः ।
नेतारो देवदेवानामेते हि तपसान्विताः" ।)

**अर्च्च्यः**, त्रि, (ऋच् + स्तुतौ ण्यत्, अर्च्च + यत् वा ।)

अर्च्चनीयः । पूज्यः । इति हेमचन्द्रः ॥
("मरुत्प्रयुक्ताश्च मरुत्सखाभं,
तमर्च्च्यमारादभिवर्त्तमानम्" ।
इति रघुवशे ।)

**अर्ज्ज**, अर्ज्जने । (भ्वादि -- परं -- सकं सेट् ।) इति

कविकल्पद्रुमः ॥ अर्ज्जनमलब्धस्य लाभः ।
यश-
श्चार्ज्जति यः स्थिरमिति हलायुधः । इति
दुर्गादासः ॥

**अर्ज्ज**, क संस्कारे (चुरादि -- उभं -- सकं -- सेट् ।)

इति कविकल्पद्रुमः ॥ क अर्ज्जयति किमपि
लोकः संस्करोतीत्यर्थः । प्रतियत्ने प्राञ्चः ।
अर्ज्ज
यति धनं परिजनः । इति रमानाथः । इति
दुर्गादासः ॥

| | | |
|---|---|---|
| | मात्मनेपदिनं मत्वा विभ्राजसे<br>मकरकेतनमर्च्च-<br>यन्तीत्यादि स्खलितमित्याह । इति<br>दुर्गादासः ॥<br>**अर्च्च**, ञ, पूजे । (भ्वादि -- सक -- सेट् ।) इति कवि-<br>कल्पद्रुमः ॥ ञ अर्च्चति अर्च्चते । इति<br>दुर्गादासः ॥<br>**अर्च्चकः**, त्रि, (अर्च्चति, अर्च्च + ण्वुल् ।) पूजकः ।<br>अर्च्चनाकारकः । यथा, --<br>"अर्च्चकस्य तपोयोगात्<br>अर्च्चनस्यातिशायनात् ।<br>आभिरूप्याच्च विम्बानां देवः<br>सान्निध्यमृच्छति" ॥ | |

**अर्ज्जकः**, पुं, (अर्ज्जयति, अर्ज्ज + ण्वुल् ।) श्वेतपर्णासः ।

वावुइ इति भाषा । तत्पर्य्यायः । श्वेतच्छदः २
गन्धपत्रः ३ पाता ४ कुठेरकः ५ । इति शब्दः-
चन्द्रिका ॥ वर्व्वरीभेदः । आजबलाइ इति
पश्चिमदेशे ख्यातः । तत्पर्य्यायः । क्षुद्रतुलसी २
क्षुद्रपर्णः ३ मुखार्ज्जकः ४ उग्रगन्धः ५ जम्बीरः
६ कुठेरः ७ कठिञ्जरः ८ । अस्य गुणाः । कटुत्वं ।
उष्णत्वं । कफवातामयनेत्ररोगनाशित्वं । रुचि-
कारित्वं । सुखप्रसवकारकत्वञ्च । इति राजनि-
र्घण्टः ॥ सामान्यतुलसी । इति रत्नमाला ॥
(“कफघ्ना लघवो रुक्षाः स्निग्धोष्णाः पित्तवर्द्धनाः ।
कटुपाकरसाश्चैव सुरसार्ज्जकभूस्तृणाः” ॥
इति सुश्रुतश्च ॥)

**अर्ज्जकः**, त्रि, (अर्ज्जयति, अर्ज्ज + ण्वुल ।) उपार्ज्जन-

कर्त्ता । यथा । “अतएव वशिष्ठेन ज्येष्ठस्यांशद्वय-
मभिधायार्ज्जकस्यांशद्वयमभिहितं” । इति दाय-
भागः ॥

**अर्ज्जनं**, क्ली, (अर्ज + ल्युट् ।) उपार्जनं । स्वत्वहेतु-

भूतो व्यापारः । यथा । अर्ज्जनं स्वत्वहेतुभूतो
ब्यापारः अर्जनं स्वत्वं नापादयतीति विप्रतिषिद्ध-
मिति दायभागः ॥
(“अर्जयितृव्यापारोऽर्जनमिति जीमूतवाहनः” ।
२१ फाल्गुनः २२ धन्वी २३ । इति राजनिर्घण्टः ॥
तत्पर्य्यायगुणाः ।
“ककुभोऽर्जुननामाख्यो नदीसर्जश्च कीर्त्तितः ।
इन्द्रद्रुर्वीरवृक्षश्च वीरश्च धवलः स्मृतः ॥
ककुभः शीतलो भग्नक्षतक्षयविषास्रजित् ।
मेदोमेहव्रणान् हन्ति तुवरः कफपित्तहृत्” ॥
इति भावप्रकाशः ॥ अस्य गुणाः । क्षतभग्नरक्त-
स्तम्भनमूत्रकृच्छ्ररोगे पथ्यत्वं । इति राजवल्लभः ॥
कषायत्वं । उष्णत्वं । व्रणशोधनत्वं । कफपित्तश्रम-
तृष्णार्त्तिनाशित्वं । वायुरोगप्रकोपकारित्वञ्च ।
इति राजनिर्घण्टः ॥ * ॥ (अस्य व्यवहारो
यथा, --
“अर्ज्जुनस्य त्वचा सिद्धं क्षीरं दद्याद्धृदामये” ॥
इति वैद्यकचक्रपाणिसंग्रहः ॥)
कार्त्तवीर्य्यार्ज्जुनः । माहिष्मती नाम पुरी तस्य
राजधान्यासीत्, स खलु भुजवीर्य्येण सप्तद्वीपां
धरामजयत् । योगाद् बाहुसहस्रञ्च लब्धवान् ।
“तस्य बाहुसहस्रन्तु युध्यतः किल भारतः ! ।
योगात् योगेश्वरस्येव प्रादुर्भवति मायया ॥
तेनेयं पृथिवी सर्व्वा सप्तद्वीपा सपर्ब्बता ।
ससमुद्रा सनगरा उग्रेण विधिना जिता ॥
तेन सप्तसु द्वोपेषु सप्तयज्ञशतानि वै ।
प्राप्तानि विधिना राज्ञा श्रूयन्ते जनमेजय” ॥
वरुणः । इति हेमचन्द्रः ॥

**अर्णवोद्भवः**, पुं, (उद्भवत्यस्मात्, उत् + भू + अपा-

दाने अप्, अर्णवः उद्भवो यस्य सः ।) अग्निजार-
वृक्षः । इति राजनिर्घण्टः ॥ । (अग्निजारशब्दे-
ऽस्य गुणा ज्ञातव्याः ॥) (चन्द्रः । अमृतं ।)

**अर्णोदः**, पुं, (अर्णांसि ददाति, दा + क ।) मुस्तकः ।

मेघः । इति राजनिर्घण्टः ॥

**अर्णोभवः**, पुं, (अर्णसि जले भवति, अर्णस् + भू +

अप्, उपपदसमासः ।) शङ्खः । इति राज-
निर्घण्टः ॥

**अर्त्तगलः**, पुं, (आर्त्तेव गलति, गल + अच्, पृषो-

दरादित्वात् वा ह्रस्वः ।) आर्त्तगलः । नील-
झिण्टिका । इत्यमरटीकायांभरतः ॥ (नीलझिण्टि-
शब्देऽस्य गुणो व्याख्येयः ॥)

**अर्त्तनं**, क्ली, (ऋत + ल्युट्, पक्षे इयङभावः ।)

जुगुप्सा । निन्दा । इत्यमरः ॥

**अर्त्तिः**, स्त्री, (अर्द्द + क्तिन् ।) पीडा । धनुरग्रभागः ।

इत्यमरः ॥ (पीडार्थे उदाहरणं यथा, --
“चूर्णं समं रुचकहिङ्गुमहौषधानां,
शुण्ठ्यम्बुना कफसमीरणसम्भवासु ।
हृत्पार्श्वपृष्ठजठरार्त्तिबिसूचिकासु
पेयन्तथा यवरसेन च विड्विबन्धे ॥”
इति वैद्यकचक्रपाणिसंग्रहः ॥)

**अर्त्तिका**, स्त्री, (ऋत + ण्वुल् ।) अन्तिका । नाट्योक्तौ

ज्येष्ठा भगिनी । इत्यमरटीकायां स्वामी ॥

**अर्थ** त् क ङ याचने । इति कविकल्पद्रुमः ॥ ङ

अर्थयते अर्थापयते । प्रार्थयत्यल्पमूल्यानीत्यादौ

"स्वामित्वजनकव्यापारत्वम्" इति महेश्वरः ।
"स्वामित्वहेतुभूतव्यापारत्वम् इति । श्रीकृष्णः ।
"पितृनिधनकालीनं वा जीवनमेव पुत्रस्यार्ज्जनं भविष्यति" । इति दायभागः ।
"अर्थानामर्जने दुःखमर्जितानाञ्च रक्षणे" । इति पञ्चतन्त्रे ।
"द्रव्यार्जनञ्च नाशञ्च मित्रामित्रस्य चार्जनम्" । इति मनुः ।)

**अर्जुनं**, क्ली, (अर्ज + उनन् ।) तृणं । नेत्ररोगः ।
इति विश्वमेदिन्यौ ॥ तस्य लक्षणं । "एको यः शशरुधिरोपमस्तु विन्दुः शुक्रस्थो भवति तदर्जुनं वदन्ति" । इति माधवकरः ॥
("नीरुक् श्लक्ष्णोऽर्जुनं विन्दुः शशलोहितलोहितः" इति वाभटश्च ।)

**अर्जुनः**, पुं, (अर्ज + उनन् ।) पाण्डुराजस्य तृतीय-
पुत्रः । स नु इन्द्रात् कुन्तीगर्भे जातः । तत्पर्य्यायः । फाल्गुनः २ जिष्णुः ३ किरीटी ४ श्वेतवाहनः ५ बीभत्सुः ६ विजयः ७ कृष्णः ८ सव्यसाची ९ धनञ्जयः १० । इति विराटपर्ब्ब । पार्थः ११ शक्रनन्दनः १२ गाण्डीवी १३ मध्यमपाण्डवः १४ श्वेतवाजी १५ कपिध्वजः १६ राधाभेदी १७ सुभद्रेशः १८ गुडाकेशः १९ वृहन्नलः २० । इति जटाधरः ॥ ऐन्द्रिः २१ । इति भूरिप्रयोगः ॥ * ॥
स्वनामख्यातवृक्षविशेषः । आजन इति भाषा ।
"योऽज्जुनेनार्ज्जनस्तुल्यो द्विबाहुर्ब्बहुबाहुना" ।
इति महाभारते ।) मयूरः । मातुरेकसुतः । इति मेदिनी ॥ श्वेतवर्णः । तद्वति त्रि । इत्यमरः ॥

**अर्ज्जुनध्वजः**, पुं, (अर्ज्जुनस्य पार्थस्य ध्वजः, रथ-
केतुभूतः, सततं तत्रावस्थानात् ।) हनूमान् । इति हेमचन्द्रः ॥

**अर्ज्जुनी**, स्त्री, (अर्ज्ज + उनन्, गौरादित्वात् ङीष् ।)
गवी । करतोयानदी । कुट्टनी । उषा । इति विश्वमेदिन्यौ ॥

**अर्ज्जुनोपमः**, पुं, (अर्ज्जुनः स्वनामख्यातः वृक्षः उपमा
यस्य सः ।) वृक्षभेदः । शेगुन इति भाषा । तत्पर्य्यायः । महापत्रः २ शाकवृक्षः ३ अनीलः ४ अर्णः ५ । इति शब्दचन्द्रिका ॥ शाकाख्यः ६ खरपत्रः ७ । इति रत्नमाला ॥

**अर्णः**, पुं, (अर्त्तेः क्तः ।) शाकवृक्षः । इति शब्द-
चन्द्रिका । अक्षरं । इत्यागमः ॥ वर्णः । यथा, --
"वर्णोऽक्षरं रश्मिरर्णः स्वरास्तु कथिता अचः ।
व्यञ्जनानि हलो वर्गाः कादयोऽष्टौ प्रकीर्त्तिताः" ॥
इति वीजवर्णाभिधानं ॥

**अर्णः**, [स्] क्ली, (ऋच्छति, ऋ गतौ उदके नुट्
चेत्यर्त्तेरसुन् तस्य च नुट् ।) जलं । इत्यमरः ॥

**अर्णवः**, पुं, (अर्णांसि जलानि सन्त्यस्मिन्, अर्णसो-
प्रार्थनं प्रार्थः पश्चात् प्रार्थं करोति इति ञौ परस्मैपदं । इति दुर्गादासः ॥

**अर्थः**, पुं, (अर्थ + घञ् ।) विषयः । याच्ञा ।
धनं । कारणं । वस्तु । शब्दप्रतिपाद्यः । निवृत्तिः । प्रयोजनं । इति मेदिनी ॥ प्रकारः । इति हेमचन्द्रः ॥ (धनार्थे यथा, --
"अर्थेन बलवान् सर्व्वः अर्थाद्भवति पण्डितः" । इति हितोपदेशे । अयञ्च त्रिवर्गस्यान्तर्गतः ।
"कस्यार्थधर्म्मौ वद पीडयामि सिन्धोस्तटावोघैव प्रवृद्धः ।" इति कुभारसम्भवे ।
"तमसोलक्षणं कामो राजसस्त्वर्थ उच्यते सत्त्वस्य लक्षणं धर्म्मः श्रेष्ठ्यमेषां यथोत्तरं" ॥
इति मनुः । शब्दप्रतिपाद्यः । शब्दानामभिधेयः ।
"वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये" । इति रधुवंशे । अभिधेये । अलङ्कारशास्त्रादौ अर्थस्त्रिविधः, वाच्यो लक्ष्यो व्यङ्गश्चेति ।

**अर्थना**, स्त्री, (अर्थ + युच् ।) याच्ञा । भिक्षा ।
इत्यमरः ॥

**अर्थपतिः**, पुं, (अर्थानां पतिः, षष्ठीतत्पुरुषः ।)
कुवेरः । राजा । इति मेदिनी ॥
("अर्थ्यामर्थपतिर्वाचमाददे वदतां वरः" ।
"स नैषधस्यार्थपतेः सुतायाम्" । इति रघुवंशे ।)

**अर्थप्रयोगः**, पुं, (अर्थानां धनानां प्रयोगः, षष्ठी-
तत्पुरुषः ।) वृद्धिजोविका । इत्यमरः ॥ सुदे देया वाडी देया इत्यादि भाषा ।

| | | |
|---|---|---|
| तत्पर्य्यायः । नदीसर्जः २ वीरतरुः ३ इन्द्रद्रुः ४ ककुभः ५ । इत्यमरः ॥ शम्बरः ६ पार्थः ७ चित्रयोधीः ८ धनञ्जयः ९ वैरातङ्कः १० किरीटी ११ गाण्डीवी १२ शिवमल्लकः १३ सव्यसाची १४ कर्णारिः १५ करवीरकः १६ कौन्तेयः १७ इन्द्र-सूनुः १८ वीरद्रुः १९ कृष्णसारथिः २० पृथाजः | लोपश्चेति वः सलोपश्च ।) समुद्रः । इत्यमरः ॥ (“अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः” । इति रघुवंशे ।)<br><br>**अर्णवजः**, पुं क्ली, (अर्णवात् जायते, अर्णव + जन + ड, उपपदसमासः ।) समुद्रफेनः । इति रत्नमाला ॥ (समुद्रफेनशब्देऽस्य विवरणं ज्ञेयं ॥)<br><br>**अर्णवमन्दिरः**, पुं, (अर्णवः मन्दिरमिव यस्य सः ।) | |

**अर्थवादः**, पुं, (अर्थस्य लक्षणया स्तुत्यर्थस्य निन्दा-
र्थस्य वा वादः, वद् + करणे घञ् ।)
स्तुतिः ।
प्रशंसा । इति हेमचन्द्रः ॥ स तु त्रिविधः । गुण-
वादः १ अनुवादः २ भूतार्थवादः ३ । यथा, --
“विरोधे गुणवादः स्यादनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानावर्थवादस्त्रिधा मतः” ॥
इति भट्टः ॥ तत्त्वसम्वोधिनीमते सप्तविधः । स्तुत्य-
र्थवादः १ फलार्थवादः २ सिद्धार्थवादः ३ नि-
न्दार्थवादः ४ परकृतिः ५ पुराकल्पः ६ मन्त्रः ७ ।
एषामुदाहरणानि श्रुत्युक्तत्वात् न लिखितानि ॥
विध्यसमभिव्याहृतवाक्यं । यथा ।
“अर्थवादश्च विध्यसमभिव्याहृतवाक्यरूपः” सोऽपि त्रिविधः ।
गुणवादानुवादभूतार्थवादभेदात् । यथा --
“विरोधे गुणवादः स्यादनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानावर्थवादस्त्रिधा मतः” ॥
इति ॥ अयमर्थः । विरोधे विशेष्यविशेषणयोः
सामानाधिकरण्येनान्वयविरोधे गुणवादः अङ्ग-
कथनरूपत्वात् । यथा “यजमान स्रस्तरः” इति ।
अत्र स्रस्तरः कुशमुष्टिः तस्य यजमानेऽभेदान्वय-
बाधात् यजमानस्य कुशमुष्टिधारणरूपार्थवाद-
सम्भिन्नमित्यादेः स्वत्न्त्रार्थवादानां का गतिरित्य-
त्राह भूतार्थानां क्रियार्थेन समाम्नायः ।
अस्यार्थः ।
भूतार्थानां सिद्धार्थानां क्रियार्थेन कार्य्यबोधकेन
विधिना इति यावत् । समाम्नायः पाठः कार्य्य-
इति शेषः । ततश्च विधिवाक्याकाङ्क्षापूरकत्वेन
कार्य्यान्वितबोधकतया तेषां प्रामाण्यं । यथा ।
लिखिष्यमाणयूपाहवनीयवाक्यानां यूपाहवनीय-
परिचयाय कार्य्यान्वितबोधकत्वेन स्वार्यबोधकत्वे
प्रामाण्यं । तथा स्वर्गकामो यजेतेत्यत्र स्वर्गरूप-
परिचयाय स्वर्गबोधकत्वेन ।
“यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरं ।
अभिलाषोपनीतं यत् तत् सुखं स्वःपदास्पदं” ॥
इत्यादि वाक्यानामपि प्रामाण्यं । अन्यथा यूपा-
दिपदार्थापरिचये च तत्तद्विधिवाक्यानां प्रवृत्तिर्न
स्यादतो विधिनैकवाक्यत्वात् सिद्धार्थकानामपि
प्रामाण्यं । यत्र तु विधिना सह विरोधः तत्र
न स्वार्थे प्रामाण्यं । यथा “अहरहः सन्ध्यामुपा-
सीत” इत्यादौ ।
“सन्ध्यामुपासते ये तु नियतं संशितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्” ॥
इत्याद्यर्थवादानां ॥ अतो नित्ये कर्म्मणि फलश्रुति-
इति प्रायश्चित्ततत्त्वं ॥ * ॥ धर्म्मशास्त्रेणार्थ-
शास्त्रस्य बाध्यत्वं यथा ॥
“स्मृत्यर्थेन विरोधे हि अर्थशास्त्रस्य बाधनं ।
परस्परविरोधे तु न्याययुक्तं प्रमाणवत्” ॥
अर्थशास्त्रस्य मन्वादिप्रणीतराजनीत्यादिविष
यस्य । यदाह, --
“अनागमन्तु यो भुङ्क्ते बहून्यब्दशतान्यपि ।
चौरदण्डेन तं पापं दण्डयेत् पृथिवीपतिः ॥
इत्यनयोर्धर्म्मशास्त्रार्थशास्त्रयोर्विप्रतिपत्तौ धर्म्म
शास्त्रेण दण्डविधायकमर्थशास्त्रं बाध्यते । तत-
श्चार्थशास्त्रस्य त्रिपुरुषीयेतरपरत्वेन सङ्कोचः” ।
इति मलमासतत्त्वं ॥

**अर्थसिद्धकः**, पुं, (अर्थात् सिद्धः, अर्थः प्रयोजनं
धनं वा सिद्धोऽस्य, समासान्तः कः ।) सिन्दवार-
वृक्षः । इति राजनिर्घण्टः ॥

**अर्थागमः**, पुं, (अर्थस्य आगमः, षष्ठीतत्पुरुषः ।)
धनागमः । तत्पर्य्यायः । आयः २ । इति हलायुधः ॥
(“अर्थागमो नित्यमरोगिता च
प्रिया च भार्य्या प्रियवादिनी च ।
वश्यश्च पुत्नोऽर्थकरी च विद्या
षड्जीवलोकेषु सुखानि राजन्” ॥
इति हितोपदेशे ।)

**अर्थिकः**, पुं, (अर्थयते इत्यर्थी याचकः कुत्सितार्थे
कन् ।) वैतालिकः । निद्राणस्य राजादेर्जागर-
यिता । इति हेमचन्द्रः ॥

**अर्थी**, [न्] त्रि, याचकः । सहायः । सेवकः ।
विवादी । इति विश्वः ॥ धनी । अर्थो विद्यते-
ऽस्येति इन् ॥

**अर्थ्यं**, क्ली, (अर्थ + यत् ।) शिलाजतु । इत्यमर-
मेदिनीकरौ ॥ अर्थहिते त्रि ॥

रूपत्वात् गुणवादः । अवधारिते प्रमाणान्तर-
सिद्धेऽर्थे यो वादः । यथा नान्तरीक्षेऽग्निश्चेतव्यः
अग्निर्हिमस्य भेषजं इत्यादि च । अन्तरीक्षेऽग्नि-
चयनस्यासम्भवेन तदभावस्य अग्नेर्हिमनाशक-
त्वस्य च लौकिकप्रमाणसिद्धत्वात् अनुवादः ।
तद्धानौ तयोर्विरोधावधारनयोरभावे भूतार्थ-
वादः । यथा इन्द्रो वृत्रहन्नित्यादि । सोऽपि
द्विविधः । स्तुत्यर्थवादो निन्दार्थवादश्च । यथा, --
"सन्ध्यामुपासते ये च" इत्यादि स्तुत्यर्थवादः ।
"स्त्रीतैलमांससंभोगी पर्ब्बस्वेतेषुवै पुमान् ॥
विण्मूत्रभोजनं नाम प्रयाति नरकं मृतः" ।
इत्यादि निन्दार्थवादः । इति श्राद्धविवेकटीकायां
श्रीकृष्णतर्कालङ्कारः ॥ * ॥
"प्रकरणप्रतिपाद्यस्य तत्र तत्र प्रशंसनं" ।
इति वेदान्तसारः ॥ तद्विवरणं यथा । अथार्थ-
वादाधिकरणं । तत्रार्थवादाश्च बहुषु श्रूयन्ते ते
किं प्रमाणं न वेति संशये पूर्ब्बपक्षसूत्रं । आम्ना-
यस्य प्रवर्त्तकत्वं तदर्थमेव तदवतारादिति । अ-
स्यार्थः । आम्नायस्य वेदस्य प्रवर्त्तकत्वं विधेये इति
शेषः । तदर्थं वेदाभिधानात् । तच्च प्रवर्त्तकत्वं
कार्य्यताज्ञानद्वारैव तद्विना प्रवृत्त्यभावात् । अतः
सिद्धार्थकानां स्तुत्यर्थवादानां कार्य्यतावाच-
रर्थवादएव सोऽपि रुच्युत्पादनपरः । अतोऽत्र
कार्य्यताज्ञानादेरप्रवृत्तिरिति दिक् । इति धर्म-
दीपिका ॥

**अर्थवान्**, [त्] पुं, (अर्थोऽस्त्यस्य, अर्थ + मतुप् +
मस्य वः ।) पुरुषः । इति राजनिर्घण्टः ॥ अर्थवि-
शिष्टे त्रि ॥ (ऐश्वर्य्यशाली । "तेनार्थवान् लोभपरा-
ङ्मुखेन" । इति रघुवंशे । अभिधेययुक्तः । सार्थकः ।
"करोति यः सर्व्वजनातिरिक्तां
सम्भावनामर्थवतीं क्रियाभिः" ।
इति किरातार्जुनीये । "अर्थवान् खलु मे राज-
शब्दः" । इति शाकुन्तले ।)

**अर्थविज्ञानं**, क्ली, (अर्थस्य विज्ञानं, षष्ठीतत्पुरुषः ।)
शुश्रूषाद्यष्टधीगुणान्तर्गतगुणविशेषः । शब्दार्थ-
ज्ञानं । इति हेमचन्द्रः ॥
("शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा ।
ऊहोऽपहोऽर्थविज्ञानं तत्वज्ञानञ्च धीगुणाः" ॥)

**अर्थव्ययज्ञः**, त्रि, (अर्थस्य व्ययं तत्प्रकारं जानाति,
ज्ञा + क ।) धनव्ययप्रकारवित् । (किं धनं, कथं,
कुत्र, कियत्, कस्मै वा व्ययितव्यमिति विशेषा-
भिज्ञः ।) तत्पर्य्यायः । सुकुलः २ । इति हेमचन्द्रः ॥

**अर्थशास्त्रं**, क्ली, (अर्थस्य भूमिधनादेः प्रापकं शास्त्रं,
षष्ठीतत्पुरुषः ।) चाणक्यादिप्रणितं नीतिशास्त्रं ।

**अर्थ्यः**, त्रि, (अर्थे साधुः, तत्साधुरिति यत्, अर्था-
दनपेतः, धर्म्मपथ्यर्थन्यायादनपेत इति यत्प्रत्ययः ।)
पण्डितः । धनवान् । न्याय्यः । इत्यमरभरतौ ।
याच्यः । याचनार्थकार्थधातोः कर्म्मणि यः ॥
(अर्थयुक्तः । उदरार्थयुक्तः ।
"अर्थ्यामर्थपतिर्वाचमाददे वदतां वरः" ।
इति रघुवंशे ।
"वागीशं वाग्भिरर्थ्याभिः प्रणिपत्योपतस्थिरे" ।
इति कुमारसम्भवे ।)

**अर्द** यातनागतियाचनेषु । (गतौ, सकं पीडायां अकं
भ्वादि परं सेट् ।) इति कविकल्पद्रुमः ॥ यातना
ताडनं । अर्द्दति पुत्रं पिता । "शरद्घनं नार्द्दति
चातकोऽपि" । न याचतीत्यर्थः । इति दुर्गादासः ॥

**अर्द** ञ बधे । (चुरां-उभं-सकं-सेट् ।) इति कविकल्प-
द्रुमः ॥ ञ अर्द्दति अर्द्दते । "रक्षःसहस्राणि चतुर्द्द-
शार्द्दीत्" । अयमात्मनेपदीत्यन्ये । इति दुर्गादासः ॥

**अर्द** क बधे । इति कविकल्पद्रुमः ॥ क अर्द्दयति ।
अयमात्मनेपदीत्यन्ये । इति दुर्गादासः ॥

**अर्दनं**, क्ली, (अर्द + ल्युट् ।) याचनं । पीडनं ।
हननं । गमनं । अर्दधातोर्भावेऽनट्प्रत्ययः ॥
("सृजस्वेति तदोवाच बलं परबलार्द्दनम्" ।
इति रामायणे ।)

| | | |
|---|---|---|
| कपदाभावात् न कार्य्यताधीजनकत्वं । अतो-<br>ऽप्रामाण्यमेव । अतस्तेषामर्थवादानां प्रवर्त्तक-<br>त्वार्थमवश्यं विधिकल्पनं क्लृप्तविशेषणत्वं वा<br>युक्तं अतएव सिद्धान्तसूत्रं । विधिना त्वेकवाक्य-<br>त्वात् स्तुत्यर्थेन विधीनां स्युरिति । अस्यार्थः ।<br>अर्थवादानां स्तुतिपरत्वेन विधिना सह एक-<br>वाक्यत्वात् ते अर्थवादाः प्रमाणानि स्युः । तथा च<br>विधेयप्रवृत्तावेव तेषां तात्पर्य्यं तत्रैव प्रामाण्यं<br>यत्परशब्दः स शब्दार्थ इति सिद्धान्तात् न स्वार्थे<br>स्तुत्यादौ तत्र तात्पर्य्यामावात् । तर्हि यन्न दुःखेन | तत्पर्य्यायः । दण्डनीतिः २ । इत्यमरः ॥<br>यथा, --<br>“वृहस्पतिप्रभृतिभिः प्रणीतञ्चार्थशास्त्रकं ।<br>तत्रैव दण्डनीतिः स्यादत्र ज्ञेयौ नयानयौ” ॥<br>इति शब्दरत्नावली ॥<br>अष्टादशविद्यान्तर्गतविद्या-<br>विशेषः । यथा विष्णुपुराणं ।<br>“अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।<br>धर्म्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश ॥<br>आयुर्व्वेदो धनुर्व्वेदो गान्धर्व्वश्चेति ते त्रयः ।<br>अर्थशास्त्रं चतुर्थञ्च विद्या ह्यष्टादशैव ताः” ॥ | |

**अर्दना**, स्त्री, (अर्द + युच्, टाप् ।) याच्ञा । भिक्षा ।

इत्यमरः । (यातना । बधः । हिंसा । गतिः ।)

**अर्दनिः**, पुं, (अर्द + अनि ।) अग्निः । याच्ञा ।

रोगः । इत्यमरटीकायां भरतः ॥

**अर्दितं**, क्ली, (अर्द + क्तः ।) वायुव्याधिविशेषः । तस्य

(निदानपूर्ब्बरूपसम्प्राप्तिपूर्ब्बकं)

लक्षणमाह (सुश्रुतः) ।

"उच्चैर्व्याहरतोऽत्यर्थं खादतः कठिनानि च ।

हसतो जृम्भतो भाराद्विषमाच्छयनादपि ॥

शिरोनासौष्ठचिवुकललाटेक्षणसन्धिजः ।

अर्द्दयित्वानिलो वक्त्रमर्द्दितं जनयत्यतः ॥

वक्रीभवति वक्त्रार्द्धं ग्रीवा चाप्यपवर्त्तते ।

शिरश्चलति वाक्सङ्गो नेत्रादीनाञ्च वैकृतम् ॥

ग्रीवाचिवुकदन्तानां तस्मिन् पार्श्वे तु वेदना ॥

(यस्याग्रजो रोमहर्षो वेपथुर्नेत्रमाविलं ।

वायरूद्ध्वं त्वचि स्वापस्तोदो मन्याहनुग्रहः ॥)

तमर्द्दितमिति प्राहुर्व्याधिं व्याधिविशारदाः" ॥

तस्यासाध्यलक्षणञ्चाह ॥

"क्षीणस्यानिमिषाक्षस्य प्रसक्ताव्यक्तभाषिणः ।

न सिध्यत्यर्द्दितं वाढं त्रिवर्षं वेपनस्य च ॥ * ॥

भावप्रकाशेऽप्येयं व्याख्या ॥ व्याहरतः वदतः ।

कठिनानि पूगफलादीनि ।

विषमाच्छयनासना-

दिति पाठान्तरे । विषमाच्छयनासनात् ग्रीवादि-

वक्रीकरोति वक्त्रार्द्धमूद्द्ध्वं हसितमीक्षितं ।

ततोऽस्य कम्पते मूर्द्धा वाक्सङ्गस्तब्धनेत्रता ॥

दन्तचालः स्वरभ्रंशः श्रुतिहानिः क्षरग्रहः ।

गन्धाज्ञानं स्मृतेर्म्मोहस्त्रासः सुप्तस्य जायते ॥

निष्ठीवः पार्श्वतोयायादेकस्याक्षणोनिमीलनं ।

जत्रोरुद्ध्वं रुजा तीव्रा शरीरार्द्धेऽधरेपि वा ॥

तमाहुरर्दितं केचिदेकायामथ चापरे" ॥ * ॥

हारीतसंहितायामप्युक्तं ।

"सन्तापदाहशोषाश्च मूर्च्छापित्तान्वितोमरुत् ।

शैत्यं शोथोऽरुचिर्जाड्यं वातश्लेष्मसमन्वितं ॥

यो द्वन्द्वजाश्रितो धीरास्तं साध्यं मारुतं विदुः ।

केवलोऽपि समीरोऽपि सोऽपि साध्यतमः स्मृतः ॥

वक्त्रं भवति वक्रार्द्धं ग्रीवा चाप्यपवर्त्तते ।

वैकृत्यं नयनानाञ्च विसंज्ञो वेदनातुरः ॥

ग्रीवायां गण्डयोर्दन्तपार्श्वे यस्यातिवेदना ।

तमर्द्दितमिति प्राहुर्वातव्याधिविचक्षणाः ॥

लालास्रावोऽथ शोषश्च हनुग्राहो विरस्यता ।

दन्तशूलं भवेद्यस्य वातेनार्द्दितमेव च ॥

पीतार्द्धं सज्वरं तृष्णा पित्तजे मोह एवच ।

शोफस्तम्भोऽस्य भवति कफोद्भूतेऽथवार्द्दिते" ॥ * ॥)

स्नैहाभ्यङ्गशिरोवस्तिपाननस्यपरायणः ।

अर्द्दितं स जयेत् सर्पिः पिबेदौत्तरभक्तिकं" ॥ * ॥

भावप्रकाशेऽप्येतदतिरिक्तं यत्संगृहीतं तच्चैतत् ॥)

"स्नेहपानानि नस्यञ्च भोज्यान्यनिलहृन्ति च ।

उपनाहाश्च शस्यन्ते स्वेदनं वस्तयोऽर्द्दिते" ॥

वस्तिरत्रशिरोवस्तिरेव ।

"दशमूलीकषायेण मातुलुङ्गरसेन वा ।

बलया पञ्चमूल्या वा क्षीरं वातात्मके हितं ॥

पिष्टं माषकृतं जग्ध्वा नवनीतेन सोऽर्द्दिती ।

क्षीरं मांसरसैर्भुक्त्वा दशमूलीरसं पिबेत् ॥

अर्दिते पित्तजे शीतान् स्नेहांश्चैव विनिर्द्दिशेत् ।

घृतवस्तिप्रसेकञ्च क्षीरसेकं तथैव च ॥

जिह्मीभूताननो मूको दाहवान् योऽर्द्दिती भवेत् ।

कुर्य्यात् प्रतिक्रियां तस्य वातपित्तविनाशिनीं ॥

श्लेष्मभागे क्षयं नीते वृंहणैः समुपाचरेत् ।

अर्दिते शोथसंयुक्ते वमनञ्च प्रशस्यते ॥

रसोनकल्कं तिलतैलमिश्रं खादेन्नरो योऽर्द्दितरोगयुक्तः ।

तस्यार्द्दितं नाशमुपैति शीघ्रं वृन्दं घनानामिव वायुवेगात्" ॥ इति ।

**अर्द्दितः**, त्रि, (अर्द्द + क्तः ।) याचितः । इत्यमरः ॥

हिंसितः । इति मेदिनी ॥ गतः । पीडितः । इति शब्दरत्नावली ॥

**अर्द्धं**, क्ली, (ऋध् + घञ् ।) समानांशः । समभागः ।

इत्यमरः ॥ आधा इति भाषा ।

समभागेऽर्द्धशब्दः

वैपरीत्येन शयनादासनाच्च । अर्द्दयति पीडयति ।
जनयेत्तत इति पाठान्तरे । ततस्तदनन्तरं अर्द्दितं
जनयेत् । अर्द्दिते जाते किं स्यात्तदाह । वक्री-
भवतीत्यादि । अपवर्त्तते वक्रीभवति । चलति
कम्पते । वाक्सङ्गः वाङ्निरोधः । नेत्रादीना-
मित्यादिशब्देन भ्रूगण्डनासिकादीनां ग्रहणं ।
वैकृतं वेदनास्फुरणवक्रत्वादि । ग्रीवेत्यादि यस्मिन्
पार्श्वे अर्द्दितं तस्मिन् पार्श्वे ग्रीवादीनां वेदना ॥
अनिमिषाक्षस्य निमेषासमर्थचक्षुषः । प्रसक्तं
प्रकर्षेण लग्नं अव्यक्तञ्च भाषितुं शीलं यस्य । तस्य
अर्द्दितं न सिध्यति त्रिवर्षं अतीतवर्षत्रयं । अथवा
त्रयाणां चक्षुर्नासामुखानां वर्षः स्रावो यत्र तत् ।
वेपनस्य कम्पनशीलस्य च । वाढमतिशयेन न
सिध्यति इत्यन्वयः । गाढमित्यर्थे च स एवार्थः ॥ * ॥
(चरकश्चाह ।
"अतिवृद्धः शरीरार्द्धमेकं वायुः प्रपद्यते ।
यदा तदोपशोष्यासृक् बाहुं पादञ्च जानु च ॥
तस्मिन् सङ्कोचयत्यर्द्धे मुखं जिह्मं करोति च ।
वक्रीकरोति नासाभ्रुललाटाक्षिहनुन्तथा ॥
ततो वक्रं व्रजत्यास्ये भोजनं वक्रनासिकं ।
स्तब्धं नेत्रं कथयतः क्षरथुश्च निगृह्यते ॥
"वातात्पित्तात्कफाच्च स्यात् त्रिविधं तत्समासतः ।
लालास्रावो व्यथा कम्पः स्फुरणं हनुवाग्ग्रहः ॥
ओष्ठयोः श्वयथुः शूलश्चार्दिते वातजे भवेत् ।
पीतमास्यं ज्वरस्तृष्णा पित्तजे मोहधूपने ॥
गण्डे शिरसि मन्यायां शोथः स्तम्भः कफात्मके" ॥ * ॥
(अथ तस्य चिकित्सामाह सुश्रुतः ॥ अर्द्दितातुरं
बलवन्तमुपकरणवन्तञ्च वातव्याधिविधानेनोपच-
रेद्वैशेषिकैश्च मस्तिष्कशिरोवस्तिनस्यधूपोपनाह-
स्नेहनाडीस्वेदादिभिः । ततः सतृणं महापञ्चमूलं
काकोल्यादिं विदारिगन्धादि सौदकानूपमांसं त-
थैवौदकन्दांश्च संहृत्य द्विगुणोदके क्षीरद्रोणे नि-
क्वाथ्य पादावशिष्टमवतार्य्य परिस्राव्य तैलप्रस्थे-
नोन्मिश्र्य पुनरग्नावधिश्रयेत् ततस्तैलं क्षीरानु-
गतमवतार्य्य शीतीभूतमभिमन्थीयात्तत्र यः स्नेहः
उत्तिष्ठेत्तमादाय मधुरौषधसहाक्षीरयुक्तं वि-
पचेदेतत् क्षीरतैलमर्द्दितातुराणां पानाभ्यङ्गादि-
धूपयोज्यं ॥ तैलहीनं वा क्षीरसर्पिरक्षितर्पण-
मिति ॥ * ॥ चरकस्तु ॥
"अर्द्दिते नावनं मूद्ध्र्नि तैलं तर्पणमेव च ॥
पुमान् क्लीवञ्च । अर्द्धशब्दः पुंलिङ्गः खण्डपर्य्याय-
एव विभागीकृत्य वण्टितस्य तुल्यवण्टिते अद्ध
क्लीवमेवेति केचित् । अर्द्धो रूपभेदात् भागे
पुंसि । तथा वस्त्रार्द्धो नगरार्द्धः उपचाराच्चु भाग-
वति वाच्यलिङ्गः । यथा अर्द्धा शाटी अर्द्धः कम्बलः
अर्द्धं वस्त्रं । इति माधवी ॥ असमपरिभागवृ-
त्तिस्त्रिलिङ्गोऽर्द्धेत्यनुन्यासः । समग्रविभागेऽर्द्ध-
शब्दो नपुंसक एव नान्यलिङ्गः । इति भागवृत्तिः ।
इति भरतः ॥

**अर्द्धः**, पुं, (ऋध् + घञ् ।) एकदेशः । तत्पर्य्यायः ।
भित्तं २ शकलं ३ खण्डं ४ । इत्यमरः ॥ ("पश्चा-
र्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्ब्बकायम्" ॥
इति शाकुन्तले ।
"सर्व्वनाशे समुत्पन्ने अर्द्धं त्यजति पण्डितः ।
अर्द्धेन कुरुते कार्य्यं सर्व्वनाशो हि दुःसहः" ॥
इति पञ्चतन्त्रं ।)

**अर्द्धगङ्गा**, स्त्री, (अर्द्धं गङ्गायाः, एकदेशतत्पुरुषः ।)
कावेरी नदी । इति त्रिकाण्डशेषः ॥

**अर्द्धगुच्छः**, पुं, (अर्द्धः चन्द्रसमः गुच्छः ।) चतुर्व्विं-
शतिगच्छकहारः । इति हेमचन्द्रः ॥ चव्विशनरि
दाना इति भाषा ।

दीना जिह्वा समुत्क्षिप्ता कला सज्जति चास्यवाक् ।
दन्ताश्चलन्ति बाध्येते श्रवणौ भिद्यते स्वरः ॥
पादहस्ताक्षिजङ्घोरुशङ्खश्रवणगण्डरुक् ।
अर्द्धे तस्मिन् मुखार्द्धे वा केवले स्यात्तदर्द्दितं” ॥ * ॥
वाभटस्वाह ।
“शिर सा भारहरणादतिहार्य्यप्रभाषणात् ।
उत्त्रासवक्त्रक्षरथुस्वरकार्मुककर्षणात् ॥
विषमादुपधानाच्च कठिनानाञ्च चर्ब्बणात् ।
वायुर्विवृद्धस्तैस्तैश्च वातलैरूर्द्ध्वमास्थितः ॥

नाडीस्वेदोपनाहाश्च आनूपपिशितैर्हिताः” ॥ * ॥
वाभटश्च ॥
“अर्द्दिते नावनं मूर्द्ध्नि तैलं श्रोत्राक्षितर्पणं ।
सशोफे वमनं दाहरागयुक्ते शिराव्यधः” ॥ * ॥
हारीतसंहितायां ।
“अर्द्धं पलं रसोनञ्च हिङ्गुसैन्धवजीरकैः ।
सौवर्च्चलेन संयुक्तं तथैव कटुकत्रिकं ॥
घृतेन संयुतं भक्षेन्मासमेकं दिने दिने ।
निहन्ति वातरोगञ्च अर्द्दितञ्च प्रतानकं” ॥ * ॥
चक्रपाणिसंग्रहे ॥
“रसोनं नवनीतेन प्राश्य हन्त्यर्दितं द्रुतं ।
अर्द्दिते नवनीतेन खादेन्माषण्डरीं नरः ॥
क्षीरमांसरसैर्भुक्त्वा दशमूलीरसं पिबेत् ।

**अर्द्धचन्द्रः**, पुं, (अर्द्धं चन्द्रस्य ।) नखक्षतं । बाण-विशेषः ।
(“चतुर्भिरर्द्धचन्द्रैश्च जघान चतुरो हयान्” ।
इति रामायणे ।) गलहस्तः । (“शृगालाः सर्व्वे-ऽर्द्धचन्द्रं दत्वा निःसारिताः” । इति एञ्चतन्त्रे ।)
गलाटिपी यस्य प्रसिद्धिः । इति मेदिनी ॥ चन्द्रकः ।

:चन्द्रखण्डं । इति हेमचन्द्रः ॥ मयूरपुच्छेर चाँद इति भाषा ।

**अर्द्धचन्द्रा**, स्त्री, (अर्द्धं चन्द्रस्य, अर्द्धचन्द्र + टाप् ।) कृष्णत्रिवृत् । इत्यमरः ॥ काल तेउडी इति भाषा ।

**अर्द्धचन्द्रिका**, स्त्री, (अर्द्धचन्द्र + स्वार्थे कन्, ह्रस्वे अत इत्त्वे टांप् ।) कर्णस्फोटालता । इति राजनि-र्घण्टः ॥

**अर्द्धचोलकः**, पुं, क्षुद्रचोलकः । इति हारावली ॥ काँचली इति भाषा ।

**अर्द्धजाह्नवी**, स्त्री, (अर्द्धं जाह्नव्याः ।) कावेरी नदी । इति हेमचन्द्रः ॥

**अर्द्धतिक्तः**, पुं, (अर्द्धः असम्पूर्णस्तिक्तः ।) नेपाल-निम्बः । इति राजनिर्घण्टः ॥ (नेपालनिम्बशब्दे-ऽस्य गुणा वक्तव्याः ॥)

**अर्द्धनारीशः**, पुं, (अर्द्धाङ्गे या नारी पार्ब्बतीरूपा तस्या ईशः ।) शिवः । इति शब्दरत्नावली ॥ तस्य ध्यानं यथा, --
"नीलप्रबालरुचिरं विलसत्त्रिनेत्रं
पाशारुणोत्पलकपालकशूलहस्तं ।
अर्द्धाम्बिकेशमनिशं प्रविभक्तभूषं
बालेन्दुबद्धमुकुटं प्रणमामि रूपं" ॥
इति तन्त्रसारः ॥

**अर्द्धनारीश्वरः**, पुं, (अर्द्धाङ्गे या नारी तस्या ईश्वरः ।) उमामहेश्वरः । स च शिवः । यथा विष्णुधर्म्मोत्तरे ।
"अष्टमी नवमीयुक्ता नवमी चाष्टमीयुता ।
अर्द्धनारीश्वरप्राया उमामाहेश्वरी तिथिः" ॥
इति तिथ्यादितत्त्वं ॥ अपि च ।
बालेन्दुबद्धमुकुटं प्रणमामि रूपं" ॥
एवं ध्यात्वा मानसैः संपूज्यार्घ्यस्थापनं कृत्वा शैवोक्तपीठपूजां विधाय पुनर्ध्यात्वावाहनादिपञ्च-पुष्पाञ्जलिदानपर्य्यन्तं विधाय आवरणपूजामार-भेत । यथा । केशरेष्वग्न्यादिकोणेषु मध्ये दिक्षु च रं इत्यादिना षडङ्गानि पूजयेत् । ततः पत्रेषु पूर्ब्बवत् वृषभादीन् पूजयेत् । पत्राग्रेषु पूर्ब्बादितः ब्राह्मीं माहेश्वरीं कौमारीं वैष्णवीं वाराहीं इन्द्राणीं चामुण्डां महालक्ष्मीञ्च पूजयेत् । तद्बहि-रिन्द्रादीन् वज्रादींश्च संपूज्य धूपादिविसर्जनान्तं कर्म्म समापयेत् ॥ अस्य पुरस्करणं लक्षजपः । तथा च ।
"लक्षमेकं जपेन्मन्त्रमित्थं मन्त्री विचिन्तयन् ।
अयुतं मधुरासिक्तैर्ज्जुहुयात्तिलतण्डुलैः" ॥
इति तन्त्रसारः ॥

**अर्द्धपारावतः**, पुं, (अर्द्धेन अङ्गेन पारावत इव ।) चित्रकण्ठकपोतः । तित्तिरिपक्षी । इति मेदिनी ॥

**अर्द्धमाणवः**, पुं, द्वादशयष्टिकहारः । इति हेम-चन्द्रः ॥ वारोनरि हार इति भाषा ।

आस्यनासाक्षिकर्णांश्च नाभ्युरस्कं भुजौ क्रमात् ।
स्पृशेदेवं भवेदाचमनञ्च वैष्णवान्वये ॥
एवमाचमनं कृत्वा साक्षान्नारायणो भवेत्" ॥
केशवादयस्तु केशव-नारायण-माधव-गोविन्द-विष्णु-मधुसूदन-त्रिविक्रम-वामन-श्रीधर-हृषी-केश-पद्मनाभ-दामोदर-सङ्कर्षण-वासुदेव-प्रद्युम्ना-निरुद्ध-पुरुषोत्तमाधोक्षज-नृसिंहाच्युत-जनार्द्दनो-पेन्द्र-हरिविष्णवः ॥ वाक्यन्तु ओम् केशवाय नमः । इत्यादि । तथा च ।
"सचतुर्थिनमोऽन्तैश्च नामभिर्व्विन्यसेत् सुधीः"
ततः सामान्यार्घ्यादिमातृकान्यासान्तं कर्म्म वि-धाय केशवकीत्यादिन्यासं कुर्य्यात् । अस्य ऋष्यादि-न्यासः । शिरसि प्रजापतये ऋषये नमः । मुखे गायत्रीच्छन्दसे नमः । हृदि अर्द्धलक्ष्मीहरये देवतायै नमः । ततः कराङ्गन्यासौ । श्रीं अङ्गु-ष्ठाभ्यां नमः । इत्यादि । श्रीं हृदयाय नमः । इत्यादि । तथा च गौतमीये ।
"ऋषिः प्रजापतिश्छन्दो गायत्री देवता पुनः ।
अर्द्धलक्ष्मीहरिः प्रोक्तः श्रीवीजेन षडङ्गकं" ॥
ततो ध्यानं ।
"उद्यत्प्रद्योतनशतरुचिं तप्तहेमावदातं
पार्श्वद्वन्द्वे जलधिसुतया विश्वधात्र्या च जुष्टं ।

"अजेशः सर्व्वसोमेशस्तथा लाङ्गुलिदारुकौ ।
अर्द्धनारीश्वरश्चोमाकान्तश्चाषाढिदण्डिनौ"
॥
इति तन्त्रसारे शिवमन्त्रे श्रीकण्ठादिन्यासः ॥
* ॥
अस्य मन्त्रादिकं यथा, --
"अग्निसंवर्त्तकादित्यरानिलौ षष्ठविन्दुमत् ।
चिन्तामणिरिति ख्यातं वीजं सर्व्वसमृद्धिदं"
॥
अग्नीरेफः । संवर्त्तकः क्षकारः । आदित्यो मकारः । र रेफः । अनिलो यकारः । औ स्वरूपं ।
षष्ठस्वर ऊकारः ॥ प्रपञ्चसारे ।
"अनलकयमरेफ-
प्राणसत्यान्तवामश्रुतिहिमरुचिखण्डैर्मण्डितो म-
न्त्रराजः" । इति वचनात् रेफ एव न तु वकारः ।
रं£ क्षं£ मं£ रं£ यं£ औं£ ऊं£ । इति मन्त्रः । अस्य पूजा
प्रातःकृत्यादिशैवोक्तपीठमन्वन्तं
विन्यस्य ऋष्यादिन्यासं कुर्य्यात् । यथा शिरसि
कश्यपाय ऋषये नमः । मुखेऽनुष्टुप्छन्दसे नमः ।
हृदि अर्द्धनारीश्वराय देवतायै नमः । ततः
कराङ्गन्यासौ कुर्य्यात् । रं अङ्गुष्ठाभ्यां नमः । कं
तर्जनीभ्यां स्वाहा । षं मध्यमाभ्यां वषट् । मं
अनामिकाभ्यां हुँ । रं कनिष्ठाभ्यां वौषट् । यं
करतलपृष्ठाभ्यां फट् । एवं हृदयादिषु । तथा च
निबन्धे । "रेफादिव्यञ्जनैः षड्भिः कुर्य्यादङ्गानि
षट् क्रमात्" । ततो ध्यानं ।
"नीलप्रबालरुचिरं विलसत्त्रिनेत्रं
पाशारुणोत्पलकपालकशूलहस्तं ।
अर्द्धाम्बिकेशमनिशं प्रविभक्तभूषं

**अर्द्धरात्रः**, पुं, (अर्द्धं रात्रेः, अर्द्धं नपुंसकमित्येक-
देशी समासः, अहःसर्व्वैकदेशसंख्यातपुण्याच्च
रात्रेरिति समासान्तोऽच्प्रत्ययः, रात्र्यह्नाहा पुंसि
इति नियमात् पुंस्त्वम् ।) रात्र्यर्द्धभागः । दुइप्रहर
रात्रि इति भाषा । तत्पर्य्यायः । निशीथः २ ।
इत्यमरः ॥ निसम्पातः ३ अवसरालयः ४ । इति
शब्दरत्नावली ॥ सुप्तजनः ५ । इति जटाधरः ॥
रात्र्यष्टममुहूर्त्तः । स तु रात्रिमध्यदण्डद्वयात्मकः ।
सम्पूर्णार्द्धरात्रोऽप्ययं । महानिशा । सा तु सा-
र्द्धप्रहरानन्तरं सार्द्धतृतीयप्रहरपर्य्यन्तं । इति स्मृतिः ॥
("मध्यन्दिनेऽर्द्धरात्रे च श्राद्धं भुक्त्वा च सामिषम्" ।
"मध्यन्दिनेऽर्द्धरात्रे वा विश्रान्तो विगतक्लमः ।
चिन्तयेद्धर्म्मकामार्थान् सार्द्धं तैरेक एव वा" ॥
इति मनुः ।)

**अर्द्धर्चः**, पुं, क्ली, (अर्द्धं ऋचः समासान्तः अच्-
प्रत्ययः ।) अर्द्धऋक् । ऋङ्नामकवैदिकमन्त्रार्द्ध-
भागः । इत्यमरः ॥

**अर्द्धलक्ष्मीहरिः**, पुं, (अर्द्धं लक्ष्म्या आकारे, अर्द्धं
च हरेः, तादृशो हरिः ।) विष्णुः । यथा ।
गौतमीये, --
नानारत्नोल्लसितविविधाकल्पमापीतवस्त्रं,
विष्णुं वन्दे दरकमलकौमोदकीचक्रपाणिं"
॥
इत्यादि । इति तन्त्रसारः ॥

**अर्द्धवीक्षणं**, क्ली, (अर्द्धमसम्पूर्णं वीक्षणम् ।) अपा-
ङ्गदर्शनं ॥ कटाक्षः । इति हेमचन्द्रः ॥

**अर्द्धशनं**, क्ली, (अर्द्धमसम्पूर्णमशनं भोजनं, अर्द्ध +
अश् + ल्युट् ।) अर्द्धाशनं । अर्द्धभोजनं । इति
शब्दरत्नावली ॥

**अर्द्धसफरः**, पुं, (अर्द्धः सफरः ।) क्षुद्रमत्स्यविशेषः ।
दाँडिका माछ इति भाषा । तत्पर्य्यायः । दण्ड-
पालः २ । इति हारावली ॥

**अर्द्धहारः**, पुं, (ऋध-वृद्धौ + अच्, अर्द्धः सम्पन्नः
हारः ।) चतुःषष्टियष्टिकहारः । इत्यमरः ॥ चौ-
षट्टिनरि हार इति भाषा ।

**अर्द्धाशनं**, क्ली, (अर्द्धमसम्पूर्णमशनं भोजनं, अर्द्ध +
अश + ल्युट् ।) अर्द्धभोजनं । इति शब्दरत्नावलीं ॥

**अर्द्धासनं**, क्ली, (अर्द्धमासनस्य ।) स्नेहदानं । अकुत्-
सनं । इति धरणिः ॥
(उपवेशनार्थमासनार्द्धदान-
रूपः स्नेहव्यञ्जकः सम्मानभेदः । यथा, --
"अर्द्धासनं गोत्रभिदोऽधितष्ठौ" । इति रघु-
वंशे । "मम हि दिवौकसां समक्षम् अर्द्धा-
सनोपवेशितस्य" ! इति शाकुन्तले ।)

**अर्द्धेन्दुः**, पुं, (अर्द्धमिन्दोः ।) चन्द्रार्द्धभागः । गल-
हस्तः । नखचिह्नं । अतिप्रौढस्त्रीयोन्यङ्गुलियो-

| | | |
|---|---|---|
| | "ऋषिः प्रजापतिश्छन्दो गायत्री देवता पुनः ।<br>अर्द्धलक्ष्मीहरिः प्रोक्तः श्रीवीजेन षडङ्गकं" ॥<br>अस्य मन्त्रादि यथा, --<br>"तारं नमः पदं ब्रूयान्नरौ दीर्घसमन्वितौ ।<br>पवनोणायमन्त्रोऽयं प्रोक्ती वस्वक्षरः परः" ॥<br>अस्य पूजाप्रयोगः ।<br>प्रातःकृत्यादिस्नानान्तं कर्म्म कृत्वा पूजामण्डपमागत्य वैष्णवाचमनं कुर्य्यात् ।<br>तद्यथा गौतमीये, --<br>"केशवाद्यैस्त्रिभिः पीत्वा द्वाभ्यां प्रक्षालयेत् करौ ।<br>द्वाभ्यामोष्ठौ द्विरुन्मृज्य द्वाभ्यां मृज्यान्मुखं ततः ॥<br>एकेन हस्तं प्रक्षाल्य पादावपि तथैकतः ।<br>संप्रोक्ष्यैकेन मूर्द्धानं ततः सङ्कर्षणादिभिः ॥ | जनं । इति मेदिनी ॥ अर्द्धचन्द्रबाणः । इति हेमचन्द्रः ॥<br>**अर्द्धोदयः**, पुं, (अर्द्धस्य समृद्धस्य पुण्यस्य उदयो यत्र ।)<br>योगविशेषः । स च रविवारव्यतीपातश्रवणा-नक्षत्रैर्युक्ता चेत् पौषमाघयोरमावास्या स्यात्तदा भबति । यथा । पाश्चात्यनिर्णयामृते । |

:"अमार्कपातश्रवणैर्युक्ता चेन्माघपौषयोः ।
अर्द्धोदयः स विज्ञेयः कोटिसूर्य्यग्रहैः समः ॥
अत्र सूर्य्यपर्ब्बशताधिक इति कृत्यचिन्तामणौ पाठः । तथा ।
"दिवैव योगः शस्तोऽयं न च रात्रौ कदाचन ।"
स्कन्दपुराणे ।
"अर्द्धोदये तु संप्राप्ते सर्व्वं गङ्गासमं जलं ।
शुद्धात्मानो द्विजाः सर्व्वे भवेयुर्ब्रह्मसन्निभाः ॥
यत्किञ्चित् क्रियते दानं तद्दानं सेतुसन्निभं" ॥
शिवविष्णुस्नानप्रशस्तकालोऽपि ।
वृहन्नारदीयं ।
"अर्द्धोदये च पूष्यार्के हस्तार्के रोहिणीबुधे" ।
इति तिथ्यादितत्त्वं ॥

**अर्द्धोरुकं**, क्ली, (अर्द्धमूरोः अर्द्धोरु, तत्र काशते, काश + ड ।) उत्तमस्त्रीणां अर्द्धोरुपर्य्यन्तं चेल-
नाकारपरिधेयवस्त्रं । तत्पर्य्यायः । चण्डातकं २ ।
इत्यमरः ॥

**अर्पणं**, क्ली, (ऋ + णिच् + ल्युट् ।) प्रापणं । सम-
र्पणं । यथा, --
"यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणं" ॥
इति श्रीभगवद्गीतायां ९ अध्यायः । (स्थापनं ।
न्यासः ।
"कैलासगौरं वृषमारुरुक्षोः
पादार्पणानुग्रहपूतपृष्ठम्" ।
इति रघुवंशे । स्वत्वत्यागः । परित्यागः ।
"अर्पणं स्वस्य वाक्यार्थे परस्यान्वयसिद्धये" ।
इति साहित्यदर्पणे ।)

**अर्पिसः**, पुं, (ऋ + णिच् + इसन् ।) हृदयं । इत्युणा-
दिकोषः ॥ (अग्रमांसः ।)

मर्ब्बुदानां लक्षणानि तुल्यानि भवन्ति ॥ * ॥ रक्ता-
र्ब्बुदमाह ।
"दोषप्रदुष्टे रुधिरं शिराश्च
सङ्कोच्य संपीड्य ततस्त्वपाकं ।
सस्रावमुन्नह्यति मासपिण्डं
मांसाङ्कुरैरावृतमाशु वृद्धिं ॥
स्रवत्यजस्रं रुधिरं प्रदुष्ट-
मसाध्यमेतद्रुधिरात्मकन्तु ।
रक्तक्षयोपद्रवपीडितत्वात्
पाण्डुर्भवेदर्ब्बुदपीडितस्तु" ॥
दोषोऽत्र पित्तं रुधिरं शिराश्च सङ्कोच्य संपीड्य
संहतीकृत्यमांसासृजोः सर्वेष्वर्ब्बुदेषु दूष्यत्वं रक्तजे
तु विशेषतोरक्वदुष्टिः । एवं मांसार्ब्बुदे विशेषतो
मांसदुष्टिर्बोद्धव्या । ततो मांसपिण्डमुन्नह्यति
उद्गतं करोति । अपाकं ईषत्पाकं यथा स्यादेव-
मिति क्रियाविशेषणं ईषत्पाकश्च एकदेशपाकेन ।
रक्तक्षयोपद्रवपीडितत्वात् ।
रक्तक्षयोपद्रवाः
सुश्रुतेनोक्ताः । तैः पीडितत्वात् । अर्ब्बुदपीडितः
रक्तार्ब्बुदपीडितः ॥ * ॥ मांसार्ब्बुदस्य संप्राप्तिमाह
"मुष्टिप्रहारादिभिरर्दितेऽङ्गे
मांसं प्रदुष्टं समुपैति शोथं ।
अवेदनं स्निग्धमनन्यवर्ण-
मपाकमश्मोपममप्रचाल्यं" ॥
मांसं प्रदुष्टं वातेन । अवेदनं वेदनारहितं
ईषद्वेदनं वा । अपाकं पाकरहितं ईषत्पाकं

"ग्रन्थ्यर्ब्बुदानां न यतो विशेषः
प्रदोषहेत्वाकृतिदोषदुष्टेः ।
अतश्चिकित्सेद्भिषगर्ब्बुदानि
विधानविद्ग्रन्थिचिकित्सितेन ॥
हरिद्रा-लोध्र-पत्तङ्ग-गृहधूम-मनःशिला ।
मधुप्रगाढो लेपोऽयं मेदोऽर्ब्बुदहरः परः ॥ १ ॥
मूलकस्य कृतः क्षारो हरिद्रायास्तथैव च ।
शङ्खचूर्णेन संयुक्तो लेपः
सिद्धोऽर्ब्बुदापहः ॥ २ ॥
वटदुग्धकुष्ठरोमकलिप्तं बद्धं वटस्य पत्रेण । अध्य-
स्थिसप्तरात्रात् महादप्युपशान्तिमर्ब्बुदं गच्छेत् ॥ ३ ॥
शिग्रुमूलकयोर्ब्बीजं रक्षोघ्नं सुरसां यवं ।
तक्रेणाश्वरिपुं पिष्ट्वा
लिम्पेदर्ब्बुदशान्तये ॥ ४ ॥
रक्षोघ्नं सर्षपं । सुरसां तुलसीं । यवं रन्द्रयवं ।
अश्वरिपुं करवीरं । इत्यर्ब्बुदाधिकारः । इति
भावप्रकाशः ॥

**अर्ब्बुद**, पुं, (अर्ब्ब + उदच् ।) पर्ब्बतविशेषः । इति
मेदिनी ॥

**अर्भः**, पुं, (ऋ + भ ।) बालकः । इति हेमचन्द्रः ॥
(प्रभाहीनः । मलिनः । शिष्यः । छात्रः ।
शिशिरः ।
शाकशस्यादिकं ।)

**अर्भकः**, पुं, (अर्भ एव, स्वार्थे कन् ।) शिश्रुः । इत्य-
मरः ॥
("अभूच्च नम्रः प्रणिपातशिक्षया
पितुर्मुदं तेन ततान सोऽर्भकः" ।

**अर्ब्ब**, हिंसे । (भ्वादि-परं-सकं-सेट् ।) गतौ । इति

कविकल्पद्रुमः ॥ अर्ब्बति । इति दुर्गादासः ॥

**अर्ब्बुदः**, पुं, क्ली, (अर्ब्ब + विच्, तस्मै उदेति, उद्

+ इण + ड ।) दशकोटिसंख्या । रोगविशेषः ।
मांसकीलः । मांसपुरुषः । आव् इति भाषा ।
इति लिङ्गादिसंग्रहे अमरो मेदिनी च ॥ तस्य
निदानलक्षणे ।
“गात्रप्रदेशे क्वचिदेव दोषाः
संमूर्च्छिता मांसमसृक् प्रदूष्य ।
वृत्तं स्थिरं मन्दरुजं महान्त-
मनल्पमूलं चिरवृद्ध्यपाकं ॥
कुर्ब्बन्ति मांसोच्छ्रयमत्यगाधं
तमर्ब्बदं शास्त्रविदो वदन्ति” ।
महान्तं ग्रन्थ्यपेक्षया चिरेण वृद्धिरपाकश्च
यस्य
तत् चिरवृद्ध्यपाकं । अपाकमिति ग्रन्थेः
सका-
शादस्य भेदज्ञापकं । अत्यगाधं दूरानुप्रविष्टं ॥
* ॥
निदानपूर्ब्बकाणि विशिष्टानि लक्षणान्याह ।
“वातेन पित्तेन कफेन वापि
रक्तेन मांसेन च मेदसा च ।
तज्जायते तस्य च लक्षणानि
ग्रन्थेः समानानि सदा भवन्ति” ॥
ग्रन्थेः समानानि
वातिकपैत्तिकश्लैष्मिकमेदोजानां
ग्रन्थीनां
लक्षणैर्व्वातिकपैत्तिकश्लैष्मिकमेदोजाना-
वा । अश्मोपमं पाषाणवत् कठिनं ।
अप्राचाल्यं
स्थिरं । यद्यपि रक्तमांसार्ब्बुदयो
रक्तमांसयो-
र्हेतुत्वेनोक्तिः तथापि रक्तजे पित्तं
मांसजे वायु-
रारम्भकः ॥ * ॥ निदानमाह ।
“प्रदुष्टमांसस्य नरस्य गाढ-
मेतद्भवेन्मांसपरायणस्य” ।
मांसाशनाभ्यासेन यः
प्रदुष्टमांसस्तस्यैव भवति
इत्यर्थः ॥ * ॥ असाध्यमाह ।
“मांसार्बुदं त्वेतदसाध्यमाहुः
साध्येष्वपीमानि विवर्जयेच्च ।
संप्रस्तुतं मर्म्मसु यच्च जातं
स्रोतःसु वा यच्च भवेदचाल्यं” ॥
साध्येष्वपि वातजादिष्वपि । इमानि
वक्ष्यमाणानि
संप्रस्तुतादीनि ॥ * ॥
अपरासाध्यमाह ।
“यज्जायतेऽन्यत् खलु पूर्ब्बजाते
ज्ञेयं तदध्यर्ब्बुदमर्ब्बुदज्ञैः ॥
यद्द्वन्द्वजातं युगपत् क्रमाद्वा
द्विरर्ब्बुदं तच्च भवेदसाध्यं” ॥ * ॥
अर्ब्बुदानां पाकाभावे हेतुमाह ।
“न पाकमायाति कफाधिकत्वा-
न्मेदोबहुत्वाच्च विशेषतस्तु ।
दोषस्थिरत्वात् ग्रथनाच्च तेषां
सर्व्वार्ब्बुदान्येव निसर्गतस्तु” ।
ग्रथनात् ग्रन्थिरूपत्वात् । नन्वपच्यां
कफमेद-
सोराधिक्येऽपि पाको दृश्यते तथात्र
कथं न पाक
इत्याह निसर्गात् स्वभावात् ॥ * ॥
अथार्ब्बुदस्य चिकित्सा ।
इति रघुवंशे ।) मूर्खः । कृशः । इति
मेदिनी ॥
स्वल्पः । सदृशः । इत्युणादिकोषः ॥

**अर्म्मं**, क्ली, पुं, (ऋ + मन् ।) चक्षूरोगविशेषः ।

इति लिङ्गादिसंग्रहे अमरः ॥ तच्च
पञ्चविधं ।
प्रस्तार्य्यर्म्म १ शुक्लार्म्म २ रक्तार्म्म ३
मांसार्म्म ४
स्नाय्वर्म्म ५ । एषां लक्षणानि तत्तत्शब्दे
द्रष्ट-
व्यानि । वैद्यके नान्तक्लीवलिङ्गोऽयं
शब्दः ॥

**अर्म्मणः**, पुं, (ऋ + बाहुलकात् मन् ।) द्रोणपरि-

माणं । इति वैद्यकपरिभाषा ॥

**अर्य्यः**, पुं, (ऋ + यत् ।) स्वामी । वैश्यः ।
इत्यमरः ॥

श्रेष्ठे त्रि । इति तट्टीकायां भरतः ॥ (त्रि,
उत्कृष्टः ।
न्याय्यः । प्रभुः ।

**अर्य्यमा**, [न्] पुं, (अर्य्यं श्रेष्ठं मिमीते, मा +

कनिन् ।) सूर्य्यः ।
(“प्रोषितार्य्यमणं
मेरोरन्धकारस्तटीमिव” ।
इति माघः ।
“सूर्य्योऽर्य्यमा भगस्त्वष्टा पूषार्कः
सविता रविः ।
गभस्तिमानजः कालो मृत्युर्धाता
प्रभाकरः” ॥
इति महाभारति । कश्यपात् दक्षकन्यया
दित्या
जातो द्वादशादित्यमध्ये परिगणितः
ख्यात आ-
दित्यः, यदुक्तं हरिवंशे, --
“मारीचात् कश्यपाज्जातास्ते दित्या
दक्षकन्यया ।

| | | |
|---|---|---|
| | | तत्र शक्रश्च विष्णुश्च जज्ञाते पुनरेव ह ॥<br>अर्य्यमा चैव धाता च त्वष्टा पूषा च भारत ! ॥<br>विवस्वान् सविता चैव मित्रो वरुण एव च ।<br>अंशोभगश्चातितेजा आदित्या द्वादश स्मृताः” ॥)<br>अर्कवृक्षः । इत्यमरः ॥ पितृदेवविशेषः । इति<br>मेदिनी ॥ |

**अर्य्या**, स्त्री, (ऋ + यत् + टाप् ।) वैश्यस्त्रीजातिः ।

इत्यमरः ॥

**अर्य्याणी**, स्त्री, (अर्य्य + आनुक् + ङीप् ।) वैश्यस्त्री-

जातिः । इत्यमरः ॥

**अर्य्यी**, स्त्री, (अर्य्य + ङीप् ।) वैश्यपत्नी । इत्यमरः ॥

वैश्यस्त्रीजातिः । इति दुर्गादासः ॥

**अर्व्व** बधे । (इति कविकल्पद्रुमः) ॥ (भ्वादिं-परं-

सकं-सेट् ।) अर्व्वति । इति

दुर्गादासः ॥ अन्तः-

स्थवकारान्तोऽयं ॥

**अर्व्वती**, स्त्री, (अर्व्व + बाहुलकात् वनिप् + ङीप् ।)

घोटकी । इति हलायुधः ॥ कुट्टनी ।

इति

त्रिकाण्डशेषः ॥

**अर्व्वा**, [न्] पुं, (ऋ + वनिप् ।) घोटकः । इत्य-

मरः ॥ इन्द्रः । गोकर्णपरिमाणं ।

इति विश्वः ॥

कुत्सिते त्रि । इत्यमरः ॥

**अर्व्वाक्**, व्य, (अवरे काले देशे वा अञ्चति, अन्च +

क्विन्, पृषोदरादित्वात् अर्व्वादेशः

।) पूर्ब्ब-

कालतः पश्चात् । तत्पर्य्यायः ।

अवरः २ । इत्य-

मरः ॥ निकटं । इति भरतः ।

अर्व्वाच् इति

केचित् ॥

**अर्व्वाचीनः**, त्रि, (अर्व्वाग्भवः, खः ।) पश्चाज्जातः ।

प्रमितमपरिमितं । तीक्ष्णमिति

मद्यविशेषणं ।

पैष्ट्यादिमृदुमद्यस्य वातसमकत्वात् ।

आतप-

स्तूष्णवीर्य्योऽप्युद्भूतरौक्ष्याद्वातप्रकोपे

हेतुः वाता-

र्शसां । नन्वर्शांसि सर्व्वाणि त्रिदोषजानि ।

यतआह ।

“पञ्चात्मा मारुतः पित्तं कफो गुदवलित्रये

।

सर्व एव प्रकुप्यन्ति गुदजानां समुद्भवः” ॥

इति ।

तथा सति कथं वातार्शसामिति उच्यते ।

तत्त-

दाधिक्याद्व्यपदेशभेद इति न दोषः ।

अतएव

अग्रे वक्ष्यते । पित्तोल्वणानामिति तथाच

चरकः ।

“अर्शांसि नाम जायन्ते

नासन्निपतितैस्त्रिभिः ।

दोषैर्दोषविशेषात्तु विशेषः कथ्यतेऽर्शसां”

॥

इति ॥ * ॥ अथ पित्तार्शसो

विप्रकृष्टनिदान-

माह ।

“कट्वम्ललवणोष्णानि

व्यायामाग्न्यातपप्रभाः ।

देशकालावशिशिरौ क्रोधोमद्यमसूयनं

विदाहि तोक्ष्णमुष्णं यत् तत् सर्व्वं

पानभोजनं ।

पित्तेल्वाणानां विज्ञेयः प्रकोपे हेतुरर्शसां”

॥

उष्णद्रव्यस्य स्पर्शनादि बोद्धव्यं

उष्णपानभोजन-

स्याग्रे वक्ष्यमाणत्वात् । अग्न्यातपप्रभा

अग्न्या-

वृद्धये उत्पत्तये ॥ * ॥ अथार्शसां

संप्राप्तिपूर्ब्बकं

सामान्यं लक्षणमाह ।

“दोषास्त्वङ्मांसमेदांसि संदूष्य विविधाकृतीन् ।

मांसाङ्कुरानपानादौ कुर्वन्त्यर्शांसि तान् जगुः”

॥

त्वङ्मांसपदेन त्वङ्मांसाश्रितं रक्तमपि गृह्यते ।

चिकित्सायां रक्तस्रावणोपदेशात् । अपानं गुदं

।

आदिशब्दान्नासानेत्रनाभिमेढ्रादिष्वपि कुर्वन्ति

॥ * ॥

अथ वातार्शोलक्षणमाह ।

“गुदाङ्कुरा बह्वनिलाः शुष्काश्चिमिचिमान्विताः

।

म्लानाः श्यावारुणाः स्तब्धा विशदाः परुषाः

खराः ॥

मिथोविसदृशा वक्रास्तीक्ष्णा विस्फुटिताननाः

।

विम्बीकर्क्कन्धुखर्ज्जूरकार्पासीफलसन्निभाः ॥

केचित्कदम्बपुष्पाभाः केचित् सिद्धार्थकोपमाः

।

शिरःपार्श्वांसकट्यूरुवङ्क्षणाभ्यधिकव्यथाः ॥

क्षवथूद्गारविष्टम्भहृद्ग्रहारोचकप्रदाः ।

कासश्वासाग्निवैषम्यकर्णनादभ्रमावहाः ॥

तैरार्त्तो ग्रथितं स्तोकं सशब्दं सप्रवाहिकं ।

रुक्फेनपिच्छानुगतं विड्बद्धमुपवेश्यते ॥

कृष्णत्वङ्नखविण्मूत्रनेत्रवक्त्रश्च जायते ।

गुल्मप्लीहोदराष्ठीलासम्भवस्तत एव च” ॥

बह्वनिलाः वातोल्वणाः । गुदाङ्कुराः अर्शांसि ।

चिमिचिमान्विताः चिमिचिमा व्यथाविशेषः

चरचराव इति लोके तदन्विताः । श्यावारुणाः

श्यावा धूम्रवर्णाः । अरुणा ईषद्रक्ताः । स्तब्धाः

कठिनाः । विशदाः अपिच्छिलाः । परुषाः गो-

जिह्वावत् स्पर्शे कर्कशाः । खराः

कर्क्कोटकफल-

वत् सूक्ष्मानेककण्टकाचिताः । विम्बादिफल-

विपर्य्यस्तं । इति धरणिः ॥
(इदानीन्तनः । अधो-
भागस्थितः । अवरदेशगतः ।
("यदूर्द्ध्वं पृथिव्या
अर्व्वाचीनमन्तरीक्षात्" ।
इति शतपथब्राह्मणे ।)

**अर्शं**, क्ली, (ऋश् + अच् ।) अर्शोरोगः । इति
शब्दरत्नावली ॥ (बलिकाकारः
गुह्यस्थरोगभेदः ।)

**अर्शः**, [स्] क्ली, (ऋ + असुन्, शुट् ।) स्वनाम-
ख्यातपायुरोगः । तत्पर्य्यायः ।
दुर्नामकं २ । इत्य-
मरः ॥ दुर्नाम ३ गुदकीलः ४
गुदाङ्कुरः ५ ।
इति राजनिर्घण्टः ॥ अनामकं ६ ।
इति शब्द-
रत्नावली ॥ यथा ।
अथार्शोऽधिकारः । तत्रार्शसः
सन्निकृष्टनिदानान्याह ।
"पृथग्दोषैः समस्तैश्च शोणितात्
सहजानि च ।
अर्शांसि षट्प्रकाराणि
विद्याद्गुदवलित्रये" ॥
केचिद्रुधिरस्यापि दोषत्वं मन्यन्ते ।
तन्मतमाश्रि-
ग्राह । शोणितादिति । सहजानि
शरीरेण सह
जातानि । सङ्ख्याञ्चाह ।
षट्प्रकाराणीति । गुद-
वलित्रये सार्द्धचतुरङ्गुलं गुदस्य मानं
तस्यावयव-
भूतास्तिस्रो वलयः शङ्खावर्त्तनिभा
उपर्य्युपरि
सन्ति । तासां नाम प्रवाहिणी
विसर्जनी संव-
तपयोः प्रभा तेजः । अथवा
अग्न्यातपेतरतेज-
स्विद्रव्यस्य दीप्तिः प्रभा । अशिशिरो देशो
मरुः ।
असूयनं परसम्पत्तिद्वेषः । पानभोजनं
पीयत इति
पानं । भुज्यते इति भोजनं प्रकोपे
उत्पत्तौ ॥ * ॥
अथ कफार्शसो विप्रकृष्टं निदानमाह ।
"मधुरस्निग्धशीतानि लवणाम्लगुरूणि च
।
अव्यायामदिवास्वप्नशय्यासनसुखे रतिः
॥
प्राग्वातसेवाशीतौ च देशकालावचिन्तनं ।
श्लैष्मिकाणां समुद्दिष्टमेतत्
कारणमर्शसां" ॥
अचिन्तनं निश्चिन्तता ॥ * ॥ अथ
त्रिदोषार्शसो
विप्रकृष्टं निदानमाह ।
"सर्व्वो हेतुस्त्रिदोषाणां सहजैर्लक्षणं समं"
।
जनकत्वेन त्रयो दोषा येषां तानि
त्रिदोषाणि
अर्शांसि तेषां सर्व्वो हेतुः । पृथग्वातपित्त-
कफार्शोहेतुः । त्रिदोषार्शसां लक्षणञ्च
सहजैः
सहजार्शोभिः समं सदृशं । ननु त्रिदोषाणां
इति
विशेषणं व्यर्थं । यतः सर्व्व एव
व्याधयस्त्रिदोषजाः ।
उक्तञ्च ।
"द्रव्यमेकरसं नास्ति न
रोगोऽप्येकदोषजः ।
एकस्तु कुपितो दोष इतरावपि कोपयेत्"
॥
इति । युक्तिमप्याह । स्वकारणाद्वद्धो
वायुः शै-
सन्निभाः आकृत्याः । अत्र विकल्पबोधकं
वक्ष्यमाणं
केचित् केचिदिति पदं सम्वन्धनीयं ।
"कदम्बपुष्पाभाः स्थूला अनेकसूक्ष्मशिखराः ।
सिद्धार्थकोपमाः पीतसूक्ष्मपिडकाश्रिताः" ॥
तैरार्त्त इति अर्शोभिः पीडितः । तैरार्त्तो विड्उप-
वेश्यत इत्यार्त्तस्य प्रयोज्यकर्त्तुः
कर्म्मतार्थत्वात् ।
ग्रथितं मलगुटिकाग्रथितविड्वर्त्तिरूपं । पिच्छा
पिच्छिलो द्रवभागः । बद्धं संहतं । विष्शब्दो-
नपुंसकेऽप्यस्ति । उपवेश्यते त्यज्यते ।
अतएव
वातार्शस एव गुल्मादीनां सम्भवः । अष्ठीला
नाभेरधोभागे
पाषाणपिण्डिकावद्वातव्याधिविशेषः
॥ * ॥ अथ पित्तार्शोलक्षणमाह ॥
"पित्तोत्तरा नीलमुखा रक्तपीतासितप्रभाः ।
तन्वस्रस्राविणो विस्रास्तनवो मृदवः श्लथः ॥
शुष्कजिह्वायकृत्खण्डजलौकोवक्त्रसन्निभाः ।
दाहपाकज्वरस्वेदतृष्णामूर्च्छारतिप्रदाः ॥
सोष्माणो द्रवनीलोष्णपीतरक्तामवर्च्चसः ।
यवमध्या हरित्पीतहारिद्रत्वङ्नखादयः" ॥
पित्तोत्तराः पित्तोल्वणाः । तनु अघनं । श्लथाः
लम्बिनः । सन्निभाः आकृत्या । पाको गुदस्य ।
सोष्माणः उष्णस्पर्शाः । हरिच्छाकवर्णं । पीतं
हरितालवर्णं । हारिद्रं हरिद्रावर्णं । आदि-
शब्दान्मलमूत्रमुखानां ग्रहणं ॥ * ॥ अथ केचि-
द्रुधिरस्यापि दोषत्वं मन्यन्ते तन्मतमाश्रित्य
रक्ता-
र्शोलक्षणमाह ।

रणी चेति । तत्र
गुदौष्ठोऽर्द्धाङ्गुलमानस्तदूद्ध्वं-
मङ्गुलमाना प्रथमा वलिः ।
सार्द्धैकाङ्गुलमाना
द्वितीया । तृतीया च तावती ।
उक्तञ्च ।
“अर्द्धाङ्गुलप्रमाणेन गुदौष्ठं परिचक्षते
।
गुदौष्ठादङ्गुलं चैकं प्रथमान्तु वलिं
विदुः ॥
सार्द्धैकाङ्गुलमानेन पृथगन्ये
प्रकीर्त्तिताः” ॥ * ॥
अथ वातार्शसो विप्रकृष्टं निदानमाह
।
“कषायकटुतिक्तानि रूक्षशीतलघूनि
च ।
प्रमिताल्पाशनं तीक्ष्णं मद्यं
मैथूनसेवनं ॥
लङ्घनं देशकालौ च शीतौ
व्यायामकर्म्म च ।
शोको वातातपस्पर्शो हेतुर्व्वातार्शसां
मतः” ॥

त्याच्छीतलं श्लेष्माणं लाघवात्तेजोरूपं
पित्तं वर्द्ध-
यते । तथा पित्तं कटुकत्वात् वातं
द्रवत्वात् कफं
वर्द्धयते । श्लेष्मा च शैत्याद्वायुं द्रवत्वात्
पित्तं
वर्द्धयते इति । उच्यते । यत्र
स्वस्वकारणात्त्रयो
दोषाः कुप्यन्ति तत्र त्रिदोषजव्यपदेश
इति न
दोषः ॥ * ॥ अथार्शसां पूर्ब्बरूपमाह ।
“विष्टम्भोऽन्नस्य दौर्बल्यं कुक्षेराटोप एव च
।
कार्श्यमुद्गारबाहुल्यं
सक्थिसादोऽल्पविट्कता ॥
ग्रहणीदोषपाण्ड्वर्त्तेः प्रशङ्का चोदरस्य च
।
पूर्ब्बरूपाणि निर्द्दिष्टान्यर्शसामभिवृद्धये” ॥
दौर्बल्यमाबल्यं । आटोपः गुड्गुडाशब्दः ।
अभि-

:"रक्तोल्वणा गुदे कीलाः पित्ताकृतिसमन्विताः ।

वटप्ररोहसदृशा गुञ्जाविद्रु मसन्निभाः ॥
तेऽत्यर्थं दुष्टमुष्णञ्च गाढविट्कप्रपीडिताः ।
स्रवन्ति सहसा रक्तं तस्य चातिप्रवृत्तितः ॥
भेकाभः पीड्यते दुःखैः शोणितक्षयसम्भवैः ।
हीनवर्णबलोत्साहो हतौजाः कलुषेन्द्रियः ॥
विट् श्यावं कठिनं रूक्षमधोवायुर्न वर्त्तते ।
तनु चारुणवर्णञ्च फेनिलञ्चासृगर्शसां ॥
कट्यूरुगुदशूलञ्च दौर्ब्बल्यं यदि वाधिकं ।
तत्रानुबन्धो वातस्य हेतुर्यदि च रूक्षणं ॥
शिथिलं श्वेतपीतञ्च विट् स्निग्धं गुरु शीतलं ।
यद्यर्शसां घनञ्चासृक् तन्तुमत् पाण्डु पिच्छिलं ॥
गुदं सपिच्छं स्तिमितं गुरु स्निग्धञ्च कारणं ।
श्लेष्मानुबन्धो विज्ञेयस्तत्र रक्त्वार्शसां बुधैः" ॥
गुदे कीला अर्शांसि ।
पित्ताकृतिसमन्विताः पित्तार्शोलक्षणयुक्ताः । आकारेण च वटप्ररो-
हादिसदृशाः । दुःखै रोगैः । त्वक्पारुष्याम्बु-
शीतप्रार्थनादिभिः । कलुषेन्द्रियः व्याकुलसर्वेन्द्रियः
॥ ० ॥ रक्तजस्यापि वातोल्वणस्य लक्षणमाह ॥
तत्र रक्तार्शसि । अनुबन्धः उल्वणत्वं । रूक्षणं
सर्व्वैर्लक्षणैर्वातपित्तश्लेष्मार्शोलक्षणैः प्रागुक्तैः । स-
र्व्वात्मकानि
सान्निपातिकान्यर्शांस्याहुः । तथा तरेव लक्षणैः सहजानि चार्शांस्याहुः ॥ * ॥ तन्त्रा-
न्तरे सहजार्शोलक्षणं पृथगाह ।
"अर्शांसि सहजातानि दारुणानि भवन्ति हि ।
दुर्द्दर्शनानि पाण्डूनि परुषाण्यरुणानि च ॥
अन्तर्म्मुखानि तैरार्त्तः क्षीणः क्षीणस्वरो भवेत् ।
क्षीणानलः क्षीणरेताः शिरासन्ततविग्रहः ॥
अल्पप्रजः क्रोघशीलः सन्ततान्त्रस्वनान्वितः ।
शिरोदृक्कर्णनासासु रोगी हृल्लेपसेकवान्" ॥ * ॥
अथ सुखसाध्यार्शोलक्षणमाह ।
"वाह्यायान्तु बलौ जातान्येकदोषोन्त्वणानि च ।
अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च" ॥
वाह्यायां वलौ संवरण्यां । न चिरोत्पतितानि अनतिक्रान्तसंवत्सराणि । एतानि लक्षणानि
मिलितानि सुखसाध्यत्वबोधकानि ॥ * ॥ अथ ।
कष्टसाध्यार्शोलक्षणमाह ।
"द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च ।
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च" ॥
द्वितीयायां वलौ विसर्जन्यां । परिसंवत्सराणि
पूर्ब्बरूपसंप्राप्तिलक्षणयुक्तं । तत्र तत्रार्शःपदं तु मांसाङ्कुरसाम्यात् । गण्डूपदः किञ्चुलकः ॥ * ॥
अत्र मांसाङ्कुरसाम्यादत्राधिकारे चर्म्मकीलस्य संप्राप्तिपूर्ब्बकं लक्षणमाह ।
"व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो वहिः ।
कीलोपमं स्थिरखरञ्चर्मकीलन्तु तद्विदुः" ॥
चर्म्मा इति लोके । खरं कर्कशं ॥ * ॥ तस्यैव वातादिभेदेन लक्षणमाह ।
"वातेन तोदपारुष्यं पित्तादसितरक्तता ।
श्लेष्मणा स्निग्धता तस्य ग्रथितत्वं सवर्णता" ॥
सवर्णता शरीरसमानवर्णता ॥ * ॥ अथ सामा
न्यतः अर्शसश्चिकित्सा ।
"यद्वायोरानुलोम्याय यदग्निबलवृद्धये ।
अन्नपानौषधं सर्वं तत्सेव्यं नित्यमर्शसैः" ॥
अर्शसैः अर्शोरोगयुक्तैः ।
"शालियष्टिकगोधूमयवान्नानि घृतैः सह ।
अजाक्षीरेण वा निम्बपटोलानां रसेन वा ॥
कन्दैर्व्वार्त्ताकुमूलोत्थै रसैर्मांसरसेन वा ।
जीवन्त्युपोदिकाशाकैस्तण्डुलीयकवास्तुकैः" ॥ १ ॥
कन्दोऽत्र शूरणः । अत्र मूलं मूलकं ।
"अन्यैश्च सृष्टविन्मूत्रमरुद्भिर्वह्निदीपनैः ।
अर्शांसि भिन्नवर्चांसि हन्याद्वातातिसारवत् ॥
सतक्रं लवणं दद्याद्वातवर्चोऽनुलोमनं ।
न प्ररोहन्ति गदजाः पुनस्तक्रसमाहताः ॥
तक्राम्यासोऽर्शसैः कार्य्यो बलवर्णाग्निवृद्धये ।
स्रोतःसु तक्रशुद्धेषु सम्यक् चलति यद्रसः ॥
तेन पुष्टिस्तथा तुष्टिर्बलं वर्णश्च जायते ।
वातश्लेष्मविकाराणां शतञ्च विनिवर्त्तयेत् ॥
मृल्लिप्तं शौरणं कन्दं पक्त्वाग्नौ पुटपाकवत् ।
अद्यात् सतैललवणं दुर्नामविनिवृत्तये ॥ २ ॥
चिरिविल्वाग्निसिन्धूत्थनागरेन्द्रयवारलून् ।
तक्रेण पिबतोऽर्शांसि निपतन्त्यसृजा सह" ॥

रूक्षयतीति रूक्षणं रूक्षं द्रव्यं ।
पित्तोल्वणस्य तु
लक्षणं ।
“रक्तोल्वणा गुदे कीलाः
पित्ताकृतिसमन्विताः” ।
इत्यादिनैवोक्तं । रक्तपित्तयोः
समानलिङ्गत्वात् ॥
॥ * ॥ कफोल्वणस्य लक्षणमाह ।
सपिच्छं पिच्छि-
लार्द्रं । स्तिंमितमार्द्रचर्म्मावगुण्ठितमिव
॥ * ॥ अथ
श्लेष्मार्शोलक्षणमाह ।
“श्लेष्मोल्वणा महामूला घना मन्दरुजः
सिताः ।
उत्पन्नोपचिताः स्निग्धाः
स्तब्धवृत्तगुरुस्थिराः ॥
पिच्छिलास्तिमिताः श्लक्ष्णाः
कण्ड्वाढ्याः स्पर्शनप्रियाः
करीरपनसास्थ्याभास्तथा
गोस्तनसन्निभाः ॥
वङ्क्षणानाहिनः पायुवस्तिनाभिविकर्षिणः
।
सकासश्वासहृल्लासप्रसेकारुचिपीनसाः
॥
मेहकृच्छ्रशिरोजाड्यशिशिरज्वरकारिणः
।
क्लैव्याग्निमार्द्दवच्छर्द्दिरामप्रायविकारदाः
॥
वसाभसकफप्राज्यपुरीषाः सप्रवाहिकाः
।
न स्रवन्ति न भिद्यन्ते
पाण्डुस्निग्धत्वगादयः” ॥
उत्पन्नाः उन्नताः । उपचिताः स्थूलाः ।
स्निग्धा ।
सस्नेहाः । स्थिरा निश्चलाः ।
पिच्छिलाः कफा-
रब्धत्वात् । स्तिमिताः आर्द्रवस्त्रगुण्ठिता
इव ।

परिगतः सवत्सरो येषां तानि ।
अतिक्रान्त-
संवत्सराणि इति यावत् । एतानि
प्रत्येकं कष्ट-
साध्यलक्षणानि ॥ * ॥
अथासाध्यार्शोलक्षणमाह ।
“सहजानि त्रिदोषाणि यानि
चाभ्यन्तरां वलिं ।
जायन्तेऽर्शांसि संगृह्य तान्यसाध्यानि
निर्दिशेत्” ॥
अभ्यन्तरां वलिं प्रवाहिणीं । एतान्यपि
प्रत्येक-
मसाध्यलक्षणानि ।
“शेषत्वादायुषस्तानि
चतुष्पादसमन्वये ।
याप्यन्ते दीप्तकायाग्नेः
प्रत्याख्येयान्यतोऽन्यथा” ॥
यद्यायुषः शेषो वर्त्तते
चिकित्सायाश्चत्वारः पा-
दास्ते यथा । वद्यवचनकारी
धनवानुदारो जिते-
न्द्रियो रोगी । १ । शास्त्रे कर्म्मणि च
कुशलो
वैद्यः । २ । अनलस आप्तः प्रियः
परिचारकः । ३ ।
नवं रसवीर्य्यादियुक्तमौषधं । ४ । एषां
समन्वये
संयोगे सति दीप्तकायाग्नेः पुरुषस्य ।
तानि अ-
र्शांसि । याप्यन्ते चिकित्सया ।
अतोऽन्यथा प्रत्या-
ख्येयानि न चिकित्स्यानीत्यर्थः ॥ *
॥ अथार्शो-
ऽरिवृमाह ।
“हस्ते पादे मुखे नाभ्यां गुदे
वृषणयोस्तथा ।
शोथो हृत्पार्श्वशूलञ्च
यस्यासाध्योऽर्शसो हि सः ॥

चिरिविल्वः करञ्जः तस्य फलस्यात्र मज्जा
ग्राह्या ।
अरलुः श्योनकः । करञ्जादिचूर्णं ॥ ३ ॥
“लेपं रजनिचूर्णेन सुधादुग्धयुतेन च ।
अर्शोरोगनिवृत्त्यर्थं कारयेत्तच्चिकित्सकः ॥ ४
॥
पिप्पलीसैन्धवं कुष्ठं शिरीषस्य फलं तथा ।
स्नुग्दुग्धमर्कदुग्धं वा लेपोऽयं गुदजान् हरेत् ॥
५ ॥
हरिद्राजालिनीचूर्णं कटुतैलसमन्वितं ।
एष लेपो वरः प्रोक्तो ह्यर्शसामन्तकारकः” ॥
जालिनी कटुतुरै इति लोके ॥ ६ ॥
“असितानां तिलानान्तु पलं शीतजलेन तु ।
खादतोऽर्शांसि शाम्यन्ति दृढादन्ता भवन्तिहि
॥ ७ ॥
शस्त्रैर्व्वाथ जलौकोभिः प्रोच्छूनकठिनार्शसः ।
शोणितं सञ्चितं दृष्ट्वा हरेत् प्राज्ञः पुनः पुनः ॥
८ ॥
कासीसं सैन्धवं कृष्णा शुण्ठी कुष्ठञ्च लाङ्गली
।
शिलाभिदश्वमारश्च दन्तीजन्तुघ्नचित्रकं ॥
तालकं कुनटी स्वर्णक्षीरी चैतैः पचेद्भिषक् ।
तैलं स्नुह्यर्कपयसा गवां मूत्रे चतुर्गुणे ॥
एतदभ्यङ्गतोऽर्शांसि क्षारेणैव पतन्ति हि ।
क्षारकर्म्मकरं ह्येतन्न च संदूषयेद्वलिं” ॥
कासीसं कौसीस इति लोके । लाङ्गली
करहारी

श्लक्ष्णा मणिवन्मसृणाः । करीरो वंशाङ्कुरः ।
पनसास्थिगोस्तनाः तदाकृतयः ।
वङ्क्षणानाहिनः
वङ्क्षणयोरानाहकारिणः ।
पाष्वादिष्वाकर्षणवत्
पीडाकारिणः । कृच्छ्रं मूत्रकृच्छ्रं ।
शिरोजाड्यं
शिरसो भाराक्रान्तत्वमिव । क्लैव्यं स्त्रीष्वनिच्छा ।
अत्र छर्द्दिशब्दः सान्त आर्षत्वात् ।
आमप्राय-
विकारदाः आमबहुला
व्याधयोऽतीसारग्रहण्या-
दग्रः तान् ददाति ॥ * ॥ अथ
द्वन्द्वजार्शोलक्षण-
माह ।
“हेतुलक्षणसंसर्गाद्विद्यात् द्वन्द्वोल्वणानि च” ॥ * ॥
अत्र त्रिदोषार्शसः सहजार्शसश्च लक्षणमाह ।
“सर्व्वैः सर्व्वात्मकान्याहुर्लक्षणैः सहजानि च” ।

असाध्यः सन्निहितमरणो बोद्धव्यः ।
अर्शसः
अर्शोरोगयुक्तः ।
एतन्मिलितमरिष्टलक्षणं ।
“हृत्पार्श्वशूलं संमोहच्छर्द्दिरङ्गस्य रुग्ज्वरः ।
तृष्णा गुदास्यपाकश्च
निहन्युर्गुदजातुरं ॥
गुदस्य यदास्यमोष्ठदेशस्तस्य पाकः ।
हृत्पार्श्व-
शूलादिसमस्तं व्यस्तं चारिष्टलक्षणं ॥
“तृष्णारोचकशूलार्त्तमतिप्रस्रुतशोणितं ।
शोथातिसारसंयुक्तमर्शांसि क्षपयन्ति हि” ॥ * ॥
अथ मेढ्रादिजार्शोलक्षणमाह ।
“मेढ्रादिष्वपि वक्ष्यन्ते यथास्वं नाभिजानि च ।
गण्डूपदास्यरूपाणि पिच्छिलानि मृदूनि च” ॥
यथास्वं यथात्मीयलक्षणं । न चात्रोक्तनिदान-

:इति लोके । शिलाभित् पाषाणभेदः ।
अश्वमारः

कनैल इति लोके । स्वर्णक्षीरी चोक इति लोके ।
वृहत्कासीसाद्यं तैलं ॥ ९ ॥
“शुण्ठीकणामरिचनागदलत्वगेलं
चूर्णीकृतं क्रमविवर्द्धितमूद्र्ध्वमन्त्यात् ।
खादेदिदं समसितं गुदजाग्निमान्द्यं
गुल्मारुचिश्वसनकण्ठहृदामयेषु” ॥
तद्यथा । एलात्र सूक्ष्मा ग्राह्या । यत आह मदन-
पालः ।
“एला सूक्ष्मा
कफश्वासकासार्शोमूत्रकृच्छ्रहृत्” ।
इत्यादि । तस्या वीजभागः १ तजभागः २ दलं
पत्रं । यत आह निघण्टौ धन्वन्तरिः ।
“तमालपत्रकं पत्रं स्यात् पलाशं दलाह्वयम्” ।
इति तस्य भागः ३ । नागो नागकेशरं । यत
आह निघण्टौ धन्वन्तरिः ।
“नागपुष्पं मतं नागं केशरं नागकेशरम्” ॥
इत्यादि । तस्य भागः ४ मरीचभागः ५ पिपरि-
भागः ६ शुण्ठीभागः ७ चिनिभागः २८ । सम-
शर्करचूर्णं ॥ १० ॥
“त्रिपलं शृङ्गवेरस्य चतुष्क मारचस्य च ।
पिप्पल्याः कुडवार्द्धञ्च चव्यायाः पलमेव च ॥
तालीशपत्रस्य पलं पलार्द्धं केशरस्य च ।
द्विपलं पिप्पलीमूलमर्द्धकर्षञ्च पत्रकात् ॥
सूक्ष्मैलाकर्षमेकन्तु कर्षञ्च त्वङ्मृणालयोः ।

हन्यादर्शांसि सर्व्वाणि
श्वासशोषभगन्दरान् ।
हृच्छूलं पार्श्वशूलञ्च वातगुल्मं तथोदरं ॥
हिक्कां कासं प्रमेहांश्च पाण्डुरोगं सकामलं ।
आमवातमुदावर्त्तमन्त्रवृद्धिं गुदक्रिमीन् ॥
अन्ये च ग्रहणीदोषा भिषग्भिर्ये प्रकीर्त्तिताः ।
विजयो नाम चूर्णोऽयं तान् सर्व्वानाशु नाशयेत् ॥
महाज्वरोपसृष्टानां भूतोपहतचेतसां ।
अप्रजानाञ्च नारीणां हितमेतद्धि भेषजं ॥
त्रिकत्रयं त्रिफलात्रिकटुत्रिसुगन्धीनि ।
क्षारौ स्वर्ज्जिका यवक्षारश्च ।
लवणानि पञ्च ।
ग्रन्थिः पिप्पलीमूलं । विडालपदकं कर्षं । विजय-
चूर्णं ॥ १२ ॥
“मरिचमहौषधचित्रकशूरण-
भागा यथोत्तरं द्विगुणाः ।
सर्व्वसमो गुडभागः
सेव्योऽयं मोदकः प्रसिद्धफलः ॥
ज्वलनं ज्वलयति जाठर-
मुन्मूलयति शूलगुल्मगदान् ।
निःशेषयति श्लीपद-
मर्शांसि विनाशयत्याशु” ॥
तद्यथा । मरिचभागः १ शुण्ठीभागः २ चिता-
भागः ४ शूरणभागः ८ गुडभागः १५ । लघु-
शूरणमोदकः ॥ १३ ॥
“षोडशशूरणतोऽंशा वह्नेरष्टौ
महौषधस्याथ ।

पूत तु तं रसं भूयः क्वाथेभ्यः त्रिगुणं गुडं ॥
लेहं पचेत् पुनस्तावद्यावद्दर्व्वीप्रलेपनं ।
अवतार्य्य ततः पश्चात् चूर्णानीमानि दापयेत् ॥
त्रिवृत्तेजोवतीकन्दचित्रकान् द्विपलांशिकान् ।
एलात्वङ्मरिचं चापि नागाह्वं चापि षटपलं ॥
द्वात्रिंशच्च पलान्यत्र चूर्णयित्वा निधापयेत् ।
ततो मात्रां प्रयुञ्जीत जीर्णे क्षीररसाशिनः” ॥
तेजोवती तेजवती तेजवल्कल इति च ।
कन्दः शूरणः ।
“हन्यादर्शांसि सर्व्वाणि तथा सर्व्वोदराण्यपि ।
गुल्मानपि प्रमेहांश्च पाण्डूरोगं हलीमकं ॥
दीपयेदनलं मन्दं यक्ष्माणं चापकर्षति ।
आद्यवाते प्रतिश्याये पीनसेऽयं हितो मतः ॥
भवन्त्यनेन पुरुषाः शतं वर्षाण्यनामयाः ।
दीर्घायुषः प्रजनना वलीपलितवर्ज्जिताः ॥
गुडः श्रीबाहुशालोऽयं रसायनवरो मतः ।
दुर्न्नामान्तकरो ह्येष दृष्टो वारसहस्रशः ॥
यावद्दर्व्वीप्रलेपः स्याद्यावद्वा तण्डुली भवेत् ।
तोयपूर्णे यदा पात्रे क्षिप्तो न प्लवते गुडः ॥
क्षिप्तस्तु निश्चलस्तिष्ठेत् पतितस्तु न शीर्य्यति ।
एष पाकः समस्तानां गुडानां परिकीर्त्तितः ॥
सार्द्धं पलं पलञ्चार्द्धं भक्षयेद्गुडखण्डयोः ।
श्रेष्ठा तु मध्यमा हीना मात्रोक्ता मुनिभिस्त्रिधा” ।
बाहुशालो गुडः ॥ १५ ॥
“तिला भल्लातकं पथ्या गुडश्चेति समांशकं ।
दुर्न्नामश्वासकासघ्नं प्लीहपाण्डूज्वरापहं ॥
पित्तश्लेष्मप्रशमनी कच्छुदद्रुरुजापहा ।
गुदजान्नाशयत्याशु भक्षिता सगुडाभया” ॥ १६ ॥ * ॥
“प्रणम्य शङ्करं रुद्रं दण्डपाणिं महेश्वरं ।
जीवितारोगमन्विच्छन्नारदोऽपृच्छदीश्वरं ॥
सुखोपायेन हे नाथ शस्त्रक्षाराग्निभिर्व्विना ।
चिकित्सामर्शसां नृणां कारुण्याद्वक्तुमर्हसि ॥

गुडात् पलानि त्रिंशच्च चूर्णमेकत्र कारयेत् ॥
अङ्कप्रमाणगुटिका प्राणदा चेति सा स्मृता ।
पूर्ब्बं भक्ष्यञ्च पश्चाच्च भोजनस्य यथाबलं ॥
मद्यं मांसरसं यूषं क्षारतोयं पिबेदनु ।
हन्यादर्शांसि सर्व्वाणि सहजान्यस्रजानि च ॥
वातपित्तकफोत्थानि सन्निपातोद्भवानि च ।
पानात्यये मूत्रकृच्छ्रे उरोरोगे गलग्रहे ॥
विषमज्वरपित्ते च पाण्डुरोगे तथैव च ।
कृमिहृद्रोगिणाञ्चैव गुल्मशूलार्त्तिनां तथा ॥
छर्द्यतीसाररोगाणां कामलाहिक्किनां तथा ।
शुण्ठीस्थानेऽभया देया हृद्ग्रहे पित्तजे गदे ॥
प्राणदेयं सितां दत्त्वा गुडमानाच्चतुर्गुणां ।
अम्लपित्ताग्निमान्द्यादौ प्रयोज्या गुदजातुरे ॥
अनुपाने प्रयोक्तव्यं व्याधौ श्लेष्मभवे पलं ।
पलद्वयं त्वनिलजे पित्तजे तु पलत्रयं ॥
फलाम्लधान्याम्लरसास्यशस्ता मद्यं मरुद्रोगिणि चानुपानं ।
इक्षो रसक्षारहिमाम्बु पित्ते उष्णाम्बुयूषौ कफजे विदध्यात् ॥
गण्डूषमात्रमादेयं मृदौ क्रूरे च पञ्च वा ।
अनुपानं प्रयोक्तव्यं देशकालमवेक्ष्य वा" ॥
इति प्राणदा गुटिका ॥ ११ ॥
"त्रिकत्रयं वचा हिङ्गु पाठाक्षारौ निशाद्वयं ।
चव्यतिक्ता कलिङ्गानि शताह्वा लवणानि च ॥
अर्द्धेन भागयुक्तिर्मरिचस्य ततोऽपि चार्द्धेन ॥
त्रिफला कणा समूला तालीशारुस्करकृमिघ्नानां ।
भागा महौषधसमा दहनांशतालमूली च ॥
भागः शूरणतुल्यो दातव्यो वृद्धदारकस्यापि ।
भृङ्गैले मरिचांशे सर्व्वाण्येकत्र कारयेत् चूर्णं ॥
द्विगुणेन गडेन युतः सेव्योऽयं मोदकः प्रकामधनैः ।
गुरुवृष्यभोज्यनिरतैरितरेषूपद्रवं कुर्य्यात् ॥
भस्मकमनेन जनितं पूर्ब्बमगस्त्यस्य योगराजेन ।
भीमस्य मारुतेरपि महाशनौ येन तौ जातौ ॥
अग्निबलमात्रहेतुर्न केवलं शूरणो महावीर्य्यः ।
हन्ता शस्त्रक्षारानलैर्विनाप्यर्शसामेषः ॥
श्वयथुश्लीपदगदहृद्ग्रहणीञ्च कफानिलोद्भुतां ।
नाशयति वलीपलितं मेधां कुरुते जरां हरते ॥
हिक्कां कासं श्वासं सराजरोगान् प्रमेहांश्च ।
प्लीहानञ्च तथोग्रं हन्यादाशु रसायनं पुंसां" ॥
एषां भागो यथा । शूरणभागः १६ चिताभागः ८
सोठिभागः ४ मरिचभागः २ । हररे वहेरा
अवरा । पीपर पिपरामूल । तालीशं तालीश-
पत्रं । अरुस्करं भल्लातकं । तदसह्यत्वे रक्तचन्दनं ।
नारदस्य वचः श्रुत्वा नराणां हितकाम्यया ।
अर्शसां नाशनं श्रेष्ठं भैषज्यं शङ्करोऽवदत् ॥
पाण्ड्यवज्रादिलोहानामादायान्यतमं शुभं ।
कृत्वा निर्म्मलमादौ तु कुनट्या माक्षिकेण च ॥
पत्तूरमूलकल्केन लिम्पेद्रसयुतेन च" ।
कुनटी मनःशिला । माक्षिकं सुवर्णमाक्षिकं ।
पत्तूरं वकम इति लोके । शालिञ्चा इति रसेन्द्र-
चिन्तामणौ । रसः पारदः ।
"वह्नौ निःक्षिप्य विधिवत् साराङ्गारेण निर्धमेत् ।
ज्वाला च तस्य रोद्धव्या त्रिफलाया रसेन वा" ॥
सारः काष्ठसारः । शालाङ्गारेण इति रसेन्द्र-
चिन्तामणौ पाठः ।
"ततो विज्ञाय गलितं शङ्कुनोद्ध्वं समुत्क्षिपेत् ।
त्रिफलाया रसे पूते तदाकृष्य तु निर्व्वपेत् ॥
न सम्यग्गालितं यत्तु तेनैव विधिना पुनः ।
ध्मातं निर्व्वापयेत्तस्मिन् लोहं तत् त्रिफलारसे ॥
यल्लोहं न मृतं तत्र पाच्यं भूयोऽपि पूर्ब्बवत् ।
मारणान्न मृतं यच्च तत्त्यक्तव्यमलोहवत् ॥
ततः संशोष्य विधिवत् चूर्णयेल्लोहभाजने ।
लोहेनैव तथा वत्स दृषदा सूक्ष्मचूर्णितं ॥

| | | |
|---|---|---|
| ग्रन्थिविल्वाजमोदा च<br>गणोऽष्टाविंशतिर्मतः ।<br>एतानि समभागानि सूक्ष्मचूर्णानि<br>कारयेत् ॥<br>चूर्णं विडालपदकं पिबेदुष्णेन वारिणा ।<br>एरण्डतैलयुक्तं वा लिह्याच्चूर्णमिदं नरः<br>॥ | विडङ्गं प्रत्येकं भागः ४ तालमूली<br>मूषली तस्याः<br>भागः ८ विधाराभागः १६ तजभागः २<br>एलाइच-<br>छोटीवीजभागः २ गुडभागः ४ । ७२ ।<br>वृहच्छू-<br>रणो मोदकः ॥ १४ ॥<br>“त्रिवृत्तेजोवती दन्ती श्वदंष्ट्रा छित्रकं<br>शटी ।<br>गवाक्षीमुस्तविश्वाह्वविडङ्गानि हरीतकी<br>॥<br>पलोन्मितानि चैतानि<br>पलान्यष्टावरुस्करात् ।<br>वृद्धदारात् पलान्यष्टौ शूरणस्य तु<br>षोडश ॥<br>जलद्रोणद्वये क्वात्थ्यं चतुर्भागावशेषितं<br>। | |

:कृत्वा लोहमये पात्रे मार्द्दे वा लिप्तरन्ध्रके ।
रसैः पङ्कोपमं कृत्वा तं पचेद्गोमयाग्निना ॥
पुटानि क्रमशो दद्यात् पृथगेषां विधानतः ।
त्रिफलार्द्रवभृङ्गाणां केशराजस्य बुद्धिमान् ॥
माणकन्दकभल्लातवह्नीनां शूरणस्य च ।
हस्तिकर्णपलाशस्य कुलिशस्य तथैव च” ॥
भृङ्ग भङ्गरिया । केशराजः भृङ्गराज इति द्विः ।
कुलिशं स्नुहीक्षीरं ।
“पुटे पुटे चूर्णयित्वा लोहात् षोडशिकं पलं ।
तन्मानं त्रिफलायाश्च पलेनाधिकमाहरेत् ॥
अष्टभागावशिष्टे तु रसे तस्याः पचेद्बुधः ।
अष्टौ पलानि दत्त्वा च सर्पिषो लोहभाजने ॥
ताम्रे वा लोहदर्व्या तु चालयेद्विधिपूर्ब्बकं ।
ततः पाकविधानज्ञः स्वच्छे चोद्ध्र्वे च सर्पिषि ॥
मृदुमध्यादिभेदेन गृह्णीयात् पाकमाज्यतः ।
आरभेत विधानज्ञः कृतकौतुकमङ्गलः ॥
भ्रामरं घृतसंयुक्तं विलिह्याद्रक्तिकक्रमात् ।
वर्द्धमानानुपानञ्च गव्यक्षीरेण संयुतं ॥
गव्याभावे त्वजायाश्च स्निग्धवृष्यादिभोजनं ।
सद्योवह्निकरञ्चैव भस्मकञ्च नियच्छति ॥
हन्ति वातं तथा पित्तं कुष्ठानि विविधं ज्वरं ।
गुल्माक्षिपाण्डुरोगांश्च निद्रालस्यमरोचकं ॥
“वास्तूकं धान्यशाकञ्च केमुकं चक्रवर्त्तनं” ।
चक्रवर्त्तनं चकवतशाकं ।
“नारिकेलञ्च खर्ज्जूरं दाडिमं लवलीफलं ।
शृङ्गाटकञ्च पक्वाम्रं द्राक्षा तालफलानि च ।
जातीकोशं लवङ्गञ्च पूगं ताम्बूलपत्रकं ॥
हितान्येतानि वस्तूनि लोहमेतत् समश्नतां ।
नाश्नीयाल्लकुचं कोलं कर्क्कन्धुवदराणि च ।
जम्बीरं वीजपूरञ्च तिन्तिडीं करमर्द्दकं” ॥
कोलं क्षुद्रवदरं । कर्क्कन्धुवदराणि महान्ति ।
“आनूपानि च मांसानि क्रकरं पुण्ड्रकानपि ।
हंससारसदात्यूहशङ्कुकङ्कबलाकिकाः ॥
माणकन्दकरीराणि कतकञ्च कलिङ्गकं ।
कुष्माण्डकञ्च कर्क्कोटं केमुकञ्च विशेषतः ॥
कटुकं कालशाकञ्च कशेरुं कर्क्कटीं तथा ।
ककारादीनि सर्व्वाणि द्विदलानि च वर्जयेत् ॥
शङ्करेण समाख्यातश्चूर्णराजोऽनुकम्पया ।
जगतामुपकाराय दुर्नामारिरयं ध्रुवं ॥
स्थानादपैति मेरुश्च पृथ्वी पर्य्येति वायुना ।
पतन्ति चन्द्रताराश्च मिथ्या चेदहमब्रुवं ॥
ब्रह्मघ्नाश्च कृताघ्नाश्च क्रूरा येऽसत्यवादिनः ।
वर्ज्जनीयाः स्वधर्म्मेण भिषजा गुरुनिन्दकाः ॥
मुनिरसपिष्टविडङ्गं मुनिरसलीढं चिरस्थितं घर्मे ।
समङ्गोत्पलमोचाह्वतिरीटतिलचन्दनैः ।
सिद्धं छागीपयो दद्याद् गुदजे शोणितात्मके” ॥
समङ्गा लज्जालुः । मोचाह्वो मोचरसः । तिरीटो
लोध्रः । चन्दनमत्र रक्तं । समङ्गादिदुग्धं ॥ ७ ॥
“भावितं रजनीचूर्णं स्नुहीक्षीरैः पुनः पुनः ।
बन्धनात् सुदृढं सूत्रं छिनत्त्यर्शोभगन्दरं” ॥
क्षारसूत्रं ॥ ८ ॥
“नासानाभिसमुत्थेषु तथा मेढ्रादिजेष्वपि ।
क्रियामर्शःसु कुर्व्वीत तत्र तत्र यथोदितां ॥
चर्म्मकीलन्तु संछिद्य दहेत् क्षारेण चाग्निना ।
वेगावरोधस्त्रीपृष्ठयानान्युत्कटकाशनं ॥
यथास्वं दोषलञ्चान्नमर्शसः परिवर्ज्जयेत्” ।
इत्यर्शोऽधिकारः ॥ * ॥ इति भावप्रकाशः ॥

**अर्शसः**, त्रि, (अर्शस् + अस्त्यर्थे अच् ।) अर्शोरोग-
युक्तः । इत्यमरः ॥
(“हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम्” ।
इति मनुः ।
“अन्नपानौषधं सर्व्वं तत्सेव्यं नित्यमर्शसाम् ।
हस्ते पादे मुखे नाभ्यां गुदे वृषणयोस्तथा ।
शोथो हृत्पार्श्वशूलञ्च यस्यासाध्योऽर्शसो हि सः” ॥
इति भावप्रकाशः ।)

**अर्शसानः**, पुं, (ऋ + असानच्, शुट् ।) अग्निः ।

शूलञ्च परिणामञ्च प्रमेहमवबाहुकं ।
अयथुं रुधिरस्रावं दुर्न्नामानं विशेषतः ॥
बलकृद्बृंहणञ्चैव कान्तिदं स्वरवर्द्धनं ।
शरीरलाघवकरमारोग्यं पुष्टिवर्द्धनं ॥
आयुष्यं श्रीकरञ्चैव वयस्तेजस्करं शुभं ।
सश्रीकपुत्रजननं वलीपलितनाशनं ॥
दुर्न्नामारियं नाम्ना दृष्टो वारसहस्रशः ।
अनेनार्शांसि दह्यन्ते यथा तूलञ्च वह्निना
॥
सौकुमार्य्याल्पकायत्वात् मद्यसेवी यथा
नरः ।
जीर्णमद्यादियुक्तादिभोजनैः सह
दापयेत्" ॥
रसेन्द्रचिन्तामणौ यथास्थाने यदा
तृतीयचरण-
स्थाने जीर्णे मद्ये प्रयोक्तव्यमिति पाठः ।
"लावतित्तिरवर्त्तीरमयूरशशकादयः ।
चटकः कलविङ्कश्च वर्त्तका हरितालकः
॥
श्येनकश्च वृहल्लावो वनविष्करकादयः ।
पारावतमृगादीनां मांसं जाङ्गलकं शुभं ॥
वर्त्तीरः वगेरा इति लोके । चटको
वन्यचटकः ।
कलविङ्को गृहचटकः । वर्त्तका वटई इति
लोके ।
हरितालकः हरिताल इति लोके ।
विष्किरा-
वर्त्तकादयः ।
"मद्गुरो रोहितः श्रेष्ठः शकुलश्च
विशेषतः ।
मत्स्यराजा इमे प्रोक्ता हितमत्स्याय
देहिने ॥
वृन्ताकम्य फलं शस्तं पटोलं वृहतीफलं
।
प्रलम्बाभीरुवेत्राग्रं तालकस्तण्डुलीयकं"
॥
प्रलम्बा लम्बालावुः । अभीरुः
शतावर्य्याः पत्रशाकं ।

द्रावयति लोहदोषान्
वह्निर्नवनीतपिण्डमिव" ॥
मुनिरत्रागस्तिः ।
"काले मलप्रवृत्तिर्लाघवमुदरे
विशुद्धिरुद्गारे ।
अङ्गेषु नावसादो मनःप्रसादोऽस्य
परिपाके ॥
कृमिरिपुचूर्णं लीढं सहितं स्वरसेन
वङ्गसेनस्य ।
क्षपयत्यचिरात्त्रितयं लोहाजीर्णोद्भवं शूलं"
॥
वङ्गसेनस्य अगस्तेः ।
"जीर्णे लोहे पतति चूर्णं भुञ्जीत
सिद्धसाराख्यं ।
लोहव्यापन्नश्यति विवर्द्धते जाठरो वह्निः"
॥
तद्यथा, --
"पथ्यासैन्धवशुण्ठीमागधिकानां पृथक्
समो भागः ।
त्रिवृतो भागौ निम्बू भाव्यं तत्
सिद्धसाराख्यं" ॥
"भवेद्यद्यतिसारस्तु दुग्धं पीत्वा रुजं
जयेत् ।
गुञ्जाद्वादशकादूर्द्ध्वं वृद्धिरस्य भयप्रदा"
॥
शङ्करप्रणीतं लोहं । इति सामान्यक्रिया ॥
१७ ॥ * ॥
अथ रक्तार्शसां चिकित्सा ।
"रक्तार्शसामुपेक्षेत रक्तमादौ स्रवद्भिषक् ।
दुष्टास्रे निगृहीते स्युः शूलानाहासृगामयाः
॥
चन्दनकिराततिक्तकधन्वयवासाः
सनागराः क्व-
थिताः । रक्तार्शसां प्रशमना
दार्व्वीत्वगुशीरनिम्बा
वा" ॥ चन्दनमत्र रक्तचन्दनं ।
चन्दनादिक्वाथः ॥ १ ॥

इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥
("अर्श-
सानाय शत्रूणां हिंसित्रे" । इति वेदभाष्यम्
।)

**अर्शी**, [न्] त्रि, (अर्शमस्त्यस्य, अर्श + इनि ।)

अर्शोरोगयुतः । इति शब्दरत्नावली ॥

**अर्शोघ्नः**, पुं, (अर्शो हन्ति, अर्श + हन् + ट ।)

ओल्लः । तत्पर्य्यायः । शूरणः २ कन्दः ३
। इत्य-
मरः ॥ सूरणः ४ । इति तट्टीका ॥ ओल
इति
भाषा । (अर्शोरोगविनाशकः ।
"अर्शोघ्नं कारभं मूत्रं मानुषन्तु विषापहम्"
।
इति सुश्रुते ।)

**अर्शोघ्नी**, स्त्री, (अर्शस् + हन् + ट + ङीप् ।) ताल-

मूली । इति मेदिनी ॥

**अर्शोहितः**, पुं, (अर्शसि हितः, सेवनेन तन्नाशक-

त्वात् ।) भल्लातकः । इति त्रिकाण्डशेषः ।
भेला
इति भाषा ।

**अर्ह** योग्यत्वे । (भ्वादिं-परं-सकं-सेट् ।) पूजने ।

इति कविकल्पद्रुमः ॥ अर्हति विप्रो वेदं
पठितुं ।
सकर्म्मकोऽपि ।
"यज्ञदानतपांस्यस्य कलां नार्हन्ति
षोडशीं" ।
इति दुर्गादासः ॥
("अध्यापयन् गुरुसुतो गुरुवन्मानमर्हति"
।
इति मनुः ।
"द्वित्राण्यहान्यर्हसि सोढुमर्हन्" ।
इति रघुवंशे ।
"गुरोर्गुरौ सन्निहिते गुरुवन्मानमर्हति" ।

| | | |
|---|---|---|
| तालकः देवदालो । तथा च निघण्टौ धन्वन्तरिः ।<br>"जीमूतको देवताडो वृत्तकोशो गरा गरी ।<br>प्रोक्ताखुविष हृद्वेणी देवदाली च ताडकः ॥<br>देवदाली रसे तिक्ता<br>कफार्शःशोयपाण्डुताः"<br>नशयेदित्यादि ॥ | नवनीततिलाभ्यासात् २ ।<br>केसरनवनीतशर्करा-<br>म्यासात् ३ । दधिसरमथिताभ्यासात् ४ । गुदजाः<br>शाम्यन्ति रक्तावहाः ॥<br>"दध्नस्तूपरि यो भागो घनः स्नेहयुतः सरः" ।<br>मथितं सररहितं निर्ज्जलं वस्त्रपूतं दधि ।<br>सपत्रकेसरं क्षौद्रं नवनीतं त्वचं लिहन् ।<br>सिताकेशरसंयुक्तं रक्तार्शसः सुखीभवेत् ॥ ५ ॥<br>पयसा शृतेन यूषैः<br>सतीनमुद्गाढकीमसूराणां ।<br>ओदनमद्यादम्लैर्मधुरैरीषत्सुगन्धैश्च ॥ ६ ॥ | इति मनुः ।)<br>**अर्ह** क पूजने । (चुरां-उभं-सकं-सेट् ।) इति<br>कविकल्पद्रुमः ॥ क अर्हयति । इति<br>दुर्गादासः ॥<br>("राजार्ज्जिहत्तं मधुपर्कपाणिः" । इति । भट्टि-<br>काव्ये ।) |

**अर्हः**, पुं, (अर्ह + अच् ।) इन्द्रः । इति शब्दरत्ना-

वली ॥

**अर्हः**, त्रि, (अर्ह + अच् ।) योग्यः । उपयुक्तः ।

यथा, --

"तस्मान्नार्हा वयं हन्तुं

धार्त्तराष्ट्रान् सबान्धवान्" ।

इति श्रीमगवद्गीता ॥

**अर्हणा**, स्त्री, (अर्ह + युच् + टाप् ।) पूजा । इत्यमरः ॥

("अर्हाणामर्हते चक्रर्मुनयो

नयचक्षुषे" ।

इति रघुवंशे ।)

**अर्हन्,** [त्] पुं, (अर्हः प्रशंसायां शतृ ।) क्षपणकः ।

बुद्धः । इति मेदिनी ॥ शेषस्य

पर्य्यायः ।

जिनः २ पारगतः ३ त्रिकालवित्

४ क्षीणाष्ट-

कर्म्मा ५ परमेष्ठी ६ अधीश्वरः

७ शम्भुः

८ स्वयम्भूः ९ भगवान् १०

जगत्प्रभुः ११

तीर्थङ्करः १२ तीर्थकरः १३

जिनेश्वरः १४

वादी १५ अभयदः १६ सार्व्वः

१७ सर्व्वज्ञः १८

सर्व्वदर्शी १९ केवली २०

देवाधिदेवः २१ बो-

धदः २२ पुरुषोत्तमः २३

वीतरागाप्तः २४ ।

इति हेमचन्द्रः ॥

**अर्हन्,** (त्) त्रि, (अर्ह + शतृ ।) पूज्यः । मान्यः ।

इति ऋतुसंहारे ।

"हस्ते लीलाकमलमलके

बालकुन्दानुविद्धं" ।

इति मेघदूते ।)

**अलकः**, पुं, (अल + क्वुन् ।) अलर्कः । क्षिप्तकुक्कुरः ।

इत्थमरटीकायां रायमुकुटः ॥

**अलकनन्दा**, स्त्री, (अलति पर्य्याप्नोति, अल + क्वुन्,

अलका, नन्दयति इति अच् नन्दा,

अलका चासौ

नन्दा चेति इति इति कर्म्मधारयः ।)

कुमारी ।

इति त्रिकाण्डशेषः ॥ भारतवर्षीयगङ्गा ।

इति

शब्दमाला ॥ "तथैवालकन्दा दक्षिणेन

तु ब्रह्म-

सदनाद्बहूनि गिरिकूटान्यतिक्रम्य

निषध-हेमकूट-

हिमकूटान्यतिरभसतररंहसा लुठन्ती

भारत-

मपि वर्षं दक्षिणस्यां दिशि

लवणजलधिमभि-

प्रविशति" । इति श्रीभागवतं ॥

(हिमालयादुत्पन्ना श्रीनगरस्यादूरे

गङ्गया सह

मिलिता स्वनामख्याता नदी । गङ्गैव

देवलोके

अलकनन्देत्युच्यते । इति महाभारते ।

यदुक्तं, --

"देवेषु गङ्गा गन्धर्ब्ब !

प्राप्नोत्यलकनन्दताम् ।

तथैवालकनन्दापि दक्षिणेनैति भारतं ।

प्रयाति सागरं भूत्वा सप्तभेदा महामुने"

॥

इति भागवतपुराणे ।)

निर्भर्त्सनं । अलक्तः । इति हलायुधो हारावली

च ॥ लाक्षा । इति राजनिर्घण्टः ॥ ("अलक्त-

काङ्कानि पदानि पादयोः" । इति कुमारसम्भवे ।

"पादालक्त्वकरक्तमौक्तिकशिलःसिद्धाङ्गनानाङ्गतैः"

इति नागानन्दे ।)

**अलगर्दः**, पुं, (लगति स्पृशति, क्विप्, लग्, अर्द्दयति,

अर्द्द + अच्, अर्दः, लग् चासौ अर्दश्चेति इति

लगर्दः, लग्नः सन् पीडक इत्यर्थः, निर्व्विषत्वात्

तद्भिन्नः ।) जलसर्पः । जलवोडा इति केचित् ।

अलाध इति केचित् । इत्यमरटीकायां भरतः ॥

(सविषो जलव्यालभेदः । विलकेउटिया इति

भाषा, "तत्र सविषाः कृष्णाः कर्व्वुरा अलगर्द्दा

इन्द्रायुधाः सामुद्रिका गोचनन्दाः चेति" । सुश्रुते ।)

**अलगर्द्दः**, पुं, (अलं गृध्यति इति गृध + अच्, पृषी-

दरादित्वात् साधुः ।) जलव्यालः । इत्यमरः ॥

केउटिया इति ख्यातः । जलवोडा इति केचित् ।

अलाध इति केचित् । इति भरतः ॥

**अलङ्करणं**, क्ली, (अलम् + कृ + भावे ल्युट् ।) भूषणं ।

इति शब्दरत्नादली ॥

**अलङ्करिष्णुः**, त्रि, (अलम् + कृ + इष्णुच् ।) अलङ्कार-

कर्त्ता । भूषणशीलः । इति रघुनाथचक्रवर्त्त्या-

दयः ॥ तत्पर्य्यायः । मण्डनः २ । इत्यमरः ॥

अलङ्कर्त्ता ३ । इति शब्दरत्नावली ॥ * ॥ अलङ्कार-

युक्तव्यक्तिः । इति सारसुन्दर्य्यादयः ॥ तत्पर्य्यायः ।

अलंकर्त्ता २ मण्डितः ३ प्रसाधितः ४ अलङ्कृतः ५

भूषितः ६ परिष्कृतः ७ । इत्यमरः ॥

**अलङ्कर्त्ता**, [ऋ] त्रि, (अलम् + कृ + तृच् ।) अल-

ङ्करिष्णुः । इत्यमरः ॥

**अलङ्कर्म्मीणः**, त्रि, (अलं समर्थः कर्म्मणे, खः ।) कार्य्य-

कुशलः । कर्म्मक्षमः । इत्यमरः ॥

**अलङ्कारः**, पुं, (अलम् + कृ + भावे घञ् ।) भूषणं ।

तत्पर्य्यायः । आभरणं २ परिष्कारः ३ विभूषणं

इति मेदिनी ॥ स्तुतः । इति शब्दरत्नावली ॥
("यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते" ।
इति कुमारसम्भवे ।
"त्वमर्हतामग्रसरः स्मृतोऽसि नः" ।
इति शाकुन्तले ।)

**अर्हन्तः**, पुं, (अर्ह + बाहुलकात् झच् ।) बुद्धः ।
क्षपणकः । मान्ये त्रि । इति जटाधरः ॥ शिवः ।
इति शब्दरत्नावली ॥

**अर्हितः**, त्रि, (अर्ह + क्त ।) पूजितः । इत्यमरः ॥

**अल** ञ वारणपर्य्याप्तिभूषासु (भ्वादिं-उभं-सकं ।)
इति कविकल्पद्रुमः ॥ ञ अलति अलते पापं
गङ्गा निवारयतीत्यर्थः ।
पर्य्याप्तिः सामर्थ्यं ।
"पर्य्याप्तन्तु यथेष्टं स्यात् तृप्ते शक्ते निवारणे" ।
इति विश्वप्रकाशात् । अलति घोटको धावितुं
समर्थः स्यादित्यर्थः । अलति हारो जनं भूष-
यति इत्यर्थः । इति दुर्गादासः ॥

**अलं**, क्ली, (अल + अच् ।) वृश्चिकपुच्छकण्टकः ।
इति हेमचन्द्रः । विछार हुल इति भाषा ।
हरितालं । इति रत्नमाला अमरटीका च ॥

**अलं**, व्य, भूषणं । पर्य्याप्तिः । वारणं । निरर्थकं ।

**अलकप्रभा**, स्त्री, (अलका पर्य्याप्ता प्रभा यस्याः सा ।)
कुवेरपुरी । इति शब्दरत्नावली ॥

**अलकप्रियः**, पुं, (अलकान् प्रीणाति अलक + प्री +
क ।) वृक्षविशेषः । इति जटाधरः ॥

**अलका**, स्त्री, (अल + क्वुन् + टाप् ।) कुवेरनगरी ।
इत्यमरः ॥
अष्टवर्षावधिदशवर्षपर्य्यन्तवयस्का कन्या । इति शब्दरत्नावली ॥

**अलकाधिपः**, पुं, (अलकाया अधिपः, षष्ठीतत्पुरुषः ।)
कुवेरः । इति जटाधरः ॥

**अलकाधिपतिः**, पुं, (अलकाया अधिपतिः, षष्ठी-
तत्पुरुषः ।) कुवेरः । इति शब्दरत्नावली ॥

**अलक्तः**, पुं, (न रक्तोऽस्मात्, रस्य लत्वं ।) वृक्षनि-
र्यासविशेषः । लाहा । जौ इति च भाषा ।
तत्पर्य्यायः । राक्षा २ लाक्षा ३ जतु ४ यावः ५
द्रुमामयः ६ । इत्यमरः ॥ रक्षा ७ । इति भरतः ।
अरक्तः ८ । इत्यमरटीकायां भरतः ॥ जतुकं ९
यावकः १० अलक्तकः ११ रक्तः १२ । इति
शब्दरत्नावली ॥ पलङ्कषा १३ कृमिः १४ वर-
वर्णिनी १५ । इति जटाधरः ॥ तस्य गुणादिः ।
"लाक्षा पलङ्कषालक्ती यावो वृक्षामयो जतु ।
४ मण्डनं ५ । इत्यमरः ॥ अलङ्क्रिया ६ भूषा ७
अलङ्करणं ८ । इति शब्दरत्नावली । कलापः ९
इति जटाधरः ॥ * ॥ अथालङ्कारयुक्तिः । तद्धा-
रणदिनमुच्यते ।
"रेवत्यश्विधनिष्ठासु हस्तादिष्वपि पञ्चसु ।
गुरुशुक्रबुधस्याह्नि वस्त्रालङ्कारधारणं ॥
अनिष्टेष्वपि निर्दिष्टं बस्त्रालङ्कारधारणम् ।
उद्वाहे राजसम्माने ब्राह्मणानाञ्च सम्मते ॥
शिरस्त्रं मुकुटं हारः कुण्डलञ्चाङ्गदन्तथा ।
कङ्कणं बालकञ्चैव मेखलाष्टाविति क्रमात् ॥
प्रधानभूषणान्येषु यथासंख्यानि निश्चयः ।
पद्मरागश्च वज्रञ्च विजयो गोविदास्तथा ॥
मुक्ता वैदूर्य्यनीलञ्च तथा मरकतं क्रमात् ।
आदित्यादिदशाजानां सर्व्वसम्पत्तिदायकाः ॥
सुवर्णेनापि घटना सर्व्वेषामुपयुज्यते ।
प्रधानभूषणेष्वेवमप्रधाने न निर्णयः ॥
प्रधानभूषणं प्रायः शिरसो ह्यभिधीयते ।
तस्य प्रधानभूषत्वादित्याह भृगुनन्दनः ॥
सुखदा मणयः शुद्धा दुःखदा दोषशालिनः ।
अतो मणीनां वक्ष्यामि लक्षणानि यथाकम" ॥

शक्तिः । इति मेदिनी ॥ अत्यर्थं । यथा, --
"सर्वं मे विमलं वदामलमलं गोलं विजानासि चेत्" । इति लीलावती ॥

**अलकः**, पुं, क्ली, (अलति भूषयति मुखं, अल +
क्वुन् ।) भङ्गियुतः केशः । कर्पूरादेः क्षोदश्चूर्णं तस्य कुन्तलाश्चूर्णकुन्तलाः तद्धि तत्र न्यस्यते इत्यन्ये । अलति भूषयति मुखं इत्यलकं । इति भरतः ॥ कुटिलकुन्तलः । इति सुभूतिः । इति सारसुन्दरी ॥ तत्पर्य्यायः । चूर्णकुन्तलः २ । इत्यमरः ।
("कर्णेषु योग्यं नवकर्णिकारं स्तनेषु हारा अलकेष्वशोकः" ।
लाक्षा वर्ण्या हिमा बल्या स्निग्धा च तुवरालघुः ॥
अनुष्णा कफपित्तास्रहिक्काकासज्वरप्रणुत् ।
व्रणोरक्षतवीसर्पकृमिकुष्ठगदापहा ॥
अलक्तको गुणैस्तद्वद्विशेषाद्व्यङ्गनाशनः" ।
इति भावप्रकाशः ॥ * ॥ लाक्षारसः । आल्ता इति भाषा । तत्पर्य्यायः । अलक्तकः २ जतुरसः ३ रागः ४ निर्भर्त्सनः ५ जननी ६ जनकरी ७ सम्पद्या ८ चक्रवर्त्तिनी ९ । अस्य गुणाः । तिक्तत्वं । उष्णत्वं । कफवातरोगब्रणदोषनाशित्वं । कण्ठरोगशम-नत्वं । रुचिकारित्वञ्च । इति राजनिर्गण्टः ॥

**अलक्तकः**, पुं, (अलक्त एव, अलक्तः स्वार्थे कन् ।)

:इति युक्तिकल्पतरुः ॥ * ॥
मणिविशेषाणां लक्ष-

णानि तत्तच्छन्दे द्रष्टव्यानि
॥ * ॥ काव्यालङ्कारः ।
स द्विविधः । शब्दालङ्कारः
१ । अर्थालङ्कारश्च २ ।
तस्य लक्षणं ।
काव्यशोभाकरधर्म्मः । इति
काव्या-
दर्शः ॥ वैचित्र्यमलङ्कार
इत्यलङ्कारसामान्यलक्षणं ।

**अथालङ्कारनामानि**

अक्रमातिशयोक्तिः -- १
अतद्गुणः -- २
अत्यन्तातिशयोक्तिः -- ३
अत्युक्तिः -- ४
अधिकं -- ५
अनन्वयः -- ६
अनुकूलं -- ७
अनुगुणः -- ८
अनुज्ञा -- ९
अनुप्रासः -- १०
अनुप्रासस्तु पञ्चविधः ।
एकस्य लक्षणोदाहरणे
उक्ते ।
अपरेयथा, वृत्त्यनुप्रासः --
श्रुत्यनुप्रासः --
अन्त्यानुप्रासः --
लाटानुप्रासः --
अनुमानं -- ११
अन्योन्यं -- १२
अपह्नवातिशयोक्तिः -- १३
अप्रस्तुतप्रशंसा -- १४
अभिधाहेतुः -- १५
अर्थान्तरन्यासः -- १६
अर्थापत्तिः -- १७

वैचित्र्यञ्च भङ्गीविशेषः प्रतीतिसाक्षिकः ।
इति
काव्यप्रकाशटीकायां महेश्वरः ॥
अङ्गदादिवत्
शब्दार्थशोभातिशयजनको
रसाद्युपकारकोऽस्थि-
रधर्म्मः । इति साहित्यदर्पणं ॥ अस्य
विवरणं
दण्डि-काव्यप्रकाश-
साहित्यदर्पणालङ्कारकौस्तुभ-
तल्लक्षणानि
"अक्रमातिशयोक्तिः स्यात् सहत्वे
हेतुकार्य्ययोः । १
"सङ्गतानुगुणासङ्गीकारमाहुरतद्गुणं" । २
"अत्यन्तातिशयोक्तिस्तु कार्य्ये
हेतुप्रशक्तिजे" । ३
"अत्युक्तिरद्भुतातथ्यशौर्य्यौदार्य्यादिवर्णनं"
। ४
"अधिक पृथुलाधारादाधेयाधिक्यवर्णनं" ।
५
"उपमानोपमेयत्वं यदेकस्यैव वस्तुनः" । ६
"अनुकूलं प्रातिकूल्यमनुकूलानुबन्धि चेत् ।
७
"प्राक्सिद्धः स्वगुणोत्कर्षोऽनुगुणः
परसन्निधेः" । ८
"दोषस्याभ्यर्थनानुज्ञा तत्रैव गुणदर्शनात्" ।
९
"अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य
यत्" । १०
"अनेकस्यैकधा साम्यसकृद्वाप्यनेकधा ।
एकस्य सकृदप्येष वृत्त्यनुप्रास इष्यते" ॥
"उच्चार्य्यत्वाद्यदेकत्र स्थाने तालुरदादिके"
।
सादृश्यं व्यञ्जनस्यैतत् श्रुत्यनुप्रास उच्यते
॥
व्यञ्जनञ्चेद्यथावस्थं सहाद्येन स्वरेण तु ।

चन्द्रालोकोज्वल-नीलमणि-काव्यचन्द्रिका-कुबल-
यानन्द-सरस्वतीकण्ठाभरणादिग्रन्थेषु ज्ञेयं । अल-
ङ्काराणां मध्ये ये ये प्रसिद्धास्तेषां नामलक्षणोदा-
हरणानि चन्द्रालोकधृतानि तदतिरिक्तानि सा-
हित्यदर्पणोक्तानि च लिख्यन्ते ॥
तदुदाहरणानि
"आलिङ्गन्ति समं देव ज्यां शराश्च परांश्चते" ॥ १
"चिरं रागिणि मच्चित्तेनिहितापि न रज्यसि" ॥ २
"यास्यामीत्युदिते तन्व्या बलयोऽभवदूर्म्मिका" ॥ ३
"त्वयि दातरि राजेन्द्र याचकाः कल्पशाखिनः" ॥
४
"ब्रह्माण्डानि जले यत्र तत्र मान्ति न ते गुणाः" ॥ ५
"इन्दुरिवेन्दुः श्रीमानित्यादौ तदनन्वयः" ॥ ६
"कुपितासि यदा तन्वि निधाय करजक्षतं ।
बधान भुजपाशाभ्यां कण्ठमस्य दृढं तदा" ॥ ७
"नीलोत्पलानि दधते कटाक्षैरतिनोलतां" ॥ ८
"मय्येव जीर्णतां यातु यत्त्वयैव कृतं हरे ।
नरः प्रत्युपकारार्थी विपत्तिमभिकाङ्क्षति" ॥ ९
"आदाय वकुलगन्धानन्धीकुर्व्वन् पदे पदे भ्रमरान् ।
अयमेति मन्दमन्दं कावेरीवारिपावनः पवनः" ॥ १०
"उन्मीलन्मधुगन्धलूब्धमधुपव्याधूतचूताङ्कुरक्रीडत्-
कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः ।
नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षण-
प्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः" ॥
"दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः" ॥
"केशः काशस्तवकविकाशः कायः प्रकटितकरभ-
विलासः । चक्षुर्दग्धवराटककल्पं त्यजति न चेतः
काममनल्पं" ॥
"स्मेरराजीवनयने नयने किं निमीलिते ।
पश्य निर्जितकन्दर्पं कन्दर्पवशगं प्रियं" ॥
"जानीमहेऽस्याः किल सारसाक्ष्या विराजतेऽन्तः-
प्रियवक्त्रचन्द्रः । तत्कान्तिजालैः
प्रसृतैस्त्वदङ्गेष्वा-
पाण्डुता कुट्मलताक्षिपद्मे" ॥ ११
"त्रियामा शशिना भाति शशी भाति त्रिया-
मया" ॥ १२

<table>
<tr>
<td></td>
<td>आवर्त्त्यतेऽन्त्ययोज्यत्वादनुप्रासः स एव<br>तत्” ।<br>“शब्दार्थयोः पौनरुक्तं भेदे तात्पर्य्यमात्रतः ।<br>लाटानुप्रास इत्युक्तः” ॥<br>“अनुमानन्तु विच्छित्त्या ज्ञानं साध्यस्य<br>साध-<br>नात्” । ११<br>“अन्योन्यं नाम यत्र स्यादुपकारः परस्परं”<br>। १२<br>“रूपकातिशयोक्तिः<br>स्यान्निगीर्य्याध्यवसानतः ।<br>यदापह्नुतिगर्भत्वं सैव सापह्नवा मता” । १३<br>“अप्रस्तुतप्रशंसा स्यात् सा यत्र<br>प्रस्तुताश्रया” । १४<br>“अभेदेनाभिधाहेतुर्हेतोर्हेतुमता सह” । १५<br>“उक्तिरर्थान्तरन्यासः स्यात्<br>सामान्यविशेषयोः” । १६<br>“दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते ।<br>क्वचित्<br>प्राकरणिकादप्राकरणिकार्थस्यापतर्न ।<br>क्वचित् अप्राकरणिकात्<br>प्राकरणिकार्थस्येति द्वौ<br>भेदौ” । १७</td>
<td>“त्वत्सूक्तिषु सुधा, राजन् भ्रान्ताः पश्यन्ति तां<br>विधौ” ॥ १३<br>“एकः कृती स कृत्येषु योऽन्यं शक्रान्न याचते” ॥<br>१४<br>“तारुन्यविलासः । इत्यत्र वशीकरणहेतुर्नायिका-<br>वशीकरणत्वेनोक्ता । विलासहासयोस्त्वध्यवसाय-<br>मूलोऽयमलङ्कारः” ॥ १५<br>“हनूमानब्धिमतरत् दुस्तरं किं महात्मनां ॥<br>गुणवद्वस्तुसंसर्गात् याति स्वल्पोऽपि गौरवं ।<br>पुष्पमालानुषङ्गेण सूत्रं शिरसि धार्य्यते” ॥ १६<br>“हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले ।<br>मुक्तानामप्यवस्थेयं के वयं स्मरकिङ्कराः” ॥<br>“विललाप सवाष्पगद्गदं सहजामप्यपहाय धी-<br>रतां । अतितप्तमयोऽपि मार्द्दवं भजते कैव कथा<br>शरीरिणां” ॥ १७</td>
</tr>
</table>

:अथालङ्कारनामानि

अल्पं -- १८

अवज्ञालङ्कृतिः -- १९

असङ्गतिः -- २०

तस्य त्रीणि लक्षणानि ।

असदर्थनिदर्शना -- २१

असम्भवः -- २२

आवृत्तिदीपकं -- २३

तत् त्रिविधं । पदावृत्तिः । अर्थावृत्तिः । उभया-
वृत्तिः ।

आक्षेपः -- २४

अस्य त्रीणि लक्षणानि लक्ष्याणि च ।

उत्प्रेक्षा -- २५

सा वस्तुहेतुफलात्मतागोचरत्वेन त्रिविधा
वस्तूत्प्रेक्षा । हेतूत्प्रेक्षा । फलोत्प्रेक्षा । तत्राद्या
उक्तविषया अनुक्तविषया चेति द्विविधा । परे
हेतुफलोत्प्रेक्षे सिद्धासिद्धविषयतया प्रत्येकं द्वि-
विधे । एवमुत्प्रेक्षा षड्विधा ।

उत्तरं -- २६

उदात्तं -- २७

उपमा -- २८

उपमेयोपमा -- २९

उल्लासः -- ३०

उल्लखः -- ३१

लक्षणभेदेन स द्विविधः ।

एकावली -- ३२

कारकदीपकं -- ३३

कारणमाला -- ३४

सा पूर्ब्बपूर्ब्बपदार्थानां कारणत्ववर्णनेन एवमुत्त-
रोत्तरपदार्थानां कारणत्ववर्णनेन च द्विधा ।

तल्लक्षणानि

“अल्पन्तु सूक्ष्मादाधेयाद्यदाधारस्य सूक्ष्मता” । १८

“ताभ्यां तौ यदि न स्यातामवज्ञालङ्कृतिस्तुसा” । १९

“विरुद्धभिन्नदेशत्वं कार्य्यहेत्वोरसङ्गतिः ।
अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च सा ॥
अन्यत् कर्त्तुं प्रवृत्तस्य तद्विरुद्धकृतिश्च सा” । २०

“अपरांबोधनं प्राहुः क्रिययासत्सदर्थयोः” ।
अस्यार्थः ।
कस्यचित् किञ्चित् क्रियाविशिष्टस्य स्वक्रियया-
परान् प्रति असतः सतो वार्थस्य बोधनंवर्णनं । २१

“असम्भवोत्थनिष्पत्तेरसम्भाव्यत्ववर्णनं” । २२

“त्रिविधं दीपकावृत्तौ भवेदावृत्तिदीपकं” । २३

“आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात् ।
निषेधाभास आक्षेपं बुधाः केचन मन्वते ॥
आक्षेपोऽन्यो व्रिधौ व्यक्ते निषेधेच तिरोहिते” । २४

“सम्भावनाः स्युरुत्प्रेक्षा वस्तुहेतुफलात्मता ।
उक्तानुक्तास्पदाद्यात्र सिद्धासिद्धास्पदे परे” । २५

“किञ्चिदाकूतसहितं स्याद्गूढोत्तरमुत्तरं” । २६

“उदात्तमृद्धिरचितं श्लाघ्यमाल्योपलक्षणं” । २७

“उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः” । २८

“पर्य्यायेण द्वयोस्तच्चेदुपमेयोपमा मता” । २९

“एकस्य गुणदोषाभ्यामुल्लासोऽन्यस्य तौ यदि” । ३०

“बहुभिर्बहुधोल्लेखादेकस्योल्लेख ईष्यते ।
एकोनबहुधोल्लेखोऽप्यसौ विषयभेदतः” । ३१

“गृहीतमुक्तरीत्यार्थश्रेणीरेकावली मता” । ३२

“क्रमिकैकगतानान्तु गुम्फः कारकदीपकं” । ३३

तदुदाहरणानि

“मणिमालोर्म्मिका तेऽद्य करे जपवटायते” ॥ १८

“स्वल्पमेवाम्बु लभते पान्थः प्राप्यापि सागरं ।
मीलन्ति यदि पद्मानि का हानिरमृतद्युतेः” ॥ १९

“विषं जलधरैः पीतं मूर्च्छिता पथिकाङ्गना ।
अपारिजातां वसुधां चिकीर्षन् द्यां तथाकृथाः ।
गोत्रोद्धारप्रवृत्तो हि गोत्रोद्धारं पुराकरोः” ॥ २०

“नश्येद्राजविरोधीति क्षीणं चन्द्रोदये पुनः” ॥ २१

“को वेद गोपशिशुकः शैलमुत्पाटयिष्यति” ॥ २२

“वर्षत्यम्बुदमालेयं वर्षत्येषा च शर्व्वरी ॥
उन्मीलन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः ।
माद्यन्ति चातकास्तृप्ता माद्यन्ति च शिखाबलाः” ॥ २३

“चन्द्र सन्दर्शयात्मानमथवास्ति प्रियामुखं ।
नायं दूति तनोस्तापस्तस्याः कालानलोपमः ।
गच्छ गच्छसि चेत्कान्त तत्रैव स्याज्जनिर्म्मम” ॥ २४

“धूमस्तोमं तमः शङ्के कोकीविरहलक्षणं ।
लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ॥
रक्तौ तवाङ्घ्री मृदुलौ भुवि विक्षेपणाद्ध्रुवं ।
तन्मुखाभेच्छया नूनं पद्मैर्व्वैरायते शशी ॥

काव्यलिङ्गं -- ३५
काव्यार्थापत्तिः -- ३६
कैतवापह्नुतिः -- ३७
गूढोक्तिः -- ३८
चपलातिशयोक्तिः -- ३९
चित्रं -- ४०

"गुम्फः कारणमाला स्याद्यथा प्रक्रान्तकारणैः" । ३४
"समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनं" । ३५
"कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते" । ३६
"कैतवापह्नुतिर्व्यक्ते व्याजाद्यैर्निह्नवे पदैः" । ३७
"गूढोक्तिरन्योद्देश्या गीर्यदन्यं प्रति कथ्यते" । ३८
"चपलातिशयोक्तिस्तत्पौर्बापर्य्यव्यतिक्रमः" । ३९
"पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते" । ४०

मध्यः किं कुचयोर्धृत्यै बद्धः कनकदामभिः ।
प्रायोऽब्जं त्वत्पदेनैक्यं प्राप्तुं तोये तपस्यति" ॥ २५
"यत्रासौ वेतसी पान्थ तत्रेयं सुतरां सरित्" ॥ २६
"सासौ यत्राभवद्युद्धं तव धूर्ज्जटिनाऽर्ज्जुनः" ॥ २७
"हंसीव भूपतेः क्रीर्त्तिः स्वर्णदीमवगाहते" ॥ २८
"धर्म्मोऽर्थ इव पूर्णश्रीरर्थो धर्म्म इव त्वयि" ॥ २९
"अपि मां पावयेत् साध्वी स्नात्वेतीच्छति जाह्नवी ॥
काठिन्यं कुचयोर्दृष्टं वाञ्छन्त्यः पादपद्मयोः ।
निम्दन्ति विश्वधातारं त्वद्धाटीष्वरियोषितः ॥
तदभाग्यं धनस्यैव यन्नाश्रयति सज्जनं ॥
लाभोऽयमेव भूपाल सेवकानां न चेद्वधः" ॥ ३०
"स्त्रीभिः कामोऽर्थिभिः स्वद्रुः कालः शत्रुभिरैक्षि सः ।
गुरुर्वचस्यर्जुनोऽयं कीर्त्तौ भीष्मः शरासने" ॥ ३१
"नेत्रे कर्णान्तविश्रान्ते कर्णौ दोःस्तम्भशासनौ ।
दोःस्तम्भौ जानुपर्य्यन्तप्रलम्बनमनोहरौ ।
जानुनी रत्नमुकुराकारे तस्य महीभुजः" ॥ ३२
"गच्छत्या गच्छति पुनः पान्थः पश्यति पृच्छति" ॥ ३३
"नयेन श्रीः श्रिया त्यागस्त्यागेन विपुलं यशः ॥
भवन्ति नरकाः पापाः पापं दारिद्र्यसम्भवं ।

| | | दारिद्र्यमप्रदानेन तस्माद्द्वानपरो भव" ॥ ३४<br>"जितोऽसि मन्द कन्दर्प मच्चित्तेऽस्ति त्रिलोचनः" ॥ ३५<br>"स जितन्त्वन्मुखेनेन्दुः का वार्त्ता सरसीरुहां" ॥ ३६<br>"निर्यान्ति स्मरनाराचा बालादृक्पातकैतवात्" ॥ ३७<br>"वृषापेहि परक्षेत्रादायाति क्षेत्ररक्षकः" ॥ ३८<br>"अग्रे मानो गतः पश्चादनुनीता प्रियेण सा" ॥ ३९<br>"मारमासुषमा चारुरुचा मारबधूत्तमा ।<br>मात्तधूर्त्तमावासा सा वामा मेऽस्तु मारमा" ॥ ४० |
|---|---|---|

| :अथालङ्कारनामानि | तल्लक्षणानि | तदुदाहरणानि |
| --- | --- | --- |
| चित्रकाव्यमनेकविधं यथा । पद्म- | “छेकापह्नुतिरन्यस्य शङ्कातस्तस्य निह्नवे” | “प्रजल्पन् मत्पदे लग्नः कान्तः किं न हि |
| च्छत्र-धनुः-खड्ग- | । ४१ | नूपुरः” ॥ ४१ |
| नागपाश-कवाट-नौका-बन्धाः । | “तद्गणः स्वगुणत्यागादन्यदीयगुणग्रहः” । | “पद्मरागायते नासामौक्तिकं तेऽधरत्विषा” ॥ |
| अश्वगति-त्रिपदी- | ४२ | ४२ |
| गोमूत्रिकादयः । | “वर्ण्यानामितरेषां वा धर्म्मैक्यं | “सङ्कुचन्ति सरोजानि स्वैरिणीवदनानि च । |
| छेकापह्नुतिः -- ४१ | तुल्ययोगिता” । | त्वदङ्गमार्दवे दृष्टे कस्य चित्ते न भासते । |
| तद्गुणः -- ४२ | “हिताहिते वृत्तितौल्यमपरा तुल्ययोगिता । | मालतीशशभृल्लेखा कदलीनां कठोरता ॥ |
| तुल्ययोगिता -- ४३ | गुणोत्कृष्टैः समीकृत्य वचोऽन्या | प्रदीयते पराभूतिर्मित्रशात्रवयोस्त्वया ॥ |
| सा त्रिधा । | तुल्ययोगिता” । ४३ | लोकपालो यमः पाशी श्रीदः शक्रो भवानपि” |
| प्रथमा यथा -- | “वदन्ति वर्ण्यावर्ण्यानां धर्म्मैक्यं दीपकं | ॥ ४३ |
| द्वितीया यथा -- | बुधाः” । ४४ | “मदेन भाति कलभः प्रतापेन महीपतिः” ॥ |
| तृतीया यथा -- | “चेद्विम्बप्रतिविम्बत्वं दृष्टान्तस्तदलङ्कृतिः” | ४४ |
| दीपकं -- ४४ | । ४५ | “त्वमेव कीर्त्तिमान्राजन् विधुरेव हि |
| दृष्टान्तः -- ४५ | “वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना । | कन्तिमान्” ॥ ४५ |
| निदर्शना -- ४६ | पदार्थगर्भामप्यन्ये वदन्त्यन्यां निदर्शनां ॥ | “या दातुः सौम्यता सेयं पूर्णेन्दोरकलङ्कता ॥ |
| सा त्रिधा । | अपरां बोधनं प्राहुः क्रिययासत्सदर्थयोः” । | त्वन्नेत्रयुगलं धत्ते लीलां नीलाम्बुजन्मनोः ॥ |
| निरुक्तिः -- ४७ | ४६ | नश्यद्राजविरोधीति क्षीणं चन्द्रोदये तमः” ॥ |
| परिकरः -- ४८ | “निरुक्तिर्योगतो नाम्नामन्यार्थत्वप्रकल्पनं” | ४६ |
| परिकराङ्कुरः -- ४९ | । ४७ | “ईदृशैश्चरितैर्जानि सत्यं दोषाकरो भवान्” ॥ |
| परिणामः -- ५० | “अलङ्कारः परिकरः साभिप्रायविशेषणे” । | ४७ |
| परिवृत्तिः -- ५१ | ४८ | “सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः” ॥ |
| परिसंख्या -- ५२ | “साभिप्रायविशेष्यश्चेद्भवेत् परिकराङ्कुरः” । | ४८ |
| पर्य्यस्तापह्नुतिः -- ५३ | ४९ | “चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः” ॥ |
| पर्य्यायः -- ५४ | “परिणामः क्रियार्थश्चेद्विषयी विषयात्मना” | ४९ |
| स द्विविधः । | । ५० | “प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा” ॥ ५० |
| पर्य्यायोक्तं -- ५५ | “परिवृत्तिर्व्विनिमयो | “ययावेकं शरं मुक्त्वा कटाक्षान् स |
| तत् द्विविधं । | न्यूनाभ्यधिकयोर्म्मिथः” । ५१ | रिपुस्त्रियाः” ॥ ५१ |
| पिहितं -- ५६ | “परिसंख्या निषिध्यैकमेकस्मिन् | “स्नहक्षयः प्रदीपेषु न स्वान्तेषु नतभ्रुवां” ॥ |
| पुनरुक्तवदाभासः -- ५७ | वस्तुयन्त्रणं” । ५२ | ५२ |
| पूर्ब्बरूपः -- ५८ | “अन्यत्र तस्यारोपार्थः पर्य्यस्तापह्नुतिस्तु | “नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखं” |
| स द्विविधः । | सा” । ५३ | ॥ ५३ |
| प्रतिवस्तूपमा -- ५९ | “पर्य्यायो यदि पर्य्यायेणैकस्यानेकसंश्रयः । | “पद्मं मुक्त्वा गता चन्द्रं कामिनीवदनप्रभा ॥ |
| प्रतिषेधः -- ६० | “एकस्मिन् यस्यनेकं वा पर्य्यायः सोऽपि | अधुना पुलिनं तत्र यत्र स्रोतः पुराजनि” ॥ |
| प्रतीपं -- ६१ | सम्मतः” ॥ ५४ | ५४ |
| तल्लक्षणभेदेन पञ्चविधं । न तु | “पर्य्यायोक्तं तु | नमस्तस्मै कृतो येन मुधा राहुबधूकुचौ ॥ |
| नामभेदेन । | गम्यश्चेद्वचोभङ्ग्यान्तराश्रयः । | |

प्रत्यनीकं -- ६२
प्रस्तुताङ्कुरः -- ६३
प्रहर्षणं -- ६४
तत् त्रिविधं ।
प्रौढोक्तिः -- ६५
भाविकं -- ६६
भाषासमावेशः -- ६७

पर्य्यायोक्तं तदप्याहुर्यद्व्याजेनेष्टसाधनं" ॥
५५
"पिहितं परवृत्तान्तज्ञातुः साकूतचेष्टितं" ।
५६
"आपाततो यदर्थ स्य पौनरुक्तावभाषणं ।
पुनरुक्तवदाभासः स भिन्नाकारशब्दगः" ॥
५७
"पुनः स्वगुणसंप्राप्तिः पूर्ब्बरूपमुदाहृतं ।
पूर्ब्बावस्थानुवृत्तिश्च विकृते सति वस्तुनि"
॥ ५८
"वाक्ययोरेकसामान्ये प्रतिवस्तूपमा मता" ।
५९
"प्रतिषेधः प्रसिद्धस्य निषेधस्यानुकीर्त्तनं" ।
६०
"प्रतीपमुपमानस्याप्युपमेयत्वकल्पनं ।
अन्योपमेयलाभेन वर्ण्यस्यानादरश्च तत् ॥
वर्ण्योपमानलाभेन तथान्यस्याप्यनादरः ।
वर्ण्येनान्यस्योपमाया अनिष्पत्तिर्वचश्च तत्
॥
प्रतीपमुपमानस्य कैमर्थ्यमपि मन्वते" । ६१
"प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमः" ।
६२
"प्रस्तुतेनं प्रस्तुतस्य द्योतने प्रस्तुताङ्कुरः"
। ६३
"उत्कण्ठितार्थसंसिद्धिर्व्विना यत्नं प्रहर्षणं ।
वाञ्छितादधिकार्थस्य संसिद्धिश्च प्रहर्षणं ॥
यत्नादुपायसिद्धार्थात् साक्षाल्लाभः फलस्य
तत्" ॥ ६४
"प्रौढोक्तिरुत्कर्षहेतौ तद्धेतुत्वप्रकल्पनं" ।
६५
"भाविकं भूतभाव्यर्थसाक्षात्कारस्य वर्णनं"
। ६६
"शब्दैरेकविधैरेव भाषासु विविधास्वपि ।
वाक्यं यत्र भवेत् सोऽयं भाषासम इतीष्यते"
॥ ६७

यामि चूतलतां द्रष्टुं युवाभ्यामास्यतामिह" ॥
५५
"प्रिये गृहागते प्रातः कान्ता तल्पमकल्पयत्"
॥ ५६
"भुजङ्गकुण्डलीव्यक्तशशिशुभ्रांशुशीतगुः ।
जगन्त्यपि सदा पायादव्याच्चेतोहरः शिवः"
॥ ५७
हरकण्ठांशुलिप्तोऽपि शेषस्त्वकृशशासितः ॥
दीपे निर्व्वापितेऽप्यासीत् काञ्चीरत्नैर्मुहर्मुहुः"
॥ ५८
"तापेन भ्राजते सूर्य्यः शूरश्चापेन राजते" ॥
५९
"न द्यूतमेतत् कितवाक्रीडनं निशितैः शरैः" ॥
६०
"तल्लोचनसमं पद्मं तद्वक्त्रसदृशो विधुः ।
अलं गर्व्वेण ते वक्त्रकान्त्या चन्द्रो भवादृशः ।
कः क्रौर्य्यदर्पस्ते मृत्यो त्वत्तुल्याः सन्ति हि
स्त्रियः ।
मिथ्यावादो हि मुग्धाक्षि त्वन्मुखाभं
किलाम्बुजं ।
दृष्टं चेद्वदनं तस्याः किं पद्मेन किमिन्दना" ॥
६१
"जैत्रनेत्रानुगौ कर्णावुत्पलाभ्यामधःकृतौ" ॥
६२
"किं भृङ्ग सत्यां मालत्यां केतक्या
कण्टकस्थया" ॥ ६३
"तामेव ध्यायते तस्मै विसृष्टा सैव दूतिका ॥
दीपमुद्दीपयेद्यावत्तावदभ्युदितो रविः ॥
निध्यञ्जनौषधीमूलं खनतासादितो निधिः" ॥
६४
"कचाः कलिन्दजातीरतमालस्तोममेचकाः"
॥ ६५
"अहं विलोकयेऽद्यापि युध्यन्तेऽत्र सुरासुराः"
॥ ६६
"गुञ्जन्मणिमञ्जीरे कलगम्भीरे विहारसरसीतीरे
।
विरसासि केलिकीरे किमालि धीरे च
गन्धसार-

:अथालङ्कारनामानि

भेदकातिशयोक्तिः -- ६८
भ्रान्तापह्नुतिः -- ६९
भ्रान्तिमान् -- ७०
मालादीपकं -- ७१
मिथ्याध्यवसितिः -- ७२
मीलितं -- ७३
मुद्रा -- ७४
यथासंख्यं -- ७५
यमकं -- ७६
युक्तिः -- ७७
रत्नावली -- ७८
रूपकं -- ७९
तत् द्विविधं । अभेदरूपकं ।
ताद्रूप्यरूपकञ्च ।
तच्च समन्यूनाधिक्यकथनद्वारा
प्रत्येकं त्रिविधं ।
समाभेदरूपकं । न्यूनाभेदरूपकं ।
अधिकाभेद-
रूपकं । समताद्रूप्यरूपकं ।
न्यूनताद्रूप्यरूपकं ।
अधिकताद्रूप्यरूपकं । एतेन
षड्विधं ।
रूपकातिशोक्तिः -- ८०
ललितं -- ८१
लुप्तोपमा -- ८२
सा चाष्टधा । वाचकलुप्ता ।
धर्म्मलुप्ता । उपमान-
लुप्ता । धर्म्मवाचकलुप्ता ।
वाचकोपमेयलुप्ता ।
वाचकोपमानलुप्ता ।
धर्म्मोपमानलुप्ता । धर्म्मो-
पमानवाचकलुप्ता ।
लेशः -- ८३
लोकोक्तिः -- ८४
वक्रोक्तिः -- ८५
विकल्पः -- ८६

तल्लक्षणानि

“भेदकातिशयोक्तिः स्यात्
तस्यैवान्यत्वकल्पनं” । ६८
“भ्रान्तापह्नुतिरन्यस्य शङ्कायां भ्रान्तिवारणे”
। ६९
“स्यात्
स्मृतिर्भ्रान्तिसन्देहैस्तदङ्कालङ्कृतित्रयं” । ७०
“दीपकैकावलीयोगान्मालादीपकमुच्यते” ।
७१
“किञ्चिन्मिथ्यात्वसिद्ध्यर्थं
मिथ्यार्थान्तरकल्पनं” । ७२
“मीलितं यदि सादृश्याद्भेद एव न दृश्यते” ।
७३
“सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः” ।
७४
“यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः” ।
७५
“सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः ।
क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते” । ७६
“युक्तिः पराभिसन्धानं क्रियया मर्म्मगुप्तये” ।
७७
“क्रमिकाप्रकृतार्थानां न्यासं रत्नावलीं तिदुः”
। ७८
“विषय्यभेदताद्रूप्यरञ्जनं विषयश्च यत्” ।
“रूपकं तत्
त्रिधाधिक्यन्यनत्वानुभयोक्तिभिः” ॥ ७९
“रूपकातिशयोक्तिः स्यात्
निगीर्य्याध्यवसानतः” ।
अस्यार्थः । विषयसम्बन्धेन उल्लेखनं विना
विषयि-
वाचकशब्देन ग्रहणं विषयनिगरणं तत्पूर्ब्बकं
विषयस्य विषयिरूपतया अध्यवसानं
तस्मिन्
सति रूपकातिशयोक्तिः” । ८०
“प्रस्तुते वर्ण्यवाक्यार्थप्रतिविम्बस्य वर्णनं” ।
८१
“वर्ण्योपमानधर्म्माणामुपमावाचकस्य च ।

तदुदाहरणानि

“अन्यदेवास्य गाम्भीर्य्यमन्यद्धैर्य्यञ्च
भूपतेः” ॥ ६८
“तापं करोति सोत्कम्पं ज्वरः किन्नु सखे
स्मरः” ॥ ६९
“अयं प्रमत्तो मधुपस्त्वन्मुखं वेत्ति पङ्कजं”
॥ ७०
“स्मरेण हृदये तस्यास्तेन त्वयि कृता
स्थितिः” ॥ ७१
“मिथ्याध्यवसितिर्व्वेश्यां वशयेत् खस्रजं
वहन्” ॥ ७२
“रसो नालक्षि लाक्षायाश्चरणे सहजारुणे”
॥ ७३
“नितम्बगुर्व्वी तरुणी दृग्युग्मविपुला च सा”
॥ ७४
“शत्रुं मित्रं विपत्तिञ्च जय रञ्जय भञ्जय” ॥
७५
“नवपलाशपलाशवनं
पुरःस्फुटपरागपरागतपङ्कजं ।
मृदुलतान्तलतान्तमलोकयत् स सुरभिं
सुरभिं सु-
मनोभरैः” ॥ ७६
“त्वामालिखन्तिदृष्ट्वान्यां धनुः
पौष्पंकरेऽलिखत्” ॥ ७७
“चतुरास्यः पतिर्लक्ष्म्याः सर्व्वज्ञस्त्वं
महीपते” ॥ ७८
“अयं हि धूर्ज्जटिः साक्षाद्येन दग्धाः पुरः
क्षणात् ।
अयमास्ते विना शम्भुस्तार्त्तीयैकं विलोचनं
॥
शम्भुर्व्विश्वमवत्यद्य स्वीकृत्य समदृष्टितां ।
अस्या मुखेन्दुना लब्धे नेत्रानन्दे किमिन्दुना
॥
साध्वीयमपरा लक्ष्मीरसुधासागरोत्थिता ।
अयं कलङ्किनश्चन्द्रान्मुखचन्द्रोऽतिरिच्यते”
॥ ७९

विकस्वरः -- ८७
विचित्रं -- ८८
विधिः -- ८९
विनोक्तिः -- ९०
लक्षणभेदेन सा द्विविधा ।
विभावना -- ९१
अस्या लक्षणाण्युदाहरणानि च षट्
।
विरोधः -- ९२
स दशधा ।

एकद्वित्र्यनुपादानात् भिन्ना लुप्तोपमाष्टधा" ॥
८२
"लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनं" ।
८३
"लोकप्रवादानुकृतिं लोकोक्तिरिति कथ्यते"
। ८४
"वक्रोक्तिः श्लेषकाकुभ्यामपूर्ब्बार्थप्रकल्पनं"
। ८५
"विरोधे तुल्यबलयोर्व्विकल्पालङ्कृतिर्म्मता" ।
८६
"यस्मिन् विशेषसामान्यविशेषाः स
विकस्वरः" । ८७
"विचित्रं तत्प्रयत्नश्चेत् विपरीतफलेच्छया"
। ८८
"सिद्धस्यैव विधानं यत्तामाहुर्व्विध्यलङ्कृतिं"
। ८९
"विनोक्तिः स्याद्विना किञ्चित् प्रस्तुतं
हीनमुच्यते ।
तच्चेत् किञ्चिद्विना रम्यं विनोक्तिः सापि
कथ्यते" ॥ ९०
"विभावना विनापि स्यात्कारणं कार्य्यजन्म
चेत् ।
हेतूनामसमग्रत्वे कार्य्योत्पत्तिश्च सा मता ॥
कर्य्योत्पत्तिस्तृतीया स्यात् सत्यपि
प्रतिबन्धके ।
अकारणात् कार्य्यजन्म चतुर्था स्याद्विभावना
॥
विरुद्धात् कार्य्यसम्पत्तिर्दृष्टा काचिद्विभावना
।
कार्य्यात् कारणजन्मापि दृष्टा
काचिद्विभावना" ॥ ९१
"जातिश्चतुर्भिर्ज्जात्याद्यैर्गुणो
गुणादिभिस्त्रिभिः ।
क्रियाक्रियाद्रव्याभ्यां यत् द्रव्यं द्रव्येण वा
मिथः ।
विरुद्धमिव भासेत विरोधोऽसौ दशाकृतिः" ॥
९२

पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति सिताः
शराः" ॥ ८०
"ललितं निर्गते नीरे सेतुमेषा चिकीर्षति" ॥
८१
"तडिद्गौरीन्दुतुल्यास्या कर्पूरन्ती
दृशोर्म्मम ।
कान्त्या स्मरवधूयन्ती दृष्टा तन्वी रहो मया
॥
यत् त्वया मेलनं तत्र लाभो मे यश्च तद्रतेः ।
तदेतत् काकतालीयमवितर्क्कितसम्भवं" ॥
८२
"अखिलेषु विहङ्गेषु हन्त स्वच्छन्दचारिषु ।
"शुक पञ्जरबन्धस्ते मधुराणां गिरां फलं" ॥
८३
"सहस्व कतिचिन्मासान्मीलयित्वा
विलोचने" ॥ ८४
"मुञ्च मानं दिनं प्राप्तं नेह नान्दी हरान्तिके"
॥ ८५
"सद्यः शिरांसि चापान् वा नमयन्तु
महीभुजः" ॥ ८६
"स न जिग्ये महान्तो हि दुर्द्धशाः सागरा
इव" ॥ ८७
"नमन्ति सन्तस्त्रैलोक्यादपि लब्धुं
समुन्नतिं" ॥ ८८
"पञ्चमोदञ्चने काले कोकिलः
कोकिलोऽभवत्" ॥ ८९
"विद्या हृद्यापि सा विद्या विना विनयसम्पदं
।
विना खलैर्व्विभात्येषा राजेन्द्र भवतः सभा"
॥ ९०
"अपलाक्षारसासिक्तं रक्तं ते चरणद्वयं ।
अस्त्रैरतीक्ष्णकठिनैर्ज्जगज्जयति मन्मथः ॥
नरेन्द्रानेव ते राजन् दशत्यसिभुजङ्गमः ।
शङ्खाद्वीणानिनादोऽयमुदेति महदद्भुतः ॥
शीताङ्गकिरणास्तन्वीं हन्त सन्तापयन्ति तां
।
यशःपयोराशिरभूत् करकल्पतरोस्तव" ॥
९१

|  |  | “तव विरहे मलयमरुद्दावानलः<br>शशिरुचोऽपि<br>शोषमणिः । हृदयमनिरुतमपि भिन्ते<br>नलिनी-<br>दलमपि निदाघरविरस्याः ॥<br>सन्ततमुषलासङ्गा-<br>द्बहुतरगृहकर्म्मघटनाया नृपते ।<br>द्विजषत्नीनां |
| --- | --- | --- |

:अथालङ्कारनामानि

विरोधामाषः -- ९३

विवृतोक्तिः -- ९४

विशेषः -- ९५

स त्रिविधः ।

विशेषोक्तिः -- ९६

विषमं -- ९७

तत् त्रिविधं ।

विषादनं -- ९८

व्याघातः -- ९९

स द्विविधः ।

व्याजनिन्दा -- १००

व्याजस्तुतिः -- १०१

स द्विविधः ।

व्याजोक्तिः -- १०२

व्यतिरेकः -- १०३

शुद्धापह्नुतिः -- १०४

श्लेषः -- १०५

स च त्रिविधः ।

प्रकृतानेकावषयः १

अप्रकृता-

नेकविषयः २

प्रकृताप्रकृतानेकविषयः ३

।

सदर्थनिदर्शना -- १०६

सन्देहः -- १०७

समं -- १०८

तत् त्रिविधं ।

समाधिः -- १०९

समासोक्तिः -- ११०

समुच्चयः -- १११

स द्विविधः ।

सम्बन्धातिशयोक्तिः --

११२

लक्षणभेदेन सा द्विधा ।

सम्भावनं -- ११३

सहोक्तिः -- ११४

तल्लक्षणानि

“आभाषत्वं विरोधस्य विरोधाभाष इष्यते” । ९३

“विवृतोक्तिः श्लेषगुप्तं कविनाविष्कृतं यदि” । ९४

“विशेषः ख्यातमाधारं विनाप्याधेयवर्णनं ।

विशेषः सोऽपि यद्येकं वस्त्वनेकत्र वर्ण्यते ॥

किञ्चिदारम्भतोऽशक्यवस्त्वन्तरकृतिश्च सः” ।

९५

“कार्य्याजनिर्विशेषोक्तिः सति पुष्कलकारणे” ।

९६

“विषमं वर्ण्यते यत्र घटनाननुरूपयोः ।

विरूपकार्य्यस्योत्पत्तिरपरं विषमं मतं ॥

अनिष्टस्याप्यवाप्तिश्चेत्तदिष्टार्थसमुद्यमात्” । ९७

“इष्यमाणविरुद्धार्थसंप्राप्तिश्च विषादनं” । ९८

“स्याद्व्याघातोऽन्यथाकारि तथाकारि क्रियेत चेत्

।

सौकार्य्येण निबद्धापि क्रियाकार्य्यविरोधिनः” ।

९९

“निन्दाया निन्दया व्यक्तिर्व्याजनिन्देति गोयते” ।

१००

“उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यांस्तुतिनिन्दयोः”

। १०१

“व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपनं” ।

१०२

“व्यतिरेको विशेषश्चेदुपमानोपमेययोः” । १०३

“शुद्धापह्नुतिरन्यस्यारोपार्थो धर्म्मनिह्नवः” । १०४

“नानार्थसंश्रयः श्लेषो वर्ण्यावर्ण्योभयाश्रयः” ।

१०५

“विभावनं समृद्धानां फलं सुहृदनुग्रहः” । १०६

“स्यात् स्मृतिभ्रान्तिसन्देहैस्तदङ्कालङ्कृतित्रयं” ।

१०७

“समं स्याद्वर्णनं यत्र द्वयोरप्यनुरूपयोः ।

सारूप्यमपि कार्य्यस्य कारणेन समं विदुः ।

विना यत्नेन तत्सिद्धिर्यदर्थः कर्त्तुमुद्यमः” । १०८

“समाधिः कार्य्यसौकर्य्यं कारणान्तरसन्निधेः” ।

१०९

“समासोक्तिः परिस्फूर्त्तिः प्रस्तुते प्रस्तुतस्य चेत्”

। ११०

तदुदाहरणानि ।

कठिनाः सति भवति कराः सरोजकुमाराः ॥

अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।

स्व-

पतो जागरूकस्य याथार्थ्यं वेद कस्तव ॥

वल्लभोत्-

सङ्गसङ्गेन विना हरिणचक्षुषः ।

राकाविभावरी-

जानिर्व्विषज्वालाकुलो भवेत् ॥

नयनयुगासेचनकं

मानसवृत्त्यापि दुष्प्रापं । रूपमिदं मदिराक्ष्या

मदयति हृदयं दुनोति च मे” ॥ ९२

“विनापि तन्वि हारेण वक्षोजौ तव हारिणौ” ॥

९३

“वृषापेहि परक्षेत्रादिति वक्ति स सूचनं” ॥

९४

“गते सूर्य्येऽपि द्वीपस्थास्तमश्छिन्दन्ति

तत्कराः ।

अन्तर्वहिः पुरः पश्चात् सर्व्वदिश्यपि सैव मे

॥

त्वां पश्यता मया लब्धं कल्पवृक्षनिरीक्षणं” ॥

९५

“हृदि स्नेहक्षयो नाभूत् स्मरदीपे ज्वलत्यपि”

॥ ९६

“क्वेयं शिरीषमृद्वङ्गी क्व तादृङ्मदनज्वरः ।

कीर्त्तिं प्रसूते धवलां श्यामा तव कृपाणिका ॥

भक्षाशया हि मञ्जूषां दृष्ट्याखुस्तेन भक्षितः”

॥ ९७

“दीपमुद्दीपयेद्यावत्तावन्निर्व्वाण एव सः” ॥

९८

“यैर्जगत् प्रीयते हन्ति तैरेव कुसुमैः स्मरः ।

दया चेद्बाल इति मय्यपरित्यज्य एव ते” ॥

९९

“विधे स निन्द्यो यस्ते प्रागेकमेवाहरच्छिरः”

॥ १००

“कः स्वर्धुनि विवेकस्ते नयसे पापिनो दिवं ॥

साधु दूति पुनः साधु कर्त्तव्यं किमतः परं ।

सामान्यं -- ११५
सारः -- ११६
सूक्ष्मं -- ११७
न्तोकोक्तिः -- ११८
स्वभावोक्तिः -- ११९

"बहूनां युगपद्भाजां भावगुम्फः समुच्चयः ।
अहं प्रथमिकाभाजामेककार्य्यान्वयोऽपि सः" ।
१११
"सम्बन्धातिशयोक्तिः स्यादयोगे योगकल्पनं ।
योगेप्ययोगसम्वन्धातिशयोक्तिरितीर्य्यते" । ११२
"सम्भावनं यदीदं स्यादित्यूहोऽन्यस्य सिद्धये" ।
११३
"सहोक्तिः सहभावश्चेद्भासते जनरञ्जनः" । ११४
"सामान्यं प्रकृतस्यान्यतादात्म्यं सदृशैर्गुणैः" ।
११५
"उत्तरोत्तरमुत्कर्षः सार इत्यभिधीयते" । ११६
"सूक्ष्मं पराशयाभिज्ञे तरसाकूतचेष्टितं" । ११७
"स्तोकोक्तिर्यत्र लोकोक्तेः स्यादर्थान्तरगर्भिता" ।
११८
"स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनं"
। ११९

यन्मदर्थे विलूनासि दन्तैरपि नखैरपि" ॥
१०१
"सखि पश्य गृहारामपरागैरस्मि धूसरा" ॥
१०२
"शैला इवोन्नताः सन्तु किन्तु
प्रकृतिकोमलाः" ॥ १०३
"नायं सुधांशुः किं तर्हि व्योमगङ्गासरोरुहं" ॥
१०४
"सर्व्वतो माधवः पायात् स यो गङ्गामदीधरत्
॥
अब्जेन त्वन्मुखं तुल्यं हरिणा हतशक्तिना ।
उच्चरद्भूरिकोलालः शुशुभे वाहिनीपतिः" ॥
१०५
"उदयन्नेव सविता पद्मेष्वर्पयति त्विषं" ॥
१०६
"पङ्कजं वा सुधांशुर्व्वेत्यस्माकन्तु न निर्णयः"
॥ १०७
"स्वानुरूपं कृतं पद्महारेण कुचमण्डलं ॥
नीचप्रमता लक्ष्मि जलजायास्तवोचिता ॥
युक्तो वारणलाभोऽयं भूपतेर्व्वारणार्थिनः" ॥
१०८
"उत्कण्ठिता च कुलटा जगामास्तञ्च
भानुमान्" ॥ १०९
"अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः"
॥ ११०
"नश्यन्ति पश्चात् पश्यन्ति भ्रश्यन्ति च तव
द्विषः ॥
लं शीलं वयो विद्या धनञ्च मदयत्यमुं" ॥
१११
"सौधाग्राणि पुरस्यास्य स्पृशन्ति विधुमण्डलं
।
त्वयि दातरि राजेन्द्र स्वर्द्रुमान्नाद्रियामहे" ॥
११२
"यदि शेषोऽभवद्वक्ता कथिताः स्युर्गुणास्तव"
॥ ११३
"दिगन्तमगमत्तस्य कीर्त्तिः प्रत्यर्थिभिः सह"
॥ ११४

| | | “मल्लिकाचितधम्मिल्लाश्चारुचन्दनचर्च्चिताः ।<br>अविभाव्याः सुखं यान्ति चन्द्रिका अभिसारिकाः” ॥ ११५<br>“मधुरं मधु पीयूषं तस्मात् तस्मात् कवेर्वचः” ॥ ११६<br>“मयि पश्यति सा केशैः सीमन्तमणिमावृणोत्” ॥ ११७<br>“भुजङ्ग एव जानीते भुजङ्गाचरणं सखे” ॥ ११८<br>“कुरङ्गैरन्तराङ्गाक्षैः स्तब्धकर्णैः समीक्ष्यते” ॥ ११९ |
|---|---|---|

:अथालङ्कारनामानि

स्मतिमान् -- १२०
हेतुः -- १२१
स द्विविधः ।
हेत्वपह्नुतिः -- १२२

**अलङ्क्रिया**, स्त्री, (अलम् + कृ + भावे श ।) भू-
षितकरणं । तत्पर्य्यायः । भूषा २ ।
इत्यमरः ॥

**अलङ्कृतः**, त्रि, (अलम् + कृ + कर्म्मणि क्तः ।) अल-
ङ्कारयुक्तः । तत्पर्य्यायः । भूषितः २
प्रसाधितः ३
परिष्कृतः ४ मण्डितः ५ । इत्यमरः ॥
(“अलङ्कृतं जनाकीर्णं
विविशुर्वारणावतम्” ।
इति महाभारते ।)

**अलञ्जरः**, पुं, (अलम् + जॄ + अच् ।) मृण्मयबहु-
जलधरपात्रं । जाला इति ख्यातः ।
तत्पर्य्यायः ।
अलिञ्जरः २ मणिकं ३ ।
इत्यमरटीकायां भरतः ॥

**अलतिः**, पुं, (अल + बाहुलकात् अतिच् ।) गीत-
विशेषः । इत्युणादिकोषः ॥

**अलन्धूमः**, पुं, (अलमत्यर्थो धूमः ।) धूमसमूहः ।
इति जटाधरः ॥

**अलम्**, व्य, भूषणं । पूर्णता । सामर्थ्यं । निषेधः ।
इत्यमरः ॥ निरर्थकं । इति भरतः ॥

**अलम्बुषः**, पुं, (अलं पुष्णाति, पुष + क, पृषोदरा-

तल्लक्षणानि
“स्यात्
स्मृतिभ्रान्तिसन्देहैस्तदङ्कालङ्कृतित्रयं” ।
१२०
“हेतोहतुमता सार्द्ध वर्णनं हेतुरुच्यते ।
हेतुर्हेतुमतोरैक्यवर्णनं हेतुरुच्यते” । १२१
“शुद्धापह्नुतिरन्यस्यारोपार्थो धर्म्मनिह्नवः ।
स एव युक्तिपूर्ब्बश्चेदुच्यते हेत्वपह्नुतिः” ।
१२२
काञ्जिकेन तु तत्पेयं विडालपदमात्रकं ।
आमवाते प्रवृद्धे च योगोऽयममृतोपमः ॥ * ॥
अपरालम्बुषाद्यं चूर्णं ॥ * ॥ इति च
भावप्रकाशे ॥)

**अलर्कः**, पुं, (अलमर्कतेऽर्च्यते वा, अर्क + अच्, अर्च
+ घञ् वा ।) क्षिप्तकुक्कुरः । (“आलर्कं
विष-
मिव सर्व्वतः प्रसुप्तम्” । इति उत्तरचरिते ।)
श्वेतार्कवृक्षः । शादा आकन्द इति भाषा ।
(अस्य पर्य्यायान्तरं गुणान्तरञ्च यथा --
“अलर्को गुणरूपः स्यान्मन्दारो वसुकोपि
च ।
श्वेतपुष्पः सदापुष्पः सबालार्कः प्रतापसः
॥
रक्तोऽपरोऽर्कनामा स्यादर्कपर्णो विकीरणः
।
रक्तपुष्पः शुक्लफलस्तथास्फोटः
प्रकीर्त्तितः ॥
अर्कद्वयं सरं वातकुष्ठकण्डूविषव्रणान् ।
निहन्ति
प्लीहगुल्मार्शःश्लेष्मोदरशकृत्क्रिमीन् ॥
अलर्ककुसुमं वृष्यं लघुदीपनपाचनं ।
अरोचकप्रसेकार्शःकासश्वासनिवारणम्” ॥
इति भावप्रकाशः ॥

तदुदाहरणानि
“पङ्कजं पश्यतः कान्ता मुखं मे गाहते
मनः” ॥ १२०
“असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवां
॥
लक्ष्मीविलासो विदुषां
कटाक्षावेङ्कटप्रभोः” ॥ १२१
“नेन्दुस्तीव्रो न निश्यर्कः
सिन्धोरौर्व्वोऽयमुत्थितः” ॥ १२२

**अलवालं**, क्ली, (लवमालाति, ला + क, ततो नञ्-
समासः ।) आलवालं । वृक्षमूले
जलधारणार्थ-
कृतालिः । चारमादा इति ख्यातः ।
इत्यमर-
टीकायां भरतादयः ॥

**अलवालकं**, क्ली, (अलवाल एव, अलवाल + स्वार्थे
कन् ।) आलवालं । इति शब्दरत्नावली
॥

**अलसः**, त्रि, (न लसति व्याप्रियते, लस + अच् ।)
आलस्ययुक्तः । आल्स्या इति भाषा ।
तत्पर्य्यायः ।
मन्दः २ तुन्दपरिमृजः ३ आलस्यः ४
शीतकः ५
अनुष्णः ६ । इत्यमरः ॥ शीतलः ७
कुण्ठः ८ मुख-
निरीक्षकः ९ । इति शब्दरत्नावली ॥
(क्रिया-
मन्दः । क्रियाजडः । अवश्यकर्त्तव्येषु
अप्रवृत्ति-
शीलः । “अव्यवसायिनमलसं दैवपरं
साहसाच्च
परिहीनं । प्रमदेव वृद्धपतिं
नेच्छत्युपगृहीतुं

दित्वात् पस्य बः ।) प्रहस्तः । वमनं । राक्षस-
विशेषः ॥ इति मेदिनी ॥ (कुरुक्षेत्रयुद्धे कौरवाणां
सहायः स्वनामख्यातो राक्षसः ।
"सात्यकिश्चापि संक्रुद्धो राक्षसं क्रूरमाहवे ।
अलम्बुषं शरैर्घोरैर्विव्याध बलिनां बली" ॥
इति महाभारते ।)

**अलम्बुषा**, स्त्री, (अलं पुष्णाति, पुष + क, पस्य बः,
ततः स्त्रियां टाप् ।) मुण्डीरी ।
स्वर्गवेश्याभेदः ।
इति मेदिनी ॥
("अलम्बुषा मिश्रकेशी पुण्डरीका तिलोत्तमा ।
सुरूपा लक्षणा क्षेमा तथा रम्भा मनोरमा" ॥
इति महाभारते ।)
अन्यप्रवेशवारणार्थदत्तरे-
खादिः ॥ लज्जालुभेदः । तत्पर्य्यायः । खरत्वक् २
मेदः ३ गला ४ । अस्या गुणाः । लघुत्वं । स्वादुत्वं ।
कृमिपित्तकफनाशित्वञ्च । इति राजनिर्घण्टः ॥
(भावप्राकाशश्च ॥
"अलम्बुषा गोक्षुरकं त्रिफला नागरा मृताः ।
यथोत्तरं भागवृद्ध्या श्यामाचूर्णन्तु तत्समं ॥
पिवेन्मस्तुसुरातक्रकाञ्जिकोष्णोदकेन वा ।
पीतं जयत्यामवातं सशोथं वातशोणितं ॥
त्रिकजानूरुसन्धिस्थं ज्वरारोचकनाशनं ।
"दुष्टकर्द्दमसंस्पर्शाः
कण्डूक्लेदान्वितान्तराः" ।
अङ्गुल्योऽलस मित्याहुः ॥ इति वाभटः ॥)
तत्पर्य्यायः । प्रतापसः २ राजार्कः ३ गणरूपी ४ ।
इति रत्नमालामरौ ॥
शूकराकाराष्टपादतीक्ष्ण-
दन्तसूच्याकृतिलोमजन्तुविशेषः । दंशनामासुरो
भृगुशापात् अयं जन्तुर्भूत्वा कर्णस्योरुं भित्त्वा
परशुरामदृष्टिपातात् शापमुक्तः पूर्ब्बरूपो बभूव ।
इति महाभारते राजधर्म्मे ॥
("ददर्श रामस्तं चापि कृमिं शूकरसन्निभं ।
अष्टपादं तीक्ष्णदंष्ट्रं सूचीभिरिव संवृतं ॥
रोमभिः संनिरुद्धाङ्गमलर्कं नाम नामतः ।
सोऽब्रवीदहमासं प्राग्दंशो नाम महासुरः ।
पुरा देवयुगे तात ! भृगोस्तुल्यवया इव ।
सोऽहं भृगोः सुदयितां भार्य्यामपहरं बलात् ॥
महर्षेरभिशापेन कृमिभूतोऽपतं भुवि" ।
स्वनामख्यातो नृपतिः ।
"शैव्यः शेनकपोतीये स्वमांसं पक्षिणे ददौ ।
अलर्कश्चक्षुषी दत्वा जगाम गतिमुत्तमाम्" ॥
इति रामायणे । स्वनामख्यातः काशिराजः, स हि
वत्सराजस्य पुत्त्रः सन्नतेश्च पिता, यथा हरिवंशे, --
"वत्सपुत्त्रस्त्वलर्कस्तु सन्नतिस्तस्य चात्मजः ।
अलर्कः काशिराजस्तु ब्रह्मण्यः सत्यसङ्गरः ॥
षष्टिं वर्षसहस्राणि षष्टिं वर्षशतानि च ।
तस्यासीत् सुमहद्राज्यं रूपयौवनशालिनः" ।)
लक्ष्मीः" । इति हितोपदेशे ।)

**अलसः**, पुं, (लस + अच्, ततो नञ्समासः ।) वृक्ष-
विशेषः । पादरोगभेदः । इति मेदिनी ॥ पाँकुइ
इति भाषा । तस्य निदानरूपे ।
"क्लिन्नाङ्गल्यन्तरौ पादौ कण्डूदाहरुजान्वितौ ।
दुष्टकर्द्दमसंस्पर्शादलसं तं विभावयेत्" ॥
अलसं कादई इति लोके । अथ तस्य चिकित्सा ।
"पादौ सित्कारनालेन लेपनं त्वलसे हितं ।
पटोलकुनटीनिम्बरोचनामरिचैस्तिलैः ॥
क्षुद्रास्वरससिद्धेन कटुतैलेन लेपयेत् ।
ततः कासीसकुनटीतिलचूर्णैर्व्विचूर्णयेत्" ॥
अवधूलयेत् ।
"करञ्जवीजं रजनी कासीसं पद्मकं मधु ।
रोचना हरितालञ्च लेपोऽयमलसे हितः" ॥
इति भावप्रकाशः ॥ ("दुष्टकर्द्दमसंस्पर्शाः कण्डू-
क्लेदान्वितान्तराः ।
अङ्गुल्योऽलसमित्याहुः" ॥
इति वाभटः ॥)

**अलसकः**, पुं, (न लस्यति अनेन, लस + करणे वुन् ।)
उदररोगविशेषः । इति माधवकरः ॥ तस्य रूपं
"कुक्षिरानह्यतेऽत्यर्थं प्रताम्येत् परिकूजति ।
निरुद्धो मारुतश्चैव कुक्षावुपरि धावति ॥
वातवर्च्चोनिरोधाश्च यस्यात्यर्थं भवेदपि ।
तस्यालसकमाचष्टे तृष्णोद्गारौ तु यस्य च" ॥
तन्त्रान्तरे ।

पथ्याक्षधात्र्यस्त्रिफला भागवृद्ध्यावयं क्रमः" ॥ * ॥

अलम्बुषाद्यं चूर्णम् ॥ * ॥ इति वैद्यकचक्रपाणि-संग्रहः ॥

"अलम्बुषा गोक्षुरकं मूलं वरुणकस्य च ।

गुडूची नागरञ्चेति समभागानि कारयेत् ॥

**अलले**, व्य, पिशाचभाषायां सम्बोधनं । तत्पर्य्यायः ।

अले २ अलेले ३ । इति शब्दरत्नावली ॥

"प्रयाति नोर्द्ध्वं नाधस्तादाहारो न च पच्यते ।

आमाशयेऽलसीभूतस्तेन सोऽलसकः स्मृतः" ॥

अस्य लक्षणं चिकित्सा च अजीर्णशब्दे द्रष्टव्या ॥

(अलसकमुपदेक्ष्यामः ।

दुर्ब्बलस्याल्पाग्नेर्बहुश्लेष्मणो वातमूत्रपुरीषवेगविधारिणः स्थिरगुरुबहुरूक्ष

:शीतशुष्कान्नसेविनस्तदन्नपानमनिलप्रपीडितं श्ले-
ष्मणा च विबद्धमार्गमतिमात्रप्रलीनमलसत्वान्न
वहिर्मुखी भवति । ततश्छर्द्यतीसारवर्ज्यान्याम-
प्रदोषलिङ्गान्यभिदर्शयति अतिमात्राणि । अति-
मात्रप्रदुष्टाश्च दोषाः प्रदुष्टामबद्धमार्गास्तिर्य्यगा-
गच्छन्तः कदाचित् केवलमेवास्य शरीरं दण्डवत्
स्तम्भयन्ति । ततस्तमलसकमसाध्यं ब्रुवते ।
विरुद्धाध्यशनाजीर्णाशनशीलिनः पुनरेव दोष-
मामविषमित्याचक्षते भिषजो विषसदृशलिङ्ग-
त्वात् । तत्परमसाध्यमाशुकारित्वात् विरुद्धोप-
क्रमत्वाच्चेति । तत्र साध्यमामं प्रदुष्टमलसीभूत-
मुल्लेखयेत् । पाययित्वा सलवणमुष्णवारि । ततः
स्वेदनवर्त्तिप्रणिधानाभ्यामुपाचरेदुपवासयेच्चैनम्
।
इति चरकः ॥)

**अलसा**, स्त्री, (लस + अच्, ततो नञ्समासः,
स्त्रियां टाप् ।) हंसपदीलता । इति मेदिनी ॥
हंसपदीशब्देऽस्य गुणादयो ज्ञेयाः ॥

**अलसेक्षणा**, स्त्री, (अलसे ईक्षणे यस्याः सा ।) स्त्री-
विशेषः । सा अलसदृष्टियुक्ता । इति हेमचन्द्रः ॥

**अलक्षणं**, क्ली, (लक्षणमनुमापकं सुचिह्नं, विरोधे
नञ्, नञसमासः ।) दुर्लक्षणं । मन्दचिह्नं ।
("आचारात् धनमक्षय्यमाचारो हन्त्यलक्षणम्" ।
इति मनुः ।) तद्विशिष्टे त्रि ॥

**अलक्ष्मीः**, स्त्री, (न लक्ष्मी, नञत्र विरोधे ।) नरक-
देवता । तत्पर्य्यायः । निरृतिः २ । इत्यमरः ॥
कालकर्णी ३ । इति शब्दरत्नावली ॥ काल-
कर्णिका ४ । इति जटाधरः ॥ ज्येष्ठादेवी ५
इति पाद्मोत्तरखण्डं ॥ तस्या विवरणं ज्येष्ठाशब्दे
द्रष्टव्यं ॥ * ॥ दीपान्वितामावास्यायां तस्याः
पूजा-
विधिर्यथा । तत्र प्रदोषे आदौ आचारादलक्ष्मी-
पूजनं । इत्याचार्य्यचूडामणिप्रभृतयः ॥ गोमय-
पुत्तलिकां निर्माय वामहस्तेन कृष्णपुष्पं गृहीत्वा
तावन्नगरनारीभिः शूर्पडिण्डिमवादनैः
॥
निष्काश्यते प्रहृष्टाभिरलक्ष्मीः
स्वगृहाङ्गनात्" ॥
इति निर्णयसिन्धौ
मदनरत्नधृतभविष्यपुराणं ॥

**अलातं**, क्ली, (ला + क्त, नञ्समासः ।)
अङ्गारः ।
इत्यमरः ॥ (अर्द्धदग्धकाष्ठः ।
"कुरुतेऽस्मिन्नमोघेऽपि
निर्व्वाणालातलाघवम्" ।
इति कुमारसम्भवे ।)

**अलावुः**, पुं, स्त्री, (न लम्बते, न + लवि
ऊर्णित् नलो-
पश्च वृद्धिः ।) लताविशेषः तत्फलञ्च
। लाउ इति
ख्याता । तत्पर्य्यायः । तुम्बः २
तुम्बकः ३ तुम्बा ४
तुम्बी ५ पिण्डफला ६ महाफला ७
आलावुः ८
एलावुः ९ लावुः १० लावुका ११ ।
इत्यमरः
तट्टीका च ॥ तुम्बिका १२ तुम्बिः १३
अलावुः १४ ।
इति शब्दरत्नावली ॥ अस्या गुणाः ।
"अलावुः कथिता तुम्बी द्विधा दीर्घा च
वर्त्तुला
मिष्टं तुम्बीफलं हृद्यं पित्तश्लेष्मापहं
गुरु ॥
वृष्यं रुचिकरं प्रोक्तं धातुपुष्टिविवर्द्धनं"
।
इति भावप्रकाशः ॥ भेदकत्वं
कफकारित्वं । गुरु-
पाकित्वं । हिमत्वं । पित्तनाशित्वञ्च ।
तन्नाडी-
साधुः ।)
मृदादिनिर्म्मितजलाधारविशेषः ।
जाला
इति ख्यातः । इत्यमरः ॥
("उदकान्तमुपनीय मत्स्यं वैवस्वतो
मनुः ।
अलिञ्जरे प्राक्षिपत्तं
चन्द्रांशुसदृशप्रभं" ॥
इति महाभारते ।)

**अलिदूर्व्वा**, स्त्री, (अलिरिवाकारेण दूर्व्वा ।)
माला-
दूर्व्वा । इति राजनिर्घण्टः ॥

**अलिन्दः**, पुं, (अलते भूष्यते, अल +
कर्म्मणि
बाहुलकात् किन्दच् ।)
वहिर्द्वारसंलग्नचतुरस्र-
कृत्रिमभूमिः । तत्पर्य्यायः । प्रघाणः
२ प्रघणः ३
वहिर्द्वारप्रकोष्ठः ४ आलिन्दः ५ ।
इत्यमरः ॥ गृह-
द्वारपिण्डकः । अलिन्दः नाम्नीति
अलञ् इन्द
ह्रस्वादिः । यस्यामलिन्देंषु न
चक्रुरेवेति माघः ।
स्वार्थे ष्णे आलिन्दो दीर्घादिरपि ।
"गृहैकदेशे आलिन्दः
प्रघाणःप्रघणस्तथा" ।
इत्यमरदत्तः । अथ पिण्डक आलिन्द
इति हड्डः ।
इह तूभयमेव श्लेषादिति साज्झः ।
इत्यमरटीकायां भरतः ॥ * ॥
अन्यच्च ।
"प्रघाणप्रघणालिन्दा
द्वारवाह्यप्रकोष्ठके ।
गृहाभ्यन्तरशय्यार्थपिण्डिकायामपि
त्रयं ॥

ध्यायेत् ।
"अलक्ष्मीं कृष्णवर्णां द्विभुजां कृष्णवस्त्रपरीधानां
लौहाभरणभूषितां शर्कराचन्दनचर्च्चितां गृह-
सम्मार्ज्जनीहस्तां गर्दभारूढां कलहप्रियां" ।
इति
ध्यात्वा विमुखेन "ॐ अलक्ष्म्यै नमः" इत्यनेन
निर्म्माल्येन कृष्णपुष्पेण संपूज्य प्रणमेत् ।
"(ॐ)अलक्ष्मीस्त्वं कुरूपासि
कुत्सितस्थानवासिनी ।
सुखरात्रौ मया दत्तां गृह्ण पूजाञ्च शाश्वतीं ॥
दारिद्र्यकलहप्रिये देवि ! त्वं धननाशिनी ।
याहि शत्रोर्गृहे नित्यं स्थिरा तत्र भविष्यसि ॥
यदि त्वं मे महाभागे प्रीता भवसि सर्व्वदा ।
पुत्त्रबन्धुकलत्रेषु कदाचिन्नागमिष्यसि ॥
गच्छ त्वं मन्दिरं शत्रोर्गृहीत्वा चाशुभं मम ।
मदाश्रयं परित्यज्य स्थिरा तत्र भविष्यसि" ॥
ततः शूर्पवाद्येन सीमान्ते तां विसृजेत् ।
इति कृत्यचन्द्रिका ॥ * ॥ किञ्च, --
"एवं गते निशीथे तु नारी च स्वगृहाङ्गनात् ।
अलक्ष्मीश्च वहिष्कार्य्या अमन्त्रञ्च यथाविधि" ॥
इति कृत्यतत्त्वार्णवधृतब्रह्मपुराणं ॥ * ॥
"एवं गते निशीथे तु जने निद्रार्द्धलोचने ।

गुणाः । गुरुत्वं । मधुरत्वं ॥
मलभेदकत्वं । वात-
श्लेष्मकारित्वं । रूक्षत्वं । शीतलत्वं ।
पित्त-
नाशित्वञ्च । इति राजवल्लभः ॥
("वर्च्चोभेदीन्यलावूनि
रूक्षशीतगुरूणि च" ।
इति चरकश्च ।
"अलावुर्भिन्नविट्का तु
रूक्षागुर्व्यतिशीतलां" ।
इति च सुश्रुतः ॥)

**अलारं**, क्ली, (अराद्यते, ऋ + यङ्लुक् + अच् रस्य
लः ।) कवाटं । इति शब्दरत्नावली ॥

**अलिः**, पुं, स्त्री, (अलति दंशे समर्थो भवति यः, सः,
अल + इन् ।) भ्रमरः ।
("अलिपङ्क्तिरनेकशस्त्वया,
गुणकृत्ये धनुषो नियोजिता" ।
इति कुमारसम्भवे ।
"अनुगतमलिवृन्दैर्गण्डभित्तीर्विहाय" ।
इति रघुवंशे ।) वृश्चिकः । इत्यमरः ॥
काकः ।
कोकिलः । इति शब्दरत्नावली ॥
मदिरा । इति
मेदिनी ॥ (वृश्चिकराशिः ।)

**अलिकं**, क्ली, (अल्यते भूष्यते, अल + कर्म्मणि
इकन् ।) ललाटं । इत्यमरः ॥

**अलिकुलसङ्कुलः**, पुं, (अलिकुलेन सङ्कुलः व्याप्तः,
तृतीयातत्पुरुषः ।) कुब्जकवृक्षः ।
इति राज-
निर्घण्टः ॥

**अलिगर्द्धः**, पुं, (अलिरिव वृश्चिक इव गृध्नोति, गृध्

आलिन्दः स्यादलिन्दोऽपि
स्यादलिन्दक इत्यपि" ।
इति शब्दरत्नावली ॥
("शुकाङ्गनीलोपलनिर्म्मितानां
लिप्तेषु भासा गृहदेहलोनां ।
यस्यामलिन्देषु न चक्रुरेव
मुग्धाङ्गना गोमयगोमुखानि ॥"
इति माघः ।)

**अलिपकः**, पुं, स्त्री, (कुत्सितवर्णेन लिप्यते, लिप +
बाहुलकात् कर्म्मणि वुन् ।) भ्रमरः ।
कोकिलः ।
कुक्कुरः । इति मेदिनी ॥ (वृश्चिकः
।)

**अलिपत्रिका**, स्त्री, (अलिर्वृश्चिक इव पत्रमस्याः,
कपि अत इत्त्वम् ।) वृश्चिकाख्यक्षुपः
। इति
राजनिर्घण्टः ॥

**अलिपर्णी**, स्त्री, (अलिरिव पर्णमस्याः, ङीप् ।)
वृश्चिकालीवृक्षः । इति राजनिर्घण्टः
॥

**अलिप्रियं**, क्ली, (अलीनां प्रियं षष्ठीतत्पुरुषः ।)
रक्तोत्पलं । रक्तपद्मं । इति
त्रिकाण्डशेषः ॥

**अलिप्रिया**, स्त्री, (अलीनां प्रिया, षष्ठीतत्पुरुषः ।)
पाटलावृक्षः । इति रत्नमाला ॥

**अलिमकः**, पुं, (अलिरिव मक्कते, मक्क + अच्,
पृषोदरादित्वात्कलोपः ।) भेकः ।
कोकिलः ।
भ्रमरः । पद्मकेशरः । मधूकवृक्षः ।
इति मेदिनी ॥

+ अच् ।) जलसर्पः । आलाध इति ख्यातः ।

इति शब्दरत्नावली ॥

**अलिजिह्वा**, स्त्री, (अलिरिव क्षुद्रा जिह्वा, ।) जिह्वो-

परि क्षुद्रजिह्वा । आलजिव इति ख्याता । इति शब्दरत्नावली ॥

**अलिजिह्विका**, स्त्री, (अलिजिह्वा एव स्वार्थे कन्;

टाप् ।) अलिजिह्वा । इति शब्दरत्नावली ॥

**अलिञ्जरः**, पुं, (अल + इन, अलिं सामर्थ्यं जरयति

जृणाति वा, अलि + जृ + अच्, पृषोदरादित्वात्

**अलिमोदा**, स्त्री, (अलीन् मोदयति मुद् + णिच्

+ अच् ।) गणिकारीवृक्षः । इति राजनिर्घण्टः ॥

**अलिम्बकः**, पुं, (न + लिपि + वुन्) पद्मकेशरः ।

भेकः । भ्रमरः । कोकिलः । इति शब्दरत्नावली ॥

(कुक्कुरः । मधूकवृक्षः ।)

**अलिवाहिनी**, स्त्री, (अलिं वाहयति गन्धेन, वह

+ णिच् + णिनि + ङीप् ।) केविकापुष्पं । इति राजनिर्घण्टः ॥

**अली**, [न्] पुं, (अलं वृश्चिकपुच्छस्थकण्टकं विद्य-

तेऽस्य इनि ।) भ्रमरः ।

:(“मलिनिमालिनि माधवयोषिताम्” ।

इति माघः ।) वृश्चिकः । इति मेदिनी ॥

**अलीकं**, क्ली, (अल + ईकन् ।) अप्रियं । (“तद्यथा

स महाराजो नालीकमधिगच्छति” । इति
रामायणे ।) मिथ्या । इत्यमरः ॥ (“ज्ञातेऽलीकनि-
मीलिते नयनयोः” । इति अमरुशतके ।) स्वर्गः ।
इति मेदिनी ॥ ललाटं । इति हेमचन्द्रः ॥

**अलीकं**, त्रि, (अल + ईकन् ।) मिथ्या । अप्रियं ।

अल्पं । इति शब्दरत्नावली ॥

**अलीकमत्स्यः**, पुं, अङ्गारखिन्नतिलतैलभृष्टमासपिष्टं ।

तत्र प्रमाणं राजनिर्घण्टे यथा ।
“माषपिष्टिकया लिङ्ग्यनागवल्लीदलैर्महत् ।
तत्तु संस्वेदयेद्युक्त्या स्थाल्यामङ्गारकोपरि ॥
ततो निष्काशितं खण्ड्यं तिलतैलेन भर्ज्जयेत् ।
अलीकमत्स्य उक्तोऽयं प्रकारः पाकपण्डितैः ॥
तं वृन्ताकभटित्रेण वास्तूकेन च भक्षयेत् ॥”

**अलुः**, स्त्री, (अल + उन् ।) आलुः । क्षुद्रकलसी ।

इत्यमरटीकायां रमानाथः ॥

**अलुब्धः**, त्रि, (लुभ + क्तः, नञ्समासः ।) लोभ-

रहितः । यथा मनुः ।

**अल्पं**, त्रि, (अल् + प् ।) किञ्चित् । तत्पर्य्यायः । ईषत्

२ मनाक् ३ स्तोकं ४ ।
(“अल्पोऽप्येवं महान् वापि विक्रयस्तावदेव सः” ।
इति मनुः ।) खुल्लकं ५ श्लक्ष्णं ६ दभ्रं ७ कृशं ८
तनुः ९ तनूः १० त्रुटिः ११ त्रुटी १२ मात्रा १३
लवः १४ लेशः १५ कणः १६ कणी १७ कणिका
१८ अणुः १९ सूक्ष्मं २० । इत्यमरः ॥ क्षुल्लं २१
क्षुल्लकं २२ खुल्लं २३ कणा २४ । इति शब्दरत्नावली ।
(अतिसामान्यः ।
“अल्पस्य हेतोर्बहु हातुमिच्छन्
विचारमूढः प्रतिभासि मे त्वम्” ।
इति रघुवंशे । संक्षिप्तं । अदीर्घं ।
“अनन्तपारं किल शब्दशास्त्रं,
स्वल्पं तथायुर्बहवश्च विघ्नाः” ।
इति पञ्चतन्त्रम् ।)

**अल्पकः**, पुं, (अल्प एव, अल्प + स्वाथ कन् ।)

यवासवृक्षः । इति राजनिर्घण्टः ॥ अस्य गुणाः ॥
“यासः स्वादुः सरस्तिक्तस्तुवरः शीतलो लघुः ।
कफमेदोमदभ्रान्तिपित्तासृक्कुष्ठकासजित् ॥
तृष्णाविसर्पवातास्रवमिज्वरहरः स्मृतः ।
यवासस्य गुणैस्तुल्या बुधैरुक्ता दुरालभा” ॥
इति भावप्रकाशः ।) (स्वल्पपरिमितः । किञ्चित् ।
“यदावगच्छेदायत्यामाधिक्यं ध्रुवमात्मनः ।
तदात्वे चाल्पिकां पीडां तदा सन्धिं समाश्रयेत्” ॥
इति मनुः ।)

**अल्पकेशी**, स्त्री, (अल्पः केशैव पत्रमस्याः सा ।)

**अल्पिष्ठः**, त्रि, (अतिशयेन अल्पः, अल्प + इष्ठन् ।

अत्यल्पं । इत्यमरः ॥

**अल्पीयः**, [स्] (अतिशयेन अल्पः, अल्प ईयसुन् ।) अत्यल्पं । इत्यमरः ॥

**अल्लः**, पुं, (अल् + क ।) परमेश्वरः ।

एतन्नाम्ना यवना उपासन्ते । यथा ।
“ॐ अस्मल्लां
इल्ले मित्रावरुणो दिव्यानि धत्ते । इलल्ले वरुणो
राजा पुनर्ददुः । हयामि मित्रो इल्लां इल्लल्लेति
इल्लाल्लां वरुणो मित्रो तेजकामाः । होवारमिन्द्रो
होतारमिन्द्रो माहासुरिन्द्राः । अल्लो ज्येष्ठं श्रेष्ठं
परमं पूर्णं ब्रह्माणमल्लां अल्लोरसुर महमदरकं
वरस्य अल्लो अल्लां आदल्लावुकमेककं । अल्लां
वुकं । निखातकं । अल्लो यज्ञेन हुतहुत्वः
अल्ला सूर्य्यचन्द्रसर्व्वनक्षत्राः अल्लो ऋषीणां स-
दिव्या इन्द्राय पूर्ब्बं मायापरमन्त अन्तरिक्षाः ।
अल्लो पृथिव्या अन्तरिक्षं विश्वरूपं दिव्यानि धत्ते
इल्लल्ले वरुणो राजा पुनर्ददुः । इल्लाकवर इल्ला-
कवर इल्लल्लेति इल्लाल्लाः इल्ला इल्लल्ला अनादि-
स्वरूपा अथर्व्वणी शाखां हूँ ह्रीँ जनान् पशून्
सिद्धान् जलचरान् अदृष्टं कुरु कुरु फट् । असुर-

"एकोऽप्यलुब्धः साक्षी स्यात् बह्व्यः शुच्योऽपि न
स्त्रियः । स्त्रीबुद्धेरस्थिरत्वात्तु दोषैश्चान्येऽपि ये
वृताः" ॥
"एकोऽलुब्धस्तु साक्षी स्यादिति कुल्लूकभट्टधृत-
पाठः ।" इति व्यवहारतत्त्वं ॥
("अलुब्धैः स्निग्धैः प्रबुद्धैश्चामात्यैः परिवृतः" ।
इति कादम्बरी ।)

**अले**, व्य, पिशाचभाषया सम्बोधनं । इति शब्द-
रत्नावली ॥

**अलेले**, व्य, पिशाचभाषया सम्बोधनं । इति शब्द-
रत्नावली ॥

**अलोभः**, पुं, (न लोभः, अभावे नञ् ।) लोभाभावः ।
यथा, --
"इज्याध्ययनदानानि तपः सत्यं धृतिः क्षमा ।
अलोभ इति मार्गोऽयं धर्म्मश्चाष्टविधः स्मृतः" ॥
इति महाभारतं ॥

**अलोभी**, [न्] त्रि, (लोभोऽस्त्यस्य इति लोभी, न
लोभी इति नञ्समासः ।) लोभशून्यव्यक्तिः ।
नास्ति लोभो यस्य इति बहुब्रीहिसमासादिन्-
प्रत्ययनिष्पन्नः ॥

**अलोहितं**, क्ली, (न लोहितं, नास्ति लोहितं यस्मात्
इति वा ।) रक्तपद्मं । इति रत्नमाला ॥

**अलौकिकः**, त्रि, (लोके विदितः, लोक + ठक्
भूतकेशीवृक्षः । इति रत्नमाला ॥

**अल्पगन्धं**, क्ली (अल्पो गन्धो यस्य तत् ।) रक्तकैरवं ।
इति रत्नमाला ॥

**अल्पतनुः**, त्रि, (अल्पा क्षुद्रापरिमाणा तनुर्यस्य ।)
खर्व्वः । दुर्ब्बलः । अल्पास्थियुक्तः । क्षुद्रदेहवान्
तत्पर्य्यायः । पृश्निः २ । इत्यमरः ॥

**अल्पपत्रः**, पुं, (अल्पं पत्रं यस्य सः ।) क्षुद्रपत्रतुलसी ।
इति रत्नमाला ॥

**अल्पपद्मं**, क्ली, (अल्पमसम्पूर्णं पद्मं ।) रक्तपद्मं । इति
रत्नमाला ॥

**अल्पप्रमाणकः**, पुं, (अल्पं प्रमाणमस्य, वा कन् ।)
चेलानं । इति रत्नमाला ॥ चेलो चेला तरमूज
इति ख्यातः । खरमूज इति केचित् ।

**अल्पमारिषः**, पुं, (अल्पः क्षुद्रः मारिषः नटिया इति
ख्यातः शाकः, कर्म्मधारयः ।) शाकविशेषः ।
क्षुद्रनटिया इति ख्यातः । तत्पर्य्यायः
तण्डुलीयः २ ।
इत्यमरः ॥ (तण्डुलीयशब्देऽस्य गुणा ज्ञेयाः ।)

**अल्पसरः**, [स्] क्ली, (अल्पं क्षुद्रं सरः, कर्म्मधारयः ।)
क्षुद्रसरोवरः । डोवा गेडे इति भाषा । तत्-
य्यर्यायः । वेशन्तः २ पल्वलं ३ । इत्यमरः ॥

**अल्पायुः**, [स्] पुं, (अल्पं संक्षिप्तं आयुर्जीवनकालो
यस्य सः ।) छागः । इति त्रिकाण्डशेषः ॥ अचि-
रजीविते त्रि ॥ (अदीर्घजीवी ।
"दुराचारो हि पुरुषो लोके भवति निन्दितः ।
दुःखभागी च सततं व्याधितोऽल्पायुरेव च" ।
इति मनुः ।)

संहारिणीं हुँ अल्लो रसुरमहमदरकं वरस्य
अल्लो अल्लां इल्लल्लेति इल्लल्लः" ।
इत्याथर्व्वणसूक्तं ।

**अल्ला**, स्त्री, (अल + क, स्त्रियां टाप् ।) परमेश्वरः ।
एतन्नाम्ना यवना उपासन्ते । यथा ।
"ॐ अस्मल्लां
इल्ले मित्रावरुणो दिव्यानि धत्ते । इलल्ले वरुणो
राजा पुनर्द्ददुः । हयामि मित्रो इल्लां इल्लल्लेति
इल्लाल्लां वरुणो मित्रो तेजकामाः । होवारमिन्द्रो
होतारमिन्द्रो माहासुरिन्द्राः । अल्लो ज्येष्ठं श्रेष्ठं
परमं पूर्णं ब्रह्माणमल्लां अल्लोरसुर महमदरकं
वरस्य अल्लो अल्लां आदल्लावुकमेककं । अल्लां
वुकं । निखातकं । अल्लो यज्ञेन हुतहुत्वः
अल्ला सूर्य्यचन्द्रसर्व्वनक्षत्राः अल्लो ऋषीणां स-
दिव्या इन्द्राय पूर्ब्बं मायापरमन्त अन्तरिक्षाः ।
अल्लो पृथिव्या अन्तरिक्षं विश्वरूपं दिव्यानि धत्ते
इल्लल्ले वरुणो राजा पुनर्द्ददुः । इल्लाकवर इल्ला-
कवर इल्लल्लेति इल्लाल्लाः इल्ला इल्लल्ला अनादि-
स्वरूपा अथर्व्वणी शाखां हूँ ह्रीँ जनान् पशून्
सिद्धान् जलचरान् अदृष्टं कुरु कुरु फट् । असुर-
संहारिणीं हुँ अल्लो रसुरमहमदरकं वरस्य

ततोनञ्समासः ।)
लौकिकप्रत्यक्षाविषयः । अमा,
मुषिकः । लोकातीतः । यथा, --
“अलौकिकत्वादमरः स्वकोषे
न यानि नामानि समुल्लिलेख ।
विलोक्य तैरप्यधुना प्रचार-
मयं प्रयत्नः पुरुषोत्तमस्य” ॥
इति त्रिकाण्डशेषद्वितीयश्लोकः ॥
(“उपसंहर
विश्वात्मन्नदोरूपमलौकिकम्” ।
इति भागवतपुराणम् ।)

अल्लो अल्लां इल्लल्लेति इल्लल्लः” ।
इत्याथर्व्वणसूक्तं ।

**अल्ला**, स्त्री, (अल्यते इत्यल्, क्विप्, अलें भूषायै
लाति गृह्णाति, ला + क ।) नाट्योक्तौ
माता ।
इति वोपदेवः ॥ (अथर्व्ववेदे
अल्लाल्लेत्यादि-
ख्यातो यवनोपास्यः परमेश्वरः ।)

**अव** रक्षणे । (यथाययथं सकं-अकं-च, भ्वादिं-
परं-सेट् ।) गतौ । कान्तौ ।
स्पृहायामिति
यावत् । प्रीतौ । तृप्तौ । द्युतौ ।
शोभायामिति
यावत् । श्रुतौ । आकर्णने इति यावत् ।
प्राप्तौ ।
श्लेषे । आलिङ्गने इति यावत् । अर्थने
। याच्ञा-
यामिति यावत् । वेशे । प्रवेशे इति
यावत् ।
भावे । सत्तायामिति यावत् । वृद्धौ । ग्रहे
।
आदाने इति यावत् । बधे । सामर्थ्ये ।
अवगमे ।
कृतौ । करणे इति यावत् । कामे ।
इच्छोत्पादने
इति यावत् । (इति
वोपदेवीयकविकल्पद्रुमः
तट्टीका च ॥) “अव रक्षे गतौ कान्तौ
प्रीतौ तृप्तौ
द्युतौ स्तुतौ । प्राप्तौ श्लेषेऽर्थने वेशे भागे
वृद्धौ
गृहे बधे । सामर्थ्येऽवगमे कामे धृतौ” ।
ऊन-
विंशतिरर्थाः । कान्तिरिच्छा । द्युतिः
शोभा ।

| | | काम इति<br>ञ्यन्ताद्व्युत्पत्तेरिच्छोत्पादाना इति<br>भेदः । श्लेष आलिङ्गनं । सामर्थ्यं<br>शक्तिः । रक्षणे<br>प्रसिद्धोऽयं । प्रीतौ तु । “न मामवति<br>सद्वीपा<br>रत्नसूरपि मेदिनी” । इति रघुः ॥<br>अन्यत्र विरल-<br>प्रयोगः । केचित्तु स्तुति-भाग-गृह-काम-<br>धृतीर्न<br>पठित्वा क्रिया-श्रवण-दहन-भावानाहुः<br>। अवति ।<br>इति दुर्गादासः ॥<br>**अव**, व्य, (अव + अच् ।) उपसर्गविशेषः । अस्यार्थः ।<br>निश्चयः । असाकल्यं । अनादरः ।<br>इति दुर्गादासः ॥<br>आलम्बनं । विज्ञापनं । व्यापनं । शुद्धिः<br>। अल्पं ।<br>परिभवः । नियोगः । पालनं । इति<br>शब्दरत्ना-<br>वली ॥ |
|---|---|---|

**अवकटं**, क्ली, (अव + स्वार्थे कटच् ।) वैरूप्यं ।
अवात् कुटारश्च वैरूप्ये चकारात्
कटश्च । इति
गोयीचन्द्रकृतलक्षणं ॥

**अवकरः**, पुं, (अव + कृ + अप् ।) सम्माार्ज्जन्यादि-
निःक्षिप्तधूल्यादिः । जञ्जाल इति ख्यातः । तत्-
पर्य्यायः । सङ्करः २ । इत्यमरः ॥
अवस्करः ३ ।
इत्यमरटीकायां मथुरानाथः ॥ सङ्कारः
४ । इति
शब्दरत्नावली ॥ (“अवकरनिकरं
विकिरति तत्
किं कृकवाकुरिव हंसः” । इति
नीतिशतके ।)

**अवकलितः** त्रि, (अव + कल + क्त ।) दृष्टः । इति
धरणी ॥

**अवकाशः**, पुं, (अव + काश + घञ् ।) अवस्थान-
देशः । फाँक इति यावत् । अवसरः ।
व्याप्ति-
रहितस्थानं । इत्यन्तरशब्दटीकायां
भरतः ॥
(“न सूक्ष्मतन्तोरपि तावकस्य
तत्रावकाशो भवतः कथं स्यात्” ।
इति रत्नावलीनाटिकायाम् ।)
अपि च ।
“एवञ्च
षडशीत्यादिष्वप्यवकाशमलभमानं” ।
इति तिथ्यादितत्त्वं ॥ अन्यच्च ।
“अवकाशेषु चोक्षेषु नदीतीरेषु चैव हि ।
विविक्तेषु च तुष्यन्ति दत्तेन पितरः
सदा” ॥
इति नागानन्दे । नीचः । निकृष्टः ।
“प्रतिकर्त्तुं प्रकृष्टस्य नावकृष्टेन युज्यते” ।
इति रामायणे । हीनजातीयः ॥
नीचजातीयः ।
अपकृष्टवर्णः ।
“चान्द्रायणं चरेत् सर्व्वानवकृष्टान् निहन्य
तु” ।
इति याज्ञवल्क्यः ।
गृहादिसम्मार्ज्जकोदकवा-
हादिः कर्म्मकरः ।
“पाणौ देयोऽवकृष्टस्य षड्उत्कृष्टस्य वेतनम्
।
षाण्मासिकस्तथाच्छादो धान्यद्रोणस्तु
मासिकः” ॥
इति मनुः ।)

**अवकेशी**, [न्] त्रि, (अवच्युतं कं सुखं यस्मात्,
अवकं फलशून्यतामीशितुं शीलमस्य,
अवक +
ईश + णिनि ।)
फलकालेऽप्यनुत्पन्नफलकवृक्षादिः ।
इत्यमरः ॥ तत्पर्य्यायः । बन्ध्यः २
अफलः ३ ॥

**अवक्तव्यं**, त्रि, (न वक्तव्यं, नञ्समासः ।) वचना-
योग्यं । अकथनीयं । न वक्तव्यं
अवक्तव्यमिति
नञ्समासनिष्पन्नं । यथा, --
“असम्भाव्यं न वक्तव्यं प्रत्यक्षमपि दृश्यते”
।
इति चाणक्यः ॥

**अवक्रयः**, पुं, (अवक्रीयते प्रतिरूपदानेन स्वाधीनं
क्रियतेऽनेन, अव + क्री + अच् ।)
क्रयसाधनद्रव्यं ।
मूल्यं । इत्यमरः ॥ (राजग्राह्यं द्रव्यं ।
बणिग्भिः

**अवगाहनं**, क्ली, (अव + गाह + भावे ल्युट् ।) स्नान-
करणं । तत्पर्य्यायः । अवगाहः २ वगाहः
३
मज्जनं ४
(“कन्दर्पबाणानलैर्दग्धानामवगाहनाय
विधिना रम्यं सरो निर्म्मितम्” । इति
शृङ्गार-
तिलके ।) निमज्जनं ५ । डुव दिया
नाओया
इति भाषा । शिरःस्नानं । अम्भसि
मज्जनं । यथा ।
अवगाहनन्तु
चक्षुःकर्णनासिकामङ्गुलीमिरा-
च्छाद्य कुर्य्यात् ।
“अङ्गुलीभिः पिधायैवं
श्रोत्रदृङ्नासिमामुखं ।
निमज्जेत प्रतिस्रोतस्त्रिः पठेदघमर्षणं” ॥
इति समुद्रकरधृतात । अत्रानुद्धृते
वारत्रय-
मेवावगाहनं ।
“नाभिमात्रजले गत्वा कृत्वा केशान् द्विधा
द्विजः ।
निरुध्य कर्णौ नासाञ्च त्रिःकृत्वो मज्जनं
ततः” ॥
इति वामनपुराणात् । इत्याह्निकाचारतत्त्वं
॥
अन्यत् स्नानशव्दे द्रष्टव्यं ॥ * ॥
श्राद्धीयब्राह्मणस्य
श्राद्धकर्त्तुरपि अवगाहनस्नानकर्त्तव्यत्वं ।
यथा गो-
भिलः । “स्नातान् शुचीन् आचान्तान्”
इत्यादि ।
स्नातान् अवगाहितान् न तु
मन्त्रादिस्नातान् ।
स्वयमपि सूतकादिरहितः स्नातः । इति
श्राद्ध-

इति मानवे ३ अध्याये २०७ श्लोकः ॥

(प्रशस्त-

प्रदेशः ।

"अवकाशो विविक्तोऽयं महानद्योः

समागमे" ।

इति रामायणे । द्रव्यादिसञ्चयस्थानं ।

अवस्थानं ।

स्थितिः ।

"अवकाशं किलोदन्वान्

रामायाभ्यर्थितो ददौ" ।

इति रघुवंशे ।)

**अवकीर्णः**, त्रि, (अव + कॄ + क्त ।) अवचूर्णितः ।

तत्पर्य्यायः । अवध्वस्तः २ । इति

हेमचन्द्रः ॥

(विस्तृतः । प्रसृतः । विक्षिप्तः ।

"भुक्तानि यौवनसुखानि यशोऽवकीर्णे

राज्ये स्थितं स्थिरधिया चरितं

तपोऽपि" ।

इति नागानन्दे । उल्लङ्घितः ।

अतिक्रान्तः ।)

**अवकीर्णी**, [न्] त्रि, (अवकीर्णमनेन अव + क

+ क्त + इनि, अवकीर्णं ध्वस्तं व्रतमिति

शेषः,

अस्यास्तीति ।) क्षतव्रतः ।

स्त्रीसंसर्गादिना त्यक्त-

नियमव्यक्तिः । इत्यमरजटाधरौ ।

("कुशीलवोऽवकीर्णी च वृषलीपतिरेव च

।

पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे"

॥

इति मनुः ।)

**अवकुटारं**, क्ली, (अव + स्वार्थे अतिशये वा कुटा-

रच् ।) वैरूप्यं । इति

संक्षिप्तसारव्याकरणस्य

परिशिष्टं ॥ (अवाचीनत्वं । वैपरीत्यं ।)

शुक्लस्थाने प्रतिभाण्डमधिपतये देयं !

"विक्रयावक्रयाधानयाचितेषु पणान् दश" ।

इति याज्ञवल्क्यः । एतावत्कालमुपयोगार्थं

भा-

ण्डवस्त्राश्वादिर्म्मया दीयते मह्यं च

युष्माभिरेता-

बद्धनं देयमित्येवंविधं भाटकं । भाडा इति

भाषा ।)

**अवगणितं**, त्रि, (अव + गण + कर्म्मणि क्त ।) अव-

ज्ञातं । अवमानितं । इत्यमरः ॥

(तिरस्कृतं ।

"आयासेनालसाङ्ग्योऽप्यवगणितरुजः

कानने चन्द-

नानां, अस्मिन् गायन्तु रागादुरगयुवतयः

कीर्त्ति-

मेतां तवैव" । इति नागानन्दः ।)

**अवगण्डः**, पुं, (अव + गम + ड, डकारस्य नेत्वम् ।)

गण्डस्थव्रणः । वयस्फोडा इति यावत् ।

तत्-

पर्य्यायः । वरण्डः २ । इति त्रिकाण्डशेषः

॥

**अवगतं**, त्रि, (अव + गम + क्त ।) ज्ञातं । तत्प-

र्य्यायः । बुद्धं २ बुधितं ३ मनितं ४ विदितं

५

प्रतिपन्नं ६ अवसितं ७ । इत्यमरः ॥

प्रमितं ८

मतं ९ प्रतीतं १० । इति जटाधरः ॥

**अवगतिः**, स्त्री, (अव + गम + भावे क्तिन् ।) ज्ञान-

सामान्यं । इति जटाधरः ॥ (बोधमात्रं ।

अप

गमः । अपसरणम् ।)

**अवगथः**, त्रि, (अव + गा + कर्त्तरि थ, निपातनात्

ह्रस्वः ।) प्रातःस्नातः । प्रातःस्नायी ।

इति सि-

तत्त्वं ॥

**अवगीतं**, क्ली, (अव + गै + क्त ।) निर्व्वादः ।

लोकापवादः । इति विश्वमेदिन्यौ ॥

(गीतादिना

निन्दाख्यापनम् । असाधुगीतं ।

अशोभनगानं ।)

**अवगीतः**, त्रि, (अव + गै + क्त ।) ख्यातगर्हणः ।

निन्दितः । इत्यमरः ॥ ("विधुरं किमतः

परं

परैरवगीतां गमिते दशामिमाम्" । इति

भारविः ।) दुष्टः । इति मेदिनी ॥ मुहुर्दृष्टः

।

इति विश्वः ॥

**अवगुण्ठनं**, क्ली, (अव + गुण्ठ + ल्युट् ।) योषानना-

वरकसरन्ध्रवस्त्रं । स्त्रीमुखाच्छादनवस्त्रं ।

घोम्टा

इति ख्याता । इति शब्दरत्नावली ॥

मुद्राविशेषः ।

("अवगुण्ठनसंवीता कुलजाभिसरेद्यदि"

।

इति साहित्यदर्पणे । "जादे ! मुहुत्तअं मा

लज्ज,

अवणैस्सं दाव दे अवगुण्ठणम्" । इति

शाकु-

न्तले ।) मुद्राविशेषः ।

तथा च तन्त्रसारे ।

"सव्यहस्तकृता मुष्टिदीर्घाधोमुखतर्ज्जनी

।

अवगुण्ठनमुद्रेयमभितो भ्रामिता मता" ॥

धूल्यादिम्रक्षणं ॥

**अवगुण्ठिका**, स्त्री, (अवगुण्ठयति आवृणोति, अव

+ गुण्ठ + ण्वुल्, स्त्रीत्वात् टापि अत

इत्वम् ।)

अवगुण्ठनं । स्त्रीमुखावरकवस्त्रं । इति

शब्दरत्ना-

**अवकृष्टः**, त्रि, (अव + कृष् + क्त ।) वहिष्कृतः ।
दूरीकृतः । तत्पर्य्यायः । निष्काशितः २ । इत्य-
मरः ॥ निःसारितः ३ । इति जटाधरः ॥ निर्ग-
मितः ४ । इति शब्दरत्नावली ॥ (वहिष्कारितः ।
निर्गलितः । आकृष्टः ।
“एकाकिनापि हि मया रमसावकृष्ट-
निस्त्रिंशदीधितिसटाभरभासुरेण” ।

द्धान्तकौमुदी ॥

**अवगादः**, पुं, (अव + गद + घञ् ।) जलद्रोणी ।
नौकाजलसेचनकाष्ठपात्रं । इति हलायुधः ॥

**अवगाहः**, पुं, (अव + गाह + घञ् ।) स्नानं । स्नान-
गृहं । इति वोपदेवः ॥
(“प्रचण्डसूर्य्यः स्पृहणीयचन्द्रमाः
सदावगाहक्षमवारिसञ्चयः” ।
इति ऋतुसंहारः ।)

वली ॥

**अवगुण्ठितं**, त्रि, (अव + गुण्ड + क्त ।) चूर्णितं ।
इति त्रिकाण्डशेषः ॥ गुँडा करा इति भाषा ।

**अवगोरणं**, क्ली, (अव + गुर उद्यमे + ल्युट् ।)
ताडनार्थदण्डादीनामुद्यम इति ब्राह्मणं ॥ मा-
रिवार निमित्ते ठेङ्गा उठान इति भाषा । यथा
प्रायश्चित्तविवेके ।
“दण्डनिपातप्रायश्चित्तेनैव गु-
रुणा
तन्नान्तरीयकावगोरणप्रायश्चित्तमपि सम्प-
द्यतैत्युक्तं । ननु दण्डनिपातप्रायश्चित्तात्
तदन्तः-

:पातिनोऽवगोरणप्रायश्चित्तस्य कथं सिद्धिः ।

तथाहि मनुः ।
अवगूर्य्य चरेत् कृच्छ्रमतिकृच्छ्रं निपातने । अव-
गूर्य्य ब्राह्मणताडनार्थं दण्डमुद्यम्य शतयातना-
जनकं यत् पापमुत्पादितं तत्क्षयकामः कृच्छ्र-
प्राजापत्यव्रतं चरेत् । तदुक्तं संयुधिकरणे । शंयोः
प्रजापतेः प्रार्थनया देवैर्ब्राह्मणावगोरणफलत्वेन
शतयातनाभिहिता । तथा च श्रुतिः । शंयुः
प्रजापतिः प्रजाविनेता प्रजाहिते रतश्च देवानां
हविर्वहन् आशिषोऽयाचत । देवास्त्ववगोरणे
शतयातनास्त्वित्याशिषोऽददतेति । शास्त्रदीपि-
कादौ दर्शपौर्णमासप्रकरणे । देवा वै शंयुं वार्ह-
स्पत्यमब्रुवन् हव्यं नो बहेति किं मे प्रजाया इति
तेऽब्रुवन् यो ब्राह्मणायावगुरेत्तं शतेन यातयेत्
यो निहन्यात् तं सहस्रेण यो लोहितमकरोत्
यावतः पांशून् व्यनक्ति तावतः परिवत्सरान् स
स्वर्गात्प्रच्यवेत । तस्मात् ब्राह्मणान् नावगुरेत् न
हन्यात् न लोहितं कुर्य्यात् इति” । इतिहासा-
त्मकं ब्राह्मणञ्च । इति प्रायश्चित्ततत्त्वं ॥

तदनुष्ठानवेलायामेव पुरुषदोषेण प्रयोजनाभावो
ज्ञायते तदा प्राक् तन्निश्चयाच्छास्त्रप्रापितः पदार्थो
नियमापूर्ब्बमात्रार्थमनुष्ठेयमेव । अतएव प्रकृता-
वपि आलस्यादिना व्रीह्यादिस्थाने तण्डुलादिषु
गृहीतेष्वाघातादि समाचरन्ति याज्ञिकाः ।
“घाते न्यूने तथा छिन्ने सान्नाय्ये मान्त्रिके तथा ।
यज्ञे मन्त्राः प्रयोक्तव्या मन्त्रा यज्ञार्थसाधकाः” ॥
सान्नाय्ये हविषि मान्त्रिके मन्त्रसाध्ये अवघातादौ
तत्काले मन्त्रपाठाभावेऽपि मन्त्राः प्रयोक्तव्याः ।
इति शुद्धितत्त्वं ॥ (अपमृत्युः) ॥

**अवचस्करः**, त्रि, अवचनस्थः । कथार अवाध्य इति
भाषा । न वचः करोतीत्यर्थे वचःशब्दपूर्ब्बक-
कृधातोः टप्रत्ययेन निष्पन्नः ॥

**अवचूर्णितं**, त्रि, (अव + चूर्ण + कर्म्मणि क्त ।)
चूर्णीकृतद्रव्यं । गुँडा करा इति भाषा ।
तत्पर्य्यायः ।
अवध्वस्तः २ अपध्वस्तः ३ । इत्यमरः
तट्टीका च ॥

**अवचूलः**, पुं, (अवनता चूडा यस्य, वा डस्य लः ।)
ध्वजाग्रबद्धाधोमुखवस्त्रं । इति हेमचन्द्रः ॥

**अवचूलकं**, क्ली, (अवचूलमिव इवार्थे कन्, संज्ञायां
वा कन् ।) चामरं । इति त्रिकाण्डशेषः ॥

**अवच्छिन्नं**, त्रि, (अव + छिद् + क्त ।) अवच्छेदकता-
निरूपकं । विशिष्टं । इति न्यायभाषा । अवच्छे-
दाश्रयः । यथा । प्रतियोग्यसमानाधिकरणयत्-
सामानाधिकरणात्यन्ताभावप्रतियोगितावच्छेद-
कावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधि-
नतिरिक्तवृत्तित्वं वाच्यं । वह्नित्वं न घटवृत्ति
तादृशप्रतियोगित्वान्यूनानतिरिक्तवृत्ति अतआह
तार्णतार्णेति । इत्यवच्छेदकत्वनिरुक्तौ जगदीशः ॥
अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वं पारिभाषिकं ।
यथा ।
तदवच्छिन्नाभाववदसम्बद्धस्वविशिष्टसामा-
न्यकत्वं
स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगिता-
नवच्छेदकतत्कत्वं वा तदनतिरिक्तवृत्तित्वं
वक्तव्यं ।
इति अवच्छेदकत्वनिरुक्तौ शिरोमणिः ॥
अव्याप्य-
वृत्तेरवच्छेदकत्वमपि स्वरूपसम्बन्धविशेषः तदा-
श्रयावच्छेदकः । तच्चावच्छेदकत्वं इह शिखरिणि
नितम्बे हुताशनो न शिखरे इत्यादि प्रतीति-
बलात्
कुत्रचिदव्याप्यवृत्त्यधिकरणदेशविशेषादि-
दानीं गोष्ठे गौर्नतु गृहे इत्यादिप्रतीतिबलात्
कुत्रचित् देशवृत्तितायाः काले कुत्रचित् काल-
वृत्तिताया देशे अप्यस्ति । इति न्यायशास्त्रं ॥

**अवच्छेदावच्छेदः**, पुं, व्यापकत्वं । इति न्यायभाषा ॥

**अवज्ञा**, स्त्री, (अव + ज्ञा + अङ् ।) अनादरः ।
अवहेला । इत्यमरः ॥ (“आत्मन्यवज्ञां शिथिली-
चकार” । इति रघुवंशे ।)

**अवग्रहः**, पुं, (अव + ग्रह + घञ् ।) वृष्टिरोधः ।

(अनावृष्टिः ।
"वृष्टिर्भवति
शस्यानामवग्रहविशोषिणाम्" ।
"नभोनभस्ययोर्वृष्टिमवग्रह
इवान्तरे" ॥
इति रघुवंशे ।) प्रतिबन्धकः ।
हस्तिललाटं । इति
मेदिनी ॥ गजसमूहः । इति
हारावली ॥ स्वभावः ।
इति त्रिकाण्डशेषः ॥ (यदुक्तं, --
"तौ स्थास्यतस्ते नृपतेर्निदेशे
परस्परावग्रहनिर्व्विकारौ" ।
इति मालविकाग्निमित्रनाटकम् ।)
ज्ञानविशेषः ।
इति हेमचन्द्रः ॥ शापः ।
इत्यमरटीकायां भर-
तादयः ॥ (ग्रहणं । स्वीकारः ।
हरणं । अपसारणं ।
निरोधः । अवरोधः ।
"स रोचयामास परैश्च बन्धं
प्रसह्य रक्षोभिवरग्रहञ्च" ।
इति रामायणे । अवान्तरपदसंज्ञां
सूचयितुं
पदपाठकाले
किञ्चित्कालमवसानम् । अनादरः
।
निन्दासूचकवाक्यप्रयोगः ।)

**अवग्रहणं**, क्ली, (अव + ग्रह + भावे ल्युट् ।) प्रति-

रोधः । अनादरः । इति मेदिनी ॥

**अवग्राहः**, पुं, (अव + ग्रह + घञ् ।) ग्रहदोषादि-

जन्यवृष्टिव्याघातः । शुको इति
भाषा । तत्प-
र्य्यायः । वृष्टिविघातः २ अवग्रहः
३ । इत्यमरः ॥
करण्यंव्याप्तिः । इति
सिद्धान्तलक्षणचिन्तामणिः ॥
("जलाशये महाकाशस्तदवच्छिन्नमेव हि ।
बुद्ध्यवच्छिन्नचैतन्यमेकं पूर्णमथापरम् ॥
साभासबुद्धेः कर्तृत्वमवच्छिन्ने विकारिणि" ।
इति अध्यात्मरामायणे ।)

**अवच्छुरितं**, क्ली, (अव + च्छुर + भावे क्त ।) महा-

हास्यं । इत्यमरटीकायां भरतः ॥

**अवच्छुरितकं** क्ली, (अवच्छुरितमेव, स्वार्थे कन् ।)

महाहास्यं । इति शब्दरत्नाबली ॥

**अवच्छेदः**, पुं, (अव + छिद् + भावे घञ् ।) परि-

च्छेदः । एकदेशः । विशेषणत्वं ॥
("शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः" ।
इति साहित्यदर्पणम् ।)

**अवच्छेदकं**, त्रि, (अवच्छिनत्ति, अव + छिद् +

ण्वुल् ।) न्यायमते
अव्याप्यवृत्त्यधिकरणसम्बन्धैक-
देशः । इतरव्यावर्त्तकः । विशेषणं ।
अवच्छिद्यते-
ऽनेनेति यथा । अव्याप्यवृत्तेरवच्छेदकत्वमपि
स्व-
रूपसम्बन्धविशेषः तदाश्रयावच्छेदकः । इति-
न्यायशास्त्रं ॥

**अवच्छेदकत्वं**, क्ली, (अवच्छेदकस्य भावः, भावार्थे त्व ।)

स्वरूपसम्बन्धविशेषः । यथा ।
घटकञ्चावच्छेदकत्वं
स्वरूपसम्बन्धविशेषः ।
इत्यवच्छेदकत्वनिरुक्तौ शि-
रोमणिः ॥ अनतिरिक्तवृत्तित्वं । यथा । अव-
च्छेदकत्वञ्च इहानतिरिक्तवृत्तित्वं । तेन
विशिष्ट-
स्यासत्वेपि भ्रमात् प्रतिबन्धेऽपि न क्षतिः । इति
सामान्यनिरुक्तौ शिरोमणिः ॥
अन्यूनानतिरिक्त-

**अवज्ञातं**, त्रि, (अव + ज्ञा + क्त ।) अवमानितं । अना-

दृतं । तिरस्कृतं । इत्यमरः ॥
"अवज्ञाता भविष्यामो लोकस्य जगतीपते"
।
इति महाभारते ।)

**अवज्ञानं**, क्ली, (अव + ज्ञा + भावे ल्युट् ।) अवज्ञा ।

यथा अवज्ञानं अवज्ञा आतो
अन्तःश्रद्गेरिति
ङः । सम्पादित्वात् क्विबिति मधुः ।
तन्मते
गोपावद्रूपं । इत्यमरटीकायां भरतः ॥
(अवमानः ।
तिरस्कारः । अनादरः ।
"ईप्सितं तदवज्ञानात् विद्धि
सार्गलमात्मनः" ।
इति रघुवंशे ।)

**अवटः**, पुं, (अव + अटन् ।) खिलं । गर्त्तः । कूपः ।

("रक्षसां गतसत्त्वानामेष धर्म्मः सनातनः ।
अवटे ये निधीयन्ते तेषां लोकाः
सनातनाः" ॥
इति रामायणे ।) कुहकजीवो । इति विश्व-
मेदिन्यौ ॥

**अवटिः**, पुं, (अव + अटि ।) गर्त्तः । इति हलायुधः ॥

**अवटीटः**, त्रि, (अवनता नासिका, प्रादिसमासः,

नतार्थे नासायाः टीटादेशः
अर्शआदित्वादच् ।)
नतनासिकः । खाँदा छेपडानेको यस्य
प्रसिद्धिः ।
तत्पर्य्यायः । अवनाटः २ अवभ्रटः ३ ।
इत्यमरः ॥

**अवटुः**, पुं, स्त्री, (अव + टीक + मितद्व्रादित्वात् डुः ।)

ग्रीवापश्चाद्भागः । इत्यमरः ॥ घाड
इतिख्यातः ।

हस्तिललाटं । शापः । इति तट्टीका ॥ (यथा, --
"अवग्राहस्ते भूयात्" ।)

**अवघट्टः**, पुं, (अव + घट्ट + आधारे घञ् ।) भूरन्ध्रं ।

गर्त्तः । इति त्रिकाण्डशेषः ॥

**अवघातः**, पुं, (अव + हन् + घञ् ।) आघात-

विशेषः । तण्डुलादिकण्डनं ।
इति हेमचन्द्रः ॥
काँडान यस्य प्रसिद्धिः । यथा ।
चरुविधौ विद्या-
करवाजपेयी ।
शास्त्रावधारणवेलायां हि यत्र
प्रयोजनाभावादिनिश्चयस्तत्रैव
तदुपादानादिलोपः
शास्त्रार्थः । यथा
कृष्णलेऽवघातादिलोपः । यत्र

वृत्तित्वं । यथा । ननु तादृशप्रतियोगित्वान्यूना-

कूपः । गर्त्तः । इति हेमचन्द्रः ॥ वृक्षभेदः ।
इत्यु-
णादिकोषः ॥

**अवडङ्गः**, पुं, (अवगतो डङ्गः शब्दो यस्मात् ।) हट्टः

इति जटाधरः । कस्यचिन्मते अवद्रङ्क इति
पाठः ॥

**अवडीनं**, क्ली, (अव + डी + भावे क्त ।) पक्षिणाम-

धोगमनं । पक्षिणामवरोहणं । इति जटाधरः
॥

**अवतंसः**, पुं, क्ली, (अव + तन्स + घञ् ।) कर्णपूरः ।

कर्णभूषणं ।
("तं मातरो देवमनुव्रजन्त्यः
स्ववाहनक्षोभवचलातंसाः" ।

:इति कुमारसम्भवे ।) शेखरः । शिरोभूषणं ।

तत्पर्य्यायः । वतंसः २ उत्तंसः ३ । इत्यमरः ॥
मुकुटं ४ मकुटं ५ मौलिः ६ मौलीकः ७ शेखरं
८ उष्णीषकः ९ कौटीरकं १० कोटीरं ११ किरीटं १२ चूडामणिः १३ शिरोरत्नं १४ शिरो-
मणिः १५ । कर्णभूषणं । तत्पर्य्यायः । वतंसः २
कर्णपुरः ३ कुण्डलं ४ कर्णवेष्टनं ५ उत्तंसः ६
दन्तपत्रं ७ कर्णकं ८ । इति शब्दरत्नावली ॥

**अवतमसं**, क्ली, (अवततं व्याप्तं तमः, प्रादिसमासः,

अच् ।) अल्पान्धकारः । इत्यमरः ॥
(“अवतमसभिदायै भास्वताभ्युद्गमेन
प्रसभमुडुगणोऽसौ दर्शनीयोऽप्यपास्तः” ।
इति माघः ।)

**अवतारः**, पुं, (अव + तॄ + करणे घञ् ।) अवतरणं ।

पुष्करिण्यादिः । तीर्थः । इति मेदिनी ॥ (सोपान-
पद्धतिः । प्रस्तावना । आभासः । उपक्रमणिका ।
यथा । “दूरे गुरुप्रथितवस्तुकथावतारः” । इति
शान्तिशतके ।) देवानां विशेषतोविष्णोर्मूर्त्त्यन्तरेण
पूर्णांशावेशरुपेण पृथिव्यामवतरणं । अवतारास्त्र-
संख्येयाः तेष्वेते प्रसिद्धाः । ब्रह्मा १ वराहः २ नारदः
३ नरनारायणौ ४ कपिलः ५ दत्तात्रेयः ६ यज्ञः ७
पञ्चदशं वामनकं कृत्वागादध्वरं बलेः ।
पदत्रयं याचमानः प्रत्यादित्सुस्त्रिपिष्टपं ॥
अवतारे षोडशमे पश्यन् ब्रह्मद्रुहो नृपान् ।
त्रिःसप्तकृत्वः कुपितो निःक्षत्रामकरोन्महीं ॥
ततः सप्तदशे जातः सत्यवत्यां पराशरात् ।
चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः ॥
नरदेवत्वमापन्नः सुरकार्य्यचिकीर्षया ।
समुद्रनिग्रहादीनि चक्रे वीर्य्याण्यतः परं ॥
एकोनविंशे विंशतिमे वृष्णिषु प्राप्य जन्मनी ।
रामकृष्णाविति भुवो भगवानहरत् भरं ॥
ततः कलौ संप्रवृत्ते संमोहाय सुरद्विषां ।
बुद्धोनाम्नाञ्जनसुतः कीकटेषु भविष्यति ॥
अथासौ युगसन्ध्यायां दस्युप्रायेषु राजसु ।
जनिता विष्णुयशसो नाम्ना कल्किर्जगत्पतिः ॥
अवतारा ह्यसंख्येया हरेः सत्वनिधेर्द्विजाः ।
यथा विदासिनः कुल्याः सरसःस्युः सहस्रशः ॥
ऋ षयो मनवो देवा मनुपुत्रा महौजसः ।
कलाः सर्व्वे हरेरेव सप्रजापतयः स्मृताः ॥
एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयं ।
इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे” ॥
(“कुन्दैः सविभ्रमबधूहसितावदातैः” ॥ इति ऋतु-
संहारे । पीतवर्णयुक्तं । निर्म्मलं ।
“तत्त्वं क्रमेण विदुषां करुणावदाते
श्रद्धावतां हृदि पदं स्वयमादधाति” ।
इति शान्तिशतके ।) मनोज्ञं । इत्यमरहेमचन्द्रौ ॥

**अवदानं**, क्ली, (अव + दो + ल्युट् ।) वृत्तं कर्म्म ।

प्रशस्तमथच निर्व्यूढं कर्म्म । ये कर्म्मे प्रवृत्तिते
सकले प्रशंसा करे सेइ समाप्तकर्म्म इति भाषा ।
तत्पर्य्यायः । अपदानं २ । इत्यमरः तट्टीका च ।
खण्डनं । इति मेदिनी ॥ (“विश्वावसुप्राग्रहरैः प्रवीणैः
सङ्गीयमानत्रिपुरावदानः” ।
इति कुमारसम्भवे ।) वीरणमूलमिति स्वामी ॥
(पराक्रमः । वीर्य्यं । यथा, --
“नैरृतघ्नमथ मन्त्रवन्मुनेः
प्रापदस्त्रमवदानतोषितात्” ।
इति रघुवंशे ।)

**अवदारणं**, क्ली, (अवदीर्यतेऽनेन, अव + दॄ + णिच्

करणे ल्युट् ।) खनित्रं । खन्ता इति ख्यातं ।
इत्यमरः ॥ (विदारणं । भेदनं । खननं । यथा, --
“अवदारणकाले तु पृथिवी नावदीर्य्यते” ।
इति रामायणे । अव + घॄ + भावे ल्युट् ।)

**अवदाहं**, क्ली, (अवशमितोदाहो येन तत् ।) वीर-

णमूलं । इत्यमरः ॥ (उशीरशब्देऽस्य विशेषो

ऋषभदेवः ८ पृथुः ९ मत्स्यः १० कूर्म्मः ११
धन्वन्तरिः १२ मोहिनी १३ नृसिंहः १४ वामनः
१५ परशुरामः १६ वेदव्यासः १७ रामः १८
बलरामः १९ कृष्णः २० बुद्धः २१ कल्की २२ ॥
इति श्रीभागवते ॥ यथा, --
"सएव प्रथमं देवः कौमारं सर्गमाश्रितः ।
चचार दुश्चरं ब्रह्मा ब्रह्मचर्य्यमखण्डितं ॥
द्वितीयन्तु भवायास्य रसातलगतां महीं ।
उद्धरिष्यन्नुपादत्त यज्ञेशः शौकरं वपुः ॥
तृतीयमृषिसर्गं वै देवर्षित्वमुपेत्य सः ।
तन्त्रं सात्वतमाचष्ट नैष्कर्म्म्यं कर्म्मणां यतः ॥
तुर्य्ये धर्म्मकला सर्गे नरनारायणावृषी ।
भूत्वात्मोपशमोपेतमकरोद्दुश्चरं तपः ॥
पञ्चमः कपिलोनाम सिद्धेशः कालविप्लुतं ।
प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयं ॥
षष्ठमत्रेरपत्यत्वं वृतः प्राप्तोऽनसूयया ।
आन्वीक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवान् ॥
ततः सप्तम आकूत्यां रुचेर्य्यज्ञोऽभ्यजायत ।
स यामाद्यैः सुरगणैरपात् स्वायम्भुवान्तरं ॥
अष्टमे मेरुदेव्यान्तु नाभेर्जात उरक्रमः ।
दर्शयन् वर्त्म धीराणां सर्व्वाश्रमनमस्कृतं ॥
ऋषिभिर्य्याचितो भेजे नवमं पार्थिवं वपुः ।
दुग्धेमामोषधीर्विप्रास्तेनायं स उशत्तमः ॥
रूपं स जगृहे मात्स्यं चाक्षुषोदधिसंप्लवे ।
नाव्यारोप्य महीमय्यामपाद्वैवस्वतं मनुं ॥
सुरासुराणामुदधिं मथ्नतां मन्दराचलं ।
दध्रे कमठरूपेण पृष्ठ एकादशे विभुः ॥
धान्वन्तरं द्वादशमं त्रयोदशममेव च ।
अपाययत् सुरानन्यान् मोहिन्या मोहयन् स्त्रिया ॥
चतुर्दशं नारसिंहं बिभ्रद्दैत्येन्द्रमूर्जितं ।
इति श्रीभागवते १ स्कन्धे ३ अध्यायः ॥ (दश-
अवतारा एव प्रधानतया प्रसिद्धाः । ते च यथा, --
"मत्स्यः कूर्म्मो वराहश्च नरसिंहोऽथ वामनः ।
रामो रामश्च रामश्च बुद्धः कल्की च ते दश" ॥)
(आविर्भावः । जन्म । उत्पत्तिः । यथा, --
"अगच्छदंशेन गुणाभिलाषिणी
नवावतारं कमलादिवोत्पलम्" ।
इति रघुः । अपसारणं । हरणं । यथा, --
"भूमेर्भारावताराय ब्रह्मणाप्रार्थितः पुरा ।
स एव जातो भवने कौशल्यायां तवानघ" ॥
इति अध्यात्मरामायणे ।

**अवतारणं**, क्ली, (अव + तॄ + णिच् + ल्युट् ।) भूतादि-
ग्रहः । वस्त्राञ्चलं । अर्च्चनं । इति विश्वमेदिन्यौ ॥
(ग्रन्थप्रस्तावना । ऊर्द्ध्वादध आनयनं । यथा, --
"क्रियतां यदि शक्नोषि गङ्गाया अवतारणं" ।
इति रामायणे ।)

**अवतीर्णः**, त्रि, (अव + तॄ + कर्त्तरि क्तः ।) अवतरण-
विशिष्टः । प्रादुर्भूतः । जलादौ कृतावरोहः ।
यथा । ज्योतिषे ।
"नीलग्रीव शुभग्रीव सर्व्वकामफलप्रद ।
पृथिव्यामवतीर्णोऽसि खञ्जरीट नमोऽस्तु ते" ॥
इति तिथ्यादितत्त्वं ॥

**अवतोका**, स्त्री, (अवपतितं तोकमस्याः सा ।) पत-
ज्ञेयः ।)

**अवदाहेष्टं**, क्ली, (अवदाहे इष्टम् अनुकूलम् ।)
वीरणमूलं । इत्यमरटीकायां भरतादयः ॥

**अवदाहेष्टकापथं**, क्ली, उशीरं । खस् इति भाषा ।)
इति भरतः ॥

**अवदीर्णं**, त्रि, (अव + दॄ + क्त ।) द्रवीभूतघृतादि ।
तत्पर्य्यायः । द्रुतं २ । इत्यमरः ॥

**अवदोहः**, पुं, (अव + दुह + घञ् ।) दुग्धं । इति
त्रिकाण्डशेषः ॥

**अवद्यं**, त्रि, (न वदति परं गुणं, अवद्यावमाधमार्व्व-
रेफाः कुत्सिते इति वदेर्नञि कर्त्तरि यत् ।) अधमं ।
कुत्सितं । गर्हितं । निकृष्टं । इत्यमरः ॥

**अवद्यं**, क्ली, अनिष्टं । इति वोपदेवः ॥ पापं । इति
पाणिनिः ॥ ("उदवहदनवद्यां तामवद्यादपेतः" ।
इति रघुवंशे ।)

**अवधानं**, क्ली, (अव + धा + ल्युट् ।) मनोयोगः ।
तत्पर्य्यायः । समाधानं २ प्रणिधानं ३ समाधिः
४ । इति हेमचन्द्रः ॥

**अवधारणं**, क्ली, (अव + धृ + णिच् + ल्युट् ।) निश्च-
यः । यथा । "हि हेताववधारणे" ।
इत्यमरः ॥

**अवधारितः**, त्रि, (अव + धृ + णिच् + क्त ।) कृता-
वधारणः । यथा ।
"त्वया सुमुखि किं प्रोक्तं न मया ह्यवधारितं ।
विवेचय महाभागे सङ्केतो वर्त्तते खलु" ॥

| | | |
|---|---|---|
| ददार करजैरूरावेरकां कटकृद्यथा ॥ | द्गर्भा गौः । तत्पर्य्यायः । स्नवद्गर्भा २ । इत्यमरः ॥<br>गावडागाइ । गावफेला गाइ । इति भाषा ॥<br>**अवदंश**, पुं, (अव + दन्श + घञ् ।) सुरापानरुचि-<br>जनकचर्व्वणद्रव्यं । गजर इति भाषा । तत्पर्य्यायः ।<br>भक्षणं २ । इत्यमरः । विदंशः ३ सन्धानं ४<br>रोचकः ५ । इति राजनिर्घण्टः ॥<br>**अवदातः**, पुं, (अव + दै + क्तः ।) श्वेतवर्णः । पीत-<br>वर्णः । इत्यमरः ॥<br>**अवदातं**, त्रि, (अव + दै + क्तः ।) शुक्लगुणविशिष्टं । | इति व्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे २० अध्यायः ॥<br>**अवधार्य्यः**, त्रि, (अव + धृ + ण्यत् ।) अवधारणीयः ।<br>अवपूर्ब्बकधृधातोर्घ्यण् प्रत्ययेन निष्पन्नः । नि-<br>र्धार्य्यः ॥ |

**अवधिः**, पुं, (अव + धा + कि ।) अवधानं । सीमा ।

कालः । ("अथ चेदवधिः प्रतीक्ष्यते" इति भा-
रविः ।) विलं । इति विश्वमेदिन्यौ ॥

**अवधीर**, त्, क, अवज्ञायां । (अदन्त + चुरा०-

उभय०-सक०-सेट् ।) अवधीरयति ।
आवधीरयत्
साधुमसाधुः । इति दुर्गादासः ॥

**अवधूतः**, पुं, (अव + धू + क्तः ।) सन्न्यासाश्रमी ।

तद्विधानं सन्न्यासिशब्दे द्रष्टव्यं । तद्भेदा यथा ।
देव्युवाच ।
"द्विविधावाश्रमौ प्रोक्तौ गार्हस्थ्यो भैक्षुकस्तथा
।
किमिदं श्रूयते चित्रमवधूताश्चतुर्विधाः ॥
एतद्वेदितुमिच्छामि तत्त्वतः कथय प्रभो ।
चतुर्व्विधावधूतानां लक्षणानि विशेषतः ॥
सदाशिव उवाच ।
ब्रह्ममन्त्रोपासका ये ब्राह्मणक्षत्रियादयः ।
गृहाश्रमे वसन्तोऽपि ज्ञेयास्ते यतयः प्रिये ॥
पूर्णाभिषेकविधिना संस्कृता ये च मानवाः ।
शैवावधूतास्ते ज्ञेयाः पूजनीयाः कुलार्च्चिते ॥
ब्रह्मावधूतः शैवाश्च साग्निमाचारवर्त्तिनः ।
विदध्युः सर्व्वकर्म्माणि शश्वदीरितवर्त्मना ॥
विना ब्रह्मार्पितञ्चैते तथा चक्रार्पितं विना ।
निषिद्धमन्नं तोयञ्च न गृह्णीयुः कदाचन ॥
ब्रह्मावधूतकौलानां कौलानामभिषेकिणां ।
प्रागेव कथितो धर्म्म आचारश्च वरानने ॥
स्नानं संन्यासनं पानं दानञ्च दाररक्षणं ।
सर्व्वमागममार्गेण शैवब्रह्मावधूतयोः" ॥
इति महानिर्व्वाणतन्त्रे १४ उल्लासः ॥ * ॥
अन्यच्च ।
शङ्कर उवाच ।
"शृणु देवि प्रवक्ष्यामि अवधूतो यथा भवेत् ।
वीरस्य मूर्त्तिं जानीयात् सदा तत्त्वपरायणः ॥
यद्रूपं कथितं सर्व्वं सन्न्यासधारणं परं ।
तद्रूपं सर्व्वकर्म्माणि प्रकुर्य्याद्वीरवल्लभं ॥
दण्डिनो मुण्डनं चामावास्यायामाचरेद्यथा ।
तथा नैव प्रकुर्य्यात्तु वीरस्य मुण्डनं प्रिये ॥
असंस्कृतं केशजालमुक्तालम्बिकचोच्चयं ।
अस्थिमाला विभूषा वा रुद्राक्षानपि धारयेत् ॥
संविदासेवनं कुर्य्यात् सदा कारणसेवनं ॥
भवेत् साक्षात् स पुरुषः शम्भुरूपो न
संशयः" ।
इति निर्व्वाणतन्त्रं ॥ * ॥ किञ्च ।
"ब्राह्मणः क्षत्रियो वैश्यः शूद्रः सामान्य एव च
।
कुलावधूतसंस्कारे पञ्चानामधिकारिता" ॥
इति महानिर्व्वाणतन्त्रं ॥ * ॥ अन्यच्च ।
"निर्व्वाणमुक्तिमाप्नोति ब्राह्मणो वीरभावतः ।
अवधूतः क्षत्रियश्च महायोगी न संशयः ॥
स्वरूपोऽपि भवेद्वैश्यः शूद्रोऽपि सहलोकवान्
।
सम्पूर्णफलमाप्नोति विप्रो निर्व्वाणतां व्रजेत्
॥
त्रिभागं फलमाप्नोति क्षत्रियो वीरभावतः ।
पादद्वयन्तु वैश्यस्य शूद्रस्य चैकपादकं" ॥ *
॥
दशनामावधूतानां प्रत्येकं नाम
प्रागुक्तमिदानी-
मपि तेषां प्रधानत्वेनाङ्गीकरणार्थं
संज्ञाकथनगर्भं
लक्षणविशेषमाह ।
"अवधूतस्य चाख्यानं शृणुष्व पर्ब्बतात्मजे ।
वनारण्ये भारती च गिरिश्च पुरिरेव च ॥
एकस्थाने तु संस्थित्य इष्टध्यानादिकञ्चरेत् ।
यो मन्त्रदानं तपसा सवनः परिकीर्त्तितः ॥
स्नस्तकेशो जटाजूटः सदा वातुलवद्भवेत् ।
अन्तर्योगी महावीरोऽरण्यसंज्ञश्च शैलजे ॥
नानाशास्त्रेषु यो विज्ञो नानाकर्म्मविशारदः ।
सदेष्टदेवीभावेन भावयेद् यो हि चाबलां ॥
स एव भारतीवीरो महाज्ञानी जितेन्द्रियः ।
सदोर्द्ध्वबाहुर्यो वीरो मुक्तकेशो दिगम्बरः ॥
सर्व्वत्र समभावेन भावयेत् यो नरोत्तमः ॥
इष्टदेवीं विना नास्ति स गिरिः परिकीर्त्तितः
॥
नानादेशेषु पीठेषु क्षेत्रेषु तीर्थभूमिषु ।
भ्रमणं कुरुते नित्यं कुर्य्याद्यत्नेन पूजनं ॥
देवतायाः सदा ध्यानं श्रीगुरोः पूजनं तथा ।
अन्तर्यागेषु यो निष्ठः स वीरः पुरिरेव च ॥
अवधूताश्रमे देवि ! यस्य भक्तिः सुनिश्चला
।
ओम् तत् सदिति मन्त्रेण कर्म्मकर्त्तव्यतामाह ।
"ॐ तत्सन्मन्त्रमुच्चार्य्य सोऽहमस्मीति चिन्तयन्
।
कुर्य्यादात्मोचितं कर्म्म सदा वैराग्यमाश्रितः ॥
कुर्व्वन् कर्म्माण्यनासक्तो नलिनोदलनीरवत् ।
यतेतात्मानमुद्धर्त्तुं तत्त्वज्ञानविवेकतः" ॥ * ॥
सर्व्वेषामोम् तत्सदिति निर्देशेन कर्म्मफलमाह ।
"ॐ तत्सदिति मन्त्रेण यो यत्कर्म्म समाचरेत् ।
गृहस्थो वाप्युदासीनस्तस्याभीष्टाय तद्भवेत्" ॥ *
॥
तन्मन्त्रक्रियमाणकर्म्मणः सम्पूर्णत्वमपि ।
"जपहोमप्रतिष्ठा च संस्काराद्यखिलाः क्रियाः ।
ॐ तत्सदिति निष्पन्नाः संपूर्णाः स्युर्न संशयः ॥
किमन्यैर्ब्बहुभिर्म्मन्त्रैः किमन्यैर्भूरिसाधनैः ।
ब्राह्म्येणानेन मन्त्रेण सर्व्वकर्म्माणि साधयेत् ॥
सुखसाध्यमबाहुल्यं संपूर्णफलदायकं ।
नास्त्येतस्मान्महामन्त्रादुपायान्तरमम्बिके ॥
पुरप्रदेशे देहे वा लिखित्वा धारयेदिमं ।
गेहे तस्य महातीर्थं देहः पुण्यमयो भवेत् ॥
निगमागमतन्त्राणां सारात् सारतरो मनुः ।
ॐ तत्सदिति देवेशि तवाग्रे सत्यमीरितं ॥
चतुर्व्विधानां तत्त्वानामन्येषामपि वस्तुनां ॥
मन्त्रान्यैः शोधनेनालं स्याच्चेदेतेन शोधितं ॥
पश्यन् सर्व्वत्र सद्रूपं जपंस्तत् सन्महामनुं ।
स्वेच्छाचारः शुद्धचित्तः स एव भुवि कौलराट् ॥
जपादस्य भवेत् सिद्धो मुक्तः स्यादर्णचिन्तनात् ।
साक्षाद्ब्रह्ममयो देही सार्थमेनं जपेन्मनुं ॥
त्रिपदोऽयं महामन्त्रः सर्व्वकारणकारणं ।
साधनादस्य मन्त्रस्य भवेन्मृत्युञ्जयः स्वयं ॥
युग्मयुग्मपदं वापि प्रत्येकं पदमेव वा ।
जप्त्वैतस्य महेशानि साधकः सिद्धिभाग्भवेत्" ।
इति मन्त्रप्रशंसा ॥ * ॥ शैवावधूतस्य सर्व्वकर्म्मा-
नधिकारमाह ।
"शैवावधूतसंस्कारविधूताखिलकर्म्मणः ।
नापि दैवे नवा पित्र्ये नार्षे कृत्येऽधिकारिता" ॥ *
॥
अथ परमहंसः ।
"चतुर्णामवधूतानां तुरीयो हंस उच्यते ।
त्रयोऽन्ये योगभोगाढ्या मुक्ताः सर्व्वे शिवोपमाः ॥
हंसो न कुर्य्यात् स्त्रीसङ्गं न विधत्ते परिग्रहं ।
प्रारब्धमश्नन् विहरेत् निषेधविधिवर्जितः ॥

दिगम्बरो वा वीरेन्द्रश्चाथ वा कौपिनी भवेत् ।
रक्तचन्दनसिक्ताङ्गः कुर्य्याद्भस्माङ्गभूषणं" ॥
रति निर्व्वाणतन्त्रे १४ पटलः ॥ * ॥ अपिच ।
"नृकरोटिं विधार्य्यञ्च काष्ठदण्डं तथा प्रिये ।
परशुञ्चाजिनञ्चैव योगीव धारयेत् सदा ॥
खट्वाङ्गं धारयेद्योगी वासरूपकवाससी ।
कपाले धारयेच्चन्द्रं चन्दनाद्यैर्व्विशेषतः ॥
ईषत् पिङ्गलकं वस्त्रं धारयेत् सर्व्वदा सुत" ।
सुत इति शिवस्य सम्बोधनं ।
सुदर्शनाख्यं यच्चक्रं तत्तु संधारयेद्बुधः ॥
विपञ्चीं कपिलञ्चैव मड्डुडिण्डिमझर्झरान् ।
वादयन् डमरुं योगी यत्र कुत्राश्रमे स्थितः" ॥
इति योगसारे २ परिच्छेदः ॥ * ॥ अपरञ्च ।
"क्षमा दानं तपो ध्यानं बालभावेन शैलजे ।
शिवोऽहं भैरवानन्दो मुक्तोऽहं कुलनायकः ॥
एवं भावपरो मन्त्री हेतुयुक्तः सदाशिवः ।
तस्य तुष्टा भवेत् काली किं न सिद्ध्यति भूतले ॥
अवधूतं समालोक्य शम्भुवत् पूजनं चरेत् ।
शक्तितः पञ्चतत्त्वानि यत्नेनैव निवेदयेत् ।
अशक्तः परमेशानि भक्तितः परितोषयेत्" ॥
इति निर्व्वाणतन्त्रं ॥ * ॥ अपि च ।
"भक्तावधूतो द्विविधः पूर्णापूर्णविभेदतः ।
पूर्णः परमहंसाख्यः परिव्राडपरः स्मृतः ॥
कृतावधूतसंस्कारो यदि स्याज्ज्ञानदुर्ब्बलः ।
तदा लोकालये तिष्ठन्नात्मानं स तु शोधयेत् ॥
रक्षन् स्वजातिचिह्नञ्च कुर्व्वन् कर्म्माणि केवलं ।
सदा ब्रह्मपरो भूत्वा साधयेज्ज्ञानमुत्तमं" ॥
इति महानिर्व्वाणतन्त्रं ॥ * ॥ अपि च ।
"अवधूतः शिवः साक्षादवधूतः सदाशिवः ।
अवधूती शिवादेवी अवधूताश्रमं शृणु ॥
चतुराश्रमिणां मध्ये अवधूताश्रमो महान् ।
अवधूतश्च द्विविधो गृहस्थश्च चितानुगः ॥
सचेलश्चापि दिग्वासा विधियोनिविहारवान् ।
सदारः सर्व्वदारस्थश्चाट्टहासो दिगम्बरः ॥
गृहावधूतो देवेशि द्वितयस्तु सदाशिवः" ।
इति मुण्डमालातन्त्रे २ पटलः ॥ * ॥
अवधूतस्य
त्यजेत् स्वजातिचिह्नानि कर्म्माणि गृहमेधिनां ।
तुरीयो विचरेत् क्षौणीं निःसङ्कल्पो निरुद्यमः ॥
सदात्मभावसन्तुष्टः शोकमोहविवर्ज्जितः ।
निर्निकेतस्तितिक्षुः स्यान्निःसङ्गो निरुपद्रवः ॥
नार्पणं भक्ष्यपेयानां न तस्य ध्यानधारणा ।
मुक्तो विमुक्तो निर्द्वन्द्वो हंसाचारपरो यतिः ॥
इति ते कथितं देवि ! चतुर्णां कुलयोगिनां ।
लक्षणं सविशेषेण साधूनां मत्स्वरूपिणां ॥
एतेषां दर्शनात् स्पर्शादालापात् परितोषणात् ।
सर्व्वतीर्थफलावाप्तिर्जायते मनुजन्मनां" ॥
इति महानिर्व्वाणतन्त्रं ॥

**अबध्यं**, त्रि, (बधमर्हति, यत्, ततो नञ्समासः ।)

मारणानर्हं । बधायोग्यं । अनर्थकवाक्यं । इति विश्वमेदिन्यौ । यथा, --

:"अबध्याञ्च स्त्रियं प्राहुस्तिर्य्यग्योनिगतास्वपि ।"

शत्रुस्त्रीणामबध्यत्वमाह मत्स्यपुराणं ।
"किं त्वया न श्रुतं लोके अबध्याः शत्रुयोषितः" ।
इति प्रायश्चित्ततत्त्वं ॥ * ॥ आत्मन अबध्यत्वं यथा, --
"देही नित्यमबध्योऽयं देहे सर्व्वस्य भारत ।
तस्मात् सर्व्वाणि भूतानि न त्वं शोचितुमर्हसि" ॥
इति श्रीभगवद्गीतायां २ अध्यायः ॥ * ॥ तद्वधे पापं यथा, --
"यावानबध्यस्य बधे तावान् बध्यस्य मोक्षणे ।
अधर्म्मोनृ पतेर्दृष्टोधर्म्मस्तु विनियच्छतः" ॥
इति मानवे ९ अध्याये २४९ श्लोकः ॥

**अवध्वंसः**, पुं, (अव + ध्वन्स + घञ् ।) परित्यागः ।

निन्दनं । अवचूर्णनं । इति मेदिनी ॥

**अवध्वस्तः**, त्रि, (अव + ध्वन्स + क्त ।) परित्यक्तः ।

निन्दितः । अवचूर्णितः । इति मेदिनी ॥

**अवनं**, क्ली, (अव + ल्युट् ।) प्रीणनं । इत्यमरः ॥

रक्षणं । इति हेमचन्द्रः ॥ गमनं । स्पहा ।
तर्पणं । शोभनं । श्रवणं । प्राप्तिः । आलिङ्गनं ।
याचनं । प्रवेशनं । सत्ता । वृद्धिः । ग्रहणं । बधः ।
शक्तिः । अवगमनं । कामः । करणं । एते अव-
धात्वर्थाः ॥

**अवनतं**, त्रि, (अव + नम् + क्त ।) नम्रं । नतभागः ।

नोया इति भाषा । तत्पर्य्यायः । अवाग्रं २ आ-
नतं ३ नतं ४ । इत्यमरः तट्टीका च ॥ (अधो-
भूतः । "लिखन्नास्ते भूमिं वहिरवनतः प्राण-
दयितः" । इति अमरुशतके ।)

**अवनद्धं**, क्ली, (अव + नह् + क्त ।) आनद्धं । मृद-

ङ्गादिवाद्यं । इत्यमरटीकायां स्वामी ॥ (आबद्धः ।
आच्छादितः । यथाह मनुः, --
"चर्म्मावनद्धं दुर्गन्धि पूर्णं मूत्रपूरीषयोः ।"
लिप्तः यथा,
"स्तानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः ।" इति
दानार्थमास्तृतकुशोपरि जलसेचनं यथा ब्रह्म-
पुराणम्, --
"सपुष्पं जलमादाय तेषां पृष्ठे पृथक् पृथक् ।
अप्रदक्षिणं नेनिज्यात् गोत्रनामानुमन्त्रितं ॥
पितुरवनेजनं मूलदेशे पितामहप्रपितामहयोस्तु
अवनेजनं मध्यदेशाग्रदेशयोः । मातामहादीना-
मप्येवं । इति । पिण्डोपरि जलसेचनं । यथा
ब्रह्मपुराणं, --
"ततो दर्भेषु विधिवत् सम्मार्ज्य च करन्ततः ।
प्रक्षाल्य च जलेनाथ त्रिराचम्य हरिं स्मरेत् ।
"तेभ्यः संस्रवपात्रेभ्यो जलेनैवावनेजनं ।
दत्त्वात्र पितरश्चेति पठेच्चोदङ्मुखस्थितः" ॥
इति च श्राद्धतत्त्वं ॥ (प्रक्षालनं ।
"न कुर्य्यात् गुरुपुत्त्रस्य पादयोश्चावनेजनम्" ।
इति मनुः ।)

**अवन्तिः**, पुं, (अव + झिच् ।) अवन्तीदेशः । इति

हेमचन्द्रः ॥ नदीविशेषः । इत्युणादिकोषः ॥
यथा,
"प्राग्ज्योतिषाः कामरूपा मालवाः स्युरवन्तयः" ।
इति हेमचन्द्रः ॥ अपि च ।
"अनूपास्तुण्डिकेराश्च वीतिहोत्रा अवन्तयः ।
एते जनपदाः ख्याता विन्ध्यपृष्ठनिवासिनः" ॥
इति मत्स्यपुराणे ९५ अध्यायः ॥

**अवन्तिका**, स्त्री, (अवति अव रक्षणादौ, बाहुल-

कात् झिच् ततः स्वार्थे कन्, टाप् ।) उज्जयनी-
नगरी ।
"अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।
पुरी द्वारवती चैव सप्तैता मोक्षदायिकाः" ॥
इति स्कन्दपुराणे ॥

**अवन्तिसोमं**, क्ली, (अवन्तिषु अभिषुतं सोमं,

शाकपार्थिवादित्वात् समासः ।) काञ्जिकं । इत्य-
मरसिंहः ॥ काँजि इति भाषा । (काञ्जिकशब्दे-
ऽस्य गुणा व्याख्येयाः ।)

**अवन्ती**, स्त्री, मालवदेशस्य नगरी । उजैन इति

ख्याता । तत्पर्य्यायः । उज्जयिनी २ विशाला ३
पुष्ककरण्डिनी ४ । इति हेमचन्द्रः ॥ यथा, --
"अवपातस्तु हस्त्यर्थे गर्त्तश्छन्नस्तृणादिना" ।
इति यादवः ।
"रोधांसि निघ्नन्नवपातमग्नः
करीव वन्यः परुषं ररास" ।
इति रघुवंशे । नाटकादौ
भयादिजनितपलायन-
सम्भ्रमादिवर्णनेन प्रस्तुतस्य परिवर्त्तः ।
यथा, --
"अवपातन्तु निष्क्राम-प्रवेश-त्रास-विद्रवैः" ।
इति दशरूपे ।)

**अवभृथः**, पुं, (अवभ्रियते अनेन, अव + भृ +

क्थन् ।) दीक्षान्तयज्ञः ।
प्रधानयागसमापका-
परयज्ञः । यज्ञादेर्न्यूनाधिक-दोष-शान्ति-
निमि-
त्तक-शेष-कर्त्तव्य-होम इति यावत् ॥
इत्यमरः
तट्टीका च ॥ यज्ञावशेषस्नानं । इति भरतः
त्रिकाण्डशेषश्च ॥
("ततश्चकारावभृथं विधिदृष्टेन कर्म्मणा"
इति भारते ।
"भुवं कोष्णेन कुण्डोध्नी मेध्येनावभृथादपि" ।
इति रघुवंशे ।)

**अवभ्रटः**, त्रि, (अवनतं नासिकायाः, नते नासि-

कायाः संज्ञायामिति भ्रटच् । अवभ्रष्टा
नासिका
अस्ति अस्य इति अर्श आद्यच् ।)
नतनासिक-
व्यक्तिः । इत्यमरः ॥ खाँदा इति भाषा ।

**अवमः**, त्रि, (अवति अस्मात् आत्मानम्, अव रक्ष-

णादौ, अवद्येति सूत्रेण अवतेः अमः प्रत्ययो
निपातितः । अवो भवो वा, अवोधसोर्लोप-
श्चेति मः ।) अधमः । निन्दितः । इत्यमरः ॥
("अनलकानलकानवमां पुरीम्" । इति
रघुवंशे ।)

**अवमं**, क्ली, तिथ्यन्तद्वयस्पृष्टैकदिनवारः । एकदिने

वेणीसंहारनाटकम् ।)

**अवनयः**, पुं, (अव + नी + भावे अच् ।) अवनायः । निपातनं । अधःपातनं । इति भरतः ॥

**अवनाटः**, त्रि, (अवनता नासिका, प्रादिसमासः, नतार्थे नासिकाया नाटादेशः अर्श आद्यच् ।) नतनासिकः । खाँदा छेपडानाकव्यक्ति इति भाषा । तत्पर्य्यायः । अवटीटः २ अवभ्रटः ३ । इत्यमरः ॥

**अवनायः**, पुं, (अव + नी + घञ् ।) अवनयः । अधोनयनं । इत्यमरः ॥ नीचे फेलान इति भाषा ।

**अवनिः**, स्त्री, (अव + अनि ।) पृथिवी । इत्यमरः ॥ ("तामुन्निद्रामवनिशयनां सौधवातायनस्थः" । इति मेघदूते ।)

**अवनी**, स्त्री, (अव + अनि + ङीप् ।) पृथ्वी । इति भरतः ॥ त्रायमाणा लता । इति राजनिर्घण्टः ॥

**अवनीपतिः**, पुं, (अवन्याः पतिः, षष्ठीतत्पुरुषः ।) राजा । इति जटाधरः ॥
("स श्रवा सुमहाभागः प्रीतिमानवनोपतौ" ।
इति मत्स्यपराणे ।)

**अवनेजनं**, क्ली, (अव + निज् + ल्युट् ।) पिण्ड-
"ताम्रपर्णीं समासाद्य शैलार्द्धशिखरोद्र्ध्वतः ।
अवन्तीसंज्ञको देशः कालिका तत्र तिष्ठति" ॥
इति शक्तिसङ्गमतन्त्रे ७ पटलः ॥ अन्यच्च ।
"उत्पन्नोर्कः कलिङ्गे तु यमुनायाञ्च चन्द्रमाः ।
अवन्त्याञ्च कुजो जातो मागधे च हिमांशुजः" ॥
इति संस्कारतत्त्वधृतमत्स्यपुराणं ॥ अन्यत् पूर्ब्ब-
लिखितं ॥
("प्राप्यावन्तीमुदयनकथाकोविदग्राम-
वृद्धान् ।" इति मेघदूते ।)

**अबन्ध्यः**, त्रि, (बन्धे साधुरिति बन्ध्यः, बन्ध + यत्, ततो नञ्समासः ।) फलवान् । फलकाले फलयुक्तवृक्षः । तत्पर्य्यायः । फलेग्रहिः २ फलग्रहिः ३ ।
इत्यमरः ॥
("कर्त्तुं यच्च प्रभवति
महीमुच्छिलीन्ध्रामबन्ध्याम्" ।
इति मेघदूते ।)

**अवपातः**, पुं, (अव + पत् + घञ् ।) रन्ध्रं । गर्त्तः । इति हेमचन्द्रः ॥ अधःपतनं ॥ (गजादीनां ग्रहणार्थं कृतस्तृणादिना प्रच्छन्नो गर्त्तः । यथा, --
एकतिथिर शेष अपरतिथिर आद्यन्तस्पर्श
इति यावत् ॥ इति ज्योतिषशास्त्रे प्रसिद्धं ॥
यथा "तिथ्यन्तद्वयमेको दिनवारः स्पृशति यत्र
तद्भवत्यवमदिनं । त्रिदिनस्पृक्तिथित्रयस्य स्पर्श-
नादह्नः" । इति ज्योतिषतत्त्वं ॥

**अवमतं**, त्रि, (अव + मन् + क्त ।) अवज्ञात । अवमानितं । अनादृतं । इत्यमरः ॥
("सुखं ह्यवमतः शेते सुखञ्च प्रतिबुध्यते" ।
इति मनुः ।)

**अवमतिः**, पुं, (अवान्तरगता अमात्यादीनां कार्य्येषु मतिर्यस्य ।) स्वामी । ईश्वरः । पतिः । प्रभुः ।
नेता । इति जटाधरः ॥

**अवमर्दः**, पुं, (अव + मृद् + घञ् ।) पीडनं । व्यथनं । इत्यमरः ॥ शस्यादिसम्पन्नदेशस्य परचक्रेण पी-
डनं । इति भरतः ॥
("बलावमर्द्दस्त्वयि सन्निविष्टो
यथा न गर्हेयुरुदारसत्त्वाः" ।
इति रामायणे ।) शत्रुकृतगाढप्रहार इति केचित् ॥
पदाक्रमणमिति केचित् ॥

**अवमानः**, पुं, (अव + मन् + भावे घञ् ।) अपमानः । अमर्य्यादा । यथा, --
"सम्मानाद्ब्राह्मणो नित्यमुद्विजेत विषादिव ।
अमृतस्येव चाकाङ्क्षेदवमानस्य सर्व्वदा" ॥
इति मानवे २ अध्याये १६२ श्लोकः ॥

:"मानावमानद्वन्द्वसहिष्णुत्वमनेन विधीयते" ।

इति कल्लूकभट्टः ॥

**अवमाननं**, क्ली, (अव + मन् + णिच् + ल्युट् ।) अप-

मानः । यथा । अवमाननं अवमानना । मान कि

चार्च्चे अवपूर्ब्बः ञीषि श्रन्थीति अनः । इत्यमर-

टीकायां भरतः ॥

**अवमानना**, स्त्री, (अव + मन + णिच् + युच् ।) अ-

वज्ञा । अनादरः । इत्यमरसिंहः ॥

("अतोऽवमाननाऽस्माकं मानिना भवता कृता" ।

इति विष्णुपुराणे ।)

**अवमानितः**, त्रि, (अव + मान + क्त ।) कृतापमानः ।

अवज्ञातः । अनादृतः । इत्यमरः ॥

("विप्रलब्धा तु सा ज्ञेया नितान्तमवमानिता" ।

इति सहित्यदर्पणे ।)

**अवमान्यः**, त्रि, (अव + मन + ण्यत् ।) अवमाननीयः ।

यथा, --

"या रोगिणी स्यात्तु हिता सम्पन्ना चैव शीलतः ॥

सानुज्ञाप्याधिवेत्तव्या नावमान्या च कर्हिचित्" ॥

इति मानवे ९ अध्याये ८२ श्लोकः ॥

**अवमूर्द्धशयः**, त्रि, (अवमूर्द्ध + शी + अच् ।) अधोमुख-

शायी । अवनतो मूर्द्धा अस्येत्यवमूर्द्धः । तथाविधः

शेते इत्यवमूर्द्धशयः ॥ ("उत्तानशया देवा अव-

मूर्द्धशया मनुष्याः" इत्युक्तं ।)

**अवमूर्द्धशायी**, [न्] त्रि, (अवमूर्द्ध + शी + णिनि ।)

अधोमुखशायी । अवमूर्द्धं यथा स्यात् तथा

शयितुं शीलमस्य इत्यर्थे णिन् प्रत्ययेन

निष्पन्नः ॥

**अवयवः**, पुं, (अवयौति इति यु मिश्रणे + पचाद्यच् ।)

अङ्गं । इत्यमरः ॥

"द्वौ शूरावरजौ धीरवित्रपाख्यौ निजाख्यया" ।

इति राजतरङ्गिण्यां ॥ शूद्रः ।

"यदि स्त्री यद्यवरजः श्रेयः किञ्चित् समाचरेत् ।

तत्सर्व्वमाचरेत् युक्तो यत्र वास्य रमेन्मनः" ॥

इति मानवे ।)

**अवरतः**, [स्] व्य, (अवर + तसिल् ।) अवरस्तात् ।

चरमे । इति सिद्धान्तकौमुदी ॥

**अवरतिः**, स्त्री, (अव + रम् + क्तिन् ।) विरामः ।

निवृत्तिः । इत्यमरः ॥

**अवरवर्णः**, पुं, स्त्री, (अवरश्चासौ वर्णश्चेति, कर्म्म-

धारयः ।) शूद्रः । इत्यमरः ॥

**अवरवर्णकः**, पुं, स्त्री, (अवरवर्ण + कन् स्वार्थे ।) चतुर्थ-

वर्णः । शूद्रः । इति रत्नावली ॥

**अवरव्रतः**, पुं, (नास्ति वरं यस्मात् तत् अवरं अत्यन्त-

श्रेष्ठं व्रतं यस्य ।) सूर्य्यः । इति त्रिकाण्डशेषः ॥

**अवरस्तात्**, व्य, (अवर + प्रथमाद्यर्थे दिक्छन्दोभ्य-

इति अस्तातिः ।) अवरतः । पश्चात् । इति

सिद्धान्तकौमुदी ॥

**अवरा**, स्त्री, (नास्ति वरा श्रेष्ठा यस्याः । अवर +

टाप् ।) दुर्गा । इति विश्वः ॥

**अवराद्ध्यः**, त्रि, (अवरार्द्धे भवः इति अवरार्द्ध यत् ।)

अवरार्द्धभवः । शेषार्द्धजातः । इति केचित् ॥

**अवरीणं**, त्रि, (अवरीयते स्म इति अव + रीङ् स्ववणे

क्त ।) धिक्कृतं । तिरस्कृतं । निन्दितं ।

इत्यमरः ॥

**अवरोधः**, पुं, (अव + रुध् + भावे घञ् ।) तिरो-

धानं । (आधारे घञ् ।) राजस्त्रीगृहं । राजगृहं ।

इति विश्वहेमचन्द्रौ ॥

("आपानभूमिगमनमवरोधस्य दर्शनम्" ।

इति रामायणे ।) राजदाराः । इति मेदिनी ॥

("यस्यावरोधस्तनचन्दनानां

प्रक्षालनाद्वारिविहारकाले ।

कलिन्दकन्या मथुराङ्गतापि

**अवरोहः**, पुं, (अव + रुह् + भावे घञ् ।) अवतरणं ।

आरोहणं । (कर्त्तरि संज्ञायां घञ् ।) लतोद्गमः ।

इति मेदिनी ॥ वृक्षमूलादग्रपर्य्यन्तं गता लता ।

शाखाशिफा । इत्यमरः । वोया नामना इति

भाषा ॥

("सुदूरमथ गत्वा तौ भ्रातरौ रामलक्ष्मणौ ।

अवरोहशताकीर्णं वटमासाद्य तस्थतुः" ॥

इति रामायणे ।) स्वर्गः । इति त्रिकाण्डशेषः ॥

**अवरोहशाखी**, [न्] पुं, (अवरोहति अधोगच्छति

मूलमस्याः तादृशी या शाखा सा विद्यते अस्य

मत्वर्थीय इनिः ।) प्लक्षवृक्षः । इति राज-

निर्घण्टः ॥ (प्लक्षशब्देऽस्य गुणाज्ञेयाः ॥)

**अवरोहिका**, स्त्री, (अवरोहति अधोगच्छति अव

+ रुह + ण्वुल् + टाप् अत इत्वं ।) अश्वगन्धा-

लता । इति राजनिर्घण्टः ॥

**अवरोही**, [न्] पुं, (अव + रुह + णिनि ।) वट-

वृक्षः । इति राजनिर्घण्टः ॥ (वटशब्देऽस्य गुणा-

दयो ज्ञातव्याः ।)

**अवर्णः**, पुं, (वर्ण्यते प्रशस्यते अनेन इति वर्णः ततो

विरोधे नञ्समासः ।) निन्दा । परीवादः । इत्य-

मरसिंहः ॥

("सोढुं न तत्पूर्ब्बमवर्णमीशे

आलानिकं स्थाणुमिव द्विपेन्द्रः" ।

इति रघुवंशे ।)

**अवलग्नः**, पुं, क्ली, (अवलग्यते इति अव + लग + क्त ।

इडभावः । लस्ज + क्त, वा ।) मध्यदेशः । इत्य-

मरः ॥ माजा इति भाषा । ("विपुलतरोन्मुख-

लोचनावलग्नम्" । इति माघः ।)

**अवलग्नः**, त्रि, (अव + लग + क्त ।) संलग्नः । संयुक्तः ।

इति मेदिनी ॥

**अवलम्बः**, पुं, (अव + लवि + अच् ।) अवलम्बनं ।

अवपूर्ब्बलम्बधातोरल्प्रत्ययेन निष्पन्नः ॥

(आश्रयः ।)

("स्वैरेवावयवैः प्रियस्य विशतस्तन्व्या कृतं मङ्गलं" ।
इति अमरुशतके । उपकरणं । अंशः ।
एकदेशः ।
"तेषामवयवान् सूक्ष्मान् षण्णामप्यमितौजसां"
।
इति मनुसंहितायां । न्यायमते
आरम्भकद्रव्यञ्च,
तत् उपादानकारणतया च व्यवह्रियते यदुक्तं, --
"अनित्या तु तदन्या स्यात् सैवावयवयोगिनी"
।
इति भाषापरिच्छेदे । प्रतिज्ञाहेतूदाहरणोप-
नयनिगमान्यनुमानावयवाश्च ।)

**अवरः**, त्रि, (न व्रियते इति वृञ्वरणे + ग्रहवृ-

द्रिति अप् ।) चरमः । इति मेदिनी । कनिष्ठः ।
अश्रेष्ठः । यथा, --
"श्रीर्नेशेन विना शम्भुः पृथग्विश्वेन तत्पुनः ।
न नाना शम्भुना रामाद्वर्षेणाधोक्षजोऽवरः" ॥
इति मुग्धबोधव्याकरणे वोपदेवः ॥ निकृष्टः ।
यथा, --
"दूरेण ह्यवरं कर्म्म बुद्धियोगाद्धनञ्जय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः" ॥
इति श्रीभगवद्गीतायां २ अध्याये ४९ श्लोकः
॥

**अवरं**, क्ली, (वृ + अप् ततो नञ्समासः ।) गजा-

न्त्यजङ्घादिदेशः । इत्यमरमेदिन्यौ ॥

**अवरजः**, पुं, (अवर + जन् + ड ।) कनिष्ठभ्राता ।

इत्यमरसिंहः ॥
("अस्य चावरजं विद्धि भ्रातरं मां तु लक्ष्मणम्"
।
इति रामायणे । हीनवंशजातः ।
गङ्गोर्म्मिसंसक्तजलेव भाति" ॥
इति रघुवंशे । निरोधः । बाधा । अन्तरायः ।
आच्छादनं । केदारादिवेष्टनं ।)

**अवरोधकः**, त्रि, (अव + रुध + ण्वुल् ।) अवरोध-

कारकः । अवरोधकर्त्ता । अवपूर्ब्बकरुधधातोः
णकप्रत्ययेन निष्पन्नः ॥
("सुधन्वा वीर्य्यवान् राजा मिथिलामवरोधकः"
।
इति रामायणे ।)

**अवरोधनं**, क्ली, (अवरुध्यते अत्र रुध आवरणे

कर्म्मणि ल्युट् ।) राज्ञामन्तःपुरं । इत्यमरसिंहः
॥
(अव + रुध् + ल्युट् भावे ।) रोधकरणं । यथा,
--
"कृष्ण त्वदीय-पद-पङ्कज-पञ्जरान्ते
अद्यैव मे विशतु मानस-राजहंसः ।
प्राणप्रयाणसमये कफबातपित्तैः
कण्ठावरोधनविधौ स्मरणं कुतस्ते" ॥
इति पाण्डवगीता ॥

**अवरोधिकः**, पुं, (अवरोध + तत्र नियुक्त इति ठक् ।

संज्ञापूर्ब्बकत्वात् वृद्ध्यभावः । अवरोधः
निवास-
त्वेन अस्ति अस्य वा ठन् ।)
राजान्तःपुराध्यक्षः ।
इति हेमचन्द्रः ॥

**अवलम्बनं**, क्ली, (अव + लवि + आधारे ल्युट् ।)

आश्रयः । यथा, --
"प्रतिकूलतामुपगते हि विधौ
विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्त्तुरभू-
न्नपतिष्यतः करसहस्रमपि" ॥
इति माघे ९ सर्गः ॥

**अवलम्बितं**, त्रि, (अव + लवि + क्त ।) अविलम्बितं ।

शीघ्रं । इति जटाधरः ॥ अधोलम्बायमानं ।
कृतावलम्बनं । आश्रितं ॥

**अवलक्षः**, पुं, (अवलक्ष्यते इति अव + लक्ष + घञ् ।)

वलक्षः । श्वेतवर्णः । (अर्श आदित्वात् अच् ।)
तद्वति त्रि । इत्यमरटीकायां स्वामी ॥

**अवलिप्तः**, त्रि, (अव + लिप् + क्त ।) धनादिगर्ब्बितः ।

यथा, --
"न संवसेच्च पतितैर्न चाण्डालैर्न पुक्कशैः ।
न मूर्खैर्नावलिप्तैश्च नान्त्यैर्नान्त्यावशायिभिः"
॥
इति भानवे ४ अध्याये ७९ श्लोकः ।
अवलिप्ता
धनादिगर्ब्बिता इति कुल्लूकभट्टः ॥
"अवलिप्तासि मैवं त्वं देवि ब्रूहि ममाग्रतः" ।

:इति देवीमाहात्म्यम् ॥

**अवलिप्तता**, स्त्री, (अवलिप्त + तल् भावे ।) अहङ्कारः । इति हेमचन्द्रः ॥
(“तेजस्विन्यवलिप्तता
मुखरता वक्तर्य्यशक्तिः स्थिरे” । इति
नीतिशतके ।)

**अवलीढं**, त्रि, (अव + लिह + क्त कर्म्मणि ।) भक्षितं ।

यथा मनुः, --
“पतत्रिणावलीढञ्च शुना संस्पृष्टमेव च” ।
इत्यादि । “पतत्रिणावलीढं काकादिना
भक्षितं” ।
इत्याह्निकतत्वम् ॥

**अवलीला**, स्त्री, (अवरा लीला ।) हेला । अनायासः ।

यथा, --
“रतिज्ञं नूतनं प्राप्य विषतुल्यं पुरातनं !
कान्तं दृष्ट्वा हिनस्त्येव सोपायेनावलीलया”
॥
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे २३
अध्यायः ।
अपिच ।
“शूलञ्च भ्रमणं कृत्वा पपात दानवोपरि ।
चकार भस्मसात्तञ्च सरथञ्चावलीलया” ॥
इति च तत्रैव प्रकृतिखण्डे १८ अध्यायः ॥

**अवलुण्ठनं**, क्ली, (अव + लुठि + भावे ल्युट् ।) लुण्ठनं ।

लोटा गडागडी इतिभाषा ।
अवपूर्ब्बकलुठधा-
तोरनट्प्रत्ययेन निष्पन्नं ॥

**अवलेपः**, पुं, (अव + लिप् + भावे घञ् ।) अहङ्कारः ।

(“दिङ्नागानां पथि परिहरन्
स्थूलहस्तावलेपान्”
इति मेघदूते ।) लेपनं । दूषणं । इति मेदिनी
॥
सङ्गः । इति त्रिकाण्डशेषः ॥

**अवलेपनं**, क्ली, (अव + लिप् + ल्यट् भावे ।) विलेपनं । म्रक्षणं । माखा इति भाषा । अवपूर्ब्बक-

शीतोपचारि क्षौद्रमिति । शीतेनोपचारोऽस्या-
स्तीति शीतोपचारि । शीतञ्चात्र सन्निपाते
विरुध्यते । अयमवलेहः प्रायेणोद्र्ध्वजत्रुजरोग-
हरत्वात् सायमुपयुज्यते । यत उक्तं चरकेण ।
“ऊद्र्ध्वजत्रुगदघ्नी या सा सायमवलेहिका ।
अधोरोगहरी या सा भोजनात्प्राक् प्रयुज्यते” ।
पौष्करं पुष्करमूलं तदलाभे कुष्ठं देयं ॥
शृङ्गी कर्कटशृङ्गी ! व्योषं शुण्ठीपिप्पलीमरिचानि
च । यासो यवासः । केचित् यासस्थाने यवानीं
प्रक्षिपन्ति । कारवी मगरेला इति लोके । अष्टा-
ङ्गावलेहिका ॥ * ॥
“स्विन्नमामलकं पिष्ट्वा द्राक्षया सह मेलयेत् ।
विश्वभेषजसंयुक्तं मधुना सह लेहयेत् ॥
तेनास्य शाम्यति श्वासः कासो मूर्च्छारुचिस्तथा”
॥
इत्यवलेहः ॥ * ॥ अन्यत् यथा, --
“पिप्पलीं त्रिफलाञ्चापि समभागां ज्वरी लिहन् ।
मधुना सर्पिषा वापि कासी श्वासी सुखी भवेत् ॥
कट्फलं पौष्करं शृङ्गी कृष्णा च मधुना सह ।
श्वासकाशज्वरहरो लेहोऽयं कफनाशनः” ॥
चातुर्भद्रिका ॥ * ॥
“कट्फलं पौष्करं शृङ्गी यवानी कारवी तथा ।
कटुत्रयञ्च सर्व्वाणि समभागानि चूर्णयेत् ॥
आर्द्रकस्य रसैर्ल्लिह्यान्मधुना वा कफज्वरी ।
कासश्वासारुचिच्छर्द्दिश्लेष्मानिलनिवृत्तये” ॥
अष्टाङ्गावलेहः । इति भावप्रकाशः ॥
(“क्वाथस्य स्यात् पुनः पाकात् घनत्वं
सारसक्रिया ।
सोऽवलेहश्च लेहः स्यात् तन्मात्रा
स्यात्पलोन्मिता ॥
सिता चतुर्गुणा कार्य्या चूर्णाच्च द्विगुणो गुडः ।
द्रवं चतुर्गुणं दद्यादिति सर्व्वत्र निश्चयः ॥
सुपक्वे तन्तुमत्त्वं स्यादवलेहेऽप्सुमज्जनं ।
स्थिरत्वं पीड्यते मुद्रा गन्धवर्णरसोद्भवः ॥
दुग्धमिक्षुरसं यूषं पञ्चमूलकषायकं ।
वासाक्वाथं यथायोग्यमनुपानं प्रशस्यते ॥ * ॥
तदुदाहरणं । यथा, --
“कण्टकारीतुलां नीर-द्रोणे पक्त्वा कषायकं ।
पादशेषं गृहीत्वा च तस्मिंश्चूर्णानि दापयेत् ॥
पृथक् पलांशान्येतानि गुडूचीचव्यचित्रकाः ।
मुस्तं कर्कटशृङ्गी च त्र्यूषणं धन्वयासकं ॥

**अवलोकितः**, पुं, (अव + लोक + भावे क्त ततोऽस्त्यर्थे अच् ।) लोकनाथः । बुद्धः । इति
विश्व-
मेदिन्यौ ॥

**अवलोकितं**, त्रि, (अव + लोक + कर्म्मणि क्त ।)

निरीक्षितं । दृष्टं । इति विश्वमेदिन्यौ । (भावे
क्त ।) प्रेक्षणक्रियायां, क्ली ॥

**अवल्गुजः**, पुं, (अवल्गोरशोभनाज्जायते इति अव-ल्गु + जन् + ड ।) सोमराजी । इत्यमरः ॥
कृष्ण-
वर्णसोमराजी । हाकुच् यस्य प्रसिद्धिः । तस्य
गुणाः । वायु-कफ-कुष्ठ-त्वग्दोष-नाशित्वं । इति
राजवल्लभः । अस्य विवरणं वाकुची शब्दे
द्रष्टव्यं ॥
(“अवल्गुजाद्बीजकर्षं पीत्वा कोष्णेण वारिणा ।
भोजनं सर्पिषा कार्य्यं सर्व्वकुष्ठप्रणाशनम्” ॥
इति वैद्यकचक्रपाणिसङ्ग्रहः ॥)

**अववादः**, पुं, (अव + वद् + घञ् ।) आज्ञा । निन्दा ।

विश्वासः । इति मेदिनी ॥
अवशः, त्रि, (न विद्यते वशमायत्तत्वं यस्य ।)
अवशीभूतः । विवशः ।
यथा, --
“श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः
।
अतो न रोदितव्यञ्च क्रिया कार्य्या विधानतः”
॥
इति शुद्धितत्त्वं ॥ (क्लीं, अवश्यं । निश्चितम्
।)

**अवशक्थिकः**, त्रि, (अवबद्धे शक्थिनी येन ।)

वस्त्रादिद्वारा
पृष्ठजानुजङ्घाद्वयदृढबन्धनपूर्ब्बको-
पविष्टः । फाँडबान्धिया वसा इति भाषा । यथा
।
कात्यायनः ।
“आसनारूढपादस्तु जानुनोर्ज्जङ्घयोस्तथा ।
कृतावशक्थिको यस्तु प्रौढपादः स उच्यते” ॥
आसनारूढपादः आसनारूढपादतलः । जानु-

लिपधातोरनट् प्रत्ययेन निष्पन्नं ॥

**अवलेहः**, पुं, (अवलिह्यते क्वाथादेः पुनः पाकात्

घनीभूततया स्वाद्यते इति अव + लिह + कर्म्मणि
घञ् ।) लेह्यौषधं । तस्य लक्षणं पर्य्यायश्च यथा, --
"क्वाथादेर्यत् पुनः पाकात् घनत्वं सारसक्रिया ।
सोऽवलेहश्चलेहश्च प्राश इत्युच्यते बुधैः" ॥
("जिह्वालेह्यावलेहिका") इति च वैद्यकपरि-
भाषा । यथा, --
"कट्फलं पौष्करं शृङ्गी व्योषं यासश्च कारवी ।
श्लक्ष्णचूर्णीकृतं चैतन्मधुना सह लेहयेत् ॥
एषावलेहिका हन्ति सन्निपातं सुदारुणं ।
हिक्कां श्वासञ्च कासञ्च कण्ठरोगञ्च नाशयेत् ॥
एतद्योज्यं कफोद्रेके चूर्णमार्द्रकजै रसैः" ।
तन्त्रान्तरे च उक्तं ।
"अष्टाङ्गं मधुना लिह्यादार्द्रकस्य रसेन वा ।
संमोहं दारुणं हन्यात्तन्द्राकाससमन्वितम्" इति ॥
"सर्व्वेषु सन्निपातेषु न क्षौद्रमवचारयेत् ।
शीतोपचारि क्षौद्रं स्याच्छीतञ्चात्र विरुध्यते" ॥
अयमभिप्रायः । सन्निपातज्वरेषु श्लेष्मनिग्रहार्थं
सर्व्वदा स्वेदो हित उक्तः । तत्राग्निसम्बन्धाद्देह-
स्योष्णता तिष्ठेदेव । उष्णेण मधुना विरोधः ।
उक्तञ्च सुश्रुतेन ।
"उष्णैर्विरुध्यते सर्वं विषाम्ययतया मधु ।
उष्णात्तमुष्णैरुष्णञ्च तन्निहन्ति यथा विषं" इति ॥
भार्गी रास्ना शठी चैव शर्करा पलविंशतिः ।
प्रत्येकञ्च पलान्यष्टौ प्रदद्याद्धृततैलयोः ॥
पक्त्वा लेहत्वमानीय शीते मधु पलाष्टकं ।
चतुष्पलं तु गोक्षीर्य्या पिप्पलीनां चतुष्पलं ॥
क्षिप्त्वा निदध्यात् सुदृढे मृन्मये भाजने शुभे ।
लेहोऽयं हन्ति हिक्कार्त्तिश्वासकासानशेषतः ॥ * ॥
कण्टकार्य्यवलेहः ॥ * ॥ इति च शार्ङ्गधरः ॥)

**अवलेहनं**, क्ली, (अव + लिह् + भावे ल्युट् ।) लेहनं ।

जिह्वाद्वारा स्वादनं । चाटन् इति भाषा । अव-
लेहः । अवपूर्ब्बलिहधातोर्भावेऽनट्प्रत्ययेन
निष्पन्नं ॥

**अवलोकनं**, क्ली, (अव + लुक् + ल्युट् भावे ।) दर्शनं ।

आलोकनं । इति हेमचन्द्रः ॥
("जलवेलावलोकनकुतूहली" ।
इति नागानन्दे ।)
नोर्ज्जङ्घयोः कृतावशक्थिको वस्त्रादिना कृतपृष्ठ-
जानुजङ्घाबन्धः । इत्याह्निकतत्त्वं ॥

**अवशिष्टः**, त्रि, (अवशिष्यते इति अब + शिष +

क्त ।) शेषः । उद्वर्त्तः । अवशेषाश्रयः । यथा, --
"बल्मीकमूषिकोत्खातां मदमन्तर्ज्जलां तथा ।
शौचावशिष्टां गेहाच्च नादद्यात् लेपमम्भवां" ॥
इत्याह्निकतत्त्वं ॥

**अवश्यं**, व्य, (न वश्यं ।) निश्चयः । तत्पर्य्यायः । नूनं २ ।

निश्चितं ३ । इत्यमरः ॥
("अवश्यं याति तिर्य्यक्त्वं जग्ध्वा चैवाहुतं हविः" ।
इति मनुः ॥) (न + वश + यत् ।) अनायत्ते त्रि ॥

**अवश्ययः**, स्त्री, (अव + श्यै + ण । पृषोदरादित्वात्

ह्रस्वः ।) कुज्झटिका । इति शब्दरत्नावली ॥
(कुज्झटिकाशब्देऽस्य विशेषो ज्ञेयः ।)

**अवश्यायः**, पुं, (अवश्यायते शैत्यमापद्यते इति श्यैङ्

गतौ + श्याद्व्यधेति णः । ततो आतो युगिति
युक् ।) हिमं । इत्यमरः ॥
("अवश्यायनिपातेन किञ्चित्प्रक्लिन्नशाद्वला" ।
इति रामायणे ।) गर्व्वः । इति विश्वप्रकाशः ।

**अवष्कयणी**, स्त्री, वष्कयनी । चिरप्रसूता गौः । इत्य-

मरटीकायां सारसुन्दरी ॥

**अवष्टब्धं**, त्रि, (अवष्टभ्यते स्म, ष्टभि स्तम्भे स्तम्भु-

:रोधने वा क्तः । स्तम्भेः अवाच्चेति षः । अवा-
च्चालम्बन इति सूत्रेण आविदूर्य्ये स्तम्भेः षत्व-
विधानादवष्टब्धशब्द आसन्नपर इति अद्यश्वीना-
वष्टब्धे इत्यत्र मनोरमायां स्थितं ।) अविदूरः ।
समीपं । अवलम्बितं । आश्रितं । इत्यमरः ॥ बद्धः ।
रुद्धः । इति भरतः ॥ आक्रान्तः । इति मेदिनी ॥

**अवष्टम्भः**, पुं, (अव + ष्टम्भ रोधे इति + घञ् ।
षत्वञ्च ।) स्वर्णं । ("रघोरवष्टम्भमयेन पत्रिणा
हृदि क्षतो गोत्रभिदप्यमर्षणः" ।
इति रघुवंशे ।) स्तम्भः । प्रारम्भः । इति मेदिनी ॥
सौष्ठवं । इति हलायुधः ॥ (अवलम्बनं । बोधनम् ।
निष्पन्दता ।)

**अवष्वाणं**, क्ली, (अव + स्वन्शब्दे + घञ् । षत्वञ्च ।)
भक्षणं । इति हेमचन्द्रः ॥

**अवस्**, ब्य, (अवर + पूर्ब्बाधरावराणामित्यसि-
प्रत्ययः, तत्सन्नियोगेन अवरस्य अवादेशश्च ।)
ब्यतिरेकः । इति केचित् ॥

**अवसः**, पुं, (अव रक्षणादौ अवति इति अत्यवि-
चमीत्यादिना असच् प्रत्ययः ।) राजा । सूर्य्यः ।
इति सिद्धान्तकौमुदी ॥

**अवसं**, क्ली, (अव + असिच् भावे ।) रक्षणं । वैदिक-
शब्दोऽयं ॥

**अवसक्थिका**, स्त्री, (अवबद्धे सक्थिनी यया बन्ध-
प्रणाल्या सा, अव + सक्थि + समासे कप्
।) खट्वा ।
बधे एका चेद्बहुभिरित्युपदेशेन दण्डवत् प्राय-
श्चित्तानि भवन्तीत्यतिदेशानवसरात् । तदवस-
रत्वे प्रत्येकं पूर्णप्रायश्चित्तद्वैगुण्यं स्यात्" । इति
प्रायश्चित्वतत्त्वं ॥ (योग्यकालः । क्रियास्थितियोग्य-
तासम्पादकरूपः कालिकोऽवकाशः । यथा, --
"कामस्तु बाणावसरं समीक्ष्य" । इति कुमारे ।
शिष्यजिज्ञासानिवृत्तावश्यवक्तव्यरूपः सङ्गति-
विशेषः । अनन्तरवक्तव्यत्वम् अवसरः । "उप-
मानेऽवसरसङ्गतिः" । इति जगदीशः ।)

**अवसर्गः**, पुं, (अव + सृज् + घञ् ।) स्वेच्छाचारः ।
तत्पर्य्यायः । प्रकाम्यं २ स्वाच्छन्द्यं ३ अनुमननं ४ ।
इति त्रिकाण्डशषः ॥

**अवसर्पः**, पुं, (अव + सृप् + अच् ।) अपसर्पः । चरः ।
इत्यमरटीकायां भरतः ॥

**अवसर्पिणी**, स्त्री, (अव + सृप + णिन् ङीप् ।)
जिनानां कालविशेषः । स तु दशकोटिकोटि-
सागरवर्षेण समाप्यते । इति हेमचन्द्रः ॥

**अवसव्यं**, त्रि, अपसव्यं । दक्षिणं । इति रायमुकुटः ॥

**अवसादः**, पुं, (अव + सद् + घञ् ।) अवसन्नता ।
तत्पर्य्यायः । विषादः २ सादः ३ विषण्णता ४ ।
इति हेमचन्द्रः ॥ (शेषः । क्षयः । यथा, --
"धैर्य्यावसादेन हृतप्रसादा
वन्यद्विपेनेव निदाघसिन्धुः" ।
इति किरातार्ज्जुनीये ।)

**अवसानं**, क्ली, (अव + सो + ल्युट् ।) क्रियासमाप्तिः ।
शेषः । तत्पर्य्यायः । सातिः २ । इत्यमरः ॥ विरामः
३ । इति जटाधरः ॥ मृत्युः ।
("पुंसोऽवसानं व्रजतोऽपि निष्ठुरै-
रिष्टैर्धनैः पञ्चपदीनमुच्यते" ।
इति पञ्चतन्त्रे ।) सीमा । इति हेमचन्द्रः ॥

**अवसायः**, पुं, (अव + सो + घञ् ।) शेषः । समाप्तिः ।
निश्चयः । इति मेदिनी ॥

**अवसितं**, त्रि, (अव + सो + क्त ।) परिपक्वमर्दित-
इति हितोपदेशः ।)

**अवस्कन्दनं**, क्ली, (अव + स्कन्द + ल्युट् ।) अव-
गाहनं । इति भट्टिः ॥ अवतरणं । इति महा-
भारतं ॥ अवपूर्ब्बस्कन्दधातोरनट्प्रत्ययेन निष्पन्नं ॥

**अवस्करः**, पुं, (अव कीर्य्यते क्षिप्यते इति । अव +
कृ + अप् + सुट् ।) विष्ठा । गुह्यं । इत्यमरमेदिन्यौ ॥
संमार्जन्यादिनिक्षिप्तधूल्यादि । इत्यमरटीकायां
मथुरानाथः सारसुन्दरी च ॥

**अवस्तात्**, ब्य, (अवरस्मिन्, अवरस्मात्, अवरमि-
त्यर्थे अस्तातिः ।) अवरे । पश्चात् । शेषे । अन्ते ।
इति पाणिनिः ॥ ("अवस्तात्स्वर्गलोकं प्रापयन्तः" ।
इति शतपथब्राह्मणे ।)

**अवस्तारः**, पुं, (अव + स्तॄ + घञ् ।) यवनिकादिः ।
कानात् इत्यादि भाषा ॥ अवस्तीर्य्यतेऽनेनेति स्तॄञ
आच्छादने घञ् ॥

**अवस्तु**, क्ली, (न वस्तु । नञ्तत्पुरुषः ।) असद्वस्तु ।
(यथा, --
"अवस्तुनिर्ब्बन्धपरे कथं नु ते
करोऽयमामुक्तविवाहकौतुकः" ।
इति कुमारे ।) वेदान्तमते अज्ञानादिसकल-
जडसमूहः ॥

**अवस्था**, स्त्री, (अव + स्था + अङ् ।) दशा । कालि-
कविशेषः । इत्यमरः ॥
"कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावाध ।
कैशोरमापञ्चदशात् यौवनन्तु ततः परं ॥
आषोडशाद्भवेद्बालस्तरुणस्तत उच्यते ।
वृद्धस्तु सप्ततेरूद्‌र्ध्वं वर्षीयान् नवतेः परं" ॥
इति स्मृतिः ॥

**अवस्थाचतुष्टयं**, क्ली, (अवस्थायाश्चतुष्टयं । तत्पुरुषः ।)
कालकृतचतुर्विधदशा । यथा । "आपञ्चदशवषं

तत्पर्य्यायः । पर्य्यस्तिका २ परिकरः ३ पर्य्यङ्कः ४ ।
इति हेमचन्द्रः ॥ (पर्य्यङ्कबन्धः ।
वस्त्रादिद्वारा पृष्ठ-
जानु-जङ्घा-द्वयदृढबन्धनपूर्ब्बकोपवेशनं ।
यथा, --
"आसनारूढपादस्तु जानुनोर्जङ्घयोस्तथा ।
कृतावसक्थिको यस्तु प्रौढपादः स उच्यते" ॥
इति कात्यायनः ।
"शयानः प्रौढपादश्च कृत्वा
चैवावसक्थिकाम् ।
नाधीयीतामिषं जग्ध्वा सूतकान्नाद्यमेव च" ॥
इति मनुः ।)

**अवसथः**, पुं, (अव + सो + क्थन् ।) छात्रनिलयः ।
इति हेमचन्द्रः ॥ पाठशाला चौपाडी यस्य प्रसिद्धिः । ग्रामः । इति शब्दरत्नावली ॥ गृहं ।
इति हलायुधः ॥

**अवसथ्यः**, पुं, (अवसथ + यत् ।) छात्रवेश्म ।
इति हेमचन्द्रः ॥ चौपाडी इति भाषा ॥

**अवसन्नः**, त्रि, (अव + सद + क्त ।) अवसादप्राप्तः ।
विषण्णः । यथा, --
"महिम्नः पारन्ते परमविदुषो यद्यसदृशी
स्तुतिर्ब्रह्मादीनामपि तदवसन्नास्त्वयि गिरः ।
अथावाच्यः सर्व्वस्वमतिपरिणामावधि गृणन्
ममाप्येष स्तोत्रे हर निरपवादः परिकरः" ॥
इति पुष्पदन्तकृतशिवस्तोत्रं । अपि च ।
"आचारेणावसन्नोऽपि पुनः प्रार्थयते यदि" ।
इति व्यवहारतत्त्वं ॥

**अवसरः**, पुं, (अव + सृ + अच् ।) प्रस्तावः । मन्त्र-
विशेषः । वर्षणं । इति मेदिनी ॥ वत्सरः । क्षणं ।
इति हेमचन्द्रः ॥ अवकाशः । यथा । "गो-
धान्यं । तत्पर्य्यायः । ऋद्धं २ । इति
भरतमेदिन्यौ ॥
ज्ञातं । अवसानगतं । समाप्तं । तत्पर्य्यायः ।
सितः
२ । इत्यमरमेदिन्यौ ॥ ("यदि नेपथ्यविधानम्
अवसितम्" । इति शाकुन्तले ।)

**अवसेकिमः**, पुं, (अवसेकेन + निर्वृत्तः । अवसेक +
इमन्च ।) वटकः । इति हेमचन्द्रः ॥ वडा इति-
भाषा ॥

**अवस्कन्दः**, पुं, (अव + स्कन्द + अच् ।) विजिगीषूणां
निवेशस्थानं । शिविरं । इति हलायुधः ॥ अव-
गाहनं । यथा, --
"लतानुपातं कुसुमान्यगृह्णात्
स नद्यवस्कन्दमुपास्पृशच्च ।
कुतूहलाच्चारुशिलोपवेशं
काकुस्थ ईषत् स्मयमान आस्त" ॥
इति भट्टौ २ सर्गे ११ श्लोकः ॥
नद्यामवस्कन्दो-
ऽवगाहो यत्र स्नानक्रियायां । इति तट्टीकायां
भरतः ॥ (आक्रमणं । यथा, --
"अवस्कन्दभयात् राजा प्रजागरकृतश्रमम् ।
दिवासुप्तं समाहन्यान्निद्राव्याकुलसनिकम्" ॥
बाल्यं । आत्रिंशद्वर्षं कौमारं । आपञ्चाशद्वर्षं यौ-
वनं । पञ्चाशत ऊर्द्ध्वं वृद्धत्वं" । इति
वैद्यकशास्त्रे ॥

**अवस्थानं**, क्ली, (अव + स्था + ल्युट् ।) स्थितिः ।
वासः । यथा । "परः सन्निकर्षश्च
उपर्य्यधोभावा-
पन्नसमसूत्रपातन्यायेनैकराश्यवच्छेदेन सहाव-
स्थानरूपः" । इति तिथ्यादितत्त्वं ॥ (अवस्था ।
प्रतिष्ठा । यथा, "कीदृक् ते व्यसनावस्थानम्" ।
इति पञ्चतन्त्रं ।
"पद्भ्यां दृढमवस्थानं स कृत्वा कपिकुञ्जरः" ।
इति रामायणं ॥)

**अवस्थितः**, त्रि, (अव + स्था + क्त ।) कृतावस्थानः ।
अवस्थितिविशिष्टं । स्थितं । यथा ।
"यानेव हत्वा न जिजीविषाम-
स्तेऽवस्थिताः प्रमुखे धार्त्तराष्ट्राः" ।
इति श्रीभगद्गीतायां २ अध्वाये ६ श्लोकः ॥

**अवस्थितिः**, स्त्री, (अव + स्था + क्तिन् ।) अवस्थानं ।
थाका । इति भाषा । अवपूर्ब्बकस्थाधातोः क्ति-
प्रत्ययेन निष्पन्ना ॥ (अनुसरणम् । अभ्यासः ।)

**अवहस्तः**, पुं, (अवरं हस्तस्य । एकदेशी तत्पुरुषः ।)
हस्तपृष्ठं । इति हेमचन्द्रः ॥

**अवहारः**, पुं, (अव + हृ + घञ् ।) चोरः । द्यूत-
युद्धदिविश्रामः । निमन्त्रणं । उपनेतव्यद्रव्यं ।

:ग्राहनामजलजन्तुः । इति विश्वमेदिन्यौ । धर्म्मा-

न्त रं । इति शब्दरत्नावली ॥ (आह्वानम् । स्वध-
र्म्मपरित्यागपूर्ब्बकधर्म्मान्तरग्रहणम् । प्रत्यर्पणम्
।)

**अवहारकः**, पुं, (अवहार + स्वार्थेकः ।) जलजन्तुवि-

शेषः । हाङ्गर इति ख्यातः । जलहस्तीति
केचित् । तत्पर्य्यायः । अवग्राहः २ नक्रराजः ३
अवहारः ४ । इति शब्दरत्नावली ॥ युद्धादि-
निवर्त्तके त्रि ।

**अवहार्य्यः**, त्रि, (अव + हृ + ण्यत् ।) समर्पणीयः ।

यथा, --
"आधिश्चोपनिधिश्चोभौ न कालात्ययमर्हतः ।
अवहार्य्यौ भवेतां तौ दीर्घकालमवस्थितौ" ॥
इति मानवे ८ अध्याये १४५ श्लोकः ॥ (अर्थ-
दण्डयोग्यः । यथा, --
"अवहार्य्यो भवेच्चैव सान्वयः षट्शतं दमम् ।
निरन्वयोऽनपसरः प्राप्तः स्याच्चौरकिल्विषं" ॥
इति मनुः ।

**अवहालिका**, स्त्री, (अव + हल् + ण्वुल् + टाप् ।)

प्राचीरं । इति हारावली ॥

**अवहितं**, त्रि, (अव + धा + क्त ।) विज्ञातं । अव-

धानं गतं । इति धरणी ॥ (सावधानः । प्रमाद-
रहितः । यथा, --
"शृणुष्वावहितो भूत्वा यद्वृत्तं नन्दने पुरा" ।
इति मार्कण्डेयपुराणम् ॥)

**अवहित्था**, स्त्री, क्ली, (न वहिस्तिष्ठतीति अवहिः +

स्था + क + टाप् । पृषोदरादित्वात् साधुः ।)
आकारगुप्तिः । रत्यादिसूचकोमुखरागादिरा-
कारः । अङ्गवैकृतमिति वोपालितः ॥ भयलज्जा-
दिना तस्य गोपनं । इत्यमरटीकायां भरतः ॥
(तल्लक्षणं, यथा साहित्यदर्पणे, --
"भयगौरवलज्जादेर्हर्षाद्याकारगुप्तिरवहित्था ।
व्यापारान्तरसक्त्यान्यथाभाषण-विलोकनादि-
करी" ॥ उदाहरणम् । यथा कुमारसम्भवे, --
"एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्ब्बती" ॥
लज्जावशात् कमलदलगणनाव्याजेन हर्षं जुगोप

**अवाक्**, [च्] त्रि, (नास्ति वाक् यस्य सः ।) वाक्य-

रहितः । इत्यमरः ॥ वोवा इति भाषा ।
क्विबन्त-
वच्धातोर्नञ्समासेऽयं प्रयोगः ॥ दक्षिणं ।
अधो
मुखं । एतदर्थयोः अवपूर्बान्चधातोः प्रयोगः
॥

**अवाक्पुष्पी**, स्त्री, (अवाक् अधोमुखं पुष्पमस्याः)

शतपुष्पा । शलुफा इति ख्याता । मिश्रेया ।
इत्यमररत्नमाले ॥ मौरी इति भाषा । वृक्ष-
विशेषः । हेठाहुली चोरहुली चोरखड्की इति
भाषा । तत्पर्य्यायः । अधःपुष्पी २ मङ्गल्या
३
अमरपुष्पिका ४ । इति रत्नमाला ॥

**अवाक्शिराः**, [स्] पुं, (अवाक् अवनतं शिरो-

यस्य ।) अधोमुखः । यथा, --
"अवाक्शिरास्तमस्यन्धे किल्विषी नरकं
व्रजेत् ।
यः प्रश्नं वितथं ब्रूयात् पृष्टः सन्
धर्म्मनिश्चये" ॥
इति मानवे ८ अध्याये ९४ श्लोकः ॥
("इति ब्रुवति रामेतु
लक्ष्मणोऽवाक्शिरास्तदा"
इति रामायणम् ॥)

**अवाग्रं**, त्रि, (अवनतमग्रमस्य ।) नम्रं । अवनतं ।

इत्यमरः ॥

**अवाङ्**, [न्च] त्रि, (अव + अन्च + क्विप् ।) नीच-

वदनः । वत्पर्य्यायः । अधोमुखः २
अवाङ्मुखः ३
अवाचीनः ४ इत्यमर-जटाधरौ ॥
("साक्षी दृष्टश्रुतादन्यत् विब्रुवन्नार्य्यसंसदि ।
अवाङ् नरकमभ्येति प्रेत्य स्वर्गाच्च हीयते"
॥
इति मनुः ।)

**अवाङ्मुखं**, त्रि, (अवाङ्मुखमस्य ।) अधोवदनं । यथा

"तत् श्रुत्वा स बलः स्नेह-हर्ष-दुःख-
त्रपाकुलः ।

इति शब्दरत्नावली ॥ (अवरदेशकालादौ भवः
।)

**अवाच्यदेशः**, पुं, (अवाच्यो देशः ।) योनिः । इति

त्रिकाण्डशेषः ॥

**अवादी**, [न्] त्रि, (वद + णिन् । न वादी । नञ्-

तत्पुरुषः ।) अविरोधी । अविवादी । अवक्ता ।
अवदनशीलः । वदधातोर्णिन् प्रत्ययानन्तरं
नञ्-
समासनिष्पन्नः ॥

**अवाधं**, त्रि, (नास्ति वाधा यस्मिन् ।) वाधाशून्यं ।

अनर्गलं । तत्पर्य्यायः । निरर्गलं २ । इत्यमरः
॥

**अवाध्यः**, त्रि, वाधानर्हः । वाधायोग्यः । अवाधनीयः ।

अवाधितव्यः । न वाध्यः अवाध्य इति नञ्-
समासनिष्पन्नः ॥

**अवानं**, त्रि, (अव + अन् + अच् ।) शुष्कफलादि ।

इति शब्दरत्नावली ॥
("अवानमशुकादष्टमेकमाम्रफलं किल" ।
इति भारते ।)

**अवान्तरं**, त्रि, (अवगतमन्तरं मध्यम् । प्रादिस-

मासः ।) प्रधानान्तःपाति । इयं फलश्रुतिर्न
श्रेयः-
परमपुरुषार्थसाधनपरा न भवति । किन्तु वहि-
र्मुखानां मोक्षविवक्षया अवान्तरकर्म्मफलैः
कर्मसु
रुच्युत्पादनमात्रं । यथा भैषज्ये औषधे
रुच्युत्पादनं ।
यथा, --
"पिब निम्बं प्रदास्यामि खलु ते खण्डलड्डुकान्
।
पित्रैवमुक्तः पिबति तिक्तमप्यतिबालकः" ॥
"अत्र तिक्तनिम्बादिपानस्य न खलु
खण्डादिलाभ-
एव प्रयोजनं किन्त्वारोग्यं तथा
वेदोऽप्यवान्तर-
फलैः प्रलोभयन् मोक्षायैव कर्म्माणि विधत्ते"
इति मलमासतत्त्वं ॥

इत्यर्थः । अनेन अवहित्थाख्यः सञ्चारी भाव
उक्तः,
तदुक्तं, --
"अवहित्था तु लज्जादेर्हर्षाद्याकारगोपनं" ।
इति मल्लिनाथः ।)

**अवहेलं**, क्ली, स्त्री, (अव + हेड् + घञ् डस्य लः,

डलयोरेकत्वस्मरणात् ।) अनादरः अवज्ञा ।
इत्यमरः ॥

**अवहेलनं**, क्ली, (अव + हेड् + ल्युट् ।) अवहेला

अवमानना । इति शब्दरत्नावली ॥

**अवहेलितं**, क्ली, (अव + हेड + क्त ।) अनादरः ।

अवहेला । तद्विशिष्टे त्रि ॥ कृतावहेलनवस्तु ।
अवहेलं जातमस्य इत्यर्थे इतप्रत्ययेन निष्पन्नं ॥

**अवक्षुतं**, क्ली, (अव + क्ष + क्त ।) उपरिकृतक्षुतं ।

यथा मनुः, --
"द्विषदन्नं नगर्य्यन्नं पतितान्नमवक्षुतं" ।
इत्याह्निकतत्त्वं ॥

अवाङ्मुखः प्राप्तकालां तामुवाचाश्रुगद्गदं" ॥
इति कथासरित्सागरे अलङ्कारवतीलम्बके
६३
रङ्गः ॥

**अवाची**, स्त्री, (अव + अन्च + क्विप् + ङीप् ।

दक्षिणदिक् । इति वोपदेवादयः ॥ अधोदिक्
।
इति व्याडिः ॥ अधोमुखी ॥

**अवाचीनं**, त्रि, (अवाच्यां भवं । अवाची + ख ।)

दक्षिणदिग्भववस्तु । अधोमुखः । इति
स्वामि-
जटाधरौ ॥

**अवाच्यं**, क्ली, (न + वच + ण्यत् ।) दुर्व्वाक्यं । तत्प-

र्य्यायः । अनक्षरं २ । इत्यमरः ॥ वचनानर्हं ।
अ-
नक्षरं गालि प्रभृति इति मधुः । निन्दितान्य-
क्षराणि अत्र अनक्षरं अव्ययानामनेकार्थत्वात्
नञ् निन्दायां । एवमवाच्यं वक्तुमयोग्यं वच्लौ
वाचि हसृष्वासोरिति घ्यण भुजवचेति क-
निषेधः ॥ इति भरतः ॥
("वाच्यावाच्ये हि कुपितो न विजानाति
कर्हिचित्" ।
इति भारते ।
"अवाच्यं वदतो जिह्वा कथं न पतिता तव" ।
इति रामायणे ।)

**अवाच्यः**, त्रि, (अवाच् + भवार्थे यत् ।) अनिन्दितः ।

इति स्मृतिः ॥ अवक्तव्यः । वचनानर्हः ।
यथा, --
"अनक्षरमवाच्यन्तु वचनार्हं न यद्भवेत् ।
एष बन्ध्यासुतो याति खपुष्पकृतशेखरः ॥
मृगतृष्णाम्भसि स्नातः शशशृङ्गधनुर्द्धरः" ।

**अवापितधान्यं**, त्रि, (अवापितं अकृतवपनं धान्यम् ।)

अकृतवपनधान्यं । रोपितधान्यं । रोयाधान
इति
भाषा । तत् वापितधान्यापेक्षया किञ्चिद्धीनगुणं
।
इति राजवल्लभः ॥

**अवारं**, क्ली, (अव + ऋ + घञ् ।) अर्व्वाक्तटं ।

नद्यादेः । पूर्ब्बतीरं । इत्यमरः ॥ एपार इति
भाषा ।

**अवारपारः**, पुं, (अवारं अर्व्वाक्तीरं पारं उत्तर-

तीरञ्च यस्य ।) समुद्रः । इति हेमचन्द्रः ॥

**अवारपारीणः**, त्रि, (अवारपारे गच्छतीति । अवा-

रपार + ख ।) पारगः । नद्यादिपारगतव्यक्तिः ।
इति पाणिनिः ॥

**अवारिका**, स्त्री, (नास्ति वारि यत्र ततः स्वार्थे

कन् + टाप् ।) धन्याकं । धनिया इति भाषा ।
अवरिका च पाठः । इति राजनिर्घण्टः ॥

**अवारितं**, त्रि, (न वारितं । नञ्समासः ।) अकृत-

वारणं । अनिवारितं । यथा, --
"अवारितद्वारतया तिरश्चा-
मन्तःपुरे तस्य निविश्य राज्ञः ।
गतेषु रम्येष्वधिकं विशेष-
मध्यापयामः परमाणुमध्याः" ॥
इति नैषधे ३ सर्गे ४२ श्लोकः ॥

**अवारीणः**, त्रि, (अवारं गच्छतीत्याद्यर्थे खः ।) पा-

रगः । नदीपारगतः । इति पाणिनिः ॥

**अवार्य्यं**, त्रि, (न वार्य्यं । नञ्समासः) अनिवार्य्यं ।

:अवारणीयं । अवारितव्यं । वारणायोग्यं । यथा, --

"नमस्ते नित्यविलसद्वैष्णवस्वनिकेतन ।
अवार्य्यवीर्य्यवद्रूपं विष्णोर्यत् प्रणमाम्यहं" ॥
इत्युत्कलखण्डे २७ अध्यायः ॥

**अवासाः**, [स्] त्रि, (नास्ति वासो यस्य ।) वस्त्र-

रहितः । नग्नः । इत्यमरः ॥

**अवास्तवं**, त्रि, अयथार्थं । मिथ्या । न वास्तवं अवास्त-

वमिति नञ्समासनिष्पन्नं ॥

**अवाक्षः**, त्रि, परिरक्षकः । अवपूर्ब्बकाक्षधातोरल्-

प्रत्ययेन निष्पन्नः ॥

**अविः**, पुं, (अव + इन् ।) सूर्य्यः । पर्ब्बतः । मेषः ।

इत्यमरः ॥
("श्वशूकरखरोष्ट्राणां गोऽजाविमृगपक्षिणां" ।
इति मनुः ।)
"मूत्राणि हस्तिकरभमहिषीखरवाजिनां ।
गोजावीनां स्त्रियां पुंसां मूत्रवर्ग उदाहृतः" ॥
इति वैद्यकरसेन्द्रसारसंग्रहे ॥)
नाथः । मूषिककम्बलः । इति मेदिनी ॥ प्राचीरं
वायुः । इति दण्डी ॥

**अविः**, स्त्री, ऋतुमती । इत्यमरः ॥

**अविकटः**, पुं, (अवीनां मेषाणाम् संघातः । अवि +

कटच् ।) मेषसमूहः । इति संक्षिप्तसारपरि-
शिष्टं ॥ भेडारपाल इति भाषा ।

**अविकटः**, त्रि, अविशालः । अकरालः । अविस्तारः ।

न विकटः अविकटः इति नञ्समासनिष्पन्नः ॥

**अविकं**, क्ली, (अवि + क ।) हीरकं । इति राज-

निर्घण्टः ॥ (हीरकशब्देऽस्य गुणादयो
ज्ञातव्याः ॥

**अविकारी**, [न्] त्रि, (न विकारी + नञ्तत्पुणषः ।)

विकाराजनकः । यथा वृहस्पतिः ।
"कन्दमूलफलैः पुष्पैः शस्तैः शुक्तरसन्तु यत् ।
अविकारि भवेन्मेध्यमभक्ष्यं तद्विकारकृत्" ॥
इत्याह्निकाचारतत्त्वं ॥

**अविगन्धिका**, स्त्री, (अवेश्छागस्य गन्द इव गन्धो-

"स किं भृत्यः स किं मन्त्री य आदावेव
भूपतिम् ।
युद्धोद्योगं स्वभूत्यागं निर्दिशत्यविचारितम्" ॥
इति हितोपदेशः ।)

**अविच्छिन्नं**, क्ली, (न विच्छिन्नं, नञ्तत् ।) विच्छेदा-

भाववत् । अनिष्पत्तिमत् । यथा, --
"अविच्छिन्ने कथम्भावे यत् प्रधानस्य पठ्यते
।
अविज्ञातफलं कर्म्म तस्य प्रकरणाङ्गता" ॥
इति मलमासतत्त्वम् ॥

**अविज्ञः**, त्रि, (न विज्ञः । नञ्तत्पुरुषः ।) अप्रवीणः ।

अनिपुणः । अनभिज्ञः । अशिक्षितः । अकृती
।
यथा, --
एते सर्व्वे गुणाः कान्त सन्ति कान्ते त्वयि ध्रुवं
।
त्वां न वाञ्छन्ति याः कान्तास्ता अविज्ञाश्च
वञ्चिताः"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे २३
अध्यायः ॥

**अविज्ञेयं**, त्रि, (न विज्ञेयं । नञतत्पुरुषः ।) दुर्ज्ञेयं ।

यथा, --
"आसीदिदं तमोभूतमप्रज्ञातमलक्षणं ।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्व्वतः" ॥
इति मानवे १ अध्यायः ॥

**अविडीनं**, क्ली, (न विडीनम् । नञ्तत्पुरुषः ।)

पक्षिणां आभिमुख्याभिगमनं । इति महाभारतं
॥

**अवितं**, त्रि, (अव + क्त ।) त्रातं । रक्षितं । इत्यमरः ॥

**अवितथं**, क्ली, (न वितथम् । नञ्तत्पुरुषः ।)

सत्यं । ("अवितथमाह प्रियंवदा" । इति
शाकु-
न्तले ।) तद्विशिष्टे त्रि । इति रत्नावली ॥
(सार्थकं । यथा, -- "वत्स ! अवितथैषा तव
भारती भवतु" । इति नागानन्दे ।)

**अवित्यजः**, पुं, क्ली, (न विशेषेण त्यज्यते रसायना-

दिषु इति । न + वि + त्यज + क ।) पारदः ।

अवश्यकार्य्याः संस्कारा भ्रातृभिः पूर्ब्बसंस्कृतैः"
॥
इति दायतत्त्वं ॥

**अविद्या**, स्त्री, (न विद्या । नञ्तत्पुरुषः ।) अ-

ज्ञानं । इत्यमरः ॥ माया । इति वेदान्ते ॥ (अह-
ङ्कारहेतुकमज्ञानं, मिथ्याज्ञानं, विद्याविरोधिनी,
अयथार्थबुद्धिः । यदुक्तम्, --
"अविद्याया अविद्यात्वमिदमेव तु लक्षणम् ।
यत्प्रमाणासहिष्णुत्वमन्यथा वस्तु सा भवेत्" ॥
अन्यच्च,
"सेयं भ्रान्तिर्निरालम्बा सर्व्वन्यायविरोधिनी ।
सहते न विचारं सा तमो यद्वद्दिवाकरम्" ।
अव्यक्तमहदहङ्कार
पञ्चतन्मात्रेष्वनात्मस्वात्मबुद्धिः ।
यथा, -- "शरीरे मनुष्योऽहमित्यादि" । इयञ्च
सर्व्वक्लेशमूलभूता तम इत्युच्यते ।
"अविरोधितया कर्म्म नाऽविद्यां विनिवर्त्तयेत् ।
विद्याविद्यां निहन्त्येव तेजस्तिमिरसंघवत्" ॥
इति आत्मबोधः ।)

**अविधिः**, पुं, (न विधिः । नञ्तंत्पुरुषः ।) अवि-

धानं । शास्त्राविहितं । यथा, --
"येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्ब्बकं" ॥
इति श्रीभगवद्गीतायां ९ अध्याये २३ श्लोकः ॥
अपि च याज्ञवल्क्यः ।
"वसेत् स नरके घोरे दिनानि पशुरोमभिः ।
अमितानि दुराचारो यो हन्त्यविधिना पशून्" ॥
इत्याह्निकतत्त्वं ॥

**अविनः**, पुं, (अव + इनच् ।) यष्टा । यागकर्त्ता ।

इत्युणादिकोषः ॥

**अविनयः**, पुं, (न विनयः । नञ्तत्पुरुषः ।) विनया-

भावः । यथा, --
"बहवोऽविनयान्नष्टा राजानः सपरिच्छदाः ।
वनस्था अपि राज्यानि विनयात् प्रतिपेदिरे ॥
वेणो विनष्टोऽविनयान्नहुषश्चैव पार्थिवः ।
सुदासो यवनश्चैव सुमुखो निमिरेव च" ॥
इति मानवे ७ अध्याये ४०।४१ श्लोकौ ॥
(अशि-

ऽस्याः । ततः स्वार्थे कन् ।) अजगन्धावृक्षः । इति
राजनिर्घण्टः ॥

**अविगीतं**, त्रि, (न विगीतम् । नञ्तत्पुरुषः ।)

अनिन्दितं । यथा । "नापि मङ्गलं सफलमविगीत-
शिष्टाचारविषयत्वाद्दर्शवत्" । इति मङ्गलवाद-
चिन्तामणिः ॥

**अविग्नः**, पुं, (न विग्नः । तञ्तत्पुरुषः ।) करमर्दक-

वृक्षः । इत्यमरः ॥ पानिआमला इति ख्यातः ।
इति सारसुन्दरी ॥

**अविचारः**, पुं, (नास्ति विचारो यस्येति ।) अन्यायः ।

अत्याचारः । विचाररहिते त्रि । (विचाराभावः ।)
यथा, --
"अविचारेण सर्व्वाभिरनुष्ठेयन्तु तत् पुनः ।
संसारोत्तारणायालमेतद्वेदविदो विदुः" ॥
इति मत्स्यपुराणं ॥

**अविचारितः**, त्रि, (न विचारितः । नञ्तत्पुरुषः ।)

अकृतविचारः । अविवेचितः । अविचारशब्दादि-
तप्रत्ययेन निष्पन्नः ॥ ("अतः सर्व्वथाऽविचारितं
कर्म्मन कर्त्तव्यम्" । इति पञ्चतन्त्रम् । अवि-
वेचितं मम्यग्विवेचनं विना । यथा, --

इति राजनिर्घण्टः ॥

**अविदूसं**, क्ली, (अवेर्मेषस्य दुग्धम् । अवेः दुग्धे

सोढदूसमरीसचः, इति दूसप्रत्ययः ।) मेषदुग्धं ।
इति हेमचन्द्रः ॥ (मेषदुग्धविवरणेऽस्य विशेषो
ज्ञेयः ॥)

**अविद्धकर्णा**, स्त्री, अम्बष्ठा । आकनादि इति

ख्याता । इति भृङ्गराजः । इत्यमरटीकायां
भरतः ॥

**अविद्धकर्णी**, स्त्री, (न विद्धः पर्णरूपः कर्णो यस्याः ।)

विद्धकर्णीलता । इति भरतः ॥
(माचिकाशब्दे-
ऽम्बष्ठकीशब्दे चास्या गुणादयो ज्ञातव्याः ॥)

**अविद्यः**, त्रि, (नास्ति विद्या यस्य सः ।) विद्यारहितः ।

अविद्वान् । विद्याहीनः । यथा, --
"अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनुः" ।
अपि च । कात्यायनः ।
"नाविद्यानान्तु वैद्येन देयं विद्याधनात् क्वचित्" ॥
इति दायतत्त्वं ॥ अन्यच्च ।
"अविद्यानान्तु सर्वेषामीहातश्चेद्धनं भवेत् ।
समस्तत्र विभागः स्यादपित्र्य इति धारणा" ॥
इति मानवे ९ अध्याये २०५ श्लोकः ॥

**अविद्यमानः**, त्रि, (न विद्यमानः । नञ्तत्पुरुषः ।)

अवर्त्तमानः । सत्तारहितः । अभावः । यथा
नारदः, --
"अविद्यमाने पित्रर्थे स्वांशादुद्धृत्य वा पुनः ।

ष्टाचारः । यथा, --
"अयमाचारत्यविनयं मुग्धासु तपस्विकन्यकासु" ।
इति शाकुन्तले ।) अविनीते त्रि ॥

**अविनाभावः**, पुं, (विना व्यापकं विना न भावः

स्थिंतिः ।) व्याप्तिः । व्याप्यनिष्ठव्यापकनिरूपित-
धर्म्मः । यथा, -- "वह्निमान् धूमात्" इत्यादौ
धूमनिष्ठा वह्निनिरूपिता व्याप्तिः ॥ इति न्याय-
मीमांसयोर्मतं ॥ तत्पंदार्थे तत्पदार्थाभाववद्वृत्ति-
त्वाभावः । यथा । केयमाकाङ्क्षा न तावदविना-
भावः । नीलं सरोजमित्यादौ तदभावात् । विमलं
जलं नद्याः कच्छे महिष इत्यत्र जलान्वितनद्या
अविनाभावात् कच्छे साकाङ्क्षतापत्तेश्च । इत्या-
काङ्क्षाचिन्तामणिः । अविनाभाव इति । तत्पदा-
र्थेन विना यो भावः सत्त्वं तदभाव इत्यर्थः ।
तत्पदार्थे तत्पदार्थाभाववद्वृत्तित्वाभावस्तत्पदार्थ
तत्पदार्थाकाङ्क्षा इति भावः । इति तट्टीका
माथुरी ॥

**अविनीतः**, त्रि, (न विनीतः । नञ्तत्पुरुषः ।)

विनयरहितव्यक्तिः । तत्पर्य्यायः । समुद्धतः २ ।
इत्यमरः ॥ (यथा, --
"न चापि प्रतिकूलेन नाविनीतेन रावण ! ।
राज्यं पालयितुं शक्यं राज्ञा तीक्ष्णेन वा पुनः" ॥
इति रामायणे । अनियमितः । यथा, --
"नाविनीतैर्व्रजेद्धूर्य्ये न च क्षुद्व्याधिपीडितैः" ॥
इति मनुः ।)

**अविनीता**, स्त्री, (न विनीता । नञ्तत्पुरुषः ।)

पुंश्चली । असती । इति हेमचन्द्रः ॥

**अविपटः**, पुं, (अवि + पटच् ।) अवीनां विस्तारः

इति संक्षिप्तसारव्याकरणपरिशिष्टं ।
कम्बलादिः ॥

**अविप्रियः**, पुं, (अवि + प्री + क ।) श्यामाकतृणं ।

इति राजनिर्घण्टः ॥ (यदा न विप्रिय इत्येवं स्यात्
तदा इष्टः ।)

**अविप्रिया**, स्त्री, (अवीनां मेषादीनां प्रिया ।) श्वेता-

लता । इति राजनिर्घण्टः ॥

**अविभक्तः**, त्रि, (न विभक्तः । नञ्तत्पुरुषः ।) अपृ-

थक् । यथा कृत्यचिन्तामणौ ।
"विभक्ता अविभक्ता वा कुर्य्युः श्राद्धमदैविकं ।
मघासु च तथान्यत्र नाधिकारः पृथग्विना" ॥
इति मलमासतत्त्वं ॥

**अविभाज्यं**, त्रि, (न विभाज्यम् । नञ्तत्पुरुषः ।)

विभागायोग्यं । अथ विभाज्याविभाज्ये । तत्र
व्यासः ।
"अनाश्रित्य पितृद्रव्यं स्वशक्त्याप्नोति यद्धनं ।
दायादेभ्यो न तद्दद्यात् विद्यालब्धञ्च यद्भवेत्" ॥ * ॥
विद्याधनमाह कात्यायनः ।
"उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्ब्बकं ।
विद्याधनन्तु तद्विद्यात् विभागे न नियोजयेत् ॥
परं निर्ज्जित्य यल्लब्धं ।
तत्सर्व्वमविभाज्यमितरैः ।
तस्माद्यया कयाचिद्विद्यया लब्धमर्ज्जकस्यैव तन्नेत-
रेषामिति । प्रदर्शनार्थन्तु कात्यायनेन विस्ता-
रितमिति दायभागः ॥ * ॥ नारदः ।
"कुटुम्बं बिभृयाद्भ्रातुर्यो विद्यामधिगच्छतः ।
भागं विद्याधनात्तस्मात् स लभेताश्रुतोऽपि सन्" ॥
बिभृयादित्येकवचननिर्देशान्न बहवः । यदि वि-
द्यामभ्यस्यतो भ्रातुः कुटुम्बमपरो भ्राता स्वधन-
व्ययशरीरायासाभ्यां संवर्द्धयति तदा तद्विद्या-
र्ज्जितधने तस्याधिकारः । अश्रुतो मूर्खः । कल्प-
तरुमिताक्षरादीपकलिकासु । कात्यायनः ।
"परभक्तोपयोगेन विद्या प्राप्तान्यतस्त या ।
तया लब्धं धनं यत्तु विद्यालब्धं तदुच्यते" ॥
अन्यतः पितृमातृकुलव्यतिरिक्तात् ॥ * ॥ अत्र
विशेषयति स एव ।
"नाविद्यानान्तु वैद्येन देयं विद्याधनात् क्वचित् ।
समविद्याधिकानान्तु देयं वैद्येन तद्धनं" ॥
तत्रोच्चरितविद्यापदमुमाभ्यां सम्बध्यते तेन सम-
विद्याधिकविद्यानां भागो न तु न्यूनविद्ययोः ।
वैद्येन विदुषा ॥ * ॥ पुनर्व्विशेषयति ।
"कुले विनीतविद्यानां भ्रातॄणां पितृतोऽपि वा ।
शौर्य्यप्राप्तन्तु यद्वित्तं विभाज्यं तद्बृहस्पतिः" ॥
कुले स्वकुले पितामहपितृव्यादिभ्यः । पितृत एव
वा । शिक्षितविद्यानां भ्रातॄणां । यद्विद्याशौर्य्य-
प्राप्तं धनं तद्विभजनीयमिति कल्पतरुरत्नाकरौ ।
पुनः कात्यायनः ॥
"द्व्यंशहरोऽर्द्धहरो वा पुत्त्रवित्तार्ज्जनात् पिता" ।
पुत्त्रवित्तार्ज्जनात् । कृदभिहितभावो द्रव्यवत्
रोपयुक्तस्त्रीवाससामपां प्रचाररथ्यानां विभागश्च
इति प्रजापतिरिति । यस्मिन् वास्तुनि येन गृहो-
द्यानादिकं कृतं अपरेणापि स्थानान्तरे तथा कृत-
ञ्चेत् तदा येन यत् कृतं तत्तस्यैव । अन्यत्रा-
प्येवं ॥ * ॥ साधारणधनार्ज्जितेऽपि विशेषमाह
व्यासः ।
"साधारणं समाश्रित्य यत्किञ्चिद्वाहनायुधं ।
शौर्य्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः ॥
तस्य भागद्वयं देयं शेषास्तु समभागिनः" ।
अत्र भ्रातर इत्युपलक्षणं पितृव्यादयोऽपि बोद्ध-
व्याः । तस्यार्जकस्य । साधारणोपघाते यस्य याव-
तोऽशस्याल्पस्य महतो वा उपघातस्तस्य तद-
नुसारेण भागकल्पना कार्य्येति दायभागः ॥
याज्ञवल्क्यः ।
"क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः ।
दायादेभ्यो न तद्दद्यात् विद्यया लब्धमेव च" ॥
पितृपितामहागतं बलादन्यैर्हृतं योऽंश्यन्तराणा-
मनुज्ञया उद्धरति तदंश्यन्तरेभ्यो न दद्यात् ॥ * ॥
भूमौ तु विशेषयति शङ्खः ।
"पूर्ब्बनष्टाञ्च यो भूमिमेक एवोद्धरेत् श्रमात् ।
यथाभागं भजन्त्यन्ये दत्त्वांशन्तु तूरीयकं" ॥
एतद्वचनं स्मृतिमहार्णवकामधेनुपारिजातप्रभृति-
ष्वलिखनादयुक्तमेवेति रत्नाकरः । तन्न, दायभाग-
मिताक्षराप्रभृतिभिर्धृतत्वात् । इति दायतत्त्वं ॥

**अविमरीसं**, क्ली, (अवि + मरीसच् । अवेर्दुग्धे

मरीसच्प्रत्ययः ।) मेषदुग्धं । इति हेमचन्द्रः ॥
("तर्पणाश्चोतनैर्नस्यैरहृद्यन्तूष्णमाविकं" ॥
इति शार्ङ्गधरः ॥)

**अविमुक्तं**, क्ली, (वि + मुच् + क्त । ततो, न विमुक्तम् ।

नञ् तत्पुरुषः ।) वाराणसीक्षेत्रं । यथा, --
"मुने प्रलयकालेऽपि न तत् क्षेत्रं कदाचन ।
विमुक्तं न शिवाभ्यां यदविमुक्तं ततो विदुः ॥
अविमुक्तं तदारभ्य क्षेत्रमेतदुदीर्य्यते ।
अस्यानन्दवनं नाम पुराऽकारि पिनाकिना ।
क्षेत्रस्यानन्दहेतुत्वादविमुक्तमनन्तरं ॥
आनन्दकन्दवीजानामङ्कुराणि यतस्ततः ।
ज्ञेयानि सर्व्वलिङ्गानि तस्मिन्नानन्दकानने
अविमुक्तमिति ख्यातमासीदित्थं घटोद्भव" ।

शिष्यादार्त्विज्यतः प्रश्नात्
सन्दिग्धप्रश्ननिर्णयात् ।
स्वज्ञानसंशनाद्वादाल्लब्धं प्राध्ययनात्तु यत् ॥
विद्याधनन्तु तत्प्राहुर्विभागे न प्रयोजयेत् ।
शिल्पेष्वपि हि धर्म्मोऽयं मूल्याद्यच्चाधिकं भवेत् ॥
परं निरस्य यल्लब्धं विद्यया धूतपूर्ब्बकं ।
विद्याधनन्तु तद्विद्यात् न विभाज्यं वृहस्पतिः” ॥ * ॥
यदि भवान् भद्रमुपन्यस्यति तदा भवत एव मयैतद्देयमिति पणितं यत्रोपन्यासं निस्तीर्य्य लभते तन्न विभाज्यं । शिष्यादध्यापितात् । आ-
र्त्विज्यतः यजमानाद्दक्षिणया लब्धधनं न प्रति-
ग्रहलब्धं वेतनरूपत्वात्तस्य । तथा यत्किञ्चिद्विद्या-
प्रश्ने निस्तीर्णेऽपणितं यदि कश्चित् परितोषा-
दृदाति । तथा योऽस्मिन् शास्त्रार्थे अस्माकं संशयमपनयति तस्मै धनमिदं ददानीत्युपस्थितस्य
संशयमपनीय यल्लब्धं । वादिनोर्व्वा सन्देहे न्यायकरणार्थमागतयोः सम्यङ्निरूपणेन यल्लब्धं
षष्ठांशादिकं तथा शास्त्रादिप्रकृष्टज्ञानं सम्भाव्य यत् प्रतिग्रहादिना लब्धं । तथा शास्त्रज्ञानवि-
वादे अन्यत्रापि यत्र कुत्रचिदन्योन्यज्ञानविवादे निर्ज्जित्य यल्लब्धं । तथैकस्मिन् देये बहूनामुप-
प्लवे येन प्रहृष्टात् यल्लब्धं । तथा शिल्पादिविद्यया
चित्रकरसुवर्णकारादिभिर्यल्लब्धं । तथा द्यूतेनापि
प्रकाशत इति न्यायात् पुत्त्रार्ज्जितवित्तात् पितु-
र्द्व्यंशित्वं पितृधनानुपघातविषयं भ्रातृधनोपघा-
तविषयञ्च । अर्ज्जकस्य तु द्व्यंशित्वं भ्रातृधनो-
पघाते तु तेषामप्येकांशित्वं वक्ष्यमाणव्यासवच-
नात् । पितुरर्द्धहरत्वन्तु पितृद्रव्योपघाताद्गुण-
वत्त्वाद्वेति दायभागः । अनुपघाते पिता द्व्यंशहरः
अर्ज्जकत्वात् स्वयमपि द्व्यंशहरः इतरेषामनं-
शित्वं । भ्रातृद्रव्योपघाते तु तस्याप्येकांश इति
द्व्यंशार्द्धांशयोर्भेदकथनं ॥ * ॥ पुनः कात्यायनः ।
“गीप्रचारश्च रथ्या च वस्त्रं यच्चाङ्गयोजितं ।
प्रायोज्यं न विभज्येत शिल्पार्थन्तु वृहस्पतिः” ॥
प्रायोज्यं यद्यस्य प्रयोजनार्हं पुस्तकादि न तन्मूर्खा-
दिभिः सह पण्डितादिभिर्व्विभजनीयं एवमेव
दायभागमदनपारिजातादयः । याज्ञवल्क्यः ।
“पितृभ्याञ्चैव यद्दत्तं तत्तस्यैव धनं भवेत्” ।
पुत्त्रदुहित्रोर्यदलङ्कारादि दत्तं तत्तस्यैवेति शूल-
पाण्युपाध्यायाः ॥ नारदः ।
“शौर्य्यभार्य्याधने चोभे यच्च विद्याधनम्भवेत् ।
त्रीण्येतान्यविभाज्यानि प्रसादो यश्च पैतृकः” ॥
प्राप्तञ्च सह भार्य्ययेति भरद्वाजवचनात् भार्य्या-
प्राप्तिकाले लब्धं धनं भार्य्याधनमौद्वाहिकमि-
त्यर्थः । चोभे इत्यत्र हित्वेति पाठे एतत्त्रिकं
हित्वान्यद्विभजेदित्यनुवर्त्तते अत एतान्यविभा-
ज्यानीति । न वास्तविभागो नोदकपात्रालङ्का-
इति काशिखण्डे २६ अध्यायः ॥
(मूर्द्धचिवकान्त-
रालस्थाने च । यथा, --
‘एष योऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठितः’
इति । “आमनन्ति चैनं परमेश्वरमस्मिन् मूर्द्ध-
चिवुकान्तराले” । इति च भाष्ये ।)

**अविमुक्तः**, पुं, (न विमुक्तः । नञ्तत्पुरुषः ।) वारा-
णसीक्षेत्रं । इति काशीखण्डे । अत्यक्ते त्रि ॥

**अविरतं**, क्ली, (न विरतम् । नञ्तत्पुरुषः ।)
सततं । अनवरतं ।
(“अविरतोज्झितवारिविपाण्डुभि-
र्विरहितैरचिरद्युतितेजसा” ॥
इति किराताज्र्जुनीये ।) तद्वति त्रि । इत्यमरः ॥

**अविरलं**, त्रि, (न विरलं । नञ्तत्पुरुषः ।) विरल-
त्वरहितं । तत्पर्य्यायः । निविरीशं २ घनं ३

:निविडं ४ निरन्तरं ५ सान्द्रं ६ नीरन्ध्रं ७

बहलं ८ दृढं ९ गाढं १० । इति हेमचन्द्रः ॥

**अविरोधः**, पुं, (न विरोधः । नञ्तत्पुरुषः ।) वि-

रोधाभावः । यथा, --
"श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी ।
अविरोधे सदा कार्य्यं स्मार्त्तं वैदिकवत् सता"
॥
इति श्राद्धतत्त्वधृतजावालवचनं ॥ अपि च ।
"अपसर्पन्तु ते भूता ये भूता भूमिपालकाः ।
भूतानामविरोधेन पूजाकर्म्म करोम्यहं" ॥
इत्याह्निकतत्त्वं ॥

**अविलम्बनं**, क्ली, (न विलम्बनम् । नञ्तत्पुरुषः ।)

शीघ्रं । अविलम्बितं । इति रायमुकुटः ॥

**अविलम्बितं**, क्ली, (वि + लबि + क्त । ततो नञ्तत्-

पुरुषः ।) विलम्बाभावः । तत्पर्य्यायः । शीघ्रं २
त्वरितं ३ लघु ४ क्षिप्रं ५ अरं ६ द्रुतं ७ सत्वरं
८
चपलं ९ तूर्णं १० आशु ११ । इत्यमरः ॥

**अविलम्बितः**, त्रि, (न विलम्बितः । नञ्समासः ।)

त्वरायुक्तः । तत्पर्य्यायः । उच्चण्डः २ ।
इत्यमरः ॥
अवलम्बितं ३ । यथा, --
"अविलम्बितमुच्चण्डं केऽप्याहुरवलम्बितं" ।
इति जटाधरः ॥

**अविला**, स्त्री, (अव + इलच् ।) मेषी । भेडी । इति

हेमचन्द्रः ॥ (नास्ति विलं यत्रेत्यर्थे, त्रि ॥)

**अविवादः**, पुं, (न विवादः । नञ्तत्पुरुषः ।)

विवादाभावः । यथा, --
"यमो वैवस्वतो देवो यस्तवैष हृदि स्थितः ।
तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः" ॥
इति मानवे ८ अध्याये ९२ श्लोकः ॥

**अविवादी**, [न्] त्रि, (न विवादी । नञ्तत्पुरुषः ।)

विवादरहितः । निर्व्विवादी । नञ्पूर्ब्बविवाद-
शब्दादिन्प्रत्ययेन निष्पन्नः ॥

**अविवाहितः**, पुं, स्त्री, (न विवाहितः । नञ्तत्-

घटकानां पञ्चानां सन्ततिः पञ्चमीपर्य्यन्ता नो-
द्वाह्या । बन्धुतन्मात्रोरसत्वेऽपि पितृमातामह-
मातृमातामहप्रभृत्युपरितनानां पञ्चानां त्रयाणां
सप्तमीपञ्चमीपय्यन्ता नीद्वाह्येति । एवञ्च पितु-
र्म्मातुश्च मातामहकन्यान्तरसत्वे तामादाय सप्त-
मीपञ्चमीपर्य्यन्तायाः परीहारः । एवं बन्ध्वन्तरे-
ऽप्यूह्यं । बन्ध्वपेक्षया त्रिगोत्रगणनं परतः सर्वत्र ।
पूर्ब्बतस्तु पितुर्म्मातुश्च मातुलपुत्त्ररूपबन्धोरपि
स्वापेक्षया अन्येषां बन्धूनां मातामहगोत्रापेक्षया
त्रिगोत्रगणनं सर्वसामञ्जस्यं स्यात् । अन्यथा
पितुः पितामहदौहित्रीकन्यायाः पितामहभगि-
नीपुत्त्रबन्ध्वपेक्षया त्रिगोत्रात् पराया विवाहः
प्रसज्येत स चायुक्तः । पितृगोत्रापेक्षया तस्यास्त्रि-
गोत्रमध्यवर्त्तित्वात् । एवं पितुः प्रमातामहदौ-
हित्रीकन्यायाः पितामहीभगिनीपुत्त्रबन्ध्वपेक्षया
त्रिगोत्रात् पराया विवाहः प्रसज्येत स चाप्य-
युक्तः । पितामहीभ्रातृपुत्त्रबन्ध्वपेक्षया तस्यास्त्रि-
गोत्रमध्यवर्त्तित्वात् । एवं मातुः प्रपिता-
महदौहित्रीकन्याया मातामहभगिनीपुत्त्रबन्ध्वपे-
क्षया त्रिगोत्रात् पराया विवाहः प्रसज्येत स
चायुक्तः । वरस्य मातामहापेक्षया तस्यास्त्रिगोत्र-
मध्यवर्त्तित्वात् । एवं मातुः प्रमातामहदौहित्री-
कन्याया मातामहीभगिनीपुत्त्रबन्ध्वपेक्षया त्रि-
गोत्रात् पराया विवाहः प्रसज्येत स चायुक्तः ।
मातामहीभ्रातृपुत्त्रबन्ध्वपेक्षया तस्या स्त्रिगोत्र-
मध्यवर्त्तित्वात् । इति । एवं मातृसपत्नीभ्रातृ-
सन्ततिः पितृमातृसगोत्रादयोऽप्यविवाह्याः ॥ * ॥
असवर्णाया अविवाह्यत्वं यथा । कलौ त्वस-
वर्णाया अविवाह्यत्वमाह वृहन्नारदीयं ।
"समुद्रयात्रास्वीकारः कमण्डलुविधारणं ।
द्विजानामसवर्णासु कन्यासूपयमस्तथा" ॥
इत्यादि । इत्युद्वाहतत्त्वं ॥

**अविवेकः**, पुं, (न विवेकः । नञ्तत्पुरुषः । नास्ति

विवेको यस्य इति समासे वाच्यलिङ्गः ।) सद-
सद्विवेचनाराहित्यं । यथा । "देहात्मनोरविवेका-
दस्यैवं शोको भवतीति तद्विवेकप्रदर्शनार्थं श्री-
भगवानुवाच अशोच्यानित्यादि" । इति श्रीभग-
वद्गीता २ अध्यायस्य ११ श्लोकटीका ॥ तद्वति
त्रि ॥ अविमृश्यकारी । यथा, -- ("सहसा विदधीत
न क्रियामविवेकः परमापदाम्पदम्" ॥ इति

विवेचनारहितः । अविवेकी । न विवेचकः
अवि-
वेचकः इति नञ्समासनिष्पन्नः ॥

**अविशेषः**, त्रि, (न विशेषः । नञ्तत्पुरुषः ।)

विशेषरहितः । अभेदः । तुल्यः ।
विशेषाभावे,
पुं ॥ विशेषाभावः । यथा, --
"पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवं ।
अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत्" ॥
इति श्राद्धतत्त्वं ॥ ("सांख्यादिमतसिद्धानि
तन्मात्राख्यानि सूक्ष्मभूतानि, तानि च
इदमेतदेवं-
गुणकमिति व्यावृत्ततया नानुभूयन्ते
इत्यविशेषाः
सूक्ष्माश्चोच्यन्ते" । तथा च विष्णुपुराणे, --
"तस्मिंस्तस्मिंस्तु तन्मात्रास्तेन तन्मात्रता
स्मृता ।
न शान्ता नापि घोरास्ते न
मूढाश्चाविशेषिणः" ॥
इति ।)

**अविश्रान्तः**, त्रि, विश्रामरहितः । विश्रान्तिशून्यः ।

अनवरते, क्ली । विपूर्ब्बश्रमधातोः
क्तप्रत्ययानन्तरं
नञ्समासनिष्पन्नः ॥ ("अविश्रान्तं
पत्युर्गुणगण-
कथाम्रेडनजडा" ॥ इति आनन्दलहर्य्याम्
॥)

**अविश्रामं**, क्ली, (नास्ति विश्रामो यस्मिन् इति ।)

विश्रामराहित्यं । यथा, --
"अविश्रामं वहेत् भारं शीतोष्णञ्च न विन्दति
।
ससन्तोषस्तथा नित्यं त्रीणि शिक्षेत
गर्द्दभात्" ॥
इति चाणक्यं ॥

**अविश्वस्तः**, त्रि, (न विश्वस्तः । नञ्तत्पुरुषः ।)

विश्वासानर्हः । अकृतविश्वासः ।
प्रत्ययायोग्यः ।
यथा, --

पुरुषः ।) अनूढः । अकृतोद्वाहः ।
अकृतोपयमः ।
अपरिणीतः । अकृतपाणिग्रहः । आइवड इति भाषा । नञ्पूर्ब्बविवाहशब्दादितप्रत्ययेन निष्पन्नः ॥

**अविवाह्या**, स्त्री, (न विवाह्या । नञ्तत्पुरुषः ।)

विवाहानर्हा । यथा । सुमन्तुः । "मातृपितृ-सम्बद्धा आसप्तमादविवाह्याः कन्या भवन्ति" ।
आपञ्चमादन्येषां मतं । नारदोऽपि ।
"आसप्तमात् पञ्चमाच्च बन्धुभ्यः पितृमातृतः ।
अविवाह्या सगोत्रा च समानप्रवरा तथा ॥
सप्तमे पञ्चमे वापि येषां वैवाहिकी क्रिया ।
ते च सन्तानिनः सर्व्वे पतिताः शूद्रतां गताः"
॥ * ॥
सर्व्वाः पितृपत्न्यो मातरस्तद्भ्रातरो मातुलास्तद्-
दुहितरो भगिन्यस्तदपत्यानि भागिनेयानि ता-श्चाविवाह्याः अन्यथा सङ्करकारिण्यस्तथाध्याप-यितुरेतदेवेति । ताश्च यथा । पितृपितामहा-दीनां सप्तानां सन्ततिः सप्तमीपर्य्यन्ता नोद्वाह्या ।
एवं पितृबन्धुप्रभृतिसम्बन्धघटकानां सप्तानां स-न्ततिः सप्तमीपर्य्यन्ता नोद्वाह्या । एवं मातामह-प्रमातामहादीनां पञ्चानां सन्ततिः पञ्चमीप-र्य्यन्ता नोद्वाह्या । एवं मातृबन्धुप्रभृतिसम्बन्ध-किरातार्ज्जुनीये ॥ सदसद्विवेकरहितः । यथा, --
"उत्तमोत्तममप्राप्यमविवेकोऽभिवाञ्छसि" । इति विष्णुपुराणं ।)

**अविवेकी**, [न्] त्रि, (न विवेकी । नञ्तत्पुरुषः ।

विवेकशून्यः । अविवेचकः । यथा । "तस्माद-विवेकिनः सुखमात्रलिप्सवो नात्राधिकारिणः")
इति मुक्तिवादस्य गादाधरी टीका । अपि च ।
"अस्मिन् प्रसन्ने देवेन्द्रे परमं धाम लभ्यते ।
मयाविवेकिना तस्य हृदये जनिता व्यथा ॥
सर्व्वपापहरो विष्णुः स मया व्यथितः कृतः" ।
इति पाद्मे क्रियायोगसारे ११ अध्यायः ॥

**अविवेचकः**, त्रि, (न विवेचकः । नञतत्पुरुषः ।)

"न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासात् भयमुत्पन्नं मूलान्यपि निकृन्तति" ॥
इति चाणक्यं ॥
("विश्वस्तवदविश्वस्ता वञ्चयन्तः पुरोचनम्" ।
इति भारते ॥)

**अविश्वासा**, स्त्री, (नास्ति विश्वासो यस्याम् सा ।)

चिरप्रसूता गौः । केलेनगाइ इति भाषा । इति शब्दचन्द्रिका ॥

**अविषः**, पुं, (अव + टिषच् ।) समुद्रः । इति कात-न्त्रीयोणादिवृत्तिः । (राजा । पृथिवी । स्वर्गः ।
रक्षकमात्रे त्रि ।) विषशून्ये त्रि ॥ (यथा, --
"इत्येता अविषा व्याख्याताः" ॥ इति सुश्रुते ॥)

**अविषा**, स्त्री, (नास्ति विषं यस्याम् ।) निर्विषातृणं ।

इति राजनिर्घण्टः ॥

**अविषी**, स्त्री, (अविष + ङीप् ।) नदी । इत्युणादि-

वृत्तावुज्जलदत्तः ॥

**अविसोढं**, क्ली, (अवेर्दुग्धम् । अवि + सोढच् ।)

मेषदुग्धं । इति हेमचन्द्रः ॥

**अविस्पष्टं**, क्ली, (वि + स्पश + क्त । ततो नञ्-

समासः ।) अस्पष्टवाक्यं । तत्पर्य्यायः ।
म्लिष्टं २ ।
इत्यमरः ॥
("नाविस्पष्टमधियीत न शूद्रजनसन्निधौ" ॥
इति मनुः ॥ अस्फुटः । यथा, --
"विवृद्धिं कम्पस्य प्रथयतितरां साध्वसवशा-दविस्पष्टां दृष्टिं तिरयति पुनर्वाष्पसलिलैः" ॥
इति रत्नावल्याम् ॥)

**अवी**, स्त्री, (अवत्यात्मानं लज्जया । अव + ई ।)

ऋतुमती । इति हेमचन्द्रः ॥

**अवीचिः**, पुं, (नास्ति वीचिः प्रकाशः सुखं वा अत्र ।)

नरकविशेषः । इति शब्दरत्नावली ॥
(“अवीचिमन्धतामिस्रं कुम्भीपाकं तथैव च ।
असिपत्रवनञ्चैव तापनञ्चैव विंशकम्” ॥
इति याज्ञवल्क्ये ॥) वाच्यलिङ्गस्तु तरङ्गशून्ये ॥

**अवीचिः**, पुं, (नास्ति वीचिः सुखं यस्मिन्) नरकवि-

शेषः । यथा । “वैतरणी पूयोदः प्राणरोधो विश-
सनं लालाभक्षः सारमेयादनमवीचिरयःपान-
मिति । य स्त्विह वा अनृतं वदति साक्ष्ये द्रव्य-
विनिमये दाने वा कथञ्चित् स वै प्रेत्य नरके
अवीचिमत्यधःशिरा निरवकाशे योजनशतो-
च्छ्रायात् गिरिमूर्द्ध्नः संपात्यते । यत्र जलमिव
स्थलमश्मपृष्ठमभासते तदवीचिमत् तिलशो वि-
शीर्य्यमाणशरीरो न म्रियमाणः पुनरारोपितो
निपतति” । इति श्रीभागवते ५ स्कन्धे २६
अध्यायः ॥

**अवीचिमत्**, क्ली, (अवीचि + मतुप् ।) नरकभेदः

शेषः । यथा । “वैतरणी पूयोदः प्राणरोधो विश-
सनं लालाभक्षः सारमेयादनमवीचिरयःपान-
मिति । य स्त्विह वा अनृतं वदति साक्ष्ये द्रव्य-
विनिमये दाने वा कथञ्चित् स वै प्रेत्य नरके
अवीचिमत्यधःशिरा निरवकाशे योजनशतो-
च्छ्रायात् गिरिमूर्द्ध्नः संपात्यते । यत्र जलमिव
स्थलमश्मपृष्ठमभासते तदवीचिमत् तिलशो वि-
शीर्य्यमाणशरीरो न म्रियमाणः पुनरारोपितो
निपतति” । इति श्रीभागवते ५ स्कन्धे २६
अध्यायः ॥

**अवीचिमयः**, पुं, (अवीचि + मयट् ।) नरकभेदः ।

“यः साक्ष्यादौ अनृतं वदति स
निरवलम्बेऽवीचि-
मये अधःशिरा निपात्यते यत्र” । इति श्रीभाग-
वते ॥

**अवीरः**, त्रि, (नास्ति वीरो यस्य ।) सत्वरुहितः ।

निर्व्वीर्य्यः । इति मेदिनी ॥

**अवीरा**, स्त्री, (नास्ति वीरः पुत्रादिर्यस्याः ।) अजा-

स्वर्य्यातस्य ह्यपुत्रस्य सर्व्ववर्णेष्वयं विधिः” ॥
तथा विष्णुः । अपुत्रस्य धनं पत्न्यभिगामि
तद-
भावे दुहितृगामि । इत्यादि । तेन प्रपौत्र-
पर्य्यन्तानामभावे पत्नी धनाधिकारिणी । यथा
कात्यायनः ।
“भर्त्तृदायं मृते पत्यौ विन्यसेत् स्त्री यथेष्टतः ।
विद्यमाने तु संरक्षेत् क्षपयेत् तत्कुलेऽन्यथा ॥
अपुत्रा शयनं भर्त्तुः पालयन्ती व्रते स्थिता ।
भुञ्जीतामरणात् क्षान्ता दायादा
ऊर्द्ध्वमाप्नुयुः” ॥
यथेष्टत इति धर्म्मार्थं । तथा च व्यासः ।
“लोकान्तरस्थं भर्त्तारमात्मानञ्च वरानने ।
तारयत्युभयं नारी नित्यं धर्म्मपरायणा” ॥
मदनपारिजातधृता स्मृतिः ।
“यद्यदिष्टतमं लोके यद्यत् पत्युः समीहितं ।
तत्तद्गुणवते देयं पतिप्रीणनकाम्यया” ॥
भर्त्तुः शयनं पालयन्ती नान्यगामिनी । अतएव
हरिवंशीयपुण्यकव्रतोपाख्याने ॥
“दानोपवासपुण्यानि सुकृतान्यप्यरुन्धुति ।
निष्फलान्यसतीनां हि पुण्यकानि तथा शुभे” ॥
तथा वृहन्मनुः, --
“अपुत्रा शयनं भर्त्तुः पालयन्ती व्रते स्थिता ।
पत्न्येव दद्यात् तत्पिण्डं कृत्स्नमंशं लभेत च”
॥
तत्पिण्डमित्यत्र तदित्यनुषज्य । तच्छब्देन
भर्त्तुः
परामर्शात् भर्त्तुः कृत्स्नमंशं यावदंशं हरेत् न तु
वर्त्तनोचितमात्रं । इति दायतत्त्वं ॥ * ॥ अस्याः
पतिश्राद्धाधिकारो यथा । पुत्रपौत्रप्रपौत्राभावे
पत्नी । तथा च शङ्खः ।
“पितुः पुत्रेण कर्त्तव्या पिण्डदानोदकक्रिया ।
तदभावे तु पत्नी स्यात् तदभावे सहोदरः ॥
भार्य्यापिण्डं पतिर्द्दद्यात् भर्त्रे भार्य्या तथैव च ।
श्वश्र्वादेश्च स्नुषा चैव तदभावे द्विजोत्तमः” ॥
इत्यादि ॥
“अपुत्रा स्त्री यथा पुत्रः पुत्रवत्यपि भर्त्तरि ।
पिण्डं दद्यात् जलञ्चैव जलमात्रन्तु पुत्रिणी” ॥
इति निर्मूलं समूलत्वेऽपि बालदेशान्तरितपुत्र-
सद्भावविषयमिति श्राद्धविवेकप्रभृतयः । इति

इति छन्दोगपरिशिष्टेन आद्यपञ्चदशश्राद्धैः
प्रेत-
त्वपरीहारोक्तत्वाच्च । एतत्पत्युरभावे द्रष्टव्यं
।
ततश्च शिशौ पुत्रे अन्येनापि सपिण्ड्यते । एवं
पतिसत्वेऽपि । अतएव मैथिलैरवीरायाः
सपिण्डनं
नास्तीत्युक्तं । इति च शुद्धितत्त्वं ॥

**अवेद्यः**, पुं, (विद + ण्यत् । ततो, न वेद्यः नञ्स-

मासः ।) गोवत्सकः । इति शब्दचन्द्रिका ॥
वाछुर
इतिभाषा । अज्ञेये त्रि ॥ (अविवाह्यः । यथा, -
-
“व्यभिचारेण वर्णानामवेद्यावेदनेन च ।
स्वकर्म्मणाञ्च त्यागेन जायन्ते वर्णसङ्कराः” ॥
इति मनुः ।)

**अवेलः**, पुं, (नास्ति वेला यस्य सः ।) अपलापः ।
अप-

ह्नवः । इति मेदिनी ॥

**अवेला**, स्त्री, पूगचर्व्वितं । इति मेदिनी ॥ चिवान

गुया इति भाषा । अपराह्णः । इति
लोकप्रसिद्धं ।
वेलाशून्ये त्रि ॥

**अवेक्षणं**, क्ली, (अव + ईक्ष + ल्युट् ।) अवेक्षा ॥

दर्शनं । यथा । “कृताकृतावेक्षणवत् स्वयं
तत्कुशो-
पवेशनस्य कर्त्तव्यत्वात्” । इति संस्कारतत्त्वं
।
(तथाच ।
“दूरादवेक्षणं हासः संप्रश्ने सादरो भृशम् ।
परोक्षेऽपि गुणश्लाघा स्मरणं प्रियवस्तुषु” ॥
इति हितोपदेशे ॥ अवधानम् । प्रतिजागरः ।
अनुसन्धानम् । यथा, --
“निगृह्य शोकं स्वयमेव धीमान
वर्णाश्रमावेक्षणजागरूकः ।”
इति रघुवंशे ॥)

**अवेक्षा**, स्त्री, (अव + ईक्ष + अ + ततष्टाप् ।) प्रत्य-

वेक्षणं । प्रत्यक्षदृष्टिः । तत्पर्य्यायः । प्रतिजा-

तापत्यविधवा । इति स्मृतिः । निष्पतिसुता । इत्यमरमेदिन्यौ ॥ तदन्नभोजने दोषप्रायश्चित्ते यथा, --
"यो विप्रोऽवीरान्नभोजी ऋतुस्नातान्नभोजकः ।
भगजीवी वार्द्धुषिको विषहीनो यथोरगः" ॥
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २१ अध्यायः ॥ * ॥
अपि च ।
"अवीरान्नञ्च यो भुङ्क्ते योनिजीवी च ब्राह्मणः ।
यस्त्रिसन्ध्याविहीनश्च स गोहत्यां लभेत् ध्रुवं" ॥
इति च तत्रैव २७ अध्यायः ॥ * ॥ विष्णुः । गण-गणिकास्तेनगायनकान्नानि भुक्त्वा सप्तरात्रं पयसा
वर्त्तेत । अवीरास्त्रीस्वर्णकारसंसर्गपतितानाञ्च । इति प्रायश्चित्तविवेकः ॥ * ॥ सामान्येनाभोज्यान्न-
भोजनप्रकरणे मनुः, --
"नाश्रोत्रियहुते यज्ञे ग्रामयाजिहुते तथा" ।
इत्यादि ।
"अनर्च्चितं वृथामांसमवीरायाश्च योषितः"
इत्यादिकञ्चोपक्रम्य ।
"भुक्त्वा चान्यतमस्यान्नममत्याक्षपणं त्र्यहं" ।
"मत्या भुक्त्वा चरेत् कृच्छ्रं रेतो विण्मूत्रमेव" ॥
इति । अवीरा पतिपुत्त्रविहीना निःसम्बन्धिनी । स्वसम्बन्धिन्यास्तु श्राद्धादिनाभ्यनुज्ञानात् व्यव-
हारात् धनाधिकाराच्च । इति च प्रायश्चित्त-विवेकः ॥ * ॥ अस्या धनाधिकारो यथा याज्ञ-वल्क्यः, --
"पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ।
तत्सुतो गोत्रजो बन्धुः शिष्याः सब्रह्मचारिणः ॥
एषामभावे पूर्ब्बस्य धनभागुत्तरोत्तरः ।
॥ * ॥ अस्या भर्त्रादितर्पणाधिकारो यथा स्मृतिः ।
"तर्पणं प्रत्यहं कार्य्यं भर्त्तुः कुशतिलोदकैः ।
तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्ब्बकं" ॥
एतत्तु तर्पणं पुत्रपौत्राद्यभावविषयमिति मदन-पारिजातः । इति ॥ * ॥ मृतायास्तस्या आद्य-श्राद्धादि पञ्चदशश्राद्धं कर्त्तव्यं न तु सपिण्डनं । यथा । अत्र सपत्नीपुत्रस्य पुत्रत्वातिदेशात् तत्स-
त्वेऽपि स्त्रीणां सपिण्डनं मैथिलैरुक्तं तन्न ।
"पुत्रेणैव तु कर्त्तव्यं सपिण्डीकरणं स्त्रियाः ।
पुरुषस्य पुनस्त्वन्ये भ्रातृपुत्रादयोऽपि ये" ॥
इति लघुहारीतवचने एवकारेण अतिदिष्टपुत्र-निषेधात् । पुत्रेणेति तत्सत्त्वमात्रविवक्षितं ।
"सपिण्डीकरणं तासां पुत्राभावे न विद्यते" ।
इति मार्कण्डेयपुराणैकवाक्यत्वात् ।
"यानि पञ्चदशाद्यानि अपुत्रस्येतराणि च ।
एकस्यैव तु दातव्यमपुत्रायाश्च योषितः" ॥
गरः २ । इत्यमरः । (अवधानम् । अनुसन्धा-नम् । यथा, --
"अलब्धमिच्छेद्दण्डेन लब्धं रक्षेदवेक्षया ।
रक्षितं वर्द्धयेत् वृद्ध्या वृद्धं दानेन निक्षिपेत्" ॥
इति मनुः ।
("यदि रामस्य नावेक्षा त्वयि
स्यान्मातृवत्सदा" ।
इति रामायणे ।)

**अवेक्षितं**, त्रि, (अव + ईक्ष + क्त ।) दृष्टं । यथा मनुः ।
"केशकीटावपन्नञ्च पदा स्पृष्टञ्च कामतः ।
भ्रूणघ्नावेक्षितञ्चैव संस्पृष्टञ्चाप्युदक्यया" ॥
इत्याह्निकाचारतत्त्वम् ॥ (कृतावधानः । यथा, रघुवंशे । "स कदाचिदवेक्षितप्रजः" ।)

**अवैधं**, त्रि, (न वैधं विधित आगतं । नञ्तत्पुरुषः ।) विध्यविषयः । विधिविवर्ज्जितं । विधिप्राप्तभिन्नं ॥
("अवैधं पञ्चमं कुर्व्वन् राज्ञो दण्डेन शुध्यति" ।
इति स्मृतिः ॥)

**अवोदं**, त्रि, (अव + उन्द + घञ् ।) आर्द्रं । इति जटाधरः ॥

**अवोधः**, त्रि, (नास्ति वोधो ज्ञानं यस्य ।) निर्व्वोधः । अज्ञानः ।

**अवोक्षणं**, क्ली, (अव + उक्ष + ल्युट् ।) प्रोक्षण-विशेषः । नुब्जहस्तेन जलक्षेपणं । यथा हारीतः ।

:“तस्मादद्भिरवोक्ष्यैतद्दद्यादालभ्य एव च” ।

अवोक्ष्य प्रोक्ष्य इति रत्नाकरः ॥ नव्यवर्द्धमान-
धृतम् ।
“उत्तानेन तु हस्तेन प्रोक्षणं समुदाहृतम् ।
न्युब्जताभ्युक्षणं प्रोक्तं तिरश्चावोक्षणं स्मृतम्” ॥
इति शुद्धितत्त्वम् ॥

**अब्दः**, पुं, (अव + दन् ॥ औणादिकोऽयं ।) वत्सरः ।

मेघः । मुस्ता । इति रायमुकुटः सारसुन्दरी च ॥
(मुस्तार्थे प्रयोगो यथा, --
“किराताब्दामृताविश्वचन्दनोदीच्यवत्सरैः ।
शोथातिसारशमनं विशेषाज्ज्वरनाशनम्” ॥
इति वैद्यकचक्रपाणिसङ्ग्रहः ॥)

**अव्यक्तः**, पुं, (वि + अन्ज + क्त । ततो नञ्समासः ।)

विष्णुः । शिवः । कन्दर्पः । इति मेदिनी । मूर्ख
इति
हेमचन्द्रः । अस्फुटे त्रि ॥)

**अव्यक्तं**, क्ली, प्रकृतिः । आत्मा । इति हेमचन्द्रः ।

महदादि । परमात्मा । इति मेदिनी ॥
(“योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः
सनातनः ।
सर्व्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ” ॥
इति मानवे ॥
गणितादौ अज्ञातराश्यादिः । अदृश्यः ।
साङ्ख्यमते
सर्व्वकारणं रूपादिहीनतया चक्षुराद्यगोचरं
प्रधानं महदादि ।
“महतः परमव्यक्तमव्यक्तात् पुरुषः परः” ।
इति कठोपनिषद् ॥
वेदान्तमते सूक्ष्मशरीरं स्वापावस्थायां शब्द-
प्रवृत्तिनिमित्तैर्जातिगुणक्रियासम्बन्धैर्वर्ज्जितं
नि-
र्व्विकारं निराकारं ब्रह्म । परमात्मा, मायोपा-
धिकं ब्रह्म, सूक्ष्ममतीन्द्रियं लिङ्गग्राह्यं परब्रह्म ।
यदुक्तम्, --
“अव्यक्तमिति विज्ञेयं लिङ्गग्राह्यमतीन्द्रियम्” ।
रूपादिविहीनत्वेन चक्षुराद्यगोचरो योगाभ्या-
सावसेयो भावः ।
“ब्राह्मं सरः कारणमाप्तवाचो
बुद्धेरिवाव्यक्तमुदाहरन्ति” । इति रघुवंशे ॥

“अव्यक्तमात्मा क्षेत्रज्ञः शाश्वतो विभुरव्ययः”
।
इति च ॥
“अतोऽन्यत् पुनरव्यक्तं लिङ्गग्राह्यमतीन्द्रियं”
॥
इति च ॥
“अव्यक्तमस्य क्षेत्रस्य ज्ञेत्रज्ञमृषयो विदुः” ॥
इति च चरकः ॥)

**अव्यक्तरागः**, पुं, (न व्यक्तोऽल्पव्यक्तो रागोऽरुणिमा
।)

ईषल्लोहितवर्णः । तत्पर्य्यायः । अरुणः २ ।
इत्य-
मरः ॥ ताम्रः ३ गौरः ४ । इति जटाधरः ॥

**अव्यङ्गः**, त्रि, (न सन्ति व्यङ्गानि यस्य ।) व्यङ्ग-

रहितः । अविकलाङ्गः । यथा, --
“तत आहूय धर्म्मज्ञं ब्राह्मणं वेदपारगं ।
अव्यङ्गावयवं पूज्य गन्धधूपार्च्चनादिभिः” ॥
इति मत्स्यपुराणे ६६ अध्यायः ॥

**अव्यङ्गा**, स्त्री, (अवेर्मेषस्य अङ्गं शृङ्गमिव अङ्गं

यस्याः ।) शूकशिम्बी । इति केचित् ॥ अमर-
कोषे अध्यण्डा इति तट्टीकायां अव्यण्डा इति
च पाठः ॥ व्यङ्गरहिते अविकलाङ्गे च त्रि ॥

**अव्यङ्ग्यं**, क्ली, (नास्ति व्यङ्गालङ्कारो यस्मिन् ।) व्यङ्ग्या-

लङ्काररहितकाव्यं ॥ यथा, --
“सव्यङ्ग्यमुत्तमं काव्यमव्यङ्ग्यमधमं स्मृतं
।
किञ्चिद्व्यङ्ग्यसमायुक्तं मध्यमं परिकीर्त्तितं”
॥
इति काव्यचन्द्रिका ॥

**अव्यञ्जनः**, पुं, (नास्ति व्यञ्जनं शुभलक्षणं शृङ्गं, यस्य
।)

शृङ्गहीनपशुः । इति हलायुधः ॥ अस्फुटे त्रि
॥
(अनुद्भिन्नरजस्वलाचिह्ना कन्या । यथा, --
“असंप्राप्तरजा गौरी प्राप्ते रजसि रोहिणी ।
अव्यञ्जना भवेत् कन्या कुचहीना च नग्निका”
॥
इति पञ्चतन्त्रे ॥)

अरूपगुणवर्णाख्यं तद्ब्रह्मेत्यवधारयेत्” ॥
इति आत्मबोधे ॥)

**अव्ययः**, पुं, (नास्ति व्ययो यस्य ।) विष्णुः ।

(“नमस्कृत्य सुरेशाय विष्णवे प्रभविष्णवे ।
पुरुषायाप्रमेयाय शाश्वतायाव्ययाय च” ॥
इति मार्कण्डेयपुराणे ॥) व्ययरहिते, त्रि । इति
मेदिनी ॥ (अविनाशी । नित्यपुरुषः । यथा, --
“तमसः परमापदव्ययं पुरुषं योगसमाधिना
रघुः” ॥ इति रघुवंशे ।
“सूक्ष्माभ्यो मूर्त्तिमात्राभ्यः
संभवत्यव्ययाद्व्ययम्” ।
इति मानवे ॥)

**अव्यर्थः**, त्रि, (न व्यर्थः । नञ्तत्पुरुषः ।) अमोघः ।

सफलः । यथा, --
“दुर्निवार्य्यञ्च दुर्द्धर्षमव्यर्थं वैरिघातकम् ।
तेजसा चक्रतुल्यञ्च सर्व्वशस्त्रास्त्रघातकम्” ॥
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे १८ अध्यायः ॥

**अव्यवसायवान्**, [त्] त्रि, (अव्यवसाय + मतुप् ।

मस्य वः ।) व्यवसायरहितः । अव्यवसायी ।
तत्पर्य्यायः । शिक्कुः २ । इति त्रिकाण्डशेषः ॥
(अनुशीलनरहितः ।)

**अव्यवस्था**, स्त्री, (वि + अव + स्था + अङ् । ततो

नञ्समासः ।) अवसिद्धान्तः । अविधिः । शास्त्र-
विरुद्धव्यवस्था । इति नञ्समासनिष्पन्ना ॥
(चञ्चले । यथा, कुमारे,
“स्थलारविन्दश्रियमव्यवस्थां” ॥)

**अव्यवस्थितः**, त्रि, (न व्यवस्थितः । नञ्समासः ।)

नीतिशास्त्रादिव्यवस्थानभिज्ञः । सिद्धान्तरहितः
।
यथा, --
“क्वचिद्रुष्टः क्वचित्तुष्टो रुष्टस्तुष्टः क्षणे क्षणे ।
अव्यवस्थितचित्तस्य प्रसादोऽपि भयङ्करः” ॥
इति हितोपदेशः ॥

**अव्यवहार्य्यं**, त्रि, (वि + अव + हृ + ण्यत् । ततोनञ्-

समासः ।) व्यवहारायोग्यं । अव्यवहरणीयं ।
यथा । ज्ञानतश्चाण्डालान्त्यस्त्रीगमने
तत्तुल्यतया

प्रकृतिः । तथा हि, -- "यत् सर्व्वस्य जगतो वीजभूतमव्याकृतमनामरूपमतत्वं सर्व्वकार्य्यकार-णशक्तिसमाहाररूपं अव्यक्ताव्याकृताकाशादिना-मवाच्यं परमात्मन्योतप्रोतभावेन समाश्रितं वट-कणिकायामिव वटवृक्षशक्तिः । सत्त्वादिरूपेण निरूप्यमाणे व्यक्तिरस्य नास्तीत्यव्यक्तम्" । यदुक्तम् । "हेतुमदनित्यमव्यापि सक्रियमनेक-माश्रितं लिङ्गम् । सावयवं परतन्त्रं व्यक्तं विप-रीतमव्यक्तम्" ॥ ० ॥ सर्व्वभूतानां कारणमकारणं सत्त्वरजस्तमोलक्षणमष्टरूपमखिलस्य जगतः स-म्भवहेतुरव्यक्तं नाम । तदेकं बहूनां क्षेत्रज्ञाना-मधिष्ठानं समुद्र इवोदकानां भावानां" ॥ इति सुश्रुतः ॥

"अनादिः पुरुषो नित्यो विपरीतस्तु हेतुजः ।
सदकारणवन्नित्यं दृष्टं हेतुमदन्यथा ॥
तदेव भावादग्राह्यं नित्यत्वान्न कुतश्चन ।
भावाज्ज्ञेयं तदव्यक्तमचिन्त्यं व्यक्तमन्यथा" ॥
इति ॥

**अव्यण्डा**, स्त्री, (न विगतमण्डं वीजमस्याः ।) अध्यण्डा इति कुत्रचिदमरकोषे पाठः ॥ आलकुशीति भाषा ।

**अव्यथः**, त्रि, (नास्ति व्यथा यस्य सः ।) पीडारहितः । व्यथाशून्यः । सर्पे पुं । इति मेदिनी ॥

**अव्यथा**, स्त्री, (न व्यथा । नञ्तत्पुरुषः ।) हरी-तकी ॥ पद्मचारिणी । इत्यमरः ॥

**अव्यथिः**, पुं, अश्वः । सङ्ग्रामे न बिभ्यतीति अव्यथिः । व्यथ भयसञ्चलनयोः सर्व्वधातुभ्य इति इन्प्रत्ययः ततो नञ्समासः । वेदप्रयोगोऽयं ॥

**अव्यथिषः**, पुं, (न + व्यथ + टिषच् ।) समुद्रः । सूर्य्यः । इति सिद्धान्तकौमुद्या उणादिवृत्तिः ॥

**अव्यथिषी**, स्त्री, (अव्यथिष + ङीप् ।) पृथिवी । अर्द्धरात्रं । इति सिद्धान्तकौमुदी ॥

**अव्यथ्यः**, त्रि, (न + व्यथ + क्यप् ।) व्यथाशून्यः । इति पाणिनिः ॥

**अव्ययं**, क्ली, पुं, (न + वि + इन् + अच् ।) शब्द-विशेषः । तत्परे विभक्तिर्न तिष्ठति अतएव लि-ङ्गत्रयाविकृतं । तथाच कातन्त्रे, --

"सदृशं त्रिषु लिङ्गेषु सर्व्वासु च विभक्तिषु ।
वचनेषु च सर्व्वेषु यन्न व्येति तदव्ययम्" ॥
(क्ली, अनाद्यन्तं विकारशून्यं परब्रह्म । यथा, --
"अनण्वस्थलमह्रस्वमदीर्घमजमव्ययम् ।
द्विगुणव्रताचरणे कृतेऽपि न व्यवहार्य्यः । यथा याज्ञवल्क्यः ।

"प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् ।
कामतोऽव्यवहार्य्यस्तु वचनादिह जायते" ॥
पापान्तरेऽप्यव्यवहार्य्यत्वं याज्ञवल्क्योक्तम् ।
"शरणागतबालस्त्रीहिंसकान् संवसेन्न तु ।
चीर्णव्रतानपि सदा कृतघ्नसहितानिमान्" ॥
"अत्र च कामतो महापातकादिवृहत्पापकर्तु-रव्यवहार्य्यत्वदर्शनात् कामतो बहुतरगुणयुक्त-शरणागतादिहन्तृणामव्यवहार्य्यत्वं न तु हीनतर-हन्तृणां अन्यथा विषमशिष्टतापत्तिः स्यात्" । इति प्रायश्चित्ततत्त्वम् ॥

**अव्यवहितं**, त्रि, (वि + अव + धा + क्त । ततो नञ्-तत्पुरुषः ।) व्यवधानशून्यं । तत्पर्य्यायः । संसक्तं २ अपटान्तरं ३ अपदान्तरं ४ । इत्यमरः ॥ तट्टीका च ॥ लग्नं ५ । इति शब्दरत्नावली ॥ ("सिसा-धयिषाविरहविशिष्टक्षणाव्यवहितोत्तरक्षणोत्प-त्तिकानुमितिकभिन्नेति" ॥ इति दीधितिः ॥)

**अव्यवहृतः**, त्रि, (न व्यवहृतः । नञ्तत्पुरुषः ।)
अकृतव्यवहारः । इति नञ्समासनिष्पन्नः ॥

**अव्याजः**, पुं, (न व्याजः । नञ्तत्पुरुषः ।) छलाभावः ।
यथा ।
"इदं किलाव्याजमनोहरं वपुः
तपःक्लमं साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया
शमीलतां छेत्तुमृषिर्व्यवस्यति" ॥
इत्यभिज्ञानशकुन्तलानाटके प्रथमोऽङ्कः ।
शीघ्रं । यथा । "सेक्तव्यो यदि मारवस्तरुरयं
पाथोदपाथोलवैरव्याजं परिषिञ्च किं चिरयसे
कालः परिक्रामति । मूले सिक्तरसे दले विग-
लिते शीर्णे तथा वल्कले न स्यादस्य परिस्थितेः
प्रभुरहो धारापि वारां तव ॥" इत्युद्भटः ॥

**अव्याप्यं**, त्रि, (न व्याप्यं । नञ्तत्पुरुषः ।) अव्याप-
नीयं । व्याप्तिरहितं । अनधीनं । यथा । "नापि
साध्यव्यापकाव्याप्यत्वेन व्याप्तिविरहोन्नायकतया
साध्यव्याप्यव्यापकत्वेनोपाधेरेव
साध्यव्यापकत्व-
साधनात् । तस्मादुपाधिर्हेत्वाभासान्तरमिति" ।
इत्युपाधिवादचिन्तामणिः । अपि च,
"अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते" ।
इति भाषापरिच्छेदः ॥

**अव्याप्यवृत्तिः**, त्रि, (अव्याप्य सर्व्वावच्छेदमप्राप्य
वृत्तिर्यस्य ।) किञ्चिदवच्छिन्नवृत्तिः ।
("अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते" ।
इति भाषापरिच्छेदः ।)
स्वसमानाधिकरणाभावप्रतियोगीति यावत् । दै-
शिककालिकभेदेन स द्विविधः । तत्पर्य्यायः ।
प्रादेशिकः २ । आत्मनो विशेषगुणाः । बुद्धिः १
सुखं २ दुःखं ३ इच्छा-४ द्वेषः ५ यत्नः ६ धर्म्मः
७
अधर्म्मः ८ भावनाख्यसंस्कारः ९ आकाशस्य
वि-
शेषगुणः शब्दः १० । सामान्यगुणौ संयोग ११
विभागश्च १२ । एते सर्व्वे अव्याप्यवृत्तयः स्युः ।
इति
न्यायभाषा ॥

**अव्याहतं**, त्रि, (न व्याहतम् । नञ्तत्पुरुषः ।)
इति याज्ञवल्क्यसंहिता ।)

**अश** ग (क्र्यादिं-परं-सकं-सेट् ।) भोजने । अश्नात्यन्नं
बुभुक्षितः । इति दुर्गादासः ।

**अशकुम्भी**, स्त्री, (अशा सलिलं स्कुम्भाति व्याप्नोति
इति । अशा + स्कुम्भ + ट + पृषोदरादिरयं
।)
पानीयपृष्ठजः । इति रत्नमाला ॥ पाना इति
भाषा ।

**अशक्यं**, त्रि, (न शक्यम् । नञ्तत्पुरुषः ।) अशक-
नीयं । असाध्यं । यथा । "अशक्ये
अध्यवसायः
समर्थना" । इति मुग्धबोधव्याकरणम् ॥

**अशक्तः**, त्रि, (न शक्तः । नञ्तत्पुरुषः ।) शक्तिरहितं ।
असमर्थं यथा । मनुः ।
"बिभृयाद्वेच्छतः सर्व्वान् ज्येष्ठो भ्राता यथा
पिता ।
भ्राताशक्तः कनिष्ठो वा शक्त्यपेक्षा कुले
स्थितिः" ॥
इति दायतत्त्वम् ॥
"उपवासेष्वशक्तानां नक्तं भोजनमिष्यते" ।
इति तिथ्यादितत्त्वम् ॥

**अशत्रुः**, पुं, (न + शद् + क्रुन् । नञ्तत्पुरुषः ।)
चन्द्रः । इति शब्दचन्द्रिका ॥ शत्रुरहिते मित्रे
च त्रि ॥

**अशनं**, क्ली, (अश + ल्युट् ।) भक्षणं । अन्नं । इति
हेमचन्द्रः ॥ ("शीतं निर्झरवारि पानमशनं
कन्दाः
सहाया मृगाः ॥" इति नागानन्दे ॥
"विशिष्टमिष्टसंस्कारैः पथ्यैरिष्टैरसादिभिः ।
मनोज्ञं शुचि नात्युष्णं प्रत्यग्रमशनं हितं" ॥
इति सुश्रुतः ॥)

**अशनः**, पुं, असनवृक्षः । पीतशालवृक्षः । इति
रायमुकुटः ॥ (असनशब्देऽस्य विशेषो
ज्ञातव्यः ॥)

**अशनपर्णी**, स्त्री, (अशनस्य शालवृक्षविशेषस्य पर्ण-

**अशाखा**, स्त्री, (नास्ति शाखा यस्याः ।) शूलीतृणं ।
इति राजनिर्घण्टः ॥

**अशितं**, त्रि, (अश + क्त ।) भुक्तं । खादितं । तृप्तं ।
इति हेमचन्द्रः ॥
("आप एव तदशितं नयन्ते" ।
"तेजोऽशितं त्रेधा विधीयते" ।
इति च छान्दोग्ये उपनिषदि ॥
"अशितं मात्रया काले पथ्यं याति जरां सुखं"
॥
इति वाभटः ॥ "यावद् यस्याशनमशितमनुप-
हत्य प्रकृतिं यथाकालं जरां गच्छति, तावदस्य
मात्रा प्रमाणं वेदितव्यं भवति" ॥ इति चरकश्च
॥)

**अशितङ्गवीनं**, त्रि, (अशिता भोजिता गावो यत्र ।
अशितगो + ख + निपातनात् मुमागमः ।) आ-
शितङ्गवीनं । पूर्ब्बगवादिचरितक्षेत्रादि । इत्यम-
रटीकासारसुन्दरी ॥

**अशित्रः**, त्रि, (अश + इत्र ।) चौरः । इत्युणादि-
कोषः ॥ (चरुः ।)

**अशिरं**, क्ली, (अश + इर ।) हीरकं । इति राज-
निर्घण्टः ॥ (हीरकशब्देऽस्य विशेषो ज्ञेयः ॥)

**अशिरः**, पुं, (अशभोजने + इर ।) अग्निः । राक्षसः ।
सूर्य्यः । इति मेदिनी ॥

**अशिरा**, स्त्री, अशिरराक्षसस्त्री । इत्युणादिकोषः ॥

**अशिश्विका**, स्त्री, (अशिश्वी + स्वार्थे कन् ।) अन-
पत्या । कन्यापुत्रविहीना स्त्री । इति
शब्दरत्ना-
वली ॥ आँटकुडी इति भाषा ॥

**अशिश्वी**, स्त्री, (नास्ति शिशुर्यस्याः इति । निपा-
तनात् ङीप् ।) अशिश्विका । इत्यमरः ॥

**अशिक्षितं**, त्रि, (न शिक्षितं । नञ्समासः ।) शि-
क्षारहितः । अनिपुणः । अतभिज्ञः । यथा ।
"यत्र
सारथेरकौशल्यात् यानमन्यथा गच्छति तत्र
हिंसायां अशिक्षितसारथिनियोगात् स्वामी द्वि-

व्याघातशून्यं । यथा ।
"यस्य त्रिकालममलं ज्ञानमव्याहतं सदा ।
वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति" ॥
इति शब्दमाला ॥ किञ्च । विष्णुपुराणम् ।
"अन्नं बलाय मे भूमेरपामग्न्यनिलस्य च ।
भवत्वेतत् परिणतौ ममास्त्वव्याहतं सुखम् ॥
प्राणापानसमानानामुदानव्यानयोस्तथा ।
अन्नं तुष्टिकरञ्चास्तु ममास्त्वव्याहतं सुखम्" ॥
इत्याह्निकाचारतत्त्वम् ॥ (अकुण्ठितं । यथा, --
"वेदशास्त्रार्थविज्ञाने येषामव्याहता मतिः" ।
इति मार्कण्डेयपुराणे ।)

**अव्याहृतः**, त्रि, अकथितः । न व्याहृतः अव्याहृतः

नञ्समासनिष्पन्नः ॥

**अश** ऊ ङ न (स्वादिं-आत्मं-सकं-वेट् ।) व्याप्ति-

संहत्योः । ऊ ङ अशिष्यते अक्ष्यते । न अश्नो-
ति । संहतिः समूहः । इति दुर्गादासः ॥
("यद्ददाति गयास्थश्च सर्व्वमानन्त्यमश्नुते" ।
मिव पर्णमस्याः ।) वृक्षविशेषः । तत्पर्य्यायः ।
वातकः २ शीतलः ३ शीतलवातकः ४
असन-
पर्णी ५ शनपर्णी ६ सनपर्णी ७ शीतः ८
शीतकः
९ अपराजिता १० । माराटी इति ख्याता ।
इति शब्दरत्नावली ॥

**अशनाया**, स्त्री, (अशन + क्यच् ।) भोजनेच्छा ।

क्षुधा । इत्यमरः ॥
("अन्नाद्वा अशनाया निवर्त्तते पानात्पिपासा"
।
इति शतपथब्राह्मणे । "च्युताशनायः
फलवद्वि-
भूत्या" । इति भट्टौ ।)

**अशनायितं**, त्रि, (अशनाय + क्त । अशनाया भोज-

नेच्छा जाता अस्य इति इतच् वा ।) क्षुधितं ।
इत्यमरः ॥

**अशनिः**, पुं, स्त्री, (अश्नाति सङ्घातं करोति ।

अश + अनिः ।) वज्रं । इत्यमरः । विद्युत् ॥
("अथवा मम भाग्यविप्लवादशनिः कल्पित
एष
वेधसा" इति रघुवंशे ।)

**अशर्म्म** [न्,] क्ली, (न शर्म्म । नञ्समासः । नास्ति

शर्म्म यस्मिन् इति समासे वाच्यलिङ्गः ।) कष्टं
।
दुःखं ।
("एकौघभूतं तदशर्म्म कृष्णां
विभावरीं ध्वान्तमिव प्रपेदे ॥"
इति भारविः ॥) तद्विशिष्टे त्रि । इति जटाधरः
॥
शतं दण्डं दाप्यः स्यात्" । इति
कुल्लूकभट्टव्याख्या-
नात् । इति प्रायश्चित्ततत्त्वं ॥

**अशीतः**, त्रि, (न शीतः । नञ्तत्पुरुषः ।) शीता-

भावयुक्तः । यथा, --
"अशीतास्तरवो माघे फाल्गुने पशुपक्षिणौ ।
चैत्रे जलचराः सर्व्वे वैशाखे नरवानरौ" ॥
इति पुराणं ॥

**अशीतिः**, त्रि, (अष्टदशतः परिमाणमस्य । पङ्क्ति-

विंशतीत्यादिना निपातनात्
प्रकृतेरशीभावस्ति-
प्रत्ययश्च ।) संख्याबिशेषः । ८० आशी इति
भाषा । यथा मनुः, --
"अशीतिभागं गृह्णीयात्
मासात् वार्द्धुषिकः शतात् ।
द्विकं शतं वा गृह्णीयात्
सतां धर्म्ममनुस्मरन्" ॥
इत्याह्निकाचारतत्त्वं ॥ अपि च ।
"अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः ।
प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव च" ॥
इति प्रायश्चित्ततत्त्वं ॥

**अशुद्धं**, त्रि, (न शुद्धम् । नञ्तत्पुरुषः ।) अपवित्र ।

अकृतशोधनं । अशौचयुक्तं । यथा । शङ्खः, --

:"ततः श्राद्धमशुद्धौ तु कुर्य्यादिकादशे तथा ।
कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः" ॥
इति ।
"शुद्धा भर्त्तुश्चतुर्थेऽह्नि अशुद्धा दैवपैत्रयीः ।
दैवे कर्म्मणि पैत्रे च पञ्चमेऽहनि शुद्ध्यति" ॥
इति च शुद्धितत्त्वं ॥ (वर्णाद्यशुद्धियुक्तः ।)

**अश्रुभं**, क्ली, (न शुभम् । नञ्तत्पुरुषः । नास्ति-
शुभं यस्येति समासे वाच्यलिङ्ग एव ।) पापं ।
इति हेमचन्द्रः ॥ अमङ्गलं ।
("न च किञ्चिदुवाचैनं शुभं वा यदि वाशुभम्" ।
मा च वोऽस्त्वशुभं किञ्चित्सर्व्वथा
पण्डुनन्दनाः" ॥
इति च भारते ॥) तद्युक्ते त्रि । यथा, --
"सर्व्वाशुभानां परिमोक्षकारि
सम्पूजनं देववरस्य विष्णोः" ।
इति ज्योतिस्तत्त्वं ॥ अपि च । मदनपारिजात-
धृतं ।
"अशुभं खञ्जनं दृष्ट्वा देवब्राह्मणपूजनं ।
दानं कुर्व्वीत कुर्य्याच्च स्नानं सर्व्वौषधीजलैः"
॥
इति तिथ्यादितत्त्वं ॥

**अशून्यशयनव्रतं**, क्ली, (न शून्यं शयनं यस्मात्, तत्
व्रतम् ।) श्रावणकृष्णद्वितीयाकर्त्तव्यव्रतविशेषः ।
यथा, --
"ब्रह्मोवाच ।
भगवन् ! पुरुषस्येह स्त्रियाश्च विरहादिकं ।
शोक-व्याधि-भयं दुःखं न भवेद्येन तद्वद ॥
भगवानुवाच ।
श्रावणस्य द्वितीयायां कृष्णायां मधुसूदनः ।
क्षीरार्णवे सलक्ष्मीकः सदा वसति केशवः ॥
तस्यां संपूज्य गोविन्दं सर्व्वान् कामान् समश्नुते
।
गो-भू-हिरण्य-दानादि सप्तकल्पशतानुगं ॥
अशून्यशयना नाम द्वितीया या प्रकीर्त्तिता ।
तस्यां सम्पूजयेद्विष्णुमेभिर्म्मन्त्रैर्व्विधानतः ॥
श्रीवत्सधारिन् श्रीकान्त श्रीधाम श्रीपतेऽव्यय ।
गार्हस्थं मा प्रणाशं मे यातु धर्म्मार्थकामद ॥
अग्नयो मा प्रणश्यन्तु देवताः पुरुषोत्तम ।
पितरो मा प्रणश्यन्तु मत्तो दाम्पत्यभेदतः ॥
तत्रोपवेश्य दाम्पत्यमलंकृत्य विधानतः ।
पत्न्यास्तु भाजनं दद्यात् भक्ष्यभोज्यसमन्वितं ।
ब्राह्मणस्यापि सौवर्णीमुपस्करसमन्वितां ।
प्रतिमां देवदेवस्य सोदकुम्भां निवेदयेत् ॥
एवं यस्तु पुमान् कुर्य्यादशून्यशयनं हरेः ।
वित्तशाठ्येन रहितो नारायणपरायणः ॥
न तस्य पत्न्या विरहः कदाचिदपि जायते ।
नारी चाविधवा ब्रह्मन् यावच्चन्द्रार्कतारकं ॥
न विरूपं न शोकार्त्तं दाम्पत्यं जायते क्वचित् ।
न पुत्रपशुरत्नानि क्षयं यान्ति पितामह ॥
सप्तकल्पसहस्राणि सप्तकल्पशतानि च ।
कुर्व्वन्नशून्यशयनं विष्णुलोके महीयते" ॥
इति मत्स्यपुराणे अशून्यशयनव्रतं ६७ अध्यायः
॥

**अशृतं**, त्रि, (न शृतम् । नञ्तत्पुरुषः ।) अपक्वं ।
इति रत्नमाला ॥
"तण्डुलात् षोडशगुणे शृते वाप्यशृते तथा ।
तोये पेयां पचेत्तावद्यावत् सिक्थकनिर्गमः" ॥
इति वैद्यकपरिभाषा ॥

**अशेषं**, त्रि, (नास्ति शेषो यस्येति ।) शेषरहितं ।
निःशेषं ॥ सर्व्वं । इत्यमरः ॥
("स्थानं प्राप्स्याम्यशेषाणां जगतामपि पूजितम्"
॥
"अहिंसादिष्वशेषेषु गुणेषु गुणिनां वरः" ॥
इति च विष्णुपुराणम् ॥ अशेषेण । यथा, --
"अलं विवादेन यथा श्रुतस्त्वया
तथाविधस्तावदशेषमस्तु सः" ।
इति कुमारे ।
"वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः" ॥
इति गीतायाम् ॥)

**अशोकं**, स्त्री, पारदं । इति मेदिनी ॥ शोकरहिते
त्रि ॥

**अशोकः**, पुं, (नास्ति शोको यस्मात् ।) स्वनाम-
ख्यातपुष्पवृक्षविशेषः । तत्पर्य्यायः । शोकनाशः
२
विशोकः ३ वञ्जुलद्रुमः ४ वञ्जलः ५ मधुपुष्पः ६
अपशोकः ७ कङ्केल्लिः ८ केलिकः ९ रक्तपल्लवः
"पादाहतः प्रमदया विकसत्यशोकः
शोकं जहाति वकुलो मुखशीधुसिक्तः" ।
अपरञ्च ।
"सनूपुररवेण स्त्रीचरणेनाभिताडनम् ।
दोहदं यदशोकस्य ततः पुष्पोद्गमो भवेत्" ॥
कुमारसम्भवे ऽपि ।
"असूत सद्यः कुसुमान्यशोकः" । इति ॥
"कुसुमं कृतदोहदस्त्वया
यदशोकोऽयमुदीरयिष्यति" ।
इति रघुवंशे ।
"अशोकवल्कलक्वाथं शृतं दुग्धं सुशीतलं ।
यथाबलं पिबेत्प्रातस्तीव्रासृग्दरनाशनं' ॥"
इति वैद्यकचक्रपाणिसंग्रहः ॥
"अशोकवल्कलप्रस्थं तोयाढके विपाचितं ।
तेन पादावशेषेण जीरकेण तथैव च ॥
घृतप्रस्थं पचेदेतत्प्रक्षिप्य च तथापरं ।
तण्डुलाम्बून्यजाक्षीरं प्रस्थं प्रस्थं पृथक्
पृथक् ॥
केशराजरसस्यापि प्रस्थमेकं भिषग्वरः ।
जीवनीयैः पियालैश्च परूषसरलाञ्जनैः ॥
यष्ट्याह्वाशोकमूलञ्च मृद्वीका च शतावरी ।
तण्डुलीयकमूलञ्च कल्कैरेतैः पलार्द्धकैः ॥
शर्करायाः पलान्यष्टौ गर्भदन्त्वाशुचूर्णितं ।
पुष्यायोगेन तत्पीतं निहन्यात् सर्व्वदोषजं ॥
श्वेतं कृष्णं तथा नीलं प्रदरं हन्ति दुस्तरं ।
कुक्षिशूलं योनिशूलं पृष्ठशूलञ्च दारुणं ॥
मन्दाग्निमरुचिं पाण्डुं कृशतां श्वासकासिनां ।
अशोकघृतमेतत्तु विख्यातं स्त्रीगदेषु च" ॥ *
॥
अशोकघृतं ॥ * ॥
इति वैद्यकस्नेहमालिकायां ॥)

**अशोकः**, त्रि, (नास्ति शोकों यस्येति वाच्यलिङ्गः ।)
शोकरहितः । यथा,
"त्वामशोक हराभीष्ट मधुमाससमुद्भव ।
पिबामि शोकसन्तप्तो मामशोकं सदा कुरु" ॥
इति तिथ्यादितत्त्वं ॥ (स्वनामख्यातो
दशरथस्य
मन्त्री । उक्तं रामायणे ।
"धृष्टिर्जयन्तो विजयः सिद्धार्थोऽप्यर्थसाधकः
।

लक्ष्म्या वियुज्यते देवो न कदाचित् यथा भवान्
।
तथा कलत्रसम्बन्धो देव मा मे वियुज्यतु ॥
लक्ष्म्या न शून्यं वरद यथा ते शयनं सदा ।
शय्या ममाप्यशून्यास्तु तथैव मधुसूदन ॥
गीतवादित्रनिर्घोषं देवस्याग्रे तु कारयेत् ।
घण्टा भवेदशक्तस्य सर्व्ववाद्यमयी यतः ॥
एवं सम्पूज्य गोविन्दमश्नीयात्तैलवर्ज्जितं ।
नक्तमक्षारलवणं यावत्तत्स्याच्चतुष्टयं ॥
ततः प्रभाते संजाते लक्ष्मीपतिसमन्वितां ।
दीपान्नभाजनैर्युक्तां शय्यां दद्याद्विलक्षणां ॥
पादुकोपानहच्छत्रचामरासनसंयुतां ।
अभीष्टोपस्करैर्युक्तां शुक्लपुष्पाम्बरावृतां ॥
सोपधानकविश्रामां फलैर्नानाविधैर्युतां ।
तथाभरणधान्यैश्च यथाशक्त्या समन्वितां ॥
अव्यङ्गाङ्गाय विप्राय वैष्णवाय कुटुम्बिने ।
दातव्या वेदविदुषे न वकव्रतिने क्वचित् ॥

१० चित्रः ११ विचित्रः १२ कर्णपूरः १३
सुभगः
१४ दोहली १५ ताम्रपल्लवः १६ रोगितरुः १७
हेमपुष्पः १८ रामा १९ वामाङ्घ्रिघातनः २०
पिण्डीपुष्पः २१ नटः २२ पल्लवद्रुः २३ ।
अस्य-
गुणाः शीतलत्वं । हृद्यत्वं । पित्तदाहश्रमापहत्वं ।
गुल्मशूलोदराध्माननाशित्वं । कृमिकारकत्वञ्च ।
इति राजनिर्घण्टः ॥ अस्य पर्य्यायगुणाः ।
“अशोको हेमपुष्पश्च वञ्जुलस्ताम्रपप्लवः ।
कङ्केल्लिः पिण्डपुष्पश्च गन्धपुष्पो नटस्तथा ॥
अशोकः शीतलस्तिक्तो ग्राही वर्ण्यः कषायकः ।
दोषापचीतृषादाहकृमिशोषविषास्रजित्” ॥
इति भावप्रकाशः ॥
अस्य कलिकाभक्षणविधिरशीकाष्टमीशब्दे द्र-
ष्टव्यः ॥ (योषितां सनूपुरचरणप्रहारेण अशो-
कानां पुष्पोद्गमो भवतीति कविसमयप्रसिद्धिः ।
यदुक्तम् ।
“पादाघातादशोकं विकसति वकुलं योषिता-
मास्यमद्यैः” । इति साहित्यदर्पणे । अपरञ्च ।

अशोको धर्म्मपालश्च सुमन्त्रश्चाष्टमोऽभवत्”
॥
स्वनामख्यातो नृपतिश्च, यथा भारते ।
“अशोको नाम राजाभून्महावीर्य्योऽपराजितः
।
तस्मादवरजो यस्तु राजन्नश्वपतिः स्मृतः” ॥

**अशोकरोहिणी**, स्त्री, (अशोकैव रोहतीति ।
अशोक + रुह + णिन् + ङीप् ।) कटुरोहिणी
।
इत्यमरः ॥ कट्कीति भाषा ।
(“अशोकरोहिणी-
वैजयन्ती-सुवर्च्चला-पुनर्नवा-वृश्चिकाली-
ज्योतिष्म-
ती-प्रभृतीनि समासेन तिक्तो वर्गः” ।
इति सुश्रुते ॥)

**अशोकषष्ठी**, स्त्री, (अशोका शोकादिरहिता या
षष्ठी ।) चैत्रस्य शुक्ला षष्ठी । तस्यां षष्ठीपूजा
यथा,
“चैत्रे मास्यसिते पक्षे षष्ठ्यां षष्ठीं समर्च्चयेत्
।
सुखाय पुत्त्रलाभाय शुक्लपक्षे तथैव च” ॥
इत्युत्तरकामाख्यातन्त्रे ११ पटलः ॥ ० ॥
“प्रसूत्या द्वादशे मासि सम्पूज्यापत्यवृद्धये ।

:सुते जाते तथा षष्ठ्यां षष्ठी द्वादशरूपिणी ॥

वैशाखे चान्दनी षष्ठी ज्यैष्ठे चारण्यसंज्ञिता ।
आषाढे कार्दमी ज्ञेया श्रावणे लुण्ठनी मता ॥
भाद्रे चपेटी विख्याता दुर्गाख्याश्वयुजे तथा ।
नाड्याख्या कार्त्तिके मासि मार्गे मूलकरूपिणी ॥
पौषे मास्यन्नरूपा च शीतला तपसि स्मृता ॥
गोरूपिणी फाल्गुने च चैत्रेऽशोका प्रकीर्त्तिता” ॥
इति स्कन्दपुराणम् ॥

**अशोका**, स्त्री, (न विद्यते शोको दुःखं यस्याम् ।)
कटुकी । इत्यमरः । अर्हतां शासनदेवताभेदः ।
इति हेमचन्द्रः ॥

**अशोकारिः**, पुं, (आशोकस्य अरिः । कदम्बवृक्षः ।
इति शब्दचन्द्रिका ॥

**अशोकाष्टमी**, स्त्री, (न विद्यते शोको यस्यां सा ।
एवम्भूता अष्टमी ।) चैत्रमासीयशुक्लाष्टमी । त-
त्राष्टसङ्ख्यकाशोककलिकायुक्तजलपानं कर्त्तव्यम् ।
यथा, अथाशोकाष्टमी स्कान्दे ।
“मीने मधौ शुक्लपक्षे अशोकाख्यां तथाष्टमीं ।
पिबेदशोककलिकाः स्नायाल्लौहित्यवारिणि” ॥
अशोकाख्येत्युपादानात्तिथिमात्रेऽपि तत्पानं ।
फलन्तु मन्त्रलिङ्गात् शोकराहित्यमवगन्तव्यं ।
लौहित्यवारिणि ब्रह्मपुत्राख्यनदजले । पुनर्वसु-
योगे तु फलाधिक्यं । आह लिङ्गगरुडपुराणयोः ।
“अशोककलिकाश्चाष्टौ ये पिबन्ति पुनर्वसौ ।
चैत्रे मासि सिताष्टम्यां न ते शोकमवाप्नुयुः” ॥
पानमन्त्रस्तु ।
“त्वामशोक हराभीष्ट मधुमाससमुद्भव ।

**अशोच्यं**, त्रि, (शुच् + कर्म्मनि ण्यत् । ततो नञ्तत्पु-
रुषः ।) शोकायोग्यं । अशोचनीयं । यथा, --
“अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः” ॥
इति श्रीभगवद्गीतायां २ अध्याये ११ श्लोकः ॥
(तथा च चाणक्ये, --
“अशोच्यो निर्धनः प्राज्ञोऽशोच्यः पण्डितबान्धवः ।
अशोच्या विधवा नारी पुत्रपौत्रप्रतिष्ठिता”)

**अशौचं**, क्ली, (शुचेः पवित्रताया भावः शौचं ततो तञ्-
तत्पुरुषः ।) शुचित्वाभावः । स्मृतौ तु । वैदिककर्म्मा-
नर्हत्वप्रयोजकीभूतसंस्कारविशेषः । यथा । वैदि-
ककर्म्मानर्हत्वप्रयोजकसंस्कारविशेषरूपमशौचं ।
वैदिककर्म्मार्हत्वप्रयोजकसंस्काररूपं शौचं । न
चाशौचाभाव एव शुद्धिर्नसंस्कारविशेष इति
वाच्यं । अघानां यौगपद्येत्विति न वर्द्धयेदघानि
इत्येताभ्यामशौचे पापपर्य्यायाघपदप्रदर्शनात्
अशौचपदस्य यथांभावरूपत्वं । तथा, --
“देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनां ।
आयान्ति तस्मात्तदहः पुण्यं षष्ठञ्च सर्व्वदा” ॥
इत्यादित्यपुराणीयेन शौचे पुण्यपददर्शनात्
शौचस्यांपि भावरूपता प्रतीयते । इति शुद्धि-
तत्त्वं ॥ * ॥ मन्त्रदगुरुमरणे अशौचं यथा, --
“गृहीतो देवतामन्त्रः सावित्रीग्रहणं कृतं ।
यस्मात्तस्य त्रिरात्रन्तु ब्रह्मविद्याग्रहो यतः ॥
उपनीयाध्यापको यस्तस्मिन्नपि त्रिरात्रकं ।
वेदवेदाङ्गशास्त्राणां व्याख्यानं शिक्षितं यतः ॥
ज्ञानं प्रतिष्ठितं येन वेदाभ्यासो यतः कृतः ।
तस्मिन्मृते चैकरात्रं गुरौ शिष्ये तथैव च ॥”
इति मत्स्यसूक्ते महातन्त्रे ३५ पटलः ॥ अपि च ।
“गुरावुपरते चैव त्र्यहाणि शिष्यसन्ततौ” ।
इति विज्ञानतन्त्रं ॥ * ॥ अन्यत् पूर्ब्बलिखितं ।
विहितकर्म्मविरोध्यदृष्टविशेषः । तदनेकविधं तत्र
शुद्धितत्त्वोक्ताशौचानि संगृह्यन्ते ॥

तामहीभ्रातृपुत्त्ररूप-मातृबान्धवत्रयमरणे सर्व्व-
वर्णानामहोरात्रं ॥
एकग्रामवासिस्वगोत्रजमरणे सर्व्ववर्णानामहो-
रात्रं ॥
औरसव्यतिरिक्तपुत्त्रजननमरणयोःपरपूर्ब्बभार्य्या-
प्रसवमरणयोश्च सर्व्ववर्णानां त्रिरात्रं ॥
आचार्य्यमरणे ब्राह्मणादिवर्णत्रयाणां त्रिरात्रं ॥
समानजातीयोत्कृष्टजातीयपुरुषान्तर-संगृहीत-
स्वभार्य्यामरणे सर्व्वेषां त्रिरात्रं ॥ हीनवर्णोपभुक्ता-
मरणे तु नाशौचं ॥
भगिनीपुत्त्रगृहे मातृष्वसुर्भ्रातृपुत्त्रगृहे पितृ-
ष्वसुः पैतृष्वस्रीयगृहे मातुलपुत्त्रस्य जामातृगृहे
श्वश्रूश्वशुरयोर्म्मरणे भगिनीपुत्त्रादिचतुर्णां त्रि-
रात्रं ॥
श्वश्रूश्वशुरयोः सन्निधिमरणे सर्व्ववर्णानां त्रि-
रात्रं ॥ श्वश्रूश्वशुरयोरेकग्रामस्थितयोर्म्मरणे स-
र्व्वेषां पक्षिणी ॥
श्वश्रूश्वशुरयोर्भिन्नग्राममरणे सर्व्वेषामहोरात्रं ॥
भगिनी-मातुलानी-मातुल-पितृष्वसृ-मातृष्वसृ-
गुर्व्वङ्गना-मातामही-मरणे सर्व्वेषां पक्षिणी ॥
आचार्य्यपत्नीपुत्त्रयोरुपाध्यायस्य मातृवैमात्रेयस्य
श्यालकस्य सहाध्यायिनः शिष्यस्य च मरणे सर्व्व-
वर्णानामहोरात्रं ॥ मातृष्वसृपुत्त्र-पितृष्वसृपुत्त्र-
मातुलपुत्त्ररूपात्मबान्धवत्रयमरणे सर्व्ववर्णानां
पक्षिणी ॥
(तथा च मनुः --
“मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च” ।
प्रथममन्येनोढा तेनैव जनितपुत्त्रा पुत्त्रसहितै-
वान्यमाश्रिता पश्चात्तेनापि जनितपुत्त्रा तयोः
पुत्त्रयोर्यथासम्भवं प्रसवमरणयोर्द्वितीयपुत्त्रपितु-
स्त्रिरात्रं । तत्सपिण्डानामेकरात्रं । तद्द्वितीय-
पितुर्म्मरणे तथाविधपुत्त्रयोरपि त्रिरात्रं । तथा-
विधपुत्त्रयोः परस्परप्रसवमरणयोर्म्मातृजात्यु-
क्ताशौचं ॥
दौहित्रमरणे सर्व्वेषां वर्णानां पक्षिणी ॥
पितृमातृमरणे ऊढानां कन्यानां त्रिरात्रं ॥ यदि
मातुलमातृष्वसृपितृष्वसृप्रभृतीनां दहनवहनं
करोति तदा सर्व्वेषां वर्णानां त्रिरात्रं ॥
मातामहादीनां त्रिरात्राभ्यन्तरं मरणश्रवणे

पिबामि शोकसन्तप्तो मामशोकं सदा कुरु” ॥
स्त्रीशूद्रकर्त्तृकपानेऽपि प्रागुक्तयुक्तेः स्वयं मन्त्रः
पठनीयः । स्त्रीपक्षे ऊहोऽपि नास्ति विवृतमेका-
दशीतत्त्वे । अशोकपानन्तु पञ्चमार्द्धप्रहरव्यापि-
न्यामष्टम्यां भ्रातृद्वितीयोक्तवत् । इति तिथ्यादि-
तत्त्वं ॥ * ॥ अपि च । अत्र स्रोतोजले बुधवारे
पुनर्व्वसुनक्षत्रयुक्तशुक्लाष्टम्यां वाजपेययज्ञजन्यफल-
समफलप्राप्तिकामः स्नायात् । ब्रह्मपुत्रे तु सर्व्व-
पापक्षयपूर्ब्बकतीर्थस्नानजन्यफलप्राप्तिकामः स्ना-
यात् । स्नानेतिकर्त्तव्यतां विधाय ।
“ॐ, ब्रह्मपुत्र महाभाग शान्तनोः कुलनन्दन ।
अमोघागर्भसंभूत पापं लौहित्य मे हर” ॥
इति पठित्वा स्नायात् ।
केवलशुक्लाष्टम्यां ब्रह्मपदगमनफलं । पञ्चमार्द्ध-
प्रहरव्यापिन्यां पुनर्व्वसुयुक्तायां केवलायां वा शुक्ला-
ष्टम्यां शोकरहितत्वकामः अष्टावशोककलिका
अहं पिबामि इति सङ्कल्प्य, --
“त्वामशोक हराभीष्ट मधुमाससमुद्भव ।
पिबामि शोकसन्तप्तो मामशोकं सदा कुरु” ॥
इति पठित्वा विष्णुपदजलमिश्रिता अशोक-
कलिका अष्टौ पिबेत् । स्त्रीशूद्रानुपनीतैरपि
मन्त्रः पठनीयः पौराणिकत्वात् । स्त्रीपक्षेलिङ्गोहो
नान्ति प्रकृतेः समवेतार्थत्वात् । इति कृत्यतत्त्वं ॥

**अशोचः**, पुं, (न शोचः । नञ्समासः ।) शोकाभावः ।
तत्पर्य्यायः । अनहंकृतिः । इति त्रिकाण्डशेषः ।

अथ सपिण्डाद्यशौचं १ ॥
जनने मरणे च सप्तमपुरुषपर्य्यन्तं सम्पूर्णाशौचं ।
तच्च विप्रस्य दशाहः क्षत्रियस्य द्वादशाहः ।
वैश्यस्य पञ्चदशाहः । शूद्रस्य मासः ॥ (यथाह मनुः ।
“शुध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति” ॥)
जनने मरणे च दशमपुरुषपर्य्यन्तं सर्व्वेषां वर्णानां
त्र्यहः । चतुर्द्दशपुरुषपर्य्यन्तं पक्षिणी ॥
जनने मरणे च जन्मनामस्मृतिपर्य्यन्तं सर्व्ववर्णाना-
मेकाहः ॥ जन्मनामस्मृतेरभावे स्नानमात्रं ॥
अशौचं प्रति कन्यायास्त्रिपुरुषं सापिण्डं ॥ माता-
महमरणे सर्व्वेषां वर्णानां त्रिरात्रं ॥
मातृष्वस्रीय-पितृष्वस्रीय-मातुलपुत्त्र-भागिनेय-
मरणे सर्व्ववर्णानां पक्षिणी ॥
पितामहभगिनीपुत्त्र -- पितामहीभगिनीपुत्त्र -- पि-
तामहीभ्रातृपुत्त्ररूप-पितृबान्धवत्रयमरणे सर्व्वव-
र्णानां पक्षिणी ॥
मातामहभगिनीपुत्त्र-मातामहीभगिनीपुत्त्र-मा-

तच्छेषेण शुद्धिः । तत्कालोत्तरश्रवणे तु नाशौचं ।
किन्त्वाचारात् स्नानमात्रं ॥
अथ बालाद्यशौचं ॥ २
नवमादिमासजातबालस्याशौचकालाभ्यन्तरे मर-
णे मातापित्रोरस्पृश्यत्वं युक्तं तदेव स्वजात्युक्त-
जननाशौचं ॥ ज्ञातीनान्त्वशौचं नास्ति ॥
नवमादिमासमृतजातयोः कन्यापुत्त्रयोः पित्रा-
दिसपिण्डानां मातुश्च जननाशौचं ॥ तच्च ब्राह्म-
णानां दशाहं शूद्राणां मासः ॥ पुत्त्रजन्मनि पितुः
सचेलं स्नानं । पुत्त्रमुखदर्शनात्परं पुनः सचेल-
स्नानं ॥
(तथाच संवर्त्तः, --
“जाते पुत्त्रे पितुः स्नानं सचेलं तु विधीयते ।

:माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः" ॥)

पुत्रकन्याजनने ब्राह्मण्या दशाहानन्तरं लौकिक-
कर्म्माधिकारः ।
पुत्रजनने ब्राह्मण्या विंशतिरात्रोत्तरस्नानात् वैदिककर्म्माधिकारः ।
कन्याजनने ब्राह्मण्या मासोत्तरस्नानात् वैदिक-
कर्म्माधिकारः ॥
शूद्रायाः कन्यापुत्रजनने त्रयोदशाहोत्तरं लौकिक-
कर्म्माधिकारः । वैदिककर्म्मणि तु मासोत्तर-
स्नानात् शुद्धिः ॥
एतत् सर्व्वं कन्यापुत्रयोर्विद्यमानत्वे बोध्यं ॥
जननाशौचोत्तरं षण्मासाभ्यन्तरमजातदन्तमरणे मातापित्रोरेकाहः । सपिण्डानान्तु सद्यः शौचं ॥
षण्मासाभ्यन्तरेऽपि जातदन्तस्य मरणे माता-
पित्रोस्त्र्यहः । सपिण्डानामेकाहः ॥ षण्मासो-
परि द्विवर्षपर्य्यन्तं बालकमरणे मातापित्रोस्त्र्यहः ।
सपिण्डानामकृतचूडे एकाहः । कृतचूडे त्र्यहः ॥
(अत्र मनुः, --
"नृणामकृतचूडानां विशुद्धिर्नैशिकी स्मृता ।
निर्वृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते ॥
ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा वहिः ।
अलङ्कृत्य शुचौ भूमावस्थिसञ्चयनादृते ॥
नास्य कार्य्योऽग्निसंस्कारो न च कार्य्योदकक्रिया ।

अथ गर्भस्रावाशौचं ॥ ४
षण्मासाभ्यन्तरे गर्भस्रावे सर्व्ववर्णस्त्रीणामेवा-
शौचं । तच्च लौकिकवैदिककर्म्मणोर्गर्भमाससम-
सङ्ख्यदिनव्यापकं ॥
("रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यति" ॥ इति मनुः ।)
द्वितीयमासावधिगर्भस्रावे माससमसङ्ख्यदिनाधि-
कादेकदिनात्परं ब्राह्मण्या वैदिककर्म्माधिकारः ॥
क्षत्रियाया गर्भमाससमसङ्ख्यदिनाधिकात् दिन-
द्वयात् । वैश्याया दिनत्रयात् । शूद्रायाः षड्-
दिनात् ॥
सप्तमाष्टममासयोर्गर्भपतने मातुः सम्पूर्णाशौचं ।
सगुणसपिण्डानां सद्यः शौचं । निर्गुणपित्रादि-
सपिण्डानामहोरात्रं । यथेष्टाचरणशीलानां सपि-
ण्डानां त्रिरात्रं तत्र जातस्य तद्दिनएव मरणे
एवं ज्ञेयं ॥ सप्तमाष्टममासजातबालस्य जन्मद्वि-
तीयदिनादौ मरणे नवमादिमासजातबालक-
मरणवदशौचं । तच्च बालाद्यशौचे विवृतं ॥
अथ मृत्युविशेषाशौचं ॥ ५
शास्त्राननुमतबुद्धिपूर्ब्बकात्मघातिनो नाशौचदा-
हश्राद्धादि ॥
शास्त्रानुमत्या अनशनादिमृतस्य प्रमादादनशना-
शनि-वह्नि-जलोच्चदेशप्रपतन-संग्राम-शृङ्गि-दंष्ट्रि-
नखि-व्याल-विष-चण्डाल-चौर-हतस्य च त्रिरात्रं ॥
शृङ्ग्यादिभिः स्त्रिया च क्रीडां कुर्व्वतः प्रमदा-
प्रमादमृतस्य नाशौचादि ॥ नागविप्रियकारित्वेन
तद्धतस्य मरणोद्देशप्रवृत्तविद्युद्धतस्य चौर्य्यदो-
षेण राज्ञा हतस्य कलहं कृत्वा चाण्डालाद्यै-
रसमानवर्णैर्हतस्य विप्रादेर्व्याधिजनकौषधस्य
विषस्य वह्नेश्च वा दातुर्म्मरणे पाषण्डाश्रितस्य नित्य
परापकारिणः क्रोधात् स्वयं प्रायविषवह्न्यादि-
शस्त्रोद्बन्धन-जल-गिरि-वृक्षप्रपात-मृतस्य चर्म्मा-
स्थ्यादिमयपात्रनिर्म्मातृविप्रादेर्म्मनुष्यबधस्थानाधि-
कारिणः कण्ठदेशोत्पन्नभगरोगस्य पुंकर्म्माशक्त-
नपुंसकस्य ब्राह्मणविषयापराधकरणान्निहतस्य
बुद्धिपूर्ब्बकब्राह्मणहतस्य च महापातकिनो गलत्-
कुष्ठिनश्च एवंविधपतितानां मरणे च न दाहा-
शौचादिकं कार्य्यं ॥ तत्कृत्वा तप्तकृच्छ्रद्वयं कुर्य्यात् ॥
(अत्र मनुः, --
"वृथासङ्करजातानां प्रव्रज्यासु च तिष्ठताम् ।

लौकिकपारिभाषिकोभयशस्त्रघातेतरक्षतमरणे
सर्व्ववर्णानां सप्ताहमध्ये त्र्यहं सप्ताहादूर्द्ध्वं सम्पूर्णा-
शौचं ॥
लौकिकपारिभाषिकशस्त्रघातमरणे त्र्यहमध्ये
त्र्यहं त्र्यहादूद्र्ध्वं प्रकृताशौचं ॥
लौकिकशस्त्रघातः खड्गशरादिघातः ॥ पारि-
भाषिकशस्त्रघातस्तु ।
"पक्षिमत्स्यमृगैर्ये तु दंष्ट्रिशृङ्गिनखैर्हताः ।
पतनानशनप्रायैर्व्वज्राग्निविषबन्धनैः ॥
मृता जलप्रवेशेन ते वै शस्त्रहताः स्मृताः" ॥
इति देवीपुराणोक्तः ॥
अथ विदेशस्थाशौचं ॥ ६
अशौचकालाभ्यन्तरे विदेशस्थजननमरणाशौच-
श्रवणे शेषाहोभिः शुद्धिः ॥
("विगतं तु विदेशस्थं शृणुयात् यो ह्यनिर्द्दशं ।
यच्छेशं दशरात्रस्य तावदेवाशुचिर्भवेत्" ॥
इति मनुः ।)
अशौचकालोत्तरं विदेशस्थज्ञातिजननश्रवणे-
ऽशौचं नास्त्येव । पुत्रजननश्रवणे तु सचेलस्नानात्
शुद्धिः ॥ (अत्र मनुराह ।
"निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च ।
सवासा जलमाप्लुत्य शुद्धो भवति मानवः" ॥)
सम्पूर्णाशौचिमरणे वर्षाभ्यन्तरश्रवणे सपिण्डानां
त्रिरात्रेण शुद्धिः । सचेलस्नानादङ्गास्पृश्यत्व-
निवृत्तिः । वर्षोत्तरश्रवणे तु सपिण्डानां स्नानेन
शुद्धिः ॥ (अत्र मनुः ।
"अतिक्रान्ते दशाहे च त्रिरात्रमशुचिर्भवेत् ।
संवत्सरे ब्यतीते तु स्पृष्ट्वैवापो विशुध्यति" ॥)
मातृ-पितृ-भर्तृ-मरणे वर्षोत्तरश्रवणे पुत्रपत्न्यो-
रेकाहेन शुद्धिः ॥ द्विवर्षोत्तरश्रवणे स्नानमात्रं ॥
पूर्णाशौचातिक्रमएव विदेशस्थमरणाशौचश्रवणे
त्र्यहाशौचं । न खण्डाशौचातिक्रमे ॥ यत्र मरण-
मात्रं श्रुतं विशिष्य मासादिकमज्ञातं तत्र श्रवण-
दिनावधिस्वजात्युक्तमशौचं । खण्डाशौचेऽपि
महागुरुनिपाते एकरात्रं ॥
अथाशौचसङ्करः ॥ ७
जननाशौचमध्ये जननाशौचान्तरपाते मरणा-
शौचमध्ये मरणाशौचान्तरपाते च पूर्ब्बाशौच-
कालेन सर्व्ववर्णानां शुद्धिः ॥ (यथाह मनुः --

अरण्ये काष्ठवत् त्यक्त्वा क्षपेयुस्त्र्यहमेव वा ॥”)
द्विवर्षोपरि
मासत्रयाधिकषड्वर्षपर्य्यन्तमनुपनीत-
बालकस्य मरणे मातापित्रादिसपिण्डानां त्र्यहः ॥
तन्मध्येऽप्युपनीतस्य मरणे दशाहः ।
मास-
त्रयाधिकषड्वर्षोपरि मरणे
पित्रादिसपिण्डानां
दशाहः ॥
शूद्रस्य षण्मासाभ्यन्तरे
अनुत्पन्नदन्तस्य मरणे
त्रिरात्रं । उत्पन्नदन्तस्य पञ्चाहः ॥
षण्मासोपरि
द्विवर्षाभ्यन्तरे अकृतचूडमरणे पञ्चाहः ।
तत्रापि
कृतचूडमरणे द्वादशाहः ॥ द्विवर्षोपरि
षड्वर्षा-
भ्यन्तरे मरणे द्वादशाहः । अत्रापि दैवात्
कृतो-
द्वाहे मासो व्यवह्रियते ॥ षड्वर्षोपरि
मासः ॥
अथ स्त्र्यशौचं ॥ ३
कन्याया जन्मावधिद्विवर्षाभ्यन्तरे मरणे
सर्व्व-
वर्णानां पित्रादिसपिण्डानां सद्यः शौचं ।
द्विव-
र्षोपरि वाग्दानपर्य्यन्तमेकाहः ॥
वाग्दानोत्तरं विवाहपर्य्यन्तं कन्यामरणे
भर्तृकुले
पितृकुले च त्रिरात्रं
(“स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुध्यन्ति बान्धवाः” ।
इति मनुः ।)
विवाहोत्तरं मरणे भर्तृकुलएव
सम्पूर्णाशौचं ॥
दन्तजन्मपर्य्यन्तं भगिनीमरणे
सोदरभ्रातुः सद्यः
शौचं ॥
चूडापर्य्यन्तं भगिनीमरणे एकरात्रं ।
विवाह-
पर्य्यन्तं त्रिरात्रं ॥

आत्मनस्त्यागिनाञ्चैव निवर्त्तेतोदकक्रिया ॥
पाषण्डमाश्रितानाञ्च चरन्तीनाञ्च कामतः ।
गर्भभर्तृद्रुहाञ्चैव सुरापीनाञ्च योषितां” ॥
इति ।) म्लेच्छतस्करादिभिर्युद्धे स्वाम्यर्थहतवि-
प्रादेर्दाहाशौचादिकमस्त्येव ॥
कृतप्रायश्चित्तगलत्कुष्ठिनो दाहाशौचादिकं कार्य्यं ॥
शस्त्रेणाभिमुखहतस्य तु सद्यःशौचं दाहादि च ॥
गवार्थे ब्राह्मणार्थे वा दण्डेन युद्धे हतस्याहोरात्र-
मशौचं ॥
मृपतिरहितयुद्धे लगुडादिहतस्य पराङ्मुख-
हतस्य च त्रिरात्राशौचं ॥
गोविप्रपालनेऽभिमुखयुद्धहतस्य सद्यः शौचं
पराङ्मुखहतस्य तु त्रिरात्रं ॥

“अन्तर्दशाहे स्यातान्चेत् पुनर्मरणजन्मनी ।
तावत्स्यादशुचिर्विप्री यावत्तत्स्यादनिर्दशं” ॥)
पूर्णजननाशौचान्तदिने पूर्णजननाशौचान्तरपाते
पूर्णमरणाशौचान्तदिने पूर्णमरणाशौचान्तरपाते
च पूर्णाशौचान्तिमदिनोत्तरदिनद्वयेन शुद्धिः ॥
पूर्णजननाशौचान्तिमदिवसीयोत्तरप्रभाते सूर्य्यो-
दयात् पूर्ब्बं तत्पाते सूर्य्योदयावधिदिनत्रयेण
शुद्धिः ॥
एवं मरणाशौचेऽपि ॥
पूर्ब्बोक्तवर्द्धितदिनद्वयत्रयाभ्यन्तरेऽशौचान्तरपाते
पूर्ब्बाशौचकालेन शुद्धिः ॥
अशौचत्रितयान्तदिनकृत्यं क्षौरादिकमेकदैव
तद्द्वितीयदिनकृत्यं श्राद्धादिकं तत्परदिने ॥

| | | |
|---|---|---|
| दत्तकन्यायाः पितृगृहे प्रसवमरणयोः पित्रोः शयनासनादिसंसर्गशून्ययोस्त्रिरात्रं । तथाविधब-न्धुवर्गाणां एकरात्रं । तथाविधसंसर्गिणान्तु सर्व्वेषां पूर्णाशौचं ॥ एतत्सर्व्वं सर्व्ववर्णसाधारणं ॥ | | |

:अत्र च अशौचान्तिमदिनतत्प्रभातयोः स्वपुत्र-

जनने पितृमातृभर्तृमरणे च न दिनद्वयत्रय-
वृद्धिः । किन्तु स्वपुत्रजननावधि पितृमातृभर्तृ-
मरणावधि च पूर्णाशौचं ॥ ज्ञातिजननाशौच-
पूर्ब्बर्द्धे स्वपुत्रजनने ज्ञातिजननाशौचकालेन
शुद्धिः ॥ परार्द्धे चेत् स्वपुत्रजननाशौचकालेन
शुद्धिः ॥
ज्ञातिमरणाशौचकालमध्ये पितृमातृभर्तृमरणे
पूर्ब्बार्द्धे पूर्ब्बाशौचकालेन परार्द्धे पराशौचकालेन
शुद्धिः ॥
स्वपुत्रजननाशौचान्तिमदिनतत्प्रभातयोर्ज्ञाति-
जनने पितृमातृभर्तृमरणाशौचान्तिमदिनतत्प्रभा-
तयोर्ज्ञातिमरणेऽपि न दिनद्वयत्रयवृद्धिः । कि-
न्तु पूर्ब्बाशौचकालेन शुद्धिः ॥
स्वपुत्रजननाशौचान्तिमदिनतत्प्रभातयोः स्वपुत्रा-
न्तरजनने एवं मातृमरणाशौचान्तिमदिनतत्प्रभा-
तयोः पितृमरणे पितृमरणाशौचान्तिमदिनतत्प्र-
भातयोर्म्मातृमरणे च क्रमेण दिनद्वयत्रयवृद्धिः ॥
जननाशौचद्वयसन्निपाते पूर्ब्बजातो यदाशौचका-
लाभ्यन्तरे मृतस्तदा सपिण्डानां सद्यःशौचेन
पूर्ब्बाशौचनाशः ॥ तन्नाशादेव परार्द्धजातबालस्य
मातृपितृव्यतिरिक्तसपिण्डानां पूर्ब्बार्द्धजातबालस्य
मातापित्रादिसकलसपिण्डानां परजननाशौचस्य
निवृत्तिः ॥ पूर्ब्बजातबालस्य मातापित्रोस्त्वस्पृ-
श्यत्वयुक्तस्वस्वजात्युक्तजननाशौचं ॥ जननाशौच-
द्वयसन्निपाते प्रथमजननाशौचपूर्ब्बार्द्धजातबाल-
मरणे तन्मातापित्रोः पूर्ब्बाशौचकालपर्य्यन्तं
अङ्गास्पृश्यत्वयुक्तमशौचं ॥ परार्द्धजातबालमरणे
तु तज्जननावधि
तन्मातापित्रोरङ्गास्पृश्यत्वयुक्तस्व-
जात्युक्तजननाशौचं । विशेषातिरिक्तसमसंख्यदि-
वसीयजननमरणाशौचयोः सन्निपाते मरणाशौच-
कालेन शुद्धिः । असमसंख्यदिवसीयजननमरणा-
शौचयोः सन्निपाते तु दीर्घशौचकालेन शुद्धिः ॥
शूद्रेतरायाः पुत्रजननप्रयुक्तविंशतिरात्राशौचा-
भ्यन्तरे पत्युर्म्मरणेऽपि पुत्रजननाशौचकालेन
शुद्धिः ॥
पूर्ब्बोक्तसपिण्डद्वयजननवर्द्धिताशौचमध्येपितृमातृ-
भर्तृमरणेऽपि वर्द्धितसपिण्डद्वयजननाशौचकालेन
शुद्धिः । एकाहे पूर्णाशौचिसपिण्डद्वयमरणे या-
वदशौचं तावत् सर्व्वसपिण्डानामस्पृश्यत्वं ॥

कन्यामरणात् सद्यः शुद्धिः । न तु पुत्रमरणात्
॥
पित्रादिसपिण्डानान्तु प्रथमजातमरणात् शुद्धिः
।
न तु परजातमरणात् ॥ शूद्राया यमजोत्पत्तौ
प्रथमजातमरणाशौचेन शुद्धिः । न तु परजात-
मरणात् ॥ पित्रादिसपिण्डानान्तु प्रथमजातमर-
णात् शुद्धिः न तु परजातमरणात् ॥ एवमन्य-
द्वाव्यं सुधीभिः ॥
अथ शवानुगमनाद्यशौचं ॥ ८
ब्राह्मणशवानुगमने ब्राह्मणस्य सचेलस्नानाग्नि-
स्पर्शघृतप्राशनैः शुद्धिः ॥
क्षत्रियशवानुगमने ब्राह्मणस्य एकाहेन शुद्धिः ॥
वैश्यशवानुगमने ब्राह्मणस्य द्व्यहेन शुद्धिः ॥
शूद्र-
शवानुगमने ब्राह्मणस्य प्राणायामशतेन दिन-
त्रयेण च शुद्धिः ॥
प्रमादात् शूद्रशवानुगमने ब्राह्मणस्य जलावगाह-
नाग्निस्पर्शघृतप्राशनैः शुद्धिः ॥
अनाथब्राह्मणस्य धर्म्मबुद्ध्या दहनवहनयोः
स्नान-
घृतप्राशनाभ्यां सद्यः शौचं ॥
लोभेन सजातीयदाहे स्वस्वजात्युक्ताशौचं ॥
असजातीयशवदहनवहनस्पर्शैः
शवजात्युक्ताशौचं ॥
स्नेहादसम्बन्धिदाहकविप्रादेस्तद्गृहवासे
त्रिरात्रं ।
अशौचिकुलान्नभोजने तत्तुल्याशौचं ॥ अशौ-
चान्नभोजनं विना तद्गृहवासेऽहोरात्रं ॥
विशेषवचनाभावे सम्बन्धिनो मातुलादेरस्नेहे-
नापि दाहे त्रिरात्रं ॥
चिताधूमसेवने स्नानात् शुद्धिः ॥ (यथाह मनुः
।
“असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् ।
विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥
यदन्नमत्ति तेषां तु दशाहेनैव शुध्यति ।
अनदन्नन्नमह्नैव स चेत् तस्मिन् गृहे वसेत् ॥
अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव वा ।
स्नात्वा सचेलं स्पृष्ट्वाग्निं घृतं प्राश्य
विशुध्यति” ॥)

अतीतेऽशौचे
सचेलस्नानेनास्पृश्यतानिवृत्तिः ॥
जननाशौचे सपिण्डानां अस्पृश्यता नास्ति
॥
पुत्रोत्पत्तौ स्नानात् पूर्ब्बं
पितुर्विमातृणाञ्चास्पृ-
श्यत्वं ॥
सूतिकास्पर्शे पितुर्विमातृणाञ्च
सूतिकातुल्य-
कालास्पृश्यत्वं । अन्येषां स्नानमात्रं ॥
कन्यापुत्रयोर्ज्जनने मातुर्दशरात्रमस्पृश्यत्वं
॥
कन्यापुत्रयोर्जनने
शूद्रायास्त्रयोदशरात्रमस्पृश्यत्वं ॥
अथ क्षताशौचं ॥ ९
नाभेरूर्द्ध्वमधोवा रुधिरस्रवे
सन्ध्यावन्दनाद्यति-
रिक्त्वकर्म्मण्येकाहः ॥
दन्तरक्तस्रवे सर्वत्र कर्म्मण्येकाहः ॥
अथ रजस्वलाशौचं ॥ १०
तत्र प्रथमदिनावधि त्रिरात्रमशौचं ॥
त्रिरात्रात्
परं सप्तदशाहपर्य्यन्तं
रजोदर्शनेऽशौचाभावः ॥
अष्टादशाहे रजोदर्शने एकाहमशौचं ॥
ऊनविंशदिने रजोदर्शने द्व्यहाशौचं ॥
ऊनविंशतिदिनात् परं रजोदर्शने
त्रिरात्राशौचं ॥
रजस्वला चतुर्थेऽह्नि
भर्तृसेवनादिलौकिककर्म्मणि
शुद्धा । पञ्चमेऽहनि दैवपैत्रकर्म्मणोः शुद्धा
॥
(“शुद्धाभर्त्तुश्चतुर्थेऽह्नि अशुद्धा दैवपैत्रयोः
।
दैवे कर्म्मणि पैत्रे च पञ्चमेऽहनि शुध्यति” ॥
इति शुद्धितत्त्वे ।)
रजस्वलाया अशौचमध्ये सूतिकास्पर्शे
अन्त्यज-
जातिस्पर्शे च त्रिरात्रोपवासेन शुद्धिः ॥
उप-
वासस्तु अशौचात् परं करणीयः ॥

सकुल्यपर्य्यायसमानोदकमरणे विद्युदादिमरणे-
ऽपि अशौचं त्रिरात्रं । अङ्गास्पृश्यत्वमेकरात्रं ।
तेनैतत् त्रिरात्रद्वयं गुरु ॥ विदेशस्थमरणे अर्थात्
अशौचमध्ये अश्रुतसपिण्डमरणे त्रिरात्राशौचं
अङ्गान्स्पृश्यत्वस्नानापनेयं । अतस्तल्लघु । एषां स-
न्निपाते गुरुणैव शुद्धिः ॥
विदेशमृतज्ञातित्रिरात्राशौचस्य लघुनः विदेश-
मृतपितृमातृभर्तृत्रिरात्राशौचेन शुद्धिः ॥
तुल्यत्रिरात्राशौचसन्निपाते पूर्ब्बेणैव शुद्धिः ॥
कन्यापुत्त्रयमजोत्पत्तौ सर्ववर्णाया मातुर्म्मासेन
शुद्धिः पित्रादिसपिण्डानां स्वजात्युक्ताशौचं ॥
तयोरशौचमध्ये एकतरमरणे शूद्राभिन्नमातुः

शूद्रे मृतेऽस्थिसञ्चयनकालाभ्यन्तरे तद्गृहं
गत्वा-
श्रुनिपातेन विप्रस्य त्रिरात्रं ॥ स्थानान्तरेऽश्रुपा-
तनेऽहोरात्रं ॥
शूद्रे मृतेऽस्थिसञ्चयनकालादूद्ध्वं मासाभ्यन्तरे
तद्-
गृहेऽश्रुपातने विप्रस्याहोरात्रं सचेस्नानञ्च ॥
अस्थिसञ्चयनात् पूर्ब्बं विप्रगृहे रोदने विप्रस्य
एकाहेन शुद्धिः ॥
क्षत्रवैश्ययोर्गृहे रोदने विप्रस्य द्व्यहेन शुद्धिः ॥
शूद्रस्तु सर्व्वत्र रोदने नक्तेन शुद्धः ॥
मृतशूद्रस्य बान्धवैः सह रोदनरहितविलापमात्रे
ब्राह्मणस्याहोरात्रं ॥
अस्थिसञ्चयनकालस्तु पूर्णाशौचे ब्राह्मणस्य
चतु-
र्थाहः । क्षत्रियस्य षष्ठाहः । वैश्यस्य अष्टमाहः ।
शूद्रस्य दशमाहः ॥ त्र्यहाशौचे सर्व्वेषां द्विती-
याहः ॥
पूर्णाशौचिमरणे ब्राह्मणस्य चतुर्थाहेऽस्पृ श्यता-
निवृत्तिः ॥ क्षत्रियस्य षष्ठदिने । वैश्यस्य अष्टम-
दिने । शूद्रस्य दशमदिनेऽस्पृश्यतानिवृत्तिः ॥
सर्वस्य खण्डाशौचे त्रिभागकालेनास्पृश्यतानि-
वृत्तिः ।

भर्तृपूरकपिण्डदानकाले यदि रजस्वला
भवति
तदा वस्त्रं त्यक्त्वा पुनः स्नात्वा पूरकं
दद्यात्
किन्तु शुद्ध्युत्तराशौचदिनासत्त्वएवायं
विधिः ।
तत्सत्त्वे तु शुद्धया भूत्वा देयं ॥
आब्दिकश्राद्धकालेऽपुत्त्रभार्य्या यदि
रजस्वला
भवति तदा पञ्चमेऽहनि तच्छ्राद्धं कुर्य्यात्
॥ * ॥
(अभिषिक्तक्षत्रियाणां
चान्द्रायणादिव्रतकारिणां
गवामयनादियागप्रवृत्तानाञ्च
सपिण्डमरणादाव-
शौचाभावएव । उक्तञ्च मनुना ।
"न राज्ञामघदोषोऽस्ति व्रतिनां न च
सत्रिणाम् ।
ऐन्द्रं स्थानमुपासीना ब्रह्मभूता हि ते सदा"
॥
विष्णुणाप्युक्तम् । "अशौचं न राज्ञां
राजकर्म्मणि,
न व्रतिनां व्रते, न सत्रिणां सत्रे" । इति ॥)
इत्यशौचव्यवस्था समाप्ता ॥

**अश्मः**, पुं, पर्ब्बतः । मेघः । वैदिकशब्दोऽयं ॥

**अश्मकदली**, स्त्री, (अश्मा इव कदलीफलं यस्याः ।)
कदलीविशेषः । इति राजनिर्घण्टः ॥
अस्याः
गुणपर्य्यायौ काष्ठकदलीशब्दे द्रष्टव्यौ ॥

**अश्मकेतुः**, स्त्री, (अश्मेव केतुरस्याः ।) क्षद्रपाषाण-
भेदावृक्षः ॥ इति राजनिर्घण्टः ॥

**अश्मगर्भः**, पुं, (अश्मेव गर्भो यस्य ।) हरिन्मणिः ।
मरकतं । इत्यमरः ॥

**अश्मगर्भजं**, क्ली, (अश्मनो गर्भाज्जायते इति । अश्म-
गर्भ + जन् + ड ।) मरकतं । इति
राजनिर्घण्टः ॥
पान्ना इति भाषा ॥ (पुं, पाषाणजो वह्निः ।)

| | | **अश्मघ्नः**, पुं, (अश्मानं पाषाणं हन्ति भिनत्तीति । अश्म<br><br>+ हन् + टक् ।) पाषाणभेदनवृक्षः । इति<br>राज-<br>निर्घण्टः ॥ हाथाजुडी इति भाषा ॥<br>अश्मभेदशब्दे-<br>ऽस्य पर्य्यायगुणौ ज्ञातव्यौ ॥ |
|---|---|---|

**अश्मजं**, क्ली, (अश्मनः प्रस्तराज्जायते इति । अश्मन्
+ जन + ड ।) शिलाजतु । इत्यमरः ॥
लौहं
इति राजनिर्घण्टः ॥
("अद्‌भ्योऽग्निर्ब्रह्मतः क्षत्रम नो
लोहमुत्थितम् ।
तेषां सर्व्वत्रगं तेजः स्वासु योनिषु शाम्यति
॥"
इति मनुः ॥ शिलाजत्वर्थे
वैद्यकचक्रपाणिसंग्र-
हस्याश्मरीरोगचिकित्सायां वरुणघृते यथा
॥
'अमृता चाश्मजं देयं' ॥)

**अश्मजतुकं**, क्ली, (अश्मजतु + स्वार्थे कन् ।) शिला-
जतु । इति राजनिर्घण्टः ॥
(शिलाजतुशब्देऽस्य
विशेषविवरणं ज्ञेयं ॥)

**अश्मदारणः**, पुं, (अश्मानं दारयतीति । अश्म +
दॄ + णिच् + ल्युट् ।) टङ्कः ।
पाषाणविदारणास्त्रं ।
इति जटाधरः ॥ टाँकी इति पश्चिमदेशे
ख्यातः ॥

**अश्मन्तं**, क्ली, (अश्मनः प्रस्तरस्यापि अन्तो भवत्यत्र ।
शकन्ध्वांदिरयं ।) चुल्ली । अशुभं । मरणं ।
अन-
वधिः । क्षेत्रं । इति मेदिनी ॥ (पुं, धर्म्मात्
मरुत्वत्यां जातः स्वनामख्यातो मरुद्भेदः
। तथा च
हरिवंशे ।
"मरुत्वती मरुत्वन्तो देवानजनयत्सुतान्
।"
"अश्मन्तं चित्ररश्मिञ्च तथा निष्कुषितं नृपं
॥")

अश्मभेदस्तथाविल्व एतन्मूलः कृतः
शृतः ॥
एरण्डतैलहिङ्गाढ्यो यवक्षारः ससैन्धवः
।
स्तनकण्ठकटीमेढ्रहृदयोत्थव्यथां
जयेत्" ॥
इति शार्ङ्गधरः ॥)

**अश्मयोनिः**, पुं, (अश्मा योनिरुत्पत्तिस्थानं यस्य ।)
मरकतमणिः । इत्यमरटीकायां भरतः
॥

**अश्मरः**, त्रि, (अश्मनोऽयमिति । अश्म + र ।) प्रस्तर-
सम्बन्धीयः । इति पाणिनिः ॥
पातुरिया इति
भाषा ।

**अश्मरी**, स्त्री, (अश्मानं राति ददाति या । अश्मन् +
रा + क + गौरादित्वात् ङीप् ।
मूत्रकृच्छ्ररोगो
हि मूत्रद्वारे प्रस्तरमिव कठिनमांसं
रचयति ।)
मूत्रकृच्छ्ररोगः । पातरी इति भाषा ।
यथा ।
अथाश्मर्य्यधिकारः । अत्राश्मर्य्याः
सन्निकृष्टनिदानं
सङ्ख्याञ्चाह ।
"वातपित्तकफैस्तिस्रश्चतुर्थी शुक्रजा
मता ।
प्रायः श्लेष्माश्रयाः सर्व्वा अश्मर्य्यः
स्युर्यमोपमाः" ॥
श्नेष्माश्रयाः श्लेष्मसमवायिकारणाः ।
शुक्रजां
विना । शुक्रजायास्तु शुक्रस्यैव
समवायिकारण-
त्वात् । अन्ये तु शुक्राश्मर्य्यामपि
कफकारणत्व-

शकृत् पुरीषं सानिलं मुञ्चति । मुहुर्व्वारंवारं ।
विन्दुशः विन्दुं विन्दुं मेहति मूत्रयेत् । श्यावे-
त्यादि श्यावा किञ्चित् श्यामा । अरुणा किञ्चि-
द्रक्ता । एवं चाश्मर्य्या वर्णाकारकथनं आ-
कृष्याणां
प्रत्यक्षसंवादिशास्त्रप्रामाण्यख्यापनार्थ-
माहुः । चिताकण्टकैरिव वदरीवीजवत् क्षुद्रा-
ङ्कुरैर्वेष्टिता ॥ * ॥ पित्तोल्वणामाह ।
"पित्तेन दह्यते वस्तिः पच्यमान इवोष्मवान् ।
भल्लातकास्थिसंस्थाना रक्ता पीता
सिताश्मरी" ॥
दह्यते साक्षादग्निनेव । वस्तिरिति मूत्रकोषः ।
पच्यमानैव क्षारेणेव । उष्मवान् उष्णस्पर्शः ॥
* ॥
कफोल्वणामाह ।
"वस्तिर्निस्तुद्यतैव श्लेष्मणा शीतलो गुरुः ।
अश्मरी महती श्लक्ष्मा मधुवर्णाथवा सिता" ॥
महती कुक्कुटाण्डतुल्या । मधुवर्णा
ईषत्पिङ्गल-
शुक्ला ॥
"एता भवन्ति बालानां तेषामेव हि भूयसा ।
आश्रयोपचयाप्लत्वात् ग्रहणाहरणे सुखाः" ॥
एताः दोषत्रयजनिताः बालानां स्युः ॥ यतः
सर्व्वा
एवाश्मर्य्यो विशेषतः श्लेष्मसमवायिकारणाः ।
बाला-
स्तु विशेषतस्तन्निदानसेविनो भवन्ति । उक्तञ्च
सुश्रुतेन । प्रायेणैता अश्मर्य्यो
दिवास्वप्नसमश-
नाध्यशनस्निग्धशीतगुरुमधुराहारप्रियत्वात्
विशे-
षेण बालानां भवन्तीति । भूयः पदोपादानात्
महतामपि त्रिदोषजनिता भवन्ति । तेषामेव
बालानामेव । ग्रहणाहरणे सुखाः ग्रहणं निष्का-
सनार्थमङ्गुलिभ्यां । आहरणं पाचनादिपूर्व्वकं
निष्कासनं तत्र सुखाः सुखदाः । तत्र हेतुमाह
।

**अश्मन्तकं**, क्ली, (अश्मन्त + स्वार्थे कन् ।) चुल्ली ।

मल्लिकाच्छादनं । दीपाधाराच्छादनं । इति मे-
दिनी ॥ सेज आँधारिया इत्यादि भाषा ।

**अश्मन्तकः**, पुं, अश्मन्त + कन् ।) तृणविशेषः । अम्ल-
कुचाइ इतिभाषा । तत्पर्य्यायः ।
अम्लोटकः २ ।
इति रत्नमाला ॥ वृक्षविशेषः । आवुटा इति
पश्चिमदेशे ख्यातः । तत्पर्य्यायः ।
इन्दुकः २ कुराली
३ अम्लपत्रः ४ श्लक्ष्मत्वक् ५ नीलपत्रः ६ यमलप-
त्रकः ७ । अस्य गुणाः । मधुरत्वं ।
कषायत्वं । सुशी-
तलत्वं ।
पित्तप्रमेहविदाहतृष्णाविषमज्वरविषा-
र्त्तिच्छर्द्दिभूतनाशित्वञ्च ॥ इति
राजनिर्घण्टः ॥

**अश्मपुष्पं**, क्ली, (अश्मनः पुष्पमिव ।) शैलेयं । शैल-
जनामगन्धद्रव्यं । इत्यमरः ॥

**अश्मभालं**, क्ली, (अश्मेव भाजयति चूर्णितं करोति ।
भजचूर्णने । भज + णिच् + अण् ।
पृषोदरादि-
त्वात् जस्य लत्वम् ।)
द्रव्यचूर्णार्थलौहादिपात्रं ।
तत्पर्य्यायः । लौहभाण्डं २ । इति
शब्दचन्द्रिका ॥
हामानदिस्ता इति भाषा ॥

**अश्मभित्**, [द्,] पुं, (अश्मानं भिनत्तीति । अश्म +
भिद् + क्विप् ।) पाषाणभेदी वृक्षः । इति रत्न-
माला ॥ प्रस्तरभेदके त्रि ॥

मिच्छन्ति । प्रायःशब्दश्चात्र विशेषार्थः । यमो-
पमाश्चिकित्सां विना ॥ * ॥
सम्प्राप्तिमाह ।
"विशोषयेद्वस्तिगतं सशुक्रं
मूत्रं सपित्तं पवनः कफं वा ।
यदा तदाश्मर्य्युपजायते तु
क्रमेण पित्तेष्विव रोचना गोः ॥
पवनो वस्तिगतं सशुक्रं मूत्रं सपित्तं कफं वा
शोषमुपनयेत् यदा तदा अश्मरी क्रमेण क्रमशो
वर्द्धमाना । यथा गोः पित्तेषु
रोचनेवेत्यन्वयः ॥ * ॥
पूर्ब्बरूपमाह ।
"नैकदोषाश्रयाः सर्व्वा अथासां
पूर्ब्बरूक्षणं ।
वस्त्याध्मानं तदासन्नदेशेषु
परितोऽतिरुक् ॥
मूत्रे वस्तसगन्धत्वं मूत्रकृच्छ्रं
ज्वरोऽरुचिः" ।
वस्तः छगलकः ॥ * ॥
सामान्यलक्षणमाह ।
"सामान्यलिङ्गं
रुङ्नाभिसेवनीवस्तिमूर्द्धसु ।
विशीर्णधारं मूत्रं स्यात् तया
मार्गनिरोधने ॥
तद्व्यपायात् सुखं मेहेदच्छं
गोमेदकोपमं ।
तत्संक्षोभात् क्षते
सास्रमायासाच्चातिरुग्भवेत्" ॥
वस्तिमूर्द्धा नाभेरधोदेशः । विशीर्णधारं सवि-
च्छेदधारं । तया अश्मर्य्या । मार्गः मूत्रवाहि
स्रोतः । तद्व्यपायात् कदाचिद्वायुना अश्मर्य्या
मूत्रमार्गादन्यत्र गमनात् । सुखं मेहेत्
मूत्रयेत् ।

आश्रयोपचयाप्लत्वादिति आश्रयो वस्तिः तस्यो-
पचयः स्थौल्यं तस्याप्लत्वात् ॥ * ॥
शुक्राश्मरीमाह ।
"शुक्राश्मरी तु महतां जायते शुक्रधारणात्" ।
अव्ययानामनेकार्थत्वात् तु
शब्दोऽत्रावधारणार्थः ।
तेन महतामेव न तु बालानां । तेषां वक्ष्यमाण-
सम्प्राप्तेरसम्भवात् । न तु शुक्राभावो वाच्यः ।
शुक्रधारणात् वेगात् च्यवमानस्य शुक्रस्य धार-
णात् ॥ * ॥ शुक्राश्मर्य्याः सम्प्राप्तिमाह ।
"स्थानाच्चुतममुक्तं हि मूष्कयोरन्तरेऽनिलः ।
शोषयत्युपसंहृत्य शुक्रं तच्छुक्रमश्मरी" ॥
अनिलः मैथुनवेगेन स्थानाच्च्युतं । अमुक्तं मैथुन-
वेगधारणेन धृतं शुक्रं । मुष्कयोः मेढ्रसहितयोः ।
मेढ्रवृषणयोरन्तर इति सुश्रुतवचनात् । तेन
मेढ्रवृषणमध्यगतवस्तिमुखे उपसंहृत्य एकीकृत्य
शोषयति । तच्छुक्रमश्मरी तथाभूतं शुक्रमेवा-
श्मरी ॥ * ॥ अस्या लक्षणमाह ।
"वस्तिरुङ्मूत्रकृच्छ्रत्वमुष्कश्वयथुकारिणी ।
तस्यामुत्पन्नमात्रायां शुक्रमेति विलीयते ॥
पीडिते त्ववकाशेऽस्मिन्नश्मर्य्येव च शर्करा" ।
तस्यां शुक्राश्मर्य्यां । उत्पन्नगात्रायां यदा सा कथ-
मपि विलीयते विलयं याति तदा शुक्रं एति
मूत्रमार्गात् प्रवर्त्तते । पीडिते त्ववकाशेऽस्मिन्
तुशब्दोऽवधारणे । तेन अस्मिन्नेव अवकाशे
स्थाने मेढवृषणयोरन्तरे पीडिते सति सा

**अश्मभेदः**, पुं, (अश्मनो भेदो भवत्यस्मात् ।) पाषाण-

भेदी वृक्षः । इति रत्नमाला ॥ (अस्य गुणाः ।

“अश्मभेदो हिमस्तिक्तः कषायो वस्तिशोधनः ।

भेदनो हन्ति दोषार्शोगुल्मकृच्छ्राश्महृद्रुजः ॥

योनिरोगान् प्रमेहांश्च प्लीहशूलब्रणानि च” ।

इति भावप्रकाशः ॥

“एरण्डो विजपूरश्च गोक्षुरं वृहतीद्वयं ।

गोमेदकोपमं गोमेदको मणिः किञ्चिल्लोहित-

स्तद्वर्णं । तत्संक्षोभात् तस्या अश्मर्य्याः सञ्चारात् ।

घर्षणेन मूत्रवहे स्रोतसि क्षते जाते सास्रं सरक्तं

मेहेत् । आयासात् प्रवाहनादिजनितात् ॥ * ॥

वातोल्वणामाह ।

“तत्र वाताद्भृशं त्वार्त्तो दन्तान् खादति वेपते ।

मृद्गाति मेहनं नाभिं पीडयत्यपि सङ्क्वणन् ॥

सानिलं मुञ्चति शकृन्मुहुर्म्मेहति विन्दुशः ।

श्यावारुणाश्मरी चास्य स्याच्चिता कण्टकैरिव” ॥

सङक्वणन् आर्त्तनादं कुर्व्वन् नाभिदेशं पीडयति ।

:विलीयते अन्तर्ल्लीना भबति ॥
अवस्थाभेदादश्मरी

शर्करा सिकता भवतीत्याह । अश्मर्य्येव च शर्करा
चकरात् सिकता च भवति । शर्करासिकतयोश्च
भेदो महत्वाल्पत्वाभ्यां बोद्धव्यः ॥ कथं अश्मरी
शर्करा भवतीत्याह । सा भिन्नमूर्त्तिर्वातेन शर्क-
रेत्यभिधीयते । सा अश्मरी ॥ * ॥ शर्करायाः पात-
मवरोधञ्च सहेतुकमाह ।
"अणुशो वायुना भिन्ना सा तस्मिन्ननुलोमगे ।
निरेति सहमूत्रेण प्रतिलोमे विबध्यते ।
मूत्रस्रोतःप्रवृत्ता सा सक्ता कुर्य्यादुपद्रवान्" ॥
सा अश्मरी । तस्मिन् वायौ । अनुलोमगे मूत्र-
स्रोतःसु सम्यक्प्रवृत्ते मूत्रेण सह सा शर्करा
निरेति पतति । प्रतिलोमगे ऊद्ध्र्वप्रवृत्ते वायौ
विबध्यते । तदा मूत्रस्रोतः श्रिता सक्ता लग्ना
स्यात्तदा उपद्रवान् कुर्य्यात् ।
तानेवोपद्रवानाह ।
"दौर्ब्बल्यं सदनं कार्श्यं कुक्षिशूलमथारुचिं ।
पाण्डुत्वमुष्मवातञ्च तृष्णां हृत्पीडनं वमिं" ॥
दौर्ब्बल्यमिन्द्रियाणां । सदनं अवसन्नत्वं । का-
र्श्यमङ्गानां । उदरैकदेशे शूलं । उष्मवातं मूत्रा-
घातविशेषं ॥ * ॥ अश्मरी शर्करा सिकताना-

दधिमण्डो भिनत्त्युग्रामश्म रीमाशु पानतः" ॥
शृङ्गवेरं नागरं ॥ * ॥
"नो जग्धं कृमिभिर्घनंसुतरुणं स्निग्धं शुचिस्थानजं
घस्रे पुण्यनिरीक्षिते वरुणकं छित्त्वा तुलां ग्राहयेत् ।
संगृह्याशु चतुर्गुणाभ्वपि पचेत् पादावशेषं जलं
तत्तुल्येन गुडेन वै दृढतरे भाण्डे पचेत्तत् पुनः ॥
ज्ञात्वैवं घनतां गुडे परिणते प्रत्येकमेषां पलं
शुण्ठ्यैर्व्वारुकवीजगोक्षुरकणापाषाणभिच्छीतला ।
कुष्माण्डत्रपूषाक्षवीजकुनटीवास्तूकशोभाञ्जनं
द्राक्षैलागिरिजाभयाकृमिहृतांचूर्णीकृतानाक्षिपेत् ॥
पथ्याशी प्रतिवासरं गुडममुं योऽक्षप्रमाणं नरः
खादेत्तस्य समस्तदोषजनिताश्मर्य्यः पतन्ति द्रुतं" ।
एर्व्वारुकवीजं कर्कटीवीजं । पाषाणभित् हाथा-
छोडीति लोके । शीतला नीलदूर्व्वा । तथाच ।
"नीलदूर्व्वा स्मृता शस्यं शाद्वलं हरितं तथा ।
शतपर्ब्बा शीतकूम्भी शीतला वामनी तथा" ॥
इति निर्घण्टौ धन्वन्तरिः ॥ कुनटी धान्यकं ।
गिरिजं शिलाजतु । कृमिहृत् विडङ्गं । वरुणा-
दिगुडः ॥ * ॥
"मञ्जिष्ठा त्रापुषं वीजं जीरकः शतपुष्पिका ।
धात्रीफलं वदरकं गन्धकञ्च मनःशिला ॥
एतेषां समभागानां चूर्णं टङ्कमितं नरः ।
भक्षयेन्मधुना सार्द्धं पतेत्तस्याश्मरी ध्रुवं" ॥ * ॥
"पलद्वयमिते कोष्णे कुलत्थस्य शृते तु यः ।
लवणं शरपुङ्खस्य सार्द्धमाषद्वयोन्मितं ॥
क्षिप्त्वा पिबेत् पतेत्तस्य मूत्रेण सममश्मरी ।
शर्करा सिकता चापि दृष्टमेतदनेकधा" ॥
इत्यश्मर्य्यधिकारः ॥ * ॥ इति भावप्रकाशः ॥
(अस्या निरुक्तिमाह भोजः ।
"तुल्यतामश्मना याति तस्मात्तामश्मरीं विदुः" । इति
माधवकृतरुग्विनिश्चयस्यान्यतमटीकाकृतोक्तं ॥

"पुराणयष्टिकाशालिरक्तकतण्डुलकास्तथा ।
श्यामाकः कोद्रवोद्दालो मर्कटीतृणधान्यकं ॥
कुलत्थयवगोधूमास्तथाचैवाढकी भिषक् ।
वातघ्नाश्च प्रयोक्तव्या भोजने वातरोगिणां ॥
क्रौञ्चाद्यानि च मांसानि पथ्यान्यश्मरिनाशने" ॥
इति हारीतः ॥
"विशोषयेद्वस्तिगतन्तु शुक्रं
मूत्रं सपित्तं पवनः कफं वा ।
यदा तदाश्मर्य्युपजायते तु
क्रमेण पित्तेष्विव रोचना गोः ॥
कदम्बपुष्पाकृतिरश्मतुल्या
श्लक्ष्णा त्रिपुट्याप्यथवापि मृद्वी ।
मूत्रस्य चेन्मार्गमुपैति रुद्धा
मूत्रं रुजां तस्य करोति वस्तौ ॥
ससीवनीमेहनवस्तिशूलं
विशीर्णधारञ्च करोति मूत्रं ।
गृह्णाति मेढ्रं स तु वेदनार्त्तो
मुहुः शकृन्मुञ्चति मेहते च ॥
क्षोभात् क्षते मूत्रयतीह सासृक्
तस्याः सुखं मेहति च व्यपायात् ।
एषाश्मरी मारुतभिन्नमूर्त्तिः
स्याच्छर्करामूत्रपथात् क्षरन्ती" ॥ * ॥
चिकित्सा यथा ॥ * ॥
"क्रिया हिता त्वश्मरिशर्कराभ्यां
कृच्छ्रे तथैवेह कफानिलाभ्यां ।
कार्य्यश्मरीभेदनपातनाय
विशेषयुक्तं शृणु कर्म्मसिद्धं ॥
पाषाणभेदं वृषकं श्वदंष्ट्रा-
पाठाभयाव्योषशठीनिकुम्भाः ।
हिंस्रीखराश्वासितिमारकाभ्या-
मेर्व्वारुकाणां त्रपुषस्य वीजं ॥
उपकुञ्चिका हिङ्ग सवेतसाम्लं
स्याद् द्वे वृहत्यौ हपुषा वचा च ।

मरिष्टमाह ।
"प्रसूननाभिवृषणं बद्धमूत्रं रुजान्वितं ।
अश्मरी क्षप्रयत्याशु शर्करा
सिकतान्विता" ॥
शर्करा सिकतेति च नामद्वयमन्वर्थं ॥ *
॥
अथाश्मर्य्याश्चिकित्सा ।
"शुण्ठ्यग्निमन्थपाषाणभिद्ग्वरुणगोक्षुरैः
।
अभयारग्वधफलैः क्वाथं कृत्वा
विचक्षणः ॥
रामठक्षारलवणचूर्णं क्षिप्त्वा पिबेन्नरः ।
अश्मरी मूत्रकृच्छञ्च नाशमायाति
निश्चितं ॥
क्वाथः शुण्ठ्यादिनामायं दीपनः
पाचनः परं ।
हन्ति कोष्ठाश्रितं वातं
कण्ठरुग्गदमेढ्रजं" ॥
रुक्कुष्ठं ।
शुण्ठ्यादिक्वाथः ॥ * ॥
"एलोपकुल्यामधकाश्मभेद-
कौन्तीश्वदष्ट्रावृषकोरुवूकैः ।
श्रितं पिबेदश्मजतुप्रगाढं
सशर्करं मूत्रगदेऽश्मरीषु" ॥
उरुवूक एरण्डस्तस्यात्र मूलं । मूत्रगदे
मूत्रकृच्छ्रे ।
एलादिक्वाथः ॥ * ॥
"कुष्माण्डकरसं हिङ्गुयवक्षारयुतं पिबेत्
।
वस्तौ मेढ्रे शूलयुक्ते
अश्मरीशर्कराञ्जयेत्" ॥ * ॥
"वरुणत्वक्शिलाभदशुण्ठीगोक्षुरकैः
कृतः ।
कषायक्षारसंयुक्तः शर्करां परतयत्यधः"
॥
क्षारो यवक्षारः ॥ * ॥
"त्रिकण्टकस्य वीजानां चूर्णं
माक्षिकसंयुतं ।

"पितृमातृकदोषेण अथवा मूत्ररोधनात् ।
अतिपथ्याक्षाभिचारैर्जायते चाश्मरीगदः ॥
मूत्राविष्टौ च पितरौ सुरतं कुरुतो यदि ।
मूत्रेण सहितं युक्तं च्यवते गर्भसम्भवं ॥
पञ्चजस्य स्वदेहस्य स च तत्र प्रजायते ।
मूत्रं मूत्रस्य संस्थाने करोति बन्धनं त्रिषु ॥
सोऽप्यसाध्यो मूत्रगदश्चाल्पाद्भवति मानुषे ।
तारुण्ये चापि साध्यश्च जायते मूत्रशर्करा ॥
विपरीतेन चोत्ताने स्त्रिया च पुरुषेण वा ।
शुक्रञ्च प्रवहेत्तस्य स्त्रीशुक्रं विचिनोति च ॥
पुनश्च मेहने वासः वातेन शोणितञ्च तत् ।
द्वयं दत्तं प्रपद्येत मूत्रद्वारं रुणद्धि च ॥
तेन मूत्रप्ररोधश्च जायते तीव्रवेदना ।
अण्डसन्धिस्थिता याति शर्करा शस्त्रसाध्यका
॥
अतो वक्ष्यामि भैषज्यं शृणु पुत्त्र ! महामते" ।
अस्याश्चिकित्सा यथा ॥
"शुण्ठीगोक्षुरकस्यैव वरुणस्य त्वचस्तथा ।
क्वाथो गुडयवक्षारयुतश्चाश्मरिनाशनः ॥ १ ॥
गोक्षुरकस्य वीजानां धातुमाक्षिकसंयुतं ।
चूर्णं माहिषदुग्धेन पानञ्चाश्मरिपातनं" ॥ २ ॥
अस्यां पथ्यानि यथा ॥

चूर्णं पिबेदश्मरिभेदि पक्वं
सर्पिश्च गोमूत्रचतुर्गुणन्तैः ॥ १ ॥
शिग्रोस्तु यूषो मृदुमूलकल्का-
द्विल्वप्रमाणाद्धृततैलभृष्टात् ।
शीतोऽश्मभित्स्याद्दधिमण्डयुक्तं
पेयः प्रकामं लवणेन युक्तः ॥ २ ॥
जलेन शौभाञ्जनमूलकल्कः
शृतो हितश्चाश्मरिशर्कराभ्यां ॥ ३ ॥
पीत्वा च मद्यं निगदं रथेन
हयेन वा शीघ्रजवेन यायात् ।
तैः शर्करा प्रच्यवतेऽश्मरी तु
शाम्येन्नचेच्छल्यविदुद्धरेत्तां" ॥ ४ ॥
अस्यां वर्ज्जनीयान्याह ।
व्यायामसन्धारणशुष्कभक्ष्य-
पिष्टान्नवातार्ककरव्यवायान् ।
खर्ज्जूर-शालूक-कपित्थ-जम्बु
विषं कषायञ्च रसं भजेन्न" ॥
इति च चरकः ॥)
चतस्रोऽश्मर्य्यो भवन्ति । श्लेष्मणा
वातेन पित्तेन

| | | |
|---|---|---|
| अवीक्षीरेण सप्ताहादश्मरीनाशनं पिबेत्" ॥<br>अवीर्म्मेषी ॥ * ॥<br>"वरुणत्वक्कषायस्तु पीती गुडसमन्वितः ।<br>अश्मरीं पातयत्याशु वस्तिशूलञ्च नाशयेत्" ॥ * ॥<br>"क्वाथो वरुणमूलस्य तस्य कल्केन संयुतः ।<br>शिग्रुमूलस्य च क्वाथः कटूष्णश्चाश्मरीं हरेत्" ॥ * ॥<br>"शृङ्गवेरयवक्षारपथ्याकालीयकान्वितः । | | |

:शुक्रेण चेति ॥ तत्रासंशोधनशीलस्यापथ्यका-
रिणः प्रकुपितः
श्लेष्मामूत्रसम्पृक्तोऽनुप्रविश्य
वस्तिमश्मरीं जनयति । तासां
पूर्ब्बरूपाणि
वस्तिपीडारोचकौ मूत्रकृच्छ्रं
वस्तिशिरोमुष्कशे-
फसां वेदना कृच्छ्रा ज्वरावसादौ
वस्तगन्धित्वं
मूत्रस्येति ॥
“यथास्वं वेदनावर्णं दुष्टं सान्द्रमथाविलं ।
पूर्ब्बरूपेऽश्मनः कृच्छ्रान्मूत्रं सृजति
मानवः” ॥
अथ जातासु नाभि-वस्ति-सेवनी-
मेहनेष्वन्यतम-
स्मिन् मेहतो वेदना मूत्रधारासङ्गः
सरुधिर-
मूत्रता मूत्रविकिरणञ्च
गोमेदकप्रकाशमनाविलं
ससिकतं विसृजति धावन-लङ्घन-
प्लवन-पृष्ठ-याना-
ध्वगमनैश्चास्य वेदना भवति ॥
तत्र श्लेष्माश्मरी
श्लेष्मलमन्नमभ्यवहरतोऽत्यर्थमुप-
लिप्याधः परिवृद्धिं प्राप्य
वस्तिमुखमधिष्ठाय स्रो-
तो विरुणद्धि तस्य मूत्रप्रतिघाताद्दाल्यते
भिद्यते
निस्तुद्यत इव च वस्तिर्गुरुः शीतश्च
भवति । अश्मरी
चात्र श्वेता स्निग्धा महती
कुक्कुटाण्डप्रतीकाशा
मधूकपुष्पवर्णा वा भवति तां
श्लैष्मिकीमिति
विद्यात् ॥
पित्तयुक्तस्तु श्लेष्मा सङ्घातमुपगम्य
यथोक्तां परि-

यदि नोपशमं गच्छेत् छेदस्तत्रोत्तरो विधिः
॥
कुशलस्यापि वैद्यस्य यतः सिद्धिरिहाध्रुवा
।
उपक्रमो जघन्योऽयमतः स परिकीर्त्तितः
॥
अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो
भवेत् ।
तस्मादापृच्छ्य कर्त्तव्यमीश्वरं
साधुकारिणा” ॥
अथ
रोगान्वितमुपस्निग्धमपकृष्टदोषमीषत् क-
शितमभ्यक्तस्विन्नशरीरं भुक्तवन्तं
कृतवलिमङ्गल-
स्वस्तिवाचनमग्रोपहरणीयोक्तेन
विधानेनोपक-
ल्पितसम्भारमाश्वास्य ततो
बलवन्तमविक्लव-
माजानुसमे फलके प्रागुपवेश्य पुरुषञ्च
तस्योत्सङ्गे
निषन्नपूर्ब्बकायमुत्तानमुन्नतकटीकं
वस्त्रधारकोप-
विष्टं सङ्कुचितजानुकूर्परमितरेण सहावबद्धं
सूत्रेण शाटकैर्व्वा ततः
स्वभ्यक्तनाभिप्रदेशस्य
वामपार्श्वं विमृद्य
मुष्टिनावपीडयेदधोनाभेर्याव-
दश्मर्य्यधः प्रपन्नेति । ततः स्नेहाभ्यक्ते
कॢप्तनखे
वातहस्तप्रदेशिनीमध्यमे पायौ
प्रणिधायानुसे-
वनीमासाद्य प्रयत्नबलाभ्यां
पायुमेढ्रान्तरमानीय
निर्व्यलीकमनायतमविषमञ्च वस्ति
सन्निवेश्य भृश-
मुत्पीडयेदङ्गुलिभ्यां यथाग्रन्थिरिवोन्नतं
शल्यं
भवति ॥

नास्ति ह्यश्रद्दधानस्य धर्म्मकृत्ये प्रयोजनं”
॥
इति श्राद्धतत्त्वं ॥

**अश्रद्धा**, स्त्री, (न श्रद्धा । नञ्तत्पुरुषः ।) शास्त्रार्थे
अदृढप्रत्ययः । यथा, --
“विधिहीनं भावदुष्टं कृतमश्रद्धया च यत् ।
तद्धरन्त्यसुरास्तस्य मूढस्य दुष्कृतात्मनः”
॥
इति श्राद्धतत्त्वं ॥ (मानसिकवृत्तिभेदः । यथा
श्रुतौ, --
“कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा
धृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव” ॥
“अश्रद्धया च यद्दत्तं तत्तामसमुदाहृतम्” ॥
इति गीतायाम् ।)

**अश्रद्धेयं**, त्रि, श्रद्धानर्हं । आदरायोग्यं । शास्त्रार्था-
दृढप्रत्यययोग्यं । श्रत् शब्दपूर्ब्बक
धाधातोर्यप्रत्यये
पश्चान्नञ्समासेन निष्पन्नं ॥
(“किमनेनाश्रद्धेय-
व्याधवचनप्रत्ययमात्रपरिगृहीतेनाण्डजेन” ।
इति
पञ्चतन्त्रे ।)

**अश्रपः**, पुं, क्ली, (अश्रं रक्तं पिबति यः । अश्र +
पा + ड ।) राक्षसः । इत्यमरः ॥

**अश्राद्धभोजी**, [न्] त्रि, (न श्राद्धभोजी । नञ्तत्-
पुरुषः ।) श्राद्धान्नाभक्षकः । यथा ।
दुर्गसिंहोऽपि
अश्राद्धभोजीत्यस्य सति भोजने अश्राद्धमेव
भुङ्क्ते न श्राद्धमिति न नियमः । तथात्वे
व्रतलोपः
स्यात् । इति प्रायश्चित्ततत्त्वं ॥

**अश्राद्धी**, [न्] पुं, (अश्राद्धमस्त्यस्य । अश्राद्ध +
इन् ।) श्राद्धपञ्चयज्ञशून्यः । यथा मनुः ।

वृद्धिं प्राप्य वस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि
तस्य मूत्रप्रतीघातादुष्यते चूष्यते दह्यते पच्यते
इव वस्तिरुष्णवातश्च भवति । अश्मरी चात्र सरक्ता
पीतावभासा कृष्णा भल्लातकास्थिप्रतिमा मधु-
वर्णा वा भवति तां पैत्तिकीमिति विद्यात् ॥
वातयुक्तस्तु श्लेष्मा सङ्घातमुपगम्य यथोक्तां परि-
वृद्धिं प्राप्य वस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि
तस्य मूत्रप्रतीघातात्तीव्रा वेदना भवति तथात्यर्थं
पीड्यमानो दन्तान् खादति नाभिं पीडयति मेढ्रं
मृद्गाति वायुं स्पृशति विशर्द्धते विदहति वात-
मूत्रपुरीषाणि कृच्छ्रेण वास्य मेहतो निःसरन्ति ।
अश्मरी चात्र श्यामा परुषा विषमा खरा कदम्ब-
पुष्पवत् कण्टकाचिता भवति तां वातिकीमिति
विद्यात् ॥
प्रायेणैतास्तिस्रोऽश्मर्य्यो दिवास्वप्न-समशनाध्यशन-
शीत-स्निग्ध-गुरु-
मधुराहारप्रियत्वाद्विशेषेण बा-लानां भवन्ति
तेषामेवाल्पवस्तिकायत्वादनुपचित-
मांसत्वाच्च वस्तेः सुखग्रहणाहरणा भवन्ति ॥ मह-
तान्तु शुक्राश्मरी शुक्रनिमित्ता भवति । मैथुनाभि-
घातादतिमैथुनाद्वा शुक्रश्च तिलमनिर्गच्छद्विमार्ग-

"सचेद्गृहीतशल्ये तु विवृताक्षो विचेतनः ।
हतवल्लम्बशीर्षश्च निर्व्विकारो मृतोपमः ॥
न तस्य निर्हरेच्छल्यं निर्हरेत्तु म्रियेत सः ।
विना त्वेतेषु रूपेषु निर्हर्त्तुं समुपाचरेत् ॥"
इति सुश्रुतः ॥
"अयोरजः श्नक्ष्णपिष्टं मधुना सह योजयेत् ।
अश्मरीं विनिहन्त्याशु मूत्रकृच्छ्रञ्च दारुणं ॥"
॥ * ॥ लौहप्रयोगः ॥ * ॥
इति वैद्यकरसेन्द्रसारसंग्रहः ॥)

**अश्मरीघ्नः**, पुं, (अश्मरीं मूत्रकृच्छ्रंहन्ति । अश्मरी + हन् + टक् ।) वरुणवृक्षः । इति त्रिकाण्डशेषः ॥

**अश्मरीहरः**, पुं, (अश्मरीं हरति । अश्मरी + हृ + अच् ।) धान्यविशेषः । इति रत्नमाला ॥ दे धान
इति ख्यातः ।
"वरुणः कफवातघ्नो भेदी चोष्णोऽश्मरीहरः" ।
इति वैद्यकद्रव्यगुणः ॥)

**अश्मसारः**, पुं, क्ली, (अश्मनः सारः ।) लौहः । इत्यमरः ॥ ("प्राणाः सत्वरमश्मसारकठिना गच्छन्ति गच्छन्त्वमी" । इति साहित्यदर्पणे ॥)

**अश्मीरः**, पुं, क्ली, (अश्मन् + ईर ।) अश्मरीरोगः ॥ इत्युणादिकोषः ॥

**अश्मोत्थं**, क्ली, (अश्मनः उत्तिष्ठति यत् । उत् + स्था + क ।) शिलाजतु । इति राजनिर्घण्टः ॥

**अश्रं**, क्ली, (अश्नुते व्याप्नोति नेत्रं कण्ठं वा अश् +

"नाद्यात् शूद्रस्य पक्वान्नं विद्वानश्राद्धिनो द्विजः ।
आददीताममेवास्मादवृत्तावेकरात्रिकं" ॥
अश्राद्धिनः श्राद्धपञ्चयज्ञशून्यस्य ।
इत्याह्निका-चारतत्त्वं ॥

**अश्राद्धेयः**, पुं, (न श्राद्धेयः । नञ्समासः ।) श्राद्धा-नर्हः । श्राद्धायोग्यब्राह्मणः । यथा । अत्रिका-श्यपौ, --
"पितुर्गेहे च या कन्या रजः पश्यत्यसंस्कता ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥
यस्तु तां वरयेत् कन्यां ब्राह्मणो ज्ञानदुर्ब्बलः ।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिं" ॥
इत्युद्वाहतत्त्वं ॥

**अश्रान्तं**, क्ली, (अविद्यमानं श्रान्तमत्र । नञ्स-मासः) अनवरतं । नित्यं । इत्यमरः ॥ श्रमर-हिते त्रि ॥

**अश्रान्तः**, त्रि, श्रमरहितः । यथा । "अश्रान्तश्रुति-पाठपूतरसनाविर्भूतभूरिस्तवा जिह्मब्रह्ममुखौघ-विघ्नितनवस्वर्गक्रियाकेलिना । पूर्ब्बं गाधिसुतेन साभिघटिता मुक्तानु मन्दाकिनी यत् प्रासादद्-कूलवल्लिरनिलान्दोलैरखेलद्दिवि" ॥ इति नैषधे
१ स्वर्गः ॥

**अश्रिः**, स्त्री, (अश्नाति अश्नुते वा । अश भोजने अशू व्याप्तौ वा । आश्रीयते प्राहारार्थम् । आङि-श्रिहनिभ्यां ह्रस्वश्चेति इण् स च डित् डित्वात् टिलोप आङो ह्रस्वश्च ।) गृहादेः कोणः । इति हेमचन्द्रः ॥ अस्त्रादेरग्रभागः । इत्यमरः ॥

गमनादनिलोऽभितः संगृह्य
मेढ्रवृषणयोरन्तरे
संहरति संहृत्य चोपशोषयति सा
मूत्रमार्गमा-
वृणोति मूत्रकृच्छ्रं वस्तिवेदनां वृषणयोश्च
श्वयथु-
मापादयति पीडितमात्रे च तस्मिन्नेव
प्रदेशे प्रवि-
लयमापद्यते तां शुक्राश्मरीमिति विद्यात्
॥
अस्याश्चिकित्सा यथा ॥
“अश्मरी दारुणो व्याधिरन्तकप्रतिमो
मतः ।
औषधैस्तरुणः साध्यः प्रवृद्धञ्छेदमर्हति
॥
तस्य पूर्ब्बेषु रूपेषु स्नेहादिक्रम इष्यते ।
तेनास्यापचयं यान्ति
व्याधेर्मूलान्यशेषतः ॥
घृतैः क्षारैः कषायैश्च क्षीरैः
सोत्तरवस्तिभिः ।

रक् ।) नेत्रजलं । इत्युणादिकोषः ॥
(“तामप्यश्रं नवजलमयं
मोचयिष्यत्यवश्यं” ।
इति मेघदूते ॥
“सखीभिरश्रोत्तरमीक्षितामिमाम्” । इति
कु-
मारे ॥) रक्तं । इत्यमरटीका ॥

**अश्रद्दधानः**, त्रि, (न श्रद्दधानः । नञ्तत्पुरुषः ।)

श्रद्धाहीनः । यथा देवलः ।
“प्रत्ययो धर्म्मकार्य्येषु तथा श्रद्धेत्यदाहृता
।

:("वृत्तस्य हन्तुः कुलिशं कुण्ठिताश्रीव लक्ष्यते" ।

इति कुमारे ।

"वज्रो वा एष यद्यूपः सोऽष्टाश्रिः

कर्त्तव्योऽष्टाश्रिः

वै वज्रः" । इति ऐतरेयब्राह्मणे ।)

**अश्री**, स्त्री, अश्रिः । अस्त्रादेरग्रभागः ॥ इत्यमर-

टीका ॥

**अश्रु**, क्ली, (अश्नुते नेत्रमिति । अश् + रुक् । अथ

वा न श्रयति इति । न + श्रि + डुन् ।)

चक्षुर्ज्जलं ।

तत्पर्य्यायः । नेत्राम्बु २ रोदनं ३ अश्रं ४

अस्रं ५

अस्रु ६ वाष्पं ७ ।

इत्यमरकोषशब्दरत्नावल्यौ ।

("श्रुतदेहविसर्ज्जनः पितुश्चिरमश्रूणि

विमुच्य

राघवः" । इति रघुवंशे ।) लोचं ८ । इति

जटा-

धरः ॥

**अश्रुतं**, त्रि, (न श्रुतं । नञ्तत्पुरुषः ।) अकृतश्रवणं ॥

अनाकर्णितं । अशुना इति भाषा । यथा, --

"श्रुतार्थस्य परित्यागात् अश्रुतार्थस्य

कल्पनात् ।

प्राप्तस्य बाधादित्येवं परिसङ्ख्या

त्रिदोषिका" ।

इति प्रायश्चित्ततत्त्वं ॥

**अश्लेषा**, स्त्री, (नास्ति श्लेषो यस्याम् ।) अश्वि-

न्यादिसप्तविंशतिनक्षत्रान्तर्गतनवमनक्षत्रं

। अस्य

रूपं । चक्राकृतिषड्नक्षत्रात्मकं । इति

दीपिका ॥

सप्तिः १६ । इत्यमरः तट्टीकाच ॥

("जितसिंहभया नागा यत्राश्वा

विलयोनयः" ।

इति कुमारे ॥

"गच्छन्तमुच्चलितचामरचारुमश्वम्" ॥

इति शिशुपालबधे ॥) अश्वेन भ्रमणगुणाः ।

वातकोपनाङ्गस्थैर्य्यबलाग्निकारित्वं । इति

राज-

वल्लभः ॥ पुंजातिविशेषः । तस्य लक्षणं ।

"काष्ठतुल्यवपुर्धृष्टो मिथाचारश्च निर्भयः ।

द्वादशाङ्गुलमेढ्रश्च दरिद्रस्तु हयो मतः" ॥

इति रतिमञ्जरी ॥ (स्वनामख्यातो

वृष्णिवंशी-

यो नृपतिश्चित्रकस्य पुत्रः । यथा, --

"चित्रकस्याभवन् पुत्राः पृथुर्विप्रथुरेव च ।

अश्वग्रीवोऽश्ववाहुश्च सुपार्श्वकगवेषणौ ॥

अरिष्टनेमिरश्वश्च ।" इति हरिवंशे ॥

स्वनाम

ख्यातो दानवश्च यथा महाभारते ।

"चत्वारिंशद्दनोः पुत्राः ख्याताः सर्व्वत्र

भारत ॥

स्वर्भानुरश्वोऽश्वपतिर्वृषपर्व्वा जकस्तथा"

॥)

**अश्वकन्दिका**, स्त्री, अश्वगन्धावृक्षः । इति रत्नमाला ॥

**अश्वकर्णः**, पुं, (अश्वस्य कर्णमिवपत्रमस्य ।) शाल-

वृक्षविशेषः । लताशाल इति केचित् ॥ तत्-

पर्य्यायः । जरणद्रुमः २ तार्क्ष्यप्रसवः ३

शस्यसम्ब-

रणः ४ धन्यः ५ दीर्घपर्णः ६ कुशिकः ७

कौ-

शिकः ८ । अस्य गुणाः । कटुत्वं । तिक्तत्वं

।

स्निग्धत्वं ।

"उरोविस्फोटपित्तास्रकण्डुशिरादोषा-

र्त्तिनाशित्वञ्च" ॥ इति राजनिर्घण्टः ॥

२८ अस्या गुणाः । कटुत्वं । उष्णत्वं ।

तिक्तत्वं ।

मदगन्धित्वं । बलशुक्रकारित्वं ।

वायुकाशश्वास-

क्षयव्रणजराव्याधिनाशित्वञ्च । इति

रत्नमाला-

राजनिर्घण्टराजवल्लभाः ॥

"गन्धान्ता वाजिनामादिरश्वगन्धा हयाह्वया

।

वाराहकर्णी वरदा वरदा कुष्ठगन्धिनी" ॥

क्वचित्पुस्तके अन्त्यवरदास्थाने वदरीति

पाठः ।

"अश्वगन्धानिलश्लेष्मश्वित्रशोथक्षयापहा

।

बल्या रसायनी तिक्ता

कषायोष्णातिशुक्रला" ॥

इति भावप्रकाशः ॥

("यवाश्वगन्धा यष्ट्याह्वैस्तिलैश्चोद्वर्त्तनं

हितम् ।

शतावर्य्यश्वगन्धाभ्यां पयस्यैरण्डजीवनैः"

॥

इति सुश्रुते ॥

"अश्वगन्धाशु वातघ्नी बल्या वृष्या

रसायणी" ॥

इति वैद्यकद्रव्यगुणः ॥

"पादकल्केऽश्वगन्धायाः क्षीरे दशगुणे

पचेत् ।

घृतं पेयं कुमाराणां पुष्टिकृद्बलबर्द्धनं" ॥

॥ * ॥ अश्वगन्धाघृतं ॥ * ॥

इति वैद्यकचक्रपाणिसंग्रहः ॥)

**अश्वगोयुगं**, क्ली, (द्वावश्वौ । द्वित्वे, अश्व + गोयुगच् ।)

अश्वद्वयं । इति पाणिनिः ॥ एक योडाघोडा

इति भाषा ।

**अश्वगोष्ठं**, क्ली, (अश्वानां स्थानं । गोष्ठजादयः स्थाना-

तस्याधिदेवता सर्पः ॥ यथा । अश्वि-यम दहन-
कमलज-शशि-शूलभृददिति-जीव-फणि-पितरः ।
इत्यादि ज्योतिस्तत्त्वं ॥ सा केतुग्रहस्य जन्मनक्षत्रं ।
यथा, --
"विशाखानलतोयानि वैष्णवं भगदैवतं ।
पुष्या पौष्णं यमः सर्पो जन्मभान्यर्कतः क्रमात्" ॥
इति दीपिका ॥ सा च अधोमुखगणः ।
यथा, --
"अश्लेषवह्नियमपित्र्यविशाखयुक्तं
पूर्ब्बात्रयं शतभिषा च नवाप्युडूनि ।
एतान्यधोमुखगणानि शिवानि नित्यं
विद्यार्घ्यभूमिखननेषु च शोभितानि" ॥
इति ज्योतिस्तत्त्वं ॥ * ॥ तस्या मस्तकोपरि उदये
रात्रिलग्ननिरूपणं यथा, --
"मौलिगे भुजगभे श्वपुच्छके
भङ्गुराकृतिनि सप्ततारके ।
मारकेलिरसिके तुलोदयात्
निर्य्ययुर्ज्जलधिखाक्षिलिप्तिकाः" ॥ ३ । २४ ।
इति कालिदासकृतरात्रिलग्ननिरूपणं ॥ तत्र
जातफलं ॥
"वृथाटनः स्याददितुष्टचेताः
कष्टप्रदश्चापि वृथा जनानां ।
सर्पे सदर्पो हि शठार्पितार्थः
कन्दर्पसन्तप्तमना मनुष्यः" ॥
इति कोष्ठीप्रदीपः ॥

**अश्लेषाभवः**, पुं, (अश्लेषायां भवः ।) केतुग्रहः । इति
हारावली ॥

**अश्वः**, पुं, (अश्नुते मार्गं व्याप्नोति । अशू व्याप्तौ
अशूप्रुषिलटीति क्वन् ।) घोटकः । तत्पर्य्यायः ।
("सालतालाश्वकर्णानां पर्णैर्व्वहुभिरावृताम्" ॥
इति रामायणे ॥
"अश्वकर्णः कषायः
स्याद्व्रणस्वेदकककृमीन् ।
ब्रध्नविद्रधिवाधिर्य्ययीनिकर्णगदान् हरेत्" ॥
इति भावप्रकाशः ॥
"विम्बीफलं साश्वकर्णं स्तन्यकृत् कफपित्तजित् ।
तृड्दाहज्वरपित्तासृक्कासश्वासक्षयापहं" ॥
इति सुश्रुतः ॥)

**अश्वकर्णकः**, पुं, (अश्वकर्ण + स्वार्थे कन् ।) पाल-
वृक्षः । इत्यमरः ॥

**अश्वकिनी**, स्त्री, (अश्वक + इन् + ङीप् ।) अश्विनी-
नक्षत्रं । इति हेमचन्द्रः ॥

**अश्वखुरः**, पुं, (अश्वस्य खुरमिवाकृतिर्यस्य ।) नखी-
नामगन्धद्रव्यं । इति रत्नमाला ॥

**अश्वखुरा**, स्त्री, अपराजितालता । इति राजनिर्घण्टः ॥

**अश्चखुरी**, (स्त्रीं) अपराजितालता । इति शब्द-
माला ॥

**अश्वगन्धा**, स्त्री, (अश्चस्य गन्ध एकदेशोमेढ्रनिव मूल-
मस्याः ।) स्वनामख्यातक्षुद्रवृक्षविशेषः । अश्वगन्ध
इतिख्याता । तत्पर्य्यायः । हयगन्धा २ वाजि-
गन्धा ३ अश्वगन्धिका ४ बल्या ५ तुरगगन्धा ६
कम्बुका ७ अश्वावरोहिका ८ कम्बुकाष्ठा ९ अव-
रोहिका १० वाराहकर्णी ११ तुरगा १२ वनजा
दिषु पशुनामभ्य इति, अश्व + गोष्ठच् ।) अश्व-
स्थानं । आस्तबल् इति आरवीमाषा ।
यथा, --
"पशुभ्यः स्थानद्विषट्के गोष्ठगोयुगषड्गवं ।"
इत्यनेन अश्वशब्दात् गोष्ठप्रत्ययेन निष्पन्नं' ॥
इति मुग्धबोधव्याकरणं ॥

**अश्वग्रीवः**, पुं, (अश्वस्य ग्रीवाइव ग्रीवा यस्य ।)
विष्णुद्वेष्टासुरविशेषः । इति हेमचन्द्रः ॥ (यथाह
भारते ।
"अश्वग्रीवश्च सूक्षश्च तुहुण्डश्च महाबलः" ॥
तत्रैव च ।
"अश्वग्रीव इति ख्यातः पृथिव्यां
सोऽभवन्नृपः" ॥
स्वनामख्यातो वृष्णिवंशीयो नृपतिः सहि चित्र-
कस्य पुत्रो वृष्णिनरपतेः पौत्रः । यथा हरि-
वंशे, --
"चित्रकस्याभवन् पुत्राः पृथुर्व्विप्रथुरेव च ।
अश्वग्रीवोऽश्ववाहुश्व सुपार्श्वकगवेषणौ" ॥)

**अश्वघ्नः**, पुं, (अश्वं हन्तीति । अश्व + हन् + टक् ।)
करवीरपुष्पवृक्षः । इति रत्नमाला ॥

**अश्वतरः**, पुं, स्त्री, (तनुरश्वः । वत्सोक्षाश्वर्षभेभ्यश्च
तनुत्व इति ष्टरच् ।
अश्वेनाश्वायामुत्कन्नोऽश्वः ।
अश्वत्वं च जातिः ।
तत्सहचरितस्योक्तधर्म्मस्य
तनुत्वं अन्यपितृकत्वात् ।) अश्वायां गर्द्दभेन

| पीतिः २ पीती ३ वीतिः ४ घोटः ५<br>घोटकः ६<br>तुरगः ७ तुरङ्गः ८ तुरङ्गमः ९ वाजी १०<br>वाहः<br>११ अर्व्वा १२ गन्धर्ब्बः १३ हयः १४<br>सैन्धवः १५ | १३ वाजिनी १४ हया १५ पुष्टिदा १६<br>बलदा १७<br>पुष्टिः १८ पीवरा १९ पलाशपर्णी २०<br>वातघ्नी २१<br>श्यामला २२ कामरूपिणी २३ काला २४<br>प्रिय-<br>करी २५ गन्धपत्री २६ हयप्रिया २७<br>वाराहपत्री | जातः पशुविशेषः । इति स्मृतिः । खचर<br>इति<br>भाषा । ॥<br>(“हयानश्वतरानुष्ट्रांस्तथैव सुरभेः सुतान्”<br>।<br>इति रामायणे ॥<br>“सकृद्दुष्टं हि यो मित्रं पुनः सन्धातुमिच्छति<br>।<br>स मृत्युमुपगृह्णाति गर्भादश्वतरो यथा” ॥<br>इति पञ्चतन्त्रे ॥) |
|---|---|---|

**अश्वतरः**, पुं, वेगसरः । नागराजविशेषः । इति
मेदिनी ॥
("कम्बलाश्वतरौ चापि नागकालीयकस्तथा" ।
"ऐरावतो महापद्मः कम्बलाश्वतरावुभौ" ॥
इति च महाभारते ॥) गन्धर्व्वविशेषः । पुंवत्सः ।
इति धरणिः ॥

**अश्वत्थः**, पुं, (अश्वत्थं जलमस्यास्ति । मूले सिक्त-
त्वात् । अर्श-आद्यच् । अशृत्थवत्
कामकर्म्मवाते-
रितनित्यप्रचलितस्वभावत्वात्
आशुविनाशित्वेन
श्वोऽपि स्थास्यतीति विश्वासानर्हत्वाच्च
मायामयः
संसारवृक्षः । शाल्मलिवटाद्यपेक्षया न श्वश्चिरं
तिष्ठति अश्वैव तिष्ठति वा । स्था गतिनिवृत्तौ ।
पृषोदरादित्वात् पूर्ब्बोत्तरपदान्ताद्योः सकारयो-
स्तकारौ सुपिस्थ इति कः ।) स्वनामख्यातवृक्ष-
विशेषः । पिपर इति पश्चिमदेशीयभाषा । तत्-
पर्य्यायः । बोधिद्रुमः २ चलदलः ३ पिप्पलः ४
कुञ्जराशनः ५ । इत्यमरः ॥ अच्युतावासः ६
चल-
पत्रः ७ पवित्रकः ८ शुभदः ९ बोधिवृक्षः १०
याज्ञिकः ११ गजभक्षकः १२ श्रीमान् १३
क्षीर-
द्रुमः १४ विप्रः १५ मङ्गल्यः १६ श्यामलः १७
गुह्य-
पुष्पः १८ सेव्यः १९ सत्यः २० शुचिद्रुमः २१
धनु-
वृक्षः २२ । अस्य गुणाः । सुमधुरत्वं । कषायत्वं
।
शीतलत्वं । कफपित्तविनाशित्वं रक्तदाहशमन-
कारित्वञ्च ॥ तत्पक्वफलस्य गुणाः । सद्यो
योनि-
दोषहारित्वं । शीतलत्वं । अतिहृद्यत्वं । पित्तर-
क्तविषार्त्तिदाहच्छर्द्दिशोषारुचिदोषनाशित्वञ्च ।
इति राजनिर्घण्टः ॥
("अश्वत्थोडुम्बरप्लक्षन्यग्रोधानां फलानि च ।
फलेऽम्लमधुरो मूले कषायः
स्वादुमज्जकः" ॥ * ॥
अथ वेलियापिप्पलः ।
"नन्दीवृक्षोऽश्वत्थभेदः प्ररोही
गजपादपः ।
स्थालीवृक्षः क्षयतरुः क्षीरी च
स्याद्वनस्पतिः ॥
नन्दीवृक्षो लघुः स्वादुस्तिक्तस्तुवर
उष्णकः ।
कटुपाकरसो ग्राही
विषपित्तकफास्रनुत्" ॥
इति भावक्रकाशः ॥ * ॥ तस्य
विष्णुस्वरूपत्वं यथा, --
ऋषय ऊचुः ।
"कथं त्वयाश्वत्थवटौ गोब्राह्मणसमौ
कृतौ ।
सर्व्वेभ्योऽपि तरुभ्यस्तौ कथं पूज्यतमौ
कृतौ" ॥
सूत उवाच ॥
"अश्वत्थरूपो भगवान् विष्णुरेव न
संशयः ।
रुद्ररूपो वटस्तद्वत् पलाशो ब्रह्मरूपधृक्
॥
दर्शनस्पर्शसेवासु ते वै पापहराः स्मृताः
।
दुःखापद्व्याधिदुष्टानां विनाशकारिणो
ध्रुवं" ॥
ऋषय ऊचुः ।
"कथं वृक्षत्वमापन्ना ब्रह्मविष्णुमहेश्वराः
।
एतत् कथय सर्व्वज्ञ संशयोऽत्र महान् हि
नः" ॥
सूत उवाच ।
"पार्ब्बतीशिवयोर्दवैः सुरतं कुर्व्वतोः
किल ।
अग्निं ब्राह्मणवेशेन प्रेष्य विघ्नः कृतः
पुरा ॥
स मुनिर्विष्णुवाक्यात्तामङ्गीकृत्य
स्वमाश्रमं ॥
वेदध्वनिसमायुक्तमानयामास धर्म्मवित्
।
होमधूपसुगन्धाढ्यं वेदघोषेन नादितं ॥
आश्रमं तं विलोक्याथ व्यथिता
साब्रवीदिदं ।"
ज्येष्ठोवाच ।
"नहि वासानुरूपोऽयं वेदध्वनियुतो मम
॥
नात्रागमिस्ये भो ब्रह्मन् नयस्वान्यत्र मां
ध्रुवं" ।
उद्दालक उवाच ।
"कथं नायासि किञ्चात्र वर्त्तते स्वमतं
तव ।
तव योग्या च वसतिः का भवेत्तद्वदस्व
मां" ॥
ज्येष्ठोवाच ।
"वेदध्वनिर्भवेद्यस्मिन् अतिथीनाञ्च
पूजनं ।
यज्ञदानादिकं यत्र नैव तत्र वसाम्यहं ॥
परस्परानुरागेण दाम्पत्यं यत्र विद्यते ।
पितृदेवार्च्चनं यत्र तत्र नैव वसाम्यहं ॥
दानशौचे न विद्येते परद्रव्यापहारिणः ।
परदाररता यत्र तत्र स्थाने रतिर्म्मम ॥
वृद्धसज्जनविप्राणां यत्र स्यादवमाननं ।
निष्ठुरं भाषणं यत्र तत्र सम्यग्वसाम्यहं"
॥
सूत उवाच ।
"इति तद्वचनं श्रुत्वा विसन्नवदनोऽभवत्
।
उद्दालकस्ततो वाक्यं तामलक्ष्मीमुवाच
ह" ॥
उद्दालक उवाच ।
"अश्वत्थवृक्षमूलेऽस्मिन् अलक्ष्मीः
श्रम्यतां क्षणं
आश्रमस्थानमालोक्य यावदायाम्यहं
पुनः" ॥

कषायमधुराम्लानि वातलानि गुरूणि च” ॥
इति चरकः ॥
अश्वत्थदेवायतनश्मशान-
बल्मीकसन्ध्यासु चतुष्पथेषु ।
याम्ये सपित्रे परिवर्ज्जनीया
ऋक्षे नरा मर्म्मसु ये च दष्टाः” ॥
इति सुश्रुतः ॥)
अथाश्वत्थवन्दनकालमन्त्राः ।
“अश्वत्थं वन्दयेन्नित्यं पूर्ब्बाह्णे प्रहरद्वये ।
अत ऊद्‌र्ध्वं न वन्देत अश्वत्थन्तु कदाचन ॥
(ॐ) चक्षुस्पन्दं भुजस्पन्दं तथा दुःस्वप्नदर्शनं
।
शत्रूणाञ्च समुत्थानमश्वत्थ शमयाशु मे ॥
अश्वत्थरूपी भगवान् प्रीयतां मे जनार्दनः ।
त्वां दृष्ट्वा नश्यते पापं दृष्ट्वा लक्ष्मीः प्रवर्त्तते ॥
प्रदक्षिणे भवेदायुः सदाश्वत्थ नमोऽस्तु ते” ॥
इति स्मृत्यर्थसारे हलायुधधृतवचनं ॥
गर्द्दभाण्ड-
वृक्षः । इति विश्वः ॥
“बाधिद्रुः पिप्पलोऽश्वत्थश्चलपत्रो गजाशनः ।
पिप्पलो दुर्ज्जरः शीतः पित्तश्लेष्मव्रणास्रजित्
॥
गुरुस्तुवरको रूक्षो वर्ण्यो योनिविशोधनः” ॥ *
॥
अथ पिप्पलभेदः । गजहण्डु इति हिन्दिभाषा ।
“पारिशोन्यः फलीशश्च कपिचूतः कमण्डलुः ।
गर्द्दभाण्डः कन्दरालकपीतनसुपार्श्वकाः ॥
फलीशो दुर्ज्जरः स्निग्धः क्रिमिशुक्रकफप्रदः ।

ततस्तु पार्ब्बती क्रुद्धा शशाप
त्रिदिवौकसः ।
रेतःसेकसुखभ्रंशकम्पमाना तदा रुषा”
॥
पार्ब्बत्युवाच ।
“कृमिकीटादयोऽप्येते जानन्ति सुरतेः
सुखं ।
तस्मान्मम सुखभ्रंशात् यूयं
वृक्षत्वमाप्स्यथ” ॥
सूत उवाच ।
“एवं सा षार्ब्बती देवी अशपत्
क्रुद्धमानसा ।
तस्माद्वृक्षत्वमापन्ना ब्रह्मविष्णुमहेश्वराः
॥
तस्मादिमौ विष्णुमहेश्वरावुभौ
बभूवतुर्बोधिवटौ मुनीश्वराः ।
बोधिस्त्वयं चार्किदिनं विनैव
न संस्पृशेदर्कजवारयोगात्” ॥
इति पाद्मे उत्तरखण्डे १६० अध्यायः
॥ * ॥
ऋषय ऊचुः ।
“अस्पृश्यत्वं कथं जातं सूत बोधितरुः
स्वयं ।
स्पृश्यत्वञ्च कथं प्राप्तस्तथायं
शनिवासरे” ॥
सूत उवाच ।
“समुद्रमथनाद्यानि रत्नान्यापुः
सुरोत्तमाः ।
श्रेष्ठञ्च कौस्तुभं तेष विष्णवे प्रददुः
सुराः ॥
यावदङ्गीचकारासौ लक्ष्मीं
भार्य्यार्थमात्मनः ।
तावद्विज्ञापयामास लक्ष्मीस्तं
चक्रपाणिनं” ॥
लक्ष्मीरुवाच ।
“असंस्कृत्य कथं च्येष्ठां कनिष्ठा
परिणीयते ।
तस्मान्ममाग्रजामेतामलक्ष्मीं मधुसूदन
॥

सूत उवाच ।
“इति तां तत्र संस्थाप्य जगामोद्दालको
मुनिः ।
प्रतीक्षन्ती चिरं तत्र यदा न तं ददर्श सा
॥
तदा रुरोद करुणं भर्तुस्त्यागेन दुःखिता
।
तत्तस्याः क्रन्दितं
लक्ष्मीर्वैकुण्ठभवनेऽशृणोत् ॥
तदा विज्ञापयामास विष्णुमुद्विग्नमानसा”
।
लक्ष्मीरुवाच ।
“स्वामिन् मद्भगिनी ज्येष्ठा स्वामित्यागेन
दुःखिता ।
तामाश्वासयितुं याहि कृपालो यद्यहं
प्रिया” ॥
सूत उवाच ।
“लक्ष्म्या सह ततो विष्णुस्तत्रागात्
कृपयान्वितः ।
आश्वासयन्नलक्ष्मीं तामिदं
वाक्यमथाब्रवीत्” ॥
विष्णुरुवाच ।
“अश्वत्थवृक्षमासाद्य सदालक्ष्मीः
स्थिरा भव ।
ममांशसम्भवो ह्येष आवासस्ते मया
कृतः ॥
मन्दवारे सदा नूनं लक्ष्मीरत्रागमिष्यति ।
अस्पृश्योऽसौ भवेत्तस्मात् मन्दवारं
विना किल” ॥
इति पाद्मे उत्तरखण्डे १६१ अध्यायः ॥
२ ॥
वैशाखमासे तस्य सेचनफलं यथा, --
“वैशाखे सिञ्चयेन्नित्यं
विष्णुमश्वत्थरूपिणं ।
चतुर्वर्गफलावाप्तिहेतवे वैष्णवो जनः ॥
गण्डूषमात्रतोयेन कूर्य्याद्योऽश्वत्थसेचनं
।
सोऽपि याति परं स्थानं विमुक्तः
पापकोटिभिः ॥

| | | |
|---|---|---|
| | विवाह्योद्वाहमां पश्चात् एष धर्म्मः सनातनः ।<br>तस्मात् धर्म्मव्यतिक्रामं न कुर्य्या मधुसूदन ॥<br>इति तद्वचनं श्रुत्वा स बिष्णुर्लोकभावनः ।<br>उद्दालकाय मुनये सुदीर्घतपसे तदा ॥<br>आप्तवाक्यानुरोधेन तामलक्ष्मीं ददौ किल ।<br>स्थूलोष्ठीं शुक्लवदनां विरूपां बिभ्रतीं तनुं ॥<br>खवदारक्तनयनां रूक्षपिङ्गशिरोरुहां । | अश्वत्थमूलं विप्रर्षे यो बध्नाति शिलादिभिः ।<br>अश्वत्थरूपी भगवान् किं तस्मै न हि यच्छति ॥<br>अश्वत्थद्रुममालोक्य प्रणामं कुरुते तु यः ।<br>आयुर्वृद्धिर्भवेत्तस्य वर्द्धन्ते सर्वसम्पदः ॥ |

:यथाश्वत्थतले बिप्र धर्म्मकर्म्म विधीयते ।
न्यूनातिरिक्तता न स्यात्तस्मिन् कर्म्मणि जैमिने ॥
तत्र तीर्थानि सर्व्वाणि त्रिस्रोतादीनि जैमिने ।
यत्राश्वत्थतरुस्तिष्ठेत् एकोऽपि शाखिनां वरः ॥
अश्वत्थपूजको यस्तु स एव हरिपूजकः ।
अश्वत्थमूर्त्तिर्भगवान् स्वयमेव यतो द्विज ॥
तरुज्ञानाद्द्विजश्रेष्ठ योऽश्वत्थं हन्ति मूढधीः ।
संसारे नास्ति तत्कर्म्म यत् कृत्वा स च शुध्यति ॥
अश्वत्थो वृक्षराजोऽयं हरिमूर्त्तिः प्रकीर्त्तितः ।
तस्मादश्वत्थहन्तॄणां त्राता कोऽपि न विद्यते ॥
अश्वत्थं पश्यतो विप्र स्पृशतः स्मरतस्तथा ।
देहस्थं पातकं तस्य हरेत् प्रणमतो हरिः ॥
विलोक्याश्वत्थहन्तारं यः शक्तो न निवारयेत् ।
तन्नेत्रयुग्मं वडिशैर्यमेनोत्पाट्यते स्वयं ॥
अश्वत्थच्छेदनं मूढ मा कुर्विति वदेन्न यः ।
तस्य जिह्वां छुरिकया स्वयं कृन्तति भास्करिः ॥
अश्वत्थशाखामेकां यः स्वल्पामपि निहन्ति यः ।
स कोटिब्रह्महत्यानां फलं प्राप्नोति मानवः ॥
यत्पापं ब्रह्महत्यायां गुरुस्त्रीगमने च यत् ।
स जातमात्रो व्यनदत् यथैवोच्चैःश्रवा हयः ॥
तच्छ्रुत्वान्तर्हितं भूतमन्तरीक्षस्थमब्रवीत् ।
अश्वस्येवास्य यत् स्थाम नदतः प्रदिशो गतम् ॥
अश्वत्थामैव बालोऽयं तस्मान्नाम्ना भविष्यति” ।)

**अश्वत्थी**, स्त्री, (क्षुद्रोऽश्वत्थः । अश्वत्थ + अल्पार्थे ङीप् ।) वृक्षविशेषः । पिप्पली इति लोके । तत्पर्य्यायः । लघुपत्री २ पवित्रा ३ ह्रस्वपत्रिका ४ पिप्पलीका ५ वनस्था ६ अश्वत्थिका ७ । अस्या गुणाः । मधुरत्वं । कषायत्वं । अम्लपित्तनाशित्वं । विषदाहप्रशमनकारित्वं । गुर्व्विण्या हितकारित्वञ्च ॥ इति राजनिर्घण्टः ॥

**अश्वदंष्ट्रा**, स्त्री, (अश्वस्य दंष्ट्रा इव आकृत्या ।) गोक्षुरवृक्षः । इत्यमरः ॥

**अश्वन्तं**, क्ली, (अशू-(सू)-नामन्तो यस्मिन् ।) अशुभं । क्षेत्रं । चुल्ली । अनवधि । मृतं । इति हेमचन्द्रः ॥

**अश्वपालः**, पुं, (अश्वान् पालयतीति, अश्व + पाल + कर्म्मणि उपपदे अण् प्रत्ययः ।) घोटकरक्षकः । इति अश्वपालिकशब्दटीकायां दुर्गादासः ॥ सैस् इति आरवीभाषा । (“दत्तातङ्कोऽङ्गनानामनुसृतसरणिः संभ्रमादश्वपालैः प्रभ्रष्टोऽयं प्लवङ्गः प्रविशति नृपतेर्मन्दिरं मन्दुरायाः” इति रत्नावल्याम् ।)

**अश्वपुच्छी**, स्त्री, (अश्वस्य पुच्छमिव केशरोऽस्याः ।) माषपर्णीवृक्षः । इति राजनिर्घण्टः ॥

**अश्वबालः**, पुं, (अश्वस्य बाल इव । काशस्य पुष्पं अश्वबालवत् विभाति ।) काशः । केश्या इति भाषा । इति त्रिकाण्डशेषः ॥

**अश्वमहिषिका**, स्त्री, (अश्वमहिषयो वैरम् । द्वन्द्वाद्वुन् वैरमैथुनिकयोरिति अश्वमहिष + वुन् ।) अश्वमहिषयोर्नित्यवैरं । इति शब्दरत्नावली ॥

**अश्वमारः** पुं, (अश्वं मारयति । अश्व + मृ +

यथा । आपस्तम्बः ।
“राजा सार्व्वभौमः अश्वमेधेन यजेत नाप्यसार्व्वभौमः” । इति ॥
प्रायश्चित्तात्मकाश्वमेधो यथा । विष्णुः ।
“अनुपातकिनस्त्वेते महापातकिनो यथा ।
अश्वमेधेन शुध्यन्ति तीर्थानुसरणेन वा” ॥
अपि च ।
“अश्वमेधेन शुध्यन्ति महापातकिनस्त्विमे” ।
इति विष्णूक्ताश्वमेधस्य प्रायश्चित्तत्वम् । पापक्षयस्वर्गोभयसाधकस्य तु तस्यापि न प्रायश्चित्तत्वम् ।
इति प्रायश्चित्ततत्त्वम् ॥ ० ॥ कलौ तस्य निषेधो यथा वृहन्नारदीये ।
“दीर्घकालं ब्रह्मचर्य्यं नरमेंधाश्वमेधकौ ।
महाप्रस्थानगमनं गोमेधञ्च तथा मखं ॥
इमान् धर्म्मान् कलियुगे वर्ज्यानाहुर्म्मनीषिणः” ।
इत्युद्वाहतत्त्वम् ॥ अन्यच्च । ब्रह्मपुराणम् ।
“नराश्वमेधौ मद्यञ्च कलौ वर्ज्या द्विजातिभिः” ।
इति तिथ्यादितत्त्वम् ॥ ० ॥ तत्फलजनककर्म्माणि यथा, --
“वैशाखे मासि यः कुर्य्यात् प्रपां माधवतुष्टये ।
दिने दिनेऽश्वमेधस्य फलं प्राप्नोति मानवः” ॥

सुरापाने तथास्तेये न्यासापहरणे तथा ॥
यत्पापं भ्रूणहत्यायां गोहत्यायां द्विजोत्तम ।
स्त्रीहत्यायाञ्च यत्पापं परस्त्रीगमने तथा ॥
शरणागतहत्यायां हत्यायां सुहृदां तथा ।
विश्वासवाक्याकथने परहिंसाविधौ च यत् ॥
यत् पापं परनिन्दायां हरिवासरभोजने ।
अश्वत्थच्छेदनाद्घोरं तत् पापं प्राप्यते जनैः ॥
विष्णुमूर्त्तेर्ज्जनो मोहादश्वत्थस्य निहन्ता यः ।
तत्तुल्यः पातकी कोऽपि न श्रुतः क्षितिमण्डले ॥
वदाम्यश्वत्थमाहात्म्यं सर्व्वपापप्रणाशनं ।
साक्षादेव स्वयं विष्णुरशत्थोऽखिलविश्वराट् ॥
तद्भक्तिं कुर्वतः पुंसो विद्यते नाशुभं क्वचित् ।
अश्वत्थं सेवते यस्तु विष्णबुद्ध्या नरोत्तमः ॥
तस्य प्रसन्नो भगवान् ददाति परमं पदं" ।
इति पाद्मे क्रियायोगसारे अश्वत्थसेचनं नाम
११ अध्यायः ॥
(अस्थिररूपः संसारवृक्षः । यथा, गीतायाम् ।
"ऊद्ध्वमुलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्" ॥
विस्तरस्तु गीतायाः पञ्चदशेऽध्याये द्रष्टव्यः ॥)

णिच् + अण् ।) करवीरवृक्षः । इति शब्दरत्नावली ॥ ("लाक्षारेवतकुटजाऽश्वमार-कटफलहरिद्राद्वयनिम्बसप्तच्छदमालत्यस्त्रायमाणा चेति" । इति सुश्रुते ॥

**अश्वमारकः** पुं, (अश्वं मारयति । अश्व + भृ +

णिच् + अण् ।) करवीरवृक्षः । इति शब्दरत्नावली ॥ ("लाक्षारेवतकुटजाऽश्वमार-कटफलहरिद्राद्वयनिम्बसप्तच्छदमालत्यस्त्रायमाणा चेति" । इति सुश्रुते ॥
"करवीरः श्वेतपुष्पः शतकुम्भोऽश्वमारकः" ।
इति भावप्रकाशः ॥
"तत्र क्लीतकाश्ममारगुञ्जेत्यादि ।
सुश्रुतस्य कल्पस्थानेऽभिहितं ॥")

**अश्वमुखः**, पुं, (अश्वस्य मुखमिव मुखं यस्य । किन्नरः ।

इति हलायुधः ॥ (स्त्री, किन्नरी । किम्पुरुषस्त्री । यथा कुमारे ।
"न दुर्व्वहश्रोनिपयोधरार्त्ता
भिन्दन्ति मन्दां गतिमश्वमुख्यः" ॥)

**अश्वमेधः**, पुं, (अश्वः मेध्यते हिंस्यते यत्र । मेध-

हिंसने + घञ् ।) यज्ञविशेषः । इति जटाधरः ॥ यत्र लक्षणविशेषाक्रान्तमश्वं संप्रोक्ष्य कपाले जयपत्रं बद्ध्वा त्यजेत् तद्रक्षार्थं पुरुषविशेषं नियोजयेत् संवत्सरान्ते अश्वे आगते सति अथवा केनापि संबद्धे युद्धं कृत्वा तमानीय यथाविधि बधं कृत्वा तद्वपया होमः कर्त्तव्यः । कामनानुसारेणतत्फलं । मोक्षः ब्रह्महत्यापापक्षयः स्वर्गश्च ।

इति पाद्मे क्रियायोगसारे ११ अध्यायः ॥
अपि च ब्रह्माण्डे ॥
"स्नानन्तु भक्त्या गङ्गायां कर्तुकामस्य गच्छतः ।
पदे पदेऽश्वमेधस्य फलं मर्त्त्यस्य जायते" ॥
इति प्रायश्चित्ततत्त्वम् ॥

**अश्वमेधिकः**, पुं, (अश्वमेधाय हितः । अश्वमेध +

ठक्, ठन् वा ।)
अश्वमेधयागोपयुक्तघोटकः ।
इति जटाधरः ॥ (क्लीवलिङ्गे स्वनामख्यातं महा-भारतान्तर्गतं चतुर्द्दशपर्ब्ब । यथा, --
"ततोऽश्वमेधिकं पर्ब्ब सर्वपापप्रणाशनम्" ।
"ततोऽश्वमेधिकं पर्ब्ब प्रोक्तं तच्च चतुर्दशम्" ।)

**अश्वमेधीयः**, पुं, (अश्वमेधाय हितः । अश्वमेध +

छ ।) अश्वमेधयज्ञीयाश्वः ।
तत्पर्य्यायः ययुः २ ।
इत्यमरः ॥ तस्य लक्षणम् ।
"कालाम्भोधरसङ्काशः स्वर्णवर्णमुखो बली ।
यस्य पार्श्वावुभावर्द्धचन्द्राकारौ सुशोभनौ ॥
पुच्छं विद्युत्प्रतीकाशमुदरं कुन्दसन्निभं ।
पादाश्चैव हरिद्वर्णाः कर्णौ सिन्दूरसन्निभौ ॥
ज्वलदग्निनिभा जिह्वा चक्षुषी भास्करोपमे ।
विराजितो रोमराज्या सानुलोमविलोमया ॥
विचित्रैर्विविधैर्वर्णैश्चित्रो रजतविन्दुभिः ।

**अश्वत्थभेदः**, पुं, (अश्वत्थस्य भेदो विभिन्नता यस्मिन् ।)

स्थालीवृक्षः । इति राजनिर्घण्टः ॥

**अश्वत्था**, स्त्री, पूर्णिमातिथिः । इति मेदिनी ॥

**अश्वत्थामा**, [न्,] पुं, (अश्वस्येव स्थाम बलं यस्य ।

पृषोदरादिवत् सस्य तः । अथवा अश्व इव
तिष्ठति युद्धे । अश्व + स्था + मनिन् ।) द्रोणा-
चार्य्यपुत्त्रः । स तु चिरजीवी महारथी च ।
तत्पर्य्यायः । कृपीसुतः २ द्रौणायनः ३ । इति
त्रिकाण्डशेषः ॥ द्रौणिः ४ । इति स्मार्त्ताः ॥ वृद्ध्य-
भावे द्रोणिः ५ ॥ (अयं खलु जात एव अश्वैव
नमाद अतोऽस्य अश्वत्थामेति नाम । तथा च
भारते ।
“अलभत् गौतमीपत्त्रमश्वत्थामानमेव च ।

यो वेगे वायुतुल्यः
स्यादुच्चैरुच्चैःश्रवा यथा ॥
यस्य गात्रोद्भवो गन्धो गन्धर्ब्बमपि मोहयेत् ।
एवं लक्षणसंयुक्तो यज्ञीयः पशुरुच्यते ॥
अश्वस्य पालकश्चातिबलवान् पुत्त्र उच्यते ।
पुत्त्रतुल्यः सुहृद्वापि बहुविघ्नः क्रतूत्तमः” ॥
इति वाशिष्ठरामायणम् ॥

**अश्वयुक्**, [ज्] स्त्री, (अश्वं युनक्ति रूपेणानुकरोतीति

अश्व + युज् + क्विप् ।)
अश्विनीनक्षत्रं । इत्यमरः ॥

**अश्वयुक्**, [ज्] पुं, (अश्वेन नक्षत्रेण युक् युक्ता पौर्ण

मासी अस्त्यस्मिन ।) आश्विनमासः ।

**अश्वयुजः** मासी अस्त्यस्मिन ।) आश्विनमासः ।

:इति शब्दरत्नावली ॥ ("अश्वयुक् कृष्णपक्षे तु
श्राद्धं कुर्य्यादिति स्मृतिः" ।
भाद्रपदाश्वयुजौ वर्षाः ।
इति सुश्रुतः ।)
इति शब्दरत्नावली ॥ ("अश्वयुक् कृष्णपक्षे तु
श्राद्धं कुर्य्यादिति स्मृतिः" ।
भाद्रपदाश्वयुजौ वर्षाः ।
इति सुश्रुतः ।)

**अश्वरक्षः**, पुं, (अश्वान् रक्षतीति । अश्व + रक्ष +
अण् ।) घोटकरक्षकः । अश्वपालः । इति जटा-
धरः ॥

**अश्वरोधकः**, पुं, (अश्वान् रुणद्धि । अश्व + रुध् +
ण्वुल् ।) करवीरवृक्षः । इति राजनिर्घण्टः ॥

**अश्वलाला**, स्त्री, (अश्वस्य लालेवाकारेण ।) सर्प-
विशेषः । तत्पर्य्यायः । हलाहलः २
ब्रह्मसर्पः ३ ।
इति त्रिकाण्डशेषः ॥

**अश्ववक्त्रः**, पुं, (अश्वस्य वक्त्रमिव वक्त्रं यस्यं ।) किन्नरः ।
इति शब्दरत्नमाला ॥

**अश्ववडवं**, क्ली, अश्ववडवानां समाहारः । अश्ववड-
वयोर्द्वन्द्वे अश्ववडवौ । अश्ववडवानां द्वन्द्वे अश्व-
वडवाः । इत्यमरटीकायां भरतः
सारसुन्दरी च ।
घोडा घुडीर समाहारद्वन्द्वसमासे
क्लीवलिङ्गेर
एकवचन हय इतरेतरद्वन्द्वे पुंलिङ्गेर द्विवचन बहु-
वचन हय इति भाषा ॥

**अश्ववहः**, पुं, (अश्वेन उह्यते यः सः । अश्व + वह +

**अश्वशृगालिका** स्त्री, (अश्वशृगालयोर्वैरम् । द्वन्द्वा
द्वुन् वैरमैथुनिकयोरिति वुन् ।)
अश्वशृगालयो-
र्वैरम् । इति शब्दरत्नावली ॥

**अश्वषड्गवं**, क्ली, (अश्व + षङ्गवच् ।) अश्वषट्कं ।
षडश्वाः । इति पाणिनिः ॥

**अश्वसेननृपनन्दनः**, पुं, (अश्वसेनो नृपस्तस्य नन्दनः ।)
सनत्कुमारः । इति हेमचन्द्रः ॥

**अश्वा**, स्त्री, (अश्व + टाप् ।) घोटकी । घुडी इति
भाषा । तत्पर्य्यायः । वामी २ वडवा ३ ।
इत्यमरः ॥

**अश्वारिः**, पुं, (अश्वानामरिः ।) महिषः । इति
जटाधरः ॥

**अश्वारूढः**, पुं, (अश्व आरूढो येन ।) अश्वारोहः ।
घोटकोपरि कृतारोहणः । यथा ।
"अश्वारोहास्तु
सादिनः" । इत्यमरः ॥ द्वे अश्वारूढे ।
अश्वमारो-
हन्ति अश्वारोहाः ढात् षण् । सादयन्ति श्रम-
यन्ति अश्वान् सादिनः ग्रहादित्वात् णिन् । इति
तट्टीकायां भरतः ॥

**अश्वारोहः**, त्रि, (अश्वमारोहतीति । अश्व + आ +
रुह + अण् ।) अश्वपृष्ठस्थितयोद्धा ।
घोडसोयार
इति भाषा । तत्पर्य्यायः । सादी २
इत्यमरः ॥
अश्ववहः ३ । इति जटाधरः ॥ अश्ववारः ४
तुरगी ५ । इति हेमचन्द्रः ॥

अश्वीभूतसंज्ञानामसूर्य्यपत्न्याः
यमजपुत्रौ । तौ
देवचिकित्सकौ । (यथा हरिवंशे,
"विवस्वान् कश्यापाज्जज्ञे
दाक्षायण्यामरिन्दम ! ।
तस्य भार्य्याभवत्संज्ञा त्वाष्ट्री देवी
विवस्वतः" ॥
"देवौ तस्यामजायेतामश्विनौ भिषजां
वरौ" ।)
नित्यद्विवचनान्तशब्दोऽयं ।

**अश्विनीपुत्रौ**, पुं, (अश्विन्याः पुत्रौ ।) स्वर्व्वैद्यौ । इति
हेमचन्द्रः ॥

**अश्विनीसुतौ**, पुं, (अश्विन्याः सुतौ ।) अश्विनीपुत्रौ ।
तयोः पर्य्यायः । स्वर्वैद्यौ २ अश्विनौ ३
दस्रौ ४
नासत्यौ ५ आश्विनेयौ ६ । इत्यमरः ।
नासिक्यौ ७
गदागदौ ८ । इति जटाधरः ॥ पुष्करस्रजौ
९ ।
रति शब्दरत्नावली ॥

**अश्विनौ**, पुं, (प्रशस्ता अश्वाः सन्ति ययोः । इनिः ।
यद्वा, अश्विन्याम् जातौ । सन्धिवेलेत्यणो नक्ष-
त्रेभ्यो बहुलमिति लुकि लुक्तद्धितलुकीति ङीपो
लुक् ॥) अश्विनीकुमारौ । इत्यमरः ॥
("त्वाष्ट्री तु सवितुर्भार्य्या
वडवारूपधारिणी ।
असूयत महाभागा सान्तरीक्षेऽश्विनावुभौ" ॥
इति महाभारते ।
"किमश्विनौ सोमरसं पिपासू" ।
इति भट्टौ ।)

अच् ।) अश्ववाहकः । इति जटाधरः । घोड-
सओयार इति भाषा ॥

**अश्ववारः**, पुं, (अश्वं वारयतीति । अश्व + वृ +
अण् ।) सादी । इति हेमचन्द्रः । घोडसओयार
इति भाषा ॥ ("परस्परोत्पीडितजानुभागा
दुःखेन निश्चक्रमुरश्ववाराः" ।
इति माघे ।)

**अश्ववारणः**, पुं, (अश्वं वारयति + अश्व + वृ + णिच्
+ ल्यु ।) गलकम्बलरहितगोसदृशपशुविशेषः ।
तत्पर्य्यायः । गवयः २ वनगवः ३ गोसदृक्षः ४ ।
इति हेमचन्द्रः ॥

**अश्ववित्**, [द्] पुं, (अश्वं अश्वविद्यां वेत्तीति ।
अश्व + विद् + क्विप् ।) नलराजः । इति त्रि-
काण्डशेषः ॥ (नलस्य राज्ञोऽश्वविद्याज्ञता वर्णिता
भारते । यथा ।
"बाहुकस्तमुवाचाथ देहि विद्यामिमां मम ।
मत्तोऽपि चाश्वहृदयं गृहाण पुरुषर्षभ ! ॥
ऋतुपर्णं ततो राजा बाहुकं कार्य्यगौरवात् ।
हयज्ञानस्य लोभाच्च तं तथेत्यब्रवीद्वचः ॥
यथोक्तं त्वं गृहाणेदमक्षाणां हृदयं परं ।
निक्षेपो मेऽश्वहृदयं त्वयि तिष्ठतु बाहुक" ॥
बाहुको बाहुकवेशधारी नलः ।)

**अश्ववद्यः**, पुं, घोटकचिकित्सकः । सालोतरी इति
हिन्दिभाषा । अश्वस्य वैद्यः इति षष्ठीतत्पुरुष-
समासनिष्पन्नः ॥

**अश्वशाला**, स्त्री, घोटकगृहं । घोडार पाइशाल ।
आस्तवल् इति भाषा । यथा वाजिशाला तु

**अश्वारोहा**, स्त्री, अश्वगन्धावृक्षः । अश्ववाहके त्रि ।
इति मेदिनी ॥ (अश्वगन्धाशब्देऽस्याः गुणा
व्याख्याताः ।)

**अश्वारोही**, [न्] त्रि, अश्वारोहणविशिष्टः । अश्वा-
रूढः । अश्वारोहणकर्त्ता । अश्वारोहणशीलः ॥
घोडसोयार इति भाषा । अश्वमारोढुं शील-
मस्येत्यर्थे णिन्प्रत्ययेन निष्पन्नः ॥

**अश्वावरोहकः**, पुं, अश्वगन्धावृक्षः । इति रत्नमाला ।

**अश्वाक्षः**, (अश्वस्याक्षीव ।) देवसर्षपवृक्षः । इति
राजनिर्घण्टः ॥

**अश्विनी**, स्त्री, (अश्वः अश्वरूपं विद्यते यस्याः । अश्व
+ इन् + ङीप् ।) सप्तविंशतिनक्षत्रान्तर्गतप्रथम-
नक्षत्रं । अश्विन्यादयो रेवत्यन्ताः सप्तविंशति-
तारा दक्षस्यापत्यत्वात् दाक्षायण्य उच्यन्ते । तत्प-
र्य्यायः । अश्वयुक् २ दाक्षायणी ३ । इत्यमरः ॥
सा चन्द्रस्य भार्य्या । नवपादात्मकमेषराशेरादि-
चतुष्पादरूपा च ॥ अस्या रूपं । घोटकमुखा-
कृतितारात्रयात्मकं । अस्या अधिष्ठात्री देवता
अश्वारूढपुरुषः । इति ज्योतिःशास्त्रं । तस्यां
जातफलं । "सदैव देवाभ्युदितो विनीतः सत्त्वा-
न्वितः प्राप्तसमस्तसम्पत् । योषाविभूषात्मज-

("अश्विनौ देवभिषजौ यज्ञवाहाविति स्मृतौ ।
दक्षस्य हि शिरश्छिन्नं पुनस्ताभ्यां समाहितं ॥
प्रशीर्णा दशनाःपूष्णो नेत्रे नष्टे भगस्य च ।
वज्रिणश्च भुजस्तम्भस्ताभ्यामेव चिकित्सितः ॥
चिकित्सितस्तु शीतांशुर्गृहीतो राजयक्ष्मणा ।
सोमान्निपतितश्चन्द्रः कृतस्ताभ्यां पुनः सुखी ॥
भार्गवश्च्यवनः कामी वृद्धः सन् विकृतिं गतः ।
वीतवर्णस्वरोपेतः कृतस्ताभ्यां पुनर्युवा ॥
एतैश्चान्यैश्च बहुभिः कम्मभिर्भिषगुत्तमौ ।
बभूवतुर्भृशं पूज्याविन्द्रादीनां महात्मनां ॥
ग्रहास्तोत्राणि मन्त्राणि तथान्यानि हवींषि च ।
धूम्राश्च पशवस्ताभ्यां प्रकल्प्यन्ते द्विजातिभिः ॥
प्रातश्च सवने सोमं शक्रोऽश्विभ्यां सहाश्नुते ।
सौत्रामण्याञ्च भगवानश्विभ्यां सह मोदते ॥
इन्द्राग्नी चाश्विनौ चैव स्तूयन्ते प्रायशो द्विजैः ।
स्तूयन्ते वेदवाक्येषु न तथान्या हि देवताः ॥
अमरैरजरैस्तावद्विबुधैः साधिपैर्ध्रुवैः ।
पूज्येते प्रयतैरेवमश्विनौ भिषजाविति ॥"
इति चरकः ॥
"श्रूयते हि यथा रुद्रेण यज्ञस्य शिरश्छिन्नमिति
ततो देवा अश्विनावभिगम्योचुः । भगवन्तौ नः
श्रेष्ठतमौ युवां भविष्यथः । भवद्भ्यां यज्ञस्य शिरः

मन्दूरा । इत्यमरः ॥ द्वे अश्वावस्थानगृहे । वाजिनो
ऽश्वस्य शाला गृहं वाजिशाला ।
अश्वशालादि च ।
इति तट्टीकायां भरतः ॥
(“कोषागारमायुधा-
गारमश्वशालां हस्तिशालाञ्च” । इति भारते ।)

भूरितोषः स्यादश्विनीजन्मनि मानवस्य” । इति
कोष्ठीप्रदीपः ॥ तस्य मस्तकोपरि उदये कर्कट-
लग्नस्य १ । ३० त्रिंशत्पलाधिकदण्डैको गतो भ-
वति । यथा । “तन्वि घोटकमुखाकृतौ त्रिभे
मस्तकोद्ध्र्वपथभाजि वाजिनि । चारुचन्द्रमुखि
कर्कटोदयात् निर्गता गगनरन्ध्रलिप्तिका” ॥ इति
श्रीकालिदासकृतरात्रिलग्ननिर्णयः ॥

**अश्विनीकुमारौ**, पुं, (अश्विन्या अश्वीभूतसंज्ञानाम-

सूर्य्यपत्न्याः यमजौ कुमारौ ।)
अश्विनीसुतौ ।

सन्धातव्यं । तावूचतुरेवमस्त्विति । अथ तयोरर्थे
देवा इन्द्रं यज्ञभागेन प्रासादयन् । ताभ्यां यज्ञम्य
शिरः संहितमिति” ॥ इति सुश्रुतः ॥)

**अश्वीनः**, त्रि, एकाश्वकरणकदिनैकगम्यस्थानादिः ।

आश्विन इत्यमरः ॥ वृद्ध्यभावपक्षे
अश्विनः ॥

**अश्वीयं**, क्ली, (अश्वानां समूहः । अश्व + छ ।) अश्व-

वृन्दं । अश्वसमूहः । तत्पर्य्यायः । आश्वं २ । इत्य-
मरः ॥

**अश्वीयः**, त्रि, (अश्वाय हितः । अश्व + छ ।) अश्व-

हितकारी ॥ इति मेदिनी ॥ अश्वसम्बन्धीयः ॥

**अष** ञ् (भ्वादिं-उभं-सकं-सेट् ।) दीप्तौ । ग्रहणे ।

गतौ । इति कविकल्पद्रुमः ॥ ञ् अषति अषते ।
इति दुर्गादासः ॥

**अषडक्षीणः**, त्रि, (अविद्यमानानि षडक्षीणि यत्र ।

अषडक्षाशितङ्ग्वलङ्कर्मेति स्वार्थे खः । अक्षि-
शब्दोऽत्र श्रोत्रेन्द्रिये वर्त्तते । बहुब्रीहौ सक्-
थ्यक्ष्णोरिति षच् ।) यो मन्त्रादिर्द्वाभ्यां क्रियते
न
तृतीयादीनां गोचरः । इत्यमरः । दुइजने करा
मन्त्रणा इति भाषा ॥

**अषाढः**, पुं, (अषाढया युक्ता पौर्णमासी आषाढी,

सा यत्र मासे अण् वा ह्रस्वः । आषाढी पूर्णिमा
प्रयोजनमस्य । प्रयोजनार्थे अण् ।) आषाढ-
मासः । व्रते पालाशदण्डः । इत्यमरटीकाधृत-
द्विरूपकोषः ॥

**अषाढकः**, पुं, (अषाढ + स्वार्थ कन् ।) आषाढमासः ।

इति शब्दमाला ॥

**अष्ट**, [न्] त्रि, (अश्नुते अशू व्याप्तौ कन् ।) सप्यशूभ्यां

तुट् चेति कनिन् ।) संख्याविशेषः । ८ आट
इति
भाषा । नित्यबहुवचनान्तशब्दोऽयं । इति
व्याक-
रणं ॥ अथाष्टवाचकशब्दाः । योगाङ्गं १ वसुः २
शिवमूर्त्तिः ३ दिग्गजः ४ सिद्धिः ५ ब्रह्मश्रुतिः
६
व्याकरणं ७ दिक्पालः ८ अहिः ९ कुलाद्रिः
१०
ऐश्वर्य्यं ११ । इति कविकल्पलता ॥

**अष्टकः**, त्रि, (अष्टावध्यायाः परिमाणमस्य । अष्टन्

+ कन् ।) अष्टसंख्या । अष्ट एवाष्टकः स्वार्थे
क-

वैश्वदेवकी च । मांसैः पशोः । तथा
च गोभिलः ।
"यद्युवाल्पतरसम्भारः स्यात्तदापि
पशुनैव कु-
र्य्यात्" इति । यद्युवेति
निपातसमुदायो यद्यर्थे
पशुरपि छाग एव । छागोऽनादेशे
पशुः । इति
गौतमात् । न च तैष्या
ऊद्‌र्ध्वमष्टम्यां गौः । इति
गोभिलसूत्रेण गवोपदेशात्
कथमनुपदिष्टत्व-
मिति वाच्यं । तदसम्भवे
पशुरित्यनेन यः पशु-
रुपदिष्टस्तस्य
विशेषतोऽनुपदिष्टत्वात् । तैषी
पौषी । वस्तुतस्तु हरिवंशे मृगोऽपि
विहितः ।
यथा, --
"इक्ष्वाकुस्तु विकुक्षिं वै
अष्टकायामथादिशत् ।
मांसमानय श्राद्धाय मृगं हत्वा
महाबलः" ॥
इति । स्त्रिया बधाभावमाह सएव ।
"अबध्याञ्च स्त्रियं
प्राहुस्तिर्य्यग्योनिगतामपि" ।
एतदर्द्धं ब्रह्मपुराणेऽपि ।
आरण्यानामगस्त्य-
प्रोक्षितत्वं वक्ष्यते । पश्वभावे
स्थालोपाकेन । यथा
गोभिलः । "अपि वा स्थालीपाकं
कुर्ब्बीत" ।
इति । तद्विधानन्तु ।
"स्थालीपाकं पशुस्थाने
कुर्य्याद्यद्यानुकल्पिकं ।
श्रपयेत्तं सवत्सायास्तरुण्या गोः
पयस्यनु" ॥

अमावास्याष्टमांशे च ततः किल भवेदणुः" ॥
इति श्राद्धतत्त्वं ॥ अपि च ।
"सावर्णिः सूर्य्यतनयो यो मनुः कथ्यतेऽष्टमः
।
निशामय तदुत्पत्तिं विस्तराद्गदतो मम" ॥
इति देवीमाहात्म्यं ॥

**अष्टमङ्गलं**, क्ली, (अष्टप्रकारं मङ्गलम् ।) अष्टप्रकार-

मङ्गलद्रव्यं । तद्यथा, --
"मृगराजो वृषो नागः कलसो व्यजनन्तथा ।
वैजयन्ती तथा भेरी दीप इत्यष्टमङ्गलं" ॥
इति वृहन्नन्दिकेश्वरपुराणोक्तदुर्गोत्सवपद्धतौ
॥
"लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो
गौर्हुताशनः ।
हिरण्यं सर्पिरादित्य आपो राजा तथा ष्टमः"
॥
इति शुद्धितत्त्वं ॥

**अष्टमङ्गलः**, पुं, (अष्टौ मङ्गलानि शुभचिह्नानि

यस्मिन् ।)
श्वेतवर्णमुखवक्षःखुरकेशपुच्छयुक्तघो-
टकः । इति हेमचन्द्रः ॥

**अष्टमङ्गलघृतं**, क्ली, (अष्टाभिः मङ्गलजनकद्रव्यैः
कृतं

यद्घृतं ।) अष्टौषधयुक्तपक्वघृतं । यथा, --
"वचा कूष्ठं तथा ब्राह्मी सिद्धार्थकमथापि च ।
सारिवा सैन्धवञ्चैव पिप्पली घृतमष्टमं ॥
सिद्धं घृतमिदं मेध्यं पिबेत् प्रातर्द्दिने दिने ।
दृढस्मृतिः कुमाराणां पिबतामष्टमङ्गलं" ॥
इति भावप्रकाशः ॥

**अष्टमानं**, क्ली, (अष्टौ मुष्टयः परिमाणमस्य ।)
कुडव-

परिमाणं । शरावार्द्धं । इति वैद्यकपरिभाषायां
॥
("प्रसृतिभ्यामञ्जलिःस्यात्
कुडवोऽर्द्धशरावकः ॥

प्रत्ययः । अष्टसंख्याविशिष्टं यथा, -- “गङ्गाष्टकं पठति यः प्रयतः प्रभाते बाल्मीकिना विरचितं सुखदं मनुष्यः” । इति बाल्मीकीयगङ्गाष्टकं ॥ अपि च ।
“अच्युतं केशवं विष्णुं हरिं सत्यं जनार्द्दनं ।
हंसं नारायणञ्चैव एतन्नामाष्टकं शुभं” ॥
इति ब्रह्मपुराणे श्रीविष्णुनामाष्टकं स्तोत्रं ॥

**अष्टकर्णः**, पुं, (अष्टौ कर्णा यस्य ।) ब्रह्मा । इति शब्दरत्नावली ॥

**अष्टका**, स्त्री, (अश्नन्ति पितरोऽस्याम् । अश् + तकन् ।) श्राद्धविशेषः । तिथिभेदः । तद्यथा । गौणचान्द्रपौषमाघफाल्गुनमासीयकृष्णाष्टमी । आश्विनकृष्णाष्टमी च । एतासु श्राद्धमावश्यकं ।
यथा । आग्रहायण्या ऊद्‌ध्वं तिसृषु कृष्णाष्टमोषु श्राद्धानि नित्यानि । यथा गोभिलः ।
“अष्टका योद्‌र्ध्वमाग्रहायण्यास्तमिस्राष्टमी” ।
इति । ब्रह्मपुराणे ।
“पित्र्यदानाय मूले स्युरष्टकास्तिस्र एव च ।
कृष्णपक्षे वरिष्ठा हि पूर्ब्बा चैन्द्रो विभाव्यते ॥
प्राजापत्या द्वितीया स्यात् तृतीया वैश्वदेवकी ।
आद्या पूपैः सदा कार्य्या मांसैरन्या भवेत्तथा ॥
शाकैः कार्य्या तृतीया स्यादेष द्रव्यगतो विधिः” ।
मूले प्रधानस्थाने अमावास्यायां अमावास्या हि श्राद्धस्य प्रधानकालस्तद्वदिति यावत् । ऐन्द्री साग्नेरिन्द्रदेवताकयागसम्बन्धात् । एवं प्राजापत्था इति छन्दोगपरिशिष्टोक्तं ग्राह्यं । अन्विति ओदनचरोः पश्चात् । अतएव सातातपः ।
“नवोदके नवान्ने च गृहप्रच्छादने तथा ।
पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च ॥
तस्माद्दद्यात् सदा युक्तो विद्वत्सुं ब्राह्मणेषु च” ।
तस्मादन्नं प्रधानं ।
पूपादिकन्तूपकरणत्वेन शक्तानामावश्यक उभयत्र सदेति श्रवणात् । तथा च ।
“नित्यं सदा यावदायुर्न कदाचिदतिक्रमेत् ।
उपेत्यातिक्रमे दोषश्रुतेरत्यागदर्शनात् ॥
फलाश्रुतेर्व्वीप्सया च तन्नित्यमिति कीर्त्तितं” ।
इति तिथ्यादितत्त्वम् ॥
गोणचान्द्रपौषस्य कृष्णाष्टमी पूपाष्टका । गौणचान्द्रमाघस्य कृष्णाष्टभी मांसाष्टका । गौणचान्द्रफाल्गुनस्य कृष्णाष्टमी शाकाष्टका । केषाञ्चिन्मते गौणचान्द्राश्विनस्य कृष्णाष्टमी अष्टकापदवाच्या । तासु क्रमात् पूपमांसशाकैः षाट्पौरुषिकं श्राद्धं कर्त्तव्यं । इति ब्रह्मवायुविष्णुधर्म्मोत्तरपुराणानि ॥

**अष्टकाङ्गं**, क्ली, (अष्टकमङ्गमस्य ।) नयपीठी । इति त्रिकाण्डशेषः ॥ पाशार छक् इति भाषा ।
अष्टमानञ्च स ज्ञेयः”, इति शार्ङ्गधरः ॥)

**अष्टमिका**, स्त्री, (अष्टम + कन् + स्त्रियामाप् ।) शुक्तिपरिमाणं । चतुस्तोलकं । इति वैद्यकपरिभाषायां ॥
(“स्यात्कर्षाभ्यामर्द्धपलं शुक्तिरष्टमिका तथा” ॥
इति शार्ङ्गधरः ॥)

**अष्टमी**, स्त्री, (अष्टानां पूरणी । अष्टम + ङीप् ।) क्षीरकाकोली । इति शब्दचन्द्रिका ॥ तिथिविशेषः । सा चन्द्रस्याष्टमकलाक्रियारूपा । तदुपलक्षितकालरूपा च । सा च शुक्ला नवमीयुता ग्राह्या युग्मात् । कृष्णा च सप्तमीयुता । यथा निगमः ।
“कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्द्दशी ।
पूर्ब्बविद्धैव कर्त्तव्या परविद्धा न कुत्रचित् ॥
उपवासादिकार्य्येषु एष धर्म्मः सनातनः” ॥ * ॥
भविष्यपुराणे ।
“चतुर्द्दश्यां तथाष्टम्यां पक्षयोः शुक्लकृष्णयोः ।
योऽब्दमेकं न भुञ्जीत शिवार्च्चनपरो नरः ॥
यत् पुण्यमक्षयं प्रोक्तं सततं सत्रयाजिनां ।
तत्पुण्यं सकलं तस्य शिवलोकञ्च गच्छति” ॥
ततश्च सततसत्रयाज्यक्षयपुण्यसमपुण्यप्राप्तिः शिवलोकगतिश्च फलं ।
फाल्गुनशुक्लाष्टमीचतुर्द्दश्योरारभ्य वर्षं यावत् प्रत्यष्टमीप्रतिचतुर्द्दश्युपवासव्रतं ॥ * ॥ कालिकापुराणे ।
“यैषा ललितकान्ताख्या देवी मङ्गलचण्डिका ।
वरदाभयहस्ता च द्विभुजा गौरदेहिका ॥

**अष्टपात्**, [द्], पुं, (अष्टौ पादा यस्य ।) लूता ।

भाकडसा । इति भाषा । शरभः ।

इति हेमचन्द्रः ॥

**अष्टपादः**, पुं, (अष्टौ पादा यस्य ।) ऊर्णनाभविशेषः ।

तत्पर्य्यायः । किन्तनुः २ । इति

त्रिकाण्डशेषः ॥

**अष्टपादिका**, स्त्री, (अष्टसु दिक्षु पादा यस्याः ।

अन्त्यलोपः । ङीपि पद्भावे संज्ञायां

कन् ह्रस्वः ।)

लताविशेषः । इति रत्नमाला ॥

हापरमाली इति

भाषा ॥

**अष्टमः**, त्रि, अष्टानां पूरणः । इति व्याकरणं ॥ (तस्य

पूरणे डट् । नान्तादसङ्ख्यादेर्मट् ।)

यथा ।

कात्यायनः ।

"अष्टमेऽशे चतुर्द्दश्याः क्षीणो भवति

चन्द्रमाः ।

:रक्तपद्मासनस्था च मुकुटकुण्डलमण्डिता ।
रक्तकौषेयवस्त्रा तु स्मितवक्त्रा
शुभानना ॥
नवयौवनसम्पन्ना चार्व्वङ्गी
ललितप्रभा ।
उमया भाषितं मन्त्रं यत् पूर्ब्बं
त्वेकमक्षरं ॥
मन्त्रमस्यास्तु तज्ज्ञेयं तेन देवीं
प्रपूजयेत्” ।
एकमक्षरं शक्तिवीजरूपं ।
“तथाष्टम्यां नवम्याञ्च पूजा कार्य्या
विवृद्धये ।
पटेषु प्रतिमायां वा घटे
मङ्गलचण्डिकां ॥
यः पूजयेद्भौमवारे शुभैर्दूर्व्वाक्षतैः शिवां
।
सततं साधकः सोऽपि
काममिष्टमवाप्नुयात्” ॥ * ॥
ज्योतिषे । शनैश्चरस्य वारेण
वारेणाङ्गारकस्य च ।
“कृष्णाष्टमी चतुर्द्दश्यौ पुण्यात्
पुण्यतरे स्मृते” ॥
तथा --
“सोमवारेऽप्यमावास्या आदित्याहे तु
सप्तमी ।
चतुर्थङ्गारवारे च अष्टमी च वृहस्पतौ
॥
अत्र यत् क्रियते पापमथवा
धर्म्मसञ्चयः ।
षष्टिजन्मसहस्राणि प्रतिजन्म
तदक्षयं” ॥
इति तिथ्यादितत्त्वं ॥ * ॥
श्रीकृष्णजन्माष्टमीव्रतं
अष्टकाश्राद्धं भीष्माष्टमीकृत्यञ्च
तत्तच्छब्दे द्रष्टव्यं ॥
महाष्टमीकृत्यं महाष्टमीशब्दे द्रष्टव्यं ॥
तत्र
जातफलं ।

वैद्यकपरिभाषा । एकीकृतैतदौषधगुणाः ।
रक्त-
पित्तव्रणवायुपित्तनाशित्वं । इति राजवल्लभः
॥
(“जीवकर्षभकौ मेदे काकोल्यौ ऋद्धिवृद्धिके
।
अष्टवर्गोऽष्टभिर्द्रव्यैः कथितश्चरकादिभिः ॥
अष्टवर्गो हिमः स्वादुर्वृंहणो शुक्रलो गुरुः ।
भग्नसन्धानकृत् कामबलासबलवर्द्धनः ॥
वातपित्तास्रतृट्दाहज्वरमेहक्षयप्रणुत्” ।
इति भावप्रकाशः ॥)
ज्योतिषशास्त्रोक्तगोचरविशेषः । तद्यथा ।
आदौ
रव्यादिसप्तग्रहाणां राहोश्च अष्टमासकोष्ठं
कृत्वा
प्रत्येकमासकोष्ठे
जन्मकालीनग्रहाधिष्ठितराश्य-
वधिस्वाद्विनकृच्छुभद इत्यादि
दीपिकोक्तवच-
नाङ्कसंख्यकगृहे रेखां विन्यसेत् तत्र
रवेर्द्वादश-
कोष्ठे ४८ चन्द्रस्य ४९ कुजस्य ३९ बुधस्य
५५
गुरोः ५६ भृगोः ५२ शनेः ३९ राहोः ३९
एतत्संख्यका रेखा देयाः । ततः
प्रत्येकगृहस्थरेखाः
द्विगुणीकृत्य अष्टाधिकाश्चेत् अष्टभिः शोध-
येत् । शेषा रेखाः शुभाः ख्याताः । अष्टोना-
श्चेत्तदा विन्दुभिरष्टानां पूरणं कार्य्यं । तत्र
विन्द-
वोऽशुभाः ख्याताः । अष्टौ चेत् तदा विन्दुरे-
खयोरभावस्तत्र समं परिकीर्त्तितं ॥ तस्य
नामगुणाः ।
“जीवकर्षभकौ मेदे काकोल्यौ वृद्धिऋद्धिके ।
अष्टवर्गोऽष्टभिर्द्रव्यैः कथितश्चरकादिभिः ॥
अष्टवर्गो हिमः स्वादुर्वृंहणः शुक्रलो गुरुः ।
भग्नसन्धानकृत् बल्यः शरीरबलवर्द्धनः ॥
वातपित्तास्रतृट्दाहज्वरमेहक्षयप्रणुत्” ।

शैलग्रहाशाशिवस्थः ३ । ४ । ५ । ७ । ९ ।
१० । ११ ।
तीक्ष्णांशुदेहोद्भवाद्रामबाणर्त्तुशम्भुस्थितो ३ ।
५ ।
६ । ११ । ऽथोदयाद्धव्यवाहर्त्तुकाष्ठाशिवस्थः
। ३ ।
६ । १० । ११ । चन्द्ररेखाः । ४९ ।
कामबाणाभि-
धानमालादण्डकेन चन्द्राष्टवर्गः ॥ * ॥
कुत्रोऽर्का-
च्छुभो वह्निबाणर्त्तुदिक्शम्भुगो ३ । ५ । ६ ।
१० ।
११ । ऽथेन्दुतो रामकालेशग ३ । ६ । ११ ।
स्ततः
स्वात कुदृग्वेदसप्ताष्टदिक्शम्भुगः स्यात् १ ।
२ ।
४ । ७ । ८ । १० । ११ ।
निशानाथपुत्राद्गुणेष्वङ्ग-
रुद्रोपयातः । ३ । ५ । ६ । ११ । ततो
जीवतः
कालकाष्ठाशिवार्कोपयातो ६ । १० । ११ ।
१२ ।
ऽथ देवारिपूज्यादनेहो गजेशार्कसंस्थः । ६ ।
८ ।
११ । १२ । ततः सूर्य्यपुत्रात्
कुवेदागनागग्रहा-
शाशिवस्थो १ । ४ । ७ । ८ । ९ । १० । ११
।
ऽथ लग्नात् कुरामाङ्गदिकशम्भुयातः । १ । ३
।
६ । १० । ११ । कुजरेखाः ३९ ।
सिंहविलासा-
भिधानमालादण्डकेन भौमाष्टवर्गः ॥ * ॥ ज्ञः
शुभो-
ऽर्कतः शरर्त्तुगोशिवार्कगो ५ । ६ । ९ । ११ ।
१२ । ऽथ चन्द्रतो द्विवेदकालनागदिङ्महेश्वरेषु
।

“भूपालतः प्राप्तधनः कृशाङ्गः
सुखी कृपालुर्युवतिप्रियश्च ।
चतुष्पदाढ्यो धनधान्ययुक्तः
स्यादष्टमीजो मनुजः सुधीरः ॥”
इति कोष्ठीप्रदीपः ॥

**अष्टमूर्त्तिः**, पुं, (अष्टौ मूर्त्तयो यस्य ।) शिवः । इति
हेमचन्द्रः ॥ तत्प्रत्येकमूर्त्तिनामानि । क्षिति-
मूर्त्तिः सर्व्वः १ जलमूर्त्तिर्भवः २ अग्निमूर्त्तिः रुद्रः
३ वायुमूर्त्तिरुग्रः ४ आकाशमूर्त्तिर्भीमः ५
यजमानमूर्त्तिः पशुपतिः ६ चन्द्रमूर्त्तिर्म्महादेवः
७ सूर्य्यमूर्त्तिरीशानः ८ । इति तन्त्रशास्त्रं ॥
एताः शरभरूपिशिवस्याष्टपादाः इति कालि-
कापुराणं ॥ यथा ।
“अष्टमूर्त्तिर्निधीशश्च ज्ञानचक्षुस्तमोमयः” ।
इति वदुकभैरवस्तोत्रं ॥
तस्याष्टमूर्त्तयो यथा ।
“अथाग्निः रविरिन्दुश्च भूमिरापः प्रभञ्जनः ।
यजमानः खमष्टौ च महादेवस्य मूर्त्तयः” ॥
इति शब्दमाला ॥
(“अवेहि मां किङ्करमष्टमूर्त्तेः
कुम्भोदरं नाम निकुम्भमित्रम्” ॥
इति रघुवंशे ॥ तथा कुमारे च ।
“तत्राग्निमाधाय समित्समिद्धं
स्वमेव मूर्त्यन्तरमष्टमूर्त्तिः” ॥)

**अष्टलोहकं**, क्ली, अष्टधातुविशेषः । तद्यथा ।
सुवर्णं १ रजतं २ ताम्रं ३ रङ्गं ४ सीसं ५ कान्त-

इति भावप्रकाशः ॥ * ।
ज्योतिःशास्त्रोक्तगणनया रेखाविन्दुभ्यां
शुभाशुभफलसूचकजन्मकालीनाष्ट-
ग्रहसमुदायः । यथा । अथाष्टवर्गः ।
“जन्मकालग्रहस्थित्या फलं वक्ष्ये शुभाशुभं” ।
स्वाद्दिनकृत् शुभदः क्षितिपक्षसमुद्रनगादिक-
पञ्चगतो १ । २ । ४ । ७ । ८ । ९ । १० । ११ ।
ऽथ विभावरिभर्त्तुस्त्र्यङ्गदशेषगतो ३ । ६ । १० ।
११ । ऽथ कुजाद्रविवत् १ । २ । ४ । ७ । ८ । ९ ।
१० । ११ । अथ सोमसुतात्रिशरर्त्तुनवादिषु
यातः । ३ । ५ । ६ । ९ । १० । ११ । १२ । देव-
गुरोर्विषयर्त्तुनवेशगतो ५ । ६ । ९ । ११ । ऽथ
सुरारिगुरोः समयाचलभास्करयातः । ६ । ७ ।
१२ । तीक्ष्णमरीचिसुतादपि भास्करवत् । १ ।
२ । ४ । ७ । ८ । ९ । १० । ११ । अथ लग्नगृहात्
त्रिकृताङ्गदशादिषु यातः ३ । ४ । ६ । १० । ११ ।
१२ । रविरेखाः । ४८ । भूजङ्गविलासाभिधान-
मालादण्डकेनादित्याष्टवर्गः ॥ * ॥ चन्द्रः शुभो-
ऽर्कात्रिकालाद्रिदन्ताबलाशशिवस्थ । ३ । ६ । ७ ।
८ । १० । ११ । स्ततः स्वात् कुरामर्त्त्वगाशा-
शिवस्थः । १ । ३ । ६ । ७ । १० । ११ । क्ष्माजा-
द्द्विवह्नीषुषड्गोदिगीशेष्व । २ । ३ । ५ । ६ । ९ ।

२ । ४ । ६ । ८ । १० । ११ । भूमिजात् कुदृक्-
कृतागनागगोदशेशगः । १ । २ । ४ । ७ । ८ ।
९ । १० । ११ । ततः स्वतः कुवह्निपञ्चषण्णवादि-
केषु । १ । ३ । ५ । ६ । ९ । १० । ११ । १२ ।
वाक्पतेरसाष्टशम्भुसूर्य्यगो ६ । ८ । ११ । १२ ।
ऽथ शुक्रतः कुबाहुवह्निवेदपञ्चनागगोशिवेषु । १ ।
२ । ३ । ४ । ५ । ८ । ९ । ११ पङ्गुतः कुदृक्कृताग-
नागपञ्चकस्थितो ऽथ । १ । २ । ४ । ७ । ८ । ९ ।
१० । ११ । १२ । लग्नतः क्षितिद्विवेदकालनाग-
दिक्शिवेषु । १ । २ । ४ । ६ । ८ । १० । ११ ।
बुधरेखाः । ५५ । अशोकमञ्जरीसंज्ञकमाला-
दण्डकेन बुधाष्टवर्गः ॥ * ॥ सुरराजगुरुः शुभदो
रवितः कुयमानलवेदनगादिकपञ्चगतो १ । २ ।
३ । ४ । ७ । ८ । ९ । १० । ११ । ऽथ विधोर्द्वि-
शराचलगोशिवगो २ । ५ । ७ । ९ । ११ । वसु-
धातनयात् कुयमाब्धिनगाष्टदशेशगतो १ । २ ।
४ । ७ । ८ । १० । ११ । ऽथ बुधात् क्षितियुग्म-
कृतेषुरसग्रहदिग्गिरिशोपगत १ । २ । ४ ।
५ । ६ । ९ । १० । ११ । स्तदनु स्वत एकयमानल-
वारिधिपर्ब्बतनागदशेशगतो १ । २ । ३ । ४ ।
७ । ८ । १० । ११ । ऽथ सिताद्यमपञ्चरसग्रहदि-

लोहं ६ मुण्डलोहं ७ तीक्ष्णलोहं ८ ।
इति राज-
निर्घण्टः ॥

**अष्टवर्गः**, पुं, (अष्टानां औषधविशेषानां रविप्रभृ-
तीनां वा वर्गः ।) औषधविशेषाष्टकं ।
तद्यथा ।
ऋषभः १ जीवकः २ मेदः ३
महामेदः ४ ऋद्धिः
५ वृद्धिः ६ काकोली ७ क्षीरकाकोली
८ । इति

१० । ११ । थ ज्ञात्
कुरामाब्धिबाणागदन्ता-
बलाशाशिवस्थः १ । ३ । ४ । ५ । ७ । ८ ।
१० ।
११ । जीवात् कुदृग्वेदशैलेभकाष्ठाशिवस्थो
१ ।
२ । ४ । ७ । ८ । १० । ११ । ऽथ
शुक्रात्रिवेदेषु-

शिवगो २ । ५ । ६ । ९ । १० । ११ ।
रविनन्द-
नतो दहनेषुरसार्कगत ३ । ५ । ६ । १२ ।
स्त्वथ
लग्नगृहात् कुयमाब्धिशरर्त्तुनगग्रहदिग्गिरिशोप-
गतः १ । २ । ४ । ५ । ६ । ७ । ९ । १० ।
११ ।
गुरुरेखाः ५६ ।
कुसुमस्तवकाभिधानमालादण्डकेन
वृहस्पतेरष्टवर्गः ॥ * ॥ भृगुः शुभो रवेर्गजेश-
सूर्य्यगो । ८ । ११ । १२ । ऽथ चन्द्रतः
क्ष्मादिपञ्च-
काष्टगोशिवार्कगः । १ । २ । ३ । ४ । ५ । ८
।
९ । ११ । १२ । कुजात्
त्रिवेदकालगोशिवार्कगो
३ । ४ । ६ । ९ । ११ । १२ । ऽथ बोधनात्
त्रि-
बाणकालरन्ध्ररुद्रसंस्थितः । ३ । ५ । ६ । ९
। ११ ।
गुरोः शराष्टरन्धदिङ्महेशग । ५ । ८ । ९ । १०
।

:११ । स्ततः स्वतः
कुपञ्चकाष्टरन्ध्रदिक्शिवोपगः

१ । ५ । ८ । ९ । १० । ११ ।
शनेर्गुणाब्धिपञ्चना-
गगोदशेशगो । ३ । ४ । ५ । ८ । ९ ।
१० । ११ । ऽथ
लग्नतः कुपञ्चकाष्टगोशिवस्थितः । १ ।
२ । ३ ।
४ । ५ । ८ । ९ । ११ । शुक्ररेखाः ।
५२ । अनङ्ग-
शेखराभिधानमालादण्डकेन
भार्गवाष्टवर्गः ॥ * ॥
शुभः पङ्गुरर्कात्
क्ष्मायमाम्भोधिशैलाष्टदिक्श-
म्भुग । १ । २ । ४ । ७ । ८ । १० ।
११ । इन्दुतो
रामकालेशगतः । ३ । ६ । ११ ।
क्ष्मासुताद्वह्नि-
बाणर्त्तुकाष्ठाशिवार्कोपगो । ३ । ५ । ६ ।
१० ।
११ । १२ । ऽथ ज्ञतः
कालदन्तावलादिस्थितो । ६ ।
८ । ९ । १० । ११ । १२ । जीवतो
बाणकालेश-
मार्त्तण्डयात । ५ । ६ । ११ । १२ ।
स्ततो दैत्य-
पूज्यादनेहःशिवार्कोपयातः । ६ । ११ ।
१२ । स्वतो
वीतिहोत्रेषु कालेशयात । ३ । ५ । ६ ।
११ ।
स्ततो लग्नतः
क्ष्मागुणाम्भोधिषड्दिङ्गहेशस्थितः ।
१ । ३ । ४ । ६ । १० । ११ ।
शनिरेखाः ३९ ।
मत्तमातङ्गलीलाभिधानदण्डकेन
शनैश्चराष्टवर्गः ।
इति दीपिका ॥ * ॥ राहुः
शुभोऽर्काद्भुजवह्नि-

मलिनोऽथ विपच्चैव हानिर्मृत्युर्भवेत्तथा ।
द्व्यादिरेखा द्व्यादिविन्दोः
फलान्येतान्यनुक्रमात् ॥
रेखायां वत्सरो ज्ञेयः सार्द्धसप्तदिनं समे ।
अष्टवर्गदशायुः स्यात् दिनं चतुर्षु विन्दुषु” ॥
इत्यायुर्द्दायः । इत्यष्टवर्गः ॥ * ॥ नन्दी ।
“अष्टवर्गशुभैः श्रीमान् कर्म्म कुर्य्यान्नभश्चरैः ।
गोचरस्थैस्तदप्राप्तौ तदप्राप्तौ च वेधगैः ॥
व्रतारम्भे विवाहे च यात्रायां क्षुरकर्म्मणि ।
अविशुद्धाष्टवर्गस्य समस्ता निष्फलाः क्रियाः
॥
“सततं दिशति नराणां
राशौ मध्येऽष्टवर्गफलं निखिलं ।
भावफलं प्रथमार्द्धे
दृष्टिफलान्यर्द्धभुक्तेषु” ॥
इत्यष्टवर्गार्थकथनम् । इति ज्योतिस्तत्त्वम् ॥

**अष्टश्रवाः**, [स्] पुं, (अष्टौ श्रवांसि यस्य । चतु-
र्मुखस्य ब्रह्मणः प्रतिमुखं द्विकर्णतया तथात्वम्
।)
ब्रह्मा । इति त्रिकाण्डशेषः ॥

**अष्टाकपालः**, पुं, (अष्टसु कपालेषु संस्कतः । संस्कृतं
भक्ष्य इत्यणोद्विगोर्लुगनपत्ये इति लुक् ।
अष्टनः
कपाले हविषीत्यात्वम् ।) यज्ञविशेषः । यत्र
अष्टसु कपालेषु पुरोडाशः पक्त्वा हूयते । इति
श्रुतिः ॥

**अष्टाङ्गार्घ्यः**, पुं, (अष्टौ अङ्गानि उपकरणानि यस्य
तादृशोऽर्घ्यः ।) अष्टद्रव्यघटितपूजोपकरणवि-
शेषः । यथा, --
“आपः क्षीरं कुशाग्राणि दधि सर्पिः सतण्डुलाः
।
यवाः सिद्धार्थकाश्चैव अष्टाङ्गार्घ्यः
प्रकीर्त्तितः” ॥
इति तन्त्रम् ॥
“आपः क्षीरं कुशाग्राणि घृतं मधु तथा दधि ।

“भूनिम्बदारुदशमूलमहौषधाब्द-
तिक्तेन्द्रवीजधनिकेभकणाकषायः ।
तन्द्राप्रलापकसनारुचिदाहमोह
श्वासादियुक्तमखिलं ज्वरमाशु हन्ति” ॥
२ ॥
“द्राक्षामृता शठी शृङ्गी मुस्तकं रक्तचन्दनं
।
नागरं कटुका पाठा भूनिम्बं सदुरालभं ॥
उशीरं पद्मकं धान्यं बालकं
कण्टकारिका ।
पुष्करं पिचुमर्द्दश्च क्वाथं जीर्णज्वरापहः
॥
कासं श्वासञ्च विषमं श्वयथूदरनाशनं ।
अष्टादशाङ्गमुदितमेतत् स्यात्
सन्निपातनुत्” ॥ ३ ॥
मुस्तपर्पटकोशीरदेवदारुमहौषधं ।
त्रिफला धन्वयासश्च नीली काम्पिल्लकं
त्रिवृत् ॥
किराततिक्तकं पाठा बलाकटुकरोहिणी ।
मधुकं पिप्पलीमूलं मुस्ताद्यो गण उच्यते
॥
अष्टादशाङ्गमुदितमेतद्वा सन्निपातनुत् ।
पित्तोत्तरे सन्निपाते हितञ्चोक्तं मनीषिभिः
॥
मन्यास्तम्भौरोघाते उरःपार्श्वशिरोग्रहे”
॥ ४ ॥
इति सुखबोधः ॥

**अष्टापदं**, पुं, क्ली, (अष्टसु धातुषु पदं प्रतिष्ठा
यस्य ।
पङ्क्तौ पङ्क्तौ अष्टौ पदानि यस्येति वा
। अष्टनः
संज्ञायामिति दीर्घः ।) स्वर्णं । धुस्तूरः ।
शारीणां
फलकः । इत्यमरमेदिनीकरौ ॥ पाशार
छक्
इति भाषा । यथा “धुस्तूरः कनकाह्वयः”
। इत्य-

वेदर्त्तुरन्ध्रगो । २ । ३ । ४ । ६ । ९ ।
अथ चन्द्रात्
कुरामवेदाङ्ग । १ । ३ । ४ । ६ ।
स्ततः कुजा-
द्वह्निबाणाङ्गरन्ध्रगतो । ३ । ५ । ६ । ९ ।
ऽथ
बुधाच्छशिपक्षवह्निबाणरन्ध्रग । १ । २ ।
३ । ५ ।
९ । स्ततो जीवाद्धव्यवाहवेदाङ्गरन्ध्रग ।
३ । ४ ।
६ । ९ । स्ततः शुक्रात्
पक्षवह्निबाणरन्ध्रगत ।
२ । ३ । ५ । ९ । स्ततः सौरात्
पक्षबाणर्त्तुग । २ ।
५ । ६ । स्ततः स्वतः
शशिवेदबाणरिपुरन्ध्रगो ।
१ । ४ । ५ । ६ । ९ । ऽथ लग्नाद्वेदरग्ध्र-
दिग्रुद्रसूर्य्यगतः । ४ । ९ । १० । ११ ।
१२ ।
राहुरेखाः । ३९ ।
मृगेन्द्रविलासाभिधानदण्डकेन
राहोरष्टवर्गः ॥ * ॥
सूर्य्यादिकद्विचतुःसप्ताष्ट-
दशैकादशेषु । १ । २ । ४ । ७ । ८ ।
१० । ११ ।
सोमात्त्रिषड्दशैकादशेष । ३ । ६ । १०
। ११ ।
भौमात्त्रिपञ्चषडेकादशेषु । ३ । ५ । ६ ।
११ ।
बुधात् षडष्टनवदशैकादशेषु । ६ । ८ ।
९ । १० ।
११ । गुरोः पञ्चषडेकादशद्वादशेषु । ५ ।
६ ।
११ । १२ । शुक्रात् षडेकादशद्वादशेषु
६ । ११ ।
१२ । शनेस्त्रिपञ्चाष्टदशैकादशेषु । ३ ।
५ । ८ ।
१० । ११ ।
लग्नादेकत्रिचतुःषड्दशकादशेषु । १ ।

रक्तानि करवीराणि तथा रक्तञ्च नन्दनम् ॥
अष्टाङ्ग एष अर्घ्यो व भानवे परिकीर्त्तितः” ।
इति काशीखण्डम् ॥

**अष्टादश** [न्] त्रि, (अष्टाधिका दश ।) अष्टाधिक-
दशसंख्या । १८ आठार इति भाषा ।
नित्यबहु-
वचनान्तशब्दोऽयं । इति सिद्धान्तकौमुदी ॥
(यथा मनुः ।
“अष्टादशसु मागषु निबद्धानि पृथक् पृथक्” ।)
अथाष्टादशवाचकशब्दाः यथा । द्वीपः १ विद्या
२
पुराणं ३ स्मृतिः ४ धान्यं ५ । इति
कविकल्पलता ॥
(“अगाहताष्टादशतां जिगीषया
नवद्वयद्वीपपृथकजयश्रियाम् ।”
इति नैषधे ।
“अष्टादश पुराणानि कृत्वा सत्यवतीसुतः” ।
इति भारते ॥)

**अष्टादशाङ्गः**, पुं, (अष्टादश अङ्गानि यस्मिन् ।)
अष्टादशद्रव्यात्मकपाचनं । स चतुर्व्विधः ।
दश-
मूल्यादिः १ । भूनिम्बादिः २ । द्राक्षादिः ३ ।
मुस्तादिः ४ । तद्यथा ।
“दशमूली शठी शृङ्गी पौष्करं सदुरालभा ।
भार्गी कुटजवीजञ्च पटोलं कटुरोहिणी ॥
अष्टादशाङ्ग इत्येष सन्निपातज्वरापहः ।
कासहृद्ग्रहपार्श्वार्त्तिहिक्काश्वासवमीहरः” ॥
१ ॥

मरदर्शनात् । अष्टापदशब्दस्य
कनकवाचकत्वाच्च ॥
(“आवर्जिताष्टापदकुम्भतोयैः ।”
इति कुमारसम्भवे ॥
“स रामकरमुक्तेन निहतो द्यूतमण्डले ।
अष्टापदेन बलवान् राजा वज्रधरोपमः
॥”
इति हरिवंशे ॥)

**अष्टापदः**, पुं, (अष्टौ पदानि यस्य ।) शरभः
मर्कटः । इति मेदिनी ॥ लूता ।
चन्द्रमल्ली ।
क्रिमिः । कैलासपर्ब्बतः । इति हेमचन्द्रः
॥ की-
लकः । इति धरणिः ॥

**अष्टापदी**, स्त्री, (अष्टौ पादा यस्याः । संख्यासु पूर्ब्ब-
स्येति पादस्यान्तलोपे
पादोन्यतरस्यामिति ङीपि
पादः पत् ॥) चन्द्रमल्ली । इति मेदिनी ॥

**अष्टारचक्रवान्** [त्] पुं, (अष्टारमष्टकोणं चक्रं
विद्यते यस्य । अष्टारचक्र + मतुप् ।
मस्य वः ।)
जिनविशेषः । तत्पर्य्यायः । मञ्जुश्रीः २
ज्ञान-
दर्पणः ३ मञ्जुभद्रः ४ मञ्जुघोषः ५
कुमारः ६
स्थिरचक्रः ७ वज्रधरः ८ प्रज्ञाकायः ९
वादिराट्
१० नीलोत्पली ११ महाराजः १२
नीलः १३
शार्दूलवाहनः १४ धियाम्पतिः १५
पूर्ब्बजिनः १६
खड्गी १७ दण्डी १८ विभूषणः १९
बालव्रतः
२० पञ्चचीरः २१ सिंहकेलिः २२
शिखाधरः

३ । ४ । ६ । ११ । एवं लग्नरेखाः ३७ ॥

* ॥

“इति निगदितमिष्टं नेष्टमन्यद्विशेषा-

दधिकफलविपाकं जन्मभात्तत्र दद्युः ।

उपचयगृहमित्रस्वोच्चगाः पुष्टमिष्टं

त्वपचयगृहनीचारातिभे नेष्टसम्पत् ॥

यावती यावती रेखा ग्रहाणामष्टवर्गके ।

तावतीं द्विगुणीकृत्य अष्टाभिः परिशोधयेत् ॥

अष्टोपरि भवेद्रेखा अष्टाभ्यन्तरविन्दवः ।

अष्टाभिस्तु समो यत्र तत् समं परिकीर्त्तितम् ॥

रेखा ग्रहाच्छुभे देया विन्दवश्चेतरत्र तु ।

रेखाविन्दू समानौ चेत् समस्तत्र निगद्यते ॥

रेखाधिक्ये शुभं ज्ञेयं तद्वद्विन्दोरथाशुभम् ।

श्रीरानन्दस्तथा श्रेयो भोगो राज्यं भवेत्तथा ॥

२३ वागीश्वरः २४ । इति त्रिकाण्डशेषः ॥

**अष्टिः**, स्त्री, (अस्यते पृथिव्यां क्षिप्यते इति + अस

+ क्तिन् । पृषोदरादित्वात् वत्वम् ।) वीजं ।

इत्युणादिकोषः ॥ आँठि इति भाषा ।

**अष्ठीवान्** [त्] पुं, क्ली, (अतिशयितमस्थि यस्मिन् ।

अस्थि + मतुप् । मस्य वः ।

आसन्दीवदष्ठीवदिति

निपातनादस्थिशब्दस्याष्ठीभावः ।) जानु । इत्य-

:मरः ॥ आँठु इति भाषा ।

**अस** ल भावे । (अदां-परं-अकं-सेट् ।) भावः

सत्ता । सा चेह विद्यमानतैव । ल
अस्ति विष्णुः ।
इति दुर्गादासः ॥ (वि + अति) ।
अतिक्रमे ।
पराभवे । "अन्यो व्यतिस्ते तु
ममापि धर्म्मः"
इति मट्टौ । (अभि) भागसत्तायाम् ।
"यदत्र
ममामिस्यात् दीयताम्" । इति
पाणिनिः ।
(आविस्) आविर्भावे ।
"तेषामाविरभूद् ब्रह्मा
परिम्लानमुखश्रियाम्" ।
इति कुमारे । (प्रादुस्) प्रादुर्भावे ।
उद्भवे ।
"महाभूतादिवृत्तौजाः
प्रादुरासीत्तमोनुदः" ।
इति मनुः ।)

**अस** इ र् य उ क्षेपे । (दिवां-परं-सकं-सेट् ।) इति

कविकल्पद्रुमः ॥ य अस्यति । उ
असित्वा अस्त्वा ।
इर् आस्थत् आसीत् । अस्यमानं
महागदा
इति भट्टौ ताच्छील्ये शतुः शानः ।
इति दुर्गा-
दासः ॥
("तस्मिन्नास्थदिषीकास्त्रं रामो
रामावबोधितः" ।
इति रघुवंशे । (अति) अतिक्रमे ।
पराभवे ।
"बहुभिश्चैकमत्यस्यन्नेकेन च बहून्
जनान्" ।
इवास यत्न इत्यादिसिद्ध्यै अनेकाथत्वात्
सत्ता-
र्थोऽयमपीति रमानाथः ।
अनुप्रयोगादन्यत्रापि
परोक्षायामस्तेर्भूभावं केचिन्नेच्छन्तीति
धातुप्रदी-
पः । इति दुर्गादासः ॥

**असंख्यः**, त्रि, असंख्यनीयः । संख्यारहितः । अपरि-

मितः । न विद्यते संख्या यस्येति बहुव्रीहिः ।
अगणनीयः । यथा, --
"असंख्यं द्विपरार्द्धादि
पुद्गलात्मात्यनन्तकं" ।
इति हेमचन्द्रः ॥ अपि च ।
"शतयोजनविस्तीर्णैः शतस्कन्धसमन्वितैः
।
असंख्यशाखानिकरैरसंख्यफलसंयुतैः" ॥
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ४१ अध्यायः
॥

**असंख्यातं**, त्रि, संख्यारहितं । यथा । मदनपारिजाते ।

"अङ्गुल्यग्रेण यज्जप्तं यज्जप्तं मेरुलङ्घितं ।
असंख्यातञ्च यज्जप्तं तत्सर्व्वं निष्फलं
भवेत्" ॥
इत्याह्निकाचारतत्त्वं ॥

**असंस्कृतः**, त्रि, (न संस्कृतः । नञ्समासः ।) संस्कार-

रहितः । यथा । आपस्तम्बः ।
"असंस्कृतः सुतः श्रेष्ठो नापरो वेदपारगः" ।
इति शुद्धितत्त्वं ॥ अन्यच्च ।
"असंस्कृतप्रमीतस्य पिता न श्राद्धमाचरेत् ।
यदि स्नेहाच्चरेच्छ्राद्धं सपिण्डीकरणं विना"
॥
इति ।
"असंस्कृतौ न संस्कार्य्यौ पूर्ब्बौ
पौत्रप्रपौत्रकैः ।

**असङ्ख्यः**, त्रि, सङ्ख्यारहितः । अगणनीयः । स तु

द्विपरार्द्धादिः । इति हेमचन्द्रः ॥
असङ्गतः, त्रि, (न सङ्गतः । नञ्तत्पुरुषः ।)
सङ्गतिरहितः । नासङ्गतं प्रयुञ्जीतेति प्रसिद्धिः ॥
यथा । वस्तुतस्तु जिज्ञासुमेकपुरुषं प्रति सङ्गत-
मपि अतादृशमन्यं प्रति असङ्गतमिति यं प्रति-
पादयितुमानन्तर्य्याभिधानं तादृशाभिधानप्रयो-
जकतत्पुरुषोयजिज्ञासाजनकज्ञानविषयोऽर्थः तं
प्रति सङ्गतिरिति पुरुषविशेषनियन्त्रितं सङ्गति-
त्वं वाच्यं । इत्यनुमितिग्रन्थीयगदाधरी ॥
अयुक्तः ।
यथा देवीपुराणं ।
"घस्रद्वये जन्मतिथिर्यदि स्यात्
पूज्या तदा जन्मभसंयुता च ।
असङ्गता भेन दिनद्वयेऽपि
पूज्या परा या भवतीह यत्नात्" ॥
इति तिथ्यादितत्त्वं ॥ (असभ्यः । अशिक्षितः ।
यथा हितोपदेशे ।
"आसन्नमेव नृपतिर्भजते मनुष्यं
विद्याविहीनमकुलीनमसङ्गतं वा" ॥)

**असती**, स्त्री, (न सती साध्वी । नञ्समासः: ।)

भ्रष्टा । व्यभिचारिणी तत्पर्य्यायः । पुंश्चली २
धर्षिणी ३ बन्धकी ४ कुलटा ५ इत्वरी ६
स्वैरिणी
७ पांशुला ८ । इत्यमरः ॥ धृष्टा ९ दुष्टा १०
धर्षिता ११ । इति शब्दरत्नाबली ॥ लङ्का १२
निशाचरी १३ त्रपारण्डा १४ । इति जटाधरः ॥
("आबाल्यादसती सती सुरपुरीं कुन्ती समा-
रोहयत्" । इति धर्म्मविवेके ।)

**असतीसुतः**, पुं, स्त्री, (असत्याः सुतः ।) व्यभि-

चारिणीपुत्त्रः । तत्पर्य्यायः । बान्धकिनेयः २
बन्धुलः
३ कौलटेरः ४ कौलटेयः ५ । इत्यमरः ॥
"बन्धुलः कौलटेरश्च कौलटेयोऽसतीसुतः ।
तथा बान्धकिनेयस्तु स्यात् कौलकेय इत्यपि ॥
अथ सत्यान्तु भिक्षुक्यां पुत्त्रो भवति यः पुनः ।

इति रामायणे । (वि + अति) उत्ताने ।
“व्यत्यस्तपाणिना कार्य्यमुपसंग्रहणं गुरोः” ।
इति मनुः । (अप) दूरनिक्षेपे ।
चीरानपास्यज्जनकस्य कन्या नेयं प्रतिज्ञा मम दत्तपूर्ब्बा” ।
इति रामायणे । (अभि) अभ्यासे ।
“अभ्यस्यन्ति तटाघातं निर्जितैरावता गजाः” ।
इति कुमारे । (नि) निक्षेपे । “न मद्विधो न्यस्यति भारमुग्रम्” । इति भट्टौ । (उप + नि) प्रस्तावे ।
“स तु तत्र विशेषदुर्लभः सदुपन्यस्यति कृत्यवर्त्म यः” । इति किराते । (सं + उप + नि) प्रमा-
णादिना दृढीकरणे ।
“त्वया च मया समुपन्यस्तेष्वपि मन्त्रेष्ववज्ञानं वाक्पारूष्यञ्च कृतम्” । इति हितोपदेशे । (प्रति + नि) स्थापने ।
“तथैवायुधजालानि भ्रातृभ्यां कवचानि च ।
रथोपस्थे प्रतिन्यस्य सचर्म्म कठिनं च यत्” ॥
इति रामायणे । (निर्) दूरीकरणे । पराभवे ।
“यशांसि सर्व्वेषुभृतां निरास्थत्” ।
“तानर्द्दिददखादीच्च निरास्थच्च तलाहतान्” ॥
इति च भट्टौ । (परि) विस्तृतौ ।
“पर्य्यस्यन्निह निचयः सहस्रसंख्यां” । किराते ॥ “ताम्रोष्ठ-
पर्य्यस्तरुचः स्मितस्य” । इति कुमारे ॥ पातने च ।
पितरं तत्र संस्कुर्य्यादिति धर्म्मो व्यवस्थितः” ॥
इति च श्राद्धतत्त्वं ॥

**असंस्कृतवाक्यं**, क्ली, (असंस्कृतं संस्कृतेतरं वाक्यम् ।)
संस्कृतेतरभाषा । तत्पर्य्यायः । अपभ्रंशः २ अप-
शब्दः ३ । इत्यमरटीका ॥

**असंस्थानं**, क्ली, असंस्थितिः संस्थानाभावः । न सं-
स्थानमसंस्थानमिति नञ्समासनिष्पन्नं ॥
असंहतः, पुं, (न संहन्यते येन । न + सम् + हन्
+ करणे क्त ।) व्यूहविशेषः । स तु सेनानां पृथग्वृत्तिः । इति रायमुकुटादयः ॥ (दण्डः । भोगः । मण्डलः ।) असमूहिते अहते च त्रि ॥

**असंहतः**, त्रि, असंलग्नः । संहतो लग्नः न संहतः
असंहतः इति नञ्समासनिष्पन्नः ॥

**असकृत्**, व्य, (न सकृत् । नञ्समासः ।) पुनः
पुनः । वारं वारं । इत्यमरः ॥
(“अनेकस्यैकधा साम्यमसकृद्वाप्यनेकधा” ।
इति साहित्यदर्पणे ।
“अन्याद्येनासकृचैतान् गुणैश्च परिचोदयेत्” ।
इति मानवे ।)

**असङ्कल्पितः**, त्रि, (न सङ्कल्पितः । नञ्समासः ।)
सङ्कल्पाविषयः । यथा । विष्णुपुराणे ।
“कर्म्माण्यसङ्कल्पिततत्फलानि
संन्यस्य विष्णौ परमात्मरूपे ।
अवाप्य तां कर्म्ममहीमनन्ते
तस्मिन् लयं ते त्वमलाः प्रयान्ति” ॥
इति मलमासतत्त्वं ॥

**असङ्कुलः**, पुं, (न सङ्कुलः ।) विस्तृतः पन्थाः । इति
हेमचन्द्रः ॥
तत्र कौलटिनेयः स्यात्कौलटेयोऽपि स स्मृतः” ॥
इति शब्दरत्नावली ॥ अपि च । असतीसूनुः कौ-
लटेरश्च बन्धुलः ।
“अपि बान्धकिनेयः स्यात्कौलटेयोऽतिभिक्षुकी ।
कुलटापि सती सा चेत् कौलटेयस्तदात्मजः ॥
अपि कौलटिनेयः स्यात्” । इति जटाधरः ॥

**असतीसूनुः**, पुं, (असत्याः सूनुः ।) कुलटापुत्रः ।
इति जटाधरः ॥

**असत्**, त्रि, (अस् + शतृ ततो नञ्समासः ।)
अविद्यमानं । असाधुः । मूर्खः । ब्रह्मभिन्नवस्तु ।
इति वेदान्तः ॥ जडवर्गः । यथा, --
“यच्च किञ्चित् क्वचिद्वस्तु सदसद्वाखिलात्मिके ।
तस्य सर्व्वस्य या शक्तिः सा त्वं किं स्तूयसे तदा” ॥
इति देवीमाहात्म्ये १ अध्यायः ॥ सत् चेतनवगः ।
असत् जडवर्गः ।
“तस्य सर्व्वस्य या शक्तिः सा यदा त्वं तदा कथं” ।
स्तव्येत्यर्थः । इति तट्टीकायां नागोजीभट्टः ॥ * ॥
निष्फलं । यथा, --
“अश्रद्धया हुतं दत्तं तपस्तप्तं कृतञ्च यत् ।

| | | |
|---|---|---|
| “दासौघटमपां पूर्णं पर्य्यस्येत् प्रेतवत् सदा” । इति मानवे ॥ (सम्) संयोगे । एकत्र संश्लेषे । यथा, -- “सर्व्वोऽप्यवयवोऽह्ना समस्यते ।” “अव्ययं समर्थेन सह समस्यते ॥” इति च पाणिनिः ॥ इत्यादिः ॥ **अस** ञ् अषार्थे । (भ्वादिं-उभं-सकं-सेट् ।) अषार्थो दीप्तिग्रहणगतयः ॥ “वासुदेवं परित्यज्य योऽन्य-देवमुपासते” । उपगच्छतीत्यर्थः । लावण्य उत्पाद्य- | | |

:असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह” ॥

इति श्रीभवद्गीतायां १७ अध्याये २८ श्लोकः ॥ * ॥
निन्दितः । यथा, --
“असत्कुलप्रसूता या कान्तं विज्ञातुमक्षमा” ।
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डं ॥ ॑ ॥ अनित्यं । यथा ।
“अज्ञानन्तु सदसद्भ्यामनिर्व्वचनीयं” । इत्यादि
वेदान्तसारः ॥

**असत्पथः**, पुं, (न सन् पन्थाः ।) मन्दपथः । तत्प-

र्य्यायः । कुपथः २ कापथः ३ व्यध्वः ४ दुरध्वः ५
अपथः ६ कदध्वा ७ विपथः ८ कुत्सितवर्त्म ९ ।
इति शब्दरत्नावली ॥

**असदध्येता**, (ऋ) त्रि, (असत् निषिद्धशास्त्रमधीते

इति । असत् + अधि + इङ् + तृच् ।) असदध्य-
यनशाली । तत्पर्य्यायः । अजपः २ । इति हेम-
चन्द्रः ॥

**असदृशः**, त्रि, (न सदृशः । नञतत्पुरुषः ।) अ-

तुल्यः । अनुपमेयः । यद्यसदृशी स्तुतिरिति पुष्प-
दन्तः ॥ यथा । ब्रह्मवैवर्त्ते ।
“वित्तशाठ्यमकुर्व्वाणः सम्यक्फलमवाप्नुयात् ।
कुर्व्वाणो वित्तशाठ्यन्तु लभते ऽसदृशं फलम्” ॥
इति तिथ्यादितत्त्वं ॥

**असद्ग्रहः**, पुं, (असति अप्राप्ये वस्तुनि ग्रहः आग्रहः ।)

सम्यक् तुष्टिरहितः । सन्तोषशून्यः । यथा, --
“असन्तुष्टाः द्विजा नष्टाः सन्तुष्टा इव पार्थिवाः” ।
इति चाणक्यं ॥

**असन्नद्धः**, त्रि, (न सम्यक् नद्धः स्वकार्य्यक्षमः ।)

समुद्धतः । पण्डितामिमानी । दर्पितः । इति
जटाधरः ॥ अकृतसन्नाहः ॥

**असन्मानं**, क्ली, मानहानिः । अमर्य्यादा । अनादरः ।

असाधुमानं । असच्च तत् मानञ्चेनि कर्म्मधारय-
समासनिष्पन्नं ॥

**असभ्यः**, त्रि, असभासत् । सभानुपयुक्तः । असा-

माजिकः ॥ न सभ्यः असभ्य इति नञ्समास-
निष्पन्नः । खलः । यथा, --
“अयन्त्वसभ्यस्तव जन्म नो गृहे
श्रुत्वाग्रजांस्ते न्यबधीत् सुरेश्वर ।
स तेऽवतारं पुरुषैः समर्पितं
श्रुत्वाधुनैवाभिसरत्युदायुधः” ॥
इति श्रीभागवते १० स्कन्धे ३ अध्याये २०
श्लोकः ॥ असभ्यः खलः । समर्पितं कथितं । इति
श्रीधरस्वामी ॥

**असमः**, पुं, (नास्ति समो यस्य ।) बुद्धः । इति

शब्दरत्नावली ॥

**असमः**, त्रि, विषमः । अतुल्यः । यथा । “इत्येषा

सहकारिशक्तिरसमा माया दुरुन्नीतितो मूल-

विजातीयं । सजातीयभिन्नं । यथा शङ्खः ।
“समानाशौचं प्रथमे प्रथमेन समापयेत् ।
असमानं द्वितीयेन धर्म्मराजवचो यथा” ॥
इति शुद्धितत्त्वं ॥

**असमाप्तं**, त्रि, (न समाप्तं । नञ्तत्पुरुषः ।) समा-

प्तिरहितं । असम्पूर्णं । अनिष्पन्नं । यथा । स्मृतिः ।
“असमाप्ते व्रते पूर्ब्बेनैव कुर्य्याद्व्रतान्तरं” ।
इति तिथ्यादितत्त्वं ॥

**असमीक्ष्यकारी**, [न्] त्रि, (समीक्ष्य विचिन्त्य न

करोतीति । असमीक्ष्य + कृ + णिनि ।) अवि-
वेचनापूर्ब्बककर्म्मकर्त्ता । तत्पर्य्यायः । जाल्मः २ ।
इत्यमरः ॥ (“उचितमेवैतत् ममासमीक्ष्य-
कारिणः” । इति हितोपदेशे ।)

**असम्बद्धं**, त्रि, (न सम्बद्धं परस्परान्वययुक्तं । नञ्-

समासः ।) अनर्थकवाक्यं । तत्पर्य्यायः । अबद्धं २ ।
इति जटाधरः ॥
(“असम्बद्धकृतश्चैव व्यवहारो न सिध्यति” ।
इति मनुः । विशृङ्खलः । अनियमः । यथा भारते ।
“असम्बद्धा महाराज ! तान् निगृह्णन्ति ते गजाः”
इति ॥)

**असम्मतः**, त्रि, (न सम्मतः । नञ्समासः । अन-

भिमतः । तत्पर्य्यायः । प्रणाय्यः २ । इति हेमचन्द्रः ॥
(“असम्मतः कस्तव मुक्तिमार्गं
पुनर्भवक्लेशभयात् प्रपन्नः” ।
इति कुमारे ।)

**असम्मानं**, क्ली, अमर्य्यादा । अपमानं । सम्यङ्माना-

अखट्टिः । इति त्रिकाण्डशेषः ॥
बालकादीनां खो-
इट आवदार इत्यादिभाषा ।

**असनं**, क्ली, (अस्यते इति । अस + ल्युट् ।) क्षेपणं ।

इति मेदिनी ॥ ("तृणनिरसने विनियोगः" ।
इति भवदेवः ।)

**असनः**, पुं, वृक्षविशेषः । पियाशाल इति ख्यातः ।

तत्पर्य्यायः । महासर्ज्जः २ सौरिः ३
बन्धूकपुष्पः
४ प्रियकः ५ वीजवृक्षः ६ नीलकः
प्रियसालकः ८ ।
("प्रियविमानितमानवतीरुषां
निरसनैरसनैरवृथार्थता" ।
इति शिशुपाले ।) अस्य गुणाः । कटुत्वं ।
उष्णत्वं ।
तिक्तत्वं ।
वातार्त्तिदोषगलदोषरक्तमण्डलनाशित्वं ।
सारकत्वञ्च । इति राजनिर्घण्टः ॥ वृक्षभेदः
।
आसन इयि ख्यातः । तत्पर्य्यायः ।
अजकर्णः २
वनेसर्ज्जः ३ महासर्ज्जः ४ । इति
रत्नमाला ॥
अस्य गुणाः । कफपित्तनाशित्वं । इति राज-
वल्लभः ।
("वीजकः पीतसारश्च पीतशालक इत्यपि ।
बन्धूकपुष्पः प्रियकः सर्ज्जकश्चासनः
स्मृतः ॥
वीजकः कुष्ठवीसर्पश्वित्रमेहगुदक्रिमीन् ।
हस्तिश्लेष्मास्नपित्तञ्च त्वच्यः केश्यो
रसायनः" ॥
इति भावप्रकाशेऽस्य पर्य्यायगुणौ कथितौ
॥)

**असनपर्णी**, स्त्री, (असनस्य पर्णमिव पर्णमस्याः ।)

वृक्षविशेषः । तत्पर्य्यायः । वातकः २
शीतलः ३

त्वात् प्रकृतिः प्रबोधभयतोऽविद्येति
यस्योदिता" ।
इति कुसुमाञ्जलौ १ स्तवकः ॥

**असमञ्जसं**, क्ली, (न समञ्जसं युक्तियुक्तम् ।) असङ्गतं ।

अनुपयुक्तं । तत्पर्य्यायः । दुर्जातं २
दुःससञ्जं ३ ।
इति त्रिकाण्डशेषः ॥
("अतिप्रणयादेतन्मयोक्त-
मसमञ्जसम्" । इति कथासरित्सागरे ।
(पुं)
सगरराजज्येष्ठपुत्रः । यथा हरिवंशे ।
"केशिन्यसूत
सगरादसमञ्जसमात्मजम्" ।)

**असमयः**, पुं, (अपकृष्टः समयः । नञ्समासः ।)

अकालः । दुःसमयः । यथा, --
"एतान् जनान्न सेवेत व्याधिसङ्घश्च
दुर्ज्जयः ।
सर्व्वं बोध्यमसमये काले सर्व्वं
ग्रसिष्यति" ॥
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १६ अध्यायः
॥

**असमर्थः**, त्रि, (न ससर्थः । नञ्समासः ।) अशक्तः ।

दुर्ब्बलः । यथा । ब्रह्मववर्त्ते ।
"उपवासासमर्थश्चेदेकं विप्रन्तु
भोजयेत् ।
तावद्धनानि वा दद्याद् यद्भुक्तद्विगुणं
भवेत्" ।
इति तिथ्यादितत्त्वं ॥

**असमवायिकारणं**, क्ली, (न समवायि कार्य्येण

कारणेन वा सह एकस्मिन्नर्थे समवेतं
कारणम् ।)
समवायिकारणासन्नकारणं ।
समवायिकारणे

भावः । न सम्मानं असम्मानमिति
नञ्समास-
निष्पन्नं ॥

**असरुः**, पुं, (अस + अरु ।) वृक्षविशेषः । इति शब्द-

चन्द्रिका ॥ कुकुरसौँका इतिख्यातः ।

**असहनः**, पुं, स्त्री, (न सहनः । नञ्समासः ।) शत्रुः ।

इति हेमचन्द्रः ॥ (अधीरः । असहिष्णुः ।
यथा, --
"कस्मात् प्राप्य
तिरस्क्रियामसहनोऽप्यस्थादिति
प्रस्तुते" । इति महावीरचरिते ।
"प्रिया मुञ्चत्यद्य स्फुटमसहना जीवितमसौ"
।
इति रत्नावल्यां । क्षमाराहित्यम् । यथा,
साहित्य-
दर्पणे ।
"अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् ।
प्राणात्ययेप्यसहनं तत्तेजः समुदाहृतम्" ॥
इति ॥)

**असह्यः**, त्रि, (न सह्यः । नञ्तत्पुरुषः ।) असह-

नीयः । असोढव्यः । सहनायोग्यः । यथा, --
"वरं रामशराः सह्या न च वैभीषणं वचः ।
असह्यं ज्ञातिदुर्व्वाक्यं मेघान्तरितराद्रवत्"
॥
इति महानाटकं ॥ ज्ञातिदुर्व्वाक्यमित्यत्र
दुर्व्वचो
ज्ञातेरिति च पाठः ॥

**असाधारणं**, त्रि, (न साधारणं सामान्यधर्म्मयुक्तम् ।

नञ्समासः ।) साधारणभिन्नं । असामान्यं ।
विशेषः । न्यायमते
साध्यव्यापकीभूताभावप्रति-
योगिहेतुः । यथा वह्निमान् जलत्वादित्यादिः
।
यथा । "यत्तु प्रयागे च्यहस्नाने क्रोडीकृते
माघसप्तमीलानादावसाधारणसङ्कल्पेन
पुनस्तथैव

शीतलवातः ४ अपराजिता ५ शणपर्णो ६ ।
इत्यमरः ॥ शीतः ७ शीतकः ८ सनपर्णो ९
।
इति शब्दरत्नावली ॥ माराटी इति भरतः ॥
ओसान इति सारसुन्दरी ॥

**असन्,** [त्] पुं, इन्द्रः । इति त्रिकाण्डशेषः ॥

**असन्तुष्टः**, त्रि, (न सन्तुष्टः । नञ्समासः ।)

प्रत्यासन्नजनकं । यथा । घटं प्रति
कपालद्वय-
संयोगः । एतत्कारणं गुणः कर्म्म च ।
समवायि-
कारणे प्रत्यासन्न हैया ये कारण हय ।
इति
न्यायभाषा ॥ (एतत् कारणन्तु सर्व्वत्र
द्रव्ये गुणः
गुणे गुणः कर्म्म च । तदुक्तं
भाषापरिच्छदे ।
"गुणकर्म्ममात्रवृत्ति
ज्ञेयमथाप्यसमबायिहेतु-
त्वम्" ।)

**असमानं**, त्रि, (नास्ति समानो यस्य ।) अतुल्यं
।

:प्रातःस्नानाचरणं” इति तिथ्यादितत्त्वं ॥ किञ्च

“असाधारणशरीरव्यापारार्ज्जितं
अविद्वद्भ्यो दातु-
मनिच्छन्न दद्यात्” । इति दायभागः ॥
अतुल्यं ।
इति शूद्रवर्गे साधारणशब्दार्थदर्शनात् ॥

**असाध्यं**, त्रि, (न साध्यं साधयितुमशक्यम् ।) असा-

धनीयं । साधनायोग्यं । अशक्यं ।
असाधितव्यं ।
यथा, --
“सहजानि त्रिदोषाणि यानि चाभ्यन्तरा
वलिं ।
जायन्तेऽर्शांसि संगृह्य तान्यसाध्यानि
निर्द्दिशेत्” ॥
इति भावप्रकाशः ॥ अपि च ।
“य इदं प्रपठेन्नित्यं दुर्गानामशतात्मकं ।
नासाध्यं विद्यते तस्य त्रिषु लोकेषु
पार्व्वति” ॥
इति विश्वसारतन्त्रे दुर्गाशतनामात्मकं
स्तोत्रं ॥
(“साध्या
याप्यत्वमायान्तियाप्याश्चासाध्यतां तथा
।
घ्नन्ति प्राणानसाध्यास्तु
नराणामक्रियावताम्” ।
“अमर्म्मोपहिते देशे
शिरासन्ध्यस्थिवर्ज्जिते ।
विकारो योऽनुपर्य्येति तदसाध्यस्य
लक्षणं” ॥
इति सुश्रुतः ॥)

**असाध्वी**, स्त्री, (न साध्वी । नञ्समासः ।) अपति-

व्रता । यथा ज्योतिस्तत्त्वम्, --
“कन्यातुलाभृन्मिथुने च साध्वी
शेषेष्वसाध्वी धनवर्ज्जिता च ।
निन्द्येऽपि लग्ने द्विपदांश इष्टः

**असाक्षात्**, व्य, (न साक्षात् । नञ्तत्पुरुषः ।)

अप्रत्यक्षं । अदर्शनं । अगोचरं ॥ अतुल्यं । इति
साक्षात् शब्दार्थदर्शनात् ॥

**असिः**, स्त्री, (अस्यते अवगाहनेन पापानि दूरी-

करोति या । अस + इन् ।) नदीविशेषः । सा
च काशीदक्षिणदिक्स्थिता । यथा ।
“तस्मात् विश्वेश्वराज्ञैव काशीवासेऽत्र कारणं ।
असिश्च वरणा यत्र क्षेत्ररक्षाकृतौ कृते ॥
वाराणसीति विख्याता तदारभ्य महामुने ।
असेश्च वरणायाश्च सङ्गमं प्राप्य काशिका ॥
वाराणसीह करुणामयदिव्यमूर्त्ते-
रुत्सृ ज्य यत्र तु तनुं तनुभृत् सुखेन ।
विश्वेशदृङ्क्हसि यत् सहसा प्रविश्य
रूपेण तां वितनुता पदवीं दधाति ॥
जातो मृतो बहुषु तीर्थवरेषु ये त्वं
जन्तोर्न जातु भवशान्तिरभून्निमज्य ।
वाराणसीति गदतीह मृतोऽमृतत्वं
प्राप्याधुना मम बलात् स्मरशासनः स्यात्” ॥
इति काशीखण्डे ३० अध्यायः ॥

**असिः**, पुं, (असतीति । अस दीप्तौ इनि ।) अस्त्र-

भेदः । खाँडा तरवाल इत्यादि भाषा । तत्प-
र्य्यायः । खड्गः २ निस्त्रिंशः ३ चन्द्रहासः ४
रिष्टिः ५ कौक्षेयकः ६ मण्डलाग्रः ७ करपालः
८ कृपाणः ९ इत्यमरः ॥ प्रबालकः १०
भद्रात्मजः
११ रिष्टः १२ ऋष्टिः १३ धाराविषः १४
कौक्षेयः
१५ तरवारिः १६ तरवाजः १७ कृपाणकः
१८
करवालः १९ कृपाणी २० शस्त्रः २१ । इति
शब्दरत्नावली ॥ विषसनः २२ । इति
त्रिकांण्ड-
शेषः ॥
(“पर्णशालामथ क्षिप्रं विकृष्टासिः प्रविश्य सः ।
वैरूप्यपौनरुक्तेन भीषणां तामयोजयत्” ॥
इति रघवंशे १२ । ४० ॥

**असिक्नी**, स्त्री, (न सिता शुक्लकेशा । छन्दसि क्न-

मेक इति तस्य क्नः नान्तत्तात् ङीप्
च ।) अवृ-
द्धान्तःपुरचारिणी प्रेष्या ॥ इत्यमरः ॥
नदी वि-
शेषः । इति मेदिनी ॥ (दक्षपत्नी
वीरणसुता ।
यथा हरिवंशे । “असिक्नीमावहत्पत्नीं
वीरणस्य
प्रजापतेः । सुतां सुतपसा युक्ताम्”
इति ॥)

**असिगण्डः**, पुं, (अस्यते क्षिप्यते इति असिः क्षिप्त

इत्यर्थः । असिः गण्डो यस्मिन् ।)
क्षुद्रोपधानं ।
इति जटाधरः ॥ छोटवांलिश इति
भाषा ॥

**असितः**, पुं, (न सितः शुक्लः । नञ्समासः ।) कृष्ण-

वर्णः । तद्विशिष्टे त्रि । (यथा पुष्पदन्ते
॥
“असितगिरिनिभं स्यात् कज्जलं
सिन्धुपात्रम्” ।
“चकाशे विनिविष्टेन स सन्ध्येव
निशाऽसिता” ।
इति रामायणे ॥) इत्यमरः ॥ शनिग्रहः
। कृष्ण-
पक्षः । इति हलायुधः ॥
(स्वनामख्यातः सूर्य्य-
वंशोद्भवो भरतपुत्त्रो राजा । यथा,
रामायणे --
“भरतात् तु महातेजा असितो
समजायत” ।
स्वनामख्यातः कश्चित् व्यासशिष्यो
मुनिः । यथा
हरिवंशे ।

कन्यादिलग्नेष्वपि नान्यभागः” ॥ इति ।

**असान्द्रं**, त्रि, (न सान्द्रं निविडं । नञ्तत्पुरुषः ।)

अनिविडं । विरलं । इति जटाधरः ॥

**असाम्प्रतं**, व्य, (न साम्प्रतम् युक्तम् । नञ्तत्पुरुषः ।)

अयुक्तं । अनुचितं । तथा च कालिदासः ।
“विषवृक्षोऽपि संवर्द्ध्य स्वयं
छेत्तुमसाम्प्रतम्” ।
इति । कुमारे २ । ५५ ॥
(“सम्प्रत्यसाम्प्रतं वक्तुमुक्ते मुषलपाणिना” ।
इति माघे । “अविधाय
विवाहसत्क्रियामन-
योर्गम्यत इत्यसाम्प्रतम्” । इति रघौ ८ ।
६० ।)

**असारः**, पुं, (नास्ति सारो यस्य ।) एरण्डवृक्षः । इति

शब्दचन्द्रिका ॥

**असारं**, त्रि, (नास्ति सारो यस्य ।) साररहितवस्त ।

स्थिरांशशून्यं । तत्पर्य्यायः । फल्गु २ ।
इत्य-
मरः ॥ निःसारं ३ निष्फलं ४ । इति
शब्दरत्ना-
वली ॥ वार्त्तं ५ । इति जटाधरः ॥
(यथा -- मनुसंहितायां ८ । २०३ ।
“नान्यदन्येन संसृष्टरूपं विक्रयमर्हति ।
न चासारं न च न्यूनं न दूरे न तिरोहितम्” ।
“असारे खलु संसारे त्रीणि साराणि
भावयेत्” ।
इति हितोपदेशे ॥
“निदर्शनमसाराणां लघुर्बहुतृणं नरः ।”
इति माघे ॥
“बहूनामप्यसाराणां समवायो बलावहः ।”
इति पञ्चतन्त्रे ॥
“स्यन्दनाश्वैः समे युध्येदनूपे नौद्विपैस्तथा ।
वृक्षगुल्मावृते चापैरसिचर्म्मायुधैः स्थले ॥”
इति मनौ ७ । १९२ ॥) तस्य स्तुतिर्यथा ।
“असिर्व्विषसनः खड्गस्तीक्ष्णधारो दुरासदः ।
श्रीगर्भो विजयश्चैव धर्म्मपालो नमोऽस्तु ते ॥
इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा ।
नक्षत्रं कृत्तिका ते तु गुरुर्देवो महेश्वरः ॥
हिरण्यञ्च शरीरन्ते धाता देवो जनार्द्दनः ।
पिता पितामहो देवस्त्वं मां पालय सर्व्वदा ॥
नीलजीमूतसङ्काशस्तीक्ष्णदंष्ट्रः कृशोदरः ।
भावशुद्धोऽमर्षणश्च अतितेजास्तथैव च ॥
इयं येन धृता क्षौणी हतश्च महिषासुरः ।
तीक्ष्णधाराय शुद्धाय तस्मै खड्गाय ते नमः” ॥
इति
वृहन्नन्दिकेश्वरपुराणीयदुर्गोत्सवपद्धतिधृत-
वाराहीतन्त्रं ॥

**असिकं**, क्ली, (असति दीप्यते यत् । अस् +

इकन् ।) अधरचिवुकयोर्म्मध्यभागः । इति
हेमचन्द्रः ॥

**असिक्निका**, स्त्री, असिक्नी । दासी । इति जटाधरः ॥

(“गतोगणस्तूर्णमसिक्निकानां” । इति
पाणिनिः ।

“असितस्यैकपर्णा तु देवलस्य
महात्मनः” ।
पर्व्वतभेदः । यथा भारते, --
“तत्र पुण्यंह्रदः ख्यातो मैनाकश्चैव
पर्व्वतः ।
बहुमूलफलोपेतस्त्वसितो नाम
पर्व्वतः” ॥)

**असिता**, स्त्री, (न सिता । असित पलितयोः प्रति-

षेधात् वर्णादनुदात्तादिति ङीष् तकारस्य क्नका-
रादेशश्च न ।) नीलीवृक्षः । इति
राजनिर्घण्टः ॥
या अवृद्धा भहादेवीभिः प्रेष्यते
अन्तःपुरे च पुनः
पुन श्चरति सा । इत्यमरटीकायां
भरतः ॥ या
अवृद्धा युवती कृष्णकेशा प्रेष्या दासी
अन्तःपुरे
चरति सा इति सारसुन्दरी ॥
(स्वनामख्याता
स्वर्वेश्या । यथा हरिवंशे ।
“असिता च सुबाहुश्च सुवृत्ता सुमुखी
तथा” ।)

**असिताभ्रशेखरः**, पुं, (असितः कृष्णवर्णः अभ्रो मेघ-

इव शेखरो यस्य ।) वुद्धविशेषः । इति
त्रिकाण्ड-
शेषः ॥

**असितार्च्चिः** [स्] पुं, (असिता कृष्णा अर्च्चिः शिखा

यस्य ।) अग्निः । इति त्रिकाण्डशेषः ॥

**असितालुः**, पुं, (असितः आलुः ।) नीलालुः । इति

राजनिर्घण्टः ॥

**असितोत्पलं**, क्ली, (असितमुत्पलम् ।) नीलोत्पलं ।

इति राजनिर्घण्टः ॥ (यथा चरकः ।

“धिगिमां देहभृतामसारताम् ।” इति रघुवंशे ॥
“अतो विपरीतास्त्वसाराः” ॥ इति चरकः ॥)

**असारं**, क्ली, नास्ति सारो यस्य ।) अगुरु । इति रा-
जनिर्घण्टः ॥ (अगुरुशब्देऽस्य विशेषो ज्ञेयः ॥)

“उत्पलानि कषायाणि पित्तरक्तहराणि च” ॥)

**असिदंष्ट्रः**, पुं, (असिरिव तीक्ष्णा दष्ट्रा यस्य ।) जल-
जन्तुविशेषः । मकर इति ख्यातः । इति शब्द-
रत्नावली ॥

**असिदंष्ट्रकः**, पुं, (असिद्रंष्ट्र + स्वार्थे कन् ।) असि-
दंष्ट्रः । मकरः । इति त्रिकाण्डशेषः ॥

**असिद्धं**, त्रि, (न सिद्धम् । नञ्समासः ।) अपक्वं ।
अस्विन्नं । इति रत्नमाला ॥
सिद्धिरहितं ॥
(“स्वयमसिद्धः कथं परान् साधयेत्” इति न्यायः ।
न्यायमते,
आश्रयासिद्धत्वादिभिर्दोषैर्दुष्टो हेतुः ।
यथा, भाषापरिच्छेदे ।

:"अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः ।
कालात्ययोपदिष्टश्च हेत्वाभासस्तु पञ्चधा" ॥)

**असिद्धिः**, स्त्री, (न सिद्धिः । नञ्समासः ।) अनि-
ष्पत्तिः । न्यायमते सा त्रिविधा ।
पक्षासिद्धिः १
यथा काञ्चनमयपर्ब्बतो वह्निमान् इत्यादिः १ ।
स्वरूपासिद्धिः २ यथा, पर्ब्बतः काञ्चनमय-
वह्निमान् इत्यादिः २ । व्याप्यत्वासिद्धिः ३ यथा,
पर्ब्बतो वह्निमान् ज्वलत्वादित्यादिः ३ । (यथा
भाषापरिच्छेदे ।
"आश्रयासिद्धिराद्या स्यात् स्वरूपासिद्धिरप्यथ ।
व्याप्यतासिद्धिरपरा स्यादसिद्धिरतः स्त्रिधा ॥
पक्षासिद्धिर्यत्र पक्षो भवेन्मनिमयो गिरिः ।
ह्रदो द्रव्यं घूमवत्वादत्रासिद्धिरथापरा ॥
व्याप्यत्वासिद्धिरपरा नीलधूमादिके भवेत्" ॥)

**असिधावः**, पुं, (असिं धावति निर्म्मलं करोतीति ।
असि + धाव + अण् ।) शस्त्रमार्ज्जकः । इति
जटाधरः ॥ शिकलकर इति भाषा ।

**असिधावकः**, पुं, (असिधाव + स्वार्थे कन् ।) असि-
धारकर्त्ता । अस्त्रमार्जकः । इत्यमरः ॥

**असिधेनुः**, स्त्री, (असिर्धेनुरिव यस्याः । असेर्धेनु-
सादृश्येन छुरिकाया स्तद्वत्स्यसादृश्यम् ।) छुरि-
का । इति हलायुधः ॥ छुरी इति भाषा ।

**असिधेनुका**, स्त्री, (असिर्धेनुका इव यस्याः ।)

**असिमेदः**, पुं, (असिरिव मेदो निर्यासो यस्य ।)
विट्खदिरः । इति शब्दरत्नावली ॥ (इरिमेद-
शब्देऽस्य गुणा ज्ञेयाः ॥)

**असिहेतिः**, पुं, (असिर्हेतिः प्रधानास्त्रं यस्य ।)
खड्गधारी योद्धा । तत्पर्य्यायः ।
नैस्त्रिंशिकः २ ।
इत्यमरः ॥

**असु**, क्ली, (अस्यतेऽनेन । अस् + उ ।) चित्तं ।
उपतापः । इत्युणादिकोषः ॥

**असुः**, पुं, (अस्यन्ते इति । अस् + उ ।) प्राणः
पञ्चप्राणेषु बहुवचनान्तः । असवः ।
इत्यमरः ॥
("तेजस्विनः सुखमसूनपि संत्यजन्ति" ।
इति नीतिशतके । ९९ श्लोकः ।)

**असुखं**, क्ली, (न सुखम् । नञ्समासः ।) दुःखं ।
इति हेमचन्द्रः ॥
(यथा मनुसंहितायां १२ । १९ ।
"तौ धर्म्मं पश्यतस्तस्य पापं चातन्द्रितौ सह ।
याभ्यां प्राप्नोति संपृक्तः प्रेत्येह च सुखासुखम्" ॥
तत्रैव ४ । ७० ।
"न कर्म्म निष्फलं कुर्य्यान्नायत्यामसुखोदयम्" ।)

**असुधारणं**, क्ली, (असूनां धारणं ।) जीवनं । इत्य-
मरः ॥

**असुभृत्**, त्रि, (असून् विभर्तीति । असु + भृ +
क्विप् ।) प्राणी । जीवः । यथा ।
"दृतय इव

**असुक्षणं**, क्ली, (न + सूर्क्ष + ल्युट्) अवज्ञा । अना-
दरः । इत्यमरः ॥

**असूया**, स्त्री, (असू ञ असूयायाम् । असू + यक् +
अ ।) गुणषु दोषाविष्करणं । परगुणे दोषारोपणं
इत्यमरः ॥ (यथा साहित्यदर्पणे ।
"असूयान्यगुणर्द्धीनामौद्धत्यादसहिष्णुता ।
दोषोद्घोषभ्रूविभेदावज्ञाक्रोधेङ्गितादिकृत्" ॥
इयञ्च "हर्षासूया विषादाः" । इत्यादिना व्यभि-
चारिभावमध्येऽपि परिगणिता ॥)

**असूर्य्यम्पश्या**, स्त्री, (सूर्य्यमपि न पश्यति या । न +
सूर्य्य + दृश् + खश् । सत्यपि सूर्य्यदर्शने प्रयोगो
भवति । यदा तु सूर्य्यदर्शनाभावमात्रम् सूर्य्ये-
तरस्य चन्द्रादेर्दर्शनं वा विवक्षितं तदा खश् न
भवति ।) राजपत्न्यादिः । इति कलापपाणिनी ॥
("असूर्य्यम्पश्यरूपा त्वं किमभीरुरराय्र्यसे" ।
इति भट्टिः ॥)

**असूर्क्षणम्**, क्ली, (सूर्क्ष आदरे तस्मात् ल्युट् ततो
नञ्समासः ।) अनादरः । इत्यमरः ।

**असूक्षणं**, क्ली, (सूर्क्ष आदरे तस्मात् ल्युट् ततो
नञ्समासः ।) अनादरः । इत्यमरः ।

**असृक्**, [ज्] क्ली (न + सृज् + क्विप् ।) रक्तम् ।
इत्यमरः ॥ ("पानमप्यसृजः क्षिप्रं स्वपीडायै
जलौकसाम्" । इति दृष्टान्तशतकम् ।) कुङ्कुमं ।
इति राजनिर्घण्टः ॥ विष्कुम्भादि सप्तविंशति
योगान्तर्गतषोडशयोगः ॥ तत्र जातफलं ।
"धनी कुरूपः कुमतिर्दूरात्मा
विदेशगामी रुधिरप्रकोपः ।
महाप्रलोभी पुरुषो वलीया-
नसृक् प्रसूतौ किल यस्य जन्तोः" ।
इति कोष्ठीप्रदीपः । रक्तार्थे यथा, वैद्यकं ॥

छुरिका । इत्यमरः ॥

**असिपत्रः**, पुं, (इक्षुपक्षे, असिरिव तीक्ष्णं पत्रं यस्य ।) इक्षुः । खडगकोषः । नरकविशेषः । इति मेदिनी ॥ गुण्डनाम तृणं । इति राजनिर्घण्टः ॥

**असिपत्रकः**, पुं, (असिपत्र + कन् ।) इक्षुः । इति त्रिकाण्डशेषः ॥

**असिपत्रवनं**, क्ली, (असिरिव तीक्ष्णं पत्रं यस्य तादृशं वनं ।) नरकविशेषः । "पत्रैर्यत्र विदार्य्यते" । इति मनुः ॥ ("यस्त्विह वै निजपथादनापद्यपगतः पाषण्डञ्चोपगतस्तमसिपत्रवनं प्रवेश्य कषया प्रहरन्ति तत्रासावितस्ततो धावमानः उभयतोधारैस्तालवनासिपत्रैश्छिद्यमानसर्व्वाङ्गो हा हतोऽस्मीति परमया वेदनया मूर्च्छितः पदे पदे निपतति स्वधर्म्महा पाषण्डानुगमनफलं भुङ्क्ते" । इति श्रीभागवते ॥
"अशिपत्रवनं नाम नरकं शृणु चापरम् ।
योजनानां सहस्रं वै ज्वलदग्न्यास्तृतावनिः ॥
तप्ता सूर्य्यकरैश्चण्डैः कल्पकालाग्निदारुणैः ।
प्रपतन्ति सदा तत्र प्राणिनो नरकौकसः ॥
तन्मध्ये च वनं शीतं स्निग्धपत्रं विभाव्यते ।
पत्राणि यत्र खङ्गानि फलानि द्विजसत्तम" ॥
इति मार्कण्डेयपुराणे ।)

**असिपुच्छकः**, पुं, (असिरिव पुच्छो यस्य ।) शिशुश्वसन्त्यसुभृतो यदि तेऽनुविधा महदहमादयो ऽण्डमसृजन् यदनुग्रहतः" । इति श्रीभागवते दशमस्कन्धे ८७ अध्यये १४ श्लोकः ॥

**असुरः**, पुं, स्त्री, (अस्यति देवान् क्षिपति इति । असं + उरन् । यद्वा न सुरः विरोधे नञ्तत्पुरुषः । यद्वा नास्ति सुरा यस्य सः । सूर्य्यपक्षे असति दीप्यते इति उरन् ।) सुर विरोधी । स तु कश्यपात् दितिगर्भजातः । तत्पर्य्यायः । दैत्यः २ दैत्येयः ३ दनुजः ४ इन्द्रारिः ५ दानवः ६ शुक्रशिष्यः ७ दितिसुतः ८ पूर्ब्बदेवः ९ सुरद्विट् १० देवरिपुः ११ देवारिः १२ इत्यमरः ॥ ("सुराः प्रतिग्रहाद्देवाः सुरा इत्यभिविश्रुताः ।
अप्रतिग्रहणात्तस्य दैतेयाश्चासुराः स्मृताः" ॥
इति रामायणे ।) सूर्य्यः । इति मेदिनी । राहुः इति ज्योतिःशास्त्रम् ॥

**असुररिपुः**, पुं, (असुराणां रिपुः ।) विष्णुः । इति शब्दरत्नावली ॥

**असुरसा**, स्त्री, (न विद्यते सु शोभनो रसो यस्याः ।) वर्व्वरी । इति रत्नमाला । वावुइ तुलसी इति भाषा । (वर्व्वरीशब्दे ऽस्या विशेषो ज्ञातव्यः ॥)

"रसासृक्मांसमेदोटस्थि मज्जशुक्राणि धातवः" ।
"तस्य पित्तमसृङ्मांसं दग्ध्वा रोगाय कल्पते" ।
"वातासृक् पूर्व्वलक्षणं ।" इति माधवकरः ॥
"विदाह्यन्नं विरुद्धञ्च तत्तच्चासृक् प्रदूषणं ।
भजतां विधिहीनञ्च स्वप्नजागरमैथुनं ॥
प्रायेण सुकुमाराणामचङ्क्रणशीलिनां ।
अभिघातादशुद्धेश्च नृणामसृजि दूषिते ॥
वातलैः शीतलैर्वायुर्वृद्धः क्रुद्धो विमार्गकः ।
तादृशनासृजा रुद्धः प्राक् तदेव प्रदूषयेत्" ॥
इति वाभटः ॥
"असृजः श्लेष्मणश्चापि यः प्रसादः परो मतः" ।
"तद्वर्षाद्वादशात्काले वर्त्तमानमसृक् पुनः ।
जरापक्वशरीराणां यातिपञ्चाशतः क्षयं ॥
मदमूर्च्छा श्रमार्त्तानां वातविण्मूत्रसङ्गिनां ।
निद्राभिभूतभीतानां नृणां नासृक् प्रवर्त्तते" ॥
इति सुश्रुतः ॥)

**असृक्करः**, पुं, (असृक् शोणितं करोतीति । असृज् + कृ + ट ।) शरीरस्थधातुः । इति हेमचन्द्रः ॥
(भुक्तस्यान्नादिकस्य प्रथमं रसरूपता, रसस्य परिपाकतो रक्तरूपता इति वैद्यके प्रसिद्धिः ।
"रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते" ॥
इति सुश्रुतः ॥)

**असृक्पः**, पुं, स्त्री, (असृक् पिवतीति । असृज् + पा + ड) राक्षसः इति हेमचन्द्रः ॥

मारः । इति हाराबली ॥

**असिपुत्रिका**, स्त्री, (असेः पुत्रीव ।) छुरिका ।

इति हलायुधः ॥

**असिपुत्री**, स्त्री, (अमेः पुत्रीव ।) इत्यमरः ॥ छुरिका ॥

छरी इति भषा ।

**असुरा**, स्त्री, रात्रिः । रासिः । इति मेदिनी ॥

**असुराह्वं**, क्ली, (असुरस्याह्वा आह्वा यस्य ।) कांस्यं ।

इति हेमचन्द्रः ॥

**असुरी**, स्त्री, (अस् + उरन् + ङीष् ।) राजिका ।

इत्यमरटोकायां भरतादयः । राई सर्षा

इति

भाषा ॥ असुरपत्नी ॥

**असुर्क्षणं**, क्ली, (न + सुक्ष + ल्युट् ।) अवज्ञा । अनादरः । इत्यमरः ।

**असुस्थः**, त्रि, (न सुस्थः । नञ्समासः ।) सुखः-

स्थितिरहितः । रोगी ॥

**असृग्धरा**, स्त्री, (असृक् शोनितं धरतीति । असृज् + धृ + अच् ।) चर्म्म । इत्यमरटीकायां भरतादयः ॥

**असृपाटी**, स्त्री, पुं, (न + सृप् + काट् ।) रक्तधारा इत्यमरटीकासारमुन्दरी ।

**असेचनकं**, त्रि, (न सिच्यते मनो यस्मिन् । न + सिच् + ल्युट् । संज्ञायां कन् ।) यस्य दर्शनात् तृप्ते रन्तो नास्ति तत् । अत्यन्तप्रियदर्शनं । इत्यमरः । याहाके देखिया तृप्तिर शेष ना हय एमन वस्तु । ("नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापं" । इति साहित्यदर्पणे ॥)

**असौम्यस्वरः**, त्रि, (असौम्यः कठोरः स्वरो यस्य ।) काकवत् मन्दस्वरयुक्तः । तत्पर्य्यायः । अस्वरः २ । इत्यमरसिंहः ॥

**असौष्ठवं**, क्वी, (न सौष्ठवं । नञ्समासः) अप्रशंसनीयत्वं । अशोभनत्वं । अनातिशय्यं । नञ् पूर्ब्बात् सुष्टुशब्दात् भावे ष्णप्रत्ययः ॥ ("गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं" । इति मालतीमाधवे । अलङ्कारशास्त्रे स्मरदशाभेदः । यथा साहित्यदर्पणे । "असौष्ठवं मलापत्तिस्तापस्तु विरहज्वरः" ॥)

**अस्तः**, पुं, (अस्यन्त रविकिरणा यस्मिन् । अस् + त ।)

**अस्ताद्रिः**, पुं, (अस्तः पश्चिमोऽद्रिः पर्ब्बतः ।) अस्ताचलः । इति त्रिकाण्डशेषः ॥

**अस्ति**, व्य, (अस् + स्तिक्) विद्यमानता । तत्पर्य्यायः सत्त्वं २ । इत्यमरः ॥ अस्धातोस्तिपि कृतेऽप्येतद्रूपं ॥ (यथा चानक्ये । "अतिथिर्बालकश्चैव राजा भार्य्या तथैव च । अस्ति नास्ति न जानन्ति देहि देहि पुनः पुनः" ॥)

**अस्तिमान्**, त्रि, (अस्ति विद्यमानमिति विद्यते यस्य अस्ति + मतुप् ।) धनी इति हेमचन्द्रः ॥

**अस्तु**, व्य, (अस् + तुन् ।) अङ्गीकारः । असूया । पीडा । इति विश्वमेदिनौ । असधातोः तुपिकृतेऽप्येतद्रूपं स्यात् ॥

**अस्त्यानं**, क्ली, (न स्त्यानं । नञ्सभासः ।) भर्त्सनं । निन्दा । इति त्रिकाण्डशेषः ॥

**अस्त्रं**, क्ली, (अस्यते क्षिप्यते यत् । अस् + ष्ट्रन् ।) प्रहारयोग्यद्रव्यमात्रं । हातियार इति भाषा । तत्पर्य्यायः । आयुधं २ प्रहरणं ३ शस्त्रं ४ । इत्यमरः ॥ खड्गः ५ । धनुः ६ । इति मेदिनो । क्षेपनयोग्यवाणादि । इति रायमुकुटः ॥ ("प्रयुक्तमप्यस्त्रमितो वृथा स्यात्" । "प्रत्याहतास्त्रो गिरीशमार्ज्जः २ । असिधावः ३ । असिधावकः ४ । इति शब्दरत्नाबली ॥

**अस्त्रसायकः**, पुं, नाराचास्त्रं । समुदयलौहमयवाणः । इति शब्दमाला ॥

**अस्त्रागारं**, क्ली, (अस्त्राणामागारं ।) अस्त्ररक्षणगृहं । सेलाखाना इति पारस्यभाषा । तत्पर्य्यायः । आयुधागारं २ । यथा, -- "स्थापना जातितत्वज्ञः सततं प्रतिजागृता । राज्ञः स्यादायुधागारे दक्षः कर्म्मसु चोद्यतः" ॥ इति मात्स्ये १८९ अध्यायः ॥

**अस्त्रागारः**, पुं, अस्त्ररक्षणगृहं । सेलाखाना इति भाषा ॥

**अस्थागं**, त्रि, (अस्थामस्थितिं गच्छति प्राप्नोतीति । अस्था + गम + ड ।) अगाधं । अतिगभीरं । इति हेमचन्द्रः ॥

**अस्थाघं**, त्रि, (अस्थामस्थितिं हन्तीति । अस्था + हन + अप् ।) अतलस्पर्शं । इति हेमचन्द्रः ॥

**अस्थानं**, त्रि, (नास्ति स्थानं प्राशस्थ्यं यत्र) अतलस्पर्शं । इति जटाधरः ॥ मन्दस्थले क्ली ॥ ("अस्थाने पतितामतीवमहतामेतादृशी स्याद्गतिः" । इति नीतिप्रपञ्चे ।)

**अस्थायं**, त्रि, अगाधं । स्थीयते यत्रेत्यधिकरणवाच्ये घञि कृते पश्चादादन्ताद्यन्प्रत्यये स्थायं ततो न स्थायमस्थायमिति नञ्समासनिष्पन्नं । न सम्भवति स्थायः स्थितिर्यत्र इति केचित् ॥

अस्ताचलः । पश्चिमाचलः । तत्पर्य्यायः । चरम
क्ष्माभृत् २ । इत्यमरमेदिन्यौ ॥
("विडम्बयत्यस्तनिमग्नसूर्य्यम्" । इति रघुः ।
"सहस्रशिखरञ्चैव नानातीर्थसमाकुलम् ।
चकार रत्नसंकीर्णं भूयोऽस्तं नाम पर्व्वतं" ॥
इति हरिवंशे ।)
लग्नात् सप्तमस्थानं । इति दीपिका ॥

**अस्तं**, त्रि, (अस् + क्त ।) क्षिप्तं । अवसानप्राप्तं । इति
मेदिनी ॥ ("पतिरपास्तसंज्ञा मतिः" । इति मालतीमाधवे ॥
"निरस्तगाम्भीर्य्यमपास्तधैर्य्यं" ।
इति माघे ॥ सूर्य्यास्तगमनं । "करजाल मस्त-
समयेऽपि सताम्" । इति माघे ॥
तथा कुमारसम्भवे २ । २३ ।
"यमोपि विलिखन् भूमिं दण्डेनास्तमितत्विषा ।
कुरुतेस्मिन्नमोघेपि निर्व्वानालातलाघवम्" ॥)

**अस्तं**, क्ली, भृत्युः । इति हेमचन्द्रः ॥

**अस्तकः**, पुं, (अस्त + कन् ।) मोक्षः । निर्ब्बाणं ।
इति त्रिकाण्डशेषः ॥

**अस्तम्**, व्य, (अस् + तम् ।) अदर्शनं । इत्यमरः ॥
(राज्यमस्तमितेश्वरम्" इति रघुः ॥)

**अस्तमती**, स्त्री, (अस्तं अततीति । अस्तम् + अत् +
अच् + गौरादित्वात् ङीष् ।) शालपर्णी वृक्षः ।
इति शब्दरत्नाबली ॥

**अस्ताघः**, त्रि, (अस्तं गतं अघं मालिन्यं यस्मात् ।)
अगाधः । अतिगभीरः । इति हेमचन्द्रः ।
प्रभावात्" । इति च रघुः ॥) तन्निरूपनं यथा, --
"दण्डसाध्यं यतो राज्यं स दण्डः शास्त्रसंश्रितः ।
अस्त्राणि भूमिपालानां निरूप्यन्ते ततः क्रमात्" ॥
अथ गणना ।
"खड्गचर्म्म धनुर्व्वाणौ शल्वभल्वौ तथापरौ ।
अर्द्धचन्द्रश्च नाराचः शक्तियष्ठी तथा परे ॥
परशुश्चक्रशूले च परिघश्चैवमादयः ।
अस्त्रभेदाः समुद्दिष्टाः श्रीमद्भोजमहीभुजा" ॥
वात्स्यस्तु ।
"अस्त्रन्तु द्विविधं प्रोक्तं निर्म्मायं मायिकन्तथा ।
खड्गादिकन्तु निर्म्मायं मायिकं दहनादिकं ॥
दहनोऽथ जलं काष्ठं लोष्ट्रं शब्दादयस्तथा ।
तप्ततैलादिकञ्चैव मायिकस्यास्त्रमुच्यते ॥
खड्गादीनान्तुगणना पूर्ब्बमेव निदर्शिता ।
अस्त्रात्मनैव निर्द्दिष्टः कवचादिरपीष्यते" ॥
इति युक्तिकल्पतरुः ॥ * ॥
स्वड्गचर्म्मादि परीक्षा तत्तच्छब्दे द्रष्टव्या ।

**अस्त्रकण्टकः**, पुं, (अस्त्रं कण्टक इव । वाणास्त्रस्य
कण्टकाकृतित्वात् ।) वाणः । इति त्रिकाण्डशेषः ॥

**अस्त्रकारकः**, पुं, (अस्त्राणां कारकः ।) अस्त्रनिर्म्माता ।
शस्त्रनिर्म्मायकः । आयुधकारः । अस्त्रकारी ॥

**अस्थायी**, [न्] त्रि, स्थितिरहितः । नश्वरः । स्थातुं
शीलमस्येति शीलार्थे णिनि स्थायी, न स्थायी अस्था-
यीति नञ्समासनिष्पन्नः ॥

**अस्थारं**, त्रि, (अस्थामस्थितिं राति । अस्था + रा
+ ड ।) अतलस्पर्शं । अगाधं । इति शब्द-
रत्नावली ॥

**अस्थावरं**, क्ली, स्थावरेतरद्रव्यं । जङ्गमवस्तु । न स्था-
वरं अस्थावरं इति नञ्समासनिष्पन्नं ॥

**अस्थावरं**, त्रि, (न स्थावरम् । नञ्समामः ।) स्था-
वरेतरद्रव्यं । जङ्गमवस्तु । इति स्मृतिः ॥

**अस्थि**, क्ली, (अस्यते क्षिप्यते यत् । अस् + क्थिन् ।)
शरीरस्थसप्तधात्वन्तर्गतधातुविशेषः । हाड इति
भाषा । तत्सङ्ख्यादि शारीरशब्दे द्रष्टव्यं ॥ तत्-
पर्य्यायः । कीकसं २ कुल्यं ३ मेदोजं ४ । इत्य-
मरादयः ॥ (अस्थिस्वरूपाद्युक्तं भावप्रकाशे ।
"मेदो यत् स्वाग्निना पक्वं वायुना चातिशोषितं ।
तदस्थिसंज्ञां लभते स सारः सर्ब्बविग्रहे ॥
अभ्यन्तरगतैः सारैर्यथा तिष्ठन्ति भूरुहाः ।
अस्थिसारैस्तथा देहा ध्रियन्ते देहिनां ध्रुवं ॥
तस्माच्चिरविनष्टेषु त्वङ्मांसेषु शरीरिणाम् ।
अस्थीनि न विनश्यन्ति सारा एतानि सर्व्वथा" ॥
"मेदसोऽस्थि ततो मज्जा मज्जतः शुक्रसम्भवः" ॥
इति सुश्रुतः ॥
त्रीणि सषष्ठान्यस्थिशतानि वेदवादिनो भाषन्ते ।
शल्यतश्रेषु त्रीण्येवशतानि । तेषां सविंशमस्थि-
शतं शाखासु । सप्तदशोत्तरं शतं स्रोणि पार्श्व-

**अस्ताचलः**, पुं, (अस्ताय अचलः । यद्वा अस्तः पश्चि-

मोऽचलः) अस्तगिरिः । पश्चिमाचलः । इति

शब्दरत्नावली ।

(“अस्ताचलचूडावलम्बिनि

भगवति कुभुदिनीनायके चन्द्रमसि” । इति

हितोपदेशः ॥)

**अस्त्रचिकित्सकः**, पुं, (अस्त्रेण चिकित्सतीति । अस्त्र

+ कित् + स्वार्थे सन् + ण्वुल् ।)

शस्त्रवैद्यः ॥

(“छेद्यादिष्वनभिज्ञो यः स्नेहादिषु च

कर्म्मषु” ।

इत्यादि सुश्रुतः ॥)

**अस्त्रजित्**, क्ली, (अस्त्रं अस्त्राघातजं व्रणादिकं जयति

निवारयति । अस्त्र + जि + क्विप् ।)

वृक्षविशेषः ।

कवाट् वेटु इति ख्यातं । कवाडवण्टुया इति

केचित् । अस्य पर्य्यायः ।

कवाटवक्रशब्दे द्रष्टव्यः ।

अस्त्रजित् इति चं पाठः । इति

रत्नमाला ॥

**अस्त्रमार्ज्जः**, पुं, (अस्त्रं मार्ष्टि । अस्त्र + मृज् + अण् ।)

अस्त्रमार्ज्जकः । शानकरः ।

तत्पर्य्यायः । शस्त्र-

पृष्ठोदरोरस्सु । ग्रीवां प्रत्यूर्द्ध त्रिषष्टिः । एव-

:मस्थ्नां त्रीणि शतानि पूर्य्यन्ते ॥

एकैकस्यान्तु पादाङ्गुल्यां त्रीणि त्रीणि तानि पञ्च-
दश । तलकूष्ठगुल्फसंश्रितानि दश । पार्ष्ण्यामेकं ।
जङ्घायां द्वे । जानुन्येकं । एकमूराविति । त्रिंशदेव-
मेकस्मिन् सक्थीनि भवन्ति । एतेनेतर सक्थि-
बाहू च व्याख्यातौ ॥ श्रोण्यां पञ्च तेषां गुदभग
नितम्बेषु चत्वारि । त्रिकसंश्रितमेकं । पार्श्वे
षट्त्रिंशदेवमेकस्मिन् द्वितीयेऽप्येवं । पृष्ठे त्रिं-
शत् । अष्टावुरसि । द्वे अक्षकसंज्ञे । ग्रीवायां
नवकं । कण्ठनाड्यां चत्वारि । द्वे हन्वोः । दन्ता
द्वात्रिंशत् । नासायां त्रीणि । एकं तालुनि । गण्ड-
कर्णशङ्खेष्वेकैकं । षट् शिरसि ॥ एतानि पञ्च-
बिधानि भवन्ति । तद्यथा ।
कपाल-रुचक-तरुण-बलय-नलकसंज्ञानि । तेषां
जानुनितम्बांसगण्डतालुशङ्खशिरस्सु कपालानि ।
दशनास्तु रुचकानि । घ्राणकर्णग्रीबाक्षिकोषेषु
तरुणानि । पाणिपादपार्श्वपृष्ठोदरोरस्सु बल-
यानि । शेषाणि नलकसंज्ञानि ॥
"मांसान्यत्रनिबन्धानि सिराभिः स्नायुभिस्तथा ।
अस्थीन्यालम्बनं कृत्वा नशीर्य्यन्ते पतन्ति वा" ॥
इति च सुश्रुतः ॥) वीजं । इति रायमुकुटः वैद्य-
कश्च ॥ आँटी इति भाषा ।

**अस्थिकुण्डं**, क्ली, (अस्थ्नां कुण्डम् ।) अस्थिपूर्णनरक-
कुण्डविशेषः । यथा, --
"पितृणां यो विष्णुपदे पिण्डं नैव ददाति च ।

**अस्थिरमतिः**, त्रि, (अस्थिरा मतिर्यस्य ।) चञ्चल-
बुद्धिः । यथा । "विक्रान्तं कुलमुख्यमस्थिरमतिं
वित्तेश्वरं साङ्गिराः" । इति ज्योतिस्तत्त्वेद्विग्रह-
योगफलं ॥

**अस्थिरविभूतिः**, स्त्री, (अस्थिरा विभूतिः ।) चञ्चलै-
श्वर्य्यं । यथा । "अस्थिरविभूतिमैत्रं चलमटनं
स्खलितनियममपि चरभे" । इति ज्योतिस्तत्त्वे
राशिफलं ॥

**अस्थिविग्रहः**, पुं, (अस्थिसारो विग्रहो यस्य ।)
भृङ्गिनामकशिवसहचरः । इति हेमचन्द्रः ॥

**अस्थिशृङ्खला**, स्त्री, (अस्थ्नां शृङ्खला योजनकारणम् ।)
ग्रन्थिमान् वृक्षः । इति राजनिर्घण्टः ॥ (हाड-
योडा इति भाषा । यथा भावप्रकाशः ॥
"काण्डं त्वग्विरहित मस्थिशृङ्खलाया
माषार्द्धं द्विदलमकञ्चुकं तदर्द्धम् ।
संपिष्टं सुतनु ! ततस्तिलस्य तैले
संपक्वं वटकमतीव वातहारि" ॥)

**अस्थिसंहारः**, पुं, (अस्थीनि संहरति योजयति ।
अस्थि + सं + हृ + अण् ।) वृक्षविशेषः । हाडञ्च
हाडजोडा इति भाषा । तत्पर्य्यायः । वज्रवल्ली
२ ग्रन्थिमान् ३ कुलिशं ४ अमरः ५ । इति
रत्नमाला ॥ हस्तिशुण्डी ६ वनालिका ७ । इति

अस्फुटं । यथा । म्लिष्टं । अस्पष्टं । इति मुग्ध-
बोधव्याकरणं ॥

**अस्पृहा**, स्त्री, (न स्पृहा । नञ्समासः ।) इच्छा-
भावः । यथा, --
"यथोत्पन्नेन सन्तोषः कर्त्तव्यो ऽत्यल्पवस्तुना ।
परस्याचिन्तयित्वार्थं सास्पृहा परिकीर्त्तिता" ॥
इत्येकादशीतत्त्वं ॥ (नास्ति स्पृहा यस्येति वाक्ये
त्रि, स्पृहा रहितः । उदासीनः ।)

**अस्फुटं**, त्रि, (न स्फुटम् । नञ्समासः ।) अस्पष्टं ।
अव्यक्तं । म्लिष्टवाक्यं । इति हेमचन्द्रः ॥

**अस्फुटवाक्**, [च्] त्रि, (अस्फुटा वाक् यस्य ।) अस्पष्ट-
वक्ता । तत्पर्य्यायः । लोहलः २ ।
इत्यमरसिंहः ॥

**अस्मद्**, त्रि, आत्मवाची सर्व्वनामशब्दः । अस्य रूपं
यथा । अहं, आमि । आवां, आमरा दुइ । वयं,
आमरा अनेक । इत्यादि व्याकरणं ॥ एकविंशति-
विभक्तिषु तस्य रूपाणि यथा । अहं १ आवां २
वयं ३ । १ । मां ४ आवां ५ अस्मान् ६ । २ ।
मया ७ आवाभ्यां ८ अस्माभिः ९ । ३ । मह्यं १०
आवाम्भां ११ अस्मभ्यं १२ । ४ । मत् १३ आवा-
भ्यां १४ अस्मत् १५ । ५ । मम १६ आवयोः १७

स च तिष्ठत्यस्थिकुण्डे स्वलोमाव्दं महेश्वरि” ॥

इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २७ अध्यायः ॥

**अस्थिकृत्**, पुं, (अस्थि करोति यः । अस्थि + कृ + क्विप् ।) शरीरस्थमेदो धातुः । इति हेमचन्द्रः ॥ (मेदसोऽस्थि । इति सुश्रुतः ।)

**अस्थिजः**, पुं, (अस्थ्नो जायते इति । अस्थि + जन + ड ।) मज्जा । इति राजनिर्घण्टः ॥ (मज्जशब्देऽस्य गुणादयो द्रष्टव्याः ।)

**अस्थितुण्डः**, पुं, स्त्री, (अस्थीव दारुणं तुण्डं यस्य ।) पक्षी । शब्दमाला ॥

**अस्थिधन्वा**, [न्] पुं, (अस्थिमयं धनुर्यस्य ।) शिवः । इति हेमचन्द्रः ॥

**अस्थिपञ्जरः**, पुं, (अस्थि पञ्जर इव ।) शरीरास्थि-समूहः । तत्पर्य्यायः । करङ्कः २ कङ्कालं ३ । इति हेमचन्द्रः ॥

**अस्थिभक्षः**, पुं, स्त्री, (अस्थि भक्षयति । अस्थि + भक्ष + अच् ।) कुक्कुरः । इति हाराबली । (पक्षि-विशेषः । हाडगिला इति भाषा ।)

**अस्थिभुक्** [ज्] पुं, स्त्री, (अस्थि भुङ्क्ते इति । अस्थि + भुज् + क्विप् ।) कुक्कुरः । इति हेमचन्द्रः ॥

**अस्थिमाली**, [न्], पुं, (अस्थिमाला विद्यते यस्य अस्थिमाला + इन्) शिवः । इति हेमचन्द्रः । (“शूलहस्थोऽस्थिमाली” इति शिवशतके ।)

**अस्थिरः**, त्रि, (न स्थिरः । नञ्तत्पुरुषः ।) चञ्चल-प्रकृतिः । तत्पर्य्यायः । सङ्कसुकः २ । इत्यमरः । अनिश्चितः । इति खामी ॥ (“लुब्धः कूराऽवशोऽसत्यः प्रमादी भीरुरस्थिरः” ॥

हारावली । अस्य गुणाः ।
वलास्थिभग्नहित-
कारित्वं । वायुनाशित्वञ्च । इति
राजवल्लभः ॥
यथा, --
“ग्रन्थिमानस्थिसंहारी वज्राङ्गी
चास्थिशृङ्खला ।
अस्थिसंहारकः प्रोक्तो
वातश्लेष्महरोऽस्थियुक् ॥
उष्णः सरः कृमिघ्नश्च दुनामघ्नो
ऽक्षिरोगजित् ।
रुक्षः स्वादुर्लघुर्वृष्यः पाचनः पित्तलः
स्मृतः ॥
काण्डं त्वग्विरहित मस्थिशृङ्खलाया
माषार्द्धं द्विदलमकञ्चुकं तदर्द्धं ।
संपिष्टं सुतनु ततस्तिलस्य तैले
संपक्वं वटकमतीव वातहारि” ॥
इति भावप्रकाशः ॥
(“अस्थिभग्नेऽस्थिसंहारो
हितोवल्योऽनिलापहः”
इति वैद्यकद्रव्यगुणः ।)

**अस्थिसंहारी**, स्त्री, (अस्थीनि संहरति या । अस्थि + सम् + हृ + अण् + स्त्रियां ङीप्) ग्रन्थिमान् वृक्षः । इति राजनिर्घण्टः ॥ (अस्थिसंहारशब्देऽस्य गुणा ज्ञातव्याः ।)

**अस्थिसारः**, पुं, (अस्थ्नः सारः पाकपरिणामः ।) मज्जा । इति राजनिर्घण्टः ॥

**अस्थिस्नेहसञ्चकः**, पुं, (अस्थ्नः स्नेहस्तस्य सञ्चकः ।) मज्जा । इति राजनिर्घण्टः ॥

**अस्थैर्य्यं**, क्ली, अस्थिरता । स्थिरस्य भावः इत्यर्थे ष्ण्यप्रत्यये स्थैर्य्यं न स्थैर्य्यमस्थैर्य्यमिति नञ्-

अस्माकं १८ । ६ । मयि १९ आवयोः
२० अस्मासु
२१ । ७ । एतानि त्रिषु लिङ्गेषु समानानि
द्वितीया-चतुर्थी-षष्ठीनां एकवचन-
द्विवचन-वहुव-
चनविभक्तिषु तस्य रुपान्तराणि यथा ।
द्वितीयै-
कवचने मा । चतुर्थी-षष्ठ्योरेकवचने मे ।
आसां-
द्विवचने नौ । आसां वहुवचने नः ।
श्लोकपाद-
वाक्यादौ एतानि रूपाणि न स्युः । च वा
हा ह
एव शब्दयोगे अदर्शनार्थदश्यर्थधातुयोगे
च न
स्युः । इति व्याकरणं ॥

**अस्मन्तं**, क्ली, अश्मन्तं । चुल्ली । इति रायमुकुटः ॥ उनान आखा इति भाषा ॥

**अस्रः**, पुं, (अस् + रक् ।) कोणः । केशः । इत्यमरः ॥

**अंस्रं**, क्ली, (अस्यते क्षिप्यते यत् । अस् + र ।) रक्तं । अस्रु । इत्यमरः ॥ (रक्तार्ते यथा, --
“पिपासादाहपित्तास्रयुक्तं पित्तज्वरं
जयेत्” ।
इति शार्ङ्गधरः ॥
“क्षीणेऽस्रे मधुराकाङ्क्षा मूर्च्छा च त्वचि
रुक्षता ।
शैथिल्यञ्च सिराणां
स्याद्वातादुन्मार्गगामिता” ।
इति भावप्रकाशः ॥ “अस्रस्राविणो
विस्रा” इति ।
“अशुद्धौ बलिनोऽप्यस्रं न प्रस्थात्
स्रावयेत्परं” ।
इति वाभटः ॥ * ॥ नेत्रजलार्थे यथा, --
“कुर्य्यात्सास्रं शिराहर्षं
तेनाक्ष्युद्वीक्षणाक्षमं” ।

इति हितोपदेशे ।)

समासेन निष्पन्नं ॥ (“अस्यैर्य्येण विभूतयोऽप्युप-
हता ग्रस्थं न किं केन वा” । इति वैराग्यशत-
कम् ॥ २९ श्लोकः ।)

**अस्निग्धदारु**, क्ली, (अस्निग्धं कठोरं दारु ।) देव-
काष्ठं । देवदारुभेदः । इति राजनिर्घण्टः ॥

**अस्पष्टं**, त्रि, (न स्पष्टम् । नञ्तत्पुरुषः ।) अव्यक्तं

इति वाभटः ॥ * ॥ आलस्यनयने साम्रे, इति
चरकः ॥)

**अस्रकण्ठः**, पुं, (अस्रं कण्ठे यस्य ।) वाणः । इति
हारावली ॥

**अस्रखदिरः**, पुं, (अस्ववर्णः खदिरः ।) रक्तखदिर-
वृक्षः । इति राजनिर्घण्टः ॥
(खदिरशब्देऽस्यगुणादयो ज्ञेयाः ॥)

**अस्रजं**, क्ली (अस्रात् रक्तात् परिपाकेण जायते यत् ।
अस्र + जन् + ड ।) मांसं । इति राजनिर्घण्टः ॥
(मांसशब्देऽस्यविशेषो ज्ञातव्यः ॥)

**अस्रपः**, पुं, स्त्री, (अस्रं पिवतीति । अस्र + पा +
ड ।) राक्षसः । इत्यमरः ॥
("द्विरागमं लघुध्रुवे चरेऽस्रपे मृदूडुनि" ।
इति मुहूर्त्तचिन्तामाणिः । जलौकाः ।)

**अस्रपत्रकः**, पुं, (अस्रमिव रक्तं पत्रं यस्य । संज्ञायां
कन् ।) भिण्डावृक्षः । इति राजनिर्घण्टः ॥

**अस्रपा**, स्त्री, (अस्रं रक्तं पिवति या । अस्र + पा +
ड + टाप् ।) जलौकाः । इति हेमचन्द्रः ॥

**अस्रफला**, स्त्री, (अस्रमिव रक्तं फलं यस्याः ।) सल्ल-
कीवृक्षः । इति राजनिर्घण्टः ॥

**अस्रमातृका**, स्त्री, (अस्रस्य रक्तस्य मातेव पोषिका ।
संज्ञायां कन् । एषा हि शरीरस्थधातूनां
श्रेष्ठा ।)
शरीररसः । इति राजनिर्घण्टः ॥

**अस्ररोधिनी**, स्त्री, (अस्रं क्षतजरक्तं रुणद्धि या ।
अस्र + रुध + णिन् + स्त्रियां ङीप् ।)
लज्जालु-
लता । इति रत्नमालाराजनिर्घण्टौ ॥

**अस्रविन्दुच्छदा**, स्त्री, (अस्रविन्दुरिब विन्दुः च्छदे
पत्रे यस्याः ।) लक्ष्मणा नाम कन्दः ॥
इति राज-
निर्घण्टः ॥

**अस्राज्जर्कः**, पुं, (अस्रानामर्ज्जकः ।) श्वेततुलसी ।
इति रत्नमाला ॥

**अस्रु**, क्ली, (अस्यते क्षिप्यते । अस् + रु ।) चक्षु-
र्ज्जलं । तत्पर्य्यायः । नेत्राम्बु २ रोदनं ३
अस्रं ४
नन्तरं १ दिनं ।
आरण्यकनामकवेदभागसमाप-
नानन्तरं १ दिनं । पञ्चपर्व्वाणि ५ दिनानि ।
चैत्रशुक्लप्रतिपत् १ दिनं ।
श्रावणशुक्लप्रतिपत् १
दिनं । मार्गशुक्लप्रतिपत् १ दिनं । एताः
प्रति-
पदो नित्याः । अन्याः काम्याः । वज्रपाते
आका-
लिकः । विद्युत्समकालीनमेघशब्दे
आकालिकः ।
चतुर्द्दशमन्वन्तराः १४ तिथयः । युगाद्याः ४
तिथयः । माघमासस्योभयपक्षीयद्वितीया २
दिने ।
आश्विनस्योभयपक्षीयद्वितीया २ दिने । चैत्र-
कृष्णपक्षद्वितीया १ दिनं ।
कार्त्तिकस्योभयपक्षीय-
द्वितीया २ दिने । आषाढस्योभयपक्षीयद्वि-
तीया २ दिने ।
मार्गमासस्योभयपक्षीयद्वितीया
२ दिने । फाल्गुनमासस्योभयपक्षीयद्वितीया
२
दिने । उत्सवदिनानि अनेकानि ।
अक्षयतृतीया
१ दिनं । इति स्मृतिः ॥
("कृष्णेऽष्टमी तन्निधनेऽहनी द्वे
कृष्णेतरेऽप्येवमहर्द्विसन्ध्यं ।
अकालविद्युत् स्तनयित्नुघोषे
स्वतन्त्रराष्ट्रक्षितिपव्यथासु ॥
श्मशानयानाद्यतनाहवेष
महोत्सवौत्पातिकदर्शनेषु ।
नाध्येयमन्येषु च येषु विप्रा
नाधीयते नाशुचिना च नित्यं" ॥ इति सुश्रुतः
॥)

**अस्वामिकं**, त्रि, (नास्ति स्वामी उत्तराधिकारी
यस्मिन् ।) स्वामिरहितवस्तु । अकर्तृकं ।
वेयो-
हीनमूल्ये अल्पतरेण मूल्येन क्रये ।
वेलाहीने
वेलया हीनो वेलाहीनः क्रयो रात्र्यादौ
कृतः तत्र
च क्रेता तस्करो भवति । तस्करवत्
दण्डभाक्
भवतोत्यर्थः । यथोक्तं ।
"द्रव्य मस्वामिविक्रीतं प्राप्य स्वामी
तदाप्नुयात् ।
प्रकाशक्रयतः शुद्धिः क्रेतुः स्तेयं
रहःक्रयात्" इति ॥
स्वाम्यभियुक्तेन क्रेत्रा किं कर्त्तव्यमित्यत
आह ।
"नष्टापहृतमासाद्य हर्त्तारं ग्राहयेन्नरं ।
देशकालातिपत्तौ च गृहीत्वा
स्वयमर्पयेत्" ॥
नष्टमपहृतं वान्यदीयं क्रयादिना प्राप्य
हर्त्तारं
ग्राहयेत् चौरोद्धरणकादिभिः ।
आत्मविशुद्ध्यथ
राजदण्डाप्राप्त्यर्थञ्च ।
अथाविदितदेशान्तरं गतः
कालान्तरे वा विपन्नस्तदा
मूलसमाहरणाशक्ते-
र्विक्रेतारमदर्शयित्वैव स्वयमेव तद्धनं
नाष्टिकस्य
समर्पयेत् । तावतैवासौ शुद्धो भवतीति
श्रीकरा-
चार्य्येण व्याख्यातं । तदिदमनुपपन्नं ।
विक्रेतु-
र्द्दर्शनाच्छुद्धिरित्यनेन पौनरुक्तप्रसङ्गात् ।
अतो
ऽन्यथा व्याख्यायते । नष्टापहृतमिति
नाष्टिकं
प्रत्ययमुपदेशः । नष्टमपहृतं वा आत्मीयं
द्रव्य-
मासाद्य क्रेतृहस्तस्थं ज्ञात्वा तं हर्त्तारं
क्रेतारं

अश्रु ५ । इत्यमरः ॥ वास्पं ६ । इति शब्दरत्नावली ॥ लोचं ७ । इति जटाधरः ॥ (“श्रुत्वा श्रुत्वास्रुधारां त्यजति” । इति कीचकबधः । “रागास्रुवेदनाशान्तौ परं लेखनमञ्जनं” । इति वाभटः ॥)

**अस्वच्छन्दः**, त्रि, (न स्वच्छन्दः । नञ्समासः ।) अधीनः । आयत्तः । इत्यमरः ॥

**अस्वतन्त्रः**, त्रि, (न स्वतन्त्रः । नञ्समासः ।) परतन्त्रः । पराधीनः । इति जटाधरः ॥

**अस्वप्नः**, पुं, (नास्ति स्वप्नो निद्रा यस्य ।) देवता । इत्यमरः ॥ (निद्राया अभावार्थे यथा, -- “अस्वप्नः सन्ततारुक् च मज्जास्थिकुपितेऽनिले” ॥ इति माधवकरः ॥) “मज्जस्थोऽस्थिषु सौषिर्य्यमस्वप्नं स्तब्धतां रुजं” ॥ इति वाभटः ॥)

**अस्वरः**, त्रि, (अप्रशस्तः स्वरो यस्य ।) मन्दस्वरयुक्तः । तत्पर्य्यायः । असौम्यस्वरः २ । इत्यमरः ॥ (“अथ गद्गदशब्दस्तु विलपन् वसुधाधिपः । उवाच मृदुमन्दार्थं वचनं दीनमस्वरम्” ॥ इति रामायणे ॥)

**अस्वाध्यायः**, पुं, (न विद्यते स्वाध्यायो वेदाध्ययनं यस्य ।) विधिपूर्व्वकवेदाध्ययनहीनः । तत्पर्य्यायः । निराकृतिः २ । इत्यमरः ॥ अनध्यायः । अध्यरिस् इति पारस्य भाषा । यथा । एतच्च अग्रदानं स्वभूमौ अस्वामिकायाञ्च न दद्यात् । अस्वामिकान्याह यमः । “अटव्यः पर्व्वताः पुण्या नद्यस्तीर्थानि यानि च । सर्व्वाण्यस्वामिकान्याहुर्न हि तेषु परिग्रहः” ॥ पुण्या इति विशेषणात् अटव्यो नैमिषाद्याः पर्व्वता हिमालयाद्याः । नद्यो गङ्गाद्याः । तीर्थाणि पुरुषोत्तमादिक्षेत्राणि । वाराणस्याद्यायतनानि च । स्वाम्यभावे हेतुमाह न हि तेष्विति । इति श्राद्धतत्त्वं ॥

**अस्वामिविक्रयः**, पुं, (अस्वामिना अनधिकारिणा कृतो विक्रयः ।) अस्वामिकर्तृकविक्रयः । यथा सम्प्रत्यस्वामिविक्रयाख्यं व्यवहारपदमुपक्रमते । तस्य च लक्षणं नारदेनोक्तं । “निक्षिप्तं वा परद्रव्यं नष्टं लव्ध्वापहृत्य वा । विक्रीयतेऽसमक्षं यत्सज्ञेयोऽस्वामिविक्रयः” ॥ इति तत्र किमित्याह । “स्वयं लभेतान्यविक्रीतं क्रेतुर्द्दोषोऽप्रकाशिते । हीनाद्रहोहीनमूल्ये वेलाहीने च तस्करः” ॥ स्वं आत्मसम्बन्धिद्रव्यं अन्यविक्रीतमस्वांमिविक्रीतं यदि पश्यति तदा लभेत गृह्णीयात् । अस्वामिविक्रयस्य स्वत्वहेतुत्वाभावात् । विक्रीतग्रहणं दत्ताहितयोरुपलक्षणार्थं । अस्वामिकृतत्वेन तुल्यत्वात् । अतएवोक्तं । अस्वामिविक्रयं दत्तमाधिञ्च विनिवर्त्तयेदिति । क्रेतुः पुनरप्रकाशिते गोपिते क्रये दोषो भवति । तथा हीनात्तद्द्रव्यागमोस्थानपालादिभिर्ग्राहयेत् । देशकालातिपत्तौ देशकालातिक्रमे स्थानपालाद्यसन्निधाने तद्विज्ञापनकालात् प्राक्पलायनाशङ्कायां स्वयमेव गृहीत्वा तेभ्यः समर्पयेत् ॥ * ॥ ग्राहिते हर्त्तरि किं कर्त्तव्यमित्यत आह । “विक्रेतुर्द्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपो दमं । क्रेता मूल्यमवाप्नोति तस्माद्यस्तस्य विक्रयी” । यद्यसौ गृहीतः क्रेता न मयेद मपहृतं अन्यसकाशात् प्राप्तमिति वक्ति तदा तस्य क्रेतुर्व्विक्रेतृदर्शनमात्रेण शुद्धिर्भवति । न पुनरसावभियोज्यः । किन्तु तत्प्रदर्शितेन विक्रेत्रा सह नाष्टिकस्य विवादः । यथाह वृहस्पतिः । “मूले समाहृते क्रेता नाभियोज्यः कथञ्चन । मूलेन सह वादस्त नाष्टिकस्य विधीयते” ॥ इति तस्मिंश्च विवादे यद्यस्वामिविक्रयनिश्चयो भवति तदास्य नष्टापहृतस्य गवादिद्रव्यस्य यो विक्रयी विक्रेता तस्य सकाशात् स्वामी नाष्टिकः स्वीयं । द्रव्यमवाप्नोति चौरश्चापराधानुरूपं दण्डं क्रेता च मूल्यमवाप्नोति । अथासौ देशान्तरं गतः तदा योजनसङ्ख्ययानयनाथ कालो देयः । “प्रकाशं वा क्रयं कुर्य्यात् मूलं वापि समर्पयेत् ।

| | | |
|---|---|---|
| यने निषिद्धदिनं । तद्यथा ।<br>चन्द्रसूर्य्यग्रहण-<br>दिनानि । तानि तु । ग्रस्तास्ते ३ दिनानि ।<br>अन्यत्र १ दिनं । सन्ध्यागर्ज्जने १ दिनं ।<br>माघादि-<br>मासंचतुष्टये गर्ज्जनमात्रे तद्दिनं ।<br>निर्घातशब्दे<br>१ दिनं । भूकम्पे १ दिनं । उल्कापाते १ दिनं ।<br>महोल्कापाते आकालिंकः ।<br>एकवेदसमापना- | पायहीनात् । रहसि चैकान्ते<br>सम्भाव्यद्रव्यादपि | मूलानयनकालश्च देय<br>स्तत्राध्वसङ्ख्ययेति स्मरणात्<br>॥ * ॥ अथाविज्ञातदेशतया मूलमाहर्त्तुं न शक्नोति तदा क्रयं शोधयित्वैव शुद्धो भवति ।<br>असमाहार्य्यमूलस्तु क्रयमेव<br>विशोधयेदिति मनु-<br>वचनात् । यदा पुनः साक्ष्यादिभिः द्दिव्येन वा<br>क्रयं न शोधयति मूलञ्च न प्रदर्शयति तदा स<br>एव दण्डभाग्भवतीति ।<br>“अनुपस्थापयन्मूलं क्रयं वाप्यविशोधयन् ।<br>यथाभियोगं धनिने धनं दाप्यो दमञ्च सः” ॥<br>इति स्मरणात् । स्वं<br>लभेतान्यविक्रीतमित्युक्तं ॥ * ॥<br>तल्लिप्सुना किं कर्त्तव्यमित्यत आह । |

:"आगमेनोपभोगेन नष्टं भाव्यमतो ऽन्यथा ।
पञ्चबन्धो दमस्तस्थ राज्ञे
तेनाविभाविते" ॥
आगमेन रिक्थक्रयादिना उपभोगेन च
मदीय-
मिदं द्रव्यं तच्चैवं नष्टमपहृतं वेत्यपि
भाव्यं साध-
नीयं तत्स्वामिना अतोऽन्यथा तेन
स्वामिना
अविभाविते पञ्चबन्धो नष्टद्रव्यस्य
पञ्चमांशो दमो
नाष्टिकेन राज्ञे देयः ॥ * ॥ अत्रैवायं
क्रमः ।
पूर्व्वस्वामो नष्टमात्मीयं साधयेत् ततः
क्रेता
चौर्य्यपरिहारार्थं मूल्यलाभाय च
विक्रेतारमान-
येत् । अथानेतुं न शक्नोति
तदात्मदोषपरिहा-
राय क्रयं शोधवित्वा नाष्टिकस्य
समर्पयेदि-
ति ॥ * ॥
तस्करस्य प्रच्छादकं प्रत्याह ।
"हृतं प्रणष्टं यो द्रव्यं परहस्तादवाप्नुयात्
।
अनिवेद्य नृपे दण्ड्यः स तु षण्णवतिं
पणान्" ॥
हृतं प्रणष्टं वा चौरादिहस्तस्थं द्रव्यमनेन
मदीयं
द्रव्यमपहृतमिति नृपस्यानिवेद्यैव
दर्पादिना यो
गृह्णात्यसौ षड्उत्तरान् नवतिपणान्
दण्डनीयः ।
तस्करप्रच्छादकत्वेन दुष्टत्वात् ॥ * ॥
राजपुरुषानीतं प्रत्याह ।
"शौल्किकैः स्थानपालैर्व्वा
नष्टापहृतमाहृतं ।

**अस्वामी**, [न्] त्रि, (न स्वामि अधिकारी नञ्-
समासः ।) स्वामिभिन्नः । यथा ।
वृहस्पतिः ।
"अस्वामिना तु यद्भुक्तं गृहक्षेत्रापणादिकं ।
सुहृद्बन्धुसकुल्यस्य न तद्भोगेन हीयते" ॥
इति दायतत्त्वं ॥

**अस्वाम्यं**, क्ली, (न स्वाम्यम् । नञ्समासः ।
स्वामि-
त्वाभावः । यथा देवलः ।
"अस्वाम्यं हि भवेदेषां निर्द्दोषे पितरि
स्थिते" ।
इति दायतत्त्वं ॥

**अस्वास्थ्यं**, क्ली, सुस्थत्वाभावः ।
सुस्थताराहित्यं ।
स्वास्थ्यस्याभावः
अस्वास्थ्यमित्यव्ययीभावसमास-
निष्पन्नं ॥ (यथा शिशुपालबधे ।
"विगृह्य चक्रे नमुचिद्विषा बली
य इत्थमस्वास्थ्यमहर्द्दिवन्दिवः" ॥
भुक्ते स्वास्थ्यमुपैति च, इति
ग्रहणीरोगेऽभिहितं
माधवकरेण संगृहीतञ्च । अत्र हि
अभुक्तेऽस्वास्थ्य-
मिति तात्पर्य्यं ॥)

**अह** इ क भासे । (उभं-चुरां-अकं-सेट् ।) दीप्ति-
रिति यावत् । इति कविकल्पद्रुमः ॥ इ क
अंह-
यति । भासो दीप्तिः । इति दुर्गादासः ॥

**अह** इ ङ गतौ । (भ्वादिं-आत्मं-सकं-सेट् ।) इति
कविकल्पद्रुमः ॥ इ अंह्यते । ङ अंहते ।
इति
दुर्गादासः ॥

**अह**, व्य, प्रशंसा । क्षेपणं । नियोगः । विनिग्रहः ।
इति मेदिनी ॥

अहङ्कृतिः ८ उद्ध्वतमनस्कत्वं ९ । मानः
१० चित्त-
समुन्नतिः ११ । यथा ।
"गर्व्वोमदोऽभिमानः स्यादहङ्कारस्त्वहङ्कृतिः ।
स्यादुद्धतमनस्कत्वे मानचित्तसमुन्नतिः ॥
अहङ्कारस्य पर्य्याय इति केचित् प्रचक्षते" ॥
इति शब्दरत्नावली ॥ (अहङ्कारस्याश्रय
आत्मा ।
यथा, भाषापरिच्छेदे ।
"अहङ्कारस्याश्रयोऽयं मनोमात्रस्य गोचरः" ।
अहङ्कारतत्त्वं । यथाह मनौ, १ । १४ ।
"मनसश्चाप्यहङ्कारमभिमन्तारमीश्वरम्" ।
गर्व्वौन्नत्यम् । यदुक्तं ।
"अहङ्कारश्च सर्व्वेषां पापवीजममङ्गलम् ।
ब्रह्माण्डेषु च सर्व्वेषां गर्व्वपर्य्यन्तमुन्नतिः" ॥
स च द्विविधः, विशेषरूपः सामान्यरूपश्चेति
।
तत्रायमहं एतस्य पुत्र इत्येवं व्यक्तमभि मन्य-
मानो विशेषरूपो व्यष्ट्यहङ्कारः ।
अस्मोत्येता-
वन्मात्रमभिमन्यमानः सामान्यरूपः समष्ट्य-
हङ्कारः । स च हिरण्यगर्भो महान् आत्मेति च
सर्व्वानुस्यूतत्वादुच्यते । अहमभिमानरूपो
यो-
ऽहङ्कारः स सर्व्वसाधारणः । आरोपितगुणै-
रात्मनो महत्वाभिमानः । अहमेव श्रेष्ठ इति
दुरभिमानः । महाकूलप्रसूतोऽहं महतां शिष्यो
नास्ति द्वितीयो मत्सम इत्यभिमानः ।
आत्मश्ला-
घनाभावेऽपि मनसि प्रादुर्भूतोऽहं सर्व्वोत्कृष्ट-
इति गर्व्वः ।)

**अहङ्कारवान्**, त्रि, (अहङ्कारो विद्यतेऽस्य । अह-
ङ्कार + मतुप् । मस्य वः ।) गर्व्वान्वितः ।
इत्य-
मरः ॥ तत्पर्य्यायः । अहंयुः २ । इत्यमरः ॥
अहङ्कारान्वितः ३ । इति शब्दरत्नावली ।
गर्व्वितः

अर्व्वाक् सम्बत्सरात् स्वामी हरेत परतो नृपः” ॥
यदा तु शुल्काधिकारिभिः स्थानरक्षिभिर्व्वा
नष्टमपहृतं द्रव्यं राजपार्श्वं प्रत्यानीतं तदा संव-
त्सरादर्ब्बाक्प्राप्तश्चेत् नाष्टिकस्तद्द्रव्यमवाप्नुयात् ।
ऊर्द्ध्वं पुनः संवत्सराद्राजा गृह्णीयात् । स्वपुरुषा-
नीतञ्च द्रव्यं जनसमूहेषूद्घोष्य यावत् संवत्सरं
राज्ञा रक्षणीयं । यथाह गौतमः । प्रणष्टमस्वा-
मिक मधिगम्य राज्ञे प्रब्रूयुर्विख्याप्य सम्बत्सरं
राज्ञा रक्ष्यमिति । यत् पुनर्मनुना विध्यन्तर-
मुक्तं --
“प्रणष्टस्वामिकं द्रव्यं राजा त्र्यब्दं निधापयेत् ।
अर्व्वाक्त्र्यब्दात् हरेत् स्वामी परतोनृपतिर्हरेत्” ॥
इति ॥ तच्छतवृत्तसम्पन्नब्राह्मणविषयं । रक्षणनि-
मित्तं षड्भागादिग्रहणञ्च तेनैवोक्तं ।
“आददीताथ षड्भागं प्रणष्टाधिगतान्नृपः ।
दशमं द्वादशं वापि सतां धर्म्ममनुस्मरन्” ॥ इति ।
तृतीयद्वितीयप्रथमवत्सरेषु वथाक्रमं षष्ठादयो
भागा वेदितव्याः । प्रपञ्चितञ्चैतत् पुरस्तात् ॥ * ॥
मनूक्तषड्भागादिग्रहणस्य द्रव्यविशेषे अपवाद-
माह ।
“पणानेकशफे दद्यात् चतुरः पञ्च मानुषे ।

**अहं**, त्रि, अस्मद्शब्दस्य प्रथमान्तस्य रूपं । आमि
इति भाषा । यथा आह्निकतत्त्वं, --
“अहं देवो न चान्योऽस्मि ब्रह्मैवास्मि न शोकभाक् ।
सच्चिदानन्दरूपोऽहं नित्यमुक्तस्वभाववान्” ॥
(तथा च रघुवंशे १ । ६८ ।
“सोहमिज्या विशुद्धात्मा प्रजालोपनिमीलितः”)

**अहंयुः**, त्रि, (अहंमस्यास्तीति अहंशब्दात् “अहं-
शुभयोर्युस्” इति युस् ।) अहङ्कारयुक्तः ।
गर्व्वान्वितः । तत्पर्य्यायः । अहङ्कारवान् २ ।
इत्यमरः ॥ (“अहंयुनाथ क्षितिपः शुभंयुः” ।
इति भट्टिः ।)

**अहः** [न्], क्ली, दिवा । इत्यमरः ॥

**अहःपतिः**, पुं, (अह्नः पतिः ।) सूर्य्यः । इत्यमरटीका ॥

**अहङ्कारः**, पुं, (अहमिति ज्ञानं क्रियतेऽनेन । अहं
+ कृ + घञ् ।) अहङ्कृतिः । तत्पर्य्यायः । गर्व्वः
२ अभिमानः ३ इत्यमरः ॥ पुराणमते स त्रि-
बिधः । सात्विकः १ राजसः २ तामसश्च ३ ।
सात्विकाहङ्कारात् इन्द्रियाधिष्ठातारो देवा मनश्च
जातं । राजसाहङ्कारात् दशेन्द्रियाणि जातानि ।
तामसाहङ्कारात् सूक्ष्मपञ्चभूतानि जातानि । वेदा-
न्तमते अभिमानात्मिकान्तःकरणवृत्तिः ॥ अह-
मित्यभिमानः । स च शरीरादिविषयको मिथ्या-
४ । इति जटाधरः ॥

**अहङ्कारी**, [न्] त्रि, गर्व्वयुक्तः । अहङ्कारो विद्यते-
यस्येति अस्त्यर्थे णिन्प्रत्ययेन निष्पन्नः । अभि-
मानी । गर्व्वान्वितः ॥ (दशदशरूपके ॥
“धीरोद्धतस्त्वहङ्कारी चलश्चण्डो विकत्थनः” ।)

**अहङ्कृतिः**, स्त्री, (अहम् + कृ + क्तिन् ।) अहङ्कारः ।
गर्व्वः । इति शब्दरत्नावली ॥ (यथा पञ्चतन्त्रे ॥
“युध्यतेऽहङ्कृतिं कृत्वा दुर्ब्बलो यो बलीयसा” ।)

**अहतं**, क्ली, (हन् + क्त । ततो नञ्समासः ।)
नवाम्बरं । नूतनवस्त्रं । इति हलायुधशब्दरत्ना-
वल्यौ ॥ (अहतलक्षणं यथा महाभारते, --
“ईषद्धौतं नवं श्वेतं सदशं यन्नधारितम् ।
अहतं तद्विजानीयात् पावनं सर्व्वकर्म्मसु” ॥
“अहतैश्चैव वासोभिर्माल्यैरुचावचैरपि” । इति ॥
“अहतानि च वासांसि रथञ्च शुभलक्षणम्” ।
इति रामायणे । अनाहते, त्रि, ॥

**अहमहमिका**, स्त्री, (अहमहं शब्दोऽस्त्यत्र, वीप्साया
द्वित्वम् । ब्रीह्यादित्वात् ठन् । ततष्टाप् ।) पर-
स्पराहङ्कारः । इत्यमरः । परस्परं परमपेक्ष्या-
परस्यापरमपेक्ष्य परस्य योऽहङ्कारोऽहमेव
श्रेष्ठोऽहमेव श्रेष्ठ इति मानः । इति भरतः
आमि वड आमि वड वलिया परस्पर अहङ्कार
इति भाषा ॥ (यथा पञ्चतन्त्रे, --

| | | |
|---|---|---|
| महिषोष्ट्रगवां द्वौ द्वौ पादं पादमजाविके" ॥<br>एकशफे अश्वादौ प्रणष्टाधिगते तत्स्वामी राज्ञे<br>रक्षानिमित्तं चतुरः पणान् दद्यात् । मानुषे<br>मनुष्यजातीये द्रव्ये पञ्च पणान् । महिषोष्ट्रगवां<br>रक्षणनिमित्तं प्रत्येकं द्वौ द्वौ पणौ । अजाविके<br>पुनः प्रत्येकं पादं पादं दद्यादिति सर्व्वत्रानुष-<br>ज्यते । अजाविकमिति समासनिर्द्देशेऽपि पादं<br>पादमिति वीप्साबलात् प्रत्येकं सम्बन्धो गम्यते ॥<br>इत्यस्वामिकविक्रयप्रकरणं । इति मिताक्षरायां<br>ष्यवहाराध्यायः ॥ | ज्ञानमुच्यते । इति गोतमसूत्रवृत्तिः । "अह-<br>मित्यव्ययं तस्य करणं । अहमिति किरति अत्रेति<br>वा अहङ्कारः । करोतेः किरतेर्व्वा घञ् । कार-<br>प्रत्यय इत्यन्ये" । इत्यभरटीकायां भरतः । मदः ४<br>स्मयः ५ अपलेपः ६ दर्पः ७ । इति जटाधरः । | |

:"इत्थञ्चाहमहमहमिकया तयोर्व्विवदतोः" ।)

**अहम्पूर्व्विका**, स्त्री, (अहं पूर्व्वं अहं पूर्व्वमिति कथनं

यत्र । अहम्पूर्ब्ब + ठन् + स्वार्थेकन् + ततष्टाप् ।) अहम्पूर्ब्बं अग्रे भवामि अहं पूर्ब्बं अग्रे भवामि इत्यन्योऽन्यं योधानां धावनक्रिया । इत्यमरः । आमि अग्रे याव वलिया योद्धा दिगेर परस्पर आगे धाओया इति भाषा । (यथा किराते, -- "सुगेषु दुर्गेषु च तुल्यविक्रमै- र्जवादहम्पूर्ब्बिकया यियासुभिः" ।)

**अहम्मतिः**, स्त्री, (अहंप्रधाना मतिर्ज्ञानं ।)

अविद्या । अज्ञानं । इत्यमरः ॥

**अहर्गणः**, पुं, (अह्नां गणः) मासः इति हारावली ।

ग्रहाणां मध्यादिज्ञानार्थं श्वेतवाराहकल्पावधि- सृष्ट्यवधिब्रह्मसिद्धान्तोक्तकल्पावधिकल्याद्यब्धा- वधि वा इष्टकालपर्य्यन्तं परिगणितदिनसमूहः । तत्पर्य्यायः । द्युवृन्दं २ । दिनौघः ३ । द्युगणः ४ । दिनपिण्डः ५ । इति ज्योतिःशास्त्रम् ॥

**अहर्ज्जरः**, पुं, (अहोभिर्लोकान् जरयति । अहन्

+ जॄ + णिच + अच् । यद्वा अहानि जीर्य्यन्त्य- न्तर्भवन्त्यस्मिन् । अहन् + जॄ + अच् ।) संवत्सरः । यथा । "यथापः प्रवता यन्ति यथा मासा अह- र्ज्जरं । एवं मां ब्रह्मचारिणः धातरायन्तु सर्व्वतः स्वाहा" । इति तैत्तिरीयोपनिषदि शिक्षावल्ली ॥ यथा लोके आपः प्रवता प्रवणवता निम्नवता देशेन यन्ति गच्छन्ति । यथा वा मासा अहर्ज्जरं संवत्सरोऽहर्ज्जरोऽहोभिः परिवर्त्तमानो लोकान् जरयतीति अहानि वा अस्मिन् जीर्य्यन्ति अन्त- र्भवन्ति इत्यहर्ज्जरः । तञ्च यथा मासा यन्ति एवं मां ब्रह्मचारिणः हे धातः सर्व्वस्य विधातः मामायन्तु सर्व्वतः सर्व्वदिग्भ्यः । इति शङ्करा- चार्य्यकृतभाष्यम् ॥

**अहर्पतिः**, पुं, (अह्नः पतिः । पक्षे अहःपतिः ।)

सूर्य्यः । इत्यमरः । (यथा रघुवंशे १० । ५४ । "द्यावापृथिव्योः प्रत्यग्रमहर्पतिरिवातपम्" ।)

मानवी भूता । इति रामायणम् ॥

**अहस्करः**, पुं, (अहः करोति । अहन् + कृ + ट ।

कस्कादित्वात् सः ।) सूर्य्यः । इति हेमचन्द्रः । अर्कवृक्षः ॥

**अहस्पतिः**, पुं, (अह्नः पतिरिव ।) सूर्य्यः । इत्यमरः ।

अर्कवृक्षः । अमरे तत्पर्य्याये अर्काह्व इति दर्शनात् ॥

**अहह**, व्य, (अहं जहातीति । अहम् + हा + ड ।

पृषोदरादित्वात्सलोपः ।) अद्भुतं । खेदः । परि- क्लेशः । प्रकर्षः । सम्बोधनं । इति मेदिनी ॥ (आश्चर्य्यं । विस्मयः । यथा हितोपदेशः । "अहह ! महापङ्के पतितोऽसि" । "अहह ! तात ! पणस्तव दारुण" । इति महानाटके ॥)

**अहहा**, व्य, (अहं जहातीति । अहम् + हा + ड ।

क्विप् । पृषोदरादित्वात् साधुः ।) अद्भुतं । खेदं । इत्यमरटीकायां रायमुकुटादयः । अत्र अहह- शब्दार्थोऽपि द्रष्टव्यः ॥

**अहार्य्यः**, पुं, (हृ + ण्यत् । ततो नञ्समासः ।)

पर्ब्बतः । इत्यमरमेदिन्यौ ॥

**अहार्य्यं**, त्रि, (न हार्य्यं । नञ्समासः ।) हर्त्तुमशक्यं ।

अहर्त्तव्यं । अहरणीयं । इति मेदिनी ॥

**अहिजित्**, पुं, (अहिं सर्पं वृत्रासुरं वा जितवान्

अहि + जि + क्विप् ।) विष्णुः । कालीयनाग- दमनात् ॥ इन्द्रः । वृत्रासुरनाशात् ॥

**अहितः**, त्रि, (न हितः । नञ्समासः ।) शत्रुः ।

इत्यमरः । (यथा रघुवंशे ४ । २८ ॥ "स ययौ प्रथमं प्राचीं तुल्यः प्राचीनवर्हिषा । अहिताननिलोद्धुतैस्तर्जयन्निव केतुभिः" ।) अपथ्यं इति शब्दचन्द्रिका ॥ ("एकान्ताहितानि दहनपचनमारणादिषु प्रवृ- त्तान्यग्निक्षारविषादीनि ।" इति सुश्रुते । प्रतिकूलः । अशुभकरः । यथा वैराग्यशतकं । "लोकस्तथाप्यहितमाचरतीति चित्रम्" । ३५ ॥ "परोऽपि हितवान् शत्रुर्बन्धुरप्यहितः परः । अहितो देहजो व्याधिर्हितमारण्यमौषधं" ॥ इति हितोपदेशः । अहिताहारोपयोगिनां पुनः कार- णतो न सद्यो दोषवान् भवत्यपचारः, नहि सर्व्वाण्यपथ्यानि तुल्यदोषाणि न च सर्व्वे दोषा- स्तुल्यबलाः । नच सर्व्वाणि शरीराणि व्याधि- क्षमत्वे समर्थानि । तदेव ह्यपथ्यं देशकालसंयोग- वीर्य्यप्रमाणातियोगात् भूयस्तरमपथ्यं सम्पद्यते ॥ स एव दोषः संसृष्टयोर्निर्विरुद्धोपक्रमो गम्भो-

**अहर्ब्बान्धवः** पुं, (अह्नो बान्धवः । अह्नो मणिरिव

च ।) सूर्य्यः । इति हेमचन्द्रः । अर्क-
वृक्षः ।

**अहर्म्मणिः** पुं, (अह्नो बान्धवः । अह्नो मणिरिव

च ।) सूर्य्यः । इति हेमचन्द्रः । अर्क-
वृक्षः ।

**अहर्मुखं**, क्ली, (अह्नो मुखं ।) प्रत्यूषः । इत्यमरः ॥

**अहल्यः**, त्रि, (हलेन कृष्यं । ततो नञ्समासः ।)

हलानाकृष्टक्षेत्रादिः । अकृष्टभूमिः ॥

**अहल्या**, स्त्री, अप्सरोविशेषः । (यथा हरिवंशे ।

"दिवोदासश्च राजर्षिरहल्या च यशस्विनी ।
शरद्वतश्च दायादमहल्या समसूयत" ॥
गौतममुनिपत्नी । इति मेदिनी ॥ सा च महा-
साध्वी । प्रातः काले तस्यानामस्मरणे महापातक-
नाशो भवति । यथा पुराणं, --
"अहल्या द्रौपदी कुन्ती तारा मन्दोदरी तथा ।
पञ्च कन्याः स्मरेन्नित्यं महापातकनाशनं" ॥
सत्ययुगे इन्द्रः गौतमरूपधारणं कृत्वा तस्याः
सतीत्वं नाशितवान् । ततो गौतमशापेन सा
पाषाणदेहा बभूव । ततस्त्रेतायुगे श्रीरामचन्द्रस्य
पादस्पर्शात् शापात् विमुक्ता सती पुनः पूर्ब्बरूपा

("अहार्य्यं ब्राह्मणद्रव्यं राज्ञा
नित्यमिति स्थितिः"
"तत्रात्मभूतैः कालज्ञैरहार्य्यैः
परिचारकैः" ॥
इति च मनुः ९ । १८९ ।)

**अहिः**, पुं, (आहन्तीति । आ + हन् + इण् । हन

हिंसागत्योः । आङि श्रिहनिभ्यां
ह्रस्वश्चेति इण् ।
स च डित् । डित्वात् टिलोपः ।
आङो ह्रस्वश्च ।)
वृत्रासुरः । सर्पः । इत्यमरः । सूर्य्यः
। पथिकः ।
राहुः । इत्यनेकार्थध्वनिमञ्जरी ॥
(सीसकं ।
राहुः । वप्रः । अश्लेषानक्षत्रं ।
खलः । "विष-
धरतोऽप्यतिविषमः खल इति न
मृषा वदन्ति
विद्वांसः । यदहिर्नकुलद्वेषी
स्वकुलद्वेषी पुनः
पिशुनः" । इति वासवदत्तायाः
प्रस्तावनाश्लोकः ॥)

**अहिंस्रा**, स्त्री, (न हिंस्रा । नञ्सभासः ।) कुलिक-

वृक्षः । कुलेखाडा इति ख्याता ।
अस्या गुणाः ।
विषरोगशोथनाशित्वं । इति
राजवल्लभः ॥
(कोकिलाक्षशब्देऽस्या गुणादयो
ज्ञेयाः । हिंसा
रहिते, त्रि ।)

**अहिका**, स्त्री, (न + हा + ङिक् + टाप् ।) शाल्म-

लीवृक्षः । इति शब्दचन्द्रिका ॥

**अहिकान्तः**, पुं, (अहेः सर्पस्य कान्तः प्रियः । भक्ष्य-

त्वात् ।) वायुः । इति हेमचन्द्रः ॥

रानुगतः प्राणायतनसमुत्थो मर्म्मोपघाती
वा
भूयान् कष्टतमः क्षिप्रकारितमश्च
सम्पद्यते
इति चरकः ।
"इह खलु यस्माद्द्रव्याणि स्वभावतः
संयोगत-
श्चैकान्तहितान्येकान्ताहितानि
हिताहितानि
भवन्ति" । "एकान्ताहितानि
दहनपचनमारणा
दिषु प्रवृत्तान्यग्निक्षारविषादीनि ।"
"दुग्धस्यैकान्तहितताં
विषस्यैकान्ततोऽहि तं
एवं युक्तरसाद्येषु द्रव्येषु सलिलादिषु ॥
एकान्तहिततां विद्धि वत्स ! सुश्रुत !
नान्यथा" ॥
"विरुद्धान्येवमादीनि रसवीर्य्यविपाकतः
।
तान्येकान्ताहितान्येव शेषं
विद्याद्धिताहितं" ॥
इति सुश्रुतः ॥)

**अहितुण्डिकः**, पुं, (अहेः तुण्डं मुखं, तेन दीव्यति

यः सः । अहितुण्ड + ठक् ।
संज्ञापूर्ब्बकत्वात्
वृद्‌ध्यभावः ।) भिक्षार्थं सर्पखेलकः ।
तत्पर्य्यायः ।
व्यालग्राही २ । इत्यमरः । सापुडे इति
भाषा ॥

**अहिद्विट्**, [ष्] पुं, (अहिं वृत्रासुरं सर्पं वा द्वेष्टि

यः । अहि + द्विष् + क्विप् ।) इन्द्रः ।
गरुडः ।
मयूरः । नकुलः । इति मेदिनी ॥
("अहिद्विषस्तद्भवता निशम्यतां" । इति
माघे ।
"एकाहिरक्षार्थमहिद्विषेऽद्य
दत्तो मयात्मेति यया ब्रवीति" ।

**अहिच्छत्रः**, पुं, (अहेः च्छत्रः फणा इव छादकः ।)

देशविशेषः । तत्पर्य्यायः ।
प्रत्यग्रथः २ । मेष-
शृङ्गीवृक्षः । इति हेमचन्द्रः ॥

**अहिच्छत्रा**, स्त्री, शर्करा । इति राजनिर्घण्टः ।

चिनि इति भाषा । पुरीविशेषः ।
इति ज्योतिष-
तत्वं ॥ तथा वृद्धगार्ग्यः ।
“केशवमानर्त्तपुरं
पाटलीपुत्रं पुरीमहिच्छत्रां ।
दितिमदितिञ्च
स्मरतां क्षौरविधौ भवति कल्याणं”
। इति
ज्योतिस्तत्वं ॥

इति नागानन्दे ॥

**अहिनकुलता** स्त्री, अहिनकुलयोर्वैरं । नित्य-

विरोधितेति यावत् । अहिश्च
नकुलश्च अहिनकुलौ तयोर्भाव इति
भावार्थे
त-ष्णिकप्रत्यययोः स्त्रियामापा निष्पन्ना
॥

**अहिनकुलिका** स्त्री, अहिनकुलयोर्वैरं । नित्य-

विरोधितेति यावत् । अहिश्च
नकुलश्च अहिनकुलौ तयोर्भाव इति
भावार्थे
त-ष्णिकप्रत्यययोः स्त्रियामापा निष्पन्ना
॥

**अहिपुत्त्रकः**, पुं, (अहेः सर्पस्य पुत्त्रक इव । सर्पा-

कारत्वात् ।) नौकाविशेषः । तत्पर्य्यायः
। पोतः २
तरालुः ३ । इति हारावली ॥

**अहिपूतनः**, पुं, क्षुद्ररोगविशेषः । तल्लक्षणं यथा, --

"शकृन्मूत्रसमायुक्तेऽधौतेऽपाने शिशोर्भवेत् ।
स्विन्ने वा स्वाप्यमानस्य कण्डूरक्तकफोद्भवा ॥
कण्डूयनात्ततः क्षिप्रं स्फोटः स्रावश्च जायते ।
एकीभूतं व्रणं घोरं तं विद्यादहिपूतनं" ॥ * ॥
तच्चिकित्सा यथा भावप्रकाशे, --
"तत्र संशोधनैः पूर्ब्बं धात्रीस्तन्यं विशोधयेत् ।
त्रिफलाखदिरक्वाथैर्व्रणानां क्षालनं हितं ॥
शङ्खसौवीरयष्ठ्याह्वैर्लेपः कार्य्योऽहिपूतने" । इति
(रुग्विनिश्चयटीकाकृता विजयेन व्याख्याप्रसङ्गतो
भोजवचनं यदाहृतं तद्यथा, -- यदुक्तं ।
"दुष्टस्तन्यस्य पानेन मलस्याक्षालनेन च ।
कण्डूदाहरुजावद्भिः पिडकैश्च समाचितः ॥
अहिपूतनः सम्भवति यथादोषञ्च दारुणः" ॥
इति सनिदानलक्षणसम्प्राप्तिकं चिकित्सितं वाभ-
टेन वा यदुक्तं तद्यथा, --
"मलोपलेपात् स्वेदाद्वा गुदे रक्तकफोद्भवः ।
ताम्रोव्रणोऽन्तःकण्डूमान् जायते भूर्य्युपद्रवः ॥
केचित्तं मातृकादोषं वदन्त्यन्येऽहिपूतनं ।
प्रष्टारुर्गुदकुन्दञ्च केचिच्च तमनामिकं" ॥ * ॥

**अहिभयं**, क्ली, (अहेः सर्पतुल्यस्वपक्षात् सर्पाद्वा भयं ।) राज्ञां स्वपक्षोद्भवभयं । इत्यमरः ॥ सर्प-भयं ॥

**अहिभयदा**, स्त्री, (अहेर्भयं द्यति खण्डययीति । अहि-भय + दो + क) भूम्यामलकी । इति राजनिर्घण्टः ॥
(भूम्यालकीशब्देऽस्या गुणाबली ज्ञातव्या ॥)

**अहिभुक्**, [ज्] पुं, (अहिं भुङ्क्ते । अहि + भुज् + क्विप् ।) गरुडः । मयूरः ॥ इत्यमरः ॥ नाकुली । गन्धनाकुली । इति राजनिर्घण्टः ॥

**अहिमर्द्दनी**, स्त्री, (अहेर्मर्द्दनं भवत्यस्याः ।) गन्ध-नाकुलीनाम कन्दविशेषः ॥ इति राजनिर्घण्टः ॥

**अहिमारः**, पुं, (अहिं मारयति यः सः । अहि + मृ + णिच् + अण् ।) अरिमेदकवृक्षः । इति राजनिर्घण्टः ॥

**अहिमेदकः**, पुं, (अहिं मेदयति स्पर्शमात्रेण गल-यति यः सः ।) अरिमेदकवृक्षः । इति राज-निर्घण्टः ॥ (अरिमेदशव्देऽस्य गुणादयो ज्ञेयाः ॥)

**अहिलता**, स्त्री, (अहिरिव लता । दोर्घाकारत्वात् ।) गन्धनाकुली । ताम्बूली । इति राजनिर्घण्टः ॥

**अहीरणिः**, पुं, (अहीन् ईरयति दूरीकरोति । अहि + ईर + अणि ।) द्विमुखसर्पः । इति त्रि-काण्डशेषः ॥

**अहे**, व्य, क्षेपः । वियोगः । इति शब्दलाला ॥

**अहेरुः**, स्त्री, (न हिनोति । हि गतौ बाहुलकाद्रुः । ततो नञ्समासः ।) शतमूली । इत्यमरः ॥

**अहो**, व्य, (न + हा + डो ।) धिगर्थः । शोकः । करुणार्थः । विषादः । सम्बोधनं । प्रशंसा । विस्मयं । पदपूरणं । असूया । वितर्कः । इति भेदिनी ॥ (यथा रामायणे अयोध्याकाण्डे ॥
"अहो धिगिति सामर्षो वाचमुक्त्वा नराधिपः" ।
"अहो मधुरमासां दर्शनं" । इति शाकुन्तले
मूर्च्छन्
मोसमहर्षिहर्षविहितस्नानाह्निकाऽह्ना-यवः" । इति काव्यप्रकाशे ।)

**अह्रीकः**, पुं, (नास्ति ह्रीर्लज्जा यस्य ।) वौद्धः । क्षप-णकः । इति त्रिकाण्डशेषः ॥

**अह्वला**, स्त्री, (न + ह्वे + डल् ।) भल्लातकवृक्षः । इति शब्दचन्द्रिका ॥ भेला इति भाषा ।

चिकित्सा ।
"तत्र धात्र्याः पयःशोध्यं
पित्तश्लेष्महरौषधैः । १
श्रृतशीतञ्च शीताम्बु-युक्तमन्तरपानकं
॥ २
सक्षौद्रताक्ष्यर्यशौलेन व्रणं तेन च
लेपयेत् । ३
त्रिफलावदरीप्लक्षत्वक्-क्वाथ-
परिषेचितं ॥ ४
कासीश-रोचना-तुत्थ-
मनोह्वालरसाञ्जनैः । ५
लेपयेदम्लपिष्टैर्वा चूर्णितैर्वावचूर्णयेत्
॥ ६
सुश्लक्ष्णैरथवा
यष्टीशङ्खसौवीरकाञ्जनैः । ७
सारिवाशङ्खनाभिभ्यामशनस्य
त्वचोऽथवा" ॥ ८ ॥ * ॥
चक्रपाणिसंग्रहे तु ॥
"पटोलपत्रत्रिफलारसाञ्जनविपाचितं
।
पीतं घृतं नाशयति
कृच्छ्रामप्यहिपूतनां" ॥
पटोलाद्यघृतं ॥ * ॥)

**अहिफेनं**, क्ली, (अहेः सर्पस्य फेनं गरलमिव
।

अत्युग्रत्वात् ।) अफेनं । इति
राजनिर्घण्टः ॥ आफिं
इति भाषा । (अस्य पर्य्यायमाह
भावप्रकाश-
कारः ।)
"उक्तं
खसफलक्षीरमाफूकमहिफेनकं" ।
अस्य कार्य्यञ्चाह शार्ङ्गधरः ।
"पूर्ब्बं व्याप्याखिलं कायं ततः
पाकञ्च गच्छति ।
व्यवायि तद्यथा भङ्गा
फेनञ्चाहिसमुद्भवं" ॥
अपरञ्चाफेनशब्दे आफूकशब्दे च
ज्ञातव्यं ॥)

प्रथमाङ्के ।)

**अहोरात्रः**, पुं, (अहश्च रात्रिश्च द्वयोः समाहारः ।

रात्राह्णाहाः पुंसि । अहः सर्व्वैकदेशे टच् इति
टच् ।) दिवानिशं । स तु सूर्य्योदयद्वयपरिच्छिन्न-
त्रिंशन्मुहूर्त्तात्मककालः । इत्यमरः ॥ मनुष्याणां
मासेन पैत्रोऽहोरात्रो भवति । मनुष्याणामेक-
वर्षेण देवानामहोरात्रोभवति । द्विसहस्रगुणित-
मानुष्यचतुर्युगमानेन ब्रह्मणोऽहोरात्रो भवति ।
तत्र मनुष्यमानेन ८६४००००००० वर्षा भवन्ति
॥

**अहोवत**, व्य (अहो च वत च ।) अनूकम्पा । खेदः ।

सम्बोधनं । इति विश्वमेदिनौ ॥
("अहोवतासिस्पृहनीयवीर्य्यः" । इति कुमारे ।
"अहोवत ! कीदृशीं वयोऽवस्थामापन्नोऽस्मि" ।
इति शाकुन्तले ।
"अहोवत ! महत्पापं कर्त्तुं व्यवसिता वयम्" । इति
गीता ॥)

**अह्नाय**, व्य, (हु ङ अपनयने । वाहुलकाद्भावे घञ् ।

वृद्धिः । पृषोदरादित्वात् वस्य यः । ततो नञ-
समासः ।) झटिति । द्रुतं । इत्यमरः ॥
(अह्नाय सा नियमजं क्लममुत्ससर्ज" । इति कुमारे
।
"अह्नाय तावदरुणेन तमो निरस्तम्" । इति रघौ ।
"स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा

| | | |
|---|---|---|
| **अहिब्रध्नः**, पुं, (अहिः ब्रध्ने यस्य ।) शिवः ।<br>(“अजैकपादहिब्रध्नः पिनाकी चापराजितः” ।<br>इति हरिवंशे ।) रुद्रविशेषः ॥ इति जटाधरः ॥<br>(यथा हरिवंशे ।<br>“सुरभी कस्यपाद्रुद्रानेकादश विनिर्म्ममे ।<br>महादेवप्रसादेन तपसा भाविता सती ॥<br>अजैकपादहिब्रध्नस्त्वष्टा रुद्राश्च भारत” ! इति ।)<br>**अहिब्रध्नदेवता**, स्त्री, (अहिब्रध्नो रुद्रोऽधिष्ठात्री<br>देवता यस्याः ।) उत्तरभाद्रपदनक्षत्रं । इति ज्यो-<br>तिःशास्त्रं ॥ | | |

# शब्दकल्पद्रुमः/आ



**पृष्ठ १/१६०अ**

**आ**

**आ**, आकारः । द्वितीयस्वरवर्णः । अस्योच्चारणस्थानं
कण्ठः । स च दीर्घः प्लुतश्च भवति ।
“आकारं परमाश्चर्य्यं शङ्खज्योतिर्म्मयं प्रिये ।
ब्रह्मविष्णुमयं वर्णं तथा रुद्रमयं प्रिये ।
पञ्चप्राणमयं वर्णं स्वयं परमकुण्डली” ॥
इति कामधेनुतन्त्रे ॥ अस्य लेखनप्रकारो यथा --
“अकाररूपमासद्य दक्षक्रोडायता त्वधः ।
ब्रह्मादयस्तथा शक्तिस्तासु तिष्ठन्ति नित्यशः” ॥
इति वर्णोद्धारतन्त्रं । तस्य नामानि यथा --
“आकारो विजयानन्तो दीर्घच्छायो विनायकः ।
क्षीरोदधिः पयोदश्च पाशो दीर्घास्यिवृत्तकौ ॥
प्रचण्ड एकजो रुद्रो नारायण इभेश्वरः ।
प्रतिष्ठा मानदा कान्तो विश्वान्तक गजान्तकः ॥
पितामहो द्विठान्तो भूः क्रिया कान्तिश्च सम्भवः ।
द्वितीया मानदा काशी विघ्नराजः कुजो वियत् ॥
स्वरान्तकश्च हृदयमङ्गुष्ठो भगमालिनी” ॥
इति वर्णाभिधानं ॥

**आ**, व्य, स्मृतिः । यथा । “आज्ञातं सजटायुरेषः” ।
वाक्यं । यथा । “आ एवं मन्यसे” । इत्यमरः ॥
(पूर्ब्बं मैवं मंस्था इदानीं त्वेवं मन्यसे इत्यर्थः ।)
अनुकम्पा । (यथा, आ देवदत्तो दरिद्रः इति ।)
समुच्चयः । इति मेदिनी ॥ (यथा, देवेभ्यश्च पितृ-
भ्यंश्च आ ।) क्वचित् निषिद्धसन्धिवर्णः । आशब्दो
योऽचा न सन्धीयते स इत्यर्थः । इति भरतः ॥
(“आ एवं तत्त्वमर्य्यादा आ एवं तत्कृतं मया” ।
इति मुग्धबोधम् ।)

**आं**, व्य, एवं । स्वीकारः । इत्यमरः ॥

**आः**, पुं, महेश्वरः । इति पुरुषोत्तमः ॥ पितामहः ।
वाक्यं । यथा अग्निपुराणे एकाक्षरामिधानं ॥
“अ विष्णुः प्रतिषेधः स्यादाः पितामहवाक्ययोः ।
सीमायामथाव्ययं आ भवेत् संक्रोधपीडयोः” ॥

**आः**, [स्] व्य, कोपः । यथा । आः पापदुर्म्मुखः ।
(“आः किमेतदितिक्रोधादाभाष्य महिषासुरः” ।
इति मार्कण्डेयपुराणम् ।
“आः पापे दुर्विनोते महाश्वेते” । इति काद-
म्बरी ।) पीडा । यथा आः शीतं । इत्यमरभरतौ ।
स्मृतिः । स्पर्द्धा । तर्ज्जतं । इति शब्दरत्नावली ॥

**आकम्पितं**, त्रि, (आकम्पते स्म । आङ् + कपि +
क्त ।) कम्पविशिष्टं । तत्पर्य्यायः । वेल्लितं २
प्रेङ्खितं ३ आधूतं ४ आधुतं ५ चलितं ६ इत्यमरः ॥
कम्पितं ७ धुतं ८ व्याधूतं ९ विधूतं १० धूतं ११
प्रकम्पितं १२ । इति शब्दरत्नावली ॥
(“अनोकहाकम्पितपुष्पगन्धी” । इति रघौ ।

:"आकम्पितानि हृदयानि मनस्विनीनां

वातैः प्रफुल्लसहकारकृताधिवासैः" ।

इति ऋतुसंहारे ॥)

**आकरः**, पुं, (आकीर्य्यन्ते धातवोऽत्र । आङ् + कृ +

अप् । यद्वा आकुर्व्वन्ति संघीभूय कुर्व्वन्ति व्यव-
हारमत्रेति वा । आ + कृ + घ ।)
धातुरत्नादे-
रुत्पत्तिस्थानं । तत्पर्य्यायः । खनिः २
इत्यमरः ॥
("आकरे पद्मरागाणां जन्म काचमणेः
कुतः" ।
इति हितोपदेशः ।
"शैलेन्द्रो हिमवान् नाम धातूनामाकरो
महान्"
इति रामायणम् ।) समूहः ।
("शब्दाकरकरग्राममर्थमण्डलमण्डलम्"
।
इति कविकल्पद्रुमः ।) श्रेष्ठः । इति
मेदिनी ॥

**आकर्णनं**, क्ली, (आ + कर्ण + ल्युट् ।) श्रवणं ॥

("मुदा तदाकर्णनतत्परोऽभूत्" । इति
नैषधे ।)

**आकर्षः**, पुं, (आकृष्यते इति । आ + कृष + घञ् ।)

पाशकः । पाशा इति भाषा । अक्षक्रीडा ।
पाशा खेला इति भाषा । सारिफलकः ।
इत्यमरः ॥
छक इति भाषा । (यथा महाभारते ।
"आकर्षस्ते वाक्फलः सुप्रणीतो
हृदि प्रोढो मन्त्रपदः समाधिः" ।
इन्द्रियं । धनुरभ्यासवस्तु । आकर्षणं ।
इति मे-
दिनी ॥ आकृष्यते अनेन । आँकुषी इति
भाषा ।

ॐ ह्रीं कमलाक्षि अमुकीमाकर्षयाकर्षय
ॐफट् ॥
इमं मन्त्रं जपेदादौ सहस्रैकं ततः पुनः ।
तद्भूर्जपत्रमादाय गुलिकां कारयेत् सुधीः
॥
तेनैवं साध्यपादोत्थमृत्तिकापङ्कवेष्टितां ।
शोषितां तेजसा भानोर्वेष्टयेत् त्रिकटुकैः
पुनः ॥
प्रतिमां स्त्रीनिभां कृत्वा
क्षिपेत्तस्यास्तदोदरे ।
गुलिकां पातयेत् पात्रे प्रतिमां
साध्यरूपिणीं ॥
तादृशाभिमुखो भूत्वा निर्जने निशि
साधकः ।
ततस्तद्गतचित्तश्च तावत् कालं
जपेन्मनुं ।
यावदायाति सन्त्रस्ता मदनालसविग्रहा
॥ * ॥
अथान्यत् कथयाम्यत्र नृपाकर्षणहेतवे ।
देवस्यापि नरस्यापि मोहिनीमन्त्रजापतः
॥
अथ मन्त्रं महेशान्यास्तारमादौ ततस्त्रपां
।
पञ्चशायकवीजञ्च दत्त्वाथ भुवनेश्वरीं ॥
मोहिनीति च नामान्ते फट्कारं
पुनरालिखेत् ।
स्वाहान्तमन्त्रमुक्तञ्च मध्यवीजेन
कारयेत् ॥
षडङ्गान् दीर्घयुक्ताद्यैश्चक्रेऽष्टदलके
यजेत् ।
प्रथमं साध्यनामानि लेख्यानि च
कजोदरे ॥
महारजनरक्तेन पूर्ब्बमन्त्रपदं युतं ।
मोहिनीं पद्मकिञ्जल्के जृम्भिणीं
स्तम्भिनीं तथा ॥
वशङ्करीं कुलेशीञ्च ततो वै विश्ववासिनीं
।

ग्रन्थिः । उत्कण्ठा । हर्षः । इति मेदिनी ॥

**आकषः**, पुं, (आकष्यते यत्र, आ + कष् + अच् ।)

प्रस्तरविशेषः । इति शब्दरत्नावली ॥
कष्टिपातर-
इति भाषा ।

**आकस्मिकं**, त्रि, (अकस्मात् भवं । अकस्मात् + ठ-

ञ् ।) अकस्मादुद्भवं । हठाज्जातं ॥
("आकस्मिक-
प्रत्यवभासां च देवीं वाचमनुष्टुभेन छन्दसा
परि-
णतामभ्युदैरयत्" । इति उत्तररामचरितम् ॥)

**आकाङ्क्षा**, स्त्री, (आङ् + काङ्क्षि + अच् + टाप् ।)

इच्छा । अभिलाषः । इत्यमरः ॥
(रमणीयवस्तु-
स्पृहा । यदुक्तं साहित्यदर्पणे ।)
"आकाङ्क्षा रमणीयत्वात् वस्तुनो या स्पृहा तु
सा" ।
अपेक्षा । जिज्ञासा । अनुसन्धानं । यथा पदा-
ङ्कदूते, --
"नाकाङ्क्षा किं भवति विपुलश्रीमतोऽर्थान्तरेषु"
।)
न्यायमते । यत्पदमृते यत्पदान्वयबोधो न
भवति
तत्पदे तत्पदवत्ता । प्रतीतिपर्य्यवसानविरहः ।
इत्या-
लङ्कारिकाः ॥

**आकायः**, पुं, (आञ् + चि + घञ् ।) निवासः ।

इति वोपदेवः ॥

**आकारः**, पुं, (आ + कृ + घञ् ।) इङ्गितं । अभि-

प्रायानुरूपचेष्टाविष्करणं । संकेत ठार इत्यादि
भाषा । आकृतिः । मूर्त्तिः । इत्यमरः ॥
("तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च" ।
इति रघौ १ । २० ।
"आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च" ।

यथा । “आकर्ष इव श्वा आकर्षश्वः” । इति
मुग्धबोधव्याकरणं ॥ आकर्षतुल्य्य इति ज्ञापनार्थ-
इव शब्दः । इति दुर्गादासः ॥
(अयस्कान्तः ।
निकषोपलः ।)

**आकर्षणं**, क्ली, (आ + कृष् + ल्युट् ।) आकर्षः ।
बलादानयनं । टानन् इति भाषा । यथा, --
“सा त्वं गच्छ मयैवोक्ता पार्श्वं शुम्भनिशुम्भयोः ।
केशाकर्षणनिर्धूतगौरवा मागमिष्यसि” ॥
इति मार्कण्डेये देवोमाहात्म्यम् ॥ * ॥
तन्त्रोक्तकर्म्मविशेषद्वारा योषाद्यानयनं । यथा ।
अथाकर्षणं ।
“आकर्षणविधानानि कथयामि समासतः ।
यद्दृष्टं त्रैपुरे तन्त्रे यद्दृष्टं भूतडामरे ॥
श्रीवीजं मान्मथं वीजं लज्जावीजं समुद्धरेत् ।
प्रथमं प्रणतं दत्त्वा त्रिपुरादेविपदं ततः ॥
अमुकीति पदं दत्त्वा आकर्षय द्विधा पदं ।
स्वाहान्तं मन्त्रमुद्धृत्य जपेद्दशसहस्रकं ॥
षट्कोणचक्रमालिख्य रक्तचन्दनकुङ्कुमैः ।
षडङ्गं कारयेन्मन्त्री लज्जावीजसमन्वितं ॥
षड्दीर्घभाक्स्वरेणैव नादविन्दुविभूषितं ॥
रक्तपुष्पाक्षतधूपादिनैवेद्यैः प्रपूज्य तां ।
भावयन् चेतसा देवीं त्रिनेत्रां चन्द्रशेखरां ।
बालार्ककिरणप्रख्यां सिन्दूरारुणविग्रहां ॥
पद्मञ्च दक्षिणे पाणौ जपमालाञ्च वामके ।
मन्त्रस्यास्य प्रभावेण रस्मामपि तथोर्व्वशीं ॥
आकर्षयेन्न सन्देहः किं पुनर्मानवीमिह ॥ * ॥
भूर्जपत्रे समालिख्य कुङ्कुमालक्तवारिणा ॥
आकर्षिणीं ततः क्लिन्नामर्च्चयेदष्टपत्रके ॥
गन्धपुष्पादिधूपाद्यैर्भक्तियुक्तेन चेतसा ।
लक्षजप्तेन सर्व्वेषां शीघ्रमाकर्षणं भवेत् ॥ * ॥
ह्रीं कालिकायै धीमहि
तन्नः कालि प्रचोदयात् ।
ॐ आकर्षिणी वज्रधारिणी
हुँ फट् स्वाहा अमुकीमाकर्षय ॥
प्रणवं पूर्ब्बमुद्धृत्य उग्रसेनी ततः परं ।
नितम्बिनी वह्निजाया विद्या परमदुर्लभा ॥
सिन्दूरपुत्तलिं कृत्वा तस्या नाम हृदि विलिख्य
पणमूल्येन ताम्बूलं समानीय आमशरावद्वये
नैवेद्यं कृत्वा कृष्णाष्टोत्तरशततुलस्या मूलमन्त्र-
पठिते पुत्तल्या हृदि नामस्थाने ताडिते सति
सा समायाति” । इति श्रीकृष्णानन्दविद्यावागीश-
कृतषट्कर्म्मदीपिका तन्त्रसारश्च ॥

**आकर्षणी**, स्त्री, (आकृष्यते अनया । आ + कृष् +
ल्युट् + स्त्रियां ङीप् ।) फलपुष्पाद्याकर्षकयष्टि-
काविशेषः । आँकुषी इति भाषा ॥

**आकलनं**, क्ली, (आ + कल् + ल्युट् ।) आकाङ्क्षा ।
परिसंख्या । बन्धनं । इति मेदिनी ॥ (“सेव्यापि
सानुनयमाकलनाय यन्त्रा” । इति माघः ।)

**आकल्पः**, पुं, (आ + कृप् + घञ् ।) वेशः । इत्य-
मरः ॥ कल्पनं । इति मेदिनी ॥ मण्डनं । रोगः ।
इति हितोपदेशे सुहृद्भेदः । मूर्त्तिः । “आकार-
सदृशप्रज्ञः” । इति रघौ १ । १५ ।)

**आकारगुप्तिः**, स्त्री, (आकारस्य गुप्तिः ।) रत्या-
दिसूचको मुखरागादिराकारः । आकारोऽङ्ग-
वैकृतमिति वोपालितः ॥ गुप्तिर्गोपनं । आकारस्य
भयलज्जादिना गुप्तिराकारगुप्तिः । इत्यमर-
टीकायां भरतः ॥ तत्पर्य्यायः । अवहित्था २ ।
इत्यमरः ॥ अङ्गविकृतस्य रोमाञ्चादेराच्छादनात्
अवहिःस्थितिरवहित्था । इति सारसुन्दरी ॥
(“भयगौरवलज्जादेर्हर्षाद्याकारगुप्तिरवहित्था” ।
इति साहित्यदर्पणम् ।)

**आकारगोपनं**, क्ली, (आकारस्य गोपनं ।) आकार-
गुप्तिः । रत्यादिसूचकमुखरागादिगोपनं । इति
हेमचन्द्रः ॥

**आकारणं**, क्ली, स्त्री, (आङ् + कृ + णिच् + ल्युट् ।)
आह्वानं । इत्यमरः ॥ डाकन इति भाषा ।
(“तैश्च मणिभद्राकारणाय कश्चित् प्रेषितः” ।
इति पञ्चतन्त्रम् ।)

**आकालिकं**, त्रि, (समानकालौ आद्यन्तौ यस्य ।
“आकालिकडाद्यन्तवचने” इति समानकालस्या-
कालादेशः । इकट् प्रत्ययश्च निपातनात् । यद्वा
अकाले भवम् । अकाल + ठञ् ।) क्षणध्वंसि ।
इति धरणिः ॥ समानकालीनजन्मविनाशशाली ।
इति संक्षिप्तसारः ॥ अकालसम्भवं । आरम्भ-
कालात् तत्सजातीयकालस्थायि । निमित्तं काल-
मारभ्य परेद्युर्यावत्कालः स एव कालस्तावदकाल-

| | | |
|---|---|---|
| काश्मीरागुरुकस्तूरीरोचनामिलितेन च ।<br>अनामारक्तमिश्रेण कमलाक्षीमनुं लिखेत्<br>॥ | इति हेमचन्द्रः ॥ वेशार्थे यथा रघौ, --<br>(“अकृतकविधिसर्व्वाङ्गीनमाकल्पजातं<br>विलसितपदमाढ्यं यौवनं सा प्रपेदे” ।<br>“स्तोकाप्याकल्परचना विच्छित्तिः<br>कान्तिपोष-<br>कृत्” । इति साहित्यदर्पणे<br>तृतीयपरिच्छेदे ।<br>कल्पपर्य्यन्ते व्य, यथा -- “आकल्पं<br>नरकं भुङ्क्ते” ।<br>इति स्मृतिः ।)<br><br>**आकल्पकः**, पुं, (आकल्प + कन् ।) तमः ।<br>मोहः । | |

:स्तत्र भवः । इति तिथितत्त्वं ॥ (यथा मनौ ४ । १०५

("एतानाकालिकान्
विद्यादनध्यायानृतावपि" ।
"तपस्विनः स्थानुवनौकसस्ता-
माकालिकीं वीक्ष्य मधुप्रवृत्तिम्" ॥
इति कुमारसम्भवे ३ । ३३ ॥)

**आकालिकप्रलयः**, पुं, (आकालिकः प्रलयः ।) प्रलय-
विशेषः । स्वायम्भुवमन्वन्तरे कपिलशापेन अकाले
जगत्प्लावनं । तद्विवरणं यथा --
श्रीमार्कण्डेय उवाच ।
"आकालिकोऽयं प्रलयो यतो भगवता कृतः ।
तत् शृण्वन्तु महाभागा वाराहं लोकसंक्षयं ॥
यथा वा मत्स्यरूपेण वेदास्त्राताश्च शार्ङ्गिणा ।
तदहं संप्रवक्ष्यामि सर्व्वपापप्रणाशनं" ॥
श्रीकपिल उवाच ।
"स्वायम्भुव मनुश्रेष्ठ ब्रह्मरूप महामते ।
ममैकमीप्सितार्थं त्वं देहि प्रार्थयतोऽधुना ॥
जगत् सर्व्वं तवैवेदं त्वया च परिपालितं ।
त्वया सर्व्वं जगत् सृष्टं त्वमेव जगतां पतिः ॥
तन्मे देहि रहःस्थानं त्रिषु लोकेषु दुर्लभं
पुण्यं पापहरं रम्यं ज्ञानप्रभवमुत्तमं ॥
अहं हि सर्व्वभूतानां भूत्वा प्रत्यक्षदर्शिवान् ।
उद्धरिष्ये जगज्जातान् निर्माय ज्ञानदीपिकाम् ॥
अज्ञानसागरे मग्नमधुना सकलं जगत् ।
ज्ञानदीपं प्रदायाहं तारयिष्ये जगत्प्लवं" ॥
श्रीमनुरुवाच ।
"यदि त्वयाखिलजगद्धितार्थं ज्ञानदीपिकां ।
चिकीर्षुणा तपः कार्य्यं किं स्थानार्थनया तव ॥
तपस्यन्तं महात्मानं मनुं स्वायम्भुवं मुनिं ॥
आससाद तदा क्षुद्रमत्स्यरूपी जनार्दनः ।
उवाच च महात्मानं मनुं स्वायम्भुवं तदा ॥
तपोनिधे महाभाग भीतं मां त्रातुमर्हसि ।
नित्यं युद्धे जितं मत्स्यैर्विशालैर्भक्षितुं प्रति ॥
अथ प्रभूतैर्विपुलैर्द्रावितः पृथुरोमभिः ।
प्राणाकाङ्क्षी महात्मानं भवन्तं शरणं मुनिं ॥
प्राप्तोऽहं यद्यनुक्रोशो मयि मां परिपालय ।
इति तस्य वचः श्रुत्वा मनुः स्वायम्भुवस्ततः ॥
अलिञ्जरे तोयपूर्णे न्यधाद्विपुलभोगिनि ।
स तस्मिन् मलिके मत्स्यो वर्द्धमानो दिने दिने ॥
सामान्यरोहितप्रायदेहोऽभून्नचिरादथ ।
दशघटजलपूर्णं प्रत्यहं स महात्मा
मलिकमसति कुर्व्वन् वर्द्धयामास मत्स्यं ।
स च सुविषदनेत्रो मत्स्यराजोऽचिरेण
मलिकसलिलमध्ये लोमशः पीनदेहः" ॥
इति कालिकापुराणे ३१ अध्यायः ॥ * ॥
श्रीमार्कण्डेय उवाच ।
"ततस्तथा पीनतनुं दृष्ट्वा मत्स्यं मनुः स्वयं ।
गृहीत्वा पाणिना फुल्लनलिनीं सरसीं ययौ ॥
तत्सरस्तत्र विपुलं पुण्ये नारायणाश्रमे ।
एकयोजनविस्तीर्णं सार्द्धयोजनमायतं ॥
नानामीनगणोपेतं शीतामलजलोत्करं ।
तदासाद्य सरो मत्स्यं विनिधाय मनुस्तदा ॥
पालयामास सुतवत् कृपया परया युतः ।
सोऽचिरेणैव कालेन पीनो वैसारिणोऽभवत् ॥
न समस्तत्र सरसि वृहत्काये द्विजोत्तमाः ।
स एकदा महामत्स्यः पूर्ब्बापरतटद्वये ॥
शिरःपुच्छे निधायाशु तुङ्गदेहः समुच्छ्रितः ।
स्वायम्भुवं महात्मानं चुक्रोश त्राहि मामिति ॥
तं तथा स मनुर्ज्ञात्वा क्रोशन्तं मीनपुङ्गवं ।
महत्त्वं लघिमानन्ते चिन्तयन् सुमहत्तम ॥
त्वं ब्रह्मा ह्यथवा विष्णुः शम्भुर्व्वा मीनरूपधृक् ।
न चेद्गुह्यं महाभाग तन्मे वद महामते" ॥
श्रीमत्स्य उवाच ।
"आराध्योऽहंत्वया नित्यं यो हरिः स सनातनः ।
तवेष्टकामसिद्ध्यर्थं प्रादुर्भूतः समाहितः ॥
यत्त्वमिच्छसि देवेश मत्तः शान्तेन मूर्त्तिना ।
तत्करिष्येऽद्य तां मूर्त्तिमिमां विद्धि मनो मम" ॥
श्रीमार्कण्डेय उवाच ।
"इति तस्य वचः श्रुत्वा विष्णोरमिततेजसः ।
ज्ञात्वा प्रत्यक्षतो विष्णुं मनुस्तुष्टाव केशवं" ॥
श्रीमनुरुवाच ।
"नमस्ते जगदब्यक्तपरावरपते हरे ।
पावकादित्यशीतांशुनेत्रत्रयधराव्यय ॥
जगत्कारण सर्व्वज्ञ जगद्धाम हरे पर ।
सुरौघ परमेशान नारायण सुरेश्वर" ॥
इत्यादिस्तोत्रं ।
श्रीमार्कण्डेय उवाच ।
"स्वायम्भुवेन मनुना संस्तुतो मत्स्यरूपधृक् ।
वासुदेवस्तदा प्राह मेघगम्भीरनिस्वनः" ॥
श्रीभगवानुवाच ।
"तुष्टोऽस्मि तपसा तेऽद्य भक्त्या चापि स्तुतो मुहुः ॥
सपर्य्यया तथानेन वरं वरय सुव्रत ।
इष्टार्थं संप्रदास्यामि तुभ्यं नात्र विचारणा ॥
वरयाभीप्सितान्कामान् लोकानां वा हितञ्च यत्"
मनुरुवाच ।
"यदि देयो वरो मेऽद्य लोकानां यो हितो भवेत् ।

देवागाराणि तीर्थानि क्षेत्राणि सरितस्तथा ।
बहूनि पुण्यभाञ्ज्यत्र तिष्ठन्ति कपिल ! क्षितौ ॥
तेषामेकतमं त्वञ्चेदासाद्य कुरुषे तपः ।
स्थानं ब्रह्मन् तपःसिद्धौ न भविष्यति तत्र किं" ॥
कपिल उवाच ।
"त्वयि विश्रम्भमाधाय तपसः सिद्धयेऽचिरात् ।
स्थानं मया प्रार्थितं ते त्वं मां क्षिपसि हेतुभिः ॥
अक्षाम्यन्ते वचो मेऽद्य प्रार्थनायां विकत्थनं ।
यत्त्वं वदसि तस्मात्त्वं फलमेतदवाप्नुहि ॥
इदं त्रिभुवनं सर्व्वं सदेवासुरमानुषं ।
हतप्रहतविध्वस्तमचिरेण भविष्यति ॥
न चिरात् द्रक्ष्यसि मनो ! जलपूर्णं जगत्त्रयं ।
हतप्रहतविध्वस्तं तव गर्व्वविशातनं ॥
एवमुक्त्वा मुनीन्द्रोऽसौ कपिलस्तपसां निधिः ।
अन्तर्दधे जगामापि तदा ब्रह्मसदो मुनिः ॥
कपिलम्य वचः श्रुत्वा विषण्णवदनो मनुः ।
भावीति प्रतिपद्याशु मनुर्नोवाच किञ्चन ॥
विशालां वदरीं यातो गङ्गाद्वारान्तिकं मनुः ।
प्रविश्य तपसे यत्नमकरोल्लोकभावनः ।
आराधयामास हरिं जगत्कारणकारणं ॥
ॐ नमो भगवते वामुदेवाय शुद्धज्ञानस्वभाविने ।
इति जप्यं प्रजपतो मनोः स्वायम्भुवस्य तु ॥
प्रसनाद जगन्नायः केशवो न चिरादथ ।
ततः क्षद्रझसो भूत्वा दूर्व्वादलममप्रभः ॥
कर्पूरकलिकायुग्मतुल्यनेत्रयगोज्यलः ।
आससाद तदा मत्स्यं जग्राह च करेण तं ॥
न शक्रोम्यहमुद्धर्त्तुं पृथुरोमाणमद्भुतं ।
इति सञ्चिन्तयन्नेवं प्रोद्दधार करेण तं ॥
भगवानपि विश्वात्मा मत्स्यरूपी जनार्द्दनः ।
स्वायम्भुवकरं प्राप्य लघिमानमुपाश्रयत् ॥
ततः कराभ्यामुद्धृत्य स्कन्धे धृत्वाण्डजं मनुः ।
निनाय सागरं तत्र तोये च निदधे ततः ॥
यथेच्छमत्र वर्द्धस्व न कोऽपि त्वां हनिष्यति ।
अचिरेणैव सम्पूर्णदेहत्वं समवाप्नुहि ॥
इत्युक्त्वा स महाभागः सर्व्वप्राणभृतांवरः ।
लघुत्वं चिन्तयंस्तस्य विस्मयं परमं गतः ॥
मत्स्योऽपि न चिरादेव पूर्णकायस्तदा महान् ।
सर्व्वतः पूरयामास देहभोगेन सागरं ॥
तं पूर्णकायमालोक्य व्यतीत्याम्भः समुच्छ्रितं ।
शल्कैः शिराभीरचितं मानसाचलसन्निभं ॥
रुन्धन्तं सागरं सर्व्वं देहाभोगाचलीकृतं ।
स्वायम्भुवो मनुर्धीमान् मेने मत्स्यं न तं तदा ॥
ततः पप्रच्छ तं साम्ना मत्स्यं स्वायम्भुवो मनुः ।
विचिन्त्य लघिमानञ्च पश्यन्मूर्त्तिं तदाद्भुतां" ॥
श्रीमनुरुवाच ।
"न त्वां मत्स्यमहं मन्ये कस्त्वं मे वद सत्तम ! ।
तन्मे देहि वरं विष्णो तं वक्ष्याभि शृणुष्व मे ॥
शशाप कपिलः पूर्ब्बं मदर्थे भुवनत्रयं ।
हतप्रहतविध्वस्तं सकलं ते भविष्यति ॥
येनेयमुद्धृता पृथ्वी येनेयं परिपालिता ।
संहरिष्यति यस्त्वेनां तेऽधुना प्लावयन्त्विमां ॥
ततोऽहं दीनहृदयस्त्वामेव शरणं गतः ।
न यथेदं त्रिभुवनं जलप्लुतं भविष्यति ॥
हतप्रहतविध्वस्तं तथा त्वं देहि मे वरं" ।
श्रीभगवानुवाच ।
"न मत्तः कपिलो भिन्नस्तथा न कपिलादहं ।
यदुक्तं मुनिना तेन मयोक्तं विहितं मनो ॥
तस्माद्यदुदितं तेन तत् सत्यं नान्यथा भवेत् ।
करिष्ये तत्र साहाय्यं स्वायम्भुव निबोध तत् ॥
हतप्रहतविध्वस्ते तोयमग्ने जगत्त्रये ।
न चिरादेव तत्तोयं शोषयिष्यामि वै मनो ॥
यावज्जलप्लवस्तावत् यथा कार्य्यं त्वया मनो ।
तन्मे निगदितं तथ्यं शृणुष्वावहितोऽधुना ॥
सर्व्वयज्ञियकाष्ठौघैरेका नौका विधीयतां ।
तामहं द्रढयिष्यामि यथा नो भिद्यते जलैः ॥
दशयोजनविस्तीर्णां त्रिंशद्योजनमायतां ।
धारिणीं सर्व्ववीजानां भुवनत्रयवर्द्धिनीं ॥
सर्व्ववाज्ञिकवृक्षाणां भूरिवल्कलतन्तुभिः ।
नवयोजनदीर्घान्तु व्यामत्रयसुविस्तृतां ॥
कुरु स्वयं मनो तूर्णं वृहतीमीरिकां वटीं ।
जगद्धात्री जगन्माया लोकमाता जगन्मयी ॥

:द्रढयिष्यति तां रज्जुं न त्रुव्यति यथा तथा ।

सर्व्वाणि वीजान्यादाय सवेदान् सप्त वै ऋषीन् ॥
तस्यां नावि निसन्नस्त्वं वर्त्तमाने जलप्लवे ।
दक्षेण सह संगम्य स्मरिष्यसि मनो मम ॥
स्मृतोऽहं तूर्णमायास्ये भवतो निकटं प्रति ।
श्यामलेनाथ शृङ्गेण त्वं मां ज्ञास्यसि वै तदा ॥
यावत् प्रहतविध्वस्तं हतं स्याद्भुवनत्रयं ।
तावत् पृष्ठेन तां नावं वोढाहं नात्र संशयः ॥
जलप्लवे तु संपूर्णे शृङ्गे मम च तां हरिं ।
त्वं तया वटिकया तुर्णं सदा नेष्यसि वै दृढं ॥
बद्धायां नावि मे शृङ्गे दैवमानेन वत्सरान् ।
सहस्रं प्रेरयिष्यामि तां नावं शोषयन् जलं ॥
ततः शुष्केषु तोयेषु प्रोन्मग्ने शिखरे गिरेः ।
हिमाचलस्य बद्ध्वा तां तस्मिन्नावमहं मनो ॥
त्वां वै गोपयिता नित्यं तावत्तु शोषये जलं ।
चिन्तितोऽहं त्वया यास्ये यदाहं निकटं तव ॥
शृङ्गेण श्यामलेनैव त्वं मां ज्ञास्यसि पुष्करे ।
पुनः सृष्टिं ततः कृत्वा मत्प्रसादान्महामते ॥
त्रैलोक्यदुर्ल्लभामृद्धिमवाप्ससि सनातनीं ।
अहमाराधितो येन जप्येन भवता मनो ॥
एवं हि मत्स्यरूपेण वेदास्त्राताश्च शार्ङ्गिणा ।
कपिलस्य तु शापेन कृतोऽथाकालिको लयः ॥
आकालिकोऽयं प्रलयो यतो भगवता कृतः ।
इति वः कथितं सर्व्वं यथावत् द्विजसत्तमाः” ॥
इति कालिकापुराणे ३२ अध्यायः ॥

**आकालिकी**, स्त्री, (अकाल + ठञ् + ङीप् ।) विद्युत् ।

इति हेमचन्द्रः ॥

**आकाशः**, पुं, क्ली, (आ समन्तात् काशन्ते दीप्यन्ते

सूर्य्यादयो यत्र । आ + काश् + घञ् ।) पञ्च-भूतान्तर्गतभूतविशेषः । स तु शून्यः । तत्पर्य्यायः ।
द्योः २ द्यौः ३ अभ्रं ४ अब्भं ५ व्योम ६ पुष्करं ७
अम्बरं ८ नभः ९ अन्तरीक्षं १० अन्तरिक्षं ११
गगनं १२ अनन्तं १३ सुरवर्त्म १४ खं १५ वियत्
१६ विष्णुपदं १७ विहायः १८ । इत्यमरः ॥
नाकः १९ अनङ्गः २० नभसं २१ मेघवेश्म २२
महाविलं २३ । इति जटाधरः ॥ मरुद्वर्त्म २४
मेघवर्त्म २५ त्रिपिष्टपं २६ । इति शब्दरत्ना-
वली ॥ न्यायमते अस्य सामन्यगुणाः सङ्ख्यादि-
पञ्च । विशेषगुणः शब्दः । स तु नित्यः अश-रीरी च । अस्येन्द्रियं कर्णः । सत्वेकः किन्तु उपाधिभेदेन नाना भवति ।
(“शब्दः श्रोत्रेन्द्रियञ्चापि छिद्राणि च विविक्तता ।
वियतः कथिता एते गुणागुणविचारिभिः” ॥
यवाङ्गुलच्छिद्रयुतास्तु मध्ये
द्विहस्तदीर्घा अथ पट्टिकास्तु ।
कृत्वा चतस्रोऽष्टदलाकृतीस्तु
यामिर्भवेदष्टदिशानुसारी ॥
तत्कर्णिकायान्तु महाप्रकाशो
दीपः प्रदेयो दलगास्तथाष्टौ ।
निवेद्य धर्म्माय हराय भूम्यै
दामोदरायाप्यथ धर्म्मराज्ञे ॥
प्रजापतिभ्यस्त्वथ सत्पृतृभ्यः
प्रेतेभ्य एवाथ तमःस्थितेभ्यः” । इति ।
अपरार्के त्वन्यो मन्त्रो यथा, --
“दामोदराय नभसि तुलायां लोलया सह ।
प्रदीपं ते प्रयच्छामि नमोऽनन्ताय वेधसे” ॥
इति निर्णयसिन्धौ २ परिच्छेदे कार्त्तिकमाहात्म्यं ॥

**आकाशप्रदीपः**, पुं, (आकाशे दीयमानः प्रदीपः ।)

तुलायां
दीयमानलक्ष्मीदामोदरसम्प्रदानाकाश-
दीपः । तथाच ब्रह्माण्डपुराणे ।
“तुलायां तिलतैलेन सायं सन्ध्यासमागमे ।
आकाशदीपं यो दद्यात् मासमेकं निरन्तरं ।
सश्रीकाय श्रोपतये स श्रीमान् भुवि जायते ॥
ॐदामोदराय नभसि तुलायां लोलया सह ।
प्रदीपं ते प्रयच्छामि नमोऽनन्ताय वेधसे ॥
इति मन्त्रेण यो दद्यात् प्रदीपं सर्पिरादिना ।
आकाशे मण्डपे वापि स चाक्षयफलं लभेत् ।
विष्णुवेश्मनि यो दद्यात् कार्त्तिके मासि दीपकं ॥
अग्निष्टोमसहस्रस्य फलमाप्नोति मानवः” ॥

**आकाशमांसी**, स्त्री, (आकाशजाता मांसी ।) सूक्ष्म-

जटामांसी । केदारे उत्पत्तिरस्याः । तत्पर्य्यायः ।
निरालम्भा २ खसम्भवा ३ शेवाली ४ सूक्ष्मपत्री
५ गौरी ६ पर्ब्बतवासिनी ७ अभ्रमांसी ८ ।
अस्या गुणाः । हिमत्वं । शोथव्रणनाडीरोग-

सर्व्वसिद्धिर्भवेत्तस्य यस्तोषयति तेन मां” ।
श्रीमार्कण्डेय उवाच ।
“इति दत्त्वा वरं तस्मै मत्स्यस्तेन नमस्कृतः ।
अन्तर्द्दधे जगन्नाथो लोकानुग्रहकारकः ॥
स्वायम्भुवोऽपि भगवानन्तर्द्धानं गते हरौ ।
यथोक्तं हरिणा पूर्ब्बं नावं रज्जुं तथाकरोत् ॥
सर्व्वयाज्ञियवृक्षौघान् छित्त्वा स्वायम्भुवस्तदा ।
उद्धेन कारयामास नावं दृढतरां ततः ॥
तेषां वल्कसमुद्भूतसूत्रसंघैर्वटीरिकां ।
पूर्ब्बोक्तेन प्रमाणेन कारयामास वै मनुः ॥
ततः कालेन महता वृत्तं युद्धं महाद्भुतं ।
विष्णोर्यज्ञवराहस्य सरभस्य हरस्य च ॥
ततो जलप्लवे भूते विध्वस्ते भुवनत्रये ।
तया रज्ज्वा तरिं बद्ध्वा वीजान्यादाय सर्व्वशः ॥
वेदानृषीन् तथा सप्त दक्षं चादाय वै मनुः ।
तस्यां नावि समाधाय तोयमग्ने चराचरे ॥
स्वायम्भुवस्तदा मत्स्यं हरिं सस्मार वै ततः ।
ततो जलानामुपरि सश्रृङ्ग इव पर्ब्बतः ॥
उद्दीप्तश्चैकशृङ्गेण विष्णुर्मत्स्यस्वरूपधृक् ।
आगतस्तत्र न चिराद्यत्रास्ते स मनुर्हरिः ॥
तरिमारुह्य विपुले तोयराशौ भयङ्करे ।
यावच्चलाचलं तोयं तावत् पृष्ठे तरिं न्यधात् ॥
जले प्रकृतिमापन्ने शृङ्गे बद्ध्वा तरिं तदा ।
तथा च भाषापरिछेदे ।
“आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः ।
इन्द्रियं तु भवेत् श्रोत्रमेकः सन्नप्युपाधितः” ॥)
वेदान्तमते स जन्यः ॥

**आकाशगङ्गा**, स्त्री, (आकाशपथवाहिनी गङ्गा ।)
स्वर्गगङ्गा । यथा, शिवरात्रिव्रतकथायां, --
“आकाशगङ्गासलिलतरङ्गगणनादिते ।
त्रैगुण्यललितैश्चारुमरुद्भिरुपवीजिते” ॥
(“नदत्याकाशगङ्गायाः स्रोतस्युद्दामदिग्गजे” ।
इति रघौ १ । ७८ ।
“उभौ यदि व्योम्नि पृथग् प्रवाहा-
वाकाशगङ्गापयसः पतेताम्” । इति माघः ।)

**आकाशजननी** [न्] पुं, (आकाशमार्गस्य जननी ।)
प्रगण्डीमध्यस्थितजनानां वाह्यार्थदर्शनार्थानिक्षुद्र-
च्छिद्राणि । यद्द्वारा आग्नेयास्त्रगुलिकाः प्रक्षि-
प्यन्ते । इति राजधर्म्मः ॥ (आकाशजननी स्त्री
आकाशपथस्य जननीव पोषिका । इति केचित् ।)

**आकाशदीपः**, पुं, (आकाशे दीयमानो दीपः ।)
कार्त्तिकमासे भगवदुद्देशेन नभसि दत्तप्रदीपः ।
यथा । कार्त्तिके आकाशदीप उक्तो निर्णयामृते
पुष्करपुराणे ।
“तुलायां तिलतैलेन सायंकाले समागते ।
आकाशदीपं यो दद्यात् मासमेकं हरिं प्रति ॥
महतीं श्रियमाप्नोति रूपसौभाग्यसम्पदम्” । इति
तद्विधिश्च हेमाद्रौ आदिपुराणे ।
“दिवाकरेऽस्ताचलमौलिभूते
गृहाददूरे पुरुषप्रमाणं ।
नाशित्वं । लूतागर्द्दभकज्वालाहारित्वं । वर्णकारि-
त्वञ्च । इति राजनिर्घण्टः ॥

**आकाशमूली**, स्त्री, (आकाशे भूमिरहितस्थाने
मूलमस्याः । ङीप् ।) कुम्भिका । इति हारा-
वली ॥ पाना इति ख्याता ।
(कुम्भिकाशब्देऽस्याः गुणा द्रष्टव्याः ।)

**आकाशरक्षी** [न्] पुं, (आकाशे उच्चस्थाने स्थितः
सन् रक्षतियः । आकाश + रक्ष + णिन् ।) प्रग-
ण्डीस्थितप्रणिधिः ।
दुर्गवहिःप्राचीरोपरिस्थित-
चरः । इति राजधर्म्मः ॥

**आकाशवल्ली**, स्त्री, (आकाशस्य वल्लीव । अत्थुच्च-
शिखत्वात् ।) लताविशेषः । आकाशवेल अमर-
वेल इति ख्याता । तत्पर्य्यायः । खवल्ली २ दु-
स्पर्शा ३ व्योमवल्लिका ४ । अस्या गुणाः । मधु-
रत्वं । कटुत्वं । पित्तनाशित्वं । शुक्रवर्द्धकत्वं ।
रसायनत्वं । बलकारित्वं । दिव्यौषधिपरत्वं । इति
राजनिर्घण्टः ॥
“आकाशवल्ली तु बुधैः कथितामरवल्लरी ।
खवल्ली ग्राहिणी तिक्ता पिच्छिलाक्ष्यामयापहा ॥
तुवराग्निकरी हृद्या पित्तश्लेष्मामनाशिनी” ।
इति भावप्रकाशः ॥

| | | |
|---|---|---|
| तां नावं चोदयामास सहस्रं दैववत्सरान् ॥<br>स्वयं नावमवष्टभ्य दधार परमेश्वरः ।<br>योगनिद्रा जगद्धात्री समासीदद्वटीरिकां ॥<br>ततः शनैः शनैस्तोये शोषं गच्छति वै चिरात् ।<br>पश्चिमं हिमवत् शृङ्गमुन्मग्नं तोयमध्यतः ॥<br>द्विसाहस्रैर्योजनानामुच्छ्रितस्य हिमप्रभोः ।<br>पञ्चाशत्तु सहस्राणि शृङ्गं तत्तस्य चोच्छ्रितं ॥<br>तस्मिन् शृङ्गे ततो नावं बद्ध्वा मत्स्यात्मधृक् हरिः ।<br>जगाम शोषणायाशु जलानां जगतां पतिः ॥ | यूपाकृतिं यज्ञियवृक्षदारु-<br>मारोप्य भूमावथ तस्य मूर्द्ध्नि ॥ | |

**आकाशवाणी**, स्त्री, (आकाशादुद्भवा वाणी ।) अशरीरिणी वाक् । दैववाणी । इति पुराणं ॥

**आकाशसलिलं**, क्ली, (आकाशात्पतितं सलिलं जलं ।) दिव्योदकं । इति राजनिर्घण्टः ॥

**आकिञ्चनं**, क्ली, (अकिञ्चनस्य दरिद्रस्य भावः । अकिञ्चन + अण् ।) अकिञ्चनता ॥

**आकीर्णं**, त्रि, (आङ् + कॄ श विक्षेपे + क्तः ।) व्याप्तं । तत्पर्य्यायः । संकीर्णं २ सङ्कुलं ३ । इत्यमरः । सभाकीर्णं ४ । इति शब्दरत्नावली ॥ (यथा, रघुवंशे । प्रथमसर्गे ५० श्लोकः । "आकीर्णमृषिपत्नीनामुटजद्वाररोधिभिः" ॥) जलादिभिर्निरवकाशं । इति भरतः ॥

**आकुञ्चनं**, त्रि, (आङ् + कुचि + ल्युट् ।) न्यायमते पञ्चप्रकारकर्म्मान्तर्गतकर्म्मविशेषः । सङ्कोचः ॥ (प्रसारितस्य संक्षिप्तत्वसम्पादनं । नमन । वक्रतासम्पादनं । यथा । भाषापरिछेदे । "उत्क्षेपणं ततोऽवक्षेपणमाकुञ्चनं तथा । प्रसारणञ्च गमनं कर्म्माण्येतानि पञ्च च" ॥)

**आकुलं**, त्रि, (आङ् + कुल + कः ।) व्याकुलं । तत्पर्य्यायः । व्यस्तं २ अप्रगुणं ३ । इत्यमरः ॥ (यथा शाकुन्तले । "विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला" ॥)

**आकूतं**, क्ली, (आङ् + कूङ् + क्तः) अभिप्रायः) आशयः । इति हेमचन्द्रः ॥ (तात्पर्य्यं । इच्छा । यथा साहित्यदर्पणे । २ य परिच्छेदे । "तत्रैव निशि नागानामाक्रन्दः श्रूयते महान्" ॥)

नाथः । पार्ष्णिग्राहात् परो राजा । इति धरणिः । (यथा मानवे ७ । २०७ । "पार्ष्णिग्राहञ्च संप्रेक्ष्य तथाक्रन्दञ्च मण्डले" ।)

**आक्रमः**, पुं, (आङ् + क्रम् + अच् ।) आक्रमणं । तत्पर्य्यायः । अधिक्रमः २ क्रान्तिः ३ । इति हेमचन्द्रः ॥ (अधिरोहः । व्याप्तिः । विक्षेपः । अधिगमः । प्राप्तिः । अधिकारः ॥)

**आक्रमणं**, क्ली, (आङ् + क्रम् + ल्युट् ।) आक्रमकरणं । ("यः पृष्ठवर्त्ती नृपतिः देशाक्रमणाद्याचरति" । इति कुल्लूकभट्टः ।) व्यापनं ॥ (अतिवर्त्तनं । यथा, रामायणे । "कण्टकाक्रमणक्लान्ता वनमद्य गमिष्यति" । आरोहणम् । यथा रामायणे । "न देवलोकाक्रमणं नामरत्वमहं वृणे" ।)

**आक्रान्तः**, त्रि, (आङ् + क्रम + क्त) कृताक्रमणः । अधिक्रान्तः । आक्रमविशिष्टः । इति हलायुधः ॥ (अभिभूतः । पराभूतः । वशीभूतः । यथा मनुः -- "न पाषण्डिगणाक्रान्ते नोपसृष्टेऽन्त्यजैर्नृभिः" ।)

**आक्रीडः**, पुं, (आङ् + क्रीड + घञ् ।) राजोपवनं । दण्डशुक्लावशेवञ्च न पुत्त्रो दातुमर्हति" ॥ ("पित्तश्लेष्मघ्नमम्लञ्च वातिकञ्चाक्षिकीफलं । मधुराम्लविपाकञ्च वातपित्तहरञ्च तत्" ॥ इति चरकः ॥ "आक्षिकः पाण्डुरोगघ्नो व्रण्यः संग्राहको लघुः" । इति सुश्रुतः ॥)

**आक्षीव**, पुं, (आङ् + क्षीव + अच् ।) अक्षीवः । शोभाञ्जनवृक्षः । इति रायमुकुटः ॥

**आक्षेपः**, पुं, (आङ् + क्षिप् + घञ् ।) अपवादः । इत्यमरः ॥ भर्त्सनं । (यथा -- नीतिशतके । ४२ ॥ 'क्षान्त्येवाक्षेपरुक्षाक्षरमुखरमुखान्दुर्मुखान्दूषयन्तः सन्तः साश्चर्य्यचर्य्याजगति बहुमता कस्यनाभ्यर्थनीयाः' आकर्षणं । ("नवपरिणयलज्जाभूषणां तत्र गौरीं । वदनमपहरन्तीं तत्कृताक्षेपमीशः" ॥ इति कुमारे । ७ । ९५ । विन्यासः । स्थापनं । "कर्णार्पितो लोध्रकषायरुक्षे गोरोचनाक्षेपनितान्तगौरे । तस्याः कपोले परभागलाभात्" । इति कुमारे । ७ । १७ अपहरणं । यथा, -- "यत्रांशुकाक्षेपविलज्जितानां" । १ । १४ कुमारे । उपस्थितिः । यथा साहित्यदर्पणम् । "मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये" । इति ।) काव्यालङ्कारः । इति मेदिनी ॥ (अलङ्कारप्रकरणे विशेषो द्रष्टव्यः ।)

**आक्षेपकः**, पुं, (आङ् + क्षिप् + ण्वुल् ।) निन्दाकरः । व्याधः । इति मेदिनी ॥ वातरोगविशेषः । तस्य कारणलक्षणे । निदाने यथा -- "यदा तु धमनीः सर्व्वाः कुपितोऽभ्येति मारुतः । तदा क्षिपत्याशु मुहुर्मुहुर्देहं मुहुश्चरः ॥ मुहुर्मुहुस्तदाक्षपादाक्षेपक इति स्मृतः" ।

**आक्षोटः**, पुं, (अक्षोट एव स्वार्थे अण् ।) अक्षोटवृक्षः । पर्ब्बतजपीलुवृक्षः । इति शब्दरत्नावली ॥

“हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितं” ।
इति
“हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः” ॥
इति शाकुन्तले ।)

**आकृतिः**, स्त्री, (आक्रियते इयं गौरयं अश्वः इति
व्यज्यतेऽनया । आङ् + कृ + क्तिन् ।) रूपं
।
शरीरं । जातिः । इति मेदिनी ॥ (यथा शाकु
न्तले प्रथमाङ्के ।
“किमिव हि मधुराणां मण्डनं नाकृतीनां” ॥
न्यागमते सामान्यं, जातिः ।
“आकृतिर्जाति-
लिङ्गाख्या” । इति न्यायसूत्रम् ।
जातिलिङ्ग-
मित्याख्या यस्याः जातेर्गोत्वादेर्हि
सास्नादिसंस्थान-
विशेषो लिङ्गम् । तस्य च परम्परया
द्रव्यवृत्ति-
त्वम् ।
जातिद्रव्यासमवायिकारणतावच्छेदिकालिङ्गं
धर्म्मो यस्याः सा इत्यर्थः इति कश्चित् ॥)

**आकृतिच्छत्रा**, स्त्री, (आकृत्या छत्रमिव या ।) घोषा-
तकीवृक्षः । श्वेतघोषा इति भाषा । इति
रत्न-
माला ॥ (घोषकशब्देऽस्या विशेषो ज्ञेयः ।)

**आकृष्टं**, त्रि, (आङ् + कृष् + कर्म्मणि + क्तः ।)
कृताकर्षणं । आकर्षितं ॥ (प्रलोभितः,
मुग्धः ।
यथा हितोपदेशे । “ततो लोभाकृष्टेन
केनचित्
पान्थेनालोचितं” ॥ इति)

**आकोकेरः**, पुं, मकरराशिः । इति ज्योतिस्तत्त्वं ॥

**आक्रन्दः**, पुं, (आङ् + क्रन्द + घञ् + अच् वा ।)
रोदनं । यथा गामायणे ।
(“तासामाक्रन्दशब्देन
सहसोद्भ्रान्तलोचनः” ।)

राज्ञः साधारणं वनं । इत्यमरः ॥
(केलीकाननं,
लीलास्थानं । यथा, रामायणे ।
“आक्रीडालङ्कृतं स्फीतं सुविभक्तं
सुसंस्कृतं” ।
तथा च कुमारे । २ । ६७ ।
“अक्रीडपर्ब्बतास्तेन कल्पिताः
स्वेषु वेश्मसु” ।
कुरुत्थामनृपपुत्त्रः स्वनामख्यातः
पौरवः” ॥
यथा हरिवंशे ।
“दुष्मन्तस्य तु दायादः कुरुत्थामः
प्रजेश्वरः ।
कुरुत्थामादथाक्रीडश्चत्वारस्तस्य
चात्मजाः” ॥)

**आक्रोशः**, पुं, (आङ् + क्रुश + घञ् ।) क्रोधाकर्त्तव्य-
निश्चयः । तत्पर्य्यायः । आक्षेपः
२ अभिषङ्गः ३
शापः ४ । इति हेमचन्द्रः ॥ (यथा
रामायणे ।
“आक्रोशं मममातुश्च प्रमार्ज्य
पुरुषर्षभ” इति ।)

**आक्रोशनं**, क्ली, (आङ् + क्रुश् + ल्युट् ।) अभिशापः ।
तत्पर्य्यायः । अभिषङ्गः २
अभीषङ्गः ३ । इत्यमरः ॥

**आक्षपाटिकः**, पुं, (अक्षपटे नियुक्तः । अक्षपट +
ठक् ।) अक्षदर्शकः । धर्म्माध्यक्षः
। इति जटाधरः ॥

**आक्षपादः**, पुं, (अक्षपाद + अण् ।) नैयायिकः ।
इति भूरिप्रयोगः ॥

**आक्षारणा**, स्त्री, क्ली, (आङ् + क्षर + णिच् +
युच् ।) मैथुनं प्रति आक्रोशः ।
इत्यमरः ॥ परस्त्री-

(“वतामाभिषुकाक्षोटमकूलकनिकोचकाः ।
गुरूष्णस्निग्धमधुरा सोरुमाणा बलप्रदाः ।
वातघ्ना वृंहणा वृष्याः कफपित्ताभिवर्द्धनाः” ॥
इति चरकः ॥)

**आक्षोडः**, पुं, आक्षोटवृक्षः । इत्यमरटीकायां
भरतः ॥

**आक्षोदनं**, क्ली, (आङ् + क्षुद् + ल्युट् ।) मृगया ।
इत्यमरः ॥

**आखण्डलः**, पुं, (आङ् + खण्ड + कलच् ।) इन्द्रः ।
इत्यमरः ॥ (यथा कुमारसम्भवे । तृतीयसर्गे ३ ।
११ ।
“आखण्डलः काममिदं बभाषे” ।)

**आखनिकः**, पुं, (आङ् + खन + इकन् ।) चौरः ।
उन्दुरुः । शूकरः इति मेदिनी ॥ (खनित्रादिकं
खननसाधनद्रव्यं । खननकर्त्ता ।)

**आखातं**, पुं, क्ली, (आङ् + खन् + क्त ।) अखातं ।
देवखातं । इत्यमरटीकायां रायमुकुटः ॥

**आखुः**, पुं, (आङ् + खन + कुः ।) मूषिकः । इत्यमरः ॥
(यथा नीतिशतके । “कृत्वाखुविर्वरं स्वयं निप-
तितो नक्तं मुखे भोगिनः” ।) शूकरः । चौरः ।

| | | |
|---|---|---|
| आह्वानं । मित्रं । दारुणयुद्धं । भ्राता । इति मेदिनी ॥ ध्वनिः (यथारामायणे । | निमित्तं पुसः परपुरुषनिमित्तं स्त्रिया वा दूषणं ।<br>यथा “कृतागम्यागमनस्त्वं स्थानान्तरं गच्छ” ।<br>इति भरतः ॥ छेनालि अपवाद इति भाषा ॥<br><br>**आक्षारितं**, त्रि, (आङ् + क्षर + णिच् + क्त ।) पर-<br><br>स्त्रियां परपुरुषे वा मैथुनं प्रति मिथ्यादूषितं ।<br>अपवादग्रस्तं । इत्यमरः ॥<br><br>**आक्षिकः**, पुं, आच्छुकवृक्षः । इति रत्नमाला ॥<br><br>आचेर गाछ इति भाषा ।<br>(द्यूतनिमित्तः । पाश-क्रीडाविषयकः । अत्र अक्षैर्दीव्यति जितो वा<br>इति अक्ष + ठञ् । यथा मानवे । ८ । १५९ ॥<br>“प्रातिभाव्यं वृथादानमाक्षिकं सौरिकञ्चयत् । | |

:इति हेमचन्द्रः ॥ देवताडवृक्षः । इति रत्नमाला ॥

(आखुमांसगुणा यथा, --
("आखोर्मांसं सपदि बहुधा खण्डखण्डीकृतं यत्तैले
पाच्यं द्रवति निरतं यावदेतन्न सम्यक् ।
तत्तैलाक्तं वसनमनिशं योनिभागे दधाना,
हन्ति ब्रीडाकरभगफलं नात्र सन्देहबुद्धिः" ॥
इति वैद्यकचक्रपाणिसंग्रहः ॥)

**आखुकर्णी**, स्त्री (आखोः कर्णमिव पत्रमस्याः । आ-
खुकर्ण + ङीप्) लताविशेषः । मूषाकाणी इति
भाषा । तत्पर्य्यायः । कृशिका २ द्रवन्ती ३ चित्रा ४
सुवर्णो ५ उन्दुरुकर्णी ६ न्यग्रोधी ७ मूषक-
कर्णी ८ वृश्चिकर्णी ९ बहुकर्णिका १० माता
११ भूमिचरी १२ चण्डा १३ शम्बरी १४ बहु-
पादिका १५ प्रत्यक्श्रेणी १६ वृषा १७ पुत्त्रश्रेणी
१८ अद्रिभूः १९ । अस्या गुणाः । कटुत्वं उष्णत्वं ।
कफपित्तहरत्वं । सारकत्वं । आनाहज्वरशूल-
नाशित्वं । परमपाचकत्वं । इति राजनिर्घण्टः ॥
"आकुपर्णी आकुकर्णी कर्णिका भूदरीभवा ।
आखुकर्णी कटुस्तिक्ता कषाया शीतला लघुः ॥
"आखेटकस्य धर्म्मेण विभवाः स्युर्वशे नृणाम् ।
नृप्रजाः प्रेरयत्येको हन्त्यन्योऽत्र मृगानिव" ॥)

**आखेटशीर्षकं**, क्ली, कुट्टिमभेदः । इति शब्दरत्नावली
शुडङ्ग इति भाषा । (यदुक्तं ।
"कपिशीर्षं द्रुमशीर्षं तथाचाखेटशीर्षकं ।
इति कुट्टिमभेदाः स्युः शाब्दिकैः समुदाहृताः" ।)

**आखेटिकः**, पुं, (आखेटे मृगयायां कुशलः । आ-
खेट + ठक् ।) मृगयाकुशलकुक्कुरः । तत्पर्य्यायः ।
आखेटिकः २ विश्वकद्रुः ३ । इति हारावली ॥
(मृगयाकर्त्ता । त्रासजनकः । भयङ्करः । मृगयुः ।
व्याधः ।)

**आखोटः**, पुं, (आख + उट् ।) फलवृक्षविशेषः ।
आखरोट् इति भाषा । तत्पर्य्यायः । पार्ब्बतीयः २
फलस्नेहः ३ गुडाशयः ४ कीरेष्टः ५ कन्दरालः ६
मधुमज्जा ७ वृहच्छदः । अस्य गुणाः । मधुरत्वं ।
बलकारित्वं । स्निग्धत्वं । उष्णत्वं । वातपित्तना-
शित्वं । रक्तदोषप्रशमनत्वं । शीतलत्वं । कफ-
कोपनत्वं । इति राजनिर्घण्टः ॥ (आक्षोडशब्दे
आक्षोटशब्दे चास्य गुणादिकं ज्ञेयं ॥)

**आख्या**, स्त्री, (आङ् + ख्या + अङ् + टाप्) नाम ।
संज्ञा । इत्यमरः ॥ यथा कुमारसम्भवे १ । २६ ।
"उमेति मात्रा तपसो निषिद्धा
पश्चादुमाख्यां सुमुखी जगाम" ।

**आख्यातं**, त्रि, (आङ् + ख्या + क्तः) कथितं । उक्तं ।
"द्विविधा पुनः प्रकृतिरेषामागन्तुनिजविभा-
गात्" । "मुखानि तु खल्वागन्तोर्नखदशनपतना-
भिचाराभिशापाभिषङ्गबधबन्ध-पीडन-रज्जु-दहन-
मन्त्राशनि-भूतोपसर्गादीनि" ।
"आगन्तुर्हि व्यथापूर्ब्बमुत्पन्नो जघन्यं
वातपित्तश्लेष्मणां वैषम्यमापादयति" । उदाहरणं ।
"तत्रागन्तवश्छेदनभेदनक्षणनभञ्जन-
पिच्छनोत्पेषणवेष्टनप्रहार-बध-बन्धन-व्यधन-पीड-
नादिभिर्व्वा । भल्लातक-पुष्पफलरसात्मगुप्ताशूक-
क्रिमिशूकाहितपत्रलतागुल्मसंस्पर्शनैर्वा स्वेदन-
परिसर्पणावमूत्रणैर्व्वा विषिणाम् ॥ सविषाविष-
प्राणिदन्तविषाणनखनिपातनैर्व्वा ।
सागरविषवात-हिम-दहन-संस्पर्शनैर्व्वा शोथाः
समुपजायन्ते" ॥ इति चरकेणोक्त ॥

**आगन्तुकं**, त्रि, (आगन्तु + स्वार्थे कन्) आहार्य्यं ।
अनित्यस्थायि । इति त्रिकाण्डशेषः ॥
(अज्ञातकुलशीलादिर्नवागतः पुरुषः । यथाः
"त्वया च मूलभृत्यानपास्यायमागन्तुकः पुर-
स्कृतः" । इति हितोपदेशे ॥ अतिथिः । अज्ञात-
स्वामिकः पश्वादिः । यथा याज्ञवल्क्ये ॥
"महोक्षोत् सृष्टपशवः सूतिकागन्तुकादयः ।
पालो येषां तु ते मोच्या दैवराजपरिप्लुताः" ॥
आकस्मिकक्षतादिरोगः । यथा, शुश्रुते ।
"शलश्वल आशुगमने धातुस्तस्य शल्यमितिरूपं
तत् द्विविधं, शारीरमागन्तुकं च" । इति ॥)

**आगमं**, क्ली, (आङ् + गम + अच् ।) तन्त्रशास्त्रं ।

विपाके कटुका

मूत्रकफामयकृमिप्रणुत्” ।

इति भावप्रकाशः ॥

**आखुगः**, पुं, (आखुना गच्छति यः । गणेशस्य मूषिक-

वाहनत्वात् तथात्वं ।) गणेशः । इति

हेमचन्द्रः ॥

**आखुपर्णिका**, स्त्री, (आखोः कर्णमिव पर्णमस्याः ।)

लताविशेषः । इति रत्नमाला ॥

इन्दुरकाणी इति

भाषा । (आखुपर्णीशब्दे

आखुककर्णीशब्दे चास्या

गुणादयो ज्ञातव्याः ।)

**आखुपर्णी**, स्त्री, (आखोः कर्णमिव पर्णमस्याः ।)

आखुपर्णिका । इति रत्नमाला ॥

“मुस्ताखुपर्णीफलदारुशिग्रु-

क्वाथः सकृष्णा क्रिमिशक्रकल्कः ।

मार्गद्वयेनापि चिरप्रवृत्तान्

क्रिमीन्निहन्यात् क्रिमिजांश्च रोगान्”

॥

इति वैद्यकचक्रपाणिसंग्रहः ।

“आखुपर्णीकिशलयैः सुपिष्टैः

पिष्टमिश्रितैः ।

पक्त्वा पूपलिकां खादेद्धान्याम्लञ्च

पिबेदनु” ॥

इति वाभटः ॥ गुणादयोऽन्येंऽस्या

आखुकर्णीशब्दे

ज्ञातव्याः ॥)

**आखुपाषाणः**, पुं, पाषाणभेदः । आखुपाषाणनामो-

ऽयं लोहसंकरकारकः । इति

राजनिर्घण्टः ॥

**आखुभुक्** [ज्] पुं, (आखून् भुङ्क्ते यः । आखु +

भुज् + क्विप्) विडालः । इत्यमरः ॥

इत्यमरः ॥ (प्रथितः, प्रसिद्धः, प्रकाशितः ।)

व्याकरणोक्तधातूत्तरविहिततिङ्प्रत्ययादि ॥

**आख्यानं**, क्ली, (आङ् + ख्या + ल्युट्) कथनं । यथा

“कथितं षष्ठ्युपाख्यानं ब्रह्मपुत्त्र यथागमं ।

देवी मङ्गलचण्डी या तदाख्यानं निशामय” ॥

इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ४१ अध्यायः ॥

**आख्यायिका**, स्त्री, (आङ् + ख्या + ण्वुल् । टाप् ।)

उपलब्धार्थकथा । इत्यमरः ॥ इतिहास

उपन्यास

इति ख्याता ॥ (आख्यायिकालक्षणं । यथा, --

“प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञाः कथां

विदुः ।

परस्पराश्रया या स्यात् सा मताख्यायिका

क्वचित्”

इति च साहित्यदर्पणे ।

“आख्यायिका कथावत्स्यात्

कवेर्वंशादिकीर्त्तनं”

**आगः**, [स्] क्ली, पापं । अपराधः । इत्यमरः ॥

(यथा शिशुपालबधे ३ य सर्गे १०८ श्लोकः ।

“सहिष्ये शतमागांसि सूनोस्ते इति यत्त्वया”

।)

**आगतं**, त्रि, (आङ् + गम् + क्तः ।) आयातं । उप-

स्थितं ॥ (लब्धः । प्राप्तः यथा, हितेपदेशे ।

“आगतन्तु भयं वीक्ष्य प्रतिकुर्य्यात्

यथोचितम्” ।)

**आगन्तुः**, त्रि, (आङ् + गम् + तुन् ।) अतिथिः ।

इत्यमरः ॥ आगमनशीलः । अनियतः ॥

(“अकस्मादागन्तुना सह विश्वासो न युक्वः”

।

इति हितोपदेशः । आकस्मिकरोगादि । यथा,

“आगन्त्वपि शरीरशल्यव्यतिरेकेण

यावन्तोभावा

दुःखमुत्पादयन्ति” । इति शुश्रुतः ।

निजागन्तुभेदेन रोगस्य

कारणद्वैविध्यादागन्तु-

अस्यार्थः । यथा तन्त्रशास्त्रं ॥

“आगतं पञ्चवक्त्रात्तु गतञ्च गिरिजानने ।

मतञ्च वासुदेवस्य तस्मादागममुच्यते” ॥

इति

(एतल्लक्षणं यथा, --

“सृष्टिश्च प्रलयश्चैव देवतानां तथार्च्चनं ।

साधनञ्चैव सर्व्वेषां पुरश्चरणमेव च ॥

षट्कर्म्मसाधनं चैव ध्यानयोगश्चतुर्विधः ।

सप्तमिर्लक्षणैर्युक्तं त्वागमं तद्विदुर्बुधाः” ॥ इति

यथा रघुवंशे । १० । २६ ॥

“बहुधाप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः”)

**आगमः**, पुं, (आ + गम् + अच् ।) शास्त्रमात्रं ।)

(“आगमादिव तमोपहादितः

सम्भवन्ति मतयो भवच्छिदः” ।

इति किराते । ५ । २२ ।) आगमनं । इति मे-

दिनीकरहेमचन्द्रौ ॥ (अर्थादीनामागमः ।

यथा,

नीतिशतके ७३ श्लोके । “नित्यव्यया

प्रचुरनित्य-

धनागमा च” । इति । प्राप्तिः । उपार्जनम् ।

“नाधर्म्मेणागमः कश्चिन्मनुष्यान् प्रति

वर्त्तते” ।

इति मनुः ॥)

साक्षिपत्रादिः । इति व्यवहारमातृका ॥

प्रकृति-

प्रत्ययानुपघाति कार्य्यं । इति व्याकरणं ॥

(शास्त्र-

ज्ञानं । श्रुतवत्ता । यथा,

“आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः” ।

इति रघुवश १ म सर्गे १५ । यथा च रघौ

१४ । ८० ।

“तामर्पयामास च शोकदीनां

तदागमप्रीतिषु तापसीषु” ॥)

**आखुरथः**, पुं, (आखुः रथो वाहनं यस्य ।) गणेशः ।

इति हलायुधः ॥

**आखुविषहा**, स्त्री, (आखोर्विषं हन्ति या ।) देव-

ताडवृक्षः । इति जटाधरः ॥

देवदालीलता । इति

राजनिर्घण्टः ॥

**आखेटः**, पुं, (आङ् + खिट् + घञ्) मृगया ।

इत्यमरः ॥ शिकार इति भाषा ।

("सुभगाखेट-

भूमित्वं" । कथासरित्सागरे १५ ।

१२० ।

**आखेटकः**, पुं, (आङ् + खिट् + ण्वुल् ।) मृगया ।

इति शब्दरत्नावली ॥ यथा पञ्चतन्त्रे ।

शब्दोऽयमामयस्यान्यतरकारणवाची ।

तद्यथा, --

**आगमनं**, क्ली, आङ्पूर्ब्बगमधातोरनट्प्रत्ययान्तस्य

रूपमिदं । आसा इति भाषा ॥ (यथा रघुवंशे ।
"रामस्त्वासन्नदे शत्वात् भरतागमनं पुनः" ।
स्त्रीसङ्गमः । यथा, --
"अन्त्यागमनपापस्य पापः पृच्छन् स निष्कतिं" ।
इति राजतरङ्गिणी ।)

**आगमावर्त्ता**, स्त्री, वृश्चिकालीवृक्षः । इति राज-

निर्घण्टः ॥

**आगमितं**, त्रि, (आ + गम + णिच् + क्त) अधीतं ।

पठितं । इति जटाधरः ॥ (यापितं प्रापितं ।)

**आगाधं**, क्ली, (अगाध एव । स्वार्थे अण् ।) अगाधं ।

अतिगभीरं इत्यमरटीकायां मथुरानाथः ॥

**आगान्तुः**, त्रि, आगन्तुकः । अतिथिः । इत्यमर-

टीकायां नीलकण्ठः ॥ (अभ्यागतः । आगन्तुः ।)

**आगामी**, [न्] त्रि, (आङ् + गम् + णिन् । भवि-

ष्यत्कालः । इति राजनिर्घण्टः ॥ (यथा, हितोप-
देशे । "भो यजमान ! आगामिन्याममावास्यायां
यक्ष्यामि यज्ञम्" ।)

**आगारं**, क्ली, (आग + ऋ + अण) गृहं । इत्यमर-

टीका ॥ (यथा मनुः ।
"आकीर्णं भिक्षुकैर्वान्यैरागारमुपसंव्रजेत् ।)

**आगुः**, [र्] स्त्री, आगूः । प्रतिज्ञा । इत्यमर-

टीकायां रमानाथः ॥

**आगूः**, स्त्री, (आ-गमेः क्विपि गमः क्वावित्यन्तलोपे

भेदे बह्निपुराणे च । अग्निदेवताके द्रव्यमात्रे
च त्रिं । अग्नियोषिति स्वाहायाम् अग्निदेवता-
कायामृचि च । आग्नेयव्रतं । यथा मनौ ९ ।
३१० ।
"दुष्टसामन्तहिंस्रस्य तदाग्नेयव्रतं स्मृतम्" ।)
अगस्त्यमुनिः । इति पाणिनिः ॥
अग्निसम्बन्धीये त्रि

**आग्नेयी**, स्त्री, (आग्नेय + ङीप् ।) अग्निकोणं ॥

स्वाहा । इति जटाधरः ॥

**आग्रयणं**, क्ली, नवशस्येष्टिः । यथा, --

"शरद्वसन्तयोः केचिन्नवयज्ञं प्रचक्षते ।
धान्यपाकवशादन्ये श्यामाको वनिनः स्मृतः" ॥
इत्यनेन शरद्वसन्तविहितनवशस्येष्टः ।
"श्यामाकैर्व्रीहिभिश्चैव यवैरन्योन्यकालतः ।
प्रग्यष्टुं युज्यतेऽवश्यं न त्वत्राग्रयणात्ययः" ॥
इति कालान्तरदर्शनात् श्राद्धेऽपि तथा इति ।
आग्रयणं नवशस्येष्टिः । इति मलमासतत्त्वं ॥

**आग्रहः**, पुं, (आङ् + ग्रह + अप्) अनुग्रहः । आ-

सक्तिः । आक्रमः । ग्रहणं । इति मेदिनी ॥
(प्रसादः, अभिनिवेशः, आसङ्गः, यथा,
"इत्याग्रहात् वदन्तं तं स पिता तत्र नीतवान्" ॥
इति कथासरित्सागरे २५ । ९९ ।)

**आग्रहायणः**, पुं, मार्गशीर्षमासः । इति रायमुकुटः ॥

**आग्रहायणिकः**, पुं, (आग्रहायण्या मृगशिरसा

युक्ता पौर्णमासी अस्मिन् । आग्रहायण + ठक्)
अग्रहायणमासः । मतभेदे वत्सराद्यमासोऽयं ।
अस्मिन् मासे वृश्चिकराशिस्थो रविः ।
तत्पर्य्यायः ।

**आघूर्णितं**, त्रि, (आङ् + घूर्ण + क्त) घूर्णितनेत्रादिः ।

घूराण इति भाषा । यथा, देवीमाहात्म्यं ॥
"आघूर्णितो वा वातेन स्थितः पोते महार्णवे" ॥

**आघ्राणं**, क्ली, (आङ् + घ्रा + ल्युट्) तृप्तिः । इति

हेमचन्द्रः ॥ गन्धग्रहणं । सोँका इति भाषा ॥
"भेदघ्नां गन्धाघ्राणतः ।" इति कथासरित्सारे
१३ । १६ ।)

**आघ्रातः**, त्रि, (आङ् + घ्रा + क्त) शिङ्घितः । आ-

क्रान्तः । इति मेदिनी ॥ तृप्तः । इति हेमचन्द्रः ॥
(घ्राणविषयीकृतः । यथा, नागानन्दे ।
"नीताः
किं न निशा शशाङ्कधवला नाघ्रातमिन्दीवरं ॥)

**आघ्र्यं**, क्ली, पीतवर्णदीर्घतुण्डषट्पदसन्निभमाक्षि-

कोत्पन्नमधु । अस्य गुणाः । अतिशयचक्षुर्हित-
कारित्वं । कफपित्तरक्तदोषनाशित्वञ्च ॥ इति राज-
निर्घण्टः ॥ यथा, भावप्रकाशः ॥
"मधूकवृक्षा निर्यासं जरत्काय्व्यार्श्रमोद्भवाः ।
स्रवन्त्याध्र्यं तदा ख्यातं श्वेतकं मालवे पुनः ॥
तीक्ष्णतुण्डास्तु याःपीता मक्षिकाः षट्पदोपमाः ।
आघ्र्यास्तास्तत्कृतं यत्तदाघ्र्यमित्यपरे जगुः" ॥
("आघ्र्यं मध्वतिचक्षुष्यं कफपित्तहरं परं ।
कषायं कटुपाके च बल्यं तिक्तमवातकृत्" ॥

ऊचगमादीनामित्यूकारादेशः ।) प्रतिज्ञा । इत्य-
मरः ॥

**आग्नीध्रं**, क्ली, (अग्निमिन्धे, इन्धीदिप्तौ, क्विप्, नलोपः ।

अग्नीधः स्थानं; अग्नीधः शरणे रन् । तत्रस्थित-
त्वात् ऋत्विगप्याग्नीग्र उ{??}) अग्नीध्रं । होतृगृहं ।
इत्यमरटीकायां रमानाथः ॥ आग्नेय्या अग्नोध्र-
मुपतिष्ठते इत्यत्र आग्नीध्रं मण्डपमित्याख्यान-
दर्शनात् । धनद्वारा वरणीयऋत्विजि पुं ॥ (स्वायम्भुवस्य प्रथमस्य
मनोर्द्वादशपुत्त्रमध्ये परिगणितः स्वनामख्यातः पुत्त्रः । यथा हरिवंशे ।
"आग्निध्रश्चाग्निबाहुश्च मेधा मेधातिथिर्वसुः ।
ज्योतिष्मान् द्युतिमान् हव्यसवलः पुत्त्र एव च ॥-
मनोः स्वायम्भुवस्यैते दश पुत्त्राः महौजसः" ।
प्रियवतनृपपुत्त्रः स्वनामख्यातो मनुवंशीयो नृ-
पतिः । यदुक्तं, --
"अग्नोध्रो नाम नृपतिर्जम्बुनाथो मनोः कुले ।
तज्जातो नृपसंज्ञाभिः कथ्यन्ते भरतादयः" ॥
प्रियव्रतस्य राज्ञः दशपुत्त्रमध्येपरिगणितः स्वना-
माख्यातः पुत्त्रः । यदुक्तम् विष्णुपुराणे २ । १ ॥
"प्रियव्रतसुताः ख्यातास्तेषां नामानि मे शृणु ॥
अग्नीध्रश्चाग्निवाहुश्च वपुष्मान् द्व्युतिमांस्तथा ।
मार्गशीर्षः २ सहाः ४ मार्गः ४ । इत्यमरः ॥ आग्र-
हायी ५ अलकः ६ सहः ७ मार्गशिरः ८ । इति
शब्दरत्नावली ॥ अग्रहायणसम्बन्धिनि त्रि ।

**आग्रहायणी**, स्त्री, (अग्रे हायनमस्याः । मतभेदे

मार्गशीर्षमारभ्य वर्षप्रवृत्तेः । प्रज्ञाद्यण् । पूर्ब्ब-
पदादिति णत्वं । गौरादित्वात् ङीष्) मृगशिरो-
नक्षत्रं । इत्यमरः ॥ अग्रहायणमासस्य पौणमासी ॥

**आघट्टकः**, पुं, (आङ् + घट्ट + वुन् । ततः स्वार्थे कः)

रक्तापामार्गः । इति राजनिर्घण्टः ॥

**आघाटः**, पुं, (आङ् + घट् + घञ्) सीमा । इति

हेमचन्द्रः ॥ अपामार्गः । इति राजनिर्घण्टः ॥

**आघातः**, पुं, (आङ् + हन् + घञ्) बधस्थानं । इति

त्रिकाण्डशेषः ॥ हननं । छेदनं । चोट कोप
इत्यादि भाषा ॥ (यथा साहित्यदर्पणे । "पादा-
घातादशोकं विकसति वकुलं योषितामास्य-
मद्यैः" ॥)

**आघातनं**, क्ली, (आङ् + हन् + स्वार्थे णिच् + ल्युट्)

बधस्थानं । इति हारावली ॥ हननं ॥

**आघारः**, पुं, (आङ् + घृ + घञ्) घृतं । इति हेम-

चन्द्रः । ऋग्वेदिनां स्रुवेण चतुराज्यं स्रुचि दत्त्वा
प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नेर्वायव्यकोणा-
दारभ्याग्नेयीं यावदविच्छिन्नघृतधारादानं । पुन-
स्रवेण चतुराज्यं स्रुचि दत्त्वा इन्द्रं ध्यात्वाग्नेर्नैरृत-
इति सुश्रुतः ॥)

**आङ्**, व्य, उपसर्गविशेषः । अस्यार्थः । ईषत् ।

यथा आपिङ्गलः । अभिव्याप्तिः । यथा आजन्म-
ब्रह्मचारी । सीमा । यथा आसमुद्रक्षितोशानां ।
इति रघौ १ म सर्गे । धातुयोगजः । यथा आरो-
हति । इत्यमरभरतौ ॥ समन्तात् । ग्रहणं ।
प्रत्यावृत्तिः । इति दुर्गादासः ॥

**आङ्गं**, क्ली, (अङ्गस्य इदं । अङ्ग + अण्) कोमलाङ्गं ।

इति त्रिकाण्डशेषः ॥

**आङ्गारं**, क्ली, (अङ्गार + अण्) अङ्गारसमूहः ।

इति रायमुकुटः ॥

**आङ्गिकः**, त्रि, (अङ्ग + ठक्) अङ्गनिष्पन्नभावव्यञ्ज-

कभ्रूक्षेपादिः । इत्यमरः ॥ मार्द्दङ्गिकः । इति शब्द-
रत्नाबली ॥ (यथा साहित्यदर्पणे ।
"भवेदभिनयो ऽवस्थानुकारः स चतुर्विधः ।
आङ्गिको वाचिकश्चैवमाहार्य्यः सात्त्विकस्तथः" ।)

**आङ्गिरसः**, पुं, (अङ्गिरस् + अण्) वृहस्पतिः ।

इत्यमरः । (यथा मनुः । २ । १५१ ।
"अध्यापयामास पितृन् शिशुराङ्गिरसः कविः ।
पुत्त्रका इति होवाच ज्ञानेन परिगृह्य तान्" ॥)

**आचमनं**, क्ली, (आङ् + चम् + ल्युट्) वैधकर्म्मा-

रम्भात् पूर्ब्बं वारत्रयजलपानानन्तरं यथाक्रमा-
ष्टाङ्गस्पर्शरूपशुद्धिजनकक्रिया । तत्पर्य्यायः । उ-

मेधा मेधातिथिर्भव्यः सवनः पुत्त्र एव च ॥
ज्योतिष्मान् दशमस्तेषां सत्यनामा
सुतोऽभवत्” ॥ ८

**आग्नेयं**, क्ली, (अग्निर्देवता यस्य ।) स्वर्णं । इति राज-

निर्घण्टः ॥ देशविशेषः । इति
शब्दरत्नावली ॥
रक्तं । इति हेमचन्द्रः ॥ घृतं । इति
पाणिनिः ॥

**आग्नेयः**, पुं, (अग्निर्देवतास्य अण् । अग्निनोक्तं पुराणं

यदाग्नेयं वेदसम्मितमित्यक्तलक्षणे
महापुराण-

कोणादारभ्य ऐशानीं
यावदविच्छिन्नघृतधारा-
दानं । इति कालेसिः ॥ यजुर्व्वेदिनान्तु
स्रुवेण
मन्त्रोच्चारणपूर्ब्बकपूर्ब्बोक्तक्रमेण
घृतधारादानं ।
इति पशुपतिः ॥

पस्पर्शः २ । इत्य मरः ॥ आचमः ३
शुचिप्रणीः ४ ।
इति शब्दरत्नावली ॥ तद्विधानं यथा ॥
“त्रिराचामेदपः पूर्ब्बं द्विः प्रमृज्यात्ततो मुख
।
संमृज्याङ्गुष्ठमूलेन त्रिभिरास्यमुपस्पृशेत् ॥
अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरं ।
अङ्गष्ठानामिकाभ्याञ्च चक्षुःश्रोत्रे पुनः पुनः
॥
कनिष्ठाङ्गुष्ठयोर्नाभिं हृदयन्तु तलेन वै ।
व्र्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशत्
॥

:ऋचो यजूंषि सामानित्रिः पिबन् प्रीणयेत् क्रमात् ।
अथर्व्वाङ्गिरसौ पूर्ब्बं द्विः प्रमाष्टर्या नयेन्मुखं ॥
सेतिहासपुराणानि वेदाङ्गानि यथाक्रमं ।
खं मुखं नासिके वायुं नेत्रे सूर्य्यं श्रुती दिशः ॥
प्राणग्रन्थिमथो नाभिं ब्रह्माणं हृदयं स्पृशेत् ।
रुद्रं मूर्द्धानमालभ्य प्रीणात्यथ शिखामृषीन् ॥
बाहू यमेन्द्रवरुणकुवेरवसुधानलान् ।
अभ्युक्ष्य चरणौ विष्णुमिन्द्रविष्णुकरद्वयं ॥
वासुकिप्रमुखान् नागान् जलं क्षिपति यत् क्षितौ ।
येऽन्तरा विन्दवो यान्ति भूतग्रामञ्च तैर्द्विज ॥
अग्निवायुसूर्य्येन्द्रा गिरयोऽङ्गुलिपर्ब्बसु ।
गङ्गाद्याः सरितस्तासु या रेखाः करमध्यगाः ॥
तले सोमः सतीर्थश्च स्मृतोऽतः पावनः करः ।
इति गारुडे २१५ अध्यायः ॥ * ॥
अन्यच्च । अथाचमनं । पराशरः । यथा, --
“कृत्वाथ शौचं प्रक्षाल्य पादौ हस्तौ च मृज्जलैः ।
निबद्धशिख आसीनो द्विज आचमनं चरेत्” ॥
आपस्तम्वः । यथा, --
“इत्येवमद्भिराजानु प्रक्षाल्य चरणौ पृथक् ।
हस्तौ चामणिबन्धाभ्यां पश्चादासीत संयतः” ॥
आजान्विति अध्वश्रमादिना तत्पर्य्यन्तमशौचे आजङ्घात इति हारीतोक्तं सामान्यतः ।
“कृत्वोपवीतं सव्यांशे वाङ्मनःकायसंयतः” ॥ * ॥
शिखाबन्धे विशेषमाह ब्रह्मपुराणम् ।
“गायत्र्या तु शिखां बद्ध्वा नैरृत्यां ब्रह्मरन्ध्रतः ।
जुटिकाञ्च ततो बद्ध्वा ततः कर्म्म समारभेत्” ॥
याज्ञवल्क्यः । यथा, --
“अन्तर्जानु शुचौ देशे उपविष्ट उदङ्मुखः ।
प्राग्वा ब्राह्म्येण तीर्थेन द्विजो नित्यमुपस्पृशेत्” ।
चतुर्व्वेति भावशुद्ध्यपेक्षया ॥ * ॥
आचमनप्रकारमाह दक्षः ।
“प्रक्षाल्य हस्तौ पादौ च त्रिः पिबेदम्बु वीक्षितं ।
संवृत्याङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततो मुखं ॥
संहत्य तिसृभिः पूर्ब्बमास्यमेवमुपस्पृशेत् ।
अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरं ॥
अङ्गुष्ठानामिकाभ्याञ्च चक्षुःश्रोत्रे पुनः पुनः ।
नाभिं कनिष्ठाङ्गुष्ठेन हृदयन्तु तलेन वै ॥
सर्व्वाभिस्तु शिरोदेशं बाहू चाग्रेण संस्पृशेत्” ।
पुनःपुनरिति घ्राणादीनां गोलकद्वयाभिप्रायेण ।
इति श्रीदत्तः ॥ * ॥
वीक्षणानुष्णयोरपवादमाह यमः ।
“रात्रावनीक्षितेनापि शुद्धिरुक्ता मनीषिभिः ।
उदकेनातुराणाञ्च तथोष्णेनोष्णपायिनां” ॥ * ॥
मुखमार्जनानन्तरं व्यासः । “वामहस्तं पादौ
शिरश्च दक्षिणेन पाणिना
जलेनाभ्युक्षयेत्” इति
सामवेदिक्रमः । यजुर्व्वेदिनान्तु गोतमः । “पादौ
चाभ्यक्षयेत् खानि चोपस्पृशेत् शीर्षाणि मूद्र्ध्नि
दद्यात् उदकविन्दून्” ॥ * ॥
इन्द्रियस्पर्शे विशेषमाह मनुः । “खानि चैव
स्पृशेदद्भिः” इति । नाभिस्पर्शे व्यासः । यथा, --
“ततः स्पृशेन्नाभिदेशं पुनरापश्च संस्पृशेत्” ।
इन्द्रियस्पर्शानन्तरं भविष्ये । यथा, --
शाट्यायनः । यथा,
“स्नानमाचमनं होमं भोजनं देवतार्चन ।
प्रौढपादो न कुर्व्वीत स्वाध्यायं पितृतर्पणम्” ॥ * ॥
द्विराचमननिमित्तानि ॥
“स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्रा रथ्योपसर्पणे ।
आचान्तः पुनराचामेद्वासो विपरिधाय च” ॥
ब्रह्मपुराणं ॥ यथा,
“होमे भोजनकाले च सन्ध्ययोरुभयोरपि ।
आचान्तः पुनराचामेदन्यत्रापि सकृत् सकृत्” ॥ * ॥
अथाचमननिमित्तानि ॥
“निष्ठीवने तथाभ्यङ्गे तथा पादावसेचने ।
उच्छिष्टस्य च सम्भाषादशुच्युपहतस्य च ॥
सन्देहेषु च सर्व्वेषु शिखां बद्ध्वा तथैव च ।
विना यज्ञोपवीतेन नित्यमेवमुपस्पृशेत् ॥
उष्ट्रवायससंस्पर्शे दर्शने चान्त्यवासिनां” ॥
हारीतः । यथा,
स्त्रीशूद्रोच्छिष्टसम्भाषणे
मूत्रपुरीषोत्सर्गदर्शने
देवमभिगन्तुकाम आचामेत् ॥ * ॥
अथ आचमनप्रतिप्रसवमाह स्मृतिः ।
यथा,
“क्षुते निष्ठीवने सुप्ते परिधानेऽश्रुपातने ।
कर्म्मस्थ एषु नाचामेद्दक्षिणं श्रवणं स्पृशेत्” ॥
वृद्धशातातपः ।
“वातकर्म्मणि निष्ठीवे दन्तश्लिष्टे तथानृते ।
क्षुते पतितसंलापे दक्षिणश्रवणं स्पृशेत्” ॥
मार्कण्डेयपुराणम् ॥ यथा,

अन्तर्जानु जानुनोर्मध्ये हस्तौ कृत्वेति शेषः ॥
भविष्यपुराणे । यथा, --
“समौ तु चरणौ कृत्वा तथा बद्धशिखोनृप !” ।
आचामेदित्यनुवृत्तौ देवलः । यथा, --
“शिखां बद्ध्वा वसित्वा तु निर्निक्ते वाससी शुभे ।
तूष्णीं भूत्वा समादाय नोद्गच्छन्न विलोकयन्” ॥ * ॥
ब्राह्म्यावरोधे तु मनुः । यथा, --
“कायत्रैदशिकाभ्यान्तु न पित्रेण कदाचन” ।
मार्कण्डेयः । यथा, --
“सपवित्रेण हस्तेन कुर्य्यादाचमनक्रियां ।
नोच्छिष्टं तत् पवित्रन्तु भुक्तोच्छिष्टन्तु वर्जयेत्” ॥
उदकग्रहणे परिमाणमाह भरद्वाजः । यथा, --
“आयतं पर्ब्बणां कृत्वा गोकर्णाकृतिमत् करं ।
संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः ॥
मुक्ताङ्गुष्ठकनिष्ठाभ्यां शेषेणाचमनं चरेत् ।
माषमज्जनमात्रास्तु संगृह्य त्रिः पिबेदपः” ॥
याज्ञवल्क्यः ॥ यथा, --
“अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बदः ।
हृत्कण्ठतालुगाभिश्च यथासङ्ख्यं द्विजातयः ॥
शुद्धेरन् स्त्री च शूद्रश्च सकृत् स्पृष्टाभिरन्ततः” ।
अन्ततः ओष्ठप्रान्ते । प्रचेताः ॥
“अनुष्णाभिरफेनाभिः पूताभिर्वीक्ष्य चक्षुषा ।
हृद्गताभिरशब्दाभिस्त्रिश्चतुर्व्वाद्भिराचमेत्” ॥

“यद्भूमावुदकं वीर समुत्सृजति दानव ।
वासुकिप्रमुखान्नागान् तेन प्रीणाति मानवः” ॥ * ॥
जलस्थलोभयकर्म्मानुष्ठानार्थञ्च जलस्थलैकचरणे-
नाचमनं कर्त्तव्यमाह पैठीनसिः ॥
“अन्तरुदके
आचान्तो अन्तरेव शुद्धो भवति वहिरुदके आ-
चान्तो वहिरेव शुद्धः स्यात्
तस्मादन्तरेकं वहि-
रेकञ्च कृत्वा पादमाचामेत् सर्व्वत्र पूतो भवति”
इति ॥ * ॥ जलमात्रे
जानोरूद्र्ध्वमुत्तिष्ठन्नाचमन-
माह विष्णुः । यथा, --
“जानोरूद्र्ध्वं जले तिष्ठन्नाचान्तः शुचितामियात् ।
अधस्ताच्छतकृत्वोपि समाचान्तो न शुध्यति” ॥
हारीतः । यथा, --
“अर्द्रवासा जले कुर्य्यात्तर्पणाचमनं जपं ।
शुष्कवासाः स्थले कुर्य्यात्तर्पणाचमनं जपं” ॥ * ॥
आचमननिषेधे देवलः । यथा, --
सोपानत्को जलस्थो वा मुक्तकेशोऽपि वा पुनः ॥
उष्णीषी वापि नाचामेद्वस्त्रेणोद्वेष्ट्य वा शिरः ॥
न गच्छन्न शयानश्च न चलन्न परान् स्पृशन् ।
न हसन् नैव सजल्पन्नात्मानञ्चैव वीक्षयन् ॥
केशान्नीवीमधःकायमस्पशन् धरणीमपि ।
यदि स्पृशति चैतानि भूयः प्रक्षालयेत् करं” ॥
आत्मानं हृदयं । तथा व्यासः ।
“शिरः प्रावृत्य कण्ठं वा
मुक्तकच्छशिखोऽपि वा ।

“कुर्य्यादालम्भनं स्पर्शं
गोपृष्ठस्यार्कदर्शनम् ।
कुर्व्वीतालभनं वापि दक्षिणश्रवणस्य च ॥
यथाविभवतो ह्येतत् पूर्ब्बाभावे ततः परम्” ॥ * ॥
आचमने जलाधारनिषेधमाह । उशनाः ॥
यथा,
“कांस्यायसेन पात्रेण त्रपुसीसकपित्तलैः ।
आचान्तः शतकृत्वोऽपि न कदाचित् शुचिर्भवेत्” ॥
इति गोपालपञ्चाननकृताचारनिर्णयः ॥
“आयतं पर्ब्बणां कृत्वा गोकर्णाकृतिवत् करं ।
संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः ॥
मुक्ताङ्गुष्ठकनिष्ठाभ्यां शेषेणाचमनं चरेत् ।
मासमज्जनमात्रास्तु संगृह्य त्रिः पिबेदपः” ॥
इति भारद्वाजः ॥
“अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ।
हृत्कण्ठतालुगाभिश्च यथासंख्यं द्विजातयः ॥
शुध्येरन् स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः” ॥
इति याज्ञवल्क्यः ॥
“हृद्गाभिः पूयते विप्रः कण्ठगाभिश्च भूमिपः ।
वश्योऽद्भिः प्राशिताभिश्च शूद्रः स्पृष्टाभिरन्ततः” ॥
इति मनुः ॥
“स्तियास्त्रैदशिकं तीर्थं शूद्रजातेस्तथैव च ।
सकृदाचमनाच्छुद्धिरेतयोरेव चोभयोः” ॥
इति मिताक्षरा ॥

**आचमनकः**, पुं, (आचमन + वुन् ।) निष्ठीवनपात्रं ।
पिक्दान डावर इति भाषा । तत्पर्य्यायः ।

|  | अकृत्वा पादयोः<br>शौचमाचान्तोऽप्यशुचिर्भवेत्” ॥<br>मरीचिः । यथा,<br>“न वहिर्जानु त्वरया नासनस्थो न<br>चात्थितः ।<br>न पादुकास्थो नान्यचित्तः शुचिः<br>प्रयतमानसः ॥<br>भुक्त्वासनस्थोऽप्याचामेन्नान्यकाले<br>कदाचन ।<br>जानुभ्यामूर्द्ध्वमाचम्य जलें तिष्ठन्न<br>दुष्यति” ॥ | प्रोण्ठः २ कटकोलः ३ पतद्ग्रहः ४ ।<br>इति<br>हारावली ॥<br>(“कोणस्थिताह्वानचकिताचमनक-<br>वाहिनि” । इति हषचरिते ॥) |
|---|---|---|

**आचमनीयं**, क्ली, (आचम्यतेऽनेन । आङ् + चम् +
अनीयर् ।) मुखप्रक्षालनार्थजलं । तद्दानविधि-
र्यथा, कालिकापुराणे ६७ अध्यायः ॥
“दद्यादाचमनीयन्तु सुगन्धिसलिलैः शुभैः ।
कर्पूरवासितैर्व्वापि कृष्णागुरुसुधूपितैः ॥
यथा तथा सुगन्धैर्व्वा प्रसन्नैः फेनवर्ज्जितैः ।
तत्तैजसेन पात्रेण शङ्खेनाथ प्रदापयेत् ॥
उदकं दीयते यत्तु प्रसन्नं फेनवर्ज्जितं ।
आचमनाय देवेभ्यस्तदाचमनमुच्यते ॥
केवलं तोयपात्रेण तदा दद्यान्नमिश्रितं ।
वासितन्तु सुगन्ध्याद्यैः कर्त्तव्यं यदि लभ्यते ॥
आयुर्ब्बलं यशोवृद्धिं प्रदायाचमनीयकं ।
लभते साधको नित्यं कामांश्चैव यथेप्सितान्” ॥

**आचरणं**, क्ली, (आङ् + चर् + ल्युट्) आचारः ।
व्यवहारः ॥
(“अधीतिबोधाचरणप्रचारणैः” ।
इति नैषधे ।)

**आचरितं**, त्रि, (आङ् + चर् + क्तः) कृताचरणं ।
(“जलं वामकरे कृत्वा या सन्ध्याचरिता द्विजैः” ।
इति काशीखण्डे ।) व्यवहृतं ॥ (यदुक्तं ।
“दारपुत्त्रपशून् हत्वा कृत्वा द्वारोपवेशनं ।
यत्रार्थो दाप्यतेऽर्थं स्वं तदाचरितमुच्यते” ॥
एतत्तु पारिभाषिकं ॥)

**आचान्तः**, त्रि, (आङ् + चम् + क्तः) कृताचमनः ।
यथा । बौधायनः ।
इति त्रिकाण्डशेषः ॥ तल्लक्षणं यथा, --
“उपनीय तु यः शिष्यं वेदमध्यापयेत् द्विजः ।
सकल्पं सरहस्यञ्च तमाचार्य्यं प्रचक्षते” ॥
इति मानवे २ । २४० ॥
(ततोऽनन्तरमाचार्य्यं परीक्षेत । तद्यथा, --
“पर्य्यवदातश्रुतं परिदृष्टकर्म्भाणं दक्षं दक्षिणं शुचिं
जितहस्तमुपकरणवन्तं सर्व्वेन्द्रियोपपन्नं प्रकृतिज्ञं
प्रतिपत्तिज्ञमनुपस्कृतविद्यमनसूयकमकोपनं क्ले-
शक्षमं शिष्यवत्सलमध्यापकं ज्ञानदानसमर्थमि-
त्येवंगुणो ह्याचार्य्यः सुक्षेत्रमार्त्तवो मेघ इव
शस्यगुणैः सुशिष्यमाशु वैद्यगुणैः सम्पादयति ।
तमुपसृत्याराराधयिषुरुपचरेदग्निवच्च देववच्च राजवच्च पितृवच्च
भर्त्तृवच्चाप्रमत्तस्ततस्तत्प्रसादात्
कृत्स्नं शास्त्रमधिगम्य शास्त्रस्य दृढतायामभि-
धानसौष्ठवस्यार्थस्य विज्ञाने वचनशक्तौ च भूयः
पयतेत सम्यक्” । इति चरकः ॥)

**आचार्य्या**, स्त्री, (आचार्य्य + टाप् ।) मन्त्रव्याख्या-
कर्त्री । इत्यमरसिंहः ॥ (वेदादिशास्त्राध्यापन-
कर्त्त्री ।)

**आचार्य्याणी**, स्त्री, (आङ् + चर् + ण्यत् + ङीप् +
आनुक् ॥) आचार्य्यपत्नी । इत्यमरः ॥ (यथा
महावीरचरिते ॥
“त्र्यम्बकं देवमाचार्य्यमाचार्य्याणीञ्च पार्ब्बतीं” ॥)

**आचितं**, क्ली, (आङ् + चि + क्त ।) दशभारपरि-
माणं । इत्यमरः । २५ मोन इति भाषा ॥

**आचितः**, पुं, (आङ् + चि + क्त ।) शाकटो भारः ।
इत्यमरः । एक गाडिर वोजा इति भाषा ॥ द्व्ययु-
तपलं । इति मेदिनी ॥

**आचितः**, त्रि, (आङ् + चि + क्तः) संगृहीतः । छन्नः ।
कथासरित्सागरे ।
“न सेहे कञ्चुकेनापि क्षिप्रमाच्छुरितं वपुः” ।)

**आच्छुरितकं**, क्ली, (आङ् + छुर + भावे क्तः । ततः
स्वार्थे कन्) सोत्प्रासहासः । इत्यमरः ॥ हास्यं ।
नखाघातविशेषः । इति मेदिनीकरहेमचन्द्रौ ॥

**आच्छोदनं**, क्ली, (आङ् + छिद् + ल्युट् । ततः पृषो-
दरादित्वात् इत ओत् ।) मृगया ।
इत्यमरः ॥

**आछ**, इ, आयामे । (भ्वादिं-परं-सकं-सेट् ।) इति
कविकल्पद्रुमः ॥ इत्यादौ द्वित्वाभावः प्रकृति-
भ्रमनिरासार्थः । इ आञ्छ्यते । आयामो दीर्घो-
करणं । आञ्छति कटं शिल्पी । इति ।
दुर्गादासः ॥

**आजं**, क्ली, (अज + अण् । अजसम्बन्धी छागस्य घृत-
मांसादिः) घृतं । इति जटाधरः ॥ (यथा
वैद्यके ।
“गव्यमाजं तथा चौष्ट्रमाविकं माहिषञ्च यत् ।
अतो धातुविवृद्ध्यर्थमाजं मांसं प्रशस्यते” ॥)
(तथाच रामायणे । २ । ९१ । ६७ ।
“आजैश्चापि च वाराहैर्निष्ठानवरसञ्चयैः” ।
घृतार्थे -- गव्यादिघृतभेदेन यदुक्तं तत्सर्व्वं घृत-
शब्दे ज्ञातव्यं किन्त्वाजशब्दव्युत्पत्त्या दुग्धादिकं
यदुपलभ्यते तदन्यत्र प्रदर्श्यते ॥

“स्नात्वा पीत्वा क्षुते सुप्त भुक्त्वा रत्योपसर्पणे ।
आचान्तः पुनराचामेत् वासो विपरिधायच” ॥
इत्याह्निकतत्त्वं ।

**आचामः**, पुं, (आङ् + चम् + घञ्) आचमनं । इति शब्दरत्नावली ॥ भक्तमण्डः । इत्यमरः ॥ (भक्षणं । पानं । यथा, काव्यप्रकाशे । “चक्रीर्य्य एव निपुणाश्चन्द्रिकाचामकर्म्मणि” ॥)

**आचारः**, पुं, (आङ् + चर् + घञ्) व्यवहरः । तत्पर्य्यायः । चरित्रं २ चरितं ३ चारित्रं ४ चरणं ५ वृत्तं ६ शीलं ७ । इति हेमचन्द्रः ॥ स्नानाचमनादिः । इति मानवे २ अध्याये ६९ श्लोकटीकायां कुल्लूकभट्टः । व्यवहारः ॥ स तु विचारः । यथा वृहस्पतिः ।
“आचारेणावसन्नोऽपि पुनर्लेखयते यदि ।
सोऽभिधेयो जितः पूर्ब्बं प्राङ्न्यायस्तु स उच्यते” ॥
इति व्यवहारतत्त्वं ॥ चरित्रं । एतद्विवरण सदाचारशव्दे द्रष्टव्यं ॥ (रघुः । २ । १० । “आचारलाजैरिव पौरकन्याः” ।)

**आचारवर्ज्जितः**, त्रि, (आचारेण वर्ज्जितः ।) आचारवहिर्भूतः । इति जटाधरः ॥ (अव्यवस्थितः । नियमरहितः ।)

**आचारी**, स्त्री, (आङ् + चार + ङीष्) हिलमोचिका । इति मेदिनी ॥ (एकत्र सन्निवेशितः, आकीर्णः, व्याप्तः, ग्रथितः, गुम्फितः । यथा भारविः । “कचाचितौविष्वगिवागजौ गजौ” ॥ यथा रघुवंशे ।
“अर्द्धाचिता सत्वरमुत्थितायाः
पदे पदे दुर्न्निमिते गलन्ती” ।)

**आच्छकः**, पुं, वृक्षविशेषः । आच इति भाषा । तत्पर्य्यायः । रञ्जनद्रुः २ पक्षीकः ३ पक्षिकः ४ आक्षिकः ५ । इति रत्नमाला ॥

**आच्छन्नं**, त्रि, (आङ् + छद् + क्तः ।) आच्छादितं । आवृतं । यथा । “मेघाच्छन्नेऽह्नि दुर्दिनं” । इत्यमरः ॥ (“पङ्कपांशुजलाच्छन्नं सुव्यस्तं दस्युविद्रुतं” । इति हितोपदेशः ॥)

**आच्छादः**, पुं, (आङ् + छद् + घञ् ।) वस्त्रं । इति हेमचन्द्रः ॥

**आच्छादनं**, क्ली, (आङ् + छद् + ल्युट् ।) वस्त्रं । इत्यमरः ॥ संपिधानं । अपवृतिमात्रं । इति मेदिनी ॥ (यथा मनुः । ३ । ५९ ॥
“तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः” ॥)

**आच्छादितं**, त्रि, (आङ् + छद् + णिच् + क्तः) कृताच्छादनं । आवृतं । ढाका इति भाषा ।

**आच्छुरितं**, क्ली, (आङ् + छुर + क्तः) सशब्दहास्यं । नखवाद्यं । इति धरणिः ॥ आहतं । (यथा
“आजं दधि भवेच्चोष्णं क्षयवातविनाशनं ।
दुर्नामश्वासकासेषु हितमग्निप्रदीपनं ॥
विपाके मधुरं वृष्यं रक्तपित्तप्रसादनं ।
शस्तं कार्श्यापहं प्रोक्तं वातपित्तनिवर्हणं” ॥
इति हारीतसुश्रुतौ ॥
“नातिशीतं गुरुस्निग्धं मांसमाजमदोषलं ।
शरीरधातुसामान्यादनभिष्यन्दि वृंहणं” ॥
इति चरको वाभटश्च ॥
“गव्यतुल्यगुणन्त्वाजं विशेषाच्छोषिणां हितं ।
दीपनं लघु संग्राहि श्वासकासास्रपित्तनुत् ।
अजानामल्पकायत्वात् कटुतिक्तनिषेवनात् ॥
नात्यम्बुपानाद्व्यायामात् सर्व्वव्याधिहरं पयः” ।
“दध्याजं कफपित्तघ्नं लघुवातक्षयापहं ।
दुर्नामश्वासकासेषु हितमग्नेः प्रदीपनं ॥
विपाके मधुरं वृष्यं रक्तपित्तप्रसादनं” ॥
“आजं घृतं दीपनीयं चक्षुष्यं बलवर्द्धनं ।
कासे श्वासे क्षये चापि पथ्यं पाके च तल्लघु” ॥
इति च सुश्रुतः ॥)

**आजकं**, क्ली, (अज + वुञ्) अजसमूहः । छागलेर पाल इति भाषा । इत्यमरः ॥

**आजकारः**, पुं, (आज + कृ + अण्) शिववृषः । इति शब्दरत्नावली ॥

**आजगवं**, क्ली, (अजगव + प्रज्ञाद्यण्) शिवधनुः । इति हेमचन्द्रः ॥

**आजन्मसुरभिपत्रः**, पुं, (आ जन्मनः सुरभीणि पत्राणि यस्य सः) भरुवकवृक्षः । इति राज-

चिका लता । इति राजनिर्घण्टः ॥

हेलञ्चा इति

ख्याता । आचारविशिष्टे त्रि ।

(हिलमोचिका-

शव्देऽस्या गुणादयो ज्ञातव्याः ॥)

**आचार्य्यः**, पुं, (आङ् + चर् + ण्यत् ।) वेदाध्या-

पकः । वैदिकमन्त्रव्याख्याकर्त्ता ।

तत्पर्य्यायः ।

मन्त्रव्याख्याकृत् २ । इत्यमरः ॥

द्रोणाचार्य्यः ।

निर्घण्टः ॥

**आजानेयः**, पुं, स्त्री, (अज् + घञ् + आज + आनेयः)

कुलीनाश्वः । श्रेष्ठघोटकः । इत्यमरः ॥

"शक्तिभि-

र्भिन्नहृदयाः स्खलन्तोऽपि पदे पदे ।

आजानन्ति

यतः सं ज्ञामाजानेयास्ततः स्मृताः" ॥

इत्यश्वतन्त्रं ॥

**आजिः**, स्त्री, (अज् + इन्) । यद्धं । समानभूमिः ।

:इत्यमरकोषमेदिन्यौ । क्षणं । इति हेमचन्द्रः ।
(युद्धार्थे यथा, -- "आवृण्वती लोचनमार्गमाजौ रजोन्धकारस्य विजृम्भितस्य" । इति रघुः । ७ । ४३ ।)
आक्षेपः । इति शब्दरत्नावली ॥

**आजीवः**, पुं, (आङ् + जीव + घञ् ।) जीविका । इत्यमरः ॥
("बहुमूलफलो रम्यः स्वाजीवः प्रतिभाति मे" ॥
इति रामायणे ।)

**आजुः**, [र्] स्त्री, (आङ् + जुर् + क्विप् ।) आजूः । विष्टिः । इति स्वामी ॥

**आजूः**, स्त्री, (आ + जुगतौ + क्विप् दीर्घश्च ।) वेतन विना कर्म्मकारः । वेंगार इति भाषा । इत्यमरः ॥
(यदुक्तम्,
"हठादभृतिकः क्लेशोविष्टिराजूश्च कीर्च्यते" ।)

**आज्ञप्तः**, त्रि, (आ + ज्ञा + णिच् + क्त ।) आज्ञा-प्राप्तः । यथा, देवीमाहात्म्यम् ।
"आज्ञप्तास्तु ततो दैत्याश्चण्डमुण्डपुरोगमाः ।
चतुरङ्गबलोपेता ययुरभ्युद्यतायुधाः" ॥

**आज्ञा**, स्त्री, (आङ् + ज्ञा + अङ् + टाप् ।) आ-देशः । तत्पर्य्यायः । अववादः २ निर्देशः ३ नि-देशः ४ शासनं ५ शिष्टिः ६ । इत्यमरः ॥
("तथेति शेषामिव भर्तराज्ञां" । इति कुमारे । ३ । २२ ।
"पश्चात् वनाय गच्छेति तदाज्ञां मुदितोऽग्रहोत्" अग्नेरुत्तरभागे स्रुवेणाग्निसम्प्रदानकघृताहुतिः तद्दक्षिणभागे सोमसम्प्रदानकाहुतिश्च । इति कालेसिः । यजुर्वेदिनान्तु अग्नेरुत्तरदक्षिणयोः पश्चिमादि-प्राच्यन्तघृतधारा । इति पशुपतिः ॥

**आञ्जनेयः**, पुं, (अञ्जनाया अपत्यं, अञ्जना + ढक् ।) अञ्जनानामवानरीपुत्त्रः । स तु हनूमान् । इति त्रिकाण्डशेषः ॥ (यथा महानाटके ।
"उल्लङ्घ्य सिन्धोः सलिलं सलीलं
यः शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां
नमामि तं प्राञ्जलिराञ्जनेयं" ॥)

**आञ्जिनेयः**, पुं, (आञ्जन + ढक् + इट् ।) जन्तुविशेषः । आजनाइ इति ख्यातः । इति शब्दमाला ॥

**आटिः**, पुं, (आङ् + अट + इन् ।) पक्षिविशेषः । शरालि इति ख्यातः । इत्यमरः ॥

**आटीकनं**, क्ली, (आङ् + टीक् + ल्युट् ।) वत्सानां गमनं । इति त्रिकाण्डशेषः ॥

**आटीकरः**, पुं, (आटीक + र ।) वृषः । इति भूरि-प्रयोगः ॥

**आटोपः**, पुं, (आङ् + टुप् + घञ् ।) दर्पः । इति हेमचन्द्रः ॥ वायुजन्य-उदरगुड्गुडाशब्दः । इति वैद्यकं ॥ (गर्व्वः, सम्भ्रमः, संरम्भः । यथा-पञ्चतन्त्रे
"विषं भवतु मावाभूत् फटाटोपो भयङ्करः" ।
यथा शिशुपालबधे । 'साटोपमुर्व्वीमनिशं नदन्तः' ।
"आटोपहल्लासवमीगुरुत्व-

**आढकं**, क्ली, (आ समन्तात् ढौकते ढौक्यते वा ढौक गतौ अच् घञ् वा पृषोदरादिः । परि-माणविशेषः । आढा इति भाषा । यथा, --
"शतयोजनविस्तीर्णं त्रिंशद्योजनमायतं ।
आढकस्य भवेन्मानं मुनिभिः परिकीर्त्तितं" ॥
अपि च ॥
"त्रिंशद्योजनविस्तीर्णं शतयोजनमायतं ।
विंशयोजनगम्भीरमाढकं परिकीर्त्तितं" ॥
इति गणपतिभट्टः । इति ज्योतिस्तत्त्वं ॥

**आढकः**, पुं, क्ली, चतुःप्रस्थपरिमाणं । आडी इति भाषा । इत्यमरः ॥ द्रोणचतुर्थभागः । इति लीलावती ॥ अष्टमुष्टिर्भवेत् कुञ्चिरित्यादिवचनात् षट्पञ्चाशदधिकद्विशतमुष्टिर्भवति । व्यवहारे षो-डशसेरो विंशतिसेरो वा । वैद्यकमते अष्टश-रावपरिमाणं । तत्पर्य्यायः । पात्रं २ कंसं ३ भाजनं ४ । इति परिभाषा ॥
("चतुःप्रस्थैस्तथाढकं ।
भाजनं कांस्यपात्रञ्च चतुःषष्टिपलञ्च तत्" ॥
इति शार्ङ्गधरः ।
"चतुःप्रस्थमयाढकं ।
"पात्रंतदेव विज्ञेयं कंसंप्रस्थाष्टकन्तथा" ॥
इति चरकः ।)
अपचयविवक्षायां आढकिकेत्यपि स्यात् । इत्य-मरटीकासारसुन्दरी ॥ आढिका । इति भरतः ॥

**आढकिकः**, त्रि, (आढक + ठञ् ।) आढकपरिमित-वीजवपनादियोग्यक्षेत्रादिः । इत्यमरः ॥

**आढकी**, स्त्री, शमीधान्यविशेषः । अरहर इति भाषा । तत्पर्य्यायः । तुवरी २ वर्य्या ३ कर

इति रघौ । १२ । ७ ।)

**आज्ञाकारी**, [न्] त्रि, (आज्ञा + कृ + णिन् ।) आ-

ज्ञया कर्म्मकारी । आज्ञावहः ।

आज्ञानुवर्त्ती ॥

**आज्ञाचक्रं**, क्ली, षट्चक्रान्तर्गतषष्ठचक्रम् । तथा च

तन्त्रे, -- "आज्ञानामाम्बुजं

तद्धिमकरसदृशं ध्यान-

धामप्रकाशं हक्षाभ्यां वैकलाभ्यां

प्रविलसितवपु-

र्नेत्रपत्रं सुशुभ्रं । तन्मध्ये हाकिनी सा

शशिसम-

घवला वक्त्रषट्कं दधाना विद्यां मुद्रां

कपालं

डमरुजपवटीं बिभ्रती शुद्धचित्ता ॥ एतत्

पद्मा-

न्तराले निवसति च मनः सूक्ष्मरूपं

प्रसिद्धम्" ॥

इति तत्त्वचिन्तामणौ षष्ठप्रकाशः ॥

**आज्ञापकः**, त्रि, (आङ् + ज्ञा + णिच् + ण्वुल् ।) आ-

ज्ञाकर्त्ता ।

**आज्ञापत्रं**, (आज्ञायै पत्रं ।) क्ली आदेशलिपिः ।

निदेशलिखनं । हुकुमनामा इति

पारस्यभाषा ॥

**आज्ञापनं**, क्ली, (आङ् + ज्ञापि + ल्युट् ।) विज्ञा-

पनं । जानान इति भाषा ॥

**आज्ञाप्तः**, त्रि, (आङ् + ज्ञापि + क्त ।) आज्ञप्ति-

विशिष्टः । लब्धाज्ञः । आज्ञाप्राप्तः ॥

**आज्यं**, क्ली, (आङ् पूर्ब्बात् अञ्जेः संज्ञायामिति

क्यप् ।) घृतं । इत्यमरः ॥ श्रीवासः ।

इत्यजय-

पालः ॥ (यागक्रियासाधनं

तैलदुग्धादिकमपि

आज्यशब्देनोच्यते । यदुक्तं गृह्यसङ्गहे ।

स्तैमित्यमावाहकफप्रसेकैः" ।

इति माधवकरः ॥)

**आडम्बरः**, पुं, (आङ् + दम् + वरच् । ततः द स्थाने

ड । आडम्ब्यते डवि क्षेपे घञ् भावे वा ।

आडम्बं

राति रमयति वा आतोनुपेति कः ।

मूलविभुजेति

वा कः । आडम्बयति वा बाहुलकादरन् ।)

पटहः ।

तूर्य्यरवः । गजेन्द्रगर्जनं । इत्यमरः ॥

आरम्भः ।

इति त्रिकाण्डशेषः ॥ पक्ष्म । दर्पः । इति

मेदिनी ॥

क्रोधः । इति स्वामी ॥ हर्षः । इति

शब्दरत्ना-

वली ॥ (आयोजनं । एकत्र सन्निवेशः, यथा,

भामिनीविलासे । "धातः किं नु विधौ

विधातु-

मुचितो धाराधराडम्वरः" ॥ युद्धं । रवार्थे

यथा,

"असारस्य पदार्थस्य प्रायेणाडम्बरो महान्

।

नहि तादृक्ध्वनिः स्वर्णे यथा कांस्ये

प्रजायते" ॥)

**आडिः**, स्त्री, (आङ् + अड + इन् ।) शरालिपक्षी ।

इत्यमरः ॥ स्वनामख्यातमत्स्यविशेषः ।

अस्याः

गुणाः । गुरुत्वं । स्निग्धत्वं ।

वातश्लेष्मप्रकोपनत्वं ।

अतिबलशुक्रमेधाग्निवृद्धिकारित्वञ्च ॥ इति

राज-

वल्लभः ॥ (विश्वामित्रशापेन वशिष्ठो

महर्षिरा-

डिपक्षिरूपतां गतः इति पौराणिकी कथा ॥

यथा मार्कण्डेयपुराणे आडिवकयुद्धे, --

"श्रुत्वा शापं महातेजा विश्वामित्रोऽपि

कौशिकः ।

वीरभुजा ४ वृत्तवीजा ५ पीतपुष्पा ६ ।

अस्याः

गुणाः । कषायत्वं । मधुरत्वं ।

कफपित्तनाशि-

त्वञ्च । तद्द्विदलगुणाः ।

ईषद्वातरुचिकारित्वं ।

गुरुत्वं । ग्राहित्वञ्च । पीता रक्ता सिता

त्रिविधेयं ।

श्वेता दोषदा । लोहिता रुच्या बल्या

पित्तता-

पादिहन्त्री च । पीता दीपनी

पित्तदाहध्वंसिनी

च ॥ तद्यषं बल्यं । इति राजनिर्घण्टः ॥

अमर-

मते तत्पर्य्यायः । काक्षी २ मृतस्ना ३

तुवरिका ४

मृतालकं ५ सुराष्ट्रजं ६ । भरतमल्लिकमते

एतत्

षट्कं अरहरस्य । सारसुन्दरीमते

तुवरिकाख्य-

गन्धद्रव्यस्य । केषाञ्चिन्मते

सुगन्धिमृत्तिकायाः ॥

(अस्याः पर्य्यायगुणावाह ।

"आढकी तुवरी चापि सा प्रोक्ता

शणपुष्पिका ॥

आढकी तुवरा रूक्षा मधरा शीतला लघुः ।

ग्राहिणी वातजननी वर्ण्या

पित्तकफास्रजित्" ॥

इति भावप्रकाशः ॥

"मृदुः कषाया च सरक्तपित्तं

निहन्ति कासानतिवातला स्यात् ।

गुल्मज्वरारोचककासछर्द्दि-

हृद्रोगदुर्नामहराढकी स्यात्" ॥

इति हारीतः ॥

"आढकी कफपित्तघ्नी वातला," । इति

चरकः ॥

"आढकी कफपित्तघ्नी

नातिवातप्रकोपनी" ।

इति सुश्रुतः ॥)

"घृतं वा यदि वा तैलं पयो वा दधि यावकं ।
आज्यस्थाने नियुक्तानामाज्यशब्दो विधीयते" ॥
यथा रघुवंशे । ७ । २० । "तत्रार्चितो भोजपतेः पुरोधाः हुत्वाग्निमाज्यादिभिरग्निकल्पः" ॥)

**आज्यभागः**, पुं, (आज्यस्य भागः) ऋग्वेदिनां

त्वमप्याडिर्भवस्वेति प्रतिशापमयच्छत ॥
आडिं सोऽप्युन्नतग्रीवो वकः पद्भ्यामताडयत्" ॥)

**आडूः**, पुं, (अण शब्दे । अनोडश्चेत्त्यूः ।) उडुपः ।
भेला माड इत्यादि भाषा । इत्युणादिकोषः ।

**आढकीनः**, त्रि, (आढक + ख ।) आढकिकः ।

इत्यमरटीका ॥

**आढ्यः**, त्रि, (आढौकते ढौकृ गतौ बाहुलकात् ढ्यः ।)

धनवान् । इत्यमरः ॥ युक्तः । विशिष्टः । अन्वितः ।

यथा, धनाढ्यः गुणाढ्य इत्यादिः ॥ (यथा मनुः ८ । १६९ ।

"चत्वारस्तूपचीयन्ते विप्र आढ्यो वणिङ् नृपः" ।

यथा भगवद्गीतायां, --

"आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया" ॥)

**आणकः**, त्रि, (अणक एव स्वार्थे अण् ।) अणकः ।

अधमः । इति रायमुकुटः ॥

**आणवीनं**, त्रि, (अणु + खञ् ।) अणव्यं । अणुधा-

न्योद्भवोचितक्षेत्रं । इत्यमरटीकायां रायमुकुटः ।

**आणिः**, पुं, स्त्री, (अण + इन् ।) अक्षाग्रकीलकः ॥

अश्रिः । सीमा । इति मेदिनी ॥

**आतङ्कः**, पुं, (आङ् + तकि + घञ् ।) रोगः ।

(यथा, याज्ञवल्क्यः, --

"दृष्ट्वा पथि निरातङ्कं कृत्वा वा ब्रह्महा शुचिः" ॥)

सन्तापः । शङ्का । (यथा, महावीरचरिते, --

"आतङ्कश्रमसाहसव्यतिकरोत्कम्पःक्षणंसह्यतां" ।)

मुरजध्वनिः । इति मेदिनीकरहेमचन्द्रौ ॥ ज्वरः ।

इति राजनिर्घण्टः ॥

("नानातन्त्रविहीनानां भिषजामल्पमेधसां ।

सुस्वं विज्ञातुमातङ्कमयमेव भविष्यति" ॥

इति माधवकरः ॥

रोगार्थे उदाहरणं यथा सुश्रुते ।

"प्रश्नेन च विजानीयात् देशं कालं जातिं सात्म्य-

मातङ्कसमुत्पत्तिं वेदनासमुच्छ्रायं बलमित्यादि" ॥

ज्वरार्थे पर्य्यायानाह ।

"ज्वरो विकारो रोगश्च व्याधिरातङ्क एव च ।

एकार्थनामपर्य्यायैर्विविधैरभिधीयते" ॥

("आतपः कटुको रुक्षः

स्वेदमच्छातृषावहः ।

दाहवैवर्ण्यजननो नेत्ररोगप्रक्रोपनः" ॥

"आतपः

पित्ततृष्णाग्निस्वेदमूर्च्छाभ्रमास्रकृत् ।

दाहवैवर्ण्यकारी च" इति सुश्रुतः ॥

यथा शाकुन्तले, --

"कथमातपे गमिष्यसि

परिवाधाकोमलैरङ्गैः" ॥

यथा ऋतुसंहारे, ११ । --

"मृगाः प्रचण्डातपतापिता भृशम्" ॥)

**आतपत्रं**, क्ली, (आतप + त्रै + कः) छत्रं । इत्यमरः ॥

(यथा शाकुन्तले, --

"राज्यं स्वहस्तधृतदण्डमिवातपत्रं" ।

यथा रामायणे, --

"पाण्डरेणातपत्रेण ध्रियमाणेन मूर्द्धनि" ॥

"छत्रशब्देऽस्य गुणादयो ज्ञातव्याः" ।)

**आतपत्रकं**, क्ली, छत्रं । इति शब्दरत्नावली ॥

**आतपवारणं**, क्ली, (आतप + वारि + ल्युट् ।) छत्रं ।

इति हेमचन्द्रः ॥ (यथा रघवंशे, ३ । ७० ।

"नृपतिककुदं दत्वा यूने सितातपवारणं" ।

"अनुदितान्यसितातपवारणः" ॥)

**आतपाभावः**, पुं, (आतपस्य अभावः । षष्ठीतत्पुरुषः ।)

छाया । इति राजनिर्घण्टः ॥

**आतरः**, पुं, (आङ् + तृ + अप् । आतरत्यनेन, पुंसि

संज्ञायामिति घः) नद्यादितरणाय

देयकपर्द-

कादिः । तत्पर्य्यायः । तरपण्यं २ ।

इत्यमरः ॥

पाराणिकडि नौकाभाडा इति भाषा ॥

**आतुरः**, त्रि, (आङ् + तुर + क) रोगी । तत्पर्य्यायः ।

आमयावी २ विकृतः ३ व्याधितः ४

अपटुः ५

अभ्यमितः ६ अभ्यन्तः ७ । इत्यमरः

॥ (यथा हितो-

पदेशे । वैद्यानामातुरः श्रेयान् । यथा

मनुः, ४ । १२९ ।

"न स्नानमाचरेद्भुक्त्वा नातुरो न

महानिशि" ॥

आतुरावस्थास्वपि कार्य्याकार्य्यं प्रति

कालाकाल-

संज्ञा । तद्यथा --

अस्यामवस्थायामस्य भेषजस्य

कालोऽकालः पुनरस्येति । एतदपि

भवत्यवस्था-

विशेषेण तस्मादातुरावस्थास्वपि हि

कालाकाल-

संज्ञा । तस्य परीक्षा मुहुर्म्मुहुरातुरस्य

सर्व्वा-

वस्थाविशेषावेक्षणं

यथावद्भेषजप्रयोगार्थं । न

ह्यतिपतितकालमप्राप्तकालं वा

भेषजमुपयुज्य-

मानं यौगिकं भवति । कालोहि

भैषज्ययोग-

पर्य्याप्तिमभिनिर्व्वर्त्तयति ॥ इति

चरकः ॥

आतुरमुपक्रममाणेन भिषजायुरेवादौ

परीक्ष्येत ।

इति सुश्रुतः ॥)

**आतृप्यं**, क्ली, (आङ् + तृप् + क्यप् ।) फलविशेषः ।

आता इति भाषा । अस्य गुणाः ।

तृप्तिजनकत्वं ।

रक्तवर्द्धकत्वं । स्वादुत्वं । शीतलत्वं ।

बलमांस-

इति चरकः ॥)

**आतञ्चनं**, क्ली, (आङ् + तञ्च + ल्युट् ।) प्रतिवापः ।

गलितस्य स्वर्णादिर्द्रव्यान्तरेणावचूर्णनं । इति स्वामी ॥ निक्षेपणं । इति सुभूतिः ॥ उपद्रवः । इति रायमकुटः ॥ द्रवद्रव्यप्रक्षेपणोचितचूर्णं । इति सारसुन्दरी ॥ जवनं । वेगः । आप्यायनं । तर्पणं । इत्यमरमेदिन्यौ ॥

**आततायी**, [न्] त्रि, (आतत + अय + णिन् ।)

बधोद्यतः । इत्यमरः ॥
"अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारापहारी च षडेते आततायिनः ॥
आततायिनमायान्तं हन्यादेवाविचारयन् ।
नाततायिबधे दोषो हन्तुर्भवति कश्चन" ॥
इति भगवद्गीताटीकायां श्रीधरस्वामी ॥

**आतपः**, पुं, (आङ् + तप + अच् ।)

रौद्रं । तत्पर्य्यायः । प्रकाशः २ द्योतः ३ । इत्यमरः ॥ दिनज्योतिः ४ सूर्य्यालोकः ५ दिनप्रभा ६ रविप्रकाशः ७ प्रद्योतः ८ तमारिः ९ तापनः १० द्युतिः ११ । अस्य गुणाः । कटुत्वं । रूक्षत्वं स्वदमूर्च्छातृष्णादाहवैवर्ण्यजनकत्वं ।
नेत्ररोगप्रको-
पनत्वञ्च ॥ इति राजनिर्घण्टः ॥

**आतर्पणं**, क्ली, (आङ् + तृप् + ल्युट् ।) प्रीणनं ।

तृप्तिः । मङ्गलालेपनं । आलिपना इति भाषा ।
इति मेदिनी ॥ (यथा मेदिनी ।
"आतर्पणं प्रीणने स्यात् मङ्गलामेपनेऽपि च" ॥)

**आतापी**, [न्] पुं, (आङ् + तापि + णिन् ।) आ-

तायी । चिल्लः । इत्यमरटीकायां स्वामी ॥ (असुर-
भेदः । चिल इति ख्यातः पक्षिभेदः ॥)

**आतायी**, [न्] पुं, (आङ् + ताय + णिन् ।) चिल्लः ।

चिल इति भाषा । इत्यमरः ॥

**आतारः**, पुं, (आङ् + तॄ + घञ् ।) आतरः । तर-

पण्यं । इति शब्दरत्नावली ॥

**आतिः**, पुं, (अत + इण् ।) पक्षी । इति सिद्धान्त-

कौमुद्यामुणादिवृत्तिः ॥

**आतिथेयः**, त्रि, (अतिथि + ढञ् । अतिथौ साधुः ।)

अतिथिसेवाकारकः । इत्यमरः ॥
(यथारघुवंशे, ५ । २
"प्रत्युज्जगामातिथिमातिथेयः ॥
यथा कुमारसम्भवे, ५ । ३१ ।
"तमातिथेयी बहुमानपूर्ब्बया सपर्य्यया" ।
यथा मनुः, ३ । १८ ।
"दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु" ।

**आतिथ्यं**, त्रि, (अतिथि + ञ्य ।)

अतिथ्यर्थवस्तु । अतिथिभक्षणादिद्रव्यं इत्य-
मरः ॥ अतिथिसेवा च ॥ ("यथा हितोपदेशे ।
"अरावप्युचितं कार्य्यमातिथ्यं गृहमागते" ॥)

कारित्वं । हृद्यत्वं ।
दाहरक्तपित्तवायुनाशित्वञ्च ।
इति द्रव्यगुणः ॥

**आतोद्यं**, क्ली, (आङ् + तुद् + ण्यत् ।) वाद्यं । तच्च-

तुर्विधं । वीणादिवाद्यं ततं १
मुरजादिवाद्यं आनद्धं
२ वंश्यादिवाद्यं शुषिरं ३
कांस्यतालादिवाद्यं घनं
४ इत्यमरः ॥ (यथा रघवंशे ।
"स्रजमातोद्यशि-
रोनिवेशितां ।
"आतोद्यं ग्राहयामास
समत्याजयदायुधं" ॥)

**आत्तगन्धः**, त्रि, (आत्तः अरिणा गृहीतः गन्धो गर्व्वो

यस्य सः बहुव्रीहिः ।) दूरीभूताहङ्कारः । तत्प-
र्य्यायः । अभिभूतः २ । इति
हेमचन्द्रः ॥ गृहीत-
गन्धः ॥ (यथा रघुवंशे १३ । १७ ।
"पक्षच्छिदा गोत्रभिदात्तगन्धाः
शरण्यमेनं शतशो महीध्राः" ।)

**आत्तगर्व्वः**, त्रि, (आत्तः अरिणा गृहीतः गर्व्वो यस्य

सः बहुव्रीहिः ।) अरिणा गृहीतगर्व्वः । दूरी-
भूताहङ्कारः । भग्नदर्पः । इत्यमरः ॥

**आत्मगुप्ता**, स्त्री, (आत्मना गुप्ता । तृतीया तत्पुरुषः ।)

लताविशेषः । आलकुशी इति भाषा ।
तत्पर्य्यायः ।
मर्कटी २ कण्डुरा ३ अध्यण्डा ४
कच्छुरा ५
जटा ६ जडा ७ शुकशिम्बा ८
आमगुप्ता ९
ऋषभी १० कपिकच्छुरा ११ । इति
रत्नमाला ।

**आतिथ्यः**, पुं, अतिथिः । इति मेदिनी ॥

**आतुः**, पुं, (आङ् + तॄ + डुः ।) भेलकः । भेला माड

इत्यादि भाषा । इति शब्दमाला ॥

("माषैः समानं फलमात्मगुप्तं" । इति

सुश्रुतः ।

विशेषोऽस्याः कपिकच्छुराशब्दे

द्रष्टव्यः ।)

**आत्मग्राही**, [न्] त्रिः, (आत्मन् + ग्रह + णिन् ।)

आत्मम्भरिः । स्वार्थी ॥

**आत्मघाती**, [न्] त्रि, (आत्मन् + हन् + णिन् ।)

आत्महन्ता । यथा कूर्म्मपुराणे ॥

"व्यापादयेद्वृथात्मानं स्वयं

योऽग्न्युदकादिभिः ।

विहितं तस्य नाशौचं

नाग्निर्नाप्युदकादिकं" ॥

आत्महननकर्त्ता ।

अवैधबुद्धिपूर्ब्बकात्महननस्य

प्रायश्चित्तं यथा, --

"इन्द्रियैरपरित्यक्ता ये च मूढा

विषादिनः ।

:घातयन्ति स्वमात्मानं चण्डालादिहताश्च ये ॥

तेषां पुत्त्राश्च पौत्राश्च दयया समभिप्लुताः ।
यथ श्राद्धं प्रतन्वन्ति विष्णुनामप्रतिष्ठितं ॥
तथा ते संप्रवक्ष्यामि नमस्कृत्य स्वयम्भुवे" ।
इति हेमाद्रौ वृद्धशातातपेनोक्तम् ॥
"आत्मनो घातशुद्ध्यर्थं चरेच्चान्द्रायणद्वयं ।
तप्तकृच्छ्रचतुष्कञ्च त्रिंशत् कृच्छ्राणि वा पुनः ॥
अर्ब्बाक् संवत्सरात् कुर्य्याद्दहनादि यथोदितं ।
कृत्वा नारायणवलिमनित्यत्वात्तदायुषः" ॥
इदञ्चात्मबधनिमित्तं तज्जातिबधप्रायश्चित्तेन समु-
च्चितं कार्य्यम् । इति निर्णयसिन्धौ ५ परिच्छेदः ॥
अन्यत् पतितशब्दे द्रष्टव्यम् ॥ * ॥
आत्मत्यागिषु
विशेषमाह गौतमः । "प्रायोऽनाशकशस्त्राग्नि-
विषोदकोद्वन्धनप्रपतनैश्चेच्छताम्" इति । प्रायो
महाप्रस्थानं । अनाशकमनशनं । प्रपतनं शैल-
शिखरादवपातनं । इत्यादिनिमित्तैः शास्त्रावि-
हितमार्गेण इच्छापूर्ब्बकमृतानामशौचादिकं न
कर्त्तव्यमित्यर्थः । अङ्गिराः ।
"चाण्डालादुदकात् सर्पात् ब्राह्मणाद्वैद्युतादपि ।
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्म्मिणां ॥
उदकं पिण्डदानञ्च प्रेतेभ्यो यत् प्रदीयते ।
नोपतिष्ठति तत्सर्व्वं अन्तरीक्षे विनश्यति" ॥
यथा मनुः ।
"वृथासङ्करजातानां प्रव्रज्यासु च तिष्ठतां ।
आत्मनस्त्यागिनां चैव निवर्त्ततोदकक्रिया" ॥
वृथासङ्करजातानामिति वृथाजाताः पञ्चमहा-
यज्ञादिरहिताः । सङ्करजाताः प्रतिलोमजाः ॥ * ॥
प्रमादात् पूर्ब्बोक्तनिमित्तैर्म्मरणे विद्यते एवा-
शौचादिकं । अतएवाङ्गिराः ।
"अथ कश्चित् प्रभादेन म्रियेताग्न्युदकादिभिः ।
तस्याशौचं विधातव्यं कर्त्तव्या चोदकक्रिया" ॥

"वृद्धः शौचस्मृतेर्लुप्तः
प्रत्याख्यातभिषक्क्रियः ।
आत्मानं घातयेद्यस्तु
भृग्वन्यनशनाम्बुभिः ॥
तस्य त्रिरात्रमाशौचं द्वितीये
त्वस्थिसञ्चयः ।
तृतीये तूदकं कृत्वा चतुर्थे
श्राद्धमारभेत्" ॥
तथा, --
"गच्छेत् महापथं वापि
तुषारगिरिमादरात् ।
प्रयागे वटशाखायां देहत्यागं करोति यः ॥
स्वयं देहविनाशस्य काले प्राप्ते
महामतिः ।
उत्तमान् प्राप्नुयाल्लोकान्नात्मघाती
भवेत् क्वचित् ॥
एतेषामधिकारस्तु सर्व्वेषां
सर्व्वजन्तुषु ।
नराणामथ नारीणां सर्व्ववर्णेषु
सर्व्वदा ॥
अशौचं स्यात् त्र्यहं तेषां
वज्रानलहतेषु च ।
वाराणस्यां म्रियेद्यस्तु
प्रत्याख्यातभिषक्क्रियः ॥
प्रणवं तारकं ब्रूते नान्यथा
कस्यचित् क्वचित्" ।
विवस्वान् ।
"सर्व्वेन्द्रियविमुक्तस्य
स्वव्यापाराक्षमस्य च ।
प्रायश्चित्तमनुज्ञातमग्निपातो
महापथः" ॥
धर्म्मार्ज्जनासमर्थस्य
द्वादशवार्षिकादिरूपप्राय-
श्चित्तासमर्थस्य । एवं
शास्त्राविहितमार्गेण मृता-
नां चाण्डालादिमृतानां
संवत्सरादूद्‌र्ध्वमौद्‌र्ध्वदेहिकं

विष्णोरभ्यर्च्चनं कृत्वा विप्रांस्तानुपवेशयेत् ।
उदङ्मुखान् यथाज्येष्ठं पितृरूपमनुस्मरन् ॥
मनो निवेश्य विष्णौ वै सर्व्वं कुर्य्यादतन्द्रितः ।
आवाहनादि यत् प्रोक्तं दैवपूर्ब्बं तदाचरेत् ॥
तृप्तान् ज्ञात्वा ततो विप्रस्तृप्तिं पृष्ट्वा यथाविधि ।
हविष्यव्यञ्जनेनैव तिलादिसहितेन च ॥
पञ्च पिण्डान् प्रदद्याच्च दैवरूपमनुस्मरन् ।
प्रथमं विष्णवे दद्यात् ब्रह्मणे च शिवाय च ॥
यमाय सानुसाराय चतुर्थं पिण्डमुत्सृजेत् ।
मृतं संकीर्त्य मनसा गोत्रपूर्ब्बमतःपरं ॥
विष्णोर्नाम गृहीत्ववं पञ्चमं पूर्ब्बवत् क्षिपेत् ।
विप्रानाचम्य विधिवत् दक्षिणाभिः समर्च्चयेत् ॥
एकं वृद्धतमं विप्रं हिरण्येन समर्च्चयेत् ।
गवा वस्त्रेण भूम्या च प्रेतं तं मनसा स्मरेत् ॥
ततस्तिलाम्भो विप्रास्तु हस्तैर्द्दर्भसमन्वितैः ।
क्षिपेयुर्गोत्रपूर्ब्बन्तु नाम बुद्धौ निवेश्य च ॥
हविर्गन्धतिलाम्भस्तु तस्मै दद्युः समाहिताः ।
मित्रभृत्यजनैः सार्द्धं पश्चाद्भुञ्जीत वाग्यतः" ॥
भविष्यपुराणे ।
"सुवर्णतारनिष्पन्नं नागं कृत्वा तथैव गां ।
व्यासाय दत्त्वा विधिवत् पितुरानृण्यमाप्तवान्" ॥
इति मदनपारिजाते ५ स्तवकः ॥

**आत्मघोषः**, पुं, (आत्मानं घोषयतीति । आत्मन् +
घुष् + अण् ।) काकः । इत्यमरः ॥ कुक्कुटः । इति
शब्दचन्द्रिका ॥

**आत्मजः**, पुं, (आत्मन् + जन् + डः । आत्मा वै जायते
पुत्र इति श्रुतेः ।) पुत्रः । इत्यमरः ॥ मनुः, १७ । १४ ।
"तस्यार्थे सर्व्वभूतानां गोप्तारं धर्म्ममात्मजं" ।
यथा रामायणे, --
"दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजां" ॥)

**आत्मजन्मा** [न्] पुं, (आत्मनः जन्म यस्य सः बहु-

चाण्डालादिमृताहिताग्नेरग्न्यादीनां
प्रतिपत्तिकर्म्म
च स्मृत्यन्तरेऽभिहितं ।
“वैतानं प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे ।
पात्राणि तु दहेदग्नौ यजमाने वृथामृते” ॥
वृथामृतः अविहितमार्गेण मृतः । तथा, --
“आत्मनस्त्यागिनां नास्ति पतितानां तथा
क्रिया ।
तेषामपि च गङ्गायास्तीरे संस्थापनं मतं” ॥
गङ्गेति पुण्यनद्युपलक्षणं ॥ * ॥ एवं पूर्ब्बोक्त-
निन्दितमरणे मृतानां
स्नेहादिनाग्न्याद्यौर्द्ध्वदेहिक-
करणे स्मृत्यन्तरे प्रायश्चित्तमाम्नातं ।
“कृत्वाग्निमुदकं स्नानं स्पर्शनं हवनं तथा ।
“रज्जुच्छेदाश्रुपातञ्च तप्तकृच्छ्रेण शुद्ध्यति”
॥ इति ।
एतच्च बुद्धिपूर्ब्बे प्रत्येकमग्न्यादिकरणे ॥
अबुद्धिपूर्ब्बके तु संवर्त्तः ।
“एषामन्यतमं प्रेतं यो वहेत दहेत वा ।
कटोदकक्रियां कृत्वा कृच्छ्रं सान्तपनं चरेत्”
॥
यच्च सुमन्त्वादिर्मासं भैक्षाहारस्त्रिसवनञ्च ।
तथा एकरात्राभोजनादिकं चाभिहितं तदशक्त-
विषये देशकालाद्यपेक्षानुसारेण योजनीयं ॥ *
॥
यस्तु
वृद्धादिर्लुप्तभिषक्क्रियस्तस्यात्महननमप्यनु-
ज्ञातमादिपुराणे ।

कार्य्यं । षट्त्रिंशन्मते ।
“गोब्राह्मणहतानाञ्च पतितानां
तथैव च ।
ऊर्द्ध्वं संवत्सरात् कुर्य्यात्
सर्व्वमेवौर्द्ध्वदेहिकं” ॥ * ॥
अत्रापरं विशेषमाह पराशरः ।
“चाण्डालेन श्वपाकेन
गोभिर्व्विप्रैर्हतो यदि ।
आहिताग्निर्मृतो विप्रो
विशेषेणात्मघातकः ॥
दहेत ब्राह्मणं विप्रो लोकाग्नौ
मन्त्रवर्ज्जितं ।
दग्ध्वास्थीनि पुनर्गृह्य क्षीरेण
क्षालयेत्ततः ॥
स्वेनाग्निना स्वमन्त्रेण पृथगेतत्
पुनर्द्दहेत्” ॥ * ॥
संवत्सरादर्व्वागपि
तत्तत्पापानुसारेण द्विगुणादि-
प्रायश्चित्तं विधाय नारायणवलिञ्च
कृत्वा औद्ध्व-
देहिकं कार्य्यं । आयुषोऽनित्यत्वेन
संवत्सरानन्तर-
मौर्द्ध्वदेहिकादिलोपप्रसङ्गात् ।
तच्च नारायण-
वलिं कृत्वा । तथा च
वृद्धयाज्ञवल्क्यः ।
“नारायणवलिः कार्य्यो
लोकगर्हाभयान्नरैः ।
तथा तेषां भवेत् शौचं
नान्यथेत्यब्रवीद्यमः” ॥
नारायणवलौ कृते
ऐद्र्ध्वदेहिककरणे भवती-
त्यर्थः ॥ * ॥ सर्पहते तु विशेषः ।
संवत्सरं यावत्
पञ्चम्यां नागपूजां विधाय तदनन्तरं
नारायण-
वलिं कृत्वा सौवर्णनागं प्रत्यक्षां
गाञ्च व्यासोद्दे-

व्रीहिः ।) पुत्त्रः । इति शब्दरत्नावली ॥
यथा कुमारसम्भवे, ६ । २८ ।
“अत आहर्त्तुमिच्छामि पार्ब्बतीमात्मजन्मने” ।
यथा रघुवंशे, १ । ३३ ।
“तस्यामात्मानुरूपायामात्मजन्मसमुत्सुकः”
॥)

**आत्मजा**, स्त्री, (आत्मन् + जन् + ड + आप् ।) कन्या ।

इत्यमरः ॥ बुद्धिः । इति शब्दरत्नावली ॥

**आत्मतत्त्वं**, क्ली, (आत्मनः तत्वं स्वरूपम् ।) तत्तद्भा-

सकं नित्यशुद्धबुद्धमुक्तसत्यस्वभावं
प्रत्यक्चैतन्यमे-
वात्मतत्त्वं । पुत्रादिभासकं
नित्यशुद्धत्वादिस्वरूप-
मेवात्मवस्त्विति यावत् । एतद्विवरणं यथा ।
“इदानीं प्रत्यगात्मनि इदमिदमयमयमारोपय-
तीति विशेष उच्यते । तथाच । अतिप्राकृतस्तु
आत्मा वै जायते पुत्र इत्यादि श्रुतेः स्वस्मिन्निव
स्वपुत्त्रेऽपि प्रेमदर्शनात् पुत्रे पुष्टे नष्टेऽहमेव
पुष्टो नष्टश्चेत्याद्यनुभवाच्च पुत्र आत्मेति
वदति ॥
१ ॥ चार्व्वाकस्तु स वा एष पुरुषोऽन्नरसमय
इत्यादि श्रुतेः प्रदीप्तगृहात् स्वपुत्त्रं
परित्यज्यापि
स्वस्य निर्गमदर्शनात् स्थूलोऽहं कृशोऽहं
इत्याद्य-
नुभवाच्च स्थूलशरीरमात्मेति वदति ॥ २ ॥
अप-
रश्चार्व्वाकः तेऽप्राणाः प्रजाप्रतिं समेत्य ब्रूयु

| | | |
|---|---|---|
| | शेन ब्राह्मणाय दत्त्वा ऐद्ध्र्वदेहिकं कुर्य्यात् ॥ * ॥<br>नारायणवलिस्वरूपञ्च विष्णुनाभिहितं ।<br>“एकादशीं समासाद्य शुक्लपक्षस्य वै तिथिं ।<br>विष्णुं समर्च्चयेद्देवं यमं वैवस्वतं तथा ॥<br>दशपिण्डान् घृताभ्यक्तान् दर्भेषु मधुसंयुतान् ।<br>तिलमिश्रान् प्रदद्याद्वै संयतो दक्षिणामुखः ॥<br>विष्णुं बुद्धौ समासाद्य नद्यम्भसि ततः क्षिपेत् ।<br>नामगोत्रग्रहं कृत्वा पुष्पैरभ्यर्च्चनं ततः ॥<br>धूपदीपप्रदानञ्च भक्ष्यभोज्यं तथापरं ।<br>विद्यातपःसमृद्धान् वै कुलोत्पन्नान् समाहितान् ॥<br>निमन्त्रयेत विप्रान् वै पञ्च सप्त नवापि वा ।<br>अपरेऽहनि सम्प्राप्ते मध्याह्ने समुपोषितः ॥ | |

:रित्यादिश्रुतेः इन्द्रियाणामभावे शरीरचलना-

भावात् काणोऽहं वधिरोऽहं इत्याद्यनुभवाच्च इन्द्रियाण्यात्मेति वदति ॥ ३ ॥ अन्यस्तु चार्व्वाकः
अन्योऽन्तर आत्मा प्राणमय इत्यादिश्रुतेः प्राणा-भावे इन्द्रियचलनायोगात् अहमशनायावानहं पिपासावान् इत्याद्यनुभवाच्च प्राण आत्मेति वदति
॥ ४ ॥ इतरस्तु चार्व्वाकः अन्योऽन्तर आत्मा मनोमय इत्यादिश्रुतेः मनसि सुप्ते प्राणादेर-भावात् अहं सङ्कल्पवानहं विकल्पवानित्याद्यनु-भवाच्च मन आत्मेति वदति ॥ ५ ॥ बौद्धस्तु अन्यो
ऽन्तर आत्मा विज्ञानमय इत्यादिश्रुतेः कर्त्तुरभावे करणस्य शक्त्यभावात् अहं कर्त्ताहं भोक्ता इत्या-द्यनुभवाच्च बुद्धिरात्मेति वदति ॥ ६ ॥ प्राभाकर-तार्किकौ तु अन्योऽन्तर आत्मा आनन्दमय इत्यादिश्रतेः सुषुप्तौ बुद्ध्यादीनामज्ञाने लयदर्श-नात् अहमज्ञोऽहं ज्ञानीत्याद्यनुभवाच्च अज्ञान-मात्मेति वदतः ॥ ७ ॥ भट्टस्तु प्रज्ञानघन एवानन्द-
मय आत्मेत्यादिश्रुतेः सुषुप्तौ प्रकाशाप्रकाशसद्-भावात् मामहं न जानामि इत्याद्यनुभवाच्च अज्ञा-नोपहितं चैतन्यमात्मेति वदति ॥ ८ ॥ अपरबौद्धः असदेवेदमग्र आसीदित्यादिश्रुतेः सुषुप्तौ सर्व्वा-भावादहं सुप्तः सुषुप्तौ नासमित्युत्थितस्य स्वाभाव-
परामर्शविषयानुभवाच्च शून्यमात्मेति वदति ॥ ९ ॥
एतेषां पुत्त्रादीनां शून्यपर्य्यन्तानामनात्मत्व-मुच्यते । एतैरतिप्राकृतादिवादिभिरुक्तेषु श्रुति-युक्त्यनुभवाभासेषु
पूर्ब्बपूर्ब्बोक्तश्रुतियुक्त्यनुभवाभासा-
नामुत्तरोत्तरश्रुतियुक्त्यानुभवाभासैरात्मबाधदर्श --
नात् पुत्त्रादीनामनात्मत्वं स्पष्टमेवेति ॥ * ॥ किञ्च प्रत्यगस्थूलोऽचक्षुरप्राणोऽमना अकर्त्ता चैतन्यं चिन्मात्रं सदित्यादिप्रबलश्रुतिविरोधात् अस्य

श्यालकः । विदूषकः । इति मेदिनी ॥

**आत्मभूः**, पुं, (आत्मन् + भू + क्विप् ।) ब्रह्मा । काम-

देवः । इत्यमरः ॥ विष्णुः । शिवः । इति शब्द-
रत्नावली ॥
(यथा रघुवंशे १० । २० ।
“सर्व्वज्ञस्त्वमविज्ञातः
सर्व्वयोनिस्त्वमात्मभूः” ।)

**आत्ममूली**, स्त्री, (आत्मन् + मूल + ङीप् ।) दुरा-

लभावृक्षः । इति शब्दमाला ॥
(दुरालभाशब्दे
ऽस्याविशेषोज्ञेयः ।)

**आत्मम्भरिः**, त्रि, (आत्मानं बिभर्त्तीति, आत्मन्

+ भृ + इन् + मुम् ।)
आत्मोदरमात्रभरणकर्त्ता ।
तत्पर्य्यायः । कुक्षिम्भरि २
स्वोदरपूरकः ३ ।
इत्यमरः ॥ (आद्यूनः, परार्थवैमुख्येन स्वार्थ-
साधनपरः । यथा भट्टिकाव्ये ।
“आत्मम्भरिस्त्वं
पिशितैर्नराणां” ॥ यथा हितोपदेशे ।
“शिष्टैरप्यविशेषज्ञ उग्रश्च कृतनाशकः ।
त्यज्यते किं पुनर्नान्यैः
पत्न्याप्यात्मम्भरिर्नरः” ॥)

**आत्मयोनिः**, पुं, (आत्मैव योनिरुपादानकारणमस्य

बहुब्रीहिः ॥) ब्रह्मा । विष्णुः । शिवः ।
कामदेवः ।
इति मेदिनीशब्दरत्नावल्यौ (यथा
कुमारे ३ । ७० ।
“ददर्श चक्रीकृतचारुपापं

“स सर्व्वगः सर्व्वशरीरभृच्च,
स विश्वकर्म्मा स च विश्वरूपः ।
स चेतनाधातुरतीन्द्रियश्च,
स नित्ययुक् सानुशयः सएव ॥
रसात्ममातापितृसम्भवानि,
भूतानि विद्याद्दश षट् च देहे ।
चत्वारि तत्रात्मनि संश्रितानि,
स्थितस्तथात्मा च चतुर्षु तेषु ॥
भूतानि मातापितृसम्भवानि,
रजश्च शुक्रञ्च वदन्ति गर्भे ।
आप्याय्यते शुक्रमसृक्सुभूतै-
र्यैस्तानि भूतानि रसोद्भवानि ॥
भूतानि चत्वारि तु कर्म्मजानि,
यान्यात्मलीनानि विशन्ति गर्भं ।
सवीजधर्म्माह्यपरापराणि,
देहान्तराण्यात्मनि याति याति ॥
रूपाद्विरूपप्रभवः प्रसिद्धः,
कर्म्मात्मकानां भनसो मनस्तः ।
भवन्ति येत्वाकृतिबुद्धिभेदाः
रजस्तमस्तत्र च कर्म्महेतुः ॥
अतीन्द्रियैस्तैरतिसूक्ष्मरूपै
रात्मा कदाचिन्न वियुक्तरूपः ।
न कर्म्मणा नैव मनोमतिभ्यां
न चाप्यहङ्कारविकारदोषैः” ॥
इति चरकः ॥
“यदा यदात्माकृतिमानयं भवे-
त्तदा मनस्तत्त्वधितिष्ठतीन्द्रियं ।
ततो मनोऽधिष्ठितमिन्द्रियं घटे-
प्रवर्त्तते संशयबुद्धिसम्भवे” ॥
इति वैद्यकवादार्थदर्पणं ॥)

**आत्माधीनः**, पुं, (आत्मनोऽधीनः ।) पुत्त्रः । प्राणा-

धारः । श्यालकः । विदूषकः । इति
हेमचन्द्रः ॥

**आत्माशी**, [न्] पुं, (आत्मन् + अश + णिन् ।)

मत्स्यः । इति त्रिकाण्डशेषः ॥

पुत्रादिशून्यपर्य्यन्तस्य जडस्य चैतन्यभास्यत्वेन घटादिवदनित्यत्वात् अहं ब्रह्मेति विद्वदनुभव प्राबल्याच्च तत्तच्छ्रुतियुक्त्यनभवाभासानां बाधित-
त्वादपि पुत्रादिशून्यपर्य्यन्तमखिलमनात्मैव । अत-
स्तत्तद्भासकं नित्यशुद्धबुद्धमुक्तसत्यस्वभावं प्रत्यक्-
चैतन्यनेवात्मतत्त्वमिति वेदान्तविदनुभवः” । इति वेदान्तसारः (५० -- ५८) ।

**आत्मदर्शः**, पुं, (आत्मन् + दृश् + घः ।) दर्पणं । इति
हेमचन्द्रः ॥ (यथा रघुवंशे । “निश्वासवाष्पापगमा-
त्प्रपन्नः । प्रसादमात्मीयमिवात्मदर्शः” ।)

**आत्मनीनं**, त्रि, (आत्मन् + खः ।) आत्मने हितं ।
इति व्याकरणं ॥ पथ्यं । इति राजनिर्घण्टः ॥
(“भजनिर्वृतिमात्मनीनाम्” । इति प्रबोधचन्द्रो-
दयः ।)

**आत्मनीनः**, पुं, (आत्मन् + ख ।) सुतः । श्यालः ॥
प्राणाधारः । विदूषकः । इत्यजयः ॥

**आत्मबन्धुः**, पुं, (आत्मनः बन्धुः । षष्ठीतत्पुरुषः ।
यदुक्तं “आत्ममातृष्वसुः पुत्रा आत्मापितृष्वसुः
सुताः । आत्ममातुलपुत्राश्च विज्ञेया आत्म-
वान्धवाः” ।) पितृष्वसृपुत्त्रः । मातुलपुत्त्रः । मातृ-
ष्वसृपुत्त्रः । इति स्मृतिः ।

**आत्मवीरः**, पुं, (आत्म वीरैव यस्य । प्राणवान् ।
प्रहर्त्तुमभ्युद्यतमात्मयोनिं” ॥)

**आत्मरक्षा**, स्त्री, महेन्द्रवारुणीवृक्षः । इति राज-
निर्घण्टः ॥ (आत्मशरीररक्षणं ।)

**आत्मशल्या**, स्त्री, शतावरी । इति राजनिर्घण्टः ॥

**आत्मश्लाघा**, स्त्री, (आत्मनः श्लाघा ।) आत्मगर्व्वः ।
स्वीयप्रशंसा ॥

**आत्महत्या**, स्त्री, (आत्मनः हत्या ।) आत्मघातः ।
स्वबधः ॥

**आत्महा**, [न्] पुं, (आत्मन् + हन् + क्विप् ।) देवलः ।
इति शब्दरत्नावली ॥ आत्मघाती । “नृदेहमाद्यं
सुलमं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारं । मया-
नुकूलेन नभस्वतेरितं पुमान् भवाब्धिं न तरेत् स
आत्महा” ॥ इति श्रीभागवतं ॥ (अपरञ्च यथा,
“लब्धा कथञ्चित् नरजन्म दुर्लभं तत्रापि पुंस्त्वं
श्रुतिपारदर्शनं । यस्त्वात्ममुक्त्यै न यतेत मूढधीः
स आत्महा स्वं विनिहन्त्यसद्ग्रहात्” ॥)

**आत्मा**, [न्] पुं, (अतति सन्ततभावेन जाग्रदादि-
सर्व्वावस्थासु अनुवर्त्तते, अत सातत्यगमने +
मनिण् ।) यत्नः । धृतिः । बुद्धिः । स्वभावः ।
ब्रह्म । देहः । इत्यमरः ॥ मनः । इति मेदिनी ॥
परव्यावर्त्तनं । इति धरणी ॥ पुत्त्रः । इति

**आत्माश्रयः**, पुं, (आत्मा आश्रयो यस्य सः ।) तर्क-
विशेषः । तस्य लक्षणं । स्वापेक्षापादकप्रसङ्गत्वं ।
अपेक्षा च ज्ञाप्तौ उत्पत्तौ स्थितौ च ग्राह्या ।
तत्र्याद्या यथा । एतद्घटज्ञानं यद्येतद्घटज्ञानजन्यं
स्यात् एतद्घटज्ञानभिन्नं स्यात् । द्वितीया तु घटो-
ऽयं यद्येतद्घटजनकः स्यात् एतद्घटभिन्नः स्यात् ।
तृतीया च अयं घटो यद्येतद्घटवृत्तिः स्यात्
तथात्वेनोपलभ्येत इति ॥

**आत्मीयः**, त्रि, (आत्मन् + छ ।) स्वकीयः । अन्त-
रङ्गः । इति हेमचन्द्रः ॥ (यथा रघुवंशे ।
“प्रसादमात्मीयमिवात्मदर्शः” ।
कुमारसम्भवे । २ । १९ ॥
“किमिदं द्युतिमात्मीयां न बिभ्रति यथा पुरा” ।)

**आत्मोद्भवा**, स्त्री, (आत्मनः उद्भवो यस्याः सा ।)
माषपर्णी । इति राजनिर्घण्टः ॥ कन्या । पुत्त्रे, पुं ॥
(माषपर्णीशब्देऽस्या विशेषो ज्ञातव्यः ।)

**आत्रेयः**, पुं, (अत्रेरपत्यं पुमान् । अत्रि + ढक् ।)
अत्रिमुनिपुत्त्रः । स च दत्तः । दुर्व्वासाः । चन्द्रश्च ।

| | | |
|---|---|---|
| | शब्दरत्नावली ॥ जीवः । अर्कः । हुताशनः । वायुः । इति हेमचन्द्रः ॥ ("आत्मज्ञः करणैर्योगात् ज्ञानं तस्य प्रवर्त्तते" । "अव्यक्तमात्मा क्षेत्रज्ञः शाश्वतो विभुरव्ययः" । "चेतवान् यतश्चात्मा ततः कर्त्ता निरुच्यते" । "देही सर्व्वगतोह्यात्मा स्वेस्वे संस्पर्शनेन्द्रिये । सर्व्वाः सर्व्वाश्रयस्थास्तु नात्मातो वेत्ति वेदनाः" ॥ "विभुत्वमतएवास्य यस्मात् सर्व्वगतो महान् । मनसश्च समाधानात् पश्यत्यात्मा तिरस्कृतं" ॥ "आदिर्नास्त्यात्मनः क्षेत्रपारम्पर्य्यमनादिकं" । | |

:इति मेदिनी ॥ शरीरस्थरसधातुः । इति

हेमचन्द्रः ॥

**आत्रेयिका**, स्त्री, (अत्रि + ढक् + कन् + टाप् ।)

ऋतुमती । इति हलायुधः ॥

**आत्रेयी**, स्त्री, (अत्रि + ढक् + ङीप् ।) पुष्पवती स्त्री ।

(यथाह अङ्गिराः, --
"आहिताग्नेर्ब्राह्मणस्य हत्वा
पत्नीमनिन्दिताम् ।
ब्रह्महत्याव्रतं कुर्य्यात्
आत्रेयीघ्नस्तथैव च" ॥)
नदीविशेषः । इति मेदिनी ॥
(अत्रिमुनिपत्नी ।)
यथा भारते, --
"सरयूर्वारवत्या च लाङ्गली च
सरिद्वरा ।
करतोया तथात्रेयी लौहीत्यश्च
महानदः" ॥)

**आथर्व्वणं**, क्ली, (अथर्व्वन् + अण् ।) अथर्व्वणां

समूहः । अथर्व्वनाम्ना मुनिना प्रोक्तो
वेदः
अथर्व्वा तेषां सङ्घः । इत्यमरः ॥
शान्तिगृहं ।
इति हेमचन्द्रः ॥ (यथा महावीरचरिते
।
"आथर्व्वणस्तीव्र इवाभिचारः" ।)

**आथर्व्वणः**, पुं, (अथर्व्व वेत्तीति । अथर्व्वन् + अण् ।)

पुरोहितः । अथर्व्ववेदक्षब्राह्मणः ।
इति हेमचन्द्रः ॥

**आदरः**, पुं, (आङ् + दृ + अप् ।) आरम्भः । इति

त्रिकाण्डशेषः ॥ समादरः । सम्मानः
॥ (यथा

"अपएव ससर्ज्जादौ तासु वीजमवासृजत्" ।
कुभारे १ । ९ । "जगदादिरनादिस्त्वं" ॥)

**आदिकविः**, पुं, (आदिः प्रथमः कविः ।) ब्रह्मा-

इति श्रीभागवतं ॥ वाल्मीकिमुनिः । इति हेम-
चन्द्रः ॥ ("तेने ब्रह्महृदा य आदिकवये मुह्यन्ति
यत् सूरयः" । इति भागवते १ । ४ ।)

**आदिकारणं**, क्ली, (आदि आद्यं कारणम् ।) पूर्ब्ब-

निमित्तं । मूलहेतुः । तत्पर्य्यायः । निदानं २ ।
इत्यमरः ॥

**आदिगदाधरः**, पुं, (आदिराद्यः आदौ पूजितो वा

गदाधरः ।) गयास्थदेवताविशेषः । यथा, --
"गयाशिरश्छादयित्वा गुरुत्वादास्थिता शिला ।
कालान्तरेण व्यक्तश्च स्थित आदिगदाधरः ॥
तथा व्यक्तोऽव्यक्तरूपी आसीदादौ गदाधरः ।
आदिरादौ पूजितोऽत्र देवैर्ब्रह्मादिभिर्यतः ॥
पाद्याद्यगन्धपुष्पाद्यैरत आदिगदाधरः" ॥
इति गारुडे गयामाहात्म्ये ८५ अध्यायः ॥
अपिच
"गदयादाववष्टभ्य गयासुरशिरःशिलां ।
निश्चलार्थंस्थितो यस्मात्तस्मादादिगदाधरः" ॥
इति वायुपुराणीयगयामाहात्म्ये ८ अध्यायः ॥

**आदितालः**, पुं, (आदिराद्यस्तालः ।) तालविशेषः ।

यथा, -- सङ्गीतदामोदरः ।
"एकएव लघुर्यत्र आदितालः स कथ्यते ।
गुरुस्तत् पुरतो वाच्यः प्रायेणैतन्निदर्शनं" ॥
इति ।

**आदितेयः**, पुं, (अदितेरपत्यं पुमान् । अदिति +

ढक् ।) अदितिपुत्त्रः । देवः । इत्यमरः ॥

**आदित्यः**, पुं, (अदितेरादित्यस्य वा अपत्यं + ण्यः ।)

देवः । सूर्य्यः । इत्यमरमेदिन्यौ ॥ द्वादशादित्य-
गणे बहुवचनान्तः । इत्यमरः ॥
तत्प्रत्येकनामानि ।
विवस्वान् १ अर्य्यमा २ पूषा ३ त्वष्टा ४ सविता
५ भगः ६ धाता ७ विधाता ८ वरुणः ९ मित्रः

र्त्त्वयनसंवत्सरयुगप्रविभागं करोति ॥ इति
सुश्रुतः)

**आदित्यपत्रः**, पुं, (आदित्यवृक्षस्य पत्रमिव पत्रमस्य ।)

क्षुपविशेषः । तत्पर्य्यायः । अर्कपत्रः २
अर्कदलः ३
सूर्य्यपत्रः ४ तपनच्छदः ५ कुष्ठारिः ६
विटपः ७
सुपत्रः ८ रविप्रियः ९ रश्मिपतिः १० रुद्रः
११ ।
अस्य गुणाः । कटुत्वं । उष्णवीर्य्यत्वं ।
कफवात-
रोगजाठरगुल्मारोचकनाशित्वं । अग्निसन्दी-
पनत्वञ्च । इति राजनिर्घण्टः ॥

**आदित्यपुष्पिका**, स्त्री, (आदित्यवत् लीहितं पुष्प-

मस्याः ।) लीहितार्कवृक्षः । इति रत्नमाला
॥
राङ्गा आकन्द इति भाषा ।

**आदित्यभक्ता**, स्त्री, (आदित्यस्य भक्ता ।) ओषधी-

विशेषः । हुडहुडिया इति भाषा ।
तत्पर्य्यायः ।
वरदा २ अर्कभक्ता ३ सुवर्च्चला ४
सूर्य्यलता ५
सूर्य्यावर्त्ता ६ अर्ककान्ता ७ मण्डूकपर्णी ८
सुर-
सम्भवा ९ सौरी १० सुतेजाः ११
अर्कहिता ११
वरिष्ठा १३ मण्डूकी १४ सप्तनामा १५ देवी
६२
मार्त्तण्डवल्लभा १७ विक्रान्ता १८
भास्करेष्टा १९ ।
अस्या गुणाः । हिमत्वं । तिक्तत्वं । कटुत्वं ।
उग्रत्वं ।
कफत्वग्दोषकण्डूब्रणकुष्ठभूतग्रहोग्रशीत-
ज्वरनाशित्वञ्च । अन्यच्च ।
स्वादुपाकरसत्वं ।

किरातार्ज्जुनीये ५ । १६ ।

“स जगदे वचनं प्रियमादरात्

मुखरतावसरे हि विराजते” ।

कुमारसम्भवे ६ । १३ ।

“तद्दर्शनादभूत् शम्भोर्भूयान्

दारार्थमादरः” ।

हितोदेशे ।

“सन्तुष्टस्य करप्राप्तेऽप्यर्थे भवति

नादरः” ।)

**आदर्य्यः**, त्रि, (आङ् + दृ + ण्यत् ।) आदरणीयः ।

आदर्त्तव्यः ॥ आदरीपयुक्तः ॥

**आदर्शः**, पुं, (आङ् + दृश् + घञ् ।) दर्पणं । टीका ।

प्रतिपुस्तकं । इति मेदिनी ॥ (यथा

भगवद्गीतायां ।

“धूमेनाव्रियते वह्निर्यथादर्शो मलेन च

।

यथोल्वनेनावृतो गर्भस्तथा

तेनेदमावृतं” ॥)

आदानं, क्ली, (आङ्दा + ल्युट् ।)

ग्रहणं । अश्वा-

भरणं । इति मेदिनीहेमचन्द्रौ ॥

रोगलक्षणं ।

इति राजनिर्घण्टः । (स्वीकारः

प्रतिग्रहः ।

यथा कुमारंसम्भवे ५ । ११ ॥

“कुशाङ्कुरादानपरिक्षताङ्गुलिः” ॥

मनुः, ७ । २०४ ।

“आदानमप्रियकरं दानञ्च प्रियकारकं

।

अभीप्सितानामर्थानां काले युक्तं

प्रशस्यते” ॥)

**आदानी**, स्त्री, (आ + दा + ल्युट् + ङीप् ।) हास्त-

घोषावृक्षः । इति रत्नमाला ॥

**आदिः**, पुं, (आङ् + दा + कि ।) पूर्ब्बः । प्रथमः ।

१० शक्रः ११ उरुक्रमः १२ । एते कश्यपात्

अदितिभार्य्यायां जाताः । कल्पान्तरे

त्वष्टृकन्या

संज्ञा आदित्यपत्नी आदित्यस्य तेजः

सोढुमस-

मर्था अतस्तस्याः पितृकृतादित्यद्वादशखण्डा

द्वा-

दशादित्याः । तेषां द्वादशमासेष्वेकैकस्योदयः ।

इति पुराणं ॥ अर्कवृक्षः । इत्यमरः ॥ आकन्द

इति भाषा । (“आदित्यमण्डलस्थितो हिरण्म-

योविष्णुः” । यथा शान्तिशतके । ४ । २४ ।

“आदित्यस्य गतागतैरहरहःसंक्षीयते जीवितं” ।

भारते ।

“आदित्यचन्द्रावनिलाऽनलश्च

द्यौर्भूमिरापो हृदयं यमश्च” ।

हरिवंशे द्वादशादित्यकथा यथा ।

“मरीचात् कश्यपाज्जातास्तेऽदित्या

दक्षकन्यया ।

तत्र शक्रश्च विष्णुश्च जज्ञाते पुनरेवह ॥

अर्य्यमा चैव धाता च त्वष्टा पूषा च भारत ।

विवस्वान् सविता चैव मित्रो वरुण एव च ।

अंशो भगश्चातितेजा आदित्या द्वादश स्मृताः”

॥

तस्य संवत्सरात्मनो भगवानादित्यो गतिविशे-

षेणाक्षिनिमेषकाष्ठाकलामुहूर्त्ताहोरात्रपक्षमास-

गुरुत्वं । अपित्तवर्द्धकत्वं । क्षाररसत्वं ।

विष्टम्भ-

वातनाशित्वञ्च । इति राजनिर्घण्टः ॥

**आदित्यसूनुः**, पुं, (अदितेरपत्यं पुमान् आदित्यः

सूर्य्यः तस्य सूनुः षष्ठीतत्पुरुषः ।)

सुग्रीववानरः ।

इति हेमचन्द्रः ॥ यमः । शनैश्चरः ।

सावर्णिमनुः ।

वैवस्वतमनुः । इति पुराणं ॥ (कर्णः ।)

**आदिदेवः**, पुं, (आदिः कारणं स च देवश्चेति कर्म्म-

धारयः ।) नारायणः । इति त्रिकाण्डशेषः ॥

(जग-

दुपादानादिगुणवान् वासुदेवः विष्णुः,

महादेवः,

ब्रह्मा च यथा, भगवद्गीतायां, १० । १२ ।

“परं ब्रह्म परं धाम पवित्रं परमं भवान् ।

पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुं ॥

त्वमादिदेवः पुरुषः पुराण-

स्त्वमस्य विश्वस्य परं निधानं” ॥

यथा, महाभारते, -- सूर्य्यस्य

नामाष्टशतमध्ये

परिगणितो नामभेदः ।

“ध्वन्वन्तरिर्धूमकेतुरादिदेवोऽदितेः सूतः”

॥)

**आदिमं**, त्रि, (आदौ भवं अग्रादिपश्चात् डिमच् ।

यद्वा मध्यान्म इत्यत्रादेश्चेति वचनात् मः ।)

आद्यं ।

प्रथमभववस्तु । इत्यमरटीका व्याकरणञ्च ॥

(यथाह भाषापरिच्छेदे, --

“एते पञ्चान्यथासिद्धा

दण्डावादिकमादिमम्” ।

“आदिमः श्येनशैलादिसंयोगः

परिकीर्त्तितः” ॥)

**आदिराजः**, पुं, (आदिः प्रथमः राजा इति राजहः-

सखिभ्यष्टच् ।) पृथुराजः । इति हेमचन्द्रः ॥

(मही-

<table>
<tr>
<td>इत्यमरः ॥ पदान्ते गणसूचकः ।<br>यथा इत्यादिः ॥<br>(प्रारम्भः । प्राक्सत्ता ।<br>नियतपूर्ब्बवत्तिकारणं ।<br>उत्पत्तिहेतुः । सामीप्ये । व्यवस्थायां<br>। प्रकारे,<br>अवयवार्थे च आदिशब्दस्य प्रयोगो<br>भवति ।<br>यदुक्तं, --<br>“सामीप्येऽथ व्यवस्थायां<br>प्रकारेऽवयवे तथा ।<br>आदिशब्दं तु मेधावी चतुर्ष्वर्थेषु<br>लक्षयेत्” ॥<br>यथा मानवे १ । ८ ।</td>
<td></td>
<td>क्षितामाद्यो वैवस्वतो ममुः । अविक्षित्पुत्रः<br>स्वना-<br>मख्यातः पौरवो राजा । यथा, रामायणे ।<br>“आदिराजो मनुरिव प्रजानां परिरक्षिता” ॥<br>महाभारते ।<br>“अविक्षितः परिक्षित्तु शवलाश्वश्च<br>वीर्य्यबान् ।<br>आदिराजो विरागश्च शाल्मलिश्च<br>महाबलः” ॥)</td>
</tr>
</table>

**आदिवराहः**, पुं, (आदिः कारणं स च वराहश्चेति
कर्म्मधारयः ।) विष्णुः । इति
त्रिकाण्डशेषः ॥
अदिशूकरः । आद्यकोलः ॥

**आदिष्टं**, क्ली, (आङ् + दिश् + क्तः ।) उच्छिष्टं ।
इति मेदिनी ॥

**आदिष्टः**, त्रि, (आङ् + दिश् + क्त ।) आदेशितः ।
आज्ञाप्तः इति मेदिनो । (नियोजितः,
उपदिष्टः,
अनुशासितः, अभिहितः ।)

**आदीनवः**, पुं, (दीङ्क्षये भावे क्तः । स्वादय
ओदितः,
ओदितश्चेति नत्वं । आदीनस्य वा नम् ।
घञर्थे
क इति बाहुलकात् वातेः कः ।) क्लेशः ।
इत्यमरः ॥
दोषः । दुरन्तः । इति मेदिनी ॥ (यथा,
शिशु-
पालबधे २ । २२ ।
"यद्वासुदेवेनादीनमनादीनवमीरितं" ।)

**आदीपनं**, क्ली, (आदीप्यते आङ् + दीप् + भावे
ल्युट् ।) आलिम्पना । इति त्रिकाण्डशेषः
॥ आ-
लिपना इति भाषा ।

**आदृतः**, त्रि, (आङ् + दृञ् + आद्रियते यः
कर्म्मणि
क्तः ।) कृतादरः । सादरः । अर्च्चितः ।
पूजितः ।
इत्यमरः ॥ (सावधानः, अवहितः,
अप्रमत्तः ।
यथा, पञ्चतन्त्रे,
"आत्मानमादृतो रक्षेत्प्रमादाद्धि
विनश्यति" ।)

**आदृत्यः**, त्रि, (आङ् + दृ + क्यप् ।) आदरणीयः
।
रघुवंशे, १ । ११ ।
"आसीत् महीक्षितामाद्यः
प्रणवश्छन्दसामिव" ।)
भक्ष्यः । यथा मनुः ५ । २६ ।
"पाठीनरोहितावाद्यौ नियुक्तौ
हव्यकव्ययोः" ।

**आद्यकविः**, पुं, (आद्यश्च कविश्चेति
कर्म्मधारयः ।)
बाल्मीकिमुनिः । इति भूरिप्रयोगः ॥
(पुराण-
कविः ब्रह्मा) ।

**आद्यमाषकः**, पुं, (आद्य + मष् + हलश्चेति
घञ् +
कः ।) माषकपरिमाणं । पञ्चरत्तिकाः ।
इत्यमरः ॥
यथाह भास्कराचार्य्यः, --
"दशार्द्धगुञ्जं प्रवदन्ति माषं" ।)

**आद्यवीजं**, क्ली, (आद्यं मुख्यं वीजं कारणं ।)
आदि-
कारणं । इति जटाधरः ॥

**आद्या**, स्त्री, (आदौ भवा दिगादित्वात् यत् टाप्
।)
दुर्गा । इति शब्दरत्नावली । काली ।
तारा ।
त्रिपुरसुन्दरी । भुवनेश्वरी । इति
तन्त्रसारनील-
तन्त्रयोगिनीतन्त्राणि । प्रधाना शक्तिः ।
महा-
विद्या । यथा, मुण्डमालातन्त्रे १०
पटलः ॥
"सत्ये तु सुन्दरी आद्या त्रेतायां
भुवनेश्वरी ।
द्वापरे तारिणो आद्या कलौ काली
प्रकीर्त्तिता ॥
नामभेदं प्रवक्ष्यामि रूपभेदं वरानने ।
यथा महाभारते, --
"सर्व्वेषां पुनराधानं बिधिदृष्टेन कर्म्मणा" ।
यथा मेघदूते, पूर्ब्बमेघे । ३ ।
"तस्य स्थित्वा कथमपि पुरः
कौतुकाधानहेतोः" ॥)

**आधानिकं**, क्ली, (आधानं गर्भाधानं प्रयोजनमस्य ।
प्रयोजनमिति ठक् ।) गर्भाधानसंस्कारः । इति
त्रिकाण्डशेषः ॥

**आधारः**, पुं, (आध्रियन्ते अस्मिन् इति आधारः
अध्यायन्यायेति सूत्रे अवहाराधारेत्युपसंख्या-
नादधिकरणे घञ् । व्याकरणशास्त्रे
अधिकरण-
कारकं, तल्लक्षणं यथा सिद्धान्तकौमुद्यां,
आधा-
रोऽधिकरणं कर्तृकर्म्मद्वारा तन्निष्ठक्रियाया आ-
धारः कारकमधिकरणसंज्ञः स्यात् । तच्च
सामी-
प्याश्लेषविषयव्याप्तिभेदाच्चतुर्विधं । तथा
सिद्धान्त-
कौमुद्यां,
औपश्लेषिकोवैषयिकोऽभिव्यापकश्चेत्या-
धारस्त्रिधा यथा -- कटे आस्ते । स्थाल्यां
पचति ।
मोक्षे सर्व्वस्मिन्नात्मास्ति ।) अधिकरणं ।
आल-
वालं । अम्बुधारणं । इति मेदिनी ॥ क्षेत्रादि-
सेकार्थं सेतुना बहुनालं जलं निरुध्य यत्र
स्थाप्यते
स आधारः बद्धकन्दरादिः । बाँध इति ख्यातः
।
इत्यमरटीकायां भरतः ॥ शस्याद्यर्थं
जलबन्धन-
माधारः । इति वैकुण्ठः ॥ क्षेत्रादिसेकार्थं
जला-
धारस्थानमाधार इति मधुः ॥ (यथा रघुवंशे ५
। ६ ।

आदरयोग्यः ॥

**आदेशः**, पुं, (आङ् + दिश् + भावे घञ् ।) आज्ञा ।

इति हेमचन्द्रः ॥ ज्योतिःशास्त्रफलं । इति सि-
द्धान्तशिरोमणिः ॥ वर्णस्य
वर्णान्तरोत्पत्तिः । प्र-
कृतिप्रत्ययोपधातिकार्य्यं । इति व्याकरणं ॥ (अनु-
मतिः, शासनं, उपदेशः,
शास्त्राचार्य्योपदेश-
गम्यो वार्त्तासञ्चारः, कार्य्यभेदः, यथा
मुग्धबोधे
“स्थानिवदादेशः” । यथा, मनुः, ९ ।
२५८ ।
“मङ्गलादेशवृत्ताश्च भद्राश्चैक्षणिकैः सह” ।)

**आदेशी**, [न्] पुं, (आङ् + दिश् + णिनि ।) दैवज्ञः ।

गणकः । इति हेमचन्द्रः ॥ (त्रि,
आदेशकर्त्ता,
उपदेष्टा, यथा, रघुवंशे, ४ । ६८ ।
“कपोलपाटलादेशि बभूव रघुचेष्टितं” ॥)

**आदेष्टा**, [ऋ] पुं, (आदिशति ऋत्त्विजादीन् यागा-

दिष्वेष्टसम्पादनाय प्रेरयति । आङ् + दिश अति-
सर्ज्जने + तृच् ।) यागविषये
ममेष्टसम्पादनाय य-
थार्थं कर्म्म कुर्व्विति ऋत्त्विजामादेशकः ।
तत्प-
र्य्यायः व्रती २ यष्टा ३ यजमानः ४ ।
इत्यमरः ॥
अन्वादेष्टा ५ याजकः ६ । इति हेमचन्द्रः
॥ आ-
देशकर्त्ता ॥

**आद्यं**, क्ली, (अद्यते यत् अद् कर्म्मणि ण्यत् ।) धान्यं ।

न भेदः कालिकायाश्च ताराया
जगदम्बिके ॥
षोडश्या भुवनायाश्च भैरव्यास्त्रिपुरेश्वरि ।
छिन्नायाश्चैव धूमाया भीमायाः
परमेश्वरि ॥
ततश्च वगलामुख्या मातङ्ग्याश्च
सुरेश्वरि ।
न च भेदो महेशानि विद्याया वरवर्णिनि” ॥
आदिभूते त्रि ॥

**आद्यूनः**, त्रि, (आङ् पूर्ब्बात् दीव्यतेरकर्म्मकत्वात्

क्तः । दिवोविजिगीषायामिति निष्ठातस्य
नत्वं
यस्य विभाषेति नेट्, च्छोरित्यूट् ।)
औदरिकः ।
इत्यमरः ॥ पेटुक इति भाषा । (यदुक्तं,
अमरे ।
“आद्यूनः स्यादौदरिके
विजिगीषाविवर्ज्जिते” ।
“आद्यूनः सदगृहिण्येव
प्रायोयष्ट्यावलम्बितः” ॥
इति किराते ११ । ५ ।) आदिहीनः ॥

**आद्योपान्तं**, क्ली, (आद्यञ्च उपान्तञ्च द्वन्द्वः ।) पूर्ब्बा-

परं । इस्तकनागादि इति भाषा ॥

**आधमनं**, क्ली, (आधीयते आङ् + धा + कमनन् ।)

बन्धकं । इति स्मृतिः । (आधिः । यथा
मनुः, --
“योगाधमनविक्रीतं योगदानप्रतिग्रहं ।
यत्र वाप्युपधिं पश्येत् तत्सर्व्वं
विनिवर्त्तयेत्” ॥

**आधानं**, क्ली, (आधीयते आङ् + धा + भावे ल्यट्

यद्वा आधीयते स्थाप्यते यत् कर्म्मणि
ल्युट् ।)
“आधारबन्धप्रमुखैः प्रयत्नैः
संवर्द्धितानां सुतनिर्विशेषं ।
क्वच्चिन्न वाष्वादिरुपप्लवो वः
श्रमच्छिदामाश्रमपादपानाम्” ॥
याज्ञवल्क्यः ।
“तथात्मकोऽप्यनेकस्तु
जलाधारेष्विवांशुमान्” ॥)

**आधार्म्मिकः**, त्रि, (अधर्म्म + ठञ् ।) अधार्म्मिकः ।

इति त्रिकाण्डशेषः ॥ (यथा मनुः ।
“नाधार्म्मिके वसेद्ग्रामे” ॥)

**आधिः**, पुं, (आङ् + धा + किः ।) मनःपीडा । प्र-

त्याशा । बन्धकं । व्यसनं । अधिष्ठानं । इति
मेदिनी ॥
(यथा, हितोपदेशे ।
“आधिव्याधिपरीताय अद्य श्वो वा विनाशिने ।
कोऽहि नाम शरीराय धर्म्मापेतं समाचरेत्” ॥
तथा च वैराग्यशतके ।
“आधिव्याधिशतैर्जनस्य
विविधैरारोग्यमुन्मूल्यते” ॥)

**आधिक्यं**, क्ली, (अधिक + ष्यञ् ।) अधिकस्य भावः ।

अधिकत्वं । अतिशयता । यथा ।
“युग्मायामपि रात्रौ चेत् शोणितं प्रचुरं तथा ।
कन्या च पुंवत् भवति शुक्राधिक्ये पुमान्
भवेत्” ॥
इति ज्योतिस्तत्त्वम् ॥ (श्रेष्ठता । उत्कर्षः ।
प्राब-
ल्यम् । यथा साहित्यदर्पणे । १० पः ।
“आधिक्यमुपमेयस्योपमानात् न्यूनताथवा” ।
यथा, मनुः ७ । १६९ ।
“यदावगच्छेदायत्यामाधिक्य ध्रुवमात्मनः” ॥
आधिक्यं नाम यदायुर्वेदे भाष्यभाणे
वार्हस्पत्य-
मौशनसम् अन्यद्वा प्रतिसम्बधार्थमुच्यते यद्वा

इति राजनिर्घण्टः ॥ अदनीयद्रव्ये त्रि ॥

(यथा --

मनुः, ५ । २४ ।

“तत्पर्य्युषितमप्याद्यं हविः शेषञ्च यद्भवेत् ।

चिरस्थितमपित्वाद्यं” -- इत्यादि ।)

**आद्यः**, त्रि, (आदौ भवः दिगादिभ्यो यत् यद्वा अद्यते

यः अद् कर्म्मणि ण्यत् ।) प्रथमः ।

इत्यमरः ॥

(यथा महाभारते, --

“तोषितोऽहं नृपश्रेष्ठ त्वयेहाद्येन कर्म्मणा”

।

गर्भाधानं । अग्न्याधानं । स्थापितद्रव्यं

। इति

स्मृतिः ॥ (ग्रहणं, धारणं । अधिगमः,

करणं ।

सम्पादनं । श्रौताग्नेः स्मार्त्ताग्नेर्वा ग्रहणं,

ब्राह्मणानां

प्रतिदिनकर्त्तव्या

विहितवह्निस्थापनपूर्ब्बकहोमा-

दिक्रिया, यजनं, होमः । यथा रघुवंशे,

१ । २४ ।

“प्रजानां विनयाधानाद्रक्षणाद्भरणादपि ।

स पिता पितरस्तासां केवलं

जन्महेतवः” ॥

यथा मनुः, ५ । १६८ ।

“भार्य्यायै पूर्ब्बमारिण्यै

दत्वाग्नीनन्त्यकर्म्मणि ।

पुनर्दारक्रियां कुर्य्यात् पुनराधानमेव च”

॥

:पुनः प्रतिसम्बद्धमपि द्विरभिधीयते तत्
पुनरुक्त-

दोषाधिकं तच्च पुनरुक्तं द्विविधं,
अर्थपुनरुक्तं
शब्दपुनरुक्तञ्च । तत्रार्थपुनरुक्तं नाम
यथा, --
"भेषजमौषधं साधनम्" इति,
शब्दपुनरुक्तं
"पुनर्भेषजं भेषजम्" इति चरकः ॥)

**आधिज्ञः**, त्रि, (आधि + ज्ञा + क ।) वक्रः । व्य-

थितः । इत्यजयपालः ॥

**आधिदैविकं**, त्रि, (अधि + देव + ठञ् । अनु-

शतिकादीनां च इत्युपभयपदवृद्धिः ।)
दुःखविशेषः ।
तद्यथा, । "आधिदैविकं
यक्षराक्षसविनायकग्र-
हाद्यावेशनिबन्धनं" । इति
साङ्ख्यसत्त्वकौमुदी ॥
(देवतामधिकृत्य, प्रवृत्तं,
दाहशीतादिजनितं दुःखं ।
अतिवातादिवृष्ट्यादिहेतुकं दुःखं ।
देवतामधि-
कृत्य प्रवृत्तं शास्त्रम् । यथा मनुः ६ ।
८३ ।
"अधियज्ञं ब्रह्म जपेदाधिदैविकमेव च ।
आध्यात्मिकञ्च सततं वेदान्ताभिहितञ्च
यत्" ॥
"तत्तु सप्तविधे व्याधावुपनिपतति" इति
सुश्रुतः ।)

**आधिपत्यं**, क्ली, (अधिपति + ष्यञ् ।)
अधिपते-

र्भावः । स्वामित्वं । प्रभुत्वं । ऐश्वर्य्यं ।
यथा,
"नहि प्रपश्यामि ममापनुद्यात्
यच्छोकमुच्छोषणमिन्द्रियाणां ।
अवाप्य भूमावसपत्नमृद्धं

वस्तु । यथा । शाब्दबोधे चैकपदार्थे
अपरपदार्थ-
संसर्गः संसर्गमर्य्यादया भासते । स च
क्वचिद्भेदः
क्वचिदतिरिक्त
एवाधाराधेयप्रतियोग्यनुयोगिवि-
षयविषयिभावादिः । इति
गदाधरभट्टाचार्य्यकृत-
प्रथमव्युत्पत्तिवादः ॥ उत्पाद्यः । यथा, --
"सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते ।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः"
॥
इति वोपदेवकृतमुग्धबोधीयकारिका ॥
आधेय
उत्पाद्यः । यथा पक्वमृण्मयपात्रेषु
रक्ततागुणः स
वह्निसंयोगादिना निष्पाद्यते । इति
तट्टीकायां
दुर्गादासः ॥

**आधोरणः**, पुं, (आधोरयति धोरृगतिचातुर्य्ये

कर्त्तरि ल्यु ।) हस्तिपकः । माहुत इति
भाषा ।
("आधोरणा हस्तिपका हस्त्यारोहा निषा-
दिनः" । अमरः । यथा, -- रघुवंशे ७ । ४६
।
"आधोरणानां गजसन्निपाते
शिरांसि चक्रैर्निशितैः क्षुराग्रैः" ॥)

**आध्मातः**, पुं, (आङ् + ध्मा + क्तः ।) शब्दितः ।
दग्धः ।

वातरोगविशेषः । संयतः । इति मेदिनी ॥
(स्फीतः
दर्पादिना उद्धतः, विवर्द्धितः । यदुक्तं ।
"ततो
मानाध्मातः स पतति यदा शोकगहने" ।
हितो-
पदेशे । "ततोऽसौ दर्पाध्मातस्तस्योपरि
आत्मानं

उदावर्त्तं तथागुल्भमुदराणि हरत्यसौ ॥
वेगे शान्ते च भुञ्जीत शर्करासहितं दधि ।
ततस्तत्सैन्धवेनापि ततो दध्योदनं मनाक्"
॥
महानाराचो रसः ॥ ३ ॥ इति भावप्रकाशः ॥
(वायुना सवेदनमुदरपरिपूर्णत्वमाध्मानत्वं ।
इति
रुग्विनिश्चयग्रन्थव्याख्यानकृद्विजयरक्षितः
॥)

**आध्मानी**, स्त्री, (आङ् + ध्मा + ल्युट् + ङीप् ।)

नलिकानामगन्धद्रव्यं । इति राजनिर्घण्टः ॥

**आध्या**, स्त्री, (आङ् + ध्यै + अङ् + टाप् ।) चिन्ता
।

स्मतिः । इति शब्दरत्नावली ॥

**आध्यात्मिकं**, त्रि, (आत्मानमधिकृत्य भवं अधि +

आत्मन् + ठञ् ।) दुःखविशेषः । यथा ।
दुःखानां
त्रयं दुःखत्रयं तत् खल्वाध्यात्मिकं
चाधिभौतिकं
चाधिदैविकञ्च । तत्राध्यात्मिकं द्विविधं
शारीरं
मानसञ्च । शारीरं वातपित्तश्लेष्मणां निमित्तं
।
मानसं
कामक्रोधलोभमोहेर्षाविषादविशेषादर्श-
ननिबन्धनं । सर्व्वं
चैतदान्तरोपायसाध्यत्वात् आ-
ध्यात्मिकं दुःखं । इति साङ्ख्यतत्त्वकौमुदी
॥
(आत्मतत्त्वविषयकं । यथा, मनुः २ । ११७
।
"लौकिकं वैदिकं वापि तथाध्यात्मिकमेव च
।
आददीत यतो ज्ञानं तं पूर्ब्बमभिवादयेत्" ॥

**आध्यानं**, क्ली, (आङ् + ध्यै + ल्युट् ।) ध्यानं ।
चिन्ता ।

राज्यं सुराणामपि चाधिपत्यं” ॥

इति श्रीभगवद्गीतायां २ अध्यायः ८ ॥

(यथा मनुः १२ । १०० ।

“सर्व्वलोकाधिपत्यञ्च

वेदशास्त्रविदर्हति” ।)

**आधिभोगः**, पुं, (आधेर्बन्धकस्य भोगः ।) बन्धक-

द्रव्यस्य भोगः ॥

**आधिभौतिकं**, त्रि, (अधिभूत + ठञ् । अनुशति-

कादीनां चेत्युभयपदवृद्धिः ।)

दुःखविशेषः । यथा ।

“वाह्योपायसाध्यं दुःखं द्वेधा ।

आधिभौतिकं आ-

धिदैविकञ्च । तत्राधिभौतिकं

मानुषपशुमृगप-

क्षिसरीसृपस्थावरनिमित्तं” । इति

साङ्ख्यतत्त्व-

कौमुदी ॥ (“तत्तु सप्तबिधे

ब्याधावुपनिपतति” ।

इति सुश्रुतः ॥)

**आधिमन्यवः**, पुं, (आधि + मन्यु + अण् ।) ज्वराग्निः ।

इति हारावली ॥

**आधिवेदनिकं**, त्रि, (अधि + विद् + ल्युट् । ततः

अधिवेदन + ठञ् ।) द्वितीयविवाहार्थं

प्रथमस्त्रियै

दत्तधनादि । यथा, --

“अधित्विन्नस्त्रियै देयमाधिवेदनिकं समं

।

न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्द्धं

प्रकीर्त्तितं” ॥

इति याज्ञवल्क्यः ॥

**आधुतः**, त्रि, (आङ् + धु + क्तः ।) आधूतः ।

कम्पितः । इत्यमरटीकायां रायमुकुटः

॥

निक्षिप्य एज्ञत्वं गतः” । उत्तरचरिते ।

“ज्यानि-

र्घोषममन्ददुन्दुभिरवैराध्मातमुज्जृम्भयन्”

।)

**आध्मानं**, क्ली, (आङ् + ध्मा + ल्युट् ।) वातव्याधि-

विशेषः । तस्य रूपं ।

“साटोपमत्युग्ररुजमाध्मातमुदरं भृशं ।

आध्मानमिति जानीयाद्घोरं वातनिरोधजं”

॥

इति निदानं ॥ पेटफाँपा इति भाषा ।

तस्य चिकित्सा यथा, --

“आध्माने लङ्घनं पूर्ब्बं दीपनं पाचनं ततः ।

फलवर्त्तिक्रियां कुर्य्यात् वस्तिकर्म्म च

शोधनं ॥

कर्षमात्रा भवेत् कृष्णा त्रिवृता स्यात्

पलोन्मिता ।

खण्डादपि पलं ग्राह्यं चूर्णमेकत्र कारयेत् ॥

भधुनाक्षमितं लिह्यातं चूर्णमाध्माननाशनं”

॥

नारायणचूर्णं ॥ १ ॥

“दारुहैमवतीकुष्ठशताह्वाहिङ्गुसैन्धवैः ।

लिम्पेब् कोष्णैरम्लपिष्टैः शूलाध्मानयुतोदरं

॥

हैमवती वचा । दारुषट्कलेपः ॥ २ ॥

“अभयारग्वधो धात्री दन्ती तिक्ता स्नुही

त्रिवृत् ।

मुस्ता प्रत्येकमेतानि ग्राह्याणि पलमात्रया ॥

तानि संक्षुद्य सर्व्वाणि जलाढकयुगे पचेत् ।

तत्र तोयेऽष्टमं भागं कषायमवशेषयेत् ॥

निस्त्वग्जैपालवीजानि नवानि पलमात्रया ।

तनुवस्त्रधृतान्येव तस्मिन् क्वाथे शनैः पचेत्

॥

ज्वालयेदनलं मन्दं यावत् क्वाथो घनो

भवेत् ।

ततः खल्ले क्षिपेत् भागानष्टौ जैपालबीजतः

॥

भागांस्त्रीन् नागराद्द्वौ च मरिचात् द्वौ च

पारदात् ।

इत्यमरः ॥

**आध्यापकः**, पुं, (आ सम्यक् अध्यापयति यः इति

अध्यापकः । स एव स्वार्थे अण् ।)

अध्यापकः । इति

शब्दरत्नावली ॥

**आनः**, पुं, (अन् + घञ्) उच्छ्वासः । वहिर्मुखश्वासः ।

इति हेमचन्द्रः ॥ (अन्तःस्थितस्य

प्राणवायोर्नासि-

कयोच्छ्वासः ।)

**आनकः**, पुं, (आङ् + अन् + ण्वुल्) पटहः । भेरी ।

मृदङ्गः । शब्दयुक्तमेघः । इति मेदिनी ॥

(यथा, भगवद्गीतायां १ । १३ ।

“ततः शङ्खाश्च भेर्य्यश्च पणवानकगोमुखाः”

।)

**आनकदुन्दुभिः**, पुं, (आनकाः दुन्दभयो देववद्यबिशेषाः

यस्य जन्मनि । वसुदेवजन्मनि देवा

दुन्दभिध्व-

निञ्चक्रुः ।) बसुदेवः । इत्यमरः ॥

(कृष्णपिता ।

यथा -- हरिवंशे ॥

“वसुदेवो महाबाहुः पूर्ब्बमानकदुन्दुभिः ।

जज्ञे यस्य प्रसूतस्य दुन्दुभ्यः प्रानदन् दिवि

॥

आनकानां च संह्लादः सुमहानभवद्दिवि” ॥)

**आनकदुन्दुभिः**, पुं स्त्री, (आनकः प्रोत्साहको दुन्दु-

भिः ।) वृहड्ढक्का । इत्यमरटीकायां भरतः ॥

**आनतः**, त्रि, (आङ् + नम् + क्तः ।) नतः । तत्-

पर्य्यायः । अवाग्रः २ अवनतः ३ । इत्यमरः

॥

(अधोमुखः, बिनतः, प्रणतः, विनयनम्रः ।

यथा,

हरिवंशे ॥

“पितृभात्रोर्हि पादान् वै नमश्चक्रतुरानतौ” ।

महाभारते ।

**आधुनिकः**, त्रि, (अधुना + ठञ् ।) अधुनाजातः ।

नव्यः ॥

**आधूतः**, त्रि, (आङ् + धू + क्त ।) कम्पितः । इत्य-

मरः ॥ (विक्षिप्तः, अभिभूतः,

व्याकुलितः ।

आन्दोलितः, चालितः । यथा, रघुवंशे,

१ । ३८ ।

"पुष्परेणूत्किरैर्वातैराधूतवनराजिभिः"

।)

**आधेयं**, त्रि, (आङ् + धा + यत् ।) आधारस्थित-

गन्धकात् द्वौ च तानीह यावद्यामं विमर्दयेत्

॥

रसो नाराचनामायं भक्षितो रक्तिकामितः ।

जलेन शीतलेनैव रोगानेतान् विनाशयेत् ॥

आध्मानं शूलमानाहं प्रत्याध्मानं तथैव च ।

"स कदाचित् मृगं विद्ध्वा

वाणेनानतपर्ब्बणा" ।

मनुः ।

"रम्यमानतसामन्तं स्वाजीव्यं देशमावसेत्"

।)

**आनतिकरः**, त्रि, (आनति + कृ + अण् ।) पारितो-

:षिकः । यथा । प्रायश्चित्तोपदेशाय वस्त्रादिना

ब्राह्मणस्तोषणीयः । यथा मिताक्षरायां पराशरः ।

"पापं प्रख्यापयेत् पापी धेनुं दत्त्वा तथा वृषं" ।

एतच्चोपलक्षणं ।

"प्रख्याप्य पापं वक्तृभ्यः किञ्चिद्दत्त्वा व्रतं चरेत् ।"

इति स्मृतेः ।

देवलवचने "तोषयित्वा द्विजोत्तमान् इति" ।

अत्र तोषयित्वा इति श्रवणात् आनतिकरत्वेन

तद्ग्रहणान्नदोषः । इति प्रायश्चित्ततत्त्वं ॥

**आनद्धं**, क्ली, (आनह्यते चर्म्मणा बध्यते इति । आङ्- + नह + क्तः ।) चर्म्मबद्धमुखबाद्यमात्रं । तत्तु मुर-

जादि । इत्यमरः ॥ कल्पमात्रं । तत्तु

वेशभूषादि ।

इत्यजयपालः ॥

**आनद्धः**, त्रि, (आङ् + नह् + कर्म्मणि + क्तः ।) सन्धितः । बद्धः । इति मेदिनी ॥ (यथा सुश्रुते ।

"च्छन्नस्तुषारैः सविता हिमानद्धा जलाशयाः" ।)

**आननं**, क्ली, (आनिति अनेन । आङ् + अन् + ल्युट्) मुखं । इत्यमरः ॥ ("तदाननं मृत्सुरभि

क्षितीश्वरः"

इति रघुः । ३ । ३ ।)

**आनन्दः**, पुं, (आङ् + नन्द + घञ्) आह्लादः । तत् पर्य्यापः । आबन्दथुः २ शर्म्म ३ शातं ४ सुखं ५

सुत् ६ प्रीतिः ७ प्रमोदः ८ हर्षः ९ प्रमदः १०

आमोदः ११ समदः १२ । इत्यमरः ॥

(यथा, उत्तरचरिते ।

"यत्रानन्दाश्च मोदाश्च यत्र स्निग्धाश्च

सम्पदः" ।

"कृस्नदेहाश्रितं शुक्रं

प्रसन्नमनसस्तथा ।

स्त्रीषु व्यायच्छतश्चापि हर्षात्तत्

संप्रवर्त्तते ॥"

इति सुश्रुतः ॥)

**आनन्दमयकोषः**, पुं, (आनन्दमयस्य परमात्मनः कोष इवावरकः ।) सत्त्वप्रधानाज्ञानं ।

तत्पर्य्यायः ।

कारणशरीरं २ सुषुप्तिः ३ । इति

वेदान्तः ॥

**आनन्दा**, स्त्री, (आनन्दयति या । आङ् + नन्द + णिच् + अच् + टाप्) विजया ।

आरामशीलता ।

इति राजनिर्घण्टः ॥

**आनन्दिः**, पुं, (आङ् + नन्द + किः ।) आनन्दः । हर्षः । इति शब्दमाला ॥

**आनन्दितः**, त्रि, (आङ् + नन्द + क्त । यद्वा आनन्दः सञ्जातोऽस्य । आनन्द + इतच् ।)

आनन्दयुक्तः ।

हृष्टः । आह्लादितः ॥ (यथा महाभारते ॥

"पुनरानन्दिताः सर्व्वे मथुरायां

वसामहे ॥")

**आनन्दी**, [न्] त्रि, (आनन्द + इनि ।) आनन्द-विशिष्टः ॥

**आनन्दी**, स्त्री, वृक्षविशेषः । आकन्दपाता इति ख्याता । इति शब्दचन्द्रिका ॥

**आनयः**, पुं, (आनीयते वेदाध्ययनायात्र । आङ् + नीङ + अच्) उपनयनं । इति

हेमचन्द्रः ॥

अस्य चिकित्सामाह । भावप्रकाशे यथा, --

"तुल्यकारणकार्य्यत्वादुदावर्त्तहरीं क्रियां ।

आनाहेषु च कुर्व्वीत विशेषश्चाभिधीयते ॥ * ॥

त्रिवृत्कृष्णाहरीतक्यो द्विचतुःपञ्चभागिकाः ।

गुडेन तुल्या गुटिका हरत्यानाहमुल्वणं ॥ * ॥

वर्त्तिस्त्रिकटुसैन्धव

सर्षपगृहधूमकूष्ठमदनफलैः ।

मधुनि गुडे वा पक्वै-

र्विहिता साङ्गुष्ठसम्मिता विज्ञैः ॥

वर्त्तिरियं दृष्टफला

शनैः प्रणिहिता गुदे घृताभ्यक्ता ।

आनाहमुदरजार्त्तिं

शमयति जठरं तथा गुल्मम्" ॥ * ॥

इति त्रिकटुकाद्यावर्त्तिः ॥ * ॥

चक्रपाणिसङ्ग्रहे तु चिकित्सा यथा, --

"उदावर्त्तक्रियानाहे सामे लङ्घनपाचनम्" ॥

"द्विरुत्तरा हिङ्गुवचा सकुष्ठा

सुवर्च्चिका चेति विडङ्गचूर्णं ।

सुखाम्बुनानाहविसूचिकार्त्ति-

हृद्रोगगुल्मोद्र्ध्वसमीरणघ्नम् ॥ * ॥

वचाभयाचित्रकयावशूकान्

सपिप्पलीकातिविषान् सकुष्ठान् ।

उष्णाम्बुनानाहविमूढवातान्

पीत्वा जयेदाशु हितौदनाशी ॥ * ॥

त्रिवृद्धरीतकीश्यामाः स्नुहीक्षीरेण भावयेत् ।

वटिका मूत्रपीतास्ता ज्येष्ठा आनाहभेदिकाः ॥ * ॥

राठ-धूम-विडव्योष-गुड-मूत्रैर्विपाचिता ।

गुदेऽङ्गुलसमावर्त्तिर्निधेयानाहशूलनुत् ॥ * ॥

मूलकं शुष्कमात्रञ्च वर्षाभूमूलपञ्चकम् ।

आरेवतफलञ्चापि पक्त्वा तेन पचेद्घृतम् ।

तत् पीतमात्रं शमयेदुदावर्त्तमसंशयम्" ॥ * ॥

शुष्कमूलकाद्यं घृतम् ॥ * ॥) दैर्घ्यं । इति

रमानाथः ॥

**आनिलिः**, पुं, (अनिलस्य वायोरपत्यं अनिल +

मनुः ।

“आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन”

।)

वासुदेवस्य बलविशेषः । इति हेमचन्द्रः ॥

**आनन्दः**, त्रि, (आनन्द + अर्श आदित्वात् अच् ।)

आनन्दविशिष्टः । हर्षयुक्तः । सुखी ।

इत्यमरटीका ॥

(“गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति”

।

इत्यमरोक्तेः अत्र गुणिलिङ्गः ।)

**आनन्दथुः**, पुं, (आङ् + नन्द + अथुच् ।) आनन्दः ।

हर्षः । इत्यमरः ॥ तद्युक्ते त्रि ॥

**आनन्दनं**, क्ली, (आङ् + नदि + ल्युट्) गमनागमन-

समये

सुहृदादेरालिङ्गनारोग्यस्वागतादिप्रश्नादि-

द्वारा आनन्दोत्पादनं । तत्पर्य्यायः ।

सभाजनः २

स्वभाजनः ३ सुभाजनः ४ आप्रश्नः ५

आमन्त्रणं ६ ॥

इत्यमरः तट्टीका च ॥ (आनन्दजननं, हर्षोत्-

पादनं । प्रभोदकरः, सुखजनकः । यदुक्तं ।

“मित्रं प्रीतिरसायनं नयनयोरानन्दनं चेतसः”

।

इति हितोपदेशे ।)

**आनन्दपटं**, क्ली, (आनन्दाय पटम् ।) नवोढावस्त्रं ।

इति हारावली ॥

**आनन्दप्रभवं**, क्ली, (आनन्दः प्रभवोयस्य तत् ।) रेतः ।

वीर्य्यं । इति हेमचन्द्रः ॥

(“वाय्वाकाशादिभिर्भावै सौशिर्य्यं

जायतेऽस्थिषु ।

तेन स्रवन्ति तच्छुक्रं नवात् कुम्भादिवोदकं ॥

म्वोतोभिः स्यन्दते देहात् समन्तात्

शुक्रवाहिभिः ।

हर्षेणोदीरितं रागात् सङ्कल्पाच्च मनोभवात् ॥

**आनयनं**, क्ली, (आङ् + नी + ल्युट् ।) स्थानान्तरनयनं ।

आना इति भाषा ॥ (यथा रामायणे ।

“व्यादिशत्पुरुषांस्तत्र राज्ञामानयने

बहून्” ॥)

**आनर्त्तः**, पुं, (आङ् + नृत् + घञ् ।) देशविशेषः ।

द्वारका इति ख्याता । नृत्यस्थानं ।

युद्धं । इत्य-

मरः ॥ जलं । इति मेदिनी ॥

आनर्त्तदेशवासी

लोकः । इत्यमरटीका ॥ (यथा

हरिवंशे । “आन-

र्त्तान् कालकूटांश्च कुलिन्दांश्च

विजित्य सः” ॥

स्वनामख्यातो राजा ।

“शर्यातिर्मिथुनं त्वासीदानर्त्तो नाम

विश्रुतः ।

“आनर्त्तस्य तु दायादो रेवो नाम

महाद्युतिः” ॥

“आनर्तविषयश्चासीत् पुरी चास्य

कुशस्थली” ।

“आनर्त्तस्तु विभोः पुत्रः

सुकुमारस्ततोऽभवत्” ॥)

**आनायः**, पुं, (आङ् + नीञ् + घञ् ।) जालं । इत्यमरः ॥

**आनाय्यः**, पुं, (आनाय्यते गार्हपत्यादानीय संस्क्रियते

ऽसौ आङ् + नी + ण्यत् ।)

दक्षिणाग्निः । इत्यमरः ॥

गार्हपत्यादग्नेरानीय यो

दक्षिणाग्निरारोप्यते ।

तत्र । इति भरतः ॥ होम करिवार

निमित्ते धर

हैते आनिया दक्षिणदिके राखा आगन्

इति

भाषा ।

**आनाहः**, पुं, (आङ् + नह् + घञ् ।) मूत्रपुरीष-

इञ् ।) हनूमान् । इति त्रिकाण्डशेषः ॥

(भीमः ।)

**आनिली**, स्त्री, (अनिल + अण् + ङीप् ।) स्वाति-

नक्षत्रं । इति हेमचन्द्रः ॥

**आनीलः**, पुं, नीलघोटकः । इति हेमचन्द्रः ॥

(असितः । ईषन्नीलः । यथा

किरातार्ज्जनीये,

“आनीलाभैर्विरचितपरभागा रत्नैः” ।)

**आनुकूल्यं**, क्ली, (अनुकूल + ष्यञ् ।) अनुकूलता ॥

(साम्मुख्यं । प्रसादः । सहायता । यथा

याज्ञवल्क्यः ।

“यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्द्धते” ।

यथा, -- रामायणे ।

“रमतश्चानुकूल्येन ययुः संवत्सरा दश” ।)

**आनुगत्यं**, क्ली, (अनुगतस्य भावः कर्म्म वा । अनु-

गत + ष्यञ् ।) अनुगतत्वं । अनुगतस्य भाव

इत्यर्थे

ष्ण्यप्रत्ययेन निष्पन्नम् ॥

**आनुपूर्व्वी**, स्त्री, क्ली, (अनुपूर्व्व + अण् ।) परिपाटी ।

अनुक्रमः । इत्यमरः ॥ (यथा मनुः ३ । २३

।

“षडानुपूर्ब्ब्या विप्रस्य क्षत्रस्य चतुरो वरान्”

॥

यथा रामायणे ।

“आनुपूर्ब्ब्या स धर्म्मज्ञः पप्रच्छ कुशलं

कुले” ।)

| वस्तौ संभृत्य निर्याति स्यलान्निम्नादिवोदकं ।"<br>इति चरकः ॥ | रोधकरोगः । तत्पर्य्यायः । विबन्धः २ । इत्यमरः ॥<br>विष्टम्भः ३ मलरोधनः ४ । इति राजनिर्घण्टः ॥<br>("आनाहार्त्तं ततो दृष्ट्वा तत्सैन्यमसुखार्द्दितम्" ।<br>इति महाभारते ।) तस्य सम्प्राप्तिरूपे । यथा,<br>"आमं शकृद्वा निचितं क्रमेण<br>भूयो विबद्धं विगुणानिलेन ।<br>प्रवर्त्तमानं न यथास्वमेनं<br>विकारमानाहमुदाहरन्ति" ॥ इति निदानं ॥<br>("यस्य वातः प्रकुपितः कुक्षिमाश्रित्य तिष्ठति ।<br>नाधो व्रजति नाप्यूद्र्ध्वञ्चानाहस्तस्य जायते" ॥<br>इति चरकः ॥ | |
|---|---|---|

**आनुमानिकः**, त्रि, (अनुमानाय हितः । अनुमान + ठक् । युक्तिसिद्धः । सांख्यमते प्रधानं प्रकृतिः ।) अनुमानसम्बन्धीयः । अनुमानविषयीभूतः ॥

**आनुरक्तिः**, स्त्री, (आ + अनु + रन्ज + क्ति ।) अनु- रागः । (आसक्तिः । अनुरक्तिः ॥)

**आनुविधित्सा**, स्त्री, (आ + अनु + वि + धा + सन् + अङ् + टाप् ।) उपकृतेरप्रत्युपकारेच्छा । इति पुराणम् ॥

**आनूपः**, पुं, (अनूप + अण् ।) अनूपदेशस्थजन्तु- मात्रं । तच्च खड्गिमहिषवराहादि । एषां मांस- गुणाः । गुरुत्वं । उष्णत्वं । मधुरत्वं । स्निग्धत्वं । शुक्रकारित्वं । वायुनाशित्वञ्च । इति राजवल्लभः ॥ अनूपदेशजलगुणाः । घनत्वं । गुरुत्वं । पिच्छि- लत्वं । मधुरत्वं । श्लेष्मजनकत्वं । स्निग्धत्वं । अग्नि- नाशित्वं । प्रमेहश्लीपदच्छर्द्दिगलगण्डादिरोग- कारित्वञ्च । इति राजनिर्घण्टः ॥ अनूपदेशस्थ- जन्तोर्लक्षणं तन्मांसस्य गुणाश्च । "कुलेचराः प्लवाश्चापि कोशस्थाः पादिनस्तथा । मत्स्या एते समाख्याताः पञ्चधानूपजातयः ॥ चामरान्दोलनादुद्वेल्लद्भुजवल्लिकङ्कणझनत्कारः क्षणं वार्य्यताम्" । इति कालिदासः । पुनः पुन- रभ्यासः । मुहुरालोचनम् ।)

**आन्दोलितं**, त्रि, (आन्दोल + क्त ।) कृतान्दोलनं । तत्पर्य्यायः । चलितं २ कम्पितं ३ धूतं ४ वेल्लितं ५ । इति हेमचन्द्रः ॥

**आन्धसिकः**, त्रि, (अन्धस् + ठक् ।) पाचकः । सूप- कारः । इत्यमरः ॥

**आन्वयिकः**, त्रि, (अन्वय + ठक् ।) प्रशस्तकुलजः । सत्कुलोद्भवः । तत्पर्य्यायः । कौलः २ । इति त्रि- काण्डशेषः । अन्वयसम्बन्धी ॥ (कुलीनः । दिव्य- भावरतः । कुलाचारी । साधकः । "और्द्धस्रोत- सिकः शैवः कौल आन्वयिकः स्मृतः" । इति त्रिकाण्डशेषः ।)

**आन्वीक्षिकी**, स्त्री, (श्रवणादनु ईक्षा पर्य्यालोचना प्रयोजनमस्याः । अनु + ईक्षा + ठञ् + ङीप् ।) तर्कविद्या । न्यायविद्या । इत्यमरः ॥ दुर्गा । यथा, "आत्मवेदनशीलत्वादन्वीक्षणपराथवा । अन्वीक्षां कुरुते यस्मात्तस्मादान्वीक्षिकी स्मृता" ॥ इति देवीपुराणे ४५ अध्यायः ॥ (अध्यात्मविद्या, प्रत्यक्षपरोक्षाभ्यामीक्षितस्य अर्थस्यानु पश्चात् ईक्षणं अन्वीक्षा सा प्रयोजनं यस्याः सा आन्वी- क्षिकी अनुमानविद्या न्यायदर्शनवैशिषिका- दिका । इयं हि त्रयीवार्त्तादिविद्याचतुष्टयान्त- र्गता आत्मविज्ञानहेतुका धर्म्मार्थसंसाधिका रा- जभिरवश्यं रक्षणीया सती विद्येति कथ्यते ॥ यथा, कामन्दकीयनीतिसारे ।

**आपक्वं**, त्रि, (आङ् + पच् + क्त ।) ईषत्पक्वकला- यादि । तत्पर्य्यायः । पौलिः २ अभ्यूषः ३ । इत्य- मरः ॥ रुटी इति केचित् ॥ (यथा ऋतुसंहारे ॥ "आपक्वशालिललितानतगात्रयष्टिः प्राप्ता शरन्नवबधूरिव रम्यरूपा" ॥ १ ॥)

**आपगा**, स्त्री, (अपां समूहः आपं । तस्य समूहे इत्यण् । तत आपेन जलसमूहेन गच्छति प्रचल- तीति । आप् + गम् + ड + टाप् ।) नदी । इत्यमरः । (यथा रामायणे । "आपगाः कृतपुण्यास्ताः पद्मिन्यश्च सरांसि च" ॥ "आपगाश्च महानूपाः सानुमन्तश्च पर्ब्बताः" ॥ तथाच माघे २ । १०० । "सम्भूयाम्भोधिमभ्येति महानद्या नगापगा" ॥)

**आपणः**, पुं, (आङ् + पण + अच् ।) पण्यविक्रय- शाला । दोकान इति भाषा । तत्पर्य्यायः । निषद्या २ विपणिः ३ पण्यवीथिका ४ । इत्यमरः ॥ वतुष्कं हट्टे इत्यन्ये । आपणादिद्वयं हट्टे विपण्यादिद्वयं हट्टगृहे इति केचित् । इत्यमरटीकायां भरतः । (यथा रामायणे । "माल्यापणेषु राजन्ते नाद्य पण्यानि वै तथा" । तथा महाभारते ।

आनूपा मधुराः स्निग्धा गुरवो वह्निमर्द्दनाः ।
श्लेष्मलाः पिच्छिलाश्चापि मांसपुष्टिप्रदा भृशं ॥
तथाभिष्यन्दिनस्ते हि प्रायोऽपथ्यतमाः स्मृताः” ॥
इति भावप्रकाशः ॥
(“सृमरश्चमरः खड्गो महिषो गवयो गजः ।
न्यङ्कुर्व्वराहश्चानूपा मृगाः सर्व्वे रुरुस्तथा” ॥
“गुरूष्णो मधुरो नातिधान्वानूपनिषेवणात्” ।
इति चरकः ॥ तथाच हारीतः ॥
“आनूपास्तेषु विज्ञेयाः श्लेष्मना वातकोपनाः” ।
आनूपवर्गस्तु पञ्चविधः । यथा ।
“कूलचराः प्लवाः कोशस्थाः पादिनो मत्स्याश्चेति” इति सुश्रुतः ॥
बहुजलयुक्ते, त्रि ।)

**आनृशंस्यं**, क्ली, (अनृशंसस्य भावः । अनृशंस +
ष्यञ् ।) अनिष्ठुरता ॥ (अक्रौर्य्यं । अहिंसत्वं । का-
रुण्यं । यथा मनुः १ । १०१, ३ । ५४, ३ । ११२ ।
“आनृशंस्यात् ब्राह्मणस्य भुञ्जते हीतरे जनाः” ।
“अर्हणं तत्कुमारीणामानृशंस्यं च केवलम्” ॥
“मोजयेत् सह भृत्यैस्तावानृशंस्यं प्रयोजनम्” ॥)

**आन्तरीक्षं**, क्ली, (अन्तरीक्ष + अण् ।) अन्तरीक्षं ।
गगनं । इति द्विरूपकोषः ॥ (यथा महाभारते ।
“आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वतो ।
विद्याश्चतस्र एवैता लोकसंस्थितिहेतवः” ॥
“आन्वीक्षिक्यात्मविज्ञानं धर्म्माधर्म्मौ त्रयीस्थितौ ।
अर्थनर्थौ च वार्त्तायां दण्डनीतौ नयानयौ” ॥
इति ।)

**आप** ऌ न औ कि ष्यापने । (चुरा० पक्षे भ्वादि०-
स्वादि० वा-उभ०-पर०-सक०-सेट् ।) इति कवि-
कल्पद्रुमः ॥ ऌ आपत् । न आप्नोति कीर्त्ति-
र्ब्रह्माण्डं । औ आप्ता । कि आपयति आपति ।
स्वराज्यं प्राप्स्यते भवान् । इति गणकृतानित्य-
त्वात् । इति दुर्गादासः ॥ (पालने ।
“स्वे स्वेऽन्तरे सर्व्वमिदमुत्पाद्यापुश्चराचरम्” ।
इति मनुः । (अभि) अभिलाषे ।
“नान्यदत्तमभीप्सामि स्थानमम्ब ! स्वकर्म्मणा ।
इच्छामि तदहं स्थानं यन्न प्राप पिता मम” ॥
इति विष्णुपुराणम् । (प्रति + अव) प्रतिग्रहणे ।
“तां प्रत्यवापुरविलम्बितमुत्तरन्तो धौताङ्गलग्ननवनीलपयोजपत्रैः” । इति ।
शिशुपालबधे । (प्र) उपगमने ।
“ते च प्रापुरुदन्तन्तं बुबुधे चादिपूरुषः” ।
इति रघुवंशे १० । ६ । इत्यादि ।)

**आपः**, पुं, (आप् + घञ् ।) अष्टवसुमध्ये वसुविशेषः ।
इति जटाधरः ॥

**आपः** [स्] क्ली, (आप् + असुन् ।) जलं । पापं ।
इत्युणादिकोषः ॥
“भक्ष्यमाल्यापणानाञ्च ददृशुः श्रियमुत्तमां” ॥)

**आपणिकः**, पुं, (आङ् + पण् + इकन् । अथवा आ-
पण + ठक् ।) बणिकः ।
इत्युणादिकोषः ॥ दोकानि मुदि व्यवसायी इत्यादि भाषा ।
(पण्यानां क्रयवि-
क्रयादिविषयके, त्रि ॥)

**आपतिकः**, पुं, (आङ् + पत् + इकन् ।) श्येनपक्षी ।
वाज इति भाषा । दैवायत्ते त्रि ।
इत्युणादिकोषः ॥

**आपत्**, [द्] स्त्री, (आङ् + पद् + क्विप् ।) विपत् ।
विपत्तिः । इत्यमरः ॥ यथा ।
“आपत्सु मूढो द्युतिमान्यः सम्यक् प्रतिपद्यते
कर्म्माण्यवश्यकार्य्याणि तमाहुः पुरुषं बुधाः” ॥
इति वह्निपुराणम् ॥ ० ॥ किञ्च ।
“आपदि किं शरणोयं शरणीयं चरणयुगलम-
म्बायाः । तच्छरणं किं कुरुते ब्रह्मादीनपि किङ्क-
रान् कुरुते” ॥ इत्युद्भटः ॥ ० ॥ मनुः ११ । २९-३० ।
“विश्वैश्च देवैः साध्यैश्च ब्राह्मणैश्च महर्षिभिः ।
आपत्सु मरणाद्भीतैर्व्विधेः प्रतिनिधिः कृतः” ॥
“प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते ।
न साम्परायिकं तस्य दुर्म्मतेर्व्विद्यते फलम्” ॥
इत्येकादशीतत्त्वम् ॥

“उत्पातांस्त्रिविधान् प्रापुर्नारदो भगवानृषिः ।
दिव्यांश्चैवान्तरीक्षांश्च पार्थिवांश्च पितामह” ॥)
अन्तरीक्षमववस्तुनि त्रि ॥ (यथा रामायणे ।
“स्वस्ति तेऽस्त्वान्तरीक्षेभ्यः पार्थिवेभ्यः पुनः पुनः” ॥)

**आन्तिका**, स्त्री, (अन्तिक + अण् + टाप् ।) अन्तिका ।

ज्येष्ठा भगिनी ॥ इति द्विरूपकोषः ॥

**आन्त्रिकः**, त्रि, (अन्त्र + ठक् ।) अन्त्रे भवः । अन्त्र-

सम्बन्धीयः ॥

**आन्दोल** त् क् दोलने । (अदन्तचुरा ०-उभ ०-अक ०

सेट् ।) इति कविकल्पद्रुमः ॥
आन्दुदोलत् । इति
दुर्गादासः ॥

**आन्दोलनं**, क्ली, (आन्दोल + ल्युट् ।) चलनं ।

कम्पनं ॥
(“किन्त्वासामरविन्दसुन्दरदृशां द्राक्-

“आपत्काले तु विप्रेण भुक्तं शूद्रगृहे यदि ।
मनस्तापेन शुद्ध्येत्तु द्रुपदां वा शतं जपेत्” ॥
इति प्रायश्चित्ततत्त्वम् ॥ ० ॥
“आपदर्थे धनं रक्षेत् दारान् रक्षेत् धनैरपि ।
आत्मानं सततं रक्षेत् दारैरपि धनैरपि” । इति ।
“जानीयात् प्रेषणे भृत्यान् बान्धवान् व्यसनागमे ।
मित्रञ्चापदि काले च भार्य्याञ्च विभवक्षये” ॥
इति च चाणक्यम् ॥ २९ ॥ २१ ॥

**आपत्तिः**, स्त्री, (आङ् + पद् + क्तिन् ।) दोषः ।

इति हेमचन्द्रः ॥ प्रापणं । आपत् । इति मेदिनी ॥

**आपत्प्राप्तः**, त्रि, (आपदं प्राप्तः । २ या तत्पुरुषः ।)

:विपद्ग्रस्तः । तत्पर्य्यायः । आपन्नः २ । इत्यमरः ॥

**आपद्**, स्त्री, (आङ् + पद् + क्विप् ।) विपत्तिः ।

इत्यमरः ॥ (यथा हितोपदेशे ।
“आपदामापतन्तीनां हितोऽप्यायाति हेतुतां” ।)

**आपदा**, स्त्री, (आ + पद् + अङ् + टाप् ।) विपत्तिः ।

इति रायमुकुटः ॥

**आपनं**, क्ली, (आप् + ल्युट् ।) प्रापणम् ॥ मरीचं । इति

शब्दचन्द्रिका ।

**आपनिकः**, पुं, (आङ् + पन् + इकन् ।) इन्द्रनील-

मणिः । किरातः । इत्युणादिकोषः ॥

**आपन्नः**, त्रि, (आङ् + पद् + क्तः ।) आपद्ग्रस्तः ।

तत्पर्य्यायः । आपत्प्राप्तः २ । इत्यमरः ॥ प्राप्तः ।
इति मेदिनी ॥ (यथा भागवते, --
“आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन् ।
ततः सद्यो विमुच्येत यद्बिभेति स्वयं भयं” ॥
यथा हितोपदेशे, --
“बलीयसाभियुक्तस्तु नृपोऽनन्यप्रतिक्रियः ।
आपन्नः सन्धिमन्विच्छेत्कुर्व्वाणः कालयापनं” ॥)

**आपन्नसत्त्वा**, स्त्री, (आपन्नं प्राप्तं सत्त्वं गर्भरूपेण

जन्तुरनया ।) गर्भवती । इत्यमरः ॥
(“सममापन्नसत्त्वास्ता रेजुरापाण्डुरत्विषः” ।
इति रघुः १० । ५० ।
“नार्य्याश्चापन्नसत्त्वायास्तथातिद्रुतमश्नतः” ॥
इति सुश्रुतः ॥)

**आपमित्यकं**, क्ली, (मेङ् प्रणिदाने उदीचां माङो

व्यतीहारे इति क्त्वा । कुगतीति समासः । समासे-
ऽनञिति ल्यबादेशः ।
मयतेरिदन्यतरस्यामितीत्वं

“आपातरम्या विषयाः
पर्य्यन्तपरितापिनः” ।
तथा च मनुः ११ । ९ ।
“मध्वापातो विषास्वादः
स्वधर्म्मप्रतिरूपकः” ।)

**आपानं**, क्ली, (आपीयते अस्मिन् । आङ् + पा +

अधि + ल्युट् ।) मद्यपानार्थसभा ।
तत्पर्य्यायः ।
पानगोष्ठिका २ । इत्यमरः ॥ मद
खावार चक्र
इति भाषा ॥ (यथा महाभारते,
वनपर्व्वणि २८०
अध्याये ।
“गन्धर्व्वाप्सरसो भद्रे ! मामापानगत
सदा” ।
१३ । तत्रैव २ अध्याये ।
“आपाने पानकलिता
दैवेनाभिप्रणोदिताः” ।
“ददर्श यदुवीराणामापाने वैशसं
महत्” ।)

**आपालिः**, पुं, (आङ् + पल् + इन् ।) केशकीटः ।

इति जटाधरः ॥ उकुन इति भाषा ।

**आपिञ्जरं**, क्ली, (ईषत् पिञ्जरम् ।) स्वर्णं । इति

राजनिर्घण्टः ॥
(“आपिञ्जरा बद्धरजःकणत्वा-
न्मञ्जर्य्युदारा शुशुभेऽर्ज्जुनस्य” ॥
इति रघुः १६ । ५१ । स्वर्णशब्देऽस्य
गणादयो
वक्तव्याः ॥)

**आपीडः**, पुं, (आङ् + पीड् + पचाद्यच् ।) शिखा-

आभाषणं । आलापः । इति हेमचन्द्रः
॥

**आपोक्लिमं**, क्ली, लग्नात् तृतीयषष्ठनवमद्वादशलग्नं ।

इति ज्योतिःशास्त्रं ॥

**आप्तः**, त्रि, (आप + क्तः ।) प्रत्ययितः । विश्वस्तः ।

इत्यमरः ॥ (यथा मानवे ७ । ८० ।
“सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेत्
वलिं” ।)
प्राप्तः । लब्धः । (तेभ्यः किमाप्तं मया
। इति कालि-
दासः ।) सत्यं । इति हेमचन्द्रः ॥
(हितः । कुशलः ।
“कुमारभृत्याकुशलैरनुष्ठिते
भिषग्भिराप्तैरथ गर्भभर्म्मणि” ।
इति रघुवंशे ३ । १२ । सन्निकृष्टः ।
आत्मीयः ।
“असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य
बन्धुवत् ।
विशुध्यति त्रिरात्रेण मातुराप्तांश्च
बान्धवान्” ॥
इति मनुः ३ । १२ । “आप्तान्
स्वन्निकृष्टान् सहो-
दरभातृमगिन्यादीन्” इति तट्टीका ।
बहुः ।
अधिकः । यथा मनुः ।
“यजेत राजा
क्रतुभिर्व्विविधैराप्तदक्षिणैः” ।
“राजा नानाप्रकारान् बहुदक्षिणान्
अश्वमेधा-
दियज्ञान् कुर्य्यात्” । इति तट्टीका ।

**आप्तः**, पुं, (आप् + क्त ।) भ्रमप्रमादविप्रलिप्साकरणा-

पाटवरूपदोषचतुष्टयरहितः । स च
ऋष्यादिः ।

अपमित्य निर्वृत्तं । अपमित्ययाचिताभ्यां कक्कना-
विति कक् ।) विनिमयात् प्राप्तं । इत्यमरः ॥
वदल करिया लओया द्रव्य इति भाषा ।

**आपवः**, पुं, (आपोर्वरुणस्यापत्यं पुमान् । आपु + अप-
त्यार्थे अण् ।) वशिष्ठमुनिः । इति महाभारतं ॥
("तत्ते शापात् विनिर्मुक्ता आपवस्य महात्मनः" ।
इति महाभारते । तथा च हरिवंशे, --
"यं लेभे वरुणः पुत्त्रं पुरा भास्वन्तमुत्तम् ।
वशिष्ठं नाम स मुनिः ख्यात आपव इत्युत" ॥)

**आपस्तम्वः**, पुं, धर्म्मशास्त्रप्रयोजकमुनिविशेषः ।
"मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः ।
यमापस्तम्बसंवर्त्ताः कात्यायनवृहस्पती ॥
पराशरव्यासशङ्खलिखिता दक्षगोतमौ ।
शातातपो वशिष्ठश्च धर्म्मशास्त्रप्रयोजकाः" ॥
इति याज्ञवल्क्यवचनं ॥

**आपस्तम्भिनी**, स्त्री, (आपः स्तभ्नातीति । आपस् +
स्तम्भ + णिनि ।) लिङ्गिनीलता । इति राज-
निर्घण्टः ॥

**आपाकः**, पुं, (आङ् + पच् + घञ् ।) कुम्भकारमृत्-
पात्रदहनस्थानं । इति जटाधरः ॥ पोयान् इति
भाषा ।

**आपातः**, पुं, (आङ् + पत् + घञ् ।) पतनं । तत्कालः ।
इति मेदिनी ॥ पातनं । इति शब्दचन्द्रिका ॥
(यथा हितोपदेशे ।
"आपातरमणीयानां संयोगानां प्रियैः सह" ।
स्थितमाल्यं । तत्पर्य्यायः । शेखरः २ । इत्यमरः ॥
(यथा रघुवंशे १८ । २८ ।
"तस्मिन् कुलापीडनिभे निपीडं
सम्यक् महीं शासति शासनाङ्कां" ॥)

**आपीतं**, क्ली, (आङ् + पा + क्त ।) माक्षिकधातुः ।
इति राजनिर्घण्टः ॥ (यथा रामायणे ।
"आपीतवर्णवदनं प्रसुप्तमिव भूमिपं" ।)

**आपीनं**, क्ली, (ओ प्यायी वृद्धौ । आङ् + प्याय +
क्त । प्यायः पी निष्ठायां सोपसर्गस्य
नः ।) ऊधः ।
गरुर पालान् । इति भाषा । इत्यमरः ॥ (यथा
रघुवंशे २ । १८ ।
"आपीनभारोद्वहनप्रयत्नात्
गृष्टिर्गुरुत्वाद्वपुषो नरेन्द्रः" ॥)

**आपीनः**, त्रि, (आङ् + प्याय + क्त ।) ईषत्स्थूलः ।
सम्यक्स्थूलः ॥

**आपीनः**, पुं, कूपः । इति वोपदेवः ॥

**आपूपिकं**, क्ली, (अपूपानां समूहः । अपूप + ठक् ।)
अपूपसमूहः । बहुपिष्टकं । इत्यमरः ॥

**आपूपिकः**, त्रि, (अपूपाः पण्यमस्य । अपूप +
ठक् ।) पिष्टकजीवी ।
पिष्टकविक्रयकर्त्ता । तत्-
पर्य्यायः । कान्दविकः २ भक्ष्यकारः
३ । इत्यमरः ॥
मयरा हालुइकर रुटिओयाला ।
इत्यादि भाषा ॥

**आपूप्यः**, पुं, (अपूप + यञ् ।) शक्तुः । चूर्णकः ।
इति स्मृतिः । आप्तास्तावत् ॥
"रजस्तमोभ्यां
निर्म्मुक्तास्तपोज्ञानबलेन ये ।
येषां त्रैकालममलं ज्ञानमव्याहतं सदा ॥
आप्ताः शिष्टा विबुद्धास्ते तेषां
वाक्यमसंशयं ।
सत्यं वक्ष्यन्ति ते कस्मादसत्यं
नीरजस्तमाः" ॥
इति चरकः ॥)

**आप्तगर्व्वः**, त्रि, (आप्तः प्राप्तः गर्व्वो येन सः ।
प्राप्ताहङ्कारः ॥)

**आप्ता**, स्त्री, जटा । इति हारावली ॥

**आप्तिः**, स्त्री, (आप् + क्ति ।) सम्बन्धः । योगः ।
लाभः । प्राप्तिः । इति हेमचन्द्रः ॥

**आप्तोक्तिः**, स्त्री, (आप्तस्य भ्रमप्रमादादिशून्यजनस्य
उक्तिः ।) सिद्धान्तवाक्यं । तत्पर्य्यायः । राद्धं २
सिद्धकतं ३ अभ्योतः ४ समयः ५
आगमः ६ ।
इति हेमचन्द्रः ॥

**आप्यं**, त्रि, (अपां विकारः तस्य विकारैत्वणत्वात्
स्वाथे ष्यञ् ।) जलविकारजं ।
फेनादि । तत्पर्य्यायः ।
अम्मयं २ । इत्यमरः ॥ (यथा हरिवंशे ।
"आप्याः प्रभूता ऋभवः पृथुकाश्च
दिवौकसः ।
लेखा नाम महाराज पञ्च देवगणाः
स्मृताः" ॥
"तस्मादाप्यो रसः परस्परसंसर्गात्
परस्परानु-

इति त्रिकण्डशेषः ॥ छातु मयदा वेसन

इत्यादि

भाषा ।

**आपूर्त्तिः**, स्त्री, (आङ् + पॄ + क्तिः ।) ईषत्पूरणं ।

सम्यक्पूरणं ॥

**आपूषं**, क्ली, (आ + पूष् वृद्धौ + करणे घञ् ।) रङ्गं ।

इति राजनिर्घण्टः ॥ रां इति भाषा ॥

(रङ्गशब्दे-

ऽस्य गुणादयो ज्ञातव्याः ॥)

**आपृच्छा**, स्त्री, (आङ् + प्रच्छ + अङ् + ततः टाप् ।)

ग्रहात् परस्परानुप्रवेशाच्च सर्व्वेषु

सर्व्वेषां सा-

न्निध्यमस्त्युत्कर्षापकर्षात्तु ग्रहणं" ।

इति सुश्रुतः ॥)

**आप्यं**, क्ली, वाप्यवृक्षः । इत्यमरटीकायां रायमुकुटः ।

कुड इति भाषा ॥

**आप्यायनं**, क्ली, (आङ् + प्याय् + ल्युट् ।) तर्पणं ।

प्रीणनं । तृप्तिः । इति राजनिर्घण्टः ॥

(यथा

महाभारते, --

"पितृप्रसादमिच्छेयं तव चाप्यायनं

पुनः" ।

यथा मनुः, ३ । २१३, ३ । २०३ ।

"लोकस्याप्यायनेयक्तान् श्राद्धदेवान्

द्विजोत्तमान् ।"

:"देवकार्य्याद्विजातीनां पितृकार्य्यं विशिष्यते ।
देवं हि पितृकार्य्यस्य पूर्ब्बमाप्यायनं स्मृतं" ॥)

**आप्यायितः**, त्रि, (आङ् + प्याय् + णिच् + क्तः ।)
तृप्तः । प्रीतः । बर्द्धितः । यथा, --
"एषा सूर्य्यस्य वीर्य्येण सोमस्याप्यायिता तनुः ।
पौर्णमास्यां स दृश्येत सम्पूर्णो दिवसक्रमात्" ॥
इति कौर्म्मे ४० अध्यायः ॥
आनन्दितः । इति लोकप्रसिद्धं ॥ (यथा हितोपदेशे ।
"आप्यायितोऽहं भवतामनेन वचनामृतेन" ॥)

**आप्रच्छनं**, क्ली, (आङ् + प्रच्छ + ल्युट् ।) गमनागम-
नादिसमये सुहृदादेरालिङ्गनारोग्यप्रश्नस्वागता-
दिनानन्दनं । इत्यमरः ॥

**आप्रच्छन्नं**, क्ली, (आङ् + प्र + छद् + क्त ।) आप्र-
च्छनं । तत्पर्य्यायः । आनन्दनं २ सभाजनं ३ ॥
इति हेमचन्द्रः ॥

**आप्रपदं**, क्ली, (प्रपदं पादाग्रं । तत्पर्य्यन्तं ।) पादाग्रपर्य्यन्तं ॥

**आप्रपदीनं**, त्रि, (आप्रपदं पदाग्रान्तं व्याप्नोतीति ।
आङ् + प्र + पद + ख ।) पादाग्रपर्य्यन्तपतित-
वस्त्रादि । इत्यमरः ॥ ("आप्रपदीनां कण्ठे यम-
दोलामिब गुणकुसुममालामारूढाम्" । इति

**आबन्धः**, पुं, (आबध्यतेऽनेन आङ् + बन्ध + घञ् ।)
योत्त्रं । इत्यमरहेमचन्द्रौ ॥ योत्दडी इति भाषा ।
भूषणं । प्रेम । बन्धनं । इति हेमचन्द्रः ॥
(यथा अमरुशतके । ३८ ॥
"गते प्रेमाबन्धे प्रणयबहुमाने विगलिते" ।)

**आबलिः**, स्त्री, आलिः । श्रेणी । इत्यमरः ॥ (समूहः,
आबली ।)

**आबिद्धः**, त्रि, (आङ् + व्यध् + क्तः ।) वक्रः । क्षिप्तः ।
इत्यमरः । पराहतः । इति मेदिनी ॥ मूर्खः ।
इति शब्दरत्नावली ॥

**आबिधः**, पुं, बेधनास्त्रं । इत्यमरः ॥ भोमर तुरपन
इत्यादि भाषा ।

**आबिलः**, त्रि, (आ + बिल + क ।) अनच्छः । अनि-
र्म्मलः । इत्यमरः ॥

**आबिलकन्दः**, पुं, मालाकन्दः । इति राजनिर्घण्टः ॥

**आबुत्तः**, पुं, (आप् + क्विप् + आपमुत्तनोति । अन्ये-
भ्योपीति ड ।) नाट्योक्तौ भगिनीपतिः ।
इत्यमरः ॥

**आभरणं**, क्ली, (आभ्रियतेऽनेन । भृञ भरणे । ल्युट् ।)
भूषणं । अलङ्कारः । इत्यमरः ॥
(तच्चतुर्व्विधं, आ-
बेध्यं बन्धनीयं, क्षेप्यं, आरोप्यं चेति । तत्र
आबेध्यं कुण्डलादि, बन्धनीयं कुसुमादिकं, क्षेप्यं
नूपुरादिकं, आरोप्यं हारादि । यदुक्तं, --
"स्याद्भूषणं त्वाभरणं चतुर्धा परिकीर्त्तितं ।
आबेध्यं बन्धनीयञ्च क्षेप्यमारोप्यमेव तत्" ॥
(यथा मनुः, ७ । २२२ ।

**आभास्वरः**, पुं, (आङ् + भास् + वरच् ।) चतुःषष्टि-
सङ्ख्यकगणदेवताविशेषः । इत्यमरः ॥
(यदुक्तं, आ-
भास्वराश्चतुःषष्टि । यद्वा, --
"आत्मा ज्ञाता दमो दान्तः शान्तिर्ज्ञानं शमस्तपः ।
कामः क्रोधो मदो मोहो द्वादशाभास्वरा इमे" ॥)

**आभिजनः**, पुं, (अभिजनादागतः । अभिजन + अण् ।)
अभिजनस्य भावः । कुलसम्बन्धीयः । गाँइ पदवी
इत्यादि भाषा ॥ (यथा कुमारसम्भवे, १ । २६ ।
"तां पार्ब्बतीत्याभिजनेन नाम्ना
बन्धुप्रियां बन्धुजनो जुहाव" ॥)

**आभिजात्यं**, क्ली, (अभिजात + ष्यञ् ।) अभिजातस्य
भावः । कौलिन्यं । पाण्डित्यं ॥
(महावंशजनन-
जनितमर्य्यादा । यथा रामायणे, --
"आभिजात्यं हि ते मन्ये यथा मातुस्तथैव च" ॥)

**आभिधा**, स्त्री, (अभि + धा + अङ् + टाप् ।) शब्दः ।
इति शब्दरत्नावली ॥

**आभिधातकं**, क्ली, (अभिधा + तक् + अच् ।) शब्दः ।
इति शब्दरत्नावली ॥

**आभिरूप्यं**, क्ली, (अभिरूप + ष्यञ् ।) अभिरूपस्य
भावः । यथा, --
"अर्च्चकस्य तपोयोगादर्च्चनस्यातिशायनात् ।

हर्षचरिते ५ म उच्छ्वासः ।)

**आप्लवः**, पुं, (आङ् + प्लु + अप् ।) स्नानं । इत्यमरः ॥

**आप्लवव्रती**, [न्] पुं, (आप्लवते प्लुङ् + अच्, आप्लव-
श्चासौ व्रती च । आप्लवः स्नानं तत्र व्रती नित्यस्ना-
यीति मुकुटः ।) आप्लुतव्रती । स्नातकब्राह्मणः ।
इत्यमरटीकायां भरतः ॥

**आप्लावः**, पुं, (आङ् + प्लुङ् + घञ् । जलप्रक्षेपः, जल-
सेचनं, जलमध्ये सम्यगवगाहनं, जलप्लावनं, ज-
लानां सर्व्वतः समुच्चलनं ।) स्नानं ।
इत्यमरः ॥

**आप्लुतः**, पुं, (आङ् + प्लुङ् + क्तः ।) आप्लुतव्रती । स्ना-
तकः । इति मेदिनी ॥

**आप्लुतः**, त्रि, (आङ् + प्लु + क्त ।) स्नातः । कृतस्नानः ।
इति मेदिनी ॥ (आप्लुतः सर्व्वपापेभ्यः स गङ्गायां
व्यमुच्यत । इति भारते ।) स्नाने क्ली इति हेम-
चन्द्रः ॥ (आर्द्रीकृतः । सिक्तः । पञ्चतन्त्रे, --
"अन्ये जर्ज्जरितकलेवरा रुधिराप्लुताः" । इति)

**आप्लुतव्रती**, [न्] पुं, (आप्लुतस्य स्नातकस्य व्रत-
मस्यास्तीति । आप्लुतव्रत + इनि ।) समाप्तवेदा-
ध्ययनस्नानशीलः । ब्रह्मचर्य्यं त्यक्त्वा यो गृहाश्रमं
गतः सः । समाप्तवेदाध्ययनो यः स्नानशील आ-
"वाहनानि च सर्व्वाणि शास्त्राण्याभरणानि
च" ।
यथा कुमारसम्भवे । ५ । ४४ ॥
"किमित्यपास्याभरणानि यौवने
धृतं त्वया वार्द्धकशोभि वल्कलं" ॥)

**आभा**, स्त्री, (आङ् + भा + अङ् + टाप् ।) शोभा
कान्तिः । इति हेमचन्द्रः ॥ दीप्तिः । ज्योतिः ॥
(वातरोगभेदः । ववुले । यथा भावप्रकाशे वात-
व्याधौ त्रिकशूलचिकित्सा, --
"आभा ववुलपर्य्यायः कथितः कोविदैरिह" ।)

**आभातिः**, स्त्री, (आङ् + भा + क्तिन् दीप्तिः, ज्यो-
तिः ।) छाया । इति राजनिर्घण्टः ॥

**आभाषणं**, क्ली, (आङ् + भाष् + ल्युट् ।) आलापः ।
कथनं । इत्यमरः ॥ (यथा रघुवंशे । २ । ५८ ॥
"सम्बन्धमाभाषणपूर्ब्बमाहुः" ।)

**आभासः**, पुं, (आङ् + भास् + पचाद्यच् ।) सदृशः ।
प्रतिविम्बं । इति वेदान्तः ॥ दीप्तिः । अभिप्रायः ॥
(प्रतिविम्बादिवदवास्तवस्वरूपमविद्याकार्य्यं, मृ-
षाबुद्धिः । यथा अध्यात्मरामायणे, --
"आभाषस्तु मृषाबुद्धिरविद्याकार्य्यमुच्यते ।
अविच्छिन्नं तु तद्ब्रह्म विच्छेदस्तु विकल्पतः ॥
आभासत्वपरं विम्बभूतमेवं त्रिधा चितिः ।
साभासबुद्धेः कर्त्तृत्वमवच्छिन्ने विकारिणि" ॥
तथा च पञ्चदशी ६ -- ७ ।
"चित्राधारेण वस्त्रेण सदृशा इव कल्पिताः ।
पृथक् पृथक् चिदाभासश्चैतन्याध्यस्तदेहिनां ॥
कल्प्यन्ते जीवनामानो बहुधा संसरत्न्यमी ।
आभिरूप्याच्च विम्बानां देवः सान्निध्यमृच्छति" ॥
इति तिथ्यादितत्त्वधृतहयशीर्षपञ्चरात्रीयवचनं ॥

**आभीरः**, पुं, (आ समन्तात् भियं राति । रा दाने
आत इति कः ।) गोपः । इत्यमरः ॥ आहिर इति
भाषा । स च ब्राह्मणादम्बष्ठायां जातः । इति
मनुः ॥

**आभीरपल्लिः**, स्त्री, (आभीराणां पल्लिः ।) गोप-
पल्ली । इत्यमरटीकायां रायमुकुटः ॥ गोयाला-
पाडा इति भाषा ॥

**आभीरपल्ली**, स्त्री, (आभीराणां पल्ली ।) गोपगृह-
समूहः । गोपग्रामः । गोपगृहं । गोपस्थानं ।
तत्पर्य्यायः । घोषः २ । इत्यमरः ॥

**आभीरी**, स्त्री, (आभीरपुंयोगादितिजातेरिति च
ङीष् ।) गोपस्त्रीजातिः । गोपपत्नी । तत्पर्य्यायः ।
महाशूद्री २ । इत्यमरः ॥ आहिरिणी इति
भाषा ॥

**आभीलं**, क्ली, (आ समन्तात् भियं लाति जनयति ।
आङ् + भी + ला + क ।) कष्टं । कृच्छ्रं । इत्यमरः ॥
(भयावहः, भीतिजनकः । यथा मेदिनी, --
"आभीलं न द्वयोः कृच्छ्रे वाच्यलिङ्गं भयानके" ॥
यथा महाभारते, --
"रात्रौ निशीथे स्वाभीले गतेऽर्द्धसमये नृप ।

श्रमान्तरं न गतः सोऽपि । आप्लुतं स्नानं तत्र

व्रती नित्यस्नायी इति व्युत्पत्तिः । इत्यमरटीकायां

भरतः ॥

**आघा**, [न्] पुं, (आप् + वुन् ।) वायुः । इति सिद्धा-

न्तकौमुद्यामुणादिवृत्तिः ॥

**आफूकं**, क्ली, अफेनं । इति वैद्यकं ॥ आफिं इति

भाषा । (अस्य गुणानाह । भावप्रकाशे ॥

“आफूकं शोषणं ग्राहि श्लेष्मघ्नं वातपित्तलं” ।)

**आबद्धः**, पुं, (आङ् + बन्ध + क्तः ।) दृढबन्धनं । प्रेम ।

अलङ्कारः । इति विश्वमेदिन्यौ ॥

(यथा मेघदूते ९ ।

“गर्भाधानक्षणपरिचयान्नूनमाबद्धमाला” ॥)

योत्रं । इति मेदिनी ॥

वस्त्राभासे स्थितान् वर्णान्

यद्वदाधारवस्त्रगान्” ॥)

प्रचारे पुरुषादानां रक्षसां घोरकर्म्मणाम्” ॥)

**आभीलः**, त्रि, (आङ् + भी + ला + क ।) कष्टयुक्तः ।

इत्यमरः ॥ भयानकः । इति मेदिनी ॥

**आभीक्ष्णं**, क्ली, (अभीक्ष्ण + ष्यञ् ।) अत्यर्थं । नित्यं ।

तद्युक्तक्रियायां त्रि । इति शब्दरत्नावली ॥

**आभेरी**, स्त्री, रागिणीविशेषः । इति हलायुधः ॥

**आभोगः**, पुं, (आङ् + भुज + घञ् ।) परिपूर्णता ।

इत्यमरः ॥ (यथा मेघटूते, उत्तरमेघे २१ ।

“गण्डाभोगात्कठिनविषमामेकवेणीं

करेण” ।

:यथा शाकुन्तले । "अकथितोऽपि ज्ञायत एव
यथायमाभोगस्तपोवनस्य" ॥)
वरुणस्य छत्रं । यत्नः । इति
मेदिनी ॥ कविनाम-
युक्तगानसमापककविता । भणिता
इति भाषा ।
यथा, --
"यत्रैव कविनाम स्यात् स आभोग
इतीरितः" ।
इति सङ्गीतदामोदरः ॥

**आभ्युदयिकं**, त्रि, (अभ्युदयः प्रयोजनम् अस्य । अभ्यु-
दय् + ठक् ।)
अभ्युदयनिमित्तश्राद्धादि । यथा ।
अथाभ्युदयिकश्राद्धं । तत्र गोभिलः
। आभ्युदयिके
श्राद्धे युग्मानाशयेत्
प्रदक्षिणमुपचारः ऋजवो
दर्भाः यवैस्तिलार्थः । सम्पन्नमिति
तृप्तिप्रश्नः ।
दधिवदराक्षतमिश्राः पिण्डाः
नान्दीमुखाः पितरः
प्रीयन्तामिति दैवे वाचयित्वा
नान्दीमुखेभ्यः पि-
तृभ्यः पितामहेभ्यः प्रपितामहेभ्यो
मातामहेभ्यः
प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च
प्रीयन्तां न
स्वधाञ्च प्रयुञ्जीत इति । अभ्युदयो
विवाहादिस्त-
दर्थं श्राद्धं आभ्युदयिकं ।
आभ्युदयिके अभ्युदय-
निमित्तके । अभ्युदयः इष्टलाभः ।
स च भूत-
च स्वधोच्यतामितिवत् प्रत्येकमेव
प्रीयन्तामिति
पृच्छेत् प्रत्युत्तरञ्च अस्तु स्वधा इतिवत्
तन्त्रेणैव
प्रीयन्तामिति । अत्र नान्दीमुखाः पितर
इत्यादि
नान्दीमुखेभ्यः पितृभ्य इति निर्देशेन च
नान्दी-
मुखं पितृगणमिति विष्णुपुराणेन च मातामहे-
भ्यश्च तथा नान्दीमुखेभ्य एव च इति
व्रह्मपुराणेन
च
नान्दीमुखपदश्रुतेस्तद्विशेषणविशिष्टस्यैवाभ्यु-
दयिके देवतात्वं ततश्चात्रापि
प्रीयन्तामितिवन्ना-
न्दीमुखेभ्यः पितामहेभ्य इति वाच्यं । न तु
नान्दी-
मुखविशेषणशून्यं पितामहेभ्यः प्रीयन्तामिति
पितृदयितोक्तं युक्तम् । नान्दीमुखेभ्यः पितृभ्य
प्रीयन्तामित्यत्रान्वितस्य नान्दीमुखेभ्य
इत्यस्य
पितामहेभ्य इत्यादावनन्वयित्वेन
प्रागुक्तयुक्त्या
प्राप्तस्य नान्दीमुखविशेषणस्य पितामहेभ्य
इत्या-
दावपि प्राप्तेः । एतेनात्र मैथिलोक्तं तन्त्रता-
विधानमपि निरस्तं । पार्ब्बणवत् स्वधाः
प्राप्तेः तन्निराशाय न स्वधां प्रयुञ्जीतेति अत्र
विशेषादभिलापे मन्त्रे च स्वधापदनिवृत्तिः ।
अभिलापे नम इति ब्रूयात् । "अमुकामुकगोत्रै-
तत् तुभ्यमन्नं स्वधा नमः" । इति ब्रह्मपुराणे
श्राद्धे
स्वधा नमः पदयोस्त्यागबोधकत्वेन
विकल्पाद-
त्राभ्युदयिके स्वधानिषेधान्नम एवान्वेति ।
पितृ-
नप्यत्र देववदित्यनेनापि पार्ब्बणोक्तविश्वदेव-
इति निदानं ॥ अन्यच्च ।
भुक्तमन्नावशेषं यत् रसं भूयस्त्वपाचितं ।
गतमामाशये यस्मात्तस्मादामं तदुच्यते ॥
अन्नमन्नरसं केचित् केचिच्च मलसञ्चयं ।
प्रथमां दोषटुष्टिञ्च आममित्यभिधीयते" ॥
अपक्वं । यथा, --
"शस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते ।
आमं वितुषमित्युक्तं स्विन्नमन्नमुदाहृतं" ॥
इति श्राद्धतत्त्वधृतवशिष्ठवचनं ॥
रोगविशेषः
तल्लक्षणादि अजीर्णशब्दे द्रष्टव्यं ॥
("उष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितं
।
दुष्टमामाशयगतं रसमामं प्रचक्षते ॥
आमेन तेन संपृक्ता दोषादूष्याश्च दूषिताः
।
सामाइत्युपदिश्यन्ते ये च रोगास्तदुद्भवाः
॥
स्रोतोरोधबलभ्रंशगौरवानिलमूढताः ।
आलस्यापक्तिनिष्ठीवमनोभेदारुचिक्लमाः
॥
लिङ्गं मलानां सामानां निरामाणां
विपर्य्ययः" ।
इति चरकः ॥
"आमेऽजीर्ने तु बन्धश्चेत् क्षाराम्लं लघु
शस्यते ।
पुष्पकासीशमिश्रं वा क्षीरेण लवणेन च ।
सदाडिमरसं सर्पिः पिबेद्वातेऽधिके सति"
॥
इति च चरकः ॥)

**आमः**, पुं, (अम + घञ् ।) रोगमात्रं । रोगभेदः । इति
मेदिनी ॥ मलवैषम्यरोगः । इति
राजनिर्घण्टः ॥
("पिबेत् स परिकर्त्तामे मले वा
दाडिमाम्बुना ।

भविष्यद्भेदेन द्विविधः । तत्र भूतं
पुत्त्रजन्मादि
भविष्यत् विवाहादि । एवञ्च
श्राद्धविवेकादौ
श्राद्धभेदगणने वृद्धिश्राद्धत्वेन
कर्म्माङ्गत्वेन च
यदुभयत्वमुक्तं
तदुभयमेवात्राभ्युदयिकत्वेनोपपन्नं
तेनाभिलापे आभ्युदयिकश्राद्धमिति
प्रयोज्यं । अत्र
यवैस्तिलार्थ इत्यनेन
पार्ब्बणश्राद्धप्राप्ततिलस्थाने
यवविधानात् आभ्युदयिकस्यापि
पार्ब्बणप्रकृतित्वं
प्रतीयते । अन्यथा तिलार्थ
इत्युपादानं व्यर्थं
स्यात् । ततश्च
पार्ब्बणप्रकृतिकत्वेन पित्र अयुग्म-
ब्राह्मणप्राप्तौ तन्निराशाय पितृपक्षे
ब्राह्मणयुग्म-
त्वोपदेशः दैवे युग्मत्वस्य
पार्ब्बणप्राप्तत्वान्नतदर्थो-
पदेशः ।
"अपसव्यं ततः कृत्वा
पितॄणामप्रदक्षिणं" ।
इति याज्ञवल्क्यवचनेन
देवकर्म्मानन्तरं पितृ-
कर्म्मकरणे प्राप्तवामोपचारनिराशाय
प्रदक्षिण-
मुपचारः तेन देवपितृकर्म्मकरणाय
दक्षिणावर्त्तेन
गन्तव्यं । द्विगुणभुग्नत्वनिराशाय
ऋजवो दर्भा
इति ऋजुत्वोपदेशः । तृप्ताः स्थ
इत्यनेन तृप्तिप्रश्ने
सम्पन्नमिति प्रष्टव्यं । योग्यत्वात्
सुसम्पन्नमिति
पक्षीयनम एव प्रतीयते न तु मैथिलोक्तं
स्वाहेति ।
श्राद्धे तथा प्रयागे प्रमाणाभावात् ।
एवमाश्वला-
यनगृह्ये यवोसीति मन्त्रे तु पुष्ट्या इति
श्रुतेर्मन्त्र-
मात्रे स्वधापदस्थाने पुष्टिपदप्रयोगः । इति
श्राद्ध-
तत्त्वं । अन्यत् नान्दीमुखशब्दे द्रष्टव्यं ॥

**आमं**, त्रि, (आम्यते ईषत्पच्यते । आ + अम +
कर्म्मणि घञ् ।) पाकरहितं । काँचा इति भाषा
।
तत्पर्य्यायः । अपक्वं २ असिद्धं ३ असृतं ४ ।
इति रत्नमाला ॥
("आमपक्वक्रमं हित्वा नातिसारे क्रिया यतः"
।
इति वैद्यकचक्रपाणिसंग्रहः ॥
"मज्जत्यामागुरुत्वाद्विट् पक्वातूत्प्लबते जले
।
विनातिद्रवसङ्घातशैत्यश्लेष्मप्रदूषणात् ॥
परीक्ष्यैवं पुरा सामं निरामं वा सदोषिणां ।
विधिनोपाचरेत्सम्यक् पाचनेनेतरेण वा" ॥
चिकित्सा यथा, --
"चित्रकं पिप्पलीमूलं द्वौ क्षारौ लवणानि च ।
व्योषं हिङ्गजमोदाञ्च चव्यञ्चैकत्र चूर्णयेत् ॥
गुडिका मातुलुङ्गस्य दाडिमस्य रसेन वा ।
कृता विपाचयन्त्यामन्दीपयन्त्याशु चाननं" ॥
इति चित्रकाद्यगुडिकाः । इति चरकः ॥)

**आमं**, क्ली, षट्प्रकाराजीर्णरोगमध्ये रोगविशेषः ।
तस्य कारणरूपे ।
"आमं विदग्धं विष्टब्धं कफपित्तानिलैस्त्रिभिः ।
अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः ॥
अजीर्णं पञ्चमं केचिन्निर्दोषं दिनपाकि च ।
वदन्ति षष्ठं चाजीर्णं प्राकृतं प्रतिवासरं ॥
तत्रामे गुरुतोत्क्लेदः शोथो गण्डाक्षिकूटगः ।
उद्गारश्च यथाभुक्तमविदग्धः प्रवर्त्तते" ॥
विडेन लवणं पिष्टं विल्वं चित्रकनागरं" ॥
इति चरकः ।)

**आमगन्धि**, क्ली, (आमस्यापक्वस्य गन्धैव गन्धो
यत्र ।) चिताधूमादिगन्धयुक्तं ।
अपक्वमांसादि-
गन्धविशिष्टं । तत्पर्य्यायः । विस्रं २ विश्रं
३ ।
इत्यमरः ॥

**आमण्डः**, पुं, (आमण्डयतीति । आ + मडि +
पचा-
द्यच् ।) एरण्डवृक्षः । इति
राजनिर्घण्टशब्दरत्ना-
वल्यौ ॥ (एरण्डशब्देऽस्य गुणादयो
व्याख्येयाः ।)

**आमनस्यं**, क्ली, (अमनसो भावः ।
ब्राह्मणादित्वात्
ष्यञ् ।) पीडा । दुःखं । इत्यमरः ॥

**आमन्त्रणं**, क्ली, (आ + मन्त्र + भावे ल्युट् ।)
सम्बो-
धनं । इति हेमचन्द्रः ॥ आप्रच्छनं । इति
जटा-
धरः ॥ निमन्त्रणं । इति स्मृतिः ॥
निमन्त्रण-
विशेषः । यदकरणे प्रत्यवायो नास्ति ।
यथा "इह
शयीत भवान्" । इति मुग्धबोधव्याकरणं ॥

**आमयं**, क्ली, (आमं रोगं यात्यनेन । आम + या +
ड ।) कुष्ठनामौषधिः । इतिराजनिर्घण्टः ॥
कुड
इति भाषा ।

**आमयः**, पुं, (अम रोगे + भावे + घञ् । मीञ्
हिंसायां करणे अच् वा ।) रोगः । इत्यमरः
॥
("तद्युक्तं विविधैर्योगैर्निहन्यादामयान्
बहून्" ।

प्रोक्ते इति
वक्ष्यमाणछन्दोगपरिशिष्टवचनाच्च सु-
सम्पन्नमित्युत्तरं ।
एतद्दर्भमयब्राह्मणपक्षेप्यबाधि-
तत्वाद्वाच्यं । दधिवदराक्षतमिश्रा
इत्यनेन दध्या-
दिमिश्रणमावश्यकं । अक्षतो यवः ।
“अक्षताश्च यवाः प्रोक्ता भृष्टा धाना भवन्ति ते” ।
इति भट्टनारायणधृतात् । अतएव
वक्ष्यमाणछन्दो-
गपरिशिष्टवचने अक्षतमनुक्त्वा
संयोज्य यवकर्क्क-
न्धुदधिभिरिति निःसन्दिग्धमुक्तं ।
स्वधावाचनप्रश्न-
निवृत्तये नान्दीमुखाः पितरः
प्रीयन्तामित्युप-
देशः । तत्र स्वधां वाचयिष्ये इति
पितृपक्षएव
प्रत्रः अतएव तन्निष्टत्तये दैव इति
आदौ देवपक्षे
नान्दीमुखाः पितरः प्रीयन्तामिति
प्रश्नः । उत्तरञ्च
प्रीयन्तामिति । ततः पितृपक्षे
स्वधावाचनस्थानी-
यत्वेन वृद्धप्रमातामहेभ्यश्च इति
चकारनिर्देशेन

इति सुश्रुतः ॥
“तत्र व्याधिरामयो गद आतङ्को यक्ष्माज्वरो
विकारो रोग इत्यनर्थान्तरं” । इति चरकः
॥)

**आमयावी**, [न्] त्रि, (आमयोऽस्त्यस्य
आमयस्योप-
संख्यानं इति दीर्घश्चेति विनिः ।) रोगी ।
इत्यमरः ॥

**आमर्षः**, पुं, (मृष + घञ् + नञ्समासः । अन्येषा-
मपीति दीर्घः ।) क्रोधः । इत्यमरटीकायां
भरतः ॥
("निरुद्योगं निरामर्षं निर्वीर्य्यमरिनन्दनं" ।
इति रामायणे ।)

**आमलकं**, क्ली, (आ + मल + क्वुन् शिल्पिसंज्ञयोः
।
आमलक्याः फलं । फलेलुगिति
विकारावयवप्रत्य-
यस्य लुक् ॥) आमलकीविशेषः । काठ
आमला-
इति भाषा । तत्पर्य्यायः । काष्ठधात्रीफलं २
क्षुद्रा-
मलकं ३ क्षुद्रजातीफलं ४ । अस्य गुणाः ।
कषा-
यत्वं । कटुत्वं । शीतत्वं ।
पित्तास्रदोषनाशित्वञ्च ।
इति राजनिर्घण्टः ॥
("तद्वदामलकं शीतमम्लं पित्तकफापहं" ।
इति वाभटः ॥
"विद्यादामलके सर्व्वान् रसान्
लवणवर्ज्जितान् ।
स्वेदमेदःकफोत्क्लेदपित्तरोगविनाशनं" ॥
इति चरकः ॥)

**आमलकः**, पुं, (आङ् + मल + क्कुन् ।) वासकवृक्षः
।
इति शब्दचन्द्रिका ॥ (यथा मार्कण्डेयपुराणे
।
"भल्लातकानामलकांस्तिन्दुकांश्च
महाफलान्" ।)

**आमलकी**, स्त्री, (आङ् + मल + क्कन् + जातेरिति
ङीष् ।) स्वनामख्यातफलवृक्षविशेषः ।
आमला
इति भाषा । तत्पर्य्यायः । तिष्यफला २
अमृता ३
स्वादुद्रव्यद्वारा पाके पित्तनाशित्वञ्च
। इति राज-
वल्लभः ॥ तस्या उत्पत्तिर्यथा ।
सख्यावूचतुः ।
"उक्तस्त्वया महेशानि
तुलसीविल्वसम्भवः ।
अनयोस्तुल्य एकः कः
शिवविष्णुप्रियस्तरुः ॥
तदावां श्रोतुमिच्छावः शिवसुन्दरि
कथ्यतां" ।
देव्युवाच ।
"अस्ति विल्वतुलसीतरुतुल्यः
पुण्य एक उत विष्णुशिवार्हः ।
नामतोऽमलक इत्यपि सख्यौ
रोपितः कमलयाथ मयापि ॥
कदाचित् देवयात्रायां प्रभासे
पुण्यतीर्थके ।
सर्व्वे देवाः समायाता दिने पुण्ये च
कुत्रचित् ॥
तत्राहञ्च स्वयं लक्ष्मीरेकस्थाने
समागते ।
तत्रावयोर्मतिर्जाता
शिवविष्णुप्रपूजने ॥
अहं श्रियमवोचञ्च सामुद्रि शृणु मे
मतिं ।
स्वकल्पितेन द्रव्येण पूजयेऽहं हरिं
प्रभुं ॥
मामुवाच ततो
लक्ष्मीर्गद्गदाक्षरभाषिणी ॥
ममाप्येवं मतिर्जाता त्वमवोचः स्वयं
यथा ।
स्वकल्पितेन द्रव्येण पूजयेऽहं
त्रिलोचनं" ॥
देव्युवाच ।
"सजये विजये देवि !
नावेवम्भूतयोस्तदा ।
इति वृहद्धर्म्मपुराणे आमलकीप्रादुर्भावः १२
अध्यायः ॥ * ॥ एकादश्यां तत्र
विष्णुप्रीतिर्यथा ।
"तुष्यत्यामलकैर्विष्णुरेकादश्यां विशेषतः ।
श्रीकामः सर्व्वदा स्नानं कुर्व्वीतामलकैर्न्नरः"
॥
इति गारुडे २१५ अध्वायः ॥

**आमवातः**, पुं, (आमोऽपाकहेतुः वातः ।)
स्वनामख्यात-
रोगविशेषः । तस्य निदानपूर्ब्बिकां
संप्राप्तिमाह ।
"विरुद्धाहारचेष्टस्य मन्दाग्नेर्निश्चलस्य च ।
स्निग्धं भुक्तवतो ह्यन्नं व्यायामं कुर्व्वतस्तथा
॥
वायुना प्रेरितो ह्यामः श्लेष्मस्थानं प्रधावति
।
तेनात्यर्थमपक्वोऽसौ धमनीभिः प्रपद्यते ॥
वातपित्तकफैर्भूयो दूषितः सोऽन्नजो रसः ।
स्रोतांस्यभिष्यन्दयति
नानावर्णोऽतिपिच्छिलः ॥
जनयत्यग्निदौर्ब्बल्यं हृदयस्य च गौरवं ।
व्याधीनामाश्रयो ह्येष आमसंज्ञोऽतिदारुणः
॥
विरुद्धाहारचेष्टस्य विरुद्धाहारः
क्षीरमत्स्यादि ।
विरुद्धा चेष्टा मुक्त्वा व्यायामादि ।
तद्युक्तस्य ।
निश्चलस्य निर्व्यापारस्य । "स्निग्धं
भुक्तवतो ह्यन्नं
व्यायामं कुर्व्वतः" इति मिलितो हेतुः ।
श्लेष्म-
स्थानं आमाशयसन्ध्यादि । तेन
श्लेष्मस्थानगतेन
अत्यर्थं अपक्वः । पित्तस्थानगमने तु
पक्वोऽभ-
विष्यदित्यभिप्रायः । असौ आमः धमनीभिः

वयस्था ४ वयःस्था ५ कायस्था ६ ।
इत्यमरस्त-
ट्टीका च ॥ श्रीफला ७ धात्रिका ८ शिवा ९
शान्ता १० धात्री ११ अमृतफला १२ वृष्या
१३
वृत्तफला १४ रोचनी १५ । इति
राजनिर्घण्टः ॥
कर्षफला १६ तिष्या १७ इति रत्नमाला ॥
अस्या गुणाः । हरीतकीगुणवद्गुणत्वं । विशे-
षेण शुक्रकारित्वं । शीतवीर्य्यत्वं ।
अम्लत्वात् वायु-
नाशित्वं । शैत्यमाधुर्य्यात् पित्तनाशित्वं ।
कषाय-
रूक्षत्वात् कफनाशित्वं ।
सर्व्वफलाधिकगुणत्वं ।
भोजनाद्यमध्यान्ते प्राशस्त्यं । निरत्ययत्वं ।
दोष-
हरत्वञ्च ॥ अस्य मज्जगुणाः ।
तृष्णाच्छर्दिकफ-
वायुनाशित्वं । लघुत्वं । कषायत्वं ।
बलकारित्वञ्च ।
इति राजवल्लभः ॥ अपि च । लघुत्वं ।
दाहवमि-
मेहशोषनाशित्वं । रसायनत्वं । कटुत्वं ।
रुचि-
करत्वं । रक्तदोषनाशित्वं ।
श्रमविबन्धाध्मान-
विष्टम्भदोषप्रशमनकारित्वञ्च । अस्य
मज्जनो
विभीतकमज्जवद्गुणत्वञ्च । इति
राजनिर्घण्टः ॥
(अस्या नामानि गुणाश्च ।
"त्रिष्यामलकमाख्यातं धात्री तिष्यफलामृता
।
हरीतकीसमञ्चात्रीफलं किन्तु विशेषतः ॥
रक्तपित्तप्रमेहघ्नं परं वृष्यं रसायनम् ।
हन्ति वातं तदम्लत्वात् पित्तं माधुर्य्यशैत्यतः
॥

नयनेषु सुजातानि अमलाश्रुजलानि
च ॥
तानि नौ नयनेभ्यश्च निपेतुर्मुवि हे
सखि ! ।
ततो जाता द्रुमाः पृथ्व्यां चत्वारो
विमलप्रभाः ॥
ख्याता आमलकी नाम्ना जाता
कादमलाद्यतः ।
श्यामलच्छदवृन्दास्ते
कर्व्वूरस्कन्धमूलकाः ॥
शिराग्रथितपत्राली
पत्रमालाकपत्रका ।
विल्वस्य च तुलस्याश्च ये गुणाः
कथिताः सखि ॥
ते ते गुणाः सर्व्वएव आमलक्यां
समाहिताः ।
पत्रमालादलैरस्याः शिवविष्णु
सुरेश्वरौ ॥
सर्व्वथा पूजितौ स्यातां सख्यौ
नास्त्यत्र संशयः ।
माघे मासि सितायां तामेकादश्यां
समुद्भवां ॥
शुभामामलकीं दृष्ट्वा समेताः
सर्व्वदेवताः ।
ऋषयस्ते सशिष्याश्च हर्षमापुः परं
तदा ॥
शिवाच्युबस्वरूपाञ्च
ददृशुस्तुष्टुवुस्तदा" ॥ * ॥
अस्या नमस्कारमन्त्रादिः ।
"नमाम्यामलकीं देवीं
पत्रमालाद्यलङ्कृतां ।
शिवविष्णुप्रियां दिव्यां श्रीमतीं
सुन्दरप्रभां ॥
एतेन खलु मन्त्रेण सर्व्वा अस्याः
क्रिया मताः ।
एतामुद्दिश्य तीर्थानि त्रीण्युक्तानि
मनीषिभिः ॥

प्रपद्यते धमनोमार्गैश्चलति । भूयो दूषितः
अति-
शयेन दूषितः । सोऽन्नजो रसः । आमः स्रो-
तांसि अभिष्यन्दयति संस्तभ्य
रसवहशिराव-
रोधं कृत्वा स्रोतांसि गुरूणि करोति ।
नानावर्णः
वातादिजनितवर्णभेदान्नानावर्णः ॥ * ॥
आमस्य
लक्षणमाह ।
"अजीर्णात् यो रसो जातः सञ्चितो हि
क्रमेण तै ।
आमसंज्ञां स लभते शिरोगात्ररुजाकरः" ॥
अजीर्णात् भुक्तादजीर्णात् ॥ * ॥
आमवातस्य सा-
मान्यलक्षणमाह ।
"युगपत् कुपितावेतौ त्रिकसन्धिप्रवेशकौ ।
स्तब्धञ्च कुरुते गात्रमामवातः स उच्यते" ॥
एतौ वातकफौ । त्रिकसन्धिप्रवेशकौ
वेदनयेति
बोद्धव्यौ ॥ * ॥ तन्त्रान्तरे तस्य
लक्षणान्तरमाह ।
"अङ्गमर्दोऽरुचिस्तृष्णास्यालस्यं गौरवं
ज्वरः ।
अपाकः शूलताङ्गानां आमवातस्य लक्षणम्"
॥ * ॥
अस्यैवातिवृद्धस्य लक्षणमाह ।
"स कष्टः सर्व्वरोगाणां यदा प्रकुपितो भवेत्
।
हस्तपादशिरोगुल्फत्रिकजानूरुसन्धिषु ॥
करोति सरुजं शोथं यत्र दोषः प्रपद्यते ।
स देशो रुज्यतेऽत्यर्थं व्याबिद्ध इव वृश्चिकैः
॥
जनयेत् सोऽग्निदौर्ब्बल्यं प्रसेकारुचिगौरवम्
।
उत्साहहानिं वैरस्यं दाहञ्च बहुमूत्रतां ॥
कुक्षौ कठिनतां शूलं तथा निद्राविपर्य्ययं ।

कफं रूक्षकषायत्वात् फलं धात्र्यास्त्रिदोषजित् ।
यस्य यस्य फलस्येह वीर्य्यं भवति यादृशं ॥
तस्य तस्यैव वीर्य्येण मज्जानमपि निर्द्दिशेत्” ।
इति भावप्रकाशः ॥
“तान् गुणांस्तानि कर्म्माणि विद्यादामलकीष्वपि ।
यान्युक्तानि हरीतक्यां वीर्य्यस्य तु विपर्य्ययः” ।
इति धरकः ॥)
तच्छुष्कफलगुणाः । कफपित्तनाशित्वं । अम्लत्वं ।

विल्ववृक्षवदेवेह पृथिव्यां कर्म्मणां स्थले ।
सिषित्तुस्तामामलकीं सर्व्वतीर्थजलैर्द्विजाः ॥
अथ सर्व्वसुराणाञ्च मुनीनाञ्च तदाग्रतः ।
मया संपूजितः कृष्णः श्रीश्च शम्भुमपूजयत् ॥
तदा जयजयध्वानो बभूव क्षितिमण्डले ।
आकाशे पुष्पवृष्टिश्च शङ्खशब्दाश्च पुष्कलाः ॥
दृष्ट्वा ह्यामलकी देवी दधारानन्दमुत्तमं ।
तेन धात्रीति नाम्नापि राजत्यामलकी शुभा ॥
नमस्कृत्य ह्यामलकीं गता देवा द्विजास्तथा ।
ब्रह्मविष्णुशिवाश्चापि तत्राधिष्ठानमास्थिताः ॥
जाता ह्यामलकी देवी परमानन्ददायिनी ।
मान्या स्थाप्या च पूज्या च प्रणन्तव्या सखोत्वियं” ॥

तृट्छदिश्रममूर्च्छाश्च हृद्ग्रहं विडविबद्धतां ॥
जाड्यान्त्रकूजमानाहं कष्टांश्चान्यानुपद्रवान्” ।
यदा प्रकुपितो भवेत् प्रकर्षेण कुपितः स्यात्तदा वक्ष्यमाणानुपद्रवान् करोति । तानाह हस्तेत्यादि ।
यत्र दोषः दुष्ट आमः प्रद्यते गच्छति । जाड्यं अकर्म्मण्यत्यं । अन्यानुपद्रवान् कलायखञ्जत्वादीन्

:॥ * ॥ तस्यैव विशिष्टानि लक्षणान्याह ।

“पित्ताद्दाहं सरागञ्च सशूलं पवनात्मकं ।
स्तिमितं गुरुकण्डूकं कफजुष्टं
तमादिशेत्” ॥
गुरुकण्डूकं बहुकण्डूकम् ॥ * ॥
तस्यासाध्यत्वादि-
कमाह ।
“एकदोषानुगः साध्यो द्विदोषो याप्य
उच्यते ।
सर्व्वदेहचरः शोथः सकष्टः
सान्निपतिकः” ॥ * ॥
अथ आमवातस्य चिचित्सा ।
“लङ्घनं स्वेदनं तिक्तं दीपनानि कटूनि च
।
रेचनं स्नेहनमपि वस्तयश्चाममारुते ॥
रूक्षस्वेदो विधातव्यो वालुकापुटकैरिह ।
उपनाहाश्च कर्त्तव्यास्तेऽपि
स्नेहविवर्जिता ॥ * ॥
वास्तूकमत्र वृन्ताकं पटोलं कारवेल्लकं ।
कोरदूषा यवाः पथ्याः षष्टिकाः
शालयोऽनवाः” ॥
अनवाः पुराणाः ।
“लावकानां तथा मांसं हितं तक्रेण
संस्कृतं ।
हितश्च यूषः कौलत्थः कलायश्चणक्स्य
च” ॥ * ॥
“चित्रकं कटुका पथ्या
नागरातिविषामृताः ।
चूर्णिताः कोष्णतोयेन पिबेदामानिलापहाः
। १ ।
शटी शुण्ठी शिवासोग्रा
देवाह्वातिविषामृताः ।
क्वथिताः प्रपिवेदामवाती रूक्षञ्च
भोजयेत् ॥
देवाह्वा देवदारु । २ ।
आमवातगजेन्द्रस्य शरीरवनचारिणः ।
एकएव निहन्तायमेरण्डस्नेहकेशरी । ३ ।

महारास्नादिक्वथः । ९ ।
“अजमोदामरिच-
पिप्पलीविडङ्गसुरदारुचित्रकशताह्वाः ।
सैन्धव-
मागधिमूलं भागा नवकस्य पलिकाः स्युः
॥ शुण्ठी
दशपलिका स्यात् पलानि तावन्ति
वृद्धदारस्य ।
अभया पलानि पञ्च श्लक्ष्णं चूर्णं
विधापयेदेषां ॥
समगुडवटकानदतश्चूर्णं वा कोष्णवारिणा
पिबतः ।
नश्यन्त्यामानिलजाः सर्व्वे रोगाः
सुदारुणाः शीघ्रं ॥
आनाहशूलतूनी प्रतितूनी गृध्रसी गुल्मः ।
कटि-
पृष्ठपरिष्फुटनं स्फुटनं
चैवास्थिजङ्घयोस्तीव्रं ॥
श्वयथुस्तथाङ्गसन्धिषु ये
चान्येऽप्यामवातजा रोगाः
सर्व्वे प्रयान्ति शान्तिं तमैव
सूर्य्यांशुविध्वस्तं ॥
अजमोदादिचूर्णमोदकः । १० ।
“आमवाते हितोऽतीव
पथ्यादिर्गुग्गुलुर्मतः” ।
तथैव योगराजाख्यश्चरकादिचिकित्सकैः
। ११ ।
नागरस्य पलान्यष्टौ घृतस्य कुडवं तथा ।
क्षीराढकसमायुक्तं खण्डस्यार्द्धशतं पलं ॥
व्योषत्रिजातकद्रव्यात् प्रत्येकञ्च पलं पलं
।
निःक्षिपेच्चूर्णितं तत्र खादेदग्निबलं यथा ॥
आमवातप्रशमनं धातुपुष्टिकरं परं ।
बल्यमायुष्यमोजस्यं बलीपलितनाशनं”
॥
शुण्ठीखण्डः । १२ ।

प्रस्थमेरण्डतेलस्य प्रस्थोऽम्बु शतपुष्पजं
।
काञ्जिकं द्विगुणं दत्त्वा मस्तु च द्विगुणं तथा
॥
एतत् संभृत्य संभारं शनैर्मृद्वग्निना पचेत् ।
सिद्धमेतत् प्रयोक्तव्यमामवातहरं परं ॥
पाने चाम्भञ्जने वस्तौ कुरुतेऽग्निबलं भृशं
।
वातार्त्ते वंक्षणे शूले कटीजानूरुसन्धिजे ॥
तथा हृत्पार्श्वजे शूले शस्तं श्लेष्मणि
पीडिते ।
अन्यांश्चानिलजान् रोगान् नाशयत्याशु
देहिनां”
वृहत्सैन्धवाद्यं तैलं । १५ ।
“दधिमत्स्यगुडक्षीरपोतकीमाषपिष्टकं ।
वर्जयेदामवातार्त्तो गुडमांसमनूपजं” ॥
इत्यामवाताधिकारः । इति भावप्रकाशः
॥
(आत्रेयौवाच ।
“लक्षणं शृणु पुत्र ! त्वं समासेन वदाम्यहं
।
गुर्व्वन्नाहारपुष्टेन मन्दाग्नेश्च व्यवायिनः ॥
तर्पितैः कन्दशाकैस्तु आमोवायुसमीरितः
।
श्लेष्मस्थाने प्रपच्यैव जायते बहुवेदनः ॥
आमातिसारो वर्त्तेत सन्धौ शोफः
प्रजायते ।
जडत्वञ्चैव गात्राणां बलासपतनं मुखे ॥
पृष्ठमन्यात्रिकेजातवेदनार्त्तोऽपि सीदति ।
अङ्गं वैकल्यमायाति आमवाते
भिषग्वर” ! ॥
चिकित्सा यथा ॥ * ॥
“तस्य नो स्नेहनं कार्य्यं पाचनञ्च
विधीयते ।
आमं संक्षयते प्राज्ञैः चतुर्धा भेदलक्षणैः”
॥
विष्टम्भ्यामलक्षणं यथा ॥ * ॥

एरण्डस्नेहयुक्तां हरीतकीं भक्षयेद्विधिवत्
।
आमानिलार्त्तियुक्तो युक्तो वृद्ध्या च
गृध्रस्या । ४ ।
श्वेतं पुनर्नवामूलं तेन तैलं प्रसाधयेत् ।
आमवातरुजं हन्ति पादाभ्यञ्जनमर्द्दनात् ।
५ ।
आरग्वधस्य पत्राणि भृष्टानि कटुतैलतः ।
आमवातप्रशान्त्यर्थं खादेद्भक्तावृतानि च ।
६ ।
शुण्ठीगोक्षुरकक्वाथः प्रातः प्रातर्निषेवितः
।
आमवाते कटीशूले पाचनं रुक्प्रणाशनं ।
७ ।
कटीशूले पिबेत्तैलं एरण्डफलसम्भवं ।
महौषधगुडच्योश्च क्वाथं मागधिकायुतं
॥
विशोध्यैरण्डवीजानि पिष्ट्वा क्षीरे
विपाचयेत् ।
तत्पायसं कटीशूले गृध्रस्यां परमौषधं । ८
।
रास्ना वातारिमूलञ्च वासकः सदुरालभः
।
शटीदारुबलामुस्तनागरातिविषाभयाः ॥
श्वदंष्ट्राव्याधिघातश्च मिषिधान्यं पुनर्णवा
।
अश्वगन्धामृता कृष्णा वृद्धदारः शतावरी
॥
वचा सहचरश्चैव चविका वृहतीद्वयं ।
समभागानि सर्व्वाणि रास्नात्र त्रिगुणा मता
॥
पिबेत् कषायमेतेषामष्टभागावशेषितं ।
क्षिप्त्वा नागरचूर्णञ्च प्रक्षेपोऽत्र यथामलं ॥
सर्व्वेषु वातरोगेषु सामेषु तु विशेषतः ।
पक्षाघातेऽर्दिते कम्पे कुब्जे
सन्धिगतेऽनिले ॥
जानुजङ्घास्थिपीडासु गृध्रस्याञ्च हनुग्रहे ।

“मेथिकायाः पलान्यष्टौ शुण्ठ्या अष्ट
पलानि च ।
तयोश्चूर्णं पटे पूतं दुग्धे मृद्वग्निना पचेत् ॥
दुग्धाढकयुगे गव्यं घृतमष्टपलं क्षिपेत् ।
तत्तावत्सुपचेत् यावत् भवेदतिघनं पयः ॥
पुनः पचेत् शनैस्तत्र दत्त्वाढकमितां सितां
।
ततः प्राके सुविज्ञाते ज्वलनादवतारयेत्
॥
मरिचं पिप्पली शुण्ठी कणामूलं सचित्रकं
।
यवानी जीरको धान्यं कारवी शतपुष्पिका
॥
जातीफलं शटीत्वक् च पत्रकं भद्रमुस्तकं
।
गृह्णीयात् पलमेतेषां सर्व्वेषाञ्च पृथक्
पृथक् ॥
षडक्षं नागरं तत्र मरिचं च षडक्षकं ।
एषां चूर्णं परिक्षिप्य सर्व्वं संमिश्य रक्षयेत्
॥
एतत्तु भेषजं प्रोक्तं मेथिकापाकसंज्ञकं ।
भक्षयेत् पलमात्रं तत् यथा चाग्निबलं तथा
॥
आमवातं निहन्त्येतत् सर्व्वांश्च
पवनामयान् ।
ज्वरांश्च विषमान् हन्ति पाण्डुरोगं
सकामलं ॥
हन्त्युन्मादमपस्मारं प्रमेहान् वातशोणितं
।
अम्लपित्तं शीतपित्तं शिरःपीडां दृगामयं
॥
पदरं सूतिकारोगं हन्यादेतन्न संशयः ।
वपुषः पुष्टिकृद्बल्यं वीर्य्यवृद्धिकरं परं” ॥
मेथिकापाकः । १३ ।
“रसो रसोनस्य पिचुप्रमाणः
क्षिपेच्च तत्राक्षमितं घृतं गोः ।
पिबेटुभे तेन दहत्यवश्यं
शिखीव तूलं हि महामवातं” ॥

“विष्टम्भी गुल्मकृन्मेही आमः पक्वाम एव
च ।
सर्व्वाङ्गगो भवेच्चान्यो वक्ष्ये तस्यापि
लक्षणं ॥
विष्टम्भो गुरु चाध्मानं वस्तिशूलञ्च जायते
।
तस्यापि पाचनं कार्य्यं स्नेहनञ्चैव
कारयेत्” ॥
गुल्मशङ्क्यामलक्षणं यथा ॥ * ॥
“जठरं गर्ज्जते यस्य गुल्मवत्
परिपीड्यते ।
कटीदेशे जडत्वञ्च आमगुल्माभिशङ्कितः
॥
तस्यादौ लङ्घनानि स्युर्ज्ञात्वा देहबलाबलं
।
पाचनं नैव कर्त्तव्यं गुल्मपाके विमूर्च्छति
॥
पाचिते चापि गुल्मामे तदाशु मरणं ध्रुवम्”
।
स्नेह्यामलक्षणं यथा ॥ * ॥
“यस्य च स्निग्धता गात्रे जाड्यं
मन्दाग्निको वली ।
स्नेहामो विजलो यस्य स्नेहीवामः
प्रकीर्त्तितः ॥
तस्य नो स्नेहनं कार्य्यञ्चोपवासञ्च
कारयेत् ।
पाचनञ्चैव कर्त्तव्यमामञ्चैवातिसारयेत्” ।
आमस्य लक्षणं यथा ॥ * ॥
“यस्य शोफाननं जाड्यं तथा चैव
घनोदरं ।
अरुच्यामातिसारश्च सचासाध्यो
विजानता ॥
प्रत्याख्येया क्रिया कार्य्या जीवितस्यापि
संशये ।
पाचनं पाचितं ज्ञात्वा तस्माच्चूर्णानि
दापयेत्” ।
चिकित्सा यथा ॥ * ॥

उरुस्तम्भे वातरक्ते विसूच्यां क्रोष्टुशीर्षके ॥
हृदामये च दुर्नाम्नि योनिशुक्रामयेषु च ।
पुंसां मेढ्रगते वाते स्त्रीणां बन्ध्यामये तथा ॥
योषितां गर्भदं मुख्यं नास्त्यस्मात् परमौषधं ।
महारास्नादिकः क्वाथो वेधसायं विनिर्म्मितः” ।

सामान्यवातव्याधिचिकित्सायां हि लिखितं रसी-
नाष्टकमामवाते अतिगुणदं । १४ ।
“सैन्धवं श्रेयसी रास्ना शतपुष्पा यवानिका ।
स्वर्जिका मरिचं कुष्ठं शुण्ठी सौवर्च्चलं विडं ॥
वचाजमोदा जरणः पौष्करं मधुरं कणा ।
एतान्यर्द्धपलांशानि सूक्ष्मकल्कानि कारयेत् ॥

“आमवाते कणायुक्तं दशमूलीजलं पिबेत् ।
गुडूची नागरं पथ्या चूर्णमेतद्गुडान्वितं ॥
धान्यनागरराजाम्लदेवदारुवचाभयाः ।
पाचनञ्चामवाते च श्रेष्ठमेतत्सुखावहं” ॥)

**आमातीसारः**, पुं, (आमरोगेण कृतः अतीसारः ।) षट्प्रकारातीसारमध्ये रोगविशेषः । तस्य

:संप्राप्तिरूपे ।

अन्नाजीर्णात् प्रद्रताः क्षोभयन्तः
कोष्ठं दोषा धातुसंधान् मलांश्च ।
नानावर्णं नैकशः सारयन्ति
शूलोपेतं षष्ठमेनं वदन्ति ॥
संसृष्टमेभिर्दोषैस्तु न्यस्तमप्स्ववसीदति ।
पुरीषं भृशदुर्गन्धि पिच्छिलं चामसंज्ञितं”
॥
इति निदानं ॥
(चिकित्सा यथा, --
“न तु संग्रहणं दद्यात् पूर्ब्बमामातीसारिणे
।
दोषाह्यादौ रुध्यमाना जनयन्त्यामयान्
बहून् ॥
शोथपाण्ड्वामयप्लीहकुष्ठगुल्मोदरज्वरान्
।
दण्डकालसकाध्मानग्रहण्यर्शोगदांस्तथा
॥
क्षीणधातुबलार्त्तस्य बहुदोषोऽति निस्रुतः
।
आमोऽपि स्तम्भनीयः स्यात्
पाचनान्मरणं भवेत्”
इति वैद्यचक्रपाणिसंग्रहः ॥ * ॥
“अभया मस्तुना पिष्टा मधुशर्करयान्विता
।
आमातीसारं शमयेद् गुडामलकमेव च ॥
वत्सकं जीरके द्वे च दध्ना पिष्टन्तु दापयेत्
।
आमातिसारशमनं वस्तिशूलं नियच्छति”
॥
इति हारीतः ॥ * ॥ “तस्य रूपाणि
विज्जल-
मामविप्लुतमवसादितं । रूक्षं द्रवं
सशब्दमशब्दं
वा विबद्धमूत्रवातमतिसार्य्यते पुरीषं
वायुश्चान्तः-

“तेनात्रामान्ने
सिद्धान्नप्रायश्चित्ततुरीयभागविधा-
नादज्ञानादावपि तत्तुरीयकल्पना इति” ।
इति
प्रायश्चित्ततत्त्वं ॥ * ॥ आमान्नद्वारा
कर्त्तव्यश्राद्धानि ।
यथा, --
“आपद्यनग्नौ तीर्थे च चन्द्रसूर्य्यग्रहे तथा ।
आमश्राद्धं द्विजैः कार्य्यं शूद्रेण तु सदैव
हि” ॥
इति श्राद्धतत्त्वधृतप्रचेतोवचनं ॥ अपि च
।
योगिनीतन्त्रे ।
“निरग्नेरामश्राद्धे तु अन्नं न क्षालयेत्
क्वचित् ।
वृद्धौ च क्षालयेदन्नं संक्रमे ग्रहणेषु च” ॥
इति तिथ्यादितत्त्वम् ॥ * ॥

**आमाशयः**, पुं, (आमस्य आशयः षष्ठीतत्पुरुषः ।)

अपक्वस्थानं । तत्तु
नाभिस्तनयोर्म्मध्यभागः । इति
शब्दचन्द्रिका ॥ (यथा महाभारते, --
“पक्वाशयस्त्वधोनाभ्यामूद्र्ध्वमामाशयः
स्थितः” ।
यथा च सुश्रुते, --
“पक्वामाशययोर्मध्ये शिराप्रभवा
नाभिर्नाम” ॥ * ॥
“नाभिस्तनान्तरं
जन्तोराहुरामाशयंबुधाः” ।
“आमाशयस्तु तदधः” इति भावप्रकाशः
॥
“तत्रामाशयः पित्ताशयस्योपरिष्टात्
तत्प्रत्यनी-
कत्वादूद्र्ध्वगतित्वात्तेजसश्चन्द्र
इवादित्यस्य स चतु-

हितवस्त्रादिः । इत्यमरः ॥
परिहितकवचव्यक्तिः ॥

**आमुपः**, पुं, (आम + वप् + क ।) कण्टकयुक्तवंश-

विशेषः । इति शब्दचन्द्रिका ॥ वेउडवाँश
।
इति ख्यातः ।

**आमुष्यायणः**, त्रि, (अमुष्य अपत्यम् + फक् । अलुक् ।)

ख्यातवंशोद्भवः । सत्कुलजातः । इति
त्रिकाण्डशेषः ॥

**आमूलं**, क्ली, (मूलपर्य्यन्तं आमूलं । अव्ययीभावः ।)

मूलपर्य्यन्तं ॥ (प्रारम्भावधि । यथा,
शाकुन्तले ।)
“आमूलशुद्धसन्तति कुलमेतत् पौरवं
प्रजाबन्ध्ये” ।)

**आमोदः**, पुं, (आङ् + मुद् + घञ् ।) अतिदूरगामि-

गन्धः । इत्यमरः ॥ गन्धः । हर्षः । इति
मेदिनी ॥
सुमहद्गन्धः । इति शब्दरत्नावली ।
(यथा रघुवंशे । १ । ४३ ।
“आमोदभुपजिघ्रन्तौ
स्वनिःश्वासानुकारिणम्” ।)

**आमोदनं**, क्ली, (आङ् + मुद् + ल्युट् ।) आमोद-

करणं । हर्षणं ॥ प्रीणनं । आनन्दनं ।

**आमोदितः**, त्रि, (आ + मुद् + णिच् + क्त । यद्वा

आमोदः सञ्जातोऽस्य तारकादित्वादितच्
।) आ-
नन्दितः । सुगन्धितः । सद्गन्धयुक्तः ।
यथा, --

कोष्ठस्य सशब्दशूलः तिर्य्यक् चरति
विबद्ध इत्या-
मातिसारः” ।
“आमे परिणते यस्तु विबद्धमतिसार्य्यते ।
सशूलपिच्छमल्पाल्पं बहुशः सप्रवाहिकं
॥
तं मूलकानां यूषेण वदराणामथापि वा ।
उपोदकायाः क्षोरिण्या यवाण्या
वास्तुकस्य वा ॥
सुवर्च्चलायाश्चञ्चोर्व्वा शाकेनावल्गुजस्य
वा ।
शठ्याः कर्कारुकाणां वा
जीवन्त्याश्चिर्भटस्य वा ॥
लोणीकायाः सपाठाया शुष्कशाकेन वा
पुनः ।
दधिदाडिमसिद्धेन बहुस्नेहेन भोजयेत्” ॥
इति चरकः ॥)

**आमात्यः**, त्रि, (अमात्य एव स्वार्थे अण् ।) अमात्यः ।

मन्त्री । इति द्विरूपकोषः ॥ बलाध्यक्षः ।

**आमानस्यं**, क्ली, (न प्रशस्तं मानसं यस्य सः अमा-

नसस्तस्य भावः । अमानस + ष्यञ् ।)
आमनस्यं ।
पीडा । दुःखं । इति शब्दरत्नावली ॥

**आमान्नं**, क्ली, (आमञ्च तत् अन्नञ्चेति कर्मधारयः ।)

अपक्वान्नं । काँचाचाउल इति भाषा ।
तद्दानमन्त्रो
यथा, --
“आमान्नं ते प्रयच्छामि फलताम्बूलसंयुतं
।
सघृतं परमं दिव्यं मया भक्त्या निवेदितं”
॥
इति
वृहन्नन्दिकेश्वरपुराणोक्तदुर्गोत्सवपद्धतिः
॥ * ॥

र्व्विधस्याहारस्याधारः” । “आमाशयः
श्लेष्मणः” ।
इति सुश्रुतः ॥)

**आमिक्षा**, स्त्री, (आमिष्यते मिषु सेचने बाहुलकात्

सक् ।) शृतोष्णदुग्धे दधियोगसम्भवा या
। क्षीरसा
इति ख्याता । छाना इति केचित् ।
इत्यमरः ॥
तत्पर्य्यायः । दधिकूर्च्चिका २ पयस्या ३
क्षीर-
सन्तालिका ४ । इति राजवल्लभादयः ॥
(“ग्राहिणी वातला रूक्षा दुर्ज्जरा
तक्रकूर्च्चिका” ।
इति सुश्रुतः अत्र हि तक्रकुर्च्चिका
शब्देनामि-
क्षोच्यते इति पर्य्यायान्तरदृष्टत्वात् ॥)

**आमिषं**, क्ली, पुं, (आमिष्यते भुज्यते मिष् श्लेषणे

घञ् संज्ञापूर्ब्बकत्वान्न गुणः ।) मांसं ।
इत्यमरः ॥
भोग्यवस्तु । संभोगः । उत्कोचः । इति
मेदिनी ॥
सुन्दराकाररूपादि । लोभसञ्चयः । इति
हेम-
चन्द्रः ॥ लाभः । काभगुणः । रूपं ।
भोजनं ।
इति हारावलो ॥

**आमिषप्रियः**, पुं, (आमिषं प्रियं यस्य सः ।)

कङ्कपक्षी । इति राजनिर्घण्टः ॥ मांसाभि-
लाषिणि त्रि ॥

**आमिषाशी**, न्, त्रि, (आमिषं अश्नाति आमिष +

अश् + णिनि ।) मत्स्यमांसभोजनशीलः
। तत्प-
र्य्यायः । शौष्कलः २ । इत्यमरः ॥

“पारिजातप्रसूनोत्थगन्धामोदितदिङ्मुखे”
।
इति शिवरात्रिव्रतकथा ॥ आनन्दितः ।
आमोद-
शब्दादितप्रत्ययेन निष्पन्नः ॥

**आमोदी**, [न्] त्रि, (आमोद + णिनि ।) मुखवासनः ।

इत्यमरः ॥ कर्पूरादिवटिकाकृतमुखगन्धः
। इति
सारसुन्दरी ॥ मुखवासनवटिकादिः ।
आमोद-
युक्तः कर्पूरादिरामोदी । इति भरतः ॥
नानाद्रव्य-
रचित एकैकश एव वा
कर्पूरादिभिर्मुखोपयोग्य-
मुखवासनवटिकादिः । इति सर्व्वस्वं ।
गन्धयुक्तः ।
हर्षविशिष्टः ॥ (यथा भर्तृहरिः ।
“नवकुटजकदम्बामोदिनो गन्धवाहाः” ।)

**आम्नायः**, पुं, (आङ् + म्ना + घञ् + युक् ।) श्रुतिः ।

वेदः । (यथा महावीरचरिते ।
“तृतीयो ह्येष मेध्योऽग्निराम्नायः
पञ्चमोऽथवा” ।
उत्तरचरिते ।
“समांसो मधुपर्क इत्याम्नायं
बहुमन्यमानाः” ।)
संप्रदायः । गुरुपरम्पराप्राप्तोपदेश इति
यावत् ॥
इत्यमरः ॥ निगमः । उपदेशः । इति
मेदिनी ॥
कुलं । आगमः । इति हेमचन्द्रः ॥
कुलक्रमः । इति
शब्दरत्नावली ॥ (उपदेशः, शिक्षादानं,
तन्त्र-
शास्त्रं, अभ्यासः, आम्रेडनं, आलोचनं ।)

**आम्बिकेयः**, पुं, (अम्बिकाया अपत्यं स्त्रीभ्यो ढक् ।)

बलात्
चाण्डालादिस्वामिकापक्वान्नभोजनप्राय-
श्चित्तं यथा । चाण्डालान्नं भुक्त्वा
त्रिरात्रमुपवसेत्
सिद्धं भुक्त्वा पराकः । इति
बलाद्भोजनविषयं ।
इति प्रायश्चित्तविवेकः ॥
त्रिरात्रमामान्नविषयं ।
परत्र सिद्धमित्युक्तेः । पराकमाह मनुः ।
"यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनं ।
पराको नाम कृच्छ्रोऽयं
सर्व्वपापापनोदनः" ॥

**आमिषी**, स्त्री, (आमिषवदाकारोऽस्त्यस्या जटाया-
मिति अर्शआदित्वादच् गौरादीत्वात् ङीष्
च ।)
मिषी । जटामांसी । इति केचित् ।
इत्यमर-
टीकायां भरतः ॥

**आमीक्षा**, स्त्री, (आमिष्यते, मिषु सेचने बाहु-
लकात् सक् ।) आमिक्षा । आवर्त्तिते तप्ते
क्षीरे
दधियोगात् या वटिकाकारा
विकृतिर्जायते सा ।
इति पुरुषोत्तमः ॥

**आमुक्तः**, त्रि, (आङ् + मुच् + क्तः ।) पिनद्धः । परि-
धृतराष्ट्रो राजा । इति त्रिकाण्डशेषः ॥
(यथा
महाभारते ।
"परं श्रेयः पाण्डवेया मयोक्तं
न मे तच्च श्रुतवानाम्बिकेयः" ।)
कार्त्तिकेयः ।

**आम्रः**, पुं, (अम्यते अम गत्यादौ अमितभ्योदीर्घश्चेति
रक् दीर्घश्च ।) फलवृक्षविशेषः । आम
आँव इति
भाषा । तत्पर्य्यायः । चूतः २ रसालः ३
। अति-
सौरभश्चेत् सहकारः ४ । इत्यमरः ॥
कामशरः ।
कामवल्लभः ६ कामाङ्गः ७ कीरेष्टः ८
माधवद्रुमः
९ भृङ्गाभीष्टः १० सीधुरसः ११ मधूली
१२

:कोकिलोत्सवः १३ वसन्तदूतः १४ अम्लफलः १५

मोदाख्यः १६ मन्मथालयः १७ मध्वावासः १८

सुमदनः १९ पिकरागः २० नृपप्रियः २१ प्रि-याम्बुः २२ कोकिलावासः २३ । इति राजनिर्घण्टः ।

माकन्दः २४ षट्पदातिथिः २५ मधुव्रतः २६ वसन्तद्रुः २७ पिकप्रियः २८ स्त्रीप्रियः २९ गन्ध-

बन्धुः ३० अलिप्रियः ३१ । इति शब्दरत्नावली ॥

मदिरासखः ३२ । इति जटाधरः ॥

बालाम्रफल-

गुणाः । वायुरक्तपित्तकारित्वं । इति राजव्रल्लभः ॥

अपिच । कषायत्वं । अम्लरसत्वं । सुगन्धित्वं ॥

कफामयनाशित्वं । अस्रकरत्वं ।

पित्तप्रकोपवायु-

रक्तदोषपटुत्वादिरुचिप्रदत्वञ्च । तच्च बद्धास्थिता-

दृक् । इति राजनिर्घण्टः ॥ * ॥ मध्याम्रगुणः । पित्तकारित्वं ॥ * ॥ पक्वाम्रगुणाः । वर्णरुचि-मांसशुक्रबलकारित्वं । पित्ताविरोधित्वं । वायु-नाशित्वं । हृद्यत्वं । गुरुत्वं । अनुलोमनत्वं । इति

राजवल्लभः ॥ अपिच । त्रिदोषशमताकारित्वं । स्वादुत्वं । पुष्टिजनकत्वं ।

अधिकधातुप्रचयकारित्वं ।

तृप्तिकान्तिकारित्वं । तृष्णाश्रमशमनत्वञ्च । इति

राजनिर्घण्टः ॥ * ॥ मधुयुक्ताम्रगुणाः । क्षयरोग-प्लीहवातश्लेष्मरोगनाशित्वं ॥ * ॥

घृतयुक्ताम्रगुणाः ।

वातपित्तनाशित्वं । अग्निबलवर्णकारित्वञ्च ॥ * ॥

(तत्रादावाम्रस्य नामानि गुणाश्च ।

“आम्रः प्रोक्तो रसालश्च सहकारोऽतिसौरभः ।

कामाङ्गो मधुदूतश्च माकन्दः पिकवल्लभः ॥ * ॥

आम्रपुष्पमतीसारकफपित्तप्रमेहनुत् ।

असृग्दुष्टिहरं शीतं रुचिकृद्ग्राहि वातलम् ॥

आम्रं बालं कषायाम्लं रुच्यं मारुतपित्तकृत् ।

तरुणन्तु तदत्यम्लं रूक्षं दोषत्रयस्रकृत् ॥

आम्रमामं त्वचाहीनमातपेऽतिविशोषितम् ॥

अम्लं स्वादुकषायं स्याद्भेदनं कफवातजित् ॥ * ॥

पक्वन्तु मधुरं वृष्यं स्निग्धं बलसुखप्रदम् ॥

गुरु वातहरं हृद्यं वर्ण्यं शीतमपित्तलम् ।

कषायानुरसं वह्नि-श्लेष्म-शुक्र-विबर्द्धनम् ॥ * ॥

तदेव वृक्षसम्पक्वं गुरुवातहरं परम् ।

मधुराम्लरसं किञ्चित् भवेत् पित्तप्रकोपनम् ॥ * ॥

अम्रं कृत्रिमपक्वञ्च तद्भवेत् पित्तनाशनम् ॥ * ॥

रसस्याम्लस्य हीनस्तु माधुर्य्याच्च विशेषतः ॥

उषितं तत्परं रुच्यं बल्यं वीर्य्यकरं लघु ॥

शीतलं शीतपाकि स्याद्वातपित्तहरं सरम् ॥ * ॥

तद्रसो गालितो बल्यो गरुर्वातहरः सरः ।

अहृद्यस्तर्पणोऽतीव वृंहणः कफवर्द्धनः ॥ * ॥

हृद्यं वर्णकरं रुच्यं रक्तमांसबलप्रदम् ।

कषायानुरसं स्वादु वातघ्नं वृंहणं गुरु ॥

पित्ताविरोधि सम्पक्वमाम्रं शुक्रविवर्द्धनम् ।

वृंहणं मधुरं बल्यं गुरु विष्टभ्य जीर्य्यति” ॥

इति सुश्रुतः ॥)

**आम्रगन्धकः**, पुं, (आम्रगन्ध + कन् ।) समष्ठिल-

वृक्षः । इति राजनिर्घण्टः ॥

**आम्रपेषी**, स्त्री, (आम्रस्य पेषी ।) शुष्काम्रखण्डं ।

आम्षी इति भाषा । अस्या गुणाः ।

अम्लत्वं ।

कषायत्वं । उष्णत्व । भेदकत्वं कफवातनाशित्वञ्च ।

इति राजवल्लभः ॥

**आम्रातः**, पुं, (आम्र + अत् + अच् ।) आम्रातकः ।

इति शब्दमाला ॥ (अस्य गुणाः ।

यदुक्तं ।

“आम्रातमम्लं वातघ्नं गुरूष्णं रुचिकृत् परम् ।

पक्वन्तु तुवरं स्वादुरसपाकं हिमं स्मृतम् ।

तर्पणं श्लेष्मनं स्निग्धं वृष्यं विष्टम्भि वृंहणम् ।

गुरु बल्यं

मरुत्पित्तक्षतदाहक्षयास्रजित्” ।

“राजाम्रष्टङ्क आम्रातः कामाह्वो राजपुत्रकः ।

राजाम्रन्तुवरं स्वादु विशदं शीतलं गुरु ॥

ग्राहि रूक्षं विबन्धाध्मवातकृत् कफपित्तनुत्” ।

दुग्धयुक्ताम्रगुणाः । शीतलत्वं । स्वादुत्वं ।
गुरुत्वं ।
स्निग्धत्वं । भेदकत्वं । वातपित्तहारित्वं ।
शुक्ररक्तब-
लवर्द्धकत्वञ्च ॥ * ॥ तत्फलास्थिगुणाः ।
तृष्णाच्छ-
र्द्दिमेहातीसारनाशित्वं । इति राजबल्लभः ॥ * ॥
तत्त्वग्गुणः । कषायत्वं ॥ * ॥ तन्मूलगुणाः ।
सुगन्धित्वं । कषायत्वं । रुचिकारित्वं ।
संग्राहित्वं ।
शीतलत्वञ्च ॥ * ॥ तत्पुष्पगुणौ । रुचिकारित्वं
।
अग्निदीपनत्वञ्च ॥ * ॥ आम्रपेषीगुणाः । काषा-
यत्वं । अम्लत्वं । भेदकत्वं ।
कफवातनाशित्वञ्च ॥ * ॥
कृत्रिमपक्वाम्रगुणः ॥ अम्लरसहानेर्मधुरत्वाच्च
पित्तनाशित्वं ॥ * ॥ चुषिताम्रगुणाः ॥
परमरुचि-
बलवीर्य्यकारित्वं । लघुत्वं । शीतलत्वं । शीघ्र-
पाकित्वं । वातपित्तहारित्वं । सारकत्वञ्च ॥ *
॥
तद्गालितरसगुणाः । बलकारित्वं । गुरुत्वं ।
वात-
हरत्वं । सारकत्वं । हृद्यत्वं । तृप्तिजनकत्वं ।
अति-
शयबृंहणत्वं । कफवर्द्धकत्वञ्च ॥ * ॥ तत्खण्ड-
गुणाः ॥ गुरुत्वं । रोचकत्वं । गुरुपाकित्वं ।
मधु-
रत्वं । वृंहणत्वं । बलकारित्वं । शीतलत्वं ।
वातना-
शित्वञ्च ॥ * ॥ अतिशयाम्रभक्षणगुणाः ॥
मन्दाग्नि-
बिषमज्वररक्तामयबद्धगुदोदरनयनामयकारित्वं
।
"एतदम्लाम्रविषयं न तु मधुराम्रपरं । मधुरस्य
परं नेत्रहितत्वादिगुणत्वात् ॥ यद्यतिशयभक्षणं
करोति तदा शुण्ठीजलानुपानं । अथवा
सौवर्च्चलेन

तस्य खण्डं गुरुपरं रोचनं चिरपाकि च
।
मधुरं वृंहणं बल्यं शीतलं वातनाशनम्
॥
वातपित्तहरं रुच्यं वृंहणं बलवर्द्धनम् ॥
* ॥
वृष्यं वर्णकरं स्वादु दुग्धाम्रं गुरु
शीतलम् ॥ * ॥
मन्दानलत्वं विषमज्वरञ्च
रक्तामयं बद्धगुदोदरञ्च ।
आम्रातियोगो नयनामयं वा
कंरोति तस्मादति तानि नाद्यात् ॥
एतदम्लाम्रविषयं मधुराम्लपरं न तु ।
मधुरस्य परं नेत्रहितन्त्वाद्या गुणा यतः
॥
शुण्ठ्याम्भसोऽनुपानं
स्यादाम्राणामतिभक्षणे ।
जीरकं वा प्रयोक्तव्यं सह सौवर्च्चलेन
च" ॥ * ॥
आम्रवीजस्य गुणाः ।
"आम्रवीजं कषायं
स्याच्छर्द्यतीसारनाशनम् ।
ईषदम्लञ्च मधुरं तथा हृदयदाहनुत्"
॥ * ॥
आम्रनवपल्लवस्य गुणाः ॥
"आम्रस्य पल्लवं रुच्यं
कफपित्तविनाशनम्" ॥ * ॥
इति भावप्रकाशः ॥
"अपक्वमाम्रं फलमेव शस्तं
संग्राहि पित्तासृजि कोपनञ्च ।
तथा विपक्वं मधुरन्तु चाल्पं,
भेद्यं सपित्तामयनाशनञ्च" ॥
इति हारीतः ॥
"वातपित्तास्नकृद्बालं
बद्धास्थिकफपित्तकृत् ॥
गुर्व्वाम्रं वातजित् स्वाद्वम्लं
कफशुक्रकृत्" ।
इति वाभटः ॥

इति भावप्रकाशः ॥ तथा च चरके ।
"मधुरं वृंहणं बल्यमाम्रातं तर्पणं गुरु ।
सस्नेहं श्लेष्मलं शीतं वृष्यं विष्टभ्य
जीर्य्यति" ॥)

**आम्रातकः**, पुं, (आम्रं तद्रसम् आ ईषत् अतति
मातति । अत सातत्यगमने कृञादित्वात्
वुन् ।)
वृक्षविशेषः । आम्डा इति भाषा ।
तत्पपर्य्यायः ।
पीतनः २ कपीतनः ३ । इत्यमरः ॥
वर्षपाकी ४ ।
इति रत्नमाला ॥ पीतनकः ५
कपिचूडा ६ अभ्र-
वाटिकः ७ भृङ्गीफलः ८ रसाढ्यः ९
तनुक्षीरः १०
कपिप्रियः ११ अम्बरातकः १२
अम्बरीयः १३
कपिचूडः १४ । इति जटाधरः ॥
तदपक्वफलगुणाः ।
कषायत्वं । अम्लत्वं ।
हृत्कण्ठहर्षणत्वञ्च । तत्पक्व-
फलगुणाः । मधुराम्लत्वं । स्निग्धत्वं ।
पित्तकफ-
नाशित्वञ्च । इति राजनिर्घण्टः ॥
अपिच । तृप्ति-
बलविष्टम्भाजीर्णकारित्वम् । गुरुत्वञ्च
। इति राज-
वल्लभः ॥ आम्रावर्त्तः । इति
राजनिर्घण्टः ॥ (यथा
मार्कण्डेयपुराणे ।
"आम्रानाम्रातकान् भव्यान्
नारिकेलान् सतिन्दुकान्" । इति ।
अस्य पर्य्यायो गुणाश्च ।
"आम्रातकः पीतनश्च मर्कटाम्रः
कपीतनः ॥
आम्रातमम्लं वातघ्नं गुरूष्णं
रुचिकृत्सरम् ।

सह क्षीरं प्रयोक्तव्यं” ॥ * ॥
तत्पल्लवगुणाः । रुचिकारित्वं । कफपित्तनाशि-
त्वञ्च ॥ * ॥ तथा च राजनिर्घण्टः ।
“आम्रमामं जलं स्विन्नं मर्द्दितं दृढपाणिना ।
सिताशीताम्बुसंयुक्तं कर्पूरमरिचान्वितं ॥
प्रपाणकमिदं श्रेष्ठं भीमसेनेन निर्म्मितं ।
सद्यो रुचिकरं बल्यं शीघ्रमिन्द्रियतर्पणम्” ॥

“रक्तपित्तकरं बालमापूर्णं पित्तवर्द्धनम्
।
पक्वमाम्रं जयेद्वायुं मांसशुक्रबलप्रदम्”
॥ * ॥
“आम्रामलकलेहाश्च वृंहणा
बलबर्द्धनाः ।
रोचनास्तर्पणाश्चोक्ताः
स्नेहमाधुर्य्यगौरवात्” ॥
इति चरकः ॥
“पित्तानिलकरं बालं पित्तलं
बद्धकेशरम् ॥

पक्वन्तु तुवरं स्वादु रसे पाके हिमं
स्मृतं ॥
तर्पणं श्लेष्मलं स्निग्धं वृष्यं विष्टम्भि
वृंहणं ।
गुरु
बल्यम्मरुत्पित्तक्षतदाहक्षयास्रजित्” ॥
इति भावप्रकाशः ॥
“आम्रातकफलं वृष्यं सस्नेहं
श्लेष्मवर्द्धनं” ।
इति सुश्रुतः ॥)

**आम्रावर्त्तः**, पुं, (आम्रस्य आवर्त्तः ।) आम्र
शुष्करसः । तत्पर्य्यायः । आम्रातकः
२ । आम्सत्व
इति भाषा । अस्य गुणाः ।
तृष्णाच्छर्द्दिवातपित्त-
हरत्वम् । सारकत्वम् । रुचिकारित्वम्
। सूर्य्यां-

:शुभिः पाकात् लघुत्वञ्च । "पक्वस्य सहकारस्य-
कटे विस्तारितो रसः । घर्म्मशुष्को मुहुर्दत्त
आम्रातक इति स्मृतः" ॥ इति राजनिर्घण्टः ॥
(यदुक्तम् ।
"आम्रावर्त्तस्तृषाच्छर्द्दिवातपित्तहरः सरः ।
रुच्यः सूर्य्यांशुभिः पाकाल्लघुश्च स हि कीर्त्तितः" ।)

**आम्रेडितं**, क्ली, (आङ् + म्रेडि + क्तः ।) द्विस्त्रि-
रुक्तम् । इत्यमरः ॥ दुइ तिन् वार वला इति
भाषा । (उन्मत्तेन यथा कथितस्य पुनः पुनः कथनं
क्रियते एवं कथितस्य द्विस्त्रिवारकथनम् ।)

**आम्लवेतसः**, पुं, (आम्लोऽम्लरसयुक्तो वेतसः ।)
अम्लवेतसवृक्षः । इति राजनिर्जण्टः ॥
(अम्लवेतसशब्देऽस्य विशेषो ज्ञेयः ॥)

**आम्ला**, त्रि, (आ सम्यक् अम्ला अम्लरसयुक्ता ।)
तिन्तिडीवृक्षः । इति शब्दरत्नावली ॥ श्रीवल्ली ।
इति राजनिर्घण्टः ॥

**आम्लिका**, स्त्री, (आम्ला + कन् ।) तिन्तिडीवृक्षः ।
इत्यमरटीकायां रायमुकुटः ॥
अम्लोद्गारः । इति शब्दमाला ॥ (यथा चरके ।
"आम्लिकायाः फलं पक्वं
तस्मादल्पान्तरं गुणैः" ॥)

**आम्लीका**, स्त्री, (अम्ल + ठक् ।) तिन्तिडीवृक्षः ।
इत्यमरटीका ॥

**आयः**, पुं, (आङ् + या + ड ।) धनागमः । प्राप्तिः ।

**आयतिः**, स्त्री, (आङ् + यम् + क्तिन् ।) उत्तरकालः ।
भविष्यत्कालः ।
(यथा मनुः, ७ । १६९, ७ । १७८ ।
"यदावगच्छेदायत्यामाधिक्यं ध्रुवमात्मनः ।
तदात्वे चाल्पिकां पीडां तदा सन्धिं समाश्रयेत्" ।
"आयतिं सर्व्वकार्य्याणां तदात्वञ्च विचारयेत्" ॥)
प्रभावः । कोषदण्डजं तेजः ।
इत्यमरः ॥ दैर्घ्यं ।
सङ्गः । इति विश्वहेमचन्द्रौ ॥ प्रापणं । इति
धरणी ॥ (राजतरङ्गिणी ।
"प्रतापमायतिं शोभां हेमन्ताहस्य वारिदः ।
स्मृतिशेषां करोत्येव लोभश्च पृथिवीभुजां" ॥)

**आयत्तः**, त्रि, (आङ् + यम् + क्तः ।) अधीनः । बशी-
भूतः । इत्यमरः ॥ (यथा पञ्चतन्त्रे, --
"तत् भद्र ! स्वयत्नायत्तो ह्यात्मा सर्व्वस्य" ।)

**आयत्तिः** स्त्री, (आङ् + यत् + क्तिन् ।) दिनं । स्नेहः ।
वशित्वं । सामर्थ्यं । सीमा । इति विश्वः हेम-
चन्द्रश्च ॥ शयनं । दैर्घ्यं । प्रभावः ।
भविष्यत्कालः ।
इति धरणी ॥ (न्यायपथावलम्बिता ।
अधीनता ।)

**आयल्लकं**, क्ली, उत्कण्ठा । इति हेमचन्द्रः ॥

**आयसं**, क्ली, (अयस् + अण् ।) लौहं । इति

"रत्यायासमनस्तापक्षुत्पिपासादिसम्भवा" ।
महाभारते, --
"शोकहर्षौ तथायासः सर्व्वं स्नेहात् प्रवर्त्तते" ।
रामायणे, --
"नैवायासं क्वचित् भद्रे प्राप्स्यसे न च विप्रियं" ।)

**आयुः**, पुं, क्ली, (एति इण् गतौ छन्दसीण इत्युण् ।)
जीवितव्याप्यकालः । इति जटाधरः ॥ (जीवनं,
प्राणाः । यथा महाभारते, --
"अहं केशरिणः क्षेत्रे वायुना जगदायुना ।
जातः कमलपत्राक्षो हनूमान्नाम वानरः" ।
स्वनामख्यातश्चन्द्रवंशीयो राजा, स च नहुषस्य
पिता । यथा महाभारते, --
"नहुषो नाम राजर्षिर्व्यक्तं ते श्रोत्रमागतः ।
तत्रैव पूर्ब्बपूर्ब्बेषामायोर्वंशधरः सुतः" ।
पुरूरवसः पुत्त्रः स्वनामख्यातो राजा ।
यथा हरिवंशे, --
"बुधस्य तु महाराज विद्वान् पुत्त्रः पुरूरवाः" ।
"तस्य पुत्त्रा बभूवुस्ते सप्त देवसुतोपमाः ।
दिवि जाता महात्मान आयुर्धीमानमावसुः" ।
ह्रदस्य पुत्त्रः स्वनामख्यातोऽसुरः ।
यथा हरिवंशे, --
"ह्रदस्य पुत्त्रो ह्यायुर्वै शिविः कालस्तथैव च" ।)

**आयुः**, [स्] क्ली, (एति गच्छतीति इण् + उसि +
णिच्च ।) जीवितकालः । परमायुः । इत्यमरः ॥ तत्-
पर्य्यायः । विजीवितं २ नित्यगः ३ अनुबन्धः ४ ।
"पुरुषाः सर्व्वसिद्धाश्च चतुर्वर्षशतायुषः ।

लाभः । (यथा मनुः । ८ । ४१९ ।
"अहन्यहन्यवेक्षेत कर्म्मान्तान् वाहनानि च ।
आयव्ययौ च नियतावाकरान् कोषमेव च" ॥)
स्त्र्यगाररक्षकः । इति हलायुधः ॥
(ज्योतिष-
प्रसिद्धमेकादशभवनम् ।)

**आयःशूलिकः**, त्रि, (अयःशूलेन अर्थानन्विच्छति ।
अयःशूलदण्डाजिनाभ्यां ठक्ठञाविति ठक् ।)
तीक्ष्णकर्म्मा । क्षिप्रकारी । इति भूरिप्रयोगः ॥
(यदुक्तम् ।
"तीक्ष्णोपायेन योऽन्विच्छेत्स आयःशूलिको जनः" ।)

**आयतः**, त्रि, (आङ् + यम् + क्तः ।) दीर्घः । इत्यमरः ॥
लम्बा इति भाषा । (विस्तृतः । विशालः । आ-
कृष्टः । यथा पञ्चतन्त्रे ।
"तन्तवोऽप्यायता नित्यं तन्तवो बहुलाः समाः" ।)

**आयतच्छदा**, स्त्री, (आयताः च्छदा यस्याः सा ।)
कदलीवृक्ष । इति त्रिकाण्डशेषः ॥

**आयतनं**, क्ली, (आङ् + यत + ल्युट् ।) यज्ञस्थानं । देव-
स्थानं । तत्पर्य्यायः । चैत्यं २ । इत्यमरः ॥
यथा रामायणे, --
"येभ्यः प्रणमसे पुत्र ! चैत्येष्वायतनेषु च" ।
"समित्कुशपवित्राणि वेद्यश्चायतनानि च ।
स्थण्डिलानि च विप्राणां शैला वृक्षा ह्रदाः क्षुपाः" ॥
आश्रयः, विश्रामस्थानं । यथा चाणक्यः ।
भरतः राजनिर्घण्टश्च ॥
अयोनिर्मितादौ, त्रि ॥
(यथा महाभारते, --
"आयसं हृदयं मन्ये तस्य दुष्कृतकर्म्मणः" ।
यथा मनुः, ८ । ३१५ ।
"शक्तिं चोभयतस्तीक्ष्णामायसं दण्डमेव वा" ।
रघुवंशे, १७ । ६३ ।
"स चकर्ष परस्मात् तदयस्कान्त इवायसम्" ।
(अयोजनितार्थे यथा, --
"विपाके कटु शीतञ्च सर्व्वश्रेष्ठं तदायसम्" ॥
इति वैद्यकचक्रपाणिसंग्रहे ॥)

**आयसी**, स्त्री, (अयसा निर्म्मिता । अयस् + अण् +
ङीप् ।) लौहमयकवचः । तत्पर्य्यायः । अङ्गरक्षिणी
२ जालिका ३ जालप्राया ४ । इति हेमचन्द्रः ॥

**आयस्तः**, त्रि, (आङ् + यस् + कर्त्तरि क्तः ।) तेजितः ।
क्षिप्तः । क्लेशितः । कुपितः । हतः । इति मेदिनी ॥
(प्रयत्नशीलः, कार्य्योत्सुकः,
यत्नसिद्धः, कष्टसिद्धः ।)

**आयातं**, त्रि, (आङ् + या + क्तः ।) आगतं । यथा,
"हंसयुक्तविमानाग्रे साक्षसूत्रकमण्डलुः ।
आयाता ब्रह्मणः शक्तिर्ब्रह्माणी साभिधीयते" ॥
इति मार्कण्डेये देवीमाहात्म्यम् ॥

**आयानं**, क्ली, (आङ् + या + ल्युट् ।) स्वभावः । इति
कृते त्रेतादिकेऽप्येवं पादशो ह्रसति क्रमात्" ॥
इति वैद्यकं ॥
"अरोगाः सर्व्वसिद्धार्थाश्चतुर्व्वर्षशतायुषः ।
कृते त्रेतादिषु ह्येषामायुर्ह्रसति पादशः" ॥
इति मनुः १ । १८३ ॥ घृतं । इति राजनिर्घण्टः ॥
("नाभिस्थः प्राणपवनः स्पृष्ट्वा हृत्कमलान्तरं ।
कण्ठाद्बहिर्विनिर्याति पातुं विष्णुपदामृतं ॥
पीत्वा चाम्बरपीयुषं पुनरायाति वेगतः ।
प्रीणयन् देहमखिलं जीवयन् जठरानलम् ॥
शरीरप्राणयोरेवं संयोगादायुरुच्यते" ।
इति शार्ङ्गधरः ॥
"शरीरेन्द्रियसत्त्वात्मसंयोगो धारि जीवितं ।
नित्यगश्चानुबन्धश्च पर्य्यायैरायुरुच्यते" ॥ इति ।
"वर्षशतं खल्वायुषः प्रमाणमस्मिन् काले । सन्ति
पुनरधिकोनवर्षशतजीविनो मनुष्याः । तेषां
विकृतिवर्ज्यैः प्रकृत्यादिबलविशेषैरायुषो लक्ष-
णतश्च प्रमाणमुपलभ्य वयसस्त्रित्वं विभजेत" ।
"तन्त्रेण तत्रायुरुक्तं स्वलक्षणतो यथावदिहैव
तत्र शरीरमानसाभ्यां रोगाभ्यामनभिद्रुतस्य
विशेषेण यौवनवतः समन्वागतबलवीर्य्यपौरुष-
पराक्रमस्य ज्ञानविज्ञानेन्द्रियेन्द्रियार्थबलसमुदाये
वर्त्तमानस्य परमर्द्धिरुचिरविविधोपभोगस्य स-
मृद्धसर्व्वारम्भस्य यथेष्टविचारणात् सुखमायु-
रुच्यते" । इति च ।
"असुखमतो विपर्य्ययेण हितैषिणः पुनर्भूताना-
म्परस्वादुपरतस्य सत्यवादिनः शमपरस्य परी-

"नासमीक्ष्य परं स्थानं पूर्ब्बमायतनं त्यजेत्" ॥

कुमारसम्भवे, ७ । ५ ।

"स्नेहस्तदेकायतनं जगाम" ।

भद्रासन भिटा इत्यादिख्यातो वास्तुदेशः ।

याज्ञवल्क्यः, --

"आरामायतनग्रामनिपानोद्यानवेश्मसु" ।)

व्याधिनिदानम् ।)

जटाधरः ॥ आगमनं ॥ (यथा महाभारते, --

"आयाने वासि विदितो रामस्य विदितात्मनः" ।

**आयामः**, पुं, (आङ् + यम् + घञ् ।) दैर्घ्यं । इत्यमरः ॥

(यथा रामायणे, --

"योजनायमविस्तारमेकैको धरणीतलम्" ।

मेघदूते, पूर्ब्बमेघे । ५८ ।

"तेनोदीचीं दिशमनुसरेस्तिर्य्यगायामशोभी" ।)

**आयासः**, पुं, (आङ् + यस् + घञ् ।) श्रान्तिः । तत्-

पर्य्यायः । श्रमः २ क्लमः ३ क्लेशः ४ परिश्रमः ५

प्रयासः ६ व्यायामः ७ । इति हेमचन्द्रः ॥ (अति-

यत्नः । प्रयत्नः । यथा साहित्यदर्पणे, --

:क्ष्यकारिणोऽप्रमत्तस्य त्रिवर्गं परस्परेणानुपहत-

मुपसेवमानस्य पूजार्हसम्पूजकस्य ज्ञानविज्ञानोप-
शमशीलस्य वृद्धोपसेविनः सुनियतरागरोगेर्ष्या-
मदमानवेगस्य सततं विविधप्रदानपरस्य तपो-
ज्ञानप्रशमनित्यस्याध्यात्मविदस्तत्परस्य लोकमि-
मञ्चासुञ्चापेक्षमाणस्य स्मृतिमतो हितमायु-
रुच्यते" । इति च ॥
"अहितमतो विपर्य्ययेण प्रमाणमायुषस्त्वर्थेन्द्रिय-
मनोबुद्धिचेष्टादीनां विकृतिलक्षणैरुपलभ्यते अ-
निमित्तैरिदमस्मात् क्षणान्मुहूर्त्ताद्दिवसात्त्रिपञ्च-
दश-सप्तदश-द्वादशाहात् पक्षान्मासात् षण्मा-
सात् संवत्सराद्वा स्वभावमापत्स्यते इति । तत्र-
स्वभावः प्रवृत्तेरुपरमो मरणमनित्यतानिरोध-
इत्येकोऽर्थः । इत्यायुषः प्रमाणमतो विपरीतम-
प्रमाणम्" । इति च ॥
"वर्षशतं खल्वायुषः प्रमाणमस्मिन् काले तस्य नि-
मित्तं प्रकृतिगुणात्मसम्पत् सात्मोपसेवनञ्चेति" ।
इति च चरकः ॥)

**आयुक्तः**, त्रि, (आङ् + युज् + क्तः ।) कर्म्माध्यक्षः ।

तत्पर्य्यायः । नियोगी २ कर्म्मसचिवः ३ व्यापृतः ४ ।

न्तर्गतधन्वन्तरिप्रणीतविद्याविशषः । वैद्यकशास्त्रं ।
चिकित्साशास्त्रं । तत्तु अथर्व्ववेदान्तर्गतं । यथा,
"विधाताथर्व्वसर्व्वस्वमायुर्व्वेदं प्रकाशयन् ।
स्वनाम्ना संहितां चक्रे लक्षश्लोकमयीमृजुं" ॥
इति भावप्रकाशः ॥
चरणव्यूहमते ऋग्वेदस्योपवेदः आयुर्व्वेदः । अथ-
र्व्ववेदस्य शस्त्रशास्त्राण्युपवेदः ॥ * ॥ अथायुर्व्वेदस्य
विवरणम् ।
"ऋग्यजुःसामाथर्व्वाख्यान् दृष्ट्वा वेदान् प्रजापतिः ।
विचिन्त्य तेषामर्थं चैवायुर्व्वेदं चकार सः ॥
कृत्वा तु पञ्चमं वेदं भास्कराय ददौ विभुः ।
स्वतन्त्रसंहितां तस्मात् भास्करश्च चकार सः ॥
भास्करश्च स्वशिष्येभ्य आयुर्व्वेदं स्वसंहितां ।
प्रददौ पाठयामास ते चक्रुः संहितास्ततः ॥
तेषां नामानि विदुषां तन्त्राणि तत्कृतानि च ।
व्याधिप्रणाशवीजानि साध्वि मत्तो निशामय ॥
धन्वन्तरिर्द्दिवोदासः काशीराजोऽश्विनीसुतौ ।
नकुलः सहदेवोऽर्किश्च्यवनो जनको बुधः ॥
जावालो जाजलिः पैलः करथोऽगस्त्य एव च ।

शब्दे वैद्यशब्दे च द्रष्टव्यम् ॥
("हिताहितं सुखं दुःखमायुस्तस्य हिताहितं ।
मानञ्च तच्च यत्रोक्तमायुर्व्वेदः स उच्यते" ॥
"तस्यायुषः पुण्यतमो वेदो वेदविदां मतः ।
वक्ष्यते यन्मनुष्याणां लोकयोरुभयोर्हितः" ॥
"किमायु कस्मादायुर्व्वेदः किञ्चायुर्व्वेदः शाश्वतो
ऽशाश्वत इति । कानि चास्याङ्गानि कैश्चायमध्ये-
तव्यः किमर्थञ्चेति" ।
"तत्र भिषजा पृष्टेनैवञ्चतुर्णामृक्सामयजुरथर्व्व-
वेदानामात्मनोऽथर्ब्बवेदे भक्तिरादेश्या वेदोह्या-
थर्व्वणः स्वस्त्ययनबलिमङ्गलहोमनियमप्रायश्चि-
त्तोपवासमन्त्रादिपरिग्रहाच्चिकित्सां प्राह चि-
कित्सा चायुषो हितायोपदिश्यते बेदञ्चोपदि-
श्यायुर्वाच्यं तत्रायुश्चेतनाप्रवृत्तिजीवितमनुबन्धो-
धारि चेत्येकोऽर्थः, तदा आयुर्व्वेदयत्यायुर्व्वेदः कथ-
मुच्यते स्वलक्षणतः सुखासुखतो हिताहितः
प्रमाणाप्रमाणतश्च यतश्चायुष्यानायुष्याणि द्रव्य-
गुणकर्म्माणि वेदयत्यतोऽप्यायुर्व्वेदः तत्रायुष्याणि
अनायुष्याणि च द्रव्यगुणकर्म्माणि केबलेनोप-
देक्ष्यन्ते" ।
"तानिन्द्रः सहस्रदृगमरगुरुवरोऽब्रवीत् स्वागतं
ब्रह्मविदां ज्ञानतपोधनानां ब्रह्मर्षीणामस्ति भुवो-
ग्लानिरप्रभावत्वं वैस्वर्य्यं वैवर्ण्यञ्च ग्राम्यवासकृत-
मसुखमसुखानुबन्धं च । ग्राम्यो हि वासो मूल-
मशस्तानां तत्कृतं पुण्यकृद्भिरनुग्रहः प्रजानां
स्वशरीरमरक्षिभिः कालश्चायमायुर्व्वेदोपदेशस्य

इति हेमचन्द्रः ॥

**आयुधः**, पुं, (आयुध्यते अनेनेति । आङ् + युध् + क ।)

अस्त्रं । इत्यमरः ॥ (आयुधानां त्रयो भेदाः । प्रहर-
णानि, पाणिमुक्तानि, यन्त्रमुक्तानि चेति । तत्र
प्रहरणानि खड्गादीनि, पाणिमुक्तानि चक्रादीनि,
यन्त्रमुक्तानि शरादीनि । "धृतायुधो यावदहं
तावदन्यैः किमायधैः" । "किं वक्ष्यत्ययमेवमद्य
विमुखं मामुद्यतेऽप्यायुधे" । इति चौत्तरचरिते ।)

**आयुधधर्म्मिणी**, स्त्री, (आयुधस्येव धर्म्मो विद्यते

यस्याः । आयुधधर्म्म + इन् + ङीप् ।) जयन्ती-
वृक्षः । इति शब्दचन्द्रिका ॥

**आयुधागारं**, क्ली, (आयुधानां, आगारं । षष्ठीतत् ।)

अस्त्रगृहं । सेलाखाना इति ख्यातं । इति महा-
भारते राजधर्म्मः ॥ तत्र नियुक्तस्य लक्षणं यथा,-
"स्थापनाजातितत्त्वज्ञः सततं प्रतिजागृता ।
राज्ञः स्यादायुधागारे दक्षः कर्म्मसु चोद्यतः" ॥
इति मात्स्ये १८९ अध्यायः ॥ (यथा मनुः ९ । २८० ।
"कोष्ठागारायुधागारदेवतागारभेदकान् ।
हस्त्यश्वरथहर्त्तॄंश्च हन्यादेवाविचारयन्" ॥)

**आयुधिकः**, पुं, (आयुधेन जीवति, आयुध + ठक् ।)

एते वेदाङ्गवेदज्ञाः षोडश व्याधिनाशकाः ॥
चिकित्सातत्त्वविज्ञानं नाम तन्त्रं मनोरमम् ।
धन्वन्तरिश्च भगवान् चकार प्रथमे सति ॥
चिकित्सादर्पणं नाम दिवोदासश्चकार सः ।
चिकित्साकौमुदीं दिव्यां काशीराजश्चकार सः ॥
चिकित्सासारतन्त्रञ्च भ्रमघ्नं चाश्विनीसुतौ ।
तन्त्रं वैद्यकसर्व्वस्वं नकुलश्च चकार सः ॥
चकार सहदेवश्च व्याधिसिन्धुविमर्द्दनं ।
ज्ञानार्णवं महातन्त्रं यमराजश्चकार सः ॥
च्यवनो जीवदानञ्च चकार भगवानृषिः ।
चकार जनको योगी वैद्यसन्देहभञ्जनं ॥
सर्व्वसारं चन्द्रसुतो जावालस्तन्त्रसारकं ।
वेदाङ्गसारं तन्त्रञ्च चकार जाजलिर्मुनिः ॥
पैलो निदानं करथस्तन्त्रं सर्व्वधरं परं ।
द्वैधनिर्णयतन्त्रञ्च चकार कुम्भसम्भवः ॥
चिकित्साशास्त्रवीजानि तन्त्राण्येतानि षोडश
व्याधिप्रणाशवीजानि बलाधानकराणि च ॥
मथित्वा ज्ञानमन्थानैरायुर्व्वेदपयोनिधिं ।
ततस्तन्त्राण्युज्जहरुर्नवनीतानि कोविदाः ॥

ब्रह्मर्षीणामात्मनः प्रजानाञ्चानुग्रहार्थमायुर्व्वेद-
मश्विनौ मह्यं प्रयच्छतां प्रजापतिरश्विभ्यां ।
प्रजापतये ब्रह्मा प्रजानामल्पमायुर्ज्जराव्याधि-
बहुलमसुखमसुखानुबन्धं अल्पत्वादल्पतपोदम-
नियमदानाध्ययनसञ्चयं मत्वा पुण्यतममायुः-
प्रकर्षकरं जराव्याधिप्रशमनं ऊर्ज्जस्करममृतं
शिवं शरण्यमुदात्तं भवन्तो मत्तः श्रोतुमर्हन्त्युप-
धारयितुं प्रकाशयितुञ्च प्रजानुग्रहार्थमार्षं ब्रह्म
च मैत्रीं कारुण्यमात्मनश्चानुत्तमं पुण्यमुदारं
ब्राह्ममक्षयं कर्म्मेति" । इति चरकः ॥
"तानुवाच भगवान् स्वागतं वः । सर्व्वत्र वा
मीमांस्या अध्याप्याश्च भवन्तो वत्साः ! इह
खल्वायुर्व्वेदो नाम यदुपाङ्गमथर्व्ववेदस्यानुत्पाद्यव
प्रजाः श्लोकशतसहस्रमध्यायसहस्रञ्च कृतवान् स्व-
यम्भूः । ततोऽल्पायुष्ट्वमल्पमेधस्त्वञ्चावलोक्य नराणां
भूयोऽष्टधा प्रणीतवान् ॥ तद्यथा ॥ शल्यं शालाक्यं
कायचिकित्सा भूतविद्या कौमारमृत्यमगदतन्त्रं
रसायनतन्त्रं वाजीकरणतन्त्रमिति" ॥
"वत्स ! सुश्रुत ! इह खल्वायुर्व्वेदप्रयोजनं व्या-
ध्युपसृष्टानां व्याधिपरिमोक्षः स्वस्थस्य रक्षणञ्च ।
आयुरस्मिन् विद्यतेऽनेन वा आयुर्विन्दतीत्यायु-
र्व्वेदः । तस्याङ्गवरमाद्यमागमप्रत्यक्षानुमानोपमानै-
रविरुद्धमुच्यमानमुपधारय । एतद्ध्यङ्गं प्रथमं
प्रागभिघातव्रणसंरोहादयज्ञशिरःसन्धानाच्च" ।
"तदिदं शाश्वतं पुण्यं स्वर्ग्यं यशस्यमायुष्यं वृत्ति-
करञ्चेति" ॥

अस्त्रजीवी । तत्पर्य्यायः । शस्त्राजीवः २ काण्ड-
पृष्ठः ३ आयुधीयः ४ । इत्यमरः ॥ (यथा महा-
भारते १६ । ७ । ३६ ।
“न पादरक्षैः संयुक्ताः नान्तरायुधिका ययुः” ।

**आयुधीयः**, पुं, (आयुध + छ ।) आयुधिकः । इत्य-
मरः ॥ (योद्धा । यथा मनुः ७ । २२२ ।
“अलङ्कृतश्च सम्पश्येदायुधीयं पुनर्जनं” ।
उत्तरचरिते ६ । “तर्ज्जयन्ति विस्फुरितशस्त्राः
कुमारमायुधीयश्रेणयः” ।)

**आयुर्द्रव्यं**, क्ली, (आयसो द्रव्यम् ।) औषधं । इति रत्नमाला ॥

**आयुर्व्वेदः**, पुं, (आयुरनेन विन्दति वेत्ति वेत्यायुर्व्वेदः ।
आयस् + विद् + करणे घञ् ।) अष्टादशविद्या-

एतानि क्रमशो दृष्ट्वा दिव्यां भास्करसंहितां ।
आयुर्व्वेदं सर्व्ववीजं सर्व्वं जानामि सुन्दरि ॥
व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः ।
एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः ॥
आयुर्व्वेदस्य विज्ञाता चिकित्सासु यथार्थवित् ।
धर्म्मिष्ठश्च दयालुश्च तेन वैद्यः प्रकीर्त्तितः” ॥
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १६ अध्यायः ॥ * ॥
तस्य लक्षणम् यथा, --
“आयुर्हिताहितं व्याधिनिदानं शमनं तथा ।
विद्यन्ते यत्र विद्वद्भिः स आयुर्व्वेद उच्यते” ॥
तस्य निरुक्तिर्यथा, --
“अनेन पुरुषो यस्मात् आयुर्विन्दति वेत्ति च ।
तस्मान्मुनिवरैरेष आयुर्वेद इति स्मृतः” ॥
इति भावप्रकाशः ॥ * ॥ अन्यत् रोगशब्दे वेद-

:"ब्रह्मा प्रोवाच ततः प्रजापतिरधिजगे तस्मा-
दश्विनावश्विभ्यामिन्द्र इन्द्रादहं मया
त्विह प्रदेय-
मर्थिभ्यः प्रजाहितहेतोः" ॥ इति
सुश्रुतः ॥)

**आयुर्व्वेदी**, [न्] त्रि, (आयुर्व्वेदो ज्ञातव्यत्वेन विद्यते
यस्य । आयुर्व्वेद + इनि ।)
आयुर्व्वेदज्ञः । चिकित्-
सकः । वैद्यः । इति हेमचन्द्रः
राजनिर्घण्टश्च ॥

**आयुर्योगः**, पुं, (ऽ्रायुषो जीवितकालस्य योगो
भवत्यस्मात् ।) औषधं । इति
राजनिर्घण्टः ।

**आयुष्मान्**, [त्] त्रि, (आयुस् + मतुप् ।) चिरजीवी ।
दीर्घायुः । तत्पर्य्यायः । जैवातृकः २ ।
इत्यमरः ॥
(यथा मनुः, २ । १२५, ३ । २६३ ।
"आयुष्मान् भव सौम्येति वाच्यो
विप्रोऽभिवादने" ।
"आयुष्मन्तं सुतं सूते
यशोमेधासमन्वितं" इतिच ॥)

**आयुष्मान्**, पुं, विस्कुम्भादिसप्तविंशतियोगान्तर्गत-
तृतीययोगः । तत्र जातफलं ।
"यस्यायुष्मान् जन्म-
काले धनुष्मान् याने यानं तस्य देशेषु
कार्य्यं ।
कुर्य्यान्न्यूनं क्रीडनं पुष्पवाट्यां
दासैर्व्वासैरन्वितो
गर्व्वितश्च" ॥ इति दीपिका ॥
("आयुष्मान् सत्त्ववान् साध्यो
द्रव्यवानात्मवानपि"
इति सुश्रुतः ॥)

**आयुस्करः**, त्रि, (आयुस् + कृ + क ।) परमायुर्ज-
नकः ॥ (आयुर्वृद्धिजनकः ।
"सहामलकशुक्तिभिर्दधिसरेण तैलेन वा
गुडेन पयसा घृतेन यवशक्तुभिर्वा सह ।
तिलेन सहमाक्षिकेण पलनेन सूपेन वा
वपुस्करमरुस्करं परममेध्यमायुस्करं"
॥
इति वाभटः ॥)

**आयोगः**, पुं, (आङ् + युज् + घञ् ।) गन्धमाल्यो-
पहारः । व्यापारः । रोधः । इति
हेमचन्द्रः ॥
(यथा रामायणे, --
"सरलैः कर्णिकारैश्च किंशुकैश्च
सुपुष्पितैः ।
स देशो भ्रमरायोगः प्रदीप्त इव लक्ष्यते"
॥)

**आयोगवः**, पुं, (अयोगव एव स्वार्थे अण् ।) शूद्रा-
द्वैश्यायां जातो जातिविशेषः । इति
हेमचन्द्रः ॥
तस्य कर्म्म काष्ठतक्षणं । (यथा मनुः
१० । १२,
१० । १६ ।
"शूद्रादायोगवः क्षत्ता चण्डालश्चाधमो
नृणां ।
वैश्यराजन्यविप्रासु जायन्ते
वर्णसङ्कराः" ॥
"आयोगवोऽयं क्षत्ता च
चाण्डालश्चाधमो नृणां ।
प्रातिलोम्येन जायन्ते
शूद्रादपसदास्त्रयः" ॥)

**आयोजनं**, क्ली, (आङ् + युज् + ल्युट् ।) उद्योगः ।
आहरणं । द्रव्यासादनं । यथा, --
रोगशङ्कामपि हन्ति अच् बधादेशश्च ।) वृक्ष-
विशेषः । सोनालु सोँदालि इति ख्यातः ।
तत्-
पर्य्यायः । राजवृक्षः २ सम्पाकः ३ चतुरङ्गुलः
४
आरेवतः ५ व्याधिघातः ६ कृतमालः ७ सुव-
र्णकः ८ । इत्यमरः ॥ मन्थानः ९ रोचनः १०
दीर्घ-
फलः ११ नृपद्रुमः १२ हिमपुष्पः १३
राजतरुः १४
कण्डुघ्नः १५ ज्वरान्तकः १६ अरुजः १७
स्वर्ण-
पुष्पः १८ स्वर्णद्रुः १९ कुष्ठसूदनः २० कर्णा-
भरणकः २१ महाराजद्रुमः २२ कर्णिकारः
२३
स्वर्णाङ्गः २४ । इति राजनिर्घण्टः ॥ प्रग्रहः
२५ ।
इति रत्नमाला ॥ अस्य गुणाः । अतिमधुरत्वं
।
शीतलत्वं ।
शूलज्वरकण्डुकुष्ठमेहकफविष्टम्भना-
शित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
ज्वर-
हृद्रोगवातरक्तोदावर्त्तरोगे अतिशयपथ्यत्वं ।
मृदु-
त्वञ्च । अस्य फलगुणाः । मधुरत्वं ।
शुक्रकारित्वं ।
वातपित्तहारित्वञ्च । इति राजवल्लभः ॥
आमल-
तास इति हिन्दीभाषा ।
"आरग्वधो राजकृक्षः सम्पाकश्चतुरङ्गुलः ।
आरेवतव्याधिघातकृतमालसुवर्णकाः ॥
कर्णिकारो दीर्घफलः स्वर्णाङ्गः स्वर्णभूषणः ।
आरग्वधो गुरुः स्वादुः शीतलः स्रंसनोत्तमः ॥
ज्वरहृद्रोगपित्तास्रवातोदावर्त्तशूलनुत् ।
तत्फलं स्रंसनं रुच्यं कुष्ठपित्तकफापहं ॥
ज्वरे तु सततं पथ्यं कोष्ठशुद्धिकरं परं" ।

**आयुष्यं**, त्रि, (आयुष् + यत् ।) पथ्यं । इति राज-

निर्घण्टः ॥ आयुर्हितकारकं ॥ (मनुः । ४ । १०६ ।
"धन्यं यशस्यमायुष्यं स्वर्ग्यं चातिथिपूजनं" ।
तत्रैव २ । ५१ ।
"आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखम्" ।
"आयुष्यं भोजनं जीर्णे वेगानाञ्चाविधारणं ।
ब्रह्मचर्य्यमहिंसा च साहसानाञ्च वर्ज्जनं" ॥
इति सुश्रुतः ॥
"आयुष्या दीपनी चैव चक्षुष्या व्रणशोधिनी" ।
इति हारीतः ।)

**आयुष्यसूक्तं**, क्ली, (आयुष्यञ्च तत्सूक्तञ्चेति । कर्म्म-

धारयः ।) नान्दीश्राद्धादौ वसुधारासम्पातनान-
न्तरपाठ्यो वैदिकमन्त्रविशेषः ।
सामगानां तन्मन्त्रो यथा, --
ॐ आयुर्विश्वायुर्विश्वं विश्वमायुरसिमहि । प्रजा-
न्त्वष्टरधिनिधेह्यस्मै शतं जीवेम शरदो वयन्ते ।
आयुषे मे पवस्व वर्च्चसे मे पवस्व विदुः पृथिव्या
दिवो जनित्र्या शृण्वन्त्वापोधःक्षरन्ती सोमो
होद्गाय ममायुषे मम ब्रह्मवर्च्चसाय यजमान-
स्यद्ध्यर्ा अमुष्य राज्याय । अमुष्य स्थाने यदर्थं वृद्धि-
स्तस्य षष्ट्यन्तनाम प्रयोज्यं । इति रघुनन्दनभट्टा-
चार्य्यकृतश्राद्धप्रयोगतत्त्वं ॥ * ॥
"कुत्रचित् तण्डुलाः सन्ति क्व च स्थाली क्व चेन्धनं ।
तेषामायोजनं कुर्व्वन् मुख्यः कर्त्ताभिधीयते" ॥
इति गोयीचन्द्रधृतकारिका ॥

**आयोधनं**, क्ली, (आङ् + युध + ल्यट् ।) युद्धं । बधः ।

इति मेदिनी ॥ (रघुवंशे, ६ । ४२ ।
"आयोधने कृष्णगतिं सहाय-
मवाप्य यः क्षत्रियकालरात्रिं" ।
भट्टिः, "आयोधने स्थायुकमस्त्रजातम्" ।
रघुः, ५ । ७१ । "आयोधनाग्रसरतां त्वयि वीर !
याते ।)

**आरं**, क्ली, (आङ् + ऋ + भावे घञ् ।) मुण्डायसं ।

मुण्डलोहं । इति राजनिर्घण्टः ॥ पित्तलं । इत्य-
मरटीका ॥ कोणः । प्रान्तभागः । इत्यानन्दलह-
रीटीका ॥ (चक्राङ्गकाष्ठभेदः । यथा महाभारते,
"आरान्तरेनावपतत् संक्षिप्याङ्गं क्षणेन ह" ।
"यस्त्रिषष्टिशतारण्यं वेदार्थं स परः कविः" ॥)

**आरः**, पुं, (आङ् + ऋ + कर्त्तरि संज्ञायां घञ् ।)

मङ्गलग्रहः । शनिः । पित्तलं । इति हेमचन्द्रः ॥
वृक्षभेदः । तत्पर्य्यायः । मधुराम्लफलः २ । इति
रत्नमाला ॥ रेफल इति ख्यातः ॥

**आरकूटः**, पुं क्ली, (आरं कूटयति स्तूपीकरोति

पचाद्यच् ।) पित्तलं । इत्यमरः ॥ (यथा नैषधे ।
इति भावप्रकाशः ॥
(व्यवहारो यथा, --
"बाले वृद्धे क्षते क्षीणे सुकुमारे च मानवे ।
योज्योमृद्वलपायित्वाद्विशेषाच्चतुरङ्गुलः" । * ॥
ग्रहणप्रणाली यथा ॥ * ॥
"फलकाले फलन्तस्य ग्राह्यं परिणतञ्च यत् ।
तेषां गुणवतां भारं सिकतासु निधापयेत् ॥
सप्तरात्रात् ससुद्धृत्य शोषयेदातपे मिषक् ।
ततो मज्जानमुद्धृत्य शुचौ भाण्डे निधापयेत्" । * ॥
संयोगविशेषे गुणा यथा ॥ * ॥
"द्राक्षारसयुतो देयो दाहोदावर्त्तपीडिते ।
चतुर्व्वर्षसुखं बाले यावद्द्वादशवार्षिके । * ॥
चतुरङ्गुलमज्ज्ञस्तु प्रसृतं वाथवाञ्जलिं ।
सुरामण्डेन संयुक्तमथवा कोलसीधुना ॥
दधिमण्डेन वा युक्तंरसेनामलकस्य वा ।
कृत्वा शीतकषायं तं पिबेत् सौवीरकेण वा" ॥
इति चरकः ॥)

**आरट्टः**, पुं, (आङ् + रट् + टच् ।) देशविशेषः ।

त्रिकाण्डशेषे क्षत्रियवर्गे आरट्टजशब्ददर्शनात् ॥
तत्र आरट्टजोऽपि पाठः ॥ (यथा भारते, --
"पञ्चनद्यो वहन्त्येता यत्र पीलवनान्युत ।
शतद्रुश्च विपाशा च तृतीयैरावती तथा ॥
चन्द्रभागा वितस्ता च सिन्धुषष्ठा वहिर्गिरेः ।
आरट्टा नाम ते देशा नष्टधर्म्मा न तान् व्रजेत्" ॥
"पञ्च नद्यो वहन्त्येता यत्र निःसृत्य पर्ब्बतात् ।
आरट्टा नाम वाहीका न तेष्वार्य्यो द्व्यहं वसेत्" ॥)

**आरट्टजः**, पुं, (आरट्टदेशे जायते आरट्ट + जन +

डः ।) आरट्टदेशोद्भवघोटकः । इति जटाधरः

यजुर्विदां तन्मन्त्रो यथा, --

ॐ आयुष्यं वर्च्चस्यं रायष्पोषमौद्भिदं

इदं हिरण्यं

वर्च्चस्व जेत्रायाविशतादुमां । न

तद्रक्षां¤सि न

पिशाचास्तरन्ति वेदानामोजः

प्रथमजं¤ ह्येतत् ।

यो बिभर्त्ति दाक्षायण्यं¤ हिरण्यं¤

सहदेवेषु

कृणुते दीर्घमायुः समनुष्येषु कृणुते

दीर्घमायुः ।

यदा बध्नान्दाक्षायणां¤ हिरण्यं¤

शतानीकाय

सुमनस्यमानाः । तन्न आवध्नामि

शतसारदया

युष्माञ्जरदष्टिर्यथासं" । इति

तत्कृतयजुर्व्वेदीय-

श्राद्धप्रयोगतत्त्वं ॥

"अकाञ्चने काञ्चननायिकाङ्के

किमारकूटाभर-

णेन न श्रियः" ।)

**आरक्षं**, त्रि, (आरक्षतीति । आङ् + रक्ष + अच् ।)

रक्षायुक्तं । इति शब्दरत्नावली ॥

रक्षणीयं । इति

विश्वः ॥

**आरक्षः**, पुं, (आङ् + रक्ष + अच् ।) गजकुम्भसन्धिः ।

इति त्रिकाण्डशेषः ॥

**आरग्वधः**, पुं, (आ + रगे शङ्कायां क्विप । आरग

:त्रिकाण्डशेशभूरिप्रयोगौ च ॥

(आरट्टदेशोत्पन्ने,

त्रि । यथा महाभारते, --

"सीधोः पानं गुरुतल्पावमर्द्दो

भ्रूणहत्या परवित्तापहारः ।

येषां धर्म्मस्तान् प्रति नास्त्यधर्म्म-

आरट्टजान् पञ्चनदान् धिगस्तु" ॥)

**आरणिः**, पुं, (आङ् + ऋ + अणिच् ।) आवर्त्तः ।

तत्पर्य्यायः । कुलहण्डकः २ । इति

हारावली ॥

पाकमारा जल इत्यादि भाषा ॥

**आरण्यपशुः**, पुं, (अरण्ये भवः । अरण्य + ष्यञ् + स

चासौ पशुश्चेति कर्म्मधारयः ।)

अरण्यजातपशुः ।

स च सप्तधा यथा । महिषः १ वानरः

२ ऋक्षः

३ सरीसृपः ४ रुरुः ५ पृषतः ६ मृगः

७ । इति

तिथ्यादितत्त्वे पैठीनसिः ॥

**आरण्यमुद्गा**, स्त्री, (अरण्यमुद्गस्येवाकारः पर्णे यस्याः ।

ततः स्वार्थे अण् ।) मुद्गपर्णे । मुगानी

इति

भाषा । इति राजनिर्घण्टः ॥

**आरण्यराशिः**, पुं, (अरण्ये भवः आरण्यः अत्र सिंह

एव स एव राशिः ।) सिंहराशिः ।

मकरप्रथ-

मार्द्धः । मीनमेषवृषराशयः । इति

दीपिका ॥

**आरतिः**, स्त्री, (आङ् + रम् + क्तिन् ।) विरतिः । नि-

यथा, --

"मीनादिस्थो रविर्य्येषामारम्भप्रथमक्षणे ।

भबेत्तेऽब्दे चान्द्रमासाश्चैत्राद्या द्वादश

स्मृताः" ॥

आरम्भप्रथमक्षणे आद्यकृत्याद्यसमये ।

इति मल-

सामतत्त्वम् ॥ पारिभाषिकारम्भो यथा, --

"आरम्भो वरणं यज्ञे सङ्कल्पो व्रतजापयोः

।

नान्दीश्राद्धं विवाहादौ श्राद्धे

पाकपरिष्क्रिया" ॥

इति तिथ्यादितत्त्वम् ॥ (यथा मेघदूते ।

३७ । --

"मृत्यारम्भे हर

पशुपतेरार्द्रनागाजिनेच्छाम्" ।

साहित्यदर्पणे । प्रमथपरिच्छेदे ।

"ग्रन्थारम्भे निर्विघ्नेन

प्रारिप्सितपरिसमाप्ति-

कामः" । रघुवंशे । १ । १५ ।

"आगमैः सदृशारम्भ आरम्भसदृशोदयः"

।)

**आरवः**, पुं, (आङ् + रु + अच् ।) शब्दः । इत्यमरः ॥

(यथा रामायणे । "वानराश्चक्रुरारवं" ।)

**आरवी**, स्त्री, आरवनामकम्लेच्छदेशीयभाषा । यथा,

"ज्येष्ठाश्लेषा मघा पूर्ब्बा रेवती भरणीद्वये"

।

विशाखार्द्रोत्तराषाढशतभे पापवासरे ॥

लग्ने स्थिरे सचन्द्रे च पारसीमारवीं पठेत्"

।

इति गणपतिमुहूर्त्तः ॥

**आरा**, स्त्री, (आङ् + ऋ + अच् + टाप् ।) चर्म्म-

भेदकास्त्रं । तत्पर्य्यायः । चर्म्मप्रभेदिका २

। इत्य-

उत्तरचरिते । प्रथमाङ्के ।

"स्नेहं दयाञ्च सौख्यञ्च यदि वा जानकीमपि

।

आराधनाय लोकानां मुञ्चतो नास्ति मे

व्यथा" ॥

कुमारसम्भवे १ । ५९ ।

"आराधनायास्य सखीसमेतां

समादिदेश प्रयतां तनूजाम्" ।)

**आराधना**, स्त्री, (आङ् + राध् + णिच् + युच् +

स्त्रीत्वात् टाप् ।) साधना । तत्पर्य्यायः ।

सेवा २

भक्तिः ३ परिचर्य्या ४ प्रसादना ५ शुश्रूषा

६

उपास्तिः ७ वरिवस्याः ८ परिष्टिः ९

उपचारः

१० । इति हेमचन्द्रः ॥

**आरामः**, पुं, (आरम्यतेऽत्र, आङ् + रम् + आधारे

घञ् ।) उपवनं । इत्यमरः ॥ वागान् इति

भाषा ।

(यथा, मनुः, -- ८ । २६२ । ८ । २६४ ।

"क्षेत्रकूपतडागानामारामस्य गृहस्य च" ।

"गृहं तडागमारामं क्षेत्रं वा भीषया हरन्" ॥)

**आरामशीतला**, स्त्री, (आरामत्वात् शीतला स्निग्धा ।)

सुगन्धिपत्रिविशेषः । वब्बर्य्यादिवर्गे

लिखिता ।

तत्पर्य्यायः । आनन्दी २ शीतला ३

सुगन्धिनी ४

रामा ५ महानन्दा ६ गन्धाढ्या ७

रामशीतला

८ । अस्या गुणाः । तिक्तत्वं । शीतलत्वं ।

पित्त-

हारित्वं । दाहशोथप्रशमनत्वं ।

विस्फोटव्रणरोप-

वृत्तिः । इत्यमरः ॥ (उपरमः,
नीराजनम् ।)

**आरनालं**, क्ली, (आर्च्छति आङ् + ऋ + अच् आरः ।
नल गन्धे ज्वलतीति णः नालः । आरः नालो
गन्धो यस्य ।) काञ्जिकं । इति हेमचन्द्रः ॥
"आरनालन्तु गोधूमैरामैः स्यान्निस्तुषीकृतैः ।
पक्वैर्व्वा सन्धितैस्तत्तु सौवीरसदृशं गुणैः" ॥
इति राजनिर्घण्टः ॥
("लाक्षा हरिद्रा मञ्जिष्ठा कल्कैस्तैलं विपाचयेत् ।
षड्गुणेनारनालेन दाहशीतज्वरापहं" ॥ * ॥
लाक्षादितैले ॥ * ॥ इति वैद्यकचक्रपाणिसंग्रहः ॥)

**आरनालकं**, क्ली, (आरनालम् एव स्वार्थे कः ।)
काञ्जिकं । इत्यमरः ॥ कांजि इति भाषा ।

**आरब्धं**, त्रि, (आङ् + रभ् + क्तः ।) कृतारम्भं । आरम्भे
क्ली । यथा, --
"आरब्धं मलमासात् प्राक् यत् कर्म्म न समापितं ।
आगते मलमासेऽपि तत् समाप्यं न संशयः" ॥
इति मलमासतत्त्वं ॥ * ॥ आरब्धकर्म्मण्यशौचा-
भावो यथा, --
"व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्च्चने जपे ।
आरब्धे सूतकं न स्यादनारब्धे तु सूतकं" ॥

मरः ॥
"उद्यम्यारामग्रकायोत्थितस्य" । इति माघः ।)

**आराग्रं**, क्ली, (आरायाः अग्रं षष्ठीतत् ।) अर्द्धचन्द्रा-
द्यस्त्रमुखं ।
"अर्द्धचन्द्रखुरप्रादिधाराग्रं मुखमुच्यते" ।
"आराग्रन्तु मुखन्तेषां पुष्पपत्रादिभेदतः" ॥ इति
हलायुधः ॥

**आरात्**, व्य, (आ राति । रा दाने बाहुलकादाति-
प्रत्ययः ।) दूरं । निकटः । इत्यमरः ॥
(यथा, उत्तरचरिते ।
"मेघमालेव यश्चायमारादपि विभाव्यते" । इति
"तमर्च्यमारादभिवर्त्तमानम्" । इति रघौ २ । १० ।

**आरातिः**, पुं, (आङ् + रा + क्तिन् ।) अरातिः ।
शत्रुः । इति भरतः द्विरूपकोषश्च ॥

**आरात्रिकं**, क्ली, (आङ् + रात्रि + कन् ।) नीराजन-
निमित्तदीपः । नीराजना । नीराजनपात्रञ्च ।
आरति इति भाषा । तथाच हरिभक्तिविलासे ।
"ततश्च मूलमन्त्रेण दत्त्वा पुष्पाञ्जलित्रयं ।
महानीराजनं कुर्य्यात् महावाद्यजयस्वनैः ॥
प्रज्वालयेत्तदर्थञ्च कर्पूरेण घृतेन वा ।
आरात्रिकं शुभे पात्रे विषमानेकवर्त्तिकं" ॥
अन्यच्च ।
"आदौ चतुष्पादतले च विष्णो
र्द्वौ नाभिदेशे मुखमण्डलैकं ।
सर्व्वेषु चाङ्गेष्वपि सप्तवारा-
नारात्रिकं भक्तजनस्तु कुर्य्यात्" ॥

णत्वञ्च । इति राजनिर्घण्टः ॥ (यथा वैद्यके ।
"आरामशीतला तिक्ता शीतला पित्तहारिणी" ।)

**आरालिकः**, त्रि, (अरालं कुटिलं चरति इति ठक् ।)
सूपकारः । पाचकः । इत्यमरः ॥

**आरावः**, पुं, (आङ् + रु + घञ् ।) शब्दः । इत्यमरः ॥
(यथा महाभारते ।
"आरावं मातृवर्गस्य भृगूणां क्षत्रियैर्बधे" ।
"आरावः सुमहांश्चासीत्" ।)

**आरुः**, पुं, (ऋ + उण् ।) वृक्षभेदः । कर्कटः । शूकरः ।
इति मेदिनी ॥

**आरूः**, पुं, (ऋच्छति अर्यते वा । ऋ + ऊ + णिच्च ।)
पिङ्गलवर्णः । तद्युक्ते त्रि । इत्युणादिकोषः ॥

**आरूकं**, क्ली, (आरू + कन् ।) हिमाचले प्रसिद्धौ-
षधीविशेषः । आड इति भाषा । तत्पर्य्यायः ।
वीरसेनं २ वीरं ३ वीरारुकं ४ । तत्पत्रपुष्पादि-
भेदतः चतुर्जातिः । तेषां गुणाः । मधुरत्वं । हि-
मत्वं । अर्शःप्रमेहगुल्मास्रदोषनाशित्वञ्च । इति
राजनिर्घण्टः ॥ (यथा चरके ॥
"अम्लं परुषकं द्राक्षा वदर्य्याण्यारूकाणि च" ॥)

**आरूढः**, त्रि, (आङ् + रुह् + कर्त्तरि क्तः ।) कृता-
रोहणः । वृक्षादिर उपर चडा व्यक्ति इति
भाषा । यथा, --
"राम रामेति रामेति कूजन्तं मधुराक्षरं ।
आरूढकविताशाखं वन्टे वाल्मीकिकोकिलं" ॥

इति तिथ्यादितत्त्वं ॥

**आरम्भः**, पुं, (आङ् + रभि + घञ् ।) प्रथमकृतिः ।

तत्पर्य्यायः । प्रक्रमः १ उपक्रमः २
अभ्यादानं ३
उद्घृतः ४ आरम्भः ५ । इत्यमरः ॥
अभ्यादानादि-
त्रयमारम्भमात्रे । प्रक्रमादिपञ्च
आरम्भमात्रे
इत्येके ॥ केचित्तु प्रक्रमादिद्वयं
प्रथमारम्भे ॥
अभ्यादानादित्रयं आरम्भमात्रे । इति
बहुभिरुक्त-
मपि न साधु यतः प्रथमकृतिरेव
आरम्भः तत्पूर्ब्ब-
द्वयं आरम्भे शेषत्रयं आरब्धे इत्याहुः ।
इति
मरतः ॥ त्वरा । उद्यमः । बधः । दर्पः
। इति मेदिनी ॥
प्रन्तावना । इति त्रिकाण्डशेषः ॥
आद्यकृतिः ।

**आराधनं**, क्ली, (आङ् + राध् + ल्युट् ।) साधनं
।

प्राप्तिः । तोषणं । इत्यमरः ॥ पचनं । इति
मे-
दिनी ॥ (यथा तैराग्यशतके तृष्णादूषणे ५
।
‘मन्त्राराधनतत्परेण मनसा नीताः श्मशाने
निशाः’ ।

इति रामायणपाठस्य पूर्ब्बपाठ्यश्लोकः ॥
(यथा स्मृतिः ।
“आरूढो नैष्ठिकं धर्म्मं यस्तु प्रच्यवते पुनः
।
प्रायश्चित्तं न पश्यामि येन शुध्येत् स
आत्महा” ॥
गीता ।
“योगारूढस्य तस्यैव शमः कारणमुच्यते”
।)

**आरेवतं**, क्ली, (आरेवयति निस्तारयति मलं सार-
कत्वात् । रेवृ प्लवगतौ । णिच् + विच् ॥ अतति ।
अत + अच् । तत आरेव् चासौ अतश्चेति ।)
पारावतवृक्षफलं । इति राजनिर्घण्टः ॥
("मूलकं शुष्कमात्रञ्च वर्षाभूः पञ्चमूलकं ।
आरेवतफलञ्चांप्सु पक्त्वा तेन घृतं पचेत्" ॥
इति सुश्रुतः तैद्यकचक्रपाणिसंग्रहश्च ॥)

**आरेवतः**, पुं, (आरेवयति रेचयति मलं सारकत्वात्
आङ् + रेव् + णिच् + विच् + अतच् ।) आरग्वध-
वृक्षः । इत्यमरः ॥

**आरोग्यं**, क्ली, (अरोगस्य भावः । ष्यञ् ।) व्याध्यभावः ।
तत्पर्य्यायः । अनामयं २ । इत्यमरः ॥ पाटवं ३
लाघवं ४ वार्त्तं ५ । इति राजनिर्घण्टः ॥ ("आ-
रोग्यं तत् सुखावहं" । इति शार्ङ्गधरः ॥
"धर्म्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्" ।
"सुखसंज्ञकमारोग्यम्,"
"वेदाध्ययनशब्दाश्च सुखो वायुः प्रदक्षिणः ।
पथि वेश्मप्रवेशे तु विद्यादारोग्यलक्षणम् ॥"
इति चरकः ॥
"सुखमात्रं समासेन सद्वृत्तस्यैतदीरितं ।
आरोग्यमायुरर्थो वा नासद्भिः प्राप्यते नृभिः" ॥
कल्पितं ॥ (यथा कुमारसम्भवे ३ । ३५ ।
"तं देशमारोपितपुष्पचापे" ।
काव्यप्रकाशे ।
"समस्तवस्तुविषयं श्रौता आरोपिता यदा" ।)

**आरोहः**, पुं, (आङ् + रुह् + घञ् ।) दैर्घ्यं । वरस्त्रि-
याः श्रोणिः । इत्यमरः ॥ (यथा माघे "आरोहै-
र्निविडवृहन्नितम्बविम्बैः" ।) अवरोहः । आरो-
हणं । गजारोहः । समुच्छ्रयः । इति मेदिनी ॥
("आरोहमिव रत्नानां प्रतिष्ठानमिव श्रियः" ।
इति रामायणे ।) परिमाणविशेषः । नितम्बः ।
इति हेमचन्द्रः ॥ (आरोहति यः । आङ् + रुह्
+ अच् । निषादी । यथा, हरिवंशे, --
"अश्वाश्च पर्य्यधावन्त हतारोहा दिशो दश" ।)

**आरोहकः**, त्रि, (आङ् + रुह् + ण्वुल् ।) आरोहण-
कर्त्ता ॥

**आरोहणं**, क्ली, (आरुह्यतेऽनेन । आङ् + रुह् +
ल्युट् ।) सोपानं । सिडि इति भाषा । (भावे
ल्युट् ।) समारोहः । नीचादूर्द्ध्वगमनमिति यावत् ।
(यथा कुमारसम्भवे १ । ३९ ।
"आरोहणार्थं नवयौवनेन
कामस्य सोपानमिव प्रयुक्तम्" ।)
"आर्त्तत्राणाय वः शस्त्रं न प्रहर्त्तुमनागसि" ।
"द्वेष्योऽपि सम्मतः शिष्टस्तस्यार्त्तस्य यथौषधम्" ।
इति रघौ । १ । २८ । (तथा च चरके ॥
"नाश्विनावार्त्तं भेषजेनोपपादयेतां" । इति ॥

**आर्त्तगलः**, पुं, (आर्त्त इव गलति पचाद्यच् ।) नील-
झिण्टी । तत्पर्य्यायः । बाणः २ बाणा ३ दासी ४
अर्त्तगलः ५ । इत्यमरस्तट्टीका च ॥
("दासे आर्त्तगलश्च सः" । इति भावप्रकाशः ॥)

**आर्त्तवं**, क्ली, (ऋतुरस्य प्राप्तः, अण् यद्वा ऋतुरेव ।
प्रज्ञादिभ्यश्चेत्यण् ।) स्त्रीरजः । इत्यमरः ॥ पुष्पं ।
इति मेदिनी ॥ (यथा मनुः, ३ । ४८ ।
"तस्मात् युग्मासु पुत्त्रार्थी संविशेदार्त्तवे स्त्रियं" ।
"नोपगच्छेत् प्रमत्तोऽपि स्त्रियमार्त्तवदर्शने" ॥
अथार्त्तवस्य स्वरूपमाह ।
स्त्रीणां रस एव मासेनार्त्तवं भवतीत्युक्त्वा पुन-
राह शुश्रुत एव ।
"मासेनोपचितं काले धमनीभ्यस्तदार्त्तवं ।
ईषद्विवर्णकृष्णञ्च वायुर्योनिमुखं नयेत्" ॥
गर्भग्रहणयोग्यस्यार्त्तवस्य लक्षणमाह ।
"शशासृक्प्रतिमं यच्च यद्वा लाक्षारसोपमं ।
तदार्त्तवं प्रशंसन्ति यद्वासो न विरञ्जयेत्" ॥
आर्त्तवस्य वर्णद्वयाभिधानं । वातादिप्रकृतिभेदेन
वर्णभेदात् । यद्वासो न विरञ्जयेत् । यद्वासो लग्नं
प्रक्षालितं तद्वासस्त्यजति न तु विकृतरक्तं कुर्य्यात्" ।
इति भावप्रकाशः ॥
"मासान्निष्पिच्छदाहार्त्ति पञ्चरात्रानुबन्धि च ।
नैवातिबहुलात्यल्पमार्त्तवं शुद्धमादिशेत् ॥
गुञ्जाफलसवर्णञ्च पद्मालक्तकसन्निभं ।

इति सुश्रुतः ॥)

**आरोग्यशाला**, स्त्री, (आरोग्यार्था शाला । मध्यपद-
लोपिकर्म्मधारयः ।) आरोग्यदानगृहं । चिकित्-
सालयः । यथा, --
“धर्म्मार्थकाममोक्षाणामारोग्यं साधनं यतः ।
अतस्त्वारोग्यदाता च नरो भवति सर्व्वदः ॥
आरोग्यशालां कुर्व्वीत महौषधपरिच्छदां ।
विदग्धवैद्यसंयुक्तां बह्वन्नरससंयुतां ॥
वैद्यस्तु शास्त्रवित् प्राज्ञो दृष्टौषधपराक्रमः ।
ओषधीमूलतत्त्वज्ञः समुद्धरणकालवित् ॥
बलवीर्य्यविपाकज्ञः शालिमांसौषधीगणे ।
त्यागिवद्देहिनां तद्वदनुकूलः प्रियंवदः” ॥
इति वैद्यकं ॥

**आरोपः**, पुं, (आङ् + रुह् + णिच् + घञ् ।) मिथ्या-
ज्ञानं । यथा । “असर्पभूते रज्जौ सर्पारोपवत्
वस्तुन्यवस्त्वारोपः अध्यारोपः” । इति वेदान्त-
सारः ॥ मिथ्याविष्करणं । यथा । “असूया तु
दोषारोपो गुणेष्वपि” । इत्यमरः ॥
(यथा साहित्यदर्पणे । १० म परिच्छेदे ।
“आरोपाध्यवसानाभ्यां प्रत्येकं ता अपि द्विधा” ।
“रूपितं रोपितारोपो विषये निरपह्नवे” ॥
प्ररोहणं । अङ्कुरादिजननमिति यावत् । इति
मेदिनी ॥

**आर्किः**, पुं, (अर्कस्यापत्यं । अर्क + इञ् ।) अर्कपुत्त्रः ।
शनैश्चरः । इति ज्योतिःशास्त्रं ॥
(वैवस्वतमनुः, सुग्रीवः, कर्णश्च ।)

**आर्गलः**, पुं स्त्री, (अर्गल एव स्वार्थे अण् ।) अर्गलः ।
इति द्विरूपकोषः ॥ खिल इति भाषा ।

**आर्ग्वधः**, पुं, आरग्वधवृक्षः । इति शब्दचन्द्रिका ॥
(“आरग्वधशब्देऽस्य गुणादयो ज्ञातव्याः” ।)

**आर्घा**, स्त्री, (आङ् + अर्घ् + अच् ।) पीता दीर्घतुण्डा
षट्पदसन्निभा मक्षिका । इति राजनिर्घण्टः ॥

**आर्घ्यं**, क्ली, (आर्घया मक्षिकया विहितम् । आर्घा
+ यत् ।) आर्घानाममक्षिकोत्पन्नमधु । तस्य
गुणाः । अतिशयचक्षुर्हितकारित्वं । कफपित्तास्र-
दोषनाशित्वञ्च । इति राजनिर्घण्टः ॥
(यदुक्तं, --
“मधूकवृक्षानिर्यासं जरत्कार्व्वाश्रमोद्भवाः ।
स्रवन्त्यार्घ्यं तदाख्यातं श्वेतकं मालवे पुनः ॥
तीक्ष्णतुण्डास्तु याः पीता मक्षिकाः षट्पदोपमाः ।
आर्घास्तास्तत्कृतं यत् तदार्घ्यमित्यपरे जगुः” ॥
यथा सुश्रुते, --
इन्द्रगोपकसङ्काशमार्त्तवं शुद्धमेव तत्” ॥
इति चरकः, --
“शशासृक्प्रतिमं यत्तु यद्वा लाक्षारसोपमं ।
तदार्त्तवं प्रशंसन्ति यद्वासो न विरञ्जयेत् ॥
विधिमुत्तरवस्त्यन्तं कुर्य्यादार्त्तवशुद्धये ॥
स्त्रीणां स्नेहादियुक्तानां चतसृष्वार्त्तवादिषु ।
कुर्य्यात् कल्कान् पिचूंश्चापि पथ्यान्याचमनानि च ॥
ग्रन्थिभूते पिबेत् पाठां भूषणं वृक्षकाणि च ।
दुर्गन्धे पूयसङ्काशे मज्जतुल्ये तथार्त्तवे ॥
पिबेद्भद्रश्रियः क्वाथञ्चन्दनक्वाथमेव च” ।
“आर्त्तवं शोणितन्त्वाग्नेयमग्नीषोमीयत्वाद्गर्भस्य
पाञ्चभौतिकञ्चापरजीवरक्तमाहुराचार्य्याः” ॥
“एवं मासेन रसः शुक्रीभवति स्त्रीणाञ्चार्त्तव-
मिति” ॥ इति शुश्रुतः ॥)

**आर्त्तवः** त्रि, (ऋतुः प्राप्तोऽस्य । अण् ।) ऋतूद्भवः ।
इति मेदिनीकरहेमचन्द्रौ ॥ यथा रामायणे,
“आर्त्तवान्युपभुञ्जाना पुष्पाणि च फलानि च”
रघौ ८ । ३६ ।
“अभिभूय विभूतिमार्त्तवीं मधुगन्धातिशयेन वीरुधाम्” ।)

**आर्त्तवी**, स्त्री, वाजिनी । घोटकी । इति राज-
निर्घण्टः ॥

**आर्त्तिः**, स्त्री, (आङ् + ऋ + क्तिन् ।) पीडा । धनु-
ष्कोटिः । इत्यमरटीकायां भरतः ॥ रोगः । इति

“यत्र कस्यचिदारोपः परारोपणकारणं”
।)

**आरोपणं**, क्ली, (आङ् + रुह् + णिच् + ल्युट् ।)

न्यासः । संस्थापनं ॥ (शस्यादीनां
रोपणं । शरा-
सनादौ ज्यादीनां संयोजनं, उन्नमनं,
समुत्थापनं,
यथा साहित्यदर्पणे । १० म परिच्छेदे ।
“यत्र कस्यचिदारोपः
परारोपणकारणम्” ।
रामायणे । आदिकाण्डे ।
“यद्यस्य धनुषो रामः कुर्य्यादारोपणं
मुने” ।)

**आरोपितं**, त्रि, (आङ् + रुह् + णिच् + क्तः ।) कृता-

रोपणं । निहितं । न्यस्तं । इति
हलायुधः ॥

“आर्घ्यं मध्वतिचक्षुष्यं कफपित्तहरं
परं ।
कषायं कटु पाके च बल्यं
तिक्तमवातकृत्” ॥
इदं हि अष्टविधमधुजातिमध्ये
परिगणितम् ।
“पौत्तिकं भ्रामरं क्षौद्रं माक्षिकं छात्रमेव
च ।
आर्घ्यमौद्दालिकं दालमित्यष्टौ
मधुजातयः” ॥)

**आर्त्तः**, त्रि, (आङ् + ऋ + क्तः ।) पीडितः । असुस्थः ।

यथा, --
“आर्त्तानां मार्गमाणानां प्रायश्चित्तानि
ये द्विजाः ।
जानन्तो न प्रयच्छन्ति तेऽपि
तद्दोषभागिनः” ॥
इति प्रायश्चित्ततत्त्वं ॥ (दुःखितः,
कातरः, शोका-
भिभूतः, उद्वेजितः, विरक्तः, अपकृतः,
उत्पी-
डितः । यथा शाकुन्तले, प्रथमाङ्के ।

:राजनिर्घण्टः ॥ (यथा मेघदूते, पूर्ब्बमेघे । ५४ ।

"आपन्नार्त्तिप्रशमनफलाः सम्पदो
ह्युत्तमानाम्" ।
सुश्रुते, --
"दाहातिसारपित्तासृङ्मूर्च्छामद्यविषार्त्तिषु"
।)

**आर्द्रं**, त्रि, (अर्द्द + रक् दीर्घश्च ।) सजलवस्तु । भिजा

इति भाषा । तत्पर्य्यायः । सार्द्रं २ क्लिन्नं
३ स्ति-
मितं ४ तिमितं ५ समुन्नं ६ उत्तं ७ ।
इत्यमरः ॥
(तच्च द्विविधं यदुक्तं, --
"आर्द्रं द्रव्यं द्विधा प्रोक्तं सरसं नीरसं तथा
।
सदुग्धं गुप्तरसकं द्विधा नीरसमुच्यते ॥
वास्तूकं सार्षपं शाकं
निर्गुण्ड्येरण्डमार्षकम् ।
धुस्तूराद्यमिदं सर्व्वमार्द्रं सरसमुच्यते ॥
वटाश्वत्थकरीराद्यमार्द्रद्रव्यं तु नीरसं ।
सदुग्धं तु द्विधा प्रोक्तं मृदु तीक्ष्णमिति
क्रमात् ।
शातला वज्रसीहुण्डसौरिण्याद्यास्तु
तीक्ष्णकाः ।
दुग्धिकार्कक्षीरिण्याद्या मृदुदुग्धाः
प्रकीर्त्तिताः" ॥
यथा रघुवंशे, "आर्द्राक्षतारोपणमन्वभूतां"
।
मेघदूते उत्तरमेघे २५ ।
"तन्त्रीमार्द्रां नयनसलिलैः सारयित्वा
कथञ्चित्") ॥

**आर्द्रकं**, क्ली, (अर्द्दयति कफं आद्रं । ततः कन् । यद्वा

आर्द्रयति जिह्वायां । क्वन् ।)
कटुमूलविशेषः । आदा
इति सुश्रुतः ॥)

**आर्द्रपटी**, [न्] पुं, (आर्द्रपट + इनि ।) आर्द्ररक्तवस्त्रा-

वृतकर्त्तृकशत्रुनाशफलकाभिचारकर्म्मविशेषः
।
यथा । "अथार्द्रपटी । प्रणवो हृदयं भगवति
चा-
मुण्डे रक्तवाससे अप्रतिहतरूपपराक्रमे
अमुक-
बधाय विचेतसे वह्निवल्लभा ।
आर्द्ररक्तपटेनावृतः
समुद्रगामिनीनदीतटे ऊषरभूमौ वा दक्षिणा-
मुख ऊद्‌र्ध्वबाहुर्ज्जपेत् यावत् पटः शुष्यति
तावत्
प्राणाः शुष्यन्ति शत्रोः" । इति तन्त्रसारः ॥
आर्द्रपटविशिष्टे, त्रि ॥

**आर्द्रमाषा**, स्त्री, माषपर्णी । इति राजनिर्घण्टः ॥

माषाणी इति भाषा ।

**आर्द्रशाकं**, क्ली, (आर्द्रं शाकमस्य ।) आर्द्रकं । इति

राजनिर्घण्टः ॥

**आर्द्रा**, स्त्री, (आर्द्र + टाप् ।) अश्विन्यादिसप्तविंशति-

नक्षत्रान्तर्गतषष्ठनक्षत्रं । अस्य रूपं ।
पद्माकृत्यु-
ज्ज्वलैकतारकामयं । अस्या अधिष्ठात्री देवता
शिवः । इति कालिदासः ॥
मणितुल्यैकतारात्मकं ।
इति केचित् ॥ तत्र जातफलं ।
"क्षुधाधिको रुक्मशरीरकान्तिः
कलिप्रियः कोपयुतोऽविनीतः ।
प्रमूतिकाले च भवेत् किलार्द्रा
नचार्द्रचेताः शरणागतेऽपि" ।
इति कोष्ठीप्रदीपः ॥

**आर्द्रालुब्धकः**, पुं, (आद्रायां तन्नान्मा प्रसिद्धनक्षत्रे

"म्लेच्छाश्चान्ये बहुविधाः पूर्ब्बं ये
निकृता रणे ।
आर्य्याश्च पृथिवीपालाः" । इति ।
स्वनामख्यातः
सावर्णमनोः पुत्त्रः । यथा, हरिवंशे ।
"वरीयांश्चावरीयांश्च संमतो धृतिमान्
वसुः ।
चरिष्णुरार्य्यो धृष्णुश्च राजः
सुमतिरेव च ।
सावर्णस्य मनोः पुत्त्राः भविष्या दश
भारत !" ॥)

**आर्य्यकं**, क्ली, पिण्डपात्रादिपितृकार्य्यं । इति त्रि-

काण्डशेषः ॥

**आर्य्यकः**, पुं, (आर्य्य + स्वार्थे कन् ।) पितामहः । मा-

तामहः । इति शब्दमाला ॥ (यथा
रामायणे, --
"अद्य ते
कतिचिद्रात्र्यश्च्युतस्यार्य्यकवेश्मनः"
।
"आर्य्यकस्ते तु कुशली
युधाजिन्मातुलस्तव" ॥
महाभारते, --
"आर्य्यकेण च दृष्टः स पृथाया
आर्य्यकेण च ।
तदा दौहित्रदौहित्रः परिष्वक्तः
सुपीडितम्" ॥
पूज्यव्यक्तिमात्रम् । स्वनामख्यातो
नागश्रेष्ठः,
यथा महाभारते, --
"आर्य्यकश्चोग्रकश्चैव नागः
कलशपोतकः" ।)

**आर्य्यका**, स्त्री, (आर्य्यक + टाप् । उदीचामात इति

इति भाषा । तत्पर्य्यायः । शृङ्गवेरं २
इत्यमरः ॥
कटुभद्रं ३ कटूत्कटं ४ । इति केचित् ॥
गुल्ममूलं ५
मूलजं ६ कन्दरं ७ वरं ८ महीज ९
सकतेष्टं १०
अनूपजं ११ अपाकशाकं १२ चान्द्राख्यं
१३ राहु-
च्छत्रं १४ सुशाककं १५ शार्ङ्गं १६
आर्द्रशाकं १७
सच्छाकं १८ । इति रात्रनिर्घण्टः ॥
अस्य गुणाः ।
कफवातविबन्धानाहशूलपित्तनाशित्वं ।
हृद्यत्वं ।
रुचिशुक्रकारित्वञ्च । इति राजवल्लभः ॥
अपिच ।
उष्णत्वं । कटुत्वं । विपाके शीतलत्वं ।
लघुत्वं ।
अग्निदीपनत्वं । शोथकण्ठामयनाशित्वञ्च
। इति
राजनिर्घण्टः ॥ लवणार्द्रकगुणाः ।
भोजनाग्रे
पथ्यत्वं । जिह्वाकण्ठविशोधनत्वं ।
अग्निसन्दी-
पनत्वं । हृद्यत्वं, --
"वातपित्तकफेभानां शरीरवनचारिणां ।
एक एव निहन्तास्ति लवणार्द्रककेशरी" ॥
इति द्रव्यगुणः, --
"आर्द्रकं शृङ्गवेरं स्यात् कटुभद्रं तथार्द्रिका
।
आर्द्रिका भेदिनी गुर्व्वी तीक्ष्णोष्णा दीपनी
तथा ।
कटुका मधुरा पाके रूक्षवातकफापहा ।
ये गुणाः कथिताः शुण्ठ्यास्तेऽपि
सन्त्यार्द्रकेऽखिलाः ।
भोजनाग्रे सदा पथ्यं लवणार्द्रकभक्षणं ।
अग्निसन्दीपनं रुच्यं जिह्वाकण्ठविशोधनं
॥

लुब्धक इव ।) केतुग्रहः । इति हलायुधः ॥

**आर्द्रिका**, स्त्री, (आर्द्रक + टाप् ।) आर्द्रकं । इति

भावप्रकाशः ॥
("आर्द्रिका तिक्तमधुरा मूत्रला न च
पित्तकृत्" ॥
इति वाभटः ॥)

**आर्य्यः**, त्रि, (अर्त्तुं प्रकृतमाचरितुं योग्यः । अर्य्यते

वा ॥ ऋ + ण्यत् ।) सत्कुलोद्भवः । इत्यमरः
।
पूज्यः । श्रेष्ठः । बुद्धः । इति शब्दरत्नावली
॥
सङ्गतः । इत्यजयः ॥ (मान्यः, उदारचरितः,
शा-
न्तचित्तः । यथा, रामावणे, ३ काण्डे ।
"योऽहमार्य्येण परवान् भ्रात्रा ज्येष्ठेन
भाविनि" ।
न्यायपथावलम्बी, प्रकृताचारशीलः,
सततकर्त्तव्य-
कर्म्मानुष्ठाता । यदुक्तं,
"कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन् ।
तिष्ठति प्राकृताचारे स तु आर्य्य इति स्मृतः"
॥
धार्म्मिकः । धर्म्मशीलः । यथा, मनुः, १० ।
७५७ ।
"आर्य्यरूपमिवानार्य्यं कर्म्मभिः
स्वैर्व्विभावयेत्" ।
उचितः । यथा, रामायणे, --
"मार्गमार्य्यं प्रपन्नस्य नानुमन्येत कः पुमान्"
॥
नाट्योक्तौ सम्मानसूचकमिदं नाम प्रायेण
मान्य-
जनाह्वाने व्यवह्रियते । यथा, सातित्वदर्पणे,
षष्ठ-
परिच्छेदे ।
"स्वेच्छया नाममिर्व्विप्रैर्व्विप्र आर्य्येति चेतरैः"
।

पक्षे इत्त्वाभावः ।) श्रेष्ठा स्त्री । इति
वोपदेवः ॥

**आर्य्यपुत्त्रः**, पुं, (आर्य्यस्य पुत्त्रः ।
षष्ठीतत्पुरुषः ।) भर्त्ता ।

स्वामी । इति हेमचन्द्रः ॥ (यथा
रामायणे, --
"आर्य्यपुत्त्र ! पिता माता भ्राता
पुत्त्रस्तथा स्नुषा ।
स्वानि पुण्यानि भुञ्जानाः स्वं स्वं
भाग्यमुपासते" ॥)
गुरुपुत्त्रः । मान्यस्य पुत्त्रः ।

**आर्य्यमिश्रः**, त्रि, (आर्य्यः श्रेष्ठो मिश्रश्च ।)
गौरवितः ।

इति त्रिकाण्डशेषः ॥ (माननीयः,
पूज्यः । यथा
रामायणे, २ काण्डे ।
"समक्षमार्य्यमिश्राणां साधूनां
गुणवर्त्तिनाम्" ।
उत्तरचरिते, प्रस्तावनायां ।
"अद्य खलु भगवतः
कालप्रियनाथस्य यात्राया-
मार्य्यमिश्रान् विज्ञापयामि" ।)

**आर्य्या**, स्त्री, (ऋ + ण्यत् + स्त्रियां टाप् ।)
पार्ब्बती ।

इति त्रिकाण्डशेषः । छन्दोविशेषः ।
तस्या लक्षणम् ।
"यस्याः पादे प्रथभे द्वादशमात्राः
स्थितास्तृतीयेऽपि ।
अष्टादश द्बितीये चतुर्थके पञ्चदश
सार्य्या" ॥
इति श्रुतबोधः ॥ अपिच ।
"लक्ष्मैतत्सप्तगणा गोपेता भवति नेह
विषमे जः ।
षष्ठो जश्च न लघुर्वा प्रथमेऽर्द्धे
नियतमार्य्यायाः ॥
षष्ठे द्बितीयलात्परकेल्ले मुखलाच्च स
यतिपदनियमः ।

कुष्ठे पाण्ड्वामये कृच्छ्रे रक्तपित्ते व्रणे ज्वरे ।
दाहे निदाघशरदोर्नैव पूजितमार्द्रकं” ॥
इति भावप्रकाशः ॥
(तद्वदार्द्रकमेतच्च, इति वामटः ॥
“रोचनं दीपनं वृष्यमार्द्रकं विश्वभेषजं ।
वातश्लेष्मविबन्धेषु रसस्तस्योपदिश्यते” ॥
इति चरकः ॥
“कफानिलहरं स्वर्य्यं विबन्धानाहशूलनुत् ।
कटूष्णं रोचनं हृद्यं वृष्यञ्चैवार्द्रकं स्मृतम्” ॥

“वाच्यौ नटीसूत्रधारावार्य्यनाम्ना परस्परं” ॥)

**आर्य्यः**, पुं, (अर्त्तुं सदाचरितुं योग्यः । ऋ + ण्यत् ।)
स्वामी । बुद्धः । इति हेमचन्द्रः ॥ सुहृत् । इत्यजयः ।
(श्रेष्ठवर्णः । म्लेच्छेतरजातिः । यदुक्तं महाभारते ।

चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः” ॥
सा नवधा ।
“पथ्या विपुला चपला भुखचपला जघनचपला च ।
गीत्युपगीत्युद्गीतय आर्य्यागीतिश्च नवधार्य्या” ॥
इति छन्दोमञ्जरी ॥ श्रेष्ठा स्त्री ॥

**आर्य्यावर्त्तः**, पुं, (आर्य्या आवर्त्तन्तेऽत्र आर्य्य +
आ + वृत् + आधारे घञ् ।)
बिन्ध्यहिमाचल-
योर्मध्यदेशः । तत्पर्य्यायः ।
पुण्यभूमिः २ । इत्य-
मरः ॥ यथा, --
“आसमुद्रात्तु वै पूर्ब्बादासमुद्रात्तु पश्चिमात् ।
तयोरेवान्तरं गिर्य्यारार्य्यावर्त्तं विदुर्बुर्धाः” ॥
इति मानवे २ । २२ ॥ अपि च, अमरे । --

:"आर्य्यावर्त्तः पुण्यभूमिर्मध्यं
बिन्ध्यहिमागयोः" ।

**आर्य्यिका**, स्त्री, (आर्य्य + स्वार्थे कन् + अत इत्वं ।)
श्रेष्ठा स्त्री । इति वोपदेवः ॥

**आर्षः**, पुं, (ऋषे रिदं । ऋषि + अण् ।) विवाह-
विशेषः । यत्र वरात् गोद्वयं गृहीत्वा तेनैव सह
कन्यादानं । यथा, याज्ञबल्क्यः, --
"यज्ञस्थायर्त्विजे दैव आर्ष आदाय गोयुगं ।
चतुर्द्दश प्रथमजः पुनात्युत्तरजश्च षट्" ॥
(यथा मनुः, ३ । २९ ।
"एकं गोमिथुनं द्वे वा वरादादाय धर्म्मतः ।
कन्याप्रदानं विधिवदार्षो धर्म्मः स उच्यते" ॥)
ऋषिप्रणीते त्रि ॥ (यथा मनुः १२ । १०६ ।
"आर्षं धर्म्मोपदेशञ्च वेदशास्त्रविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्म्मं वेद नेतरः" ॥

**आर्षभिः**, पुं, (ऋषभस्यापत्यम् । ऋषभ + इञ् ।)
ऋषभपुत्त्रः । स तु भरतराजचक्रवर्त्ती । इति
हेमचन्द्रः ॥

**आर्षभी**, स्त्री, (ऋषभस्य वृषस्य प्रिया । ऋषभ +
अण् + ङीप् ।) कपिकच्छवृक्षः ।
इति राजनि-
र्घण्टः ।

वृथालम्भेऽनुगच्छेत् गां दिनमेकं पयोव्रतः" ॥
स्पर्शः । आलिङ्गनम् । यथा मनुः २ । १७९ ।
"द्यूतञ्च जनवादञ्च परिवादं तथाऽनृतं ।
स्त्रीणां च प्रेक्षणालम्भमुपघातं परस्य च" ॥)

**आलम्भ्या**, स्त्री, (आङ् + लभि + ण्यत् ।) बधार्ह्या ।
हननीया । इति वोपदेवः ॥

**आलयः**, पुं, (आलीयतेऽस्मिन् । आ + ली + आधारे
अच् ।) गृहं । इत्यमरः ॥ (यथा कुमारे १ । १ ।)
"हिमालयो नाम नगाधिराजः" नैषधे, "तत्रा-
मरालयमरालमरालकेशी" । रामायणे ३ काण्डे ।
"न हि दुष्टात्मनामार्य्या निवसन्त्यालये चिरं" ।
लयपर्य्यन्ते, क्ली । भागवते १ अध्याये ५ ।
"पिवत
भागवतं रसमालयम्") ॥

**आलवालं**, क्ली, (आ समन्तात् जलस्य लवमालाति
आ + लव + ला + क ।)
तरुमूलसेचनार्थस्वल्प-
जलाधारः । चारमादा इति भाषा ।
तत्पर्य्यायः ।
आवालं २ आवापः ३ । इत्यमरः ॥ (रघुवंशे
१ । ५१ ।
"विश्वासाय
विहङ्गानामालवालाम्बुपायिनाम्" ।
माघे । "विपुलालवालभृतवारिदर्पणः" ।)

**आलसः**, त्रि, (अलस + स्वार्थे अण् ।) अलसः ।
आलस्ययुक्तः । इति द्विरूपकोषः ॥

**आलस्यं**, क्ली, (अलस + ष्यञ् ।) अलसस्य भावः ।

**आलावर्त्तं**, क्ली, (आलमत्यर्थमावर्त्तते इति आल +
आ + वृत् + अच् ।) वस्त्रनिर्म्मितव्यजनं । इति
हेमचन्द्रः ॥ कापडेर पाखा इति भाषा ।

**आलावुः**, स्त्री, अलावुः । इति शब्दरत्नावली ॥ लाउ
इति भाषा । (अलावुशब्देऽस्या विशेषो
ज्ञेयः ॥

**आलावूः**, स्त्री, अलावुः । इति शब्दरत्नावली ॥

**आलास्यः**, पुं, (आलं पर्य्याप्तं आस्यं मुखं यस्य सः ।)
कुम्भीरः । इति हेमचन्द्रः ॥

**आलिः**, स्त्री, (आलयति भूषयति । आ + अल भूषणे ।
अच इः ।) वयस्या । (यथा कुमारसम्भवे ।
५ । ८३ ।
("निवार्य्यतामालि किमप्ययं वटुः,
पुनर्व्विवक्षुः स्फुरितोत्तराधरः" ।)
(आलति निर्वापयति जलं । अल वारणे । सर्व्वधा-
तुभ्य इन् ।) सेतुः । (अल्यतेऽनया । अल् + इञ् ।)
पंक्तिः । इति मेदिनी अमरश्च ॥ सन्ततिः । इति
शब्दरत्नावली ॥

**आलिः**, पुं, (आलति दंशने समर्थो भवति । आ +
अल् + बाहुलकात् इण् ।) वृश्चिकः ।
भ्रमरः ।
इति हारावली अमरटीका च ॥

**आलिः**, त्रि, (आङ् + अल् + इण् ।) विशदाशयः ।
निर्म्मलान्तःकरणः । इति मेदिनी ॥
अनर्थः । इति
हेमचन्द्रः ॥

(मध्यममार्गे नक्षत्रविशेषाणां संज्ञाविशेषः । यथा,
“तथा द्वे चापि फल्गुन्यौ मघा चैवार्षभी मता” ।
कपिकच्छुशब्देऽस्या गुणादयो ज्ञातव्याः ॥)

**आर्षभ्यः**, पुं, (ऋषभस्य प्रकृतिः । ऋषभ + ञ्य ।) षण्डोपयुक्तवृषः । तत्पर्य्यायः । षण्डतायोग्यः २ । इत्यमरः ॥ षाँडेर उपयुक्त एँडे इति भाषा ॥

**आर्हतः**, पुं, (अर्हन् जिन एव । अर्हत् + अण् ।) जिनविशेषः । तत्पर्य्यायः । वादवादी २ । इति हेमचन्द्रः ॥

**आलं**, क्ली, (आलयति भूषयतीति । आ + अल् + अच् ।) हरितालं । इत्यमरः ॥ अनल्पे त्रि । इति हेमचन्द्रः ॥ (यथा वैद्यकरसेन्द्रसारसंग्रहे ॥)
(“हरितालं तालमालमालं शैलूषभूषणम् ।
पिञ्जकं रोमहरणं तालकं पीतमित्यपि” ॥)

**आलगर्द्दः**, पुं, (अलगर्द्द एव । स्वार्थे अण् ।) अलगर्द्दः । जलसर्पः ।

**आलम्बः**, पुं, (आङ् + लवि + घञ् ।) अवलम्बः । आश्रयः ॥ (शरणं । गतिः । “इह हि पततां नास्त्यालम्बो न चापि निवर्त्तनम्” । इति शान्ति- अलसता । तत्पर्य्यायः । तन्द्रा २ कौसीद्यं ३ । इति हेमचन्द्रः ॥ मन्दता ४ मान्द्यं ५ कार्य्यप्रद्वेषः ६ । इति राजनिर्घण्टः ॥ (यदुक्तं । “आलस्यं श्रमग- भार्द्यैर्जाड्यं जृम्भासितादिकृत्” इत्युक्तलक्षणो व्यभिचारिभावभेदः । सुश्रुते ।
“सुखस्पर्शप्रसङ्गित्वं दुःखद्वेषणलोलता ।
शक्तस्य चाप्यनुत्साहः कर्म्मण्यालस्यमुच्यते” ॥)

**आलस्यः**, त्रि, (अलस एव । अलस + स्वार्थे ष्यञ् ।) अलसयुक्तः । तत्पर्य्यायः । मन्दः २ तुन्दपरिमृजः ३ शीतकः ४ अलसः ५ अनुष्णः ६ । इत्यमरः ॥

**आलातं**, क्ली, (अलातमेव । अलात + स्वार्थेअण् ।) अलातं । अङ्गारः ॥

**आलानं**, क्ली, (आलीयतेऽत्र । आङ् + ली + ल्युट् । विभाषा लीयतेरित्यात्त्वम् ।) गजबन्धनस्तम्भः । इत्यमरः ॥ गजबन्धनरज्जुः । इति नीलकण्ठः ॥ (रघुवंशे १ । ७१ ।
“अरुन्तुदमिवालानमनिर्वाणस्य दन्तिनः” । कादम्बरी ।
“इभमदमलिनमालानस्तम्भयुगलमुप- हसन्तमिवोरुदण्डद्वयेन” ।
रघुवंशे ४ । ६९, ४ । ८१ ।
“गजालानपरिक्लिष्टैरक्षोटैः सार्द्धमानताः” ।
“तद्गजालानतां प्राप्तैः सह कालागुरुद्रुमैः” ॥)

**आलिङ्गनं**, क्ली, (आङ् + लिङ्ग + ल्युट् ।) प्रीतिपूर्ब्बक- परस्पराश्लेषः । कोलाकोली इति भाषा । तत्- पर्य्यायः । अङ्गपालिः २ श्लिषा ३ । इति त्रिकाण्ड- शेषः ॥ परिरम्भः ४ परीरम्भः ५ परिष्वङ्गः ६ संश्लेषः ७ उपगूहनं ८ । इत्यमरः ॥ तत्सप्तधा यथा । आमोदालिङ्गनं १ मुदितालिङ्गनं २ प्रेमा- लिङ्गनं ३ आनन्दालिङ्गनं ४ रुच्यालिङ्गनं ५ मदना- लिङ्गनं ६ विनोदालिङ्गनं ७ । इति कामशास्त्रम् ॥
(“आलिङ्गनान्यधिकृताः स्कुटमापुरेव” । इति माघः ॥ यथा मेघदूते उत्तरमघे ९ ।
“यत्र स्त्रीणां प्रियतमभुजालिङ्गनोच्छ्रसितानां” ।)

**आलिङ्गी**, [न्] पुं, (आ + लिङ्ग + इनि ।) आलिङ्ग्यः । मृदङ्गविशेषः । इत्यमरटीकायां स्वामी शव्द- रत्नावली च ॥

**आलिङ्ग्यः**, पुं, (आ + लिङ्ग + ण्यत् ।) यवाकृतिमृदङ्गः । इत्यमरः ॥ मादोल इति भाषा । यथा शब्दार्णबे ॥
“चतुरङ्गुलहीनोऽङ्ङ्ठ्यान्मुखे चैकाङ्गुलेन यः ।
यवाकृतिः स आलिङ्ग्य आलिङ्ग्य स हि वाद्यते” ॥

**आलिञ्जरः**, पुं, (अलिञ्जर + अण् ।) अलिञ्जरः । इति त्रिकाण्डशेषः ॥ जाला इति भाषा ।

**आलिन्दः**, पुं, (अलिन्द + अण् ।) अलिन्दः । वहि-

शतके ३ । २ ।) अधोलम्बनम् ।

यथा, रामायणे, --

“शोभते किञ्चिदालम्बैः शालयः

कनकप्रभाः” ॥)

**आलम्बनं**, क्ली, (आङ् + लम्ब + ल्युट् ।) अवलम्बनं ।

विभावविशेषः । यथा, --

“आलम्बनोद्दीपनाख्यौ तस्य

भेदावुभौ स्मृतौ ।

आलम्बनं नायकादिस्तमालम्ब्य

रसोद्गमात्” ॥

इति साहित्यदर्पणे ३ य परिच्छेदः ।

**आलम्भः**, पुं, (आङ् + लभि + घञ् ।) मारणं ।

वधः । इत्यमरः ॥ (यथा स्मृतिः,

“अश्वालम्भं

गजालम्भं” । मेधदूते पूर्ब्बमेघे । ४६

।

“व्यालम्बेथाः सुरभितनयालम्भजां

मानयिष्यन्” ।

छेदनम् । कर्त्तनम् । मनुः ११ ।

१४४ ।

“कृष्टजानामोषधीनां जातानां च

स्वयं वने ।

बन्धनं । इति रायमुकुटः ॥ रज्जुः । इति

मेदिनी ॥

**आलापः**, पुं, (आङ् + लप् + घञ् ।) कथोपकथनं ।

सम्भाषणं । तत्पर्य्यायः । आभाषणं २ ।

इत्यमरः ।

(साहित्यदर्पणे, प्रथमपरिछेदः ।

“काव्यालापाश्च ये केचित्

गीतकान्यखिलानि च” ।)

**आलाप्यः**, त्रि, (आङ् + लप् + कर्म्मणि ण्यत् ।)

आलापयोग्यः । आलापनीयः ॥

द्वारप्रकोष्ठः । गृहान्तरशय्यार्थवेदिका ।

इति

रायमुकुटः शब्दरत्नावली च ॥ गृहैकदेशः

। इत्य-

मरमाला ॥

**आलिन्दकः**, पुं, (आलिन्द एव स्वार्थे कः ।) आलिन्दः ।

इति शब्दरत्नावली ॥

**आलिम्पनं**, क्ली, (आङ् + लिम्प + ल्युट् ।) मङ्गला-

लेपनं । आलिपना इति भाषा ।

तत्पर्य्यायः । आत-

र्पणं २ आदीपनं ३ मण्डोदकं ४ । इति

त्रिकाण्ड-

शेषः ॥

**आली**, स्त्री, (आलि + ङीष् ।) सखी । पङ्क्तिः ।

वृश्चिकः । इत्यमरटीकायां भरतादयः ॥ सेतुः । इति शब्दरत्नावली ॥ (श्रेण्यर्थे यथा कुमारे ६ । ४९ ।

“तोयान्तर्भास्करालीव रेजे मुनिपरम्परा” ।)

**आलीढं**, क्ली, (आङ् + लिह् + क्तः ।) धन्विनां दक्षिण-

जङ्घाप्रसारवामपादसंकोचरूपावस्थानं । इत्यमरः । (यथा, रघौ ३ । ५२ ।

। “अतिष्ठदालीढविशेषशोभिना

वपुःप्रकर्षेण विडम्बितेश्वरः” ।

(तल्लक्षणं यथा, चिन्तामणिधृतम् ।

“नमिता पूर्ब्बजङ्घा च पश्चिमा प्रगुणा भवेत् ।

असमो मध्यकायश्च स्यादालीढस्य लक्षणम्” ॥)

**आलीढं**, त्रि, (आङ् + लिह + क्त ।) अशितं । भुक्तं ।

इति मेदिनी ॥ (क्षतः, रघुवंशे, २ । ३७ ।

“सेनान्यमालीढमिवासुरास्त्रैः” ।)

**आलीढकं**, क्ली, (आलीढ एव स्वार्थेकः ।) तर्णकानां

स्थलीषु क्रीडनं । इति हारावली ॥ वाछुरेर खेला इति भाषा । आटीलकमिति क्वचित् पाठः ॥

**आलीनकं**, क्ली, (आलीन + कन् ।) रङ्गं । इति हेम-

चन्द्रः ॥ रां इति भाषा ।

**आलु**, क्ली, (आङ् + लु + डु ।) भेलकः । स्वनामख्यात-

मूलविशेषः । इति मेदिनी ॥ अस्य गुणाः । रक्त-

पित्तनाशित्वं । गुरुत्वं । स्वादुत्वं । शीतलत्वं ।

स्तनदुग्धशुक्रकारित्वञ्च । इति द्रव्यगुणः ॥

**आलुः**, स्त्री, (आलाति । आङ् + ला + डु ।) स्वल्प-

वारिधानिका । घटी झारीइत्यादि भाषा । तत्प-

र्य्यायः । कर्करी २ गलन्तिका ३ । इत्यमरः ॥

**आलुः**, पुं, पेचकः । इति शब्दरत्नावली ॥ कासालुः ।

इति राजनिर्घण्टः ॥

**आलुकं**, क्ली, (आलु + स्वार्थेकन् ।) मूलविशेषः

इति सुश्रुतः ॥)

**आलुकः**, पुं, (आलाति पृथ्वीं कामरोगं वा आङ् +

ला + डु + संज्ञायां कन् ।)

कासालुः । इति राज-

निर्घण्टः ॥ शेषनागः । इति

हेमचन्द्रः ॥

**आलुकी**, स्त्री, दीर्घाकारसूक्ष्मरक्तालुः । अरुई इति

नाम । यथा, भावप्रकाशे ॥

“रक्तालुभेदो या दीर्घा तन्वी

च प्रथितालुकी ।

आलुकी बलकृत् स्निग्धा

गुर्व्वी हृत्कफनाशिनी ।

विष्टम्भकारिणी तैले

तलितातिरुचिप्रदा” ॥

**आलेख्यं**, क्ली, (आङ् + लिख् + ण्यत् ।) चित्रं । इति

हेमचन्द्रः ॥ (यथामाघे, २ । ६७ ।

“इति संरम्भिणो

वाणीर्बलस्यालेख्यदेवताः” ।

“निशीथदीपाः सहसा

हतत्विषो

बभूवुरालेख्यसमर्पिता इव” ।

रघवंशे ३ । १५ ।)

**आलेख्यशेषः**, त्रि, (आलेख्यं चित्रमेव शेषो यस्य सः ।)

मृतः । इति हेमचन्द्रः ॥ (यथा

रघुवंशे, १४ । १५ ।

“वाष्पायमाणो बलिमन्निकेत-

मालेख्यशेषस्य पितुर्व्विवेश” ।)

**आलोकः**, पुं, (आङ् + लुक् + घञ् ।) दर्शनं । देखा

पुरा तपस्यतः शम्भोर्दाक्षायण्या

वियोगतः ॥

भालस्थलात्पपातैकः स्वेदविन्दुर्महीतले ।

ततः कुमारः संजज्ञे लोहिताङ्गो

महीतलात् ॥

स्नेहसम्बर्द्धितः सोऽथ धात्र्या

धात्रीस्वरूपया ।

माहेय इत्यतः ख्यातिं पराभयं

गतस्ततः” ॥)

**आवपनं**, क्ली, (ओप्यते स्थाप्यतेऽत्र । आङ् + वप् +

आधारे ल्युट् ।) द्रव्यस्थापनपात्रं ।

भाण्डं । इत्य-

मरः ॥ सम्यक्क्षुरिकर्म्म ।

सम्यग्वीजतन्तुवपनं ॥

(यथा महाभारते, आदिपर्ब्बणि ।

“प्रभुरग्निः प्रतपने भूमिरावपने प्रभुः ।

प्रभुः सूर्य्यः प्रकाशित्वे सतां चाभ्यागतः

प्रभुः” ॥

“अग्निर्हिमश्च भैषज्यं भूमिरावपनं महत्” ।)

**आवरणं**, क्ली, (आङ् + वृ + ल्युट् ।) फलकं । इति

हेमचन्द्रः ॥ ढाल इति भाषा ।

आच्छादनं । ढाका

इति भाषा ॥ (यथा महाभारते,

आदिपर्ब्बणि ।

“विचित्राणि च वासांसि प्रावारावरणानि च” ।

“सूर्य्ये तपत्यावरणाय दृष्टेः

कल्पेत लोकस्य कथं तमिस्रा” । इति

रघुः ।

५ । १३ । मनुः । ३ । १६३ ।

“स्रीतसां भेदको यश्च तेषाञ्चावरण

रतः” ॥)

आलु इति भाषा । इति राजवल्लभः ॥ एलवालुकं । इति राजनिर्घण्टः ॥ तद्विवरणं यथा, --
“आलुकमप्यालूकं तत् कथितं वीरसेनश्च ।
काष्ठालुकशङ्खालुकहस्त्यालुकानि कथ्यन्ते ॥
पिण्डालुकमध्वालुकरक्तालुकानि व्यक्तानि” ।
काष्ठालुकं काठिन्ययुक्तकटारु । शङ्खालुकं श्वेतता-युक्तशङ्खालु । हस्त्यालुकं दीर्घतायुक्तमहाशरीरं ।
पिण्डालुकं वर्त्तुलसुथनी । मध्वालुकं मधुरतायुक्त-रोमान्वितदीर्घसुथनी । रक्तालुकं रतारू तरण्डा इति च । एषां गुणाः ।
“आलुकं शीतलं सर्व्वं विष्टम्भि मधुरं गुरु ।
सृष्टमूत्रमलं रूक्षं दुर्ज्जरं रक्तपित्तनुत् ॥
कफानिलकरं बल्यं वृष्यं स्तन्यविवर्द्धनम्” ।
इति भावप्रकाशः ॥
(“आलुकानि च सर्व्वाणि तथा सूप्यानि लाक्ष्मणं ।
स्विन्नं निष्पीडितरसं स्नेहाढ्यं नातिदोषणम्” ॥
इति वाभटः ॥
“विदारीकन्दशतावरीविसमृणालशृङ्गाटककशेरु-कपिण्डालुकमध्वालुकहस्त्यालुककाष्ठालुकशङ्ख्या-लुकरक्तालुकेन्दीबरोत्पलकन्दप्रभृतीनि” ॥
“रक्तपित्तहराण्याहुः शीतानि मधुराणि च ।
गुरूणि बहुशुक्राणि स्तन्यवृद्धिकराणि च” ॥

इति भाषा । द्योतः । आलो इति भाषा । शान्ति-शतके, ४ । ६ ।
“आलोकाय निशासु चन्द्रकिरणाः सख्यं कुरङ्गैः सह” । मेघदूते पूर्ब्बमेघे ३८ ।
“रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः” ।
यथा शाकुन्तले, प्रथमाङ्के ।
“यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां” ।
(यथा, रामायणे ४ काण्डे । ५० । २४ ।
“आलोकं ददृशुर्धीरा नीराशा जीविते यदा” ।
वन्दिभाषणं । स्तुतिरिति यावत् । इति मेदिनी ॥
(रघुवंशे । २ । ९ ।
“उदीरयामासुरिवोन्मदाना-मालोकशब्दं वयसां विरावैः” ॥)

**आलोकनं**, क्ली, (आङ् + लोक् + ल्युट् ।) दर्शनं ।
इत्यमरः ॥ (रघुवंशे, ७ । ५ ।
“ततस्तदालोकन-तत्पराणां,” कुमारसम्भवे । २ । ४५ ।
“भुवनालोकनप्रीतिः स्वर्गिभिर्नानुभूयते” ।
माघे, ११ । ३३ ।
“व्रजति हि सफलत्वं बल्लभालोकनेन” ।)

**आलोचनं**, क्ली, (आङ् + लुच् + ल्युट् ।) दर्शनं ।
विवेचनं ॥ (यथा हेमचन्द्रः, “रहस्यालोचनं मन्त्रः” । सांख्यमते निर्विकल्पकं ज्ञानं निर्द्धर्म्मकं

**आवरणशक्तिः**, स्त्री, (आवरणे शक्तिः ।) माया-शक्तिः । यथा । “स्वल्पोऽपि मेघो बहुयोजन-विस्तीर्णमादित्यमण्डलं अवलोकयितृजननयनप-थपिधायकतयाच्छादयतीव तथैवाज्ञानं परि-च्छिन्नमपि आत्मानमपरिच्छिन्नमसंसारिणं अव-लोकयितृबुद्धिपिधायकतयाच्छादयतीव तादृशं सामर्थ्यं” ॥ इति वेदान्तः ॥

**आवर्त्तं**, क्ली, (आङ् + वृत् + घञ् ।) माक्षिकधातुः ।
इति राजनिर्घण्टः ॥ (आवर्त्तनं । चक्राकारेण-भ्रमणं ।)

**आवर्त्तः**, पुं, (आङ् + वृत् + घञ् ।) जलभ्रमः । इत्य-मरः ॥ घूर्णा इति भाषा । (रघुवंशे ६ । ५२ ।
“नृपं तमावर्त्तमनोज्ञनाभिः” ।)
चिन्ता । आवर्त्तनं । इति मेदिनी ॥ मेघनायक-चतुष्टयान्तर्गतमेघाधिपविशेषः । इति पुराणं ज्योतिषञ्च । (यथा मेघदूते पूर्ब्बमेघे ६ ।
“जातं वंशे भुवनविदिते पुष्करावर्त्तकानाम्” ।)
राजावर्त्तनामोपरत्नं । इति राजनिर्घण्टः ॥

**आवर्त्तकी**, स्त्री, (आवर्त्त इव कायति प्रकाशते ।
आवर्त्त + कै + क + ङीष् ।) लताविशेषः । भग-तवल्ली इति कोकणे प्रसिद्धा । तत्पर्य्यायः । तिन्दु-

| | | |
|---|---|---|
| | शुद्धवस्तुविषयकं प्राथमिकं ज्ञानं । यदुक्तं ।<br>“अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम् ।<br>बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥<br>ततःपरं पुनर्वस्तु धर्म्मैर्जात्यादिभिर्यथा” ।<br>“बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन सम्मता” ।<br>“शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृ-<br>त्तिः” ॥ सांख्यकारिका ।)<br>**आवनेयः**, पुं, (अवन्या अपत्यं अवनी + ढक् ।) मङ्ग-<br>लग्रहः । इति ज्योतिःशास्त्रं ॥ (यथा काशी-<br>खण्डे । १७ अध्याये ।<br>“उत्पत्तिं चास्य वक्ष्यामो भूसुतोऽयं यथाभवत् । | किनी २ विभाण्डी ३ विषाणिका ४ रङ्गलता ५<br>मनोज्ञा ६ रक्तपुष्पी ७ मरुत्ताली ८ पीतकीला ९<br>चर्म्मरङ्गा १० । अस्या गुणाः । कषायत्वम् ।<br>अम्लत्वम् । शीतवीर्य्यकारित्वम् । पित्तनाशित्वञ्च ।<br>भद्रदन्तिकावृक्षः । इति राजनिर्घण्टः ॥<br>**आवर्त्तनं**, क्ली, (आङ् + वृत् + ल्युट् ।) दुग्धादेरा-<br>लोडनं । आओटान इति भाषा । धातुद्रव्यस्य<br>द्रवीकरणं । इत्यमरटीका ॥ गलान इति भाषा ।<br>सूर्य्यस्य पश्चिमदिगवस्थितच्छायायाः पूर्ब्बदिग्गम-<br>नारम्भकालः । “आवतनात्तु पूर्ब्बाह्नो ह्यपराह्न-<br>स्ततःपरं” इति स्मृतिः ॥ |

**आवर्त्तनी**, स्त्री, (आङ् + वृत् + ल्युट् + ङीप् ।)

धातुद्रव्यद्रावणार्थमृत्पात्रं । मुछी इति भाषा । तत्पर्य्यायः । तैजसावर्त्तनी २ मूषा ३ मूषः ४ ।
इति शब्दरत्नावली ॥

**आवर्त्तनमणिः**, पुं, (आवर्त्तनाकारो मणिः ।) राजा-

वर्त्तनामोपरत्नं । इति राजनिर्घण्टः ॥

**आवर्त्तिनी**, स्त्री, (आवर्त्त + इनि + ङीप् ।) अज-

शृङ्गीवृक्षः । इति रत्नमाला ॥

**आवर्हितः**, त्रि, (आङ् + वृह् + क्तः ।) उन्मूलितः ।

उत्पाटितः । इति हेमचन्द्रः ।

**आवलिः**, स्त्री, (आङ् + बल + इन् ।) श्रेणी । पंक्तिः ।

इत्यमरः ॥

**आवली**, स्त्री, (आङ् + बल् + इन् + ङीप् ।) आ-

बलिः । इत्यमरः ॥ (यथा अमरुशतके ३ ॥ "आ-
लोलामलकावलीं विलुलितां
बिभ्रच्चलत्कुण्डलं" ।
"द्विजावलीव्याजनिशाकरांशुभिः" । इति माघे १ । २५ ।)

**आबल्यं**, क्ली, (अवल + ष्यञ् ।) अबलस्य भावः

दौर्बल्यं ॥

**आवश्यकं**, त्रि, (अवश्य + मनोज्ञादित्वाद्बुञ् । अव्य-

यानां भमात्र इति टिलोपः ।) अवश्यकर्त्तव्यं । नैश्चयिकं । उचितं । यथा । "घ्यणोरावश्यके । उवर्णान्तादावश्यकेऽर्थे घ्यण् स्यात्" । इति मुग्ध-
बोधव्याकरणं ॥ किञ्च ।
आवश्यकपर्ब्बादिक्रियमा-
णस्य नित्यनैमित्तिकत्वं । इति तिथ्यादितत्त्वं ॥
(यथा साहित्यदर्पणे, । "आवश्यकानां कार्य्याणां
अविरोधाद्विनिर्म्मितः" ।)

**आवसथं**, क्ली, (आवसन्ति आगत्य वसन्ति अस्मिन् ।

**आवहमानं**, त्रि, (आङ् + वह् + शानच् ।) क्रमा-

गतं ॥ (परम्परागतं, धारावाहि ।)

**आवाधा**, स्त्री, (आ सम्यक् वाधा ।) दुःखं । पीडा ।

इति शब्दरत्नावली । भूखण्डं । त्रिकोणक्षेत्रमध्य-रज्जुनिक्षेपेण यत् खण्डद्वयं जायते तत् । इति लीलावती ॥

**आवापः**, पुं, (आ वपन्ति सलिलमत्र । आङ् + वप् +

घञ् ।) आलवालं । इत्यमरः ॥ वलयः । (यथा महाभारते १४ पर्ब्बणि ।
"मोहात् पपात गाण्डीवमावापं च करादपि" ।)
शत्रुचिन्तनं । (परराष्ट्रचिन्तनम् । यथा, माघे । २।८८ ।)
"तन्त्रावापविदा योगैर्मण्डलान्यधितिष्ठता" ।)
पानभेदः । इति हेमचन्द्रः ॥ भाण्डवपनं । परिक्षेपः ।
इति मेदिनी ॥ निम्नोन्नतभूमिः । इत्यजयः ॥ पात्रं ।
इति शब्दरत्नावली ॥ प्रधानहोमः । इति स्मृतिः ॥

**आवापकः**, पुं, (आ उप्यते इति । आङ् + वप् +

कर्म्मणि घञ् + संज्ञायां कन् वा ।) वलयः । इत्यमरः ॥

**आवापनं**, क्ली, (आवाप्यतेऽनेनेति आङ् + वप् +

णिच् + करणेल्युट् ।) सूत्रयन्त्रं । इति शब्दमाला ॥
ताँत् इति भाषा ।

**आवारि**, क्ली, (आङ् + वृ + इ ।) हट्टवेश्म । इत्यु-

णादिकोषः ॥ दोकान हाट्चालि इत्यादि भाषा ।

**आवालं**, क्ली, (आङ् + वल् + घञ् ।) आलवालं ।

इत्यमरः ॥ (वालकमभिव्याप्य इत्यर्थे ।) वालक-पर्य्यन्तम् ॥

**आवाल्यं**, क्ली, (वाल्यात् आ आवाल्यं पर्य्यन्तार्थे-

ऽव्ययीभावः ।) वाल्यावस्थापर्य्यन्तं ॥ (यथा धर्म्म-
विवेके, -- "आवाल्यादसती सती सुरपुरीं कुन्ती समारोहयत्" ।)

**आविकः**, पु, (अविना मेषलोम्ना कृतम् इति अवि

+ ठक् ।) कम्वलं । इति हलायुधः ॥ (त्रि, मेष-लोम्ना निर्म्मितं, । २ । ४१
"वसोरन्नानुपूर्ब्येण शाणक्षौमाविकानि च" ।
भेडीदुग्धं । यथा वैद्यके, --
"आविकं लवणं स्वादु स्निग्धोष्णं
चाश्मरीप्रणुत् ।
अहृद्यं तर्पणं केश्यं शुक्रपित्तकफप्रदम् ॥
गुरु कासेऽनिलोद्भूते केवले चानिले वरम्" ।
इति ।)

**आविग्नः**, पुं, (आङ् + विज् + क्तः ।) अविग्नः । कर-

मर्द्दकः । इति शब्दरत्नावली ॥ पाणि आमला इति ख्यातः । इत्यमरटीकासारसुन्दरी ॥
(उद्विग्नः
उत्कण्ठितः ।)

**आविर्भावः**, पुं, (आविस् + भू + घञ् ।) प्रकाशः ।

देवावतरणं । प्रादुर्भावः । यथा, --
"तदा मे मनसा ध्यातो दयासिन्धुर्जनार्दनः ।
भक्तानामनुकम्पार्थं यश्चाविर्भावमिच्छति" ॥
इति जैमिनिभारते आश्वमेधिके पर्ब्बणि २ अ-ध्यायः ॥

**आविर्भूतः**, त्रि, (आविस् + भू + क्त ।) प्रकाशितः ।

अधिष्ठितः । जन्मयुक्तः । अवतीर्णः । प्रादुर्भूतः ।
आविर्भावविशिष्टः । यथा, --
"उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ ।
लग्ने कर्कटके पुनर्व्वसुदिने मेषं गते पूषणि ।
निर्दग्धुं निखिलाः पलाशसमिधो
मध्यादयोध्यारणे-
राविर्भूतमभूदपूर्ब्बविभवं यत्किञ्चिदेकं महः" ॥
"तत्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी ।
आविर्भूता महाघोरा योगिनीकोटिभिः सह" ॥
इति च तिथ्यादितत्त्वम् ॥

**आविष्कारः**, पुं, (आविस् + कृ + घञ् ।) प्रकाशः ॥

(यथा साहित्यदर्पणे, २ परिच्छेदे ।
"आविष्कारातिशयञ्चाभिधेयवत्
स्फुटंप्रतीयते" ।)

आङ् + वस + अथच् ।) गृहं । इति हेमचन्द्रः ॥
(वसतिस्थानं । विश्रामस्थानं । अग्निगृहं । अग्नि-
होत्रस्थानं ।
रघुवंशे, ८ । १४ "निवसन्नावसथे पुराद्वहिः" ।
मनुः । ३ । १०७ ।
"आसनावसथौ शय्यामनुव्रज्यामुपासनाम्" ।)

**आवसथः**, पुं, (आवसन्त्यत्र । आ + वस + अधि-
करणे अथच् ।) गृहं । (यथा, हितोपदेशे मित्र-
लाभे "अस्ति चम्पकाभिधानायां नगर्य्यां परि-
ब्राजकावसथः" ।) आर्य्याकोषः ।
आर्य्याच्छन्दसो
ग्रन्थभेदः । व्रतविशेषः । इत्युणादिकोषः ॥

**आवसितं**, त्रि, (आवस्यते आच्छाद्यते आङ् + वस्
आच्छादने + क्तः ।) परिपक्वमर्द्दितधान्यं ।
इति
भरतः ॥ बहुलितधान्यं । इति सुभूतिः ॥
सम्पन्न-
धान्यं । इत्यन्ये ॥ तत्पर्य्यायः ऋद्धं २ ।
इत्यमरः ॥

**आवहः**, पुं, (आभिमुख्येन वहतीति । आङ् + वह् +
अच् ।) सप्तवाय्वन्तर्गतवायुविशेषः । स च
भूवायुः । इति पुराणज्योतिषे ॥
(यथा, मनुः, ८ । ३४७ ।
"द्वौ शुक्लज्योतिरादित्यौ नन्दो
हरिस्तपास्तथा ।
चित्रज्योतिः सत्यज्योतिर्ज्योतिष्मान् स्कन्ध
आ-
वहः" ॥ इति प्रापकः । जनकः । यथा मनुः, --
"समुत्सृजेत्साहसिकान् सर्व्वभूतभयावहान्" ।
रघुवंशे । १४ । ५, "क्लेशावहा
भर्त्तुरलक्षणाहं" ।)

**आवासः**, पुं, (आ बसन्ति अत्र इति । आङ् + वस् +
अधिकरणे घञ् ।) गृहं इति हेमचन्द्रः ॥ (यथा
गीतगोविन्दे । ४ । १० ।
"आवासो विपिनायते प्रियसखीमालापि जा-
लायते" ।)

**आवाहनं**, क्ली, (आङ् + वह + णिच् + ल्युट् ।) आ-
ह्वानं । निमन्त्रणं । यथा, --
"प्रतिमास्थानेष्वप्स्वग्नौ नावाहनविसर्ज्जने" ।
इति । विनायकादीनां व्याहृतिभिरावाहनमाह
मत्स्यपुराणं ।
"विनायकं तथा दुर्गां वायुमाकाशमेव च ।
आवाहयेद्व्याहृतिभिस्तथैवाश्विकुमारकौ" ॥
इति च तिथ्यादितत्त्वं ॥ आवाहनीमुद्रा मुद्राशव्दे
द्रष्टव्या ॥

**आवाहनी**, स्त्री, (आवाह्यतेऽनया । आङ् + वह् +
णिच् + करणे ल्युट् ङीप् ।) भुद्राविशेषः । यथा,
"हस्ताभ्यामञ्जलिं बद्ध्वानामिकामूलपर्ब्बणोः ।
अङ्गुष्ठौ निःक्षिपेत् सेयं मुद्रा त्वावाहनी स्मृता" ॥
इति तन्त्रशास्त्रं ॥

**आविः**, [स्] व्य, (अवते । उङ्शब्दे + इर् ।) प्राका-
श्यम् । प्रस्फुटत्वं । तत्पर्य्यायः । प्राटुः २ ।
इत्यमरः ॥

**आविष्कृतः**, त्रि, (आविस् + कृ + क्तः ।) प्रका-
शितः । तत्पर्य्यायः । प्रकटितः २ । इति हेम-
चन्द्रः । (यथा उत्तरचरिते, षष्ठाङ्के ।
"आविष्कृतं
कथाप्रावीण्यं वत्सेन" ।)

**आविष्टः**, त्रि, (आ + विश + क्तः ।) प्रेतवाहितः ।
भूतादिग्रस्तः । इति त्रिकाण्डशेषः ॥
आवेशयुक्तः ।
निविष्टः ॥ (उपहतः । यथा कामन्दकः,
"आविष्टैव दुःखेन हृद्गतेन गरीयसा" ।)

**आवीरचूर्णं**, क्ली, (आवीरमेव चूर्णम् ।) फल्गु ।
फागु इति वङ्गभाषा । आवीर इति हिन्दीभाषा ।
यथा, --
"चन्दनागुरुकस्तूरीकुङ्कुमद्रवसंयुतं ।
आवीरचूर्णं रुचिरं गृह्यतां परमेश्वर" ॥
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ८ अध्यायः
॥

**आवुकः**, पुं, (अवति रक्षतीति । अव + बाहुलका-
दुण् + कन् ।) नाट्योक्तौ पिता । इत्यमरः ॥

**आवृत्**, स्त्री, (आङ् + वृत् + क्विप् ।) अनुक्रमः ।
परिपाटी । इत्यमरः ॥ (प्रकारः ।
जातकर्म्मादि-
क्रियाकलापः । यथा मनुः, ३ । २४८ । २ ।
६६ ।
"अनयैवावृता कार्य्यं पिण्डनिर्वपणं सुतैः" ।

:"अमन्त्रिका तु कार्य्ययं स्त्रीणामावृदशेषतः" ॥)

**आवृतः**, त्रि, (आङ् + वृ + क्तः ।) कृतावरणः ।

तत्पर्य्यायः । वेष्टितम् २ वलयितम् ३ संवीतम् ४
रुद्धम् ५ । इत्यमरः ॥ (आच्छादितं, प्रावृतं, आकीर्णं । वर्णभेदः, स च
ब्राह्मणादुग्रजातीयायां
जातः ।)

**आवृत्तः**, त्रि, (आङ् + वृत् + क्तः ।) कृतावरणः ।

आवृतः । इत्यमरटीका ॥ (अभ्यस्तः, क्रमवैप-
रीत्येन स्थापितः, प्रतिनिवृत्तः, पलायितः, उद्व-
र्त्तितः, परिवर्त्तितः । यथा उत्तरचरिते,
"स कृत्स्न एव सन्दर्भोऽस्माकमावृत्तः" ।)

**आवेगः**, पुं, (आङ् + विज् + घञ् ।) त्वरा । इति

हेमचन्द्रः ॥ (यथा दशरूपके, --
"आवेगः सम्भमोऽस्मिन्नभिसरजनिते शस्त्रना-
गादियोगो वातात् पांशूपदिग्धस्त्वरितपदगति-
र्वर्षजे पिण्डिताङ्गः" । यथा अमरुशतके ८, ३ ।
"आवेगादवधीरितः
प्रियतमस्तूष्णींस्थितस्तत्-
क्षणात्" ।)

**आवेगी**, स्त्री, (आङ् + विज् + घञ् + ङीप् ।) वृद्ध-

दारकवृक्षः । इत्यमरः राजनिर्घण्टश्च ।
(अस्या गुणादयो वृद्धदारकशब्दे द्रष्टव्याः ॥)

**आवेदनं**, क्ली, (आङ् + विद् + ल्युट् ।) निवेदनं ।

(विज्ञापनम् ।)

**आवेशः**, पुं, (आङ् + विश् + घञ् ।) अहङ्कार-

विशेषः । तत्पर्य्यायः । संरम्भः २ आटोपः ३ ।
अपस्माररोगः । इति हेमचन्द्रः ॥ भूतादिना
रोगः । तत्पर्य्यायः । भूतसञ्चारः २ भूतक्रान्तिः ३
ग्रहामयः ४ । इति राजनिर्घण्टः ॥ आसक्तिः ।
अभिनिवेशः ॥ (यथा रघुवंशे, ५ । १९ ।
"तस्मै स्मयावेशविवर्ज्जिताय" ।)

**आशंसुः**, त्रि, (आङ् + शन्स + उ ।) आशंसिता ।

इच्छुः ॥ इत्यमरः ॥

**आशक्तः**, त्रि, (आङ् + शक् + क्तः ।) सम्यक्शक्ति-

विशिष्टः ॥

**आशङ्का**, स्त्री, (आङ् + शकि + अ + टाप् ।) भयं ।

त्रासः । इति हेमचन्द्रः ॥ (संशयः, वितर्कः ।)
शाकुन्तले, प्रथमाङ्के ।
"नष्टाशङ्का हरिणशिशवो मन्दमन्दं चरन्ति" ।
कथासरित्सागरे, १४ तरङ्गे ।
"तत् श्रुत्वा विगताशङ्कस्तामकारणदूषिताम्" ।)

**आशनः**, पुं, (अशन + स्वार्थे अण् ।) अशनवृक्षः ।

इति भरतः द्विरूपकोषश्च ॥

**आशयः**, पुं, (आङ् + शीङ् + अच् ।) अभिप्रायः ।

पनसवृक्षः । आधारः । इति विश्वमेदिन्यौ ॥
विभवः । किम्पचानः । चेतः । अजीर्णं । कोष्ठा-
गारं । इत्यजयपालः । धर्म्माधर्म्मौ । अदृष्टं । इति
कुसुमाञ्जलिः ॥ (अभिप्रायार्थे यथा, कथासरित्-
सागरे, १२ तरङ्गे ।
"तच्चालोक्याशयं बुद्ध्वा तस्य सोऽपि वसन्तकः" ।
चित्तार्थे यथा, भगवद्गीतायां, १० । २० ।
"अहमात्मा गुडाकेश सर्व्वभूताशये स्थितः" ।
"आशयाः सप्त" । "आशयास्तु वाताशयः पित्ता-
शयः श्लेष्माशयो रक्ताशय आमाशयः पक्वाशयो
मूत्राशयः स्त्रीणां गर्भाशयोऽष्टम" इति । सुश्रुतः ॥)

**आशयाशः**, पुं, (आशेरतेऽत्रेत्याशयः । एरच् ।

आधारः । तमश्नाति । कर्म्मण्यण् ।) आश्रयाशः ।
अग्निः । इत्यमरटीकायां स्वामी ॥

**आशरः**, पुं, (आ शृणाति शॄ हिंसायां + पचाद्यच् ।)

अग्निः । राक्षसः । इति मेदिनी ॥

**आशा**, स्त्री, (आ समन्तात् अश्नुते व्याप्नोतीति ।

अषडक्षाशितङ्ग्वलमिति खः । निपातनात्
पूर्ब्बस्य मुम् ।) अशिताङ्गवीनं । गावो यत्राशिताः
पुरा । इत्यमरः ॥ (यथा भट्टिकाव्ये ४ र्थ सर्गे ।
"हित्वाशीतङ्गवीनानि फलैर्यत्राशितम्भवम्" ।)
पूर्ब्बे ये स्थाने गरु चरियाच्छेइति भाषा ।

**आशितम्भवं**, क्ली, (आशित + भू + खच् + मुमा-

गमः ।) अन्नादि । तृप्तौ पुं । इति मेदिनी ॥ (यावता
अन्नेन अतिथ्यादिः भोजितः तृप्तोभवति तावत्
अन्नादिकम् । यथा, भट्टिकाव्ये ४ र्थ सर्गे, --
"हित्वाशिताङ्गवीनानि फलैर्यत्राशितम्भवम्" ।)

**आशिता** [ऋ] त्रि, (आ अश्नातीति । आ + अश् +

तृच् ।) बहुभोजनशीलः । अतिशयभोक्ता । इति
हेमचन्द्रः ॥

**आशिरः**, पुं, (आ + अश + किरच् ।) राक्षसः ।

अग्निः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥
(सूर्य्यः ।)

**आशीः**, [स्] स्त्री, (आङ् + शास् + क्विप् + उप-

धाया इत्वम्) आशीर्व्वादः । सर्पदन्तः । इत्यमरः ॥
वृद्धिनामौषधिः । इति राजनिर्घण्टः ॥ (हित-
प्रार्थनं, अभीष्टवृद्धिप्रार्थनं । यदुक्तं, --
"वात्सल्यात् यत्र मान्येन कनिष्ठस्याभिधीयते ।
इष्टावधारकं वाक्यमाशीः सा परिकीर्त्तिता" ॥
यथा, कुमारे ७ । ४७ ।
"तस्मै जयाशीः ससृजे पुरस्तात्" ।)

**आशी**, स्त्री, (आङ् + अश् + अच् + ङीप् ।) हिता-

शंसनं । अहिदन्तः । सर्पविषं । इति शब्दरत्ना-
वली ॥
"आशी तालुगता दंष्ट्रा तया दष्टो न जीवति" ।
इति विषविद्या ॥

**आशीर्व्वादः**, पुं, (आशिषो वारः षष्ठीतत् ।) आशीर्व-

चनं । मङ्गलप्रार्थना ॥ (यथा, मनुः । २ । ३३ ।
"मङ्गल्यं दीर्घवर्णान्तमाशीर्व्वादाभिधानवत्" ।)

**आशीविषः**, पुं, (आशिषि दंष्ट्रायां विषमस्य सः

पृषोदरादित्वात् साधुः ।) सर्पः । इत्यमरः ॥
रघुवंशे, -- ३ । ५७ ।

**आवेशनं**, क्ली, (आविश्यतेऽस्मिन् । आङ् + विश् + ल्युट् ।) शिल्पशाला । इत्यमरः ॥ (मनुः, ९ । २६५ ।
"जीर्णोद्यानान्यरण्यानि कारुकावेशनानि च" ।
(भावे ल्युट् ।) भूतावेशः । (यथा, साहित्यदर्पणे
३ परिच्छेदे ।
"मनःक्षेपस्त्वपस्मारो ग्रहाद्यावेशनादिजः" ।)
प्रवेशः । इति मेदिनी ॥ कोपः । इति धरणी ॥
परिवेशः । इति हेमचन्द्रः ॥

**आवेशिकः**, त्रि, (आवेशं संरम्भं प्राप्तः । आवेश + ठञ् ।) आगन्तुः । अतिथिः । इत्यमरः ॥
स्वीयं ।
असाधारणं । तत्पर्य्यायः । अन्यासाधारणं २
प्रातिष्ठितं ३ । इति त्रिकाण्डशेषः ॥

**आवेष्टकः**, पुं, (आङ् + वेष्ट + ण्वुल् ।) प्राचीरादिः । इति हलायुधः ॥ पाँचिल वेडा इत्यादि भाषा ॥

**आवोधनं**, क्ली, (आङ् + वध् + ल्युट् ।) ज्ञानम् । बुद्धिः ॥

**आशंसा**, स्त्री, (आङ् + शन्स + अङ् + टाप् ।) इच्छा । आकाङ्क्षा । इति हेमचन्द्रः ॥
(रघवंशे, १२ । ४४ ।
"निदधे विजयाशंसां चापे सीताञ्च लक्षणे" ।)

**आशंसिता**, [ऋ] त्रि, (आङ् + शन्स + तृच् ।) आशंसाकर्त्ता ॥ आकाङ्क्षाशीलः । इत्यमरः ॥

आङ् + अशू + पचाद्यच् + टाप् ।) दीर्घाकाङ्क्षा ।
आयता तृष्णा । (यथा, शान्तिशतके, ४ । २६ ।
"आशा नाम नदी मनोरथजला
तृष्णातरङ्गाकुला" ।
दिक् । इत्यमरः ।
वासवाशामुखे भाति इन्दुश्चन्दनविन्दुवत्" ॥
इति साहित्यदर्पणे १० परिच्छेदे ।
स्वनामख्याता
दक्षप्रजापतिकन्या । यथा, हरिवंशे, --
"श्रीर्ह्रीर्धृतिस्तथा कीर्त्तिराशा मेधा च सुव्रता" ।)

**आशाढः**, पुं, आषाढमासः । व्रतिनां पलाशदण्डः । इत्यमरटीका द्विरूपकोषश्च ॥

**आशाढा**, स्त्री, पूर्ब्बाषाढानहत्रं । उत्तराषाढा च ॥

**आशापुरसम्भवः**, पुं, (आशापुरात् सम्भवो यस्य ।) भूमिजगुग्गुलुः । इति राजनिर्घण्टः ॥

**आशाबन्धः**, पुं, (आशाया बन्धः । षष्ठीतत् ।) समाश्वासः । (मेघदूते, --
"आशाबन्धः कुसुमसदृशं प्रायशीह्यङ्गनानां ।
सद्यः पाति प्रणयि हृदयं विप्रयोगे रुणद्धि" ॥)
प्रत्याशा । मर्कटजालकं । माकडसार जाल इति भाषा । इति मेदिनी ॥

**आशितं**, त्रि, (आङ् + अश् + क्तः ।) अशितं । भुक्तं इति जटाधरः ॥

**आशितङ्गवीनं**, त्रि, (आशिता भोजिता गावो यत्र

"गरुत्मदाशीविषभीमदर्शनैः" ।

**आशुः**, पुं, क्ली, (अशू + उण् ।) प्रावृट्कालसमुद्भव-धान्यं । आउश इति भाषा । तत्पर्य्यायः । व्रीहिः २ पाटलः ३ । अस्य गुणाः । मधुरत्वम् । पाके अम्लत्वम् । पित्तकारित्वम् । गुरुत्वञ्च । इति राजवल्लभः ॥

**आशु**, क्ली, (अश्नुते इति । अशूङ् व्याप्तौ उण् ।) शीघ्रम् । द्रुतम् । (यथा शाकुन्तले १ अङ्के ।
("तदाशु कृतसन्धानं प्रतिसंहर सायकम्" ।)
सत्त्वगामि चेत् त्रि । इत्यमरः ॥

**आशुगः**, पुं, (आशु शीघ्रं गच्छतोति । आशु + गम् + ड ।) वायुः । बाणः । (रघुवंशे, १२ । ९१ ।
"रावणस्यापि रामास्तो भित्वा हृदयमाशुगः" ।)
शीघ्रगामिनि, त्रि । इत्यमरः ॥ मनुः ४ । ६८ ।
("विनीतैस्तु व्रजेन्नित्यमाशुगैर्लक्षणान्वितैः" ।)

**आशुपत्री**, स्त्री, शल्लकीलता । इति रत्नमाला ॥

**आशुव्रीहिः**, पुं, (आशुः ब्रीहिः ।) आशुधान्यं । इत्य-मरटीकायां भरतमुकुटौ ॥

**आशुशुक्षणिः**, पुं, (आ समन्तात् शोष्टुमिच्छति । आङ् + शुष् + सन् + अनि ।) अग्निः । इत्यमरः ॥ (यथा कादम्बर्य्यां, -- "मन्त्रपूतानि हवींषि प्रति- गृह्णाति एतत्प्रीत्या आशुशुक्षणिः" ।) वायुः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**आशेकुटी**, [न्] पुं, पर्ब्बतः । इति शब्दमाला ॥

**आश्चर्य्यं**, क्ली, (आङ् + चर् + ण्यत् + सुट् निपा- तनात् ।) अपूर्ब्बं । तत्पर्य्यायः । विस्मयः २ अद्भुतं ३ चित्रं ४ । इत्यमरः ॥ (यथा, रघौ १६ । ८७ । "गन्धोदग्रं तदनु ववृषुः पुष्पमाश्चर्य्यमेघाः" ।)

**आश्मनः**, पुं, (आश्मन् + अञ् ।) अरुणः । सूर्य्य- सारथिः । इति त्रिकाण्डशेषः ॥ (अश्मनि प्रस्तरे भवमित्यर्थे अश्मन् + अण् । शिलाभववस्तुनि त्रि । यथा भट्टौ ४ । २६ । "यश्चापमाश्मनप्रख्यं सेषुं धत्तेऽन्यदुर्व्वहम्" ।)

**आश्रमः**, पुं, क्ली, (आङ् + श्रम + घञ् ।) शास्त्रोक्त- धर्म्मविशेषः । आश्राम्यन्ति स्वं स्वं तपश्चरन्त्यत्र । स चतुर्विधः । ब्रह्मचर्य्यं १ गार्हस्थ्यं २ वानप्रस्थ्यं ३ सन्न्यासः ४ । इति स्मृतिः ॥ ब्रह्मचारी । गृही । वानप्रस्थः । भिक्षुः । इत्यमरः ॥ मुनीनां वास- स्थानं । वनं । मठः । इति मेदिनी ॥ (कलियुगे तु ब्रह्मचर्य्यवानप्रस्थौ न स्तः केवलं गृहस्थभिक्षुका- श्रमावेव, यदुक्तं । महानिर्व्वाणतन्त्रे । "गार्हस्थो भैक्षुकश्चैव आश्रमौ द्वौ कलौ युगे" । रघुवंशे, १ । ४८ । "स दुष्प्रापयशाः प्रापदाश्रमं श्रान्तवाहनः" ।)

**आश्रमिकः**, त्रि, (आश्रम + ठक् ।) आश्रमयुक्तः । इति शब्दरत्नावली ॥

**आश्रयः**, पुं, (आङ् + श्रि + अच् ।) राज्ञां सन्ध्या-

तत्कर्म्मणि प्रवीणत्वमित्युत्साहगुणा मताः ॥
व्यसनस्यागमद्वारमनुत्साहो म हीपतेः ।
सामदानदण्डभेदा इत्युपायचतुष्टयं ।
सामसिद्धं प्रशंसन्ति सर्व्वतश्च विपश्चितः ॥
स्रवन्निवामृतं वाचा सामोपायं समाचरेत् ।
लुब्धं क्षीणं प्रदानेन सत्कृत्य वशमानयेत् ।
भेदं कुर्व्वीत यत्नेन मल्लामात्यपुरोधसां ॥
यथाबलं प्रकुर्व्वीत दुष्टदण्डनिपातनं" ॥
इति युक्तिकल्पतरौ १ अध्यायः ॥

**आश्रयाशः**, पुं, (आश्रयमाधारमपि अश्नाति यः आश्रय + अश् + कर्म्मणि उपपदे अण् ।) अग्निः । (यथा, हितोपदेशे । २ । "दुर्वृत्तः क्रियते धूर्त्तैः श्रीमानात्मविवृद्धये । किं नाम खलसंसर्गः कुरुते नाश्रयाशयत्" ।) चित्रकवृक्षः । इत्यमरः ॥

**आश्रयाशः**, त्रि, (आश्रयं स्वालम्बनस्थानमपि अश्नाति यः । आश्रय + अश् + अण् ।) आश्रयनाशकः । आश्रयध्वंसी । इति मेदिनी ॥

**आश्रवं**, त्रि, (आ सम्यक् शृणोति वाक्यं यः । आङ् + श्रु + पचाद्यच् ।) वचनस्थितः । इति मेदिनी ॥ कथार बाध्य इति भाषा । ("दृष्टदोषमपि तन्न सोऽत्यजत् सङ्गवस्तु भिषजामनाश्रवः" ।) इति रघुवशम् । १९ । ४९ ।)

**आश्रवः**, पुं, (आङ् । श्रु + अच् ।) अङ्गीकारः । क्लेशः । इति मेदिनी ॥ दोषः । इति हेमचन्द्रः ॥

**आश्रिः**, स्त्री, (अश्रिरेव । अश्रि + इञ् ।) अश्रिः । कोणः ॥

**आश्रितः**, त्रि, (आङ् + श्रि + क्तः ।) आश्रयप्राप्तः । शरणागतः । न्यायमते परमाण्वाकाशादिनित्य- द्रव्यभिन्नसर्व्वद्रव्याणां आश्रितत्वं साधर्म्म्यं ॥ (अव-

"त्यजेदाश्वयुजे मासि मुन्यन्नं पूर्ब्बसञ्चितम् । जीर्णानि चैव वासांसि शाकमूलफलानि च" ॥)

**आश्वयुजी**, स्त्री, (अश्वयुजा युक्ता पौर्णमासी । अश्व- युज् + अण् + ङीप् ।) आश्विनी पूर्णिमा । इति शब्दरत्नावली ॥

**आश्वासः**, पुं, (आङ् + श्वस् + घञ् ।) निर्वृतिः । आख्यायिकापरिच्छेदः । इति मेदिनी ॥ आशा- प्रदानं ॥ (आश्रयदानं, भीतस्य भयनिवारणार्थं सान्त्वनं । उत्तरचरिते, षष्ठाङ्के । "आश्वासस्नेहभक्तीनामेकमालम्बनं महत्" ।)

**आश्विनः**, पुं, (अश्विनीनक्षत्रयुक्ता पौर्णमासी यत्र मासे सः । अश्विनी + अण् ।) वैशाखादिद्वादश- मासान्तर्गतषष्ठमासः । रवेः कन्याराशिस्थिति- कालः । तत्पर्य्यायः । इषः २ आश्वयुजः ३ । इत्य- मरः ॥ शारदः ४ । इति राजनिर्घण्टः ॥ तत्र जातफलं ।
"राज्ञां प्रियः काव्यकलाविदग्धः
स्याद्दर्भगर्भाग्रसुतीक्ष्णबुद्धिः ।
सुखी वदान्यो बहुमानशाली
भक्तो भवेदाश्विनमासजन्मा" ॥
इति कोष्ठीप्रदीपः ॥

**आश्विनेयौ**, पुं, (अश्विन्या अपत्ये । अश्विनी + ढक् ।) अश्विनीकुमारौ । इत्यमरः ॥ (पाण्डुपुत्रौ नकुल- सहदेवनामानौ, अश्विनीकुमारजातत्वात् तयो- स्तथात्वम् ।)

**आश्वीनं**, त्रि, (अश्वेनैकाहेनातिक्रम्यते । अश्वस्यैका- हगम इति खञ् ।) यद्वर्त्म एकेनाश्वेन एकेन दिनेन गम्यते तत् । इत्यमरः ॥ एक घोडाय एक दिने यावार पथ इति भाषा ।

**आषाढः**, पुं, (आषाढया नक्षत्रेण युक्ता पूर्णिमा यस्मिन् । आषाढा + नक्षत्रेण युक्तः कालः इति अण् । पलाशदण्डपक्षे आषाढः प्रयोजनमस्य इति विशाखाषाढादण् मन्थदण्डयोरित्यण् ।) वैशाखादिद्वादशमासान्तर्गततृतीयमासः । रवे- र्मिथुनराशिस्थितिकालः । पूर्ब्बोत्तराषाढान्यतर- नक्षत्रयुक्ता पौर्णमासी यत्र मासे सः । तत्पर्य्यायः ।

दिषड्गुणान्तर्गतगुणविशेषः । इत्यमरः ॥ व्यप-
देशः । (यथा, मनुः २ । ११ ।
“योवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विजः” ।
सामीप्यः । आधारः । इति जटाधरः ॥ (यथा,
शान्तिशतके ४ । ६ । “वासो वल्कलमाश्रयो
गिरि-
गुहा शय्या लतावल्लरी” ।)
गृहं । इति हेमचन्द्रः ॥ संश्रयणं । अवलम्बनं ।
(यथा, मनुः ७ । ७२ ।
“त्रीण्याद्यान्याश्रितास्त्वेषां
मृगगर्त्ताश्रयाप्सराः” ।)
राज्ञां तन्निर्णयो यथा, --
“अस्थितौ यदि कल्याणं भवेत् संश्रयणं तथा ।
भवति श्रेयसे राज्ञां विपरीतं न कर्हिचित् ॥
उच्छिद्यमानो बलिना आश्रयेत् बलवत्तरं ।
विनीतवत्तत्र कालं नयेदिति मतिर्ध्रुवा ॥
ददत् बलं वा कोषं वा भूमिं वा भूतिसम्भवां ।
आश्रयेदभियोक्तारं समाश्रयगुणान्वितं ॥
वीतव्यसनमश्रान्तं महोत्साहं महामतिं ।
प्रविशन्ति महाराजमपांपतिमिवापगाः ॥
अव्यवसायिनमलसं दैवपरं साहसाच्च परिहीनं
।
प्रमदेव वृद्धपतिं नेच्छन्त्युपगूहितुं कमला ॥
उत्साहात् श्रियमाप्नोति उत्साहाच्च महद्यशः
।
तस्मात् सर्व्वोपधाशुद्धमुत्साहं नित्यमाचरेत् ॥
अमर्षश्चैव शौर्य्यञ्च शीघ्रकारित्वमेव च ।

लम्बितः, अनुसृतः, आधेयः, अधीनः,
वशवर्त्ती ।)

**आश्रुतः**, त्रि, (आङ् + श्रु + क्तः ।) अङ्गीकृतः । स्वी-

कृतः । इत्यमरः ॥ आकर्णितः । कृतश्रवणः ॥

**आश्लेषः**, पुं, (आङ् + श्लिष् + घञ् ।) आलिङ्गनं ।

इति हलायुधः ॥ (मेघदूते, पूर्ब्बमघे ३ ।
“कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे” ।)
एकदेशसम्बन्धः । यथा । कानने रेमे । इति
व्याक-
रणं ॥ (अश्लेषा एव । अश्लेषा + अण् । स्त्रियां
टाप् ।) अश्लेषा । अश्लेषानक्षत्रसम्बन्धिनि,
त्रि ।
(यथा, तैत्तिरीयसंहितायां । ४ । ४ । १० । १
।
“अश्लेषानक्षत्रं सर्पा देवताः” ।)

**आश्वं**, क्ली, (अश्वानां समूहः । अश्व + अण् ।)
अश्व-

वृन्दं । घोटकसमूहः । इत्यमरः ॥ (अश्वस्य
भावः
कर्म्म वा ।)

**आश्वत्थं**, क्ली, (अश्वत्थस्य इदम् । अश्वत्थ + अण्
।)

अश्वत्थवृक्षफलं । इत्यमरः ॥

**आश्वपालिकः**, पुं, (अश्वपालस्यापत्यम् । अश्वपाल
+

ठक् ।) अश्वपालस्य पुत्त्रः । इति व्याकरणं ॥

**आश्वयुजः**, पुं, (आश्वयुजी पूर्णिमा विद्यतेऽस्य ।
आश्व-

युजी + अण् ।) आश्विनमासः । इत्यमरः ॥
आ-
श्विनसम्बन्धिनि त्रि ॥ (मनुः, ६ । १५ ।

शुचिः २ । इत्यमरः ॥ तत्र जातफलं ।
“अनल्पजल्पी प्रमदाभिलाषी
प्रमादशीलो गुरुवत्सलश्च ।
बहुव्ययो मन्दहुताशनः स्या-
दाषाढमासप्रभवो मनुष्यः” ॥
इति कोष्ठीप्रदीपः ॥ व्रतिनां पलाशदण्डः ॥
(“अथाजिनाषाढधरः प्रभल्भवाक्
ज्वलन्निव ब्रह्ममयेन तेजसा” ।
इति कुमारे । ५ । ३० ।)
मलयपर्ब्बतः । इति मेदिनी ॥

**आषाढकः**, पुं, (आषाढ एव + आषाढ + स्वार्थे

क ।) आषाढमासः ॥

**आषाढभवः**, पुं, (आषाढ + भू + अच् ।) मङ्गल-

ग्रहः । इति हारावली ॥ आषाढमासजाते त्रि ॥

**आषाढा**, स्त्री, पूर्ब्बाषाढानक्षत्रं । उत्तराषाढा-

नक्षत्रं । इति शब्दरत्नावली ॥

**आषाढाभूः**, पुं, (आषाढा + भू + क्विप् ।) मङ्गलग्रहः ।

इति हेमचन्द्रः ॥

**आषाढी**, स्त्री, (आषाढस्य इयं । आषाढ + अण् +

ङीप् ।) आषाढमासस्य पूर्णिमा । इति
मेदिनी ॥

**आष्ट्रं**, क्ली, (अश्नुते व्याप्नोतीति अश् + ष्ट्रन् वृद्धिश्च ।)

आकाशं । इत्युणादिकोषः ॥

**आस**, ञि ङ ल उपवेशने । (अदा ०-आत्म ० अक ०-

सेट् ।) इति कविकल्पद्रुमः ॥ विद्यमानतायां
।
इति तट्टीका ॥
("आसने भगवानास्तां सहैभिर्मुनिपुङ्गवैः" ।
इति रामायणे १ काण्डे) ञि आसितोऽस्ति ।
ल ङ
आस्ते सिंहासने नृपः । विद्यमानतायामप्ययं
।
आकाशमास्ते । इति दुर्गादासः ॥ (सम् +
अधि)
सम्यगुपवेशने । व्याप्तौ । यथा रघुवंशे, १३ ।
५२ ।
"वीरासनैर्ध्यानजुषागृषीणा-
ममी समध्यासितवेदिमध्याः" ।
(अनु) पश्चादुपवेशने । यथा रघौ, २ । २४
।
"तामन्तिकन्यस्तबलिप्रदीपा-
मन्वास्य गोप्ता गृहिणीसहायः" । इति ।
उपासनायां । यथा रामायणे, --
"ततश्चीरोत्तरासङ्गः सन्ध्यामन्वास्य
पश्चिमाम्" ।
इति ।
(अभि) अभ्यासे । (उत्) उपेक्षायां । यथा
माघे ।
२ । ४२ ।
"विधाय वैरं सामर्षे नरोऽरौ य उदासते" ।
इति ।
(उप) समीपोववेशने । यथा मनुः, ४ ।
१५४ ।
(यथा, कुमारे । ५ । ९ ।
"ब षट्पदश्रेणिभिरेव पङ्कजं
सशैवलासङ्गमपि प्रकाशते" ।)
तुवरी । सौराष्ट्रमृत्तिका इति यावत् । इति राज-
निर्घण्टः ॥ आसक्तिः ॥ (यथा, गीतायां ४ । २० ।
"त्यक्त्वा कर्म्मफलासङ्गभित्यतृप्तो निराश्रयः" ।)

**आसङ्गिनी**, स्त्री, (आसङ्ग + इनि + ङीप् ।) चक्र-

वातः । वातभ्रमः । इति त्रिकाण्डशेषः ॥ घूरु-
णिया वातास इति भाषा ।

**आसत्तिः**, स्त्री, (आङ् + सद् + क्तिन् ।) सङ्गमः ।

लाभः । इति मेदिनी ॥ (अविच्छेदः । निरन्तरं ।
यथा, साहित्यदर्पणे २ य परिच्छेदे ।
"वाक्यं स्याद् योग्यताकाङ्क्षासत्तियक्तः पदोच्चयः"
।
आसत्तिर्बुद्व्यविच्छेदः" इति तट्टीका ।)
न्यायमते पदसन्निधानकारणं । यत्पदार्थस्य यत्प-
दार्थेनान्वयोऽपेक्षितस्तयोरव्यवधानेनोपस्थिति-
कारणं । इति सिद्धान्तमुक्तावली ॥

**आसनं**, क्ली, (आस्यते उपविश्यतेऽस्मिन् । आस् +

अधिकरणे + ल्युट् ।) पीठ । पिँडि चौकि इत्यादि
भाषा । हस्तिस्कन्धदेशः । यत्र महामात्रो निव-
सति । विजिगीषोर्दुर्गादीनवर्द्धयतः स्थितिः । इत्य-
मरः ॥ यात्रानिवर्त्तनं । इति मेदिनी ॥ अष्टाङ्ग-
योगस्य तृतीययोगाङ्गं । तत्तु पञ्चप्रकारकरचर-
णादिसंस्थानविशेषः । यथा, --
"पद्मासनं स्वस्तिकाख्यं भद्रं वज्रासनं तथा ।
वीरासनमिति प्रोक्तं क्रमादासनपञ्चकम्" ॥
तेषां क्रमः ।
"ऊर्व्वोरुपरि विन्यस्य सम्यक् पादतले उभे ।
अङ्गुष्ठौ च निबध्नीयात् हस्ताभ्यां व्युत्क्रमात्तथा ॥
पद्मासनमिति प्रोक्तं योगिनां हृदयङ्गमम् ॥ १ ॥
जानूर्व्वोरन्तरे सम्यक् कृत्वा पादतले उभे ।
ऋजुकायो विशेन्मन्त्री स्वस्तिकं तत् प्रचक्ष्यते ॥ २
॥
सीमन्याः पार्श्वयोर्न्यस्येद्गुल्फयुग्मं सुनिश्चलम् ।
वृषणाधःपादपार्ष्णी पाणिभ्यां परिबन्धयेत् ॥
भद्रासनं समुद्दिष्टं योगिभिः सारकल्पितम् ॥ ३ ॥
ऊर्व्वोः पादौ क्रमान्न्यस्येत् कृत्वा प्रत्यङ्मुखाङ्गुली
।
पौष्पासनं यद्विहितं यस्य तद्यदि गर्भकम् ॥
निवेदयेत्तदा पद्मे विपुलं द्वारि चोत्सृजेत् ।
पौष्पं पुष्पौघरचितं कुशसूत्रादिसंयुतं ॥
अतिप्रीतिकरं देव्या ममाप्यन्यस्य भैरव ।
यज्ञदारुसमुद्भूतमासनं मसृणं शुभम् ॥
नोच्छ्रायं नातिविस्तीर्णमासनं विनियोजयेत् ॥
अन्यदारूद्भवञ्चापि दद्यादासनमुत्तमम् ॥
सकण्टकं क्षीरयुक्तं दारुसारविवर्जितम् ।
चैत्यश्मशानसंभूतं वर्जयित्वा विभीतकम् ॥
वाल्कलं कोषजं फालं वस्त्रमेतत्त्रयं मतम् ।
रोमजं कम्बलञ्चैव तदनेन चतुष्टयम् ॥
अनेन रचितं दद्यादासनं चेष्टभूतये ।
सिंहव्याघ्रतरक्षूणां छागस्य महिषस्य च ॥
गजानां तुरगाणाञ्च कृष्णसारस्य चर्म्मणः ।
सृमरस्याथ रामस्य मृगाणां नवभेदिनाम् ॥
चर्म्मभिः सर्व्वदेवानामासनं प्रीतिदं स्मृतम् ।
वास्तेषु कम्बलं शस्तमासनं देवतुष्टये ॥
राङ्कवं चार्म्मणं श्रेष्ठं दारवं चन्दनोद्भवम् ।
यच्चासनं कुशमयं तदासनमनुत्तमम् ॥
सर्व्वेषामपि देवानामृषीणाञ्च यतात्मनाम् ।
योगपीठस्य सदृशमासनं स्थानमुच्यते ॥
आसनस्य प्रदानेन सौभाग्यं मुक्तिमाप्नुयात् ।
सृमरो रोहितो न्यङ्कुः सम्बरो वभ्रुणो रुरुः ॥
शशैणहरिणाश्चेति मृगा नवविधा मताः ।
हरिणश्चापि विज्ञेयः पञ्चभेदोऽत्र भैरव ॥
ऋष्यः खङ्गो रुरुश्चैव पृषतश्च मृगस्तथा ।
एते वलिप्रदानेषु चर्म्मदाने च कीर्त्तिताः ॥
सर्व्वेषां तैजसानाञ्च आसनं ज्येष्ठमुच्यते ।
आयसं वर्ज्जयित्वा तु कांस्यं सीसकमेव वा ॥
शिलामयं मणिमयं तथा रत्नमयं मतम् ।
आसनं देवताभ्यस्तु भुक्त्यै मुक्त्यै समुत्सृजेत्
॥ * ॥
अत्रैव साधकानाञ्च आसनं शृणु भैरव ।
यत्रासीनः पूजकस्तु सर्व्वसिद्धिमवाप्नुयात् ॥
ऐणञ्च चार्म्मणं वास्त्रं तैजसञ्च चतुष्टयम् ।
आसनं साधकानाञ्च सततं परिकीर्त्तितम् ॥
पूर्ब्बोक्तं यच्च देवेभ्य आसनं परिकीर्त्तितम् ।
तत्सर्व्वमासनं शस्तं पूजाकर्म्मणि साधके ॥
न यथेष्टासनो भूयात् पूजाकर्म्मणि साधकः ।
काष्ठादिकासनं कुर्य्यात् मितमेव सदा बुधः ॥ *
॥
चतुर्व्विंशत्यङ्गुलेन दीर्घं काष्ठासनं मतम् ।

"कृताञ्जलिरुपासीत गच्छतः
पृष्ठतोऽन्वियात्" ।
इति ।
बद्धाञ्जलिश्च गुरुसमीपमासीत इति तट्टीका ॥
उपासनायां । यथा, --
"मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते" ।
इति गीतायां १२ । २ । सेवने । यथा, --
"उपासते ये गृहस्था ! परपाकमबुद्धयः" ।
इति मनुः ३ । १०४ । परपाकमुपासते सेवन्ते इति
तट्टीका । (निर्) निरासे । अपसारणे । (प्रति + सम्) प्रतिद्वन्द्वितयावस्थाने । "कोऽन्यः प्रति-
समासेत कालान्तकयमादृते" । इति भारतम् ।
इत्यादि ।)

**आसः**, पुं, (अस्यन्ते शरा अनेनेति । अस् + करणे
घञ् ।) धनुः । इति हेमचन्द्रः ॥

**आसक्तः**, त्रि, (आङ् + सञ्ज + क्तः ।) आसक्तिवि-
शिष्टः । तत्पर्य्यायः । तत्परः २ प्रसितः ३ । इत्य-
मरः ॥ (विषयान्तरपरिहारेण सर्व्वदा निविष्टः ।
यथा, किराते । ११ । ३४ ।
"असक्तास्तास्वमी मूढा वामशीला हि जन्तवः" ।)

**आसक्तं**, क्ली, (आङ् + सञ्ज + क्त ।) नित्यं । सततं ।
अविरतं । इति जटाधरः ॥

**आसक्तिः**, स्त्री, (आङ् + सञ्ज + क्तिन् ।) आनुरक्तिः ।
आसङ्गः ॥

**आसङ्गं**, क्ली, (आङ् + सञ्ज + अच् ।) अनवरतं ।
नित्यं । सततं । तद्युक्ते त्रि । इति जटाधरः ॥

करौ निदध्यादाख्यातं वज्रासनमनुत्तमम् ॥ ४ ॥
एकपादमधः कृत्वा विन्यस्योरौ तथेतरम् ।
ऋजुकायो विशेन्मन्त्री वीरासनमितीरितम् ॥ ५ ॥
इति तन्त्रसारः ॥ अन्यच्च ।
"आसनानि कुलेशानि यावन्तो जीवजन्तवः ।
चतुरशीतिलक्षाणि चैकैकं समुदाहृतम् ॥
आसनेभ्यः समस्तेभ्यः साम्प्रतं द्वयमुच्यते ।
एकं सिद्धासनं नाम द्वितीयं कमलासनम्" ॥
इति निरुक्ततन्त्रम् ॥
शृङ्गारासनानि बन्धशब्दे द्रष्टव्यानि ॥
उपवेशनाधारः । पीठादि । यथा ।
श्रीभगवानुवाच ।
"उपचारान् प्रवक्ष्यामि शृण षोडश भैरव ।
यैः सम्यक् तुष्यते देवी देवोऽप्यन्यो हि भक्तितः ॥
आसनं प्रथमं दद्यात् पौष्पं दारुजमेव वा ।
वास्त्रं वा चार्म्मणं कौशं मण्डलस्योत्तरे सृजेत् ॥
षोडशाङ्गुलविस्तीर्णमुत्सेधचतुरङ्गुलम् ॥
षडङ्गुलं वा कुर्य्यात्तु नोच्छ्रितं चात्र कारयेत् ।
पुर्ब्बोक्तं वर्ज्जयेद्वर्ज्यमासनं पूजनेष्वपि ॥
वास्त्रं द्विहस्तान्नो दीघं सार्द्धहस्तान्न विस्तृतम् ।
न त्र्यङ्गुलात्तथोच्छ्रायं पूजाकर्म्मणि संश्रयेत् ॥
यथेष्टं चार्म्मणं कुर्य्यात् पूर्ब्बोक्तं सिद्धिदायकम् ॥
षडङ्गुलाधिकं कुर्य्यान्नोच्छ्रितन्तु कदाचन ।
काम्बलं चार्म्मणं चैलं महामायाप्रपूजने ॥
प्रशस्तमासनं प्रोक्तं कामाख्यायास्तथैव च ।
त्रिपुरायाश्च सततं विष्णोश्चापि कुशासनम् ॥
बहुदीर्घं बहूच्छ्रायं तथैव बहुविस्तृतम् ।
दारुभूमिसमं प्रोक्तमश्मापि सर्व्वकर्म्मणि ॥

:पृथक् पृथक् कल्पयेच्च शोभनं तादृशासनम् ।

न पत्रमासनं कुर्य्यात् कदाचिदपि पूजने ॥
न प्राण्यङ्गससुद्भूतमस्थिजं द्विरदादृते ।
मातङ्गदन्तसञ्जातमासनं कामिके चरेत् ॥
चर्म्मपूर्ब्बोदितं ग्राह्यं तथा गन्धमृगस्य च ॥ * ॥
सलिले यदि कुर्व्वीत देवतानां प्रपूजनम् ॥
तत्राप्यासनमासीनो नोत्थितस्तु समाचरेत् ।
तोये शिलामयं कुर्य्यादासनं कौशमेव वा ॥
दारवं तैजसं वापि नान्यदासनमाचरेत् ।
आसनारोपसंस्थानं स्थानाभावे तु पूजकः ॥
आसनं कल्पयित्वा तु मनसा पूजयेज्जले ॥
यद्यासनस्य संस्थानं तोयमध्ये न विद्यते ॥
अन्यत्र वा तदा स्थित्वा देवपूजां समाचरेत्
इत्येतत् कथितं पुत्त्र पूज्यपूजकसङ्गतम् ॥
आसनं पाद्यमधुना शृणु वेतालभैरव" ॥
इति कालिकापुराणे ६७ अध्यायः ॥

**आसनः**, पुं, (असु क्षेपने + ल्युः + प्रज्ञाद्यण् ।) जीवकवृक्षः । इति मेदिनी ॥ (जीववृक्षशब्देऽस्य विशेषो ज्ञेयः ।)

**आसना**, स्त्री, (आस्यतेऽस्याम् । आस + ण्यासश्रन्थो युच् ।) स्थितिः । इत्यमरः ॥

**आसनी**, स्त्री, (आस्यतेऽस्मिन् । आस + अधिकरणे ल्युट् + स्त्रियां ङीप् ।) विपणिः । (आस + भावे + ल्युट् + ङीप्) स्थितिः । इति मेदिनी ॥

**आसन्दः**, पुं, (आसं ददातीति । आस + ड ।) वासुदेवः । इति मेदिनी ॥

**आसन्दी**, स्त्री, (आस्यतेऽस्यां । आस् । अब्दादयश्चेति साधुः ।) क्षुद्रखट्वा । इति मेदिनी ॥ (यथा, शतपथब्राह्मणे ५ । ४ । ४ । १ । "तस्मादस्मा आसन्दीमाहरन्ति सैषा खादिरी वितृष्णा भवति येयं वघ्रव्युता भरतानाम्" ।)

**आसन्नः**, त्रि, (आङ् + सद् + क्तः ।) निकटः । इत्यमरः ॥ (समीपवर्त्ती, कुमारसम्भवे, ३ । ४४ ॥ "आ-

"रोचनो दीपनो हृद्यः शोषशोफार्शसंहितः ।
स्नेहश्लेष्मविकारघ्नो वर्ण्यः पक्वरसो मतः" ॥
"मृष्टो भिन्नशकृद्वातो गौडस्तर्पणदीपनः ।
छेदी मध्वासवस्तीक्ष्णो मैरेयो मधुरो गुरुः" ॥
इति चरकः ॥ तथा च सुश्रुते ॥
"तीक्ष्णः सुरासवो हृद्यो मूत्रलः कफवातनुत् ॥
मुखप्रियः स्थिरमदो विज्ञेयोऽनिलनाशनः ।
लघुर्मध्वासवश्छेदी मेहकुष्ठविषापहः ॥
तिक्तः कषायः शोफघ्नस्तीक्ष्णः स्वादुरवातकृत् ।
तीक्ष्णः कषायो मदकृद्दुर्नामकफगुल्महृत् ॥
कृमिमेदोऽनिलहरो मैरेयो मधुरो गुरुः ।
बल्यः पित्तहरो वर्ण्यो मृद्वीकेक्षुरसासवः" ॥)

**आसवद्रुः**, पुं, (आसवस्य द्रुः ।) तालवृक्षः । इति राजनिर्घण्टः ॥

**आसादितः**, त्रि, (आङ् + सद् + णिच् + क्तः ।) प्राप्तः । लब्धः । इत्यमरः ॥ (सन्निधापितः, आयोजितः, सम्पादितः ।)

**आसारः**, पुं, (आङ् + सृ + घञ् ।) धारासपातः । वेगवृष्टिः । (मेघदूते, "त्वामासारप्रशमितवनोपप्लवं साधु मूर्द्ध्ना" । प्रसरणम् । सैन्यानां सर्व्वतो व्याप्तिः । इत्यमरः ॥ (यथा पञ्चतन्त्रे । ३ । ४९ । "तस्मात् दुर्गं दृढं कृत्वा सुभटासारसंयुतं" ।) सुहृद्बलम् । इति मेदिनी ॥ (यथा पञ्चतन्त्रे ३ । २९ ।
"अज्ञातवीवधासारतोयशस्यो व्रजेत्तु यः" ।)

**आसीनः**, त्रि, (आस् + शानच् ।) उपविष्टः । इति जटाधरः ॥ वसा लोक इत्यादि भाषा ।

**आसीनप्रचलायितं**, क्ली, (आसीनेन उपविष्टेन प्रचलवदाचरितम् ।) उपविश्य निद्रावशेन दोलनम् । इति राजवल्लभः ॥ ढोला इति भाषा ।

**आसुतिः**, पुं, (आसूयते + आङ् + सुञ् + क्तिन् ।) मद्यसन्धानम् । इति हेमचन्द्रः ॥ मद चोयान इति भाषा ।

**आसुतीवलः**, पुं, (आसुतिरस्यास्ति रजःकृष्यासुतिपरिषदौ वलच् । वलेति दीर्घः ।) यज्वा । शौ-

इति श्राद्धतत्त्वे ऋग्वेदीयगृह्यपरिशिष्टम् ॥
अपि च ।
"स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने ।
आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्ज्जयेत्" ॥
इति श्राद्धतत्त्वधृतयमवचनम् ॥ * ॥
आसुरसर्गो
यथा ।
"द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥
प्रवृत्तिञ्च निवृत्तिञ्च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥
असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूतं किमन्यत् कामहेतुकम् ॥
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्म्माणः क्षयाय जगतोऽहिताः ॥
काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहात् गृहीत्वा सद्ग्राहान् प्रवर्त्तन्तेऽशुचिव्रताः ॥
चिन्तामपरिमेयाञ्च प्रलयान्तामपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥
आशापाशशतैर्ब्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥
इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥
असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ।
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥
अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥
आत्मसम्भाविताःस्तब्धा धनमानमदान्विताः ।
यजन्ते नाम यज्ञैस्ते दम्भेनाविधिपूर्ब्बकम् ॥
अहङ्कारं बलं दर्पं कामं क्रोधञ्च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥
तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय तती यान्त्यधमां गतिम्" ॥
इति श्रीभगवद्गीतायां १६ अध्यायः ॥

सीनमासन्नशरीरपातः” । अस्ताभिमुखः सूर्य्यः ।)

**आसवः**, पुं, (आङ् + सुञ् + अप् ।) मद्यविशेषः ।

तत्पर्य्यायः । मैरेयं २ शीधुः ३ । इत्यमरः ॥
“शीवुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत् ।
मैरेयं धातकीपुष्पगुडधानाम्लसंहितम्” ॥
इति माधवेन भेदः कृतस्तथापि सूक्ष्ममनादृत्ये-
दमुक्तम् । इति भरतः ॥ मद्यमात्रम् । इति
राजनिर्घण्टः ॥ (यथा भनुः ११ । ९५ ।
“यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवं ।
तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हरिः” ।)
(“यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः” ।
इति शार्ङ्गधरः । यथा भावप्रकाशे ।
“आसवस्य गुणा ज्ञेया वीजद्रव्यगुणैः समाः” ।)
आसवभेदेन गुणभेदो यथा ॥
“छेदी मध्वासवस्तीक्ष्णो मेहपीनसकासजित्” ।
“शार्करः सुरभिः स्वादुर्हृद्यो नातिमदो लघुः” ।
इति च वाभटः ॥
“मुखप्रियः सुखमदः सुगन्धिर्वस्तिरोगनुत् ।
जरणीयः परिणतो हृद्यो वर्ण्यश्च शार्करः” ॥

ण्डिकः । इति हेमचन्द्रः ॥ (कन्यापालः, शूद्रजाति-
विशेषः ।)

**आसुरः**, पुं, (असुर + प्रज्ञाद्यण् ।) असुरः । इति

सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥
“ब्राह्म्याद्यष्टधाविवाहान्तर्गतविवाहविशेषः ।
“आसुरो द्रविणादानात्” ॥ इति याज्ञवल्क्यः ।
“ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायै चैव शक्तितः ।
कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म्म उच्यते” ॥
इति मनुः ३ । ३१ ।

**आसुरं**, क्ली, विड्लवणम् । इति राजनिर्घण्टः ॥

असुरस्य भावः । (यथा गीतायां ७ । १५ ।
“न मां दुष्कृतिनो मूढा प्रपद्यन्ते नराधमाः ।
माययापहृतज्ञाना आसुरं भावमाश्रिताः” ।)
असुरसम्बन्धीये त्रि । इति व्याकरणम् ॥

**आसुरं**, त्रि, (असुरस्येदम् । असुर + अण् ।) असुर-

सम्बन्धि । यथा --
“यस्मिन् नवे पुराणे च विश्वे देवा न लेभिरे ।
आसुरं तद्भवेत् श्राद्धं वृषलं मन्त्रवर्जितम्” ॥

**आसुरी**, स्त्री, (असुरस्य इयं । असुर + तस्येदमित्यण्

ततः ङीप् ।) राजिका । राइ सर्षा इति भाषा ।
इति राजनिर्घण्टः ॥ त्रिविधचिकित्सान्तर्गत-
चिकित्साविशेषः । सा च छेदभेदाद्यात्मिका ।
इति वैद्यकं शब्दचन्द्रिका च ॥

**आसेचनः**, त्रि, (न सिच्यते मनोऽत्र । नञ् + सिच्

+ अधिकरणे ल्युट् । ततः स्वार्थे अण् ।) यस्य
दर्शने तृप्तेरन्तो न जायते सः । तत्पर्य्यायः ।
अतृप्तिकृत् २ । इति हारावली ॥ (आ + सिच् +
करणे + ल्युट् । आसेचनपात्रम् । यथा, ऋग्वेदे
१ । १६२ । १३ । “या पात्र पूष्ण
आसेचनानि” ।)

**आसेचनकः**, त्रि, (आसेचन एव संज्ञायां कन् ।)

असेचनकः । आसेचनः । इत्यमरटीकायां राय-
मुकुटः ॥ (यथा, साहित्यदर्पणे १० म
परिच्छेदे ।
“नयनयुगासेचनकं मानसवृत्यापि दुष्पापम्” ।)

**आस्कन्दनं**, त्रि, (आङ् + स्कन्द + भावे ल्युट् ।)
तिरस्कारः । रणः । शोषणं । इति मेदिनी ॥
(यथा, किराते ६ । २५ ।
“चरणास्कन्दननामिता-
चलेन्द्रः” ।)

**आस्कन्दितं**, क्ली, (आङ् + स्कन्द + भावे + क्त ।) अश्व-
गतिविशेषः । स च सम्यग्गतिः । इत्यमरः ॥

**आस्कन्दितकं**, क्ली, (आस्कन्दितमेव स्वार्थे कन् ।)
आस्कन्दितं । अश्वानां पञ्चमगतिः । तत्पर्य्यायः ।
उत्तेरितं २ उपकण्ठं ३ । इति हेमचन्द्रः ॥
(“उत्तेरितमुपकण्ठमास्कन्दितकमित्यपि ।
उत्प्लुत्योत्प्लुत्य गमनं कोपादिवाखिलैः पदैः” ।
हेमचन्द्रः ॥)

**आस्तरः**, पुं, (आस्तीर्य्यतेऽसौ । आङ् + स्तॄ + अप् ।)
करिकम्बलं । इति हेमचन्द्रः ॥ वस्त्राद्यास्तरणं ॥
(यथा शान्तिशतके, २ । १९ । “वासो वल्कल-
मास्तरः किशलयान्योकस्तरूणां तलम्” ॥)

**आस्तरणं**, क्ली, (आस्तीर्य्यते यत् येन वा आङ् +
स्तॄ + कर्म्मणि करणे वा ल्युट् ।)
हस्तिपृष्ठस्थित-
चित्रकम्बलं । झुल इति भाषा । तत्पर्य्यायः ।
प्रवेणी २ वर्णः ३ परिस्तोमः ४ कुथा ५ कुथः ६ ।
इत्यमरः ॥ प्रवेणिः ७ परिष्टोमः ८ कुथं ९ ।
इत्यमरटीका ॥ (शय्या, कुशासनं । यथा रामा-
यणे, ३ काण्डे ।
“राङ्कवास्तरणे पूर्ब्बमयोध्यायामिवासने” ।
महाभारते, आदिपर्ब्बणि ।
“दर्भास्तरणमास्तीर्य्य निश्चयात् धृतराष्ट्रजः” ॥)

**आस्तिकः**, पुं, (अस्तीत्यस्य । अस्ति + ठक् ।) मुनि-
विशेषः । स तु जरत्कारुमुनिपुत्त्रः । तत्पिता
गर्भस्थं तं ज्ञात्वास्तीत्युक्त्वा गत
इत्यस्मादास्तिकः ।
(यथा, --
आलम्बन । आस्थानं । अपेक्षा । इति मेदिनी-
कारहेमचन्द्रौ ॥ (श्रद्धा । आदरः । प्रतिष्ठा ।
यथा, रघौ १० । ४३ ।
“दैवात् स्वर्गादबध्यत्वं मर्त्त्येष्वास्थापराङ्मुखः” ।
“विनश्वरे विहायास्थां यशः पालय मित्र मे” ।
इति हितोपदेशः ॥)

**आस्थानं**, क्ली, (आस्थीयतेऽस्मिन् इति । आङ् +
स्था + ल्युट् ।) सभा । इत्यमरः । (यथा, किराते
१ । १६ । “अनेकराजन्यरथाश्वसंकुलं
तदीयमास्थाननिकेतनाजिरम्” ।)
यत्नः । इत्यजयः ॥ (आश्रयः । स्थानम् ।)

**आस्थानी**, स्त्री, (आस्थान + ङीप् ।) सभा । इत्य-
मरः ॥ (“आस्थानीं समये समं नृपजनः सायन्तने
सम्पतन्” । इति रत्नावली ।)

**आस्पदं**, क्ली, (आपद्यतेऽस्मिन् इति । आस्पदं प्रति-
ष्ठायामिति निपातनात् सुट् ।) प्रतिष्ठा । कर्म्म ।
इत्यमरः ॥ प्रभुत्वं । इति धरणी । स्थानं । इति
हेमचन्द्रः ॥ (“रागस्यास्पदमित्यवैमि न हि मे
ध्वंसीति न प्रत्ययः” । इति नागानन्दे । तथा च
रघौ ३ । ३६ ।
“नरेन्द्रमूलायतनादनन्तरं
तदास्पदं श्रीर्युवराजसंज्ञितम्” ।)

**आस्पन्दनं**, क्ली, (आङ् + स्पन्द + ल्युट् ।) स्पन्दनं ।
कम्पनम् ॥

**आस्फालः**, पुं, (आङ् + स्फुल् + घञ् ।) हस्ति-
कर्णास्फालनं । हातिर काण नाडा इति भाषा ।
तत्पर्य्यायः । झलज्झला । इति हारावली-त्रि-
काण्डशेषौ ॥ (आस्फालनं । सञ्चालनं ।)

**आस्फालनं**, क्ली, (आङ् + स्फुल् + णिच् + ल्युट् ।)
आटोपः । प्रागल्भ्यम् ॥ (यथा रघौ ६७३ ।
रत्नावली ॥ (नवमल्लीशब्देऽस्या विशेषो ज्ञेयः ।)

**आस्फोतः**, पुं, (आस्फोटयतीति । आङ् + स्फुट् +
अच् + पुषोदरादित्वात् साधुः ।) अर्कवृक्षः ।
कोविदारकवृक्षः । इति मेदिनी ॥ भूपलाशवृक्षः ।
इति शब्दचन्द्रिका ॥ (यथा, वाभटे ।
(“मूलं सप्ताह्वात्त्वक्शिरीषाश्वमारा-
दर्कान्मालत्याश्चित्रकास्फोतनिम्बात् ।
वीजं कारञ्जं सार्षपं प्रापुनाटं
श्रेष्ठा जन्तुघ्नं क्रूषणं द्वे हरिद्रे” ॥)

**आस्फोतकः**, पुं, (आस्फोत एव स्वार्थे कन् ।) अक-
वृक्षः । इति राजनिर्घण्टः ॥

**आस्फोता**, स्त्री, (आस्फोत + टाप् ।) अपराजिता ।
वनमल्लिका । इति मेदिनी ॥ सारिवावृक्षः । इति
राजनिर्घण्टः । वृक्षविशेषः । हापरमालीति
ख्याता । अस्या गुणौ । कुष्ठविषरोगनाशित्वं ।
इति राजवल्लभः ॥

**आस्यं**, क्ली, (अस्यते ग्रासोऽस्मिन् इति असु क्षेपणे
कृत्यल्युट इति ण्यत् । यदा आस्यन्दते अम्लादिना
प्रस्रवति इति स्यन्दू प्रस्रवणे + ड ।) मुखं । मुख-
मध्यम् । (यथा, मनुः १ । ९५ ।)
(“यस्यास्येन सदाश्नन्ति हव्यानि
त्रिदिवौकसः” ।)
(आस्ये भवमास्यं ।) मुखभवे त्रि । इति मेदिनी ॥

**आस्यपत्रं**, क्ली, (आस्यमिव पत्राणि यस्य तत् ।) पद्मं ।
इति शब्दचन्द्रिका ।

**आस्यलाङ्गलः**, पुं, (आस्यं लाङ्गलं भूविदारकयन्त्र-
मिव यस्य ।) शूकरः । इति हेमचन्द्रः ॥

**आस्यलोम**, [न्] क्ली, (आस्यस्य लोम ।) श्मश्रुः ।
इति हेमचन्द्रः ॥

**आस्या**, स्त्री, (आस् + ण्यत् ।) स्थितिः । इत्यमरो
मेदिनी च ॥ (आसनं, इति वैद्यमाधवकररोग-
विनिश्चयसंग्रहे । यथा, --
“आस्यासुखं स्वप्नसुस्वं दधीनि”

"अस्तीत्युक्त्वा गतो यस्मात् पिता गर्भस्थमेव तम् ।
वनं तस्मादिदं तस्य नामास्तिकेति विश्रुतम्" ॥)
इति महाभारतम् ॥
("आस्तिकस्य मुनेर्माता भगिनी वासुकेस्तथा" ।
इति मनसाप्रणाममन्त्रः ।)

**आस्तिकः**, त्रि, (अस्ति ईश्वर इति मतिर्यस्य ।

अस्ति + ठक् ।) नास्तिकभिन्नः ।
ईश्वरोऽस्तीति-
वादी । वेदप्रामाण्यवादी । तत्पर्य्यायः । श्रद्धालुः २
श्राद्धः ३ । इति हेमचन्द्रः ॥
("सत्यधर्म्मच्युतात् पुंसः क्रुद्धादाशीविषादिव ।
अनास्तिकोऽप्युद्विजते जनः किं पुनरास्तिकः" ॥
इति महाभारते आदिपर्ब्बणि ॥)

**आस्तिकार्थदः**, पुं, (आस्तिकस्य मुनेरर्थं सर्पसत्रात्

निवृत्तिरूपप्रयोजनं ददाति यः । जनमेजयो राजा आस्तिकमुनिवचनात् सर्पयज्ञात् विरराम इति पौराणिकी कथा ।) जनमेजयो राजा । इति शब्दरत्नावली ॥

**आस्तीकः**, पुं, आस्तिकमुनिः । इति त्रिकाण्डशेषः ॥

**आस्तीकजननी**, स्त्री, (आस्तीकम्य जननी माता,

षष्ठीतत्पुरुषः ।) आस्तिकमाता । मनसा देवी । इति शब्दरत्नावली ।

**आस्था**, स्त्री, (आङ् + स्था + अङ् + टाप् ।) यत्नः ।

"ऐरावतास्फालनविश्लथं यः
सङ्गट्टयन्नङ्गदमङ्गदेन" ।)

**आस्फुजित्**, पुं, (आस्फु + जि + क्विप् ।) शुक्राचार्य्यः ।

इति त्रिकाण्डशेषः ॥

**आस्फोटः**, पुं, (आङ् + स्फुट् + अच् ।) आस्फोत-

वृक्षः । इति शब्दरत्नावली ॥ आकन्द इति भाषा ।
शूरादेर्बाह्वादिशब्दः । इति श्रीभागवतम् ॥
("कक्षैः कक्ष्यां विधुन्वानावास्फोटं तत्र चक्रतुः" ।
इति महाभारते सभापर्ब्बणि ।)

**आस्फोटकः**, पुं, (आङ् + स्फुट् + ण्वुल् ।) पर्ब्बत-

जपीलुवृक्षः । इति शब्दमाला ॥ आकरोट इति भाषा ।

**आस्फोटनं**, क्ली, (आङ् + स्फुट् + ल्युट् ।) विकाशः ।

मुद्रणं । इति धरणी ॥ बाह्वादिशब्दः । ताल ठोका इत्यादि भाषा ॥ (यथा रामायणे ५ काण्डे ।
"आस्फोटननिनादांश्च बालानां तत्र खेलताम्" ॥
धान्यादेस्तुषविश्लेषकरणम् ।)

**आस्फोटनी**, स्त्री, (आस्फुट्यतेऽनया । स्फुट् + करणे- ।

ल्युट् + ङीप् ।) वेधनिका । इत्यमरः ॥ तुरपन भ्रमर इत्यादि भाषा ।

**आस्फोटा**, स्त्री, (आस्फोटयतीति । आङ् + स्फुट्

+ अच् + टाप् ।) नवमल्ली । वनमल्ली । इति शब्द-

सुश्रुतेऽस्या गुणा यथा,
"आस्या वर्णकफस्थौल्यसौकुमार्य्यकरी सुखा" ।)

**आस्यासवः**, पुं, (आस्यस्य मुखस्य आसव इव ।)

लाला । इति हेमचन्द्रः ॥ थुतु लाल इत्यादि भाषा ।

**आस्रपः**, पुं, (आस्रं पिबतीति । आस्र + पा + क ।)

मूलानक्षत्रं । इति हेमचन्द्रः ॥ (राक्षसः ।)

**आस्रवः**, पुं, (आङ् + स्रु + अच् ।) क्लेशः । कष्टं ।

इत्यमरः ॥

**आह**, व्य, (उवाच इत्यर्थे कालमात्रे निपातोऽयं ।)

क्षेपः । नियोगः । इति मेदिनी ॥ दृढसम्भावनं । इति शब्दरत्नावली ॥

**आहकज्वरः**, पुं, (आहको नासारोग एव ज्वरः ।)

नासारोगविशेषः । नासाज्वर इति ख्यातः ।
तस्य लक्षणम् ।
"तनुना रक्तशोथेन युक्तो नासापुटान्तरे ।
गात्रशूलज्वरकरः श्लेष्मणा ह्याहकः स्मृतः" ॥
इति वैद्यकम् ॥ (आहव इति क्वचिद्वैद्यके पाठः ।
तद्यथा, आहवज्वरस्य लक्षणम् ।
"शोथः सरक्तो नासायां व्यथास्रावौ ज्वरस्तथा ।
वातश्लेष्मासृगुत्थञ्च आहवाख्यं विनिर्द्दिशेत्" ।

:अस्य चिकित्सा यथा, वैद्यकचिकित्सारत्ने ॥

"दूर्व्वाचव्यं फलं माषकुलत्थौ वंशपत्रिका ।
जलस्थलभवौ कर्णमोरटाखरमञ्जरी ॥
दण्डोत्पलस्य मूलानि क्वाथ्यादष्टगुणेऽम्भसि ।
तत्पादशेषिते तैलं तुलां कृत्वा विपाचयेत् ।
तत्तैलं प्रतिमर्षण आहवाख्यं ज्वरं जयेत्" ॥
॥ * ॥ दूर्व्वाद्यं तैलं ॥ * ॥)

**आहतं**, क्ली, (आ + हन् + क्त ।) पुरातनवस्त्रं । नूतन-
वस्त्रं । इति मेदिनी ॥ मृषार्थकवाक्यं । इत्यमरः ॥

**आहतः**, त्रि, (आ + हन् + क्तः ।) गुणितः । ता-
डितः । इति मेदिनी ॥ ("प्रति दिवसं याति लयं
वसन्तवाताहतेव शिशिरश्रीः" । इति पञ्चतन्त्रम् ।
ज्ञातः । मिथ्योक्तः । इत्यजयः ॥ निहतः । "द्व्यूना विं-
शतिराहताक्षौहिणीनाम्" । इति महाभारतम् ।)

**आहतः**, पुं, (आहन्यते यः + आङ् + हन् + कर्म्मणि
+ क्त ।) आनकः । ढक्का । इति मेदिनी ॥

**आहतलक्षणः**, त्रि, (आहतं अभ्यस्तं लक्षणं यस्य ।)
गुणैः प्रतीतः । गुणेन ख्यातः । तत्पर्य्यायः । कृत-
लक्षणः २ । इत्यमरः ॥

**आहरः**, पुं, (आङ् + हृ + अच् ।) उच्छ्वासः ।
अन्तर्मुखश्वासः ॥ इति हेमचन्द्रः ॥ (आहरण-
शीले वाच्यलिङ्ग एव । यथा, रघौ १ । ४९ ।
"वनान्तरादुपावृत्तैः समित्कुशफलाहरैः" ।)

**आहरणं**, क्ली, (आङ् + हृ + भावे ल्यट् ।) द्रव्या-
द्यानयनं । आसादनम् । यथा । देवीपुराणं ।
"मृदाहरणसंघट्टप्रतिष्ठाह्वानमेव च ।
स्नपनं पूजनञ्चैव विसर्जनमतःपरं" ॥
इति तिथ्यादितत्त्वम् ॥

**आहवः**, पुं, (आहूयते अरिर्यस्मिन् । आङ + ह्वे +

वेश ! समांश्चैव शरीरधातून् प्रकृतौ स्थापयति,
विषमांश्च समीकरोतीत्येतद्धितं विद्धि त्वहितं
विपरीतं इत्येतद्धिताहितलक्षणमनपवादम्भवति
एवं वादिनञ्च भगवन्तमात्रेयमग्निवेश उवाच ।
भगवन्नन्वेतदेवमुपदिष्टं भूयिष्ठकल्पाः सर्व्वभिषजो
विज्ञास्यन्ति । तमुवाच भगवानात्रेयः । येषां
विदितमाहारतत्त्वमग्निवेश ! गुणतो द्रव्यतः
कर्म्मतः सर्व्वावयवतो मात्रादयो भावास्तत्र तदेव-
मुपदिष्टं विज्ञातुमुत्सहेरन् यथा तु खल्वेतदुप-
दिष्टं भूयिष्ठकल्पाः सर्व्वभिषजो विज्ञास्यन्ति
तथैतदुपदेक्ष्यामः । मात्रादीन् भावानुदाहरन्त-
स्तेषां हि बहुविधविकल्पा भवन्ति । आहारविधि-
विशेषांस्तु खलु लक्षणतश्चावयवतश्चानुव्याख्या-
स्यामः । तद्यथा, आहारत्वमाहारस्यैकविधमर्था-
भेदात् । स पुनर्द्वियोनिः स्थावरजङ्गमात्मकत्वात् ।
द्विविधः प्रभावो हिताहितोदर्कविशेषात् । चतु-
र्व्विधोपयोगः पानाशनभक्ष्यलेह्योपयोगात् । षडा-
स्वादो रसभेदतः षड्विधत्वात्" । इति चरकः ॥
"यदाहारगुणैः पानं विपरीतं तदिष्यते ।
अन्नानुपानं धातूनां दृष्टं यन्न विरोधि च" ॥
इति च चरकः ॥
"प्राणिनां पुनर्मूलमाहारो बलवर्णौजसाञ्च षट्सु
रसेष्वायत्तो रसाः पुनर्द्रव्याश्रयाः" ॥
"स च तत्रौदकैर्गुणैराहारः प्रक्लिन्नो भिन्नसङ्घातः
सुखकरश्च भवति" ।
"आहारः प्रीणनः सद्यो बलकृद्देहधारकः ।
आयुस्तेजःसमुत्साहस्मृत्योजोऽग्निविवर्द्धनः" ॥
इति सुश्रुतः ॥) स त्रिविधः । सात्विकः १ राज-
सिकः २ तामसिकः ३ । सात्विकाहारो यथा, --
८ श्लोकः ।
"आयुः-सत्त्व-बलारोग्य-सुख-प्रीति-विवर्द्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्विक-
प्रिया" । राजसिकारो यथा, ९ श्लोकः ।
"कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः" ॥
तामसिकाहारो यथा, १० श्लोकः ।
"यातयामं गतरसं पूतिपर्य्युषितञ्च यत् ।
उच्छिष्टमपि चामेध्यं मोजनं तामसप्रियम्" ॥
इति श्रीभगवद्गीता १७ अध्यायः ॥ आहरणं ।
इति मेदिनी ॥
("स पुनर्देवयान्योक्तः पुष्पाहारो यदृच्छया" ।

वेध्यं एष्यम्, आहार्य्यं, विश्राय्यं, जीव्यमिति" ।
"आहार्य्याशर्करास्त्रिस्रो दण्डकर्णमलास्मरी" ।)

**आहार्य्यः** पुं, नाठ्योक्तौ व्यञ्जकविशेषः । स तु भूषा
दिना रचितः । इति हेमचन्द्रः ॥ (यथा सा-
हित्यदर्पणे । षष्ठाङ्के ।
"भवेदभिनयोऽवस्थानुकारः स चतुर्व्विधः ।
आङ्गिको वाचिकश्चैवमाहार्य्यः सात्त्विकस्तथा" ॥)

**आहार्य्यशोभा**, स्त्री, (आहार्य्यात् या शोभा ।)
कृत्रिमशोभा । चित्रभूषादिना कृतद्युतिः । इति
जटाधरः ॥ (यथा, भट्टिकाव्ये २ य सर्गे, --
"आहार्य्यशोभारहितैरमायैः
ऐक्षिष्ट पुंभिः प्रचितान् स गोष्ठान्" ।)

**आहावः**, पुं, (आङ् + ह्वे + अप् ॥ निपातनात्वृद्धिः ।)
कूपसमीपे पश्वादिजलपानार्थकृतस्वल्पजलाशयः ।
इत्यमरः ॥ चौवाच्चा इति भाषा । (आहूयतेऽरि-
रत्रैति व्युत्पत्त्या ।) युद्धं । आह्वानं । इति धरणिः ॥
(आहूयतेऽत्र इति आ + हु + अधिकरणे घञ् ।)
अग्निः ।)

**आहिकः**, पुं, (अहिरिव आकृतिर्यस्य । अहि +
ठक् ।) पाणिनिमुनिः । इति त्रिकाण्डशेषः ॥ केतु-
ग्रहः । इति हेमचन्द्रः ॥

**आहितः**, त्रि, (आङ् + धा + क्त ।) न्यस्तः ।
अर्पितः । स्थापितः । इति हलायुधः ॥
(यथा, किराते ।
"व्यावर्त्तनैरहिपतेरयमाहिताङ्कः" ।)

**आहितलक्षणः**, त्रि, (आहितं लक्षणं यस्य ।) आह-
तलक्षणः । इत्यमरटीकायां रमानाथः ॥ गुणादि-
द्वारा ख्यातः ।

**आहिताग्निः**, पुं, (आहितः स्थापितोऽग्निर्येन ।)
साग्निकः । अग्निहोत्री इति स्मृतिः ॥
("न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः" ।
इति मनुः ३ । २८२ । तथा च रघौ २४४ ॥
"गुरोरपीदं धनमाहिताग्नेः" ।)

अप् ।) युद्धं ।
("यदाश्रौषं भोष्ममत्यन्तशूरम्
हतं पार्थेनाहवेष्वप्रधृष्यम्" ॥
इति महाभारते आदिपर्ब्बणि १ । १८२ ।
आहूयते आज्यादिकं यत्र । आङ् + हु + अप ।)
यज्ञः । इति शब्दरत्नावली ॥

**आहवनीयः**, पुं, (आहूयते आज्यादिरस्मिन् । आङ् + हु + अनीयर् ।) यज्ञाग्निविशेषः । इत्यमरः ।
गार्हपत्यादुद्धृत्य होमार्थं यः संस्क्रियते सः । इति
भरतः ॥ (यथा, मनौ २ । २३१ ।
"गुरुराहवनीयस्तु साग्नित्रेता गरीयसी" ।)

**आहारः**, पुं, (आङ् + हृ + घञ् ।) द्रव्यगलाधः-करणं । तत्पर्य्यायः । जग्धिः २ भोजनं ३ जेमनं ४
लेपः ५ निघषः ६ न्यादः ७ । इत्यमरः ॥ जमनं ८
विघषः ९ इति तट्टीका ॥ प्रत्यवसानं १० भक्षणं
११ अशनं १२ ॥ इति रत्नमाला ॥ अभ्यवहारः
१३ स्वदनं १४ निगरः १५ । इति राजनिर्घण्टः ॥
अस्य गुणाः । सद्यस्तृप्तिजनकत्वं । बलकारित्वं ।
देहधारकत्वञ्च । इति राजवल्लभः ॥
("तमुवाच भगवानात्रेयः । हिताहारोपयोग एक-
एव पुरुषस्याभिवृद्धिकरो भवति । अहिताहारो-
पयोगः पुनर्व्वाधिनिमित्तमिति" ।
"तमुवाच भगवानात्रेयः । यदाहारजातमग्नि-
इति महाभारतम् । आदिपर्ब्बणि ७६ । सम्भव-
पर्ब्बणि ७६ । ३५ ।)

**आहारसम्भवः**, पुं, (आहारात् सम्भवो यस्य ।)
शरीरस्थरसधातुः । इति हेमचन्द्रः ॥

**आहार्य्यं**, त्रि, (आङ् + हृ + ण्यत् ।) आगन्तुकं ।
इति त्रिकाण्डशेषः ॥
("आहार्य्यैर्नीयमानं हि क्षणं दुःखेन हृद्यताम्"
इति कामन्दकः ।) आहरणीयं ॥ (यथा, मनुः
८ । २०२ । "अथ मूलमनाहार्य्यं प्रकाशक्रयशो-
धितः" ।) (शस्त्रकर्म्मभेदः । यथा सुश्रुते "तच्च
शस्त्रकर्म्माष्टविधं, तद्यथा; -- छेद्यं भेद्यं, रेख्यं

**आहितुण्डिकः**, पुं, (अहितुण्डेन दीव्यति । अहितुण्ड + ठक् ।) व्यालग्राही । सापुडिया इति भाषा ।
इत्यमरः शब्दरत्नावली च ॥ (यथा पञ्चतन्त्रम् ।
"वैद्यसांवत्सराचार्य्याः स्वपक्षेऽधिकृताश्चराः ।
यथाहितुण्डिकोन्मत्ताः सर्व्वं जानन्ति शत्रुषु" ।)

**आहुतं**, क्ली, (आङ् + हु + क्त ।) गृहस्थानां पञ्च-महायज्ञान्तर्गतयज्ञविशेषः । स तु नृयज्ञः । इति
जटाधरः ॥

**आहुतिः**, स्त्री, (आ + हु + क्तिन् ।) देवोद्देशे मन्त्रो-च्चारणपूर्ब्बकोऽग्नौ हविर्निक्षेपः । तत्पर्य्यायः ।
देवयज्ञः २ होमः ३ होत्रं ४ वषट्कारः ५ । इति
हेमचन्द्रः ॥ (यथा, रघौ १ । ५३ ।
"पुनानं पवनोद्धूतैर्धूमैराहुतिगन्धिभिः" ।
धर्म्मात् मरुद्वत्यां जातः स्वनामख्यातो मरुद्भेदः ।
यथा हरिवंशे, --
"मरुद्वती मरुत्वन्तो देवानजनयत् सुतान् ।
नहुषं चाहुतिं चैव चारित्रं ब्रह्मपन्नगम्" ।)

**आहुल्यं**, क्ली, (आङ् + ह्वल् + क्यप् ।) क्षुपविशेषः
तरवट इति काश्मीरादौ ख्यातं । तत्पर्य्यायः ।

:हलराख्यं २ तगरं ३ तरवटं ४ शिम्बीफलं ५

सुपुष्पं ६ पीतपुष्पं ७ काञ्चनपुष्पकं ८
नृपमा-
ङ्गल्यकं ९ शरत्पुष्पं १० । तस्य गुणाः ।
तिक्तत्वं ।
शीतलत्वं । चक्षुर्हितत्वम् ।
पित्तदाहमुखरोग-
कुष्ठकण्डूतिजन्तुशूलव्रणनाशित्वञ्च । इति
राज-
निर्घण्टः ॥

**आहूतं**, क्ली, (आ + ह्वे + क्त ।) प्रलयपर्य्यन्तं । यथा, --

"कदम्बानि पटोलानि वृन्ताकसहितानि च
।
न त्यजेत् कार्त्तिके मासि
यावदाहूतनारकी" ॥
"आहूतानि आभूतानि प्रलयपर्य्यन्तानीति
या-
वत्" । इति तिथ्यादितत्त्वम् ॥

**आहूतः**, त्रि, (आङ् + ह्वे + क्त ।) कृताह्वानः ।

यथा, --
"प्रगायतः स्ववीर्य्याणि तीर्थपादः
प्रियश्रवाः ।
आहूत इव मे शीघ्रं दर्शनं याति चेतसि" ॥
इति श्रीभागवते १ स्कन्धे ६ । ३४ ॥

**आहूतिः**, स्त्री, (आङ् + ह्वे + क्तिन् ।) आह्वानं ।

इति शब्दरत्नावली ॥

**आहेयं**, त्रि, (अहौ भवं । अहि + ढञ् ।) अहि-

सम्बन्धि । तद्विषचर्म्मादि । इत्यमरः ॥

**आहो**, व्य, (आ हन्तीति । आङ + हन् + डो ।)

विकल्पः । इत्यमरः ॥ प्रश्नः । (यथा
शाकुन्तले
पञ्चमाङ्के ।
"द्वारत्यागो भवाम्याहो
परस्त्रीस्पर्शपांशुलः" ।)
विचारः । इति मेदिनीकरहेमचन्द्रौ ॥
("आहो निवत्स्यति समं हरिणाङ्गनाभिः"
।

नमस्कृत्य दक्षिणचरणं भूमौ विन्यस्य कर्क्कोट-
कनागदमयन्तीनलऋतुपर्णराजकार्त्तवीर्य्यार्ज्जुनान्
स्मृत्वा नेत्रमुखे प्रक्षाल्य द्विराचामेत् ॥
ततः नैरृत्यां दक्षिणस्यां वा दिशि मूत्रपुरीषात्-
सर्गं जलमृत्तिकाशौचञ्च कृत्वा द्विराचम्य हरिं
स्मृत्वा दिवा सूर्य्यं रात्रौ चन्द्रं तारां वा तदसम्भवे
अग्निं पश्येत् ॥
ततो दन्तधावनं । दन्तकाष्ठाभावे निषिद्धदिने
च द्वादशगण्डूषजलैः पत्रैर्व्वा मुखं शोधयित्वा
द्विराचामेत् ।
ततः प्रातःस्नानं तिलकं सन्ध्यातर्पणञ्च कृत्वा
सूर्य्योदयपर्य्यन्तं गायत्रीं जपेत् ॥ स्नानाशक्तौ
आर्द्रवस्त्रेण गात्रमार्ज्जनं मन्त्रस्नानञ्च कृत्वा
सन्ध्योपासनं कुर्य्यात् ॥
तत आदर्शादिदर्शनं दधिदूर्व्वादिमङ्गलद्रव्यस्पर्श-
नञ्च कुर्य्यात् इति ॥ * ॥
अथ द्वितीययामार्द्धकृत्यम् ॥
वेदविद्याद्यभ्यासः । समित्पुष्पाद्याहरणञ्च ॥ * ॥
अथ तृतीययामार्द्धकृत्यम् ।
गुरुदेबधार्म्मिकोपासनं । कुटुम्बभरणार्थमीश्वरो-
पासनादि च ॥ *
अथ चतुर्थयामार्द्धकृत्यम् ।
मध्याह्नस्नानं । तत्र परखातोदके चेत् तदा सप्त
पञ्च त्रीन् वा मृत्पिण्डान् तीरे क्षिप्त्वा नाभि-
मात्रोदके कुशहस्तः सशिरस्कमज्जनं कृत्वा द्विरा-
चम्य सङ्कल्प्य यथाविधि त्रिर्निमज्जेत् ॥
ततः स्नानवस्त्रपाणिव्यतिरेकेण गात्रमार्जनं तिलकं
तर्पणञ्च कुर्य्यात् ॥
ततः अष्टममुहूर्त्ते मध्याह्नसन्ध्यां समाप्य ब्रह्मयज्ञं
विधाय देवपूजनं कृत्वा पादोदकं नैवेद्यञ्च यथा-
काले उपयुञ्जीत ॥ * ॥
अथ पञ्चमयामार्द्धकृत्यम् ॥
बलिवैश्वदेवकर्म्मणी काम्यबलिकर्म्म वामदेव्यगानं
गानाशक्तौ तस्य त्रिः पाठः पार्ब्बणश्राद्धानन्तरं
बलिवश्वदेवकर्म्मणी कर्त्तव्ये ॥
बलिकर्म्मानन्तरमतिथिलाभार्थं मुहूर्त्तं गोदोहन-
कालं वा अभोजनेन प्रतीक्षेत । तल्लगे भिक्षा-
दिकं दत्त्वा तदनुव्रजेत् । तदानीमतिथ्यलाभे नि-
त्यश्राद्धान्तरमतिथीन् भोजयेत् । भोजनासामर्थ्ये
भिक्षां दद्यात् । अतिथ्यलाभे ब्राह्मणाय दानं
तदसम्भवे अग्नौ जले वा किञ्चिदन्नं क्षिपेत् ॥
ततो नित्यश्राद्धं । वामदेव्यगानं तदशक्तौ ऋक्-

ङ्गुष्ठे दक्षिणहस्तेन मन्त्रेण जलं दद्यात् ॥
ततो महीमार्जनाभावेऽशुचित्वादविलम्बमेव भो-
जनपात्रमुद्धृत्य उच्छिष्टमपनीय तत् स्थानं
गोमयो-
दकाभ्यां सिञ्चेत् ॥
ततः सुस्थ आसने उपविश्य इष्टदेवतानाम स्मृत्वा
अन्नजीर्णतार्थं मन्त्रपाठपूर्ब्बकवामहस्तेनोदरं परि-
मृज्य पादशतव्रजनानन्तरं वामपार्श्वेन किञ्चित्
कालं शयित्वा ताम्बूलादिमुखवासनद्रव्यं
भोक्तव्यम्
इति ॥ * ॥
अथ षष्ठसप्तमयामार्द्धकृत्यम् ।
इतिहासपुराणादिश्रवणम् ॥
अथाष्टमयामार्द्धकृत्यम् ॥
लौकिकचिन्ताकरणम् । सायंसन्ध्योपासनम् ।
इष्टदेवतास्मरणादिकञ्च कुर्य्यात् ॥ * ॥
अथ रात्रिकृत्यम् ।
सन्ध्यानन्तरमिष्टदेवतामन्त्रजपत्रिकालपाठ्यस्तव
नारायणस्मरणानि कुर्य्यात् ॥
ततोऽन्नादिपाके जाते पूर्ब्बवद्बलिवैश्वदेवकर्म्मणी
कृत्वा अतिथिलाभेऽन्नादिकं तस्मै दत्त्वा अवश्य-
भरणीयैः सह सार्द्धप्रहराभ्यन्तरेऽनतितृप्तं भु-
ञ्जीत । अन्नभोजनाभावे ताम्बूलादिकं भोक्तव्यम् ॥
प्रथमयामाभ्यन्तरे विद्याभ्यासं कुर्य्यात् ॥ ततः
शयनं । शुचिदेशे खट्टोपरि शय्यां कृत्वा शिरो-
देशे पूर्णकुम्भं निधाय रात्रिवासः परिधाय प्रक्षा-
लितपाणिपादो द्विराचान्तः पूर्ब्बशिरा दक्षिण-
शिरा वा पद्मनाभं स्मृत्वा यामद्वयाभ्यन्तरे
शयीत ॥ * ॥
अथ दारोपगमनम् ।
ऋतौ निषिद्धेतरदिने स्त्रीसम्भोगं कृत्वा तां
दक्षिणपार्श्वेन स्वापयेत् ॥
ततः अविलम्बेन मूत्रपुरीषोत्सर्गवत् मृज्जलाभ्यां
लिङ्गं हस्तौ पादौ च प्रक्षाल्य द्विराचम्य स्नायात् ॥
ऋतुभिन्नगमने तु लिङ्गप्रक्षालनमाचमनद्वयमात्रञ्च
कुर्य्यात् । स्त्रियास्तु ऋतावनृतावपि लेपादिक्षा-
लनानन्तरमाचमनमात्रं न स्नानं ॥ क्षालनादेः
पूर्ब्बं मूत्रपुरीषोत्सर्गौ न कुर्य्यात् । सम्भोगानन्तरं
तस्यां रात्रौ एकशय्यायां न शयीयातां । अनृता-
वपि गर्भवत्त्वेऽपि कामुकीमुपेयात् ॥
ऋतावभिगम्य प्रातर्नैमित्तिकमङ्गशून्यस्नानं कु-
र्य्यात् ॥

इति शाकुन्तले प्रथमाङ्के ।)

**आहोपुरुषिका**, स्त्री, (अहो अहमेव पुरुषः । मयूर-
व्यंसकादित्वात् समासः । अहोपुरुषस्य भावः ।
अहोपुरुष + वुञ् + स्त्रीत्वात् टाप् ।) दर्पात्
यात्मनि सम्भावना सा । इत्यमरः ॥ अधिकार्थ-
वचनेन शक्तेरप्रतिघाताविष्करणं । आत्मविषय-
कार्य्यसिद्धिजननशक्त्याविष्करणं । इति भरतः ॥
(यथा, भट्टौ ५ । २७ ।
"आहोपुरुषिकां पश्य मम सद्रत्नक्रान्तिभिः" ।)

**आहोस्वित्**, व्य, (आहो च स्विच्च ।) आहो । वि-
कल्पः । इत्यमटीका ॥

**आह्नः**, पुं, (अह्नां समूहः ।) दिनसमूहः । इति
व्याकरणम् ॥

**आह्निकं**, त्रि, (अह्ना निर्वृत्तं । अहन् + ठञ् ।)
दिननिर्व्वर्त्त्यं । दिनसाध्यं । इति मेदिनी ॥ दिन-
सम्बन्धी ॥

**आह्निकं**, क्ली, (अह्ना निर्वृत्तं । अहन् + ठञ् ।)
भोजनं । प्रकरणसमूहः । ग्रन्थभागः ।
नित्यक्रिया । इति मेदिनीकरहेमचन्द्रौ ॥ अथ ॕ
रघुनन्दनभट्टाचार्य्यकृताह्निकाचारतत्त्वोक्त-
कर्म्माणि संक्षेपेण लिख्यन्ते ॥
तत्र प्रथमयामार्द्धकृत्यम् ।
"ब्राह्मेमुहूर्त्ते जागरित्वा ब्रह्मविष्णुशिवनवग्रहान्
स्मृत्वा गुरुप्रणामं कृत्वा आत्मानं ब्रह्मत्वेन संभाष्य
तद्दिवमकर्त्तव्यधर्म्मकर्म्मार्थं चिन्तयेत् ॥
ततः शयनादुत्याय स्मत्रिवासस्त्यक्त्व पृथिवीं
त्रय पठेत् । नित्यश्राद्धकरणासामर्थ्ये वलितर्प-
णाभ्यां पितृयज्ञसिद्धिः ॥ ततो गोग्रासदानं गो-
नमस्कारञ्च कुर्य्यात् ॥ ततो यथाविधि भोजनं ।
विष्णुपादोदकादिकं पूर्ब्बमगृहीतञ्चेत् इदानीं
गृह्णीयात् ॥ ततः स्थानान्तरं न गत्वा मृद्भिर्घर्षणै-
र्मुखहस्तौ शोधयित्वा तृणादिना दन्तलग्नरसद्रव्य-
मपनीय जलगण्डूषैर्मुखाभ्यन्तरं संशोध्य पाणिपादौ
प्रक्षालयेत् ॥
तत आसनस्थ एव भूमौ पादौ संस्थाप्य द्विरा-
चम्य मुखं तुलसीपत्रादिना संशोध्य दक्षिणपादा-
ऋतुगमनं पुत्रोत्पत्तिपर्य्यन्तमावश्यकम् ॥ इत्या-
ह्निकाचारतत्त्वोक्तकर्म्म समाप्तं ॥ * ॥

**आह्लादः**, पुं, (आङ् + ह्लद् + घञ् ।) आनन्दः ।
हर्षः । यथा । श्रीभागवते १० । ५ । १ ॥
"नन्दस्त्वात्मज उत्पन्ने जाताह्लादो महामनाः ।
आहूय विप्रान् वेदज्ञान् स्नातः शुचिरलङ्कृतान् ॥"

**आह्लादितः**, त्रि, आनन्दितः । हृष्टः । जाताह्लादः ।
इतोऽस्य जाते इत्यनेन आह्लादशब्दात् इतप्रत्य-
येन निष्पन्नः ॥

**आह्वयः**, पुं, (आङ् + ह्वे + अच् । यद्वा आह्वैर्यायते
प्राप्यते इति । आह्व + या + घञर्थे कः ।) नाम ।
इत्यमरः ॥ (यथा, रामायणे, बालकाण्डे ४ । ७ ॥
"कृत्वा तु तन्महाप्राज्ञः काव्यं रामायणाह्वयम्" ।)
अष्टादशव्यवहारपदान्तर्गतो व्यवहारविशेषः ।
यथाह मनुः अष्टमे । ४ । ५ । ६ । ७ ।
"तेषामाद्यमृणा-
दानं" इत्थुपक्रम्य । "स्त्रीपुंधर्म्मो विभागश्च द्यूत-
माह्वय एव च" ।)

**आह्वा**, स्त्री, (आह्वानमिति । आङ् + ह्वे + अङ् ।)
नाम । संज्ञा । इत्यमरः ॥

**आह्वानं**, क्ली, (आङ् + ह्वे + भावे ल्युट् ।) आवा-
हनं । डाका इति भाषा । तत्पर्य्यायः । हूतिः २
आकारणं ३ । इत्यमरः ॥ (यथा मनुः ९ । १२६ ।
"जन्मज्येष्ठेन चाह्वानं स्वब्राह्मण्यास्वपि स्मृतम्" ।)
(आहूयतेऽनेन । करणे ल्युट् ।) नाम । इति शब्द-
रत्नावली ॥

इ

**इ**, इकारः । तृतीयस्वरवर्णः । अस्योच्चारणस्थानं
तालु । स च ह्रस्वो दीर्घः प्लुतश्च भवति ।
(अयञ्च उदात्तानुदात्तसरिद्-भेदात् त्रिविधः
।
अनुनासिकाननुनासिकभेदाच्च प्रत्येकं
द्विविधः
एतेन षड्विध एव ।)
"इकारं परमानन्दसुगन्धकुसुमच्छविम् ।
हरिब्रह्ममयं वर्णं सदा रुद्रयुतं प्रिये ॥
सदा शक्तिमयं देवि गुरुब्रह्ममयं तथा ।
सदाशिवमयं वर्णं परं ब्रह्मसमन्वितम् ॥
हरिब्रह्मात्मकं वर्णं गुणत्रयसमन्वितम् ।
इकारं परमेशानि स्वयं कुण्डली मूर्त्तिमान्"
॥
इति कामधेनुतन्त्रम् ॥ (वङ्गीयभाषायां ।)
तस्य लेखनप्रकारो यथा,
"ऊद्‌ध्वाधः कुब्जिता मध्ये रेखा
तत्सङ्गता भवेत् ।
लक्ष्मीर्व्वाणी तथेन्द्राणी क्रमात्तास्वेव
संवसेत् ॥
शीर्षाधःकुञ्चिता रेखा दक्षोद्‌ध्वा
कामरूपिणी ।
मात्राशक्तिः कोणयुता ध्यानमस्य
प्रचक्ष्यते" ॥
इति वर्णोद्धारतन्त्रम् ॥ * ॥ (यद्यपि
सिद्धान्त-
कौमुद्यां "इचुयशानाम् तालु" इति
सामान्यतः
उक्तं तथापि शब्देन्दुशेखरादिष्वस्य
विस्तरतो
विबृतिरुक्ता । यथा, -- "तुल्यास्य
प्रयत्नमिति
सूत्रेण प्रशब्देन विलक्षणयन्तबोधेऽपि लोके
यत्नप्रयत्नयोः पर्य्यायतेति ध्वनयन्नाह
प्रयत्नो
"शेषाः स्पृष्टा हलप्रोक्ताः" इत्यादि । यथा,
शिक्षायां शब्देन्दुसारः । तथाहि
"अचोऽस्पृष्टाः
यणस्त्वीषत् नेमस्पृष्टाः शलः स्मृताः ।
"शेषाः
स्पृष्टाः हलप्रोक्ताः" इत्यादि । अत्र अचः
अस्पृष्टाः स्पर्शाभावरूपविवृतत्ववन्तः
यणस्त्वीषत्
अस्पृष्टा इत्यनुषज्यते तेन ईषदस्पृष्टा
ईषद्विवृता
इत्यर्थः । नेम इत्यर्द्धे तेन शलः ईषत्
विवृताः
यणमपेक्ष्याधिकविवृतत्ववन्त इत्यर्थः ।
अपि च --
"अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजम् ।
हो-
तारं रन्तधातमम्" । ईले इत्येतत्
समस्तमपि-
पदमनुदात्तम् "तिङ्ङतिङ" इति सूत्रेण
अति-
ङन्तादग्निशब्दात् परस्य ईल इति
तिङन्तस्य
निघातविधानात् अग्निमील इति पदयोः सं-
हिताकाले तु धातुगतस्य ईकारस्य
स्वरितत्वम्
"उदात्तानुदात्तस्वरितः" इति सूत्रेण
उदात्तात्
परस्यानुदात्तस्य स्थाने स्वरितः स्यात्
इत्यर्थकेनानु-
दात्तस्य ईकारस्य स्थाने स्वरितादेशात्
ततःपरस्य
ले इत्यत्र एकारस्य तिङ्प्रत्ययरूपस्य
स्वरितात्
संहितायाम् पूर्ब्बस्यैकारस्य नितरां
उदात्तत्वम् ।
अपरञ्च ताल्वादिस्थानमाभ्यन्तरप्रयत्नैति
सूच्य-
"प्रत्यादेशव्यलीकमपैतु ते" । इति
शाकुन्तले ।
(सम् + आ) सम्मिलने । "देवाश्चैतान्
सभत्यो-
चूर्न्याय्यं वः शिशुरुक्तवान्" । इति मनुः
। २ ।
१५२ । इत्यादयो ज्ञेयाः ।)

**इ**, ल, स्मृत्यां । (अदां-परं-सकं-अनिट् ।) अधि-
पूर्ब्बोऽयं । अधिग्रहणं अन्यपूर्ब्बस्य ।
केवलस्य च
प्रयोगनिरासार्थं । एवं सर्व्वत्र । ल
अध्येति तव
लक्ष्मणः । इक स्मरणे इति प्रसिद्धोऽयं ।
इन्व-
दिक इत्यत्रास्यैव ग्रहणम् । इति
दुर्गादासः ॥

**इ** ङ ल अध्ययने । (अदा०-आ० -सक० -
अनिट् ।)
अधिपूर्ब्बोऽयं । अध्ययनमर्थतः
शब्दतश्च गुरुतो
ग्रहणं । ङ ल वेदमधीते विप्रः । इति
दुर्गादासः ॥
("यः स्वाध्यायमधीतेऽब्दं विधिना
नियतः शुचिः"
इति मनुः । २ । १३७ ।)

**इ**, व्य, भेदः । क्रोधोक्तिः । अपाकरणं ।
अनुकम्पा ।
इति मेदिनो ॥ खेदः । इति हेमचन्द्रः ॥ ।

**इंरेजः**, पुं, लण्ड्रदेशजातम्लेच्छजातिविशेषः ।
यथा, --
"अधिपा मण्डलानाञ्च
संग्रामेष्वपराजिताः ।
इंरेजा नव षट् पञ्च लण्ड्रजाश्चापि
भाविनः" ॥
इति मेरुतन्त्रे २३ प्रकाशः ॥

हि हिधा इति क्वचित् यत्नो द्विधेत्येव पाठः ।
एतेषां आभ्यन्तरत्वं वर्णोत्पत्तेः
प्राग्भावित्वात् ।
तथाहि नाभिप्रदेशात् प्रयत्नप्रेरितः प्राणो
नाम वायुः ऊद्‌र्ध्वमाक्रमन् उरःप्रभृतीनि
स्था-
नान्याहन्ति ततो वर्णस्य
तदभिव्यञ्जकध्वनेर्वो-
त्पत्तिस्तत्रोत्पत्तेः ।
प्राक्जिह्वाग्रोपाग्रमध्यमूलानि
वर्णोत्पत्तिस्थानं ताल्वादि यदा सम्यक्
स्पृशन्ति
तदा स्पृष्टता ईषत्स्पर्शे ईषत्स्पष्टता समी-
पावस्थाने संवृतता दूरावस्थाने विवृतता
अतएव
इचुयशानां तालव्यत्वाविशेषेऽपि चवर्गे
उच्चा-
रयितव्ये जिह्वाग्रादीनां तालु स्थानेन
सम्यक् स्पर्शः
यकारे ईषत् स्पर्शः शकारेकारयोः समीपदू-
रावस्थानं । स्पृष्टं प्रयतनमिति यतेर्नपुंसके
भावे
ल्युट् । प्रयत्नमित्यपपाठः नङन्तस्य
पुंस्तत्वात् ।
ते । अत्र मूलम् पाणिनीयशिक्षाग्रन्थे । यथा, --
"कण्ठ्यावहा विचुयशास्तालव्या
ओष्ठजावुपू" ।
"स्वराणामुष्मणाञ्चैव विवृतं करणं मतम्" ।)
तस्य नामानि यथा, --
"इः सूक्ष्मा शाल्मली विद्या चन्द्रः पूषा
सुगुह्यकः ।
सुमित्रः सुन्दरो वीरः कोटरः काटरः पयः ॥
भ्रूमध्यो माधवस्तुष्टिर्दक्षनेत्रञ्च नासिका ।
शान्तः कान्तः कामिनी च कामो
विघ्नविनायकः ॥
नेपालो भरणी रुद्रो नित्या क्लिन्ना च
पावका" ।
इति वर्णाभिधानतन्त्रम् ॥
(मातृकान्यासेऽस्य
दक्षिणचक्षुषि स्थानम् । यथा, मातृकान्यास-
धृतमन्त्रः "इं नमो दक्षिणचक्षुषि ईं नमो
वामचक्षुषि" । इति ।)

**इ**, गतौ । (भ्वादिं-इलपक्षे अदां-परं-सकं-अनिट् ।)

अयति । ल एति । पृथक्पाठसामर्थ्यात्
पूर्ब्बो
न लित् । शेषस्तु इन गताविति प्रसिद्धः ।
यिनो-
ऽच्यणावित्यादिषु ग्रहणमस्यैव । इति
दुर्गादासः ॥
(उत् ।) उदये । समुन्नतौ । यथा, --
"उदयति यदि भानुः पश्चिमे दिग्विभागे"
इति ।
(अभि + उत् ।) अभ्युदये । समुन्नतौ ।
सर्व्वेः गत्यर्था
ज्ञानार्थाः प्राप्त्यर्थाश्च इत्यनेन
प्राप्त्यर्थेऽप्यस्य बहुलः
प्रयोगः । यथा, -- मनुः ।
"ब्राह्मणः श्रेष्ठतामेति प्रत्यवायेन शूद्रताम्" ।
"अयमेति मन्दं मन्दं कावेरीवारिपावनः
पवनः" ।
इति साहित्यदर्पणम् । (अति) अतिक्रमे ।
परा-

**इः**, [स्] व्य, कोपः । सन्तापः । दुःखमावना । इति

शब्दरत्नावली ॥

**इः**, पुं, (अस्य विष्णोः श्रीकृष्णस्यापत्यम् पुमान् ।

अ + इञ् ।) कामदेवः । इति
पुरुषोत्तमहला-
युधौ ॥ यथा, आग्नेये एका क्षराभिधानम् ।
"इः कामे रतिलक्ष्म्योरी उः शिवे
ब्रह्मकाद्य ऊः" ॥

**इक्कटः**, पुं, तृणविशेषः । तत्पर्य्यायः । बहुमूलः २ ।

इति त्रिकाण्डशेषः । कोशाङ्गः ३ इत्कटः
४ । इति
हारावली ॥ (इत्कटशव्देऽस्य विशेषो
द्रष्टव्यः ॥)

**इक्षुः**, पुं, (इष्यतेऽभिलष्यतेऽसौ इति । इष् + क्सु ।)

स्वनामख्याततृणं । आक् इति भाषा ।
तत्पर्य्यायः ।
रसालः २ । इत्यमरः ॥ कर्कोटकः ३
वंशः ४
कान्तारः ५ सुकुमारकः ६ अधिपत्रः ७
मधुतृणः ८
वृष्यः ९ गुडतृणः १० । इति
राजनिर्घण्टः ॥
मृत्युपुष्पः ११ महारसः १२ असिपत्रः
१३ को-
शकारः १४ इक्षवः १५ । इति
शन्दरत्नावली ॥
पयोधरः १६ । इति जटाधरः ॥ * ॥
तस्य भेदाः ।
वंशकः १ कान्तारः २ भीरुः ३ पौण्ड्रः
४ । इति
रत्नमाला ॥ सामान्येक्षुगुणाः ।
रक्तपित्तनाशित्वं ।
बलशुक्रकफकारित्वं । पाके मधुरत्वं ।
स्निग्धत्वं ।

| | | |
|---|---|---|
| | भवे । यथा, हितोपदेशे । १ ।<br>“अतीत्य हि गुणान् सर्व्वान् स्वभावो मूर्द्धि वर्त्तते” ।<br>“ततः परं जनस्थानं क्रोशत्रयमतीत्य वै” ।<br>इति रामायणे । (अनु) अनुकरणम् ।<br>“धानुरादेशमन्वेति तद्यथा हि तदर्पणः ।<br>नात्माधीनो मनुष्योऽयं कालं भजति कञ्चन” ॥<br>इति महाभारते । (अप) अपगमने । पलायने । | गुरुत्वं । शीतलत्वं । मूत्रशुद्धिकारित्वञ्च । तस्य<br>मूले अतिमधुरत्वं । मध्ये मधरत्वं । ग्रन्थित्वज-<br>ग्रभागेष लवणरसत्वञ्च । इति राजवल्लभः ॥<br>मूलादूर्द्ध्व मधुरत्वं । मध्ये अतिमधुरत्वं । अग्र<br>क्रमाल्लवणत्वं नीरसत्वञ्च ॥ अभुक्ते इक्षुभक्षणगुणः ।<br>पित्तदातृत्वं । भुक्ते वातप्रकोपणत्वं । भुक्तिमध्ये<br>गुरुतरत्वश्च ॥ इति राजनिर्घण्टः ॥ दन्तनिष्पी-<br>डितेक्षुरसगुणाः । हिमत्वं । शुक्रकारित्वं । तृप्ति<br>जनकत्वम् । जीवनहितकारित्वम् । वायुरक्तपित्त<br>नाशित्वं । स्वादुत्वं । स्निग्धत्वं । प्रीतिदातृत्वं । रक्त-<br>वर्द्धकत्वं । मुखप्रह्लादकारित्वं । धातुवर्द्धकत्वञ्च ।<br>इति राजवल्लभः ॥ अपि च ।<br>रक्तदोषभ्रमशमन- |

:कारित्वं । अल्पश्लेष्मदातृत्वं । हृद्यत्वं । रुचिजनकत्वं ।

मूत्रशुद्धिकारित्वं । देहस्य कान्तिदातृत्वं । बल-
कारित्वं । पीयूषोपमत्वं । त्रिदोषशमनत्वञ्च ।
इति राजनिर्घण्टः ॥ यन्त्रनिष्पीडितरसगुणाः ।
रक्तशुक्रकारित्वं । शीतलत्वं । सारकत्वं । रुचि-
करत्वं । दाहजनकत्वञ्च ॥ इति राजवल्लभः ॥
अ-
पि च । दन्तनिष्पीडितरसगुणवद्गुणत्वं ।
किञ्चित्
पित्तवायुनाशित्वं । अकोमलत्वं । अस्वादुत्वं ।
क्षीरविष्टम्भदाहकारित्वञ्च । पर्य्युषिततद्रसगुणाः ।
वान्तिहरत्वं । वातजनकत्वं ।
जाड्यप्रतिश्यायरोग-
दातृत्वं । कफवायुकारित्वञ्च । इति
राजनिर्घण्टः ॥
तत्पक्वरसगुणाः । गुरुत्वं । सुतीक्ष्णत्वं ।
कफवात-
नाशित्वञ्च । इति राजवल्लभः ॥ स्निग्धत्वं ।
अति-
शयगुरुत्वं । अतिपाके विदाहत्वं ।
पित्तास्नदोष-
कारित्वञ्च । इति राजनिर्घण्टः ॥
अस्य विकाराः ॥
"लसीकाफाणितगुडखण्डमत्स्यण्डिकासिताः ।
निर्म्मला लघवो ज्ञेयाः शीतवीर्य्या यथोत्तरम्" ॥
इति राजवल्लभः । अथेक्षुवर्गः । तत्रेक्षोर्नामानि
गुणाश्च ।
"इक्षुर्दीर्घच्छदः प्रोक्तस्तथा भूरिरसोऽपि च ।
गुडमूलोऽसिपत्रश्च तथा मधुतृणः स्मृतः ॥
इक्षवो रक्तपित्तघ्ना बल्या वृष्याः कफप्रदाः ।
स्वादुपाकरसाः स्निग्धा गुरवो मूत्रला हिमाः" ॥ * ॥
अथेक्षुभेदाः ।
"पौण्ड्रको भीरुकश्चापि वंशकः शतपोरकः ।
कान्तारस्तापसेक्षुश्च काण्डेक्षुः सूचिपत्रकः ॥

"मूले तु मधुरोऽत्यर्थं मध्येऽपि मधुरः स्मृतः ।
अग्र ग्रन्थिषु च ज्ञेयं इक्षुः पटुरसो जनैः" ॥ * ॥
अथ दन्तपीडितेक्षुरसगुणाः ॥
"दन्तनिष्पीडितस्येक्षोः रसः पित्तास्रनाशनः ।
शर्करासमवीर्य्यः स्यादविदाही कफप्रदः" ॥ * ॥
अथ यन्त्रपीडितस्येक्षुरसस्यं गुणाः ।
"मूलाग्रजन्तु ग्रन्थ्यादिपीडनान्मलसंकरात् ।
किञ्चित् कालं विधृत्याच विकृतिं याति यान्त्रिकः ॥
तस्माद्विदाही विष्टम्भी गुरुः स्याद्यान्त्रिको रसः" ॥
अथ पर्य्युषितस्येक्षुरसस्य गुणाः ।
"रसः पर्य्युषितो नेष्टो ह्यम्लो वातापहो गुरुः ।
कफपित्तकरः शोषी भेदनश्चातिमूत्रलः" ॥ * ॥
अथ पक्वस्येक्षुरसस्य गुणाः ।
"पक्वो रसो गुरुः स्निग्धः सुतीक्ष्णः कफवातनुत् ॥
गुल्मानाहप्रशमनः किञ्चित्पित्तहरः स्मृतः" ॥ * ॥
अथेक्षुरसस्य विकाराणां गुणाः ।
"इक्षोर्विकारास्तृड्दाहमूर्च्छापित्तास्ननाशनाः ।
गुरवो मधुरा बल्याः स्निग्धा वातहराः सराः ॥
वृष्या मोहहराः शीता वृंहणा विषहारिणः" ॥
इति भावप्रकाशः ॥
(अथ श्वेतेक्षुगुणाः ।
"रसायनोत्तमो बल्यो रोगवारणमुत्तमः ।
स्निग्धश्च तर्पणो वृष्यो वृंहणश्च सजीवनः ॥
स्वादुगुणाभिबद्धत्वाद्वातपित्तप्रशान्तिकृत् ।
वृष्योऽप्यन्तर्विदाही स्यात् सितेक्षुः कफकृन्मतः" ॥
अथ कृष्णेक्षुगणाः ।
"तद्वत् सुकृष्णो भवनं गुणानां
वृष्यो भवेत्तर्पणवृंहणश्च ।
सञ्जीवनं स्यान्मधुरो रसेन
शोषापहर्त्ता व्रणशोककारी" ॥ * ॥
अथ यन्त्रोद्भवरसगुणाः ।
"यन्त्रेण पीडितरसः कथितो गुरुश्च

सक्षाराः सकषायाश्च सोष्णाः
किञ्चिद्विदाहिनः" ॥
"वृष्यः शीतः स्थिरः स्निग्धो
वृंहणो मधुरो रसः ।
श्लेष्मणो
भक्षितस्येक्षोर्यान्त्रिकस्तु विदह्यते ॥
शैत्यात् प्रसादान्माधुर्य्यात्
पौण्ड्रकाद्वंशको वरः" ।
इति चरकः ॥ तथा च सुश्रुते ॥
"इक्षवो मधुरा विपाका गुरवः
शीताः स्निग्ध-
बल्या वृष्या मूत्रला
रक्तपित्तप्रशमनाः कृमिकफ-
कराश्चेति ते चानेकविधाः ।
तद्यथा, --
"पौण्ड्रको भ्रीरुकश्चैव वंशकः
शतपोरकः ।
कान्तारस्तापसेक्षुश्च काष्ठेक्षुः
सूचिपत्रकः ॥
नैपालो दीर्घपत्रश्च नीलपोरोऽथ
कोशकृत् ।
इत्येता जातयः स्थौल्याद्गुणान्
वक्ष्याम्यतः परम् ॥
सुशीतो मधुरः स्निग्धो वृंहणः
श्लेष्मणः सरः ।
अविदाही गुरुर्वृष्यः पौण्ड्रको
भीरुकस्तथा ॥
आभ्यां तुल्यगुणः
किञ्चित्सक्षारोवंशको मतः ।
वंशवच्छतपोरस्तु किञ्चिदुष्णः स
वातहा ॥
कान्तारतापसाविक्षू वंशकानुगुणौ
मतौ ।
एवंगुणस्तु काष्ठेक्षु; स तु
वातप्रकोपणः ॥
सूचीपत्रो नीलपोरो नैपालो
दीर्घपत्रकः ।

नैपालो दीर्घपत्रश्च नीलपोरोऽथ कोशकृत् ।
इत्येता जातयस्तेषां कथयामि गुणानपि” ॥ * ॥
अथ पौण्ड्रकभीरुकयोर्गुणाः ।
“वातपित्तप्रशमनो मधुरो रसपाकयोः ।
सुशीतो वृंहणो बल्यः पौण्ड्रको भीरुकस्तथा” ॥ * ॥
अथ कोशकारगुणाः ।
“कोशकारो गुरुः शीतो रक्तपित्तक्षयापहः” ॥ * ॥
अथ कान्तारेक्षुगुणाः ।
“कान्तारेक्षुर्गुरुर्वृष्यः श्लेष्मलो वृंहणः सरः” ॥ * ॥
अथ दीर्घपोरवंशकयोर्गुणः ।
“दीर्घपोरः सुकठिनः सक्षारो वंशकः स्मृतः” ॥ * ॥
अथ शतपोरकगुणाः ।
“शतपर्ब्बा भवेत् किञ्चित् कोशकारगुणान्वितः ।
विशेषात् किञ्चिदुष्णश्च सक्षारः पवनापहः” ॥ * ॥
अथ मनोगुप्तागुणाः ।
“मनोगुप्ता वातहरी तृष्णामयविनाशिनी ।
सुशीता मधुरातीव रक्तपित्तविनाशिनी” ॥ * ॥
अथ तापसेक्षुगुणाः ।
“तापसेक्षुर्भवेत् मृद्वी मधुरा श्लेष्मकोपना ।
तर्पणा रुचिकृच्चापि वृष्या च बलकारिणी” ॥ * ॥
अथ बालयुववृद्धेक्षुगुणाः ।
“बाल इक्षुः कफं कुर्य्यान्मेदोमेहकरश्च सः ।
युवा तु वातहृत् स्वादुरीषत्तीक्ष्णश्च पित्तनुत् ॥
रक्तपित्तहरो वृद्धः क्षतहृत् बलवीर्य्यकृत्” ॥ * ॥
अथाङ्गभेदेन भेदः ।
वृष्यः कफञ्च कुरुतेऽथ सुशीतलश्च ।
पाके विदाहिबलकृच्च सुशोभनश्च
संसेवितो रुधिरपित्तरुजं निहन्ति” ॥ * ॥
अथ दन्तपीडितरसगुणाः ।
“दन्तेन पीडितरसो रुचिकृद्गुरुश्च
सन्तर्पणो बलकरः कफकृच्छ्रमघ्नः ।
विष्टम्भकोऽपि रुधिरञ्च तथैव पित्तं
शोषं निहन्ति मधुरः स हिमो सरश्च” ॥ * ॥
अथ पक्वरसगुणाः ॥ * ॥
“पक्वो गुरुतरः स्निग्धः सुतीक्ष्णः कफवातहा ।
पित्तघ्नोऽपि विशेषेण गुल्मातिसारकासनुत्” ॥ * ॥
इति हारीतः । तथा च वाभटः शार्ङ्गधरश्च ।
“इक्षोः रसो गुरुः स्निग्धो वृंहणः कफमूत्रकृत् ।
वृष्यः शीतोऽस्रपितघ्नः स्वादुपाकरसः सरः ।
सोऽग्रे सलवणो दन्तपीडितः शर्करासमः ॥
मूलाग्रजन्तुजग्धादिपीडनान्मलसङ्करात् ।
किञ्चित्कालं विधृत्या च विकृतिं याति यान्त्रिकः ॥
विदाही गुरुविष्टम्भी तेनासौ तत्र पौण्ड्रकः ।
शैत्यप्रसादमाधुर्य्यैर्वरस्तमनुवांशिकः ॥
शातपर्ब्बककान्तारनैपालाद्यास्ततः क्रमात् ।
वातलाः कफपित्तघ्नाः सकषाया विदाहिनः ॥
कोशकारो गुरुः शीतो रक्तपित्तक्षयापहः ।
अतीवमधुरो मूले मध्ये मधुर एव तु ॥
अग्रेष्वक्षिषु विज्ञेय इक्षूणां लवणो रसः ।
अविदाही कफकरो वातपित्तनिवारणः ॥
वक्त्रप्रह्लादनो वृष्यो दन्तनिष्पीडितो रसः ।
गुरुर्विदाही विष्टम्भी यान्त्रिकस्तु प्रकीर्त्तितः ॥
पक्वो गुरुः सरः स्निग्धः सुतीक्ष्णः कफवातनुत्” ॥)
कोकिलाक्षवृक्षः । इति राजनिर्घण्टः ॥

**इक्षुकाण्डः**, पुं, (इक्षुवृक्षस्य काण्ड इव काण्डो यस्य ।)
मुञ्जकः । शरमुञ्ज इति ख्यातः । इति शब्द-चन्द्रिका ॥ (यथा, रामायणे २ । ९१ । १५ ।
“अपराश्चोदकं शीतमिक्षुकाण्डरसोपमम्” ।)
काशतृणम् । इति राजनिर्घण्टः ॥

**इक्षुगन्धः**, पुं, (इक्षुवृक्षस्य गन्ध इव गन्धो यस्य ।)
काशतृणम् । इति भावप्रकाशः ॥ क्षुद्रगोक्षुरक-वृक्षः । इति राजनिर्घण्टः ॥

**इक्षुगन्धा**, स्त्री, (इक्षुगन्ध + टाप् ।) गोक्षुरकवृक्षः ।
गोखुरी इति भाषा । शुक्लभूमिकुष्माण्डः । को-किलाक्षवृक्षः । कुलिया खारा इति भाषा ।

काशतृणम् । इत्यमरो मेदिनी च ॥ काशिया इति भाषा ।

**इक्षुगन्धिका**, स्त्री, (इक्षुगन्ध + कन् + टाप् ।) भूमि-

कुष्माण्डः । इति शब्दरत्नावली ॥ (भूमिकुष्माण्ड-शब्देऽस्या गुणादयो ज्ञेयाः ॥)

**इक्षुतुल्या**, स्त्री, (इक्षोस्तुल्या ।) तृणविशेषः । आ-

नाखु इति ख्याता । तत्पर्य्यायः । इक्ष्वाणिका २ अनिक्षुः ३ इक्षुबालिका ४ । इति रत्नमाला ॥

**इक्षुदर्भा**, स्त्री, (इक्षुवृक्षस्य दर्भो बन्ध इव दर्भो-

यस्याः ।) तृणविशेषः । तत्पर्य्यायः । सुदर्भा २ पत्रालुः ३ तृणपत्रिका ४ । अस्या गुणाः । सुमधु-रत्वं । स्निग्धत्वं । ईषत्काषायत्वं । कफपित्तहरत्वं । रुचिजनकत्वं । लघुत्वं । परमतृप्तिकारित्वञ्च ।

:इति राजनिर्घण्टः ॥

**इक्षुनेत्रं**, क्ली, (इक्षोर्नेत्रं ।) इक्षुमूलं । इति राज-
निर्घण्टः ॥

**इक्षुपत्रः**, पुं, (इक्षोः पत्रमिव तीक्ष्णं पत्रं यस्य ।)
यावनालनामधान्यविशेषः । इति
राजनिर्घण्टः ॥
जोयार इति भाषा ।

**इक्षुप्रः**, पुं, (इक्षुरिव पूर्य्यते । इक्ष + पॄ + क ।)
शरतृणं । इति राजनिर्घण्टः ॥
(शरतृणशब्दे-
ऽस्य गुणादयो ज्ञातव्याः ।)

**इक्षुबालिका**, स्त्री, (इक्षोर्बालिकेव तदाकृतित्वात् ।)
इक्षुतुल्या । इति रत्नमाला ॥ अनाखु
इति
ख्याता । काशः । इति राजनिर्घण्टः ॥
काशिया
इति भाषा ।

**इक्षुमूलं**, क्ली, (इक्षोः मूलमिव मूलं यस्य ।) वृक्षवि-
शेषः । तत्पर्य्यायः । इक्षुनेत्रं २ मोरटकं
३ वंश-
नेत्रं ४ वंशमूलं ५ मोरटं ६ वंशपूरकं ७
। इति
राजनिर्घण्टः ॥ ("अतीव मधुरो मूलः"
इति सुश्रुतः ।)

**इक्षुयोनिः**, पुं, (इक्षोर्योनिरुत्पत्तिकारणं ।) पुण्ड्रक-
इक्षुः । इति राजनिर्घण्टः ॥ (तत्र
पौण्डकः । शैत्य-
प्रसादमाधुर्य्यैर्वरः, इति वाभटः ।
पौण्ड्रकशब्दे
चास्य विशेषो ज्ञेयः ॥)

**इक्षुरः**, पुं, (इक्षुमिक्षुवत् गन्धं राति ददातीति ।
वातनाशित्वं । स्निग्धत्वं । अतिपाके विदाहत्वं
।
पित्तास्रदोषशोषकारित्वञ्च । यथा भावप्रकाशे ।
"पक्वो रसो गुरुः स्निग्धः सुतीक्ष्णः
कफवातनुत् ।
गुल्मानाहप्रशमनः किञ्चित् पित्तहरः स्मृतः" ॥
* ॥
इक्षुरसविकारगुणाः । यथा भावप्रकाशे ।
"इक्षोर्विकारास्तृड्दाहमूर्च्छापित्तास्रनाशनाः ।
गुरवो मधुरा बल्याः स्निग्धाः वातहराः सराः ।
वृष्या मोहहराः शीता वृंहणा विषहारिणः" ॥)

**इक्षुरसक्वाथः**, पुं, (इक्षुरसस्य क्वाथः ।) गुडः । इति
हेमचन्द्रः ॥ (गुडशब्देऽस्य गुणादयो व्याख्येयाः
।)

**इक्षुरसोदः**, पुं, (इक्षुरसवत् उदकं यस्य उदकस्य
उदभावः ।) इक्षुसमुद्रः । इति जटाधरः ॥

**इक्षुवल्लरी**, स्त्री, (इक्षुरिव सुस्वादा वल्लरी ।) क्षीर-
विदारी । क्षीरकन्दः । इति राजनिर्घण्टः ॥

**इक्षुवल्ली**, स्त्री, (इक्षुरिव सुस्वादा वल्ली लता ।)
क्षीरविदारी । इति राजनिर्घण्टः ॥

**इक्षुवाटिका**, स्त्री, पुण्ड्रकः । इति राजनिर्घण्टः ।
पुडि आक् इति भाषा ।

**इक्षुवाटी**, स्त्री, (इक्षोर्वाटीव ।) पुण्ड्रकः । इति
राजनिर्घण्टः ।

**इक्षुवेष्टनः**, पुं (इक्षोरिव वेष्टनं यस्य ।) भद्रमुञ्जः ।
इति राजनिर्घण्टः ॥

**इक्षुशाकटं**, क्ली, (इक्षोः क्षेत्रं । इक्षुशब्दात् क्षेत्रे
शकटशाकिनौ इति शाकटप्रत्ययः ।) इक्षुक्षेत्रम्
।
इति व्याकरणम् ॥ इक्षुर भूमि इति भाषा ।

**इक्षुशाकिनं**, क्ली, (इक्षोर्भवनं क्षेत्रं वा । इक्षु +
योगाहरितपाण्डूनां सुरामण्डेन पञ्चमः ॥
फलस्य रसभागञ्च त्रिगुणक्षीरसाधितम् ।
उरःस्थिते कफे दद्यात् स्वरभेदे सपीनसे
॥
हृतमध्येफलेजीर्णे स्थितं क्षीरं यदा दधि ।
जातं स्यात् कफजे कासे श्वासे वम्याञ्च
तत्पिबेत् ॥
मस्तुना वा फलान्मध्यं
पाण्डुकुष्ठविषार्द्दितः ।
तेन तक्रं विपक्वं वा सक्षौद्रलवणं पिबेत् ॥
अजाक्षीरेण वीजानि भावयेत् पाययेत च ।
विषगुल्मोदरग्रन्थिगण्डेषु श्लीपदेषु च ॥
तुम्ब्याः फलरसैः शुष्कैः
सपुष्पैरवचूर्णितम् ।
छर्द्दयेन्माल्यमाघ्राय गन्धसम्पत्सुखोचितः
॥
भक्षयेत्फलमध्यं वा गुडेन पललेन च ।
इक्ष्वाकुफलतैलं वा सिद्धं वा पूर्ब्बवद्घृतम्
॥
पञ्चाशद्दशवृद्धानि फणादीनां यथोत्तरम् ।
पिबेद्विमृद्य वीजानि कषायेष्वासुतं पृथक्
।
यष्ट्याह्वकोविदाराद्यैर्मुष्टिमन्तर्नखं पिबेत्
॥
कषायैः कोविदाराद्यैर्मात्राश्च फलवत्
स्मृताः ।
गुल्ममेहे प्रसेके च कल्कं मांसरसैः पिबेत्
॥
नरः साधु वमत्येवं न च दौर्ब्बल्यमश्नुते"
॥
"इक्ष्वाकुमूलं मदनं विशल्यातिविषे वचां ।
कुष्ठं किण्वाग्निकौ चापि पिबेत्तुल्यानि
पूर्ब्बवत्" ॥)
इति चरकः ॥)

**इक्ष्वारिः**, पुं, (इक्षुवृक्षस्य अरिः ।) काशतृण । इति

इक्षु + रा + क ।) कोकिलाक्षवृक्षः । इति रत्न-
माला ॥ कुलिया खारा इति भाषा ।
इक्षुः ।
गोक्षुरकवृक्षः । इति शब्दरत्नावली ॥
काशः ।
इति राजनिर्घण्टः ॥

**इक्षुरकः**, पुं, (इक्षुर + स्वार्थे + क ।) कोकिलाक्ष-
वृक्षः । स्थूलशरः । काशतृणं । इति
राजनिर्घण्टः ।
("स्वयङ्गुप्तेक्षुरकयोः फलचूर्णं सशर्करम् ।
धारोष्णेन नरः पीत्वा पयसा न क्षयं
व्रजेत्" ॥
इति सुश्रुतः ॥)

**इक्षुरसः**, पुं, (इक्षोरिव रसो यस्य ।) काशतृणं ।
इति भावप्रकाशः ॥ (इक्षुवृक्षस्य रसः ।
अस्य गुणाः
क्रमेण यथा; दन्तपीडितेक्षुरसगुणाः ।
जीवन-
हितकारित्वं, हिमत्वं, शुक्रकारित्वं,
तृप्तिजनकत्वं,
वायुरक्तपित्तनाशित्वं, स्वादुत्वं,
रक्तवर्द्धकत्वं धातु-
वर्द्धकत्वञ्च यथा भावप्रकाशः ।
"दन्तद्विष्पीडितस्येक्षो रसः
पित्तास्रनाशनः ।
शर्करासमवीर्य्यः स्यादविवादी
कफप्रदः" ॥
यन्त्रनिष्पीडितरसगुणाः,
रक्तशुक्रकारित्वम्, शी-
तलत्वं, सारकत्वं, दाहजनकत्वं,
किञ्चित् पित्त-
वायुनाशित्वं, क्षीरविष्टम्भदाहकारित्वञ्च
यथा,
भावप्रकाशे, --

शाकिन ।) इक्षुक्षेत्रं । इति व्याकरणम् ॥

**इक्षुसारः**, पुं, (इक्षोः सारः ।) गुडः । इति राजनिर्घण्टः ॥

**इक्ष्वाकुः** पुं, (इक्षुमाकरोतीति । इक्षु + आङ् + कृ
+ मितद्रूवादित्वात् डुः । यद्वा इक्ष इति शब्दं
अकतीति अक गतौ बाहुलकादुण् ।)
वैवस्वतमनु-
पुत्त्रः । स तु सत्ययुगे अयोध्यायां
सूर्य्यवंशीयादि-
राजः । इति पुराणम् ॥ (गीतायाम् । ४ । १ ।
"विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत्" ।
इक्ष्वाकोर्गोत्रे जाताः इति व्युत्पत्त्या वाच्यलिङ्गाः
।
इक्ष्वाकुवंशोद्भवाः । यथा रघुः । १ । ७२ ।
"इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः" ।)

**इक्ष्वाकुः**, स्त्री, (इक्षु + आङ् + कृ + डु ।) कटु-
कुम्बी । इत्यमरो मेदिनी च ॥ तितलाउ इति
भाषा । ("इक्ष्वाकुकुसुमचूर्णं वा पूर्ब्बवदेव क्षीरेण
काशश्वासच्छर्द्दिकफरोगेषूपयोगः" । इति
सुश्रुते ।
"सिद्धं वक्ष्याम्यथेक्ष्वाकुकल्पं येषां प्रशस्यते" ।
अस्याः पर्य्यायो यथा ।
"लम्बाऽथ कटुकालावुतुम्बी पिण्डफला तथा ।
इक्ष्वाकौ फलिनी चैव प्रोच्यते तस्य कल्पना"
॥
अस्या रोगविशेषे प्रशस्तता यथा ।
"कासश्वासविषच्छर्द्दिज्वरार्त्ते कफकर्षिते ।
प्रताम्यति नरे चैव वमनार्थं तदिष्यते" ॥
अवस्थाभेदेनास्या व्यवहारो यथा ।
"अपुष्पस्य प्रबालानां मुष्टिं प्रादेशसम्मिताम् ।
क्षीरप्रस्थे श्टतं दद्यात् पित्तोद्रिक्ते कफज्वरे ॥
पुष्पादिषु च चत्वारः क्षीरे जीमूतके यथा ।

राजनिर्घण्टः ॥ (काशशब्देऽस्य गुणादयो ज्ञा-
तव्याः ।)

**इक्ष्वालिकः**, पुं, (इक्षुरिव अलति व्याप्नोतीति ।)
काशतृणं । इति भावप्रकाशः ॥

**इक्ष्वालिका**, स्त्री, (इक्ष्वालिक + टाप् ।) इक्षतुल्या ।
इति रत्नमाला ॥ आनाखु इति भाषा ।
खागडा
इति केचित् ॥

**इख**, गतौ । (भ्वादिं-परं-सकं-सेट् ।) इति कवि-
कल्पद्रुमः ॥ तृतीयस्वरादिः । एखति ।
इति
दुर्गादासः ॥

**इख**, इ, गतौ । (भ्वादिं-परं-सकं-सेट्-इदित् ।) इति
कविकल्पद्रुमः ॥ तृतीयस्वरादिः । इ,
इङ्खते । इति
दुर्गादासः ॥

**इग**, इ, गतौ । (भ्बादिं-परं-सकं-सेट्, इदित् ।) इति
कविकल्पद्रुमः ॥ तृतीयस्वरादिः । इ,
इङ्गति
इङ्गितं । इति दुर्गादासः ॥ (यदुक्तं भारते ।
"त्वया सृष्टमिदं विश्वं यच्चेङ्गं यच्च
नेङ्गति" ।

**इङ्गं**, त्रि, (इगि + क ।) अद्भुतं । जङ्गमं । इति
मेदिनीकरहेमचन्द्रौ ॥ (यथा, भारते ।
("त्वया सृष्टमिदं विश्वं यच्चेङ्गं यच्च
नेङ्गति" ।)

**इङ्गः**, पुं, (इङ्ग + घञ् ।) इङ्गितं । ज्ञानं । इति
मेदिनीकरहेमचन्द्रौ ॥

**इङ्गितं**, क्ली, (इगि + क्त ।) अभिप्रायानुरूपचेष्टा-
विष्करणं । ठार सङ्केत । इत्यादि भाषा ।
तत्य-

| | | |
|---|---|---|
| “मूलाग्रजन्तुग्रन्थ्यादिपीडनात् मलसंकरात् ।<br>किञ्चित्कालं विधृत्याथ विकृतिं याति यान्त्रिकः ॥<br>तस्मात् विदाही विष्टम्भी गुरुः स्यात् यान्त्रिको<br>रसः । पर्य्युषितेक्षुरसगुणाः । वान्तिहरत्वं, वातज-<br>नकत्वं, जाड्यप्रतिश्यायरोगदातृत्वं, कफवायुकारि-<br>त्वञ्च । यथा भावप्रकाशे ।<br>“रसः पर्य्युसितो नेष्टो ह्यम्लो वातापहो गुरुः ।<br>कफपित्तकरः शोषी भेदनश्चातिमूत्रलः” ॥ * ॥<br>पक्वेक्षुरसगुणाः । गुरुत्वं । सुतीक्ष्णत्वं । कफ- | | य्यायः । आकारः २ इङ्गः ३ । इत्यमरः ॥ गमनं ।<br>चेष्टा । इति हेमचन्द्रः ॥<br>(“आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च ।<br>नेत्रवक्त्रविकारेण लक्ष्यतेऽन्तर्गतं मनः” ॥<br>हितोपदेशे सुहृद्भेदः । (तथाच रघुः १ । २० ।) |

:"तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च" ।)

**इङ्गुदः**, पुं (इङ्गं द्यति अवखण्डयतीति । इङ्ग + दो + क । अस्य उक् ।) इङ्गुदीवृक्षः । इत्यमर-
भरतौ ॥
("इङ्गुदन्तिक्तमधुरं स्निग्धोष्णं कफवातजित्" ।
इति चरकः ॥ ० ॥
विशेघोऽन्यश्चेङ्गुदीशब्दे ज्ञेयः ॥)

**इङ्गुदी**, स्त्री, (इङ्गुद + ङीष् ।) वृक्षविशेषः । इङ्गौट इति भाषा । जीयापुता इति तु वङ्गदेशीयाः प्रमादेन वदन्ति तस्य तु पुत्रजीव इत्यादीनि
नामानि प्रसिद्धानि । तत्पर्य्यायः । तापसतरुः २ ।
इत्यमरः ॥ हिङ्गुपत्रः ३ विषकण्टः ४ अनिलान्तकः
५ गौरत्वक् ६ तनुपत्रः ७ शूलारिः ८ तापसद्रुमः
९ तीक्ष्णकण्टः १० तैलफलः ११ पूतिगन्धः १२
विगन्धकः १३ क्रोष्टुफलः १४ ।
(यथा रघुः १४ । ८१ ।
"ता इङ्गुदीस्नेहकृतप्रदीप-
मास्तीर्णमेध्याजिनतल्पमन्तः" ॥)
अस्या गुणाः । मदगन्धित्वं । कटुत्वम् । उष्णत्वम् ।
फेनिलत्वम् । लघुत्वम् । रसायनत्वम् । जन्तु-
वातामयकफव्रणनाशित्वञ्च । इति राजनिर्घण्टः ॥
(अस्य पर्य्यायपूर्ब्बकं गुणानाह ।
"इङ्गुदोऽङ्गारवृक्षश्च तिक्तकस्तापसद्रुमः ।
इङ्गदः कुष्ठभूतादिग्रहव्रणविषक्रिमीन् ॥
हन्त्युष्णश्वित्रशूलघ्नस्तिक्तकः कटुपाकवान्" ।

("शरण्यः शरणेच्छूनां पितुरादेशपालकः" ।)

**इच्छुकः**, पुं, (इच्छु + कन् ।) वृक्षविशेषः । इति शब्द चन्द्रिका ॥ टावालेवु इति ख्यातः ।

**इज्जलः**, पुं, (एतीति । इ + क्विप् + तुक्; इत् जल-मस्य ।) हिज्जलवृक्षः । हिजल गाछ इति भाषा ।
तत्पर्य्यायः । निचुलः २ अम्बुजः ३ । इत्यमरः ॥
(सपर्य्यायगुणाः यथा, भावप्रकाशे ।
"इज्जलो हिज्जलश्चापि निचुलश्चाम्बुजस्तथा ।
ज्जलवेतसवद्वेद्यो हिज्जलोऽयं विषापहः" ॥)

**इज्यः**, पुं, (इज्या विद्यते यस्य । इज्या अर्श आद्यच् ।) वृहस्पतिः । इति ज्योतिषं शब्दरत्नावली च ॥
("जीवार्किभानुजेज्यानां क्षेत्राणि स्युरजादयः" ।)

**इज्यः**, त्रि, (इज्या पूजास्त्यस्य । अर्शआद्यच् ।) गुरुः । पूजनीयः । इति मेदिनी ॥

**इज्या**, स्त्री, (यजनं इति । यज + भावे क्यप् + टाप् ।) दानं । यज्ञः । (यथा, रघुः । १ । ६८ ।)
("सोहमिज्याविशुद्धात्मा
प्रजालोपनिमीलितः")
पूजा । सङ्गमः । इति मेदिनी ॥ (कर्म्मणि क्यप् ।)
गौः । इति राजनिर्घण्टः ॥ कुट्टनी । इति त्रि-काण्डशेषः ॥

**इज्याशीलः**, पुं, (इज्यां यज्ञं शीलयति पुनःपुनरा-चरतीति । इज्या + शील + ण ।) पुनःपुनर्यज्ञ-कर्त्ता । तत्पर्य्यायः । यायजूकः २ । इत्यमरः ॥

**इञ्चाकः**, पुं, मत्सविशेषः । इति त्रिकाण्डशेषः ॥ इँच्ला मोचाचिङ्ङि इति भाषा । (चिङ्गटशब्दे-ऽस्य गुणादयो ज्ञातव्याः ॥)

**इट** गत्यां । (भ्वादिं-परं-सकं-सेट् ।) इति कवि-

तार्थः । निषण्णे वर्त्तेते" ।
ज्ञानसङ्कलनीतन्त्रे । ८ ।
"इडा नाम सैव गङ्गा यमुना पिङ्गला स्मृता ।
गङ्गायमुनयोर्मध्ये सुषुम्ना च सरस्वती ॥
एतासां सङ्गमो यत्र त्रिवेणी सा प्रकीर्त्तिता ।
तत्र स्नातः सदा योगी सर्व्वपापैः प्रमुच्यते" ॥
इयन्तु सकामकर्म्मानुष्ठायिजीवानां पुंनरावर्त्ति-
कारिणी धूममार्गा पितृयानरूपिणी ।
अनयोरिडापिङ्गलयोर्मध्ये गता सुषुम्नैव ब्रह्म-
नाडी यस्यां नाड्यां इदं सर्व्वं विश्वं प्रतिष्ठितम् ।
यथा उत्तरगीतायाम् । २ अध्याये ।
"इडा च वामनिःश्वासः सोममण्डलगोचरा ।
पितृयानमितिज्ञेया वाममाश्रित्य तिष्ठति ॥ १२ ॥
गुदस्य पृष्ठभागेऽस्मिन् वीणादण्डस्य देहभृत् ।
दीर्घास्थि मूद्ध्निर्पर्य्यन्तं ब्रह्मदण्डेति कथ्यते ॥ १३ ॥
तस्यान्ते सुषिरं सूक्ष्मं ब्रह्मनाडीति सूरिभिः ॥ १४ ॥
इडा पिङ्गलयोर्मध्ये सुषुम्ना सूक्ष्मरूपिणी ॥
सर्व्वं प्रतिष्ठितं यस्यां सर्व्वगं सर्व्वतोमुखम्" ॥ १५ ॥
परं आसामिडादीनां नाडीनां शोधनमकुर्व्वन्
योगी कदाप्यात्मप्रसादं लब्धुं नार्हति तथा च
भगवच्छङ्करोक्तयोगशास्त्रे ।

इति भावप्रकाशः ॥) ज्योतिष्मतीवृक्षः । इति
रत्नमाला ॥ नयाफट्की इति भाषा ।

**इङ्गुलः**, पुं, स्त्री, इङ्गुदीवृक्षः । इति भरतो द्विरूप-
कोषश्च ॥

**इच्छा**, स्त्री, (एषणं इच्छा । इष् + श + टाप् ।)
मनोधर्म्मविशेषः । तत्पर्य्यायः । आकाङ्क्षा २
वाञ्छा ३ दोहदः ४ स्पहा ५ ईहा ६ तृट् ७
लिप्सा ८ मनोरथः ९ कामः १० अभिलाषः ११
तर्षः १२ । इत्यमरः ॥ रुक् १३ इषा १४ श्रद्धा १५
तृष्णा १६ रुचिः १७ मतिः १८ दोहलं १९ छन्दः
२० इट् २१ । इति जटाधरः ॥ (यथा मनौ ५ । ४५
"योऽहिं सकानि भूतानि हिनन्त्यात्मसुखेच्छया" ।) ।
न्यायमते अस्याः कारणम् । (यथा, भाषापरि-
च्छेदे । १४८, १४९ ।)
"निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते ।
इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्य्यदि ॥
चिकीर्षाकृतिसाध्यत्वप्रकारेच्छा तु या भवेत् ।
तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत्" ॥
अस्याः प्रतिबन्धः ।
"बलवद्विष्टहेतुत्वमतिः स्यात् प्रतिबन्धिका" । इति भाषापरिच्छेदे १४८ ॥

**इच्छावती**, स्त्री, (इच्छा विद्यते यस्याः । इच्छा +
कल्पद्रुमः ॥ एटति । इति दुर्गादासः ॥

**इट्**, [ष्] स्त्री, (इष् + क्विप् ।) इच्छा । इति जटाधरः ॥

**इट्चरः**, पुं, (एषणमिति इट् । इष् + क्विप् । तेन
चरति इति । इष् + चर् + अच् ।) षण्डः । इत्य-
मरः ॥ षाँड इति भाषा ।

**इडा**, स्त्री, (इल् + क + टाप् ।) बुधग्रहभार्य्या । सा
इक्ष्वाकुराजकन्या । (यथा हरिवंशे, --
"तत्र दिव्याम्बरधरा दिव्याभरणभूषिता ।
दिव्यसंहनना चैव इडा जज्ञे इति श्रुतिः" ॥)
गौः । (यथा, भारते, --
"इडाज्यहोमाहुतिभिर्मन्त्रशिक्षाविशारदैः" ।)
वचनं । (देवीभेदः । यथा, हरिवंशे, --
'श्रुतिःप्रीतिरिडाकान्तिःशान्तिःपुष्टिःक्रिया तथा' ।)
पृथ्वी । इति मेदिनी ॥ (यथा, महाभारते,
घोषयात्रापर्ब्बणि २३५ । १० ।
"पतत्रिसङ्घैः स जघन्यरात्रे
प्रबोध्यते नूनमिडातलस्थः" ।) स्वर्गः ।
शरीरस्य वामभागस्था नाडी । इति हेमचन्द्रः ॥
(तथा च षट्चक्रभेदे २ श्लोके ।
"मेरोर्वाह्यप्रदेशे शशिमिहिरशिरे सव्यदक्षे
निषण्णे, मध्ये नाडी सुषुम्ना त्रितयगुणमयी चन्द्र-
सूर्य्याग्निरूपा" ।
"मेरोर्मेरुदण्डस्य वाह्यप्रदेशे वहिर्भागे सव्यदक्षे
वामदक्षिणे पार्श्वे शशिमिहिरशिरे चन्द्रसूर्य्या-
त्मिके नाड्यौ इडापिङ्गलानाडीद्वयमितिफलि-
"ईप्सितानि समभ्यस्य वाञ्छितानि यथाविधि ।
प्राणायामं ततो गार्गि जितासनगतोऽभ्यसेत् ॥
मृदासने कुशान् सम्यक् आस्तीर्य्यामृतमेव च ।
लम्बोदरञ्च सम्पूज्य फलमोदकभक्षणैः ॥
तदासने सुखासीनः सव्ये न्यस्येतरं करम् ।
समग्रीवशिराः सम्यक् संवृतास्यः सुनिश्चलः ।
प्राङ्मुखोदङ्मुखोवापि नासाग्रन्यस्तलोचनः ॥
अतिभुक्तमभुक्तञ्च वर्ज्जयित्वा प्रयत्नतः ।
नाडीसंशोधनं कुर्य्यात् उक्तमार्गेण यत्नतः ॥
वृथा क्लेशो भवेत्तस्य तच्छोधनमकुर्व्वतः ।
नासाग्रे शशभृद्वीजं चन्द्रातपवितानितम् ॥
सप्तमस्य तु वर्गस्य चतुर्थं वर्गसंयुतम् ।
विश्वमध्यस्थमालोक्य नासाग्रे चक्षुषी उभे ॥
इडया पूरयेद्वायुं वाह्यं द्वादशमात्रकैः ।
ततोऽग्निं पूर्ब्बवद्ध्यायेत् स्फुरज्ज्वालावलीयुतम् ।
रुषष्ठं विन्दुसंयुक्तं शिखिमण्डलसंस्थितम् ॥
ध्यायेद्विरेचयेद्वायुं मन्दं पिङ्गलया पुनः ।
पुनः पिङ्गलयापूर्य्य घ्राणं दक्षिणतः सुधीः ॥
तद्वद्विरेचयेद् वायुमिडया तु शनैः शनैः ।
त्रिचतुर्वत्सरञ्चापि त्रिचतुर्मासमेव च ।
गुरुणोक्तप्रकारेण रहस्येवं समभ्यसेत्" ॥)

मतुप् । मस्य वः ।) धनादीच्छायुक्ता स्त्री । तत्-

पर्य्यायः । कामुका २ । इत्यमरः ॥

**इच्छावसुः**, पुं, (इच्छयाभिलाषमात्रेणव वसु धनं

यस्य ।) कुवेरः । इति जटाधरः ॥

**इच्छुः**, त्रि, (इच्छतीति । इषधातोर्न्निपातनात्

सिद्धम् ।) इच्छाविशिष्टः । आकाङ्क्षायुक्तः । इति

व्याकरणम् ॥ (यथा, रामायणे । ४ । ४ । ८ ।

**इडाचिका**, स्त्री, (इडावत् अचति । इडा + अच् ।

ण्वुल् । टाप् + अत इत्वम् ।) वरटा । वोल्ता इति

भाषा । इति शब्दचन्द्रिका ॥

**इडिका**, स्त्री, (इडा + स्वार्थे क, इत्वम् ।) पृथ्वी ।

इति शब्दरत्नावली ॥

इडिक्वः, पुं, (इडिक् + कै + ड ।)

वनच्छगलः ।

इति हेमचन्द्रः ॥

**इड्वरः**, पुं, (इट् + वृ + अच् ।) इट्चरः । वृषः ।

इत्यमरटीकायां स्वामी ॥

**इत**, इ बन्धे । (इदित् -दिवां -आत्मं -सक -सेट् ।)

इ इन्त्यते । इति दुर्गादासः ॥

**इतः**, त्रि, (इ + क्त ।) गतः । स्मृतः । इति मेदिनी ॥

(प्राप्तः । ज्ञाने, क्ली ।)

**इतः**, [स्] व्य, (अस्मादिति निपातनात् सिद्धम् ।)

नियमः । पञ्चम्यर्थः । (यथा कुमारे २ । २८ ।
"तद्ब्रूत वत्साः किमितः प्रार्थयध्वं समागताः" ।)
विभागः । इति विश्वः ॥

**इतरः**, त्रि, (इना कामेन तरतीति । इ + तॄ + अच्

यद्वा इतेन ज्ञानेन क्षीयते इति बाहुलकात् अरः ।)
अन्यः ("वामेतरस्तस्य करः प्रहर्त्तुः" । इति
रघुः । २ । ३१ ।) नीचः ।
इत्यमरः ॥

**इतरविशेषः**, पुं, (इतरस्मात् विशेषः ।) अन्यप्रभेदः ॥

**इतरेतरं**, त्रि, अन्योऽन्यं । परस्परं । इति हेम-

चन्द्रः ॥ यथा, रघुः । ७ ।
५४ ।)
("व्यूहावुभौ तावितरेतरस्मात्
भङ्गं जयञ्चापतुरव्यवस्थम्"
।)

**इतरेद्युः**, [स्] व्य, (इतर + एद्युस् ।) इतरस्मिन्न-

हनि । अन्यदिने । इत्यमरः ॥

**इतस्ततः**, व्य, अत्र तत्र । एखाने सेखाने इति भाषा ।

यथा, --
"द्वे सहस्ने रथानां स
गजानामयुतं रणे ।

**इत्कटः**, पुं, (इतं समीपस्थं जनं कटति आच्छादयति

फलेन इति । इत् + कट् + अच् ।) वृक्षविशेषः ।
ओकडा इति भाषा । तत्पर्य्यायः । बहुमूलः २
वाटीदीर्घः ३ खरच्छदः ४ । इति रत्नमाला ॥
("वीरणशालिषष्टिकेक्षुबालिकादर्मकुशकाशगुन्द्रे-
त्कटकतृणमूलानीति दशेमानि स्तन्यजननानि
भवन्ति" । इति चरकः ॥)

**इत्किला**, स्त्री, रोचनाख्यगन्धद्रव्यम् । इति शब्द-

चन्द्रिका ॥

**इत्थं**, व्य, (इदम् + थमु । एतेतौरथोरिति इदा-

देशः ।) इदंप्रकारं । इति वोपदेवः ॥ एइ प्रकार
इतिभाषा । (यथा रघौ । २ । २५ ।
"इत्थं व्रतं धारयतः प्रजार्थं
समं महिष्या महनीयकीर्त्तेः ।)

**इत्यः**, त्रि, (इ + क्यप् ।) गम्यः । इति व्याकरणम् ॥

**इत्वरः**, त्रि, (एतीति + इ + क्वरप् ।) क्रूरकर्म्मा ।

पथिकः । दुर्व्विधः । नीचः । इति हेमचन्द्रः ॥

**इत्वरी**, स्त्री, (एति परपुरुषं प्राप्नोतीति । इ +

क्वरप् + ङीष् ।) असती । इत्यमरो मेदिनी च ॥
अभिसारिका । इति हेमचन्द्रः ॥

**इद**, इ, परमैश्वर्य्ये । (इदित् भ्वादि-परं-सकं-सेट् ।)

इति कविकल्पद्रुमः ॥ इ इन्दते इन्दति इन्द्रः ।
इति दुर्गादासः ॥

**इदं**, [म्] त्रि, (एति, इण् गतौ, इणो दमुगिदि दश-

पादीवृत्तिः । यद्वा इन्दति, इदि परमैश्वर्य्ये,
इन्देः
कमिर्नलोपश्चेति दीक्षितः ।)
पुरोवर्त्तिवाचकसर्व्व-
नाम । इति व्याकरणम् ॥ एइ इति भाषा ।

**इदंकार्य्या**, स्त्री, (इदम् कार्य्यं यस्याः ।) दुरालभा-

वृक्षः । इति शब्दचन्द्रिका ॥

**इदा**, स्त्री, संवत्सरादिवर्षपञ्चकान्तर्गततृतीयवत्सरः ।

पञ्चमो वत्सरस्तेषां तदेभिः पञ्चभिर्युगं ।
तेषु संवत्सरो ह्यग्निः सूर्य्यस्तु परिवत्सरः ॥
सोम इद्वत्सरस्तेषां वायुश्चैवानुवत्सरः ।
रुद्रस्तु वत्सरो ज्ञेयः पञ्चाव्दा ये युगात्मकाः" ॥
इति देवीपुराणे कालव्यवस्थानामाध्यायः ॥

**इध्मं**, क्ली, (इन्ध + मक् ।) अग्निसन्दीपनकाष्ठम् ।

इत्यमरः ॥ जालानि काठ इति भाषा ।
("तत्रेध्मानयने शुक्रो नियुक्तः कश्यपेन ह" ।
इति भारते ।)

**इनः**, पुं, (एतीति । इ + नक् ।) सूर्य्यः । प्रभुः । ("वसु

न इनस्पतिः" । ऋग्वेदे । ४३ । २ ।) नृपभेदः ।
इत्युणादिकोषः ॥

**इनानी**, स्त्री, वटपत्रीवृक्षः । इति राजनिर्घण्टः ॥

**इन्दम्बरं**, क्ली, (इन्दं महार्हम् अम्बरं नीलवस्त्रमिव ।)

इन्दीवरं । नीलोत्पलं । इति शब्दमाला ॥

**इन्दिन्दिरः**, पुं, भ्रमरः । इति हेमचन्द्रः ॥

**इन्दिरा**, स्त्री, (इन्द + किरच + टाप् ।) लक्ष्मीः ।

इति जटाधरः त्रिकाण्डशेषश्च ॥ ("मन्दं मन्दं
मन्दिरादिन्दिरेव" इति भामिनीविलासे ।)
शोभा । कान्तिः । यथा, "निशि निःसरदिन्दिरं
कथं तुलयामः कलयापि पङ्कजम्" । इति भामि-
नीविलासे ।)

**इन्दिरामन्दिरं**, क्ली, (इन्दिरायाः मन्दिरं वासस्थान-

मिव ।) विष्णुः । इति राजवल्लभः ॥

**इन्दिरालयं**, क्ली, (इन्दिरायाः लक्ष्म्याः आलयः ।)

पद्मं । इति शब्दरत्नावली । क्लीवत्वमभिधानात्
॥

**इन्दिरावरं**, क्ली, (इन्दिरायाः लक्ष्म्याः वरं प्रियं ।)

नीलोत्पलं । इति शब्दरत्नावली ॥

**इन्दिवरं**, क्ली, (इन्दतीति । इदि परमैश्वर्य्ये, इगुप-

धात् किदिति इन् । इन्दिर्लक्षीस्तस्याः वरं प्रियं ।)
नीलोत्पलं । इति शब्दमाला ॥

इतस्ततो धावमानः सुरथो रथिनां वरः” ॥
इति जैमिनिभारते आश्वमेधिके पर्ब्बणि २० अध्यायः ॥ अपि च ।
“ताडितास्तेन वीरेण फणीन्द्रास्त्रासमागताः ।
इतस्ततस्ते तन्मुक्ता गताः पातालमुज्जवाः” ॥
इति पाद्मे पातालखण्डे ४४ अध्यायः ॥

**इति**, व्य, (इण् + क्तिच् ।) हेतुः । (यथा, रघुः । २ । २२ ।
“वत्सोत्सुकापि स्तिमिता सपर्य्यां,
प्रत्यग्रहीत्सेति ननन्दतुस्तौ” ।)
प्रकरणम् । (यथा, मनुः । २ । १५ ॥
“उदितेऽनुदिते चैव समयाध्युसिते तथा ।
सर्व्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः” ॥)
प्रकाशः । (यथा, रघुः । १ । १२ ।
“दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव” ॥)
आदिः । समाप्तिः । इत्यमरः ॥ निदर्शनम् ।
(“आपो नारा इति प्रोक्ता आपो वै नरसूनवः” ।
इति मनुः । १ । १० ।)
प्रकारः । अनुकर्षः । पर-कृतिः । इति मेदिनी ॥
(विवक्षानियमः । प्रत्यक्षं । अवधारणं । परामर्शः । मानम् । इत्थमर्थः ।
एवार्थः । “गुणानित्येव तान् विद्धि” । इति मलमासतत्त्वं ॥ अस्या विवरणम् वत्सरशब्दे द्रष्टव्यम् ॥

**इदानीं**, [न्] व्य, (इदम् + दानीं, इदम इश् ।) अस्मिन् काले । सम्प्रति । इत्यमरः ॥
(“हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतसः” ।
इति रघुः । १ । ८० ।) वाक्यभूषणम् । इति शब्दरत्नावली ॥

**इदानीन्तनं**, त्रि, (इदानीं + भवार्थे ट्युः ।) इदानी-म्भवं । सम्प्रतिजातं । आधुनिकं । इति व्याकरणम् ॥
“वासना चेदानीन्तनी प्राक्तनी च रसास्वादहेतुः” ।
इति साहित्यदर्पणे ३ परिच्छेदे । २९ ।)

**इदावत्सरः**, पुं, (इदा इति वत्सरः ।) संवत्सरादि-पञ्चान्तर्गतवत्सरविशेषः । अस्मिन् वत्सरे अन्न-वस्त्रदानं महाफलम् । इति विष्णुधर्म्मोत्तरम् ॥
(“संवत्सरोऽसि परिवत्सरोऽसीदावत्सरोसीद्वत्-सरोऽसि” । इति वाजसनेयीसंहिता । २७ । ४५ ॥)

**इद्धं**, क्ली, (इन्द + क्तः ।) आतपः । दीप्तिः । इति मेदिनी ॥ आश्चर्य्यं । इति जटाधरः ॥

**इद्धः**, त्रि, निर्म्मलः । इति शब्दरत्नावली ॥

**इद्वत्सरः**, पुं, इदावत्सरः । यथा, --
“संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः ।
इद्वत्सरस्तृतीयस्तु चतुर्थस्त्वनुवत्सरः ॥

**इन्दीवरं**, क्ली, (इन्दी लक्ष्मीस्तस्याः वरं प्रियं ।) नील-पद्मं । तत्पर्य्यायः । नीलाम्बुजन्म २ । इत्यमरः । कुवलयं ३ नीलाब्जं ४ नीलोत्पलं ५ । इति रत्न-माला ॥ (“इन्दीवरेण नयनं मुखमम्बुजेन” । इति कालिदासः । “इन्दीवरश्यामतनुर्नृपोऽसौ” । इति रघुः । ६ । ६५ ।) (नीलोत्पलशब्देऽस्यगुणादयो ज्ञेयाः ।)

**इन्दीवरिणी**, स्त्री, (इन्दीवर + इनि ङीष् ।) उत्प-लिनी । इति राजनिर्घण्टः ॥ (नीलोत्पलसमूहः ।)

**इन्दीवरी**, स्त्री, (इन्दीवरमस्त्यस्याः । अर्श आद्यच् गौरादित्वात् ङीष् ।) शतमूली । इति मेदिनी-राजनिर्घण्टौ ॥
(“वासानिम्बपटोलकेतकिबलाकुष्माण्डकेन्दीवरी” इति परिभाषायां ॥)

**इन्दीवारं**, क्ली, (इन्द्या लक्ष्म्या वारो वरणं यस्मिन् ।) इन्दीवरं । इत्यमरटीकायां रायमुकुटः ॥

**इन्दुः**, पुं, (उनत्ति अमृतधारया भुवं क्लिन्नां करोति इति । उन्द + उ + आदेरिच्च ।) चन्द्रः ।
(“दिलीप इति राजेन्दरिन्दुः क्षीरनिधाविव” ।
इति रघुः । १ । १२ ।) कर्पूरः । इत्यमरः ॥
(चन्द्रसमसंख्यः एकसंख्यायुक्तः । मृगशिरानक्षत्रम् ॥
“दिवार्ककिरणैर्जष्टं स्पष्टमिन्दुकरैर्निशि” ।

रामायणे । १ म काण्डे ।)

**इतिकथं**, त्रि, (इति इत्थं प्रकारेण कथा यस्य ।)

अश्रद्धेयं । नष्टं । इति मेदिनी ॥

**इतिकथा**, स्त्री, अर्थशून्यवाक्यं । इति मेदिनी ॥

**इतिह**, व्य, (इति एवं च ह किल च ।) पारम्पर्य्यो-

पदेशः । तत्पर्य्यायः । ऐतिह्यं २ । इत्यमरः ॥

**इतिहासः**, पुं, (इतिह आस्तेऽस्मिन् । इतिह +

आस + घञ् ।) पूब्बवृत्तान्तः । पाचीनकथा । तत्पर्य्यायः । पुरावृत्तः २ । इत्यमरः ॥ (यथा, मनुः । ३ । २३२ । "आख्यानानीतिहासांश्च पुराणानि खिलानि च" ।) व्यासादिप्रणीतभारतादिग्रन्थः । इति भरतः ॥

:इति वैद्यकद्रव्यगुणः ॥)

**इन्दुकः**, पुं, (इन्दुरिव शुक्लत्वात् । इन्दु + कन् ।)
अश्यन्तकवृक्षः । इति राजनिर्घण्टः ॥

**इन्दुकमलं**, क्ली, (इन्दुश्चन्द्र इव शुभ्रं कमलं ।) सितो-
त्पलं । इति राजनिर्घण्टः ॥

**इन्दुकलिका**, स्त्री, (इन्दुरिव शुक्ला कलिका यस्याः ।)
केतकी । इति राजनिर्घण्टः ॥
(केतकीशब्देऽस्या
विशेषो ज्ञेयः ॥)

**इन्दुकान्तः**, पुं, (इन्दुः कान्तः प्रियो यस्य । चन्द्रोदये-
ऽयं निष्यन्दतीतिभावः ।)
चन्द्रकान्तमणिः । इति
राजनिर्घण्टः ॥

**इन्दुकान्ता**, स्त्री, (इन्दुः कान्तो यस्याः ।) रात्रिः ।
इति हेमचन्द्रः ॥

**इन्दुजनकः**, पुं, (इन्दोर्जनकः ।) समुद्रः । इति त्रिकाण्ड-
शेषः ॥ (समुद्रात् चन्द्रोत्पत्तिकथा
भारते आदि-
पर्ब्बणि अष्टादशाध्याये द्रष्टव्या । यथा, --
"ततः शतसहस्रांशुर्मथ्यमानात्तु
सागरात् ।
प्रसन्नात्मा समुत्पन्नः सोमः
शोतांशुरुज्ज्वलः" ॥ ३४ ॥)

**इन्दुजा**, स्त्री, (इन्दोर्जायते या । इन्दु + जन् + ड ।)
नर्म्मदा नदी । इति हेमचन्द्रः । नर्व्वदा
इति
ख्याता । (इयं च प्रतीच्यामवन्तिषु
स्थिता प्रत्यक्

**इन्दुव्रतं**, क्ली, (इन्दवे इन्दुलोकार्थं वा व्रतं ।) चान्द्राय-
णव्रतं । इति त्रिकाण्डशेषः ॥ (यथा, महाभारते ॥)
("इन्दुव्रतसहस्रं तु यश्चरेत् कायशोधनम् ।
पिबेत् यश्चापि गङ्गाम्भः समौ स्यातां न वा समौ")

**इन्दूरः**, पुं, मूषिकः । इति जटाधरः । इँदुर इति
भाषा ॥ (गणेशबाहनं । इति पुराणम् ।)

**इन्द्रः**, पुं, (इन्दतोति । इदि परमैश्वर्य्ये तस्मात् रन्-
प्रत्ययः ।) देवराजः । स तु अदितिपुत्त्रः । पूर्ब्ब-
दिक्पतिश्च । तस्य भार्य्या शची । पुत्त्राः जयन्तः
१
ऋषभः २ मीढ्वांश्च ३ । अस्त्रं वज्रं । वाहनं ऐरा-
वतः । पुरी अमरावती । वनं नन्दनं । तत्पर्य्यायः ।
मरुत्वान् २ मघवा ३ विडोजाः ४ पाकशासनः ५
वृद्धश्रवाः ६ सुनासीरः ७ पुरुहूतः ८ पुरन्दरः ९
जिष्णुः १० लेखर्षभः ११ शक्रः १२ शतमन्युः
१३
दिवस्पतिः १४ सुत्रामा १५ गोत्रभित् १६ वज्री
१७
वासवः १८ वृत्रहा १९ वृषा २० वास्तोस्पतिः
२१
सुरपतिः २२ बलारातिः २३ शचीपतिः २४
जम्भ-
भेदी २५ हरिहयः २६ स्वाराट् २७ नमुचि-
सूदनः २८ संक्रन्दनः २९ दुश्च्यवनः ३०
तुराषाट्
३१ मेघवाहनः ३२ आखण्डलः ३३ सहस्राक्षः
३४
ऋभुक्षा ३५ । इत्यमरः । महेन्द्रः ३६ कौशिकः
३७
पूतक्रतुः ३८ विश्वम्भरः ३९ हरिः ४० पुरदंशा
४१ शतधृतिः ४२ पृतनाषाड् ४३ अहिद्विषः
४४ । इति जटाधरः ॥ वज्रपाणिः ४५ देवराजः
४६ पर्व्वतारिः ४७ पर्य्यण्यः ४८ देवताधिपः ४९
नाकनाथः ५० पूर्ब्बदिक्पतिः ५१ पुलोमारिः ५२
अर्हः ५३ प्राचीनवर्हिः ५४ तपस्तक्षः ५५ । इति
शब्दरत्नावली । तस्य चतुर्द्दश नाम भेदा यथा ।

**इन्द्रकीलः**, पुं, (इन्द्रस्य कील इव ।) मन्दरपर्ब्बतः ।
इति हेमचन्द्रः ॥ (यथा रामायणे २ ।
८० । १८ ।
"तत्रेन्द्रकीलप्रतिमाः
प्रतोलिवरशोभिताः ।)

**इन्द्रकुञ्जरः**, पुं, (इन्द्रस्य कुञ्जरः ।) ऐरावतहस्ती ।
इति जटाधरः ॥

**इन्द्रकोषः**, पुं, (इन्द्रस्य ऐश्वर्य्यशालिनः कोषः ।)
मञ्चः । खट्वा । इति त्रिकाण्डशेषः ॥
तमङ्गकः ।
इति हेमचन्द्रः । घोझला गाँजला
इत्यादिख्यातः ।
निर्यूहोऽपि । यथा, महेश्वरः ।
"निर्यूहः शेखरे द्वारे निर्य्यासे
नागदन्तके" ।

**इन्द्रगोपः**, पुं, (इन्द्रो गोपो रक्षको यस्य ।) रक्तवर्ण-
कीटबिशेषः । मखमली इति भाषा ।
तत्पर्य्यायः ।
अग्निरजः २ वैराटः ३ तितिभः ४
अग्निकः ५ इति
हेमचन्द्रः । शक्रगोपः ६ वर्षाभूः ७
रक्तवर्णः ८ ।
इति राजनिर्घण्टः ॥
("अविरलवितरेवहीन्द्र-
गोपैः" । इति किराते । १९ । ३ ।)

**इन्द्रचन्दनं**, क्ली, (इन्द्रस्य चन्दनं वृक्षविशेषः ।)
हरिचन्दनम् । इति राजनिर्घण्टः ॥

**इन्द्रचिर्भिटी**, स्त्री, लताविशेषः । तत्पर्य्यायः । इन्दी-
वरा २ युग्मफला ३ दीर्घवृन्ता ४
उत्तमारणी ५

स्रोतोवहा च । यथा, --
"अवन्तिषु प्रतीच्यां वै कीर्त्तयिष्यामि ते दिशि ।
यानि तत्र पवित्राणि पुण्यान्यायतनानि च ॥
प्रियङ्ग्वाम्रवनोपेता वानीरफलशालिनी ।
प्रत्यक्स्रोता नदी पुण्या नर्मदा तत्र भारत" ! ॥
इति भारते आदिपर्ब्बणि ८९ अध्यायः ॥)

**इन्दुपुत्रः**, पुं, (इन्दोः पुत्रः ।) बुधग्रहः । इति शब्द-
रत्नावली ॥

**इन्दुपुष्पिका**, स्त्री, (इन्दुरिव शुभ्रं पुष्पं यस्याः ।)
कलिकारोवृक्षः । इति राजनिर्घण्टः ॥ विषला-
ङ्गला इति भाषा ।

**इन्दुभृत्**, पुं, (इन्दुं बिभर्त्तीति । इन्दु + भृ + क्विप् ।)
शिवः । इति हेमचन्द्रः ॥

**इन्दुमती**, स्त्री, (इन्दुः पुर्णेन्दुर्विद्यते यस्याः । इन्दु +
मतुप् ।) पूर्णिम्छि इति राजनिर्घण्टः ॥ (इन्दमती
पूर्णिमेव आनन्ददायिका स्वनामख्याता विदर्भ-
राजभगिनी, अजराजपत्नी । यथा, -- रघुः ।
"अथेश्वरेण क्रथकैशिकानां
स्वयंवरार्थं स्वसुरिन्दुमत्याः" । ५ । ३९ ।
"वसुधामपि हस्तगामिनी-
मकरोदिन्दुमतीमिवापरां" । ८ । १ ।)

**इन्दुरत्नं**, क्ली, (इन्दुरिव शुभ्रं रत्नम् ।) मुक्ता । इति
राजनिर्घण्टः ॥

"इन्द्रश्च विश्वभुग् ज्ञेयो विपश्चित्तदन्तरम् ।
विभुः प्रभुः शिखिश्चैव तथैब च मनोजवः ।
तेजस्वी साम्प्रतस्त्विन्द्रो वलिर्भाव्यस्त्वनन्तरम् ॥
अद्भुतस्त्रिदिवश्चैव दशमस्त्विन्द्र उच्यते ।
सुशान्तिश्च सुकीर्त्तिश्च ऋतधाता दिवस्पतिः ।
इति भूता भविष्याश्च इन्द्रा ज्ञेयाश्चतुर्द्दश" ॥
इति देवीपुराणे कालव्यवस्थध्यायः ।
विष्कुम्भादिसप्तविंशतियोगान्तर्गतषड्विंशयोगः ।
तत्र जातफलम् ।
"प्रतापशीलो बलवान् गुणज्ञः
श्लेष्माधिकः श्रीकमलाभ्यपेतः ।
किलेन्द्रयोगो यदि जन्मकाले
महेन्द्रतुल्यः पुरुषः प्रसन्नः" ।
इति कोष्ठीप्रदीपः ॥ * ॥ अन्तरात्मा आदित्य-
विशेषः । इति मेदिनी (यथा, हरिवंशे ।
"तत्र शक्रश्च विष्णुश्च जज्ञाते पुनरेव ह" ।)
कुटजवृक्षः । रात्रिः । इति धरणी ॥ उपद्वीप-
विशेषः । इति शब्दमाला ॥ परमेश्वरः । इति
वेदान्तः ॥ ("इन्द्रो मायाभिः पुरुरूप ईयते"
इति श्रुतिः ॥ इन्द्रियं । श्रेष्ठः । प्रथमः । यथा,
नरेन्द्रो राजा । पक्षीन्द्रो गरुडः । इत्यादिः ।)

**इन्द्रकं**, क्ली, (इन्द्रस्य ऐश्वर्य्यशालिनः कं सुखं यस्मिन् ।)
सभागृहम् । तत्पर्य्यायः । अस्थानगृहं २ । इति
हेमचन्द्रः ॥

पुष्पमञ्जरिका ६ द्रोणी ७ करम्भा ८
नलिका ९ ।
अस्या गुणाः । कटुत्वं । शीतत्वं ।
पित्तश्लेष्मकास-
दोषव्रणकृमिनाशित्वं ।
चक्षुर्हितकारित्वञ्च । इति
राजनिर्घण्टः ॥

**इन्द्रच्छन्दः**, [स्] क्ली, (इन्द्र इव सहस्रपुच्छेन छाद्यते
इति । इन्द्र + छद् + असुन् ।
निपातनात् सिद्धं ।)
सहस्रगुच्छहारः । इति हेमचन्द्रः ॥

**इन्द्रजालं**, क्ली, (इन्द्राणामिन्द्रियाणां जालं आव-
रकम् । यद्वा इन्द्रस्य परमेश्वरस्य
जालं माया
इव ।) मायाकर्म्म । भोजवाजि, भेल्कि
इत्यादि
भाषा । तत्पर्य्यायः । कुहकं २ जालं ३
कुसृतिः ४ ।
तद्विवरणग्रन्थो यथा, --
"अथातः संप्रवक्ष्यामि
चेन्द्रजालमनुत्तमम् ।
व्याधिदारिद्रहरणं जरामृत्युविनाशनम् ॥
इन्द्रस्य यो न जानाति जालेशं
रुद्रभाषितम् ।
निग्रहानुग्रहे तस्य का शक्तिः
परमेश्वरि ! ॥
न तेषां जायते सिद्धिर्गोत्रे क्षेत्रे गृहेऽपि वा ।
इन्द्रजालं न जानाति स क्रुद्धः किं
करिष्यति ॥
न जीवति वरारोहे संसारे दुःखसागरे ।
इन्द्रजालं न जानाति कुतः सौख्यं
भवेत्ततः ॥
कौतूहलं कुतस्तेषां कुतः कामा
वरानने ! ।

**इन्दुलेखा**, स्त्री, (इन्दोश्चन्द्रस्य लेखेव ।) अमृता ।

सोमलता । शशिकला । इति मेदिनी । यमा-
निका इति शब्दमाला ॥

**इन्दुलोहकं**, क्ली, (इन्दुलोह + कन् ।) रौप्यं । इति

राजनिर्घण्टः ।

**इन्दुवल्ली**, स्त्री, (इन्दोर्वल्ली लता ।) सोमलता । इति

जटाधरः ॥ (सोमलताशब्देऽस्या गुणादयो व्या-
ख्येयाः ॥)

संसारसागरे घोरे कामलुब्धाश्च मानवाः ।
रुद्रकर्म्म न हि तेषां कुतः सौख्यं विधीयते ॥
यथा नदौनदाः सर्व्वे सागरे समुपागताः ।
तथा सर्व्वाणि शास्त्राणि इन्द्रजालस्थितानि च ॥
तप्तानाञ्च यथा भानुः शीतलानां यथा शशो ।
गम्भीराणां यथा सिन्धुर्जालेन्द्रञ्च तथा प्रिये ! ।
तथा किं बहुनोक्तेन वर्णनेन पुनः पुनः ।
जालेन्द्रस्य समं शास्त्रं न भूतं न भविष्यति” ॥ * ॥
“अथातः संप्रवक्ष्यामि ओषधीनां विधिं वरे ।
येन विज्ञानमात्रेण सर्व्वसिद्धिर्भविष्यति ॥
महाकालस्य वीजानि प्रस्थमेकं समाहरेत् ।

:धात्रीरसेन देवेशि ! सप्त वारान् विभावयेत्" ॥

गुटिका कर्त्तव्या तां गुटिकां मुखे निक्षिप्य
पारावतो भवति ॥ १ ॥ "अथातः
संप्रवक्ष्यामि
शृणु त्वं मम वल्लभे । छागस्य शीर्षं संगृह्य
कृष्ण-
मृत्तिकां पूरयित्वा पुनर्धुस्तूरवीजानि
वापयेत् काले
तानि पुष्पितानि भवन्ति तदा यस्योपरि
निक्षि-
पेत् स छागो भवति ॥ २ ॥ मयूरशीर्षमादाय
कृष्णचतुर्दश्यां मृत्तिकां पूरयेत् शणवीजानि
वाप-
येत् यदा फलितो पुष्पितो भवति तदा शण-
वीजानि ग्रीवायां बन्धयेत् तेन मयूरो भवेत्
॥ ३ ॥
कृष्णचतुर्दश्यां मयूरशीर्षमादाय
कृष्णमृत्तिकां
पूरयेत् कार्पासवीजानि वापयेत् यदा
फलिताः
पुष्पिता भवन्ति पुष्पफले संगृह्य समस्तं
पेषयित्वा
अङ्गं विलिप्य पानीयमध्ये प्रविश्य तथा
जले
तिष्ठेत् यथा स्थले ॥ ४ ॥ कृष्ण-काक-
शीर्षमादाय
काकमाचीवीजानि वापयेत् यदा फलिताः
पुष्पिता भवन्ति तत्फलं संगृह्य मुखे प्रक्षिप्य
काको भवति काक इव गच्छति मह्या
उद्गीर्णे
मोक्षः ॥ ५ ॥ पारावतशीर्षमादाय
कृष्णमृत्तिकां
पूरयित्वा तिलवीजानि वापयेत् क्षीरोदकेन
सिञ्च-
नीयं यदा पुष्पिता भवन्ति तदा मुखे
संस्थाप्य
अन्तर्हितो भवेत् ॥ ६ ॥ तेषां फलानां चूर्णं
कृत्वा

अत्र मन्त्रः ।
ॐ "रक्तचामुण्डे अमुकं मे वशमानय ह्रीँ ह्रीं
हूं फट् । अयुतं जप्तव्यम् । ॐ नमोऽस्तु
आदित्याय
किलि किलि चिलि चिलि धूमं लिहि यक्षिणि
मोदते हि शाकिनि अनिदुद्धशूलपाणि स्वाहा
॥
वर्णाः ४० शिलाकृतिके मन्त्रे । ॐ नमो
गुहा-
वासिन्यै गुहपति गुहिले मनोजवो ॐ एं ॐ
विज्वे नमः । शिलायाः कृतिः करलिखिता
खदि-
रानलसन्तप्तलिङ्गा यतो नवयोषितोऽपि
आक-
र्षणं । वर्णाः २६ । ॐ नमः कपालरुद्राय
सर्व्व-
लोकवशङ्कराय
अनाथायाप्रतिहतबलवीर्य्यपरा-
क्रमप्रभवाय हा हा हे हे पच पच मारय मारय
कपट कपट काट सर्प कर्म्मकरि अमुकं मे
वश-
मानय स्वाहा । ७७ । वर्णाः अयुतजपाद्वशी-
करोति ॥ * ॥ अन्यप्रकारः ।
"पारावतस्य हृदयं चक्षुर्जिह्वा च शोणितम् ।
अञ्जनं रोचनयुतं वनितावशकृत् परम्" ॥
तत्र मन्त्रः । ॐ नय नय महारिणि नमो देव्यै
स्वाहा ॥ १५ ॥ एकविंशतिवारान् परिजप्य
सिद्धि-
र्भवति ॥ * ॥ अन्यप्रकारः ।
"कपालं मानुषं गृह्यं कनकस्य फलानि च ।
कर्पूरं मधुसंयुक्तं निघृष्य तिलकेन च ॥
नारी वा पुरुषोऽनेन वश्यो भवति नित्यशः ।
एष कापालिको योगो वशिष्ठस्य शुभंमतम्"
॥ * ॥
अन्यप्रकारः । पुरुषार्थी ।
"कर्पूरं वालुकं लाक्षा रजसा सप्तभावितं ।
रतिकाले भगं लिप्य पतिर्दासो भविष्यति" ॥
* ॥

तद्भावितञ्च मञ्जिष्ठा तगरं गौरसर्षपाः ॥
शिवनिर्माल्यसंयुक्तं समभागानि कारयेत्
।
भोज्ये पानेऽथवा देयाः स्त्रीणान्तु
वशकारकाः ॥
नित्यं पुरुषमिच्छन्ती मृतमप्यनुगच्छति
॥ * ॥
अन्यप्रकारः । कृष्णसर्पमप्यङ्गुलप्रमाणं
शिर-
श्छित्वास्यास्यं सर्षपादिभिः पूरयित्वा
छायाशुष्कं
शोषयेत् । परतः सर्षपान् ग्राहयित्वा
तानि
यस्मै दीयते स वश्यो भवति ॥ * ॥
अन्यप्रकारः ॥
पूगीफलं निर्गिलित्वापानमार्ग निर्गतं
गृह्यधुस्तूर-
रसान्तरितं कृत्वा सप्तदिनानि पूजयेत् ॥
पुनः
कुङ्कुमचन्दनैरधिभाव्य यस्मै दीयते स
वश्यो
भवति ॥ * ॥ अन्यप्रकारः ।
"दर्दुरयुग्मं गृहीत्वा तद्धूमेन दाहयेत् ।
तद्भस्म सह पानेन वश्यकृत् परमो मतः"
॥ * ॥
अन्यप्रकारः ।
"अजगन्धस्य पत्राणि वचा कुष्ठेन
मावयेत् ।
श्मशानभस्मसंयुक्तं चूर्णञ्चेत्त्रिषु दुर्लभम्
॥
अनेनैव तु चूर्णेन जोटयेत् त्रिश्च पादपम्
।
पुष्पितं फलितं दृष्ट्वा चूर्णं वृक्षाद्विलग्नयेत्
।
तत्क्षणात् फलते वृक्षो नरनारीषु का
कथा ॥ * ॥
अन्यप्रकारः ।

तेन चूर्णेन यं स्पृशति स किङ्करो भवेत्
सर्व्वस्वं
ददाति ॥ ७ ॥ तानि तिलानि संगृह्य
नेत्राञ्जनेन
सह पिष्ट्वा कपिलादुग्धेन गुटिकां कारयेत् ।
सप्तरात्रं पाचयेत् । तां गुटिकां मुखे निक्षिप्य
अन्तर्हितो भवति देवैरपि न दृश्यते
मनुष्याणां
का कथा । उद्गीर्णेन पुरुषो भवति ।
जीवेद्वर्षशतं
स्त्रियः सर्व्वे जनाश्च वश्या भवन्ति ॥ ८ ॥
गृध्रशिरः
समादाय कृष्णचतुर्दश्यां कृष्णमृत्तिकां
निक्षेपेत्
लशुनवीजानि वापयेत् यदा फलं पुष्पं
भवति तदा
पुष्यनक्षत्रे पुष्पं गृहीत्वा अञ्जनेन सह
कपिला-
घृतेन कज्जलं पातयेत् चक्षुरञ्जनीयं तावत्
योजन-
शतं पश्यति मेदिनीं दिवा नक्षत्राण्यपि
पश्यति
लाभस्तस्य । किञ्चित् कर्त्तुमिच्छति तत्
करोति
न संशयः ॥ ९ ॥ अन्ये च सर्व्वे जीवाः एवं
उष्ट्र-
गद्धभमहिष्यादिलघुवृहज्जीवाः । यत् यत्
वीजं
यस्य शिरसि वापयेत् यदा पुष्पितः फलितो
भवति तदा यस्य वीजानि मुखे निक्षिप्यन्ते
स
जीवो भवति नात्र सन्देहः ॥ १० ॥ * ॥
अथ
सर्व्वेषां धारणमन्त्रः । ॐ ह्रीं ह्रीं ह्रें ऐं लं लं
ॐ
भौ स्वाहा । एकादशाक्षरो मनुरस्य
पुरश्चरणं
लक्षजपः । दशांशहोमः घृतेन तर्पणं मार्जनं

अन्यप्रकारः ।
“नरजिह्वां ममुद्धृत्य सूक्ष्मचूर्णन्तु कारयेत् ।
जलेन च सुशीतेन दापयेत् तद्विचक्षणः ॥
पाने फले च पुष्पे च भक्ष्ये भोज्ये च दापयेत्
।
प्रजापतिकुलोद्भूता यदि साक्षादरुन्धती ॥
साभिसक्ता प्रियं याति नान्यं पुरुषमिच्छति”
॥ * ॥
अन्यप्रकारः ।
“कनकञ्चाप्यपामार्गं सुरसा गौरसर्षपाः ।
तिलतैलेन पिष्ट्वापि योनिलेपः प्रशस्यते” ॥
अत्र मन्त्रः । ॐ नम शय्यायै दरि विदरि या-
मिनि अमुकं मे वशमानय स्वाहा ॥ * ॥
अन्य-
प्रकारः । हरितालं श्मशाने कृष्णचतुर्दश्यां
क्षिप्त्वा
कुष्ठविमिश्रं ग्राह्यं अवश्यं वशी भवेत् स नरः
॥ * ॥
अन्यप्रकारः ।
ऋतुनवलोचनतालाललाटास्थि-
बाणसाधितं तैलं
सकलमनुजेन्द्रललनावशङ्करं
मकरालये पुष्ये । नरतैलं प्रेताम्बरवर्त्तिकं
कृत्वा
मात्रे रात्रौ प्रज्वाल्यार्कवृक्षस्कन्धे कज्जलं
कृत्वा
चक्षुषी अभ्यञ्जयेत् यंपश्यति स वश्यो भवति
॥ * ॥
अन्यप्रकारः ।
“कर्णदन्तमलं लाला स्वदेहाक्षिमलत्रयम् ।
नासिकोद्भवरक्तञ्च चूर्णमेतद्बलायुतम् ॥
एतत् सर्व्वं समुद्धृत्य गुटिकां कारयेद्बुधः ।
पानभोजनके देया वशीकरणमुत्तमम्” ॥ *
॥
अन्यप्रकारः ।
काकजिह्वा वचा कुष्ठं आत्मनो रुधिरं स्त्रियः
।

“जिह्वामूले सप्तरात्रं सैन्धवेनापि
मिश्रितम् ।
ददाति यस्य पानेषु सोऽपि वश्यो भवेत्
क्षणात्” ॥ *
अन्यप्रकारः ।
“गोपित्तं सैन्धवञ्चैव वृहतीफलमेव च ।
लेपमेतत् प्रयोक्तव्यं नरनारीवशङ्करम्” ॥
* ॥
अन्यप्रकारः ।
“बालामूलं चूर्णयित्वा रक्तरेतःसमन्वितः
।
दद्यात् पानेन प्रमदां क्षिप्रमेव वशं नयेत्
॥
पुत्त्रादिञ्च धनं त्यक्त्वा दासीवत् भवति
तु सा ।
यत्र वा नीयते तत्र पश्चात् भ्रमति
विह्वला” ॥ * ॥
अन्यप्रकारः । वल्मीकमृत्तिकायाः
प्रतिकृतिं कृत्वा
क्षीरेण स्नाप्य आज्येन वा अभ्यज्य
तस्य लवणाहुति-
मेकविंशतिवारं जुहुयात् त्रिरात्रेण वश्यो
भवति
सप्तरात्रेणाथवा । देवीञ्च गान्धारीं यक्षिणीं
शक्र-
स्यापि पत्नीं वशमानयति ॥ * ॥
अन्यप्रकारः ।
“उद्गातुः पक्षिणो मलमात्मनो
रुधिरान्वितम् ।
स्त्रीपुंसयोः प्रदातव्यं वशीकरणमुत्तमम्”
॥
अत्र मन्त्रः । त्रिशूलिने त्रिनेत्राय हिलि
हिलि
स्वाहा । वर्णाः १४ । सप्तजप्तेन सिद्धिः
॥ * ॥
अन्यप्रकारः ।
“कृष्णपक्षचतुर्दश्यां मृतभस्म तु ग्राहयेत्
।

ब्राह्मणभोजनादिकं कारयित्वा सिद्धिर्भवति
॥ * ॥
अथ वश्याधिकारः ।
“मातुलुङ्गस्य मूलन्तु धुस्तूरवीजकेन च ।
पलाण्डुपुष्पमादाय सूक्ष्मचूर्णन्त् कारयेत् ॥
योऽस्य गन्धं समाघ्राति स च स्नेहेन
पश्यति ।
दुन्दुभिं पटहांश्चैव शङ्खांश्चैव तु लेपयेत् ॥
एष भूतोपसृष्टानां कुमारीणां गृहेषु च ।
भूपतेः सेव्यमानानां तथापत्यापजीविनां ॥
न चाग्निर्दह्यते वेश्म यत्रैष सोऽगदो भवेत्” ।

स्त्रीणाञ्च मूर्द्ध्नि दातव्यं विद्यया
परिजप्तया ॥
दह्यते मुह्यते नारी पच्यते शुष्यतेऽपि च ।
अङ्गानि चैव भज्यन्ते यदि तं न
समाविशेत्” ॥
अत्र मन्त्रः । ॐ नमश्चामुण्डे
श्मशानवासिनि
स्वाहा । वर्णाः । १४ । सप्तरात्रेण प्रेरकः
॥ * ॥
अन्यप्रकारः ।
“श्वेतार्कं रोचनायुक्तं आत्ममूत्रेण पेषयेत्
।
ललाटे तिलकं कृत्वा त्रैलोक्यं क्षोभयेत्
क्षणात् ।
दृष्टमात्रेण तेनैव सर्व्वो भवति किङ्करः” ॥
* ॥
अन्यप्रकारः ।

:"श्वेतार्कं चन्दनेनैव रमयेत् सह लेपयेत् ।
दीयते कस्यचिद्वापि पश्चाद्दासी भविष्यति ॥
* ॥
अथ पतिवशीकरणम् ।
"मधुकं सह तैलेन सार्षपेण तु पेषयेत् ।
एतेन पाणिमभ्यज्य भर्त्रा सा सहिता स्वपेत्
॥
संवृत्ते मैथुनीभावे पतिर्दासो भविष्यति" ॥ *
॥
अन्यच्च ।
"मनःशिलाकुङ्कुमसर्षपाश्च
तथा च कुष्ठं सहदेवदारु ।
रक्तञ्च रक्तं पलितेन सार्द्धम्
प्रपेषयेत् सूक्ष्मतरं महान्तम् ॥
प्रस्नातपूर्ब्बाभिमुखोऽपि भूत्वा
संस्मृत्य लक्ष्मीञ्चरुकेण पूज्य ।
ततः प्रकुर्य्यात् तिलकं ललाटे
वामाच्च हस्ताच्चतुरङ्गुलीभिः ॥
पुंदृष्टमात्रेण भवेत् स कान्ता-
दासातिदासश्च किमत्र चित्रम्" ॥ * ॥
अथ लिङ्गलेपाधिकारः ।
"वृहतीफलमूलानि पिप्पली मरिचानि च ।
भया रोचनया सार्द्धं लिङ्गलेपोत्तमो मतः ॥
निःशेषस्त्रीजगत्कर्षं नाम्ना स्त्रीहृदयाङ्कुशम् ।
मोहनं शस्त्रमेतद्धि मदनस्य स्मृतं बुधैः" ॥ *
॥
अन्यच्च ।
"कुष्ठञ्च धातकीपुष्पं मरिचानि वचा तथा ।
अनेन लिङ्गमालिप्य कृत्स्नां श्यामां वशं
नयेत् ॥
तासाञ्चित्तहरोऽप्येष मृतमप्यनुगच्छति ।
विवशा भक्तिभावेन पश्चात् सर्व्वं प्रयच्छति"
॥ * ॥
अन्यच्च ।
"पञ्चरक्तानि संगृह्य शुभानि च यथेच्छया ।
सर्व्वाणि समभागानि प्रियङ्गुञ्चापि तत्समम् ॥
नागरं दशभागेन लेपः कान्तावशङ्करः" ॥ *
॥

"इन्द्रजालं विना रक्षां न करोतीति
निश्चितम् ।
रक्षामन्त्रं महामन्त्रं सर्व्वसिद्धिप्रदायकम्"
॥
"ओं नमो नारायणाय विश्वम्भराय
इन्द्रजाल-
कौतुकानि दर्शय दर्शय सिद्धिं कुरु कुरु
स्वाहा"
अष्टोत्तरशतजपेन सिद्धिः ॥ * ॥ अथ
रक्षामन्त्रः ।
"ओं नमः परब्रह्मपरात्मने मम शरीरे
पाहि
पाहि कुरु कुरु" ॥
"उल्लुकस्य कपालेन घृतेनाहतकज्जलं ।
तेन नेत्राञ्जनं कृत्वा रात्रौ पठति पुस्तकम्
॥ १ ॥
अङ्कोलवीजनिक्षिप्ते गुरुवारे मुखे गजे ।
मन्त्रेण सिञ्चयेन्नित्यं यावद्वीजफलं ह वै ॥
त्रिलौहवेष्टितं कृत्वा एकवीजं मुखे
स्थितम् ।
मत्तमातङ्गवीर्य्यस्तु वायुतुल्यपराक्रमः ॥
दशहेमद्विषट्ताम्रं षोडशं रूप्यभागकम् ।
एवं संख्या त्रिलोही च ज्ञातव्या
सर्व्वकर्म्मणि ॥ २ ॥
यानि कानि च वीजानि जङ्गमं स्थलमेव
च ।
अङ्कोलवीजनिक्षिप्ते मुखे भूमितले ध्रुवम्
॥
तद्वीजं मुखमध्यस्थं त्रिलोहैर्वेष्टितं कुरु ।
तद्रूपो हि भवेन्मर्त्यो नान्यथा
शङ्करोदितम् ॥ ३ ॥
यानि कानि च वीजानि
अङ्कोलतैलमेलनात् ।
सफलो जायते वृक्षः सिद्धियोगमुदाहृतम्
॥ ४ ॥
शवमुखे विन्दुमात्रं तत्तैलं निःक्षिपेद्यदि ।
एकयामं भवेत् जीवो नान्यथा
शङ्करोदितम् ॥ ५ ॥

ग्रीष्मे विद्वेषणं कुर्य्यात् प्रावृषि स्तम्भनं
तथा ॥
शिशिरे मारणञ्चैव शान्तिकं शरदि स्मृतम् ॥
हेमन्ते पौर्णमास्याञ्च ऋतुकर्म्मविशारदः ।
वसन्तश्चैव प्रब्बह्ने ग्रीष्मो मध्याह्न उच्यते
॥
वर्षा ज्ञेयापराह्ने तु प्रदोषे शिशिरः स्मृतः ।
अर्द्धरात्रे च हेमन्तः शरदं तत्परं स्मृतम्" ॥
* ॥
अथ पक्षादिनिर्णयः ।
"कृष्णपक्षे मारणादि शुक्लपक्षे च वर्द्धनम् ॥
द्वादश्यां मारणं कर्म्म एकादश्यां तथैव च ।
तृतीयां नवमीञ्चैव वश्याकर्षञ्च कारयेत् ।
स्तम्भनञ्च चतुर्दश्यां चतुर्थ्यां प्रतिपद्यपि ॥
द्वितीयां षष्ठीमष्टम्यां कारयेत् शान्तिकर्म्म च
।
अश्विनीमृगमूलाश्च पुष्या पुनर्व्वसुस्तथा ॥
वश्याकर्षञ्च कर्त्तव्यं कारयेच्च सदा बुधः ।
ज्येष्ठा च उत्तराषाढा अनुराधा च रोहिणी ॥
कारयेन्मारणं शान्तिं स्तम्भनं विजयं तथा
।
विधिमन्त्रसमायुक्तमौषधं सफलं भवेत्" ॥
* ॥
अथ वशीकरणम् ।
"सिन्दूरमाक्षिककपोतमलानि पिष्ट्वा
लिङ्गं विलिप्य रमते तरुणीं नवोढां ।
शान्तिं न याति पुरुषो मनसापि नूनं
दासी भवेदिति मनोहरदिव्यमूर्त्तिः ॥
पुष्ये रुद्रजटामूलं मुखस्थं कारयेद्बुधः ।
ताम्बूलादौ प्रदातव्यं वश्या भवति
निश्चितम् ॥
तथैव पाटलीमूलं ताम्बूलेन तु वश्यकृत् ।
नागपुष्पं प्रियङ्गुञ्च तगरं पद्मकेशरम् ॥
जटामांसी समं नीत्वा चूर्णयेत् मन्त्रवित्तमः
।
साङ्गं धूपयते तेन भजते कामवत् स्त्रियः"
॥

अन्यच्च ।
“देवदारु वचा कुष्ठं चतुर्थं वैश्वभेषजं ।
आम्लवीजरसैर्युक्तं गौरीश्यामावशङ्करम्” ॥
* ॥
अन्यच्च ।
“हरिद्रा वृहतीमूलं भद्रमुस्तं तथोत्पलम् ।
विडङ्गं कृष्णं वैरञ्च समभागानि कारयेत् ॥
लिङ्गलेपोत्तमो ह्येष रक्तवल्लीवशङ्करः” ॥ * ॥
अन्यच्च ।
“हरिद्रा पिप्पलीमूलं पद्मं मधुकमेव च ।
एतानि समभागानि नवनीतेन पेषयेत् ॥
लिङ्गलेपोत्तमो ह्येष गौरीप्रीताय शाङ्करः” ॥
* ॥
“कौशिकशोणितलेपात् सेचनाद्वापुष्टं
भवेल्लिङ्गं ।
तद्वशन्तेजस्तम्भमयं कीलकसदृशं भवेच्च ॥
कौशिकं रुधिरं गृह्य गोमूत्रेण च पेषयेत् ।
वीर्य्यं हि स्तम्भयेन्नित्यं प्रहरार्द्धं न संशयः”
॥ * ॥
सर्व्वसाधारणो मन्त्रः । ॐ एं ह्रीं ह्रीं श्रीं
फट् स्वाहा । अनेन मन्त्रेण
सर्व्वयोगानभिमन्त्र्य
सिद्धिः” । इति
श्रीपार्ब्बतीपुत्त्रश्रीनित्यनाथविर-
चिते सिद्धखण्डे तन्त्रसारे कौतूहलविद्यानाम
इन्द्रजालतन्त्रम् ॥ * ॥ पुस्तकत्रयमालोच्य
यथासाध्यं
शोधितमेतत् ॥ * ॥ * ॥ अपिच । ईश्वर
उवाच ।

शिग्रुवीजस्थितं तैलं पारावतपुरीषकम् ।
वराहस्य वसायुक्तं गृहीत्वा च समं समम्
॥
गर्दभस्य वसायुक्तं हरितालं मनःशिला ।
एभिस्तु तिलकं कृत्वा यथा लङ्केश्वरो
नृपः ॥ ६ ॥
उल्लुविष्ठां गृहीत्वा तु एरण्डतैलपेषणात् ।
यस्याङ्गेनिक्षिपेत् विन्दुं स क्षिप्तो जायते
ध्रुवम् ॥ ७ ॥
सर्पदन्तं गृहीत्वा तु
कृष्णवृश्चिककण्टकम् ।
कृकलारक्तसंयुक्तं सूक्ष्मचूर्णन्तु कारयेत्
॥
यस्याङ्गे निक्षिपेच्चूर्णं सद्यो याति
यमालयम् ॥ ८ ॥
सिन्दुरं गन्धकं तालं समं पिष्ट्वा
मनःशिलाम् ।
तल्लिप्तवस्त्रं शिरसि अग्निवत् दृश्यते ध्रुवम्
॥ ९ ॥
अर्कक्षीरं वटक्षीरं क्षीरं डुम्बरसम्भवम् ।
गृहीत्वा पात्रके लिप्ते जलपूर्णं करीति च ।
दुग्धं संजायते तत्र महाकौतुककौतुकम्
॥ १० ॥
अङ्कोलतैललिप्ताङ्गो दृश्यते राक्षसाकृतिः
।
पलायन्ते नराः सर्व्वे पशुपक्षिगजाहयाः
॥ ११ ॥
अङ्कोलस्य तु तैलेन दीपं प्रज्वालयेन्नरः
।
रात्रौ पश्यति भूतानि खेचराणि महीतले
॥ १२ ॥
बुधे वा शनिवारे वा कृकलां परिगृह्य च ।
शत्रुर्मूत्रयते यत्र कृकलां तत्र निःक्षिपेत् ॥
निखनेद्भूमिमध्येषु उद्धृते च पुनः सुखी ।
नपुंसकं भवेत् सत्यं नान्यथा
शङ्करोदितम् ॥ १३ ॥
गन्धकं हरितालञ्च गोमूत्रञ्च विषं तथा ।
सूक्ष्मचूर्णमयं कृत्वा किञ्चिद्वह्निं
विनिःक्षिपेत् ॥

ॐ मूली मूली महामूली सर्व्वं
संक्षोभभयेभ्यः
उपद्रवेभ्यः स्वाहा । धूपमन्त्रः ॥
“पानीयस्याञ्जलीन् सप्त दत्त्वा विद्यामिमां
जपेत् ।
सालङ्कारां नवां कन्यां लभते मासमात्रतः ॥
ॐ विश्वावसुर्नाम गन्धर्ब्बः
कन्यानामधिपतिः सुरूपां
सालङ्कारां देहि मे नमस्तस्मै विश्वावसवे
स्वाहा ।
“कन्यागृहे शालकाष्ठं क्षिपेदेकादशाङ्गुलम् ।
ऋक्षेच पूर्ब्बफल्गुन्यां यस्तां कन्यां
प्रयच्छति ॥ * ॥
अथ सर्व्वजनवशीकरणम् ।
“शिला च रोचनामूलं वारिणा तिलके कृते ।
दृष्टमात्रे वशं याति नारी वा पुरुषोऽपि वा ॥
स्वर्णेन वेष्टनं कृत्वा तेनैव तिलके कृते ।
सम्भाषणेन सर्व्वेषां त्रैलोक्यं वशमानयेत्”
॥
ॐ ह्रीँ क्लीँ ऐँ क्षौँ भोगप्रदा भैरवी मातङ्गी
त्रैलोक्यं वशमानय स्वाहा । औषधोपरि
सहस्रजपं
कुर्य्यात् । पुनः सप्तवारजपेन तिलकं
कारयेत्
शक्रसमोऽपि वश्यो भवति । इति
कालनाथविर-
चिते इन्द्रजाले १ अध्यायः ॥ * ॥
अथाकर्षणं । ॐ ह्रीँ चामुण्डे ज्वल ज्वल
प्रज्वल
प्रज्वल स्राहा । अनेन मन्त्रेण स्त्रियं दृष्ट्वा
जपं
कुर्य्यात् तत्क्षणात् पृष्ठतः समागच्छति ।
पूर्ब्ब-
मेवायुतजपेन सिद्धिः ॥
“अश्लेषायां समादाय अर्ज्जुनस्य च
व्रध्नकम् ।
अजमूत्रेण संपिष्य स्त्रीणां शिरसि दापंयत् ॥

| | | |
|---|---|---|
| | विघ्नाः सर्व्वे पलायन्ते यथा युद्धेषु<br>कातराः ॥ १४ ॥<br>इति दत्तात्रेयतन्त्रे ईश्वरदत्तात्रेयसंवादे<br>इन्द्र-<br>जालकौतुकदर्शनं नाम एकादशः पटलः<br>॥ * ॥ * ॥<br>अन्यच्च ।<br>“वश्याकर्षणकर्म्माणि वसन्ते योजयेत्<br>प्रिये । | |

:पुरुषस्य पशूनां वा क्षिपेदाकर्षणं भवेत्” ॥ * ॥

अथ जयः ।
“गोजिह्वां शिखिमूलं वा मुखे शिरसि संस्थिता ।
कुरुते सर्व्ववादेषु जयं पुष्ये समुद्धृते ॥
मार्गशीर्षपौर्णमास्यां शिखिमूलं समुद्धरेत् ।
बाहौ शिरसि वा धार्य्यं विवादे विजयो भवेत् ॥
गिरिकर्णीं शमीं गुञ्जां श्वेतवर्णां समाहरेत् ।
चन्दनेनान्वितञ्चैव तिलकेन जयी नरः ॥
कणकार्कवटावह्निर्विद्रुमः पञ्चमस्तथा ।
तिलकं कुरुते यस्तु पश्येत्तं पञ्चधा रिपुः ॥
आर्द्रायां वटवन्दाकं गृहीत्वा धारयेत् करे ।
संग्रामे जयमाप्नोति जयां स्मृत्वा जयी भवेत्” ॥
अस्य मन्त्रः । ॐ नमो महाबलपराक्रम समस्त-
विद्याविशारद अमुकस्य भूजबलं बन्धय बन्धय
दृष्टिं स्तम्भय स्तम्भय अङ्गानि धूनय धूनय पातय
पातय महीतले ह्रीं ॥ * ॥ अथ सौभाग्यम् ।
“पुष्योद्धृतं सितार्कस्य मूलं वामेतरे भुजे ।
बद्ध्वा सौभाग्यमाप्नोति दुर्भगापि न संशयः ॥
रक्तचितार्कमूलन्तु सोमग्रस्ते समुद्धृतं ।
क्षीद्रैः पिष्ट्वा वटीं कुर्य्यात् तिलकं शुभमङ्गना” ॥ * ॥
अथ ईश्वरादिक्रोधोपशमनं । ॐ शान्ते प्रशान्ते
सर्व्वक्रोधोपशमनि स्वाहा ।
अनेन मन्त्रेण त्रिःसप्तधा जपेन मुखं मार्जयेत् ।
ततः क्रोधोपशमनं भवति” ॥ * ॥
गजनिवारणम् ।
“श्वेतापराजितामूलं हस्तस्थं वारयेत् गजम् ।
करे सुदर्शनामूलबन्धनात् स्तम्भनं तथा” ।
ॐ अहो कुम्भकर्ण महाराक्षस निकषागर्भ-
सम्मतपरसैन्यस्तम्भन महाभय रणरुद्र आज्ञापय
स्वाहा । अष्टोत्तरसहस्रजपात् सिद्धिः ॥
“गृहीत्वा शुभनक्षत्रे अपामार्गस्य मूलकम् ।
लेपमात्रे शरीराणां सर्व्वशस्त्रनिवारणम् ॥
पुष्यार्के श्वेतगुञ्जाया मूलमुद्धृत्य धारयेत् ।
हस्ते काण्डभयं नास्ति संग्रामे च कदाचन” ॥ * ॥
गोमहिष्यादिस्तम्भनम् ।
“उष्ट्रस्यास्थि चतुर्दिक्षु निखनेत् भूतले ध्रुवम् ।
गां मेषीं महिषीं वाजीं स्तम्भयेत् करिणीमपि” ॥ * ॥
बुद्धिस्तम्भनम् ।
“भृङ्गराजमपामार्गं सिद्धार्थं सहदेविकाम् ।
ओलं वचाञ्च श्वेतार्कं ध्रुवमेषां समाहरेत् ॥
लौहपात्रे विनिक्षिप्य द्विदिनान्ते समुद्धरेत् ।
तिलकैः सर्व्वभूतानां बुद्धिस्तम्भकरं परम्” ॥
ॐ नमो भगवते विश्वामित्राय नमः सर्व्व-
मुखीभ्यां विश्वामित्र आगच्छ आगच्छ स्वाहा ।
उक्तयोगस्यायं मन्त्रः ॥ * ॥
चौरगतिस्तम्भननम् ।
ॐ ब्रह्मवेशिनि शिवे रक्ष रक्ष स्वाहा । अनेन
मन्त्रेण सप्तपाशान् गृहीत्वा त्रीणि कट्यां बद्ध्वा
अपरान् मुष्टिभ्यां धारयेत् । इति चौराणां गति-
स्तम्भनम् । * ॥ गर्भस्तम्भनम् ।
“ग्राह्यं कृष्णचतुर्दश्यां धूस्तूरस्य तु मूलकम् ।
कट्यां बद्ध्वा रमेत् कान्तां न गर्भं धारयेत् क्वचित् ॥
मुक्तेन लभते गर्भं पुरा नागार्ज्जुनोदितम् ।
“रसालजम्बूफलगर्भसारः
सकर्कटो माक्षिकसंयुतश्च ।
स्थितो मुखान्ते पुरुषस्य रात्रौ
करोति पुंसां मुखवासमिष्टम् ॥
चूर्णं मुराकेशरकुष्ठकानां
प्रातदिनान्ते परिलेढि या स्त्री ।
अप्यर्द्धमासेन मुखस्य वासः
कर्पूरतुल्यो भवति प्रकाशः” ॥ * ॥
केशकृष्णीकरणादि ।
“लोहकिट्टं जवापुष्पं पिष्ट्वा धात्रीफलं समम् ।
त्रिदिनं लेपयेत् शीर्षं त्रिमासं केशरञ्जनम्” ॥
इति कृष्णीकरणम् ॥ * ॥
केशशुक्लीकरणम् ।
“वज्राक्षीरेण सप्ताहं अन्वहं भावयेत्तिलम् ।
तत्तैललिप्ताः केशाः स्युः शुक्लाश्च नात्र संशयः ॥
इति कामरत्ने ४ उपदेशः ॥ * ॥ अथ वाजीकरणं
“अश्विन्यां वटवन्दाकं क्षीरैः पिष्ट्वा महाबलः ।
पुष्योद्धृतं पिबेन्मूलं श्वेतार्कस्य प्रयत्नतः ॥
स्वप्तरात्रन्तु गोक्षीरैर्वृद्धोऽपि तरुणायते” ।
“चूर्णं विदार्य्याः स्वरसेन तस्याः
विभावितं भास्कररश्मिजाले ।
मध्वाज्यसंमिश्रितमेव लीढे-
द्दशस्त्रियो गच्छति निर्विशङ्कः” ॥ * ॥
जन्मबन्ध्याचिकित्सा ।
“समूलपत्रां सर्पाक्षीं रविवारे समुद्धरेत् ।
एकवर्णगवां क्षीरैः कन्याहस्तेन पेषयेत् ॥
ऋतुकाले पिबेत् बन्ध्या पलार्द्धं तद्दिने दिने ।
क्षीरशाल्यन्नमुद्गञ्च लघ्वाहारं प्रदापयेत् ॥
एवं सप्तदिनं कुर्य्यात् बन्ध्या भवति गर्भिणी ।
उद्वेगं भयशोकञ्च दिवानिद्रां विवर्जयेत् ॥
न कर्म्म कारयेत् किञ्चित् वर्जयेत् सावगाहनम् ।

मूलं त्रिशूल्या वक्त्रस्थं गजवश्यकरं
भवेत्” ॥ * ॥
व्याघ्रनिवारणं ।
“मुखस्थं वृहतीमूलं हस्तस्थं
व्याघ्रभीतिजित्” ।
ह्रीं ह्रीं ह्रीं श्रीं श्रो श्रो स्वाहा ।
इत्यष्टाक्षरमन्त्रेण लोष्ट्रं पठित्वा क्षिपेत् ।
तदा मुखं न चालयति गन्तुमशक्यः ॥
“मूलं कृष्णचतुर्दश्यां ग्राहयेल्लाङ्गलीभवम् ।
हस्तस्थं व्याघ्रभीतादिभयहृत्
परिकीर्त्तितम्” ॥
इति इन्द्रजालतन्त्रे ३ उपदेशः ॥ * ॥
अथ स्तम्भनम् ।
“श्वेतगुञ्जोत्थितं मूलं मुखस्थं
दृष्टतुण्डजित्” ।
ॐ ह्रीँ रक्ष रक्ष चामुण्डे तुरु तुरु अमुकं मे
वशमानय वशमानय स्वाहा । अयं
चण्डामन्त्रः ।
उक्तयोगसिद्धिः ॥
“पुष्यार्के मधुवन्दाकं गृहीत्वा प्रक्षिपेद्बुधः ।
सभामध्ये च सर्व्वेषां मूखस्तम्भः
प्रजायते” ॥ * ॥
मेघस्तम्भनम् । इष्टकद्वयसंपुटमध्ये
मेघसंख्यक-
चतुरस्रं विलिख्य उद्याने स्थापयेत्तदा
मेधान्
स्तम्भयति । मन्त्रः । “मेघान् स्तम्भय
स्तम्भय” ॥ * ॥
नौकास्तम्भनम् ।
“भरण्यां क्षीरकाष्ठस्य कीलं पञ्चाङ्गुलं
क्षिपेत् ।
नौकामध्ये तदा नौकास्तम्भनं जायते
ध्रुवम्” ॥ * ॥
निद्रास्तम्भनम् ।
“मूलं वृहत्या मधुकं पिष्ढ्वा नस्यं समाचरेत्
।
निद्रास्तम्भनमेतद्धि मूलदेवेन भाषितम्” ॥
* ॥
शस्त्रस्तम्भनम् ।

तन्मूलचूर्णं योनिस्थं न गर्भं सम्भवेत्
क्वचित् ॥
सिद्धार्थमूलं शिरसि बद्ध्वा कान्तां रमेत्तु
थां ।
न गर्भं धारयेत् सा स्त्री मुक्तेन लभते पुनः”
॥ * ॥
शुक्रस्तम्भनम् ।
“नीलीमूलं श्मशानस्थं कट्यां बद्ध्वा तु
वीर्य्यधृक् ।
रक्तापामार्गमूलन्तु सोमवारे निमन्त्रयेत् ॥
भौमे प्रातः समुद्धृत्य कट्यां बद्ध्वा तु
वीर्य्यधृक्” ॥
इति कामरत्ने ३ उपदेशः ॥ * ॥ मोहनम् ।
“शृङ्गीवचानलदसर्जरसं समानं
कृत्वा त्रुटिं मलयजञ्च षडेकमिश्रम् ।
यो धूपयेन्निजगृहं वसनं शरीरं
तस्यापि दास इव मोहमुपैति लोकः” ॥
भृङ्गराजः केशराजो लज्जा च सहदेविका ।
एभिस्तु तिलकं कृत्वा त्रैलोक्यं मोहयेन्नरः”
॥
ॐ अं आं इं ईं उं ऊं ऋं ॠं हूं फट् ।
“अनेनैव तु मन्त्रेण कृत्वा ताम्बूलभावनम् ।
साध्यस्य मुखनिक्षिप्तेमोहमायाति
तत्क्षणात्” ॥
ॐ भीँ क्षीँ भाँ मोहय । इमं मन्त्रं वारत्रयं
जपेत् । मोहमाप्नोति मानवः ॥ * ॥
देहरञ्जनम् ।
“कदम्बपत्रं लोध्रञ्च अर्ज्जुनस्य च पुष्पकम्
।
पिष्ढ्वा गात्रोद्वर्त्तनाच्च कायदुर्गन्धनाशनम्
॥
एला-शटी-पत्रक-चन्दनानि
तोयाभयाशिग्रुघनामयानि ।
ससौरभोऽयं सुरराजयोगः
ख्यातः सुगन्धो नरमोहयोग्यः” ॥ * ॥
मुखरञ्जनम् ।

पतिसङ्गं चरेत् सा च नात्र कार्य्या विचारणा
॥
कृष्णापराजितामूलं छागीक्षीरेण संपिबेत् ।
ऋतुकाले समायाते भुक्त्वा गर्भधरा भवेत्
॥
गोक्षुरस्य तु वीजन्तु पिबेन्निर्गुण्डिकारसैः ।
त्रिरात्रं सप्तरात्रं वा बन्ध्या भवति गर्भिणी”
॥
इतीन्द्रजाले जन्मबन्ध्याचिकित्सा ॥ * ॥
अथ काकबन्ध्याचिकित्सा ।
“अश्वगन्धीयमूलन्तु ग्राहयेत् पुष्यभास्करे
।
पेषयेन्महिषीक्षीरैः पलार्द्धं भक्षयेत् सदा ॥
सप्ताहाल्लभते गर्भं काकबन्ध्या चिरायुषम्”
।
इतीन्द्रजाले काकबन्ध्याचिकित्सा ॥ * ॥
अथ मृतवत्साचिकित्सा ।
“प्राङ्मुखः कृत्तिकाऋक्षे बन्ध्या कर्कोटकीं
हरेत् ।
तत्कन्दं पेषयेत्तोयैः कर्षमात्रं सदा पिबेत् ॥
या वीजपूरद्रुममूलमेकं
क्षीरेण पक्वं प्रपिबेत् विमिश्रम् ।
ऋतौ निजं या तु पतिं प्रयाति
दीर्घायुषं सा तनयं प्रसूते ॥
मञ्जिष्ठा मधुकं कुष्ठं त्रिफला शर्करा बला ।
मेदा पयस्या काकोली मूलञ्चैवाश्वगन्धजम्
॥
अजमोदा हरिद्रे द्वे हिङ्गुः कटुकरोहिणी ।
उत्पलं कुमुदं द्राक्षा काकल्यौ तन्मूलद्वयम्
॥

| | | |
|---|---|---|
| “कपित्थस्य च वन्दाकं कृत्तिकायां समाहरेत् ।<br>“वक्त्रसंस्थन्तु देवस्य शस्त्रस्तम्भनकं परम् ॥ | | |

:एतेषां कर्षकैभर्गैर्घृतप्रस्थ विपाचयेत् ।

शतावरीरसं क्षीरं घृतस्येदं चतुर्गुणम् ॥
संपिबेन्नियतं नारी नित्यं स्त्रीषु च शस्यते ।
पुत्रान् जनयते नारी मेधाढ्यान् प्रियदर्शनान् ॥
या चैवास्थिरगर्भास्यात् या नारी जनयेत् मृतम् ।
अल्पायुषञ्च जनयेत् या च कन्याः प्रसूयते ॥
योनिदोषे रजोदोषे गर्भस्नावे च शस्यते ।
प्रजावर्द्धनमायुष्यं सर्व्वग्रहनिवारणम् ॥
नान्मा फलघृतं ह्येतदायुष्यं परिकीर्त्तितम् ।
नोक्तञ्च लक्ष्मणामूलं वदन्त्यत्र चिकित्सकाः ॥
जीववत्सा शुक्लवर्णा घृतमत्र तु दीयते ॥
अरण्यगोमयेनात्र वह्नेन्र्त्वला प्रदीयते" ।
अत्र पयस्या क्षीरयुक्तभूमिकुष्माण्डम् ।
उत्पलं ।
नीलं । इतीन्द्रजाले मृतत्रत्साचिकित्सा ॥ * ॥
अथ गर्भस्रावचिकित्सा । प्रथमे मासि ।
"गोक्षीरैः पेषयेत्तुल्यं पद्मवेशरचन्दनम् ।
पतने तं पिबेन्नारी महागर्भः स्थिरो भवेत् ॥
अथवा मधुकं दारु शरवृक्षस्य वीजकम् ।
संपिष्य क्षीरकाकोलीं पिबेत् क्षीरैश्च गोभवैः ॥ १ ॥
नीलोत्पलं मृणालञ्च षष्ठी कर्कटश्टङ्गिका ।
गोक्षीरश्च द्वितीये च पीत्वा शाम्यति वेदना ॥ २ ॥
श्रीखण्डं तगरं कुष्ठं मृणालं पद्मकेशरम् ।
पिबेत् शीतोदकैः पिष्ट्वा तृतीये वेदनावती ॥
अथवा क्षीरकाकीलीबलानन्तापयः पिबेत् ॥ ३ ॥
शीतोत्पलं मृणालानि गोक्षीरक-कशेरुकम् ।
तुर्य्यमासे गवां क्षीरं पिबेत् सा वेदनापरा ॥
अथवा मधुकं रास्ना श्यामा ब्राह्मणयष्टिका ।

अथवा मधुकं दारु शुद्धक्षीरेण संपिबेत् ॥ १० ॥
क्षौद्रं वृषं चन्दनसिन्धुजातं
महेन्द्रराजं पयसा सुपिष्टम् ।
गर्भं क्षरन्तं प्रतिहन्ति शीघ्रं
योगो विभुञ्जन् किल मूलदैवैः" ॥
इति इन्द्रजाले गर्भस्रावचिकित्सा ॥ * ॥
अथ गर्भशुष्कम् ।
"गोक्षीरं शर्करायुक्तं गर्भशुष्कप्रशान्तये ।
पिबेद्वा मधुकं चूर्णं गाम्भारीफलचूर्णकम् ॥
समांसं गव्यदुग्धेन गर्भिणी च प्रशान्तये" ॥ * ॥
अथ सुखप्रसवयोगः ।
"श्वेतं पुनर्णवामूलं चूर्णं योनौ प्रवेशयेत् ।
तत्क्षणात् प्रसूते नारी गर्भे सति प्रपीडिते ॥
वासकस्य तु मूलन्तु चोत्तरस्थं समुद्धरेत् ।
कट्यां बद्ध्वा सप्तसूत्रैः सुखं नारी प्रसूयते ॥
सहदेव्याश्च मूलं वा कटिस्थं प्रसवेत् सुखम् ।
अपामार्गस्य मूलन्तु ग्राहयेच्चतुरङ्गुलम् ॥
द्वारि प्रवेशयेत् योनौतत्क्षणात् सा प्रसूयते" ॥ * ॥
अथ स्तनवर्द्धनं स्तनोत्थापनञ्च ।
"तैलं वचादाडिमकल्कसिद्धं
सिद्धार्थजं लेपनतो नितान्तम् ।
नारीकुचौ चारुतरौ सुपीनौ
कुर्य्यादसौ योगवरः प्रदिष्टः ॥
श्रीपर्णिकाया रसवल्कसिद्धं
तिलोद्भवं तैलवरं प्रदिष्टम् ।
तुलेन वक्षोजयुगे प्रदेयं
प्रयाति वृद्धिं पतितोऽपि नार्य्याः ॥
प्रथमकुसुमकाले नस्ययोगेन पीतं
सनियमममरास्यं तण्डलाम्भो युवत्याः ।
कुचयुगलसुपीनं क्वापि नो याति पातं
कथित इति पुरैव चक्रदत्तेन योगः" ॥ * ॥
अथ योनिसंस्कारः ।
"प्रक्षालयेन्निम्बुकषायनीरैः

दातुं दुहितरं तस्मै रोचयामास तत्र वै ॥ १६ ॥
करेण तु करं तस्या ग्राहयित्वा मयस्तदा ।
प्रहसन् प्राह दैत्येन्द्रो राक्षसेन्द्रमिदं वचः ॥ १७ ॥
इयं ममात्मजा राजन् हेमयाप्सरसा धृता ।
कन्या मन्दोदरी नाम पत्न्यर्थं प्रतिगृह्यताम् ॥ १८ ॥
वाढमित्येव तं राम ! दशग्रीवोऽभ्यभाषत ।
प्रज्वाल्य तत्र चैवाग्निमकरोत् पाणिसङ्ग्रहम्" ॥ १९ ॥
"ततो मन्दोदरी पुत्रं मेघनादमजीजनत् ।
स एष इन्द्रजिन्नाम युष्माभिरभिधीयते ॥ २८ ॥
जातमात्रेण हि पुरा तेन रावणसूनुना ।
रुदता सुमहान् मुक्तो नादो जलधरोपमः ॥ २९ ॥
जडीकृता च सा लङ्का तस्य नादेन राघव ! ।
पिता तस्याकरोत् नाममेघनाद इति स्वयम्" ॥ ३० ॥
अस्य यथा इन्द्रजिदित्यभिधानं जातं तदपि उक्तं
तत्रैव ३५ सर्गे ।
"जिते महेन्द्रेऽतिबले रावणस्य सुतेन वै ।
प्रजापतिं पुरस्कृत्य ययुर्लङ्कां सुरास्तदा ॥ १ ॥
तत्र रावणमासाद्य पुत्त्रभ्रातृभिरावृतम् ।
अब्रवीद् गगने तिष्ठन् सामपूर्ब्बं प्रजापतिः ॥ २ ॥
वत्स रावण ! तुष्टोऽस्मि पुत्त्रस्य तव संयुगे ।
अहोऽस्य विक्रमौदार्य्यं तव तुल्योऽधिकोऽपि वा ॥ ३ ॥

अनन्ता पेषयित्वा तु गवां क्षीरैः समं पिबेत्
॥ ४ ॥
पुनर्णवा च काकोली तगरं नीलमुत्पलम् ।
गोक्षीरं पञ्चमे मासि गर्भक्लेशहरं भवेत् ॥
अथवा वृहतीयुग्मं यज्ञाङ्गं कट्फलं त्वचः ।
गोघृतं क्षीरसंयुक्तं पिबेत् पिष्ट्वा च पञ्चमे ॥
५ ॥
सिता काशाखुमज्जा च शीततोयेन पेषयेत्
।
षष्ठे मासि गवां क्षीरैः पिबेत् क्लेशं
निवर्त्तयेत् ॥
अथवा गोक्षुरं शिग्रुं मधुकं पृश्निपर्णिकाम् ।
बलायुक्ता पिबेत् पिष्ट्वा गोदुग्धैः षष्ठमाषके
॥ ६ ॥
काष्ठकं पौष्करं मूलं शृङ्गाटं नीलमुत्पलम् ।
पिष्ट्वा च सप्तमे मासि क्षीरैः पीत्वा
प्रशाम्यति ॥
अथवा मकरद्राक्षां शृङ्गाटञ्च सकेशरम् ।
मृणालं शर्करायक्तं क्षीरैः पेयन्तु सप्तमे ॥ ७
॥
यष्टी पठ्माक्षार्कमुस्तं केशरं गजपिप्पली ।
नीलोत्पलं गवां क्षीरैः पिबेदष्टममासके ॥
अथवा विल्वमूलञ्च कपित्थं वृहती शमी ।
इक्षुपाटलयोर्मूलं एभिः क्षीरं प्रसाधयेत् ।
तत्क्षीरमष्टमे पीत्वा गर्भे शाम्यति वेदना ॥
८ ॥
विशालावीजकक्कोलं मधुना सह लेपयेत् ।
वेदना नवमे मासि शान्तिमाप्नोति नान्यथा
॥
अथवा मधुकं श्यामा ह्यनन्ता क्षीरकाकली
।
एभिः सिद्धं पिबेत् क्षीरं नवमे वेदनावती ॥
९ ॥
शर्करा गोस्तनी द्राक्षा सक्षुद्रं नीलमुत्पलम् ।
पाययेत् दशमे मासि गवां क्षीरैः प्रशान्तये ॥
अथवा शुद्धसंसिद्धं गोक्षीरं दशमे पिबेत् ।

स्विन्नाज्यकृष्णागुरुगुग्गुलानां ।
धूपेन योनिं निशि धूपयित्वा
नारी प्रमीदं विदधातु भर्त्तुः” ॥ * ॥
अथ लोमशातनम् ।
“पलाशभस्मान्विततालचूर्णै-
रम्भाम्बुमिश्रैः परिलिप्य भूयः ।
कन्दर्पगेहे मृगलोचनानां
रोमाणि रोहन्ति कदापि नैव” ॥
इति इन्द्रजालतन्त्रसंग्रहः ॥ युद्धे
क्षुद्रोपायविशेषः ।
इति हेमचन्द्रः ॥

**इन्द्रजालिकः**, त्रि, (इन्द्रजालं करोति इन्द्रजालेन
दीव्यतीति वा । इन्द्रजाल + ठक् ।)
कुहककारी ।
इति जटाधरः ॥ वाजीकर इति भाषा ।

**इन्द्रजित्**, पुं, (इन्द्रंजितवान् इति । इन्द्र + जि +
क्विप् ।) रावणपुत्रः । तत्पर्य्यायः । मेघनादः
२
मन्दोदरीसुतः ३ । इति जटाधरः ॥
(अस्य जन्मविवरणं यथा, रामायणे ७ । १२
। सर्गे,
“एवमुक्तस्तदा राम ! राक्षसेन्द्रेण दानवः ।
महषेर्स्तनयं ज्ञात्वा मयो दानवपुङ्गवः ॥
जितं हि भवता सर्व्वं त्रैलोक्यं स्वेन
तेजसा ।
कृता प्रतिज्ञा सफला प्रीतोऽस्मि
ससुतस्य ते ॥ ४ ॥
अयञ्च पुत्त्रोऽतिबलस्तव रावण
वीर्य्यवान् ।
जगतीन्द्रजिदित्येव परिख्यातो भविष्यति
॥ ५ ॥
बलवान् दुर्जयश्चैव भविष्यत्येव राक्षसः ।
यं समाश्रित्य ते राजन् स्थापितास्त्रिदशा
वशे” ॥ ६ ॥
महावीरो लक्षणस्तु विभीषणेन
वानरादिभिश्च-
सह निकुम्भिलां गला
तत्रस्थमेनमिन्द्रजितं
व्यापादयामास इति तत्रैव लङ्काकाण्डे ५
सर्ग-
मारभ्य ७ सर्गेषु उक्तम् ॥
स्वनामख्यातो दानवः । यथा हरिवंशे ।
३ । ८३ ।
“इन्द्रजित् सत्यजिच्चैव वज्रनामस्तथैव
च ।
महानाभश्च विक्रान्तः कालनाभस्तथैव
च” ॥)

**इन्द्रजिद्विजयी**, [न्] पुं, (इन्द्रजितः रावणपुत्त्रस्य
।
विजयी इति । इन्द्रजित् + वि + जि +
णिनि ।)
लक्ष्मणः । इति शब्दरत्नावली ॥ (अस्य
विवरणन्तु
रामायणे । ६ । ९१ सर्गे उक्तम् । यथा, -
-
“इत्युक्ता बाणमाकर्णं विकृष्य
तमजिह्मगम् ।
लक्ष्मणः समरे वीरः ससर्जेन्द्रजितं प्रति
॥ ७२ ॥
ऐन्द्रास्त्रेण समायोज्य लक्ष्मणः परवीरहा
।

| | | तच्छिरः सशिरस्त्राणं श्रीमत् ज्वलितकुण्डलम् । प्रमथ्येन्द्रजितः कायात् पातयामास भूतले" । ६३ ।)<br>**इन्द्रतूलं**, क्ली, (इन्द्रस्य तूलं । आकाशे उड्डीयमान- त्वात् ।) आकाशपतितसूत्रम् । आकाशवुडिर सुता इति भाषा । तत्पर्य्यायः । वृद्धसूत्रकम् २ ग्रीष्महासम् ३ वंशकफम् ४ वाततूलम् ५ मरु- द्ध्वजम् ६ । इति हारावली ॥<br>**इन्द्रतूलकं**, क्ली, (इन्द्रतूलमेव । इन्द्रतूल + स्वार्थेकन् ।) इन्द्रतूलं । इति त्रिकाण्डशेषः ॥ |
|---|---|---|

**इन्द्रदारुः**, पुं, (इन्द्रस्य दारुः ।) देवदारुवृक्षः । इति

भावप्रकाशः ॥ (अस्य पर्य्यायः ।

"देवदारु स्मृतं दारुभद्रं दार्व्वीन्द्रदारु च ।

मस्तदारुद्रुकिलिमं कृत्रिमं सुरभूरुहः" ॥)

**इन्द्रद्रुः**, पुं, (इन्द्रस्य द्रुर्वृक्षः ।) अर्ज्जुनवृक्षः । इत्य-

मरः ॥ कुटजवृक्षः । इति राजनिर्घण्टः ॥

**इन्द्रद्रुमः**, पुं, (इन्द्रस्य द्रुमो वृक्षः ।) अर्ज्जुनवृक्षः ।

इति शब्दरत्नावली ॥

**इन्द्रनीलः**, पुं, (इन्द्रवत् नीलः ।) मरकतमणिः ।

इति हेमचन्द्रः ॥ पान्ना इति भाषा । (अस्य

परीक्षा यथा, चिन्तामणिधृतवचनम् ।

"क्षीरमध्ये क्षिपेत् नीरं क्षीरञ्चेत् नीलतां व्रजेत् ।

इन्द्रनीलमितिख्यातं तदाहि रत्नकोविदैः" ॥

"क्वचित् प्रभालेपिभिरिन्द्रनीलै-

र्मुक्तामयी यष्टिरिवानुविद्धा" ॥

इति रघुवंशे । १३ । ५४ । यथा, भावप्रकाशः ॥

अथ इन्द्रनीलगोमेदयोर्नामानि ।

"नीलन्तथेन्द्रनीलञ्च गोमेदः पीतरत्नकम्" ।)

**इन्द्रनीलकः**, पुं, (इन्द्रनील + स्वार्थे कन् ।) मरकत-

मणिः । इति शब्दरत्नावली ॥

**इन्द्रपुष्पा**, स्त्री, (इन्द्रनीलवत् पुष्पं यस्याः ।) लाङ्ग-

लिकीवृक्षः । इति रत्नमाला ॥

विषलाङ्गला इति

ख्याता । (लाङ्गलिकीशब्देऽस्या विवरणं ज्ञेयं ।)

इति धन्वन्तरिः प्राह ।

"ऐन्द्रं यवं त्रिदोषघ्नं संग्राहि कटु शीतलम् ।

ज्वरातीसाररक्तार्शःकृमिविसर्पकुष्ठनुत् ॥

दीपनं गुदकीलास्रवातास्नश्लेष्मशूलजित्" ।

इति भावप्रकाशः ॥ (यथा, वैद्यकद्रव्यगुणः ।

"तद्बोजं ज्वरजित्तिक्तं रक्तपित्तातिसारजित्" ।)

**इन्द्रलुप्तं**, क्ली, (इन्द्राणां इन्द्रनीलवर्णकेशानां लुप्तं

लोपो यस्मात् ।) केशरोगविशेषः । टाक इति

भाषा । तस्य लक्षणम् ।

"रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम् ।

प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः ॥

रुणद्धि रोमकूपांस्तु ततोऽन्येषामसम्भवः ।

तदिन्द्रलुप्तं खालत्यं रुज्येति च विभाव्यते" ॥

इति निदानम् ॥ खालत्यं रुज्येति च तस्य पर्य्याय-

कथनम् । तथाच भोजः ।

"तदिन्द्रलुप्तमित्याहुः खल्लीं रुज्याञ्च केचन" ।

कार्त्तिकस्त्वाह । "इन्द्रलूप्तं श्मश्रुणि भवति खालत्यं

शिरोरुहेष्वेव रुज्या सवेदनेति आगमस्तत्र नास्ति" ॥

इति तट्टीका ॥ अथेन्द्रलुप्तस्य चिकित्सा ।

"तिक्तपटोलीपत्रस्वरसैर्घृष्टा शमं याति ।

चिरकालजापि रुज्या नियतं दिवसत्रयेणैव ॥

गोक्षुरस्तिलपुष्पाणि तुल्यञ्च मधुसर्पिषः ।

शिरः प्रलेपितं तेन केशैः समुपचीयते ॥

हस्तिदन्तमसीं कृत्वा छागीदुग्धरसाञ्जनः ।

लोमान्यनेन जायन्ते लेपात् पाणितलेष्वपि ॥

यष्टीन्दीवरमृद्वीकातैलाज्यक्षीरलेपनैः ।

इन्द्रलुप्तं शमं याति केशा स्युश्च घना दृढाः ॥

जातीकरञ्जवरुणकरवीराग्निपाचितम् ।

तैलमभ्यञ्जनाद्धन्ति इन्द्रलुप्तं न संशयः ॥

पैत्तिकानि च लिङ्गानि दृष्ट्वा दुग्धेन धावनम् ॥

शीतलानि प्रदेयानि पैत्तिकेन विधीयते" ॥

"धुस्तूरपत्राणि च मागधीनां

निशा विशालागृहधूमकुष्ठम् ।

घृतेन युक्तञ्च जलेन पिष्टं

शिरःप्रलेपे क्षतवारणं स्यात् ॥

पित्ते कृते दोषयुते च रोगे

पटोलपत्रं पिचुमर्द्दकं वा ।

तथामलक्या फलमेव पिष्ट्वा

घृतेन खण्डेन प्रलेपनञ्च ॥

निवार्य्यते मस्तकजं क्षतञ्च

शिरोर्त्तिसङ्घान् विनिहन्ति चैतत् ।

गजेन्द्रदन्तस्य मसीं गृहीत्वा

प्रलेपनं वा नवनीतकेन ॥

तिलार्कभल्लातकदग्धमाष-

क्षारस्य लेपो नबनीतकेन ।

सर्पस्य क्षारस्य तथा प्रयोगः

खल्लाटके केशचयं करोति" ॥

इति हारीतः ॥

"तेजोऽनिलाद्यैः सहकेशभूमिम्

दग्ध्वाशु कुर्य्यात् खलतिन्नरस्य" ॥ * ॥

चिकित्सा यथा चरके ।

"खालत्ये पलिते वल्यां हरिल्लोम्नि च शोधितम् ।

नस्यैस्तैलैः शिरोवक्तप्रलेपैश्चाप्युपाचरेत् ॥

सिद्धं विदारीगन्धाद्यैर्जीवनीयैरथापि च ।

नस्यं स्यादणुतैलं वा खालत्यपलितापहम्" ॥)

**इन्द्रलुप्तः**, पुं, (इन्द्राणां इन्द्रनीलवत् केशानां लुप्तं

नाशो यस्मात् ।) केशनाशकरोगः ।

तत्पर्य्यायः ।

इन्द्रलुप्तकः २ केशघ्नः ३ । इति राजनिर्घण्टः ॥

**इन्द्रलुप्तकं**, क्ली, (इन्द्रलुप्त + स्वार्थे कन् ।) इन्द्रलुप्त-

**इन्द्रपुष्पिका**, स्त्री, (इन्द्रपुष्पैव । कन् ।) कलिकारी ।

इति राजनिर्घण्टः ॥ विषलाङ्गला इति भाषा ।

**इन्द्रप्रस्थं**, क्ली, (इन्द्रस्य इन्द्रकीलस्य प्रस्थम् इव ।)

राजयुधिष्ठिरनिर्म्मितनगरम् । अधुना दिल्ली
इति ख्यातम् । (यथा, महाभारते १ । २०८ । २८ ।
"ततः पुण्ये शिवे देशे शान्तिं कृत्वा महारथाः ।
नगरं यापयामासुर्द्वैपायनपुरोगमाः ॥
सागरप्रतिरूपाभिः परिखाभिरलङ्कृतं" ॥
"तत्त्रिपिष्टपसङ्काशं इन्द्रप्रस्थं व्यरोचत ।
मेघवृन्दमिवाकाशे विद्धं विद्युत्समावृतम्" ॥)

**इन्द्रप्रहरणं**, क्ली, (इन्द्रस्य प्रहरणम् ।) इन्द्रस्यास्त्रम् ।

वज्रम् । इति हलायुधः ॥

**इन्द्रभेषजं**, क्ली, (इन्द्रं महत् भेषजम् ।) शुण्ठी ।

इति शब्दरत्नावली ॥

**इन्द्रमहकामुकः**, पुं, (इन्द्रमहं कामयते इति ।

इन्द्रमह + काम + उकञ् ।) कुक्कुरः । इति त्रि-
काण्डशेषः ॥

**इन्द्रयवः**, पुं, क्ली, (इन्द्रस्य इन्द्रवृक्षस्य यवः यवाकार-

वीजत्वात् तथात्वम् ।)
स्वनामख्याततिक्तवीजविशेषः ।
तत्पर्य्यायः । कलिङ्गम् २ भद्रयवम् ३ ।
इत्यमरः ॥
शक्राह्वः ४ शक्रवीजम् ५ वत्सकः ६ वत्सकवीजम् ७
भद्रजः ८ कुटजः ९ कुटजवीजम् १० कलिङ्गवीजम्

स्नुहीपयः पयोऽर्कस्य लाङ्गलीमार्कवो विषम् ।
अजामूत्रं सगोमूत्रं रत्तिका सेन्द्रवारुणी ॥
सिद्धार्थकस्तीक्ष्णगन्धा सम्यगेभिर्विपाचितम् ।
तैलं भवति नियमात् खालित्यव्याधिनाशनम् ॥
स्नुहीदुग्धादितैलम्" । इति भावप्रकाशः ॥
("केशघ्नस्य चिकित्सान्तु श्टणु हारीत ! साम्प्रतम् ।
रूक्षं सपाण्डुरं वातात् पित्ताद्रक्तं सदाहकम् ॥
कफान्वितं भवेत् स्निग्धं रक्तात्पाकं व्रजन्ति तत् ।
सन्निपातेन सदृशं जायते सर्व्वलक्षणम्" ॥
अस्य चिकित्सा यथा ॥ * ॥
"गुडेन सुरसा शुण्ठी मातुलुङ्गरसेन तु ।
केशघ्ने वातसम्भूते धावनञ्च प्रशस्यते ॥ १ ॥
त्रिफलाञ्च वचां शुण्ठीं गुडेनापि प्रपेषितम् ।
धावनं कफसम्भूते चेन्द्रलुप्ते प्रशस्यते ॥ २ ॥
पैत्तिके च हितं दुग्धं नवनीतान्वितन्तथा ।
सिताशिवाफलं यष्टी पैत्तिके धावनं मतम् ॥ ३ ॥
भृङ्गराजरसं ग्राह्यं शृङ्गवेररसन्तथा ।
सौवीरकरसेनापि तिलान् पिष्ट्वा प्रलेपनम् ॥
पश्चात् कार्य्यं पूरुषेण स्नानमुष्णेन वारिणा ।
धवार्ज्जुनकदम्बस्य शिरीषमपि रोहितम् ॥
क्वाथमेषां शिरोदद्रून् शमयेदिन्द्रलुप्तकभ् ।
कुरुवकस्य पुष्पेण जपायाः कुसुमेन च ॥
घृष्टस्य चेन्द्रलप्तस्य कृतमेव निवारणम् ।

रोगः । इति भूरिप्रयोगो जटाधरहेमचन्द्रौ च ॥

**इन्द्रवारुणिका**, स्त्री, (इन्द्रवारुणी + कन् + टाप् ।)

इन्द्रवारुणीलता । इति शब्दचन्द्रिका ॥

**इन्द्रवारुणी**, स्त्री, (इन्द्रं वारयति । इन्द्र + वृ +

णिच् + उन् । ङीप्) लताविशेषः । राखाल ससा
इति भाषा ॥ तत्पर्य्यायः । विशाला २ । इत्यमरः ॥
ऐन्द्री ३ चित्रा ४ गवाक्षी ५ गजचिर्भटा ६
मृगेर्व्वारु ७ पिटङ्कीकी ८ मृगादनी ९ । इति
रत्नमाला ॥ इन्द्रा १० अरुणा ११ गवादनी १२
क्षुद्रसहा १३ इन्द्रचिर्भिटी १४ सूर्य्या १५ विषघ्नी
१६ गणकर्णिका १७ अमरा १८ माता १९ सुकर्णी
२० सुफला २१ तारका २२ वृषभाक्षी २३ पीत-
पुष्पा २४ इन्द्रवल्लरी २५ हेमपुष्पी २६ क्षुद्रफला
२७ वारुणी २८ बालकप्रिया २९ रक्तैर्व्वारुः ३०
विषलता ३१ शक्रवल्ली ३२ विषापहा ३३ अमृता
३४ विषवल्ली ३५ । चित्रफला ३६ । इति जटा-
धरः ॥ अपि च ।
"ऐन्द्रीन्द्रवारुणी चित्रा गवाक्षी च गवादनी ।
वारुणी च पराप्युक्ता सा विशाला महाफला ॥
श्वेतपुष्पा मृगाक्षी च मृगैर्वारुर्मृगादनी ।
गवादनीद्वयं तिक्तं पाके कटुरसं लघु ॥
वीर्य्योष्णं कामलापित्तकफप्लीहोदरापहम् ।

| | | |
|---|---|---|
| ११ । अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । शीतत्वम् । कफवातरक्तपित्तहरत्वम् । दाहातिसारशमनत्वम् । ज्वरदोषशूलमूलनाशित्वञ्च । इति राजनिर्घण्टः ॥ कुडचिर विचि इति भाषा । यथा, -- "उक्तं कुटजवीजन्तु यवमिन्द्रयवं तथा । कलिङ्गञ्चापि कालिङ्गं तथा भद्रयवं स्मृतम्" ॥ इति क्लीवे अमरः प्राह । "क्वचिदिन्द्रस्य नामैव भवेत्तदभिधायकम् । फलानीन्द्रयवास्तस्य तथा भद्रयवा अपि" ॥ | | |

:श्वासकाशापहं कुष्ठगुल्मग्रन्थिव्रणप्रणुत् ॥

प्रमेहमूढगर्भामिगण्डामयविषापहम्” ।
इति भावप्रकाशः ॥ अस्या गुणाः ।
तिक्तत्वम् । कटु-
त्वम् । शीतत्वम् । रेचनत्वम् ।
गुल्मपित्तोदरश्लेष्म-
कृमिकुष्ठज्वरापहत्वञ्च ॥ इति राजनिर्घण्टः
॥

**इन्द्रवृद्धा**, स्त्री, (इन्द्रेण इन्द्रियजनितदोषेण वृद्धा ।

यद्वा इन्द्रः श्रेष्ठोऽपि वृद्धः कृशो भवति
यस्याः ।)
व्रणरोगविशेषः । तस्य लक्षणम् ।
“पद्मकर्णिकवन्मध्ये पिडकाभिः
समाचिताम् ।
इन्द्रवृद्धान्तु तां विद्याद्वातपित्तोत्थितां
भिषक्” ॥
इति निदानम् ॥ तस्याश्चिकित्सा ।
विवृत्तामृन्द्रवृद्धाञ्च गर्द्दभीं जालगर्द्दभम् ।
पैत्तिकस्य विसर्पस्य क्रियया साधयेत्
भिषक् ।
पाके तु शोषयेदाज्यपक्वैर्मधुरभेषजैः” ॥
इति भाबप्रकाशः ॥
(“या पद्मकर्णिकाकारा पिटिका
पिटिकान्विता ।
साविद्धा वातपित्ताभ्यां ताभ्यामेव च
गर्द्दभी” ॥)

**इन्द्रवृक्षः**, पुं, (इन्द्रस्य वृक्षः ।) देवदारु । इति

जटाधरः ॥ (देवदारुशब्देऽस्य गुणादयो
ज्ञातव्याः ॥)

**इन्द्रसावर्णिः**, पुं, चतुर्द्दशमनुः । अस्मिन् मन्वन्तरे

वृहद्भानुरवतारः । शुचिरिन्द्रः ।
पवित्रचाक्षुषा-
दयो देवाः । अग्निबाहुशुचिशुद्धमागधाद्याः
सप्त-
र्षयः । उरुगम्भीरब्रध्नाद्या मनुपुत्रा
भविष्यन्ति ॥

**इन्द्राग्निधूमः**, पुं, (इन्द्राग्नेर्मेघवह्नेर्धूम इव ।) हिमं ।

इति हारावली ॥

**इन्द्राणिका**, स्त्री, (इन्द्राणी + कन् ।) इन्द्रसुरिस-

वृक्षः । इत्यमरः ॥

**इन्द्राणी**, स्त्री, (इन्द्रस्य ऐश्वर्य्यशालिनः सुरराजस्य

वा पत्नी । इन्द्र + इन्द्रवरुणेति ङीष्
आनुक् च ।)
दुर्गा । यथा, --
“ऐश्वर्य्यं परमं यस्या वशे चैव
सुरासुराः ।
इदि परमैश्वर्य्ये च इन्द्राणी तेन सा
शिवा” ॥
इति देवीपुराणे ४५ अध्यायः ॥ * ॥
इन्द्रभार्य्या ।
तत्पर्य्यायः । पुलोमजा २ शची ३ ।
इत्यमरः ॥
पौलीमी ४ । इति मेदिनी ॥ पूतक्रतायी
५ ।
इति जटाधरः ॥ माहेन्द्री ६
जयवाहिनी ७ ऐन्द्री
८ शतावरी ९ । इति शब्दरत्नावली ॥
(“यथेन्द्राणी महेन्द्रस्य
लक्ष्मीर्लक्ष्मीपतेर्यथा” ॥
इति भविष्यपुराणे
षट्पञ्चमीव्रतकथायाम् । इन्द्र-
शक्तिः । यथा ऋग्वेदे १ । २२ । १२ ।
“इहेन्द्राणी
मुपह्वये वरुणानीं” । “इन्द्राणीं इन्द्रस्य
सूर्य्यस्य
वायोर्वाशक्तिम्” । इति
दयानन्दस्वरस्वतीकृत-
भाष्यम् ।) इन्द्रसुरिसवृक्षः । स्त्रीणां
करणं ।

कर्म्मेन्द्रियाणि पञ्च यथा । वाक् १ पाणिः २
पादः
३ पायुः ४ उपस्थः ५ । अन्तरिन्द्रियाणि
चत्वारि ।
मनः १ बुद्धिः २ अहङ्कारः ३ चित्तं ४ ॥
मनस्तावदि-
न्द्रियाणां नियामकम् । चतुर्द्दश देवाः चतुर्द्दशे-
न्द्रियनियन्तारः । तत्र श्रोत्रस्य देवता दिक् ।
त्वचो वातः । चक्षुषः सूर्य्यः । रसनायाः
प्रचेताः
घ्राणस्याश्विनौ । वाचो वह्निः । हस्तस्य इन्द्रः
।
पादस्य विष्णुः । पायोर्म्मित्रः । उपस्थस्य
प्रजापतिः ।
मनसश्चन्द्रः । बुद्धेश्चतुर्मुखः । अहङ्कारस्य
शङ्करः ।
चित्तस्याच्युतः । इति वेदान्तः ॥ न्यायमते ।
पृथिव्या इन्द्रियं घ्राणं । जलस्य जिह्वा ।
तेजस-
श्चक्षुः । वायोस्त्वक् । आकाशस्य कर्णः ।
(अथ बुद्धेर्ब्रह्मा । अहङ्कारस्येश्वरः ।
मनसश्चन्द्रमाः ।
दिशः श्रोत्रस्य । त्वचो वायुः । सूर्य्यश्चक्षुषोः ।
रसनस्यापः । पृथिवी घ्राणस्य । वचसोऽग्निः ।
हस्तयोरिन्द्रः । पादयोर्विष्णुः । पायोर्म्मित्रं ।
प्रजापतिरुपस्थस्येति । इति सुश्रुतः ॥)
(यथा,
मनुः । २ । ८८ । “इन्द्रियाणां विचरतां विषये-
ष्वपहारिषु” ।
विज्ञानम् । यथा, ऋग्वेदे १ । १११ । २ ।
“यथा क्षयाम सर्व्ववीरया विशातन्तः शर्द्धाय
धासथास्विन्द्रियम्” । “इन्द्रियं विज्ञानम्” इति
दयानन्दभाष्यम् ।) शुक्रम् । वीर्य्यम् । इत्यमरः
॥

**इन्द्रियस्वापः**, पुं, (इन्द्रियस्य स्वापः सम्यक् निरोधः ।)

प्रलयः । इति राजनिर्घण्टः ॥

इति श्रीभागवतम् ॥ (अयं हि भौत्यनाम्ना च-
आख्यातः । यथा, विष्णुपुराणे ३ । २ ।
"भौत्यश्चतुर्दशश्चात्र मैत्रेय भविता मनुः ।
शुचिरिन्द्रः सुरगणास्तत्र पञ्च शृणुष्व तान् । ४० ।
चाक्षुषाश्च पवित्राश्च कनिष्ठा भ्राजिरस्तथा ।
वयोवृद्धाश्च वै देवाः सप्तर्षीनपि मे शृणु । ४१ ।
अग्निबाहुः शुचिः शुक्रो मागधोऽग्नीध्र एव च ।
युक्तस्तथाजितश्चान्यो मनुपुत्रानतः शृणु । ४२ ।
उरुगम्भीरब्रध्नाद्या मनोस्तस्य सुता नृपाः" । ४३ ।
मार्कण्डेयपुंराणेऽपि १०० अध्याये उक्तरूपेण
वर्णितम् । अधुना तु सप्तममन्वन्तरस्याष्टाविंशति-
तमं यगं ।)

**इन्द्रसुतः**, पुं, (इन्द्रस्य सुतः ।) बालिनामवानरराजः ।
इति हेमचन्द्रः ॥ अर्ज्जुनवृक्षः । इति राज-
निर्घण्टः ॥ जयन्तः । अर्ज्जुनः ॥

**इन्द्रसुरसः**, पुं, (इन्द्रः इन्द्रवृक्ष इव सुरसः सुपथ्य-
रसः ।) सिन्दुवारवृक्षः । इत्यमरः ॥ निसिन्दा
इति ख्यातः । (सिन्दुवारशब्दे निगुर्ण्डीशब्दे च
अस्य गुणादयो ज्ञेयाः ॥)

**इन्द्रसुरिसः**, पुं, वृक्षविशेषः । निसिन्दा इति भाषा ।
तत्पर्य्यायः । इन्द्राणी २ निर्गुण्डी ३ सुरसा ४ ।
इति रत्नमाला ॥ इन्द्रसुरसः ५ सिन्दुवारः ६
इन्द्राणिका ७ । इत्यमरः ॥ विसुन्धकः ८ सिन्धकं
इति मेदिनी ॥ नीलसिन्दुवारवृक्षः । स्थूलैला ।
सूक्ष्मैला । इति राजनिर्घण्टः ॥ अष्टमातृकान्त-
र्गतमातृकाविशेषः ॥ इति स्मृतिः ॥

**इन्द्रानुजः**, पुं, (अनु पश्चात् जायते इति अनुजः क-
निष्ठः । इन्द्रस्यानुजः । विष्णुः खलु कश्यपात् अदितौ
वामनरूपेण इन्द्रस्य पश्चात् जातः ।) विष्णुः ।
इति हेमचन्द्रः ॥ (विवृतिर्वामनशब्दे द्रष्टव्या ।)

**इन्द्रायुधं**, क्ली, (इन्द्रस्यायुधमिव चापाकृतिंत्वात् ।)
इन्द्रधनुः । इत्यमरः ॥ रामधनुक गण्डी इत्यादि
भाषा । ("स नादं मेघनादस्य धनुश्चेन्द्रायुधप्रभम्" ।
इति रघुवंशे । १२ । ७९ । तथा, मनुः । ४ । ५९ ।
"न दिवीन्द्रायुधं दृष्ट्वा कस्यचिद्दर्शयेद्बुधः" ।)

**इन्द्रारिः**, पुं, (इन्द्रस्य अरिः शत्रुः ।) असुरः ।
इत्यमरः ॥

**इन्द्रावरजः**, पुं, (इन्द्रस्य अवरजः वामनरूपेण
अनुजः ।) विष्णुः । इत्यमरः ॥

**इन्द्राशनः**, पुं, (इन्द्रस्य अशनः खाद्यद्रव्यम् ।) संविदा-
वृक्षः । इति शब्दमाला ॥ सिद्धि इति भाषा ।
गुञ्जा । इति हारावली ॥ कुच इति भाषा ।
("इन्द्राणिकेन्द्राशनकञ्च" । "तथाचेन्द्राशनोत्कटैः" ।

**इन्द्रियायतनं**, क्ली, (इन्द्रियाणां आयतनमाश्रय-
स्थानम् ।) शरीरम् । इति हेमचन्द्रः ॥

**इन्द्रियार्थः**, पुं, (इन्द्रियाणामर्थः ।) इन्द्रियजन्यज्ञान-
विषयः । यथा । रूपं । शब्दः । गन्धः । रसः ।
स्पर्शः । तत्पर्य्यायः । विषयः २ गोचरः ३ । इत्य-
मरः ॥ (यथा, मनुः । ४ । १६ ।
"इन्द्रियार्थेषु सर्व्वेषु न प्रसज्जेत कामतः" ।
"अपि स्वदेहात् किमुतेन्द्रियार्थात्
यशोधनानां हि यशो गरीयः" ।
इति रघुः । १४ । ३५ ।)

**इन्द्रेज्यः**, पुं, (इन्द्रस्य इज्यः ।) वृहस्पतिः । इति
शब्दरत्नावली ॥

**इन्ध** ई ध ङ ञि द्युतौ । इति कविकल्पद्रुमः ॥
(रुधां-आत्मं-अकं-सेट् ।) ह्रस्वादिः । ई ञि इन्धो-
ऽस्ति । ङ ध इन्धे । इति दुर्गादासः ॥

**इन्धनं**, क्ली, (इन्धे दीप्यतेऽग्निरनेन । इन्ध + करणं
+ ल्युट् ।) अग्निसन्दीपनतृणकाष्ठादि । जालानी
काठ इति भाषा । तत्पर्य्यायः । इध्मम् २ एधः ३
समित् ४ एधम् ५ । इत्यमरः ॥ समिन्धनम् ६ ।
इति शब्दरत्नावली ॥ (यथा, मनुः । ७ । ११८ ।
"अन्नपानेन्धनादीनि ग्रामिकस्तान्यवाप्नुयात्" ।)

**इन्वकाः**, स्त्री, इल्वलाः । मृगशिरोनक्षत्रोपरि-
स्थितपञ्चताराः । इत्यमरटीकायां स्वामी ॥

**इभः**, पुं, स्त्री, (एति गच्छतीति । इण भन् । औ-
णादिकोऽयं प्रत्ययः ।) हस्ती ।
("खराश्वोष्ट्रमृगेमानामजाविकबधन्तथा" ।
इति मनुः । ११ । ६८ । यथा, उत्तरचरिते ।

९ सुरसः १० सिन्धुवारितः ११

इन्द्रालिका १२

सिन्धुवारकः १३ । इति शब्दरत्नावली ॥

(इन्द्राणी-

शब्देऽस्य विशेषो ज्ञेयः ।)

**इन्द्रा**, स्त्री, (इदि + रन् ।) फणिज्झकवृक्षः । इति

मेदिनी ॥ काँटा जामीर इति भाषा ।

इन्द्रपत्नी ।

शची । इति शब्दरत्नावली ॥

"ग्रीष्मसुन्दरमण्डूकी

जयन्तीन्द्राशनस्य च" ॥

इति वैद्यकरसेन्द्रसारसंग्रहः ॥)

**इन्द्रियं**, क्ली, (इन्द्रस्यात्मनोलिङ्गमनुमापकम् । इन्द्रेण

ईश्वरेण सृष्टं । इन्द्रे णात्मना मम

चक्षुर्मम श्रोत्र-

मित्यादि क्रमेण ज्ञातं । इन्द्रेण जुष्टं वा

इत्याद्यर्थेषु

इन्द्रशब्दात् निपातनात् घच् ।)

ज्ञानकर्म्म-

साधनम् । तत्पर्य्यायः । हृषीकम् २

विषयि ३ ।

इत्यमरः ॥ अक्षम् ४ करणम् ५ ग्रहणम्

६ । इति

राजनिर्घण्टः ॥ तत्र तु ज्ञानेन्द्रियाणि

पञ्च । यथा ।

कर्णः १ त्वक् २ चक्षुः ३ जिह्वा ४

नासिका ५

:“इभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः” ।)

उत्तरपदे श्रेष्ठवाचकः । इत्यमरः ॥

**इभकणा**, स्त्री, (इभो हस्तीव कणा ।) गजपिप्पली ।

इति रत्नमाला ॥ (“कर्पूरं जातिकोषं सजल-
मिभकणा तेजपत्रं लवङ्गम्” । इति वैद्यकरसे-
न्द्रसारसंग्रहः ।)

**इभदन्ता**, स्त्री (इभस्य दन्त इव । इभदन्त + टाप् ।)

नागदन्तीवृक्षः । इति रत्नमाला ॥ (नागदन्ती-
शब्देऽस्या गुणादयो ज्ञेयाः ।)

**इभनिमीलिका**, स्त्री, (इभस्य हस्तिन इव निमी

लिका ।) वैदग्धी । भङ्गिः । इति त्रिकाण्डशेषः ॥

**इभपालकः**, पुं, (इभानां पालकः ।) हस्तिपकः ।

इति हेमचन्द्रः ॥ माहुत् इति भाषा ।

**इभमाचलः**, पुं, (इभमाचालयति । इभ + आङ् +

चल + णिच् + बाहुलकात् ख ।) सिंहः । इति
भूरिप्रयोगः ॥

**इभषा**, स्त्री, (इभ + षा + क + टाप् ।) स्वर्णक्षीरीवृक्षः ।

इति रत्नमाला ॥

**इभाख्यः**, पुं, (इभस्य आख्या यस्मिन् ।) नागकेशर-

वृक्षः । इति त्रिकाण्डशेषः ॥

**इभोषणा**, स्त्री, इभकणा । गजपिप्पली । इति शब्द-

चन्द्रिका ॥ (गजपिप्पलीशब्देऽस्या
विवरणम् ज्ञेयम् ।)

**इभ्यः**, त्रि, (इभमर्हतीति दण्डादित्वात् यत् ।) धन-

“इरां वहन्तो घृतमुक्षमाणा
मित्रेण साकं सह संविशन्तु” ।)
सरस्वती । इति शब्दरत्नावली ॥ (अन्नम् ।)
कश्यपपत्नीविशेषः ।
यथा, गारुडे ६ अध्यायः ॥
“धर्म्मपत्न्यः समाख्याताः कश्यपस्य वदाम्यहम् ।
अदितिर्दितिर्दनुः काला अमायुः सिंहिका मुनिः ।
कद्रुः प्राधा इरा क्रोधा विनता सुरभिः खशा” ।
तस्याः सृष्टिर्यथा ।
“इरा वृक्षलता वल्ली तृणजातिश्च सर्व्वशः ।
खशा च यक्षरक्षांसि मुनिरप्सरसस्तथा” ।
(दैत्यविशेषः । यथा, हरिवंशे । ३ । ८२ ।
“मरीचिर्मघवांश्चैव इरा शङ्कुशिरा वृकः” ।)

**इराचरं**, क्ली, (इरायां चरतीति । इरा + चर् +

ट ।) करका । इति त्रिकाण्डशेषः ॥ वृष्टिर
शील इति भाषा । जलचरे भूचरे च त्रि ॥

**इराजः**, पुं, (इरया मद्येन जायते इति । इरा + जन्

+ ड ।) कन्दर्पः । इति हलायुधः ॥

**इरावती**, स्त्री, (इरा विद्यतेऽस्या इति । इरा +

मतुप् ।) वटपत्रीवृक्षः । पाषाणभेदीविशेषः । इति
राजनिर्घण्टः ॥ (नदीभेदः । यथा, महाभारते ।
“विपासा च शतद्रश्च चन्द्रभागा सरस्वती ।
इरावती वितस्ता च सिन्धुर्देवनदी तथा” ॥

**इरिणं**, क्ली, (ऋच्छतीति । ऋ गतिप्रापणयोः,

किदिच्चेति इनन् ।) शून्यम् । ऊषरभूमिः । इत्य-
जयः ॥ (यथा, मनुः । ३ । १४२ ।)
“यथेरिणे वीजमुप्त्वा न वप्त्वा लभते फलम्” ।)

**इरिमेदः**, पुं, (इरिणो हस्तिनो मेद इव मेदो यस्य ।)

(कर्कटीशब्देऽस्य विशेषो ज्ञातव्यः ।)

**इर्व्वारुशुक्तिका**, स्त्री, (इर्व्वारुः शुक्तिकेव स्वयं स्फो-

टनात् ।) इर्व्वारुविशेषः । इति हारावली ॥
फुटी इति भाषा ।

**इर्व्वालुः**, पुं, (इर्व्व + आरु । रलयोरैक्यात् ।) इर्व्वारुः ।

इत्यमरटीकायां रायमुकुटः ॥

**इल**, श शये, गतौ । क्षेपे । इति कविकल्पद्रुमः ॥

(तुदां -परं -सकं -शयने, अकं -सेट् ।) श इलति ।
शयः शयनं । इति दुर्गादासः ॥

**इल**, क क्षेपे । इति कविकल्पद्रुमः ॥ (चुरां -उभं-

सकं -सेट् ।) ह्रस्वादिः । क एलयति । इति दुर्गा-
दासः ॥

**इलविला**, स्त्री, कुवेरमाता । सा च विश्रवःपत्नी ।

इति पुराणम् ॥

**इला**, स्त्री, (इलति विष्णुवरात् पुंस्त्वं प्राप्नोति इति ।

इल + क + टाप् ।) वैवस्वतमनुकन्या । सा च
विष्णुवरात् पुंस्त्वं प्राप्य सुद्युम्ननाम्ना ख्याता । पश्चात्
शङ्करशप्तकुमारवनं प्रविश्य पुनः स्त्रीत्वं गता ।
बुधस्तां भार्य्यात्वेन स्वीकृत्य पुरूरवसं जनयामास ।
ततस्तस्याः पुरोहितो वशिष्ठः शङ्करमाराध्य तस्यै
मासं स्त्रीत्वं मासं पुंस्त्वं दत्तवान् इति श्रीभाग-

वान् । इत्यमरः ॥ (पुं, राजा । हस्तिपकः ।) (यथा छान्दग्योपनिषदि । १ । १० । "उषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास । सहेभ्यम् कुल्मा- षाण्खादन्तं बिभिक्षे" ।)

**इभ्या**, स्त्री, हस्तिनी । शल्लकी । इति मेदिनी ॥

**इयं**, स्त्री, इदम् शब्दस्य स्त्रीलिङ्गे प्रथमायां रूपं । एइ स्त्री इति भाषा । इति व्याकरणम् ॥

**इयत्**, त्रि, (इदम् परिमाणमस्य । इदम् + वतुप् वस्य यः ।) कियत्संख्याबोधकम् । इति व्याकरणम् ॥ एतो इति भाषा । (यथा, रघुवंशे । १३ । ६७ ।
"इयन्ति वर्षाणि तया सहोग्र
मभ्यस्यतीव व्रतमासिधारम्" ।)

**इयत्ता**, स्त्री, (इयत् + तल् ।) इयतो भावः । सीमा । परिमाणम् । सङ्ख्या । इत्यादि ॥ ("श्रमेण तदशक्त्या वा न गुणानामियत्तया" । इति रघुवंशे । १० । ३२ ।)

**इरणं**, त्रि, ईरणं । शून्यं । ऊषरभूमिः । इत्यमर- टीकायां रमानाथः ॥

**इरम्मदः**, पुं, (इरया उदकेन माद्यति दीप्यते अबि- न्धत्वात् इति उग्रम्पश्येरम्मदेत्यादिना खश्प्रत्ययो मुमागमश्च निपातितः ।) वज्राग्निः । तत्पर्य्यायः । मेघज्योतिः २ । इत्यमरः ॥ मेघाग्निः ३ । इति जटाधरः ॥ अन्योन्यसङ्घट्टनेन मेघान्निःसृत्य यज्ज्यो- तिर्वृक्षादौ पतति सः । मेघेत्युपलक्षणं वात- जाग्निरपि । इति भरतः ॥ अरिमेदः । विट्खदिरः । इति शब्दरत्नावली राजनिर्घण्टश्च ॥ ("इरिमेदौ विट्खदिरः कालस्कन्धोऽरिमेदकः" । इति पर्य्यायः । अस्य गुणा यथा भावप्रकाशे "अरिमेदः कषायोष्णो मुखदन्तगदास्नजित् । हन्ति कण्डूविषश्लेष्मकृमिकुष्ठविषव्रणान्" ॥)

**इरिवेल्लिका**, स्त्री, मस्तकोद्भवव्रणजन्यपीडाविशेषः । तस्य लक्षणम् ।
"पिडकामुत्तमाङ्गस्थां वृत्तामुग्ररुजाज्वराम् ।
सर्व्वात्मिकां सर्व्वलिङ्गां जानीयादिरिवेल्लिकाम्" ॥
इति निदानम् ॥ चिकित्सा यथा ।
"पैत्तिकस्य विसर्पस्य या चिकित्सा प्रकीर्त्तिता ।
तयैव भिषगेताञ्च चिकित्सेदिरिवेल्लिकाम्" ॥
इति भावप्रकाशः ॥ (तथा च वाभटः ।
"त्रिलिङ्गा पिटिका वृत्ता जत्रूद्र्ध्वमिरिवेल्लिका" ।
"इरिवेल्लिकां गन्धनामां जयेत्पित्तविसर्पवत्" ।
इति तैद्यकचक्रपाणिसंग्रहे ।)

**इरेशः**, पुं, (इरायाः ईशः ।) विष्णुः । इति शब्द- रत्नावली ॥ राजा । वागीशः । वरुणः ॥

**इर्व्वारुः**, पुं, स्त्री, (उर्व्व + आरु । पृषोदरादित्वात् साधुः ।) कर्कटी । इत्यमरः ॥ काँकुड इति भाषा । अस्य गुणाः । स्वादुत्वम् । गुरुत्वं । अजीर्ण- कारित्वम् । शीतलत्वञ्च । तत्पक्वफलगुणाः । दाह- च्छर्दितृष्णाक्लान्तिनाशित्वम् । इति राजवल्लभः ॥ वतं ॥ कर्द्दमप्रजापतिपुत्त्र इलः कार्त्तिकेयजन्मदेशं प्रविश्य स्त्री भूत्वा इलानाम्ना ख्यातः ततः पार्ब्बती- माराध्य मासं स्त्रीत्वं मासं पुंस्त्वञ्च प्राप्तवान् । इति रामायणं ॥ पृथिवी । गौः । वाक्यं । इति मेदिनी ॥

**इलावृतं**, क्ली, (इरया आवृतं ।) जम्बुद्वीपस्य नव- वर्षान्तर्गतवर्षविशेषः । इति त्रिकाण्डशेषः । तच्च सुमेरुपर्ब्बतं संवेष्ट्यास्ते । तस्य सीमा उत्तरे नीलपर्ब्बतः । दक्षिणे निषधः । पश्चिमे माल्य- वान् । पूर्ब्बेगन्धमादनपर्ब्बतः । इति श्रीभागवतम् ॥ अग्नीध्रस्य स्वनामख्यातः पुत्रः स तु पितुः सकाशात् इलावृतं नाम वर्षमलभत । यदुक्तं विष्णुपुराणे । २ । १ । १६, १७, १८ ।
"जम्बुद्वीपेश्वरो यस्तु अग्नीध्रो मुनिसत्तम ! ।
तस्य पुत्रा बभूवुस्ते प्रजापतिसमा नव ॥
नाभिः किम्पुरुषश्चैव हरिवर्ष इलावृतः ।
रम्यो हिरण्वान् षष्ठश्च कुरुर्भद्राश्व एव च ॥
केतुमालस्तथैवान्यः साधुचेष्टो नृपोऽभवत्" ॥)

**इलिका**, स्त्री, (इला एव । इला + स्वार्थे कन् + टाप् ।) पृथिवी । इति शब्दरत्नावली ॥

**इली**, स्त्री, (इल गतौ क्षेपणे च इति, कृदिकारा- दिति वा ङीष् ।) ईली । करपालिका । इत्य-

**इरा**, स्त्री, (इं कासं राति ददाति इति । इ + रा

+ क । यद्वा एतीति इ + रन् + टाप्

निपातनात्

गुणाभावः ।) भूमिः । वाक्यम् । मद्यम् ।

जलम् ।

इत्यमरः ॥ (यथा, आश्वलायनगृह्यसूत्रे ।

२ । ९ ।

मरटीकायां रायमुकुटः ॥ हातछुरि इति

भाषा ।

**इलीशः**, पुं, (इलन्ति अप्सु द्रुतं गच्छन्ति इति इला

द्रुतगामिनो मत्स्याः । इल + क । तेषां

ईशः ।)

स्वनामख्यातमत्स्यविशेषः । इति

शब्दरत्नावली ॥

("इलीशो जितपीयुषो वाचा

वाचामगोचरा ।

रोहितो नो हितः प्रोक्तो मद्गुरो मद्गुरोः

प्रियः" ॥

इत्युद्भटः ।

"इलीशो मधुरः स्निग्धः

पित्तश्लेष्माग्निमान्द्यनुत्" ।

इति वैद्यकद्रव्यगुणः ॥)

**इल्ललः**, पुं, पक्षिविशेषः । इति शब्दचन्द्रिका ॥

**इल्लिशः**, पुं, इलीशमत्स्यः । तत्पर्य्यायः । वारि-

कर्पूरः २ गाङ्गेयः ३ शफराधिपः ४
जलतालः ५ ।
इति त्रिकाण्डशेषः ॥ इलीशः ६
राजशफरः ७
इल्लीशः ८ जलतापी ९ । इति
शब्दरत्नावली ॥
अस्य गुणाः ।
पित्तश्लेष्माग्निवृद्धिकारित्वम् । मधु-
रत्वम् । हृद्यत्वञ्च । इति
राजवल्लभराजनिर्घण्टौ ॥
"इल्लिशो मधुरः स्निग्धो रोचनो
वह्निवर्द्धनः ।
पित्तकृत् कफकृत् किञ्चित्
लघुर्वृष्योऽनिलापहः" ॥
इति भावप्रकाशः ॥

**इल्वकाः**, स्त्री, इल्वलाः । नित्यबहुवचनान्तशब्दो-

ऽयं । इति भरतो द्विरूपकोषश्च ॥

**इल्वलः**, पुं, (इल् + वलच् । निपातनात् गुणाभावः ।)

दैत्यविशेषः । स च वातापेर्भ्राता । (स
च सिंहि-
कासुतः । यथा, हरिवंशे । ३ य
अध्याये ।
"सैहिकेया इति ख्यातास्त्रयोदश
महाबलाः । ९८ ।
ऐशः बल्यश्च बलिनौ नभश्चैव
तथाबलः ।
वातापिर्नमुचिश्चैव इल्वलः
खसृमस्तथा" ॥ ९९ ॥
तस्य विवृतिर्यथा महाभरते
तीर्थयात्रापर्ब्बणि
अगस्त्योपाख्याने ९६ अध्यायः ।
लोमश उवाच ।
विषादो वो न कर्त्तव्यो ह्यहं भोक्षे महासुरं । ४ ।
धुर्य्यासनमथासाद्य निषषाद महानृषिः ।
तं पर्य्यवेशयद्दैत्येन्द्रः इल्वलः प्रहसन्निव । ५ ।
अगस्त्य एव कृस्नन्तु वातापिं बुभुजे ततः ।
मुक्तवत्यसुराह्वानमकरोत्तस्य चेल्वलः । ६ ।
ततो वायुः प्रादुरभूत् अधस्तस्य महात्मनः ।
शब्देन महता तात गर्ज्जन्निव यथा घनः । ७ ।
वातापे निष्क्रमस्वेति पुनः पुनरुवाच ह । ८ ।
तं प्रहस्याब्रवीत् राजन् अगस्त्यो मुनिसत्तमः ।
कुतो निष्क्रमितुं शक्तो मया जीर्णस्तु सोऽसुरः । ९
।
इल्वलस्तु विषण्णोऽभूद्दृष्ट्वा जीर्णं महासुरम् ।
प्राञ्जलिश्च सहामात्यैरिदं वचनमब्रवीत् । १० ।)
मत्स्यविशेषः । इति मेदिनी ॥

**इल्वलाः**, स्त्री, (इल + वलच् ।) मृगशिरोनक्षत्र-

शिरो देशस्थिताः पञ्चताराः । इत्यमरः ॥ (नित्य-
बहुवचनान्तोऽयम् ।)

**इव**, इ, व्याप्तौ । (इदित् -भ्वादिं -- परं -सकं -सेट् ।)

प्रीणने । इति कविकल्पद्रुमः ॥ ह्रस्वादिः । इ
इन्व्यते । दन्त्यबकारपरत्वान्नानुस्वारः । प्रीणनं
कैश्चिन्न मन्यते । इति दुर्गादासः ॥

**इव**, व्य, सादृश्यम् । साम्यम् । इत्यमरः ॥ (यथा,

रघौ । १ । १ ।
"वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्ब्बतीपरमेश्वरौ" ॥)
(उत्प्रेक्षा । यथा, साहित्यदर्पणे १० परिच्छेदे ।
"मुखमेणीदृशो भाति पूर्णचन्द्र इवापरः" ।)
ईषत् । वाक्यालङ्कारः । (यथा, शाकुन्तले १ अङ्के
।
"किमिव हि मधुराणां मण्डनं नाकृतीनाम्" ।
एवार्थः । यथा, ऋग्वेदे १ । १८४ । ३ । "श्रिये
पुषन्निषुकृतेव देवाः" "इवशब्द एवार्थे" इति
भाष्यम् । अवधारणार्थः । यथा, शतपथब्राह्मणे
प्लक्षणेव तु ईश्वरा" "इवशब्दोऽवधारणार्थः इति
भाष्यम् ।)
शतपथब्राह्मणे । ४ । ३ ।
"यच्छरद्धूर्गस ओषधयः
पच्यन्ते ते ने हैताविषश्चोर्गश्च" ।
इषर्जौ शरत्" ।
इति सुश्रुतः ॥)

**इषिका**, स्त्री, (इष् + कृञादिभ्यो वुन् ।) इषीका ।

गजचक्षुर्गोलकः । तूलिका ।
इत्यमरटीकायां राय-
मुकुटः ॥

**इषिरः**, पुं, (इष्यति गच्छतीति । इष + किरच् ।)

अग्निः । इत्युणादिकोषः ॥ (गमनशीले,
त्रि, यथा,
ऋग्वेदे । ७ । ३५ । ४ । "शं न इषिरो
अभिया-
रातः" । "इषिरः गतिशीलः" इति
भाष्यम् ।)

**इषीका**, स्त्री, (ईष्यते इति । ईषेः कित् ह्रस्व-

श्चेतीकन् ह्रस्वश्च ।) गजाक्षिकूटकः ।
हस्थिचक्षु-
र्गोलकः । इत्यमरः ॥ तूलिका । इति
रायमुकुटः ॥
काशतृणं । इति हेमचन्द्रः ॥
("पताङ्गानां पुच्छेषु त्वयेषीका
प्रवेशिता" ।
"इषीकाञ्च यथा मुञ्जात् कश्चित्
निष्कृष्य दर्शयेत् ।
योगी निष्कृष्य चात्मानं तथा पश्यति
देहतः" ।
इति च महाभारते ।
"तस्मिन्नास्थदिषीकास्त्रं रामो
रामावबोधितः" ।
इति रघुः १२ । २३" । इषीकास्त्रं
काशास्त्रं "इषीका

“इल्वलो नाम दैतेय
आसीत्कौरवनन्दन ! ।
सणिमत्यां पुरि पुरा वातापिस्तस्य
चानुजः । ४ ।
स ब्राह्मणं तपोयुक्तमुवाच दितिनन्दनः ।
पत्त्रं मे भगवानेकमिन्द्रतुल्यं प्रयच्छतु
॥ ५ ॥
तस्मिन् स ब्राह्मणो नादात् पुत्त्रं
वासवसम्मितम् ।
चुक्रोध सोऽसुरस्तस्य ब्राह्मणस्य ततो
भृशम् ॥ ६ ॥
तदा प्रभृति राजेन्द्र इल्वलो ब्रह्महासुरः
।
मन्युमान् भ्रातरं छागं मायावो
ह्यकरोत्ततः ॥ ७ ॥
मेषरूपी च वातापी कामरूप्यभवत्
क्षणात् ।
संस्कृत्य च भोजयति ततो विप्रं
जिघांसति ॥ ८ ॥
स आह्वयति यं वाचा गतं वैवस्वतक्षयम्
।
स पुनर्दहमास्थाय जीवन् संप्रत्यदृश्यत
॥ ९ ॥
ततो वातापिमसुरं छागं कृत्वा
सुसंस्कृतम् ।
तं ब्राह्मणं भोजयित्वा पुनरेव समाह्वयत्
॥ १० ॥
तामिल्वलेन महता स्वरेण
वाचमीरिताम् ।
श्रुत्वातिमायो बलवान् क्षिप्रं
ब्राह्मणकण्टकः ॥ ११ ॥
तस्य पार्श्वं विनिर्भिद्य ब्राह्मणस्य
महासुरः ।
वातापिः प्रहसन् राजन् निश्चक्राम
विशाम्पते ॥ १२ ॥
एवं स ब्राह्मणान् राजन् भोजयित्वा पुनः
पुनः ।
हिंसयामास दैतेय इल्वलो दुष्टचेतनः ॥
१३ ॥

**इशीका**, स्त्री, इषीका । गजचक्षुर्गोलकः । इत्य-

मरटीकायां भरतः ॥

**इष** य सर्पणे । गतौ । इति कविकल्पद्रुमः ॥ (दिवां-

परं-सक-सेट् ।) ह्रस्वादिः । य इष्यति । सर्पणं
गतिः । इति दुर्गादासः ॥

**इष** उ श वाञ्छे । इति कविकल्पद्रुमः ॥ (तुदां-

परं-अकं-सेट् । उ एषित्वा इष्ट्वा । वेमसह-
लुभेत्यादिसूत्रेणैवेष्टसिद्धेऽप्यस्योदनुबन्धस्तत्सूत्रे
इ
षगाभीक्ष्ये इष्य सर्पणे इत्येतयोरप्राप्तये विशे-
षणार्थः । न च पिबादिग्रहणवत्तत्र इच्छ इति
ग्रहणेनैवेष्टसिद्धिरिति वाच्यं लाघवाभावे प्राचीन-
मतस्यैव न्याय्यत्वात् । श इच्छती इच्छन्ती ।
अस्यैव
इच्छादेशः । इच्छति धनं लोकः । इति दुर्गादासः
॥

**इष** ग आमीक्ष्ण्ये । पौनःपुन्येन करणे । इति कवि-

कल्पद्रुमः ॥ (क्र्यादिं-परं-अकं-सेट् ।) ग इष्णाति
पण्डितः । पुण्यं पुनःपुनः करोतीत्येर्थः । इति
दुर्गादासः ॥

**इषः**, पुं, (इष्यते गम्यतेऽस्मिन् जिगीषुभिरिति ।

इष + क ।) आश्विनमासः । इत्यमरः ॥ (यथा,

काशमुच्यते” इति हलायुधः । इति
तट्टीका ।)

**इषुः**, पुं, स्त्री, (इष्यति गच्छतीति । इष् + उ
।)

बाणः । इत्यमरः ॥ (“उत्कर्षः स च
धन्विनां
यदिषवः सिध्यन्ति लक्ष्ये चले” । इति
शाकुन्तले
२ अङ्के ।)

**इषुधिः**, स्त्री, (इषवो धीयन्तेऽस्मिन् । इषु +
धा

कि ।) तूणः । इत्यमरः ॥
(“धनुर्गाण्डीवमादाय
तथाक्षय्ये महेषुधी” । इति महाभारते
३ । ३९ ।)

**इषुपुङ्खा**, स्त्री, शरपुङ्खावृक्षः । इति
राजनिर्घण्टः ॥

**इष्टं**, क्ली, (इज्यते इष्यते वा यज इष वा +
भावे

क्त ।) यज्ञादिकर्म्म । (यथा, हेमचन्द्रः
।
“अग्निहोत्रं तपः सत्यं वेदानां
चार्थपालनम् ।
आतिथ्यं वैश्यदेवञ्च
इष्टमित्यभिधीयते” ॥)
यथेप्सितं । कामं । इत्यमरः ॥
संस्कारः । इति
मेदिनी ॥

**इष्टं**, त्रि, (इष्यते इज्यते वा यत् तत् । इष यज
वा

+ कर्म्मणि क्त ।) आशंसितम् ।
वाञ्छित्वम् ।
पूजितम् । प्रियं । इति मेदिनी ॥ (यथा,
महा-
भारते ।
“उपपन्नो गुणैरिष्टै रूपवानश्वकोविदः”
।
मनुः । ४ । २२९ ।

अगस्त्यश्चापि भगवानेतस्मिन् काल

एव तु ।

पितॄन् ददर्श गर्त्ते वै

लम्बमानानधोमुखान् ॥ १४ ॥

ततः ९९ प्रध्याये इल्वलेन

अगस्त्यातिथ्यं कृतम् ॥

यथा, -- लोमश उवाच ।

“इन्त्वलस्तान् विदित्वा तु

महर्षसहितान् नृपान् ।

उपस्थितान् सहामात्यो विषयान्ते

ह्यपूजयत् । १ ।

तेषां ततोऽसुरश्रेष्ठस्त्वातिथ्यमकरोत्

तदा ।

सुसस्कतेत कौरव्य भ्रात्रा वातापिना

तदा । २ ।

ततो राजर्षयः सर्व्वे विषण्णा गतचेतसः

।

वातापिं संस्कृतं दृष्ट्वा मेषभूतं महासुरम्

। ३ ।

अथाववीदगम्त्यम्तान्

राजर्षीनृषीसत्तमः ।

“तिलप्रदः प्रजामिष्टां

दीपदश्चक्षुरुत्तमम्” ।)

**इष्टः**, पुं, (इज्यते यः । यज् + क्त ।) यज्ञः । इति

मेदिनी ॥ एरण्डवृक्षः । इति

शब्दचन्द्रिका ॥

(शमीशब्देऽस्य गुणादिकं बोद्धव्यम् ॥)

**इष्टका**, स्त्री, (इष + तकन् + टाप् ।) गृहादि-

निर्म्माणार्थदग्धमृत्तिकाखण्डः । इति

चितिव्यवहारे लीलावती । इट इति

भाषा ।

तद्गृहगुणः ।

**इष्टिका**, स्त्री, (इष + तकन् + टाप् ।) गृहादि-

निर्म्माणार्थदग्धमृत्तिकाखण्डः । इति

चितिव्यवहारे लीलावती । इट इति

भाषा ।

तद्गृहगुणः ।

“कूपोदकं वटच्छाया श्यामा स्त्री

इष्टकालयम् ।

शीतकाले भवेदुष्णमुष्णकाले च

शीतलम्” ॥

इति चाणक्यम् ॥ * ॥ तद्रचितस्थाने

पितृकर्म्मनि-

:षेधो यथा । शङ्खलिखितौ । नेष्टकारचिते पितॄन्
सन्तर्पयेत् । इति श्राद्धतत्त्वम् ॥ * ॥
देवोद्देश्यकेष्ट-
कामयगृहदानफलं यथा । मठादिप्रतिष्ठातत्त्वे
॥
"मृण्मयात् कोटिगुणितं फलं स्यात् दारुभिः
कृते ।
कोटिकोटिगणं पुण्यफलं स्यादिष्टकामये ॥
द्विपरार्द्धगुणं पुण्यं शैलजे तु विदुर्ब्बुधाः ।
मृच्छिलयोः समं ज्ञेयं फलमाढ्यदरिद्रयोः"
॥

**इष्टकापथं**, क्ली, (इष्टं कापथं यस्य अधोवायुकर-
त्वात् ।) वीरणमूलम् । इत्यमरः ॥
(इष्टकाभि-
र्निर्म्मितः पन्थाः ।) इष्टकानिर्म्मितपथे, पुं ॥

**इष्टगन्धं**, क्ली, (इष्टो गन्धो यस्येति ।) बालुका । इति
मेदिनी ॥

**इष्टगन्धः**, त्रि, (इष्टो गन्धो यस्य ।) सुगन्धिद्रव्यम् ।
इत्यमरः ॥ (इष्टश्चासौ गन्धश्चेतिवाक्ये ।
सौरभम् ।)

**इष्टा**, स्त्री, (इज्यतेऽनया । यज + क्त टाप् ।) शमी-
वृक्षः । इति राजनिर्घण्टः ॥

**इष्टापूर्त्तं**, क्ली, (इष्टञ्च पूर्त्तञ्च द्वयोः समाहारः ।)
यज्ञखातादिकर्म्म । इति हेमचन्द्रः ॥ यथा ।
"अग्निहोत्रं तपः सत्यं वेदानाञ्चानुपालनम् ।
आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते ॥
वापीकूपतडागादिदेवतायतनानि च ।
अन्नप्रदानमारामाः पूर्त्तमित्यभिधीयते" ॥
इति मलमासतत्त्वधृतजातूकर्णः ॥ (यथा,
मार्क-
ण्डेयपुराणे १८ । ६ ।
"इष्टापूर्त्तविनाशाय तद्राज्ञश्चौरधर्म्मिणः" ॥
तथा च महाभारते । ३ । ३२ । ३० ।

**इष्वासः**, पुं, (इषवो बाणा अस्यन्ते क्षिप्यन्तेऽनेन ।
इषु + अस् + करणे घञ् ।) धनुः । इत्यमरः
॥
("महोरस्को महेष्वासो गूढजत्रुररिन्दमः" ।
इति रामायणे । १ । १ । १० । गीतायां १ ।
४ ।
"अत्र शूरा महेष्वासा भीमार्ज्जुनसमा युधि"
।)

**इह**, व्य, (अस्मिन् काले, लोके, विषये, देशे, दिशि
वा इत्याद्यर्थे निपातनात् सिद्धम् ।) अस्मिन्
।
एइ देशे एइ काले इत्यादि भाषा । इति व्या-
करणम् ॥ (यथा, मनुः । ३ । १ । ८१ ।
"यत्तु वाणिजके दत्तं नेह नामुत्र तद्भवेत्" ।
"षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता"
।
इति हितोपदेशे ।)

**इहामुत्रफलभोगविरागः**, पुं, (इह अस्मिन् लोके
स्रक्चन्दनादिजनितोऽमुत्रामुस्मिन् लोके
अमृता-
दिविषयोत्पन्नो योऽनित्यः फलभोगस्तस्मात्
वि-
रागो नितरां विरतिः ।) ऐहिकपारत्रिकविषय-
भोगेभ्यो नितरां विरतिः इति वेदान्तसारे ॥

## ई

**ई** दीर्घ ईकारः । चतुर्थस्वरवर्णः । अस्योच्चारणस्थानं
तालु । (स च दीर्घः द्विमात्रत्वात् त्रिमात्राश्रय-
त्वात् प्लुतश्च भवति ।) (विस्तृतिस्त
ह्रस्वैकारे
द्रष्टव्या ।)
"ईकारं परमेशानि स्वयं परमकुण्डली ।
ब्रह्मविष्णुमयं वर्णं तथा रुद्रमयं सदा ॥
पञ्चदेवमयं वर्णं पीतविद्युल्लताकृतिम् ।
चतुर्ज्ञानमयं वर्णं पञ्चप्राणमयं सदा" ॥

इति गणकृता नित्यत्वादात्मनेपद ।
धातुरयं कै-
श्चिन्न मन्यते । इति दुर्गादासः ॥

**ई**, ङ य, गतौ । इति कविकल्पद्रुमः ॥ (दिवां-आत्मं-
सकं -अनिट् ।) ङ य ईयते । इति
दुर्गादासः ॥

**ई**, व्य विषादः । अनुकम्पा । इति मेदिनी ॥ क्रोधः ।
दुःखभावनं । प्रत्यक्षं । सन्निधिः । इति
हेम-
चन्द्रः ॥ (सम्बोधनम् ।)

**ईः**, पुं, कन्दर्पः । इति त्रिकाण्डशेषः ॥

**ईः**, स्त्री, (अस्य विष्णोः पत्नी । ङीप् ।) लक्ष्मीः ।
इति विश्वमेदिन्यौ ॥

**ईख**, इ गतौ । इति कविकल्पद्रुमः ॥ (इदित्-भ्वादिं-
परं-सकं-सेट् ।) दीर्घादिः । इ ईङ्खते ।
इति
दुर्गादासः ॥ (ईख गतौ । ईखति इति
केचित् ।)

**ईक्ष** ङ दर्शने । इति कविकल्पद्रुमः ॥ (भ्वादिं-आत्मं-
सकं-सेट् ।) दर्शनमिह चाक्षुषज्ञानं
प्रणिधानञ्च ।
ङ ईक्षते चन्द्रं लोकः । "न
कामवृत्तिर्व्वचनीय-
मीक्षते" । इति कालिदासः ॥
"निरीक्षिष्यामि
यान्मुनीन् इति गणकृतानित्यत्वात्"
इति रमानाथः ॥
"वस्तुतस्तु निरीक्ष्यते निरीक्षः
पचादित्वादन् ततो
निरीक्ष इवाचरतीतिक्वौ साध्यं" इति
दुर्गादासः ॥

"इष्टापूर्त्तफलं न स्यात् न शिष्यो न गुरुर्भवेत्" ।)

**इष्टार्थोद्युक्तः**, त्रि, (इष्टोऽर्थस्तस्मिन् उद्युक्तः ।) उत्सुकः । उत्साहयुक्तः । इत्यमरः ॥

**इष्टिः**, स्त्री, (इष्, यज् वा + क्तिन् ।) अभिलाषः । (इति भाष्यकारेष्ट्या गतार्थत्वात् । इति पाणिनिः ।) यागः । इत्यमरः ॥ (यथा, रघुः । १० । ४ ।
"आरेभिरे जितात्मामः
पुत्त्रियामिष्टिमृत्विजः" ।
"प्राजापत्यं निरूप्येष्टिं सर्व्वदेवसदक्षिणां" ।
इति मनुः । ६ । ३८ ।) श्लोकसंग्रहः । इति मेदिनी ॥

**इष्टिकापथिकं**, क्ली, लामज्जकतृणम् । इति राज-निर्घण्टः ॥

**इष्टिपचः**, पुं, (इष्टिं यज्ञं पचतीति । यद्वा, इष्टये स्वेच्छार्थं पचति यः । इष्टि + पच + अच् ।) दनुजः । असुरः । इति शब्दरत्नावली ॥

**इष्टिमुट्**, [ष्] पुं, (इष्टिं यागं मुष्णाति । इष्टि + मुष् + क्विप् ।) दैत्यः । इति त्रिकाण्डशेषः ॥

**इष्टुः**, स्त्री, (इष + तु ।) इच्छा । इत्युणादिकोषः ॥

**इष्मः**, पुं, (इच्छतीति इषियुधीति मक् ।) कामदेवः । वसन्तकालः । इति सिद्धान्तकौमुद्यामुणादि-वृत्तिः ॥ [कालः । इति हेमचन्द्रः ॥

**इष्यः**, पुं, (इष्यतेऽनेन इति । इष् + क्यप् ।) वसन्त-

**इष्वः**, पुं, (इष्यतेऽसौ । इष् + वन् । निपातनात् गुणाभावः ।) उपदेष्टा । इत्युणादिकोषः ॥

**इष्वासं**, त्रि, (इषून् बाणान् अस्यतीति । इषु + अस् + घञ् ।) इषुक्षेपकम् । इति मेदिनी ॥ तिरन्दाज

इति कामधेनुतन्त्रम् । (वङ्गीयभाषायां ।) तस्य लेखनप्रकारो यथा ।
"ऊद्र्ध्वाधः कुञ्चिता मध्ये त्रिकोणाधोगता पुनः ।
अधोगता कोणशीर्षा कुञ्चिता दक्षतः शुभा ॥
शीर्षाद्दक्षे कोणयुता कुञ्चितोद्र्ध्वगता पुनः ।
चन्द्रसूर्य्याग्निरूपा सा मात्राशक्तिः प्रकीर्त्तिता" ॥
इति वर्णोद्धारतन्त्रम ॥ * ॥ अस्य नामानि यथा, --
"ई स्त्रीमूर्त्तिर्म्महामाया लोलाक्षी वामलोचनम् ।
गोविन्दः शेखरः पुष्टिः सुभद्रा रत्नसंज्ञकः ॥
विष्णुर्लक्ष्मीः प्रहासश्च वाग्विशुद्धः परापरः ।
कालोत्तरीयो भेरुण्डा रतिश्च पौण्ड्रवर्द्धनः ॥
शिवोत्तमः शिवा तुष्टिश्चतुर्थी विन्दुमालिनी ।
वैष्णवी वैन्दवी जिह्वा कामकला सनादका ॥
पावकः कोटरः कीर्त्तिर्मोहनी कालकारिका ॥
कुचद्वन्द्वं तर्ज्जनी च शान्तिस्त्रिपुरसुन्दरी" ॥
इति तन्त्रोक्तवर्णाभिधानम् ॥
(मातृकान्यासेऽस्य वामचक्षुषि स्थानम् । यथा, मातृकान्यासधृत-मन्त्रे । "इं नमो दक्षिणचक्षुषि ईं नमो वाम-चक्षुषि ।)

**ई**, ल, कान्तौ । गतौ । व्याप्तौ । क्षेपे । प्रजने । खादने । इति कविकल्पद्रुमः ॥ (अदां-परं-सकं-अकं च-अनिट् ।) कान्तिरिच्छा । प्रजनो गर्भ ग्रहणं इत्यर्थः । ल एति गौः गर्भं गृह्णाति इत्यर्थः ।
"न हि तरणिरुदीते दिक् पराधीनवृत्तिः" ।

**ईक्षणं**, क्ली, (ईक्ष + भावे, ल्युट् ।) दर्शनम् । ("कृतान्धा धनलोभान्धाः
नोपकारेक्षणक्षमाः" ।
इति कथासरित्सागरे ॥) (ईक्ष्यतेऽनेनति करणे ल्युट् ।) चक्षुः । इत्यमरः ॥ ("अभिमुखे मयि संवृतमीक्षणम्" । इति शाकुन्तले । २ अङ्के ।
"श्वासक्षामेक्षणा दीना
सुनीतिर्वाक्यमब्रवीत्" ।
इति विष्णुपुराणे । १ । ११ । १५ ।
निरूपणम् । पर्य्य-वेक्षणम् । यथा, मनुः ७ । १४१ ।
"स्थापयेदासने तस्मिन्
खिन्नःकार्य्येक्षणे नृणाम्" ।)

**ईक्षणिका**, स्त्री, (ईक्षणेन हस्तरेखाद्यवलोकनेन शुभाशुभं जानाति या । ईक्षण + ठन् + टाप् ।) दैवज्ञा । लक्षणादिना शुभाशुभनिरूपिणी । इत्य-मरः ॥ (पुं, दैवज्ञः । यथा, मनुः । ९ । २५८ ।
"मङ्गलादेशवृत्ताश्च भद्राश्चेक्षणिकैः सह" ।)

**ईज**, इ, कुत्से । गतौ । इति कविकल्पद्रुमः ॥ (भ्वादिं -आत्मं -सकं -सेट् -इदित् ।) इ ईञ्जते । कुत्सः कैश्चिन्न मन्यते । इति दुर्गादासः ॥

**ईज**, ङ, कुत्से । गतौ । इति कविकल्पद्रुमः ॥ (न्वादिं -आत्मं -सकं -सेट् ।) दीर्घादिः । ङ ईञ्जते इजते । कुत्सः कैश्चिन्न मन्यते । इति दुर्गादासः ॥

| | | |
|---|---|---|
| इति ख्यातम् । | | **ईड**, क, स्तुतौ । इति कविकल्पद्रुमः ॥ (चूरां-परं-<br>सकं-सेट् ।) क ईडयति । इति<br>दुर्गादासः ॥<br>**ईड**, ङ ल, स्तुतौ । इति कविकल्पद्रुमः ॥ (अदां-<br>आत्मं -सकं -सेट् ।) ल ङ ईट्टे । इति<br>दुर्गादासः ॥<br>(यथा, रामायणे । ३ य काण्डे ।<br>“गन्धर्ब्बाः सुरसंघाश्च बहवश्च महर्षयः<br>।<br>अन्तरीक्षगतं देवं गीर्भिर्ग्र्याभिरीडिरे”<br>॥)<br>**ईडा**, स्त्री, (ईड + क + टाप् ।) स्तुतिः । इति हला-<br>युधः ॥ (प्रशंसा ।)<br>**ईडितः**, त्रि, (ईड्यते स्म । ईड् + क्त ।) स्तुतः । कृत-<br>स्तवः । इत्यमरः ॥ (प्रशंसितः ।) |

**ईत**, इ बन्धे । इ ईन्त्यते । इति दुर्गादासः ॥ (भ्वादिं-
परं -सकं -सेट् । तेन इन्ततीति केचित् ।)

**ईतिः**, स्त्री, (ईयते ऽनया । ई + क्तिन् ।) डिम्वः ।
प्रवासः । इत्यमरो मेदिनी च ॥ कृषेः षट्प्रका-
रोपद्रवविशेषः । यथा, --
"अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः ।
प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः" ॥
इति स्मृतिः ॥ (कलहभेदः ।
नृपतिरहितयुद्धम् ।
"ईतयो व्याधयस्तन्द्रा दोषा क्रोधादयस्तथा ।
उपद्रवाश्च वर्त्तन्ते आधयः क्षुद्भयं तथा" ॥
इति महाभारते हनूमद्भीमसंवादे । ३ । १४९ । ३४ ।)

**ईदृक्**, [श्] त्रि, (इदम् + दृश् + क्विप् ।) अयमिव
दृश्यते । इति व्याकरणम् ॥ इहार न्याय एइ-
प्रकार इत्यादि भाषा ।
("रत्नानीदृंशि भूयांसि न भवन्त्येव भूतले" ।
इति कथासरित्सागरे । २५ । १७६ ॥ तथा च
किराते । २ । २८ ॥
"इदमीदृगनीदृगाशयः प्रसभं वक्तुमुपक्रमेत कः" ।

**ईदृक्षः**, त्रि, (अयमिव दृश्यतेऽसावित्याद्यर्थे । इदम्
+ दृश् + क्स दृक्षे चेति ईश् ।) ईदृशः । इति
ब्याकरणभ् ॥

मरः ॥ (यथा, भट्टिकाव्ये । ४ । ४४ ।
"मृगयुमिव मृगोऽथ दक्षिणेर्म्भा" ।)

**ईर्य्या**, स्त्री, (ईर + ण्यत् ।) भिक्षुव्रतम् । इति जटा-
धरः ॥

**ईर्व्वारुः**, पुं, स्त्री, (ईरं वृणोतीति । ईर् + वृ -बाहु
लकात् उण् ।) स्फुटिः । इति शब्दरत्नावली ॥
फुटी इति भाषा ।

**ईर्षा**, स्त्री, (ईर्ष्यणं । ईर्ष्य + घञ् । हसाल्लोप इति
यकारलोपः ।) अक्षमा । इति शब्दमाला ॥
("कथमीर्षां न कुरुषे सुग्रीवस्य समीपतः" ।)
इति रामायणे ॥ ४ । २४ । ३७ ।)

**ईर्षालुः**, त्रि, (ईर्षा + आलुच् ।) ईर्षाविशिष्टः ।
इति हलायुधः ॥

**ईर्ष्य**, ईर्षे । इति कविकल्पद्रुमः ॥ (भ्वादिं-परं-अकं-
सेट् ।) दीर्घादिः । रेफयुक्तः । ईर्ष इति ईर्ष्यस्य
घञि हसाल्लोप इति यलोपे सिद्धम् । ईर्षा परा-
भ्युदयासहिष्णुत्वम् ।
परदोषासहिष्णुत्वमिति के-
चित् । ईर्ष्यति खलः साधवे । यद्भयान्तः इत्येके ।
इति दुर्गादासः ॥

**ईर्ष्या**, स्त्री, (ईर्ष्यणं । ईर्ष्य + अच् + टाप् ।) परोत्-
कर्षासहिष्णुता । रीष इति भाषा । तत्पर्य्यायः ॥
अक्षान्तिः २ । इत्यमरः ॥ (यथा, मनुः । ७ । ४८ ॥
("पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् ।

कुमारे २ । ९ "जगदीशो निरीश्वरः" ।) प्रभुः ।
इति मेदिनीकरहेमचन्द्रौ ॥ (यथा, कुमारे ।
३ । ३४ "कथञ्चिदीशा मनसां बभूवुः" ।)

**ईशः**, पुं, (ईष्टे इति । ईश + क ।) महादेवः ।
("शनैः कृतप्राणविमुक्तिरीशः
पर्य्यङ्कबन्धं निविडं बिभेद" ।
इति कुमारे ३ । ५९ ।) ईशानकोणाधिपतिः ।
इत्यमरः ॥

**ईशसखः**, पुं, (ईशस्य सखा बन्धुः राजाहःसखिभ्यः
टच् ।) कुवेरः । इति हेमचन्द्रः ॥

**ईशा**, स्त्री, (ईश + अ + टाप् ।) लाङ्गलदण्डः । इत्य-
मरटीका शब्दरत्नावली च ॥ (यथा महाभारते
वनपर्ब्बणि घोषयात्रापर्ब्बणि २४० । ३० ।
"ईशामन्ये हयानन्ये सूतमन्ये न्यपातयन्" ।)
(ईशस्य महादेवस्य पत्नी । दुर्गा ॥ ईशस्य प्रभोः
पत्नी इति व्युत्पत्त्या स्वामिपत्नी । प्रभुस्त्री यथा,
अथर्व्ववेदे ११ । ८ । १७ "ईशा वशस्य या जाया" ।)

**ईशादण्डः**, पुं, (ईशायाः लाङ्गलस्य दण्डः ।) अक्ष-
युगयोः सन्धारणार्थो दण्डः । यथा, --
"योजनानां सहस्राणि भास्करस्य रथो नव ।
ईषादण्डस्तथैवास्य द्विगुणो मुनिसत्तम" ॥
इति विष्णुपुराणे २ अंशे ८ । २ ॥

**ईशादन्तः**, पुं, (ईशेव दन्तो यस्य ।) वृहद्दन्तहस्ती ।
तत्पर्य्यायः । महादन्तः २ । इति त्रिकाण्डशेषः ॥
हस्तिदन्तः । इति शब्दरत्नावली ॥

("ईदृक्षराजकर्म्माणि भवेयुस्तदिदं वयम्"
।
इति कथासरित्सागरे ।)

**ईदृशः**, त्रि, (अयमिव दृश्यतेऽसौ इदम् + दृश् +

कञ् ।) ईदृक् । एतत्सदृशः । इति
व्याकरणम् ॥
("ईदृशानां विपाकोऽपि जायते
परमाद्भुतः" ।
इति उत्तररामचरिते ।)

**ईर**, कि गतौ । प्रेरणे । इति कविकल्पद्रुमः । (वा,

चुरां-परं -सकं -सेट् ।) नुदि । कि ईरयति
ईरति ।
नुदि प्रेरणे । इति दुर्गादासः ॥

**ईर**, ङ ल, कम्पे । गतौ । इति कविकल्पद्रुमः ॥

(अदां-आत्मं -सकं कम्पार्थे, अकं -सेट्
।) दीर्घादिः ।
ङ ल ईर्त्ते लता वायुना । इति दुर्गादासः
॥

**ईरिका**, स्त्री, वृक्षविशेषः । यथा । ईरिकावणम् ।

इति णत्वप्रकरणे दुर्गादासः ॥

**ईरिणं**, त्रि, (ऋ + इरन् ।) शून्यं । ऊषरभूमिः ।

इति मेदिनी ॥ (यथा, मनुः । ३ । १४२
॥
"यथेरिणे वीजमुप्त्वा न वप्ता लभते
फलम् ॥
तथानृते हविर्दत्वा न दाता लभते फलम्"
॥
"ततस्तदीरिणं जातं समुद्रश्चावसर्पितः"
।
इति महाभारते अमुशासनपर्ब्बणि । चलनं
।)

**ईरितं**, त्रि, (ईर + क्त ।) क्षिप्तम् । इत्यमरः ॥ प्रेरि-

तम् । कम्पितम् । गतम् । कथितम् ॥
("इतीरिते
वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि
गुणाष्टकः" ।
स्त्रियः पत्युरन्यप्रियासङ्ग दर्शनादिजनितो
मान-
भेदः । यथा, श्टङ्गारशतके ॥
"वचोभिरीर्ष्याकलहेन लीलया
समस्तभातैः खलु बन्धनं स्त्रियः" ।)

**ईर्ष्यालुः**, त्रि, (ईर्ष्यां लाति । ईर्ष्या + ला + डु ।)

ईर्षाविशिष्टः । अक्षान्तियुक्तः । तत्पर्य्यायः
।
कुहनः २ इति हेमचन्द्रः ॥ (यथा,
राजतरङ्गिणी ।
"दिवसे सन्निधानेन पेशुनप्रेरणा यदि ।
ईर्ष्यालुना स्वैरिणीव रक्षितुं यदि पार्य्यते"
॥)

**ईलिः**, स्त्री, (ईर्य्यते इति । ईर + इन् रस्य लः ।)

ह्रस्वगदाकारहस्तदण्डः । इति भरतः ॥
साँटा
इति ख्याता । करच्छुरीति ख्याते एकधारा
इति
ख्याते यवनास्त्रे वा । इति सारसुन्दरी ॥

**ईलिका**, स्त्री, (ईलिरेव । ईलि + स्वार्थे कन् टाप्
।)

ह्रस्वगदाकारहस्तदण्डः । इति भरतः ॥
साँटा
इति ख्याता । एकधारेलीति स्वामी ।
तत्पर्य्यायः ।
ईलिः २ ईली ३ करपाली ४ गुप्तिका ५
कर-
पालिका ६ । इति शब्दरत्नावली ॥

**ईलितः**, त्रि, (ईड + क्त । डस्य लः ।) स्तुतः । इत्य-

मरः ॥

**ईली**, स्त्री, (ईर + क । कृदिकारादिति पाक्षिको

ङीष् ।) ह्रस्वगदाकारहस्तदण्डः ।
तत्पर्य्यायः ।
करपालिका २ । इत्यमरः ॥

**ईशानं**, क्ली, (ईश + आनश् ।) ज्योतिः ।
इतिमेदिनी ॥

(तद्विशिष्टे, त्रि । यथा, ऋग्वेदे । १ । १७५ ।
४ ।
"मुषाय सूर्य्य कवे चक्रमोशान ओजसा" ।)

**ईशानः**, पुं, (ईष्टे । ईश् + ताच्छिल्यवयोवचनशक्तिषु

चानश् ।) महादेवः । इत्यमरः ॥
("तस्मिन् मुहूर्त्ते पुरसुन्दरीणा-
मीशानसंदर्शनलालसानाम्" ॥
इति कुमारे ७ । ५६ ।
"तत्रेशानं समभ्यर्च्च्य त्रिरात्रोपोषितो नरः" ।
इति भारते ।) एकादशरुद्रान्तर्गतरुद्रविशेषः
।
इति पुराणं ॥ (यथा, आश्वलायनगृह्यसूत्रे ।
४ । ९ ।
"हराय मृडाय शर्व्वाय शिवाय भवाय
महादेवाय
उग्राय भीमाय पशुपतये रुद्राय
शङ्करायेशानाय
स्वाहा" इति । दूतमूर्त्तिधरः शिवः । स च
धूम्र-
जटिलः । यथा, मार्कण्डेये । ८८ । २३ ॥
"सा चाह धूम्रजटिलमीशानमपराजिता ।
दूतत्वं गच्छ भगवन् पार्श्वं शुम्भनिशुम्भयोः"
।)
शिवाष्टमूर्त्यन्तर्गतसूर्य्यमूर्त्तिः । इति
स्मृतिराग-
मश्च ॥ (परमेश्वरः । यथा, कृष्णयजुर्व्वेदे ।
"सर्व्वेन्द्रियगुणावासं सर्व्वेन्द्रियविवर्जितम् ।
सर्व्वस्य प्रभुमीशानं सर्व्वस्य शरणं वृहत्" ।
तथा च महाभारते १ । १ । २२ ।
"आद्यं पुरुषमीशानं पुरुहूतं पुरुष्टुतम् ।
ऋतमेकाक्षरं ब्रह्म व्यक्ताव्यक्तं सनातनम्" ॥
साध्यापुत्रो देवताभेदः । यथा, --
"धर्म्माल्लक्ष्म्युद्भवः कामः साध्या साध्यान्
व्यजायत ।
प्रसवं व्यवनञ्चैवं ईशानं सुरभिं तथा" ॥

वचसि वचस्विनामुना” । इति माघे । १७ । १ ।

“तस्य वर्म्म विभिद्याशु स बाणो मत्सुतेरितः” ।

इति, महाभारते ।)

**ईर्क्ष्यं**, ईर्षे । (भ्वादिं-परं-अकं -सेट् ।) पराभ्युदयासहि-

ष्णुतायामिति यावत् । इति कविकल्पद्रुमः ॥

दीर्घादिः । रेफयुक्तः । ईर्षा परादोषासहि-ष्णुत्वमिति केचित् । ईर्क्ष्यति खलः साधवे ।

षद्वयान्त इत्येके । इति दुर्गादासः ॥

**ईर्म्मं**, क्ली, (इर + वाहुलकात् मक् ।) व्रणः । इत्य-

**ईश**, ङ, ल, ऐश्वर्य्ये । इति कविकल्पद्रुमः ॥ (अदां-

आत्मं अकं-सेट् ।) दीर्घादिः ।

ऐश्वर्य्यमीश्वरीभावो-ऽधीनीकरणञ्च । ङ ल ईष्टे धनी ।

मायानामी-शिषेण च । अत्र कर्म्मणिषष्ठी । इति दुर्गादासः ॥

**ईशं**, त्रि, (ईष्टे इति । ईश् + क ।) ईश्वरं । (यथा

:इति भारते ।) शमीवृक्षः । इति राजनिर्घण्टः ॥

**ईशानी**, स्त्री, (ईशस्य पत्नी ।) दुर्गा । इति तन्त्रं ॥

शमीवृक्षः । इति राजनिर्घण्टः ॥

**ईशिता**, स्त्री, (ईशिनो भावः । ईशिन् + तल् ।) ईशित्वं ।

अणिमाद्यष्टैश्वर्य्यान्तर्गतैश्वर्य्यविशेषः ।
इति शब्द-
रत्नावली ॥

**ईशिता**, [ऋ] त्रि, (ईष्टे इति । ईश् + तृच् ।)

ईश्वरः । प्रभुः । अधिपतिः । इत्यमरः ॥
(यथा
माघे । २ । ९५ ।
"तदीशितारं चेदीनां भवांस्तमवमंस्त मा"
।)

**ईशित्वं**, क्ली, (ईशिनो भावः । ईशिन् + त्वा ।) ईशिता ।

देवानामष्टैश्वर्य्यान्तर्गतैश्वर्य्यविशेषः । इति
हेम-
चन्द्रः ॥ (यदुक्तं ।
"अणिमा लघिमा व्याप्तिः प्राकाम्यं गरिमा
तथा ।
ईशित्वञ्च वशित्वञ्च तथा कामावशायिता"
॥)
प्रभुत्वम् । येन स्थावरादिसर्व्वभूतानि
आज्ञा-
कारीणि भवन्ति । इत्यमरटीकासारसुन्दरी
॥

**ईश्वरं**, त्रि, (ईश् + वरच् ।) आढ्यं ।

("दरिद्रान् भर कौन्तेय मा प्रयच्छेश्वरे
धनम्" ।
इति हितोपदेशे । १ । ७६ ।) स्वामि । इति
वि-
श्वमेदिन्यौ ॥ (यथा महाभारते ।
"अहं चैव हि यच्चान्यन्ममास्ति वसु किञ्चन
।
तत्सर्व्वं तव विस्रब्धं कुरु प्रणयमीश्वर" ॥
"शृणु रुद्र प्रवक्ष्यामि ब्रह्मणा च सुरैः सह
।
अहं हि देवो देवानां सर्व्वलोकेश्वरेश्वरः
॥
अहं ध्येयश्च पूज्यश्च स्तुतोऽहं
स्तुतिभिः सुरैः ।
अहं प्रपूजितो रुद्र ददामि परमां गतिम्"
॥
इत्यादि च गारुडे २ अध्यायः ॥
(स्वनामख्यातो नृपतिभेदः । यथा,
महाभारते ।
"मतिमांश्च मनुष्येन्द्रः ईश्वरश्चेति
विश्रुतः" ।)

**ईश्वरा**, स्त्री, (ईश्वर + टाप् । पुंयोगविवक्षामावात्

न ङीष् ।) दुर्गा ।
("विन्यस्तमङ्गलमहौषधिरीश्वरायाः
स्रस्तोरगप्रतिसरेण करेण पाणिः" ।
इति किराते । "ईश्वराया गौर्य्याः,
स्थेषभासे-
त्यादिना वरच् । पुंयोगविवक्षाभावात् न
ङीष्"
इति तट्टीका ॥) लक्ष्मीः ।
सरस्वत्यादिशक्तिः ।
इति शव्दरत्नावली ॥

**ईश्वरी**, स्त्री, (ईष्टे इति + ईश् + वनिप् । वनोर-

चेति ङीप्रौ ।) ईश्वरा । इति
शब्दरत्नावली ॥
("त्वमीश्वरी देवि ! चराचराणाम्" । इति
मार्क-
ण्डेयपुराणं ॥ ९१ । २ ।) लिङ्गिनीवृक्षः ।
वन्ध्या-
कर्कोटकीवृक्षः । रुद्रजटालता ।
नाकुलीकन्दः ।
इति राजनिर्घण्टः ॥

**ईष** उ उञ्छे । इति कविकल्पद्रुमः ॥ (तुदां -परं - सकं-

तत्पर्य्यायः । अव्यक्तरागः २ अरुणः ३ ।
इत्यमरः ॥

**ईषा**, स्त्री, (ईष + क + टाप् ।) लाङ्गलदण्डः । इत्य-

मरः ॥ लाङ्गलेर ईष् इति भाषा ॥ (ऋग्वेदे ।
"हिरण्मयी वां रभिरीषा अक्षो" ।
रथस्यावयवभेदः । यथा, ऋग्वेदे । १० ।
१३५ ।
३ । "रथः एकैषः" ।
"ईषामन्ये हयानन्ये सूतमन्ये न्यपातयन्" ।
इति महाभारते । वनपर्ब्बनि २४० । ३० ।
ईशेति
क्वचित् पाठः ॥)

**ईषादन्तः**, पुं, (ईषेव दन्तो यस्य ।) दीर्घदन्तहस्ती ।

तत्पर्य्यायः । उदग्रदन्तः २ । इति हेमचन्द्रः
॥
("ईषादन्तान् हेमकक्षान् पद्मवर्णान्
कुथावृतान्"
ईषादन्ता महाकायाः सर्व्वे चाष्टकरेणवः" ॥
इति च भारते ॥)

**ईषिका**, स्त्री, (ईष + किकन् ।) हस्तिचक्षुर्गोलकः ।

इत्यमरटीकायां रायमुकुटः ॥ तूलिका ।
इत्य-
मरः ॥ अस्त्रविशेषः । यथा, --
"सोऽभिमन्त्र्य शरेषीकामीषिकास्त्रेण
वीर्य्यवान् ।
काकं तमभिसन्धाय ससर्ज पुरुषर्षम" ! ॥
इति रामायणं ॥

**ईषिरः**, पुं, (ईष + किरच् ।) अग्निः । इति त्रिकाण्ड-

शेषः ॥

**ईषीका**, स्त्री, (ईष + ईकन् । औणादिकप्रत्ययो-

ऽयम् । पर्फरीकादित्वात् साधुः ।) तूलिका ।
वीरणादिशलाका इत्यन्ये ।
आवर्त्तितमनावर्त्तितं वा

नियन्ता । प्रभुः ।
“ईश्वरः सर्व्वभूतानां धर्म्मकोषस्य गुप्तये” ।
इति मनुः । १ । ९९ ॥)

**ईश्वरः**, पुं, (ईष्टे इति । ईश् + वरच् । यद्वा, अश्नुते
व्याप्नोतीति अशधातोर्वरट् उपधाया ईत्वं च ।)
शिवः । (यथा, कुमारे । ७ । ३१ ।
“तद्गौरवान्मङ्गलमण्डनश्रीः
सा पस्पृशे केवलमीश्वरेण” ।
“अथेश्वरं देवगणः सह सप्तर्षिभिर्विभुम्” ॥
“वाग्भिः स्थितः स्तुवन् यावच्छिवे भावे शिवः स्थितः ।
शिवं शिवाय भूतानां स्थितं ज्ञात्वा कृताञ्जलिः ॥
क्रोधाग्निरुक्तवान् देवमहं किं करवाणि ते” ।
“तमुवाचेश्वरः क्रोधं ज्वरो लोके भविष्यसि” ॥
इति चरके चिकित्सास्थाने तृतीयाध्यायः ॥
“ततः सृष्ट्वा प्रजाः शेषं तदा तं क्रोधमीश्वरः ।
विन्यस्तवान् स भूतेषु स्थावरेषु चरेषु च” ॥
इति सुश्रुते कल्पस्थाने तृतीयाध्यायः ॥)
कन्दर्पः । इति मेदिनी ॥
“विशुद्धसत्त्वप्रधानाज्ञानोपहितचैतन्यम्” ।
इति वेदान्तः ॥ न्यायमते ईश्वरगुणाः । संख्यादि-
पञ्च बुद्धिः इच्छा यत्नश्च । ईश्वरस्वरूपं ब्रह्मशब्दे
द्रष्टव्यम् ॥ ऐश्वर्य्यशाली । तत्पर्य्यायः । राष्ट्री १
अर्य्यः २ नियुत्वान् ३ इनैनः ४ । इति वेदनि-
र्घण्टौ २ अध्यायः ॥ श्रीहरिः । यथा । रुद्रौवाच ।
“हरे कथय देवेश देवदेवक ईश्वर ।
को ध्येयः कश्च वै पूज्यः कैर्व्रतैस्तुष्यते परः” ॥
इत्यादि । श्रीहरिरुवाच ।
सेट् ।) उञ्छ उद्धृतशस्यशेषापहरणं । ईषति
धान्यं दीनः । इति दुर्गादासः ॥

**ईष** ङ दाने । (भ्वादिं -आत्मं -सकं -सेट् ।) ईक्ष ।
हिंसने । सर्पणे । इति कविकल्पद्रुमः ॥ दीर्घादिः ।
ङ ईषते । ईक्षो दर्शनं । इति दुर्गादासः ॥

**ईषः**, पुं, (ईष् + क ।) इषः । आश्विनमासः । इत्य-
मरटीकायां मथुरानाथः ॥
(स्वनामख्यातः उत्तम-
मनोर्दशपुत्रमध्ये एकः पुत्त्रः । यथा, --
‘औत्तमेयान् महाराज ! दशपुत्त्रान् मनोरमान्’ । १८
“ईष ऊद्‌र्ध्वस्तनूर्ज्जश्च मधुमाधव एवच ।
शुचिः शुक्रः सहश्चैव नभस्यो नभ एव च” ॥ १९
इति हरिवंशे ७ अध्यायः ॥)

**ईषत्** व्य, (ईषणमिति । ईष् + अत् ।) अल्पम् ।
किञ्चित् । मनाक् । इत्यमरः ॥
(“तं दृष्ट्वा कुपितं
पुत्रमीषत्प्रस्फुरिताधरं” ।
इति विष्णुपुराणे ॥ १ । ११ । १२ ।
“ईषत् सहासममलं परिपूर्णचन्द्र-
विम्बानुकारि कनकोत्तमकान्तिकान्तं” ।
इति मार्कण्डेयपुराणे, शक्रादिमाहात्म्यम् ॥
“हृदि तिष्ठति यच्छुद्धं रक्तमीषत् सपीतकम्” ।
इति चरके सूत्रस्थाने सप्तदशाध्यायः ॥)

**ईषत्करः**, पुं, (ईषत् + कृ + खल् ।) अत्यल्पः । तत्प-
र्य्यायः । लेशः २ उपपदं ३ गन्धः ४ अनुबन्धः ५ ।
इति त्रिकाण्डशषः । ईषत्क्रियमाणं वस्तु । इति
सुवर्णं ज्ञातुं यन्निःक्षिप्यते तत्रेत्यन्ये । आवर्त्तित-
सुवर्णं द्रवाकारं यत्र निःक्षिप्यते तत्रेति केचित् ।
इत्यमरटीकायां भरतः ॥

**ईष्मः**, पुं, (ईष + मक् ।) कामदेवः । वसन्तकालः ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**ईह** ङ चेष्टे । इति कविकल्पद्रुमः ॥ (भ्वादिं-आत्मं-
अकं-सेट् ।) दीर्घादिरकर्म्मकः । ङ ।
“ऐहिष्ट तं कारयितुं कृतात्मा
क्रतुं नृपः पुत्त्रफलं मुनीन्द्रम्” ।
इति भट्टिः । १ । ११ ॥
सकर्म्मकोऽपि । “ग्रामं भ्रमादपि नेहते” । इति
जयदेवः ॥ “सर्व्वः स्वार्थं समीहते” इति माघः ।
२ । ६५ ॥ इति दुर्गादासः ॥

**ईहा**, स्त्री, (ईह + अ + टाप् ।) चेष्टा । उद्यमः ।
(“इच्छया जायते काम ईहयार्थो विवर्द्धते ।
श्रद्धया वर्द्धते धर्म्मस्तेषां फलमिदं त्रिधा” ॥
इति रामायणे ॥ ३ काण्डे । तथा च मनुः २ । ३७ ।
“राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे” ।
“वैश्यस्य बहुकृष्यादिचेष्टार्थिनः” इति तट्टीकायां
कुल्लुकभट्टः ।) वाञ्छा । इच्छा । इति त्रिकाण्डशेषः ॥
(“धर्म्मार्थं यस्य वित्तेहा वरं तस्य निरीहता ।
प्रक्षालनाद्धि पङ्कस्य श्रेयो न स्पर्शनं नृणाम्” ॥
इति महाभारते । १ । २ । ४८ ॥)

**ईहामृगः**, पुं, (ईहाप्रधानो मृगो वृकः ।) कुक्कुर-
प्रमाणहरिणघ्नकपिलवर्णजन्तुविशेषः । इति

व्याकरणं ॥

**ईषत्पाण्डुः**, पुं, (ईषत् पाण्डुः ।) धूसरवर्णः । इत्यमरः ॥

**ईषदुष्णं**, त्रि, (ईषच्च तदुष्णञ्चेति ।) अल्पतप्तं । तत्प-

र्य्यायः । कोष्णं २ कवोष्णं ३ कदुष्णं ४

मन्दोष्णं ५ ।

इति हेमचन्द्रः ॥

**ईषद्रक्तः**, पुं, (ईषत् रक्तः ।) अल्पलोहितवर्णः ।

भरतः ॥ घो०घ इति ख्यातः । तत्पर्य्यायः ।

कोकः २

ष्टकः ३ । इत्यमरः ॥

(“पुलहस्य सुता राजन् शलभाश्च

प्रकीर्त्तिताः ।

सिंहाः किम्पुरुषा व्याघ्रा यक्षा

इहामृगास्तथा” ॥

इति महाभारते । आदिपर्ब्बणि ॥) (नायको

मृग-

वदलभ्यामपि नायिकामीहते वाञ्छत्यत्र

इति ।)

नाटकरूपकभेदः । इति मेदिनीकरहेमचन्द्रौ

॥

(तल्लक्षणं यथा, साहित्यदर्पणे षष्ठपरिच्छदे ।

“ईहामृगो मिश्रवृत्तश्चतुरङ्कः प्रकीर्त्तितः ।

मुखप्रतिमुखे सन्धी तत्र निर्व्वहनं तथा ॥

नरदिव्यावनियमौ नायकप्रतिनायकौ ।

ख्यातौ धीरोद्धतावन्यो गूढभावादयुक्तकृत्

॥

दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः ।

शृङ्गाराभासमप्यस्य किञ्चित् किञ्चित्

प्रदर्शयेत् ॥

पताका नायका दिव्या मर्त्त्या अपि

दशोद्धताः ।

युद्धमानीय संरब्धं परं व्याजान्निवर्त्तयेत् ॥

महात्मानो बधप्राप्ता अपि बध्याः स्युरत्र नो

।

एकाङ्को देव एवात्र नेतेत्याहुः परे पुनः ॥

दिव्यस्त्रीहेतुकं युद्धं नायकाः षडितीतरे” ॥

“मिश्रं ख्याताख्यातम् । अन्यः प्रतिनायकः

।

पताकानायकास्तु

नायकप्रतिनायकयोर्मिलिता

दश । नायको मृगवदलभ्यां नायिकामत्र

ईहते

वाञ्छतीति ईहामृगः । यथा--कसुमशेखर-

विजयादि” ॥)

**ईहावृकः**, पुं, (ईहाप्रधानो वृकः ।) ईहामृगः ।

इति शब्दरत्नावली ॥

**उ**

**उ**, उकारः । पञ्चमस्वरवर्णः । अस्योच्चारणं आष्ठः ।

(यथा, शिक्षाग्रन्थे ।
"कण्ठ्या वहाविचुयशास्तालव्या ओष्ठजावुपू" ।
तथा च मुग्धबोधे ।
"उत्रयं पफबभमवा ओ औष्ठ्याः" ।)
स च ह्रस्वो दीर्घः प्लुतश्च भवति । (एवं त्रिधापि
प्रत्येकं उदात्तानुदात्तस्वरितभेदेन
नवमसङ्ख्यकः
पुनः प्रत्येकं अनुनासिकाननुनासिकभेदात्
अष्टा-
दशविध एव भवति । अस्य ध्यानमाह ।)
"उकारं परमेशानि अधःकुण्डलिनी स्वयम् ।
पीतचम्पकसङ्काशं पञ्चदेवमयं सदा ॥
पञ्चप्राणमयं देवि चतुर्व्वर्गप्रदायकम्" ।
इति कामधेनुतन्त्रम् ॥ (वङ्गीयभाषायां) अस्य
लेखनप्रकारोयथा, --
"ऊद्ध्वाधो मध्यतः कुब्जा रेखा वामगता शुभा
।
तिष्ठन्ति वायुवह्नीन्द्राः शक्तिर्मात्रा परा स्मृता" ॥
इति वर्णोद्धारतन्त्रम् ॥ अस्य नामान्तराणि
यथा, --
"उः शङ्करो वर्त्तुलाक्षी भूतः कल्याणवाचकः ।
अमरेशो दक्षकर्णः षड्वक्त्रो मोहनः शिवः ॥
उग्रः प्रभुर्धृतिर्विष्णुर्विश्वकर्म्मा महेश्वरः ।
शत्रुघ्नश्चटिका पुष्टिः पञ्चमी वह्निवासिनी ॥
कामघ्नः कामना चेशो मोहिनी विघ्नहृन्मही ।
उढसूः कुटिला श्रोत्रं पारद्वीपो वृषो हरः" ॥
इति तन्त्रोक्तवर्णाभिधानम् ॥ (मातृकान्यासेऽस्य
दक्षिणकर्णे स्थानम् । यदुक्तं मातृकान्यासमन्त्रे
"उं नमो दक्षिणकर्णे ऊं नमो वामकर्णे" ।)

**उ**, ङ, शब्दे । इति कविकल्पद्रमः ॥ (भ्वादिं-आत्मं
अकं-अनिट् ।) ङ अवते गौः । इति दुर्गादासः ॥

**उ**, व्य, (उ शब्टे + क्विप् + तुक् न ।) सम्बोधनम् ।
रीषोक्तिः । अनुकम्पा । नियोगः । पदपूरणं ।
पादपूरणं । इति मेदिनी ॥ प्रश्नः । अङ्गीकारः ।
इति हेमचन्द्रः ॥ इदमेव उङ् इति ख्यातं ॥
("उमेति मात्रा तपसो निषिद्धा,
पश्चादुमाख्यां सुमुखी जगाम" ॥
इति कुमारे । १ । २६ ॥)

**उः**, पुं, (अतति विश्वमयत्वात् सर्व्वं व्याप्नोतीति ।
अत् + डु ।) शिवः । इति त्रिकाण्डशेषः ॥
("अकारो विष्णुरुद्दिष्ट उकारस्तु महेश्वरः ।
मकारेणोच्यते ब्रह्मा प्रणवेन त्रयो मताः" ॥
इति पुराणे ।) ब्रह्मा । इति कश्चिदेकाक्षरकोषः ॥

**उकनाहः**, पुं, पीतरक्तवर्णाश्वः । स एव क्वचित्
कृष्णरक्तच्छविः । इति हेमचन्द्रः ॥

**उक्तं**, क्ली, (वच् + क्त ।) एकाक्षरछन्दः । इति
मेदिनी ॥ वाक्यम् ॥

**उक्तः**, त्रि, (उच्यते यः । वच् + कर्म्मणि क्त ।) कथितः ।
तत्पर्य्यायः । भाषितः २ उदितः ३ जल्पितः ४
आख्यातः ५ अभिहितः ६ लपितः ७ इत्यमरः ॥
गदितः ८ निगदितः ९ ईरितः १० उदीरितः ११
भणितः १२ लडितः १३ रपितः १४ रठितः १५
भटितः १६ रटितः १७ व्याहृतः १८ ॥
(यथा, मार्कण्डेयपुराणे देवीमाहात्म्ये ९६ । ९ ।
"इत्युक्तः सोभ्यधावत्तामसुरो धूम्रलोचनः" ॥
तथा, तत्रैव ८५ । ६६ ।
"इत्युक्ता सा तदा देवी गम्भीरान्तःस्मिता जगौ"
॥)

**उक्तिः**, स्त्री, (वच् + भावे क्तिन् ।) कथनं । तत्-
तपर्य्यायः । व्याहारः २ लपितं ३ भाषितं ४ वचनं
५ वचः ६ । इत्यमरः ॥ ("अतिसंक्षिप्तचिरन्तनो-
क्तिभिः" । इति मुक्तावलीसूचना । तथा, चामरे ।
"एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ" ॥)

**उक्थं**, क्ली, (वच् + थक् ।) सामवेदः । इत्युणादि-

**उक्ष** वृषि । (भ्वादिं -परं -सकं -सेट् ।) इति कवि-
कल्पद्रुमः ॥ उक्षति वृक्षं मेघः । वृट् सेकः । इति
दुर्गादासः ॥ ("उक्षाम्प्रचक्रर्नगरस्य मार्गान्" ।
इति भट्टिकाव्ये । ३ । ५ ॥)

**उक्षः** त्रि, (उक्ष + अच् ।) सिक्तः । धौतः ॥

**उक्षतरः**, पुं, (उक्षन् + तरप् ।) महावृषः । इति
हेमचन्द्रः ॥

**उक्षा**, [न्] पुं, (उक्ष + कनिन् ।) वृषः । इत्यमरः ।
(यथा, ऋग्वेदे ८ । ७१ । ९ । "उक्षा मिमाति
प्रति-
यन्ति धेनवः" । तथा च कुमारे ७ । ७० ।
"तत्रावतीर्य्याच्युतदत्तहस्तः
शरद्घनाद्दीधितिमानिवोक्ष्णः" ॥)
ऋषभौषधिः ॥ इति राजनिर्घण्टः ॥

**उख**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वादि -परं -सकं-
सेट् ।) पञ्चमस्वरी ॥ ओखति । इति दुर्गादासः
॥

**उख**, इ, गतौ । इति कविकल्पद्रुमः ॥ (इदित् -भ्वादि
परं -सकं -सेट् ।) पञ्चमस्वरी । इ उङ्खति । इति
दुर्गादासः ॥

**उखर्व्वलः**, पुं, तृणविशेषः । तत्पर्य्यायः । उखलः २
भूरिपत्रः ३ सुतृणः ४ तृणोत्तमः ५ । अस्य
गुणाः ।
बलदातृत्वं । रुचिकारित्वं । पशूनां सर्व्वदा हित-
कारित्वञ्च । इति राजनिर्घण्टः ॥

**उखा**, स्त्री, (उख + क + टाप् ।) स्थाली । इत्य-
मरः ॥ हाँडि इति भाषा । (यथा, सुश्रुते ।
"इद्धः स्वतेजसा वह्निरुखागतमिवोदकम्" ॥)

**उख्यं**, त्रि, (उखायां संस्कृतं । उखा + यत् ।) स्थाली-
पक्वमांसादि । तत्पर्य्यायः । पैठरं ३ । इत्यमरः
॥
("शूल्यमुख्यञ्च होमवान्" । इति भट्टिः ४ । ९ ।
उखायां भवः । अग्निः । यथा, अथर्ब्बवेदे । ४ ।
१४ । २ ।
"उख्यान् (अग्नीन्) हस्तेषु बिभ्रतः" ॥)

**उग्रं**, त्रि, (उच्यति क्रुधा सम्बध्यते । उच समवाये

कोषः ॥ (यथा, ऋग्वेदे । ३ । ६४ । ७ ।
"विप्रा उक्थेभिः कवयो गृणन्ति" ॥
स्तोत्रम् । यथा,
"अथ योसावन्तरक्षिणि पुरुषो दृश्यते सैवर्क तत्साम तद्यजुः तत् उक्थं तद्ब्रह्म" । इति छान्दोग्ये उपनिषदि ॥)

**उक्थशाः** [स्] पुं, (उक्थैरुक्थानि वा शंसति ।

मन्त्रे श्वेतवहोक्थशस्पुरोडासोण्विन्नित्यत्र श्वेत-वहादीनां डस् पदस्येति वक्तव्यम् । यत्र पदत्वं भावि तत्र डस् । अन्यत्र ण्विः ॥) यजमानः । इति व्याकरणं ॥ (यथा, ऋग्वेदे । ७ । १९ । ९ ।
"नरः शंसन्त्युक्थशास उक्था" ।)

**उक्था**, स्त्री, (वच् + थक् + टाप् ।) छन्दोविशेषः ।

एकाक्षरवृत्तमुक्था । सा द्विविधा । श्रीः १ सर्व्व-गुरुः । यथा श्रीस्ते सास्तां । इति छन्दोमञ्जरी । उः २ सर्व्वलघुः । यथा । उरवतु । इति छन्दो-ऽर्णवः ॥

+ ऋज्रेन्द्रेत्यादिना रक्, गश्चान्तादेशः ।) रौद्रं । उत्कटं । इत्यमरो मेदिनी च ॥
("लोकेषु प्रथितं चोग्रं तपस्तस्य भविष्यति" ।) इति रामायणे ॥
"तामिस्रादिषु चोग्रेषु नरकेषु विवर्त्तनम्" ॥
इति मनुः । १२ । ७५ । यष्ट्यादिधारी । दारुणकर्म्मा ।
यथा मनुः ४ । २१२ ।
"उग्रान्नं सूतिकान्नञ्च पर्य्यायान्तमनिर्द्दशम्" ॥)

**उग्रं**, क्ली, वत्सनाभनामविषं । इति राजनिर्घण्टः ॥

**उग्रः**, पुं, (उच + रक् । गश्चान्तादेशः ।) महादेवः ।

वायुमूर्त्तिरयं । इति मविष्यपुराणम् । (यथा, महाभारते । १३ । शिवसहस्रनामकथने । १७ । ९ ।
"उग्रो वंशकरोवंशो बंशनादो ह्यनिन्दितः" ॥
नृपविशेषः । इति मार्कण्डेये । ७६ । ४७ ।
क्षत्त्रियात् शूद्रायां जात जातिविशेषः । इत्यमरः ॥
आगुरि इति भाषा । (तथा च मनुः । १० । ९ ।
"क्षत्रियात् शूद्रकन्यायां क्रूराचारविहारवान् ।
क्षत्रशूद्रवपुर्जन्तुरुग्रो नाम प्रजायते" ॥)
अस्य कर्म्म विलवासिगोधादिबधबन्धनम्" ।
तथाच मनुः । १० । ४९ ।
"क्षत्त्रोग्रपुक्कसानान्तु विलौकोबधवन्धनम्" ॥

:नक्षत्रगणविशेषः । स च पूर्ब्बफल्गुनीपूर्ब्बाषाढा-

पूर्ब्बभाद्रपदमघाभरण्यात्मकः । इति ज्योतिषं
शोभाञ्जनवृक्षः । इति शब्दचन्द्रिका ॥ केरल-
देशः । इति हेमचन्द्रः ॥ (रुद्रः । उग्रोदेवः ।
स्वनामख्यातो दानवविशेषः । यथा हरिवंशे ।
"वेगवान् केतुमानुग्रः सोग्रव्यग्रो महासुरः" ॥
धृतराष्ट्रस्य शतपुत्त्रेषु एकः । यथा, धृतराष्ट्रपुत्र-
नामकथने १ । ११७ । ११ । महाभारते ।
"उग्रभीमरथौ वीरौ वीरबाहुरलोलुपः" ॥
नरेन्द्रादित्याख्यास्य काश्मीरराजस्य
स्वनामख्यातो
गुरुः । यथा, राजतरङ्गिणी ।
"दिव्यानुग्रहभागुग्राभिधो यस्य गुरुर्व्यधात्" ॥
विष्णुः । इति महाभारते । १३ । १४९ । ५९ ॥
स्त्री, योगिनीभेदः । यथा, कालिकायां । ६०
अध्यायः ।
"महाकाल्यथ रुद्राणी उग्रा भीमा तथैव च" ।)

**उग्रकाण्डः**, पुं, (उग्रः काण्डो यस्य ।) कारवेल्लः ।

इति राजनिर्घण्टः ॥ करेला इति भाषा ।
कापवेल्ल-
शब्देऽस्य गुणादिकं ज्ञेयम् ।)

**उग्रगन्धं**, क्ली, (उग्रो गन्धो यस्मिन् ।) हिङ्गु । इति

राजनिर्घण्टः ॥

**उग्रगन्धः**, पुं, (उग्रस्तीव्रः गन्धो यस्मिन् ।) लशुनः ।

कटफलः । अर्जकवृक्षः । इति राजनिर्घण्टः ॥
चम्पकः । इति शब्दचन्द्रिका ॥ उत्कटगन्धयुक्ते
त्रि ॥ (यथा, हारीते प्रथमस्थानेऽष्टमाध्यायः ।
"उग्रगन्धं पुराणं स्याद्दशवर्षोषितं घृतम् ।
यथा यथा जरां याति गुणवत्स्यात्तथा तथा" ॥)

**उग्रगन्धा**, स्त्री, (उग्रः गन्धो यस्याः ।) अजमोदा ।

वचा । छिक्किकौषधी । इति मेदिनी ॥ अज-
गन्धा । यवानी । इति राजनिर्घण्टः ॥ ("वचा,
यमानी च" । इति भावप्रकाशे पूर्ब्बखण्डे
अनेकार्थ-
नामवर्गः ॥)

**उग्रचण्डा**, स्त्री, (उग्रा चण्डा कोपना स्त्री ।) देवी-

भेदः । यथा महिषासुरं प्रति भगवतीवाक्यम् ।
"उग्रचण्डेति या मूर्त्तिर्भद्रकाली ह्यहं पुनः ।
यया मूर्त्या त्वां हनिष्ये सा दुर्गेति प्रकीर्त्तिता ॥
ततः प्रवृत्ते यज्ञे तु तस्मिन् द्वादशवार्षिके ।
नवम्यां कृष्णपक्षे तु कन्यायां चण्डमूर्त्तिधृक् ॥
योगनिद्रा महामाया योगिनीकोटिभिः सह ।
सतीरूपं परित्यज्य यज्ञभङ्गमथाकरोत् ॥
शङ्करस्य गणैः सर्व्वैः सहिता शङ्करेण च ।
स्वयं बभञ्ज सा देवी महासत्रं महात्मनः ॥
ततो देव्या महाक्रोधे व्यतीते त्रिदिवौकसः ।
पूजयाञ्चक्रुरतुलां देवीं पूर्ब्बोदितेन वै ॥
पूर्ब्बोदितविधानेन पूजामस्या दिवौकसः ।
कृत्वैव परमामापुर्निर्वृतिं दुःखहानये ॥
एवमन्यैरपि सदा कार्य्यं देव्याः प्रपूजनम् ।
विभूतिमतुलां प्राप्तुं चतुर्व्वर्गप्रदायकम् ॥
यो मोहादथवालस्याद्देवीं दुर्गां महोत्सवे ।
न पूजयति दम्भाद्वा द्वेषाद्वाप्यथ भैरव ॥
क्रुद्धा भगवती तस्य कामानिष्टान्निहन्ति वै ।
परत्र च महामायावलिर्भूत्वा स जायते ॥
अष्टम्यां रुधिरैर्म्मांसैर्म्महामांसैः सुगन्धिभिः ।
पूजयेद्बहुजातीयैर्व्वलिभिर्भोजनैः शिवां" ॥
इत्यादि ॥ * ॥ तन्मन्त्रो यथा, --
"भद्रकालीमुग्रचण्डां महामायां महोत्सवे ।
नेत्रवीजन्तु सर्व्वासां पूजने परिकीर्त्तितम् ।
तन्त्रं यथोग्रचण्डायाः पृथक् त्वं शृणु भैरव ॥
आद्यद्वयं नेत्रवीजं मन्त्रस्योपान्तमन्तरे ।
वह्निनान्तस्वरेणेन्दुविन्दुभ्यां तन्त्रमौग्रकम्" ॥
इत्यादि च कालिकापुराणे ५९ । ६० अध्यायौ ॥

**उग्रतारा**, स्त्री, (उग्रादपि भयात् भक्तान् त्राति

तारयति वा या ॥ उग्र + तॄ + णिच् + अच् +
टाप् । यथा, निरुक्तौ ।
"उग्रादपि भयात् त्राति यस्मात् भक्तान् सदा-
म्बिका" ।) देवीविशेषः । अस्या उत्पत्त्यादि
यथा, --
"सर्व्वेषामेव देवानां यज्ञभागानपाहरत् ।
स्वयं शुम्भो निशुम्भश्च दिक्पालत्वं तथा गतौ ॥
सर्व्वे सुरगणाः सेन्द्रास्ततो गत्वा हिमाचलम् ।
गङ्गावतारनिकटे महामायां प्रतुष्टुवुः ॥
अनेकसंस्तुता देवी तदा सर्व्वामरोत्करः ।
मातङ्गवनितामूर्त्तिर्भूत्वा देवानपृच्छत ॥
युष्माभिरमरैरत्र स्तूयते का च भाविनी ।
किमर्थमागता यूयं मातङ्गस्याश्रमं प्रति ॥
एवं ब्रुवन्त्या मातङ्ग्यास्तस्यास्तु कायकोषतः ।
समुद्भूताब्रवीद्देवी मां स्तुवन्ति सुरा इति ॥
चतुर्भुजां कृष्णवर्णां मुण्डमालाविभूषिताम् ॥
खड्गं दक्षिणपाणिभ्यां बिभ्रतीन्दीवरं त्वधः ।
कर्त्रीञ्च खर्परञ्चैव क्रमाद्वामेन बिभ्रतीम् ॥
खं लिखन्तीं जटामेकां बिभ्रतीं शिरसा स्वयम् ।
मुण्डमालां धरां शीर्षे ग्रीवायामपि सर्व्वदा ॥
वक्षसा नागहारन्तु बिभ्रतीं रक्तलोचनाम् ।
कृष्णवस्त्रधरां कट्यां व्याघ्राजिनसमन्विताम् ॥
वामपादं शवहृदि संस्थाप्य दक्षिणं पदम् ।
विनस्य सिंहपृष्ठे तु लेलिहाना शवं स्वयम् ॥
साट्टहासमहाघोरा रावयुक्तातिभीषणा ।
चिन्त्योग्रतारा सततं भक्तिमद्भिः सुखेप्सुभिः" ॥
* ॥
"एतस्याः संप्रवक्ष्यामि या अष्टौ योगिनीस्तु ताः
।
महाकाल्यथ रुद्राणी उग्रा भीमा तथैव च ।
घोरा च भ्रामरी चैव महारात्रिश्च सप्तमी ॥
भैरवी चाष्टमी प्रोक्ता योगिनीस्ताः प्रपूजयेत्" ।
इति कालिकापुराणे ६० अध्यायः ॥ * ॥
अपिच
"ब्रह्मशैलस्य पूर्ब्बस्यां भूमिपीठे व्यवस्थिता ।
"चारुनिम्नं शुभावर्त्तं कामाख्यानाभिमण्डलम् ॥
यत्रोग्रतारारूपेण रमते परमेश्वरी ।
तत्र तेनैव रूपेण पूजितव्या शुभात्मिका ॥
तस्यास्तु वीजं पूर्ब्बस्मिन् उत्तरे प्रतिपादितम् ।
रूपं शृणु नरश्रेष्ठ येन ध्येया सदाशिवा ॥
कृष्णा लम्बोदरी दीर्घा विरला रक्तदन्तिका ।
चतुर्भुजा कृशाङ्गी तु दक्षे कर्त्तृकखर्परौ ॥
खड्गं चेन्दीवरं वामे शीर्षे त्वेकजटां पुनः ।
वामपादं शवस्योर्व्वोर्निधायोत्थाय दक्षिणम् ॥
शवस्य हृदये न्यस्य साट्टहासं प्रकुर्व्वती ।
नागहारशिरोमालाभूषिता कामदा परा ॥
त्रिकोणं मण्डलं चास्या हुंकारमध्यवीजकम् ।
द्वारे नानायोगिनीनां नामान्यस्यास्तु तन्त्रके ॥
ज्ञेयानि नरशार्द्दूल तत्प्रोक्तं वान्यगोचरे" ।
इति कालिकापुराणे कामाख्यारूपनिर्णये ८१
अध्यायः ॥ * ॥ सा च वशिष्ठशापात् वामा
भूता । यथा, --
और्व्व उवाच ।
"एतद्विष्णोर्व्वचः श्रुत्वा विधिना सहितः स तु ।
अङ्गीचकार हृदये तद्वचः साध्यसाधने ॥
विसृज्य तान् ब्रह्मविष्णुयमान् वृषभवाहनः ।
आदाय सगणान् सर्व्वान् कामरूपान्तरं ययौ ॥

एतासु मूर्त्तिषु सदा पादलग्नो नृणां भवान् ।
पूज्यो भविष्यसि त्वं वै देवानामपि रक्षसाम् ॥
आदिसृष्टौ उग्रचण्डामूर्त्या त्वं निहतः पुरा ।
द्वितीयसृष्टौ तु भवान् भद्रकाल्या मया हतः ॥
दुर्गारूपेणाधुना त्वां हनिष्यामि सहानुगम्” ।
इत्यादि ॥ * ॥ तस्याः प्रादुर्भावो यथा ।
श्रीभगवानुवाच ।
“उग्रचण्डा तु या मूर्त्तिरष्टादशभुजाऽभवत् ।
सा नवम्यां पुरा कृष्णपक्षे कन्यां गते रवौ ॥
प्रादुर्भूता महाभागा योगिनीकोटिभिः सह” ॥ * ॥
अन्या मूर्त्या दक्षयज्ञभङ्गः कृतः । यथा, --
“आषाढस्य तु पूर्णायां सत्रं द्वादशवार्षिकम् ।
दक्षः कर्त्तुं समारेभे वृताः सर्व्वे दिवौकसः ॥
ततोऽहं न वृतस्तेन दक्षेण सुमहात्मना ।
कपालीति सती चापि तज्जायेति च नो वृता ॥
ततो रोषसमायुक्ता प्राणांस्तत्याज सा सती ।
त्यक्तदेहा सती चापि चण्डमूर्त्तिस्तदाभवत् ॥

शुम्भो निशुम्भो ह्यसुरौ बाधेते सकलान् सुरान् ।
तस्मात्तयोर्बधायाहं स्तूयेऽद्य सकलैः सुरैः ॥
विनिःसृताया देव्यास्तु मातङ्ग्याः कायतस्तदा ।
भिन्नाञ्जननिभा कृष्णा साभूद्गौरी क्षणादपि ॥
कालिकाख्याभवत् सापि हिमाचलकृताश्रया ।
तामुग्रतारामृषयो वदन्तीह मनीषिणः ॥
उग्रादपि भयात्त्राति यस्माद् भक्तान् सदाम्बिका ।
एतस्याः प्रथमं वीजं कथितं तन्त्रमेव च” ॥ * ॥
“एषैवैकजटाख्यातिर्यस्मात्तस्या जटाधिका ।
शृणु त्वं चिन्तनं चास्याः सम्यक् वेतालभैरवौ ॥
यथा ध्यात्वा महादेवीं भक्तः प्राप्नोत्यभीप्सितम् ।

उग्रतारां ततो देवीं गणांश्च प्राह शङ्करः ।
उत्सारयन्तु सकलान् इमान् लोकान् गणा द्रुतम् ॥
उग्रतारे महादेवि त्वञ्चाप्युत्सारय द्रुतम् ॥
ततो गणाः कामरूपाद्देवीचाप्यपराजिता ।
लोकानुत्सारयामासुः पीठं कर्त्तुं रहस्यकम् ॥
उत्सार्य्यमाने लोके तु चतुर्व्वर्णैर्द्विजातिभिः ।
सन्ध्याचलो गतो विप्रो वशिष्ठः कुपितो मुनिः ॥
सोऽप्युग्रतारया देव्या उत्सारयितुमीशया ।
गणैः सह वृतः प्राह शापं कुर्व्वन् सुदारुणम् ।
यस्मादहं धृतं वामे त्वयोत्सारयितुं मुनिः ॥
तस्मात्त्वं वाम्यभावेन पूज्या भव समन्त्रिका ।
भर्त्स्यन्ति म्लेच्छवत् यस्माद्गणास्ते मन्दबद्धयः ।
भवन्तु म्लेच्छास्तस्माद्व भवत्या काभरूपके ॥

:महादेवोऽपि यस्मान्मां निःसारयितुमुद्यतः ।
तपोबलं मुनिं दान्तं म्लेच्छवद्वेदपारगभ् ॥
तस्मात् म्लेच्छप्रियो भूयात्
शङ्करश्चास्थिभस्मधृक् ।
एतत्तु कामरूपाख्यं म्लेच्छैर्गुप्त्रं भवद्वलं ॥
स्वयं विष्णुर्न चायाति यावत् कालमिदं पुनः ।
विरलाश्चागमाः सन्तु यत्र तत्प्रतिपादकाः ॥
विरलं यस्तु जानाति कामरूपागमं बुधः ।
स एव प्राप्तकालेऽपि पूर्ब्बं फलमवाप्स्यति ॥
एवमुक्त्वा वशिष्ठस्तु तत्रैवान्तरधीयत ।
ते गणाः म्लेच्छतां याताः कामरूपे सुरालये ॥
वामाऽभूदुग्रतारापि शम्भुर्म्लेच्छरतोऽभवत्” ।
इति च कालिकापुराणे ८३ अध्यायः ॥

**उग्रत्वं**, क्ली, (उग्रस्य भावः । उग्र + त्व ।) उग्रता ।
उत्कटता । तत्पर्य्य यः । चण्डता २ । इति
हेम-
चन्द्रः ॥

**उग्रधन्वा**, [न्] पुं, (उग्रं धनुर्यस्य । धनुषश्चेत्यनङ् ।)
इन्द्रः । इति हेमचन्द्रः ॥ (“स इषुहस्तैः स
निष-
ङ्गिभिर्वशी संस्रष्टासायुध इन्द्रो गणेन ।
संसृष्टजित्
सोमपा बाहुशद्ध्युग्रधन्वा प्रतिहिताभिरस्ता” ।
इति ऋग्वेदे । १० । १०३ । ३ ॥ शिवः ।
उग्रधनु-
र्व्विशिष्टे, त्रि ॥)

**उग्रनासिकः**, त्रि, (उग्रा दीर्घा नासिका यस्य ।)
दीर्घनासिकाविशिष्टः । इति हेमचन्द्रः ॥

**उग्रशेखरा**, स्त्री, (उग्रस्य महादेवस्य शेखरं मस्तकं
वासस्थानत्वेनयस्याः ।) गङ्गा । इति
शब्दरत्नावली ॥

**उग्रसेनः**, पुं, (उग्रा सेना यस्य ।) मथुरादेशस्य राज-
विशेषः । स च आहुकपुत्त्रः । कंसराजपिता च
।
परीक्षित्पुत्त्रः । इति श्रीभागवतम् ॥ (तथा
महाभारतेऽपि “जनमेजयः पारिक्षितः सह-
भ्रातृभिः कुरुक्षेत्रे दीर्घसत्रमुपास्ते । तस्य
भ्रातर-
इति कितच् प्रत्ययः ।) विदितम् । न्यस्तम् ।
परि-
मितम् । युक्तम् । इति हेमचन्द्रः ॥ ग्राह्यम् । इति
शब्दरत्नावली ॥

**उच्चं**, त्रि, (उच्चिनोतीति । चिञ चित्यां अन्येभ्योऽपि
इति डः । उच्चैस्त्वमस्ति अत्र वा । अर्श
आद्यच्,
अव्ययानामिति टिलोपः ।) उपरि । उँचु इति
भाषा । तत्पर्य्यायः । प्रांशु २ उन्नतम् ३ उदग्रम्
४
उच्छ्रितम् ५ तुङ्गम् ६ । इत्यमरः ॥ उत्तुङ्गं ७ ।
इति
तट्टीका ॥ (यथा, रघुः ३ । १३ ।
“ग्रहैन्ततः पञ्चभिरुच्चसंश्रयैः,
असूर्य्यगैः सूचितभाग्यसम्पदम्” ।)
(ज्योतिषोक्तं ग्रहाणामुच्चस्थानम् । यथा,
“अजवृषभमृगाङ्गनाकुलीराः
झषबणिजौ च दिवाकरादितुङ्गाः ।
दशशिखिमनुयुक्तिथीन्द्रियांशै-
स्त्रिणवकविंशतिभिश्च तेऽप्यनीचाः” ॥
सूर्य्यादीनां सप्तानां ग्रहाणां मेषवृषभादयो राशयः
श्लोकोक्तक्रमविशिष्टा उच्चस्थानानि
स्वस्वतुङ्गा-
पेक्षया सप्तमस्थानानि च नीचानि, तत्रोच्चेष्वपि
दशमादयो राशित्रिंशाशाः यथाक्रमं उच्चेषु पर-
मोच्चा नीचेषु परमनीचा भवन्तीति ॥)

**उच्चकैः**, [स्] व्य, (उच्चैस् + अव्ययसर्व्वनाम्नां इति
प्रागिवीयेषु अर्थेषु टेः प्रागकच् ।) उच्चैः । अति-
शयोच्चम् । इति द्विरूपकीषः ॥ (यथा विष्णु-
पुराणम् ।
“वशिष्ठाद्यैर्दयासारै स्तोत्रं कुर्व्वद्भिरुच्चकैः” ।
उन्नतम् । यथा माघे १ । १२ ।
“गिरेस्तडित्वानिव तावदुच्चकै-
र्जवेन पीठादुदतिष्ठदच्युतः” ॥)

**उच्चटा**, स्त्री, (उत् + चट् + अच् + टाप् ।) गुञ्जा ।
भूम्यामलकी ।
(“उच्चटाचूर्णमप्येवं क्षीरेणोत्तममिष्यते ।
शतावर्य्युच्चटामूलं पेयमेवं बलार्थिना” ॥
इति सुश्रुते चिकित्सितस्थाने २६ ।)
तत्पर्य्यायः: । नीवी २ ॥ इति हेमचन्द्रः ॥ (पुष्पा-
दीनामुत्तालनम् । यथा, रघुः १० । ४४ ।
“करिष्यामि शरैस्तीक्ष्णैस्तच्छिरःकमलोच्चयम्”
।
“पुष्पोच्चयं नाटयति” इति शाकुन्तले १ माङ्कें ॥
राशिः । समष्टिः । यथा, --
“शिलोच्चयोऽपि क्षितिपालमुच्चैः” । रघुः । २ ।
५१ ।
“वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः”
।
इति साहित्यदर्पणे । २ । १ ॥)

**उच्चलं**, क्ली, (उच्चलतीति । उत् + चल् + अच् ।)
मनः । इति हेमचन्द्रः ॥

**उच्चललाटा**, स्त्री, (उच्चमुन्नतं ललाटं यस्याः ।) उन्नत-
ललाटवती । इति त्रिकाण्डशेषः ॥

**उच्चाटनं**, क्ली, (उत् + चट् + णिच् + ल्यट् ।) उत्-
खातम् । उचाटन इति माषा । षट्कर्म्मान्तर्गता-
भिचारकर्म्मविशेषः । अस्य देवता दुर्गा । तिथिः
कृष्णा चतुर्द्दशी अष्टमी च । वारः शनिः । जप-
माला साध्यस्य केशसूत्रग्रथिततुरङ्गदशनोद्भवा ।
फलम् । उच्चाटनं स्वदेशादेर्भ्रंशनं परकीर्त्तितम् ॥
इति शारदातन्त्रम् ॥

**उच्चारः**, पुं, (उच्चार्य्यते परित्यज्यते इति । उत् + चर
+ णिच् + घञ् ।) विष्ठा । इत्यमरः ॥
(“मूत्रोच्चारसमुत्सर्गं दिवा कुर्य्यादुदङ्मुखः” ।
इति मनुः । ४ । ५० ।)
“यस्योच्चारं विना मूत्रं सम्यग्वायुश्च गच्छति ।
दीप्ताग्नेर्लघुकोष्ठस्य स्थितस्तस्योदरामयः” ॥
इति सुश्रुते उत्तरतन्त्रे चत्वारिंशत्तमोऽध्वायः ।)
उच्चारणम् ॥

**उच्चारणं** क्ली, (उत् + चर + णिच् + ल्युट् ।) कथ-
नम् । वाङ्निष्पत्तिकरणम् ॥ यथा । “हसे अकार-
उच्चारणार्थः” । इति मुग्धबोधव्याकरणे, सन्धि-
संज्ञा २ । अपिच ।
“कर्म्मोच्चारणमात्रेण स्पष्टमात्रानुबन्धतः” ।
इति कविकल्पद्रुमः ॥

**उच्चावचः**, त्रि, (उदक् च अवाक् च । मयूरव्यंसका-
दित्वात् साधुः ।) अनेकप्रकारः । तत्पर्य्यायः ।

स्त्रयः श्रुतसेन उग्रसेनो भीमसेनश्च” इति । तथा
च तत्रैव १ । ६५ । ४२ ।
“भीमसेनोग्रसेनौ च सुपर्णो वरुणस्तथा” ॥)

**उग्रसेनजः**, पुं, (उग्रसेनात् त्रायते इति । उग्रसेन + जन + ड ।) कंसनामासुरराजः । इति त्रि-काण्डशेषः ॥

**उग्रा**, स्त्री, (उच्यति क्रुधा सम्बध्यते या । उच सम-वाये + ऋज्रेत्यादिना रक् गश्चान्तादेशः । तत-ष्टाप् ।) यवानी । वचा । इति राजनिर्घण्टः ॥ (“दन्तचाले हितं श्रेष्ठं तिलोग्राचर्व्वणं सदा” । इति वैद्यकचक्रपाणिसंग्रहे मुखरोगाधिकारे ।) छिक्किकौषधी । इति हेमचन्द्रः ॥ उग्रजातिस्त्री ।
(यथा मनुः १० । १९ ।
“क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्यते” ॥)
धन्याकम् । इति रत्नमाला ॥ प्रखरा नारी ॥

**उङ्कुणः**, पुं, उत्कणः । इति शब्दमाला ॥ उकुन् इति भाषा ।

**उच**, इ र य समवायने । मिश्रणे । इति कवि-कल्पद्रुमः ॥ (दिवां -परं -सकं -सेट् ।) ह्रस्वादिः । इ र
औचत् औचित् । अस्मात् पुरुषादित्वात् नित्यं ङ
इत्यन्ये । य उच्यते केशः स्नानात् । इति दुर्गादासः ॥

**उचितं**, त्रि, (वच + “रुचिवचिकुचिकुटिभ्यः कितच्” नागरमुस्ता । इति राजनिर्घण्टः ॥ दम्भः । चर्य्या ।
लशुनप्रभेदः । इति हेमचन्द्रः ॥ तृणविशेषः । निर्व्विषी इति ख्याता । चेँचुया इति केचित् । इत्यमरटीकायां भरतः । तत्पर्य्यायः । चूडाला २
चक्रला ३ । इत्यमरः ॥ अम्बुपत्रा ४ जटिला ५ शुक्रला ६ उत्तानकः ७ । इति रत्नमाला ॥

**उच्चण्डः**, त्रि, (उत् चण्डतीति । चडि कोपे + अच् ।) त्वरान्वितः । अविलम्बितः । इत्यमरः ॥

**उच्चतरुः**, पुं, (उच्चः उन्नतस्तरुः ।) नारिकेलवृक्षः । इति राजनिर्घण्टः ॥ (नारिकेलशब्देऽस्य विवरणं ज्ञातव्यम् ॥)

**उच्चतालं**, क्ली, (उच्चः मत्ततया प्रचण्डस्तालो यत्र ।) पानगोद्व्यां नृत्यम् । इति हेमचन्द्रः ॥

**उच्चदेवः**, पुं, (उच्चः सर्व्वदेवमयत्वात् श्रेष्ठः देवः ।) श्रीकृष्णः । इति त्रिकाण्डशेषः ॥

**उच्चन्द्रः**, पुं, (उत स्वल्पं अवशिष्टश्चन्द्रो यस्मिन् ।) रात्रिशेषः । इति शब्दरत्नावली ॥

**उच्चयः**, पुं, (उत् + चि + अच् ।) परिधानवस्त्रग्रन्थिः । नैकभेदः २ । इत्यमरः ॥ (यथा, मनुः १ । ३८ । (“उल्कानिर्घातकेतूंश्च ज्योतींष्युच्चावचानि च” ।
“उच्चावचेषु भूतेषु स्थितं तं व्याप्य तिष्ठतः” । इति च मनुः ६ । ७३ ॥)

**उच्चिङ्गटः**, पुं, तृणगडमत्स्यः । कोपनपुरुषः । इति मेदिनी ॥

**उच्चूलः**, पुं, (उद्गता चूडा यस्य । डस्य लत्वम् ।) ध्वजोद्ध्वमुखकूर्च्चः । इति हेमचन्द्रः ॥ निशानेर पाग
इति भाषा । अस्य पट्टका अवचूलः ॥

**उच्चैः**, [स्] व्य, (उच्चीयते इति । उत् + चि + डैस् ।) उच्चम् । महत् । इत्यमरः ॥ (यथा, कुमारे २ । ४७ ।
“उच्चैरुच्चैःश्रवास्तेन हयरत्नमहारि च” ।
“शिलोच्चयोऽपि क्षितिपालमुच्चैः” ।
इति रघुः २ । ५१ । यथा, माघः २ । ५१ ।
“अकृत्वा हेलया पादमूच्चेर्भूर्द्धसु विद्विषाम्” ॥)

**उच्चैःश्रवाः** [स्] पुं, (उच्चैः श्रवो यशो यस्य । यद्वा उच्चैः श्रवसी यस्य । यद्वा उच्चैः शृणोतीति उच्चैः

:+ श्रु + असुन् ।) इन्द्रघोटकः । इत्यमरः ॥ स तु

श्वेतवर्णः समुद्रमन्थनोत्थितः । इति
श्रीभागवतम् ॥
("उच्चैःरुच्चैःश्रवास्तेन हयरत्नमहारि च" ॥
इति कुमारे । २ । ४७ ॥)

**उच्चैर्घुष्टं**, क्ली, (उच्चैर्घुष्यते स्म । घुष + क्त ।) घोषणा ।

इत्यमरः ॥

**उच्छ**, इ श उञ्छे । इति कविकल्पद्रुमः ॥ (तुदां-

इदित् -परं -सकं -सेट् ।) ह्रस्वादिः । इ उञ्छति । श
उञ्छती उञ्छन्ती । उञ्छ उद्धृतशस्यस्य शेषाप-
हरणम् । (यथा, हलायुधः ।
"सुलभं शस्यमुञ्छन्ति यद्देशे ब्रतिनो द्विजाः" ।
उञ्छः स्फोटनमित्येके । इति दुर्गादासः ॥

**उच्छ**, ई श बन्धे । समापने अतिक्रमे । वर्जने । इति

कविकल्पद्रुमः । (तुदां-परं-सकं-सेट् ।) ई उष्टः ।
श उच्छती उच्छन्ती । चत्वारोऽर्थाः । समापने ।
(अक्त०) उच्छति रात्रिः । "भरण्यां व्युष्टायामुषसि
जनयासास तनयम्" । व्युष्टायां समाप्तायामित्यर्थः ।
इति दुर्गादासः ॥

**उच्छन्नं**, त्रि, (उत् + छद् + क्त ।) नष्टम् । इति

श्रीभगवद्गीता ॥

**उच्छादनं**, क्ली, (उत् + छद् + णिच् + ल्युट् ।) उत्-

सादनम् । उद्वर्त्तनम् । गन्धद्रव्यद्वारा शरीरनिर्म-
लीकरणम् ॥ इत्यमरटीका ॥
("यथाशक्तिप्रदानेन स्नापनोच्छादनेन च" ।
इति रामायणे । २ । १११ । १० ॥)

**उच्छिलीन्ध्रं**, क्ली, (उत्थितं शिलीन्ध्रम् ।) छत्रिका ।

इति श्रीभागवतम् ॥ कोड्क छाता इति भाषा)
("उद्गतशिलीन्ध्रे, त्रि, "कर्त्तुं यच्च प्रभवति
महीमुच्छिलीन्ध्रामबन्ध्याम्" ॥ इति मेघदूते ।
पूर्ब्बमेघे । १८ ॥)

शीश्चापदि ज्ञेयम्" ॥ * ॥ "सर्व्वत्रोच्छिष्टे तु व्रत-
द्वैगुण्यं आपदज्ञानभुक्तोत्तारिते मासयावकव्रतं
तदशक्तौ धेनुद्वयं षट्कार्षापणा वा देयाः । तत्रो-
च्छिष्टान्ने पराक इति । अभ्यासभेदे त्वावृत्ति-
रूहणीया" । इति प्रायश्चित्ततत्त्वम् ॥ * ॥ अथो-
च्छिष्टस्य चाण्डालादिस्पर्शप्रायश्चित्तम् । (तत्रैव
उच्छिष्टस्य चाण्डालादिस्पर्शप्रायश्चित्तप्रकरणे
द्रष्टव्यम् ।) आपस्तम्बः ।
"भुक्तोच्छिष्टस्त्वानाचान्तश्चाण्डालैः श्वपचेन वा ।
प्रमादात् स्पर्शनं गच्छेत् तत्र कुर्य्याद्विशोधनम् ॥
गायन्यष्टसहस्रन्तु द्रुपदां वा शतं जपेत् ।
त्रिरात्रोपोषितो भूत्वा पञ्चगव्येन शुध्यति ॥
भुक्तोच्छिष्टोऽन्त्यजैः स्पृष्टः प्राजापत्यं समाचरेत् ।
अर्द्धोच्छिष्टे स्मृतः पादः पाद आमाशने तथा" ॥
प्राजापत्यं ज्ञाने अर्द्धोच्छिष्टो येनाद्यग्रास आस्ये
निक्षिप्तः न तु निगीर्णः । दक्षः ।
"पाने मैथुनसंसर्गे तथा मूत्रपूरीषयोः ।
संस्पर्शं यदि गच्छेत्तु शवोदक्यान्त्यजैः सह ॥
दिनमेकं चरेन्मूत्रे पुरीषे तु दिनद्वयम् ।"
दिनत्रयं मैथुने स्यात् पाने स्याच्च चतुष्टयम् ॥
काश्यपः ।
श्वशूकरान्त्यचाण्डालमद्यभाण्डरजस्वलाः ।
यद्यच्छिष्टः स्पृशेत्तत्र कृच्छ्रं सान्तपनं चरेत् ॥
एतद्ज्ञानाभ्यासे सान्तपने धेनुद्वयं ॥ ब्रह्मपुराणे ।
"उच्छिष्टेन तु शूद्रेण विप्रः स्पृष्टस्तु तादृशः ।
उपवासेन शुद्धिः स्यात् शुना संस्पृष्ट एव वा ॥
उच्छिष्टेन तु विप्रेण विप्रः स्पृष्टस्तु तादृशः ।
उभौ स्नानं प्रकुरुतं सद्य एव समाहितौ" ॥
अनुच्छिष्टशूद्रस्पर्शे उच्छिष्टब्राह्मणस्य नक्तमिति
प्रायश्चित्तविवेकः ॥ त्यक्तं । इति हेमचन्द्रः ॥ (यथा,
शतपथब्राह्मणे २ । ३१ । ११ ।
"हुतोच्छिष्टमिदम्" ।
इति । अनाचान्तो भक्षकः । यथा मनुः २ । ५६ ।
"नचैवात्यशनं कुर्य्यात् नचोच्छिष्टः क्वचित्
व्रजेत्" ।

**उच्छिष्टभोजनः**, पुं, (उच्छिष्टं देवनैवेद्यावशिष्टं भो-

जनं यस्य ।) देवनैवेद्यवलिभोजनकर्त्ता । इति
हेमचन्द्रः ॥

**उच्छिष्टमोदनं**, क्ली, सिक्थम् । इति राजनिर्घण्टः ।

चन्द्रः ॥ (यथा, हितोपदेशः ३ । ९७ ।
("अन्यदुच्छङ्खलं सत्त्वमन्यत्
शास्त्रनियन्त्रितम्" ॥
"सम्मूर्च्छदुच्छृङ्खलशङ्खनिस्वनः" ।
इति माघः । १२ । १३ ॥)

**उच्छ्रयः**, पुं, (उत् + श्रि + अच् ।) पर्ब्बतवृक्षादेरु-

च्चता । तत्पर्य्यायः । उच्छ्रायः २ उत्सेधः ३ । इत्य-
मरः ॥ ("प्राप्ते यूपोच्छ्रये तस्मिन् षड्बैल्वाः
खादिराश्च षट्" । इति रामायणे ॥)

**उच्छ्रायः**, पुं, (उत् + श्रि + घञ् ।) उच्छ्रयः । उच्चता ।

इत्यमरः ॥ (यथा, याज्ञवल्क्ये ।
"ग्रहाधीना नरेन्द्राणामुच्छ्रायाः पतनानि च" ।
"शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितथ स्थितः खं" ॥
इति मेघदूते । ६० ॥)

**उच्छ्रितं**, त्रि, (उत् + श्रि + क्त ।) संजातं । समुन्नद्धं ।

उच्चं । प्रवृद्धं । इति मेदिनी ॥ (यथा, महाभा-
रते १३ । दानधर्म्मकथने । ८१ । २६ ।
"सर्व्व-
मयैर्भान्ति शृङ्गैश्चारुभिरुच्छ्रितैः" ।) त्यक्तं । इति
हेमचंन्द्रः ॥

**उच्छ्वसितं**, त्रि, (उत् + श्वस् + क्त ।) प्रफुल्लं । विक-

सितं । इति हेमचन्द्रः ॥ (भावे + क्त । जीवितम् ।
स्फुरितम् । प्राणनम् । यथा, मेघदूते । १०१ ।
"त्वामुत्कण्ठोच्छ्वसितहृदया वीक्ष्य सम्भाव्य
चैव" ।
"सा खलु भगवतः कण्वस्य
कुलपतेरुच्छ्वसितम्" ।
इति शाकुन्तले ३ अङ्के ॥)

**उच्छ्वासः**, पुं, (उत् + श्वस् + घञ् ।) अन्तर्मुखश्वासः ।

("प्रियामुखोच्छ्वासविकम्पितं मधु" । इति ऋतु-
संहारे ग्रीष्मवर्णनायां ३ ।) तत्पर्य्यायः । आहरः
२

**उच्छिष्टं**, त्रि, (उत् शिष्यते यत् । उत् + शिष + क्त ॥) भुक्तावशिष्टम् । इति पुराणम् ॥ एँटो इति भाषा । तद्भोजनप्रायश्चित्तं यथा (प्रायश्चित्ततत्त्वे चाण्डालाद्यन्नभक्षणप्रायश्चित्तप्रकरणे ।) विष्णुः ।
"आमश्राद्धाशने त्रिरात्रं पयसा वर्त्तेत ब्राह्मणः शूद्रोच्छिष्टाशने च वमनं कृत्वा सप्तरात्रमुपवसेत्"
इति । एवं उच्छिष्टे यः पराक उक्तोऽङ्गिरसा सोऽपि प्रागुक्तसकृदापदादिविषये बोध्यः । विष्णु नापि अनुच्छिष्टे पराकोक्तेः । तथाचाङ्गिराः ।
"चाण्डालपतितादीनामुच्छिष्टान्नस्य भक्षणे । द्विजः शुध्येत् पराकेण शूद्रः कृच्छ्रेण शुध्यति" ॥
यत्तु मिताक्षरायामापस्तम्बः ।
"अन्त्यानां भुक्तशेषन्त भक्षयित्वा द्विजातयः । चान्द्रं कृच्छ्रं तदर्द्धन्तु ब्रह्मक्षत्रविशां विधिः" ॥
चान्द्रं चान्द्रायणम् । कृच्छ्रं तप्तकृच्छ्रम् । एतच्च ब्राह्मणस्य सकृदज्ञानविषयं बलात्कारानुत्तारेऽप्यन्नेतरताम्बूलाद्युत्सृष्टपरञ्च । तत्राज्ञाने आपस्तम्बेन उच्छिष्टे चान्द्रायणविधानात् । अङ्गिरसा अन्त्यावसायिनामित्यादि प्रागुक्तवचने सामान्यतस्तप्तकृच्छ्रविधानात् अनुच्छिष्टेऽपि तथात्वादेव सर्व्वत्रानुच्छिष्टादुच्छिष्टे द्वैगुण्यं बोध्यम् । प्रायश्चित्तविवेके संसर्गप्रकरणेऽप्येवम् । क्षत्रियविमोम इति भाषा ॥

**उच्छीर्षकं**, क्ली, (उत् ऊर्द्ध्वस्थापितं शीर्षं मस्तकं येन । बहुव्रीह्यर्थे कन् ।) उपधानम् । इति हलायुधः । वालिश इति भाषा ॥

**उच्छूनं**, त्रि, (उत् + श्वि + क्त । ओदितश्चेति तस्य नः । यजादित्वात् सम्प्रसारणे पूर्ब्बरूपे च हल इति दीर्घः ।) स्फीतम् । उन्नतम् । वर्द्धितम् । तथा च प्राचीनाः ।
"कामिन्याः कियदुच्छूनमुरः प्रेयान् समीक्षते । नव्यं शालिमिवोत्पन्नमतिदीनः कृषीबलः" ॥
(स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः । इति साहित्यदर्पणे । १ परिच्छेदे ॥)

**उच्छृङ्खलं**, त्रि, (उङ्गतं शृङ्खलं निगडं यस्य ।) शृङ्ग-लारहितं । तत्पर्य्यायः । अबाधं २ उद्दाम ३ अनियन्त्रितं ४ अनर्गलं ५ निरङ्कुशं ६ । इति हेमचन्द्रः ॥ आख्यायिकापरिच्छेदः । आश्वासः । इति मेदिनो ॥ (यथा, काव्यादर्शे आख्यायिकालक्षणकथने, --
"वक्त्रं चापरवक्त्रञ्च सोच्छूआसत्वञ्च भेदकम्" ॥)

**उज्जयनी**, स्त्री, विशालानगरी । इति त्रिकाण्डशेषः ॥ उजैन इति पश्चिमदेशे ख्याता । वङ्गदेशे तु उजनी । इयं मालवदेशस्य नगरी । मोक्षदसप्तपुर्य्यन्तर्गतपुरी । पुरा विक्रमादित्यराजधानी च अधुना महाराष्ट्रेणाधिकृता ॥ (यथा, मेघदूते पूर्ब्बमेधे । २९ ॥
"सौधोत्सङ्गप्रणयविमुखो मा च भूरुज्जयिन्याः" ।)

**उज्जयन्तः**, पुं, रैवतपर्ब्बतः । इति हेमचन्द्रः ॥

**उज्जयिनी**, स्त्री, उज्जयनीनगरी । तत्पर्य्यायः । विशाला २ अवन्ती ३ पुष्ककरण्डिनी ४ । इति हेमचन्द्रः ॥

**उज्जासनं**, क्ली, (उत्, जसु हिंसायाम् । णिच् भावे ल्युट् ।) मारणम् । बधः । इत्यमरः ॥

**उज्जृम्भं**, त्रि, (उत् + जृम्भि + घञ् ।) प्रफुल्लम् । प्रस्फुटितम् । इति हेमचन्द्रः ॥
("उज्जृम्भवदनाम्भोजा भिनत्त्यङ्गानि साङ्गना" । इति साहित्यदर्पणे । ३ परिच्छेदे ॥)

**उज्जृम्भितं**, त्रि, (उत् + जृम्भि + क्त ॥) प्रफुल्लम् । चेष्टायां, क्ली । इति मेदिनी ॥

**उज्ज्वलं**, त्रि, (उच्चैर्ज्वलति प्रकाशते इति । उत् + ज्वल् + अच् ।) दीप्तम् । विशदम् । विकाशितम् ।

:इति मेदिनी ॥ (यथा, साहित्यदर्पणे । ३ परि-
च्छेदः । "अस्माकं सखि ! वाससी न रुचिरे ग्रैवेयकं नोज्ज्वलं" ।
"विचित्रोज्ज्वलवेशा तु बलन्नूपुरनिःस्वना" ॥)

**उज्ज्वलं**, क्ली, (उत् + ज्वल + अच् ।) स्वर्णम् ।
इति राजनिर्घण्टः ॥

**उज्ज्वलः**, पुं, (उत् + ज्वल + अच् ।) शृङ्गाररसः ।
इत्यमरः ॥ (यथा, नैषधे १ । १ ।
"स राशिरासीन्महसां महोज्ज्वलः" ॥)

**उज्झ** श त्यागे । इति कविकल्पद्रुमः ॥ (तुदां -परं-
सकं -सेट् ।) जोपध इत्येके । उजिज्झिषति ।
औजिज्झत् । श उज्झती उज्झन्ती । इति
दुर्गादासः ॥ अन्यत् उद्झधातौ द्रष्टव्यम् ॥

**उज्झः**, पुं, (उज्झतीति । उज्झ + अच् ।) त्यागः ।
विसर्जनम् । (यथा, मनुः ११ । ५६ ।
"ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः" ॥)

**उज्झितं**, त्रि, (उज्झ + क्त ।) उत्सृष्टम् । त्यक्तम् ।
वर्जितं । इति हलायुधः ॥ (यथा किराते । ५ ।
६ ।
"अविरतोज्झितवारिविपाण्डुभिः" ।
"उज्झितायास्त्वया नाथ ! तदैव मरणं वरम्" ॥
इति रामायणे २ । ३० । २० ॥)

**उञ्छं**, क्ली, (उछि + घञ् ।) पक्षिचञ्च्वादानवत् शस्य-
ग्रहणं । यथा । उपात्तशस्यात् क्षेत्रात् शेषावच-
यने । उञ्छेन पक्षिचञ्च्वादानवद्ग्रहणेन शिल्यते
सञ्चीयते उञ्छशिलं उञ्छिउञ्छे शिल उञ्छे
कृद्धोरित्युक्तेः कृगृज्ञेति इजुङन्त्वात् कः उञ्छशि-
लम् । संघातं विगृहीतं विपर्य्यस्तञ्च नाम । "शक्या
न चेदुञ्छशिलेन वृत्तिः । फलेन मूलेन च वारिणा
च" इति । समाहारद्वन्द्वे उञ्छं शिलञ्च । उञ्छं
भैक्षञ्च यच्चान्यत्तत् परिग्रहणन्तु ऋतम् । इति
"ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम्" ॥)

**उञ्छशीलः**, त्रि, (उञ्छः शीलं वृत्तं यस्य ।) उञ्छ-
जीवी । उद्धृतशस्यस्य शेषाहरणकर्त्ता । इति
पुराणम् ॥ छिचेरु इति भाषा ॥

**उटः**, पुं, तृणपर्णादिः । इत्यमरटीकायां भरतः ॥

**उटजः**, पुं, क्ली, (उटास्तृणपर्णादयस्तेभ्योजायते इति ।
उट + जन + ड ।) मुनीनां पत्ररचितगृहम् ।
तत्पर्य्यायः । पर्णशाला २ । इत्यमरः ॥ पर्णोटजः
३ ।
इति शब्दरत्नावली ॥ यथा रघुः ।
('आकीर्णमृषिपत्नीनामुटजद्वाररोधिभिः' । १ ।
५० ।
'मृगैर्वर्त्तितरोमन्थमुटजाङ्गनभूमिषु" । १ । ५२ ।)
गृहमात्रम् । इत्यमरमाला ॥

**उठ** उपघाते । (भ्वादिं-परं-सकं-सेट् ।) इति कवि-
कल्पद्रुमः ॥ ह्रस्वादिः । ओठति खलः साधुम् ।
इति दुर्गादासः ॥

**उड** संहतौ । (परं-अकं-सेट् ।) सौत्रधातुरयम् । इति
कविकल्पद्रुमः ॥ उडुपः । इति दुर्गादासः ॥

**उडु**, क्ली स्त्री, (उ रोषोक्तिपूर्ब्बकं डयते इति । उ
+ डी + डु मितद्र्वादित्वात् डुः ।) नक्षत्रम् ।
इत्यमरः ॥ ("तदोडुराजः कुकुभः करैर्मुखम्" ।
इति भागवतं । १० । २९ । २ । तथा रघुवंशे ।
१६ । ६५ ।
"इन्दुप्रकाशान्तरितोडुतुल्याः" ।)
जले क्ली । इत्यमरटीकायां भरतः ॥

**उडुपः**, पुं क्ली, (उडुनोजलात् पाति रक्षतीति ।
उडु + पा + क ।) भेलकम् । भेला माड़ इत्यादि
भाषा । तत्पर्य्यायः । प्लवः २ कोआलः ३ ।
इत्यमरः ॥
भेलकः ४ उडूपः ५ तरणः ६ तारणः ७ तारकः
८ । इति शब्दरत्नावली ॥
("तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्" ॥
इति रघुवंशे । १ । २ ।) चन्द्रे पुं । इति मेदिनी ॥
("अपश्यत् वदनं तस्य रश्मिवन्तमिवोडुपम्" ।
इति महाभारते । वनपर्ब्बणि ॥ चर्म्मावनद्धपान-
पात्रं । यथा, --
"चर्म्मावनद्धमुडुपं प्लवः काष्ठं करण्डवत्" ॥
९ क्षीरवृक्षः १० शुचक्षुः ११ श्वेतवल्कलः १२
।
इति जटाधरः ॥ अस्य गुणाः । उडुम्बरो हिमो
रूक्षो गुरुः पित्तकफास्रणुत् । मधुरस्तुवरो वर्ण्यो
व्रणशोधनरोपणः ॥ इति भावप्रकाशः ॥
("उडुम्बरफलं पक्वं चूर्णितं कर्षमात्रकम् ।
संलिहेन्मधुना सर्व्वमनुपानं सुखावहम्" ॥
इति वैद्यक रसेन्द्रसारसंग्रहे मूत्राघाताधिकारे ।)
अन्यत् उदुम्बरशब्दे द्रष्टव्यम् ॥ देहली । गोव-
राटेर निचेर काठ इति भाषा । पण्डम् । नपुं-
सकमिति यावत् । कुष्ठरोगभेदः । इति मेदिनी ॥

**उडुम्बरपर्णी**, स्त्री, (उडुम्बरस्य पर्णमिव पर्णं यस्याः ।)
दन्तीवृक्षः । इति शब्दचन्द्रिका । (उदुम्बरपर्णी-
शब्देऽस्या विशेषो ज्ञेयः ॥)

**उडूपः**, पुं क्ली, (उडुपशव्देऽस्य व्युत्पत्तिर्ज्ञेथा ।)
उडुपः । भेला इति भाषा । चन्द्रे पुं । इति
द्विरूपकोषः ॥

**उड्डयनं**, क्ली, (उत् + डी + ल्युट् ।) नभोगतिः ।
ओडा इति भाषा । यथा नैषधे १ । १२५ ॥
"गतो विरुत्योड्डयने निराशताम्" ॥
("सोऽपि तमादाय सम्पातोड्डयनेन प्रस्थितः" ।
इति पञ्चतन्त्रे ॥)

**उड्डामरं**, त्रि, (उत्कृष्टः डामरः ।) श्रेष्ठम् । तत्प-
र्य्यायः । उद्भटं २ उत्तालम् ३ । इति त्रिकाण्ड-
शेषः ॥ (पुं तन्त्रविशेषः ॥)

**उड्डीनं**, क्ली, (उत् + डी + क्ल ।) खगगतिक्रिया ।
पक्षिणां ऊर्द्ध्वगमनम् । इत्यमरः ॥
("अहं सम्पातादिकानष्टानुड्डीनगतिविशेषान्
वेद्मि" । इति पञ्चतन्त्रे ॥)

**उड्डीयमानः**, त्रि, (उत् + डी + शानच् ।) उड्डयन-
विशिष्टपक्ष्यादिः । उडन्त ओड़ता इत्यादि भाषा
॥

**उड्डीशः**, पुं, (उत् + डी + श । यद्वा उड्डानां उत्पथ-
गामिनां योगिनामित्यर्थः ईशः महादेवस्य योगी-
श्वरत्वात् ।) आगमशास्त्रविशेषः । शिवः । इति
मेदिनी ॥

**उत्**, व्य, प्रश्नः । वितर्कः । इति मेदिनी ॥ अत्यर्थं ।

निगमाभिधाने क्लीवम् । पुमानुञ्छऋतशिलं इति
वोपालिते पुंस्युञ्छः । भवभूतिकृतशिलोञ्छे इति
गोवर्द्धनः । केचिदुञ्छशिलयोर्भेदमाहुः । “प्रति-
ग्रहात् शिलं श्रेयस्ततोऽप्युञ्छः प्रशस्यते” । इति
तत्र शाल्यादेर्निपातितपरित्यक्तमञ्जरीणां आदानं
शिलं । शिलं धान्यमञ्जरीसंग्रहः । इति स्वामी
च । एकैकशः कपोतवद्धान्यकणोद्ग्रहणमुञ्छः ।
तदुक्तं उञ्छो धान्यकणोच्चय इति । शिलं ताल-
ष्यादि दन्त्यादि च । धर्म्मात्वात् सत्यमिति ऋतम् ।
इति उञ्छशिलशब्दटाकायां भरतः ॥

**उञ्छः**, पुं, (उछि उञ्छे + घञ् ।) उञ्छशिलम् ।
इति जटाधरः ॥ (यथा, रामायणे । २ । २४ । २ ।
“मयि जातो दशरथात् कथमुञ्छेन वर्त्तयेत्” ॥)

**उञ्छनं**, क्ली, (उछि + ल्युट् ।) आपणादिपतितक-
णोपादानम् । इति श्रीभागवतम् ॥ उछन खुँटिया
लओन चुनिया लओन कुडाइया लओन इत्यादि
भाषा ॥

**उञ्छशिलं**, क्ली, (उञ्छञ्च शीलञ्चत्यकवद्भावः ।)
उञ्छष्टत्तिः । सा तु गृहीतशस्यक्षेत्रात् शेषा-
वचयनम् । तत्पर्य्यायः । ऋतं २ । इत्यमरः ॥
उञ्छसिलं ३ उञ्छः ४ उञ्छं ५ शिलं ६ । इति
तट्टीका ॥ (यथा, मनुः । ४ । ५ ।
इति सज्जनः ॥)

**उडुपतिः**, पुं, (उडूनां पतिः ।) चन्द्रः । इति पुराण-
ज्योतिषे ॥ (“अयाचितोपस्थितमम्बु केवलं रसा-
त्मकस्योडुपतेश्च रश्मयः” । इति कुमारे । ५ । २२ ।
“परिमुग्धतां वणिगिवोडुपतेः” । इति माघे ।)

**उडुपथः**, पुं, (उडूनां पन्थाः ।) आकाशम् । इति
हेमचन्द्रः ॥

**उडुम्बरं**, क्ली, (उडुं वृणातीति । उडु + वृ + अच् ।)
ताम्रम् । इति मेदिनी ॥ (“ताम्रं शुल्वमुडुम्बरम्” ।
इति वैद्यकरत्नमाला । कर्षार्थे यथा, --
“उडुम्बरश्च पर्य्यायैः कर्षएव निगद्यते” ॥
इति शार्ङ्गधरे पूर्ब्बखण्डे प्रथमाध्यायः ।)
कर्षपरिमाणम् । इति वैद्यकपरिभाषा ॥

**उडुम्बरः**, पुं, (उडु + वृ + अच् ।) उदुम्बरवृक्षः ।
यज्ञडुमुर इति भाषा । तत्पर्य्यायः । जन्तुफलः २
यज्ञाङ्गः ३ हेमदुग्धकः ४ । इत्यमरः ॥ ब्रह्मवृक्षः
५ । इति रत्नमाला ॥ हेमदुग्धी ६ यज्ञफलः ७
यज्ञोडम्बरः ८ । इति शब्दरत्नावली ॥ सदाफलः
सन्देहः । इति शब्दरत्नावली ॥ (ऊद्र्ध्वम् । अ-
प्यर्थे ॥)

**उत** व्य, (उ शब्दे + क्त ।) अत्यर्थम् । विकल्पः । समु-
च्चयः । वितर्कः । प्रश्नः । पादपूरणम् । इति
मेदिनी ॥ (अप्यर्थे । एवार्थे । “किमेतदारण्यं
उत ग्राम्यम्” । इति पञ्चतन्त्रे । “तत्किमयमातप-
दोषः स्यात् उत यथा मे मनसि वर्त्तते” ।
इति शाकुन्तले । “वीरो रसः किमयमित्युत दर्प-
एषः” । इति उत्तरचरिते ॥)

**उतं**, त्रि, (व्ये + क्त । यजादित्वात् सम्पसारणम् ।)
तन्तुसन्तानः । वोना इति भाषा । तत्पर्य्यायः ।
ऊतं २ स्यूतम् ३ । इत्यमरः ॥

**उतथ्य**, पुं, मुनिविशेषः । स च अङ्गिरःपुत्रः । इति
पुराणम् ॥
(“त्रयस्त्वङ्गिरसः पुत्रा लोके सर्व्वत्र विश्रुताः ।
वृहस्पतिरुतथ्यश्च संवर्त्तश्च धृतव्रतः” ॥
इति महाभारते आदिपर्ब्बणि ॥)

**उतथ्यानुजः**, पुं, (उतथ्यस्यानुजः ।) वृहस्पतिः । इति त्रिकाण्डशेषः ॥ (यथा माघे २ । ६९ । “तथ्यामुतथ्यानुजवत् जगादाग्रे गदाग्रजम्” ॥)

**उतथ्यानुजन्मा**, [न्] पुं, (उतथ्यस्य अनुजन्मा अनुजः ।) वृहस्पतिः । इति भूरिप्रयोगः ॥

**उताहो**, व्य, (उत च आहो च अनयोः समाहारः ।) परिप्रश्नः । विचारः । इति मेदिनी ॥ विकल्पः । इत्यमरः ॥
(“क्षमा स्वित् श्रेयसी तात ! उताहो तेज इत्युत” । यक्षी वा राक्षसी वा त्वं उताहोऽसि सुराङ्गना” ॥ इति च महाभारते ॥)

**उताहोस्वित्**, व्य, उताहो । विकल्पः । इत्यमरटीका ॥ (“अन्यद्वपु विदधातीह गर्भमुताहोस्वित् स्वेन कायेन याति” । इति महाभारते ॥)

**उत्कः**, त्रि, (उद्गतं मनो यस्य । उत् + कन् ।) उन्मनाः । अन्यमनस्कः । इत्यमरः ॥
(“तत् श्रुत्वा ते श्रवणसुभगं गर्ज्जितं मानसोत्काः” ।
इति मेघदूते । ११ । तथा कुमारे । ६ । ९५ ।
“अगमयदद्रिसुतासमागमोत्कः” ॥)

**उत्कटं**, त्रि, (उद्गतः कटः आवरणं आवरको वा यस्य ।) तीव्रम् । मत्तम् । इति मेदिनी ॥ विषमम् ।
इति शब्दरत्नावली ॥ (यथा रामायणे ५ काण्डे ।
“चन्द्रांशुनिकराभासा हाराः कासाञ्चिदुत्कटाः ।
स्तनमध्ये सुविन्यस्ता विरेजुर्हंसपाण्डराः” ॥)

**उत्कटं**, क्ली, गुडत्वक् । तेजपात इति ख्यातं इति केचित् । इत्यमरमरतौ ॥ दारचिनि । इति ख्यातम् । इति राजनिर्घण्टः ॥ (अस्य पर्य्यायानाह
भावप्रकाशे पूर्ब्बखण्डे,
“त्वक्पत्रञ्च वराङ्गंस्याद् भृङ्गञ्चोदन्तमुत्कटम्” ।)

**उत्कटः**, पुं, (उद्गतमदवृत्तेः उच्छब्दात् स्वार्थे स-
उत्सुकं ३ उन्मनः ४ । इति हेमचन्द्रः ॥
(“साश्रेणास्रद्रुतमविरतोत्कण्ठमुत्कण्ठितेन” ।
इति मेघदूते । १०३ ॥)

**उत्कण्ठिता**, स्त्री, (उत्कण्ठा सञ्जातास्याः । उत्कण्ठा + इतच् + टाप् ।) स्वीयादिनायिकाभेदः । अस्याः लक्षणम् ।
“सङ्केतस्थलं प्रति भर्त्तुरना-
गमनकारणं चिन्तयति या” ।
अस्याश्चेष्टाः । अरति-सन्ताप-जृम्भाङ्गाकृष्टि-कम्प-
रुदित -श्वासावस्थाकथनादयः । इति रसमञ्जरी ॥
(इयमेव विरहोत्कण्ठिता । यदुक्तं साहित्यदर्पणे
तृतीयपरिच्छेदे ।
“आगन्तुं कृतचित्तोऽपि दैवान्नायाति यत्प्रियः ।
तदागमनदुःखार्त्ता विरहोत्कण्ठिता तु सा” ॥
तत्रैव । १० परिच्छेदे अपह्नुतेरुदाहरणम् ।
यथा, --
‘उत्कण्ठितासि तरले !
नहि नहि सखि ! पिच्छिलः पन्थाः’ ॥)

**उत्कता**, स्त्री, (उत्कस्य भावः । उत्क + तल् ।) गजपिप्पली । इति शब्दचन्द्रिका ॥ उत्कस्य भावः । उत्कण्ठा ॥

**उत्करः**, पुं, (उत्कीर्य्यते इति । उत् + कॄ + अप् ।) धान्यादिराशिः । स्तूपः । इत्यमरः ॥
(“सिक्तराजपथान् रम्यान् प्रकीर्णकुसुमोत्करान्” ।
इति रामायणे ॥

**उत्कर्षः**, पुं, (उत् + कृष् + घञ् ।) अतिशयः । इत्यमरः ॥ (प्राधान्यं । श्रेष्ठता । यथा, “उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले” ।
इति शाकुन्तले २ य अङ्के ।
“निनीषुः कुलमुत्कर्षमधमानधमांस्त्यजेत्” ।
इति मनुः ४ । २४४ ॥ वृद्धिः । यथा, --
“पञ्चानामपि भूतानामुत्कर्षं पुपुषुर्गुणाः” ।
इति रघुः । ४ । ११ ।) अतिशययुक्ते त्रि ॥ स्वकालात् परकालकर्त्तव्यः । इति स्मृतिः ॥

**उत्कलः**, पुं, (उत् + कल + अच् ।) ओड्रदेशः । इति त्रिकाण्डशेषः ॥ उडिश्या इति भाषा । व्याधः ।
इति शब्दमाला ॥ पाखिमारा इति भाषा ।
(“उत्कलादर्शितपथः कलिङ्गाभिमुखं ययौ” ।
त्कूलितशैवलाभाः” । इति माघः । ३ । ७० ।)
हेला । इति हेमचन्द्रः ॥

**उत्कलितः**, त्रि, (उत् + कल + क्त ।) उन्मनाः । वृद्धिमान् । इति धरणी ॥ (उत्कण्ठितः ॥)

**उत्का**, स्त्री, (उद्गतं मनो यस्याः । उत् + कन् + टाप् ।) उत्कण्ठिता नायिका । इति रसमञ्जरी ॥

**उत्काका**, स्त्री, (उत्क + अक + अच् + टाप् ।) प्रतिवर्षप्रसूता गौः । इति शब्दचन्द्रिका ॥

**उत्कारः**, पुं, (उत्कीर्य्यते इति । उत् + कॄ + घञ् ।) धान्योत्क्षेपणम् । तत्पर्य्यायः । निकारः २ । इत्यमरः ॥ धान सारा इति भाषा । धान्यस्य राशीकरणं वा । इति भरतः ॥

**उत्कूटं**, क्ली, (उत् + कूट् + क ।) उत्तानशयनम् ।
इति हारावली ॥ चित् हैया शोया इति भाषा ।

**उत्कुणः**, पुं, (उत् + कुण + क ।) केशकीटः । उकुण इति भाषा । तत्पर्य्यायः । मत्कुणः २
कोणकुणः ३
उद्दंशः ४ किटिभः ५ । इति हेमचन्द्रः ॥

**उत्कूटः**, पुं, (उन्नतंकूटमस्य ।) छत्रम् । इति हारावली ॥

**उत्कृष्टं**, त्रि, (उत् + कृष् + क्त ।) उत्कर्षविशिष्टम् ।
अतिशययुक्तम् । प्रकृष्टम् । प्रशस्तम् । यथा, --
“उत्कृष्टमध्यमनिकृष्टजनेषु मैत्री,
यद्वत् शिलासु सिकतासु जलेषु रेखा ।
वैरं क्रमादधममध्यमसज्जनेषु,
यद्वत् शिलासु सिकतासु जलेषु रेखा” ॥
इत्युद्भटः ॥ (कर्षणवत्क्षेत्रादिः ॥)

**उत्कृष्टभूमः**, पुं, (उत्कृष्टा प्रशस्ता भूमिर्यस्मिन् ।)
प्रशस्तभूमिः । इति जटाधरः ॥

**उत्कोचः**, पुं स्त्री, (उत्कोचति अशुभं नाशयतीति ।
उत् + कुच + क ।) घुस् इति ख्यातः ।
तत्पर्य्यायः ।
प्राभृतं २ ढौकनं ३ लम्बा ४ कोशलिकं ५
आमिषं

म्मोदश्चेति कटच् ।) मदः । इति शब्दरत्नावली ॥
संजातमदहस्ती । इति हारावली ॥ शरः । रक्तेक्षुः । इति राजनिर्घण्टः ॥

**उत्कटा**, स्त्री, (उद्गतः कटो यस्याः ।) सैंहलीलता ।

इति राजनिर्घण्टः ॥

**उत्कण्ठः**, पुं, (उद्गतः कण्ठो यस्य ।) शृङ्गारस्य

षोडशबन्धान्तर्गतत्रयोदशबन्धः । आसन यस्य प्रसिद्धिः । तस्य लक्षणम् ।
"नारीपादौ च हस्तेन धारयेद्गलके पुनः ।
स्तनार्पितकरः कामी बन्धश्चोत्कण्ठसंज्ञकः" ॥
इति रतिमञ्जरी ॥

**उत्कण्ठा**, स्त्री, (उत् + कठि + अ + टाप् ।) उत्क-

लिका । इष्टलामे कालक्षेपासहिष्णुता । इत्यमरः ॥
कामादिजातस्मृतिः । इति भरतः ॥
उद्वाहुलकेन
स्मरणम् । इति मधुः ॥ उत्केन दयितस्मरणम् । इति सुभूतिः ॥ प्रियाभिलाषादुन्मनस्कत्वं । इत्यन्ये ॥
("गाढोत्कण्टां गुरुषु दिवसेष्वेषुगच्छत्सु बालाम्" ।
इति मेघदूते । ८३ ।
"यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया" ।
इति शाकुन्तले । ४ र्थ अङ्के ॥)

**उत्कण्ठितं**, त्रि, (उत्कण्ठा जातास्य । उत्कण्ठा +

इतच् ।) उत्कण्ठायुक्तम् । तत्पर्य्यायः । उत्कं २
इति रघुवंशे ४ । ३८ ॥ सुद्युम्नतनयः स्वनामख्यातो
राजा । यदुक्तं महाभारते ।
"सुद्युम्नस्य तु दायादास्त्रयः परमधार्म्मिकाः ।
उत्कलश्च गयश्चैव विनताश्वश्च भारत ! ॥
उत्कलस्योत्कला राजन् विनताश्वस्य पश्चिमा" ॥)

**उत्कलं**, त्रि, (उत् + कल + अच् ।) भारवाहकम् ।

इति शब्दमाला । मुटे इति भाषा ॥

**उत्कलिका**, स्त्री, (उत् + कल + वुन् + टाप् ।) उ-

त्कण्ठा । इत्यमरः ॥
("ततोऽन्येद्युः प्रतिपदं तत्तदुत्कलिकाभृता" । कथासरित्सागरे । २२ । १०५ ।) कलिका । इति त्रिकाण्डशेषः ॥ ("उद्दामोत्कलिकां विपाण्डुर-रुचं प्रारब्धजृम्भां क्षणात्" । इति रत्नावली ।) तरङ्गः । ("वनावलीरुत्कलिकासहस्रप्रतिक्षणो-
६ उपाच्चारः ७ प्रदा ८ आनन्दा ९ हारः १० ग्राह्यं ११ अयनं १२ । इति हेभचन्द्रः ॥ उप-दानकं १३ । इति त्रिकाण्डशेषः ॥ अपप्रदानं १४ । इति भूरिप्रयोगः ॥ (यथा, याज्ञवल्क्ये १ । ३ ॥ ३८ ।
"उत्कोचजीविनो द्रव्यहीनान् कृत्वा प्रवासयेत्" ।)

**उत्क्रमः**, पुं, (उत् + क्रम + अच् ।) व्यतिक्रमः ।

विपरीतिः । तत्पर्य्यायः । व्युत्क्रमः २ अक्रमः ३ ।
इति हेमचन्द्रः ॥

**उत्क्रोशः**, पुं, स्त्री, (उत्क्रोशति प्रहरे प्रहरे शब्दं

करोतीति । उत् + क्रुश + अच् ।) कुररपक्षी । इत्यमरः ॥

**उत्क्षिप्तः**, पुं, (उत् + क्षिप + क्त ।) धुस्तूरफलम् ।

इति शब्दचन्द्रिका । ऊर्द्ध्वत्यक्ते त्रि ॥

**उत्क्षिप्तिका**, स्त्री, (उत् + क्षिप् + क्तिन् + कन् +

टाप् ।) कर्णभूषणविशेषः । तत्पर्य्यायः । कर्णान्दुः
२ । इति हेमचन्द्रः ॥

**उत्क्षेपणं**, क्ली, (उत् + क्षिप् + ल्युट् ।) व्यजनम् ।

धान्यमर्द्दनवस्तु । इति मेदिनी ॥ उदञ्चनम् । ऊर्द्ध्व-
क्षेपणम् ।
("अतिमात्रलोहिततलौ बाहू घटोत्क्षेपणात्" इति शाकुन्तले प्रथमाङ्के ।) षोडशपणम् । इति

:हेमचन्द्रः ॥ (न्यायमते पञ्चकर्म्ममध्यपरिगणितम् ।

यथा भाषापरिच्छेदे ।
"उत्क्षेपणं ततोऽवक्षेपणमाकुञ्चनं तथा ।
प्रसारणञ्च गमनं कर्म्माण्येतानि पञ्च च" । ६ ॥)

**उत्खला**, स्त्री, (उत् + खल + अच् + टाप् ।) मुरा-

नाम गन्धद्रव्यम् । तत्पर्य्यायः । तालपर्णी २ ताल-
पर्णं ३ तालाख्या ४ खशा ५ । इति शब्दचन्द्रिका ॥
(मुराशब्देऽस्या विवरणं ज्ञेयम् ॥)

**उत्खातं**, त्रि, (उत् + खन + क्त ।) उन्मूलितम् ।

इति जटाधरः ॥ उप्डान इति भाषा ।
("त्याजितैः फलमुत्खातैर्भग्नैश्च बहुधां नृपैः" ।
इति रघुवंशे । ४ । ३३ । विदारितः । यथा, --
"शैलादाशु त्रिनयनवृषोत्खातपङ्कान्निवृत्तः" ।
इति मेघदूते । ११६ ॥)

**उत्तं**, त्रि, (उनत्ति स्म । उन्दी क्लेदने अकर्म्मकत्वात्

कर्त्तरि क्तः । नुदविदेति पक्षे नत्वाभावः ।) आर्द्र-
वस्तु । इत्यमरः ॥

**उत्तंसः**, पुं, (उत्तंसयति उत्तंस्यतेऽनेन वा तसिः

सौत्रो भूषार्थः । पञ्चाद्यच् हलश्चेति घञ् वा ।)
कर्णपूरः । कर्णाभरणम् । शेखरः । शिरोभूषणम् ।
इत्यमरः ॥ मतान्तरे क्लीवलिङ्गोऽपि ॥ ("नोत्तंसं
क्षिपति क्षितौ श्रवणतः सा मे स्फुटेऽप्यागसि" ।
इति साहित्यदर्पणे । ३ य परिच्छेदे ॥)

**उत्तप्तं**, क्ली, (उत् + तप + क्तः ।) शुष्कमांसम् ।

इत्यमरः ॥

**उत्तप्तः**, त्रि, तप्तः । सन्तप्तः । परिप्लुतः । स्नातः ।

इति मेदिनो ॥

**उत्तभितं**, त्रि, उन्नमितम् । इति श्रीभागवतम् ॥

**उत्तमः**, त्रि, (अतिशयेन उत्कृष्टः । उत् + तमप् ।

रत्नमाला । क्षीराइ इति भाषा ॥

**उत्तमर्णः**, पुं, (उत्तममृणमस्य । ऋणमाधमर्ण्ये इति

सूत्रे आधमर्ण्यशब्देन व्यवहारविशेषो लक्ष्यते ।)
ऋणदाता । इत्यमरः ॥ महाजन इति भाषा ।
तत्पर्य्यायः । ऋणदः २ । इति जटाधरः ॥
("अधमर्णार्थसिद्ध्यर्थमुत्तमर्णेन चोदितः ।
दापयेत् धनिकस्यार्थमधमर्णात् विभावितम्" ॥
इति मनुः । ८ । ४७ ॥)

**उत्तमसंग्रहः**, पुं, (उत्तमः संग्रहो यस्मिन् ।) सम्यक्

संग्रहणम् । तत्तु निर्जने परभार्य्यया सह केशा-
केशिपरस्परालिङ्गनसहासनादिरूपमिथुनीभावः ।
इति मिताक्षरा ॥

**उत्तमसाहसः**, पुं, (उत्तमः साहसोऽस्त्यस्मिन् ।)

दण्डविशेषः । स तु साशीतिपणसाहस्रः । यथा ।
साशीतिपणसाहस्रो दण्ड उत्तमसाहसः" ।
इति याज्ञवल्क्यः ॥ सहस्रपणमितोऽपि । यथा,
"पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः ।
मध्यमः पञ्च विज्ञेयः सहस्नं त्वेव चोत्तमः" ॥
इति मनुः ॥

**उत्तमा**, स्त्री, (अतिशयेन उत्कृष्टा । उत् + तमप् +

टाप् ।) उत्कृष्टा नारी । तत्पर्य्यायः । वरारोहा २
मत्तकाशिनी ३ वरवर्णिनी ४ । इत्यमरः ॥ मत्त-
काषिणी ५ । मत्तकासिनी ६ । इति तट्टीका ॥
दुग्धिकावृक्षः । इति मेदिनी ॥ स्वीयादिनायिका-
भेदः । अस्या लक्षणम् । अहितकारिण्यपि प्रिये
हितकारिणी । अस्याश्चेष्टा उत्तमा एव । इति
रसमञ्जरी ॥

**उत्तमाङ्गं**, क्ली, (उत्तमं प्रशम्तमङ्गं ।) मस्तकं । इत्थ-

मरः ॥ ("कश्चित् द्विषत्खङ्गहृतोत्तमाङ्गः" ।
इति रघौ । ७ । ५१ । "बभौ पतद्गङ्गैवोत्तमाङ्गे" ।
इति कुमारे ॥ ७ । ४१ । मुखम् । यथा, मानवे १ ।
९३ ॥
"उत्तमाङ्गोद्भवाज्ज्येष्ठात् ब्राह्मणश्चैव धारणात् ।
सर्व्वस्यैवास्य सर्गस्य धर्म्मतो ब्राह्मणः प्रभुः" ॥
उत्तमाङ्गं मुखं इति तट्टीका ॥)

**उत्तमारणी**, स्त्री, इन्दीवरी । इति राजनिर्घण्टः ॥

(इन्दीवरीशब्देऽस्या गुणादिकं बोध्यम् ।)

**उत्तरं**, क्ली, (उत् + तृ + अप् ।) प्रतिवाक्यम् । इत्य-

स्पर्शा इति ब्रुवतः परो ब्रूयात् हेतुविधर्म्माणो
विकाराः यथा शरीरावयवानां दाहौष्ण्यं कोथ-
प्रपचने हेतुवैधर्म्म्यं हिमशिशिरवातसंस्पर्शां
इति । एतत् सविपर्य्ययमुत्तरम् । इति चरके
विमानस्थानेऽष्टमोऽध्यायः ॥)

**उत्तरः** पुं, विराटराजपुत्रः । इति हेमचन्द्रः ॥ (यथा

महाभारते ३ । गोहरणपर्ब्बणि ३५ । ३३
"तमुत्तरं
वीक्ष्य रथोत्तमे स्थितम्" । तत्रैव ३४ "सहोत्तरे-
णास्तु तदद्य मङ्गलम्") । (स्वनामख्यातपर्ब्बत-
भेदः । यया, "दक्षिणस्योत्तरो गिरिः" । इति
रामायणे ॥ उत्तरयति संसारसागरात् इति
व्युत्पत्तेः । शिवः । हरिः ॥ भारते । १३ । १४९
। ६६ ॥)

**उत्तरः**, त्रि, (उदतिशयेन उद्गतः । उत् + तरप् ।)

ऊद्‌र्ध्वः । उदीची । (यथा, रामायणे ।
"उत्तरे जाह्नवीतीरे हिमवन्तं शिलोच्चयम्" ।)
उत्तमः इति मेदिनी अमरश्च ॥ (प्रधानं । श्रेष्ठः ।
यथा, रघुः १३ । ७ ।
"नृपा इवोपप्लविनः परेभ्यो,
धर्म्मोत्तरं मध्यममाश्रयन्ते" ।
"ब्रह्मधर्म्मोत्तरे राज्ये शान्तनुर्विनयात्मवान्"
इति महाभारतम् ॥) अनन्तरम् ।
("वित्तं बन्धुर्बयः कर्म्म विद्या भवति पञ्चमी ।
एतानि मान्यस्थानानि गरीयो यद् यदुत्तरम्" ॥
इति मनुः । २ । १३६ ॥)

**उत्तरकालः**, पुं, (उत्तरः कालः ।) भविष्यत्कालः ।

गौणकालः । यथा, हरिहरपद्धतिः ।
"एवमागामियागीयमुख्यकालादधस्तनः ।
स्वकालादुत्तरो गौणः कालः पूर्ब्बस्य कर्म्मणः" ॥

**उत्तरकुरुः**, स्त्री, (उत्तरः कुरुः ।) जम्बुद्वीपस्य नव-

वर्षान्तर्गतवर्षविशेषः । इति त्रिकाण्डशेषः ॥
("विजित्य यः प्राज्यमयच्छदुत्तरान्
कुरूनकुप्यं वसु वासावोपमः" ।
इति किरातार्ज्जुनीये । १ । २५ ॥)

**उत्तरकोशला**, स्त्री, (उत्त्रे स्थिता कोशला ।)

अयोध्यानगरी । इति त्रिकाण्डशेषः ॥
("पितुरनन्तरमुत्तरकोशलान्

द्रव्यप्रकर्षार्थत्वान्नाम् । यद्वा उत्ताम्यति तमु अच्
उत्तम्यते वा घञ् । नोदात्तेति न वृद्धिः ।)
भद्रः ।
उत्कृष्टः । तत्पर्य्यायः । प्रधानं २ प्रमुखः ३ प्रवेकः
४ अनुत्तमः ५ मुख्यः ६ वर्य्यः ७ वरेण्यः ८ प्रवर्हः
९ अनवराद्ध्‌र्य्यः १० पराद्ध्‌र्य्यः ११ अग्रः १२ प्राग्रहरः
१३ प्राग्र्यः १४ अग्र्यः १५ अग्रीयः १६ अग्रियः
१७ । इत्यमरः ॥ मुखः १८ अग्रणीः १९ तट्टीका ॥
(उत्तमस्यापि वर्णस्य नीचोऽपि गृहमागतः” ।
इति हितोपदेशः ।
“उत्तमाद्बेवरात् पुंसः काङ्क्षन्ते पुत्त्रमापदि” ॥
इति महाभारते ॥)

**उत्तमः**, पुं, वैशिकनामनायकभेदः । तस्य लक्षणम् ।

“दयिताश्रमप्रकोपेऽपि उपचारपरायणः” ।
इति रसमञ्जरी ॥ प्रियव्रतराजपुत्रः । स च
तृतीयमनुः । अस्मिन् मन्वन्तरे सत्यसेनोऽवतारः ।
सत्यजिदिन्द्रः । सत्यवेदश्रुतभद्रादयो देवाः । वशिष्ठ-
सुताः प्रमदादयः सप्तर्षयः । पवनसृञ्जययज्ञहो-
त्राद्या मनुपुत्राः । इति श्रीभागवतम् ॥ (उत्तान-
पादस्य राज्ञः स्वनामख्यातः पुत्रभेदः । यथा,
विष्णुपुराणे । १ । ११ । २ ॥
“तयोरुत्तानपादस्य सुरुच्यामुत्तमः सुतः” ॥)

**उत्तमफलिनो**, स्त्री, (उत्तमफलं विद्यते यस्याः ।

उत्तमफल + निन् + ङीप् ।) दुग्धिकावृक्षः । इति
मरः ॥ जवाव इति यावनी भाषा ।
(यथा, माघे २ । २२ ।
“वचसस्तस्य सपदि क्रिया केवलमुत्तरम्” ।)
तस्य व्युत्पत्तिः ।
“उत्तीर्य्यते निस्तीर्य्यते प्रकृताभियोगोऽनेन” ।
तस्य स्वरूपम् ।
“पक्षस्य व्यापकं सारमसन्दिग्धमनाकुलम् ।
अव्याख्यागम्यभित्येवमुत्तरं तद्विदो विदुः” ॥
तस्य भेदाः ।
“मिथ्या सम्प्रतिपत्तिश्च अत्यवस्कन्दनं तथा ।
प्राङ्न्यायश्चोत्तराःप्रोक्ताश्चत्वारः शास्त्रवेदिभिः” ॥
इति नारदः ॥ (अथ उत्तरं नाम साधर्म्योपदिष्टे
वा हेतौ वैधर्म्म्यवचनं वैधर्म्म्योपदिष्टे वा साधर्म्म्य-
वचनं यथा हेतुमधर्म्माणोविकाराः शीतकस्य
द्विव्याधेर्हेतुस्राधर्म्म्यवचनं हिमशिशिरवातसं-
ससधिगम्य समाधिजितेन्द्रियः” ॥
इति रघुः ९ । १ ॥
“यदुपतेः क्व गता मथुरापुरी
रघुपतेः क्व गतोत्तरकोशला” ।
इति उद्भटः ॥)

**उत्तरक्रिया**, स्त्री, (उत्तरा अन्तिमा क्रिया ।) अन्ति-

मक्रिया । सांवत्सरिकश्राद्धादिपित्र्यक्रिया । यथा,
“प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु ।
क्रियन्तेयाः क्रियाः पित्र्याः प्रोच्यन्ते ता नृपोत्तराः” ॥
इति विष्णुपुराणम् ॥

**उत्तरङ्गं** क्ली, (उत्तर + गम् + खश् ।) द्वारोर्द्ध्‌वक्र-

दारु । इति हेमचन्द्रः ॥ उद्‌गततरङ्गे त्रि ॥
“प्रत्यग्रहीत् पार्थिववाहिनीं तां
भागीरथीं शोण इवोत्तरङ्गः” ॥ इति रघुः । ७ । ३६ ।

**उत्तरणं**, क्ली, (उत् + तॄ + ल्युट् ।) नद्यादिपारगम-

नम् । उत्तरण इति भाषा ॥

**उत्तरतः**, [स्] व्य, (उत्तर + स्वार्थे + अतसुच् ।)

उत्तरदिग्देशकालात् । इति रायमुकुटः ॥ उत्तर हैते इति भाषा । (यथा, रामायणे ४ । ५५ । अध्याये ।
"दक्षिणाग्रेषु दर्भेषु कृत्वा चोत्तरतः शिरः ।
तमेवानुमरिष्यन्तः सर्व्वे संविविशुर्भुवि" ॥)

**उत्तरतारं**, क्ली, (उत्तरमपरं तारं ।) उत्तरतीरम् ।

इति सिद्धान्तकौमुदी ॥

**उत्तरपक्षः** पुं, (उत्तरः पक्षः ।) विचारसिद्धान्तः ।

समाधानम् । तत्पर्य्यायः । सिद्धान्तः २ समाधिः ३
कृतान्तः ४ । इति त्रिकाण्डशेषः ॥ सिद्धान्तानुकूलतर्कोपन्यासः । इति स्मृतिः ॥ यथा माघे । ("प्रापयन् पवनव्याधेर्गिरमुत्तरपक्षतां" । २ । १५ ॥)

**उत्तरपादः**, पुं, (उत्तरः पादः ।) चतुष्पादव्यवहारान्तर्गतद्वितीयपादः । (यथाह वृहस्पतिः ।
"पूर्ब्बपक्षः स्मृतः पादो द्विपादश्चोत्तरः स्मृतः" ।)
उत्तरम् । इति व्यवहारतत्त्वम् ॥

**उत्तरफल्गुनी**, स्त्री, (उत्तरा फल्गुनी ।) अश्विन्यादि-

सप्तविंशतिनक्षत्रान्तर्गतद्वादशनक्षत्रम् । अस्या रूपम् । दक्षिणोत्तरमिलिततारकाद्वयम् । इति कालिदासः ॥ पर्य्यङ्करूपं तारकाद्वयं । इति दीपिकाटीका ॥ अस्या अधिष्ठात्री देवता अर्य्यमा । अस्या मिश्रगुणः । अस्यां जातफलम् ।
"दाता दयालुः स्वजने सुशीलो
विशालकीर्त्तिः सुमतिः प्रधानः ।
धीरो नरोऽत्यन्तमृदुस्वभाव-
श्चदुत्तराफल्गुनिकाप्रसूतिः" ॥
इति कोष्ठीप्रदीपः ॥

**उत्तरफाल्गुनी**, स्त्री, (उत्तरा फाल्गुनी ।) उत्तर-

फल्गुनीनक्षत्रम् । तत्पर्य्यायः । उत्तरा २ अर्य्यमदेवा ३ । इति हेमचन्द्रः ॥

**उत्तरभाद्रपत्,** [द्] स्त्री, (उत्तरा भाद्रपत् ।) उत्तर-

भाद्रपदानक्षत्रम् । इति ज्योतिषम् ॥

**उत्तरभाद्रपदा**, स्त्री, (उत्तरा भाद्रपदा ।) अश्विन्या-

दिसप्तविंशतिनक्षत्रान्तर्गतषड्विंशनक्षत्रं । तत्-

**उत्तरसाक्षी**, [न्] त्रि, स्वपक्षसम्बन्धिसाक्ष्यं परि-

भाषतां साक्षिणां यः स्वयं शृणोति अर्थिना श्राव्यते वा सः । तथाच नारदः ।
"साक्षिणामपि यः साक्ष्यं स्वपक्षं परिभाषताम् ।
श्रवणात् श्रावणाद्वापि स साक्ष्युत्तरसञ्ज्ञकः" ॥
इति व्यवहारतत्त्वम् । परसाक्षी इति भाषा ॥

**उत्तरसाधकः** त्रि, (उत्तरः साधकः ।) साधक-

सहायः । सहकारी ॥

**उत्तरा**, स्त्री, (उत्तर + टाप् ।) विराटराजकन्या ।

साभिमन्युपत्नी । इति मेदिनी ॥ (यथा महाभारते ३ । गोहरणपर्ब्बणि ३५ । २३ ।
"स तत्र नर्म्मसंयुक्तमकरोत् पाण्डवो बहु ।
उत्तरायाः प्रमुखतः सर्व्वं जानन्नरिन्दमः" ॥)
उत्तरा दिक् । तत्पर्य्यायः । कौवेरी २ देवी ३ उदीची ४ । इति राजनिर्घण्टः ॥ (यथा महाभारते २ । दिग्विजयपर्ब्बणि २८ । १७ ।
"एवं स पुरुषव्याघ्रो विजिग्ये दिशमुत्तराम्" ।)
अस्या दिशोऽधिपतिः कुवेरः कर्कटवृश्चिकमीन-
राशयश्च । यथा । समयप्रदीपः ॥
"मेषसिंहधनुः प्राच्यां दक्षिणस्यान्तु तत्परे ।
प्रतीच्यां तत्परे ज्ञेया उदीच्याञ्च ततः परे" ॥

**उत्तरात्,** व्य, (उत्तराधरदक्षिणादाति इति उत्तरा-

दातिप्रत्ययः ।) उत्तरा दिक् । इत्यमरटीकायां रायमुकुटः ॥ (यथा, ऋग्वेदे ६ । १९ । ९ ।
"आ ते शुष्मा वृक्ष एतु पश्चादोत्तरादधरादापुरस्तात्" ॥)

**उत्तराधिकारी**, [न्] त्रि, (उत्तरं पूर्ब्बस्वामिकस्वत्त्व-

नाशानन्तरं अधिकरोति पूर्ब्बस्वामिकधने स्वाम्यमाप्नोतीति । उत्तर + अधि + कृ + णिन् ।) प्रथमाधिकारिणः पश्चादधिकारी । दायादः । ओयारिस् इति यावनी भाषा ॥ (मृतधनोत्तराधिकारिणो दायभागशब्दे द्रष्टव्याः ॥)

**उत्तराभासः**, पुं, (सदुत्तरम् इव आभासते । आङ् +

भास + अच् ।) दुष्टोत्तरम् । तथा च कात्यायनः ।
"प्रकृतेन त्वसम्बन्धमत्यल्पमतिभूरि च ।

"शिशिराद्यास्त्रिभिस्तैस्तु विद्यादयनमुत्तरम् ।
आदानञ्च तदा दत्ते नृणां प्रतिदिनं बलम् ॥
तस्मिन् ह्यत्यर्थतीक्ष्णोष्णरूक्षामार्गस्वमावतः ।
आदित्यपवनाः सौम्यान् क्षपयन्ति गुणान् भुवः ॥
तिक्तः कषायः कटुको बलिनोऽत्र रसाः क्रमात् ।
तस्मादादानमाग्नेयम्" । इति सूत्रस्थाने तृतीयेऽध्याये वाभटेनोक्तं ॥
"तत्र ते शीतोष्णवर्षलक्षणाश्चन्द्रादित्ययोः कालविभागकरत्वादयने द्वे भवतो दक्षिणमुत्तरञ्च" ।
"उत्तरञ्च शिशिरवसन्तग्रीष्मास्तेषु भगवानाप्याय्यतेऽर्कस्तिक्तकषायकटुकाश्च रसा बलवन्तो भव-
न्त्युत्तरोत्तरञ्च सर्व्वप्राणिनां बलमपहीयते" ॥
इति सूत्रस्थाने षष्ठेऽध्याये सुश्रुतेनोक्तम् ॥)

**उत्तराशाढा**, स्त्री, (उत्तरा आशाढा ।) उत्तराषा-

ढानक्षत्रम् । इति भरतो द्विरूपकोषश्च ॥

**उत्तराशापतिः**, पुं, (उत्तराशायाः उत्तरदिशः अधि-

पतिः अधिष्ठाता ।) कुवेरः । इति हलायुधः ॥

**उत्तराषाढा**, स्त्री, (उत्तरा आषाढा ।) अश्विन्यादि-

सप्तविंशतिवक्षत्रान्तर्गतैकविंशनक्षत्रम् । अस्या रूपम् । सूर्पाकृतिताराचतुष्टयात्मकम् । अस्या अधिदेवता विश्वः । इति कालिदासः ॥ गजदन्तवदष्टतारामयम् । इति दीपिकाटीका ॥
तत्र जातफलम् । यथा कोष्ठीप्रदीपे ।
"दाता दयावान् विजयी विनीतः
सत्कर्म्मचेता विभवैः समेतः ।
कान्तासुतावाप्तसुखो नितान्तं
वैश्वे सुवेशः पुरुषो मनीषी" ॥)

**उत्तरासङ्गः**, पुं, (उत्तरे ऊर्द्ध्वभागे आसज्यते । उत्तर

+ आ + सञ्ज + घञ् ।) उत्तरीयवस्त्रं । इत्यमरः ॥
("कृताभिषेकां हुतजातवेदसं
त्वगुत्तरासङ्गवतीमधीतिनीम्" ।
इति कुमारे ५ । १६ ॥ तथा, रामायणे २ । ५० । ४८ ।
"ततश्चीरोत्तरासङ्गः सन्ध्यामन्वास्य पश्चिमाम्" ॥)

**उत्तरीयं**, क्ली, (उत्तरस्मिन् ऊर्द्ध्वदेहभागे भवम् ।

उत्तर + छ ।) उत्तरीयवस्त्रम् । दोछोट् दोब्जा

पर्य्यायः । प्रौष्ठपदा २ अहिर्व्रध्नदेवता ३ । इति हेमचन्द्रः ॥ अस्या रूपम् ।
"उत्तरे सुमुखि तारमूर्त्तिभृ-
त्युत्तमाङ्गमिलितद्वितारके ।
नीलचामरकचे नृयुग्मतो
लोचनाचलकलाः पलायिताः" ॥
इति कालिदासः ॥ पर्य्यङ्करूपमष्टतारात्मकं । इति
दीपिकाटीका ॥ अस्यां जातफलम् ।
"धनी कुलीनः कुशलः क्रियादौ
भूपालमान्यो बलवान् महौजाः ।
सत्कर्म्मकर्त्ता निजबन्धुभक्तो
यद्युत्तराभाद्रपदाप्रसूतः" ॥
इति कोष्ठीप्रदीपः ॥

**उत्तरवादी**, [न्] त्रि, (उत्तरं वदति यः । उत्तर + वद + णिन् ।) उत्तरवक्ता । इति व्यवहारतत्त्वम् ॥ आसामी इति भाषा । यथा याज्ञवल्क्मः २ । १७ ।
("पूर्ब्बपक्षेऽधरीभूने भवन्त्युत्तरवादिनः" ॥)
पक्षैकदेशव्याप्येव तच्च नैवोत्तरं भवेत्" ॥
इति व्यवहारतत्त्वम् ॥

**उत्तरायणं**, क्ली, (उत्तरा उत्तरस्यां अयनं सूर्य्यदि-र्गमनम् । पूर्ब्बपदात्संज्ञायामिति णत्वम् ।) सूर्य्यस्य
उत्तरदिग्गमनकालः । स तु माघादिषण्मासा-त्मकः । इति हेमचन्द्रः ॥ (यथाह
सूर्य्यसिद्धान्तः ।
"भानोर्मकरसंक्रान्तेः षण्मासा उत्तरायणम् ।
कर्कादेस्तु तथैव स्यात् षण्मासा दक्षिणायनम्" ॥
"माघादिमासयुग्मैस्तु ऋतवः षट् क्रमादितः ।
उत्तरायणमाद्यैस्तैस्त्रिभिः स्याद्दक्षिणायनम्" ।)
देवानां दिनम् । इति स्मृतिः ॥ (मकरसंक्रान्तिः ।
"वानप्रस्थाश्रमिभिर्विप्रैः करणीयो यागभेदः" ।
यदुक्तं मनुना ६ । १० ।
"ऋक्षेष्ट्याग्रयणञ्चैव चातुर्मास्यानि चाहरेत् ।
उत्तरायणञ्च क्रमशो दाक्षस्यायनमेव च" ॥
"शिशिरश्च वसन्तोऽपि ग्रीष्मः स्यादुत्तरायणे" ।
इति हारीते प्रथमस्थाने चतुर्थोऽध्यायः ॥
इत्यादि भाषा । तत्पर्य्यायः । प्रावारः २ उत्तरा-सङ्गः ३ वृहतिका ४ संव्यानम् ५ । इत्यमरः ॥
कक्षा ६ । इति जटाधरः ।
("अथास्य रत्नग्रथितोत्तरीय-
मेकान्तपाण्डुस्तनलम्बिहारम्" ।
इति रघुः १६ । ४३ । यथा रामायणे २ । ८८ । १४ ।
"उत्तरीयमिवासक्तं सुव्यक्तं सीतया तदा" ॥)

**उत्तरेण**, व्य, (उत्तर + एनप् ।) उत्तरदिग्देशकालः । इत्यमरटीकायां रायमुकुटः ॥ यथा मेघदूते १६ । ७५ ।
("किञ्चित्पश्चात् व्रज लघुगतिर्भूय एवोत्तरेण" ।
"तत्रागारं धनपतिगृहानुत्तरेणास्मदीयम्" ॥)

**उत्तरेद्युः**, [स्] व्य, (उत्तरस्मिन्नहनि इत्यर्थे सद्यः-परुदिति उत्तरशब्दादेद्युस् प्रत्ययो निपातितः ।) उत्तरस्मिन्नहनि । आगामिदिने । इति शब्द-रत्नावली ॥

**उत्तानं**, त्रि, (उद्गतस्तानो विस्तारो यस्मात् ।) अग-म्भीरम् । ऊर्द्ध्वमुखशयितम् । इति मेदिनो ॥ चित्

:इति भाषा । (ऊर्द्ध्वतलम् । यथा,

"उत्तानपाणिद्वयसन्निवेशात्
प्रफुल्लराजीवमिवाङ्कमध्ये" ।
इति कुमारे ३ । ४५ । तथा, याज्ञवल्क्यः ।
"पितृपात्रं तदुत्तानं कृत्वा विप्रान् विसर्ज्जयेत्" ।
"उत्तानं लेपनाभ्यङ्गपरिषेकावगाहनैः ।
विरेकास्थापनैः स्नेहपानैर्गम्भीरमाचरेत्" ॥
इति चिकित्सास्थाने द्वाविंशेऽध्याये वाभटेनोक्तं ॥
"उत्तानस्य प्रसुप्तस्य कांस्यं वा ताम्रभाजनम् ।
नाभौ निधाय धाराम्बु शीतदाहनिवारणम्" ॥
इति हारीते चिकित्सितस्थाने द्वितीयोऽध्यायः ॥)

**उत्तानकः**, पुं, (उत् + तन + ण्वुल् ।) उच्चटातृणम् ।

इति रत्नमाला ॥ (उच्चटाशब्देऽस्य विशेष उक्तः ॥)

**उत्तानपत्रकः**, पुं, (उत्तानं ऊर्द्ध्वमुखं पत्रं यस्य ।

बहुव्रीह्यर्थे कन् ।) रक्तैरण्डवृक्षः । इति राज-
निर्घण्टः ॥

**उत्तानपादः**, पुं, (उत्तानः उन्नतः पादः पदं यस्य ।)

राजविशेषः । स तु स्वायम्भुवमनुपुत्त्रः इति
पुराणम् ॥ (यथा, विष्णुपुराणे १ । ११ ॥
"प्रियव्रतोत्तानपादौ मनोः स्वायम्भुवस्य तु ।
द्वौ पुत्त्रौ सुमहावीर्य्यौ धर्म्मज्ञौ कथितौ तव" ॥)

**उत्तानपादजः**, पुं, (उत्तानपादात् जायते यः । उत्तान-

पाद + जन् + ड ।) उत्तानपादराजपुत्त्रः । तत्प-
र्य्यायः । ज्योतीरथः २ ग्रहाधारः ३ ध्रुवः ४ । इति
हारावली ॥ (उत्तमः । यथा, विष्णुपुराणे १ । ११ ॥
"तयोरुत्तानपादस्य सुरुच्यामुत्तमः सुतः ।
अभीष्टायामभूद्ब्रह्मन् ! पितुरत्यन्तबल्लभः ॥ २ ॥
सुनीतिर्नाम या राज्ञस्तस्याभून्महिषी द्विज !
स नातिप्रीतिमांस्तस्यां तस्याश्चाभूद्ध्रुवः सुतः ॥ ३ ॥)

**उत्तानशयः**, त्रि, (उत्तानः शेते । शीङ शयने पार्श्वा-

दिषूपसंख्यानमिति अच् ।) अत्यन्तशिशुः । तत्प-
र्य्यायः । डिम्भा २ स्तनपा ३ स्तनन्धयी ४ । इत्य-
मरः ॥ उत्तानसुप्तः ॥

**उत्तापः**, पुं, (उत् + तप् + घञ् ।) तेजः । उष्मा ।

**उत्तीर्णं**, त्रि, (उत् + तॄ + क्त ।) मुक्तम् । पारगतम् ॥

("तुलोत्तीर्णस्यापि प्रकटितहताशेषतमसो
रवेस्तादृक्तेजो न हि भवति कन्यां गतवतः" ।
इति पद्यसंग्रहे १९ ॥)

**उत्तुङ्गः**, त्रि, (उत् अतिशयेन तुङ्गः ।) उच्चः । इति

जटाधरः ॥
("उत्तुङ्गशैलशिखरस्थितपादपाना
काकः कृशोऽपि फलमालभते सपक्षः" ।
इति उद्भटः । उन्नतः । "पीनोत्तुङ्गपयोधरेति
सुमुखाम्भोजेति सुभ्राविति" । इति भर्तृहरिः
१ । ७२ ॥)

**उत्तुषः**, पुं, (उद्गतस्तुषो धान्यत्वक् यस्मात् ।)

भृष्टधान्यम् । तत्पर्य्यायः । खाजिकः २
लाजाः ३ ।
इति हारावली । खै इति भाषा ॥

**उत्तेजना**, स्त्री, (उत् + तिज् + णिच् + युच् ।) प्रे-

रणा । व्यग्रकरणम् ॥ (तीक्ष्णीकरणम् । यथा,
"व्याघट्टनोत्तेजनया मणीनाम्" । इति माघे ।)

**उत्तेजितं**, क्ली, (उत् + तिज् + णिच् + क्त ।) अश्व-

चतुर्थगतिः । सा च मध्यवेगेन या गतिः । तत्प-
र्य्यायः । रेचितम् २ । इति हेमचन्द्रः ॥ प्रेरिते
त्रि ॥

**उत्तेरितं**, क्ली, (उत् + तॄ + इतच् ।) अश्वपञ्चमगतिः ।

तत्पर्य्यायः । उपकण्ठं २ आस्कन्दितकम् ३ । इति
हेमचन्द्रः ॥ (तथा चोक्तं, --
"उत्तेरितोऽतिवेगान्धो न शृणोति न पश्यति" ॥)

**उत्तोलनं**, क्ली, (उत् + तुल् + ल्युट् ।) ऊर्द्ध्वनयनम् ।

तोला । इति भाषा ॥

**उत्त्यक्तः**, त्रि, (उत् + त्यज् + क्त ।) परित्यक्तः । ऊर्द्ध्व-

क्षिप्तः । विरक्तः ॥

**उत्त्रासः**, पुं, (उत् + त्रस् + घञ् ।) भयम् । इति

या एकादशी । अस्यां भगवान् क्षीरोदशयानो
नारायणः योगनिद्रां विहाय उत्तिष्ठति ।) का-
र्त्तिकशुक्लैकादशी ॥ अथ विष्णूत्थानम् । तत्र
दिवसे रेवत्यन्तयुक्तायां द्वादश्याम् । रात्रौ रेव-
त्यन्तपादयोगे तु दिवातृतीयभागे रेवतीयुक्त-
द्वादश्याम् । द्वादश्यामृक्षाभावे एकादशीप्रभृति-
पौर्णमास्यन्तान्यतमतिथौ रेवत्यन्तपादयोगे । तद-
भावे केवलायां द्वादश्यां सन्ध्यायां विष्णुं संपूज्य ।
ॐ "महेन्द्ररुद्रैरभिनूयमानो
भवानृषिर्व्वन्दितवन्दनीयः ।
प्राप्ता तवेयं किल कौमुदाख्या
जागृष्व जागृष्व च लोकनाथ ॥
मेघा गता निर्म्मल एष चन्द्रः
शारद्यपुष्पाणि च लोकनाथ ।
अहं ददानीति च पुण्यहेतो-
र्जागृष्व जागृष्व च लोकनाथ" ॥
ततश्च ।
"उत्तिष्ठोत्तिष्ट गोविन्द त्यज निद्रां जगत्पते ।
त्वया चोत्थीयमानेन उत्थितं भुवनत्रयम्" ॥
इति पठेत् । इति कृत्यतत्त्वम् ॥

**उत्थापनं**, क्ली, (उत् + स्था + णिच् + ल्युट् ।) उत्तो-

लनम् । उपस्थितीकरणम् ॥
("किन्नु मे सुकृतं भूयात् भर्त्तुरुत्थापनं न वा" ।
इति महाभारते १ । आस्तीकपर्ब्बणि । ४६ । १७ ।)

**उत्थितं**, त्रि, (उत् + स्था + क्त ।) वृद्धिमत् । प्रोद्यतं ।

उत्पन्नम् । इत्यमरमेदिनीकरौ ॥ (कृतोत्थानम् ।
"अर्द्धाचिता सत्वरमुत्थितायाः" ।
इति कुमारे, ७ । ६२ । रघुवंशे च ७ । १० ।
"शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ" ।
इति मेघदूते । ११२ । "न यावदेतावुदपश्य-
दुत्थितौ" । इति माघे । १ । १५ ॥)

**उत्थिताङ्गुलिः**, पुं, (उत्थिता अङ्गुलयो यत्र ।) चपेटः ।

विस्तृताङ्गुलिकरतलम् । इति शब्दचन्द्रिका । चा-
पड़ इति भाषा ॥

**उत्पतः**, पुं, (उत् ऊर्द्ध्वे पतति गच्छति । उत् + पत् +

सन्तापः ॥ (यथा, हितोपदेशः ।
"प्रत्यहः सर्व्वसिद्धीनामुत्तापः प्रथमः किल" ॥)

**उत्तारः**, त्रि, (उत् + तॄ + घञ् ।) महान् । तत्पर्य्यायः ।

उदीर्णः २ उद्भटः ३ उदारः ४ उत्तमः ५ । इति
जटाधरः ॥ (यथा प्रबोधचन्द्रोदये ।
"संसारसागरोत्तारतरणिः" ।) वमनम् । इति
प्रायश्चित्तविवेकादयः ॥

**उत्तारी**, [न्] त्रि, (उत् + तॄ + णिन् ।) चपलः

इति भूरिप्रयोगः ॥

**उत्तालः**, त्रि, (उत् + तल् + घञ् ।) उत्कटः । श्रेष्ठः ।

विकरालः । प्लवङ्गमः । इति मेदिनी ॥
("लसदुत्तालवेतालतालवाद्यं विवेश तत् ।
श्मशानं कृष्णरजनीनिवासभवनोपमम्" ॥
इति कथासरित्सागरे २५ । १३६ ॥
"अन्योन्यप्रतिधातसङ्कुलचलत्कल्लोलकोलाहलैः
उत्तालान्तैमे गभीरपयसः पुण्याः सरित्सङ्गमाः" ।
इति उत्तरचरिते । २ य अङ्के ।) त्वरितः । इति
हेमचन्द्रः ॥

शब्दरत्नावली ॥

**उत्थानं**, क्ली, (उत् + स्था + ल्युट् ।) सैन्यम् ।
युद्धम् ।

पौरुषम् । पुस्तकम् । उद्यमः । (यथा
रामायणे ५ ।
"मम धर्म्मार्थमुत्थानं न कामक्रोधसंज्ञितम्"
।)
उद्गमः । (अभ्युदयः । यथा रघुवंशे । ६ ।
३१ ।
"निदर्शयामास विशेषदृश्य-
मिन्दुं नवोत्थानमिवेन्दुमत्यै" ॥)
हर्षः । वास्त्वन्तः । अङ्गनम् । चैत्यः ।
(धनार्ज्जन-
निमित्ता चेष्टा । यथा मनुः ९ । २१५ ॥
"भ्रातॄणामविभक्तानां यद्युत्थानं भवेत्सह ।
न पुत्त्रभागं विषमं पिता दद्यात् कथञ्चन" ॥)
मलोत्सर्गः । इति हेमचन्द्रः ॥ तन्त्रम् । तत्तु
स्व-
मण्डलम् । सैन्यंचिन्ता च । सन्निविष्टः ।
उपविष्टः ।
इत्यमरभरतौ ॥ गात्रोत्तोलनम् । उठन इति
भाषा । (यथा शाकुन्तले २ य अङ्के ।
"मेदच्छेद-
कृशोदरं लघु भवत्युत्थानयोग्यं वपुः" ।) यथा
च,
"निशि स्वापो दिवोत्थानं सन्ध्यायां
परिवर्त्तनम् ।
अन्यत्र पादयोगेऽपि द्वादश्यामेव कारयेत्" ॥
इति तिथ्यादितत्त्वम् ॥ (पुनर्जीवनम् ।
मरणान-
न्तरं पुनर्जीवनलाभः । यथा महाभारते ।
"स चापि वरयामास पितुरुत्थानमात्मनः" ॥)

**उत्थानैकादशी**, स्त्री, (उत्थानाय हरेः प्रबोधनाय

अच् ।) पक्षी । इति त्रिकाण्डशेषः ॥

**उत्पतनं**, क्ली, (उ + पत् + ल्युट् ।) उत्पत्तिः ।
ऊर्द्ध्व-

गमनम् । इति मेदिनी ॥
("अथोत्पतनमन्त्रं सा पठित्वा ससखीजना" ।
इति कथासरित्सागरे ॥ विंशतरङ्गे ॥)

**उत्पतिता**, [ऋ] त्रि, (उत् + पत् + तृच् ।) ऊर्द्ध्व-

गमनशीलः । उपरिगमनकर्त्ता इत्यमरः ॥

**उत्पतिष्णुः**, त्रि, (उत् + पत् + इष्णुच् ।) ऊर्द्ध्वगमन-

शीलः । तत्पर्य्यायः । उत्पतिता २ । इत्यमरः ॥
("ससञ्जुरश्वक्षुण्णानामेलानामुत्पतिष्णवः" ।
इति रघुः । ४ । ४७ । तथा पञ्चतन्त्रे । ३ । ४१
।
"मृगपतिरपि कोपात् सङ्कुचत्युत्पतिष्णुः" ॥)

**उत्पत्तिः**, स्त्री, (उत् + पत् + क्तिन् ।) उत्पतनम् ।

तत्पर्य्यायः । जनुः २ जननं ३ जन्म ४ जनिः ५
उद्भवः ६ । इत्यमरः ॥ संसारः ७ भवः ८
जातिः ९ । इति जटाधरः ॥ प्रभवः १० भावः
११
सम्भवः १२ जनूः १३ । इति शब्दरत्नावली ॥

:(यथा मनुः । २ । ६८ ।
"उत्पत्तिव्यञ्जकः पुण्यः कर्म्मयोगं निबोधत" ।)
(साङ्ख्यादिमते आविर्भावः । यथा, मृत्पिण्डे विद्य-
मानस्य घटस्याविर्भाव एव उत्पत्तिर्यथा तथैव कारणात्मना विद्यमानानां तत्त्वानां आविर्भाव एवोत्पत्तिर्विवक्षिता ॥)

**उत्पन्नः**, त्रि, (उत् + पद् + क्त ।) उत्पत्तिविशिष्टः ।
जातः । उद्भूतः ॥

**उत्पलं**, क्ली, (उत्पलतीति । पल गतौ पचाद्यच् ।)
नोलकमलम् । कुष्ठौषधिः । इति विश्वः ॥ पुष्पम् ।
इति मेदिनी ॥ जलजपुष्पमात्रम् । तच्च पद्मकुमु-
दादि । तत्पर्य्यायः । कुवलयम् २ । इत्यमरः ॥ कुब-
लम् ३ । इति जटाधरः ॥ कुवेलम् ४ । इति शब्द-
रत्नावली ॥ (यथा रघौ ३ । ३६ । "नवावतारं कमलादिवोत्पलम्" ।) तस्य गुणाः ।
कषायत्वम् ।
मधुरत्वम् । शीतत्वम् ।
पित्तकफरक्तनाशित्वञ्च ।
इति राजवल्लभः ॥ जलपुष्पविशेषः । कोञि इति
हिन्दी भाषा । तत्पर्य्यायः । अनुष्णम् २ रात्रि-
पुष्पम् ३ जलाह्वयम् ४ हिमाब्जम् ५ निशापुष्पम्
६ । अस्य गुणाः । शीतत्वम् । स्वादुत्वम् । पित्त-
रक्तार्त्तिदोषनाशित्वम् । दाहश्रमवमिभ्रान्तिकृ-
मिज्वरहरत्वञ्च । इति राजनिर्घण्टः ॥
("उत्पलानि कषायाणि पित्तरक्तहराणि च" ।
इति सूत्रस्थाने सप्तविंशेऽध्याये चरकेणोक्तम् ॥
"तस्मादल्पान्तरगुणे विद्यात्कुवलयोत्पले" ।
इति सुश्रुते सूत्रस्थाने
षट्चत्वारिंशत्तमोऽध्यायः ॥)

**उत्पलः**, त्रि, (उद्गतं पलं मांसं यस्मात् सः ।) मांस-
अस्या गुणाः । हिमत्वम् । तिक्तत्वम् । रक्तामय-
पित्तनाशित्वम् । वातकफकासतृष्णा श्रमवमिशम-
ताकारित्वञ्च । तस्या वीजगुणाः । स्वादुत्वम् । रूक्ष-
त्वम् । हिमत्वम् । गुरुत्वञ्च । इति राजनिर्घण्टः ॥

**उत्पली**, स्त्री, तुषचर्पटी । इति मेदिनी । तुँसेर
चाप्डा इति भाषा ॥

**उत्पवनं**, क्ली, (उत् + पू + ल्युट् ।) कुशण्डिकायां पवि-
त्रमध्येन जलादेरुत्क्षेपणम् । तत्र क्रमः । "पवित्र-
द्वयमग्रे वामहस्तानामिकाङ्गुष्ठाभ्यां मूले दक्षिण-
हस्तानामिकाङ्गुष्ठाभ्यां उत्तानहस्ताभ्यां गृहीत्वा
आज्ये प्रक्षिप्य तयोर्म्मध्येनाग्नावाज्योत्क्षेपणम्" ।
इति कालेसिः ॥ "पवित्रद्वयमग्रे दक्षिणहस्ता-
नामिकाङ्गुष्ठाभ्यां मूले वामहस्तानामिकाङ्गुष्ठाभ्यां
गृहीत्वा दक्षिणहस्तोपरिभावेन अधोमुखो व्य-
स्तपाणिः पवित्रमध्येन प्रोक्षणीजलस्य किञ्चि-
दुत्तोलनम्" । इति पशुपतिः ॥ "पशुपत्युक्तक्रमेण
सामगानां मन्त्रोच्चारणपूर्ब्बकं पवित्रद्वयमध्येनाग्ना
वाज्योत्क्षेपणं ॥ इति भवदेवभट्टः ॥

**उत्पश्यः**, त्रि, (उदूद्र्ध्वं पश्यतीति + उत् + दृश् + श ।)
उन्मुखः । ऊद्र्ध्वदृष्टिविशिष्टः । इति हेमचन्द्रः ॥

**उत्पाटनं**, क्ली, (उत् + पट् + णिच् + ल्युट् ।) उल-
नम् । मूल उप्डान इति भाषा ॥ (यथा सुश्रुते ।
"निखातोत्पाटनं भङ्गः पतनं निर्गमस्तथा" ॥)

**उत्पाटितं**, त्रि, (उत् + पट + णिच् + क्त ।) कृतोत्-
पाटनं । तत्पर्य्यायः । उन्मूलितम् २ उत्खातम् ३ ।
इति जटाधरः ॥ आवर्हितम् ४ उद्धृतम् ५ । इति
हेमचन्द्रः ॥

**उत्पातः**, पुं, (उत् + पत् + घञ् ।) उत्पतति अक-
स्मादायाति यः । प्राणिनां शुभाशुभसूचकमहा-
भूतविकारभूकम्पादिः । इत्यमरटीकायां भरतः ॥
तत्पर्य्यायः । अजन्यम् २ उपसर्गः ३ । इत्यमरः ॥
सत्रिविधः । दिव्यः १ यथा अपर्ब्बणि चन्द्रादित्य-
ग्रासादिः । आन्तरीक्ष्यः २ यथा, उल्कापात-
निर्घातादिः । भौमः ३ यथा भूकम्पादिः । इति
दीपिकाचण्डीटीके ॥ (उत्पातानां लक्षणादिकं
सरणं चाद्रिगेहानां वर्षासु न भयावहम् ॥ ८९ ॥
दिव्यस्त्रीभूतगन्धर्व्वविमानाद्भुतदर्शनम् ।
ग्रहनक्षत्रताराणां दर्शनं च दिवाम्बरे ॥ ९० ॥
गीतवादित्रनिर्घोषा वनपर्ब्बतसानुषु ।
शस्यवृद्धिरपां हानिरपापाः शरदि स्मृताः ॥ ९१ ॥
शीतानिलतुषारत्वं नर्दनं मृगपक्षिणाम् ।
रक्षोयक्षादिसत्वानां दर्शनं वागमानुषी ॥ ९२ ॥
दिशो धूमान्धकाराश्च सनभोवनपर्ब्बताः ।
उच्चैः सूर्य्योदयास्तौ च हेमन्ते शोभनाः स्मृताः ॥ ९३ ॥
हिमपातानिलोत्पातविरूपाद्भुतदर्शनम् ।
कृष्णाञ्जननिभाकाशं तारोल्कापातपिञ्जरम् ॥ ९४ ॥
चित्रगर्भोद्भवाः स्त्रीषु गोऽजाश्वमृगपक्षिषु ।
पत्राङ्कुरलतानाञ्च विकाराः शिशिरे शुभाः ॥ ९५ ॥
ऋतुस्वभावजा ह्येते दृष्टाः स्वत्ता शुभप्रदाः ।
ऋतोरन्यत्र चोत्पाता दृष्टास्ते भृशदारुणाः ॥ ९६ ॥
उन्मत्तानाञ्च या गाथाः शिशूनां भाषितञ्च यत् ।
स्त्रियो यच्च प्रभाषन्ते तस्य नास्ति व्यतिक्रमः ॥ ९७ ॥
पूर्ब्बं चरति देवेषु पश्चात् गच्छति मानुषान् ।
नचोदिता वाग्वदति सत्या ह्येषा सरस्वती ॥ ९८ ॥
उत्पातान् गणितविवर्जितोऽपि बुद्ध्वा
विख्यातो भवति नरेन्द्रवल्लभश्च ।
एतत्तन्मुनिवचनं रहस्यमुक्तं
यज्ज्ञात्वा भवति नरस्त्रिकालदर्शी" ॥ ९९ ॥
उत्पतनं । उल्लम्फः । यथा, रामायणे ५ । ६८ । २३ ।
"एकोत्पातेन ते लङ्कामेष्यन्ति हरिपुङ्गवाः" ।
उन्नतिः । वृद्धिः । यथा, हितोपदेशे ।
"करनिहितकन्दुकसमाः पातोत्पाता मनुष्याणां" ।
उत्पत्तिः । यथा, महाभारते, वनपर्ब्बणि ।
"बुद्धिरात्मानुगातीव उत्पातेन विधीयते ।
तदाश्रिता हि सा ज्ञेया बुद्धिस्तस्यैषिणी भवेत्" ॥)

**उत्पादकः**, पुं, (उत् + पद + णिच् + ण्वुल् ।) पशु-
विशेषः । तत्पर्य्यायः । शरभः २ कुञ्जराराातिः ३

शून्यः । इति विश्वः हेमचन्द्रश्च ॥

**उत्पलगन्धिकं**, क्ली, (उत्पलस्य गन्धैव गन्धो यस्य । स-

मासे इत् संज्ञायां कन् ।) चन्दनविशेषः ।
तत्पर्य्यायः ।
कृष्णताम्रम् २ गोशीर्षम् ३ । इति शब्दमाला ॥

**उत्पलपत्रं**, क्ली, (उत्पलस्य पत्रम् । नखक्षतपक्षे पत्र-

मिव ।) कुवलयदलम् । (यथा विष्णुपुराणे १ । ४ । २६ ।
ततः समुत्क्षिप्य धरां स्वदंष्ट्रया
महावराहः स्फुटपद्मलोचनः ।
रसातलादुत्पलपत्रसन्निभः
समुत्थितो नील इवाचलो महान् ॥)
स्त्रीनखक्षतम् । इति हेमचन्द्रः ॥ तिलकम् । इति
धरणी ॥

**उत्पलशारिवा**, स्त्री, (उत्पलमस्त्यस्याः उत्पलाकार-

पुष्पत्वात् । अर्श आद्यच् । यद्वा उद्यतं पलमनया ।
ततः उत्पला चासौ शारिवा चेति ।) श्यामलता ।
इत्यमरः । (श्यामलताशब्देऽस्या गुणादिकं ज्ञेयम् ॥)

**उत्पलिनी**, स्त्री, (उत्पलानि सन्ति अस्यां तेषां

समूहो वा । उत्पल + इनि + ङीप् ।) पद्म-
समूहः । इति शब्दरत्नावली ॥
जलपुष्पविशेषः ।
छोटी कोञि इति हिन्दी भाषा । तत्पर्य्यायः ।
कैरविणी २ कुमुद्वती ३ कुमुदिनी ४ चन्द्रेष्टा ५
कुवलयिनी ६ इन्दीवरिणी ७ नीलोत्पलिनी ८ ।
(यथा महाभारते तीर्थयात्रापर्ब्बणि ३ । ९६ । २५ ।
"ववृधे सा महाराज विभ्रती रूपमुत्तमम् ।
अप्स्विवोत्पलिनी शीघ्रमग्नेरिव शिखा शुभा" ॥)

ऋतौ स्वभावप्रभवात् अदोषत्वञ्चोक्तं वृहत्संहि-
तायां ४६ अध्याये । यथा, --
"नरपतिदेशविनाशे केतोरुदयेऽथवा ग्रहेऽर्केन्द्वोः ।
उत्पातानां प्रभवः स्वर्तुभवश्चाप्यदोषाय ॥ ८२ ॥
येच न दोषान्
जनयन्त्युत्पातास्तानृतुस्वभावकृतान् ।
ऋषिपुत्त्रकृतैः श्लोकैर्विद्यादेतैः समासोक्तैः ॥ ८३ ॥
वज्राशनिमहीकम्पसन्ध्यानिर्घातनिःस्वनाः ।
परिवेशरजोधूमरक्तार्कास्तमनोदयाः ॥ ८४ ॥
द्रुमेभ्योऽन्नरसस्नेहबहुपुष्पफलोद्गमाः ।
गोपक्षिमदवृद्धिश्च शिवाय मधुमाधवे ॥ ८५ ॥
तारोल्कापातकलुषं कपिलार्केन्दुमण्डलम् ।
अनग्निज्वलनस्फोटधूमवेण्वनिलाहतम् ॥ ८६ ॥
रक्तपद्मारुणं सान्ध्यं नभः क्षुब्धार्णवोपमम् ।
सरितां चाम्बुसंशोषं दृष्ट्वा ग्रीष्मे शुभं वदेत् ॥ ८७ ॥
शक्रायुधपरीवेषविद्युच्छुष्कविरोहणम् ।
कम्पोद्वर्त्तनवैकृत्यं रसनं दरणं क्षितेः ॥ ८८ ॥
सरोनद्युदपानानां वृद्ध्यूर्द्ध्वतरणप्लवाः ।

अष्टपादः ४ । इति हेमचन्द्रः ॥

**उत्पादकः**, त्रि, (उत्पादयतीति । उत् + पद् + णिच्

+ ण्वुल् ।) उत्पादयिता । जनकः । यथा मनुः ।
"उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता" ।
२ । १४६ ॥

**उत्पादनं**, क्ली, (उत् + पद् + णिच् + ल्युट् ।) जननम् ।

उत्पन्नकरणम् । इति व्याकरणम् ॥ (यथामनुः । ९ । २७ ।)
"उत्पादनमपत्यस्य जातस्य परिपालनम्" ।

**उत्पादशयनः**, पुं स्त्री, (उत्पाद ऊर्द्ध्वपादः सन् शेते

यः सः । उत्पाद + शी + ल्यु ।) टिट्टिभपक्षी । इति
हेमचन्द्रः ॥

**उत्पादिका**, स्त्री, (उत् + पद् + णिच् + ण्वुल् +

टाप् ।) देहिकानामकीटः । इति त्रिकाण्डशेषः ॥
हिलमोचिका इति शब्दचन्द्रिका ॥ पूतिका ।
इति भरतो द्विरूपकोपश्च ॥

**उत्पाली**, स्त्री, (उत् + पल् + घञ् + ङीष् ।) आ-

रोग्यम् । इति शब्दचन्द्रिका ॥

**उत्पिञ्जलः**, त्रि, (उदतिशयः पिञ्जलो व्यग्रः ।) भृश-

माकुलः । अतिशयव्याकुलः । तत्पर्य्यायः । समु-
त्पिञ्जः २ पिञ्जलः ३ । इति हेमचन्द्रः ॥

**उत्प्रेक्षा**, स्त्री, (उत्पेक्षते इति उत् + प्र + ईक्ष + अ + टाप् ।) अनवधानम् । इति मेदिनी ॥ काव्या-
लङ्कारविशेषः । तस्य लक्षणम् ।
"सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्" ।
"अस्यार्थः । प्रकृतस्य उपमेयस्य समेन उपमानेन
यत् सम्भावनं मिथ्यात्वेन वर्णनम्" । इति काव्य-
प्रकाशः ॥ (अस्या भेदा बहवः । यदुक्तं साहित्य-
दर्पणे, दशमपरिच्छेदे । ५६ -- ६२ ॥
"भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना ।
वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता ॥
वाच्येवादिप्रयोगे स्यादप्रयोगे परा पुनः ।
जातिर्गुणः क्रिया द्रव्यं यदुत्प्रेक्ष्यं द्वयोरपि ॥
तदष्टधापि प्रत्येकं भावाभावाभिमानतः ।
गुणक्रियास्वरूपत्वात् निमित्तस्य पुनश्च ताः ॥
द्वात्रिंशद्विधतां यान्ति तत्र वाच्याभिदाः पुनः ।
विना द्रव्यं त्रिधा सर्व्वाः स्वरूपफलहेतुगाः ॥
उक्त्यनुक्त्योर्निमित्तस्य द्विधा तत्र स्वरूपगाः ।
प्रतीयमानामेदाश्च प्रत्येकं फलहेतुगाः ॥
उक्त्यनुक्तोः प्रस्तुतस्य प्रत्येकं ता अपि द्विधा ।
अलङ्कारान्तरोत्था सा वैचित्रमधिकं वहेत् ॥
मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः" ॥
विस्तृतिस्तु अलङ्कारशब्दे द्रष्टव्या ॥)

**उतप्लवनं**, क्ली, (उत् + प्लु + ल्युट् ।) उल्लम्फनम् । लाफान इति भाषा ॥ (यथा, मनुः । ५ । ११५ ॥
"द्रव्याणां चैव सर्व्वेषां शुद्धिरुत्प्लवनं स्मृतम्" ॥)

**उत्प्लवा**, स्त्री, (उत् + प्लु + अच् + टाप् ।) नौका । इति शब्दरत्नावली ॥

**उत्फालः**, पुं, (उत् + फल् + घञ् ।) लम्फः ॥ ("तत्क्षणं स कृतोत्फालः शक्तिदेवोऽथ साध्वसात्" ।
इति कथासरित्सागरे । १६ तरङ्गे ॥)

**उत्फुल्लः**, त्रि, (उत्फलतीति । उत् + फल् + क्त ।
इति मेघदूते ८६ । तथा, विष्णुपुराणम् । १ । ११ । ५ ॥
"प्रणयेनागतं पुत्त्रम् उत्सङ्गारोहणोत्सुकम्" ॥
पर्ब्बतादीनां शिखरदेशः । सानुः ॥ यथा, रघुः ।
"शिलाविभङ्गैर्मृगराजशाव-
स्तुङ्गं नगोत्सङ्गमिवारुरोह" ॥ ६ । ३ ॥
सौधादीनामुपरिभागः । छाद् इति भाषा ॥
"सौधोत्सङ्गप्रणयविमुखो मास्म भूरुज्जयिन्याः" ।
इति मेघदूते । २९ । अभ्यन्तरभागः ।
"वनेचराणां वनितासखानां
दरीगृहोत्सङ्गनिषक्तभासः" ।
इति कुमारे । १ । १० । ऊर्द्ध्वतलः । वहिर्भागः ।
"दृषदो वासितोत्सङ्गा निषण्णमृगनाभिभिः" ।
इति रघुवंशे । ४ । ७४ । सङ्गमः ॥ आलिङ्गनम् ।
विवाहः ॥ व्रणाधोभागः । शोष इति भाषा ॥
यथा सुश्रुते । सूत्रस्थाने ।
"अभ्यन्तरमुत्सङ्गं कृत्वा भूयोऽपि विकरोति" ।
गर्भः । यथा, महाभारते परीक्षिज्जन्मनि । १४ ।
६८ । १८ । १९ ॥
"आसीन्मम मतिः कृष्ण ! पूर्णोत्सङ्गा जनार्द्दन" ! ॥)

**उत्सर्गः** पुं, (उत् + सृज् + घञ् ।) त्यागः । दानम् । वर्ज्जनम् । (यथा, कुमारे । ७ । ३५ ॥
"श्रीलक्षणोत्सर्गविनोतवेशाः" ।
"तयोत्सर्गद्रुततरगतिस्तत्परं वर्त्म तीर्णः" ।
इति मेघदूते । २० ॥ यथा, मनुः । ११ । १९३ ।
"तस्योत्सर्गेण शुध्यन्ति जप्येन तपसैव च" ।)
सामान्यविधिः ॥ इति हेमचन्द्रः ॥ (यथा, कुमारे ।
२ । २७ ।
"अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः" ।)
साग्निकर्त्तव्यक्रियाविशेषः । इति तिथ्यादितत्त्वम् ।
अथ वैधोत्सर्गविधिः । स्नानसन्ध्याचमनानि कृत्वा
अवसर्पिण्यां षड्वा उत्सर्पिण्यां तएव विपरीताः ।
एवं द्वादशभिरैर्व्विवर्त्तते कालचक्रमिदम्" ॥
(उद्गमनशीला । यथा, शाकुन्तले ६ अङ्के ।
"उत्सर्पिणी खलु महतां प्रार्थना" । इति ॥)

**उत्सर्य्या**, स्त्री, (उत् + सृ + ण्यत् ।) प्रजनकालप्राप्ता गौः । इति जटाधरः ॥ पाल लओनेर उपयुक्त गाइ इति भाषा ।

**उत्सवः**, पुं, (उत् + सू + अच् ।) नियताह्लादजनक-
व्यापारः । तत्पर्य्यायः । क्षणः २ उद्धवः ३ उद्धर्षः ४ महः ५ । इत्यमरः ॥ (यथा मनुः । ३ । ५९ ।
"तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः ।
भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च" ॥)
उत्सेकः । इच्छाप्रसवः । कोपः । इति मेदिनी ॥
(उन्नतिः । अभ्युदयः ।
"उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे" ॥
इति हितोपदेशेः । १ । १६४ ॥)

**उत्सादनं**, क्ली, (उत् + सद् + णिच् + ल्युट् ।) समु-
ल्लेखः । उद्वाहनम् । उद्वर्त्तनम् । इति मेदिनी ॥
("उत्सादनञ्च गात्रानां स्नापनोच्छिष्टभोजने" ।
इति मनुः । २ । २०९ ॥ विनाशः । उन्मूलनम् ॥
"पूर्ब्बं क्षत्रबधं कृत्वा गतमन्युर्गतज्वरः ।
क्षत्रस्योत्सादनं भूयो न खल्वस्य चिकीर्षितम्" ॥
इति रामायणम् । १ । ७४ । २१ ॥ औषधलेपना-
दिना व्रणस्य संशोधनम् । तथा, -- सुश्रुते ।
"अपामार्गोऽश्वगन्धा च तालपत्री सुवर्च्चला ।
उत्सादने प्रशस्यन्ते काकोल्यादिश्च यो गणः" ॥
"उत्सादनात् भवेत् स्त्रीणां विशेषात्कान्तिमद्वपुः ।
प्रहर्षसौभाग्यमृजालाघवादिगुणान्वितम्" ॥
इति चिकित्सितस्थाने २४ अध्याये सुश्रुतेनोक्तम् ॥)

**उत्सादितं**, त्रि, (उत् + सद् + णिच् + क्त ।) कृतोत्-
सादनम् । उद्वर्त्तितम् । निर्म्मलीकृतशरीरम् ॥
(यथा, महाभारते ७ । ८० । १० । प्रतिज्ञापर्ब्बणि ।
"उत्सादितः कषायेण बलवद्भिः सुशिक्षितैः ।
आप्लुतः साधिवासेन जलेन सुसुगन्धिना" ॥)

**उत्सारकः**, पुं, (उत्सार्य्यन्ते प्रभुद्वारतोऽनेन इति । उत् + सृ + णिच् + वुण् ।) द्वारपालः । इति हेमचन्द्रः ॥ उत्ससारणकर्त्ता ॥

आदितश्चेतीडभावः
उत्फुल्लसंफुल्लयोरुपसंख्यान-
मिति निष्ठातस्य लः ।) प्रफुल्लः । विकसितः ।
इत्यमरः ॥ (यथा, किराते ।
("उत्फुल्लकमलपरागजन्या-
दुद्भूतः सरसिजसम्भवः परागः" ।
स्पीतः । वर्द्धितः । (यथा, विष्णुपुराणे । १ । ९ । १३ ॥
"हर्षोत्फुल्लकपोलेन न चापि शिरसा धृता" ।
आनन्दादिना विस्फारितः । यथा, रामायणे ॥
"अवस्थितैः समीपस्थैस्त्रासादुत्फुल्ललोचनैः" ।)
स्त्रीणां करणम् । उत्तानम् । इति मेदिनी ॥

**उत्मः**, पुं, (उनत्ति जलेन । उन्द + उन्दिगुधिकुषिभ्य-
श्चेति सः । किदित्यनुवृत्तेर्न लोपः ।) प्रस्रवणम् ।
इत्यमरः ॥ उनै इति भाषा । यत्र स्थाने स्रुत्वा
जलं गलति तत्र । इति भरतः ॥ स्वाम्यादयस्तु
अविच्छेदेन स्रवज्जलं यत्र स्थाने पतति निपत्य च
बहुलीभवति तत्रेत्याहुः ॥ तथा साङ्गोऽप्याह ।
"गिरेरुपरि निर्झरादिप्रभवजलसङ्घातः" ।
"अजस्रं मन्दवेगेन स्रवज्जले । इति कोक्कटः" ॥

**उत्मङ्गः**, पुं, (उतम्वजते मिलति यत्र । उत् + सञ्ज
+ घञ् ।) क्रोडम् । इति जटाधरः ॥
("उत्मङ्गवा मलिनवसने सौम्य निक्षिप्य
वीणाम्" ॥

नारायणनवग्रहगुरून् संपूज्य देयद्रव्यं
वामहस्तेन
धृत्वा दक्षिणहस्थेन त्रिरभ्यर्च्चर्य्य तद्द्रव्याधि-
पतिदेवतां सम्प्रदानञ्च अर्च्चयित्वा संकल्प्य कुश-
तिलजलत्यागपूर्ब्बकदानम् । इति स्मृतिः ॥
(अपानवायोर्व्यापारः । मलमूत्रादिवर्ज्जनम् ॥
उत्सज्यते विण्मूत्रमनेनेति व्युत्पत्त्या
पाय्विन्द्रियम् ।
यथा, -- यथा, मनुः । १२ । १२१ ।
"मनसीन्द्रं दिशः श्रोत्रे क्लान्ते विष्णं बले हरम् ।
वाच्यग्निं मित्रमुत्सर्गे प्रजने च प्रजापतिम्" ॥)

**उत्सर्जनं**, क्ली, (उत् + सृज् + ल्युट् ।) उत्सर्गः ।
तत्पर्य्यायः । त्यागः १ विहापितं ३ दानं ४ विस-
र्ज्जनं ५ विश्राणनं ६ वितरणं ७ स्पर्शनं ८ प्रति-
पादनं ९ प्रादेशनं १० निर्व्वपणं ११ अपवर्जनं १२
अंहतिः १३ । इत्यमरः ॥
(साग्निककर्त्तव्यक्रिया-
विशेषः । (यथा, मनुः । ४ । ९६ ।
"पुष्य तु छन्दसां कुर्य्यात् वहिरुत्सर्ज्जनं द्विजः ।
माघशुक्लस्य वा प्राप्ते पूर्ब्बाह्णे प्रथमेऽहनि" ॥)

**उत्सर्पिणी**, स्त्री, (उत् + सृप् + णिनि + ङीष् । उत्-
सर्पतीति वाक्ये वाच्यलिङ्ग एव ।) जिनानां
कालविशेषः । यथा, -- हेमचन्द्रः ॥
"कालो द्विविधोऽवसर्पिण्युत्सर्पिणीषु भेदतः ।
सागरकोटिकोटीनां विंशत्या स समाप्यते ॥

**उत्सारणं**, क्ली, (उत् + सृ + णिच् + ल्युट् ।) दूरी-
करणम् । चालनम् । स्थानान्तरप्रापणम् ॥

**उत्साहः**, पुं, (उत् + सह् + घञ् ।) उद्यमः । तत्-
पर्य्यायः । अध्यवसायः २ । इत्यमरः ॥ सूत्रम् ।
इति मेदिनी ॥ कल्याणम् । भावविशेषः । इति
शब्दरत्नावली ॥ (यथा, साहित्यदर्पणे ३ य
परिच्छेदे !
"रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेत्थमष्टौ प्रोक्ताः शमोऽपि च" ।)
ध्रुवकविशेषः । तल्लक्षणं यथा, --
"उत्साहः स्यात् रसे हास्ये ताले केन्दुकसंज्ञके ।
वशवृद्धिकरः पादैस्त्रयोदशमिताक्षरः" ॥
इति सङ्गीतदामोदरः ॥

**उत्साहवर्द्धनं**, क्ली, (उत्साहं वर्द्धयति यत् । उत्साह
+ वृध + ल्युट् ।) उद्यमवृद्धिः । वीररसः । इत्य-
मरः ॥

**उत्सिक्तः**, त्रि, (उत् + सिच् + क्त ।) उद्धतः । इति

त्रिकाण्डशेषः ॥ गर्व्वितः । वर्द्धितः । उद्रिक्तः ।

इति श्रीभागवतम् ॥ (यथा, मनुः ८ । ७१ ।

"बालवृद्धातुराणाञ्च साक्ष्येषु वदतां मृषा ।

जानीयादस्थिरां वाचमुत्सिक्तमनसां तथा" ।

"वीर्य्योत्सिक्तौ हि तौ पापौ कालपाशवशङ्गतौ"

।

इति रामायणे १ म काण्डे ॥)

**उत्सिच्यमानः**, त्रि, (उत् + सिच् + शानच् ।) उद्रिच्य-

मानः । वृद्धिमान् । इति श्रीभागवतम् ॥

**उत्सुकः**, त्रि, (उत् उद्योगं सुवति सौति सुनोति वा ।

सु प्रसवैश्वर्य्ययोः । विचिसंज्ञापूर्ब्बकत्वात्

गुणा-

भावः । क्विपि

आगमशास्त्रस्यानित्यत्वात्तुगभावो

वा । ततः संज्ञायां कन् ॥ यद्वा उत् सुवति ।

षू प्रेरणे । मितद्रूवादित्वात् डुः । सत्स्विति

क्विप्

वा । कनिकेण इति ह्रस्वः ॥ उत् + सु + क्विप्

+

कन् ।) वाञ्छितकर्म्मोद्यतः । तत्पर्य्यायः ।

इष्टा-

र्थोद्युक्तः २ । इत्यमरः ॥ उत्कण्ठितः । इति

हेमचन्द्रः ॥ (यथा, रामायणे आदिकाण्डे ।

("प्रेषयिष्यति राजा तु कुशलार्थं तवानघे ।

ब्राह्मणान् नित्यशः पुत्त्रि मोत्सुका भूः

कदाचन" ॥

"वत्सोत्सुकापि स्तिमिता सपर्य्याम्" ।

इति रघुवंशे २ । २२ ॥)

**उत्सूरः**, पुं, (सूरं सूर्य्यमतिक्रान्तः ।) दिनावसानम् ।

इति हेमचन्द्रः ॥

**उत्सृष्टः**, त्रि, (उत् + सृज् + क्त ।) कृतोत्सर्गः । तत्-

पर्य्यायः । त्यक्तः २ हीनः ३ विधुतः ४ समुज्-

झितः ५ घूतः ६ । इत्यमरः ॥ (यथा,

याज्ञवल्क्यः ।

"महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः" ॥)

**उत्सेचनं**, क्ली, (उत् + सिच् + ल्युट् ।) ऊद्र्ध्वसेकः

।

उथ्लन उपचन इत्यादि भाषा ॥

नारायणस्योदरनाभिनालात्" ।

इति श्रीभागवते । तथा च गीतायाम् । २ । ४६ ।

"यावानर्थ उदपाने सर्व्वतः संप्लुतोदके" ॥)

**उदक्**, [च्] व्य, (उद् + अञ्च + अस्तातिः ।) उत्तर-

दिग्देशकालाः । इति मेदिनी ॥

**उदकं**, क्ली, (उनत्तीति । उन्दी क्लेदने + क्वन् । उद-

कमिति २ । ३९ । उणादिसूत्रेण साधु ।) जलम् ।

इत्यमरः ॥

("अनीत्वा पङ्कतां धूलिमुदकं नावतिष्ठति" ।

इति माघः २ । ३४ ॥ तथा श्रीभगवद्गीता । २ ।

४६ ॥

"यावानर्थ उदपाने सर्व्वतः संप्लुतोदके" ।

"उदकस्योदः एकहलादौ । पाणिनिः । ६ । ३ ।

५९ ।

इति विकल्पः । उदकुम्भः । उदककुम्भः । यथा,

भट्टिः । २ । २० । "तपःकृशाः शान्त्युदकुम्भ-

हस्ताः" ॥ उदशब्दोऽप्युदकपर्य्याय इति भाष्य-

टीका । उदकस्योदः संज्ञायामिति रक्षितः ।

यथा, कुमारे ५ । २६ । "सहस्यरात्रीरुदवास-

तत्परा" ॥ इति उज्ज्वलदत्तः ।

वारिशब्देऽस्य विवरणं बोद्धव्यम् ॥)

**उदकपरीक्षा**, स्त्री, (उदकस्य उदकेन वा परीक्षा ।)

दिव्यविशेषः । यथा । अथोदकपरीक्षा ।

पितामहः ।

"तोयस्याथ प्रवक्ष्यामि विधिं धर्म्म्यं सनातनम् ।

मण्डलं पुष्पधूपाभ्यां कारयेत् सुविचक्षणः ॥

शरान् संपूजयेद्भक्त्या वैणवञ्च धनुस्तथा" ।

तत्र प्रथमतो वरुणं पूजयेत् । यथा नारदः ।

"गन्धमाल्यैः सुरभिभिर्मधुक्षीरघृतादिभिः ।

वरुणाय प्रकुर्व्वीत पूजामादौ समाहितः" ॥

ततो धर्म्मावाहनादिसकलदेवतापूजाहोमसम-

न्त्रकप्रतिज्ञापत्रशिरोनिवेशान्तं कर्म्म कुर्य्यात् ।

कात्यायनः ।

"शरांस्त्वनायसाग्रांस्तु प्रकुर्व्वीत विशुद्धये ।

वेणुकाष्ठमयांश्चैव क्षेप्ता च सुदृढं क्षिपेत्" ॥

पितामहः ।

"क्षेप्ता च क्षत्त्रियः कार्य्यस्तद्वृत्तिर्ब्राह्मणोऽथवा ॥

अक्रूरहृदयः शान्तः सोपवासस्तथा शुचिः ॥

इषून्न प्रक्षिपेद्धीमान् मारुते वाति वा भृशम् ।

विषमे भूप्रदेशे च वृक्षस्थाणुसमाकुले" ॥ * ॥

ग्रहणं ततश्च प्रथमतः पुरुषान्तरेण तत्स्थाने शरः

आनेतव्यः ॥ * ॥ नारदः ।

"नदीषु नातिवेगासु तडागेषु सरःसु च ।

ह्रदेषु स्थिरतोयेषु कुर्य्यात् पुंसां निमज्जनम्" ॥

नातिवेगासु स्थितिविरोधिवेगशून्यासु ॥ * ॥

विष्णुः ।

पङ्कशैवालदुष्टग्राहमत्स्यजलौकादिवर्ज्जिते

तस्य नाभिमात्रजले मग्नस्यारागद्वेषिणः पुरुष-

स्यान्यस्योरू गृहीत्वा अभिमन्त्रिताम्भः प्रविशेत्

।

तत्समकालञ्च नातिक्रूरमृदुना धनुषा पुरुषो-

ऽपरः शरमोक्षं कुर्य्यादिति तस्य शाध्यस्येत्यर्थः ।

अन्यथा तस्येति व्यथ स्यात् ॥ * ॥

अन्यपुरुषस्य स्तम्भधारणमाह स्मृतिः ।

"उदके प्राङ्मुखस्तिष्ठेद्धर्म्मस्थूणां प्रगृह्य च" ॥ *

॥

प्राड्विवाककर्तृकजलाभिमन्त्रणमाह पितामहः ।

तोय त्वं प्राणिनां प्राणः मृष्टेराद्यन्तु निर्म्मितम् ।

शुद्धेश्च कारणं प्रोक्तं द्रव्याणां देहिनां तथा ॥

अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे" ॥ * ॥

शोध्यकर्त्तृकाभिमन्त्रणमाह याज्ञवल्क्यः ।

"सत्येन माभिरक्षस्व वरुणेत्यभिशाप्य कम् ।

नाभिमात्रोदस्थस्य गृहीत्वोरू जलं विशेत्" ॥

मा मां । अभिशाप्य शपथं कारयित्वा । कं

जलम् । विशेत् निमज्जेत् ॥ * ॥ तोरणञ्च निम-

ज्जनसमीपे समे स्थाने शोध्यकर्णप्रमाणोच्छ्रितं

कार्य्यम् । यथा नारदः ।

"गत्वा तु तज्जलस्थानं तटे तोरणमुच्छ्रितम् ।

कुर्व्वीत कर्णमात्रन्तु भूमिभागे समे शुचौ" ॥ * ॥

शरमोक्षे विशेषमाहतुर्नारदवृहस्पती ।

"शरप्रक्षेपणस्थानाद्युवा जवसमन्वितः ।

गच्छेत् परमया शक्त्या यत्रासौ मध्यमः शरः ॥

मध्यमं शरमादाय पुरुषोऽन्यस्तथाविधः ।

प्रत्यागच्छेत्तु वेगेन यतः स पुरुषो गतः ॥

आगतस्तु शरग्राही न पश्यति यदा जले ।

अन्तर्ज्जलगतं सम्यक् तदा शुद्धिं विनिर्द्दिशेत् ॥

अन्यथा न विशुद्धः स्यादेकाङ्गस्यापि दर्शनात् ।

स्थानाद्वान्यत्र गमनाद्यस्मिन् पूर्ब्बं निवेशयेत्" ॥

* ॥

जविनौ विशेषयति नारदः ।

"पञ्चाशतो धावकानां यौ स्यातामधिकौ जवे ।

तौ च तत्र नियोक्तव्यौ शरानयनकर्म्मणि" ॥

**उत्सेधः**, पुं, (उत् + सिध् + घञ् ।) पर्ब्बतवृक्षादीनां दैर्घ्यम् ।
("कूर्म्मस्त्रियोजनोत्सेधो दशयोजनमण्डलः" ॥
इति महाभारते गजकूर्म्मयुद्धे । २९ । ३१ ।)
उच्छ्रयः । (यथा, कुमारे ५ । ८ ॥
"पयोधरोत्सेधविशीर्णसंहति" ॥
उपरिभागः । यथा, कुमारे ५ । २४ ।
"पयोधरोत्सेधनिपातचूर्णिताः" ।)
शरीरम् । इत्यमरः ॥ संहननम् । इति हेमचन्द्रः ॥
("सोत्सेधमुष्मार्थशिरातनुत्वम्" ।
इति भावप्रकाशे शोथाधिकारे ॥
"उत्सेधं संहतं शोफं तमाहुर्न्निचयादतः" ।
इति निदानस्थाने त्रयोदशाध्याये वाभटेनोक्तम् ॥)

**उद्** व्य, (उ + क्विप् + तुक् । पृषोदरादित्वात् साधः ।)
विंशत्युपसर्गान्तर्गत उपसर्गविशेषः । अस्यार्थः ।
ऊद्ध्वर्म् । उत्कर्षः । प्राकट्यम् । नैकट्यम् । इति
दुर्गादासः ॥ प्रकाशः । विभागः । प्राबल्यम् ।
अस्वास्थ्यम् । शक्तिः । प्राधान्यम् । बन्धनम् ।
भावः । मोक्षः । लाभः । ऊद्ध्वर्कर्म्म । इति
मेदिनी ॥

**उदं**, क्ली, (उद् + अच् ।) जलम् । इति शब्दरत्नावली ।
("जगत्त्रयान्तोदधिसंप्लवोदे
नारदः ।
"क्रूरं धनुः सप्तशतं मध्यमं षट्शतं मतम् ।
मन्दं पञ्चशतं प्रोक्तमेष ज्ञेयो धनुर्विधिः" ॥
अङ्गुलीनां सप्ताधिकं शतं यस्य धनुषः परिमाणं
तत् सप्तशतम् । एवं षट्शतादिकम् ॥ * ॥
पितामहः ।
"मध्यमेन तु चापेन प्रक्षिपेत्तु शरत्रयम् ।
हस्तानान्तु शते सार्द्धे लक्ष्यं कृत्वा विचक्षणः ॥
तेषाञ्च प्रेषितानान्तु शराणां शास्त्रदर्शनात् ।
मध्यमस्तु शरो ग्राह्यः पुरुषेण बलीयसा ॥
शराणां पतनं ग्राह्यं सर्पणं परिवर्जयेत् ।
सर्पन् सर्पन् शरो याति दूराद्दूरतरं यतः" ॥
पतनं ग्राह्यमिति शरपतनस्थानपर्य्यन्तं गच्छेदि-
त्यर्थः । तेन प्रसरणपक्षेऽपि पतनस्थानकशर-
एकाङ्गस्य दर्शनादिति कर्णाद्यभिप्रायेण ।
"शिरोमात्रन्तु दृश्येत न कर्णौ नापि नासिके ।
अप्सु प्रवेशने यस्य शुद्धं तमपि निर्द्दिशेत्" ॥
इति विशेषाभिधानात् । कात्यायनः ।
"निमज्योत्प्लवते यस्तु दृष्टश्चेत् प्राणिना नरः ।
पुनस्तत्र निमज्जेत दंशचिह्नविभावितः" ॥
जलान्तर्गतमत्स्यजलौकादिना दष्टः समुत्प्लवते यदि
तदा दष्टे दृष्टे पुनर्न्निमज्जनीय इत्यर्थः ॥ * ॥
पितामहः ।
"गन्तुश्चापि च कर्त्तुश्च समं गमनमभज्जनम् ।
गच्छेत् तोरणमूलात्तु शरस्थान जवी नरः ॥
तस्मिन् गते द्वितीयोऽपि वेगादादाय शायकम् ।
गच्छेत्तोरणमूलन्तु यतः स पुरुषो गतः ॥
आगतस्तु शरग्राही न पश्यति यदा जले ।

:अन्तर्ज्जलगतं सम्यक् ततः शुद्धिं विनिर्द्दिशेत्” ॥

अत्र मज्जनसमकालगमनाभिधानात् शरमोक्ष-समकालं गमनं शूलपाण्युक्तमयुक्तम् । मज्जनसम-कालक्षिप्तं मध्यमं शरमादायेत्यपरमुक्तमपि प्रमा-णशून्यम् । ततश्च त्रिषु शरेषु मुक्तेषु एको वेग-वान् मध्यमशरपतनस्थानं गत्वा तमादाय तत्रैव तिष्ठति । अन्यस्तु पुरुषो वेगवान् शरमोक्षस्थाने तोरणमूले तिष्ठति एवं स्थितयोस्तृतीयायां कर-तालिकायां प्राड्विवाकदत्तायां शोध्यो निम-ज्जति तत्समकालमेव तोरणमूलस्थितोऽपि द्रुत-तरं मध्यमशरपतनस्थानं गच्छति शरग्राही च तस्मिन् प्राप्ते द्रुततरं तोरणमूलं प्राप्यान्तर्ज्जल-गतं यदि न पश्यति तदा शुद्धो भवतीति वर्त्तु-लार्थः ॥ * ॥ * ॥ तत्र प्रयोगः । उक्तलक्षणजला-शयनिकटे तथा तोरणं विधाय उक्तदेशे लक्ष्यं कृत्वा तोरणसमीपे सशरं धनुः संपूज्य जला-शये वरुणमावाह्य पूजयित्वा तत्तीरे धर्म्मादींश्च देवान् हवनान्तमिष्ट्वा दक्षिणां कृत्वा शोध्यस्य शिरसि प्रतिज्ञापत्रं बद्ध्वा प्राड्विवाको जलमभि-मन्त्रयेत् । वक्ष्यमाणमन्त्रेण ।
ॐ “तोय त्वं प्राणिनांप्राणः सृष्टेराद्यन्तु निर्म्मितम् ।
शुद्धेश्च कारणं प्रोक्तं द्रव्याणां देहिनां तथा ॥
अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे” । इति ॥
शोध्यस्तु ॐ “सत्येन माभिरक्षस्व वरुण” इत्यनेन जलमभिमन्त्र्य गृहीतस्थूणस्य शोध्यनाभिमात्रोद-कावस्थितस्य बलीयसः प्राङ्मुखस्य पुरुषस्य समीपं जलमध्ये गच्छेत् । ततः शरेषु त्रिषु मुक्तेषु मध्यम-शरपातस्थाने मध्यमशरं गृहीत्वा जविन्येकस्मिन् पुरुषे स्थिते अन्यस्मिंश्च तोरणमूलस्थिते प्राड्विवा-केन तालत्रये दत्तेशोध्यो गृहीतस्थूणप्राङ्मुखपुरु-षस्योरू गृहीत्वा निमज्जति तत्समकालमेव तो-रणमूलस्थोऽपि मध्यमशरस्थानं द्रुतं गच्छति । ततः शरग्राही च तस्मिन् प्राप्ते द्रुतं तोरणमूलं प्राप्य जलान्तःस्थं यदि न पश्यति तदा शुद्धः । कर्णाद्यङ्गं विना शिरोमात्रदर्शनेऽपि शुद्धः ।

उत्तरायणम् । इति स्मृतिः ॥ (यथा, मनुः । १ । ६७ ।
“दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः ।
अहस्तत्रोदगयनं रात्रिः स्याद् दक्षिणायनम्” ॥
“तदादित्यस्योदगयनमादानञ्च त्रीनृतून् शिशि-रादीन् ग्रीष्मान्तान् व्यवस्येत्” ॥ इति सूत्रस्थाने षष्ठेऽध्याये चरकेणोक्तम् । विस्तरश्चास्योत्त-रायणशब्दे ज्ञेयः ॥)

**उदग्भूमः**, पुं, (उदगुत्तरदिग्वत् प्रशस्ता भूमिर्यत्र । समासे + अच् ।) सद्भूमिः । उत्कृष्टस्थानम् । इति जटाधरः ॥

**उदग्रं**, त्रि, (उद्गतमग्रं यस्य ।) उच्छ्रितम् । उच्चम् । इत्यमरः ॥ (विशालम् । महत् । दीर्घम् । भीमम् ।
“नयन् मधुलिहः श्वैत्यमुदग्रदशनांशुभिः” ॥ इति माघः । २ । २१ । तथा, रघुः । २ । ५३ ।
“क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुव-नेषु रूढः” । “अवन्तिनाथोऽयमुदग्रबाहुः” ॥ इति च रघुः । ६ । ३२ ॥)

**उदग्रदन्, [त्]** पुं, (उदग्रौ दन्तौ यस्य । अग्रान्तशुद्ध-शुभ्रवृषवराहेभ्यश्चेति दन्तस्य दतृ ॥) उच्चदन्त-हस्ती । वृहद्दन्तयुक्ते, त्रि । इति हेमचन्द्रः ॥

**उदजः**, पुं, (उत् + अज् + समुदोरजःपशुष्विति अप् । अघञपोरिति पर्य्युदासात् वीभावो न ।) पशुप्रेरणम् । इत्यमरः ॥

**उदञ्चनं**, क्ली, (उत् + अञ्च + ल्युट् ।) पिधानपात्रम् । इति हेमचन्द्रः ॥ ढाकुनि इति भाषा । (यथा, शतपथब्राह्मणे । ४ । ३ । ५ । “प्रतिप्रस्थाता संस्रवावानयत्युन्नेता चमसेन वोदञ्चनेन वा” ।) ऊद्‌र्ध्वक्षेपणम् ॥

**उदञ्चितं**, त्रि, (उत् + अञ्च + क्त ।) ऊद्‌र्ध्वक्षिप्तम् । इति हेमचन्द्रः ॥ (“उदञ्चिताक्षोऽञ्चितदक्षि-णोरुः” । इति भट्टिः ॥ (पूजितम् ॥)

**उदण्डपालः**, पुं, (उदण्डस्य उद्भिन्नाण्डस्य पालो गमनं

रत्नावली ॥ (पाकवशात् प्राप्तान्ते, त्रि । यथा, शतपथब्राह्मणे । “शृतमसदिति तदाहुर्य्यर्ह्युदन्तं तर्हि जुहुयात् तद्धैनोदन्तं कुर्य्यादुप ह दहेत् यद्यदन्तं कुर्य्यादप्रजज्ञि वै रेत उपदग्धं तस्मान्नो दन्तं कुर्य्यात्” ॥)

**उदन्तकः**, पुं, (उदन्त + स्वार्थे कन् ।) वृत्तान्तः । वार्त्ता । इति शब्दरत्नावली ॥

**उदन्तिका**, स्त्री, (उत् + अन्त + णिच् + ण्वुल् + टाप् ।) तृप्तिः । इति हारावली ॥

**उदन्या**, स्त्री, (उदन्यति उदकस्येच्छा वा । सुपः आत्मनः क्यच् । अशनायोदन्येति ईत्वाभावः क्यचि उदकस्योदन्मावोऽपिनिपात्यते । अप्रत्ययादित्यः ।) पिपासा । इत्यमरः ॥ (यथा छान्दोग्योपनिषदि । ६ । ८ । ५ । “अथ यत्रैतत्पुरुषः पिपासति नाम तेज एव तत्पीतं नयते तद्यथा गोनायोऽश्वनायः पुरुषनायः इत्येवं तत्तेज आचष्ट उदन्येति” ॥)

**उदन्वान्, [त्]** पुं, (उदकानि सन्त्यत्र । उदक + मतुप् । उदन्वानुदधौ चेत्युदकस्य उदन्भावो निपातितः मतुपि ।) समुद्रः । इत्यमरः ॥ (यथा रघुः ४ । ५२ ॥
“असह्यविक्रमः सह्यं दूरान्मुक्तमुदन्वता” । ऋषिविशेषः । इति पाणिनिः । ८ । २ । १३ ॥)

**उदप** आघाते । सौत्रधातुरयम् । इति कविकल्प-द्रुमः ॥ (परं-सकं-सेट् ।) पञ्चमस्वरादिः । उदप्तः । इति दुर्गादासः ॥ पानुबन्ध उदधातुरयं भ्रम-वशात् उदपेति लिखितः ॥

**उदपानं**, क्ली, पुं, (उदकं पीयतेऽस्मिन् । उदक + पा + अधिकरणे + ल्युट्, उदकस्य उदः ।) कूपः । इत्यमरः ॥
(“तडागान्युदपानानि वाप्यः प्रस्रवणानि च” । इति मनुः २ । ४८ । तथा, रामायणे २ । ८० । १२ ॥
“निर्जलेषु च देशेषु खनयामासुरुत्तमान् ।

मज्जनस्थानादन्यत्रगमनेऽप्यशुद्धः । ततो दक्षिणा-
दिकं दद्यात्” । इति दिव्यतत्त्वम् ॥

**उदकीर्णः**, पुं, (उदेन जलेन कीर्णः व्याप्तः ।) महा-
करञ्जः । इति राजनिर्घण्टः ॥

**उदकीर्य्यः**, पुं, (उदेन कीर्य्यः ।) करञ्जविशेषः ।
इति रत्नमाला ॥ डालकरम्चा डहरकरञ्ज
इत्यादि भाषा । (अस्योक्तः पर्य्यायो भावप्रकाशे ।
“उदकीर्य्यस्तृतीयोऽन्यः षड्ग्रन्था हरिवारुणी ।
मर्कटी वायसी चापि करञ्जी करभञ्जिका” ॥
गुणा अस्य करञ्जीशब्दे ज्ञातव्याः ॥)

**उदक्या**, स्त्री, (उदकं जलं शुद्धिस्नानार्थमर्हतीति ।
उदक + संज्ञायामिति यत् ।) रजस्वला । ऋतु-
मती । इत्यमरः ॥ (यथा, मनुः । ४ । ५७ ।
“नोदक्ययाभिभाषेत यज्ञं गच्छेन्नचावृतः” ॥)

**उदगद्रिः**, पुं, (उदगुत्तरे योऽद्रिः ।) हिमालयपर्ब्बतः ।
इति हेमचन्द्रः ॥

**उदगयनं**, क्ली, (उदक् उत्तरस्यामयनं गमनम् ।)
पलायनं यत्र । मत्स्यसर्पविशेषाणामण्डं उद्भिन्नं
सत्पलायते इति प्रसिद्धिः ।) मत्स्यविशेषः । सर्प-
भेदः । इति मेदिनी ॥

**उदधिः**, पुं, (उदानि उदकानि वा धीयन्तेऽस्मिन् ।
उद + वा उदक + धा + कि ।) समुद्रः । इत्य-
मरः ॥ (“उदधेरिव निम्नगाशतेष्वभवन्नास्य विमा-
नना क्वचित्” । इति रघुः ८ । ८ ॥ मेघः । घटः ॥)

**उदधिक्राः**, पुं, (उदधि + क्रम + विट् ।) समुद्रा-
क्रमणकर्त्ता । इति व्याकरणम् ॥

**उदधिमलः**, पुं, (उदधेः समुद्रस्य मल इव ॥) समुद्र-
फेनः । अस्य गुणाः । शीतलत्वम् । कषायत्वम् ।
अतिवान्तिकारित्वञ्च । इति राजवल्लभः ॥

**उदधिमेखला**, स्त्री, (उदधिर्मेखलेव यस्याः ॥) पृथिवी ।
इति महाभारतम् ॥ (“चतुरुदधिमालामेख-
लाया भुवो भर्त्ता” । इति कादम्बरीकथामुखे ।)

**उदन्तः**, पुं, (उद्गतो निर्णीतः अन्तो यस्य ।) वार्त्ता ।
(“कान्तोदन्तः सुहृदुपगतः सङ्गमात्किञ्चिदूनः” ॥
इति मेघदूते” १०१ । तथा, रघुः । १२ । ६६ ।
“श्रुत्वा रामः प्रियोदन्तं मेने तत्सङ्गमोत्सुकः”
साधुः । इति मेदिनी ॥ वृत्तियाजनम् । इति शब्द-
उदपानान् बहुविधान् वेदिकापरिमण्डितान्” ॥
भावे ल्युट् । जलपानम् । यथा गीतायाम् । २ । ४६
“यावानर्थ उदपाने सर्व्वतः सम्प्लुतोदके” ॥)

**उदयः**, पुं, (उद्यन्ति ग्रहा यस्मात् । उत् + इ +
अच् ।) पूर्ब्बपर्ब्बतः । उदयाचलः । (भावे + अच् ।)
समुन्नतिः । इति मेदिनी ॥ दीप्तिः । मङ्गलम् ।
इति शब्दरत्नावली ॥ ग्रहाणामुद्गमः । तत्र
सूर्य्यस्योदयविवरणं यथा, विष्णुपुराणे २ अंशे ८
अध्यायः ॥ * ॥
“उदयास्तमने चैव सव्वकालन्तु संमुखे ।
दिशास्वशेषासु तथा मैत्रेय विदिशासु च ॥ १३ ॥
यैर्यत्र दृश्यते भास्वान् स तेषामुदयः स्मृतः ।
तिरोभावञ्च यत्रैति तत्रैवास्तमनं रवेः ॥ १४ ॥
नैवास्तमनमर्कस्य नोदयः सर्व्वदा सतः ।
उदयास्तमनाख्यञ्च दर्शनादर्शनं रवेः ॥ १५ ॥
शक्रादीनां पुरे तिष्ठन् स्पशत्थेष पुरत्रयम् ।
विकर्णौ द्वौ विकर्णस्थस्त्रीन्कोणान् द्वेपुरे तथा ॥ १६ ॥
उदितो वर्द्धमानाभिरामध्याह्नात्तपन् रविः ।
ततः परं ह्रसन्तीभिर्गोभिरस्तं निगच्छति ॥ १७ ॥
उदयास्तमनाभ्याञ्च स्मृते पूर्ब्बापरे दिशौ ।

:यावत् पुरस्तात्तपति तावत् पृष्ठेऽथ पार्श्वयोः ॥ १८ ॥

ऋतेऽमरगिरेर्मेरोरुपरि ब्रह्मणः सभाम् ।
ये ये मरीचयोऽर्कस्य प्रयान्ति ब्रह्मणः सभाम् ॥ १९ ॥
ते ते निरस्तास्तद्भासा प्रतीपमुपयान्ति वै ।
तस्माद्दिश्युत्तरस्यां वै दिवारात्रिः सदैव हि ।
सर्व्वेषां द्वीपवर्षाणां मेरुरुत्तरतो यतः" ॥ २० ॥
उदयास्तमने च सर्व्वकालं भवतः । ते च परस्परं
संमुखे समानसूत्रस्थे भवतः । तत्र हेतुमाह ।
यर्यत्रेति । रवेरुदयास्तमयौ सर्व्वकालं मध्याह्न एव
सतोऽर्कस्य न स्त एव अतो एवेरुदयास्तमयत्वं
दर्शनादर्शनमात्रमेव ॥ दर्शनादर्शनयोरवधिमाह ।
शक्रादीनामिति । इन्द्राद्यन्यतमस्य पुरे मध्याह्ने
तिष्ठंस्तदेकं पुरं अभितः पुरद्वयं चेत्येवं पुर-
द्वयं तदन्तराजस्थौ द्वौ च विकर्णौ कोणौ उद-
याद्यवस्थाभिः स्तृशति स्वरश्मिभिर्भासयति । तथा
विकर्णस्थः अग्न्याद्यन्यतमकोणे मध्याह्ने स्थितस्तं
कोणं अभितः स्थितं कोणद्वयं चेत्येवं त्रीन् को-
णान् तन्मध्यवर्त्तिद्वे च पुरे तथैवोदयाद्यवस्थाभिः
स्पृशति । भूवलयस्यार्द्धे प्रतपन् दृश्यते ताव-
दहः । अर्द्धे तु न दृश्यते तावद्रात्रिरित्यर्थः ।
तथाहि ऐन्द्रे पुरे मध्याह्ने यदा तिष्ठति तदा
सौम्यपुरस्थानामस्तमयः । ऐशकोणस्थानां तृतीयो
यामः । अग्निकोणस्थानां प्रथमः । याम्ये स्थिता-
नामुदयः । एवं यदा याम्ये मध्याह्ने तिष्ठति तदा
ऐन्द्रे अस्तमयः । अग्निकोणे तृतीयो यामः ।
नैरृतिकोणे प्रथमो यामः । वारुणे उदयः । यदा
च वारुणे मध्याह्नः तदा याम्ये अस्तमयः । नैरृति-
कोणे तृतीयो यामः । वायव्ये प्रथमः । सौम्ये
उदयः । यदा सौम्ये मध्याह्नस्तदा वारुणे अस्त-
मयः । वायव्ये तृतीयो यामः । ऐशकोणे प्रथमः ।
ऐन्द्रे उदयः । एवं अग्निकोणे यदा मध्याह्नस्तदा
ऐशकोणे अस्तमयः । इन्द्रपुरे तृतीयो यामः ।
यमपुरे प्रथमः । नैरृतिकोणे उदयः । इत्यादि
तस्मान्मेरोरुत्तरस्यां दिशि सदा दिवापि अन्येषां
दिनेऽपि नित्यं रात्रिरेव । अयं भावः । मेरुं प्रद-
क्षिणीकुर्व्वन्तं सूर्य्यं ये यत्र पश्यन्ति सैव तेषां
प्राची । तेषाञ्च वामभाग एव मेरुः । अतः सर्व्वेषां
सर्व्वदा मेरुरुत्तरत एव । दक्षिणभागे च लोका-
लोकाचलः । तस्मादुत्तरस्यां दिशि सदा रात्रिः ।
दक्षिणस्याञ्च दिशि सदा दिनमिति । यद्वा ।
भारतादिवर्षस्थानां सम्मुखे सूर्य्यमुद्यन्तं पश्यता-
मुत्तरस्यां दिशि वामभागे मेरोरेकतः सदा
दिनम् । अन्यतश्च सदा रात्रिः । दक्षिणभागे तु
सदा दिनमेवेत्यर्थादुक्तं भवति" ॥ इति तट्टीकायां
श्रीधरस्वामी ॥

**उदयनं**, क्ली (उत् + इ + ल्युट् ।) उदयः । इति मे-
दिनी ॥ (यथा ऋग्वेदे १ । ४८ । ७ ।
"एषा युक्ते परावतः सूर्य्यस्योदयनादधि" ॥)

**उदयनः**, पुं, अगस्त्यमुनिः । वत्सराजः । इति मेदिनी ॥
("प्राप्यावन्तीनुदयनकथाकोविदान् ग्रामवृद्धान्" ।
इति मेघदूते । ३९ ।) उदयनाचार्य्यः । स च कुसुमा-
ञ्जलिग्रन्थकर्त्ता ॥

**उदरं**, क्ली, (उत् ऋणातीति । "उदिदृणातेरजलौ
पूर्ब्बपदान्त्यलोपश्च" । उत् + दृ + अच् । अन्त्य-
लोपश्च ।) नाभिस्तनयोर्मध्यभागः । पेट इति
भाषा । तत्पर्य्यायः । पिचिण्डः २ कुक्षी ३ जठरः ४
तुन्दम् ५ । इत्यमरः ॥ युद्धम् । इति मेदिनी ॥
("उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम्" ।
इति मनुः । ८ । १२५ ॥)

**उदरः**, पुं, (उदरं अश्रयत्वेनास्त्यस्य । अर्श आदित्वा
दच् ।) उदरस्थरोगविशेषः । उदरी इति भाषा ।
यथा । अथोदराधिकारः । तत्रोदरस्य निमित्त-
माह ।
कुक्षिपार्श्वोदरकटीपृष्ठरुक् पर्ब्बभेदनम् ॥
शुष्ककासोऽङ्गमर्द्दश्च गुरुता मलसंग्रहः ।
श्यावारुणत्वगादित्वमकस्मान्मांसवृद्धिमत् ॥
सतोदमेदमुदरं तनुकृष्णशिराततम् ।
आध्मानादतिवच्छब्दमाहतं प्रकरोति च ॥
वायुश्चात्र सरुक् शब्दो विचरेत् सर्व्वतोगतिः" ॥
पाणिपादित्यत्र व्यञ्जनान्तः पाच्छब्द आर्षत्वात् ।
कुक्षिपार्श्वोदरेत्यत्र कुक्षिशब्द उदरस्य वाम-
दक्षिणभागद्वयवाची । सर्व्वतोगतिः सकलकोष्ठे
सञ्चरन् ॥ * ॥ पैत्तिकमाह ।
"पित्तोदरे ज्वरो मूर्च्छा दाहस्तृट् कटुकास्यता ।
भ्रमोऽतिसारः पीतत्वं त्वगादावुदरं हरित् ॥
पीतताम्रशिरानद्ध सस्वेदं सोष्म दह्यते ।
धूमायते मृदुस्पर्शं क्षिप्रपाकं प्रदूयते" ॥
हरित् शाकवर्णम् । सोष्म अन्तस्तापयुक्तम् । दह्यते
वहिर्दाहयुक्तम् । धूमायते धूममिवोद्वमति ।
क्षिप्रपाकं क्षिप्रपाकात् जलोदरतां याति । प्रदू-
यते व्यथते ॥ * ॥ कफोदरमाह ।
"श्लेष्मोदरेऽङ्गसदनं स्वापश्चयथुगौरवम् ।
तन्द्रोत्क्लेशोऽरुचिः श्वासः कासः शुक्लत्वगादिता ॥
उदरं स्तिमितं स्निग्धं शुक्लराजीततं महत् ।
चिराभिवृद्धिकठिनं शीतस्पर्शं गुरु स्थिरम्" ॥
स्वापः स्पर्शाज्ञता । गौरवमङ्गानाम् । तन्द्रा निद्रा-
बाहुल्यम् । उत्क्लेशो हृल्लासः । शुक्लराजीततं
शुक्लशिराव्याप्तम् ॥ * ॥ सन्निपातोदुरमाह ।
"स्त्रियोऽन्नपानं नखलोममूत्र-
विडार्त्तवैर्युक्तमसाधुवृत्ताः ।
यस्मै प्रयच्छन्त्यरयो गरांश्च
दुष्टाम्बुदूषीविषसेवनाच्च ॥
तेनाशु रक्तं कुपिताश्च दोषाः
कुर्य्युः सुघोरं जठरं त्रिलिङ्गम् ।
तच्छीतवाते भृशदुर्द्दिने च
विशेषतः कुप्यति दह्यते च ॥
स चातुरो मूर्च्छति हि प्रसक्तं
पाण्डुः कृशः शुष्यति तृष्णया च ।
दूष्योदरं कीर्त्तितमेतदेव
प्लीहोदरं कीर्त्तयतो निबोध" ॥
स्त्रिय इत्यविवेकिसन्निहितजनोपलक्षणम् । ताश्च
स्वसौभाग्यमिच्छन्त्यः । विट् मांर्ज्जारादीनाम् ।
आर्त्तवं रजः । अरयो वा । गरान् संयोगजानि

योज्यम् । एवं मेरोः सर्व्वतः परिभ्रमन् सू-
र्य्योऽर्द्धभूवलयं प्रकाशयन् दर्शनादर्शनाद्यपेक्षया
अहोरात्रव्यवस्थाकारणमुक्तं भवति ॥ सन्नि-
धानव्यवधानकृतमेव रश्मीनां वृद्धिह्रासतीव्रत्व-
मन्दत्वादिकमपीत्याह । उदित इति गोभिः र-
श्मिभिः ॥ दिग्विभागोऽप्युदयास्तमयनिमित्तएवे-
त्याह उदयेति । यत्र यस्योदेति सा तस्य पूर्ब्बा
दिक् । यत्रास्तमेति सा अपरा प्रतीची । तथा
श्रुतिः । "तस्मादसावादित्यः सर्व्वाः प्रजाः
प्रत्य-
गुदेति । तस्मात् सर्व्वा एवान्यतः
प्रत्युदगादिति" ॥
पुरस्तादुद्यन्तं सूर्य्यं पश्यतश्च दक्षिण-वाम-
पार्श्व-
भागौ दक्षिणोत्तरे दिशाविति दर्शयन् रश्मि-
विस्ताराावधिमाह । यावदिति । चतुर्दिक्षु लोका-
लोकाचलपर्य्यन्तं तपतीत्यर्थः ॥ मेरौ तु विशेष-
माह । ऋते इति । ब्रह्मसभावर्जं मेरोरुपर्य्यपि
सर्व्वतस्तपति न तु ब्रह्मसभां भासयति । तत्र
हेतुमाह । ये ये मरीचय इति ॥ मेरोः सर्व्वतोऽपि
विशेषतान्तरमाह । तस्मादिति । यतो यस्मात्
सर्व्वेषां द्वीपानां वर्षाणाञ्च मेरुरुत्तरत एव स्थितः
।

"रोगाः सर्व्वेऽपि मन्देऽग्नौ सुतरामुदराणि च ।
अजीर्णान्मलिनैश्चान्यर्जायन्ते मलसञ्चयात्" ॥
अग्नौ मन्दे सर्व्वे रोगा जायन्ते किन्तु सुतरा-
मतिशयेन उदराणि जायन्ते । अपरानपि हेतू-
नाह । अजीर्णान्मलिनैश्चान्यैः
अत्यन्तदोषजनकैः
मलसञ्चयात् मलानां दोषाणां पुरीषस्य चाति-
वृद्धेः । अत्रोदरशब्देनोदरस्थो रोग उच्यते । यत
आह ।
"तात्स्थ्यतद्धर्म्मताभ्याञ्च तत्समीपतयापि च ।
तत्साहचर्य्यात् शब्दानां वृत्तिरुक्ता चतुर्व्विधा"
॥ * ॥
संप्राप्तिमाह ।
"रुद्धाः स्वेदाम्बुवाहीनि दोषाः स्रोतांसि
सञ्चिताः ।
प्राणाग्न्यपानान् संदुष्य जनयन्त्युदरं नृणाम् ॥
* ॥
सामान्यरूपमाह ।
"आध्मानं गमने ऽशक्तिर्द्दौर्ब्बल्यं दुर्बलाग्निता ।
शोथः सदनमङ्गानां सङ्गो वातपुरीषयोः ।
दाहस्तन्द्रा च सर्व्वेषु जठरेषु भवन्ति हि ॥ * ॥
सन्निकृष्टनिदानपूर्ब्बिकां संख्यामाह ।
"पृथक्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः ।
सम्भवन्त्युदराण्यष्टौ तेषां लिङ्गं पृथक् शृणु ॥ *
॥
वातोदरस्य लक्षणमाह ।
"तत्र वातोदरे शोथः पाणिपान्नाभिकुक्षिषु ।

विषाणि । दुष्टाम्बु सविषमत्स्यतृणपर्णादियुतं
शटितञ्च ॥ दूषीविषं विषमेवाग्न्याद्युपघातेन
स्वल्प-
प्रभावम् । यत उक्तम् ।
"जीर्णं विषघ्नौषधिभिर्हतं वा
दावाग्निवातातपशोधितञ्च ।
स्वभावतो वा गुणविप्रयुक्तं
विषं हि दूषीविषतामुपैति" ॥
गुणविप्रयुक्तं गुणवियुक्तं तत् । उदरं शीततादिषु
कुप्यति । दूषीविषस्य कोपात् । मूर्च्छातिविषयो-
गात् । प्रसक्तं निरन्तरं एतदेव सन्निपातोदरम् ।
तन्त्रान्तरे दूष्योदरं कीर्त्तितम् । अथवा परस्परं
दूषयन्तीति दोषा एव दूष्याः तैः कृतमुदरं दूष्यो-

:दरम् ॥ * ॥ प्लीहोदरमाह ।

“वर्द्धते प्लीहवृद्ध्या यद्विद्यात् प्लीहोदरं हि तत् ।

तद्वामे वर्द्धते पार्श्वे निमित्तं तस्य तत्र यत् ॥

प्रवृद्धप्लीहलिङ्गानि यान्युक्तानि भिषग्वरैः ।

प्लीहोदरेऽपि दृश्यन्ते तानि सर्व्वाणि देहिनाम्” ॥

प्लीहोदरस्यैव भेदो यकृद्दाल्युदरं न पुनरधिक-

मित्याह । “सव्यान्यपार्श्वे यकृति प्रवृद्धे ज्ञेयं यकृ-

द्दाल्युदरं तदेव” । यकृद्दालयति दोषैर्भेदयतीति

यकृद्दाल्युदरं तदेव उदरमेव ॥ * ॥ बद्धगुदमाह ।

“यस्यान्नमन्नैरुपलेपिभिर्व्वा,

बालाश्मभिर्व्वा पिहितं यथावत् ।

सञ्चीयते यस्य मलः सदोषः,

शनैः शनैः शङ्करवच्च नाड्याम् ॥

निरुध्यते यस्य गुदे पुरीषं

निरेति कृच्छ्रादपि चाल्पमल्पम् ।

हृन्नाभिमध्ये परिवृद्धिमेति

तस्योदरं बद्धगुदं वदन्ति” ॥

उपलेपिभिः पिच्छिलैरन्नैः शाकशालुकादिभिः ।

बालाश्मभिः बालुकाभिः कर्क्करैर्व्वा बालैः केशैः

अश्मभिः पाषाणैर्व्वा । यथावत् यस्य यत्

सम्भवति ।

मलः पुरीषम् । शङ्करवत् संमार्ज्जनीक्षिप्ततृण-

धूल्यादिवत् । “शङ्करोऽवकरः पुमान्” इत्यमरः ।

शङ्करो घूण इति लोके । नाड्यां अन्त्रनाड्याम् ।

हृन्नाभिमध्ये हृन्नाभ्योर्मध्ये ॥ * ॥ क्षतोदरमाह ।

“शल्यं यथान्नोपहतं यदन्त्रं

भुक्तं भिनत्त्यागतमन्यथा वा ।

तस्मात् क्षतोऽन्त्रात् सलिलप्रकाशः

स्रावः स्रवेद्वै गुदतस्तु भूयः ॥

नाभेरधश्चोदरमेति वृद्धिं

निस्तुद्यते दाल्यति चातिमात्रम् ।

एतत् परिस्राव्युदरं प्रदिष्टं

दकोदरं कीर्त्तयतो निबोध” ॥

शल्यं कर्क्करादि । अन्नोपहतं अन्ननिहितम् । भुक्तं

यदन्त्रं भिनत्ति । तथा अन्यथा आगतं भोजनं

विना आगतं शरादि । तदपि यदन्त्रं भिनत्ति

एतदुपलक्षणम् । जृम्भणमत्यशनं वा यदन्त्रं

भिनत्ति । यत उक्तं चरके ।

यथा दृतिः क्षुभ्यति कम्पते च

शब्दायते चापि दकोदरं तत्” ॥

स्नेहपीतः पीतैत्यत्राध्यवसितादित्वात् कर्त्तरि

क्तः पश्चात् स्नेहं पीतः स्नेहपीत इति तत्पुरुषः ।

तेन स्नेहं पीतवानित्यर्थः । अनुवासितो वा गृही-

तानुवासनवस्तिः । वान्तः अत्रापि पूर्ब्बवत् कर्त्तरि

क्तः तेन वान्तवानित्यर्थः । एवं विरिक्तः विरिक्त-

बान् । तथा निरूढः गृहीतनिरूढवस्तिः । स

चेदाशु शीतलं जलं पिबेत् । तस्य तद्वहानि जल-

वहानि स्रोतांसि दुष्यन्ति स्वकर्म्मदुष्टानि भवन्ति

जलवहेषु स्रोतःसु दुष्टेषु सत्सु अन्नरसे उपस्ने-

हन्यायेन वहिर्भूते दकोदरमायाति । अथवा

तेषु उदकवहेषु स्रोतःसु स्नेहोपलिप्तेषु पूर्ब्बवत्

यथापूर्ब्बम् । अन्नरसे उपस्नेहन्यायेन वहिर्निःसृते

दकोदरमायाति । तथा जलेऽपि वहिर्निःसृते

दकोदरमायाति । तत् उदरम् । परिवृत्तनाभि

गम्भीरनाभि । समाततं स्तब्धम् । यथा दृतिः

चर्म्ममयं जलाहरणपात्रम् । क्षुभ्यति अन्तर्जल-

दोलनेन सञ्चलति कम्पते वहिः शब्दायते कम्प-

मानं सत् शब्दं करोति ॥ * ॥

साध्यासाध्यलक्षणमाह ।

“जन्मनैवोदरं सर्व्वं प्रायः कृच्छ्रतमं मतम् ।

बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम्” ॥

बलिनःअजाताम्बु नवोत्थितञ्च यत्नसाध्यमित्यन्वयः ।

“पश्चाद्बद्धगुदं तूद्र्ध्वं सर्व्वं जातोदकं तथा ।

प्रायो भवत्यभावाय छिद्रान्त्रञ्च दकोदरम्” ॥

छिद्रान्त्रं शरादिना छिद्रमन्त्रं यस्य तदुदरं अभा-

वायं भवति ॥ * ॥

जातोदकस्योदरस्य लक्षणमाह । चरकः ।

“पयःपूर्णा दृतिरिव क्षोभे शब्दकरं मृदु ।

अप्रव्यक्तशिरःशूलं नितान्तमुदरं महत् ॥

आलस्यमास्यवैरस्यं मूत्रं बहु सकृच्छ्रतः ।

जातोदकस्य लिङ्गं स्यान्मन्दोऽग्निः पाण्डुतापि च ॥

शूलाक्षं कुटिलोपस्थमुपक्लिन्नतनुत्वचम् ।

बलशोणितमांसाग्निपरिक्षीणञ्च वर्ज्जयेत्” ॥

शूलाक्षस्थाने शूनाक्षमिति च पाठः ।

कुटिलीपस्थं

देवदारु वचा कुष्ठं मधु शिग्रुः पुनर्नवा ।

सौवर्च्चलं विडङ्गानि दीप्यको गजपिप्पली ॥

एतेषां पलिकान् भागान् त्रिवृतः षट्पलानि च ।

पिष्ट्वा कषायेणैतेन तैलं मृद्वग्निना पचेत् ॥

तत्पिबेत् प्रातरुत्थाय यथाग्निबलमात्रया ।

निहन्ति सकलान् रोगान् उदराणि विशेषतः ॥

मूत्रकृच्छ्रमुदावर्त्तमन्त्रवृद्धिगुदक्रमीन् ।

पार्श्वकुक्षिभवं शूलमामशूलमरोचकम् ॥

यकृदष्ठीलिकानाहान् प्लीहानं चाङ्गवेदनाम् ।

मासमात्रेण नश्यन्ति अशीतिर्वातजा गदाः” ॥

इति रसोनतैलम् ॥ * ॥

“पित्तोदरेषु बलिनं पूर्ब्बमेव विरेचयेत् ।

दुर्ब्बलं हनुवाष्पादौ शोधयेत् सौरवस्तिना ।

संजातबलकायाग्निं पुनः स्निग्धं विरेचयेत् ॥

पयसा च त्रिवृत्कल्कैरुवूकस्य शृतेन च ॥

पिप्पल्यादिगणेनाज्यं पाचितं पाययेद्भिषक् ।

नरं पथ्यभुजं नित्यं कफोदरनिवृत्तये” ॥ * ॥

“नागरत्रिफलाकल्कैर्दध्यम्बुपरिपेषितैः ।

पाचितं तैलमाज्यञ्च पिबेत् सर्व्वोदरापहम्” ॥

इति नागरादितैलं घृतञ्च ॥ * ॥

“शालियष्टिकगोधूमयवनीवारभोजनम् ।

निरूहो रेचनं श्रेष्ठं सर्व्वेषु जठरेषु च ॥

आनूषमोदनं मांसं शाकं पिष्टकृतं तिलाः ।

व्यायामञ्च दिवास्वप्नपानपानानि वर्ज्जयेत् ॥

तथोग्रलवणोष्णानि विदाहीनि गुरूणि च ।

नाद्यादन्नानि जठरे तोयपानञ्च वर्ज्जयेत् ॥

उदराणां मलाढ्यत्वाद्बहुशः शोधनं हितम् ।

क्षीरेणैरण्डतैलं वा पिबेन्मूत्रेण वासकृत्” ॥ * ॥

“वातोदरी पिबेत्तक्रं पिप्पलीलवणान्वितम् ।

शर्क्करामरिचोपेतं स्वादु पित्तोदरी पिबेत् ॥

यवानीहपुषाजाजीव्योषयुक्तं कफोदरी ।

सन्निपातोदरी युक्तं त्रिकटुक्षारसैन्धवैः ॥

यवानी हपुषा धान्यं त्रिफला चोपकुञ्चिका ।

कारवी पिप्पलीमूलमजगन्धा शटी वचा ॥

शताह्वा जीरको व्योषं स्वर्णक्षीरी च चित्रकम् ।

द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपञ्चकम् ॥

विडङ्गञ्च समांसानि दन्त्या भागत्रयं भवेत् ।

त्रिवृद्विशाले द्विगुणे सातला स्याच्चतुर्गुणा ॥

एष नारायणो नाम्ना चूर्णो रोगगणापहः ।

एनं प्राप्य निवर्त्तन्ते रोगा विष्णुमिवासुराः ॥

तक्रेणोदरभिः पेयो गुल्मिभिर्वादराम्बुना ।

आनद्धवाते सुरया वातरोगे प्रसन्नया ॥

“शर्क्करातृणकाष्ठास्थिकण्टकैरन्नसंयुतः ।
भिद्येतान्त्रं यदा भुक्तं जृम्भयात्यशनेन वा” ॥
इति ।
तस्मात् भिन्नादन्त्रात् । गुदतस्तु भूयः अन्त्रात् संस्रुत्य पुनर्गुदतः स्रवेदित्यर्थः । दाल्यति विदीर्य्यतैव । पदसिद्धिरार्षत्वात् । एतत् क्षतोदरं तन्त्रान्तरे परिस्राव्युदरं प्रदिष्टम् ॥ * ॥
उदकोदरमाह ।
“यत् स्नेहपीतोऽप्यनुवासितो वा,
वान्तो विरिक्तोऽप्यथवा निरूढः ।
पिबेज्जलं शीतलमाशु तस्य
स्रोतांसि दुष्यन्ति हि तद्वहानि ॥
स्नेहोपलिप्तेय्वथवापि तेषू-
दकोदरं पूर्ब्बवदभ्युपैति ।
स्निग्धं महत्तत् परिवृत्तनाभि
समाततं पूर्णमिवाम्बुना च” ॥
वक्रमेहनम् । उपक्लिन्नतनुत्वचं । उपरि आर्द्रा तन्वो
त्यग्यस्य । तं उदरिणम् ।
“पार्श्वभङ्गान्नविद्वेषशोफातीसारपीडितम् ।
विरिक्तं चाप्युदरिणं पूर्य्यमाणं विवर्ज्जयेत्” ॥
विरिक्तमपि पूर्य्यमाणं पूर्य्यमाणोदरं उदरिणं विवर्ज्जयेत् ॥ * ॥
अथोदरस्य चिकित्सा ।
“एरण्डतैलं दशमूलमिश्रं
गोमूत्रयुक्तस्त्रिफलारसो वा ।
निहन्ति वातोदरशोथशूलान्
क्वाथः समूत्रो दशमूलजश्च ॥
कुष्ठं दन्ती यवक्षारः पाठा त्रिलवणं वचा ।
शुण्ठी चोष्णाम्बुना पीता वातोदररुजापहा” ॥
कुष्ठादिचूर्णम् ॥ * ॥
“लशुनस्य तुलामेकां जलद्रोणे विपाचयेत् ।
त्रिकटु त्रिफला दन्ती हिङ्ग सैन्धवचित्रकम् ॥
दधिमण्डेन विडबन्धे दाडिमाम्बुभिरर्शसे ।
परिकर्त्तषु वृक्षाम्लैरुष्णाम्बुभिरजीर्णके ॥
भगन्दरे पाण्डुरोगे कासे श्वासे गलग्रहे ।
हृद्रोगे ग्रहणीरोगे कुष्ठे मन्देऽनले ज्वरे ॥
दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे ।
यथार्हं स्निग्धकोष्णेन पेयभेतद्विरेचनम्” ॥
उपकुञ्चिका कारवी च वृहज्जीरकः । यस्य मगरैला नाम इति लोके । तस्य भागद्वयं ग्राह्यं पुनरुक्तेः । स्वर्णक्षीरी चोक इति लोके । विशाला इन्द्रवारुणी । सातला सीहुण्डभेदः सातलेत्येव

:प्रसिद्धा । परिकर्त्तो गुदे परिकर्त्तनवत् पीडा

इति नारायणचूर्णम् ॥ * ॥

“स्नुक्क्षीरदन्तीत्रिफलाविडङ्ग-
सिंहीत्रिवृच्चित्रकसूर्य्यकल्कैः ।
घृतं विपक्वं कुडवप्रमाणं
तोयेन तस्याक्षसमेन कर्षम् ॥
पीतोष्णमम्भोऽनुपिबेद्विरेके
पेयं रसं वा प्रपिबेद्विधिज्ञः ।
नाराचमेनं जठरामयाना-
मुक्तं प्रयुक्तं प्रवदन्ति सन्तः” ॥
इति नाराचघृतम् ॥ * ॥
“वज्राण्ड्याः कर्षमात्रायाः कल्कं दध्यादिवेष्टितम्
।
निगिलेद्वारिणा नित्यमुदरव्याधिशान्तये” ॥
वज्राण्डी शूरणपत्रो माणभेदः । वज्राण्डी इति
लोके ॥ * ॥
“पुनर्नवादारुनिशासविश्वा-
पटोलपथ्याः पिचुमर्द्ददारु ।
सनागरच्छिन्नरुहेति सर्व्वैः
कृतः कषायो विधिना विधिज्ञैः ॥
गोमूत्रयुक् गुग्गुलुना च युक्तः
पीतः प्रभाते नियतं नराणाम् ।
सर्व्वाङ्गशोथोदरपार्श्वशूल-
श्वासान्वितं पाण्डुगदं निहन्ति” ॥
पुनर्नवादिक्वाथः । इत्युदराधिकारः । इति भाव-
प्रकाशः ॥ (“उदरं स्तिमितं गुरु” इति वैद्यक-
माधवकरधृतरुग्विनिश्चयग्रन्थः । अस्य शब्दस्य
रोगविशेषवाच्यत्वेऽन्याविशेषवाच्यविवृत्तिरुदररो-
गशब्दे ज्ञातव्या ॥)

**उदरग्रन्थिः**, पुं, (उदरस्य ग्रन्थिरिव ।) गुल्मरोगः ।
इति हेमचन्द्रः ॥

**उदरत्राणं**, क्ली, (उदरस्य त्राणं यस्मात् ।) उदरबन्ध-
वस्त्रादि । तत्पर्य्यायः । नागोदं २ । इति हेम-
चन्द्रः ॥

**उदरथिः**, पुं, (उदृच्छति उदर्य्यते वा । उत् + ऋ +
उद्यर्त्तेश्चिदिति गथिन् ।) समुद्रः । सूर्य्यः । इति
हेमचन्द्रः ॥

**उदरपिशाचः**, त्रि, (उदराय तत्पूरणाय पिशाच

पुनर्व्वसुं जितात्मानमग्निवेशोऽब्रवीद्वचः ॥
भगवन्नुदरैर्दुःखैर्दृश्यन्ते ह्यर्द्दिता नराः ।
शुष्कवक्त्राः कृशैगात्रैराध्मातोदरकुक्षयः ॥
प्रणष्टाग्निबलाहाराः सर्व्वचेष्टास्वनीश्वराः ।
दीनाः प्रतिक्रियाभावाज्जहतोऽसूननाथवत् ॥
तेषामायतनं सङ्ख्यां प्राग्रूपाकृतिभेषजान् ।
यथावज्ज्ञातुमिच्छामि गुरुणा सम्यगीरितम् ॥
सर्व्वभूतहितायर्षिः शिष्येणैवं प्रचोदितः ।
सर्व्वभूतहितं वाक्यं व्याहर्त्तुमुपचक्रमे” ॥
अस्य सनिदानं सम्प्राप्तिकलक्षणं यथा, --
“अग्निदोषान्मनुष्याणां रोगसङ्घाः पृथग्विधाः ।
मलवृद्ध्या प्रवर्त्तन्ते विशेषेणोदराणि तु ॥
मन्देऽग्नौ मलिनैर्भुक्तैरपाकाद्दोषसञ्चयः ।
प्राणाग्न्यपानान् सन्दूष्य मार्गान्
बद्ध्वोत्तरोत्तरान् ॥
त्वङ्मांसान्तरमागम्य कुक्षिमाध्मापयन् भृशम् ।
जनयत्युदरं तस्य हेतुं शृणु सलक्षणम्” ॥
सामान्यहेतवो यथा, --
“अत्युष्णलवणक्षारविदाह्यम्लरसाशनात् ।
मिथ्यासंसर्ज्जनाद्रूक्षविरुद्धाशुचिभोजनात् ॥
प्लीहार्शोग्रहणीदोषकर्षणात् कर्म्मविभ्रमात् ।
क्लिष्टानामप्रतीकाराद्रौक्ष्याद्वेगविधारणात् ॥
स्रोतसां दूषणादामात् संक्षोभादतिपूरणात् ।
अर्शोवातशकृद्रोधादन्त्रस्फुटनभेदनात् ॥
अतिसञ्चितदोषाणां पापं कर्म्म च कुर्व्वताम् ।
उदराण्युपजायन्ते मन्दाग्नीनां विशेषतः” ॥
प्राग्रूपं यथा, --
“क्षुण्णाशः स्वाद्वतिस्निग्धगुर्व्वन्नं पच्यतेऽचिरात्
।
भुक्तं विदाह्यते सर्व्वं जीर्णाजीर्णं न वेत्ति च ॥
सहते नातिसौहित्यमीषच्छोफश्च पादयोः ।
शश्वद्बलक्षयोऽल्पेऽपि व्यायामे श्वासमृच्छति ॥
पुरीषनिचयो वृद्धिरुदावर्त्तकृता च रुक् ।
वस्तिसन्धौ रुगाध्मानं वर्द्धते पाट्यतेऽपि च ॥
आतन्यते च जठरमपि लघ्वल्पभोजनात् ।
राजीजन्म वलीनाश इति लिङ्गं भविष्यताम्” ॥
सम्प्राप्तिर्यथा, --
“रुद्ध्वा स्वेदाम्बुवाहानि दोषाः स्रोतांसि
सञ्चिताः ।
प्राणापानान् हि सन्दूष्य जनयन्त्युदरं नृणाम्” ॥
सामान्यलक्षणं यथा, --
“कुक्षेराध्मानमाटोपः शोफः पादकरस्य च ।

वति । वायुश्चोर्द्ध्वमधस्तिर्य्यक् च
सशूलशब्दश्चरत्ये-
तद्वातोदरं विद्यात्” ॥
पित्तजस्य सनिदानसम्प्राप्तिकं लक्षणं यथा, --
“कट्वम्ललवणात्युष्णतीक्ष्णाग्न्यातपसेवनैः ।
विदाह्यध्यशनाजीर्णैश्चाशु पित्तं समाचितम् ॥
प्राप्यानिलकफौ रुद्ध्वा मार्गमुन्मार्गमास्थितम्
।
निहत्यामाशये वह्निं जनयत्युदरं ततः” ॥
अस्य रूपाणि ।
“दाहज्वर-तृष्णा-मूर्च्छातिसार-भ्रमाः
कटुकास्य-
त्वं हरितहारिद्रत्वं नख-नयन-वदन-त्वङ्-मूत्र-
वर्च्च-
सामपि चोदरं नील-पीत-हारिद्र-हरित-ताम्र-
राजीशिरावनद्धं दह्यात् दूषयते धूप्यते रूपायते
स्विद्यते क्लिद्यते मृदुस्पर्शं क्षिप्रपाकञ्च
भवत्येतत्
पित्तोदरं विद्यात्” ॥
श्लेष्मजनितस्य सनिदानसम्प्राप्तिकं लक्षणं
यथा, --
“अव्यायामदिवास्वप्नस्वाद्वतिस्निग्धपिच्छिलैः
।
दधिदुग्धोदकानूपमांसैश्चात्युपसेवितैः ॥
क्रुद्धेन श्लेष्मणा स्रोतः स्वाहतेष्वावृतोऽनिलः
।
तमेव पीडयन् कुर्य्यादुदरं वहिरन्त्रगः” ॥
अस्य रूपाणि ।
“गौरवारोचकाविपाकाङ्गमर्द्द-सुप्ति-पाणि-पाद-
मुष्कोरुशोफोत्क्लेश-निद्रा-श्वास-कासाः
शुक्लत्वञ्च
नख-नयन-वदन-त्वङ्मूत्रवर्च्चसामपि चोदरं
शुक्ल-
राजीशिरासन्ततं गुरुस्तिमितस्थिरं कठिनञ्च
भवत्येतत् श्लेष्मोदरं विद्यात्” ॥
त्रिदोषजस्य सनिदानसम्प्राप्तिकं लक्षणं यथा,
“दुर्ब्बलाग्नेरपथ्यामविरोधिगुरुभोजनात् ।
स्त्रीदत्तैश्च रजोरोम-विण्मूत्रास्थिनखादिभिः ॥
विषैश्च मन्दैर्वाताद्याः कुपिताः सञ्चितास्त्रयः ।
शनैः कोष्ठे प्रकुर्व्वन्तो जनयन्त्युदरं नृणाम्” ॥
अस्य रूपाणि ।

इव ।) सर्व्वान्नखादकः । तत्पर्य्यायः ।
सर्व्वान्नीनः २
सर्व्वान्नभक्षकः ३ । इति हेमचन्द्रः ॥

**उदरम्भरिः**, त्रि, (उदरं बिभर्त्तीति । उदर + भृ +

इन् + मुम् च । निपातसिद्धः ।) स्वोदरमात्र-
पूरकः । तत्पर्य्यायः । कुक्षिम्भरिः २ आत्मम्भरिः
३ । इति हेमचन्द्रः ॥

**उदरव्याधिः**, पुं, (उदरस्य व्याधिः ।) उदररोग-

विशेषः । यथा, -- गारुडे १९४ अध्यायः ॥
"कदलीयवक्षारन्तु पानीयेन प्रसाधितम् ।
तदास्वादनान्नश्यन्ति उदरव्याधयोऽखिलाः" ॥

**उदररोगः**, पुं, (उदरस्य रोगः ।) जठरव्याधि-

विशेषः । उदरी इति भाषा ॥
("सिद्धविद्याधराकीर्णे कैलासे नन्दनोपमे ।
तप्यमानं तपस्तीव्रं साक्षाद्धर्म्ममिव स्थितम् ॥
श्रायुर्व्वेदविदां श्रेष्ठं भिषग्विद्याप्रवर्त्तकम् ।

मन्दोऽग्निः श्लक्ष्णगण्डत्वं कार्श्यञ्चोदरलक्षणम्"
॥
वातजस्य सनिदानसम्प्राप्तिकं लक्षणं यथा, --
"रूक्षाल्पभोजनायासवेगोदावर्त्तकर्षणैः ।
वायुः प्रकुपितः कुक्षिहृद्वस्तिगुदमार्गगः ॥
हत्वाग्निं कफमुद्धूय तेन रुद्धगतिस्तथा ।
आचिनोत्युदरं जन्तोस्त्वङ्मांसान्तरमाश्रितः" ॥
अस्य रूपाणि ।
"कुक्षि-पाणि-पाद-वृषण-श्वयथूदर-विपाटनम्
अ-
नियतौ च वृद्धिह्रासौ कुक्षि-पार्श्वशूलोदावर्त्ताङ्ग-
मर्द्द-पर्ब्बभेद-शुष्ककास-कार्श्य-दौर्ब्बल्यारोचक-
वि-
पाका अधोगुरुत्वं वातवर्च्चमूत्रसङ्गः
श्यावारुणत्वं
नखनयनवदनत्वङ्मूत्रवर्च्चसामपि चोदरं तन्व-
सितराजीशिरासन्ततमाहतमाध्मातदृतिशब्दवद्ध-

"सर्व्वेषामेव दोषाणां समस्तानि
लिङ्गान्युपलभ्यन्ते
वर्णाश्च नखादिषूदरमपि नानावर्णराजीशिरा-
सन्ततं भवत्येतत् सन्निपातोदरं विद्यात्" ॥
यकृत्प्लीहसमुद्भवस्य सनिदानसम्प्राप्तिकं
लक्षणं यथा, --
"असितस्यातिसङ्क्षोभाद्यानयानाभिचेष्टितैः ।
अतिव्यवायभाराध्ववमनव्याधिकर्षणैः ॥
वामपार्श्वास्थितः प्लीहाच्युतः स्थानात्
प्रवर्द्धते ।
शोणितं वा रसादिभ्यो विवृद्धन्तं विवर्द्धयेत्" ॥
इति तस्य प्लीहाकठिनोऽष्ठिलेवादौ वर्द्धमान-
कच्छपसंस्थान उपलभ्यते सचोपेक्षितः क्रमेण
कुक्षिं जठरमग्न्यधिष्ठानञ्च परिक्षिपन्नुदरमभि-
निवर्त्तयति" ॥
अस्य रूपाणि यथा, --
"दौर्ब्बल्यारोचकाविपाकवर्च्चोमूत्रग्रहतमःपिपा-
साङ्गमर्द्द-च्छर्द्दि-मूर्च्छाङ्गसाद-कास-श्वास-
मृदुज्व-
रानाहाग्निनाशकार्श्यास्यवैरस्य-पर्ब्बभेद-कोष्ठ-
वा-
तशूलान्यपि चोदरमरुणवर्णं विवर्णं वा नील-
हरित-हारिद्र-राजिमद्भवत्येवमेव यकृदपि
दक्षिण-
पार्श्वस्थं कुर्य्यात्तुल्यहेतुलिङ्गौषधत्वात्तस्य
प्लीहजठ-
रएवावबोध इत्येतत् यकृत्प्लीहोदरं विद्यात्" ॥

:बद्धगुदोदरस्य निदानपूर्ब्बिका सम्प्राप्तिर्यथा,

“पक्ष्मबालैः सहान्नेन भुक्तैर्बद्धायने गुदे ।
उदावर्त्तैस्तथार्शोभिरान्त्रसंमूर्च्छनेन वा ॥
अपानो मार्गसंरोधाद्धात्वग्निं कुपितोऽनिलः ।
वर्च्चःपित्तकफान् रुद्ध्वा जनयत्युदरं ततः” ॥
अस्य रूपाणि ।
“तृष्णा-दाह-ज्वर-मुख-तालु-शोषोरुसाद-कास-श्वास-दौर्ब्बल्यारोचकाविपाक-वर्च्चोमूत्र-सङ्गा-ध्मान-च्छर्द्दि-क्षवथु-शिरोहृन्नाभि-गुदशूलान्यपि चोदरं मूढवातं स्थिरमरुणं नीलराजिशिरावनद्धं सराजिकं वा प्रायो नाभ्युपरि गोपुच्छवदभिनि-वर्त्तत इत्येतद् बद्धगुदोदरं विद्यात्” ॥
छिद्रोदरस्य निदानपूर्ब्बिका सम्प्राप्तिर्यथा,
“शर्करा-तृणकाष्ठास्थि-कण्टकैरन्नसंयुतैः ।
भिद्येतान्त्रं यदा भुक्तैर्ज्जृम्भयात्यशनेन वा ।
इयात् पाकरसस्तेभ्यश्छिद्रेभ्यः प्रस्रवद्बहिः ।
पूरयन् गुदमन्त्रञ्च जनयत्युदरं ततः” ॥
अस्य रूपाणि ।
“इति तदधोनाभ्याः प्रायोऽभिनिवर्त्तमानमुदको-दरस्य च यथाबलञ्च दोषाणां रूपाणि दर्शयत्य-पि चातुरः सलोहित-नील-पीत-पिच्छिल-कुणप-गन्धामवर्च्च उपवेशते हिक्का-श्वास-कास-तृष्णा-प्रमेहा-रोचकाविपाक-दौर्ब्बल्यपरीतश्च भवत्येतत् छिद्रोदरं विद्यात्” ॥
जलोदरस्य निदानपूर्ब्बिका सम्प्राप्तिर्यथा, --
“स्नेहपीतस्य मन्दाग्नेः क्षीणस्यातिकृशस्य वा ।
अत्यम्बुपानान्नष्टेऽग्नौ मारुतः क्लोम्नि संस्थितः ॥
स्रोतःसु रुद्धमार्गेषु कफश्चोदकमूर्च्छितः ।
वर्द्धयेतां तदेवाम्बु स्वस्थानादुदराय तौ” ॥
अस्य रूपाणि ।
“तस्य रूपाण्यनन्नकाङ्क्षापिपासा-गुदस्राव-शूल-श्वास-कास-दौर्ब्बल्याण्यपि चोदरं नानावर्णराजि-भिरासन्ततमुदकपूर्णदृतिक्षोभसंस्पर्शं भवत्येत-दुदकोदरं विद्यात्” ॥
एषां साध्यत्वासाध्यत्वादिलक्षणं यथा, --
“तत्राचिरोत्पन्नमनुपद्रवमनुदकप्राप्तमुदरं त्वर-माणश्चिकित्सेदुपेक्षितानां ह्येषां दोषाः स्वस्थान-दपवृत्ता अपरिपाकाद्द्रवीभूताः सन्धीन् स्रोतांसि चोपक्लेदयन् स्वेदश्च वाह्येषु स्रोतःसु प्रतिहत-गतिस्तिर्य्यगवतिष्ठमानस्तदेवोदकमाप्याययति” ।
तत्र पिच्छोत्पत्तौ मण्डलमुदरं गुरुस्तिमितमा-कोचितमशब्दं मृदुस्पर्शमपगतराजीकमाक्रान्तं

प्रायो भवत्यभावाय छिद्रान्त्रञ्चोदरं नृणाम्” ॥
“श्वयथुः सर्व्वमर्म्मोत्थः श्वासो हिक्कारुचिः सतृट् ।
मूर्च्छाच्छर्द्यतिसारश्च निहन्त्युदरिणं नरम्” ॥
जललक्षणमाह ।
“अशोथमरुणाभासं सशब्दं नातिभारिकम् ।
सदा गुडगुडायान्तं शिराजालगवाक्षितम् ॥
नाभिं विष्टभ्य पायौ तु वेगं कृत्वा प्रणश्यति ॥
हृन्नाभिवंक्षणकटीगुदप्रत्येकशूलिनः ॥
कर्कशं सृजतो वातं नातिमन्दे च पावके ॥
मूत्रेऽल्पे संहते दोषे लालया विरसे मुखे ।
अजातोदकमित्येतैर्लिङ्गैर्विज्ञाय तत्त्वतः” ॥
अतःपरं वातजादिभेदेन चिकित्साविधानं यथा,
“उपक्रामेद्भिषग्दोषबलकालविशेषवित् ।
वातोदरे बलवतः पूर्ब्बं स्नेहैरुपाचरेत् ॥
स्निग्धाय स्वेदिताङ्गाय दद्यात् स्नेहविरेचनम् ॥
हृते दोषे परिम्लानं वेष्टयेद्वाससोदरम् ॥
तथास्यानवकाशत्वाद्वायुर्नाध्मापयेत् पुनः ।
दोषातिमात्रोपचयात् स्रोतसां सन्निरोधनात् ॥
सम्भवन्त्युदराण्येवं अतो नित्यं विशोधयेत् ।
शुद्धं संसृज्य च क्षीरं बलार्थं पाययेत्तु तम् ॥
प्रागुत्केशान्निवर्त्त्यञ्च बले लब्धे क्रमात् पयः ।
यूषैरसर्व्वा मन्दाम्ललवणैः रोधितानलम् ॥
सोदावर्त्तिं पुनः स्निग्धं स्विन्नमास्थापयेन्नरम् ।
स्फुरणाक्षेपसन्ध्यस्थिपार्श्वपृष्ठत्रिकास्थिषु ।
दीप्ताग्निबद्धविड्वातं रूक्षमप्यनुवासयेत् ॥
तीक्ष्णाधोभागयुक्तः स्यान्निरूहो दाशमूलिकः ।
वातघ्नाम्लशृतैरण्डतिलतैलानुवासनः ॥
अविरेच्यन्तु यं विद्याद्दुर्ब्बलं स्थविरं शिशुम् ।
सुकुमारं प्रकृत्याल्पदोषं वाथोल्वणानिलम् ॥
तं भिषक् शमनैः सर्पिर्यूषमांसरसौदनैः ।
वस्त्यभ्यङ्गानुवासश्च क्षीरैश्चोपाचरेद्बुधः ॥ १ ॥
पित्तोदरे तु बलिनं पूर्ब्बमेव विरेचयेत् ।
दुर्ब्बलन्त्वनुवास्यादौ शोधयेत् क्षीरवस्तिना ॥
सञ्जातबलकालाग्निं पुनः स्निग्धं विरेचयेत् ।
पयसा सत्रिवृत्कल्केनोरुवूकशृतेन वा ॥
शातलात्रायमाणाभ्यां शृतेनारम्बधेन वा ।
सकफे वा समूत्रेण सवाते तिक्तसर्पिषा ॥
पुनः क्षीरप्रयोगञ्च वस्तिकर्म्मविरेचनम् ।
क्रमेण ध्रुवमातिष्ठन् युक्तः पित्तोदरं जयेत् ॥
स्निग्धं स्विन्नं विशुद्धन्तु कफोदरिणमातुरम् ।

सगुडामभयां वापि क्षारारिष्टगणांस्तथा ॥
रोहितकलतानान्तु काण्डैका साभया जले ।
मूत्रे वा शृतमेतच्च सप्तरात्रस्थितं पिबेत् ॥
कामलागुल्ममेहार्शःप्लीहसर्व्वोदरक्रिमीन् ।
तद्वन्याज्जाङ्गलरसैर्जीर्णे स्याच्चात्र भोजनम् ॥
अग्निकर्म्म च कुर्व्वीत भिषग्वातकफोल्वणे ।
पैत्तिके जीवनीयानि सर्पींषि क्षीरवस्तयः ॥
रक्तावसेकः संशुद्धिः क्षीरपानञ्च शस्यते ।
यूषैर्मांसरसैश्चापि दीपनीयसमायुतैः ॥
लघून्यन्नानि संसृज्य भजेत् प्लीहोदरी नरः ॥
स्विन्नाय बद्धोदरिणे मूत्रतीक्ष्णौषधान्वितम् ।
सतैललवणं दद्यान्निरूहं सानुवासनम् ॥
परिस्रंसीनि चान्नानि तीक्ष्णञ्चैव विरेचनम् ।
उदावर्त्तहरं कर्म्म कार्य्यं वातघ्नमेव च ॥
छिद्रोदरमृते स्वेदात् श्लेष्मोदरवदाचरेत् ॥
जातं जातं जलं स्राव्यमेवं तत्पातयेद्भिषक्” ॥
अरिष्टलक्षणं यथा ।
“तृष्णाकासज्वरार्त्तन्तु क्षीणमांसाग्निभोजनम् ।
वर्ज्जयेत् श्वासिनं तद्वत् शूलिनं दुर्ब्बलेन्द्रियम्” ॥
“द्रवेभ्यश्चोदकादिभ्यो नियच्छेदनुपूर्ब्बशः ।
सर्व्वमेवोदरं प्रायो दोषसंघातजं मतम् ।
तस्मात्त्रिदोषशमनीं क्रियां सव्वषु कारयेत्” ॥
पथ्यनियमो यथा ।
“दोषैः कुक्षौ हि संपूर्णे वह्निर्मन्दत्वमृच्छति ।
तस्माद्भोज्यानि योज्यानि दीपनानि लघूनि च ॥
रक्तशालीन् यवान् मुद्गान् जाङ्गलांश्च मृगद्विजान् ।
पयोमूत्रासवारिष्टान्मधुशीधूंस्तथा सुराम् ॥
यवागूमोदनं वापि यूषैरद्याद्रसैरपि ।
मन्दाम्लस्नेहकटुभिर्यच्च मूलोपसाधितैः” ॥
अपथ्यानि यथा ।
“औदूकानूपजं मांसं शाकं पिष्टकृतं तिलान् ।
व्यायामाध्वदिवास्वप्नं यानयानञ्च वर्ज्जयेत् ॥
तथोष्णलवणाम्लानि विदाहीनि गुरूणि च ।
नाद्यादन्नानि जठरी तोयपानञ्च वर्ज्जयेत्” ॥
वातजादिभेदेन तक्रपाननियमो यथा ।
“वातोदरी पिबेत्तक्रं पिप्पलीलवणान्वितम् ।
शर्करामधुकोपेतं स्वादु पित्तोदरी पिबेत् ॥
यमानीसैन्धवाजाजीव्योषयुक्तं कफोदरी ।
पिबेन्मधुयुतं तक्रं व्यक्ताम्लं नातिपेलवम् ॥

नाभ्यां सर्पतीति । ततोऽनन्तरं उदकप्रादुर्भावः ॥ तस्य रूपाणि कुक्षेरतिमात्रवृद्धिः शिरान्तर्धा-नगमनमुदकपूर्णदृतिसमक्षोभस्पर्शत्वञ्च । तदातुरमुपद्रवाः स्पृशन्ति छर्द्यतीसार-तमक-तृष्णा-श्वास-कास-हिक्का-दौर्ब्बल्य-पार्श्वशूलारुचि-स्वरभेद-मूत्रसङ्गादयस्तथाविधमचिकित्स्यं विद्यादिति ॥ भवति चात्र, --

“वातात्पित्तात् कफात् प्लीहः
सन्निपातात्तथोदकात् ।
परस्परं कृच्छ्रतरमुदरं भिषगादिशेत् ॥
पक्षाद्बद्धगुदन्तूदर्ध्वं सव्वं जातोदकन्तथा ।

संसर्ज्जयेत् कटुक्षारयुक्तैरन्नैः कफापहैः ॥
गोमूत्रारिष्टपानैश्च चूर्णायस्कृतिभिस्तथा ।
सक्षारैस्तैलपानैश्च समयेत्तु कफोदरम् ॥
सन्निपातोदरे सर्व्वा यथोक्ताः कारयेत् क्रियाः ।
सोपद्रवन्तु निर्वृत्तं प्रत्याख्येयं विजानता ॥
उदावर्त्तरुगानाहैर्दाहमोहतृषाज्वरैः ।
गौरवारुचिकाठिन्यैश्चानिलादीन् यथाक्रमम् ॥
लिङ्गः प्लीहोदरान् दृष्ट्वा रक्तं वापि स्वलक्षणैः ।
चिकित्सां संप्रकुर्व्वीत यथादोषं यथाबलम् ॥
स्नेहं स्वेदं विरेकञ्च निरूहमनुवासनम् ।
समीक्ष्य कारयेद्बाहौ वामे वा व्यधयेत्सिराम् ॥
षट्पलं वा पिबेत्सर्पिः पिप्पलीर्व्वा प्रयोजयेत् ।

मधुतैलवचाशुण्ठीशताह्वाकुष्ठसैन्धवैः ।
युक्तं प्लीहोदराघातं सव्योषन्तु दकोदरी ॥
बद्धोदरी तु हपुषायवान्यजाजीसैन्धवैः ।
पिबेच्छिद्रोदरी तक्रं पिप्पलीक्षौद्रसंयुतम् ॥
“देवदारुपलाशार्कहस्तिपिप्पलीशिग्रुकैः ।
साश्वगन्धैः सगोमूत्रैः प्रदिह्यादुदरं समैः ॥
पलाशं कत्तृणं रास्ना तद्वत्पक्त्रावसेचयेत् ।
मूत्राण्यष्टावुदरिणां सेके पाने च योजयेत् ॥
रूक्षाणां बहुवातानां तथा संशोधनार्थिनाम् ।
दीपनीयानि सर्पींषि जठरघ्नानि वक्ष्यते ॥
पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
सक्षारैरर्द्धपलिकैर्द्विःप्रस्थं सर्पिषः पचेत् ॥
कल्कैर्द्विपञ्चमूलस्य तुलार्द्धस्य रसेन च ॥
दधिमण्डातकोपेतं तत्सर्पिर्जठरापहम् ।
श्वयथुं वातविष्टम्भं गुल्मार्शांसि च नाशयेत्” ॥
इति पञ्चकोलघृतम् ॥ * ॥

"चतुर्गुणे जले मूत्रे द्विगुणे चित्रकात्पले ।
कल्के सिद्धं घृतप्रस्थं सक्षारं जठरी पिबेत्" ॥
इति चित्रकघृतम् ॥
"पटोलमूलरजनीविडङ्गत्रिफलात्वचम् ।
काम्पिल्यको नीलिनी च त्रिवृता चेति चूर्णयेत्
॥
षडाद्यान् कार्षिकानन्त्यांस्त्रीन् द्वित्रिचतुर्गुणान् ।
कृत्वा चूर्णमतोमुष्टिं गवां मूत्रेण वा पिबेत् ॥
विरिक्तो मृदु भुञ्जीत भोजनं जाङ्गलैः रसैः ।
मण्डं पेयाञ्च पीत्वा च सव्योषं षडहं पयः ॥
शृतं पिबेत्ततश्चूर्णं पिबेदेव पुनः पुनः ।
हन्ति सर्व्वोदराण्येतच्चूर्णं जातोदकान्यपि ।
कामलां पाण्डुरोगञ्च श्वयथुञ्चापकर्षति" ॥
इति पटोलाद्यं चूर्णम् ॥ * ॥
"नीलिनीं निचुलं व्योषं द्वौ क्षारौ लवणानि च ।
चित्रकञ्च पिबेच्चूर्णं सर्पिषोदरगुल्मनुत्" ॥
इति नीलिन्याद्यं चूणम् ॥ * ॥
"भावितानां गवां मूत्रे षष्टिकानान्तु तण्डुलैः ।
यवागूं पयसा सिद्धां प्रकामं भोजयेन्नरम् ॥
पिबेदिक्षुरसञ्चानु जठराणां निवृत्तये ।
स्वं स्वं स्थानं व्रजन्त्येषां तथा पित्तकफानिलाः
॥
क्रियातीते त्रिदोषे च जठरे चाप्रशाम्यति ।
ज्ञातीन् ससुहृदो दारान् ब्राह्मणान् नृपतीन्
गुरून् ॥
अनुज्ञाप्य भिषक् कर्म्म विदध्यात्संशयं ब्रुवन् ।
अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेत् ॥
एवमाख्याय तस्येदमनुज्ञातः प्रयोजयेत् ।
पानभोजनसंयुक्तं विषमस्मै प्रदापयेत् ॥
यस्मिन् वा कुपितः सर्पो विसृजेद्धि फले बिषम्
।
तेनास्य दोषसंघातः स्थिरो लीनो विमार्गगः ॥
विषेणाशु प्रमाथित्वादाशुभिन्नः प्रवर्त्तते ।
विषेण हृतदोषन्तं शीताम्बुपरिषेचितम् ॥
पाययेत भिषग्दुग्धं यवागूं वा यथाबलम् ।
त्रिवृन्मण्डूकपर्ण्याश्च शाकं सयववास्तुकम् ।
भक्षयेत्कालशाकं वा स्वरसोदकसाधितम् ॥
निरम्ललवणस्नेहं स्विन्नास्विन्नमनन्नभुक् ।
मासमेकं ततश्चैव तृषितः स्वरसं पिबेत्" ॥
"इदन्तु शल्यहर्त्तॄणां कर्म्म स्याद्दृष्टकर्म्मणां ।
मात्रायुक्तेन शस्त्रेण पाटयेन्मतिमान् भिषक् ॥
विपाट्यान्त्रन्ततः पश्चाद्वीक्ष्य बद्धक्षतान्त्रयोः ।
त्रीन् मासान् पयसा पेयां पिबेत्त्रींश्चापि
भोजयेत् ॥
श्यामाकङ्कोरदूष्यं वा क्षीरेण लघुभोजनः ।
नरः संवत्सरेणैवं जयेत् प्राप्तं जलोदरम् ॥
प्रयोगाणाञ्च सर्व्वेषामनुक्षीरं प्रयोजयेत् ।
दोषानुबन्धरक्षार्थं बलस्थैर्य्यार्थमेव च ॥
प्रयोगापचिताङ्गानां हितं ह्युदरिणां पयः ।
सर्व्वधातुक्षयार्त्तानां देवानाममृतं यथा" ॥
इति चरके चिकित्सितस्थानेऽष्टादशोऽध्यायः
।
"धन्वन्तरिर्धर्म्मभृतां वरिष्ठी
राजर्षिरिन्द्रप्रतिमो बभूव ।
ब्रह्मर्षिपुत्रं विनयोपपन्नं
शिष्यं शुभं सुश्रुतमन्वशात्सः ॥
पृथक्समस्तैरपि चेह दोषैः
प्लीहोदरं बद्धगुदं तथैव ।
आगन्तुकं सप्तममष्टमञ्च
दकोदरञ्चेति वदन्ति तानि ॥
सुदुर्ब्बलाग्नेरहिताशनस्य
संशुष्कपूत्यन्ननिषेवणाद्वा ।
स्नेहादिमिथ्याचरणाच्च जन्तो-
र्वृद्धिं गताः कोष्ठमभिप्रपन्नाः ॥
गुल्माकृतिव्यञ्जितलक्षणानि
कुर्व्वन्ति घोराण्युदराणि दोषाः ।
कोष्ठादुपस्नेहवदन्नसारो
निःसृत्य दुष्टोऽनिलवेगनुन्नः ॥
त्वचः समुन्नम्य शनैः समन्ता-
द्विवर्द्धमानो जठरं करोति" ॥ * ॥
अस्य पूर्ब्बरूपं यथा, --
"तत्पूर्ब्बरूपं बलवर्णकाङ्क्षा-
बलीविनाशो जठरे हि राज्यः ।
जीर्णापरिज्ञानविदाहवत्यो
वस्तौ रुजः पादगतश्च शोफः" ॥
वातजादिभेदेन लक्षणानि यथा, --
"संगृह्य पार्श्वोदरपृष्ठनाभी-
र्यद्वर्द्धते कृष्णशिरावनद्धम् ।
सशूलमानाहवदुग्रशब्दम्
सतोदभेदं पवनात्मकन्तत् ॥ १ ॥
यच्चोषतृष्णाज्वरदाहयुक्तं
पीतं शिरा यत्र भवन्ति पीताः ।
पीताक्षिविण्मूत्रनखाननस्य
पित्तोत्तरं तत्त्वचिराभिवृद्धि ॥ २ ॥
सव्येतरस्मिन् यकृति प्रदुष्टे
ज्ञेयं यकृद्दाल्युदरं तदेव" ॥ ४ ॥
दूष्युदरं बद्धगुदोदरं परिस्राव्युदरं दकोदरञ्चेति
चतुर्णामुदराणां सुश्रुतीयं लक्षणादिकं यत् भाव-
प्रकाशे संगृहीतं तत्तावच्चान्यविधम् ॥
अस्य चिकित्सा यथा ।
"अष्टावुदराणि पूर्ब्बमुद्दिष्टानि तेष्वसाध्यं बद्धगुदं
परिस्रावि चावशिष्टानि कृच्छ्रसाध्यानि सर्व्वाण्येव
च प्रत्याख्यायोपक्रमेत । तेष्वाद्यश्चतुर्व्वर्गो भेषज-
साध्यः । कालप्रकर्षात् सर्व्वाण्येव शस्त्रसाध्यानि
वर्ज्जयितव्यानि वा ॥
उदरी तु गुर्व्वभिष्यन्दिरूक्षविदाहिस्निग्धपिशित-
परिषेकावगाहान् परिहरेत् । शालियष्टिकयव-
गोधूमनीवारान्नित्यमश्नीयात् ॥
तत्र वातोदरिणं विदारिगन्धादिसिद्धेन सर्पिषा
स्नेहयित्वा तिल्वकविपक्वेनानुलोम्य
चित्राफलतैल-
प्रगाढेन विदारिगन्धाकषायेणास्थापयेदनुवासयेच्च
शाल्वणेन चोपनाहयेदुदरम् । भोजयेच्चैनं विदा-
रिगन्धादिसिद्धेन क्षीरेण जाङ्गलरसेन चाभीक्ष्णं
स्वेदयेत् ॥ * ॥
पित्तोदरिणन्तु मधुरगणविपक्वेन सर्पिषा स्नेह-
यित्वा श्यामात्रिफलात्रिवृद्विपक्वेनानुलोम्य शर्क-
रामधुधृतप्रगाढेन न्यग्रोधादिकषायेणास्थापये-
दनुवासयेच्च पायसेनोपनाहयेदुदरं भोजयेच्चैनं
विदारिगन्धादिसिद्धेन पयसा ॥ * ॥ श्लेष्मोदरिणं
पिप्पल्यादिकषायसिद्धेन सर्पिषोपस्नेह्य स्नुहीक्षी-
रविपक्वेनानुलोम्य त्रिकटुकमूत्रक्षारतैलप्रगाढेन
मुष्कादिकषायेणास्थापयेदनुवासयेच्च शणातसी-
धातकीकिण्वसर्षपमूलकवीजकल्कैश्चोपनाहयेदु-
दरं भोजयेच्चैनं त्रिकटुकप्रगाढेन कुलत्थयूषेण
पायसेन वा स्वेदयेच्चाभीक्ष्णम् ॥ * ॥
दूष्योदरिणन्तु प्रत्याख्याय सप्तलाशङ्खिनीस्वरस-
सिद्धेन सर्पिषा विरेचयेन्मासमर्द्धं मासं वा
महावृक्षक्षीरसुरागोमूत्रसिद्धेन वा शुद्ध्वकोष्ठनु
मद्येनाश्वमारकगुञ्जाकाकादनीमूलकल्कं पाययेत् ।
इक्षुकाण्डानि वा कृष्णसर्पेण दंशयित्वा भक्षयेत् ।
वल्लीफलानि वा मूलजं कन्दजं वा विषमासेवयेत्
तेनागदो भवत्यन्यं वा भावमापद्यते ॥ * ॥
भवति चात्र, --
"कुपितानिलमूलत्वात् सञ्चयित्वान्मलस्य च ।
सर्व्वोदरेषु शंसन्ति बहुशस्त्वनुलोमनम्" ॥

| | | |
|---|---|---|
| सर्पिषाभ्यज्य केशादीनवमृज्य विमोक्षयेत् ॥<br>मूर्च्छनात् यच्च संमूढमन्त्रं यच्च विमोक्षयेत् ।<br>छिद्राण्यन्त्रस्य तु स्थूलैर्दंशयित्वा पिपीलिकैः ॥<br>बहुशः संगृहीतानि मत्वा छित्त्वा पिपीलिकान् ।<br>प्रतियोगैः प्रवेश्यान्त्रं वहिः सीव्येद्व्रणन्ततः ।<br>तथा जातोदकं सर्व्वमुदरं व्यधयेद्भिषक् ॥<br>वामपार्श्वे त्वधो नाभेर्नाडीं दत्त्वा च गालयेत् ।<br>निःस्नाव्य च विमृज्यैतद्वेष्टयेद्वाससोदरम् ॥<br>तथा वस्तिविरेकाद्यैर्म्लानं सर्व्वञ्च वेष्टयेत् ।<br>निःसृते लङ्घितः पेयामस्नेहलवणां पिबेत् ॥<br>अतः परञ्च षण्मासान् क्षीरवृत्तिर्भवेन्नरः । | यच्छीतलं शुक्लशिरावनद्धं<br>श्लक्ष्णं स्थिरं शुक्लनखाननस्य ।<br>स्निग्धं महच्छोफयुतं ससादं<br>कफोदरं तच्च चिराभिवृद्धि ॥ ३ ॥<br>विदाह्यभिष्यन्दिरतस्य जन्तोः<br>प्रदुष्टमत्यर्थमसृक्कफश्च ।<br>प्लीहाभिवृद्धिं सततं करोति<br>प्लीहोदरन्तत् प्रवदन्ति तज्ज्ञाः ॥<br>वामे च पार्श्वेपरिवृद्धिमेति<br>विशेषतः सीदति चातुरोऽत्र ।<br>मन्दज्वराग्निः कफपित्तलिङ्गै-<br>रुपद्रुतः क्षीणबलोऽतिपाण्डुः ॥ | ज्योतिष्कफलतैलं वा क्षीरेण स्वर्ज्जिकाहिङ्गुमिश्रं<br>पिबेत् ॥ गुडद्वितीयां वा हरीतकीं भक्षयेत् ॥<br>स्नुहीक्षीरभावितानां वा पिप्पलीनां सहस्रं का-<br>लेन पथ्याकृष्णाचूर्णं वा स्नुहीभावितामुत्कारिकां<br>पक्वां दापयेत्” ॥<br>“प्लीहोदरिणः स्निग्धस्विन्नस्य दध्ना भुक्तवतो<br>वाम-<br>बाहौ कुर्प्पराभ्यन्तरतः शिरां विध्येद्विमर्दयेत्<br>पाणिना प्लीहानं रुधिरस्यन्दनार्थं ततः संशुद्धदेहं<br>समुद्रशुक्तिकाक्षारं पयसा पाययेत हिङ्गुसौतर्च्चि<br>काक्षारेण स्रुतेन पलाशक्षारेण वा यवक्षारम् ।<br>पारिजातकेक्षरकापामार्गक्षारं वा तैलसंसृष्टम् । |

:शोभाञ्जनकषायं वा पिप्पलीसैन्धवचित्रकयुक्तम् ।

पूतिकरञ्जक्षारं वाम्लस्रुतं विडलवण-पिप्पली-
प्रगाढम् ॥ * ॥
पिप्पलीपिप्पलीमूलचित्रकशृङ्गवेरयवक्षारसैन्ध-
वानां पालिकाभागा घृतप्रस्थं तत्तुल्यं क्षीरं
तदैकध्यं विपाचयेदेतत् षट्पलकं नाम सर्पिः
प्लीहाग्निषङ्गगुल्मोदरोदावर्त्त-श्वयथु-पाण्डुरोग-
कास-श्वास-
प्रतिश्यायोर्द्ध्ववातविषमज्वरानपहन्ति
मन्दाग्निर्वा हिङ्ग्वादिकं चूर्णमुपयुञ्जीत यकृद्दा-
ल्येऽप्येष एव क्रियाविभागः विशेषतस्तु दक्षिण-
बाहौ शिराव्यधः" ॥
"मणिबन्धं सकृन्नाम्य वामाङ्गष्ठसमीरिताम् ।
दहेत्सिरां शरेणाशु प्लीह्नो वैद्यः प्रशान्तये" ॥ * ॥
बद्धगुदे परिस्राविणि च स्निग्धस्विन्नस्याभ्यक्त-
स्याधो नाभेर्व्वामतश्चतुरङ्गुलमपहाय रोमराज्या
उदरं पाटयित्वा चतुरङ्गुलप्रमाणान्यन्त्राणि नि-
ष्कृष्य निरीक्ष्य बद्धगुदस्यान्त्रप्रतिरोधकरमश्मानं
बालं वा पोह्य मलजातं वा ततो मधुसर्पिर्म्या-
मभ्यज्यान्त्राणि यथास्थानं स्थापयित्वा वाह्यव्रण-
मुदरस्य सीव्येत् । परिस्राविण्यप्येवमेव शल्य-
मुद्धृत्यान्त्रस्रावान् संशोध्य तच्छिद्रमन्त्रं समाधाय
कालपिपीलिकाभिर्दंशयेत् दष्टे च तासां काया-
नपहरेत् न शिरांसि ततः पूर्ब्बवत् सीव्येत्
सन्धानञ्च यथोक्तं कारयेत् यष्टीमधुकमिश्रया
च कृष्णमृदावलिप्य बन्धेनोपचरेत्ततोनिवातमा-
गारं प्रवेश्याचारिकमुपदिशेद्वासयेच्चैनं तैलद्रोण्यां
सर्पिर्द्रोण्यां वा पयोवृत्तिमिति ॥ * ॥ उदकोदरि-
णस्तु वातहरतैलाभ्यक्तस्योष्णोदकस्विन्नस्य
स्थित-
स्याप्तैः सुपरिगृहीतस्याकक्षात् परिवेष्टितस्याधो-
नाभेर्वामतश्चतुरङ्गुलमपहाय रोमराज्या व्रीहि-
मुखेनाङ्गुष्ठोदरप्रमाणमवगाढं विध्येत् । तत्र तप्वा-
दीनामन्यतमस्य नाडीद्विद्वारां पक्षनाडीं वा संयो-
ज्यादोषोदकमवसिञ्चेत्ततो नाडीमपहृत्य तैल-
लवणेनाभ्यज्य व्रणबन्धेनोपचरेन्नचैकस्मिन्नेव
दिवसे
सर्व्वं दोषोदकमपहरेत् सहसा ह्यपहृते तृष्णा-
ज्वराङ्गमर्द्दातीसारश्वासपाददाहा उत्पद्येरन् आ-
पूर्य्यते वा भृशतरमुदरमसञ्जातप्राणस्य तस्मा-
तृतीयचतुर्थपञ्चमषष्ठाष्टमदशमद्वादशषोडशरा-
त्राणामन्यतममन्तरीकृत्य दोषोदकमल्पाल्पमव-

"शुद्धसूतं द्विधा गन्धं मृतार्कायःशिलाजतु ।
रससाम्येन दातव्यं रसस्य द्विगुणं विषम् ॥
त्रिकटुचित्रकाकोलीनिर्गुण्डीमूषलीरजः ।
अजभोदाविधांशेन प्रत्येकञ्च प्रकल्पयेत् ॥
निम्बपञ्चाङ्गुलक्वाथैर्भावनाश्चैकविंशतिम् ।
भृङ्गराजरसैः सप्त दत्त्वा क्षौद्रेण लेहयेत् ॥
वदरास्थिप्रमाणेन वटिकां तां दिवा निशि ।
श्लेष्मोत्तरं निहन्त्याशु नाम्ना वैश्वानरी वटी ॥
देवदारुवह्निमूलकल्कं क्षीरेण पाचयेत् ।
भोजनं मेषदुग्धेन कौलोत्थेन रसेन च" ॥
इति वैश्वानरी वटी ॥ * ॥
"पिप्पली मरिचं ताम्र-काञ्चनीचूर्णसंयुतम् ।
स्नुहीक्षीरे दिनं मर्द्यं तुल्यं जैपालवीजकम् ॥
निष्कं खादेत् विरेकाय सद्यो हन्ति जलोदरम् ।
रेचनानाञ्च सर्व्वेषां दध्यन्नं स्तम्भने हितम् ।
दिनान्ते च प्रदातव्यमन्यद्वा मुद्गयूषकम्" ॥
इति जलोदरीरसः ॥ * ॥
"पारदं शुक्तितुत्थञ्च जैपालं पिप्पलीसमम् ।
आरम्बधफलान्मज्जां वज्रीदुग्धेन मर्द्दयेत् ।
माषमात्रं वटीं खादेत् स्त्रीणां हन्ति जलोदरम् ॥
चिञ्चाफलरसञ्चानु पथ्यं दध्योदनं हितम् ।
दकोदरहरञ्चैव कठिने रेचनेन च" ॥
इति उदराररिसः ॥ * ॥
"द्विकर्षं लौहचूर्णस्य चाभ्रञ्चापि पलार्द्धकम् ।
कर्षं शुद्धं मृतं ताम्रं लिम्पाकाङ्घ्रित्वचां पलम् ॥
मृगाजिनपलं भस्म सर्व्वमेकत्र कारयेत् ।
नवगुञ्जाप्रमाणेन वटिकां कारयेद्भिषक् ॥
यकृत्प्लीहोदरहरं कामलाञ्च हलीमकम् ।
कासं श्वासं ज्वरं हन्याद्बलवर्णाग्निकारकम् ।
यकृदरि त्विदं लौहं वातगुल्मविनाशनम्" ॥
इति यकृदरिलौहम् ॥ * ॥
इति वैद्यकरसेन्द्रसारसंग्रहे ॥
पथ्यानि यथा, --
"विरेचनं लङ्घनमब्दसम्भवाः
कुलत्थमुद्गारुणशालयो यवाः ।
मृगद्विजाजाङ्गलसंज्ञयान्विताः
पेयाः सुरामाक्षिकसीधुमाधवाः ॥
तक्ररसोनोरुवुतैलमार्द्रकम्
शालिञ्च शाकं कुलकं कठिल्लकम् ।
पुनर्नवा शिग्रुफलं हरीतकी
ताम्बूलमेलायवशूकमायसम् ॥
अजा-गवोष्ट्री-महिषी-पयोजलं

विष्टम्भीनि विशेषात्तु स्वेदं छिद्रसमुद्भवे ।
वर्ज्जयेदुदरव्याधौ वैद्यो रक्षन्निजं यशः" ॥
इति वैद्यकपथ्यापथ्यविधिः ॥ * ॥)

**उदरामयः**, पुं, (उदरस्य आमयः ।) रोगविशेषः ।
तत्पर्य्यायः । अन्नगन्धिः २ अतिसारः ३ ।
इति
त्रिकाण्डशेषः ॥ (अस्योपशमलक्षणं
चिकित्सास्थाने
नवमाध्याये वाभटेनोक्तम् । यथा,
"यस्योच्चाराद्विना मूत्रं पवनो वा प्रवर्त्तते ।
दीप्ताग्नेर्लघुकोष्ठस्य शान्तस्तस्योदरामयः" ॥)

**उदरावर्त्तः**, पुं, (उदरे आवर्त्त इव ।) नाभिः । इति
राजनिर्घण्टः ॥

**उदरिणी**, स्त्री, (उदरं तज्जातगर्भेऽस्या अस्तीति ।
उदर + इनि + ङीप् ।) गर्भवती । इति
हेमचन्द्रः ।
(उदरमस्या अस्तीति वाक्ये । वृहदुदरयुक्ता ।
"लम्बस्तनीमुदरिणीं विदीर्णोत्फुल्लपादकाम् ।
धात्रा वैरूप्यनिर्म्माणवैदग्धीं दर्शितामिव" ॥
इति कथासरित्सागरे विंशतरङ्गे ॥)

**उदरिलः**, त्रि, (अतिशयितमुदरमस्य । उदर +
तुन्दादिभ्यः इलच्चेति इलच् ।) वृहदुदरयुक्तः
।
भुँडिया इति भाषा । तत्पर्य्यायः पिचिण्डिलः
२
वृहत्कुक्षिः ३ तुन्दिः ४ तुन्दिकः ५ तुन्दिलः
६
उदरी ७ । इति हेमचन्द्रः ॥

**उदरी**, [न्] त्रि, (अतिशयितमुदरमस्य । उदर +
इनि ।) उदरिलः । इति हेमचन्द्रः ॥ (उदररोग-
ग्रस्तः । यथा सुश्रुते चिकित्सितस्थाने १४
अध्याये ।
"उदरी तु गुर्व्वभिष्यन्दिरूक्षविदाहिस्निग्धपि-
शितपरिषेकावगाहान् परिहरेत् । शालिषष्टि-
कयवगोधूमनीवारान्नित्यमश्नीयात्" ॥)

**उदर्कः**, पुं, (उत् + ऋच् + घञ् ।) उत्तरकालोद्भव-
फलम् । इत्यमरः ॥ भविष्यत्कालः । इति
धरणी ॥

सिञ्चेत् । निःस्रुते निःस्नुते च दोषे गाढतरमावि-
ककाशेयचर्म्मणामन्यतमेन परिवेष्टयेदुदुरं तथा
नाध्मायति वायुः षण्मासांश्च पयसा भोजये-
ज्जाङ्गलरसेन वा तत्र त्रीन् मासान् अर्द्धोदकेन
पयसा फलाम्लेन जाङ्गलरसेन वावशिष्टं मासत्रय-
मन्नं लघहितं वा सेवेतैवं संवत्सरेणागदो भवति ॥
भवति चात्र, --
आस्थापने चव विरेचने च
पाने तथाहारविधिक्रियासु ।
सर्व्वोदरिभ्यः कुशलैः प्रयोज्यं
क्षीरं शृतं जाङ्गलजो रसो वा" ॥
इति सुश्रते चिकित्सितस्थाने उदराधिकारः ॥
औषधान्याह ॥

लघूनि तिक्तानि च दीपनान्यपि ।
वस्त्रेण संवेष्टनमग्निकर्म्मता
विषप्रयोगोऽनुयुतो यथायथम्" ॥ * ॥
अपथ्यानि यथा ॥
"सस्नेहनं धूमपानं जलपानं शिराव्यधः ।
छर्द्दियानं दिवानिद्रा व्यायामः पिष्टवैकृतम् ॥
औदकानूपमांसानि पत्रशाकांस्तिलानपि ।
उष्णानि च विदाहीनि लवणान्यशनानि च ॥
शिम्बीधान्यं विरुद्धान्नं दुष्टनीरं गुरूणि च ।
महेन्द्रगिरिजातानां सरितां सलिलानि च ॥

("परित्यजेदर्थकामौ यौ स्यातां धर्म्मवर्ज्जितौ
।
धर्म्मञ्चाप्यसुखोदर्कं शोकविक्रुष्टमेव च" ॥
इति मनुः ४ । १७६ ॥
"उदर्कस्तव कल्याणि ! तुष्टो देवगणश्वरः" ॥
इति महाभारते पाण्डवोत्पत्तौ । १ । १२३ ।
२९ ॥)
मदनकण्टकम् । इति मेदिनी । मयना गाछेर
काँटा इति भाषा ॥

**उदर्च्चिः**, [स] त्रि, (उद्गतं अर्च्चिः प्रभा यस्मात् ।)

उत्प्रभः । इति मेदिनी । (यथा रघौ १५ । ७६
।
"ऋचेवोदर्च्चिषं सूर्य्यं रामं मुनिरुपस्थितः" ॥
"प्रदक्षिणप्रक्रमणात् कृशानो-
रुदर्च्चिषस्तन्मिथुनं चकाशे" ।
इति रघुवंशे ७ । २४ । तथा, कुमारे ३ । ७१
।
"स्फुरन्नुदर्च्चिः सहसा तृतीया-
दक्ष्णः कृशानुः किल सम्पपात" ॥)

**उदर्च्चिः**, [स्], पुं, (उदूद्र्ध्वं गतं अर्च्चिर्य्यस्य ।) अग्निः
।

इति मेदिनी ॥
"प्रक्षिप्योदर्च्चिषं कक्ष शेरते तेऽभिमारुतम्" ॥
इति माघे २ । ४२ ॥ हरिः ।) शिवः । कन्दर्पः
।
इति शब्दरत्नावली ॥

**उदर्दः**, पुं, (उदर्दति पीडयतीति । उत् + अर्द्द + अच् ।) रोगविशेषः । तस्य लक्षणम् । यथा, निदाने ॥
"वरटीदष्टसंस्थानः शोथः संजायते वहिः ।
सकण्डूस्तोदबहुलः छर्द्दिज्वरविदाहवान् ॥
उदर्द्दमिति तं विद्याच्छीतपित्तमथापरे ।
वाताधिकं शीतपित्तमुदर्द्दञ्च कफाधिकम्" ॥
(अस्य चिकित्सा यथा,
"अभ्यङ्गः कटुतैलेन सेकश्चोष्णाम्बुभिस्ततः ।
उदर्दे वमनं कार्य्यं पटोलारिष्टवारिणा" ॥
"सगुडं दीप्यकं यस्तु खादेत् पथ्यान्नभुङ्नरः ।
तस्य नश्यति सप्ताहादुदर्दः सर्व्वदेहजः" ॥
इति वैद्यकचक्रपाणिसंग्रहे ॥)

**उदलावणिकः**, त्रि, (उदलवणेन लवणाम्भसा सिद्धः । उदलवण + ठक् ।) लवणोदकसंसिद्धव्यञ्जनादिः । इति हलायुधः ॥

**उदवसितं**, क्ली, (उदूद्र्ध्वमवसीयते स्म । षो अन्त-कर्म्मणि षिञ् बन्धने वा । क्तः । द्यतिस्यतीतीत्वम् ।) गृहम् । इत्यमरः ॥

**उदश्वित्**, क्ली, (उदकेन श्वयति वर्द्धते इति । उद + श्वि + क्विप् + तुक् ।) अर्द्धजलयुक्तघोलम् । इत्य-मरः ॥ अस्य गुणाः । लेपात् कुष्ठरोगनाशित्वम् । दाहतृष्णामुखशोषनाशित्वञ्च । इति राजवल्लभः ॥ ("अर्द्धोदकमुदश्वित्स्यात्" ॥
"उदश्विच्छेष्मलं बल्यं श्रमघ्नं परमं मतम्" ॥
इति हारीते प्रथमस्थानेऽष्टमोऽध्यायः ॥)

**उदात्तं**, त्रि, (उत् + आ + दा + क्त ।) दयात्यागादि-सम्पन्नम् । इति मेदिनी ॥ हृद्यम् । दातृ । महत् । इति हेमचन्द्रः ॥ (यथा, रामायणे २ य काण्डे ।)
"उदात्तदन्तानाम् कुञ्जराणाम्" ।
नायकभेदः । यथा साहित्यदर्पणे ३ परिच्छेदे ॥
"अविकत्थनः क्षमावान् अतिगम्भोरो महासत्त्वः ।
स्थेयान् निगूढमानो धीरोदात्तोदृढव्रतः कथितः" ॥)

**उदात्तः**, पुं, (उच्चैरादीयते स्म । उत् + आ + दा + क्त ।) स्वरभेदः । स तु वेदगाने उच्चैःस्वरः । इत्य-
हृल्लासो हृदि शूलञ्च यकृद्वातादिका वमिः ।
क्षवथुर्जृम्भणञ्चैव तथा वैस्वर्य्यपीनसौ ॥
अरुचिश्च प्रतिश्याय एते प्रोक्ता उदानतः ।
उदानः श्लेष्मसंयुक्तो दोषात् हृदि प्रकुप्यति" ॥
इति चिकित्सितस्थाने २१ अध्याये हारीते-नोक्तम् ॥ * ॥
"उदानः क्षवथूद्गारच्छर्द्दिनिद्रावधारणैः ।
गुरुभारातिरुदितहास्याद्यैर्विकृतो गदान् ॥
कण्ठरोधमनोभ्रंशच्छदर्द्यरोचकपीनसान् ।
कुर्य्याच्च गलगण्डादींस्तांस्तान्
जत्रूद्र्ध्वसंश्रयान्" ।
इति निदानस्थाने षोडशेऽध्याये वाभटेनोक्तम् ॥ * ॥
अस्य स्थानं कार्य्यञ्च यथा ॥
"उदानस्य पुनः स्थानं नाभ्युरःकण्ठ एव च ।
वाक्प्रवृत्तिः प्रयत्नोर्ज्जो बलवर्णादि कर्म्म च" ॥
इति चिकित्सास्थाने २८ अध्याये चरकेणोक्तम् ॥
"उदानो नाम यस्तूद्र्ध्वमुपैति पवनोत्तमः ॥
तेन भाषितगीतादिविशेषोऽभिप्रवर्त्तते ।
ऊद्र्ध्वजत्रुगतान् रोगान् करोति च विंशेषतः" ॥
दोषान्तरगतस्यास्य लक्षणं यथा ॥
"उदाने पित्तसंयुक्ते मूर्च्छादाहभ्रमक्लमाः ।
अस्वेदहर्षौ मन्दाग्निः शीतस्तम्भौ कफावृते" ॥
इति निदानस्थाने प्रथमेऽध्याये सुश्रुतेनोक्तम् ॥
उदरावर्त्तः । नाभिः । सर्पविशेषः । इति मेदिनी ॥
पक्ष्म । इति शब्दरत्नावली ॥

**उदारः**, त्रि, (उत्कृष्टमासमन्तात् राति । रा + आत-श्चेति कः । उदर्य्यते, ऋगतिप्रापणयोः कर्म्मणि घञ् वा ।) दाता । महान् । (यथा गीतायां ७ । १८ ॥
"उदाराः सर्व्व एवैते ज्ञानी त्वात्मैव मे मतम्" ॥
"उदारा सहान्तः मौक्षभाज एव इत्यर्थः" ॥
इति श्रीधरस्वामी ।) ऋज्वाशयः । तत्पर्य्यायः । दक्षिणः २ सरलः ३ । इत्यमरः ॥
("क उदारः समर्थश्च त्रैलोक्यस्यापि रक्षणे" ।
इति रामायणे आदिकाण्डे । गभीरः । सारवान् । रम्यः । न्याय्यः ।
"इत्यर्घ्यपात्रानुमितव्ययस्य
रघोरुदारामपि गां निशम्य" ।
इति रघुः ५ । १२ । असाधारणः । सरलाशयः । शिष्टः ।
"स तथेति विनेतुरुदारमतेः
पक्वाशये कुप्यति चेदपानः
स्रोतांस्यधोगानि बली स रुद्ध्वा ॥
करोति विण्मूत्रसमीरसङ्गं
क्रमादुदावर्त्तमतः सुघोरम् ।
रुग्वस्तिहृत्कुक्ष्युदरेष्वभीक्ष्णं
स पृष्ठपार्श्वेष्वतिदारुणा स्यात् ॥
आध्मानहृल्लासविकर्त्तिकाश्च
तोदोऽविपाकश्च सवस्तिशोथः ।
वर्च्चोऽप्रवृत्तिर्जठरे च गण्डा-
न्यूद्र्ध्वञ्च वायुर्व्विहितो गुदे स्यात् ॥
कृच्छ्रेण शुक्रस्य चिरात्प्रवृत्तिः
स्याद्वा तनुः स्यात् खररूक्षशीता ।
ततश्च रोगा ज्वरमूत्रकृच्छ्र-
प्रवाहिकाहृद्ग्रहणीप्रदोषाः ॥
वम्यान्ध्य-बाधिर्य्य-शिरोऽभिताप-
वातोदराष्ठीलमनोविकाराः ।
तृष्णास्रपित्तारुचिगुल्मकास-
श्वासप्रतिश्यार्द्दितपार्श्वरोगाः ।
अन्ये च रोगा बहवोऽनिलोत्थाः
भवन्त्युदावर्त्तकृताः सुघोराः" ॥
अस्य चिकित्सा यथा, --
"तं तैलशीतज्वरनाशनोक्तैः,
स्वेदैर्यथोक्तैः प्रविलीनदोषम् ।
उपाचरेद्वर्त्तिनिरूहवस्ति-
स्नेहैर्विरेकैरनुलोमनान्नैः ॥ * ॥
श्यामात्रिवृन्मागधिकाग्निचूर्णं
गोमूत्रपिष्टं दशभागमाषम् ।
सनीलिकां द्विर्लवणां गुडेन
वर्त्तिं कराङ्गुष्ठनिभां विदध्यात् ॥
पिण्याकसौवर्च्चलहिङ्गुभिर्व्वा
ससर्षपत्र्यूषणयावशूकैः ।
क्रिमिघ्नकम्पिल्लकशङ्खिनीभिः
सुधार्कजक्षीरगुडैर्युताभिः ।
स्यात् पिप्पलीसर्षपराठवेश्म-
धूमैः सगोमूत्रगुडैश्च वर्त्तिः ॥ * ॥
श्यामाफलेक्षु सपिप्पलीकं
नाड्याथवा तत् प्रधमेत्तु चूर्णम् ।
रक्षोघ्नतुम्बीकरहाटकृष्णा-
चूर्णं सजीमूतकसैन्धवं वा ॥ * ॥
स्निग्धे गुदे तान्यनुलोमयन्ति
नरस्य वर्च्चोऽनिलमूत्रसङ्गम् ।
तेषां विघाते तु भिषग्विदध्यात्

मरः ॥ दानम् । वाद्यविशेषः । इति शब्दरत्नावली ॥
काव्यालङ्कारभेदः । इति मेदिनी ॥ (यदुक्तं साहित्य-
दर्पणे । १० म परिच्छेदे । १११ ।
"लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते ।
यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत्" ॥)

**उदानः**, पुं, (उदूर्द्ध्वेन आनिति अनेन । उत् + आङ् +

अन् + घञ् ।) कण्ठस्थवायुः । इत्यमरः ॥ तस्य कर्म्म ऊद्‌र्ध्वनयनम् । इति श्रीधरस्वामी ॥
(यथा, सङ्गीतरत्नाकरे, १ । ६४ ।
"उदानः पादयोरास्ते हस्तयोरङ्गसन्धिषु ।
कर्म्मास्य देहोन्नयनोत्क्रमणादि प्रकीर्त्तितम्" ॥)
"ऊद्‌र्ध्व गमनवान् कण्ठस्थानीयोत्क्रमणवायुः" ।
इति वेदान्तः ॥ (तथा चोक्तम् ।
"हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः ।
उदानः कण्ठदेशे स्यात् व्यानः सर्व्वशरीरगः" ॥
"उदानो नाम यस्तूर्द्ध्वमुपैति पवनोत्तमः" ।
इति महाभारते वनपर्व्वणि ॥
प्रकुपितोदानस्य लक्षणं यथा ।
"हिक्का श्वासः परिश्वासः कासः शोषार्त्तिघण्टिकाः ।

प्रतिगृह्यवचो विससर्ज मुनिम्" । इति रघुः । ८ । ९१ ॥)

**उदावत्सरः**, पुं, संवत्सरादिपञ्चान्तर्गतवत्सरविशेषः ।

अस्मिन् वर्षे रौप्यदानं महाफलम् । इति विष्णु-
धर्म्मोत्तरम् ॥

**उदावर्त्तः**, पुं, (उत् + आङ् + वृत् + घञ् ।) रोग-

विशेषः । तत्पर्य्यायः । गुदग्रहः २ । इति हेम-
चन्द्रः ॥ मलमूत्रवायुरोधकरोगः तस्य निदानं संप्राप्तिश्च । यथा निदाने ।
"वातविण्मूत्रजृम्भास्रुक्षवोद्गारवमीन्द्रियम् ।
क्षुत्तृष्णोच्छ्वासनिद्राणां धृत्योदावर्त्तसम्भवः" ॥
(अपरञ्चास्य सनिदानसंप्राप्तिक लक्षणं यथा, --
"कषायतिक्तोषणरूक्षभोज्यैः
सन्धारणाभोजनमैथुनैश्च ।

स्वभ्यक्तसुस्विन्नतनोर्निरूहम् ॥
ऊद्‌र्ध्वानुलोमौषधमूत्रतैल-
क्षाराम्ल-वातघ्नयुतं सुतीक्ष्णम् ॥ * ॥
वातेऽधिकेऽम्लं लवणं सतैलं
क्षीरेण पित्ते तु कफे समूत्रम् ।
समूत्रवर्च्चोऽनिलसङ्गमाशु
गुदं शिराश्च प्रगुणीकरोति ॥ * ॥
त्रिवृत्सुधापत्रतिलादिशाकं
ग्राम्यौदकानूपरसैर्यवान्नम् ।
अन्यैश्च सृष्टानिलमूत्रविड्भि-

:रद्यात् प्रसन्नागुडसीधुपायी ॥ * ॥

भूयोऽनुबन्धे तु भवेद्विरेच्यो
मूत्रप्रसन्नादधिमण्डयुक्तैः” ॥ * ॥
द्विरुत्तरं हिङ्गुवचाग्निकुष्ठं
सुवर्च्चिका चैव विडङ्गचूर्णम् ।
सुखाम्बुनानाहविसूचिकार्त्ति-
हृद्रोगगुल्मोद्र्ध्वसमीरणघ्नम् ॥ * ॥
वचाभयाचित्रकयावशूकान्
सपिप्पलीकातिविषान् सकुष्ठान् ।
उष्णाम्बुनानाहविमूढवातान्
पीत्वा जयेदाशु रसौदनाशी” ॥ * ॥
इति चिकित्सास्थाने षड्विंशेऽध्याये
चरकेणोक्तम् ॥
सुश्रुतेनोत्तरतन्त्रे ५५ अध्यायेऽस्य
सनिदानसम्प्रा-
प्तिकं लक्षणं चिकित्सा चेति यदुक्तं तद्यथा ।
“अधश्चोद्र्ध्वञ्च भावानां प्रवृत्तानां स्वभावतः ।
न वेगान् धारयेत् प्राज्ञो वातादीनां जिजीविषुः ॥
वातविण्मूत्रजृम्भाश्रुक्षवोद्गारवमीन्द्रियैः ।
व्याहन्यमानैरुदितैरुदावर्त्तो निरुच्यते ॥
क्षुत्तृष्टा-श्वास-निद्राणामुदावर्त्तो विधारणात् ।
तस्याभिधास्ये व्यासेन लक्षणञ्च चिकित्सितम् ॥
त्रयोदशबिधश्चासौ भिन्न एतैस्तुकारणैः ।
अपथ्यभोजनाच्चापि वक्ष्यते च यथापरः ॥
आध्मानशूलौ हृदयोपरोधं
शिरोरुजं श्वासमतीवहिक्काम् ।
कास-प्रतिश्याय-गलग्रहांश्च
बलासपित्तप्रसरञ्च घोरम् ॥
कुर्य्यादपानाभिहतः खमार्गे
हन्यात् पुरीषं मुखतः क्षिपेद्वा ॥ १ ॥
आटोपशूलौ परिकर्त्तनञ्च
सङ्गः पुरीषस्य तथोद्र्ध्ववातः
पुरीषमास्यादथवा निरेति
पुरीषवेगेऽभिहते नरस्य ॥ २ ॥
मूत्रस्य वेगेऽभिहते नरस्तु
कृच्छ्रेण मूत्रं कुरुतेऽल्पमल्पम् ।
मेढ्रे गुदे वङ्क्षणमुष्कयोश्च
नाभिप्रदेशेष्वथवापि मूद्र्ध्नि ॥
आनद्धवस्तिश्च भवन्ति तीव्राः
शूलाश्च शूलैरिव भिन्नमूर्त्तेः ॥ ३ ॥
मन्यागलस्तम्भशिरोविकारा
जृम्भोपघातात् पवनात्मकाः स्युः ।
छर्द्देर्विघातेन भवेच्च कुष्ठं
येनैव दीषेण विदग्धमन्नम् ॥ ८ ॥
मूत्राशये वा गुदमुष्कयोश्च
शोफो रुजा मूत्रविनिग्रहश्च ।
शुक्राश्मरी तत्स्रवणं भवेद्वा
ते ते विकारा विहते तु शुक्रे ॥ ९ ॥
तन्त्राङ्गमर्द्दावरुचिः श्रमश्च
क्षुधोऽभिघातात् कृशता च दृष्टेः ॥ १० ॥
कण्ठास्यशोषः श्रवणावरोध-
स्तृष्णाभिघाताद्धृदये व्यथा च ॥ ११ ॥
श्रान्तस्य निश्वासविनिग्रहेण
हृद्रोगमोहावथवापि गुल्मः ॥ १२ ॥
जृम्भाङ्गमर्द्दोऽङ्गशिरोऽक्षिजाड्यं
निद्राभिघातादथवापि तन्द्रा” ॥ १३ ॥
अरिष्टलक्षणं यथा,
“तृष्णार्द्दितं परिक्लिष्टं क्षीणं शूलैरभिद्रुतम् ।
शकृद्वमन्तं मतिमानुदावर्त्तिनमुत्सृजेत् ॥
अस्य चिकित्सा यथा,
“सर्व्वेष्वेतेषु विधिवदुदावर्त्तेषु कृत्स्नशः ।
वायोः क्रिया विधातव्या स्वमार्गप्रतिपत्तये ॥
सामान्यतः पृथक्त्वेन स्त्रियां भूयो निबोध मे ।
आस्थापनं मारुतजे स्निग्धे स्विन्ने विशिष्यते ॥
१ ॥
पुरीषजे तु कर्त्तव्यो विधिरानाहिको भवेत् ॥ २ ॥
सौवर्च्चलाढ्यां मदिरां मूत्रेष्वभिहते पिबेत् ।
एलामप्यथ मद्येन क्षीरं वापि पिबेन्नरः” ॥ ३ ॥
“स्नेहस्वैदैरुदावर्त्तं जृम्भाजं समुपाचरेत् ॥ ४ ॥
अश्रुमोक्षोऽश्रुजे कार्य्यः स्निग्धस्विन्नस्य देहिनः
॥ ५ ॥
तीक्ष्णाञ्जनावपीडाभ्यां तीक्ष्णगन्धोपसिंहनैः ।
वर्त्तिप्रयोगैरथवा क्षवशक्तिं प्रवर्त्तयेत् ॥
तीक्ष्णौषधप्रधमनैरथवादित्यरश्मिभिः ॥ ६ ॥
उद्गारजे क्रमोपेतं स्नैहिकं धूममाचरेत् ।
सुरां सौवर्चलवतीं वीजपूर्णरसान्विताम् ॥ ७ ॥
छर्द्याघातं यथा दोषं सम्यक् स्नेहादिभिर्जयेत् ।
सक्षारलवणोपेतमभ्यङ्गं वात्र दापयेत् ॥ ८ ॥
वस्तिशुद्धिकरावापञ्चतुर्गुणजलम्पयः ।
आवारिनाशात् क्वथितं पीतवर्णं प्रकामतः ।
रमयेयुः प्रिया नार्य्यः शुक्रोदावर्त्तिनं नरम् ॥ ९ ॥
क्षुद्विघाते हितं स्निग्धमुष्णमल्पञ्च भोजनम् ॥
१० ॥
दोषतो भिन्नवर्च्चस्कं भुक्तञ्चाप्यनुवासयेत् ।
नचेच्छान्तिं प्रयात्येवमुदावर्त्तः सुदारुणः ॥
अथैनं बहुशः स्विन्नं युञ्ज्यात् स्नेहविरेचनैः ।
पाययेत त्रिवृत्पीलुयवानीरम्लपानकैः” ॥
“देवदार्व्वग्निकं कुष्ठं वचाम्पथ्यां पलङ्कषाम् ।
पौष्कराणि च मूलानि तोयस्यार्द्धाढकं पचेत् ॥
पादावशिष्टं तत्पीतमुदावर्त्तं व्यपोहति” ॥
घृतं यथा ।
“मूलकं शुष्कमाद्रञ्च वर्षाभूः पञ्चमूलकम् ॥
आरेवतफलञ्चाप्सु पक्त्वा तेन घृतम्पचेत् ।
तत्पीयमानं शमयेत् उदावर्त्तमशेषतः” ॥ * ॥
“चूर्णं निकुम्भकम्पिल्लश्यामेक्ष्वाक्वग्निकोद्भवम् ।
कृनवेधनमागध्यो लवनाणाञ्च साधयेत् ॥
गवां मूत्रेण ता वर्त्तीः कारयेत्तु गुदानुगाः” ।
वैद्यकरसेन्द्रसारसङ्ग्रहे यच्चिकित्सितं तद्यथा ॥
“त्रिकटुपारदं पथ्याकालकफलं द्विगुणं ।
थानकुलीनां स्वरसैर्गुडिका कार्य्याम्लरोल्यास्तु
॥
प्रबलजलोदरगुल्मज्वरपाण्डामयनाशिनी ।
प्रोक्ता तिमिराणिपटलविद्रधिप्रबलोदावर्त्तहरी ॥
क्रिमिकोष्ठगात्रकण्डूपिडकाश्च निहन्ति शूलचयं ।
शुद्धगुडिका कथिता भुवने श्रीवैद्यनाथाख्या” ॥
इति वैद्यनाथवटिका ॥ * ॥
अत्र अपथ्यानि यथा ।
“वमनं वेगरोधञ्च शमीधान्यानि कोद्रवम् ।
नालीतशाकं शालूकं जाम्बवं कर्कटीफलम् ॥
पिण्याकमालुकं सर्व्वं करीरं पिष्टवैकृतम् ।
विष्टम्भीनि विरुद्धानि कषायाणि गुरूणि च ॥
उदावर्त्ती प्रयत्नेन व्रर्जयेत् सततं नरः ।
इति वैद्यकपथ्यापथ्यविधिः ।)

**उदासः**, पुं, (उदस्यते इति । उत् + अस् + घञ् ।)
उत्क्षेपः । उद्भावः । औदास्ययुक्ते, त्रि ॥

**उदासीनः**, पुं, (उदास्ते इति । उत् + आस् + शानच्
+ ईदास इति ईत्वम् ।) परतरः । इत्यमरः ॥
विजिगीषोः शत्रुमित्रभूमितो व्यवहितः व्यव-
हितत्वादेव नोपकारी नाप्यपकारी केवलमूद्र्ध्व-
मासीन इव । इति भरतः ॥ (यथा, मनुः ७ ।
१५५ ।
“मध्यमस्य प्रचारञ्च विजिगिषोश्च चेष्टितम् ।
उदासीनप्रचारञ्च शत्रोश्चैव प्रयत्नतः” ॥
मण्डलभेदः । यथा, तत्रैव ७ । १५८ ।

श्रोत्राननघ्राणविलोचनोत्था
भवन्ति तीव्राश्च तथा विकाराः ॥ ४ ॥
आनन्दजं शोकसमुद्भवं वा
नेत्रोदकं प्राप्तममुञ्चतो हि ।
शिरोगुरुत्वं नयनामयाश्च
भवन्ति तीव्राः सह पीनसेन ॥ ५ ॥
भवन्ति गाढं क्षवथोर्विघाता-
च्छिरोऽक्षिनासाश्रवणेषु रोगाः ।
कण्ठास्यपूर्णत्वमतीवतोदः
कूजश्च वायोरथवा प्रवृत्तिः ॥ ६ ॥
उद्गारवेगेऽभिहते भवन्ति
जन्तोर्विकाराः पवनप्रसूताः ॥ ७ ॥

तृष्णाघाते पिबेन्मन्थं यवागूं वापि शीतलां ॥ ११ ॥
भोज्यो रसेन विश्रान्तः श्रमश्वासातुरो नरः ॥ १२ ॥
निद्राघाते पिबेत् क्षीरं स्वप्याच्चेष्टकथारतः” ॥ १३ ॥
अपरञ्च सनिदानसम्प्राप्तिकं लक्षणं चिकित्सा च ॥
“वायः कोष्ठानुगो रूक्षैः कषायकटुतिक्तकैः ।
भोजनैः कुपितः सद्य उदावर्त्तं करोति हि ॥
वातमूत्रपुरीषासृक्कफमेदोवहानि व ।
स्रोतांस्युदावर्त्तयति पुरीषञ्चातिवर्त्तयेत् ॥
ततोहृद्बस्तिशूलार्त्तो गौरवारुचिपीडितः ।
वातमूत्रपुरीषाणि कृच्छ्रेण कुरुते नरः ॥
श्वासकासप्रतिश्यायदाहमोहवमिज्वरान् ।
तृष्णाहिक्काशिरोरोगमनःश्रवणविभ्रमान् ॥
लभते च बहूनन्यान् विकारान् वातकोपजान् ।
तत्तैललवणाभ्यक्तं स्निग्धं स्विन्नं निरूहयेत् ॥

“अनन्तरमरिं विद्यादरिसेविनमेव च ।
अरेरनन्तरं मित्रमुदासीनं तयोः परम्” ॥
उपेक्षकः । यथा, --
“उदासीनवदासीनमसक्तं तेषु कर्म्मसु” । इति गीतायाम् ॥ ९ । ९ ॥)

**उदास्थितः**, पुं, (उत् + आङ् + स्था + क्त ।) चरः ।

द्वारपालः । अध्यक्षः । इति हेमचन्द्रः ॥ प्रव्रज्या-वसितः । नष्टसन्न्यासः । इति मेदिनी ॥

**उदाहरणं**, क्ली, (उत् + आङ् + हृ + ल्युट् ।)

दृष्टान्तः । तत्पर्य्यायः । उपोद्घातः २ उदाहारः ३ इति शब्दरत्नावली ॥ (यथा, माघे । २ । ३३ ।
“प्रध्वंसितान्धतमसस्तत्रोदाहरणं रविः” ।
कथाप्रसङ्गः । कथनम् । यथा, कुमारे । ६ । ६५ ॥

:"अथाङ्गिरसमग्रण्यमुदाहरणवस्तुषु" ॥)

पञ्चन्यायावयवान्तर्गतमिदम् ॥ (नाट्यशास्त्रे सोत्क-
र्षवचनोपन्यासरूपो गर्भाङ्कभेदः । यदुक्तं साहि-
त्यदर्पणे ६ ष्ठ परिच्छेदे ।
"उदाहरणमुत्कर्षयुक्तं वचनमुच्यते" ।
यथा, वेणीसंहारे अश्वत्थामाङ्के ॥
"यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदात्पाण्डवीनां
चमूनां, यो यः पाञ्चालगोत्रे शिशुरधिकवया
गर्भशय्यां गतो वा । यो यस्तत्कर्म्मसाक्षी चरति
मयि रणे यश्च यश्च प्रतीपः, क्रोधान्धस्तस्य
तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम्" ॥
षट्त्रिंशन्नाटकलक्षणान्तर्गतलक्षणभेदः । यथा,
साहित्यदर्पणे ६ ष्ठ परिच्छेदे ।
"यत्र तुल्यार्थयुक्तेव वाक्येनाभिप्रदर्शनात् ।
साध्यतेऽभिमतश्चार्थस्तदुदाहरणं मतम् ॥)

**उदाहारः**, पुं, (उत् + आ + हृ + घञ् ।) उदा-
हरणं । इत्यमरः ॥ प्रकृतोपपादकदृष्टान्तादिः ।
इति भरतः ॥ युक्तिप्राप्त्यर्थनिदर्शनं इति साङ्गः ॥
प्रकृतसिद्धार्था चिन्ता । इति रायमुकुटः ॥

**उदितः**, त्रि, (वद् + क्त । यद्वा । उत् + इण + क्त ।)
उक्तः । (यथा, किराते । १ । २८ ।
"भवादृशेषु प्रमदाजनोदितं
भवत्यधिक्षेपैवानुशासनम्" ॥)
बद्धः । इत्यमरः ॥ उद्गतः । प्राप्तोदयः । इति
मेदिनी ॥ (यथा, रामायणे ।
"उदयादुदितं दीप्तं ज्वालापिण्डसमप्रभम्" ॥
"उदितेऽनुदिते चैव समयाध्युषिते तथा" ।
इति मनुः । २ । १५ ॥ तथा, किराते । ५ । ५ ।
"दधतमुज्वशिलान्तरगोपुराः,
पुर इवोदितपुष्पवना भुवः" ॥)

**उदितोदितः**, त्रि, (उदिते कथिते शास्त्रे उदितः
अभ्यदितः ।) शास्त्रज्ञः । इति स्मृतिः ॥
("पुरोहितञ्च कुर्व्वीत दैवज्ञमुदितोदितम् ।
दण्डनीत्याञ्च कुशलमथर्व्वाङ्गिरसे तथा" ॥
इति याज्ञवल्क्यः ॥)

**उदीची**, स्त्री, (उत् उत्तरं अञ्चत्यर्कं । उत्क्रान्तं
दृष्टिपथं अञ्चति सूर्य्यं वा । उद ईदित्यञ्चेरत
ईकारः । ऋत्विगादिना क्विन् । उगितश्चेति
ङीप् ।) उत्तरा दिक् । इत्यमरः ॥
तथा, महाभारते युधिष्ठिरप्रबोधने ८ । ७० । ३४
॥
"हता उदीच्या निहताः प्रतीच्याः
प्राच्या निरस्ता दाक्षिणात्या विशस्ताः" ॥)

**उदीरणं**, क्ली, (उत् + ईर + ल्युट् ।) कथनम् । इति
हलायुधः ॥ (यथा, कुमारे २ । १२ ।
("उद्घातः प्रणवो यासां न्यायैस्त्रिभिरुदीरणम्" ॥
प्रेरणम् । क्षेपणम् ।
"ब्रह्मास्त्रोदीरणात् शत्रोर्देवदानवकिन्नराः" ।
इति महाभारते ॥)

**उदीर्णः**, त्रि, (उत् + ऋ + क्त ।) उदारः । महान् ।
इति जटाधरः ॥
("न हि राज्ञामुदीर्णानामेवम्भूतैर्नरैः क्वचित् ।
सख्यं भवति मन्दात्मन् ! श्रिया हीनैर्धनच्युतैः"
॥
इति महाभारते ॥ उत्तेजितः । उद्दीपितः ।
उद्धतः । यथा, कुमारे २ । ३२ ।
"भवल्लब्धवरोदीर्णस्तारकाख्यो महासुरः" ।
"ब्रह्म क्षत्रेण संसृष्टं क्षत्रं च ब्रह्मणा सह ।
उदीर्णेदहतः शत्रून् वनानीवाग्निमारुतौ" ॥
इति महाभारते । पुं, विष्णुः । यथा, महा-
भारते विष्णुसहस्रनामकथने १३ । १४९ । ८०
।
"उदीर्णः सर्व्वतश्चक्षुरनीशः शाश्वतः स्थिरः"
॥)

**उदुम्बरं**, क्ली, (उं शम्भुं वृणोतीति उम्बरम् । उ + वृ +
संज्ञायां खच् । अरुर्द्विषदिति मुम् । उत्कृष्टमु-
म्बरम् ।) ताम्रम् । इत्यमरः ॥ (ताम्रशब्देऽस्य
विशेषो ज्ञेयः ॥)

**उदुम्बरः**, पुं, उडम्बरवृक्षः । यज्ञडुमुर इति भाषा ।
तत्पर्य्यायः । क्षीरवृक्षः २ हेमदुग्धः ३ सदाफलः
४
कालस्कन्धः ५ यज्ञयोग्यः ६ यज्ञीयः ७ सुप्रति-
ष्ठितः ८ शीतवल्कः ९ जन्तुफलः १०
पुष्पशून्यः
११ पवित्रकः १२ सौम्यः १३ शीतफलः १४ ।
अस्य
पक्वफलगुणाः । सधुरत्वम् । हिमत्वम् । कृमि-
कारित्वम् । रक्तपित्ततृष्णामूर्च्छादाहनाशित्वञ्च ।

**उदुम्बरपर्णी**, स्त्री, (उदुम्बरस्य पर्णमिव पर्णमस्याः ।)
उडम्बरपर्णी । दन्तिकावृक्षः । इत्यमरः ॥
(अस्याः
पर्य्यायाश्चरकेण कल्पस्थाने १२ अध्याये
उक्ताः ।
यथा, --
"दन्त्युदुम्बरपर्णी स्यान्निकुम्भोऽथ मुकूलकः"
॥)

**उदूखलं**, क्ली, (उदूदूर्ध्वञ्च तत् खञ्च । तत् लाति ।
आतोनुपेति कः । पृषोदरादित्वात् साधुः ।)
गुग्गुलुः । इति मेदिनी ॥
तण्डुलकण्डनार्थकाष्ठनि-
र्म्मितपात्रम् । उखलि इति भाषा । तत्पर्य्यायः ।
उलूखलं २ । इत्यमरः ॥ ("संकुट्योदूखले
विद्वान्"
इत्यादिप्रयोगो भावप्रकाशादौ द्रष्टव्यः ॥)

**उदूढः**, त्रि, (उत् + वह + क्तः ।) ऊढः । स्थूलः ।
इति मेदिनी ॥ (यथा, माघे । १ । ३६ ।)
"उदूढलोकत्रितयेन साम्प्रतम्
गुरुर्धरित्री क्रियतेतरां त्वया" ॥)

**उद्गतं**, त्रि, (उत् + गम + क्त ।) उद्वान्तम् । छर्द्दित-
वस्तु । इत्यमरः ॥ ऊद्र्ध्वं गतम् । उदितम् ॥

**उद्गमः**, पुं, (उत् + गम + अप् ।) ऊद्र्ध्वगमनम् ।
उदयः ॥ (आविर्भावः । यथा, कुमारे । ७ । ७७
॥
"रोमोद्गमः प्रादुरभूदुमायाः
स्विन्नाङ्गुलिः पुङ्गवकेतुरासीत्" ।
"फलेन सहकारस्य पुष्पोद्गम इव प्रजाः" ॥
इति रघुवंशे । ४ । ९ ॥ प्रस्थानं वहिर्गमनम् ।
"तनयानां क्षुधार्त्तानां पश्यन् प्राणोद्गमव्यथाम्"
।
इति कथासरित्सागरे ४ तरङ्गे ॥)

**उद्गमनीयं**, क्ली, (उत् + गम + अनीयर् ।) धौत-
वस्त्रद्वयं । इत्यमरः ॥ धोया योड इति भाषा ।
("सा मङ्गलस्नानविशुद्धगात्री
गृहीतपत्युद्गमनीयवस्त्रा" ।
इति कुमारे । ७ । ११ ॥)

**उद्गाढं**, क्ली, (उत् + गाह + क्त ।) अतिशयः । तद्-

("यदोदीच्यां गतिर्भानोस्तदा सूर्य्यबलाधिकम्" ॥
इति हारीतोत्तरे प्रथमस्थाने चतुर्थेऽध्याये ॥)

**उदीचीनं**, त्रि, (उदीची + ख ।) उदीच्यां भवं । उत्तर-

दिग्जातवस्तु । इति हेमचन्द्रः ॥ (यथा, शतपथ-
ब्राह्मणे १३ । ८ । १ । ६ । "उदीचीनप्रवणे
करोत्यु
दीची वै मनुष्याणां दिक्" ॥)

**उदीच्यं**, क्ली, (उदीच्यां भवम् । उदीची + यत् ।)

बालनामगन्धद्रव्यं । इत्यमरः ॥ बाला इति
ख्यातम् ।
(बालकशब्देऽस्य गुणादयो बोद्धव्याः ॥)

**उदीच्यः**, पुं, (उदीच्यां भवः । उदीची + यत् ।)

शरावतिनद्याः पश्चिमोत्तरदेशः । इत्यमरः ॥
(तद्देशवासिनि त्रि, यथा, रघौ ४ । ६६ ।
"शरैरस्नैरिबोदीच्यानुद्धरिष्यन् रसानिव" ॥

अस्य सुपक्वफलगुणाः । अतिशयशीतलत्वम् ।
मधु-
रत्वम् । पित्तश्रमशोषहारित्वञ्च । अस्यामफल-
गुणाः । कषायत्वम् । अग्निदीपनत्वम् । रक्त-
विकारित्वञ्च ॥ अस्य त्वग्गुणाः । शीतत्वम् ।
कषायत्वम् । व्रणनाशित्वम् । गर्भिणीगर्भसंरक्षक-
त्वम् । स्तनदुग्धदातृत्व ञ्च । इति राजनिर्घण्टः ॥
(अस्य पर्य्यायगुणौ यथा ।
"उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ।
उदुम्बरो हिमो रूक्षो गुरुः पित्तकफास्रजित् ॥
मधुरस्तुवरो वर्{??} व्रणशोधनरोपणः" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे १ म भागे
वटादिवर्गे ॥
अस्य फलगुणांश्चाह चरकः सूत्रस्थाने सप्तविंशे-
ऽध्याये यथा, --
"अश्वत्थोदुम्बरप्लक्षन्यग्रोधानां फलानि च ।
कषायमधुराम्लानि वातलानि गुरूणि च ॥ * ॥)
कुष्ठविशेषः । देहली । गोवराटेर नीचेर काठ्
इति भाषा । पण्डकः । नपुंसकं । इति हेमचन्द्रः
॥

**उदुम्बरदला**, स्त्री, (उदुम्बरस्य दलमिव दलमस्याः ।)

दन्तीवृक्षः । इति राजनिर्घण्टः ॥ (अस्या
गुणादयो
दन्तीशब्दे ज्ञेयाः ॥)

युक्ते त्रि । इत्यमरः ॥ ("प्रेमार्द्राः प्रणयस्पृशः
परिचयादुद्गाढरागोदयाः" । इति साहित्य-
दर्पणे । ३ य परिच्छेदे ॥)

**उद्गाता**, [ऋ] पुं, (उद्गायति साम यः । उत् +

गै + तृच् ।) सामवेदज्ञः । सामवेदविद्ब्राह्मणः
इत्यमरः ॥
("ब्रह्माणं परमं वक्त्रादुद्गातारञ्च सामगम् ।
होतारमथ चाध्वर्य्युं बाहुभ्यामसृजत्प्रभुः" ॥
इति हरिवंशे । तथा च मनुः । ८ । २०९ ।
"होता वापि हरेदश्वमुद्गाता चाप्यनःक्रये" ॥
"उद्गातृहोतृब्रह्माणो यथाध्वर्य्युं विनाध्वरे" ।
इति सुश्रुते सूत्रस्थाने चतुस्त्रिंशेऽध्याये ॥)

**उद्गारः**, पुं, (उत् + गॄ + घञ् ।) उद्वमनम् । इत्य-

मरः ॥ (यथा, रघौ । ६ । ६० ।
"आभाति बालातपरक्तसामुः
सनिर्झरोद्गार इवाद्रिराजः" ॥)
शब्दः । इति भरतः ॥ (यथा महाभारते ३ ।
"तस्य लाङ्गूलनिनदं पर्ब्बतः स गुहामुखैः ।
उद्गारमिव गौर्नदन्नुत्ससर्ज समन्ततः" ॥)
कण्ठगर्ज्जनं । इति जटाधरः ॥ ढेकुर इति
भाषा ।
तत्तु नागवायुकर्म्म । इति श्रीधरस्वामी ॥
(स्रावः ।

:क्षरणम् । यथा, रघौ । ४ । ५३ ।

"खर्ज्जूरीस्कन्धनद्धानां मदोद्गारसुगन्धिषु ।
कटेषु करिणां पेतुः पुन्नागेभ्यः शिलीमुखाः" ।
"अधः प्रतिहतो वायुः श्लेष्मणा मारुतेन च" ।
"करोत्युद्गारबाहुल्यम्" इति भावप्रकाशे मध्य-
खण्डे वातरोगाधिकारे ॥ वमनप्रकारादिकं वमन-
शब्दे द्रष्टव्यम् ॥ यथा, शारदातिलकटीकायां, --
"उद्गारे नागैत्युक्तो नीलजीमूतसन्निभः" ॥)
द्गीतं, त्रि, (उदुच्चैर्गीयते स्म । उत् + गै + क्त ।)
उच्चैर्गीतम् । इति देवीमाहात्म्यम् ॥ (यथा, --
मार्कण्डये ८४ । ९ ।
"शब्दात्मिकासुविमलर्ग्यजुषां निधान-
मुद्गीतरम्यपदपाठवताञ्च साम्नाम्" ॥)

**उद्गीथः**, पुं, (उत् + गै + थक् ।) सामवेदभेदः ।
प्रणवः । इत्यमरटीकायां भरतः ॥
("अस्मिन्नगस्त्यप्रमुखाः प्रदेशे
भूयांस उद्गीथविदो वसन्ति" ॥
इति उत्तररामचरिते । २ याङ्के" ।)
सामवेदध्वनिः । इत्यरुणः ॥ सामगानम् । इति
सारसुन्दरी ॥ साम्नां द्वितीयोऽध्यायः । इति भगी-
रथः ॥ (भवपुत्त्रः । इति विष्णुपुराणम् ॥)

**उद्गूर्णं**, त्रि, (उत् + गूर + क्त ।) उद्यतम् । इत्य-
मरः ॥ उत्तोल्यधृतवस्त्रादि । इति भरतः ॥

**उद्ग्राहः**, पुं, (उत् + ग्रह + घञ् ।) उद्ग्रहणम् ।
ऊद्ध्वींकृत्य कस्यचित् ग्रहणम् । इत्यमरः ॥ विद्या-
विचारः । इति भरतः ॥

**उद्ग्राहितः**, त्रि, (उत् + ग्रह + णिच् + क्त ।)
उदीर्णः । बद्धः । ग्राहितः । इति मेदिनी ॥ उप-
न्यस्तः । इति हेमचन्द्रः ॥

**उद्घः**, पुं, (उद्घन्यते इति । उत् + हन् + कर्म्मणि
अप् । टिलोपात् घत्वं च निपातनात् । यद्वा
उद्घन्ति नीचताम् । उत् + हन् + ड ।) प्रशस्तः ।
प्रकाण्डः । इत्यमरः ॥ (हस्तपुटम् । अग्निः ।
शरीरस्थो वायुः ॥)

(उद्घाटनम् ॥)

**उद्घाटकं**, क्ली, (उत् + घट् + णिच् + ण्वुल् ।) कूपा-
ज्जलोत्तोलनार्थयन्त्रविशेषः । तत्पर्य्यायः । घटी-
यन्त्रम् २ । इति हेमचन्द्रः ॥

**उद्घाटनं**, क्ली, (उत् + घट् + णिच् + ल्युट् ।) कूपात्
जलोत्तोलनार्थं रज्जुसहितघटः । तत्पर्य्यायः ।
घटीयन्त्रम् २ । इत्यमरः ॥ उत्तोलनम् । इति
भरतः ॥ (यथा, हितोपदेशे । मित्रप्राप्तौ ॥
"धर्म्मं यो न करोति निश्चलमतिः स्वर्गार्गलोद्-
घाटनम्" ॥)

**उद्घाटितः**, त्रि, (उत् + घट् + णिच् + क्त ।) कृतो-
द्घाटनम् । खोला इति भाषा ॥
("मृहेऽनुद्घाटितद्वारि नाहूतः प्रविशेन्नरः ।
वारितार्थप्रवक्तापि पञ्चाहमशनं त्यजेत्" ॥
इति स्मृतिः ॥ तन्त्रशास्त्रम् ॥)

**उद्घाटितज्ञः**, त्रि, (जानाति इति ज्ञः । उद्घाटितस्य
ज्ञः । उद्घाटित + ज्ञा + क ।) प्राज्ञः । इति
त्रिकाण्डशेषः ॥

**उद्घातः**, पुं, (उत् + हन् + घञ् ।) आरम्भः । इत्य-
मरः ॥ (यथा, कुमारे २ । १२ ।
"उद्घातः प्रणवो यासां न्यायस्त्रिभिरुदीरणम्" ।
"आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः" ।
इति रघुवंशे । ४ । २० ॥) शस्त्रम् । ग्रन्थपरि-
च्छेदः । इति त्रिकाण्डशेषः ॥ पादस्खलनम् ।
("ययावनुद्घातसुखेनमार्गम्" । इति रघुः । २ ।
७२ ।
"रथेनानुद्घातस्तिमितगतिना" । इति शाकुन्तले ।
६ अङ्के ॥ समुपक्रमः । पवनाभ्यासयोगाय कुम्भ-
कादित्रयम् । उत्तुङ्गः । (यथा, रामायणे ४ काण्डे
"पृथुशृङ्गशिलोद्घातः" । इति ॥) मुद्गरम् ।
इति मेदिनी ॥

**उद्झ**, श त्यागे । इति कविकल्पद्रुमः ॥ (तुदां-परं-
सकं-सेट् ।) ह्रस्वादिर्दन्त्यवर्गतृतीयोपधः । क्विपि

इति रामायणे ॥) महान् । यथा । "उद्दामदन्तुर-
विधुन्तुददन्तघातैः" । इति प्रव्रज्या ॥
("उद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि" ।
इति मेघदूते । २७ ॥ गम्भीरः । यथा भागवते
१ मस्कन्धे । "उद्दामभावपिशुनामलवद्ग्रहासु"
॥)

**उद्दामः**, पुं, (उद्दीप्तं दाम पाशो यस्य । समासे अच् ।)
वरुणः । इति मेदिनी ॥ (दण्डकभेदच्छन्दोविशेषः ।
यथा, वृत्तरत्नाकरे ।
"यदि नयुगलं ततः सप्तरेफा-
स्तदां दण्डवृद्धिप्रयातो भवेद्दण्डकः ।
प्रतिचरणविवृद्धरेफाः स्युरर्णार्णव-
व्यालजीमूतलीलकरोद्दामशङ्खादयः" ॥)

**उद्दालः**, पुं, (उत् + दल + घञ् ।) बहुवारकवृक्षः ।
इत्यमरः ॥ वनकोद्रवः । इति रत्नमाला ॥

**उद्दालकः**, पुं, (उद्दाल एव । स्वार्थे कन् ।) बहुवा-
रकवृक्षः । इति शब्दरत्नावली ॥ (भुनिभेदः ।
स तु आयोदधौम्यस्य शिष्यः । तस्य नामोत्पत्ति-
रुक्ता महाभारते १ । पौष्योपाख्याने ३ अध्याये ।
"एतस्मिन्नन्तरे कश्चिदृषिर्धौम्यो नामायोदस्तस्य
शिष्यास्त्रयो बभूवुःउपमन्युरारुणिर्वेदश्चेति । २३
॥
स एकं शिष्यमारुणिं पाञ्चाल्यं प्रेषयामास गच्छ
केदारखण्डं बधानेति । २४ ॥ स उपाध्यायेन
संदिष्ट आरुणिः पञ्चाल्यस्तत्र गत्वा तत्केदारखण्डं
बन्धुं नाशकत् ॥ २५ ॥ स क्लिश्यमानोऽपश्य-
दुपायं भवत्वेवं करिष्यामीति ॥ २६ ॥ स तत्र
संविवेश केदारखण्डे शयाने च तथा तस्मिंस्तदु-
दकं तस्थौ ॥ २७ ॥ ततः कदाचिदुपाध्यायः
आयोदो धौम्यः शिष्यानपृच्छत् क्व आरुणिः पा-
ञ्चाल्यो गत इति ॥ २८ ॥ ते तं प्रोचुः भगवंस्त्वयैव
प्रेषितो गच्छ केदारखण्डं बधानेति । स एवमुक्त-
स्तान् शिष्यान् प्रत्युवाच तस्मात् तत्र सर्व्वे
गच्छामः यत्र स गत इति ॥ २९ ॥ स तत्र गत्वा
तस्याह्वानाय शब्दं चकार भो आरुणे पाञ्चाल्य
क्वासि वत्स एहीति ॥ ३० ॥ स तत् श्रुत्वारुणि-
रुपाध्यायवाक्यं तस्मात् केदारखण्डात् सहसो-

**उद्घनः**, पु, (ऊर्द्ध्यं हन्यतेऽस्मिन् । उत् + हन + अप् । निपातनात् हस्य घः ।) यत्र काष्ठे काष्ठं निधाय तक्ष्यते तत् । इत्यमरः ॥ परकाठ इति भाषा ॥ (यथा, भट्टिः ७ । ६२ ।
"तस्मिन्नन्तर्घने पश्यन् प्रधाने सौधसद्मनः ।
लौहोंद्घनघनस्कन्धा ललितापयनां स्त्रियम्" ॥)

**उद्घर्षणं**, क्ली, (उत् + घृष + ल्युट् ।) गात्रादिघर्षणं । इष्टकया उद्घर्षणगुणाः । कण्डुकोठनाशित्वम् । त्वग्गताग्नितेजनत्वम् । शिरासुखकारकत्वञ्च । इति राजवल्लभः ॥
("उद्घर्षणन्तु विज्ञेयं कण्डुकोठानिलापहम्" । इति चिकित्सितस्थाने चतुर्विंशेऽध्याये सुश्रुते-नोक्तम् ॥ समासकथनं । उद्देशः । यथा । शल्य-मिति ॥ इति सुश्रुते उत्तरतन्त्रे ६५ अध्याये ॥)

**उद्घसं**, क्ली, (उत् + अद् + अप् । घसादेशः ।) मांमम् । इति हारावली ॥

**उद्घाटः**, पुं, (उत् + घट् + घञ् ।) गृहभेदः । इति त्रिकाण्डशेषः ॥ चौकिर घर थाना इत्यादि भाषा । समुत्समुद्भ्याम् । स्यादौ नवद्र इति उज्जिझिषति
औज्जिझत् । श उज्झती उज्झन्ती । इति दुर्गादासः ॥

**उद्दंशः**, पुं, (उत् + दन्श + अच् ।) कीटविशेषः । तत्पर्य्यायः । मत्कुणः २ कोणकुणः ३ किटिभिः ४
उत्कुणः ५ । इति हेमचन्द्रः ॥

**उद्दण्डपालः**, पुं, (उद्दण्ड इव पाल्यते इति । उद्दण्ड + पाल + + घञ् ।) सर्पविशेषः । मत्स्यभेदः । इति मेदिनी ॥

**उद्दन्तुरः**, त्रि, (उत् अतिशयेन दन्तुरः ।) उत्तङ्गः । करालः । उत्कटदन्तः । इति मेदिनी ॥

**उद्दानं**, क्ली, (उत् + दो + ल्युट् ।) बन्धनम् । इत्य-मरः ॥ (यथा, महाभारते । शान्तिपर्ब्बणि ।
"उद्दाने क्रियामाणे तु मत्स्यानां तत्र रज्जुभिः" ।)
उद्गमः । चुल्ली । वाडवाग्निः । मध्यः । लग्नः । इति विश्वः ॥

**उद्दामः**, त्रि, (दाम्नः उद्गतः ।) बन्धनरहितः । स्वतन्त्रः । इति मेदिनी ॥ (यथा, रघुः । १ । ७८ ॥
"नदत्याकाशगङ्गायाः स्रोतस्युद्दामदिग्गजे" ॥
"अत्यङ्कुशमिवोद्दामं गजं मदजलोद्धतम्" ।
त्थाय तमुपाध्यायं उपतस्थे ॥ ३१ ॥ प्रोवाच चैनमुपाध्यायं अयमस्म्यत्र केदारखण्डे निःसर-माणमुदकमवारणीयं संरोद्धुं संविष्टो भगवत्-शब्दं श्रुत्वैव सहसा विदार्य्य केदारखण्डं भगवन्त-मुपस्थितः ॥ ३२ ॥ तदभिवादये
भगवन्तमाज्ञापयतु
भवान् किमर्थं करवाणीति ॥ ३३ ॥ स एवमुक्त-उपाध्यायः प्रत्युवाच यस्मात् भवान् केदारखण्डं विदार्य्य उत्थितस्तस्मात् उद्दालकएव नाम्ना भवि-ष्यतीत्युपाध्यायेनानुगृहीतः" । २४ ॥
अपरः स्वनामख्यात ऋषिभेदः । स तु श्वेतकेतु-पिता । यथा तत्रव कुन्तीपुत्रोत्पत्त्युनुज्ञाने १२२ ॥
"बभूवोद्दालको नाम महर्षिरिति नः श्रुतम् ।
श्वेतकेतुरिति ख्यातः पुत्रस्तस्याभवन् मुनिः" ॥ ९ ॥)

**उद्दितः**, त्रि, (उत् + दो + क्त ।) बद्धः । इत्यमर-टीकायां भरतः ॥

**उद्दीपकः**, त्रि, (उत् + दीप् + ण्वुल् ।) उद्दीपनकर्त्ता ॥

**उद्दीपनं**, क्ली, (उत् + दीप् + ल्युट् ।) प्रकाशनम् ॥

:विभावविशेषः । यथा, --

"आलम्बनोद्दीपनाख्यौ तस्य भेदावुभौ स्मृतौ ।
उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये" ॥ ते च ।
"आलम्बनस्य चेष्टाद्या देशकालादयस्तथा" ॥
चेष्टादीत्यादिशब्दात् रूपभूषणादयः । कालादि
इत्यादिशब्दात् चन्द्रचन्दनकोकिलालापभ्रमर-
झङ्कारादयः । इति साहित्यदर्पणे ॥ ३ य परि-
च्छेदः ॥)

**उद्दीप्तः**, त्रि, (उत् + दीप + क्त ।) प्रकाशितः ॥

**उद्दीप्रं**, क्ली, (उत् + दीप् + रक् ।) गुग्गुलुः । इत्य-
मरटीकायां भरतधृतवाचस्पतिः ॥

**उद्देशः**, पुं, (उत् + दिश् + घञ् ।) अनुसन्धानम् ।
अन्वेषणम् ॥ (न्यायमते नाम्ना निर्द्देशः । अभि-
धानं यथा, -- "पदार्थोद्देशः" । समासकथनम् ।
यथा, "समासकथनमुद्देशः । यथा, शल्यमिति" ॥
पर्ब्बतस्य गण्डकूपः । निर्द्देशः । विवरणम् ।
"इत्येष ते ग्रहोद्देशो मानुषाणां प्रकीर्त्तितः" ।
इति महाभारते । स्थानम् । प्रदेशः ।
"सपर्ब्बतवनोद्देशा दक्षिणार्थे स्वयम्भुवा" ।
इति महाभारते ॥)

**उद्देशकः**, त्रि, (उत् + दिश + ण्वुल् ।) उद्देशकर्त्ता ।
उदाहरणम् । इति लीलावती ॥

**उद्देश्यः**, त्रि, (उत् + दिश् + ण्यत् ।) उद्देष्टव्यः ।
उद्देशनीयः । प्रयोजनम् ॥ (यत् उद्दिश्य विधेयस्य
प्रवृत्तिः भवति तत् । अनुवाद्यम् ॥)

**उद्देहिका**, स्त्री, (उद्गतो देहो यस्याः ।) कीटविशेषः ।
तत्पर्य्यायः । उपजिह्विका २ उत्पादिका ३ वटिः
४ दिवी ५ । इति हारावली ॥

**उद्द्रावः**, पुं, (उद्द्रवणम् । द्रु + उदिश्रयतियौतिपूद्रव-
इति घञ् ।) पलायनम् । इत्यमरः ॥

**उद्धतः**, पुं, (उत् + हन् + क्त ।) राजमल्लः । इति
त्रिकाण्डशेषः ॥

**उद्धतं**, त्रि, (उत् + हन् + क्त ।) अविनीतम् । इति
हेमचन्द्रः ॥ (यथा, उत्तरचरिते षष्ठाङ्के ।
"धीरोद्धता नमयतीव गतिर्धरित्रीम्" ।
"मदमानसमुद्धतंनृपं न वियुङ्क्ते नियमेन मूढता"
।
दिनानि दीनोद्धरणोचितस्य" ॥
इति रघुः । २ । २५ ॥)

**उद्धर्षः**, पुं, (उद्गतो हर्षो यस्मिन् ।) उत्सवः । इत्य-
मरः ॥ (यथा, रामायणे । ४ काण्डे ।
"अशक्तोऽस्मि रणोद्धर्षे तपस्विशरणं गृहम्"
॥)

**उद्धर्षणं**, क्ली, (उत् + हृष् + ल्युट् ।) रोमाञ्चः । इति
हेमचन्द्रः ॥ (त्रि, आनन्दकरम् । रोमाञ्चकरम्
।)
(यथा रामायणे २ । २ । १ ॥
"ततः परिषदं सर्व्वामामन्त्र्य वसुधाधिपः ।
हितमुद्ध्वर्षणं चैवमुवाच प्रथितं वचः" ॥)

**उद्धवः**, पुं, (उद्धुनोति दुःखमिति । उत् + धूङ् + अच्
।)
उत्सवः । इत्यमरः ॥ यज्ञाग्निः । यादवविशेषः
।
इति मेदिनी ॥ यथा, श्रीभागवतम् ॥
"वृष्णीनां सम्मतो मन्त्री कृष्णस्य दयितः
सखा ।
शिष्यो वृहस्पतेः साक्षादुद्धवो बुद्धिसत्तमः" ॥

**उद्धानं**, क्ली, (उद्धीयतेऽस्मिन् । उत् + धा + ल्युट्
।)
चुल्ली । इत्यमरः ॥

**उद्धानः**, त्रि, (उत् + धा + ल्युट् ।) उद्गतः । वमितः
।
इति मेदिनी ॥

**उद्धान्तः**, पुं, (उद्धान्यते इति उत् + धन् + णिच् +
क्त ।) निर्मदहस्ती । इत्यमरः ॥ उद्वान्तः ।
इति
रमानाथः ॥

**उद्धारः**, पुं, (उत् + हृ + घञ् ।) ऋणम् । इत्यमरः ॥
उद्धृतिः । इति मेदिनी ॥ ("निमग्नस्य
पुनरुद्धार-
एव दुर्लभः" । इति वृहदारण्यकोपनिषत् ।
मोच-
नम् । यथा, शतपथब्राह्मणे १३ । ३ । ४ । २ ।
"अश्वस्य वयमुद्धारमुद्धरामहै" । मोक्षः ।
निर्व्वा-
त्रितैलालवङ्गकर्पूरकस्तूरोमरिचत्वचचूर्णम् । इति
पाकराजेश्वरः ॥

**उद्धूषणं**, क्ली, (उत् + धूष + ल्युट् ।) रोमाञ्चः । इति
हलायुधः ॥

**उद्धृतः**, त्रि, (उत् + हृ + क्त ।) कृतोद्धरणम् । तोला
इति भाषा । तत्पर्य्यायः । समुदक्तः २ । इत्यमरः
॥
उत्क्षिप्तः । परिभुक्तोज्झितः । इति मेदिनी ॥
("उद्धर्तुमैच्छत् प्रसभोद्धृतारिः" । इति रघुः ।
२ । ३० तथा नैषधे । १ । ६९ ।
"इतीव वाहैर्निजवेगदर्पितैः
पयोधिरोधक्षममुद्धृतं रजः" ॥)

**उद्ध्मानं**, क्ली, (उत् ध्मायते अग्निरत्र । ध्मा शब्दाग्नि-
संयोगयोः उत्पूर्ब्बात् तस्मात् ल्युट् ।) चुल्ली ।
इत्य-
मरटीकायां भरतः ॥

**उद्ध्यः**, पुं, (उज्झति कूलमिति । उज्झ + क्यप् । निपा-
तनात् सिद्धम् ।) नदः । इति व्याकरणम् ॥
("तोयदागमैवोद्ध्यभिद्ययोः" । इति रघुः ११ । ८
।
"कूलं भिद्योद्ध्यसन्निभौ" ॥ इति भट्टिः । ५ । २२
॥)

**उद्बुद्धः**, त्रि, (उत् + बुध + क्त ।) विकसितः । इति
हलायुधः ॥ (प्रबुद्धः । यथा तिथितत्त्वे, --
"उद्बुद्धां च जगद्धात्रीं पूजयेत् दीपमालया" ॥
यथा, साहित्यदर्पणे ३ । १६२ ।
"उद्बुद्धं कारणैः स्वैः स्वैर्वहिर्भावं प्रकाशयन् ।
लोके यः कार्य्यरूपः सोऽनुभावः काव्यनाव्ययोः"
॥)

**उद्बोधः**, पुं, (उत् + बुध् + घञ् ।) किञ्चित् ज्ञानम् ॥
(यथा साहित्यदर्पणे तृतीयपरिच्छेदे ४१ ।
"उत्साहादिसमुद्बोधः साधारण्याभिमानतः ।
नृणामपि समुद्रादिलङ्घनादौ न दुष्यति" ॥)

**उद्भटः**, पुं, (उत् + भट् + अप् ।) कच्छपः । सूर्य्यः ।
इति मेदिनी ॥ (सूर्प इति केचित् ॥)

**उद्भटः**, त्रि, (उत् + भट् + अप् ।) प्रवरः । ("पदे
पदे सन्ति भटा रणोद्भटाः" ।) इति नैषधः ॥

इति किराते । २ । ४९ ॥ उत्थितः । उत्क्षिप्तः । आहतः । चालितः । यथा, -- शाकुन्तले १ म अङ्के ॥
“आत्मोद्धतैरपि रजोभिरलङ्घनीयाः” ।
निविडः । घोरः । यथा, पञ्चतन्त्रम् ॥ “तुषार-वर्षोद्धतप्रवर्षघनधारानिपातसमाहतम्” ॥)

**उद्धतमनस्कत्वं**, क्ली, (उद्धतं गर्ब्बितं मनो यस्य तस्य भावः ।) गर्ब्बः । अभिमानः । इति शब्दरत्नावली ॥

**उद्धरणं**, क्ली, (उत् + हृ + ल्युट् ।) उद्धारः । वान्तान्नम् । उन्मूलनम् । इति मेदिनी ॥ मुक्तिः । इति शब्दरत्नावली ॥ (कण्टकादीनां ऋणादेर्व्वा शोधनम् । निराकरणम् । उत्तोलनम् । यथा, --
“यत्नवानपि तु श्रीमाल्लाङ्गूलोद्धरणोद्धरः” ।
इति महाभारते ।
“कण्टकोद्धरणैर्नित्यमातिष्ठेत् यत्नमुत्तमम्” ॥
इति मनुः ॥ ९ । २५२ । व्यसनादिभ्यो विमोचनम् ।
“सप्त व्यतीयुस्त्रिगुणानि तस्य

णम् ॥ * ॥ उद्ध्रियते साधारणधनात् इत्युद्धारः ।
यद्वा, साधारणद्रव्यात् यत् गरिष्ठं तदुद्धारः । इति श्रीनाथः । उद्ध्रियते साधारणधनात् निष्कृष्य विशेषनिष्ठतया एव बोध्यते इत्युद्धार-इति अच्युतानन्दः । साधारणत्वेन उद्ध्रियते इति
उद्धार इति रघुनन्दनः । उद्ध्रियते साधारणधनात्
वहिर्भाव्यते इत्युद्धार इति श्रीकृष्णः । यथाह मनुः ९ । ११२ ॥
“ज्येष्ठस्य विंश उद्धारः सर्व्वद्रव्याच्च यद्वरम् ।
ततोऽर्द्धं मध्यमस्य स्यात् तुरीयस्तु यवीयसः” ॥
ज्येष्ठस्य विंश उद्धारः उद्ध्रियते इत्युद्धारः ज्येष्ठस्या-
विभक्तसाधारणधनात् उद्धृत्य विंशतितमो भाग-
इति तट्टीकायां कुल्लूकभट्टः ॥ * ॥ जयानन्तरं श-
त्रुभ्यो लब्धं धनादिकम् । यदुक्तं मनुना ७ । ९७ ।
“राज्ञश्च दद्युरुद्धारमित्येषा तैदिकी श्रुतिः ।
राज्ञा च सर्व्वयोधेभ्यो दातव्यमपृथक् जितम्” ॥
“उद्धारं योद्धारः राज्ञे दद्युः । उद्ध्रियते इत्युद्धारः
जितधनाद्युत् उत्कृष्टधनं सुवर्णरजतभूम्यादि राज्ञे
समर्पणीयम्” । इति तट्टीका ॥)

**उद्धारं**, क्ली, (उत् + धृ + घञ् ।) उद्धानम् । इत्यमरटीकायां स्वामी ॥ उनन् आका इत्यादि भाषा ।

**उद्धारणं**, क्ली, (उत् + हृ + णिच् + ल्युट् ।) उद्धारकरणम् । उत्तोलनम् ॥

**उद्धारा**, स्त्री, गुडूची । इति शब्दचन्द्रिका ॥

**उद्धूननं**, क्ली, (उत् + धूञ् + णिच् + ल्युट् ।) एक-

श्रेष्ठाशयः । तत्पर्य्यायः । महेच्छः २ उदारः ३ उदात्तः ४ उदीर्णः ५ महाशयः ६ महामनाः ७ महात्मा ८ । इति हेमचन्द्रः ॥

**उद्भवः**, पुं, (उद्भवनं उद्भवत्यस्मादिति वा । उत् + भू + अप् ।) जन्म । उत्पत्तिः । इत्यमरः ॥ (“दिलीपसूनुर्मणिराकरोद्भवः” । इति रघुः । ३ । १८ । “विष्णुपादोद्भवा गङ्गा” । इति पुराणम् । विष्णुः । प्रपञ्चं प्रत्युपादानकारणत्वात् ॥)

**उद्भिजः**, त्रि, उद्भिज्जः । इत्यमरटीकायां रमानाथः ॥

**उद्भिज्जं**, त्रि, (उद्भेदनमिति उद्भित् सम्पदादित्वात् क्विप् । तस्मात् जायते यत् । उद्भित् + जन् + ड ।)
उद्भिद्यजातमात्रम् । तच्च तरुगुल्मादि । इत्यमरः ॥ (यथा, मनुः । १ । ४६ । “उद्भिज्जाः स्थावराः सर्व्वे
वीजकाण्डप्ररोहिणः” । “इन्द्रगोपमण्डूकप्रभृतय-उद्भिज्जाः” ॥ इति सूत्रस्थाने प्रथमेऽध्याये सुश्रुतेनोक्तम् ॥)

**उद्भित्**, [द्] त्रि, (उद्भिनत्ति भूमिमिति । उत् + भिद् + क्विप् ।) उद्भिज्जम् । इत्यमरः ॥ तच्च पञ्चधा । वृक्षः १ गुल्मः २ लता ३ वल्ली ४ तृणम् ५ ॥
(यथा, महामारते आदिपर्ब्बणि । “संस्वेदजा

:अण्डजा उद्भिदश्च” । उद्भिद्यते पशुफलमनेन इति

निरुक्तेः यागभेदः ॥)

**उद्भिदं**, त्रि, (उद्भिनत्तीति । उत् + भिद् + इगुप-

धेति कः ।) तरुगुल्मादि । तत्पर्य्यायः । उद्भित् २

उद्भिज्जम् ३ । इत्यमरः ॥ उद्भिजम् ४ । इति रमानाथः ॥ (यथा महाभारते १४ पर्ब्बणि ।

“जरायुजाण्डजातानि स्वेदजान्युद्भिदानि च” ॥)

**उद्भिदं**, क्ली, (उद्भिनत्तीति । उद् + भिद् + क ।)

पांशुलवणम् । इति रत्नमाला ॥ पाङालुण इति भाषा । (“उद्भिदानि पलालेक्षुकरीषवेणुक्षिति-जानि” । इति सुश्रुते सूत्रस्थाने षट्चत्वारिं-शत्तमेऽध्याये ॥)

**उद्भूतः**, त्रि, (उद्भवति स्म । उत् + भू + क्त ।) उत्पन्नः ।

जातः । यथा । ईशानसंहितायाम् ।

“माघे कृष्णचतुर्द्दश्यामादिदेवो महानिशि ।

शिवलिङ्गतयोद्भूतः कोटिसूर्य्यसमप्रभः” ॥

इति तिथ्यादितत्त्वम् ॥ (तथा, भाषापरिच्छेदे ५६ ।

“उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः” ।)

**उद्भूतरूपं**, क्ली, (उद्भूतं प्रत्यक्षयोग्यं रूपम् ।) नयन-

गोचररूपम् । यथा, -- भाषापरिच्छेदे ॥

“उद्भूतरूपं नयनस्य गोचरं

द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये ।

विभागसंयोगपरापरत्व-

स्नेहद्रवत्वं परिमाणयुक्तम् ॥ ५४ ॥

क्रियाजाती योग्यवृत्ती समवायञ्च तादृशम् ।

गृह्णाति चक्षुः सम्बन्धादालोकोद्भूतरूपयोः” ॥ ५५ ॥

**उद्भ्रमः**, पुं, (उद्भ्रमणमिति । उत् + भ्रम + घञ् ।

नोदात्तोपदेशेति न वृद्धिः ।) उद्वेगः । इत्यमरः ॥

**उद्भ्रान्तं**, क्ली, (उत् + भ्रम + क्त ।) बाहुमुद्यम्य मण्ड-

लाकारखड्गभ्रामणं । इति महाभारतम् ॥ (परि-

आक्रीडः २ ।

(“वाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्म्या” । इति मेघदूते ७ ।) निःसरणम् । प्रयोजनम् । इत्य-मरः ॥

**उद्यानपालः**, त्रि, (उद्यानं पालयतीति । उद्यान +

पालि + अण् ।) उद्यानरक्षकः । माली इति भाषा ॥ (“उद्यानपालसामान्यमृतवस्तमुपासते” ॥

इति कुमारे । २ । ३६ ॥)

**उद्युक्तः**, त्रि, (उत् + युज् + क्त ।) उद्यमयुक्तः ।

उद्योगविशिष्टः । इत्यमरटीकायां भरतः ॥ (यथा, अमरकोषः । “इष्टार्थोद्युक्तौत्सुकः” ।)

**उद्योगः**, पुं, (उत् + युज + घञ् ।) यत्नः । चेष्टा ।

तत्पर्य्यायः । उत्साहः २ अध्यवसायः ३ उद्यमः ४ ।

इति जटाधरः ॥ (यथा, मार्कण्डेये ८८ । २ ।

“उद्योगः सर्व्वसैन्यानां दैत्यानामादिदेश ह” ।

“उद्योगादनिवृत्तस्य सुसहायस्य धीमतः” ।

छायेवानुगता तस्य नित्यं श्रीः सहचारिणी” ॥

इति नीतिवाक्यम् ।

महाभारतस्य उद्योगपर्ब्ब । यथा, महाभारते १ । १ । ६३ ।

“उद्योगः सैन्यनिर्य्याणं श्वेतोपाख्यानमेवच” ॥)

**उद्योगी**, [न्] त्रि, (उद्योगोऽस्यास्तीति । उद्योग +

इन् ।) उद्योगविशिष्टः । उद्यमी । तथा च ।

“उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-

र्दैवेन देयमिति कापुरुषा वदन्ति ।

दैवं निहत्य कुरु पौरुषमात्मशक्त्या

यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः” ॥

इति नीतिसारे १३ ॥

**उद्योतः**, पुं, (उत् + द्युत + घञ्) आलोकः । ज्योतिः ।

इति हलायुधः ॥

**उद्रः**, पुं, (उनत्तीति । उन्द + रक् ।) जलजन्तुविशेषः ।

इत्यमरः ॥ उद्बिडाल इति भाषा ।

**उद्रङ्कः**, पुं, पुरविशेषः । “व्योमचारि पुरं शौभमुद्रङ्कः

प्रतिमार्गकः” । इति जटाधरः ॥

**उद्रङ्गः**, पुं, व्योमचारि पुरम् । तत्पर्य्यायः । खपुरं २

ऊद्ध्वगं पुरं ३ हरिश्चन्द्रपुरं ४ शौभं ५ प्रतिमा-

**उद्रेका**, स्त्री, (उद्रेक + टाप् ।) महानिम्बः । इति

राजनिर्घण्टः ॥

**उद्वत्सरः**, पुं, (उत्क्रान्तो वत्सरः ।) वत्सरः । इति

हेमचन्द्रः ॥

**उद्वन्धनं**, क्ली, (उत् + वन्ध + ल्युट्) ऊर्द्धबन्धनम् ।

इति स्मृतिः ॥ गलाय दडि देओन फाँसी देओन टाङ्गान इत्यादि भाषा ॥

**उद्वमनं**, क्ली, (उत् + वम + ल्युट् ।) उद्गीरणम् ।

तुलिया फेलन वाँति करण इत्यादि भाषा ॥

**उद्वर्त्तः**, त्रि, (उत् + वृत् + घञ् ।) अतिरिक्तः ।

उवरण वाडा इत्यादि भाषा । यथा । “उद्वर्त्तो हि ग्रन्थः समधिकफलमाचष्टे” । इति व्याकरण-टीका ॥

**उद्वर्त्तनं**, क्ली, (उत् + वृत् + णिच् + भावे करणे वा

ल्युट् ।) उत्पतनम् । (यथा, मेघदूते ४२ ।

मोघीकर्त्तुं चटुलशफरोद्वर्त्तनप्रेक्षितानि” ।)

विलेपनम् । घर्षणम् । इति मेदिनी ॥

(यथा, मनुः ४ । १३२ ।

“उद्वर्त्तनमपस्नानं विण्मूत्रे रक्तमेव च ।

श्लेष्मनिष्ठ्यूतवान्तानि नाधितिष्ठेत्तु कामतः” ॥)

शरीरनिर्म्मलीकरणगन्धद्रव्यादि । तत्पर्य्यायः ।

उत्सादनम् २ । इत्यमरः ॥ हरिद्रा सेवन आवटन

इत्यादि भाषा । सामान्योद्वर्त्तनगुणाः । कफवा-युमेदोवातरोगनाशित्वम् । अङ्गस्थैर्य्य-चर्म्मनिर्म्मल-

कारित्वञ्च ॥ हरिद्राद्युद्वर्त्तनगुणाः । कण्डूवैवर्ण्य-रूक्षताहारित्वम् ॥ तिलोद्वर्त्तनगुणाः । कण्डूरूक्ष-

तात्वग्दोषनाशित्वम् । इति राजवल्लभः ॥

(“उद्वर्त्तनं वातहरं कफमेदोविलापनम् ।

स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परम् ॥

शिरासुखविविक्तत्वं त्वक्स्थस्याग्नेश्च तेजनम् ॥

इति चिकित्सितस्थाने २४ । अध्याये सुश्रुते-नोक्तम् ॥)

**उद्वर्द्धनं**, क्ली, (उत् + वृध् + ल्युट् ।) अन्तर्हासः ।

इति त्रिकाण्डशेषः ॥

**उद्वर्हितः**, त्रि, (उत् + वर्ह + क्त ।) उद्धृतः । इति

भ्रान्ते, त्रि । यथा, रघौ ४ । ४६ ॥
"मारीचोद्भ्रान्तहारीता मलयाद्रेरुपत्यकाः" ॥
विकले । विह्वले । यथा, रामायणे, --
"उद्भ्रान्तहृदयश्चापि विवर्णवदनोऽभवत्" ॥)

**उद्यः**, पुं, नदः । इति हेमचन्द्रः ॥ (उद्यते यत् । वद + क्यप् । कथनीये, त्रि । यथा, मृषीद्यम् वाक्यम् ।)

**उद्यतं**, त्रि, (उत् + यम + क्त ।) उत्तोल्यधृतवस्त्रादि । उद्यतशस्त्रादि । तत्पर्य्यायः । उद्गूर्णं २ ॥
इत्यमरः ॥
(यथा, रघुवंशे । ४ । १६ ।
"प्रजार्थसाधने तौ हि पर्य्यायोद्यतकार्म्मुकौ" ॥)

**उद्यतः**, पुं, (उत् + यम + क्त ।) ग्रन्थपरिच्छेदः । इति जटाधरः ॥

**उद्यमः**, पुं, (उत् + यम + घञ् । संज्ञापूर्ब्बकत्वात् वृद्ध्यभावः ।) उद्योगः । तत्पर्य्यायः । गुरणम् २ ।
इत्यमरः ॥ गूरणम् ३ गोरणम् ४ । इति तट्टीका ॥
उत्साहः ५ अध्यवसायः ६ उद्योगः ७ । इति जटाधरः ॥ (यथा, कुमारे ५ । ३ ।
("निशम्य चैनां तपसे कृतोद्यमाम्" ।
"शशाक मेना न नियन्तुमुद्यमात्" ।
इति च कुमारे ५ । ५ ॥)

**उद्यानं**, क्ली, (उद्याति क्रीडार्थमस्मिन् । उत् + या + ल्युट् ।) राज्ञः साधारणं वनम् । तत्पर्य्यायः ।

र्गकः ६ त्रङ्गा ७ त्रङ्गः ८ । इति त्रिकाण्डशेषः ॥

**उद्रथः**, पुं, (उद्गतो रथो यस्मात् ।) रथकीलम् । ताम्रचूडपक्षी । इति मेदिनी ॥

**उद्रिक्तं**, त्रि, (उद्रिच्यते स्म । उत् + रिच + क्त ।) स्फुटम् । स्पष्टम् । इति जटाधरः ॥

**उद्रेकः**, पुं, (उत् + रिच + घञ् ।) उपक्रमः । वृद्धिः ॥
"अधुनैव कुरङ्गाक्षि जहार जगतां मनः ।
न जाने यौवनोद्रेके जीवनस्यापि का गतिः" ॥
इत्युद्भटः ॥
"हरिस्ते साहस्रं कमलबलिमाधाय पदयो-
र्यदेकोने तस्मिन्निजमुदहरन्नेत्रकमलम् ।
गतो भक्त्युद्रेकः परिणतिमसौ चक्रघपुषा
त्रयाणां रक्षायै त्रिपुरहर जागर्त्ति जगताम्" ॥
इति महिम्नःस्तोत्रम् ॥
("तमःप्रवेशः संरम्भो दोषोद्रेकहतस्मृतेः" ।
इति वैद्यकरुग्विनिश्चयेऽपस्माराधिकारे ॥)

भूरिप्रयोगः ॥ उद्वाहितो वा इति पाठः ॥

**उद्वहः**, पुं, (उदूर्द्ध्वं वहति प्रापयतीति । उत् + वह + अच् ।) पुत्रः । इति हेमचन्द्रः ॥ (यथा, -- रघुः । ९ । ९ ।
("उदयमस्तमयञ्च रघूद्वहात्" ॥)
सप्तवाष्वन्तर्गतवायुविशेषः । स तु प्रवहवायोरूर्द्ध्व-
स्थितः । इति सिद्धान्तशिरोमणिः ॥
("आवहः प्रवहश्चैव विवहश्च समीरणः ।
परावहः संवहश्च उद्वहश्च महाबलः ॥
तथा परिवहः श्रीमानुत्पातभयशंसिनः ।
इत्येते क्षुभिताः सप्त मारुता गगनेचराः" ॥
इति हरिवंशे । २३६ अध्याये । विवाहः ॥)

**उद्वहा**, स्त्री, (उद्वह + टाप् ।) कन्या । पुत्री । इति हेमचन्द्रः ॥

**उद्वानः**, त्रि, (उत् + वन + घञ् ।) उद्वमितः । उद्वान्तः । इत्यमरटीकायां रायमुकुटः ॥

**उद्वान्तं**, त्रि, (उत् + वम् + क्त ।) वमितवस्त । तत्-

:पार्य्यायः । उद्गतं २ । इत्यमरः ॥

**उद्वान्तः**, पुं, (उद्गतं वान्तं मदो यस्मात् ।) निर्म्मदहस्ती । इति मेदिनीकरजटाधरौ ॥

**उद्वासनं**, क्ली, (उत् + वस् + णिच् + ल्युट् ।) मारणम् । बधः । इत्यमरः ॥ (संस्कारभेदः । यथा, कात्यायने ९ । १ । २ ॥
"अप उपस्पृश्य शालाद्धार्य्ये परिस्तरणपात्रसं-सादनप्रोक्षणाज्यनिर्वपणाधिश्रयणस्रुक्संमार्जनो-द्वासनावेक्षणानि कृत्वाग्नीघ्र उत्पूय पश्चात् आ-ज्यग्रहणम्" ॥)

**उद्वाहः**, पुं, (उत् + वह + घञ् ।) विवाहः । इत्यमरः । तस्य लक्षणं भार्य्यात्वसम्पादकग्रहणम् । तस्य स्वी-कारूपज्ञानविशेषस्य समवायविषयतयोर्भेदात् वरकन्ययोर्विवाहकर्तृत्वकर्म्मत्वे । स तु अष्ट-विधः । वरमाहूय यथाशक्त्यलङ्कृता कन्या यत्र दीयते स ब्राह्मः १ । यत्र यज्ञस्थायर्त्विजे कन्या-दानं स दैवः २ । यत्र वरात् गोद्वयं गृहीत्वा तेनैव सह कन्यादानं स आर्षः ३ । यत्र अनया सह धर्म्मं चरतां इति नियमं कृत्वा कन्यादानं स कायः ४ । यत्र धनं गृहीत्वा कन्यादानं स आसुरः ५ । यत्र कन्यावरयोरन्योन्यानुरागात् त्वं मे भार्य्या त्वं मे पतिरिति निश्चयः स गान्धर्व्वः ६ । यत्र बलात्कारेण कन्याहरणं स राक्षसः ७ । यत्र सुप्तायां मत्तायां प्रमत्तायां वा कन्यायां निर्जने गमनं स पैशाचः ८ । तस्य निर्णयः । सगोत्रामनवरवयस्कां समानप्रवरां पित्रपेक्ष-योर्द्ध्वतनषण्णां पुरुषाणां पुत्रकन्यासन्ततिपरम्प-रया प्रत्येकसप्तमीपर्य्यन्तां अधस्तने तदपेक्षया सप्तमीपर्य्यन्तां पितृबन्ध्वपेक्षयोर्द्ध्वतनषण्णां प्रत्येका-पेक्षया सप्तमोपर्य्यन्तां अधस्तने तदपेक्षया सप्तमी पर्य्यन्तां मातामहसमानोदकां मातामहापेक्ष-योर्द्ध्वतनचतुर्णां पुरुषाणां पुत्त्रकन्यासन्तति-परम्परया प्रत्येकापेक्षया पञ्चमीपर्य्यन्तां अधस्तने तदपेक्षया पञ्चमीपर्य्यन्तां मातृबन्ध्वपेक्षयोर्द्ध्वतन-चतुर्णां प्रत्येकापेक्षया पञ्चमीपर्य्यन्तां अधस्तने त-दपेक्षया पञ्चमीपर्य्यन्ताञ्च कन्यां परित्यज्य उद्वाहः कर्त्तव्यः ॥ पितृबन्धुमातृबन्धुविरहेऽपि तयोर्योग्य-तामवलम्ब्य सप्तमीपर्य्यन्तायाः पञ्चमीपर्य्यन्तायाश्च रण्यगोवस्त्रदानम् । ततो नान्दीश्राद्धम् । लग्न-समये वरे उपस्थिते स्वस्तिवाचनादिकं विधाय वरणम् । स्त्र्याचारादि । ततः कन्यादानं यथाशक्ति धनदानञ्च । ततः स्वगृह्योक्तविधिनाग्निं संस्थाप्य कुशण्डिकां समाप्य पाणिग्रहणं सप्तपदीगमनञ्च कर्त्तव्यम् ॥ * ॥ ज्येष्ठेऽकृतविवाहे विवाहकर्त्ता कनिष्ठः परिवेदनदोषविशिष्टो भवति । ज्येष्ठः परिविन्नः । सा कन्या परिवेदनीया । कन्यादाता परिदायी । तत्पुरोहितः परिकर्त्ता । ते सर्व्वे पतिताः । किन्तु देशान्तरस्थक्लीवैकाण्डवैमात्रेय-वेश्यासक्तशूद्रतुल्यातिरोगिजडमूकान्धवधिरकु-ब्जवामनकुण्ठातिवृद्धनैष्ठिकब्रह्मचारिवानप्रस्थभि-क्षुकृषिसक्तनृपसक्तधनवृद्धिप्रसक्तकामकारिदत्त-कोन्मत्तचौरेषु ज्येष्ठेष्वनूढेष्वपि कनिष्ठविवाहे न दोषः । एवं विकृतरूपानूढा ज्येष्ठा कनिष्ठायाः सोदराया ऊढायाः परिवेदनाय न भवति । इत्यु-द्वाहतत्त्वम् ॥

**उद्वाहनं**, क्ली, (उत् + वह + णिच् + ल्युट् ।) वि-वाहः । तत्पर्य्यायः । रणरणं २ । इति त्रिकाण्ड-शेषः ॥ द्विसीत्यम् । द्विवारकृष्टक्षेत्रम् । इति हेम-चन्द्रः ॥

**उद्वाहनी**, स्त्री, (उद्वाहन + ङीप् ।) वराटकः । इति हेमचन्द्रः ॥ कडि इति भाषा ॥

**उद्वाहिकः**, त्रि, (उद्वाहस्यायम् । उद्वाह + ठक् ।) उद्वाहसम्बन्धी ॥ (यथा, मनुः । ९ । ६४ ।)
"नोद्वाहिकेषु मन्त्रेषु विधवावेदनं क्वचित्" ॥)

**उद्वाहितः**, त्रि, (उत् + वह + णिच् + क्त ।) उद्व-र्हितः । उद्धृतः । विवाहितः । यथा । राजमार्त्तण्डे देवलः ।
"बाले वृद्धे तथैवास्ते कुरुते दैत्यमन्त्रिणि । उद्वाहितायां कन्यायां दम्पत्योरेकनाशनम्" ॥ इति ज्योतिषतत्त्वम् ॥ (कलिकाले आगमोक्ता-न्यमार्गेण विवाहिता गर्हिता भवति । यथा, --
"उद्वाहितापि या नारी जानीयात् सातु गर्हिता" इत्यागमसिद्धान्तः ॥)

**उद्वाहिनी**, स्त्री, (उद्वहति उद्धरतीति । उत् + वह + णिनि + ङीप् ।) रज्जुः । इति मेदिनी ॥

**उद्वाहुः**, त्रि, (उदूर्द्ध्वे वाहुर्यस्य ।) ऊर्द्ध्वबाहुः । उद्वेग-इति श्रीभागते १३ । ४३ ॥ उद्विवर्हणं उद्धरणम् । इति तट्टीकायां श्रीधरस्वामी ॥

**उद्वृत्तः**, त्रि, (उत् + वृत् + क्त । वृत्ताच्चरित्रात् उत्क्रान्तो वा ।) उत्तोलितः । उत्क्षिप्तः । परि-मुक्तोज्झितः । उद्वान्तः । इति हेमचन्द्रो मेदिनी च ॥ दुर्वृत्तः ॥ (यथा, महाभारते, --
"उद्वृत्तान् सततंलोकान् राजा धर्म्मण शास्ति वै" ॥)

**उद्वेगं**, क्ली, (उद्विज्यतेऽनेन इति । उत् + विज् + घञ् ।) गुवाकफलम् । इत्यमरः ॥

**उद्वेगः**, पुं, (उत् + विज् + भावे घञ् ।) उद्वेजनम् । तत्पर्य्यायः । उद्भ्रमः २ । इत्यमरः ॥ चमत्कारः । इति भरतः ॥ विरहजन्यदुःखम् । इति रसमञ्जरी ॥ भयं । इति हेमचन्द्रः । उद्वाहुलकम् । उद्गमनम् । इति मेदिनी ॥
("नृत्यारम्भे हर पशुपतेरार्द्रनागाजिनेच्छाम् । शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या" ॥ इति मेघदूते पूर्व्बमेधे ३७ श्लोकः ॥
"सदयं बुभुजे महाभुजः सहसोद्वेगमियं व्रजेदिति" । रघुः ८ । ७ ।
"संक्षोभेष्वप्यनुद्वेगो माधुर्य्यं परिकीर्त्तितम्" । इति साहित्यदर्पणे ॥ ३ य परिच्छेदः ॥)

**उद्वेगः**, त्रि, (उद्गतो वेगो यस्मात् ।) स्तिमितः । शीघ्रगामी । ऊर्द्ध्वबाहुः । इति हेमचन्द्रः ॥

**उद्वेजनं**, क्ली, (उत् + विज + ल्युट् ।) उद्वेगः ॥ ("परदाराभिमर्षेषु प्रवृत्तान्नॄन् महोपतिः । उद्वेजनकरैर्दण्डैश्छिह्नयित्वा प्रवासयेत्" ॥ इति मनुः ॥ ८ । ३५२ ॥)

**उधः**, [स्] क्ली, (वहति उनत्ति वा । वह प्रापणे

कन्यायाः परिहारः । वर्ज्जनीयानां कन्यानां मध्येऽपि या त्रिगोत्रान्तरिता सा विवाह्या अत्र सप्तमगणनप्रतियोगिपितृपितृबन्धुपञ्चमगणनप्र-तियोगिमातामहमातृबन्धुगोत्रमादायैव त्रिगोत्र-गणनम् । शूद्रस्य सगोत्राविवाहे दोषाभावः । मातृसपत्नीभ्रातृकन्यां तद्दौहित्रीं अध्यापयितृ-कन्यां शिष्यकन्यां ब्रह्मदगुरुकन्याञ्च परित्यज्य विवाहः कर्त्तव्यः ॥ अथ कन्यादानाधिकारिणः । आदौ पिता । तदभावे पितामहः । तदभावेभ्राता । तदभावे पितृज्ञातिः । तदभावे मातामहः । तद-भावे मातुलः । तदभावे माता । तदभावे माता-महज्ञातिः । एतेषामप्यभावे कन्या स्वयं वरं कुर्य्यात् ॥ अथ विवाहपूर्ब्बकर्त्तव्यकर्म्म । अवश्यं-भावि शुभाशुभग्रहादिदोषशान्त्यर्थं होमो हि-

शब्दार्थे हेमचन्द्रेण लिखितः ॥ (यथा, रघु । १ । ३ ।
("प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः" ॥)

**उद्बाहुलकं**, क्ली, ऊर्द्ध्वीकृतबाहुः । उद्वेगशब्दार्थे मेदिनीकरेण लिखितम् ॥

**उद्विग्नः**, त्रि, (उत् + विज + क्त । ओदितश्चेति तस्य नः । श्वीदित इति नेट् ।) उद्वेगयुक्तः । यथा, --
"तैर्वृक्नरुग्नसंभुग्नक्षुण्णभिन्नविपन्नकैः ।
निमग्नोद्विग्नसंहीणैः पप्रे दीनैश्च मेदिनी" ॥
इति भट्टिकाव्ये ४ । ४२ ॥ (तथा च भारते, --
"नोद्विग्नश्चरते धर्म्मं नोद्विग्नश्चरते क्रियाम्" ॥)

**उद्विवर्हणं**, क्ली, (उत् + वि + वृह + ल्युट् ।) उद्धा-रकरणम् । यथा, --
"कः श्रद्धधीतान्यतमस्तव प्रभो
रसाङ्गताया भुव उद्विवर्हणम्" ।

उन्द क्लेदने वा + असुन् ।) ऊधः ।
इत्यमरटीकायां
रमानाथः ॥ गरुर पालान् इति भाषा ॥

**उध्रस** ग उञ्छे । इति कविकल्पद्रुमः ॥ (क्रादिं-परं-सकं-सेट् ।) एतस्यादौ पञ्चमस्वरः । मध्ये केवल-
धकारस्याधो रेफः । क्र्यादावुध्रस उञ्छ इत्यय-
मुदिच्चौरादिकः पट्यते तस्य ध्रासयतीति रूपं
अपरं ध्रस्नाति । येषां ध्रसेः उत्पूर्ब्बस्य गणद्वयेऽपि
पठनं तेषां मते श्नाविधावुध्रस्नाति निगद्यते णिचि
कृतेऽप्युध्रासयत्यन्यतः । अत्र उत्पूर्ब्बस्येति तु उत्
उकारः नतूपसर्गः । ग उध्रस्नाति शस्यं दीनः ।
इति दुर्गादासः ॥

**उध्रस** क उत्क्षेपे । उञ्छे । इति कविकल्पद्रुमः ॥
(चुरां-परं-सकं-सेट् ।) क उध्रासयति धूलिं वायुः ।
इति दुर्गादासः ॥

**उन्द**, ई ध क्लेदे । इति कविकल्पवुमः ॥ (रुधां-परं-सकं-सेट् ।) ह्रस्वादिः । क्लेद आर्द्रभावः । ध
उनत्ति वस्त्रं पयसा । ई उन्नः उत्तः ।
उन्दिदिषति ।
इति दुर्गादासः ॥

**उन्दरुः**, पुं, उन्दुरुः इति द्विरूपकोषः ॥

**उन्दुरः**, पुं, (उन्द + उर ।) मूषिकः । इति भरतो द्विरूपकोषश्च ॥ इदुँर इति भाषा ॥

**उन्दूरः**, पुं, (उन्द + ऊर ।) जन्तुविशेषः । इदुँर इति भाषा । तत्पर्य्यायः । मूषिकः २ आखुः ३ । क्षुद्र-

:श्चेत् । गिरिका ४ बालमूषिका ५ । नेङ्टे इदुँर
इति भाषा । इत्यमरः ॥ मूषकः ६ मूषः ७ मूषीकः
८ उन्दूरुः ९ खनकः १० वभ्रुः ११ वृषः १२ आ-
खनिकः १३ वृशः १४ दीना १५ मुषीका १६ ।
मूषा १७ मूषीका १८ मूषिका १९ । इति
शब्दरत्नावली ॥ विलेशयः २० शुषिरः २१
इन्दूरः २२ । इति जटाधरः ॥ क्षुद्रस्य तस्य पर्य्यायः ।
चिक्कः २३ वेश्मनकुलः २४ चिक्का २५ । इति च
शब्दरत्नावली ॥ हालाहला २६ अञ्जनिका २७ ।
इति जटाधरः ॥

**उन्दूरुः**, पुं, (उन्द + बाहुलकात् ऊरुः ।) मूषिकः ।
इति हेमचन्द्रः ॥
("उन्दूरुञ्चान्त्ररहितं तेन वातघ्नकल्कवत्" ॥
इति वाभटे चिकित्सास्थाने नवमेऽध्याये ॥)

**उन्दूरुकर्णी**, स्त्री, (उन्दूरोः मूषिकस्य कर्णेव पर्ण-
मस्याः । उन्दूरकर्ण + ङीष् ।) आखुकर्णोलता ।
इति राजनिर्घण्टः ॥

**उन्नः**, त्रि, (उन्द + क्त । नुदविदेति पक्षे नत्वम् ।)
क्लिन्नः । दयापरः । इति हेमचन्द्रः ॥

**उन्नतः**, त्रि, (उत् + नम + क्त ।) वर्द्धितः । तत्पर्य्यायः ।
उच्चः २ प्रांशुः ३ उदग्रः ४ उच्छ्रितः ५ उत्तुङ्गः ६ ।
इत्यमरः ॥ उच्चैः ७ । इति शब्दरत्नावली ॥ तुङ्गः ८ ।
इति जटाधरः ॥ (यथा, रघुः । १ । १५ ।
"स्थितः
सर्व्वोन्नतेनोर्व्वीं क्रान्त्वा मेरुरिवात्मना" ॥ क्ली,
दिनपरिमाणज्ञानसाधनं उपायः । यथा सिद्धा-
न्तशिरोमणौ । "दिवसस्य यद्गतं यच्च शेषं तयोर्य-
दल्पं तदुन्नतसंज्ञं ज्ञेयम्" । (पुं, चाक्षुषमन्वन्तरे
विषयेऽप्युत्सर्गोऽभिनिविशते इति एरच् ।)
ऊर्द्ध्व-
नयनम् । इत्यमरः ॥

**उन्नयनं**, क्ली, (उत् + नी + ल्युट् ।) वितर्कः । इति
हेमचन्द्रः ॥ ऊर्द्ध्वप्रापणम् । उत्तोलनम् । तोलन
उठान इत्यादि भाषा ॥
(यथा, कात्यायने । २२ । १० । ५ ॥
"तेष्वेवोन्नयनमभ्यभि सोमानुन्नयन्तीति श्रुतेः," ।
उदूर्द्ध्वे नयनं यस्येति वाक्ये वाच्यलिङ्गः" ॥)

**उन्नायः** पुं, (उन्नयनं इति । उत् + नी + घञ् ।)
उन्नयनम् । इत्यमरः ॥ (यथा भट्टिः । ७ । ३७ ।
"उन्नायानधिगच्छन्तः प्रद्रावैर्वसुधाभृताम्" ॥)

**उन्नाहं**, क्ली, (उत् + नह + घञ् ।) काञ्जिकम् ।
इति हेमचन्द्रः ॥

**उन्निद्रः**, त्रि, (उद्गता निद्रा स्वप्नो दुःखादिकं वा
यस्मात् ।) प्रफुल्लः । विकसितः । इति हेमचन्द्रः ॥
("उन्निद्रपुष्पचनचम्पकपुष्पभासाः" ।
इति माघः । प्रबुद्धः । शयनादुत्थितः ।
"तामुन्निद्रामवनिशयनां सौधवातायनस्थः" ।
इति मेघतूते । ८८ । तथा, शाकुन्तले षष्ठाङ्के ।
"शय्याप्रान्तविवर्त्तनैर्विगमयत्यु न्निद्रएव क्षपाः"
॥)

**उन्भ** प श पूर्त्तौ । (तुदां + परं + सकं + सेट् ।)
ह्रस्वादिः । प श उम्भति कुम्भं जलेन लोकः ।
उम्भामास । इति दुर्गादासः ॥

**उन्मत्तः**, त्रि, (उत् + मद् + क्त ।) उन्मादयुक्तः ।
वायुकृतचित्तविभ्रमविशिष्टः । पागल इति भाषा ।
तत्पर्य्यायः । उन्मादवान् २ । इत्यमरः ॥ तस्यौ-
षधम्, यथा, -- गारुडे १९९ अध्यायः ॥ * ॥
"कूर्म्ममत्स्याखुमहिषगोशृगालाश्च वानराः ।
विडालवर्हिकाकाश्च वराहोलूककुक्कुटाः ॥
हंस एषाञ्च विण्मूत्रं मांसं वा रोमशोणितम् ।
धूमं दद्याज्ज्वरार्त्तस्य उन्मत्तेभ्यश्च शान्तये ॥
एतान्यौषधजातानि धूपितानि महेश्वर ।
निहन्ति ज्वरमुन्मादं वृक्षमिन्द्राशनिर्यथा" ॥
("तमात्मनो हतमुपघ्नन्तो देवादयः कुर्व्वन्त्यु-
युक्तः । उद्गतमदः । तत्पर्य्यायः । उन्मदिष्णुः २
।
इत्यमरः ॥ ("उदीरयामासुरिवोन्मदानाम्" ॥
इति रघुः । २ । ९ । तथा, माघे ६ । २९ ॥
"मधुकराङ्गनया मुहुरुन्मद-
ध्वनिभृता निभृताक्षरमुज्जगे" ॥)

**उन्मदिष्णुः**, त्रि, (उत् + मद् + इष्णुच् ।) उन्मदः ।
उन्मादशीलः । इत्यमरः ॥

**उन्मनाः**, [स्] त्रि, (उद्गतं उत्कण्ठितं मनो यस्य ।)
उत्कण्ठितचित्तः । तत्पर्य्यायः । उत्कः २ ।
इत्यमरः ॥
("उन्मनाः प्रथमजन्मचेष्टिता-
न्यस्मरन्नपि बभूव राघवः" ।
इति रघुः । ११ । २२ । "पयोधरेणोरसि काचि-
दुन्मनाः" ॥ इति किराते । ८ । १९ ॥)

**उन्मन्थः**, पुं, (उत् + मथि + घञ् ।) मारणम् ।
बधः । इति हेमचन्द्रः ॥

**उन्माथः**, पुं, (उन्मथ्यतेऽनेनेति । उत् + मथ + घञ् ।
मारणादिपक्षे भावे घञ् ।) कूटयन्त्रम् । मृग-
बधोपयुक्तयन्त्रम् । आमिषं दत्त्वा मृगपक्षिबन्ध-
नार्थं यत् सन्धानयन्त्रं निवेश्यते सः । इत्यमरः ॥
मारणम् । घातकः । इति मेदिनी ॥
(यथा, प्रबोधचन्द्रोदये ।
"प्रभो मद्बाणानां क इव भुवनोन्माथविधिषु" ॥)

**उन्मादः**, पुं, (उत् + मद् + घञ् । (महादेवः ।
यथा महाभारते । महादेवसहस्रनामकथने १३
१७ । ६९ ॥ "उन्मादो मदनः कामो ह्यश्वत्थोऽर्थ-
करी यशः" ।) वातिकरोगविशेषः । तत्पर्य्यायः ।
चित्तविभ्रमः २ । इत्यमरः ॥ मतिभ्रंशः ३ उन्मनाः
४ । इति राजनिर्घण्टः ॥ (चित्तविप्लवः ५२ ।
२३४ ।
इति हेमचन्द्रः ॥) मानसरोगविशेषः ।
तस्यौषधं यथा, --
"वचा त्रिकटुकञ्चैव करञ्जं देवदारु च ।
मञ्जिष्ठा त्रिफला श्वेता शिरीषो रजनीद्वयम् ॥
प्रियङ्गुनिम्बत्रिकटु गोमूत्रेणावघर्षितम् ।
नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनम् तथा ॥
अपस्मारविषोन्मादशोषालक्ष्मीज्वरापहम् ।
भूतेभ्यश्च भयं हन्ति राजद्वारे च शासनम्" ॥

ऋषिभेदः । यथा, मार्कण्डेये ७६ । ५४ ।
"सुमेधा विरजाश्चैव हविष्मानुन्नतो मधः ।
अतिनामा सहिष्णुश्च सप्तासन्निति चर्षयः" ॥)

**उन्नतनाभिः**, त्रि, (उन्नतो नाभिः यस्य ।) उच्चनाभि-

युक्तः । तत्पर्य्यायः । तुन्दिः २ । इति
हलायुधः ॥

**उन्नतानतं**, त्रि, (उन्नतञ्च तत् आनतञ्चेति ।) उच्च-

नीचस्थानादि । तत्पर्य्यायः । बन्धुरम् २ ।
इत्यमरः ॥

**उन्नतिः**, स्त्री, (उत् + नम + क्तिन् ।) गरुडभार्य्या ।

समृद्धिः । ("वक्षोजौ करिकुम्भविभ्रमकरीमत्यु-
न्नतिं गच्छतः" । इति साहित्यदर्पणे ॥ ३ य
परिच्छेदे ।) उदयः । इति हेमचन्द्रः ॥ (यथा,
सिद्धान्तशिरोमणौ ।
"मासान्तपादे प्रथमेऽथवेन्दोः
शृङ्गोन्नतिर्यद्दिवसेऽवगम्या ।
तदोदयस्ते निशि वा प्रसाध्यः
शङ्कुर्विधोः स्वोदितनाडिकाद्यैः" ॥)

**उन्नतीशः**, पुं, (उन्नत्यास्तदाख्यया प्रसिद्धाया गरुड-

पत्न्याः ईशः स्वामी ।) गरुडपक्षी । इति त्रि-
काण्डशेषः ॥

**उन्नमितः**, त्रि, (उत् + नम् + णिच् + क्त ।) उत्तो-

लितः । उद्ध्वींकृतः । इति श्रीधरस्वामी ॥
("अथ प्रयत्नोन्नमितानमत्फणै-
र्धृते कथञ्चित् फणिनां गणैरधः" ॥
इति माघे । १ । १४ ॥)

**उन्नयः**, पुं, (उन्नयनम् । उत् + नी + क्वचिदपवाद

न्मत्तम्" । इति निदानस्थाने सप्तमेऽध्याये ।
"देवर्षिपितृगन्धर्व्वैरुन्मत्तस्य च बुद्धिमान् ।
वर्जयेदञ्जनादीनि तीक्ष्णानि क्रूरकर्म्म च ॥
सर्पिष्पानादि तस्येह मृदुभैषज्यमाचरेत्" ॥
इति च चिकित्सास्थाने १४ अध्याये
चरकेणोक्तम् ॥
अन्यद्विवरणमस्योन्मादशब्दे ज्ञेयम् ॥)
तद्वाक्यप्रामाण्यं यथा, -- मलमासतत्त्वे ॥
"उन्मत्तानाञ्च या गाथा शिशूनां चेष्टितं च यत् ।
स्त्रियो यच्च प्रभाषन्ते नास्ति तत्र व्यतिक्रमः ॥
आदौ गच्छति देवेषु पश्चात् गच्छति मानुषान् ।
नादेशिता वाग्वदति सत्या ह्येषा सरस्वती" ॥

**उन्मत्तः**, पुं, (उन्मत्तयति । उन्मत्त + तत्करोतीति

णिच् + पचाद्यच् ।) धुस्तूरः । यथा, --
("श्वेतोन्मत्तस्योत्तरदिङ्मूलसिद्धस्तु पायसः ।
गुडाज्यसंयुतो हन्ति सर्व्वोन्मादांश्च दोषजान्" ॥
इति तैद्यकचक्रपाणिसंग्रहे उन्मादाधिकारे ॥)
मुचुकुन्दवृक्षः । इति मेदिनी ॥

**उन्मदः**, त्रि, (उद्गतो मदो यस्य ।) उन्माद-

इति गारुडे १९९ अध्यायः ॥ * ॥ अथ उन्मादा-
धिकारः ॥ तत्र उन्मादस्य निरुक्तिमाह ।
"मदयन्त्युद्धता दोषा यस्मादुन्मार्गमास्थिताः ।
मानसोऽयमतो व्याधिरुन्माद इति कीर्त्तितः" ॥
अयमर्थः । यस्माद्धेतोरुद्धताः प्रवृद्धा दोषाः
उन्मार्गमास्थिताः मदयन्ति चित्तं विक्षिपन्त्य-
स्मिन् । अतोऽयमुन्माद इति कीर्त्तितः । सः
उन्मादः मानसो व्याधिः मनोवैकृत्यकरणात् ॥ *
॥
तस्यैवावस्थाभेदेन नामान्तरमाह । स चाप्रवृद्ध-
स्तरुणो मदसंज्ञां बिभर्त्ति च । स उन्मादस्तरुणो
नवीनः ॥ * ॥ उन्मादस्य विप्रकृष्टनिदानमाह ।
"विरुद्धदुष्टाशुचिभोजनानि
प्रधर्षणं देवगुरुद्विजानाम् ।
उन्मादहेतुर्भयहर्षपूर्ब्बो
मनोऽभिघातो विषमाश्च चेष्टाः ॥"
दुष्टं धत्तरवीजादिसहितम् । अशुचि रजस्वलादि-

:स्पृष्टम् । प्रधर्षणमभिभवः । विषमाश्च चेष्टाः
बलवद्विग्रहादयः ॥ * ॥ सन्निकृष्टं निदानमाह ।
“एकैकशः सर्व्वशश्च दोषैरत्यर्थमुच्छ्रितैः ।
मानसेन च दुःखेन स पञ्चविध उच्यते ॥
विषाद्भवति षष्ठश्च यथास्वं तत्र भषजम्” ॥ * ॥
तस्य सम्प्राप्तिमाह ।
“तैरल्पसत्त्वस्य मलाः प्रदुष्टाः
बुद्धेर्निवासं हृदयं प्रदूष्य ।
स्रोतांस्यधिष्ठाय मनोवहानि
प्रमोहयन्त्याशु नरस्य चेतः” ॥
अल्पसत्त्वस्य अल्पसत्त्वगुणस्य । मला वातादयः ।
बुद्धेर्निवासं हृदयं प्रदूष्येति । एतेनाश्रयस्य दुष्ट्या
तदाश्रिताया बुद्धेरपि दुष्टिरुक्ता । मनोवहानि
स्रोतांसि हृदयाश्रितानि दश । एतानि विशे-
षतो बोद्धव्यानि । यतश्चरकेण सकलशरीर-
स्रोतांस्येव मनोऽधिष्ठानत्वेनोक्तानि । प्रमोहयन्ति
विकृतं कुर्व्वन्ति ॥ * ॥
उन्मादस्य सामान्यं रूपमाह ।
“धीविभ्रमः सत्त्वपरिप्लवश्च
पर्य्याकुला दृष्टिरधीरता च ।
अबद्धवाक्त्वं हृदयञ्च शून्यं
सामान्यमुन्मादगदस्य लिङ्गम्” ॥
धीविभ्रमः शुक्तिकायां रजतज्ञानम् । सत्त्वपरिप्लवः
सत्त्वं मनस्तस्य चाञ्चल्यम् । अबद्धवाक्त्वं असम्ब-
द्धभाषित्वम् । शून्यं स्मृतिशून्यम् ॥ * ॥
वातिकोन्मादस्य निदानपूर्व्विकां सम्प्राप्तिमाह ।
रूक्षाल्पशीतान्नविरेकधातु-
क्षयोपवासैरनिलोऽतिवृद्धः ।
चिन्तातिदुष्टं हृदयं प्रदूष्य
बुद्धिं स्मृतिं वाप्युपहन्ति शीघ्रम्” ॥
प्रदूष्य प्रकर्षेण दूषयित्वा ॥ * ॥
तस्यैव रूपमाह ।
“अस्थानहास्यस्मृतिनृत्यगीत-
वागङ्गविक्षेपणरोदनानि ।
पारुष्यकार्श्यारुणवर्णताश्च
जीर्णे बलञ्चानिलजस्य रूपम्” ॥
अस्थाने अनवसरे । हास्यादीनि रोदनान्तानि ।
जीर्णे आहारे । बलं व्याधेः ॥ * ॥

इति यावत् । सन्तर्जनं परत्रासनम् । अभिद्रवणं
पलायनम् । औष्ण्यं गात्रे । चोषो दाहविशेषः ।
प्रच्छाय इत्यादि छायायां शीतयोरन्नजलयोरभि-
लाषः ॥ * ॥
श्लैष्मिकस्य निदानपूर्व्विकां सम्प्राप्तिमाह ।
“सम्पूरणैर्मन्दविचेष्टितस्य
सोष्मा कफो मर्म्मणि संप्रवृद्धः ।
बुद्धिं स्मृतिं वाप्युपहन्ति चित्तं
प्रमोहयन् संजनयेद्विकारम्” ॥
संपूरणैर्भोजनादिभिः । मन्दविचेष्टितस्य व्यायाम-
रहितस्य । सोष्मा कफ इति कफोऽप्युन्मादं करि-
ष्यन् पित्तं सहायमपेक्षते व्याधिस्वभावात् ।
मर्म्मणि अत्र मर्म्मशब्देन हृदयमुच्यते । विकार-
मुन्मादरूपम् ॥ * ॥
तस्य रूपमाह ।
“वाक्चेष्टितं मन्दमरोचकश्च
नारीविविक्तप्रियता च निद्रा ।
छर्दिश्च लाला च बलञ्च भुक्ते
नखादिशौक्ल्यञ्च कफात्मके स्यात्” ॥
वाक्चेष्टितं मन्दं वचनमल्पम् । नारीविविक्त-
प्रियता नारीप्रियता विजनप्रियता च । भुक्ते सति
बलं व्याधेः ॥ * ॥
सान्निपातिकस्य निदानपूर्व्वकं लक्षणमाह ।
“यः सन्निपातप्रभवोऽतिघोरः
सर्व्वैः समस्तैः स तु हेतुभिः स्यात् ।
सर्व्वाणि रूपाणि बिभर्त्ति तादृ-
ग्विरुद्धभैषज्यविधिर्व्विवर्ज्यः” ॥
स सान्निपातिक उन्मादः । सन्निपातग्रहणेनैव
सर्व्वात्मकत्वं लब्धम् । पुनः सर्व्वैरिति यत्कृतं तद्र-
जस्तमःप्रापणार्थम् । तेन रजस्तमोमिलितैरि-
त्यर्थः । तेन वातादयो रजस्तमोभिर्मनोदोषैर्म्मि-
लिताः । समस्तैश्च निदानैः कुपिता उन्मादं जन-
यन्ति । सर्व्वैर्हेतुभिः समस्तैर्म्मिलितैः स्यात् । यतो-
ऽन्यो व्याधिः सर्व्वैर्हेतुभिर्मिलितैरेव भवतीति
नियमो नास्ति । अयन्तु व्याधिप्रभावात् सर्व्वैर्हेतु-
भिर्म्मिलितैः स्यात् । तादृगुन्मादः विरुद्धभैष-

चित्रमाश्चर्य्यं । मनोऽनुगतं गोप्यमपि । विसंज्ञो
विरुद्धज्ञानः । अतीवमूढः अतीवज्ञानशून्यः । अत्र
विकल्पो बोद्धव्यः ॥ * ॥
विषजस्य रूपमाह ।
“रक्तेक्षणो हतबलेन्द्रियभाः सुदीनः
श्यावाननो विषकृते तु भवेत् परासुः” ।
परासुः मृतः ॥ * ॥
अरिष्टमाह ।
“अवाङ्मुखस्तून्मुखो वा क्षीणमांसबलो नरः ।
जागरूको ह्यसन्देहमुन्मादेन विनश्यति” ॥ * ॥
अथ देवादिकृतस्योन्मादस्य सामान्यं लक्षणमाह।
“अमर्यवाग्विक्रमवीर्य्यचेष्टो
ज्ञानादिविज्ञानबलादियुक्तः ।
प्रकोपकालो नियतश्च यस्य
देवादिजन्मा स मनोविकारः” ॥
अमर्त्यवाग्विक्रमवीर्य्यचेष्टः न मर्त्यस्येव मनुष्यस्येव
वागादयो यत्र सः । विक्रमः पराक्रमः । वीर्य्यं
शौर्य्यम् । ज्ञानादिविज्ञानबलादियुक्तः । ज्ञानं
बुद्धिः । आदिषदेन तद्भेदा मेधा-विचारणा-स्मृत्या-
दयो गृह्यन्ते । विज्ञानं शिल्पादिविषयकं ज्ञानम् ।
चेष्टा पाटवम् । आदिपदेनाभिमानादि गृह्यते ।
नियतः वक्ष्यमाणतिथ्यादिभिः । मनोविकार उ-
न्मादः ॥ * ॥
तत्र देवाविष्टस्य लक्षणमाह ।
“सन्तुष्टः शुचिरतिदिव्यमाल्यगन्धो
निस्तन्द्रोऽवितथसंस्कृतप्रभाषी ।
तेजस्वी स्थिरनयनो वरप्रदाता
ब्रह्मण्यो भवति नरः स देवजुष्टः” ॥
अतिदिव्यमाल्यगन्धः अतिशयो दिव्यमाल्यस्येव
गन्धो यस्य सः । निस्तन्द्रः निद्रारहितः । अवितथं
सत्यम् । ब्रह्मण्यः ब्राह्मणभक्तः ॥ * ॥
दैत्याविष्टमाह ।
“संस्वेदी द्विजगुरुदेवदोषवक्ता
जिह्माक्षो विगतभयो विमार्गदृष्टिः ।
सन्तुष्टो भवति न चान्नपानजातै-
र्दुष्टात्मा भवति स देवशत्रुजुष्टः” ॥
विमार्गदृष्टिः कुमार्गरतः । दुष्टात्मा दुष्टस्वभावः ।

पैत्तिकस्य निदानपूर्ब्बिकां सम्प्राप्तिमाह ।
“अजीर्णकट्वम्लविदाह्यशीतै-
र्भोज्यैश्चितं पित्तमुदीर्णवेगम् ।
उन्मादमत्युग्रमनात्मकस्य
हृदि स्थितं पूर्ब्बवदाशु कुर्य्यात्” ॥
हृदि स्थितं पित्तं चितं सञ्चितम् । पुनः अजीर्ण-
कट्वम्लविदाह्यशीतैर्भोज्यैरुदीर्णवेगं सत् उन्मादं
कुर्य्यात् पूर्ब्बवत् हृदयं प्रदूष्य इत्यर्थः ॥ * ॥
तस्य रूपमाह ।
“अमर्षसंरम्भविनग्नभावाः
सन्तर्जनाभिद्रवणौष्ण्यचोषाः ।
प्रच्छायशीतान्नजलाभिलाषः
पोतावभाः पित्तकृतस्य लिङ्गम्” ॥
अमर्षोऽसहिष्णुता । संरम्भः आरभटी आडम्बर-
ज्यविधिः । विरुद्धभैषज्यविधिरिति कोऽर्थः । त्रि-
दोषजे प्रत्येकं वातादिप्रत्यनीका कार्य्या । सा च
परस्पराविरोधिनी त्रिदोषं हन्ति किञ्चिदेव
द्रव्यमामलकादि तच्चात्रायौगिकम् । अतएव वि-
वर्ज्यः न चिकित्स्य इत्यर्थः ॥ * ॥
मनोदुःखजस्य विप्रकृष्टं निदानमाह ।
“चौरैर्नरेन्द्रपुरुषैररिभिस्तथान्यै-
र्वित्रासितस्य धनबान्धवसंक्षयाद्वा ।
गाढं क्षते मनसि च प्रियया रिरंसो-
र्जायेत चोत्कटतरो मनसो विकारः” ॥
अन्यैर्हिंस्रादिभिः । गाढमतिशयेन । क्षते अभि-
हते । प्रियया प्राप्तुमशक्यया रिरंसोः पुरुषस्य
विकारः उन्मादरूपः ॥ * ॥
तस्य रूपमाह ।
“चित्रं ब्रवीति च मनोऽनुगतं विसंज्ञो
गायत्यथो हसति रोदिति चातिमूढः” ।
गन्धर्व्वाविष्टमाह ।
“हृष्टात्मा पुलिनवनान्तरोपसेवी
स्वाचारः प्रियपरिगीतगन्धमाल्यः ।
नृत्यन् वै प्रहसति चारु चाल्पशब्दं
गन्धर्व्वग्रहपरिपीडितो मनुष्यः” ॥
हृष्टात्मा हृष्टजीवात्मा । पुलिनंतोयोत्थितं तटम् ।
वनान्तरं वनमध्यम् । तयोः सेवी । स्वाचारः
अनिन्दिताचारः । प्रियाणि परि समन्ततो भावेन
गीतगन्धमाल्यानि यस्य स तथा । चारुचाल्प-
शब्दमिति हसनक्रियाया विशेषणम् ॥ * ॥
यक्षाविष्टमाह ।
“ताम्राक्षः प्रियतनुरक्तवस्त्रधारी
गम्भीरोऽद्रुतगतिरल्पवाक् सहिष्णुः ।
तेजस्वी वदति च किं ददामि कस्मै
यो यक्षग्रहपरिपीडितो मनुष्यः” ॥ * ॥

:पित्राविष्टमाह ।

"प्रेतानां स दिशति संस्तरेषु पिण्डान्
शान्तात्मा जलमपि वापसव्यवस्त्रः ।
मांसेक्षुतिलगुडपायसाभिकाम-
स्तद्भक्तो भवति पितृग्रहाभिजुष्टः" ॥
प्रेतानां मृतानां पितणाम् । दिशति ददाति ।
अपसव्यवस्त्रः दक्षिणस्कन्धधृतोत्तरीयः ॥ * ॥
नागाविष्टमाह ।
"यस्तूर्व्व्यां प्रसरति सर्पवत् कदाचित्
सृक्वण्यौ मुहुरपि जिह्वयावलेढि ।
क्रोधालुर्घृतमधुदुग्धपायसेप्सु-
र्विज्ञेयः स खलु भुजङ्गमेन जुष्टः" ॥
प्रसरति सर्पवत् उरसा चलति । सृक्वण्यौ
ओष्ठ-
प्रान्तौ ॥ * ॥
राक्षसाविष्टमाह ।
"मांसासृग्विविधसुराविकारलिप्सु-
र्निर्लज्जो भृशमतिनिष्ठुरोऽतिशूरः ।
क्रोधालुर्विपुलबलो निशाविचारी
शौचद्विट् भवति स राक्षसैर्गृहीतः" ॥
अतिनिष्ठुरोऽतिनिर्दयः ॥ * ॥
ब्रह्मराक्षसाविष्टमाह ।
"देवविप्रगुरुद्वेषी वेदवेदाङ्गविच्छुचिः ।
आत्मपीडाकरोऽहिंस्रो ब्रह्मराक्षससेवितः" ॥
अहिंस्रः अहिंसाशीलः ॥ * ॥
पिशाचाविष्टमाह ।
"उद्वस्त्रः कृशपरुषो विरुद्धभाषी
दुर्गन्धो भृशमशुचिस्तथातिलोलः ।
बह्वाशी विजनवनान्तरोपसेवी
व्याचेष्टन् भ्रमति रुदन् पिशाचजुष्टः" ॥
उद्वस्त्रः नग्नः । दिगम्बर इति विदेहवचनात् ।
कृशो निर्मांसः । परुषो रूक्षः । अतिलोलः
सर्व्व-
स्मिन् अन्नपाने लोलुपः । व्याचेष्टन् विरुद्धमाचे-
ष्टन् । ग्रहा हिंसा क्रीडा पूजार्थं गृड्णन्ति । अत-
एवोक्तम् ।
"अशुचिं भिन्नमर्य्यादं क्षतं वा यदि वाक्षतम् ।
हिंस्युर्हिंसाविहारार्थं सत्कारार्थमथापि वा" ॥ *
॥
तत्र हिंसार्थं गृहीतस्य लक्षणमाह ।
"स्थूलाक्षो द्रुतमटनः सफेनवामी
निद्रालुः पतति च कम्पते च योऽति ।
विशन्तस्ते दृश्यन्ते कथं नेत्यत आह ।
"दर्पणादीन् यथा छाया शीतोष्णं प्राणिनो यथा ।
स्वमणिं भास्करार्च्चिश्च यथा देहञ्च देहधृक् ॥
विशन्ति न च दृश्यन्ते ग्रहास्तद्वच्छरीरिणाम्" ।
दर्पणादीत्यादिशब्देनान्यदपि निर्म्मलद्रवद्रव्यं गृ-
ह्यते । छाया प्रतिविम्बम् । स्वमणिं सूर्य्यमणिम् ।
देहधृक् जीवात्मा ॥ * ॥ * ॥
अथोन्मादस्य चिकित्सा ।
"वातिके स्नेहपानं प्राक् विरेकः पित्तसम्भवे ।
कफजे वमनं कार्य्यं परो वस्त्यादिकक्रमः
यच्चोपदेक्ष्यते किञ्चिदपस्मारे चिकित्सितम् ।
उन्मादे तच्च कर्त्तव्यं सामान्याद्दोषदूष्ययोः ॥
जलादिद्रुमशैलेभ्यो विषमेभ्यश्च तं सदा ।
रक्षेदुन्मादिनं यत्नात् सद्यः प्राणहरा हि ते" ॥
ते जलादयः ॥ * ॥
"ब्राह्मीकुष्माण्डीफलषड्ग्रन्थाः
शङ्खपुष्पिकास्वरसाः ।
दृष्टा उन्मादहृतः पृथगेते कुष्ठमधुमिश्राः" ॥
अत्र ब्राह्मीति पदं ब्राह्मीस्वरसपरम् । कुष्माण्डी-
फलं तद्बीजपरम् । षड्ग्रन्थे तु यथाश्रुतार्थमेव ।
तेनायमर्थः । वरभीकरसतोरा ४ कूटकचूर्ण-
मासा २ मधुमासा ८ पेयः । इत्येको योगः ॥
कोहण्डके वीजकचूर्णमासा २ कूटकचूर्णमासा २
मधुना संनीयावलेह्यम् । द्वितीयो योगः । महा-
भरीवचकचूर्णमासा २ कूटकचूर्णमासा २ मधु
नावलेह्यम् । तृतीयो योगः ॥ शङ्खपुष्पीस्वरस-
तोरा ४ कूटकचूर्णमासा २ मधुमासा ८ पेयः ।
चतुर्थयोगः ॥ * ॥
"सिद्धार्थको हिङ्गु वचाकरञ्जौ देवदारु च ।
मञ्जिष्ठा त्रिफला श्वेता कटभीत्वक् कटुत्रिकम् ॥
समांशानि प्रियङ्गुश्च शिरीषो रजनीद्वयम् ।
वस्तमूत्रेण पिष्टोऽयमगदः पानमञ्जनम् ॥
नस्यमालेपनञ्चैव स्नानमुद्वर्तनं तथा ।
अपस्मारविषोन्मादकृत्यालक्ष्मीज्वरापहम् ॥
भूतेभ्यश्च भयं हन्ति राजद्वारे च शस्यते ।
सर्पिरेतेन संसिद्धं सगोमूत्रं तथार्थकृत्" ॥
सिद्धार्थकादि ॥ * ॥
"ब्रूयादिष्टविनाशञ्च दर्शयेदद्भुतानि च ।
बद्धं सर्षपतैलाक्तं रक्षेदुत्तानमातपे ॥
कपिकच्छूथवा तप्तैर्लोहतैलजलैः स्पृशेत् ।
कशाभिस्ताडयेत्तं वा सुबद्धं विजने गृहे ॥
सर्पेणोद्धतदत्तेन दंशैः सिंहैर्गजैश्च तं ।
त्र्युषणाद्यञ्जनम् ॥ * ॥
"कुष्ठाश्वगन्धे लवणाजमोदे
द्वे जीरके त्रीणि कटूनि पाठा ।
मङ्गल्यपुष्पी च समान्यमूनि
सर्व्वैः समानाञ्च वचां विचूर्ण्य ॥
ब्राह्मीरसेनाखिलमेव भाव्यं
वारत्रयं शुष्कमिदं हि चूर्णम् ।
अक्षप्रमाणं मधुना घृतेन
लिह्यान्नरः सप्त दिनानि यावत् ॥
सारस्वतमिदं चूर्णं ब्रह्मणा निर्म्मितं पुरा ।
हिताय सर्व्वलोकानां दुर्म्मेधानां विचेतसाम् ॥
एतस्याभ्यासतः पुंसां बुद्धिर्म्मेधा घृतिः स्मृतिः ।
सम्पत्तिः कविताशक्तिः प्रवर्द्धेतोत्तरोत्तरम्" ॥
मङ्गल्यपुष्पी शङ्खदूली इति लोके । सारस्वतं
चूर्णम् ॥ * ॥
"विश्वाजमोदरजनीद्वयसैन्धवोग्रा-
षष्ट्याह्वकुष्ठमगधोद्भवजीरकाणाम् ।
चूर्णं प्रभातसमये लिहतः ससर्पि-
र्वाग्देवता निवसति स्वयमेव वक्त्रे" ॥
विश्वाद्यं चूर्णम् ॥ * ॥
"क्वाथ्ये विचूर्णिते क्षिप्त्वा तत्षोडशगुणं जलम् ।
पादशेषं प्रकर्त्तव्यमेष क्वाथविधिः स्मृतः ॥
दशमूली तथा रास्ना वातारिस्त्रिवृता बला ।
मूर्व्वा शतावरी चेति क्वाथ्यैस्तु कुडवैः पृथक् ॥
कृते क्वाथे घृतं प्रस्थद्वयं मृद्वग्निना पचेत् ।
कल्कीकृतैर्वक्ष्यमाणद्रव्यैः मम्यक् पुनः पचेत् ॥
विशाला त्रिफला कौन्ती देवदार्व्वेलवालुकम् ।
स्थिरानन्ता रजन्यौ द्वे प्रियङ्गुः सारिवाद्वयम् ॥
नीलोत्पलैलामञ्जिष्ठादन्तीदाडिमकेशरम् ।
विडङ्गं ह्यग्निपत्री च कुष्ठं चन्दनपद्मके ॥
तालीसपत्रं वृहती मालतीकुसुमं नवम् ।
अष्टाविंशतिभिः कल्कैरेतैः कर्षमितैः पृथक् ॥
चतुर्गुणं जलं दत्त्वा पिष्टैस्तद्विपचेद्घृतम् ।
महाचैतसनामेदं सर्व्वचेतोविकारहृत् ॥
अपस्मारे महोन्मादे मन्देऽग्नौ ज्वरकासयोः ।
वातरक्ते प्रतिश्याये शोषे कार्श्ये तृतीयके ॥
मूत्रकृच्छ्रे कटीशूले विसर्पाभिहतेषु च ।
पाण्ड्वामये तथा कण्ड्वां विषे मेहे गरेऽपि च ॥
देवादिहतचित्तानां गद्गदानामचेतसाम् ।
शस्तं स्त्रीणाञ्च बन्ध्यानां धन्यमायुर्बलप्रदम् ॥
अलक्ष्मीपापरक्षोघ्नं सर्व्वग्रहनिवारणम् ।
हन्ति भ्रमं मदं मूर्च्छां मेधास्मृतिमतिप्रदम्" ॥

यश्चाद्रिद्विरदनगादिविच्युतः स्यात्
सोऽसाध्यो भवति तथा त्रयोदशेऽब्दे ॥”
यश्चाद्रीत्यादि यः पर्ब्बतादिपतितः सन्
ग्रहैर्गृह्यत-
इत्यर्थः । आदिर्शब्देन भित्तिप्रासादादयो
गृह्यन्ते ।
त्रयोदशेऽब्दे सर्व्व एव देवादिगृहीतोऽसाध्यः ॥
* ॥
देवादीनामावेशसमयमाह ।
“देवग्रहाः पौर्णमाम्यामसुराः सन्ध्ययोरपि ।
गन्धर्व्वाः प्रायशोऽष्टम्यां यक्षश्च प्रतिपद्यपि ॥
पितरः कृष्णपक्षे च पञ्चम्यामपि चोरगाः ।
रक्षःपिशाचा रात्रौ च चतुर्द्दश्यां विशन्ति हि” ॥
कृष्णपक्षे अमायाम् । प्रायशःपदादन्यत्रापि ।
तिथ्यमिधानप्रयोजनं लक्षणार्थं तत्र तिथौ बलि-
दानार्थञ्च ॥ * ॥ ननु यदि देवादयो विशन्ति
तदा

त्रासयेच्छस्त्रहस्तैश्च शत्रुभिस्तस्करैस्तथा ॥
अथवा राजपुरुषा वहिर्नीत्वा सुसंयतम् ।
त्रासयेयुर्ब्बधैरेनं तर्ज्जयन्तो नृपाज्ञया ॥
देहदुःखभयेभ्यो हि यतः प्राणभयं महत् ।
ततस्तस्य शमं याति सर्व्वतो विप्लुतं मनः ॥
इष्टद्रव्यविनाशेन मनो यस्याभिहन्यते ।
तस्य तत्सदृशप्राप्त्या सान्त्वाश्वासैः शमं नयेत् ॥
* ॥
त्र्युषणं हिङ्गु लवणं वचा कटुकरोहिणी ।
शिरीषस्य करञ्जस्य वीजं गौराश्च सर्षपाः ॥
गोमूत्रपिष्टैरेभिस्तु वर्त्तिर्नेत्राञ्जने हिता ।
हन्त्युन्मादमपस्मारं तथा चातुर्थकं ज्वरम्” ॥

अग्निपत्री अग्निवतीति लोके अगिया इति च ।
महाचैतसं घृतम् ॥ * ॥
अथ देवाद्याविष्टानां चिकित्सा ।
“पूजाबल्युपहारेष्टिहोममन्त्राञ्जनादिभिः ।
जयेदागन्तुमुन्मादं यथाविधि शुचिर्भिषक् ॥
कृष्णामरिचसिन्धूत्थमधुगोरोचनाकृतम् ।
अञ्जनं सर्व्वदेवादिकृतोन्मादहरं परम्” ॥
कृष्णाद्यञ्जनम् ॥ * ॥
“ऋक्षजम्बुकलोमानि शल्लकी लसुनं तथा ।
हिङ्गु मूत्रञ्च वस्तस्य धूपमस्य प्रयोजयेत् ॥

:एतेन शाम्यति क्षिप्रं बलवानपि यो ग्रहः” ।

ऋक्षलोमादिधूपः ॥ * ॥
“कल्याणकञ्च युञ्जीत महद्वा चैतसं घृतम् ।
तैलं नारायणं चाथ महानारायणं तथा ॥
ऋते पिशाचादन्येषु प्रतिकूलं न चाचरेत् ।
रोगिणं भिषजं यत्ते क्रुद्धा हन्युर्म्महौजसः” ॥
इत्युन्मादाधिकारः । इति भावप्रकाशः ॥
(आत्रेय उवाच ॥
“अयं मानसको व्याधिरुन्माद इति कीर्त्तितः ।
प्रमत्ता ऊद्र्ध्वगा दोषा ऊद्र्ध्वं
गच्छन्त्यमार्गताम् ॥
उन्मादो नाम दोषोऽयं कष्टसाध्यो भिषग्वरैः ।
सोऽपि पृथग्विधैर्दोषैर्द्वन्द्वजोऽन्यः प्रकीर्त्तितः ।
अथान्यः सन्निपातेन विषाद्भवति चापरः ॥
अशुचिविपथशून्यागारकेऽरण्यमध्ये
सभयगहनवीथीदेवतागारके च ।
अथ कथमपि भीत्या शङ्कया खिन्नचेतः-
क्षुभितमनसमार्गत्याज्यमुन्मार्गयेति ॥
चिन्ताव्यथासुभयहर्षविमर्षलोभात्
देवातिथिद्विजनरेन्द्रगुरोर्विमानात् ।
प्रेमाधिकाद्युवजनादपि विप्रयोगात्
उन्मादहेतु च नृणां कथितं वरिष्ठैः ॥
तन गायति वा रौति विरूपं पठते यदा ।
लोलयेच्छर्द्दते वापि कम्पते हसते तथा ॥
धावते हनने चैव तथा जिह्वा विनश्यति ।
नरो वा भ्रमतेऽत्यर्थं पश्येद्धनमथातुरः ॥
तस्यापस्मारकं कर्म्म कर्त्तव्यं भिषजांवरैः ।
विशेषेण भूतविद्यां मध्ये वक्ष्यामि चाग्रतः” ॥
इति महर्ष्यात्रेयभाषिते हारीतोत्तरे तृयीय-
स्थाने उन्मादनिदाननामा विंशोऽध्यायः ॥
अस्य सम्प्राप्तिसहित-निदानलक्षण-
चिकित्सिता-
न्याह वाभटः ॥
“उन्मादाः षट् पृथग्दोषनिचयाधिविषोद्भवाः ।
उन्मादोनाम मनसो दोषैरुन्मार्गगैर्मदः ॥
शारीरमानसैर्दुष्टैरहितादत्र पानतः ।
विकृतासात्म्यसमलाद्विषमादुपयोगतः ॥
विषमस्याल्पसत्त्वस्य व्याधिवेगसमुद्गमात् ।
क्षीणस्य चेष्टावैषम्यात् पूज्यपूजाव्यतिक्रमात्
॥
आधिभिश्चिचविभ्रंशाद्विषेणोपविषेण च ।
एभिर्विहीनसत्त्वस्य हृदि दोषाः प्रदूषिताः ॥

पित्तात् सन्तर्ज्जनं क्रोधो मुष्टिलोष्ट्राद्यभिद्रवः ।
शीतच्छायोदकाकाङ्क्षा नग्नत्वं पीतवर्णता ।
असत्यज्वलनज्वालातारकादीपदर्शनम् ॥ २ ॥
कफादरोचकश्छर्द्दिरल्पेहाहारवाक्यता ।
स्त्रीकामता रहः प्रीतिर्लालासिङ्घाणकश्रुतिः ॥
बैभत्स्यं शौचविद्वेषो निद्राश्वयथुरानने ।
उन्मादो बलवान् रात्रौ भुक्तमात्रे च जायते ॥ ३
॥
सर्व्वायतनसंस्थानसन्निपाते तदात्मकम् ।
उन्मादं दारुणं विद्यात् तं भिषक् परिवर्ज्जयेत् ॥
४ ॥
धनकान्तादिनाशेन दुःसहेनाभिषङ्गवान् ।
पाण्डुर्दीनो मुहुर्मुह्यन् हाहेति परिदेवते ॥
रोदित्यकस्मान् म्रियते तद्गुणान् बहु मन्यते ।
शोकक्लिष्टमना ध्यायन् जागरूको विचेष्टते ॥ ५
॥
विषेण श्याववदनो नष्टच्छायाबलेन्द्रियः ।
वेगान्तरेऽपि संभ्रान्तो रक्षाक्षस्तं विवर्जयेत्” ॥ ६
॥
चिकित्सा यथा ॥
“अथानिलज उन्मादे स्नेहपानं प्रयोजयेत् ।
पूर्ब्बमावृतमार्गे तु सस्नेहं मृदुशोधनम् ॥
कफपित्तभवेऽप्यादौ वमनं सविरेचनम् ।
तथास्य शुद्धदेहस्य प्रसादं लभते मनः ॥
इत्थमप्यनुवृत्तौ तु तीक्ष्णं लावणमञ्जनम् ।
हर्षणाश्वासनोत्रासभयताडनतर्ज्जनम् ॥
अभ्यङ्गोद्वर्त्तनालेपधूमान् पानञ्च सर्पिषः ।
युञ्ज्यात्तानि हि शुद्धस्य नयन्ति प्रकृतिं मनः”
॥ * ॥
“द्वौ प्रस्थौ स्वरसाद्ब्रह्म्या घृतप्रस्थञ्च
साधितम् ॥
व्योषश्यामात्रिवृद्दन्तीशङ्खपुष्पीनृपद्रुमैः ।
ससप्तलाक्रिमिहरैः कल्कितैरक्षसम्मितैः ॥
पलवृद्ध्या प्रयुञ्जीत परं मात्राचतुष्पलम् ।
उन्मादकुष्ठापस्मारहरं बन्ध्यासुतप्रदम् ॥
वाक्स्वरस्मृतिमेधाकृद्धन्यं ब्राह्मीघृतं स्मृतम्” ॥
इति ब्राह्मीघृतम् ॥ * ॥
“वरा विशाला भद्रैला देवदार्व्वेलबालुकैः ।
द्विसारिवा द्विरजनी द्विस्थिरा फलिनी नतैः ॥
वृहतीकुष्ठमञ्जिष्ठानागकेशरदाडिमैः ।
वेल्लतालीशपत्रैलामालतीमुकुलोत्पलैः ॥
सदन्तीपद्मकहिमैः कर्षांशैः सर्पिषः पचेत् ।

महापुरुषदन्ता च वनस्था नाकुलीद्वयम् ।
कटम्भरा वृश्चिकाली शालिपर्णो च तैर्घृतम् ॥
सिद्धं चातुर्थिकोन्मादग्रहापस्मारनाशनम् ।
महापैशाचकं नाम घृतमेतद्यथामृतम् ॥
बुद्धिमेधास्मृतिकरं बालानाञ्चाङ्गवर्द्धनम्” ॥
इति महापैशाचकं घृतम् ॥ * ॥
“अवपीडाश्च विविधाः सर्षपाः स्नेहसंयुताः ।
कटुतैलेन चाभ्यङ्गो ध्मापयेच्चास्य तद्रजः ॥
सहिङ्गुस्तीक्ष्णधूमश्च सूत्रस्थानोदितो हितः ॥ * ॥
शृगालशल्यकोलूकजलूकावृषवस्तजैः ॥
मूत्रपित्तशकृल्लोमनखचर्म्मभिराचरेत् ।
धूपधूमाञ्जनाभ्यङ्गप्रदेहपरिषेचनम् ॥
धूपयेत् सततञ्चैनं श्वगोमत्स्यैस्तु पूतिभिः ।
वातश्लेष्मात्मके प्रायः पैत्तिके तु प्रशस्यते ॥
तिक्तकं जीवनीयञ्च सर्पिः स्नेहश्च मिश्रकः ।
शिशिराण्यन्नपानानि मधुराणि लघूनि च ॥
विध्येच्छिरां यथोक्तां वा तृसं मेद्यामिषस्य वा ।
निवाते शाययेदेवं मुच्यते मतिविभ्रमात्” ॥
“भूतानुबन्धमीक्षेत प्रोक्तात्लिङ्गाधिकाकृतिम् ॥
यद्युन्मादे ततः कुर्य्याद्भूतनिर्द्दिष्टमौषधम् ।
बलिञ्च दद्यात् पललं यावकं सक्तुपिण्डिकाम् ॥
स्निग्धं मधुरमाहारं तण्डुलान् रुधिरोक्षितान् ।
पक्वामकानि मांसानि सुरामैरेयमासवम् ॥
अतिमुक्तस्य पुष्पाणि जात्या सहचरस्य च ।
चतुष्पथे गवां तीर्थे नदीनां सङ्गमेषु च ॥
निवृत्तामिषमद्यो यो हिताशी प्रयतः शुचिः ।
निजागन्तुभिरुन्मादैः सत्त्ववान्न स युज्यते ॥
प्रसाद इन्द्रियार्थानां बुद्ध्यात्ममनसान्तथा ।
धातूनां प्रकृतिस्थत्वं विगतोन्मादलक्षणम्” ॥ * ॥
इति वाभटे उत्तरस्थाने सप्तमोऽध्यायः ॥
अस्य सनिदानसंप्राप्तिर्यथा ।
“इह खलु पञ्चोन्मादा भवन्ति । तद्यथा, --
वातपित्तकफसन्निपातागन्तुनिमित्तास्तत्र दोष-
निमित्ताश्चत्वारः ।
पुरुषाणामेवंविधानां क्षिप्रमभिनिर्वर्त्तन्ते तद्यथा,
भीरूणामुपक्लिष्टसत्त्वानामुत्सन्नदोषाणाञ्च
मलविकृतोपहितानि अनुचितान्याहारजातानि
वैषम्ययुक्तेनोपयोगविधिनोपयुञ्जानानां तन्त्रप्रयोग
वा विषममाचरतामन्यां वा चेष्टां विषमां समा-
चरतामत्युपक्षीणदेहानाञ्च व्याधिवेगसमुद्भ्रमि-
तानामुपहतमनसां वा काम-क्रोध-लोभ-हर्ष-भय-
शोक-चिन्तोद्वेगादिभिः पुनरभिघाताभ्याहतानां

धियो विधाय कालुष्यं हत्वा मार्गान् मनीवहान्
उन्मादं कुर्व्वते तेन धीविज्ञानस्मृतिभ्रमात् ॥
देहो दुःखसुखभ्रष्टो, भ्रष्टसारथिवद्रथः ।
भ्रमत्यचिन्तितारम्भम्” --
वातादिभेदेन लक्षणं यथा ॥
“तत्र वातात् कृशाङ्गता ॥
अस्थाने रोदनाक्रोशहसितस्मितनर्त्तनम् ।
गीतवादित्रवागङ्गविक्षेपास्फोटनानि च ॥
असाम्ना वेणुवीणादिशब्दानुकरणं मुहुः ।
आस्यात् फेनागमोऽजस्वमटनं बहुभाषिता ॥
अलङ्कारोऽनलङ्कारैरयानैर्गमनोद्यमः ।
गृद्धिरभ्यवहार्य्येषु तल्लाभे वावमानता ॥
उत्पिण्डितारुणाक्षित्वं जीर्णे चान्ने गदोद्भवः ॥
१ ॥

प्रस्थं भूतग्रहोन्मादकासापस्मारपाप्मसु ॥
पाण्डुकण्डुविषे शोफे मोहे मेहे गरे ज्वरे ।
अरेतस्यप्रजसि वा दैवोपहतचेतसि ॥
अमेधसि स्खलद्वाचि स्मृतिकामेऽल्पपावके ।
बल्यं मङ्गल्यमायुष्यं कान्तिसौभाग्यपुष्टिदम् ॥
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च” ॥
इति कल्याणघृतम् ॥ * ॥
“एभ्यो द्विसारिवादीनि जले पक्त्वैकविंशतिम् ।
रसे तस्मिन् पचेत्सर्पिर्गृष्टिक्षीरं चतुर्गुणम् ॥
वीराद्विमेदाकाकोलीकपिकच्छूविषाणिभिः ।
सूर्पपर्णीयुतैरेतन्महाकल्याणकं परम् ॥
वृंहणं सन्निपातघ्नं पूर्ब्बस्मादधिकं गुणैः” ॥
इति महाकल्याणं घृतम् ॥ * ॥
“जटिला पूतना केशी चारटी मर्कटी वचा ॥
त्रायमाणा जया वीरा चोरकः कटुरोहिणी ।
कायस्था शूकरीच्छत्रा अतिच्छत्रा पलङ्कषा ॥

वा मनस्युपहते बुद्धौ च प्रचलितायामभ्युदीर्णाः
दोषाः प्रकुपिता हृदयमुपसृत्य मनोवहानि
स्रोतांस्यावृत्य जनयन्त्युन्मादम् । उन्मादं पुनर्मनो-
बुद्धि-संज्ञा-ज्ञान-स्मृति-भक्ति-शील-चेष्टाहार-
विभ्रमं विद्यात्” ॥
तस्येमानि पूर्ब्बरूपाणि । तद्यथा, --
“शिरसः शून्यभावः चक्षुषोः व्याकुलता स्वनःकर्ण-
यीरुच्छ्वासस्याधिक्यमास्यसंस्रवणमनन्नाभिलाषो-
ऽरोचकाविपाकौ हृदयग्रहो ध्यानायास-सम्मो-
होद्वेगाश्चास्थाने सततं लोमहर्षो ज्वरश्चाभीक्ष्ण-

:मुन्मत्तचित्तत्वमुदर्द्दितत्वमर्द्दिताकृतिकरणञ्चव्याधेः

स्वप्ने च दर्शनमभीक्ष्णं भ्रान्तचलितानवस्थिता-
नवस्थितानाञ्च रूपाणामप्रशस्तानाञ्च तिलपी-
डकचक्राधिरोहणं वातकुण्डलिकाभिश्चोन्मथनं
निमज्जनं कलुषाणामम्भसामावर्त्तेषु चक्षुषोश्चा-
पसर्पणमिति दोषनिमित्तानामुन्मादानां पूर्ब्ब-
रूपाणि" ॥

अत्र वातादिभेदेनास्य लक्षणानि यथा, --
"ततोऽनन्तरमुन्मादाभिनिर्वृत्तिस्तत्रेदमुन्माद-

विज्ञानं भवति । तद्यथा, -- परिसर्पणमक्षिभ्रुवा-
मोष्ठांस-हनु-हस्त-पादविक्षेपणमकस्मादनियता-
नाञ्च सततङ्गिरामुत्सर्गः फेनागमनमात्स्यात् स्मित-
हसित-नृत्य-गीत-वादित्र-प्रयोगाश्चास्थाने वीणा-
वंश-शङ्ख-शस्यातालशब्दानुकरणमसाम्ना । यान-
मयानैरलङ्करणमनलङ्कारिकैर्द्रव्यैर्लोभोऽभ्यवहार्य्ये-
ष्वलब्धेषु । लब्धषु चावमानस्तीव्रं मात्सर्य्यं कार्श्यं
पारुष्यमुत्पिण्डितारुणाक्षता वातोपशय-विपर्य्या-
सानुपशयिता चेति वातोन्मादलिङ्गानि भवन्ति ॥

अमर्षः क्रोध-संरम्भश्चास्थाने
शस्त्रलोष्टकाष्ठ-

मुष्टिभिरभिद्रवणं स्वेषां परेषां प्रच्छाय-शीतोद-
कान्नाभिलाषः । सन्तापोऽतिवेलम् । ताम्रहरित-
हारिद्रसंरब्धाक्षिता पित्तोपशयविपर्य्यासादनु-
पशयिता चेति पित्तोन्मादलिङ्गानि भवन्ति ॥

स्थानमेकदेशे तूष्णीम्भावोऽल्पशश्चंक्रमणं
ला-

लाशिङ्घाणकाप्रस्रवणमनन्नाभिलाषो रहस्कामता
बीभत्सत्वं शौचद्वेषः स्वप्न-निद्रताश्वयथुरानने
शुक्ल-
स्तिमितमलोपदिग्धाक्षता श्लेष्मोपशयविपर्य्या-
सादनुपशयिता चेति श्लेष्मोन्मादलिङ्गानि भवन्ति ।
त्रिदोषलिङ्गसन्निपाते तु सान्निपातिकं विद्यात् ।
तमसाध्यमित्याचक्षते कुशलाः" ॥
साधारणसाधनविधिर्यथा ।

"साध्यानान्तु त्रयाणां साधनानि भवन्ति ।

तद्यथा, -- स्नेह-स्वेद-वमन-विरेचनास्थापनानुवास-
नोपशमननस्तः कर्म्म-धूप-धूम-पानाञ्जनावपीड-
प्रधमनाभ्यङ्ग-प्रदेह-परिषेकानुलेपन-बध-बन्धना-

तमात्मनोहतमुपघ्नन्तो देवादयः
कुर्व्वन्त्युन्मत्तम्" ॥
आगन्तून्मादस्य पूर्ब्बरूपाणि यथा ।

"तत्र
देवादिप्रकोपनिमित्तेनागन्तून्मादेन
पुर-

स्कृतस्येमानि पूर्ब्बरूपाणि । तद्यथा --
देव-गो-
ब्राह्मण-तपस्विनां हिंसारुचित्वं कोपनत्वं
नृशं
साभिप्रायता अरतिरोजो-वर्णच्छाया-बल-
वपुषा-
ञ्चोपतप्तिः स्वप्ने च देवादिभिरभिभर्त्सनं
प्रवर्त्त-
नञ्चेति ततोऽन्तरमुन्मादाभिनिर्वृत्तिः ॥

तत्रायमुन्मादकराणां
भूतानामुन्मादयिष्यता-

मारम्भविशेषो भवति । तद्यथा ।
अवलोकयन्तो
देवा जनयन्त्युन्मादं
गुरुवृद्धसिद्धर्षयोऽभिशपन्तः
पितरो धर्षयन्तः स्पृशन्तो गन्धर्व्वाः
समाविशन्तो
यक्षराक्षसास्त्वामगन्धमाघ्रापयन्तः
पिशाचाः पुन-
रारुह्य वाहयन्तः ॥
तस्येमानि रूपाणि भवन्ति । तद्यथा ।
अमर्त्यबल-
वीर्य्य-पौरुष-पराक्रम-ग्रहण-धारण-
स्मरण-वचन-
ज्ञान-विज्ञानान्यनियतश्चोन्मादकालः ।

उन्मादयिष्यतामपि खलु देवर्षि-
पितृ-गन्धर्व्व-

यक्ष-राक्षस-पिशाचानां गुरुवृद्धसिद्धानां वा
एष्व-
न्तरेष्वभिगमनीयाः पुरुषा भवन्ति ।
तद्यथा --
पापस्य कर्म्मणः समारम्भे पूर्ब्बकृतस्य वा
कर्म्मणः

नाचारधर्म्मः कुतएव शान्तिम् ।
विन्दत्यपास्तस्मृतिबुद्धिसंज्ञो
भ्रमत्ययञ्चेतैतस्ततश्च ॥
समुद्भ्रमं बुद्धिमनःस्मृतीना-
मुन्मादमागन्तुनिजोत्थमाहुः" ॥
"देवर्षि-गन्धर्व्व-पिशाच-यक्ष-
रक्षःपितृणामभिधर्षणानि ।
आगन्तुहेतुर्नियमव्रतादि-
मिथ्याकृतं कर्म्म च पूर्ब्बदेहे" ॥
"अदूषयन्तः पुरुषस्य देहं
देवादयः स्वैस्तु गुणप्रभावैः ।
विशन्त्यदृश्यास्तरसा यथैव
च्छायातपौ दपर्णसूर्य्यकान्तौ ॥
आघातकालास्तु सपर्ब्बरूपाः
प्रोक्ता निदानेऽथ सुरासुराद्यः ।
उन्मादरूपाणि पृथक् निबोध
कालञ्च गम्यान् पुरुषांश्च तेषाम्" ॥
तद्यथा, -- सौम्यदृष्टिं गम्भीरमप्रधृष्यमकोपन-
मस्वप्नमभोजनाभिलाषिणमल्पस्वेदमूत्रपुरीषवाचं
शुभगन्धं फुल्लपद्मवदनमिति देवोन्मत्तं विद्यात् ॥

गुरुवृद्धसिद्धर्षीणामभिशापाभिचाराभिध्याना-

नुरूपचेष्टाहारव्याहारं तैरुन्मत्तं विद्यात् ॥

अप्रसन्नदृष्टिमपश्यन्तं निद्रालुं प्रतिहतवाच-

मनन्नाभिलाषारोचकाविपाकपरीतं पितृभिरुन्मत्तं
विद्यात् ॥

चण्डं साहसिकं तीक्ष्णं गम्भीरमप्रधृष्यं मुख-

वाद्य-नृत्य-गीतान्नपान-स्नान-माल्य-धूप-गन्ध-रक्त-
वस्त्र-बलिकर्म्म-हास्य-कथायोगप्रिपं शुभगन्ध-
मिति गन्धर्व्वोन्मत्तं विद्यात् ॥

असकृत् स्वप्नरोदनहास्यं नृत्य-गीत-वाद्य-

कथान्नपान-स्नान-माल्य-धूप-गन्धरतिं रक्तविप्लु-
ताक्षं द्विजातिवैद्यपरिवादिनं रहस्यभाषिणमिति
यक्षोन्मत्तं विद्यात् ॥

नष्टनिद्रमन्नपानद्वेषिणमनाहारमप्रतिबलिनं

शस्त्रशोणितमांसरक्तमाल्याभिलाषिणं सन्तर्ज्ज-
कमिति राक्षसोन्मत्तं विद्यात् ॥

प्रहासनृत्यप्रधानं देवविप्रवैद्यद्वेषावज्ञाभिः

वरोधन-वित्रासन-विस्मापन-विस्मारणापतर्पण-शिराव्यधनानि ॥

भोजनविधानञ्च यथास्वं युक्त्या यच्चान्यदपि

किञ्चिन्निदानविपरीतमौषधं कार्य्यन्तत्स्यादिति । उन्मादान् दोषजान् साध्यान् साधयेद्भिषगुत्तमः । अनेन विधियुक्तेन कर्म्मणा यत्प्रकीर्त्तितम्” ॥ इति ॥ आगन्तुरुन्मादो यथा ।

“यस्तु दोषनिमित्तेभ्य उन्मादेभ्यः समुत्थान-

पूर्ब्बरूपलिङ्गविशेषसमन्वितो भवत्युन्मादस्तमा-गन्तुमाचक्षते ॥

केचित् पुनः पूर्ब्बकृतं कर्म्माप्रशस्तमिच्छन्ति ।

तम्य निमित्तं प्रज्ञापराध एवेति भगवान् पुनर्व्व-सुरात्रेय उवाच ॥

प्रज्ञापराधाद्ध्ययं देवर्षि-पितृ-गन्धर्व्व-यक्ष-रा-

क्षम-पिशाच-गरु-वृद्ध-मिद्धाचार्य्य-पूज्यानवमत्या-हितान्याचरति अन्यद्वा किञ्चित् कर्म्माप्रशस्त-सारमते ।

परिणामकाले एकस्य वा शून्यगृहवासे चतु-ष्पथाधिष्ठाने वा सन्ध्यावेलायामप्रयतभावे वा पर्ब्बसन्धिषु वा मिथुनीभावे रजस्वलाभिगमने वा विगुणे वाऽध्ययन-बलि-मङ्गल-होम-प्रयोगे नियमव्रतब्रह्मचर्य्ये वा महाहवे वा देव-कुल-पुर-विनाशे वा महाग्रहोपगमने वा स्त्रिया प्रव्रजन-काले विविधभूताशुचिसंस्पर्शने वा वमनरुधिर-स्रावाशुचेरप्रयतस्य चैत्य-देवायतनाभिगमने वा मांस-मधु तिल-गुड-मद्योच्छिष्टे वा दिग्वाससि वा निशि नगर-निगम-चतुष्पथे पवनश्मशानाभि-गमने वा द्विज-गुरु-सुर-यति-पूज्याभिधर्षणे वा धर्म्माख्यातव्यतिक्रमे वा न्यस्यकर्म्मणोऽप्रशस्तस्या-रम्भे वा इत्याघातकालाः व्याख्याता भवन्ति ॥

त्रिविधन्तु खलून्मादकराणां भूतानामुन्मादने

प्रयोजनम्भवति । तद्यथा । हिंसारतिरभ्यर्च्चन-ञ्चेति । तेषां तत्प्रयोजनविशेषमुन्मत्ताचारविशेष-लक्षणैर्व्विद्यात् । तत्र हिंसार्थमुन्माद्यमानोऽग्निं प्रविशत्यप्सु वा निमज्जति स्थलात् श्वभ्रे निपतति शस्त्र-कषा-काष्ठ-लोष्ट-मुष्टिभिर्हन्त्यात्मानमन्यच्च प्राणबधार्थमारभते । तमसाध्यं विद्यात् । साध्यौ पुनर्द्वावितरौ । तयोः साधनानि । मन्त्रौषधि-मणि-

स्तुतिवेदमन्त्रशास्त्रोदाहरणैः काष्ठादिभिरात्म-पीडनेन च ब्रह्मराक्षसोन्मत्तं विद्यात् ॥

अस्वस्थचित्तस्थानमनभिमानं नृत्यगीतहासिनं

बद्धाबद्धप्रभाषिणं सङ्करकूटमलिनरथ्याचेलतृणे-ष्वारोहणरतिं भिन्नरूक्षवर्णस्वरं नग्नं विधावन्तं नैकत्र तिष्ठन्तं दुःखान्यावेदयन्तं नष्टस्मृतिं पि-शाचोन्मत्तं विद्यात् ॥
भूतादीनामावेशकालो यथा ।

“तत्र शौचाचारं तपःस्वाध्यायकोविद नरं

प्रायः शुक्लप्रतिपदि त्रयोदश्याञ्च देवाः, पानशुचि-विविक्तसेविनं धर्म्मशास्त्रश्रुतिकाव्यकुशलं प्रायः षष्ठीनवम्योरृषयः, मातृ-पितृ-गुरु-वृद्ध-सिद्धाचा-र्य्योपसेविनं प्रायो दशम्याममावस्यायाञ्च पि-तरः, गन्धर्व्वास्तु स्तुतिगीतवादित्ररतिं परदार-गन्ध-माल्य-प्रिय-शौचाचार द्वादश्याञ्चतुर्द्दश्याञ्च,

| | | |
|---|---|---|
| | मङ्गल-बल्युपहार-होम-नियम-<br>प्रायश्चित्तोपवास-<br>स्वस्त्ययन-प्रणिपात-गमनादीन्येवमेते<br>पञ्चोन्मादाः<br>व्याख्याता भवन्ति” ॥<br>“नैव देवा न गन्धर्वा न पिशाचा न<br>राक्षसाः ।<br>न चान्ये स्वयमक्लिष्टमुपक्लिश्यन्ति<br>मानवम् ॥<br>ये त्वेनमनुवर्त्तन्ते क्लिश्यमानं स्वकर्मणा<br>।<br>न तन्निमित्तः क्लेशोऽसौ न ह्यस्ति<br>कृतकृत्यता” ॥<br>इति चरके निदानस्थाने सप्तमोऽध्यायः ॥<br>* ॥<br>चिकित्साविशेष<br>आगन्तून्मादकारणलक्षणविशेषश्च ।<br>“समूढचेता न सुखं न दुःख | |

:सत्त्व-बल-रूप-गर्व्व-शौर्य्य-युक्तं माल्यानुलेपनं हा-

स्यप्रियमतिवाक्करणं प्रायः शुक्लैकादश्यां सप्त-
म्याञ्च यक्षाः, स्वाध्याय-
तपोनियमोपवासव्रतचर्य्या-
देव-यति-गुरु-पूजारतिं भ्रष्टशौचं ब्राह्मणमब्राह्मणं
वा ब्रह्मवादिनं शूरमानिनं देवतागार-सलिल-
क्रीडनरतिं प्रायः शुक्लपञ्चम्यां पूर्णचन्द्रदर्शने च
ब्रह्मराक्षसाः, रक्षःपिशाचास्तु हीनसत्त्व-पिशुन-
स्तेन-लुब्धं प्रायो द्वितीयातृतीयाष्टमीषु पुरुषं छि-
द्रमवेक्ष्याभिधर्षयन्तीत्यपरिसंख्येयानां ग्रहाणा-
माविस्कृततमा ह्यष्टावेते व्याख्याताः" ॥

अत्र ये असाध्यास्तेषां लक्षणानि यथा ।
"सर्व्वेष्वपि तु खल्वेष यो हस्तावुद्दम्य
रोष-सं-

रम्भो निःसंज्ञमन्येष्वात्मनि वा पातयेत्
सह्यसाध्यो
ज्ञेयस्तथा साश्रुनेत्रो मेढ्रप्रवृत्तरक्तः क्षतजिह्वः
प्रस्रुतनासिकश्छिद्यमानमर्म्मा
प्रतिहन्यमानपाणिः
सततं विकूजन् दुर्व्वर्णस्तृषार्त्तः पूतिगन्धिश्च हिं-
सार्थी उन्मत्तो ज्ञेयस्तं परिवर्जयेत् । रत्यर्च्चना-
कामोन्मादिनौ तु भिषगभिप्रायाचाराभ्यां बुद्ध्वा
तदङ्गोपहारबलिश्रमेण मन्त्रभैषज्यविधिनोप
क्रमेत्" ॥
अस्य चिकित्सा यथा ।
"लशुनानां शतं त्रिंशदभयात्र्यूषणात्पलम् ।
गवां चर्म्ममसी प्रस्थो द्व्याढकं क्षीरमूत्रयोः ॥
पुराणसर्पिषः प्रस्थमेभिः सिद्धं प्रयोजयेत् ।
हिङ्गुचूर्णं पलं शीते दत्त्वा च मधुमालिकाम् ॥
तद्दोषागन्तुसम्भूतानुन्मादान् विषमज्वरान् ।
अपस्मारांश्च हन्त्याशु पानाभ्यञ्जननावनैः" ॥
लशुनाद्यं घृतम् ॥ * ॥
"विशेषतः पुराणञ्च घृतं तं पाययेद्भिषक् ।
त्रिदोषघ्नं पवित्रत्वाद्विशेषाद्ग्रहमोक्षणम् ॥
गुणकर्म्माधिकं स्थानादास्वादात् कटुतिक्तकम् ।
उग्रगन्धं पुराणं स्याद्दशवर्षस्थितं घृतम् ॥
लाक्षारसनिभं शीतं तद्धि सर्व्वग्रहापहम् ।
मेध्यं विरेचेव्वग्र्यं प्रपुराणमतः परम् ॥
नासाध्यं नाम तस्यास्ति यत्स्यात् वर्षशतं
स्थितम् ।
दृष्टं स्पृष्टमथाघ्रातं तद्धि सर्व्वग्रहापहम् ॥

पूजां बल्युपहारांश्च मन्त्राञ्जनविधींस्तथा ॥
शान्तिकर्म्मेष्टिहोमांश्च जपस्वस्त्ययनानि च ।
वेदोक्तान् नियमांश्चापि प्रायश्चित्तानि चाचरेत् ॥
भूतानामधिपं देवमीश्वरं जगतः प्रभुम् ।
पूजयन् प्रयतो नित्यं जयत्युन्मादजं भयम् ॥
रुद्रस्य प्रमथा नाम गणा लोके चरन्ति ये ।
तेषां पूजाञ्च कुर्व्वाण उन्मादेभ्यो विमुच्यते" ॥
इति च चरके चिकित्सास्थाने चतुर्द्दशोऽध्यायः
॥
अस्य विशिष्टपूर्ब्बरूपं यथा ।
"मोहोद्वेगौ स्वनः श्रोत्रे गात्राणामपकर्षणम्
अत्युत्साहोऽरुचिश्चान्ने स्वप्ने कलुषभोजनम् ॥
वायुनोन्मथनञ्चापि भ्रमश्च क्रमतस्तथा ।
यस्य स्यादचिरेणैवमुन्मादं सोऽधिगच्छति" ॥
वातजादिभेदेन रूपाणि यथा ॥
"रूक्षच्छविःपरुषवाक् धमनीततो वा
श्वासातुरः कृशतनुः स्फुरिताङ्गसन्धिः ।
आस्फोटयन् पठति गायति नृत्यशीलो
विक्रोशति भ्रमति चाप्यनिलप्रकोपात् ॥ १ ॥
तृट्स्वेददाहबहुलो बहुभुग्विनिद्र-
श्छायाहिमानिलजलान्तविहारसेवी ।
तीक्ष्णो हिमाम्बुनिचयेऽपि स वह्निशङ्की
पित्ताद्दिवा नभसि पश्यति तारकाश्च ॥ २ ॥
च्छर्द्यग्निसादसदनारुचिकासयुक्तो
योषिद्विविक्तरतिरल्पमतिप्रकारः ।
निद्रापरोऽल्पकथनोऽल्पभुगुष्णसेवी
रात्रौ भृशं भवति चापि कफप्रकोपात् ॥ ३ ॥
सर्व्वात्मके त्रिभिरपि व्यतिमिश्रितानि
रूपाणि वातकफपित्तकृतानि विद्यात् ।
सम्पूर्णलक्षणमसाध्यमुदाहरन्ति
सर्व्वात्मकं क्वचिदपि प्रवदन्ति साध्यम्" ॥ ४ ॥
अपरयोर्लक्षणानि प्रथमतोऽस्योक्तानि ।
अस्य चिकित्सा यथा ।
"स्निग्धं स्विन्नन्तु मनुजमुन्मादार्त्तं विशोधयेत् ।
तीक्ष्णैरुभयतो भागैः शिरसश्च विरेचनः ॥
विविधैरवपीडैश्च सर्षपस्नेहसंयुतैः ।
योजयित्वा च तच्चूर्णं घ्राणे नस्यन्तु योजयेत् ॥
सततं धूपयेच्चैनं श्वगोमांसैः सुपूतिभिः ।
सर्षपाणाञ्च तैलेन नस्याभ्यङ्गौ हितौ सदा ॥
दर्शयेदद्भुतान्यस्य वदेन्नाशं प्रियस्य च ।
भीमाकारैर्नरैर्नगैर्दान्तैर्व्यालैश्च निर्विषैः ॥
भीषयेत् सततं पाशैः कशाभिर्वाथ ताडयेत् ।

अपस्मारक्रियाञ्चापि ग्रहोद्दिष्टाञ्च कारयेत् ।
शान्तदोषं विशुद्धञ्च स्नेहवस्तिभिराचरेत् ॥
शोकशल्यं व्यपनयेदुन्मादे पञ्चमे भिषक् ।
उन्मादेषु च सर्व्वेषु कुर्य्याच्चित्तप्रसादनम् ॥
मृदुपूर्ब्बं मदेऽप्येवं क्रियां विद्वान् प्रयोजयेत् ।
विषजे मृदुपूर्ब्बाञ्च विषघ्नीं कारयेत् क्रियाम्" ॥
इति सुश्रुते उत्तरतन्त्रे द्विषष्टितमोऽध्यायः ॥ * ॥
"तपांसि तीव्राणि तथैव दानं
व्रतानि धर्म्मो नियमश्च सत्यम् ।
गुणास्तथाष्टावपि तेषु नित्याः
व्यस्ताः समस्ताश्च यथाप्रभावम् ॥
न ते मनुष्यैः सह संविशन्ति
न वा मनुष्यान् क्वचिदाविशन्ति ।
ये वा विशन्तीति वदन्ति मोहात्
ते भूतविद्याविषयादपोह्याः ॥
तेषां ग्रहाणां परिचारका ये
कोटीसहस्रायुतपद्मसङ्ख्याः ।
असृग्वसामांसभुजः सुभीमाः
निशाविहाराश्च तमाविशन्ति" ॥
"निशाचराणां तेषां हि ये देवगणसंसृताः ।
ते तु तत्सत्त्वसंसर्गाद्विज्ञेयास्तु तदङ्गनाः ॥
देवग्रहा इति पुनः प्रोच्यन्ते शुचयश्च ये ।
देववच्च नमस्यन्ते प्रत्यर्थ्यन्ते च देववत् ॥
स्वामिशीलक्रियाचाराः क्रमएव सुरादिषु ।
नैरृतेया दुहितरस्तासां स प्रसवः स्मृतः ॥
सत्यत्वादपवृत्तेषु वृत्तिस्तेषां गणैः कृताः ।
हिंसाविहारा ये केचिद्दिव्यं भावमुपाश्रिताः ॥
भूतानीति कृता संज्ञा तेषां संज्ञाप्रवक्तृभिः ।
ग्रहसंज्ञाभिभूतानि यस्माद्वेत्त्यनया भिषक् ॥
विद्यया भूतविद्यात्वमतएव निरुच्यते ।
तेषां शान्त्यर्थमन्विच्छन् वैद्यस्तु सुसमाहितः ॥
जप्यैः सनियमैर्होमैरारभेत चिकित्सितम् ।
रक्तानि गन्धमाल्यानि वीजानि मधुसर्पिषाम् ॥
भक्ष्याश्च सर्व्वे सर्व्वेषां सामान्यो विधिरुच्यते ।
वस्त्राणि मद्यमांसानि क्षीराणि रुधिराणि च ॥
यानि तेषां यथेष्टानि तानि तेभ्यः प्रदापयेत् ।
हिनस्ति मनुजान् येषु प्रायशो दिवसेषु च ॥
दिनेषु तेषु देयानि तद्भूतविनिवृत्तये ।
देवग्रहे देवगृहे हुत्वाग्निं प्राशयेद्बलिम् ॥
कुशस्वस्तिकपूपाज्यच्छत्रपायससम्भृतम् ।
असुराय यथाकालं विदध्याच्चत्वरादिषु ॥
च्चतुष्पथे राक्षसस्य भोमेषु गहनेषु वा ।

अपस्मारग्रहोन्मादवतां शस्तं विशेषतः” ॥
“एतैरौषधवर्गैर्व्वा विधेयत्वं स गच्छति ।
अञ्जनोन्मादनालेपान्नावनादींश्च योजयेत् ॥
शिरीषो मधुकं हिङ्गु लशुनं तगरं वचाम् ।
कुष्ठञ्च वस्तमूत्रेण पिष्टं स्यान्नावनाञ्जनम्” ॥
इति नस्याञ्जनम् ॥ * ॥
“प्रसेके पीनसे गन्धैर्धूमवर्त्तिं कृताम्पिबेत् ।
वैरेचनिकधूमोक्तैः श्वेताद्यैर्व्वासहिङ्गुभिः” ॥
इति धूमपानम् ॥ * ॥
“शङ्खके शान्तसन्धौ वा मोक्षयेज्ज्ञो भिषक् शिराम् ।
उन्मादे विषमे चैव ज्वरेऽपस्मारएव च” ॥
“कामशोकभयक्रोधहर्षेर्ष्यालोभसम्भवान् ।
परस्परप्रतिद्वन्द्वैरेभिरेव शमं नयेत्” ॥
“देवर्षिपितृगन्धर्व्वैरुन्मत्तस्य तु बुद्धिमान् ।
वर्ज्जयेदञ्जनादीनि तीक्ष्णानि क्रूरकर्म्म च ॥
सर्पिःपानादि तस्येह मृदुभैषज्यमाचरेत् ।
यन्त्रयित्वा सुषुप्तं वा त्रासयेत्तं तृणाग्निना ॥
प्रतुदैर्दारयेच्चैनं मर्म्माघातं विवर्ज्जयेत् ।
सापिधाने जरत्कूपे सततं वा निवासयेत्” ॥
“वर्हिष्ठकुष्ठमञ्जिष्ठाकटुकैलानिशाह्वयैः ।
तेनेदं त्रिफलाहिङ्गुवाजिगन्धामरद्रुमैः ॥
वचाजमोदाकाकोलीमेदामधुकपद्मकैः ।
सशर्करं हितं सर्पिः पक्वं क्षीरचतुर्गुणम् ॥
बालानां ग्रहजुष्टानां पुंसां दुष्टाल्पमेधसाम् ।
ख्यातं फलघृतं स्त्रीणां बन्ध्यानाञ्चाशु गर्भदम्” ॥
इति फलघृतम् ॥ * ॥
“उरोऽपाङ्गललाटेषु शिराश्चास्य विमोक्षयेत् ।
शून्यागारे पिशाचस्य तीव्रं बलिमुपाहरेत् ॥
पूर्ब्बमाचरितैर्मन्त्रैर्भूतविद्यादिदर्शितैः ।
न शक्या बलिभिर्जेतुं योगैस्तान् समुपाचरेत्” ॥
“नक्तमालफलं व्योषं मूलं श्योनाकविल्वयोः ।
हरिद्रे च कृतावर्त्तिः पूर्ब्बवन्नयनाञ्जनम्” ॥
“न चायक्तं प्रयुञ्जीत प्रयोगं देवताग्रहे ।
ऋते पिशाचादन्येषु प्रतिकूलं न चाचरेत् ॥
वैद्यातुरौ निहन्युस्ते ध्रुवं क्रुद्ध्वा महौजसः ।
हिताहितविधानञ्च नित्यमेव समाचरेत् ॥
ततः प्राप्स्यति सिद्धिञ्च यशश्च विपुलं भिषक्” ॥

:इति च सुश्रुते उत्तरतन्त्रे षष्टितमोऽध्यायः ॥ * ॥

"सूतायस्तारमभ्रञ्च मुक्ता चापि समं समम् ।
सूतपादोत्तमं वज्रं तालं गन्धं मनःशिला ॥
तुत्थं रसाञ्जनं शुद्धमब्धिफेनं शिलाञ्जनम् ।
पञ्चानां लवणानाञ्च प्रतिभागं वसोन्मितम् ॥
भृङ्गराजचित्रवज्रीदुग्धेनापि विमर्द्दयेत् ।
दिनान्ते पिण्डितं कृत्वा रुद्ध्वा गजपुटे पचेत् ॥
भूताङ्कुशो रसो नाम नित्यं गुञ्जाद्वयं लिहन् ।
आर्द्रकस्य रसेनापि भूतोन्मादसवातजित् ॥
पिप्पल्याक्तं पिबेच्चानु दशमूलकषायकम् ।
स्वेदयेत् कटुतुम्ब्या च तीक्ष्णमुष्णञ्च वर्ज्जयेत् ॥
माहिषञ्च घृतं क्षीरं गुर्व्वन्नमपि भक्षयेत् ।
अभ्यङ्गं कटुतैलेन हितो भूताङ्कुशो रसः" ॥
इति भूताङ्कुशोरसः ॥ * ॥
उन्मादभञ्जिनीवटीयथा ।
"शुद्धं मनःशिलाचूर्णं सैन्ववं कटुरोहिणी ।
वचा शिरीषवीजञ्च हिङ्गुञ्च श्वेतसर्षपम् ॥
करञ्जवीजं त्रिकटु मलं पारावतस्य च ।
एतानि समभागानि गोमूत्रैर्वटिकां कुरु ॥
गिरिमल्लीवीजसमां छायाशुष्काञ्च कारयेत् ।
प्रातःसन्ध्यानिशाकाले चक्षुषोरञ्जनं हितम् ॥
मधुना दिवसे चाञ्ज्यं रात्रौ चैव जलेन च ।
वटिकैषा समाख्याता नाम्ना चोन्मादभञ्जिनी ।
चातुर्थकापस्मारहा सर्व्वोन्मादविनाशिनी" ॥
इति वैद्यकरसेन्द्रसारसंग्रहे उन्मादाधिकारे ॥
अत्र पथ्यानि यथा ।
"स्नेहो विरेको वमनञ्च पूर्ब्बं
क्रमान्मरुत्पित्तकफोद्भवेषु ।
ततः परं वस्तिविधिश्च नस्यम्
सन्तर्ज्जनं ताडनमञ्जनञ्च ॥ १ ॥
आश्वासनत्रासनबन्धनानि
भयानि दानानि च हर्षणानि ।
धूपो दमो विस्मरणं प्रदेहः
शिराव्यधः संशमनञ्च सेकः ॥ २ ॥
आश्चर्य्यकर्म्माणि च धूमपानं
धीधैर्य्यसत्त्वात्मनिवेदनानि ।
अभ्यञ्जनं स्नापनमासनञ्च
निद्रासुशीतान्यनुलेपनानि ॥ ३ ॥
गोधूममुद्गारुणशालयश्च
धारोष्णदुग्धं शतधौतसर्पिः ।
घृतं नवीनञ्च पुरातनञ्च
कूर्म्मामिषं धन्वरसा रसालम् ॥ ४ ॥
देवब्राह्मणपूजनञ्च शमयेदुन्मादमागन्तुकम्" ॥ ८ ॥
अपथ्यानि यथा ॥
"मद्यं विरुद्धाशनमुष्णभोजनं
निद्राक्षुधातृट्कृतवेगधारणम् ।
व्यवायमाषाढफलं कठिन्नकं
शाकानि पत्रप्रभवानि सर्व्वशः ॥
तिक्तानि विम्बी च भिषक् समादिशे-
दुन्मादरोगोपहतेषुगर्हितम्" ॥
इति वैद्यकपथ्यापथ्यविधौ उन्मादाधिकारः ॥ * ॥)
औत्सुक्यसन्तापादिकारितमनोविपर्य्याससमुत्थ-
प्रियाश्रितवृथाव्यापारः । इति रसमञ्जरी ॥
(व्यभिचारिभावभेदः । यथा, साहित्यदर्पणे
३ । १३६ ।
"औत्सुक्योन्मादशङ्काः स्मृतिमतिसहिता व्या-
धिसंत्रासलज्जाः" । इति ॥ अस्य लक्षणं सोदा-
हरणमाह तत्रैव ३ । १५५ ।
"चित्तसम्मोह उन्मादः कामशोकभयादिभिः ।
अस्थानहासरुदितगीतप्रलपनादिकृत्" ॥
उदाहरणम् ।
"भ्रातर्द्विरेफ । भवता भ्रमता समन्तात्
प्राणाधिका प्रियतमा मम वीक्षिता किम् ?
भृङ्गझङ्कारमनुभूय सानन्दम् --
"ब्रूषे किमोमिति सखे ! कथयाशु तन्मे
किंकिं व्यवस्यति कुतोऽस्ति च कीदृशीयम्" ॥)

**उन्मादः**, त्रि, (उत् + मद् + घञ् ।) उन्मादरोग-
युक्तः । क्षिप्तः । उन्मत्तः । इत्यमरटीकायां नील-
कण्ठः ॥ पागल इति भाषा ॥

**उन्मादनः**, पुं, (उन्मादयत्यनेन इति । उत् + मद् +
णिच + ल्यु) कामदेवस्य पञ्चबाणान्तर्गतबाणवि-
शेषः । इति त्रिकाण्डशेषः ॥

**उन्मादवान्**, त्रि, (उन्मादो विद्यते अस्य । उन्माद
+ मतुप् । मस्य वः ।) उन्मादरोगविशिष्टः ।
उन्मत्तः । इत्यमरः ॥

**उन्मानः**, पुं, (उत् + मा + ल्युट् ।) द्रोणपरिमाणम् ।
इति वैद्यकपरिभाषा ॥
("उन्मानश्च घटो राशिर्द्रोणपर्य्यायसंज्ञितः" ।
इति पूर्ब्बखण्डे प्रथमेऽध्याये शार्ङ्गधरेणोक्तम् ॥
"स एव कलशः ख्यातो घटस्तून्मानमेव च" ॥
इति कल्पस्थाने द्वादशेऽध्याये चरकेणोक्तम् ॥)

**उन्मिषितः**, त्रि, (उत् + मिष + क्त ।) प्रफुल्लः ।
निलाः" । इति साहित्यदर्पणे १ म परिच्छेदे
॥)

**उन्मुखः**, त्रि, (उदूद्र्ध्वं मुखं यस्य ।) ऊद्‌र्ध्वमुखः । तत्-
पर्य्यायः । उत्पश्यः २ । इति हेमचन्द्रः ॥
("मनोभिरामाः शृण्वन्तौ
रथनेमिस्वनोन्मुखैः" ।
इति रघुः । १ । ३९ ।) उत्सुकः । यथा
कुभारे । ६ । ३४ ॥
"तस्मिन् संयमिनामाद्ये जाते परिणयोन्मुखे"
।
"पतिः प्रतीतः प्रसवोन्मुखीं प्रियाम्" । इति
रघुः । ३ । १२ ॥
"अद्रेः शृङ्गं हरति पवनः
किंस्विदित्युन्मुखीभिः" ।
इति मेघदूते । पूर्ब्बमेघे १४ ।
"इत्याख्याते पवनतनयं मैथिलीवोन्मुखी
सा" ।
इति च मेघदूते उत्तरमेघे ३९ श्लोकः ॥)

**उन्मुद्रः**, त्रि, (उद्‌गता मुद्रा यस्मात् ।) प्रफुल्लः ।
विकसितः । इति त्रिकाण्डशेषः ॥

**उन्मूलितं**, त्रि, (उत् + मूल् + क्त ।) उत्पाटितम् ।
इति हेमचन्द्रः ॥ (यथा रामायणे । ५ । ६ ।
"लङ्कामुग्मूलितां कृत्वा कदा द्रक्ष्यति मां
पतिः" ॥)

**उन्मेषं**, क्ली, (उत् + मिष् + घञ् ।) चक्षुरुन्मीलनम्
।
इति हेमचन्द्रः ॥ चक्षु मेला इति भाषा ।
("खद्योतालीविलसितनिभां
विद्युदुन्मेषदृष्टिम्" ।
इति मेघदूते उत्तरमेघे २० । स्फुरणम् ॥
यथा,
"स्वकिरणपरिवेशोन्मेषशून्याः प्रदीपाः" ॥
इति रघुः । ५ । ७४ ॥ विकाशः २ ।
प्रस्फोटनम् ।
यथा, --
"दीर्घिकाकमलोन्मेषो यावन्मात्रेण साध्यते"
।
इति कुमारे । २ । ३३ ॥)

**उप** व्य प्रादिविंशत्युपसर्गान्तर्गतौपसर्गविशेषः ।

पुराणकुष्माण्डफलं पटोलं
ब्रह्मीदलं वास्तुकतण्डुलीयम् ।
खराश्वमूत्रं गगनाम्बुपथ्या
सुवर्णचूर्णानि च नारिकेलम् ॥ ५ ॥
द्राक्षाकपित्थं पनसञ्च वैद्यै-
र्विधेयमुन्मादगदेष पथ्यम्” ॥ ६ ॥
“पूजाबल्युपहारशान्तिविधयो होमेष्टिमन्त्रक्रियाः
दानं स्वस्त्ययनं व्रतानि नियमः सत्यञ्जपो
मङ्गलम् ॥
प्रायश्चित्तविधानमञ्जनविधीरत्नौषधीधारणं
भूतानामनुरूपमिष्टचरणं गौरीपतेरच्चनम् ॥ ७ ॥
ये च स्युर्भुवि गुह्यकाश्च प्रमथास्तेषां समाराधनं

विकसितः । इति हेमचन्द्रः ॥ यथा कुमारे ।
“व्यलोकयन्नुमिषितैस्तडिन्मयै-
र्महातपःसाक्ष्यैव स्थिताः क्षपाः” । ५ । २५ ॥

**उन्मीलनं**, क्ली, (उत् + मील + ल्युट् ।) उन्मेषः ।

इति हेमचन्द्रः ॥ चक्षुमेला इति भाषा । विकाशः ॥
(“अज्ञानतिमिरान्धस्य लोकस्य तु विचेष्टतः ।
ज्ञानाञ्जनशलाकाभिर्नेत्रोन्मीलनकारकः” ।
इति महाभारते । १ । १ । ८४ ॥)

**उन्मीलितः**, त्रि, (उत् + मील् + क्त ।) विकसितः ।

प्रस्फुटितः । इति हलायुधः ॥ (“उन्मीलितं
तूलिकयेव चित्रम्” । इति कुमारे । १ । ३२ ॥
“ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बा-

अस्यार्थः । अनुगतिः । पश्चाद्भावः ।
अनुकम्पा ।
आधिक्यम् । (यथा पाणिनिः २ । ३ । ९ ।
“उप परार्द्धे
हरेर्गुणाः । परार्द्धादधिकाइत्यर्थः ।) हीनः ।
(यथा
मुग्धबोधे कारके ७ । “विष्णुमन्वर्च्च्यते भर्गः
शक्रा-
दय उपाच्युतम्” ।) सामीप्यम् । (यथा,
मुग्धबोधे
समासप्रकरणे ६७ । “उपसमिधं उपसमित् ।
उपनदं । उपनदि” ॥) प्राथम्यम् । इति दुर्गा-
दासः ॥ दाक्षिण्यम् । सामर्थ्यम् । अत्ययः ।
भूषणम् । दीषाख्यानम् । निदर्शनम् ।
आश्चर्य्य-
करणम् । दानम् । मारणम् । व्याप्तिः । लिप्सा
।
उपालम्भनम् । पूजा । उद्योगः । इति शब्द-
रत्नावली ॥

**उपकण्ठं**, क्ली, (उपगतः कण्ठम् । अत्यादय इति

समासः । उपगतः कण्ठः सामीप्यमस्येति वा
॥)
ग्रामान्तम् । तत्पर्य्यायः । उपशल्यम् २ ।
इति त्रि-
काण्डशेषः ॥ आस्कन्दितम् ।
अश्वपञ्चमगतिः ।
इति हेमचन्द्रः ॥ कण्ठसमीपम् ॥ (यथा, माघे
।
“प्रेम्नोपकण्टं मुहुरङ्कभाजो-
रत्नावलीरम्बुधिराबबन्ध” ।)

**उपकण्ठः**, त्रि, (उपगतः कण्ठः सामीप्यमस्य ।)

निकटः । इत्यमरः ॥ (यथा, कुमारे । ७ ।
५१ ॥
“तस्योपकण्ठे घननीलकण्ठः
कुतूहलादुन्मुखपौरदृष्टः” ॥)

**उपकरणं**, क्ली, (उप + कृ + ल्युट् ।) प्रधानाङ्गी-

भूतोपकारकद्रव्यम् । नृपादीनां छत्रचामरादि
।

:तत्पर्य्यायः । परिच्छदः २ परिवर्हः ३ तन्त्रम् ४ ।

इति हेमचन्द्रः ॥ भोजनादौ व्यञ्जनादि ॥ यथा । "तस्मादन्नं प्रधानं पूपादिकन्तु उपकरणत्वेन शक्तानामावश्यकम्" । इति श्राद्धतत्त्वम् ॥ पूजादौ नैवेद्यादि । मृगबन्धनादौ जालादि ॥

**उपकारः**, पुं, (उप + कृ + घञ् ।) उपकृतिः ।

("उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः" । इति माघः । २ । ३७ ॥ "कृतोपकारेव रतिर्बभूव" ।
इति कुमारे । ३ । ७३ ॥) विकीर्णपुष्पादिः । इति हेमचन्द्रो मेदिनी च ॥

**उपकारिका**, स्त्री, (उपकरोतीति । उप + कृ +

ण्वुल् + टाप् + इत्वम् ।) उपकारकर्त्री । पिष्ट-भेदः । इति मेदिनी ॥ राजगृहम् । इत्यमरः ॥ कुशूलः । मरायि इति भाषा । इति केचिदाहु-रिति भरतः ॥

**उपकारी**, स्त्री, (उपकारयतीति । उप + कृ + णिच्

+ अण् + ङीष् ।) राजगृहम् । इति भरतधृत-द्विरूपकोषः ॥

**उपकारी**, [न्] त्रि, (उपकरोतीति । उप + कृ +

णिनि ।) उपकारविशिष्टः । उपकारकर्त्ता । ("उप-कारिणि विश्रब्धे शुद्धमतौ यः समाचरति पापम्" इति हितोपदेशे मित्रलाभे ॥)
तत्र दानादानविधिर्यथा । हारीतः । अथासद्-द्रव्यदानमस्वर्ग्यं यच्च दत्त्वा परितप्यते तर्ह्यदान-मफलं यच्चोपकारिणे ददाति ॥ उपकारिणे व्यस-नोपकारिणे । तदितरोपकारिणे तु दक्षः ।
"मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणे ।
दीनानाथविशिष्टेभ्यो दत्तन्तु सफलं भवेत्" ॥
इति शुद्धितत्त्वम् ॥ किञ्च ।
"उपकारिषु यः साधुः स साधुः सद्भिरुच्यते ।
समदृष्टिर्भवाशु त्वं सर्व्वभूतेषु केशव" ॥
इति जैमिनीये आश्वमेधिके पर्व्वणि ११ अध्यायः ॥

**उपकार्य्यः**, त्रि, (उप + कृ + ण्यत् ।) उपकारोचितः ।

इति मेदिनी ॥

**उपकार्य्या**, स्त्री, (उपक्रियते इति । उप + कृ +

ण्यत् + टाप् ।) राजगृहम् । इत्यमरः ॥ (पट-

इति व्याकरणम् ॥

**उपकुर्व्वाणः**, पुं, (उप + कृ + शानच् ।) ब्रह्मचर्य्या-

नन्तरं यो गृहस्थो भवति सः । इति पुराणम् ॥ (कृतोपकारः । यथा हितोपदेशे सुहृद्भेदे, -- "यतोऽनुपकुर्व्वाणो न कस्यापि उपायनं गृह्णीयात्" ॥)

**उपकुल्या**, स्त्री, (उपकोलति । कुल संख्याने बन्धुषु

च । अघ्न्यादिः ।) पिप्पली । इत्यमरः ॥ पिपुल इति भाषा । ("कृष्णोपकुल्या मगधी" इति वैद्यक-
रत्नमाला ॥ "उपकुल्योषणा शौण्डी" इति भाव-प्रकाशे पूर्ब्बखण्डे प्रथमभागे ॥ गुणादिकमस्य पिप्पलीशब्दे ज्ञातव्यम् ॥) (उपगता कुल्यामिति वाक्ये वाच्यलिङ्गः । कृत्रिमसरःसमीपम् ॥)

**उपकूपजलाशयः**, पुं, (उपकूपं कूपसमीपे यो जला-

शयः ।) कूपसमीपे शिलादिनिबद्धपशुपानार्थ-कृतकूपोद्धृताम्बुस्थानम् । इत्यमरः ॥

**उपक्रन्ता**, [ऋ] त्रि, (उप + क्रम + तृच् ।) उप-

क्रमकर्त्ता । आरम्भकर्त्ता । इति व्याकरणम् ॥

**उपक्रमः**, पुं, (उप + क्रम + घञ् । नोदात्तोपदेशस्य

इति न वृद्धिः ।) ज्ञात्वारम्भः । अयमस्योपायः अनेनैतत् सिध्यतीति ज्ञात्वा प्रथमारम्भः ॥ उपधा ।
राज्ञा धर्म्मकामार्थभयैः अमात्यादेर्यत् परीक्षणं भावतत्त्वनिरूपणम् ॥ प्रक्रमः । प्रथमारम्भः । इत्यमरः ॥ विक्रमः । चिकित्सा । इति मेदिनी ॥ पलायनम् । इति हेमचन्द्रः ॥ (उपायः । यथा, -- "सामादिभिरुपक्रमैः" । इति मनुः । ७ । १०७ । आरम्भः । यथा, -- "रामोपक्रममाचख्यौ रक्षः-परिभवं नवम्" ॥ १२ । ४२ । इति रघुः । "उप-क्रम्यते इत्युपक्रमः कर्म्मणि घञ् । रामस्य कर्तुरुप-
क्रमः रामोपक्रमं रामेणादौ उपक्रान्तमित्यर्थः । उपज्ञोपक्रमं तदाचिख्यासायामिति क्लीवत्वम्" ।
इति तट्टीका ॥)

**उपक्रोशः**, पुं, (उप + क्रुश् + घञ् ।) निन्दा । इत्य-

मरः ॥ (यथा, रघुः । २ । ५३ ।

इति भागवते १ । ५ । १९ ॥ तथा च साहित्य-दर्पणे ६ परिच्छेदे ।
"कृतिः प्रमाद आनन्दः समयोऽप्युपगूहनम्" ॥)

**उपग्रहः**, पुं, (उपगृह्यते इति । उप + ग्रह + अप् ।)

वन्दी । इत्यमरः ॥ वँदुयान् इति भाषा । उप-योगः । अनुकूलः । इति मेदिनी ॥ (ग्रहसदृशो ज्योतिःपदार्थभेदः । यथा महाभारते ३ । स्कन्द-
शत्रुसमागमे २२६ । १ ॥
"ग्रहाः सोपग्रहाश्चैव ऋषयो मातरस्तथा ।
हुताशनमुखाश्चैव दीप्ताः परिषदां गणाः" ॥)

**उपग्रहणं**, क्ली, (उप + ग्रह + ल्युट् ।) उपाकरणम् ।

संस्कारपूर्ब्बकश्रुतिग्रहणम् । इत्यमरटीकायां रायमुकुटः ॥ (स्वीकारः । यथा, रामायणे १ । ४ । ४ ।
"वेदोपग्रहणार्थाय तावग्राहयत प्रभुः" ।
वेदोपवृंहणार्थाय इति पाठान्तरम् ॥)

**उपग्राह्यः**, पुं, (उपगृह्यते इति । उप + ग्रह +

ण्यत् ।) उपढौकनम् । इत्यमरः ॥ भेटी डालि इत्यादि भाषा ॥

**उपघातः**, पुं, (उपहन्यते अनेन । उप + हन +

करणे घञ् ।) रोगः । इति राजनिर्घण्टः ॥ (भावे घञ् । विनाशः । यथा, --
"तथात्वञ्चेदिन्द्रियाणामुपघाते कथं स्मृतिः" ।
इति भाषापरिच्छेदे । ४८ । अपकारः ।
"स्त्रीणाञ्च प्रेक्षणालम्भमुपघातं परस्य च" ॥
इति मनुः । २ । १७९ ॥)

**उपघ्नः**, पुं, (उप + हन + क ।) निकटाश्रयः । इत्य-

मरः ॥ (यथा, रघुः । १५ । १ ।
"छेदादिवोपघ्नतरोर्व्रतत्यौ" ॥)

**उपचक्रः**, पुं, (चक्रेण चक्रनाम्ना तुल्यः ।) चक्रवाकपक्षि-

विशेषः । अस्य मांसगुणाः । लघुत्वम् । हृद्यत्वम् ।
उष्णवीर्य्यत्वम् । कटुपाकित्वम् ।
बलाग्निवृद्धिका-
रित्वञ्च । इति राजवल्लभः ॥
("चकोरैरुपचक्रैश्च पक्षिभिर्जीवजीवकैः" ॥

मवनम् । यथा, रघौ ५ । ४१ ।
"तस्योपकार्य्यारचितोपचारा
वन्येतरा जानपदोपदाभिः" ॥
"शत्रुघ्नप्रतिविहितोपकार्य्यमार्य्यः,
साकेतोपवनमुदारमध्युवास" । इति च १३ । ७९
।)
कुशूलः । मरायि इति भाषा । इति केचिदाहु-
रिति भरतः ॥

**उपकुञ्चिः**, स्त्री, (उप + कुञ्च + कि ।) सूक्ष्मकृष्णजी-
रकः । इति रत्नमाला ॥ (कृष्णजीरकशब्देऽस्य
गुणादयो बोध्याः ॥)

**उपकुञ्चिका**, स्त्री, (उप + कुञ्च + ण्वुल् + टाप् ।)
कृष्णजीरकः । सूक्ष्मैला । इत्यमरः ॥
("कारवी करवी तद्वद्विज्ञेया सोपकुञ्चिका ।
भक्ष्यव्यञ्जनभोज्येषु विविधेष्ववचारिता" ॥
इति सूत्रस्थाने ४६ अध्याये सुश्रुतेनोक्तम् ॥)

**उपकुम्भं**, क्ली, (कुम्भस्य समीपे ।) कुम्भसमीपम् ।
"राज्येन किं तद्विपरीतवृत्तेः
प्राणैरुपक्रोशमलीमसैर्व्वा" ॥)

**उपक्रोष्टा** [ऋ] पुं, स्त्री, (उप + क्रुश + तृच् ।)
गर्द्दभः । इति श्रीभागवतम् ॥ निन्दकः ॥

**उपक्वणः**, पुं, (उप + क्वण् + अच् ।) प्रक्वणः । वीणा-
शब्दः । इत्यमरटीकायां रायमुकुटः ॥

**उपक्षेपणधर्म्मः**, पुं, (उपक्षेपणरूपो धर्म्मः ।) शूद्र-
स्वामिकान्नस्य पाकार्थं ब्राह्मणगृहे समर्पणम् ।
इति शुद्धितत्त्वे कल्पतरुः ॥

**उपगतः**, त्रि, (उप + गम् + क्त ।) अङ्गीकृतः । स्वी-
कृतः ॥ इत्यमरः ॥ (यथा रघौ ९ । १५ ।
"उपगतोऽपि च मण्डलनाभिता-
मनुदितान्यसितातपवारणः" ।) कृतमैथुनः ॥

**उपगमः**, पुं, (उप + गम् + अप् ।) अङ्गीकारः ।
निकटगमनम् । इति मेदिनी ॥ (यथा रघौ ६ ।
६९ ।
"तं प्राप्य सर्व्वावयवानवद्यं
व्यावर्त्ततान्योपगमात् कुमारी" ॥)

**उपगूहनं**, क्ली, (उप + गूह + ल्युट् ।) आलिङ्गनम् ।
इत्यमरः ॥ ("स्मरन्मुकुन्दाङ्घ्यपगहनं पुनः" ॥
इति महाभारते ३ भीमस्याजगरग्रहणे १७८ । ७
॥)

**उपचक्षुः**, [स्] क्ली, (उपगतं चक्षुषोर्दर्शनार्थम् ।)
दिव्यचक्षुः । चश्मा इति पारस्यभाषा । इति
लोकप्रसिद्धम् ॥

**उपचयः**, पुं, (उप + चि + अच् ।) वृद्धिः । उन्नतिः ।
("स्वशक्त्युपचये केचित् परस्य व्यसने परे" ।
इति माघः । २ । ५७ । "तदेतेषामस्मत्पुत्राणां
ज्ञानोपचये भवन्तः प्रमाणम्" । इति हितोप-
देशे कथामुखम् ।) लग्नात् तृतीयषष्ठदशमैका-
दशस्थानानि । इति ज्योतिषम् ॥

**उपचरितं**, त्रि, (उपचर्य्यते स्म । उप + चर + क्त ।)
उपासितम् । सेवितम् । इत्यमरः ॥

**उपचर्य्या**, स्त्री, (उप + चर + क्यप् + टाप् ।) चि-
कित्सा । इति हलायुधः ॥

**उपचाय्यः** पुं, (उपचीयतेऽग्निरस्मिन् इति । "अग्नौ
परिचाय्योपचाय्यसमूह्याः" ३ । १ । १३१ ।
इतिण्य-
दायादेशौ निपात्येते । उप + चि + ण्यत् ।)
यज्ञा-
ग्निः । इत्यमरः ॥

**उपचार**, पुं, (उप + चर + घञ् ।) रोगप्रतिकारः ।

:तत्पर्य्यायः । उपचर्य्या २ चिकित्सा ३ रुक्प्रति-

क्रिया ४ निग्रहः ५ वेदनानिष्टा ६ क्रिया ७ उप-
क्रमः ८ शमः ९ । इति राजनिर्घण्टः ॥ सेवा ।
(“समे चिरायास्खलितोपचाराम्” । इति रघौ,
५ । २० ।) व्यवहारः । (“प्रयुक्तपाणिग्रहणोप-
चारौ” । इति कुमारे ७ । ८६ ।) उत्कोचः ।
इति
हेमचन्द्रः ॥ परस्य रञ्जनार्थं असत्यभाषणम् ।
यथा,
कुमारे ४ । ९ । “उपचारपदं नचेदिदं त्वमनङ्गः
कथमक्षता रतिः” ॥ “उपचारज्ञता दाक्ष्यं” इति
चरके सूत्रस्थाने नवमेऽध्याये ॥)

**उपचार्य्यः**, पुं, (उप + चर + ण्यत् ।) चिकित्सा । इति

हेमचन्द्रः ॥

**उपचितः**, त्रि, (उपचीयते स्म । उप + चि + क्त ।)

दिग्धः । समृद्धः । इति विश्वमेदिन्यौ ॥ (यथा
रघौ
९ म -- सर्गे, । “मृगवयोगवयोपचितं वनम्” ।)
समाहितः । इति विश्वः हेमचन्द्रश्च ॥ निदिग्धः
।
लेपादिना वर्द्धितः । इत्यमरः ॥ (“यथाह
हारीतः ।
“प्रयतत्वाद्वोपचितमशुभं नाशयतीति” ॥)

**उपचित्रा**, स्त्री, (उपगता चित्राम् ।) मूषिकपर्णी ।

इत्यमरः । इँदुरकानि इति भाषा । दन्तीवृक्षः ।
इति राजनिर्घण्टः ॥ (दन्त्यर्थे यथा, --
“चित्रा दन्ती निकुम्भः स्यादुपचित्रा मुकूलकः”
।
इति वैद्यकरत्नमाला ॥)

**उपजापः**, पुं, (उप + जप् + घञ् ।) भेदः । विच्छेदः ।

इत्यमरः ॥
(“तेषु तेषु चाकृतेषु प्रासरन् परोपजापाः” ।
इति दशकुमारे विश्रुतचरिते । तथा च माघे
२ । ९९ ।
“उपजापः कृतस्तेन तानाकोपवतस्त्वयि” ॥)

**उपजिह्वा**, स्त्री, (उपगता जिह्वा यस्याः ।) कीट-

विशेषः । तत्पर्य्यायः । उपदेहिका २ वम्री ३
उददीका ४ । इति हेमचन्द्रः ॥ आलजिह्वा इति
ख्याता च ॥ (“उपजिह्वा स्फिचौ बाहू” ।

प्रकथ्यतेऽसावुपजिह्विकेति” ॥
इति निदानस्थाने षोडशेऽध्याये सुश्रुतेनोक्तम् ॥
अस्य चिकित्सा यथा ।
“उपजिह्वान्तु संलिख्य क्षारेण प्रतिसारयेत् ।
शिराविरेकगण्डूषधमैश्चैनमुपाचरेत् ।
जिह्वागतानां कर्म्मोक्तं तालव्यानां प्रवक्ष्यते” ॥
इति सुश्रुते चिकित्सितस्थाने २२ अध्यायः ॥)

**उपजीविका**, स्त्री, (उपजीव्यतेऽनया । उप + जीव

+ गुरोश्चेत्यः । संज्ञायां कन् क्वुन् वा ।) उप-
जीव्यम् । जीवनोपायः ॥

**उपजोषम्**, व्य, (उपजोषणम् । उप + जुष + अम् ।)

आनन्दः । इत्यमरः ॥ (यथा, महाभारते १ ।
“यथोपजोषं सर्व्वश्च जनश्चिक्रीड भारत” ।
सुखं । यथा, रामायणे २ । ८९ । २२ ।
“आश्वासयित्वा च चमूं महात्मा
निवेशयित्वा च यथोपयोषम्” ॥)

**उपज्ञा**, स्त्री, (उपज्ञायते । ज्ञा अवबोधने । आत-

श्चोपसर्गे इति कर्म्मणि अङ् ।) आद्यज्ञानम् ।
इत्यमरः ॥ तत्तु विनोपदेशेन प्रथमज्ञानम् । यथा
बाल्मीकेः श्लोकनिर्म्माणे ज्ञानम् ॥
(“अथ प्राचेतसोपज्ञं रामायणमितस्ततः” ॥
इति रघुः १५ । ६३ ॥ “लोकेऽभूद्यदुपज्ञमेव
विदुषां सौजन्यजन्यं यशः” इति मल्लिनाथटीका-
मुखम् ॥)

**उपढौकनं**, क्ली, (उप + ढौक + ल्युट् ।) पारितो-

षिकद्रव्यम् । भेट् डाला इत्यादि भाषा । तत्प-
र्य्यायः । प्राभृतम् १ प्रदेशनम् २ उपायनम् ३
उप-
ग्राह्यः ४ उपहारः ५ उपदा ६ । इत्यमरः ॥

**उपतप्ता**, [ऋ] पुं, (उप + तप् + तृच् ।) उपतापक-

मात्रम् । तत्पर्य्यायः । स्पर्शः २ स्प्रष्टा ३ । इत्य-
मरः ॥ स्पशः ४ स्पर्ष्टा ५ । इति तट्टीका ॥ रोग-
इत्यन्ये । इति भरतः ॥

**उपतापः**, पुं, (उप + तप् + घञ् ।) त्वरा । उत्तापः ।

रोगः । इति मेदिनी ॥ अशुभम् । पीडा । इति
शब्दरत्नावली ॥ (यथा, शाकुन्तले ।
“विवक्षितं ह्यनुक्तं उपतापं जनयति” ।
पीडादायके वाच्यलिङ्गः । यथा, कौशिकसूत्रे ।

शाधिकारः । तत्रोपदंशस्य विप्रकृष्टं निदान-
माह ।
“हस्ताविघातान्नखदन्तघाता-
दधारणादत्युपसेवनाद्वा ।
योनिप्रदोषाच्च भवन्ति शिश्ने
पञ्चोपदंशा विविधापचारैः” ॥
हस्ताविघातात् हस्तेन मैथुनात् । नखदन्तघातात्
नखदन्तघातस्थानत्वेनानुक्तेऽपि मेहने नखदन्त-
घातो बलवदनुरागोदयात् । उक्तञ्च कामशास्त्रे ।
“शास्त्रस्य विषयस्तावद्यावन्मन्दतरो रसः ।
रतिचक्रे प्रवृत्ते तु न शास्त्रं नापि च क्रमः” ॥
कलहे दुष्टस्त्रीकृतो वा मेहने नखदन्तघातः ।
उत्कलादौ स्त्रियो मुखयोनयो भवन्ति । ताभिर्व्वा
मेहने नखदन्तघातः । योनिप्रदोषात् दीर्घकर्क्कश-
योनिलोमयोगात् । योनिच्छिद्रस्यातिसूक्ष्मत्वाद्वा ।
वातादिकृताद्वा योनिदोषात् । विविधापचारैः ।
दुष्टजलप्रक्षालनब्रह्मचारिणीगमनादिभिः पञ्चो-
पदंशाः । वातिकः पैत्तिकः श्लैष्मिकः
सान्निपातिकः
आगन्तुजश्चेति ॥ * ॥ तत्र वातिकपैत्तिकस्य
चोप-
दंशस्य लक्षणमाह ।
“सतोदभेदस्फुरणैस्तु कृष्णैः
स्फोटैर्व्यवस्येन्मरुतोपदंशम् ।
पीतैर्ब्बहुक्लेदयुतैः सदाहैः
पित्तेन रक्तैः पिशितावभासैः” ॥
व्यवस्येत् जानीयात् । पीतैः रक्तैर्व्वेति विकल्पः ॥
* ॥
श्लैष्मिकं सान्निपातिकञ्चाह ।
“सकण्डुरैः शोफयुतैर्म्महद्भिः
शुक्लैर्घनैः स्रावयुतैः कफेन ।
नानाविधस्रावरुजोपपन्न-
मसाध्यमाहुस्त्रिमलोपदंशम्” ॥ * ॥
असाध्यमाह ।
“विशीर्णमांसं कृमिभिः प्रजग्धं
मुष्कावशेषं परिवर्ज्जयेत्तम्” ।
विशीर्णमांसं गलितमांसम् । प्रजग्धं खादितम् ।
मुष्कावशेषं विशीर्णसमस्तमेहनमांसत्वेनावशिष्ट-
फलकोषमात्रम् ॥ * ॥ उत्पन्नमात्रचिकित्सायाः
अकरणे दोषमाह ।
“सञ्जातमात्रे न करोति मूढः
क्रियां नरो यो विषये प्रसक्तः ।

इति याज्ञवल्क्यः ।
"तादृगेवोपजिह्वा तु जिह्वाया उपरि स्थिता" ॥
इति वाभटेनोत्तरस्थाने एकविंशेऽध्याये उक्तम् ॥
चिकित्सा यथा ।
"उपजिह्वां परिस्राव्य यवक्षारेण घर्षयेत्" ।
इति च वाभटेनोत्तरस्थाने द्वाविंशेऽध्याये उक्तम् ॥)

**उपजिह्विका**, स्त्री, (उपजिह्वा + स्वार्थ कन् ।) घ-

ण्टिका । आलजिव इति भाषा । तत्पर्य्यायः । प्रतिजिह्वा २ । इति राजनिर्घण्टः ॥ (ऋग्वेदे ४ । ९१ । २१ । "यदत्युपजिह्विका यद्वम्रो अति-
सर्पति" ।) कीटभेदः । तत्पर्य्यायः ।
उत्पादिका २
वटिः ३ उद्देहिका ४ दिवी ५ । इति हारावली ॥
("यस्य श्लेष्मा प्रकुपितो जिह्वामूलेऽवतिष्ठते ।
आशु संजनयेत् शोथं जायतेऽस्योपजिह्विका" ॥
इति चरके सूत्रस्थाने १८ अध्यायः ॥
"जिह्वाग्ररूपः श्वयथुर्हि जिह्वा-
मुन्नम्य जातः कफरक्तयोनिः ।
प्रसेककण्डूपरिदाहयुक्ता

१३५ । "यो वनस्पतीनामुपतापो बभूव" ॥)

**उपत्यका**, स्त्री, (उप समीपे आसन्ना भूमिः । उप +

"उपाधिभ्यां त्यकन्नासन्नारूढयोः" । ५ । २३४ ।
इति त्यकन् । "त्यकनश्च निषेधः" इति इत्वा-
भावः ।) पर्ब्बतनिकटभूमिः । इत्यमरः ॥ (यथा, रघुः । ४ । ४६ ।
"मारीचोद्भ्रान्तहारीता मलयाद्रेरुपत्यकाः" ॥)

**उपदंशः**, पुं, (उपदश्यते इति । उप + दंश + कर्म्मणि

घञ् ।) मद्यपानरोचकभक्ष्यद्रव्यम् । तत्पर्य्यायः ।
अवदंशः २ चक्षणम् ३ मद्यपासनम् ४ । इति
हेमचन्द्रः ॥ (यथा दशकुमारे विश्रुतचरिते --
"द्वित्रान् उपदंशान् उपपाद्य" ।
"ततस्तस्य शाल्योदनस्य दर्व्वीद्वयं दत्त्वा सपि-
र्मात्रां सूपम् उपदंशं च उपजहार" । इति च ।)
मेढ्ररोगविशेषः । वाओ इति भाषा । अथोपदं-

कालेन शोफक्रिमिदाहपाकैः
प्रशीर्णशिश्नो म्रियते स तेन" ॥
विषये प्रसक्तः अतिस्त्रीरतः ॥ * ॥ लिङ्गार्शमाह ।
"अङ्कुरैरिव संजातैरुपर्य्युपरि संस्थितैः ।
क्रमेण जायते वर्त्तिस्ताम्रचूडशिखोपमा ॥
कोषस्याभ्यन्तरे सन्धौ पर्ब्बसन्धिगतापि च ।
सवेदना पिच्छिला च दुश्चिकित्स्या त्रिदोषजा ॥
लिङ्गवर्त्तिरिति ख्याता लिङ्गार्श इति चापरे" ॥
लिङ्गवर्त्तेः स्थानमाह । कोषाभ्यन्तरे अण्डकोषा-
भ्यन्तरे । सन्धौ लिङ्गरन्ध्रसन्धौ । पर्ब्बसन्धिगता
मणिपर्ब्बणोः सन्धिगता ॥ * ॥ * ॥
अथोपदंशस्य चिकित्सा ।
"उपदंशेषु सर्व्वेषु स्निग्धं स्विन्नस्य देहिनः ।

:मेढ्रमध्ये शिरां विध्येत् पातयेद्वा जलौकसः ॥

सद्यो निर्हृतदोषस्य रुक्शोथावुपशाम्यतः ।
पाको निवार्य्यो यत्नेन शिश्नक्षयकरः स यत् ॥
वटप्ररोहार्ज्जुनजम्बुलोध्र-
पथ्याहरिद्रारचितः प्रलेपः ।
व्यथां तथा शोथमपाकरोति
सर्व्वोपदंशेषु ततो हितोऽयम् ॥
उपदंशेषु पक्वेषु व्रणप्रक्षालनं हितम् ।
त्रिफलायाः कषायेण भृङ्गराजरसेन वा ॥
नीलोत्पलं सकुमुदं पद्मं सौगन्धिकं तथा ।
एषां चूर्णं धूलनार्थं प्रलेपश्चात्र शस्यते ॥
बन्धूकदलचूर्णेन रजसा दाडिमत्वचः ।
गुण्ठनं तद्व्रणे कुर्य्याल्लेपं पूगफलेन वा ॥
दहेत् कटाहे त्रिफलां तन्मसी मधुसंयुता ।
प्रलेपेनोपदंशस्य व्रणं सद्यः प्ररोहयेत् ॥
पटोलनिम्बत्रिफलाकिरात-
क्वाथं पिबेद्वा खदिरासनाभ्याम् ।
सगुग्गुलुं वा त्रिफलायुतं वा
सर्व्वोपदंशापहरः प्रयोगः" ॥ * ॥
"भूनिम्बनिम्बत्रिफलापटोल-
करञ्जधात्रीखदिरासनानाम् ।
कषायकल्कैः सृतमाशु चाज्यं
सर्व्वोपदंशापहरं प्रदिष्टम्" ॥
भूनिम्बादिघृतम् ॥ * ॥
"घृतानि यानि प्रोक्तानि कुष्ठे नाडीव्रणे व्रणे ।
उपदंशे प्रयोज्यानि सेकाभ्यञ्जनभोजने ॥
क्षारसूत्रेण संछिद्य लिङ्गवर्त्तिमशेषतः ।
दहेच्च तां ततस्ताभ्यां चिकित्सां व्रणवच्चरेत्" ॥
इत्युपदंशाधिकारः । इति भावप्रकाशः ॥ * ॥
अपि च ।
"पटोलनिम्बत्रिफलागुडूचीक्वाथमाविशेत् ।
सगुग्गुलुं सखदिरमुपदंशो विनश्यति" ॥
ग्रन्थान्तरे प्रथमार्द्धे "पटोलनिम्बगुडूचीमरिच-क्वाथमापिबेत्" । इति च पाठः ॥
"दहेत् कटाहे त्रिफलां सा मसी मधुसंयुता ।
उपदंशे प्रलेपोऽयं सद्यो रोपयते व्रणम्" ॥ * ॥
"त्रिफलानिम्बभूनिम्बकरञ्जखदिरादिभिः ।
कल्कैः क्वाथैर्घृतं पक्वमुपदंशहरं परम्" ॥
इति गारुडे १७५ अध्यायः ॥
(अन्यच्चास्य सनिदानसम्प्राप्तिकं लक्षणमाह । यथा,

श्लेष्मणा कठिनः स्निग्धः कण्डूमान् शीतलोगुरुः ॥ ३ ॥
शोणितेनासितस्फोटसम्भवोऽस्रस्रुतिर्ज्वरः ॥ ४ ॥
सर्व्वजे सर्व्वलिङ्गत्वं श्वयथुर्मुष्कयोरपि" ॥ ५ ॥
असाध्यलक्षणं यथा ।
"तीव्रा रुगाशुपचनं दरणं क्रिमिसम्भवः ।
याप्यो रक्तोद्भवस्तेषां मृत्यवे सन्निपातजः" ॥
इति वाभटे उत्तरस्थाने ३३ अध्याये ।
अस्य चिकित्सा च यथा ॥
"मेढ्रमध्ये शिरां विध्येदुपदंशे नवोत्थिते ।
शीतां कुर्य्यात् क्रियां शुद्धिं विरेकेण विशेषतः ॥
तिलकल्कघृतक्षौद्रैर्लेपः पक्वे तु पाटिते ।
जम्ब्वाम्रसुमनोनीपश्वेतकाम्बोजिकाङ्कुरान् ॥
शल्लकीवदरीविल्वपलाशतिनिशोद्भवाः ।
त्वचः क्षीरिद्रुमाणाञ्च त्रिफलाञ्च जले पचेत् ॥
सक्वाथः क्षालनं तेन पक्वतैलञ्च रोपणम् ।
तुत्थगैरिकलोध्रैलामनोह्वालरसाञ्जनैः ॥
हरेणुपुष्पकाशीससौराष्ट्रीलवणोत्तमैः ।
लेपः क्षौद्रयुतैः सूक्ष्मैरुपदंशव्रणापहः ॥
कपाले त्रिफला दग्धा सघृता रोपणं परम् ।
सामान्यं साधनमिदं प्रतिदोषन्तु शोफवत् ॥
न च याति यथा पाकं प्रयतेत तथा भृशम् ।
पक्वैः स्नायुशिरामांसैः प्रायो नश्यति हि ध्वजः" ॥
इति वाभटे उत्तरस्थाने ३४ अध्यायः ॥
तत्रातिमैथुनादतिब्रह्मचर्य्याद्वा तथा ब्रह्मचारिणीं चिरोत्सृष्टां रजस्वलां दीर्घरोमां कर्कशरोमां सङ्कीर्णरोमां निगूढरोमामल्पद्वारां महाद्वारामप्रियामकामामचौक्ष्यसलिलप्रक्षालितयोनिमक्षालितयोनिं योनिरोगोपसृष्टां स्वभावतो वा दुष्टयोनिं वियोनिं वा नारीमत्यर्थमुपसेवमानस्य तथा करज-दशन-विष-शूकनिपातनादर्द्दनाद्धस्ताभिघाताच्चतुष्पदीगमनादचौक्ष्यसलिलप्रक्षालनादवपीडनाच्छुक्रमूत्रवेगविधारणान्मैथुनान्ते वाऽप्रक्षालनादिभिर्मेढ्रमागम्य प्रकुपिता दोषाः क्षतेऽक्षते वा श्वयथुमुपजनयन्ति तमुपदंशमित्याचक्षते ॥

स पञ्चविधस्त्रिभिर्दोषैः पृथक् समस्तैरसृजा चैकः ॥

तत्र वातिके पारुष्यं त्वक्परिपुटनं स्तध्वमेढ्र-

प्रपौण्डरीकयष्ट्याह्ववर्षाभू-कुष्ठदारुभिः ॥
सरलागुरुरास्नाभिर्वातजं संप्रलेपयेत् ।
निचुलैरण्डवीजानि यवगोधूमशक्तवः ॥
एतैश्च वातजं स्निग्धैः सुखोष्णैः संप्रलेपयेत् ।
प्रपौण्डरीकपूर्ब्बैश्च द्रव्यैः सेकः प्रशस्यते ॥
गैरिकाञ्जनयष्ट्याह्वसारिवोशीरपद्मकैः ।
सचन्दनोत्पलैः स्निग्धैः पैत्तिकं संप्रलेपयेत् ॥
पद्मोत्पलमृणालैश्च ससर्ज्जार्ज्जुनवेतसैः ।
सर्पिःस्निग्धैः समधुकैः पैत्तिकं सम्प्रलेपयेत् ॥
सेचयेच्च घृतक्षीरशर्करेक्षुमधूदकैः ।
अथ वापि सुशीतेन कषायेण वटादिना ॥
शालाश्वकर्णाजकर्णधवत्वग्भिः कफोत्थितम् ।
सुरापिष्टाभिरुष्णाभिः सतलाभिः प्रलेपयेत् ॥
रजन्यतिविषामुस्तसरलासुरदारुभिः ।
सपत्रपाठापत्तूरैरथ वा सम्प्रलेपयेत् ॥
करवीरस्य पत्राणि जात्यारग्बधयोस्तथा ।
प्रक्षालने प्रयोज्यानि वैजयन्त्यर्कयोरपि ॥
गोजिविडङ्गयष्टीभिः सर्व्वगन्धैश्च संयुतम् ।
एतत् सर्व्वोपदंशेषु श्रेष्ठं रोपणमिष्यते ॥
सर्ज्जिकातुत्थकाशीसं शैलेयञ्च रसाञ्जनम् ।
मनःशिलासमैश्चूर्णं व्रणवीसर्पनाशनम् ॥
गुन्द्रान्दग्ध्वा कृतं भस्म हरितालं मनःशिला ।
उपदंशविसर्पाणामेतच्छान्तिकरं परम् ॥
मार्कवस्त्रिफलादन्तीताम्रचूर्णमयो रजः ।
उपदंशं निहन्त्येष वृक्षमिन्द्राशनिर्यथा ॥
उपदंशद्वयेऽप्येतां प्रत्याख्यायाचरेत् क्रियाम् ।
तयोरेव च या योग्या वीक्ष्य दोषबलाबलम् ॥
उपदंशे विशेषेण श्टणु भूयस्त्रिदोषजे ।
दुर्व्रणविधिं कुर्य्यात् कुथितं मेहनं त्यजेत् ॥
जाम्बौष्ठेनाग्निवर्णेन पश्चाच्छेषं दहेद्भिषक् ।
सम्यग्दग्धञ्च विज्ञाय मधुसर्पिः प्रयोजयेत् ॥
शुद्धे च रोपणं दद्यात् कल्कं तैलं हितञ्च यत्" ।
इति च सुश्रुते चिकित्सितस्थाने १९ अध्याये ॥
"लवङ्गं मरिचं शुण्ठी विडङ्गञ्च वचान्तथा ।
गन्धकं श्वेतखदिरं जातीकोषफले तथा ।
समभागकृतं सर्व्वं मधुना कारयेद्वटीम् ॥
शाणमात्रान्तु मतिमान् योजयेदविकल्पितः ।
अनुपानं दुग्धसारं ततस्ताम्बूलभक्षणम्" ॥
इति उपदंशारी रसः ॥
इति वैद्यकरसेन्द्रसारसंग्रहे उपदंशाधिकारः ॥ * ॥

| | | |
|---|---|---|
| "स्त्रीव्यवायनिवृत्तस्य सहसा भजतोऽथवा ।<br>दोषाध्युषितसंकीर्णमलिनानुरजःपथाम् ॥<br>अन्ययोनिमनिच्छन्तीमगम्यां नवसूतिकाम् ।<br>दूषितं स्पृशतस्तोयं रतान्तेष्वपि नैव वा ॥<br>विवर्द्धयिषया तीक्ष्णान् प्रलेपादीन् प्रयच्छतः ।<br>मुष्टिदन्तनखोत्पीडाविषवच्छुक्रपातनैः ॥<br>वेगनिग्रहदीर्घातिखरस्पर्शविघट्टनैः ।<br>दोषा दुष्टा गता गुह्यं त्रयोविंशतिमामयान् ॥<br>जनयन्त्युपदंशादीन् उपदंशोऽत्र पञ्चधा ।<br>पृथक्दोषैः सरुधिरैः समस्तैश्चात्र मारुतात् ॥<br>मेढ्रशोके रुजश्चित्राः स्तम्भत्वक् परिपोटनम् ॥ १ ॥<br>पक्वोदुम्बरसंकाशः पित्तेन श्वयथुर्ज्वरः ॥ २ ॥ | ता परुषशोफता विविधाश्च वातवेदनाः ॥ १ ॥<br>पैत्तिके ज्वरः श्वयथुः पक्वोडुम्बरसङ्काशस्तीव्र-<br>दाहः क्षिप्रपाकः पित्तवेदनाश्च ॥ २ ॥<br>श्लैष्मिके श्वयथुः कण्डूमान् कठिनः स्निग्धः श्लेष्म-<br>वेदनाश्च ॥ ३ ॥<br>रक्तजे कृष्णस्फोटप्रादुर्भावोऽत्यर्थमसृक्प्रवृत्तिः पित्तलिङ्गान्यत्यर्थं ज्वरदाहो शोषश्च याप्यश्चैव कदाचित् ॥ ४ ॥<br>सर्व्वजे सर्व्वलिङ्गदर्शनमवदरणं शेफसः कृमि-<br>प्रादुर्भावो मरणञ्चेति ॥ ५ ॥<br>इति सुश्रुते निदानस्थाने १२ अध्यायः ॥<br>चिकित्साविशेषो यथा ।<br>"यदि वा दुर्ब्बलो जन्तुर्न वा प्राप्तं विरेचनम् ॥<br>निरूहेण हरेत् तस्य दोषानत्यर्थमुच्छ्रितान् । | अत्र पथ्यानि यथा ॥<br>छिर्द्विर्विरेको ध्वजमध्यनाडी-<br>वेधो जलौकःपरिपातनञ्च ।<br>सेकः प्रलेपो यवशालयश्च<br>धन्वामिषं मुद्गरसो घृतानि ॥ १ ॥<br>कठिल्लकं शिग्रुफलं पटोलं<br>शालिञ्चशाकं नवमूलकञ्च ।<br>तिक्तं कषायं मधुकूपवारि<br>तैलञ्च हन्यादुपदंशरोगम् ॥ २ ॥<br>अपथ्यानि यथा ॥<br>"दिवानिद्रां मूत्रवेगं गुर्व्वन्नं मैथुनं गुडम् ।<br>आयासमम्लं तक्रञ्च वर्ज्ज येदुपदंशवान् ॥ ३ ॥ |

:इति वैद्यकपथ्यापथ्यविधिः ॥) समष्ठिलवृक्षः ।
शिग्रुवृक्षः । इति राजनिर्घण्टः । (भवे घञ् ।)
दंशनम् ॥

**उपदर्शकः**, पुं, (उपदर्शयतीति । उप + दृश् + णिच्
+ ण्वुल् ।) द्वारपालः । इत्यमरटीकासारसुन्दरी
॥
(दर्शयितरि, त्रि ॥)

**उपदा**, स्त्री, (उपदीयते इति । उप + दा + आत-
श्चोपसर्ग इत्यङ् ।) उपढौकनम् । इत्यमरः ॥
("उपदा विविशुः शश्वत् नोत्सेकः
कोशलेश्वरम्" ।
इति रघुः । ४ । १० ।)
"प्रत्यर्प्य पूजामुपदाच्छलेन" । इति रघुः । ७ ।
३० ।)

**उपदानकं**, क्ली, (उपदान + स्वार्थे कन् ।) उत्कोचः ।
इति त्रिकाण्डशेषः ॥

**उपदिष्टः**, त्रि, (उप + दिश् + क्त ।) उपदेशप्राप्तः ।
यथा । "ननु शूद्रस्यापि सगोत्रा कथं न निषिध्यते
इति चेदत्र उपदिष्टातिदिष्टगोत्रस्यैव निषेधो न
त्वतिदिष्टातिदिष्टशूद्रगोत्रादेरिति" । इत्युद्वाह-
तत्त्वम् ॥

**उपदी**, स्त्री, (उपेत्य दीयते छिद्यते इति उप + दो
+ क + ङीष् ।) वन्दाकः । इति राजनिर्घण्टः ॥
परगाछा इति भाषा ॥

**उपदेवता**, स्त्री, (उपगता सादृश्येन देवताम् ।) यक्ष-
भूतादिः ॥ (उपदेवताश्च दश । यथाह अमरः ।
"विद्याधरोऽप्सरो यक्षो रक्षो गन्धर्व्वकिन्नरौ ।
पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः" ॥)

**उपदेशः**, पुं, (उप + दिश् + घञ् ।) मन्त्रकथनम् ।
तत्पर्य्यायः । दीक्षा २ । यथा ।
"चन्द्रसूर्य्यग्रहे तीर्थे सिद्धक्षेत्रे शिवालये ।
मन्त्रमात्रप्रकथनमुपदेशः स उच्यते" ॥
इति रामार्च्चनचन्द्रिका ॥ कलावत्यादिदीक्षाया-
मसामर्थ्ये संक्षेपो यथा ।
"तत्राप्यशक्तः कश्चिच्चेदब्जमभ्यर्च्च्य साक्षतम्
।
तदम्बुनाभिषिच्याष्टवारं मूलेन केकरम् ॥
निधायाष्टौ जपेत् कण उपदेशे त्वयं विधिः" ॥
इति तिथ्यादितत्त्वम् ॥ वृहस्पतिः ।
"उपदेष्टानुमन्ता च लोके तुल्यफलौ स्मृतौ" ।
इत्याह्निकतत्त्वञ्च ॥

**उपदेहिका**, स्त्री, (उपदेहो विद्यते यस्याः । उप-
देह + ठक् ।) कीटविशेषः । तत्पर्य्यायः । उप-
जिह्वा २ वम्री ३ उपदीका ४ । इति हेमचन्द्रः ॥

**उपद्रवः**, पुं, (उप + द्रु + अप् ।) उत्पातः । इति
हलायुधः ॥ रोगारम्भकदोषप्रकोपजन्योऽन्यो वि-
कारः । (तल्लक्षणमुक्तं वैद्यके । यथा, --
"यो व्याधिस्तस्य यो हेतुर्दोषस्तस्य प्रकोपतः ।
योऽन्यो विकारो भवति स उपद्रव उच्यते" ॥
"व्याधेरुपरि यो व्याधिः उपद्रव उदाहृतः ।
सोपद्रवा न जीवन्ति जीवन्ति निरुपद्रवाः" ॥
इति हारीते चिकित्सितस्थाने द्वितीयेऽध्याये ।
"तत्रौपसर्गिको यः पूर्ब्बोत्पन्नं व्याधिं
जघन्यकाल-
जातो व्याधिरुपसृजति स तन्मूलएवोपद्रव-
संज्ञः" । इति सुश्रुते सूत्रस्थाने ३५ अध्याये ॥)

**उपद्रष्टा**, [ऋ] त्रि, (उप + दृश + बाहुलकात्तृच् ।)
उपदर्शकः । उदासीनबोधरूपत्वेन गुणप्रचार-
दर्शी । इति गीताटीका ॥
("उपद्रष्टानुमन्ता च भर्त्ता भोक्ता महेश्वरः" ।
इति गीतायां १३ । २२ । साक्षी पुरुषः । यथा,
"ऋत्विग्यजमानेषु यजनकर्म्मव्यापृतेषु तत्स-
मीपस्थोऽन्यः स्वयमव्यापृतो
यज्ञविद्याकुशलत्वात्
ऋत्विग्यजमानव्यापारगुणदोषाणां ईक्षिता तद्वत्-
कार्य्यकारणव्यापारेषु स्वयमव्यापृतो
विलक्षणस्तेषां
कार्य्यकारणानां सव्यापाराणां समीपस्थो द्रष्टा
उपद्रष्टा साक्षी पुरुषः" ॥)

**उपधर्म्मः**, पुं, (उपहीनोधर्म्मः ।) पाषण्डः । इति
श्रीभागवतम् ॥ (यथा मनुः २ । २३७ ।
"एष धर्म्मः परः साक्षात् उपधर्म्मोऽन्य उच्यते"
॥)

**उपधा**, स्त्री, (उपधीयते शुद्धिज्ञानमत्र । उप + धा
+ आतश्चोपसर्ग इत्यङ् + टाप् ।) राज्ञां धर्म्म-
कामार्थभयैरमात्यादेर्यत् परीक्षणम् । इत्यमरः ॥
धर्म्मार्थकाममोक्षद्वारा परीक्षा । यथा ।
शुद्धमांसभवस्नेहः सा वसा परिकीर्त्तिता ॥
स्वेदो दन्तास्तथा केशास्तथैवोजश्च सप्तमम् ।
इति धातुभवा ज्ञेया एते सप्तोपधातवः" ॥
इति शार्ङ्गधरेण पूर्ब्बखण्डे पञ्चमेऽध्याये उक्तम् ॥
"सप्तोपधातवः स्वर्णमाक्षिकं तारमाक्षिकम् ।
तुत्थं कांस्यं च रीतिश्च सिन्दूरश्च शिलाजतु" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमभागे ॥)

**उपधानं**, क्ली, (उपधीयते आरोप्यते मस्तकमत्र ।
उप + धा + अधिकरणे ल्युट् ।) शिरोधानम् ॥
वालिश इति भाषा । तत्पर्य्यायः । उपवर्हः २ ।
इत्यमरः । गण्डुः ३ । इति जटाधरः ।
("सोपधानां धियं धीराः स्थेयसीं खट्टयन्ति ये"
।
इति माघः २ । ७७ ।
"पट्टोपधानाध्यासितशिरो-
भागेन" । इति कादम्बरी ।) विषम् । प्रणयः ।
इति मेदिनी । व्रतम् । इति हेमचन्द्रः ॥

**उपधानीयं**, क्ली, (उपधीयते यस्मिन् । उप + धा +
अनीयर् ।) उपधानम् । इति शब्दरत्नावली ॥

**उपधिः**, पुं, (उपधीयते आरोप्यतेऽनेन । उप + धा
+ किः ।) कपटः । इत्यमरः ॥ (यथा, मनुः ८ ।
१६५ ॥
"योगाधमनविक्रीतं योगदानप्रतिग्रहम् ।
यत्र वाप्युपधिं पश्येत् तत्सर्व्वं विनिवर्त्तयेत्" ॥
"अरिषु हि विजयार्थिनः क्षितीशाः
विदधति सोपधि सन्धिदूषणानि" ।
इति किराते ॥ १ । ४५ ।) रथचक्रम् । इति
हेमचन्द्रः ॥

**उपधूपितः**, त्रि, (उप + धूप् + क्त ।) आसन्नमरणः ।
परिधूपितः । इति मेदिनी ॥

**उपधृतिः**, स्त्री, (उप + धृ + क्तिन् ।) किरणः । इति
हेमचन्द्रः ॥

**उपनतः**, त्रि, (उप + नम् + क्त ।) उपस्थितः । इति
हेमचन्द्रः ॥ ("अचिरोपनतां स मेदिनीं" इति
रघुः ८ । ७ ॥ नम्रः । यथा, माघे । १२ । ३३ ।
"शौरेः प्रतापोपनतैरितस्ततः
समागतैः प्रश्रयनम्रमूर्त्तिभिः" ॥)

**उपनदं**, क्ली, नद्याः समीपम् । इति मुग्धबोध-

इति विश्वसारतन्त्रम् ॥ हितकथनम् ।
(यथा, हितोपदेशे विग्रहे उक्तम् ।
“उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये” ॥)
शिक्षणम् ॥ (यथा, मनुः ८ । २७२ ।
“धर्म्मोपदेशं दर्पण विप्राणामस्य कुर्व्वतः” ।
“एवमित्युपदेशः । यथा । तथा न जागृयात्
रात्रौ दिवास्वप्नञ्च वर्जयेदनेन कारणेनेत्युपदे शः ॥
अथोपदिश्यते मधुरेण श्लेष्माभिवर्द्धत इति” ।
इति सुश्रुते उत्तरतन्त्रे ६५ अध्यायः ॥)

**उपदेशी**, [न्] त्रि, (उपदिशति यः । उप + दिश्
+ णिनि ।) उपदेष्टा ॥ (यथा हितोपदेशे मित्र-
लाभे ।
“गतानुगतिको लोकः कुट्टनीमुपदेशिनीम् ।
प्रमाणयति नो धर्म्मे यथा गोघ्नमपि द्बिजम्” ॥)

**उपदेष्टा**, [ऋ] त्रि, (उपदिशति यः । उप + दिश् +
तृच ।) उपदेशकर्त्ता । यथा ।
“तथोपदेष्टारमपि पूजयेच्च ततो गुरुम् ।
नपूज्यते गुरुर्यत्र नरैस्तत्राफला क्रिया” ॥
“धर्म्मार्थकाममोक्षैश्च प्रत्येकं परिशोधनैः ।
उपेत्य धीयते यस्मादुपधा परिकीर्त्तिता ॥
अर्थकामोपधाभ्यान्तु भार्य्याः पुत्त्रांस्तु शोधयेत् ।
धर्म्मोपधाभिर्व्विप्रांस्तु सर्व्वाभिः सचिवान् पुनः” ॥
इति कालिकापुराणे ८५ अध्यायः ॥ (“भूयोभूय-
श्चोपधाभिर्विशोध्य तं मे मतिसहायमकरवम्” ।
इति दशकुमारचरिते विश्रुतचरिते ।) पदानामु-
पान्त्यवर्णः । इति व्याकरणम् ॥

**उपधातुः**, पुं, (उप सादृश्ये । धातुसदृशो धातुः ।)
अष्टप्रधानधातुसदृशधातुः । स तु सप्तधा यथा ।
माक्षिकम् १ तुत्थकम् २ अभ्रम् ३ नीलाञ्जनम्
४ मनःशिला ५ हरितालम् ६ रसाञ्जनम् ७ ॥
शरीरस्थधातुभवोपधातुः सप्तधा यथा । रसात्
स्तनदुग्धम् १ रक्तात् स्त्रीरजः २ मांसात् वसा
३ मेदसो घर्म्म ४ अस्थ्नो दन्तः ५ मज्जनः
केशः
६ शुक्रात् ओजः ७ । इति वैद्यकम् ॥
(“स्तन्यं रजश्च नारीणां काले भवति गच्छति ।
व्याकरणम् ॥ (तथा पाणिनीये ।
“नदीपौर्णमास्याग्रहायणीभ्यः” । ५ । ४ । ११० ।
इत्यनेन सिद्धम् ॥)

**उपनदि**, क्ली, नद्याः समीपम् । इति मुग्धबोध-
व्याकरणम् ॥ (तथा पाणिनीये ।
“नदीपौर्णमास्याग्रहायणीभ्यः” । ५ । ४ । ११० ।
इत्यनेन सिद्धम् ॥)

**उपनयः**, पुं, (उप समीपे नीयते येन कर्म्मणा । उप
+ नी + अच् ।) उपनयनम् । इति हेमचन्द्रः ॥
(“गृह्योक्तकर्म्मणा येन समीपं नीयते गुरोः ।
बालो वेदाय तद्योगात् बालस्योपनयं विदुः” ॥
इति स्मृतिः । भावे + अच् । प्रापणम् । यथा,
महाभारते ३ । २ । २४ ।
“मानमस्य प्रियाख्यानैः सम्भोगोपनयैर्नृणाम्” ॥
न्यायमते यो यो धूमवान् स सवह्निमान् अयमपि
तथेत्यादिरूपः न्यायावयवभेदः ॥)

:

**उपनयनं**, क्ली, (अध्ययनार्थं आचार्य्यस्य उप समीपं
नीयते येन कर्म्मणा इति । उप + नी
ल्युट् ।)
ब्राह्मणक्षत्रियवैश्यानां
यज्ञसूत्रधारणादिरूपप्र-
धानसंस्कारः ।
अध्यापनार्थमाचार्य्यसमीपं नीयते
येन कर्म्मणा तदुपनयनम् । यथा
स्मृतिः ।
“गृह्योक्तकर्म्मणा येन समीपं नीयते
गुरोः ।
बालो वेदाय तद्योगाद्बालस्योपनयं विदुः” ॥ * ॥
तत्पर्य्यायः । वटूकरणम् २ । इति
त्रिकाण्डशेषः ॥
उपनायः ३ उपनयः ४ आनयः ५ ।
इति हेम-
चन्द्रः ॥ तस्य कालः ।
“गर्भाष्टमेऽष्टमे वाब्दे
ब्राह्मणस्योपनायनम् ।
राज्ञामेकादशे सैके विशामेके
यथाकुलम् ।
ब्रह्मवर्च्चसकामस्य कार्य्यं विप्रस्य
पञ्चमे” ॥
ब्राह्मणस्य गर्भावधिषोडशवर्षपर्य्यन्तम्
॥ तत्र-
गर्भाष्टमवर्षो मुख्यः । क्षत्रियस्य
द्वाविंशतिवर्ष-
पर्य्यन्तम् । तत्रैकादशवर्षो मुख्यः ।
वैश्यस्य चतु-
र्व्विंशतिवर्षपर्य्यन्तम् । तत्र द्वादशवर्षो
मुख्यः ।
इति स्मृतिः ॥ सैके द्वादशे । तत्राशक्तौ
प्रायश्चित्तं
कृत्वा तदुत्तरे कार्य्यम् ।
निषिद्धेति । षष्ठ्यामशुचिरमार्य्यो रिक्तासु बहु-
दोषभाक् । शुक्लपक्ष एव विहितः प्रागुक्ताश्व-
लायनवचनात् ॥ * ॥ सामगानां कुजवारेऽप्युप-
नयनं
श्रीपतिरत्नमालाकृत्यचिन्तामणिधृतवात्स्य-
वचनात् । यथा ।
“शाखाधिपे बलिनि केन्द्रगतेऽथ वास्मिन्
वारेऽस्य चोपनयनं कथितं द्विजानाम् ।
नीचस्थितेऽरिगृहगेऽथ पराजिते वा
जीवे भृगावुपनयः स्मृतिकर्म्महीनः” ॥
अस्य शाखाधिपस्य ॥ दीपिकायां ।
“ऋग्वेदाधिपतिर्जोवो यजुर्व्वेदाधिपः सितः
सामवेदाधिपो भौमः शशिजोऽथर्व्ववेदराट्” ॥
वेदाधिपकथनम् ॥ * ॥
“ब्राह्मणे शुक्रवागीशौ क्षत्रिये भौमभास्करौ ।
चन्द्रो वैश्ये बुधः शूद्रे पतिर्मन्दोऽन्त्यजे जने” ॥
वर्णाधिपकथनम् ॥ * ॥ पराजयलक्षणं वक्ष्ये
यात्रायाम् ।
अत्रापि विवाहवद्दशयोगभङ्गवर्ज्जनम् ।
विष्णुधर्म्मोत्तरे ।
“षोडशाब्दो हि विप्रस्य राजन्यस्य द्विविंशतिः
।
विंशतिः सचतुर्थी च वैश्यस्य परिकीर्त्तिता ॥
सावित्री नातिवर्त्तेत अत ऊर्द्ध्वं निवर्त्तते” ॥
अत्र षोडशवर्षस्य उपनयनाङ्गता प्रतीयते ॥
“पतिता यस्य सावित्री दशवर्षाणि पञ्च च ।
ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः ॥
प्रायश्चित्तं भवेदेषां प्रोवाच वदतां वरः” ॥
इति यमवचने तदनङ्गता प्रतीयते । अनयोर्गर्भ-
जन्मप्रभृतिगणनाभ्यामविरुद्धार्थता । तथाच
मा-
ण्डव्यः । “व्रतबन्धविवाहे च वत्सरपरिकल्पन-
माहुराचार्य्याः । आधानपूर्ब्बमेके प्रसूतिपूर्ब्बं
सदान्ये तु” ॥ * ॥ यत्तु द्विजानुपक्रम्य
पैठिनसि-
वचनं द्वादशषोडशविंशतिश्चेदतीता अवरुद्ध-
काला भवन्ति इति द्वादशवर्षाद्युपरि ब्राह्मणा-
कस्य दक्षिणतः स्थितो मन्त्रवान् ब्राह्मणो
माण-
वकस्य अञ्जलिमुदकेन पूरयति पश्चात्
आ-
चार्य्यस्यापि । ततो
गृहीतजलाञ्जलिराचार्य्यो
गृहीतजलाञ्जलिं माणवकं पश्यन् मन्त्रं
जपति । तत आचार्य्यो माणवकं मन्त्रं
पाठ-
यति । ततो माणवकस्याभिवादनार्थं
देवता-
श्रयं नक्षत्राश्रयं गोत्राश्रयं वा माणवकनाम
कल्पयित्वा आचार्य्यो माणवके कथयति
। तत-
आचार्य्यो माणवकं मन्त्रेण नामधेयं
पृच्छति ।
माणवकः पूर्ब्बाचार्य्यकल्पितं नाम
मन्त्रेण कथ-
यति । तत आचार्य्यमाणवकौ
पूर्ब्बगृहीतजला-
ञ्जली त्यजेताम् । आचार्य्यस्तु दक्षिणेन
पाणिना
माणवकस्य साङ्गुष्ठं दक्षिणं पाणिं मन्त्रेण
गृह्णाति ।
ततो गृहीतमाणवकहस्तो मन्त्रं
जपत्याचार्य्यः ।
ततो माणवकमाचार्य्यो मन्त्रेण प्रदक्षिणेन
भ्राम-
यित्वा प्राङ्मुखं करोति । ततो माणवकस्य
दक्षिण-
स्कन्धं स्पृष्ट्वा अवतीर्णेन दक्षिणपाणिना
अव्यव-
हितं नाभिदेशं आचार्य्यो मन्त्रेण स्पृशति
। ततो
माणवकस्य नामेरुपरिदेशं मन्त्रेण
आचार्य्यः

“गृह्योक्तकर्म्मणा येन समीपं नीयते गुरोः ।
बालो वेदाय तद्योगाद्बालस्योपनयं विदुः ॥
रक्तस्रावे तथा शस्त्रक्षते पाठनिषेधनात् ।
उपनयनं न तत्र स्यात् इति मन्वादिसम्मतम्” ॥
कृत्यचिन्तामणौ ।
“जन्मोदये जन्मसु तारकासु मासेऽथवा जन्मनि जन्मभे वा ।
व्रतेन विप्रो न बहुश्रुतोऽपि विद्याविशेषैः प्रथितः पृथिव्यां ॥
अस्तं गते दैत्यगुरौ गुरौ वा ऋक्षेऽपि वा पापयुतेऽप्यनुक्ते ।
व्रतोपनीतो दिवसे प्रणाशं प्रयाति देवैरपि रक्षितो यः” ॥
उदये लग्ने । व्रतेन उपनयनेन । भुजबलभीमकृत्य-
चिन्तामण्योः ।
“स्वातीशक्रधनाश्विमित्रकरभे पौष्णेज्यचित्राहरि-
ष्विन्दौ तोयपतौ भगे दितिसुते भाद्रद्वये सागरे ।
केन्द्रस्थे भृगुजेऽङ्गिरःशशिसुते चन्द्रे च तारे शुभे
कर्त्तव्यं व्रतकर्म्म मङ्गलतिथौ वाराः सितार्केज्यकाः” ॥
तोयपतिः शतभिषा ।
अदितिसुतौत्तरफल्गुनी ।
सागरः पूर्ब्बाषाढा । दीपिकायाम् ।
जीवार्केन्दूडुशुद्धौ हरिशयनवहिर्भास्करे चोत्तरस्थे,
स्वाध्याये वेदवर्णाधिपैहशुभदे क्षौरिभे नादितौच ।
शुकार्केज्यर्क्षलग्ने रविमदनतिथिं प्रोह्य षष्ठाष्टमेन्दुं,
नो जीवास्तातिचारेऽर्कसितगुरुदिने कालशुद्धौ

दीनां महाव्याहृतिहोमप्रायश्चित्तार्थम् । षोड-
शोपरि तु व्रात्यहोमादिगुरुप्रायश्चित्तार्थमिति ।
इत्युपनयनम् । इति ज्योतिस्तत्त्वम् ॥
अथ उपनयनस्यानुष्ठानक्रमः ।
तत्र प्रथमं प्रातः कृतस्नानः कृतवृद्धिश्राद्धः पिता
कृतवृद्धिश्राद्धेन पित्रान्यएवाचार्य्यो वृतस्तद-
सम्भवे माणवकवृतो वा समुद्भवनामानमग्निं सं-
स्थाप्य विरूपाक्षजपान्तां कुशण्डिकां समाप्य
माणवकं प्रातर्भोजयित्वा अग्न्युत्तरतो नीत्वा
शिखया सह मुण्डितं स्नापितं कुण्डलाद्यलङ्कृतं
क्षौमवस्त्रावृतं तदसम्भवे शुक्लाहतकार्पासैक-
वस्त्रावृतं माणवकं दक्षिणे पूर्ब्बाभिमुखं निधाय
प्रकृतकर्म्मारम्भे प्रादेशप्रमाणां घृताक्तां समिधं
तूष्णीमग्नौ हुत्वा
तत्तन्मन्त्रैर्व्यस्तसमस्तमहाव्याहृ-
तिहोमं कुर्य्यात् । तत आचार्य्यः पञ्चभिर्म्मन्त्रैः
पञ्चाहुतीर्जुहुयात् । तत आचार्य्यः उदगग्रेषु
कुशेषु कृताञ्जलिः प्राङ्गख ऊर्द्ध्वस्तिष्ठेत् । अग्न्या-
चार्य्ययोर्म्मध्ये माणवकोऽपि कृताञ्जलिराचार्य्या-
भिमुख उदगग्रेषु कुशेषु ऊर्द्ध्वस्तिष्ठेत् । माणव-

स्पृशति । ततो माणवकहृदयदेशं मन्त्रेणाचार्य्यः
स्पृशति । ततो दक्षिणे पाणिना आचार्य्यो
माणवकस्य दक्षिणस्कन्धं स्पृशन् मन्त्रं जपति ।
ततो वामेन पाणिना माणवकस्य वामस्कन्धं
स्पृशन्नाचार्य्यो मन्त्रं जपति । अथाचार्य्यो माण-
वकं मन्त्रेण सम्बोधयति । अथ सम्बोधितं माण-
वकं आचार्य्यो मन्त्रेण प्रेषयति । ब्रह्मचारी तु
सर्व्वत्र वाढमिति ब्रूयात् ।
ततोऽग्नेरुचरमागे
गत्वा आचार्य्य उदगग्रेषु कुशेषु प्राङ्मुख उप-
विशति । तत आचार्य्याभिमुखो भाणवकः पाति-
तदक्षिणजानुः उदगग्रेषु कशेषु उपविशति ।
ततः प्रवरसंख्यया पञ्च वा त्रयो वा मेखला-
यज्ञोपवीतरूपग्रन्थयः कर्त्तव्याः । अथैनं माण-
वकमाचार्य्यस्त्रिःप्रदक्षिणं कारयित्वा त्रिवृतां
मुञ्जमेखलां परिधापयन् मन्त्रद्वयं वाचयति ।
ततो यज्ञोपवीतं कृष्णसाराजिनान्वितं आचार्य्यो
माणवकं मन्त्रेण परिधापयेत् । ततो माणवक-
आचार्य्यस्य उपसन्नो भवति ।
ततस्तमुपसन्नमाण-
वकं आचार्य्यः प्रथमं पादं पादं ततोऽर्द्धमर्द्धं ततः
कृत्स्नां सावित्रीं अध्यापयेत् । तत आचार्य्यो

व्रतं स्यात्” ॥
रविमदनतिथिं सप्तमीं त्रयोदशीम् ॥ *
॥
कृत्यचिन्तामणौ ।
“माघे द्रविणशीलाढ्यः फाल्गुने च
दृढव्रतः ।
चैत्रे भवति मेधावी वैशाखे कोविदो
भवेत् ॥
ज्यैष्ठे गहननीतिज्ञ आषाढे क्रतुभाजनः
।
शेषेष्वन्येषु रात्रिः स्यान्निषिद्धं निशि च
व्रतम्” ॥
राजमार्त्तण्डे ।
“पुनर्व्वसौ कृतो विप्रः
पुनःसंस्कारमर्हति” ।
वृद्धगर्गः ।
“स्मृतियुक्ताननध्यायान् सप्तमीञ्च
त्रयोदशीम् ।
पक्षयोर्माघमासस्य द्वितीयां
परिवर्जयेत्” ॥
चैत्रशुक्लतृतीया आशाढशुक्लदशमी
मन्वन्तरा-
दित्वेन निषिद्धा वैशाखशुक्लतृतीया
युगादित्वेन

माणवकं महाव्याहृतीः पृथक् पृथक्
कृत्वा
प्रणवपूर्ब्बिका अध्यापयेत् । ततो वैल्वं
पालाशं
वा माणवकपरिमाणदण्डं माणवकाय
प्रयच्छन्
आचार्य्यो माणवकं मन्त्रं वाचयति । अथ
गृहीत-
दण्डो ब्रह्मचारी प्रथमं मातरं भिक्षां
प्रार्थयति ।
ततो मातृबन्धून् ततः पितरं ततः
पितृबन्धून्
ततोऽन्यांश्च प्रार्थयेत् । ततः
सर्व्वंलब्धभैक्षं आचा-
र्य्याय निवेदयेत् । ततः पूर्ब्बवदाचार्य्यो
व्यस्तसमस्त-
महाव्याहृतिहोमं कृत्वा प्रादेशप्रमाणां
घृताक्तां
समिधं तूष्णीमग्नौ हुत्वा प्रकृतं कर्म्म
समाप्य
उदीच्यं
शाट्यायनहोमादिवामदेव्यगानान्तं कर्म्म
निर्व्वर्त्तयेत् । ततः यदि
पितैवाचार्य्यस्तदा कर्म्म-
कारयितृब्राह्मणाय दक्षिणां दद्यात् ।
अथान्य-

:एवाचार्य्यो वृतः तदा येन वृतः स तस्मै दक्षिणां

दद्यात् । ब्रक्ष्मचारी तु तत्रैव स्थाने दिनान्तं यावत्
वाग्यतस्तिष्ठेत् । ततः प्राप्तायां सन्ध्यायां सन्ध्या-
मुपास्य कुशण्डिकोक्तविधानेन समुद्भवनामान-
मग्निं संस्थाप्य मन्त्रं जप्त्वा दक्षिणं जानुं भूमौ
निधाय दक्षिणपश्चिमोत्तरक्रमेण उदकाञ्जलि-
सेकमग्निपर्य्युक्षणञ्च कृत्वा समिद्धोमं कुर्य्यात् ।
ततः प्रादेशप्रमाणघृताक्तसमित्त्रयं गृहीत्वा आद्य-
न्तयोस्तूष्णीं मध्ये समन्त्रकं अग्नौ जुहुयात् । ततः
कर्म्मशेषोक्तविधिना पुनरपि अग्निपर्य्युक्षणोप-
क्रमं दक्षिणपश्चिमोत्तरक्रमेण उदकाञ्जलिसेकं
कुर्य्यात् । ततः ब्रह्मचारी अग्निमभिवाद्य मन्त्रे-
णग्निं विसृज्य अतीतायां सन्ध्यायां भिक्षालब्ध-
मन्नं क्षारलवणवर्जितं सघृतमुदकेनाभ्युक्ष्य भक्षण-
प्रकरणोक्तविधिना भुञ्जीत । एतच्चाग्निकर्म्म
समावर्त्तनपर्य्यन्तं प्रत्यहं सायं प्रातः कर्त्तव्यम् ॥
इत्युपनयनकर्म्म समाप्तम् ॥ इति भवदेवभट्टः ॥
(ब्राह्मण-क्षत्त्रिय-वैश्यानामन्यतममन्वय-वयः शील-
शौर्य्य -- शौचाचार-विनय-शक्ति-बल-मेधा-धृति-
स्मृति-मति-प्रतिपत्तियुक्तं तनुजिह्वौष्ठदन्ताग्रमृ-

भवतश्चात्र ॥
"कृष्णेऽष्टमी तन्निधनेहनी द्वे
कृष्णेतरेऽप्येवमहर्द्विसन्ध्यम् ।
अकालविद्युत्-स्तनयिन्तुघोषे
स्वतन्त्रराष्ट्रक्षितिपव्यथासु ॥
श्मशानयानाद्यतनाहवेषु
महोत्सवौत्पातिकदर्शनेषु ।
नाध्येयमन्येषु च येषु विप्रा-
नाधीयते नाशुचिना च नित्यम्" ॥
इति सुश्रुते सूत्रस्थाने द्वितीयोऽध्यायः ॥)

**उपनायः**, पुं, (उपनीयते आचार्य्यसमीपमिति । उप + नी + घञ् ।) उपनयनम् । इति हेमचन्द्रः ॥

**उपनायकः**, पुं, (उपमितो नायकेन ।) नायकगुणो-
त्कर्षकथकः । यथा, --
"नायकस्य गुणोत्कर्षकथका उपनायकाः" ।
इति सङ्गीतदामोदरः ॥ * ॥ उपपतिश्च ॥ (उप-
नयतीति । उप + नी + ण्वुल् । प्रापके, त्रि ॥)

**उपनाहः**, पुं, (उपनह्यतेऽस्मिन् । उप + नह + घञ् ।)
वीणादितन्त्रबन्धनस्थानम् । तत्पर्य्यायः । निबन्धनम्
२ । इत्यमरः ॥ व्रणालेपपिण्डः । इति मेदिनी ॥
प्रलेप इति भाषा । (यथाह सुश्रुतः ।
"आदौ विम्लापनं कुर्य्यात्
द्वितीयमवसेचनम् ।
तृतीयमुपनाहञ्च चतुर्थीं पाटनक्रियाम्" ॥)

**उपनिधिः**, पुं, (उपनिधीयते इति । उप + नि + धा + कि ।) उपन्यस्तवस्तु । स्थाप्यद्रव्यम् । तत्प-
र्य्यायः । न्यासः । २ । इत्यमरः ॥

७
सर्व्वसारं निरालम्बं रहस्यं वज्रसूचिकम् ॥ ३६ ॥
८ ९ १० ११
तेजोनाद-ध्यान-विद्या-योगतत्वात्मबोधकम् ॥ ४२ ॥
१३ १३ १४ १५
परिव्राट्-त्रिशिखी-सीता-चूडानिर्व्वाण-मण्डलम् ॥ ४८ ॥
१६ १७
दक्षिणाशरभं स्कन्दं महानारायणाऽद्वयम् ॥ ५३ ॥
१८
रहस्यं रामतपनं वासुदेवञ्च मुद्गलम् ॥ ५७ ॥
१९ २०
शाण्डिल्यं पौङ्गलं भिक्ष महत्शारीरकं शिखा ॥ ६३ ॥
२१
तुरीयातीत-संन्यास-परिव्राजाक्षमालिका ॥ ६७ ॥
२२
अव्यक्तैकाक्षरं पूर्णा सूर्य्याक्ष्यध्यात्म-कुण्डिका ॥ ७४ ॥
सावित्र्यात्मा पाशुपतं परब्रह्मावधूतकम् ॥ ७९ ॥
२३
त्रिपुरातापनं देवी त्रिपुरा कठ-भावना ॥ ८४ ॥
२४ २५ २६ २७
हृदयं कुण्डली भस्म रुद्राक्षगण-दर्शनम् ॥ ९० ॥
२८
तारसार-महावाक्य-पञ्चब्रह्माग्निहोत्रकम् ॥ ९४ ॥
गोपालतापनं कृष्णं याज्ञवल्क्यं वराहकम् ॥ ९८ ॥

जुवक्त्राक्षिनासं प्रसन्नचित्त-वाक्चेष्टं क्लेशसहञ्च
भिषक् शिष्यमुपनयेत् । अतो विपरीतगुणं नोपनयेत् ।

उपनयनीयस्तु ब्राह्मणः प्रशस्तेषु तिथिकरण-

मुहूर्त्तनक्षत्रेषु प्रशस्तायां दिशि शुचौ समे देशे चतुर्हस्तं चतुरस्रं स्थण्डिलमुपलिप्य गोमयेन दर्भैः संस्तीर्य्य पुष्पैर्लाजभक्तैः रत्नैश्च देवताः पूज-
यित्वा विप्रान् भिषजश्च तत्रोल्लिख्याभ्युक्ष्य च
दक्षिणतो ब्राह्मणं स्थापयित्वाग्निमुपसमाधाय खदिर-पलाश-देवदारु-विल्वानां समिद्भिश्चतुर्णां
वा क्षीरवृक्षाणां न्यग्रोधोडुम्बराश्वत्थमधूकानां
दधि-मधु-घृताक्ताभिर्दार्व्वीहौमिकेन विधिना-स्नुवेणाज्याहुतीर्जुहुयात् । सप्रणवाभिर्महाव्या-
हृतिभिस्ततः प्रतिदैवतमृषींश्च स्वाहाकारञ्च कुर्य्यात् शिष्यमपि कारयेत् ॥ ब्राह्मणस्त्रयाणां
वर्णानामुपनयनं कर्त्तुमर्हति राजन्यो द्वयस्य वैश्यो
तैश्यस्यैवेति । शूद्रमपि कुलगुणसम्पन्नं मन्त्रवर्ज्ज-
मनुपनीतमध्यापयेदित्येके ॥ ततोऽग्निं त्रिः परि-
णीयाग्निसाक्षिकं शिष्यं ब्रूयात् । काम-क्रोध-लोभ-
मोह-मानाहङ्कारेर्ष्यापारुष्य--पैशुन्यानृतालस्याय-
शस्यानि हित्वा नीच-नख-रोम्ना शुचिना कषाय-
वाससा सत्यव्रतब्रह्मचर्य्याभिवादनतत्परेणावश्यं

(“वासनस्थमनाख्याय हस्ते न्यस्य यदर्पितम् ।
द्रव्यमुपनिधिः प्रोक्तः स्मृतिषु स्मृतिवेदिभिः” ॥
वासुदेवपुत्त्रः । इति विष्णुपुराणम् ॥)

**उपनिषत्,** [द्] स्त्री, (उपनिषद्यते प्राप्यते ब्रह्म-

विद्या अनया इति । उप + नि + सद् + क्विप् ।)
धर्म्मः । वेदान्तशास्त्रम् । निर्जनस्थानम् । इति
मेदिनी ॥ (वेदशिरोभागः । तत्र चतुर्णां वेदानां
अशीतिसहितशताधिकसहस्रसंख्यका उपनि-
षदः । तथाहि । ऋच एकविंशतिः । यजुषो
नवाधिकशतम् । साम्नः सहस्रम् । पञ्चाशदुप-
निषदोऽथर्वणस्य ॥ ब्रह्मविद्या ।) समीपसदनम् ।
इति त्रिकाण्डशेषः ॥ तत्त्वम् । इत्यमरटीकायां
भरतः ॥ (द्विजातिकर्त्तव्यो व्रतभेदः । यथा, आ-
श्वलायनगृह्यकारिका ।
“प्रथमं स्यात् महानाम्नी द्वितीयञ्च महाव्रतम् ।
तृतीयं स्यादुपनिषद् गोदानञ्च ततः परम्” ॥)
(मुक्तिकोपनिषदि अष्टाधिकशतोपनिषद्भेदाः प्रदर्शिताः । यथा, --
“ईश-केन-कट-प्रश्न-मुण्ड-माण्डूक्य-तित्तिरिः ॥ ७ ॥
ऐतरेयञ्च छान्द्योग्यं वृहदारण्यकं तथा ॥ १० ॥
ब्रह्म कवल्य-जावाल-श्वेताश्वा हंस आरुणिः ॥ १६ ॥
१ २ ३ ४ ५

शाट्यायनी हयग्रीवं दत्तात्रेयं च गारुड्म् ॥ १०२ ॥
२९ ३०
कलि-जावालि-सौभाग्य-रहस्य-ऋच-मुक्तिकाः” ॥ १०८ ॥
अत्र स्थितानामेकदेशवाचिशब्दानां विवृतिः ।

१ हंसः परमहंसः । २ विन्दुरमृतविन्दुः ।

३ नादोऽमृतनादः । ४ शिरोऽथर्व्वशिरः । ५ शिखा-
थर्व्वशिखा । ६ तापनी नृसिंहतापनी । ७ रहस्यं
शुकरहस्यम् । ८ तेजः तेजोविन्दुः । ९ नादो नाद-
विन्दुः । १० ध्यानं ध्यानविन्दुः । ११ विद्या ब्रह्म-
विद्या । १२ परिव्राट् नारदपरिव्राट् । १३ त्रिशि-
खी त्रिशिखीब्राह्मणः । १४ चूडा योगचूडामणिः ।
१५ मण्डलं मण्डलब्राह्मणः । १६ दक्षिणा दक्षिणा-
मूर्त्तिः । १७ अद्वयं तारकः । १८ रहस्यं राम-
रहस्यम् । १९ महत् महोपनिषत् । २० शिखा
योगशिखा । २१ परिव्राजः परमहंसपरिव्राजकः ।
२२ पूर्णाऽन्नपूर्णा । २३ कटः कटरुद्रः । २४ कु-
ण्डली योगकुण्डली । २५ भस्मः भस्मजावालः । २६
गणः गणपतिः । २७ दर्शनं जावालदर्शनम् । २८
अग्निहोत्रकं प्राणाग्निहोत्रम् । २९ । कलिः कलि-

| | | |
|---|---|---|
| भवितव्यं मदनुमतस्थान-गमन-शयनासन-<br>भोज-<br>नाध्ययन-परेण भूत्वा मत्प्रियहितेषु<br>वर्त्तितव्य-<br>मतोऽन्यथा ते वर्त्तमानस्याधर्म्मो<br>भवत्यफला च<br>विद्या न च प्राकाश्यं प्राप्नोति । अहं वा<br>त्वयि<br>सम्यग्वर्त्तमाने यद्यन्यथादर्शो स्यामेनोभाग्<br>भवेय-<br>मफलविद्यश्च । द्विज-गुरु-दरिद्र-मित्र-<br>प्रव्रजितो-<br>पनत-साध्वनाथाभ्युपगतानां<br>चात्मबान्धवानामिव<br>स्वमेषजैः प्रतिकर्त्तव्यमेवं साधु भवति ।<br>ब्याधशाकु-<br>निक-पतित-पापकारिणां न च<br>प्रतिकर्त्तव्यमेवं वि-<br>द्या प्रकाशते मित्रयशो धर्म्मार्थकामांश्च<br>प्राप्नोति ॥ | गर्मो नारायणो हंसो विन्दुर्नाद-शिरःशिखा ॥<br>२३ ॥<br>मत्रायनी कैषितकी वृहज्जावाल-तापनी ॥<br>२७ ॥<br>कालाग्निरुद्र-मैत्रेयी सुबाल-क्षरि-मन्त्रिकाः ॥<br>३२ ॥ | सन्तरणम् । ३० रहस्यं<br>स्वरस्वतीरहस्यम् ॥<br>आसां मध्ये या यद्वेदान्तर्गतास्ता अपि<br>तत्रैव<br>प्रदर्शिताः । यथा, --<br>सामवेदान्तर्गताः षोडशसंख्यका<br>उपनिषदः ।<br>अव्यक्तम् १ आरुणिः २ कुण्डिका ३<br>केनः ४<br>छान्द्योग्यम् ५ (या)जावालदर्शनम् ६<br>जावाली ७<br>महत् ८ मैत्रायणी ९ मैत्रेयी १०<br>योगचूडामणिः<br>११ रुद्राक्षम् १२ वज्रसूचिकम् १३<br>वासुदेवम्<br>१८ संन्यासम् १५ सावित्री १६ ॥ *<br>॥<br>शुक्लयजुर्व्वेदान्तर्गता<br>ऊनविंशतिसंख्यकाः<br>उपनिषदः यथा, --<br>अतीताध्यात्मम् १ ईशावास्यम् २<br>(जा)यावालम् ३ |

:तारसारः ४ तुरीयम् ५ त्रिशिखी ६ निरालम्बम् ७

परमहंसः ८ पैङ्गलम् ९
ब्राह्मणमण्डलम् १० ब्रा-
ह्मणद्वयतारकम् ११ भिक्षु १२
मन्त्रिका १३
मुक्तिका १४ याज्ञवल्क्यम् १५
वृहदारण्यकम् १६
शाष्ट्यायणी १७ सुबालः १८
हंसः १९ ॥ * ॥
कृष्णयजुर्व्वेदान्तर्गता द्वात्रिंशत्-
सख्यकाः
उपनिषदः यथा, --
अक्षि १ अमृतनादः २ अमृतविन्दुः
३ अवधूतम् ४
एकाक्षरा ५ कठरुद्रः ६ कठवल्ली ७
कलिसन्तरणम् ८
कालाग्निरुद्रः ९ कैवल्यम् १०
क्षुरिका ११ गर्भः १२
तेजोविन्दुः १३ तैत्तिरीयकम् १४
दक्षिणामूर्त्तिः १५
ध्यानविन्दुः १६ नारायणं १७
पञ्चब्रह्म १८ प्राणाग्नि-
होत्रम् १९ ब्रह्म २० ब्रह्मविद्या २१
योगकुण्डलिनी २२
योगतत्त्वम् २३ योगशिखा २४
वराहः २५ शारी-
रकम् २६ शुकरहस्यम् २७
श्वेताश्वतरः २८ सर्व्व-
सारः २९ स्कन्दः ३०
स्वरस्वतीरहस्यम् ३१ हृद-
यम् ३२ ॥ * ॥
ऋग्वेदान्तर्गता दशसंख्यका
उपनिषदः यथा, --
अक्षमालिका १ आत्मप्रबोधः २
ऐतरेयः ३ कौषि-

धनादीनामर्पणम् । गच्छित इति भाषा ॥)

**उपपतिः**, पुं, (उपमितः पत्या । अवादयः क्रुष्टाद्यर्थे

तृतीयया इति समासः ।) जारः । इत्यमरः
॥ नां
इति भाषा । तस्य लक्षणम् ।
आचारहानिहेतुः
पतिः । स चतुर्व्विधः ।
सार्व्वकालिकपराङ्गना-
पराङ्मुखत्वे सति
सर्व्वकालमनुरक्तोऽनुकूलः १ ।
सकलनायिकाविषयसमसहजानुरागो
दक्षिणः २ ।
भूयो निःशङ्कः कृतदोषोऽपि भूयो
निवारितो-
ऽपि भूयः प्रश्रयपरायणो धृष्टः ३ ।
कामिनी-
विषयकपटपटुः शठः ४ । इति रसमञ्जरी
॥
(यथा, मनुः ३ । १५५ ।
"पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे"
॥)

**उपपत्तिः**, स्त्री, (उप + पद् + क्तिन् ।) सङ्गतिः ।

निर्वृतिः । समाधानम् । सिद्धान्तः ।
प्रकरणप्रति-
पाद्यार्थसाधने तत्र तत्र श्रूयमाणा युक्तिः ।
इति
वेदान्तसारः ॥
("उपपत्तिमदूर्ज्जिताश्रयम्" ।
इति भारविः । २ । १ ॥) हेतुः । यथा, --
"श्रोतव्यः श्रुतिवाक्येभ्यो
मन्तव्यश्चोपपत्तिभिः" ।
इत्यत्र उपपत्तिभिर्बहुभिर्हेतुभिरिति पक्षता-
ग्रन्थमाथुरी ॥ सङ्गतिः । यथा, --
"लक्षणा
शक्यसम्बन्धस्तात्पर्य्यानुपपत्तितः" ।

वेतनग्रहणपूर्ब्बमध्यापनम् । भृताध्ययनम् २५
तत्तु वेतनप्रदानपूर्ब्बकाध्ययनम् । अपण्यानां
विक्रयः २६ स तु तिललाक्षागोरसादौनां ब्राह्म-
णेन विक्रयः । सर्व्वाकरेष्वधीकारः २७ स तु सु-
वर्णाद्युत्पत्तिस्थानेषु राजाज्ञया अधिकारः । महा-
यन्त्रप्रवर्त्तनं २८ तत्तु महतां
उदकप्रवाहप्रतिबन्ध-
हेतूनां सेतुबन्धादीनाञ्च प्रवर्त्तनं अथवा तैलादि-
यन्त्रस्य शस्त्रतेजनादियन्त्रस्य च । ओषधिहिंसनं
२९ तत्तु धान्यादीनां यथाकथञ्चिन्नाशः । स्त्र्या-
जीवः ३० स तु भार्य्यादिस्त्रीणां वेश्यात्वं कृत्वा
तदुपजीवनम् । अभिचारकर्म्म ३१ तत्तु श्येना-
दिना यज्ञेन अनपराद्धस्य मारणम् । मूलकर्म्म
३२ तत्तुमन्त्रौषधादिना वशीकरणम् । इन्धनार्थ-
मशुष्कद्रुमाणां छेदनं ३३ आत्मार्थं क्रियारम्भः
३४
स तु अनातुरस्य देवपित्राद्युद्देशमन्तरेण पाका-
द्यनुष्ठानम् । निन्दितान्नस्य भक्षणम् ३५ तत्तु
लशु-
नादेः सकृदनिच्छया अथवा गणकदेवलतस्करा-
द्यन्नभक्षणम् । अनाहिताग्निता ३६ सा तु सम-
र्थस्य श्रौतस्मार्त्ताग्न्यपरिग्रहः । स्तेयं ३७ तत्तु
सुवर्णद्रव्यादन्यसारद्रव्यापहरणम् । देवर्षिपितॄणां
ऋणाशोधनं ३८ असच्छास्त्राभिगमनम् ३९ तत्तु
श्रुतिस्मृतिविरुद्धशास्त्रशिक्षणम् पाषण्डशास्त्रा-
भ्यासो वा । कौशीलव्यक्रिया ४० सा तु तौर्य्य-
त्रिकस्य सततानुष्ठानम् । धान्यस्तेयं ४१
पशुस्तेयम्
४२ कुप्यस्तेयम् ४३ मद्यपस्त्रीनिषेवनम् ४४
स्त्रीबधः
४५ शूद्रबधः ४६ वैश्यबधः ४७ क्षत्रियबधः ४८
नास्तिक्यम् ४९ । तत्तु अदृष्टार्थकर्म्माभावबुद्धिः
।
नास्ति परलोक इति वा । इति मनुः शूलपाणिश्च
॥
(अस्य प्रायश्चित्तादिकं प्रायश्चित्तशब्दे द्रष्टव्यम्
॥)

तकी ४ त्रिपुरा ५ नादविन्दुः ६ निर्वाणम् ७ मुद्गला ८ बह्वृचः ९ सौभाग्यम् १० ॥ * ॥ अथर्व्ववेदान्तर्गता एकत्रिंशत्संख्यका उपनिषदः, अथर्व्वशिखा १ अथर्व्वशिरः २ कृष्णः ३ गणपतिः ४ गाडुरम् ५ गोपालतापनम् ६ जावालम् ७ त्रिपुरातपनम् ८ दत्तात्रेयः ९ देवी १० नारदपरिव्राजकः ११ नृसिंहतापनी १२ परब्रह्म १३ परिव्राजकान्नपूर्णा १४ परमहंसः १५ पाशुपतम् १६ प्रश्नम् १७ भस्म १८ भावना १९ महानारायणम् २० महावाक्यम् २१ माण्डूक्यम् २२ मुण्डकम् २३ रामतापनी २४ रामरहस्यम् २५ वृहज्जाबालम् २६ शरभम् २७ शाण्डिल्यम् २८ सीता २९ सूर्य्यात्म ३० हयग्रीवम् ३१ ॥ * ॥)

**उपनिष्करं**, क्ली, (उपनिष्किरन्ति सैन्यान्यत्र । उप + निस् + कॄ + घ । ऋदोरप् तु न । अपोबाधकस्य ल्युटोऽपि घस्यापवादत्वात् । यद्वा उपनिष्कीर्य्यते सैन्यैर्हन्यते इति । कृ + कर्म्मणि अप् । इदुदुपधस्येति षः ।) पुरपथः । इत्यमरः ॥ राजपथः । इति हेमचन्द्रः ॥

**उपनिष्क्रमणं** क्ली, (उपष्क्रम्यतेऽनेन उप + निर्-

इति भाषापरिच्छेदः । ८२ ॥ (उपायः । यथा माघे । "अपेक्षितान्योन्यबलोपपत्तिभिः" । सिद्धिः । प्राप्तिः । "स्वार्थोपपत्तिं प्रति दुर्ब्बलाशः" । इति रघुः ॥ ५ । १२ ॥)

**उपपदं**, क्ली, (उपोच्चारितं पदम् ।) लेशः । इति त्रिकाण्डशेषः ॥ समीपोच्चारणीयपदम् । (यथा, रघौ १६ । ४० । "तस्याः स राजोपपदं निशान्तम्" ॥) यथा वा नामोत्तरे शर्म्मवर्म्मादि । समभिव्याहृतस्वार्थपोषकपदम् । यथा प्रहारादौ प्रादि । इति व्याकरणम् ॥

**उपपातकं**, क्ली, (उपपातयति नरके यत् । उप + पत् + णिच् + ण्वुल् । यद्वा उपमितं पातकेन ।) पापविशेषः । तत्तु ऊनपञ्चाशद्विधंयथा । गोबधः १ अयाज्ययाजनम् २ परदारगमनम् ३ आत्मविक्रयः ४ गुरुत्यागः ५ मातृत्यागः ६ पितृत्यागः ७ एषां शुश्रूषाद्यकरणं त्यागः । स्वाध्यायत्यागः ८ स तु सर्व्वदा ब्रह्मयज्ञत्यागः । अधीतवेदविस्मरणञ्च । अग्नित्यागः ९ स तु स्मार्त्ताग्निहोत्रत्यागः । सुतत्यागः १० स तु तस्य संस्कारभरणाद्यकरणम् । परिवित्तिता ११ सा तु कनिष्ठेन आदौ विवाहे कृते ज्येष्ठस्य परिवेदनं १२ तत्तु अकृतदारज्येष्ठसत्त्वे कनि-

**उपपापं**, क्ली, (उपमितं पापेन ।) उपपातकम् । इति स्मृतिः ॥

**उपपुरं**, क्ली, (उप समीपे पुरम् ।) शाखानगरम् । इति हेमचन्द्रः ॥

**उपपुराणं**, क्ली, (उपमितं पुराणैः ।) व्यासकृताष्टादशपुराणसदृशनानामुन्यादिप्रणीताष्टाद्रशपुराराणम् । यथा, --

"अन्यान्युपपुराणानि मुनिभिः कथितान्यपि ।
आद्यं सनत्कुमारोक्तं १ नारसिंहं २ ततः परम् ॥
तृतीयं वायवीयञ्च ३ कुमारेण च भाषितम् ।
चतुर्थं शिवधर्म्माख्यं ४ साक्षान्नन्दीशभाषितम् ॥
दुर्व्वाससोक्तमाश्चर्य्यं ५ नारदीयमतःपरम् ६ ।
नन्दिकेश्वरयुग्मञ्च ७ तथैवोशनसेरितम् ८ ॥
कापिलं ९ वारुणं १० शाम्बं ११ कालिकाह्वयमेव च १२ ।
माहेश्वरं १३ तथा कल्की १४ दैवं १५ सर्व्वार्थसिद्धिदम् ॥
पराशरोक्तमपरम् १६ मारीचम् १७ भास्कराह्वयम् १८ ।
अत्र दैवं देवीपुराणम् । इति मलमासतत्त्वधृतकूर्म्मपुराणम् ॥ (एषां विस्तुतिस्त तत्तच्छब्दे द्रष्टव्या ॥)

**उपपुष्पिका**, स्त्री, (उपगता पुष्पमिव विकाशत्वम् । जृम्भणसमये मुखव्यादानात् तथात्वम् ।) जृम्भा । हाइ इति भाषा । तत्पर्य्यायः । हाफिका २ । इति हारावली ॥

+ क्रम + ल्युट् ।) राजपथः । इति हेमचन्द्रः ॥

निष्क्रमणनामसंस्कारः ॥

**उपनीतः**, पुं, (उप + नी + क्त ।) कृतोपनयनः । इति

स्मृतिः ॥ ("अथोपनीतं विधिवद् विपश्चितः" ।

इति रघुः । ३ । २९ ।) निकटप्राप्ते त्रि ॥

**उपन्यासः**, पुं, (उप + नि + अस् क्षेपणे + घञ् ।)

वाक्योपक्रमः । तत्पर्य्यायः । वाङ्मुखम् २ । इत्य मरः ॥ ("तस्मात् ब्रह्मजिज्ञासोपन्यासमुखेन" । इति शरीरकभाष्ये ॥ ९४ । ७ । विचारः । यथा, मनुः ९ । ३१ ।

"विश्वजन्यमिमं पुण्यमुपन्यासं निबोधत" ॥

"वक्ष्यमाणं सर्व्वजनहितं विचारं शृणुत" ।

इति तट्टीका ।

ष्ठस्य । तयोः कन्यादानं १३ तयोर्याजनं १४ तत्तु

तयोरेव विवाहादौ पौरोहित्यम् । कन्याया दूषणं

१५ तत्तुं मैथुनवर्जमङ्गुलीप्रक्षेपादिना रूषणम् ।

अङ्गुल्या योनिविदारणमिति यावत् । वार्द्धुष्यं १६

तत्तु निषिद्धवृद्धिजीवनम् । व्रतलोपः १७ स तु

ब्रह्मचारिणो मैथुनम् । तडागविक्रयः १८ आराम-

विक्रयः १९ दारविक्रयः २०

अपत्यविक्रयः २१

व्रात्यता २२ सा तु यथाकालमनुपनयनम् । बान्ध-

वत्यागः २३ भृताध्यापनम् २४ तत्तु प्रतिनियत-

**उपप्रदानं**, क्ली, (उप समीपे प्रदानम् ।) उत्कोचः ।
इति हेमचन्द्रः ॥ घुस इति भाषा । (यथा कथा-
सरित्सागरे २४ तरङ्गे ।
“उपप्रदानं लिप्सूनामेकं ह्याकर्षणौषधम्” ॥)

**उपप्लवः**, पुं, (उप + प्लु + अप् ।) राहुग्रहः । वि-
प्लवः । उत्पातः । इति मेदिनी ॥
(“उपप्लवाय लोकानां धूमकेतुरिवोत्थितः” ।)
इति कुमारे । २ । ३२ ।) ग्रहणम् । यथा “उप-
प्लवे चन्द्रमसो रवेश्च” । इति स्मृतिः ॥ (उत्पात-
सूचकोऽनिलादिः । यथा, “कच्चिन्न वाय्वादिरुप-
प्लवो वः” । इति रघः । ५ । ६ । भीतिः । “नृपा-
इवोपप्लविनः परेभ्यः” । इति रघुः । १३ । ७ ।
“उपप्लविनो भयवन्तः” । इति मल्लिनाथः ॥)

**उपभूषणं**, क्ली, (उपमितं भूषणेन ।)
घण्टाचामरादि । यथा, --
“घण्टाचामरकुम्भादिपात्रोपकरणादिकम् ।
तद्भूषणान्तरे दद्याद्यस्मात्तदुपभूषणम्” ॥ इति ।
“प्रावारः पानपात्रञ्च गेण्डुको गृहमेव च ।
पर्य्यङ्कादि यदन्यच्च सर्व्वं तदुपभूषणम्” ॥
इति च कालिकापुराणे ६८ अध्यायः ॥

**उपभृत्**, स्त्री, (उप + भृ + क्विप् ।) चक्राकारयज्ञ-
पात्रं । इत्यमरः ॥ (यथा, श्रौत्रसूत्रे । १ । १० । ९ ॥
“पाणिभ्यां जुहूं परिगृह्योपभृत्याधानम् ॥)

**उपभोगः**, पुं, (उप + भुज + घञ् ।) भोजनाति-
सादृश्यज्ञानम् । उपमितिकरणम् । यथा गौर्गवय-
स्तथेतिवाक्ये । “प्रसिद्धसाधर्म्म्यात् साध्यसाधन-
मुपमानम्” । इति न्यायसूत्रम् । प्रसिद्धस्य
पूर्ब्बप्रमितस्य गवादेः साधर्म्म्यात् सादृश्यात् तज्-
ज्ञानात् साध्यस्य गवयादिपदवाच्यत्वस्य साधनं
सिद्धिरुपमानमुपमितिर्यत इत्यध्याहारेण च
करणलक्षणम् । अत्र च वैधर्म्मोपमितिमपि मन्यन्ते
टीकाकृतः । यथा च अतिदीर्घग्रीवत्वादिपश्व-
न्तरवैधर्म्म्यज्ञ नत् । उष्ट्रे करभपदवाच्यताग्रहः ।
एवमन्योऽपि उमानस्य विषय इति भाष्यं । तथा
मुद्गपर्णीसदृशी ओषधी विषं हन्तीत्यतिदेश-
वाक्यार्थे ज्ञाते मुद्गपर्णीसादृश्यज्ञाने जाते इय-
मोषधी विषहरणीत्युपमित्या विषयीक्रियते
इत्यादि ॥)

**उपमालङ्कारः**, पुं, (उपमैव अलङ्कारः ।) साम्या-
लङ्कारः । यथा । उपमामाह ।
“साम्यं वाच्यमवैधर्म्म्यं वाक्यैक्ये उपमा द्वयोः” ।
तद्भेदाः । सा द्विविधा । पूर्णा लुप्ता च । तल्ल-
क्षणम् । यथा, --
“सा पूर्णा यदि सामान्यधर्म्म औपम्यवाचि च” ।
उदाहरणम् ।
“वदनं मृगशावाक्ष्याः सुधाकरमनोहरम्” ।
“गर्द्दभति श्रुतिपरुषं व्यक्तं निनदन्महात्मनां पुरतः”
पुनर्धर्म्मोपमानयोर्लोपे द्विधा । तद्यथा ।
“द्विधा समासे वाक्ये च लोपे धर्म्मोपमानयोः” ।
उदाहरणम् ।
“तस्या मुखेन सदृशं रम्यं नास्ते न वा नयनतुल्यम्” ।
पुनर्द्विधा ।
“क्विप्समासगता द्वेधा धर्म्मे वादिविलोपने” ।
उदाहरणम् । विधवति मुखाब्जमस्या इत्यादि ।
“उपमेयस्य लोपे तु स्यादेका प्रत्यये क्यचि” ।
उदाहरणम् ।
“अरातिविक्रमालोकविकश्वरविलोचनः ।
कृपाणोदग्रदोर्द्दण्डः स सहस्रायुधीयति” ॥
धर्म्मोपमेयलोपेऽन्या च । उदाहरणम् । “यशसि
प्रसरति भवतः क्षीरोदीयन्ति सागराः सर्व्वे” ।
त्रिलोपे च समासगा । यथा । राजते मृगलोच-
नेत्यादि ।
“तेनोपमाया भेदाः स्युः सप्तविंशतिसंख्यकाः” ।
पूर्णा षड्विधा । लुप्ता चैकविंशतिविधेति मि-
लित्वा सप्तविंशतिप्रकारोपमा” । इति साहित्य-
दर्पणस्य १० परिच्छेदात् संगृहीतः ॥

**उपमितिः**, स्त्री, (उप + मि + क्तिन् ।) उपमा । इति
शब्दरत्नावली ॥ न्यायमते सादृश्यज्ञानजन्यज्ञानम् ।
यथा “गोसदृशो गवयपदवाच्य इत्याकारशक्ति-
ज्ञानम् । अस्य करणं गवादिसादृश्यवत् पिण्डप्र-
त्यक्षम् । अस्य व्यापारः अतिदिष्टवाक्यार्थस्मर-

रिक्तभोगः । तत्पर्य्यायः । निर्व्वेशः २ ।
इत्यमरः ॥
("प्रियोपभोगचिह्नेषु पौरोभाग्यमिवाचरन्" ।
इति रघुः । १२ । २२ । तथा च स्मृतिः ।
"आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा" ।
"न जातु कामः कामानामुपभोगेन शाम्यति" ।
इति मनुः । २ । ९४ ॥)

**उपमा**, स्त्री, (उपमीयते इति । उप + मा + अङ् + टाप् ।) उपमानम् । सादृश्यम् । इत्यमरः ॥
("स्फुटोपमंभूतिसितेन शम्भुना" । इति माघे १ । ४ ।
"अपि लङ्घितमध्वानं बुबुधे न बुधोपमः" ।
इति रघुः । १ । ४७ ।) तस्य वैदिकपर्य्यायः ।
इदमिव १ इदं यथा २ अग्निर्णये ३ चतुरश्चिद्दद-
मानात् ४ ब्राह्मणाव्रतचारिणः ५ वृक्षस्यनुते-
पुरहूतवयाः ६ जारआभगं ७ मेषोभूतोऽभीषन्नपः
८ तद्रूपः ९ तद्वर्णः १० तद्वत् ११ तथा १२ ।
इति द्वादशोपमाः । इति वेदनिर्घण्टौ ३ अ-
ध्यायः ॥ (अर्थालङ्कारभेदः । विस्तृतिस्तु उपमा-
लङ्कारशब्दे द्रष्टव्या ॥)

**उपमाता**, [ऋ] स्त्री, (उपमिता मात्रा ।) धात्री ।
इति जटाधरः ॥ मातुः सदृशी । सा षड्विधा
यथाह स्मृतिः ।
"मातुःष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा ।
श्वश्रूः पूर्ब्बजपत्नी च मातृतुल्याः प्रकीर्त्तिताः" ॥
उपमानकर्त्तरि त्रि ॥

**उपमानं**, क्ली, (उपमीयते इति । उप + मा +
इयं पुनः श्रौत्यार्थी च । तल्लक्षणन्तु ।
"श्रौती यथेववाशब्दा इवार्थो वा वतिर्यदि ।
आर्थी तुल्यसमानाद्यास्तुल्यार्थो यत्र वा वतिः" ॥
द्वे त्रिधा । तद्धिते समासेऽथ वाक्ये ।
उदाहरणम् ।
"सौरभमम्भोरुहवन्मुखस्य कुम्भाविव स्तनौ पीनौ ।
हृदयं मदयति वदनं तव शरदिन्दुर्यथा बाले" ॥
अत्र क्रमेण त्रिविधा श्रौती ।
"मधुरः सुधावदधरः पल्लवतुल्योऽतिपेलवः पाणिः ।
चकितमृगलोचनाभ्यां सदृशी चपले च लोचने तस्याः" ॥
अत्र क्रमेण त्रिविधा आर्थी । पूर्णा षडेव तत् ।
"लुप्ता सामान्यधर्म्मादेरेकस्य यदि वा द्वयोः ॥
त्रयाणां वानुपादाने श्रौत्यार्थी सापि पूर्ब्बवत्" ॥
इयञ्च तद्धिते श्रौत्या असम्भवात् पूर्ब्बोक्तरीत्या
पञ्चप्रकाराः । उदाहरणम् ।
"मुखमिन्दुर्यथा पाणिः पल्लवेन समः प्रिये ।
वाचः सुधा इवौष्ठस्ते विम्बतुल्यो मनोऽश्मवत्" ॥
"सा लुप्ता पञ्चधा पुनः ।
आधारकर्म्मविहिते द्विविधे च क्यचि क्यङि ।
कर्म्मकर्त्रोर्णमुलि च स्यादेवं पञ्चधा पुनः" ॥
उदाहरणम् ।
"अन्तःपुरीयसि रणेषु सुतीयसि त्वं
पौरं जनं तव सदा रमणीयते श्रीः ।
दृष्टः प्रियाभिरमृतद्युतिदर्शमिन्द्र-
णम्" । इत्युपमानखण्डम् । अपि च । भाषा-
परिच्छेदे ॥ ७९-८० ॥
"ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् ।
सादृश्यधीर्गवादीनां या स्यात् सोपमितिः स्मृता ॥
वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते ।
गवयादिपदानान्तु शक्तिधीरुपमाफलम् ॥
पदज्ञानन्तु करणं शक्तिधीरुपमाफलम्" ॥

**उपमेतः**, पुं, (उपमां इतः प्राप्तः ।) शालवृक्षः ।
इति शब्दचन्द्रिका ॥ (शालवृक्षोहि सर्व्वोन्नतत्वात्
उन्नतानामुपमास्थानम् । इत्यर्थः ॥)

**उपयन्ता**, [ऋ] पुं, (उप + यम + तृच् ।) पतिः
इति जटाधरः ॥ ("अथोपयन्तारमलं समा-
धिना" । इति कुमारे ५ । ४५ । "अथोपयन्त्रा
सदृशेन युक्ताम्" । इति रघुः ॥ ७ । १ ॥)

**उपयमः**, पुं, (उप + यम् + अप् ।) विवाहः ।
इत्यमरः ॥

**उपयाचकः**, त्रि, (उप समीपे याचते इति । उप +
याच + ण्वुल् ।) समीपे याच्ञाकर्त्ता ॥

**उपयाचितं**, त्रि, (उप + याच् + क्त ।) स्वेष्टसिद्धये
देवाय देयं वस्तु । तत्पर्य्यायः । दिव्यदोहदम् २ ।
इति त्रिकाण्डशेषः ॥ (प्रार्थितम् । यथा, कथा-
सरित्सागरे १३ तरङ्गे ।
"तस्योपयाचितान्येत्य तत्रत्याः कुर्व्वते जनाः ।
तत्तत्वाञ्छितसंसिद्धिहेतोस्तैस्तैरुपायनैः" ॥)

**उपयाचितकं**, त्रि, (उपयाचित + कन् ।) उपयाचि-

| | | |
|---|---|---|
| ल्युट् ।) उपमा । इत्यमरः ॥ (यथा, कुमारे । ४ । ५ । “उपमानमभूद्विलासिनां करणं यत्तव कान्तिमत्तया” । | सञ्चारमत्र भुवि सञ्चरसि क्षितीश” ॥ तदेवं दशप्रकारा लुप्ता । सा पुनर्द्विधा । वाक्य-गता समासगता च । यथा । “उपमानानुपादाने द्विधा वाक्यसमासयोः” । श्रौत्यार्थोत्वभेदेन चतुर्व्विधत्वसम्भवेऽपि प्राचीन-रीत्या द्विप्रकारत्वमेवोक्तम् । पुनर्द्विधा । “औपम्यवाचिनो लोपे समासे क्विपि च द्विधा” | |

:तम् । स्वेष्टलब्धये देवदेयम् । इति जटाधरः ॥

(यथा, कादम्बरी । “सिद्धायतनानि
कृतविविध-
देवतोपयाचितकानि” ॥)

**उपयामः**, पुं, (उप + यम् + घञ् ।) विवाहः । इत्य-

मरः । (यज्ञाङ्गपात्रविशेषः । यथा यजुर्व्वदे
७ । ४ ।
११ । “उपयामगृहीतोऽसि” ।
उपयाम्यतेऽनेन ।
उप + यम + णिच् + अच् । इति व्युत्पत्त्या
सि-
द्धम् ॥)

**उपयुक्तः**, त्रि, (उप + युज् + क्त ।) योग्यः । उचितः ॥

**उपयोगः**, पुं, (उपयुज्यते इति । उप + युज् + घञ् ।)

आचरणम् । इति विजयरक्षितः ।
इष्टसिद्ध्यर्थ-
व्यापारः । इति विष्णुमिश्रः ॥
(“अनङ्गलेखक्रिय-
योपयोगम्” । इति कुमारे । १ । ७ ॥
भोजनम् ।
“औषधान्नविहाराणामुपयोगं सुखावहम्” ।
इति
निदानस्थाने प्रथमेऽध्याये वाभटेनोक्तम् ॥)

**उपयोगिता**, स्त्री (उपयोगिन् + तल् ।) उपयोगिनो

भावः । फलसाधनता । प्रयोजनम् ।
आनुकूल्यम् ॥

**उपयोगी**, [न्] त्रि, (उपयोगोऽस्यास्तीति । उप-

योग + इनि ।) उपयुक्तद्रव्यादिः ।
क्रियासाधनम् ।
अनुकूलः ॥ (“तदुपयोगीनि शारीरकसूत्रा-
दीनि” । इति वेदान्तसारे । २ ॥
उपभोगद्रव्यम् ।
यथा कथासरित्सागरे । १५ तरङ्गे ।

खेचरम् । अञ्जनम् । कङ्कुष्टम् । गन्धारी ।
गैरिकम् ।
क्षितिनागः । शैलेयं । इति राजनिर्घण्टः ॥
“गन्धो हिङ्गुलमभ्रतालकशिलाः
स्रोतोऽञ्जनण्ट-
ङ्कणम्, राजावर्त्तकचुम्बकौ स्फटिकया शङ्खः
खटी
गैरिकम् । कासीसं रसकङ्कपर्द्दसिकता
वोलाश्च
कङ्कुष्ठकम्, सौराष्ट्री च मता अमी उपरसा
सूतस्य
किञ्चिद्गणैः” ॥ इति भावप्रकाशस्य
पर्ब्बखण्डे
प्रथमभागे ॥)

**उपरागः**, पुं, (उप + रञ्ज + घञ् ।) राहुग्रस्तश्चन्द्रः ।

सूर्य्यश्च । इत्यमरः ॥ (“उपरागान्ते शशिनः
समु-
पगता रोहिणीयोगम्” । इति शाकुन्तले ।
निकट-
स्थितित्वात् निजगुणादेरन्यत्रारोपणम् । यथा
स्फटिकस्तम्भे रक्तपुष्पाणां रक्तिमारोपः ।)
राहुः ।
विगानम् । परीवादः । इति हेमचन्द्रः ॥ दुर्नयः
।
ग्रहकल्लोलः । व्यसनम् । इति मेदिनी ॥ (यथा
रघौ १६ । ७ । “बिभर्षि चाकारमनिर्वृतानां
मृणालिनी हैममिवोपरागम्” ॥)

**उपरामः**, पुं, (उप + रम् + घञ् ।) निवृत्तिः । तत्प-

र्य्यायः । आरतिः २ अवरतिः ३ विरतिः ४
इत्य-
मरः ॥ विरामः ५ उपरमः ६ इति भरतः ॥
आ-
रामः ७ उपरतिः ८ इति हेमचन्द्रः ॥

**उपरि**, व्य, (ऊद्‌र्ध्वे ऊद्‌र्ध्वायां ऊद्‌र्ध्वात् ऊद्‌र्ध्वायाः ऊद्‌र्ध्वे

**उपरोधः**, पुं, (उप + रुध् + घञ् ।) अनुरोधः ॥

(प्रतिबन्धः । “अन्येषामपि
भैक्षोपजीविनां वृत्युप-
रोधं करोषि” । इति महाभारते
आदिपर्ब्बणि ।
३ । ४५ ।
“तपोधननिवासिनामुपरोधो माभूत्”
।
इति शाकुन्तले प्रथमाङ्के ॥)

**उपरोधकं**, क्ली, (उप + रुध् + ण्वुल् ।) गभागारम् ।

वासगृहम् । इति शब्दरत्नावली ॥

**उपर्य्युपरि**, व्य, ऊद्‌र्ध्वोद्‌र्ध्वं । उपर उपरि इति भाषा ।

सामीप्यम् । यथा “उपर्य्युपरि ग्रामम्”
। इति
व्याकरणम् ॥

**उपलः**, पुं, (उपलाति । उप + ला + क । यद्वा, उं

शम्भुं पलति यः । उ + पल + अच् ।)
पाषाणः ।
(यथा, --
“रेवां द्रक्ष्यस्युपलावषमे
विन्ध्यपादेविशीर्णाम्” ।
इति मेघदूते पूर्ब्बमेघे १९ श्लोकः ।)
रत्नम् । इति
मेदिनी ॥ (यथा मनुः । ११ । १६७ ।
“मणिमुक्ताप्रबालानां ताम्रस्य
रजतस्य च ।
अयःकांस्योपलानाञ्च द्वादशाहं
कणान्नता” ॥
बालुका । यथा, “भिषगुपलाप्रक्षिणी
नना” । इति
ऋग्वेदे । ९ । ११२ । ३ । “उपलेषु
बालुकासु”
इति भाष्यम् ॥)

"अस्ति कन्यारत्नं मे गृह्यतामुपयोगि चेत्"

॥)

**उपयोषं**, व्य, उपजोषम् । आनन्दः । इत्यमरटीकायां

भरतः ॥

**उपरक्तः**, पुं, (उप + रञ्ज + क्त ।) राहुग्रस्तः सूर्य्य-

श्चन्द्रश्च । इत्यमरः ॥ राहुः । इति

हेमचन्द्रः ॥

**उपरक्तः**, त्रि, (उप + रञ्ज + क्त ।) व्यसनार्त्तः । दैव-

मानुषान्यतरपीडायुक्तः । इत्यमरः ॥

**उपरक्षणं**, क्ली (उपगतं रक्षणं यत्र ।) रक्षणार्थं सैन्य-

स्थापनम् । चौकी इति ख्यातम् ।

तत्पर्य्यायः ।

सज्जनम् २ । इत्यमरः ॥

**उपरतः**, त्रि, (उप + रम + क्त ।) मृतः । इति

स्मृतिः ॥ (यथाह नारदः ।

"पितुर्य्युपरते पुत्रा विभजेयुर्धनं पितुः" ॥)

विरतः ॥

**उपरतस्पृहः**, त्रि, (उपरतानष्टा स्पृहा धनाद्याकाङ्क्षा

यस्य ।) सत्यपि सत्त्वेस्वगतधनेच्छारहितः

। स्वस-

मानाधिकरणस्वत्वसमानकालीनेच्छा

प्रागभावा-

समानकालीनेच्छाध्वंसवान् । इति

दायतत्त्वम् ॥

इच्छारहितः ॥ ("पितुर्य्युपरतस्पृहे" । इति

याज्ञवल्क्यः ॥)

**उपरतिः**, स्त्री, (उप + रम् + क्तिन् ।) विरतिः ।

इति हेमचन्द्रः ॥ (यथा, मार्कण्डेये ९१ । ८

।

"विश्वस्योपरतौ शक्तेनारायणि ! नमोऽस्तु

ते" ॥)

"निगृहीतेन्द्रियाणां विषयेभ्य उपरमणम् ।

ऊद्ध्वां वा वसत्यागतो रमणीयं वा ।

"उपर्य्युपरि-

ष्टात्" । ५ । ३ । ३१ । इति

ऊद्ध्वस्योपादेशो रिल्

प्रत्ययश्च ॥) ऊद्ध्वम् । इति व्याकरणम् ॥

उपर

इति भाषा ।

("त्वय्यासन्ने नयनमुपारस्पन्दि शङ्के मृगाक्ष्याः

।

मीनक्षोभाच्चलकुवलयश्रीतुलामेष्यतीति" ॥

इति मेघदूते उत्तरमेघे ३४ श्लोकः ।

"अवाङ्मुखस्योपरि पुष्पवृष्टिः

पपात विद्याधरहस्तमुक्ता" ।

इति रघुः । २ । ६० ॥)

**उपरिष्टात्**, व्य, (ऊद्ध्वे ऊद्ध्वायां ऊद्ध्वात् ऊद्ध्वायाः

ऊद्ध्वे ऊद्ध्वां वा वसति आगतो रमणीयं वा

।

"उपरि उपरिष्टात्" । ५ । ३ । ३१ ।

इत्यूद्ध्वस्य

उपादेशो रिष्टातिल् प्रत्ययश्च ।) उपरि ।

ऊद्ध्वम् ।

इति हेमचन्द्रः ॥ (यथा रामायणे ४ काण्डे ।

"नाधस्तान्नोपरिष्टाच्च गतिर्नाप्सु न चाम्बरे"

॥)

**उपरीतकः**, पुं, शृङ्गारबन्धविशेषः । आसन बाँधन

इत्यादि भाषा । तस्य लक्षणं यथा ।

"एकपादमुरौ कृत्वा द्वितीयं स्कन्धसंस्थितम् ।

नारीं कामयते कामी बन्धः स्यादुपरीतकः" ॥

इति रतिमञ्जरी ॥ अत्र विपरीतकोऽपि पाठः ॥

**उपरूपकं**, क्ली, (उपमितं रूपकेण ।) नाटकविशेषः ।

स तु अष्टादशविधः । यथा ।

"नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम् ।

प्रस्थानोल्लाप्यकाव्यानि प्रेङ्क्षणं रासकन्तथा ॥

संलापकं श्रीगदितं शिल्पकञ्च विलासिका ।

दुर्म्मल्लिका प्रकरणी हल्लीशो भाणिकेति च ॥

अष्टादश प्राहुरुपरूपकाणि मनीषिणः ।

**उपलक्षणं**, क्ली, (उप + लक्ष् + ल्युट् ।) अजहत्-

स्वार्थलक्षणा ।

("स्वसिद्धये पराक्षपः परार्थे

स्वसमर्पणम् ।

उपादानं लक्षणञ्चेत्युक्ता शुद्धैव सा

द्विधा ॥

यथा कुन्ताः प्रविशन्ति ।

इत्युपादानम् । गङ्गायां

घोषः । इत्युपलक्षणम्" । इति

काव्यप्रकाशः ॥)

एकपदेन तदर्थान्यपदार्थकथनम् ।

यथा, शुद्धितत्त्वम् ।

"देशान्तरे मृते पत्यौ साध्वी

तत्पादुकाद्वयम् ।

निधायोरसि संशुद्धा

प्रविशेज्जातवेदसम्" ॥

अत्र पादुकाद्वयमित्युपलक्षणं

द्रव्यान्तरमपि ॥

**उपलक्ष्यः**, पुं, (उप + लक्ष + ण्यत् ।) आश्रयः । अव-

लम्बनम् ॥

**उपलधिप्रियः**, पुं, (उपलधिः प्रियो यस्य ।) चमर-

नामवनजन्तुः । इति राजनिर्घण्टः ॥

**उपलब्धार्था**, स्त्री, (उपलब्धः अर्थो यस्याः ।) आख्या-

यिका । इत्यमरः ॥

हितोपदेशादिकथा ॥

**उपलब्धिः**, स्त्री, (उप + लभ + क्तिन् ।) मतिः ।

प्राप्तिः । (यथा, रघुः ५ । ५६ । "वृथा

हि मे स्यात्

स्वपदोपलब्धिः" ।) ज्ञानम् । इति

मेदिनी ॥ (यथा

महाभारते १४ । अनुगीतापर्ब्बणि ।

२२ । २९ ।

"कामन्तु नः स्वेषु गुणेषु सङ्गः

अथवा विहितकर्म्मणां विधिना परित्यागः”

।

इति वेदान्तः ॥

**उपरमः**, पुं, (उप + रम + घञ् । निपातनात् न

वृद्धिः ।) उपरतिः । इति हेमचन्द्रः ॥

(“फेनोपरमे

कल्कद्रव्यं नियोजयेत्” । इति वैद्यके ॥)

**उपरसः**, पुं, (उपमितं रसेन ।) उपधातुः । तद्यथा ।

विना विशेषं सर्व्वेषां लक्ष्म नाटकवन्मतम्” ॥

इति साहित्यदर्पणे ६ परिच्छेदः ॥

कामञ्च नान्योन्यगुणोपलब्धिः ।

अस्मान् विना नास्ति तवोपलब्धि-

स्तावद्दूते त्वां न भजेत् प्रहर्षः” ॥)

**उपलभेदी**, पुं, (उपलं भिनत्तीति । उपल + भिद् +

णिनि ।) पाषाणभेदी वृक्षः । इति

राजनिर्घण्टः ॥

(अश्मभेदशब्देऽस्य गुणादयो

ज्ञातव्याः ॥)

**उपलम्भः**, पुं, (उप + लभ + घञ् । उपसर्गात् खल-

घञोरिति नुम् ।) अनुभवः । इत्यमरः

॥

(यथा रघुः १४ । २ ।

“विस्पष्टमस्रान्धतया न दृष्टौ

:ज्ञातौ सुतस्पर्शसुखोपलम्भात्” ॥)

**उपलम्भ्यः**, त्रि, (उप + लभ + ण्यत् । “उपात् प्रशं-
सायाम्” । ७ । १ । ६६ । इत्यनेन सिद्धम् ।) स्तव्यः ।
स्तवोपयुक्तः । यथा उपलम्भ्यः साधुः ।
इति मुग्ध-
बोधव्याकरणम् ॥

**उपला**, स्त्री, (उप + ला + क + टाप् ।) शर्क्करा ।
इति मेदिनी ॥ (“सितोपला तु गोक्षीरी” ।
इति वैद्यकचक्रपाणिसंग्रहे यक्ष्माधिकारे ॥)

**उपलिङ्गं**, क्ली, (उपमितं लिङ्गेन ।) उपद्रवः । अरि-
ष्टम् । इति हेमचन्द्रः ॥ (“केनचित्
उपलिङ्गानि
गायता” । इति हर्षचरिते पच्छमोच्छ्वासे ॥)

**उपलेपनं**, क्ली, (उप + लिप् + ल्युट् ।) गोमयादि-
लेपनम् । इति त्रिकाण्डशेषः ॥ (यथा
पञ्चतन्त्रे ।
“तत्रैव देवायतने
संमार्जनोपलेपनमण्डनादिकं
कर्म्म समाज्ञापयति” ॥)

**उपवटः**, पुं, (उपमितो वटेन ।) प्रियालवृक्षः । इति
राजनिर्घण्टः ॥ (प्रियालशब्देऽस्य गुणादयो
व्या-
ख्येयाः ॥)

**उपवनं**, क्ली, (उपमितं वनेन ।) कृत्रिमवनम् । वा-
गान इति भाषा । तत्पर्य्यायः । आरामः २
। इत्य-
मरः ॥ (यथा, मेघदूते पूर्ब्बमेघे २४
श्लोकः ।
“पाण्डुच्छायोपवनवृतयः केतकैः
सूचिभिन्नैः” ।
“सा केतुमालोपवना वृहद्भि-

अस्यार्थः । उपावृत्तस्य निवृत्तस्य ।
पापेभ्यः पाप-
कर्म्मभ्यः । गुणाः । सर्व्वभूतेषु दया
क्षान्तिः अन-
सूया शौचं अनायासः मङ्गलं अकार्पण्यं
अस्पृहा
च । सर्व्वभोगविवर्ज्जितः
शास्त्राननुमतनृत्यगी-
तादिसुखरहितः । वैधोपवासे
भोजनचतुष्टय-
निवृत्तिमाह महाभारते ।
“सायमाद्यन्तयोरह्नोः सायं प्रातश्च
मध्यमे ।
उपवासफलं प्रेप्सोर्वर्ज्यं भक्तचतुष्टयम्” ॥
उपवासदिने वर्ज्जनीयानि । अञ्जनम् ।
रोचनम् ।
गन्धः । पुष्पम् । माल्यम् । अलङ्कारः ।
दन्तधाव-
नम् । गात्राभ्यङ्गः । शिरोभ्यङ्गः ।
ताम्बूलम् । यच्चा-
न्यत् बलरागकृत् । दिवास्वापः ।
अक्षक्रीडा ।
मैथुनम् । स्तीणां सरागसम्प्रेक्षणस्पर्शौ ।
व्रतादिषु
पुत्रोत्पत्तिपर्य्यन्तं ऋतौ सकृत् स्त्रीगमने
न दोषः ॥
तत्पूर्ब्बापरदिने वर्ज्जनीयानि ।
कांस्यपात्रे भोज-
नम् । मांसभोजनम् । सुरापानम् ।
मधुपानम् ।
लोभः । वितथमाषणम् । व्यायामः ।
व्यवायः
दिवास्वापः । अञ्जनम् ।
शिलापिष्टभक्षणम् । म-
सूरभक्षणम् । पुनर्भोजनम् । अध्वगमनम्
। यानम् ।

**उपवाह्यः**, पुं, (उत्कृष्टो वाह्यः ।) राजवाहकहस्ती
।
तत्पर्य्यायः । राजवाह्यः २ । इति हेमचन्द्रः
॥
(गजारोहणादिसम्मानयोग्यः । यथा,
रामायणे ।
२ । ४५ । १६ ।
“धर्म्मतः स विशुद्धात्मा वीरः शुभदृढव्रतः
।
उपवाह्यस्तु वो भर्त्ता नापवाह्यः पुराद्वनम्”
॥)

**उपविषं**, क्ली, (उपमितं विषेण ।) कृत्रिमविषम् ।
तत्पर्य्यायः । चारं २ । गरः ३ । इति
हेमचन्द्रः ॥
(पुं, पारिभाषिकविषः । यथा, --
“अर्कक्षीरं स्नुहीक्षीरं तथैव कलिहारिका ।
करवीरोऽथ धुस्तूरः पञ्च चोपविषाः
स्मृताः” ॥
केषाञ्चिन्मते सप्त उपविषाः । यथा, --
“अर्कसेहुण्डधुस्तूरा लाङ्गली करवीरकः ।
गुञ्जाहिफेनमित्येताः सप्तोपविषजातयः” ॥
इति शार्ङ्गधरे मध्यखण्डे द्वादशाध्याये ॥)

**उपविषा**, स्त्री, (विषमुपगता ।) अतिविषा । इत्य-
मरः ॥ आतैष इति भाषा ।
(अतिविषाशब्देऽस्या
गुणादयोऽवगन्तव्याः ॥)

**उपविष्टः**, त्रि, (उप + विश + क्त ।) आसीनः । इति
हेमचन्द्रः ॥ वसा इति भाषा । (यथा,
मार्कण्डेये
देवीमाहात्म्ये । ८१ । २८ । “उपविष्टौ
कथाः
काश्चित् चक्रतुर्वैश्यपार्थिवौ” ॥)

**उपवीतं**, क्ली, (उप + वि + इ + क्त ।) वामस्कन्धा-

र्विहारशैलानुगतेव नागैः” ।

इति रघुः । १६ । २६ ॥)

**उपवर्त्तनं**, क्ली, (उपागत्य वर्त्तन्ते अत्र । उप + वृत्

+ ल्युट् ।) जनपदः । जनपदसमुदायः । जनपदैक-

देशः । सजलनिर्जलस्थानमात्रम् । इति भरतः ॥

तत्पर्य्यायः । देशः २ विषयः ३ । इत्यमरः ॥ (यथा

काशीखण्डे ।

“तस्योपवर्त्तनेऽप्येको न श्रुतो गोत्रभित्

क्वचित्” ॥)

**उपवर्षः**, पुं, मुनिविशेषः । तत्पर्य्यायः । हलभृतिः २

कृतकोटिः ३ अयाचितः ४ । इति

त्रिकाण्डशेषः ॥

**उपवर्हः**, पुं, (उप + वृह + घञ् ।) उपधानम् ।

इत्यमरः ॥ वालिश इति भाषा ॥

**उपवल्लिका**, स्त्री, अमृतस्रवालता । इति राजनि-

र्घण्टः ॥

**उपवसथः**, पुं, (उपागत्य वसन्ति अत्र । उप + वस् +

उपसर्गे वसेः इति अथप्रत्ययः ।)

ग्रामः । इति हेमचन्द्रः ॥ (यथा, --

शतपथ-

ब्राह्मणे । ११ । १ । ७ । “तेऽस्य विश्वे देवा गृहाना-

गछन्ति तेऽस्य गृहेषूपवसन्ति स

उपवसथः” ।

यागपूर्ब्बदिनम् ॥)

**उपवस्तं**, क्ली, (उप + वस + क्त ।) उपवासः । इत्य-

मरः ॥

**उपवासः**, पुं, (उप + वस + घञ् ।) अग्न्याधानम् ।

आयासः । द्यूतक्रीडा । अभ्यङ्गः ।

परान्नम् । तैलम् ।

चणकम् । कोरदूषकम् । शाकम् ।

अधिकधृतम् ।

अत्यम्बुपानम् । इति एकादशीतत्त्वम् ॥

उपवासा-

सामर्थ्ये प्रतिनिधिः । स्कन्दपुराणम् ॥

“पुत्त्रं वा विनयोपेतं भगिनीं भ्रातरं तथा ।

एषामभाव एवान्यं ब्राह्मणं विनियोजयेत्”

। इति ।

“भार्य्या भर्तृव्रतं कुर्य्यात् भार्य्यायाश्च

पतिस्तथा ।

असामर्थ्ये द्वयोस्ताभ्यां व्रतभङ्गो न

जायते” ॥

इति गरुडपुराणम् ॥ तदनुकल्पः ।

“नक्तं हविष्यान्नमनोदनञ्च

फलं तिलाः क्षीरमथाम्बु चाज्यम् ।

यत्पञ्चगव्यं यदि वाथ वायुः

प्रशस्तमत्रोत्तरमुत्तरञ्च” ॥

इति वायुपुराणम् ॥

“उपवासासमर्थश्चेदेकं विप्रन्तु भोजयेत्

।

तावद्धनानि वा दद्याद्यद्भक्ताद्द्विगुणं भवेत्

॥

सहस्रसम्मितां देवीं जपेद्वा प्राणसंयमान् ।

कुर्य्याद्द्वादशसंख्याकान् यथाशक्ति व्रते

नरः” ॥

इति ब्रह्मवैवर्त्तपुराणम् ॥

“अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं

पयः ।

हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम्” ॥

इति बौधायनः ॥

**उपवासी**, [न्] त्रि, (उपवासोऽस्यास्तीति । उप-

वास + इनि ।) उपवासयुक्तः ।

अहोरात्रभोजना-

भावविशिष्टः ॥

(“विमानैर्हंससंयुक्तैर्यान्ति

मासोपवासिनः” ।

र्पितं यज्ञसूत्रम् । यज्ञसूत्रमात्रम् । इत्यमरः

॥

पैता इति भाषा । (यदुक्तमुपनिषदि ।

“ऊद्‌र्ध्वन्तु त्रिवृतं कार्य्यं

तन्तुत्रयमधोवृतम् ।

त्रिवृतञ्चोपवीतं स्यात् तस्यैको

ग्रन्थिरिष्यते” ॥

देवलश्चाह ।

“यज्ञोपवीतकं कुर्य्यात् सूत्राणि

नवतन्तवः” ।

तद्‌द्वयमेव सर्व्वदा धारणीयं

उत्तरीयवस्त्राभावे तु

तत्त्रितयं धारणीयम् । यदुक्तम् ।

“यज्ञोपवीते द्वे धार्य्ये श्रौते स्मार्त्ते च

कर्म्मणि ।

तृतीयमुत्तरीयार्थं वस्त्रालाभेऽतिदिश्यते” ॥

तत्सूत्रभेदश्च मनुना वर्णभेदेन उक्तः । २ ।

४४ । यथा,

“कार्पासमुपवीतं स्यात् विप्रस्योर्द्धवृतं

त्रिवृत् ।

शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम्”

॥

यथा, माघे । १ । ७ ।

“कृतोपवीतं हिमशुभ्रमुच्चकैः” ।

“मुक्तायज्ञोपवीतानि बिभ्रतो हैमवल्कलाः”

।

इति कुमारे । ६ । ६ ॥)

**उपवेदः**, पुं, (उपमितो वेदेन ।) प्रधानवेदातिरिक्त-

वेदः । स चतुर्विधः । आयुर्व्वेदः १

धनुर्व्वेदः २

गान्धर्व्ववेदः ३ स्थापत्यवेदः ४ । इति

श्रीभागवतम् ॥

**उपवेशनं**, क्ली, (उप + विश + ल्युट् ।) स्थितिः ।

वैसन इति भाषा । अस्य गुणाः ।

मेदोदीप्तिश्लेष्म-

सौकुमार्य्यसुखकारित्वम् । इति

राजवल्लभः ॥

**उपव्याघ्रः**, पुं, (उपमितो व्याघ्रेण ।) चित्रकः । इति

इति मलमासतत्त्वम् ।
अहोरात्रभोजनाभावः ।
तत्पर्य्यायः । उपवस्तम् २ । इत्यमरः ॥
उपोषितम् ३
उपोषणम् ४ औपवस्तम् ५ । इति तट्टीका ॥
अस्य प्रमाणम् ।
"उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह ।
उपवासः स विज्ञेयः सर्व्वभोगविवर्ज्जितः" ॥

इति महाभारते ३ ।
मार्कण्डेयसमस्यापर्ब्बणि
दानकथने । १९९ । ५१ ॥
"दिवोपवासी तु निशामिषाशी
जटाधारः सन् कुलटाभिलाषी ।
अयं कषायारुणचारुदण्डः
शठाग्रणीः सर्पति विश्वभण्डः" ॥
इति हास्यार्णवः ॥)

राजनिर्घण्टः ॥ चितावाघ इति भाषा ।
(क्ली,
व्याघ्रस्य समीपे इति । शार्दूलसमीपम् ॥)

**उपशमः**, पुं, (उप + शम् + घञ् ।) शमता । तत्प-य्यार्यः । शमः २ शान्तिः ३ शमथः ४ तृष्णाक्षयः ५ । इति हेमचन्द्रः ॥ (यथा, महाभारते १ ।

:पौष्योपास्याने । ३ । १२० । "न हि मे मन्युरद्यापि

उपशमं गच्छति" । तथा प्रबोधचन्द्रोदये । ५ ।

१५ । "तथायमपि कृतकर्त्तव्यः संप्रति परमा-

मुपशमनिष्ठां प्राप्तः" ॥)

**उपशयः**, पुं, (उप + शी + अच् ।) निदानपञ्चकान्त-

र्गतरोगज्ञानजनकः । तस्य लक्षणम् ।

"हेतुव्याधिविपर्य्यस्तविपर्य्यस्तार्थकारिणाम् ।

औषधान्नविहाराणामुपयोगं सुखावहम् ॥

विद्यादुपशयं व्याधेः स हि सात्म्यमिति स्मृतः" ।

इति निदानम् ॥ ("अस्मिन्नर्थे उपशयः पुनर्हेतु-

व्याधिविपरीतानां विपरीतार्थकारिणाञ्चौषधा-

हारविहाराणां उपयोगः सुखानुबन्धः" । इति

चरके निदानस्थाने प्रथमोऽध्यायः ॥)

**उपशल्यं**, क्ली, (उपगतं शल्यम् ।) ग्रामप्रान्तभागः ।

तत्पर्य्यायः । ग्रामान्तम् २ । इत्यमरः ॥

(यथा रघौ १५ । ६० ।

"उपशल्यनिविष्टैस्तैश्चतुर्द्वारमुखी बभौ" ॥

"भ्रमंश्च विशालोपशल्ये

कमप्याक्रीडमासाद्य" ।

इति दशकुमारे ॥)

**उपशायः**, पुं, (उप + शी + घञ् ।) पर्य्यायशयनार्थकः ।

प्रहरिकादीनां क्रमेण शयनम् । तत्पर्य्यायः । वि-

शायः २ । इत्यमरः ॥

**उपश्रुतं**, त्रि, (उप + श्रु + क्त ।) प्रतिश्रुतम् । अङ्गी-

कृतम् । इत्यमरः ॥

**उपश्रुतिः**, स्त्री, (उपश्रूयते । उप + श्रु + क्तिन् ।)

दैवप्रश्नः । यथाह हारावली ॥

"उपक्रमोपसंहारयोः

शुक्लत्वकीर्त्तनाच्च" ।

इति सप्तमीप्रकरणे

तिथ्यादितत्त्वलिखनम् ॥

(एकत्रीकरणम् । सम्यगाहरणम् ॥)

**उपसत्तिः**, स्त्री, (उप + सद् + क्तिन् ।) सङ्गमात्रम् ।

प्रतिपादनम् । सेवा । इति हेमचन्द्रः ॥

**उपसद्**, पुं, (उप + सद् + क्विप् ।) अग्निविशेषः ।

यथा । वह्निपुराणे गणभेदनामांध्यायः ॥

"गार्हपत्यो

दक्षिणाग्निस्तथैवाहवनीयकः ।

एतेऽग्नयस्त्रयो मुख्या

शेषाश्चोपसदस्त्रयः" ॥

(स्त्री, यज्ञभेदः । आश्वलायने ४ । ८ । १ "अथोपसद्भिः

प्रचरति" । इति । सभीपस्थिते

व्याचलिङ्गः ॥)

**उपसदनं**, क्ली, (सदनस्य गृहस्य समीपे । यद्वा, उप

+ सद + ल्युट् ।) गृहसमीपम् ॥ (यथा रामायणे

१ । ५० । १६ ।

"धन्योस्म्यनुगृहीतोऽस्मि यस्य मे

मुनिपुङ्गव ।

यज्ञोपसदनं ब्रह्मन् प्राप्तोऽसि मुनिभिः

सह" ॥

उपसेवनम् । प्राप्तिः । यथा, महाभारते

वनपर्ब्बणि ।

"तत्रोपसदनं चक्रे

द्रोणस्येष्वस्त्रकर्म्मणि" ॥)

**उपसन्नः**, त्रि, (उप + सद् + क्त ।) उपनतः । उप-

इति मुग्धबोधटीकायां दुर्गादासः ॥

**उपसर्ज्जनं**, क्ली, (उप + सृज् + ल्युट् ।) प्रधानभिन्नम् ।

तत्पर्य्यायः । अप्रधानम् २ अप्राग्र्यम् ३ ।

इत्यमरः ॥

(यथा, मनुः ९ । २११ ।

"उपसर्ज्जनं प्रधानस्य धर्म्मतो नोपपद्यते" ॥

(विशेषणम् । त्यागः । उपद्रवः । यथा अनध्याय-

प्रकरणे मनुः, --

"निर्घाते भूमिचलने ज्योतिषामुपसर्ज्जने" ॥)

**उपसर्पकः**, त्रि, (उप + सृप् + ण्वुल् ।) उपसर्पण-

कर्त्ता । उपासकः ॥

**उपसर्य्या**, स्त्री, (उप + सृ + उपसर्य्या काल्या प्रजने

इति साधुः ।) प्राप्तगर्भग्रहणकाला गौः । ऋतु-

मती गौः । तत्पर्य्यायः । काल्या २ ।

इत्यमरः ॥

कालप्राप्ता ३ वृषरता ४ । इति

शब्दरत्नावली ॥

**उपसार्य्यः**, त्रि, (उप + सृ + ण्यत् ।) समीपगमनीयः ।

(यथा, पाणिनिः ३ । १ । १०४ । "प्रजने

काल्येति किम्

उपासार्य्या काशीप्राप्तव्या इत्यर्थः" ॥)

**उपसूर्य्यकं**, क्ली, सूर्य्यसुपगत उपसूर्य्यं स्वार्थे कन् ।

चन्द्रपक्षे उपसूर्य्यमिव उपसूर्य्यकं इवार्थे

कन् ॥

चन्द्रसूर्य्यमण्डलम् । इत्यमरः ॥

**उपसृष्टं**, क्ली, (उपसृज्यते स्म इति । उप + सृज् +

"नक्तं निर्गत्य यत् किञ्चिच्छुभाशुभकरं वचः ।
श्रूयते तद्विदुर्धीरा दैवप्रश्नमुपश्रुतिम्" ॥
(उप समीपे श्रुतिः श्रवणम् । समीपश्रवणम् ।
उपमिता श्रुत्या । वेदसदृशी श्रुतिसदृशत्वात्
तथात्वम् ॥)

**उपष्टम्भकः**, पुं, (उप + स्तन्भ + ण्वुल् ।) आधि-

क्यम् । यथा । उअच्चैःश्रवादीन्
तेजोभागोपष्टम्भ-
कतया प्रत्यक्षयोग्यत्वात् । इति
बौद्धाधिकारचि-
न्तामणिः ॥

**उपसंग्रहः**, पुं, (उपसंगृह्यते इति । उप + सम् +

ग्रह् + अप् ।) पादस्पर्शपूर्ब्बकनमस्कारः ।
तत्प-
र्य्यायः । पादग्रहणम् २ अभिवादनम् ३ । इति
हेमचन्द्रः ॥ (उपकरणम् । यथा, महाभारते ४
।
कीचकबधपर्ब्बणि । १६ । १५ ।
"उपातिष्ठन्महाबाहुः पर्य्यङ्के सोपसंग्रहे" ॥)

**उपसंग्राह्यं**, त्रि, (उपसंगृह्यते इति । उप + सम् +

ग्रह् + ण्यत् ।) उपसंग्रहणीयम् । अभिवाद्यम् ।
पादे ग्रहीतव्यम् । इति हलायुधः ॥
(यथा मनुः । २ । १३२ ।
"भ्रातुर्भार्य्योपसंग्राह्या सवर्णाऽहन्यहन्यपि"
॥)

**उपसंव्यानं**, क्ली, (उपसंवीयतेऽनेन । उप + सम् +

व्ये + कृत्यल्युट् इति ल्युट् ।) परिधानवस्त्रम्
।
इत्यमरः ॥ (यथा मुग्धबोधे शब्दसंज्ञायाम् ।
"वर्हिर्य्योगोपसंव्याने" ॥)

**उपसंहारः**, पुं, (उपसंहरणम् । उप + सम् + हृ +

घञ् ।) अन्तः । शेषः । यथा ।

स्थितः । इति हेमचन्द्रः ॥ (यथा,
महाभारते १२ ।
मोक्षधर्म्मपर्ब्बणि । २८७ । ११ ।
"ब्रवीतु भगवांस्तन्मे
उपसन्नोऽस्म्यधीहि भोः" ॥)

**उपसम्पन्नः**, त्रि, (उप + सम् + पद् + क्त ।) यज्ञार्थ-

हतपशुः । तत्पर्य्यायः । प्रमीतः २
प्रोक्षितः ३ ।
पाकेन रूपरसादिसम्पन्नव्यञ्जनादिः ।
तत्पर्य्यायः ।
प्रणीतः २ । इत्यमरः । पर्य्याप्तः ।
संस्कृतः । प्राप्तः ।
मृतः । इति हेमचन्द्रः ॥ (यथा, मनुः ।
५ । ८१ ।
"श्रोत्रिये तूपसम्पन्ने
त्रिरात्रमशुचिर्भवेत्" ॥)

**उपसरः**, पुं, (उप + सृ + अप् ।) स्त्रीगव्यादिषु पुङ्ग-

वादीनां प्रथमगर्भाधानाय
मैथुनाभियोगः । तत्प-
र्य्यायः । प्रजनः २ । इत्यमरः ॥
(यथा, पाणिनिः
३ । ३ । ७१ । "प्रजननं
प्रथमगर्भग्रहणम् गवामुप-
सरः" । निरवच्छेदगमनम् । यथा,
भट्टिः । "वी-
नामुपसरं दृष्ट्वा" । अत्र
जयमङ्गलस्त्वाह । "वीनां
उपसरं नैरन्तर्य्येण निर्गमनम्" ॥)

**उपसर्गः**, पुं, (उप + सृज् + घञ् ।) रोगभेदः । (यथा,

सुश्रुते । "क्षीणं हन्युश्चोपसर्गाः
प्रभूताः" ।) उप-
प्लवः । इति मेदिनी ॥ (यथा,
मार्कण्डेये ९२ । ७ ।
"उपसर्गानशेषांस्तु
महामारीसमुद्भवान्" ।)

क्त ।) मैथुनम् । इति त्रिकाण्डशेषः ।
उपसर्गग्रस्ते
त्रि । तथा च याज्ञवल्क्यः ।
"तेनोपसृष्टो लभते न राज्यं राजनन्दनः" ॥
(ग्रहोपग्रस्तश्चन्द्रादिः । यथा मनुः,
"नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन
।
नोपसृष्टं न वारिस्थं न मध्यं नभसोगतम्" ॥
व्याप्तम् । यथा, रघुः "रोगोपसृष्टतनुदुर्वसतिं
मुमुक्षुः" ॥)

**उपस्करः**, पुं, (उप + कृ + अप् समवाये चेति सुट् ।)

व्यञ्जनादिसंस्कारार्थधन्याकसर्षपपिष्टादिः ।
वेसार
वाटना इत्यादि भाषा । तत्पर्य्यायः ।
वेसवारः २ ।
इत्यमरः ॥ (यथा रामायणे । २ । ६५ । ९ ।
"मङ्गलालम्भनीयानि प्राशनीयान्युपस्करान्
।
उपानिन्युस्तथा पुण्याः कुमारीबहुलाः
स्त्रियः" ॥)
गृहवासोपकरणम् । तच्च दृषदुपलसूर्पादि ।
कनककुण्डलहारादि । इति
श्रीकृष्णतर्कालङ्कारः ॥
तथा च याज्ञवल्क्यः ।
"गृहोपस्करवाह्यानां दोह्याभरणकर्म्मिणाम् ।
मूल्यंलब्धन्तु यत्किञ्चित् शुल्कं
तत्परिकीर्त्तितम्" ॥
(तथा च मनुः । ३ । ६८ ।
"पञ्चसूना गृहस्थस्य चूल्लीपेषण्युपस्करः" ॥
"सज्जोपस्करभेषजः" । इति सुश्रुते
सूत्रस्थाने
चतुस्त्रिंशोऽध्यायः ॥)

**उपस्त्री**, स्त्री, (उपमिता स्त्रिया ।) उपपत्नी । ढेमिनी

इति भाषा ॥

**उपस्थः**, पुं, (उप + स्था + क ।) लिङ्गम् । भगः ।

| | | |
|---|---|---|
| | धातोः<br>पूर्ब्बवर्त्तिविंशतिसंख्यकप्राद्यव्ययम् । यथा ।<br>प्र । परा । अप । सम् । नि । अव । अनु । निर् ।<br>दुर् । वि । अधि । सु । उत् । परि । प्रति ।<br>अभि । अति । अपि । उप । आङ् । अस्य<br>प्रमाणम् ।<br>"निपाताश्चादयो ज्ञेयाः उपसर्गास्तु प्रादयः ।<br>द्योतकत्वात् क्रियायोगे लोकादवगता इमे" ॥<br>स त्रिधा । "धात्वर्थं बाधते कश्चित्" । यथा<br>आदत्ते । "कश्चित्तमनुवर्त्तते" । यथा प्रसूते ।<br>"तमेव विशिनष्ट्यन्यः" । यथा प्रणमति । "उप-<br>सर्गगतिस्त्रिधा" । अपि च ।<br>"उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।<br>नीहाराहारसंहारप्रतीहारप्रहारवत्" ॥ | क्रोडः । इति मेदिनी ॥<br>("रथोपस्थौपाविशत्" ।<br>इति गीतायां १ । ४६ ।) गुह्यद्वारम् । इति हेम-<br>चन्द्रः ॥ (यथा, मनः । ८ । १२५ ।<br>"उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चकम्" ॥)<br>निकटे त्रि । इति शब्दरत्नावली ॥ |

**उपस्थाता**, [ऋ] त्रि, (उप समीपे तिष्ठतीति । उप + स्था + तृच् ।) भृत्यः । "प्रेष्यो भृत्य उपस्थाता सेवकोऽभिसरोऽनुगः" । इति शब्दमाला ॥ (ऋ- त्विग्भेदे, पुं ॥ "भिषगद्रव्याण्यपस्थाता रोगी पादचतुष्टयम् । गुणवत् कारणं ज्ञेयं विकारस्योपशान्तये" ॥ इति चरके सूत्रस्थाने नवमोऽध्यायः ॥)

**उपस्थितः**, त्रि, (उप समीपे तिष्ठति स्म । उप + स्था + क्त ।) समीपस्थितः । तत्पर्य्यायः । उपनतः २ उपसन्नः ३ । इति हेमचन्द्रः ॥ (यथा, रघुवंशे १ । ८७ । "उपस्थितेयं कल्याणी नाम्नि कीर्त्तित एव यत्" । "हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान्" । इति च रघुः १ । ४५ ।) मृष्टः । शोधितः । इति जटाधरः ॥ (अनार्षः । यथा पाणिनिः । ६ । १ । १२९ । "अप्लुतवदुपस्थिते" अत्र सिद्धान्तकौमुदी । उप- स्थितोऽनार्षः" । इति ॥)

**उपस्पर्शः**, पुं, (उप + स्पृश् + घञ् ।) स्पर्शमात्रम् । स्नानम् । आचमनम् । इति मेदिनी ॥

**उपस्पर्शनं**, क्ली, (उप + स्पृश् + ल्युट् ।) उपस्पर्शः । इति धरणिः ॥ (यथा रामायणे २ । २५ । २४ । "उपस्पर्शनकाले तु त्वां रक्षन्तु रघूत्तम !" ॥) इति मलमासतत्त्वम् ॥ (तथा, रघुः । १२ । ३७ । "फलमस्योपहासस्य सद्यः प्राप्स्यसि पश्य माम्" ॥)

**उपह्वरं**, क्ली, (उपह्वरन्त्यत्र । उप + ह्वृ + घ ।) नि- र्जनस्थानम् । (यथा ऋग्वेदे ८ । ६ । २८ । "उपह्वरे गिरीणाम्" ।) निकटम् । इत्यमरः ॥ ("ऊर्म्मीप्रवाहैर्जाह्नव्याः समानीतमुपह्वरम्" । इति महाभारते । ३ । कुण्डलाहरणपर्ब्बणि ३०८ । ४ ॥ "सर्व्वानाहूय उपह्वरें वैद्यान्" । इति हर्षचरिते पञ्चमोच्छ्वासे ॥)

**उपह्वरः**, पुं, (उप + ह्वृ + घ ।) रथः । इत्युणादि- कोषः ॥ (प्रान्तभागः । यथा ऋग्वेदे । १ । ८७ । २ । "उपह्वरेषु यदचिध्वं ययिं वय इव मरुतः केन- चित्पथा" ॥)

**उपांशुः**, पुं, (उपगता अंशवो यत्र ।) जपभेदः । इति मेदिनी ॥ "जिह्वौष्ठौ चालयेत् किञ्चिद्देवतागतमानसः । निजश्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः" ॥ इत्यागमः ॥ (निगूढे वाच्यलिङ्गः । यथा, महा- भारते । १ । ३ । १९ । "अस्य त्वेकमुपांशुव्रतं यदेनं कश्चित् ब्राह्मणः कञ्चिदर्थं अभियाचेत्तं तस्मै

**उपाग्रहणं**, क्ली, (उप + आ + ग्रह् + ल्युट् ।) उपा- करणम् । संस्कारपूर्ब्बकवेदग्रहणम् । इत्यमर- टीकायां रायमुकुटः ॥

**उपाङ्गः**, पुं, (उपमितं अङ्गेन ।) तिलकम् । तत्प- र्य्यायः । पत्रावली २ पत्रलेखा ३ पत्राङ्गुलिः ४ पुण्ड्रः ५ तमालपत्रकम् ६ चित्रकम् ७ । इति जटा- धरः ॥ (पुराण-न्याय-मीमांसा-धर्म्मशास्त्राणि वेदस्य उपाङ्गानि ॥)

**उपात्तं**, त्रि, (उप + आ + दा + क्त ।) प्राप्तम् । यथा, -- "क्षयं केचिदुपात्तस्य दुरितस्य प्रचक्षते । अनुत्पत्तिं तथा चान्ये प्रत्यवायस्य मन्यते ॥ नित्यक्रियां तथा चान्ये ह्यनुषङ्गफलां श्रुतिम्" ॥ इति प्रायश्चित्ततत्त्वीयजावालभविष्यपुराणवचनम् ॥

**उपात्तः**, पुं, (उप समीपे आत्तः ।) निर्म्मदहस्ती । इति हलायुधः ॥

**उपात्ययः**, पुं, (उप + अति + इ + अच् । उपगतस्य अत्ययः अतिक्रम्य गमनं वा ।) शास्त्रतो लोक- व्यवहाराच्च व्यतिक्रमः । अतिक्रमः । क्रमोल्लङ्घ- नम् । द्वयोः पर्य्यायः । पर्य्यायः २ अतिपातः ३ । इत्यमरः ॥ (यथा पाणिनिः ३ । ३ । ३८ । "परा- वनुपात्यय इणः" ॥)

**उपादानं**, क्ली, (उप + आङ् + दा + ल्युट् ।) स्वस्व- विषयेभ्य इन्द्रियाकर्षणम् । तत्पर्य्यायः । प्रत्याहारः २ । इत्यमरः ॥ (ग्रहणम् । "स्यादात्मणोप्युपादा- नात् एषोपादानलक्षणा" । इति साहित्यदर्पणे

**उपस्वत्वं**, क्ली, (उपगतं स्वत्वम् ।) उत्पन्नम् । लभ्यम् ।

स्वत्वास्पदीभूतभूम्यादिलब्धधनादि ॥

**उपहतः**, त्रि, (उप + हन् + क्त ।) नष्टः । उत्पा-

तग्रस्तः । अशुद्धद्रव्यम् ॥

(“करत्यवज्ञोपहतं पृथक्-

जनम्” । इति किराते ।

“किमेभिराशोपहता-

त्मवृत्तिभिः” । इति कुमारे । ५ । ७६ ॥)

**उपहसितं**, क्ली, (उप + हस् + क्त ।) हास्यभेदः इति ।

जटाधरः ॥ (यथा साहित्यदर्पणे ३ य-

परिच्छेदे २२८ ।

“ज्येष्ठानां स्मितहसिते मध्यानां

विहसिताव-

हसिते च । नोचानामपहसितं

तथातिहसितं च

षड्भेदाः ॥ मधुरस्वरं विहसितं

सांसशिरःकम्प-

मवहसितं । अपहसितं सास्राक्षं विक्षिप्ताङ्गं

भवत्यतिहसितम्” ।) अपहसितमत्र

उपहसितम्

इत्यपि पाठः ॥

**उपहारः**, पुं, (उप + हृ + घञ् ।) उपढौकनद्रव्यम् ।

तत्पर्य्यायः । प्राभृतम् २ प्रदेशनम् ३

उपायनम्

४ उपग्राह्यः ५ उपदा ६ । इत्यमरः ॥

(यथा, --

रघौ ४ । ८४ ।

“रत्नपुष्पोपहारेण च्छायामानर्च्च पादयोः”

।

“बन्धुप्रीत्या

भवनशिखिभिर्दत्तनृत्योपहारः” ।

इति मेघदूते पूर्ब्बमेघे ३३ श्लोकः । यथा,

--

कुमारे । ६ । ४२ ।

दद्यादयम्” ॥)

**उपांशु**, व्य, विजनम् । रहः । इत्यमरो मेदिनी च ॥

(यथा, रघुः ८ । १८ ।

“परिचेतुमुपांशु धारणां कुश-

पूतं प्रवयास्तु विष्टरम्” ॥)

**उपाकरणं**, क्ली, (उपाक्रियतेऽनेन । उप + आ + कृ

ल्युट् ।) संस्कारपूर्ब्बकश्रुतिग्रहणम् ।

इत्यमरः ॥

पशूनां संस्कारपूर्ब्बकहननम् । इति

स्मृतिः ॥

(यथा, आश्वलायने १० । ४ ।

“उपाकरणकालेऽश्व-

मानीय” ॥)

**उपाकर्म्म**, [न्] (क्ली, उपाक्रियतेऽनेन । उप + आ +

कृ + मनिन् ।) उपाकरणम् ।

इत्यमरटीकायां

रायमुकुटः ॥ (यथा मनुः । ४ ।

११९ ।

“उपाकर्म्मणि चोत्सर्गे त्रिरात्रं क्षेपणं

स्मृतम्” ॥)

**उपाकृतं**, त्रि, (उप + आ + कृ + क्त ।) उपद्रुतम् ।

इति मेदिनी ॥

**उपाकृतः**, पुं, (उ + आ + कृ + क्त ।) यज्ञे अभि-

मन्त्र्य हतः पशुः । इत्यमरः ॥

(“अनुपाकृतमांसानि देवान्नानि

हवींषि च” ।

इति मनुः ।) उपद्रवः । इति

हेमचन्द्रः ॥

**उपाख्यानं**, क्ली, (उप + आ + ख्या + ल्युट् ।) पूर्ब्ब-

वृत्तान्तकथनम् । आख्यानम् ।

वर्णनम् । विशेष-

१० परिच्छेदः ।) हेतुः । इति त्रिकाण्डशेषः ॥

न्याय-

मते ॥ समवायिकारणम् । प्रवृत्तिजनकज्ञानञ्च ॥

**उपादेयः**, त्रि, (उप + आ + दा + यत् ।) ग्राह्यः ।

उत्तमः । उत्कृष्टः । इति वेदान्तः ॥

(“भवे सौख्यं हित्वा शमसुखमुपादेयमनघम्” ।

इति शान्तिशतके । १ । २१ ।) विधेयकर्म्म ।

इति

तिथितत्त्वम् ॥

**उपाधिः**, पुं, (उप + आ + धा + कि ।) धर्म्मचिन्ता ।

कुटुम्बव्यापृतः । इत्यमरः ॥ छलम् । (यथा

रामा-

यणे २ । १११ । २९ ।

“उपाधिर्न मया कार्य्यो वनवासे जुगुप्सितः” ।)

विशेषणम् । इति मेदिनी ॥ (“पदार्थविभाजको-

पाधिमतम्” । इति मुक्तावली । ८ ।) नामचिह्नम्

।

इति शब्दरत्नावली ॥ न्यायमते

साध्यव्यापकत्वे

सति हेतोरव्यापकः । यथा धूमवान् वह्निरित्यत्र

आर्द्रकाष्ठं उपाधिः । अस्य प्रयोजनम् । व्यभि-

चारस्यानुमानम् । अलङ्कारमते जातिगणक्रिया-

यदृच्छास्वरूपः ॥

**उपाध्यायः**, पुं, (उपेत्य अधोयतेऽस्मात् । उप +

अधि + इ + घञ् ।) अध्यापकः । इत्यमरः ॥

वेदैक-

देशाध्यापकः । यथा, --

“एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः ।

योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते” ॥

इति भविष्ये २ अध्यायः ॥ मानवे २ । १४५

श्लोके च ॥

**उपाध्याया**, स्त्री, (उपेत्याधीयतेऽस्याः । इङश्चेति-

सूत्रे अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा

"ज्योतिषां प्रतिविम्बानि

प्राप्नुवन्त्युपहारताम्" ॥

उपगतो हारं इति वाक्ये

हारनिकटस्थद्रव्यम् ।

यथा, -- नैषधे । १ । ४८ ॥

"उरोमुवा कुम्भयुगेन जृम्भितं

नवोपहारेण वयस्कृतेन किम्" ॥)

**उपहालकः**, पुं, कुन्तलदेशः । इति हेमचन्द्रः ॥

**उपहासः**, पुं, (उप + हम + घञ् ।) परीहासः ।

निन्दार्थवाक्यादिः । विद्रूप ठाट्टा इत्यादि

भाषा ।

"उपहासाय किं न स्यांत असत्सङ्गो

मनीषिणाम्" ।

कथनम् । यथा, --

"सर्व्वाख्यानं श्रुतं ब्रह्मन्

अतीवपरमाद्भुतम् ।

अधुना श्रोतुमिच्छामि

दुर्गोपाख्यानमुत्तमम्" ॥

इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ४४

अध्यायः ॥

"शृणु नारद वक्ष्यामि

स्वधोपाख्यानमुत्तमम्" ।

इति च तत्रैव ३८ अध्यायः ॥

("चतुर्विंशतिसाहस्रीं चक्रे

भारतसांहिताम् ।

उपाख्यानर्विना तावत् भारतं

प्रोच्यते बुधैः" ॥

इति महाभारते १ । १ । १०१ ॥)

**उपागमः**, पुं, (उप + आ + गम् + अप् ।) स्वीकारः ।

निकटगमनम् । इत्यजयः ॥

:ङीषिति घञ् । टाप् ।) अध्यापिका । विद्योप-
देशिनी । इत्यमरः ॥

**उपाध्यायानी**, स्त्री, (उपाध्यायस्य पत्नी ॥ “मातुलोपा-
ध्याययोरानुक् वा” इत्यानुक् ।)
उपाध्यायपत्नी ।
इत्यमरः ॥ (यथा महाभारते १ । ३ ।
९६ । “स एव-
मुक्त उपाध्यायेनोपाध्यायानीमपृच्छत्”
॥)

**उपाध्यायी**, स्त्री, (उपाध्यायस्य पत्नी । आनुगभाव-
पक्षे सिद्धम् ।) अध्यापकभार्य्या ।
इत्यमरः ॥

**उपानत्**, [ह्] स्त्री, (उपनह्येते पादावनया । उप +
नह + क्विप् । “नहिवृतिवृषीति” । ७३
। ११६ ।
पूर्ब्बपदस्य दीर्घः ।)
चर्म्मादिनिर्म्मितपादकोषः ।
जुता इति भाषा । तत्पर्य्यायः । पादुका
२ पादूः
३ । इत्यमरः ॥
पादव्यतिरेकेणात्मोपानद्वहन-
निषेधो यथा, --
“नाक्षैः क्रीडेत् कदाचित्तु स्वयं
नोपानहौ वहेत् ।
शयनस्थो न भुञ्जीत न पाणिस्थं न
चासने” ॥
इति मानवे ४ । ७४ । “ग्लहं विना
कदाचिदपि
परिहासेनापि नाक्षादिभिः क्रीडेत् ।
स्वयमि-
त्यभिधानात् आत्मोपानहौ
पादव्यतिरिक्तेन
ऽस्ति न च विद्यते तदात्वे
कृताच्चोत्तरकालं फलं
फलञ्चानुबन्ध इति जातं दशविधम्”
।
इति चरके विमानस्थाने ८ अध्यायः
॥)

**उपायनं** क्ली, (उपेयते उपाय्यते वा । उप + इण वा
अय + ल्युट् ।) उपहारः ।
उपढौकनद्रव्यम् । इत्य-
मरः ॥ (यथा, कुमारे । २ । ३७ ।
“तस्योपायनयोग्यानि रत्नानि
सरितां पतिः” ।)
व्रतादिप्रतिष्ठा । इति स्मृतिः ॥
समीपगमनम् ॥
(यथा ऋग्वेदे २ । २८ । २ ।
“उपायन उषसां गोमतीनाम्” ॥)

**उपार्ज्जनं**, क्ली, (उप + अर्ज्ज + ल्युट् ।) अर्ज्जनम् ।
धनाद्याहरणम् । (यथा, रामायणे ।
५ काण्डे ।
“शस्त्राणां सरथानाञ्च कृत्वा
सम्यगुपार्जनम्” ।)
“सत्वहेतुभूतव्यापारः” । इति
स्मृतिः ॥

**उपालम्भः**, पुं, (उप + आ + लम् + घञ् । “उपसर्गात्
खलघञोः” इति नुम् ।) दुर्व्वाक्यम्
। इति हला-
युधः ॥ स च गुणाविष्करणेन
स्तुतिपूर्ब्बकः । यथा,
महाकुलस्य भवतः
किमिदमुचितमिति । निन्दा-
पूर्ब्बकश्च । यथा बन्धकीसुतस्य
भवतस्तदिदमुचित-
आसनम् । इति मेदिनी ॥
(“मङ्गल्योपासनं शस्तं वृद्धिदं व्यसनापहम्” ।
इति चक्रपाणिकृतद्रव्यगुणे गुणानां क्रियाभि-
धानादिवर्गे ॥)

**उपासना**, स्त्री, (उपासनमिति । उप + आस् +
युच् + टाप् ।) सेवा । तत्पर्य्यायः । वरिवस्या २
शुश्रूषा ३ परिचर्य्या ४ उपासनम् ५ । इत्यमरः ॥
(“न विष्णूपासना नित्या वेदेनोक्ता तु कुत्रचित् ।
न विष्णुदीक्षा नित्यास्ति शिवस्यापि तथैव च ॥
गायत्र्युपासना नित्या सर्व्ववेदैः समीरिता ।
यया विना त्वधःपातो ब्राह्मणस्यास्ति सर्व्वथा ॥
तावता कृतकृत्यत्वं नान्यापेक्षा द्विजस्य हि ।
गायत्रीमात्रनिष्णातो द्विजो मोक्षमवाप्नुयात् ॥
कुर्य्यादन्यन्न वा कुर्य्यात् इति प्राह मनुः स्वयम् ।
विहाय तान्तु गायत्रीं रिष्णूपास्तिपरायणः ॥
शिवोपास्तिरतो विप्रो नरकं याति सर्व्वथा ।
तस्मादाद्ययुगे राजन् गायत्रीजपतत्पराः ॥
देवीपादाम्बुजरता आसन् सव्व द्विजोत्तमाः” ॥
इति श्रीदेवीभागवतम् ॥

सत्यपि ईश्वरे न हि तस्य सर्व्वैश्वर्य्यवत्त्वात्
सर्व्वतः पूर्णकामत्वाच्च उपासनयालमिति वाच्यम्
।
यतः सर्व्वेषामपि भूतजातानामविदितात्मतत्त्वा-
नामपि स्वस्वोत्पत्त्यादिकारणे अलक्षितत्वेनापि
प्रीतिरिति नैसर्गिकी वृत्तिरेव । परं यदि च
रजस्तमोभ्यामन्धीभूतानांसुतरामात्मानात्मविवेक-
विहीनानामज्ञमनुष्याणामविद्याकामकर्म्मकलुषी-
कृते चित्ते नित्यमुक्तशुद्धबुद्धस्वभावः
प्रशान्तविमल-
ज्योतिःस्वरूपः स सर्व्वभूतान्तरात्मा न सम्यक्
प्रतिभाति । तथा च आत्मस्वरूपमजानन्नपि
सर्व्वोऽपि जनः स्वभावगत्यैव परमप्रीत्यात्मानं
भजते नोचेत् कथमात्मज्ञानविमूढोऽपि अनेनैव
मे श्रेयो भविता अस्मिन् कृतेऽहं सुखी भवेयम्
इत्याकारेण सर्व्वथा आत्मसुखोत्पादनाय प्रयतते?
तस्य सर्व्वान्तरात्मत्वात् सर्व्वैरपि जीवैः सह

हस्तादिना देशान्तरं न नयेत् ।
शय्यावस्थितश्च
न भुञ्जीत हस्ते च प्रभूतमन्नं कृत्वा
क्रमेण न
खादेत् । आसने भोजनपात्रं निधाय न
भुञ्जीत ।
इति तट्टीकायां कुल्लूकभट्टः ॥ (यथा
नैषधे । १ । १२३ ।
"कृतावहोरस्य हयादुपानहौ" ।
"अनारोग्यमनायुष्यं चक्षुषोरुपघातकृत्
।
पादाभ्यामनुपानद्भ्यां सदा चंक्रमणं
नृणाम्" ॥
इति सुश्रुते चिकित्सितस्थाने २४
अध्यायः ॥)

**उपान्तः**, त्रि, (उपगतोऽन्तात् ।) निकटम् । इति
हेमचन्द्रः ॥ ("दिशामुपान्तेषु ससर्ज
दृष्टिम्" ।
इति कुमारे ३ । ६९ ।
"उपान्तवानीरगृहाणि
दृष्ट्वा" । इति रघुः १६ । २१ ।
"शय्योपान्तनिविष्ट-
सस्मितमुखी" । इति साहित्यदर्पणे ३
य परि-
च्छेदे ॥)

**उपायः**, पुं, (उपाय्यतेऽनेन । उप + अय + घञ् ।)
राजादीनां शत्रुवशीकरणहेतुचतुष्टयम् ।
यथा ।
साम १ दानम् २ भेदः ३ दण्डः ।
इत्यमरः ॥ उप-
गतिः । इति मेदिनी ॥ स्वार्थसम्पादकः
। साध-
नम् । यथा, --
"उपायतः समारम्भाः सर्व्वे
सिद्ध्यन्त्युपक्रमाः ।
मिति भागुरिः ।
इत्यमरटीकासारसुन्दरी ॥
("उपालम्भो नाम हेतोर्दोषवचनं
यथापूर्ब्बमहे-
तवो हेत्वाभासा व्याख्याताः" । इति
चरके वि-
मानस्थाने ८ अध्यायः ॥)

**उपावृत्तः**, त्रि, (उप + आ + वृत् + क्त ।) श्रमशा-
न्त्यर्थं पुनःपुनर्भूमौ लुठिताश्वः ।
इत्यमरः । नि-
वृत्तः । तथाचैकादशीतत्त्वे ।
"उपावृत्तस्य पापेम्यो यस्तु वासो
गुणैः सह ।
उपवासः स विज्ञेयः
सर्व्वभोगविवर्ज्जितः" ॥

**उपासकः**, पुं, स्त्री, (उपास्ते सेवते यः । उप +
आस् + ण्वुल् ।
द्विजातिसेवकत्वादस्य तथात्वम् ।)
शूद्रः । इति राजनिर्घण्टः ॥

**उपासकः**, त्रि, (उपासते इति । उप + आस् +
ण्वुल् ।) उपासनाकर्त्ता । (यथा,
वेदान्ते ।
"चिन्मयस्याद्बितीयस्य
निष्कलस्याशरीरिणः ।
उपासकानां सिद्ध्यर्थं ब्रह्मणो
रूपकल्पना" ॥)
स च पञ्चविधः । वैष्णवः १ शाक्तः
२ शैवः ३
सौरः ४ गाणपत्यः ५ । त्रिविधश्च
यथा । दिव्यः १
वीरः २ पशुः ३ । इत्यागमः ॥ अपि
च ।
सात्त्विकः १ राजसिकः २
तामसिकश्च ३ ॥
नित्यसम्बन्धवत्त्वाच्च । यद्यपि तस्मिन् नित्यानन्द-
स्वरूपे भगवति परमेश्वरे एकान्तप्रीतिकरणमेव
तदुपासनं तथापि सर्व्वलोकमोहप्रदायिन्यां ज्ञा-
नावरणकारिण्यामविद्यायां सत्यां कुतः सा सर्व्व-
सुखप्रदा तापत्रयच्छेत्री परमा प्रीतिरनुभवनीया?
अतस्तस्या आत्मज्ञानविलोपिन्या मलिनसत्व-
गुणाया रजस्तमःप्रधानाया अविद्यायाः प्रणाश-
नार्थमेवावश्यमुपासना करणीयेति सर्व्वेषामपि
शास्त्राणां सारमतमिति बोध्यम् । परन्तु सबल-
दुर्ब्बलाद्यधिकारिभेदेन उपासनाया अपि प्रभेद-
उपदिष्टस्तत्वदर्शिभिः । यदि च मनुष्याणां निः-
श्रेयसार्थं बहवः पन्थानः स्वमतानुसारेण शा-
स्त्रकृद्भिरुपदिष्टास्तत्रापि आत्मज्ञानमेवाविद्या-
नाशनायालमिति वेदान्त-भगवद्गीता-पातञ्जल-
साङ्ख्यादिज्ञानशास्त्रोपदेष्टॄणां प्रशस्तमतमित्येव
दृश्यते । वस्तुतस्तु तज्ज्ञानमेव मुक्तेः साक्षा-
त्कारणमित्यत्र नैव केषाञ्चिदपि संशयावसरः ।
किन्तु नैव योगाभ्यासादृते प्रायेण तत्वज्ञान-

उपायं पश्य येन त्वं धारयेथाः प्रजा नृप” ॥
इति वह्निपुराणे पृथूपाख्याननामाध्यायः ॥
(“उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः” ।
इति हितोपदेशे । तथा, माघः २ । ५४ ।
“चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया” ।
“सर्व्वोपायैस्तथा कुर्य्यात् नीतिज्ञः पृथिवीपतिः” ।
इति मनुः ७ । १७७ । चेष्टा । यन्त्नः ।
“यैर्यैरुपायैरर्थं स्वं प्राप्नुयादुत्तमर्णिकः” ।
इति मनुः ८ । ४८ ।
“अध्ययनमध्यापनं तद्विद्यासम्भाषेत्युपायाः” ।
“उपायः पुनः कारणादीनां सौष्ठवमभिधानं च
सम्यक्
कार्य्याकार्य्यफलानुबन्धवर्ज्यानां कार्य्या-
णामभिनिर्वर्त्तकः इत्यतोऽभ्युपायः कृतेनोपायार्थो-

**उपासङ्गः**, पुं, (उपासज्यन्ते शरा अत्र । उप + आङ्

सञ्ज + घञ् ।) तूणीरः । इत्यमरः ॥
(यथा,
महाभारते ४ । उत्तरस्य अस्त्रदर्शने ४० । ६ ।
“इमे च कस्य नाराचा सहस्रं लोमवादिनः ।
समन्तात् कलधौताग्रा उपासङ्गे हिरण्मये” ॥)

**उपासनं**, क्ली, (उपास्यन्ते क्षिप्यन्ते शरा अत्र । उप

+ असु क्षेपे + अधिकरणे ल्युट् ।
शुश्रूषादिपक्षे
आस भावे + ल्युट् ।) शराभ्यासः ।
(यथा
रामायणे । २ । ६७ । २१ ।
“श्रूयते तलनिर्घोष
इष्वस्त्राणामुपासने” ।)
शुश्रूषा । इत्यमरः ॥
(“नित्यनैमित्तिकप्रायश्चित्तो-
पासनेन” । “उपासनानि
शाण्डिल्यविद्यादीनि” ।
इति च वेदान्तसारे ।) विहिंसनम् ।
इति विश्वः ॥

:स्योत्पत्तिः । विशेषतः शोकमोहनिमग्नायार्ज्जुनाय

स्वयं भगवता वासुदेवेनाप्युपदिष्टम् । यथा, भग-
वद्गीतायाम् । ६ । ४५-४७ ।
“प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्विषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥
तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपिमतोऽधिकः ।
कर्म्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्ज्जुन ! ॥
योगिनामपि सर्व्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः” ॥
तथा च श्रीमद्भागवते । ३ । २५ । १३ ।
“स्वमातरं देवभूतिं प्रति कपिलोक्तिः । यथा,
“योग आध्यात्मिकः पुंसां मतो निःश्रेयसाय मे ।
अत्यन्तोपरतिर्यत्र दुःखस्य च सुखस्य च” ॥

योगाअपि क्रियाभक्तिज्ञानादिभेदेन बहुधा

सन्ति तत्र प्रथमतः क्रियायोग एव तत्वज्ञानप्रेप्सु-
नाप्यविदुषा संसारासक्तमनसा समाचरणीयः ॥
ननु “ज्ञानादृते मुक्तिर्नास्ति” । “तमेव विदित्वाति-
मृत्युमेति नान्यः पन्था विद्यतेऽयनाय” । “विद्य-
यामृतमश्नुते” । इत्यादौ सति कथं क्रियायोग-
एवारम्भणीय इत्युपदिश्यते ? इति चेत् सत्यम् ।

“कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः” ।
इत्यत्र “अतिशब्दः कट्वादिषु सप्तस्वपि सम्बध्यते ।
तेन अतिकटुर्निम्बादिः अत्यम्लोऽतिलवणोऽत्यु-
ष्णश्च प्रसिद्धः अतितीक्ष्णो मरिचादिः अतिरूक्षः
कङ्गुकोद्रवादिः अतिविदाही सर्षपादिः” ॥ इति
स्वामी । अमेध्यम् अपवित्रम् ॥ यष्टव्यं यजनीय-
मर्च्चनीयमिति यावत् ॥ फलमभिसन्धाय उद्दिश्य
इज्यते यज्ञः क्रियते इत्यर्थः ॥ ब्राह्मणादिभ्यो न
सृष्टं दत्तमन्नं यद्वा न निष्पादितमन्नं भक्ष्यभोज्या-
दिकं यस्मिन् यज्ञे तम् । विधिहीनं शास्त्रोक्तवि-
धिशून्यम् । अदक्षिणं दक्षिणाविरहितमिति ॥
नन्वेवं चेत् तर्हि कीदृशोऽयमविदुषानुष्ठेयः
क्रियायोगस्तस्य सत्त्वशोधनार्थं इति जिज्ञासायां
ब्रूमः ॥ यथा, पातञ्जले ।
“तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः” ॥

तपः शास्त्रान्तरोपदिष्टं चान्द्रायणादि, स्वा-

ध्यायः प्रणवपूर्ब्बाणां मन्त्राणां जपः । ईश्वरप्रणि-
धानं सर्व्वक्रियाणां तस्मिन् परमगुरौ फलनिरपे-
क्षतया समर्पणम् । एतानि क्रियायोग उच्यते ।
इति राजमार्त्तण्डवृत्तिः ।

यद्यप्यत्र चान्द्रयणादीति तपसोऽर्थो व्याख्यातः

दुःखमित्येव यत्कर्म्म कायक्लेशभयात्त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥
कार्य्यमित्येव यत्कर्म्म नियतं क्रियतेऽर्ज्जुन ! ।
सङ्गं त्यक्त्वा फलञ्चैव स त्यागः सात्त्विको मतः ॥
न द्वेष्ट्यकुशलं कर्म्म कुशले नानुषज्जते ।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः” ॥
कार्य्यमिति । कार्य्यं कर्त्तव्यं नियतं नित्यमित्यर्थः ॥
फलतः न हि देहधारिणामशेषतः कर्म्मणस्त्यागः
सम्भवेत् यथा, तत्रैव । १८ । ११ ॥
“न हि देहभृता शक्यं त्यक्तुं कर्म्माण्यशेषतः ।
यस्तु कर्म्मफलत्यागी स त्यागीत्यभिधीयते” ॥
परं अनिष्टादिफलमत्यागिनामेव न हि सन्न्या-
सिनां कदाचित् फलसम्बन्धः । तत्रैव । १८ । १२ ॥
“अनिष्टमिष्टं मिश्रञ्च त्रिविधं कर्म्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु सन्न्यासिनां क्वचित्” ॥
अतः काम्यानां कर्म्मणां परित्यागस्तथा सर्व्वतः
फलाभिसन्धानत्यागपूर्ब्बस्य ईश्वरार्पणपरस्य वा
नित्यादेः कर्म्मणः करणमेव सत्त्वशोधनार्थं प्रश-
स्यते । यतः सर्व्वत्र सात्त्विकज्ञानस्यैव संसार-

किन्तु लोके हि श्रद्धाभक्तितपस्यादिषु सात्त्विक-
राजस तामसादिप्रकृतिभेदात् तेषामविद्याविमो-
हितानां स्वस्वगुणानुसारिणीं प्रवृत्तिं विचार्य्य शोच्यांस्तान्
प्रत्यनुकम्प्याविद्योत्थाभिमानमोहरा-
गद्वेषादिपरिहरणेन शनैः शनैः सत्त्वशोधनार्थं
महात्मभिः शास्त्रकृद्भिरादौ क्रियायोगएव वि-
हितः । कीदृश्यस्तेषां गुणानुसारिण्यः प्रवृत्तय-
स्तादृशीभिः प्रवृत्तिभिः समन्वितानां कार्य्यं वा
किमिति चेत् अवधार्य्यताम् । यथा, भगवद्गीता-
याम् । १७ । ३ -- १३ ॥
"सत्त्वानुरूपा सर्व्वस्य श्रद्धा भवति भारत ! ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥
यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।
प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥
अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥
कर्षयन्तः शरीरस्थं भूतग्राममचेतसः ।
माञ्चैवान्तःशरीरस्थं तान् विद्ध्यासुरनिश्चयान् ॥
आहारस्त्वपि सर्व्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥
आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्द्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥
कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।

किन्तु शास्त्रान्तरे मतान्तरमपि दृश्यते तच्च
कायिकादिभेदेन त्रिविधम् । यथा, भगवद्गीता-
याम् । १७ । १४ -- १६ ।
"देवद्विजगुरुप्राज्ञपूजनं शौचमार्ज्जवम् ।
ब्रह्मचर्य्यमहिंसा च शारीरं तप उच्यते ॥
अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत् ।
स्वाध्यायाभ्यासनञ्चैव वाङ्मयं तप उच्यते ॥
मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते" ॥
एतेषां तपसामपि त्रिगुणानुसारिप्रकृत्यादिभेदेन
तपःकर्म्माण्यपि त्रिविधानि परिकीर्त्तितानि ।
तत्रैव । १७ । १७ -- १९ ॥
"श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥
सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥
मूढग्राहेणात्मनो यत् पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम्" ॥
अपि च अशेषतः कर्म्मणां त्यागः कर्त्तव्यः नित्या-
दिकं कर्त्तव्यं वेति जातसंशयमर्ज्जुनं प्रति भगवत-
उपदेशः । यथा, तत्रैव । १८ । ३ -- १० ॥
"त्याज्यं दोषवदित्येके कर्म्म प्राहुर्मनीषिणः ।
यज्ञदानतपःकर्म्म न त्याज्यमिति चाप्रे ॥
निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ! ।
त्यागो हि पुरुषव्याघ्र ! त्रिविधः संप्रकीर्त्तितः ॥
यज्ञदानतपःकर्म्म न त्याज्यं कार्य्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥
एतान्यपि तु कर्म्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्त्तव्यानीति मे पार्थ ! निश्चितं मतमुत्तमम् ॥
नियतस्य तु सन्न्यासः कर्म्मणो नोपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः ॥

बन्धनच्छेत्तृत्वं राजसतामसयोऽस्तु भेदज्ञानत्वात्
संकीर्णज्ञानत्वाच्च बन्धमोहकारित्वमेव दृश्यते
यथा, तत्रैव । १८ । २०-२२ ॥
"सर्व्वभूतेषु येनैकं भावमव्ययमीक्ष्यते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥
पृथक्त्वेन तु यजज्ञानं नानाभावान् पृथग्विधान् ।
वेत्ति सर्व्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥
यत् तु कृत्स्नवदेकस्मिन् कार्य्ये सक्तमहैतुकम् ।
अतत्त्वार्थवदल्पञ्च तत्तामसमुदाहृतम्" ॥
सुतरां तेषां गुणभेदेन कर्म्माण्यपि पृथक्त्वेनो-
क्तानि । यथा, तत्रैव । १८ । २३-२५ ॥
"नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म्म यत्तत्सात्त्विकमुच्यते ॥
यत्तु कामेप्सुना कर्म्म साहङ्कारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥
अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म्म यत्तत् तामसमुच्यते" ॥
कर्त्तारोऽपि त्रिविधाः । तत्रैव । १८ । २६-२८ ॥
"मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्धोर्निर्व्विकारः कर्त्ता सात्त्विक उच्यते ॥

| | | |
|---|---|---|
| आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥<br>यातयामं गतरसं पूतिपर्य्युसितञ्च यत् ।<br>उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥<br>अफलाकाङ्क्षिभिर्यज्ञो विधिदिष्टो य इज्यते ।<br>यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥<br>अभिमन्धाय तु फलं दम्भार्थमपि चैव यत् ।<br>इज्यते भरतश्रेष्ठ ! तं यज्ञं विद्धि राजसम् ॥<br>विधिहीनममृष्टान्नं मन्त्रहीनमदक्षिणम् ।<br>श्रद्धाविरहितं यज्ञं तामसं परिचक्षते" ॥ | | रागी कर्म्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।<br>हर्षशोकान्वितः कर्त्ता राजसः परिकीर्त्तितः ॥<br>अयुक्तः प्राकृतस्तब्धः शठो नैष्कृतिकोऽलसः ।<br>विषादी दीर्घसूत्री च कर्त्ता तामस उच्यते" ॥<br><br>एवं सति सर्व्वत्र हि विशुद्धसत्त्वगुणस्यैव ब्रह्म-<br><br>सिद्धये कारणत्वं बोध्यते । विशुद्धसत्त्वाश्रयी साधको हि शनैः शनैः भक्त्यात्मकस्य क्रियात्म-कादेर्वा योगादेर्निरन्तराभ्यासबलात् आदिपदे-नात्र केवलं विद्याबलाद् वेति सूच्यते । निष्कामः सन् सत्त्वोद्रेकेणान्तःकरणस्थानि सर्व्वाणि पापानि सन्दह्य तत्त्वज्ञानं प्राप्नुयात् । ततस्तज्ज्ञानेनात्म-साक्षात्कारं लब्ध्वा जीवन्मुक्तो भवेत् । ततः कैवल्यं प्राप्य नित्यानन्दमयो भवेत् । |

::अतएव सर्व्वमङ्गलोपायीभूतस्य सत्त्वगुणस्यो-

द्रेकाय दुर्ब्बलाधिकारिभिः प्रथमं निष्कामेणान्तः-
करणेन क्रियायोगादिरूपेश्वरोपासना कार्य्येति
लक्ष्यते न हि सत्त्वभावेन परमेश्वरोपासनामृते
रजस्तमोभावाः केनापि विलापयितुं शक्येरन् ।
तदभावे नितरां विशुद्धसत्त्वगुणोद्रेकाशा सुदूर-
पराहतैव ।
प्रबलरजस्तमोभ्यामस्याभिभूतत्वात् ।
एवं सति सर्व्वतः सात्त्विकाहारः सात्त्विकानुष्ठानं
सात्त्विकाचरणमित्यादिसत्त्वभावाश्रयेण क्रमशः
रजस्तमोभावं विलापयन् कैवल्याकाङ्क्षी परामात्म-
साक्षात्काराभिलाषी वा साधकः कालेन परम-
सिद्धिं ध्रुवमाप्नुयादेव । परन्तु दुर्ब्बलाधिकारिणा
प्रथमतश्चित्तस्य स्थिरत्वापादनाय काञ्चित् स्वा-
भीष्टां भागवतीं मूर्त्तिमालम्ब्यैवोपासना कर्त्तव्या
अन्यथा तेषां सर्व्वरूपाद्युपाधिपरिवर्जिते निर्व्वि-
कारे निरञ्जने गुणातीतेऽवाङ्मनसगोचरे पर-
ब्रह्मणि चित्तधारणा विडम्बनैव ।
परन्त्वित्यत्र न
हि ईश्वरोपासनामुपलक्षीकृत्य कथं पौत्तलिका-

यथा तत्रैव ३ । २१, २५ श्लोके ।
"यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥
सक्ताः कर्म्माण्यविद्वांसो यथा कुर्व्वन्ति भारत ! ।
कुर्य्याद् विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम्" ॥

किन्तु यावदस्मिन् त्रिधातुके शोणितशुक्रप-

रिणामपिण्डे शरीरे कर्त्तृत्वाद्यभिमानवान् तावत्
"ब्रह्मज्ञोऽस्मि अलं मे कर्म्मणा" इत्येवं मौढ्यात्
संसारासक्तोऽतत्त्वज्ञपुरुषः कर्त्तव्यं कर्म्म परि-
त्यजति चेत् उभयतो भ्रश्यत् एव । तथाहि योग-
वाशिष्ठे मोक्षप्रकरणे ७४ । ४१ ।
"संसारविषयासक्तो ब्रह्मज्ञोऽस्मीति वादिनः ।
कर्म्मब्रह्मोभयभ्रष्टस्तं त्यजेदन्त्यजं यथा" ॥

अतएव कर्म्मत्यागे प्रायशो दोषएव न तु

क्वचित् विधिर्लक्ष्यते यतो विद्योदये तत्त्वज्ञानी
विधिनिषेधसापेक्षो भवितुं नार्हति सर्व्ववासना-
कामकर्म्ममय्यविद्याभावात् न हि विधिनिषेधाभ्यां
सह विदुषः कोऽपि सम्बन्धः । किन्तु अदूरद-
र्शिनो भन्दस्य तत्त्वज्ञानोपदेशेन कर्म्मानुष्ठानाद्
बुद्धिभेदो न कर्त्तव्य इत्यादिशतिभगवान्
वासुदेवः ।
यथा भगवद्गीतायां ३ । २६, २९ ॥
"न बुद्धिभेदं जनयेदज्ञानां कर्म्मसङ्गिनाम् ।
योजयेत् सर्व्वकर्म्माणि विद्वान् युक्तः समाचरन्" ॥
"प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्म्मसु ।
तानकृतस्नविदो मन्दान् कृत्स्नविन्न विचालयेत्" ॥

भवतु अलं बहुना वाग्जालेन । योऽस्य विश्वस्य

आकाशवत् सर्व्वदा सर्व्वत्र ओतप्रोतरूपेण अन्त-

ननु निःश्रेयसार्थिनां साधकानां यदि प्रथमतः

क्रियायोगएव कर्त्तव्यः तर्हि अलं प्रमाणशत-
विस्तारेण तत्र परम्पराकर्त्तव्यमेव विधीयतामिति
चेत् अवधेहि यत्पथावलम्बनेन सत्त्वे शोधिते
सति दुर्ब्बलाधिकार्य्यपि सत्वरं सबलाधिकारित्वं
याति । यथा, भागवते ३ । २८ । १-५ ।
श्रीभगवानुवाच । (कपिलदेवः ।)
"योगस्य लक्षणं वक्ष्ये सवीजस्य नृपात्मजे ।
मनो येनैव विधिना प्रसन्नं याति सत्पथम् ॥
स्वधर्म्माचरणं शक्त्या विधर्म्माच्च निवर्त्तनम् ।
दैवाल्लब्धेन सन्तोष आत्मविच्चरणार्च्चनम् ॥
ग्राम्यधर्म्मनिवृत्तिश्च मीक्षधर्म्मरतिस्तथा ।
मितमेध्यादनं शश्वद् विविक्तक्षेमसेवनम् ॥
अहिंसा सत्यमस्तेयं यावदथपरिग्रहः ।
ब्रह्मचर्य्यं तपः शौचं स्वाध्यायः पुरुषार्च्चनम् ॥
मौनं सदासनजयः स्थैर्य्यं प्राणजयः शनैः ।
प्रत्याहारश्चेन्द्रियाणां विषयान्मनसा हृदि" ॥

सवीजस्य सकारणस्य योगस्य इत्यर्थः ॥ विधर्म्मा-

ल्लोकानिष्टकारित्वादिविरुद्धधर्म्मात् ॥ दैवाल्लब्धेन

डम्बरं प्रतिपादयितुं प्रयतसे इति वाच्यम्
महात्मभिर्ब्रह्मविद्भिः पूर्ब्बाचार्य्यैर्हि कलुषित-
चित्तानां दुर्ब्बलाधिकारिणाम् चित्तशुद्ध्यै प्रथ-
मतश्चित्तस्थैर्य्यसम्पादनाय धारणाध्यानावलम्बन-
रूपायां प्रतिमायामुपासनायाः कर्त्तव्यतयोपदिष्ट-
त्वात् । अयमर्थः यावत् न सत्त्वोद्रेकेण चित्तशुद्धि-
र्भवेत् यावन्न स्वहृदये निर्गुणपरमात्मधारणया
समाधिशक्तिर्भवेत् यावन्न तत्कथादिषु दृढाभक्तिः
रतिश्च भवेत् तावदर्च्चादौ आदिपदेनात्र सूर्य्ये
वह्नौ जले अभीष्टमूर्त्तौ वा उपासना कर्त्तव्ये-
त्यर्थः । परमेवं मा मन्यध्वं यत् केवलं मृच्छिलादि-
निर्म्मितप्रतिमूर्त्तिमाश्रित्यैव यावज्जीवं स्थूलो-
पासना कर्त्तव्येति ॥
"आसत्वशोधनात् क्रमेण स्वहृदये दृढतरधारणाध्यानप्रभावेन आचित्त-
समाधानाच्च" । इति कालनिर्द्देशात् । फलतः
आदौ नित्याद्यवश्यकर्म्म करणीयमेव । पुरा कर्म्म-
णैव हि बहवः सिद्धिं गताः तथा हि भगवद्-
गीतायाम् । ३ । १९-२० ॥
"तस्मादसक्तः सततं कार्य्यं कर्म्म समाचर ।
असक्तौ ह्याचरन् कर्म्म परमाप्नोति पूरुषः ॥
र्वहिर्विराजते तस्य सर्व्वव्यापिनः सर्व्वान्तर्यामिनः
परमपुरुषस्य स्वरूपभावे यावन्न साधकस्य स्वहृ-
दये धारणाध्यानादिभिः स्थैर्य्यमापद्यते तावद-
र्च्चादावेवोपासना कार्य्या दुर्ब्बलाधिकारिणेत्येव
निष्कर्षः ॥ तथा हि कुलार्णवतन्त्रे ६ उल्लासे ।
"चिन्मयस्याप्रमेयस्य निर्गुणस्याशरीरिणः ।
साधकानां हितार्थाय ब्रह्मणो रूपकल्पना ॥
अरूपं रूपिणं कृत्वा कर्म्मकाण्डरता नराः ।
ब्रह्मज्ञानामृतानन्दपराः सुकृतिनो नराः" ॥
किञ्च तत्रैव ९ उल्लासे ।
"निर्व्विशेषं परं ब्रह्म साक्षात् कर्त्तुमनीश्वराः ।
ये मन्दास्तेऽनुकल्प्यन्ते सविशेषनिरूपणैः" ॥

अधिकारिभेदेनालम्बनीयोपास्यदेवस्यापि भेदः

प्रदर्शितः । यथा । तत्रैव ९ म उल्लासे ।
"अग्नौ तिष्ठति विप्राणां हृदि देवो मनीषिणाम् ।
प्रतिमास्वल्पबुद्धीनां सर्वत्र विदितात्मनाम्" ॥

अपि च कति दिनानि यावत् कर्म्माणि कर्त्त

व्यानि अर्च्चाद्यधिष्ठानेऽर्च्चनं वा कर्त्तव्यमिति विवि-
त्सायां मूढान् प्रत्यनुकम्प्य तदप्युपदिदिशुः पूर्ब्बा-
चार्य्याः । यथा भागवते ११ । २० । ९ ॥
"तावत्कर्म्माणि कुर्व्वीत न निर्व्विद्येत यावता ।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते" ॥
तथा, तत्रैव ३ । २९ । २५ ॥
"अर्च्चादावर्च्चयेत्तावदीश्वरं मां स्वकर्म्मकृत् ।
यावन्न वेद स्वहृदि सर्व्वभूतेष्ववस्थितम्" ॥
प्रारब्धलब्धेन ॥ आत्मविदिति । आत्मतत्त्वज्ञानिनां
चरणसेवनम् ॥ ग्राम्यधर्म्मेति मोक्षपथं विहाय
धर्म्मार्थिकामादयः ग्राम्यधर्म्मत्वेनोच्यन्ते अतएव
ग्राम्यधर्म्मस्त्रैवर्गिकधर्म्मस्तस्मान्निवृत्तिः ॥ मित-
मिति मितं स्वल्पं मेध्यादनं पवित्रद्रव्यभोजनम्
विविक्ते निर्जने क्षेमस्य मङ्गलस्य सेवनम् ॥ अस्तेय-
मचौर्य्यम् ॥ यावदर्थपरिग्रह इति । यावतार्थेन
जीवेत तावन्मात्रस्य परिग्रहः ॥ ब्रह्मचर्य्यं योषित्-
सङ्गराहित्यम् ॥ स्वाध्याय इति स्वाध्यायः जपा-
ध्ययनादिः ॥ पुरुषार्च्चनं परमपुरुषस्य उपासनम् ॥
मौनमिति मौनं मुनेर्व्रताचरणं मननशीलत्वंवाचां
संयमत्वं वा ॥ आसनानां स्वस्तिकादीनां विजयः ॥
स्थैर्य्यं दीर्घकालमवस्थातुं शक्तिः ॥ प्राणजयः प्राणा-
यामैः प्राणनिरोधकरणसामर्थ्यम् ॥ प्रत्याहारेति ॥
मनसा सह इन्द्रियाणां शब्दस्पर्शादिविषयात्
हृदि हृदये प्रत्याहारः प्रत्याकर्षणम् ॥
तत्रैव । ३ । २८ । ६ -- ९ ॥
"स्वाधिष्ठानामेकदेशे मनसा प्राणधारणम् ।
वैकुण्ठलीलाभिध्यानं समाधानं तथात्मनः ॥
एतैरन्यैश्च पथिभिर्मनो दुष्टमसत्पथम् ।
बुद्ध्या युञ्जीत शनकैर्जितप्राणो ह्यतन्द्रितः ॥

कर्म्मणैव हि संसिद्धिमास्थिता
जनकादयः" ॥
यदा तु रजस्तमोभावानां निवृत्तौ
सत्यां बहु-
जन्मार्ज्जितसौभाग्यवशात् तस्मिन्नेव
ऐकान्तिकी
रतिरुत्पद्यते
तादृशस्यात्मरतेरात्मतृप्तस्य यो
गिनः न तदा किञ्चिदपि कर्म्मणा
प्रयोजनमस्ति
यथा तत्रैव । ३ । १७-१८ ॥
"यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च
मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्य्यं न
विद्यते ॥
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन
।
न चास्य सर्व्वभूतेषु
कश्चिदर्थव्यपाश्रयः" ॥

एवं प्राप्तविद्योऽपि साधारणवत्
कर्म्माचरेत्

चेत् तत्तु केवलं लोकशिक्षार्थमेव न तु
तस्य स्वा-
भीष्टसिद्धये
अविद्याकामकर्म्माद्यभावात् सुखदुः-
खादिद्वन्द्वनिर्म्मुक्तत्वाच्च ।

शुचौ देशे प्रतिष्ठाप्य विजितासन
आसनम् ।
तस्मिन् स्वस्तिसमासीनः ऋजुकायः
समभ्यसेत् ॥
प्राणस्य शोधयेन्मार्गं पूरकुम्भकरेचकः
।
प्रतिकूलेन वा चित्तं
यथास्थिरमचञ्चलम्" ॥

स्वाधिष्ठानामिति ।
मूलाधारादिचक्राणामे-

कस्मिन् स्थाने मनसा सह प्राणानां
धारणम् ॥
वैकुण्ठेति तैकुण्ठस्याकुण्ठितस्य
सुखदुःखादि-
भिरपरामृष्टस्य परमपुरुषस्य
लीलाभिध्यानं
सृष्ट्यादिव्यापारसमालोचनम् ।
आत्मनो मनसः
समाधानमैकाग्र्यसाधनम् ॥ जितप्राणो
निरुद्ध-
प्राणवृत्तिः । अतन्द्रितः निरलसः ॥
विजितासनः
वशीकृतकरचरणादिसंस्थानविशेषः ॥
प्राणस्येति ।

:प्रतिकूलेन विपर्य्ययक्रमेण वा चित्तं यथा येन

प्रकारेण स्थिरमचञ्चलं चाञ्चल्यरहितं
स्यात् तथा
प्राणमार्गं शोधयेदित्यर्थः ॥ तेन किं
स्यादित्यत
आह । तत्रैव ३ । २ । १० ॥
"मनोऽचिरात् स्याद्विरजं जितश्वासस्य
योगिनः ।
वाय्वग्निभ्यां यथा लोहं ध्मातं त्यजति वै
मलम्" ॥

निरुद्धप्राणवृत्तेर्योगिनः
मनोऽचिरात् वह्निता-

पितलोहवत् अविद्याकामकर्म्मजनितमलं
विषय-
सङ्गजनितपापनिचयमित्यर्थः विहाय
विरजं नि-
र्म्मलं स्यात् । इदानीं
पूर्ब्बोपदिष्टप्राणायामादिना
केन कार्य्येण किं फलं स्यात् तत्सर्व्वं
क्रमेण सुव्यक्तं
बोधयति । तत्रैव ३ । २८ । ११-१२ ॥
"प्राणायामैर्दहेद्दोषान् धारणाभिश्च
किल्विषान् ।
प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान्
गुणान् ॥
यदा मनः स्वं विरजं योगेन सुसमाहितम् ।
काष्ठां भगवतो ध्यायेत्
स्वनासाग्रावलोकनः" ॥

प्राणायामद्वारा
वातपित्तश्लेष्मादिदोषान् धार-

णया पापानि प्रत्याहारेण इन्द्रियाकर्षणेन
विषय-
संसर्गान् ध्यानेन अनीश्वरान्
शोकमोहाभि-

वियोज्य निरालम्बनं निर्व्विषयं कृत्वा
उपरत-
गुणप्रवाहः सन् धातृध्येयादिज्ञानाभावात्
सर्व्वो-
पाधिपरिवर्ज्जितमेकमेवाद्वितीयमात्मानं
पश्यत्येव ॥
यथा तत्रैव ३ । २८ । ३४-३५ ॥
"एवं हरौ भगवति प्रतिलब्धभावो
भक्त्या द्रवद्धृदय उत्पुलकः प्रमोदात् ।
औत्कण्ठ्यवाष्पकलया मुहुरर्द्यमान-
स्तच्चापि चित्तवडिशं शनकैर्व्वियुङ्क्ते ॥
मुक्ताश्रयं यदि हि निर्व्विषयं विरक्तं
निर्व्वाणमृच्छति मनः सहसा यथार्च्चिः ।
आत्मानमत्र पुरुषोऽव्यवधानमेक-
मन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः" ॥

ननु सुचिरं साधनेन लब्धेऽप्यात्मनि
किमायातं ।

किन्तु श्रम एवेति चेत् न
यतोऽनेकजन्मसाधन-
बलात् यदाऽखण्डमात्मानं ईक्षते स योगी
सुख-
दुःखादिकं सर्व्वमहङ्कारनिष्ठं पश्यति
तदादेहा-
द्युपाधिनिर्म्मुक्तो जीवन्मुक्तो भवेत् ।
यथा तत्रैव ३ । २८ । ३६ -- ३७ ॥
"सोऽप्येतया चरमया मनसो निवृत्त्या
तस्मिन् महिम्न्यवसितः सुखदुःखवाह्ये ।
हेतुत्वमसति कर्त्तरि दुःखयोर्यत्
स्वात्मन् विधत्त उपलब्धपरात्मकाष्ठः ॥
देहञ्च तं न चरमः स्थितमुत्थितं वा
सिद्धो विपश्यति यतोऽध्यगमत् स्वरूपम् ।
दैवादुपेतमथ दैववशादपेतं
वासो यथा परिकृतं मदिरामदान्धः" ॥
जीवन्मुक्तस्य देहाद्युपाधिवर्गस्य निवृत्तौ तत्र
मनः-
संयोगाभावात् कथं देहादेर्व्वर्त्तनमिति शङ्कयन्

त्सोरर्ज्जुनस्य संशयं निराकुर्व्वन्नाह
भगवान् वासु-
देवः । तत्रैव ३ । ३-४ ॥
"लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता
मयानघ ! ।
ज्ञानयोगेन साङ्ख्यानां कर्म्मयोगेन
योगिनाम् ॥
न कर्म्मणामनारम्भान्नैष्कर्म्म्यं
पुरुषोऽश्नुते ।
नच सन्न्यसनादेव सिद्धिं
समधिगच्छति" ॥

"अतः सम्यक्चित्तशुद्ध्यर्थं
ज्ञानोत्पत्तिपर्य्यन्तं

वर्णाश्रमोचितानि कर्म्माणि कर्त्तव्यानि
अन्यथा
चित्तशुद्ध्यभावेन ज्ञानानुत्पत्तेरित्याह
न कर्म्मणा-
मिति । कर्म्मणां अनारम्भात्
अननुष्ठानात् नै-
ष्कर्म्म्यं ज्ञानं नाश्नुते न प्राप्नोति । ननु
"चैतमेव
प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति"
इति श्रुत्या
संन्यासस्य मोक्षाङ्गत्वं तर्हि
संन्यासादेव मोक्षो
भविष्यति किं कर्म्मभिरित्याशङ्क्योक्तं
न चेति । नच
चित्तशुद्धिं विना कृतात्संन्यसनादेव
ज्ञानशून्यात्
सिद्धिं मोक्षं समधिगच्छति प्राप्नोति
इति तट्टी-
काकृत् पूज्यपादश्रीधरस्वामी ।

ननु कामं ईश्वरार्पितेन
निष्कामकर्म्मणा चित्त-

मानदम्भक्रोधमात्सर्य्यादिदोषान्
दहेदित्यन्वयः ।
अनेन विधिना यदा मनः स्थिरतां याति तदा यु-
ञ्जानो योगी प्रथमे धारणालम्बनस्वरूपां भगवतः
काञ्चित् स्वाभीष्टां मूर्त्तिं ध्यायेदित्युपदिदेश भग-
वान् कपिलदेवः ॥ इदानीं ध्येयमूर्त्तिं विवृणोति ।
यथा, तत्रैव ३ । २८ । १३ -- १९ ॥
"प्रसन्नवदनाम्भोजं पद्मगर्भारुणेक्षणम् ।
नीलोत्पलदलश्यामं शङ्खचक्रगदाधरम् ॥
लसत्पङ्कजकिञ्जल्कपीतकौशेयवाससम् ।
श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम् ॥
मत्तद्विरेफकलया परीतं वनमालया ।
परार्ध्यहारबलयकिरीटाङ्गदनूपुरम् ॥
काञ्चीगुणोल्लसच्छ्रोणिं हृदयाम्भोजविष्टरम् ।
दर्शनीयतमं शान्तम् मनोनयनवर्द्धनम् ॥
अपीव्यदर्शनं शश्वत् सर्व्वलोकनमस्कृतम् ।
सन्तं वयसि केशोरे भृत्यानुग्रहकातरम् ॥
कीर्तन्यतीर्थयशसं पुण्यश्लोकयशस्करम् ।
ध्यायेद्देवं समग्राङ्गं यावन्न च्यवते मनः ॥
स्थितं व्रजन्तमासीनं शयानं वा गुहाशयम् ।
प्रेक्षणीये हि तं ध्यायेत् शुद्धभावेन चेतसा" ॥

ध्येयमूर्त्तेः सकाशात् मनो यावत् विषयान्तरं

न याति तावद्ध्यायेदितिभावः । गुहाशयं बुद्धितत्त्वे
विराजमानं एवं निरन्तरध्यानेन साधकस्य चित्तं
यदा भगवद्रूपे लब्धपदं भवेत् तदा चित्तस्य शनैः
स्वारम्भकं प्रारब्धवीजमेवेत्यर्थः देहादेः स्थिति-
कारणमित्याह । तत्रैव ३ । २८ । ३८ ॥
"देहोऽपि दैववशगः खलु कर्म्म यावत्
स्वारम्भकं प्रतिसमीक्षत एव सासुः ।
तं सप्रपञ्चमधिरूढसमाधियोगः
स्वप्नं पुनर्न भजते प्रतिबुद्धवस्त" ॥

ननु यदि परब्रह्मलामायात्मसाक्षात्कारात्तमेव

चरमं देहं मन्यसे तर्हि विद्यैव सुगमोपायः श्रूयते
तस्मिन् सति कथं वृथा कर्म्माडम्बरे प्रवर्त्तयसे
इति चेत् न कर्म्मविद्ययोरधिकारिभेदात् आदा-
वीश्वरार्पितकर्म्मणा निष्कामकर्म्मणा वा चित्त-
शुद्धिं विना कुतोविद्यायामधिकारः । इत्यत्राधि-
कारिभेदमुद्दिश्य ज्ञानकर्म्मणोः पृथक्त्वं प्रदर्श्यापि
तत्त्वज्ञानमुपदिशन्तं भगवन्तं वासुदेवं पृष्टवान्
जातसंशयोऽर्जुनः । यथा गीतायां ३ । १-२ ।
"ज्यायसी चेत् कर्म्मणस्ते मता बुद्धिर्जनार्द्दन ।
तत्किं कर्म्मणि घोरे मां नियोजयसि केशव ॥
व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम्" ॥
हे जनार्द्दन ! चेद्यदि ते कर्म्मणः सकाशात्
बुद्धिर्बोधः ज्ञानमिति यावत् ज्यायसी गरीयसी
मता तर्हि कथं मां घोरे कर्म्मणि नियोजयसी-
त्यन्वयः । व्यामिश्रेण ज्ञानकर्म्मणोर्मिश्रीभूतेन
वाक्येन कथं मे बुद्धिं मोहयसीव । इत्येवं विवि-
शुद्धिः प्रजायते ततो ज्ञानं लब्ध्वा मोक्षमाप्नुयात्
किन्तु भक्तिबलेनापि सत्त्वं संशोध्याचिरादेवा-
विद्याबन्धनात् मुक्तो भवेदित्यपि बहुषु शास्त्रेषु
दृश्यते । सर्व्वेभ्यो हि भक्तिमाहात्म्यस्याधिक्यं प्रद-
र्शितं महात्मभिरतो बहुप्रयाससाध्यं कर्म्माडम्बरं
विहाय भक्तिपथाश्रयएव गरीयान्निश्रेयसार्थ-
मिति चेन्न तदप्यधिकारिभेदेनोक्तत्वात् अर्च्चा-
दावर्च्चनादिक्रियायोगसाध्यत्वाच्च । किञ्च पुरुषाणां
निश्रेयसाय शास्त्रविहितमार्गत्रयं मुक्त्वा नह्यपरः
पन्थाः क्वापि दृश्यते श्रूयते वा । तथाहि श्रीमद्भा-
गवते ११ । २० । ६-८ । तत्त्वजिज्ञासुमुद्धवं प्रति-
यथोक्तवान् भगवान् वासुदेवः ।
"योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ।
ज्ञानंकर्म्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ॥
निर्व्विण्णानां ज्ञानयोगो न्यासिनामिह कर्म्मसु ।
तेष्वनिर्व्विण्णचित्तानां कर्म्मयोगस्तु कामिनाम् ॥
यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ।
न निर्व्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः" ॥
यदृच्छया दैवगत्या । न निर्व्विण्णो न प्राप्तनिर्व्वेदः ।

अतः सर्व्वत्रैव भिन्नभिन्नाधिकारमपेक्ष्य ज्ञान-

| | | |
|---|---|---|
| शनैः सौक्ष्मकरणाय मूर्त्तिं हापयित्वा भगवतश्च-<br>रणारविन्दादीन्येकैकाङ्गानि ततः साभरणान्य-<br>स्त्राणि ततो विलासहासादीनि च क्रमेण यथा-<br>विधि ध्यातुमुपदिष्टवान् कपिलः ॥ ततः किमि-<br>त्याह । एवं चिरं ध्यात्वा योगी बहुजन्मार्जित-<br>सौभाग्यवशात् यदि हरौ प्राप्तभावो भक्त्या द्रव-<br>द्धृदय आनन्दार्णवे भासमानो भवेत् तर्हि तस्मिन्<br>स्थूले भगवद्रूपे वडिशवत् संलग्नं चित्तं निर्गुणस्य<br>परब्रह्मणः स्वरूपलाभार्थं<br>तस्मादङ्गादिस्थूलरूपाद् | | कर्म्मभक्तियोगादयो विहिताः । यथा तत्रैव ११ ।<br>२० अध्याये २६ ॥<br>“स्वे स्वेऽधिकारे या निष्ठा सगुणः परिकीर्त्तितः ।<br>कर्म्मणां जात्वशुद्धानां अनेन नियमः कृतः” ॥<br>यथा तत्त्वज्ञानार्थी निकृष्टसात्त्विककर्त्ता प्रथ-<br>मतः केवलं अविद्याकर्म्मनिर्हारादीनुद्दिश्य निष्का-<br>मकर्म्मानुष्ठानमाचरति न जातूद्रिक्तविशुद्धसत्त्वो-<br>ऽधिरूढयोगो योगीव सहसा भेदबुद्ध्यादिकं परि-<br>हातुमर्हति तथा प्रथमं सगुणभक्तियोगाश्रयिणो-<br>ऽपि न हि युगपत् भगवत्स्वरूपतत्त्वज्ञा निर्गुण-<br>भक्ता इव भगवत्प्रतिमाद्यर्च्चनादिक्रियायोगं परि-<br>त्यक्तुं समर्था भवेयुः किन्तु तादृशेन सगुणभक्ति-<br>योगावलम्बिना दुर्ब्बलाधिकारिणा भगवत्प्रतिमा-<br>पूजादिकर्म्मयोगएव कर्त्तव्यः इत्येतद्विहितं |

:शास्त्रकृद्भिः ।

अथ यथाशास्त्रं
निकृष्टसात्त्विककर्त्तुर्भेदबुद्धिं

प्रदर्श्य दुर्ब्बलाधिकारिणो भक्तियोगावलम्बिनः कर्त्तव्यमपिप्रदर्शयामः । यथा भागवते ३ । २९ । १० ।
“कर्म्मनिर्हारमुद्दिश्य परस्मिन् वा तदर्पणम् ।
यजेद्यष्टव्यमिति वा पृथग्भावः स सात्त्विकः” ॥
दुर्ब्बलभक्तियोगाधिकारिकर्त्तव्यता च तत्रैव । ११ । ११ । ३४-४२ ।
“मल्लिङ्गमद्भक्तजनदर्शनस्पर्शनार्च्चनम् ।
परिचर्य्या स्तुतिः प्रह्वगुणकर्म्मानुकीर्त्तनम् ॥
मत्कथाश्रवणे श्रद्धा मदनुध्यानमुद्धव ।
सर्व्वलोभोपहरणं दास्येनात्मनिवेदनम् ॥
मज्जन्मकर्म्मकथनं मम पर्ब्बानुमोदनम् ।
गीत-ताण्डव-वादित्र-गोष्ठीभिर्मद्गृहोत्सवः ॥
यात्रा बलिर्विधानञ्च सर्व्ववार्षिकपर्ब्बसु ।
वैदिकी तान्त्रिकी दीक्षा मदीयव्रतधारणम् ॥
ममार्च्चास्थापने श्रद्धा स्वतः संहत्य चोद्यमः ।
उद्यानोपवनाक्रीडपुरमन्दिरकर्म्मणि ॥
संमार्ज्जनोपलेपाभ्यां सेकमण्डलवर्त्तनैः ।
गृहशुश्रूषणं मह्यं दासवद्यदमायया ॥
अमानित्वमदम्भित्वं कृतस्यापरिकीर्त्तनम् ।
अपि दीपावलोकं मे नोपयुञ्ज्यान्निवेदितम् ॥
यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः ।
तत्तन्निवेदितं मह्यं तदानन्त्याय कल्पते ॥
सूर्य्योऽग्निर्ब्राह्मणो गावो वैष्णवः खं मरुज्जलम् ।
भूरात्मा सर्व्वभूतानि भद्र पूजापदानि च” ॥
हे भद्र ! एतानि मम पूजास्थानानि । अधुना कस्मिन् स्थले केन यजेत इत्याह तत्रव ११ । ११ ।
४३-४५ ।
“सूर्य्ये तु विद्यया त्रय्या हविषाग्नौ यजेत माम् ।
आतिथ्येन तु विप्राग्रे गोष्वङ्ग यवसादिना ॥
वैष्णवे बन्धुसत्कृत्या हृदि खे ध्याननिष्ठया ।
वायौ मुख्यधिया तोये द्रव्यैस्तोयपुरस्कृतैः ॥

स्वयं भगवान् । सुतरां तदा दुर्ब्बलाधिकारिणा भक्तियोगाश्रयिणापि प्रथमे क्रियायोगएव कर्त्तव्यः
इति बोध्यतेऽन्यथाचित्तशुद्ध्यभावात् ज्ञानं न लभेत
इति तात्पर्य्यार्थः ॥

ननु मा भूत्तत्वज्ञानं किन्तु
शास्त्रविहितक्रिया-

योगशून्यया भक्त्या क्रमेण निर्गुणाया भक्तेरुदयेनैव
चरितार्थतेति चेन्न
तयोस्तत्वज्ञाननिर्गुणभक्तियो-
गयोर्लक्षणे नैक्यदर्शनात्
उभयोरेवात्मसाक्षात्का-
ररूपचरमफलत्वेनोक्तत्वाच्च । यथा श्रीमद्भागवते
३ । २९ । ११-१२ ।
“मद्गुणश्रुतिमात्रेण मयि सर्व्वगुहाशये ।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ।
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे” ॥
ईदृग्भक्तिर्यदि बहुजन्मार्जितसुकृतिवशात् कस्या-
पि क्वचिदुत्पद्येत तर्हि सालोक्यादिमुक्तिं साध-
कान्तरैः प्रार्थनीयां भगवता स्वयं दीयमानामपि
तादृग्भक्तो नेच्छतीति तन्निस्पृहतां दर्शयन्नाह ।
तत्रैव ३ । २९ । १३ ।
“सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः” ॥
अपि च तत्त्वज्ञानिनो निर्गुणभक्तस्य च तयोः शब्दतएव भेदः न तु लक्षणतः यत उभावेव लक्षणादिना सर्व्वत्र एकाचारौ एकनिष्ठावेक-

ननु भक्तिज्ञानयोश्चरमफलैकत्वेपि भक्तेः समधिक-
प्रसंशादर्शनात् भक्तिरेवगरीयसीति चेत् न भक्ति-
वत् ज्ञानस्यापि प्रसंशादर्शनात् आत्मसाक्षात्-
कृतौ साक्षात्कारणत्वाच्च । यथा श्रीमद्भागवते
११ । १९ । १ -- ५ ॥
श्रीभगवानुवाच ।
“यो विद्याश्रुतसम्पन्न आत्मवानानुमानिकः ।
मायामात्रमिदं ज्ञात्वा ज्ञानं च मयि संन्यसेत् ॥
ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च सम्मतः ।
स्वर्गश्चैवापवर्गश्च नान्योऽर्थो मदृते प्रियः ॥
ज्ञानविज्ञानसंसिद्धाः पदं श्रेष्ठं विदुर्मम ।
ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्त्ति माम् ॥
तपस्तीर्थं जपो दानं पवित्रानीतराणि च ।
नालं कुर्व्वन्ति तां सिद्धिं या ज्ञानकलया कृता ॥
तस्माजज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव ।
ज्ञानविज्ञानसम्पन्नो भज भां भक्तिभावितः” ॥
किञ्च भगवद्गीतायां ४ । ३३-३९ ।
“श्रेयान् द्रव्यमयाद् यज्ञाज्ज्ञानयज्ञः परन्तप ! ।
सर्व्वं कर्म्माखिलं पार्थ ! ज्ञाने परिसमाप्यते ॥

स्थण्डिले मन्त्रहृदयैर्भोगैरात्मानमात्मनि ।
क्षेत्रज्ञं सर्व्वभूतेषु समत्वेन यजेत माम्" ॥

हृदि खे हृदयाकाशे ॥ मुख्यधिया प्राणदृष्ट्या ॥

जले जलाञ्जलिप्रदानरूपतर्पणपूर्ब्बकैर्द्रव्यैः ॥ स्थ-
ण्डिले भूमौ मन्त्रन्यासैः ॥ भोगैरिति । देहे भोगै-
रात्मानं एतैरन्नादिभिर्देहस्थपरमात्मानं यजेऽहं
नत्वविद्याकर्म्मजनितं देहं बिभर्म्मीति चिन्तयेत् ॥
क्षेत्रज्ञमिति । सर्व्वभूतेषु क्षेत्रज्ञरूपेणावस्थितं
कूटस्थब्रह्मचैतन्यस्वरूपं मां समत्वेन यजेत ॥ * ॥
एतेषु स्थानेषु तव कीदृग्रूपं ध्येयमित्यपेक्षयाह
तत्रैव ११ । ११ । ४६-४७ ।
"धिष्णेष्वेष्विति मद्रूपं शङ्खचक्रगदाम्बुजैः ।
युक्तं चतुर्भुजं शान्तं ध्यायन्नर्च्चेत् समाहितः ॥
इष्टापूर्त्तेन मामेवं यो यजेत समाहितः ।
लभते मयि सद्भक्तिं मत्स्मृतिः साधुसेवया" ॥
यदा "मल्लिङ्गमद्भक्तजनदर्शनस्पर्शनार्च्चनम्" इत्या-
रभ्य "लभते मयि सद्भक्तिम्" इत्यन्तैरेतैश्चतुर्द्दश-
श्लोकैर्धारणाध्यानायनभूतप्रतिमाद्याश्रयिण्या भक्ति-
योगोपयोगिक्रिययैव सद्भक्तिलाभः प्रदर्शयामास
भावापन्नौ लक्ष्येते । यथा भागवते ११ । ११ ।
२९-३३ । भगवद्भक्ततमस्य लक्षणमुपदिष्टवानुद्धवं
प्रति भगवान् ।
"कृपालुरकृतद्रोहस्तितिक्षुः सर्व्वदेहिनाम् ।
सत्यसारोऽनवद्यात्मा समः सर्व्वोपकारकः ॥
कामैरहतधीर्दान्तो मृदुः शुचिरकिञ्चनः ।
अनीहो मितभुक् शान्तः स्थिरो मच्छरणो मुनिः ॥
अप्रमत्तो गभीरात्मा धृतिमान् जितषड्गुणः ।
अमानी मानदः कल्पो मैत्रः कारुणिकः कविः" ॥
कविः क्रान्तदर्शी सर्व्वज्ञ इत्यर्थः ।
"आज्ञायैवं गुणान् दोषान् मया दिष्टानपि स्वकान् ।
धर्म्मान् सन्त्यज्य यः सर्व्वान् मां भजेत स सत्तमः ॥
ज्ञात्वा ज्ञात्वाथ ये वै मां यावान् यश्चास्मि यादृशः ।
भजन्त्यनन्यभावेन ते मे भक्ततमा मताः" ॥
तथा, ज्ञानिनोऽपि लक्षणं प्रदर्शयामास । यथा,
तत्रैव ११ । ११ । १२-१७ ।
"न तथा बध्यते विद्वांस्तत्र तत्रादयन् गुणान् ।
प्रकृतिस्थोऽप्यसंसक्तो यथा खं सविताऽनिलः ॥
वैशारद्येक्षयाऽसंगशितया छिन्नसंशयः ।
प्रतिबुद्ध इव स्वप्नान् नानात्वद् विनिवर्त्तते" ॥
यस्य स्युर्वीतसङ्कल्पाः प्राणेन्द्रियमनोधियाम् ।
वृत्तयः स विनिर्मुक्तो देहस्थोऽपि हि तद्गुणैः ॥
यस्यात्मा हिंस्यते हिंस्रैर्येन किञ्चिद् यदृच्छया ।
अर्च्च्यते वा क्वचित्तत्र न व्यतिक्रियते बुधः ॥
न स्तवीत न निन्देत कुर्व्वतः साध्वसाधु वा ।
वदतो गुणदोषाभ्यां वर्ज्जितः समदृङ्मुनिः ॥
तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥
यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ! ।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥
अपिचेदसि सर्व्वेभ्यः पापिभ्यः पापकृत्तमः ।
सर्व्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥
यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्ज्जुन ! ।
ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुते तथा ॥
न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत् स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥
श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति" ॥
अतएव निर्गुणभक्तिज्ञानयोर्न कियदप्यन्तरं
मन्यन्ते तत्त्वदृशः स्वरूपतस्तयोरेकात्मत्वात् अत-
त्त्वदर्शिनोऽज्ञा एवाविद्यामोहितत्वात् भिन्नदृशो
भवन्ति ॥ वरं भक्तियोगमुपदिशन्नुपसंहारे ज्ञान-
विज्ञानसम्पन्ना भक्तिरेव ब्रह्मलब्धये सम्यक् हित-
साधनीति प्रदर्शितवानुद्धवाय भगवान् ॥ यथा
भागवते ११ । १८ । ४५-४६ ।
"भक्त्योद्धवानपायिन्या सर्व्वलोकमहेश्वरम् ।

| | | |
|---|---|---|
| | न कुर्य्यान्न वदेत् किञ्चिन्न ध्यायेत् साध्वसाधु वा । आत्मारामोऽनया वृत्त्या विचरेज्जडवन्मुनिः” ॥ | सर्व्वोत्पत्त्यव्ययं ब्रह्म कारणं मोपयाति सः ॥ इति स्वधर्म्मनिर्णिक्तसत्त्वो निर्ज्ञातमद्गतिः । ज्ञानविज्ञानसम्पन्नो न चिरात् समुपैति मां” । निष्कामेनानुष्ठितभक्तिरेव शनैः शनैः सान्द्रत्वेन निर्गुणतां गच्छन्ती सती परमप्रेमानन्दरूपेण परिणमते सुतरां तदा स्वयं सान्द्रानन्दमयं तज्-ज्ञानं प्रकाशते । तयोर्हि तत्स्वरूपत्वात् न क्वापि निर्गुणभक्तिज्ञानयोगयोर्भेदः श्रूयते । यथा छा-न्दोग्ये “सत्यं ज्ञानमनन्तं ब्रह्म । आनन्दरूपममृतं यद् विभाति शान्तं शिवमद्वैतम” । इति ज्ञाना-नन्दयोर्ब्रह्मस्वरूपत्वात् अतएव क्वचित् केनापि न पूर्णानन्दत्वेन परिणताया निर्गुणस्वरूपाया भक्ते-र्ज्ञानेन सह कियानपि भेदो दर्शयितुं शक्यते |

:स्वरूपतस्तयोरेकात्मत्वात् । परन्तु तत्त्वज्ञानो-

त्पादनक्षमा भक्तिरेवानुष्ठेया न तु
संसारबन्धन-
कारिणी नश्वरफलदात्री अन्धभक्तिवत्
सकामा
भक्तिरेवानुमोदनीया तत्त्वदर्शिभिरिति
बोध्यम् ॥
यथा भागवते १ । २ । ७ ।
“वासुदेवे भगवति भक्तियोगः प्रयोजितः ।
जनयत्याशु वैराग्यं ज्ञानञ्च यदहैतुकम्” ॥
विशेषतः प्रह्लादध्रुवयोरिव
नित्यानित्यवस्त्ववाप्ति-
दर्शनात् । असुरकुलजातोऽपि प्रह्लादः
निष्काम-
भक्तियोगमाचरन् तत्प्रभावेन शतशः
पितृप्रयुक्तां
बाधामतिक्रम्यात्मप्रसादलब्धं
विमलानन्दस्वरूपं
जीवन्मुक्तत्वं ततो निर्व्वाणमप्यवाप्तवान् ।
ध्रुवः
पुनः स्वायम्भुवमनुवंशजातोऽपि
विमातृवचना-
दीर्ष्यापरवशः सन्
परमतत्वज्ञाद्देवर्षिनारदादप्यु-
पदेशं लब्ध्वा अन्तःकामवीजं परिपुष्णन्
कठोर-
तपसापि सकामभक्तियोगमनुष्ठाय
कल्पस्थायिन
ध्रुवाख्यलोकं लब्धवान् ततः
गृहप्रत्यागमनकाले
सहसा जातनिर्व्वेद आत्मधिक्कारेण
मुहुरन्वशो-
चत् ॥ इदानीं प्रदर्शयामो यथाक्रमं तयोः
राज-
पुत्रयोः
सकामनिष्कामभक्तियोगानुष्ठाननित्या-
नित्यफलम् ॥

“एता वद्वर्णितगुणो भक्त्या भक्तेन
निर्गुणः
प्रह्लादं प्रणतं प्रीतो
यतमन्युरभाषत ॥
श्रीभगवानुवाच ।
प्रह्लाद भद्र भद्रं ते प्रीतोऽहं
तेऽसुरोत्तम ।
वरं वृणीष्वाभिमतं
कामपूरोऽस्म्यहं नृणाम् ॥
मामप्रीणत आयुष्मन् दर्शनं दुर्लभं
हि मे ।
दृष्ट्वा मां न पुनर्जन्तुरात्मानं
तप्तुमर्हति ॥
प्रीणन्ति ह्यथ मां धीराः
सर्व्वभावेन साधवः ।
श्रेयस्कामा महाभागाः
सर्व्वासामाशिषां पतिम् ॥
एवं प्रलोभ्यमानोऽपि
वरैर्लोकप्रलोभनैः ।
एकान्तित्वाद् भगवति
नैच्छत्तानसुरोत्तमः” ॥
तत्रैव ७ । १० । १ -- ५ ।
नारद उवाच ॥
“भक्तियोगस्य तत्
सर्व्वमन्तरायतयार्भकः ।
मन्यमानो हृषीकेशं स्मयमान
उवाच ह ॥
मा मां प्रलोभयोत्पत्त्या सक्तं
कामेषु तैर्वरैः ।
तत्संगभीतो निर्व्विण्णो
मुमुक्षुस्त्वामुपाश्रितः ॥
भृत्यलक्षणजिज्ञासुर्भक्तं
कामेष्वचोदयत् ।
भगवन् संसारवीजेषु हृदयग्रन्थिषु
प्रभो ! ।
नान्यथा तेऽखिलगुरो ! घटेत
करुणात्मनः ॥

“आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदि
ध्यासितव्यश्च” । अर्थात् आत्मैव साक्षात्
कर्त्तव्यः
साक्षात्कारे उपायमाह श्रवणं मननं निदिध्या-
सनञ्च किन्तत् श्रवणादि इति जिज्ञासायां ब्रूमः ।
यथा । “श्रवणं नाम षड्विधलिङ्गैरशेषवेदान्ता-
नामद्वितीये वस्तुनि तात्पर्य्यावधारणम् । लिङ्गानि
तु । उपक्रमोपसंहाराभ्यासाऽपूर्ब्बताफलार्थवा-
दोपपत्त्याख्यानि । तत्र प्रकरणप्रतिपाद्यस्यार्थस्य
तदाद्यन्तयोरुपादानं उपक्रमोपसंहारौ । यथा,
छान्दोग्ये षष्ठप्रपाठके प्रकरणप्रतिपाद्यस्याद्विती-
यवस्तुनः एकमेवाद्वितीयमित्यादौ “ऐतदात्म्यमिदं
सर्व्वम्” । इत्यन्ते च प्रतिपादनम् ॥

प्रकरणप्रतिपाद्यस्य वस्तुनः तन्मध्ये
पौनःपुन्येन

प्रतिपादनं अभ्यासः । यथा, तत्रैवाद्वितीयवस्तु-
नो मध्ये “तत्त्वमसीति” नवकृत्वः प्रतिपादनम् ॥
प्रकरणप्रतिपाद्यस्य वस्तुनः प्रमाणान्तरेणा-
विषयीकरणं अपूर्ब्बत्वम् । यथा तत्रैवाद्वितीय-
वस्तुनः तन्त्वौपनिषदं पुरुषं पृच्छामीत्यादिना
उपनिषन्मात्रवेद्यत्वप्रतिपादनात् । मानान्तरा-
विषयीकरणं फलन्तु प्रकरणप्रतिपाद्यस्यात्म-
ज्ञानस्य तदनुष्ठानस्य वा तत्र तत्र श्रूयमाणं प्रयो-
जनं यथा तत्रैव “आचार्य्यवान् पुरुषो वेद तस्य
तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये” ।
इत्यद्वितीयवस्तुज्ञानस्य तत्प्राप्तिप्रयोजनं श्रूयते ।
प्रकरणप्रतिपाद्यस्य तत्र तत्र प्रशंसनं अर्थवादः ।
यथा, तत्रैव उततमादेशमप्राक्षो येनाश्रुतं श्रुतं
भवत्यमतं मतमविज्ञातं विज्ञातमित्यद्वितीयवस्तु
प्रशसनम् ।

प्रकरणप्रतिपाद्यार्थसाधने तत्र तत्र
श्रूयमाणा

युक्तिः उपपत्तिः” । यथा, तत्र “सौम्यैकेन मृत्-
पिण्डेन सर्व्वं मृण्मयं विज्ञातं स्यात् वाचारम्भण-
विकारो नामध्येयं मृत्तिकेत्येव सत्यम्” । इत्यादा-

यथा, श्रीमद्गागवते । ४ । ९ । २७-३५ ॥
"सोऽपि सङ्कल्पजं विष्णोः
पादसेवोपसादितम् ।
प्राप्य सङ्कल्पनिर्व्वाणंनातिप्रीतोऽभ्यगात्
पुरम् ॥
विदुर उवाच ।
सुदुर्ल्लभं यः परमं पदं हरेः
मायाविनस्तच्चरणार्च्चनार्ज्जितम् ।
लब्ध्वाऽप्यसिद्धार्थमिवैकजन्मना
कथं स्वमात्मानममन्यतार्थवित् ॥
मैत्रेय उवाच ।
मातुः सपत्न्या वाग्बाणैर्हृदि विद्धस्तु तान्
स्मरन् ।
नैच्छन् मुक्तिपतेर्मुक्तिं तस्मात्
तापमुपेयिवान् ॥
ध्रुव उवाच ।
समाधिना नैकभवेन यत् पदं
विदुः सनन्दादय ऊद्ध्र्वरेतसः ।
मासैरहं षड्भिरमुष्य पादयो-
श्छायामुपेत्यापगतः पृथङ्गतिः ॥
अहोवत ममानात्म्यं मन्दभाग्यस्य पश्यत ।
भवच्छिदः पादमूलं गत्वा याचे यदन्तवत् ॥
मतिर्विदूषिता देवैः पतद्भिरसहिष्णुभिः ।
यो नारदवचस्तथ्यं नाग्राहीषमसत्तमः ॥
दैवीं मायामुपाश्रित्य प्रसुप्तैव भिन्नदृक् ।
तप्ये द्वितीयेऽप्यसति भ्रातृभ्रातृव्यहृद्रुजा ॥
मयैतत् प्रार्थितं व्यर्थं चिकित्सेव गतायुषि ।
प्रसाद्य जगदात्मानं तपसा दुष्प्रसादनम् ॥
भवच्छिदमयाचेऽहं भवं भाग्यविवर्जितः ।
स्वाराज्यं यच्छतो मौढ्यान्मानो मे
भिक्षितो वत ॥
ईश्वरात् क्षीणपुण्येण फलीकारानिवाधनः"
।
भगवता नृसिंहदेवेन प्रलोभ्यमानोऽपि
प्रह्लादः
निष्कामभक्तिज्ञानप्रभावेन किमपि
नैच्छदिति
धर्म्मनन्दनमजातशत्रुं युधिष्ठिरं श्रावयामास
दे-

यस्तु आशिष आशास्ते न स
भृत्यः स वै बणिक् ।
आशासानो न वै भृत्यः
स्वामिन्याशिष आत्मनः ॥
अहं त्वकामस्तद्भक्तस्त्वं च
स्वाम्यनपाश्रयः ।
नान्यथेहावयोरर्थो
राजसेवकयोरिव" ॥
अस्तु तस्य निस्पृहत्वादि किन्तु
तत्त्वज्ञानं नासी-
दिति चेत् न यतः उपरिष्टादेव
तत्त्वज्ञानमूलाया
निर्गुणाया भक्तेर्लक्षणं प्रदर्शितं ।
यथा, भागवते
७ । ५ । १३ ॥ हिरण्यकशिपुं
प्रति प्रह्लादोक्तिः ।
"स एष आत्मा स्वपरेत्य
बुद्धिभि-
र्दुरत्ययानुक्रमणो निरूप्यते ।
मुह्यन्ति यद्वर्त्मनि वेदवादिनो
ब्रह्मादयो ह्येष भिनत्ति मे मतिम्"
॥
किञ्च तत्रैव ३१ ।
"न ते विदुः स्वार्थगतिं हि विष्णुं
दुराशया ये वहिरर्थमानिनः ।
अन्धा यथान्धैरुपनीयमाना
वागीशतन्त्यामुरुदाम्नि बद्धाः" ॥
स्वार्थगतिमिति । स्वस्मिन्
एवार्थो येषां ते स्वा-
र्थास्तत्वज्ञानिनस्तेषां
गतिर्ज्ञानस्वरूपस्तं । वहि-
रर्थमानिनः इति ।
वहिर्वाह्यवस्तुषु अर्थो येषां
तान् गुरून् इति मन्यन्ते ये इति
॥ ननु क्वचि
दर्च्चादिर्निन्दापि लक्ष्यते यदा
तदुपासनं
निष्फलमिति चेन्न । यतः सर्व्वतः
साधुसङ्गलाभ

वद्वितीयवस्तुसाधने विकारस्य वाचारम्भणमात्रत्वे
युक्तिः श्रूयते" । मननन्तु । "श्रुतस्याद्वितीयवस्तुनो
वेदान्तार्थानुगुणयुक्तिभिरनवरतमनुचिन्तनम्" ।
"विजातीयदेहादिप्रत्ययरहिताऽद्वितीयवस्तुसजा-
तीयप्रत्ययप्रवाहः निदिध्यासनम्" ॥ इति वेदा-
न्तशास्त्रेषु ॥
समाधिस्तु द्विविधः । सविकल्पको निर्व्विकल्पक-
श्चेति । तत्र सविकल्पको नाम ज्ञातृज्ञानादि-
विकल्पलयानपेक्षयाऽद्वितीयवस्तुनि तदाकारा-
कारितायाश्चित्तवृत्तेरवस्थानम् । तदा मृण्मय-
गजादिभानेऽपि मृद्भानवत् द्वैतभानेऽप्यद्वैतं वस्तु
भासते ॥
निर्व्विकल्पकस्तु ज्ञातृज्ञानादिभेदलयापेक्षयाऽद्वि-
तीयवस्तुनि तदाकाराकारिताया बुद्धिवृत्तेरति-
तरामेकीभावेनावस्थानम् । तदा तु जलाकारा-
कारितलवणानवभासेनाद्वितीयवस्तुमात्रमेवावभा-
सते ॥ इति वेदान्ते उपदिष्टं पूर्ब्बर्षिभिः ॥
अतो ज्ञानलक्षणानि भगवद्गीतायां । १३ । ७-११
॥
"अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्य्योपासनं शौचं स्थैर्य्यमात्मविनिग्रहः ॥

| | | | |
|---|---|---|---|
| वर्षिर्नारदः । यथा, भागवते । ७ । ९ । ५१-५५ ॥ | | स्योत्कर्षः इति प्रदर्शयन् विशेषतः सर्व्वाभ्य उपासाभ्यः हृद्देशे आत्मध्यानमेव गरीय इत्येवोप दिदिशुः महान्तः शास्त्रकृतः । अन्यथा “मदर्च्चा- स्थापने श्रद्धा” “अर्च्चायामर्च्चयेत्तावत्” “यावन्न मे कथारतिः” इत्यादि वचनानां निष्फलत्वं स्यात् । दर्शितञ्च यथासम्भवमुपासनायां दुर्ब्बला- धिकारिणां यत् यत् कर्त्तव्यं इदानीं सबलाधि- कारिणां करणीयं यत्प्रकृतपथं तदेव दर्शयामः समासेनेति । यथा, वृहदारण्यकश्रतौ ॥ | |

:इन्द्रियार्थेषु वैराग्यमनहङ्कारएव च ।

जन्म मृत्यु-जरा-व्याधि-दुःख-
दोषानुदर्शनम् ॥
असक्तिरनभिष्वङ्गः पुत्त्रदारगृहादिषु ।
नित्यञ्च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम्
।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा”
॥
अतो ज्ञेयं वस्तु तत्रैवाध्याये । १२-१७ ॥
“ज्ञेयं यत्तत् प्रवक्ष्यामि
यज्ज्ञात्वाऽमृतमश्नुते ।
अनादिमत् परं ब्रह्म न सत्तन्नासदुच्यते ॥
सर्व्वतः पाणिपादन्तत्
सर्व्वतोऽक्षिशिरोमुखम् ।
सर्व्वतःश्रुतिमल्लोके सर्व्वमावृत्य तिष्ठति ॥
सर्व्वेन्द्रियगुणाभासं सर्व्वेन्द्रियविवर्ज्जितम्
।
असक्तं सर्व्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥
वहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च
तत् ॥
अविभक्तञ्च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते
।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्व्वस्य
विष्ठितम्” ॥
तथा च श्वेताश्वतरश्रुतौ आत्मज्ञानेनैव
मुक्ति-
रिति स्फुटं दर्शयामास । यथा, --
“सर्व्वेन्द्रियगुणाभासं
सर्व्वेन्द्रियविवर्ज्जितम् ।
सर्व्वस्य प्रभुमीशानं सर्व्वस्य शरणं वृहत्”
॥

तथा च शुकशिष्यो गौडपादाचार्य्यः ॥
“यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते ।
न सर्व्वे सम्प्रयुज्यन्ते तद्वज्जीवाः सुखादिभिः” ॥
तस्मादद्बितीये परमात्मन्युपाधितो जीवेश्वरयो-
र्जीवानाञ्च परस्परं भेदव्यवस्थायाः सिद्धत्वान्न
विशुद्धसत्वोपाधेरीश्वरस्याविशुद्धोपाधिजीवगताः
सुखदुःखमोहाज्ञानादयः ॥ तथा च भगवान्
पराशरः ।
ज्ञानात्मकस्यामलसत्त्वराशे-
रपेतदोषस्य सदा स्फुटस्य ।
किं वा जगत्यस्ति समस्तपुंसा-
मज्ञातमस्यास्ति हृदि स्थितस्य” ॥
कथं तर्ह्यौपाधिकभेदेन बन्धमुक्त्यादिव्यवस्था
सोपा-
धिकानां तेषां वा सोपाधिकैश्वरस्य वा स्वरूप-
स्येति इत्याशङ्क्य दृष्टान्तपूर्ब्बकं व्यवस्थां
दर्शयति ॥
“एकस्तु सूर्य्यो बहुधा जलाधारेषु दृश्यते ।
आभाति परमात्मा च सर्व्वोपाधिषु संस्थितः” ॥
“ब्रह्म सर्व्वशरीरेषु वाह्ये चाभ्यन्तरे स्थितम् ।
आकाशमिव भूतेषु बुद्धावात्मा म चान्यथा” ॥
एवं सति यया बुद्ध्या देहोऽहमिति मन्यते ।
‘अनात्मन्यात्मता भ्रान्त्या सा
स्यात्संसारबन्धिनी’ ॥
सर्व्वैर्विकल्पैर्हीनस्तु शुद्धो बुद्धोऽजरोऽमरः ।
प्रशान्तो व्योमवद्व्यापी चैतन्यात्मा सकृत्प्रभुः ॥
धूमाभ्रधूलिभिर्व्योम यथा न मलिनीयते ।
प्राकृतैरपरामृष्टो विकारैः पुरुषस्तथा ॥
यथैकस्मिन् घटाकाशे जलैर्धूमादिभिर्युते ।
नान्ये मलिनतां यान्ति दूरस्थाः कुत्रचित् क्वचित्
॥
यथा द्वन्द्वैरनेकैस्तु जीवे च मलिनीकृते ।
एतस्मिन्नापरे जीवा मलिनाः सन्ति कुत्रचित्” ॥
परं नतु केवलं प्रकृतेः पृथग्रूपचैतन्यज्ञान-
मात्रेण ब्रह्मज्ञानं सम्भवितुमर्हति । यदि चैके
पण्डिताः पृथग्ज्ञानेनैव सिद्धिः स्यादिति मन्यन्ते
किन्तु नैव श्रुतय एवं परिचक्षते । यथा, श्वेताश्व-

युक्तेन मनसा वयं देवस्य सवितुः
सवे सुवर्गेयाय
शक्त्यै ॥ २ ॥
यक्ताय मनसा देवान् सुवर्य्यतो
धिया दिवं ।
वृहज्ज्योतिः करिष्यतः सविता
प्रसुवाति तान् ॥ ३ ॥
युञ्जते मन उत युञ्जते धियो
विप्रा विप्रस्य वृहतो विपश्चितः ॥
विहोत्रा दधे वयुना विदेक इन् ।
महो देवस्य सवितुः परिष्टुतिः ॥ ४
॥
युजे वां ब्रह्म पूर्व्यं नमोभिः
विश्लोका यन्ति पथ्येव सूराः” ॥
५ ॥
परन्तु आत्मज्ञादविशदीकरणाय
दक्षसंहितैव
श्रेयसी जीवानामिति प्रदर्शयितुं
भूयोऽप्यनुस-
रामः । यथा,
“ऊरुस्थोत्तानचरणः सव्ये
नस्येतरं करम् ।
उत्तानं किञ्चिदुन्नाम्य मुखं विष्टभ्य
चोरसा ॥
निमीलिताक्षः सत्त्वस्थो
दन्तेर्दन्तानसंस्पृशन् ।
तालुस्थाचलजिह्वश्च संवृतास्यः
सुनिश्चलः ।
संनिरुध्येन्द्रियग्रामं
नातिनीचोच्छ्रितासनः ।
द्विगुणं त्रिगुणं वापि
प्राणायाममुपक्रमेत्” ॥
किन्तुएवं मा मन्यध्वं यत्
गृहान्निःसृत्य अरण्यवा-
सादौ योगाभ्यासतत्त्वज्ञानादेः
सुगमो भवेत्
इत्यत्र यथाह दक्षः सप्तमाध्याये ।

"आत्मा गुहायां निहितोऽस्य जन्तो-
रणोरणीयान् महतो महीयान् ।
तमक्रतुं पश्यति वीतशोको
धातुः प्रसादान्महिमानमीशम्" ॥
महानिव्वाणतन्त्रे च । ५ । ११ ॥
"परे ब्रह्मणि विज्ञाते समस्तैर्न्नियमैरलम् ।
तालवृन्तेन किं कार्य्यं लब्धे मलयमारुते"
॥
ननु किमिदानीं वाग्भङ्ग्याऽद्वैतवादं
संस्थाप-
यितुं प्रयतते इति चेत् दर्शयामः ।
तथा च श्रीविष्णुधर्म्मे, --
"परात्मनो मनुष्येन्द्र विभागो हि न
कल्पितः ।
क्षये तस्यात्मपरयोर्विभागाभावएव हि ॥
आत्मा क्षेत्रज्ञसंज्ञोऽयं संयुक्तः प्राकृतैर्गुणैः
।
तैरेव विगतः शुद्धः परमात्मा निगद्यते ॥
अनादिसम्बन्धवत्या क्षेत्रज्ञोऽहमविद्यया ।
युक्तः पश्यति भेदेन ब्रह्मत्वात्मनि
संस्थितम्" ॥
तथाहि
श्वेताश्वतरश्रुतिभाष्यधृतवशिष्टवचनं
प्रश्नपूर्ब्बकं दर्शितम् । यथा, --
"यद्यात्मा निर्गुणः शुद्धः
सदानन्दोऽजरोऽमरः ।
संसृतिः कस्य तात ! स्यात् मोक्षो
वाऽविद्यया विभो ॥
क्षेत्रनाशे कथं तस्य ज्ञायते भगवान् यतः ।
यथावत् सर्व्वमेतं मे वक्तुमर्हसि साम्प्रतम्
॥
तस्यैव नित्यशुद्धस्य सदानन्दमयात्मनः ।
अवच्छिन्नस्य जीवस्य संसृतिः कीर्त्त्यते
बुधैः ॥
एकएव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥
मान्त्यारूढः सएवात्मा जीवसंज्ञः सदा
भवेत् ॥"

तरोपनिषदि "ज्ञाज्ञौ द्वावजावीशानीशावजा
ह्येका भोक्तृभोग्यार्थयुक्ता अनन्तश्चात्मा विश्व-
रूपो ह्यकर्त्ता त्रयं यदा विन्दते ब्रह्ममेतत्" ॥
अतएव ब्रह्मजिज्ञासोर्योगिनः श्रत्यपदिष्टब्रह्म-
तत्त्वविज्ञानेनैव मुक्तिः स्यात् अन्यथा श्रमएव ॥
यथा, तत्रैव "क्षरं प्रधानममृताक्षरं हरः
क्षरात्मानावीशते देवएकः । तस्याभिधानात्
योजनात् तत्त्वभावात् भूयश्चान्ते विश्वमाया-
निवृत्तिः ॥ ज्ञात्वा देवं सर्व्वपाशापहानिः क्षीणैः
क्लेशैर्जन्ममृत्यप्रहाणिः । तस्याभिध्यानात्तृतीयं
देह-
भेदे विश्वैश्वव्य केवल आप्तकामः" ॥ परं योगा-
भ्यासादृते नैव कदाचित् तत्त्वज्ञानास्योत्पत्ति-
रिति श्रुतिस्मृत्यादीनां ज्ञानप्रतिपादकशास्त्रा-
णामुपदेशो दृश्यते यदि च पूर्ब्बपूर्ब्बप्रकरणे पुराण-
प्रभृतिविहितयोगादिमतं प्रदर्शितं तत्रापि तत्-
व्रढीकरणाय वैदिक्मतमिदानीं प्रदर्शयामः । यथा
यजुर्व्वेदोक्तश्वेताश्वतरीययोगप्रकरणम् । ॐ
"युञ्जा-
नः प्रथमम् मनस्तत्त्वाय सविता धियः ॥ अग्निं
ज्योतिर्न्निचाय्य पृथिव्या अध्याभरत् ॥ १ ॥

"लोको वशीकृतो येन येन चात्मा
वशीकृतः ।
इन्द्रियार्थौ जितो येन तं योगं
प्रब्रवीम्यहं ॥
प्राणायामास्तथा ध्यानं
प्रत्याहारस्तु धारणा ।
तर्कश्चैव समाधिश्च षडङ्गो योग
उच्यते ॥
नारण्यसेवनाद्योगो
नानेकग्रन्थचिन्तनात् ।
व्रतैर्यज्ञैस्तपोभिश्च न योगः
कस्यचित् भवेत् ॥
न च पथ्याशनात् योगो न
नासाग्रनिरीक्षणात् ।
न च शास्त्रातिरिक्तेन शौचेन स
भवेत् क्वचित् ॥
न मौनमन्त्रकुहकैरनेकैः
सुकृतैस्तथा ।
लोकयात्रावियुक्तस्य योगो भवति
कस्यचित् ॥
अभियोगात् तथाभ्यासात्
तस्मिन्नेव तु निश्चयात् ।
पुनः पुनश्च निर्व्वेदाद् योगः
सिध्यति नान्यथा" ॥
अतएव निर्व्वेदादृते केवलं
तपःस्वाध्यायादिभिर्न
योगसिद्‌ध्विः
शास्त्रकृद्भिरनुमोदनीया । किन्तु
आदरनैरन्तर्य्येण
आत्मचिन्तादयएव ब्रह्मलब्ध्यै
सदुपाया इति बोध्यम् यथा तत्रैव ।
"आत्मचिन्ताविनोदेन
शौचक्रीडनकेन च ।
सर्व्वभूतसमत्वेन योगः सिध्यति
नान्यथा ॥
यश्चात्मनि रतो
नित्यमात्मक्रीडस्तथैव च ।
आत्मनिष्ठश्च सततमात्मन्येव
स्वभावतः ॥

|  |  |  |
| --- | --- | --- |
|  |  | रतश्चैव स्वयं तुष्टः सन्तुष्टो नान्यमानसः ।<br>आत्मन्येव सुतृप्तोऽसौ योगस्तस्य प्रसिध्यति ॥<br>सुप्तोऽपि योगयुक्तः स्याज्जाग्रच्चापि विशेषतः ।<br>ईदृक्चेष्टः स्मृतः श्रेष्ठो गरिष्ठो ब्रह्मवादिनाम्” ॥<br>परन्तु विषयासक्तिवर्ज्जनं विना क्वापि कस्य-<br>चिदपि आत्मसिद्धिर्न प्रजायते ।<br>यथा तत्रैव, --<br>“य आत्मव्यतिरेकेण द्वितीयं नैव पश्यति ।<br>ब्रह्मीभूय स एवं हि दक्षपक्ष उदाहृतः ॥<br>विषयासक्तचित्तो हि यतिर्मोक्षं न षिन्दति ।<br>यत्नेन विषयासक्तिं तस्माद् योगी विवर्ज्जयेत्” ॥ |

:यदि च केचित् विषयेन्द्रियसंयोगैः सिद्धिर्भवेत्

इति वदन्ति तत्र तेषां भ्रान्तिरेव सा
यथा तत्रैव,
“विषयेन्द्रियसयोगं केचित् योगं वदन्ति
हि ।
अधर्म्मो धर्म्मरूपेण
गृहीतस्तैरपण्डितैः” ॥ इति ॥
यदि चाद्वैततत्त्वज्ञानमेव सर्व्वतो
निश्रेयसकरं
जीवानाभित्यशेषवः प्रदर्शितम् किन्तु
दुर्ब्बलमब-
लाद्यधिकारिभेदेन यथाकमं
क्रियाभंक्तिज्ञान-
वोगादयः सन्निवेशिता
इत्यलमतिपल्लवितेन ॥ * ॥)

**उपासितः**, त्रि, (उप + आस् + क्त ।) कृतोपासनः ।

तत्पर्य्यायः । वरिवसितः २
वरिवस्यितः ३ उप-
चरितः ४ । इत्यमरः ॥

**उपास्तिः**, स्त्री, (उप + आस् + क्तिन् ।) सेवा । इति

हेमचन्द्रः ॥ (यथा, मुग्धबोधे
कारकप्रकरणे ७ ।
“मुक्तिर्नर्त्तेऽच्युतोपास्तिं भूतं भूतमभि
प्रभुः” ॥)

**उपाहितः**, पुं, (उप आसन्नं आहितं फलं यस्य ।)

अग्न्युत्पातः । स तु उल्कापातादिः ।
इत्यमरः ॥

**उपाहितः**, त्रि, (उप + आ + धा + क्त ।) संयो-

जितः । इत्यमरः ॥ आरोपितः । इति
मेदिनी ॥

**उपेक्षणं**, क्ली, (उप + ईक्ष् + भावेल्युट् ।) वर्ज्जनम् ।

**उपोदकी**, स्त्री, (उपगता उदकम् । रसप्राधान्यात् ।

गौरादित्वात् ङीष् ।) पूतिका । पूँइशाक
इति
भाषा । तत्पर्य्यायः । कलम्बी २
पिच्छिला ३ पि-
च्छिलच्छदा ४ मोहनी ५ मदशाकः ६
विशाला
७ बलिपोदकी ८ । अस्या गुणाः ।
कषायत्वम् ।
उष्णत्वम् । कटुत्वम् । मधुरत्वम् ।
निद्रालस्यरुचि-
विष्टम्भश्लेष्मकारित्वञ्च । इति
राजनिर्घण्टः ॥ (यथा,
एकादशीतत्त्वे द्वादशीनियमे
कूर्म्मपूराणधृत-
वचनम् ।
“द्वादश्यां पारणं कुर्य्यात्
वर्जयित्वाप्युपोदकीम्” ॥)

**उपोदिका**, स्त्री, (उपाधिकमुदकमस्याम् । उत्तर-

पदस्य चेत्युत्तरपदस्योदादेशः । कप् ।
टाप् ।)
पूतिका । इत्यमरः ॥ अस्या गुणाः ।
सारकत्वम् ।
स्निग्धत्वम् । बलश्लेष्मकारित्वम् ।
हिमत्वञ्च । इति
राजवल्लभः ॥ (यथा, वैद्यके ।
“तण्डुलैरानतव्याजैर्हसत्येषा उपोदिका”
।
“मदघ्नी चाप्युपोदिका” ।
इति सूत्रस्थाने ६ अध्याये वाभटेनोक्तम्
॥
“उपोदिकादधिभ्यान्तु सिद्धा
मदविनाशिनी” ।
इति चरके सूत्रस्थाने २ अध्याये ॥
“स्वादुपाकरसा वृष्या वातपित्तमदापहा ।

भस्मन् हुतं कुहकराद्धमिवोप्तमूष्याम्” ॥
इति श्रीभागवते १ स्कन्धे १५ । २१ ॥
श्रीकृष्णवियोग एवात्र हेतुः नान्य इत्याह तद्वै
इति
यतो येभ्य ईशेन रिक्तं शून्यं असत् कार्य्याक्षमं
सन्मन्त्रविधानैरपि भस्मनि हुतमिव
भस्मन्निति
लुप्तसप्तम्यन्तं पदम् । अतिप्रीतादपि
कुहकान्मा-
याविनः सकाशाद्राद्धं लब्धं यथा ।
सम्यक्कर्षणा-
दिनापि उषरभूमौ उप्तं वीजमिव” । इति तट्टी-
कायां श्रीधरस्वामी ॥ * ॥ कृतमुण्डनम् ।
यथा --
“सशिखं वपनं कार्य्यमास्नानाद्‌ब्रह्मचारिणा”
।
इति कात्यायनकृतच्छन्दोगपरिशिष्टेऽप्येवम् ।
तदे-
कश्रुतिमूलकत्वात् । तद्धृतपारस्करीये ।
पर्य्युप्त-
शिरसमिति सूत्रेऽपि तथैवार्थः तद्भाष्यकृता
हरिशर्म्मणापि परि सर्व्वतोभावेनोप्तशिरसं
मुण्डितशिरसमिति व्याख्यातम्” । इति प्राय-
श्चित्ततत्त्वम् ॥

**उप्तकृष्टं**, त्रि, (आदौ उप्तं पश्चात् कृष्टम् । पूर्ब्ब-

कालेति समासः ।)
वीजवपनानन्तरकर्षितक्षेत्रम् ।
तत्पर्य्यायः । वीजाकृतम् २ । इत्यमरः ॥

**उब्ज**, श आर्ज्जवे । इति कविकल्पद्रुमः ॥ (तुदां-परं-

अकं-सेट् ।) ह्रस्वादिः । ओष्ठ्यबकारोपधः ।
तेन व्र्यनच्त्यीति दीर्घो न स्यात् । स्यादौ
नवद्र
इति उब्जिजिषति ।
ऊर्णौज्जोर्दीर्घपाठसामर्थ्यात्
स्वरादेर्न दीर्घ इति केचित् । दन्त्यवकारत्वान्न

त्यजनम् ॥ (यथा, महाभारते ३ । हनूमद्भीमसं-
वादे १५० । ४२ ।
"साम्ना दानेन भेदेन दण्डेनोपेक्षणेन च ।
साधनीयानि कर्म्माणिं समासव्यासयोगतः" ॥)

**उपेक्षा**, स्त्री, (उप + ईक्ष् + अ + टाप् ।) अस्वी-
कारः । त्यागः । (औदासीन्यम् । यथा, रघुः
१४ । ६५ । "कुर्य्यामुपेक्षां हतजीवितेऽस्मिन्" ।)
युद्धविषये तु क्षुद्रोपायः ।
"मायोपेक्षन्द्रजालानि क्षुद्रोपाया इमे त्रयः" । इति हेमचन्द्रः ॥

**उपेन्द्रः**, पुं, (इन्द्रमुपगतः । कश्यपादृषेः अदितौ
वामनावतारे इन्द्रस्यानन्तरं जातत्वात् तथात्वम् ।)
विष्णुः । इत्यमरः ॥ (उपेन्द्रस्यापरां व्युत्पत्तिमाह
हरिवंशे ७५ । ४६ ।
"ममोपरि यथेन्द्रस्त्वं स्थापितो गोभिरीश्वरः ।
उपेन्द्र इति कृष्ण त्वां गास्यन्ति दिवि देवताः" ॥
तथा च भागवते ८ । २३ । २१, २२, २३ ।
"कश्यपस्यादितेः प्रीत्यै सर्व्वभूतभवाय च ।
लोकानां लोकपालानामकरोत् वामनं पतिम् ॥
वेदानां सर्व्वदेवानां धर्म्मस्य यशसः श्रियः ।
मङ्गलानां व्रतानां च कल्पं स्वर्गापवर्गयोः ॥
उपोदिका सरा स्निग्धा बल्या श्लेष्मकरी हिमा" ॥
इति सुश्रुते सूत्रस्थाने ४६ अध्यायः ॥)

**उपोदीका**, स्त्री, पूतिका । इति भरतः द्विरूप-
कोषश्च ॥

**उपोद्घातः**, पुं, (उप समीपे उद्घननम् । उप + उत्
+ हन् + घञ् ।) उदाहरणम् । इत्यमरः ॥ आ-
रम्भः । इति भरतः ॥ सङ्गतिविशेषः । यथा, --
"सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा ।
निर्व्वाहकैककार्य्यत्वे षोढा सङ्गतिरिष्यते" ॥
तल्लक्षणं यथा, --
"चिन्तां प्रकृतसिद्धार्थामुपोद्घातं विदुर्ब्बुधाः" ।
इत्यनुमितौ जगदीशतर्कालङ्कारः ॥

**उपोषणं**, क्ली, (उप + उष् दाहे + ल्युट् ।) उपवासः ।
इति त्रिकाण्डशेषः ॥ (यथा, तिथितत्त्वे ।
"उपोषणं नवम्याञ्च दशम्याञ्चैव पारणम्" ।
विस्तृतिस्तु उपवासशब्दे द्रष्टव्या ॥)

**उपोषितं**, क्ली, (उप + वस् + भावे क्त ।) उपवासः ।
इत्यमरटीकायां भरतः ॥ (यथा, मनुः । ५ । १५५ ।
"नास्ति स्त्रीणां पृथक्यज्ञः न व्रतं नाप्युपोषितम्" ॥

**उपोषितः**, त्रि, (उपोष्यते स्म । उप + वस + कर्त्तरि
+ क्त ।) कृतोपवासः । यथा, --
"उपोषितो द्वितीयेऽह्नि पूजयेत् पुनरेव ताम्" ।
इति दुर्गोत्सवप्रकरणे तिथ्यादितत्त्वम् ॥
(यथा रघौ २१९ ।
"पपौ निमेषालसपक्ष्मपङ्क्ति-
उब्जतीत्यत्र दीर्घ इत्यप्येके । श उब्जती उब्जन्ती ।
आर्ज्जवमवक्रीभावः । उब्जति साधुरवक्रः स्यादि-
त्यर्थः । इति दुर्गादासः ॥ (यथा, ऋग्वेदे । ६ । ५
२ । १ ॥ "उब्जन्तु तं सुभ्वः पर्व्वतासो निहियता
मतियाजस्य यष्ट" ॥)

**उभ**, श पूर्त्तौ । इति कविकल्पद्रुमः ॥ (तुदां-परं-
सकं-सेट् ।) ह्रस्वादिः । श उभति कुम्भं जलेन
लोकः । उवोभ । इति दुर्गादासः ॥

**उभयः**, त्रि, (उभौ अवयवौ अस्य । उभ + तयप् ।
उभादुदात्तो नित्यमिति । ५ । २ । ४४ । तयपो-
ऽयजादेशः । कथमुभये देवमनुष्या इति यतो
बहूनामुभावयवौ न घटतः । नैष दोषः । अत्र हि
द्वौ राशी समुदायस्यावयवौ । एको देवानां अपरो
मनुष्याणामिति । उभादुदात्तो नित्यमिति नित्य-
ग्रहणस्येदं प्रयोजनं वृत्तिविषये उभशब्दप्रयोगो
माभूत् उभयशब्दस्यैव यथा स्यादिति ।)
युगलम् ।
इति शब्दचन्द्रिका ॥ दुइ इति भाषा । (यथा,
मनुः । २ । ५५ ॥
"पूजितं ह्यशनं नित्यं बलमूर्जञ्च यच्छति ।
अपूजितन्तु तद्भक्तमुभयं नाशयेदिदम्" ॥)

**उभयतः**, [स्] व्य (उभयस्मात् । उभय + तसिल् ।)
पार्श्वद्वये । उभयपार्श्वे । इति व्याकरणम् ॥
(यथा, मनुः । ८ । ३१५ ।
"शक्तिञ्चोभयतस्तीक्ष्णामायसं दण्डमेव वा" ॥)

**उभयद्युः**, [स्] व्य, (उभयोरह्नोः । द्युश्चोभया-

उपेन्द्रं कल्पयाञ्चक्रे पतिं सर्व्वविभूतये
।
तदा सर्व्वाणि भूतानि भृशं मुमुदिरे
नृप !” ॥)

**उपोढः**, त्रि, (उप समीपे उह्यते स्म । उप + वह +
क्त ।) निकटः । (यथा, किराते १३ ।
२३ “तदुपोढैश्च
नमश्चरः पृषत्कः” ।) विवाहितः । इति
मेदिनी ॥
(धृतः । विहितः । यथा शाकुन्तले ७ म
अङ्के, --
“उपोढशब्दा न रथाङ्गनेमयः
प्रवर्त्तमानं न च दृश्यते रजः” ॥)

**उपोढः**, पुं, (उप + वह + क्त ।) व्यूहः । इति धरणी ॥

**उपोती**, स्त्री, (उपते स्म या । उप + वे + क्त + ङीष् ।
पत्रादिषु वयनसादृश्यादस्य तथात्वम्
।) पूतिका ।
इति शब्दरत्नावली ॥ (“द्वादश्यामुपोतीं
त्यक्त्वा
पारणं कुर्य्यात्” । इति स्मृतिः ॥)

रुपोसिताभ्यामिव लोचनाभ्याम्” ॥)

**उप्तः**, त्रि, (उप्यते स्म यः क्षेत्रादिषु । वप् + क्त ।)
कृतवपनः । वोना इति भाषा । यथा, --
“तद्वै धनुस्त इषवः स रथो हयास्ते
सोटहं रथी नृपतयो यत आनमन्ति ।
सर्व्वं क्षणेन तदभूदसदीशरिक्तं

द्वक्तव्य इति साधुः ।) उभयदिनम् । दिनद्वयम्
।
इत्यमरः ॥ (यथा, अथर्व्ववेदे । १ । २५ । ४
।
“योऽन्येद्युरुभयद्युरभ्येति” ॥)

**उभयेद्युः**, [स्] व्य (उभयोरह्नोः । सद्यःपरुदिति उभयादेद्युस् निपातितः ।) उभयदिनम् । इत्य- मरः ॥ (यथा, ऐतरेयब्राह्मणे । ५ । २९ ॥ "अग्निहोत्रमुभयेद्युरहूयत" ॥)

**उम्**, व्य, (उङ् शब्दे + डुम् ।) रोषः । अङ्गीकारः । प्रश्नः । इति मेदिनी ॥ क्रोधवर्जितः । इति शब्द- रत्नावली ॥

**उमा**, क्ली, (उ भो मा तपस्यां कुर्व्विति । यथा, "उमेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम" । इति कुमारोक्तेः । यद्वा ओर्ह- रस्य मा लक्ष्मीरिव । उं शिवं माति मिमीते वा । आतोऽनुपसर्गेति कः । अजादित्वात् टाप् । अवति ऊयते वा उङ् शब्दे "विभाषा तिलमाषो मेति" । ५ । २ । ४ । निपातनात् मक् ॥) दुर्गा । (यथा, कुमारे । ३ । ६७ । "उमामुखे विम्बफलाधरोष्ठे व्यापारयामास विलोचनानि" ॥) अतसी । कीर्त्तिः । हरिद्रा । कान्तिः । इति मेदिनी ॥ शान्तिः । इति शब्दरत्नावली ॥ तन्नाम- व्युत्पत्तिर्यथा । "यतो हि तपसे पुत्त्रि वनम् गन्तुञ्च मेनका । उमेति तेन सोमेति नाम प्राप तदा सती" ॥ इति कालिकापुराणे ४२ अध्यायः ॥

**उमाकटः**, पुं, (उमाया रजः । उमा "अलावूति- लोमाभङ्गाभ्यो रजस्युपसंख्यानम्" इति कटच् ।)

**उम्बी**, स्त्री, (उम् क्रोधवर्ज्जितं स्वभावं वाति प्राप्नो- तीति । उम + वा + क । पृषोदरादित्वात् वस्य बः ।) अर्द्धपक्वतृणानलसंभृष्टयवगोधूममञ्जरी । अस्या गुणाः । कफप्रदत्वम् । बलकारित्वम् । लघुत्वम् । पित्तानिलापहत्वञ्च । इति भावप्रकाशा ॥

**उम्भ**, प श पूर्णौ इति कविकल्पद्रुमः । (तुदां-परं- सकं-सेट् ।) उन्भ इति च पाठः ॥

**उम्यं**, क्ली, (उमाया अतस्या हरिद्राया वा क्षेत्रम् । उमा + "विभाषा तिलमाषोमाभङ्गाणुभ्यः" । ५ । २ । ४ । इति यत् ।) औमीनम् । अतसीक्षेत्रम् । हरिद्राक्षेत्रञ्च । इति भरतो द्विरूपकोषश्च ॥

**उर**, गतौ । सौत्रधातुरयम् । इति कविकल्पद्रुमः । (परं-सकं-सेट् ।) पञ्चमस्वरादिः । उरसः । इति दुर्गादासः ॥

**उरः**, [स्] क्ली, (इयर्त्ति । ऋ गतौ । "अर्त्तेरुच्च" । ४ । १९४ इति उणादिसूत्रेण असुन् उरादेशः किच्च ।) वक्षःस्थलम् । इत्यमरः ॥ (यथा, रघुः १० । १० । "कौस्तुभाख्यमपां सारं बिभ्राणं वृहतोरसा" । तथा, माघे ७ । २२ । "उरसि सरसपादलेखा प्रतिमतयानुययावसंशयानः" ॥) तत्पर्य्यायः । वक्षः २ वत्सम् ३ क्रोडम् ४ हृत् ५ भुजान्तरम् ६ । इति राजनिर्घण्टः ॥

**उरः** [स्] त्रि, (ऋ + असुन् + उरादेशः किच्च ।) उत्तमः । श्रेष्ठः । इति मेदिनी ॥

**उरःसूत्रिका**, स्त्री, (उरसः सूत्रमिव । इवे प्रति- वृक्षविशेषः । एडाँचि इति भाषा । चाकुन्दा इति केचित् । तत्पर्य्यायः । प्रपुन्नाडः २ एडगजः ३ दद्रुघ्न ४ चक्रमर्द्दकः ५ पद्माटः ६ । इत्यमरः ॥ उर- णाख्यः ७ प्रपुन्नडः ८ प्रपुनाडः ९ । इति तट्टीका ॥ (अस्य गुणादय एडगजशब्दे ज्ञातव्याः ॥)

**उरणाक्षकः**, पुं, (उरणाक्ष + स्वार्थे कन् ।) उरणाक्ष- वृक्षः । इति शब्दरत्नावली ॥

**उरणाख्यः**, पुं, (उरणस्य मेषम्य आख्या इव आख्या यस्य ।) दद्रुघ्नवृक्षः । इत्यमरटीकायां स्वामी ॥

**उरणाख्यकः**, पुं, (उरणाख्य + स्वार्थे कन् ।) दद्रुघ्न- वृक्षः । इति शब्दरत्नावली ॥

**उरभ्रः**, पुं, स्त्री, (उरु कठोरं भ्रमति । भ्रमु चलने । अन्येभ्योऽपीति डः । पृषोदरादित्वात् साधुः ।) मेषः । इत्यमरः ॥ (मेषशब्देऽस्य गुणादिकंज्ञेयम् ॥)

**उररी**, व्य, (व्ये + बाहुलकात्ररीक् । सम्प्रसारणञ्च ।) स्वीकारः । विस्तारः । इत्यमरः । (यथा, साहित्य- दर्पणे २ य परिच्छेदे । "इति काल्पनिकं भेद- मुररीकृत्य" ॥)

**उररीकारः**, पुं, (उररीकरणम् । उररी + कृ + घञ् ।) अङ्गीकारः । इति जटाधरः ॥

उमाधूलिः । इति व्याकरणम् ॥ मसिनार धूला
इति भाषा ।

**उमागुरुः**, पुं, (उमाया गुरुः पिता । सती दक्ष-
यज्ञे शिवनिन्दाश्रवणात् योगविमुक्तदेहा हिमा-
लयात्मेनकागर्भे सम्भूतेति पौराणिकी कथात्रानु-
सन्धेया ।) हिमालयपर्ब्बतः । इति त्रिकाण्डशेषः ॥

**उमाचतुर्थी**, स्त्री, (उमायाश्चतुर्थी । उमाजन्मतिथि-
त्वादस्याः तथात्वम् । ज्यैष्ठशुक्लचतुर्थी । यथा,
“ज्यैष्ठशुक्लचतुर्थ्यान्तु जाता पूर्ब्बमुमा सती ।
तस्मात् सा तत्र संपूज्या स्त्रीभिः सौभाग्यवृद्धये” ॥
इति संवत्सरकौमुदीधृतब्रह्मपुराणवचनम् ॥

**उमापतिः**, पुं, (उमायाः पतिः ।) शिवः । इत्यमरः ॥
(यथा, महाभारते १४ । संवर्त्तमरुत्तीये । ८ । १
“तप्यते तत्र भगवान् तपो नित्यमुमापतिः” ॥)

**उमावनं**, क्ली, (उमायाः प्रीतये वनमिव ।) पुर-
विशेषः । तत्पर्य्यायः । देवीकोटः २ कोटीवर्षम् ३
बाणपुरं ४ शोणितपुरं ५ । इति हेमचन्द्रः ॥

**उमासुतः**, पुं, (उमायाः सुतः पुत्त्रः ।) कार्त्तिकेयः ।
इति हेमचन्द्रः ॥

**उमेशः**, पुं, (उमाया ईशः पतिः ।) महादेवः । इति
हेमचन्द्रः ॥

**उम्बरः**, पुं, (उम् इत्यव्यक्तशब्दं वृणातीति । उम्
+ बृ + अच् ।) द्वारोद्ध्र्वकाष्ठम् । तत्पर्य्यायः ।
कृताविति कन् ।) मुक्तारचितहारः । इत्यमरः ॥

**उरगः**, पुं, । (उरसा गच्छतीति । उरसो लोपश्चेति
डप्रत्ययः सकारलोपश्च ।) सर्पः इत्यमरः ॥
(अङ्गुलीवोरगक्षता” । इति रघुः १ । २८ ।)
सीसकम् । इति राजनिर्घण्टः ॥

**उरगस्थानं**, क्ली, (उरगाणां सर्पाणां स्थानम् ।)
पातालम् । इति शब्दरत्नावली ॥

**उरगाशनः**, पुं, (उरगान् सर्पान् अश्नातीति । उरग
+ अश + ल्यु ।) गरुडपक्षी । इति जटाधरः ॥
(“स्वावासभागमुरगाशनकेतुयष्ट्या” ।
इति माघः । ५ । १३ ॥)

**उरङ्गः**, पुं, (उरसा गच्छतीति । उरस् + गम् + ड ।
निपातनात् सिद्धम् ।) उरङ्गमः । इत्यमरटीकायां
रायमुकुटः ॥

**उरङ्गमः**, पुं, स्त्री, (उरसा गच्छतीति । उरस् + गम्
+ खच् ।) सर्पः । इति व्याकरणम् ॥

**उरणः**, पुं, स्त्री, (ऋ + “अर्त्तेः क्युजुच्च” । ५ । १७ ।
इति उणादिसूत्रेण क्युच् उत्वं रपरत्वञ्च ।) मेषः ।
इत्यमरः ॥ (यथा, ऋग्वेदे २ । १४ । ४ । “यः
उरणं जघान नवचख्वांसं नवतिञ्च बाहून्” ।
तथा हरिवंशे २६ । २९ ।
“उत्सृष्टावरणौ दृष्ट्वा राजा गृह्यागतो गृहम् ॥)
मेघः । इति उणादिकोषः ॥

**उरणाक्षः**, पुं, (उरणस्य मेषस्याक्षीवाक्षि यस्य ।
तत्तुल्यपुष्पत्वात् तथात्वम् ।
अक्ष्णोदर्शनादित्यच् ॥)

**उररीकृतः**, त्रि, (उररी + कृ + क्त ।) अङ्गीकृतः ।
विस्तृतः । इत्यमरः ॥

**उरश्छदः** पुं, (उरो वक्षःस्थलं छाद्यतेऽनेनेति । उरस
+ छद + घ ।) कवचः । इत्यमरः ॥ (रामायणे
३ काण्डे । “काञ्चनोरश्छदाश्चेमे पिशाचवदनाः
खराः ॥)

**उरसिजः**, पुं, (उरसि वक्षःस्थले जायते । उरस् +
जन् + ड । सप्तम्या अलुक ।) स्त्रीस्तनः । इति
हलायुधः ॥ (यथा रामायणे ।)
“परिपस्पृशिरे चनं पीनैरुरसिजैर्मुहुः” ॥)

**उरसिलः**, त्रि, (प्रशस्तं अतिशयितं वा उरो वक्षो
यस्य । उरस् + इलच् ।) प्रशस्तवक्षोयुक्तः । इत्य-
मरः ॥

**उरस्कटः**, पुं, (उरः कट्यतेऽनेन । उरस् + कट् + क ।)
बालयज्ञोपवीतकम् । वुकवाछाड इति ख्यातम् ।
पञ्चवटश्च तत्पर्य्यायः । इति त्रिकाण्डशेषः ॥

**उरस्त्राणं**, क्ली, (उरसस्त्राणं भवत्यस्मात् ।) बक्ष-
स्त्राणकवचम् । तत्पर्य्यायः । नागोदरम् २ । इति
हारावली ॥

**उरस्यः**, त्रि, (उरसा निर्म्मितः । उरस् + यत् ।)
औरसजातः । इत्यमरः ॥

गृहावग्रहणी २ देहली ३ अम्बरः ४ उदुम्बरः ५ ।
इति हेमचन्द्रः ॥ (गन्धर्ब्बविशेषः । यथा, हरि-
वंशे पारिजातहरणे । १२६ । १४ ।
“उम्बरस्तुम्बुरुश्चैव जग्मुरन्ये च षड्गणान्” ॥)

**उरस्वान्**, [त्] त्रि, (प्रशस्तमतिशयितं वा उरो
वक्षःस्यलं यस्य । उरस् + मतुप् + मस्य वः ।)
प्रशस्तवक्षोयुक्तः । तत्पर्य्यायः ।
उरसिलः २ ।
इत्यमरः ॥

**उरी**, व्य, (वयतेरीक् बाहुलकात् सम्प्रसारणञ्च ।)
स्वीकारः । विस्तारः । इत्यमरः ॥
(यथा रघौ १५ ॥ ७० ।
“उरीकृत्यात्मनो देहं राज्यमस्मै न्यवेदयत्” ॥)

**उरीकृतः**, त्रि, (उरी + कृ + क्त ।) अङ्गीकृतः । वि-
स्तृतः । इत्यमरः ॥

**उरुः**, त्रि, (उर्णौति । ऊर्णू + “महति ह्रस्वश्च”

:४ । १ । ३२ । इति उणादिसूत्रेण कुः नुलोपो ह्रस्वश्च ।) महान् । वड इति भाषा । तत्पर्य्यायः । वड्रम् २ विपुलम् ३ विशङ्कटम् ४ पृथु ५ वृहत् ६ विशालम् ७ पृथुलम् ८ महत् ९ । इत्यमरः ॥ विस्तीर्णम् १० विकटम् ११ । इति जटाधरः ॥ (यथा, महाभारते १ । सौपर्णे । २१ । १८ । "विलीर्णं ददृशतुरम्बरप्रकाशं तेऽगाधं निधिमुरुमम्भसामनन्तम्" । बहुलम् । यथा, ऋग्वेदे १ । २९ "तुविजिता उरुक्षयां" । "उरुक्षयो बहुनिवासौ" इति भाष्यम् ॥)

**उरुकालः**, पुं, (उरुर्महान् कालः कृष्णवर्णः परिणामे यस्य । पाकवशादस्याभ्यन्तरं कृष्णवर्णं जायते अतस्तथात्वम् ।) महाकाललता । इति रत्नमाला ॥ माकाल फलेर गाछ इति भाषा । (अस्य पर्य्यायो यथा, -- "उरुकालो महाकालः किम्पाकः काकमर्द्दकः" । इति च तत्रैव । अस्य गुणाश्च महाकालशब्दे ज्ञेयाः ॥)

**उरुकालकः**, पुं, (उरुकाल + स्वार्थे कन् ।) महाकाललता । इति त्रिकाण्डशेषः ॥

**उरुगायः**, पुं, (उरुभिर्महद्भिर्गीयते यः । उरु + गै + मरटीकायां रमानाथः ॥ ("ललाटपट्टे नवनलिननालभङ्गतन्वीयमुर्णा परिस्फुरति" । इति कादम्बरी ॥)

**उर्द**, ङ परिमाणे । क्रीडायाम् । स्वादे । इति कविकल्पद्रमः ॥ (भ्वादिं-आत्मं-सकं-क्रीडायां, अकं-सेट् ।) ह्रस्वादीरेफमध्यः । दीर्घस्य नित्यत्वात् दीर्घादिरिति कश्चित् । ङ उर्द्दते कनकं वणिक् । इति दुर्गादासः ॥

**उर्द्रः**, पुं, (उर्द् + र ।) जलाखुः । इति शब्दरत्नावली ॥ उद्बिडाल इतिभाषा ।

**उर्व्व**, ई, हिंसे । इति कविकल्पद्रुमः ॥ (भ्वादिं-परं-सकं-सेट् ।) ह्रस्वादिः । र्व्यनच्तयीति दीर्घे ऊर्व्वति । क्विपि राच्छ्वोर्लेप इति वलीपे ऊः उरौ उरः । एवं सर्व्वत्र । ई ऊर्णः । इति दुर्गादासः ॥

**उर्व्वटः**, पुं, (उरुर्महान् अटोऽटनं यस्य ।) वत्सरः । इति त्रिकाण्डशेषः ॥

**उर्व्वरा**, स्त्री, (ऋच्छतीति । ऋ + अच् + टाप् । यद्वा उर्व्यते उर्व्व + घ । यद्वा उर्व्वं राति । उर्व + रा + क्विप् ।) सर्व्वशस्याठ्या भूमिः । (यथा अथर्व्ववेदे १० । ६ । ३३ । "यथा वीजमुर्व्वरायां कृष्टे कालेन रोहति" ।) भूमीमात्रम् । इति हेम-

क्षुत्त्रिट्त्रिकालगुणमारुतजैह्व्यशैश्न्यानस्मानपारजलधीनतितीर्य्य केचित् ॥
क्रोधस्य यान्ति विफलस्य वशं पदे गोर्मज्जन्ति दुश्चरपथश्च वृथोत्सृजन्ति ।
इति प्रगृणतां तेषां स्त्रियोऽत्यद्भुतदर्शनाः ।
दर्शयामास शुश्रूषां स्वर्चिताः कुर्व्वतीर्व्विभुः ॥
ते देवानुचरा दृष्ट्वा स्त्रियः श्रीरिव रूपिणीः ।
गन्धेन मुमुहुस्तासां रूपौदार्य्यहतश्रियः ॥
तानह देवदेवेशः प्रणतान् प्रहसन्निव ।
आसामेकतमां वृङ्ध्वं सवर्णां स्वर्गभूषणाम् ॥
ओमित्यादेशमादाय नत्वा तं सुरवन्दिनः ।
उर्व्वशीमप्सरःश्रेष्ठां पुरस्कृत्य दिवं ययुः ॥
इन्द्रायानम्य सदसि शृण्वतां त्रिदिवौकसाम् ।
ऊचुर्नारायणबलं शक्रस्तत्रास विस्मितः" ॥
पुराणान्तरेषु ऋषिप्रवरोऽयं नारायणो निजोरुदेशं निर्भिद्य अप्सरःश्रेष्ठाभेनामुर्व्वशीं देवगणेभ्यो ददौ इति दृश्यते ॥

इयं हि चन्द्रवंशावतंसे बुधपुत्त्रे पुरूरवसि राजनि बद्धप्रणया बहुकालं तेन सह रेमे । एतत्कथा उक्ता हरिवंशे २६ अध्याये ॥ यथा,
जनमेजय उवाच ।
"गन्धर्व्वी उर्व्वशी देवी राजानं मानुषं कथम् ॥
देवानुत्सृज्य सम्प्राप्ता तन्मे ब्रूहि बहुश्रुत ॥
वशम्पायन उवाच ।
ब्रह्मशापाभिभूता सा मानुषं समपद्यत ।
ऐलन्तु सा वरारोहा समयात्समुपस्थिता ॥
आत्मनः शापमोक्षार्थं समयं सा चकार ह ।
अनग्नदर्शनञ्चैव सकामायाश्च मैथुनम् ॥
द्वौ मेषौ शयनाभ्यासे सदा बद्धौ च तिष्ठतः ।
घृतमात्रा तथाहारः कालमेकन्तु पार्थिव ॥
यद्येष समयो राजन् यावत्कालञ्च ते दृढः ।
तावत्कालन्तु वत्स्यामि कृतः समय एष नः ॥
तस्यास्तं समयं सर्व्वं स राजा समपालयत् ।

घञ् ।) श्रीकृष्णः । (यथा, श्रीभागवते २ । ३ । २० ।
“जिह्वा सती दार्द्दुरिकेव सूत
न चोपगायत्युरुगायगाथाः” ।
विस्तीर्णा गतिः । यथा, कटोपनिषादे । २ । ११ ।
“स्तोममहदुरुगायं प्रतिष्ठान् दृष्ट्वा धृत्वा धीरो
नचिकेतोऽत्यप्राक्षीः” । उरुगायं विस्तीर्णां गतिं ।
इति भाष्यम् ।)

**उरुरी**, व्य, उररी । इति भरतः द्विरूपकोषश्च ॥

**उरुवुकः**, पुं, एरण्डवृक्षः । इत्यमरटीकायां राय-
मुकुटः ॥

**उरुवूकः**, पुं, (उरुं महान्तं वायतीति । उरु + वै +
उलकादयश्चेति ऊकः ।) एरण्डवृक्षः । इत्यमरः ॥
रक्तैरण्डः । इति राजनिर्घण्टः ॥
(“लघु भिन्नशकृत्तिक्तं
लाङ्गुलक्युरुवूकयोः” ।
इति चरके सूत्रस्थाने २७ अध्यायः ॥)

**उरुव्यचाः**, [स्] पुं, (उरं महान्तं विचतीति ।
इरु + व्यच् + अस् ।) राक्षसः ।
इत्युणादिकोषः ॥
(अतिव्यापके, त्रि, यथा ऋग्वेदे ३ । ५० । १ ओ-
रुव्यचाः पृणतामेभिरन्नः ॥)

**उरोजः**, पुं, (उरसि वक्षःस्थले जायते । उरस् ।
जन् + ड ।) स्तनः । इति हेमचन्द्रः ॥

**उर्ज्जितं**, त्रि, (उर्ज्ज + क्त ।) वर्द्धितम् । इति श्री-
भागवतम् ॥ (प्रख्यातम् । यथा, ग्घुः ७ । ३८ ।
चन्द्रः ॥ (अप्सरोमेदः । यथा काशीखण्डे ।
“कलानिधिर्गुणनिधिः कर्पूरतिलकोर्व्वरा” ॥)

**उर्व्वशी**, स्त्री, (उरून् महतोऽपि अश्नुते व्याप्नोति
वशीकरोतीति यावत् । यद्वा ऊरुं नारायणस्य
महर्षेरूरुप्रदेशं अनुते योनित्वेन व्याप्नोतीति ।
उरु + अश् + क । गौरादित्वात् ङीष् ।) स्वना-
मख्यातस्वर्गवेश्या । इत्यमरः ॥ तस्या उत्पत्तिर्ह
रिवंशे । नारायणोरुं निर्म्मिद्य सम्भूता वरवर्णिनी ।
मनीषादित्वात् ह्रस्वादिः ॥
(अस्या उत्पत्तिकथा उक्ता भागवते ११ । ४ । ६-१६ ।
यथा, --
“धर्म्मस्य दक्षदुहितर्य्यजनिष्ट मूर्त्त्यां
नारायणो नर ऋषिप्रवरः प्रशान्तः ।
नैष्कर्म्म्यलक्षणमुवाच चचार कर्म्म
योऽद्यापि चास्त ऋषिवर्य्यनिषेविताङ्घ्रिः ॥
इन्द्रो विशङ्क्य मम धाम जिघृक्षतीति
कामं न्ययुङ्क्त सगणं स वदर्य्युपाख्यम् ।
गत्वाप्सरोगणवसन्तसुमन्दवातैः
स्त्रीप्रेक्षणेषुभिरविध्यदतन्मतिज्ञः ॥
विज्ञाय शक्रकृतमक्रममादिदेवः
प्राह प्रहस्य गतविस्मय एजमानान् ।
मा भैष्ट भो मदनमारुतदेवबध्वो
गृह्णीत नो बलिमशून्यमिमं कुरुध्वम् ॥
इत्थं ब्रुवत्यभयदे नरदेव ! देवाः
सव्रीडनम्रशिरसः सघृणं तमूचुः ।
नैतत् विभो त्वयि परे विकृते विचित्रं
स्वारामधीरनिकंरानतपादपद्मे ॥
त्वां सेवतां सुरकृता बहवोऽन्तरायाः
स्वौको विलङ्घ्य परमं व्रजतां पदं ते ।
एवं सा वसते तत्र पुरूरवसि भाविनौ ॥
वर्षाण्येकोनषष्टिन्तु तद्भक्ता शापमोहिता ।
उर्व्वश्यां मानुषस्थायां
गन्धर्व्वाश्चिन्तयान्विताः ॥
गन्धर्व्वा ऊचुः ।
चिन्तयध्वं महाभागा यथा सा तु वराङ्गना ।
समागच्छेत् पुनर्द्देवानुर्व्वशी स्वर्गभूषणम् ॥
ततो विश्वावसुर्नाम तत्राह वदतां वरः ।
मया तु समयस्ताभ्यां क्रियमाणः श्रुतः पुरा ॥
व्युत्क्रान्तसमयं सा वै राजानं त्यक्ष्यते यथा ।
तदहं वेद्म्यशेषेण यथा भेत्स्यत्यसौ नृपः ॥
ससहायो गमिष्यामि युष्माकं कार्य्यसिद्धये ।
एवमुक्त्वा गतस्तत्र प्रतिष्ठानं महायशाः ॥
निशायामथ चागम्य मेषमेकं जहार सः ।
मातृवत् वर्त्तते सा तु मेषयोश्चारुहासिनी ॥
गन्धर्व्वागमनं ज्ञात्वा शापान्तञ्च यशस्विनी ।
राजानमब्रवीत्तत्र पुत्त्रो मे ह्रियतेति सा ॥
एवमुक्तो विनिश्चित्य नग्नो नैवोदतिष्ठत ।
नग्नं मां द्रक्ष्यते देवी समयो वितथो भवेत् ॥
तवो भूयस्तु गन्धर्व्वा द्वितीयं मेषमाददः ।

“बाणाक्षरैरेव पुरस्परम्य

नामोर्ज्जितं चापभृतः शशंसुः” ।

उर्ज्जितं प्रख्यातम् इति तट्टीका ॥)

**उर्णनाभः**, पुं, (उर्णेव सूत्रं नामौ गर्भे यस्य । समामे

ह्रस्वः ।) मर्क्वटकः । इति

शब्दरत्नावली ॥ माक-

डसा इति भाषा ॥

**उर्णा**, स्त्री, मेषादिलोम । भ्रुद्वयमध्यावर्त्तः । इत्य-

नान्यम्य वर्हिषि बलीन् ददतः स्वभागान् ।

धत्ते पदं त्वमविता यदि विघ्नमूर्द्ध्नि ॥

:द्वितीये तु गते मेषे ऐलं देव्यब्रवीदिदम् ॥

पुत्त्रो मे ह्रियते राजन्ननाथाया इव प्रभो ।
एवमुक्तस्तदोत्थाय नग्नो राजा प्रधावितः ॥
मेषयोः पदमन्विच्छन् गन्धर्व्वैर्विद्युदप्यथ ।
उत्पादिता सुमहती ययौ तद्भवनं महत् ॥
प्रकाशितं वै सहसा ततो नग्नमवैक्षत ।
नग्नं दृष्ट्वा तिरोभूता साप्सराः कामचारिणी ॥
तिरोभूतान्तु तां दृष्ट्वा गन्धर्व्वा ह्यगमन्दिवम् ॥
उत्सृष्टावुरणौ दृष्ट्वा राजा गृह्यागतो गृहम् ।
अपश्यन्नुर्व्वशीं तत्र विललाप सुदुःखितः ॥
चचार पृथिवीञ्चापि मार्गमाण इतस्ततः ।
अथापश्यत् स तां राजा कुरुक्षेत्रे महाबलः ॥
प्लक्षतीर्थे पुष्करिण्यां हैमवत्यां समाप्लुताम् ।
क्रीडन्तीमप्सरोभिश्च पञ्चभिः सह शोभनाम् ॥
तां क्रीडन्तीं ततो दृष्ट्वा विललाप सुदुःखितः ।
सा चापि तत्र तं दृष्ट्वा राजानमविदूरतः ॥
उर्व्वशी ताः सखीः प्राह स एष पुरुषोत्तमः ।
यस्मिन्नहमवात्सं वै दर्शयामास तं नृपम् ॥
समाविग्नास्तु ताः सर्व्वाः पुनरेव नराधिप ।
जायेहो तिष्ठ मनसा घोरे वचसि तिष्ठ ह ॥
एवमादीनि सूक्तानि परस्परमभाषताम् ।
उर्व्वशी चाब्रवीदैलं सगर्भाहं त्वया विभो ॥
संवत्सरात् कुमारास्ते भविष्यन्ति न संशयः ।
निशामेकाञ्च नृपते निर्व्वत्स्यसि मया सह ॥
हृष्टो जगाम राजाथ स्वपुरं सुमहायशाः ।
गते संवत्सरे भूय उर्व्वशी पुनरागमत् ॥
उषितश्च तया सार्द्धमेकरात्रं महायशाः” ॥ * ॥)
(नदीभेदः । उर्व्वशीतीर्थः । यथा, महाभारते १३ ।
आङ्गिरसतीर्थयात्रायां २५ । ४४ ।
“उर्व्वशीं कृत्तिकायोगे गत्वा चैव समाहितः ।

कपः सम्प्रसारणञ्च ।) विस्तीर्णा लता । सा तु
त्रपुषीद्राक्षाताम्बूल्यादिः । तत्पर्य्यायः । वीरुत् २
गुल्मिनी ३ । इत्यमरः ॥ प्रताना ४ । इति जटा-
धरः ॥ प्रतानिनी ५ वीरुधा ६ वरुत् ७ । इति शब्द-
रत्नावली ॥ मेदिनीमते क्लीवमपि । तृणविशेषः ।
इति विश्वमेदिन्यौ ॥ उलुखड इति भाषा ॥

**उलिन्दः**, पुं, (वल + किन्दः सम्प्रसारणञ्च ।) देश-
विशेषः । इत्युणादिकोषः ॥

**उलुपः**, पुं, क्ली, गुल्मिनी । शाखापत्रप्रचययुक्तलता ।
इत्यमरटीकासारसुन्दरी काचिन्मेदिनी च ॥

**उलुपः**, पुं, तृणविशेषः । इति केचिद्विश्वमेदिन्यौ ॥
उलुखड इति भाषा ।

**उलुपी**, [न्] पुं, (उलुपैवाकृतिर्विद्यते यस्य ।
उलुप + इनि ।) शिशुकः । इत्यमरः ॥ तदाकृ-
तिमत्स्यः । इति शब्दरत्नावली ॥

**उलूकं**, क्ली, (वल + “उलूकादयश्च” । ४ । ४१ । इति
उणादिसूत्रेण निपातनात् ऊकः सम्प्रसारणञ्च ।)
तृणविशेषः । उलुखड इति भाषा । तत्पर्य्यायः ।
सूच्यग्रः २ स्थूलकः ३ दर्भ्मः ४ जूर्णाख्यः ५ खरच्छदः ६

र्दिष्टत्वात् । शुकी शुकानजनयत् उलूकप्रत्युलूक-
कानिति मात्स्योक्तेः । शुच्यौदकान् शुचिरेव शुची
सा औदकान् जलजान् पक्षिगणान् व्यजायत ।
सुग्रीवी तु अश्वादीन् व्यजायत इत्यन्वयः । ता-
म्राया दंशः परिकीर्त्तित इत्युपसंहारः” । इति
तट्टीकायां श्रीधरस्वामी ॥

**उलूखलं**, क्ली, (ऊर्द्ध्वं खमुलूखम् । पृषोदरादित्वात्
साधुः । उलूखं लाति गृह्णातीति । आतोनुपेति
कः ।) उदूखलम् । इत्यमरः ॥ (यथा, मनुः
३ । ८८ ।
“वनस्पतिभ्य इत्येवं मुषलोलूखले हरेत्” ।
(“श्टते पयसि मृद्गीयादापोथ्योलूखले ततः” ।
इति चरके चिकित्सास्थाने दशमेऽध्याये ॥) गुग्-
गुलुः । इति भरतो द्विरूपकोषश्च ॥

**उलूखलकं**, क्ली, (उलूखल + स्वार्थेकः ।) गुग्गलुः ।
इत्यमरः ॥ (उलूखलं कायति शब्दयति यः इति
व्युत्पत्त्या वाच्यलिङ्गः । विद्वान् । यथा, ऋग्वेदे
१ । २८ । ५ ।
“यच्चिद्धि त्वं गृहे गृह उलूखलक युज्यसे” ।
“हे उलूखलक हे विद्वन्” इति भाष्यम् ।)

**उलूतः**, पुं, (उलतिं हिनस्ति यः । उल् + बाहुलकात् ।

लौहित्ये विधिवत् स्नात्वा पुण्डरीकफलं लभेत्” ॥)

**उर्व्वशीरमणः**, पुं, (उर्व्वश्याः स्वर्व्वेश्याया रमणः प्रियः ।)

उर्व्वशीपतिः । स तु चन्द्रवंशीयराजविशेषः । तत्पर्य्यायः । पुरूरवाः २ बौधः ३ ऐलः ४ । इति हेमचन्द्रः ॥ (अस्य विवरणन्तु उर्व्वशीशब्दे- द्रष्टव्यम् ॥)

**उर्व्वशीवल्लभः** पुं, (उर्व्वश्याः वल्लभः पतिः ।) ऐल- नृपतिः । इति त्रिकाण्डशेषः ॥

**उर्व्वारुः**, पुं, (उरु + ऋ + उण् ।) इर्व्वारुः । इति भरतो द्विरूपकोषश्च ॥ काँकुड इति भाषा । (कर्कटीशब्देऽस्य गुणादयो ज्ञातव्याः ॥)

**उर्व्वी**, स्त्री, (उर्णौति इति । ऊर्णूञ् + “महति ह्रस्व- श्च” । १ । ३२ । उणादिसूत्रेण कुः नुलोपो ह्रस्वश्च । बोतो गुणवचनादिति ङीष् ।) पृथिवी । इत्य- मरः ॥ (“हिरण्मयोर्व्वीरुहवल्लितन्तुभिः” । इति माघे १ । ७ । तथा, रघुः । १ । ३० । “अनन्यशासनामुर्व्वीं शशासैकपुरीमिव” ॥)

**उल** दाहे । सौत्रधातुरयम् । इति कविकल्पद्रुमः ॥ (परं-सकं-सेट् ।) उल्का । उलपम् । इति दुर्गा- दासः ॥

**उलपः**, पुं, (वलतीति । वल + “विटपपिष्टप- विशिपोलपाः” । ३ । १०५ । इति उणादिसूत्रेण उलपः ७ उलुपः ८ । इति रत्नमालादयः ॥

**उलूकः**, पुं, (उचतीति, उच समवाये, उलूकादय- इति साधु, यद्वा वलते, उलूकादित्वात् वलेः सम्प्र- सारणम् ऊकश्च ।) पेचकपक्षी । इत्यमरः ॥ तत्- पर्य्यायः । तामसः २ घूकः ३ दिवान्धः ४ कौ- शिकः ५ कुशिः ६ नक्तञ्चरः ७ निशाटः ८ का- कारिः ९ घोरदर्शनः १० । इति राजनिर्घण्टः ॥ (“त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः” । इति माघे ११ । ६४ । तथा, मनुः ११ । १३१ । “श्वगोधोलूककाकांश्च शूद्रहत्याव्रतञ्चरेत्” ॥) इन्द्रः । (“उलूकाविन्द्रपेचकौ” । इत्युणादिवृत्तिः । ४ । ४१ ।) भारतयोधी । सच शकुनिपुत्त्रः । इति हेमचन्द्रः ॥ (यथा, महाभारते । “आहूयोपह्वरे राजन्नुलूकमिदमब्रवीत् । उलूक गच्छ कैतव्य ! पाण्डवान् सहसोमकान्” ॥ विश्वामित्रपुत्त्रः । यथा, भारते १३ । ४ । ५१ । “उलूकोऽथ मुद्गलश्च तथर्षिः सैन्धवायनः” ।) उलूकदेशवासिनि त्रि । यथा, महाभारते २ । २७ । ११ । “उलूकानुत्तरांश्चैव तांश्च राज्ञः समानयत्” ॥)

**उलूकी**, स्त्री, ताम्रायाः सुता शुकी तस्याः कन्या । ऊतच् ।) अजगरसर्पः । इति त्रिकाण्डशेषः ॥

**उलूपी**, [न्] पुं, (उ विस्मयजनकं रूपमस्यास्तीति । इनिः । रलयोरैक्यम् ।) शिशुकः । इत्यमरः ॥ उपलैति ख्यातः अतिचञ्चलमत्स्यः । शिशु- माराकृतिर्मत्स्यभेदः । इति कलिङ्गादयः ॥ शोशु इति ख्यातः मत्स्यविशेषः । इत्यन्ये ॥ भाँगाल इति ख्यातः । इत्येके ॥ शिशुमारएव उच्यते । इति सर्व्वस्वम् ॥ तथा च रत्नकोषादौ ॥ “चुलुपी शिशुमारः स्यादुलूपी शिशुकस्तथा” । इत्यमर- टीकायां भरतः ॥

**उलूपी**, स्त्री, कौरव्यनामनाग-कन्या सा तु अर्ज्जुन- पत्नी । (तत्कथा महाभारते आदिपर्ब्बणि । २१५ अध्याये उक्ता । यथा, --

उलूप्युवाच ।
“ऐरावतकुले जातः कौरव्यो नाम पन्नगः ।
तस्यास्मि दुहिता राजन् उलूपी नाम पन्नगी ॥
साहं त्वामभिसेकार्थमवतीर्णा समुद्रगां ।
दृष्ट्वैव पुरुषव्याघ्र कन्दर्पेणाभिमूर्च्छिता ॥
तां मामनङ्गग्लपितां त्वत्कृते कुरुनन्दन ! ।
अनन्यां नन्दयस्वाद्य प्रदानेनात्मनोऽनघ” ! ॥
अर्ज्जुन उवाच ।
ब्रह्मचर्य्यमिदं भद्रे ! मम द्वादशवार्षिकम् ।

| | | |
|---|---|---|
| | यथा, -- विष्णुपुराणे १ अंशे २१ । १४ -- १६ ।<br>“षट्सुतास्तु महासत्त्वास्ताम्रायाः परिकीर्त्तिताः ।<br>शुकी श्येनी च भासी च सुग्रीवी-शुचि-गृध्रिकाः ॥<br>शुकी शुकानजनयत् उलूकी प्रत्युलूककान् ।<br>श्येनी श्येनांस्तथा भासी भासान् गृध्रांश्च गृध्यपि ॥<br>शुच्यौदकान् पक्षिगणान् सुग्रीवी तु व्यजायत ।<br>अश्वान् उष्ट्रान् गर्द्दभांश्च ताम्रावंशः प्रकीर्त्तितः ॥<br>“ताम्राया वंशमाह षडिति त्रिभिः । सुताः कन्याः<br>ता एवाह शुकीति । सुग्रीवी च शुचिश्च गृध्रिका च<br>ताः । उलूकं प्रत्युलूककान् तत्प्रतिपक्षान् काकांश्च ।<br>उलूकीति पाठेऽपि उलूकीं प्रत्युलूककांश्च सैवा-<br>जनयदित्यर्थः न पुनरुलूकीसंज्ञा अन्या अनि- | धर्म्मराजेन चादिष्टं नाहमस्मि स्वयंवशः ॥<br>तव चापि प्रियं कर्त्तुमिच्छामि जलचारिणि ! ।<br>अनृतं नोक्तपूर्ब्बञ्च मया किञ्चन कर्हिचित् ।<br>कथञ्च नानृतं मे स्यात् तव परिप्रियं मवेत् ॥<br>न च पीड्येत मे धर्म्मस्तथा कुर्य्यां भुजङ्गमि ! ॥<br>उलूप्युवाच ।<br>जानाम्यहं पाण्डवेय ! यथा चरसि भेदिनीम् ।<br>यथा च ते ब्रह्मचर्य्यं इदमादिष्टवान् गुरुः ॥<br>परस्परं वर्त्तमानां द्रुपदास्यात्मजां प्रति । |

:यो नोऽनुप्रविशेन्मोहात् स वै द्वादशवार्षिकम् ॥

वने चरेत् ब्रह्मचर्य्यमिति वः समयः कृतः ।
तदिदं द्रौपदीहेतोरन्योन्यस्य प्रवासनम् ॥
कृतवांस्तत्र धर्म्मार्थमत्र धर्म्मो न दुष्यति ।
परित्राणञ्च कर्त्तव्यमार्त्तानां पृथुलोचन ! ॥
कृत्वा मम परित्राणं तव धर्म्मो न लुप्यते ।
यदि वाप्यस्य धर्म्मस्य सूक्ष्मोऽपि स्यात् व्यतिक्रमः ॥
स च ते धर्म्म एव स्यात् दत्त्वा प्राणान् ममार्ज्जुन ! ।
भक्ताञ्च भज मां पार्थ ! सतामेतन्मतं प्रभो ! ॥
न करिष्यसि चेदेवं मृतां मामुपधारय ।
प्राणदानान्महाबाहो चर धर्म्ममनुत्तमम् ॥
शरणञ्च प्रपन्नास्मि त्वामद्य पुरुषोत्तम ! ।
दोनाननाथान् कौन्तेय ! परिरक्षसि नित्यशः ॥
साहं शरणमभ्येमि रोरवीमि च दुःखिता ।
याचे त्वाञ्चाभिकामाहं तस्मात्कुरु मम प्रियम् ॥
स त्वमात्मप्रदानेन सकामां कर्त्तुमर्हसि ॥
वैशम्पायन उवाच ।
एवमुक्तस्तु कौन्तेयः पन्नगेश्वरकन्यया ।
कृतवांस्तत्तथा सर्व्वं धर्म्ममुद्दिश्य कारणम् ॥

ध्याये । तद्यथा, --
“दिविभुक्तशुभफलानांपततांरूपाणिवानितान्युल्काः ।
धिष्णोल्काशनिविद्युत्ताराइतिपञ्चधा भिन्नाः ॥ १ ॥
उल्का पक्षेण फलं तद्वद्धिष्णाशनिस्त्रिभिः पक्षैः ।
विद्युदहोभिः षड्भिस्तद्वत्तारा विपाचयति ॥ २ ॥
तारा फलपादकरी फलार्द्धदात्री प्रकीर्त्तिता धिष्णा ।
तिस्रः सम्पूर्णफला विद्युदथोल्काशनिश्चेति ॥ ३ ॥
अशनिःस्वनेनमहतानृगजाश्वमृगाश्मवेश्मतरुपशुषु ।
निपतति विदारयति धरातलं ॥ चक्रसंस्थाना ॥ ४ ॥
विद्युत्सत्त्वत्रासं जनयन्ती तटतटस्वना सहसा ।
कुटिलविशालानिपततिजीवेन्धनराशिषुज्वलिता ५
धिष्णाकृशाल्पपुच्छाधनूंषिदशदृश्यतेऽन्तराभ्यधिकं ।
ज्वलिताङ्गारनिकाशा द्वौहस्तौ सा प्रमाणेन ॥ ६ ॥
तारा हस्थं दीर्घा शुक्ला ताम्राब्जतन्तुरूपा वा ।
तिर्य्यगधश्चोद्‌र्ध्वंवा याति वियत्युह्यमानेव ॥ ७ ॥
उल्काशिरसिविशालानिपतन्ती वर्द्धतेप्रतनुपुच्छा ।
दीर्घा भवति च पुरुषं भेदा बहवो भवन्त्यस्याः ॥ ८ ॥
प्रेतप्रहरणखरकरभनक्रकपिदंष्ट्रिलाङ्गलमृगाभाः ।
गोधाहिधूमरूपाः पापा या चोभयशिरस्काः ॥ ९ ॥
ध्वजझषकरिगिरिकमलेन्दुतुरगसन्तप्तरजतहंसा-
भाः । श्रीवत्सवज्रशङ्खस्वस्तिकरूपाः शिवसुभिक्षाः ॥ १० ॥
अम्बरमध्याद्बह्व्यो निपतन्त्यो राजराष्ट्रनाशाय ।
सम्भमतिगगनोपरिविभ्रममाख्याति लोकस्य ॥ ११ ॥
संस्पृशती चन्द्रार्कौ तद्विसृता वा सभूप्रकम्पा च ।
परचक्रागमनृपबधदुर्भिक्षावृष्टिभयजननी ॥ १२ ॥
पौरेतरघ्नमुल्कापसव्यकरणं दिवाकरहिंमाश्वोः ।
उल्का शुभदापुरतो दिवाकरविनिःसृता यातुः ॥ १३ ॥
शुक्ला रक्ता पीता कृष्णा चोल्का द्विजादिवर्णघ्नी ।
क्रमशश्चैतान् हन्त्युमूद्र्ध्वोँरःपार्श्वपुच्छस्थाः ॥ १४ ॥
हन्त्यधोमुखी नृपान्
ब्राह्मणानथोद्‌र्ध्वगा ॥ २५ ॥
वर्हिपुच्छरूपिणी लोकसंक्षयावहा ।
सर्पवत् प्रसर्पिणी योषितामनिष्टदा ॥ २६ ॥
हन्ति मण्डलापुरं छत्रवत्पुरोहितम् ।
वंशगुल्मवत् स्थिता राष्ट्रदोषकारिणी ॥ २७ ॥
व्यालसूकरोपमा विस्फुलिङ्गमालिनी ।
खण्डशोऽथ वा गता सस्वना च पापदा ॥ २८ ॥
सुरपतिचापप्रतिमा राज्यं नभसि विलीना जल-
दान् हन्ति । पवनविलोमा कुटिलं याता न भवति
शस्ता विनिवृत्ता वां ॥ २९ ॥
अभिभवति यतः पुरं बलं वा भवति भयं तत-
एव पार्थिवस्य । निपतति च यया दिशा प्रदीप्ता
जयति रिपूनचिरात् तया प्रयातः” ॥ ३० ॥)

**उल्कामुखी**, स्त्री, (उल्का अग्निशिखावत् तेजः मुखे यस्याः ।) जन्तुविशेषः । खेँकश्यालि इति भाषा । तत्पर्य्यायः । शृगालिका २ लोमालिका ३ दीप्तजिह्वा ४ किखिः ५ । इति त्रिकाण्ड्शेषः ॥

**उल्मुकं**, क्ली, (ओषतीति । उष दाहे + उल्मुकदर्वीति निपातनात् धातोः षस्य लः मुकप्रत्ययश्च ।) अ-ङ्गारः । इत्यमरः ॥ (यथा, शतपथब्राह्मणे ६ । २ । ७

स नागभवने रात्रिं तामुषित्वा
प्रतापवान् ।
उदितेऽभ्युत्थितः सूर्य्ये कौरव्यस्य
निवेशनात् ॥
आगतस्तु पुनस्तत्र गङ्गाद्वारं तया सह
।
परित्यज्य गता साध्वी उलूपी
निजमन्दिरम् ॥
दत्त्वा वरमजेयत्वं जले सर्व्वत्र
भारत ! ।
साध्या जलचराः सर्व्वे भविष्यन्ति न
संशयः” ॥ * ॥)

**उल्का**, स्त्री, (ओषतीति । उष दाहे
“शुकवल्कोल्का”

३ । ४२ । इति उणादिसूत्रेण क-
प्रत्ययात् साधुः ।)
तेजःपुञ्जः । इत्यमरटीकायां भरतः ॥
अग्निशिखा ॥
अग्निः । इत्युणादिकोषः ॥ (यथा,
“तुलाराशिं गते भानौ अमावस्यां
नराधिपः ।
स्नात्वा देवान् पितॄन् भक्त्या
संपूज्याथ प्रणम्य च ॥
कृत्वा तु पार्ब्बणश्राद्धं
दधिक्षीरगुडादिभिः ।
ततोऽपराह्णसमये घोषयेन्नगरे नृपः ॥
लक्ष्मीः संपूज्यतां
लोकाउल्काभिश्चापि वेष्ट्यताम्” ।
इति तिथितत्त्वे अमावस्याप्रकरणे ।)
आकाशात्
पतिताग्निः । इति रायमुकुटादयः ॥
(“तञ्चेद्वायौ सरति
सरलस्कन्धसङ्घट्टजन्मा
बाधेतोल्काक्षपितचमरीबालभारो
दवाग्निः” ।
इति मेघदूते पूर्ब्बमेघे ५४ श्लोकः ।
“उल्कानिर्घातकेतूंश्च
ज्योतींष्युच्चावचानि च”

उत्तरदिगादिपतिता विप्रादीनामनिष्टदा रूक्षा ।
ऋज्वी स्निग्धा खण्डा नीचोपगता च तद्वृद्ध्यै ॥
१५ ॥
श्यामा वारुणनीलासृग्दहना सितभस्मनिभारूक्षा ।
सन्ध्या दिनजा वक्रा दलिता च परागमभयाय ॥
१६ ॥
नक्षत्रग्रहघाते तद्भक्तीनां क्षयाय निर्दिष्टा ।
उदये घ्नती रवीन्दू पौरेतरमृत्यवेऽस्ते वा ॥ १७ ॥
भाग्यादित्यधनिष्ठामूलेषूल्काहतेषु युवतीनाम् ।
विप्रक्षत्रिपीडा पुष्यानिलविष्णुदेवेषु ॥ १८ ॥
ध्रुवसौम्येषु नृपाणां उग्रेषु सदारुणेषौचराणां ।
क्षिप्रेषु कलाविदुषां पीडा साधारणे च हते ॥ १९ ॥
कुर्व्वन्त्येताः पतिता देवप्रतिमासु राजराष्ट्रभयम् ।
शक्रोपरि नृपतीनां गृहेषुतत्स्वामिनां पीडाम् ॥ २०
॥
आशाग्रहोपघाते तद्देश्यानां खले कृषिरतानाम् ।
चैत्यतरौ सम्पतिता सत्कृतपीडां करोत्युल्का ॥
२१ ॥
द्वारिपुरस्यपुरक्षयमथेन्द्रकीले जनक्षयोऽभिहितः ।
ब्रह्मायतने, विप्रान् विनिहन्याद्गोमिनोगोष्ठे ॥ २२ ॥
क्ष्वेडास्फोटितवादितगीतोत्क्रुष्टस्वनाभवन्तियदा ।
उल्कानिपातसमये भयाय राष्ट्रस्य सनृपस्य ॥ २३
॥
यस्याश्चिरं तिष्ठति स्वेऽनुषङ्गो दण्डाकृतिः सा नृप-
तेर्भयाय । या चोह्यते तन्तुधृतेव स्वस्था या वा
महेन्द्रध्वजतुल्यरूपा ॥ २४ ॥
श्रेष्ठिनः प्रतीपगा तिर्य्यगा नृपाङ्गनाः ।

“अन्वाहार्य्यपचनादुल्मुकमादाय” ।
वृष्णिवंशीय-
राजा । यथा, महाभारते २ ।
निमन्त्रितराजा-
गमने ३४ । १६ ।
“उल्मुको निशठश्चैव
वीरश्चाङ्गावहस्तथा ।
वृष्णयो निखिलाश्चान्ये
समाजग्मुर्महारथाः” ॥)

**उल्लङ्घनं**, क्ली, (उत् + लघि + ल्युट् ।)
अतिक्रमणम् ।

इति पुराणम् ॥ डिङ्गान इति भाषा ।
(यथा,
कुमारे ३ सर्गे २५ श्लोकस्य टीकायां
मल्लिनाथः ।
“समयोल्लङ्घनेन पराङ्गनासङ्गतिं प्रवृत्ते
सति” ॥)

**उल्ललः**, त्रि, (उत् + लल् + अच् ।)
बहुरोमयुक्तः ।

तत्पर्य्यायः । रोमशः २ । इति
हारावली ॥

**उल्ललितः**, त्रि, (उत् + लल् + क्त ।) तरलितः
।

आन्दोलितः । इति जटाधरः ॥

**उल्लसनकं**, क्ली, (उल्लसन + स्वार्थ कन् ।)
रोमाञ्चः ।

इति हेमचन्द्रः ॥

**उल्लाघः**, त्रि, (उत् + लाघ् + गत्यर्थेति क्त ।
निपात-

नात् सिद्धम् ।) गदान्निर्गतः । नीरोगः ।
इत्यमरः ॥
शुचिः । दक्षः । कृष्णम् ।
मरीचमितियावत् ।
इति विश्वमेदिन्यौ ॥ कृष्णमित्यत्र
हृष्टभिति
कस्याञ्चिन्मेदिन्यां पाठः ॥

**उल्लापः**, पुं, (उत् + लप् + घञ् ।)
शोकरोगादिना

इति मनुः । १ । ३८ ।) अस्या
लक्षणम् ।
“वृहच्छिखा च सूक्ष्माग्रा
रक्तनीलशिखोज्ज्वला ।
पौरुषीयप्रमाणेन उल्का नानाविधा
स्मृता” ॥
इति काश्यपः ॥
(अस्याः कारणमाह गर्गसंहितायाम् ।
“अतिलोभादसत्याद्वा
नास्तिक्याद्वाप्यधर्म्मतः ।
नरापचारात् नियतमुपसर्गः प्रवर्त्तते
॥
ततोऽपराधात् नियतमपवर्जन्ति
देवताः ।
ताः सृजन्त्यद्भुतांस्तांस्तु
दिव्यनाभसभूमिजान् ॥
तएव त्रिविधा लोके उत्पाता
देवनिर्म्मिताः ।
विचरन्ति विनाशाय रूपैः
संबोधयन्ति च” ॥
अस्या लक्षणादिकञ्चोक्तं
वृहत्संहितायां ३३ अ-

ध्वनिविकारः । तत्पर्य्यायः ।
काकुवाक् २ । इति
हेमचन्द्रः ॥ (यथाह, भर्तृहरिः । ३ ।
६ ।
“खलोल्लापाः सोढाः कथमपि
तदाराधनपरैः ॥”)

**उल्लासः**, पुं, (उत् + लस् + घञ् ।)
ग्रन्थपरिच्छेदः ।

इति भूरिप्रयोगः ॥ यथा काव्यप्रकाशे
प्रथम-
उल्लास इति प्रयोगः । वृद्धिः । इति
श्रीभाग-
वतम् ॥ आह्लादः । प्रकाशः ॥
(“निपतन्ति कन्दलदलोल्लासाः
पयोविन्दवः” ।
इति अमरुशतके । ४८ ।)

**उल्लिखितः**, त्रि, (उत् + लिख + क्त ।)
उत्कीर्णः ।

तनूकृतः । इति मेदिनी ॥ चित्रितः ।
इति शब्द-

:रत्नावली ॥ ऊद्ध्वे लिखितः ॥ (यथा, रघुः । ६३२ ।)

"त्वष्ट्रेव यन्त्रोल्लिखितो विभाति" ॥)

**उल्लेखः**, पुं, (उत् + लिख् + घञ् ।) उच्चारणम् । कथ-

नम् । इति स्मार्त्ताः ॥ (अलङ्कारभेदः ॥ तल्लक्षणं

यथा, साहित्यदर्पणे १० परिच्छेदे ।

"क्वचिद्भेदाद्गृहीतॄणां विषयाणां तथा क्वचित् ।

एकस्यानेकधोल्लेखो यः स उल्लेख उच्यते" ॥

उदाहरणम् । "प्रियैति गोपबधूभिः शिशुरिति वृद्धैरधीशैति देवैः । नारायणैति भक्तैर्ब्रह्मे-

त्यग्राहि योगिभिर्देवः" ॥)

**उल्लेखनं**, क्ली, (उत् + लिख् + ल्युट् ।) वमनम् ।

इति रत्नमाला ॥ खननम् । यथा "भूमेरुल्लेखनं

कुर्य्यात्" । उति स्मृतिः ॥ (यथा, मनुः ५ । १२४ ।

"सन्मार्जनोपाञ्जनेन सेकेनोल्लेखनेन च" ।)

उच्चारणम् । यथा, --

"मासपक्षतिथीनाञ्च निमित्तानाञ्च सर्व्वशः ।

उल्लेखनमकुर्व्वाणो न तस्य फलभाग्भवेत्" ॥

इति तिथ्यादितत्त्वम् ॥

**उल्लोचः**, पुं, (ऊद्ध्वं लोचति । उत् + लोच् + अञ् । यद्वा

ऊद्ध्वं लोच्यते । लोच् + घञ् । कुत्वन्तु न निष्ठा-

यामनिट इति वचनात् । अस्य तु तन्न सेट्त्वात् ।)

चन्द्रातपः । चाँदोया इति भाषा । तत्पर्य्यायः ।

वितानम् २ । इत्यमरः ॥

**उल्लोलः**, पुं, (उल्लोडयतीति । लोड़ृ उन्मादे + णिच्

मातरः" ॥)

**उशनाः**, [स्] पुं, (वश कान्तौ + "वशेः कनसिः"

। ४ । २३८ । इति उणादिसूत्रेण कनसिः । ग्रह्यादि-

त्वात् सम्प्रसारणम् ।) शुक्राचार्य्यः । इत्यमरः ॥

(यथा, कुमारे ३ । ६ ।

"अध्यापितस्योशनसापि नीतिं

प्रयुक्तरागप्रणिधिर्द्विषस्ते" ॥

स च दैत्यगुरुः । तथा च महाभारते ययाति-

संवादे १ । ७६ । ६ ।

"पौरोहित्येन याज्यत्वे काव्यन्तूशनसं परे" ॥)

**उशीक्**, [ज्] पुं, (वष्टि उश्यते वा । वश कान्तौ +

"वशः कित्" । २ । ७१ । इति उणादिसूत्रेण इजिः ।

सम्प्रसारणम् ।) अग्निः । घृतं । इति सिद्धान्तकौ-

मुद्यामुणादिवृत्तिः ॥

**उशिक्**, त्रि, (वश कान्तौ + इजि + सम्प्रसारणम् ।)

कमनीयम् ॥

"न यद्वचश्चित्रपदं हरेर्यशो

जगत्पवित्रं प्रगृणीत कर्हिचित् ।

तद्वायसं तीर्थमुशन्ति मानसाः

न यत्र हंसा निरमन्त्युशिक्षयाः" ॥

इति श्रीभागवते १ स्कन्धे ५ अध्यायः । "चित्रपद-

मपि यद्वचो हरेर्यशो न प्रगृणीत तद्वायसं तीर्थं

काकतुल्यानां कामिनां रतिस्थानं उशन्ति मन्यन्ते

तत्पर्य्यायः । अभयम् २ नलदम् ३ सेव्यम् ४ अमृ-

णालम् ५ जलाशयम् ६ लामज्जकम् ७ लघुलयम् ८

अवदाहम् ९ इष्टकापथम् १० । इत्यमरः ॥ उषीरम्

११ मृणालम् १२ लघु १३ लयम् १४ अवदानम्

१५ इष्टम् १६ कापथम् १७ अवदाहेष्टकापथम्

१८ इन्द्रगुप्तम् १९ । इति तट्टीकायां भरतादयः ॥

जलवासम् २० हरिप्रियम् २१ वीरम् २२ वीरणम्

२३ समगन्धिकम् २४ रणप्रियम् २५ वीरतरु २६

शिशिरम् २७ शीतमूलकम् २८ वितानमूलकम्

२९ जलमेदम् ३० सुगन्धिकम् ३१ सुगन्धिमूलकम्

३२ कम्भु ३३ । इति राजनिर्घण्टः ॥ अस्य गुणाः ।

घर्म्मदार्गन्ध्यदाहपित्तरक्तरोगनाशित्वम् ।

इति राजवल्लभः ॥ अपिच । शीतलत्वम् । तिक्तत्वम् ।

मोहभ्रमापहत्वम् ।

ज्वरार्त्तिपित्तशमनकारित्वम् ।

जलसौगन्ध्यदायकत्वञ्च । इति राजनिर्घण्टः ॥

(यथा, शाकुन्तले ३ अङ्के । "प्रियंवदे ! कस्येद-

मुशीरानुलेपनं मृणालवन्ति च नलिनीदलानि

नीयन्ते" । अस्य पर्य्यायगुणाः यथा,

"वीरणस्य तु मूलं स्यादुशीरं नलदञ्च तत् ।

अमृणालञ्च सेव्यञ्च समगन्धिकमित्यपि ॥

उशीरम्पाचनं शीतं स्तम्भनं लघु तिक्तकम् ।

मधुरं ज्वरहृद्वान्तिमदनुत्कफपित्तहृत् ॥

+ पचाद्यच् । डलयोरैक्यात् डस्य लः ।) महा-
तरङ्गः । वड ढेउ इति भाषा । तत्पर्य्यायः । क-
ल्लोलः २ । इत्यमरः ॥

**उल्वं**, क्ली, (उल्लीयते इति । उत् + लीङ् श्लेषणे
उल्वादयश्च ४ । ९५ । इति उणादिसूत्रेण साधुः ।)
जरायुः । इत्यमरः ॥ (यथा, गीतायां ३ । ३८ ।
"यथोल्वेनावृतो गर्भस्तथा तेनेदमावृतम्" ।
"जातमात्रं विशोध्योल्वाद्बालं सैन्धवसर्पिषा ।
प्रसूतिक्लेशितञ्चानु बलातैलेन सेचयेत्" ॥
इति वाभटः उत्तरस्थाने १ अध्याये उक्तवान् ॥
"अथ जातस्योल्वं मुखञ्च सैन्धवसर्पिषा विशोध्य
घृताक्तं मूद्‌र्ध्नि पिचुं दद्यात् ततो नाभिनाडीमष्टा-
ङ्गुलमायम्य सूत्रेण बद्‌ध्वा च्छेदयेत्तत्सूत्रैकदेशञ्च
कुमारस्य ग्रीवायां सम्यग् बध्नीयात् । इति सुश्रुते
शारीरस्थाने १० अध्याये ॥)

**उल्वणं**, त्री, (उत् + वण + अच् । पृषोदरादित्वात्
साधुः ।) व्यक्तम् । स्पष्टम् । इत्यमरः ॥
("श्लेष्मोल्वणा महामूला घना मन्दरुजः सिताः" ॥
इति वाभटे निदानस्थाने ७ अध्याये ॥
"हेतुलक्षणसंसर्गाद्विद्याद्द्वन्द्वोल्वणानि च" ।
इति रुग्विनिश्चयग्रन्थे अर्शोधिकारे ॥
प्रकाशः । निर्बाधः । यथा, रघुः । ४ । ३३ ।
"तस्यासीदुल्वणो मार्गः पादपैरिव दन्तिनः" ॥)

**उशती**, त्रि, (वश + शतृ + ङीप् । सम्प्रसारणम् ।)
कुतः मानसाः सत्त्वप्रधाने मनसि वर्त्तमाना हंसाः
यतयो यत्र न निरमन्ति कर्हिचिदपि नितरां न
रमन्ते । उशिक्क्षयाः उशिक् कमनीयं ब्रह्म
क्षयो निवासो येषां ते यथा प्रसिद्धा हंसाः
मानससरसि चरन्तः कमनीयपद्मषण्डनिवासा-
स्त्यक्तविचित्रान्नादियुक्ते उच्छिष्टगर्त्ते काकक्रीडा-
स्थाने न रमन्ते इति शेषः" । इति तट्टीकायां
श्रीधरस्वामी ॥ (कामयमानम् । यथा ऋग्वेदे
१ । १३१ । ५ "आदित्ते अस्य वीर्य्यस्य चर्किर-
न्मदेषु वृषन्नुशिजो यदाविथ सखीयतो यदा-
विथ" । "उशिजो धर्म्मं कामयमानाः जनाः" ।
इति भाष्यम् ॥)

**उशी**, स्त्री, (वश + ई । सम्प्रसारणम् ।) वाञ्छा ।
इत्युणादिकोषः ॥

**उशीनरः**, पुं, (उशीप्रदो वाञ्छाप्रदो नरो यत्र ।)
देशभेदः । तत्पर्य्यायः । गान्धारः २ । इति जटा-
धरः ॥ चन्द्रवंशोद्भवराजविशेषः । स तु शिवि-
राजपिता । इति श्रीभागवतम् ॥ (पुरुवंशीयो
नृपभेदः । यथा महाभारते । श्येनकपोतीये । ३ ।
१३० । २१-२३ ।
तृष्णास्रविषवीसर्पदाहकृच्छ्रव्रणापहम्" ।
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**उशीरकं**, क्ली, (उशीर + स्वार्थे कन् ।) वीरणमूलं ।
इति रत्नमाला ॥ (उशीरशब्देऽस्य विशेषो ज्ञेयः ।)

**उशीरी**, स्त्री, लघुकाशः । छोट काश्या इति भाषा ।
तत्पर्य्यायः । मिषिः २ गुडा ३ अश्वालः ४
नीरजः ५ शरः ६ । अस्य गुणाः । मधुरत्वम् ।
शीतत्वम् । पित्तदाहक्षयरोगनाशित्वञ्च । इति
राजनिर्घण्टः ॥

**उष** उ बधे, दहि । इति कविकल्पद्रुमः ॥ (भ्वादिं-
परं-सकं-सेट् ।) ह्रस्वादिः । उ ओषित्वा उष्ट्वा ।
ओषति । क्त्वावेट्त्वान्नेमडीश्वीत्यादिना इमो
निषेधे निष्ठायां उष्टः । दहि भस्मीकरणे । इति
द्बुर्गादासः ॥

**उष** बधे । दहि । इति कविकल्पद्रुमः ॥ (भ्वादि-परं-
सकं-सेट् ।) ओषति । उषितः । दहि भस्मी-
करणे । इति दुर्गादासः ॥ (यथा, मनुः । ९ । २७३ ।
"यश्चापि धर्म्मसमयात् प्रच्युती धर्म्मजीवनः ।
दण्डेनैव तमप्योषेत् स्वकाद्धर्म्माद्धि विच्युतम्" ॥)

**उषं**, क्ली, (उष + क ।) पांशुजलवणम् । इति रत्न-
माला ॥

**उषः**, पुं, (उष + क ।) कामी । गुग्गुलुः । रात्रि-
शेषः । दिनम् । इति मेदिनी ॥ (दहनबधकर्त्तरि,
त्रि ।) क्षारमृत्तिका । इति शब्दरत्नावली ॥

**उषः**, [स्] क्ली, (ओषति नाशयत्यन्धकारम् ।

अकल्याणवाक् । इति शब्दरत्नावली ॥

(यथा,

अघमर्षणमन्त्रे । “आपो हिष्ठा मयोभुवः

स्नान

ऊर्जे दधातन महेरणाय चक्षसे । ॐ यो वः

शिवतमोरसस्तस्य भाजयतेह नः ।

उशतीरिव-

“उशीनरो वै यत्रेष्ट्वा

वासवादत्यरिच्यत ॥

तां देवसमितिं तस्य वासवश्च

विशाम्पते ।

अभ्यगच्छन्नृपवरं ज्ञातुमग्निश्च भारत

॥

जिज्ञासमानौ वरदौ महात्मानमुशीनरं

।

इन्द्रः श्येनः कपोतोऽग्निर्भूत्वा

यज्ञेऽभिजग्मतुः” ॥

तस्य चारित्रं तत्रैव १३१ अध्याये

द्रष्टव्यम् ॥)

**उशीरः**, पुं, क्ली, (वश कान्तौ + “वशः कित्” । ४ । ३१

इति उणादिसूत्रण ईरन् ।

सम्प्रसारणम् ।)

वीरणमूलम् । वेनार मूल् खस् इत्यादि

भाषा ।

उष + “उषः किदिति” ४ । २३३ ।

उणादिसूत्रेण

असिः ।) प्रत्यूषः । इत्यमरः ।

(“आसीदासन्ननिर्व्वाणः

प्रदीपार्च्चिरिवोषसि” ।

इति रघुः । १२ । १ । तथा, माघे । ११ ।

१७ ।

“पुनरुषसि विविक्तैर्मातरिश्वावचूर्ण्य” ॥)

**उषणं**, क्ली, (उष् + बाहुलकात् क्युन् । ल्युट् वा ।)

मरिचम् । इत्यमरः । पिप्पलीमूलम् ।
इति
राजनिर्घण्टः ॥

**उषणा**, स्त्री, (उषण + टाप् ।) पिप्पली । इत्यमरः ॥

शुण्ठी । इति राजनिर्घण्टः ॥ चविकम्
। इति
रत्नमाला ॥ ("उपकुल्योषणा
शौण्डी" इति भाव-
प्रकाशस्य पूर्ब्बखण्डे प्रथमभागे
पर्य्याय उक्तः ।)

**उषती**, स्त्री, (उष् + शतृ । आगमशासनस्यानित्य-

त्वात् नुमभावः ।) अकाल्याणवाक् ।
इत्यमरः ॥
(यथा, महाभारते १ । ८७ । ८ ।
"ययास्य वाचा पर उद्विजेत
न तां वदेदुषतीं पापलोक्याम्" ॥)

**उषपः**, पुं, (ओषतीति । उष् + "उषिकुटिदलि-

कचिखजिभ्यः कपन्" । ३ । १४२ ।
इति कपन् ।)
सूर्य्यः । अग्निः । इत्युणादिकोषः ॥

**उषर्बुधः**, पुं, (उषसि प्रातर्बुध्यते प्रकाशते । उषस्

+ बुध् + क ।) अग्निः । इत्यमरः ॥
रक्तचित्रकः । रांचिता इति भाषा ॥

**उषसी**, स्त्री, (उषं दिवसं स्यति दूरीकरोतीति ।

उष + सो + क + ङीप् ।)
सन्ध्याकातः । इति मे-
दिनी ॥

**उषा**, स्त्री, (उष + क + टाप् ।) बाणराजसुता । सा

**उषेशः**, पुं, (उषायाः बाणकन्यायाः ईशः ।) अनिरुद्धः ।

इति हेमचन्द्रः ॥

**उष्ट्रः**, पुं, (उष + "उषिखनिभ्यां कित्" । ४ । १६१ ।

इत्युणादिसूत्रेण ष्ट्रन् किच्च ।)
वाह्यरथः । इति
धरणी ॥ पशुविशेषः । उट् इति भाषा
। तत्प-
र्य्यायः । क्रमेलकः २ मयः ३ महाङ्गः
४ । इत्य-
मरः ॥ दीर्घगतिः ५ बली ६ करभः ७
दासेरकः
८ धूसरः ९ लम्बोष्ठः १० रवणः ११
महाजङ्घः १२
जवी १३ जाङ्घिकः १४ दीर्घः १५
शृङ्खलकः १६
महान् १७ महाग्रीवः १८ महानादः
१९ महा-
ध्वगः २० महापृष्ठः २१ बलिष्ठः २२
। इति राज-
निर्घण्टः ॥ दीर्घजङ्घः २३ ग्रीवी २४
धूम्रकः २५
शरभः २६ । इति जटाधरः ॥ क्रमेलः
२७ कण्ट-
काशनः २८ भोलिः २९ बहुकरः ३०
अध्वगः ३१
मरुद्विपः ३२ वक्रग्रीवः ३३ । इति
शब्दरत्नावली ॥
वासन्तः ३४ कुलनाशः ३५ । इति
त्रिकाण्डशेषः ॥
कुशनामा ३६ मरुप्रियः ३७ द्विककुत्
३८ दुर्ग-
लङ्घनः ३९ भूतघ्नः ४० दासेरः ४१
दीर्घग्रीवः ४२
केलिकीर्णः ४३ । इति हेमचन्द्रः ॥
(यथा मनुः

सुश्रुतेन निदानस्थाने ४ अध्याये यत् सम्प्राप्ति-
पूर्ब्बकं लक्षणमस्योक्तं तद्यथा ॥ पित्तन्तु प्रकुपित-
मनिलेनाधः प्रेरितं पूर्ब्बवदवस्थितं रक्तां तन्वी-
मुच्छ्रितामुष्ट्रग्रीवाकारां पिडकां जनयति । सास्य-
चोषादीन् वेदनाविशेषान् जनयत्यप्रतिक्रियमाणा
च पाकमुपैति व्रणश्चाग्निक्षाराभ्यामिव दह्यते
दुर्गन्धमुष्णमास्रावं स्रवत्युपेक्षितश्च वात्मूत्र-
पुरीष-रेतांसि विसृजति तं भगन्दरमुष्ट्रग्रीव-
मित्याचक्षते" ॥ इति । * ॥ सुश्रुते
चिकित्सितस्थाने
८ अध्याये चिकित्सा यथा, --
"उष्ट्रग्रीवे क्रियां शृणु ।
अथोष्ट्रग्रीवमेषित्वा च्छित्त्वा क्षारं निपातयेत् ।
पूतिमांसव्यपोहार्थमग्निरत्र न पूजितः ।
अथैनं घृतससृष्टैस्तिलैः पिष्टैः प्रलेपयेत् ॥
बन्धं ततोऽनुकुर्व्वीत परिषेकन्तु सर्पिषा ।
तृतीये दिवसे मुक्त्वा यथास्वं शोधयेद्भिषक् ॥
ततः शुद्धं विदित्वा च रोपयेत्तु यथाक्रमं ।
उत्कृत्यास्रावमार्गन्तु परिस्राविणि बुद्धिमान् ॥
क्षारेण वा स्रावगतिं दहेद्धुतवहेन वा ।
सुखोष्णेनाणुतैलेन सेचयेद्गुदमण्डलम् ॥
उपनाहाः प्रदेहाश्च मूत्रक्षारसमन्विताः ।
वामनीयौषधैः कार्य्याः परिषेकाश्च मात्रया" ॥)

**उष्ट्रिका**, स्त्री, (उष्ट्रस्याकृतिरिवावयवो यस्याः । उष्ट्रस्य

स्त्री वा ॥) मृत्तिकाभाण्डभेदः । (यथा माघे १२ ।
१६ ।
"धूर्भङ्गविक्षेपविदारितोष्ट्रिका" ।) उष्ट्रभार्य्या ।
इति मेदिनी ॥ वृश्चिकालीवृक्षः । इति राज-
निर्घण्टः ॥

**उष्ट्री**, स्त्री, (उष + ष्ट्रन् + ङीष् ।) मृत्तिकाभाण्डः ।

उष्ट्रस्त्री । इति हेमचन्द्रः ॥ तस्याः क्षीरगुणाः ।
कुष्ठशोथपित्तार्शःकफाटोपानाहोदरस्थजन्तुगुल्म-
श्वासोल्लासनाशित्वम् । तद्दधिगुणाः । अर्शःकुष्ठ-
कृमिशूलोदररोगनाशित्वम् । कटुत्वम् । स्वादु-
त्वञ्च । तन्नवनीतगुणाः । विपाके शीतलत्वम् ।
लघुत्वम् । व्रणकृभिकफास्नवातविषनाशित्वञ्च ।

तु अनिरुद्धभार्य्या । (यथा, हरिवंशे १७४ ।
बाणयुद्धे १२ ।
"बाणस्य दुहिता कन्या तत्रोषा नाम भाविनी" ।
विस्तृतिस्तु बाणयुद्धशब्दे द्रष्टव्या ।)
रात्रिः । इति
मेदिनी ॥ स्त्रीगवी । इति हेमचन्द्रः ॥
उखा । स्था-
लीति यावत् । इत्यमरटीकायां
रमानाथः ॥
(रात्रिशेषः । यथा ज्योतिषे ।
"उषां गोधूलियोगं वा स्वीकृत्य गमनं
चरेत्" ॥)

**उषा**, व्य, (ओषतीति । उष + क + टाप् ।) रात्रि-
शेषः । रात्र्यवसानम् । इत्यमरमेदिन्यौ ॥ सा तु
नक्षत्रतेजःपरिहानिमारभ्य
भानोरर्द्धोदयं यावत्
भवति । यथा, --
"अर्द्धास्तमयात् सन्ध्या व्यक्तीभूता न तारका या-
वत् । तेजःपरिहानिरुषा भानोरर्द्धोदयं
यावत्" ॥
इति तिथितत्त्वे वराहवचनम् ॥

**उषाकलः**, पुं, (उषायां कलो यस्य ।) कुक्कुटः । इति
त्रिकाण्डशेषः ॥

**उषापतिः**, पुं, (उषायाः पतिः ।) अनिरुद्धः । स तु
कामदेवपुत्त्रः । इत्यमरः ॥
(एतत्कथाबाणयुद्धशब्दे
द्रष्टव्या ॥)

**उषारमणः**, पुं, (उषाया रमणः ।) अनिरुद्धः । इति
हलायुधः ॥

४ । १२० ।
"नाधीयिताश्वमारूढो न रथं न च
हस्तिनम् ।
न नावं न खरं नोष्ट्रं नेरिणस्थो न
यानगः" ॥
"उष्ट्रयानं समारुह्य खरयानं तु
कामतः" ।
इति च मनुः । ११ । २९ ॥)

**उष्ट्रकाण्डी**, स्त्री, (उष्ट्रैव काण्डोऽस्य । जातित्वात्
ङीष् ।) पुष्पजातिभेदः । उँटाटी इति
ख्याता ।
तत्पर्य्यायः । रक्तपुष्पी २
करभकाण्डिका ३ रक्ता ४
लोहितपुष्पी ५ कर्णपुष्पी ६ । अस्या
गुणाः ।
तिक्तत्वम् । उष्णत्वम् ।
रुचिकारित्वम् । हृद्रो-
गहारित्वञ्च । अस्या वीजगुणाः ।
मधुरत्वम् ।
शीतत्वम् । ग्रीष्मत्वम् । वृष्यत्वम् ।
सन्तर्पणत्वञ्च ।
इति राजनिर्घण्टः ॥

**उष्ट्रधूसरपुच्छिका**, स्त्री, (उष्ट्रस्य धूसरः पुच्छेव
पुच्छो मञ्जरी यस्याः ।) वृक्षविशेषः ।
इति रत्न-
माला ॥ विचिटीइति भाषा ॥

**उष्ट्रपादिका** स्त्री, (उष्ट्रस्य पाद इव पादो यस्याः ।)
वृक्षविशेषः । मदनमालीति ख्याता ।
तत्पर्य्यायः ।
शातभीरुः २ भद्रवल्ली ३ भूमिमत्ता ४
। इति
रत्नमाला ॥

**उष्ट्रशिरोधरं**, क्ली, (उष्ट्रस्य शिरोधरः ग्रीवा इव आ-

तद्भूतगुणाः । मधुरत्वम् । विपाके कटुत्वम् ।
शीतलत्वम् । कुष्ठकृमिविषवातकफगुल्मोदरना-
शित्वञ्च । तन्मांसगुणाः ॥ शिशिरत्वम् । त्रिदोष-
शमनत्वम् । लघुत्वम् । बलपुष्टिप्रदत्वम् । रुचि-
कारित्वम् । मधुरत्वम् । वीर्य्यवर्द्धनत्वञ्च । इति
राजनिर्घण्टः ॥ (अस्या दुग्धगुणा यथा, --
"ईषद्रूक्षोष्णलवणमौष्ट्रकं दीपनं लघु ।
शस्तं वातकफानाहक्रिमिशोथोदरार्शसाम्" ॥
इति वैद्यकचक्रपाणिकृतद्रव्यगुणे पानीयवर्गे ।
"औष्ट्रं दुग्धं लघु स्वादु लवणं दीपनन्तथा ।
क्रिमिकुष्ठकफानाहशोथोदरहरं सरम्" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥
"रूक्षं तथोष्णं लवणं कफस्य
निवारणं वातविकारहारि ।
लघुप्रशस्तं कटुकं कृमीणां
शोफार्शिनामौष्ट्रपयोऽनुकूलम्" ॥
इति हारीते प्रथमस्थानेऽष्टमेऽध्याये ॥
"रूक्षोष्णं क्षीरमुष्ट्रीणामीषत् सलवणं लघु ।

**उषितः**, त्रि, (उष वा वस + क्त ।) व्युषितः । दग्धः ।

इति मेदिनी ॥ त्वरितम् । इति धरणिः ॥ स्थितः ।

इति त्रिकाण्डशेषः ॥

**उषितङ्गवीनः**, त्रि, (उषिताः स्थिता गावो यत्र ।)

आशितङ्गवीनः । यत्र पुरा गावो भोजिताः ।

इत्यमरटीकायां रमानाथः ॥

**उषीरः**, पुं, क्ली, (उष् + कीरच् ।) उशीरः । वीरण-

मूलम् । इत्यमरटीकायां रायमुकुटः ॥

कृतिर्यस्य ।) भगन्दररोगविशेषः ।

तस्य लक्षणम् ।

“प्रकोपनैः पित्तमतिप्रकोपितं

करोति रक्तां पिडकाङ्गदागताम् ।

तदाशुपाका हिमपूतवाहिनी

भगन्दरन्तूष्ट्रशिरोधरं वदेत्” ॥

इति निदानम् । (अस्य लक्षणं

चिकित्साञ्चोक्तवान्

वाभटे उत्तरस्थाने २८ अध्याये ।

अस्य नामान्तर-

मुष्ट्रग्रीवः । यथा ।

“पित्तादुष्ट्रग्रीवावदुच्छ्रिता ॥

रागिणी तनुरुष्माढ्या

ज्वरधूमायनान्विता” ।

“उष्ट्रग्रीवस्तु पित्तजः” ।

“अग्निना वा भिषक्

साधुक्षारेणैवोष्ट्रकन्धरम्” ।

:शस्तं वातकफानाहक्रिमिशोथोदरार्शसाम्” ॥

इति चरके सूत्रस्थाने सप्तविंशेऽध्याये ॥
“रूक्षोष्णं लवणं किञ्चिदौष्ट्रं स्वादुरसं लघु ।
शोफगुल्मोदरार्शोघ्नं कृमि-कुष्ठ-विषापहम्” ॥
इति सुश्रुते सूत्रस्थाने ४५ अध्यायः ॥)

**उष्णः**, पुं, (उष दाहे + “इण्षिञ्जिदीङुष्यविभ्योनक्’
। ३ । २ । इति उणादिसूत्रेण नक् ।) ग्रीष्मऋतुः ।
तत्पर्य्यायः । ग्रीष्मः २ उष्मकः ३ निदाघः ४ उष्णो-
पगमः ५ उष्णागमः ६ तपः ७ । इत्यमरः ॥ आ-
तपः । इति हेमचन्द्रः ॥ (यथा, सुश्रुते चिकित्-
सितस्थाने २४ अध्यायः ।
“उष्णे हैमे वसन्तेच कामं ग्रीष्मे तु शीतलम्” ।
क्वचित् क्लीवलिङ्गान्तोऽपि दृश्यते ।
यथा महाभारते संवर्त्तमरुत्तीये । १४ । ८ । ९ ।
“नोष्णं न शिशिरस्तत्र न वायुर्न च भास्करः” ।
अग्निः । सूर्य्यः । यथा, मनुः ११ । ११३ ।
“उष्णे वर्षति शीते वा मारुते वाति वा भृशम्” ।
(“उष्णे आदित्ये मेघे च वर्षति” इति तट्टीकायां
कुल्लुकभट्टः ॥) पलाण्डुः । इति राजनिर्घण्टः ॥

**उष्णागमः**, पुं, (उष्णस्यागमो यस्मिन् ।) ग्रीष्मकालः ।
इत्यमरः ॥

**उष्णाभिगमः** पुं, (उष्णस्यातपस्याभिगमो यत्र ।)
ग्रीष्मऋतुः । इति शब्दरत्नावली ॥

**उष्णासहः** पुं, (उष्ण आतप आसह्यते यत्र । उष्ण +
आ + सह + अच् ।) हेमन्तऋतुः । इति राज-
निर्घण्टः ॥ (उष्णासह्यकारिणि, त्रि ॥)

**उष्णिक्**, [ह्] स्त्री, (उत् + स्निह् + क्विन् । निपा-
तनात् उपसर्गान्तलोपः षत्वं च ।) सप्ताक्षर-
च्छन्दः । (यथा छन्दोमञ्जर्य्यां, --
“उक्थात्युक्था तथा मध्या प्रतिष्ठान्या सुपूर्ब्बिका ।
गायत्र्युष्णिगनष्टुप् च वृहती पङ्क्तिरेव च” ॥
उष्णिक्सप्ताक्षरा वृत्तिः । सा च त्रिधा मधुमती-
कुमारललिता-मदलेखाभेदात् । उदाहरणपूर्ब्बकं
तल्लक्षणं यथा तत्रैव । “ननगि मधुमती” ।
“रविदुहितृतटे वनकुसुमनतिः ।
व्यधित मधुमती मधुमथनमुदम्” ॥ १ ॥
“कुमारललिता जस्गाः” ॥
“मुरारितनुवल्ली कुमारललिता सा ।
व्रजैणनयनानां ततान मुदमुच्चैः” ॥ २ ॥
“मस्गौ स्यान्मदलेखा” ॥) “रङ्गे बाहुविरुग्नात्
कुम्भीन्द्रान्मदलेखा । लग्नाभून्मुरशत्रोः कस्तूरी-
रसचर्च्चा” ॥

**उष्णिका**, स्त्री, (अल्पमन्नमस्याम् । ब्राह्मणकोष्णिके
संज्ञायामिति कन् । निपातनादन्नशब्दस्योष्णा-
देशः ।) यवागुः । इत्यमरः ॥ याउ इति भाषा ।

“श्लेष्मामवातमेदोघ्नं वस्तिशोधनदीपनम् ।
कासश्वासज्वरान् हन्ति पीतमुष्णोदकं निशि” ॥
इति भावप्रकाशे प्रथमखण्डम् ॥ * ॥ अथोष्णो-
दकस्य लक्षणं गुणाश्च ।
“क्वाथ्यमानन्तु निर्व्वेगं निष्फेनं निर्म्मलन्तथा ।
अर्द्धावशिष्टं यत्तोयं तदुष्णोदकमुच्यते ॥
ज्वर-कास-कफ-श्वास-वात-पित्ताम-मेदसाम् ।
नाशनं वस्तिसंशोधि पथ्यमुष्णोदकं सदा ॥ * ॥
अथर्त्तुभेदे जलस्य पाकभेदः । यदाह,
त्रिपादशेषं सलिलं ग्रीष्मे शरदि शस्यते ।
“हिमेऽर्द्धशेषं शिशिरे तथा वर्षावसन्तयोः” ॥
अन्ये तु ।
“निदाघे त्वर्द्धपादोनं पादहीनन्तु शारदम् ।
शिशिरे च वसन्ते च हिमे चार्द्धावशेषितम् ॥
अष्टमांशावशेषन्तु वारि वर्षासु शस्यते ।
इति केचिद्बुधाः प्राहुर्जेज्जटागमदर्शनात्” ॥
केचित्त ।
“वसुष्वङ्गेषु बाणेषु वेदेषु त्रिषु पक्षयोः ।
एकभागावशेषं स्यादम्बु वर्षादिषु क्रमात्” ॥
अत्र दोषाणां यथोल्वणता हीनता वा तथा व्यवस्था कल्पनीया ॥
“तत्पादहीनं पित्तघ्नमर्द्धहीनन्तु वातनुत् ।
त्रिपादहीनं श्लेष्मघ्नं संग्राह्यग्निप्रदं लघु” ॥ * ॥
त्रिपादहीनस्य तन्त्रान्तरे आरोग्याम्बुसंज्ञा ।
तस्य लक्षणगुणाः ।
“पादशेषन्तु यत्तोयमारोग्याम्बु तदुच्यते ।
आरोग्याम्बु सदा पथ्यं कास-श्वास-कफापहम् ॥
सद्यो ज्वरहरं ग्राहि दीपनं पाचनं लघु ।
आनाहपाण्डुशूलार्शोगुल्मशोथोदरापहम्” ॥

उष्णवीर्य्यद्रव्यगुणाः । पित्तबलकारित्वम् । लघुत्वम् । वातश्लेष्मनाशित्वच्च । इति राजवल्लभः ॥

**उष्णः**, त्रि, (उष् + नक् ।) निरालस्यव्यक्तिः । तत्पर्य्यायः । दक्षः २ चतुरः ३ पेशलः ४ पटुः ५ सूत्थानः ६ । इत्यमरः । अशीतः । इति मेदिनी ॥ (यथा मनुः । ३ । २३७ ।
"यावदुष्णं भवत्यन्नं यावदश्नाति वाग्यतः" ॥)

**उष्णकः**, पुं, (उष्णं करोतीति । उष्ण + शीतोष्णाभ्यां कारिणीति कन् ।) ग्रीष्मकालः । चंक्रमादिः । इति धरणी ॥ (ज्वरः । इति पाणिनिः ५ । २ । ८१ ॥)

**उष्णकः**, त्रि, (उष्णं कार्य्यमस्य । उष्ण + कन् ।) क्षिप्रकारी । आतुरः । इदि मेदिनी ॥ प्रणतः । इति धरणी ॥ क्रोधोद्दीप्तः इति पाणिनिः ५ । २ । ७२ ॥)

**उष्णनदी**, स्त्री, (उष्णा नदी ।) वैतरणी नदी ॥

**उष्णरश्मिः**, पुं, (उष्णा रश्मयो यस्य ।) सूर्य्यः । अर्कवृक्षः । इत्यमरः ॥ (यथा, कुमारे ३ । २५ ।
"कुवेरगप्तां दिशमुष्णरश्मौ गन्तुं प्रवृत्ते समयं विलङ्घ्य" ॥)

**उष्णवारणः**, पुं, क्ली, (उष्णमातपं वारयति । उष्ण +

**उष्णीषः**, पुं, क्ली, (उष्णमीषते हिनस्तीति । ईष गतिहिंसादर्शनेषु । इगुपधेति कः । शकन्ध्वादिः ।) शिरोवेष्टः । इत्यमरः ॥ पाग इति भाषा । अस्य गुणाः । केशचक्षुरायुर्वद्धकत्वम् । धूलिशीतोष्णनिवारकत्वञ्च । इति राजवल्लभः ॥ यथा ।
"उष्णीषं कान्तिकृत् केश्यं रजोवातकफापहम् ।
लघु चेच्छस्यते यस्मात् गुरुपित्ताक्षिरोगकृत्" ॥
इति भावप्रकाशः ॥ किरीटः । (यथा, महाभारते सौभबधोपाख्याने ३ । २१ । २४ ।
"विशीर्णमलिनोष्णीषः प्रकीर्णाम्बरमूर्द्धजः" ।
रजोऽवश्यायसूर्य्यांशुहिमानिलनिवारणं ।
प्रतिश्यायशिरःशूल-हरञ्चोष्णीषधारणम् ।
इति वैद्यकचक्रपाणिकृतद्रव्यगुणे गुणानां क्रियाभिधानादिवर्गे ॥
"बाणवारं मृजावर्णतेजोबलविवर्द्धनम् ।
पवित्रं केश्यमुष्णीषं वातातपरजापहम्" ॥
इति सुश्रुते चिकित्सितस्थाने २४ अध्याये ॥)
चिह्नान्तरम् । इति मेदिनी ॥

**उष्णोदकं**, क्ली, (उष्णञ्च तत् उदकञ्चेति ।) तप्तजलम् । क्वाथ्यमानपादावशेषार्द्धावशेषपादहीनं जलम् । तद्विधिर्यथा ।
"अष्टमेनांशशेषेण चतुर्थेनार्द्धकेन बा ।
अथवा क्वथनेनैव सिद्धमुष्णोदकं बदेत्" ॥
अस्य गुणाः । सदा पथ्यत्वम् । कासज्वरविबन्धकफवाताममेदोनाशित्वम् । दीपनत्वम् । वस्ति-

इति भावप्रकाशे मध्यमखण्डम् ॥ रात्रौ उष्णोदकपानगुणाः । श्लेष्मसङ्घातभेदकत्वम् । मारुतापकर्षित्वम् । आशु अजीर्णजारकत्वञ्च ।
"तत्पादहीनं वातघ्नं मध्यहीनं तु पित्तनुत् ।
कफघ्नं पादशेषस्थं पानीयं लघु दीपनम्" ॥
इति राजनिर्घण्टः ॥
("शरदीह तथा ग्रीष्मे क्वाथे पादावशेषितम् ।
शिशिरे च वसन्ते च कुर्य्यादर्द्धावशेषितम्" ॥
विपरीतमृतुं दृष्ट्वा प्रावृषं वार्द्धभागिकम् ।
क्वाथ्यमानञ्च निर्व्वेगं निष्फेनं निर्म्मलञ्च यत् ॥
अर्द्धावशिष्टं भवति तदुष्णोदकमुच्यते ।
तत्पादहीनं वातघ्नञ्चार्द्धं पित्तविकारजित् ॥
कफघ्नं पादशेषन्तु पानीयं लघु पाचनम्" ।
"दिवसे क्वथितं तोयं रात्रौ तद्गुरुतां व्रजेत् ।
रात्रौ शृतन्तु दिवसे गुरुत्वमधिगच्छति" ॥
इति हारीते प्रथमस्थाने ७ अध्याये ।
"दीपनं पाचनं कण्ठ्यं लघूष्णं वस्तिशोधनम् ॥
हिक्काध्मानानिलश्लेष्म सद्यःशुद्धे नवज्वरे ।
कासामपीनसश्वासपार्श्वरुक्षुच शस्यते" ॥
"अनभिस्यन्दि लघु च तोयं क्वथितशीतलम् ।
पित्तयुक्ते हितं दोषे व्युषितं तन्त्रिदोषकृत् ॥
इति वाभटे सूत्रस्थाने ५ अध्याये ॥
"कफमेदोऽनिलामघ्नं दीपनं वस्तिशोधनम् ॥

| | | |
|---|---|---|
| वृ + णिच् + ल्युट् ।) छत्रम् । इति<br>हारावली ॥<br>(यथा, कुमारे ५ । ५२ ।<br>"यदर्थमम्भोजमिवोष्णवारणं<br>कृतं तपःसाधनमेतया वपुः" ।<br>छत्रशब्देऽस्य गुणादिकं ज्ञेयम् ॥)<br>**उष्णवीर्य्यः** पुं, (उष्णमुग्रं वीर्य्यं यस्य ।) शिशुमारः ।<br>इति हेमचन्द्रः ॥<br>तीक्ष्णतेजोयुक्तद्रव्यादिः ॥ (प्रच-<br>ण्डवीर्य्ययुक्ते, त्रि ॥)<br>**उष्णा**, स्त्री, (उष्यते बध्यते यया । उष बधे + नक् +<br>टाप् ।) क्षयव्याधिः । सन्तापः ।<br>पित्तम् । इति<br>राजनिर्घण्टः ॥ [हेमचन्द्रः ॥<br>**उष्णांशुः**, पुं, (उष्णा अंशवो यस्य ।) सूर्य्यः । इति | शोधनत्वञ्च । | |

:श्वास-कास-ज्वर-हरं पथ्यमुष्णोदकं सदा ।

यत् क्वाथ्यमानं निर्व्वेगं निःफेनं निर्म्मलं लघु ॥
चतुर्भागावशेषन्तु तत्तोयं गुणवत् स्मृतम् ।
न च पर्य्युषितं देयं कदाचिद्वारि जानता ॥
अम्लीभूतं कफोत्क्लेशि न हितं तत् पिपासवे ।
मद्यपानात् समुद्भूते रोगे पित्तोत्थिते तथा ॥
सन्निपातसमुत्थे च शृतशीतं प्रशस्यते" ।
इति सुश्रुते सूत्रस्थाने ४५ अध्याये ॥)
तमुवाच भगवानात्रेयो ज्वरितस्य कायसमुत्थान-
देश-कालानभिसमीक्ष्य पाचनार्थं पानीयमुष्णं
प्रयच्छन्ति भिषजः । ज्वरो ह्यामाशयसमुत्थः प्रायो
भेषजानि चामाशयसमुत्थानां विकाराणां पाचन-
वमनापतर्पणानि शमनानि भवन्ति पाचनार्थञ्च
पानीयमुष्णं तस्मादेतज्ज्वरितेभ्यः प्रयच्छन्ति भि-
षजो भूयिष्ठम् । तद्ध्येषां पीतं वातमनुलोमयति
अग्निमुदर्य्यमुदीरयति । क्षिप्रं जरां गच्छति
श्लेष्माणञ्च परिशोषयति स्वल्पमपि च पीतं तृष्णा-
प्रशमनायोपपद्यते तथा युक्तमपि चैतन्नात्यर्थोत्-
सन्नपित्ते ज्वरे सदाहभ्रमप्रलापातिसारे वा
प्रदेयमुष्णेन हि दाह-भ्रम-प्रलापातिसारा भूयो-
ऽभिवर्द्धन्ते शीतेनोपशाम्यन्तीति" ।
इति चरके विमानस्थाने ३ अध्यायः ॥)

**उष्णोपगमः**, पुं, (उष्णः उपगमो यत्र ।) ग्रीष्मकालः ।

इत्यमरः ॥

**उष्मः**, पुं, (उष + मक् ।) ग्रीष्मकालः । वसन्तकालः ।

इत्युणादिकोषः ॥ उष्णः । क्रोधः ॥

**उष्मकः**, पुं, (उष्म + कन् ।) ग्रीष्मऋतुः । इत्यमरः ॥

**उष्मा**, [न्] पुं, (उष् + मनिन् ।) ग्रीष्मकालः ।

उत्तापः । इत्यमरटीकायां नीलकण्ठः ॥
(यथा कुमारे । ५ । २३ ॥
"तपात्यये वारिभिरुक्षिता नवै-
र्भुवा सहोष्माणममुञ्चदूर्द्धगम्" ।
"उष्मा पित्तादृते नास्ति ज्वरो नास्त्युष्मणा विना ।
तस्मात्पित्तविरुद्धानि त्यजेत्पित्ताधिकेऽधिकम्" ॥
इति वाभटे चिकित्सास्थाने १ म अध्याये ॥)

**उष्मागमः**, पुं, (ओषतीति उष्मा । आगछतीति आ-
गमः । उष्मा आगमो यत्र ।) ग्रीष्मकालः । इत्य-
मरटीकायां रायमुकुटः ॥

**उस्रः**, पुं, (वस + “स्फायितञ्चिवञ्चिशकिक्षिपीति” ।
२ । १३ । उणादिसूत्रेण रक् ।) वृषः । (यथा,
ऋग्वेदे । ६ । १२ । ४ ॥ “वन्वन्क्रत्वानार्वोस्रः पि-
तेव” । “उस्रः वृषभः” । इति भाष्यम् ॥) रश्मिः ।
इति मेदिनी ॥ (यथा रघुः । ४ । ६६ ।
“शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव” ।
लताभेदः । सूर्य्यः । यथा, ऋग्वेदे । ३ । ५८ । ४ ।
“प्र मित्रासो न ददुरुस्रो अग्रे” । “वसति नभ-
सीत्युस्रः सूर्य्यः” । इति भाष्यम् । अश्विनीपुत्त्रौ ।
यथा तत्रैव । ४ । ४५ । ५ ॥
“अग्रय उस्रा जरन्ते प्रतिवस्तोरश्विनौ” ॥)

**उस्रा**, स्त्री, (उस्र + टाप् ।) अर्ज्जुनी । गाइ इति
भाषा । उपचित्रा । इन्दुरकाणीति भाषा । इति
मेदिनी ॥ (सुरभी गौः । इत्युणादिकोषः ॥)

**उह** इर् अर्द्दे । इति कविकल्पद्रुमः ॥ (भ्वादिं-परं
सकं-सेट् ।) ह्रस्वादिः । इर् औहत् औहीत् ।
अर्द इह बधः । इति दुर्गादासः ॥

**उहानः**, पुं, देशविशेषः । इति भूरिप्रयोगः ॥

ऊ

**ऊ**, दीर्घोकारः । स च षष्ठस्वरवर्णः । अस्य उच्चा-
रणस्थानं ओष्ठः ॥ (“उपूपध्मानीयानामोष्ठौ” ।
स च (द्विमात्रत्वात्) दीर्घः (त्रिमात्रत्वात्)
प्लुतश्च भवति । (प्रत्येकं उदात्तानुदात्तसरितभेदात्
त्रिविधोऽपि अनुनासिकानुनासिकभेदात् षड्-
विधोऽपि भवति ॥
“स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम्” ।
इति शिक्षावचनात् अस्योच्चारणे विचार आन-
न्तरप्रयत्नः । विवृतं जिह्वाग्रादेः स्पर्शनाभावः ।
यदुक्तं तत्रैव “अचोऽस्पृष्टायणस्त्वीषत् नेम-
स्पृष्टाः शलः स्मृताः” । इति ।)
“शङ्खकुन्दसमाकारं ऊकारं परमकुण्डली ।
पञ्चप्राणमयं वर्णं पञ्चदेवमयं सदा ॥
पञ्चप्राणयुतं वर्णं पीतविद्युल्लता तथा ।
धर्म्मार्थकाममोक्षञ्च सदा सुखप्रदायकम्” ॥
इति कामधेनुतन्त्रम् ॥ तस्य (वङ्गीयभाषायाम्)
लेखनप्रकारो यथा, --
“तद्रूपाधोगता रेखा कुब्जिता वामतः शुभा” ।
तद्रूपा पूर्ब्बोक्तोकाररूपा ।
“तिष्ठन्ति तासु रेखासु यमाग्निवरुणाः क्रमात् ॥
अधोर्द्ध्वगामिनी मात्रा लक्ष्मीर्वाणी च सा स्मृता” ।
इति वर्णोद्धारतन्त्रम् ॥ * ॥ तस्य नामानि यथा, --
“ऊः कण्ठको रतिः शान्तिः क्रोधनो मधुसूदनः ।
कामराजः कुजेशश्च महेशो वामकर्णकः ॥
अर्घीशो भैरवः सूक्ष्मो दीर्घघोणा सरस्वती ।
विलासिनी विघ्नकर्त्ता लक्ष्मणो रूपकर्षिणी ॥
महाविद्येश्वरी षष्ठा षण्डोभूः कान्यकुब्जकः” ।
इति तन्त्रम् ॥ (मातृकान्यासेऽस्य वामकर्णे
न्यस्यतया तदाख्ययाप्यभिधानम् । यथा, मातृका-
न्यासमन्त्रे “उं नमो दक्षिणकर्णे ऊं नमो वाम-
कर्णे” । अनुबन्धविशेषः । यथाह कविकल्पद्रुमे ।
“उः क्त्वावेभूस्तु वेटकः । तेन सिधू शास्त्रे इत्यस्य
लुङि कृते असेधीत् असैत्सीत् इति स्यात् ॥)

**ऊढा**, स्त्री, (वह + क्त + टाप् ।) भार्य्या । इति
हेमचन्द्रः ॥ (विवाहिता कन्या । यथा, --
“ऊढानूढासमवायेऽनूढैव प्रथमं धनहारिणी” ।
इति स्मृतिः ॥)

**ऊतं**, त्रि, (वे + क्त ।) तन्तुसन्ततम् । तत्पर्य्यायः ।
स्यूतम् २ उतम् ३ । इत्यमरः ॥ कापड वोना इति
भाषा ॥ (प्रथितम् । अव + क्त । ज्वरत्त्वरेत्यूट् ६ ।
४ । २० । रक्षितम् ॥)

**ऊतिः**, स्त्री, (अव् + क्तिन् । ज्वरत्त्वरेत्यूट् । ६ । ४ ।
२० ।) रक्षणम् । (वे + क्तिन् ।) स्यूतिः । इति
मेदिनी ॥ वोना सेलाइ इति भाषा । क्षारणम् ।
इति शब्दरत्नावली ॥ जवनम् । इत्यमरटीकायां
स्वामी ॥ लीला । इति श्रीभागवतम् ॥ (कर्त्तरि
क्तिचि । रक्षाकर्त्री । यथा, ऋग्वेदे । ४ । ४ । २ ॥
“उरुष्यन्तम् माध्वी दस्ना न ऊतीः” । कर्म्मणि
क्तिन् । पुराणस्य दशविधलक्षणमध्ये कर्म्मवासना-
रूपो लक्षणभेदः । यथा, भागवते । २ । २० -- १४ ।
श्रीशुक उवाच ।
“अत्र सर्गो विसर्गश्च स्थानं पोषणभूतयः ।
मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः ॥
दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम् ।
वर्णयन्ति महात्मानः श्रुतेनार्थेन चाञ्जसा ॥
भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः ।
ब्रह्मणो गुणवैषम्यात् विषर्गः पौरुषः स्मृतः ॥
स्थितिर्वैकुण्ठविजयः पोषणं तदनुग्रहः ।
मन्वन्तराणि सद्धर्म्म ऊतयः कर्म्मवासनाः” ॥
“कर्म्मवासना ऊतयः” । इति चूर्णिकाटीका ॥)

**ऊधः**, [स्] क्ली, (उन्द + असुन् । ऊधसो नङिति
निर्देशात् ऊधादेशः ।) आपीनम् । इत्यमरः ॥
गाइर पालान् इति भाषा । (यथा महा-
भारते । चैत्ररथपर्ब्बणि । १ । १७६ । १३ ॥
(“मण्डूकनेत्रां स्वाकारां पीनोधसमनिन्दिताम्” ।

**ऊ**, व्य, (वेञ् + क्विप् ।) वाक्यारम्भः । रक्षा । अनु-

कम्पा । इति मेदिनी ॥ (सम्बोधनम् ॥)

**ऊः**, पुं, (अवति रक्षतीति । अव् + किप् । ज्वरत्त्वरे-

त्यूट् । ६ । ४ । २० ।) महेश्वरः । इति पुरुषोत्तमः ॥
चन्द्रः । इति शब्दरत्नावली ॥ (रक्षाकर्त्तरि, त्रि ॥)

**ऊढः**, त्रि, (उह्यते स्म । वह् + क्त ॥) विवाहितः ।

इति स्मृतिः ॥
("भार्य्योढं तमवज्ञाय तस्थे सौमित्रयेऽसकौ" ।
इति भट्टिः । ४ । १५ ॥) कृतवहनः ॥

**ऊढकङ्कटः**, त्रि, (उढो धृतः कङ्कटो येन ।) कवच-

धारी । तत्पर्य्यायः । सन्नद्धः २ वर्म्मितः ३ सज्जः ४
दंशितः ५ । इत्यमरः ॥

"यदैव स्त्रियै स्तनावाप्यायेते ऊधः पशूनाम्" ।
इति शतपथब्राह्मणे । २ । ५ । १ । ५ ॥)

**ऊधस्यं**, क्ली, (ऊधसि भवम् । ऊधस् + यत् ।) दुग्धम् ।

इति हेमचन्द्रः ॥

**ऊन**, त् क परिहाने । इति कविकल्पद्रुमः ॥ (अदन्त-

चुरां-परं-सकं-सेट् ।) दीर्घादिर्दन्त्योपधः । तथा
च । "क्षोभमाशु हृदयं न यदूनां रागवृद्धिमकरोन्न
यदूनाम्" । इति माघयमकम् । परिहानं न्यूनक्रिया ।
ऊनयति बणिक् स्वर्णं प्रथमपरिमाणात् । परि-
माणमात्रेऽयमिति केचित् । मा भवान् ऊनिनत् ।
ऊनधोर्ङिः अङ् द्वित्वे स्वस्थानमेव नास्ति अतो
नाग्लोपित्वमिति सन्देहनिरासार्थमाह । ओने-
र्ृदनुबन्धज्ञापकबलात् द्वित्वात् प्राक् प्राप्तो
ह्रस्वो अग्लोपित्वान्न स्यात् । इति दुर्गादासः ॥

**ऊनं**, त्रि, (अवतीति । अव + "इण्षिञ्जिदीङुष्य-

विभ्यो नक्" । ३ । २ । इति उणादिसूत्रेण नक् ।
"ज्वरत्वरेति" । ६ । ४ । २० ऊट् । सर्व्वस्वे तु
ऊन-
यतेरूनमिति साधितम् ।) हीनम् । न्यूनम् ॥
("ऊनं न साचेष्वधिको बबाधे" । इति रघुः । २ ।
१४ ॥ तत्रैव । ११ । १ ।

:"किञ्चिदूनमनूनर्द्धेः शरदामयुतं ययौ" ।

"ऊनद्विवार्षिकं प्रेतं
निदध्युर्बान्धवा वंहिः" ।
इति मनुः । ५ । ६८ ॥)

**ऊनविंशः**, त्रि, ऊनविंशतेः पूरणः । यथा, --

"तिथ्यङ्गवेदैकदशोनविंश-
भैकादशाष्टादशविंशसंख्याः ।
इष्टोडना सूर्य्ययुतोडुना च
योगादमूश्चेद्दशयोगभङ्गः" ॥
इति ज्योतिस्तत्त्वम् ॥

**ऊनविंशतिः**, स्त्री, (एकेन ऊना विंशतिः ।) एकोन-

विंशतिः । ऊनिश इति भाषा ।
यथा । "ऊनविं-
शतिदास्यमानपिण्डस्थानानि"
। इति तिथ्यादि-
तत्त्वे आमावस्याप्रकरणे ॥

**ऊम्**, व्य (ऊय्यते । ऊय् + मुक् ।) रोषोक्तिः ।

पृच्छा । इति मेदिनी ॥ निन्दा
। स्पर्द्धा । इति
शब्दरत्नावली ॥

**ऊमं**, क्ली, (अवतीति । अव + "अविसिविमिशु-

षिभ्यः कित्" । १ । १४३ ।
इति उनादिसूत्रेण
मन् । कित् ऊठ् च ।)
देशविशेषः । इति
सिद्धान्तकौमुदी ॥

**ऊय**, ई ङ सेवने । तन्तुसन्ताने इति यावत् ।

भृगुवंशीय ऋषिभेदः । स च और्व्व इति
नाम्ना
ख्यातः । तस्य जन्मकथा और्व्वशब्दे
द्रष्टव्या ॥)

**ऊरुपर्ब्बा**, [न्] पुं, क्ली, (ऊरोः पर्ब्बेव ।) जानु ।

इत्यमरः ॥ हाँटु इति भाषा ।

**ऊरुरी**, ब्य, (ऊर + रुरीक् ।) विस्तारः । अङ्गी-

कारः । इति भरतो द्विरूपकोषश्च ॥

**ऊरुस्तम्भः**, पुं, (ऊरू स्तभ्नाति इति ऊरु + स्तन्भ +

अण् ।) ऊरुरोगविशेषः । यथा ।
अथोरुस्तम्भा
धिकारः । तत्रोरुस्तम्भस्य
विप्रकृष्टसन्निकृष्टनिदान-
सम्प्राप्तिपूर्ब्बकं लक्षणमाह ।
"शीतोष्णद्रवसंशुष्कगुरुस्निग्धैर्न्निषेवितैः ।
जीर्णाजीर्णे तथायाससंक्षोभस्वप्नजागरैः ॥
सश्लेष्ममेदः पवनः साममत्यर्थसञ्चितम् ।
अभिभूयेतरं दोषमूरू चेत् प्रतिपद्यते ॥
सक्थ्यस्थिनी प्रपूर्य्यान्तःश्लेष्मणा
स्तिमितेन सः ।
तदा स्तभ्नाति तेनोरू स्तब्धौ
शीतावचेतनौ ॥
परकीयाविव गुरू स्यातामतिशयव्यथौ ।
ध्यानाङ्गमर्द्दस्तैमित्यतन्द्राच्छदर्द्यरुचिज्वरैः
॥
संयुतौ पादसदनकृच्छ्रोद्धरणसुप्तिभिः ।
तमूरुस्तम्भमित्याहुराढ्यवातमथापरे" ॥
जीर्णाजीर्णे किञ्चिज्जीर्णं किञ्चिदजीर्णं
तस्मिन्
भोजनमित्यर्थः । अतएव दृढबलेन
जीर्णाजीर्णे

मात्रं साधयेत् ॥ * ॥ * ॥
अथोरुस्तम्भस्य चिकित्सा ।
"स्नेहासृक्स्रावमनं
वस्तिकर्म्मविरेचनम् ।
वर्जयेदाढ्यवाते तु यतस्तैस्तस्य
कोपनम् ॥
तस्मादत्र सदा कार्य्यं स्वेदनं घनरूक्षणम्
।
आममेदःकफाधिक्यान्मारुतं नयता
समम् ॥
यत् स्यात् कफप्रशमनं न तु
मारुतकोपनम् ।
तत्सर्व्वं सर्व्वदा कार्य्यमूरुस्तम्भस्य
भेषजम् ॥
सर्व्वो रूक्षक्रमः कार्य्यस्तत्रादौ
कफनाशनः ।
पश्चाद्वातविनाशाय विधातव्याखिला क्रि
॥
भोज्याः पुराणाः
श्यामाककोद्रवोद्दालशालयः ।
जाङ्गलैरघृतैर्म्मांसैः शाकैश्चालवणैर्हितैः"
॥
उद्दालो वनकोद्रवः ।
"दद्याद्वास्तूकशाकेन हीनेन लवणेन तु ।
जीर्णशाल्योदनं रूक्षमूरुस्तम्भवते भिषक्
॥
रूक्षणाद्वातकोपश्चेन्निद्रानाशादिसम्भवः
।
स्नेहस्वेदक्रमस्तत्र कार्य्यो वातामयापहः
॥
प्रतारयेत् प्रतिस्रोतः सरितं
शीतलोदकाम् ।
सरश्च विमलं शीतं स्थिरतोयं पुनः पुनः
॥

इति कविकल्पद्रुमः (भ्वादिं-आत्मं-सकं-सेट् ।) दीर्घादिः । सेवनमिह षिव्युतन्तुततावित्यस्य रूपं ई ऊतः । ङ ऊयते पटं सौचिकः । इति दुर्गादासः ॥

**ऊररी**, व्य (ऊय् + वाहुलकात् ररीक् ।) विस्तारः ।

अङ्गीकारः । इति भरतो द्विरूपकोषश्च ॥

**ऊरव्यः**, पुं, (ऊरोर्जातः । ऊरु + शरीरावयवात्

यदिति यत् । वैश्यस्य ब्रह्मणः ऊरोर्जातत्वात् तथात्वम् ।) वैश्यः । इत्यमरः ॥ (यदुक्तं यजुषि । ३१ । ११ ॥ “ब्राह्मणोऽस्य मुखमासीत् बाहूराजन्यः कृतः । ऊरूतदस्य यत् वैश्यः पद्भ्यां शुद्रोऽजायत” ॥ इति ॥)

**ऊरी**, व्य (ऊर + बाहुलकात् रीक् ।) विस्तारः ।

अङ्गीकारः । इत्यमरः ॥ (यथा हितोपदेशे वि-ग्रहे । “ऊरीकृत्य प्रस्थितः” ॥)

**ऊरीकृतः**, त्रि, (ऊरी + कृ + क्त ।) अङ्गीकृतः ।

विस्तृतः । इत्यमरः ॥

**ऊरुः**, पुं, (ऊर्णूयते आच्छाद्यते इति । ऊर्णू +

समश्नत इति पठितम् । तत्र शीतादिभिर्निषे-वितैर्भुक्तैः । संक्षोभेण सञ्चलनेन । स्वप्नेन दिवा ।
जागरणेन रात्रौ । अभिभूय दूषयित्वा । इतरं दोषं पित्तम् । स्तिमितेन आर्द्रेण द्रुतेनेति यावत् ।
न तु घनेन । एवंविधेन श्लेष्मणा । सः पवनः ।
तदा ऊरू स्तभ्नाति तेन स्तम्भेन ।
अचेतनौ शून्यौ ।
परकीयाविव अक्रियावित्यर्थः । ध्यानं संमूढता ।
पादसम्बन्धिनीभिः सदनकृच्छ्रोद्धरणसुप्तिभिश्च संयुक्तौ । अयंसुश्रुतेन महावातव्याधिषु पठितः ॥ *
प्राग्रूपमाह ।
“प्राग्रूपं तस्य निद्रातिध्यानं स्तिमितता ज्वरः ।
रोमहर्षोऽरुचिश्छर्द्दिर्जङ्घोर्व्वोः सदनं तथा” ॥ * ॥
तस्योपशयमाह ।
“वातशङ्किभिरज्ञानात्तत्र स्यात् स्नेहनात् पुनः ।
पादयोः सदनं सुप्तिः कृच्छ्रादुद्धरणं तथा ॥
जङ्घोरुग्लानिरत्यर्थं शश्वदादाहवेदना ।
पदञ्च व्यथते न्यस्तं शीतस्पर्शं न वेत्ति च ॥
संस्थाने पीडने गत्यां चालने चाप्यनीश्वरः ।
अन्यनेयौ हि संभग्नावूरू पादौ च मन्यते” ॥
अन्यनेयौ अन्यपुरुषचाल्यौ भवत इत्यर्थः । अज्ञा-नात् अनिश्चयात् स्तम्भ-सुप्ति-कम्पादि-दर्शनेन ।

मूलैर्व्वा वाजिगन्धायाः अथवार्कस्य कारयेत् ।
गाढमुत्सादनं वैद्य ऊरुस्तम्भे सवेदने ॥
त्रिफलाग्रन्थिकव्योषचूर्णं लिह्यात् समाक्षिकम् ।
ऊरुस्तम्भविनाशाय पुरं मूत्रेण वा पिबेत् ॥
नागरं पिप्पलीञ्चापि गुग्गुलुं वा शिलाजतु ।
ऊरुस्तम्भी पिबेण्मूत्रैर्द्दशमूलीरसेन वा” ॥
इत्यूरुस्तम्भाधिकारः । इति भावप्रकाशः ॥
अपि च ।
“त्रिफला चित्रकं चित्रं तथा कटुकरोहिणी ।
ऊरुस्तम्भहरो ह्येष उत्तमन्तु विरेचनम् ॥
हरीतकीं शृङ्गवेरं देवदारु च चन्दनम् ।
क्वाथयेच्छागदुग्धेन अपामार्गस्य मूलकम् ॥
जङ्घाशूलमूरुस्तम्भं सप्तरात्रे तु नाशयेत्” ॥ * ॥
इति गारुडे १८७ अध्यायः ॥
(“एक ऊरुस्तम्भ इति आमत्रिदोषसमुत्थानः” ।
इति चरके सूत्रे ऊनविंशोऽध्यायः ॥ अस्य सकारणलक्षणसम्प्राप्तिचिकित्सितानि यथा,
“श्रिया परमया ब्राह्म्या परया च तपःश्रिया ।
अहीनं चन्द्रसूर्य्याभ्यां सुमेरुमिव पब्बतम् ॥
धीर्धृतिस्मृतिविज्ञानज्ञानकीर्त्तिक्षमालयम् ।

(ऊर्णोतेर्नुलोपः । १ । ३१ ।
इति उणादिसूत्रेण
कर्म्मणि कुः नुलोपश्च ।)
जानूपरिभागः । उरत्
इति भाषा । तत्पर्य्यायः ।
सक्थि २ । इत्यमरः ॥
(यथा, साहित्यदर्पणे ।
“भुवनत्रितये न बिभर्त्ति
तुलामिदमूरुयुगं न
चमूरुदृशः” ।
“भुजमूर्द्ध्वोरुबाहुल्यादेकोऽपि
धनदानुजः” ।
इति रघुः । १२ । ८८ । तथा
मनुः । १ । ३१ ।
“लोकानान्तु विवृद्ध्यर्थं
मुखबाहूरुपादतः” ॥)

**ऊरुजः** पुं, (ऊरोर्जायते इति । ऊरु + जन् + ड ।)

बैश्यः । स तु ब्रह्मण ऊरुभ्यां
जातः । इत्यमरः ॥
(यथा, विष्णुपुराणे । १ । ६ ।
४ ।
रजसा तमसा चैव
समुद्रिक्तास्तथोरुजाः” ।

वातशङ्किभिः वातव्याधिशङ्किभिः । तत्र
ऊरुस्तम्भे ।
स्नेहनात् स्नेहादिना स्नेहन्या चिकित्सया
। पाद-
सदनादय ऊरुभग्नोपमत्वात् ते विकाराः
स्युः ।
जङ्घोरुग्लानिः जङ्घोर्व्वोर्गमनादावशक्तिः ।
आदा-
हवेदना ईषद्दाहेन सह वेदना ॥ * ॥
ऊरुस्तम्भस्यारिष्टं लक्षणमाह ।
“यदा दाहार्त्तितोदार्त्तो वेपनः पुरुषो भवेत् ।
ऊरुस्तम्भस्तदा हन्यात् साधयेदन्यथा
नवम्” ॥
अन्यथा दाहाद्युक्तोपद्रवरहितं तमपि
नवमुत्पन्न-

अग्निवेशो गुरुं काले संशयं परिपृष्टवान् ॥
भगवन् ! पञ्च कर्म्माणि समस्तानि
पृथक्तथा ।
निर्द्दिष्टान्यामयानान्तु सर्व्वेषामेव भेषजम्
॥
दोषजोऽस्त्यामयः कश्चिद्यस्यैतानि
भिषग्वर ! ।
न स्युः शक्ता निशमने साध्यस्य क्रियया
ततः ॥
अस्त्यूरुस्तम्भ इत्युक्ते गुरुणा तस्य
कारणम् ।
सलिङ्गं भेषजं भूयः पृष्टस्तेनाब्रवीद्गुरुः”
॥ * ॥
निदानं सम्प्राप्तिलक्षणे च यथा ॥
“स्निग्धोष्णलघुशीतानि जीर्णाजीर्णे
समश्नतः ।
द्रव्यशुष्कदधिक्षीरात्युग्रानूपौदकामिषैः ॥
पिष्टव्यापन्नमद्यातिदिवास्वप्नप्रजागरैः ।
लङ्घनाध्यशनायासभयवेगविधारणैः ॥
स्नेहाच्चामञ्चितङ्कोष्ठे वातादीन् मेदसा
सह ।

:रुद्ध्वाशु गौरवादूरू यात्यधोगैः शिरादिभिः ॥

पूरयन् सक्थिजङ्घोरुदोषो मेदोबलोत्कटः ।
अविधेयं परिस्पन्दं जनयत्यल्पविक्रमम् ॥
महासरसि गम्भीरे पूर्णेऽम्बु स्तिमितं यथा ।
तिष्ठति स्थिरमक्षोभ्यं तद्वदूरुगतः कफः ॥
गौरवायाससङ्कोचदाहरुक्सुप्तिकम्पनैः ।
भेदस्फुरणतोदैश्च युक्तो देहं निहन्त्यसून् ॥
गुरुः श्लेष्मा समेदस्को वातपित्तेऽभिभूय तु ।
स्तम्भयेत्
स्थैर्य्यशैत्याभ्यामूरुस्तम्भस्ततो मतः” ॥
पूर्ब्बरूपाणि यथा ॥
“प्राग्रूपं
ध्याननिद्रातिस्तैमित्यानोचकज्वराः ।
रोमहर्षश्च छर्द्दिश्च जङ्घोर्व्वोः
सदनन्तथा” ॥
अन्यदत्रैव प्रागुक्तम् ॥ * ॥
चिकित्सा-यथा ॥
“तस्य न स्नेहनं कार्य्यं न वस्तिर्न
विरेचनम् ।
न चैव वमनं यस्मात्तन्निबोधत कारणम् ॥
वृद्धये श्लेष्मणो नित्यं स्नेहनं वस्तिकर्म्म च ।
तत्स्थस्योद्धरणे चैव न समर्थं विशोधनम् ॥
श्लेष्मस्थानगतः श्लेष्मा पित्तञ्च
वमनात्सुखम् ।
हर्त्तुमामाशयस्थौ च स्रंसनात्तावुभावपि ॥
पक्वाशयस्थाः सर्व्वेऽपि
वस्तिभिर्मूलनिर्जयात् ॥

सक्षौद्रं मात्रया तच्चाप्यूरुस्तम्भार्द्दितः
पिबेत्” ॥
इति कुष्ठाद्यं तैलम् ॥ * ॥
“पलाभ्यां पिप्पलीमूलनागरादष्टकट्वरः ।
तैलप्रस्थः समो दध्ना गृध्रस्यूरुग्रहापहः” ॥
इति अष्टकट्वरं तैलम् ॥ * ॥
“इत्यभ्यन्तरमुद्दिष्टमूरुस्तम्भस्य भेषजम् ।
श्लेष्मणः क्षपणन्त्वन्यद्बाह्यं शृणु
चिकित्सितम् ॥
वल्मीकमृत्तिकामूलं करञ्जात्
सफलत्वचम् ।
इष्टकानां ततश्चूर्णैः कुर्य्यादुत्सादनं भृशम् ॥
मूलैर्वाप्यश्वगन्धाया मूलैरर्कस्य वा भिषक् ।
पिचुमर्द्दस्य वा मूलैरथवा देवदारुणः ॥
क्षौद्रसर्षपवल्मीकमृत्तिकासंयुतैर्भिषक् ।
गाढमुत्सादनं कुर्य्यादूरुस्तम्भे प्रलेपनम्” ॥
“श्योनाकं खदिरं विल्वं वृहत्यौ
सरलासनौ ।
अग्निमन्थाढकीशिग्रुश्वदंष्ट्रासुरसार्जकान् ॥
तर्कारीं नक्तमालञ्च जलेनोत्क्वाथ्य
सेचयेत् ।
प्रलेपो मूत्रपिष्टैर्वाप्यूरुस्तम्भनिवारणः ॥
कफक्षयार्थं व्यायामेष्वेनं शक्येषु
चोत्सृजेत् ।
स्थलान्याक्रामयेत् कल्यं शर्कराः
सिकतास्तथा ॥
प्रतारयेत् प्रतिस्रोतो नदीं शीतजलां
शिवाम् ।

“पूजितं ह्यशनं नित्यं बलमूर्जञ्च
यच्छति” ॥
“यस्मात् पूजितमन्नं सामर्थ्यं
वीर्य्यं च ददाति” ॥)
इति कुल्लुकभट्टः ॥)
कान्तिकनामसंवत्सरः ॥
(स्वारोचिषस्य मनोः पुत्त्रभेदः
। यथा हरिवंशे
७ । १४ ।
“प्रथितश्च नभस्यश्च नभ
ऊर्ज्जस्तथैव च ।
स्वारोचिषस्य पुत्त्रास्ते
मनोस्तात महात्मनः” ॥
स्त्री, हिरण्यगर्भकन्या । यथा,
हरिवंशे ७ । १७ ।
“हिरण्यगर्भस्य सुता ऊर्ज्जा
नाम सुतेजसः” ॥)

**ऊर्ज्जस्वलः**, त्रि, (अतिशयितः ऊर्जो बलं अस्या-
स्तीति । ऊर्जस् +
ज्योस्नातमिस्रेति वलच् ।)
अतिशयबलवान् । इत्यमरः ॥
(“ऊर्जस्वलं हस्ति-
तुरङ्गमेतत्” । इति भट्टिः । ३ ।
५५ । “भोक्तार-
मूर्जस्वलमात्मदेहम्” । इति
रघुः । २ । ५० ॥)

**ऊर्ज्जस्वि**, [न्] क्ली, (ऊर्जस् + विनि ।) अलङ्कार-
विशेषः । तस्य लक्षणम् ।
साहङ्कारवस्त्वभिधा-
नम् । तथा चोक्तम् । ऊर्जस्वि
रूढाहङ्कारम् ।

शक्या न त्वाममेदोभ्यां स्तब्धा जङ्घोरुसंस्थिताः ॥
वातस्थाने हितं शैत्यात्तयोस्तम्भाच्च तद्गताः ।
न शक्याः सुखमुद्धर्त्तुं जलं निम्नादिव स्थलात् ॥
तस्य संशमनं कुर्य्यात् क्षपणं शोधनन्तथा ।
आधिक्यादामकफवोर्युक्त्यपेक्षः सदा भिषक् ॥
सदा रूक्षोपचाराय यवश्यामाककोद्रवान् ।
शाकैरलवणैर्द्द्याज्जलतैलोपसाधितैः ॥
सुनिषण्णकनिम्बार्कवेत्रारम्बधपल्लवैः ।
वायसीवास्तुकैरन्यैस्तिक्तैश्च कुलकादिभिः ॥
क्षारारिष्टप्रयोगैश्च हरीतक्यास्तथैव च ।
मधूदकस्य पिप्पल्या ऊरुस्तम्भविनाशनाः ॥
समङ्गा शाल्मली विल्वं मधुना सह नापिबेत् ।
तथा ग्रीवेष्टकोदीच्यदेवदारुनतान्यपि ॥
चन्दनं धातकीकुष्ठं तालीशं नलदन्तथा ।
मुस्तं हरीतकी लोध्रं पद्मकं तिक्तराहिणी ॥
देवदारु हरिद्रे द्वे वचा कटुकरोहिणी ।
पिप्पली पिप्पलीमूलं सरलं देवदारु च ॥
चव्यं चित्रकमूलानि देवदारु हरीतकी ।
भल्लातकं समूला च पिप्पली पञ्च तान् पिबेत् ॥
सक्षौद्रानर्द्धश्लोकोक्तान् कल्कानूरुग्रहापहान्” ॥
“मूर्व्वामतिविषां कुष्ठं चित्रकं कटुरोहिणीम् ।
पूर्व्ववद्वा पिबेत्तोये रात्रिस्थितमथापि वा ॥
स्वर्णक्षीरीमतिविषां मुस्तं तेजोवतीं वचाम् ।
सुराह्वं चित्रकं कुष्ठं पाठां कटुकरोहिणीम् ।
सरश्च विमलं शीतं स्थिरतोयं पुनः पुनः ॥
तथा विशुष्केऽस्य कफे शान्तिमूरुग्रहो व्रजेत् ।
श्लेष्मणः क्षपणं यत्स्यान्न च मारुतकोपनम् ॥
तत् सर्व्वं सर्व्वदा कार्य्यमूरुस्तम्भस्य भेषजम् ।
शरीरं बलमग्निञ्च कार्य्यैषा रक्षता क्रिया” ॥
इति चरके चिकित्सास्थाने २७ अध्यायः ॥ * ॥
“निष्कत्रयं शुद्धसूतं निष्कद्वादशगन्धकम् ।
गुञ्जावीजञ्च षण्णिष्कं निम्ववीजं जया तथा ॥
प्रत्येकं निष्कमात्रन्तु निष्कं जैपालवीजकम् ।
जया जम्बीरधुस्तूरकाकमाचीद्रवैर्दिनम् ॥
भावयित्वा वटीं कृत्वा दद्याद्गुञ्जाचतुष्टयम् ।
गुञ्जाभद्ररसो नाम हिङ्गुसैन्धवसंयुतः ॥
शमयत्यूद्र्ध्वगं दुःखमूरुस्तम्भं सुदारुणम्” ॥
इति गुञ्जाभद्रो रसः ॥ इति वैद्यकरसेन्द्रसार-संग्रहे ऊरुस्तम्भाधिकारः ॥ * ॥)

**ऊरुस्तम्भा**, स्त्री, (ऊरुस्तम्भ इव आकृतिर्यस्याः ।)

कदलीवृक्षः । इति राजनिघण्टः ॥ (कदलीशब्दे-ऽस्या गुणादयो व्याख्येयाः ॥)

**ऊर्ज्ज**, क जीवने । बले । इति कविकल्पद्रुमः ॥

(चुरां-परं-अकं-सेट् ।) दीर्घादिः । क ऊर्जयति
तस्योदाहरणं यथा ।
“प्रचपलमगुरुं भरास-हिष्णुं जनमसमानमनूर्जितम्
विवर्ज्य । कृतवस-तिमिवार्णवोपकण्ठे
स्थिरमतुलोन्नतिमूढतुङ्गमे-घम्” ॥ इति भट्टिः ॥

**ऊर्ज्जस्वी**, [न्] त्रि, (अतिशयितं उर्जो बलमस्या-

स्तीति + ऊर्जस् + विनि ।)
अतिशयबलवान् ।
इत्यमरः ॥ (यथा, भारते ।)
“अन्नमूर्जस्करं लोके
दत्त्वोर्जस्वी भवेन्नरः” ॥)

**ऊर्णनाभः**, पुं, (ऊर्णेव तन्तुर्नाभौ यस्य । यद्वा मृदु-

त्वादूर्णेव नाभिर्यस्य ।
नाभेरुपसङ्ख्यानमित्यच् ।
ङ्यापोरिति ६ । ३ । ६३ ।
ह्रस्वः ।) कीटविशेषः ।
माकड्सा इति भाषा ।
तत्पर्य्यायः । लूता २
तन्तुवायः ३ मर्कटकः ४ ।
इत्यमरः ।
(यथाह उज्वलदत्तः । ५ । ४७ ।
“नाचारेण विना
सृष्टिरूर्णनाभेरपीष्यते ।
नच निःसाधनः कर्त्ता कश्चित्
सृजति किञ्चन” ॥
अत्र ऊर्णनाभिरिति चिन्त्यम् ।)
(स्वनामख्यातो
धृतराष्ट्रपुत्त्रभेदः । यथा,
महाभारते । १ । ६७ । ९७ ।

लेहयेन्मधुना चूर्णं मक्षौद्रं वा जलप्लुतम्”
॥
“अपतर्पणजश्च स्याद्दोषः सन्तर्पयेत्तु तम्
।
युक्त्या जाङ्गलर्जर्मांसैः पुराणैश्चैव
शालिभिः ॥
रूक्षणाद्वातकोपश्चेन्निद्रानाशार्त्तिपूर्ब्बकः ।
स्नेहस्वेदक्रमस्तत्र कार्य्यो वातामयापहः”
॥
“कुष्टं श्रीवंष्टकोदीच्यं सरलं दारुकेशरम् ।
अजगन्धाश्वगन्धा च तैलन्तैः सार्षपं
पचेत् ।

जनो जीवति बली स्याद्वेत्यर्थः । इति
दुर्गादासः ॥

**ऊर्ज्जं**, क्ली, (उर्ज्यते जीव्यतेऽनेत । ऊर्ज्ज + घञ् ।)

ञलम् । इति शब्दरत्नावली ॥ (यथा,
भागवते ।
४ । २४ । ३८ ॥
“नम ऊर्ज इषे एय्याः पतये यज्ञरेतसे ।
तृप्तिदाय च जीवानां नमः सर्व्वरसात्मने”
॥)

**ऊर्ज्जः**, पुं, (ऊर्ज्जयति उत्साहयति जिगीषून् इति ।

ऊर्ज्ज + णिच् + अच् ।) कार्त्तिकमासः ।
उत्-
साहः । बलम् । (यथा, ऋग्वेदे । १ । २६
। १ ।
“वसिष्ठा हि मिहेध्य वस्त्राण्यूर्जां पते” ।
“ऊर्जां
बलपराक्रमादीनाम्” । इति भाष्यम् ।)
प्राणनम् ।
इति मेदिनी ॥ (वीर्य्यम् । यथा, मनुः । २
। ५५ ।

“ऊर्णनाभः सुनाभश्च तथा
नन्दोपनन्दकौ” ।
स्यनामख्यातो दैत्यभेदः ।
यथा, हरिवंशे । ३ । ८६ ।
“सूक्ष्मश्चैव निचन्द्रश्च
ऊर्णनाभो महागिरिः” ॥)

**ऊर्णनाभिः**, पुं, (ऊर्णावत् नाभौ यस्य ।) मर्कटकः ।

इति शब्दरत्नावली ।
(यथा, भागवते । २ । ५ । ५ ।
“आत्मशक्तिमवष्टभ्य
ऊर्णनाभिरिवाक्लमः” ॥)

**ऊर्णा**, स्त्री, (ऊर्णोति । ऊर्णु + “ऊर्णोते डः” । ५ । ४७ ।

इति उणादिसूत्रेण डः ।
डित्वात् टिलोपः ।)
मेषादिलोम । पसम् इति
भाषाभ्रु । वोरन्तरावर्त्तः ।
इत्यमरः ॥ स तु भ्रूद्वयमध्ये
मृणालतन्तुसूक्ष्मः
शुभायत एकः प्रशस्तावर्त्तो
महापुरुषलक्षणम्
चक्रवर्त्त्यादीनां महायोगिनाञ्च
भवति । इति
भरतः ॥ (चित्ररथपत्नी । यथा,
भागवते । ५ ।
१५ । १२ । “चित्ररथादूर्णायां
सम्राडजनिष्ट” ॥)

**ऊर्णायुः**, पुं, (ऊर्णा अस्यास्तीति । ऊर्णा युस् ।)

मेषलोमकम्बलः । मेषः ।
इत्यमरः ॥ ऊर्णनाभः ।

:इति हेमचन्द्रः ॥ क्षणभङ्गः । इति मेदिनी ॥

(गन्धर्व्वविशेषः । यथा, हरिवंशे ।
“ऊर्णायुश्चित्रसेनश्च हाहा हुहुश्च भारत !
॥)

**ऊर्णु**, ञ ल आच्छादने । इति कविकल्पद्रुमः ॥

(अदां-उभं-सकं-सेट् ।)
दीर्घादिर्दन्त्योपधः । रेफ-
योगान्मूर्द्धन्यः । तेन ऊर्णुनाव इत्यादौ
निमित्ता-
भावान्मूलधातोर्णत्वाभावः । लञ ऊर्णोति
ऊर्णौति
ऊर्णुते दिशं मेघः । इति दुर्गादासः ॥
(यथा, भट्टिः । १४ । १०३ ।
“ऊर्णुनाव स
शस्त्रौघैर्वानराणामनीकिनीम्” ॥)

**ऊर्द्दरः**, पुं, (ऊर्जेन बलेन दृणाति विदारयति ।

ऊर्ज + दॄ + “ऊर्जिदृणातेरलचौ
पूर्ब्बपदान्त्यलो-
पश्च” । ५ । ४० । उणादिसूत्रेण अल्
अत् बा ।
स्वरभेदार्थं प्रत्ययद्वयम् ।) शूरः । राक्षसः
। इत्यु-
णादिकोषः ॥ (कुसूलम् । धान्याद्याधारः ।
यथा, ऋग्वेदे । ३ । १४ । ११ ॥ “ऊर्द्दरं
पृणता
यवेनेद्धम्” । “ऊर्द्दरं कुसूलम्” इति
भाष्यम् ॥)

**ऊर्द्धः**, त्रि, उपरि । उच्छ्रितः । तुङ्गः । इति अन्त्यस्थ-

वकारान्तोद्ध्र्वशब्दार्थे मेदिनी ॥
अत्र ऊर्द्धशब्दो निर्व्वकारः । तदुक्तं
वर्णदेश-

**ऊद्ध्र्वकः**, पुं, (उद्ध्र्वः सन् कायति शब्दायते इति ।

ऊद्ध्र्व + कै + क ।) मृदङ्गविशेषः
। यथा, --
“ऊद्ध्र्वको गोपुच्छवत् स
त्रितालोऽष्टाङ्गुलो मुखे ।
धृत्वोद्ध्र्वं वाद्यते तेषां वादनं
दुर्ज्जनं नना” ॥
इति भरतधृतशब्दार्णवः ॥ अपिच
। “हरीतक्या-
कृतिस्त्यङ्क्यस्तथालिङ्ग्यो
यवाकृतिः । ऊद्ध्र्वको दण्ड-
तुल्यः स्यान्मुरजा भेदतो मताः”
॥ अन्यटीका-
यान्तु । “यवमध्यस्तथोद्ध्र्वकः”
। इत्यमरटीका-
सारसुन्दरी ॥

**ऊद्ध्र्वकण्टी**, स्त्री, (ऊद्ध्र्वे कण्टः कण्टको यस्याः ।)

महाशतावरी । इति राजनिर्घण्टः
॥
(“महाशतावरी चान्या
शतमूल्यूद्ध्र्वकण्टिका” ।
इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ॥)

**ऊद्ध्र्वजानुः**, त्रि, (ऊद्ध्र्वे स्थूले जानुनी यस्य ।) उपरि-

भागे स्थूलजानुकः । तत्पर्य्यायः ।
ऊद्ध्र्वज्ञुः २ ।
इत्यमरः ॥ (यथा,
सांख्यायनश्रौतसूत्रम् १ । ५ । ८ ।
“उपविश्योद्ध्र्वजानुः” । इति ॥)

**ऊद्ध्र्वज्ञः**, त्रि, (ऊद्ध्र्वे जानुनी यस्य । पृषोदरादित्वात्

जन्मना लब्धजातिस्तु
वेदपन्थानमाश्रितः ।
पुण्ड्रान्तरं भ्रमाद्वापि ललाटेनैव
धारयेत् ॥
ख्यातिकान्त्यादिसिद्ध्यर्थं चापि
विष्णवगमादिषु
स्थितं पुण्ड्रान्तरं नैव धारयेत् वैदिको
नरः” ॥
श्राद्धे
ऊद्ध्र्वपुण्ड्रादिविधिनिषेधव्यवस्था ।
यथा, निर्णयसिन्धौ हेमाद्रिः ।
“जपे होमे तथा दाने स्वाध्याये
पितृकर्म्मणि ।
तत्सर्व्वं नश्यति क्षिप्रमूद्ध्र्वपुण्ड्रं विना
कृतम्” ॥
तथा च नारदः ।
“यज्ञो दानं जपो होमः स्वाध्यायः
पितृकर्म्म च ।
वृथा भवति विप्रेन्द्राः ! ऊद्ध्र्वपुण्ड्रं
विना कृतम्” ॥
इत्यादिवचनात् पैत्रे कर्म्मणि
ऊर्द्धपुण्ड्रधारणं
विहितम् । केचित्तु ।
“ऊद्ध्र्वपुण्ड्रो द्विजातीनामग्निहोत्रसमो
विधिः ।
शाद्धकाले च संप्राप्ते कर्त्ता भोक्ता च
वर्जयेत्” ॥
तथा, --
“वामहस्ते च ये दर्भा गृहे
रङ्गबलिन्तथा ।
ललाटे तिलकं दृष्ट्वा निराशाः पितरो
गताः” ॥
इति संग्रहोक्तवचनात् तथा, --

नायां । उज्जिहीते उद्गच्छति उदो हाङो डप्र-
त्ययः आदिवर्णस्य ऊरादेशः । इति मधुमाधवा-
दयः ॥ इति मृदङ्गभेदोर्द्धकशब्दस्य टीकायां
भरतः ॥ (यथा, महाभारते ।
मुद्गलज्ञानप्राप्तौ ।
३ । २६० । २ ।
"ऊर्द्धगः सत्पथः शश्वद्देवयानचरो मुने"
॥)

**ऊर्द्धकः**, पुं, (ऊर्द्धः सन् कायतीति । ऊर्द्ध + कै शब्दे
+ क ।) ऊद्ध्‌र्वकः । मृदङ्गविशेषः । इत्यमरटीकायां
भरतमुकुटौ । (यथा शब्दार्णवे ।
"ऊर्द्धको गोपुच्छवत् सत्रितालोऽष्टाङ्गुलो मुखे ।
धृत्वोद्ध्वं वाद्यते तेषां वादनं दुर्जनं न वा"
॥
तथाच चिन्तामणौ ।
"हरीतक्याकृतिस्त्वङ्क्यस्तथालिङ्ग्यो यवाकृतिः ।
ऊर्द्धको दण्डतुल्यः स्यात् मुरजा भेदतो
मताः" ॥)

**ऊद्ध्‌र्वः**, पुं, दण्डवत्स्थितः । यथा, --
"आसीन ऊद्ध्‌र्वः प्रह्वो वा नियमो यत्र नेदृशः ।
तदासीनेन कर्त्तव्यं न प्रह्वेन न तिष्ठता" ॥
इत्यादि छन्दोगपरिशिष्टात् ॥ आसीनः उपविष्टः ।
"ऊद्ध्‌र्वो दण्डवत् स्थितः
प्रह्वोऽवनतपूर्ब्बकायः" ।
इति श्राद्धतत्त्वम् ॥

साधुः ।) ऊद्ध्‌र्वजानुः । इति
भरतो द्विरूपकोषश्च ॥

**ऊद्ध्‌र्वज्ञुः**, त्रि, (ऊद्ध्‌र्वे जानुनी यस्य । "ऊद्ध्‌र्वात् विभा-
षा" । ५ । ४ । १३० । इति पक्षे
ज्ञुः ।) ऊद्ध्‌र्वजानुः ।
इत्यमरः ॥ (यथा,
सांख्यायनश्रौतसूत्रम् । "ऊद्ध्‌र्व-
ज्ञुरनवानं यजति" ॥
तथाच माघे ११ । २१ ।
"क्षणमयमनुभूय स्वप्नमूर्द्धज्ञुरेव"
॥)

**ऊद्ध्‌र्वदेवः**, पुं, (ऊद्ध्‌र्वः तुङ्गः श्रेष्ठो देवः ।) विष्णुः । इति
शब्दरत्नावली ॥

**ऊद्ध्‌र्वन्दमः**, त्रि, (ऊद्ध्‌र्वम् + दम् + अच् ।) ऊद्ध्‌र्वस्थः ॥
इति त्रिकाण्डशेषः ॥ ऊद्ध्‌र्वङ्गम
इति युक्तिसिद्ध-
पाठः ॥

**ऊद्ध्‌र्वपादः**, पुं, (ऊद्ध्‌र्वाः पादा यस्य ।) शरभः । इति
शब्दरत्नावली ॥ (ऊद्ध्‌र्वपदे, त्रि
॥)

**ऊद्ध्‌र्वपुण्ड्रः**, पुं, (ऊद्ध्‌र्वः पुण्ड्रः इव ।) तिलकविशेषः ।
स तु ब्राह्मणललाटे पुण्ड्रेक्षुवत्
चन्दनादिना
कृतोद्ध्‌र्वरेखात्रयः । यथा ।
"ऊद्ध्‌र्वपुण्ड्रे त्रिपुण्ड्रं
स्यात् त्रिपुण्ड्रे
नोद्ध्‌र्वपुण्ड्रकमिति" ।
"ऊद्ध्‌र्वपुण्ड्रं द्विजः
कुर्य्याद्वारिमृद्भस्मचन्दनैः" ।

"ऊद्ध्‌र्वपुण्ड्रं त्रिपुण्ड्रं वा
चन्द्राकारमथापि वा ।
श्राद्धकर्त्ता न कुर्व्वीत यावत् पिण्डान्न
निर्व्वपेत्" ।
इति विश्वप्रकाशवचनाच्च श्राद्धकाले
ऊद्ध्‌र्वपुण्ड्रा-
दिकं न धार्य्यमित्याहुः । तन्न, यतः
कुलाचारा-
देव व्यवस्था । यत्तु, --
"ललाटे पुण्ड्रकं दृष्ट्वा स्कन्धे माल्यं
तथैव च ।
निराशाः पितरो यान्ति दृष्ट्वा च
वृषलीपतिम्" ॥
इति हेमाद्रिधृतवचनम् तत्
गन्धत्रिपुण्ड्रक-
विषयम् । अतः श्राद्धकाले
गन्धत्रिपुण्ड्रकएव न
धार्य्यः । अन्यरूपस्तु धार्य्य एव ।
तथा च व्यासः ।
"वर्जयेत्तिलकं भाले श्राद्धकाले च
सर्व्वदा ।
ऊद्ध्‌र्वपुण्ड्रं त्रिपुण्ड्रं वा धारयेत्तु
प्रयत्नतः" ॥)

**ऊद्ध्‌र्वरेताः**, [स्] पुं, (ऊद्ध्‌र्वं रेतो यस्य न पतति वीर्य्यं
यस्यत्यर्थः ॥) महादेवः । इति
त्रिकाण्डशेषः ।
(अष्टोत्तरसहस्रनामान्तर्गतो
महादेवस्य नाम-
भेदः । यथा महाभारते १३ । १७ ।
४५ ।
"ऊद्ध्‌र्वरेता ऊद्ध्‌र्वलिङ्ग
ऊद्ध्‌र्वशायी नभस्थलः" ॥)
भीष्मः । (कृतसमावर्त्तनोऽपि
भीष्मदेवः पितुः

**ऊद्र्ध्वः**, त्रि, (उत् + हा + ड । आदिवर्गस्य ऊरा-

देशः ।) उच्छ्रितः । तुङ्गः । उपरिष्टात् । इति

मेदिनी ॥ ऊद्र्ध्वशब्दो दीर्घादिः सवकारो निर्व्व-

कारश्च । तथाच उपरि ध्वन्यते इति कृतनिरुक्ति-

रुद्र्ध्वशब्दो वकारवानिति सुभूत्यादयः ॥

“कुर्व्वतीरुपलैस्तुङ्गैर्भुवनं नीचमूद्र्ध्वजैः ।

तस्या चलालीवान्वेति चित्रानागचमूद्र्ध्वजैः” ॥

इति कीचकबधयमकम् ॥ (यथा, कुमारे १ । १६ ।)

“पद्मानि यस्याग्रसरोरुहाणि

प्रवोधयत्यूद्र्ध्वमुखैर्मयूखैः” ।

ऊद्र्ध्वं शब्दो मकारान्तोऽव्ययो दीर्घादिर्वकारवान्

तथा अदन्तोऽनव्ययोऽपीति जयादित्यादयः ॥

इत्यादि च बहवः ॥

“ऊद्र्ध्वपुण्ड्रं मृदा कुर्य्यात्

त्रिपुण्ड्रं भस्मना सदा ।

तिलकं वै द्विजः कुर्य्याच्चन्दनेन यदृच्छया ॥

ऊद्र्ध्वपुण्ड्रं द्विजः कुर्य्यात्

क्षत्रियस्तु त्रिपुण्ड्रकम् ।

अद्र्ध्वचन्द्रन्तु वैश्यश्च वर्त्तुलं शूद्रयोनिजः” ॥

इति आह्निकतत्त्वधृतब्रह्माण्डपुराणम् ॥ (ऊद्र्ध्व-

पुण्ड्रधारिप्रशंसा यथा, ब्रह्मपुराणे ।

“अशुचिर्वाप्यनाचारो मनसा पापमाचरेत् ।

शुचिरेव भवेन्नित्यमूद्र्ध्वपुण्ड्राङ्कितो नरः ॥

ऊद्र्ध्वपुण्ड्रधरो मर्त्त्यो म्रियते यत्र कुत्रचित् ।

श्वपाकोटपि विमानस्थो मम लोके महीयते” ॥

अस्य धारणे वैदिकद्विजभिन्न एवाधिकारी यदुक्तं

देवीभागवते नारायणेन ॥

“ऊद्र्ध्वपुण्ड्रं त्रिशूलं च वर्त्तुलं चतुरस्रकम् ।

अद्र्ध्वचन्द्रादिकं लिङ्गं वेदनिष्ठो न धारयेत् ॥

काम्यविवाहार्थं वैवाहिकधर्म्मं

त्यक्तवान् अतस्तस्य

ऊद्र्ध्वरेतस्त्वं जातम् । एतद्विवरणन्तु

महाभारते १ ।

सत्यवतीलाभोपाख्याने १००

अध्याये द्रष्टव्यम् ॥)

मुनिविशेषः । तद्यथा । सनक-सनन्द-सनातन-

सनत्कुमारादयः । (यथा, महाभारते २ । ब्रह्म-

सभावर्णने । ११ । ४९ ॥

“अष्टाशीतिसहस्राणि

मुनीनामूर्द्ध्वरेतसाम्” ॥

त्रि, विषयासङ्गरहितः । सन्न्यासी । यथा भा-

रते शकुन्तलोपाख्याने, --

“ऊद्र्ध्वरेता महाभागो भगवान् लोकपूजितः ।

चलेद्धि वृत्ताधर्म्मोऽपि न चलेत् संशितवतः” ॥)

**ऊद्र्ध्वलिङ्गः**, पुं, (ऊद्र्ध्वं लिङ्गं यस्य । महादेवः । इति

हेमचन्द्रः ॥ (यथा, महाभारते १३ । १७ । ४५ ।

“ऊर्द्ध्वरेता उर्द्ध्वलिङ्ग ऊद्र्ध्वशायी

नभःस्थलः” ॥)

**ऊद्र्ध्वलोकः**, पुं, (ऊद्र्ध्वः उपरिस्थो लोकः ।) स्वर्गः । इति

:हेमचन्द्रः ॥ (यथा, मुग्धबोधे कारकप्रकरणे । ५ सूत्रम् । “रक्षांस्यखादयदनाययदूद्र्ध्वलोकमाक्रन्दयत्कपिभिराययदाशु रामः” ॥)

**ऊद्र्ध्वस्थः**, त्रि, (ऊद्र्ध्वं तिष्ठति यः । ऊर्द्ध + स्था + क ।) उपरिस्थितः । तत्पर्य्यायः । ऊद्र्ध्वन्दमः २ । इति त्रिकाण्डशेषः ॥

**ऊद्र्ध्वस्थितिः**, स्त्री, (ऊद्र्ध्वा स्थितिर्यत्र ।) ऊद्र्ध्वावत्तः । स तु अश्वस्य पृष्ठस्थानम् । तत्पर्य्यायः । पुरुषकम् २ । इति त्रिकाण्डशेषः ॥ उपरिस्थितिः । उपरिस्थानम् ॥

**ऊद्र्ध्वासितः**, पुं, (ऊद्र्ध्वं आसितः ।) कारवेल्लः । इति त्रिकाण्डशेषः ॥ करला इति भाषा ॥

**ऊर्म्मिः**, स्त्री, पुं, (ऋच्छतीति । ऋ गतौ । “अर्त्तेरूच्च” । ४ । ४४ । इति उणादिसूत्रेण मिः । अर्त्तेरूरादेशश्च ॥) तरङ्गः । (यथा, रघुः । १२ । ८५ । “तमाधूतध्वजपटं व्योमगङ्गोर्म्मिवायुभिः” ॥) प्रकाशः । वेगः । भङ्गः । वस्त्रसङ्कोचरेखा । वेदना । पीडा । इति मेदिनी ॥ उत्कण्ठा । इति

**ऊर्व्यङ्गं**, क्ली, (ऊर्व्व्याः पृथिव्या अङ्गमिव ।) गोमयच्छत्रिका । तत्पर्य्यायः । दिलीरम् २ शिलीन्ध्रकम् ३ वशारोहम् ४ गोलासम् ५ । इति हारावली ॥

**ऊर्षा**, स्त्री, देवताडकतृणम् । इति शब्दचन्द्रिका ॥

**ऊलुपी**, [न्] पुं, उलूपी । शिशुमारः । इत्यमरटीकासारसुन्दरी ॥ (जलजन्तुविशेषः ॥)

**ऊलूकः**, पुं, (उलुकशब्देऽस्य व्युत्पत्तिर्द्रष्टव्या ।) उलुकः पेचकः । इत्यमरटीकायां रायमुकुटः ॥ (यथा, पञ्चतन्त्रे ३ । ७७ । “ऊलूकं नृपतिं कृत्वा का नः सिद्धिर्भविष्यति” ॥)

**ऊष** रोगे । इति कविकल्पद्रुमः ॥ (भ्वादिं-परं सकं-सेट् ।) दीर्घादिः । “ऊषति सन्तं खलः” । इति दुर्गादासः ॥

**ऊषं**, क्ली, (ऊष् + क ।) प्रभातम् । इति शब्दरत्नावली ॥

**ऊषः**, पुं, क्षारमृत्तिका । इत्यमरः ॥ (यथा मनुः ५ । १२० । “कौषेयाविकयोरूषैः कुतपानामरिष्टकैः” । “ऊषैः क्षारमृत्तिकाभिः” इति कुल्लुभट्टः । कर्णविलम् । चन्दनाद्रिः ॥)

**ऊह** ङ वितर्के । सन्देहाद्विचारे । इति कविकल्पद्रुमः ॥ (भ्वादिं-आत्मं-सकं-सेट् ।) दीर्घादिः । सन्देहाद्विचारस्तर्कः । ङ ऊहन्ते धर्म्मं धीरः । यशः समूहन्निव दिग्विकीर्णमिति गेर्व्वास्योर्ह्रोढे चेति परस्मैपदविधानाच्छत्रन्तम् । “अनुक्तमप्यूहति पण्डितो जनः” । इति गणकृतानित्यत्वादिति रमानाथः । वस्तुतस्तु पचादित्वादनि ऊह इवाचरतीति क्वौ साध्यम् । इति दुर्गादासः ॥

**ऊहः**, त्रि, (ऊह् + घञ् ।) पूर्ब्बाप्राप्तस्य उत्क्षेपणम् । तत्पर्य्यायः । अध्याहारः २ तर्कः ३ । इत्यमरः ॥ वितर्कः ४ । वूहः ५ व्यूहः ६ वितर्कणम् ७ अध्याहरणम् ८ ऊहनम् ९ प्रतर्कणम् १० । इति शब्दरत्नावली ॥ अपूर्ब्बोत्प्रेक्षणम् । इति जैमिनिः ॥ असमवेतार्थकपदत्यागपूर्ब्बकसमवेतार्थकपदसमभिव्याहारकरणम् । इति श्राद्धतत्त्वटीका ॥ साकाङ्क्षवाक्यस्य पदान्तरेण आकाङ्क्षापूरणम् ॥ (ऊहनम् । आरोपः । यथा, महाभारते १३ । उमामहेश्वरसंवादे १४५ । ४३ ॥ “इमे मनुष्या दृश्यन्ते ऊहापोहविशारदाः । ज्ञानविज्ञानसम्पन्नाः प्रजावन्तोऽथ कोविदाः” ॥ परीक्षणम् । सिद्धिभेदः ॥)

**ऊहनी**, स्त्री, (ऊह् + ल्युट् + ङीप् ।) सम्मार्जनी । इति शब्दरत्नावली ॥ झाँटा इति भाषा ॥

हेमचन्द्रः ॥ "शोकमोहौ जरामृत्यू क्षुत्पिपासे
षडूर्म्मयः" । इति श्रीभागवतटीका ॥
(बुभुक्षादयः षट्, यथा; --
"बुभुक्षा च पिपासा च प्राणस्य मनसः स्मृतौ ।
शोकमोहौ शरीरस्य जरामृत्यू षडूर्म्मयः" ॥
(अश्वगतिभेदः । तल्लक्षणं यथा वैजयन्त्याम् ।
"पङ्क्तीकृतानामश्वानां नमनोन्नमनाकृतिः ।
अतिवेगसमायुक्ता गतिरूर्म्मिरुदाहृता" ॥
तथा च माघे ५ । ४ ।
"तूर्णं पयोधर इवोर्म्मिभिरापतन्तः" ॥)

**ऊर्म्मिका**, स्त्री, (ऊर्म्मिरिव । इवे प्रतिकृताविति-
कन् । ऊर्म्मिं प्रकाशं कायतीति वा । आतोनु-
पेति कः ।) उत्कण्ठा । भृङ्गनादः । वस्त्रभङ्गः ।
अङ्गुलीयकम् । वीचिः । इति हेमचन्द्रः ॥

**ऊर्म्मिमान्,** [त्] त्रि, (ऊर्म्मिरस्यास्तीति । ऊर्म्मि +
मतुप् ।) वक्रः । इत्यमरः ॥ ढेउखेलानिया इति
भाषा । तरङ्गयुक्तः ॥ (यथा, महाभारते २ ।
द्रौपदीप्रश्ने ६३ । २८ ।
"दीर्घेषु नीलेष्वथ चोर्म्मिमत्सु
जग्राह केशेषु नरेन्द्रपत्नीम्" ॥)

**ऊर्म्मिमाली**, [न्] पुं, (ऊर्म्मीणां माला विद्यतेऽस्य ।

**ऊषकं**, क्ली, (ऊष + स्वार्थे कन् ।) प्रत्यूषम् । इति
शब्दरत्नावली ।

**ऊषणं**, क्ली, (ऊष् + ल्युट् ।) मरिचम् । इति हेम-
चन्द्रः ॥ (मरिचार्थे पर्य्यायो यथा, --
"मरिचं वेल्लजं कृष्णमूषणं धर्म्मपत्तनम्" ॥
गुणाश्चास्य मरिचशब्दे ज्ञेयाः ॥ शुण्ठी च । एत-
दर्थे पर्य्यायो यथा, --
"शुण्ठी विश्वा च विश्वञ्च नागरं विश्वभेषजम् ।
ऊषणं कटुभद्रञ्च शृङ्गवेरं महौषधम्" ॥
गुणाश्च शुण्ठीशब्दे ज्ञातव्याः ॥ पिप्पलीमूलञ्च ।
एतदर्थे पर्य्यायो यथा, --
"ग्रन्थिकं पिप्पलीमूलमूषणं चटकाशिरः" ।
अस्य गुणाश्च पिप्पलीमूलशब्दे बोद्धव्याः । इति
भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**ऊषणा**, स्त्री, उषणा । पिप्पली । इति शब्दरत्ना-
वली ॥ (चविका । अस्याः पर्य्यायो यथा, --
"भवेच्चव्यन्तु चविका कथिता सा तथोषणा" ।
गुणाश्चास्याश्चविकाशब्दे बोध्याः । इति भाव-
प्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

इनिः ।) समुद्रः । इति त्रिकाण्डशेषः ॥ (“चन्द्रं प्रवृद्धोर्म्मिरिवोर्म्मिमाली” । इति रघुः ५ । ६१ ॥)

**ऊर्व्वरा**, स्त्री, उर्व्वरा । सर्व्वशस्याढ्या भूमी । इति शब्दरत्नावली । (व्युत्पत्तिस्तु ह्रस्वादौ उर्व्वराशब्दे द्रष्टव्या ॥)

**ऊर्व्वशी**, स्त्री, (ऊरुमश्नुते स्वकारणत्वेन व्याप्नोति या । ऊरु + अश् + अच् + ङीप् । नारायणोरु-सम्भवत्वात् तथात्वम् ।) उर्व्वशी । स्वर्गवेश्या-विशेषः । इत्यमरटीकायां रायमुकुटः ॥ (विस्तृतिस्तु ह्रस्वादौ उर्व्वशीशब्दे द्रष्टव्या ॥)

**ऊर्व्वसी**, स्त्री, (ऊरौ उषिता इति । पृषोदरादित्वात् साधुः ।) उर्व्वशी । इत्यमरटीकासारसुन्दरी ॥

**ऊषरः**, त्रि, (ऊष् + र ।) क्षारभूमी । लोणा जायगा इति भाषा । तत्पर्य्यायः । ऊषवान् २ । इत्यमरः ॥ (“तत्र विद्या न वप्तव्या शुभं वीजमिवोषरे” । इति मनुः । २ । ११२ । ऊषरा मृत्पित्तं कोपयेत् । प्रमाणं यथा ॥ “पित्तमूषरा” इति वैद्यकमाधव-कृतरोगनिश्चये पाण्ड्वधिकारे ॥)

**ऊषरजं**, क्ली, (ऊषर + जन् + ड ।) पांशवलवणम् । रोमकनामायस्कान्तभेदः । इति राजनिर्घण्टः ॥

**ऊषवान्,** [त्] त्रि, (उषो विद्यतेऽस्य । उष् + मतुप् । मस्य वः ।) ऊषरभूमी । इत्यमरः ॥

**ऊषा**, स्त्री, (उष् + क + टाप् ।) उषा । अनिरुद्ध-भार्य्या । इति शब्दरत्नावली ॥ (तत्कथा च भाग-वते १० स्कन्धे ६२ अध्याये तथा हरिवंशे १७४ अध्याये बाणयुद्धे द्रष्टव्या ॥)

:

ऋ

**ऋ**, ऋकारः । सप्तमस्वरवर्णः । अस्योच्चारणस्थानं

मूर्द्धा । (ऋटुरषाणाम्मूर्द्धा" । इत्युक्तेः । तथाच
शिक्षायां "स्युर्मूर्द्धण्या ऋटुरषाः" । तथा च मुग्धबोधे । "ऋत्रयं टठडढणरषा मूर्द्धण्याः" ।
इति ।) स तु ह्रस्वो दीर्घः प्लुतश्च भवति ॥ (एवं
त्रिधापि उदात्तानुदात्तसरितभेदात् नवविधस्ततः
प्रत्येकं
अनुनासिकानुनासिकभेदादष्टादशविध-एव ।)
"ऋकारं परमेशानि कुण्डली मूर्त्तिमान् स्वयम् ।
अत्र ब्रह्मा च विष्णुश्च रुद्रश्चैव वरानने ॥
सदाशिवयुतं वर्णं सदा ईश्वरसंयुतम् ।
पञ्चवर्णमयं वर्णं चतुर्ज्ञानमयं तथा ॥
रक्तविद्युल्लताकारं ऋकारं प्रणमाम्यहम्" ॥
इति कामधेनुतन्त्रम् ॥ (वङ्गीयभाषायाम्) तस्य
लेखनप्रकारादि यथा ।
"ऊद्ध्र्वाद्दक्षगता वक्रा त्रिकोणा वामतस्ततः ।
पुनस्त्वधोदक्षगता मात्रा शक्तिः परा स्मृता ॥
मात्रासु ब्रह्मविष्ण्वीशास्तिष्ठन्ति क्रमतः पराः" ।
इति वर्णोद्धारतन्त्रम् ॥ * ॥ तस्य नामानि यथा ।

कुलाचलानामेकः । यथा,
सिद्धान्तशिरोमणौ ॥
"माहेन्द्रशुक्तिमलयर्क्षकपारिपात्राः
सह्यः सविन्ध्य इह सप्त
कुलाचलाख्याः" ॥)
भल्लूकः । (यथा मनुः । १२ । ६७ ।
"वृको मृगेभं व्याघ्रोऽश्वं फलमूलन्तु मर्कटः ।
स्त्रीमृक्षस्तोककोवारि यानान्युष्ट्रः पशूनजः" ॥)
शोणाकवृक्षः । इति मेदिनी ॥
श्योनाकप्रभेदः ।
इति राजनिर्घण्टः ॥
(स्वनामख्यातोऽजमीढपुत्त्रः ।
यथा, हरिवंशे पुरुवंशानुकीर्त्तने । ३२ । ८७ ।
"धूमिन्या स तया देव्या त्वजमीढः समेयिवान् ।
ऋक्षं स जनयामास धूमवर्णं सुदर्शनम्" ॥
स्वनामख्यातो विदूरथस्य पुत्त्रः ।
यथा, तत्रैव ३२ । १०४ ।
"विदूरथस्य दायद ऋक्ष एव महारथः" ॥
तथा स्वनामख्यातोऽरिहस्य पुत्त्रः ।
यथा, महा-
भारते १ । पुरुवंशानुकीर्त्तने । ९५ । २४ ।
"अरिहः खल्वाङ्गेयीमुपयेमे सुदेवां नाम तस्यां
पुत्त्रमजीजनदृक्षम्" ॥ एतेन पुरुवंशे त्रयएव
ऋक्षनामानो राजानः सम्भूताः ॥)

मोहस्थाने इन्द्रियप्रलयं पठन्ति
प्राञ्चः । ऋच्छति
वृद्धस्येन्द्रियंप्रलीयते इत्यर्थः ।
इति रमानाथः" ॥
इति दुर्गादासः ॥

**ऋच्छरा**, स्त्री, (ऋच्छति परपुरुषं प्राप्नोतीति ।

ऋच्छ + "ऋच्छेररः" ३ ।
१३१ । इत्युणादिसूत्रेण
अरः । अरन् इति प्रमाद इति
पारायणीयम् ।)
वेश्या । इत्युणादिकोषः ॥
(यथा, अथर्व्ववेदे १० ।
९२० । "ऋच्छरा ये च ते
शफाः" ॥)

**ऋज**, ङ गत्याम् । स्थैर्य्ये । ऊर्ज्जने । अर्ज्जने । इति

कविकल्पद्रुमः ॥ (भ्वादिं-
आत्मं-सकं-अकञ्च-सेट् ।)
ङ अर्ज्जते । ऊर्ज्जनं जीवनं
बलवद्भावश्च । इति
दुर्गादासः ॥

**ऋज**, इ ङ भृजि । इति कविकल्पद्रुमः ॥ (इदित्

भ्वादिं-आत्मं-सकं-सेट् ।)
ह्रस्वादिः । भृजि भर्जने ।
इ ऋञ्ज्यते । ङ ऋञ्जते मत्स्यं
सूपकारः । इति
दुर्गादासः ॥

**ऋजीषं**, क्ली, (अर्जते रसोऽस्मादिति । ऋज् + "अर्जे-

"ऋः पूर्दीर्घमुखी रुद्रो देवमाता त्रिविक्रमः ।
भावभूतिः क्रिया क्रूरा रेचिका नाशिका धृतः ॥
एकपादशिरो माला मण्डला शान्तिनी जलम् ।
कर्णः कामलता मेधो निवृत्तिर्गणनायकः ॥
रोहिणी शिवदूती च पूर्णगिरिश्च सप्तमी" ।
इति तन्त्रम् ॥ (मातृकान्यासेऽस्य दक्षिणघ्राणेऽव-
स्थितित्वात्तदाख्ययाप्यभिधानम् । यथा, मातृका-
न्यासधृतमन्त्रे "ॠं नमो दक्षिणघ्राणे ॠं नमो
वामघ्राणे" । इति । अनुबन्धविशेषः । यथा,
कविकल्पद्रुमः । "उः क्त्वावेडस्तु वेट्क ॠः ।
चङ्य-ह्रस्वः" । एतेन ढौकृङ् गत्यामित्यस्य लुङि
अडुढौकदिति सिद्धम् ॥)

**ॠ**, प्रापे । गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वादिं-
परं-सकं-अनिट् ।) प्रापः प्राप्तिः । "ॠच्छति धनं
कृती" । इति दुर्गादासः ॥

**ॠ**, इर ल गत्याम् । इति कविकल्पद्रुमः ॥ (अदां-
परं-सकं-अनिट् ॥)

**ॠ**, र लि गत्याम् । (जुहों-परं-सकं-अनिट् ।) र
वैदिकः । लि इयर्त्ति । शपो लुक्वरणादस्य शतृ-
शानयोरेव ऋच्छादेशः । इयृच्छत् समियृच्छानः ।
इति दुर्गादासः ॥

**ऋक्षगन्धा**, स्त्री, (ऋक्षस्येव गन्धो यस्याः ।) वृक्ष-
विशेषः । वीरताड इति ख्यातः । तत्पर्य्यायः ।
छगलान्त्री २ आवेगी ३ वृद्धदारकः ४ जुङ्गः ५ ।
इत्यमरः ॥ ऋषिजाङ्गल इति ख्यातो वृक्षश्च ।
तत्पर्य्यायः । ऋष्यगन्धा २ ऋषिजाङ्गलिकी ३
इति रत्नमाला । क्षीरविदारीवृक्षः । तत्पर्य्यायः ।
महाश्वेता २ । क्षीरिका ३ । ऋक्षगन्धिका ४ ।
इति शब्दरत्नावली ॥ (वृद्धदारकशब्देऽस्याः
गुणादयो ज्ञेयाः ॥)

**ऋक्षगन्धिका**, स्त्री, (ऋक्षगन्धा + स्वार्थे कन् । अत
इत्वम् ।) कृष्णभूमिकुष्माण्डः । तत्पर्य्यायः । क्षीर-
विदारी २ महाश्वेता ३ । इत्यमरः ॥

**ऋक्षरं**, क्ली, (ऋषी गतौ । ऋष् + "तन्यृषिभ्यां क्स्-
रन्" । ३ । ७५ । इत्युणादिसूत्रेण क्स्रन् ।) वारि-
धारा । इति मेदिनी ॥

**ऋक्षरः**, पुं, (ऋष + "तन्यृषिभ्यां क्स्रन्" । ३ ।
७५ । इत्युणादिसूत्रेण कस्रन् ।) ऋत्विक् ।
इति मेदिनी ॥

**ऋक्षराजः**, पुं, (ऋक्षाणां भल्लूकानां राजा ।
रृजश्च" इत्युणादिसूत्रेण ईषन् ।) पिष्टपचनम् ।
पिष्टकभर्जनपात्रम् । इति हेमचन्द्रामरौ ॥ नरक-
विशेषः । अत्र पिष्टपचनप्रक्षेपः । (यथा, मनुः ४ । ९० ।
"लोहशङ्कुमृजीषञ्च पन्थानं शाल्मलीं नदीम्" ॥
धनम् । सोमलताया उद्धृतो रसः । यथा, ऋग्वेदे
३ । ४३ । ५ । "कुविद्राजानं मघवन्नृजीषिन्" ।
"ऋजीषिन् सोमवन्" । इति भाष्यम्" ॥)

**ऋजु**, त्रि, (अर्जयति गुणान् । अर्ज अर्जने । "अर्जि-
दृशीति" । १ । २८ । उणादिसूत्रेण साधुः ।)
अवक्रम् । सोजा इति भाषा । तत्पर्य्यायः । अजि-
ह्मम् २ प्रगुणम् ३ । इत्यमरः ॥ प्राञ्जलः ४ सरलः
५ । इति जटाधरः ॥ ("उमां स पश्यन् ऋजुनैव चक्षुषा" ।
इति कुमारे ५ । ३२ ॥ यथा, मनुः । २ । ४७ ।
"ऋजवस्ते तु सर्व्वे स्युरव्रणाः सौम्यदर्शनाः" ॥
स्त्रियां ङीष्पक्षेयथा, माघे १२ । १८ ।
"ऋज्वीर्दधानैरवतत्य कन्धरा-
श्चलावचूडाः कलघर्घरारवैः ॥
अनुकूलम् । यथा, ऋग्वेदे ५ । ४१ । १५ ।

**ऋ**, र न हिंसने । इति कविकल्पद्रुमः ॥ (स्वां-परं-
सकं-अनिट् ।) र वैदिकः । न ऋणोति । रेफादि-
स्तृतीयस्वरान्तोऽयमिति केचित् । इति दुर्गादासः ॥

**ऋ**, व्य गर्हणम् । वाक्यम् । देवमातरि स्त्री । इति
मेदिनी ॥ (सम्बोधनम् ।) परिहासः । वाक्यविकारः ।
इति शब्दरत्नावली ॥ (पुं, स्वर्गः ॥)

**ऋक्**, [च्] स्त्री, (ऋच्यन्ते स्तूयन्ते देवा अनया ।
ऋच् + क्विप् ।) वेदविशेषः । ऋग्वेदः । इत्यमरः ॥
अस्य एकविंशतिशाखाः । वेदमन्त्रविशेषः । तस्य
लक्षणम् । यत्रार्थवशेन पादव्यवस्थितिः । अस्यार्थः ।
यत्रार्थवशेन
एकान्वयित्वेनानुष्टुवादिपादस्थितिः ।
इति जैमिनिः ॥
(ऋग्यजुःसामाथर्व्ववेदाभिहि-
तैरपरैश्चाशीर्विधानैरुपाध्यायां भिषजश्च सन्ध्ययोः
रक्षां कुर्य्युः ॥ इति सुश्रुते सूत्रस्थाने ऊनविंशे-
अध्याये ॥)

**ऋक्थं**, क्ली, (ऋच् स्तुतौ ऋच् + "पातृतुदिवचि-
रिचिसिचिभ्यस्थक्" । २ । ७ ।
इत्युणादिसूत्रेण थक् ।)
धनम् । इत्यमरः ॥ स्वर्णम् ।
इत्युणादिकोषः ॥
(यदुक्तं शब्दार्णवे । "हिरण्यं द्रविणं द्युम्नं विक्म-
राजाहःसखिभ्यष्टच् ।) जाम्बवान् । इति रामा-
यणम् ॥ (यथा, हरिवंशे । ३८ । ४१ ।
"लेभे जाम्बवतीं कन्यामृक्षराजस्य
सम्मताम्" ॥)

**ऋक्षेशः**, पुं, (ऋक्षाणां नक्षत्राणामीशः ।) चन्द्रः ।
इति हलायुधः ॥

**ऋच**, श नुत्याम् । इति कविकल्पद्रुमः ॥ (तुदां-परं-
सकं-सेट् ।) श ऋचति । आनर्च्च ।
इति दुर्गादासः ॥

**ऋचीषं**, क्ली, (ऋचतीति । ऋच् + बाहुलकात् की-
षन् ।) पिष्टकभर्जनपात्रम् । इति
हेमचन्द्रः ॥

**ऋच्छ**, श मूर्त्तौ । गमने । मोहे । इति कविकल्पद्रुमः ॥
(तुदां-परं-सकं अकञ्च-सेट् ।) श ऋच्छती ऋ-
च्छन्ती । मूर्त्तिः कठिनीभावः ।
"मूर्त्तिः काठिन्य-
काययोरित्यमरात् । ऋच्छति घृतं कठिनं स्यादि-
त्यर्थः । ऋच्छति वृद्धो गच्छति
मुह्यति वेत्यर्थः ।
"ऋजुहस्त ऋजुवनिः" ।
"ऋजुहस्तस्तदनुकूल-
हस्तः" । इति भाष्यम् ॥
शोभनम् । यथा ऋग्वेदे
५ । ४४ । ५ ।
"धारवाकेष्वृजुगाथः" । "ऋजु-
गाथः शोभनस्तुतिकः" । इति
भाष्यम् ॥ वसुदेव-
पुत्त्रभेदे पुं । यथा भागवते ९ ।
२४ । ५४ ।
"ऋजुं संमर्द्दनं भद्रं
संकर्षणमहीश्वरम्" ॥)

**ऋजुकायः**, पुं, (ऋजुः सरलः कायो यस्य ।) कश्यप-
मुनिः । इति जटाधरः ॥
अवक्रशरीरे त्रि ॥
("तस्मिन्स्वस्तिसमासीन
ऋजुकायः समभ्यसेत्" ।
इति भागवते ३ । २८ । ८ ॥)

**ऋज्रः**, पुं, (ऋज् + "ऋज्रेन्द्राग्रवज्रेति" । २ । २८ ॥
उणादिसूत्रेण निपातनात् रन्
गुणाभावश्च ।)
नायकः । इत्युणादिकोषः ॥
(सरलगामिनि, त्रि ।
यथा ऋग्वेदे १ । ११७ । १४ ।
"युवं भुज्यु-
मर्णसो निः समुद्राद्विभिरूहस्यु
ऋज्रेमिरश्वैः" ।

मृक्थं धनं वसु" ॥) पुत्त्रहीनस्य ऋक्थिनः" ।
इति याज्ञवल्क्यः । "ऋक्थमूलं हि कुटुम्बं" ।
इति दायभागे पितृधनविभागकालेऽभिहितम् ॥)

**ऋक्ष**, न र बधे । इति कविकल्पद्रुमः ॥ (स्वां-परं-सकं-सेट् ।) र वैदिकः । न ऋक्ष्णोति । इति दुर्गादासः ॥

**ऋक्षं**, क्ली, पुं, (ऋष् + स । "स्नुव्रश्चिकृत्यृषिभ्यः कित्" । ३ । ६६ । इत्युणादिसूत्रेण कित् ।) नक्षत्रम् । इति मेदिनी ॥ (यथा, मनुः । २ । १९१ ।
"पूर्ब्बां सन्ध्यां जपंस्तिष्ठेत् सावित्रीमार्कदर्शनात् ।
पश्चिमान्तु समासीनः सम्यगृक्षविभावनात्" ॥
तच्च अश्विन्यादिभेदेन सप्तविंशतिः ।) राशिः ।
इति ज्योतिषम् ॥ (राशयश्च मेषवृषादिभेदेन द्वादश । अस्मिन्नर्थे प्रमाणं यथा रघौ । १२ । २५ ।
"प्रययावातिथेयेषु वसन्नृषिकुलेषु सः ।
दक्षिणां दिशमृक्षेषु वार्षिकेष्विव भास्करः" ॥
"ऋक्षेषु नक्षत्रेषु राशिषु वा भास्कर इव" ।
इति तट्टीकायां मल्लिनाथः ॥)

**ऋक्षः**, पुं, (ऋक्ष् + अच् ।) पर्ब्बतविशेषः ॥ (अयं हि

:“ऋज्रेभिः ऋजुगामिभिः” । इति भाष्यम्” ॥)

**ऋञ्जासनः**, पुं, (ऋजि + “ऋजिवृधिसन्दिसहिभ्यः
कित्” । २ । ८७ । इत्युणादिसूत्रेण असानच् ।
किच्च ।) मेघः । इति
सिद्धान्तकौमुदी ॥ उणादि-
कोषश्च ॥)

**ऋण**, द उ ञ गतौ । इति कविकल्पद्रुमः ॥ (तनां-
उभं-सकं-सेट् ।) द ञ ऋणोति
अर्णोति ऋणुते
अर्णुते । उ अर्णित्वा ऋत्वा । इति
दुर्गादासः ॥

**ऋणं**, क्ली, (ऋ + क्त । ऋणमाधमर्ण्ये इति णत्वम् ।)
धारः । देना इति भाषा ।
तत्पर्य्यायः । पर्य्युदञ्च-
नम् २ उद्धारः ३ । इत्यमरः ॥
पुनर्देयत्वेन स्वी-
कृत्य यत् गृहीतम् । इति जगदीशः
॥ अस्य
विवरणं ऋणादानशब्दे द्रष्टव्यम् ॥ *
॥
कुसीदाख्यं ऋणं यथा ।
“स्थानलाभनिमित्तं
यद्दानग्रहणमिष्यते ।
तत्कुसीदमिति ज्ञेयं तेन वृत्तिः
कुसीदिनाम्” ॥
इति नारदः ॥ अस्यार्थः । स्थानं
मूलधनावस्थानम् ।
शब्दरत्नावली ॥ जामिन इति भाषा
॥

**ऋणमार्गणः**, पुं, (ऋणं मार्गयति यः सः । ऋण +
मार्ग + ल्यु ।) प्रतिभूः । इति
हारावली ॥
जामिन इति भाषा ॥

**ऋणमुक्तिः**, स्त्री, (ऋणस्य ऋणात् वा मुक्ति-
र्मोचनं भवत्यस्मात् ।)
ऋणपरिशोधनम् । तत्-
पर्य्यायः । विगणनम् २ । इति
त्रिकाण्डशेषः ॥

**ऋणमोक्षः**, पुं, (ऋणात् मोक्षः ।) ऋणपरिशो-
धनम् । इति हारावली ॥

**ऋणादानं**, क्ली, (ऋणस्य आदानम् ग्रहणम् ।) अधम-
र्णात् उत्तमर्णेन सलाभधनग्रहणम् ।
तत्तु अष्टा-
दशविवादान्तर्गताद्यविवादः । (यदाह
मनुः । ८ । ४ ।
“तेषामाद्यमृणादानं
निक्षेपोऽस्वामिविक्रयः” ।
इत्यादि ।) तच्च सप्तविधं यथा ।
ईदृशमृणं देयम् १
ईदृशमदेयम् २ अनेनाधिकारिणा
देयम् ३ अस्मिन्
समये देयं ४ अनेन प्रकारेण देयं ५
इत्यधमर्णे
पञ्चविधम् । उत्तमर्णे तु दानविधिः ६
आदान-
विधिश्च ७ इति द्विविधम् । तथाच
नारदः ।
सन्देशो यो यच्च साभवचनं
यच्चानुगमनं प्रायोप-
वेशनं वा धनिकस्य सधर्म्म
ऋणोद्ग्राहणोपायः ॥
व्यवहारे कात्यायनः ।
“धार्य्योऽवरुद्ध ऋणिकः प्रकाशं
जनसंसदि ।
यावन्न दद्याद्देयञ्च देशाचारस्थितिर्यथा”
॥
अस्यार्थः । यावद्दानं जनसंसदि
ऋणिकस्य धनि-
केन धारणं व्यवहारः ॥
छलाचरितबलात्कारेषु
वृहस्पतिः ।
“छद्मना याचयित्वार्थमानीय
ऋणिकादृणी ।
अन्नाहितादि वाहृत्यं दाप्यते यत्र
सोपधिः” ॥
अस्यार्थः । ऋणिकस्य धनमन्नाहितादि
वा छद्मना
आहृत्य वा यत्र दाप्यते तत्र साधनोपायः
सोपधिः सच्छलमुच्यते ॥
“पुत्त्रदारपशून् रुद्ध्वा कृत्वा
द्वारोपवेशनम् ।
यत्रर्णी दाप्यतेऽर्थं स्वं तदाचरितमुच्यते
॥
बद्ध्वा स्वगृहमानीय ताडनाद्यैरुपक्रमैः
।
ऋणिको दाप्यते यत्र बलात्कारः स
उच्यते” ॥
अनयोरर्थः । पुत्त्रदारपशुरोधो
द्वारोपवेशनञ्च
य उद्ग्राहणोपायस्तदाचरितमुच्यते ।
स्वगृहमा-

लाभो वृद्धिः । दानग्रहणपदे
कर्म्मण्यनटा साध्ये
तेन मूलधनावस्थाने सत्येव यो
लाभस्तदर्थं यद्दानं
धनिकेन दीयमानं मूलधनं
अधमर्णेन च ग्रहणं
तथा स्वीकृत्य गृह्यमाणं यत्तदृणम् ।
इति रत्ना-
करादयः ॥ कलाशून्ये तु
अवश्यापाकरणियत्व-
रूपगुणयोगाद्गौणप्रयोगः । अतएव
बाणिज्यार्थ-
प्रयुक्तस्य नर्णत्वं इति मिश्राः ॥ *
॥ अपि च ।
"कुत्सितात् सीदतश्चैव निर्विशङ्कैः
प्रगृह्यते ।
चतुर्गुणं वाष्टगुणं कुसीदाख्यमृणं
त्वतः" ॥
इति वृहस्पतिः ॥ अस्यार्थः ।
कुत्सितात् सीदत-
श्चाधमर्णात् सकलं धनं यत् गृह्यते
निर्विशङ्कै-
रुत्तमर्णैः । चतुर्गुणं वेति
वाकारोऽनास्थायां तेन
द्वैगुण्यादिलाभः ॥ * ॥
ऋणत्रयविशेषो यथा ।
"देवानाञ्च पितृणाञ्च अषीणाञ्च
तथा नरः ।
ऋणवान् जायते यस्मात्तन्मोक्षे
प्रयतेत् सदा ॥ * ॥
तत्परिशोधनमाह ।
"देवानामनृणो जन्तुर्यज्ञैर्भवति
मानवः ।
अल्पवित्तश्च
पूजाभिरुपवासव्रतैस्तथा ॥
"ऋणन्देयमदेयञ्च येन यत्र यथा
भवेत् ।
दानग्रहणधर्म्माश्च ऋणादानमिति
स्मृतम् ॥
अदेयमिति यदुक्तं तदाह कात्यायनः
।
न स्त्रीभ्यो दासबालेभ्यः प्रदद्यात्
किञ्चिदुद्धृतम् ।
दाता न लभते तत्तु तेभ्यो दत्तन्तु
यद्वसु" ॥
तत्र विशेषमाह वृहस्पतिः ।
"परिपूर्णं गृहीत्वाधिं बन्धं वा
साधुलग्नकम् ।
लेख्यारूढं साक्षिमद्वा ऋणं दद्यात्
धनी सदा" ॥
इति विवादार्णवसेतुः ॥ अस्य
यदवशिष्टं ऋणोद्-
ग्राहणशब्दे द्रष्टव्यम् ॥

**ऋणान्तकः**, पुं, (ऋणमन्तयति यः । ऋण + अन्ति

नामधातु + ण्वुल् । मङ्गलग्रहाराधनेन
ऋणाप-
नयनात् तथात्वम् ।) मङ्गलग्रहः ।
इति शब्द-
रत्नावली ॥

**ऋणापनोदनं**, क्ली, (ऋण + अप + नुद + ल्युट् । ततः

षष्ठीतत्पुरुषः ।) ऋणापनयनम् ।
धारशोधनम् ॥

**ऋणी**, [न्] त्रि, (ऋणमस्यास्तीति । ऋण + इनि ।)

ऋणग्रस्तः । धारी ॥
("जायमानो वै ब्राह्मणः त्रिभिरृणैरृणी
भवति" ।
नीय ताडनादिलक्षण उद्ग्राहणोपायो
बला-
त्कार उच्यते ॥ * ॥ कोऽधमर्णः
केनोपायेन
साध्यस्तदाह कात्यायनः ।
"राजानं स्वामिनं विप्रं सान्त्वेनैव
प्रसाधयेत् ।
ऋक्थिनं दुर्हृदं वापि च्छलेनैव
प्रसाधयेत्" ॥
ऋक्थिनं दायादम् ॥ तथा
"बणिजः कर्षकांश्चैव शिल्पिनश्चाब्रवीद्
भृगुः ।
देशाचारेण दाप्याः स्युर्दुष्टान् संपीड्य
दापयेत् ॥ * ॥
यत्र धनं न लभ्यते तत्राह वृहस्पतिः ।
"निर्धनं ऋणिकं कर्म्म गृहमानीय
कारयेत् ।
शौण्डिकाद्यं ब्राह्मणस्तु दापनीयः शनैः
शनैः" ॥
याज्ञवल्क्यः, --
"हीनजातिं परिक्षीणमृणार्थं कर्म्म
कारयेत् ।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो
यथोदयम् ॥
यथोदयं यथा धनोत्पत्तिरित्यर्थः ॥ * ॥
व्यापार-
द्वारा न ब्राह्मणस्य ऋणशोधनमाह
कात्यायनः ।
"कर्म्मणाक्षत्त्रविट्शूद्रान् समहीनांस्तु
दापयेत्" ॥ *
ऋणशोधनाय निन्दितं कर्म्म
कारयितुरुत्तमर्णस्य
दण्डमाह कात्यायनः ।
"यदि ह्यादावनादिष्टमशुभं कर्म्म कारयेत्
।

श्राद्धेन प्रजया चैव पितृणामनृणो भवेत् ।
ऋषीणां ब्रह्मचर्य्येण श्रुतेन तपसा तथा" ॥
इति विष्णुधर्म्मोत्तरम् ॥
(जलदुर्गमभूभिः । यथा मुग्धबोधे १ । २८ सूत्रस्य टीकायां दुर्गादासः ।
"दशार्णो देशः दशार्णा नदी उभयत्र ऋणशब्देन जलदुर्गमभूमिरुच्यते" ॥
अङ्कशास्त्रोक्तः कुतश्चिदपि राश्यन्तरात् वियोज्य संख्यावान् पदार्थः ।
यथा वीजगणिते ।
"धनर्णसङ्कलने करणसूत्रं वृत्तार्द्धम् ।
योगे युतिः स्यात् क्षययोः स्वयोर्व्वा धनर्णयोरन्तरमेव योगः" ॥
ऋणतीति । ऋण गतौ तस्मात्कः । इति व्युत्पत्त्या वाच्यलिङ्गः । गन्ता । गमनशीलः । यथा, ऋग्वेदे ६ । १२ । ५ । "सद्यो यः स्यन्द्रो विषितो यवीयानृणो न तायुरतिधन्वा राट्" ।
"ऋणः शीघ्रगन्ता" इति भाष्यम् ॥)

**ऋणमत्कणः**, पुं, (ऋणे मत्कुणैव ।) लग्नकः । इति श्रुतिः । "ऋणी न स्यात् यथा पिता" ।
इति दायभागे ॥)

**ऋणोद्ग्राहणं**, क्ली, (ऋणस्य उद्ग्राहणं ।) अधमर्णगृहीतर्णग्रहणं । यत्र ऋणं प्रार्थनकाले प्रार्थितोऽपि ऋणी न ददाति तत्र धनिकेन यत् कर्त्तव्यं तदाह मनुः । ८ । ४८ -- ४९ ।
"यैर्यैरुपायैरर्थं स्वं प्राप्नुयादुत्तमर्णिकः ।
तैस्तैरुपायैः संगृह्य साधयेदधमर्णिकम्" ॥
धर्म्मेण व्यवहारेण छलेनाचरितेन च ।
प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च" ॥
अयमर्थः । पूर्ब्बपूर्ब्बसामर्थ्याभावे उत्तरोत्तरम् संगृह्य वशीकृत्य । धर्म्मे वृहस्पतिराह ।
"सुहृत्सम्बन्धिसन्दिष्टैः सामोक्तानुगमेन च ।
प्रायेण वा ऋणी दाप्यो धर्म्म एष उदाहृतः" ॥
अस्यार्थः । ऋणिकस्य ये सुहृत्सम्बन्धिनस्तेषु प्राप्नुयात् साहसं पूर्ब्बमृणान्मुच्येत चर्णिकः ॥ * ।
यदि परमवृद्धिप्राप्तं धनमृणिको दातुं न शक्नोति तदा चक्रवृद्ध्या स्वेच्छया धारयेत् ।
यथा वृहस्पतिः ।
"पूर्णावधौ शान्तलाभमृणमुद्ग्राहयेद्धनी ।
कारयेद्वा धनी लेख्यं चक्रवृद्धिव्यवस्थया" ॥
तथा च वृहस्पतिः ।
"हिरण्ये द्विगुणीभूते मृते नष्टेऽधमर्णिके ।
द्रव्यं तदीयं संगृह्य विक्रीणीत ससाक्षिकम् ॥
रक्षेद्वा कृतमूल्यन्तु दशाहं जनसंसदि ।
ऋणानुरूपं परतो गृह्णीतान्यत्तु वर्जयेत् ॥
स्वधनञ्च स्थिरीकृत्य गणनाकुशलैर्नरैः ।
तद्बन्धुज्ञातिविदितं प्रगृह्णन्नापराध्नुयात्" ॥ * ॥
यथाविषयं धर्म्मादीन् धनसाधनोपायान् प्रयुञ्जानो

:न राज्ञा निवर्त्तनीय इत्याह मनुः ।

"यः स्वयं
साधयेदर्थमुत्तमर्णोऽधमर्णिकात् ।
स राज्ञा नाभियोक्तव्यः स्वकं
संसाधयन् धनम्" ॥ * ॥
धनवता ऋणिकेनादत्ते ऋणे राजा
स्वयं विंशति-
तमभागं गृहीत्वा उत्तमर्णाय दापयेत्
इत्याह
नारदः ॥
"ऋणिकः सधनो यस्तु दौरात्म्यान्न
प्रयच्छति ।
राज्ञा दापयितव्यः
स्यातगृहीत्वांशन्तु विंशकम्" ॥ *
॥
यदा अधमर्णिकः सकलमृणं
दातुमसमर्थः शक्त्यनु-
सारेण दत्त्वा पूर्ब्बकृतस्य लेख्यस्य
पृष्ठेऽभिलिखेत्
एतावद्दत्तं उत्तमर्णेन उपगतं
प्राप्तमिति धनी
तस्यैव लेख्यस्य पृष्ठे
दद्यादभिलिखेत् इत्याह
याज्ञवल्क्यः ।
"लेख्यस्य पृष्ठेऽभिलिखेत् दत्त्वा
दत्त्वाधनं ऋणी ।
धनी चोपगतं दद्यात्
स्वहस्तपरिचिह्नितम्" ॥
इति विवादार्णवसेतुः ॥

**ऋत**, गत्याम् । स्पर्द्धने । ऐश्वर्य्ये ।
घृणायाम् । इति

कविकल्पद्रुमः ॥ (भ्वादिं-परं-
ईयङ्पक्षे आत्मं-

वृजिनानि हन्ति" । "ऋतस्य ऋतदेवस्य" ।
इति
भाष्यम् ॥ यज्ञः । यथा, ऋग्वेदे । १ । १४५
। ५ ।
"ऋतचिद्धि सत्यम्" । "ऋतस्य यज्ञस्य
जलस्य
वा चित् ज्ञाता" । इति भाष्यम् ॥ अग्नेरृषि-
भेदः । यथा, यजुषि । १७ । ८२ । "ऋतश्च
सत्यश्च" । इति ॥)

**ऋतः**, त्रि, (ऋ + क्त ।) दीप्तः । पूजितः । इति

मेदिनी ॥

**ऋतजित्**, पुं, (ऋतं जयति ऋत + जि + क्विप् ।)

यक्षविशेषः । यथा, --
"त्वष्टा च जमदग्निश्च कम्बलोऽथ तिलोत्तमा
।
ब्रह्मापेतोऽथ ऋतजित् धृतराष्ट्रश्च सप्तमः ॥
माघमासे वसन्त्येते सप्त मैत्रेय भास्करे ।
श्रूयतां चापरे सूर्य्ये फाल्गुने निवसन्ति ये"
॥
इति श्रीविष्णुपुराणे २ । १० । १५ -- १६ ।
"त्वष्टा
सूर्य्यः । कम्बलः सर्पः । ब्रह्मापेतो राक्षसः ।
ऋत-
जिद्यक्षः । धृतराष्ट्रो गन्धर्व्वः । इति
तट्टीकायां
श्रीधरस्वामी ॥ (त्रि, यज्ञजेता । यथा,
यजुषि १७ ।
८३ । "ऋतजिच्च सत्यजिच्च सेनजिच्च
सुषेणश्च" ॥)

**ऋतधामा**, [न्] पुं, (ऋतं सत्यं धाम भवनं यस्य ।)

विष्णुः । इति त्रिकाण्डशेषः ॥ (यथायजुर्व्वेदे
५ । ३२ ।

हेमन्तशिशिरयोरेकत्रीकरणं
विवक्षितम् ॥
"चयकोपसमा यस्मिन् दोषाणां
सम्भवन्ति हि ।
ऋतुषट्कं तदाख्यातं रवेः राशिषु
संक्रमात् ॥
ग्रीष्मो मेषवृषौ प्रोक्तः
प्रावृड्मिथुनकर्कटौ ।
सिंहकन्ये स्मृता वर्षा
तुलावृश्चिकयोः शरत् ॥
धनुर्ग्राहौ च हेमन्तौ वसन्तः
कुम्भमीनयोः" ।
मेषवृषौ रविणा संक्रान्तौ । एवं
मिथुनकर्कटा-
वित्यादि । अन्ये तु ।
"शिशिरः पुष्पसमयो ग्रीष्मो
वर्षाशरद्धिमाः ।
माघादिमासयुग्मैः स्युरृतवः षट्
क्रमादमी" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमभागे ।
"वर्षाः शरच्च हेमन्तः शिशिरश्च
वसन्तकः ।
ग्रीष्मश्चेति क्रमादेते ऋतवः षट्
प्रकीर्त्तिताः ॥
पृथक् पृथक प्रवक्ष्यामि
रवेर्गतिविशेषतः" ।
इति प्रथमस्थाने चतुर्थेऽध्याये
हारीतेनोक्तम् ॥
"मासैर्द्विसङ्ख्यैर्माघाद्यैः क्रमात्
षड़ृतवः स्मृताः ।
शिशिरोऽथ वसन्तश्च ग्रीष्मवर्षा
शरद्धिमाः" ॥

गत्यर्थे सकं, अन्यार्थे-अकं-सेट् ।)
घृणा दया ।
ऋतीयते जनः स्पर्द्धते ईश्वरो
भवति । किञ्चि-
द्दयते गच्छति वेत्यर्थः । अरे तु
ईयङोऽप्राप्तिपक्षे
परस्मैपदमेव । आर्त्तीत् आनर्त्त
इत्यादि । इति
दुर्गादासः ॥

**ऋतं**, क्ली, (ऋ + क्त ।) उञ्छशिलम् । (यथा, मनुः ।
४ । ४ -- ५ ॥
"ऋतामृताभ्यां जीवेत्तु मृतेन
प्रमृतेन वा ।
सत्यानृताभ्यामपि वा न श्ववृत्त्या
कदाचन ॥
ऋतमुञ्छशिलं ज्ञेयममृतं
स्यादयाचितम् ।
मृतन्तु याचितं भैक्षं प्रमृतं कर्षणं
स्मृतम्" ॥)
जलम् । (यथा, ऋग्वेदे । ७ । १०१
। ६ । "तन्म
ऋतं पातु शतशारदाय" ।
"ऋतमुदकम्" । इति
भाष्यम् ॥) सत्यं इति मेदिनी ॥
(यथा, मनुः ।
८ । ८२ ।
"साक्ष्येऽनृतं वदन् पाशैर्बध्यते
वारुणैर्भृशम् ।
"विवशः शतमाजातीस्तस्मात्
साक्ष्यं वदेदृतम्" ॥
कर्म्मफलं । यथा, "ऋतं पिवन्तौ
सुकृतस्य लोके" ।
इति श्रुतिः ॥ विष्णुः ॥ यथा,
महाभारते । १ ।
"हव्यसूदन ऋतधामासि स्वर्ज्योतिः" ॥
इन्द्रभेदः ।
स तु रुद्रसावर्णिके मनौ भविता । यथा, --
भागवते । ८ । १३ । २८ ।
"भविता रुद्रसावर्णी राजन् ! द्वादशमो मनुः
।
ऋतधामा च देवेन्द्रो देवाश्च हरितादयः" ॥
यदुवंशीयो नृपतिभेदः । यथा, भागवते ।
"कङ्कश्च कर्णिकायां वै ऋतधामाजयावपि"
॥
अविनश्वरस्थानवति, त्रि । यथा यजुर्व्वेदे ।
१८ । ३८ ।
"ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयः"
॥)

**ऋतिः**, स्त्री, (ऋ + करणे + क्तिन् ।) कल्याणम् । वर्त्म ।
जुगुप्सा । स्पर्द्धा । इति मेदिनी ॥ (भावे +
क्तिन् ।)
गमनम् । अशुभम् । इति धरणी ॥
(पुरुषमेध-
यज्ञीयदेवभेदः । यथा, यजुर्व्वेदे । ३० । १३
।
"ऋतये स्तेन हृदयम्" । शत्रौ पुं, इति
निरुक्तिः ।)

**ऋतीया**, स्त्री, (ऋत + ईयङ् + टाप् ।) घृणार्थकः ।
जुमुप्सा । तत्पर्य्यायः । अर्त्तनम् २ ह्रिणीया
३ ।
इत्यमरः ॥

**ऋतुः**, पुं, (ऋ + "अर्त्तेश्च तुः" । इति उणादिसूत्रेण
१ । ७२ । तुः चकारात् कित् च ।)
कालविशेषः ।
स तु षड्विधः यथा । मार्गपौषौ हिमः १
माघ-
फाल्गुनौ शिशिरः २ चैत्रवैशाखौ वसन्तः ३
इति सूत्रस्थ ने तृतीयेऽध्याये
वाभटेनोक्तम् ॥
"इह खलु संवत्सरं
षडङ्गमृतुविभागेन विद्यात्" ।
इति सूत्रस्थाने षष्ठोऽध्यायः ।
"तत्र खलुतावत् षोढा प्रविभज्य
कार्य्यमुपदेक्ष्यते ।
हेमन्तो ग्रीष्मो वर्षाश्चेति
शीतोष्णवर्षलक्षणास्त्रयः
ऋतवो भवन्ति ।
तेषामन्तरेष्वितरे साधारण-
लक्षणास्त्रय ऋतवः
प्रावृट्शरद्वसन्ता इति ।
प्रावृडिति प्रथमः प्रवृष्टेः
कालस्तस्यानुबन्धो वर्षाः ।
एवमेते संशोधनमधिकृत्य षड्
विभज्यन्ते
ऋतवः" ।
इति च विमानस्थानेऽष्टमेऽध्याये
चरकेणोक्तम् ।
"तत्र माघादयो द्वादशमासा
द्विमासिकमृतुं
कृत्वा षड्तवो भवन्ति । ते
शिशिर-वसन्त-ग्रीष्म-
वर्षा-शरद्धेमन्ताः । तेषां
तपस्तपस्यौ शिशिरः ।
मधुमाधवौ वसन्तः । शुचिशुक्रौ
ग्रीष्मः । नभो-
नभस्यौ वर्षाः । इषर्जौ शरत् ।
सह सहस्यौ
हेमन्त इति ॥ तत्र ते
शीतोष्णवर्षलक्षणाश्च-
न्द्रादित्ययोः
कालविभागकरत्वादयने द्वे
भवतो-

१ । २५३ ।
“भगवान् वासुदेवश्च कीर्त्त्यतेऽत्र सनातनः ।
स हि सत्यमृतञ्चैव पतित्रं पुण्यमेव च ।
शाश्वतं ब्रह्म परमं ध्रुवं ज्योतिः सनातनम्” ॥
पुं, सूर्य्यः । यथा, शतपथब्राह्मणे । “ब्रह्म वा
ऋतं ब्रह्म हि मित्रो ब्रह्म ऋतं ब्रह्म एवायुः” ॥
परब्रह्म । यथा, श्रुतिः ।
“ऋतमेकाक्षरं ब्रह्म” ॥
सत्याचारः । यथा, ऋग्वेदे । १ । १३७ । २ ।
“सुतो मित्राय वरुणाय पीतये चारूरृताय
पीतये” ॥ “ऋताय सत्याचाराय” । इति दया-
नन्दभाष्यम् ॥ रुद्रः । यथा, सामगानां सन्ध्यामन्त्रे
रुद्रोपस्थाने । “ऋतमित्यस्य कालाग्नी रुद्र ऋषि-
रनुष्टुप्छन्दो रुद्रो देवता रुद्रोपस्थाने विनि-
योगः” ॥ देवमेदः । यथा, ऋग्वेदे । ४ । २३ । ८ ।
“ऋतस्य हि सुरुषः सन्ति पूर्ब्बीरृतस्य धीति-

ज्यैष्ठाषाढौ ग्रीष्मः ४ श्रावणभाद्रौ वर्षाः ५ आ-
श्विनकार्त्तिकौ शरत् ६ । इत्यमरः ॥ स त्रिविधो-
ऽपि । कार्त्तिकाग्रहायणपौषमाघाः शीतः १
फाल्गुनचैत्रवैशाखज्यैष्ठाः ग्रीष्मः २ आषाढश्रावण-
भाद्राश्विनाः वर्षाः ३ । द्विविधोऽपि । कार्त्तिका-
दिषण्मासाः शीतः १ वैशाखादिषण्मासाः ग्रीष्मः
२ ॥ इति स्मृतिः ॥ * ॥
(यदुक्तम् ।
“मासद्वयात्मकः कालः ऋतुः प्रोक्तो विचक्षणैः” ।
यत्र तु “द्वादश मासाः पञ्चर्त्तवः” इति श्रुतं तत्र

दक्षिणमुत्तरञ्च” ।
“इह तु वर्षा-शरद्धेमन्त-वसन्त-ग्रीष्म-प्रावृषः षड्-
तवो भवन्ति दोषोपचय-प्रकोयोपशम-निमित्तम् ।
ते तु भाद्रपदाद्येन द्विमासिकेन व्याख्याताः । तद्-
यथा । भाद्रपदाश्वयुजौ वर्षाः । कार्त्तिकमार्गशीर्षौ
शरत् । पौषमाघौ हेमन्तः । फाल्गुन-चैत्रौ
वसन्तः । वैशाख-ज्यैष्ठौ ग्रीष्मः । आषाढ-श्रावणौ
प्रावृडिति” । इति सूत्रस्थाने ६ अध्याये सुश्रुते-
नोक्तम् ॥)
स्त्रीकुसुमम् । इति विश्वमेदिन्यौ ॥ तत्पर्य्यायः ।
रजः १ पुष्पम् २ आर्त्तव्यम् ३ । इत्यमरः ॥
यथाह मनुः । ३ । ४५-४९ ।
“ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा ।
पर्ब्बवर्ज्जं व्रजेच्चैनां तद्व्रतो रतिकाम्यया ॥
ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः ।
चतुर्भिरितरैः सार्द्धमहोमिः सद्विगर्हितैः ॥
तासामाद्याश्चतस्रस्तु निन्दितकादशी च या ।

:त्रयोदशी च शेषास्तु प्रशस्ता दशरात्रयः ॥

युग्मासु पुत्रा जायन्ते
स्त्रियोऽयुग्मासु रात्रिषु ।
तस्मात् युग्मासु पत्रार्थी
संविशेदार्त्तवे स्त्रियम् ॥
पुमान् पुंसोऽधिके शुक्रे स्त्री
भवत्यधिके स्त्रियाः ।
समेऽपुमान्पुंस्त्रियौ वा
क्षीणेऽल्पे च विपर्य्ययः” ॥
“रजः सप्तदिनं यावत् ऋतुश्च
भिषजां बर” ! ।
इति शारीरस्थाने प्रथमेऽध्याये
हारीतेनोक्तम् ॥
“ऋतुस्तु द्वादशरात्रं भवति
दृष्टार्त्तवम् ॥”
“नियतं दिवसेऽतीते
सङ्कुचत्यम्बुजं यथा ।
ऋतौ व्यतीते नार्य्यास्तु योनिः
संव्रियते तथा ॥
मासेनोपचितं काले
धमनीभ्यान्तदार्त्तवम् ।
ईषत् कृष्णं विगन्धञ्च
वायुर्योनिमुखं नयेत् ॥
तद्वर्षाद्द्वादशात्काले
वर्त्तमानमसृक् पुनः ।
जरापक्वशरीराणां याति
पञ्चाशतः क्षयम्” ॥
इति शारीरस्थाने
तृतीयेऽध्याये सुश्रुतेनोक्तम् ॥
“द्वादशाद्वत्सरादूर्द्ध्वं
मापञ्चाशत् समाः स्त्रियः ।
मासि मासि भगद्वारा
प्रकृत्यैवार्त्तवं स्रवेत् ॥

नेत्रयोरञ्जनं स्नानं दितास्वप्नं प्रधावनम् ।
अत्युच्चशब्दश्रवणं हसनं बहुभाषणम् ॥
आयासं भूमिखननं प्रवातञ्च विवर्जयेत् ।
ततश्चतुर्थे दिवसे स्नाता सद्वसनादिभिः ।
भूषिताः सुमनाः पश्येत् भर्त्तारं समलङ्कृतम् ॥
पूर्ब्बं पश्येत् ऋतुस्नाता यादृशं नरमङ्गना ।
तादृशं जनयेत् पुत्त्रं ततः पश्येत् पतिं प्रियम्” ॥
एतदकरणे प्रत्यवायमाह ।
“अज्ञानात् वा प्रमोदाद्वा लौल्याद्वा दैवतश्च वा ।
सा चेत् कुर्य्यात् निषिद्धानिगर्भदोषां स्तदाप्नुयात् ॥
एतस्या रोदनात् गर्भो भवेद्विकृतलोचनः ।
नखच्छेदेन कुनखी कुष्ठी त्वभ्यङ्गतो भवेत् ॥
अनुलेपात् तथा स्नानात् दुःखशीलोऽञ्जनाददृक् ।
स्वापशीलो दिवास्वापात् चञ्चलः स्यात् प्रधावनात् ॥
अत्युच्चशब्दश्रवणात् वधीरः खलु जायते ।
तालुदन्तौष्ठजिह्वासु श्यावो हननतो भवेत् ॥
प्रलापी भूरिकथनात् उन्मत्तस्तु परिश्रमात् ।
खलतिर्भूमिखननात् उन्मत्तो वातसेवनात्” ॥
इति ।
“क्षामप्रसन्नवदनां स्फुरच्छ्रोणिपयोधराम् ।
स्रस्ताक्षिकुक्षिं पुंस्कामां विद्यादृतुमतीं स्त्रियम्” ॥

**ऋतुवृत्तिः**, पुं, (ऋतुषु वृत्तिर्वर्त्तनं यस्य ।) वत्सरः ।

इति त्रिकाण्डशेषः ॥

**ऋतुसन्धिः**, पुं, (ऋत्वोः सन्धिर्मेलनम् ।) ऋतुद्वयसन्धि-

कालः । स च ऋत्वोरन्त्यादिसप्ताहौ ।
तथाच
वाभटः ।
“ऋत्वोरन्त्यादिसप्ताहावृतुसन्धिरिति स्मृतः ।
तत्र पूर्ब्बो विधिस्त्याज्यः सेवनीयः परो विधिः” ॥

**ऋतुस्नानं**, क्ली, (ऋतौ स्नानम् ।) रजस्वलास्त्रियाः

चतुर्थाहकर्त्तव्यस्नानम् । इति स्मृतिः ॥
तत्स्ना-
नानन्तरं भर्तृवदनं द्रष्टव्यं नान्यस्य भर्त्रसन्निधाने
भर्त्तारं मनसि ध्यात्वा सूर्य्यं विलोकयेत् । इति
काशीखण्डम् ॥
(“ततः पुष्पेक्षणादेव कल्याणध्यायिनी त्र्यहम् ।
मृजालङ्काररहिता दर्भसंस्तरशायिनी ॥
क्षैरेयं यावकं स्तोकं कोष्ठशोधनकर्षणम् ।
पर्णे शरावे हस्ते वा भुञ्जीत ब्रह्मचारिणी ॥
चतुर्थेऽह्नि ततः स्नात्वा
शुक्लमाल्याम्बरा शुचिः ।
इच्छन्ती भर्तृसदृशं पुत्त्रं पश्येत् पुरः पतिम्” ॥

आर्त्तवस्रावदिवसात् ऋतुः
षोडशरात्रयः ।
गर्भग्रहणयोग्यस्तु स एव
समयः स्मृतः” ॥
“सर्व्वासामेव चतुर्वर्णस्त्रीणां
सर्व्ववादिसम्मतः ।
पूर्ब्बोक्तसमयः ग्रन्थान्तरेषु
विषयः । तद्यथा ।
स्नानदिवसादूद्र्ध्वं
द्वादशरात्रावधि ब्राह्मण्याः ।
दश-
रात्रावधि क्षत्त्रियायाः ।
अष्टरात्रावधि तैश्यायाः ।
षड्रात्रावधि शूद्रायाः गर्भधारणे
शक्तिः” ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ॥
“पद्मं सङ्कोचमायाति
दिनेऽतीते यथा तथा ।
ऋतावतीते योनिः सा शुक्रं
नातः प्रतीच्छति ॥
मासेनोपचितं रक्तं
धमनीभ्यामृतौ पुनः ।
ईषत्कृष्णं विगन्धञ्च
वायुर्योनिमु खन्नुदेत्” ॥
“ऋतुस्तु द्वादशनिशाः
पूर्ब्बास्तिस्रश्च निन्दिताः” ॥
इति शारीरस्थाने प्रथमेऽध्याये
वाभटेनोक्तम् ॥
शिवः । यथा महाभारते १३ ।
महादेवसहस्र-
नामकथने १७ । १३९ ।
“ऋतुः संवत्सरो मासः पक्षः
संख्यासमापनः” ॥

इति शरीरस्थाने प्रथमेऽध्याये
वाभटेनोक्तम् ॥
“गते पुराणे रजसि नवे चावस्थिते पुनः
शुद्ध-
स्नातां
स्त्रियमव्यापन्नयोनिशोणितगर्भाशयामृतु-
मतीमाचक्ष्महे” ।
इति शारीरस्थाने चतुर्थेऽध्याये
चरकेणोक्तम् ॥
“पीनप्रसन्नवदनां प्रक्लिन्नात्ममुखद्विजाम्
।
नरकामां प्रियकथां स्रस्तकुक्ष्यक्षिमूर्द्धजाम्
॥
स्फुरद्भुजकुचश्रोणिनाभ्यूरुजघनस्फिचम् ।
हर्षौत्सुक्यपराञ्चापि विद्यादृतुमतीमिति” ॥
इति शारीरस्थाने तृतीयेऽध्याये, --
“ततः शुद्धस्नातां
चतुर्थेऽहन्यहतवासःसमलङ्कृतां
कृतमङ्गलस्वस्तिवाचनां भर्त्तारं दर्शयेत् ।
तत्-
कस्य हेतोः ।
पूर्ब्बं पश्येदृतुस्नाता यादृशं नरमङ्गना ।
तादृशं जनयेत् पुत्रं भर्त्तारं दर्शयेदतः ॥
ततो विधानं पुत्त्रीयमुपाध्यायः समाचरेत् ।
कर्म्मान्ते च क्रमं ह्येनमारभेत विचक्षणः” ॥
“तत्र प्रथमे दिवसे ऋतुमत्यां
मैथुनगमनमना-
युष्यं पुंसां भवति । यश्च तत्राधीयते गर्भः
स
प्रसवमानो विमुच्यते । द्वितीयेऽप्येवं
सूतिकागृहे
वा । तृतीयेऽप्येवमसम्पूर्णाङ्गोऽल्पायुर्व्वा
भवति ।
चतुर्थे तु सम्पूर्णाङ्गो दीर्घायुश्च भवति ।
नच

इति शरीरस्थाने प्रथमेऽध्याये
वाभटेनोक्वम् ॥)

**ऋते**, व्य, (ऋत + के ।) विना । वर्ज्जनम् । इत्यमरः ॥

(“अवेहि मां प्रीतमृते तुरङ्गमात्” ।
इति रघुवंशे । ३ । ६३ ॥ तथा, कुमारे
२ । ५७ ।
“अंशादृते निषिक्तस्य
नीललोहितरेतसः” ॥)

**ऋत्विक्**, [ज्] पुं, (ऋतौ यजतीति । ऋतु + यज् +

ऋत्विगादिना क्विन्नन्तो निपातितः ।)
पुरोहितः ।
यथा, --
“अग्न्याधेयं
पाकयज्ञानग्निष्टोमादिकान्मखान् ।
यः करोति वृतो यस्य स
तस्यर्त्विगिहोच्यते” ॥
इति मानवे २ । १४३ ॥ तत्पर्य्यायः ।
याजकः २ ।
इत्यमरः ॥ भरताः ३ कुरवः ४ वाग्यतः
५ वृक्त-
वर्हिषः ६ यतश्रुचः ७ मरुतः ८ सबाधः
९ देव-
यवः १० । इत्यष्टावृत्विङ्नामानि ।
इति वेदनि-
र्घण्टौ ३ अध्यायः ॥
अयं हि नायकस्य धर्म्मसहायः । यदुक्तं
साहि-
त्यदर्पणे । ३ । ५१ । “ऋत्विक्पुरोधसः
स्युर्ब्रह्म-
विदस्तापसास्तथा धर्म्मे” ॥)

**ऋद्धं**, क्ली, (ऋध् + क्त ।) सम्पन्नधान्यम् । इति मे-

विष्णुः । यथा, महाभारते १३ । विष्णुसहस्रनाम-
कथने १४९ । ५८ ।
"ऋतुः सुदर्शनः कालः
परमेष्ठी परिग्रहः" ॥)
दीप्तिः । इति मेदिनी । मासः ।
सुवीरः । इति विश्वः ॥

**ऋतुप्राप्तः**, त्रि, (ऋतुः प्राप्तोऽनेन ।) फलेग्रहिः ।

अबन्ध्यवृक्षादिः । इति
शब्दचन्द्रिका ॥

**ऋतुमती**, स्त्री, (ऋतुरस्या अस्तीति । ऋतु + मतुप्

+ ङीप् ।) ऋतुयुक्ता स्त्री ।
तत्पर्य्यायः । ग्ज-
स्वला २ स्त्रीधर्म्मिणी ३ अवी
४ आत्रेया ५
मलिनी ६ पुष्पवती ७ उदक्या
८ । इत्यमरः ।
(यथा, महाभारते । १ । ३ ।
८७ । "उपाध्यायानी
ते ऋतुमती उपाध्यायश्च
प्रोषितोऽस्या यथाय-
मृतुर्बन्ध्यो न भवति तथा
क्रियताम्" ॥
ऋतुमतीकृत्यमाह ।
"आर्त्तवस्रावदिवसात् त्र्यहं सा
ब्रह्मचारिणी ।
शयीत दर्भशय्यायां पश्यदपि
पतिं न च ॥
करे शरावे पर्णेवा हविष्यं
त्र्यहमाचरेत् ।
अश्रुपातं
नखच्छेदमभ्यङ्गमनुलेपनम् ॥

प्रवर्त्तमाने रक्ते वीजं प्रविष्टं गुणकरं भवति
यथा
नद्यां प्रतिस्रोतः प्लावि द्रव्यं प्रक्षिप्तं
प्रतिनिव-
र्त्तते नोर्द्ध्वं गच्छति तद्वदेव द्रष्टव्यम् ।
तस्मान्नि-
यमवतीं त्रिरात्रं परिहरेत् । अतः परं मासा-
दुपेयात्" । इति च शारीरस्थाने
द्वितीयेऽध्याये
सुश्रुतेनोक्तम् ॥)

**ऋतुराजः**, पुं, (ऋतूनां राजा । "राजाहःसखिभ्य-

ष्टच्" । ५ । ४ । ९१ । इति टच् ।)
वसन्तकालः ।
इति राजनिर्घण्टः ॥

दिनी ॥ परिपक्वमर्द्दितधान्यम् ।
इत्यमरटीकायां
भरतः ॥ बहुलितधान्यम् । इति सुभूतिः
॥ तत्प-
र्य्यायः । आवसितम् २ । इत्यमरः ॥
अवसितम् ३ ।
इति तट्टीका ॥ सिद्धान्तः । इति
हेमचन्द्रः ॥
(पुं, विष्णुः । यथा, महाभारते
विष्णुसहस्रनाम-
कीर्त्तने १३ । १४९ । ४३ ।
"ऋद्धः स्पष्टाक्षरो
मन्त्रश्चन्द्रांशुर्भास्करद्युतिः" ॥)

**ऋद्धः**, त्रि, (ऋध् + क्त ।) समृद्धः । सम्पन्नः । इति

मेदिनीकरहेमचन्द्रौ ॥ (यथा, गीतायाम्
। २ । ८ ।
"अवाप्य भूमावसपत्नमृद्धं
राज्यं सुराणामपि चाधिपत्यम्" ॥)

**ऋद्धिः**, स्त्री, (ऋध् + क्तिन् ।) अष्टवर्गान्तर्गतौषध-

विशेषः तत्पर्य्यायः । योग्यम् २ सिद्धिः
३ लक्ष्मीः
४ । इत्यमरः ॥ प्राणप्रदा ५ वृष्या ६ ।
इति रत्न-
माला ॥ प्राणदा ७ जीवदात्री ८ सिद्धा
९ योग्या

:१० चेतनीया ११ रथाङ्गी १२ मङ्गल्या १३ लोक-

कान्ता १४ जीवश्रेष्ठा १५
यशस्या १६ । अस्याः
गुणाः । मधुरत्वम् । सुस्निग्धत्वम्
। अतितिक्तत्वम् ।
शीतलत्वम् । रुचिमेधाकारित्वम् ।
श्लेष्मकुष्ठकृमि-
नाशित्वञ्च । इति राजनिर्घण्टः ॥
अस्या रूपं यथा, --
"ऋद्धिर्वृद्धिश्च कन्दौ द्वौ भवतः
कोशयामले ।
श्वेतलोमान्वितः कन्दो
लताजालः सरन्ध्रकः ॥
स एव ऋद्धिर्वृद्धिश्च
भेदमप्येतयोर्ववे ।
तूलग्रन्थिसमा ऋद्धिर्वामावर्त्तफला
च सा ॥
वृद्धिस्तु दक्षिणावर्त्तफला प्रोक्ता
महर्षिभिः" ।
औषधकरणे ऋद्धिवृद्धिस्थाने
वाराहीकन्दः अ-
थावा बला देया । इति परिभाषा ॥
* ॥ समृद्धिः ।
इति मेदिनी ॥ (यथा, कुमारे २ ।
५८ ॥
"परिच्छिन्नप्रभावर्द्धिर्न मया न च
विष्णुना" ।)
पार्ब्बती । इति शब्दरत्नावली ॥
(लक्ष्मीः ॥)

**ऋध**, उ य न इर वृद्धौ । इति कविकल्पद्रुमः ॥

**ऋश्यः**, पुं, स्त्री, (ऋश् + क्यप् ।) मृगविशेषः । इति

शब्दरत्नावली ॥ (यथा, ऋग्वेदे । ८ ।
४ । १० ।
"ऋश्यो न तृष्यन्नवपानमागहि" ॥)

**ऋष**, ई श गतौ । इति कविकल्पद्रुमः ॥ (तुदां-

परं-सकं-सेट् ।) ह्रस्वादिः । ई ऋष्टः ।
श ऋषति ।
इति दुर्गादासः ॥

**ऋषभः**, पुं, (ऋष् + "ऋषिवृषिभ्यां कित्" । इति

उणादिसूत्रेण ३ । १२३ । अभच् ।
किच्च ।) वृषः ।
(यथा, ऋग्वेदे ६ । २८ । ८ । "उप
ऋषभस्य
रेतस्युपेन्द्र तव वीर्य्ये" ॥) कर्णरन्ध्रम्
। कुम्भीर-
पुच्छः । उत्तरपदे श्रेष्ठः । इति मेदिनी
॥
("स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः
।
सिंहशार्दूलनागाद्याः पुंसि
श्रेष्ठार्थवाचकाः" ॥
इत्यमरवाक्यात् । यथा पुरुषर्षभः
पुरुषश्रेष्ठः
इत्यर्थः । असमस्तेऽप्ययं
श्रेष्ठार्थवाचकः । यथा,
भागवते २ । ४ । २२ ॥
"स्वलक्षणा प्रादुरभूत् किलास्यतः
स मे ऋषीणामृषभः प्रसीदताम्" ॥
"ऋषीणां ज्ञानप्रदानां ऋषभः श्रेष्ठः" ।
इति

("जीवकर्षभकौ ज्ञेयौ
हिमाद्रिशिखरोद्भवौ ।
रसोनकन्दवत्कन्दौ निःसारौ
सूक्ष्मपत्रकौ" ॥
"ऋषभो वृषशृङ्गवत्" ॥
"ऋषभो वृषभो धीरो विषाणी
द्राक्षैत्यपि" ॥
अनयोर्गुणा यथा ॥
"जीवकर्षभकौ बल्यौ शीतौ
शुक्रकफप्रदौ ।
मधुरौ पित्तदाहास्रकार्श्यवातक्षयापहौ"
॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥) सप्त-
स्वरान्तर्गतद्वितीयस्वरः । (अयं स्वरः
त्रिश्रुतिः ।
अस्यः तिस्रः श्रुतयो यथा, (१)
दयावती, (२)
रञ्जनी, (३) रतिका । तिस्रश्च
श्रुतिजातयो यथा,
(१) करुणा, (२) मध्या, (३) मृदुः ।
अयञ्च ऋषि-
वंशीयः, क्षत्त्रियजातिः, पिञ्जरवर्णश्च ।
अस्यो
त्पत्तिः शाकद्वीपे । अस्य ऋषिः देवता
च ब्रह्मा;
छन्दो गायत्री । यथा सङ्गीतरत्नाकारे, -
-
"ऋषभस्त्रिश्रुतिस्ततः ... ... ... ।
दयावती रञ्जनी च रतिका चर्षभे स्थिता
॥
दीप्तायता मृदुर्मध्या षड्जे स्यात् ऋषभे
पुनः ।
संस्थिता करुणा मध्या मृदुः ... ... ॥

(दिवां, स्वां-परं-सकं-सेट् ।) य
ऋद्ध्यति । उ
अर्द्धित्वा ऋद्धा । न ऋध्नोति ।
इर आर्धत् आ-
र्धोत् । क्वचित्तृप्तौ चायम् । सोऽहं
प्राग्भवतैव
भूतजननीमृध्नोमीति भवभूतिः ॥
अन्तर्भूतञ्यर्थ-
त्वादिदं सिद्धमिति केचित् । इति
दुर्गादासः ॥

**ऋफ**, श दाने । श्लाघायाम् । हिंसायाम् । निन्दा-
याम् । यद्धे । इति कविकल्पद्रुमः
॥ (तुदां-परं-
सकं, अकं च-सेट् ।) श ऋफति
जनो ददाति
श्लाघते हिनस्ति निन्दति
युद्ध्यते वेत्यर्थः । आनर्फ ।
हिंसायामप्ययमित्यन्ये । इति
दुर्गादासः ॥

**ऋभुः**, पुं, (ऋ स्वर्गे देवमातुरदितेर्व्वा भवति यः ।
ऋ + भू + डु ।) देवता । इत्यमरः
॥ (यथा, ऋग्-
वेदे । ९ । २१ । ६ ।
"ऋभुर्न रथ्यं नवं दधतो
केतुमादिशे" ॥
देवानामपि देवः । यथा, महाभारते
वनपर्ब्बणि ।
"ऋभवो नाम तत्रान्ये देवानामपि
देवताः ।
तेषां लोकाः परतरे यान्यजन्तीह
देवताः" ॥)
चाक्षुषमन्वन्तरे देवगणभेदः ।
यथा, --
तट्टीका ॥ गणविशेषः ।
आकृतिगणोऽयम् । यथा
पाणिनिः तत्पुरुषसमासप्रकरणे २ ।
१ । ५६ ॥
"उपमितं व्याघ्रादिभिः
सामान्याप्रयोगे" ॥ व्या-
घ्रादिराकृतिगणः । "व्याघ्र-सिंह-ऋक्ष-
ऋषभ-
चन्दन-वृक-वृष-वराह-हस्तिन्-तरु-
कुञ्जर-रुरु-पृ-
षत्-पुण्डरीक-पलाश-कितवाः" ।
इत्येते व्याघ्रा-
दयः ॥) पर्ब्बतविशेषः । इति धरणी ॥
वराहपुच्छः ।
आदिजिनः । इति हेमचन्द्रः ॥
भगवदवतारवि-
शेषः । (यथा, भागवते ५ । ६ । ७ ।
"तस्य ह वा एवं
मुक्तलिङ्गस्य भगवत ऋषभस्य
योगमायावासनया
देह इमां जगतीमभिमानाभासेन
चंक्रममाणः" ।)
स तु सत्ययुगे
अग्नीध्रसुतनाभिराजपुत्त्रत्वेन जातः ।
तस्य पुत्त्रः जडभरतः । इति
श्रीभागवतं ।
(तथा, मार्कण्डेये ५३ । ३८ ।
"अग्नीध्रसूनोर्नाभेस्तु ऋषभोऽभूत्
सुतो द्विज ! ।
ऋषभाद्भरतो जज्ञे वीरः पुत्त्रशताद्वरः"
॥
स्वारोचिषे मन्वन्तरे ऋषिभेदः । यथा,
मार्कण्डेये
६७ । ४ ।
पञ्चमः पितृवंशस्थो रि-धावृषिकुलोद्भवौ
।
ऋधौ तु क्षत्त्रियौ ज्ञेयौ वैश्यजाती निगौ
मतौ" ॥
रि धौ ऋषभधैवतौ इत्यर्थः । इत्यादि ।)
स तु गोस्वरतुल्यस्वरः ।
चातकस्वरतुल्यस्वर इति
केचित् । नारदमते गावः ऋषभस्वरं
वदन्ति
यथा, --
"षड्जं रौति मयूरो हि गावो नर्द्दन्ति
चर्षभम्" ।
इति नारदसंहितायाम् ।
दपणरत्नाकरादिमते
तु चातकः ऋषभं वदति । यथा
सङ्गोतदर्पणे, --
"स्वरमृषभं चातको ब्रूते" ।)
अस्योत्पत्तिः ।
"नाभिमूलाद्यदा वर्ण उत्थितः कुरुते
ध्वनिम् ।
वृषभस्येव निर्याति हेलया ऋषभः
स्मृतः" ॥
इति सङ्गीतदामोदरः ॥
("नाभेः समुदितो वायुः
कण्ठशीर्षसमाहतः ।
ऋषभस्येव नादं यत् तस्मादृषभईरितः"
॥
इति च सङ्गीतसमयसारे । अस्योत्पत्तिः
ऋग्वे-
दात् । यथा रत्नावल्यां, --
"ऋग्वेदात् षड्ज-ऋषभौ यजुषो
मध्यधैवतौ ।
सामवेदात् समूद्भूतौ तथा
गान्धारपञ्चमौ" ॥
इति ॥)

"आद्याः प्रभूता ऋभवः पृथुकाश्च
दिवौकसः" ।
इति हरिवंशे । ७ । ३२ ॥)

**ऋभुक्षः**, पुं, (ऋभवो देवाः क्षियन्ति वसन्ति यत्र ।
ऋभु + क्षि + ड ।) स्वर्गः । वज्रम्
। इन्द्रः । इति ।
रायमुकुटः ॥ (देवमात्रे । यथा
ऋग्वेदे । ४ ।
३७ । १ । "उपनो राजा
अध्वरमृभुक्षाः" ।
"ऋभुक्षाः ऋभवः" । इति भाष्यम्
॥)

**ऋभुक्षाः**, [न्] पुं, (ऋभुक्षः स्वर्गः वज्रं वा अस्या-
स्तीति इनिः ।
"पथिमथ्यृभुक्षामात्" । ७ । १ ।
८५ ।
"इतोत्सर्व्वनामस्थाने" । ७ । १ ।
८६ । इत्यादिना
सिद्धम् । यद्वा ऋच्छति इति
अर्त्तेर्भुक्षिनक्
प्रत्ययः ।) इन्द्रः । इत्यमरः ॥
(यथा, ऋग्वेदे ।
७ । ४७ । ३ । "इन्द्रो विभ्वां
ऋभुक्षा वाजो
अर्य्यः" । इति ॥)

**ऋम्फ**, प श बधे । (मुचादि-तुदां-परं-सकं-सेट् ।)
इति रिम्फधातोष्टीकायां दुर्गादासः
॥

**ऋश**, गतिस्मृत्योः । सौत्रधातुरयम् । (परं-सकं-
सेट् ।) ऋश्यः । इति दुर्गादासः ॥

"उर्जस्तम्बस्तथा प्राणो
दत्तोलिरृषभस्तथा" ॥
ऋषभसहस्रदक्षिण एकाहनिष्पाद्यो
यागभेदः ।
यथाह गर्गः "पूर्ब्ब ऋषभसंज्ञो राज्ञः"
॥ स्वनाम-
ख्यातः यज्ञतुरपुत्रो नृपभेदः । यथा,
शतपथ-
ब्राह्मणे १३ । ५ । ४ । १५ ।
"एकविंशस्तोमेन
ऋषभो याज्ञतुर ईजे शिक्नानां
राजांतदेतद्गाथ-
याऽभिगीतम्" ॥)
अष्टवर्गान्तर्गतौषधविशेषः ।
तत्पर्य्यायः । वृषः १ ऋषभकः २
वीरः ३ । इति
रत्नमाला ॥ गोपतिः ४ धीरः ५
विषाणी ६ दुर्द्धरः
७ ककुद्मान् ८ पुङ्गवः ९ वोढा १०
शृङ्गी ११ धूर्य्यः
१२ भूपतिः १३ कामी १४ रूक्षप्रियः
१५ उक्षा
१६ लाङ्गूली १७ गौः १८ बन्धुरः
१९ गोरक्षः २०
वनवासी २१ । अस्य गुणाः ।
मधुरत्वम् । शीतत्वम् ।
रक्तपित्तविरेकनाशित्वम् ।
शुक्रश्लेष्मकारित्वम् ।
दाहक्षयज्वरहरत्वञ्च । इति
राजनिर्घण्टः ॥ * ॥

**ऋषभध्वजः**, पुं, (ऋषभः ध्वजश्चिह्नमस्य ध्वजेऽस्य वा ।)
शिवः । अर्हद्विशेषः । इति मेदिनी ॥

**ऋषभी**, स्त्री, (ऋषभ + जातौ ङीष् ।) नराकारस्त्री ।
शूकशिम्बी । शिराला । विधवा । इति
मेदिनी ॥
(शूकशिम्ब्यर्थे व्यवहारो यथा ॥
"ऐन्द्यृषभ्यतिरसेत्यादिषु" ।
इति चरके सूत्रे चतुर्थेऽध्याये ॥ अत्र हि
ऋषभी
शूकशिम्बी इत्यस्य शिवदासीयटीका ॥
* ॥)

**ऋषिः**, पुं, (ऋषति प्राप्नोति सर्व्वान् मन्त्रान् ज्ञानेन
पश्यति संसारपारं वा इति । ऋष् +
"इगुप-
धात् कित्" ४ । ११९ । इति
उणादिसूत्रेण इन् ।
किच्च ।) ज्ञानसंसारयोः पारगन्ता ।
शास्त्रकृदा-
चार्य्यः । (यथा, ऋग्वेदे १ । १ । २ ।
"अग्नि

:पूर्ब्बेभिरृषिभिरीड्यो नूतनैरुत स देवा एह

वक्ष्यति” ॥) रिषिर्हसादिश्च ।
“विद्याविदग्धमतयो
रिषयः प्रसिद्धाः” । इति प्रयोगात्
। इति भरतः ॥
तत्पर्य्यायः । सत्यवचाः २
शापास्त्रः ३ । स तु
सप्तविधः यथा । व्यासाद्या
महर्षयः १ भेलाद्याः
परमर्षयः २ कण्वादयो देवर्षयः
३ वशिष्टाद्या
ब्रह्मर्षयः ४ सुश्रुताद्याः श्रुतर्षयः
५ ऋतपर्णादयो
राजर्षयः ६ जैमिन्याद्याः
काण्डर्षयः । इति त्रि-
काण्डशेषः ॥ तथा च रत्नकोषे ।
“सप्त ब्रह्मर्षि-देवर्षि-महर्षि-
परमर्षयः ।
काण्डर्षिश्च श्रुतर्षिश्च राजर्षिश्च
क्रमावराः ॥ * ॥
मन्वन्तरभेदे सप्तर्षिनामानि यथा
।
१ स्वायम्भुवमन्वन्तरे मरीचिः ।
अत्रिः । अ-
ङ्गिराः । पुलस्त्यः । पुलहः ।
क्रतुः । वशिष्ठः ।
(यथा हरिवंशे । ७ । ८ ।
“मरीचिरत्रिर्भगवानङ्गिराः पलहः
क्रतुः ।
पुलस्त्यश्च वशिष्ठश्च सप्तैते
ब्रह्मणः सुताः” ॥)
२ । स्वारोचिषे उर्जस्तम्भादयः
।
९ । दक्षसावर्णिके द्युतिमदाद्याः ।
(यथा मार्कण्डेये ९४ । ८ ।
“मेधातिथिर्व्वसुः सत्यो ज्योतिष्मान्
द्युतिमांस्तथा ।
सप्तर्षयोऽन्यः सबलस्तथान्यो
हव्यवाहनः” ॥)
१० । ब्रह्मसावर्णिके
हविष्मत्सुकृतसत्यजयमू-
र्त्याद्याः । (यथा मार्कण्डेये ९४ । १०,
१३, १४ ।
“मनोस्तु दशमस्यान्यच्छृणु मन्वन्तरं
द्विज ! ॥
सप्तर्षींस्तान् निबोध त्वं ये भविष्यन्ति वै
तदा ।
आपो भूतिर्हविष्मांश्च सुकृती सत्यएव च
।
नाभागोऽप्रतिमश्चैव वाशिष्ठश्चैव सप्तमः”
॥)
११ । धर्म्मसावर्णिके अरुणादयः ।
(यथा मार्कण्डेये ९४ । १९-२० ।
“हविष्मांश्च वरिष्ठश्च
ऋष्टिरन्यस्तथारुणिः ।
निश्चरश्चानघश्चैव विष्टिश्चान्यो
महामुनिः ॥
सप्तर्षयोऽन्तरे तस्मिन्नग्निदेवश्च सप्तमः”
॥)
१२ । रुद्रसावर्णिके तपोमूर्त्यादयः ।
(यथा मार्कण्डेये ९४ । २५ ।
“द्युतिस्तपस्वी
सुतपास्तपोमूर्त्तिस्तपोनिधिः ।
तपोरतिस्तथैवान्यः सप्तमस्तु
तपोधृतिः” ॥)
१३ । देवसावर्णिके
निर्म्मोहतत्त्वदर्श्याद्याः । (मार्क-
ईश्वराणां सुतास्तेषामृषयस्तान्
निबोधत ।
काव्यो वृहस्पतिश्चैव
कश्यपश्च्यवनस्तथा ।
उतथ्यो वामदेवश्च
अगस्त्यश्चौषिजस्तथा” ॥
औषिजस्थाने कौशिक इति वा पाठः ।
“कर्द्दमो बालिखिल्याश्च विश्रवाः
शक्तिवर्च्चसः ।
इत्येते ऋषयः प्रोक्तास्तपसा
ऋषिताङ्गताः” ॥
इति । तस्य व्युत्पत्तिर्यथा ।
“ऋषि हिंसागतौ
धातुर्व्विद्यासत्यतपःश्रुतिः ।
एष सन्निचयो यस्मात् ब्राह्मणश्च ततः
त्वृषिः ॥
विवृत्तिसमकालन्तु बुद्ध्या
व्यक्तिमृषिस्त्वयम् ।
ऋषन्ते परमां यस्मात् परमर्षिस्ततः
स्मृतः ॥
गत्यर्थादृषतेर्धातोर्नामनिर्वृतिकारणम् ।
यस्मादेष स्वयम्भूतस्तस्माच्च ऋषिता
मता” ॥
इति मत्स्यपुराणे १२० अध्यायः ॥

**ऋषिकः**, पुं, (ऋषेः पुत्त्रः । ऋषि + कन् ।) काव्या-

दि-ऋषिपुत्त्रः । यथा ।

**ऋषीकः**, पुं, (ऋषेः पुत्त्रः । ऋषि + कन् ।) काव्या-

दि-ऋषिपुत्त्रः । यथा ।
“ऋषिपुत्त्रा ऋषीकास्तु
मैथुनाद्गर्भसम्भवात् ।

(यथा, मार्कण्डेये ६७ । ४ ।
“उर्जस्तम्भस्तथा प्राणो
दत्तोलिरृषभस्तथा ।
निश्चरश्चार्व्ववीराश्च तत्र
सप्तर्षयोऽभवन्” ॥)
३ । उत्तमे वशिष्ठसुताः
प्रमदादयः ।
(यथा, मार्कण्डेये ७३ । १३ ।
“स्वतेजसा हि तपसो वशिष्ठस्य
महात्मनः ।
तनयश्चान्तरे तस्मिन् सप्त
सप्तर्षयोऽभवन्” ॥)
४ । तामसे ज्योतिर्धामादयः ।
(यथा मार्कण्डेये ७४ । ५९ ।
“ज्योतिर्धामा पृथुः
काव्यश्चैत्रोऽग्निर्बलकस्तथा ।
पीवरश्च तथा ब्रह्मन् सप्त
सप्तर्षयोऽभवन्” ॥)
५ । रैवते हिरण्यरोमा वेदशिरा
ऊद्ध्र्वबाहु-
रित्यादयः । (यथा मार्कण्डेये
७५ । ७३-७४ ।
“हिरण्यरोमा
वेदश्रीरूद्ध्र्वबाहुस्तथापरः ।
वेदबाहुः सुधामा च पर्जन्यश्च
महामुनिः ॥
वशिष्ठश्च महाभागो
वेदवेदान्तपारगः ।
एते सप्तर्षयश्चासन् रैवतस्यान्तरे
मनोः” ॥)
६ । चाक्षषे हर्य्यश्मद्वीरकादयः ।
(मार्कण्डेयमतानुयायिन उच्यन्ते
तत्रैव । ७६ । ५४ ।
“सुमेधा विरजाश्चैव
हविष्मानुन्नतो मधुः ।

ण्डेयपुराणमते अयं त्रयोदशमनुः
रौच्याख्ययाभि-
हितः । यथा, तत्रैव ९४ । २७-३० ।
“त्रयोदशस्य पर्य्याये रौच्याख्यस्य मनोः
सुतान् ।
सप्तर्षीं श्च नृपांश्चैव गदतो मे निशामय ॥
सुधर्म्माणः सुरास्तत्र सुकर्म्माणस्तथापरे
।
सुशर्म्माणः सुरा ह्येते समस्ता
मुनिसत्तम ! ॥
महाबलो महावीर्य्यस्तेषामिन्द्रो
दिवस्पतिः ।
भविष्यानथ सप्तर्षीन् गदतो मे निशामय
॥
धृतिमानव्ययश्चैव तत्त्वदर्शी निरुत्मुकः ।
निर्म्मोहः सुतपाश्चान्यो निष्प्रकम्पश्च
सप्तमः” ॥)
१४ । इन्द्रसावर्णिके
अग्निबाहुशुचिशुद्धमागधाद्याः
सप्तर्षयः । (मार्कण्डेयपुराणमतेऽयं
भौत्याख्यया-
भिहितः । यथा तत्रैव ९९ । १ ।
“ततः परन्तु भौत्यस्य समुत्पत्तिं
निशामय ।
देवानृषींस्तथा पुत्त्रांस्तथैव
वसुधाधिपान्” ॥
ततः परं त्रयोदशमन्वन्तरानन्तरम् ॥
अस्मिन्
मन्वन्तरे सप्तर्षिनामान्याह तत्रैव १०० ।
३१ ।
“अग्नीध्रश्चाग्निबाहुश्च शुचिर्मुक्तोऽथ
माधवः ।
शुक्रोऽजितश्च सप्तैते तदा सप्तर्षयः
स्मृताः” ॥

परत्वेनर्षयस्ते वै भूतादिऋषिकास्ततः
॥
ऋषीकाणां सुता ये वै विज्ञेया
ऋषिपुत्त्रकाः
इत्येते ऋषयः प्रोक्तास्तपसा
ऋषिताङ्गताः ॥
तेषां पुत्त्रानृषीकांस्तु
गर्भोत्पन्नान्निबोधत ।
वत्सरो नहुषश्चैव भारद्वाजश्च
वीर्य्यवान् ।
ऋषिर्द्दीर्घतपाश्चैव वृहद्दुःस्थः शरत्वतः
॥
वाजिश्रवाः सुचित्तश्च श्यावोऽश्वश्च
पराशरः ।
शृङ्गी च कश्यपश्चैव राजा
वैश्रवणस्तदा ॥
इत्येते ऋषिकाः सर्व्वे सत्येन
ऋषिताङ्गताः” ।
इति मात्स्ये १२० अध्यायः ॥

**ऋषिकुल्या**, स्त्री, (ऋषीणां कुल्या कृत्रिमाल्पा सरित्
इव ।) नदी । इति हेमचन्द्रः ॥
(“ऋषिकुल्यां समासाद्य नरः स्नात्वा
विकल्मषः ।
देवान् पितॄन् चार्च्चयित्वा ऋषिलोकं
प्रपद्यते” ॥
इति भहाभारते । तीर्थयात्रापर्ब्बणि ३ ।
८४ । ४६ ॥
ऋषिकुलाय हितम् । ऋषिकुल + यत् ।
ऋषि-
कुलहिते, त्रि । यथा, मागवते ३ । १६
। १३ ।
“अथ तस्योशतीं देवीमृषिकुल्यां
सरस्वतीम् ।

अतिनामा सहिष्णुश्च
सप्तासन्निति चर्षयः” ॥)
७ ।
वैवस्वताख्यवर्त्तमानमन्वन्तरे
कश्यपः ।
अत्रिः । वशिष्ठः । विश्वामित्रः ।
गौतमः । जम-
दग्निः । भरद्वाजः ॥ (यथा
मार्कण्डेये ७९ । ९-१० ।
“अत्रिश्चैव वशिष्ठश्च काश्यपश्च
महानृषिः ।
गौतमश्च भरद्वालो
विश्वामित्रोऽथ कौशिकः ॥
तथैव पत्रो भगवानृचीकस्य
महात्मनः ।
जमदग्निस्तु सप्तैते मुनयोऽत्र
तथान्तरे” ॥)
८ । सावर्णिके गालवः ।
दीप्तिमान् । परशु-
रामः । अश्वत्थामा । कृपः ।
ऋष्यशृङ्गः । व्यासः ।
यथा, मार्कण्डये ८० । ४ ।
“रामो व्यासो गालवश्च
दीप्तिमान् कृपएव च ।
ऋष्यशृग्ङ्गस्तथा द्रोणिस्तत्र
सप्तर्षयोऽभवन्” ॥
रामः परशुरामः ।
द्रोणिरश्वत्थामा ॥)

पुराणान्तरे मतभेदात् मन्वन्तरसप्तर्षीणां
नाम-
भेदोऽपि दृश्यते । हरिवंशे ७ अध्याये
तथा
विष्णुपुराणे ३ अंशे अस्य विवरणादिकं
द्रष्टव्यम् ॥)
॥ * ॥ ज्यीतिःशास्त्रमते
वशिष्ठपत्न्यरुन्धतीसहित-
वर्त्तमानमन्वन्तरीयसप्तर्षीणां मघानक्षत्रे
स्थितिः
तस्योदये तेषाञ्चोदयो भवति ।
काशोखण्डमते
शनिलोकादूर्द्ध्वं ध्रूवलोकात् अधः तेषां
स्थितिः
॥ * ॥ वेदः । किरणः । इति मेदिनी ॥
भृग्वादि-
महर्षिसन्तानः । यथा ।
“भृगुर्म्मरीचिरत्रिश्च अङ्गिराः पुलहः
क्रतुः ।
मनुर्दक्षो वशिष्ठश्च पुलस्त्यश्चेति ते दश
॥
ब्रह्मणो मानसा ह्येते उत्पन्नाः
स्वयमीश्वराः ।
परत्वेनर्षयस्तस्माद्भूतास्तस्मान्महर्षयः
॥

नास्वाद्य मन्युदष्टानां
तेषामात्माप्यतृप्यत” ॥)

**ऋषिजाङ्गलिकी**, स्त्री, (ऋषिप्रिया जाङ्गलिकी
।)
ऋक्षगन्धावृक्षः । इति रत्नमाला ॥
ऋषिजाङ्गल-
इति ख्यातः । (वृद्धदारकशब्देऽस्या
विशेषो ज्ञेयः ॥)

**ऋषिप्रोक्ता**, स्त्री, (ऋषिणा प्रोक्ता औषधार्थम्
।)
माषपर्णीवृक्षः । इति रत्नमाला ॥
(माषपर्णी-
शब्देऽस्या गुणादिकं ज्ञेयम् ॥)

**ऋष्टिः**, स्त्री, (ऋष् हिंसायां + क्तिन् ।) खङ्गः ।
इत्य-
मरः ॥ (यथा, ऋग्वेदे । ५ । ५७ । २ ।
“वाशीमन्त ऋष्टिमन्तो मनीषिणः ।
सुधन्वान इषुमन्तो निषङ्गिणः” ॥
आयुधमात्रम् । यथा ऋग्वेदे १ । १६६
। ४ ।
“मयन्ते विश्वाभुवनानि हर्म्म्या ।
चित्रो वो यामः प्रयतास्वृष्टिषु” ॥
“ऋष्टिषु युद्धस्थहेतिषु” । इति भाष्यम्
।
तथा तत्रैव । ५ । ५२ । ६ ।
“आ रुक्मैरायधा नर ऋष्वा
ऋष्टीरसृक्षत” ।

:"ऋष्टीरायुधविशेषान्" । इति भाष्यम् ।

तथा मनुः ३ । १३३ ।
"यावतो ग्रसते ग्रासान्
हव्यकव्येष्वमन्त्रवित् ।
तावतो ग्रसते प्रेत्य दीप्तशूलर्ष्टयोगुडान्"
॥
"ज्वलितशूलर्ष्टख्यायुधलोहपिण्डान्" । इति त-
ट्टीका ॥ दीप्तिः । यथा, ऋग्वेदे ३ । ५४ ।
१३ ।
"विद्युद्रथा मरुत ऋष्टिमन्तो
दिवो मर्या ऋतजाता अयासः" ।
"ऋष्टिमन्तो दीप्तिमन्तः" । इति भाष्यम्
॥ गमना-
गमनशीलः । यथा, ऋग्वेदे १ । ६४ । ४
॥ "अंसे-
ष्वेषां निप्निमृक्षुरृष्टयः साकं यज्ञिरे
स्वधया
दिवो नरः" । "ऋष्टयः
गमनागमनशीलाः" ।
इति दयानन्दभाष्यम् ॥ पुं,
धर्म्मसावर्णिके मन्व-
न्तरे ऋषिभेदः । यथा, मार्कण्डेये । ९४
। १९ ।
"हविष्मांश्च वरिष्ठश्च
ऋष्टिरन्यस्तथारुणिः" ॥)

**ऋष्यः**, पुं, स्त्री, (ऋष् + यत् । निपातनात् सिद्धम् ।)

मृगविशेषः । इत्यमरः ॥ (यथा महाभारते
ऋष्य-
शृङ्गोपाख्याने । ३ । ११० । २७ ।
"ऋष्यशृङ्गः कथं मृग्यामुत्पन्नः
काश्यपात्मजः" ।
पम्पासरोवरकूले स्थितः । यत्र
बालिभयात् सुग्री-
वादयः पञ्च वानराः स्थिताः ॥ इति
रामायणम् ॥
("तावृष्यमूकस्य समीपचारी
चरन् ददर्शाद्भुतदर्शनोयौ" ।
इति रामायणे । ४ । १ । १२८ ॥)

**ऋष्यशृङ्गः**, पुं, (ऋष्यस्य मृगस्य शृङ्गमिव शृङ्ग-

मस्य ।) मुनिविशेषः । स तु
विभाण्डकसुतः ।
तस्य भार्य्या लोमपादराजकन्या
शान्ता । इति
रामायणम् ॥ ("मान्यो मुनिः स्वां
पुरमृष्यशृङ्गः" ।
इति भट्टिः । १ । १० ॥ अस्य
जन्मनः प्रभृति
विवरणमुच्यते ।

आसीत्पुरा
महातेजास्तपस्विसत्तमः
काश्यपो

विभाण्डको नाम ऋषिः । स च
महाह्रदं समा-
साद्य दीर्घकालं तपसि स्थितः ।
एकदाप्सरस-
मुर्व्वशीं दृष्ट्वा चलितचित्तस्यास्य
रेतः अप्सु प्रच-
स्कन्द । ततः काचित् मृगी तृषिता
तोयेन सह
तत्पीत्वा गर्भिणी अभवत् । इत्थं हि
मृगी पुरा
वत् । एवं स लोमपादः
परिपूर्णकामः तपोधनाग्र-
गण्यात् विभाण्डकात्
शापमुक्तिमिच्छन् स्वमित्रस्य
दशरथस्य सुतां शान्तां
ऋष्यशृङ्गाय प्रददौ ।
अथ विभाण्डको मुनिः तपसः
प्रतिनिवृत्तः सुत-
मनवलोक्य ध्यानधिया
सर्व्वमवगम्य क्रुधा ज्वल-
न्निव लोमपादराज्यं आजगाम ।
आगते च
तस्मिन् विभीतैः सर्व्वैः
ऋष्यशृङ्गस्य राज्यमिद-
मिति आचख्ये । पूजितश्च तेन
राजषिणा दिवि
इन्द्रमिव पुत्त्रं शचीमिव शान्तां
स्नुषाञ्चावलोक्य
ग्रामांश्च घोषांश्च सुतस्य
इत्यवगम्य शान्तकोपः
स्वाश्रमं प्रति प्रययौ । अथ स
ऋष्यशृङ्गः शान्तया
सह तस्मिन् राज्ये
सुखमतिचिरमवसत् ॥

अथ गच्छति काले
सूर्य्यवंशावतंसो राजा

दशरथः अनपत्यतया
क्लिश्यमानहृदयो निजगुरुं
वशिष्ठदेवं पुत्त्रलाभोपायं प्रप्रच्छ ।
एवमुक्तस्तेन
ऋषिप्रवरो वशिष्ठः
लोमपादराज्यात् ऋष्यशृङ्गं

ऋष्यस्य मृगविशेषस्य शृङ्गमिव शृङ्गं यस्य स
ऋष्यशृङ्गः ।
"ऋष्यो नीलाङ्को लोके सरोह्य इति कीर्त्तितः" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥)
स्वनामख्यातः कुरुवंशीयो देवातिथिपुत्त्रः । यथा,
भागवते । ९ । २२ । ११ ।
"ततश्च क्रोधनस्तस्माद् देवातिथिरमुष्य च ।
ऋष्यस्तस्य दिलीपोऽभूत् प्रतीपस्तस्य चात्मजः" ॥

**ऋष्यकेतुः**, पुं, (ऋष्यः केतौ यस्य ।) अनिरुद्धः ।
इति त्रिकाण्डशेषः ॥ अस्य रूपान्तराणि । ऋश्य-
केतुः । ऋष्यकेतनः । रिष्यकेतुः । विश्वकेतुः ॥

**ऋष्यगता**, स्त्री, (ऋष्येण ऋषिसमूहेन गता ज्ञाता ।)
ऋष्यप्रोक्तावृक्षः । इति शब्दरत्नावली ॥

**ऋष्यगन्धा**, स्त्री, (ऋष्यस्य मृगविशेषस्य गन्ध इव
गन्धो यस्याः ।) वृक्षविशेषः । ऋषिजाङ्गल इति
ख्यातः । तत्पर्य्यायः । ऋक्षगन्धा २ ऋषिजाङ्गलिकी
३ । इति रत्नमाला ॥
("महासहा-ऋद्धि-ऋष्यगन्धाश्वगन्धेत्यादिषु" ॥
इतिं चरके विमानस्थाने अवृमेऽध्याये ॥)

**ऋष्यप्रोक्ता**, स्त्री, (ऋष्येण ऋषिसमूहेन प्रोक्ता ।)

काचित् देवकन्यासीत् शापवशात् मृगरूप-
धारिणी वने विचरन्ती स्थिता । अथामोघत्वात्
ब्रह्मरेतसस्तस्यां मृग्यामेकः पुत्त्रः समभवत् । मृ-
गीगर्भजातत्वादस्य शिरसि शृङ्गमजायत तेनास्य
ऋष्यशृङ्ग इति नाम समभवत् । अनेन हि
पितुरन्यः कोऽपि मानुषो न दृष्टपूर्ब्बस्तस्माद-
नन्यविषयं अस्य मनः सदा ब्रह्मचर्य्ये एवाभवत् ।
एतस्मिन्नेव काले दशरथस्य बन्धुर्लोमपाद इति
ख्यातोऽङ्गानामीश्वरः समभवत् । तेन कामात्
ब्राह्मणस्य मिथ्याकृतम् । अस्मात् सर्व्वे ब्राह्मणास्तं
परितत्यजुः । प्रणष्टयज्ञस्यास्य राज्ये न ववर्ष शत-
क्रतुः । अतः क्लिष्टचित्तः स राजा ब्राह्मणान्
सन्तोषयित्वा कञ्चिदुपायं पर्य्यपृच्छत् । तेन पृष्टास्ते
ब्राह्मणा यज्ञार्थं ऋष्यशृङ्गमानेतुं उपदिदिशुः ।
अथ स राजा दुष्करत्वादस्य कार्य्यस्य ऋष्य-
शृङ्गमानेतुं शापाद्यभीताभिर्वाराङ्गनाभिर्यत्नमक-
रोत् । अथ रूपयौवनसम्पन्नाः काश्चित् वारा-

तपोधनं समानीय पुत्त्रेष्टिं कर्तुं समादिशत् ।
अथासौ राजा एवमभिहितः स्वजामातरममुं
ऋष्यशृङ्गमानेतुं यत्नमकरोत् । तत आगतेन
तेन क्रियमाणे यज्ञे दैवश्चरुर्वह्निमध्यादुदतिष्ठत् ।
एतच्चरुभक्षणात् नारायणावतारस्वरूपा रामा-
दयश्चत्वारो दशरथस्य तनया जाताः । अयं
विभाण्डकसुतस्तु महाप्रतापवान् यज्ञनिष्ठश्चेति
प्रसिद्धः । एतत्कथा च महाभारते । ३ । ११०
अध्यायन्तथा रामायणे । १ । ९ अध्यायञ्चारभ्य
द्रष्टव्या ॥ * ॥ सावर्णिके मन्वन्तरे ऋषिभेदः ।
यथा, मार्कण्डेये ८० । ४ ।
"रामो व्यासो गालवश्च दीप्तिमान् कृपएव च ।
ऋष्यशृङ्गस्तथा द्रोणिस्तत्र सप्तर्षयोऽभवन्" ॥)

## ॠ

**ॠ** दीर्घऋकारः । स तु अष्टमस्वरवर्णः । अस्यो-
च्चारणस्थानं मूर्द्धा । (यथा, सिद्धान्तकौमुद्यां
"ऋटुरषाणाम्मूर्द्धा" । पाणिनीयशिक्षायामपि ।
"स्युर्मूर्द्धण्या ऋटुरषा दन्त्या ऌतुलसाः स्मृताः" ।)

शतमूली । शूकशिम्बी । अतिबला । इति मेदिनी ॥
(अस्याः पर्य्यायो यथा ॥
"अतिबला महाशतावरी कपिकच्छुश्च" ।
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥
व्यवहारो यथा ॥
"ऐन्द्यृषभ्यतिरसर्ष्यप्रोक्तापयस्येत्यादिषु" ।
इति चरके सूत्रंस्थाने चतुर्थेऽध्याये ॥
अत्र तु
ऋष्यप्रोक्ता माषपर्णी इति शिवदासीयटीका ॥ * ॥
"कुक्कुटी सर्पगन्धा च तथा काणविषाणिके ।
ऋष्यप्रोक्ता वयस्था च शृङ्गी मोहनवल्लिका" ॥
इति उत्तरतन्त्रे षष्टितमेऽध्याये सुश्रुतेनोक्तम् ॥)

**ऋष्यमूकः**, पुं, (ऋष्यो मृगो मूको यत्र ।) पर्ब्बत-
विशेषः । इति जट धरः ॥ स तु दक्षिणदेशे

ङ्गना बहूनि उपायनद्रव्याणि गृहीत्वा जलपथेन
तं तपोधनम् लोभयित्वानेतुं प्रतस्थिरे । अथ ताः काश्यपस्याश्रमं समासाद्य व्याजकृताश्रमां नावम्-
दूरे निबध्य तत्रोत्तस्थुः । अथ कदाचित् तासां काचित् कुशला ऋषेः सुतं तं दृष्ट्वा वाग्भङ्ग्या
मोहयित्वा विचित्राणि माल्यानि वासांसि च
दत्त्वा पेयानि च पाययित्वा तेन सह चिक्रीड
प्रजहास च । एतादृशेन विविधोपायेन तं प्राप-
यित्वा कामवशतां अग्निहोत्रस्योपदेशं कृत्वा च
स्वस्थानमाजगाम । गतायाञ्च तस्यां मदनेन मत्तो
विचेतनश्चाभवदृष्यशृङ्गः । अथ विभाण्डकस्तपसः
प्रतिनिवृत्य स्वसुतं तथाविधं दृष्ट्वा प्रबोधयामास ।
प्रबोध्य तपस्यार्थं प्रस्थिते च तस्मिन् पुनः सा
ऋषिरूपधारिणी वेश्या तं विभाण्डकसुतं प्रलोभ्य
नाव्याश्रममानीय द्रुततरं लोमपादराज्यमायता ।
अथ स राजा ते प्राप्य विभाण्डकसुतं प्रहृष्ट-
मना अन्तःपुरे निवेशयामास । प्रविष्टे च तस्मिन्

स प्लुतश्च भवति ॥ इति व्याकरणम् ॥
(स च उदात्तानुदात्तस्वरितभेदात् त्रिधापि पुनः
प्रत्येकमनुनासिकाननुनासिकभेदेन द्विधेति षड्-
विधः ।)
ऋकारं परमेशानि स्वयं परमकुण्डलम् ।
पीतविद्युल्लताकारं पञ्चदेवमयं सदा ॥
चतुर्ज्ञानमयं वर्णं पञ्चप्राणयुतं सदा ।
त्रिशक्तिसहितं वर्णं प्रणमामि सदा प्रिये" ।
इति कामधेनुतन्त्रम् ॥
(वङ्गीयभाषायाम् ।) तस्य लेखनप्रकारो यथा, --
"तद्रूपाधोगता दक्षा वामतः कुञ्चिता त्वधः ।
पुनर्द्दक्षगता रेखा तासु ब्रह्मेशविष्णवः ॥
मात्रा शक्तिः परा ज्ञेया ध्यानमस्य प्रवक्ष्यते" ।
इति वर्णोद्धारतन्त्रम् ॥ * ॥ तस्य नामानि यथा ।
"ऋः क्रोधोऽतिथिशो वाणी वामनो गोऽथ श्रीर्धृतिः ।
ऊद्ध्वर्मुखी निशानाथः पद्ममाला विनष्टधीः ॥
शशिनी मोचिका श्रेष्ठा दैत्यमाता प्रतिष्ठिता ।

:एकदन्ताह्वयो माता हरिता मिथुनोदया ॥

कोमलः श्यामला मेधी प्रतिष्ठा पतिरष्टमी ।
ब्रह्मण्यमिव कीलाले पावको गन्धकर्षिणी” ॥
इति तन्त्रशास्त्रम् ॥ वामनासिका । इति वीज-
वर्णाभिधानम् ॥ (मातृकन्यासेऽस्य वामनासिकया
न्यस्यतया तथात्वम् । यदुक्तं मातृकान्यासमन्त्रे ।
“ॠं नमो दक्षिणघ्राणे ॠं नमो वामघ्राणे” ।
इति ॥ अनुबन्धविशेषस्तेन च्यङ्यह्रस्वो वा स्यात् ।
यदुक्तं कविकल्पद्रुमे । “च्यङ्यह्रस्वोऽथ ॠर्वा लृ-
रङ्वानिर्वाथ एः सिचि” ॥ (एतेन कणॄ आर्त्तस्वरे
लुङि कृते ज्रचीकणत् अचकणत् इति स्यात् ॥)

**ॠ** गि गत्यां । इति कविकल्पद्रुमः । (घादि-क्र्यादिं-
परं-सकं-सेट् ।) गि ॠणाति । ईर्ण्णः ईर्ण्णिः ।
इति दुर्गादासः ॥

**ॠ**, व्य, (ॠ + क्विप् ।) वाक्यारम्भः । रक्षा । इति
मेदिनी ॥ निन्दा । भयम् । इति शब्दरत्नावली ॥

**ॠ**, क्ली, (ॠणातीति । ॠ + क्विप् ।) वक्षः । इति
मेदिनी ॥

**ॠः**, स्त्री, देवमाता । दानवमाता । (ॠ + भावे
क्विप् ।) स्मृतिः । गतिः । इति मेदिनी ॥

**ॠः**, पुं, (ॠणाति प्राप्नोति विश्वमिति । ॠ + क्विप् ।)
भैरवः । (यथा, “ॠनन्ददात्रि ! प्रमथेशसङ्गैः ! ।”
इत्युद्भटः ॥) दनुजः । इति मेदिनी ॥

## ऌ

**ऌ** ऌकारः । स तु नवमस्वरवर्णः । अस्योच्चारण-
स्थानं दन्तः । (यदुक्तम् सिद्धान्तकौमुद्याम् “ऌतु-
लसानान्दन्ताः” । शिक्षायामपि यथा, --
“स्युर्मूर्द्धन्या ऋटुरसा दन्त्या ऌतुलसाः स्मृताः” ।)
स ह्रस्वो दीर्घः प्लुतश्च भवति । इति व्याकरणम् ॥

कान्यासमन्त्रे । “ऌं नमो दक्षिणगण्डे ऌं नमो
वामगण्डे” । अनुबन्धविशेषः । एतेन लुङि अङ्
स्यात् । यदुक्तम् कविकल्पद्रुमे ।
“चङ्यह्रस्वोऽथॠर्वा ऌरङ्वानिर्वाथ एः सिचि” ।
एतेन गम् ऌ औ गतौ इत्यस्य लुङि अगम-
दिति स्यात् ॥)

**ऌ**, व्य, देवमाता । इति मेदिनी एकाक्षरकोषश्च ॥
भूमिः । कुध्रः पर्ब्बतः । इति मेदिनी ॥

## ॡ

**ॡ** दीर्घ ऌकारः । स तु दशमस्वरवर्णः । अस्यो-
च्चारणस्थानं दन्तः । (यथा मुग्धबोधे । “ऌत्रयं
तथदधनलसाः वो दन्त्याः” ।) स प्लुतश्च भवति ।
इति व्याकरणम् ॥ (उदात्तानुदात्तस्वरितभेदात्
त्रिविधोऽपि प्रत्येकं पुनरनुनासिकानुनासिकभे-
दात् षड्विधएव ।)
“ॡकारं परमेशानि पूर्णचन्द्रसमप्रभम् ।
पञ्चदेवात्मकं वर्णं पञ्चप्राणात्मकं सदा ॥
गुणत्रयात्मकं वर्णं तथा विन्दुत्रयात्मकम् ।
चतुर्व्वर्गप्रदं देवि स्वयं परमकुण्डली” ॥
इति कामधेनुतन्त्रम् ॥ (वङ्गीयभाषायां) अस्य
लेखनप्रकारो यथा, --
“तत्क्रोडतुल्यरूपा च रेखा सा वैष्णवी स्मृता ।
तासु वन्द्याः सुरेशानि दुर्गा वाणी सरस्वता” ॥
इति वर्णोद्धारतन्त्रम् ॥ * ॥ तन्नामानि यथा, --
“ॡकारः कमला हर्षा हृषीकेशो मधुव्रतः ।
सूक्ष्मा कान्तिर्व्वामगण्डो रुद्रः कामोदरी सुरा ॥
शान्तिकृत् स्वस्तिका शक्रो मायावी लोलुपो वियत् ।
कुशमी सुस्थिरो माता नीलपीतो गजाननः ॥
कामिनी विश्वषा कालो नित्या शुद्धः शुचिः कृती ।
सूर्य्यो धैर्य्योत्कर्षिणी च एकाकी दनुजप्रसूः” ॥
इति तन्त्रशास्त्रम् ॥ (मातृकान्यासे वामगण्डे
न्यस्यतया तन्नाम्नाप्यभिधानम् । मातृकान्यास-

(अयन्तु उदात्तानुदात्तस्वरितभेदात् त्रिविधोऽपि प्रत्येकं पुनरनुनासिकाननुनासिकभेदन द्विधेति षड्विधएव ॥)
“ऌकारं चञ्चलापाङ्गि कुण्डली परदेवता ।
अत्र ब्रह्मादयः सर्व्वे तिष्ठन्ति सततं प्रिये ॥
पञ्चदेवमयं वर्णं चतुर्ज्ञानमयं सदा ।
पञ्चप्राणयुतं वर्णं तथा गुणत्रयात्मकम् ॥
विन्दुत्रयात्मकं वर्णं पीतविद्युल्लता तथा” ।
इति कामधेनुतन्त्रम् ॥ (वङ्गीयभाषायां) अस्य लेखनप्रकारो यथा, --
“रेखाधःकुण्डली वक्रा दक्षतो वामतो गता ।
वह्नीशवायवस्तासु नित्यं सन्ति च नित्यशः” ॥
इति वर्णोद्धारतन्त्रम् ॥ * ॥ अस्य नामानि यथा, --
“ऌः स्थाणुः श्रीधरः शुद्धो मेधाधूम्रावको वियत् ।
देवयोनिर्द्दक्षगण्डो महेशः कौन्तरुद्रकौ ॥
विश्वेश्वरो दीर्घजिह्वा महेन्द्रो लाङ्गलिः परा ।
चन्द्रिका पार्थिवो धूम्रा द्विदन्तः कामवर्द्धनः ॥
शुचिस्मिता च नवमी कान्तिरायातकेश्वरः ।
चित्ताकर्षिणी काशश्च तृतीयकुलसुन्दरी” ॥
इति तन्त्रशास्त्रम् ॥ (मातृकान्यासे दक्षिणगण्डे न्यस्यतया दक्षिणगण्डेनाप्यभिधानम् । यथा मातृ-मन्त्रो यथा ॥ “ऌं नमो दक्षिणगण्डे ॡं नमो वामगण्डे” ॥ मुग्धबोधमते तन्त्रमते च ऌकारस्य दीर्घत्वमस्ति पाणिनिमते तु नास्ति । अत्रेदं ज्ञा-तव्यं ऌकारस्य दीर्घत्वाभावेऽपि “ऌति ॡवा” इति वार्त्तिकोक्तेः ॡकार एव तत्र विधेयः । तेन होतॄकार इत्यादौ ॡकारस्य व्यवहारः । मुग्ध-बोधेऽपि एतदनुसारेण एकमात्रद्विमात्रत्रिमा-त्रापेक्षा “ऌत्रयम्” इत्युक्तन्तेन न विरोधः ॥)

**ॡ**, व्य, देवनारी । नार्य्यात्मा । माता । इति मेदिनी ॥

**ॡः**, स्त्री, दैत्यस्त्री । इत्येकाक्षरकोषः ॥ दनुजमाता । कामधेनुमाता । इति कश्चिदेकाक्षरकोषः ॥

**ॡः**, पुं, सर्व्वः । महादेवः । इति कश्चिदेकाक्षरकोषः ॥

**ए**

**ए** एकारः । स तु एकादशस्वरवर्णः । अस्योच्चारण-

स्थानंतालुकण्ठश्च । (यदुक्तं सिद्धान्तकौमुद्याम् ।
"एदैतोः कण्ठतालु" । तथाच शिक्षायाम् ।
"एऐ तुकण्ठतालव्यावो औ कण्ठोष्ठजौ स्मृतौ" ॥)
स दीर्घः प्लुतश्च भवति । इति व्याकरणम् ॥ (उदा-
त्तानुदात्तस्वरितभेदात् त्रिविधोऽपि प्रत्येकं पुनर-
नुनासिकाननुनासिकभेदात् षड्विधएव ॥)
"एकारं परमं दिव्यं ब्रह्मविष्णुशिवात्मकम् ।
रञ्जिनीकुसुमप्रख्यं पञ्चदेवमयं सदा ॥
पञ्चप्राणात्मकं वर्णं तथा विन्दुत्रयात्मकम् ।
चतुर्व्वर्गप्रदं देचि स्वयं परमकुण्डली" ॥
इति कामधेनुतन्त्रं ॥ (वङ्गीयभाषायां) अस्य लेख-
नप्रकारो यथा ।
"कुञ्चिता वामतो रेखा दक्षकोणायता त्वधः ।
पुनर्व्वामगता सैव तासु वह्नीशवायवः" ॥
इति वर्णोद्धारतन्त्रम् ॥ * ॥ अस्य नामानि यथा ।
"एकारो वास्तवः शक्तिर्झिण्टी सोष्ठो भगं मरुत् ।
सूक्ष्मा भूतोऽर्द्धकेशी च ज्योत्स्ना श्रद्धा प्रमर्द्दनः ।
भयं ज्ञानं कृषा धीरा जङ्घा सर्व्वसमुद्भवः ।
वह्निर्विष्णुर्भगवती कुण्डली मोहिनी वसः ॥
योषिदाधारशक्तिश्च त्रिकोणा ईशसंज्ञकः ।
सन्धिरेकादशी भद्रा पद्मनाभः कुलाचलः" ॥
इति तन्त्रशास्त्रम् ॥ * ॥ अन्यच्च ।
"एकारो वामगण्डान्तः शक्तिर्झिण्टी भगन्तथा ।
माक्षवीजञ्च विजया ओष्ठ एकादशस्वरः" ॥
इति वीजवर्णाभिधानम् ॥ (मातृकान्यासेऽस्य
ओष्ठस्थाने न्यस्यतया ओष्ठशब्देनाप्यभिधानम् ।
भातृकान्यासमन्त्रो यथा, --
"ऐं नम ओष्ठे ऐं नमोऽधरे" ॥ इति । अनु-
बन्धविशेषः । तेन लुङि सिचि अवृद्धिः स्यात् ।
यथाह कविकल्पद्रुमे ॥
"ॡरङ्वानिर्वाथ एः सिचि ।
अवृद्धिः ऐर्यजादिः स्यात्" ॥
एतेन कटे वर्षावर्णयोरित्यस्य लुङि अकटीदिति
स्यात् ॥)

**ए**, व्य, स्मृतिः । असूया । अनुकम्पा । आमन्त्रणम् ।

आह्वानम् । इति मेदिनी ॥

**एः**, पुं, (एति प्राप्नोति सर्व्वंविश्वमिति । इण् + अच् ।

"सर्व्वं विष्णुमयं जगत्" इति वाक्यादस्य तथा-
त्वम् ॥) विष्णुः । इत्येकाक्षरकोषः ॥

**एकं** त्रि, (एतीति । इण गतौ । "इण्भीकापा-

शल्यतिमर्च्चिभ्यः कन्" ॥ ३ । ४३ ।
इत्युणादिसूत्रेण
कन् ।) मुख्यम् । अन्यत् । केवलम् । इत्यमरः ॥
("त्वमेको ह्यस्य सर्व्वस्य विधानस्य स्वयम्भुवः" ।
इति मनौ १ । ३ । "अजामेकां
लोहितशुक्लकृष्णाम्"
इति श्रुतिः ॥ "एकातपत्रं जगतः प्रभुत्वम्" । इति
रघुवंशे २ । ४७ । "ममात्र भावैकरसं मनः स्थिरम्"
इति कुमारे ५ । ८२ ॥) आदिसंख्या । इति मेदिनी ।
अथैकवाचकानि । परमात्मा १ विधुः २ क्षितिः
३ गणेशदन्तः ४ शुक्रचक्षुः ५ । इति कविकल्प-
लता ॥ अग्निः ६ सूर्य्यः ७ देवराजः ८ यमः ९ ।
इति महाभारते वनपर्ब्ब ॥ (सर्व्वनामशब्दोऽयम् ।
तथा च सिद्धान्तकौमुद्यां "सर्व्वादयश्च पञ्चत्रिं-
शत्" इत्युक्त्वा "त्यद्-तद्-यद् एतद्-इदम्-अदस्

एक-द्वि-युष्मद्-अस्मद्-भवत्-किम्”
इत्युक्तवान् ।
यथा शाकुन्तले २ अङ्के । “विश्रान्तेन भवता
ममाप्येकस्मिन् कर्म्मणि सहायेन भवितव्यम्” ।
पुं, स्वनामख्यात ऐलवंशीयो नृपतिभेदः ।
यथा, भागवते ९ । १५ । २ ।
‘श्रुतायोर्वसुमान् पुत्रः सत्यायोश्च श्रुतं जयः ।
रयस्य सुतएकश्च जयस्य तनयोऽमितः’ ॥
परमेश्वरः । विष्णुः । यथा विष्णुसंहितायाम् ।
“एको नैकः सवः कः किम्” । “परमार्थतः
सजा-
तीयविजातीयस्वगतभेदराहित्यादेकः” । इति
भाष्यम् । घटे घटान्तरात् भेदः सजातीयभेदः
।
घटे पटात् भेदः विजातीयभेदः । घटे कपाला-
देर्भेदः स्वगतभेदः ॥)

**एककः** त्रि, (“एकादाकिनिच्चासहाये” । ५ । ३ ।

५२ । इत्यत्र चकारात् पक्षे कन् ।) असहायः ।
एकला इति भाषा । तत्पर्य्यायः । एकः २
एकाकी ३ । इत्यमरः ॥
(“महानप्येकको वृक्षः सर्व्वतः सुप्रतिष्ठितः ।
प्रसह्यैव हि वातेन शक्यो धर्षयितुं यतः” ॥
इति पञ्चतन्त्रे ३ । ५२ । ॥ तथा नैषधे । २ ।
३६ ।
“विधिरेककचक्रचारिणम्
किमु निर्म्मित्सति मान्मथं रथम्” ॥)

**एककुण्डलः** पुं, (एकं कुण्डलं यस्य ।) बलरामः ।

कुवेरः । इति मेदिनी ॥

**एकगुरुः**, पुं, (एको गुरुर्यस्य ।) सतीर्थः । इत्यमरः ॥

एकगुरुर शिष्य इति भाषा ॥

**एकचक्रं**, क्ली, (एकं चक्रं यस्य ।) पुरीविशेषः । तत्प-

र्य्यायः । हरिगृहम् २ शुम्भपुरी ३ । इति
त्रिकाण्ड-
शेषः ॥ सूर्य्यरथः । त्रि, असहायचारी । यथा,
ऋग्वेदे १ । १६४ । २ ।
स्परविलक्षणाः षड़्तवः एकः साधारण
इत्येवं-
रूपा यद्वा मासद्वयात्मकाः षट् अपरोऽधि-
मासात्मक एक इत्येवं सप्तर्त्तवो युञ्जन्ति
एतस्य
कार्य्यं निर्व्वहन्तीत्यर्थः । स
चैकोऽसहायोऽश्वो
ल्यापनशील आदित्यः सप्तनामा सप्तरसानां
सन्नमयितारो रश्मयो यस्य तादृशः ।
सप्तर्षि-
भिः स्तूयमानो वादित्यो वहति धारयति
भ्रम-
तीत्यर्थः । किं भूतम् । त्रिनाभि चक्रम् ।
त्रयो
नाभिस्थानीयाः सन्ध्यासम्बद्धा वा एव
ऋतवो
यस्य तत्तादृशम् । के ते
ग्रीष्मवर्षहिमन्ताख्याः
यद्वा भूतभविष्यद्वर्त्तमानाख्यास्त्रयः
कालास्त्रिना-
भयः । तद्विशिष्टं चक्रं चक्रवत् पुनः पुनः
परिभ्रममाणं संवत्सराख्यचक्रमजरममरणम्
।
न हि कदाचिदपि कालो म्रियते
अनादिनिधनः
कालः इति स्मृतेः । अनर्व्वमप्रतिहतम् ।
ईदृशं
संवत्सराख्यं चक्रं
नानाकालावयवोपेतमयमादित्यः
पुनः पुनरावर्त्तयति संवत्सरादर्वाचीनानां
तत्रै-
वान्तर्भावात् युगादीनां तदावृत्तिसाध्यात्
संवत्-
सरस्य चक्रत्वेन रूपणम् । पुनः कीदृशं तत्
। यत्र
यस्मिंश्चक्रे इमा विश्वा भुवना इमानि
सर्व्वाणि
चरान्” । इति तट्टीकायां कुल्लुकभट्टः ॥
(त्रि,
एकाकिचारी । यूथभ्रष्टः । यथा,
“अयमेकचरो-
ऽभिवर्त्तते माम्” । इति किराते । १३ ।
३ ।
“एकचरो यूथादपेतः” । इति तट्टीका
॥)

**एकचारी**, [न्] पुं, (एकः सन् चरतीति । चर् +

णिनि ।) बुद्धसहचारी । इति
त्रिकाण्डशेषः ॥
(एकचारिणि, त्रि ॥)

**एकजटा**, स्त्री, (एका जटा यस्याः ।

“एषैवैकजटा ख्याता यस्मात्तस्या
जटाधिका’ ।
इति श्रवणात् । यद्वा एका मुख्या जटा
यस्याः ।
“खंलिखन्तीं जटामेकां बिभ्रतीं शिरसा
स्वयम्” ।
इति च श्रवणात्तथात्वम् ।) उग्रतारा ।
तस्या
आविर्भावो यथा, --
“सर्व्वे सुरगणाः सेन्द्रास्ततो गत्वा
हिमाचलम् ।
गङ्गावतारनिकटे महामायां प्रतुष्टुवुः ॥
अनेकसंस्तुता देवी तदा
सर्व्वामरोत्करैः ।
मातङ्गवनितामूर्त्तिर्भूत्वा देवानपृच्छत ॥
युष्माभिरमरैरत्र स्तूयते का च भाविनी
।
किमर्थमागता यूयं मातङ्गस्याश्रमं प्रति
॥
एवं ब्रुवन्त्या मातङ्ग्यास्तस्यास्तु
कायकोषतः ।
समुद्भूताब्रवीद्देवी मां स्तुवन्ति सुरा इति
॥

"सप्त युञ्जन्ति रथमेकचक्र-
मेकोऽश्वो वहति सप्तनामा ।
त्रिनाभिचक्रमजरमनर्व्वं
यत्रेमा विश्वा भुवनाधितस्थुः" ॥
अत्र भाष्यकृता यद्व्याख्यातन्तदाह ।

"एकचक्रमेकरथाङ्गोपेतम् । यद्यपि त्रीणि

चक्राणि तथापि
तेषामेकरूपत्वादेकचक्रमित्युच्यते
रथं रंहणस्वभावं भुर्य्यस्य सम्बन्धिनं सप्तै-
तत्संङ्ख्यका अश्वा युञ्जन्ति अनुबध्नन्ति वहन्त्य-
होरात्रनिर्वाहाय । किं वस्तुतः सप्त नेत्याह ।
एकोऽश्वः सप्तनामा । एक एव सप्ताभिधानः
सप्तधा नमनप्रकारो वा एक एव वायुः सप्तरूपं
धृत्वा वहतीत्यर्थः ।
वाष्वधीनत्वादन्तरीक्षसञ्चारस्य
एकचक्रमित्युक्तम् । कीदृशन्तदित्यत आह । त्रिनाभि
बलयत्रयमध्यस्थितनाभिस्थानीयच्छिद्र-
त्रयोपेतम् । अंजरममरणधर्म्मार्कम् । अनर्व्वम-
शिथिलं पुनस्तदेव विशेष्यते । यत्र यस्मिंश्चक्रे
इमा विश्वा भुवना इमानि प्रसिद्धानि सर्व्वाणि
भूतजातान्यधि आश्रित्य तस्थुस्तिष्ठन्ति । यद्वा
एकचक्रमेकचारिणमसाहाय्येन सञ्चरन्तं रथ-
मादित्यं सप्त युञ्जन्ति सर्पणस्वभावाः सप्तसंख्या
वा रश्मयः सप्तप्रकारकार्य्या असाधारणाः पर-
भूतान्यधितस्थुः आश्रित्य तिष्ठन्ति कालाधी-
नत्वात् सर्व्वस्याः स्थितेः । ईदृशस्य कालस्य का-
रणभूतपरमेश्वरपरिज्ञानेन मोक्षसद्भावात् ज्ञान-
मोक्षाक्षरप्रशंसा च" ॥ नृपाद्वयविशिष्टम् । एक-
राजविशिष्टम् । यथा, भागवते । ३ । १ । २० ।
"इत्थं व्रजन् भारतमेव वर्षं
कालेन यावत् गतवान् प्रभासम् ।
तावच्छशास क्षितिमेकचक्रा-
मेकातपत्रामजितेन पार्थः" ॥
पुं, असुरभेदः । यथा, हरिवंशे ३ । ८४ ।
"एकचक्रो महाबाहुस्तारकश्च महाबलः" ।
अयं हि प्रतिविन्ध्य इति नाम्ना प्रसिद्धः । यथा ।
महाभारते १ । सम्भवपर्ब्बण्यंशावतरणे ६७ । २२ ।
"एकचक्र इवि ख्यात आसीद्यस्तु महासुरः ।
प्रतिविन्ध्य इति ख्यातो बभूव प्रथितः क्षितौ" ॥
स्त्री, स्वनामख्याता पुरी । अत्रस्थो भीमसेनो
महाबलं वकनामानमसुरं हतवान् ॥ यथा, --
महाभारते । १ । अंशावतारपर्ब्बणि भारतसूत्रे ।
६१ । २६-२८ ।
"ते तत्र नियता कालम् कञ्चिदूषुर्नरर्षभाः ।
मात्रा सहैकचक्रायां ब्राह्मणस्य निवेशने ॥
तत्राससाद क्षुधितं पुरुषादं वृकोदरः ।
भीमसेनो महाबाहुर्व्वकं नाम महाबलम् ॥
तञ्चापि पुरुषव्याघ्रो बाहुवीर्य्येण पाण्डवः ।
निहत्य तरसा वीरो नागरान् पर्य्यसान्त्वयत्" ॥)

**एकचरः**, पुं, (एकश्चरति यः । चर + पचाद्यच् ।)

शुम्भो निशुम्भो ह्यसुरौ बाधेते सकलान् सुरान् ।
तस्मात्तयोर्ब्बधायाहं स्तूयेऽद्य सकलैः सुरैः ॥
विनिःसृतायां देव्यान्तु मातङ्ग्याः कायतस्तदा ।
भिन्नाञ्जननिभा कृष्णा साभूत् गौरी क्षणादपि ॥
कालिकाख्याभवत् सापि हिमाचलकृताश्रया ।
तामुग्रतारामृषयो वदन्तीह मनीषिणः ॥
उग्रादपि भयात् त्राति यस्माद्भक्तान् सदाम्बिका ।
एतस्याः प्रथमं वीजं कथितं तन्त्रमेव च ॥
एषैवैकजटा ख्याता यस्मात्तस्या जटाधिका ।
शृणुतं चिन्तनं चास्याः सम्यक् वेतालभैरवौ ॥
यथा ध्यात्वा महादेवीं भक्तः प्राप्नोत्यभीप्सितम् ।
चतुर्भुजां कृष्णवर्णां मुण्डमालाविभूषिताम् ॥
खड्गं दक्षिणपाणिभ्यां बिभ्रतीन्दीवरं त्वधः ।
कर्त्रीञ्च खर्परञ्चैव क्रमाद्वामेन बिभ्रतीम् ॥
खं लिखन्तीं जटामेकां बिभ्रतीं शिरसा स्वयम् ।
मुण्डामालाधरां शीर्षे ग्रीवायामपि सर्व्वदा ॥
वक्षसा नागहारन्तु बिभ्रतीं रक्तलोचनाम् ।
कृष्णवस्त्रधरां कट्यां व्याघ्राजिनसमन्विताम् ॥
वामपादं शवहृदि संस्थाप्य दक्षिणं पदम् ।
विन्यस्य सिंहपृष्ठे तु लेलिहानासवं स्वयम् ॥
साट्टहासमहाघोरा रावयुक्तातिभीषणा ।

हिंस्रपशुविशेषः । गण्डार इति भाषा । तत्प-
र्य्यायः । वार्द्धीनसः २ गणोत्साहः ३ गण्डकः ४ ।
इति त्रिकाण्डशेषः ॥
(सर्पादिः । यथा, मनुः । ५ । १७ ।
“न भक्षयेदेकचरानज्ञातांश्च मृगद्विजान्” ।
“ये एकाकिनः प्रायेण चरन्ति सर्पादयम्तानेक-

चिन्त्योग्रतारा सततं भक्तिमद्भिः सुखेप्सुभिः ॥ * ॥
एतस्याः संप्रवक्ष्यामि या अष्टौ योगिनीस्तु ताः ।
महाकाल्यथ रुद्राणी उग्रा भीमा तथैव च ॥
घोरा च भ्रामरी चैव महारात्रिश्च सप्तमी ।
भैरवी चाष्टमी प्रोक्ता योगिनीस्ताः प्रपूजयेत्” ॥
इति कालिकापुराणे ६१ अध्यायः ॥

**एकजन्मा**, [न्] पुं, (एकं मुख्यं जन्म यस्य । दिक्-
पालांशसम्भूतत्वादस्य तथात्वम् ।) राजा । इति
त्रिकाण्डशेषः ॥ (एकं न द्वितीयं जन्म यस्य
इत्यर्थे । शूद्रः । तस्य अद्विजत्वात् तथात्वम् ।)

**एकतमः**, त्रि, (एक + “एकाच्च प्राचाम्” । ५ । ३ ।
९४ । इति डतमच् ।) बहूनां मध्ये एकः । इति
व्याकरणम् ॥ (यथा महाभारते आदिपर्ब्बणि ।
“अस्त्राणि वा शरीरं वा ब्रह्मन्नेकतमं वृणु” ॥)

**एकतरः**, त्रि, (एक + “एकाच्च प्राचाम्” । ५ । ३ ।
९४ । इति डतरच् ।) द्वयोर्म्मध्ये एकः । इति
व्याकरणम् । भिन्नः । इत्यमरटीकायां भरतः ॥
(यदाह कात्यायनः ।
“यदि ह्येकतरो ह्येषां स्त्रीधनं भक्षयेद्बलात्” ॥)

**एकता**, स्त्री, (एकस्य भावः । एक + तल् + टाप् ।)
एकत्वम् । ऐक्यम् । इति व्याकरणम् ॥
(यथा, रामायणे ६६ । १३ ।
“वह्वीरपि मतीर्गत्वा मन्त्रिणो मन्त्रनिर्णये ।
पुनर्यत्रैकतां प्राप्ताः स मन्त्रो मध्यमः स्मृतः” ॥)

**एकतानः**, त्रि, (एकेन भावरसेन तन्यते विस्तीर्य्यते
इति । तन इञ विस्तारे । कर्म्मण्यण् ।) एकाग्रः ।
एकविषयासक्तचित्तः । इत्यमरः ॥ (यथा भाग-
वते ७ । ९ । ८ ।
“ब्रह्मादयः सुरगणा मुनयोऽथ सिद्धाः
सत्त्वैकतानमतयो वचसां प्रवाहैः ।
नाराधितुं पुरुगुणैरधुनापि पिप्रुः
किं तोष्टुमर्हति स मे हरिरुग्रजातेः” ॥
एकस्तानो विस्तृतिर्यस्येति ।) एकताले पुं । इत्य-

**एकदा**, व्य, (एक + “सर्व्वैकान्यकिंयत्तदः काले
दा” । ५ । ३ । १५ । इति दा ।) एकस्मिन् काले ।
तत्पर्य्यायः । युगपत् २ । इत्यमरः ॥
(यथा भागवते ६ । ३ । २९ ।
“जिह्वा न वक्ति मगवद्गुणनामधेयं
चेतश्च न स्मरति चच्चरणारविन्दम् ।
कृष्णाय नो नमति यच्छिर एकदापि
तानानयध्वमसतोऽकृतविष्णुकृत्यान्” ॥)

**एकदृक्**, [श्] पुं, (एकं सर्व्वमभिन्नं पश्यति यः ।
एकादृश् + क्विप् ।) महादेवः । (एका दृक् यस्य ।
रामबाणमोक्षणेन नष्टे एकचक्षुषि काकस्य
तथात्वम् ।) काकः । काणे त्रि । इति हेमचन्द्रः ॥
(एकमेव सर्व्वं ब्रह्मत्वेन पश्यति यः इति व्युत्पत्त्या
तत्त्ववेत्ता । ब्रह्मज्ञानी ॥ एकमेव पक्षं पश्यतीत्यर्थे
एकपक्षाश्रयी ॥)

**एकदेहः**, पुं, (एकः मुख्यो देहो यस्य । ग्रहेषु
सौम्यत्वादस्य तथात्वम् ।) बुधग्रहः । इति त्रि-
काण्डशेषः ॥ (एको मेदरक्तादीनां साम्यात् तुल्यो
देहः शरीरं यत्र । गोत्रम् । वंशः ।
यथा, हरिवंशे ४६ अध्याये ।
“बहूनि विप्र गोत्राणि मुनीनां भावितात्मनाम् ।
एकदेहानि तिष्ठन्ति विभक्तानि विना प्रजाः” ॥
दम्पती । “अस्थिभिरस्थीनि मांसैर्मांसानि त्वचा
त्वचमिति श्रुतेः” । तथा, --
“शरीरार्द्धं स्मृता जाया पुण्यापुण्यफले समा” ।

विग्रहे “नित्यं सपत्न्यादिषु” इति एकपतिशब्दस्य
नकारान्तादेशे “ऋन्नेभ्य” इति ङीप् ।) पति-
व्रता । इति त्रिकाण्डशेषः ॥ (यथा, मेघदूते । १० ॥
“ताञ्चावश्यं दिवसगणनातत्परामेकपत्नीम्” ॥
एकः समानः पतिर्यस्या इति विग्रहे । सपत्नी ।
यथा मनुः । ९ । १८५ ।
“सर्व्वासामेकपत्नीनामेका चेत् पुत्त्रिणी भवेत् ।
सर्व्वास्तास्तेन पुत्त्रेण प्राह पुत्त्रवतीर्मनुः” ॥)

**एकपत्त्रिका**, स्त्री, (एकं गन्धवत्त्वात् श्रेष्ठं पत्रं यस्याः ।)
गन्धपत्रवृक्षः । इति राजनिर्घण्टः ॥

**एकपदं**, क्ली, (एकं पदं पदमात्रोच्चारणकालो यस्मिन् ।)
तत्कालः । इति मेदिनी ॥ (तत्पर्य्यायः । तत्क्षणम् १
इति विश्वः । यथा, रघुः ८ । ४८ ।
“कथमेकपदे निरागसं जनमाभाष्यमिमं न मन्यसे” ॥
“एकपदे तत्क्षणे । स्यात् तत्क्षणे एकपदमिति विश्वः” ।
इति तट्टीका ॥ एकं प्रशस्तं पदं स्थानम् । “पदं
व्यवसितित्राणस्थानलक्ष्याङ्घ्रिवस्तुषु” इत्यमरोक्ते-
स्तथात्वम् । वैकुण्ठम् । सुप्तिङन्तरूपपदम् ।
यथा माघे २ । ९५ ।
“निहन्त्यरीनेकपदे य उदात्तः स्वरानिव” ॥
एकं श्रेष्ठं पदं कोष्ठरूपपूजास्थानम् । वास्तुमण्डल-
स्थमेककोष्ठात्मकस्थानम् । यथा, वास्तुयागतत्त्वधृत-
देवीपुराणम् ।
“इन्द्रश्चेन्द्रात्मजश्चोभावेकैकपदसंस्थितौ” ॥)

**एकपदः**, पुं, (एकं पदं पदविन्यासो यस्मिन् ।) शृङ्गार-

मरटीकायां स्वामी ॥

**एकतालः**, पुं, (एकस्तुल्यस्तालो मानं यत्र ।) सम-
न्वितलयः । नृत्यगीतवाद्यानां साम्यं यत्र । सम-
ताल इति यस्याख्या । इत्यमरमरतौ ॥ (सङ्गीत-
शास्त्रे खनामख्यातः तालभेदः । त्रि, एकताल-
वृक्षसमन्वितः । यथा रघौ १५ । २३ ।
"एकताल इवोत्पातपवनप्रेरितो गिरिः" ॥)

**एकतीर्थी**, [न्] पुं, (एकं समं तीर्थमाश्रमो यस्य ।)
सतीर्थः । गुरुभाइ इति भाषा ॥ ("एकतीर्थी
एकाश्रमी" इति मिताक्षरा ॥)

**एकत्र**, व्य, (एक + त्रल् ।) एकस्मिन् । इति व्याक-
रणम् ॥ एकसङ्गे इति भाषा । (एकत्र निर्णीतः
शास्त्रार्थो बाधकं विनान्यत्रापि प्रयुज्यते" । इति
दुर्गादासः । यथा मनुः । ५ । १३६ ।
"एका लिङ्गे गुदे तिस्रस्तथैकत्र करे दश ।
उभयोः सप्त दातष्या मृदः शुद्धिमभीप्सता" ॥)

**एकदंष्ट्रः**, पुं, (एका द्रंष्ट्रा यस्य । परशुरामेणैक-
दन्तस्य उत्पाटनात् तथात्वम् ।) गणेशः । इति
त्रिकाण्डशेषः ॥ (अस्य परशुरामकृतदन्तोत्पाट-
नकथा एकदन्तशब्दे द्रष्टव्या ॥)

**एकदन्तः**, पुं, (एको दन्तो यस्य ।) गणेशः ।
इत्यमरः ॥ (परशुरामकृतगणेशदन्तोत्पाटनकथा
ब्रह्मवैवर्त्ते उक्ता । एकदा रहसि स्थितयोः शिवा-
इति स्मृत्युक्तेश्च जायापत्योरेकदेहत्वम्" ॥)

**एकधा**, व्य, (एक + "एकाद्धोध्यमुञ" । ४ । २ । ४ ॥
इति धा ।) एकप्रकारम् । इति व्याकरणम् ॥
(यथा महाभारते अनुगीतापर्ब्बणि १४ । ४२ । ६० ।
"सर्व्ववित् सर्व्वभूतेषु विन्दत्यात्मानमात्मनि ।
एकधा बहुधा चैव विकुर्व्वाणस्ततस्ततः" ॥)

**एकधुरः**, त्रि, (एका धूः । ऋक्पूरब्धूःपथामानक्षे" ।
५ । ४ । ७४ । इति अः समासान्तः ।) एकभार-
वाहकगवादिः । एकपिठा गरु इति भाषा । तत्प-
र्य्यायः । एकधुरीणः २ एकधुरावहः ३ । इत्यमरः ॥
(यथा, पाणिनिः । ४ । ४ । ७९ । "एकधुरान्नुक्" ।)

**एकधुरावहः**, त्रि, (वहतीति वहः । वह् + अच् ।
एकधुरायाः वहः ।) एकधुरः । इत्यमरः ॥

**एकधुरीणः**, त्रि, (एकधुरां वहति यः । "एकधुरान्नुक्
च" । ४ । ४ । ७९ । चकारेण स्वस्यानुकर्षणसाम-
र्थ्यात् पक्षे श्रवणम् ॥) एकधुरः । एकभारवोढा ।
इत्यमरः ॥ एकस्य रथस्य लाङ्गलादेर्व्वा धुरं वहति
यः । इत्यमरटीकायां भरतः ॥

**एकनटः**, पुं, (एको मुख्यो नटः ।) मुख्यनटः । तत्प-
र्य्यायः । कथकः २ । इति त्रिकाण्डशेषः ॥ कथा-
प्राणः ३ । इति शब्दरत्नावली ॥
बन्धविशेषः । तस्य लक्षणम् ।
पादमेकं हृदि स्थाप्य द्वितीयं स्कन्धसंस्थितम् ।
स्तनौ धृत्वा रमेत् कामी बन्धस्त्वेकपदः स्मृतः" ॥
इति रतिमञ्जरी ॥ (वास्तयागमण्डलैककोष्ठपूज-
नीयो देवभेदः । यथा वास्तुयागतत्त्वधृतदेवी-
पुराणवचनम् । "भृगुश्चैकपदो ज्ञेयः" । इति ।
एकं पदं चरणं यस्य इति विग्रहे वाच्यलिङ्गः ।
एकपदविशिष्टः । यथा भागवते १ । १६ । २० ।
"पादैर्न्यूनं शोचसि मैकपाद-
मात्मानं वा वृषलैर्भोक्ष्यमाणम्" ॥
एकेन पदा चरन् वृषरूपधरो धर्म्मो गोरूपधरां
पृथ्वीं रुदतीं दृष्ट्वोवाच । हे भद्रे ! पादैर्न्यूनं एक-
पादं मां तथा शूद्रैर्भोक्ष्यमाणमात्मानं वा शोचसि
किम् । इति तट्टीका ॥)

**एकपदी**, स्त्री, (एकः पादो यस्याम् । कुम्भपदीषु
चेति निपातः । यद्वा संख्यासु पूर्ब्बस्येति पादस्या-
न्तलोपः । पादोऽन्यतरस्यामिति ङीप् ॥ स्वाङ्गा-
च्चेति ङीष् वा । पादः पत् ।) पन्थाः । इत्यमरः ॥

**एकपर्णिका**, स्त्री, (एकपर्णा + कन् । तपःसाधनार्थं
पार्ब्बत्याः पत्रमात्रभक्षणात् तथात्वम् ।) दुर्गा ।
देवीपुराणे देवीनिरुक्तं नाम ४५ अध्यायः ॥
"अपर्णाशा निराहारा एकाशी एकपर्णिका ।
पाटला पाटलाहारा देवी लोकेषु गीयते" ॥

**एकपात्**, [द्] पुं, (एकः पादो यस्य । संख्यासु पूर्ब्ब-
स्येति अन्त्यलोपः ।) शिवः । इति त्रिकाण्डशेषः ॥
(रुद्रः । यथा, महाभारते सम्भवपर्ब्बणि १ । १२३ । ६५ ।

| | | |
|---|---|---|
| शिवयोर्द्वारपालत्वमङ्गीकृतं गजाननेन । एतस्मिन्न-<br>न्तरे परशुरामः शिवं द्रष्टुमागतः । शिव-<br>दर्शनव्याकुलस्यान्तर्जिगमिषोर्द्वाररोधे कृते गण-<br>पतिना सह तस्य तुमुलं युद्धमभवत् । परशु-<br>रामक्षिप्तेन परशुना च गजाननस्य एको दन्तः<br>भग्नः । तदा प्रभृत्येव एकदन्तोऽसौ कथ्यते ॥) | **एकपक्षः**, त्रि, (एकः पक्षो यस्य ।) सहायः । इति<br>त्रिकाण्डशेषः ॥ (एकः पक्षः इति विग्रहे ।<br>अद्वितीयः पक्षः ॥ यथा, रघौ १४ । ३४ ।<br>"इत्येकपक्षाश्रयविक्लवत्वात्<br>आसीत् स दोलाचलचित्तवृत्तिः ॥)<br><br>**एकपत्नी**, स्त्री, (एकोऽद्वितीयः पतिर्यस्याः इति | |

:"अजैकपादहिव्रध्नः पिनाकी च परन्तपः" ॥

विष्णुः । यथा, विष्णुसंहितायाम् ।
"चतुरात्मा चतुर्भावश्चतुर्व्वेदविदेकपात्" ॥
एकः पादो यस्य इति विग्रहे वाच्यलिङ्गः ॥)

**एकपिङ्गः**, पुं, (एकं पिङ्गं पिङ्गलवर्णं नेत्रं यस्य ।)

कुवेरः । इत्यमरः ॥ (कुवेरस्य पिङ्गनेत्रकथा उक्ता
काशीखण्डे । यथा, --
"प्रसार्य्य नयने पूर्ब्बमुमामेव व्यलोकयत् ।
शम्भोः समीपे का योषिदेषा सर्व्वाङ्गसुन्दरी ॥
अनया किं तपस्तप्तं ममापि तपसोऽधिकम् ।
अहो रूपमहो प्रेम सौभाग्यश्रीरहो भृशम् ।
क्रूरदृग्वीक्षते यावत् पुनः पुनरिदं वदन् ।
तावत् प्रस्फोटितं नेत्रं वामं वामविलोकनात् ॥
अथ देव्यब्रवीद्देवं किमसौ दुष्टतापसः ।
असकृद्दक्षिणेनाक्ष्णा पुनर्ममेष पश्यति ॥
असूयमानो मे रूपं प्रेमसौभाग्यसम्पदः ।
इति देवीगिरं श्रुत्वा प्रहस्य प्राह तां प्रभुः ॥
उमे ! त्वदीयपुत्रोऽयं न च क्रूरेण चक्षुषा ।
संपश्यते तपोलक्ष्मीं तव किन्त्वधिवर्णयन् ॥
इति देवीं समाभाष्य तमीशः पुनरब्रवीत् ।
वरं ददामि ते वत्स ! तपसानेन तोषितः ॥
निधीनामधिनाथस्त्वं गुह्यकानां भवेश्वरः ।
यक्षाणां किन्नराणाञ्च राजा राज्ञाञ्च सुव्रत ! ॥
पतिः पुण्यजनानाञ्च सर्व्वेषां धनदो भव ।
मया सख्यञ्च ते नित्यं वत्स्यामि च तवान्तिके ॥
अलकां निकषामित्र ! तव प्रीतिं विवर्द्धयन् ।
आगच्छ पादयोरस्याः पत ते जननी त्वियम् ॥
इति दत्त्वा वरान् देवः पुनराह शिवः शिवाम् ।
प्रसादं कुरु देवेशि ! तपस्विन्यङ्गजे तव ।
देव्युवाच ।
वत्स ! ते निर्म्मला भक्तिर्भवे भवतु सर्व्वदा ।
भवैकपिङ्गो नेत्रेण वामेन स्फुटितेन च ॥
पौण्डरीकस्य यज्ञस्य ततः फलमवाप्नुयात् ।
दशवर्षसहस्राणि स्वर्गलोके महीयते ॥
तत्क्षयादिह चागत्य माहात्म्यं प्रतिपद्यते" ॥
इति ॥)

**एकमूला**, स्त्री, (एकं मूलं यस्याः ।) शालपर्णी ।

अतसी । इति वैद्यकम् ॥ (एकमेव मूलं यस्य
इति विग्रहे एकमूलविशिष्टे, त्रि ॥)

**एकयष्टिका**, स्त्री, (एका यष्टिरिव ।) हारविशेषः ।

एकनरि हार इति भाषा । तत्पर्य्यायः । एका-
वली २ । इत्यमरः ॥

**एकरजः**, पुं, (रज्यते इति रजः । एको मुख्यो रजः ।

रञ्जनद्रव्यम् ।) भृङ्गराजवृक्षः । इति जटाधरः ॥
(भृङ्गराजशब्देऽस्य गुणादयो बोद्धव्याः ॥)

**एकलः**, त्रि, (एक + ला + क ।) एक की । इति

पद्यावली ॥ एकला इति भाषा । (यथा
भागवते ५ ।
७ । १० । "तस्मिन् वाव किल स एकलः पुल-
हाश्रमोपवने
विविधकुसुमकिसलयतुलसिकाम्बुभिः
कन्दमूलफलोपहारैश्च समीहमानो भगवत आ-
राधनं विविक्तौपरतविषयाभिलाष उपभृतोप-
शमः परां निर्वृतिमाप" ॥)

**एकलिङ्गं**, क्ली, (एकं लिङ्गं यस्य ।) स्थानविशेषः ।

तथा च आगमे ।
"पञ्चक्रोशान्तरे यत्र न लिङ्गान्तरमीक्ष्यते ।
तदेकलिङ्गमाख्यातं तत्र सिद्धिरनुत्तमा" ॥

**एकलिङ्गः**, पुं, (एकं लिङ्गं पिङ्गलनेत्ररूपं चिह्नं यस्य

सः ।) कुवेरः । इति शब्दरत्नावली ॥
(पिङ्गलनेत्र-
कथा एकपिङ्गशब्दे द्रष्टव्या ॥)

**एकवर्णी**, स्त्री, (एकमेव शब्दं वर्णयति या । एक +

**एकवृक्षः**, पुं, (एको वृक्षो यस्मिन् ।) स्थानभदः ।

"चतुःक्रोशान्तरे यत्र न वृक्षान्तरमीक्ष्यते ।
एकवृक्षः स विज्ञेयः" । इति आगमः ॥
(एकोऽद्वि-
तीयो वृक्षः इति विग्रहे एकस्मिन् वृक्षे । यथा
सारमञ्जरी । "एकवृक्षः पञ्चनौका भवति" ।
एको वृक्ष इति पाठान्तरम् ॥)

**एकशफः**, पुं, (एकः शफः खुरो यस्य । अखण्ड-

खुरत्वात् तथात्वम् ।) घोटकः । इति त्रिकाण्ड-
शेषः ॥ एकखुरजन्तुमात्रम् । यथा ।
"खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा ।
एते चैकशफाः क्षत्तः शृणु पञ्चनखान् पशून्" ॥
इति श्रीभागवतम् ॥ ३ । १० । २२ ॥
(अस्य दुग्ध-
दधि-मूत्र-मांसादिगुणा अश्वशब्दे ऐकशफशब्दे
च ज्ञातव्याः ॥)

**एकशृङ्गः**, पुं, (एकं शृङ्गं यस्य ।) विष्णुः । इति

त्रिकाण्डशेषः ॥ (स्वायम्भुवमन्वन्तरे अकालप्रलयात्
मत्स्यरूपधरस्यास्य शृङ्गे मनोर्नौर्बद्धा । तत्कथा
यथा कालिकापुराणे ३२ अध्याये ।
"स्वायम्भुवस्तदा मत्स्यं हरिं सस्मार वै तदा ।
ततो जलानामुपरि सशृङ्ग इव पर्ब्बतः ॥
उद्दीप्तश्चैकशृङ्गेण
विष्णुर्मत्स्यस्वरूपधृक् ।

देवदत्तास्तु ये तुभ्यं वराः सन्तु तथैव ते ।
कुवेरो भव नाम्ना त्वं मम रूपेर्ष्यया सुत" ॥)

**एकपिङ्गलः**, पुं, (एकं पिङ्गलं नेत्रं यस्य ।) कुवेरः ।

इत्यमरटीकायां भरतः ॥ (अस्य
पिङ्गलनेत्रकथा
एकपिङ्गशब्दे द्रष्टव्या ॥)

**एकभक्तव्रतं**, क्ली, (एकं भक्तं भोजनं यत्र तत् व्रतम् ।)

रात्रिभोजनाभावविशिष्टदिवाभोजनम् । तथा
च
स्कन्दपुराणे ।
"दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत् ।
एकभक्तमिति प्रोक्तं रात्रौ तन्न कदाचन" ॥
(अस्य व्रतस्य नियमफलादिकञ्चोक्तं
विष्णुधर्म्मो-
त्तरे । तद्यथा, --
"चैत्रं विष्णुपरो मासमेकभक्तेन यः क्षिपेत् ।
सुवर्णमणिमुक्ताढ्यं गार्हस्थ्यं समवाप्नुयात्
॥
अहिंस्रः सर्व्वभूतेषु वासुदेवपरायणः ।
नमोऽस्तु वासुदेवायेत्यहश्चाष्टशतं जपेत् ॥
अतिरात्रस्य यज्ञस्य ततः फलमवाप्नुयात् ।
यस्तु संवत्सरं पूर्णमेकभक्तो भवेन्नरः ॥
अहिंस्रः सर्ष्वभूतेषु वासुदेवपरायणः ।
नमोऽस्तु वासुदेवायेत्यहश्चाष्टशतं जपेत् ॥

वर्ण + अच् । गौरादित्वात् ङीष् ।) वाद्यभेदः ।
तत्पर्य्यायः । करताली २ कङ्कमाला ३
कलङ्कषा ४
इति शब्दरत्नावली ॥

**एकवर्षिका**, स्त्री, (एको वर्षो यस्याः । कः । इत्वम् ।) ।

एकहायनी गौः । इति हेमचन्द्रः ॥ एकवत्सरेर
वक्ना इति भाषा ॥

**एकवादः**, पुं, (एकोऽभिन्नस्वरो वादः वाद्यम् ।

डिण्डिम इति एकरूपवाद्यत्वादस्य तथात्वम्
।)
डिण्डिमवाद्यम् । इति शब्दरत्नावली ॥

**एकविंशतिः**, स्त्री, (एकाधिका विंशतिः ।) एका-

धिकविंशतिसंख्या । एकुश इति भाषा ।
यथा । मनुः ५ । ३५ ।
"नियुक्तस्तु यथान्यायं यो मांसं नात्त्यलोलुपः
।
सप्रेत्य पशुतां याति सम्भवानेकविंशतिम्" ॥

**एकवीरः** पुं, वृक्षभेदः । तत्पर्य्यायः । महावीरः २

सकृद्वीरः ३ सुवीरकः ४ । अस्य गुणाः ।
मदका-
रित्वम् । अत्युष्णत्वम् । कटुत्वम् ।
तोदवातनाशि-
त्वम् । चटुलीकटिपृष्ठादिचलपक्षाभिघातहारि
त्वञ्च । इति राजनिर्घण्टः ॥ (त्रि, एकः
अद्बितीयो
वीरः । वीरवरः । प्रशस्तवीर्य्यशाली ।
यथा भागवते ३ । १ । ४० ।
"अहो पृथापि ध्रियतेऽर्भकार्थे
राजर्षिवर्य्येण विनापि तेन ।
यस्त्वेकवीरोऽधिरथो विजिग्ये
धनुर्द्धितीयः ककुभश्चतस्रः" ॥)

आगतस्तत्र न चिरात् यत्रास्ते
समनुर्हरिः" ॥
विस्तृतिस्तु आकालिकशब्दे द्रष्टव्या ।)
एकशृङ्ग-
युक्तपशुमात्रम् ॥ (पितृगणभेदः । यथा,
महा-
भारते २ । ११ । ४१-४३ ।
"पितॄणाञ्च गणान् विद्धि सप्त वै
पुरुषर्षभ ! ।
मूर्त्तिमन्तो हि
चत्वारस्त्रयश्चाप्यशरीरिणः ॥
वैराजाश्च महाभागा अग्निस्वात्ताश्च
भारत ।
गार्हपत्या नाकचराः पितरो
लोकविश्रुताः ॥
सोमपा एकशृङ्गाश्च चतुर्व्वेदाः
कलास्तथा ।
एते चतुर्षु वर्णेषु पूज्यन्ते पितरो नृप" ॥)

**एकषष्टिः**, स्त्री, (एकाधिका षष्टिः ।) संख्यासंख्येय-

विशेषः । इत्यमरः ॥ ६१ एकषट्टि इति
भाषा ।
(यथा भागवते ६ । ६ । ३० ।
"सुता दनोरेकषष्टिस्तेषां प्राधानिकान्
शृणु" ।)

**एकसर्गः**, त्रि, (एकस्मिन् विषये सर्गो निश्चयो

यस्य ।) एकाग्रः । इत्यमरः ॥

**एकसूत्रः**, पुं, (एकं सूत्रं यस्य । एकसूत्रेण वादनात्

तथात्वम् ।) डमरुवाद्यम् । इति
शब्दरत्नावली ॥

**एकहायनी**, स्त्री, (एकः हायनो यस्याः । "दामहाय-

नान्ताच्च" । ४ । १ । २६ । इति ङीष्
।) एक-
वर्षीयगवी । एकवत्सरेर वाच्छुर इति
भाषा ।

| | | |
|---|---|---|
| | | तत्पर्य्यायः । एकाब्दा २ । इत्यमरः ॥ (पुंसि प्रमाणं<br>यथा, मनुः ११ । १३६ ।<br>"वासो दद्याद्धयं हत्वा पञ्च नीलान् वृषान् गजम् ।<br>अजमेषावनड्वाहं खरं हत्वैकहायनम्" ॥<br>"अश्वं हत्वा वस्त्रं दद्यात् हस्तिनं हत्वा पञ्च<br>नीलान् वृषभान् दद्यात् प्रत्येकं छागमेषौ हत्वा<br>वृषभं दद्यात् गर्द्दभं हत्वा एकवर्षं वत्सं दद्यात्"<br>इति कुल्लुकभट्टः ॥)<br>**एका**, स्त्री, (एक + टाप् ।) दुर्गा । यथा ।<br>"एका गुणार्थां त्रैलोक्ये तस्मादेका स उच्यते" । |

:देवी सा परमार्थेति वदन्ते भिन्नदर्शिनः ॥ इति" ।

"एका सा तु पृथक्त्वेन विना सर्व्वत्र विश्रुता ।
यथा तु व्यज्यते वर्णैर्विचित्रैः स्फटिको मणिः ॥
तथा गुणवशाद्देवी नानाभावेषु वर्ण्यते" ॥
इति च देवीपुराणे देवीनिरुक्तं नाम ४५ अध्यायः ॥
(अद्वितीया । यथा, मार्कण्डेये ९० । ७ ।
"एकैवाहं जगत्यत्र द्वितीया का ममापरा" ।
"अजामेकां लोहितशुक्लकृष्णां" । इति श्रुतिः ॥
एकैव । स्त्री । यथा भट्टिः १ । १४ ।
"प्रासोष्ट शत्रुघ्नमुदारुचेष्टम्
एका सुमित्रा सह लक्ष्मणेन" ॥)

**एकाकी**, [न्] त्रि, (एक + "एकादाकिनिच्चास-
हाये" । आकिनिच् ।) सहायरहितः । अस-
हायः । एकला इति भाषा । तत्पर्य्यायः । एकः २
एकक ३ । इत्यमरः ॥ एकलः ४ । इति शब्द-
रत्नावली ॥ (यथा मनुः । ४ । २५८ ।
"एकाकी चिन्तयेन्नित्यं विविक्ते हितमात्मनः ।
एकाकी चिन्तयानो हि परं श्रेयोऽधिगच्छति" ॥)

**एकाक्षः**, पुं, (एकमक्षि यस्य । सक्थ्यक्ष्णोः साङ्गात्
षच् ।) काकः । इति शब्दचन्द्रिका ॥ (काकस्य यथा
एकनेत्रत्वं जातम् । तत् पाद्मे भरतस्यायोध्यां
प्रतिनिवृत्त्यनन्तरमुक्तम् । तद्यथा, --
अनन्यवृत्तिः ३ एकायनः ४ एकसर्गः ५ एकाग्र्यः ६
एकायनगतः ७ । इत्यमरः ॥ (यथा, मनुः । १ । १ ।
"मनुमेकाग्रमासीनमभिगम्य महर्षयः" ।
"एकाग्रं विषयान्तराव्याक्षिप्तचित्तम्" । इति
कुल्लुकभट्टः । तथा भागवते ८ । १६ । ३ ।
"मनश्चैकाग्रया बुद्ध्या भगवत्यखिलात्मनि ।
वासुदेवे समाधाय चचार ह परव्रतम्" ॥
तथा गीतायाम् ६ । १२ ।
"तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासाने युञ्ज्याद्योगमात्मविशुद्धये" ॥
"एकाग्रं विक्षेपरहितं मनः कृत्वा" । इति स्वामि-
टीका ।) अनाकुलः । इति मेदिनी ॥

**एकाग्र्यः**, त्रि, (एकं अग्र्यं अस्य ।) एकाग्रः । इत्यमरः ॥

**एकाङ्गं**, क्ली (एकं सुन्दरमङ्गं यस्य । एकं सुन्दर-
मङ्गं भवत्यस्माद्वा ।) चन्दनम् । इति हारावली ॥
(एकमद्वितीयमङ्गम् । एकस्मिन्नपि अङ्गे । यथा,
महाभारते १३ । दानधर्म्मकथने । ८२ । २१ ।
"माननामहमिच्छामि भवत्यः सततं शुभाः ।
अप्येकाङ्गेऽप्यधोवस्तुमिच्छामि च सुकुत्सिते" ॥
एकं श्रेष्ठमङ्गमिति विग्रहे मस्तकम् । अस्य
पर्य्याये उत्तमाङ्गशब्ददर्शनात् ॥)

**एकाङ्गः**, पुं, (एकं सुन्दरम् अङ्गं यस्य । सौम्यत्वादस्य
तथात्वम् ।) बुधग्रहः । इति त्रिकाण्डशेषः ॥

**एकादश**, [न्] त्रि, (एकाधिका दश ।) संख्या-
विशेषः । ११ एगार इति भाषा । तद्वाचकौ ।
सरति तदा तामुपवसेत् । यदा तद्विधा सती
परदिनेऽपि निःसरति तत्परदिने च द्वादशी तदा
तां विहाय खण्डामुपोष्य द्वादश्यां पारयेत् । यदा
तूभयदिने तद्विधैकादशी परदिने च न द्वादशी
तदा षष्टिदण्डात्मिकां विद्धामुपोष्य परदिने
द्वादश्याद्यपादमुत्तीर्य्य पारयेत् । वैष्णवस्तु तत्रापि
शुक्लपक्षे परामुपोष्य त्रयोदश्यां पारयेत् । सर्व्व-
स्यां कृष्णैकादश्यां वैष्णवानां सपुत्त्राणां गृहस्था-
नामप्युपवासो नित्यः । ब्राह्मणस्य विशेषतो
नित्यः । वैष्णवेतरेषां तादृशानां हरिशयनमध्य-
वर्त्तिनीषु कृष्णैकादशीषु उपवासो नित्यः । अ-
पुत्रवतां गृहिणान्तु सर्व्वास्वेव नित्याधिकारः ।
काम्योपवासे त्वविशेषेणैव सर्व्वेषामधिकारः ।
नित्योपवासे रविशुक्रादिदोषो नास्ति । अष्टाब्दा-
दधिको मर्त्योऽपूर्णाशीतिवत्सरो नित्याधिकारो ।
विधावानान्तु सर्व्वास्वेव नित्याधिकारः तत्र मल-
मासादिदोषो नास्ति । इत्येकादशीतत्त्वोक्त-
व्यवस्था ॥ * ॥
अथ हरिभक्तिविलासोक्तैकादशीव्यवस्था लिख्यते ।
तत्रादौ उपवासपूर्ब्बदिनकृत्यम् ।
"प्रातःस्नानादिकं कृत्वा सुवेशो धौतवस्त्रकः ।
व्रतं संकल्प्य कुर्व्वीत वैष्णवैश्च महोत्सवम्" ॥
इति कारिका ॥ संकल्पमन्त्रः ।
"दशमीदिनमारभ्य करिष्येऽहं व्रतं तव ।

"राघवश्चित्रकूटाद्रौ सानुजोऽरमत स्त्रिया ।
कदाचिदङ्के वैदेह्या निद्राणे रघुनन्दने ॥
ऐन्द्रः काकः समागम्य जानकीं वीक्ष्य कामुकः ।
विददार नखैस्तीक्ष्णैः पीनोन्नतपयोधरम् ॥
तत् दृष्ट्वा राघवः क्रुद्धः कुशं जग्राह पाणिना ।
ब्राह्मेणास्त्रेण संयोज्य चिक्षेप धाङ्क्षमारणे ॥
तत् दृष्ट्वा घोरसङ्काशं ज्वलत्कालानलोपमम् ।
दृष्ट्वा काकः प्रदुद्राव निनदन् दारुणस्वनम् ॥
वायसस्त्रिषु लोकेषु बभ्राम भयपीडितः ।
यत्र यत्र ययौ काकः शरणार्थी च वायसः ॥
तत्र तत्र तदस्त्रं तु प्रविवेश भयावहम् ।
ब्रह्माणमिन्द्रं रुद्रं मां शरणार्थी जगाम सः ॥
तत् दृष्ट्वा वायसं भीतं देवता न ररक्षिम ।
न शक्ताः स्म वयं त्रातुं राघवास्त्राद्भयङ्करात् ॥
इत्यब्रूम महादेवा अन्यथास्त्रं दहेच्च नः ।
पुनश्चागात् विधिं काको दयया विधिराह तम् ॥
भो भो बलिभुजां श्रेष्ठ तमेव शरणं व्रज ।
स एव रक्षकः श्रीशः शरणागतवत्सलः ॥
इत्युक्तः सोऽथ बलिभुक् ब्रह्मणा रघुनन्दनम् ।
उपेत्य सहसा भूमौ निपपात भयातुरः ॥
प्राणसंशयमापन्नं दृष्ट्वा सीता तु वायसम् ।
त्राहि त्राहीति भर्त्तारमुवाच दयिता विभुम् ॥
रुद्रः १ दुर्य्योधनसेनापतिः २ । इति कविकल्प-
द्रुमः ॥ (यथा मनुः २ । ३६ ।
"गर्भादेकादशे राज्ञो गर्भाच्च द्वादशे विशः" ॥)

**एकादशी**, स्त्री, (एकादशानां पूरणी । एकादश +
डडन्तात् ङीप् ।) तिथिविशेषः । सा तु शुक्लपक्षे
सूर्य्यमण्डलात् चन्द्रमण्डलस्य निर्गमरूपैकादश-
कलाक्रियारूपा । कृष्णपक्षे सूर्य्यमण्डले चन्द्रमण्ड-
लस्य प्रवेशरूपैकादशकलाक्रियारूपा । तत्पर्य्यायः ।
हरिवासरम् २ । हरिदिनम् ३ । इति स्मृतिः ॥
तत्र जातफलम् ।
"क्रोधोत्कटः क्लेशसहः सुभाषी
यागादिकर्त्ता स्वजनैकभर्त्ता ।
महामतिर्देवगुरुप्रियः स्या-
देकादशीजो मनुजोऽतिहृष्टः" ॥
इति कोष्ठीप्रदीपः ॥ * ॥ तत्र उपवासविधिः ।
पारणदिने द्वादशीलाभे सर्व्वएव पूर्णां त्यक्त्वा
खण्डामुपवसेयुः । तदलाभे गृही प्रब्बीं तनन्यः
परां-विधवापि उपवसेत् । पूर्णा तु ।
"उदयात् प्राक् यदा विप्र मुहूर्त्तद्वयसंयुता ।
संपूर्णैकादशी ज्ञेया तत्रैवोपवसेद् गृही" ॥
इति गारुडोक्ता ॥ यदा तु पूर्ब्बदिने दशम्या पर-
दिने द्वादश्या युक्तैकादशी तदा उत्तरामुपोष्य
द्वादश्यां पारणं कुर्य्यात् । परदिने द्वादश्यनिर्गमे
त्रयोदश्यामपि । यदा तु सूर्य्योदयानन्तरं दशमी-
युतैकादशी अथ च परदिने न निःसरति तदा
त्रिदिनं देवदेवेश निर्व्विघ्नं कुरु केशव" ॥ * ॥
तत्र रुक्माङ्गदराजवाक्यं नारदीये ।
"प्रातर्हरिदिनं लोकास्तिष्ठध्वं चैकभोजनाः ।
अक्षारलवणाः सर्व्वे हविष्यान्ननिषेविनः ॥
अवनीतल्पशयनाः प्रियासङ्गविवर्ज्जिताः ।
स्मरध्वं देवमीशानं पुराणं पुरुषोत्तमम्" ॥ * ॥
अथान्यनियमाः । स्कान्दे ।
"कांस्यं मांस्यं मसूरञ्च क्षौद्रं चानृतभाषणम् ।
पुनर्भोजनमायासं दशम्यां परिवर्ज्जयेत्" ॥
पारणदिनोक्तनिषिद्धद्रव्याण्यत्रापि निषिद्धानि ॥ * ॥
ततो व्रतस्य नित्यत्वमाह कण्वः ।
"एकादश्यामुपवसेन्न कदाचिदतिक्रमेत्" ।
आग्नेयञ्च ।
"उपोष्यैकादशीं राजन् यावदायुःप्रवृत्तिभिः" ॥ * ॥
भोजननिषेधो नारदीये पाद्मोत्तरखण्डे च ।
"रटन्तीह पुराणानि भूयोभूयो वरानने ! ।
न भोक्तव्यं न भोक्तव्यं संप्राप्ते हरिवासरे" ॥
पक्षद्वयेऽपि नित्यत्वम् । विष्णुरहस्यम् ।
"शुक्ले वा यदि वा कृष्णे विष्णुपूजनतत्परः ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि" ॥ * ॥
संक्रान्त्यादावपि नित्यत्वम् । कात्यायनः ।
"संक्रान्तौ रविवारे वा यदा चैकादशी भवेत् ।
उपोष्या सा महापुण्या सर्व्वपापहरातिथिः" ॥ * ॥
उपवासदिने श्राद्धनिषेधः । पाद्मोत्तरखण्डे ।
"एकादश्यान्तु प्राप्तायां मातापित्रोर्मृतेऽहनि ।
द्वादश्यां तत्प्रदातव्यं नोपवासदिने क्वचित्" ॥ * ॥
अथ अधिकारिणः । पाद्मोत्तरखण्डे ।
"वर्णानामाश्रमाणाञ्च स्त्रीणाञ्च वरवर्णिनि ।

| | | |
|---|---|---|
| तच्छिरः पादयोस्तस्य युयुजे चाथ जानकी ।<br>तमुत्थाप्य करेणाथ कृपापीयूषसागरः ।<br>ररक्षामौ निजास्त्राय तदेकाक्षि ददौ तदा ॥<br>वावसोऽपि मुहुर्नत्वा सीतायै राघवाय च ।<br>स्वर्लोकं प्रययौ हृष्टो राघवेणाभिपालितः” ॥)<br>एकनेत्रविशिष्टे काणे त्रि ॥<br>**एकाग्रः**, त्रि, (एकं एकस्मिन् वा अग्रं पुरोगतं ज्ञेय-<br>मस्य ।) अनन्यचित्तः । तत्पर्य्यायः । एकतानः २ | तां विहाय द्वादशीमुपवसेत् । यदा तु सूर्य्योदय-<br>प्राक्कालीनदशमीविद्धैकादशी परदिने च न निः- | |

:एकादश्युपवासस्तु कर्त्तव्यो नात्र संशयः” ॥

कात्यायनस्मृतौ च ।
“अष्टवर्षाधिको मर्त्यो ह्यपूर्णाशीतिवत्सरः ।
एकादश्यामुपवसेत् पक्षयोरुभयोरपि” ॥ * ॥
अशक्तौ प्रतिनिधिः । वायुपुराणे ।
“उपवासे त्वशक्तस्य आहिताग्नेरथापि वा ।
पुत्त्रान् वा कारयेदन्यान् ब्राह्मणान् वापि कारयेत् ॥
अथवा विप्रमुख्येभ्यो दानं दद्यात् स्वशक्तितः ।
उपवासन्तु कुर्व्वाणः पुण्यं शतगुणं भवेत्” ॥
मार्कण्डेयपुराणे च ।
“एकभक्तेन नक्तेन बालवृद्धातुरः क्षिपेत् ।
पयोमूलफलैर्व्वापि न निर्द्वादशिको भवेत्” ॥ * ॥
अनुकल्पापवादः । गरुडपुराणे ।
“मच्छयने मदुत्थाने मत्पार्श्वपरिवर्त्तने ।
फलमूलजलाहारी हृदि शल्यं ममार्पयेत्” ॥ * ॥
एकादशीमाहात्म्यम् । तत्त्वसागरे ।
“एकादशीसमं किञ्चित् पावनं न च विद्यते ।
स्वर्गमोक्षप्रदा ह्येषा राज्यपुत्त्रप्रदायिनी” ॥
गारुडे च ।
“एकादशीव्रतं भक्त्या यः करोति नरः सदा ।
स विष्णुलोकं व्रजति याति विष्णोः सरूपताम्” ॥ * ॥
उपवासदिननिर्णयः । सौरधर्म्मोत्तरे ।
“एकादशीमुपवसेत् द्वादशीमथवा पुनः ।
“उन्मीलनी वञ्जुली च त्रिस्पृशा पक्षवर्द्धिनी ।
जया च विजया चैव जयन्ती पापनाशिनी ॥
द्वादश्योऽष्टौ महापुण्याः सर्व्वपापहरा द्विज ।
तिथियोगेन जायन्ते चतस्रश्चापरास्तथा ॥
नक्षत्रयोगाच्च बलात् पापं प्रशमयन्ति ताः” ॥ * ॥
अथोन्मीलनी । यथा ब्रह्मवैवर्त्ते ।
“एकादशी च संपूर्णा वर्द्धते पुनरेव सा ।
द्वादशी च न वर्द्धेत कथितोन्मीलनी च सा” ॥
पद्मपुराणे ॥
“सर्व्वत्रैकादशी कार्य्या द्वादशीमिश्रिता नरैः ।
प्रातर्भवतु वा मा वा यतो नित्यमुपोषणम्” ॥ * ॥
अथ वञ्जुली । ब्रह्मवैवर्त्ते ।
“द्वादश्येव विवर्द्धेत नचैवैकादशी यदा ।
वञ्जुलीति भृगुश्रेष्ठ ! कथिता पापनाशिनी” ॥
भागवतादितन्त्रे ।
“संपूर्णैकादशी त्याज्या परतो द्वादशी यदि ।
उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारणम्” ॥ * ॥
अथ त्रिस्पृशा । ब्रह्मवैवर्त्तपुराणे ।
“अरुणोदय आद्या स्यात् द्वादशी सकलं दिनम् ।
अन्ते त्रयोदशी प्रातस्त्रिस्पृशा सा हरेः प्रिया” ॥
नारदीये ।
“एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
त्रिस्पृशा नाम सा प्रोक्ता ब्रह्महत्यां व्यपोहति” ॥
अथ पक्षवर्द्धिनी । ब्रह्मवैवर्त्ते ।
“दर्शश्च पौर्णमासी च संपूर्णा वर्द्धते यदि ।
द्वितीयेऽह्नि द्विजश्रेष्ठ सा भवेत् पक्षवर्द्धिनी” ॥ * ॥
स्नात्वा सम्यग्विधानेन धौतवासा जितेन्द्रियः ॥
संपूज्य विधिवद्विष्णुं श्रद्धायातिसमाहितः ।
पुष्पैर्गन्धैस्तथा धूपैर्दीपैन वेद्यकैः परैः ॥
उपहारैर्ब्बहुविधैर्जपहोमप्रदक्षिणैः ।
स्तौत्रैर्नानाविधैर्नृत्यगीतवाद्यैर्मनोरमैः ॥
एवं संपूज्य विधिवद्रात्रौ कुर्य्यात् प्रजागरम्” ॥ * ॥
अथ जागरणलक्षणम् । स्कान्दे ।
“शृणु नारद वक्ष्यामि जागरस्य तु लक्षणम् ।
येन विज्ञातमात्रेण दुर्लभो न जनार्द्दनः ॥
गीतं वाद्यञ्च नृत्यञ्च पुराणपठनन्तथा ।
धूपं दीपञ्च नैवेद्यं पुष्पगन्धानुलेपनम् ॥
फलमर्घ्यञ्च श्रद्धा च दानमिन्द्रियनिग्रहः ।
सत्यान्वितं विनिद्रञ्च मुदायुक्तं क्रियान्वितम् ॥
साश्चर्य्यञ्चैव सोत्साहं पापालस्यादिवर्ज्जितम् ।
प्रदक्षिणाभिः संयुक्तं नमस्कारपुरःसरम् ॥
नीराजनसमायुक्तमनिर्व्विण्णेन चेतसा ।
यामे यामे महाभागे कुर्य्यादारात्रिकं हरेः ॥
एतैर्गुणैः समायुक्तं कुर्य्याज्जागरणं हरेः’ ॥ * ॥
अथ पारणदिनकृत्यम् । कात्यायनः ।
“प्रातः स्नात्वा हरिं पूज्य उपवासं समर्पयेत् ।
पारणन्तु ततः कुर्य्यात् व्रतसिद्ध्यै हरिं स्मरन्” ॥
तत्र समर्पणमन्त्रः ।
“अज्ञानतिमिरान्धस्य व्रतेनानेन केशव ।
प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव” ॥ * ॥
अथ पारणे द्वादशीलङ्घने दोषः । स्कान्दे ।
“पारणाहनि संप्राप्ते द्वादशीं यो व्यतिक्रमेत् ।
त्रयोदश्यान्तु भुञ्जानः शतजन्मानि नारकी” ॥ * ॥
अथ द्वादश्यत्यल्पत्वे कृत्यसमाधानम् ।
देवीरहस्ये ।
“अल्पा चेद्द्वादशी कुर्य्यात् नित्यकर्म्मारुणोदये ।
अत्यल्पा चेन्निशीथोऽर्द्धमामध्याह्निकमेव तत्” ॥ * ॥
अथ सङ्कटे पारणसमाधानम् । कात्यायनः ।

विमिश्रां वापि कुर्व्वीत न दशम्या युतां क्वचित्” ॥ * ॥
विद्धोपवासदोषमाह वशिष्ठः ।
“दशम्येकादशी यत्र तत्र नोपवसेद्बुधः ।
अपत्यानि विनश्यन्ति स्वर्गलोकं न गच्छति” ॥ * ॥
द्वादश्युपवासफलम् । स्कान्दे ।
“ऊर्द्ध्वं हरिदिनं न स्यात् द्वादशीं ग्राहयेत्ततः ।
द्वादश्यामुपवासोऽत्र त्रयोदश्यान्तु पारणम् ॥
एवं कुर्व्वन् नरो भक्त्या विष्णुसायुज्यमाप्नुयात् ।
अन्यथा कुरुते यस्तु स याति नरकं ध्रुवम्” ॥ * ॥
सपूर्णालक्षणेन विद्धालक्षणम् । भविष्यपुराणे ।
“आदित्योदयवेलायाः प्राङ्मुहूर्त्तद्वयान्विता ।
एकादशी च संपूर्णा विद्धान्या परिकीर्त्तिता” ॥ * ॥
अरुणोदयविद्धापरित्यागमाह कण्वः ।
“अरुणोदयवेलायां दशमीसंयुता यदि ।
अत्रोपोष्या द्वादशी स्यात् त्रयोदश्यान्तु पारणं” ॥
वेधश्चतुर्विधः । ब्रह्मवैवर्त्ते ।
“अरुणोदयवेधः स्यात् सार्द्धन्तु घटिकात्रयम् ।
अतिवेधो द्विघटिकः प्रभासन्दर्शनाद्रवेः ॥
महावेधोऽपि तत्रैव दृश्यतेऽर्को न दृश्यते ।
तुरीयस्तत्र विहितो योगः सूर्य्योदये बुधैः” ॥ * ॥
अरुणोदयविद्धोपवासदोषः । पाद्मे ।
“अरुणोदयकाले तु वेधं दृष्ट्वा चतुर्व्विधम् ।
मद्दिनं ये प्रकुर्व्वन्ति यावदाहूतनारकाः” ॥ * ॥
शुद्धाविशेषपरित्यांगः । गारुडे ।
ब्रह्मवैवर्त्ते ।
“कुहूराके यदा वृद्धिं प्रयाते पक्षवर्द्धिनी ।
विहायैकादशीं तत्र द्वादशीं समुपोषयेत्” ॥ * ॥
अथ जयादिः । ब्रह्मवैवर्त्ते ।
“पुष्यश्रवणपुष्याद्यरोहिणीसंयुतास्तु ताः ।
उपोषिताः समफला द्वादश्योऽष्टौ पृथक् पृथक्” ॥
अथोपवासदिनकृत्यम् । देवलः ।
“गृहीत्वौडुम्बरं पात्रं वारिपूर्णमुदङ्मुखः ।
उपवासन्तु गृह्णीयाद्यद्वा संकल्पयेद्बुधः” ॥
तत्र सङ्कल्पमन्त्रः ।
“एकादश्यां निराहारः स्थित्वाहमपरेऽहनि ।
भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत” ॥ * ॥
पुष्पाञ्जलित्रयदानं मन्त्रपूतजलपानञ्चाह मार्क-
ण्डेयः ।
“अष्टाक्षरेण मन्त्रेण त्रिजप्तेनाभिमन्त्रितम् ।
उपवासफलं प्रेप्सुः पिबेत्तोयं समाहितः ॥
देवार्च्चनं ततः कृत्वा पुष्पाञ्जलिमथापि वा ।
संकल्पमन्त्रमुच्चार्य्य देवाय विनिवेदयेत्” ॥ * ॥
संकल्पादौ विशेषः । नारदीये ।
“पूर्ब्बायाः सङ्गदोषेणैकादश्याः स्नानपूजने ।
वर्ज्जयन्ति नराः पूर्ब्बान् यामांश्च चतुरो द्विज ॥
तदूद्ध्र्वं स्नानपूजादि कर्त्तव्यं तदुपोषितैः ।
न दिवा शुद्धिमाप्नोति तदा रात्रौ विधीयते ॥
दिनकार्य्यमशेषञ्च कर्त्तव्यं शर्व्वरीमुखे” ॥ * ॥
पूजाजागरणविधिः । ब्राह्मे ।
“एकादश्यामुभौ पक्षौ निराहारः समाहितः ।
“मन्त्रं जपित्वा हरये निवेद्योपोषणं व्रती ।
अद्भिस्तु पारणं कुर्य्यात् सङ्कटे विषमे सति” ॥ * ॥
अथ हरिवासरकालपारणानिषेधः । विष्णुधर्म्मो-
त्तरे ।
“द्वादश्याः प्रथमः पादो हरिवासरसंज्ञकः ।
तमतिक्रम्य कुर्व्वीत पारणं विष्णुतत्परः” ॥ * ॥
अथ द्वादशीदिने वर्ज्जनीयानि । स्कान्दे ।
“क्षौद्रं मांसं सुरां तैलं व्यायामं क्रोधमैथुने ।
परान्नं कांस्यताम्बूले लोभं निर्म्माल्यलङ्घनम् ॥
द्वादश्यां द्वादशैतानि वैष्णवः परिवर्ज्जयेत्” ॥
अपि च । वितथभाषणम् । प्रवासः । दिवास्वप्नः ।
अञ्जनम् । शिलापिष्टम् । मसूरम् । द्यूतम् । हिंसा ।
चणकम् । कोरदूषकम् । औषधम् । एतानि पुराणान्तरोक्तान्यपि वर्ज्जनीयानि ॥ * ॥ इति श्रीहरिभक्तिविलासोक्तैकादशीव्यवस्था समाप्ता ॥ * ॥
अथे पश्चिमदेशप्रसिद्धनानापुराणोक्तषड्विंशत्ये-
कादशीनामानि लिख्यन्ते । अग्रहायणस्य कृष्णैका-
दशी उत्पन्ना १ शुक्ला मोक्षा २ । पौषस्य कृष्णैकादशी सफला ३ शुक्ला पुत्रदा ४ । माघस्य कृष्णकादशी षट्तिला ५ शुक्ला जया ६ । फाल्गु-
नस्य कृष्णैकादशी विजया ७ शुक्ला आमर्दकी ८ ।

| | | |
|---|---|---|
| सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा । वैष्णवी च त्रयोदश्यां घटिकैकापि दृश्यते ॥ गृहस्थोऽपि परां कुर्य्यात् पूर्ब्बां नोपवसेत्तदा” ॥ * ॥ अथाष्टमहाद्वादशीनां विशेषतो निरूपणम् । यथा, ब्रह्मवैवर्त्ते । | | |

:चैत्रस्य कृष्णैकादशी पापमोचनी ९ शुक्ला का-
मदा १० । वैशाखस्य कृष्णैकादशी वरूथिनी ११
शुक्ला मोहनी १२ । ज्यैष्ठस्य कृष्णैकादशी अपरा
१३ शुक्ला निर्जला १४ । आषाढस्य कृष्णैकादशी
योगिनी १५ शुक्ला पद्मा १६ । श्रावणस्य कृष्णै-
कादशी कामिका १७ शुक्ला पुत्त्रदा १८ । भाद्रस्य
कृष्णैकादशी अजा १९ शुक्ला वामना २० ।
आश्विनस्य कृष्णैकादशी इन्दिरा २१ शुक्ला पापा-
ङ्कुशा २२ । कार्त्तिकस्य कृष्णैकादशी रमा २३
शुक्ला प्रबोधिनी २४ । मलमासस्य शुक्लैकादशी
सुभद्रा २५ कृष्णा कमला २६ ॥ * ॥ इत्येकादशी-
प्रकरणं समाप्तम् ॥ (संख्याविशेषः । एगार इति
भाषा । यथा महाभारते ६ । १६ । २१ ।
"एकादशी धार्त्तराष्ट्री कौरवाणां महाचमूः" ॥)

**एकाद्गविंशतिः**, त्रि, (एकेन न विंशतिः । एकादि-
श्चैकस्य चादुक्" । ६ । ३ । ७६ । इत्यनेन सिद्धम् ।)
एकोनविंशतिः १९ । इति व्याकरणम् ॥

**एकानंशा**, स्त्री, (एको न अंशो यस्याः ।) पार्ब्बती ।
इति तिथ्यादितत्त्वम् ॥ एकं अविभक्तमन्नंयस्य इति
व्युत्पत्त्या एकपाकावस्थितः । अविभक्तः । यथा,
"एकपाकेन वसतां पितृदेवद्विजार्च्चनम् ।
एकं भवेद्विभक्तानां तदेव स्याद्गृहे गृहे" ॥
इति प्रायश्चित्ततत्त्वधृतवृहस्पतिवचनम् ॥

**एकान्नविंशति**, त्रि, (एकेन न विंशतिः । "एका-
दिश्चैकस्य चादुक्" । ६३ । ७६ । नञो विंशत्या
समासे कृते एकशब्देन सह तृतीयेति योग-
विभागात् समासः । अनुनासिकविकल्पः ।)
एकोनविंशतिः १९ । इति व्याकरणम् ॥

**एकाब्दा**, स्त्री, (एकोऽब्दो यस्याः सा ।) एकहायनी ।
एकवत्सरवयस्कगवी । इत्यमरः ॥

**एकायनः**, त्रि, (एकं अयनं विषयो यस्य ।) एकाग्रः ।
एकविषयासक्तचित्तः । इत्यमरः । (यथा छान्दोग्यो-
पनिषदि । ७ । ४ । २ । तानि हतानि संकल्पैका-
यनानि सङ्कल्पात्मकानि संकल्पे प्रतिष्ठितानि" ।
एकमयनं गतिर्यत्र । एकामात्रगमनयोग्यः । यदुक्तं
महाभारते ३ । १४६ । ६६ ।
"अनेनैव पथा मा वै गच्छेदिति विचार्य्य सः ।
आस्त एकायने मार्गे कदलीषण्डमण्डिते" ॥)

**एकायनगतः** त्रि, (एकायनं गतः प्राप्तः । एकस्मिन्न-
यने गतं ज्ञानमस्येति वा ।) एकाग्रः । इत्यमरः ॥

**एकावली**, स्त्री, (एका श्रेष्ठा आवली माला ।) एक-
इत्यमरः ॥ पाठा । इति राजनिर्घण्टः ॥ आक्नादि
इति भाषा । (अस्याः पर्य्याया यथा ॥
"अम्बष्ठाम्बष्ठकी पाठा कुचेला पापचेलिका ।
एकाष्ठीला वरा तिक्ता प्राचीनौका शिवावुका" ॥
इति वैद्यकरत्नमाला ॥)

**एकाहः**, पुं, (एकमहः । "उत्तमैकाभ्याञ्च" । ५ । ४ ।
९० इत्यनेन सिद्धम् ।) एकदिनम् । इति व्याक-
रणम् ॥ (यथा, मनुः ५ । ५९ ।
"अर्व्वाक् सञ्चयनादस्थ्नां त्र्यहमेकाहमेव च" ॥)

**एकाहारः**, पुं, (एकः न द्वितीय आहारः ।) एक-
दिनवृत्त्येकवारभोजनम् । यथा ।
"एकाहारः सदा कार्य्यो न द्वितीयः कदाचन ।
पर्य्यङ्कशायिनी नारी विधवा पातयेत् पतिम्" ॥
इति शुद्धितत्त्वधृतस्मृतिः ॥

**एकीयः**, त्रि, (एकस्मिन् तिष्ठतीति । एक + छ ।)
एकपक्षः । सहायः । सहभावी । इति त्रिकाण्डशेषः ॥

**एकोद्दिष्टं**, क्ली, (एकः प्रेत एव उद्दिष्टो यत्र ।) प्रेतो-
द्देश्यकश्राद्धम् । यथा । गोभिलः अथैकोद्दिष्ट-
मेकं पवित्रमेकोऽर्घ्यः एकः पिण्डो नावाहनं नाग्नौ-
करणं नात्र विश्वे देवाः स्वदितमिति तृप्तिप्रश्नः
सुस्वदितमिति प्रत्युत्तरम् । उपतिष्ठतामित्यक्षय्य-
स्थाने अभिरम्यतामिति विसर्गोऽभिरतोऽस्मीति
प्रतिवचनमेतत् प्रेतश्राद्धमिति ॥ * ॥ एतत् प्रेत-
श्राद्धमित्युपसंहारात् एकं प्रेतमुद्दिश्य यद्दीयते
श्राद्धं तदेकोद्दिष्टमिति वैदिकप्रयोगाधीनं
यौगिकम् । अतएव प्रतिसांवत्सरिकस्य नैको-
द्दिष्टत्वं किन्त्वेकोद्दिष्टविधिकत्वं अत्रार्घ्यैक्याद्द्विद-
लरूपसङ्केतितपवित्रैक्यप्राप्तौ एकं पवित्रमिति
पुनरभिधानसार्थकत्वाय तदवयवैकदलपरम् । अत्र

इति त्रिकाण्डशेषः ॥ (इयं हि यशोदागर्भसम्भवा ।
यदुक्तं हरिवंशे । ५९ । १४ -- ४७ ।
"देवक्यजनयत् विष्णुं यशोदा तां तु कन्यकाम्" ।
"विद्धि चैनामथोत्पन्नां अंशाद्देवीं प्रजापतेः ।
एकानंशां योगकलां रक्षार्थं केशवस्य तु" ॥)

**एकान्तं**, क्ली, (एकस्मिन्नेव अन्तः समाप्तिर्यस्य ।) अत्य-
न्तम् । तत्पर्य्यायः । अतिशयः २ भरः ३ अतिवेलम् ४
भृशम् ५ अत्यर्थम् ६ अतिमात्रम् ७ उद्गाढम् ८
निर्भरम् ९ तीव्रम् १० नितान्तम् ११ गाढम् १२
वाढम् १३ दृढम् १४ । (यथा माघे २ । ८३ ।
"तेजः क्षमा वा नैकान्तं कालज्ञस्य महीपतेः" ॥
तद्वति, त्रि । यथा कुमारे १ । ३६ ।
"नागेन्द्रहस्तास्त्वचि कर्कशत्वा-
देकान्तशैत्यात् कदलीविशेषाः" ॥
तथा भागवते । १ । ४ । ४ ।
तस्य पुत्त्रो महायोगी समदृङ्निर्विकल्पकः ।
एकान्तमतिरुन्निद्रो गूढो मूढ इवेयते" ॥)
भेद्यगामिनि त्रि । इत्यमरः ॥ (सर्व्वत्र यदवधारे-
णोच्यते स एकान्तः ॥ यथा "तृवृद्विरेचयति मद-
नफलं वामयतीति" ॥ इत्युत्तरतन्त्रे ६५ अध्याये
सुश्रुतेनोक्तम् ॥) निर्ज्जनम् ॥ (यथा हितोपदेशे
विग्रहे । १५ । "अथ केनापि शस्यरक्षकेण धूसर-
यष्टिका । इत्यमरः ॥ एकनर हार इति भाषा ।
(अलङ्कारविशेषः । तल्लक्षणादिकमुक्तं साहित्य-
दर्पणे १० परिच्छदे । १०१ । यथा, --
"पूर्ब्बं पूर्ब्बं प्रति विशेषणत्वेन परं परम् ।
स्थाप्यतेऽपोह्यते वा चेत्स्यात्तदैकावली द्विधा" ॥
क्रमेणोदाहरणम् । तत्रैव ।
"सरो विकसिताम्भोजमम्भोजं भृङ्गसङ्गतम् ।
भृङ्गा यत्र ससङ्गीताः सङ्गीतं सस्मरोदयम्" ॥
"न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तद्यदलीनषट्पदम् ।
न षट्पदोऽसौ न जुगुञ्ज यः कलं
न गुञ्जितं तन्न जहार यन्मनः" ॥
भट्टिः । २ । १९ ॥ क्वचिद्विशेष्यमपि यथोत्तरं वि-
शेषणतया स्थापितमपोहितञ्च दृश्यते । यथा, --
"वाप्यो भवन्ति विमलाः स्फुटन्ति कमलानि वापीषु ।
कमलेषु पतन्त्यलयः करोति सङ्गीतमलिषु पदम्" ॥
एवमपोहनेऽपि ॥)

**एकाश्रितगुणः**, पुं, (एकस्मिन् पदार्थे आश्रितोगुणः ।)
एकवृत्तिधर्म्मः । तद्यथा । रूपम् १ रसः २
गन्धः ३ स्पर्शः ४ एकत्वम् ५ एकपृथक्त्वम् ६
परिमाणम् ७ परत्वम् ८ अपरत्वम् ९ बुद्धिः १०
सुखम् ११ दुःखम् १२ इच्छा १३ द्वेषः १४ यत्नः
१५ गुरुत्वम् १६ द्रवत्वम् १७ स्नेहः १८ संस्कारः
१९ अदृष्टम् २० शब्दः २१ । इति सिद्धान्त-
नावाहनं नाग्नौ करणमिति निषेधयोः पौर्ब्बा-
पर्य्यादग्नौ करणपूर्ब्बकालीनं प्रधानसम्बन्धि श्राद्ध-
सूत्रोद्दिष्टं श्राद्धार्थावाहनमेव निषिध्यते न त्व-
प्रधानसम्बन्धि पितृयज्ञवदित्यतिदेशप्राप्तं पिण्डा-
र्थावाहनमिति । एतेन पिण्डार्थावाहननिषेधो
मैथिलोक्तो हेयः । अत्राग्नौ करणनिषेधेन हुत-
शेषस्यालाभे हुतशेषं दत्त्वा पात्रमालभ्य जपति
पृथिवीत्यादि स्वाहा इत्यन्तसूत्रोक्तपात्रालम्भन-
स्यापि बाधः । आनन्तर्य्याभावात् अमृतमिति
मन्त्रलिङ्गविरोधाच्च । स्वदितमिति तृप्तिप्रश्न इति
तृप्ताः स्थ इति तृप्तिप्रश्ने स्वदितमिति प्रश्नः ।
कुशमयब्राह्मणपक्षे तु प्रतिवचनानुपपत्त्या प्रश्न-
स्यापि निवृत्तिः । अक्षय्यशब्दस्थाने उपतिष्ठता-
मिति प्रयोगः अत्रोपतिष्ठतामित्यनेन अन्नादिक-
मित्यस्यान्वये अस्त्वित्यस्य अन्वयानुपपत्त्या तस्या-
प्यप्रयोगः । अतएव पितृदयितायामन्नादिकमुप-
तिष्ठतामिति लिखितम् । अभिरम्यतामिति वाजे
वाजे इति स्थाने अभिरम्यतामित्यनेन विसर्जन-
मिति । एतदिति पूर्ब्बोक्तेतिकर्त्तव्यताकश्राद्धमि-
त्यर्थः । प्रेतश्राद्धं प्रेतस्य श्राद्धं न तु पार्ब्बणविकृति-
त्वेन प्राप्तपितृलोकरूपपितुः श्राद्धं अकृतसपि-
ण्डीकरणस्य तथाविधपितृत्वाभावात् । अतएवै-
तन्न्यायमूलकमेवाश्वलायनगृह्यपरिशिष्टेऽपि पितृ-

कम्बलकृततनुत्राणेन धनुःकाण्डं
सज्जीकृत्यावनत-
कायेन एकान्ते स्थितम्” ॥)

**एकान्ती** [न्] (एकान्तमस्त्यस्य । एकान्त + इनि ।)

विष्णुभक्तविशेषः । यथा, गारुडे १३१
अध्याये ।
“एकान्तेनाममो विष्णुर्यस्मादेषां
परायणः ।
तस्मादेकान्तिनः
प्रोक्तास्तद्भागवतचेतसः ॥
प्रियाणामपि सर्व्वेषां देवदेवस्य स
प्रियः ।
आपत्स्वपि तदा यस्य
भक्तिरव्यभिचारिणी” ॥

**एकान्नः**, त्रि, (एकं एककालपक्वं अन्नं यत्र ।) एक-

भक्तः । यथा । काशीखण्डे ।
“ऊर्ज्जे यवान्नमश्नीयादेकान्नमथवा
पुनः ।
वृन्ताकं शूरणञ्चैव शूकशिम्बीञ्च
वर्ज्जयेत्” ॥

मुक्तावली ॥ ९० ॥

**एकाष्ठीलः**, पुं, (एकमस्थि लाति । ला + क ।

सुषामादित्वात् षत्वं दीर्घत्वञ्च ।) वकवृक्षः
। इति
कश्चिदमरः ॥

**एकाष्ठीला**, स्त्री, (एकाष्ठील + टाप् ।) वकवृक्षः ।

:शब्दं न युञ्जीत पितृहा चोपजायते इत्युक्तम् ।

अतएव विष्णुना प्रेतस्य नामगोत्राभ्यां दत्ताक्ष-
य्योदकेषु इत्यत्र प्रेतनामगोत्राभ्यामित्यनेन प्रेत-
स्येत्युक्तं न तु सम्बन्धिन इत्युक्तम् । ततश्च मन्त्रे
प्राप्तपितृलोकोपाधिकएव पितृपदस्थाने प्रेत-
पदोहो न तु अग्निस्वात्ताद्युपाधिके एवमभिलाप-
वाक्येऽपि सम्बन्धित्वेन नोल्लेखः किन्तु प्रेतत्वेन
असम्बन्धिनोऽपि मठच्छात्रादेरपि प्रेतश्राद्धाधि-
कारित्वात् । सांवत्सरिकश्राद्धे एकोद्दिष्टविकृ-
तीभूतेऽपि
प्राप्तपितृलोकोपाधिकपितृपदवन्मन्त्रे
अभिलापे च सम्बन्धिबोधकपितृत्वेनैवोल्लेखः
।
एवञ्च देवताभ्यः पितृभ्यश्च इत्यत्र न प्रेतपदोहः
पितृपदस्य दिव्यपितृपरत्वात् । एवं नैकवचनोहो-
ऽपि तथा मधु द्यौरस्तु नः पिता इत्यस्य द्यौः स्वर्गः
पिता पितेव सर्व्वस्याधिगम्यत्वात् मध्वस्तु मधु-
मयी भवत्विति भाष्यव्याखाने द्यौरिति पितेति
पदयोः सामानाधिकरण्यं प्रतीयते अत्र च द्युत्व-
पितृत्वयोर्भेदेऽपि
सामानाधिकरण्येनाभेदावगमात्
दिवः पितृसाधर्म्म्यप्राप्तिरिति पितृपदं पितृ-
तुल्यपरं न तु जनकपर प्राप्तपितृलोकपरं वेति
।
तेनात्र मन्त्रे पितेत्येव वक्तव्यं न तु प्रेतपदोहः
।

पर्य्युषितं स्थितम् ।
दम्पत्योराश्रमस्वामिनोर्भोजना-
नन्तरं पाकस्थाल्यामवशिष्टमिति श्राद्धचिन्ता-
मणिः ॥ यत्तु देवलवचनम् ।
"एकोद्दिष्टस्य शेषन्तु ब्राह्मणेभ्यः समुत्सृजेत् ।
पश्चात् स्वयञ्च भुञ्जीत पुनर्मङ्गलभोजनम्" ॥
इति । तस्यैकोद्दिष्टशेषं ब्राह्मणेभ्यः समुत्सृजेत् न
त्ववशेषयेत् पुनर्मङ्गलभोजनं पाकान्तरकृतान्नं
भुञ्जीतेत्यन्वय इति ॥ * ॥ तत्करणकालो यथा
।
ब्रह्मपुराणम् ।
"पूर्ब्बाह्णे मातृकं श्राद्धमपराह्णे तु पैत्रिकम् ।
एकोद्दिष्टन्तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्" ॥
मध्याह्ने तु विशेषमाह कालमाधवीये व्यासः ।
"कुतपप्रथमे भागे एकोद्दिष्टमुपक्रमेत् ।
आवर्त्तनसमीपे वा तत्रैव नियतात्मवान्" ॥
आवर्त्तनं पश्चिमदिगवस्थितच्छायायाः पूर्ब्बदिग्-
गमनारम्भकालः । तत्समीपे कुतपशेषदण्डे ।
यदाह गोतमः ।
"आरभ्य कुतपे श्राद्धं कुर्य्यादारौहिणं बुधः ।
विधिज्ञो विधिमास्थाय रौहिणन्तु न लङ्घयेत्"
।
तेन
पूर्ब्बदिवसीयकुतपरौहिणयोस्तत्तत्तिथेर्लाभे
परत्र कुतपमात्रलाभे शुक्लपक्षेऽपि पूर्ब्बदिने
एकोद्दिष्टं उभयप्राप्त्यनुरोधात् । पूर्ब्बदिने कुत-
पालाभे परत्र तल्लाभे कृष्णपक्षऽपि परदिनएव
समाप्तिकालादारम्भकालस्य बलवत्त्वात् ।
तथा च
बौधायनः ।
"यो यस्य विहितः कालः कर्म्मणस्तदुपक्रमे ।
तिथिर्याभिमता सा तु कार्य्या नोपक्रमोज्झिता" ॥
उभयत्र कुतपमात्रालाभे शुक्लपक्षेऽपि पूर्ब्बदिने
समाप्तिकालानुरोधात् पूर्ब्बदिने रौहिणालाभे
परत्र सप्तममुहूर्त्तलाभे कृष्णपक्षेऽपि परदिने

वृक्षा । इति दुर्गादासः ॥

**एठ**, ङ बाधने । इति कविकल्पद्रुमः ॥ (भ्वादिं-आत्मं
सकं-सेट् ।) बाधनं विहतिः । ङ एठते वत्सरं
लोकः । इति दुर्गादासः ॥

**एडः**, त्रि, (इलति । इल स्वप्ने । अच् । डलयो-
रैक्यम् । यद्वा आ सर्व्वतः ईड्यते । ईड स्तुतौ ।
घञ् ।) वधिरः । इत्यमरः ॥
(मेषः । यथाह कात्यायनः ।
"श्वैडवराहेषूदधारा प्राचीदं विष्णुः" ॥)

**एडकः**, पुंः (एड + स्वार्थे कन् । यद्वा इलति एलयति
वा इल + ण्वुल् ।) मेषः । इत्यमरः ॥
वनच्छगलः ।
इति त्रिकाण्डशेषः ॥

**एडका**, स्त्री, (एडकस्य स्त्री । अजादित्वात् टाप् ।
क्षिपकादित्वान्नेत्वम् ।) मेषी । इत्यमरटीकायां
रायमुकुटः ॥

**एडगजः**, पुं, (एडो मेष एव गजो यस्य भञ्जकत्वात् ।)
चक्रमर्द्दकः । इत्यमरः ॥ चाकुन्दिया इति भाषा ।
अस्य गुणाः ।
वायुकफकुष्ठत्वग्दोषगुल्मोदर-
रोगार्शोनाशित्वम् । कटुत्वञ्च । इति
राजवल्लभः ॥
(पर्य्यायाः यथा, --
"चक्रमर्द्दः प्रपुन्नाटो दद्रुघ्नो
मेषलोचनः ।

न वा पितृशब्दं न युञ्जीत इत्यनेन निषेधः । एव-
मामावेति मन्त्रे पितरा इत्यत्र नोहः । एवं वृद्धि-
श्राद्धेऽप्येतेषु नान्दीमुखविशेषणं न देयमेवेति ।
अन्यत्र सर्व्वत्रोत्सर्गवाक्ये मन्त्रे च पितृपदप्रयोग-
निषेधात् प्रेतपदोहः कार्य्यः । विष्णुः । एकवन्म-
न्त्रानूहेत एकोद्दिष्टे इति एकवत् एकवचनवत्
यथा स्यात्तथोहेत यथा पवित्र स्थो वैष्णव्यावित्यत्र
पवित्रासि वैष्णवीति एवं विष्णोर्मनसा पूते स्थ
इत्यत्रापि पूतमसीति । अत्र पितरो मादयध्वं
यथाभाग मा वृषायध्वं इति मन्त्रे अत्र प्रेत-
मादयस्व यथाभाग मावृषायस्व इत्यूत्यम् । अमी
मदन्तः पितर इत्यत्र अमी मदत् प्रेतं इति ।
वृषायिषत इत्यत्र वृषायिष्टेति । एत पितर इति
पिण्डार्थावाहनमन्त्रे एहि प्रेत इति । सौम्यास
इत्यत्र सौम्येति । दत्तास्मभ्यमित्यत्र देह्यस्मभ्य-
मिति । नियच्छत इत्यत्र नियच्छेति । नमो व
इत्यादिमन्त्रेषु पितर इति स्थानचतुष्टये प्रेते-
त्यूह्यम् । एवं व इत्यत्र ते इति । आशीःप्रार्थने
येभ्य इत्यत्र यस्मै इति । तेषामित्यत्र तस्येत्यूह्यम् ।
एतद्वः पितर इत्यत्र तु प्रेता इति विकृतावूहो
न तु बहुवचनस्य । एतद्वः पितरो वास इति
जल्पन् पृथक् पृथक् इति ब्रह्मपुराणेन प्रकृता-
वेव पार्ब्बणे पित्रादिषु प्रत्येकमेतद्वः पितर इति
बहुवचनान्तमन्त्रप्रयोगात् अत्रानर्थक्येन तद्वि-
कृतावेकोद्दिष्टेऽप्यसमवेतार्थबहुवचनस्यैव युक्त-
मध्याह्नानुरोधात् । इति श्राद्धतत्त्वम् ॥ * ॥
एकोद्दिष्टविधिकसांवत्सरिकश्राद्धम् । यथा, --
"एकोद्दिष्टं पुरावश्यं तद्विशेषं वदे शृणु" ।
प्रथमं निमन्त्रणं पादप्रक्षालनं आसनं अद्य अमुक-
गोत्रस्य मत्पितुरमुकदेवशर्म्मणः प्रतिसांवत्-
सरिकमेकोद्दिष्टं श्राद्धं सिद्धान्नेन युष्मास्वहं करिष्ये
श्राद्धकरणानुज्ञापनम् । आसनं अर्घ्यः । गन्धादि-
दानं नित्यश्राद्धम् । अन्नसङ्कल्पनं जप्यं निवीती
उत्तराभिमुखीभूयातिथिश्राद्धं कुर्य्यात् । ततस्तृप्तिं
ज्ञात्वा दक्षिणाभिमुखो वामोपवीती उच्छिष्ट-
समीपे ये अग्निदग्धा इति अन्नविकिरणम् । ॐ
अमुकगोत्र मत्पितरमुकदेवशर्म्मन् एतत्ते जल-
मवने निक्ष्व ये चात्र त्वामनुयांश्च त्वमनु तस्मै ते
स्वधा । इति रेखोपरि दक्षिणामुखवारिधारादा-
नम् । इति गारुडे २२३ अध्यायः ॥

**एकोशिका**, स्त्री, (एका मुख्या उशिका कमनीया ।)
वृक्षविशेषः । इति रत्नमाला ॥ आक्नादि इति
भाषा ॥

**एज**, ऋ ङ दीप्तौ इति कविकल्पद्रुमः ॥ (भ्वादिं-
आत्मं-अकं-सेट् ।) ऋ मा भवान् एजिजत् । ङ
एजते । इति दुर्गादासः ।

**एज**, ऋ कम्पे । इति कविकल्पद्रुमः । (भ्वादिं-परं-सकं
सेट् ।) ऋ मा भवान् एजजित् । एजति वायुना
पद्माटः स्यादेडगजश्चक्री पुन्नाट
इत्यपि" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ।
गुणाश्चास्य चक्रमर्द्दशब्दे ज्ञेयाः ॥
व्यवहारो यथा, --
"सलोमशः सैडगजः करब्जः" ।
इति चरके सूत्रस्थाने तृतीयेऽध्याये ॥)

**एडमूकः**, त्रि, (एडो वधिरो मूकश्च ।) वधिरः मूकश्च ।
वक्तुं श्रोतुमशिक्षितः ।
वाक्श्रुतिवर्जितः । इत्य-
मरः ॥ शठः । इति मेदिनी ॥

**एडुकं**, क्ली, (ईड + उलूकादयश्चेति ४ । ४१ । उणा-
दिसूत्रेण साधु । निपातनात् ह्रस्वम् ।) एडूकम् ।
इति भरतो द्विरूपकोषश्च ॥

**एडूकं**, क्ली, (ईड्यते इति । "उलूकादयश्च" ४ । ४१ ।
उणादिसूत्रेण साधु ।)
अन्तर्न्यस्तकीकसकुड्यम् ।
इत्यमरः ॥ कीकसमिव कीकसं यत् कुड्यम् छिटा-
वेडा इति ख्यातमित्यन्ये । इति सारसुन्दरी ॥
कीकसमस्थि एतत्
काष्ठादिकठिनद्रव्योपलक्षणं
कीकसमिव कीकसं किलिञ्जादीति मधुः ॥
"मध्यसंस्थापितास्थ्यादि
कुड्यमेडूकमुच्यते" ।
इति माधवः ॥ (यथा महाभारते वनपर्ब्बणि ।
"एडूकचिह्ना पृथिवी न देवगृहभूषिता" ॥
अस्य शब्दस्य पुंस्त्वमपि दृश्यते महाभारते ३ ।

त्वात् । ततश्च प्रकृतौ समवेतार्थस्यैव
विकृतावूहः ।
सांवत्सरिके त्वेकवचनस्यैवोहो न तु
पितृपदस्य
तत्र प्राप्तपितृलोकत्वेन तस्यैव युक्तत्वात् ।
स्मृतिः ।
“प्रेतश्राद्धे यदुच्छिष्टं ग्रहे पर्य्युषितञ्च यत् ।
दम्पत्योर्भुक्तशेषञ्च न भुञ्जीत कदाचन” ॥
उच्छिष्टं पाककपात्रे अवशिष्टम् । ग्रहे उपरागे

१९० । ६३ । यथा, --
“एड्डूकान् पूजयिष्यन्ति वर्जयिष्यन्ति
देवताः ।
शूद्राः परिचरिष्यन्ति न द्विजान्
युगसंक्षये” ॥)

**एडोकं**, क्ली, एड्डूकम् । इति
भरतधृतद्विरूपकोषः ॥

**एणः**, पुं स्त्री, (एति द्रतं गच्छतीति । इ +
बाहुल-
कात् णः ।) हरिणः । इति
राजनिर्घण्टः ॥ मृग-
विशेषः । इत्यमरः ॥ अस्य मांसगुणाः
। कषा-
यत्वम् । मधुरत्वम्
पित्तरक्तकफज्वरनाशित्वम् ।
संग्राहित्वम् । रोचनत्वम् । हृद्यत्वम् ।
बलकारि-

:त्वञ्च । इति राजवल्लभः ॥ (यथा मनुः ३ ।
२६९ ।

“अष्टावेणस्य मांसेन रौरवेण नवैव तु”
॥
अस्य लक्षणं यथा ॥ “एणः कृष्णः
प्रकीर्त्तितः” ।
इति भावप्रकाशस्य पूर्ब्बखण्डे २
भागे ॥)

**एणकः**, पुं, (एण + स्वार्थे कन् ।) एणः । इति शब्द

रत्नावली ॥

**एणतिलकः**, पुं, (एणो मृगस्तिलकमिव यस्य । चन्द्रस्य

मृगाङ्कत्वात्तथात्वम् ।) चन्द्रः । इति
हारावली ॥

**एणभृत्**, पुं, (एणं बिभर्त्तीति । एण + भृ + क्विप् ।)

चन्द्रः । इति हेमचन्द्रः ॥

**एतं**, त्रि, (आ + इण् + क्त ।) आगतम् । इति मेदिनी ॥

कर्व्वूरवर्णयुक्तम् । इत्यमरः ॥ (स्त्रियां
एनी एता ।
पाणिनिः ४ । १ । ३९ ॥)

**एतः**, पुं, (आ सम्यक् एति गच्छतीति । आ + इण्

+ क्त ।) मृगः । इति शब्दरत्नावली ॥
कर्व्वूरवर्णः ।
इति मेदिनी ॥

**एतद्**, त्रि, (इण् + “एतेस्तुट् च” इति उणादि-

सूत्रेण १ । १३२ । अतोऽदि
स्यात्तस्य तुडागमः ।)
पुरोवर्त्तिवाचकसर्व्वनामशब्दः । इति
व्याकरणम् ॥
एइ इति भाषा ।

“एधान् हुताशनवतः स मुनिर्ययाचे” ॥)

**एधः**, [स्] क्ली, (एध् + असुन् ।) इन्धनम् । इत्य-

मरः ॥ (यथा गीतायाम् । ४ । ३७ ।
“यथैधांसि समिद्धोऽग्निर्भस्मसात्
कुरुतेऽर्ज्जुनः” ॥)

**एधतुः**, त्रि, (एध् वृद्धौ “एधिवह्योश्चतुः” १ । ७९

उणादिसूत्रेण चतुः ।) वर्द्धितम् । वृद्धियुक्तम्
।
इति शब्दरत्नावली ॥

**एधतुः**, पुं, (एध + “एधिवह्योश्चतुः” । १ । ७९ ।

उणादिः चतुः ।) पुरुषः । अग्निः । इति
मेदिनी ॥

**एधितः**, त्रि, (एध वृद्धौ + क्त ।) बर्द्धितः । वृद्धि-

प्राप्तः । इत्यमरः ॥

**एनः**, [स्] क्ली, (एति गच्छति प्रायश्चित्तेन । इण्

आगसीत्यसुन् नुडागमश्च ।) पापम् ।
अपराधः ।
इति मेदिनी ॥ निन्दा । इति शब्दरत्नावली
॥
(“एनोनिवृत्तेन्द्रियवृत्तिरेनम्
जगाद भूयो जगदेकनाथः ॥
इति रघुः । ५ । २३ ॥)

**एरका**, स्त्री, तृणविशेषः । तत्पर्य्यायः । गुन्द्रमूला २

शिम्बी ३ गुन्द्रा ४ शरी ५ । यथा भागवते
१ । ३ । १८ ।
“चतुर्द्दशं नारसिंहं बिभ्रद् दैत्येन्द्रमूर्ज्जितम् ।
ददार करजैर्वक्षस्येरकां कटकृद् यथा” ॥)
अस्या गुणाः । हिमत्वम् । शुक्रवृद्धिकारित्वम्
।
चक्षुर्हितत्वम् । वातकोपनत्वम् ।
मूत्रकृच्छ्राश्मरी-
दाहपित्तशोणितनाशित्वञ्च । इति
राजनिर्घण्टः ॥
(यथा वैद्यके,

आमवातनाशित्वञ्च । इति राजनिर्घण्टः ॥
अस्य
भेदकत्वगुणोऽप्यस्ति ॥ श्वेतैरण्डगुणाः ।
कटुत्वम् ।
तिक्तत्वम् । उष्णत्वम् ।
कफार्त्तिज्वरवायुकासना-
शित्वम् । रसार्हत्वञ्च । इति राजनिर्घण्टः ॥
अस्य
मूलगुणाः । शूलवायुकफनाशित्वम् ।
शुक्रकारित्वञ्च ।
इति राजवल्लभः ॥
(शुक्लरक्तैरण्डयोः पर्य्यायगुणा यथा, --
“शुक्ल एरण्ड आमण्डुश्चित्रो गन्धर्व्वहस्तकः ।
पञ्चाङ्गुलो वर्द्धमानो दीर्घदण्डोऽप्यदण्डकः ।
वातारिस्तरुणश्चापि रुवूकश्च निगद्यते ॥
रक्तोऽपरो रुवुकः स्यादुरुवूको रुवूस्तथा ।
व्याघ्रपुच्छश्च वातारिश्चञ्चुरुत्तानपत्रकः ॥
एरण्डयुग्मं मधुरमुष्णं गुरु विनाशयेत् ।
शूलशोथकटीवस्तिशिरःपीडोदरज्वरान् ॥
व्रध्नश्वासकफानाहकासकुष्ठाममारुतान् ।
एरण्डपत्रं वातघ्नं कफक्रिमिविनाशनम् ॥
मूत्रकृच्छ्रहरञ्चापि पित्तरक्तप्रकोपनम् ।
वातार्य्यग्रदलं गुल्मं वस्तिशूलहरं परम् ॥
कफवातक्रिमीन् हन्ति वृद्धिं सप्तविधामपि ।
एरण्डफलमत्युष्णं गुल्मशूलानिलापहम् ॥
यकृत्प्लीहोदरार्शोघ्नं कटुकं दीपनं परम् ।
तद्वन्मज्जा च विड्भेदी वातश्लेष्मोदरापहः” ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
“सतिक्तोषणमेरण्डतैलं स्वादु सरं गुरु ।
व्रध्नगुल्मानिलकफानुदरं विषमज्वरम् ॥
रुक्शोफौ च कटीगुह्यकुष्ठपृष्ठाश्रयाञ्जयेत् ।
तीक्ष्णोष्णं पिच्छिलं विस्रं रक्तैरण्डोद्भवन्त्विति”
॥
इति शार्ङ्गधरस्य पूर्ब्बखण्डे चतुर्थेऽध्याये ॥
“एरण्डतैलं मधुरमुष्णं तीक्ष्णं दीपनं कटुकषा-
यानुरसं सूक्ष्मं स्रोतोविशोधनं त्वच्यं वृष्यं
मधुर-
विपाकं वयःस्थापनं योनिशुक्रविशोधनमारो-

("एते वयममी दाराः कन्येयं
कुलजीवितम्" ।
इति कुमारे ६ । ६३ ॥ "एतान्
महाराज विशेष-
धर्म्मान्" । इति शुद्धितत्त्वम् । उक्तस्य
पश्चादुक्तौ
"द्वितीयाटौस्मेनः" २ । ४ । ३४ ।
इति एणादेशः
स्यात् । यथा "य एनामाश्रमधर्म्मे
नियङ्क्ते" ।
इति शाकुन्तले प्रथमाङ्के ॥)

**एतनः**, पुं, (आङ् + इ + तन ।) निश्वासः । इति हेमचन्द्रः ॥

**एतर्हि**, व्य, (इदम् + "इदमोर्हिल्" । ५ । ३ । १६ ।

इति र्हिल् ततो "एतेतौ रथोः" ५ । ३
। ४ ।
इति एतादेशः ।) एतस्मिन् काले ।
सम्प्रति ।
इत्यमरः ॥ (यथा भागवते १ । १७ ।
४२ ।
"स एष एतर्ह्यध्यास्त आसनं
पार्थिवोचितम्" ॥)

**एतशः**, पुं, (इण् + "इणस्तशन्तशसुनौ" ३ । १४९ ।

इति उणादिसूत्रेण तशन् ।) ब्राह्मणः ।
इत्यु-
णादिकोषः ॥

**एतशाः**, [स्] पुं, (इण् + "इणस्तशन्तशसुनौ"

३ । १४९ इति उणादिसूत्रेण तशसुन्
।) ब्राह्मणः ।
इत्युणादिकोषः ॥

**एतावत्,** त्रि, (एतद् + "यत्तदेतेभ्यः परिमाणे वतुप्" ।

५ । २ । ३९ । इति परिमाणे वतुप् ।
(एतत्परि-
माणम् । इति व्याकरणम् ॥ (यथा
रघुः २ । ५१ ।
"एरका शिशिरा वृष्या चक्षुष्या वातकोपिनी ।
मूत्रकृच्छ्राश्मरीदाहपित्तशोणितनाशिनी" ॥
एषा यत्र व्यवह्रियते तद्यथा, --
"निर्व्वापणः स्याज्जलमेरका च" ।
इति चरके सूत्रस्थाने तृतीयेऽध्याये ॥
"एरका
होग्गलः" । इति चरकस्य शिवदासीयटीका
॥)

**एरङ्गः**, पुं, (एरति सम्यक् भ्रमति यः । आ + ईर-

गतौ कम्पने + अङ्गच् ।) मत्स्यभेदः । रङ्गा
इति
ख्यातः । अस्य गुणाः । मधुरत्वम् ।
स्निग्धत्वम् ।
विष्टम्भित्वम् । शीतलत्वम् । गुरुत्वञ्च । इति
भाव-
प्रकाशः ॥

**एरण्डः** पुं, (एरयति वायुम् । आ + ईर गतौ कम्पने

च + बाहुलकात् अण्डच् ।) वृक्षविशेषः ।
भेरेण्डा
इति भाषा । तत्पर्य्यायः । व्याघ्रपुच्छः २
गन्धर्व्व-
हस्तकः ३ उरुवूकः ४ रुवूकः ५ चित्रकः ६
चञ्चुः
७ पञ्चाङ्गुलः ८ मण्डः ९ वर्द्धमानः १०
व्यडम्बकः
११ । इत्यमरः ॥ उरुवुकः १२ रुवुकः १३
रूवुकः
१४ रुवकः १५ वुकः १६ अमण्डः १७
आमण्डः
१८ व्यडम्बनः १९ । इति तट्टीकायां भरतः
॥
कान्तः २० तरुणः २१ शुक्लः २२
वातारिः २३
दीर्घपत्रकः २४ । इति राजनिर्घण्टः ॥ अस्य
तैलस्य गुणाः । मधुरत्वम् । गुरुत्वम् ।
अतिश्लेष्म-
वर्द्धनत्वम् ।
वातरक्तगुल्महृद्रोगजीर्णज्वरनाशि-
ग्यमेधाकान्तिस्मृतिबलकरं
वातकफहरमधोमाग-
दोषहरञ्च" ॥
इति सुश्रुते सूत्रस्थाने पञ्चचत्वारिंशत्तमेऽध्याये
॥)

**एरण्डकः**, पुं, (एरण्ड + स्वार्थे कन् ।) एरण्डवृक्षः ।

इति भरतो द्विरूपकोषश्च ॥ (एरण्डशब्देऽस्य
विशेषो ज्ञेयः ॥)

**एरण्डजं**, त्रि, (एरण्डात् एरण्ड्वृक्षात् जायते इति ।

एरण्ड + जन् + ड ।) एरण्डवृक्षजातम् । तत्तैलं
स्नेहमध्ये श्रेष्ठविरेचकम् । यथा ।
"चूर्णमध्ये त्रिवृत्चूर्णं स्वोरसे कारवेल्लकम् ।
स्नेहेष्वेरण्डजं तैलं फलेष्वेव हरीतकी" ॥
इति वाभटः ॥
("एरण्डजं घनञ्चापि स्वादुमेव मृदु स्मृतम् ।
हृद्वस्तिजङ्घाकट्यूरुशूलानाहविबन्धनुत् ॥
आनाहाष्ठीलवान्तासृक्प्लीहोदावर्त्तशूलिनाम् ।
वातपित्तविकाराणां विदध्याच्च प्रशान्तये ।
तीक्ष्णोष्णं पिच्छिलं विस्रं रक्तैरण्डसमुद्भवम्" ॥
इति प्रथमस्थाने अष्टमेऽध्याये हारीतेनोक्तम् ॥)

**एरण्डपत्रिका**, स्त्री, (एरण्डस्य पत्रमिव पत्रमस्याः ।)

दन्तीवृक्षः । इति राजनिर्घण्टः ॥

**एरण्डफला**, स्त्री, (एरण्डस्य फलमिव फलमस्याः ।)

“एतावदुक्त्वा विरते मृगेन्द्रे
प्रतिस्वनेनास्य गुहागतेन” ॥)

**एध**, ङ, वृद्धौ । इति कविकल्पद्रुमः ॥ (भ्वादिं-
आत्मं-अकं-सेट् ।) ङ एधते । इति
दुर्गादासः ॥
(यथा मनुः ४ । १७० ।
“हिंसारतश्च यो नित्यं नेहासौ
सुखमेधते” ॥)

**एधः**, पुं, (इध्यतेऽनेनाग्निः । इन्ध + “हलश्च” ३ ।
३ । १२१ । इति करणे घञ् ।
अवोदैधौद्मप्रश्रथ-
हिमश्रथा” इति घञि नलोपो गुणश्च
निपा-
तितः ॥) इन्धनम् । इत्यमरः ॥
जालानि काठ
इति भाषा । (यथा रघौ ९ । ८१

त्वञ्च । इति राजवल्लभः ॥ अपि च ।
कृमिदोष-
सकलाङ्गशूलकुष्ठनाशित्वम् । स्वादुत्वम् ।
रसाय-
नोत्तमत्वम् । पित्तप्रकोपनत्वम् ।
अतिदीपनत्वम् ।

:दन्तीवृक्षः । इति राजनिर्घण्टः ॥

(अस्याः पर्य्याया यथा, --
"लघुदन्ती विशल्या च स्यादुदुम्बरपर्ण्यपि ।
तथैरण्डफला शीघ्रा श्येनघण्टा घुणप्रिया !
वाराहाङ्गी च कथिता निकुम्भश्च मकूलकः" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**एरण्डा**, स्त्री, (आ + ईर् + बाहुलकात् अण्डच् + टाप् ।) पिप्पली । इति शब्दचन्द्रिका ॥

**एर्व्वारुः**, पुं, (एरणमिति । आ + ईर् + सम्पदादित्वात् क्विप् । एरं वृणोति वारयति वा । वृञ् + बाहुलकात् उण् ।) कर्कटीभेदः । तत्पर्य्यायः । व्यालपत्रा २ लोमशा ३ स्थूला ४ तोयफला ५ हस्तिदन्तफला ६ कर्कटी ७ । अस्य गुणाः । पित्तहरत्वम् । सुशीतलत्वम् । मधुरत्वम् । मूत्रामयघ्नत्वम् । रुचिप्रदत्वम् । सन्तापमूर्च्छापहरत्वम् तृप्तिदातृत्वम् । अतिसेवितश्चेत् वातप्रकोपकारित्वञ्च । इति राजनिर्घण्टः ॥
("एर्व्वारुकं स्वादु शीतं सक्षारं कफवातकृत् ।
नातिपित्तकरं रुच्यं दीपनं दाहनाशनम्" ॥
इति प्रथमस्थाने दशमेऽध्याये हारीतेनोक्तम् ॥
"त्रपुषैर्व्वारुकं स्वादु गुरु विष्टम्भि शीतलम् ।
एर्व्वारुकञ्च सम्पक्वं दाहतृष्णाक्लमार्त्तिनुत्" ॥
हन्ति कण्डूव्रणच्छर्द्दितृट्कासारुचिहृद्रुजः ॥
बलासविषपित्तास्रकुष्ठमूत्रगदक्रिमीन्" ।
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**एलविलः**, पुं, ऐलविलः । कुवेरः । इत्यमरटीका ॥

**एला**, स्त्री, (इल् + अच् + टाप् ।) फलवृक्षविशेषः । एलाचि इति भाषा । तत्पर्य्यायः । बहुलगन्धा २ ऐन्द्री ३ द्राविडी ४ कपोतपर्णी ५ बाला ६ बलवती ७ हिमा ८ चन्द्रिका ९ सागरगामिनी १० गन्धालीगर्भः ११ एलीका १२ कायस्था १३ । इति राजनिर्घण्टः ॥ सा द्विविधा सूक्ष्मा । गुजराटी एलाचि इति भाषा । स्थूला च । वड एलाचि इति भाषा । आद्यायाः पर्य्यायः । उपकुञ्चिका १ तुत्था २ कोरङ्गी ३ त्रिपुटा ४ त्रुटिः ५ । इत्यमरः ॥ वयस्था ६ तीक्ष्णगन्धा ७ सूक्ष्मैला ८ त्रिपुटी ९ । इति रत्नमाला ॥ द्वितीयायाः पर्य्यायः । पृथ्वीका २ चन्द्रबाला ३ निष्कुटिः ४ बहुला ५ । इत्यमरः ॥ स्थूला ६ मालेया ७ ताडकाफलम् ८ । इति रत्नमाला ॥ एलाद्वयगुणाः । शीतलत्वम् । तिक्तत्वम् । उष्णत्वम् । सुगन्धित्वम् । पित्तरोगकफनाशित्वम् । हृद्रोगकारित्वम् । मलापार्थान्ययोगस्तादात्म्यम् । विशेषणसङ्गतस्य एवकारस्य अयोगव्यवच्छेदोऽर्थः । शङ्खः पाण्डुर एव इत्यादौ विशेष्ये शङ्खे पाण्डुरत्वायोगव्यवच्छेदबोधात् । क्रियासङ्गतस्य एवकारस्य चात्यन्तायोगव्यवच्छेदोऽर्थः । सम्भवाभिप्रायके नीलं सरोजं भवत्येव इत्यादौ अन्वयितावच्छेदकसरोजत्वसामानाधिकरण्येन सरोजनीलभवनकर्त्तृत्वात्यन्तायोगव्यवच्छेदबोधादिति सम्प्रदायः ॥)
गमनकर्त्तरि त्रि । इति सिद्धान्तकौमुदी (यथा ऋग्वेदे ६ । ५१ । २ । "ऋजुमर्तेषु वृजिन च पश्यन्नभिचष्टे सूरो अर्य एवान्" ॥ अश्वे पुं, यथा, ऋग्वेदे । १ । १५८ । ३ । "उप वामवः शरणम् गमेयं शूरो नाज्म पतयद्भिरेवः" ॥ "एवैरश्वैः" इति भाष्यम् । गमने क्ली । यथा, ऋग्वेदे १ । १२९ । ३ । "एवेन सद्यः पर्य्येति पार्थिवम्" । "एवेन गमनेन" । इति । भाष्यम् ॥)

**एवं**, व्य, साम्यम् । सादृश्यम् । यथा । अग्निरेवं विप्रः । अग्निरिवेत्यर्थः । तत्पर्य्यायः । वत् २ वा ३ यथा ४ तथा ५ इव ६ । वत्स्थाने व इति केचित् पठन्ति । अयं प्रकारः । (यथा, कुमारे । ६ । ८४ ।
"एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी" ॥)

इति सूत्रस्थाने सप्तविंशेऽध्याये चरकेणोक्तम् ॥)

**एलकः**, त्रि, (एलति विग्रहादिस्थले आत्मानं क्षिप-
तीति इल् + ण्वुल् ।) मेषः । इति राजनिर्घण्टः ॥

**एलङ्गः**, पुं, (एरङ्गः + रस्य लः ।) मत्स्यभेदः । रायकडा
इति भाषा । रायखाँडा एलाङ्गा इत्यपि ख्यातः ।
अस्य गुणाः । मधुरत्वम् । वृष्यत्वम् । संग्राहित्वम् ।
कफवातनाशित्वम् । मेधाग्निपुष्टिकारित्वम् । शी-
तलत्वम् । गुरुत्वम् । श्लेष्मप्रसादनत्वञ्च । इति
राजनिर्घण्टः ॥ (यथा वैद्यकचक्रपाणिकृतद्रव्यगुणे मांसवर्गाधिकारे ॥
"एलङ्गः स्निग्धो मधुरो गुरुविष्टम्भिशीतलः" ॥)

**एलबालु**, क्ली, (एलतीति । इल प्रेरणे पचाद्यच् ।
टाप् । एलेव बलते । बल प्राणने । बाहुलकात्
उण् । ङयापोरिति ह्रस्वः ।) एलबालुकम् । इति
शब्दरत्नावली ॥ (यत्र व्यवह्रियते तद्यथा, रोध्रा-
दिगणे ॥
"सैलबालु परिपेलवमोचाः" ॥
इति वाभटे सूत्रस्थाने पञ्चदशेऽध्याये ॥)

**एलबालुकं**, क्ली, (एलबालु + स्वार्थे कन् ।) सुगन्धि-
द्रव्यविशेषः । लालुका इति ख्यातम् । तत्पर्य्यायः ।
ऐलेयम् २ सुगन्धि ३ हरिबालुकम् ४ बालुकम् ५
र्त्तिवान्तिपुंस्त्वघ्नत्वम् । स्थविरस्य गुणाढ्यत्वञ्च ।
इति राजनिर्घण्टः ॥ अपिच । शूलकोष्ठबद्ध-
तृष्णाच्छर्द्दिवायुनाशित्वम् । इति राजवल्लभः ॥
सूक्ष्मैलाविशेषगुणाः । कफश्वासकासार्शोमूत्र-
कृच्छ्रनाशित्वम् । इति राजनिर्घण्टः ॥
("एला स्थूला च बहुला पृथ्वीका त्रिपुटापि च" ।
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**एलापत्रः**, पुं, (एलापत्रमिवाकारोऽस्त्यस्य ।
अर्शआदेरच् ।) नागभेदः । इति जटाधरः ॥
(यथा महाभारते आस्तीके पर्ब्बणि १ । ३५ । ६ ।
"नागस्तथा पिञ्जरक एलापत्रोऽथ वामनः" ॥)

**एलापर्णी**, स्त्री, (एलाया इव पर्णमस्याः । "पाक-
कर्णेति" । ४ । १ । ६४ । ङीष् ।) वृक्षविशेषः ।
काँटा आमरुली एलानी इति च भाषा । तत्-
पर्य्यायः । सुवहा २ रास्ना ३ युक्तरसा ४ । इत्य-
मरः ॥

**एलीका**, स्त्री, (आ + इल् + ईकन् + टाप् ।) सूक्ष्मैला ।
इति राजनिर्घण्टः ॥ (द्राविडीशब्देऽस्या गुणा-
दयो ज्ञातव्याः ॥)

**एव**, व्य, (अयनमिति । इण् + "इणशीभ्यां वन्" ।
१ । ५२ । उणादिः वन् ।) अवधारणम् । यथा ।
त्वमेव जानासि । तत्पर्य्यायः । एवम् २ तु ३ पुनः
तत्पर्य्यायः । इत्थम् २ । अवधारणम् । इत्यमरः ॥
यथा । एवमेतत् । अस्य पर्य्यायः एवशब्दे लि-
खितः । अङ्गीकारः । अर्थप्रश्नः । परकृतिः ।
पृच्छा । इति मेदिनी ॥

**एष** ऋ ङ गतौ । इति कविकल्पद्रुमः ॥ भ्वादिं-
आत्मं-सकं-सेट् ।) ऋ मा भवान् एषिषत् ।
ङ एषते । इति दुर्गादासः । (यथा, भागवते ३ । १४ । ४५ ।
"स वै वत भ्रष्टमतिस्तवैषते
यः कर्म्मणां पारमपारकर्म्मणाम्" ॥)

**एषः**, पुं, पुरोवर्त्तिपुरुषः । एतद्शब्दस्य पुंलिङ्गे
प्रथमैकवचने रूपमिदम् ॥

**एषणः**, पुं, (इष् + ल्यु ।) लौहमयबाणः । इति
हलायुधः ॥ (यथा, भागवते ७ । ९ । ३९ ।
"कामातुरं हर्षशोकभयैषणार्त्तं
तस्मै कथं तव पतिं विमृ शमि दीनः" ॥)

**एषणिका**, स्त्री, (इष्यतेऽनया । इष् गतौ + ल्युट् +
स्वार्थे कन् ततो टाप् इत्वञ्च ।) स्वर्णकारादीनां
तुला । निक्ति इति भाषा । तत्पर्य्यायः । नाराची
२ । इत्यमरः ॥

**एषणी**, स्त्री, (इष्यते अनया, इष् + ल्युट् + ङीष् ।)
व्रणमार्गानुसारिणी । वेलकार इति भाषा ।
तुलाभेदः । इति मेदिनी ॥ निक्ति इति भाषा ॥

**एषा**, स्त्री, (इषु श वाञ्छे + टाप् ।) इच्छा । इति
जटाधरः ॥ एतद्शब्दस्य स्त्रीलिङ्गेऽपि रूपमिदम् ॥

| | | |
|---|---|---|
| इत्यमरः ॥ हरिवासुकम् ६ । इति तट्टीका ॥ आलु-<br>कम् ७ एल्वबालुकं ८ कपित्थत्वक् ९ गन्धत्वक् १०<br>कुष्ठगन्धि ११ । अस्य गुणाः । अत्युग्रत्वम् । कषा-<br>यत्वम् । कफवातमूर्च्छातिज्वरदाहनाशित्वम् ।<br>परमरुचिकारित्वञ्च । इति राजनिर्घण्टः ॥<br>कक्कोलसदृशं कुष्ठगन्धि ॥ अस्य पर्य्यायगुणाः ॥<br>“एलबालुकमैलेयं सुगन्धि हरिबालुकम् ।<br>ऐलबालुकमेलालु कपित्थं पत्रमीरितम् ॥<br>एल्वालु कटुकं पाके कषायं शीतल लघु । | ४ वा ५ । इत्यमरः ॥ व ६ च ७ । इति सुभूतिः ॥<br>सादृश्यम् । इति भरतः । नियोगः । वाक्यपूरणम् ।<br>चारनियोगः । विनिग्रहः । इति मेदिनी ॥ (अनि-<br>योगः । यथा “अद्येव” इति मुग्धबोधव्याकरणम् ।<br>एवकारस्त्रिविधः । विशेष्यसङ्गतः विशेषेण-<br>सङ्गतः क्रियासङ्गतश्चेति । तत्र विशेष्यसङ्ग-<br>तस्य एवकारस्य अन्ययोगव्यवच्छेदोऽर्थः । पार्थ-<br>एव धनुद्‌र्ध्वर इत्यादौ विशेषणे धनुद्‌र्ध्वरे पार्था-<br>न्ययोगव्यवच्छेदाबोधात् । धनुद्‌र्ध्वरपदस्य उत्कृष्ट-<br>धनुद्‌र्ध्वरे लाक्षणिकत्वात् तथैव तात्पर्य्यात् । | |

**ऐ**

**ऐ** ऐकारः । स तु द्वादशस्वरवर्णः । अस्योच्चारण-
स्थानं तालु कण्ठश्च । ("एदैतोः कण्ठतालु" इ-
त्युक्तः । तथाच शिक्षायाम् । "ए ऐ तु कण्ठ-
तालव्यावोऔ कण्ठौष्ठजौ स्मृतौ" ॥) स च
ह्रस्वो न भवति । (द्विमात्रत्वात् दीर्घस्त्रिमात्र-
त्वात् प्लुतश्च भवति ।
उदात्तानुदात्तस्वरितभेदै-
स्त्रिविधोऽपि पुनः
प्रत्येकमनुनासिकाननुनासिक-
भेदाभ्यां षड्विध एव ॥)
"ऐकारं परमं दिव्यं महाकुण्डलिनी स्वयम् ।
कोटिचन्द्रप्रतीकाशं पञ्चप्राणमयं सदा ॥
ब्रह्मविष्णुमयं वर्णं तथा रुद्रमयं प्रिये ।
सदाशिवमयं वर्णं विन्दुत्रयसमन्वितम्" ॥
इति कामधेनुतन्त्रम् ॥ (वङ्गीयभाषायाम्) तस्य
लेखनप्रकारो यथा, --
"एकाररूपमध्ये तु किञ्चिद्दक्षे तदोर्द्ध्वतः ।
चन्द्रेन्द्रभानवस्तासु मात्रा शक्तिः क्रमात्
स्मृताः ॥
त्रिधा शक्तिमयी पूर्ब्बा दुर्गा वाणी सरस्वती" ।
इति वर्णोद्धारतन्त्रम् ॥ * ॥ तन्नामानि यथा, --
"ऐर्लज्जा भौतिकः कान्ता वायवी मोहिनी
विभुः ।
दक्षा दामोदरप्रज्ञोऽधरो विकृतमुख्यपि ॥
क्षमात्मको जगद्योनिः परः परनिबोधकृत् ।
ज्ञानामृता कपर्द्दिश्रीः पीठेशोऽग्निः समातृकः ॥
त्रिपुरा लोहिता राज्ञी वाग्भवो भौतिकासनः ।
महेश्वरो द्वादशी च विमलश्च सरस्वती ॥
कामकोटो वामजानुरंशुमान् विजयो जटा" ।
इति तन्त्रशास्त्रम् ॥ दन्तान्तः । योनिः । इति
वीजवर्णाभिधानम् ॥ (अनुबन्धविशेषः । यथाह
कविकल्पद्रुमः । ("ऐर्यजादिः स्यादोर्निष्ठातन
औरनिट्" । एतेन यजादिगणीयत्वात् "ऐ वसौ
निवासे इत्यस्य लिटिप्रभृतिषु सम्प्रसारणे कृते
इत्यादि माहेश्वरकवचम् ॥

**ऐकाहिकज्वरः**, पुं, (ऐकाहिक एकाहभवो ज्वरः ।)
एकदिनान्तरागतज्वरः । तस्यौषधं यथा, --
"पीतं वृश्चिकमूलन्तु पर्य्युषितजलेन वै ।
सार्द्धं विनाशयेद्दाहं ज्वरञ्च परमेश्वर ! ॥
शिखायाञ्चैव तद्बद्धं भवेदैकाहिकादिनुत् ।
एतत् सकाञ्जिकं पीतं रक्तकुष्ठज्वरादिनुत् ॥
वास्योदकेन पीतं तत् वृहद्विषहरं भवेत्" ।
इति गारुडे १९३ अध्यायः ॥
("ऐकाहिको द्याहिकश्च स्त्र्याहिकश्च
तथापरः" ।
"मुस्तामृतामलक्यश्च नागरं
कण्टकारिका ।
कणाचूर्णान्वितः क्वाथस्तथा
मधुसमन्वितः ॥
ऐकाहिकं वा वेलाद्यं ज्वरजातं व्यपोहति ।
वानरेन्द्रमुखं दिव्यं तरुणादित्यतेजसम् ॥
ज्वरमैकाहिकं घोरं तत्क्षणादेव नश्यति ।
वानराकृतिमालिख्य खटिकाभिः पुनः
शृणु ॥
गन्धपुष्पाक्षतैर्धूपैरर्च्चयेद्भिषजां वरः" ।
मन्त्रो यथा,
ॐ हां ह्रीं श्रीं सुग्रीवाय महाबलपराक्रमाय
सूर्य्यपुत्त्राय अमिततेजसे ऐकाहिक-द्व्याहिक-
त्र्याहिक-चातुर्थिक-महाज्वर-भूतज्वर-भयज्वर-
शोकज्वर-क्रोधज्वर-वेलाज्वर-
प्रभृतिज्वराणां बन्ध
बन्ध ह्रां ह्रीं ह्रूं फट् स्वाहा । इति हारीते चि-
कित्सास्थाने । २ अध्याये ॥)

**ऐक्यं**, क्ली, (एक + भावे ष्यञ् ।) एकस्य भावः ।
श्चर्म्मादि । इत्यमरः ॥ स्त्रीणां
रतिबन्धविशेषः ।
इति हेमचन्द्रः ॥

**ऐतिह्यं**, क्ली, (इतिह उपदेशपारम्पर्य्यम् । तदेव ।
इतिह "अनन्तावसथेतिहभेषजाञ् ञ्यः" । ५ ।
४ । २३ । इति स्वार्थे ञ्यः ।)
पारम्पर्य्योपदेशः ।
तत्पर्य्यायः । इतिह । इत्यमरः ॥ (यथा
रामायणे
। ५ । ८७ । २३ ।
"ऐतिह्यमनुमानञ्च प्रत्यक्षमपि चागमम् ।
ये हि सम्यक् परीक्षन्ते
कुतस्तेषामबुद्धिता" ॥
"ऐतिह्यं नाम आप्तोपदेशो वेदादिः" ।
इति विमानस्थाने । ८ अ । चरकेणोक्तम्
॥)

**ऐन्दवं**, क्ली, (इन्दुर्देवता यस्य । इन्दु + अण् ।) मृग-
शिरोनक्षत्रम् । इति ज्योतिषम् ॥ यथा ।
मात्स्ये ।
"अश्विनी रेवती मूलमुत्तरत्रयमैन्दवम् ।
स्वाती हस्तानुराधा च गृहारम्भे
प्रशस्यते" ॥
ऐन्दवं मृगशिरः । इति मठप्रतिष्ठातत्त्वम्
॥
(इन्दोश्चन्द्रस्य इदम् । चन्द्रसम्बन्धिनि,
त्रि । यथा,
मनुः ११ । १२५ ।
"सङ्करापात्रकृत्यासु मासं शोधनमैन्दवम्
।
मलिनीकरणीयेषु तप्तः
स्याद्यावकैस्त्र्यहम्" ॥)

**ऐन्दवी**, स्त्री, (ऐन्दव + ङीप् ।) सोमराजी । इति
वैद्यकम् ॥

उवास इत्यादयो भवेयुः" ॥ मातृकान्यासे अधरे
न्यस्यतया तदाख्ययाप्यभिधानम् । मातृकान्यास-
मन्त्रो यथा । "एं नम ओष्ठे ऐं नमोऽधरे" ॥
इति ॥)

**ऐ**, व्य, (एतीति । आ + इण् + विच् ।) आह्वानम् ।
स्मरणम् । आमन्त्रणम् । इति मेदिनी ॥

**ऐः** पुं, (एति प्राप्नोति सर्व्वम् । आङ् + इण् + विच् ।)
महेश्वरः । इति एकाक्षरकोषः ॥

**ऐकागारिकः**, त्रि, (एकमसहायमगारं प्रयोजनमस्य ।
"ऐकागारिकट् चौरे" ५ । १ । ११३ इति इकट्
वृद्धिश्च निपातनात् ।) चौरः । इत्यमरः । एका-
गारवासी ॥

**ऐकाहिकं**, त्रि, (एकाहे भवम् । एकाह + ठक् ।)
एकाहनिष्पन्नम् । एकदिनान्तरभवम् । इति वैद्य-
कम् ॥
(वैद्यकगोपालकृष्णकविभूषणकृतकषाय-
संग्रहे दास्यादिपाचने यथा । "भूतोत्थं विषमं
त्रिदोषजजनितञ्चैकाहिकं द्व्याहिकम् ॥
"काकजङ्घा बला श्यामा ब्रह्मदण्डी कृताञ्जलिः ।
पृश्निपर्णी त्वपामार्गस्तथा भृङ्गराजोऽष्टमः ॥
एषामन्यतमं मूलं पुष्येणोद्धृत्य यत्नतः ।
रक्तसूत्रेण संवेष्ट्य बद्धमैकाहिकं जयेत्" ॥
इति वैद्यकचक्रपाणिसंग्रहे ज्वराधिकारे ॥)
एकाहभवम् । यथा, --
"ऐकाहिकं द्वितीयस्थं तृतीयकचतुर्थकम्" ।
एकता । एकत्वम् । एकीभावः । यथा । शारदा-
याम् ।
"गुरोर्ल्लब्ध्वा पुनर्व्विद्यामष्टकृत्वो जपेत् सुधीः ।
गुरुविद्यादेवतानामैक्यं सम्भावयन् धिया ॥
प्रणमेद्दण्डवद्भूमौ गुरुं तं देवतात्मकम्" ।
इति दीक्षातत्त्वम् ॥

**ऐक्षवं**, त्रि, (इक्षोर्विकारः । इक्षु + अण् ।) इक्षु-
विकारः । इक्षुसम्बन्धिगुडादि । इति स्मृतिः ॥
(अस्य गुणादय इक्षुशब्दे ज्ञातव्याः ॥)

**ऐक्षवं**, क्ली, (इक्षोर्भवम् । इक्षु + अण् ।) इक्षुभव-
गुडादि । यथा, --
"कदली लवणी धात्री फलान्यगुडमैक्षवम् ।
अतैलपक्वं मुनयो हविष्यान्नं विदुर्ब्बुधाः" ॥
इति तिथ्यादितत्त्वम् ॥ इक्षुगुडादिगुणा इक्षुशब्दे
ज्ञातव्याः ॥)

**ऐङ्गुदं**, क्ली, (इङ्गुद्या इदम् । "प्लक्षादिभ्योऽण्"
४ । ३ । १६४ । विधानसामर्थ्यान्नाणो लुक् ।) इङ्गु-
दीवृक्षस्य फलम् । इत्यमरः ॥
("स्निग्धोष्णं तिक्तमधुरं
वातश्लेष्मघ्नमैङ्गुदम्" ॥
इति सूत्रस्थाने । ४६ अ । सुश्रुतेनोक्तम् ॥)

**ऐडुकं**, क्ली, (एडुक एव । स्वार्थे अण् ।) एडूकम् ।
इति भरतो द्विरूपकोषश्च ॥

**ऐणं**, त्रि, (एणस्य इदम् । एण + अण् ।) एणस्य
चर्म्मादि । इत्यमरः ॥

**ऐणिकः**, त्रि, (एणं मृगं हन्तीति । एण + ठक् ।)

**ऐन्द्रं**, क्ली, (इन्द्रो देवता यस्य । इन्द्र + अण् ।) ज्येष्ठा-
नक्षत्रम् । इति जटाधरः ॥ मूलविशेषः । वन
आदा इति भाषा । तत्पर्य्यायः । वनार्द्रका २
वनजा ३ अरण्यजार्द्रका ४ । अस्य गुणाः । कटु-
त्वम् । अम्लत्वम् ।
रुचिबलाग्निकारित्वञ्च । इति राजनिर्घण्टः ॥ (इन्द्रस्य इदम् ।) इन्द्रसम्बन्धिनि
त्रि । (यथा मनुः ५ । ९३ ।
"न राज्ञामघदोषोऽस्ति व्रतिनां न च सत्रिणाम् ।
ऐन्द्रं स्थानमुपासीना ब्रह्मभूता हि ते सदा" ॥
"ऐन्द्रंस्थानं राज्याभिषेकाख्यं आधिपत्यकारणम्"
इति तट्टीकायां कुल्लूकभट्टः ॥ तथा रघुः २ । ५० ।
"महीतलस्पर्शनमात्रभिन्न-
मृद्धं हि राज्यं पदमैन्द्रमाहुः" ॥
"ऐन्द्रमम्बु सुपात्रस्थमविपन्नं सदा पिबेत्" ॥
इति वाभटे सूत्रे । ५ अ ॥)
(इन्द्रस्यापत्यं पुमान् ।) बालिवानरे
(अर्ज्जुने जयन्ते
च पुं ॥ जलविशेषः ।)

**ऐन्द्रजालिकः**, पुं, (इन्द्रजालेन दीव्यतीति । इन्द्रजाल
+ ठक् ।) इन्द्रजालकारकः । तत्पर्य्यायः । प्रती-
हारकः २ मायाकारकः ३ कौसुतिकः ४ मायावी
५ व्यंसकः ६ मायी ७ मायिकः ८ । इति जटा-
धरः ॥

**ऐन्द्रलुप्तिकः**, त्रि, केशघ्नरोगविशिष्टः । टेको इति

| | | |
|---|---|---|
| | एणहन्ता । इति व्याकरणम् ॥<br>**ऐणेयं**, त्रि, (एण्या इदम् । एणी + ढञ् ।) एण्या- | भाषा । तत्पर्य्यायः । खल्लीटः २ खलतिः ३ । इति भूरिप्रयोगः ॥<br>**ऐन्द्रिः**, पुं, (इन्द्रस्यापत्यं पुमान् । इन्द्र + इञ् ।) जयन्तनामा इन्द्रपुत्त्रः । काकः । इति मेदिनी ॥ (“ऐन्द्रिः किल नखैस्तस्याः विददार स्तनौ द्विजः” । इति रघुवंशे । १२ । २२ ॥) बालिनामवानराजः । इति त्रिकाण्डशेषः ॥ अर्ज्जुनः । इति हेमचन्द्रः ॥ |

**ऐन्द्रियकं**, त्रि, (इन्द्रियेणानुभूयते । इन्द्रिय +
वुञ् ।) प्रत्यक्षम् । इन्द्रियग्राह्यम् ।
इत्यमरः ॥
(व्याधिविशेषः । यथा, --
“मिथ्याभियोगहीनेभ्यो यो
व्याधिरुपजायते ।
शब्दादीनां स विज्ञेयो व्याधिरैन्द्रियको
बुधैः ॥
वेदनानामशान्तानामित्येते हेतवः स्मृताः
।
सुखहेतुर्मतस्त्वेकः समयोगः सुदुर्ल्लभः ॥
नेन्द्रियाणि न चैवार्थाः सुखदुःखस्य
हेतवः ।
हेतुस्तु सुखदुःखस्य योगो दृष्टश्चतुर्व्विधः
॥
सन्तीन्द्रियाणि सन्त्यर्था योगो न च न
चास्ति रुक् ।
न सुखं कारणं तस्मात् योगएव चतुर्व्विधः
॥
नात्मेन्द्रियमनोबुद्धिगोचरं कर्म्म वा विना ।
सुखं दुःखं यथा यच्च बोद्धव्यं
तत्तथोच्यते ॥
स्पर्शनेन्द्रियसंस्पर्शः स्पर्शो मानस एव च
।
द्विविधः सुखदुःखानां वेदनानां प्रवर्त्तकः ।
इच्छा द्वेषात्मिका तृष्णा सुखदुःखात्
प्रवर्त्तते ॥
तृष्णा च सुखदुःखानां कारणं पुनरुच्यते ।
उपादत्ते हि सा भावान् वेदनाश्रयसंज्ञकान्
॥
स्पृश्यते नानुपादाने न स्पृष्टो वेत्ति वेदनाः
।
वेदनानामधिष्ठानं मनो देहश्च सेन्द्रियः ॥
केशलोमनखाग्रान्नमलद्रवगुणैर्विना” ।
इति चरके शारीरे १ अः ॥)

**ऐन्द्री**, स्त्री, (इन्द्रस्य शक्रस्य इयम् । इन्द्र +
“तस्ये-
समुद्रमथनोत्थितत्वादस्य तथात्वम् । यद्वा
इरा-
वत्या विद्युत अयं तस्येदमित्यण् ४ । ३ ।
१२० ।)
इन्द्रहस्ती । स तु शुक्लवर्णः चतुर्द्दन्तः
समुद्र-
मथनोत्थितः पूर्ब्बदिग्गजश्च । तत्पर्य्यायः ।
अभ्र-
मातङ्गः २ ऐरावणः ३ अभ्रमुवल्लभः ४ ।
इत्य-
मरः ॥ श्वेतहस्ती ५ चतुर्द्दन्तः ६ मल्लनागः
७
इन्द्रकुञ्जरः ८ हस्तिमल्लः ९ सदादानः १० ।
इति
जटाधरः ॥ सुदामा ११ श्वेतकुञ्जरः १२
गजाग्रणीः
१३ नागमल्लः १४ । इति शब्दरत्नावली ॥
(यथा,
कुमारे । ३ । २२ ॥
(“ऐरावतास्फालनकर्कशेन” ।
“प्रावृषेण्यं पयोवाहं विद्युदैरावताविव” ।
इति रघौ । १ । ३६ ॥)
नागरङ्गः । लकुचवृक्षः । नागभेदः । इति
मेदिनी ॥
(“ऐरावतं दन्तशठमम्लं शोणितपित्तकृत्” ।
इति
सूत्रे । ४६ अः । सुश्रुतेनोक्तम् ॥) (इरावत्या
नद्याः
सन्निकृष्टो देशः । इरावती + अण् । यथा,
महा-
भारते ३ । १६२ । ३३ ।
“बभूव परमाश्वानामैरावतपथे यथा” ॥)

**ऐरावती**, स्त्री, (इरा जलानि विद्यन्तेऽस्य इरावान्
मेघस्तस्य इयं । इरावत् + “तस्येदम्” । ४ ।
३ ।
१२० । इति अण् + ङीप् ।) विद्युत् ।
विद्युद्विशेषः
+ “तस्येदम्” । ४ । ३ । १२० । इति
अण् +
ङीप् ।) ईशानकोणः । इति जटाधरः ॥
(‘ऐ-
शानीक्रमतो रेखा” इति स्मृतिः ।
“ऐशान्यां
मरणं ध्रुवं निगदितं दिग्लक्षणं खञ्जने” ।
इति
तिथितत्त्वम् ॥)

**ऐशिकः**, त्रि, (ईशस्य अयम् । ईश + ईकण् ।)
ईश्वरसम्बन्धी । ईश्वरेर इति भाषा ॥

**ऐशी** त्रि, (ईशस्य ईश्वरस्य च इयम् ।
ईश + ईश्वर + अण् + ङीप् ।) ईश्वर-
सम्बन्धी । ईश्वरेर इति भाषा ॥

**ऐश्वरी** त्री, (ईशस्य ईश्वरस्य च इयम् ।
ईश + ईश्वर + अण् + ङीप् ।) ईश्वर-
सम्बन्धी । ईश्वरेर इति भाषा ॥

**ऐश्वर्य्यं**, क्ली, (ईश्वरस्य भावः । ईश्वर + ष्यञ्
।)
ईश्वरधर्म्मः । तत्पर्य्यायः । विभूतिः २
भूतिः ३ ।
स चाष्टविधो यथा । अणिमा १ लघिमा २
प्राप्तिः ३ प्राकाम्यम् ४ महिमा ५ ईशित्वम्
६
वशित्वम् ७ कामावशायिता ८ । इत्यमरः
॥
(“ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः
श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना” ॥
इति पुराणम् । “ऐश्वर्य्यमपि बुद्धिधर्म्मः
यतो-
ऽणिमादिप्रादुर्भावः” । इति वाचस्पतिमिश्रः
।
सम्पत्तिः । प्रभुत्वम् । नियन्तृत्वम् ।
यथा रघुवंशे । १२ । ६९ ॥

दम्” । ४ । ३ । १२० । इत्यण् ।
टिड्ढएति । ४ । १ ।
१५ । ङीप् ।) शची । (यथा, मार्कण्डेये
८८ । २० ।
“वज्रहस्ता तथैवैन्द्री गजराजोपरि
स्थिता” ।
इन्द्रस्य योगैश्वर्य्यशालिनो महादेवस्य
पत्नी ।)
दुर्गा । इति शब्दरत्नावली ॥ अलक्ष्मीः ।
इति
त्रिकाण्डशेषः ॥ इन्द्रवारुणी । इति
रत्नमाला ॥
राखाल शसा इति भाषा । पूर्ब्बा दिक् ।
इत्य-
मरटीकायां रमानाथः ॥ एला । इति राज-
निर्घण्टः ॥ एलाचि इति भाषा ।
“यष्ट्याह्वमैन्द्री नलिनानि दूर्ब्बा” ।
इति सूत्रे ३ अध्याये । चरकेणोक्तम् ॥)

**ऐभी**, स्त्री, (इभ इत्याख्यास्त्यस्याः । इभ + “प्रज्ञा-
दिभ्यश्च” । ५ । ४ । ३८ । इति अण् + ङीप् ।)
हस्तिघोषा लता । इति राजनिर्घण्टः ॥

**ऐरावणः**, पुं, (इरया जलेन वणति शब्दायते इति ।
इरा + वण + पचाद्यच् । तत इरावणएव स्वार्थे
प्रज्ञाद्यण् ५ । ४ । ३८ । यद्वा इरा सुरा वनमु-
दकं यस्मिन् । पूर्ब्बपदादिति ८ । ४ । ३ । णत्वम् ।
तत्र भवः । इरावण + अण् ।) ऐरावतहस्ती इत्य-
मरः ॥ यथा, महाभारते १ । १८ । ४१ ।
“श्वेतैर्दन्तैश्चतुर्भिस्तु महाकायस्ततःपरम् ।
ऐरावणो महानागोऽभवद्वज्रभृता धृतः” ॥)

**ऐरावतं**, क्ली, (इरा जलानि सन्त्यस्मिन् । इरा +
इति मेदिनी ॥ ऐरावतभार्य्या ।
इत्यरारटीकायां
स्वामी ॥ वटपत्रीवृक्षः । इति राजनिर्घण्टः ॥
पञ्चालदेशीयनदीविशेषः । अधुना रावी इति
ख्याता ॥ (उत्तरमार्गे नक्षत्रविशेषाणां संज्ञाभेदः
यथा ।
“पुष्याश्लेषा तथादित्या वीथी चैरावती
स्मृता” ॥)

**ऐरिणं**, क्ली, (इरिणे उषरभूमौ भवम् । इरिण +
अण् ।) पांशवलवणम् । इति राजनिर्घण्टः ॥
(पांशुलवणेऽस्य विवरणं ज्ञेयम् ॥)

**ऐरेयं**, क्ली, (इरा + ढक् ।) मद्यम् । इरा एव ऐरेयं
स्वार्थे ष्णेयप्रत्यये वृद्धिः ॥ (यत्रास्य व्यवहार-
स्तद्यथा, --
“ऋतेऽप्यूर्द्ध्वमधश्चैवमैरेयाम्लसुरासतैः” ।
इति वैद्यकचक्रपाणिसंग्रहे विद्रध्यधिकारे ॥)

**ऐलः**, पुं, (इलाया अपत्यं पुमान् । इला + अण् ।)
इलापुत्त्रः । स तु चन्द्रवंशीयो राजा पुरूरवाः ।
इति हेमचन्द्रः ॥ (यथा महाभारते । १ । ७५ । १७ ।
“पुरूरवास्ततो विद्वानिलायां समपद्यत ।
सावै तस्याभवन्माता पिता चैवेति नः श्रुतम्” ॥
“षट् सुता जज्ञिरेऽथैलादायुर्द्धीमानमावसुः”
॥ २४ ॥

**ऐलबालुकं**, क्ली, (एलबालुकमेव । स्वार्थे अण् ।) एल-
बालुकम् । इति शब्दरत्नावली ॥

**ऐलविलः**, पुं, (इलविलाया अपत्यं पुमान् । इल-
विल + अण् ।) इलविलापुत्त्रः । स तु कुवेरः ।
इत्यमरः ॥ तस्य रूपान्तराणि । ऐडविडः । ऐड-
विलः । एलबिलः ॥
“तस्मै निशाचरैश्वर्य्यं प्रतिशुश्राव राघवः” ॥)
इति ॥)

**ऐश्वर्य्यकर्म्मा**, [न्] पुं, (ऐश्वर्य्यं कर्म्म यस्य ।) ईश्वर-
सम्बन्धिकर्म्मयुक्तः । तत्पर्य्यायः ।
इरज्यति १ प-
त्यते २ क्षयति ३ राजति ४ । इति चत्वार
ऐश्वर्य्यकर्म्माणः । इति वेदनिर्घण्टौ २
अध्यायः ॥

**ऐषमः**, [स्] व्य, (अस्मिन् वत्सरे इति । “सद्यःपरु-
त्परार्य्यैषमः” ५ । ३ । २२ । इति इदम
इश् सम-
सन्प्रत्ययश्च संवत्सरे निपात्यते ।)
वर्त्तमानवत्सरः ।
इत्यमरः ॥

**ऐषमस्तनः**, त्रि, (ऐषमोभवः । “ऐषमोह्यःश्वसो-
ऽन्यतरस्यां” । ४ । २ । १०५ । इति शैषिकेष्वर्थेषु पक्षे
ट्युल् तुट् च ।) ऐषमःसम्बन्धी । एइ वत्सरेर इति
भाषा । इति पाणिनिः ॥ ७ । २ । १०५ ॥

**ऐषमस्त्यः**, त्रि, (ऐषमोभवः । ऐषमस् + ऐषमो-
ह्यसिति पक्षे त्यप्) ऐषमस्तनः इति
पाणिनिः ॥

**ऐहिकं**, त्रि, (इह + ढञ् ।) इह भवम् । इहकालेर
इति भाषा । इति व्याकरणम् ॥ (यथा भागवते
५ । १४ । ३२ । “क्वचिद्द्रुमवदैहिकार्थेषु रंस्यन्
यथा वानरः सुतदारवत्सलो व्यवायक्षणः”
॥)

**ओ**

**ओ** ओकारः । स तु त्रयोदशस्वरवर्णः । अस्यो-

मतुप् । इरावान् मेघः । तत्र भवः । इत्यण् । जल-
वति मेघे
सूर्य्यकरपतनादस्योत्पत्तेस्तथात्वम् ॥)
इन्द्रस्य ऋजुदीर्घधनुः ।
इति मेदिनी ॥ रामधनुक् इति भाषा ॥

**ऐरावतः**, पुं, (इरा जलानि विद्यतेऽस्मिन् । मतुप् ।
इरावान् समुद्रः । तत्र भवः इति । इरावत् + अण् ।

**ऐलेयं**, क्ली, एलबालुकनामगन्धद्रव्यम् । इत्यमरः ॥
(एलबालुकशब्देऽस्य विशेषो ज्ञातव्यः ॥)
(पुं,
इलाया अपत्यम् । इला + ढक् । मङ्गलः ।
भौमः ।
पुरूरवाः ॥)

**ऐशानी**, स्त्री, (ईशानस्य महादेवस्य इयम् । ईशान

च्चारणस्थानं ओष्ठः कण्ठश्च ।
("ओदौतोः कण्ठौ-
ष्ठम्" इत्युक्तेः । तथा च शिक्षायामुक्तम् ।
"ए ऐ तु कण्ठतालव्यावोऔ कण्ठौष्ठजौ
स्मृतौ" ॥)
स तु ह्रस्वो न भवति । दीर्घः प्लुतश्च
भवति ।
(प्रत्येकं
उदात्तानुदात्तस्वरितभेदैस्त्रिविधोऽपि
अनुनासिकाननुनासिकभेदाभ्यां षड्विधः । एतेन
द्वादशविध एव निर्णीतः ।)

:"ओकारं चञ्चलापाङ्गि ! पञ्चदेवमयं सदा ।
रक्तविद्युल्लताकारं त्रिगुणात्मानमीश्वरम् ॥
पञ्चप्राणमयं वर्णं नमामि देवमातरम् ।
एतद्वर्णं महेशानि स्वयं परमकुण्डली" ॥
इति कामधेनुतन्त्रम् ॥
(वङ्गीयभाषायां) तस्य लेखनप्रकारो यथा, --
"वामतः कुण्डली भूत्वा दक्षान्मध्ये तु कुञ्चिता ।
किञ्चिद्दक्षगता या तु कुञ्चिता वामतस्त्वधः ॥
ब्रह्मेशविष्णवस्तासु मात्रा तु ब्रह्मरूपिणी ।
शक्तिश्च परमा सैव ध्यानमस्य प्रवक्ष्यते" ॥
इति वर्णोद्धारतन्त्रम् ॥ * ॥ तस्य नामानि यथा, --
"ओकारः सत्यपीयूषौ पश्चिमास्यः श्रुतिः स्थिरा ।
सद्योजातो वासुदेवो गायत्री दीर्घजङ्घकः ।
आप्यायनी चोद्‌र्ध्वदन्तो लक्ष्मीर्वाणी मुखी द्विजः ॥
उद्देश्यदर्शकस्तीव्रः कैलासो वसुधाक्षरः ।
प्रणवांशो ब्रह्मसूत्रमजेशः सर्व्वमङ्गला ॥
त्रयोदशी दीर्घनासा रतिनाथो दिगम्बरा ।
त्रैलोक्यविजया प्रक्षा प्रीतिवीजादिकर्षिणी" ॥
इति तन्त्रशास्त्रम् ॥
(अनुबन्धविशेषः । यथाह इति कविकल्पद्रुमः ॥ (भ्वादिं-अकं-सकं च परं-सेट् ।) ऋ मा भवान् ओचिखत् । अत्र द्वित्वात् प्राक् प्राप्तो ह्रस्व ऋदित्त्वान्न स्यात् । शोषः स्नेह-रहितीभावः । ओखति पङ्क आतपात् । अल-मर्थो भूषणं सामर्थ्यं वारणञ्च । इति दुर्गादासः ॥

**ओघः**, पुं, (उच् समवाये + घञ् । पृषोदरादित्वात् साधुः ।) द्रुतनृत्यगीतवाद्यम् । समूहः । इत्यमरः ॥ जलवेगः । (यथा कुमारे ४ । ४४ ।
"रविपीतजला तपात्यये पुनरोघेन हि युज्यते नदी" ॥) परम्परा । उपदेशः । इति मेदिनी ॥

**ओङ्कारः**, पुं, (ओम् + कारप्रत्ययः ।) प्रणवः । इत्यमरः ॥ (यथाह स्मृतिः ।
"ओङ्कारः पूर्ब्बमुच्चार्य्यस्ततो वेदमधीयते" ।
"ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्ज्जातौ तस्मान्माङ्गलिकावुभौ" ।
इति व्याकरणटीकायां दुर्गादासः ।
"प्राणायामैस्त्रिभिः पूतस्तत ओङ्कारमर्हति" ॥
इति मनुः । २ । ७५ ॥ अत्राह आवस्तम्बः,
"ओङ्कारः स्वर्गद्वारं तद्ब्रह्म अध्येष्यमाण एत-दापि प्रतिपद्येत विकथां चान्यां कृत्वा एवं लौ-किक्या वाचा व्यावर्त्तते" । लौकिक्या वाचा व्याव-र्त्तते तया मिश्रितं न भवतीत्यर्थः ॥)

**ओङ्कारा**, स्त्री, बुद्धशक्तिविशेषः । इति त्रिकाण्डशेषः ॥

**ओज** त्क, बले । तेजसि । इति कविकल्पद्रमः ॥
(अदन्तचुरां-परं-अकं-सेट् ।) मा भवान् ओजि-जत् । इति दुर्गादासः ॥

**ओजः**, [स्] क्ली, (उब्जत्यनेन । उब्ज आर्जवे उब्जेर्बले "बलोपञ्च" ४ । १९१ । उणादिः असुन् । बलोपश्च । गुणः ।) दीप्तिः । अवष्टम्भः । प्रकाशः । बलम् । इति मेदिनी ॥ (यथा रघौ २ । ५४ ।
"रुद्रौजसा तु प्रहृतं त्वयास्याम्" । यथा च मा-नवे १ । १९ ।
"तेषामिदन्तु सप्तानां पुरुषाणां महौजसाम्" ॥)
प्रथमतृतीयपञ्चमसप्तमनवमैकादशराशयः । इति ज्योविषम् ॥ गौडी रीतिः काव्यगुणः । तस्य तद्वदोजः शरीरेभ्यो धातुः संभ्रियते नृणाम्" ॥
इति वैद्यकम् ॥ ओजोऽदन्तोऽपि । इति भरतः ॥
"हृदयं चेतनास्थानमोजसश्चाश्रयं मतम्" ।
इति पूर्ब्बखण्डे । ५ अ । शाङ्गर्धरेणोक्तम् ॥
"तत्परस्यौजसः स्थानं तत्र चैतन्यसंग्रहः" ॥
"ओजोवहाः शरीरे वा विधम्यन्ते समन्ततः ।
येनौजसा वर्त्तयन्ति प्रीणिताः सर्व्वदेहिनः ॥
यदृते सर्व्वभूतानां जीवितं नावतिष्ठते ।
यत्सारमादौ गर्भस्य योऽसौ गर्भरसाद्रसः ॥
संवर्त्तमानं हृदयं समाविशति यत्पुरा ।
यस्य नाशान्न नाशोऽस्ति धारि यद्धदयाश्रितम् ॥
यच्छरीरबलं देहः प्राणा यत्र प्रतिष्ठिताः ।
तत्फला विविधा वाताः फलन्तीति महाफलाः ॥
ध्मानाद्धमन्यः स्रवणात् स्रोतांसि सरणात्सिराः ॥
तन्महत्ता महामूलास्तच्चौजः परिरक्षता ।
परिहार्य्या विशेषेण मनसा दुःखहेतवः ॥
हृद्यं यत्स्याद्यदौजस्यं स्रोतसां यत्प्रसादजम् ।
तत्तत्सेव्यं प्रयत्नेन प्रशमो ज्ञानमेव च" ॥
इति सूत्रस्थाने त्रिंशेऽध्याये चरकेणोक्तम् ॥
"गुरु शीतं मृदु श्लक्ष्णं बहुलं मधुरं स्थिरम् ।
प्रसन्नं पिच्छिलं स्निग्धं ओजो दशगुणं तथा" ॥
मद्यसेवनतोऽस्य ये गुणा नश्यन्ति तद्यथा ॥

कविकल्पद्रुमे । "ऐर्यजादिः

स्यादोर्निष्ठातन और-

निट्" ॥ तेन ओ दी क्षये इत्यस्मात्

कृतायां

निष्ठायां दीनं दीनवत् इति स्यात् ॥

मातृकान्यासे

ऊद्ध्र्वदन्तपङ्क्तौ न्यस्यतया

तदाख्ययाप्यभिधानम् ।

मातृकान्यासमन्त्रो यथा, --

"ॐ नम ऊद्ध्र्वदन्तपङ्क्तौ औँ

नमऽधोदन्तपङ्क्तौ" ॥)

**ओ**, व्य, सम्बोधनम् । आह्वानम् । स्मरणम् । अनु-

कम्पा । इति मेदिनी ॥

**ॐ**, व्य, ओम् । प्रणवः । इति वेदागमौ ॥

**ओः**, पुं, व्रह्मा । इत्येकाक्षरकोषः ॥

**ओकं**, क्ली, (उचेरिगुपधलक्षणे के गुणः कुत्वञ्च

"ओक उचः के" । ७ । ३ । ६ । ४ । इति निपा-

त्यते ।) गृहम् । आश्रयः ।

इत्यमरटीकायां भर-

तादयः ॥ (पुं । पक्षी । वृषलः ॥)

**ओकः**, [स्] क्ली, (उच्यते समवैति अस्मिन् । उच +

असुन् । गुणः । न्यङ्क्वादित्वात्

कुत्वम् ॥) आश्रयः ।

गृहम् । इत्यमरः ॥ ("जलौका अथ

भल्लके" ।

इति अमरकोषः । तथा

विष्णुपुराणम् १ । ६ । ३७ ।

"सप्तर्षीणान्तु यत स्थानं स्मृतं तद्वै

वनौकसाम्" ॥)

**ओकणः**, पुं, केशकीटः । इति शब्दरत्नावली ॥

उकुण् इति भाषा ॥

**ओकणिः**, पुं, यूकः । इति शब्दरत्नावली ॥ उकुण्

लक्षणम् । बहुसमाससंयुक्तवर्णपदाडम्बरः । यथा,

"ओजःप्रसादमाधुर्य्यगुणत्रितयभेदतः ।

गौडवैदर्भपञ्चालीरीतयः परिकीर्त्तिताः ॥

ओजः समासभूयस्त्वं मांसलं पदडम्बरम्" ।

तस्योदाहरणम् यथा, --

"गङ्गोत्तुङ्गतरङ्गसङ्गतजटाजूटाग्रजाग्रत्फणि-

स्फुर्जत्स्फुत्कृतिभीतिसम्भृतचमत्कारस्फुरत्सम्भ्रमा

।

आनन्दामृतवापिकां विदधती चित्तं गिरीशप्रभो-

स्त्वां पायान्नवसङ्गमे भगवती लज्जावती पार्ब्बती" ॥

इति काव्यचन्द्रिका ॥ * ॥ रसादिसप्तधातुसार-

भागजधातुविशेषः । तस्य गुणाः । सर्व्वशरीरस्थि-

तत्वम् । स्निग्धत्वम् । शीतलत्वम् । स्थिरत्वम् ।

शुक्लवर्णत्वम् । कफात्मकत्वम् । शरीरस्य बलपुष्टि-

कारित्वञ्च ॥

"हृदि तिष्ठति यच्छुद्धं रक्तमीषत् सपीतकम् ।

ओजः शरीरे संजातं तन्नाशान्नाशमृच्छति ॥

भ्रमरैः फलपुष्पेभ्यो यथा संभ्रियते मधु ।

"गुरुत्वं लाघवाच्चैत्यं

चौष्ण्यमम्लस्वभावतः ।

माधुर्य्यं मार्द्दवं तैक्ष्ण्यात्

प्रसादञ्चाशुभावनात् ॥

रौक्ष्यात् स्नेहं व्यवायित्वात् स्थिरत्वं

श्लक्ष्णतामपि ।

विकासिभावात् पैच्छिल्यं वैशद्यं

सान्द्रतान्तथा ॥

सौक्ष्म्यान्मद्यं विहन्त्येवमोजसः

स्वगुणैर्गुणान्" ।

"रसधात्वादिमार्गाणां

सत्त्ववद्ध्वीन्द्रियात्मनाम् ।

प्रधानस्यौजसश्चैव हृदयस्थानमुच्यते" ॥

"नैवं विघातं जनयेन्मद्यं पैष्टिकमोजसः ।

विकाश-रूक्ष-विशदा गुणास्तत्र हि

नोल्वणाः" ॥

इति च चरके चिकित्सास्थाने । १२ अः

॥

"ओजः सोमात्मकं स्निग्धं शुक्लं

शीतंस्थिरं सरम् ।

विविक्तं मृदु मृत्स्नञ्च प्राणायतनमुत्तमम् ॥

देहस्यावयवस्तेन व्याप्तो भवति देहिनाम् ।

तदभावाच्च शीर्य्यन्ते शरीराणि

शरीरिणाम् ॥

अभिघातात्

क्षयात्कोपाच्छोकाद्ध्यानाच्छ्रयात् क्षुधः ।

ओजः संक्षीयते ह्येभ्यो धातुग्रहणनिःसृतम्

।

तेजः समीरितं तस्माद्विभ्रंशयति देहिनः"

॥

इति सूत्रस्थाने । १५ अः । सुश्रुतेनोक्तम्

॥)

**ओडवः**, पुं, पञ्चस्वरयुक्तरागः । स तु ऋ-प-वर्ज्जितः ।

ष-ग-म-ध-नि-युक्तः । यथा मल्लारादयः ।

इति सं-

गीतदामोदरः ॥ (यदुक्तं संगीतरत्नाकरे

स्वरा-

ध्याये जातिप्रकरणे ।

इति भाषा ॥

**ओकुलः**, पुं, (उच् + उलच । निपातनात् सिद्धम् ।)

गोधूमकृततप्तापक्वः । अस्य गुणाः
। गुरुत्वम् ।
वृष्यत्वम् । मधुरत्वम् ।
बलकारित्वम् । रक्तवा-
तापहत्वम् । स्निग्धत्वम् । हृद्यत्वम्
। मदविव-
र्द्धनत्वञ्च । इति राजनिर्घण्टः ॥

**ओकोदनी**, स्त्री, (ओकः मस्तकरूपाश्रयस्थानमदनं

भक्ष्यं यस्याः ।) यूकः । इति
शब्दरत्नावली ॥

**ओक्कणी**, स्त्री, (ओच् + कण् + अच् + ङीप् ।) ओ-

कणः । इति शब्दरत्नावली ॥
उकुण् इति भाषा ॥

**ओख**, ऋ, शोषणे । भूषणे । सामर्थ्ये । निवारणे ।

"वान्ति यान्त्युडवोऽत्रेति व्योमोक्तमुडवं
बुधैः ।
पञ्चमं तच्च भूतेषु पञ्चसंख्या तदुद्भवा ।
ओडवी सास्ति येषाञ्च स्वरास्तेत्वोडवा
मताः" ॥
"औडवा मताः" इति क्वचित् पाठः ॥
"उडवः
नक्षत्राणि वान्ति यान्ति यस्मिन् इत्युडवं
व्योम,
तच्च भूतेषु पञ्चमम् । तेन पञ्चसङ्ख्या
लक्ष्यन्ते ।
औडवी सङ्ख्या विद्यते येषां स्वराणां ते
औडवाः
पञ्चस्वराः" इत्यादिसिंहभूपालटीका ॥)

**ओडिका**, स्त्री, धान्यविशेषः । उडि धान इति
भाषा । तत्पर्य्यायः । ओडी २ नीवारः ३ । इति
रत्नमाला ॥ अस्या गुणाः । शोषणत्वम् । रूक्षत्वम् ।
कफवायुवर्द्धकत्वम् । पित्तनाशित्वञ्च । इति राज-
वल्लभः ॥

**ओडी**, स्त्री, ओडिकाधान्यम् । इति रत्नमाला ॥
(नीवारशब्देऽस्या विवरणं ज्ञातव्यम् ॥)

**ओड्रः** पुं, (आ ईषदुनत्ति । उन्दी + स्फायितञ्चीति
रक् । बाहुलकात् दस्य डत्वम् ।) जवापुष्पवृक्षः ।
देशविशेषः । उडिस्या इति ख्यातः । तत्र बहु-
वचनान्तः । इति मेदिनी ॥
(तद्देशवासिनि, त्रि ।
यथा, मनुः १० । ४४ ।
"पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा जवनाः शकाः" ।
"पौण्ड्रादिदेशोद्भवाः क्षत्रियाः सन्तः क्रियालो-
पादिना शूद्रत्वमापन्नाः" ।
इति तट्टीकायां कुल्लुकभट्टः ॥)

**ओड्रपुष्पं**, क्ली, (ओड्रं पुष्पम् ।) जवा । इत्यमरः ॥
वृद्धास्तु "ओड्रपुष्पशब्देन तथा जवाशब्देन
ओड्रवृक्षः ओड्रस्य पुष्पञ्चोच्यते" इत्याहुः । वृक्षे
व्युत्पत्तिर्यथा । ओड्रं पुष्पमस्य इति ।
"ओड्रः स्यादोड्रपुष्पञ्च जवाथ हयमारकः" ।
इति रायमुकुटः ॥
"ओड्रपुष्पकुसुमप्रियेऽम्बिके" ।
इति हरानन्दः ॥ इत्यमरटीकायां भरतः ॥

**ओदनिका**, स्त्री, महासमङ्गा । बला । इति राज-
निर्घण्टः ॥

**ओदनी**, स्त्री, (ओदन इवाचरति । ओदन + क्विप्
+ ङीष् ।) बला । इति मेदिनी ॥ वेलेडा इति
भाषा । (बलाशब्देऽस्या गुणादथो ज्ञातव्याः ॥)

**ओम्**, व्य, (अवति रक्षति इति । "अवतेष्टिलो-
पश्च" । १ । १४१ । उणादिः मन् टिलोपश्च । ज्वर-
त्वरेत्यूट् ६ । ४ । २० ॥ ततो गुणः ।) प्रणवः । स
तु अकारोकारमकारवर्णत्रयात्मकः । तथा च
उक्तम् ।
"अकारो विष्णुरुद्दिष्ट उकारस्तु महेश्वरः ।
मकारेणोच्यते ब्रह्मा प्रणवेन त्रयो मताः ॥
("यथा पर्णं पलाशस्य शङ्कुनैकेन धार्य्यते ।
तथा जगदिदं सर्व्वमोङ्कारेणैव धार्य्यते" ॥
इति याज्ञवल्क्यः । तथा, मनुः । २ । ७६ ।
"अकारञ्चाप्युकारञ्च मकारञ्च प्रजापतिः ।
वेदत्रयात् निरदुहत् भूर्भुवस्वरिति त्रिधा" ॥
"ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तस्मात् माङ्गलिकावुभौ" ॥
इति दुर्गादासः । योगी याज्ञवल्क्यश्च ।
"सिद्धानाञ्चैव सर्व्वेषां वेदवेदान्तयोस्तथा ।
अन्येषामपि शास्त्राणां निष्ठाऽथोङ्कार उच्यते ॥
प्रणवाद्या यतो वेदा प्रणवे पर्य्यवस्थिताः ।
वाङ्मयं प्रणवः सर्व्वं तस्मात् प्रणवमभ्यसेत्" ॥)
अनुमतिः । इति विश्वः ॥ उपक्रमः । अङ्गीकारः ।
अस्य गुणाः । अग्निदीपनत्वम् । रुचिकारित्वम् ।
कफनाशित्वम् । विशदत्वम् । लघुत्वम् । अर्शो-
रोगपथ्यत्वञ्च । ग्राम्यकन्दस्तु दोषलः ॥ इति राज-
वल्लभः ॥

**ओषः**, पुं, (उष + दाहे घञ् ।) दाहः । तत्पर्य्यायः ।
प्रोषः २ । इत्यमरः ॥ प्लोषः ३ । इति भरतः ॥
(पित्तविकाराश्चत्वारिंशदत ऊर्द्ध्वं व्याख्यास्यन्ते ।
यथा ओषश्च प्लोषश्च इत्यादि । चरके सूत्रे ।
२० अः ॥)

**ओषणः**, पुं, (उष + ल्युट् ।) कटुरसः । इति हेम-
चन्द्रः ॥ झाल इति भाषा ॥

**ओषणी**, स्त्री, (ओषण + ङीष् ।) शाकविशेषः ।
पुड्याति इति भाषा । अस्या गुणः । कफवायु-
नाशित्वम् । इति राजवल्लभः ॥

**ओषधिः**, स्त्री, (ओषो धीयतेऽत्र । ओष + धा +
कि ।) फलपाकान्तवृक्षादिः । कदली धान्यमि-
त्यादिः । इत्यमरः ॥ (यदाह मनुः । १ । ४६ ।
"उद्भिज्जाः स्थावरा ज्ञेया वीजकाण्डाप्ररोहिणः ।
ओषध्यः फलपाकान्ताः बहुपुष्पफलोपगाः" ॥
तथा, कुमारे १ । १० । "भवन्ति यत्रौषधयो
रजन्याम्" । तथा ७ । १
"अथौषधीनामधिपस्य वृद्धौ" । "ओषधयः प्रशुष्यन्ति गवादीनां पयां-

**ओड्राख्या**, स्त्री, (ओड्रमाख्या यस्याः ।) जवापुष्प-
वृक्षः । इति राजनिर्घण्टः ॥

**ओण**, ऋ अपसारणे । दूरीकरणे ॥ इति कविकल्प-
द्रुमः ॥ (भ्वादिं-परं-सकं-सेट् ।) अपसारणमप-
नयनम् । मा भवान् ओणिनत् । ओणति धनम्
चौरः । इति दुर्गादासः ॥

**ओतुः**, पुं स्त्री, (अवति गृहमाखुभ्यः । अव रक्षणे +
"सितनिगमिमसिसच्यवीति" १ । ७० । उणादिः
तुन् । "ज्वरत्वरेति" ६ । ४ । २० । ऊट् ततो
गुणः ।) विडालः । इत्यमरः । (यथा मुग्ध-
बोधे । "स्थूलोतुः । स्थूलौतुः ॥)

**ओदनः**, पुं क्ली, (उन्द + "उन्देर्नलोपश्च" इति २ ।
७६ । उणादिः युच् + नलोपश्च ।) अन्नम् । भक्तम् ।
इत्यमरः ॥ भात इति भाषा ।
(यथा मनुः । ८ । ३२९ ।
"अन्येषाञ्चैवमादीनां मद्यानामोदनस्य च" ॥
"ओदनः क्षालितः स्विन्नः प्रस्रुतो विशदो लघुः ।
भृष्टतण्डुलजोऽत्यर्थमन्यथा स्याद्गुरुश्च सः" ॥
इति वैद्यकचक्रपाणिकृतद्रव्यगुणे मद्यादिवर्गे ॥
"ओदनस्तैः शृतो द्विस्त्रिः प्रयोक्तव्यो यथायथम् ।
दोषदूष्यादिबलतो ज्वरघ्नः क्वाथसाधितः" ॥
इति बाभटे चिकित्सास्थाने । १ अध्याये ॥
(यथा, भागवते ११ । ४ । १५ ।
"ओमित्यादेशमास्थाय नत्वा तं सुरवन्दिनः ।
उर्व्वशीमप्सरःश्रेष्ठां पुरःस्कृत्य दिवं ययुः" ॥)
अपाकृतिः । मङ्गलम् । इति मेदिनी ॥

**ओम्**, क्ली, ब्रह्मणो नामविशेषः । यथा, --
"ॐ तत्सदिति निर्द्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणाश्चैव वेदाश्च यज्ञाश्च विहिताः पुरा ॥
तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्" ॥
इति श्रीभगवद्गीतायां १७ अध्यायः ॥

**ओलं** त्रि, (आङ् + उन्द + क । पृषोदरादित्वात्
साधु ।) आर्द्रम् । इति त्रिकाण्डशेषः ॥ भिजा
इति भाषा ॥

**ओलः**, पुं, स्वनामख्यातमूलविशेषः । शूरणः । इति
त्रिकाण्डशेषः ॥ (अस्य पर्य्यायो यथा ॥
"शूरणः कन्द ओलश्च कन्दलोऽर्शोघ्न इत्यपि" ।
गुणा अस्य शूरणशब्दे ज्ञेयाः ॥)

**ओलज**, इ, क्षेपणे । इति कविकल्पद्रुमः ॥ (भ्वादिं-
परं-सकं-सेट् ।) अन्तस्थतृतीययुक्तः । इ ओलञ्ज्यते
धूलिर्वायुना । इति दुर्गादासः ॥

**ओलड**, इ कि उत्क्षेपे । इति कविकल्पद्रुमः ॥ (वा
चुरां-उमं-सकं-सेट् ।) अन्तस्थतृतीयोपधः । इ
ओलण्ड्यते । कि ओलण्डयति ओलण्डति तण्डुलं
लोकः । कर्पूरमोलण्डयतीति दर्शनात् । इति
दुर्गादासः ॥
सिच । इति हारीते प्रथमस्थाने ॥ ४ अध्याये ॥
"ओषधीर्नामरूपाभ्यां जानते ह्यजपा वने ।
अविपाश्चैव गोपाश्च ये चान्ये वनवासिनः ॥
न नामज्ञानमात्रेण रूपज्ञानेन वा पुनः ।
ओषधीनाम्पराम्प्राप्तिं कश्चिद्वेदितुमर्हति ॥
योगविन्नामरूपज्ञस्तासां तत्त्वविदुच्यते ।
किं पुनर्यो विजानीयादोषधीः सर्व्वथा भिषक् ॥
योगमासान्तु यो विद्याद्देशकालोपपादितम् ।
पुरुषं पुरुषं वीक्ष्य स विज्ञेयो भिषक्तमः" ॥
इति चरके सूत्रस्याने ॥ १ अध्याये ॥)

**ओषधिप्रस्थः**, पुं, (ओषधिबहुलं प्रस्थं यत्र । ओषधी-
नामाकरत्वात् हिमालयस्य तथात्वम् ।) हिमाल-
यस्य नगरम् । (यथा, कुमारे ६ । ३३ ।
"तत्प्रयातौषधिप्रस्थं सिद्धये हिमवत्पुरम्" ।
तत्रैव ६ । ३६ । "आसेदुरोषधिप्रस्थम्" इति ।)
तथा, -- कालिकापुराणे ४१ अंध्यायः ।
"एतस्मिन्नन्तरे शम्भुः शिप्रं त्यक्त्वा तदा सरः ।
गङ्गावतारमगमद्धिमवत्प्रस्थमुत्तमम् ॥
यत्र गङ्गा निपतिता पुरा ब्रह्मपुरात् सृता ।
ओषधिप्रस्थनगरस्यादूरे सानुरुत्तमः ॥
तत्र भर्गः स्वमात्मानमक्षरं परमात्परम् ।
एकाग्रं चिन्तयामास भगवान् वृषभध्वजः" ॥

**ओषधी**, स्त्री, (ओषधि + ङीप् ।) ओषधिः । इति
भरतः ॥ (फलपाकान्तवृक्षः । स च कदली-
धान्यादिः । यथाह मनुः । १ । ४६ ।
"उद्भिज्जाः स्थावराः सर्व्वे वीजकाण्डप्ररोहिणः ।
ओषध्यः फलपाकान्ताः बहुपुष्पफलोपगाः" ॥
ओषधिशब्देऽस्या विवृतिर्ज्ञेया ॥)

**ओषधीपतिः**, पुं, (ओषधीनां पतिः ।) चन्द्रः । इति

अस्य पर्य्यायश्चाह भावप्रकाशकारः ॥

“भक्तमन्नं तथान्धश्च क्वचिकूरञ्च

कीर्त्तितम् ।

ओदनोऽस्त्री स्त्रियां भिस्मा दीदिविः पुंसि

भा-

षितः” ॥

अस्य विवरणान्तरञ्चान्नशब्दे ज्ञेयम् ॥)

**ओदनाह्वा**, स्त्री, (ओदनस्याह्वा इव आह्वा यस्याः ।)

महासमङ्गा । इति राजनिर्घण्टः ॥

**ओल्लः**, पुं, ओलः । तत्पर्य्यायः । शूरणः २ कन्दः ३

अर्शोघ्नः ४ चित्रदण्डकः ५ । इति

रत्नमाला ॥

हेमचन्द्रः ॥ (कर्पूरं । चन्द्रसंज्ञत्वादस्य

तथात्वम् ॥)

**ओषधीशः**, पुं, (ओषधीनामीशः) चन्द्रः । कर्पूरम् ।
इत्यमरः ॥ (यथा, हरिवंशे ४६ । ८ ।
"ओषधीशः
क्रियायोनिरम्भोयोनिरनुष्णभाक्" ॥)

**ओष्ठः**, पुं, (उष्यते दह्यते उष्णाहारेणेति । उष दाहे
+ "उषिकुषीति" । २ । ४ । थन् ॥)
दन्ताच्छादकावयवः । उपर ठोँट इति भाषा
।
तत्पर्य्यायः । रदनच्छदः २ दशनवासः ३ ।
इत्य-
मरः ॥ दन्तवासः ४ दन्तवस्त्रम् ५ रदच्छदः
६
इति राजनिर्घण्टः ॥ तस्य द्विवचने ओष्ठौ
ओष्ठा-
धराविति यावत् ॥ (यथा, ऋग्वेदे । २ । ३९
। ६ ।
"ओष्ठाविव मध्वास्ने वदन्ता स्तनाविव
पिप्यतं
जीवसे नः" । तथा मनुः । ८ । २८२ ।
"अवनिष्ठीवतो दर्पाद्द्वारोष्ठौ च्छेदयेन्नृपः" ॥
तथा, कुमारे ३ । ६७ ।
"उमामुखे विम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि" ॥)

**ओष्ठपुष्पः**, पुं, (ओष्ठ इव पुष्पं यस्य ।) बन्धूकपुष्प-
वृक्षः । इति राजनिर्घण्टः ॥

**ओष्ठरोगः**, पुं, (ओष्ठस्य रोगः ।) आस्यरोगान्त-
र्गतोष्ठभवव्याधिः । स च
वातपित्तकफसन्निपात-
रक्तमांसमेदोऽभिघातजत्वेनाष्टविधः । तेषां
यथा-
क्रमं लक्षणानि यथा, --
"कर्कशौ परुषौ स्तब्धौ संप्राप्तानिलवेदनौ ।
दाल्येते परिपाट्येते ओष्ठौ मारुतकोपतः ॥
चीयेते पिडकाभिश्च सरुजाभिः समन्ततः ।
सदाहपाकपिडकौ पीताभासौ च पित्ततः ॥
सवर्णाभिस्तु चीयेते पिडकाभिरवेदनौ ।
पिटिकाभिर्महाक्लेदावाशुपाकौ कफात्पुनः
॥
शीतासहौ गुरू शूनौ सवर्णपिटिकाचितौ ।
सन्निपातादनेकाभौ दुर्गन्धास्रावपिच्छलौ ॥
अकस्मात् म्लानसंशूनरुजौ विषमपाकिनौ
।
रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ ॥
खर्ज्जूरसदृशश्चात्र क्षीणे रक्तेऽर्व्वुदं भवेत् ।
मांसपिण्डोपमौ मांसात्स्यातां
मूच्छत्क्रमीक्रमात् ॥
तैलाभश्वयथुक्लेदौ सकण्ड्वौ मेदसा मृदु ।
क्षतजाववदीर्य्येते पाट्येते चासकृत्पुनः ॥
ग्रथितौ च पुनः स्यातां कण्डूलौ दशनच्छदौ
।
जलवुद्बुदवद्वातकफादोष्ठे जलार्व्वुदम्" ॥
इति वाभटे उत्तरस्थाने । २१ अध्याये ॥
"खण्डोष्ठस्य विलिख्यान्तौ स्यूत्वा
व्रणवदाचरेत् ।
यष्टी-ज्योतिष्मती-रोध्र-श्रावणी-
सारिवोत्पलैः ॥
पटोल्या काकमाच्या च तैलमभ्यञ्जनं पचेत्
।
नस्यञ्च तैलं वातघ्नमधुरस्कन्धसाधितम् ॥
महास्नेहेन वातौष्ठे सिद्धे नाक्तः पिचुर्हितः ।
देवधूपमधूच्छिष्टगुग्गुल्वमरदारुभिः ॥
यट्याह्वचूर्णयुक्तेन तेनैव प्रतिसारणम् ।
नाड्योष्ठं स्वेदयेद्दुग्धसिद्धैरेरण्डपल्लवैः ॥
खण्डोष्ठंविहितं नस्यं तस्य मूर्द्ध्नि च
तर्पणम् ।
पित्ताभिघातजावोष्ठौ जलौकोभिरुपाचरेत् ॥
रोध्रसर्जरसक्षौद्रमधुकैः प्रतिसारणम् ।
गुडूची यष्टिपत्तङ्गसिद्धमभ्यञ्जने घृतम् ॥
पित्तविद्रधिवच्चात्र क्रियाशोणितजेऽपि च ।
इदमेव भवेत्कार्य्यं कर्म्मौष्ठे तु कफोत्तरे ॥
पाठाक्षारमधुव्योषैर्हतास्रे प्रतिसारणम् ।
धूमनावनगण्डूषाः प्रयोज्याश्च कफच्छिदः
॥
खिन्नं भिन्नं विमेदस्कं दहेन्मेदोजमग्निना ।
अत्र ब्रह्मादयः सर्व्वे तिष्ठन्ति सततं प्रिये
॥
पञ्चप्राणमयं वर्णं सदाशिवमयं सदा ।
सदा ईश्वरसंयुक्तं चतुर्व्वर्गप्रदायकम्" ॥
इति कामधेनुतन्त्रम् ॥ (वङ्गभाषायां) तस्य
लेखनप्रकारो यथा, --
"ओकारमध्यदक्षेतु गता तूर्द्ध्वगतायता ।
किञ्चित् सा वामतो वक्रा तासु
ब्रह्मेशविष्णवः ॥
शक्तिमध्यगता रेखा ध्यानमस्य
प्रचक्ष्यते" ।
इति वर्णोद्धारतन्त्रम् ॥ * ॥ अस्य नामानि
यथा,
"औकारः शक्तिको नादस्तेजसो
वामजङ्घकः ।
मनुरर्द्धग्रहेशश्च शङ्कुकणः सदाशिवः ॥
अधोदन्तश्च कण्ठौष्ठौ सङ्कर्षणः सरस्वती
।
आज्ञा चोद्ध्वमुखी शान्तो व्यापिनी
प्रकृतः पयः ॥
अनन्ता ज्वालिनी व्योमा चतुर्द्दशी
रतिप्रियः ।
नेत्रमात्मकर्षिणो च ज्वालामालिनिका
भृगुः" ॥
इति तन्त्रशास्त्रम् ॥ शेषदशनः ।
सत्यान्तः ।
इति वीजवर्णाभिधानम् ॥
(मातृकान्यासेऽधो-
दन्तपङ्क्तौ न्यस्यतया
तच्छब्देनाप्यभिधानम् ।
मातृकान्यासमन्त्रो यथा, --
ओं नम ऊद्र्ध्वदन्तपङ्क्तौ औं
नमोऽधोदन्तपङ्क्तौ" ॥
अनुबन्धविशेषः । यदुक्तं कविकल्पद्रुमे ।
"ओर्नि-
ष्ठातन औरनिट्" । तेन दृशि रौ प्रेक्षणे
इत्यस्य
लृटि कृते द्रक्ष्यति इति स्यात् ॥)

भवतस्तु कफादोष्ठौ पिच्छिलौ शीतलौ गुरू ॥
सकृत् कृष्णौ सकृत् पीतौ सकृत् श्वेतौ तथैव च ।
सन्निपातेन विज्ञेयावनेकपिडकाचितौ ॥
खर्ज्जूरफलवर्णाभिः पिडकाभिर्न्निपीडितौ ।
रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ ॥
गुरू स्थूलौ मांसदुष्टौ मांसपिण्डवदुन्नतौ ।
जन्तवश्चात्र मूर्च्छन्ति नरस्योभयतो मुखात् ॥
सर्पिर्मण्डप्रतीकाशौ मेदसा कण्डुरौ गुरू ।
स्वच्छं स्फटिकसङ्काशमास्रावं स्रवतो भृशम् ॥
तयोर्व्रणो न संरोहेन्मृदुत्वञ्च न गच्छति ।
ओष्ठौ पर्य्यवदीर्य्येते पाट्येते चाभिघाततः” ॥
इति निदानम् ॥
(“ओष्ठौ च स्फुटितौ यस्य वातिवाहेन वातिकात् ।
तस्य सर्पिर्म्रक्षणञ्च ओष्ठदारणवारणे ॥
सदाहञ्च भवेत्सौख्यं पैत्तिकं तं विनिर्द्दिशेत् ।
मधुना नवनीतेन ओष्ठयोर्म्रक्षणं मतम् ।
लेपनञ्चौष्ठरोगेषु शर्करासहितं दधि ।
सरक्तमोष्ठरोगञ्च दृष्ट्वा रक्तावसेचनम् ॥
धवार्ज्जुनकदम्बानां प्रलेपः स्यात् सुखावहः” ॥
इति हारीते चिकित्सिते । २५ अध्याये ॥
चिकित्सा यथा ॥
“तत्र खण्डौष्ठ इत्युक्तो वातेनोष्ठो द्विधा कृतः ॥
ओष्ठकोपे तु पवनात् स्तब्धावोष्ठौ महारुजौ ।
दाल्येते परिपाट्येते परुषासितकर्क्कशौ ॥
पित्तात्तीक्ष्णासहौ पीतौ सर्षपाकृतिभिश्चितौ ।
प्रियङ्गुरोध्रत्रिफलामाक्षिकैः प्रतिसारयेत् ॥
सक्षौद्राघर्षणम् तीक्ष्णा भिन्नशुद्धे जलार्व्वुदे ।
अवगाढेऽतिवृद्धे वा क्षारोऽग्निर्वा प्रतिक्रिया” ॥
इति च वाभटे उत्तरस्थाने ॥ २२ अध्याये ॥
चिकित्सादिविवृतिस्तुमुखरोगशब्दे द्रष्टव्या ॥)

**ओष्ठी**, स्त्री, (ओष्ठ इवाचरति पक्वावस्थायाम् । ओष्ठ + क्विप् । ततोऽच् + ङीप् च ।) विम्बफलम् । इति रत्नमाला ॥ तेलाकुचा इति भाषा ॥

**ओष्ठोपमफला**, स्त्री, (ओष्ठोपमानि ओष्टसदृशानि फलानि यस्याः ।) विम्बिका । इति जटाधरः ॥ (तेलाकुचा इति भाषा ॥)

## औ

**औ**, औकारः । स तु चतुर्द्दशस्वरवर्णः । अस्योच्चारण-स्थानं ओष्ठः कण्ठश्च । (ओदौतोः कण्ठौष्ठम्” । इत्युक्तेः । तथा च शिक्षायाम् । “एऐ तु कण्ठ-तालव्यावोऔ कण्ठौष्ठजौ स्मृतौ” ।) स दीर्घः प्लुतश्च भवति न ह्रस्वः ॥ (प्रत्येकमुदा-त्तानुदात्तस्वरितभेदात् त्रिविधोऽपि पुनरनु-नासिकाननुनासिकभेदात् षड्विध एतेन द्वादश-विध एव ।)
“रक्तविद्युल्लताकारं औकारं कुण्डली स्वयम् ।

**औ**, व्य, आह्वानम् । सम्बोधनम् । इति मेदिनी ॥ विरोधः । निर्णयः । इति शब्दरत्नावली ॥ (गण-भेदः । स च चादिः । इति पाणिनिः । १ । ४ । ५७ ॥)

**औँ**, व्य, शूद्राणां प्रणवः । यथा, --
“चतुर्द्दशस्वरो योऽसौ सेतुरौकारसंज्ञितः ।
स चानुस्वारनादाभ्यां शुद्राणां सेतुरुच्यते” ॥
इति तन्त्रसारधृतकालिकापुराणम् ॥

**औः**, पुं, अनन्तः । इत्येकाक्षरकोषः ॥ निस्वनः । इति मेदिनी ॥

**औः**, स्त्री, विश्वम्भरा । इति मेदिनी ॥

**औक्षकं**, क्ली, उक्ष्णां समूहः । (“गोत्रोक्षोष्ट्रो-रभ्रेति” । ४ । २ । ३९ ॥ वुञ् ।) वृषसमूहः । इत्य-मरः ॥ एँडे गरुर पाल इति भाषा ॥

**औख्यं**, त्रि, (उखायां निष्पन्नं, उखा + यत् + स्वार्थे + ष्यञ् ।) स्थालीपक्वान्नादि ॥ उखायां निष्पन्नम् इत्यर्थे ष्ण्यप्रत्ययः ॥

**औचिती**, स्त्री, (उचितस्य भावः । ब्राह्मणादित्वात् व्यञ् + ङीष् । “हलस्तद्धितस्य” । ६ । ४ । १५० । इति यलोपः ॥) औचित्यम् । इति लिङ्गादिसंग्रहे अमरः ॥
(“सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः” ।
इति साहित्यदर्पणम् ॥)

**औचित्यं** क्ली, (उचित + ष्यञ् ।) उचितस्य भावः । उपयुक्तता । योग्यत्वम् । इत्यमरः ॥

| | | |
|---|---|---|
| | | (यथा साहित्यदर्पणे ३ य परिच्छेदे ।<br>“एता अपि<br>यथौचित्यादुत्तमाधममध्यमाः” ॥)<br>**औडवः**, पुं, (औड्वी संख्या विद्यते यस्य स औडवः ।<br>यद्वा ओडव एव + स्वार्थे अण् ।)<br>ओडवस्वरः ।<br>स च रागस्य जातिविशेषः ।<br>पञ्चस्वरमिश्रित- |

:रागरागिण्य इति यावत् । यथा, --

"औडवः पञ्चभिः प्रोक्तः स्वरैः षड्भिस्तु षाडवः ।
सम्पूर्णा सप्तभिः प्रोक्ता रागजातिस्त्रिधा मता" ॥
इति सङ्गीतरत्नाकरः ॥ अपि च ।
सम्पूर्णस्वराः
ष ऋ ग म प ध नि ॥ षाडवस्वराः
निषादो-
ञ्झिताः ष ऋ ग म प ध ॥ ओडवस्वराः
ऋ-प-
वर्जिताः ष ग म ध नि ॥ सम्पूर्णरागाः
सप्तभिः
स्वरैर्यथा । नटवसन्तादयः । षाडवरागाः
षड्भिः
स्वरैर्यथा । सैरिन्ध्रीप्रभृतयः ।
ओडवरागाः
पञ्चभिः स्वरैर्यथा मल्लारादयः । इति
सङ्गीत-
दामोदरः ॥ (तथा च संङ्गीतरत्नाकरे
स्वराध्याये
जातिप्रकरणे । ५३ -- ५४ ॥
"वान्ति यान्त्युडवोऽत्रेति व्योमोक्तमुडवं बुधैः ।
पञ्चमं तच्च भूतेषु पञ्चसंख्या तदुद्भवा ॥
ओडवी सास्ति येषाञ्च स्वरास्ते त्वोडवा मताः ।
ते संजाता यत्र गीते तदौडवितमुच्यते ॥
तत्सम्बन्धादौडवञ्च पञ्चस्वरमिद विदुः" ।
"क्रमादल्पाल्पतरते षाडवौडवकारिणोः" ॥)

**औडुम्बरं**, क्ली, कुष्ठरोगविशेषः । इति मेदिनी ॥

तस्य लक्षणम् ।
"रुग्दाहरागकण्डूभिः परीतं रोमपिञ्जरम् ।
उडुम्बरफलाभासं कुष्ठमौडुम्बरं वदेत्" ॥
इति निदानम् ॥ ताम्रम् । इति जटाधरः ॥
व्यभिचारिभावभेदः ।
यथा साहित्यदर्पणे ३ । १३७ ।
"औत्सुक्योन्माद-
शङ्काः स्मृतिमतिसहिता
व्याधिसन्त्रासलज्जाः" ॥
तल्लक्षणं तत्रैव ३ । १५६ ।
"इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता ।
चित्ततापत्वरास्वेद-
दीर्घनिश्वसितादिकृत्" ॥
उदाहरणं यथा तत्रैव ।
"यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपां-
स्तेचोन्मीलितभालतीसुरभयः
प्रौढाःकदम्बानिलाः ।
सा चैवास्मि तथापि तत्र
सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः
समुत्कण्ठते" ॥
इच्छा । यथा, तत्त्वकौमुद्याम् ।
"औत्सुक्यमिच्छा सा च इष्यमाणप्राप्तौ
निवर्त्तते
इष्यमाणश्च स्वार्थ इष्टलक्षणत्वात्
फलस्य" ॥)

**औदनिकः**, त्रि, (ओदनं शिल्पमस्य । ओदन + ठञ् ।)

सूपकारः । इत्यमरः ॥

**औदरिकः**, त्रि, (उदरे प्रसितः । उदर + ठक् ।)

विजिगीषाविवर्ज्जितः । उदरमात्रपूरकः ।
पेट्टुक
इति भाषा । तत्पर्य्यायः । आद्यूनः २ ।
इत्यमरः ॥
(यथा किराते । ११ । ५ श्लोकस्य
टीकायां
मल्लिनाथः । "अतएवाद्यून औदरिकः ।
आद्यूनः
स्यादौदरिके विदिगोषाविवर्ज्जिते ।
इत्यमरः" ॥)
"न ब्रूते परुषां गिरं वितनुते न भ्रूयुगं भङ्गुरं
नोत्तंसंक्षिपति क्षितौ श्रवणतः सा
मेस्फुटेऽप्यागसि
कान्ता गर्भगृहे गवाक्षविवरव्यापारिताक्ष्या
वहिः
सख्या वक्त्रमभिप्रयच्छति परं पर्य्यश्रुणी
लोचने" ॥
मनसो वृत्तिभेदः । यथा पञ्चदशी । १५ । ३
।
"शान्ता धोरास्तथा मूढा मनसो वृत्तयस्त्रिधा
।
वैराग्यं क्षान्तिरौदार्य्यमित्याद्या घोरवृत्तयः"
॥)

**औदास्यं** क्ली, (उदास + ष्यञ् ।) उदासस्य भावः
।

वैराग्यम् । अनुरागादिशून्यता । यथा ।
"औदास्यसंविदवलम्बितशून्यमुद्रा-
मस्मिन् दृशोः पतितताभवलोक्य भैम्याः" ।
इत्यादि नैषधम् ॥
"क्षौणीविलिखनहेतोर्वयमपि
कुब्जाः किमौदास्यम्" । इति पद्यावली ॥

**औद्दालकं**, क्ली, (उद्दालेन कीटेन सञ्चितम् ।
उद्दाल-

+ अण् + संज्ञायां कन् ।)
वल्मीककारिकीट-
निर्म्मितमधु ।
तस्य गुणाः । कषायत्वम् । उष्णत्वम् ।
कटुत्वम् ।
कुष्ठविषरोगनाशित्वञ्च । इति राजवल्लभः ॥
(अथौद्दालकस्य लक्षणं गुणाश्च यथा ।
"प्रायो वल्मीकमध्यस्थाः कपिलाः
स्वल्पकीटकाः ।
कुर्व्वन्ति कपिलं स्वल्पं तत् स्यादौद्दालकं
मधु ॥
औद्दालकं रुचिकरं स्वर्य्यं कुष्ठविषापहम् ।
कषायमुष्णमम्लञ्च कटुपाकञ्च पित्तकृत्" ॥

ताम्रपात्रादौ त्रि ॥ (उडुम्बरस्य विकारः । उडुम्बर
+ अण् । उडुम्बरपात्रम् ।
यज्ञाङ्गवृक्षविकारः ।
यथाह देवलः ।
“गृहीत्वौडुम्बरं पात्रं वारिपूर्णमुदङ्मुखः” ॥)

**औडुम्बरः**, पुं, चतुर्द्दशयमान्तर्गतयमविशेषः । इति
मेदिनी ॥ मुनिविशेषः । यथा, --
“वैखानसा बालिखिल्यौडुम्बराः फेनपा वने ।
न्यासे कुटीचकः पूर्ब्बं बह्वोदो हंसनिष्क्रियौ” ॥
इति श्रीभागवते ३ । १२ । ४३ ।
“औडुम्बराः
प्रातरुत्थाय यां दिशं प्रथमं पश्यन्ति तत आहृतैः
फलादिभिर्जीवन्तः” । इति तट्टीकायां स्वामी ॥

**औत्कर्ष्यं**, क्ली, (उत्कर्षस्य भावः । उत्कर्ष + ष्यञ् ।)
उत्कर्षता ॥

**औत्तानपादिः**, पुं, (उत्तानपादस्यापत्यम् पुमान् ।
उत्तानपाद + इञ् ।) ध्रुवः । इत्यमरः ॥ स तु
उत्तानपादराजपुत्त्रः ।
स्वायम्भुवमनुपौत्त्रः ।
(यथा भागवते । ४ । १० । ३० ।
“औत्तानपादे भगवांस्तव शार्ङ्गधन्वा
देवः क्षिणोत्ववनतार्त्तिहरो विपक्षान् ॥
उत्तानपादात् सुरुच्यां जात उत्तमः । इति महा-
भारतम् ॥)
ग्रहाणामुपरिस्थितनिश्चलतारा च ॥

**औत्सर्गिकः**, त्रि, (सामान्यविधिरुत्सर्गस्तस्य भावः ।
उत्सर्ग + ठञ् ।) सामान्यत्वम् । इति स्मार्त्ताः ॥

“विजिगीषाव्यवहारः कश्चित् प्रकर्षो वा आल-
स्यात् तेन विहीनो यः केवलमुदराधीनः” । इति
भरतः ॥
“स्वोदरपूरणाशक्तिनिमित्तकनिन्दात्या-
गेच्छा विजिगीषा तया रहितः” ।
इति रमानाथः ॥

**औदश्वितं**, क्ली, (उदश्वित् + “उदश्वितोऽन्यत्तर-
स्याम्” । ४ । २ । १९ । इति पक्षे अण् ।) अर्द्ध-
जलयुक्तघोलं । इति हेमचन्द्रः ॥ (उदश्विच्छब्दे
ऽस्य विशेषो ज्ञातव्यः ॥)

**औदश्वित्कं**, क्ली, (उदश्विति संस्कृतम् । “उदश्वितो-
ऽन्यतरस्याम् ४ । २ । १९ इति ठक् । “इसुसुक्ता-
न्तात् कः” । ७ । ३ । ५१ । इति ठस्य कः ।) अर्द्ध-
जलमिश्रितघोलम् । इति हेमचन्द्रः ॥

**औदार्य्यं**, क्ली, (उदारस्य भावः । उदार + ष्यञ् ।)
उदारता । इति हेमचन्द्रः ॥ (वाग्गुणभेदः । यथा
किराते १ । ३ ॥ “स सौष्ठवौदार्य्यविशेषशा-
लिनोम्” इति “औदार्य्यं अर्थसम्पत्तिः” इति
मल्लिनाथः ॥ सात्त्विको नायकगुणभेदः । यथा
साहित्यदर्पणे ३ । ५८ ।
“शोभा विलासो माधुर्य्यं गाम्भीर्य्यं धैर्य्यतेजसी ।
ललितौदार्य्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः” ॥
तल्लक्षणं यथा तत्रैव ३ । ६३ ।

इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥
तीर्थविशेषः । यदुक्तं महाभारते ३ । ८४ । १५१ ।
“औद्द्वालकं महाराज तीर्थं मुनिनिषेवितम् ।
तत्राभिषेकं कृत्वा वै सर्व्वपापैः प्रमुच्यते” ॥

**औद्धत्यं**, क्ली, (उद्धत + ष्यञ् ।) उद्धतस्य भावः ।
यथा ।
“असूयान्यगुणर्द्धीनामौद्धत्यादसहिष्णुता ।
भ्रूभङ्गदोषसंघोषरक्ताक्षिवैकृतादिकृत्” ॥ इति
साहित्यदर्पणे ३ परिच्छेदः ॥

**औद्भिज्जं**, क्ली, (उद्भिद् + जन + ड + स्वार्थे अण् ।)
पांशवलवणं । इति राजनिर्घण्टः ॥

**औद्भिदं**, क्ली, (उद्भिद + स्वार्थेऽण् ।) साम्भरि-
लवणम् । अस्य गुणाः । (यथा सुश्रुते । सूत्रस्थाने
४६ अः ॥
“लघु तीक्ष्णोष्णमुत्क्लेदि सूक्ष्णं वातानुलोमनम् ।
सुतिक्तं कटुसंस्कारं विद्याल्लवणमौद्भिदम्” ॥)
तीक्ष्णत्वम् । उत्क्लेदकारित्वम् । क्षारयुक्तत्वम् ।
कटुत्वम् । तिक्तत्वम् । कोष्ठबद्धतानाहशूलनाशि-
त्वञ्च । इति राजवल्लभः ॥ (अस्य पर्य्यायो गुणाश्च
यथा --
“औद्भिदं पांशुलवणं यज्जातं भूमितः स्वयं
क्षारं गुरु कटु स्निग्धं शीतलं वातनाशनम्” ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे । १ भागे ॥
“सतिक्तकटुकक्षारं तीक्ष्णमुत्क्लेदि चौद्भिदम्” ।
इति वाभटे सूत्रस्थाने । ६ अ ॥)

**औत्सुक्यं**, क्ली, (उत्सुकस्य भावः । उत्सुक + ष्यञ् ।)

उत्कण्ठा । इति हेमचन्द्रः ॥ (यथा रत्नावली ।
“औत्सुक्त्येन कृतत्वरा सहभुवा व्यावर्त्तमाना
ह्रिया” ॥
“रथचरणसमाह्वस्तावदौत्सुक्यनुन्ना” ।
इति माघे ११ । २६ । तथा मेघदूते पूर्ब्बमेघे ॥ ५ ॥
“इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे” ।

“दानं सप्रियभाषणमौदार्य्यं शत्रुमित्रयोः समता” ॥
नायिकालङ्कारभेदः । यथा, तत्रैव ३ । ९४ ।
“यौवने
सत्त्वजास्तासामष्टाविंशतिसंख्यकाः ।
अलङ्कारास्तत्र भावहावहेलास्त्रयोऽङ्गजाः” ॥
शोभा कान्तिश्च दीप्तिश्च माधुर्य्यञ्च प्रगल्भता ।
औदार्य्यं धैर्य्यमित्येते सप्तैव स्युरयत्नजाः” ॥
तल्लक्षणं यथा तत्रैव ३ । १०३ । “औदार्य्यं विनयः
सदा” ॥ अस्य उदाहरणं यथा तत्रैव ।

उद्भिदो जातं जलम् । तस्य गुणाः ।
मधुरत्वम् ।
पित्तशमनत्वम् । अविदाहित्वम् । इति राज-
वल्लभः ॥
(“औद्भिदं पित्तशमनं मधुरं न विदाहि च” ॥
इति वैद्यकचकपाणिकृतहव्यगुणे पाणीयवर्गे ॥

:अस्य व्याख्यायां शिवदासेनोक्तं यथा ।
"औद्भिदं निम्नप्रदेशादूद्र्ध्वमुत्तिष्ठज्जलम्" ॥
उद्भिदो जातं द्रव्यादि । यथा ॥
"तत् नस्त्रिविधं ज्ञेयं जाङ्गलौद्भिदपार्थिवम्" ।
"भौममौषधमुद्दिष्टमौद्भिदन्तु चतुर्व्विधम् ।
वनस्पतिर्वीरुधश्च वानस्पत्यस्तथौषधिः" ॥
"मूलत्मक्सारनिर्यासनाडस्वरसपल्लवाः ।
क्षाराः क्षीरं फलं पुष्पं भस्मतैलानि कण्टकाः ॥
पत्राणि शुङ्गाः कन्दाश्च प्ररोहश्चौद्भिदो गणः" ।
इति चरके सूत्रस्थाने । १ अः ॥)

**औद्वाहिकं**, क्ली, (उद्वाहसमये लब्धम् । उद्वाह + ठञ् ।) भार्य्याप्राप्तिकाले लब्धं भार्य्याधनम् । इति दायभागः ॥ तत् भ्रातृभिरविभाज्यम् । यथा ।
"पितृद्रव्याविनाशेन यदन्यत् स्वयमर्ज्जयेत् ।
मैत्रमौद्वाहिकञ्चैव दायादानां न तद्भवेत् ॥
इति याज्ञवल्क्यः ॥ (यथा च मनुः । ९ । २०६ ।
"विद्याधनन्तु यद्यस्य तत्तस्यैव धनं भवेत् ।
मैत्रमौद्वाहिकञ्चैव माधुपर्किकमेव च" ॥)

**औपगवः**, पुं, उपगोरपत्यम् । इति भरतः ॥ उप समीपे गौर्य्यस्य इति उपगुर्गोपः । लक्षणया तत्पुरोहिते उपगुशब्दः । यथा हारीतः ।
"यं वर्णं याजयेद् यस्तु स तद्वर्णत्वमाप्नुयात् सद्योवर्षेण वर्षैश्चेत्वेवमेवाब्रवीद्भृगुः" ॥ * ॥ तथाच लक्षणया ब्राह्मण उपगुपदवाच्यः । तस्यापत्य- भौपगवः । इति श्रीभागवतटीकायां स्वामी । (उपगोरिदमिति व्युत्पत्त्या उपगुसम्बन्धिनि, त्रि- उपगु + "तस्येदम्" । ४ । ३ । १२० । इत्यण् ॥)
तथा रामायणे २ । ५४ । ३९ ।
"वासमौपयिकं मन्ये तव राम महाबल" ।
स्त्रियां तु ङीप् । यथा महाभारते वैवाहिक- पर्ब्बणि १ । १९४ । ११ ।
"न वैश्यशूद्रौपयिकीः कथास्ता न च द्विजानां कथयन्ति वीराः" ॥
स्वार्थे विनयादिभ्यष्ठक्प्रत्यये कृते उपायएव औप- यिंकम् । यथा भारविः, ३५ ।
"शिवमौपयिकं गरीयसीम्" इति ॥

**औपरोधिकः**, पुं, (उपरोधः प्रयोजनभस्य । उपरोध + ठक् ।) पीलुदण्डः । तत्पर्य्यायः । पैलवः २ । इति हेमचन्द्रः ॥ उपरोधसम्बन्धिनि त्रि ॥

**औपवस्तं**, क्ली, (उपवस्त + प्रज्ञाद्यण् ।) उपवासः । इति हेमचन्द्रः ॥

**औपसर्गिकः**, पुं, (उपसर्ग + ठक् ।) सन्निपातरोग- विशेषः । तस्य लक्षणम् । यथा, --
"कफोऽनुलोमवातेन यदि पित्तानुगो भवेत् ।
स्वेदशैत्यादिभिर्जुष्टस्तदा भवति मानवः ॥
प्रतिलोमः पुनस्तेन स्वास्थ्यमायाति तत्क्षणात् ।
औपसर्गिक एवान्यः सन्निपात उदाहृतः" ॥
इति वैद्यकम् ॥ उपसर्गसम्बन्धिनि त्रि ॥
("तत्रौपसर्गिको यः पूर्ब्बोत्पन्नंव्याधिं जघन्यकाल- इति हारीते प्रथमस्थाने । ८ अध्याये ॥
धन्वन्तरिं प्रति प्रश्नकारकः ऋषिभेदः । यथा सुश्रुते सूत्रस्थाने १ । "अथ खलु भगवन्तममर- बरमृषिगणपरिवृतमाश्रमस्थं काशीराजं दिवो- दासं धन्वन्तरिमौपधेनववैतरणौरभ्रपौष्कलावत- करवीर्य्यगोपुररक्षितसुश्रुतप्रभृतय ऊचुः" ॥)

**औरभ्रकं**, क्ली, (उरभ्राणां समूहः । उरभ्र + "गो- त्रोक्षोष्ट्रोरभ्रेति" । ४ । २ । ३९ । वुञ् ।) मेष- समूहः । इत्यमरः ॥ भेडार पाल इति भाषा ॥

**औरसः**, पुं स्त्री, (उरसा निर्म्मितः । उरस् अण् ।) स्वजातपुत्त्रः । तत्पर्य्यायः । औरस्यः २ । इत्य- मरः ॥ उरस्यः ३ । इति तट्टीका ॥ द्वादशविध- पुत्त्रान्तर्गतश्रेष्ठपुत्त्रोऽयम् । स तु सवर्णायां भा- र्य्यायां म्वयं जनितः । यथा । "सवर्णायां संस्कृतायां स्वयमुत्पादितमौरसं विद्यात्" । इति बौधायनः ॥
(तथा मनुः । ९ । १६६ ।
"स्वे क्षेत्रे संस्कृतायान्तु स्वयमुत्पादयेद्धि यम् ।
तमौरसं विजानीयात् पुत्त्रं प्रथमकल्पितम्" ॥)
"औरसो धर्म्मपत्नीजः" इत्यादि याज्ञवल्क्यः ॥ २ । १३१ ॥

**औरस्यः**, पुं स्त्री, (उरसो भवः । उरस् + यत् । ततः स्वार्थेऽण् ।) औरसपुत्त्रः । इत्यमरः ॥ (क्ली, उरसो वक्षस उत्पन्नम् । वक्षोभवम् । यथा शि- क्षायाम् । १६ ।
"हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम्" ।
औरस्यं तं विजानीयात् कण्ठ्यमाहुरसंयुतम्" ॥)

**औद्ध्वदेहिकं**, त्रि, (ऊद्ध्वदेहाय भवम् । ऊद्ध्वदेह +

**औपगवकं**, क्ली, (औपगवानां समूहः । "गोत्रोक्षो-
ष्ट्रेति" । ४ । २ । ३९ । वुञ् ।)
औपगवसमूहः ।
इत्यमरः ॥

**औपग्रस्तिकः**, पुं, (उपग्रस्तं ग्रासकालं भूतः । उप-
ग्रस्त + "तमधीष्टो भृतो भूतो भावी" । ५ । १
।
इति ठञ् ।) राहुग्रस्तश्चन्द्रः सूर्य्यश्च । इति
शब्द-
रत्नावली ॥

**औपनिधिकं**, क्ली, (उपनिधि + स्वार्थ ठञ् ।)
उपनिधिः । प्रीत्या भोगार्थमर्पितद्रव्यम् ।
इति
स्मृतिः ॥

**औपम्यं**, क्ली, (उपमैव । चतुर्वर्णादित्वात् स्वार्थे
ष्यञ् ।)
सादृश्यम् । तत्पर्य्यायः । अनुकारः २
अनुहारः ३ ।
साम्यम् ४ तुला ५ उपमा ६ कक्षः ७
उपमानम् ८ ।
इति हेमचन्द्रः ॥ (यथा, हितोपदेशे १ । ७३
॥
"प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा
।
आत्मौपम्येन भूतानां दयां कुर्व्वन्ति साधवः"
॥
"औपम्यं नाम यदन्येनान्यस्य
सादृश्यमधिकृत्य
प्रकाशनम् । यथा दण्डेन दण्डकस्य धनुषा
धानु-
ष्कस्येष्वासेनारोग्यदस्येति" । इति
विमानस्थाने ।
८ अध्याये ॥ चरकेणोक्तम् ॥)

**औपयिकः**, त्रि, (उपायेन सञ्जातः । उपाय + ठक्
+ ह्रस्वश्च ।) न्याय्यः । उपयुक्तः । इत्यमरः
॥ (यथा,
जातो व्याधिरुपसृजति स
तन्मूलएवोपद्रव-
संज्ञः" । इति सुश्रुते सूत्रस्थाने । ३५
अध्याये ॥
"प्रसङ्गात् गात्रसंस्पर्शान्निश्वासात्
सहभोजनात् ।
सहशय्यासनाच्चापि
वस्त्रमाल्यानुलेपनात् ॥
कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द
एव च ।
औपसर्गिकरोगाश्च संक्रामन्ति
नरान्नरम्" ॥
इति च सुश्रुते निदानस्थाने । ५
अध्याये ॥
माधवसंग्रहस्य व्याख्यायां
कुष्ठाधिकारे यथा ।
"औपसर्गिकरोगा इति औपसर्गिकाः
पापरोगा-
दयो भूतोपसर्गजाः संक्रामन्ति
आविशन्ति" ॥)

**औपस्थ्यं**, क्ली, (उपस्थाद्भवम् । उपस्थ +
ष्यञ् ।) उप-
स्थेन्द्रियसुखम् । इति श्रीभागवतम्
॥ (यथा,
तत्रैव ७ । ६ । १३ ।
"औपस्थ्यजैह्व्यं बहु मन्यमानः
कथं विरज्येत दुरन्तमोहः" ॥)

**औमीनं**, त्रि, (उमानां भवनं क्षेत्रं वा ।
"विभाषा-
तिलमाषोमेति" । ५ । २ । ४ । पक्षे
खञ् ।)
उम्यम् । उमाक्षेत्रम् । इत्यमरटीकायां
भरतः ॥
मसिनार क्षेत इति भाषा ॥

**औरगं**, क्ली, (उरगस्य इदम् । उरग + अण्
।) अश्ले-
षानक्षत्रम् । इति जटाधरः ।
सर्पसम्बन्धिनि त्रि ॥
ठञ् ।) मृतार्थं तदहर्दानम् । इत्यमरः ॥ यदह्नि
मृतस्तदहःप्रभृति सपिण्डीकरणात् पूर्ब्बं प्रेत-
तृप्तिहेतुकं यत् पिण्डादिदानं तत् । इति भरतः
॥
(पुत्त्रदाराद्यवश्यभर्त्तव्यपीडनेन
यत्पारलौकिक-
धर्म्मबुद्ध्या दानादि करोति तस्य दातुर्जीवतो
मृतस्य च तद्दानं दुःखफलं भवति ।
यथा मनुः ११ । १० ।
"वृत्यानामुपरोधेन यत्करोत्यौर्द्ध्वदेहिकम् ।
तद्भवत्यसुखोदर्कं जीवतश्च मृतस्य च" ॥
तथा रामायणे २ । ७७ । ३ ।
"दासीर्दासांश्च यानानि वेश्मानि सुमहान्ति च ।
ब्राह्मणेभ्यो ददौ पुत्रो राज्ञस्तस्यौर्द्ध्वदेहिकम्"
॥
(और्द्ध्वदैहिकम् इत्यपि स्यात् ॥)

**और्द्ध्वश्रोतसिकः**, त्रिं, (ऊर्द्ध्वश्रोतस् + ठञ् ।) शैवः
।
इति त्रिकाण्डशेषः ॥ (और्द्ध्वस्रोतसिकः ।
इत्यपि
स्यात् ॥)

**और्व्वं**, क्ली, (उर्व्व्यां भवम् । उर्व्वी + अण् ।) पांश-
वलवणम् । इति राजनिर्घण्टः ॥

**और्व्वः**, पुं, (और्व्वात् भृगुवंशीयात् ऋषेर्जातः । और्व्व
+ अण् । और्व्वर्षिक्रोधजत्वात्तथात्वम् ।) वाड-
वानलः । इत्यमरः ॥ स तु भूगोलस्य दक्षिण-
सीमा । तत्र सर्व्वे नरकाः दैत्याश्च वसन्ति ।
इति
सिद्धान्तशिरोमणिः ॥ स्वनामख्यातो
भृगुवंशीय-
ऋषिभेदः । तज्जन्मादिकथा, महाभारते
चैत्ररथ-
पर्ब्बणि १७९ अध्याये । उक्ता । यथा, --

| | | |
|---|---|---|
| महाभारते विदुरागमनपर्ब्बणि १ । २०५ । १२ ।<br>"एतत्तव महाराज तेषु पुत्रेषु चैव ह ।<br>वृत्तमौपयिकं मन्ये भीष्मेण सह मारत" ! ॥ | **औरभ्रः**, पुं, (उरभ्रस्य मेषस्य इदम् । उरभ्र + अण् ।)<br>कम्बलः । तत्पर्य्यायः । उर्णायुः २ आविकः ३<br>रल्लकः ४ । इति हेमचन्द्रः ॥<br>(मेषमांसम् । यथा<br>मनुः । ३ । २६८ ।<br>"द्वौ मासौ मत्स्यमांसेन त्रीन् मासान् हारिणेन तु ।<br>औरभ्रेणाथ चतुरः शाकुनेनाथ पञ्च वै" ॥<br>मेषदुग्धम् । यथा, --<br>"औरभ्रं मधुरं रूक्षमुष्णं वातकफापहम् ।<br>न शस्तं रक्तपित्तानां वातिकानां हितं भवेत्" ॥ | |

:"ततो भहीतलं तात क्षत्रियेण यदृच्छया ।

खनताधिगतं वित्तं
केनचिद्भृगुवेश्मनि ॥
तद्वित्तं ददृशुः सर्व्वे समेताः
क्षत्रियर्षभाः ।
अवमन्य ततः
क्रोधाद्भृगंस्ताश्छरणागतान् ॥
निजघ्नः परमेष्वासाः
सर्व्वांस्तान्निशितैः शरैः ।
आगर्भादवकृन्तन्तश्चेरुः सर्व्वां
वन्धसुराम् ॥
तत उच्छिद्यमानेषु भृगुष्वेवं
भयात्तदा ।
भृगुपत्न्यो गिरिं दुर्गं हिमवन्तं
प्रपेदिरे ॥
तासामन्यतमा गर्भं भयाद्दध्रे
महौजसम् ।
ऊरुणैकेन वामोरुर्भर्त्तुः
कुलविवृद्धये ॥
तद्गर्भमुपलभ्याशु ब्राह्मणी या
भयार्द्दिता ।
गत्वैका कथयामास
क्षत्रियाणामुपह्वरे ॥
ततस्ते क्षत्रिया जग्मुस्तं गर्भं
हन्तुमुद्यताः ।
ददृशुर्ब्राह्मणीं तेऽथ दीप्यमानां
स्वतेजसा" ॥
"अथ गर्भः स भित्त्वोरु ब्राह्मण्या
निर्जगाम ह ।
मुष्णन् दृष्टीः क्षत्रियानां मध्याह्नैव
भास्करः ॥
ततश्चक्षुर्विहीनास्ते गिरिदुर्गेषु
बभ्रमुः" ॥
अयमौर्व्वस्तु पितृबधामषात्
क्षत्रियबधे कृत-
प्रतिज्ञ उग्रे तपसि वर्त्तमानः
पितृभिर्न्निवारितः ।

**औलूक्यः**, पुं, (उलूकस्य मुनेरपत्यं पुमान् । उलूक +

गर्गादित्वात् यञ् ।) वैशेषिकः ।
वैशेषिकदर्शन-
वेत्ता । इति हेमचन्द्रः ॥ (अयं खलु
कणाद-
इत्याख्यया प्रसिद्धः ॥)

**औशीरं**, क्ली, (उश्यते । वश् + ईरन् । प्रज्ञाद्यण् ।

५ । ४३९ । यद्वा उशीरस्येदं
"तस्येदम्" । ४ ।
३ । १२० । इत्यण् ।) शयनासनम् ।
इत्यमरः ॥
शयनं स्वापः शय्या वा आसनं पीठादि
। शय-
नासनं समुदिवमिति स्वामी । पृथगिति
सुभूतिः ।
इत्यमरटीकायां भरतः ॥ (यथा,
महाभारते राज-
धर्म्मानुशासनपर्ब्बणि १२ । ६० । ३१
।
"छत्रं वेष्टनमौशीरमुपानद्व्यजनानि च ।
यातयामानि देयानि शूद्राय परिचारिणे"
॥)
उशीरजम् । चामरम् । दण्डः । इति
हेमचन्द्रः ॥

**औशीरः**, पुं, (उशीरस्यायम् । उशीर + अण् ।)

चामरदण्डः । इत्यमरः ॥

**औषणं**, क्ली, (उषण + भावार्थे अण् ।) कटुरसः ।

उषणं मरीचं तस्य भावः ॥

**औषधं**, क्ली, (ओषधेरिदम् । ओषधिरेव वा "ओ-

षधेरजातौ" ५ । ४ । ३७ । इत्यण् ।)
रोगनाशकद्रव्यं ।
ओषधिभवं भवार्थे ष्णप्रत्ययः ।
तत्पर्य्यायः । भेष-

तदेव युक्तं भैषज्यं यदारोग्याय कल्पते ।
स एव भिषजां श्रेष्ठो रोगेभ्यो यः प्रमोचयेत्" ॥
इति चरके सूत्रस्थाने । १ अध्याये ॥

"करणं पुनर्भेषजम् । भेषजं नाम तद्यदुपकर-

णायोपकल्पते भिषजो धातुसाम्याभिनिर्वृत्तौ
प्रयतमानस्य विशेषतश्चोपायात्तेभ्यः तद्द्विविधं
व्यापाश्रयभेदात् । दैवव्यपाश्रयं युक्तिव्यपाश्रयञ्च ।
तत्र दैवव्यपाश्रयं मन्त्रौषधमणिमङ्गलबल्युपहार-
होमनियमप्रायश्चित्तोपवासस्वस्त्ययनप्रणिपातग-
मनादि । युक्तिव्यपाश्रयं संशोधनोपशमने चेष्टाश्च
दृष्टफलाः एतच्चैव भेषजमङ्गभेदादपि द्विविधं ।
द्रव्यभूतमद्रव्यभूतञ्च । तत्र यद्द्रव्यभूतं तदुपायाभि-
प्लुतम् । उपायो नाम भयदर्शन-विस्मापन-क्षोभ-
ण-हर्षण-भर्त्सन-बध-बन्ध-स्वप्न-संवाहनादिरमूर्त्तो
भावः यथोक्ताः सिद्ध्युपायाश्च । यत्तु द्रव्यभूतं
तद्वमनादिषु योगमुपैति ।

तस्यापीयं परीक्षा इदमेवं प्रकृत्या एवंगुणमेवं

प्रभावमस्मिन् देशे जातमस्मिन्नृतौ एवं गृहीत-
मेवं निहितमेवमुपस्कृतमनया मात्रया युक्तमस्मिन्
ऋतौ एवंविधस्य पुरुषस्यैतावन्तन्दोषमपकर्षयति
उपशमयति वा अन्यदपि चैवंविधं भेषजमभूच्चा-
नेनानेन वा विशेषेण युक्तमिति" । इति च तत्रव
विमानस्थाने ८ अध्याये ॥

पर्य्यायानाह चरकश्चिकित्सास्थाने । १ अः ।

"चिकित्सितं व्याधिहरं पथ्यं साधनमौषधम् ।
प्रायश्चित्तं प्रशमनं प्रकृतिस्थापनं हितम् ॥
विद्याद्भेषजनामानि भेषजं द्विविधञ्च तत् ।
स्वस्थस्यौजस्करं किञ्चित्किञ्चिदार्त्तस्य रोगनुत् ॥
अभेषजञ्च द्विविधं बाधनं सानुबाधनम्" ।
तथा, सुश्रुते सूत्रस्थाने ३७ अध्याये यथा, --

"श्वतभ्रशर्कराश्मविषमवल्मीकश्मशानाद्यतनदे-

वतायतनसिकताभिरनुपहतामनूषरामभङ्गुराम-
दूरादेकां स्निग्धां प्रोहवतीं मृद्वीं स्थिरां समां
कृष्णां गौरीं लोहितां वा भूमिमौषधार्थं परी-

ततो वृथाप्रतिज्ञो नाहं भवितुमुत्सहे इति
जातशङ्कः अमोघत्वाच्च क्रोधवह्नेः पितॄनुक्तवान् ।
यथा तत्रैव १८१ अध्याये ।
"यश्चायं मन्युजो मेऽग्निर्लोकानादातुमिच्छति ।
दहेदेष च मामेव निगृहीतः स्वतेजसा ॥
भबताञ्च विजानामि सर्व्वलोकहितेप्सुताम् ।
तस्माद्विधध्वं यच्छ्रेयो लोकानां मम चेश्वराः ॥
पितर ऊचुः ।
य एष मन्युजस्तेऽग्निर्लोकानादातुमिच्छति ।
अप्सु तं मुञ्च भद्रन्ते लोका ह्यप्सु प्रतिष्ठिताः ॥
आपोमयाः सर्व्वरसाः सर्व्वमापोमयं जगत् ।
तस्मादप्सु विमुञ्चेमं क्रोधाग्निं द्विजसत्तम ॥
अयं तिष्ठतु ते विप्र यदिच्छसि महोदधौ ॥
मन्युजोऽग्निर्दहन्नापो लोका ह्यापोमयाः स्मृताः ॥
एवं प्रतिज्ञा सत्येयं तवानघ भविष्यति ।
नचैवं समरा लोका गमिष्यन्ति पराभवम् ॥
वशिष्ठ उवाच ।
ततश्च क्रोधजं तात और्व्वोऽग्निं वरुणालये ।
उत्ससर्ज्ज स चैवाप उपयुङ्क्ते महोदधौ ॥
महद्धयशिरो भूत्वा यत्तद्वेदविदो विदुः" ॥)
(उर्व्वस्यापत्यम् ।)
पञ्चप्रवरान्तर्गतमुनिविशेषः ।
जम् २ भैषज्यम् ३ अगदः ४ जायुः ५ । इत्यमरः ॥
जैत्रम् ६ आयुर्योगः ७ गदारातिः ८ अमृतम् ९
आयुर्द्रव्यम् १० । इति वैद्यकम् ॥
("शोधनं शमनञ्चेति समासादौषधं द्विधा ।
शरीरजानां दोषाणां क्रमेण परमौषधम् ॥
वस्तिर्विरेको वमनं तथा तैलं घृतं मधु ।
धीर्धैर्य्यात्मादिविज्ञानं मनोदोषौषधम्परम्" ॥
इति वाभटे सूत्रस्थाने । १ अध्याये ॥
"धन्वसाधारणे देशे समे सन्मृत्तिके शुचौ ।
श्मशानचैत्यायतनश्वभ्रबल्मीकवर्ज्जिते ॥
मृदौ प्रदक्षिणजले कुशरोहिषसंस्मृते ।
अफालकृष्टेऽनाक्रान्ते पादपैर्बलवत्तरैः ॥
शस्यते भेषजं जातं युक्तवर्णरसादिभिः ।
जन्त्वदग्धं दवादग्धमविदग्धञ्च वैकृतैः ॥
भूतैश्छायातपाम्बाद्यैर्यथाकालञ्च सेवितम् ।
अवगाढमहामूलमुदीचीं दिशमाश्रितम् ॥
अथ कल्याणचरितः श्राद्धः शुचिरुपोषितः ।
गृह्णीयादौषधं सुस्थं स्थितं काले च कल्पयेत् ॥
सक्षीरं तदसम्पत्तावनतिक्रान्तवत्सरम् ।
ऋते गुडघृतक्षौद्रधान्यकृष्णाविडङ्गतः" ॥
इति तत्रैव कल्पस्थाने । ६ अध्याये ॥
"यथाविधं यथाशस्त्रं यथाग्निरशनिर्यथा ।
तथौषधमविज्ञातं विज्ञातममृतं यथा ॥
क्षेत तस्यां जातमपि कृमि-विष-शस्त्रातप-पवन-दहन-तोयसम्बाध-मार्गैरनुपहतमेकरसं पुष्टं पृथ्व-वगाढमूलमुदीच्यां चौषधमाददीतेत्यौषधभूमिप-रीक्षाविशेषसामान्यं ॥

विशेषस्तु । तत्राश्मवती स्थिरा गुर्व्वी श्यामा कृष्णा वा स्थूलवृक्षशस्यप्राया स्वगुणभूयिष्ठा ॥ स्निग्धा शीतला सन्नोदकास्निग्धशस्यतृणकोमलवृ-क्षप्राया शुक्लाम्बुगुणभूयिष्ठा ॥ नानावर्णा लघ्वश्म-वती प्रविरलाल्पपाण्डुवृक्षप्ररोहाग्निगुणभूयिष्ठा ॥ रूक्षा भस्मरासभवर्णा तनुरूक्षकोटराल्परसवृक्ष-प्रायाऽनिलगुणभूयिष्ठा ॥ मृद्वी समा श्वभ्रवत्यव्यक्त-रसजला सर्व्वतोऽसारवृक्षा महापर्ब्बतवृक्ष-प्राया श्यामा चाकाशगुणभूयिष्ठा ॥

तत्र केचिदाहुराचार्य्याः । प्रावृट्-वर्षा-शर-द्धेमन्त-वसन्त-ग्रीष्मेषु यथासङ्ख्यं मूल-पत्र-त्वक्-क्षीरसार-फलान्यांददीतेति तत्तु न सम्यक् कस्मात् सौम्याग्नेयत्वाज्जगतः । सौम्यान्यौषधानि सौम्येषु ऋतुषु आददीताग्नेयान्याग्नेयेष्वेवमव्यापन्नगुणानि

इति पुराणम् ॥

**और्व्वशेयः**, पु, (उर्व्वश्याः अपत्यम् । उर्व्वशी + ढक् ।)

अगस्त्यमुनिः । इति हेमचन्द्रः ॥

(अस्य जन्मकथा पुराणेषूक्ता यथा,

“तयोरादित्ययोः सत्रे

दृष्ट्वाप्सरसमुर्व्वशीम् ।

रेतश्चस्कन्द तत् कुम्भे

न्यपतद्वाशतीवरे ॥

तेनैव तु मुहूर्त्तेन वीर्य्यवन्तौ

तपस्विनौ ।

अगस्त्यश्च वशिष्ठश्च द्वावृषी

संबभूवतुः” ॥

उर्व्वशीगर्भजाताः पुरूरवसः सप्त

पुत्राः ।

तत्कथा हरिवंशे २५ अध्याये

द्रष्टव्या ॥)

**औलूकं**, क्ली, (उलूकानां समूहः । अञ् ।) उलूक-

समूहः । इति जटाधरः ॥ पेचार

झाँक् इति भाषा ॥

औषधं ह्यनभिज्ञातं नामरूपगुणैस्त्रिभिः

।

विज्ञातमपि दुर्य्युक्तमनर्थायोपपद्यते ॥

योगादपि विषं तीक्ष्णमुत्तमं भेषजं भवेत्

।

भेषजं वापि दुर्य्युक्तं तीक्ष्णं सम्पद्यते

विषम् ॥

तस्मान्न भिषजा युक्तं युक्तिवाह्येन

भेषजम् ।

धीमता किञ्चिदादेयं

जीवितारोग्यकाङ्क्षिणा ॥

कुर्य्यान्निपतितो मूद्‌र्ध्नि सशेषं

वासवाशनिः ।

सशेषमातुरं कुर्य्यान्नत्वज्ञमतमौषधम् ॥

:भवन्ति ॥ सौम्यान्यौषधानि सौम्येषु ऋतुषु मृही-

तानि सोमगुणभूयिष्ठायां भूमौ जातान्यति-
मधुरस्खिग्वशीतानि जायन्ते । एतेन शेषं व्या-
ख्यातम् ॥

तत्र पृथिव्यम्बुगुणभूयिष्ठायां भूमौ जातानि

विरेचनद्रव्याण्याददीताग्न्याकाशमारुतगुणभूयि-
ष्ठायां वमनद्रव्याणि । उभयगुणभूयिष्ठायामुभयतो
भागानि । आकाशगुणभूयिष्ठायां संशमनान्येवं
बलवत्तराणि भवन्ति । सर्व्वाण्येव
चाभिनवान्यन्यत्र
मधु-घृत-गुड-पिप्पली-विडङ्गेभ्यः । सर्व्वाण्येव
स-
क्षीराणि वीर्य्यवन्ति तेषामसम्पत्तावनतिक्रान्त-
संवत्सराण्याददीतेति" ॥)
नानारोगहरौषधादिर्यथा । रुद्र उवाच ।
"एवं धन्वन्तरिर्विष्णुः सुश्रुतादीनुवाच ह ।
हरिः पुनर्हरायाह नानारोगान् रुगर्द्दनान्" ॥
हरिरुवाच ।

सर्व्वज्वरेषु प्रथमं कार्य्यं शङ्कर ! लङ्घनम्
।

क्वथितोदकपानञ्च तथा निर्व्वातसेवनम् ॥
अग्निस्वेदो ज्वरास्त्वेवं नाशमायान्ति हीश्वर ! ।
वातज्वरहरः क्वाथो गुडूच्या मुस्तकेन च ॥
दुरालभयैव कृतं पित्तज्वरहरं शृणु ।
शुण्ठीपर्पटमुस्तैश्च बालकोशीरचन्दनैः ॥
साज्यः क्वाथः श्लेष्मजन्तु सशुण्ठिः सदुरालभः
।
सबालकः सर्व्वज्वरं सशुण्ठिः सहपर्पटः ॥
किराततिक्तकैर्व्वापि गुडूचीशुण्ठितिक्तकैः ।
पित्तज्वरहरः स्याच्च शृण्वन्यं योगमुत्तमम् ॥
वालकोशीरपाठाभिः कण्टकारिकमुस्तकैः ।
ज्वरनुच्च कृतक्वाथस्तथा वै सुरदारुणा ॥
धन्याकनिम्बमुस्तानां समधुः स च शङ्कर ! ।
पटोलपत्रयुक्तश्च गुडूचीत्रिफलायुतः ॥
पीतोऽखिलज्वरहरः क्षुधाकृद्वातनुत्त्विदम् ।
हरीतकीपिप्पलीनामामलीचित्रकोद्भवम् ॥

सक्षीरो भेदनः क्वाथः
सर्व्वज्वरविशोधनः" ॥
इति गारुडे १७९ अध्यायः ॥ * ॥
भगवानुवाच ।

"सप्तरात्रात् प्रजायन्ते खल्वीटस्य
कचाः शुभाः ।

दग्धहस्तिदन्तलेपात् साजाक्षीररसाञ्जनात्
॥
भृङ्गराजरसेनैव चतुर्भागेण साधितम् ।
केशवृद्धिकरं तैलं गुञ्जाचूर्णान्वितेन च ॥
एला मांसी कुष्ठमुरायुक्तमभ्यङ्गतः शिव ! ।
गुञ्जाफलं ममाप्यैव लेपनं चेन्द्रलुप्तनुत् ॥
आम्रास्थिचूर्णलेपाद्धि केशाः सूक्ष्मा
भवन्ति वै ।
बद्धमूला घना दीर्घाः स्निग्धाः
स्युर्नोत्पतन्ति च ॥
विडङ्गगन्धपाषाणसाधितं तैलमुत्तमम् ।
सचतुर्गुणगोमूत्रं समनःशिलमेव च ॥
शिरोऽभ्यङ्गाच्छिरोजन्मयूकालिख्याक्षयं
नयेत् ।
नवदग्धशङ्खचूर्णघृष्टसीसकलेपिताः ॥
कचाः श्लक्ष्णा महाकृष्णा भवन्ति
वृषभध्वज ! ।
भृङ्गराजं लोहचूर्णं त्रिफला वीजपूरकम् ॥
नीली च करवीरञ्च गुडमेतैः समैः शृतम् ।
पलितानीह कृष्णानि कुर्य्याल्लेपान्महौषधम्
॥
आम्रास्थिमज्जा त्रिफला नीली च
भृङ्गराजकम् ॥
जीर्णं पक्वलौहचूर्णं काञ्जिकं कृष्णकेशकृत्
॥
चक्रमर्दकवीजानि कुष्ठमेरण्डमूलकम् ।
अत्युष्णकांञ्जिकं पिष्ट्वा
लेपान्मस्तकरोगनुत् ॥

सैन्धवञ्च वचा हिङ्गु कुष्ठं नागेश्वरं
तथा ।

त्रिकटु त्रिफला चैव करञ्जस्य फलानि
च ॥
सैन्धवं रजनी द्वे च भृङ्गराजरसेन हि ।
पिष्ट्वा तदञ्जनादेव
तिमिरादिविनाशनम् ॥
अटरूषकमूलन्तु काञ्जिकापिष्टमेव च
।
तेनाक्षिभूरिलेपाच्च चक्षुःशूलं
विनश्यति ॥
सतक्रं वदरीमूलं पीतमक्षिव्यथां हरेत्
।
सैन्धवं कटुतैलञ्च अपामार्गस्य
मूलकम् ॥
क्षीरकाञ्जिकसंघृष्टं ताम्रपात्रे च तेन च
।
अञ्जनात् पिटकस्यैव नाशो भवति
शङ्कर ! ॥
विल्वनीलीकारमूलं पिष्टमश्वजलेन च
।
अनेनाञ्जितमात्रेण नश्यन्ति तिमिराणि
हि ।
पिप्पलीकतकञ्चैव हरिद्रामलकं वचा ।
खदिरपिष्टवर्त्तिश्च अञ्जनं नेत्ररोगनुत्
॥
नीरपूर्णमुखो धौति वृहद्वातेन
योऽक्षिणी ।
प्रभाते नेत्ररोगैश्च नित्यं सर्व्वैः
प्रमुच्यते ॥
शुक्लैरण्डस्य मूलेन पत्रेणापि
प्रसाधितम् ।
छागदुग्धं सेकयुक्तं चक्षुषोर्वातरोगनुत्
॥
चन्दनं सैन्धवं वृद्धपलाशश्च हरीतकी
।
पटोलकुसुमं नीली चक्रिका
हरतेऽञ्जनात् ॥
गञ्जामूलं छागमूत्रघृष्टं तिमिरनुच्च तत्
।

चूर्णं जलञ्च क्वथितं धन्याकोशीरपर्पटैः ।
आमलक्या गुडूच्या च मधुयुक्तं सचन्दनम् ॥
समस्तज्वरनुत् स्याच्च सन्निपातहरं शृणु ।
हरिद्रानिम्बत्रिफलामुस्तकैर्देवदारुणा ॥
कषायं कटुरोहिण्या सपटोलं सपत्रकम् ।
त्रिदोषज्वरनुत् स्याच्च पीतन्तु क्वथितं जलम् ॥
कण्टकारिनागरेण गुडूच्या पुष्करेण च ।
जग्ध्वा नागबलाचूर्णं श्वासकासादिनुद्भवेत् ॥
कफवातज्वरे देयं जलमुष्णं पिपासिने ।
मण्डो वा मुद्गयूषं वा शाल्यन्नं वाथ यूषवत् ॥
ज्वरार्त्तमानुषे देयं ज्वरहानिस्तदा भवेत् ।
विश्वपर्पटकोशीरघनचन्दनसाधितम् ॥
दद्यात् सुशीतलं वारि तृट्छर्दिज्वरदाहनुत् ।
विल्वादिपञ्चमूलस्य क्वाथः स्याद्वातिके ज्वरे ॥
पाचनं पिप्पलीमूलं गुडूचीविश्वभेषजम् ।
वातज्वरे त्वयं क्वाथो दत्तः शान्तिकरः परः ॥
पित्तज्वरनुत् समधुः क्वाथः पर्पटनिम्बयोः ।
विधाने क्रियमाणेऽपि यस्य संज्ञा न जायते ॥
पादयोस्तु ललाटे वा दहेल्लोहशलाकया ।
तिक्ता पाठा पटोलश्च विशाला त्रिफला त्रिवृत् ॥
शतपुष्पा देवदारु एभिस्तैलन्तु साधितम् ॥
गोपुरीषरसेनैव चतुर्भागेण संयुतम् ।
तत्कर्णभरणाद्रुद्र ! कर्णशूलं क्षयं नयेत् ॥
मेषमूत्रसैन्धवाभ्यां कर्णयोर्भरणात् शिव ! ।
कर्णयोः पूतिनाशः स्यात्
कृमिस्रावादिकस्य च ॥
मालतीपुष्पदलयो रसेन भरणात् तथा ।
गोजलेनैव पूरेण कर्णस्रावो विनश्यति ॥
कुष्ठमाषमरीचानि तगरं मधु पिप्पली ।
अपामार्गोऽश्वगन्धा च वृहती सितसर्षपाः
॥
यवास्तिलाः सैन्धवञ्च पादिकोद्वर्त्तनं शुभम्
।
लिङ्गबाहुस्तनानाञ्च कर्णयोरृद्धिकृद्भवेत् ॥

कटुतैलं भल्लातकं
वृहतीफलदाडिमम् ।

वल्कलैः साधितं लिप्तं लिङ्गं तेन विवर्द्धते”
॥
इति गारुडे १८० अध्यायः ॥ * ॥
हरिरुवाच ।

“शोभाञ्जनपत्ररसं मधुयुक्तं हि
चक्षुषोः ।

भरणाद्रोगहरणं भवेन्नास्त्यत्र संशयः ॥
अशीतितिलपुष्पाणि जात्याश्च कुसुमानि
च ।
भया निम्बामला शुण्ठी पिप्पली
तण्डुलीयकम् ॥
छायाशुष्कां वर्टिं कुर्य्यात् पिष्ट्वा
तण्डुलवारिणा ।
मधुना सह सा चाक्ष्णोरञ्जनात्तिमिरादिनुत्
॥
विभीतकास्थिमज्जा तु
शङ्खनाभिर्मनःशिला ।
निम्बपत्रमरीचानि अजामूत्रेण पेषयेत् ॥
पुष्पं रात्र्यन्धतां हन्ति तिमिरं पटलं तथा ।
चतुर्भागाणि शङ्खस्य तदर्द्धेन मनःशिला ॥
सैन्धवञ्च तदर्द्धेन एतत् पिष्टोदकेन तु ।
रौप्यताम्रसुवर्णानां हस्तघृष्टं
शलाकया ॥
घृतं तद्वमनं रुद्र !
कामलाव्याधिनाशनम् ।
घोषाफलमथाघ्रातं पीतं
कामलनाशनम् ॥

दूर्व्वादाडिमपुष्पन्तु
अलक्तकहरीतकी ।

नासाशिंरारक्तनुत् स्यान्नस्याद्वै
स्वरसेन हि ॥

सुपिष्टं जिङ्गिनीमूलं तद्रसेन
वृषध्वज ! ।

नस्यदानाद्विनश्येत नासार्शो
नीललोहित ! ॥

गव्यं घृतं सर्ज्जरसं रुद्र !
धन्याकसैन्धवम् ।

धुस्तूरकं गैरिकञ्च एतैः
साधितसिक्थकम् ॥
सतैलं व्रणनुत् स्याच्च
स्फुटितोच्चटितोधरे ।
जातीपत्रञ्च चर्व्वित्वा विधृतं
मुखरोगनुत् ॥
भक्ष्यात् केशरवीजस्य दन्ताः
स्युश्चलिताः स्थिराः

मुस्तकं कुष्ठमेला च
यष्टीमधुकबालुकम् ॥

धन्याकमेतददनान्मुखदुर्गन्धनुत् हर !
।
कषायं कटुकं वापि तिक्तं वै तस्य
भक्षणात् ॥
तैलयुक्तस्य नित्यं स्यात्
मुखदुर्गन्धताक्षयः ।
दन्तव्रणानि सर्व्वाणि क्षयं
गच्छन्त्यनेन तु ॥

| | | |
|---|---|---|
| | छायाशुष्कान्तु वटिकां कृत्वा नयनमञ्जयेत् ॥<br>तिमिरं पटलं हन्ति पिटकस्य महौषधम् । | काञ्जिकस्य सतैलस्य गण्डूषकवलास्थितिः ।<br>ताम्बूलचूर्णदग्धस्य मुखस्य व्याधिनुच्छिव ! ॥<br>परित्यक्तः श्लेष्मगणः शुण्ठीचर्वणतो यथा ।<br>मातुलुङ्गदलान्येला यष्टीमधु च पिप्पली ॥<br>जातीपत्रमथैषाञ्च चूर्णं लीढं तथा कृतम् ।<br>शेफालिकाजटायाश्च चर्वणं गलगुण्ठिनुत् ॥<br>नासाशिरारक्तकर्षान्नश्येत् शङ्कर ! जिह्विका ।<br>रसः शिरीषवीजानां हलदस्य चतुर्गुणः ॥<br>तेन पक्वेन भूतेश ! नस्यं मस्तकरोगनुत् ।<br>गलरोगा विनश्यन्ति नस्यमात्रेण तत्क्षणात् ॥<br>दन्तकीटविनाशः स्यात् गुञ्जामूलस्य चर्व्वणात् ।<br>काकजङ्घा स्नुही नीली कषायाम्रकमूलकम् ॥<br>दन्ताक्रान्तं दन्तजांश्च क्रिमीन्नाशयते शिव ! ।<br>घृतं कर्कटपादेन दुग्धोन्मिश्रेण साधितम् ॥<br>तेन चाभ्यङ्गिता दन्ताः कुर्य्युः कटकटान्नहि । |

:लिप्ताः कर्कटपादेन केवलेनाथ वा द्विजाः ॥

त्रिसप्ताहं वारिपिष्टा ज्योतिष्मत्याः फलस्य हि ।
मज्जाभया च शुक्रस्य लेपादङ्गकलङ्कनुत् ॥

लोध्रकुङ्कुममञ्जिष्ठा लोहकालीयकानि च ।

यवतण्डु लमेतैश्च यष्टीमधुसमन्वितैः ॥
वारिपिष्टैर्वक्त्रलेपः स्त्रीणां शोभनवक्त्रकृत् ।
द्विभागच्छागदुग्धेन तैलप्रस्तन्तु साधितम् ॥
रक्तचन्दनमञ्जिष्ठालाक्षाणां कर्षकेण वा ।
यष्टीमधुकुङ्कुमाभ्यां सप्ताहान्मुखकान्तिकृंत् ॥

शुण्ठी च पिप्पलीचूर्णं गुडूची कण्ठकारिका ।

एभिश्च क्वथितं वारि पीतञ्चाग्निं करोति वै ॥
वातशूलक्षयञ्चैव सुरयक्षमखेश्वर ! ।
करञ्जपर्पटोशीरं वृंहती कटुरोहिणी ॥
गोक्षुरं क्वथितं त्वेभिर्वारि पीतं श्रमापहम् ।
दाहपित्तज्वरं शोषं मूर्च्छाञ्चैव क्षयं नयेत् ॥

मध्वाज्यपिप्पलीचूर्णं क्वथितं क्षीरसंयुतम् ।

पीतं हृद्रोगकासस्य विषमज्वरनुद्भवेत् ॥
क्वाथौषधीनां सर्व्वासां कर्षार्द्धं ग्राह्यमेव च ।
क्योऽनुरूपतो ज्ञेयो विशेषो वृषभध्वज ! ॥

दुग्धं पीतन्तु संयुक्तं गोपुरीषरसेन च ।

विषमज्वरनुत् स्याच्च काकजंघारसस्तथा ॥
सशुण्ठीक्वथितं क्षीरमजाया ज्वरनुद्भवेत् ।
यष्टीमधु मुस्तकञ्च सैन्धवं वृहतीफलम् ॥
एतैर्नस्यप्रदानाच्च निद्रा स्यात् पुरुषस्य च ।
मरीचमधुशुण्ठीनां नस्यान्निद्रा भवेच्छिव ! ॥
मूलन्तु काकजङ्घाया निद्राकृत् स्यात् शिरःस्थितम् ।

सिद्धं तैलं काञ्जिकेन तथा सर्ज्जरसेन च ॥

अग्निदग्धं व्रणं नश्येद्बहुशः कृतलेपतः ॥

नवनीतं माहिषञ्च दुग्धपिष्टतिलानि च ।

भल्लातकव्रणं नश्येत् हृच्छल्यं तस्य लेपतः ॥

शरपुङ्खा लज्जालुका पाठा चैषान्तु मूलकम् ।

जलपिष्टं तस्य लेपात् शस्त्राघातः प्रशाम्यति ॥
मूलञ्च काकजङ्घायास्त्रिरात्रेणैव शेषतः ।
पाकपूतिवेदनाञ्च हन्ति वै रोहिते व्रणे ॥

सजलं तिलतैलञ्च अपामार्गस्य मूलकम् ।

तत्सेकदानान्नश्येत प्रहारोद्भववेदना ॥

अभया सैन्धवं शुण्ठिरेतत् पिष्ट्वोदकेन तु ।

भक्षयित्वा ह्यजीर्णस्य नाशो भवति शङ्कर ! ॥
कटिबद्धं निम्बमूलमक्षिशूलहरं भवेत् ।
शणमूलं सताम्बूलं पीतमिन्द्रियकम्पहृत् ॥
अन्नसिद्धं हरिद्रा च श्वेतसर्षपमूलकम् ।
वीजानि मङ्गलदिने एषामुद्वर्त्तनं समम् ॥
सप्तरात्रप्रयोगेण शुभदेहकरं भवेत् ।

श्वेतापराजितापत्रं निम्बपत्ररसेन तु ॥

नस्यदानात् डाकिनीनां मातृणां ब्रह्मरक्षसाम् ।
मोक्षः स्यान्मधुसारेण नस्याच्च वृषभध्वज ! ॥

मूलं श्वेतजयन्त्याश्च पुष्यर्क्षे तु समाहृतम् ।

मन्त्रेणानेन तत् क्षिप्तं महाभङ्गकरं रिपोः ।
ॐ ठ ठ ठ ठाही ठाही ठाही स्वाहा ।
ॐ उदरः पाही पाही स्वाहा ॥

सुदर्शनाया मूलन्तु पुष्यर्क्षे तु समाहृतम् ।

निःक्षिप्तं गृहमध्ये तु भुजङ्गा वर्जयन्ति तम् ॥

माज्जर्रिपललं विष्ठा हरितालञ्च भावितम् ।

छागमूत्रेण तल्लिप्तो मूषिको मूषिकान् हरेत् ॥
युक्तो हि मन्दिरे रुद्र ! नात्र कार्य्या विचारणा ।

त्रिफलार्ज्जुनपुष्पाणि भल्लातकशिरीषकम् ॥

लाक्षा सर्ज्जरसश्चैव विडङ्गश्चैव गुग्गुलुः ।
एतैर्धूपो मक्षिकाणां मशकानां विनाशनः" ॥
इति गारुडे १८१ अध्यायः ॥ * ॥
हरिरुवाच ।

"ब्रह्मदण्डी वचा कुष्ठं प्रियङ्गुर्नागकेशरम् ।

दद्यात्ताम्बूलसंयुक्तं स्त्रीणां मन्त्रेण तद्वशम् ॥
ॐ नारायणायेति स्वाहा ।
ताम्बूलं यस्य दीयेत स वशी स्यात् समन्त्रतः ।
ॐ हरि हरि स्वाहा ॥

गोदन्तहरितालञ्च संयुक्तं काकजिह्वया ।

चूर्णं कृत्वा यस्य शिरे दीयते स वशी भवेत् ॥
श्वेतसर्षपनिर्म्माल्यं यद्गृहे तद्विचालकृत् ।
वैभीतकं शाखोटकं मूलं पत्रञ्च संयुतम् ॥
स्थाप्यते यद्गृहद्वारे तत्र वै कलहो भवेत् ॥

शीतोदकसमायुक्तं लेपात् सन्तापनाशनम् ।
शोणितज्वरदाहेभ्यो जातसन्तापनुत्तथा ॥
शूकशैवालमन्थाश्च शुण्ठीपाषाणभेदकम् ।
शोभाञ्जनं गोक्षुरं वा वरुणच्छदमेव च ॥
शोभाञ्जनस्य मूलञ्च एतैः क्वथितवारि च ।
दत्त्वा हिङ्गु यवक्षारं पीतं वातविनाशनम् ॥

पिप्पली पिप्पलीमूलं तथा भल्लातकं शिव ! ।

वार्य्येतैः क्वथितं पीतं वरशूलापसारकृत् ॥
अश्वगन्धामूलकाभ्यां सिद्धा वल्मीकमृत्तिका ।
एतया मर्द्दनात् रुद्र ! उरुस्तम्भः प्रशाम्यति ॥

वृहतीकस्य वै मूलं संपिष्टमुदकेन च ।

पीतं झिञ्झिनिवातस्य विपाटनकृदेव च ॥
पीतं तक्रेण मूलं च आर्द्रस्य तगरस्य च ।
हरेत् झिञ्झिनिवातं वै वृक्षमिन्द्राशनिर्यथा ॥
अस्थिसंहारमेकेन भक्तेन सह खादितम् ।
पीतं मांसरसेनापि वातनुच्चास्थिभङ्गहृत् ॥

घृतलिप्तं शक्तुकञ्च छागक्षीरेण संयुतम् ।

तल्लेपात् पादयोर्न्नश्येत् सन्तापो नात्र संशयः ॥
मध्वाज्यं सैन्धवं सिक्थं गुडगैरिकगुग्गुलैः ।
ससर्ज्जरसः स्फुटितः कोमलोऽङ्घ्रिश्च लेपनात् ॥
कटुतैलेन लिप्तो व विध्रमाग्नौ प्रतापितः ।
मृत्तिकाखादितः पादः समः स्याद्वृषभध्वज ! ॥

सर्ज्जरसः सिक्थकञ्च जीरकञ्च हरीतकी ।

तत्साधितघृताभ्यङ्गो ह्यग्निदग्धव्यथापनुत् ॥
तिलतैलञ्चाग्निदग्धयवभस्मसमन्वितम् ।

श्वेतापराजितार्कस्य तथा चित्रस्य मूलकम् ॥
कृत्वा तु वटिकां नारी तिलकेन वशी भवेत् ॥

पिप्पली लोहचूर्णन्तु शुण्ठिश्चामलकानि च ।

समानि रुद्र ! जानीयात् सैन्धवं मधु शर्करा ॥
उदुम्बरप्रमाणेन सप्ताहं भक्षणात् समम् ।
पुमांश्च बलवान् स्याच्च जीवेद्वर्षशतद्वयम् ॥
ॐ ठ ठ ठ इति ।
सर्व्ववश्यप्रयोगेषु प्रयुक्तः सर्व्वकामकृत् ॥
संगृह्य वृक्षात् काकस्य निलयं प्रदहेच्च तत् ।
चिताग्नौ भस्म तच्छत्रोर्दत्तं शिरसि शङ्कर ! ॥
तमुच्चाटयते रुद्र ! शृणु तं योगमुत्तमम् ।
निक्षिप्तञ्च पुरीषं वै वनमूषिकचर्म्मणि ॥
कट्यां तन्तु निबद्धं वै कुर्य्यान्मलनिरोधनम् ।

कृष्णकाकस्य रक्तेन यस्य नाम प्रलिख्यते ॥

चूतदलेऽमेध्यमध्ये ततो निक्षिप्यते हर ! ।
स खाद्यते काकवृन्दैर्नारी पुरुष एव वा ॥
शर्क्करा मध्वजाक्षीरं तिलगोक्षुरकं समम् ।
पाण्डुत्वं नाशयेद्रुद्र ! आस्वादितमिदं हर ! ॥

उलूककृष्णकाकस्य चिल्लस्याथ समिच्छतस् ।

रुधिरेण समायुक्तं ययोर्नाम्ना च हूयते ॥
तयोर्द्वयोर्महावैरं भवेन्नास्त्यत्र संशयः ।
भावितं ऋक्षदुग्धेन रोहितस्य शशस्य च ॥

खञ्जरीटस्य मांसन्तु मधुना सह पेषयेत् ।

ऋतुकाले योनिलेपात् पुरुषो दासतामियात् ॥

अगुरु गुग्गुलुञ्चैव नीलोत्पलसमन्वितम् ।

गुडेन धूपयित्वा तु राजद्वारे प्रियो भवेत् ॥

श्वेतापराजितामूलं पिष्टं रोचनया युतम् ।

यं पश्येत्तिलकेनैव वशी कुर्य्यान्नृपालये ॥

काकजिह्वा वचा कुष्ठं निम्बपत्रं सकुङ्कुमम् ।

आत्मरक्तं सभावेयं वशी भवति मानवः ॥

आरण्यस्य विडालस्य गृहीत्वा रुधिरं शुभम् ।

करञ्जतैले तद्भाव्य रुद्राग्नेः कज्ज्वलं ततः ॥
पातयेत् पद्मसूत्रेण अदृश्यः स्यात् तदञ्जनात् ॥

ॐ नमः खड्गवज्रपाणये महायक्षसेनापतये

स्वाहा । ॐ वक्र ह्रीं ह्रीं वरसंयुक्ता त्वरिता विद्या ॐ मातश्चौरं स्तम्भय स्वाहा ।

सहस्रं परिजप्या तु विद्येयं चौरवारिणी ।

महासुगन्धिकामूलं शुक्रं स्तम्भेत् क्रटौ स्थितम् ॥

ॐ नमः सर्व्वसत्त्वेभ्यो नमः सिद्धिं कुरु कुरु

स्वाहा ।

सप्ताभिमन्त्रितं कृत्वा करवीरस्य पुष्पकम् ।

| | | |
|---|---|---|
| | मांसं तत्साधितं तैलं तदभ्यङ्गश्च रोगनुत् ।<br>चन्दनोदकनस्यात्तु रोमोत्थानं भवेत् पुनः ॥<br>हस्ते लाङ्गलिकाकन्दं गृहीतं तेन लेपितम् ।<br>शरीरं येन स पुमान् बुद्धेर्दर्पं व्यपोहति ॥<br>पराक्रमेण युक्तस्य शूरस्य पुरुषस्य हि ।<br>वर्त्तिर्य्यस्य पुरीषेण कृतगर्भा तु भाविता ॥<br>मयूररुधिरेणैव जीवमाहरते शिव ! ।<br>ज्वरितानां भुजङ्गानां विलस्थानामपीश्वर ! ॥<br>देहश्चिताग्नौ दग्धस्तु सर्पस्याजगरस्य हि ।<br>तद्भस्म सम्मखे क्षिप्तं शत्रूणां भङ्गकृद्भवेत् ॥ | स्त्रीणामग्रे भ्रामयेच्च क्षणाद्वै सा वशा भवेत् ॥<br>ब्रह्मदण्डी वचा पत्रं मधुना सह पेषयेत् ।<br>अङ्गलेपाच्च वनिता नान्यं भर्त्तारमिच्छति ॥<br>पुत्त्रदण्डीशिफा वक्त्रे क्षिप्ता शुक्रस्य स्तम्भनम् ।<br>मूलं जयन्त्या वक्त्रस्थं व्यवहारे जयप्रदम् ॥<br>अपराजिताशिफां दद्यान्नीलोत्पलसमन्विताम् ।<br>ताम्बूलेन प्रदानाच्च वशीकरणमुत्तमम् ॥<br>रोचनानागपुष्पाणि विल्वपुष्पं प्रियङ्गवः ।<br>कुङ्कुमं चन्दनञ्चैव तिलकेन जगद्वशेत् ॥<br>ॐ ह्राँ गौरि देवि सौभाग्यं पुत्त्रवश्यादि देहि मे । |

:ॐ ह्रीँ लक्ष्मि ! देहि सौभाग्यं सर्व्वत्रैलोक्यमोहनम् ॥

दुरालभा वचा कुष्ठं कुङ्कुमञ्च शतावरी ।

तिलतैलेन संयुक्तं योनिलेपाद्वशो नरः ॥

निम्बकाष्ठस्य धूपेन धूपयित्वा भगं स्त्रियाः ।

मुभगा स्यात् सा च रुद्र ! पतिर्दासो भविष्यति ॥
माहिषं नवनीतञ्च कुष्ठञ्च मधुयष्टिका ।
सौभाग्यं भगलेपाच्च पतिर्दासो भवेत्तदा ॥
मधुयष्टिञ्च तैर्दद्याद्गोक्षीरं कण्टकारिका ।
एतानि समभागानि पिबेदुष्णेन वारिणा ॥
चतुर्भागावशेषेण गर्भसम्भवमुत्तमम् ॥

मातुलुङ्गस्य वीजानि क्षीरेण सह भावयेत् ॥

तत्पीत्वा लभते गर्भं नात्र कार्य्या विचारणा ।
मातुलुङ्गस्य वीजानि मूलान्येरण्डकस्य च ॥
घृतेन सह संयोज्य पाययेत् पुत्त्रकाङ्क्षिणीम् ।
अश्वगन्धाघृतं दुग्धं क्वथितं पुत्त्रकारकम् ॥

पलाशस्य तु वीजानि क्षौद्रेण सह पेषयेत् ।

रजस्वला तु पीत्वा स्यात् पुष्पगर्भविवर्ज्जिता” ॥
इति गारुडे १८२ अध्यायः ॥ * ॥
हरिरुवाच ।
“हरितालं यवक्षारं पत्राङ्गं रक्तचन्दनम् ।
जाती हिङ्गुलकं लाक्षा पक्वतैलेन पेषयेत् ॥
हरीतकीकषायेन घृष्ट्वा दन्तान् प्रलेपयेत् ।
दन्ताः स्युर्लोहिताः पुंसः श्वेता रुद्र ! न संशयः ॥

मूलकं स्वेदमग्नौ तु रसं तस्य प्रपेषयेत् ।

कर्णयोः पूरणात्तेन कर्णस्रावो विनश्यति ॥
अर्कपत्रं गृहीत्वा तु मन्दाग्नौ तापयेच्छनैः ।

ओम् रक्तचासुण्डे अमुकं मे वशमानय वशमानय
ह्रीँ ह्रौँ ह्रः फट् ।

इमं जप्त्वायुतं मन्त्रं तिलकेन च शङ्कर ! ।

गोरचनासंयुतेन स्वरक्तेन वशीभवेत् ॥

सैन्धवं कृष्णलवणं सौवीरं मत्स्यपित्तकम् ।

मधु सर्पिः सितायुक्तं स्त्रीणां तद्भगलेपनम् ॥
यः पुमान् मैथुनं गच्छेत् नान्यां नारीं गमिष्यति ॥

शङ्खपुष्पी वचा मांसी सोमराजी च फल्गुकम् ॥

माहिषं नवनीतञ्च गाढीकरणमुत्तमम् ।
सनालानि च पद्मानि क्षीरेणाज्येन पेषयेत् ॥
गुटिकां शोषितां कृत्वा नारी योन्यां प्रवेशयेत् ।
दशवारं प्रसूतापि पुनः कन्या भविष्यति ॥

सर्षपाश्च वचा चैव मदनस्य फलानि च ।

मार्जारविष्ठाधुस्तूरःस्त्रीकेशेन समन्वितः ॥
चातुर्थकहरो धूपो डाकिनीज्वरनाशनः ।
अर्ज्जुनस्य तु पुष्पाणि भल्लातकविडङ्गके ॥
ह्रीवेरकं सर्जरसं सौवीरं सर्षपास्तथा ।
सर्पयूकामक्षिकाणां धूपो मशकनाशनः ॥
भूलतायाश्च चूर्णेन स्तम्भः स्यात् योनिपूरणात् ।
तेन लेपयतो योनौ भगस्तम्भश्च जायते” ॥
इति गारुडे १८४ अध्यायः ॥ * ॥
हरिरुवाच ।

“साञ्जनञ्च घृतं क्षौद्रं लवणं ताम्रभाजने ।

घृष्टं पयःसमायुक्तं चक्षुःशूलहरं परम् ॥

भुक्ते त शर्करा पीता नवनीतेन बुद्धिकृत् ।
गुडस्य तु पुराणस्य पलमेकन्तु भक्षयेत् ॥
प्रत्यहं वर्षमेकन्तु निरन्तरमथो हर ! ।
स्त्रीसहस्रञ्च गच्छेच्च पुमान् बलयुतो हर ! ॥

कुष्ठं सुचूर्णितं कृत्वा घृतमाक्षिकसंयुतम् ।

भक्षणात् स्वप्नवेलायां बलीपलितनाशनम् ॥

अतसीमाषगोधूमं चूर्णं कृत्वा च पिप्पलीम् ।

घृतेन लेपयेद्गात्रमेभिः सार्द्धं विचक्षणः ॥
कन्दर्पसदृशो मर्त्त्यो भवते नित्यभक्षणात् ।
यवास्तिला अश्वगन्धा मुषला शरला गुडम् ॥
एभिश्च वटिकां जग्ध्वा तरुणो बलवान् भवेत् ।

हिङ्गु सौवर्च्चलं शुण्ठीं पीत्वा तु क्वथितोदकैः ॥

परिणामाख्यशूलञ्च अजीर्णञ्चैव नश्यति ॥

धातकीं सोमराजीञ्च मधुना सह पेषयेत् ।

दुर्ब्बलश्च भवेत् स्थूलो नात्र कार्य्या विचारणा ।
शर्करामधुसंयुक्तं नवनीतं बली लिहेत् ॥
क्षीराशी च क्षयी पुष्टिमेवाज्यैरतुलां लभेत् ॥

निष्पीड्य पूरयेत् कर्णौ कर्णशूलं विनश्यति ॥
प्रियङ्गुमधुकाम्बष्ठाधातक्युत्पलपत्तिभिः ।
मञ्जिष्ठालोध्रलाक्षाभिः कपित्थस्य रसेन च ॥
पचेत्तैलं तथा शुष्कक्षारो हिङ्गु महौषधम् ।
शतपुष्पा वचा कुष्ठं दारु शिग्रु रसायनम् ॥
सौवच्चलं यवक्षारं तथा सर्ज्जिकसैन्धवम् ।
भुजग्रान्थ विडं मुस्तं मधुयुक्तं चतुर्गुणम् ॥
मातुलुङ्गरसस्तद्वत् कदल्याश्च रसो हि तैः ।
पक्वतैलं हरेदाशु स्रावादींश्च न संशयः ॥
कर्णयोः कृमिनाशः स्यात् कटुतैलस्य पूरणात्
।
हरिद्रा निम्वपत्राणि पिप्पल्यो मरिचानि च ॥
विडङ्गं भद्रमुस्तञ्च सप्तमं विश्वभेषजम् ।
गोमूत्रेण च पिष्ट्वैव कृत्वा च वटिकां हर ! ॥
अजीर्णहृद्भवेच्चैका द्वयं विष्टम्भिकापहम् ।
पटलं मधुना हन्ति गोमूत्रेण तथार्व्वुदम् ॥
एषा च शङ्करी वर्त्तिः सर्व्वनेत्रामयापहा" ।
इति गारुडे १८३ अध्यायः ॥ * ॥
हरिरुवाच ।

"वचा मांसी च विल्वञ्च तगरं
पद्मकेशरम् ।

नागपुष्पं प्रियङ्गुञ्च समभागानि चूर्णयेत् ॥
अनेनाधूपितो मर्त्त्यः कामवद्विचरेन्महीम् ।

कर्पूरं देवदारुञ्च मधुना सह योजयेत् ॥

लिङ्गलेपाच्च तेनैव वशीकुर्य्यात् स्त्रियं किल ।
मैथुनं पुरुषो गच्छत् गृह्णीयात् स्वकमिन्द्रियम्
॥
वामहस्तन वामञ्च हस्तं यस्याः स्त्रिया लिपेत्
।
आलिप्ता स्त्री वशं याति नान्यं पुरुषमिच्छति
॥

हरितकी वचा कुष्ठं पिप्पल्यो
मरिचानि च ।

विभीलकस्य वीजानि हरितालं मनःशिला ॥
सर्व्वाक्षिरोगान्नश्येयुरजाक्षीरसमन्विताः ।
तत्क्षणात् पुष्पनाशः स्यात्
मालतीकुमुमाञ्जनात् ॥
विडङ्गं सैन्धवं कुष्ठं व्योषं हिङ्गु मनःशिला ।
कासे श्वासे च हिक्कायां लिह्यात् क्षौद्रं
घृतप्लुतम् ॥

पिप्पलीत्रिफलाचूर्णं मधुना लेहयेन्नरः
।

नश्यते पीनसः कासः श्वासश्च बलवत्तरः ॥
समूलचित्रकं भस्म पिप्पलीचूर्णकं हरेत् ।
कासं श्वासञ्च हिक्काञ्च मधुमिश्रं वृषध्वज !
॥

नीलोत्पलं शर्करा च मधुकं पद्मकं
समम् ।

तण्डुलोदकसंमिश्रं प्रशमेद्रक्त्वविक्रियाम् ॥

शुण्ठी च शर्करा चैव तथा क्षौद्रेण
संयुता ।

कोकिलस्वरएव स्यात् गुलिकाभक्षमात्रतः ॥

हरितालं शङ्खचूर्णं कदलीदलभस्मना
।

एतद्द्रव्येण चोद्वर्त्त्य लोमशातनमुत्तमम् ॥
लवणं हरितालञ्च तण्डुल्याश्च फलानि च ।
लाक्षारससमायुक्तं लोमशातनमुत्तमम् ॥
सुधा च हरितालञ्च शङ्खश्चैव मनःशिला ।
सैन्धवेन सहैकत्र छागमूत्रेण पेषयेत् ॥
तत्क्षणोद्वर्त्तनादेव लोमशातनमुत्तमम् ।

शङ्खमामलकीपत्रं धातक्याः कुसुमानि
च ॥

पिष्ट्वा तत् पयसा सार्द्धं सप्ताहं धारयेन्मुखे ।
स्निग्धाः श्वेताश्च दन्ताश्च भवन्ति
विमलप्रभाः" ॥

कुलीरचूर्णं सक्षीरं पीतञ्च
क्षयरोगनुत् ।

भल्लातकं विडङ्गञ्च यवक्षारञ्च सैन्धवम्
।
मनःशिला शङ्खचूर्णं तैलपक्वं तथैव च
॥
लोमानि शातयत्येव नात्र कार्य्या
विचारणा ॥

मालूरस्य रसं गृह्य जलौकां तत्र
पेषयेत् ।

हस्तौ तु लेपयेत्तेन
अग्निस्तम्भनमुत्तमम् ॥
शाल्मलीरसमादाय खरमूत्रे निधाय
तम् ।
अग्न्यागारे क्षिपेत्तेन
अग्निस्तम्भनमुत्तमम् ॥

वायसी-उदरं गृह्य
मण्डूकवसया सह ।

गुटिकां कारयेत्तेन ततोऽग्नौ प्रक्षिपेद्वशी
।
एवमेतत् प्रयोगेण अग्निस्तम्भनमुत्तमम्
॥

मुण्डीतकवचायुक्तं मरीचं नागरं
तथा ।

चर्व्वित्वा च इमं सद्यो जिह्वया ज्वलनं
लिहेत् ॥

गोरोचनाभृङ्गराजं चूर्णीकृत्य
घृतं समम् ।

दिव्याम्भसस्तु स्तम्भः स्यात्
मन्त्रेणानेन वै तथा ॥
ॐ ह्यं अग्निस्तम्भनं कुरु । ॐ नमो
भगवते जलं
स्तम्भय स्तम्भय संस संस केक केक
चर चर ।

इति गारुडे १८५ अध्यायः ॥ * ॥

हरिरुवाच ।

“शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम् ।
हेमन्ते शिशिरे चैव वर्षासु दधि शस्यते ॥

जलस्तम्भनमन्त्रोऽयं जलं स्तम्भयते शिव ! ॥

गृध्रास्थि च गवास्थि च
मृतनिर्माल्यमेव च ।

अरेर्यो निखनेत् द्वारे पञ्चत्वमुपयाति सः ॥
ब्रह्मदण्डी तु पुष्पेण खाने पाने वशीकरा ॥
यष्टीमधुपलैकेन पक्वमुष्णोदकं पिबेत् ।
विष्टम्भिकाञ्च हृच्छूलं हरत्येव महेश्वर ! ॥
ॐ हृः जः ।

मन्त्रोऽयं हरते रुद्र !
सर्पवृश्चिकजं विषम् ।

पिप्पली नवनीतञ्च शृङ्गवेरञ्च सैन्धवम् ॥
मरीचं दधि कुष्ठञ्च नस्ये पाने विषं हरेत् ।
त्रिफलार्द्रककुष्ठञ्च चन्दनं घृतसंयुतम् ॥
एतत्पानाच्च लेपाच्च विषनाशो भवेच्छिव ! ।
पारावतस्य चाक्षीणि हरितालं मनःशिला ॥
एष योगो विषं हन्ति वैनतेय इवोरगान् ॥

सैन्धवं त्र्युषणं चूर्णं
दधिमध्वाज्यसंयुतम् ।

वृश्चिकस्य विषं हन्ति लेपोऽयं वृषभध्वज ! ।

ब्रह्मदण्डीतिलान् क्वाथ्य चूर्णं
त्रिकटुकं पिबेत् ।

नाशयेद्रुद्र ! गुल्मानि निरोधं रक्तमेव च ॥

:पीत्वा क्षीरं क्षौद्रयुतं नाशयेधृदसृग्रुजम् ॥

अटरूषकमूलेन भगं नाभिञ्च लेपयेत् ।
सुखं प्रसूयते नारी नात्र कार्य्या विचारणा ॥
शर्करा मधुसंयुक्ता पीता तण्डु लवारिणा ।
रक्तातिसारशमनं भवतीति वृषध्वज ! ” ॥
इति गारुडे १८६ अध्यायः ॥ * ॥
हरिरुवाच ।
“मरीचं शृङ्गवेरञ्च कुटजत्वचमेव च ।
पानाच्च ग्रहणी नश्येत् शशाङ्ककृतशेखर ! ॥
पिप्पलीं पिप्पलीमूलं मरीचं तगरं वचाम् ।
देवदारुरसं पाठां क्षीरेण सह पेषयेत् ॥
अनेनैव प्रयोगेण अतीसारो विनश्यति ॥

मरीचतिलपुष्पाभ्यामञ्जनं कामलापहम् ।

हरीतकीसमगुडा मधुना सह योजिता ।
विरेचनकरी रुद्र ! मवतीति न संशयः ॥
त्रिफला चित्रकं चित्रं तथा कटुकरोहिणी
ऊरुस्तम्भहरो ह्येष उत्तमन्तु विरेचनम् ॥
हरीतकीं शृङ्गवेरं देवदारु च चन्दनम् ।
क्वाथयेच्छागदुग्धेन अपामार्गस्य मूलकम् ॥
जङ्घाशूलमूरुस्तम्भं सप्तरात्रेण नाशयेत् ॥
नाटाञ्च शृङ्गवेरञ्च सूक्ष्मचूर्णानि कारयेत् ॥
गुग्गुलं गुडतुल्यञ्च गुलिकामुपयुज्य तु ।
वायुं स्नायुगतञ्चैव अग्निमान्द्यञ्च नाशयेत् ॥
शङ्खपुष्पी तु पुष्पेण समुद्धृत्य सपत्रिकाम् ।
समूलीं छागदुग्धेन अपस्मारहरां पिबेत् ॥
अश्वगन्धाभये चैव उदकेन समं पिबेत् ।
रक्तपित्तं विनश्येत नात्र कार्य्या विचारणा ॥
हरीतकीकुष्ठचूर्णं कृत्वा आस्यञ्च पूरयेत् ।
शीतं पीत्वाथ पानीयं सर्व्वच्छर्द्दिनिवारणम् ॥
गुड़ची पद्मकारिष्टं धन्याकं रक्तचन्दनम् ।
पित्तश्लेष्मज्वरच्छर्द्दिदाहतृष्णाघ्नमग्निकृत् ॥
ॐ हूँ नम इति ।
श्रोत्रे बद्ध्वा शङ्खपुष्पीं ज्वरं मन्त्रेण वै हरेत् ।
ॐ जम्भनि स्तम्भनि विमोहय सर्व्वव्याधीन् मे वज्रेण ठ ठ सर्व्वव्याधीन् मे वज्रेण फट् । इति ॥
पुष्पमष्टशतं जप्त्वा हस्ते दत्त्वाथ न स्पृशेत् ।
चातुर्थको ज्वरो रुद्र ! अन्ये चैव ज्वरास्तथा ॥

“रजनीकदलीक्षारलेपः सिध्मविनाशनः ।
कुष्ठस्य भागमेकन्तु पथ्याभागद्वयं तथा ॥
उष्णोदकेन संपीत्वा कटिशूलविनाशनम् ।
अभया नवनीतञ्च शर्करा पिप्पलीयुतम् ॥
पानादर्शोहरं स्याच्च नात्र कार्य्या विचारणा ।
अटरूषकपत्रेण घृतं मृद्वग्निना पचेत् ॥
चूर्णं कृत्वा तु लेपोऽयं अर्शोरोगहरः परः ।

गुग्गुलुं त्रिफलायुक्तं पीत्वा नश्येत् भगन्दरम् ॥

अजाजीं शृङ्गवेरञ्च दधिमण्डेन पाययेत् ।
लवणेन तु संयुक्तं मूत्रकृच्छ्रविनाशनम् ॥
यवक्षारः शर्करा च मूत्रकृच्छ्रविनाशनम् ॥

चिताग्निः खञ्जरीटस्य विष्ठा फेनो हयस्य च ।

शोभाञ्जनं चासनेत्रं नर एतैस्तु धूपितः ।
अदृश्यस्त्रिदशैः सव्वैः किं पुनर्मानवैः शिव ! ॥

तिलतैलं यवान्दग्ध्वा मसिं कृत्वा तु लेपयेत् ।

तेनैव सह तैलेन अग्निदग्धः सुखी भवेत् ॥
लज्जालुः शरपुंखा च लेपः साज्यो हराग्निहा ।
पञ्चाङ्गं कनकं गृह्य श्लक्ष्णचूर्णन्तु कारयेत् ॥
दुग्धं धूपं तत्र दत्त्वा तत्क्षणात् पतते ध्रुवम् ।
ॐ नमो भगवते छिन्द छिन्द ज्वरस्य शिरः

वशातैलसमायुक्तमेकत्र तन्नियोजयेत् ॥
आत्मानं म्रक्षयेत्तेन जले तिष्ठेद्दिनत्रयम् ।
कुम्भीरकस्य नेत्राणि हृदयं कच्छपस्य च ॥
मूषकस्य वशास्थीनि शिशुमारवशा तथा ।
एतान्येकत्र संस्थानि जले तिष्ठेत् यथा गृहे ॥

लोहचूर्णं तक्रपीतं पाण्डुरोगहरं भवेत् ।

तण्डुलीयकगोक्षुरमूलं पीतं पयोऽन्वितम् ॥
कामलादिहरं प्रोक्तं मुखरोगहरं तथा ।
जातीमूलं तक्रपीतं कोलिमूलन्तु जीर्णकृत् ॥
सतक्रकाशमूलं वा वाकुचीमूलमेव वा ।
काञ्जिकेन च वाकुच्या मूलं वै दन्तरोगनुत् ॥

अथेन्द्रवारुणीमूलं वारिपीतं विषादिहृत् ।

बला चातिबला यष्टी शर्करा मधुसंयुता ॥
बन्ध्यागभकरं पीतं नात्र कार्य्या विचारणा ॥

श्वेतापराजितामूलं पिप्पलीशुण्ठिसंयुतम् ।

परिपिष्टं शिरोलेपात् शिरःशूलविनाशनम् ।
शिरोरोगहरं लेपात् गुञ्जामूलं सकाञ्जिकम् ॥

निर्गुण्डिकाशिफां पीत्वा गण्डमालाविनाशनम् ।

केतकीपत्रजं क्षारं गुडेन सह भक्षयेत् ॥
तक्रेण शरपुङ्खां वा पीत्वा प्लीहां विनाशयेत् ॥

जम्बूफलं हरिद्रा च सर्पस्यैव च कञ्चुकम् ।
स्वर्व्वज्वराणां धूपोऽयं हर ! चातुर्थकस्य च ॥
करवीरं भृङ्गपत्रं लवणं कुष्ठकर्कटम् ।
चतुर्गुणेन मूत्रेण पचेत्तैलं हरेच्च तत् ॥
पामां विचर्च्चिकां कुष्ठमभ्यङ्गाद्धि व्रणानि वै ॥
पिप्पलीमधुपानाच्च तथा मधुरभोजनात् ॥
प्लीहा विनश्यते रुद्र ! तथा शूरणसेवनात् ॥
पिप्पलीञ्च हरिद्राञ्च गोमूत्रेण समन्विताम् ॥
प्रक्षिपेच्च गुदद्वारे अर्शांसि विनिवारयेत् ।
अजादुग्धमार्द्रकञ्च पीतं प्लीहापहं भवेत् ॥
सैन्धवञ्च विडङ्गानि सोमराजी तु सर्षपाः ।
रजनी द्वे विषाञ्चैव गोमूत्रेण च पेषयेत् ॥
कुष्ठनाशश्च तत्क्षेपान्निम्बपत्रादनात्तथा” ॥
इति गारुडे १८७ अध्यायः ॥ * ॥
हरिरुवाच ।

प्रज्वलितपरशुपाणिपुरुषाय फट् ।
करे बद्ध्वा तु निर्गुण्ड्या मूलं ज्वरहरं ततः ।
मूलञ्च श्वेतगुञ्जायाः कृत्वा तत् सप्तखण्डकम् ॥
हस्ते बद्धं नाशयेच्च अर्शांस्येव न संशयः ॥

विष्णुक्रान्ताजमूत्रेण चौरव्याघ्रादिरक्षणम् ।

ब्रह्मदण्ड्यास्तु मूलेन सर्व्वकर्म्माणि कारयेत् ॥

त्रिफलायास्तु चूर्णन्तु साज्यं कुष्ठं विनाशयेत् ॥

आज्यं पुनर्णवाविल्वैः पिप्पलीभिश्च साधितम् ।
हरेत् हिक्काश्वासकासं पीतं स्त्रीणाञ्च गर्भकृत् ॥
भक्षयेच्चैवमादीनि पयसाज्येन पाचितम् ।
घृतशर्करया युक्तं शुक्रं स्यादक्षयं ततः ॥

विडङ्गं मधुकं पाठां मांसीं सर्ज्जरसन्तथा ।

हरिद्रां त्रिफलाञ्चैव अपामार्गं मनःशिलाम् ॥
उडुम्बरं धातकीपुष्पं तिलतैलेन पेषयेत् ।
योनिं लिङ्गञ्च मृक्षेत स्त्रीपुंसोः स्यात् प्रियं मिथः ॥

पुनर्णवामृता दूर्व्वा कनकं चेन्द्रवारुणी ।

वीजेनैषां जातिकाया रसेन रसमर्दनम् ॥
कृत्वा धमेच्च मूषायां रसमारणमीरितम् ॥

मध्वाज्यसहितं दुग्धं बलीपलितनाशनम् ॥

मातुलुङ्गस्य निर्यासं गुडाज्येन समन्वितम् ।

वातपित्तजशूलानि हन्ति वै पानयोगतः ।
शुण्ठीं सौवर्च्चलं हिङ्गु पीत्वा हृदयरोगनुत्” ॥
इति गारुडे १८८ अध्यायः ॥ * ॥
हरिरुवाच ।
ॐ गं गणपतये स्वाहेति ।
“अयं गणपतेर्मन्त्रो धनविद्याप्रदायकः ।
इममष्टसहस्रञ्च जप्त्वा बद्ध्वा शिखान्ततः ॥
व्यवहारे जयः स्याच्च शतं जाप्यान्नृणां प्रियः ।
तिलानान्तु घृताक्तानां कृष्णानां रुद्र ! होमयेत् ॥
अष्टोत्तरसहस्रन्तु राजा वश्यस्त्रिभिर्दिनैः ।
अष्टम्याञ्च चतुर्दश्यामुपोष्याभ्यर्च्च्य विघ्नराट् ॥
तिलाक्षतानां जुहुयादष्टोत्तरसहस्रकम् ।
अपराजितः स्याद्युद्धे च अथ चेदुद्यमे शिव ! ॥
जप्त्वा चाष्टसहस्रन्तु ततश्चाष्टशतेन ह ।
शिखां बद्ध्वा राजकुले व्यवहारे जयो भवेत् ॥
ह्रीकारं सविसर्गञ्च प्रातःसूर्य्यसमद्युतिम् ।
स्त्रीणां ललाटे विन्यस्य वश्यतां नयते ध्रुवम् ॥
तथैव नासामुरसि ध्यातश्चैवोपकारकृत् ।
सुसमाहितचित्तेन न्यस्तन्तु प्रमदालये ॥
सकामां कामिनीं कुर्य्यात् स्खलन्मदजलाकुलाम् ।
यस्तु जुहुयादयुतं शुचिः प्रयतमानसः ॥
दृष्टिमात्रे सदा तस्य वशमायान्ति योषितः ॥

मनःशिला पत्रकञ्च सगोरोचनकुङ्कुमम् ॥

| | | |
|---|---|---|
| | मध्वाज्यं गुडताम्रञ्च करेणामाक्षिकं रसम् ।<br>धमनाच्च भवेद्रौप्यं सुवर्णकरणं शृणु ॥<br>पीतं धुस्तूरपुष्पञ्च सीसकस्य पलं मतम् ।<br>पाठा लाङ्गलशाखा च मूलमावर्त्तनाद्भवेत् ॥<br>तैलं धुस्तूरवृक्षस्य तेन दीपं प्रदापयेत् ।<br>समाधावुपविष्टन्तु गगनस्थो न पश्यति ॥<br>रात्रौ च सार्षपं तैलं कर्णं खद्योतसम्भवम् ।<br>तद्दीपः प्रज्वलेत् सम्यक् अग्निज्वालाकलापवत् ॥<br>कुञ्जरस्य मदार्त्तस्य स्वयं नेत्रे शिवाञ्जयेत् ।<br>संग्रामं जयते सोऽपि महाशूरश्च जायते ॥<br>दन्तं दुण्डुभसर्पस्य मुखे संगृह्य वै क्षिपेत् ।<br>तिष्ठते जलमध्ये तु निर्विकल्पं स्थले यथा ॥<br>कुम्भीरनेत्रदंष्ट्राणि सास्थीनि रुधिरं तथा । | एभिः कृते च तिलके सदा स्त्री वशतामियात् ॥<br>सहदेवो भृङ्गराजः सितापराजिता वचा ।<br>तेनैव तिलकं कृत्वा त्रैलोक्यं वशतां नयेत् ।<br>गोरोचना मीनपित्तमाभ्याञ्च कृतवर्त्तिकाम् ॥<br>यः पुमांस्तिलकं कुर्य्याद्वामहस्तकनिष्ठया ।<br>स करोति वशं सर्व्वं त्रैलोक्यं नात्र संशयः ॥<br>गोरोचना महादेव ! ऋतुशोणितभाविता ।<br>ततो या कृततिलका सा नारी यं निरीक्षते ॥ |

:तञ्च शर्व्व ! वशं कुर्य्यान्नात्र कार्य्या विचारणा ।

नागेश्वरञ्च शैलेयं त्वक्पत्रञ्च हरीतकी ॥
चन्दनं कुष्ठसूक्ष्मैला रक्तशालिसमन्विता ।
एतैर्धूपो वशकरः स्मरबाण इवेश्वर ! ॥

रतिकाले महादेव ! पार्ब्बतीप्रिय ! शङ्कर ! ।

निजशुक्रं गृहीत्वा तु वामहस्तेन यः पुमान् ॥
कामिनीचरणं वामं लिम्पेत् स स्यात् स्त्रियाः प्रियः ।
सैन्धवञ्च महादेव । पारावतमलं मधु ॥
एभिर्लिप्तन्तु लिङ्गं वै कामिनीवशकृद्भवेत् ।
पुष्पाणि पञ्चरक्तानि गृहीत्वा यानि कानि च ॥
तण्डुलञ्च प्रियङ्गञ्च पेषयेदेकयोगतः ।
अनेन लिप्तलिङ्गस्य कामिनीवशतामियात् ॥
हयलाला च मञ्जिष्ठा मालतीकुसुमानि च ।
श्वेतसर्षपाण्येतैश्च लिप्तलिङ्गः स्त्रियाः प्रियः ॥
मूलन्तु काकजङ्घाया दुग्धपीतन्तु शोषनुत् ।

अश्वगन्धानागबलागुडमांसनिषेविणाम् ॥

रूपं भवेत् यथा तद्वन्नवयौवनचारिणाम् ॥

लौहचूर्णसमायुक्तं त्रिफलाचूर्णमेव वा ।

मधुना खादितं रुद्र ! परिणामाख्यशूलनुत् ॥

क्वथितोदकपानन्तु शम्बूकाक्षारकं तथा ।

मृगशृङ्गं ह्यग्निदग्धं गव्याज्येन समन्वितम् ।
पीतं हृत्पृष्ठशूलानां भवेन्नाशकरं शिव ! ॥

हिङ्गु सौवर्च्चलं रुद्र ! वृषध्वज ! महौषधम् ।

एभिस्तु क्वथितं वारि पीतं वै सर्व्वशूलनुत् ॥

अपामार्गस्य वै मूलं सामुद्रलवणान्वितम् ।

आस्वादितमजीर्णस्य शूलस्य स्याद्विमर्द्दकम् ॥

रात्र्यन्धता पटलता नश्येदिति विनिश्चयः ।
पिप्पली केतकं रुद्र ! हरिद्रामलकं वचा ॥
सर्व्वाक्षिरोगा नश्येयुः सक्षीरादञ्जनात्ततः ॥

काकजङ्घाशिग्रुमूले मुखेन विधृते शिव ! ।

चर्व्वित्वा दन्तरोगाणां विनाशो हि भवेद्धर" ! ॥
इति गारुडे १८९ अध्यायः ॥ * ॥
हरिरुवाच ।

"पीतं सारं गुडूच्याश्च मधुना च प्रमेहनुत् ।

पीतं गोहालियामूलं तिलदध्याज्यसंयुतम् ॥
निरुद्धमूत्रं क्वथितं प्रवर्त्तयति शङ्कर ! ।
तथा हिक्कां हरेत् पीता सौवर्च्चलयुता मुरा ॥

गोरक्षकर्क्कटीमूलं पिष्टं वास्योदकेन च ।

पीतं दिनत्रयेणैव नाशयेत् दन्तशर्क्कराम् ॥

पिष्टं वै मालतीमूलं ग्रीष्मकाले समाहृतम् ।

साधितं छागदुग्धेन पीतं शर्क्करयान्वितम् ॥
हरेन्मूत्रनिरोधञ्च हरेद्वै पाण्डुशर्क्कराम् ॥

द्विजयष्ट्याश्च वै मूलं पिष्टं तण्डुलवारिणा ।

कृष्णकेशसमायुक्तं नरं वर्षसहस्रिणम् ।
तच्च काञ्जिकसंयुक्तं नरं कुर्य्याच्च भक्षितम् ॥
शतशर्षं दिव्यदेहं बलीपलितवर्जितम् ।
जग्धं त्रिफलया युक्तं चक्षुष्मन्तं करोति वै ॥
अन्धः पश्येत्तु चूर्णस्य साज्यस्यैव तु भक्षणात् ।
महिषक्षीरसंयुक्तं तल्लेपः कृष्णकेशकृत् ॥
खल्लीटस्य च वै केशा भवन्ति वृषभध्वज ! ।
तैलयुक्तेन चूर्णेन बलीपलितवर्जितम् ॥
तदुद्वर्त्तनमात्रेण सर्व्वरोगैः प्रमुच्यते ।
सच्छागक्षीरचूर्णेन दृष्टिः षण्मासतोऽञ्जनात् ॥
पलाशस्य तु वीजानि श्रावणे वितुषाणि च ।
गृहीत्वा नवनीतेन तेषां चूर्णन्तु भक्षयेत् ॥
कर्षार्द्धमेव कुल्माषं नत्वा नित्यं हरिं प्रभुम् ।
यष्टिं पुराणधान्यं स्यादम्बुवर्ज्जं वृषध्वज ! ॥
जीवेद्वर्षसहस्राणि बलीपलितवर्जितः ॥

भृङ्गराजस्य वै चूर्णं पुष्यर्क्षे तु समाहृतम् ।

विडालपदमात्रन्तु ससौवीरञ्च भक्षयेत् ।
मासमात्रप्रयोगेण बलीपलितवर्जितः ॥
शतानि पञ्च जीवेच्च नवनागबलो भवेत् ।
भवेत् श्रुतिधरो रुद्र ! पुष्यर्क्षेचैव भक्षयेत्" ॥
इति गारुडे १९१ अध्यायः ॥ * ॥
हरिरुवाच ।

"निर्व्रणः स्यात् पूयहीनः प्रहारो घृतपूरितः ।

अपामार्गस्य वै मूलं हस्ताभ्याञ्च विमर्द्दयेत् ॥
तद्रसेन प्रहारस्य रक्तस्रावो न पूरणात् ।
रुद्र ! लाङ्गलिकामूलं हिज्जलस्य तथैव च ॥
तेन व्रणमुखं लिप्तं शल्यो निःसरति व्रणात् ।
चिरकालप्रविष्टोऽपि तेन मार्गेण शङ्कर ! ॥

दध्ना माहिषेण युक्तं जग्धं कोद्रवभक्तकम् ।

कङ्गुमूलस्य वै चूर्णं दत्तं नाडीव्रणापहम् ॥

वटरोहाङ्कुरो रुद्र ! तण्डलोदकघर्षितः ।

पीतः सतक्रोऽतीसारं क्षयं नयति शङ्कर ! ॥

अङ्कोठमूलं कर्षार्द्धं पिष्टं तण्डुलवारिणा ।

सर्व्वातिसारग्रहणीं पीतं हरति भूतप ! ॥
मरीचशुण्ठिकुटजत्वक्चूर्णन्तु गुडान्वितम् ।
क्रमात्तद्द्विगुणं पीतं ग्रहणीव्याधिनाशनम् ॥

श्वेनापराजितामूलं
हरिद्रासिक्थतण्डुलम् ।

अपामार्गत्रिकटुकमेषान्तु वटिकां शिव ! ।
विसूचिकामहाव्याधिं हरत्येव न संशयः ॥

त्रिफला त्रिकटुश्चव शिलाजतु हरीतकी
।

एकैकमेषां चूर्णन्तु मधुना च विमिश्रितम् ।
पीतं सर्व्वप्रमेहन्तु क्षयं नयति शङ्कर ! ॥

अर्कक्षीरं प्रस्थमेकं तिलतैलं तथैव च ।

मनःशिला मरीचानां सिन्दूरस्य पलं पलम् ॥
चूर्णं कृत्वा ताम्रपात्रे त्वातपे शोषयेत्ततः ।
पीतं स्नुहीगतं दुग्धं सैन्धवं शूलनुद्भवेत् ॥

त्रिकटुत्रिफलायुक्तं पलाशाष्टकसैन्धवम्
।

मनःशिला निम्बपत्रं जातीपुष्पमजापयः ॥
तन्मूत्रं शङ्खनाभिञ्च चन्दनं घर्षयेत्ततः ।
एभिश्च वटिकां कृत्वा अक्षिणी चाञ्जयेत्ततः ॥
नश्यते पटलं काचं पुष्पञ्च तिमिरादिकम् ॥

विभीतकस्य वै चूर्णं समधु
श्वासनाशनम् ॥

पिप्पलीत्रिफलाचूर्णं मधुसैन्धवसंयुतम् ।
सर्व्वरोगज्वरश्वासशोषपीनसहृद्भवेत् ॥
देवदारोश्च वै चूर्णं अजामूत्रेण भावयेत् ।
एकविंशति वै वारमक्षिणी तेन चाञ्जयेत् ॥

गण्डमालां हरेल्लेपात्
कुरुण्डगलगण्डकम् ॥

रसाञ्जनहरीतक्याश्चूर्णं तेनैव
गुण्डनात् ।

नश्येद्वै पुरुषव्याधिं नात्र कार्य्या
विचारणा ॥
करवीरमूललेपात् लेपात् पूगफलस्य
च ।
पुंव्याधिर्नश्यते रुद्र ! योगमन्यं
वदाम्यहम् ॥

दन्तीमूलं हरिद्रा च चित्रकं
तस्य लेपनात् ।

भगन्दरविनाशः स्यादन्ययोगं
वदाम्यहम् ॥
जलौकाजग्धरक्तन्तु
भगन्दरमुमापते ! ॥
त्रिफलाजलघृष्टञ्च
मार्जारास्थिविलेपितम् ।
ततो न प्रसवेत् रुद्र ! नात्र कार्य्या
विचारणा ॥

हरिद्रा त्वेकवारन्तु
स्नुहीक्षीरेण भाविता ।

झटित्यर्शो निपतति तल्लेपात्
वृषभध्वज ! ॥
घोषाफलं सैन्धवञ्च तल्लिप्तार्शः
पतेत्तथा ।
गव्याज्यं साधितं पीतं
पलाशक्षारवारिणा ॥
त्रिगुणेन त्रिकटुकमर्शांसि
क्षययेच्छिव ! ।
विल्वस्य च फलं दग्धं रक्तार्शसो
विनाशनम् ॥

जग्ध्वा कृष्णतिलान्येव
नवनीतयुतानि च ।

ब्रह्मयष्टिफलं पिष्टं वारिणा तेन लेपतः ।
तेन घृष्टं रक्तदोषः प्रणश्यति न संशयः ॥
यवभस्म विडङ्गञ्च गन्धपाषाणमेव च ।
शुण्ठिरेषाञ्चैव चूर्णं भावितं रुधिरेण वै ।
कृकलाशस्य तल्लिप्तं अर्व्वुदं विद्रवेच्छिव ! ॥

शोभाञ्जनस्य वीजानि अतसीमसिना
सह ।

गोरसन्तु प्रपिष्ट्वान्यत् ग्रन्थिकं नाशयेद्धि वै
॥

श्वेतापराजितामूलं पिष्ट
तण्डुलवारिणा ।

तेन नस्यप्रदानात् स्याद्भूतवृन्दस्य विद्रवः ॥
अगस्त्यपुष्पनस्यो वै समरीचश्च भूतहृत् ॥
भुजङ्गवर्म्म वै हिङ्गु निम्बपत्राणि वै यवाः ।
गौरसर्षप एभिः स्याल्लेपो भूतहरः कृतः ॥
गौरोचना मरीचानि पिप्पली सैन्धवं मधु ।
अञ्जनं कृतमेभिः स्यात् ग्रहभूतहरं शिव ! ॥
गुग्गुलूलूकपुच्छाभ्यां धूपो ग्रहहरः कृतः ।
चातुर्थिकज्वरैर्मुक्तः कृष्णवस्त्राबगुण्ठितः” ॥
इति गारुडे १९२ अध्यायः ॥ * ॥
हरिरुवाच ।

“श्वेतापराजितापुष्परसेनाक्ष्णोश्च
पूरणे ।

पटलं नाशमायाति ह्येतदुत्तममौषधम् ॥

मूलं गोक्षुरकस्यैव चर्व्वित्वा
नीललोहित ! ।

दन्तकीटव्यथां नश्येदन्धासुरविमर्द्दन ! ॥

यवक्षारं शुण्ठिचूर्णं युक्तं
तुल्यघृतान्वितम् ॥
लीढमग्निं करोत्येष प्रत्युषे
वृषभध्वज ! ।
शुण्ठ्या च क्वथितं वारि पीतञ्चाग्निं
करोति वै ॥
हरीतकी सैन्धवञ्च चित्रकं रुद्र !
पिप्पली ।
चूर्णमुष्णोदकेनैषां
पीतञ्चातिक्षुधाकरम् ॥
साज्यं शूकरभांसं वै पीतं
चातिक्षुधाकरम्" ॥
इति गारुडे १९० अध्यायः ॥ * ॥
हरिरुवाच ।
"हस्तिकर्णस्य वै मूलं गृहीत्वा
चूर्णयेद्धर ! ।
सर्व्वरोगविनिर्मुक्तं चूर्णं पलशतं
शिव ! ॥
सक्षीरं भक्षितं कुर्य्यात् सप्ताहेन
वृषध्वज ! ।
नरं श्रुतिधरं शूरं मृगेन्द्रगतिविक्रमम्
॥
पद्मगौरप्रतीकाशं युक्तं दशशतायुषा ।
षोडशाब्दाकृतिं रुद्र ! सततं
दुग्धभोजनम् ॥
मधुसर्पिःसमायुक्तं जग्धमायुस्करं
भवेत् ।
तज्जग्धं मधुना सार्द्धं
दशवर्षसहस्रिणम् ॥
कुर्य्यान्नरं श्रुतिधरं प्रमद्राजनवल्लभम्
।
दध्ना नित्यं भक्षितन्तु वज्रदेहकरं
शिव ! ॥

::नारी पुष्पदिने पीत्वा गोक्षीरेणोपवासतः ॥

श्वेतार्कस्य तु वै मूलं तस्यास्तद्गुल्मशूलनुत् ॥
श्वेतार्कमूलं विधिना गृहीतं पूर्ब्बसंस्थितम् ।
ऋतुशुद्धा च ललना कटौ बद्ध्वा नरोऽथ वा ।
नारी पुत्रंहि लभते सुरते वृषभध्वज ! ।

हस्तबद्धं पलाशस्य अपामार्गस्य वा हर ! ।

मूलं सर्व्वज्वरहरं भूतप्रेतादिनुद्भवेत् ॥

पीतं वृश्चिकमूलन्तु पर्य्युषितजलेन वै ।

सार्द्धं विनाशयेद्दाहज्वरञ्च परमेश्वर ! ।
शिखायाञ्चैव तद्बद्धं भवेदेकाहिकादिनुत् ॥
एतत् सकाञ्जिकं पीतं रक्तकुष्ठज्वरादिनुत् ।
वास्योदकेन पीतं तद्वृहद्विषहरं भवेत् ॥
यस्य लज्जालुकामूलं दीयते बहुवेतसा ।
सार्द्धं स वै वशं याति पुमान् स्त्री वा न संशयः ॥

पिष्ट्वा गव्यघृतेनैव पाठामूलं पिबेत्तु यः ।

गरं विषं तस्य नश्येन्नात्र कार्य्या विचारणा ॥
वास्योदकयुतं मूलं शिरीषस्य यथा तथा ।
रक्तचित्रकमूलस्य शमनं भरणाद्धर ! ॥
कर्णयोः कामलाव्याधिविनाशः स्यान्न संशयः ॥

श्वेतकोकिलाक्षमूलं छागीक्षीरेण संयुतम् ।

त्रिसप्ताहेन वै पीतं क्षयरोगं क्षयं नयेत् ।

नारिकेलस्य वै पुष्पं छागीक्षीरेण संयुतम् ।

पिबेच्च त्रिविधस्तस्य रक्तवातो विनश्यति ॥

एकश्च त्रिफलाभागस्तथा भागद्वयं शिव ! ।
सोमराजस्य वीजानां जग्धं पथ्या च दद्रुनुत् ॥
अम्बुतक्रं सगोमूत्रं क्वथितं लवणान्वितम् ।
कांस्यघृष्टं खरं लेपात् कुष्ठदद्रुविनाशनम् ॥
हरिद्रा हरितालञ्च दूर्व्वागोमूत्रसैन्धवम् ।
अयं लेपो हन्ति दद्रु पामानं वै गरं तथा ॥
सोमराजस्य वीजानि नवनीतयुतानि च ।
मधुनास्वादितानि स्युः शुक्लकुष्ठहराणि वै ।
तक्रानुपानतो रुद्र ! नात्र कार्य्या विचारणा ॥

सितापराजितामूलं वर्त्तितं वास्यवारिणा ।

तल्लेपो रुद्र ! मासेन शुक्लकुष्ठविनाशनः ॥
माहिषं नवनीतञ्च सिन्दूरञ्च मरीचकम् ।
पामा विलेपिता नश्येद्बहुलापि वृषध्वज ! ॥
विशुष्कगम्भारिमूलं पक्वक्षीरेण संयुतम् ।
भक्षितं शुक्लपित्तस्य विनाशकरमीश्वर ! ॥
मूलकस्य च वीजानि अपमार्गरसेन वै ।
पिष्टानि तेन लेपेन सिह्मिका रुद्र ! नश्यति ॥

कदलीक्षारसंयुक्ता हरिद्रा सिह्मिकापहा ।

रम्भापामार्गयोः क्षार एकस्तैलविमिश्रितः ॥
तदभ्यङ्गान्महादेव ! सद्यः सिध्म विनश्यति ।
कुष्माण्डनालक्षारस्तु सगोमूत्रश्च तत्त्वचः ॥
जलपिष्टा हरिद्रा च सिद्धा मन्दानलेन हि ।
माहिषेण पुरीषेण वेष्टिता वृषभध्वज ! ॥
अस्या उद्वर्त्तनं कुर्य्यादङ्गगौरत्वमीश्वर ! ।
तिलसर्षपसंयुक्तं हरिद्राद्वयकुष्ठकम् ॥
तेनोद्वर्त्तितदेहः स्यादुज्ज्वलः सुरभिः पुमान् ।
मनोहरश्चानुदिनं दूर्व्वाणां काकजङ्घया ॥
अर्ज्जुनस्य तु पुष्पाणि जम्बुपत्रयुतानि च ।

वारिपीतं तस्य पार्श्वे भवनेषु न पन्नगाः ॥
तार्क्षं मूर्त्तिं वहेद्यो वै भल्लूकदन्तनिर्मिताम् ।
स पन्नगैर्न दश्येत यावज्जीवं वृषध्वज ! ॥
पिबेद्गरुडमूलं यः पुष्यर्क्षे रुद्र ! वारिणा ।
तस्मिन्नपास्तदशना नागाः स्युर्नात्र संशयः ॥
पुष्ये लज्जालुकामूले हस्तबद्धे तु पन्नगान् ।
गृह्णीयाल्लेपतो वापि नात्र कार्य्या विचारणा ॥
पुष्ये श्वेतार्कमूलञ्च पीतं शीतेन वारिणा ।
नश्येत दन्तकविषं करवीरादिजं विषम् ॥
महाकालस्य वै मूलं पिष्टं तत् काञ्जिकेन वै ।
वोड्रमण्डलिकानाञ्चतल्लेपो हरते विषम् ॥
तण्डुलीयकमूलञ्च पिष्टं तण्डलवारिणा ।
घृतेन सह पीतन्तु हरेत् सर्पविषाणि च ॥
नीली लज्जालुकामूलं पिष्टं तण्डुलवारिणा ।
पीत्वा दद्दष्टकविषं नश्येदेकेन चोभयोः ॥
कुष्माण्डकफलरसः सगुडः सहशर्करः ।
पीतः सदुग्धो मोहन्तु तद्दष्टस्य विषस्य वै ॥
तथा काद्रवभूतस्य मोहस्य हर एव च ।
यष्टीमधुसमायुक्ता पीता च सितशर्करा ॥
सदुग्धा च त्रिरात्रेण मूषाविषहरा भवेत् ॥

चुम्बुकत्रयपानाच्च वांरिणः शीतलस्य वै ।

ताम्बूलजग्धरोमाञ्च मुखलाला विनश्यति ॥

घृतं सशर्करं पीत्वा मद्यपानमदो न वै ।

कृष्णाङ्कोठस्य मूलेन पीतम्त्क्वथितं जलम् ।
ततो नश्येद्दारुविषं त्रिरात्रेण महेश्वर ! ॥

कुर्य्यात् सुदर्शनामूलं आदित्ये तु समाहृतम् ।

कण्ठबद्धं त्र्याहिकादिग्रहभूतविनाशनम् ॥

पुष्ये धवलगुञ्जाया गृहीतं मूलमुत्तमम् ।

मुखे तु निहितं रुद्र ! हरेत् गरविषं बहु ॥
हस्ते बद्धं काण्डनुच्च कण्ठबद्धं ग्रहादिनुत्" ॥
इति गारुडे १९३ अध्यायः ॥ * ॥
हरिरुवाच ।
"अपराजिताया मूलञ्च गोमूत्रेण समन्वितम् ।
पीतञ्चापि हरत्येव गण्डमालां न संशयः ॥
तथेन्द्रवारुणीमूलं विधिना पीतमीश्वर ! ।
जिङ्गिन्येरण्डकं रुद्र ! शूकशिम्बीसमन्वितम् ॥
शीतोदकञ्च तन्नस्यो बाहुग्रीवाव्यथां हरेत् ॥

माहिषं नवनीतञ्च अश्वगन्धा च पिप्पली ।

वचा कुष्ठं त्वयं लेपो लिङ्गश्रोत्रस्तनर्द्धिकृत् ॥

कुष्ठनागबलाचूर्णं नवनीतसमन्वितम् ।

तल्लेपो युवतीनाञ्च कुर्य्यान्मनोहरं स्तनम् ॥

विटपेन्द्रवारुणीमूलं यस्य नाम्ना सुदूरतः ।

निक्षिप्यते समुत्पाट्य तस्य प्लीहा विनश्यति ॥
पुनर्णवायाः शुक्लाया मूलं तण्डुलवारिणा ।
पीतं विद्रधि नश्येच्च नात्र कार्य्या विचारणा ॥

कदली यवक्षारन्तु पानीयेन प्रसाधितम् ।

सलोध्राणि च तल्लेपो देहदुर्गन्धतां हरेत् ॥
मन्दोष्णलोध्रनीरं वै चूर्णन्तु कनकस्य च ।
तेनोद्वर्त्तितदेहस्य हरेद्ग्रीष्मप्रसारिकाम् ॥
त्वग्दोषश्चैव देवेन्द्र ! घर्म्मदोषश्च नश्यति ।
काकजङ्घोद्वर्त्तनञ्च अङ्गरागकरं भवेत् ॥

यष्टीमधु शर्करा च वासकस्य रसो मधु ।

एतत् पीतं रक्तपित्तकामलापाण्डुरोगनुत् ॥
रक्तपित्तं हरेत् पीतो वासकस्य रसो मधु ।
स्वापकाले तोयपानात् पीनसं प्रहितं हरेत् ॥

विभीतकस्य वै चूर्णं पिप्पलीसैन्धवस्य च ।

पीतं सकाञ्जिकं हन्ति स्वरभेदं महेश्वर ! ॥
चूर्णमामलकस्यैव पीतं शूलहरं परम् ॥

मनःशिला बलामूलं काकपर्णञ्च गुग्गुलुम् ।

जातीपत्रं कोलिपत्रं तथा चैव मनःशिला ।
एभिश्चैव कृता वर्त्तिर्वदराग्नौ महेश्वर ! ॥
धूमपानं काशहरं नात्र कार्य्या विचारणा ॥

त्रिफलापिप्पलीचूर्णं भक्षितं मधुना युतम् ॥

भोजनादौ हि समधु पिपासां त्वरितं हरेत् ।
विल्वमूलञ्च समधु गुडूचीक्वथितं जलम् ॥
पीतं हरेच्च त्रिविधं छर्दि वै नात्र संशयः ।
पीतादूर्व्वा छर्दिनुत् स्यात् पिष्टा तण्डुलवारिणा" ॥
इति गारुडे १९४ अध्यायः ॥ * ॥
हरिरुवाच ।

"पुनर्णवाया मूलञ्च श्वेतं पुष्ये समाहृतम् ।

उष्णं गव्यघृतं पीतं सैन्धवेन समन्वितम् ।

नाशयेत्तन्महादेव ! वेदनां वृश्चिकोद्भवाम् ॥
कुसुम्भं कुङ्कुमञ्चैव हरितालं मनःशिला ।
करञ्जपिशितञ्चैव अर्ककीटञ्च शाल्मली ॥
विषं नृणां विनश्येत एतेषां भक्षणाच्छिव ! ।
दीपतैलप्रदानाच्च दंशे वृश्चिकजे शिव ! ॥
खर्ज्जुरकविषं नश्येत्तदा वै नात्र संशयः ।
दंशस्थानं वृश्चिकस्य रुद्र ! गुग्गुलुधूपितम् ॥
विषं नश्येत्ततो रुद्र ! तात्र कार्य्या विचारणा ॥

अङ्कोठपत्रधूपेन नश्येन्मषिकजं विषम् ॥

नागेश्वरमरीचानि शुण्ठी तगरपादिका ।
नश्येन्मधुमक्षिकाया एतेषां लेपतो विषम् ॥

शतपुष्पा सैन्धवञ्च साज्यं वा तेन लेपतः ।

शिरीषस्य च वीजं वै सितक्षीरेण घर्षितम् ॥
तल्लेपेन महादेव ! नश्येदुन्दुरुजं विषम् ॥

ज्वलिताग्निना विसेकी तथा दर्द्दुरजं विषम् ॥

धुस्तूरकरसोन्मिश्रं क्षीराज्यगुडपानतः ।
शूनां विषं विनश्येत शशाङ्ककृतशेखर ! ॥
वटनिम्बशमीनाञ्चवल्कलैः क्वथितं जलम् ।
तत्सेकान्नखदन्तानां नश्येद्व विषवेदनाम् ॥
देवदारु हरिद्रा च गैरिकस्य च लेपनात् ।
नागेश्वरं हरिद्रे द्वे मञ्जिष्ठा देवदारुकम् ।
एभिर्लेपाद्विनश्येत लूताविषमुमापते" ! ॥
इति गारुडे १९५ अध्यायः ॥ * ॥
हरिरुवाच ।

"एकं पुनर्णवामूलं अपामार्गस्य वा शिव ! ।

| | | |
|---|---|---|
| तदास्वादनान्नश्यन्ति उदरव्याधयोऽखिलाः ॥<br>वदरीकारवीमूलं गुडाज्येन समन्वितम् ।<br>अग्निना साधितं जग्ध्वा कृमीन् सर्व्वान् हरेत् शिव ! ।<br>नित्यं निम्बदलानाञ्च चूर्णमामलकस्य च ।<br>प्रत्यूषे भक्षयेच्चैव तस्य कुष्ठं विनश्यति ॥<br>हरीतकी विडङ्गञ्च हरिद्रा सितसर्षपाः ।<br>सोमराजस्य वीजानि करञ्जस्य च सैन्धवम् ।<br>गोमूत्रपिष्टान्येतानि कुष्ठरोगहराणि च ॥ | | सरसं योनिविक्षिप्तं बराङ्गस्य व्यथां हरेत् ॥ |

:प्रसूतिवेदनाञ्चैव तरुणीनां व्यथा हरेत् ॥

मूमिकुष्माण्डमूलं वै
शालितण्डुलवारिणा ।

सप्ताहं दुग्धपीतं स्यात् स्त्रीणां
बहुपयस्करम् ॥
रुद्रेन्द्रवारुणीमूललेपात् स्त्रीस्तनवेदना ।
नश्येत् घृतविपक्वा च कार्य्यावश्यं तु
पालिका ।
मक्षिता सा महेशान ! योनिशूलं
विनाशयेत् ॥
प्रलेपिता कारवेल्लमूलेनैव विनिर्गता ।
योनिः प्रवेशमायाति नात्र कार्य्या
विचारणा ॥

नीलीपटोलमूलानि साज्यानि
तिलवारिणा ॥

पिष्टान्येषां प्रलेपो वै ज्वालागर्द्दभरोगनुत्
॥

पाठामूलं रुद्र ! पीतं पिष्टं
तण्डुलवारिणा ।

पापरोगहरं स्याच्च कुष्ठपानन्तथैव च ॥
वास्योदकञ्च समधु पीतमन्तर्गतस्य वै ।
पापरोगस्य सन्तापनिवृत्तिं कुरुते शिव !
॥

कदलीमेकुचं पीतं पिष्ट्वा
तण्डुलवारिणा ।

स्त्रीणाञ्चैव महादेव ! रक्तस्रावं हि वारयेत्
॥
घृततुल्या रुद्र ! लाक्षा पीता क्षीरेण वै
सह ।
प्रदरं हरते रोगं नात्र कार्य्या विचारणा ॥

द्विजयष्टीत्रिकटुकं चूर्णं पीतं
हरेच्छिव ! ।

शर्करराज्यपयोभिश्च भक्षयित्वा च कामयेत् ।
स्त्रीणां शतं महादेव ! तत्क्षणान्नात्र संशयः ॥
रसश्चैरण्डतैलेन गन्धकेन शुभो भवेत् ।
त्रिफलोदकसंघृष्टो बलकृद्भक्षणाद्भवेत् ॥
दुग्धं वितुषमार्षञ्च शिम्बीवीजैश्च साधितम् ।
अपामार्गस्य तैलेन पीतं स्त्रीशतकामकृत्” ॥
इति गारुडे १९६ अध्यायः ॥ * ॥
हरिरुवाच ।

“या गौर्द्वेष्टि स्वकं वत्सं तस्या देयं
स्वकं पयः ।

लवणेन समायुक्तं तस्या वत्सः प्रियो भवेत् ॥

शुनोऽस्थि कण्ठबद्धं हि महिषीणां
गवान्तथा ।

कृमिजालं पातयति सकलं नात्र संशयः ॥
गोजङ्गलाभिपातः स्यात् गुञ्जामूलस्य भक्षणात्
।
वरुणफलस्य रसं करेण मथितं शिव ! ॥
चतुष्पादद्विपदयोः कृमिजालं निपातयेत् ।
व्रणञ्च शमयेद्रुद्र ! यवानां पूरणात्तथा ॥

गजमूत्रस्य वै पानं गोमहिष्युपसर्गनुत् ।

समसूरं शालिवीजं पीतं तक्रेण घर्षितम् ॥
क्षीरं गोमहिषस्यैव गोः पुंसश्च हितं भवेत् ।
पत्रञ्च शरपुङ्खाया दत्तं सलवणं शिव ! ॥
वारिस्फोटं हयानाञ्च वेशराणां विनाशयेत् ।
अश्वाश्च सुन्दरच्छाया भवन्ति च न संशयः ॥
गृहकुमारीपत्रं वै दत्तं सलवणं हर ! ।
तुरङ्गमवेशराणां कण्डुनुत् स्याद्दशाहतः” ॥
इति गारुडे १९७ अध्यायः ॥ * ॥
हरिरुवाच ।

“चित्रकस्याष्टभागानि शूरणस्य च
षोडश ।

शुण्ठ्याश्चत्वारि भागानि मरीचानां द्वयं तथा ॥
पिप्पली पिप्पलीमूलं विडङ्गानां चतुष्टयम् ।
अष्टौ मुषलीभागाश्च त्रिफलायाश्चतुष्टयम् ॥

शुष्कमूलकशुण्ठीनां क्षारो हिङ्गुलनागरम् ।
शुष्कं चतुर्गुणं दद्यात्तैलमेतैर्विपाचयेत् ॥
वाधिर्य्यं कर्णशूलञ्च पूयस्रावश्च कर्णयोः ।
क्रमयश्च विनश्यन्ति तैलस्यास्य
प्रपूरणात् ॥
शुष्कमूलकशुण्ठीनां क्षारो हिङ्गुलनागरम् ।
शतपुष्पी वचा कुष्ठं दारु शिग्रु रसाञ्जनम् ॥
सौवर्च्चलं यवक्षारं सामुद्रं सैन्धवं तथा ।
भुजग्रन्थि विडं मुस्तं मधु शुक्लं चतुर्गुणम्
॥
मातुलुङ्गरसञ्चैव कदलीरसमेव च ।
तैलमेभिर्विपक्तव्यं कर्णशूलापहं परम् ॥
व्याधिजः कर्णनादश्च पूयस्रावश्च दारुणः
।
पूरणादस्य तैलस्य क्रमयः कर्णयोः
खिलाः ॥
क्षिप्रं विनाशमायान्ति शशाङ्ककृतशेखर !
।
क्षारतैलमिदं श्रेष्ठं मुखदन्तामयापहम् ॥
चन्दनं कुङ्कुमं मांसी कर्पूरो जातिपत्रिका ।
जातीकक्कोलपूगानां लवङ्गस्य फलानि
च ॥
अगुरूशीरकस्तुर्य्यः कुष्ठं तगरनालिका ।
गोरोचना प्रियङ्गुश्च चोलो दमनकं नखम्
॥
सरलः सप्तपर्णश्च लाक्षा चामलकी तथा ।
कर्पूरकः पद्मकञ्च एतैस्तैलं प्रसाधितम् ॥
प्रस्वेदमलदौर्गन्ध्यकण्डुकुष्ठहरं परम् ।
पुमान्युवा स्यात्शुक्राढ्यः स्त्रीणां
चात्यन्तदुर्ल्लभः ।
स्त्रीशतं गच्छते रुद्र ! बन्ध्यापि लभते
सुतम् ॥

यमानी चित्रकं धान्यं त्र्युषणं
जीरकं तथा ।

सौवर्च्चलं विडं वच्यं
पिप्पलीमूलराजिकम् ।

तिलक्वाथेन संयुक्तं रक्तगुल्मं स्त्रिया हर ! ॥
कुसुमस्य निबद्धञ्च तरुणीनां महेश्वर ! ।
रक्तोत्पलस्य वै कन्दं शर्करातिलसंयुतम् ॥
पीतं सशर्करं स्त्रीणां धारयेत् गर्भपातनम् ।
रक्तस्रावस्य नाशः स्यात् शीतोदकनिषेवनात् ॥

पीतन्तु काञ्जिकं रुद्र ! क्वथितं शरपुंखया ।

हिङ्गुसैन्धवसंयुक्तं शीघ्रं स्त्रीणां प्रसूतिकृत् ॥
मातुलुङ्गस्य वै मूलं कटिबद्धं प्रसूतिकृत् ।

अपामार्गस्य वै मूलं योनिस्थञ्च प्रसूतिकृत् ॥

अपामार्गस्य वै मूले गर्भवत्यास्तु नामतः ।
उत्पाट्यमाने सकले पुत्रः स्यादन्यथा सुता ॥
अपामार्गस्य वै मूले नारीणां शिरसि स्थिते ।
गर्भशूलं विनश्येत नात्र कार्य्या विचारणा ॥

कर्पूरमदनफलमधुकैः पूरितः शिव ! ।

योनिः शुभा स्याद्वृद्धाया युवत्याः किं पुनर्हर ! ॥

यस्य बालस्य तिलकः कृतो गोरोचनाख्यया ।

शर्कराकुष्ठपानञ्च दत्तं स स्याच्च निर्भयः ॥
विषभूतग्रहादिभ्यो व्याधिभ्यो बालकः शिव ! ।

द्विगुणेन गुडेनैषां मोदकानि हि कारयेत् ।
तद्भक्षणमजीर्णं हि पाण्डुरोगञ्च कामलाम् ॥
अतिश्रोणि च मन्दाग्निं प्लीहाद्यञ्च निवारयेत् ।
विल्वाग्निमन्थश्योनाकपाटलापारिभद्रकम् ॥
प्रसारण्यश्वगन्धा च वृहती कण्टकारिका ।
बला चातिबला रास्ना श्वदंष्ट्रा च पुनर्णवा ॥
एरण्डशारिवा पर्णी गुडूची कपिकच्छरा ।
एषां दशपलान् भागान् क्वाथयेत् सलिलेऽमले ॥
तेन पादावशेषेण तैलपात्रे विपाचयेत् ।
आजं वा यदि वा गव्यं क्षीरं दत्त्वा चतुर्गुणम् ॥
शतावरीरसञ्चैव तैलतुल्यं प्रदापयेत् ।
द्रव्याणि यानि पेष्याणि तानि वक्ष्यामि तच्छृणु ॥
शतपुष्पा देवदारु बला पर्णी वचागुरु ।
कुष्ठं मांसी सैन्धवञ्च पलमेकं पुनर्णवा ॥
पाने नस्ये तथाभ्यङ्गे तैलमेतत् प्रदापयेत् ।
हृच्छूलं पार्श्वशूलञ्च गण्डमालाञ्च नाशयेत् ॥
अपस्मारं वातरक्तमायुष्मांश्च पुमान् भवेत् ।
गर्भमश्वतरी विन्द्यात् किं पुनर्मानुषी शिव ! ॥
अश्वानां वातभग्नानां कुञ्जराणां नृणां तथा ।
तैलमेतत् प्रयोक्तव्यं सर्व्ववातविकारिणाम् ॥

हिङ्गु तुम्बुरु शुण्ठ्या च साध्यं तैलन्तु सार्षपम् ।

एतद्धि पूरणं श्रेष्ठं कर्णशूलापहं परम् ॥

एभिः पचेत् घृतप्रस्थं जलप्रस्थाष्टसंयुतम् ॥
मर्म्मार्शोगुल्मश्वयथुं हन्ति वह्निं करोति वै ॥

मरीचं त्रिवृतं कुष्ठं हरितालं मनःशिला ।

देवदारुहरिद्रे द्वे कुष्ठं मांसी च चन्दनम् ।
विशाला करवीरञ्च अर्कक्षीरं शकृद्रसम् ॥
एषाञ्च कार्षिको भागो विषस्यार्द्धपलं भवेत् ।
प्रस्थं कटुकतैलस्य गोमूत्रेऽष्टगुणे पचेत् ॥
मृत्पात्रे लौहपात्रे वा शनैर्मृद्वग्निना पचेत् ।
पामा विचर्च्चिका चैव दद्रुविष्फोटकानि च ॥
अभ्यङ्गेन प्रणश्यन्ति कोमलत्वञ्च जायते ।
प्रसूतान्यपि श्वित्राणि तैलनानेन म्रक्षयेत् ॥
चिरोत्थितमपि श्वित्रं विवर्णं तत्क्षणाद्भवेत् ।
पटोलपत्रं कटुका मञ्जिष्ठा शारिवा निशा ॥
जाती शमी निम्बपत्रं मधुकं क्वथितं घृतम् ।
एभिर्लेपात् स्युररुजो व्रणा वै स्राविणः शिव ! ॥
शङ्खपुष्पी वचा सोमा ब्राह्मी ब्रह्मसुवर्च्चला ।
अभया च गुडूची च अटरूषकवाकुची ॥
एतैरक्षसमैर्भागैर्घृतप्रस्थं विपाचयेत् ॥

कण्टकार्य्या रसं प्रस्थं क्षीरप्रस्थसमन्वितम् ।

एतद्ब्राह्मीघृतं नाम स्मृतिमेधाकरं परम् ॥

अग्निजिह्वा वचा वासा पिप्पली मधु सैन्धवम् ।

सप्तरात्रप्रयोगेण किन्नरैः सह गीयते ॥

शङ्खनाभिवचाकुष्ठलोहानां धारणं सदा ॥
बालानामुपसर्गेभ्यो रुद्र ! रक्षाकरं भवेत्
।
पलाशचूर्णं समधु
गव्याज्यामलकान्वितम् ॥
सविडङ्गं पीतमात्रं नरं कुर्य्यान्महामतिम्
।
मासैकेन महादेव ! जरामरणवर्ज्जितम् ॥
पलाशवीजं सघृतं तिलमध्वन्वितं समम्
।
सप्ताहं भक्षितं रुद्र ! जरां नयति संक्षयम्
॥

रुद्रामलकचूर्णं वै
मधुतैलघृतान्वितम् ।

जग्ध्वा मांसं युवा स्याच्च नरो वागीश्वरो
भवेत् ॥
शिवामलकचूर्णं वै मधुना उदकेन वा ।
वलानि कुर्य्यान्नासायाः प्रत्यूषे भक्षितं
शिव ! ॥
कुष्ठचूर्णं साठ्यमधु प्रातर्जग्ध्वा मवेन्नरः ।
साक्षात् सुरभिदेहो वै जीवेद्वर्षसहस्रकम्
॥

माषस्य बिदलान्येव वितुषाणि
महेश्वर ! ।

घृतमावितशुष्काणि मयसा साधितानि वै
॥

अपामार्गो गुडूची च कुष्ठं शतावरी
वचा ।

शङ्खपुष्प्यभया साज्यं विडङ्गं भक्षितं समम्
।
त्रिभिर्दिनैर्नरं कुर्य्याद्ग्रन्थाष्टशतधारिणम्
॥

अद्भिर्वा पयसाज्येन मासमेकन्तु
सेविता ।

वचा कुर्य्यान्नरं प्राज्ञं श्रुतिधारणसंयुतम् ॥

:चन्द्रसूर्य्यग्रहे पीतं पलमेकं पयोऽन्वितम् ।
वचायास्तत्क्षणं कुर्य्यात् महाप्रज्ञान्वितं नरम् ॥
भूनिम्बनिम्बत्रिफलापर्पटैश्च शृतं जलम् ।
पटोलीमुस्तकाभ्याञ्च वासकेन च नाशयेत् ।
विस्फोटकानि व्यक्तानि नात्र कार्य्या विचारणा ।
कतकस्य फलं शङ्खं सैन्धवं त्र्युषणं वचा ॥
फेनो रसाञ्जनं क्षौद्रं विडङ्गानि मनःशिला ।
एषां वर्त्तिर्हन्ति काचं तिमिरं पटलं तथा ॥
प्रस्थे द्वे गण्डमालानां क्वाथयेद्द्रोणमम्भसाम् ।
चतुर्भागावशेषेण तैलप्रस्थं विपाचयेत् ॥
काञ्जिकस्याढकं दत्त्वा पिष्टान्येतानि दापयेत् ।
पुनर्णवा गोक्षुरकं सैन्धवं युषणं वचा ॥
सरलं सुरदारुश्च मञ्जिष्ठा कण्ठकारिका ।
नस्यपानाद्धरत्येव कर्णशूलं हनुग्रहम् ॥
वाधिर्य्यं सर्व्वरोगांश्च अभ्यङ्गाच्च महेश्वर ! ॥

पलद्वयं सैन्धवञ्च शुण्ठी चित्रकपञ्चकम् ।

पञ्चप्रस्थं त्वारनालं तैलप्रस्थं पचेत्ततः ।
ग्रहगृह्यस्वरप्लीहसर्व्ववातविकारनुत् ॥
उदुम्बरं वटप्लक्षं जम्बुद्वयमथार्ज्जुनम् ।
पिप्पलञ्च कदम्बञ्च पलाशं लोध्रतिन्दुकम् ॥
मधुकमाम्रसर्जञ्च वदरं पद्मकेशरम् ।
शिरीषवीजं कतकमेतत्क्वाथेन साधितम् ।
तैलं हन्ति व्रणाल्लेपाच्चिरकालभवानपि” ॥
इति गारुडे १९८ अध्यायः ॥ * ॥
हरिरुवाच ।
“पाठा द्वे रजनी कुष्ठमश्वगन्धाजमोदकम् ।
वचा त्रिकटुकञ्चैव लवणं चूर्णमुत्तमम् ॥
ब्राह्मीरसे भावितञ्च सर्पिर्मधुसमन्वितम् ।
सप्ताहं भक्षितं कुर्य्यान्मदैश्वर्य्यं मतिं पराम् ॥

सिद्धार्थकवचाहिङ्गुकरञ्जं देवदारु च ।

मञ्जिष्ठा त्रिफला श्वेता शिरीषो रजनीद्वयम् ॥
प्रियङ्गुनिम्बत्रिकटु गोमूत्रेणावघर्षितम् ।
हरीतकी सोष्णनीरा लवणञ्च विरेचकृत् ॥

कूर्म्मम्त्स्याखुमहिषगोशृगालाश्च वानराः ।

विडालवर्हिकाकाश्च वराहोलूककुक्कुटाः ॥
हंस एषाञ्च विण्मूत्रं मांसं वा रोमशोणितम् ।
धूपं दद्यात् ज्वरार्त्तेभ्य उन्मत्तेभ्यश्च शान्तये ॥
अपस्माराभिभूतेभ्यो ग्रहार्त्तेभ्यश्च शान्तये ।
एतान्यौषधजातानि कथितानि महेश्वर ! ॥
निहन्ति यानि रोगाणि वृक्षमिन्द्राशनिर्यथा ।
औषधे भगवान् विष्णुः स्मृतोऽसौ रोगनुद्भवेत् ॥
ध्यातोऽर्च्चितः स्तुतो वापि नात्र कार्य्याविचारणा” ॥
इति गारुडे १९९ अध्यायः ॥
(विष्णुः । यथा महाभारते । विष्णोः सहस्रनाम-कीर्त्तने । १३ । १४९ । ४४ ।
“अमृतांशूद्भवो भानुः शशविन्दुः सुरेश्वरः ।
औषधं जगतः सेतुः सत्यधर्म्मः पराक्रमः” ॥)

**औषरं**, क्ली, (उषरे भवं । उषर + अण् ।) पांशव-लवणम् । अयस्कान्तभेदः । इति राजनिर्घण्टः ॥
(पांशवलवणशब्देऽस्य गुणादिकं ज्ञेयम् ॥)

**औषरकं**, क्ली, (औषर + स्वार्थे कन् ।) मृत्तिका-लवणम् । खारी लूण इति भाषा । तत्पर्य्यायः । सार्व्वगुणम् २ सर्व्वसंसर्गलवणम् ३ उषरकम् ४ साम्बरम् ५ बहुलवणम् ६ मेलकलवणम् ७ मिश्रम् ८ । अस्य गुणाः । कटुत्वम् । क्षारत्वम् । तिक्तत्वम् । वातकफनाशित्वम् । विदाहित्वम् । पित्तमलबन्धमूत्रसंशोषकारित्वञ्च । इति राज-निर्घण्टः ॥

“अंकारं विन्दुसंयुक्तं पीतविद्युत्समप्रभम् ।
पञ्चप्राणात्मकं वर्णं ब्रह्मादिदेवतामयम् ॥
सर्व्वज्ञानमयं वर्णं विन्दुत्रयसमन्वितम्” ॥
इति कामधेनुतन्त्रम् ॥
(वङ्गीयभाषायाम् ।) तस्य लेखनप्रकारो यथा ।
“अकाररूपशीर्षे तु दक्षिणे विन्दुरूपिणी ।
ब्रक्ष्मा विष्णुश्च रुद्रश्च क्रमशस्तासु तिष्ठति ॥
या तु विन्दुमयी रेखा सैवाद्या शक्तिरीरिता” ॥
इति वर्णोद्धारतन्त्रम् ॥ * ॥ अस्य नामानि यथा ।
“अंकारश्चक्षुषो दन्तो घटिका समगुह्यकः ।
प्रद्युम्नः श्रीमुखी प्रीतिर्वीजयोनिर्वृषध्वजः ॥
परं शशी प्रमाणीशः सोमविन्दुः कलानिधिः ।
अक्रूरश्चेतना नादपूर्णा दुःखहरः शिवः ॥
शिवः शम्भुर्नरेशश्च सुखदुःखप्रवर्त्तकः ।
पूर्णिमा रेवती शुद्धः कन्याचरवियद्रविः ॥
अमृताकर्षिणी शून्यं विचित्रा व्योमरूपिणी ।
केदारो रात्रिनाशश्च कुब्जिका चैव वुद्बुदः” ॥
इति तन्त्रशास्त्रम् ॥

**अं**, क्ली, परं ब्रह्म । इत्येकाक्षरकोषः ॥ (महेश्वरः ।
यदुक्तम् महाभारते १३ । १७ । १२६ ।

नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनं तथा ॥
अपस्मारविषोन्मादशोषालक्ष्मीज्वरापहम् ।
भूतेभ्यश्च भयं हन्ति राजद्वारे च शासनम् ॥
निम्बकुष्ठे हरिद्रे द्वे शिग्रु सर्षपजस्तरुः ।
देवदारु पटोलञ्च धान्यं तक्रेण घर्षितम् ॥
देहं तलाक्तगात्रं वै अनेनोद्वर्त्तयेत्ततः ।
पामाः कुष्ठानि नश्येयुः कण्डुं
पिटकसक्थिकीम् ॥

सामुद्रं सैन्धवं क्षारो राजिका लवणं
विडम् ।

कटुलोहरजः कीटं त्रिवृत् शूरणकं समम् ॥
दधिगोमूत्रपयसा मन्दपावकपाचितम् ।
एतच्चाग्निबलं चूर्णं पिबेदुष्णेन वारिणा ॥
जीर्णे जीर्णे च भुञ्जीत मासादिघृतभोजनम् ।
नाभिशूलं मूत्रशूलं गुल्मप्लीहभवञ्च यत् ।
सर्व्वशूलहरं चूर्णं जठरानलदीपनम् ।
परिणामसमुत्थस्य शूलस्य च हितं परम् ॥

अभयामलकं द्राक्षा पिप्पली
कण्टकारिका ।

शृङ्गं पुनर्णवा शुण्ठी जग्ध्वा काशं निहन्ति वै ॥

अभयामलकं द्राक्षा पाठा चैव
विभीतकम् ।

शर्क्करा च समञ्चैव जग्धं ज्वरहरं भवेत् ॥
त्रिफला वदरं द्राक्षा पिप्पली च विरेचकृत् ।

**औष्ट्रकं**, क्ली, (उष्ट्राणां समूहः । उष्ट्रस्य विकारः

अवयवो वा । उष्ट्र + "गोत्रोक्षोष्ट्रोरभ्रेति" ।
४ । २ । ३९ । वुञ् ।) उष्ट्रसमूहः । इत्यमरः
॥
उटेर पाल इति भाषा । (उष्ट्रदुग्धार्थे यथा ॥
वाभटे सूत्रस्थाने । ५ अ ॥
"ईषद्रूक्षोष्णलवणमौष्ट्रकं दीपनं लघु ।
शस्तं वातकफानाहक्रिमिशोफोदरार्शसाम्"
॥)

**औष्म्यं**, क्ली, (उष्मन् + ष्यञ् ।) उष्मणो भावः ।

उष्णता ॥ (यथा रघुः । १७ । ३३ ।
"पूर्ब्बराजवियोगौष्म्यं कृत्स्नस्य जगतो
हृतम्" ॥)

## अं

**अं** अंकारः । स तु अनुस्वारः । तन्त्रमते पञ्चदश-

स्वरवर्णः । (स तु पाणिन्यादिमते अयोगवाह
एव
"अयोगवाहा विज्ञेया आश्रयस्थानभागिनः" ।
इत्यक्तेः । नस्ति योगः अक्षरसमाम्नायसूत्रेषु
येषां
ते अयोगास्तथापि वाहयन्ति णत्वषत्वकार्य्यं
नि-
र्व्वाहयन्तीति वाहाः अयोगाश्च ते वाहाश्चेति
अयोगवाहा
अनुस्वारविसर्गजिह्वामूलीयोपाध्मा-
नीया इत्यर्थः ।)
विन्दुमात्रानुनासिकवर्णोऽयं अकार
उच्चारणार्थः ।
वोपदेवेनास्य नुरिति संज्ञा कृता । स तु
नकार-
मकारस्थानेऽपि भवति ॥ * ॥
"नुवीपूर्ब्बेण संबद्धौ मून्यौ तु परगामिनौ ।
चत्वारोऽयोगवाहाख्या णत्वकर्म्मण्यचो मताः"
॥
इति दुर्गादासः ॥ * ॥

"विन्दुर्विसर्गः सुमुखः शरः
सर्व्वायुधः सहः" ॥)

## अः

**अः** अःकारः स च विसर्गः । द्विविन्दुमात्रकण्ठ्यवणा-

ऽयं अकार उच्चारणार्थः । तन्त्रमते
स च षोडश-
स्वरवर्णः । (पाणिन्यादिमते अयं
अयोगवाहएव ।
अयोगवाहस्य व्युत्पत्तिस्तु
अनुस्वारशब्दे द्रष्टव्या ।)
वोपदेवेनास्य विरिति संज्ञा कृता । स
तु सका-
ररकारयोः स्थानेऽपि भवति ॥ * ॥
"अःकारं परमेशानि ! विसर्गसहितं
सदा ।
अःकारं परमेशानि !
रक्तविद्युत्प्रभामयम् ॥
पञ्चदेवमयो वर्णः पञ्चप्राणमयः सदा ।
सर्व्वज्ञानमयो वर्ण
आत्मादितत्त्वसंयुतः ॥
विन्दुत्रयमयो वर्णः शक्तित्रयमयः सदा
।
किशोरवयसाः सर्व्वे
गीतवाद्यादितत्पराः ॥
शिवस्य युवती एताः स्वयं कुण्डली
मूर्त्तिमान्" ॥
इति कामधेनुतन्त्रम् ॥
(वङ्गीयभाषायां) तस्य
लेखनप्रकारो यथा ।
"अकाररूपदक्षे तु द्विविन्दुरध
ऊर्द्ध्वतः ।
ब्रह्मेशविष्णवस्तासु मात्रा शक्तिः
समीरिता ॥
विन्दुद्वयान्विता रेखा सैवाद्या
शक्तिरीरिता" ॥
इति वर्णोद्धारतन्त्रम् ॥ * ॥ अस्य
नामानि यथा ।

| | | “अः कण्ठको महासेनः<br>कालापूर्णामृता हरिः ।<br>इच्छा भद्रा गणेशश्च रतिर्विद्यामुखी सुखम् ॥<br>द्विविन्दुरसना सोमोऽनिरुद्धो दुःखसूचकः ।<br>द्विजिह्वः कुण्डलं वक्त्रं सर्गः शक्तिर्निशाकरः<br>सुन्दरी सुयशानन्ता गणनाथो महेश्वरः” ॥<br>इति तन्त्रशास्त्रम् ॥<br>**अः**, पुं, महेश्वरः । इत्येकाक्षरकोषः ॥ (यदुक्तम्, --<br>महाभारते १३ । १७ । १२६ ।<br>“विन्दुर्विसर्गः सुमुखः शरः सर्व्वायुधः सहः” ॥) |
|---|---|---|

**शब्दकल्पद्रुमः । द्वितीयकाण्डम् ।**

**क**, ककारः । (वर्णस्य स्वरूपग्रहणाय कारः ।) स तु

व्यञ्जनप्रथमवर्णः ।
अस्योच्चारणस्थानं कण्ठः ।
इति व्याकरणम् ॥ (तंथा चोक्तम्
"तुल्यास्य प्रयत्नं
सवर्णं" । १ । १ । ९ ।
सिद्धान्तकौमुद्याम् ।
"अकुहविसर्जनीयानाङ्कण्ठः" ॥ इति ॥
* ॥)
(वङ्गीयभाषायां) तस्य लेखनप्रकारो
यथा, --
"वामरेखा भवेद्ब्रह्मा
विष्णुर्द्दक्षिणरेखिका ।
अधोरेखा भवेद्रुद्रो मात्रा साक्षात्
सरस्वती ॥
कुण्डली चाङ्कुशाकारा मध्यशून्यं
सदाशिवः ।
कदम्बगोलकाकारं ककारं भावयेत्
सुधीः" ॥
इति वर्णोद्धारतन्त्रम् ॥ * ॥ तस्य
नामानि
यथा, --
"कः क्रोधीशो महाकाली
कामदेवप्रकाशकः ।
कपाली तेजसः शान्तिर्वासुदेवो
जयानलः ॥
चक्री प्रजापतिः सृष्टिर्दक्षस्कन्धो
विशाम्पतिः ।
अनन्तः पार्थवो विन्दुस्तापिनी
परमात्मकः ॥
वर्गाद्यश्च मुखी ब्रह्मा सखाद्योऽम्भः
शिवो जलम् ।
माहेश्वरी तुला पुष्प मङ्गलश्चरणं करः
॥
नित्या कामेश्वरी मुख्यः कामरूपो
गजेन्द्रकः ।

ककारः कामदा कामरूपिणी स्फुरदव्यया ॥
कामनीया महेशानि ! स्वयं प्रकृतिसुन्दरी ।
माता सा सर्व्वदेवानां कैवल्यपददायिनी ॥
ऊद्र्ध्वकोणे स्थिता कामा
ब्रह्मशक्तिरितीरिता ।
वामकोणे स्थिता ज्येष्ठा विष्णुशक्तिरितीरिता
॥
दक्षकोणे स्थिता विन्दू रौद्री संहाररूपिणी ।
ज्ञानात्मा स तु चार्व्वङ्गि ! कलाचतुष्टयात्मकः
॥
इच्छाशक्तिर्भवेद्ब्रह्मा विष्णुश्च ज्ञानशक्तिमान्
।
क्रियाशक्तिर्भवेद्रुद्रः सर्व्वे प्रकृतिमूर्त्तिमान् ॥
आत्मविद्या शिवस्तत्र सदा मन्त्रः प्रतिष्ठितः ।
आसनं त्रिपुरादेव्याः ककारं पञ्चदैवतम् ॥
ईश्वरो यस्तु देवेशि ! त्रिकोणे तस्य
संस्थितिः ।
त्रिकोणमेतत् कथितं योनिमण्डलमुत्तमम् ॥
केवलं प्रपदे यस्याः कामिनी सा प्रकीर्त्तिता ।
ॐ जवायावकसिन्दूरसदृशीं कामिनीं परम् ॥
चतुर्भुजां त्रिनेत्राञ्च बाहुवल्लीविराजिताम् ।
कदम्बकोरकाकारस्तनद्वयविभूषिताम्॥
रत्नकङ्कणकेयूरमङ्गदैरुपशोभिताम् ।
रत्नहारैः पुष्पहारैः शोभितां परमेश्वरीम् ॥
एवं हि कामिनीं ध्यात्वा ककारं दशधा जपेत्
।
प्रफुल्लञ्च ततो ध्यात्वा जपस्य फलभाग्भवेत्
॥
एतत्ते कथितं देवि ! ककारतत्त्वमुत्तमम्' ॥
इति कामधेनुतन्त्रम् ॥ (अनुबन्धविशेषः ।
यथाह
कविकल्पद्रुमः । "कश्चुरादिः किस्तु वा" ।
एतेन
गणत् क संख्याने गणयति कथत् क
वाक्यप्रबन्धे
कथयति इत्यादि स्यात् ॥)

**कं**, क्ली, (कायति शब्दो निर्गच्छति यतः यस्मिन्

सतीत्यर्थः सजिह्ववदनस्य
शिरोऽन्तर्वर्त्तित्वात् ।

(यथा, भागवते ६ । १ ४२ ।
"सूर्य्योऽग्निः खं मरुद्गावः सोमः
सन्ध्याहनीदिशः ।
कं कुः कालो धर्म्म इति ह्येते दैह्यस्य
साक्षिणः" ॥
कायन्ति आनन्दोत्सवध्वनिं कुर्व्वन्ति
यस्मिन् समा-
गते उपस्थिते इत्यर्थः गृहिण इति शेषः ।
आ-
नन्दध्वनेस्तु सुखानुवर्त्तित्वात् ।) सुखम् ।
इति
मेदिनी ॥
(यथा, छान्दोग्योपनिषदि । ४ । १० । ५
।
"प्राणो ब्रह्मकं ब्रह्म खं ब्रह्मेति स होवाच
विजा-
नाम्यहं यत् प्राणो ब्रह्म कञ्च तु खञ्च न
विजा-
नामीति ते होचुर्यद् वाव कं तदेव खं यदेव
खं
तदेव कमिति प्राणञ्च हास्मै
तदाकाशञ्चोचुः" ॥
"तमेवमुक्तवन्तं ब्रह्मचारिणं ते ह्यग्नयः ऊचुः
।
यद्वाव यदेव वयं कमवोचाम तदेव
खमाकाशम्
इत्येवं खेन विशेष्यमाणं कं
विषयेन्द्रियसंयोग-
जातसुखान्निवर्त्तितं स्यान्नीलेनेव
विशेष्यमाण-
मुत्पलं रक्तादिभ्यः ॥ यदेव
खमाकाशमवोचाम
तदेव च कं सुखमिति जानोहि एवञ्च सुखेन
विशेष्यमाणं खं भौतिकादचेतनात्
खान्निवर्त्तितं
स्यान्नीलोत्पलवद्व्" ॥ इति भाष्यम् ॥
कचते दी-
प्यते मस्तकोपरि शोभते इति भावः । यद्वा
कच्यते

श्रीपुरं रमणो रङ्गकुसुमा परमात्मकः”
॥
इति तन्त्रशास्त्रम् ॥
“अधुना संप्रवक्ष्यामि
ककारतत्त्वमुत्तमम् ।
रहस्यं परमाश्चर्य्यं त्रैलोक्यानाञ्च
संश‍ृणु ॥
वामरेखा भवेद्ब्रह्मा
विष्णुर्द्दक्षिणरेखिका ।
अधोरेखा भवेद्रुद्रो मात्रा साक्षात्
सरस्वती ॥
कुण्डली अङ्कुशाकारा मध्ये शून्यः
सदाशिवः ।
जवायावकसंकाशा वामरेखा वरानने !
॥
शरच्चन्द्रप्रतीकाशा दक्षरेखा च
मूर्त्तिमान् ।
अधोरेखा वरारोहे ! महामरकतद्युतिः
॥
शङ्खकुन्दसमा कीर्त्तिर्म्मात्रा साक्षात्
सरस्वती ।
कुण्डली अङ्कुशा या तु
कोटिविद्युल्लताकृतिः ॥
कोटिचन्द्रप्रतीकाशो मध्ये शून्यः
सदाशिवः ।
शून्यगर्ब्भे स्थिता काली
कैवल्यपददायिनी ॥
ककाराज्जायते सर्व्वं कामं कैवल्यमेव
च ।
अर्थश्च जायते देवि ! तथा धर्म्मश्च
नान्यथा ॥
ककारः सर्व्ववर्णानां मूलप्रकृतिरेव च ।

यद्वा कायति वर्णात्मकं ध्वन्यात्मकं वा शब्दं
करोति जीवः यस्मिन् सतीति यावत् ॥ कै
शब्दे
“अन्येभ्योऽपि दृश्यते” डः । ३ । २ । १०१
।)
शिरः ॥ (यथा, तन्त्रसारे ।
“द्वाभ्यामोष्ठौ द्विरुन्मृज्य चैकेन क्षालयेत्करम्
।
मुख-घ्राण-नेत्र-श्रोत्र-नाभ्युरस्कं भुजौ
क्रमात्” ॥
अत्र कं शिरः इति तट्टीका ॥ कायति शब्दा-
यते स्रोतोवेगेनालोडनेन वेति यावत् ।)
जलम् ॥

बध्यते संयम्यते कराभ्याम् । कच् बन्धने
डः ।)
केशः ॥ इति धरणी ॥

**कः**, पुं, (कचति दीप्यते स्वेन ज्योतिषा ज्योति-
र्म्मयत्वात् कच् + ड ।) ब्रह्मा (यथा,
भागवते ।
३ । १२ । ५१ ।
“एवं युक्तकृतस्तस्य दैवं चावेक्षतस्तदा ।
कस्य रूपमभूद् द्वेधा यत्कायमभिचक्षते”
॥)
विष्णुः । (यथा महाभारते । १३ । विष्णोः
सहस्र-
नामकथने । १४९ । ९१ ।
“एको नैकः सवः कः किं यत्
तत्पदमनुत्तमम्” ॥
प्रजापतिः । यथा भागवते । ८ । ५ । ३९
।
“खेभ्यश्च छन्दांस्यृषयो मेढ्रतः कः
प्रसीदतां नः स महाविभूतिः” ॥)
दक्षः । (यथा भागवते । ९ । १० । १० ॥
“जघ्नेऽद्भुतैणवपुषाऽश्रमतोऽपकृष्टो

:मारीचमाशु विशिखेन यथा कमुग्रः” ॥)

कामदेवः ॥ अग्निः ॥ वायुः ॥ यमः ॥
सूर्य्यः ॥ आत्मा ॥
राजा ॥ ग्रन्थिः ॥ मयूरः ॥ इति मेदिनी
॥ मनः ॥
शरीरम् ॥ कालः ॥ धनम् ॥ शब्दः ॥
इत्यनेकार्थ-
कोषः ॥ प्रकाशः ॥ इत्येकाक्षरकोषः ॥

**कः**, त्रि, सर्व्वनाम । इति विश्वः । के कि इति भाषा ॥

(यथा विष्णुपुराणे । १ । १७ । २० ।
“तमृते परमात्मानं तात ! कः केन
शास्यते” ॥)

**कंशः**, पुं क्ली, कंसः ॥ पानपात्रम् । इत्यमरटीका ॥

**कंसं**, क्ली पुं, (कामयति काम्यते वा अनेन

पातुमितिशेषः । “वृतॄवदिहनिकमीति”
सः ।
उणां । ३ । ६२ ।) मद्यादिपानपात्रम् ।
तत्पर्य्यायः ।
पानभाजनम् २ । इत्यमरः ॥ २ । ९ ।
३२ । कंशम्
३ । कांस्यम् ४ । इति तट्टीका ।
तैजसद्रव्यम् ।
स्वर्णरजतादिनिर्म्मितपात्रमात्रम् ।
मानविशेषः
तत्तु आढकपरिमाणम् । इति मेदिनी ॥
(चतुः
षष्टिपलात्मकाढकरूपम् ॥ यथा
भावप्रकाशे ।
“शरावोऽष्टपलं तद्वज्ज्ञेयमत्र विचक्षणैः ।
शरावाभ्यां भवेत् प्रस्थश्चतुः
प्रस्थैस्तथाढकः ।
भाजनं कांसपात्रञ्च चतुःषष्टिपलश्चसः”
॥
ताम्रवङ्गमिश्रितधातुविशेषः । काँसा इति
भाषा ।
तत्पर्य्यायः । कांस्यम् २ । कंसास्थि ३
। ताम्रार्द्धम्

इति ब्रह्मवैवर्त्तपुराणम् ॥

**कंसजित्**, पुं, (कंसं जयति जितवान् वा कंस + जि

+ कर्त्तरि क्विप् ।) श्रीकृष्णः ।
इति हलायुधः ॥

**कंसवती**, स्त्री, (कंसः शासनशक्तिरस्त्यस्याः । कंस +

मतुप् मस्य वत्वम् । यद्वा कंसः
भ्रातृत्वेनास्त्यस्याः ।)
कंसभगिनी । सा उग्रसेनसुता ।
वसुदेवानुजपत्नी
च । (यथा भागवते । ९ । २४ ।
२५ ।
“कंसा कंसवती कङ्का शूरभू
राष्ट्रपालिका ।
उग्रसेनदुहितरो
वसुदेवानुजस्त्रियः” ॥)

**कंसहा**, [न्] पुं, (कंसं हन्ति हतवान् वा । कंस +

हन् + क्विप् ।) विष्णुः । इति
हेमचन्द्रः ॥

**कंसा**, स्त्री, (कंस + टाप् ।) कंसभगिनी । सा उग्र-

सेनसुता । वसुदेवानुजपत्नी च ।
(यथा भागवते । ९ । २४ । २५ ।
“कंसा कंसवती कङ्का शूरभू
राष्ट्रपालिका ।
उग्रसेनदुहितरो
वसुदेवानुजस्त्रियः” ॥)

**कंसारातिः**, पुं, (कंसस्य अरातिः ।) विष्णुः । इत्य-

मरः ॥ १ । १ । २१ ॥

**कंसारिः**, पुं, (कंसस्य अरिः शत्रुः ।) श्रीकृष्णः । इति

शब्दरत्नावली ॥ (यथा
राजतरङ्गिणो । १ । ५९ ।
“साहायकार्थमाहूतो जरासन्धेन
बन्धुना ।

णिच् + पृषोदरादित्वात् ह्रस्वः तुगागमश्च ।) वृ
षाङ्गविशेषः । षाँडेर झुँट् इति भाषा । (यथा,
अथर्व्ववेदे । ६ । ८६ । ३ । “सम्राडस्य सुरामों
ककुन् मनुष्याणाम् । देवानामर्द्धभागसि त्वणको
वृषो भव” ॥ स्कन्धभागः ॥
यथा, भागवते ५ । २५ । ७ । “ध्यायमानः सुरा-
सुरोरगसिद्धगन्धर्व्वविद्याधरमुनिगणैरनवरतमद-
मुदितविकृतविह्वललोचनः सुललितमुखरिकामृ-
तेनाप्यायमानः स्वपार्षदविवुधयूथपपतीनपरिम्ला-
नरागनवतुलसिकामोदमध्वासेव्क्ता माद्यन्मधुकर-
व्रातमधुरगीतश्रियं वैजयन्तीं स्वां वनमालां नील-
वासा एककुण्डलो हलककुदि कृतसुभगसुन्दरभुजो
भगवान् माहेन्द्रो वारणेन्द्र इव काञ्चनीं कक्षामु-
दारलीलो बिभर्त्ति” ॥) ध्वजः । वरः । इति मेदिनी ॥
(यथा, ऋग्वेदे । ८ । ४४ । १६ ।
“अग्निर्मूर्द्धादिवः ककुत्पतिः पृथिव्या अयम्” ॥)

**ककुत्स्थः**, पुं, (वृषरूपधरस्य देवेन्द्रस्य ककुदि तिष्ठति

यः सः । ककुत् + स्था + कः ।) सूर्य्यवंशीयराजवि-
शेषः । स तु अयोध्याधिपतिः । (पुरञ्जयनामायं ।)
शशादराजपुत्त्रः । इक्ष्वाकुराजपौत्रश्च ॥ (येन
चासौ ककुत्स्थनामासीत् तत्कथा हरिवंशे
ऐलोत्पत्तौ । ११ । १९--२० ॥
“शशादस्य तु दायादः ककुत्स्थो नाम वीर्य्यवान् ।
इन्द्रस्य वृषभूतस्य ककुत्स्थोऽजयतासुरान् ॥
पूर्ब्बं देवासुरे युद्धे ककुत्स्थस्तेन सः स्मृतः ।
अनेनास्तु ककुत्स्थस्य पृथुरानेनसः स्मृतः” ॥
तथा च महाभारते १ । १ । २२९ ।
“पुरुः कुरुर्यदुः शूरो विश्वगश्वो महाद्युतिः ।
अणुहो युवनाश्वश्च ककुत्स्थो विक्रमी रघुः” ॥)
स्कन्धदेशस्थिते त्रि ॥)

**ककुदः**, पुं क्ली, (कं सुखं उत्कर्षं वा कौति प्रकाश-

यति धातूनामनेकार्थत्वात् कुधातुरत्र प्रकाशनार्थः
अन्तर्ण्यन्तार्थश्च । कु + क्विप् तुक् च पृषोदरादि-
त्वात् तस्य दः । यद्वा कस्य सुखस्य शरीरस्य वा कुं
भूभिं मूलं आकरमिति यावत् ददातीति । कक‍ु +
दा + कः । यद्वा “ककुदस्यावस्थायां लोपः” । ५ ।
४ । १४६ । अर्द्धर्च्चादि-पां । २ । ४ । ३१ ।)
प्राधा-

४ । इति त्रिकाण्डशेषः ॥
(वर्त्तुलाकारयज्ञिय-
पात्रभेदः । यथा शतपथब्राह्मणे । १४ ।
९ । ३ । १ ।
“औडुम्बरे कंसे चमसे वा” ।)

**कंसः**, पुं, (कामयति पित्रादिबन्धुवर्गान् अभिभूय
पापात्मकं राज्यविषयादिभोगं यः । कम्
+ सः ।
यद्वा कंस्ते शास्ति शत्रून् कंस शासने
इत्यस्मात्
सः ।) विष्णुद्वेष्टृसुरविशेषः । इति
हेमचन्द्रः ॥
स तु मथुरादेशराजा ।
यदुवंशीयोग्रसेनराज-
पुत्त्रः । श्रीकृष्णमातुलः । तेन बधः
प्राप्तः ।
(एतद्विवरणं भागवते । १० । ४४
अध्याये विशे-
षेण दृष्टव्यम् ॥ कंसनामकारणं हरिवंशे
यथा,
“कस्य त्वमिति यच्चाहं त्वयोक्तो
मत्तकाशिनि ।
कंसस्तस्माद्रिपुध्वंसी तव पुत्त्रो
भविष्यति” ॥
अतएव कंसधातुनिष्पन्नत्वम्वेव प्रशस्यते
॥)

**कंसकं**, क्ली, (काम्यतेऽनेन चक्षुर्दृष्ट्यादिकमिति-
शेषः । कम् + सः । ततो जातौ संज्ञायां
वा कन् ।)
चक्षुरौषधधातुविशेषः । स तु
हीराकसीप्रभेदः ।
तत्पर्य्यायः । पुष्पकासीसम् २ ।
नयनौषधम् ३ ।
इति हेमचन्द्रः ॥

**कंसकारः**, पुं, स्त्री, (कंसं तन्मयपात्रादिकं करोति
यः । कंस + कृ + “कर्म्मण्यण्” । ३ ।
२ । १ । केचित्तु
तालव्यशकारमिच्छन्त्यत्र ।)
जातिविशेषः । काँ-
समं रुरोध कंसारेर्मथुरां
पृथुभिर्ब्बलैः” ॥)

**कंसास्थि**, क्ली, (कंसस्य अस्थि । अस्थि रूपमित्यर्थः ।)
कांस्यधातुः । इति त्रिकाण्डशेषः
॥

**कंसोद्भवा**, स्त्री, (कंसात् तैजसधातुविशेषसम्बन्धात्
उद्भवति या । यद्वा कंसायाः
निर्झरिण्या उद्भवा
कंसायां उद्भवो यस्या वा । कंस +
उत् + भू +
अच् । कंस इव शुभ्रत्वात्
उद्भवतीति केचित् ।)
सुगन्धिमृत्तिकाविशेषः ।
तत्पर्य्यायः । आढकी २
तुवरी ३ काक्षी ४ मृदाह्वया ५
सौराष्ट्री ६ पा-
र्व्वती ७ कालिका ८ पर्पटी ९
सती १० । इति
हेमचन्द्रः ॥

**कक** इ ङ व्रजने । इति कविकल्पद्रुमः ॥ (भ्वां--
आत्मं--सकं--सेट् ।) इ कर्म्मणि
कङ्क्यते । ङ कङ्कते ।
इति दुर्गादासः ॥

**कक** ङ इच्छायां । गर्व्वे । चापले । इति कवि-
कल्पद्रुमः ॥ (भ्वां--आत्मं--सकं--
अकं--च--सेट् ।)
इच्छेह तृष्णा । चापलं
चञ्चलीभावः । ङ ककते
काकः । सतृष्णश्चञ्चलो वा
स्यादित्यर्थः । गर्व्वः
कैश्चिन्न पठ्यते । इति दुर्गादासः
॥

**ककन्दः**, पुं, (कको गर्ब्बश्चापल्यं वा भवत्यस्मात् ।
कक + अन्दच् । यद्वा ककं गर्व्वं
चापल्यं तृष्णां
न्यम् । (यथा अथर्व्ववेदे । १० । १० । १९ ।
“ऊद्ध्र्वो विन्दुरुदचरद् ब्रह्मणः ककुदादधि” ।
रघुश्च । ६ । ७१ ॥
“इक्ष्वाकुवंश्यः ककुदं नृपाणां
ककुत्स्थ इत्याहितलक्षणोऽभूत् ।
काकुत्स्थशब्दं यत उन्नतेच्छाः
श्लाघ्यं दधत्युत्तरकोशलेन्द्राः” ॥)
राजचिह्नम् । तत्तु श्वेतच्छत्रादि । (यथा रघुः ।
३ । ७० ।
“अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे
नृपतिककुदं दत्त्वा यूने सितातपवारणम्” ॥)
वृषाङ्गम् । झुँट इति भाषा । इत्यमरः ॥ ३ । ३ ।
९१ ॥ (यथा महाभारते । १३ । १४ । २३६-२३९
।
“वृषरूपधरं साक्षात् क्षीरोदमिव सागरम् ।
कृष्णपुच्छं महाकायं मधुपिङ्गललोचनम् ॥

सारि इति भाषा ॥ तस्योत्पत्तिर्य्यथा ।
“वैश्यायां ब्राह्मणाज्जातः अम्बष्ठो
गान्धिको बणिक् ।
कंसकारशङ्खकारौ ब्राह्मणात्
सम्बभूवतुः” ॥
इति ष्टहद्धर्म्मपुराणम् ॥ अपि च ।
“विश्वकर्म्मा च शूद्रायां वीर्य्याधानं
चकार सः ।
ततो बभूवुः पुत्त्राश्च षडेते
शिल्पकारिणः ॥
मालाकरः कर्म्मकारः शङ्खकारः
कुविन्दकः ।
कुम्भकारः कंसकारः षडेते शिल्पिनो
नराः” ॥

वा ददातीति । कक् + दा + डः ।)
स्वर्णः । इत्यु-
णादिकोषः ॥

**ककुञ्जलः**, पुं स्त्री, (कं जलं कूजयति आह्वयते या-
चते इति यावत् । क + कूज् +
अलच् । पृषोद-
रादित्वात् नुम् ह्रस्वश्च ।)
चातकपक्षी । इति
राजवल्लभः ॥

**ककुत्**, [द्] स्त्री, (कं सुखं कावयति गृहस्थस्य औ-
न्नत्यं प्रापयतीति यावत् । वृषाणां
हि ककुत्
गृहस्थस्य सुखलक्षणमिति भावः
। ककुद्धीनवृष-
पालने दरिद्रता इति सरणात् । क
+ कु +

:वज्रसारमयैः शृङ्गैर्निष्टप्तकनकप्रभैः ।

सुतीक्ष्णैर्मृदुरक्ताग्रैरुत्किरन्तमिवावनिम् ॥
जाम्वूनदेन दाम्ना च सर्व्वतः समलङ्कृतम् ।
सुवक्त्रखुरनासञ्च सुकर्णं सुकटीतटम् ॥
सुपार्श्वं विपुलस्कन्धं सुरूपं चारुदर्शनम् ।
ककुदं तस्य चाभाति स्कन्धमापूर्य्य धिष्ठितम्” ॥)
पर्ब्बताग्रभागः । इति अमरटीकायां स्वामी ॥

**ककुद्मान्** [त्] पुं, (ककुदस्यास्तीति । मतुप् इति
“मादुपधायाश्च मतो र्वो यवादिभ्यः” । ८ । २ । ९ ।
न मस्य वकारत्वम् ।) वृषः । इति हेमचन्द्रः ॥
(यथा, कुमारे । १ । ५६ ।
“तुषारसंघातशिलाः खुराग्रैः
समुल्लिखन् दर्पकलः ककुद्मान्” ॥)
पर्व्वतः । इत्यमरटीकायां स्वामी ॥
(यथा, विष्णुपुराणे २ । ४ । २७ ।
“ककुद्मान् पर्ब्बतबरः सरिन्नामानि मे शृणु” ॥)
ऋषभौषधम् । इति राजनिर्घण्टः ॥ अत्र क्वचिदप-
वादविषयेऽप्युत्सर्गोऽभिनिविशते इति न्यायात्
वतुप्राप्तौ मतुप्रत्ययः ॥ इति मुग्धबोधमतम् ॥
(ऊर्म्मिः । यथा, यजुर्व्वेदे । ९ । ६ ।
“ऊर्म्मिः प्रतूर्त्तिः ककुद्मान्” ॥)

**ककुद्मती**, स्त्री, (ककुदिव वृषस्कन्धवत् अतिशयितो
मांसपिण्डः अस्त्यस्याम् । मुतुप् । यवादित्वात् न
मस्य वत्वं स्त्रियां ङीप् ।) कटिः । इत्यमरः ॥ २ । ६ ।
७४ । पाछा इति भाषा ॥

**ककुन्दरं**, क्ली, (कस्य शरीरस्य कुं भूमिं नितम्बस्थलवि-
शेषं दृणातीति । ककु + दॄ + खच् मुम्च ।) कुकु-
न्दरम् । नितम्बस्थकूपकद्वयम् । इत्यमरटीकायां
रमानाथः राजनिर्घण्टश्च ॥ (यथाह, याज्ञवल्क्यः ।
३ । ९६ ।
“कनीनिके चाक्षिकूटे शस्कुलीकर्णपत्रकौ ।
कर्णौ शङ्खौ भ्रुवौ दन्तवेष्टावोष्ठौ ककुन्दरे” ॥
“सकृद्विभक्तश्चतुरस्रः ककुन्दरविभागशोभी
रथाङ्गाकारसंस्थितश्च नितम्बभागः” ।

“भानुर्लम्बा ककुब् जामिर्विश्वा साध्या
मरुत्वती” ॥)

**ककुभः**, पुं, (कस्य वातस्य कुः भूमिः स्थानं प्रकाश-
रूपविशेष इति यावत् भात्यस्मात् । ककु + भा +
कः । यद्वा कं वातं स्कुभ्नाति विस्तारयति । क +
स्कुम्भ + कः + पृषोदरादित्वात् सलोपः ॥) अर्ज्जु-
नवृक्षः । (यथा, चक्रपाणिदत्तकृतसंग्रहे ॥
“गोधूमककुभचूर्णं छागपयोगव्यसर्पिषा पक्वम् ।
मधुशर्करासमेतं समयति हृद्रोगमुद्धतं पुंसाम् ॥
मूलं नागबलायास्तु चूर्णं दुग्धेन पाययेत् ।
हृद्रोगश्वासकासघ्नं ककुभस्य च वल्कलम् ॥
रसायनं परं बल्यं वातजिन्मासयोजितम् ।
संवत्सरप्रयोगेन जीवेत् वर्षशतं नरः” ॥)
वीणाङ्गम् । तत्पर्य्यायः । प्रसेवकः २ । इत्यमरः ॥
१ । ७ । ७ ॥ वीणाप्रान्तवक्रकाष्ठम् । दण्डाधःशब्द-
गाम्भीर्य्यार्थंदारुमयं भाण्डं यच्चर्म्मणाच्छाद्य दीयते
तत्रेत्यन्ये । वीणास्थितालावुफले इत्यपरे । इति
भरतः ॥ रागविशेषः । इति मेदिनी ॥
(शिवः । यथा महाभारते १३ । शिवसहस्रनाम-
कीर्त्तने १७ । १३० ।
“हर्य्यक्षः ककुभो वज्री शतजिह्वः सहस्रपात्”
॥)

**ककुभा**, स्त्री, (केन आदित्येन कुत्सितानि भानिनक्ष-
त्राण्यस्याम् । टावन्तोऽपीति कश्चित् तन्न । व्यधि-
करणबहुब्रीहिप्रसङ्गात् ।) दिक् । इत्यमरटीकायां
रायमुकुटः ॥ (केन सूर्य्येण दिनप्रकाशेनेति भावः

कफवातरोगनाशित्वञ्च । इति
राजनिर्घण्टः ॥
(“कक्कोलकं लवङ्गञ्च तिक्तं
कटुकफापहम् ।
लघुतृष्णापहं
वक्त्रक्लेददौर्गन्ध्यनाशनम्”
॥
इति सुश्रुतः ॥)

**कक्ख** हासे । इति कविकल्पद्रुमः ॥ (भ्वां--परं--अकं--
सेट् ।) कोपधः । कक्खति ।
इति दुर्गादासः ॥

**कक्खटः**, त्रि, (कक्खति हसति यः ॥ प्रफुल्लमुखो
जनः । इति व्युत्पत्त्यर्थः ।
अन्यस्तु रूढ्यर्थः । कक्ख
अटन् । अथवा कक्खं
प्रसन्नभावं अटति अद्वयति
कर्कशान्तर्वृत्तित्वात् कक्ख +
अट् + अच् । यदा
कठिण्यां वर्त्तते तदा कक्खति
कृष्ट्या प्रकाशयति
वर्णान् । अन्तर्णिजर्थः ।)
कठिनः । इत्यमरः ॥

**कक्खटपत्रकः**, पुं, (कक्खटानि प्रकाशान्वितानि
पत्राणि यस्य । कप् ।)
वृक्षविशेषः । पाट इति
भाषा । तत्पर्य्यायः । पट्टः २
वाजशलः ३ शाणिः ४
चिमः ५ । इति शब्दमाला ॥

**कक्खटी**, स्त्री, (कक्खति भूकर्षणेन प्रकाशयति
वर्णान् । अत्राप्यन्तर्णिच्
शकादिभ्योऽटन् गौरा-
दित्वात् ङीष् ।) खटिका ।
खडी इति भाषा ।

इति दशकुमारे ॥)

**ककुप्,** [भ्] स्त्री, (कं वातं स्कुभ्नाति विस्तारयति

या । स्कुभ इति सौत्रः । क्विप् । पृषोदरादित्वात् सलोपः ।) दिक् । इत्यमरः ॥ १ । ३ । १ । प्रवेणी ।
शोभा । चम्पकमाजा । इति मेदिनी ॥ शास्त्रम् । इति विश्वः ॥

**ककुभ्,** स्त्री, (कं सुखं आनन्दं स्कुभ्नाति विस्तारयति

या पृषोदरादित्वात् सलोपः ।) रागिणीविशेषः ।
तस्या नामान्तरम् । कुहुः । तस्या लक्षणम् ।
"पीतं वसाना वसनं सुकेशी
वने रुदन्ती पिकनाददूना ।
विलोकयन्ती ककुभोऽतिभीता
मूर्त्तिः प्रदिष्टा ककुभस्तथेयम्" ॥
इति सङ्गीतदामोदरः ॥ (दिक् । यथा,
मागवते । २ । ७ । २५ ।
"वक्षःस्थलस्पर्शरुग्नमहेन्द्रवाहदन्तैर्विडम्बितककुब्जुष ऊढहासम्" ॥ दक्षकन्या । सैव घर्म्मपत्नी ।
गथा तत्रैव । ६ । ६ । ४ ।
कुत्सिता भाति । भा दीप्तौ । इति धातोः सुपीति
कः । भिदाद्यङ् वा । रात्रावेवास्या माधुर्य्यस्याधिक्यमिति तात्पर्य्यार्थः ।) रागिणीविशेषः । इति
हलायुधः ॥

**ककुभादनी**, स्त्री, (ककुभः अर्ज्जुन इव अद्यतेऽसौ तुल्य-

गुणत्वात् । ककुभ + अद् + कर्म्मणि ल्युट् + स्त्रियां
ङीप् ।) नलीनामगन्धद्रव्यम् । इति
शब्दचन्द्रिका ॥

**कक्क** हासे । इति कविकल्पद्रुमः ॥ (भ्वां--परं--अकं--

सेट् ।) कोपधः । कक्कति । इति दुर्गादासः ॥

**कक्कोलः**, पुं क्ली, (ककते गच्छति दिशि प्रकाशते

इत्यर्थः ततः क्विप् कक्कोलति संस्त्यायति कुल-
धातोर्ज्वलादित्वात् णः । कक्चासौ कोलश्चेति ।
"पूगकक्कोलकर्पूरलवङ्गसुमनःफलैरित्युक्तेः" ।)
सुगन्धिद्रव्यविशेषः । काँकला इति भाषा । अस्य
गुणाः । कटुत्वम् । हृद्यत्वम् । सुगन्धित्वम् । कफ-
वातनाशित्वञ्च । इति राजवल्लभः ॥ (यथा रामा-
यणे ३ काण्डे ।
"वनानि च सुरम्याणि कक्कोलानां त्वचस्य च" ॥)

**कक्कोलकं**, क्ली, (कक्कोलस्य + इदमर्थे स्वार्थे वा कन् ।

शाल्मलिद्वीपान्तर्गतसप्तमवर्षपर्ब्बतः । तद्विचरणं
विष्णुपुराणे २ अंशे ४ अध्याये द्रष्टव्यम्" ॥)
गन्धद्रव्यविशेषः । काँकला इति ख्यातम् । तत्पर्य्यायः
कोलकम् २ कोषफलम् ३ । इत्यमरः ॥ कृत-
तत्पर्य्यायः । वर्णलेखा २
कठिनी ३ खटी ४ । इति
त्रिकाण्डशेषः ॥

**कक्षः**, पुं, (कषतीति । कष् हिंसायां "वृतृवदि-

हनिकमिकषिभ्यः सः" । उणां ३ । ६२ । इति
सः ।) बाहुमूलम् । इत्यमरः । २ । ६ । ७९ ॥
काँक् वगल् इति च भाषा ॥
(यथा, महाभारते ४ । ६ । १ ।
"वदर्य्यरूपान् प्रतिगृह्य काञ्चना-
नक्षान् स कक्षे परिरभ्य वाससा" ॥)
तृणम् । वीरुत् । इत्यमरः ॥ ३ । ३ । २१८ ।
(यथा, मनुः ७ । ११० ।
"यथोद्धरति निर्द्दाता कक्षं धान्यञ्च रक्षति" ॥
"यथा क्षेत्रे धान्यतृणादिकयोः सहोत्पन्नयोरपि
धान्यानि लवनकर्त्ता रक्षति तृणादिकञ्चोद्धरति" ।
इति तट्टीकायां कुल्लूकभट्टः ॥)
शुष्कतृणम् । इति
धरणी ॥ (यथा, माघः । २ । ४२ ।
"प्रक्षिप्योदर्च्चिषं कक्षे शेरते तेऽभिमारुतम्" ॥)
कच्छः । (यथा महाभारते । १ । वारणावतागमने । १४६ । २२ ॥
"कक्षघ्नः शिशिरघ्नश्च महाकक्षे विलौकसः ।
न दहेदिति चात्मानं यो रक्षति स जीवति" ॥
विलौकसो महाकक्षे वृहत्कच्छे
इत्यर्थः ॥) शुष्क-

| | | |
|---|---|---|
| | फलम् ४ कटुकफलम् ५ द्वेष्यम् ६ स्थूलमरिचम् ७ कक्कोलम् ८ माधवोचितम् ९ कालम् १० कटफलम् ११ मरिचम् १२ । अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । वक्त्रजाड्यहरत्वम् । दीपनत्वम् । पाचनत्वम् । रुचिकारित्वम् । | वनम् । पापम् । इति हेमचन्द्रः ॥ अरण्यम् । इति रुद्रः ॥ (यथा महाभारते १ । खाण्डवदहनपर्ब्बणि । २३१ । ३ । "अयमग्निर्दहन् कक्षमित आयाति भीषणः" ॥) भित्तिः । पार्श्वः । इति भरतधृताजयः ॥ (यथा, रामायणे । ५ । ५ । २५ । "तस्य वानरसिंहस्य क्रममाणस्य सागरम् । कक्षान्तरगतो वायुर्जीमूत इव गर्ज्जति" ॥)<br>**कक्षरुहा**, स्त्री, (कक्षे कच्छे जलप्राये रोहति इति । कक्ष + रुह + क । अस्या अनूपजातत्वात् तथात्वम् ।) नागरमुस्ता । इति राजनिर्घण्टः ॥ |

**कक्षा**, स्त्री, (कष-हिंसादौ + सः टाप् च ।) हस्ति-
रज्जुः । काञ्ची । गेहप्रकोष्ठकः ।
(यथा, भागवते ३ । १५ । २७ ।
"तस्मिन्नतीत्य मुनयः
सडसज्जमानाः
कक्षाः समानवयसावथ सप्तमायाम्"
॥)
भित्तिः । साम्यम् । रथभागः ।
अन्तरीयपश्चिमा-
ञ्चलम् । परिधानवस्त्रस्य पृष्ठतो
निहिताञ्चलम् ।
उद्ग्राहिणी । इति हेमचन्द्रः ॥
(काछा काँचा
आँचल् इत्यादि भाषा ॥ यथाह
योगियाज्ञवल्क्यः ।
"परिधानात् वहिः कक्षा निबद्धा
ह्यासुरी भवेत्" ॥)
"वामे पृष्ठे तथा नाभौ
कक्षात्रयमुदाहृतम् ।
एभिः कक्षैः परीधत्ते यो विप्रः स
शुचिः स्मृतः" ॥
इति स्मृतिः ॥
स्पर्द्धापदम् । इति मेदिनी रुद्रश्च ॥
कक्ष्या । हस्ति-
मध्यदेशब्न्धनरज्जुः ।
इत्यमरटीकायां भरतः ॥
क्षुद्ररोगविशेषः । तस्य लक्षणं यथा,
--
"बाहुपार्श्वांसकक्षेषु कृष्णस्फोटां
सवेदनाम् ।
पित्तप्रकोपसम्भूतां
कक्षामित्यभिनिर्द्दिशेत्" ॥
इति माधवकरः ॥ तच्चिकित्सा
यथा, --
"कक्षाञ्च गन्धनाम्नीञ्च चिकित्सति
चिकित्सकः ।
पैत्तिकस्य विसर्पस्य क्रियया
पूर्ब्बमुक्तया" ॥
इति भावप्रकाशः ॥
"प्रविश्य प्रथमां कक्ष्यां द्वितीयायां ददर्श सः
।
ब्राह्मणान् वेदसम्पन्नान् वृद्धान्
राज्ञाभिसत्कृतान्" ॥)
काञ्ची । इत्यमरः ॥ ३ । ३ । १५७ ।
अन्तर्गृहमिति
सुभूतिः ॥ (यथा, कुमारे ७ । ७० ।
"क्रान्तानि पूर्ब्बं कमलासनेन
कक्ष्यान्तराण्यद्रिपतेर्विवेश" ॥)
सादृश्यम् । उद्योगः । वृहतिका । उत्तरीय-
वस्त्रम् । इति हेमचन्द्रः ॥ गुञ्जा । इति शब्द-
रत्नावली ॥

**कख** ए म हासे । इति कविकल्पद्रुमः ॥ (भ्वां-परं
-अकं-सेट् ।) एदित् घटादिः इति वोपदेवः ।
पाणिनीमते तु एदित्वं न तेन अकखीत् अका
खीत् इति स्यात् ।) म कखयति ए अकखीत्
।
इति दुर्गादासः ॥

**कख्या**, स्त्री, (कखति हसतीव प्रकाशते शोभते ।
कख् + यत् + स्त्रियां टाप् ।) कक्षा ।
हर्म्म्यादि-
प्रकोष्ठः । इति शब्दरत्नावलो ॥

**कग** म ए क्रियासु । क्रियामात्रे । इति कविकल्प-
द्रुमः ॥ (भ्वां-परं-सकं-अकं च-सेट् । घटादि
एदित् इति वोपदेवः । नैदित् इति पाणिनिः ।
अकगीत् अकागीत् ॥) तेन म कगयति । ए
अकगीत् । क्रियामात्रे । कगति लोकः
गच्छती-
त्यर्थः । इति दुर्गादासः ॥

**कङ्कः**, पुं, (कङ्कते उद्गच्छति इति । ककि गतौ । कक्
+ अच् + इदित्वान्नुम् ।) पक्षिविशेषः । काँक्
इति
भाषा । तत्पर्य्यायः । लोहपृष्ठः २ । इत्यमरः
२ । ५ ।
१६ ॥ सदंशवदनः ३ खरः ४ रणालङ्करणः
५ क्रूरः ६
ख्यातहस्ताभरणम् । तत्पर्य्यायः ।
करभूषणम् २ ॥
इत्यमरः २ । ६ । १०८ ॥ कौशुकम् ३ ।
इति
शब्दरत्नावली ॥ (यथा, भागवते ६ । १६ ।
३० ।
"मृणालगौरं सितिवाससं स्फुरत्
किरीटकेयूरकटित्रकङ्कणम्" ॥)
हस्तसूत्रम् । मण्डनम् । शेखरम् । इति विश्वः
॥

**कङ्कणी**, स्त्री, (ककि गतौ घञ् कङ्कः तस्मिन् अणति-
अण शब्दे ततः अच् गौरादित्वात् ङीष् ।
शक-
न्ध्वादिवत् सन्धिः । यद्वा कं सुखं कणति इति
कण + पचाद्यच् ।) किङ्किणी । क्षुद्रघण्टिका ।
इत्यमरटीकायां भरतः ॥

**कङ्कणीका**, स्त्री, (चङ्कण्यते पुनः पुनः कणति । कण-
शब्दे अस्माद् यङ्लुगन्तात् "चङ्किणः कङ्कण
च" ॥
४ । १८ । उणां इति ईकन् धातोः कङ्कणा-
देशश्च ।) क्षुद्रघण्टिका । इति
सिद्धान्तकौमुद्या-
मुणादिवृत्तिः ॥

**कङ्कतं**, क्ली, (कङ्कते शिरोमलं प्राप्नोतीति । ककि
गतौ + अतच् ।) कङ्कतिका । इत्यमरटीकायां
भरतः ॥ चिरुणी इति ख्यातम् ॥

**कङ्कतः**, पुं, (कङ्कते भूमिं भित्त्वा उद्गच्छति झटिति
नाशं गच्छति वा । ककि गतौ इति धातोः
अतच् ।)
वृक्षः । इत्युणादिकोषः ॥ (केशप्रसाधनी
कङ्कती ।
चिरुणीइति भाषा । यथा, अथर्व्ववेदे १४ । २
।
६८ । "कृत्रिमः कङ्कतः शतदन्य एषः ।
अपास्याः
केश्यं मलमपशीर्षण्यम् लिखात्" ॥
अल्पविष-

**कक्षापटः**, पुं, (कक्षाकारः हस्तिरज्जुतुल्यः पटोव-
स्त्रम् ।) कौपीनम् । इति हलायुधः ॥ (कक्षायाः
गृहप्रकोष्ठकस्य पटः इति विग्रहे गृहभित्तिस्थ-
पटः ॥)

**कक्षावान्**, [त्] पुं, (कक्षा सर्व्ववस्तुनि साम्यं सा
विद्यते यस्य । कक्षा + मतुप् मस्य वः ।) मुनि-
विशेषः । इति हेमचन्द्रः ॥

**कक्षावेक्षकः**, पुं, (कक्षायाः अवेक्षकः यद्वा कक्षां
वनोपवनादिकं राजान्तःपुरं वा अवेक्षते इति ।
अव + ईक्ष् + ण्वुल् ।) शुद्धान्तपालः । उद्यान-
पालः । रङ्गाजीवः । कविः । षिड्गः । द्वाःस्थः ।
इति मेदिनी ॥

**कक्षोत्था**, स्त्री, (कक्षात् जलप्रायदेशात् उत्तिष्ठति
जायते या । कक्ष + उत् + स्था + कः टाप् च ।)
भद्रमुस्ता । इति राजनिर्घण्टः ॥

**कक्ष्यं**, क्ली, (कक्षायै साम्याय भवम् । कक्षा + यत् ।)
एषणिकास्थकटोरा । इति मिताक्षरा । निक्तिरं
वाटी इति भाषा ॥ (त्रि, कक्षपूरकः । यथा,
ऋग्वेदे ५ । ४४ । ११ ।
"श्येन आसामदितिः कक्ष्यो मदो-
विश्ववारस्य यजतस्य मायिनः" ॥)

**कक्ष्या**, स्त्री, (कक्षे भवा । कक्ष + शरीरावयवात्
+ यत् टाप् च ।) कक्षरज्जुः । काछदडी इति
आमिषप्रियः ७ । इति राजनिर्घण्टः ॥ अरिष्टः ८
कालपुष्टः ९ किंशारुः १० लोहपृष्टकः ११ । इति
जटाधरः ॥ दीर्घपादः १२ दीर्घपात् १३ । इति
शब्दरत्नावली ॥ (यथा भागवते ३ । १० । २३ ।
"कङ्कगृध्रवटश्येनभासभासकवर्हिणः" ।)
यमः ।
छद्मद्विजः । इति मेदिनी ॥ युधिष्ठिरराजः । इति
त्रिकाण्डशेषः ॥ (यथा, महाभारते । ४ । ६ । १४ ।
"शृण्वन्तु मे जानपदाः समागताः
कङ्को यथाहं विषये प्रभुस्तथा" ॥
शाल्मलिद्वीपान्तर्गतपञ्चमवर्षपर्ब्बतः । तद्विव-
रणं विष्णुपुराणे २ अंशे ४ अध्याये द्रष्टव्यम् ।
क्षत्त्रियः । इति शब्दमाला ॥ कंसासुरभ्राता । स
तु उग्रसेनपुत्त्रः । (यथा, भागवते ९ । २४ । २४ ।
"कंसः सुनामा न्यग्रोधः कङ्कः शङ्कुः
सुहूस्तथा" ॥)
महाराजचूतः । इति राजनिर्घण्टः ॥

**कङ्कटः**, पुं, (कं देहं कटति आवृणोतीति । क + कट
+ अच् । अथवा-ककि लौल्ये इति कङ्कते क्षणेन
नाशतां याति अचिरस्थायित्वात् ककि +
अटन् ।) (कवचः । इत्युणादिकोषः ॥
प्रतिसंस्कृतेनामरश्च ॥
(यथा, रघुः । ७ । ५९ । "सर्व्वायुधैः कङ्कटभेदि-
भिश्च" ॥)

**कङ्कटकः**, पुं, (कङ्कट + स्वार्थे कन् ।) सन्नाहः ।
इत्यमरः । २ । ८ । ६४ । साँजोया इति
भाषा ॥

**कङ्कणं** क्ली, (कं शुभं कणतीति । क + कण शब्दे +
प्राणिविशेषः । यथा, ऋग्वेदे । १ । १९१ । १ ।
"कङ्कतो नकङ्कतोऽथो सतीनकङ्कतः" ॥)

**कङ्कतिका**, स्त्री, (कङ्कते मूर्द्धजेन सम्बन्धं गच्छतीति ।
ककिगतौ बाहुलकादतच् । गौरादित्वात् ङीष्
स्वार्थे कन् केण इति ह्रस्वः । यद्वा कस्य शिरसो-
ऽङ्काः । शकन्ध्वादित्वात् सन्धिः । कङ्केषु अतति
ततः क्वुन् । तत इत्वं टाप् च ।) केशप्रसाधनार्थ-
काष्ठादिनिर्म्मितद्रव्यम् । चिरुणी काँकुइ इत्यादि
भाषा । तत्पर्य्यायः । प्रसाधनी २ । इत्यमरः । २ ।
१९० ॥ कङ्कती ३ कङ्कतम् ४ प्रसाधनम् ५ । इति
तट्टीका । केशमार्जनम् ६ । इति जटाधरः ॥ फली
७ फलिक्त ८ फलिः ९ । इति शब्दरत्नावली ॥
अस्य गुणाः ।
धूलीजन्तुमलकण्डुशिरोरोगनाशि-
त्वम् । कान्तिकेशवृद्धिकेशप्रसन्नताकारित्वञ्च । इति
राजवल्लभः । नागबला । इति वैद्यकम् ॥

**कङ्कती**, स्त्री, (कङ्कते शिरोरुहं प्राप्नोति । ककि
गतौ + बाहुलकादतच् गौरादित्वात् ङीष् ।)
कङ्कतिका । इत्यमरटीकायां भरतः ॥

**कङ्कत्रोटः**, पुं, (कङ्कात् पक्षिविशेषात् आत्मानं
त्राति । कङ्क + त्रा + अटन् पृषोदरादित्वात्
साधुः । यद्वा कङ्कवत् त्रोटयति कङ्क + त्रुट् +
णिच् + कर्त्तर्य्यच् ।) मत्स्यविशेषः । काँकिला
इति भाषा । तत्पर्य्यायः । जलव्यधः २ । इति
त्रिकाण्डशेषः ॥

**कङ्कत्रोटिः**, पुं, (कङ्कस्य त्रोटिरिव त्रोटिश्चञ्चुर्यस्य ।)
मत्स्यविशेषः । काँकिला इति भाषा । तत्पर्य्यायः ।
जजसूचिः २ । इति जटाधरः ॥

| | | |
|---|---|---|
| ख्याता । चर्म्मरज्जुः । इत्यन्ये । इति भरतः ॥ गजमध्यबन्धनचर्म्मरज्जुः । इति सारसुन्दरी ॥ तत्-पर्य्यायः । चूषा २ वरत्रा ३ । इत्यमरः ॥ २ । ८ । ४२ । वूषा ४ दृष्या ५ दूष्या ६ कक्षा ७ । इति तट्टीका । हर्म्म्यादिप्रकोष्ठः । राजगृहादेर्वेष्टनावच्छिन्नो देशः । (महल इति भाषा । यथा रामायणे । २ । २० । ११ । | कर्त्तरि अच्-पृषोदरादित्वात् णत्वम् ।) स्वन्यम- | |

**कङ्कपत्रः**, पुं, (कङ्कस्य पक्षिविशेषस्य पत्रमेव पत्रं
पक्षो यस्य ।) बाणविशेषः । इति
हलायुधः ॥
(यथा रामाथणे ६ । २८ । ४ ।
“विव्यधुर्घोररूपास्ते कङ्कपत्रैरजिह्मगैः”
॥
कङ्कस्य पक्षिविशेषस्य पत्रम् । यथा,
“नखप्रभाभूषितकङ्कपत्त्रे” ॥ रघुः २ ।
३१ ॥)

**कङ्कमाला**, स्त्री, (कङ्कं चापल्यं करचाञ्चल्यं मलते
धारयति । ककि चापल्ये + घञ् । कङ्क +
मल
धृतौ । मलधातोः उपपदे कर्म्मण्यण् टाप्
च ।)
करतालीवाद्यम् । इति शब्दरत्नावली ॥

**कङ्कमुखः**, पुं, (कङ्कस्य मुखमिव मुखंयस्य ।) सन्दंशः ।
इति हेमचन्द्रः ॥ साँडाशि इति भाषा ।
(क्ली,
नाल्योद्धरणार्थः यन्त्रभेदः । स तु
अस्थिविनष्ट-
शल्योद्धरणार्थमुपदिश्यते ॥) अस्य
प्रशंसा यथा,
“निर्व्वर्त्तते साध्ववगाहने च
शल्यं प्रगृह्योद्धरते च यस्मात् ।
यन्त्रेष्वतः कङ्कमुखं प्रधानं
स्थानेषु सर्व्वेष्वविकारि चैव” ॥ सुश्रुतो
॥
(त्रि, यथा रामायणे ६ । ७९ । ६९ ॥
“व्याघ्र-सिंहमुखान् बाणान्
काककङ्कमुखानपि” ॥)

**कङ्करं**, क्ली, (कं जलं कीर्य्यतेऽत्र । कं + कृ
आधारे
अप् ।) तक्रम् । इति हेमचन्द्रः ॥

**कङ्करः**, त्रि, (कं सुखं किरति क्षिपतीति । कं + कृ
+
अच् ।) कुत्सितः । इति हेमचन्द्रः ॥

सङ्कीर्णा भूर्बभूव” ॥)

**कङ्कालमाली**, [न्] पुं, (कङ्कालानां माला अस्ति
अस्य व्रीह्यादित्वादिनिः ।) महादेवः । इति
शब्द-
रत्नावली ॥

**कङ्कुः**, पुं, (कङ्कते औद्धत्यं लौल्यं वा प्राप्नोतीति ।
ककि गतौ + उन् ।) उग्रसेनपुत्त्रः । स तु
कंसा-
सुरभ्राता । (यथा, श्रीभागवते ९ । २४ ।
२४ ॥
(“कंसः सुनामा न्यग्रोधः कङ्कः कङ्कुः
सुहूस्तथा” ॥)
क्वचित् शङ्कुरितिपाठः ।) कङ्गुतृणम् । इति
द्वि-
रूपकोषः ॥

**कङ्कुष्ठं**, क्ली, (कङ्कुस्तृणविशेषः तस्य समीपे तिष्ठति
।
कङ्कु + स्था + क + षत्वम् ।)
पर्ब्बतीयमृत्तिकावि-
शेषः । तत्पर्य्यायः । कालकुष्टम् २ विरङ्गम्
३
रङ्गदायकम् ४ रेचकम् ५ पुलकम् ६
शोधकम् ७
कालपालकम् ८ । तद्द्विधा रजताभं
स्वर्णाभञ्च ।
अस्य गुणाः । कटुत्वम् । उष्णत्वम् ।
कफवातव्रण-
शूलनाशित्वम् । रेचकत्वञ्च । इति
राजनिर्घण्टः ॥
अपिच ।
“पीतप्रभं गुरु स्निग्धं श्रेष्ठं कङ्कुष्ठमादिमम् ।
श्यामं पीतं लघु त्यक्तसत्त्वं नेष्टं हि रेणुकम्”
॥
(इदञ्च हिमालयशिखरे जायते । यदुक्तं--
“हिमवत् पादशिखरे कङ्कुष्ठमुपजायते ।
तत्रैकं नालिकाख्यं स्यात्तदन्य द्रेणुकं
स्मृतम्” ॥
“कङ्कुष्ठं रेचनं तिक्तं कटूष्णं वर्णकारकम् ।

स्वार्थे कन् ततष्टाप् ।) कङ्गुः । अस्य
गुणाः ।
धातुशोषणत्वम् । पित्तश्लेष्मनाशित्वम् ।
रूक्षत्वम् ।
वायुवर्द्धकत्वम् । पुष्टिकारित्वम् । गुरुत्वम्
। भग्न-
सन्धानकारित्वञ्च । इति राजवल्लभः ॥

**कङ्गुनी**, स्त्री, (कंग्वा नीयते कङ्गुशब्देन ज्ञायते
इत्यर्थः । कङ्ग + नी + बाहुलकात्
कर्म्मणि डः ।
गौरादित्वात् ङीष् ।) धान्यविशेषः ।
काङ्गनि
इति भाषा । तत्पर्य्यायः । प्रियङ्गुः २
कङ्गुः ३
चीनकः ४ पीततण्डुलः ५
अत्यन्तसुकुमारः ६ ।
अस्या गुणाः । मधुरत्वम् । रुचिकारित्वम्
।
कषायत्वम् । स्वादुत्वम् । शीतलत्वम् ।
वातकारि-
त्वम् । पित्तदाहनाशित्वम् । रूक्षत्वम् ।
भग्नास्थि-
बन्धकारित्वञ्च । इति राजनिर्घण्टः ॥

**कङ्गुनीपत्रा**, स्त्री, (कङ्गुन्याः पत्त्रमिव पत्त्रमस्याः ।)
पण्यान्धातृणम् । इति राजनिर्घण्टः ॥

**कङ्गुलः**, पुं, (कङ्गु लाति गृह्णाति अनेन कङ्गु + ला
+
बाहुलकात् घञर्थे करणे कः ।) पाणिः ।
इति
शब्दचन्द्रिका ॥

**कच** रवे । इति कविकल्पद्रुमः ॥ (भ्वां--परं--अकं--
सेट् ।) कचति । रवः शब्दः । इति
दुर्गादासः ॥

**कच** इ बन्धे । त्विषि । इति कविकल्पद्रुमः ॥ (भ्वां-
-
परं बन्धे सकं दीप्तौ अकं--इदित्--सेट् ।)
इ

**कङ्करोलः**, पुं, (कङ्क इव लोलः लस्य रः ।) निको-
चकष्टक्षः । इति शब्दचन्द्रिका ॥
काँकरोल
इति ख्याता लता च ॥

**कङ्कलोड्यं**, क्ली, (कङ्क इव लोड्यते आलोड्यते । इति
कङ्क + लोड् + ण्यत् ।) अङ्कलोड्यम् ।
चटिञ्चिता
चिञ्चोडमूल इति च भाषा । अस्य गुणाः ।
गुरु-
त्वम् । अजीर्णकारित्वम् । शीतलत्वञ्च ।
इति
कश्चिद्राजवल्लभः ॥

**कङ्कशत्रुः**, पुं, (कङ्कस्य शत्रुः । पृश्निपर्ण्यास्तु कङ्क-
नाशकत्वमाहुः अत अस्य तथात्वम् ।)
पृश्नि-
पर्णी । इति शब्दचन्द्रिका ॥

**कङ्कशायः**, पुं, (कङ्क इव शेते । शीङ् + णः ।) कुक्कुरः ।
इति शब्दमाला ॥

**कङ्का**, स्त्री, (कङ्कते चापल्यं गच्छति या पित्रा-
द्यादरवशात् । ककि + अच् ।)
उग्रसेनराजकन्या ।
सा तु वसुदेवानुजपत्नी । (यथा,
श्रीमागवते ।
९ । २४ । २५ ।
"कंसा कंसवती कङ्का शूरभू राष्ट्रपालिका
।
उग्रसेनदुहितरो वसुदेवानुजस्त्रियः" ॥)
गोशीर्षचन्दनम् । तद्यथा ।
"गोशीर्षं चन्दनं
कृष्णताम्रमुत्पलगन्धिकम् ।
कङ्का" इत्यादि शब्दमाला ॥

**कङ्कालः**, पुं, (कं सुखं शिरो वा कालयति क्षिप-
तीति कं + कालि + अच् ।) शरीरास्थि ।
इत्य-
मरः । २ । ६ । ६९ ॥
समुदितशरीरास्थिसंघात-
कृमिशोथोदराध्मानगुल्मानाहकथापहम्"
॥)

**कङ्केरुः**, पुं, (कङ्कते भक्षणाय लौल्यं गच्छति । ककि
+ एरुः ।) काकविशेषः । तत्पर्य्यायः ।
द्वारबलि-
भुक् २ । इति त्रिकाण्डशेषः ॥

**कङ्केलिः**, पुं, (कं सुखं तस्मै केलिः यत्र ।) अशोक-
वृक्षः । इति राजनिर्घण्टः ॥

**कङ्केल्लः**, पुं, (ककि + एल्लप्रत्ययः ।) वास्तूकम् । इति
शब्दमाला ॥

**कङ्केलिः**, पुं, (कङ्क + बाहुलकात् एलिः पृषोदरादि-
त्वात् लश्च ।) अशोकवृक्षः । इति
त्रिकाण्डशेषः ॥

**कङ्खं**, क्ली, (कं सुखं खलत्यनेन । खल + बाहुलकात्
डः ।) भोगः । इति शब्दमाला ॥ (कं + खं ।
ब्रह्म ।
यथा छान्द्योगोपनिषदि ४ । १० । ५ ।
"प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति सहोवाच
विजानाम्यहं यत्प्राणो ब्रह्म कञ्चतु खञ्च न
विजाना-
मीति ते होचुर्यदेव कं तदेव खं यदेव खं
तदेवक-
मिति प्राणश्च हास्मै तदाकाशञ्चोचुः" ॥)

**कङ्गुः**, स्त्री, (कं सुखं अङ्गति अङ्गयति वा अगि
गतौ + ण्यन्तादस्मात् मृगष्वादित्वात् कुः
शक-
न्ध्वादित्वात् अकारस्य लोपश्च ।)
पीततण्डुला ।
काङ्गनि इति भाषा । तत्पर्य्यायः । प्रियङ्गुः
२ ।
इत्यमरः ॥ २ । ९ । २० । कङ्गूः ३ प्रियङ्गः
४ ।
इति तट्टीका ॥ (तथाचोक्तम् ।
"स्त्रियां कङ्गुप्रियङ्गू द्वे कृष्णरक्तसितास्तथा
।
पीता चतुर्व्विधा कङ्गुस्तासां पीतां वरा
स्मृता" ॥)

कञ्चति । इति दुर्गादासः ॥

**कच** ङ बन्धे । त्विषि । इति कविकल्पद्रुमः ॥ (भ्वां--
आत्मं बन्धे सकं दीप्तौ अकं--सेट् ।) ङ
कञ्चते
कचते । त्विट् दीप्तिः । इति दुर्गादासः ॥

**कचः**, पुं, (कचते शोभते शिरसीति । कच् + पचा-
द्यच् । कच्यते बध्यते इति कच बन्धे +
कर्म्मणि
अप् वा ।) केशः । इत्यमरः ॥ २ । ६ ।
९५ ॥ (यथा,
महाभारते १ । १२८ । १९ ॥)
"कचेषु च निगृह्यैतान् निविहत्य बलाद्बली
।
चकर्ष क्रोशतो भूमौ घृष्टजानुशिरोंसकान्"
॥)
वृहस्पतिपुत्त्रः । (कचते दीप्यते
तपस्तेजसेति
कच् + दीप्तौ + पचाद्यच् । पुरा किल
सुरासुर-
संग्रामे असुराणां यानेव देवा
निजघ्नस्तांश्चासुर-
गुरुरुशनाः सञ्जीवनीविद्यया
पुनर्जीवयामास ।
सुरगुरुर्वृहस्पतिः पुनस्तद्विद्यानभिज्ञतया
सुरान्
रणनिहतान् जीवयितुं न शशाक ।
तद्दर्शनभीता
देवा गुरुपुत्रं कचमुपागम्य अर्थ्यामिर्वाग्भिः
सन्तोष्य तं सञ्जीवनीलाभाय शुक्रसकाशं
प्रेरया-
मासुः । कचो ऽपि सुरकार्य्यसिद्धये
गुरुत्वेनाङ्गी
कृत्य नितरां भक्त्या परिचर्य्यया च काव्यं
परितो-
षयन् ब्रह्मचर्य्यमालम्ब्याधीतवान् ।
क्रूरप्रकृतयो
दैत्याः खलु कचाभिसन्धिं विज्ञाय तं
वारद्वयं

स्त्वङ्गांसरहितः । इति भरतः ॥
तत्पर्य्यायः ।
करङ्कः २ अस्थिपञ्जरः ३ । इति वैद्यकम् ॥ (यथा,
सुन्दोपसुन्दोपाख्याने २ । २४ ।
“अस्थिकङ्काल-

**कङ्गुका**, स्त्री, (कं सुखं अङ्गयति प्रापयति ज्ञापयति वा । अगि गतौ ण्यन्तान् मृगय्वादित्वात् कुः इदित्वात् नुम् शकन्ध्वादित्वात् अलोपे सन्धिः ।

निहत्यापि यदा पूर्णकामा नासन् तदा भूयोऽपि
तन्मांसादिकं लवशः कृत्वा शुक्रमेव सुरयासह
भोजयामासुः शुक्रस्तु स्वदुहितुर्देवयान्याः सस्नेह-
निर्ब्बन्धांतिशयेन स्वोदरगतं कचं सञ्जीवनीविद्यां
प्रदायाजीवयत् । ततः प्राप्तजीवः कृतार्थश्च कचो-
ऽतीवहृष्टचित्तया देवयान्या पतित्वेन अनुरुद्धो-
ऽपि सम्बन्धानुरोधात् नैव स्वीचकार । सुतरां
क्रोधपरतन्त्रया तया निष्फलविद्यो भवेत्यभि-

:शप्तस्तेनापि त्वमपि क्षत्त्रियभार्य्या भविष्यसीति शप्ता देवयानी ॥ एतद्विवरणं सविस्तरं महाभारतीयसम्भवपर्ब्बणि १ । ७६ अध्याये दर्शनीयम् ॥) बन्धः । शुष्कव्रणः । इति मेदिनी ॥ मेघः । इति शब्दमाला ॥

**कचङ्गनं**, क्ली, (कचस्य जनकोलाहलरवस्य अङ्गनम् । शकन्ध्वादित्वात् सन्धिः ।) विक्रयस्थानम् । तत्पर्य्यायः । निर्म्मुटः २ पण्याजिरम् ३ । इति त्रिकाण्डशेषः ॥

**कचङ्गलः**, पुं, (कच्यते रुध्यते वेलया अथवा कचते आत्मानं वेलाभूमिं न लङ्घयतीति यावत् बाहुलकात् अङ्गलच् ।) समुद्रः । इति त्रिकाण्डशेषः ॥

**कचपं**, क्ली, (कचते शोमते । "उषिकटिदलिकचिखजिभ्यः कपन्" इति उणां । ३ । १४२ । कच + कपन् ।) तृणम् । शाकपत्रम् । इत्युणादिकोषः ॥

**कचपक्षः**, पुं, (कचानां केशानां पक्षः समूहः ।) केशसमूहः । इत्यमरः ॥ २ । ६ । ९८ ॥

**कचपाशः**, पुं, (कचानां केशानां पाशः । समूहः ।) केशसमूहः । इत्यमरः ॥ २ । ६ । ९८ ॥

**कचमालः**, पुं, (कचं कचवत् वर्णं मलते धारयतीति । अच् कोः कदादेशः । अथवा चरेष्टः ।) मलिनम् । इत्यमरः ॥ ३ । १ । ५५ । कुत्सितम् । इति मेदिनी ॥

**कच्चरं**, क्ली, (कु कुत्सितं चर्य्यते आचर्य्यते यत् यद्वा केन जलेन चर्य्यते व्यवह्रियते यत् पृषोदरादित्वात् चकारस्य द्वित्वम् ।) तक्रं । इति मेदिनी ॥

**कच्चित्**, व्य, (कच्च चिच्च अनयोः समाहारः । कोः कदादेशः । अथबा काम्यते इति कद् चीयते निश्चीयते यस्मात् । कम + विच् । चि + क्विप् ततः पृषोदरादित्वात् मस्य दकारत्वम् ।) कामप्रवेदनम् । इष्टपरिप्रश्नः । इत्यमरः । ३ । ४ । १ । यथा, "कच्चित् जीवति मे तातः" ॥ (तथा, रघुः । ५ । ५ । "आपद्यते न व्ययमन्तरायैः कच्चिन्महर्षे स्त्रिविधं तपस्तत्" ॥)

**कच्छः**, पुं, (केन जलेन छृणाति दीप्यते छाद्यते वा, उच्छृदिर दीप्तिदेवनयोः छृद् वा अन्येष्वपि इति डः । कं जलं क्यति परिछिनत्ति इति वा, छो छेदने + आतोऽनुपेति कः" । ३ । २ । ३ । इति कः ।) अनूपप्रायस्थानम् । इत्यमरः । २ । १ । १० । काछाड् इति भाषा । (यथा, किराते १२ । ५४ । "कच्छान्ते सुरसरितो निधाय सेनामन्वीतः स कतिपयैः किरातवर्य्यैः" ॥) सिन्धूनां सरसाञ्च प्रान्तभागः । इति मधुः ॥

क्रोडाङ्गः १० । इति शब्दरत्नावली ॥ पञ्चनखः ११ गुह्यः १२ पीवरः १३ जलगुल्मः १४ । इति जटाधरः । अस्य मांसगुणाः । वातहरत्वम् । शुक्रवृद्धिकारित्वम् । चक्षुर्हितत्वम् । बलवर्द्धनत्वम् । मेधास्मृतिकारित्वम् । पथ्यत्वम् । शोथदोषनाशित्वञ्च । तस्य चर्म्म पित्तनाशकम् । पादः कफहारकः । अण्डं स्वादु वाजीकरञ्च ॥ (अवतारविशेषः । यथाभागवते ८ । ७ । १० ।
"सुरासुरेन्द्रैर्भुजवीर्य्यवेपितं
परिभ्रमन्तं गिरिमङ्गपृष्ठतः ।
बिभ्रत्तदावर्त्तनमादिकच्छपो
मेनेऽङ्गकण्डूयनमप्रमेयः" ॥)
नन्दीवृक्षः । इति राजनिर्घण्टः । कुवेरस्य निधिविशेषः । मल्लस्य बन्धविशेषः । इति मेदिनी ॥ मदिरायन्त्रविशेषः । इति शब्दचन्द्रिका ॥ (ऋषिविशेषः स तु विश्वामित्रपुत्त्रः ॥ यथा हरिवंशे २७ । ४७--५० ॥
"विश्वामित्रस्य पुत्त्रास्तु देवराजादयः स्मृताः ।
विख्यातास्त्रिषु लोकेषु तेषां नामानि मे शृणु ॥
देवश्रवाः कतिश्चैव यस्मात् कात्यायनाः स्मृताः ।
शालावत्यां हिरण्याक्षो जज्ञे रेणौ तु रेणुमान् ॥
साङ्कृतिर्गालवश्चैव मुद्गलश्चेति विश्रुताः ।
मधुच्छन्दादयश्चैव देवलश्च तथाष्टकः ॥
कच्छपः पूरितश्चैव विश्वामित्रस्य वै सुताः ।
तेषां ख्यातानि गोत्राणिकौशिकानां महात्मनां" ॥
नागविशेषः । यथा महाभारते १ । १२३ । ६८ ।
"कर्क्कोटकोऽथ सर्पश्च वासुकिश्च भुजङ्गमः ।
कच्छपश्चाथ कुण्डश्च तक्षकश्च महोरगः" ॥)

**कच्छपिका**, स्त्री, (कच्छेन पातीति कच्छ + पा + डः + स्वार्थे कन् । अत इत्वं टाप् च । कफवाताभ्यां जातानि कच्छप इव पञ्च षट् वा दारुणानि उन्नतानि यस्यां संज्ञायां कन् टापि इत्वं च ।) क्षुद्ररोगविशेषः । तस्य लक्षणम् !
"ग्रथिता पञ्च वा षड्वा दारुणाः कच्छपोन्नताः ।

कच + मल् + कर्म्मण्यण् ।) धूमः । इति हारा-
वली ॥ खतमाल इति च पाठः ॥

**कचरिपुफला**, स्त्री, (कचस्य रिपुः फलमस्याः ।)
शमीवृक्षः । इति राजनिर्घण्टः ॥

**कचहस्तः**, पुं, (कचानां हस्तः समूहः ।) केशसमूहः ।
इत्यमरः ॥ २ । ६ । ९८ ॥

**कचा**, स्त्री, (कच्यते रुध्यते लौहशृङ्खलादिभिरिति
यद्वा कचते शोभते राजगृहे इति ।) कच +
अच् + टाप् ।) हस्तिनी इति मेदिनी ॥ शोभा ।
इति शब्दरत्नावली ॥

**कचाकु**, त्रि, (कच इव अकति वक्रं गच्छति । अक
+ उन् ।) दुराधर्षम् । दुःशीलम् ।
इति मेदिनी ॥

**कचाकुः**, पुं, (कच इव कचनिर्म्मितवेणीवत् अकति
कौटिल्यं यथा तथा गच्छतीति
अक + उन् ।)
सर्पः । इति मेदिनी ॥

**कचाटुरः**, पुं, (कचवदटति मेघवत् शून्ये विहर
तीति । कच + अट् + उरच् ।) पक्षिविशेषः ।
डाक् इति भाषा । तत्पर्य्यायः । शितिकण्ठः २
दात्यूहः ३ काकमद्गुः ४ । इति
त्रिकाण्डशेषः ॥

**कचामोदं**, क्ली, (कचं आमोदयतीति-आ-मुद्-णिच्-
अच् ।) बालकम् । इति
राजनिर्घण्टः ॥ बाला
इति भाषा ।

**कचुः**, स्त्री, (कचते शोभते । कच् + उन् ।) कच्ची ।
जलाशयप्रान्तदेशः । इति रमानाथः । नदी-
पर्ब्बतादिसमीपम् । इति साङ्गः ॥ (यथा महा-
भारते । १ सम्भवपर्ब्बणि शाकुन्तले ७० । १६ ।
"नदीकच्छोद्भवं
कान्तमुच्छ्रितध्वजसन्निभम्" ॥)
तुन्नवृक्षः । इत्यमरः । २ । ४ । १२८ तुँद्
इति भाषा ।
परिधानाञ्चलम् । इत्यमरमेदिनोकरौ ॥ काछा
काँचा कँड्सी इतिभाषा । शेषस्य पर्य्यायः ।
कक्षाः २ कच्छा ३ कच्छोटिका ४ । इति हेम-
चन्द्रः ॥ कच्छटिका ५ कच्छाटिका ६ । इति
शब्दरत्नावली ॥ नौकाङ्गम् । इति
हेमचन्द्रः ॥
(देशविशेषः । यथोक्तञ्च ।
"गणेश्वरात् पूर्ब्बभागे समुद्रादुत्तरे शिंवे ।
कच्छदेशः समाख्यातस्तन्त्रे
श्रीशक्तिसङ्गमे" ॥)

**कच्छः**, त्रि, (केन जलेन छृणाति दीप्यते इति ।
छृद् + बाहुलकात् डः ।) जलप्रान्तः ।
इति नानार्थे
अमरः ॥

**कच्छटिका**, स्त्री, (कच्छं कच्छस्थलं अटति प्राप्नोति
शकन्ध्वादित्वात् अलोपे सन्धिः । अट्
अच् संज्ञायां
कन् अत इत्वं च । यद्वा कच्छेन
पश्चाद्भागस्थवस्त्रा-
ञ्चलविशेषेण अट्यते प्राप्यते ज्ञायते वा अट्
कर्म्मणि अप् । ततः कन् इत्वं च ।)
कच्छः । इति
शब्दरत्नावली । काछा इति भाषा ॥

**कच्छपः**, पुं, (कच्छं आत्मनो मुखसम्पुटं पाति स हि
कफानिलाभ्यां पिडका ज्ञेयाः कच्छपिका बुधैः"
॥
प्रमेहोपेक्षया जातदशपिडकान्तर्गतपिडकावि-
शेषः । तस्य लक्षणम् ।
"सदाहा कूर्म्मसंस्थाना ज्ञेया कच्छपिका बुधैः" ।
इति सुश्रुतः ॥
("अवगाढार्त्तिनिस्तोदा महावास्तुपरिग्रहा ।
श्लक्ष्णा कच्छपपृष्ठाभा पिडका कच्छपी मता" ॥
इति चरकः ॥ चिकित्सा तु कच्छपीशब्दे द्रष्टव्याः
॥)

**कच्छपी**, स्त्री, (कच्छं कच्छेन वा पाति । पा + सुपीति
कः । ३ । २ । ४ । अथवा कच्छेन पिबति । अत्र
तु गापोष्टक् न पिबतेः सुराशीध्योरिति वचनात्
जातेरिति ङीष् । ४ । १ । ६३ ।) कूर्म्मी । तत्-
पर्य्यायः । डुलिः २ दुलिः ३ कमठी ४ । वीणा-
विशेषः । सा तु सरस्वतीवीणा । इत्यमरः ॥
३ । ३ । १३१ । क्षुद्ररोगविशेषः । इति मेदिनी ।
कच्छपिकारोगः । तच्चिकित्सा यथा,
"कच्छपीं स्वेदयेत् पूर्ब्बं तत एभिः प्रलेपयेत् ।
कल्कीकृतैर्निशाकुष्ठसितातालकदारुभिः ॥

स्वनामख्यातगुल्मः। इति पुराणम्

॥ मूलशाक-

विशेषः। यथा, --

“कदली दाडिमी धान्यं हरिद्रा

माणकं कचुः।

विल्वोऽशोको जयन्ती च विज्ञेया

नवपत्रिका” ॥

इति तिथ्यादितत्त्वे दुर्गोत्सवतत्त्वम्

॥

**कच्चटं**, क्ली, (कु कुत्सितं चटतीति। चट् + अच्।

बाहुलकात् कोः कत्। कुत्सितम्।)

जलपिप्पली।

इति वैद्यकम्॥

**कच्चरं**, त्रि, (कु कुत्सितं चरतीति। कु + चर +

किञ्चिद्दृष्ट्वा शरीरे एव मुखसम्पुटं

प्रवेशयति

सम्पुटे हि कच्छशब्दः प्रसिद्धः। यद्वा

कच्छे अनूप-

देशे पाति आत्मानं रक्षतीति। कच्छ + पा +

कर्त्तरि डः।) स्वनामख्यातजलजन्तुः।

काछिम् इति

भाषा। तत्पर्य्यायः। कूर्म्मः २ कमठः ३

। इत्यमरः॥

१। १०। २१। गूढाङ्गः ४ धरणीधरः ५

कच्छेष्टः ६

पल्वलावासः ७ कठिनपृष्ठकः ८।

पञ्चसुप्तः ९

:तां पक्वां साधयेच्छीघ्रं भिषग्व्रणचिकित्सया” ॥

इति भावप्रकाशः ॥

**कच्छरुहा**, स्त्री, (कच्छे रोहति या । कच्छ + रुह् + इगुपधेति कः । ३ । १ । १३५ । स्त्रियां टाप् च ।) दूर्व्वा । इति जटाधरः ॥

**कच्छां**, स्त्री, (कचं पश्चात्प्रदेशं छादयतीति । छद् + णिच् + डः पृषोदरादित्वात् ह्रस्वः । टाप् च । कचश्छाद्यतेऽनया वा ।) परिधानापराञ्चलम् । इति हेमचन्द्रः ॥ चीरिका । झिँझी पोका इति भाषा । वाराही । इति मेदिनी ॥

**कच्छाटिका**, स्त्री, (कच्छ एव बाहुलकात् अटन् ततः स्वार्थे कन् टाप् च ।) कच्छटिका । इति शब्दरत्नावली ॥

**कच्छुः**, स्त्री, (कर्षति देहं । कष हिंसायां + “कषच्छ-श्चेति” १ । ८६ । उणां ऊ छान्तादेशश्च ।) पृषोदरा-दित्वात् वा ह्रस्वः । रोगविशेषः । तस्य लक्षणम् ।
“सूक्ष्मा बह्व्यः पिडकाः स्राववत्यः
पामेत्युक्ता कण्डूमत्यः सदाहाः ।
सैव स्फोटैस्तीव्रदाहैरुपेता
ज्ञेया पाण्योः कच्छुरुग्रास्फिचोश्च” ॥
इति निदानम् ॥ तच्चिकित्सा यथा ।
“अर्कपत्ररसे पक्वं हरिद्राकल्कसंयुतम् ।
नाशयेत् सार्षपं तैलं पामाकच्छुविचर्च्चिकाम्” ॥
इति अर्कतैलम् ॥ १ ॥
“मनःशिलालं कासीसं गन्धाश्मा सिन्धुजन्म च ।
स्वर्णक्षीरी शिलाभेदी शुण्ठी कुष्ठञ्च मागधी ॥
कण्डूकच्छप्रशमनं कच्छुपामा विनाशनम्” ॥
इति सोमराजीतैलम् ॥ * ॥
इति चक्रपाणिकृतसंग्रहः ॥)

**कच्छुघ्नी**, स्त्री, (कच्छुं हन्ति या । कछु + हन् + टक् + ङीप् ।) पटोलः । हपुषाभेदः । इति राजनिर्घण्टः ॥

**कच्छुरः**, त्रि, (कच्छरस्त्यस्य । “कच्छ्वा ह्रस्वत्व-ञ्चेति” रः । ह्रस्वश्च । पां । ५ । २ । १०७ । वार्त्तिके ।) कच्छुरोगयुक्तः । खोसरोगी इति भाषा । तत्-पर्य्यायः । पामनः २ । इत्यमरः ॥ २ । ६ । ५८ पुंश्चलः । इति मेदिनी ॥

**कच्छुरा**, स्त्रो, (कच्छुं कण्डूरोगं राति ददातीति । आत इति कः । टाप् च । पृषोदरादित्वात् ह्रस्वः पूर्ब्बस्य । यद्वा कच्छूः साध्यत्वेनास्ति अस्यां ह्रस्व-श्चेति केषाञ्चिन्मतम् ।) शूकशिम्बी । शटी । दुरा-लभा । इति मेदिनी ॥ यवासः । इति राज-निर्घण्टः ॥ ग्राहिणीवृक्षः । इति रत्नमाला ॥ क्षी रुइ इति भाषा ॥

**कच्छूः**, स्त्री, (कषति हिनस्ति देहं “कषेश्छश्च” । इति ऊः । १ । ८६ । उणां ।) रोगविशेषः । खोस् पाँच्डा इति भाषा । तत्पर्य्यायः । पाम २ पामा ३ विचर्च्चिका ४ । इत्यमरः ॥ २ । ६ । ५६ ॥

**कच्छूमती**, स्त्री, (कच्छूःसाधनत्वेनास्त्यस्यां अस्त्यर्थेमतुप्

कस्तूरिकादिसंयुक्तं कज्जलं तैलमिश्रितम्” ॥
इति कथासरित्सागरे । ४ । ४७ ॥ तथा, भाग-वते ६ । २ । २७ ।
“धिङ्मां विगर्हितं सद्भिर्दुष्कृतं कुलकज्जलम्” ॥)

**कज्जलः**, पुं, (कत् कुत्सितं यथा तथा जालयति आच्छादयति आतपादिकं । यद्वा कुत्सितमपि लतागुल्मादिकञ्चेति यावत् जालयति जीवयति वर्षणेनेतिशेषः । कु + जल् + णिच् अच् ततो ह्रस्वः ।) मेघः । इति शब्दमाला ॥

**कज्जलध्वजः**, पुं, (कज्जलं ध्वज इव यस्य ।) दीपः । इति त्रिकाण्डशेषः ॥

**कज्जलरोचकः**, पुं, क्ली, (कज्जलं रोचयति । दीपेनो-द्भासयति । कज्जल + रुच् + णिच् ततोऽच् स्वार्थे कन् । ण्वुल् वा ।) दीपाधारः । पिलसुज् देरको इत्यादि भाषा । तत्पर्य्योयः । कौमुदीवृक्षः २ दीपवृक्षः ३ शिखातरुः ४ दीपध्वजः ५ । इति जटाधरः ॥ ज्योत्स्नावृक्षः ६ । इति त्रिकाण्डशेषः ॥

**कज्जली**, स्त्री, (कु कुत्सितं जलति जीवतीति । जल + टक् ङीप् च कोः कत् । यद्वा कुत्सितं रोगयुक्तम् जालयति आरोग्यं नयति । जल + णिच् + अच् गौरादित्वात् ङीष् ह्रस्वश्च । यद्वा कज्जलमिवाच-

लाङ्गलीरवींरश्च दद्रुघ्नः कृमिहानलः ।
दन्ती निम्बदलञ्चैभिः पृथक्
कर्षमितैर्भिषक् ॥
कल्कीकृतैः पचेत्तैलं कटुप्रस्थद्वयोन्मितम्
।
अर्कसीहुण्डदुग्धेन पृथक् पलमितेन च ॥
गोमूत्रस्याढकेनापि शनैर्मृद्वग्निना पचेत् ।
अभ्यङ्गेन हरेदेतत् कच्छुन्दुःसाध्यतामपि ॥
पामानञ्च तथा कण्डूं
त्वग्व्याधिवधिरामयान् ।
कच्छुराक्षसनामेदं तैलं हारीतभाषितम्” ॥
कच्छुराक्षसनाम तैलम् ॥ २ ॥ इति
भावप्रकाशः ॥
(“अवल्गुजं कासमर्दं चक्रमर्दं निशायुतम् ।
माणिमन्थेन तुल्यांशं मस्तुकाञ्जिकपेषितम्
।
कच्छुं कण्डूं जयन्त्युग्रां सिद्धत्रयप्रयोगराट्
॥
कोमलं सिंहास्यदलं सनिशं सुरभिजलेन
पिष्टम् ।
दिवसत्रयेण नियतं क्षपयति कच्छुं
विलेपनतः ।
हरिद्राकल्कसंयुक्तं गोमूत्रस्य पलद्वयम् ।
पिबेन्नरः कामचारी कच्छुपामाविनाशनम् ॥
शोथपाण्ड्वामयहरी गुल्ममेहकफापहा ।
कच्छुपामाहरी चैव पथ्या गोमूत्रसाधिता ॥
* ॥
स्वरसेऽपि च दूर्व्वायाः पचेत्तैलं चतुर्गुणम् ।
कच्छुर्विचर्चिका-पामा अभ्यङ्गादेव
नाशयेत्” ॥
इति दूर्व्वाद्यं तैलम् ॥ * ॥
“सोमराजी हरिद्रे द्वे सर्षपारग्वधं गदम् ।
करञ्जवीजैडगजं गर्भं दत्त्वा विपाचयेत् ॥
तैलं सर्षपसम्भूतं नाडीदुष्टव्रणापहम् ।
अनेनाशु प्रणश्यन्ति कुष्ठान्यष्टादशैव तु ॥
नीलिकापि पुरोव्यङ्गगम्भीरं वातशोणितम् ।
ततो ङीप् ।) शूकशिम्बी । इति
शब्दचन्द्रिका ॥

**कच्छोटिका**, स्त्री, (कच्छ + अटन् वा कन् । अत
इत्वं टाप् च । पृषोदरादित्वात्
ओकारादेशः ।)
कच्छः । इति हेमचन्द्रः । काछा इति भाषा
॥

**कच्छोरं**, क्ली, (केन शिरसा शरीरेण वा छुर्य्यते
लिप्यते इति । क + छुर लेपे + कर्म्मणि
घञ् ।)
शटी । इति रत्नमाला ॥

**कच्ची**, स्त्री, (कचते दीप्यते शोभते । कच् उन् । ततः
कचुशब्दात् ङीप् ।) कन्दविशेषः । कचु
इति
ख्याता । तत्पर्य्यायः । वितण्डा २ । इति
जटा-
धरः ॥ अस्या गुणाः । भेदकत्वम् ।
गुरुत्वम् ।
कटुत्वम् । आमवायुपित्तकारित्वम् ।
पिच्छिल-
त्वञ्च । इति राजवल्लभः ॥
(“कच्ची सरा गुरुः सामवातकृत्
कटुपित्तला” ॥
इति वैद्यकद्रव्यगुणे ॥) कच्चु इति
हिन्दीभाषा ॥
“महिषासुरयुद्धेषु कच्चीरूपासि सुव्रते ।
मम विघ्नविनाशाय पूजां गृह्ण प्रसीद मे” ॥
इति शारदीयदुर्गार्च्चापद्धतिः ॥

**कज**, इ रुहे । जन्मनि । सौत्रधातुरयम् । इति
कविकल्पद्रुमः ॥ इ कञ्जारः । रुहो जन्म ।
कृद्धोः
कभावे इति भावे कः । इति दुर्गादासः ॥

**कजं**, क्ली, (के जले जायते जातं वा । जन + कर्त्तरि +
डः ।) कमलम् । इति राजनिर्घण्टः ॥

**कज्जलं**, क्ली, (कु कुत्सितं जलं यस्मात् शुभ्रमपि
रतीति कद् + जल् + क्विप् + अच् ङीष्
च ।)
मत्स्यविशेषः । तत्पर्य्यायः । कज्जला २
अनन्ता ३
इति शब्दरत्नावली ॥ मिश्रितरसगन्धकम्
। (यथा
“गन्धकेन रसं प्राज्ञः सुदृढं मर्द्दयेद्भिषक् ।
कज्जलाभो यथा सूतो विहाय
घनचापलम् ॥
दृश्यतेऽसौ तदा ज्ञेयो मूर्च्छितो
रसकोविदैः ।
असौ रोगचयं हन्यादनुपानस्य योगतः” ॥
इति वैद्यकरसेन्द्रसारसंग्रहः ॥)

**कज्वलं** क्ली, (कं ऊद्ध्वर्गतं चक्षुषोर्जलं चक्षुरोगविशेषं
ज्वालयति शोषयति नाशयतीति यावत् ।
ज्वल्
+ णिच् + अच् ह्रस्वश्च ।) कज्जलम् ।
इति त्रि-
काण्डशेषः ॥

**कञ्चटं**, क्ली, (कञ्चते दीप्यते लतादामादिभिः शोभते
इति भावः । कचि + अटच् ।)
जलजशाकविशेषः ।
काँचडादाम इति भाषा । तत्पर्य्यायः ।
जलभूः २
लाङ्गली ३ । इति शब्दचन्द्रिका ॥ शारदी
४
तोयपिप्पली ५ शकुलादनी ६ । इति
रत्नमाला
जलतण्डुलीयम् ७ । इति भावप्रकाशः ॥
तस्य गुणाः ।
श्लेष्मकारित्वम् । धारकत्वम् । हिमत्वम्
। पित्तरक्त-
नाशित्वम् । लघुत्वञ्च । इति राजवल्लभः
॥ अपि च ।
तिक्तत्वम् । वायुहरत्वञ्च । इति
भावप्रकाशः ॥

**कञ्चडः**, पुं, (कञ्चते वघ्नाति मध्यगतं मनुष्यादि-

| | | |
|---|---|---|
| | जलं संयोगात् स्ववर्णत्वं नयतीति यावत् यद्वा<br>कुत्सितं ऊद्ध्र्वगं चक्षुषोर्जलं दूरीभूतं भवत्यस्मात् ।<br>कोः कदादेशः ।) अञ्जनम् । इति हेमचन्द्रः ॥<br>काजल इति भाषा । तत्पर्य्यायः । लोचकः २ ।<br>इति त्रिकाण्डशेषः ॥<br>(“ततः साकारयद्भूरि चेटीभिः कुण्डकस्थितम् । | जीवम् । कचि धातोरडन् बाहुलकात् इदित्वान्नुम् ।<br>कञ्चते शोभते वा ।) कञ्चटप्रभेदः ।<br>तत्पर्य्यायः ।<br>कञ्चटः २ काचः ३ चक्रमर्द्दः ४ अम्बपः ५ । इति<br>शब्दचन्द्रिका ॥<br>**कञ्चारः**, पुं, (कचेर्भावि घञ् कञ्चं प्रकाशं तं ऋच्छति<br>प्राप्नोतीति ऋ + कर्म्मण्यण् । अथवा कं पृथ्वीं चा-<br>रयति चालयति यद्वा कं जलं चारयति निज-<br>रश्मिभिरितिशेषः । कचि + णिच् अच् । कर्म्मणि<br>उपपदे अण् वा ।) सूर्य्यः । इति जटाधरः ॥ |

**कञ्चिका**, स्त्री, (कञ्चते वेणौ प्रकाशते । कचि + ण्वुल्
स्त्रियां टाप् इत्वञ्च ।) वेणुशाखा । कञ्ची इति
भाषा । तत्पर्य्यायः । कुञ्चिका २ धृष्णुः ३ ।
इति
शब्दचन्द्रिका ॥ क्षुद्रस्फोटः । इति वैद्यकम्
॥

**कञ्चुकः**, पुं, (कञ्चते आपुच्छात् सफणमुखपर्य्यन्तं
अभितो दीप्यते प्रकाशते शोभते वा कञ्चते
आवृणोति शत्रुनिक्षिप्तास्त्रादिनिवारणाय।
कचि
+ बाहुलकादुकन् ।) सर्पत्वक् । सापेर
खोलोस
इति भाषा । तत्पर्य्यायः । निर्म्मोकः २ ।
(यथा पञ्चतन्त्रे । १ । ६९ ।
"भोगिनः कञ्चुकाविष्टाः कुटिला क्रूरचेष्टिताः
।
सुदुष्टा मन्त्रसाध्याश्च राजानः पन्नगा इव"
॥)
भटादेश्चोलाकृतिसन्नाहः । साँजोया इति
भाषा ।
तत्पर्य्यायः । वारबाणः २ वाणवारः ३ ।
इत्य-
मरभरतौ ॥ (तथा हि रामायणे ६ । ९९ ।
२३ ।
"कञ्चुकोष्णीषिणस्तत्र वेत्रकर्कशपाणयः ।
उत्सारयन्तः सहसा समन्तात्परिचक्रमुः"
॥)
चोलकम् । काँचलि इति भाषा । तत्पर्य्यायः
।
चोलः २ कञ्चुलिका ३ कूर्पासकः ४
अङ्गिका ५ ।
वर्द्धापकगृहीताङ्गस्थितवस्त्रम्। इति
हेमचन्द्रः ॥
(यथाऽमरुशतके ८१ ।
"सख्यः किं करवाणि यान्ति
शतधा यत् कञ्चुके सन्धयः" ॥)
वस्त्रम् । इत्युणादिकोषः ॥ (यथा भागवते ८
। ७१५ ।
कञ्चुलिकया धत्से मनोहारिणीम् ।)

**कञ्जं**, क्ली, (कम् क्षीरोदधौ जायते सागरस्यापि
जलमयत्वात् तद्वति इति सूच्यते ।
कम् जले
जातम् । जनेः कर्त्तरि डः ।) अमृतम् ।
पद्मम् ।
इति मेदिनी ॥ (यथा, भागवते । ८ ।
६ । ३ ।
"विरिञ्चो भगवान् दृष्ट्वा सह शर्व्वेण तां
तनुम् ।
स्वच्छामरकतश्यामां
कञ्जगर्भारुणेक्षणाम्" ॥)

**कञ्जः**, पुं, (कम् के जले शिरसि च जायते । जनेर्डः ।)
ब्रह्मा । केशः । इति मेदिनी ॥

**कञ्जकः**, पुं, (कञ्जते मनुष्यवत् प्रायेणोच्चारयितुं
शक्नोतीति । कजि + कर्त्तरि ण्वुल् ।)
पक्षिविशेषः ।
इति शब्दचन्द्रिका ॥ मयना इति भाषा
॥

**कञ्जजः**, पुं, (कञ्जात् विष्णोर्नाभिपद्मात् जातः । जन
+ कर्त्तरि डः ।) ब्रह्मा । इति
शब्दरत्नावली ॥

**कञ्जनः**, पुं, (कं सुखं जनयतीति । कम् + जनि +
अण् ।) कन्दर्पः । इति त्रिकाण्डशेषः
॥ पक्षिवि-
शेषः । इति शब्दचन्द्रिका ॥ मयना
इति भाषा ॥

**कञ्जरः**, पुं, (कं जलं एकार्णवस्थसलिलं जरयति
शोषयति । कम् जृणाति
रश्मिभिराकर्षति ।
कजि + अरन् ।) ब्रह्मा । सूर्य्यः ।
उदरम् । हस्ती ।
इत्युणादिकोषः ॥

मानेन कटं कदाचित् वन्यद्विपेनोन्मथिता
त्वगस्य" । इति रघुः" । २ । ३७ ।)
कटिदेशः
तत्पार्श्वश्च । किलिञ्जकः । इत्यमरः ॥
माँदुर्द्दर्मा
इत्यादि भाषा । काशादिरचितरज्जुः येन
कुसूलं
वेष्ट्यते । कुसूलञ्च मरायि इति टीकान्तरम्
॥
तृणरचितटाटी इतिख्यात इत्यन्ये । इति
तट्टी-
कायां भरतः ॥
(यथा भागवते । १ । ३ । १८ ।
"चतुर्द्दशं नारसिंहं बिभ्रद्दैत्येन्द्रमूर्ज्जितम् ।
ददार करजैर्वक्षस्येरकां कटकृद्यथा" ॥)
अतिशयः । शरः । समयः । इति मेदिनी ॥
तृणम् ।
इति धरणी ॥ (यथा मनु २ । २०४ ।
"गोऽश्वोष्ट्रयानप्रासादस्रस्तरेषु कटेषु च ।
आसीत गुरुणा सार्द्धं शिलाफलकनौषु च" ॥
"कटेषु तृणादिनिर्म्मितेषु" इति कुल्लूकभट्टः
॥)
शवः । शवरथः । ओषधी । श्मशानम् । इति
हेम-
चन्द्रः ॥ तक्षितकाष्ठम् । तक्ता इति भाषा ।
इति शब्दरत्नावली ॥ (यथा, -- रामायणे ।
२ ।
५६ । २१ ।
"तां निष्ठितां बद्धकटां दृष्ट्वा रामः सुदर्शनाम्
।
सुश्रूषमाणमेकाग्रमिदं वचनमब्रवीत्" ॥
"बद्धकटां बद्धकवाटाम्" इति तट्टीका ॥
स्वनाम-
प्रसिद्धराक्षसः । यथा, -- रामायणे । ५ ।
१२ । १३ ।
"शुकनासस्य वक्रस्य कटस्य विकटस्य च ।
रक्षसो लोमहर्षस्य दंष्ट्रालह्रस्वकर्णयोः" ॥)

**कटः**, त्रि, (कटयति प्रकाशयति क्रियामितिशेषः । कट्-

"देवांश्च तच्छ्वासशिखाहतप्रभान्
धूम्राम्बरस्नग्वरकञ्चुकाननान्' ॥)

**कञ्चुकालुः**, पुं, (कञ्चुकोऽस्त्यस्य । कञ्चुक + आलुच् ।)

सर्पः । इति शब्दचन्द्रिका ॥

**कञ्चुकी**, [न्] पुं, (कञ्चुकोऽस्यास्तीति । कञ्चुक + अस्त्यर्थे

इनिः ।) महल्लरक्षकः । अन्तःपुराध्यक्षः । स तु
वहिःसञ्चरन्तीनां पुरस्त्रीणां प्रेक्षकपुरुषान्तर-
वारणाय राज्ञा स्त्र्यागारे यो वेत्रधरो नियुक्तः ।
तत्पर्य्यायः । सौविदल्लः २ स्थापत्यः ३ सौविदः ४ ।
इत्यमरः ॥ २ । ८ । ८ ॥ (यथा रत्नावलीनाटिकायां
२ अङ्के ।
"नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्यत्रपा-
मन्तःकञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः" ॥
अस्य लक्षणमुक्तं भरतेन ।
"अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः ।
सर्व्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयते" ॥)
यवः । चणकः । सर्पः । इति राजनिर्घण्टः ॥ षिङ्गः ।
जोङ्गकद्रुमः । इति मेदिनी ॥

**कञ्चुकी**, स्त्री, (कञ्चयति शरीरकान्त्यादिकं प्रका-

शयति रोगादिकमुपशमयति वा । कञ्च णिच्
बाहुलकादुकन् गौरादित्वात् ङीष् जातिवाच-
कत्वात् ङीप् वा ।) औषधिभेदः । इति मेदिनी ॥
क्षीरीशवृक्षः । इति रत्नमाला ॥

**कञ्चुलिका**, स्त्री, (कञ्चते हृदयाद्यङ्गान्यावृणोतीति ।

कचि + उलच् + स्वार्थे कन् गौरादित्वात् ङीष्

**कञ्जलः**, पुं, (कञ्जते उपदिष्टविषयं पठितुं शक्नोति ।

कजि + कलच् ।) मदनपक्षी । इति शब्दचन्द्रिका ॥
मयना इति भाषा ॥

**कञ्जारः**, पुं, (कम् जलं भुक्तरसादिकं जारयति । कम् +

जलं जारयति शोषयति रश्मिभिः । कम् एकार्ण-
वस्थप्रलयसलिलं जारयति योगबलेन लापयति ।
कं जलं जारयति शोषयति शुण्डेनेतिशेषः ।
कम् + जॄ + णिच् + अण् । यद्वा "कञ्जिमृजिभ्यां
चित्" । इति आरन् । ऊणां ३ । १३७ ।) जठ-
रम् । सूर्य्यः । विरिञ्चिः । वारणः । मुनिः । इति
मेदिनी ॥ (मयूरः । व्यञ्जनम् । इत्युणादिकोषः ॥
४ । १३७ ॥ कम् जलं सागरं जारयति शोष-
यति गण्डूषीकृत्य योगबलेन इति विग्रहे अग-
स्त्यमुनिः ॥)

**कञ्जिका**, स्त्री, (कञ्जते तरसा भूमिं भित्त्वा उत्प-

द्यते । कजि + कर्त्तरि + ण्वुल् + टाप् इत्वञ्च ।)
ब्राह्मणयष्टिकावृक्षः । इति शब्दरत्नावली ॥ वा-
मन्हाटी इति भाषा ॥

**कट** गत्यां । इति कविकल्पद्रुमः ॥ (भ्वां--परं--सकं--

सेट् ।) कटति । इति दुर्गादासः ॥

**कट** इ गत्यां । इति कविकल्पद्रुमः ॥ (भ्वां--परं--सकं--

सेट्--इदित् । इ-कण्ट्यते । इति दुर्गादासः ॥

+ णिच् + अच् ।) क्रियाकारः । इति हेमचन्द्रः ॥

**कटकः**, पुं, क्ली, (कटति वर्षति अस्मिन् मेघ इति ।

अथवा कट्यते निर्गम्यते अस्मात् निर्झरिण्या-
दिभिः "कृञादिभ्यः संज्ञायां वुन्" । ५ । ३५ ।
उणां इति वुन् ।) पर्ब्बतमध्यभागः । तत्पर्य्यायः ।
नितम्बः २ । इत्यमरः ॥ २ । ३ । ५ ॥ मेखला ३
इति भरतः ॥ (यथा रघुः । १६ । ३१ । "मार्गै-
षिणी सा कटकान्तरेषु वैन्ध्येषु सेना बहुधा
विभिन्ना" ॥) वलयः । चक्रम् । इत्यमरः ॥ २ ।
६ । १०७ । हस्तिदन्तमण्डनम् । सामुद्रलवणम् ।
राजधानी । इति मेदिनी ॥ नगरी । इति
शब्दरत्नावली ॥ सेना । इति हेमचन्द्रः ॥ (यथा
हितोपदेशे १ । ३३२ । "स च दिग्विजयक्र-
मेणागत्य चन्द्रभागानदीतीरे समावेशितकटको
वर्त्तते" ॥) सानुः । पर्ब्बतस्य समभूभागः । इति
विश्वः ॥
("गिरिकूटेषु दुर्गेषु नानाजनपदेषु च ।
जनाकीर्णेषु देशेषु कटकेषु परेषु च" ॥
इति महाभारतम् ४ । २४ । १२ ।)

**कटकी**, [न्] पुं, (कटकोऽस्त्यस्य अस्त्यर्थे इनिः ।)

पर्ब्बतः । इति त्रिकाण्डशेषः ॥

**कटकोलः**, पुं, (कटति वर्षति स्रवति इति । कट् +

अच् । कटस्य निष्ठीवनरूपजलस्य कोलः घनीभावो
यत्र । कुल संस्त्याने अधिकरणे घञ् ।) निष्ठी-
वनपात्रम् । इति त्रिकाण्डशेषः ॥ पिक्दानी इति

| | | |
|---|---|---|
| ह्रस्वः । टाप् च ।) कञ्चकः ।<br>स्त्रीणामङ्गरक्षिणी ।<br>इति हेमचन्द्रः ॥ काँचुलि इति भाषा ॥<br>(यथा अमरुशतके । २३ । "त्वं मुग्धाक्षि<br>विनैव- | **कट** ई गत्यां । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-<br>सेट् । कटति अकटीत् अकाटीत्<br>चकाट ।<br>ई कट्टः इति दुर्गादासः ॥<br>**कट** ए वृतौ । वृषि । वृतिरावरणम् । वृट् वर्षणम् ।<br>(भ्वां-परं-सकं-अकं च सेट् ।) कटति<br>। एदित्<br>अकटीत् चकाट ।) ए अकटीत् पटो<br>गात्रम् ।<br>कटति मेघः । इति दुर्गादासः ॥<br>**कटः**, पुं, (कटति मदवारि वर्षति यः । कट<br>वर्षणे-कर्त्तर्य्यच् ।) हस्तिगण्डस्थलम्<br>। "कण्डूय- | भाषा ॥ |

:("स्यादाचामनकः प्रोण्ठः कटकोलः पतद्ग्रहः" ।)

**कटखादकं**, त्रि, (कटं तृणादिकं सर्व्वमपि खादति इत्यर्थः । कट् + खाद् + ण्वुल् । सर्व्वभक्षम् ।) खादकम् । भक्षकम् । इति मेदिनी ॥

**कटखादकः**, पुं, (कटस्य आवरणस्य खं मध्यस्थित-च्छिद्रं अत्ति । कट + ख + अद् + ण्वुल् ।) काच-कलसः । काकः । जम्बूकः । इति मेदिनी ॥ (कटं शवं खादतीति व्युत्पत्त्या शवखादके त्रि ।)

**कटङ्कटः**, पुं, (कटं शवं कटति ज्वालया आवृणो-तीति । कट + कट् + बाहुलकात् खच् ।) अग्निः । यथा, -- "कटङ्कटाय भीमाय नमः पञ्चपलाय च । अघोरघोररूपाय घोरघोरतराय च" ॥ इति वह्निपुराणे अग्निस्तवनामाध्यायः ॥

**कटङ्कटेरी**, स्त्री, (कटङ्कटं वह्निजं सुवर्णं तत्कान्ति-मितिशेषः ईरयति प्रापयति ज्ञापयति वात्मानं सुवर्णकान्तितुल्यपीतवर्णत्वात् । कटङ्कट + ईर गतौ + अण् । ङीप् गौरादित्वात् ङीष् वा ।) हरिद्रा । इति त्रिकाण्डशेषः ॥ दारुहरिद्रा । इति रत्नमाला ॥

**कटप्रूः**, पुं, (कटे श्मशाने प्रवते । कटं कटेन वा प्रवते । प्रुङ् गतौ क्विप् निपातनात् दीर्घः । पां । ३ । २ । १७ । "क्विव्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसा-

**कटम्बः**, पुं, (कटतीति "कृकदिकडिकटिभ्योऽम्बच्" । उणां । ४ । ८२ । इति अम्बच् धातूनामनेकार्थत्वात् अत्र वादनेऽपि ।) वाद्यभेदः । (कट्यते आव्रियते शत्रुरनेनेति करणे अम्बच् ।) बाणः । इत्युणा-दिकोषः ॥

**कटम्बरा**, स्त्री, (कटं गुणातिशयम् वृणोति धार-यतीति । वृ + अच् + टाप् च ।) कटुकी । इत्य-मरः । २ । ४ । ८५ ॥ कटम्भरा इति च पाठः ॥

**कटम्भरः**, पुं, (कटं गुणातिशयं बिभर्त्ति । भृ + धा-रणपोषणयोः संज्ञायां भृतॄवृजिधारिसहितपि-दमीति खच् मुम् च पां ३ । २ । ४६ ।) श्योना-कवृक्षः । इति राजनिर्घण्टः ॥ कटभीवृक्षः । इति वैद्यकम् ॥

**कटम्भरा**, स्त्री, (कटं बिभर्त्ति या । भृ + खच् मुम् टाप्च ।) राजबला । इत्यमरः । २ । ४ । १५३ ॥ प्रसारणी । गन्धभादालिया इति भाषा । रो-हिणी । कटकी इति भाषा । हस्तिनी । कलम्बिका । गोला । वर्षाभूः । मूर्ब्बा । इति मेदिनी ॥

**कटव्रणः**, पुं, (कटः उत्कटो व्रणो युद्धकण्डुरस्य ।) भीमसेनः । इति त्रिकाण्डशेषः ॥

**कटशर्करा**, स्त्री, (कटः नलः मिष्टरसत्वात् शर्करेव

इति तट्टीका ॥ कलत्रम् ९ कटीरम् १० काञ्ची-पदम् ११ । इति हेमचन्द्रः । करभः १२ । इति जटाधरः ॥ अत्र पूर्ब्बद्वयं कटिपार्श्वः । इति भरतः ॥ (यथा, भागवते । ३ । १५ । २० । "येषां वृहत् कटितटाः स्मितशोभिमुख्यः" । कृष्णात्मनां न रज आदधुरुत्स्मयाद्यैः" ॥)

**कटित्रं**, क्ली, (कटिं त्रायते इति । कटि + त्रै + कः ।) रसना । कटिवस्त्रम् । कटिवर्म्म । इति मेदिनी-करहेमचन्द्रु ॥ (यथा भागवते । ६ । १६ । ३० । "मृणालगौरं शितिवाससं स्फुरत्-किरीटकेयूरकटित्रकङ्कणम्" ।)

**कटिप्रोथः**, पुं, (प्रोथतीति प्रोथृ + पर्य्याप्तौ पुंसीति घः । कट्याः प्रोथः मांसपिण्डः ।) कटिदेशस्थमांस-पिण्डम् । गुदपुला पोदेर पेलो इति भाषा । तत्पर्य्यायः । स्फिक् २ । इत्यमरः । २ । ६ । ३५ ॥ पूलकः ३ कटीप्रोथः ४ । इति रभसः ॥ कटिः ५ प्रोथः ६ । इति केचित् ॥ पूलः ७ । इति भरतः ॥

**कटिरोहकः**, पुं, (कटिं हस्तिपश्चाद्भागं रोहतीति । कटि + रुह् + ण्वुल् ।) हस्तिपश्चाद्भागरोहकः । इति शब्दमाला ॥

**कटिल्लकः**, पुं, (कटति लतायां प्रकाशते उत्पद्यते वा । कट + बाहुलकादिल्लप्रत्ययः । ततः स्वार्थेकन् ।) कारवेल्लः । इत्यमरः । करला इति भाषा ॥

**कटिशीर्षकः**, पुं, (कटिः शीर्षमिव । संज्ञायां कन् ।) कटिदेशः । इति हलायुधः ॥

**कटिशूलः**, पुं, (कटिस्थः शूलः शूलरोगः ।) कटि-देशस्थशूलरोगः । तस्यौषधं यथा । "रजनीकदलीक्षारलेपः सिध्मविनाशनः । कुष्ठस्य भागमेकन्तु पथ्याभागद्वयं तथा ॥ उष्णोदकेन संपीत्वा कटिशूलविनाशनम्" । इति गारुडे १८८ अध्यायः ॥ ("गुडूच्यारग्बधश्चैव क्वाथमेषां विपाचयेत् । शुण्ठीचूर्णेन संयुक्तं पिबेज्जङ्घाकटिग्रहे" ॥ इति शार्ङ्गधरः ॥)

रणञ्च" ।) उणां २ । ५७ ।) महादेवः ।
राक्षसः ।
विद्याधरः । अक्षदेवनः । इति मेदिनी ।
कीटः ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**कटभङ्गः** पुं, (कटानां शस्यानां ओषधीनामिति-

यावत् हस्तेन भङ्गः च्छेदनम् । कटस्य
सैन्यसंघस्य
भङ्गः यस्मात् हेतोः सैन्यभङ्गस्तु
राजमरणहेतु-
रेव ।) शस्यानां हस्तच्छेदः । हात दिया
शस्य
छेडा कुडन इत्यादि भाषा । नृपात्ययः ।
राजवि-
नाशः । इति मेदिनी ॥

**कटभी**, स्त्री, (कटवद् भाति । कट + भा + डः । गौ-

रादित्वात् ङीष् ।) ज्योतिष्मती लता ।
इत्यमरः ।
२ । ४ । १५० ॥ नया फटिकी इति
भाषा । अप-
राजिता । वृक्षभेदः । तत्पर्य्यायः ।
नाभिका २
शौण्डी ३ पाटली ४ किणिही ५ मधुरेणुः
६
क्षुद्रश्यामा ७ कैडर्य्यः ८ श्यामला ९ ।
अस्या गुणाः ।
कटुत्वम् । उष्णत्वम् ।
गुल्मविषाध्मानशूलदोष-
नाशित्वम् ।
वातकफाजीर्णरोगशमताकारित्वम् ।
श्वेता चेत् गुणयुक्तत्वञ्च । "तत्फलं
तद्गुणं ज्ञेयं
विशेषात् कफशुक्रकृत्" । इति
राजनिर्घण्टः ॥
(यथा भावप्रकाशे ।
"कटभी तु प्रमेहार्शोनाडीव्रणविषक्रिमीन्
।
हन्त्युष्णा कफकुष्ठघ्नी कटुरुष्णा च
कीर्त्तिता" ॥)

यस्याः ।) गाङ्गेष्टीलता । इति
हारावली ॥ नाटा
इति ख्याता ।

**कटाकुः** पुं, (कटति कृच्छ्रेण जीविकां निर्व्वाहयति ॥

कट् कृच्छ्रजीवने "कटिकषिभ्यां
काकुः" उणां ३ ।
७७ । इति काकुः ।) पक्षी । इति
सिद्धान्तकौमु-
द्यामुणादिवृत्तिः ॥

**कटाक्षः**, पुं, (कटावतिशयितौ अक्षिणी यत्र ।

कट + अक्षिन् + षच् । यद्वा कटं
गण्डं अक्षति व्या-
प्नोति । अक्षु व्याप्तौ + अच्
कर्म्मण्यण् वा ।) अपा-
ङ्गदर्शनम् । आड्चके देखन इति
भाषा । इत्य-
मरः । २ । ६ । ९४ ॥ (यथा,
मेघदूते ३७ । "आमो-
क्ष्यन्ति त्वयि मधुकरश्रेणिदीर्घान्
कटाक्षान्" ॥)

**कटायनं**, क्ली, (कटस्य स्वनामख्यातासनस्य अयनं

उत्पत्तिस्थानम् ।) वीरणम् ।
इति शब्दरत्नावली ॥

**कटारः**, पुं, (कटं कन्दर्पमदं ऋच्छति । कट +

ऋ + अण् ।) नागरः । कामी ।
इति शब्दमाला ।

**कटाहः**, पुं, (कटं उत्तापादिकं आहन्ति निवारय-

तीति । कट् + आ + हन् + ड ।)
कूर्म्मकर्परः ॥
द्वीपप्रभेदः । (कटं कटुगन्धादिकं
आहन्ति तैला-
दिकटुगन्धः आहन्यतेऽत्र वा ।)
तैलादिपाकपा-
त्रम् । (कटं शत्रुं आहन्त्यसौ
जायमानविषाणा-

**कटिशृङ्खला**, स्त्री, (कट्यां धार्य्या शृङ्खला । यद्वा

कट्याः शृङ्खला ।) चितिका । कटिधार्य्यक्षुद्र-
घण्टिका । इति हारावली ॥

**कटिसूत्रं**, क्ली, (कट्यां धार्य्यं सूत्रम् । शाकपार्थिवा-

दित्वात् मध्यपदलोपः ।) कट्यलङ्कारविशेषः । इति
हलायुधः । चन्द्रहार गोट् इत्यादि भाषा ॥
(यथा, भागवते । ५ । ३ । ४ । "स्फुटकिरण
प्रवरमणिमयमुकुटकुण्डलकटककटिसूत्रहारकेयूर
नूपुराद्यङ्गभूषणविभूषितमृत्विक्सदस्यगृहपतयो
ऽधना इव" ॥)

**कटी**, [न्] पुं, (कटः गण्डस्थलं प्राशस्त्येनास्यास्तीति

अस्त्यर्थे इनिः ।) हस्ती । इति त्रिकाण्डशेषः ॥

**कटी**, स्त्री (कट्यतेः कटुरसेषु गृह्यतेऽसौ । कट्यते

आव्रियते वस्त्रादिना । सर्व्वधातुभ्यैन् । कटात्
श्रोणिवचन इति गौरादिषु पाठाद् वा ङीष् ।
पां ४ । १ । ४१ ।) पिप्पली । श्रोणिदेशः । [इति
मेदिनी ॥ (यथा, महाभारते । १ । वकबधपर्ब्बणि
१६४ । २७ ।

वृक्षभेदः । काँटाशिरीष इति ख्यतः । इति
रत्नमाला ॥

**कटमालिनी**, स्त्री, (कटानां किण्वाद्योषधीनां माला

साधनत्वेनास्ति अस्याः अस्त्यर्थेइनिः ततो ङीप् । मदिरामादकतायास्तु किण्वाद्योषधीगणप्रभव-
त्वात् । "मद्यादौ किण्वशक्तिवत्" । इति चार्व्वाक-
दर्शनं १ अध्यायः ।) मदिरा । इति शब्दभाला ॥

ग्रमहिषीशावकः । इति मेदिनी ॥ (कटः पापी
आहन्यतेयत्र ।) नरकः । इति हारावली ॥ कर्व्वूरः ।
इति जटाधरः ॥ कूपः । इति शब्दरत्नावली ॥
(यथा सिद्धान्तकौमुद्याम् । ५ । १ । ५२ । "प्रस्थं
सम्भवति प्रास्थिकः कटाहः" ॥)

**कटिः**, पुं, स्त्री, (कट्यते वस्त्रादिना व्रियतेऽसौ सर्व्व-

धातुभ्य इन् इति कट् + इन् ।) शरीरावयव-
विशेषः । काँकालि इति भाषा । तत्पर्य्यायः । कटः २
श्रोणिफलकं ३ श्रोणी ४ ककुद्मती ५ । इत्यमरः ।
२ । ६ । ७४ ॥ श्रोणिफलम् ६ कटी ७ श्रोणिः ८ ।

:"सव्येन च कटीदेशे गृह्य वाससि पाण्डवः ।
तद्रक्षो द्विगुणं चक्रे रुवन्तं भैरवं रवम्" ॥)

**कटीतलः**, पुं, (कट्यां तलमास्पदमस्य । अस्य कटि-
देशे धारणप्रसिद्धेस्तथात्वम् ।) न्युब्जखड्गः । इति
त्रिकाण्डशेषः । वाँका खाँडा इति भाषा ॥

**कटीरं**, क्ली, (कट्यते आव्रियतेऽसौ वाससेतिशेषः ।
कट् + "कॄशॄपॄकटिपटिशौटीभ्यःईरन्" । उणां ।
४ । ३० ॥ इति ईरन् ।) कटिः । इति
हेमचन्द्रः ॥

**कटीरः**, पुं, (कट्यते आव्रियतेऽसौ अथवा कद्यते
गम्यते अनेन । कर्म्मणि करणे वा ईरन् । उणां ।
४ । ३० ।) जघनम् । कन्दरः ।
इत्युणादिकोषः ॥
कटिः । इति जटाधरः ॥

**कटीरकः**, पुं, (कटीर एव स्वार्थे संज्ञायां वा कन् ।)
नितम्बः । इति त्रिकाण्डशेषः ॥

**कटु**, क्ली, (कटति सदाचारमावृणोतीति । कट् +
उन् ।) अकार्य्यम् । इत्यमरः । ३ । ३ । ३५ ॥
दूषणम् ।
इति विश्वः ॥

**कटुः**, पुं, (कटति तीक्ष्णतया रसनां मुखं वा आवृणो-
ति यद्वा कटति वर्षति चक्षुर्मुखनासादिभ्यो जलं
स्रावयतीति । कट् + उन् । "कटिवटिभ्यां च" ।
उणां । १ । ९ ।) सविशेषः इत्यमरः । १ । ५ ।
९ । झाल
इति भाषा ॥ अस्य गुणाः
कण्ठजदोषशोथमन्दाग्नि-
श्वित्ररोगनाशित्वम् । अस्य बहुसेवने क्षयदातृ-
त्वम् । वीर्य्यबलापहत्वञ्च । इति राजनिर्घण्टः ॥
भ्रमयति, कण्ठं परिदहति
शरीरतापमुपजन-
यति, बलं क्षिणोति, तृष्णां जनयति,
वाष्वग्निबाहु-
ल्याद् भ्रम-मद-दवथु-कम्प-तोद-
भेदैश्चरण-भुज-
पार्श्व-पृष्ठप्रभृतिषु मारुतजान्
विकारानुपजन-
यति ॥ इति चरकः ॥) चम्पकवृक्षः ।
इति शब्द-
चन्द्रिका ॥ चीनकर्पूरः । पटोलः ।
कङ्गीलता । इति
राजनिर्घण्टः ॥

**कटुः**, स्त्री, (कट्यते कटुत्वेनास्वाद्यते इति । कट् +
उ ।) कटुकी । इत्यमरः ॥ प्रियङ्गुवृक्षः । रा-
जिका । इति विश्वमेदिन्यौ ॥

**कटुः**, त्रि, (कटति परलक्ष्मीदर्शनेन कृपणतां गच्छ-
तीति । कट् + उः ।) मत्सरः ।
तीक्ष्णः । इत्यमरः ।
३ । ३ । ३५ ॥ (यथा, महाभारते १ । पौष्यपर्ब्बणि
३ । ५५ ।
"क्षारतिक्तकटुरूक्षैस्तीक्ष्णविपाकै-
श्चक्षुष्युपहतोऽन्धो बभूव" ।)
कटुरसयुक्तः । (यथा,
भागवते । ३ । २६ । ४२ ।
"कषायो मधुरस्तिक्तः कठ्वम्ल इति
नैकधा ।
भौतिकानां विकारेण रस एको
विभिद्यते" ॥)
सुगन्धिः । इति मेदिनी ॥ (यथा, रघुः
। ५ । ४८ ।
"सप्तच्छदक्षीरकटुप्रवाह-
मसह्यमाघ्राय मदं तदीयम्" ॥)
अप्रियः । इति त्रिकाण्डशेषः ॥ (यथा,
रघुः ६ । ८५
मघ्नी २५ । इति राजनिर्घण्टः ॥ कटम्बरा
२६
कटुम्भरा २७ अशोका २८ । इत्यमरः
तट्टीका
च ॥ (अस्य गुणाः ।
"कटुका कटुका पाके तिक्ता रूक्षा हिमा
लघुः ।
भेदिनी दीपनी हृद्या कफपित्तज्वरापहा ।
प्रमेहश्वासकासास्रदाहकुष्ठकृमिप्रणुत्" ॥
इति शब्दार्थचिन्तामणिधृतवैद्यकवचनम्
॥)
अतिकटुत्वम् । तिक्तत्वम् । शीतत्वम् ।
पित्तरक्त-
दाहबलाशारोचकश्वासज्वरनाशित्वम् ।
रुचिका-
रित्वञ्च । इति राजनिर्घण्टः । सारकत्वम् ।
रूक्ष-
त्वम् । कफनाशित्वञ्च । इति राजवल्लभः
॥ ताम्बूली ।
इति शब्दचन्द्रिका ॥ कुलिकवृक्षः । इति
रत्न-
माला ॥

**कटुकालावुः** पुं, (कटुका अलावुः ।) कटुतुम्बी । इति
रत्नमाला ॥ तित्लाउ इति भाषा ॥

**कटुकी**, स्त्री, (कटु + स्वार्थे कन् । गौरादित्वात्
ङीष् ।) कटुका । इति
मेदिनीशब्दरत्नावल्यौ ।
कट्की इति भाषा ॥ (अस्या गुणाः ।
"कटुकी तु सरा रूक्षा कफपित्तज्वरापहा"
।
इति वैद्यकद्रव्यगुणग्रन्थे ॥
"कठ्वी तु कटुका पाके तिक्ता रूक्षा हिमा
लघुः ।
भेदिनी दीपनी हृद्या कफपित्तज्वरापहा ।
प्रमेहश्वासकासास्रदाहकुष्ठक्रिमिप्रणुत्" ॥
इति भावप्रकाशः ॥)

**कटुकीटकः**, पुं, (कटुः तीक्ष्णः दंशनेन दुःखप्रदत्वात्

अपि च । आरोग्यपित्ताग्निवाय्वुकारित्वम् । कृमिकण्डुविषरोगस्तनदुग्धमेदःस्थौल्यनाशित्वम् । लघु-
त्वम् । अतिशयभक्षणे श्रमस्थैर्य्यतालुशोषातिदा-
हकारित्वञ्च । इति राजवल्लभः ॥ (तथा चोक्तम् ।
भावप्रकाशे ।
"कटूरूक्षः स्तन्यमेदःश्लेष्मकण्डूविषापहः ।
वातपित्तकृदाग्नेयः शोषी पाचनरोचकृत्" ॥
अस्य लक्षणं यथाह वाभटः ॥
"उद्वेजयति जिह्वाग्रं कुर्व्वंश्चिमिचिमां कटुः ।
स्रावयत्यक्षिना सास्यं कपोलौ दहतीव च" ॥
गुणकर्म्माणि च यथा, तत्रैव ।
"कटुर्गलामयोदर्द्दकुष्ठालसकशोफजित् ।
व्रणावसादनः स्नेहमेदःक्लेदोपशोषणः ॥
दीपनः पाचनो रुच्यः शोषणोऽन्नस्य कर्षणः ।
छिनत्ति बन्धान् स्रोतांसि विवृणोति कफापहः ॥
कुरुते सोऽतियोगेन तृष्णां शुक्रबलक्षयम् ।
मूर्च्छामाकुञ्चनं कम्पं कटीपृष्ठादिषु व्यथाम्" ॥ * ॥
कटुको रसो वक्त्रं शोधयति अग्निं दीपयति, भुक्तं
शोधयति, घ्राणमास्रावयति, चक्षुर्विरेचयति, स्फुटोकरोतीन्द्रियाणि
अलसकश्वयथूपचयोदर्द्धा-
भिष्यन्द-स्नेह-श्वेद-क्लेदमलानुपहन्ति, रोचयत्य-
शनं, कण्डूर्विनाशयति, व्रणानवसादयति, क्रिमीन्
हिनन्ति, मांसं विलिखति, शोणितसङ्घातं भि-
नत्ति, बन्धाच्छिनत्ति, मार्गान् विवृणोति, श्लेष्माणं
शमयति, लघुरुष्णो रूक्षश्च ॥ स एवंगुणोऽप्येक-
एवात्यर्थमुपयुज्यमानो विपाकप्रभावात् पौंस्त्व-
मुपहन्ति, रसवीर्य्यप्रभावान्मोहयति, ग्लापयति,

"इति समगुणयोगप्रीतयस्तत्र पौराः
श्रवणकटु नृपाणामेकवाक्यं विवव्रुः"
॥)
दुर्गन्धः । इत्यमरटीकायां स्वामी ॥

**कटुकं**, क्ली, (कटुकानां कटुरसानां त्रयं कटोः
संज्ञायां कन् ।) त्रिकटु । इति मेदिनी ॥ तत्तु
शुण्ठी पिप्पली मरिचञ्च ॥ (कटु एव । स्वार्थे कन् ।
इति विग्रहे वाच्यलिङ्गं । अप्रियम् । यथा, महा-
भारते । २ । अनुद्यूतपर्ब्बणि ७७ । १६ ।
"दुर्य्योधनश्च कर्णश्च कटुकान्यभ्यभाषताम् ।
इति सर्व्वमिदं राजन्नाकुल प्रतिभाति मे" ॥)

**कटुकः**, पुं, (कटुरेव कटुकः स्वार्थे कन् ।) कटुरसः ।
(यथा, सुश्रुते "यो जिह्वग्रं बाधते उद्वेगं जनयति
शिरो गृह्णीते नासिकाञ्च स्रावयति स कटुको
रसः" ॥) पटीलः । इति राजनिर्घण्टः ॥ सुगन्धि-
तृणम् । इति शब्दरत्नावली ॥ कुटजवृक्षः । अर्क-
वृक्षः । इति शब्दचन्द्रिका ॥ राजसर्षपः । इति
हारावली ॥

**कटुकन्दः**, पुं, (कटुः कन्दोमूलमस्य ।) शिग्रुवृक्षः ।
आर्द्रकम् । लशुनम् । इति मेदिनी ॥

**कटुकफलं**, क्ली, (कटुकं फलमस्य ।) कक्कोलकम् ।
इति राजनिर्घण्टः ॥

**कटुका**, स्त्री, (कटु + संज्ञायां कन् । स्त्रियां टाप् ।)
क्षुद्रचञ्चवृक्षः । वृक्षविशेषः । कट्की इति माषा ।

कीटः । ततः स्वार्थेकन् ।) मशकः । इति
जटाधरः ॥

**कटुक्वाणः**, पुं, (कटुः कर्कशः क्वाणः क्वणनं शब्दो
यस्य ।) टिट्टिभपक्षी । इति हेमचन्द्रः ॥

**कटुग्रन्थि**, क्ली, (कटुस्तीव्रो ग्रन्थिर्मूलमस्य ।) पिप्प-
लीमूलम् । शुण्ठी । इति राजनिर्घण्टः ॥

**कटुचातुर्जातकं**, क्ली, (चतुर्भ्यो जातकं ततः स्वार्थे
अण् ततः कर्म्मधारयः ।) एलात्वक्पत्रकमरिचा-
त्मकचतुष्कम् । इति राजनिर्घण्टः ॥

**कटुच्छदः**, पुं, (कटुश्छदः पत्रं यस्य ।) तगरवृक्षः ।
इति शब्दरत्नावली ॥

**कटुतिक्तकः**, पुं, (कटुश्चासौ तिक्तश्चेति । अल्पार्थे
कन् ।) शणवृक्षः । इति राजनिर्घण्टः ॥ भूनिम्बः ।
इति वैद्यकम् ॥

**कटुतिक्तका**, स्त्री, (विपाके कटुः स्वादे तिक्ता ।
स्वार्थे कन् । अत इत्वम् ॥) कटुतुम्बी । इति
शब्दरत्नावलो ॥

**कटुतुण्डी**, स्त्री, (कटु तीव्रं तुण्डमस्याः ।) लताप्रभेदः ।
कटुतराइ इतिख्याता । तत्पर्य्यायः । तिक्ततुण्डी
२ तिक्ताख्या ३ कटुका ४ कटुतुण्डिका ५ विषा
६ ॥ अस्या गुणाः । कटुत्वम् । तिक्तत्वम् । कफ-
वान्तिविषारोचकरक्तपित्तनाशित्वम् । सदा पथ्य-
त्वम् । रेचनत्वञ्च । इति राजनिर्घण्टः ॥

**कटुतुम्बी**, स्त्री, (कटुश्चासौ तुम्बी चेति ।) लता-
विशेषः । तित्लाउ इति भाषा । तत्पर्य्यायः ।
इक्ष्वाकुः २ । इत्यमरः । २ । ४ । १५६ ॥ कटुका-

| | | |
|---|---|---|
| सादयति, कर्षयति, मूर्च्छयति, नमयति, तमयति, | तत्पर्य्यायः । जननी २ तिक्ता ३ रोहिणी ४ तिक्त रोहिणी ५ चक्राङ्गी ६ मत्स्यपित्ता ७ वकुला ८ । शकुलादनी ९ सादनी १० शतपर्ब्बा ११ द्विजाङ्गी १२ मलभेदिनी १३ अशोकरोहिणी १४ कृष्णा १५ कृष्णभेदी १६ महौषधी १७ कट्वी १८ अञ्जनी १९ काण्डरुहा २० कटुः २१ कटुरो- हिणी २२ केदारकटुका २३ अरिष्टा २४ पा- | लावुः ३ नृपात्मजा ४ । इति रत्नमाला ॥ कटुति- क्तिका ५ । इति शब्दरत्नावली ॥ कदुफला ६ |

:तुम्बिनी ७ कटुतुम्बिनी ८ वृहत्फला ९ राजपुत्री
१० तिक्तवीजा ११ तुम्बिका १२ ॥
अस्या गुणाः ।
कटुत्वम् । तीक्ष्णत्वम् ।
वान्तिकारित्वम् । श्वास-
वातकासशोथव्रणशूकविषनाशित्वम् । शोधन-
त्वञ्च । इति राजनिर्घण्टः ॥
पाण्डुकृमिकफवाय-
नाशित्वम् । लघुपाकित्वञ्च । इति
राजवल्लभः ॥
(“कटुतुम्बी हिमा हृद्या
पित्तकासविषापहा ।
तिक्ता कटुर्विपाके च
वातपित्तज्वरान्तकृत्” ॥)

**कटुत्रयं**, क्ली, (कटूनां कटुरसानां त्रयम् ।) त्रिकटु ।
इति राजनिर्घण्टः ॥ (अस्य गुणाः ।
“त्रयं त्रिक-
टुकं जयेत् । स्थौल्याग्नि-सदन-श्वास-
कास-श्लीपद-
पीनसान्” ॥ इति वाभटः ॥)

**कटुदला**, स्त्री, (कटु दलं पत्रं यस्याः ।) कर्कटी ।
इति राजनिर्घण्टः । काँकुड इति भाषा
॥

**कटुनिष्पावः** पुं, (कटुश्चासौ निष्पावश्चेति ।) नदी-
निष्पावधान्यम् । इति राजनिर्घण्टः ॥

**कटुपत्रः**, पुं, (कटु तीव्रं पत्रं यस्य ।) पर्पटः । सिता-
र्जकः । इति राजनिर्घण्टः ॥

**कटुपत्रिका**, स्त्री, (कटु पत्रं यस्याः । ततः कप् । अत
इत्वं टाप् च ।) कारीवृक्षः । इति
राजनिर्घण्टः ॥

**कटुस्नेहः**, पुं, (कटुः तीक्ष्णः स्नेहः रसविशेषो यस्य ।)
सर्षपः । इति त्रिकाण्डशेषः ॥ गौरसर्षपः
। इति
राजनिर्घण्टः ॥

**कटूत्कटं**, क्ली, (कटुषु उत्कटम् ।) आर्द्रकम् । इति
रत्नमाला ॥

**कटूत्कटकं**, क्ली, (कटुषु उत्कटम् । ततः संज्ञायां
कन् ।) शुण्ठी । इति राजनिर्घण्टः ॥

**कटोरं**, क्ली, (कट्यते वृष्यते निषिच्यते वा भक्ष्यद्रव्यं
यत्र । कट + अधिकरणे ओलच् ।
रलयोरैक्यात्
लस्य रत्वम् ।) पात्रविशेषः । कटोरा
इति
भाषा । यथा, -- मेरुतन्त्रे पञ्चमप्रकाशः
॥ * ॥
“मृत्कर्पटे संयुतकाचकूप्यां
दत्त्वा मुखं लोहपलोहसूत्रैः ।
निष्कासितो धूमरसस्तु तस्य
सौगन्धिकैः काचकटोरके यः” ॥
किञ्च ।
“रम्यान्नं देवकीदत्तं पात्रे काञ्चननिर्म्मिते
।
कटोराणां चतुःषष्टिः पात्रस्योभयतः
स्थिता” ॥
इति जैमिनिभारते आश्वमेधिके पर्ब्बणि
९ अध्यायः ॥

**कटोरा**, स्त्री, (कट्यते वृष्यते दीयते स्थाप्यते वा
भक्ष्यद्रव्यादिकमस्याम् । कट + ओलच्
। लस्य
रत्वम् ।) स्वनामख्यातपात्रम् । इति
ब्रह्मवैवर्त्त-
पुराणम् । वाटि इति भाषा ॥

**कटोलः**, पुं, (कटति सदाचारं मिष्टाद्यन्नरसञ्च आवृ-

**कट्फला**, स्त्री, (कटति इति । कट् + क्विप् तदेव फल-
मस्याः ।) गम्भारीवृक्षः । इति रत्नमाला ॥ वृ-
हती । काकमाची । देवदाली । वार्त्ताकी । मृगे-
र्व्वारुः । इति राजनिर्घण्टः ॥

**कड्वङ्गः**, पुं, (कटु अङ्गमस्य ।) श्योनाकवृक्षः । इत्य-
मरः । २ । ४ । ५६ ॥ कटूनि उग्राणि
वीर्य्यव्यञ्जकानि
अङ्गानि यस्य ।) दिलीपराजः । इति
त्रिकाण्डशेषः ॥

**कड्वरं**, क्ली, (कटति वर्षति रसान्तरम् । “छित्वर-
च्छत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वर
कड्वरसंयद्वराः” उणां ३ । १ । इति कट् + ष्वरच्
।
निपातनात् साधु ।) दधिसरः । इति रत्नमाला
॥
व्यञ्जनम् । इत्युणादिकोषः ॥
तक्रम् । यथा ।
“दध्नः ससारकस्यात्र तक्रं कड्वरमुच्यते” ।
इति चक्रपाणिकृतसंग्रहे ॥
(“सुवर्च्चिका-नागर-कुष्ठ-मूर्व्वा
लाक्षा-निशा-लोहितयष्टिकाभिः ।
तलं जवरे षडगुणतक्रसिद्ध-
मभ्यञ्जनाच्छीतविदाहनुत्स्यात्” ॥
इति षट्कठ्वरं तैलम् ॥)

**कड्वी**, स्त्री, (कट्यते कटुरसतया स्वाद्यते अनुभूयते
वा । कट् + उन् । ततः स्त्रियां ङीप् । वोतो-
गुणवचनादिति ङीष् वा । पां । ४ । १ । ४४ ।)
कटुका । लताविशेषः । तत्पर्य्यायः । कटुकवल्ली
२
सुकाष्ठा ३ काष्ठवल्लिका ४ सुवल्ली ५ महावल्ली
६ पशुमोहनिका ७ कटुः ८ ॥ अस्या गुणाः ।
मधु-
रत्वम् । शीतत्वम् ।
कफश्वासनानाज्वरहारित्वम् ।
रुचिकारित्वम् । राजयक्ष्मनिवारणत्वञ्च । इति
राजनिर्घण्टः ॥ (कटुकाशब्देऽस्या गणादयो
व्या-

**कटुफलः**, पुं, (कटु फलं यस्य । अस्य पत्रस्यतिक्तत्वेपि
फले कटुपाकत्वात् ।) पटोलः । इति
राजनिर्घण्टः ॥

**कटुफला**, स्त्री, (कटु फलं यस्याः ।) श्रीवल्लीवृक्षः ।
इति राजनिर्घण्टः ॥

**कटुभङ्गः**, पुं, (कटुः एकैकदेशभङ्गश्च यस्य ।) शुण्ठी ।
इति त्रिकाण्डशेषः ॥

**कटुभद्रं** क्ली, (कट्वपि भद्रं सेवनेन हितजनकम् ।)
शुण्ठी । इति राजनिर्घण्टः ॥ आर्द्रकम्
। इति
केचित् ॥

**कटुमञ्जरिका**, स्त्री, (कटुः तीक्ष्णा मञ्जरी अस्ति
अस्याः । अच् गौरादित्वात् ङीष्
संज्ञायां कन् टाप्
पूर्ब्बह्रस्वत्वञ्च ।) अपामार्गः । इति
राजनिर्घण्टः ॥

**कटुमोदं**, क्ली, (कटुरेव मोदः गन्धो यस्य तत् ।)
जवादिनामसुगन्धिद्रव्यम् । इति
राजनिर्घण्टः ॥

**कटुरं**, क्ली, (कटति मन्थनेन रसान्तरं गुणान्तरं
वा वर्षतीति । कट + उरन् । यद्वा
कट्यते प्रकट्यते
मन्थनात् रसान्तरेण गुणान्तरेण च
प्रकाश्यते
इति ।) तक्रम् । इति जटाधरः ॥ कट्वरं
इत्यपि
पाठः ॥

**कटुरवः**, पुं, (कटुः कर्कशो रवः ध्वनिर्यस्य ।) मण्डूकः ।
इति राजनिर्घण्टः ॥

**कटुरोहिणी**, स्त्री, (कटुश्चासौ कट्वी चासौ वा रो-
हिणी चेति । केचित्तु कटुः सती
रोहतीति +
णोतीति । "कपिगतिगण्डिकटिपटिभ्य
ओ-
लच्" । उणां १ । ६७ । इति ओलच् ।)
चण्डालः ।
इत्वुणादिकोषः ॥ कटुरसः । इति
सिद्धान्तकौमु-
द्यामुणादिवृत्तिः ॥

**कटोलवीणा**, स्त्री, (कटोलस्य चाण्डालस्य वीणा
वाद्ययन्त्रविशेषः ।) वीणाविशेषः । इति
शब्द-
रत्नावली । केन्दुडा इति ख्याता ॥

**कट्फलः**, पुं, (कटति कटुतया अन्यरसमावृणो-
तीति । कट् + क्विप् । कट् फलं यस्य
सः ।) स्वनाम
ख्यातफलवृक्षविशेषः । कायफल इति
भाषा ।
तत्पर्य्यायः । श्रीपर्णिका २ कुमुदिका ३
कुम्भी ४
कैटर्य्यः ५ । इत्यमरः २ । ४ । ४० ॥
सोमवल्कः ६
६ सोमवृक्षः ७ रोहिणी ८ । इति
रत्नमाला ॥
कृष्णगर्भः ९ प्रचेतसी १० भद्रावती
११ महा-
कुम्भी १२ रामसेनकः १३ कुमुदा १४
उग्रगन्धः
१५ भद्रा १६ रञ्जनकः १७
लघुकाश्मर्य्यः १८ श्री-
पर्णी १९ काफलः २० परुषः २१
कुमुदी २२ ।
इति शब्दरत्नावली ॥ अपि च ।
"कट्फलः सोमवल्कश्च कैटर्य्यः
कुम्भिकापि च ।
श्रीपर्णिका कुमुदिका भद्रा भद्रवतीति च
॥
कट्फलस्तुवरस्तिक्तः
कटुर्व्वातकफज्वरान् ।
हन्ति
श्वासप्रमेहार्शःकासकण्ठामयारुचीः" ॥
ख्याताः ॥)

**कठ** इ कि आध्याने । उत्कण्ठापूर्ब्बकस्मरणे इति
कविकल्पद्रुमः ॥ (चुरां--पक्षे भ्वां--परं--सकं--
सेट्--
इदित् ।) इ कर्म्मणि कण्ठ्यते । कि कण्ठयति ।
आध्यानं स्मृ म औत्क्ये इत्यत्र व्याख्यातम् ।
इति
दुर्गादासः ॥

**कठ** तङ्कने । तङ्कनं दुःखेन जीवनम् । इति कवि-
कल्पद्रुमः ॥ (भ्वां--परं--अकं--सेट् ।) कठति
दीनः ।
इति दुर्गादासः ॥

**कठ** इ ङ आध्याने । इति कविकल्पद्रुमः ॥ (भ्वां--
आत्मं--सकं--सेट्--इदित् ।) इ कर्म्मणि
कण्ठ्यते ।
ङ कर्त्तरि कण्ठते । "रेवारोधसि वेतसीतरुतले
चेतः समुत्कण्ठते" । इति दुर्गादासः ॥

**कठः**, पुं, (कठेन प्रोक्तमधीते यः । कठशाखां अभि-
जानाति वा "कठचरकात् लुक्" । इति लुक् ।
४ । ३ । १०७ ।) मुनिविशेषः ।
कठशाखाध्ययनकर्त्ता
कठशाखाज्ञः । (यथा महाभारते । १ । पौलमे
८ । २४ ।
"उद्दालकः कठश्चैव श्वेतश्चैव महायशाः" ॥
ऋग्भेदः । स्वरः ।
("कठो मुनौ तदाख्यातवेदाध्येतृज्ञयोः स्वरे" ।)
इति हेमचन्द्रः ॥ ब्राह्मणः । इति त्रिकाण्डशेषः ॥
(उपनिषद्विशेषः । यदुक्तं मुक्तिकोपनिषदि ।

रुह + णिनिः ततो ङीप् ।) कटुकी ।

इत्यमरः ।

२ । ४ । ४५ ॥

**कटुवार्त्ताकी**, स्त्री, (कटुः कठ्वी वार्त्ताकी ।) श्वेत-

कण्टकारी । इति राजनिर्घण्टः ॥

**कटुवीजा**, स्त्री, (कटु वीजं यस्याः ।) पिप्पली । इति

राजनिर्घण्टः ॥

**कटुशृङ्गालं** क्ली, (कटूनां शृङ्गाय प्राधान्याय अलति

पर्य्याप्नोतीति । अल् + अच् ।)

गौरसुवर्णशा-

कम् । इति राजनिर्घण्टः ॥

इति भावप्रकाशः ॥ अस्य गुणाः ।

कटुत्वम् ।

उष्णत्वम् ।

कासश्वासज्वरोग्रदाहनाशित्वम्। रुचि-

कारित्वम् । मुखरोगशमप्रदत्वञ्च । इति

राजनि-

र्घण्टः ॥ कफरोगनाशित्वम् । इति

राजवल्लभः ॥

(“कट्फलः कफरोगघ्नः

कासश्वासज्वरापहः” ॥

इति वैद्यकद्रव्यगुणः ॥)

:"ईशा-केन-कठ-प्रश्न-मुण्ड-माण्डक्य-तित्तिरि" ॥)

**कठमर्द्दः**, पुं, (कठं कष्टजीवनं मृद्गातीति । कठ मृद् + अण् ।) शिवः । इति त्रिकाण्डशेषः ॥

**कठरः**, त्रि, (कठ + अरन् ।) कठिनः । इति जटाधरः ॥

**कठशाखा**, स्त्री, (यजुर्वेदान्तर्गता कठेन प्रोक्ता शाखा ।) यजुर्व्वेदस्य शाखाविशेषः । एतद्विवरणं वेदशब्दे द्रष्टव्यम् ॥

**कठाहकः**, पुं, (कठं कठिनमाहन्तीति । आ + हन् + डः । कठाहः तादृशं कं शिरो यस्य ।) दात्यूह-पक्षी । इति शब्दरत्नावली ॥

**कठिञ्जरः**, पुं, (कठिं कठिनं जरयति । जॄष् वयो-हानौ तस्मात् अण् । पृषोदरादित्वात् साधुः । यद्वा जॄ + णिच् + बाहुलकात् + खच् मुम् च ।) तुलसीवृक्षः । तत्पर्य्यायः । पर्णासः २ कुठेरकः ३ । इत्यमरः । २ । ४ । ७९ ॥ ("लोणिका-जातुकपर्णिका-पत्तूर-जीवक-सुवर्च्चला-कुरुवक-कठिञ्जर-कुन्त-लिका-कुरण्टिकाप्रभृतीनि" ॥ इति सुश्रुते द्रष्ट-व्यम् ॥)

**कठिनं**, त्रि, (कठ् + इनन् । उणादिमते तु इनच् । "बहुलमन्यत्रापि" । उणां । २ । ४ । ९ ।) कठरम् । तत्पर्य्यायः । कक्खटम् २ क्रूरम् ३ यति । अतीवतिक्तत्वात् तथात्वं । कठ शोके इति धातोर्बाहुलकादिल्लप्रत्ययः ।) कारवेल्लः । इत्युणा-दिकोषः । करला इति भाषा ॥ (वाभटे शाकव-र्गाणां मध्ये गणितम् ॥ यथा, --
"कठिल्लं केम्बुकं शीतं स कोषातक कर्कशम् ।
तिक्तं पाके कटुग्राहि वातलं कफपित्तजित्" ॥)

**कठिल्लकः**, पुं, (कठिल्ल + स्वार्थे कन् ।) कारवेल्लः । पुनर्णवा । तुलसी । इति त्रिकाण्डशेषः ॥

**कठी**, स्त्री, (कठेन प्रोक्तमधीते या शाखाध्येतृ-वाचित्वेन जातित्वात् ङीष् । कठप्रोक्तमधीयाना इत्यर्थः ।) ब्राह्मणी । इति जटाधरः ॥

**कठेरः**, पुं, (कठति कृच्छ्रेण जीवति जीविकां निर्व्वा-हयति । "पतिकठिकुठिगडिगुडिदंशिभ्यएरक्" । उणां । १ । ५९ इति एरक् ।) कृच्छ्रजीवी । दरिद्रः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

**कठोरः**, त्रि, (कठति पारुष्यमाचरति । "कठिरकि-भ्यामोरन्" उणां १ । ६५ । इतिकठ + ओरन् ॥) कठिनः । इत्यमरः । ३ । १ । ७६ ॥ (यथा, भागवते ३ । १९ । १५ ।
"प्रवृद्धरोषः स कठोरसुष्टिना
नदन् प्रहत्यान्तरधीयतासुरः" ॥
दारुणः । तथाहि भागवते । ५ । १३ । ३ ।
"कठोरदंशैर्मशकैरुपद्रुतः" ॥ अतिविस्तृतः । तत्रैव ६ । १२ । २ । "युगान्ताग्निकठोरजिह्वं" ॥ पूर्णः । तथाहि ।
"स तप्तकार्त्तस्वरभास्वराम्बरः
कठोरताराधिपलाच्छनच्छविः" ।
इति माघः । १ । २० ॥ "कठोरताराधिपस्य पूर्णेन्दोः" इति तट्टीकायां मल्लिनाथः ॥)

**कठोलः**, त्रि, (कठ + ओलच् "कपिगतिगण्डिकटि-पटिभ्य ओलच्" उणां । १ । ६७ ।) कठोरः । इत्य-मरटीकायां नीलकण्ठः ॥

**कड** इ ङ ञ दर्पे । हर्षे इत्यर्थः । इति कविकल्प-द्रुमटीकायां दुर्गादासः । (भ्वां--आत्मं--अकं--सेट्--पक्षे उभं--इदित् ।) इ कर्म्मणि कण्ड्यते । ञ

**कडः**, त्रि, (कडति माद्यतीति । कड मदे + पचा-द्यच् ।) मूर्खः । इति हलायुधः ॥

**कडकं**, क्ली, (कड्यते अद्यते इति । कड अदने + अच् संज्ञायां कन् । कर्म्मणि अप् स्वार्थे संज्ञायां वा कन् ।) लवणविशेषः । करकच् इति भाषा ॥ तत्पर्य्यायः । सामुद्रम् २ त्रिकूटम् ३ । इति रत्नमाला ॥ अस्य गुणः सामुद्रशब्देद्रष्टव्यः ॥

**कडङ्गः**, पुं, (कडं मादकताशक्तिं गमयति जनयति वा कडात् गमेर्डः । अन्तर्भूतो ण्यन्तोवा ।) सुरा-विशेषः । इत्युणादिकोषः ॥

**कडङ्गरः**, पुं, (कडात् भक्षणीयतण्डुलादेः सकाशात् ग्रियते क्षिप्यते दूरीक्रियते इति भावः । कड + गिरतेः कर्म्मणि खच् । यद्वा कडं भक्षणीयं शस्यादि गिरति उद्गिरति आत्मनः सकाशात् । गॄ + अच् ।) वुषं इत्यमरः । २ । ९ । २२ । आग्डा इति भाषा ॥ ("नीवारपाकादि कडङ्गरीयै-रामृश्यते जानपदैर्न कच्चित्" । इति रघुः । ५ । ९ ॥ कडङ्गरं वुषम् अर्हन्तीति कडङ्गरीया इति तट्टीकायां मल्लिनाथः ॥)

**कडत्रं**, क्ली, (गड्यते सिच्यतेऽत्र जलादिकम् । गड

कठोरम् ४ निष्ठुरम् ५ दृढम् ६ जठरम् ७ मूर्त्तिमत् ८ मूर्त्तम् ९ । इत्यमरः । ३ । १ । ७६ ॥ खक्खटम् १० कठोलम् ११ जरठम् १२ । इति तट्टीका ॥ कर्करम् १३ कठरम् १४ । इति जटाधरः ॥ काठरम् १५ कमठायितम् १६ । इति शब्दरत्नावली ॥ स्तब्धम् । इति मेदिनी ॥ ("उन्मूलयंश्च कठिनान् नृपान् वायुरिव द्रुमान्" । कथासरित्सागरे १९ । ८९ ॥ तथा कुमारे ४ । ५ । "न विदीर्य्ये कठिनाः खलु स्त्रियः" ॥ अपि च "भक्ष्यांश्चातिकठिनान् दन्तरोगी विवर्जयेत्" । सुश्रुते ॥)

**कठिनं**, क्ली, स्त्री, (कठ् + "बहुलमत्रापि" । उणां २ । ४९ । इति इनच् ।) स्थाली । इति मेदिनीशब्दरत्नावल्यौ ॥

**कठिनपृष्ठकः**, पुं, (कठिनं पृष्ठकमस्य । पृष्ठ स्वार्थे सञ्ज्ञायां वा कन् ।) कच्छपः । इति राजनिर्घण्टः ॥

**कठिना**, स्त्री, (कठ + इनच् । स्त्रियां टाप् ।) गुड-शर्करा । इति विश्वमेदिन्यौ ॥

**कठिनिका**, स्त्री, (कठ् + इनच् + गौरादित्वात् ङीष् स्वार्थे कन् । टापि ह्रस्वश्च ।) कठिनी । इति हारावली । खडी इति भाषा ॥

**कठिनी**, स्त्री, (कठिन + गौरादित्वात् ङीष् ।) कण्डति कण्डते । ङ कण्डते जनो हृष्टः स्यादित्यर्थः । अयमात्मनेपदीत्यन्ये । कदाचित् परस्मैपदार्थो ञकारः । अनेकार्थत्वात् तुषापनयने च । (भ्वां--आत्मं--सकं ।) "कण्डते तण्डुलं लोकः" । इति दुर्गादासः ॥

**कड** श अदने । दर्पे । इति कविकल्पद्रुमः ॥ (तुदां--परं--सकं--दर्पे अकं--सेट् ।) श कडती कडन्ती । प्राञ्चस्तु वेदे तूच्चारणभेदार्थं भ्वादावप्येवं पठन्ति । तथा च । "कड मद इति धातुः पठ्यते भूतुदाद्योः कडति कडति रूपं तुल्यमेव द्वयोः स्यात् । तदुभयगणपाठे किं फलं नेति वाच्यं स्वरक्वत इह भेदः शप्शयोरस्ति यस्मात्" इति । स्वरकृत इति उदात्तानुदात्तस्वरितविरिब्धसंज्ञकचतुर्व्विधस्वरकृत इत्यर्थः । इति दुर्गादासः ॥

**कड** इ क भेदे । रक्षणे । इति कविकल्पद्रुमः ॥ (चुरां--परं--सकं--सेट्--इदित् ।) इ कण्डयति । इति दुगादासः ॥

+ ञत्रन् गडेरादेश्च कः ।) पात्रविशेषः । इति उणादिकोषः ॥ (गड्यते सिच्यतेऽनेन । गड + सेचने "गडेरादेश्च कः" उणाम् । ३ । १०६ । इति अत्रन् प्रत्ययः डलयोरेकत्वस्मरणात् कलत्रम् ॥

**कडम्बः**, पुं, (कड + "कृकदिकडिकटिभ्योऽम्बच्" उणाम् । ४ । ८२ । इति कडधातोरम्बच्प्रत्ययः ।) शाकनाडिका । डाँटा इति भाषा ॥ तत्पर्य्यायः । कलम्बः २ । इत्यमरः । २ । ९ । ३५ ॥ कोणम् । प्रान्तभागः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥ (कलम्बशब्दे विशेषो ज्ञेयः ॥)

**कडम्बी**, स्त्री, (कडम्बः कलम्बो भूयसा विद्यते अस्याः । इति अर्शआदित्वात् अच् ततः गौरादित्वात् ङीष् ।) कलम्बीशाकम् । इति शब्दरत्नावली ॥ (कलम्बीशब्दे गुणादयोऽस्या वक्तव्याः ॥)

**कडारः**, पुं, (गड । सेचने इति + "गडेः कड् च" । उणाम् । ३ । १३५ । इति आरन् कडादेशश्च धातोः ।) पिङ्गलवर्णः । तद्वर्णयुक्ते त्रि । इत्यमरः । १ । ५ । १६ ॥ (यथा माघः । ५ । ३ । "सविव्युरम्बरविकाशि चमूसमुत्थं पृथ्वीरजः करभकण्ठकडारमाशाः" ॥) कडारस्तृणवह्निवत् इत्यन्ये इति भरतः ॥ दासः ।

खडिका । इति मेदिनी । खडी इति भाषा ॥

तत्पर्य्यायः । पाकशुक्ला २ अमिलाधातुः ३ कक्-खटी ४ खटी ५ खडी ६ वर्णलेखिका ७ । इति रत्नमाला ॥ धातूपलः ८ कठिनिका ९ । इति हारावली ॥ (तथा च हितोपदेशे १ । १८ ।

"गुणिगणगणनारम्भे न पतति कठिनी सस-म्भ्रमाद् यस्य । तेनाम्बा यदि सुतिनी वद बन्ध्या कोदृशी नाम" ॥)

**कठिल्लः**, पुं, (कठति भोजने दुःखं उद्वेगं वा जन-

इति मेदिनी ॥

**कडितुलः**, पुं, (कट्यां तुला तोलनं ग्रहणं यस्य पृषो-

दरादित्यात् टस्य डः ।) खड्गः । इति शब्द-रत्नावली ॥

**कड्ड** कार्कश्ये । इति कविकल्पद्रुमः ॥ (भ्वां--परं--अकं--

सेट् ।) टवर्गतृतीयोपधः । क्विपि संयोगान्तलोपे कड् । कड्डति पद्ममृणालं कर्क्कशं स्यादित्यर्थः ।

इति दुर्गादासः ॥

**कण** ऋ आर्त्तस्वरे । इति कविकल्पद्रमः ॥ (भ्वां--

:परं--अकं--सेट् ।) ऋ अचीकणत् अचकाणत् ।

कणति भीतः । इति दुर्गादासः ॥

**कण**, म गतौ । इति कविकल्पद्रुमः । (भ्वां--परं--

सक्--सेट्--घटादि ।) म कणयति । इति दुर्गा-
दासः ॥

**कण**, क निमीलने । इति कविकल्पद्रुमः ॥ (चुरां--

परं--सकं--सेट् ।) निमीलनं पक्ष्मावरणम् । क
काणयति चक्षुः पक्ष्मभिरावृतं स्यादित्यर्थः । इति
दुर्गादासः ॥

**कणः**, पुं, (कणति अतिसूक्ष्मत्वं गच्छति । कण +

पचाद्यच् ।) अतिसूक्ष्मः । (“आनन्दाश्रुकणान्
पिबन्ति शकुना निःशङ्कमङ्केशयाः” ।
इति शान्तिशतकम् ५ ॥) धान्यांशः । इत्यमरः ।
३ । १ । ६२ ॥ (यथा, मनुः । ११ । ९२ ।
“कणान् वा भक्षयेदब्दं पिन्याकं वा
सकृन्निशि” ॥)
तस्य स्त्रीलिङ्गे कणी कणिका । वनजीरकः ।
इति राजनिर्घण्टः ॥

**कणगुग्गुलुः**, पुं, (कणश्चासौ गुग्गुलुश्चेति ।) गुग्गुलु-

प्रभेदः । तत्पर्य्यायः । गन्धराजः २
स्वर्णकर्णः ३
सुवर्णः ४ कनकः ५ वंशपीतः ६ सुरभिः ७
पलङ्कषः ८ ॥ अस्य गुणाः । कटुत्वम् । उष्णत्वम् ।
सुगन्धित्वम् ।
वातशूलगुल्मोदराध्मानकफनाशि
त्वम् । रसायनत्वञ्च । इति राजनिर्घण्टः ॥

**कणजीरः**, पुं, (कणश्चासौ जीरश्चेति नित्यकर्म्मधा-

रयः ।) श्वेतजीरकः । इति राजनिर्घण्टः । (श्वेत-
जीरकशब्देऽस्य गुणा ज्ञेयाः ॥)

**कणाटीरकः**, पुं, (कणाटीर + स्वार्थे कन् ।) खञ्जन-

पक्षी । इति शब्दरत्नावली ॥

**कणादः**, पुं, (कणं अत्ति भक्षयति । कण अद +

कर्म्मणि उपपदे अण् ।)
स्वनामख्यातमुनिविशेषः ।
तत्पर्य्यायः । काश्यपः २ । इति
त्रिकाण्डशेषः ॥
स च वैशेषिकदर्शनकर्त्ता । स्वर्णकारः । कलादो
रुक्मकारक इत्यमरोपरि कणाद इत्यपि पाठः ।
इति सारसुन्दरी ॥

**कणिकः**, पुं, (कणैव इति स्वार्थे कन् अत इत्वम् ।)

कणा । शत्रुः । नीराजनविधिः । इति
सारस्वतः ॥
शुष्कगोधूमचूर्णम् । इति राजनिर्घण्टः ॥ (कणा
विद्यतेऽस्य अस्त्यर्थे ठन् । स्वार्थे ठन् वा । “नाभे-
रभूत् स्वकणिकाद् वटवन्महाब्जं” इति भाग-
वतम् । ७ । ९ । ३३ ॥
धृतराष्ट्रमन्त्रिविशेषः ।
यथा महाभारते । १ । सम्भवपर्ब्बणि १४१ । २ ।
“तत आहूय मन्त्रज्ञं राजशास्त्रार्थवित्तमम् ।
कणिकं मन्त्रिणां श्रेष्ठं धृतराष्ट्रोऽब्रवीद्वचः”
॥)

**कणिका**, स्त्री, (कणाः सन्त्यस्याः । “अत इनठनाविति

ठन्” ५ । २ । ११५ । कणति स्थूलरूपात् क्रमशो
गच्छति अत्यन्तसूक्ष्मतां प्राप्नोति इत्यर्थः । पचा-
द्यच् स्वार्थे कन् अत इत्वं टाप् च ।) अत्यन्त-

काँटा इति भाषा ॥ (तथा चोक्तं
चाणक्यशतके २२ ।
“उपकारगृहीतेन शत्रुणा शत्रुमुद्धरेत् ।
पादलग्नं करस्थेन कण्टकेनेव
कण्टकम्” ॥)
केन्द्रम् । इति दीपिका ॥

**कण्टकः**, पुं, (कटि + ण्वुल् ।) सूच्यग्रम् । क्षुद्रशत्रुः ।

(यथा, मनुः । ९ । २५२ ।
“सम्यङ्निविष्टदेशश्च कृतदुर्गश्च
शास्त्रतः ।
कण्टकोद्धरणे
नित्यमातिष्ठेद्यत्नमुत्तमम्” ॥)
लोमहर्षः । इत्यमरः ३ । ५ । ३२ ॥
कर्म्मस्थानम् ।
दोषः । इति जटाधरः ॥ मकरः । इति
विश्वः ॥
वेणुः । इति हेमचन्द्रः ॥
(लोकोपद्रवकारी ।
यथा, भागवते । ३ । १८ । २३ ।
“अन्वेषन्नप्रतिरथो लोकानटति
कण्टकः” ॥)

**कण्टकद्रुमः**, पुं, (कण्टकप्रधानो द्रुमः । कण्टकेना-

चितोद्रुमो वा ।) शाल्मलिवृक्षः । इति राज-
निर्घण्टः ॥ (यथा मृच्छकटिके । १४० । ४ ।
“किं कुलेनोपदिष्टेन शीलमेवात्र कारणम् ।
भवन्ति नितरां स्फीताः सुक्षेत्रे
कण्टकद्रुमाः” ॥
“दैतेयचन्दनवने जातोऽयं कण्टकद्रुमः” ।
इति भागवतम् । ७ । ५ । १७ ॥
शाल्मलीशब्दे
विशेषोऽस्य ज्ञेयः ॥)

**कण्टकप्रावृता**, स्त्री, (कण्टकैः प्रावृता व्याप्ता ।

**कणजीरकं**, क्ली, (कणं क्षुद्रं जीरकम् । कणजीर + स्वार्थे कन् ।) क्षुद्रजीरकम् । तत्पर्य्यायः । हृद्य-
गन्धि २ सुगन्धम् ३ । इति रत्नमाला शब्द-
चन्द्रिका च ॥

**कणभक्षकः**, पुं, (कणान् भक्षयति भक्षति वा । कण + भक्ष + ण्वुल् ।) भारिटपक्षी । इति राज-
निर्घण्टः ॥

**कणलाभः**, पुं, (कणानां लाभो यस्मात् सः । पेषण-
साधनयन्त्रविशेषः स सादृश्येनास्त्यस्य । अर्श-
आदिभ्यः अच् ।) आवर्त्तः । इति त्रिकाण्डशेषः ।
जलेर घूर्णा इति भाषा ॥

**कणा**, स्त्री, (कण + स्त्रियां टाप् ।) जीरकम् । कुम्भी-
रमक्षिका । पिप्पली । इति मेदिनी ॥
(“द्राक्षां कणां पञ्चमूलं तृणाख्यञ्च पचेज्जले ।
तेन क्षीरं शृतं शीतं पिबेत् समधुशर्करम्” ॥
इति पित्तकासचिकित्सायांवाभटेनोक्तम् ॥)
श्वेतजीरकम् । इति राजनिर्घण्टः ॥ (“कणा स्या-
द्दीर्घजीरकः” ॥ इति भावप्रकाशः ॥ * ॥) अल्पम् ।
यथा, --
“कदलीफलमध्यस्थं कणामात्रमपक्वकम्” ।
इति तिथ्यादितत्त्वम् ॥

**कणाटीनः**, पुं, (कणाय अटतीति । कण + अट + इनन् दीर्घत्वञ्च पृषोदरादित्वात् ।) खञ्जनपक्षी ।
इति त्रिकाण्डशेषः ॥

**कणाटीरः**, पुं, (कणाय अटति । कण + अट + ईरन् ।) खञ्जनपक्षी । इति शब्दरत्नावली ॥
सूक्ष्मवस्तु । अग्निमन्थवृक्षः । इति मेदिनी ॥ कणा ।
तण्डुलविशेषः । इत्यमरटीकायां रायमुकुटः ॥
(जलादीनां सूक्ष्मांशः । यथा, मेघदूते ९९ ।
“तामुत्थाप्य स्वजलकणिकाशीतलेनानिलेन
प्रत्याश्वस्तां सममभिनवैर्जालकै र्मालतीनाम्” ॥)

**कणितं**, क्ली, (कण आर्त्तनादे + भावे क्तः ।) पीडि-
तानां शब्दः । इति हेमचन्द्रः ॥

**कणिशं**, क्ली, (कणो विद्यतेऽस्य इति इनिः तं श्यति ।
कणि + शो + कः । यद्वा कणिनः शेरतेऽस्मिन् ।
कणिन् + शी + डः । कणाः सन्त्यस्य इत्यमरटीका
कृत् ।) शस्यमञ्जरी । इत्यमरः । २ । ९ ॥ २१ ।
धान्यादिर शिष इति भाषा ॥

**कणी**, स्त्री, (कण + स्त्रियां ङीप् गौरादित्वात् ङीष्
वा ।) कणिका । इत्यमरटीकायां भरतः ॥

**कणीकं**, त्रि, (कण + ईकन् ।) अल्पम् । इत्युणादि-
कोषः ॥

**कणीयः**, [स्] त्रि, (कण + ईयसुन् ।) अत्यल्पम् ।
इत्यमरः ॥ कनिष्ठम् । इति तट्टीका ॥ (यथा हठ-
योगदीपिकायां । २ । १२ । “कणीयसि भवेत् स्वेदः
कम्पो भवति मध्यमे” ॥)

**कणेरः** पुं, (कण + एरप्रत्ययः ।) कर्णिकारवृक्षः ।
इत्युणादिकोषः ॥

**कणेरा**, स्त्री, (कण + एरष्टाप् च ।) वेश्या । हस्तिनी ।
इत्युणादिकोषः ॥

**कणेरुः** स्त्री, (कण + एरु ।) वेश्या । करिणी । कर्णि-
कण्टक + प्र + आ + वृ + कर्म्मणि क्त + टाप् ।)
गृहकन्या । इति राजनिर्घण्टः । घृतकुमारी इति
भाषा ॥

**कण्टकफलः** पुं, (कण्टकैराचितं व्याप्तं फलं यस्य ।
शाकपार्थिवादिवत् मध्यपदलोपी समासः ।)
पनसवृक्षः । इत्यमरटीकायां भरतः ॥ गोक्षुर-
वृक्षः । इति रत्नमाला ॥ (अस्य गुणादयः कण्टा-
फलशब्दे ज्ञेयाः ॥)

**कण्टकवृन्ताकी**, स्त्री, (कण्टकाचिता वृन्ताकी ।
शाकपार्थिवादित्वात् मध्यपदलोपश्च ।) वार्त्ताकी ।
इति राजनिर्घण्टः ॥

**कण्टकश्रेणी**, स्त्री, (कण्टकानां श्रेणिर्यत्र । श्रेणी
यस्यां वा ।) कण्टकारी । इति शब्दचन्द्रिका ॥

**कण्टकागारः**, पुं, (कण्टका आगारो यस्य । यद्वा
कण्टकं आगिरति । आ + गॄ + अच् ।) सरट-
जन्तुः । इति राजनिर्घण्टः ॥

**कण्टकाढ्यः**, पुं, (कण्टकैराढ्यः ।) कुब्जकवृक्षः । इति
राजनिर्घण्टः ॥

**कण्टकारिका**, स्त्री, (कण्टकान् इयर्त्ति ऋच्छति वा
कण्टक + ऋ + कर्त्तरि + ण्वुल् । स्त्रियां टाप्
इत्वं च । यद्वा कण्टकं ऋच्छति + ऋ कर्म्मण्यण्
ततः कन् च ततः प्राग्वत् । तत्फले तु अणि कृते
हरीतक्यादित्वात् लुक् ।) स्वनामख्यातक्षुद्रवृक्षः ।

| | | |
|---|---|---|
| | कारवृक्षे पुं । इति मेदिनी ॥<br>**कण्टकः**, पुं, क्ली, (कण्टति इति कटि ण्वुल् । अर्द्धर्च्चादि<br>पां २ । ४ । ३१ ।) क्षुद्रशत्रुः । (यथा विष्णुपुराणे<br>१ । १९ । ३१ । "प्रह्लादः कथ्यतां सम्यक् तथा<br>कण्टकशोधने" ॥) मत्स्याद्यस्थि । नैयायिकादि-<br>दोषोक्तिः । रोमाञ्चः । द्रुमाङ्गम् । इति मेदिनी ॥ | तत्पर्य्यायः । निदिग्धिका २ स्पृशो ३ व्याघ्री ४<br>वृहती ५ प्रचोदनी ६ कुली ७ क्षुद्रा ८ दुष्पर्शा<br>९ राष्ट्रिका १० । इत्यमरः ॥ अनाक्रान्ता ११<br>भण्टाकी १२ सिंही १३ धावनिका १४ । इति<br>रत्नमाला ॥ कण्टकारी १५ कण्टकिनी १६ दुष्प-<br>धर्षिणी १७ निदिग्धा १८ धावनी १९ क्षुद्र-<br>कण्टिका २० बहुकण्टा २१ क्षुद्रफला २२ कण्टा- |

:लिका २३ चित्रफला २४ । अस्या गुणाः । कटु-
त्वम् । उष्णत्वम् । दीपनत्वम् । श्वास-काश-प्रति-
श्याय-दोष-कफ-वात-ज्वर-नाशित्वञ्च । इति राज-
निर्घण्टः ॥ तृष्णानाशित्वम् । इति राजवल्लभः ॥
तस्याः फलगुणाः ।
पित्तकफकण्डूकुष्ठकृमिनाशि-
त्वम् । लघुत्वम् । उष्णत्वम् । कटुत्वम् ।
तिक्तत्वञ्च ।
इति राजनिर्घण्टराजवल्लभौ ॥
(“मुस्तामृतामलक्यश्च नागरं कण्टकारिका ।
कणाचूर्णान्वितः क्वाथस्तथा मधुसमन्वितः ।
एकाहिकं वा वेलाद्यं ज्वरजातं व्यपोहति” ॥
इति हारीतः ॥ * ॥ अस्या विशेषश्च कण्टकारी-
शब्दे ज्ञातव्यः ॥)

**कण्टकारी**, स्त्री, (कण्टकं ऋच्छति । कण्टक + ऋ +
अण् + ङीप् च ।) कण्टकारिकावृक्षः । इति
राजनिर्घण्टः ॥ शाल्मलीवृक्षः । इति जटाधरः ॥
विकङ्कतवृक्षः । इति शब्दरत्नावली वँइचि इति
भाषा ॥ तत्पर्य्यायगुणाः ।
“कण्टकारी तु दुष्पर्शा क्षुद्रा व्याघ्री निदिग्धिका ।
कण्टालिका कण्टकिनी धावनी वृहती तथा” ॥
उभे च वृहत्यौ । यदाह शाश्वतः ॥
“क्षुद्रायां क्षुद्रभण्टाक्यां वृहतीति निगद्यते ।
श्वेता क्षुद्रा चन्द्रहासा लक्ष्मणा क्षेत्रदूतिका ॥
गर्भदा चन्द्रभा चन्द्रा चन्द्रपुष्पा प्रियङ्करी ।
कण्टकारी सरा तिक्ता कटुका दीपनी लघुः ॥
रूक्षोष्णा पाचनी कासश्वासज्वरकफानिलान् ।
निहन्ति पीनसं पार्श्वपीडाकृमिकृदामयान् ॥
तयोः फलं कटुरसे पाके च कटुकं भवेत् ।
शुक्रस्य रेचनं भेदि तिक्तं पित्ताग्निकृल्लघु ॥

शोभते । कण्टक + अल् + अच् ।
कण्टं कण्डका-
कारं फलं कालयति वा । कल् +
अण् ।) पनस-
वृक्षः । इति शब्दचन्द्रिका ॥

**कण्टकालुकः**, पुं, (कण्टकैरलति पर्य्याप्नोति कण्टका-
लयति वा कण्टक + अल् + उकञ्
।) यवासवृक्षः ।
इति राजनिर्घण्टः ॥ (यवास-
शब्देऽस्य गुणादयो
बोद्धव्याः ॥)

**कण्टकाशनः**, पुं, (कण्टकं अश्नातीति । कण्टक +
अश ग् भोजने + कर्त्तरि + ल्युः ।)
उष्ट्रः । इति
त्रिकाण्डशेषः ॥

**कण्टकाष्ठीलः**, पुं, (कण्टकः अष्ठीलेव यस्य ।) मत्स्य-
विशेषः । तत्पर्य्यायः । कुलिशम् २ ।
इति त्रिका-
ण्डशेषः ॥

**कण्डकिनी**, स्त्री, (कण्डकाः सन्त्यस्याः । इनिः । ईप्
च ।) वार्त्ताकी । शोणझिण्टी ।
मधुखर्ज्जुरी ।
इति राजनिर्घण्टः ॥

**कण्टकिफलः**, पुं, (कण्टकि कण्टकयुक्तं फलं यस्य ।)
वृक्षविशेषः । काँटाल इति भाषा ।
तत्पर्य्यायः ।
पनसः २ । इत्यमरः । २ । ४ । ६१
॥ पलसः ३
कण्टकीफलः ४ कण्टकफलः ५ ।
इति तट्टीका ॥
महासर्जः ६ फलिनः ७ फलवृक्षकः
८ स्थूलः ९

झिण्टी । इति राजनिर्घण्टः ॥
(झिण्टीशब्देऽस्य
विशेषो ज्ञेयः ॥)

**कण्टतनुः**, स्त्री, (कण्टा कण्टकान्विता तनुर्यस्याः ।)
वृहती इति राजनिर्घण्टः ॥ (एषा हि तिक्त-
कटुका । इति वैद्यकद्रव्यगुणः ॥)

**कण्टदला**, स्त्री, (कण्टं कण्टकाचितं दलं यस्याः ।
शाकपार्थिवादित्वात् मध्यपदलोपः ।)
केतकी ।
इति राजनिर्घण्टः ॥

**कण्टपत्रः**, पुं, (कण्टं कण्टकान्वितं पत्रं यस्य ।) विक-
ङ्कतवृक्षः । इति शब्दमाला । वँइचि इति
भाषा ॥

**कण्टपत्रफला**, स्त्री, (कण्टं कण्टकान्वितं पत्रं फलञ्च
यस्याः । कण्डकान्विते पत्रफलेऽस्य वा ।)
ब्रह्मदण्डी-
वृक्षः । इति राजनिर्घण्टः ॥

**कण्टपादः**, पुं, (कण्टः कण्टकान्वितः पादो मूलं
यस्य ।) विकङ्कतवृक्षः । इति राजनिर्घण्टः
॥

**कण्ठफलः**, पुं, (कण्टं कण्टकान्वितं फलं यस्य ।) क्षुद्र-
गोक्षुरः । पनसः । धुस्तूरः । लताकरञ्जः । इति
राजनिर्घण्टः ॥ तेजःफलः । एरण्डः । इति
केचित् ॥

**कण्टफला**, स्त्री, (कण्टं कण्टकाकीर्णं फलं यस्याः ।)
देवदालीलता । इति राजनिर्घण्टः ॥
(देवदाली-
शब्दे ऽस्या गुणादयो ज्ञेयाः ॥)

**कण्टलः**, पुं, (कण्टः अस्त्यस्य । मत्वर्थे अलच् । यद्वा
कण्टेन कण्टकेन अलति पर्य्याप्नोति
शोभते वा ।

हन्यात् कफमरुत्कण्डूकाशमेदकृमिज्वरान् ।
तद्वत् प्रोक्ता सिता क्षुद्रा विशेषाद्गर्भकारिणी”
॥
इति भावप्रकाशः ॥ (शब्दार्थचिन्तामणिधृत-
वैद्यकम् । यथा
“कण्टकारी कण्टकिनी तथा स्वादुश्च
शुक्रला ।
चक्षुष्या क्षतशोथघ्नी ग्राहिणी ज्वरदाहनुत् ।
दोषत्रयहरी लघ्वी ग्रहण्यर्शोऽतिसारजित्’ ॥
“कण्टकार्य्यमृताभार्गी नागरेन्द्रयवासकम् ।
भूनिम्बं चन्दनं मुस्तं पटोलं कटुरोहिणी ॥
कषायं पाययेदेतत् पित्तश्लेष्मज्वरापहम् ।
दाहतृष्णारुचिच्छर्द्दिकासहृत्पार्श्वशूलनुत्’
॥
इति वैद्यकचक्रपाणिसंग्रहः ॥
“कण्टकारीतुलां नीरद्रोणे पक्त्वा कषायकम् ।
पादशेषं गृहीत्वा च तस्मिंश्चूर्णानि दापयेत् ॥
पृथक् पलांशान्येतानि गुडूचीचव्यचित्रकाः ।
मुस्तं कर्कटशृङ्गी च त्र्यूषणं धन्वयासकम् ॥
भार्गी रास्ना शठीचैव शर्करा पलविशतिः ।
प्रत्येकञ्च पलान्यष्टौ प्रदद्यात् घृततैलयोः ॥
पक्त्वा लेहत्वमानीय शीते मधुपलाष्टकम् ।
चतुष्पलं तु गाक्षीर्य्याः पिप्पलीनां चतुष्पलम्
॥
क्षिप्त्वा निदध्यात् सुदृढे मृण्मये भाजने शुभे ।
लेहोऽयं हन्ति हिक्कार्त्तिश्वासकासानशेषतः”
॥
कण्टकार्य्यवलेहः ॥ * ॥ इति च शार्ङ्गधरः ॥)

**कण्टकालः**, पुं, (कण्टकैः कण्टकाकीर्णफलैः अलति
कण्टाफलः १० मूलफलदः ११
अपुष्पफलदः १२
पूतफलः १३ चम्पकोषः १४
चम्पालुः १५ रसालः
१६ मृदङ्गफलः १७ पानसः १८ ।
इति शब्द-
रत्नावली ॥ अस्य गुणाः
कण्टाफलशब्दे पनस-
शब्दे च द्रष्टव्याः ॥ समष्ठिलवृक्षः ।
इति राज-
निर्घण्टः ॥

**कण्टकिलः**, पुं, (कण्टकोऽस्त्यस्य । कण्टक + अस्त्यर्थे
इलच् ।) वंशविशेषः । इति
शब्दचन्द्रिका । वेडु-
वाँश इति भाषा ॥

**कण्टकिलता**, स्त्री, (कण्टकिनी चासौ लता चेति ।)
त्रपुषी । इति राजनिर्घण्टः । शसा
इति भाषा ॥
(त्रपुषीशब्दे विशेषोऽस्या द्रष्टव्यः ॥)

**कण्टकी**, [न्] पुं, (कण्टकोऽस्त्यस्य अस्त्यर्थे इनिः ।)
मत्स्यः । इति शब्दरत्नावली ॥
खदिरवृक्षः । इति
शब्दमाला ॥ मदनवृक्षः । इति
रत्नमाला ॥ गो-
क्षुरवृक्षः । वंशः । वदरवृक्षः । इति
राजनिर्घण्टः ॥
(यथा, महाभारते १ । शाकुन्तले
७० । ७ ।
“नापुष्पः पादपः कश्चिन्नाफलो नापि
कण्टकी” ॥)

**कण्टकी**, स्त्री, (कण्टक + अर्श आदित्वात् अच् गौ-
रादित्वात् ङीष् ।) वार्त्ताकीविशेषः ।
काँटा वेगुन्
इति भाषा । अस्या गुणा । कटुत्वम् ।
तिक्तत्वम् ।
कण्ट + अल् + अच् । शकन्ध्वादिवत्
अस्य लोपः ।)
वृक्षविशेषः । वावला इति भाषा ।
तत्पर्य्यायः ।
वावलः २ स्वर्णपुष्पः ३ सूक्ष्मपत्रः ४ । इति
शब्द-
चन्द्रिका ॥

**कण्टवल्ली**, स्त्री, (कण्टा कण्टकान्विता वल्ली ।)
श्रीवल्लीवृक्षः । इति राजनिर्घण्टः ॥

**कण्टवृक्षः**, पुं, (कण्टप्रधानः कण्टकमयः कण्टक-
बहुलो वा वृक्षः । मध्यपदलोपी ।)
तेजःफलवृक्षः ।
इति राजनिर्घण्टः ॥

**कण्टाफलः**, पुं, (कटि + भावे + अप् । कण्टा कण्टक-
मयवेष्टनं तदुपलक्षितं फलमस्य ।)
पनसवृक्षः ।
इति शब्दमाला । काँटाल इति भाषा ॥
अस्य
पक्वफलगुणाः । सुमधुरत्वम् ।
रक्तबर्द्धकत्वम् ।
स्निग्धत्वम् । शीतलत्वम् । दुर्ज्जरत्वम् ।
वायु-
पित्तनाशित्वम् । श्लेष्मशुक्रबलप्रदत्वञ्च ।
इति राज-
वल्लभः ॥ पिच्छिलत्वम् । गुरुत्वम् ।
हृद्यत्वम् ।
भ्रमदाहविशोषनाशित्वम् । रुचिकारित्वम् ।
ग्राहित्वञ्च । इति राजनिर्घण्टः ॥ * ॥
तद्बीज-
गुणाः । रक्तपित्तनाशित्वम् । स्वादुत्वम् ।
फल-
तुल्यगुणत्वञ्च । इति राजवल्लभः ॥ ईषत्
कषा-
यत्वम् । मधुरत्वम् । रुचिवायुवृद्धिकारित्वम्
।
गुरुत्वम् । त्वग्दोषतत्फलविकारनाशित्वञ्च ।
इति
राजनिर्घण्डः ॥ * ॥ तस्यापक्वस्य गुणाः ।
कषा-

उष्णत्वम् । रक्तपित्तप्रकोपणत्वम् । कण्डूकच्छु-
हरत्वम् । दोषलत्वञ्च । इति राजवल्लभः ॥

**कण्टकीद्रुमः**, पुं, (कण्टकी द्रुमः । पृषोदरा-
दित्वात् दीर्घः ।) खदिरवृक्षः । इति रत्न-
माला ॥ (खदिरशब्दे विशेषो वक्तव्यः ॥ कण्डकी
एव द्रुमः । वार्त्ताकीवृक्षः ॥)

**कण्टकीफलः**, पुं, (कण्टकि कण्टकाचितं फलमस्य ।
पृषोदरात् साधुः ।) कण्टकिफलः । इत्यमर-
टीकायां भरतः ॥ काँटाल इति भाषा ॥

**कण्टकुरण्टः**, पुं, (कण्टः कण्टकप्रधानः कुरण्टः ।)

यत्वम् । स्वादुत्वम् । वायुकारित्वम् । इति राज-
वल्लभः ॥ शीतलत्वञ्च ॥ * ॥ घृतयुक्तस्य तस्य गुणाः
स्निग्धत्वम् । हृद्यत्वम् । बलप्रदत्वम् । छर्दिनाशि-
त्वम् । अचक्षुष्यत्वम् । शुक्रकारित्वम् । वातपित्त-
नाशित्वञ्च ॥ तन्मज्जगुणाः । शुक्रकारित्वम् । वात-
पित्तकफनाशित्वम्च ॥ विशेषात् पनसं वर्ज्यं

:गुल्मिभिर्मन्दवह्निभिः ॥ इति राजनिर्घण्टः ॥

(अन्यत्सर्व्वं पनसशब्दे द्रष्टव्यम् ॥)

**कण्टार्त्तगला**, स्त्री, (कण्टा कण्टयुक्ता आर्त्तगला ॥

आर्त्तः क्षीणः गलदेशो यस्याः ।)

नीलझिण्टी ।

इति राजनिर्घण्टः ।

(नीलझीण्टीशब्देऽस्य गुणा-

दयो ज्ञेयाः ॥)

**कण्टालुः**, पुं, (कण्टाय कण्टकाय अलति पर्य्याप्नोति ।

कण्ड + अल् + उन् ।) वंशः । वृहती

। वार्त्ताकी ।

वर्व्वूरः । इति राजनिर्घण्टः ॥

**कण्टाह्वयं**, क्ली, (कण्टं कण्डकमाह्वयते स्पर्द्धते ।

कण्ट + आ + ह्वे + कः ।) पद्मकन्दः

। इत्ति रा-

जनिर्घण्टः ॥

**कण्टी**, [न्] पुं, (कण्टः कण्टकः अस्त्यस्य । अस्त्यर्थे

इनिः ।) कलायः अपामार्गः । खदिरः

। गो-

क्षुरः । इति राजनिर्घण्टः ॥

**कण्ठः**, पुं, (कठि + अच् + इदित्वात् नुम् ।) मदन-

वृक्षः । इति मेदिनी ॥

होमकुण्डाद्वहिरङ्गुलि-

परिमितस्थानम् । यथा, --

“खाताद्वाह्येऽङ्गुलः कण्ठः

सर्व्वकुण्डेष्वयं विधिः” ॥

इति तिथ्यादितत्त्वम् ॥ (कणशब्द

“कणेष्ठः” ।

इति ठः । उणं १ । १०५ ।)

ग्रीवापुरोभागः ॥ तत्पर्य्यायः ।

गलः २ । इत्यमरः । २ । ६ । ८८ ॥

(यथा, शाकुन्तले । १ म अङ्के ।

**कण्ठभूषा**, स्त्री, (भूष्यतेऽनया इति भूषा । कण्ठस्य

भूषा ।) ग्रीवालङ्कारः । तत्पर्य्यायः ।

ग्रैवेयकम् २ ।

इत्यमरः । २ । ६ । १०४ ॥ ग्रैवेयम्

३ ग्रैवम् ४ ।

इति शब्दरत्नावली ॥ रुचकः ५

निष्कम् ६ । इति

जटाधरः ॥

**कण्ठमणिः**, पुं, (कण्ठे कण्ठस्थले धारणीयो मणिः ।

कण्ठस्य मणिर्वा ।)

गलदेशधारणीयमणिः । तत्-

पर्य्यायः । काकलम् २ । इति

त्रिकाण्डशेषः ॥

**कण्ठ्यः**, त्रि, (कण्ठे + भवः । शरीरावयवत्वात् यत् ।

६ । १ । २१३ ।) कण्ठोद्भवशब्दादिः

। इति व्या-

करणम् ॥ “अकुहविसर्ज्जनीयानां

कण्ठः” । पां ।

१ । १ । ९ वार्त्तिके ॥)

**कण्ठाग्निः**, पुं, (कण्ठे कण्ठाभ्यन्तरे अग्निः पाचन-

रूपाग्निर्य्यस्य ।) पक्षी । इति

त्रिकाण्डशेषः ॥

**कण्ठालः**, पुं, (कठि + आलच् ।) शूरणः । युद्धम् ।

नौका । खनित्रम् । इति विश्वः ॥

क्रमेलकः ।

गोणीप्रभेदः । इति मेदिनी ॥

**कण्ठाला**, स्त्री, (कटि + आलच् + टाप् ।) जालगो-

णीका । इति त्रिकाण्डशेषो मेदिनी च

॥

**कण्ठिका**, स्त्री, (कण्ठो भूष्यतयास्त्यस्याः । कण्ठ

“एष सर्व्वेश्वरः एष सर्व्वज्ञ

एषोऽन्तर्याम्येष-

योनिः सर्व्वस्य प्रभावाप्ययो हि भूतानाम्” ॥ ६ ॥

“नान्तः प्रज्ञं न वहिःप्रज्ञं नोभयतः प्रज्ञं न

प्रज्ञानघनं न प्रज्ञं नाप्राज्ञमदृष्टमव्यवहार्य्यम-

ग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं

प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थंमन्यन्ते स

आत्मा स विज्ञेयः” ॥ ७ ॥)

**कण्डनं**, क्ली, (कडि + भावे ल्युट ।) उदूखलादिना

तण्डुलादेर्निर्मलीकरणं । इति हेमचन्द्रः । काँडान

इति भाषा ॥

**कण्डनी**, स्त्री, (कण्ड्यते तुषादिरपनीयतेऽनया । कडि

+ करणे ल्युट् । ङीप्च ।) उदूखलम् । इति त्रि-

काण्डशेषः ॥ (यथा, मनुः । ३ । ६८ ।

“पञ्चसूना गृहस्थस्य चुल्लीपेषण्युपस्करम् ।

कण्डनीचोदकुम्भश्च बध्यते यास्तुवाहयन्” ॥)

**कण्डरा**, स्त्री, (कडि + अरन् टापच् ।) महास्नायुः ।

महानाडी । इति हेमचन्द्रः ॥

(“महत्थः स्नायवः प्रोक्ताः कण्डरास्तास्तु षोडश ।

प्रसारणाकुञ्चनयोर्दृष्टं तासां प्रयोजनम् ॥

चतस्रो हस्तयोस्तासां तावत्यः पादयोः स्मृताः ।

ग्रीवायामपि तावत्यस्तावत्यः पृष्ठसङ्गताः” ॥

“तत्र पादहस्तगतानां कण्डराणां नखाः प्ररोहाः

ग्रीवानिबन्धनानामधोभागगतानांप्ररोहा मेढ्रः

पृष्ठनिबन्धनां प्ररोहो नितम्बमूर्द्धोरुवक्षोऽक्ष-

स्तनपिण्डाः” ॥ इति भावप्रकाशः ॥

“तलं प्रत्यङ्गुलीनां याः कण्डरा बाहुपृष्ठतः ।

बाह्वोः कर्म्मक्षयकरी विश्वचीति हि सोच्यते” ॥

इति च सुश्रुतः ॥)

**कण्डुः**, स्त्री, (कण्डते शरीरं माद्यति अस्मात्

उष्णशोणितत्वात् । यद्वा कण्डयति कण्डुयुक्तं

करोति शरीरम् । कडि + मदे । “मृगष्वादयश्च” ।

उणां १ । ३८ । इति कुः ।) कण्डूः । इति राय-

मुकुटः ॥ (पुं ऋषिविशेषः ।

(यथा, विष्णुपुराणे १ । १५ । ११ ।

"विकचसरसिजायाः
स्तोकनिर्मुक्तकण्ठं
निजमिवकमलिन्याः
कर्क्कशंवृन्तजालम्" ॥)
अत्र विशुद्धनामषोडशदलपद्ममस्ति।
यथा, --
"तदूर्द्ध्वन्तु विशुद्धाख्यं
दलषोडशपङ्कजम्।
स्वरैः षोडशभिर्युक्तं धूमवर्णैर्महाप्रभम्
॥
विशुद्धपद्ममाख्यातमाकाशाख्यं
महाद्भुतम्" ॥
इति गौतमतन्त्रम् ॥ निकटः । ध्वनिः
। इति
मेदिनी ॥

**कण्ठकूणिका**, स्त्री, (कण्ठ इव कण्ठध्वनिरिव कूण-

यतीति । कण्ठ + कूण् + ण्वुल् ।
टापि अत इत्वं
च वीणायाः
कण्ठतुल्यस्पष्टध्वनिरितिप्रसिद्धेः।)
वीणा । इति हेमचन्द्रः ॥

**कण्ठतलासिका**, स्त्री, (कण्ठतले अश्वानां कण्ठदेशे

आस्ते इति । कण्ठ + आस + ण्वुल्
+ टापि अत
इत्वं च ।)
अश्वग्रीवावेष्टकरज्जुचर्म्मादि । इति
शब्दमाला ॥

**कण्ठनीडकः**, पुं, (कण्ठे निकटस्थे नीडे शत्रून् दृष्ट्वा

कायति शब्दायते । कण्ठ + कै + कः
। यद्वा कण्ठे
प्रासादवृक्षादीनां शिरोभागे नीडं यस्य
+ कप् ।)
चिल्लपक्षी । इति त्रिकाण्डशेषः । चिल्
इति भाषा ॥

**कण्ठनीलकः**, पुं, (कण्ठं धारकस्य कण्ठादिकमूर्द्ध्वं

+ ठन् टाप् च । यद्वा कण्ठयति कण्ठं
भूषयति
या । कठि + णिच् + ण्वुल् + टाप्
अत इत्वञ्च ।)
कण्ठाभरणम् । इति हेमचन्द्रः ॥
एकनरी कण्ठी
इति भाषा ॥

**कण्ठी**, स्त्री, (कण्ठ + अल्पार्थे ङीप् ।) अश्व कण्ठ-

वेष्टनरज्जुचर्म्मादि । इति शब्दमाला
॥ गलः ।
इत्यमरटीकायां भरतः ॥

**कण्ठीरवः**, पुं, (कण्ठ्यां रवो यस्य ।) सिंहः । इति

त्रिकाण्डशेषः ॥ पारावतः । इति
राजनिर्घण्टः ॥
मत्तहस्ती । इति सारस्वतः ॥

**कण्ठीरवी**, स्त्री, (कण्ठीरव + गौरादित्वात् जातौ

वा ङीष् ।) वासकवृक्षः । इति
राजनिर्घण्टः ॥

**कण्ठेकालः**, पुं, (कण्ठे + कालः क्षीरोदमन्थनोद्भव-

विषपाननिदर्शनरूपनीलवर्णो यस्य ।
सप्तम्या अ-
लुक् ।) महादेवः । इति त्रिकाण्डशेषः
॥ (कण्ठे
जीवानां कण्ठदेशे कालः
कालस्वरूपेण वर्त्तते ।
यद्वा कण्ठदेशपर्य्यन्तं आक्रम्य
तमःप्रधाना माया
अस्त्यस्य । परमात्मनः
मायाशवलितत्रिपादत्वात्
तथात्वम् । एष सर्व्वज्ञः
सर्व्वान्तर्यामीश्वरः । एत-
स्मात् पादत्रयादन्यत् तुरीयं निष्कलं
निरुपा-
धिकं शिवपादमस्ति ॥
यथा, माण्डुक्योपनिषदि ।

"कण्डुर्नाम मुनिः पूर्ब्बमासीद् वेदविदां वरः ।
सुरम्ये गोमतीतीरे स तेपे परमं तपः" ॥
तद्विवरणं तत्रैव १ मांशे १५ अध्याये द्रष्टव्यम् ।)

**कण्डुरः**, पुं, (कण्डूं राति ददातीति । "आतोनुपसर्गे

कः" । ३ । २ । ३ । पृषोदरादित्वात् ह्रस्वः ।)
कारवेल्ललता । कुन्दरतृणम् । इति राजनिर्घण्टः ॥

**कण्डुरा**, स्त्री, कण्डुं राति । कण्डू + रा + कः । ह्रस्वश्च ।

ततष्टाप् ।) कपिकच्छुः । अत्यम्लपर्णी । इति राज
निर्घण्टः ॥ (शूकशिम्बीशब्दे विशेषोऽस्य वक्तव्यः ॥

**कण्डूः**, स्त्री (कण्डूय + सम्पदादित्वात् क्विप् अलोप-

यलोपौ ।) रोगविशेषः । चुल्कनि खोस् इत्यादि
भाषा । (यथा, भागवते । २ । ७ । १३ ।
"षष्ठेन कच्छपवपुर्व्विदधार गोत्रं
निद्राक्षणोऽद्रिपरिवर्त्तकषाण कःण्डू" ॥)
तत्पर्य्यायः । खर्ज्जुः २ कण्डूया ३ । इत्यमरः । २
।
६ । ५३ ॥ कण्डूति ४ । इति तट्टीका ॥ कण्टूय
नम् ५ । इति राजनिर्घण्डः ॥
तच्चिकित्सा यथा, --

स्थानं नीलयति स्वशिखाकज्जलेन नीलवर्णं करो-
तीति । कण्ठ + नील् + णिच् + ण्वुल् । अथवा
कण्ठे शिखाग्रभागे नीलवर्णोऽस्य कप् ।) उल्का ।
इति शब्दमाला । मसाल इति भाषा ॥

**कण्ठपाशकः**, पुं, (कण्ठे पाश इव कायति प्रकाशते ।

कण्ठपाश + कै + कः ।)
हस्तिगलवेष्टकरज्जः ।
इति शब्दमाला ॥

"सर्व्वं ह्येतद्ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा

चतुष्पात्" ॥ २ ॥

"जागरितस्थानो वहिःप्रज्ञः सप्ताङ्ग एकोनविं-

शतिमुखः स्थूलभुक् वैश्वानरः प्रथमः पादः" ॥ ३ ॥

"स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशति-

मुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः" ॥ ४ ॥

"यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन

स्वप्नं पश्यति तत्सुषुप्तम् ।
सुषुप्तस्थान एकीभूतः
प्रज्ञानघन एवानन्दमयो ह्यानन्दभूक्
चेतोमुखः
प्राज्ञस्तृतीयः पादः" ॥ ५ ॥

:“दूर्ब्बानिशायुतो लेपः कण्डूपामविनाशनः ।

कृमिदद्रुहरश्चैव शीतपित्तापहः स्मृतः ॥ १ ॥
हरिद्रायाः पलान्यष्टौ षट्पलं हविषस्तथा ।
क्षीराढकेन संयुक्तं खण्डस्यार्द्धशतं तथा ॥
पचेन्मृद्वग्निना वैद्यो भाजने मृण्मये दृढे ।
त्रिकटुत्रिजातकञ्चैव कृमिघ्नं त्रिवृता तथा ॥
त्रिफला केशरं मुस्तं लौहं प्रति पलं पलम् ।
संचूर्ण्य प्रक्षिपेत्तत्र कर्षमेकन्तु भक्षयेत् ॥
कण्डूविष्फोटदद्रूणां नाशनं परमौषधम् ।
प्रतप्तकाञ्चनाभासो देहो भवति नान्यथा ॥
शीतपित्तोदर्द्दकोठान् सप्ताहादेव नाशयेत् ।
हरिद्रानामतः खण्डः कण्डूनां परमौषधम्” ॥
इति हरिद्राखण्डः ॥ २ ॥
“अमृतवृषपटोलं मुस्तकं सप्तपर्ण
खदिरमसितवेत्रं निम्बपत्रं हरिद्रे ।
विविधविषविसर्पान् कुष्ठविष्फोटकण्डू
रपनयति मसूरीं शीतपित्तं ज्वरञ्च” ॥
इति अमृतादि ॥ ३ ॥ इति भैषज्यरत्नावली ॥
(“द्विधा ते कोठपिडका कण्डू गण्डान् प्रकुर्व्वते” ।
इति वाभटः ॥ * ॥ “चन्दननलदकृतमालनक्त-
मालनिम्बकुटजसर्षपमधूकदारुहरिद्रामुस्तानीति
दशेमानि कण्डूघ्नानि भवन्ति” ॥ इति चरकः ॥)

**कण्डूकरी**, स्त्री, (कण्डूं करोति इति । कण्डू + कृ + टः ।

स्त्रियां ङीप् ।) शूकशिम्बीवृक्षः । इति शब्द
चन्द्रिका ॥

**कण्डूघ्नः**, पुं, (कण्डूं हन्ति । कण्डू + हन् + टक् ।)

आरग्वधः । गौरसर्षपः । इति राजनिर्घण्टः ॥

**कण्डूतिः**, स्त्री, (कण्डय + भावे क्तिन् । अलोपय-

लोपौ ।) कण्डूः । इति भरतहलायुधौ ॥ चुल्कनि
इति भाषा ॥ (“राज्ञ्या वप्यटदेव्याः स निर्दयैः सुर-
तोत्सोत्वैः । खण्डयामासकण्डूतिम् साप्यस्यार्थे-
षणां धनैः” ॥ इति राजतरङ्गिण्याम् । ५ । २८६
॥)

**कण्डूयनं**, क्ली, (कण्डूय + भावे ल्युट् ।) कण्डूः । इति

हलायुधः ॥ (यथा, भागवते । ७ । ९ । ४५ ।
“यन्मैथनादि गृहमेधिसुखं हि तुच्छं
कण्डूयनेन करयोरिव दुःखदुःखम्” ॥)

भाषा । तत्पर्य्यायः । पिटः २ ।
इत्यमरः ।
२ । ९ । २६ ॥ पिटकः ३ पेटकः ४
। इति
भरतः ॥ उष्ट्रः । इत्युणादिकोषः ॥

**कण्डोलकः**, पुं, (कडि + बाहुलकादोलच् । स्वार्थे-

कन् ।) कण्डोलः । इति हेमचन्द्रः ॥

**कण्डोलवीणा**, स्त्री (कण्डोल इव वीणा । कण्डोलस्य

वीणा वा ।) चण्डालवीणा । कैँद्ड़ा
इति ख्याता ।
तत्पर्य्यायः । चाण्डालिका २
चण्डालवल्लकी ३ ।
इत्यमरः । २ । १० । ३२ ॥
चण्डालिका ४ कटोलवीणा
५ । इति भरतः ॥

**कण्डोली**, स्त्री, (कण्डोलस्तदाकारोऽस्त्यस्याः । अर्श

आदित्वात् अच् + गौरादित्वात् ङीष्
।) कण्डो
लवीणा । इतिशब्दरत्नावली ॥

**कण्ड्वोघः**, पुं, (कण्डूनामोघः संघोयस्मात् शूककीट-

स्पर्शे कण्डूबहुलत्वमिति
प्रसिद्धेस्तथात्वम् ।) शूक
कीटः । इति शब्दचन्द्रिका ॥
शूयापोका इति
भाषा ॥

**कण्वं**, क्ली, (कण्यते अपोद्यते इति । कण् + क्वन् ।)

पापम् । इति मेदिनी ॥

**कण्वः**, पुं, (कण् + क्वन् ।) मुनिविशेषः । इति

मेदिनी ॥ स तु
पुरुवंशजाताप्रतिरथनामक्षत्रिय
पुत्रः । यथा, --

जलस्य तकः हासः प्रकाशः प्रसाद
इति यावत्
अस्मात् ।) वृक्षविशेषः । निर्म्मली इति
भाषा ।
तत्पर्य्यायः । अम्बुप्रसुदः २ कतः ३
तिक्तफलः ४
रुच्यः ५ छेदनीयः ६ गुच्छफलः ७
कतफलः ८ ति-
क्तमरिचः ९ ॥ अस्य गुणाः । कटुत्वम्
। तिक्तत्वम् ।
उष्णत्वम् । चक्षुर्हितत्वम् ।
रुचिकारित्वम् । कृमि-
दोषशू लदोषनाशित्वच्च । तस्य वीजं
अम्बुप्रसाद-
नम् । इतिराजनिर्घण्टः ॥ (यथा, मनुः
। ६ । ६७ ।
“फलं कतकवृक्षस्य
यद्यप्यम्बुप्रसादकम् ।
न नामग्रहणादेव तस्य वारिप्रसीदति”
॥
“पयः प्रसादि कतकङ्कतकं तत्फलञ्च
तद् ।
कतकस्य फलं नेत्र्यं जलनिर्म्मलता
करम् ।
वातश्लेष्महरं शीतं मधरं तुवरं गुरु” ॥
इति भावप्रकाशः ॥)

**कतफलः** पुं, (कं जलं तनोति प्रसन्नं सम्पादयति ।

क + तन् + ड । तादृशं फलमस्य ।)
कतकवृक्षः ।
इति राजनिर्घण्टः ॥

**कतमालः**, पुं, (तम + घञ् ह्रस्वः । कस्य जलस्य तमाय

शोषणाय अलति पर्य्याप्नोति । क +
तम + अल्
+ अच् ।) अग्निः । इति शब्दमाला ॥
कचमालः
खतमालश्च पाठः ॥

**कति**, त्रि, (का सङ्ख्या किं परिमाणं वा एषां

**कण्डूया**, स्त्री, (कण्डू + "कण्ड्वादिभ्योयक्" ३ । ३ । १०२ ।

अप्रत्ययात् स्त्रित्वात् टाप् च ।) कण्डूः । इत्यमरः ।

२ । ६ । ५३ ॥

**कण्डूरा**, स्त्री, (कण्डूं राति । कण्डू + रा + कः । टाप् ।)

वृक्षविशेषः । आलकुशी इति भाषा । तत्पर्य्यायः । आत्मगुप्ता २ जडा ३ अव्यण्डा ४ प्रावृषायणी ५ ऋष्यप्रोक्ता ६ शूकशिम्बिः ७ कपिकच्छः ८ मर्कटी ९ । इत्यमरः । २ । ४ । ६ ॥ अजहा १० अव्यण्डा ११ कण्डूरा १२ शूकशिम्बी १३ शूक-शिम्बा १४ कपिकच्छुः १५ । इति तट्टीका ॥ ऋ-षभः १६ स्वगुप्ता १७ । इति रत्नकोषः ॥

**कण्डूलः** पुं, (कण्डू + अस्त्यर्थे + लच् । कण्डूतिकारक-

त्वात् तथात्वम् ।) शूरणः । इति राजनिर्घण्टः ॥ कण्डूयुक्ते त्रि ॥

**कण्डोलः**, पुं, (कडि + बाहुलकात् ओलच् ।) नल-

वंशादिरचितधान्यादिस्थापनपात्रम्। डोल् इति

"सुमतिर्ध्रुवोऽप्रतिरथः
कण्वोऽप्रतिरथात्मजः।
तस्य मेधातिथिस्तस्मात् प्रस्कण्वाद्या
द्विजातयः" ॥
इति श्रीभागवते । ९ । २० । ६ ॥
(अपर ऋषिभेदः ।
अनेनैव मुनिशार्दूलेन
यजुर्व्वेदीयकाण्वशाखा प्र-
णीता । यथा, यजुर्व्वेदे १७ । ७४ ।
"यामस्य कण्वोऽदुहत् प्रपीनां
सहस्रधारां पयसा महीं गाम्" ॥
तथा, भागवते च १२ । ६ । ७४ ।
"यजुर्भिरकरोच्छाखा
दशपञ्चशतैर्विभुः ।
जगृहुर्वाजसन्न्यस्ताः
काण्वमाध्यन्दिनादयः" ॥
अयन्तु कश्यपवंशोद्भवः शकुन्तलायाः
प्रतिपालक
पिता । यथा, महाभारते १ ।
शाकुन्तले । ७० । ३० ।
"महर्षिं काश्यपं द्रष्टुमथ कण्वं
तपोधनम्" ॥
एतस्य सविस्तरन्तु तत्रैव ७१
अध्याये द्रष्टव्यम् ।
अयमेव गोत्रप्रवर्त्तकः । ऋग्वेदे १ ।
४४--५०
सूक्तेषु ऋषिगोत्रप्रवर्त्तक
कण्ववृत्तान्तमवध्येयम् ॥
कण्व इत्यस्यार्थः कण्वः सुखमयः
तत्त्वविद्याप्र-
भावात् नत्वयं संसारजन्यसुखमयः
नहि तत्त्व-
ज्ञानिनां क्वचित् संसारासक्तिः
अविद्याधर्म्मा-
भावादिति नीलकण्ठः । विद्या
क्रियाकुशलः
मेधावी च । इति
ऋग्वेदभाष्यकृद्दयानन्दः ॥
स्वनामाख्याततीर्थविशेषः । यथा,
महाभारते ।
३ । ८२ । ४४ ।

"किमः सङ्ख्यापरिमाणे डति" ५ ।
२ । ४१ ।
इति डति ।) कियत्परिमाणम् । इति
व्याकरणम् ॥
कत इति भाषा । (यथा, अथर्व्ववेदे
१० । २ । ४ ।
"कति देवाः कतमे त आसन् य
उरोग्रीवाश्चिक्युः
पुरुषस्य कतिस्तनौ व्यदधुः कः
कफोडौ कति-
स्कन्धान् कतिपृष्टी रचिन्वन्" ॥ पुं ।
विश्वामि-
त्रस्य पुत्त्राणामेकतमः । यद्वंशोद्भूत
सूत्रकृत्
कात्यायनर्षिः ॥)

**कतिपयः**, त्रि, (किम् + डति कति अयक् पुकच् ।)

कति । इति व्याकरणम् । कतकगुलि
इति भाषा ।
(यथा, मेघदूते २५ ।
"सम्पत्स्यन्ते
कतिपयदिनस्थायिहंसादशार्णाः" ॥)

**कत्तृणं**, क्ली, (कद् कुत्सितं तृणं इति । अत्र कद् स्वार्थे

कोः कदादेशः "तृण च जातौ" । ६ ।
३ । १०३ ।)
सुगन्धितृणविशेषः । रामकर्पूर इति
ख्यातम् ।
तत्पर्य्यायः । पौरम् २ सौगन्धिकम् ३
ध्याम ४ देव-
जग्धकम् ५ रौहिषम् ६ । इत्यमरः । २
। ४ । १६६ ॥
सुगन्धम् ७ तृणशीतम् ८ सुशीतलम्
९ । इति
रत्नमाला ॥ रोहिषतृणम् १०
कात्तृणम् ११
भूति १२ भूतिकम् २३ श्यामकम् १४
ध्यामकम्
१५ पूति १६ मुद्गलम् १७
देवदग्धकम् १८ ।

“कण्वाश्रमं ततो गच्छेत् श्रीजुष्टं लोकपूजितम् ।
धर्म्मारण्यं हि तत्पुण्यमाद्यञ्च भरतर्षभ !” ॥)

**कतः**, पुं, मुनिविशेषः । इत्युणादिकोषः ॥ (अयन्तु विश्वामित्रपुत्त्रानामेकतमः । कं जलं शुद्धं तनोति कं + तन + ड ।) कतकवृक्षः । इति राजनिर्घण्टः ॥

**कतकः**, पुं, (तक् + हासे + बाहुलकाद्धः । कस्य अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । कफशस्त्रशल्यादिदोषबालग्रहविनाशित्वञ्च । इति राजनिर्घण्टः ॥ (तुबरत्वम् । हृत्कण्ठव्याधिपित्तास्रशूलकासज्वरनाशित्वञ्च । इति भावप्रकाशः ॥) पृश्निः । इति मेदिनी ॥ चाकुलिया इति भाषा ।

**कत्तोयं**, क्ली (कु कुत्सितं तोयं यत्र ।) मद्यम् । इति त्रिकाण्डशेषः ॥

**कत्थ**, ङ श्लाघे । इति कविकल्पद्रुमः ॥ (भ्वां--आत्मं--सकं--सेट् । क्वचित् अकं च ।) दन्त्यवर्गाद्यापधः ।

:श्लाघः प्रशंसा । ङ कत्थते गुणिनं गुणी । इति

दुर्गादासः ॥

**कत्र**, त् क शैथिल्ये । इति कातकल्पद्रुसः ॥ (चुरां--

परं--अकं--सेट् ।) कत्रयति कत्रापयति ।
इति
दुर्गादासः ॥

**कत्सवरं**, क्ली, (कद् वैकल्ये + स । कत्सः विह्वलता तया

व्रियते शिर एवान्तःकरणस्थानं स्कन्धस्य
शिरो-
ऽन्तवर्त्तित्वात् तथात्वम् । कत्स + वृ + अप्
।)
स्कन्धः । इति शब्दचन्द्रिका ॥

**कथ**, त् क वाक्यप्रबन्धे । इति कविकल्पद्रुमः ॥ (चुरां--

पर--सकं--सेट् ।) कथयति । इति दुर्गादासः
॥
("हन्त ! ते कथयिष्यामि सेतिहासं
पुरातनम्" ।
इति भागवतम् ॥)

**कथं** व्य, कथम् । किंप्रकारम् । इति व्याकरणम् ॥

(यथा, मनः ५ । २ ।
"कथं मृत्युः प्रभवति वेदशास्त्रविदां प्रभो" !
॥)

**कथकः**, त्रि, (कथयति यः । कथ + कर्त्तरि ण्वुल् ।)

वक्ता । कथोपजीवी । नाटकवर्णनकर्त्ता ।
तत्प-
र्य्यायः । एकनटः २ कथाप्राणः ३ । इति
शब्द-
रत्नावली ॥ (यथा महाभारते १ । २१५ ।
३ ।
"कथकाश्चापरे राजन् श्रमणाश्च वनौकसः"
॥
ग्रन्थकर्तृविशेषः । (यथा,
अनुमानचिन्तामणिः ।
"वाद्युक्तसाध्यनियमच्युतोऽपि
कथकैरुपाधि-
वार्त्ता । वाक्यम् । यथा, रघुः । ८ । ४३ ।
"अभितप्तमयोऽपि मार्द्दवं
भजते कैव कथा शरीरिषु" ॥
विवरणम् । यथा, रामायणे । १ । ८ । ६ ।
"सनत्कुमारो भगवान् पुरा कथितवान्
कथाम् ।
भविष्यं विदुषां मध्ये तव पुत्त्रसमुद्भवम्" ॥)

**कथाप्रसङ्गः**, त्रि, (कथायां प्रसङ्गो यस्य ।) ज-

ल्पाकः । इति शब्दरत्नावली ("तेन सह
नाना-
कथाप्रसङ्गेनावस्थितः" ॥ इति हितोपदेशः
॥)
वातूलः । विषवैद्यः । इति मेदिनी ।
(किराता-
र्ज्जुनीये । १ । २४ । "कथाप्रसङ्गेन
जनैरुदाहृता-
दनुस्मृताऽखण्डलसूनुविक्रमः" ॥ वार्त्ता ।
गोष्ठी-
वचनम् । उक्तञ्च कथासरित्सागरे २२ ।
१८१ ।
"मिथः कथाप्रसङ्गेन विवादं किल चक्रतुः"
॥)

**कथाप्राणः**, त्रि, (कथया प्राणिति जीवति कथां श्राव-

यित्वैव जीवनोपायं करोतीत्यर्थः । प्र +
अण् +
अच् । यद्वा कथायां प्राणाः जीवनोपायाः
यस्य ।)
कथकः । स तु नाटकवक्ता । इति
शब्दरत्नावली ॥

**कथितः**, त्रि, (कथ्यतेऽसौ । कथ + कर्म्मणि + क्तः ।)

उक्तः । (यथा, श्रीभागवतम् । १० । १ । १
।
"कथितो वंशविस्तारो भवता
सोमसूर्य्ययोः" ॥
कथ + भावे क्तः । कथनम् । यथा रघुः ।
११ । १० ।
"पूब्बवृत्तकथितैः पुराविदः
"इति ते भर्तृनिर्द्देशमादाय शिरसादृताः
।
तथा प्रजानां कदनं विदधुः
कदनप्रियाः" ॥)
मारणम् । इति भूरिप्रयोगः जटाधरश्च
॥

**कदन्नं** क्ली, (कुत्सितं अन्नं । कोः कदादेशश्च ।) कुत्सि-

तान्नम् । इति व्याकरणम् ॥
(यथा, भागवते । ५ । ९ । ८ । "मिष्टं
कदन्नं वा
अभ्यवहरति परं
नेन्द्रियप्रीतिनिमित्तम्" ॥
"हविर्व्विना हरिर्य्याति विना पीठेन
माधवः ।
कदन्नैः पुण्डरीकाक्षः प्रहारेण
धनञ्जयः" ॥ इत्युद्भटः ॥)

**कदम्बं**, क्ली, ("कृकदिकडिकटिभ्योऽम्बच्" । उणां ।

४ । ८२ । इति कद् + अम्बच् ।)
निकुरम्बम् ।
समूहः । इति मेदिनी ॥

**कदम्बः**, पुं, (कद्यते दर्शनात् विरहिणां चित्तवैक्लव्यं

जायतेऽनेन । कद् + करणे अम्बच् ।)
वृक्षविशेषः ।
कदम् इति भाषा । तत्पर्य्यायः । नीपः
२ प्रियकः ३
हलिप्रियः ४ । इत्यमरः । २ । ४ ।
८९ ॥ कादम्बः ५ ।
इति तट्टीका ॥ षट्पदेष्टः ६ प्रावृषेण्यः
७ हरि-
प्रियः ८ । इति रत्नमाला ॥ वृत्तपुष्पः
९ भुरभिः
१० ललनाप्रियः ११ कादम्बर्य्यः १२
सीधुपुष्पः १३
महाढ्यः १४ कर्णपूरकः १५ । अस्य
गुणाः ।

रुद्राव्यः” ॥)

**कथङ्कथिकः**, त्रि, (कथं कथमिति प्रष्टृत्वेनास्त्यस्य
इति । कथंकथं + बाहुलकात् ठन्
ततष्टिलोपः ।)
प्रष्टा । प्रश्नकर्त्ता । इति
त्रिकाण्डशेषभूरिप्रयोगौ ॥

**कथङ्कथिकता**, स्त्री, (कथङ्कथिक + भावे तल् ।)
पृच्छा । प्रश्नः । इति हेमचन्द्रः ॥

**कथनं**, क्ली, (कथ्यते इति । कथत्क वाक्यप्रबन्धे ।
भावे + ल्युट् ।) कथा । इति हलायुधः ॥
कहन
इति भाषा । (यथा पञ्चतन्त्रे १ । १३ ।
“मिथ्याक्रमकथनं कूटतुलामानम्” ॥)

**कथम्**, व्य, (कस्मिन् प्रकारे इति प्रकारार्थे +
“किमश्चेति” । ५ । ३ । २५ । थमुः
कादेशश्च ।) हर्षः ।
गर्हा । प्रकारार्थः । सम्भ्रमः । प्रश्नः ।
सम्भावना ।
इति मेदिनी ॥ (यथा शाकुन्तले १ अङ्के
“कथमिदानीमात्मानं निवेदयामि
कथं वा आत्मापहारं करोमि” ॥)

**कथा**, स्त्री, (क्रथ + “चितिपूजिकथिकुम्बिचर्च्चि-
श्चेति” । ३ । ३ । १०५ । अङ् । टाप् च ।)
प्रबन्धकल्पना । इत्यमरः । १ । ६ । ६ ।
प्रबन्धेन
कल्पना अथव प्रबन्धस्य अभिधेयस्य
कल्पना
स्वयं रचना इति सारसुन्दरी ॥ “प्रवन्धस्य
कल्पना
रचना बह्वनृतास्तोकसत्या” । इति भरतः ॥
“प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञाः कथां
विदुः ।
परम्पराश्रया या स्यात् सा मताख्यायिका
क्वचित्” ॥
इति कोलाहलाचार्य्यः ॥ (“नैयायिकमते हि
नानावक्तृकपूर्ब्बपक्षसिद्धान्तवान्
वाक्यसन्दर्भः” ।
यया, मनुः । ३ । २३१ ।
सानुजः पितृसखस्य राघवः” ॥)

**कद**, इ रोदन । आह्वाने । वैक्लव्ये । इति कविकल्प-
द्रुमः ॥ (भ्वां--परं--सकं अकं च--सेट्--
इदित् ।) इ
कर्म्मणि कन्द्यते । इति दुर्गादासः ॥

**कद**, ष म ङ वैक्लव्ये । विह्वलीमावे । इति कविकल्प-
द्रुमः । (भ्वादिं--आत्मं--अकं--सेट्--घटादि
।) ष
कदा । म कदयति । ङ कदते । इति
दुर्गादासः ॥

**कदः**, पुं, (कं जलं ददाति । क + दा + क ।) मेघः ।
इति शब्दरत्नावली ॥

**कदकः**, पुं, (कदः मेघ इव कायति प्रकाशते उपरि-
भागे । कद् + कै + क ।) वितानम् । इति
हेम-
चन्द्रः ॥ चाँदोया इति भाषा ॥

**कदक्षरं**, क्ली, (कुत्सितं अक्षरं । कोः कदादेशः ।)
कुत्सितवर्णः ॥

**कदध्वा**, [न्] पुं, (कुत्सितोऽध्वा । कुगतीति
समासः । कोः कत् तत्पुरुषेचेति कदादेशः
।)
निन्दितपथः । तत्पर्य्यायः । व्यध्वः २
दुरध्वः ३
विपथः ४ कापथः ५ । इत्यमरः २ । १ ।
१६ ॥

**कदनं**, क्ली, (कदयति दुःखं वैक्लव्यं वा प्राप्नोत्यनेन
कद्यते दुःखंप्राप्यतेऽनेन वा । कद् + णिच् +
करणे
ल्युट् । घटादित्वात् न वृद्धिः । कद्यते इति
भावे
ल्युट् । कद्यते आहन्यते विह्वलीक्रियते
निहन्यते
वा यत्र । अधिकरणे णिच् ल्युट् यद्वा कद्यते
म्रियते यत्र ।) पापम् । (यथा, भागवते ७ ।
९ । १६ ।
तिक्तत्वम् । कटुत्वम् । कषायत्वम् ।
वातपित्त-
कफार्त्तिनाशित्वम् । शीतलत्वम् ।
शुक्रबर्द्धनत्वञ्च ।
इति राजनिर्घण्टः ॥ (यथा भावप्रकाशे
।
“कदम्बो मधुरः शीतो कषायो लवणो
गुरुः ।
सरो विष्टम्भकृद्रूक्षः
कफस्तन्यानिलप्रदः” ॥
तथा च सुश्रुतः ।
“गरदोषहरनीपं प्राचीनामलकं तथा”
॥)
अत्र नीपहलिप्रियौ
धाराकदम्बवाचिनावपि
कदम्बसाम्यात् पठितौ । यथा साञ्जः ॥
“नीपो महाकदम्बः स्याद्धाराकदम्ब
इत्यपि ।
द्वितीयोऽल्पप्रसरश्च वृत्तपुष्पः
कदम्बकः” ॥
इत्यस्य भेदः । तथा रत्नेऽपि ।
हारिद्रस्तु रजो
बलः । यथामरटीकायां भरतः ॥
“धुलीकदम्बका धारा कदम्बः
षट्पदप्रियः ॥
वृत्तपुष्पः केशराढ्यः प्रावृषेण्यः
कदम्बकः ।
नीपो महाकदम्बोऽपि तथा बहुफलो
मतः” ॥
(यथा, -- साहित्यदर्पणम् । “यः
कौमारहरः स
एव हि वरस्ता एव चैत्रक्षपास्ते
चोन्मीलि-
तमालतीसुरभयः प्रौढाः
कदम्बानिलाः” ॥
कविभिस्तु प्रायशो वर्षाकाले एव अस्य
वर्णनं
क्रियते । माघे रैवतकपर्व्वतवर्णने
द्रष्टव्यम् ॥ * ॥)
सर्षपः । इति मेदिनी ॥ देवताडकतृणम्
। इति

| | | |
|---|---|---|
| "यद्यद्रोचेत विप्रेभ्यस्तत्तद्दद्यादमत्सरः। ब्रह्मोद्याश्च कथाः कुर्य्यात्पितणामेतदीप्सितम्" ॥ | "त्रस्तोऽस्म्यहं कृपणवत्सल ! दुःसहोग्र-संसारचक्रकदनात् ग्रसतां प्रणीतः" ॥) मर्द्दः । (यथा, रामायणे । ६ । २८ । २० । "क्रोधेन कदनं चक्रे वानराणां युयुत्सताम्" ॥) युद्धम् । इति मेदिनी ॥ (यथा, भागवते । ७ । २ । १३ । | रत्नमाला ॥ (कं प्रजापत्यधिष्ठातृकं औपस्थेन्द्रियं दमयति इति व्युत्पत्त्या जितेन्द्रियतत्त्वज्ञानी । कदं कदनं विनाशं वाति गच्छति प्रलये इति शेषः । इति व्यत्पत्त्या जगत् । यथा, -- "स एव सौम्य नित्यं राजते मूले विश्व कदम्बस्य परमो वै पुरुष आत्मा" ॥ इति श्रुतौ ॥)<br><br>**कदम्बकं**, क्ली, (कदम्ब + संज्ञायां कन् ।) समूहः ।<br><br>इत्यमरग २ । ५ । ४० ॥ (यथा, शाकुन्तले २ अङ्के । "गाहन्तां महिषा निपानसलिलं शृङ्गै-मुहूस्ताडितं छायाबद्धकदम्बकं मृगकुलं रोम-न्थमभ्यस्यतु" ॥) |

**कदम्बकः**, पुं, (कदम्ब इव कायति प्रकाशते । हरिद्रा
पीतवर्णत्वात् कदम्बकोरकोपरिस्थितसूक्ष्मांश-
तुल्यफलत्वाच्च सर्षपस्यापि तथात्वम् । वृक्षे तु
कदम्ब एव स्वार्थे कन् ।) सर्षपः । हरिद्रुः । इति
राजनिर्घण्टः ॥ कदम्बवृक्षः । इति शब्दरत्नावली ॥

**कदम्बदः**, पुं, (कदम्बः कदम्बस्योपरिस्थः सूक्ष्मांश-
इव दीयतेऽसौ । कदम्ब + दो खण्डने + कर्म्मणि
+ घञर्थे कः । सर्षपस्य कदम्बकोरकोपरिस्थ-
सूक्ष्मांशतुल्यफलत्वात्तथात्वम् ।) सर्षपः । इति
शब्दचन्द्रिका ॥

**कदम्बपुष्पा**, स्त्री, (कदम्बस्येव पुष्पमस्त्यस्याः । अर्श
आदित्वात् अच् ततष्टाप् ।) मुण्डितिकावृक्षः । इति
रत्नमाला । मुण्डिरी इति भाषा ॥ (विशेषोऽस्या
मुण्डितिकाशब्दे ज्ञातव्यः ॥)

**कदम्बपुष्पी**, स्त्री, (कदम्बपुष्पमिव पुष्पमस्याः । कदम्ब-
पुष्प + ङीप् ।) महाश्रावणिकावृक्षः । इति राज-
निर्घण्टः शब्दचन्द्रिका च । मुण्डिरी इति भाषा ॥

**कदम्बी**, स्त्री, (कद् + करणे अम्बच् गौरादित्वात्
ङीष् ।) देवदालीलता । इति राजनिर्घण्टः ॥ (देव-
दालीशब्देगुणादयोऽस्या ज्ञातव्याः ॥)

**कदरं**, क्ली, (कं जलं दृणाति दारयति नाशयतीत्यर्थः ।
क + दृ + अच् ।) पायसभेदः । इति शब्दमाला ॥

**कदरः**, पुं, (कं जलं दृणाति श्लेष्मणा संहतजलं नाश-
यतीत्यर्थः । क + दृ + अच् ।) श्वेतखदिरः । काँटा
वावला इति भाषा । तत्पर्य्यायः । सोमवल्कः २ ।
इत्यमरः । २ । ४ । ४० ॥ ब्रह्मशल्यः ३ खदिरोपमः
४ । इति रत्नमाला ॥ (श्वेतसारः ५ । खदिरः ६ ।
सोमवल्कलः ७ । इति भावप्रकाशः ॥
गुणानाह तत्रैव ।
"कदरो विशदो वर्ण्यो मुखरोगकफास्रजित्" ॥
व्यवहारो यथा, चरके ।
"तिन्दुकपियालवदरकदरखदिरसप्तपर्णाश्वकर्णा-
र्ज्जुनासनारिमेदा इति दशेमान्युदर्द्दप्रशमनानि
भवन्ति" ॥) क्रकचः । करात् इति भाषा ॥ व्याधि-
भेदः । इति मेदिनी ॥ कडा जामुडा इति भाषा ॥
तस्य लक्षणम् । यथा निदाने ।
"शर्करोन्मथिते पादे क्षते वा कण्टकादितः ।
ग्रन्थिः कोलवदुत्पन्नो जायते कदरस्तु सः" ॥
("शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः ।
मेदोरक्तानुगैश्चैव दोषैर्वा जायते नृणाम् ॥
सकोलः कठिनो ग्रन्थिर्निम्नमध्योन्नतोपि वा ।
५ । "तेभ्योऽप्राप्तेभ्यः पृथगर्हाणि कारयाञ्चकार
सहप्रातः सञ्जिहान उवाच नमेस्तेनो जनपदे न
कदर्य्यो न मद्यपो नानाहिताग्निर्नाविद्वानिति"
॥)

**कदलः**, पुं, (कद + वृषादित्वात् कलच् ।) कदली-
वृक्षः । पृश्नीलता । इति मेदिनी ॥
(यथा, अमरुशतके । ९५ ।
"ऊरुद्वयं मृगदृशः कदलस्य काण्डौ
मध्यञ्च वेणिरतुलं स्तनयुग्ममस्याः" ॥)

**कदलकः**, पुं, (कदल + स्वार्थे कन् ।) कदलीवृक्षः ।
इति शब्दरत्नावली ॥

**कदला**, स्त्री, (कदल + टाप् ।) पृश्नी । चाकुलिया
इति भाषा । डिम्बिका । शाल्मलीवृक्षः । इति
मेदिनी ॥

**कदली**, स्त्री, (कदल + गौरादित्वात् ङीष् । यद्वा
काय जलाय दल्यते त्वगस्य गौरादित्वात् ङीष्
।)
स्वनामप्रसिद्धौषधिविशेषः । कला इति भाषा ।
तत्पर्य्यायः । वारणवुसा २ रम्भा ३ मोचा ४
अंशुमत्फला ५ काष्ठीला ६ । इत्यमरः ॥
कदलः
७ वारणवुषा ८ वारवुषा ९ । इति तट्टीका ॥
सुफला १० सुकुमारा ११ सकृत्फला १२
गुच्छ-
फला १३ हस्तिविषाणी १४ गुच्छदन्तिका १५
निःसारा १६ राजेष्टा १७ बालकप्रिया १८
ऊरु-
स्तम्भा १९ भानुफला २० वनलक्ष्मीः २१ ।
कदलकः
२२ मोचकः २३ रोचकः २४ लोचकः २५
वारवृषा
२६ । इति शब्दरत्नावली ॥ वारणवल्लभा २७
चर्म्मण्वती २८ । इति जटाधरः ॥ (यथा, महा-
भारते २ । दूतपर्ब्बणि ६६ । १२ ।
"कदलीशुण्डसदृशं सर्व्वलक्षणसंयुतम् ।
गजहस्तप्रतीकाशं वज्रप्रतिमगौरवम्" ॥)
अस्याः पक्वफलगुणः । कषायत्वम् । मधुरत्वम्
।
शीतलत्वम् । पित्तास्रविमर्द्दनत्वम् । गुरुतरत्वम्
।
मन्दानले अपथ्यत्वम् । सद्यः शुक्रविबर्द्धनत्वम्
।
वातपित्तहरं शीतं रक्तपित्तक्षयप्रनुत्" ॥)
अस्या मूलगुणाः । बलकारित्वम् । वातपित्त-
नाशित्वम् । गुरुत्वञ्च ॥ * ॥
"माणिक्यमर्त्यामृतचम्पकाद्या
भेदाः कदल्या बहवोऽपि सन्ति ।
उक्ता गुणास्तेष्वधिका भवन्ति
निर्द्दोषता स्याल्लघुता च तेषाम्" ॥
इति राजनिर्घण्टः ॥ * ॥ चम्पकाख्यकदली-
फलगुणाः । वातपित्तहरत्वम् । गुरुत्वम् ।
शुक्र-
वृद्धिकारित्वम् । अतिशीतलत्वम् । रसे पाके
मधुरत्वञ्च । दुग्धदधितक्रतालयुक्तं कदलं
दुर्ज्जरम् ।
इति राजवल्लभः ॥ * ॥ हरिणविशेषः ।
पताका ।
इति मेदिनी ॥ करिवैजयन्ती । इति हलायुधः
॥
हातिर उपरेर निशान इति भाषा ॥

**कदा**, व्य, (किम् + काले दा । "सर्व्वैकान्यकिंयत्तदः-
काले दा" । ५ । ३ । १५ ।) कस्मिन् काले ।
इति व्याकरणम् ॥ कवे कखन इति भाषा ॥
(यथा,
ऋग्वेदे १ । ८४ । ८ । "कदा नः शुश्रवद्गिर
इन्द्रो
अङ्ग" ॥ तथा हितोपदेशे । १ । १२२ ।
"जातिद्रव्यबलानाञ्च साम्यमेषां मया सह ।
मत्प्रमुत्वफलं ब्रूहि कदा किन्तद्भविष्यति" ॥)

**कदाकारः**, पुं, (कुत्सितः आकारः । नैवात्र बहु-
ब्रीहिः निपिद्धत्वात् । यथा, "कोः कत्तत्पुरुष-
ऽचि" । ६ । ३ । १०१ ।) कुत्सिताकारः ॥
(कुत्सि-
ताकारविशिष्टे, त्रि ॥)

**कदाख्यं**, क्ली, (कुत्सिता आख्या नाम यस्य ।)
कुष्ठवृक्षः ।
कुड् इति भाषा । तत्पर्य्यायः । कौबेरम् २
दुष्टम्
३ व्याप्यम् ४ । इति शब्दचन्द्रिका ॥

**कदाचन**, व्य, (कदा + अनिर्द्धारिते चनप्रत्ययः ।)
कस्मिन् काले । इति व्याकरणम् । कोन
समये
इति भाषा । (यथा, मनुः । २ । ५८ ।
"ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् ।
कालत्रैदशिकाभ्यां वा न पित्र्येण कदाचन" ॥)

कोलमात्रः सरुक्स्रावी जायते कदरस्तु सः” ॥
इति सुश्रुतः ॥) तच्चिकित्सा यथा भावप्रकाशे ॥
“दहेत् कदरमुद्धृत्य तैलेन दहनेन वा” ॥
अङ्कुशः । इति हारावली ॥

**कदर्य्यः**, त्रि, (कुसितोऽर्य्यः स्वामी ॥ कुगतीति-

समामः ।) क्षुद्रः । कृपणः । इत्यमरः । ३ । १ । ४८ ॥
“आत्मानं धर्म्मकृत्यञ्च पुत्त्रदारांश्च पीडयन् ।
यो लोभात् मञ्चिनोत्यर्थान् स कदर्य्य इति स्मृतः” ॥
इति स्मृतिः ॥ (तथा, छान्दोग्योपनिषदि । ५ । ११ ।

क्लमतृष्णाहरत्वम् । कान्तिदातृत्वम् । दीप्ताग्नौ
सुखदत्वम् । कफामयकरत्वम् । सन्तर्पणत्वम् ।
दुर्ज्जरत्वञ्च ॥ * ॥ (यथा हारीते ।
“हृद्यं मनोज्ञं कफवृद्धिकारि
शीतञ्च सन्तर्पणमेव बल्यम् ।
रक्तं सपित्तं श्वसनञ्चदाहं
रम्भाफलञ्चापि नरस्य हन्ति ॥
अपक्वकं ग्राहि च शीतलञ्च
कषायकं वातकफं करोति ।
विष्टम्भि बल्यं गुरु दुर्ज्जरञ्च
आरण्यरम्भाफलमेव तद्वत्” ॥)
मोचकगुणाः । हृद्यत्वम् । कफकृमिनाशित्वम् ।
कुष्ठप्लीहज्वरहरत्वम् । अग्निदीपनत्वम् ।
वस्ति-
शोधनत्वञ्च ॥ * ॥
(“मोचाफलं स्वादु शीतं विष्टम्भि कफनुद्गुरु ।
स्निग्धं पित्तास्रतृड्दाहक्षतक्षयसमीरजित्॥
पक्वं स्वादु हिमं पाके स्वादु वृश्यञ्च वृंहणम् ।
क्षुत्तृष्णानेत्रगदहृन्मेहघ्नं रुचिमांसकृत्” ॥
इति भावप्रकाशः ॥ कदली पुष्पगुणांश्चाह ॥
“कदल्याः कुसुमं स्निग्धं मधुरन्तुवरं गुरु ।

**कदाचित्**, व्य, (कदा + अनिर्द्धारिते चित् ।) कस्मिं-

श्चित् काले । तत्पर्य्यायः । जातु २ ।
इत्यमरः ।
३ । ४ । ४ ॥ कर्हिचित् ३ । इति हेमचन्द्रः ॥
(यथा, मनुः । ४ । ७४ ।
“नाक्षैः क्रीडेत् कदाचित्तु स्वयं नोपानहौ हरेत्
।
शयनस्थो न भुञ्जीत न पाणिस्थं नचासने” ॥)

**कदुष्णं**, क्लो, (कद् ईषत् उष्णं ईषदर्थे कीः “कव-

ञ्चोष्णे” ६ । ३ । १०७ । चकारात् ।
कदादेशः ।)
ईषदुष्णम् । तत्पर्य्यायः । कोष्णम् २
कवोष्णम्
३ मन्दोष्णम् ४ । (यथा भट्टिः । ३ । १८ ।
“ससीतयोराघवयोरधीयन्
श्वसन् कदुष्णं पुरमाविवेश” ॥)
तद्वति त्रि । इत्यमरः । १ । ४ । ३५ ॥

**कदुड** कार्क्श्ये । (भ्वां--परं--अकं--सेट् ।)
तवर्गतृतोयो-

पधः । क्विपि संयोगान्तलोपे कद् इति ।
कड्डति
पद्ममृणालं कर्कशं स्यादित्यर्थः । इति
दुर्गादासः ॥

**कद्रथः**, पुं, (कुत्सितः रथः । कोः कदादेशः ।

“रथवदयोश्च” । ६ । ३ । १०२ ।)
कुत्सितरथः ।
इति व्याकरणम् ॥ (यथा, भट्टिः ५ । १०३ ।

:“युधिकद्रथवद्धीमं वभञ्ज ध्वजशालिनग्” ॥)

**कद्रुः**, पुं, (कद् + रुः ।) पिङ्गलवर्णः । तद्वति त्रि ।

इत्यमरः । १ । ५ । १६ ॥

**कद्रुः**, स्त्री, (कद् + रुः । यद्वा मृगष्वादित्वात् साधुः ।)

नागमाता । इति मेदिनी ॥ सा तु दक्षकन्या कश्यपपत्नी च । इति पुराणम् ॥ (यथा, रामायणम् । ३ । २० । २९ ।
“रोहिण्यां जज्ञिरे गावो गन्धर्व्यां वाजिनस्तथा ।
सुरसाऽजनयन्नागान् राम ! कद्रुश्च पन्नगान्” ॥)

**कद्रुपुत्त्रः**, पुं, (कद्रोः पुत्त्रः ।) नागः । इति शब्दचन्द्रिका ॥

**कद्रुसुतः**, पुं, (कद्रोः सुतः ।) नागः । तत्पर्य्यायः ।

काद्रवेयः २ । इति शब्दरत्नावली ॥ कञ्चुकालुः ३
कद्रुपुत्त्रः ४ । इति शब्दचन्द्रिका ॥

**कद्वदः**, त्रि, (कुत्सितं वदति यः । वदेः पचाद्यच् ।

कुत्सितः वदः इति वा “रथवदयोश्च” । ६ । २ । १०२ । इति कदादेशः ।) कुत्सितवक्ता । तत्पर्य्यायः । गर्ह्यवादी २ । इत्यमरः । ३ । १ । ३७ ॥
दुर्व्वाक् ३ । अतिकुत्सितः । इति हेमचन्द्रः ॥ (यथा, भट्टिः ६ । ७५ ।
“सर्व्वत्र दयिताधीनं सुव्यक्तं रामणीयकम् ।
येन जातं प्रियापाये कद्वदं हंसकोकिलम्” ॥)

**कन**, ई ञि प्रीतौ । गतौ । द्युतौ । इति कविकल्पद्रुमः ॥ (भ्वां--परं--अकं--सकं च--सेट् ईदित् ।) ई ञि कान्तोऽस्ति । इति दुर्गादासः ॥

**कनकं**, क्ली, (कनति दीप्यते इति । कनी दीप्तौ + कृञादिभ्यो वुन् ।) स्वर्णम् । इत्यमरः । २ । ९ । ९४ ॥ (यथा, मेघदूते । २ ।
“तस्मिन्नद्रौ कतिचिदबला विप्रयुक्तः स कामी
नीत्वा मासान् कनकवलयभ्रंशरिक्तप्रकोष्ठः” ॥)

**कनकः**, पुं, (कनति दीप्यते यः । कनी दीप्तौ + कृञादिभ्यो वुन् ।) पलाशवृक्षः । नागकेशरवृक्षः । धूस्तूरवृक्षः । (यथा, इन्द्रजालतन्त्रे ।
“कपालं मानुषं गृह्य कनकस्य फलानि च” ॥) काञ्चनालवृक्षः । कालीयवृक्षः । चम्पकवृक्षः । इति
मेदिनी ॥ कासमर्द्दवृक्षः । कणगुग्गुलुवृक्षः । इति राजनिर्घण्टः ॥ लाक्षातरुः । इति शब्दमाला ॥ (शिवः । यथा, महाभारते । १३ । १७ । ९२ ।
“उपकारः प्रियः सर्व्वः कनकः काञ्चनच्छविः” ॥

**कनकप्रभा**, स्त्री, (कनकस्य प्रभेव प्रभा यस्याः ।)

महाज्योतिष्मती । इति राजनिर्घण्टः ॥ (स्वनामख्यातो ज्वरातीसाररोगस्यौषधविशेषो यथा ।
“सुवर्णवीजं मरिचं विराल-
पदं कणा टङ्गणकं विषञ्च ।
गन्धं जयाह्निस्त्रिदिनं विमर्द्द्य
गुञ्जा प्रमाणा वटिका विधेया ॥
रक्तातिसारग्रहणीज्वराग्नि-
मान्द्यादि हन्यात् कनकप्रभेयम् ।
दध्योदनं भोज्यमनुष्णवारि-
मांसं भजेत्तित्तिरिलावकानाम्” ॥
इति वैद्यकरसेन्द्रसारसंग्रहः ॥ * ॥)

**कनकप्रसवा**, स्त्री, (कनकवत् प्रसवः पुष्पं यस्याः ।)

स्वर्णकेतकी । इति राजनिर्घण्टः ॥

**कनकरम्भा**, स्त्री, (कनकवर्णवत् रम्भा । यद्वा कनकवर्णफणिनी रम्भा ।) सुवर्णकदली । इति राजनिर्घण्टः ॥

**कनकरसः** पुं, (कनकवर्णो रसः ।) हरितालम् । इति

राजनिर्घण्टः ॥ (“कतमोऽयं पूर्ब्बापरसमुद्रावगाढः कनकरसनिस्यन्दी सान्ध्य इव मेघपरिघः सानुमानालोक्यते” । इति शाकुन्तले ७ अङ्के ॥)

**कनकलोद्भवः**, पुं, (कनति दीप्यते इति । कना दीप्ता

कला अवयवः तया उद्भवतीति । कनकला + उद् + भू + अच् ।) रालः । इति राजनिर्घण्टः । धुना इति भाषा ॥

**कनकाचलः**, पुं, (कनकमयो अचलः पर्ब्बतः ।) अस्ताचलः । सुमेरुपर्ब्बतः । इति सिद्धान्तशिरोमणिः ॥ दानविशेषः । इति स्मृतिः ॥
(अस्य परिमाणमुक्तं ब्रह्माण्डपुराणे यथा, --
“अथ पापहरं वक्ष्ये सुवर्णाचलमुत्तमम् ।
यस्य प्रसादाद्भवनं विरिञ्चेर्याति मानवः ॥
उत्तमः पलसाहस्रो मध्यमः पञ्चभिः शतैः ।
तदर्द्धेनाधरस्तद्वत् अल्पवित्तोऽपि शक्तितः ॥
दद्यादेकपलादूर्द्धं यथा शक्त्या विमत्सरः ।
धान्यपर्ब्बतवत् सर्व्वं विदध्यात् विधिमुत्तमम्
विष्कम्भशैलास्तद्वच्च ऋत्विग्भ्यः प्रतिपादयेत्” ॥)

**कनकाध्यक्षः**, पुं, (कनकस्य रक्षणे अध्यक्षः मध्यपदलोपः ।) सुवर्णरक्षकः । तत्पर्य्यायः । भौरिकः २ ।
इत्यमरः । २ । ८ । ७ ॥

स्पर्द्धते वा । कनक + आ + ह्वे + कः ।) धुस्तूरवृक्षः । इत्यमरः । २ । ४ । ७७ ॥ नागकेशरवृक्षः ।
इति शब्दचन्द्रिका ॥

**कननः**, त्रि, (कन् + युच् ।) काणः । इति हेमचन्द्रः ॥

**कनिष्ठः**, त्रि, (अतिशयेन युवा अल्पो वा । इष्टन् ।

कनादेशश्च ।) अतियुवा । अल्पः । पश्चाज्जातः ।
तत्पर्य्यायः । जघन्यजः २ यवीयान् ३ अवरजः ४ अनुजः ५ । इत्यमरः । २ । ६ । ४३ ॥ कनीयान् ६
कन्यसः ७ यविष्ठः ८ । इति तट्टीकासारसुन्दरी ॥ (यथा, मनुः । ९ । ११३ ।
“ज्येष्ठश्चैव कनिष्ठश्च संहरेतां यथोदितम् ।
येऽन्ये ज्येष्ठकनिष्ठाभ्यां तेषां स्यान्मध्यमं धनम्” ॥
शिवः । यथा, महाभारते । १३ । १७ । १३१ ।
“पवित्रं त्रिककुन्मन्त्रः कनिष्ठः कृष्णपिङ्गलः” ॥)

**कनिष्ठकं**, क्ली, (कनिष्ठमिव कायति प्रकाशते । कनिष्ठ + कै + कः ।) शूकतृणम् । इति राजनिर्घण्टः ॥

**कनिष्ठा**, स्त्री, (कनिष्ठ + ङीषादिकं बाधित्वा

अजादित्वात् टाप् ।) दुर्बलाङ्गुलिः । इत्यमरमेदिनीकरौ ॥ कडे आङ्गुल इति भाषा । (यथा, रामायणे ३ । ४१ । ७ ।
“कनिष्ठायामप्यङ्गुल्यां भ्रादुर्म्मम स राक्षसः ।
दुःखं कर्त्तुमपर्य्याप्तो देवि ! कस्माद्बिभीदसि” ॥)
धीरादितिसृणां द्विधाभेदान्तर्गतनायिकाविशेषः । अस्या लक्षणम् । परिणीतत्वे सति भर्त्तुर्न्यूनस्नेहा इति रसमञ्जरी ॥ (त्रि, मनुः ९ । १२२ ॥
पुत्त्रः कनिष्ठो ज्येष्ठायां कनिष्ठायाञ्च पूर्ब्बजः” ।
“यदि प्रथमोढायां कनीयान् पुत्त्रो जातः पश्चादूढायाञ्च ज्येष्ठः” ॥ इति कुल्लूकभट्टः ॥)

**कनी**, स्त्री, (कन + अच् + गौरादित्वात् ङीष् ।)

कन्या । इति हेमचन्द्रः ॥

**कनीचिः**, स्त्री, (कन् + बाहुलकात् इचि प्रत्ययः ।

पृषोदरादित्वात् दीर्घश्च ।) गुञ्जा । इति शब्दरत्नावली ॥ कुँच् इति भाषा ॥ पुष्पयुक्तलता । शकटः । इत्युणादिकोषः ॥ मूर्द्धन्यणमध्योऽपि पाठः ॥

**कनीनिका**, स्त्री, (कन् + ईन् । संज्ञाया कन् ।

ततष्टाप् + अत इत्वम् ।) चक्षुस्तारा । कनिष्ठाङ्गुलिः । इति मेदिनी ॥

यदुवंशीयस्य दुर्द्दमस्य पुत्त्रः ।
यथा, हरिवंशे ३३ । ६ ।
"दुर्द्दमस्य सुतो धीमान् कनको नाम नामतः" ॥)

**कनकक्षारः**, पुं, (कनकस्य द्रावणार्थं क्षारः ।) टङ्कणः ।

इति राजनिर्घण्टः । सोवागा इति भाषा ॥ (टङ्गण-
शब्देऽस्य गुणा व्याख्येयाः ॥)

**कणकदण्डकं**, क्ली, (कनकस्य कनकनिम्भितो वा

दण्डः यत्र । कप् स्वार्थे कन् वा ।) राजच्छत्रम् ।
इति त्रिकाण्डशेषः ॥

**कनकपलः**, पुं, (कनकस्य कर्षचतुष्टयरूपपलं तत्परि-

माणम् ।) पलपरिमाणम् । तत्तु सुवर्णादिपरि-
माणकषोडशमाषकम् । तत्पर्य्यायः । कुरुविस्तः
२ ।
इति हारावली ॥ (कनकमिव पलं मांसमस्य इति
व्युत्पत्त्या मत्स्यविशेषः ॥)

**कनकारकः**, पुं, (कनकं दीप्तस्वर्णदीप्तिमिव सर्व्वतो

ऋच्छति व्याप्नोतीति । कनक + ऋ + अण् ।
स्वार्थे + कन् ।) कोविदारवृक्षः । इति राज-
निर्घण्टः ॥ (कोविदारशब्देऽस्य गुणादिकं ज्ञात-
व्यम् ॥)

**कनकालुका**, स्त्री, (कनकनिर्म्मित आलुः । सलि-

लाद्याधारपात्रविशेषः संज्ञायां कन् टाप् च ।)
स्वर्णकलसः । तत्पर्य्यायः । भृङ्गारः २ । इत्यमरः
।
२ । ८ । ३२ ॥

**कनकाह्वं**, क्ली, (कनकस्याह्वा नाम यस्य ।) नागकेश-

रपुष्पम् । इति राजनिर्घण्टः ॥ (नागकेशरशब्दे-
ऽस्य विशेषो द्रष्टव्यः ॥)

**कनकाह्वयः**, पुं, (कनकं आह्वयोऽस्य । कनकमाह्वयते

**कनीनी**, स्त्री, (कन् + ईन् ततो ङीष् ।) कनिष्ठा-

ङ्गुलिः । इत्यमरटीका ॥

**कनीयसं**, क्ली, (कन् दीप्तौ + अच् । कनः सूर्य्यः

तस्येदम् । कन + च्छः कनीयम् । तद्रूपत्वेन
सीयते
अवसीयते इति । सो + घञर्थे कर्म्मणि कः ।
सूर्य्यदेवाधिष्ठातृकत्वमिति ताम्रस्योक्तेः ।) ताम्रम् ।
इति हेमचन्द्रः ॥

**कनीयान्**, [स्] त्रि, (अयमनयोरतिशयेन युवा

अल्पो वा इत्यर्थे ईयसुन् । ततः कनादेशः ।)
अनुजः । अतियुवा । अत्यल्पः । इति मेदिनी ॥
(यथा, ऋग्वेदे । ४ । २४ । ९ । "स भूयसा
कनीयो
नारिरेचीद्दीनां दक्षा विदुहन्ति प्रवाणम्" ॥
"मातुः पितुः कनीयांसं न नमेद् वयसाऽधिकः ।
प्रणमेच्च गुरोः पत्नीं ज्येष्ठभार्य्यां विमातरम्" ॥
इति स्मृतिः ॥)

**कन्तुः**, पुं, ("कंशम्भ्यां वभयुस्तितुतयसः इति तुः" ।
५ । २ । १३८ । कम् + तुः । कामयते इति कमु कान्तौ । अर्जिदृशीत्यादिना कुप्रत्यये तुकि सिद्ध-त्वात् । "कमिभनिजनिगाभायाहिभ्यश्च" । उणां १ । ७३ ।) कामदेवः । इति त्रिकाण्डशेषः ॥ हृदयम् । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥ (चित्रम् । इति उज्जलदत्तः । कं सुखं अस्यास्तीति व्युत्पत्त्या सुखी जनः ॥)

**कन्था**, स्त्री, (कम् + बाहुलकात् थन् + टाप् ।)
स्यूतंकर्पटः । इति स्त्रीलिङ्गसंग्रहे अमरः ॥ काँथा इति भाषा । (यथा, यतिपञ्चके २ । "कन्थामिव श्रीमपि कुत्सयन्तः कौपीनवन्तः खलु भाग्यवन्तः" ॥)
मृण्मयमित्तिः । इति मेदिनी । काँथ् इति भाषा ॥ उसीनराख्यजनपदप्रसिद्धग्रामाणांनामसु विषय-भूतेषु षष्ठ्यन्तात् परा कन्था क्लीवे स्यात् । यथा सौसमीनां कन्था सौसमिकन्थम् । आह्वीनां कन्था आह्विकन्थम् । इत्यमरटीकायां भरतः ॥

**कन्थारी**, स्त्री, (कम् + आरन् । पृषोदरादित्वात् थुक् गौरादित्वात् ङीष् ।) वृक्षविशेषः । तत्प-र्य्यायः । कन्थरी २ कन्था ३ दुर्द्धर्षा ४ तीक्ष्ण-कण्टका ५ तीक्ष्णगन्धा ६ क्रूरगन्धा ७ दुष्प्रवेशा ८ । अस्या गुणाः । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । कफवातशोथरक्तग्रन्थिज्वरनाशित्वम्। दीपन-त्वम् । रुचिकारित्वञ्च । इति राजनिर्घण्टः ॥

**कन्दं**, क्ली पुं, (कन्दयति जिह्वायाः वैक्लव्यं जनयति रोदयति वा भक्षयन्तं जनम् । कदि + णिच् + अच् । यद्वा कन्द्यते कन्द इति नाम्ना ज्ञायते । कदि + कर्म्मणि + घञ् ।) शूरणः । शस्यमूलम् । इति मेदिनी ॥ गृञ्जनम् । इति राजनिर्घण्टः ॥ (यथा, महाभारते १३ । १४ । ११९ ॥
"वने निवसतां नित्यं कन्दमूलफलाशिनाम्" ॥
यथा च, शान्तिशतके । २ । २० ।-
"शीतं निर्झरवारिपानमशनं कन्दः सहाया मृगाः" ॥
शूरणशब्देऽस्य विशेषो ज्ञेयः ॥)

**कन्दः**, पुं, (कं जलं ददातीति । क + दा + कः ।
कन्दति कन्दयति कन्द्यते वा । कदि आह्वाने रो-दने च । अच् घञ् वा ।) मेघः । इति मेदिनी ॥ योनिरोगविशेषः । तस्य निदानलक्षणे । यथा, --
"दिवास्वप्नादतिक्रोधाद्व्यायामादतिमैथुनात् ।
क्षताच्च नखदन्ताद्यैर्वाताद्याः कुपिता यदा ॥
पूयशोणितसङ्काशं लकुचाकृतिसन्निभम् ।
पूरयेद्योनिमेतेषां चूर्णैः क्षौद्रसमन्वितैः ॥
त्रिफलायाः कषायेण सक्षौद्रेण च सेवयेत् ।
प्रमदा योनिकन्देन व्याधिना परिमुच्यते" ॥
अन्यत्सर्व्वं योनिशब्दे द्रष्टव्यम् ॥)

**कन्दगुडूची**, स्त्री, (कन्दोद्भवा गुडूची । शाकपार्थि-वादिवत् समासः । मध्यपदलोपश्च ।) गुडूची-विशेषः । तत्पर्य्यायः । कन्दोद्भवा २ कन्दामृता ३ बहुच्छिन्ना ४ बहुरुहा ५ पिण्डालुः ६ कन्दरो-हिणी ७ । इति राजनिर्घण्टः ॥

**कन्दटं**, क्ली, (कदि + अटन् ।) श्वेतोत्पलम् । इति शब्दरत्नावली । सादा सुँदि इति भाषा ॥

**कन्दफला**, स्त्री, (कन्दात् कन्दमारभ्य वा फलं यस्याः ।)
क्षुद्रकारवेल्ली । इति राजनिर्घण्टः ॥

**कन्दबहुला**, स्त्री, (कन्दादारभ्य कन्देन कन्देषु बहुला वा ।) त्रिपर्णिका । इति राजनिर्घण्टः ॥

**कन्दमूलं**, क्ली, (कन्द एव कन्दरूपं वा मूलं यस्य ।)
मूलकम् । इति राजनिर्घण्टः ॥ (मूलकशब्देऽस्य-गुणा वक्तव्याः ॥)

**कन्दरं**, क्ली, (केन जलेन दीर्य्यते । दृ + विदारे + कर्म्मणि अप् । कं जलं श्लेष्मजनितं दृणाति नाश-यतीति वा । दृ + अच् ।) आर्द्रकम् । इति राज-निर्घण्टः ॥ (आर्द्रकशब्देऽस्य गुणादयो ज्ञेयाः ॥)

**कन्दरः**, पुं स्त्री, (केन जलेन द्रीर्य्यते विदीर्य्यतेऽसौ ।
दृ + कर्म्मणि अप् ।) गुहा । इति मेदिनी ॥
"निह्रादीचेन्मुरज इव ते कन्दरेषु ध्वनिः स्थात्" । इति मेघदूते ५८ ॥) कृत्रिमोऽकत्रिमो वा सजलो निर्जलो वा गृहाकारो गिरिनितम्बदेशः । इति भरतः ॥ तत्पर्य्यायः । दरी २ कन्दरा ३ इत्यमरः । २ । ३ । ६ ॥ कन्दरी ४ । इति पञ्जिका ॥ दरः ५ । इति स्वामी ॥ (यथा, भागवते । ४ । ६ । ११ ।
"नानाऽमलप्रस्रवणैर्नानाकन्दरसानुभिः" ॥)

**कन्दरः**, पुं, (कं मातङ्गशिरो दीर्य्यतेऽनेन । दृ + करणे अप् ।) अङ्कुशः । इति मेदिनी ॥

**कन्दरा**, स्त्री, (कन्दर + टाप् ।) गुहा । इत्यमरः ।
२ । ३ । ६ ॥)

**कन्दराकरः**, पुं, (कन्दरस्य आकरः ।) पर्ब्बतः । इति हारावली ॥

**कन्दरालः**, पुं, (कन्दराय अङ्कुराय अलतीति । कन्दर
"साहन्त्वाममिषेकार्थमवतीर्णं समुद्रगाम् ।
दृष्ट्वैव पुरुषव्याघ्र ! कन्दर्पेणाभिमूर्च्छिता" ॥)
ध्रुवकभेदः । यथा, -- सङ्गीतदामोदरः ॥
"त्रयोविंशतिवर्णाङ्घ्रिर्ध्रुवः कन्दर्पसंज्ञकः ।
वीरे वा करुणे वा स्यात् खण्डताले विधीयते" ॥

**कन्दर्पकूपः**, पुं, (कन्दर्पस्य कूप इव ।) योनिः । इति जटाधरः ॥

**कन्दर्पजीवः**, पुं, (कन्दर्पं जीवयति परिवर्द्धयतीति ।
कन्दर्प + जीव + अच् ।) कामवृद्धिनामवृक्षः । इति राजनिर्घण्ट ॥

**कन्डर्पमुषलः** पुं, (कन्दर्पस्य मुषल इव ।) लिङ्गः । इति त्रिकाण्डशेषः ॥

**कन्दर्पशृङ्खलः**, पुं, (कन्दर्पः शृङ्खलः यत्र । यद्वा कन्दर्पाय शृङ्खलः ।) शृङ्गारबन्धविशेषः । तस्य लक्षणम् । यथा रतिमञ्जरी ।
"नारी पदद्वयं स्थाप्य कान्तस्योरुद्वयोपरि ।
कटिञ्चेद्दोलयेद्दाशु तन्धः कन्दर्पशृङ्खलः" ॥

**कन्दलं**, त्रि, (कदि + अलच् ।) कपालः । उपरागः ।
नवाङ्कुरः । कलध्वनिः । इति मेदिनी ॥ अपवादः । इति शब्दरत्नावली ॥ (कदलीविशेषः । यथा, अमरुशतके ४८ । "प्रारम्भे निपतन्ति कन्दल-दलोल्लासाः पयोविन्दवः" ॥)

**कन्दलः**, पुं, (कदि + अलच् ।) कनकम् । युद्धम् ।
कपालः । इति धरणी ॥

**कन्दलता**, स्त्री, (कन्दप्रधाना लता ।) मालाकन्दः ।
इति राजनिर्घण्टः ॥

**कन्दली**, स्त्री, (कन्दल + गौरादित्वात् ङीष् ।)
मृगविशेषः । यस्य चर्म्म व्यवह्रियते । गुल्मप्रभेदः । (यथा, मेघदूते २१ ।
"आविर्भूतप्रथममुकुलाः कन्दलीश्चानुकच्छम्" ॥)

उत्पद्यते यदा योनौ नाम्ना कन्दस्तु योनिजः” ॥
स चतुर्विधः । वातिकः १ पैत्तिकः २ श्लैष्मिकः ३
सान्निपातिकश्च ४ । एषां यथाक्रमं लक्षणानि ।
“रूक्षं विवर्णं स्फुटितं वातिकं तं विनिर्द्दिशेत् ।
दाहरागज्वरयुतं विद्यात् पित्तात्मकन्तु तम् ॥
नीलपुष्पप्रतीकाशं कण्डूमन्तं कफात्मकम् ।
सर्व्वलिङ्गसमायुक्तं सन्निपातात्मकं विदुः ।
सन्निपातात्मकोऽसाध्यःशेषाः कृच्छ्रप्रसाधनाः” ॥
इति भाधवकरः ॥ (अस्य चिकित्सामाह भाव-
प्रकाशः ॥
“गौरिकाम्रास्थि जन्तुघ्नं रजन्यञ्जनकट्फलाः ।

+ अल् + अच् ॥) गर्द्दभाण्डवृक्षः । प्लक्षवृक्षः ।
इति मेदिनी ॥ आखोटवृक्षः । इति राजनिर्घण्टः ॥

**कन्दरालकः**, पुं, (कन्दराल एव स्वार्थे कन् ।)

प्लक्षवृक्षः । इति शब्दरत्नाक्ली ॥ (प्लक्षशब्दे
विशेषोऽस्य ज्ञातव्यः ॥)

**कन्दरी**, स्त्री, गुहा । इत्यमरः । २ । ३ । ६ ॥

**कन्दरोद्भवा**, स्त्री, (कन्दरे उद्भवतीति । कन्दर + उद्

+ भू + अच् + टाप् ।) क्षुद्रपाषाणभेदीवृक्षः
इति राजनिर्घण्टः ॥

**कन्दर्पः**, पुं, (कमित्यव्ययं कुत्सायां, कं कुत्सितो दर्पः

यस्मात् । यद्वा कं सुखं तेन तत्र वा दृप्यति । दृप्
+ अच् । कं ब्रह्माणं प्रति दर्पितवान् वा ।)
कामदेवः । इत्यमरः । १ । १ । २६ ॥ (यथा, महा-
भारते १ । २१५ । १८ ॥

कदली । इति मेदिनी ॥ (यथा,
विक्रमोर्व्वश्यां । ७८ ।
“आरक्तराजिभिरियं
कुसुमैर्नवकन्दलीसलिल-
गर्भैः” । इति ॥)
पताका । इति त्रिकाण्डशेषः ॥ पद्मवीजम् ।
इति
राजनिर्घण्टः ॥

**कन्दलीकुसुमं**, क्ली, (कन्दल्या इव कुसुमंमस्य ।) शि-

लीन्ध्रम् । इति जटाधरः ॥

**कन्दवर्द्धनः**, पुं, (कन्देन वर्द्धते इति । वृध् + ल्युः ।)

शूरणः । इति राजनिर्घण्टः ॥
(शूरणशब्देऽस्य
गुणादयो द्रष्टव्याः ॥)

**कन्दवल्ली**, स्त्री, (कन्दाकारा + वल्ली ।) बन्ध्याकर्क्को-

टकी । इति राजनिर्घण्टः ॥

**कन्दशूरणः**, पुं, (कन्देषु शूरणः श्रेष्ठः ।) ओल्लः ।

इति राजनिर्घण्टः ॥ (ओल्लशब्देऽस्य
गुणादयो
व्याख्याताः ॥)

**कन्दसंज्ञं**, क्ली, (कन्द इति संज्ञा यस्य कन्दनाम्ना

संज्ञायते वा ।) योनिरक्तरोगविशेषः । तत्प-
र्य्यायः । योन्यर्शः २ । इति त्रिकाण्डशेषः ॥
तस्य
निदानादि कन्दशब्दे द्रष्टव्यम् ॥

**कन्दसारं**, क्ली, (कन्दानां सारो यत्र ।) नन्दनवनम् ।

इति त्रिकाण्डशेषः ॥

**कन्दाढ्यः**, पुं, (कन्देन आढ्यः ।) धरणीकन्दः । इति राजनिर्घण्टः ॥

**कन्दार्हः**, पुं, (कन्देषु अर्हः आदरणीयः ।) शूरणः ।
इति राजनिर्घण्टः ॥

**कन्दालुः**, पुं, (कन्दमय आलुः ।) कासालुः । धरणी-
कन्दः । त्रिपर्णिका । इति राजनिर्घण्टः ॥

**कन्दिरी**, स्त्री, (कन्द + इरच् + गौरादित्वात् ङीष् ।)
लज्जालुवृक्षः । इति वैद्यकम् ॥
(लज्जालुशब्दे
विशेषोऽस्या ज्ञातव्यः ॥)

**कन्दी**, [न्] पुं, (कन्दोऽस्त्यस्य । अस्त्यर्थे इनिः ।)
शूरणः । इति राजनिर्घण्टः ॥

**कन्दुः**, पुं स्त्री, (स्कन्दति शोषयति जलादिकं स्कन्देः
सलोपश्चेत्युः ।) लौहमयपाकपात्रम् ।
ताओया
इति लोहता इति च भाषा । तत्पर्य्यायः ।
स्वेदनी
२ । इत्यमरः । २ । ९ । ३० ॥

**कन्दुकः**, पुं, (कं सुखं ददातीति । कम् + दा +
मितद्र्वादित्वात् डुः संज्ञायां कन् ।) गेण्डुकः ।
इत्य-
मरः । २ । ७ । १३८ ॥ गेँडु इति भाषा ॥
(यथा,
कुमारे । १ । २९ । "सा कन्दुकैः
कृत्रिमपुत्रकैश्च" ॥)

**कन्दुपक्वं**, क्ली, (कन्दौ पक्वम् ।) जलोपसेकं विना
केव-
लपात्रे यत् वह्निना पक्वं भृष्टतण्डुलादि ।
यथा, --
"कन्दुपक्वानि तैलेनं पायसं दधि शक्तवः ।
द्विजैरेतानि भोज्यानि शूद्रगेहकृतान्यपि" ॥
इति तिथ्यादितत्त्वे कूर्म्मपुराणम् ॥

**कन्दोटं**, क्ली, (कदि + ओटन् ।) नीलोत्पलम् ।
इति शब्दरत्नावली ॥

**कन्दोटः**, पुं, (कदि + ओटन् ।) शुक्लोत्पलम् । इति
शब्दरत्नावली ॥

**कन्दोतः**, पुं, (कन्दे मूले उतः । कन्द + वेञ् + क्तः ।)
कुमुदम् । इति त्रिकाण्डशेषः ॥

**कन्धः**, पुं, (कंजलंदधाति धारयति । कं + धा + कः ।)
मेघः । इति शब्दरत्नावली ॥

द्विविधा परोढा कन्यका च । कन्यायाः पित्राद्य-
धीनतया परकीयत्वम् । अस्या गुप्तैव सकला
चेष्टा" । इति रसमञ्जरी ॥

**कन्यकाजातः**, पुं स्त्री, (कन्यकायां अनूढायां जातः ।
कन्यका + जन + कर्त्तरि क्तः ।) अविवाहितापुत्त्रः ।
तत्पर्य्यायः । कानीनः २ । इत्यमरः । २ । ६ । १३७
॥
(यथाह याज्ञवल्क्यः । १२ । १३२ ।
"कानोनः कन्यकाजातो मातामहसुतो मतः" ॥
कर्णः । स तु अनूढायां कुन्त्यां जातः ॥)

**कन्यकापतिः**, पुं, (कन्यकायाः पतिः ।) जामाता ।
इति शब्दरत्नावली ॥

**कन्यसः**, पुं, (कन + अघ्न्यादित्वात् । ४ । १११ । उणां ।
निपातनात् कन्यः । कन्यत्वेन काम्यत्वेन सीयते
अवसीयते इति । कन्य + सो + घञर्थे कः ।)
कनिष्ठभ्राता । इत्यमरटीकासारसुन्दरी ॥
(यथा रामायणम् । ५ । ३३ । १० ।
"रामस्य कन्यसो भ्राता सुमित्रा येन सुप्रजाः" ॥)

**कन्यसा**, स्त्री, (कन्यस + टाप् ।) कनिष्ठभगिनी ।
इत्यमरटीका ॥

**कन्या**, स्त्री, (कन् दीप्तौ + अघ्न्यादित्वात् यक् इत्यु-
णादौ ४ । १११ । कन्यायाः कनीन् चेति निर्द्दे
शात् पाणिनिमतानुसारेण न ङीष् अतष्टाप् ।)
कुमारी । इत्यमरः ॥ २ । ६ । ८ । सा तु दशम-
वर्षीया । इति स्मृतिः ॥ (यथा महाभारते
वनपर्ब्बणि ।
"यस्मात् कामयते सर्व्वान् कमेर्धातोश्च भाविनि ! ।
तस्मात् कन्येह सुश्रोणि ! स्वतन्त्रा बरवर्णिनि !" ॥)
नारी । ओषधीविशेषः । घृतकुमारी इति ख्याता ।
इति सेदिनी ॥ यथा सुश्रुते निदानस्थाने ॥
("कान्तैर्द्वादशभिः पत्रैर्मयूराङ्गरुहोपमैः ।
कन्दजा काञ्चनक्षीरी कन्या नाम महौषधी" ॥
"शोथघ्नी कासहा कन्या" ॥ इति वैद्यकद्रव्य-
गुणः ॥ विशेषगुणादयोऽस्या घृतकुमारीशब्दे
द्रष्टव्याः ॥) स्थूलैला । वाराहीकन्दः । बन्ध्याकर्को-
टकी । इति राजनिर्घण्टः ॥ * ॥ मेषादिद्वादश-
राश्यन्तर्गतषष्ठराशिः । सा तु उत्तरफल्गुनीशेष-
पादत्रयहस्तासमुदायुक्तचित्राप्रथमार्द्धेन भवति ।
तदधिष्ठातृदेवतायाः स्वरूपं यथा । जले । नौकास्थ-
शस्याग्निधारिणी स्त्री । इति दीपिका ॥ अपि च ।
नीलकण्ठीजातके ॥

"युवतिगे शशिनि प्रमदाजन-
प्रबलकेलिविलासकुतूहलैः ।
विमलशीलयुता जननोत्सवैः
सुविधिना विधिना सहितः पुमान्" ॥ * ॥
तस्या उदये तन्नामकलग्नं भवति । तस्य गणित-
प्राप्तपरिमाणं दशव्यङ्गुलाधिकपञ्चाङ्गुलप्रभे देशे
वर्त्तमानोनविंशायनांशे ऊनत्रिंशत्पलाधिकपञ्चद
ण्डाः । इति ज्योतिषम् ॥ * ॥ तत्र जातफलम् ।
"कन्यालग्नोद्भवो मर्त्यो नानाशास्त्रविशारदः ।
सौभाग्यगुणसम्पन्नः सुन्दरः सुरतप्रियः" ॥
इति कोष्ठीप्रदीपः ॥ * ॥ सुता । तस्या विवाहं वि-
नान्यसंस्कारकर्म्मणि वृद्धिश्राद्धनिषेधो यथा, --
"कन्याया निष्क्रमो नास्ति वृद्धिश्राद्धंन विद्यते ।
नामान्नप्राशनं चूडां कुर्य्यात् स्त्रीणाममन्त्रकम्" ॥
"जातकर्म्मादिचूडान्तं कुमार्य्याश्चाप्यमन्त्रकम् ।
कर्त्तव्यं पञ्चभिर्व्वर्णैरेकं निष्क्रमणं विना" ॥
इति च महानिर्व्वाणतन्त्रे नवमोल्लासः ॥
(तीर्थविशेषः । यथा महाभारते ३ । ८३ । १०४
।
"ततो गच्छेत धर्म्मज्ञ ! कन्यातीर्थमनुत्तमम् ।
कन्यातीर्थे नरः स्नात्वा गोसहस्रफलं लभेत्" ॥)

**कन्याका**, स्त्री, (कन्यैव इति स्वार्थे कन अनुक्तपुं-
स्कत्वात् न ह्रस्वः ।) कुमारी । इति शब्दरत्ना-
वली ॥

**कन्याकुब्जः**, पुं, (कन्याः कुब्जाः यत्र देशे सः । वायुना
हि अस्मिन् देशे कन्याः कुब्जीकृता अतोऽस्य
तथात्वम् ।) कान्यकुब्जदेशः । इति हेमचन्द्रः ॥
(यथा, महाभारते । वनपर्ब्बणि ॥
"कन्याकुब्जेऽपिबत्सोममिन्द्रेण सह कौशिकः" ॥
वायुनाहि अस्मिन् देशे पुरा कन्याः कुब्जीकृताः ।
तद्विवरणमुच्यते । पुरा किल कुशनाभो राजर्षि-
र्घृताच्यां कन्याशतं जनयामास ।
रूपयौवनसम्पन्ना-
स्तास्तु कदाचित् उद्यानभूमिमागम्य परयानन्द-
सन्तत्या चिक्रीडुः । अथ सर्व्वगो
वायुश्चारुसर्व्वा-
ङ्गीस्ता अवलोक्य कामशरपीडितोऽब्रवीत् । अहं
वः कामये, भवत्यो मे भार्य्या भवन्तु । अय ता
अङ्गनास्तस्य तद्वचनं श्रुत्वा उच्चैर्विहस्य
तमब्रुवन्
भो वायो ! त्वं भूतानां अन्तश्चरसि तत्कथम-
स्माकं मनोभावं न वेत्सि । वयं किल कुशनाभ-
सुताः कथं पितरं कामतः समतिक्रम्य स्वयं वर-

**कन्धरः**, पुं, (कं जलं धरति धारयति वा । कम् + घृ + अच् ।) मेधा । इति मेदिनी ॥ मारिषवृक्षः । इति राजनिर्घण्टः ॥ (कं शिरो धरतीति ।) ग्रीवा । इत्यमरटीकासारसुन्दरी ॥ (भागवते ६ । १२ । ३३ ।
"वज्रस्तु तत्कन्धरमाशु वेगः
कृन्तन्समन्तात् परिवर्त्तमानः" ॥)

**कन्धरा**, स्त्री, (कं शिरो धरतीति । कम् + धृ + अच् + टाप् ।) ग्रीवा इत्यमरः । २ । ६ । ८८ ॥
(यथा, याज्ञबल्क्यः । २ । २२३ ।
"कन्धरा बाहुसक्थ्नां च भङ्गे भध्यमसाहसः" ॥)

**कन्धिः**, स्त्री, (कं शिरः समुद्रपक्षे जलं ध्रियते यत्र । धृ + अधिकरणे + किः ।) ग्रीवा । समुद्रे पुं । इति राजनिर्घण्टः ॥

**कन्नं**, क्ली, (कन्यते प्राप्यते दुःखमनेन । कन गत्यां + करणे क्तः ।) पातकम् । मूर्च्छा । इति शब्दमाला ॥
कल्लमिति च पाठः ॥

**कन्यका**, स्ती, (कन्या + अज्ञातादौ कन् पूर्ब्बह्रस्वश्च ।)
कुमारी । इति त्रिकाण्डशेषः ॥ यथा ।
"अष्टवर्षा मवेद्गौरी नववर्षा च रोहिणी ।
दशमे कन्यका प्रोक्ता अत ऊर्द्ध्वं रजस्वला" ॥
इति स्मृतिः ॥ परकीयनायिकाविशेषः । यथा ।
"अप्रकटपरपुरुषानुरागा परकीया । सा च

"पाण्डुर्द्विपात् स्त्रीद्वितनुर्यमाशा-
निशामरुच्छीतसमोदयक्ष्मा।
कन्यार्द्धशब्दा शुभभूमिवैश्य-
रूक्षाल्पसङ्गप्रसवा शुभा च" ॥ * ॥
मतान्तरे सा तु शीर्षोदया । दिनबला । पिङ्गल-वर्णा । दक्षिणदिक्स्वामिनी । वायुप्रकृतिः । शीत-लस्वभावा । शुद्धभूमिचरा । वैश्यवर्णा । रूक्षा । श्लथाङ्गा । खटच्छब्दा । अल्पसन्ताना । अल्प-पुंसङ्गा च ॥ * ॥ तत्र जातफलम् । "वेदशास्त्रे श्रद्धावान् स्थानरोषे खेदितः भार्य्यायां । सदा विरसश्च" । इति ज्योतिषम् ॥ * ॥ जन्मकालीन-चन्द्राश्रितैतद्राशिफलम् । यथा कोष्ठीप्रदीपः ॥

मभिलषामः । पिता हि अस्मान् यस्मै दास्यति स नो भर्त्ता भविष्यतीति । अतः क्षन्तव्याः खलु भवन्नियोगं कर्त्तुमशक्ता वयम् । वायुस्तु तासामे-तद्वचनमाकर्ण्य कोपसमन्वितः स्वतेजसा तासां शरीरेषु प्रविश्य मध्ये बभञ्ज । ततः प्रभृति देशोऽयं कन्याकुब्ज इत्येव ख्यातः ॥ अस्य विस्तृ-तिस्तु रामायणे आदिकाण्डे ३५ अध्याये द्रष्टव्या ॥

अयन्तु काशीनदीतटे स्थितः । अधुना कुश-

स्थल इत्याख्यया प्रसिद्धः । इति कनिहामेनो-क्तम् ॥ अस्य समीपे जाह्नवीप्रवहमाना वर्त्तते । इति महाभारते अनुशासनपर्ब्ब ॥)

**कन्याटः**, पुं, (कन्या अटति अत्र । कन्या + अट् + अ-धिकरणे घञ् ।) वासगृहम् । इति त्रिकाण्डशेषः ॥

**कन्यादानं**, क्ली, (कन्याया दानं वराय सम्प्रदानम् ।)

वराय कन्यासम्प्रदानम् । तद्दानफलादि यथा ।
यम उवाच ।
"कन्यां ये तु प्रयच्छन्ति यथाशक्त्या स्वलङ्कृताम् ।
ब्रह्मदेयां द्विजश्रेष्ठ ! ब्रह्मलोकं व्रजन्ति ते ॥
कन्यादानन्तु सर्व्वेषां दानानामुत्तमं स्मृतम्" ॥ * ॥
तद्ग्रहणे दशकुलत्यागो यथा, --
"महान्त्यपि समृद्धानि गोऽजाविधनधान्यतः ।
स्त्रीसम्बन्धे दशेमानि कुलानि परिवर्जयेत् ॥
हीनज्ञातिषु पाषण्डे मुने उद्वेगकारिणाम् ।
छद्मामयसदावाच्यचित्रिक्लिष्टिकुलानि च ॥
यस्यास्तु न भवेत् भ्राता न च विज्ञायते पिता ।
नोपयच्छेत तां प्राज्ञः पुत्त्रिकाधर्म्मशङ्कया" ॥ * ॥
ततोऽष्टप्रकारविवाहानन्तरम् ।
"कन्यां ये तु प्रयच्छन्ति यथाशक्त्या स्वलङ्कृताम् ।
विवाहकाले संप्राप्ते यथोक्ते सदृशे वरे ।
क्रमात् क्रमं कतुशतमनुपूर्ब्बं लभन्ति ते ॥
श्रुत्वा कन्याप्रदानन्तु पितरः प्रपितामहाः ।
विमुक्ताः सर्व्वपापेभ्यो ब्रह्मलोकं व्रजन्ति ते ॥
ब्राह्मेण तु विवाहेन यस्तु कन्यां प्रयच्छति ।
ब्रह्मलोकं व्रजेच्छीघ्रं ब्रह्माद्यैः पूजितः सुरैः ॥
दिव्येन तु विवाहेन यस्तु कन्यां प्रयच्छति ।
भित्त्वा द्वारन्तु सूर्य्यस्य स्वर्गलोकञ्च गच्छति ॥
गान्धर्ब्बेण विवाहेन यस्तु कन्यां प्रयच्छति ।
गन्धर्ब्बलोकमासाद्य क्रीडते देववच्चिरम् ॥
शुल्केन दत्त्वा यः कन्यां तां पश्चात् सम्यगर्च्चयेत् ।
स किन्नरैश्च गन्धर्ब्बैः क्राडते कालमक्षयम् ॥
न मन्युं कारयेत्तासां पूज्याश्च सततं गृहे ।
ब्रह्मदेया विशेषेण ब्राह्मभोज्या सदा भवेत् ॥
कन्यायां ब्रह्मदेयायामभुञ्जन् सुखमश्नुते ।
अथ भुञ्जति यो मोहात् भुक्त्वा स नरकं व्रजेत् ॥
अप्रजायाञ्च कन्यायां न भुञ्जीयात् कदाचन ।
दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचसि ॥
महासत्वसमाकीर्णान्नास्तिते नरकाद्भयम् ।
तीर्णस्त्वं सर्व्वदुः खेभ्यः परं स्वर्गमवाप्स्यसि ॥
दौहित्रस्य तु दानेन नन्दन्ति पितरः सदा ।
यत्किञ्चित् कुरुते दानं तदानन्त्याय कल्प्यते ।
भातापितुश्च विज्ञेयं तच्छुभस्याभिगामिनः ।
मातुः पितुर्हिरण्यस्य दौहित्रोऽर्द्धमवाप्नुते ॥
दत्त्वा कन्यां न शोचेत क्षुधितां मुदितां तथा ।
नग्नां दुःखाभिभूतां वा तथैव कृपणां कृशाम् ।
कुर्य्यान्मन्युं नचैवास्या आगताञ्चापि पोषयेत् ॥
यद्भूतमर्थयेत् किञ्चित् सर्व्वं तत् प्रतिपादयेत् ।
अप्रयच्छंन् पतेत् ब्रह्मन् ! नरके नात्र संशयः" ॥ *
॥
वर्षान्ते गृह्यमानस्तु तिल एको भवेद् यदा ।
सोऽक्षयं लभते तावत् ब्रह्मलोकं सनातनम् ॥
शतगव्याः प्रमाणेन सुकृते रोमसञ्चये ।
विशीर्य्यते तु वा लोकं वर्षे पूर्णे सुताप्रदः ।
तावत् स्वर्गं लभेत् सोऽपि यावल्लोम्नश्च
संक्षयः ॥
महीदातुश्च गोदातुः कन्यादातुस्त्रयो रथाः ।
कन्यादात्रनुगाः पश्चात्समं यान्ति त्रयो रथाः
॥
कन्यादानं दरिद्रस्य यो ददाति सुसत्कृतैः ।
पूर्ब्बं धर्म्मवाप्नोति यथावत् विधिकल्पितम्
।
तस्मात्कन्या प्रयत्नेन दातव्या श्रेय इच्छता"
॥
इत्याद्ये वह्निपुराणे कन्यादाननामाध्यायः ॥

**कन्यापतिः**, पुं, (कन्यायाः पतिः ।) जामाता । इति

जटाधरः ॥

**कन्यापालः**, पुं, (कन्याप्रधानः पालः । पालाख्य-

वणिगिति यावत् ।) पालवणिक् ।
शूद्रजातिवि-
शेषः । इति त्रिकाण्डशेषः ॥

**कन्यारामः**, पुं, बुद्धभेदः । इति त्रिकाण्डशेषः ॥

**कन्यिका**, स्त्री, (कन्या एव स्वार्थेकन् टाप् अत-

इत्वम् ।) कन्यका । इति शब्दरत्नावली ॥

**कन्युषं**, क्ली, (कन + इन् । कन्या दीप्त्या कान्त्या

तेजसा वा ओषति इव । कनि + उष् + कः ।)
हस्तपुच्छः । इति हारावली । हातेर पोँछा
इति भाषा ॥

**कप** चलने । सौत्रधातुरय । इति कविकल्पद्रुमः ॥

(भ्वां--परं--अकं--सेट् ।) कपोलः । इति
दुर्गा-
दासः ॥

**कप** इ ङ सञ्चलने । इति कविकल्पद्रुमः ॥ (भ्वां--

आत्मं--अकं--सेट्--इदित् ।) इ कर्म्मणि
कम्प्यते ॥
ङ कम्पते वायुना वृक्षः । इति दुर्गादासः ॥

**कपटः**, पुं, क्ली, (पटतीति पटः । पट् + अच् । कस्य

सतो ब्रह्मणोऽपि पटः आवरकः । यद्वा कप +
अटन् ।) अयथार्थव्यवहारः । प्रतारणा ।
तत्प-

**कपटेश्वरी**, स्त्री, (कमिव शुभ्रः पटः वसनं तत्तुल्यं

फलं ईष्टे + प्रेरयतीति । कपट + ईश् + क्वरप् +
स्त्रियां ङीप् ।) श्वेतकण्टकारी । इति राज-
निर्घण्टः ॥

**कपर्द्दः**, पुं, (पर्ब्ब पूरणे + सम्पदादित्वात् भावे

क्विप् । "रात् लोपः" । ६ । ४ । २१ । इति
वलोपे पर् पूर्त्तिः । केन सुखेन जलेन वा पर
पूर्त्तिं ददातीति । क + पर् + दा + सुपीति योग
विभागात् कः । कस्य गङ्गाजलस्य परा पूरणेन
दापयति शुध्यति वा । क + पर् + दैप् शोधने
"आतोऽनुपसर्गे कः" । ३ । २ । ३ । इति कः ।)
शिवजटा । इत्यमरः । १ । १ । ३७ ॥ (यथा
काशिखण्डे । २९ । ४४ ।
"कमनीयजलाकम्रा कपर्द्दिसुकपर्द्दगा" ॥)
वराटकः । इति मेदिनी ॥ ("पञ्चभिः कपद्दः
पञ्चिका नाम द्यूतमस्ति" । इति पां २ । १ ।
१० । सूत्रस्य सरला टीका ॥)

**कपर्द्दकः**, पुं, (कपर्द्द + कन् ।) शिवस्य जटाजूटः

वराटकः । इति मेदिनी । कडि इति भाषा ॥
("यद्यहमिमं शक्तुशरावं विक्रीय दश कपर्द्दकान्
प्राप्नोमि" ॥ इति हितोपदेशः ॥) शेषस्य पर्य्यायः ।
वराटः २ कपर्द्दः ३ वराटिका ४ चराचरः ५
चरः ६ वर्ज्यः ७ बालक्रीडकः ८ । अस्य गुणाः ।
कटुत्वम् । तिक्तत्वम् । उष्णत्वम् ।
कर्णशूलव्रणगुल्म-
शूलनेत्रदोषनाशित्वञ्च ॥ तस्य भेदाः । सुवर्णवर्णा
सिंही १ धूम्रवर्णा व्याघ्री २ पीतपृष्ठासितोदरा
मृगी ३ श्वेतवर्णा हंसी ४ नातिदीर्घिका विदन्ता
५ । इति राजनिर्घण्टः ॥ (वराटकशब्देऽस्य
गुणादयो व्याख्येयाः ॥)

**कपर्द्दी**, [न्] पुं, (कपर्द्दो जटाजूटोऽस्त्यस्य । इनिः ।)

शिवः । इत्यमरः । १ । १ । ३४ ॥ (यथा,
महाभारते १३ । १७ । ४५ ।
"अजश्च बहुरूपश्च गन्धधारी कपर्द्यपि" ॥
"कपर्द्दी कैलासं करिवरमथोऽयं कुलिशभृत्"
इति कालिदासः ॥
यथा, ऋग्वेदे । १० । १०२ । ८ ।
"शुनमष्ट्रा व्यचरद् कपर्द्दी" ॥)

**कपाटं**, त्रि, (कं वायुं मस्तकं वा पाटयंतीति । पट-

गतौ + णिच् + कर्म्मणि उपपदे अण् ।) स्वनाम-
ख्यातद्वाराच्छादककाष्ठफलकविशेषः । तत्पर्य्यायः
।

"शोचन्ति यामयो यत्र विनश्यत्याशु तत्कुलम् ।
न भुञ्जन्ति च यत्रैव निर्दहन्त्यप्रपूजिताः ॥
तस्मादेताः समभ्यर्च्च्या भूषणाच्छादनाशनैः ।
भूतिकामैर्नरैर्नित्यं सुतयुक्तास्तु सर्व्वदा ॥
संतृप्ताः स्युस्तथा पूज्याः श्राद्धे चैवोत्सवेषु च ।
यस्मिन्नेवं कुले नित्यं कल्याणं तत्र वै ध्रुवम् ॥
इह कीर्त्तिर्भवेत् स्वर्गे परत्र द्विजसत्तम ! ।
तिलराशिः कृतो यावत् दिवाकरसमं कृतः ॥

र्य्यायः । व्याजः २ दम्भः ३ उपधिः ४ छद्म ५ कैत-
वम् ६ । इत्यमरः । १ । ७ । ३० ॥ कूटम् ७
कल्कम् ८ छलम् ९ मिषम् १० कैरवम् ११ ।
इति शब्दरत्नावली ॥
("नरेन्द्रसिंह ! कपटं न वोढुं त्वमिहार्हसि" ।
इति महाभारते १ । ७४ । १०१ ॥ दनुपुत्त्रः ।
यथा महाभारते १ । ६४ । २५ ।
"निचन्द्रश्च निकुम्भश्च कुपटः कपटस्तथा ।
एते ख्याता दर्नोर्वंशे दानवाः परिकीर्त्तिताः"
॥)

**कपटिकः**, त्रि, (कपटः विद्यतेऽस्मिन् अस्त्यस्य वा ।
कपट + मत्वर्थे + ठन् ।) कपटविशिष्टः । इति
शब्दरत्नावली ॥

**कपटिनी**, स्त्री, (कपटिन् + गौरादित्वात् ङीष् ।)
चीडानामगन्धद्रव्यम् । इति राजनिर्घण्टः ॥

**कपटी**, स्त्री, (कप + अटन् । गौरादित्वात् ङीष् ।)
परिमाणविशेषः । इति शब्दरत्नावली । एक
आँकाड़ इति भाषा ॥

**कपटी**, [न्] त्रि, (कपटोऽस्त्यस्य अस्मिन् वा अस्त्यर्थे
+ इनिः ।) कपटविशिष्टः । कपटधारी । इति
शब्दरत्नावली ॥

अररम् २ । इत्यमरः । २ । २ । १७ ॥ कवाटः ३
कपाटी
४ कवाटी ५ अररी ६ अररिः ७ । इति तट्टीका ॥
द्वारकण्टकम् ८ असारम् ९ । इति शब्दरत्नावली ॥
(यथा महाभारते १ । जतुगृहवासे । १४८ । १७ ।
"चक्रे च वेश्मनस्तस्य मध्ये नातिमहाविलम् ।
कपाटयुक्तमज्ञातं समं भूम्याश्च भारत" ! ॥
कं शिरः इत्युपलक्षणेन मनुष्यादीनां ग्रहणमिति
बोध्यम् । कं वातं वा पाटयति वारयति गृह-
द्वारदेशं आवृणोतीत्यर्थः । मनुव्यवातादीनां गतिं
रुणद्धि वा । क + पट् + णिच् + अण् । यथा,
"द्वाराणि समुपावृण्वन् कपाटान्यवघट्टयन्" ।
इति रामायणम् ।

**कपालः**, पुं, क्ली, (कं मस्तकं पालयतीति । क + पालि
+ अण् । यद्वा कम्पते यः । कपि चलने + "तमि
विशिविडिमृणिकुलिकपिपलिपञ्चिभ्यः कालन्" ।
उणां १ । ११७ । इति कालन् । कपिनिर्देशाद्
नलोपः ।) शिरोऽस्थि । माथार खुलि इति भाषा ।
तत्पर्य्यायः । कर्परः इत्यमरः । २ । ६ । ६८ ॥
(यथाह याज्ञबल्क्यः । ३ । ९० ।
"द्वौ शङ्खकौ कपालानि चत्वारि शिरसस्तथा" ॥)
घटादेः खण्डम् । खापरा खोला इत्यादि भाषा ॥
(यथा, भाषापरिच्छेदे । ११ ।
"घटादीनां कपालादौ द्रव्येषु गुणकर्म्मणोः ।
तेषु जातेश्च सम्बन्धः समवायः प्रकीर्त्तितः" ॥)
समूहः । इति मेदिनी ॥ (मृण्मयकर्परादिभि-
क्षापात्रम् । यथा, मनुः । ६ । ४४ ।
"कपालं वृक्षमूलानि कुचेलमसहायता ।
समता चैव सर्व्वस्मिन्नेतन्मुक्तस्य लक्षणम्" ॥)
पुरोडाशः । यथा शतपथब्राह्मणे ।
"कपालानि चोपदधातिपुरोडाशं चाधिश्रयति" ॥)
कुष्ठरोगविशेषः । इति हेमचन्द्रः ॥ तस्य लक्ष-
णम् । यथा, माधवकरः ॥
"कृष्णारुणकपालाभं यद्रूक्षं परुषं तनु ।
कापालं तोदबहुलं तत्कुष्ठं विषमं स्मृतम्" ॥

**कपालनालिका**, स्त्री, (कपालस्य सूत्रसंघस्य ना-
लिका ।) तर्कुः । इति त्रिकाण्डशेषः ॥ टेको
इति भाषा ॥

**कपालभृद्**, पुं, (कपालं भिक्षापात्रं ब्रह्मकपालं वा
बिभर्त्ति धारयति । कपाल + भृ + क्विप् तुक् च ।)
शिवः । इत्यमरः । १ । १ । ३४ ॥

**कपालिका**, स्त्री, (कपाल + कन् + टाप् ।) दन्त-
रोगविशेषः । तस्य लक्षणम् ।
"कपालेष्विव दीर्य्यत्सु दन्तानां सैव शर्करा ।
कपालिकेति पठिता सदा दन्तविनाशिनी" ॥
इति माधवकरः ॥ तस्याश्चिकित्सा दन्तरोगशब्दे
द्रष्टव्या ॥ (घटकपालिका । यथा, विष्णुपुराणे । २
१२ । ४१ ।
"महीघटत्वं घटतः कपालिका
कपालिकाचूर्णरजस्ततोऽणुः ।
जनैः स्वकर्म्मस्तिमितात्मनिश्चयै
आलक्ष्यते ब्रुहि किमत्र वस्तु" ॥)

**कपालिनी**, स्त्री, (कपालोऽस्त्यस्य । कपाल + इनि +
स्त्रिया ङीप् ।) दुर्गा । इति हेमचन्द्रः ॥

**कपाली**, [न्] पुं, (कपालोऽस्त्यस्य । कपाल + इनिः ।)

**कपिः**, पुं, (कम्पते यः सदा । कपिचलने । "कुण्डि-
कम्प्योर्नलोपश्च" उणां । ४ । १४३ । इ
प्रत्ययः ।)
वानरः । इत्यमरः । २ । ५ । ३ ॥
(यथा, मनुः । ११ । १५४ ॥
"विड्वराहखरोष्ट्राणां गोमायोः कपिकाकयोः ।
प्राश्य मूत्रपुरीषाणि द्विजश्चान्द्रायणञ्चरेत्" ॥)
सिह्लकः । मधुसूदनः । इति मेदिनी ॥ (यथा,
महाभारते १३ । १४९ । १०९ ।
"सनात्सनातनतमः कपिलः कपिरव्ययः" ॥)
धात्रिका । इति शब्दमाला ॥ करञ्जभेदः । इति
शब्दचन्द्रिका ॥ (कादुदकात् पृथ्वीं पाति इति ।
वराहः । रक्तचन्दनम् । पिङ्गलम् । तद्वर्णवति त्रि
॥)

**कपिकच्छुः**, स्त्री, (कपीनामपि कच्छुर्य्यस्याः कण्डू-
हेतुत्वात् ।) वृक्षविशेषः । आलकुशी इति भाषा
।
केऊँयाच इति हिन्दाभाषा । तत्पर्य्यायः ।
आत्म-
गुप्ता २ जडा ३ अध्यण्डा ४ कण्डूरा ५ प्रावृषा-
यणी ६ ऋष्यप्रोक्ता ७ शूकशिम्बिः ८ मर्कटी ९
।
इत्यमरः । २ । ४ । ८७ ॥ स्वगुप्ता १० ।
अजहा ११ कण्डुरा
१२ प्रावृषायिणी १३ प्रावृषा १४ शूकशिम्बी
१५
शूकशिम्बा १६ कपिकच्छूः १७ । इति भरतः
॥
स्वयंगुप्ता १८ महर्षभी १९ लाङ्गली २०
कुण्डली
२१ चण्डा २२ दुरभिग्रहा २३ कपिरोमफला
२४ गुप्ता २५ दुष्पर्शा २६ अजडा २७
प्रावृषेण्या
२८ वदरी २९ गुरुः ३० आर्षभी ३१ शिम्बी
३२
वराहिका ३३ तीक्ष्णा ३४ रोमालुः ३५ वन-
शूकरी ३६ कीशरोमा ३७ रोमवल्ली ३८ । शूक-
शिम्बिः ३९ वानरी ४० कपीकच्छुः ४१ शुक-
पिण्डी ४२ शूकपिण्डी ४३ कपिप्रभा ४४ ।
इति
शब्दरत्नावली ॥ अस्या गुणाः । स्वादुरसत्वम् ।
शुक्रवृद्धिकारित्वम् । वातक्षयपित्तास्रविकृतव्रण-
नाशित्वम् । शीतत्वञ्च । तस्या वीजगुणौ ।
वातश-

**कपिचूडा**, स्त्री, (कपीनां चूडा इव । आम्रातक-
मुकुलस्य कपिचूडातुल्यत्वात् ।) आम्रातकवृक्षः ।
इति राजनिर्घण्टः । (आम्रातकशब्दे विशेषो-
ऽस्या ज्ञेयः ॥)

**कपिचूतः**, पुं, (कपीनां चूत इव अत्यन्तप्रियत्वात् ।)
आम्रातकवृक्षः । इति त्रिकाण्डशेषः ॥

**कपिजः**, पुं, (कपेः शिलायाः जायते । जन् + डः ।
कपितैलम् ॥) तुरुष्कः । इति राजनिर्घण्टः ।
शिलारस इति भाषा ॥

**कपिजङ्घिका**, स्त्री, (कपेः वानरस्य जङ्घा इव जङ्घा
यस्याः । संज्ञायां कन् । कपिसदृशजङ्घाया
दैर्घ्यात्
इत्येवम् ।) तैलपिपीलिका । इति राजनिर्घण्टः ॥

**कपिञ्जलः**, पुं, (कपिरिव जवते वेगेन गच्छति यद्वा कम्
श्रुतिसुखदं शब्दम् पिञ्जयति कपिवत् पिञ्जलो
वा । ईषत्पिङ्गलवर्णो हरितालवर्णो वा । पृषो-
दरादित्वात् साधुः ।) चातकपक्षी । तन्मांस-
गुणाः । लघुत्वम् । शीतत्वम् ।
कफरक्तपित्तनाशि-
त्वम् । अग्निदातृत्वञ्च । इति राजवल्लभः ॥ पक्षि-
विशेषः । तत्पर्य्यायः । तेजलः २ ॥ तस्य मांसं
शुक्रवृद्धिकरम् । इति राजनिर्घण्टः ॥ तित्तिरि-
पक्षी । इति त्रिकाण्डशेषः ॥ (यथा, --
"कपिञ्जल इति प्राज्ञैः कथितो गौरतित्तिरः ।
कपिञ्जल इति ख्यातो लोके कपिशतित्तिशः" ॥
इति भावप्रकाशः ॥
"पित्तश्लेष्मविकारेषु सरक्तेषु कपिञ्जलाः ।
मन्दवातेषु शस्यन्ते शैत्यमाधुर्य्यलाघवात्" ॥
इति चरकः । तथा सुश्रुतश्च ।
"रक्तपित्तहरः शीतो लघुश्चापि कपिञ्जलः ।
कफोत्थेषु च रोगेषु मन्दवाते च शस्यते" ॥
ऋषिकुमारभेदः । अयन्तुश्वेतकेतुपुत्त्रस्य
पुण्डरी-
कस्य बन्धुः । यथा कादम्बर्य्यां
महाश्वेतोपाख्याने ।
"सखे ! कपिञ्जल ! किं मामन्यथा सम्भावयसि"
॥)

**कपितैलं**, क्ली, (कपिभिर्वानरैः शिलायाः विदारणात्
सम्पादितं यत् तैलम् ।) तुरुष्कनामगन्धद्रव्यम् ।
इति भावप्रकाशः ॥ (तथाचोक्तम् ।
"सिह्लकस्तु तुरुस्कः स्याद्यतो यवनदेशगः ।

महादेवः । इति हलायुधः ॥ स्वनामख्यातजाति-
विशेषः । स तु ब्राह्मणकन्यायां तीवराज्जातः ।
इति पराशरपद्धतिः ॥ (त्रि, कपालविशिष्टः ।
यथा, कुमारे । ५ । ७८ ।
"कपालि वा स्यादथवेन्दुशेखरं
न विश्वमूर्त्तेरवधार्य्यते वपुः" ॥
"नटी कपालिनी वेश्या कुलटा नापिताङ्गना" ॥
इति च तन्त्रम् ॥ योगिविशेषः । यथा, हटयोग-
दीपिकायां १ । ७ ।
"कपाली विन्दुनाथश्च काकचण्डीश्वराह्वयः" ॥)

मनत्वम् । परमवाजीकरत्वञ्च । इति
राजनिर्घण्टः ॥
(शूकशिम्बीशब्देऽस्या विशेषश्च ज्ञेयः ॥)

**कपिकच्छुफलोपमा**, स्त्री, (कपिकच्छुफलस्य उप-

मात्र ।) जतुकालता । इति राजनिर्घण्टः ॥

**कपिकच्छुरा**, स्त्री, (कपिभ्यः कच्छुं कण्डूं राति ददाति ।

कपिकच्छु + रा + कः ।) कपिकच्छुः । इति
शब्द-
माला ॥ (यथा, गारुडे १९७ अध्याये ।
"एरण्डशारिका पर्णी गुडूची कपिकच्छुरा ।
एषां दशपलान् भागान् क्वाथयेत् सलिलेऽमले"
॥)

**कपिकन्दुकं**, क्ली, (कपि + कदि + उकः । अतो-

लोपः । कस्य शिरसः पिकन्दुकं अस्थि । यद्वा
कपिः परमात्मा विष्णुः कन्दति क्रीडति यत्र
तत्रत्यं
अस्थि ।) शिरोऽस्थि । इति शब्दचन्द्रिका ।
माथार
खुलि इति भाषा ॥

**कपिका**, स्त्री, (कपिरिव कायिति यज्ञवराहवत् नील-

वर्णतया प्रकाशते शोभते वा । एकदेशसाम्यात्
तथात्वम् ।) नीलसिन्दुवारवृक्षः । इति राज
निर्घण्टः ॥ (नीलसिन्दुवारशब्देऽस्या गुणादयो
व्याख्येयाः ॥)

**कपिकोलिः**, पुं, (कपीनां प्रियः कोलिः ।) कोलि-

विशेषः । इति रत्नमाला । शेयाकुल इति भाषा
॥

कपितैलञ्च सङ्ख्यातं तथा च कपिनामकः" ॥)

**कपित्थः**, पुं, (कपिः तिष्ठति फलप्रियत्वात् लोभात्

वा यत्र । कपि + स्था + कः । पृषोदरादित्वात्
सलोपे साधुः ।) वृक्षविशेषः । कत्वेल इति भाषा
तत्पर्य्यायः । दधित्थः २ ग्राही ३ मन्मथः ४
दधि-
फलः ५ पुष्पफलः ६ दन्तशठः ७ । इत्यमरः
२ । ४ । २१ ॥ कगित्थः ८ । इति भरतः ॥
मालूरः
९ मङ्गल्यः १० नीलमल्लिका ११ ग्राहिफलः १२
चिरपाकी १३ ग्रन्थिफलः १४ कुचफलः १५
क-
पीष्टः १६ गन्धफलः १७ दन्तफलः १८
करभव-
ल्लभः १९ काठिन्यफलः २० करञ्जफलकः २१
।
अस्यामफलगुणः । अम्लत्वम् । उष्णत्वम् ।
कफ-
नाशित्वम् । ग्राहित्वम् । वायुवर्द्धकत्वम् । कण्ठ-
रोगजिह्वाधिकजडताकारित्वम्। त्रिदोषवर्द्धक-
त्वम् । विषहरत्वम् । रोचकत्वञ्च । तत्पक्वफल-
गुणाः । दोषत्रयहरत्वम् । मधुराम्लरसत्वम् ।

:गुरुत्वम् । श्वासवभिश्रमक्लमहरत्वम् । हिक्काप-

नोदक्षमत्वम् । ग्राहित्वम् । रुचिप्रदत्वम् । ततः सर्व्वदा सेव्यम् । इति राजनिर्घण्टः ॥
"कपित्थमामं कण्ठघ्नं विषघ्नं ग्राहि वातलम् ।
मधुराम्लकषायत्वात् सौगन्ध्याच्च रुचिप्रदम्" ॥
इति राजवल्लभः ॥ (तथा च चरके ॥
"कपित्थं विषकण्ठ्यघ्नमामं संग्राहि वातलम् ॥
मधुराम्लकषायत्वात् सौगन्ध्याच्च रुचिप्रदम् ।
परिपक्वं सदोषघ्नं विषघ्नं ग्राहि गुर्व्वपि" ॥
"कुशद्वीपेश्वरस्य राज्ञो ज्योतिष्मत्संज्ञकस्य सप्त-
पुत्राणामेकतमः । तद्वर्षमपि तन्नाम्ना ख्यातम् ।
तद्विवरणन्तु विष्णुपुराणे २ यांशे ४ अध्याये द्रष्टव्यम्")

**कपित्थत्वक्**, क्ली, (कपित्थस्य मालूरस्य त्वगिव त्वग् यस्य ।) एलबालुकम् । इति राजनिर्घण्टः ॥ (एलवालुकशब्देऽस्य विशेषगुणा ज्ञातव्याः ॥)

**कपित्थपर्णी**, स्त्री, (कपित्थस्य पर्णमिव पर्णं पत्रं यस्याः । कपित्थपर्ण + गौरादित्वात् ङीष् ।) वृक्षविशेषः । कपित्थानीति ख्याता । तत्पर्य्यायः ।
विरजा २ सुरसा ३ चित्रपत्रिका ४ । इति रत्न-माला ॥

**कपित्थास्यः**, पुं, (कपित्थवत् कपित्थफलवत् वर्त्तु-लाकारं आस्यं मुखं यस्य ।) वानरविशेषः । तत्प-
य्यायः । गोलाङ्गूलः २ दधिशोणः ३ नगाटनः ४ ।
इति त्रिकाण्डशेषः ॥

**कपिध्वजः**, पुं, (कपिर्हनूमान् ध्वजे यस्य सः । प्रतिज्ञा-पालनपरतन्त्रेन महावीरेण हनूमताधिष्ठित-ध्वजत्वात् वानरलाञ्छनध्वजत्वाद्वातथात्वम् ।)
अर्ज्जुनः । इति त्रिकाण्डशेषः ॥
(यथा गीतायाम् । १ । २० ।
"अथ व्यवस्थितान् दृष्ट्वा धार्त्तराष्ट्रान् कपिध्वजः" ॥)

**कपिनामा**, [न्] पुं, (कपेर्नामैव नाम यस्य ।) सि-

५६ । इलच् । पश्चान्तादेशः ।) मुनिविशेषः । स तु ज्ञानभक्तिसांख्ययोगप्रचारार्थभगवदतारः । कर्द्द-मप्रजापतेरौरसाद्देवहूतिगर्भजातः । इति श्री-भागवतम् ॥ (यथा गीतायां १० । २६ ।
"गन्धर्ब्बाणां चित्ररथः सिद्धानां कपिलो मुनिः" ॥
सगरराजसन्ततिध्वंसकारी रसातलस्थः कपिलो मुनिः केषाञ्चिन्मते साङ्ख्ययोगप्रचारकर्त्तान ।
अयन्तु अपरः कश्चित् स्वनामख्यातो मुनिः ।
एतदर्थे प्रमाणं यथा, रघुः ३ । ५० ।
"अतोऽयमश्वः कपिलानुकारिणा
पितुस्त्वदीयस्य मयापहारितः" ॥)
अग्निः । कुक्कुरः । इति हेमचन्द्रः ॥ सिह्लकनाम-गन्धद्रव्यम् । इति रत्नमाला ॥ पिङ्गलवर्णः । तद्-युक्ते त्रि । इत्यमरः । १ । ५ । १६--१९ ॥ नीलपीतः ।
कपिलः । इति रभसः ॥ "कपिलो रोचनाच्छविरि-त्यन्ये" । इतिभरतः ॥ (यथा, महाभारते ३ । ३ । २४ ।
"अनन्तः कपिलो भानुः कामदः सर्व्वतोमुखः" ॥
महादेवः । यथा तत्रैव १३ । १७ । ९७ ।
"कपिलः कपिशः शुक्लः आयुश्चैव परोऽपरः" ॥
विष्णुः । यथा तत्रैव १३ । १४९ । १०९ ।
"सनात्सनातनतमः कपिलः कपिरव्ययः" ॥
नागविशेषः । यथा, हरिवंशे ३ । ११४ ।
"शङ्खश्च शङ्खपालश्च कपिलो वामनस्तथा" ॥
दानवभेदः । यथा तत्रैव ३ । ८२ ।
"अयोमुखः शम्बरश्च कपिलो वामनस्तथा" ॥)

**कपिलद्युतिः**, पुं, (कपिला रक्ता पिङ्गिलवर्णा वा द्युतिः यस्य ।) सूर्य्यः । इति शब्दचन्द्रिका ॥

**कपिलद्राक्षा**, स्त्री, (कपिला द्राक्षा ।) द्राक्षाविशेषः ।
तत्पर्य्यायः । मृद्वीका २ गोस्तनी ३ कपिलफला ४ अमृतरसा ५ दीर्घफला ६ मधुवल्ली ७ मधुफला ८ मधुली ९ हरिता १० हारहारा ११ सुफला १२ मृद्वी १३ हिमोत्तरा १४ पथिका १५ हेमवती १६ शतवीर्य्या १७ काश्मरी १८ । अस्या गुणाः । मधुरत्वम् । शीतत्वम् । हृद्यत्वम् । मदहर्ष-दातृत्वम् । दाहमूर्च्छाज्वरश्वासतृष्णाहृल्लासना शित्वञ्च । इति राजनिर्घण्टः ॥ (मृद्वीकाशब्दे-ऽस्या गुणादयो ज्ञातव्याः ॥)

**कपिलद्रुमः**, पुं, (कपिलः कपिलवर्णो द्रुमः ।) काक्षी-नामसुगन्धिकाष्ठम् । इति शब्दचन्द्रिका ॥

**कपिलाधारा**, स्त्री, (कपिलानां धारा इव दुग्धधारा-

१ । ३ । ४ ॥ भस्मगर्भा शिंशपा । रेणुकानाम गन्धद्रव्यम् । इत्यमरः । २ । ६३--१२० ॥
(यथाह राजवल्लभः ।
"रेणुका राजपुत्री च नन्दिनी कपिला द्विजा ।
भस्मगन्धा पाण्डुपुत्री स्मृता कौन्ती हरेणुका" ॥
अस्या गुणादिकं रेणुकाशब्दे द्रष्टव्यम् ॥) गो-विशेषः ॥ इति हेमचन्द्रः ॥ सा तु स्वर्णवर्णा । इति
पुराणम् ॥ (यथा, महाभरते ३ । ८४ । ८२ ।
"कपिला सहवत्सा वै पर्ब्बते विचरत्युत" ॥
दक्षकन्या । यथा, महाभारते १ । ६५ । १२ ॥
"क्रोधा प्राधा च विश्वा च विनता कपिला मुनिः" ॥
कपिलवर्णयोगात् । अनुदात्तत्वाभावात् वर्णा-दिति न ङीप् ।) गृहकन्या । शिंशपा । राजरीतिः इति राजनिर्घण्टः ॥ नदीविशेषः । यथा,
"कज्जला चलशैलात्तु पूर्ब्बस्मिन् शुभ्रपर्ब्बतः ।
शच्या सह पुरा रेमे यत्र शक्रः सुरेश्वरः ॥
तत्पूर्ब्बस्यां महादेवी नदी कपिलसंज्ञिता ।
तस्यां स्नात्वा नरो गङ्गास्नानजं फलमाप्नुयात्" ॥
इति कालिकापुराणे ८१ अध्यायः ॥
(तीर्थविशेषः ।
यथा, महाभारते ३ । ८३ । ४५ ।
"कपिलातीर्थमासाद्य ब्रह्मचारी समाहितः ।
तत्र स्नात्वार्च्चयित्वा च पितॄन् स्वान् दैबतान्यपि ।
कपिलानां सहस्रस्य फलं विन्दति मानवः" ॥
कपिलानां पयस्विनीधेनूनाम् इत्यर्थः ॥ पिङ्गल-वर्णा । यथा, विष्णुपुराणे २ यांशे । ४ । ३१ ।
"कपिलाश्चारुणाः पीताः कृष्णाश्चैव पृथक् पृथक्" ॥
कपिला कन्या नोपयन्तव्या यदुक्तं मनुना ३ । ८ ।
"नोद्वहेत्कपिलांकन्यां नाधिकाङ्गीं न रोगिणीम्" ॥)

**कपिलाक्षी**, स्त्री, (कपिलं अक्षि तद्वत् पुष्पं यस्याः ।) मृगेर्व्वारुः । कपिलशिंशपा । इति राजनिर्घण्टः ॥

**कपिलाश्वः**, पुं, (कपिलाः कपिलवर्णाः अश्वाः यस्य ।) इन्द्रः । इति त्रिकाण्डशेषः ॥

**कपिलोमफला**, स्त्री, (कपिलोमस्वपि फलति कण्डू-

ह्लकः । इति रत्नमाला ॥ (स्वार्थे कन् प्रत्ययेनास्य प्रमाणमुक्तं भावप्रकाशे यथा, -- "कपितैलञ्च संख्यातं तथा च कपिनामकः" ॥)

**कपिपिप्पली**, स्त्री, (कपिः कपिवत् रक्तवर्णा पिप्प-

लीव रक्तवर्णपिप्पलीतुल्येति यावत् ।) रक्ता-पामार्गः । इति वैद्यकम् ॥ सूर्य्यावर्त्तवृक्षः । इति रत्नमाला ॥

**कपिप्रभा**, स्त्री, (कपिष्वपि प्रभा निजप्रभूतगुण-

प्रसारणं यस्याः । कपीनामपि कण्डूयनादस्या-स्तथात्वम् ।) कपिकच्छुः । इति शब्दरत्नावली ॥

**कपिप्रभुः**, पुं, (कपीनां हनूमदादीनां प्रभुः

नियन्ता ।) रघुनाथः । इति शब्दरत्नावली ॥ (वानरराजः बाली सुग्रीवश्च ॥)

**कपिप्रियः**, पुं, (कपीनां प्रियः ।) आम्रातकः । इति

राजनिर्घण्टः ॥ कपित्थः । इति जटाधरः ॥

**कपिरथः**, पुं, (कपिर्हनूमान् रथ इव वहनकारी

वाहनं वा यस्य ।) श्रीरामः । इति शब्दरत्ना-वली ॥ (कपिः महावीरः हनूमान् रथे यस्य इति व्युत्पत्त्या कपिलाञ्छितध्वजः अर्ज्जुनः ॥)

**कपिलः** पुं, (कमु कान्तौ "कमेः पश्च" । उणां १ ।

सदृशी शुद्धा धारा यस्याः । यद्वा कपिलानां दुग्धधाराभिः सम्भूता निर्म्मला धारा यस्याः । संज्ञायां ङ्यापोरिति पाणिनिसूत्रानुसारेण ह्रस्वः ।) स्वर्णदी । तीर्थभेदः । इति हेमचन्द्रः ॥

**कपिलशिंशपा**, स्त्री (कपिला रक्तपीतमिश्रितवर्णा

शिंशपा ।) शिशपावृक्षविशेषः । तत्पर्य्यायः । कपिला २ पीता ३ सारिणी ४ कपिलाक्षी ५ भस्मगर्भा ६ कुशिंशपा ७ । अस्या गुणाः । तिक्त-त्वम् । शीतवीर्य्यत्वम् । आमयवातपित्तज्वरच्छ-र्द्दिहिक्कानाशित्वञ्च इति राजनिर्घण्टः ॥

**कपिला**, स्त्री, (कपिलो वर्णोऽस्त्यस्याः अर्श आद्यच् ।

टाप च ।) पुण्डरीकनामदिग्गजपत्नी। इत्यमरः ।

प्रदानाय प्रभवति या ।) कपिकच्छूः । इति राज-निर्घण्टः ॥ (शूकशिम्बीशब्देऽस्या गुणा ज्ञेयाः ॥)

**कपिलोमा**, स्त्री, (कपिलोमवत् लोममञ्जरी यस्याः ।)

रेणुका । इति राजनिर्घण्टः ॥ (विस्तृतिस्तु रेणुका शब्द द्रष्टव्या ॥)

**कपिलोहं**, क्ली, (कपिरिव कपिवर्णतुल्यं लोहम् ।)

पित्तलम् । इति हेमचन्द्रः ॥ (पित्तलशब्देऽस्य गुणा ज्ञातव्याः ॥)

**कपिल्लिका**, स्त्री, (कपिवर्णा वल्लिका । पृषोदरा-

दित्वात् वलोपे साधुः ।) गजपिप्पली । इति रत्नमाला ॥ (गजपिप्पलीशब्देऽस्या गुणा ज्ञेयाः ॥)

**कपिवक्त्रः**, (कपेर्वानरस्य वक्त्रमिव वक्त्रं यस्य भागि-

नेयपर्ब्बतमुनिशापप्रभावात् मातुलस्य देवषेस्तथा-त्वम् ।) नारदः । इति त्रिकाण्डशेषः ॥ (यथा हि नारदस्य कपिवक्त्रत्वं जातम् तदुच्यते ।

पुरा किल मातुलभागिन्यौ द्वावृषिसत्तमौ

नारदपर्ब्बतौ मानुषेषु सम्प्रीत्या विहर्त्तुकामौ देवलोकादिहागतवन्तौ। आगत्य च सृञ्जयं राजानमभ्येत्य तद्राज्ये ऊषतुः । आसीच्च

:किलानयोः समयः शुभमशुभं वा हृदि जातं
सङ्कल्पं परस्परेण कथनीयमिति । अथ कदाचित्
राजा तावभ्युपेत्य स्वसुतां तदाराधनाय नियो-
जितवान् । अथ गच्छति काले नारदस्तु कन्दर्प-
बाणवशगः राजदुहितरि मनो निदधे । धर्म्म-
विदपि नारदः व्रीडमानः तीव्रमिदं मनोभावं
भागिनेयाय न शशंस । भागिनेयः पर्ब्बतस्तु इङ्गि-
तादिभिर्मातुलं कामार्त्तं वीक्ष्य समयभङ्गादति-
क्रुद्धः "इयं नृपसुता तव भार्य्या भविष्यति त्वमपि
वानरमूर्त्तिधरोऽत्र विचरिष्यति" इति तं शश-
वान् । एतच्छापात् खलु नारदो वानरमुख
आसीत् इति पौराणिकी कथा अत्र अनुसन्धेया ॥
विस्तृतिस्तु महाभारते शान्तिपर्ब्बणि ३० अध्याये
द्रष्टव्या ॥)

**कपिवल्ली**, स्त्री, (कपिरिव कपिलोमसदृशी वल्ली ।)
गजपिप्पली । इत्यमरः । १ । ५ । १६ ॥

**कपिशः** पुं, (कपिः वर्णविशेषः अस्त्यस्य कपिनामा-
स्यास्ति वा लोमादित्वात् शः ।) श्यावः । कृष्ण-
पीतमिश्रितवर्णः । तद्युक्ते त्रि । इत्यमरः १ । ५ । १६ ॥
(यथा, रघुः १२ । २८ ।
"सन्ध्याभ्रकपिशस्तस्य विराधो नाम राक्षसः ।
अतिष्ठन्मार्गमावृत्य रामस्येन्दोरिव ग्रहः" ॥
सर्व्ववर्णमयत्वात् शिवः । यथा, महाभारते १३ ।
शिवसहस्रनामकीर्त्तने १७ । ९७ ।
"कपिलः कपिशः शुक्लः आयुश्चैव परोऽपरः" ॥)
सिह्लकनाम गन्धद्रव्यम् । इति मेदिनी ॥

**कपिशाञ्जनः**, पुं, (कपिशं अञ्जनं कपिशयुक्तं अञ्जनं
वा यत्र । अञ्जनस्य कृष्णवर्णतया तस्य श्वेतवर्णत्वाच्च
एवमुच्यते ।) शिवः । इति त्रिकाण्डशेषः ॥

**कपिशापुत्त्रः** पुं, (कपिशायाः मदोन्मत्तायाःपिशाच्याः
पुत्त्रः ।) पिशाचः । इति शब्दमाला ॥

**कपीतनः**, पुं, (कपीनां ईं लक्ष्मीं तनोति विस्तारय-
तीति । कपि + ई + तन् + पचाद्यच् । कपीनां
कपेर्वर्णस्य वा तनः । अन्येषामपीति । ६ । ३ ।
१३७ । दीर्घः ।) आम्रातकवृक्षः । गर्द्दभाण्डवृक्षः ।
शिरीषवृक्षः । इत्यमरः । २ । ४ । २७ ॥ अश्वत्थ-
वृक्षः । इति मेदिनी । गुवाकवृक्षः । विल्ववृक्षः ।
इति शब्दरत्नावली ॥ (आम्रातकशब्दे शिरीष-
शब्दे अश्वत्थशब्दे विल्वशब्दे चास्य गुणादयो
ज्ञातव्याः ॥)

**कपीन्द्रः**, पुं, (कपिश्चासौ इन्द्रश्चेति कपिरिन्द्र इव
इति वा ।) हनूमान् । इति शब्दरत्नावली ॥
(कपीनां वानराणामिन्द्रः । सुग्रीवः । बाली ।
इति रामायणम् ॥ विष्णुः । यथा, महाभारते ।
१३ । बिष्णुसहस्रनामकीर्त्तने १४९ । ६६ ।
"शरीरभूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः" ॥)

**कपीष्टः**, पुं, (कपीनां इष्टः प्रियः ।) राजादनीवृक्षः ।
कपित्थः । इति राजनिर्घण्टः ॥ (कपित्थशब्देऽस्य
गुणादय उक्ताः ॥)

**कपोतः**, पुं, (को वायुः पोतः नौरिवास्य । यद्वा कवृ
वर्णे + "कवेरोतच् पश्च" । उणां । १ । ६३ ।
इति ओतच् + वस्य पश्च ।) गृहकपोतः । पायरा
इति भाषा । तत्पर्य्यायः । कलरवः २ पारावतः
३ । इत्यमरः । २ । ५ । १४ ॥ पारापतः ४ छेद्यः
५ रक्तलोचनः ६ । इति रभसः ॥ गृहकुक्कुटः ७ ।
यथा, --
"मार्जाररक्षिते दुःखं यादृशं गृहकुक्कुटे" ।
इति प्रयोगात् इति सारसुन्दरी ॥
(यथा, रामायणे । ५ । ९१ । ४ ।
"श्रूयते हि कपोतेन शत्रुः शरणमागतः ।
अर्च्चितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः" ॥)
वनकपोतः । घुघु इति भाषा । तत्पर्य्यायः । चित्र-
कण्ठः २ । इति मेदिनी ॥ कोकदेवः ३ धूसरः ४
धूम्रलोचनः ५ दहनः ६ अग्निसहायः ७ भीषणः
८ गृहनाशनः ९ । तन्मांसगुणाः । वीर्य्यबल-

"सर्व्वदोषहरस्तेषां भेदाशी मलदूषकः ।
कषायस्वादुलवणो गुरुः काणकपोतकः" ॥
इति सुश्रुतः ॥)

**कपोतकं**, क्ली, (कपोत इव कपोतवर्नवत्कायति
प्रकाशते । कै + कः ।) सौवीराञ्जनम् । इति राज-
निर्घण्टः ॥

**कपोतचरणा**, स्त्री, (कपोतचरणः चरणाकारो
अस्त्यस्याः ।) नलीनामगन्धद्रव्यं । इति जटाधरः ॥

**कपोतपालिका**, स्त्री, (पालयति इति । पाल
रक्षणे + कर्त्तरि ण्वुल् । कपोतानां पालिका
कपोतान् पालयति इति वा कर्म्मण्यण् ।) विटङ्कः ।
सौधादिप्रान्तकाष्ठादिरचितपक्षिस्थानम्। इत्य-
मरः । २ । २ । १५ ॥ पायरार खोप इति भाषा ॥

**कपोतपाली**, स्त्री, (कपोतान् पालयति इति । पाल
कर्म्मण्यण् ङीप् च । केचित्तु पाल + अच् गौरादि-
त्वात् ङीष् ।) कपोतपालिका । इति हलायुधः ॥
(यथा माघे ३ । ५१ ।
"चिक्रंसया कृत्रिमपत्रिपङ्क्तेः
कपोलपालीषु निकेतनानाम्" ॥)

**कपोतवङ्का**, स्त्री, (कपोतो वञ्च्यते प्रतार्य्यतेऽनया ।
वन्च + करणे घञ् कुत्वं टाप् च ।) ब्राह्मीवृक्षः ।
इति राजनिर्घण्टः ॥ (यथा सुश्रुते ।
"कपोतवङ्कामूलं हि पिबेदम्लसुरादिभिः" ॥)

**कपोतवर्णी**, स्त्री, (कपोतस्य वर्ण इव वर्णो यस्याः
गौरादित्वात् ङीष् ।) सूक्ष्मैला । इति राज-
निर्घण्टः ॥ (सूक्ष्मैलाशब्देऽस्या विशेषो ज्ञेयः ॥)

**कपोतवाणा**, स्त्री, (कपोतपाद इव यो वाणः तद्वदा-
कारोऽस्याः ।) नलिकानामगन्धद्रव्यम् । इति राज-
निर्घण्टः ॥

**कपोतसारं**, क्ली, (कपोतः कपोतवर्ण इव सारः कृष्ण-
वर्णो यत्र ।) स्रोतोऽञ्जनम् । इति राजनिर्घण्टः ॥

**कपोताङ्घ्रिः**, स्त्री, (कपोतस्य अङ्घ्रिरिव ।) नलीना-
मगन्धद्रव्यम् । इत्यमरः । २ । ४ । १२१ ॥

**कपोताभः**, पुं, (कपोतस्य आभा इव आभाऽस्य ।)
कपोतवर्णः । इति हेमचन्द्रः ॥ (मूषिकभेदः ।
"मूषिकश्च कपोताभस्तथैवाष्टादश स्मृताः" ।
इति सुश्रुतः ॥)

**कपोतारिः**, पुं, (कपोतानां अरिः शत्रुः ।) श्येन-

**कपिशी**, स्त्री, (कपिश इति वर्णवाचितया ङीष् ।)

माधवी । मदिरा । इति मेदिनी जटाधरश्च ॥
(हलायुधमतेऽस्य क्लोवत्वमपि दृश्यते ॥)

**कपिशीका**, स्त्री, (कपिश + स्वार्थे बाहुलकात्

ईकन् टाप् च ।) मदिरा । इति त्रिकाण्डशेषः ॥

**कपिशीर्ष**, क्ली, (कपीनां प्रियस्थानं शीर्षं वृक्ष-

प्राकारादीनां शिर्षदेश एव कपिप्रियत्वात् प्रसि-
द्धः । शाकपार्थिवादित्वात् समासः ।) प्राकारा-
ग्रम् । तत्पर्य्यायः ॥ खोडकशीर्षकम् २
क्रयशीर्षम्
३ । इति त्रिकाण्डशेषः ॥

**कपिशीर्षकं**, क्ली, (कपीनां शीर्षवर्णवत् कायति

प्रकाशते । कै + कः ।) हिङ्गुलम् । इति शब्द-
चन्द्रिका ॥ (हिङ्गुलशब्देऽस्य गुणादयो
व्याख्येयाः ॥)

**कपीकच्छुः**, पुं, (कपिकच्छुरिति संज्ञायां वादीर्घः ।)

कपिकच्छुः । इति शब्दरत्नावली ॥

**कपीज्यः**, पु, (कपिभिर्वानरैरतिप्रियत्वात् इज्यते

पूज्यते । कपि + यज् + क्यप् ।) क्षीरिकावृक्षः ।
इति जटाधरः ॥ (रामचन्द्रः । इति व्युत्पत्त्यर्थः
॥)

**कपीतः**, पुं, (कं जलं तत्तुल्यश्वेतवर्णं अपि इतः

प्राप्तः अपेरल्लोपः । यद्वा कपिभिरितः प्रियत्वेन
प्राप्तः ।) श्वेतवुह्नावृक्षः । इति रत्नमाला ॥

वृद्धिकारित्वम् । स्वादुत्वम् ।
कफपित्तास्रनाशित्वञ्च ।
इति राजनिर्घण्टः ॥ मधुरत्वम् । शीतत्वम् ।
कषा-
यत्वम् । वातपित्तनाशित्वम् ।
सार्षपतैलभर्जनेन
विरुद्धत्वञ्च । इति राजवल्लभः ॥
(अस्य गुणान्तरं यथा, --
"पारावतो गुरुः स्निग्धो रक्तपित्तानिलापहः ।
संग्राही शीतलस्तज्ज्ञैः कथितो वीर्य्यवर्द्धनः" ॥
इति भावप्रकाशः ॥
"कपोतो वृंहणो बल्यो वातपित्तविनाशनः ।
तर्पणः शुक्रजननो हितो नृणा रुचिदः" ॥
इति हारीतः ॥ कपोतविशेषस्य गुणाः ॥ यथा,
--
"गुरुः सलवणः काणकपोतः सर्व्वदोषकृत्" ॥
इति वाभटः ॥
"कषायमधुराः शीता रक्तपित्तनिवर्हणाः ।
विपाके मधुराश्चैव कपोता गृहवासिनः ॥ १ ॥
तेभ्यो लघुतराः किञ्चित् कपोता वनवासिनः ।
शीताः संग्राहिणश्चैव स्वल्पं मृदुतराश्च ते" ॥
२ ॥
इति चरकः ॥

पक्षी । इति शब्दरत्नावली ॥

**कपोलः**, पुं, (कम्पते "कपिगण्डि कटिपटिभ्य ओ-

लच्" । उणां १ । ६७ । इति ओलच् कपि
इति निर्द्देशात् नलोपः । कं सुखं पोलतीति
वा पुलमहत्त्वे कर्म्मण्यण् ।) सृक्वतिर्य्यक्सन्निधि-
भागः । गाल इति भाषा । तत्पर्य्यायः । गण्डः
२ । इत्यमरः । २ । ६ । ९० ॥ गल्लः ३ । इति
राजनिर्घण्टः ॥ (यथा रघुः । ४ । ६८ ।
"तत्र हूणावरोधानां भर्तृषु व्यक्तविक्रमम् ।
कपोलपाटलादेशि बभूव रघुचेष्टितम्" ॥)

**कफः**, पुं, (केन जलेन फलति इति । फल निष्पत्तौ

"अन्येष्वपि" ३ । २ । १०१ । इति डः । केशिरसि
फलति वा प्राग्वड्डः ।) शरीरस्यधातुविशेषः ।
तत्पर्य्यायः । श्लेष्मा २ संघातः ३ सौम्यधातुः ४

:घनः ५ बली ६ । अस्य गुणाः । गुरुत्वम् । सन्धि-
विश्लेषकारित्वम् । मृदुत्वम् । प्रमर्द्दनत्वम् । स्निग्ध-
त्वम् । कटुत्वम् । शीतत्वम् । जडताकारित्वम् ।
शुक्लत्वम् । शीते वसन्ते निशामुखे पूर्ब्बाह्णे भुक्ते
च प्रकोपणत्वम् । इति राजनिर्घण्टः ॥ * ॥ अस्य
प्रकोपहेतुः ।
"गुरुमधुररसातिस्निग्धदुग्धेक्षुभक्ष्य-
द्रवदधिदिननिद्रापूपसर्पिःप्रपूरैः । तुहिनपतन-
काले श्लेष्मणः सप्रकोपः प्रभवति दिवसादौ भुक्त-
मात्रे वसन्ते" ॥ * ॥ तस्य कर्म्माणि ।
"स्तमित्यं म-
धुरास्यता शिशिरता शौक्ल्यं प्रसेको मलप्राचुर्य्यं
स्थिरता रसश्च लवणः कण्डूरतिस्वप्नता । आलस्यं
चिरकारिता कठिनता शोथारुचिस्निग्धता तन्द्रा-
तृप्त्युपदेहकासगुरुता एताः कफोत्था रुजः" ॥ * ॥
अस्य प्रशमताकारणम् ।
"गुरुशीतमृदुस्निग्धमधुरस्थिरपिच्छिलाः ।
श्लेष्मणः प्रशमं यान्ति विपरीतगुणैर्गुणाः" ॥
"रूक्षक्षारकषायतिक्तकटुकव्यायामनिष्ठीवन-
स्त्रीसेवाध्वनियुद्धजागररतिक्रीडापदाघातनम् ।
धूमात्युष्णशिरोविरेकवमनस्वेदोपनाहादिकं
पानाहारविहारभेषजमिदं श्लेष्माणमुग्रं जयेत्" ॥
स च पञ्चविधो यथा, --
"अवलम्बक इत्येकः क्लेदकः श्लेषकोऽपरः ।
बोधकस्तर्पकश्चेति श्लेष्मा पञ्चविधः स्मृतः" ॥ * ॥
एतेषां लक्षणानि यथा, --
"कफधाम्नान्तु शेषाणां यत्करोत्यवलम्बनम् ।
ततोऽवलम्बकाख्यातिं श्लेष्मा प्राप्नोत्युरःस्थितः ॥ १ ॥
आमाशयाश्रितः सोऽन्नक्लेदनात् क्लेदकः स्मृतः ॥ २ ॥
श्लेषकश्लेषणात् सन्धेः स च सन्धौ व्यवस्थितः ॥ ३ ॥
रसनावस्थितस्त्वेष बोधको रसबोधनात् ॥ ४ ॥
संगीतवाद्योऽतिसहिष्णुचित्तः ।
व्यायामशीलो रतलालसोऽसौ
भवेत् कफात्मप्रकृतिर्मनुष्यः ॥
शुक्लाक्षः स्थिरकुटिलातिनीलकेशो
लक्ष्मीवान् जलदमृदङ्गसिंहघोषः ।
सुप्तः सन् सकमलहंसचक्रवाकान्
सम्पश्येदपि च जलाशयान् मनोज्ञान् ॥
रक्तान्तनेत्रः सुविभक्तगात्रः
स्निग्धच्छविः सत्त्वगुणोपपन्नः ।
क्लेशक्षमोमानयिता गुरूणां
ज्ञेयो वलासप्रकृतिर्मनुष्यः ॥
दृढशास्त्रमतिः स्थिरमित्रधनः
परिगण्य चिरात् प्रददाति बहु ।
परिनिश्चितवाक्यपदः सततं
गुरुमानकरश्च भवेत् स सदा ॥
ब्रह्मरुद्रेन्द्रवरुणैः सिंहाश्वगजगोवृषैः ।
तार्क्षहंससमानूकाः श्लेष्मप्रकृतयो नराः" ॥
इति सुश्रुतश्च ॥

श्लेष्मस्थानान्यत ऊर्द्ध्वं तक्ष्यामः । तत्रामाशय-

पित्ताशयस्योपरिष्टात्
तत्प्रत्यनीकत्वादूर्ध्वगतित्वा-
त्तेजसश्चन्द्र इवादितस्य स चतुर्व्विधस्याहारस्या-
धारः । स च तत्रौदकैर्गुणैराहारः प्रक्लिन्नो
भिन्नसंघातः सुखजरश्च भवति ।
"माधुर्य्यात् पिच्छिलत्वाच्च प्रक्लेदित्वात्तथैव च ।
आमाशये सम्भवति श्लेष्मामधुरशीतलः" ॥

स तत्रस्थ एव स्वशक्त्या शेषाणां श्लेष्मस्थानानां

शरीरस्य चोदककर्म्मणानुग्रहं करोति । उरस्थः-
स्त्रिकसन्धारणमात्मवीर्य्येणान्नरससहितेन हृद-
यावलम्बनं करोति । जिह्वामूलकण्ठस्थो जिह्वे-
न्द्रियस्य सौम्यत्वात् सम्यग्रसज्ञाने वर्त्तते । शिरस्थः
स्नेहसन्तर्पणाधिकृतत्वादिन्द्रियाणामात्मवीर्य्येणानु-
ग्रहं करोति । सन्धिस्थस्तु श्लेष्मा सर्व्वसन्धि-
संश्लेषात् सर्व्वसन्ध्यनुग्रहं करोति ॥ भवति चात्र ।
"श्लेष्मा श्वेतो गुरुः स्निग्धः पिच्छिलः शीत एव च ।
मधुरस्त्वविदग्धः स्याद्विदग्धो लवणः स्मृतः" ॥)
तस्याविकृतस्य कर्म्म ।
"स्नेहो बन्धः स्थिरत्वञ्च गौरवं वृषता बलम् ।
क्षमा धृतिरलोभश्च कफकर्म्माविकारजम् ॥ * ॥
पृषोदरादित्वात् साधुः ।) कफोणिः । इति
हेमचन्द्रः ॥

**कफवर्द्धनः**, पुं, (कफं कफजनितं विकारं वर्द्धयतीति ।
कफ + वृध् + णिच् + ल्युः ।) पिण्डीतगरवृक्षः ।
इति त्रिकाण्डशेषः ॥ श्लेष्मवृद्धिकारके त्रि । इति
वैद्यकं ॥
(दिवास्वप्नाव्यायामालसमधुराम्ललवण-
शीतस्निग्धगुरुपिच्छिलाभिष्यन्दिहायनकयवैन्न-
धेत्कटमाषमहामाषगोधूमतिलपिष्टविकृतिदधि-
दुग्धकृशरापायसेक्षुविकारानुपौदकमांसवसाविस-
मृणालकशेरुकशृङ्गाटकमधुरवल्लीफलसमशनाध्य-
शनप्रभृतिभिः श्लेष्माप्रकोपमापद्यते ॥
"सशीतैः शीतकाले च वसन्ते च विशेषतः ।
पूर्ब्बाह्णे च प्रदोषे च भुक्तमात्रे प्रकुप्यति" ॥
इति सुश्रुतः ॥)

**कफविरोधि**, क्ली, (कफं विशेषेण रुणद्धीति ।
कफ + वि + रुध् + णिनिः ।) मरिचम् । इति
राजनिर्घण्टः ॥ (श्लेष्मनाशके, त्रि । मरिचशब्दे-
ऽस्य गुणा ज्ञेयाः ॥)

**कफान्तकः**, पुं, (कफस्य अन्तकः नाशकः । यद्वा ।
कफं अन्तयतीति । कफ + अन्त + करोत्यर्थे
णिच् + ण्वुल् ।) वर्व्वुरवृक्षः । इति राज-
निर्घण्टः ॥ (अस्य गुणादिकं वर्व्वूरशब्दे द्रष्टव्यम् ॥
कफनाशके, त्रि ॥)

**कफारिः** पुं, (कफस्य अरिः दमयितेत्यर्थः ।) शुण्ठी ।
इति राजनिर्घण्टः ॥ (श्लेष्मनाशके, त्रि । शुण्ठी-
शब्देऽस्य विशेषो ज्ञेयः ॥)

**कफी**, [न्] त्रि, (कफोऽस्त्यस्य । कफ + अस्त्यर्थे ।
"द्वन्द्वोपतापेति" । ५ । २ । १२८ । इनिः ।)
श्लेष्मयुक्तः । तत्पर्य्यायः । श्लेष्मलः २ श्लेष्मणः ३ ।
इत्यमरः । २ । ६ । ६० ॥ गजे पुं । इति सार-
स्वतः ॥

**कफेलूः**, त्रि, (कफं लाति आदत्ते इति । कफ + ला
आदाने + "अन्दू-दृन्फू--जम्बू-कम्बू-कफेलू-कर्कन्धू-
दिधिषु" । उणां १ । ९५ । इति कुप्रत्ययान्तो
निपातितः ।) कफयुक्तः । इति सिद्धान्तकौमुद्या-
मुणादिवृत्तिः ॥ (पुं, श्लेष्मातकवृक्षः ।
"कफेलूः श्लेष्मातकतरौ पुंसीति रूपमञ्जरी" ।
इति "उज्वलदत्तधृतवचनात्' ॥ १ । ९५ ॥)

शिरसि प्रस्थितश्चासौ तर्पको नेत्रतर्पणात् ॥ ५ ॥ ॥ * ॥
अस्य स्थानानि ।
"उरःकण्ठशिरः क्लोमपर्ब्बाण्यामाशयो रसः ।
मेदो घ्राणञ्च जिह्वा च कफस्थानमुरः परम्" ॥ * ॥
(सन्धिसंश्लेषणस्नेहनरोपणपूरणबलस्थैर्य्यकृत् श्लेष्मा पञ्चधा प्रविभक्त उदककर्म्मणानुग्रहं करो-
ति । इति तु प्रकारभेदेनास्य कार्य्यमुक्तम् ॥
अतः परमस्य क्षीणलक्षणमाह ।

श्लेष्मक्षये कक्षतान्तर्दाह आमाशयेतराशय-

शिरसां शून्यता सन्धिशैथिल्यं तृष्णा दौर्ब्बल्यं प्रजागरणञ्च । तत्र स्वयोनिवर्द्धनद्रव्याण्येव प्रती-
कारः ॥ अतःपरमम्यातिवृद्धौ यल्लक्षणं तदाह ॥

श्लेष्मवृद्धौ शौक्ल्यं शैत्यं स्थैर्य्यं गौरवमवसाद-

स्तन्द्रानिद्रासन्ध्यस्थिविश्लेषश्च ॥)
तत्प्रकृतिकस्य लक्षणम् ।
"गम्भीरबुद्धि स्थूलाङ्गः स्निग्धकेशो महाबलः ।
स्वप्ने जलाशयालोकी श्लेष्मप्रकृतिको नरः" ॥ * ॥
(अपरञ्च यथाह हारीतः ।
"सुस्निग्धवर्णः सितनेत्रदीप्तः
श्यामः सुकेशो न च दीर्घरोमा ।
गम्भीरशब्दः श्रुतशास्त्रनिद्रा-
तन्द्राप्रियस्तिक्तकटूष्णभोजी ॥
सुमांसलः स्निग्धरसप्रियश्च

इति सुखबोधः ॥ फेनः । यथा अब्धिकफः इत्यादि ॥

**कफकूर्च्चिका**, स्त्री, (कफं कूर्चति विकृतं करोतीति ।

कफ + कूर्च + विकारे + ण्वुल् + टाप् इत्वञ्च ।) लाला । लाल् थुतु सिक्नि इत्यादि भाषा ॥ तत्पर्य्यायः । सृणीका २ स्यन्दिनी ३ लाला ४ आस्यासवः ५ । इति हेमचन्द्रः ॥

**कफघ्नी**, स्त्री, (कफं कफविकृतिं हन्तीति । कफ +

हन् + टक् + ङीप् ।) हपुषाभेदः । इति राज-निर्घण्टः ॥ (यथा, राजनिर्घण्टे शताह्वादिवर्ग-श्चतुर्थः ।
"प्लीहशत्रुर्विषघ्नी च कफघ्नी चापराजिता" ॥)

**कफणिः**, पुं, स्त्री, (केन सुखेन फणति अनायासेन

सङ्कोचविकोचनत्वं प्राप्नोति स्फुरति वा । फण गतौ, स्फुर सञ्चलने इति वा धातोः इन्

**कफोणिः**, पुं, (कं सुखं स्फोरयति । स्फुर स्फुरणे

सञ्चलने च ण्यन्तात् अच इः । अथवा केन सुखेन फणति स्फुरतीति वा । स्फुर, फण वा + इन् उमयतः पृषोदरादित्वात् साधुः ।) भुजमध्य-ग्रन्थिः । कनुइ इति भाषा ॥ तत्पर्य्यायः । कुर्परः २ । इत्यमरः । २ । ६ । ८० ॥ (कुर्परशब्दे ऽस्य विशेषो ज्ञेयः ॥)

**कब**, ऋ ङ स्तुतौ । वर्णे । इति कविकल्पद्रुमः । (भ्वां-

आत्मं-सकं-सेट्-ऋदित् ।) वर्णः शुक्लादिक्रिया । ऋ अचकाबत् । ङ कबते कविर्विष्णुम् । कबते प्रतिमां चित्रकारः । इति दुर्गादासः ॥

**कबन्धं**, क्ली, (कस्य प्राणवायोः बन्धः आश्रयः । जल-

पानमेव प्राणधारणकारणम् । कदापि प्राण-स्थितिः जलं विना नैव स्यात् । यथा, श्रुतिः ।

:"पञ्चदशाहानि माऽशीः काममपः पिनापोमयः
प्राणो न पिबतस्ते विच्छेत्स्यते" ।) जलम् । इत्य-
मरः । १ । १० । ४ ॥ (यथा, ऋग्वेदे ५ । ८५ । ३ ।
"नीचीनवारं वरुणः कबन्धं प्रससर्ज रोदसी अन्त-
रीक्षम्" ॥)

**कबन्धः** पुं, (कं सुखं बध्यते रुध्यतेऽस्मात् । क + बन्ध
+ घञ् ।) राहुः । रक्षोविशेषः । (यथा, रघुः १२ । ५७ ।
"बधनिर्द्धूतशापस्य कबन्धस्योपदेशतः ।
मुमूर्च्छसख्यं रामस्य समानव्यसने हरौ" ॥
अस्य विवरणादिकमुच्यते । पुरा किल दनुनामा
कश्चिद्दानवः उग्रेण तपसा पितामहं सन्तोषयन्
दीर्घमायुः प्राप्तवान् । प्राप्तदीर्घायुरतिगर्व्वः सुर-
राजेन सह योद्धुं सुरपुरमगच्छत् । शक्रस्तु रण-
भूमिगतः प्रमुक्तेन वज्रेणास्य सक्थिनी शिरश्च
शरीरमध्येप्रावेशयत् । न त्वसौ पितामहवरप्रभा-
वतया प्राणान् मुमोच । अथ स एवं विकृत-
विग्रहोऽनाहारादितया क्लिश्यमानो बहुधा या-
चमानः सुरपतिं प्रसादयामास । इन्द्रस्तु प्रसन्नो यो-
जनमायतौ बाहू तीक्ष्णदंष्ट्रञ्च वदनमस्मै वक्षसि
प्रादात् । तदा प्रभृत्येवासौ वने विचरन् सुदीर्घ-
बाहुभ्यां वनजादीन् प्राणिनो गृहीत्वा भक्षयन्
विचचार । अथ गच्छति काले दशरथात्मजो
रामः ससीतालक्ष्मणः पितृसत्यपालनार्थं वने भ्रम-
न्नमुना कबन्धेन सम्प्राप्तः । प्रभूतबलशालिनान्नेन
गृहीतोऽपि रामः स्वखड्गेनैनं व्यापादयामास ।
अथ रामहस्तनाशात् प्राप्तशापमोचनसमयो-
ऽयं कबन्धः विकृतरूपं विहाय दिव्यमूर्त्तिधरः
स्वर्लोकं ययौ । इति वाल्मीकियरामायणमतम् ।
महाभारतमते तु अयं विश्वावसुनामा गन्धर्व्व
आसीत् ब्राह्मणशापेन राक्षसयोनिं प्राप्तवान् ।
यदुक्तं तत्रैव ३ । २७८ । ४२ ।
"तस्याचचक्षे गन्धर्व्वो विश्वावसुरहं नृप ! ।
प्राप्तो ब्राह्मणशापेन योनिं राक्षससेविताम्" ॥)
उदरम् । इति मेदिनी ॥ (केन वायुना बध्यते
संबध्यते वा । धूमकेतुः । प्रवहवायुनोपचीयमान-
त्वात् तथात्वंतस्य च लोकसुखनाशकत्वं
प्रसिद्धम् ॥)

**कबन्धः**, पुं, क्ली, (केन प्राणवायुना पुनर्बध्यते सम्ब-
इति भरतो द्विरूपकोषश्च ॥

**कम**, उ क ङ स्पृ हि । इति कविकल्पद्रुमः ॥ (चुरां
--आत्मं--सकं--सेट् ।) उ कमित्वा कान्त्वा । क ङ
कामयते । अन्यैर्भ्वादौ पठ्यमानस्याप्यस्य कित्क-
रणं कम ऋत इत्यादिना विहितस्य ञिङो
ज्ञापनार्थं तेन अरे ञिङोऽप्राप्तिपक्षे अचकमत ।
चकमे कमिता इत्यादि सिद्धम् । इति दुर्गा-
दासः ॥

**कम**, उ ङ कान्तौ । इति मुग्धबोधव्याकरणम् ।
(भ्वां-आत्मं-अकं-सेट् ॥)

**कम्**, व्य (कमुकान्तौ णिङभावे विच् ।) जलम् ।
शिरः । सुखम् । मङ्गलम् । पादपूरणम् । इति
शब्दरत्नावली ॥ (यथा ऋग्वेदे । १ । १२३ । ११ ॥
"सुसंकाशा मातृमृष्टेव योषा विस्तन्वं कृणुषे
दृशे कम्" । "अत्र कमिति पादपूरणे अथवा क-
मिति सुखवचनं सुखं यथा भवतीति" भाष्यम् ॥)

**कमठं**, क्ली, (कम + "कमेरठः" । उणां १ । १०२ ।
इति + अठ ।) भाण्डभेदः । तत्तु मुनीनां जल-
पात्रम् । इति मेदिनी ॥

**कमठः** पुं, (के जले मठति वसतीति । क + मठ
वासे + पचाद्यच् ।) कच्छपः । इत्यमरः । १ । १० ।
२१ ॥ (यथा महानाटके ।
"कमठपृष्ठकठोरमिदं धनु-
र्मधुरमूर्त्तिरसौ रघुनन्दनः" ॥
मकठात्कामठं मांसं रामठेन समन्वितम् ।
यदि सर्पिःसमायुक्तं का सुधा वसुधातले" ॥
इत्युद्भटः ॥ * ॥ गुणादयोऽस्य कच्छपशब्दे
ज्ञातव्याः ॥ भगवद्विष्णोर्द्वितीयावतारः । यथा
हटयोगदीपिकायाम् । १ । १० ।
"अशेषतापतप्तानां समाश्रयमठो हठः ।
अशेषयोगयुक्तानामाधारकमठो हटः" ॥)
वंशः । इति शब्दरत्नावली ॥ दैत्यविशेषः । मुनि-
भाजनम् । इति हेमचन्द्रः ॥ शल्लकी इति धरणी ॥
(नृपविशेषः । यथा महाभारते । २ । ४ । २२ ।
कमेर्युच् वा ।) कामुकम् । अभिरूपम् । इति
मेदिनी ॥ (यथा भागवते १ । ९ । ३३ ।
"त्रिभुवनकमनं तमालवर्णं
रविकरगौरवराम्बरं दधाने" ॥)

**कमनः**, पुं, (काम्यतेऽनेन । कमेः + करणे + युच् ।)
कामः । अशोकवृक्षः । इति मेदिनी । ब्रह्मा ॥
इति हेमचन्द्रः ॥

**कमनच्छदः**, पुं, (कमनः कमनीयः छदः पक्षो यस्य ।)
कङ्कपक्षी । इति हेमचन्द्रः ॥

**कमनीयं**, त्रि, (काम्यते यत् कमेः कर्म्मणि अनीयर् ।)
कामनायोग्यम् । तत्पर्य्यायः । चारु २ हारि ३
रुचिरम् ४ मनोहरम् ५ वरुगु ६ कान्तम् ७ अभि-
रामम् ८ बन्धुरम् ९ वामम् १० रुच्यग् ११ सुष-
मम् १२ शोभनम् १३ मञ्जु १४ मञ्जलम् १५
मनोरमम् १६ साधु १७ रम्यम् १८ मनोज्ञम् १९
पेशलम् २० हृद्यम् २१ सुन्दरम् २२ काम्यम् २३
कम्रम् २४ सौम्यम् २५ मधुरम् २६ प्रियम् २७ ।
इति हेमचन्द्रः ॥ (यथा, कुमारे १ । ३७ ।
"आरोपितं यद्गिरिशेन पश्चात्
अनन्यनारीकमनीयमङ्कम्' ॥)

**कमन्धं**, क्ली, (कम् शिरः अन्धं शून्यं यस्य ।) कब-
न्धम् । (कमं कान्तिं जीवनं वा दधाति विदधा-
तीति । कम + धा + ड । पृषोदरादित्वात् साधुः ।)
जलम् । इत्यमरटीकायां रायमुकुटः ॥

**कमरः**, त्रि, (कामयते इति । कम् + "अर्त्ति-कमि-
भ्रमीति" उणां ३ । १३२ । अरश्चित् ।) कामी ।
इत्यणादिकोषः ॥

**कमलं**, क्ली, (कमेः णिङ् भावे वृषादित्वात् कलच् ।
कम् जलं अलति अलंकरोति वा । अल् + अच् ।
अन्तणिजन्तो वा ।) जलजपुष्पविशेषः । तत्पर्य्यायः ।
पद्मम् २ पाथोजम् ३ नलम् ४ नलिनम् ५ अम्भो-
जभ् ६ अम्बुजन्म ७ अम्बुजम् ८ श्रीः ९ अम्बुरु-
हम् १० अम्बुपद्मम् ११ सुजलम् १२ अम्भोरु-
हम् १३ सारसम् १४ पङ्कजम् १५ सरसीरुहम्
१६ कुटपम् १७ पाथोरुहम् १८ पुष्करम् १९
वार्ज्जम् २० तामरसम् २१ कुशेशयम् २२ कञ्जम्
२३ कजम् २४ अरविन्दम् २५ शतपत्रम् २६
विसकुसुमम् २७ सहस्रपत्रम् २८ महोत्पलम् २९
वारिरुहम् ३० सरसिजम् ३१ सलिलजम् ३२

ध्यते मस्तकहीनस्यापि दैवेन प्राणावेशात् जीवतो नरस्येव क्रियाकारित्वशक्तित्वात्तथात्वम्। क + बन्ध + घञ् ।) क्रियायुक्तापमूर्द्धकलेवरम् । इत्यमरः २ । ८ । ११८ ॥ यथा, मार्कण्डेये ८२ । ६३ ।
“कबन्धाश्छिन्नशिरसः खड्गशक्त्यृष्टिपाणयः” ॥
अपि च । “नागानामयुतं तुरङ्गनियुतं सार्द्धं रथानां शतं पत्तीनां दशकोटयो निपतिता एकः कबन्धो रणे । तादृक्कोटिकबन्धनर्त्तनविधौ खेलच्चलत् खे शिरस्तेषां कोटिनिपातने रघुपतेः कोदण्डघण्टारवः” ॥ इति प्राचीनाः ॥

**कबित्थः**, पुं, (कपयस्तिष्ठन्त्यत्र । “सुपिस्थः” इति कः । पृषोदरादित्वात् साधुः ।) कपित्थवृक्षः । इत्यमरटीका ॥ कगित्थः । इत्यमरमालायां पाठः ॥

**कबिलः**, पुं, (कबृवर्णे + इलच् ।) कपिलवर्णः ।

“कक्षसेनः क्षितिपतिः क्षेमकश्चापराजितः ।
काम्बोजराजः कमठः कम्पनश्च महाबलः” ॥)

**कमठी**, स्त्री, (कमठ + पुंयोगादिति जातेरिति वा ङीष् प्रत्ययः ।) कच्छपी । इत्यमरः । १ । १० । २४ ॥
(यथा शान्तिशतके ४ । १३ ।
“इदानीमह्माकं जठरकमठीपृष्ठकठिना-
मनोवृत्तिस्तत् किं व्यसनिविमुखैव क्षपयसि” ॥)

**कमण्डलुः**, पुं, क्ली, (कस्य प्रजापतेः जलस्य वा मण्डः सारः तं लाति आदत्ते । ला + मितद्र्वादित्वात् डुः ।) सन्न्यासिनां मृत्काष्ठादिमयपात्रम् । तत्पर्य्यायः । कुण्डी २ । इत्यमरः ७ । २ । ४६ ॥ करकः ३ ।
(यथा मनुः २ । ६४ ॥
“मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवित्” ॥)
प्लक्षवृक्षः । इति मेदिनी ॥

**कमण्डलुतरुः**, पुं, (कमण्डल्वाकारस्तरुः ।) प्लक्षवृक्षः । इति रत्नमाला ॥

**कमनं**, त्रि, (कम + णिङ्भावे युच् । अनुदात्तश्चेति

पङ्केरुहम् ३३ राजीवम् ३४ । (यथा रघुः । ३ । ३६ ।
“अगच्छदंशेन गुणाभिलाषिणी
नवावतार कमलादिवोत्पलम्” ॥)
अस्य गुणाः शीतलत्वम् । स्वादुत्वम् । रक्तपित्तभ्रमार्त्तिनाशित्वम् । सुगन्धित्वम् । भ्रान्तिसन्तापशान्तिपरमतृप्तिकारित्वञ्च । इति राजनिर्घण्टः ॥
(तथाच भावप्रकाशः ।
“कमलं शीतलं वर्ण्यं मधुरं कफपित्तजित् ।
तृष्णादाहास्रविस्फोटविषवीसर्पनाशनम् ॥
विशेषतः सितं पद्मं पुण्डरीकमिति स्मृतम् ।
रक्तं कोकनदं ज्ञेयं नीलमिन्दीवरं स्मृतम् ॥
धवलं कमलं शीतं मधुरं कफपित्तजित् ।
तस्मादल्पगुणं किञ्चिदन्यद्रक्तोत्पलादिकम्” ॥)

:जलम् । ताम्रम् । क्लोम । औषधम् । इति मे-
दिनी ॥ सारसपक्षी । इत्यमरः । १ । १० । ४० ॥

**कमलः**, पुं, (कमेः + कलच् । यद्वा को वायुः तस्य
अमः गतिः तं लाति आदत्ते । क + अम + ला + कः ।) मृगविशेषः । इति मेदिनी ॥ ध्रुवकभेदः । यथा, सङ्गीतदामोदरः ॥
"उक्तो मलयतालेन लघुमध्ये स्फुरेद्गुरुः ।
सप्तदशाक्षरैर्युक्तः कमलोऽयं भयानके" ॥

**कमला**, स्त्री, (काम्यतेऽसौ कमेः वृषादित्वात् कलच्
कमलं अस्त्यस्याः इति वा । अर्श + आद्यच् । टाप्
च ।) लक्ष्मीः । ("कमला श्रीर्हरिप्रिया" इत्य-
मरः । १ । १२८ ॥) वरस्त्री । इति मेदिनी ॥
स्वनामख्यातनिम्बुकः । कमलालेवु इति भाषा । यथा, --
"रम्भाफलं तिन्तिडीकं कमला नागरङ्गकम् ।
फलान्येतानि भोज्यानि एभ्योऽन्यानि विवर्ज्जयेत्" ॥
इति तन्त्रसारे पुरश्चरणप्रकरणम् ॥
(छन्दोविशेषः । यथा, वृत्तरत्नाकरे ।
"द्विगुणनगणसहितः सगण इह हि विहितः ।
फणिपतिमतिविमला क्षितिप भवति कमलेति" ॥
नर्त्तकीविशेषः । यथा राजतरङ्गिण्याम् ४ । ४२४ ।
"तर्त्तकी कमला नाम कान्तिमन्तं ददर्श तम् ।
असामान्याकृतेः पुंसः सा ददर्श सविस्मया" ॥
पुरीविशेषः । यथा तत्रैव ४ । ४८३ ।
"राजा मह्लाणपुरकृत् चक्रे विपुलकेशवम् ।
कमला सा स्वनाम्नापि कमलाख्यं पुरं व्यधात्" ॥
गङ्गा । यथा काशीखण्डे २९ । ४४ ।
"कमला कल्पलतिका काली कलुषवैरिणी" ॥)

**कमलासनः**, पुं, (कमलमासनमस्य । विष्णोर्नाभि-
पद्मजातत्वात् तथात्वम् ।) ब्रह्मा । इत्यमरः । १ । १ । १७ ॥ (यथा भागवते ५ । २० । ३० ।
"यस्मिन्
वृहत्पुष्करं ज्वलनशिखामलकनकपत्रायुतायुतं भगवतः कमलासनस्याध्यासनंपरिकल्पितम्" ॥
क्ली, कमलाया लक्ष्म्या असनं क्षेपणं दानमि-
त्यर्थः । यथा, शम्भुविरचिते राजेन्द्रकर्णपूरे ५३ ।
"तात्पर्य्यं कमलासनेविचरितं गौरिहितैःपालिता" ॥

**कम्पः**, पुं, (कपि चलने + भावे घञ् ।) गात्रादि-
चलनम् । तत्पर्य्यायः । वेपथुः २ । इत्यमरः १ । ७ ।
३८ ॥ वेपनम् ३ वेपः ४ कम्पनम् ५ । इति राजनि-
र्घण्टः ॥ (यथा विक्रमोर्व्वश्याम् । "मुञ्चति न ताव-
दस्या भयकम्पः कुसुमकोमलं हृदयम्" । "न
कम्पो वायुना विना" । इति वैद्यकम् ॥)

**कम्पनं**, त्रि, (कपि चलनशब्दार्थादिति युच् ।) कम्प-
युक्तः । काँपुने इति भाषा । तत्पर्य्यायः । चल-
नम् २ कम्प्रम् ३ चलम् ४ लोलम् ५ चलाचलम् ६
चञ्चलम् ७ तरलम् ८ पारिप्लवम् ९ परिप्लवम्
१० । इत्यमरः । ३ । १ । ७४ ॥ चपलम् ११
चटुलम् १२ । इति तट्टीका ॥
(यथा महाभारते १३ । १४ । ७२ ।
"हिरण्यकशिपुर्योऽभूद्दानवोमेरुकम्पनः" ॥
यथा सिद्धान्तकौमुद्याम् ॥ "कम्पा कम्पना
शाखा" । पां ३ । २ । १५३ ॥ कपि + भावे + ल्युट् ।)
कम्पे क्ली । इति मेदिनी ॥

**कम्पनः**, पुं, (कम्पयति वेपथुयुक्तं करोति शिशिरे-
णेति यावत् कपि + णिच् + युच् । ल्युर्वा ।) शि-
शिरऋतुः । इति राजनिर्घण्टः ॥
(नृपविशेषः । यथा महाभारते २ । ४ । २२ ।
"काम्बोजराजः कमठः कम्पनश्च महाबलः ।
सततं कम्पयामास यवनानेक एव यः" ॥)

**कम्पलक्ष्मा**, [न्] पुं, (कम्पः चलनं लक्ष्म लक्षणं यस्य ।)
वायुः । इति शब्दरत्नावली ॥

**कम्पाकः**, पुं, (कम्पया चलनेन कायति प्रकाशते
इति । कम्प + कै + कः ।) वायुः । इति हेमचन्द्रः ॥

**कम्पितं**, क्ली, (कपि + भावे + क्तः ।) चलनम् । तत्प-
र्य्यायः । कम्पनम् २ कम्पः ३ वेपनम् ४ वेपथुः ५ ।
इति शब्दरत्नावली ॥ (कपि + कर्त्तरि + क्तः ।)
कम्पयुक्ते त्रि ॥ (यथा रघुः । २ । १३ ।
विधाय कम्प्राणि मुखानि कं प्रति" ॥)

**कम्ब**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां--परं--सकं--
सेट् ।) कम्बति । इति दुर्गादासः ॥

**कम्बरः**, पुं, (कम्ब + अरन् ।) चित्रवर्णः । कर्ब्बूर-
वर्णः । तद्वति त्रि । इति शब्दरत्नावली ॥

**कम्बलं**, क्ली, (कम्यते । इति कमु कान्तौ + कमेवुक्
चेति कलः । कम्बगतौ वृषादित्वात् कलच् वा ।)
जलम् । इति शब्दरत्नावली ॥

**कम्बलः**, पु, (कंकुत्सितं शिरो वा कं सलिलं वा
बलते बल संवरणे सञ्चारणे च अच् । यद्वा
कम्ब + गतौ इति धातोः वृषादित्वात् कलच् ।)
स्वनामख्यातमेषादिलोमरचितवस्त्रासनादि। तत्
पर्य्यायः । रल्लकः २ । इत्यमरः । २ । ६ । ११६ ॥
वेशकः ३ रोमयोनिः ४ रेणुका ५ । इति शब्द-
रत्नावली ॥ प्रावारः ६ । इति जटाधर ॥
(यथा महाभारते ३ । ३ । ५१ ।
"न तथा सुखयत्यग्निर्न प्रावारा न कम्बलाः ।
शीतवातार्द्दितं लोकं यथा तव मरीचयः" ॥)
नागराजः । सास्ना । प्रावारः । कृमिः । इत्यमरः ।
३ । ३ । १९३ । मेदिनी च ॥ उत्तरासङ्गः । इति
मेदिनी ॥ मृगविशेषः । इति जटाधरः ॥
(नागभेदौ । अनयोरेकः अधस्तात् पाताले वासुकि
प्रमुखो निवसति अपरस्तु वरुणदेवसभास्थः ।
यथाक्रमं उदाहरणे द्रष्टव्ये ।
यथा, भागवते ५ । २४ । ३१ ।
"ततोऽधास्तात् पाताले नागलोकपतयो वासु-
किप्रमुखाः शङ्खकुलिकमहाशङ्खश्वेतधनञ्जयधृत-
राष्ट्र शङ्खचूडकम्बलाश्वतरदेवदत्तादयो महाभो-
गिनो महामर्षा निवसन्ति" ॥
यथा महाभारते । २ । ९ । ९ ।
"कम्बलाश्वतरौ नागौ धृतराष्ट्रवलाहकौ" ॥
कम्बलाद्यधिष्ठितप्रयागान्तर्वर्त्तितीर्थविशेषः ।
यथा, महाभारते । ३ । तीर्थयात्रापर्व्वणि ८५ । ७५ ।
"प्रयागं सप्रतिष्टानं कम्बलाश्वतरौ तथा ।
तीर्थं भोगवती चैव वेदिरेषा प्रजापतेः" ॥

**कम्बलिवाह्यकं**, क्ली, (कम्बलः सास्ना अस्ति एषाम्
इति इनिः । कम्बलिभिर्वृषैरुह्यते । वह + कर्म्मणि
ण्यत् स्वार्थे संज्ञायां वा कन् ।) वृषवहनीय-
शकटम् । तत्पर्य्यायः । गन्त्री २ । इत्यमरः ।
२ । ८ । ५२ ॥ गान्त्री ३ । इति तट्टीका ॥

**कम्बिः**, स्त्री, (कमु + बाहुलकात् + विन् । यद्वा

"कमलाया लक्ष्म्या असने क्षेपणे याचकेभ्यो दाने इत्यर्थः । अथच कमलरूपे विष्टरे ब्रह्मणः पद्मा-सनत्वात्" । इति तट्टीका ॥)

**कमलिनी**, स्त्री, (कमलानि सन्त्यत्र । पुष्करादिभ्यो

देशे इति इनिः ।) पद्मिनी । (यथा रघुः ९ । २७ ।
"अभिययुः सरसो मधुसम्भृतां कमलिनीमलि-
नीरपतत्रिणः" ॥) पद्माकरः । इति शब्दरत्ना-
वली ॥ (गङ्गा यथा काशीखण्डे २९ । ४० ।
"कुमुद्वती कमलिनी कान्तिः कल्पितदायिनी" ॥)

**कमलोत्तरं**, क्ली, (कमलमिव उत्तरं । यद्वा कमला-

दुत्तरं उत्कृष्टमिव ।) कुसुम्भपुष्पम् । इत्यमरः ।
२ । ९ । १०६ ॥

**कमा**, स्त्री, (कम णिङभावे बाहुलकात् स्त्रियां

भावे अः । टाप् ।) शोभा । इति राजनिर्घण्टः ॥

**कमिता**, [ऋ] त्रि, (कम + णिङभावे तृच् ।) का-

मुकः । इयमरः । ३ । १ । २३ ॥

"पृक्तस्तषारैर्गिरिनिर्झराणा-
मनोकहाकम्पितपुष्पगन्धी' ॥)

**कम्पिलः**, पुं, (कम्प + इलच् ।) रोचनी । कमला

गुँडि इति भाषा । तस्य रूपान्तराणि
काम्पिल्लः ।
कम्पिल्लः । कम्पीलः । कम्पिल्यः ।
इत्यमरटीकायां
मुकुटादयः ॥

**कम्पिल्लकः**, पुं, (कम्पिल्ल + स्वार्थे + कन् ।) वृक्षवि-

शेषः । कमिला इति देशान्तरभाषा ।
तत्पर्य्यायः ।
रक्ताङ्गः २ रेची ३ रेचनकः ४ रञ्जकः ५
लोहि-
ताङ्गः ६ कम्पिल्लः ७ रक्तचूर्णकः ८ । तस्य
गुणाः ।
विरेचकत्वम् । कटुत्वम् । उष्णत्वम् ।
व्रणकफ-
कासतन्तुकृमिनाशित्वम् । लघुत्वञ्च । इति
राज-
निर्घण्टः ॥ (अस्य तैलगुणाः ।
तुम्बीकोशाम्रदन्ती-
द्रवन्तीश्यामासप्तला
नीलिकाकम्पिल्लकशङ्खिनी-
स्नेहास्तिक्तकटुककषाया अधोभागदोषहराः
क्रि-
मिकफकुष्ठानिलहरा दुष्टव्रणविशोधनाश्च ॥
इति
सुश्रुतः ॥)

**कम्पः**, त्रि, (कपि + नमि-कम्पीति रः ।) कम्पयुक्तः ।

कम्पान्वितः । इत्यमरः । ३ । १ । ७४ ॥
(यथा नैषधे । १ । १४२ ।
"सुताः कमाहूय चिराय चूङ्कतै-

कम्बति प्राप्नोति जानाति वा अन्नादि अनया ।
कम्ब + करणे इन् ।) दर्व्विः । इत्यमरः । २ । ९ ।
३४ ।
हाता इति भाषा ॥ इति मेदिनी । वंशांशः ।
वाँशेर पाव् इति भाषा ॥

**कम्बुः**, पुं क्ली, (कमु + जत्रादयश्चेति निपातनात् ।

साधुः । कमु + उन् वुक्चेति वा ।) शङ्खः ।
इत्यमरः । १ । १० । २३ ॥ (यथा भागवते । ४ । ७
। २० ।
"कम्बब्जचक्रशरचापगदासिचर्म्म-
व्यग्रैर्हिरण्मयभुजैरिव कर्णिकारः" ॥)

**कम्बुः**, पुं, (कम्ब गतौ इति मृगष्वादित्वात् उन्

वुगागमो वा । निपातनात् वा साधुः ॥) वलयम् ।

:(यथा महाभारते ३ । २३२ । ४४ ।

"शतं दासीसहस्राणि कौन्तेयस्य महात्मनः ।
कम्बुकेयूरधारिण्यो निष्ककण्ट्यः स्वलङ्कृताः" ॥)
शम्बूकः । हस्ती । इत्यमरः । ३ । ३ । १३३ ।
मेदिनी च ॥
कर्व्वूरवर्णः । ग्रीवा । नलकम् । इति हेमचन्द्रः ।
फाँपा हाड इति भाषा ॥

**कम्बुका**, स्त्री, (कम्बरिव कायति शोभते प्रकाशते वा । कै + कः टाप् च ।) अश्वगन्धावृक्षः । इति रत्न-
माला । (गुणादयोऽस्या अश्वगन्धाशब्दे ज्ञेयाः ॥)

**कम्बुकाष्ठा**, स्त्री, (कम्बु चित्रवर्णं काष्ठं यस्याः ।) अश्वगन्धावृक्षः । इति राजनिर्घण्टः ॥

**कम्बुग्रीवा**, स्त्री, (कम्बुवत् रेखात्रयशोभिता ग्रीवा ।) कम्ब्वाकृतिरेखात्रययुक्तग्रीवा । इत्यमरः । २ । ६ । ८८ ॥
(कम्बुःशङ्खस्तद्वत्रेखात्रययुक्ता ग्रीवा यस्येति विग्रहे वाच्यलिङ्गः । यथा महाभारते । १ । १५३ । १८ ।
"कम्बुग्रीवः पुष्कराक्षो भर्त्ता युक्तोभवेन्मम" ॥)

**कम्बुपुष्पी**, स्त्री, (कम्बुः शङ्खः तद्वत् शुक्लं पुष्पं यस्याः ।) शङ्खपुष्पीवृक्षः । इति राजनिर्घण्टः । (शङ्खपुष्पो-
शब्देऽस्या गुणा व्याख्येयाः ॥)

**कम्बुमालिनी**, स्त्री, (कम्बुतुल्यपुष्पाणा माला समूहः अस्ति अस्याः ।) शङ्खपुष्पी । इति राजनिर्घण्टः ॥

**कम्बोजः**, पुं, (कम्ब + ओज ।) शङ्खविशेषः । देश-
भेदः । (यथा तन्त्रशास्त्रम् ।
"पञ्चनदं समारभ्य म्लेच्छाद्दक्षिणपूर्ब्बतः ।
कम्बोजदेशो देवेशि ! वाजिराशिपरायणः" ॥)
हस्तिप्रभेदः । इति मेदिनी ॥ (तद्देशवासिनि त्रि ॥)

**कम्ब्बातायी**, [न्] पुं, (कम्बुः शङ्खः स इव आतायी । शङ्खतुल्यशुक्लपूर्ब्बकायत्वास्तथात्वम् ।)
शङ्खचिल्लः ।
इति महाभारतम् ॥

**कम्भारी**, स्त्री, (कं जलं बिभर्त्ति धारयतीति । डु भृ धारणपोषणयोः + कर्म्मण्यण् + ङीप् गौरादि-
त्वात् ङीष् वा ।) गम्भारीवृक्षः । इति शब्दमाला-
स्वम् । खाजाना इति पारस्यभाषा ।
तत्पर्य्यायः ।
भागधेयः २ बलिः ३ । इत्यमरः । २ । ८ । २७ ॥
कारः ४ । इति तट्टीका ॥ प्रत्यायः ५ ।
इति
मेदिनी ॥ * ॥
अथ राज्ञां करग्रहणप्रकारः ।
क्रयविक्रयादिना
लाभादीन् संप्रेक्ष्य राज्ञा करो ग्रहीतव्यः ।
यथा, मनुः । ७ । १२७-१३३ ।
"क्रयविक्रयमध्वानं भक्तञ्च सपरिव्ययम् ।
योगक्षेमञ्च संप्रेक्ष्य बणिजो दापयेत् करान् ॥
यथा फलेन युज्येत राजा कर्त्ता च कर्म्मणां ।
तथावेक्ष्य नृपो राष्ट्रे कल्पयेत् सततं
करान्" ॥ * ॥
राज्ञा राज्यात् वार्षिकः करोऽल्पाल्पं कृत्वा
ग्रहीतव्यः । यथा, --
"यथाल्पाल्पमदन्त्याद्यं
वार्य्योकोवत्सषट्पदाः ।
तथाल्पाल्पो ग्रहीतव्यो राष्ट्राद्राज्ञाब्दिकः
करः" ॥
मूलादधिकयोः पशुहिरण्ययोः
पञ्चाशद्भागरूपः
करो ग्राह्यः ॥ धान्यानां भूम्युत्कर्षापेक्षया
कर्ष-
काणां क्लेशलाघवगौरवापेक्षया च
षष्ठोऽष्टमो
द्वादशो वा भागो राज्ञा ग्रहीतव्यः ।
यथा, --
"पञ्चाशद्भाग आदेयो राज्ञा पशुहिरण्ययोः ।
धान्यानामष्टमो भागः षष्ठो द्वादश एव वा"
॥ * ॥
द्रुमाश्ममधुसर्पिरादीनां
षड्भागो लाभात् ग्रहणीयः । यथा, --
"आददीताथ षड्भागं द्रुमाश्ममधुसर्पिषाम् ।
गन्धौषधिरसानाञ्च पुष्पमूलफलस्य च ॥
पत्रशाकतृणानाञ्च चर्म्मणां वैदलस्य च ।
मृ मयानाञ्च भाण्डानां सर्व्वस्याश्ममयस्य
च" ॥ * ॥
अतिक्षीणधनोऽपि राजा
कृणोति फलपत्रादिभिः वायुपित्तादिदोषं नाश-
यति वा कृञ् हिंसायां "कृञादिभ्यः संज्ञायां
वुन्" । उणां ५ । ३५ । इति वुन् ।) दाडिमवृक्षः ।
राजकरः । पक्षिविशेषः । लङ्काकरञ्जवृक्षः । इति
हेमचन्द्रः ॥ पलाशवृक्षः । इति हारावली ॥
कोविदारवृक्षः । वकुलवृक्षः । करीरवृक्षः ।
नारिकेलास्थि । इति राजनिर्घण्टः । माला इति
भाषा ॥ (यथा, रामायणे ५ । १४ । ४८ ।
"हिरण्मयैश्च करकैर्भाजनैः स्फाटिकैरपि" ॥)

**करकच्छपिका**, स्त्री, (कच्छपस्तदाकृतिर स्त्यस्याः ठन् । करे स्थिता कच्छपिका कच्छपाकारमुद्रा ।)
कूर्म्ममुद्रा । यथा, -- कालिकापुराणे ५६ अध्यायः ॥
"करकच्छपिकां कुर्य्यात् कूर्म्ममन्त्रेण साधकः ।
तत्र संस्कृतपुष्पेण पूजयेदात्मनो वपुः" ॥

**करकण्टकः**, पुं, (करे हस्ते कण्टक इव ।) नखः । इति त्रिकाण्डशेषः ॥

**करका**, स्त्री, पुं, (कृणोति हिनस्ति आम्रादिफलम् । "कृञादिभ्यो वुन्" । वुनन्तात् टापि क्षिपकादि-
त्वात् प्रत्ययस्थादिति इत्वं न किरति क्षिपति जलं
वा ।) मेधभवशिला । शिल इति भाषा । तत्प-
र्य्यायः । वर्षोपलः २ । इत्यमरः । १ । ३ । १२ ॥
मेघोपलः ३ । इति मेदिनी ॥ वीजोदकम् ४
घनकफः ५ मेघास्थि ६ वार्चरः ७ करः ८
करकः ९ । इति शब्दरत्नावली ॥ राधरङ्कुः १०
धाराङ्कुरः ११ । इति जटाधरः ॥ मेदिन्यां राध-
रङ्क इति पाठः ॥ (यथा मेघदूते ५६ ।
"तान्कुर्व्वीथास्तुमुलकरकावृष्टिहासावकीर्णान्" ॥)

**करकाम्भाः**, [स्] पुं, (करकावत् शीतलं अम्भो जलं यत्र ।) नारिकेलवृक्षः । इति त्रिकाण्डशेषः ॥

**करग्रहः**, पुं, (करः इयं मम भार्य्या इति प्रतिज्ञया गृह्यतेऽत्र वरेणेति यावत् । ग्रह + अधिकरणे
अप् ।) विवाहः । इति त्रिकाण्डशेषः ॥ (यथा,
आर्य्यासप्तशती । ६०३ ।
"सा गुणमयी स्वभावस्वच्छा सुतनुः करग्रहायत्ता ।
भ्रमिता बहुमन्त्रविदा भवता काश्मीरमालव" ॥)
करग्रहणञ्च ॥ (यथा, आर्य्यासप्तशती । ६२९ ।
"सकरग्रहं सरुदितं
साक्षेपं सनखमुष्टि सजिगीषम्" ॥)

**करग्रहारम्भः**, पुं, (करग्रहस्य करादानस्य आरम्भः प्रजाभ्यः ।) राज्ञां प्रजाभ्यो नववर्षीयकरस्य प्रथमा-
दानम् । तद्दिनं पुण्याह इति ख्यातम् । तस्याप-

राजनिर्घण्टौ । (गम्भारीशब्देऽस्या गुणादयो व-
क्तव्याः ॥)

**कम्भु**, क्ली, (कं जलं तत्तुल्यं शैत्यं बिभर्त्ति । भृ + डुः ।)

उशीरम् । इति राजनिर्घण्टः ॥

**कम्रः**, त्रि, (कामयतीति । कम् + नमिकम्पीति रः ।

३ । २ । १६७ ।) कामुकः । मैथुनेच्छाविशिष्टः ।
इत्यमरः । ३ । १ । २४ ॥
(स्त्री, गङ्गा । यथा काशीखण्डे २९ । ४४ ।
"कमनीयजला कम्रा कपर्द्दिसुकपर्द्दगा" ॥
जह्नुं प्रतीपं शान्तनुं कामितवती कम्रा कामुका ॥
इति तट्टीका ॥ काम्यतेऽसौ इति ।)
कमनीयम् । यथा, --
"लोलां दृष्टिमितस्ततो वितनुते सभ्रूलताविभ्रमा-
माभुग्नेन विवर्त्तिता बलिमता मध्येन कम्रस्तनी" ।
इति शाकुन्तले १ अङ्के ॥

**कयस्था**, स्त्री, (को वायुः स इव वेगेन याति अथवा

कं जलं तस्य स्रोत इव याति । क + या + डः ।
तत्र
तिष्ठति । स्था + कः टाप् च ।) वयस्था ।
इत्यमर-
टीकायां स्वामी ॥ काकोली इति ख्याता ॥

**करः**, पुं, (कं सुस्वं राति ददातीति । रा + कः ।) राज-

श्रोत्रियब्राह्मणात् करं न गृह्णीयात् । यथा, -
-
"म्रियमाणोऽप्याददीत न राजा श्रोत्रियात्
करम् ।
न च क्षुधास्य संसीदेच्छोत्रियो विषये
वसन्" ॥ * ॥
(कीर्य्यते विक्षिप्यतेऽसौ कर्म्मणि + अप् ।
हस्त-
करिशुण्डयोस्तु करणेऽपि अप् ॥)
वर्षोपलः ।
किरणः । (यथा रामायणे ६ । ११ । ४४ ।
"तीक्ष्णः पटुर्दिनकरः करैस्तापयते जगत्"
॥)
हस्तः । (अमरः । ३ । ३ । १६३ ॥)
हस्तिशुण्डः ।
इति मेदिनी ॥ (यथा, महाभारते ३ । ११ ।
२८ ।
"एवन्तु ब्रुवतस्तस्य मैत्रेयस्य विशाम्पते ।
ऊरुं गजकराकारं करेणाभिजघान सः" ॥)
कर्म्मोपपदे कर्त्तृवाचकः । यथा । सुखकर
इत्यादि ॥
(यथा, रामायणे ६ । ११ । ४४ ।
"तीक्ष्णः पटुर्दिनकरः करैस्तापयते जगत् ।
प्रतिलोमश्च ते वायुस्त्वत्परामवलक्षणम्"
॥)

**करकं**, क्ली पुं, (किरति विक्षिपति जलं अस्मात्

करोति जलमत्र वा । कॄ + वा कृ
"कृञादिभ्यः
संज्ञायां वुन्" । उणां ५ । ३५ । इति वुन्
।)
करङ्कः । कमण्डलुः । इति मेदिनी ॥
(यथा, मनुः । ४ । ६६ ।
"उपानहौ च वासश्च धृतमन्यैनधारयेत् ।
उपवीतमलङ्कारं स्रजं करकमेव च" ॥)

**करकः**, पुं, (करोति वाष्वादिजनितदोषाभावं

भाषा पुण्या । तस्य शुभदिननिरूपणम् यथा, --
"तीक्षोग्रवह्नीतरभेषु लग्ने
शीर्षोदये भानुदिने शुभाहे ।
कुर्य्यादनुक्तानि समीहितानि
करग्रहारम्भमपि प्रजाभ्यः" ॥
इति ज्योतिषम् ॥ अस्यार्थः । अश्लेषार्द्राज्येष्ठा-
मूलापूर्ब्बफल्गुनीपूर्ब्बाषाढापूर्ब्बभाद्रपदमघाभरणी-
कृतिकाभिन्ननक्षत्रेषु । मिथुनसिंहकन्यातुलावृ-
श्चिककुम्भमीनलग्नेषु । रविसोमबुधवृहस्पति-
शुक्रवारेषु करग्रहारम्भः कर्त्तव्यः ॥

**करघर्षणः**, पुं, (कराभ्यां घृष्यतेऽसौ । कर + घृष् +

:कर्म्मणि ल्युट् ।) दधिमन्थनदण्डः । तत्पर्य्यायः ।

वैशाखः २ दधिचारः ३ तक्राटः ४ । इति हारा-
वली ॥ हस्तघर्षणे क्ली ॥

**करघर्षी**, [न्] पुं, (कराभ्यां करयोर्वा घर्ष घर्षणं
अस्ति अस्यास्मिन् वा । करघर्ष + इनिः ।) मन्था-
नदण्डः । इति शब्दमाला ॥

**करङ्कः**, पुं, (कस्य रङ्क इव ।) मस्तकम् । (कीर्य्यते
जलमत्र इति करः । कृ + अप् । जलहोनः अङ्को
गर्भो यस्य शकन्ध्वादित्वात् अलोपे साधुः ।)
अशस्यनारिकेलफलास्थि । इति मेदिनी । नारि
केलेर खोल इति भाषा ॥ शरीरास्थि । इति
हेमचन्द्रः ॥ इक्षुभेदः । इति राजनिर्घण्ठः ॥ (पात्र-
विशेषः । यथा, "ताम्बूलकरङ्कवाहिनी" इति
कादम्बरी ॥)

**करङ्कशालिः**, पुं, (करङ्क इति नाम्ना शालते शोभते
इति । करङ्क + शाल + इन् ।) करङ्कनामेक्षुः ।
इति राजनिर्घण्टः ॥

**करच्छदः**, पुं, (करवत् आवरणकारी छदो यस्य ।)
शाखोटवृक्षः । शेओडा इतिभाषा ॥ इति भावप्र-
काशः । (अस्य गुणादिकं शाखोटशब्दे
द्रष्टव्यम् ॥)

**करच्छदा**, स्त्री, (कर इव किरण इव लीहितवर्णः
छदः पुष्पं यस्याः । कर इव आवरकश्छदो वा
यस्याः ।) सिन्दूरपुष्पीवृक्षः । इति
राजनिर्घण्टः ॥

**करजं**, क्ली, (करे जायते इति । कर + जन् + ड ।
व्याघ्रनखवदस्याकृतेस्तथात्वम् ।) व्याघ्रनखनाम-
गन्धद्रव्यम् । इत्यमरः । २ । ४ । ११९ ॥ (नवमीशब्दे-
ऽस्य गुणा वक्तव्याः ॥)

**करजः**, पुं, (कं सुखं जलं वा रञ्जयतीति । रञ्जेः

इत्यमरः । २ । ४ । ४७ ॥ चिरिविल्वः ११ । इति
तट्टीका ॥ उदकीर्य्यः १२ । इति रत्नमाला ॥ * ॥ अस्य
फलगुणाः । कटुत्वम् । उष्णत्वम् । चक्षुर्हितत्वम् ।
वातनाशित्वञ्च । इति राजनिर्घण्टः ॥ वातकफ-
मेहतनःकृमिकुष्ठनाशित्वञ्च ॥ * ॥ तत्पत्रगुणाः ।
कफवातार्शःकृमिशोथनाशित्वम् । भेदकत्वम् ।
पाके कटुत्वम् । वीर्य्योष्णत्वम् । पित्तवर्द्धकत्वम् ।
लघुत्वञ्च । इति भावप्रकाशः ॥ * ॥ तत्तैलगुणाः ।
अतिस्निग्धत्वम् । वातनाशित्वम् । स्थिरदीप्ति-
दातृत्वम् ।
नयनामयवातरोगकुष्टकण्डुविसूचिका-
नाशित्वम् । तीक्ष्णत्वम् । उष्णत्वम् । लेपेन नाना-
विधचर्म्मदोषनाशित्वञ्च । इति राजनिर्घण्टः ॥
किटिमत्वम् । कृमिनाशित्वम् । रक्तपित्तदोष-
कारित्वञ्च । इति राजवल्लभः ॥ * ॥ अथ नाटा-
करञ्जपर्य्यायः । प्रकीर्य्यः १ पूतिकरजः २ पूतिकः
३ कलिकारकः ४ । इत्यमरः २ । ४ । ४८ ॥ पूती-
करञ्जः ५ सकण्टकः ६ । इति रत्नमाला ॥ * ॥
षड्ग्रन्थः । काँटाकरञ्ज गाँटिया करञ्ज इति
भाषा ॥ * ॥ मर्कटी । माकडाकरञ्ज इति भाषा ॥

- ॥ अङ्गारवल्लरी । इत्यमरभरतौ विषकरञ्ज

इति भाषा ॥ * ॥ अथ अम्लकरञ्जपर्य्यायः ॥
करमर्द्दी १ वनेक्षुद्रा २ कराम्लः ३ करमर्द्दकः ४ ।
इति रत्नमाला ॥ कृष्णपाकफलः ५ अविग्नः ६
सुषेणः ७ । इत्यमरः । २ । ४ । ६७ ॥ अस्य फलगुणाः ।
पिपासानाशित्वम् । रुचिपित्तकारित्वम् । गुरु-
त्वञ्च । इति राजवल्लभः ॥ राजनिर्घण्टोक्तगुण-
पर्य्यायौ करमर्द्दकशब्दे द्रष्टव्यौ ॥
(यथा, महाभारते ३ । २२९ । ३५ ।
"पादपानाञ्च या माता करञ्जनिलया हि सा ।
वरदा सा हि सौम्या च नित्यं भूतानुकम्पिनी ।
करञ्जे तां नमस्यन्ति तस्मात् पुत्त्रार्थिनो नराः" ॥

उपस्थाय महानागं करेणुः शूकरं स्पृशेत्" ॥)
कुसुम्भवृक्षः । निन्द्यजीवनः । एकादशाहादि-
श्राद्धम् । दुर्द्धरूटः । नास्तिक इति यावत्
(अयं तु क्षत्रियभेदाभिप्रायेणोक्तः । तथा च
महाभारते ६ । ९ । ६२ ।
"मालवा वल्लवाश्चैव तथैवापरवर्त्तकाः ।
कुलिन्दाः कालदाश्चैव दण्डकाः करटास्तथा" ॥)
वाद्यविशेषः । इति मेदिनी ॥

**करटकः**, पुं, (करट + स्वार्थे कन् ।) काकः । इति
शब्दरत्नावली ॥ (पिङ्गलकनाम्नः सिंहस्य मन्त्रि-
पुत्त्रविशेषः शृगालः । यथा हितोपदेशे २ । २५ ।
"स च तथाविधः करटकदमनकाभ्यां तन्मन्त्रि-
पुत्त्राभ्यां शृगालाभ्यां दृष्टः" ॥ स्तेयशास्त्रप्रवर्त्तकः
कर्णीसुतः । यथा कादम्बरीटीका ।
"कर्णीसुतः करटकः स्तेयशास्त्रप्रवर्त्तकः" ॥)

**करटा**, स्त्री, (करट + "अजाद्यतष्टाप्" । ४ । १ । ४ ।
इति टाप् ।) दुःखदोह्या गवी । इति हेमचन्द्रः ॥

**करटी**, [न्] पुं स्त्री, (करटः मदक्षरणशीलगण्डः
प्राशस्त्येन अस्ति अस्य । करट + इनिः ।) हस्ती ।
इति हेमचन्द्रः ॥ (यथा, लङ्केश्वरविरचितशिव-
स्तुतौ । ४ ।
"कपर्दिनि कुमुद्वतीरमणखण्डचुडामणौ
कटीतटपटाभवत्करटिचर्म्मणि ब्रह्मणि ॥)

**करटुः**, पुं, (कृ + अटुः ।) पक्षिविशेषः । इति हेम-
चन्द्रः । करकटिया इति भाषा ॥

**करणं**, क्ली, (क्रियतेऽनेन । कृ + करणे + ल्युट् ।)
साधकतमम् । इत्यमरः । ३ । ३ । ५४ ॥ तत्तु
षट्कारकन्तर्गतकारकविशेषः । तस्य लक्षणम् ।
"क्रियायां साध्यायां बहूनां कारणानां मध्ये कार-
णान्तरव्यवधानाभावे यद्वस्तु क्रियानिष्पत्तिकारणं
विवक्षितं तस्मिन् करणत्वं प्रकीर्त्तितम् । तेन
दात्रेण धान्यं लुनातीत्यत्र हस्तादेः कारणत्वेऽपि
दात्रस्यैव करणत्वं विवक्षितम् ॥ तथाचोक्तम् ।
"कारणाव्यवधानेऽपि क्रिया निष्पत्तिकारणम् ।
यद्वै विवक्षितं तेषु करणत्वं प्रकीर्त्तितम्" ॥
इति मुग्धबोधटीकायां दुर्गादासः ॥ * ॥ तिथ्यर्द्ध-
परिमितववाद्येकादशसंज्ञककालविशेषः । तेषां
नामानि । ववः १ वालवः २ कौलवः ३ तैतिलः ४
गरः ५ बणिजः ६ विष्टिः ७ शकुनिः ८ चतुष्पदः
९ किन्तुघ्नः १० नागः ११ । तेषां यथाक्रमेणा-
धिष्ठातृदेवाः । इन्द्रः १ कमलजः २ मित्रः ३

कर्म्मण्यण् ।) करञ्जवृक्षः । ("करञ्जकः स्यात्
करजः पत्रसूची फलाशनः" । इति शब्द-
रत्नावली ॥ करे जायते इति । जन + ड ।)
नखः । इति मेदिनी ॥ (यथा, मनुः । ४ । ७० ।
"नमृल्लोष्टञ्चमृद्नीयान्नच्छिन्द्यात् करजैस्तृणम्" ॥)

**करजाख्यः**, पुं, (करजस्याख्या एव आख्या यस्य ।)

नखीनामगन्धद्रव्यम् । इति रत्नमाला ॥

**करज्योडिः**, पुं, हस्तज्योडिवृक्षः । इति राज-

निर्घण्टः ॥ (केचित् करजोडिरिति वदन्ति ॥)

**करञ्जः**, पुं, (कं सुखं शिरो जलं वा रञ्जयतीति । क +

रञ्ज + णिच् + अण् ।)
स्वनामख्यातवृक्षविशेषः ।
करम्चा इति भाषा । तत्पर्य्यायभेदौ यथा, --
"करञ्जकः स्यात् करजः पत्रसूची फलाशनः ।
आङ्गारमञ्जी षड्ग्रन्थो मर्कट्यङ्गारवल्लरी ।
करञ्जभेदाश्चत्वारो विज्ञेया लोकतस्त्विमे" ॥
इति शब्दरत्नावली ॥ अपि च ।
"चिरविल्वो नक्तमालः करजश्च करञ्जकः ।
सोमवल्कः कलिङ्गस्तु पूतिकः कलिकारकः ॥
प्रकीर्य्यः पूतिकरजः पट्टिलः सुमना अपि ।
करञ्जभेदाः षड्ग्रन्थो मर्कट्यङ्गारवल्लरी" ॥
इति जटाधरः ॥ स षड्विधः । तत्र डरकरञ्ज-
पर्य्यायः । नक्तमालः २ पूतिकः ३ चिरविल्वकः ४
पूतिपर्णः ५ बद्धफलः ६ रोचनः ७ । इति राज-
निर्घण्टः ॥ चिरविल्वः ८ करजः ९ करञ्जकः १० ।
किरति विक्षिपति धार्म्मिकानिति । कॄ विक्षेपे +
बाहुलकादौणादिकोऽञ्जन्प्रत्ययः । धर्म्मद्वेष्टरि,
त्रि । यथा ऋग्वेदे । १ । ५३ । ८ ।
"त्वं करञ्जमुत पर्ण्यं बधी-
स्तेजिष्ठयातिथिग्वस्य वर्त्तनी" ॥)

**करञ्जकः**, पुं, (करञ्ज + स्वार्थे कत् ।) करञ्जवृक्षः ।

इत्यमरः । २ । ४ । ४७ ॥ भृङ्गराजवृक्षः । इति
जटाधरः ॥ (यथा महाभारते । १३ । १२८ । ८ ।
"यस्तु संवत्सरं पूर्णं दद्याद्दीपं करञ्जके ।
सुवर्च्चलामूलहस्तः प्रजास्तस्य विवर्द्धते" ॥)

**करञ्जफलकः**, पुं, (करञ्जफलमिव फलं यस्य । ततः

स्वार्थे कन् । करञ्जफलमिव कायते इति वा । कै
+ कः ।) कपित्थवृक्षः । इति राजनिर्घण्टः ॥

**करटः**, पुं, (कं कुत्सितं रटति शब्दं करोतीति । रट

शब्दे + पचाद्यच् ।) काकः । (यथा गङ्गास्तोत्रे ।
"वरमिह गङ्गातीरे सरटः करटः ।" इति ॥
किरति विक्षिपति मदवारि इति । कॄ + अटन् ।)
हस्तिगण्डः । इत्यमरः । ३ । ३ । ३४ ॥ (यथा
महाभारते । ३ । २७७ द्रौपदीहरणपर्ब्ब-
णि ३८ ।
"कथं हि भिन्नकरटं पद्मिनं वनगोचरम् ।
अर्य्यमा ४ भूः ५ श्रीः ६ यमः ७ कलिः ८ वृषः
९ फणी १० मारुतः ११ । एकैकस्मिन् तिथौ
द्वे द्वे करणे भवतः । तेषां ववादयः सप्त अष्टा-
वृत्त्या शुक्लप्रतिपच्छेषार्द्धमारभ्य कृष्णपक्षीयचतु-
र्द्दशीप्रथमार्द्धपर्य्यन्तं भवन्ति । शेषाश्चत्वारः कृ-
ष्णचतुर्द्दशीशेषार्द्धावधिशुक्लप्रतिपत्प्रथमार्द्धपूर्य्यन्तं
नियमेन भवन्ति अतो ध्रुवाणि करणानि । पूर्ब्बे
सप्ताध्रुवाणि ॥ तेषामानयनक्रमो यथा ।
"तिथिर्द्विघ्ना करोनागशिष्टाकरणमादिमे।
परे दले तु सैकं तत्करणं ववपूर्ब्बकम्" ॥
इति ज्योतिषम् ॥ * ॥ क्षेत्रम् । गात्रम् । इन्द्रि-

:यम् । इत्यमरः । ३ । ३ । ५४ ॥ (यथा गीतायां
१८ । १४ ।
"अधिष्ठानं तथाकर्त्ता करणञ्च पृथग्विधम्" ॥)
हेतुः । कर्म्म । हस्तलेपः । नृत्यप्रभेदः । गीतवि-
शेषः । (तले व्यवस्थापकस्ताडनविशेषः । यदुक्तं राजकन्दर्पेण ।
"नृत्यवादित्रगीतानां प्रयोगवशभेदिनां ।
संस्थानं ताडनं रोधः करणानि प्रचक्षते" ॥
अस्य प्रमाणं यथा कुमारे ६ । ४० ।
"शिखरासक्तमेघानां व्यज्यस्ते यत्र वेश्मनाम् ।
अनुगर्जितसन्दिग्धाः करणैर्मुरजस्वनाः" ॥)
क्रियाभेदः । संवेशनम् । कायस्थः । इति मेदिनी ॥
कायस्थसंहतिः ॥ वर्णानां स्पष्टतादि । योगिना-
मासनादि । कृतादि । इति हेमचन्द्रः ॥ (सर्व्वेषा-
मादिकारणत्वात् विष्णुः । यथा, महाभारते
१३ । १४९ । ५४ ।
"करणं कारणं कर्त्ता विकर्त्ता गहनो गुहः" ॥
लेख्यपत्रसाक्षिदिव्यादि । यथा मनुः ८ । ४१ ।
"अर्थेऽपव्ययमानन्तु करणेन विभावितम् ।
दापयेद्धनिकस्याथ दण्डलेशञ्च शक्तितः" ॥
भावे ल्युट् । कृतिः । यथा रामायणे ४ । १७ । ५६ ॥
"धर्म्मतः शेषकरणे प्रतीक्षिष्यामहे वयम्" ॥)

**करणः**, पुं, शूद्रावैश्ययोर्जातजातिविशेषः । इत्यमरः ।
२ । १० । २ ॥ अयं लिखनवृत्तिः कायस्थ इति
ख्यातः । इति भरतः ॥ यथा, --
"शूद्राविशोस्तु करणोऽम्बष्ठो वैश्याद्विजन्मनोः" ।
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १० अध्यायः ॥ * ॥ अपि च ।
"कायस्थे साधने क्लीवं पुंसि शूद्राविशोः सुते" ।
इति करणशब्दार्थे मेदिनो ॥ * ॥ अन्यच्च ।
"झल्लो मल्लश्च राजन्यात् व्रात्यान्निच्छिविरेव च ।
नटश्च करणश्चैव खसद्रविड एव च" ॥
इति मानवे १० । २२ ॥ झल्लोमल्लश्चेति । "क्षत्रि-
यात् व्रात्यात् सवर्णायां झल्लमल्लनिच्छिविनट-
त्रायतेऽनेन । करण + त्रै + करणे + ल्युट् । मस्त-
कस्य प्रधानकरणैकादशस्य मनसः स्थलत्वात् ।
करणैर्हस्तादिकर्म्मेन्द्रियादिभिः त्रायते वा इति
कर्म्मणि ल्युट् ।) मस्तकम् । इति हेमचन्द्रः ॥

**करणीयं**, त्रि, (कर्त्तुमुचितं कर्त्तुमर्हं वा । कृ + अनी-
यर् ।) कर्त्तव्यम् । कार्य्यम् । इति व्याकरणम् ॥
(यथा रामायणे ३ । १४ । १० ।
"मया किं करणीयञ्च इत्युक्ते द्विजसन्निधौ ।
सर्व्वैरेव च तैरार्त्तैर्वागियं समुदाहृता" ॥)

**करण्डः**, पुं, (कृञ् + "कृसृभृवृञः" । इत्यण्डन् ।
उणां । १ । १२८ ।) मधुकोषः । मौचाक् इति भाषा ।
असिः । कारण्डवपक्षी । दलाढकम् । इति मेदिनी
हेमचन्द्रश्च ॥ वंशादिरचितभाण्डविशेषः समुद्गश्च ।
इत्यमरः । ३ । ५ । १८ ॥ साजि झाँपि इत्यादि
भाषा । (यथा भागवते ५ । १४ । ४ । "एवमेव
गृहाश्रमः कर्म्मक्षेत्रं यस्मिन् न हि कर्म्माण्युत्-
सीदन्ति यदयं कामकरण्ड एष आवसथः" ॥)

**करण्डी**, [न्] पुं, (करण्डस्येव आकारोऽस्यास्तीति ।
करण्ड + इनिः ।) मत्स्यः । इति त्रिकाण्डशेषः ।
(मत्स्यशब्देऽस्य गुणादिकथनं ज्ञेयम् ॥)

**करतलः**, पुं, (करस्य हस्तस्य तलः ।) हस्ततलः ।
हातेर तेलो इति भाषा । (यथा । जयदेवः । १ । ४५ ॥
"करतलतालतरलवलयावलिकलितलस्वनवंशे"
अपि च । यथा, श्रीभागवते । ८ । ७ । ४२ ॥
"ततः करतलीकृत्य व्यापि हालाहलं विषम् ।
अभक्षयन् महादेवः कृपया भूतभावनः" ॥)

**करतालं**, क्ली, (कराभ्यां हस्ताभ्यां दीयमानस्तालो
यत्र ।) वाद्यविशेषः । यथा, --
"शिवागारे झल्लकञ्च सूर्य्यागारे च शङ्खकम् ।
दुर्गागारे वंशिवाद्यं मधुरीञ्च न वादयेत्" ॥
झल्लकं कांस्यनिर्म्मितकरतालकम् । इति तिथ्या-
दितत्त्वे रघुनन्दनभट्टाचार्य्येण व्याख्यातम् ॥

**करताली**, स्त्री, (करताल + गौरादित्वात् ङीष् ।)
वाद्यविशेषः । करताल खरताल इति ख्याता ।
तत्पर्य्यायः । करर्द्धिः २ । इति त्रिकाण्डशेषः ॥
करतलध्वनिः । तथा च । "यथा न स्यादाली-
कपटकरतालीपटुरवः" । इति उद्भटः ॥

**करतोया**, स्त्री, (करात् शङ्करस्य हस्तात् च्युतं तोयं
जलं अस्ति यत्र । अर्श आद्यच् ।) स्वनामख्यात-
उत्तरदेशस्थनदीविशेषः । तत्पर्य्यायः । सदानीरा
अश्वमेधमवाप्नोति प्रजापतिकृतो विधिः" ॥)

**करद्रुमः**, पुं, (किरति शाखाः सर्व्वतः यः । स चासौ
द्रुमश्चेति ।) कारस्करवृक्षः । इति राजनिर्घण्टः ॥

**करपत्रं**, क्ली, (करेण करात् वा पततीति । पत +
"सर्व्वधातुभ्यः ष्ट्रन्" इति ष्ट्रन् ।) क्रकचः । इत्य-
मरः । २ । १० । ३५ ॥ करात् इति भाषा । (करौ
पत्रमिव नौरिव यत्र ।) जलक्रीडा । इति
जटाधरः ॥

**करपत्रवान्**, [त्] पुं, (करपत्राकारपत्रमस्ति यस्मिन्
मतुप् मस्य वः ।) तालवृक्षः । इति शब्द-
चन्द्रिका ॥

**करपत्रिका**, स्त्री, (करौ पत्रं नौरिव यस्याः । पत्र
+ कप् + टाप् + अत इत्वम् ।) जलक्रीडा । इति
जटाधरः ॥

**करपर्णः**, पुं, (करो हस्तः तद्वत्पर्णं यस्य ।) भिण्डा-
वृक्षः । रक्तैरण्डः । इति राजनिर्घण्टः ॥ (एरण्ड-
शब्देऽस्य विशेषः उक्तः ॥)

**करपल्लवः**, पुं, (करस्य पल्लव इव ।) अङ्गुलिः । यथा,
मार्कण्डेये ८४ । २६ ।
"करपल्लवसङ्गीनि तैरस्मान्रक्ष सर्व्वतः" ॥

**करपात्र**, क्ली, (करः पात्रमिव यत्र ।) जलक्रीडा ।
इति हारावली ॥

**करपालः**, पुं, (करं पालयति रक्षति । पाल +
कर्म्मण्यण् ।) खड्गः । इत्यमरः । २ । ८ । ८९ ॥

**करपालिका**, स्त्री, (करपाल् + ण्वुल् + टाप् अत
इत्वम् ।) ह्रस्वगदाकारहस्तदण्डः । सोँटा इति
ख्यातः । इति भरतः ॥ एकधारास्त्रम् । इति
स्वामी । तत्पर्य्यायः । ईली २ । इत्यमरः । २ ।
८ । ९१ ॥ इली ३ इलिः ४ करवालिका ५ । इति
तट्टीका ॥

**करबालः**, पुं, (करस्य बालः पुत्र इव । नखस्य कर-
जातत्वात् तथात्त्वम् ।) नखम् । इति शब्दमाला ॥

करणखसद्रविडाख्या जायन्ते ।
एतान्यप्येकस्यैव
नामानि" । इति तट्टीकायां कुल्लूकभट्टः ॥ * ॥
तस्य कर्म्मविपाको यथा, --
"तैलचौरस्तैलकीटो मूद्घ्निर्न कीटस्त्रिजन्मकम्
।
ततो भवेत् स्वर्णकारो जन्मैकं दुष्टमानसः ॥
तमःकुण्डे वर्षशतं स्थित्वा स्वर्णबणिक् भवेत्
।
जन्मैकञ्च दुराचारो जन्मैकं करणो भवेत् ॥
विश्वैकलिपिकर्त्ता च भक्ष्यदातुर्धनं हरेत् ॥
कायस्थेनोदरस्थेन मातुर्म्मांसं न खादितम् ।
तत्र नास्ति कृपा तस्य दन्ताभावेन केवलम् ॥
स्वर्णकारः स्वर्णबणिक् कायस्थश्च व्रजेश्वर ।
नरेषु मध्ये ते धूर्त्ताः कृपाहीना महीतले ॥
हृदयं क्षुरधाराभं तेषाञ्च नास्ति सादरम् ।
शतेषु सज्जनः कोऽपि कायस्थो नेतरौ च तौ
॥
सुबुद्धिः शिवयुक्तिश्च शास्त्रज्ञो धर्म्ममानसः ।
न विश्वसेत्तेषु तात स्वात्मकल्याणहेतवे" ॥
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ८५
अध्यायः ॥

**करणत्राणं**, क्ली, (करणं ज्ञानकर्म्मादिरूपं इन्द्रियं

२ । इत्यमरः । १ । १० । ३३ ॥ सदानीरवहा ३ ।
इति शब्दरत्नावली ॥ * ॥ गौरीविवाहसमये
शङ्करकरगलितसंप्रदानतोयप्रभवत्वात्करस्यतोयं
विद्यतेऽत्र इति करतोया । श्रावणे एतद्वर्ज्जं
सर्व्वा नद्यो रजखलाः इयं तु न रजस्वला अत-
एव सदा सर्व्वदा नीरमस्या इतिसदानीरा ।
तथा च स्मृतिः ।
"अथादौ कर्कटे देवी त्र्यहं गङ्गा रजस्वला ।
सर्व्वा रक्तवहा नद्यः करतोयाम्बुवाहिनी" ॥
इत्यमरटीकायां भरतः ॥ (इयं हि तीर्थविशेषः ।
यथा महाभारते ३ । तीर्थयात्रःपर्ब्बणि । ८५ । ३ ॥
"करतोयां समासाद्य त्रिरात्रोपषितो नरः ।

(करं बलति संवृणोति बल + अण् ।) खड्गः ।
इत्यमरटीकायां भरतादयः । करवाल इति भाषा
।
(यथा, गीतगोविन्दे । १ । १० ॥
"म्लेच्छनिवहनिधने कलयसि करबालम्" ॥)

**करबालिका**, स्त्री, (कर + बल + ण्वुल् + टाप् +
अत इत्वम् ।) करपालिका । इत्यमरटीकायां
रायमुकुटादयः ॥

**करभः**, पुं, (कृणाति कीर्य्यतेऽनेन वा । कृञ् हिंसायां
कृश विक्षेपे वा "कृशृशलिकलिगर्द्भ्योऽभच्" ।
उणां । ३ । १२२ । इति अभच् । करे भाति
शोभते
इति वा । भा + कः ।) मणिवन्धावधिकनिष्ठा-
पर्य्यन्तं करस्य वहिर्भागः । (यथा, रघुः । ६ ।
८३ ।
"धात्री कराभ्यां करभोपमोरुः ॥)
उष्ट्रशिशुः । इत्यमरः ॥ २ । ९ । ७५ ।
करिशावकः । इत्यमरटीकासारसुन्दरी ॥ (यथा
भागवते ८ । २ । २२ ।
"सघर्म्मतप्तः करिसिः करेणुभि-
र्वृतोमदच्युत्करभैरणुद्रतः" ॥)
उष्ट्रः । इति मेदिनी ॥ नखनामगन्धद्रव्यम् ।
इति राजनिर्घण्टः ॥ कटिः । इति जटाधरः ॥

**करभकाण्डिका**, स्त्री, (करभप्रियं काण्डमस्याः ।

:करभकाण्ड + कप् + अत इत्वम् ।) उष्ट्रकाण्डी-

वृक्षः । इति राजनिर्घण्टः ॥

**करभप्रिया**, स्त्री, (करभस्य करिशावकस्य उष्ट्रस्य

वा प्रिया ।) क्षुद्रदुरालभा । इति राजनिघण्टः ॥

**करभवल्लभः**, पुं, (करभस्य हस्तिशावस्य वल्लभः

प्रियः ।) कपित्थवृक्षः । पीलुवृक्षः । इति राज-निर्घण्टः ॥

**करभादनी**, स्त्री, (करभेन उष्ट्रेन अद्यतेऽसौ । अद् +

कर्म्मणि ल्युट् । ततो + ङीप् ।) क्षुद्रदुरालभा ।
इति राजनिर्घण्टः ॥
करभी, [न्] पुं, (कर इव भाति करभः शुण्डः स
अस्यास्ति । करभ + इनिः । यद्वा करभः हस्ता-
वयवविशेषः सोऽस्य शुण्डावच्छेदे अस्तोति इनिः ।)
हस्ती । इति राजनिर्घण्टः ॥

**करभी**, स्त्री, (करभ + ङीप् ।) उष्ट्री । तत्पर्य्यायः ।

वामी २ । इति जटाधरः ॥

**करभीरः**, पुं, (करभिणं हस्तिनं ईरयति प्रेरयति

मृत्युमुखम् । करभि + ईर् + अण् ।) सिंहः ।
इति शब्दरत्नावली ॥

**करभूषणं**, क्ली, (करयोर्भूषणम् ।) कङ्कणम् । इत्य-

मरः । २ । ६ । १०८ ॥ हस्ताभरणमात्रञ्च ॥

**करमट्टः**, पुं, (करं करिशुण्डमपि अट्टति तुच्छी-

करोति । अस्य सरलकाण्डत्वात् तथात्त्वम् । अट्ट
अनादरे + खसुम् प्रत्ययः ।) गुवाकवृक्षः । इति
त्रिकाण्डशेषः ॥ (गुवाकशब्देऽस्य गुणा
द्रष्टव्याः ॥)

**करमरी**, [न्] पुं, (किरति क्षिपति अत्र दण्ड्यान्

इति करः कारागारः । कृ + अधिकरणे अप् ।
तस्मिन् करे मरः मरणं मृत्युवत् यातना यस्य
बाहुलकात् इनिः । तत्र म्रियते वा ।) वन्दी ।
इति त्रिकाण्डशेषः । कयेदी इति भाषा ॥

**करमर्द्दः**, पुं, (करं मृद्नातीति । करकण्डूप्रदत्वात् ।

मृद्क्षोदे + कर्म्मण्यण् । करेण मृद्यते इति कर्म्मणि

करमर्द्दः २२ पाणिमर्द्दः २३ । तद्बालफलगुणाः ।
तिक्तत्वम् । अम्लत्वम् । दीपनत्वम् । दाहदातृत्वञ्च ।
तत्पक्वफलगुणः । त्रिदोषशभनत्वम् । अरुचि-
विषनाशित्वञ्च । इति राजनिर्घण्टः ॥ पिपासा-
नाशित्वम् । अम्लत्वम् । रुचिपित्तकारित्वम् ।
गुरुत्वञ्च । इति राजवल्लभः ॥ (यथा, वाभटः ।
“गुरूष्णवीर्य्यं वातघ्नं सरञ्च करमर्दकम्” ॥)

**करमर्द्दी**, स्त्री, (करं मृद्नातीति । कर + मृद् +

अण् ङीप् ।) करमर्दकवृक्षः । इति रत्नमाला ॥

**करमालः**, पुं, (करः करिशुण्डः तदाकारा माला

समूहः यस्य मेघस्य धूमस्य वा क्रमशः करि-
शुण्डवत् प्रसरत्वात् तथात्त्वम् ।) खतमालः ।
धूमः । इति हेमचन्द्रः ॥

**करमाला**, स्त्री, (कराङ्गुलीभिर्मालयेव जपनात् कर-

रूपा माला । कराङ्गुल्य मालेव वा ।) करपर्ब्ब-
रूपमाला । यथा,
“अनामिकात्रयं पर्ब्ब कनिष्ठात्रितयं तथा ।
तर्ज्जनीमूलपर्य्यन्तं करमाला प्रकीर्त्तिता” ॥
इति मुण्डमालातन्त्रे सामान्यविषयम् ॥ * ॥
“तर्ज्जनी मध्यमानामा कनिष्ठा चेति ताः क्रमात् ।
तिस्रोऽङ्गुल्यस्त्रिपर्ब्बाणो मध्यमा चैकपर्ब्बिका ।
पर्ब्बद्वयं मध्यमाया मेरुत्वेनोपकल्पयेत्” ॥
इति शिवरहस्यीयं शक्तिभिन्नविषयम् ॥ * ॥
“अनामामूलमारभ्य कनिष्ठादिक्रमेण तु ।
तर्ज्जनीमध्यपर्य्यन्तमष्टपर्ब्बसु संजपेत्” ॥
इति सनत्कुमारसंहितावचनं शक्तीतरेषामष्ट-
वारविषयम् ॥ * ॥
“अनामिकात्रयं पर्ब्ब कनिष्ठा च त्रिपर्ब्बिका ।
मध्यमायाश्च त्रितयं तर्ज्जनीमूलपर्ब्बिका ॥
करमाला समाख्याता आरभ्यानामिकान्तरात् ।
तर्ज्जन्यग्रे तथा मध्ये यो जपेत् स तु पापकृत्” ॥
इति शक्तिविषये मुण्डमालातन्त्रम् ॥ * ॥ तथा ।
“अनामामूलमारभ्य प्रादक्षिण्यक्रमेण तु ।
मध्यमामूलपर्य्यन्तं जपेदष्टसु पर्ब्बसु” ॥
इदमपि शक्तिविषये अष्टवारपरम् । इति श्या-
मारहस्यम् ॥

**करमुक्तं**, क्ली, (करेण सुदृढं धृत्वा शत्रुं प्रति मुच्यते ।

कर + मुच् + कर्म्मणि क्तः ।) अस्त्रविशेषः । इति
हलायुधः । वरछी भाला इत्यादि भाषा ॥

**करम्बः**, पुं, (कृञ् करणे + “कृकाद कडीत्यम्बच्” ।

उणां । ४ । ८२ ।) करम्भः । इत्यमरटीकायां

“अतुषानिव यवान् कृत्वा तानीषदीवोपतप्य तेषां
करम्भपात्राणि कुर्व्वन्ति” ॥ उदमन्थः । यथा,
यजुर्व्वेदे १९ । २१ ।
“धानाः करम्भः सक्तवः परिवापः पयोदधि” ।
“करम्भः उदमन्थः । इति वेददीधितिः ॥
भृष्टयवमात्रम् । यथा मनुः १२ । ७६ ।
“करम्भवालुकातापान् कुम्भीपाकांश्च दारुणान्” ।
करम्भवालुकातापान् करम्भैर्यवैः सह भृष्टा या
वालुकाः तद्वत्तप्तवालुकादीन् इत्यर्थः ॥
मिश्रगन्धः ।
यथा भागवते ३ । २६ । ४५ ।
“करम्भपूतिसौरभ्य शान्तोदग्रादिभिः पृथक् ।
द्रव्यावयववैषम्याद् गन्ध एको विभिद्यते” ॥)

**करम्भकं**, क्ली, (करम्भ एव स्वार्थे कन् ।) करम्भः ।

दधिसक्तवः । तत्पर्य्यायः । कर्कसारम् २ । इति
हारावली ॥

**करम्भा**, स्त्री, (केन जलेन रभ्यते सिच्यते इति ।

अथवा केन वायुना रभ्यते मिश्रीक्रियते नानागन्धो
यस्याः । रभेर्नानार्थत्वात् क + रभ + घञ् + नुम्
टाप् च ।) शतावरी । प्रियङ्गुवृक्षः । इति राजनि-
र्घण्टः ॥ (स्वनामख्याता कलिङ्ग देशोत्पन्ना रमणी ।
सा तु पूरुवंशीयस्याक्रोधनस्य पत्नी । यथा महा-
भारते १ । ९५ । २२ ।
“अक्रोधनः खलु कालिङ्गीं करम्भां नामोपयेमे ।
तस्यामस्य जज्ञे देवातिथिः” ॥)

**कररुहः**, पुं, (करे रोहति कराङ्गुलीभ्य उत्पद्यते

इत्यर्थः । कर + रुह + “इगुपधेति” । ३ । १ ।
१३४ । कः ।) नखः । इत्यमरः । २ । ६ । ८३ ॥
(यथा आर्य्यासप्तशती ३७ । “अस्याः कररुह-
खण्डितकाण्ड-पटप्रकटनिर्गता दृष्टिः” ॥)

**करर्द्धिः**, स्त्री, (करस्य ऋद्धिः करेण ऋद्धिर्यस्य वा ।

अप् वा ।) करमर्द्दकवृक्षः । इति शब्दरत्नावली ॥
(यथा भावप्रकाशे,--अस्य गुणा उक्ताः ।
"लघुदीर्घफलाभ्यान्तु करमर्द्दद्वयं मतम् ।
करमर्द्दद्वयं त्वाममम्लं गुरुतृषाहरम् ॥
उष्णं रुचिकरं प्रोक्तं पित्तरक्तकफप्रदम् ।
तत्पक्वं मधुरं रुच्यं लघुपित्तसमीरजित् ॥
करमर्द्दः सुषेणः स्यात् कृष्णपाकफलस्तथा ।
तस्माल्लघुफलायास्तु सा ज्ञेया करमर्द्दिका ॥)

**करमर्द्दकः**, पुं, (कर + मृद् + ण्वुल् । करमर्द्द एव स्वार्थे कन् इति वा ।) वृक्षविशेषः । इत्यमर-टीकासारसुन्दरी । पाणि आमला इति भाषा ॥ इति रत्नमालाराजनिर्घण्टादयः । करौन्दा इति करम्चा इति च भाषा ॥ तत्पर्य्यायः । कृष्णपाक-फलः २ अविग्नः ३ सुषेणः ४ । इत्यमरः । २ । ४ । ६७ ॥ कृष्णपाकः ५ पाकफलः ६ कृष्णकलः ७ पाककृष्ण-फलः ८ कृष्णफलपाकः ९ पाककृष्णः १० फल-कृष्णः ११ पाकफलकृष्णः १२ वनालयः १३ वला-लकः १४ कराम्बुकः १५ वोलः १६ वशः १७ आ-विग्नः १८ । इति तट्टीकायां भरतः ॥ करमर्द्दी १९ वनेक्षुद्रा २० कराम्लः २१ । इति रत्नमाला ॥

नीलकण्ठः ॥ मिश्रिते त्रि । इति हेमचन्द्रः ॥

**करम्बितः**, त्रि, (करम्बः मिश्रणंजातोऽस्य । करम्ब + इतच् ।) मिश्रितः । खचितः । इति त्रिकाण्डशेषः ॥
("ललितलवङ्गलतापरिशीलनकोमलमलयसमीर
मधुकरनिकरकरम्बितकोकिलकूजितकुञ्जकुटीरे" ॥
इति गीतगोविन्दः । १ । २ ॥)

**करम्भः**, पुं, (केन जलेन रभ्यते मिश्रीक्रियते । रभि-धातोरनेकार्थत्वात् "अकर्त्तरि चेति" घञ् । ३ । ३ । १९ । रभेरशब्लिटोः । ७ । १ । ६३ । इति नुम् ।) दधिमिश्रितशक्तुः । इत्यमरः । २ । ९ । ४८ ॥
(यथा शतपथब्राह्मणे । २ । ५ । २ । ४ ।

करसम्पत् ।) करताली । इति त्रिकाण्डशेषः ॥

**करवालिका**, स्त्री, (करं वलते । वल हिंसादानयोः अण् । करेण वाल्यते वा । णिजन्तादच इः ततः कन् + टाप् च ।) करपालिका । इयमरटीकायां मरतः ॥

**करवी**, स्त्री, (कस्य वायोः रवो यत्र । गौरादित्वात् ङीष् ।) कवरी । हिङ्गुपत्रम् । इति शब्दचन्द्रिका ॥

**करवीरः**, पुं, (करं वोरयति । वीर + विकान्तौ + कर्म्म ण्यण् ।) खड्गः । देत्यविशेषः । इति मेदिनी ॥ श्मशानम् । इति हेमचन्द्रः ॥ ब्रह्मावर्त्ते दृशद्वती-नदीतीरे चन्द्रशेखरराजपुरम् । इति कालिका-पुराणे ४६ अध्यायः ॥ (पर्ब्बतविशेषः । यथा, भागवते ५ । १६ । २८ ।
"एवमपरेण पवनपारियात्रौ
दक्षिणेन कैलास करवीरौ प्रगायतौ" ॥
नागविशेषः । यथा, महाभारते १ । ३५ । १२ ।
"करवीरः पुष्पदंष्ट्रो विल्वको विल्वपाण्डरः" ॥)
वृक्षविशेषः । करवी इति भाषा ॥
(यथा रामायणे ३ । १७ । १० ।
"दाडिमान् करवीरांश्च
अशोकांस्तिलकांस्तथा" ॥)
तत्पर्य्यायः । प्रतिहासः २ शतप्रासः ३ चण्डातः ४ हयमारकः ५ । इत्यमरः । २ । ४ । ७६ ॥ प्रतीहासः

:६ । इति तट्टीका ॥ अश्वघ्नः ७ हयारिः ८ अश्व-
मारकः ९ शीतकुम्भः १० तुरङ्गारिः ११ । इति रत्नमाला ॥ अश्वहा १२ वीरः १३ हयमारः १४ हयघ्नः १५ शतकुन्दः १६ अश्वरोधकः १७ वीरकः
१८ कुन्दः १९ शकुन्दः २० श्वेतपुष्पकः २१ अश्वा-
न्तकः २२ नखराह्वः २३ अश्वनाशनः २४ स्थल-कुमुदः २५ दिव्यपुष्पः २६ हरिप्रियः २७ गौरी-पुष्पः २८ सिद्धपुष्पः २९ । अस्य गुणाः । कटु-त्वम् । तीक्ष्णत्वम् । कुष्ठकण्डूतिनाशित्वम् । व्रणा-र्त्तिविषविस्फोटकशमनत्वम्। अश्वमृतिप्रदत्वञ्च। इति राजनिर्घण्टः ॥ (श्वेतरक्तभेदेन यथा, --
"करवीरः श्वेतपुष्पः शीतकुम्भोऽश्वमारकः ।
द्बितीयो रक्तपुष्पश्च चण्डातो लगुडस्तथा ॥
करवीरद्वयं तिक्तं कषायं कटुकञ्च तत् ।
व्रणलाघवकृन्नेत्रकोपकुष्ठव्रणापहम् ।
वीर्य्योष्णं क्रिमिकण्डूघ्नं भक्षितं विषवन्मतम्" ॥
इति भावप्रकाशः ॥ नागविशेषः । इति भारतम् ॥)

**करवीरकः**, पुं, (करवीर इव कायति प्रकाशते ।
कै + कः । करं वीरयतीति । कर + वीर विक्रा-न्तौ + ण्वुल् ।) अर्ज्जुनवृक्षः । इति राजनिर्घण्टः ॥ खड्गः । इति शब्दमाला ॥ (करवीर एव स्वार्थे कन् ।) करवीरः । विषभेदः । स तु करवीरस्य मूलम् । इति हेमचन्द्रः ॥

**करवीरकन्दसंज्ञः**, पुं, (करवीरकन्दसंज्ञया संज्ञा
यस्य । करवीरकन्द इति संज्ञा यस्य वा ।) तैल-कन्दः । इति राजनिर्घण्टः ॥

**करवीरभुजा**, स्त्री, (करवीरस्य भुज इव शाखावत्
भुजः शाखाऽस्याः ।) आढकीवृक्षः । । इति राज-निर्घण्टः ॥ अरहर इति भाषा ॥

**करवीरी**, स्त्री, (किरति क्षिपति राक्षसासुरादीन्
इति । कृ + अच् । करः तादृशः वीरः पुत्त्रो यस्याः । यद्वा कं सुखं राति ददातीति क + रा + कः । सुखप्रदः वीरपुत्त्रो यस्याः ।) अदितिः । श्रेष्ठगवी । पुत्त्रवती । इति मेदिनी ॥

**करशाखा**, स्त्री, (करस्य शाखा इव ।) अङ्गुलौ ।
इत्यमरः । २ । ६ । ८१ ॥ तासां परिमाणं यथा ।
"अष्टभिस्तैर्भवेत् ज्यैष्ठं मध्यमं सप्तभिर्यवैः ।
कन्यसं षड्भिरुद्दिष्टमङ्गुलं मुनिसत्तम ॥
मानन्तु पार्श्वेन । षड्यवाः पार्श्वसम्मिताः । इति
र्गजा विविग्नाः करशीकरेण" ॥)

**करशूकः**, पुं, (करस्य शूकः सूक्ष्माग्र इव सूच्यग्र इव
वा ।) नखः । इति त्रिकाण्डशेषः ॥

**करहाटः**, पुं, (करेण किरणेन सूर्य्यस्येति यावत्
हाट्यते दीप्यते इति । हट् + णिच् + कर्म्म-ण्यण् ।) पद्ममूलम् । मदनवृक्षः । इति मेदिनी ॥ महापिण्डीतरुः । इति राजनिर्घण्टः ॥

**करहाटकः**, पुं, (करहाट एव इति स्वार्थेकन् । करं
हाटयतोति ण्वुल् वा ।) मदनवृक्षः । इत्यमरः । २ । ४ । ५२ ॥ हस्तीयस्वर्णे क्ली ॥

**करामर्द्दः**, पुं, (करं आमृद्गातीति । कर + आ + मृद्
+ अण् ।) करमर्दवृक्षः । इति शब्दरत्नावली ॥ करम्चा इति भाषा ॥

**कराम्बुकः**, पुं, (कीर्य्यते क्षिप्यते । कृ + कर्म्मणि
अप् । करं अम्बु यस्मात् कप् ।) कृष्णपाकफल-वृक्षः । इति शब्दचन्द्रिका भरतधृतवाचस्पतिश्च ॥
पाणि आमला इति भाषा ॥

**कराम्लकः**, पुं, (कीर्य्यते इति करं कीर्य्यमाणं अम्लं
यतः । अम्ल + कप् ।) करमर्द्दकवृक्षः । इति राजनिर्घण्टः ॥

**करायिका**, स्त्री, (कराविव आचरति उड्डीनादि-
काले करवल्लम्बमानत्वात्तथात्त्वम्। कर + आ-चारे क्यङ् । ततो + ल्वुल् + टाप् च ।) बलाका-पक्षी । क्षुद्रवकः । इति भूरिप्रयोगः ॥

**करारोटः**, पुं, (करे आरोटते दीप्यते । आ + रुट् +
अच् ।) अङ्गुरीयकम् । इति त्रिकाण्डशेषः ॥

**करालं**, क्ली, (कराय चक्षुरोगादिनाशाय अलति
पर्य्याप्नोतीति । अल् + अच् ।) कृष्णकुठेरकः । इति
मेदिनी ॥ काल तुलसी इति भाषा ॥

**करालः**, पुं, (करं आलाति गृह्णाति । आ + ला +
कः । कराय क्षेपाय अलति पर्य्याप्नोति वा ।) सर्जरसयुक्ततैलम् । इति मेदिनी ॥ गर्जनतेल इति भाषा ॥ तैले घृते वा पक्ववेसवारः । इति पाकराजेश्वरः ॥ (क्वचित् क्लीवेऽपि दृश्यते । यथा,
"तप्तस्नेहे पचेत् पूर्ब्बं वेसवारकसंज्ञकम् ।
अनन्तमूल इति ख्याता । इति रत्नमाला ॥
(शारिवाशब्दे अस्या गुणा व्याख्येयाः ॥)

**करालिकः**, पुं, (कराणां करसदृशशाखानां आलिः
श्रेणिर्यत्र । कप् ।) वृक्षः । इति हेमचन्द्रः ॥

**कराली**, स्त्री, (कराल + गौरादित्वात् ङीष् ।) अग्नेः
सप्तजिह्वान्तर्गतजिह्वाविशेषः । इति जटाधरः ॥ (यथा मुण्डकोपनिषदि । १ । २ । ४ ।
"काली कराली च मनोजवा च
सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरूपी च देवी
लेलायमाना इति सप्त जिह्वाः" ॥)

**करिकणावल्ली**, स्त्री, (करिकणाया इव वल्ली ।) चवि-
कावृक्षः । इति राजनिर्घण्टः । चै इति भाषा ॥ (चविकाशब्देऽस्या विशेषो ज्ञेयः ॥)

**करिकुसुम्भः**, पुं, (करीति नागकेशरःत्वद्वत् कुसुम्भः ।)
नागकेशरचूर्णकम् । इति हारावली ॥

**करिगर्ज्जितं**, क्ली, (करिणः गर्ज्जितं गर्ज्जनं । करि +
गर्ज्ज + भावे क्तः ।) हस्तिगर्जनम् । तत्पर्य्यायः । वृंहितम् २ । इत्यमरः । २ । ८ । १०७ ॥

**करिजः**, पुं, (करिणो जायते इति । करि + जन् +
कर्त्तरि डः ।) हस्तिशिशुः । इति शब्दमाला ॥

**करिणी**, स्त्रा (करिन् + स्त्रियां ङीप् ।) हस्ति-
नी । तत्पर्य्यायः । धेनुका २ वशा ३ । इत्य-मरः । २ । ८ । ३६ ॥ करेणूः ४ करेणुः ५ करे-णुका ६ रेणुका ७ वासिता ८ वासा ९ हस्तिनी १० । इति शब्दरत्नावली ॥ कटम्भरा ११ पुष्क-
रिणी १२ कचा १३ गणिका १४ गजयोषित् १५ । इति जटाधरः ॥ पद्मिनी १६ इत्यमर-टीका ॥ (यथा भागवते । ४ । ९ । ५३ ।
"आरोप्य करिणीं हृष्टः स्तूयमानोऽविशत्पुरम्" ॥)

**करिदारकः**, पुं, (करिणं दृणाति हिनस्ति दारय-
तीत्यर्थः । दॄ विदारे + ण्वुल् ।) सिंहः । इति शब्दरत्नावली ॥

**करिपत्रं**, क्ली, (करिणः कर्णवत् पत्रं यस्य ।) तालीश-
पत्रम् । इति राजनिर्घण्टः ॥

**करिपिप्पली**, स्त्री, (करिसंज्ञया संज्ञा यस्याः पि-

कात्यायनदर्शनात्” । इति तिथ्यादितत्त्वम् ॥ तत्-
पर्य्यायः । अग्रुवः १ अल्व्यः २ क्षिपः ३ व्रिशः ४
शर्य्याः ५ रशनाः ६ धीतयः ७ अथर्य्यः ८ विपः
९ कक्ष्याः १० अवनयः ११ हरितः १२ स्वसारः
१३ जामयः १४ सनाभयः १५ योक्त्राणि १६
योजनानि १७ धुरः १८ शाखाः १९ अभीशवः
२०
दीधितयः २१ गभस्तयः २२ । इति द्वाविंशति-
रङ्गुलिनामानि । इति वेदनिघण्टौ २ अध्यायः ॥

**करशीकरः**, पुं, (करात् करिशुण्डात् निःसृतः
शीकरः । करस्य गजशुण्डस्य शीकरो वा ।)
हस्तिशुण्डनिर्गतजलकणा । तत्पर्य्यायः । वमथुः २
।
इत्यमरः । २ । ८ । ३७ ॥ (यथा रघुः । ७ । ४८ ।
“उद्यन्तमग्निं शमयाम्बभूवु-
पाकप्रापितसौरभ्यं करालं सूदकैर्मतम्” ॥
गन्धर्व्वभेदः ॥ यथा, महाभारते । १ । १२३ ।
५४ ।
“सद्धा वृहद्धा वृहकः करालश्च महामनाः” ॥)

**करालः**, त्रि, (कराय क्षेपाय भयप्रदर्शनाय अलति
यर्य्याप्नोति ।) दन्तुरः । दँतो इति भाषा ॥
(यथा,
“कराल वदनां घोरां मुक्तकेशीं चतुर्भुजां” ।
इति चामुण्डाध्यानम् ॥) तुङ्गः । उचु इति भाषा
॥
भीषणः । इति मेदिनी ॥ भयानक इति यावत् ॥
(यथा, रघुः । १२ । ९८ ।
“तद्व्योम्नि शतधा भिन्नं ददृशे दीप्तिमन्मुखम् ।
वपुर्महोरगस्येव करालफणमण्डलम्” ॥)

**करालकः**, पुं, (कराल एव स्वार्थे कन् । करालवत्
कायति वा ।) कृष्णतुलसी । इति रत्नमाला ॥
करालशब्दार्थश्चात्र ॥

**करालत्रिपुटा**, स्त्री, (करालानि त्रीणि पुटानि
यस्याः ।) लङ्काधान्यम् । इति राजनिर्घण्टः ॥

**कराला**, स्त्री, (करालनाम्ना नाम यस्याः ।) शारिवा ।
प्पल्याः सा । करिनामिका पिप्पली ।) गजपि-
प्पली । इत्यमरः । २ । ४ । ९७ ॥

**करिपोतः**, पुं, (करिणः पोतः शिशुः ।) करिशा-
वकः । इति हलायुधः । २ । ६९ ॥

**करिबन्धः**, पुं, (करी बध्यते रुध्यतेऽत्र । यद्वा करिणं
हस्तिनं बध्नाति अत्र । बन्ध + अधिकरणे घञ्
।)
हस्तिबन्धनस्तम्भः । तत्पर्य्यायः । प्रारब्धिः २ ।
इति हारावली ॥

**करिमाचलः**, पुं, (मच शाठ्यदम्भयो रितिधातोः
भावे घञ् । करिणि हस्तिवधविषये माचं शाठ्यं
लाति गृह्णातीति । ला + कः ।) सिंहः । इति त्रि-
काण्डशेषः ॥

**करिमुखः**, पुं, (करिणो मुखमिव मुखं यस्य ।) गणेशः ।
इति त्रिकाण्डशेषः ॥

**करिरः**, पुं, क्ली, (कॄ + इरन् ।) करारः । इति
शब्दरत्नावली ॥

**करिशावकः**, पुं, (करिणः शावकः शिशुः ।) हस्ति-
शिशुः । तत्पर्य्यायः । कलभः २ । करभ इत्यपि
पाठः । इत्यमरः । २ । ८ । ३५ ॥ करिपोतः ३ ।
इति हलायुधः ॥ करिजः ४ । इति शब्दमाला ॥
विक्कः ५ । धिक्कः ६ । यथा, शब्दरत्नावली ॥
"यावत् पञ्चाब्दमेतस्मिन् करभः कलभोऽपि च ।
विक्कधिक्कौ तथा स्त्री तु करभी कलभीत्यपि" ॥

**करी**, [न्] पुं, (करः शुण्डः अस्यास्तीति इनिः ।)
हस्ती । इत्यमरः । २ । ८ । ३४ ॥ (यथा भागवते
। ८ । २ । २२ ।
"स घर्म्मतप्तः करिभिः करेणुभि-
र्वृतो मदच्युत्कलभैरनुद्रुतः" ॥)

**करीरः**, पुं क्ली, (किरति विक्षिपति स्वदेहजावर-
णादीनिति । "कॄशॄपॄ कटिपटि शौटिभ्य ईरन्" ।
उणां । ४ । ३० । इति ईरन् ।) वंशाङ्कुरः । इत्य-
मरः । ३ । ३ । १७३ ॥ वाँशेर काँडा इति भाषा ॥
(यथा, माघे ४ । १४ ।
"रत्नैः पुनर्यत्र रुचा रुचंस्वा-
मानिन्यिरे वंशकरीरनीलैः" ॥
"वंशशब्दस्याम्लानताहेतोरलूनतायाः प्रतिपत्य-
र्थत्वादपौनरुक्त्यम् ॥
अतएवैकार्थपदमप्रयोज्यमि-
त्युक्त्वा करिकलभकर्णावतंसादिषु प्रतिपत्तिविशे-
षकरेषु न दोष इत्याह वामनः" ॥ इति तट्टी-
कायां मल्लिनाथ ॥)
अस्य गुणाः । श्लेष्मनाशित्वम् । कषायत्वम् । दाह-
जनकत्वञ्च । इति राजवल्लभः ॥ (यथाह वाभटः ।
"करीरमाध्मानकरं कषायस्वादुतिक्तकम्" ॥
"वेणोः करीराः कफला मधुरा रसपाकतः ।
विदाहिनो वातकराः स कषाया विरूक्षणाः" ॥
इति सुश्रुतः ॥)

**करीरः**, पुं, (कीर्य्यते क्षिप्यते जलमत्र "कॄशॄपॄक-
टीति" ईरन् । उणां । ४ । ३० ।) घटः । इति
चीरिका । हस्तिदन्तमूलम् । इति मेदिनी ॥

**करीषः**, पुं, क्ली, (कीर्य्यते विक्षिप्यते इति । "कॄतॄ-
भ्यामीषन्" । उणां ४ । २६ । इति कॄ + ईषन् ।)
शुष्कगोमयम् । इत्यमरः । २ । ९ । ५१ ॥ घूँटे इति
भाषा । तत्पर्य्यायः । गोग्रन्थिः २ छगणः ३ । इति
हेमचन्द्रः ॥ (यथा, रामायणे । २ । १०० । ७ ।
"ददर्श च वने तस्मिन् महतः सञ्चयान् कृतान् ।
मृगाणां महिषीणाञ्च करीषैः शीतकारणात्" ॥)

**करीषाग्निः**, पुं, (करीषे करीषस्थितो वा अग्निः ।)
शुष्कगोमयवह्निः । घूँटेर आगुन इति भाषा ।
तत्पर्य्यायः । छागणः २ । इति त्रिकाण्डशेषः ॥

**करुणः**, पुं, (करोति मनः आनुकूल्याय । कृ + "कॄ
वृदारिभ्य उनन्" । उणां । ३ । ५३ । इति उनन् ।)
वृक्षविशेषः । करुणा लेवुर गाछ इति भाषा ।
तत्फलगुणः । कफवाय्वाममेदोनाशित्वम् । पित्त-
प्रकोपकत्वञ्च । इति राजवल्लभः ॥ बुद्धभेदः । इति
त्रिकाण्डशेषः ॥ शृङ्गाराद्यष्टरसान्तर्गततृतीय-
रसः । इत्यमरः । १ । ७ । १७ ॥ तस्य लक्षणादि ।
"इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत् ।
धीरैः कपोतवर्णोऽयं कथितो यमदैवतः ॥
शोकोऽत्र स्थायिभावः स्याच्छोच्यमालम्बनं मतम् ।
तस्य दाहादिकावस्था भवेदुद्दीपनं पुनः ॥
अनुभावा दैवनिन्दा भूपातक्रन्दितादयः ।
वैवर्णोच्छ्वासनिश्वासस्तम्भप्रलपनानि च ॥
निर्व्वेदमोहापस्मारव्याधिग्लानिस्मृतिश्रमाः ।
विषादजडतोन्मादचिन्ताद्याव्यभिचारिणः ॥
शोच्यं विनष्टबन्धुप्रभृति । यथा राघवविलासे ।
विपिने क्व जटानिबन्धनं
तव चेदं क्व मनोहरं वपुः ।
अनयोर्घटना विधेः स्फुटं
ननु खड्गेन शिरीषकर्त्तनम् ॥

अत्र रामवनवासजनितशोकार्त्तस्य दशरथस्य
दैवनिन्दा । एवं बन्धुवियोगवित्तनाशादावपि
प्रवासाख्यो भेद एवेति केचिदाहुः तदन्ये मरण-
रूपविशेषसम्भवात्तद्भिन्नमपि मन्यन्ते" ॥

**करुणा**, स्त्री, ("कृवृदारिभ्य उनन्" ॥ उणां । ३ ।
५३ । इति कृ + उनन् । टाप् च ।) परदुःखहा-
नीच्छा । तत्पर्य्यायः । कारुण्यम् २ घृणा ३ कृपा
४ दया ५ अनुकम्पा ६ । अनुक्रोशः ७ । इत्य-
मरः । १ । ७ । १ ॥ शूकः ८ । इति हेहचन्द्रः ।
(यथा रघुः ८ । ६७ ।
"करुणाविमुखेन मृत्युना
हरता त्वां वद किं न मे हृतम्" ॥
गङ्गानामविशेषः । यथा काशीखण्डे २९ । ४३ ।
"कूटस्था करुणा कान्ता कूर्मयाना कलावती" ॥
करुणा दयास्वरूपा । इति तट्टीका ॥)

**करुणापरः**, त्रि, (करुणा परा यस्य करुणायां परः
अनुरागी वा ।) दयापरः । तत्पर्य्यायः । दयालुः
२ कृपालुः ३ सूरतः ४ । इति हेमचन्द्रः ॥

**करुणी**, स्त्री, (कृ + उनन् + ङीप् ।) पुष्पवृक्षविशेषः ।
ककरखिरुणि इति कोकणे प्रसिद्धा । तत्पर्य्यायः ।
ग्रीष्मपुष्पी २ रक्तपुष्पी ३ चारिणी ४ राजप्रिया
५ राजपुष्पी ६ सूक्ष्मा ७ ब्रह्मचारिणी ८ । अस्या
गुणाः । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । कफ-
मारुताध्मानविषविच्छर्द्दिजन्तूर्द्ध्वश्वासनाशित्वञ्च ।
इति राजनिर्घण्टः ॥

**करेटः**, पुं, (करे कराङ्गुलीषु अटति उत्पद्यते इति
अट् + अच् अलुक्समासः ।) नखः । इति त्रिका-
ण्डशेषः ॥

**करेटव्या**, स्त्री, (करे अटं अटनं व्ययतीति । व्ये + डः
ततष्टाप् ।) धनच्छूपक्षी । इति त्रिकाण्डशेषः ॥

**करेटुः**, पुं, (के जले वायौ वा रेटतीति । रेटृ भाषण-
याचनयोः + मृगष्वादित्वात् कुः ।) पक्षिविशेषः ।
करकटिया इति भाषा । तत्पर्य्यायः । कर्करेटुः २ ।
इत्यमरः । २ । ५ । १९ ॥ करटुः ३ कर्कराटुकः ४ ।
इति हेमचन्द्रः ॥

**करेणुः**, पुं, ("कृहृभ्यामेनुः" । उणां । २ । १ । इति
कृ + एनुः । के मस्तके रेणुः पांशुर्य्यस्य वा । मस्तके
शुण्डाकृष्टधूलीनिक्षेपणात् तथात्वम् ।) हस्ती ।
इत्यमरः । ३ । ३ । ५२ ॥ (यथा माघे १२ । ५ ।
"उत्क्षिप्तगात्रः स्म विडम्बयन्नभः
समुत्पतिष्यन्तमगेन्द्रमुच्चकैः ।
आकुञ्चितप्रोहनिरूपितक्रमं

मेदिनी ॥ (कीर्य्यते दूरे निक्षिप्यते दूरतः त्यज्यते कण्टकादिभयादिति यावत् ।) मरुभूमिज उष्ट्र-प्रियः कण्टकिवृक्षः । करील इति भाषा ! तत्-पर्य्यायः । क्रकरः २ ग्रन्थिलः ३ । इत्यमरः । २ । ४ । ७७ ॥ क्रकचः ४ । इति तट्टीका ॥ निष्पत्रिका ५ करिरः ६ गूढपत्रः ७ करकः ८ तीक्ष्णकण्टकः ९ । अस्य गुणाः । (यथा भावप्रकाशे ।
"करीरः कटुकस्तिक्तः स्वेद्युष्णो भेदनः स्मृतः ।
दुर्नामकफवातामगरशोथव्रणप्रणुत्" ॥)
आध्मानकारित्वम् । कषायत्वम् । कटुत्वम् । उष्ण-त्वम् । अतिशयकफकारित्वम् । श्वासानिलारो-चकसर्व्वशूलविच्छर्द्दिखर्ज्जूव्रणदोषनाशित्वञ्च । इति राजनिर्घण्टः ॥

**करीरा**, स्त्री, (करिर + "अजाद्यतष्टाप्" । ४ । १ । ४ । इति टाप् ।) चीरिका । झिँझि पोका इति भाषा ॥ हस्तिदन्तमूलम् । इत्युणादिकोषः ॥

**करीरिका**, स्त्री, (करीरमिवाकृतिरस्त्यस्याः । करीर + टन् + टाप् च ।) हस्तिदन्तमूलम् । इति त्रि-काण्डशेषः ॥

**करीरी**, स्त्री, (कृ + ईरन् + गौरादित्वात् ङीष् ।) उदाहार्य्यम् ॥ परिपोषस्तु महाभारते स्त्रीपर्ब्बणि बोद्धव्यः" । इति साहित्यदर्पणे ३ । १९९ ॥ (सर्व्व-जीवेषु दयावान् । यथा भागवते । ३ । २७ । ८ ।
"यदृच्छयोपलनब्धे सन्तुष्टो मितभुग् मुनिः ।
विविक्तशरणः शान्तो मैत्रः करुण आत्मवान्" ॥)

**करुणमल्ली**, स्त्री, (करुणा करुणाया अर्हा मल्ली ।) नवमल्लिका । इति शब्दचन्द्रिका ॥

**करुणविप्रलम्भः**, पुं, (करुणयुक्तो विप्रलम्भः ।) पूर्ब्ब-रागादिचतुर्भेदविप्रलम्भशृङ्गारमध्ये विप्रलम्भवि-शेषः । अस्य लक्षणम् । यथा साहित्यदर्पणे ३ परिच्छेदे १९३ ।
"यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये ।
विमनायते यदैकस्तदा भवेत् करुणविप्रलम्भाख्यः" ॥
यथा, कादम्बर्य्याम् ।
"पुण्डरीकमहाश्वेतावृत्तान्ते पुनरलभ्ये शरीरान्तरे वा लभ्ये करुणाख्य एव रसः ॥ किञ्चात्राकाशसरस्वतीभाषानन्तरमेव शृङ्गारः । सङ्गमप्रत्याशायां रतेरुद्भावात् प्रथ-मस्तु करुण एवत्यभियुक्ता मन्यन्ते यच्चात्र सङ्गम-प्रत्याशानन्तरमपि भवतो विप्रलम्भशृङ्गारस्य करेणुरारोहयते निषादिनम्" ॥)
कर्णिकारवृक्षः । इति विश्वः ॥

**करेणुः**, स्त्री, (कृ + एनुः ।) हस्तिनी । इत्यमरः । ३ । ३ । ५२ ॥ (यथा रामायणे २ । ४० । २९ ।
"शुश्रुवे चाग्रतः स्त्रीणां रुदतीनां महास्वनः ।
यथा नादः करेणूनां बद्धे महति कुञ्जरे" ॥
अस्या दुग्धगुणा यथोक्ताः सुश्रुते ।
"हस्तिन्याः [दुग्धं] मधुरं वृष्यं कषायानुरसं गुरु ।
स्निग्धं स्थैर्य्यकरं शीतं चक्षुष्यं बलवर्द्धनम्" ॥)

**करेणुभूः**, पुं, (करेणौ करेणुविषये भवति हस्ति-शास्त्रप्रवर्त्तनाय प्रभवतीत्यर्थः । भू + क्विप् ।) पाल-काप्यमुनिः । इति हेमचन्द्रः ॥

**कर्व्वुरः**, पुं, (कृणाति हिनस्ति प्राणिनः । किरति विक्षिपति जीवानिति वा । कृ + "कृगृशृवृच-तिभ्यः ष्वरच्" । उणां । २ । १२३ । इति ष्वरच् ।) राक्षसः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥ व्याघ्रः । इति मेदिनी ॥ (यथा, उणादिटीका "कर्व्वुरो व्याघ्ररक्षसोः" । २ । १२३ ॥)

**कर्व्वरी**, स्त्री, (कर्व्वर + षित्वात् ङीप् ।) शिवा । इति विश्वमेदिन्यौ ॥ हिङ्गुपत्री । इति जटाधरः ॥ (व्याघ्री । राक्षसी । इत्युणादिवृत्तिः । २ । १२३ ॥)

**कर्व्वुरः**, पुं, (कर्व्वति हिनस्ति सदर्पो भवति वा । कर्व्व दर्पे हिंसायाञ्च । "मद्गुरादयश्चेति" + उरच् ।) राक्षसः । इति शब्दार्णवः ॥ चित्रवर्णः । इत्यमरः । २ । ९ । ९४ ॥ शटी । इति भरतः ॥

**कर्व्वूरः**, पुं, (कर्व्व + खर्ज्जूरादित्वात् ऊरः । उणां १ । ८२ ।) राक्षसः । शटी । इत्यमरः ॥ २ । ९ । ९४ ॥

**कर्श्यः**, पुं, (कृश् + यत् ।) कर्च्चूरः । इति राज-निर्घण्टः । कचूर इति हिन्दीभाषा ॥

**कर्षः**, पुं क्ली, (कृष् विलेखने पचाद्यच् । कर्मणि करणे वा घञ् ।) षोडशमाषकपरिमाणम्। अशीतिरत्तिकाः । तत्पर्य्यायः । अक्षः २ । इत्य-मरः । २ । ९ । ८६ ॥ वैद्यकमते तोलकद्वयम् । तत्पर्य्यायः । सुवर्णम् २ अक्षः ३ विडालपदकम् ४ पिचुः ५ पाणितलम् ६ उडुम्बरम् ७ तिन्दुकम् ८ कबडग्रहः ९ । इति परिभाषा ॥ दशमाषकः । इति राजनिर्घण्टः ॥ ("कोलद्वयञ्च कर्षः स्यात् स प्रोक्ता पाणिमानिका । अक्षः पिचुः पाणितलं किञ्चिपाणिश्च तिन्दुकम्" ॥ इति शार्ङ्गधरे पूर्ब्बखण्डे । १ अध्याये ॥)

**कर्षः**, पुं, (कृष् + भावे घञ् ।) कर्षणम् । इति शस्य पूर्ब्बखण्डे । १ भागे ॥)

**कर्षफला**, स्त्री, (कर्षफल + टाप् ।) आमलकीवृक्षः । इति रत्नमाला ॥ (आमलकीशब्देऽस्या गुणादिकं ज्ञातव्यम् ॥)

**कर्षार्द्धं**, क्ली, (कर्षस्य अर्द्धम् ।) तोलकपरिमाणम्। इति वैद्यकपरिभाषा ॥ ("कर्षार्द्धवा कणाशुण्ठ्योः" । "कर्षः कर्षार्द्ध्वमथो पलं पलद्वयमथाकर्षश्च" ॥ इति वैद्यकचक्रपाणि संग्रहज्वराधिकारकासाधि-कारयोः ॥)

**कर्षिणी**, स्त्री, (कर्षति इति । कृष् + णिनिस्ततो ङीप् ।) क्षीरिणीवृक्षः । अश्वमुखबन्धनरज्जुस्थित-लौहम् । तत्पर्य्यायः । खलीनः २ कवीयम् ३ कविका ४ । इति जटाधरः ॥ (त्रि । मनोहारी । यथा रघुः १९ । ११ । "घ्राणकान्तमधुगन्धकर्षिणीः पानभूमिरचनाः प्रिधासखः" ॥)

**कर्षूः**, पुं, (कृष् + "कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः" । उणां १ । ८२ । इति ऊः ।) वार्त्ता । करी-षाग्निः । इत्यमरः । ३ । ३ । २२१ ॥ वार्त्ता अत्र-कृषिः । इति रमानाथः ॥ जीविका । इति भरतः ॥

**कर्षूः**, स्त्री, (कृष् विलेखने + "कृषिचमितनीति" ऊः उणां १ । ८२ ।) कुल्या । अल्पा कृत्रिमा सरित् । इत्यमरः । ३ । ३ । २२१ ॥ नदीमात्रम् । इति रत्नकोषः ॥ इष्टखातः । इति मेदिनी ॥ तद्यथा । चतुरङ्गुलपृथ्वीस्तावदन्त रास्तथाधः खाता वितस्त्यायतास्तिस्रः कर्षूः कुर्य्यात् कर्षूसभीपे अग्नित्रयमुपसमाधाय परिस्तीर्य्य तत्रैकैकस्मिन्ना-हुतित्रयं जुहुयात् । इति श्राद्धविवेक धृतविष्णु-सूत्रम् ॥

**कर्हि**, व्य, (किम् + "अनद्यतने हिलन्यतरस्याम्" । सक--सेट् ।) क कालयति । नुदिरिति नुद ञौश् प्रेरणे इत्यस्य औणादिककिप्रत्यये रूपम् । इति दुर्गादासः ॥

**कलं**, क्ली, (कडति माद्यति अनेन । कड मदे + "हल-श्च" । ३ । ३ । १२१ । इति घञ् । संज्ञापूर्ब्बकत्वात् वृद्ध्यभावः । डलयोरेकत्वम् ।) शुक्रम् । इति मेदिनी ॥ कोलिवृक्षः । इति शब्दचन्द्रिका ॥

**कलः**, पुं, (कल + भावे घञ् वृद्ध्यभावः ।) मधुरास्फुट-ध्वनिः । इत्यमरः । १ । ७ । २ ॥ ("जगौ कलं वामदृशां मनोहरम्" ॥ इति भागवतम् । १० । २९ । ३ ॥) सालवृक्षः । इति राजनिर्घण्टः ॥

**कलः**, त्रि, (कलयति मान्द्यं नयति जाठराग्निम् । कल + णिच् + अच् । धातूनामनेकार्थत्वात् विशेषतः कलिहलिरित्युक्तेश्च तथात्वम् ।) अजीर्णः । इति मेदिनी ॥ (अव्यक्तमधुरध्वनिः । यथा रघुः । १ । ४१ । "सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिताननौ" ॥)

**कलकः**, पुं, (कलते इति । कल + ण्वुल् । स्वार्थे कन् वा ।) शकुलमत्स्यः । इति हेमचन्द्रः ॥ (शकुल-शब्देऽस्य गुणादयोऽवगन्तव्याः ॥)

**कलकण्ठः**, पुं, (कलप्रधानः कण्टो यस्य ।) कलध्वनिः । हंसः । पारावतः । पिकः । इति मेदिनी ॥ (यथा, राजेन्द्रकर्णपूरे ३ । "युष्माकं रतिकान्तकार्म्मुक-लताक्रेङ्कारकान्ते रुते, सोत्कष्ठं कलकण्ठकण्ठ-कुहरोद्भूतेऽपि माभून्मनः" ॥)

**कलकलः**, पुं, (कलादपि कलः । युगपत्समुत्थित-बहुलशब्दानामेकीभूततया तुमुलत्वात्तथात्वम्। कलशब्दे + घञ् । वृद्ध्यभावः । यद्वा कलः प्रकारः गुणवचनत्वात् प्रकारे द्वित्वम् ॥) कोलाहलः । (यथा, गीतगोविन्दे । १ । ३८ । "उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कु-क्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः" ॥) सालनिर्य्यासः । इति मेदिनी ॥

**कलघोषः**, पुं, (कलो मधुरो घोषो ध्वनिर्यस्य ।) कोकिलः । इति शब्दरत्नावली ॥

**कलङ्कः**, पुं, (कलयति इति । कल + क्विप् । कल् चासौ अङ्कश्चेति ।) चिह्नम् । अपवादः । ("उत्तमस्य विशेषेण कलङ्कोत्पादको जनः" ॥ इति कथासरित्सागरे । २४ । २०४ ॥) लौह-मलम् । इति मेदिनी ॥

मेदिनी ॥ विभीतकवृक्षः । इति शब्दरत्नावली ॥

**कर्षकः**, त्रि, (कर्षति भूमिमिति । कृष् + ण्वुल् ।)

कृषिजीवी । कृषाण् इति भाषा ॥
("सुखमापतितं सेवेत् दुःखमापतितं सहेत् ।
कालप्राप्तमुपासीत शस्यानामिव कर्षकः" ॥
इति महाभारते । ३ । २५८ । १५ ॥)
तत्पर्य्यायः । क्षेत्राजीवः २ कृषिकः ३ कृषीबलः ४ ।
इत्यमरः । २ । ९६ ॥ कार्षकः ५ । इति तट्टीका ॥
आकर्षणकर्त्ता च ॥

**कर्षणं**, क्ली, (कृष् + भावे ल्युट् ।) कृषिकर्म्म । लाङ्ग-

लादिना भूम्यादिखननम् । इति हेमचन्द्रः । चास
इति भाषा ॥ आकर्षणम् । टानन् इति भाषा ॥
(शोषणम् । पीडणम् । यथा मनुः ७ । ११२ ।
"शरीरकर्षणात् प्राणाः क्षीयन्ते प्राणिनां यथा ।
तथा राज्ञामपि प्राणाः क्षीयन्ते राष्ट्रकर्षणात्" ॥)

**कर्षणिः**, स्त्री, (कृष् + अनिः ।) असती । इत्युणादि-

कोषः ॥

**कर्षणी**, स्त्री, (कर्षण + गौरादित्वात् ङीष् ।) क्षी-

रिणीवृक्षः । इति राजनिर्घण्टः ॥

**कर्षफलः**, पुं, (कर्षः कर्षमात्रं फलं यस्य ।) विभी-

तकवृक्षः । इत्यमरः । २ । ४ । ५८ ॥ (अस्य पर्य्यायाः यथा, --
"विभीतकस्त्रिलिङ्गः स्याल्लाक्षः कर्षफलस्तु सः ।
कलिद्रुमो भूतवासस्तथा कलियुगालयः" ॥
गुणाश्चास्य विभीतकशब्दे ज्ञेयः । इति भावप्रका-
५ । ३ । २१ इति । हिल् कादेशः ।) कदा । कस्मिन्
काले । इति व्याकरणम् ॥ कखन कवे इति भाषा ॥
(यथा, ऋग्वेदे ६ । ३५ । २ ।
"कर्हिस्वित्तदिन्द्र यन्नृभिर्न्नृन्वी-
रैवीरान् नीलयासे जयाजीन्" ॥)

**कर्हिचित्**, व्य, (कर्हि च चिच्चेति विग्रहः । पाणिनि-

मतानुसारेण भिन्नपदद्वयम् मुग्धबोधमते तु
"किमः क्त्यन्ताच्चिच्चनौ" । इति चित् ।) कस्मिं-
श्चित् काले । कोनकाले इति भाषा । तत्पर्य्यायः ।
जातु २ कदाचित् ३ । इति हेमचन्द्रः ॥ (यथा, भागवते १० । ८४ । १३ ।
"यस्यात्मबुद्धिः कुणपे त्रिधातुके
स्वधीः कलत्रादिषु भौम इज्यधीः ।
यत्तीर्थबुद्धिः सलिले न कर्हिचित्
जनेष्वभिज्ञेषु स एव गोखरः" ॥)

**कल**, त् क गतौ । सङ्ख्यायाम् । इति कविकल्पद्रुमः ॥

(अदन्तचुरां--परं--सकं--सेट् ।) अन्त्यस्थतृती-
योपधः । कलयति कालं धीरः । इति दुर्गादासः ॥

**कल**, ङ सङ्ख्यारुतोः । इति कविकल्पद्रुमः ॥ (भ्वां--

आत्मं--सकं--अकं च--सेट् ।) ङ कलते दिवसं वृद्धः
गणयतीत्यर्थः । रुत् शब्दः । इति दुर्गादासः ॥

**कल**, क नुदौ । इति कविकल्पद्रुमः ॥ (चुरां--परं--

**कलङ्कषः**, पुं, (करेण कषति हिनस्ति नाशयति वा ।

बाहुलकात् खच् मुम् च रस्य लः कलेन गर्ज्जनेन
कषति वा ।) सिंहः । इति शब्दमाला ॥

**कलङ्कषा**, स्त्री, (कलङ्कष + टाप् ।) करताली । इति

शब्दरत्नावली ॥

**कलङ्की**, [न्] त्रि, (कलङ्कोऽस्त्यस्य । इनिः ।) अप-

वादग्रस्तः । यथा, -- तिथ्यादितत्त्वे ।
"कलङ्की जायते विल्वे तिर्य्यग्योनिश्च निम्बके" ।
चिह्नयुक्तः । लौहमलविशिष्टः ॥ चन्द्रः ॥

**कलङ्कुरः**, पुं, (कं जलं लङ्कयति गमयति भ्रामय-

तीत्यर्थः । लकिगतौ + णिच् + उरच् ।) आवर्त्तः ।
जलभ्रमः । इति त्रिकाण्डशेषः ॥

**कलञ्जः**, पुं, (कं लञ्जयति । लजि + अण् ।) विषास्त्र-
हतमृगपक्षिणौ । इति त्रिकाण्डशेषः ॥ ताम्र-
कूटः । दोक्ता तामाक् इति भाषा । यथा । विष्णु-
सिद्धान्तसारावल्यां वैद्यके । अथ धुमपर्णीधूम-
पानगुणः ।
"कलञ्जसंवेष्टनधूमपानात्
स्याद्दन्तशुद्धिर्मुखरोगहानिः ।
कफघ्नमामज्वरहानिकृच्च
गान्धर्व्वविद्याप्रवणैकसेव्यम्" ॥

**कलटं**, क्ली, (कं जलं लटति आच्छादयति । आवृ-
णोतीति वा । क + लट् + अच् ।) गृहाच्छादनम् ।
इति शब्दरत्नावली । चाल इति भाषा ॥ कुटल-
मिति च पाठः ॥

**कलतूलिका**, स्त्री, (कं सुखं विषयत्वेन लाति गृह्णा-
तीति कलः । कलं कामं तूलयति निष्कषति
पूरयति वा या । कल + तूल निष्कर्षे पूरणे
वा ण्वुल् । टापि अत इत्वम् ।) इच्छावती । का-
मुका । तत्पर्य्यायः । वाञ्छिनी २ लञ्जिका ३ । इति
त्रिकाण्डशेषः ॥

**कलत्रं**, क्ली, (गड सेचने + "गडेरादेश्च कः" ।
उणां । ३ । १०६ । अत्रन् गकारस्य ककारश्च ।
डलयो रेकत्वस्मरणात् डस्य लः । यद्वा कलं
त्रायते । त्रै + कः । यद्वा कड्यते शिष्यते इति ।)
कड--शासने बाहुलकात् अत्रन् । श्रोणिः । भार्य्या ।
इत्यमरः । ३ । ३ । १७८ ॥ (यथा मेघदूते । ४० ।
"तां कस्याञ्चिद् भवनवडभौ सुप्तपारावतायां
नीत्वा रात्रिं चिरविलसनात् खिन्नविद्युत्कलत्रः" ॥)
राज्ञां दुर्गस्थानम् । इति हेमचन्द्रः ॥

**कलधूतं**, क्ली, (कलेन अवयवेन धूतं शुद्धम् ।) रूप्यम् ।
इति राजनिर्घण्टः ॥

**कलधौतं**, क्ली, (कलेन अवयवेन धौतम् ।) स्वर्णम् ।
('कन्येयं कलधौतकोमलरुचिः कीर्त्तिस्तु नातः
परा' ।
इति महानाटकम् ॥
महाभारते च ४ । गोहरणे ४० । ६ ।
"इमे च कस्य नाराचाः सहस्रं लीमवाहिनः ।
समन्तात्कलधौताग्रा उपासङ्गे हिरण्मये" ॥)
रजतम् । इति मेदिनी ॥ कलध्वनिः । इति विश्वः ॥

**कलध्वनिः**, पुं, (कलः अस्फुटमधुरः ध्वनिर्यस्य ।)
पारावतः । कोकिलः । मयूरः । इति मेदिनी ॥
मधुराव्यक्तशब्दः । इति कलशब्दार्थे अमरः । १ ।

क + ला + कः ।) वेतसवृक्षः । इति राजनिर्घण्टः
॥

**कलना**, स्त्री, (कल + भावे युच् । टाप् च ।) वशी-
भूतत्वम् । वशता । यथा, -- आनन्दलहर्य्याम् ।
२९ ।
"करारं यत् क्ष्वेडं कवलितवतः कालकलना" ।
जल्पना च ॥

**कलन्दरः**, पुं, (कलं शास्त्रविहितवाक्यं शिष्टाचारं
वा दृणाति । कल + दॄ + खच् । मुम् च ।) वर्ण-
शङ्करजातिविशेषः । स तु लेटात् तीवरकन्यायां
जातः । इति ब्रह्मवैवर्त्तपुराणम् ॥

**कलन्दिका**, स्त्री, (कं सुखं लाति विषयत्वेन इति ।
कलं कामं सर्व्वाभीष्टं ददाति । कल + दा + कः ।
संज्ञायां कन् । ततष्टाप् अत इत्वं पृषोदरा
दित्वात् मुम् च ।) सर्व्वविद्या । इति हेमचन्द्रः ॥

**कलन्धुः**, स्त्री, (कलायाः मात्रायाः अन्धुरिव । शक-
न्ध्वादित्वात् अलोपे साधुः ।) घोलीशाकः । इति
राजनिर्घण्टः ॥

**कलभः**, पुं, (कलेन करेण शुण्डेनेति यावत् भाति ।
कल + भा + कः । यद्वा + कल् गतौ "कृशृशलि-
कलिगर्द्दिभ्योऽभच् । उणां । ३ । १२२ । इति ।
अभच् ।) करभः । हातिर छा इति भाषा । स तु
पञ्चवर्षपर्य्यन्तम् । इति सुभूतिः ॥ तत्पर्य्यायः ।
करिशावकः २ । इत्यमरः । २ । ८ । ३५ ॥
दुर्द्दान्तः
३ व्यालः ४ । (यथा रघौ । ३ । ३२ ।
"महोक्षतां वत्सतरः स्पृशन्निव
द्विपेन्द्रभावं कलभः श्रयन्निव" ॥)
धत्तूरवृक्षः । इति राजनिर्घण्टः ॥

**कलभवल्लभः**, पुं, (कलभस्य हस्तिशावकस्य वल्लभः
प्रियः ।) पीलुवृक्षः । इति राजनिर्घण्टः ॥

**कलभी**, स्त्री, (कं जलं आश्रयतया लभते । लभ +
अच् । गौरादित्वात् ङीष् ।) चञ्चुवृक्षः । इति
राजनिर्घण्टः ॥

**कलमः**, पुं, (कलते कलयति वा अक्षरं प्रकाशयति
जनयति वा । कल + "कलिकर्द्दोरमः" । उणां । ४
।
८४ इति अमः ।) स्वनामख्यातलिपिसाधनवस्तु
।
तत्पर्य्यायः । लेखनी २ वर्णतूली ३ अक्षरतूलिका

("कलम्बनालिका मार्षकुटिज्जरकुतुम्बकम्" ॥
इत्यादीनां समष्टिगुणा यथा, --
"शाकं गुरु च रूक्षञ्च प्रायो विष्टभ्य जीर्य्यति ।
मधुरं शीतवीर्य्यञ्च पुरीषस्य च भेदनम्" ॥
इति चरके सूत्रस्थाने २७ अध्याये ॥)

**कलम्बकः**, पुं, (कलम्ब + संज्ञायां कन् ।) धारा-
कदम्बः । इति राजनिर्घण्टः ॥

**कलम्बिका**, स्त्री, (कलम्बी एव स्वार्थे कन् टाप् च
अत इत्वम् ।) कलम्बीशाकः । इति शब्दरत्ना-
वली ॥ (यथा चक्रपाणिकृतद्रव्यगुणे शाकवर्गे ।
"कलम्बिका गुरुर्वृष्या कषायास्तन्यवृद्धिदा" ॥
कलम्बीव कायते प्रकाशते निधीयते वा । क-
लम्बी + कै + कः । टाप् इत्वञ्च । संज्ञा
हेतुत्वात्
पृषोदरादित्वात् । ह्रस्वः ।) ग्रीवापश्चान्नाडी ।
तत्पर्य्यायः । मन्या २ । इति हेमचन्द्रः ॥

**कलम्बी**, स्त्री, (के जले लम्बते । लवि स्रंसने + अच्
ङीष् ।) जलजलताशाकविशेषः । कल्मी इति
भाषा । तत्पर्य्यायः । कडम्बी २ कलम्बूः ३
कल-
म्बिका ४ । इति शब्दरत्नावली ॥ अस्या गुणाः
।
स्तन्यदुग्धशुक्रश्लेष्मकारित्वम् । मधुरत्वम् ।
कषा-
यत्वम् । गुरुतरत्वञ्च । इति राजबल्लभः ॥

**कलम्बुटं**, क्ली, (के जले लम्बते भासते । क + लम्ब +
बाहुलकात् उटन् ।) हैयङ्गवीनम् । नवनीतम् ।
इति हारावली ॥

**कलम्बूः**, स्त्री, (के जले लम्बते । लम्ब + बाहुलकात्
ऊङ् ।) कलम्बीशाकः । इति शब्दरत्नावली ॥

**कलरवः**, पुं, (कलः मधुरास्फुटो रवः ध्वनिर्यस्य ।)
कपोतः । पायरा इति भाषा । इत्यमरः । २ ।
५ । १४ ॥ (यथा आर्य्यासप्तशती ५९७ ।
"शीर्णप्रासादोपरि जिगीषुरिव कलरवः क्वणति"
॥)
कोकिलः । इति राजनिर्घण्टः ॥ (यथा, ब्रह्म-
पुराणे ५२ । ३४ । "कोलिलैः कलरवैश्च" ॥)
मधुराव्यक्तध्वनिः । इति कलशब्दार्थे अमरः ॥
(कलएव रवः । कर्म्मधारयः ॥ यथा कलाबि-
लासे १ । ६ ।
"नवविसकिसलयकबलन-

७ । २ ॥ (यथा महानिर्व्वाणतन्त्रे । १ । ३ ।
“अप्सरोगणसङ्गीतकलध्वनिनिनादिते” ॥)

**कलनं**, क्ली, (कल्यते लक्ष्यते दुष्यते वा । कल + ल्युट् ।) चिह्नम् । दोषः । इति हलायुधः ॥ (कल्यते शुक्रशोणिताभ्यामन्योन्यंमिश्र्यते ।) गर्भे मिश्रितं शुक्रशोणितम् ॥ यथा, भागवते । ३ । ३१ । २ ।
“कलनं त्वेकरात्रेण पञ्चरात्रेण बुद्बुदम् ।
दशाहेन तु कर्क्कन्धूः पेश्यण्डं वा ततः परम्” ॥
क्वचित् कललं इत्यपि पाठो दृश्यते । कलयति जानात्यनेन । कल गतौ गत्यर्था ज्ञानार्थाश्च । कल + करणे ल्युट् । ज्ञानम् ॥)

**कलनः**, पुं, (कं जलं लाति । तथा सन् नमति । ४ । इति जटाधरः ॥ स्वनामख्यातशालिधान्य-विशेषः । (यथा, रघुः । ४ । ३७ ।
“आपादपद्मप्रणताः कलमा इव ते रघुम् ।
फलैः संवर्द्धयामासुरुत्खातप्रतिरोपिताः” ॥)
अस्य गुणाः । रक्तदोषत्रिदोषनाशित्वम् । चक्षु-र्हितकारित्वम् । कषायत्वञ्च । इति राजवल्लभः ॥
“रक्तशालिर्महाशालिः कलमः षष्टिकोऽपरः” ।
इति हारीते प्रथमस्थाने १० अध्याये ॥
(“शूकजेषु वरस्तत्र रक्ततृष्णात्रिदोषहा ॥
महांस्तस्यानुकलमस्तञ्चाप्यनुततः परे” ॥
इति वाभटे सूत्रस्थाने ६ अध्याये ॥) चौरः । इति मेदिनी ॥

**कलमोत्तमः**, पुं, (कलमेभ्यः कलमेषु वा उत्तमः ।) गन्धशालिः । इति राजनिर्घण्टः ॥

**कलम्बः**, पुं, (कल्यते क्षिप्यते शत्रुं प्रति । कलक्षेपे + अम्बच् ।) शरः । शाकनाडिका । इत्यमरः ॥ २ । ८ । ८७ । कदम्बः । इति विश्वः ॥

कषायकलहंसकलरवो यत्र” ॥)

**कललः**, पुं क्ली, (कल्यते वेष्ट्यतेऽनेन । कल + वृषा-दिभ्यः कलच् ।) जरायुः । गर्भवेष्टनचर्म्म । इत्य-मरः । २ । ६ । ३८ ॥
(“ऋतुस्नाता तु या नारी स्वप्ने मैथुनमावहेत् ।
आर्तवं वायुरादाय कुक्षौ गर्भं करोति हि ॥
मासि मासि विवर्द्धेत गर्भिण्या गर्भलक्षणम् ।
कललं जायते तस्या वर्ज्जितं पैतृकैर्गुणैः” ॥
इति सुश्रुते शारीरस्थाने २ अध्याये ॥)

**कललजः**, पुं, (कललमिव जायते । जन + डः ।) रालः । इति राजनिर्घण्टः ॥ धुना इति भाषा ॥

**कललजोद्भवः**, पुं, (डद्भवत्यस्मात् उद्भवः । कलल-जस्य उद्भवः ।) सालवृक्षः । इति राजनिर्घण्टः ॥

**कलविङ्कः**, पुं, (कलं मधुरास्फुटं वङ्कते रौति । वकि वा गतौ + अच् पृषोदरादित्वात् अत इत्वे साधुः ।) चटकः । इत्यमरः । २ । ५ । १८ ॥

:(यथा, मनुः । ५ । १२ ।
"कलविङ्कं प्लवं हंसं चक्राङ्गं ग्रामकुक्कुटम्" ॥)
कलिङ्गकवृक्षः । इति मेदिनी ॥ कलङ्कः । श्वेत-
चामरः । इति सारस्वतः ॥
(त्वष्टृपुत्त्रविश्वरूपस्य
शिरोभेदः । पुरा किल कदाचित् ऐश्वर्य्यमत्तेन सुरेश्वरेण यदा सभागतः सुराचार्य्यो गीष्पति-रसम्मानितोऽन्तरधीयत । तदा ब्रह्मोपदिष्टैर्-सुरप्रपीडितैरमरैस्त्वाष्ट्रं विश्वरूपं पौरिहित्ये वरयित्वा भूयः सन्नद्धैरसुरा बबाधिरे ।
विश्वरूपस्तु
मातामहकुलस्यापेक्षया परोक्षमसुरेभ्योऽपि यज्ञभागं प्रददौ तदभिज्ञाय सुरपतिर्भीतः क्रुद्धश्च
विश्वरूपस्य शिरांस्यछिनत् । तस्य खलु त्वाष्ट्रस्य
कपिञ्जलः कलविङ्कस्तित्तिरिरिति त्रीणि शिरां-स्यासन् तेषु सुरापायि शिर एव कलविङ्क इति बोध्यम् । एतद्विवरणन्तु श्रीमद्भागवते ६ । ९ अ-
ध्याये सविस्तरं दर्शनीयम् ॥)

**कलशः**, त्रि, (कलं मधुराव्यक्तशब्दं शवति जलपूरण-
समये प्राप्नोति । कल + शुगतौ + डः ।) जलाधार-
विशेषः । कलशी इति ख्यातः । (यथा आर्य्या-सप्तशती ६९० ।
"प्रबलो विदरयिष्यति जलकलशं नीरलेखेव" ॥)
तत्पर्य्यायः । घटः २ कुटः ३ निपः ४ । इत्यमरः ।
२ । ९ । ३२ ॥ कलसः ५ कलसिः ६ कलसी ७
कलसम् ८ कलशिः ९ कलशीः १० कलशम् ११ ।
इति तट्टीका ॥ कुम्भः १२ करीरः १३ । इति
हेमचन्द्रः । कलावतीदीक्षाप्रकरणोक्तंतस्य परि-
माणं । यथा, तन्त्रसारे ।
"पञ्चाशदङ्गुलव्याम उत्सेधः षोडशाङ्गुलः ।
कलशानां प्रमाणन्तु मुखमष्टाङ्गुलं स्मृतम् ॥
षट् त्रिंशदङ्गुलं कुम्भं विस्तारोन्नतिशालिनम् ।
षोडशं द्वादशं वापि ततो न्यूनं न कारयेत्" ॥

पीयूषधारणार्थाय निर्म्मिता विश्वकर्म्मणा ॥
कलाः कलास्तु देवानामसितास्ताः पृथक् पृथक् ।
यतः कृतास्तु कलसास्ततस्ते परिकीर्त्तिताः ॥
नवैव कलसाः प्रोक्ता नामतस्तान्निबोधत ।
गोह्योपगोह्यो मरुतो मयूखश्च तथापरः ॥
मनोहा कृषिभद्रश्च विजयस्तनुशोधकः ।
इन्द्रियघ्नोऽथ विजयो नवमः परिकीर्त्तितः ॥
तेषामेव क्रमाद्भूप नव नामानि यानि तु ।
शृणु तान्यपराण्येव शान्तिदानि सदैव हि ॥
क्षितीन्द्रः प्रथमः प्रोक्तो द्वितोयो जलसम्भवः ।
पवनाग्नी ततो द्वौ तु यजमानस्ततः परः ।
कोषसम्भवनामा तु षष्ठः स परिकीर्त्तितः ॥
सोमस्तु सप्तमः प्रोक्तश्चादित्यस्तु तथाष्टमः ।
विजयो नाम कलसो योऽसौ नवम उच्यते ॥
स तु पञ्चमुखः प्रोक्तो महादेवस्वरूपधृक् ।
घटस्य पञ्चवक्त्रेषु पञ्चवक्त्रः स्वयं तथा ॥
यथा काष्ठास्थितः सम्यक् वामदेवादिनामतः ।
मण्डलस्य च पद्मान्तः पञ्चवक्त्रघटं न्यसेत् ॥
क्षितीन्द्रं पूर्ब्बतो न्यस्य पश्चिमे जलसम्भवम् ।
वायव्ये वायवं न्यस्य आग्नेये ह्यग्निसम्भवम् ॥
नैरृत्ये यजमानन्तु ऐश्यान्यां कोषसम्भवम् ।
सोममुत्तरतो न्यस्य सौरं दक्षिणतो न्यसेत् ॥
न्यस्यैवं कलसांश्चैव तेषु चैतान् विचिन्तयेत् ।
कलसानां मुखे ब्रह्मा ग्रीवायां शङ्करः स्थितः ।
मूले तु संस्थितो विष्णुर्म्मध्ये मातृगणाः स्थिताः ॥
दिक्पाला देवताः सर्व्वे वेष्टयन्ति दिशो दश ।
कुक्षौ तु सागराः सप्त सप्तद्वीपाश्च संस्थिताः ॥
नक्षत्राणि ग्रहाः सर्व्वे तथैव कुलपर्व्वताः ।
गङ्गाद्याः सरितः सर्व्वा वेदाश्चत्वार एव च ।
कलसे संस्थिताः सर्व्वे तेषु तानि विचिन्तयेत् ॥
रत्नानि सर्व्ववीजानि पुष्पाणि च फलानि च ॥
वज्रमौक्तिकवैदूर्य्यमहापद्मेन्द्रस्फाटिकैः ।
सर्व्वधाममयं विल्वं नागरोडुम्बरं तथा ॥
वीजपूरकजम्बीरकाम्राम्रातकदाडिमान् ।
यवं शालिञ्च नीवारं गोधूमं सितसर्षपम् ॥
कुङ्कुमागुरुकर्पूरमदनं रोचनं तथा ।
चदनञ्च तथा मांसीमेलां कुष्ठं तथैव च ॥
कर्पूरपत्रचण्डञ्च जलं निर्यासकाम्बुदम् ।
शैलेयं वदरं जातीपत्रपुष्पे तथैव च ॥
कालशाकं तथा पृक्कां देवीं पर्णकमेव च ।
वचां धात्रीं समञ्जिष्ठां तुरुष्कं मङ्गलाष्टकम् ॥
दूर्व्वां मोहनिकां भद्रां शतमूलीं शतावरीम् ।
पर्णानां शवलां क्षुद्रां सहदेवां गजाङ्कुशाम् ॥
पूर्णकोषां सितां पाठां गुञ्जां सुरसिकालसौ ।
व्यामकं गजदन्तञ्च शतपुष्पां पुनर्णवाम् ॥

पूर्ब्बं वहिःस्थापितेषु ग्रहाणां कलसेषु च ॥
नवग्रहान् पूजयेत्तु मातॄर्मातृघटेषु च ।
सर्व्वे देवा घटे पूज्या घटस्तेषां पृथक् पृथक् ॥
नवैव तत्र पूर्ब्बोक्ताः स्मृता मुख्यतमा नृप ।
भक्ष्यैर्भोज्यैश्च पेयैश्च पुष्पैर्नानाविधैः फलैः ॥
यावकैः पायसैश्चापि यथासम्भवयोजितैः ।
पुष्यस्नानाय नृपतिः पूजयेत् सकलान् सुरान्" ॥
इति कालिकापुराणे पुष्याभिषेकः ८७ अ-
ध्यायः ॥ * ॥ अन्यत् धारकशब्दे द्रष्टव्यम् ॥

**कलसिः**, पुं, (केन जलेन लसतीति । क + लस् +
इन् ।) पृश्निपर्णो । इत्यमरटीका शब्दरत्नावली
च ॥ गर्गरी । इत्यमरटीका हारावली च ॥

**कलसी**, स्त्री, (कलस + स्त्रियां ङीप् ।) पृश्निपर्णी ।
इति शब्दरत्नावली ॥ (कलसी वृहतीद्राक्षेत्यादि-
ष्वस्या व्यवहारः ॥ इत्युत्तरतन्त्रे । ३९ अध्याये
सुश्रुतेनोक्तम् ॥) कलसः । इत्यमरटीका ॥ (स्वार्थे
कन्प्रत्ययेनोक्तं यथा, नैषधे । २ । ८ ।
"अलम्बितकर्णशस्कुलीकलसीकं रचयन्नवोचत" ॥)

**कलसीसुतः**, पुं, (कलस्यां जातः सुतः ।) अगस्त्य-
मुनिः । इत्यमरटीकायां वाचस्पतिः ॥

**कलसोदधिः**, पुं, कलस इव उदधि । मन्थनाधार-
त्वात् । समुद्रः । इति महाभारतम् ॥

**कलहः**, पुं क्ली, (कलं कासं हन्त्यत्र । हन् + अधि-
करणे डः ।) विवादः । लडाइ झगडा इति
भाषा ॥ (यथा मनुः ४ । १२१ ।
"न विवादे न कलहे न सेनायां न सङ्गरे" ॥)
तथा विष्णुपुराणे १ मांशे ९ । १४५ ।
"अलक्ष्मीः कलहाधारा न तेष्वास्ते कदाचन" ॥)
तत्पर्य्यायः । युद्धम् २ आयोधनम् ३ जन्यम् ४
प्रधनम् ५ प्रविदारणम् ६ मृधम् ७ आस्कन्द-
नम् ८ संख्यम् ९ समीकम् १० साम्परायिकम्
११ समरः १२ अनीकः १३ रणः १४ विग्रहः १५
सम्प्रहारः १६ अभिसम्पातः १७ कलिः १८ सं-
स्फोटः १९ संयुगः २० अभ्यामर्द्दः २१ समा-
घातः २२ संग्रामः २३ अभ्यागमः २४ आहवः २५
समुदायः २६ सयत् २७ समितिः २८ आजिः २९
समित् ३० युध् ३१ । इत्यमरः । २ । ८ । १०४ ॥
शमीकम् ३२ साम्परायकम् ३३ संस्फेटः ३४

**कलशिः**, स्त्री, (कलं शरीरमालिन्यं श्यति नाशयति ।

कल + शो + बाहुलकात् इन् । कं जलं लाति आदत्तेतथा सती शीर्य्यते । कल + शृ + डिः ।)

पृश्निपर्णी । चाकुलिया इति भाषा । इत्यमरः । २ । ४ । ९३ ॥ (पृश्निपर्णीशब्देऽस्या गुणावलो ज्ञा-

तव्या ॥) घटः । इत्यमरटीकायां रायमुकुटः ॥ यथा, माघे ११ । ८ ।

"कलशिमुदधिगुर्व्वीं वल्लवा लोडयन्ति" ॥)

**कलशी**, स्त्री, (कलशि कृदिकारान्तत्वात् वा ङीप् ।)

स्वनामख्यातजलपात्रम् । पृश्निपर्णी । इत्यमरटी-

कायां रायमुकुटः ॥

**कलसः**, त्रि, (केन जलेन लसति शोभते । क +

लस् + अच् ।) कलशः । घटः । इति हेमचन्द्रः ॥

द्रोणपरिमाणे, पुं, । इति वैद्यकपरिभाषा ॥

("चतुर्भिराढकैर्द्रोणः कलसो नल्वणोर्म्मणः" ॥

इति शार्ङ्गधरे पूर्ब्बखण्डे १ अध्याये ॥

"स एव कलसः ख्यातो घटस्तून्मानमेव च" ॥

इति चरके कल्पस्थाने १२ अध्याये ॥)

**कलसः**, पुं, (केन जलेन लसतौति । लस् + अच् ।)

कुम्भः । अस्योत्पत्त्यादिर्यथा, --

"सागरे मथ्यमाने तु पीयूषार्थं सुरासुरैः ।

ब्राह्मीं देवीं शिवां रुद्रां सर्व्वसन्धानिकां तथा ।

समाहृत्य शुभानेतान् कलसेषु निधापयेत् ॥

कलसस्य यथा देवान् विधिं शम्भुं गदाधरम् ।

यथाक्रमं पूजयित्वा शम्भुं मुख्यतया यजेत् ॥

प्रासादेन तु मन्त्रेण शम्भुतन्त्रेण शङ्करम् ।

प्रथमं पूजयेन्मध्ये नानानैवेद्यवेदनैः ॥

दिक्पालानां धटेष्वेव दिक्पालानपि पूजयेत् ।

युत् ३५ । इति तट्टीका ॥

**कलहः**, पुं, (कल + हन् + "अन्येभ्योऽपीति" ३ ।

२ । १०१ । डः ।) वाटः । खड्गकोषः । भण्डनम् ।

इति मेदिनी ॥

**कलहंसः**, पुं, (कलेन मधुरास्फुटध्वनिना विशिष्टो

हंसः । शाकपार्थिवादित्वात् मध्यपदलोपि समासः ।)

हंसविशेषः । बालिहाँस इति भाषा । तत्पर्य्यायः । कादम्बः २ । इत्यमरः । २ । ५ । २३ ॥ कलनादः ३ मरालकः ४ । इति राजनिर्घण्टः ॥ राजहंसः । (यथा भट्टिः । २ । १८ ।

"कुन्दावदाताः कलहंसमालाः

प्रतीयिरे श्रोत्रसुखैर्निनादैः" ॥)

नृपोत्तमः । इति विश्वमेदिन्यौ ॥ परात्मा । ब्रह्म । इति शब्दरत्नावली ॥ (अतिजगती वृत्तिः । सा

:च त्रयोदशाक्षरा । लक्षणमुक्तं यथा, छन्दोमञ्ज-

र्य्याम् ७ ।

"सजसाः सगौ च कथितः कलहंसः" ।

अस्योदाहरणमुक्तं तत्रैव । यथा,

"यमुनाविहारकुतुके कलहंसो

व्रजकामिनी कमलिनीकृतकेलिः ।

जनचित्तहारिकलकण्ठनिनादः

प्रमदं तनोतु तव नन्दतनूजः" ॥

सिंहनादः क्वापि ॥)

**कलहनाशनः**, पुं, (कलहं नाशयतीति । कलह +

नश + णिच् + ल्युः । अस्य कलहनाशकता का-

र्मणविद्यायां प्रसिद्धा ।) पूतिकरञ्जः । इति

शब्दमाला ॥

**कलहप्रियः**, पुं, (कलहः प्रियो यस्य ।) नारदः ।

इति महाभारतम् ॥ (कलहप्रिये त्रि ।) यथा

गोः रामायणे ५ । १७ । २७ ।

"दुर्म्मखीः कपिलाः कृष्णाः क्रोधनाः कलहप्रियाः"

॥)

**कलहप्रिया**, स्त्री, (कलहस्य कलहे वा प्रिया ।)

शारिकापक्षी । इति राजनिर्घण्टः ॥

**कलहान्तरिता**, स्त्री, (कलहादन्तरिता पश्चात्

परितापमाप्ता ।) नायिकाभेदः । अस्या लक्ष-

णम् । पतिमवमन्य पश्चात् परितप्ता । अस्याः

क्रिया । भ्रान्तिः । सन्तापः । सम्मोहः । निश्वासः

।

ज्वरः । प्रलापादिः । इति रसमञ्जरी ॥ (तथा च

साहित्यदर्पणे ३ । ८६ ।

"चाटुकारमपि प्राणनाथं रोषादपास्य या ।

पश्चात्तापमवाप्नोति कलहान्तरिता तु सा" ॥

उदाहरणमाह तत्रैव । "नो चाटुश्रवणं कृतं न

च दृशा हारोऽन्तिके वीक्षितः, कान्तस्य प्रिय-

हेतवे निजसखीवाचोऽपि दूरीकृताः । पादान्ते

विनिपत्य तत्क्षणमसौ गच्छन्मया मूढया, पाणि-

भ्यामवरुध्य हन्त ! सहसा कण्ठे कथं नार्पितः" ॥)

**कला**, स्त्री, (कलयति वृद्धितो धनं संगृह्णाति सञ्चि-

नोतीत्यर्थः । कल + अच् + टाप् ।) मूलधनवृद्धिः ।

सुद् इति भाषा । शिल्पादि । (यथा रामायणे

१ । ९ । ८ ।

"गीतवादित्रकुशला नृत्येषु कुशलास्तथा ।

उपायज्ञाः कलाज्ञाश्च वैशिके परिनिष्ठिताः" ॥)

अंशमात्रम् । चन्द्रस्य षोडशांशः । (यथा, वक्रोक्ति-

पञ्चाशिकायाम् । "सालङ्कारतया त्वया मम

तत्त्रिंशता भवेद्राशिर्भगणो द्वादशैव ते" ॥

इति सूर्य्यसिद्धान्तः ॥ अथ शैवतन्त्रोक्ताश्चतुः-

षष्टिकला लिख्यन्ते । गीतम् १ वाद्यम् २ नृत्यम्

३ नाठ्यम् ४ आलेख्यम् ५ विशेषकच्छेद्यम् ६

तण्डुलकुसुमबलिविकाराः ७ पुष्पास्तरणम् ८ द-

शनवसनाङ्गरागाः ९ मणिभूमिकाकर्म्म १० शयन-

रचनम् ११ उदकवाद्यम् १२ उदकघातः १३

चित्रायोगाः १४ माल्यग्रथनविकल्पाः १५ शेख-

रापीडयोजनम् १६ नेपथ्ययोगाः १७ कर्णपत्र-

भङ्गाः १८ गन्धयुक्तिः १९ भूषणयोजनम् २०

ऐन्द्रजालम् २१ कौचुमारयोगाः २२ हस्तलाघ-

वम् २३ चित्रशाकपूपभक्ष्यविकारक्रिया २४ पान-

करसरागासवयोजनम् २५ सूचीवापकर्म्माणि २६

सूत्रक्रीडा २७ प्रहेलिका २८ प्रतिमाला २९

दुर्व्वचकयोगाः ३० पुस्तकवाचनम् ३१ नाटिका-

ख्यायिकादर्शनम् ३२ काव्यसमस्यापूरणम् ३३

पट्टिकावेत्रवाणविकल्पाः ३४ तर्कुकर्म्माणि ३५

तक्षणम् ३६ वास्तुविद्या ३७ रूप्यरत्नपरीक्षा ३८

धातुवादः ३९ मणिरागज्ञानम् ४० आकरज्ञा-

नम् ४१ वृक्षायुर्व्वेदयोगाः ४२ मेषकुक्कुटलावक-

युद्धविधिः ४३ शुकशारिकाप्रलापनम् ४४ उत्सा-

दनम् ४५ केशमार्जनकौशलम् ४६ अक्षरमुष्टिका-

कथनम् ४७ म्लेच्छितकविकल्पाः ४८

देशभाषाज्ञा-

नम् ४९ पुष्पशकटिकानिमित्तज्ञानम् ५० यन्त्र-

मातृका ५१ धारणमातृका ५२ सम्पाट्यम् ५३

मान-

सीकाव्यक्रिया ५४ क्रियाविकल्पाः ५५ छलितक-

योगाः ५६ अभिधानकोषच्छन्दोज्ञानम् ५७

वस्त्रगो-

पनानि ५८ द्यूतविशेषः ५९ आकर्षक्रीडा ६० बा-

लकक्रीडनकानि ६१ वैनायिकीनां विद्यानां ज्ञानम्

६२ वैजयिकीनां विद्यानां ज्ञानम् ६३ वैतालिकीनां

विद्यानां ज्ञानम् ६४ । इति श्रीभागवतटीकायां

श्रीधरस्वामी ॥ क्वचित् पुस्तके सूचीवापकर्म्मसूत्र-

क्रीडा इत्येकं पदं तदुत्तरं वीणाडमरुकवाद्यानि-

वैतालिकीनामित्यत्र वैयासिकीनामिति च पाठः ॥

(जिह्वा । यथा हठयोगप्रदीपिकायाम् ३ । ३७ ।

"कलां पराङ्मुखीं कृत्वा त्रिपथे परियोजयेत्" ॥

"कलां जिह्वां पराङ्मखमास्यं यस्याः सा तथा तां

प्रत्यङ्मुखीं कृत्वा तिसृणां नाडीनां पन्थाः तस्मिन्

कपालकुहरे संयोजयेत्" । इति तट्टीका ॥ शिवः ।

यथा महाभारते १३ । १७ । १४० ।

'कलाःकाष्ठा लवा मात्रा मुहूर्त्ताहः क्षपाःक्षणाः' ॥)

**कलाकूलं**, क्ली, (कलया मात्रयापि आकूलयति व्याकू

ततष्टाप् अत इत्वञ्च ।) प्रकोष्ठः । स तु कफो-

णेरधो मणिबन्धपर्य्यन्तः । इति हेमचन्द्रः ॥

**कलाची**, स्त्री, (कलां अचति । कला + अच् + अण् ।

गौरादित्वात् ङीष् ।) कलाचिका । इति हारा-

वली ॥

**कलादः**, पुं, (अलङ्कारनिर्म्माणाय गृहस्थैः समर्पि-

तानां स्वर्णादीनां कलां अंशं आदत्ते गृह्णाति ।

अलङ्कारनिर्म्माणहेतुना गृहस्थोपार्ज्जितधनांशं

वा आदत्ते । आ + दा + कः ।) स्वर्णकारः ।

इत्य-

मरः । २ । १० । ८ ॥

**कलानिधिः**, पुं, (कलाः निधीयन्तेऽस्मिन् । कला +

नि + धा + अधिकरणे किः ।) चन्द्रः । इत्यमरः

।

१ । ३ । १४ ॥ (यथाह कश्चित् ।

"अहो महत्त्वं महतामपूर्ब्बं

विपत्तिकालेऽपि परोपकारः ।

यथाऽस्य मध्ये पतितोऽपि राहोः

कलानिधिः पुण्यचयं ददाति" ॥)

**कलानुनादी**, [न्] पुं, (कलं अनुनदतीति । कल +

अनु + नद् + णिनिः ।) रोलम्बः । भ्रमरः । कल-

विङ्कः । चटकः । कपिञ्जलः । चातकः । इति

मेदिनी ॥

**कलान्तरं**, क्ली, (अन्या कला अंशः । सुप्सुपेति

समासः ।) वृद्धिः । लाभः । इति लीलावती ॥

सुद्

इति भाषा । (चन्द्रस्य अन्या कला । यथा

कुमारे १ । २५ ।

"पुपोष लावण्यमयान् विशेषान्

ज्योत्स्नान्तराणीव कलान्तराणि" ॥)

**कलापः**, पुं, (कलां मात्रां आप्नोति । कला + आप्

+ "कर्म्मण्यण" । ३ । २ । १ । इति अण् । यद्वा

कला आप्यतेऽनेन "हलश्च" । ३ । ३ । १२१ ।

इति घञ् ।) समूहः । (यथा भागवते ४ । २४ ।

६२ ।

"क्रियाकलापैरिदमेव योगिनः

श्रद्धान्विताः साधु यजन्ति सिद्धये" ॥)

मयूरपिच्छः । (यथा, गोः रामायणे । ५ । ५२ ।

१३

"संप्रदीप्तकलापाग्रा विप्रकीर्णाश्च बर्हिणः" ॥)

काञ्ची । भूषणम् । (यथा कुमारे । १ । ४२ ।

कथं नेन्दोः कला दृश्यते, पश्यामीन्दुकलां स्फुटं पुनरिदं लङ्कारता नास्मि यत्” ॥) कालमानः । स तु त्रिंशत्काष्ठात्मकः । इति मेदिनी ॥ (“त्रिं-शत् काष्ठाः कलाः” । इति सुश्रुते सूत्रे ६ अः ॥ शरीरस्यांशविशेषो यथा, --

“मांसासृङ्मेदसां तिस्रो यकृत्प्लीह्नोश्चतुर्थिका ।
पञ्चमी च तथान्त्रानां षष्ठीचाग्निधरा मता ।
रेतोधरा सप्तमी स्यादिति सप्तकलाः स्मृताः” ॥
इति पूर्ब्बखण्डे पञ्चमेऽध्याये शार्ङ्गधरेणोक्तम् ॥)
स्त्रोरजः । नौका । कपटः । इति विश्वः ।
राशेष्त्रं शद्भागोऽशस्तस्य षष्टिभागः । यथा, --
“षिकलानां कला षष्ट्या तत्षष्ट्या भाग उच्यते ।

लयतीति । आकूलि इति नामधातोः + अच् ।) विषम् । इति राजनिर्घण्टः ॥

**कलाकेलिः**, पुं, (कलाभिः केलिः विलासो यस्य ।

कलासु केलिर्यस्य वा ।) कामदेवः । इति त्रिकाण्ड-शेषः ॥

**कलाङ्कुरः**, पुं, (कलानां अङ्कुरो यत्र ।) सारसपक्षी ।

(स्तेयशास्त्रप्रवर्त्तककर्णीसुतः ।) कंसासुरः । इति त्रिकाण्डशेषः ॥

**कलाचिका**, स्त्री, (कलामचति गच्छति प्राप्नोति वा ।

कला + अच् + उपपदे कर्म्मण्यण् । ततः स्वार्थे कन्

“कण्ठस्य तस्याः स्तनबन्धुरस्य
मुक्ताकलापस्य च निस्तलस्य” ॥
“मुक्ताकलापस्य मुक्ताभूषणस्य” । इति मल्लिनाथः ॥)
तूणः । (यथा हेः रामायणे २ । ५२ । ११ ।
“ततः कलापान् सन्नह्य खड्गौ बद्ध्वा च धन्विनौ” ॥)
चन्द्रः । विदग्धः । व्याकरणविशेषः । इति मे-दिनी ॥ (यथा, वृहत्कथासारः ।
“अधुना स्वल्पतन्त्रत्वात् कातन्त्राख्यं भविष्यति ।
तद्वाहनकलापस्य नाम्ना कालापकं तथा” ॥)
ग्रामविशेषः । यथा, भागवते । ९ । १२ । ६ ।
“देवापिर्योगमास्थाय कलापग्राममाश्रितः ।
सोमवंशे कलौ नष्टे कृतादौ स्थापयिष्यति” ॥
(अस्त्रविशेषः । यथा महाभारते ४ । ५ । २८ ।
“खड्गांश्च दीप्तान् दीर्घांश्च कलापांश्च महाधनान् ।
विपाठान् क्षुरधारांश्च धनुर्भिर्निदधुः सह” ॥)

**कलापकः**, पुं, (कलाप + संज्ञायां कन् ।) हस्तिकण्ठ-

:बन्धः । इति हेमचन्द्रः ॥ (स्वार्थे कन् । कलापार्थः ।
क्ली, यस्मि न् काले मयूराः कलापिनी भवन्ति स
उपचारात् कलापी तत्र देयमृणम् । "कलाप्य-श्वत्थयववुसाद्वुन्" । ४ । ३ । ४८ । ऋणविशेषः ।
इति सिद्धान्तकौमुदी ॥ पद्यविशेषः । यथा, साहित्यदर्पणे ६ । २४७ ।
"छन्दोबद्धपदं पद्यं तेनैकेन च मुक्तकम् ।
द्वाभ्यान्तु युग्मकं सन्दानितकं त्रिभिरिष्यते ।
कलापकं चतुर्भिश्च पञ्चभिः कुलकं स्मृतम्" ॥)

**कलापिनी**, स्त्री, (कलापश्चन्द्रः अस्ति अस्याम् ।
कलाप + मत्वर्थे इनिः + ततो ङीप् ।) रात्रिः । नागरमुस्ता । इति राजनिर्घण्टः ॥

**कलापी**, [न्] पुं, (कलापाः फलपत्रसमूहाः सन्त्य-
स्मिन् । कलाप + इनिः ।) प्लक्षवृक्षः । (कलापो-
वर्हः अस्ति अस्य इनिः ।) मयूरः । इति मेदिनी ॥
(यथा रघुः ६ । ९ ।
"पुरोपकण्ठोपवनाश्रयाणां
कलापिनामुद्धतनृत्यहेतौ" ॥)
कोकिलः । इति धरणी ॥ (त्रि, तूणवान् । कलाप-
व्याकरणाध्यायी ॥)

**कलापूर्णः**, पुं, (कलाभिः पूर्णः ।) चन्द्रः । इति शब्द-
चन्द्रिका ॥ (त्रि, कलापरिपूर्णः । यथा महाभा-
रते । ४ । ३७ । १३ ।
"सदा भवान् फाल्गुनस्य गुणैरस्मान् विकत्थते ।
न चार्ज्जुनः कलापूर्णो मम दुर्योधनस्य वा" ॥)

**कलाभृत्**, पुं, (कलां बिभर्त्ति । कला + भृ + क्विप् ।
तुगागमश्च ।) चन्द्रः । इति हेमचन्द्रः ॥ (कलां
गीतादिकं बिभर्त्तीति । गीतादिकलाभिज्ञे वाच्य-
लिङ्गत्वम् । यथा मनुः २ । १३४ ॥
"दशाब्दाख्यं पौरसख्यं पञ्चाब्दाख्यं कलाभृताम् ।
त्र्यब्दपूर्ब्बं श्रोत्रियाणां स्वल्पेनापि स्वयोनिषु" ॥)

**कलामकः**, पुं, (कलम + कनि पृषोदरात् साधुः ।)
कलमधान्यम् । इति हेमचन्द्रः ॥ (कलमशब्देऽस्य
विशेषो ज्ञातव्यः ॥)

**कलाम्बिका**, स्त्री, (कला अर्थः विकायते प्रयुज्यते
कलायो मधुरः स्वादुःपाके रूक्षश्च वातलः" ॥)
अस्य शाकगुणाः । मंधुरत्वम् । पित्तश्लेष्महरत्वम् ।
गुरुत्वम् । कषायानुरसत्वम् । रूक्षत्वम् । मल-
भेदित्वम् । बायुकोपनत्वञ्च । इति राजनिर्घण्टः ॥
("भेदनं मधुरं रूक्षं कषायमतिवातलम्" ॥
इति सुश्रुते सूत्रस्थाने । ४६ अध्याये ॥)

**कलायनः**, पुं, (कलानां नृत्यगीतादोनां अयनं प्राप्ति-
र्यत्र ।) नर्त्तकः । इति शब्दरत्नावला ॥

**कलाया**, स्त्री, (कलाय + स्त्रियां टाप् ।) गण्ड-
दूर्व्वा । इति राजनिर्घण्टः ॥ (गण्डदूर्व्वाशब्दे-
ऽस्या विवरणं ज्ञातव्यम् ॥)

**कलालापः**, पुं, (कलं मधुरास्फुटं आलपतीति । कल
+ आ + लप् + उपपदे "कर्म्मण्यण्" । ३ । २ । १ ।
इति अण् ।) भ्रमरः । इति राजनिर्घण्टः ॥ (मधु-
रालापकर्त्तरि त्रि ॥)

**कलावती**, स्त्री, (कला गान्धर्व्वकलाः संगीतरागा-
लापादयः सन्ति अस्याम् । कला + मतुप् मस्य
वः स्त्रियां ङीप् ।) तुम्बुरुगन्धर्व्वस्य वीणा । इति
हेमचन्द्रः ॥ (यथा माघस्य १ । १० श्लोकस्य टी-
कायां मल्लिनाथधृतवैजयन्तीवचनम् ।
"विश्वावसोस्तु वृहती तुम्बुरोस्तु कलावती ।
महती नारदस्य स्यात् सरस्वत्यास्तु कच्छपी" ॥
स्वनामख्याता द्रुमिलस्य राज्ञः पत्नी । यथा ब्रह्म-
वैवर्त्ते ब्रह्मखण्डे । २० । १२ ।
"कान्यकुब्जे च देशे च द्रुमिलो नाम राजकः ।
कलावती तस्य पत्नी बन्ध्या चापि पतिव्रता" ॥)
श्रीराधामाता । सा तु वृषभानुपत्नी । इति ब्रह्म-
वैवर्त्तपुराणम् ॥ अप्सरोविशेषः । यथा रतिस्तव
कलावतीति श्लिष्टकाव्ये जयदेवः ।
(कलाः चतुःषष्टिकलाः विद्यन्ते यस्याः । गङ्गा ।
यथा, काशीखण्डे २९ । ४७ ।
"कूटस्था करुणा कान्ता कूर्म्मयाना कलावती" ॥)
दीक्षाविशेषः । तस्याः क्रमो मन्त्रं विना लिख्यते ।
शिष्यः पूर्ब्बमुपोषितः कृतनित्यक्रियः स्वस्तिवा-
चनपूर्ब्बकं सङ्कल्पं कुर्य्यात् । ततो गुरुं वृणुयात् ।
अथ गुरुराचम्य द्वारदेशे सामान्यार्घ्यं कुर्य्यात् ।
तदर्घ्यजलेन द्वारमभ्युक्ष्य द्वारपूजां कुर्य्यात् । ततो
प्रणम्य अस्त्रमन्त्रेण गन्धपुष्पाभ्यां करौ संशोध्य
ऊद्‌र्ध्वोद्‌र्ध्वतालत्रयं दत्त्वा छोटिकाभिर्दशदिग्बन्धनं
कृत्वा वह्निवीजेन जलधारया वह्निप्राकारं विचिन्त्य
भूतशुद्धिं कुर्य्यात् । ततो मातृकान्यासः प्राणा-
यामः पीठन्यासः ऋष्यादिन्यासः मन्त्रन्यासः ।
ततो मुद्रां प्रदर्श्य ध्यानं भानसपूजां अर्घ्यस्थापनञ्च
कुर्य्यात् । ततोऽर्घ्यपात्रात् किञ्चित् जलं प्रोक्षणी-
पात्रे निक्षिप्य तेनोदकेनात्मानं पूजोपकरणञ्च
मूलेन त्रिरभ्युक्ष्य पीठमन्त्रेण शरीरे धर्म्मादीन्
पूजयेत् । ततो हृत्पद्मस्य पूर्ब्बादिकेशरेषु पीठ-
शक्तीः संपूज्य मध्ये पीठमनुं यजेत । तत्र हृदये
मूलदेवतां नैवेद्यं विना गन्धाद्यैः पूजयेत् । तत
उत्तमाङ्गहृदयमूलाधारपादसर्व्वाङ्गेषु मूलेन पञ्च-
पुष्पाञ्जलीन् दत्त्वा यथाशक्ति मन्त्रं जप्त्वा जपं
समर्पयेत् । सर्व्वमेतत् प्रोक्षणीपात्रस्थवारिणा
विदध्यात् । ततः प्रोक्षण्यास्तोयं विसृज्य पूर्ब्बवदा-
पूर्य्य वहिःपूजामारभेत । तत्र शारदोक्तसर्व्वतोभद्र-
मण्डलाद्यन्यतममण्डलं विधाय तत्र घटं संस्थाप्य
मण्डलं संपूज्य शालिभिः कर्णिकामापूर्य्य तदुपरि
तण्डुलानास्तीर्य्य तेषु दर्भानास्तीर्य्य विष्टरं चाक्षत-
संयुक्तं तदुपरि न्यसेत् । तती मण्डले पीठोक्त-
देवताः पूजयेत् । ततो मण्डले प्रादक्षिण्येन वह्ने-
र्दशकला विन्यस्य पूजयेत् । ततो हेमादिरचितं
कुम्भं अस्त्रमन्त्रेण प्रक्षाल्य चन्दनागुरुकर्पूरैर्धूप-
यित्वा त्रिगुणतन्तुना संवेष्ट्य कुम्भं संपूज्य तत्र
विष्टराक्षतं नवरत्नानि च प्रक्षिप्य प्रणवमुच्चरन्
कुम्भपीठयोरैक्यं विभाव्य पीठे स्थापयेत् । कुम्भे
प्रादक्षिण्येन सूर्य्यस्य द्वादशकला विन्यस्य संपू-
जयेत् । ततः क्षीरिद्रुमकषायेण पलाशत्वम्भवेन
वा तीर्थजलैर्व्वा सुवासितजलैर्व्वा आत्माभेदेन
मातृकां मन्त्रञ्च प्रतिलोमतो जपन् पूरयेत् कुम्भं
देवताधिया । ततश्चन्द्रस्यामृतादिषोडशकलाजले
प्रादक्षिण्येन विचिन्त्य मन्त्रेण संपूज्य शङ्खान्तरं
क्षीरिद्रुमकषायादिद्रव्येणापूर्य्य गन्धाष्टकं विलोड्य
तस्मिन् जले सकलाः कला आवाह्य पूजयेत् ।
तत्रादौ वह्नेर्दशकलाः पूजयेत् । ततो मूलमन्त्रं
प्रतिलोमेन जपन् मन्त्रस्य देवतां मनसा ध्यायन्
आसां प्राणप्रतिष्ठां कृत्वा गन्धादिभिः पूजयेत् ।
ततः प्रत्येकेन् पूजयेत् । ततः सूर्य्यस्य तपिन्यादि-
द्वादशकलाः आवाहनादिकं कृत्वा संपूज्य प्रत्येकं
पूजयेत् । ततश्चन्द्रस्यामृतादिषोडशकलाःप्राण-
प्रतिष्ठादिकं कृत्वा संपूज्य प्रत्येकेन पूजयेत् । ततः
पञ्चाशत्कलाः पूजयेत् । यथा सृष्ट्यादिकचवर्ग-
दशकलाः प्राणप्रतिष्ठादिकं कृत्वा पूर्ब्बवत् संपूज्य
प्रत्येकेन पूजयेत् । ततो जरादिटतवर्गद्दशकलाः

अस्याम् । कला + वि + कै + क + टाप् । पृषो-
दरादित्वात् मुमि साधुः ।) अर्थानां प्रयोगः ।
ऋणदानम् । इति त्रिकाण्डशेषः ॥ धार देओया
इति भाषा ॥

**कलायः**, पुं, (कलां अयते । “कर्म्मण्यण्” । ३ । २

१ । इति अण् ।) शमीधान्यविशेषः । मटर वाँ-
टुला इति भाषा । तत्पर्य्यायः । सतीलकः २
हरेणुः ३ खण्डिकः ४ । इत्यमरः । २ । ९ । १६
॥
त्रिपुटः ५ अतिवर्त्तुलः ६ । इति रत्नमाला ॥
मुण्डचणकः ७ शमनः ८ नीलकः ९ कण्टी १०
सतीलः ११ हरेणुकः १२ सतीनः १३ सती-
नकः १४ । (यथा, माघः । १३ । २१ । “विक-
सत्कलायकुसुमासितद्युतेः” ॥) अस्य गुणाः ।
वात-
रुचिपुष्ट्यामदोषकारित्वम् ।
पित्तदाहकफनाशि-
त्वम् । शीतत्वम् । कषायत्वञ्च ॥ (अस्य
पर्य्यायो-
गुणाश्च यथा, भावप्रकाशस्य पूर्ब्बखण्डे
धान्यवर्गे ।
“कलायो वर्त्तुलः प्रोक्तः सतिलश्च हरेणुकः ।

दक्षिणपादपुरःसरं द्वारवामशाखां स्पृशन् दक्षि-
णाङ्गं सङ्कोचयन् मण्डपान्तः प्रविश्य नैरृत्यां
वास्तुपुरुषं ब्रह्माणञ्च संपूज्य देयमन्त्रेण दिव्य-
दृष्ट्यावलोकनेन दिव्यान् विघ्नानुत्सार्य्य
अस्त्रमन्त्रेण
जलेनान्तरीक्षगान् विघ्नानुत्सार्य्य
वामपार्ष्णिघात-
त्रयेण भौमान् विघ्नानुत्सार्य्य सप्तधास्त्रमन्त्राभि-
मन्त्रितविकिरानादाय भूतनिवारणार्थमन्त्रेण
तान् विकिरेत् । तत आसनशुद्धिं कृत्वा मन्त्रेण
स्वस्तिकादिक्रमेणोपविशेत् । उपविश्य वा
विघ्ना-
नुत्सारयेत् । ततः पञ्चगव्येन मूलेन मण्डपं शोध-
येत् । ततः स्वदक्षिणे पूजाद्रव्याणि वामे सुवा-
सिताम्बुपूर्णकुम्भं हस्तप्रक्षालनार्थं पात्रमेकं पृष्ठ-
देशे स्थापयेत् । सर्व्वदिक्षु घृतप्रदीपांश्च स्थाप-
यित्वा पुटाञ्जलिर्भूत्वा वामे गुरुपरमगुरुपरा-
परगुरून् प्रणम्य दक्षिणे गणेशं मध्ये स्वेष्टदेवताञ्च

प्राणप्रतिष्ठादिकं कृत्वा संपूज्य प्रत्येकेन पूजयेत् ।
ततस्तीक्ष्णादिपयवर्गद्दशकलाः प्राणप्रतिष्ठादिकं
कृत्वा संपूज्य प्रत्येकेन पूजयेत् । ततः पीतादिष-
वर्गपञ्चकलाः (षं-सं-हं-कषं) प्राणप्रतिष्ठादिकं
कृत्वा संपूज्य प्रत्येकेन पूजयेत् । ततो निवृत्त्यादि-
अवर्गषोडकलाः प्राणप्रतिष्ठादिकं कृत्वा पूजयेत् ।
शक्तश्चेत् प्रत्येकमावाह्य पाद्यादिभिः पूजयेत् ।

:ततः कलात्मकं तत्शङ्खस्थं क्वाथं कुम्भेनिःक्षिपेत् ।

ततोऽश्वत्थपनसचूतपल्लवैरिन्द्रवल्लीवेष्टितैः कल्प-
वृक्षबुद्ध्या कुम्भवक्त्रं पिधाय तस्मिन् वक्त्रे सफला-
क्षतं चषकं कल्पवृक्षफलबुद्ध्या स्थापयेत् । ततः
कुम्भं निर्म्मलेन क्षौमयुग्मेन संवेष्ट्य मूलेन कुम्भे
मूर्त्तिं सङ्कल्प्य यथोक्तरूपेण देवतां ध्यात्वा तस्या-
मावाहनादिकं कृत्वा पूजयेत् । देवताङ्गे अङ्गन्यासं
कृत्वा धेनुमुद्रापरमीकरणमुद्रे प्रदर्श्य प्राणप्रतिष्ठां
कृत्वा षोडशोपचारादिभिः पूजयेत् । ततोऽष्टो-
त्तरं सहस्रं शतं वा संजप्य जपं समर्पयेत् । ततो
मन्त्रस्य दशसंस्कारान् कृत्वा गुरुः शिष्यमानीय
मन्त्रेण शिष्यनेत्रं वस्त्रेणाच्छाद्य शिष्याञ्जलिं पुष्पैः
पूरयित्वा गुरुः स्वयमेव मन्त्रं जपन् कलसे देव-
ताप्रीत्यै क्षिपेत् । ततो नेत्रबन्धनं दूरीकृत्य दर्भा-
स्तरे आसीनं शिष्यं स्वकृतपूजाक्रमाद्भूतशुद्ध्या-
दिकं विधाय तत्तन्मन्त्रोक्तन्यासान् शिष्यस्य देहे
कुर्य्यात् । कुम्भस्थां देवतां पुनः पञ्चोपचारैः
संपूज्यालङ्कृतं शिष्यमन्यस्मिन्नुपवेशयेत् । ततो
मङ्गलाचारपूर्ब्बकं तत्कुम्भं समुद्धृत्य तन्मुखस्थान्
सुरद्रुमरूपान् पल्लवान् शिष्यशिरसि निधाय
मातृकां मनसा जपन् मूलेन साधितैस्तोयैर्वशिष्ठ-
संहितोक्ताभिषेकमन्त्रैस्तमभिषिञ्चेत्। शिष्योऽव-
शिष्टजलेनाचम्य वाससी परिधाय गुरोः सन्निधा-
वुपविशेत् । ततस्तामेव गुरुरात्मनो देवतां शिष्य-
संक्रान्तां तयोरैक्यं विभाव्य गन्धादिभिः पूजयेत् ।
ततो मन्त्रेण शिष्यस्य शिखां बद्ध्वा संरक्ष्य शिष्य-
शरीरे कलान्यासं कुर्य्यात् । ततः शिष्यशिरसि
हस्तं दत्त्वा अष्टोत्तरशतं जप्त्वा अमुकमन्त्रं तेऽहं
ददामीति शिष्यहस्ते जलं दद्यात् । ददस्वेति
शिष्यो ब्रूयात् । तत ऋष्यादियुक्तं मन्त्रं गुरु-
र्द्विजातीनां दक्षिणकर्णे त्रिः श्रावयेत् वामे
सकृत् । स्त्रीशूद्राणां वामकर्णे त्रिः श्रावयेत्
दक्षिणे सकृत् । ततः शिष्यो गुरुचरणे पतित

**कलिः**, पुं, (कलते कलेराश्रयत्वेन वर्त्तते इति । कल
+ “सर्व्वधातुभ्य इन्” । उणां ४ । ११७ । इति
इन् ।) विभीतकवृक्षः । (विभीतकस्य कलिद्रुमत्व-
कारणमुक्तं यथा, वामने २७ अध्याये ।
“इत्येवमुक्तो देवेन ब्रह्मणा कलिरव्ययः ।
दीनान् दृष्ट्वा च शक्रादीन् विभीतकवनं ययौ” ॥
अस्य गुणादिकं विभीतकशब्दे द्रष्टव्यम् ॥ * ॥
कलते स्पर्द्धते इति कल + “सर्व्वधातुभ्यः इन्” ।
उणां-४ । ११७ । इति इन् ।) शूरः ।
(कलन्ते स्पर्द्ध-
माना भाषन्तेऽस्मिन्निति । कल + “सर्व्वधातुभ्य
इन्” । उणां ४ । ११७ । इति इन् ।) विवादः ।
(यथा, भागवते ९ । ६ । ४४ ।
“तासां कलिरभूद्भूयांस्तदर्थेऽपोह्य सौहृदम् ।
समानुरूपो नायं व इति तद्गतचेतसाम्” ॥)
युद्धम् । (कल्यते पापेषु निक्षिप्यते अनेन यद्वा
कलयति पापेन जडयति कलुषितं करोति ।
कल + इन् ।) अन्त्ययुगम् । इति हेमचन्द्रः ॥
तस्योत्पत्तिर्यथा ।
“प्रलयान्ते जगतस्रष्टा ब्रह्मा लोकपितामहः ।
ससर्ज्ज घोरं मलिनं पृष्ठदेशात् सपातकम् ॥
सचाधर्म्म इति ख्यातस्तस्य वंशानुकीर्त्तनात् ।
श्रवणात् स्मरणाल्लोकः सर्व्वपापैः प्रमुच्यते ॥
अधर्म्मस्य प्रिया रम्या मिथ्या माज्जारलोचना ।
तस्याः पुत्त्रोऽतितेजस्वी दम्भः परमकोपनः ॥
स मायायां भगिन्यान्तु लोभं पुत्त्रञ्च कन्यकाम् ।
निकृतिं जनयामास तयोः क्रोधः सुतोऽभवत् ॥
स हिंसायां भगिन्यान्तु जनयामास तत्कलिम् ।
वामहस्तधृतोपस्थं तैलाभ्यक्ताञ्जनप्रभम् ॥
काकोदरं करालास्यं लोलजिह्वं भयानकम् ।
पूतिगन्धं द्यूतमद्यस्त्रीसुवर्णकृताश्रयम् ॥

विष्णुं न पूजयिष्यन्ति पाषण्डोपहता जनाः ॥
कलेर्द्दोषनिधेर्विप्र अस्ति ह्येको महान् गुणः ।
कीर्त्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् ॥
कृते यद्ध्यायतो विष्णुं त्रेतायां यजतः फलम् ।
द्वापरे परिचर्य्यायां कलौ तद्धरिकीर्त्तनात् ॥
तस्माद्ध्येयो हरिर्नित्यं ध्येयः पूज्यश्च शौनक” ॥
इति गारुडे युगधर्म्मे २२७ अध्यायः ॥
(माघिपूर्णिमायां शुक्रवारे कलियुगोत्पत्तिः ॥)
तद्युगमानम् । द्वात्रिंशत्सहस्राधिकचतुर्लक्षवत्-
सराः (४३२०००) ।
(आर्य्यभट्टमते ऽत्र १५७७९१७५० दिवसाः ।
सूर्य्यसिद्धान्तमते १५७७९१७८२ । ४८ दिवसाः ।
ज्योतिषसैद्धान्तिकमतेच १५७७९१७८२ दिवसाः ॥
अतो वर्षमाणमार्य्यभट्टमते ३६५ । १५ । ३१ । १५ ।
दिवसाः ।
सूर्य्यसिद्धान्तमते ३६५ । १५ । ३१ । ३१ । २४ ।
दिवसाः ।
ज्योतिषसैद्धान्तिकमते च ३६५ । १५ । ३१ । ३०
दिवसाः ॥)
तस्यातीताब्दाः १८०९ शाकपर्य्यन्तं ४९८८ ॥

(कलेस्त्रिपञ्चाशदधिकषट्शतमितेषु (६५३)

वत्सरेषु गतेषु युधिष्ठिरादयो जाताः । यदुक्त
राजतरङ्गिण्यां १ । ५१ ।
“शतेषु षट्सु सार्द्धेषु त्र्यधिकेषु च भूतले ।
कलेर्गतेषु वर्षाणामभवन् कुरुपाण्डवाः” ॥

ऋतुपक्षशरद्विमितेषु (२५२६) युधिष्ठिराब्देषु

कलेर्ग्रहसिन्ध्विन्दुनेत्रमितेषु (३१७९) वत्सरेषुगतेषु
च महाविषुवसंक्रान्त्यां शालिवाहनस्य राज्ञो
जन्मदिनमारभ्य शकाब्दः प्रवर्त्तितः । यदुक्तं
तत्रैव १ । ५६ ।
“आसन् मघासु मुनयः शासति पृथ्वीं युधिष्ठिरे
नृपतौ । षड् द्विपञ्चद्वियुतः शककालस्तस्य रा-
ज्यस्य” ॥ अयन्तु महाविषुवसंक्रान्तिमधिगम्य
परिगणितो भवति ॥

कलेश्चतुश्चत्वारिंशदधिकत्रिसहस्रपरिमितेषु

(३०४४) वत्सरेषु गतेषु चैत्रशुक्लप्रतिपदि उज्ज-
यिनीपतेर्विक्रमादित्यस्य राज्यप्राप्तिकालमारभ्य
संवत् इत्याख्यया प्रसिद्धो वत्सरः प्रचलितः ॥
अयन्तु चैत्रशुक्लप्रतिपत्तिथिमधिगम्यपरिगणितो
भवति ॥

कलेरेकोद्ध्वंशताधिकत्रिसहस्रपरिमितेषु (३१

एव तिष्ठेत् । ततो गुरुर्म्मन्त्रेण तमुत्थापयेत् ।
ततः शिष्यो लब्धमन्त्रं अष्टोत्तरशतं जपेत् ।
ततः
शिष्यः कुशतिलजलान्यादाय गुरवे दक्षिणां
सुवर्णं
काञ्चनं वा दद्यात् । दीक्षाग्रहणसामग्रीश्च निवे
दयेत् । अन्यांश्च ब्राह्मणान् परितोषयेत् । गुरुः
स्वशक्तिरक्षणार्थाय अष्टाधिकं सहस्रं शतं वा
मन्त्रं जपेत् । ततः शिष्यो मिष्टान्नपानादिना
ब्राह्मणान् परितोष्य स्वयं भुञ्जीत । दीक्षादिवसे
गुरुशिष्ययोरुपवासे दोषः । इति तन्त्रसारोक्ता
कलावतीदीक्षा समाप्ता ॥

**कलाविकः**, पुं, (कलं आविकायति विशेषेण रौतीति
कल + आ + वि + कै + कः ।) कुक्कुटः । इति त्रि-
काण्डशेषः ॥

**कलाविकलः**, पुं, (कलः मधुराष्यक्तः आविकलः रवो
यम्य मः । यद्वा कलया कामावेशेन विकलः
चञ्चलः ।) चटकः । इति शब्दरत्नावली ॥

**कलाहकः**, पुं, (कलमाहन्तीति । कल + आ + हन्
+ डः । संज्ञायां कन् ।) काहलवाद्यम् । इति
शब्दरत्नावली ॥

भगिन्यान्तु दुरुक्त्यां स भयं पुत्रञ्च
कन्यकाम् ।
मृत्युं संजनयामास तयोश्च निरयोऽभवत् ॥
यातनायां भगिन्यान्तु लोभपुत्त्रायुतायुतम् ।
इत्थं कलिकुले जाता बहवो धर्म्मनिन्दकाः”
॥
इति कल्किपुरणे १ अध्यायः ॥ * ॥
कलिधर्म्मो यथा ।
“यदा सदानृतं तन्द्रानिद्रा हिंसा विषादनम् ।
शोकमोहभयं दैन्यं स कलिस्तु तदा स्मृतः ॥
यस्मिन् जनाः कामिनः स्युः
शश्वत्कटुकभाषिणः ।
दस्युकृष्टा जनपदा वेदाः पाषण्डदूषिताः ॥
राजानश्च प्रजाभक्षाः शिश्नोदरपरा द्विजाः ।
अव्रता वटवो ऽशौचा भिक्षवश्च कुटुम्बिनः ॥
तपस्विनो ग्रामवासा न्यासिनो ह्यर्थलोलुपाः
।
ह्रस्वकाया महाहाराश्चौर्य्यमायोरुसाहसाः ॥
त्यक्ष्यन्ति भृत्याश्च पतिं तापसास्त्वखिलं
व्रतं ।
शूद्राः प्रतिग्रहीष्यन्ति तपोवेशोपजीविनः ॥
उद्विग्नाश्चानलङ्काराः पिशाचसदृशाः प्रजाः ।
अस्नातभोजनेनाग्निदेवतातिथिपूजनम् ॥
करिष्यन्ति कलौ प्राप्ते न च
पिण्डोदकक्रियाम् ।
स्त्रीपराश्च जनाः सर्व्वे शृद्रप्रायाश्च शौनक ॥
बहुप्रजाल्पभाग्याश्च भविष्यन्ति कलौ स्त्रियः
।
शिरःकण्डयनपरा आज्ञां भेत्स्यन्ति सत्पतेः
॥

०१) वत्सरेषु गतेषु प्रायशो सौरपौषस्य अष्टा
दशदिवसे यीशुख्रीष्टीयाब्दः प्रचलितः ॥

पञ्चनवत्यूद्र्ध्वषट्शताधिकत्रिसहस्रपरिमितेषु

(३६९५) कलेरतीताब्देषु सप्तदशाधिकपञ्च-
शतमिते (५१७) च शकाब्दे प्रचलति भाद्रशुक्ल-
द्वादश्यां उत्कलदेशप्रचलितः विलायति इत्या-
ख्यया प्रसिद्धो वत्सरः प्रवर्त्तितः । अयन्तु भाद्र-
शुक्लद्वादशीमधिगम्य परिगणितो भवति ॥

त्रयोविंशत्यूर्द्धसप्तशताधिकत्रिसहस्रपरिमितेषु

(३७२३) कलेरतीताब्देषु पञ्चचत्वारिंशदधिक-
पञ्चशतमिते (५४५) च शकाब्दे प्रचलति ज्यैष्ठस्य
विंशतितमदिवसीय शुक्रवारात् महम्मदस्य मक्का-

:प्रस्थानकालमारभ्य “हिज्रि” इति प्रसिद्धो

हायनः प्रचलितः । अयन्तु चान्द्रमाणेन परिग-
णितो भवति । अतः प्रायशः सौरसप्तनवतितम-
वर्षैरस्य शततमा वत्सरा भवेयुः ॥

पञ्चाशीत्यूद्र्ध्वपञ्चशताधिकचतुःसहस्रपरिमि

तेषु कलेरतीताब्देषु (४५८५) सप्ताधिकचतु-
र्द्दशशतपरिमिते (१४०७) च शकाब्दे प्रचरति
फाल्गुनीयोनविंशदिवसे शुक्रवारे पूर्णिमायां भग-
वांश्चैतन्यदेवः प्रादुर्बभूव । अस्य जन्मदिनमारभ्य
चैतन्याब्दः प्रचलितः ॥)

अस्मिन् युगे धर्म्म एकपादः । अधर्म्मश्चतु-

ष्पादः । आयुः शतवर्षाणि । अवतारः श्रीकृष्णः ।
तद्युगशेषे पापिनां विनाशाय भगवद्दशमावतारः
कल्किर्भविष्यति । तद्युगधर्म्मो यथा ।
“कलौ तु धर्म्मपादानां तूर्य्यांशोऽधर्म्महेतुभिः ।
एधमानैः क्षीयमाणो ह्यन्ते सोऽपि विनङ्क्ष्यति ॥
तस्मिन् लुब्धा दुराचारा निर्दयाः शुष्कवैरिणः ।
दुर्भगा भूरितर्षाश्च शूद्रदासोत्तराः प्रजाः” ॥
“यदा मायानृतं तन्द्रा निद्रा हिंसा विषादनम् ।
शोकमोहौ भयं दैन्यं स कलिस्तामसः स्मृतः ॥
यस्मात् क्षुद्रदृशो मर्त्याः क्षुद्रभाग्या महाशनाः ।
कामिनो वित्तहीनाश्च स्वैरिण्यश्च स्त्रियोऽसतीः ॥
दस्युकृष्टा जनपदा वेदाः पाषण्डदूषिताः ।
राजानश्च प्रजाभक्षाः शिश्नोदरपरा द्विजाः ॥
अव्रता वटवोऽशौचा भिक्षवश्च कुटुम्बिनः ।
तपस्विनो ग्रामवासा न्यासिनो ह्यर्थलोलुपाः ॥
ह्रस्वकाया महाहारा बह्वपत्या गतह्रियः ।
शश्वत्कटुकभाषिण्यश्चौर्य्यमायोरुसाहसाः ॥
पणयिष्यन्ति वै क्षुद्राः किराटाः कुटकारिणः ।
अनापद्यपि मंस्यन्ते वार्त्तां साधुजुगुप्सिताम् ॥
पतिं त्यक्ष्यन्ति निर्द्रव्यं भृत्या अप्यखिलोत्तमम् ।
भृत्यं विपन्नं पतयः कौलं गाश्चापयस्विनीः ॥
पितॄन् भ्रातॄन् सुहृद्‌ज्ञातीन् हित्वासौरतसौहृदाः
ननान्दृश्यालसम्बादादीनाः स्त्रैणाः कलौ नराः ॥
शूद्राः प्रतिग्रहीष्यन्ति तपोवेशोपजीविनः ।
धर्म्मं वक्ष्यन्त्यधर्म्मज्ञा अधिरुह्योत्तमासनम् ॥
नित्यमुद्विग्नमनसो दुर्भिक्षकरकर्षिताः ।
निरन्ने भूतले राजन्ननावृष्टिभयातुराः ॥
वासोऽन्नपानशयनव्यवायस्नानभूषणैः ।
हीनाः पिशाचसन्दर्शा भविष्यन्ति कलौ प्रजाः ॥
कलौ काकिणिकेऽप्यर्थे विगृह्य त्यक्तसौहृदाः ।
त्यक्ष्यन्ति हि प्रियान् प्राणान् हनिष्यन्ति स्वकानपि ॥
न रक्षिष्यन्ति मनुजाः स्थविरौ पितरावपि ।
प्राप्नोति यक्ष्यन्ति न तं कलौ जनाः ॥
पुंसां कलिकृतान् दोषान् द्रव्यदेशात्मसम्भवान् ।
सर्व्वान् हरति चित्तस्थो भगवान् पुरुषोत्तमः ॥
श्रुतः संकीर्त्तितो ध्यातः पूजितस्त्वादृतोऽपि वा ।
नृणां क्षिणोति भगवान् हृत्स्थो जन्मायुताशुभम् ॥
यथा हेम्नि स्थितो वह्निर्दुर्व्वर्णं हन्ति धातुजम् ।
एवमात्मगतो विष्णुर्योगिनामशुभाशयम् ॥
विद्यातपःप्राणनिरोधमैत्री
तीर्थाभिषेकव्रतदानजप्यैः ।
नात्यन्तशुद्धिं लभतेऽन्तरात्मा
यथा हृदिस्थे भगवत्यनन्ते ॥
तस्मात् सर्व्वात्मना राजन् हृदिस्थं कुरु केशवम्
।
म्रियमाणो ह्यवहितस्ततो याहि परां गतिम्” ॥
“कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः ।
कीर्त्तनादेव कृष्णस्य मुक्तसङ्गः परं व्रजेत् ॥
कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखे ।
द्वापरे परिचर्य्यायां कलौ तद्धरिकीर्त्तनात्” ॥
इति श्रीभागवते महापुराणे १२ । ३ अध्यायः ॥
* ॥
तद्युगशेषधर्म्माः यथोक्तास्तत्रैव १२ । १ ।
३६-४७ ॥
“सौराष्ट्रावन्त्याभीराश्च शूरा अर्ब्बुदमालवाः ।
व्रात्या द्विजा भविष्यन्ति शूद्रप्राया जनाधिपाः ॥
सिन्धोस्तटं चन्द्रभागां कान्तीं काश्मीरमण्डलम्
।
भोक्ष्यन्ति शूद्रा व्रात्याद्या म्लेच्छा अब्रह्मवर्च्चसः
॥
तुल्यकाला इमे राजन् म्लेच्छप्रायाश्च भूभृतः ।
एतेऽधर्म्मानृतपराः फल्गुदास्तीव्रमन्यवः ॥
स्त्रीबालगोद्विजघ्नाश्च परदारधनादृताः ।
उदितास्तमितप्राया अल्पसत्वाल्पकायुषः ॥
असंस्कृताः क्रियाहीना रजसा तमसा वृताः ।
प्रजास्ते भक्षयिष्यन्ति म्लेच्छा राजन्यरूपिणः ॥
तन्नाथास्ते जनपदास्तच्छीलाचारवादिनः ।
अन्योन्यतो राजमिश्च क्षयं यास्यन्ति पीडिताः”
॥
तत्रैव १२ । २ । १-१६ ।
“ततश्चानुदिनं धर्म्मः सत्यं शौचं क्षमा दया ।
कालेन बलिना राजन् नंङ्क्ष्यत्यायुर्ब्बलं स्मृतिः
॥
वित्तमेव कलौ नृणां जन्माचारगुणोदयः ।
धर्म्मन्यायव्यवस्थायां कारणं बलमेव हि ॥
दाम्पत्येऽभिरुचिर्हेतुर्मायैव व्यवहारिके ।
स्त्रीत्वे पुंस्त्वे च हि रतिर्विप्रत्वे सूत्रमेव हि ॥
क्षुत्तृड्भ्यां व्याधिभिश्चैव सन्तप्स्यन्ते च
चिन्तया ॥
त्रिंशद्विंशतिवर्षाणि परमायुः कलौ नृणाम् ॥
क्षीयमाणेषु देहेषु देहिनां कलिदोषतः ।
षर्णाश्रमवतां धर्म्मे नष्टे वेदपथे नृणाम् ॥
पाषण्डप्रचुरे धर्म्मे दस्युप्रायेषु राजसु ।
चौर्य्यानृतवृथाह्सिनानावृत्तिषु वै नृषु ॥
शूद्रप्रायेषु वर्णेषु छागप्रायासु धेनुषु ।
गृहप्रायेष्वाश्रमेषु यौनप्रायेषु बन्धुषु ॥
अनुप्रायास्वोषधीषु शमीप्रायेषु स्थास्नुषु ।
विद्युत्प्रायेषु मेघेषु शून्यप्रायेषु सद्मसु ॥
इत्थं कलौ गतप्राये जनेषु खरधर्म्मिषु ।
धर्म्मत्राणाय सत्वेन भगवानवतरिष्यति” ॥
(देवगन्धर्व्वविशेषः । स तु कश्यपात्
दक्षकन्यायां
मुनौ जातः । यथा, महाभारते १ । ६५ ।
४४ ।
“तथा शालिशिरा राजन् पर्ज्जन्यश्च
चतुर्द्दश ।
कलिः पञ्चदशस्त्वेषां नारदश्चैव षोडशः” ॥
शिवः । यथा महाभारते । १३ । १७ । ७८
।
“दम्भोह्यदम्भो वैदम्भो वश्यो वशकरः
कलिः” ॥)

**कलिः**, स्त्री, (कलयति ईषत्प्रकाशते उद्भिद्यते वा

कल् + ततः इन् ।) कलिका । इति मेदिनी
॥

**कलिकः**, पुं, (कलो मन्दगम्भीरध्वनिरस्यास्ति ।

कल + मत्वर्थे ठन् ।) क्रौञ्चपक्षी । इति
शब्द-
रत्नावली ॥

**कलिका**, स्त्री, (कलिरेव । स्वार्थे कन् टाप् च ।)

अस्फुटितपुष्पम् । तत्पर्य्यायः । कोरकः २
। इत्य-
मरः । २ । ४ । १६ ॥ कलिः ३ कली ४ ।
कोरकम् ।
५ इति तट्टीका ॥ (यथा, साहित्यदर्पणे ३ ।
१६८ ।
“मुग्धामजातरजसं कलिकामकाले
व्यर्थं कदर्थयसि किं नवमालिकायाः” ॥)
वीणामूलम् । इति हेमचन्द्रः ॥
पदसन्ततियुक्त-
रचनाविशेषः । तद्विवरणम् यथा, --

पुत्रान् भार्य्याञ्च कुलजां क्षुद्राः शिश्नोदरम्भराः ॥
कलौ न राजन् जगतां परं गुरुं
त्रिलोकनाथानतपादपङ्कजम्।
प्रायेण मर्त्या भगवन्तमच्युतं
यक्ष्यन्ति पाषण्डविभिन्नचेतसः” ॥ * ॥
कलिकृतदोषविनाशोपायः। यथा,
“यन्नामधेयं म्रियमाण आतुरः
पतन् स्खलन् वा विवशो गृणन् पुमान्।
विमुक्तकर्म्मार्गल उत्तमां गतिं

लिङ्गमेवाश्रमाख्यातावन्योन्यापत्तिकारणम्।
अवृत्त्या न्यायदौर्ब्बल्यं पाण्डित्ये चापलं वचः ॥
अनाढ्यतैवासाधुत्वे साधुत्वे दम्भ एव हि ।
स्वीकार एव चोद्वाहे स्नानमेव प्रसाधनम् ॥
दूरे वार्य्ययनं तीर्थं लावण्ये केशधारणम् ।
उदरम्भरता स्वार्थः सत्यत्वे धाष्टर्यमेव हि ॥
दाक्ष्ये कुटुम्बभरणं यशोऽर्थे धर्म्मसेवनम् ।
एवं प्रजाभिर्दुष्टाभिराकीर्णे क्षितिमण्डले ।
ब्रह्मविट्क्षत्त्रशूद्राणां यो बली भविता नृपः ॥
प्रजा हि लुब्धै राजन्यैर्निर्घृणैर्दस्युधर्म्मभिः ।
आच्छिन्नदारद्रविणा यास्यन्ति गिरिकाननम् ॥
शाकमूलामिषक्षौद्रफलपुष्पाष्टिभोजनाः।
अनावृष्ट्या विनङ्क्ष्यन्ति दुर्भिक्षकरपीडिताः ॥
शीतवाततपप्रावृडहिमैरन्योऽन्यतः प्रजाः ।

“स्युर्म्महाकलिकारम्भे श्लोकास्तु युगशः स्मृताः ।
अन्यासां कलिकानान्तु भवन्त्येकैकशो हि ते ॥
पूर्त्तौ द्वौ कलिकाभिस्तु
विरुदास्तुल्यसङ्ख्यकाः” ॥ * ॥
कलिकालक्षणम्।
“कला नाम भवेत्तालनियता पदसन्ततिः।
कलाभिः कलिका प्रोक्ता तद्भेदाः षट् समीरिताः।
कलिका चण्डवृत्ताख्या द्विगादिगणवृत्तका।
तथा त्रिभङ्गी वृत्ताख्या मध्या मिश्रा च केवला” ॥
चण्डवृत्ते दशधा संयुक्तवर्णाः ।
“अत्र संयुक्तवर्णानां नियमो दशधा च ते ।
मधुरं श्लिष्टविश्लिष्टशिथिलह्रादिनस्त्वमी॥
भिद्यन्ते ह्रस्वदीर्घाभ्यां ते दर्श्यन्ते स्फुटं यथा ।
ह्रस्वान्मधुरसंयोगाः शङ्कराङ्कुशकिङ्कराः ॥
तस्माच्चु श्लिष्टसंयक्ता दर्पकर्परसर्पवत् ।
ततो विश्लिष्टसंयुक्ता भल्लकल्याणचिल्लयः ॥
तथा शिथिलसंयुक्ताः पश्य कश्यप वश्यवत् ।
प्रोक्ता ह्रादियुता मह्यं सह्यं गुह्यं प्रसह्यवत् ॥
गर्ह्रादीन् ह्रादिसंयुक्तमेदान् केचित् ममूचिरे ।
दीर्घात्तुङ्गाङ्कार्पामं बाल्यं वैश्यश्च वाह्यकम्” ॥
कलापरिमाणमुक्तम्।

:"अधिकाश्चेच्चतुःषष्टिर्न्यूना द्वादश ताः कलाः ।

एताभ्यो नाधिकाः कार्य्या न्यूनाश्चापि न पण्डितैः" ॥

तत्र तावच्चण्डवृत्तकलिका द्विधा । नखो विशिख-श्चेति भेदात् । तत्र रणादि-विंशतिभेदस्य नखस्येह बर्द्धितादयो नव भेदा गृहीताः ।
"वर्द्धितं वीरभद्रश्च समग्रोऽच्युत उत्पलम् ।
तुरङ्गः श्रीगुणरतिस्तथा मातङ्गखेलितम् ।
तिलकश्चेति कलिका नखस्येहोदिता नव" ॥
इत्युक्तेः ॥

अथ विशिखः ।
पद्मकुन्दचम्पकवञ्जुलभेदात् पञ्च-

विधः । तेष्वादिमं पद्मं पङ्केरुहसितकञ्जपाण्डूत्पले-न्दीवरारुणाम्भोरुहकह्लारभेद्गात् षड्विधम् । अन्तिमं वकुलन्तु भासुरमङ्गलभेदात् द्विविधमित्ये कादशभेदो विशिखः ।
"पङ्केरुहं सितकञ्जं तथा पाण्डूत्पलं परम् ।
इन्दीवरारुणाम्भोजे कह्लारञ्चेति षड्विधम् ॥
ईषद्भेदेन कथितं पद्ममेव मनीषिभिः ।
चम्पकं वञ्जुलं कुन्दं वकुलुं द्विविधं तथा" ॥
इति पञ्चविधस्यापि विशिखस्येशसङ्ख्यका इत्युक्तेः ।
एवं चण्डवृत्तकलिका विंशतिधा गृहीताः ॥ * ॥

अथ पञ्चधाद्विगादिगणवृत्तकाकलिका मञ्जरी-

त्यभिहिता क्रमात् कोरकगुच्छकसंफुल्लकुसुम-गन्धाख्या । तस्याश्चात्र कोरकगुच्छकुसुमानि गृहीतानि । कोरको गुच्छकुसुमैर्मञ्जरी त्रिविधात्र त्वित्युक्तेः । त्रिभङ्गी कलिका तु शिखरिण्यादि-पूर्ब्बा सोढा । तस्याश्चात्र दण्डकपूर्ब्बा विदग्धपूर्ब्बा च गृहीता । दण्डकाख्या विदग्धाख्या त्रिभङ्गीह द्विधा मतेत्युक्तेः ॥ * ॥ अथ मिश्रकलिका तु कलिकागद्यसंपृक्ता सप्तविभक्तिका वा । अक्ष-मयी सर्व्वलघ्वी चेति द्विभेदा केवला चेत्यष्टौ । तदेवं षड्भ्यो महाकलिकाभ्यो ऽष्टाबिंशतिरिह कलिका गृहीताः । रणादय एकादश नखभेदाः । संफुल्लगन्धौ मञ्जरीभेदौ । शिखरिण्यादयः त्रिभ ङ्गीभेदा मध्यकलिका च त्यक्ताश्चारुताधिक्यविर-हात् । इति रूपगोस्वामिकृतगोविन्दविरुदावली-भाष्ये बलदेवविद्याभूषणः ॥ (छन्दोभेदः । यदुक्तं वृत्तरत्नाकरे ४ अध्याये ।
"प्रथममपरचरणसमुत्थं
श्रयति स यदि लक्ष्म ।

करञ्ज नाटाकरञ्ज इति च भाषा । इत्यमरः । २ । ४ । ४८ ॥ (कलिं कलहं कारयति । कलि + कृ + णिच् + ण्वुल् ।) नारदमुनिः । इति हेमचन्द्रः ॥

**कलिकारी**, स्त्री, (कलिं गर्भपाताद्यनिष्टं करोतीति । कलि + कृ + अण् । जातित्वात् ङीष् ।) उप-विषभेदः । विषलाङ्गलीया इति भाषा । तत्प-र्य्यायः । लाङ्गली २ हलिनी ३ गर्भपातनी ४ दीप्ता ५ विशल्या ६ अग्निमुखी ७ हली ८ नक्ता ९ इन्द्रपुष्पिका १० विद्युज्ज्वाला ११ अग्निजिह्वा १२ व्रणहृत् १३ पुष्पसौरभा १४ खर्णपुष्पा १५ वह्निशिखा १६ । अस्या गुणाः । कटुत्वम् । उष्णत्वम् । कफवातनाशित्वम् । गर्भान्तःशल्यनि-ष्क्रामकारित्वम् । परमसारित्वञ्च । इति राज-निर्घण्टः ॥

**कलिङ्गं**, क्ली, (कलि + गम् + ड । निपातनात् साधुः ।) इन्द्रयवम् ॥ इत्यमरः । २ । ४ । ६७ ॥

**कलिङ्गः**, पुं, (कलिं पूतिगन्धादिकं गच्छति प्राप्नोति कलि + गम् + ड । निपातनात् साधुः ।) पूतिक-रजवृक्षः । (के मस्तके लिङ्गं पीतादिचिह्नमस्य ।) धूम्याटपक्षी । देशविशेषः । इति हेमचन्द्रः ॥ (स्वनामख्यातो नृपतिविशेषः । अस्य नामानुसारे-णैव कलिङ्ग इति देशाख्या जाता । यदुक्तं महा भारते । १ । १०४ । ४९, ५० ।
"अङ्गो वङ्गः कलिङ्गश्च पुण्ड्रः सुह्मश्च ते सुताः ।
तेषां देशाः समाख्याताः स्वनामप्रथिता भुवि ॥
अङ्गस्याङ्गोऽभवद्देशो वङ्गो वङ्गस्य च स्मृतः ।
कलिङ्गविषयश्चैव कलिङ्गस्य च स स्मृतः" ॥)
मेदिनीमते जलपदार्थे पुं भूम्नि । (यदुक्तं तत्रैव गत्रिके ३३ ।
"कलिङ्गः पूतिकरजे धूम्याटे भूम्नि नीवृति" ॥
अस्य प्रमाणं यथा, गोःरामायणे । ४ । ४० । २१ ।
"ततः शकपुलिन्दांश्च कलिङ्गांश्चैव मार्गतः" ॥
तद्देशवासिमानवादयः । यथा, महाभारते । ३ । ११४ । ३ ।
"ततः समुद्रतीरेण जगाम वसुधाधिपः ।
भ्रातृभिः सहितो वीरः कलिङ्गान् प्रति भारत" ॥)
कुटजवृक्षः । (अस्यपर्य्यायो यथा भावप्रकाशे पूर्ब्बखण्डे १ भागे ।
"उक्तं कुटजवीजन्तु यवमिन्द्रयवन्तथा ।
कलिङ्गञ्चापिकालिङ्गं तथा भद्रयवा अपि" ॥
इन्द्रयवशब्देऽस्य गुणावली ज्ञेया ॥
व्यवहारो यत्र तद्यथा ।
"विल्वं छागपयः सिद्धं सितामोचरसान्वितम् ।

अच् टाप् ।) नितम्बिनी । महिला । इति मेदिनी करहेमचन्द्रौ ॥ त्रिवृत् । इति शब्दचन्द्रिका । तेउडि इति भाषा ॥

**कलिञ्जः**, पुं, (कं वातं लञ्जति तिरस्करोति रोधने-नेति यावत् । क + लजि भर्त्सने + "कर्म्मण्यण्" ३ । २ । १ । इति अण् । निपातनात् साधुः ।) कटः । इति हेमचन्द्रः ॥ चाँच् दरमा इत्यादि भाषा ॥

**कलितं**, त्रि, (कल् + कर्म्मणि क्त ।) विदितम् । आप्तम् । इति मेदिनी ॥ भेदितम् । गणितम् । इति शब्दरत्नावली ॥ धृतम् यथा, --
"करकलितकपालः कुण्डली दण्डपाणिः" । इति भैरबध्यानम् ॥
(प्राप्तः । यथा आर्य्यासप्तशती ३५५ ।
"विशिख इव कलितकर्णः प्रविशति हृदं न निःसरति" ॥ भावे + क्त । ज्ञानम् ॥)

**कलिद्रुमः**, पुं, (कलिना आश्रितो द्रुमः शाकपार्थि-वादिवत् मध्यपदलोपः ।) विभीतकवृक्षः । इत्य-मरः । २ । ४ । ५८ । वयडा इति भाषा ॥ (अस्य पर्य्यायो यथा भावप्रकाशस्य पूर्ब्बखण्डे । १ भागे ।
"विसीतकस्त्रिलिङ्गः स्यान्नाक्षः कर्षफलस्तु सः ।
कलिद्रुमो भूतवासस्तथा कलियुगालयः" ॥
विशेषविवरणमस्य विभीतकशब्दे ज्ञेयम् ॥)

**कलिन्दः**, पुं, (कलिं ददाति द्यति वा खच् मुम् च ।) विभीतकवृक्षः । इति राजनिर्घण्टः ॥ (विभीतक-शब्देऽस्य विशेषो ज्ञातव्यः ॥) सूर्य्यः । पर्व्वत-विशेषः । यस्मात् यमुना निर्गता । इति कालि-न्दीशब्दव्युत्पत्तौ भरतः ॥ (यथा रघुः ६ । ४८ ।
"कलिन्दकन्या मथुरां गतापि
गङ्गोर्म्मिसंसक्तजलेव भाति" ॥)

**कलिन्दकन्या**, स्त्री, (कलिन्दस्य पर्व्वतविशेषस्य कन्या तदुत्पन्नत्वात् ।) यमुनानदी । इति राजनिर्घण्टः ॥
("कलिन्दकन्यामथुरां गतापि

इतरदितरगदितमपि यदि च तूर्य्यम्
चरणयुगलकमविकृतमपरमिति कलिका सा” ॥
कला । यथोक्तं सिद्धान्तशिरोमणौ ।
“तन्यन्ते कलिका यस्मात्तस्मात्तास्तिथयः स्मृताः”
॥)

**कलिकापूर्व्वं**, क्ली, (कलिकया अंशेन जन्यं अपूर्व्वं
अदृष्टम् ।) अङ्गप्रधानान्यतरबह्वकर्म्मसाध्यस्वर्गा-
दिफलजनकापूर्ब्बोत्पत्तौ तत्तत्प्रत्येककर्म्मजन्यमदृ-
ष्टम् । इति स्मृतिः ॥

**कलिकारः**, पुं, (कलिं चिचिकुचीतिशब्देन कलहं
करोतीति । कलि + कृ + अण् ।) धूम्याटपक्षी ।
पीतमस्तकपक्षी । (कलिं स्वदेहस्थकण्टकैरनिष्टं
करोतीति ।) पूतिकरञ्जः । इति मेदिनी ॥

**कलिकारकः**, पुं, (कलिं कण्टकैरनिष्टं करोति ।
कलि + कृ + णिच् + ण्वुल् ।) पूतिकरञ्जः । काँटा-
कलिङ्गचूर्णसंयुक्तं रक्तातीसारनाशनम्’ ॥
इति वैद्यकचक्रपाणिसंग्रहेऽतीसाराधिकारे ॥)
शिरीषवृक्षः । प्लक्षवृक्षः । इति राजनिर्घण्टः ॥

**कलिङ्गकः**, पुं, (कलिङ्ग + संज्ञायां कन् । कलिङ्ग
इव कायति वा । कै + कः ।) इन्द्रयवम् । इति
रत्नमाला ॥ (यथा, वैद्यकचक्रपाणिसंग्रहे ज्वरा-
धिकारे ।
“कलिङ्गकाः पटोलस्य पाठा कटुकरोहिणी” ॥)
कलिङ्गा, स्त्री, (कं सुखं लिङ्गतीति । क + लिङ्ग
गङ्गोर्म्मिसंसक्तजलेव भाति” ॥
इति रघुः । ६ । ४८ ॥)

**कलिन्दनन्दिनी**, स्त्री, (कलिन्दं नन्दयति । कलिन्द +
नन्द + णिनिः ङीप् च । कलिन्दस्य नन्दिनी
वा ।)
यमुनानदी । इति शब्दरत्नावली ॥

**कलिप्रियः**, पुं, (कलिः कलहः प्रियो यस्य ।) नारद-
मुनिः । यथा । “कलिप्रियस्य प्रियशिष्यवर्गः” ।
इति रघुः ॥ (कलेः प्रियः दुष्टप्रकृतिकः ॥) वा-
नरः । इति शब्दरत्नावली ॥

**कलिमारकः**, पुं, (कलीनां कलिकानां माला यत्र ।
लस्य रः कप् संज्ञायां कन् वा । यद्वा कलिना
स्वदेहस्थकण्ठकाघातदुःखेन मारयतीति ।
कलि
+ मृ + णिच् + ण्वुल् ।) कलिकारकः ।
इत्यमर-
टीकायां रमानाथः । २ । ४ । ४८ ॥

**कलिमालकः**, पुं, (कलीनां माला यत्र । कप् कलिना
मारयति वा रस्य लः ।) कलिकारकः । इति
स्वामी इत्यमरटीकायां भरतः ॥

**कलिमाल्यः**, पुं, (कलीनां माल्यं यत्र ।) पूतिकरञ्जः ।
इति राजनिर्घण्टः ॥

**कलियुगं**, क्ली, (कलिरेव युगम् । अग्नेः शिखा राहोः
शिर इति वत् कलेर्युगं वा ।) चतुर्थयगम् ।
(यथा
मनुः १ । ८५ ।
“अन्ये कृतयुगे धर्म्मा स्त्रेतायां द्वापरे परे ।
अन्ये कलियुगे नृणां युगह्रासानुरूपतः” ॥)
तस्योत्पत्त्यादि यथा । माघीपूर्णिमायां
शुक्रवारे
कलियुगोत्पत्तिः । तत्र अवतारः कल्किः ।
पुण्य-
मेकपादम् ॥ पापं त्रिपादम् । गङ्गा तीर्थम् ।
ब्राह्मणो निरग्निः । अन्नगताः प्राणाः । सार्द्ध-
त्रिहस्तपरिमितो मनुष्यदेहः । अष्टाधिकशत-
वर्षं परमायुः । भोजनपात्रस्य नियमो नास्ति ।
इति कलियुगस्य लक्षणम् ॥ कलियुगाब्दाः
४३२००० । आदौ कलिराजा धर्म्मपुत्त्रो
युधि-
ष्ठिरः । हरिश्चन्द्रः मुनिश्चन्द्रः तेजशेखरः
विक्र-
मादित्यः विक्रमसेनः लाउसेनः बल्लालसेनः
देव-
पालः भूपालः महीपालः । एते
राजचक्रवर्त्तिनः ॥
तन्माहात्म्यं यथा, --
‘धर्म्मः सङ्कुचितस्तपो विरहितं सत्यञ्च
दूरंगतम् ।
लोकाधर्म्महता द्बिजाश्चलुभिता नारीवशा
मानवाः’ ॥
तत्र तारकब्रह्मनाम ।
“हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे ।
हरे राम हरे राम राम राम हरे हरे” ॥
इति केचित् ॥

**कलियुगाद्या**, स्त्री, (कलियुगस्य आद्या आद्यतिथिः ।)
माघीपौर्णमासी । तत्प्रमाणं युगाद्याशब्दे
द्रष्टव्यम् ॥

**कलिलः**, त्रि, (कल्यते मिश्र्यते इति । “सलिकलि”
उणां १ । ५५ । इति इलच् ।) गहनः ।
इत्यमरः ।
३ । १ । ८५ ॥ (यथा गीतायाम् २ । ५२ ।
“यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति” ॥)
मिश्रः । इत्युणादिकोषः ॥ (यथा भागवते ६ ।
२ । ४६ ।
“न यत्पुनः कर्म्मसु सज्जते मनो
रजस्तमोभ्यां कलिलं ततोऽन्यथा” ॥)

**कलुषः**, त्रि, (कल् + उषच् ।) अनच्छः । आविलः ।
इत्यमरः । १ । १० । १४ ॥ (“निर्भुग्नकलुषे नेत्रे”
इति सुश्रुते उत्तरतन्त्रे । ३१ अध्याये ।)

**कलेवरं**, क्ली, (कले शुक्रे वरं श्रेष्ठं देहोत्पत्तिहेतु-
कत्वात् पवित्रम् । समम्या अलुक् ।) शरीरम् ।
इत्यमरः । २ । ६ । ७० ॥ (यथा गीतायाम् । ८ । ६
।
“यं यं भावं स्मरन् देही त्यजत्यन्ते कलेवरम् ।
तं तमुपैति कौन्तेय ! सदा तद्भावभावितः” ॥)

**कल्कः**, पुं, क्ली, (कल् गतौ + “कृ दाधारार्च्चि-
कलिभ्यः कः” । उणां ३ । ४० । इति कः ।)
घृततैलादिशेषः । (यथा याज्ञवल्क्यः । १ । २७७ ।
“स्नपनं तस्य कर्त्तव्यं पुण्येऽह्नि विधिपूर्ब्बकम् ।
गौरसर्षपकल्केन साज्येनोत्सादितस्य च” ॥)
दम्भः । (यथा महाभारते १ । १ । २७१ ।
“तपो न कल्कोऽध्ययनं न कल्कः
स्वाभाविको वेदविधिर्नकल्कः ।
प्रसह्यवित्ताहरणं न कल्कः
तान्येव भावोपहतानि कल्कः” ॥)
विभीतकवृक्षः । विष्ठा । किट्टम् । पापम् । इति
मेदिनी ॥ (यथा भागवते २ । २ । २४ ।
“विधूतकल्कोऽथ हरेरुदस्तात्
प्रयाति चक्रं नृप ! शैशुमारम्” ॥
यस्य कस्यचित् वस्तुनो चूर्णम् । यथा कुमारे ।
७ । ९ ।
“तां लोध्रकल्केन हृताङ्गतैला-
माश्यानकालेयकृताङ्गरागाम्” ॥)
कर्णमलः । इति शब्दरत्नावली ॥ तुरुष्कनाम-
गन्धद्रव्यम् । इति राजनिर्घण्ठः ॥ घृततैलादि-
पाके देयमौषधद्रव्यम् । तत्तु पञ्चकषायान्तर्गत-
दृशदि पेषितम् । अस्य पूर्णवीर्य्यं याममेकं ति
ष्ठति । यथा, --
“द्रव्यमात्रं शिलापिष्टं शुष्कं वा जलमिश्रितम् ।
तदेव सूरिभिः पूर्ब्बैः कल्क इत्यभिधीयते” ॥
तत्पर्य्यायः । पिष्टः २ विनीयः ३ । इति रत्नमाला ॥
आवापः ४ प्रक्षेपः ५ । इति वैद्यकपरिभाषा ॥
(“द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा सजलं भवेत् ।
प्रक्षेपावापकल्कास्ते तन्मानं कर्षसम्मितम् ॥
इति मध्यखण्डे । ५ । १ । शार्ङ्गधरेणोक्तम् ॥
यस्तु क्षतेषूपयुज्यते सभूयः कल्क इति संज्ञा
लभते निरुद्धालेपनसंज्ञस्तेनास्रावसंनिरोधो मृ-
दुता पूतिमांसापकर्षणमन्तर्न्निद्दोषताव्रणशुद्धिश्च
भवति” ॥ इति सुश्रुते सूत्रस्थाने । १८ अध्याये ॥)
शाठ्यम् । इति मोक्षधर्म्मटीकायां नीलकण्ठः ॥
भविष्यति । यथा, --
“सम्भलग्राममुख्यस्य ब्राह्मणस्य महात्मनः ।
भवने विष्णुयशसः कल्किः प्रादुर्भविष्यति” ॥
तस्य कर्म्म यथा, --
“अश्वमाशुगमारुह्य देवदत्तं जगत्पतिः ।
असिनाऽसाधुदमनमष्टैश्वर्य्यगुणान्वितः ॥
विचरन्नाशुना क्षौण्यां हयेनाप्रतिमद्युतिः ।
नृपलिङ्गच्छदो दस्यून् कोटिशो निहनिष्यति” ॥
इति श्रीभागवतम् ॥ तस्योत्पत्तिर्यथा, --
“स्तुत्वा प्राह पुरो ब्रह्मा देवानां हृदयेप्सितम् ।
तं श्रुत्वा पुण्डरीकाक्षो ब्रह्माणमिदमब्रवीत् ॥
सम्भले विष्णुयशसो गृहे प्रादुर्भवाम्यहम् ।
सुमत्यां मातरि विभो धन्यायां त्वन्निदेशतः ॥
चतुर्भिर्भ्रातृभिर्देव करिष्यामि कलिक्षयम् ।
भवन्तो बान्धवा देवाः स्वांशेनावतरिष्यथ ॥
इयं मम प्रिया लक्ष्मीः सिंहले संभविष्यति ।
वृहद्रथस्य भूपस्य कौमुद्यां कमलेक्षणा ।
भार्य्यायां मम भार्य्यैषा पद्मा नाम्नी जनिष्यति ॥
यात यूयं भुवं देवाः स्वांशावतरणे रताः ॥
राजानौ मरुदेवापी स्थापयिष्याम्यहं भुवि ।
पुनः कृतयुगं कृत्वा धर्म्मान् संस्थाप्य पूर्ब्बवत् ।
कलिव्यालं संनिरस्य प्रयास्ये स्वालयं विभो ॥
इत्युदीरितमाकर्ण्य ब्रह्मा देवगणैर्वृतः ।
जगाम ब्रह्मसदनं देवाश्च त्रिदिवं ययुः ॥
महीमाश्वास्य भगवान् निजजन्मकृतोद्यमः ।
सम्भलग्रामविप्रर्षिमाविवेश परात्मकः ॥
सुमत्यां विष्णुयशसा गर्भमाधत्त वैष्णवम् ।
ग्रहनक्षत्रराश्यादिसेवितश्रीपदाम्बुजम् ॥
सरित् समुद्रा गिरयो लोकाः सस्थाणुजङ्गमाः ।
सहर्षा ऋषयो देवा जाते विष्णौ जगत्पतौ ॥
बभूव सर्व्वसत्वानामानन्दो विविधाश्रयः ।
नृत्यन्ति पितरो हृष्टास्तुष्टा देवा जगुयशः ॥
चक्रुर्व्वाद्यादि गन्धर्व्वा ननृतुश्चाप्सरोण{??}ः ।
द्वादश्यां शुक्लपक्षस्य माधवे मासि माधवः ।
जातो ददृशतुः पुत्त्रं पितरौ हृष्टमानसौ ॥
धात्री माता महाषष्ठी नाडीच्छेत्त्री तदाम्बिका ।
गङ्गोदकक्लेदमोक्षा सावित्री मार्ज्जनोद्यता ॥
तस्य विष्णोरनन्तस्य वसुधाऽदात् पयः सुधाम् ।
मातृका माङ्गल्यवचः कृष्णजन्मदिनेऽभवन् ॥
व्रह्मा तदुपधार्य्याशु स्वाशुगं प्राह सेवकम् ।
याहीति सूतिकागारं गत्वा विष्णुं प्रबोधय ॥
चतुर्भुजमिदं रूपं देवानामपि दुर्ल्लभम् ।
त्यक्त्वा मानुषवद्रूपं कुरु नाथ विचारितम् ॥
इति व्रह्मवचः श्रुत्वा पवनः सुरभिः सुखम् ।
सुशीतः प्राह तरसा ब्रह्मणो वचनादृतः ।

**कलिवृक्षः**, पुं, (कलेराश्रयरूपो वृक्षः ।) कलिद्रुमः ।

वहेडुकवृक्षः । इति हेमचन्द्रः ॥

**कली**, स्त्री, (कल् + "सर्व्वधातुभ्य इन्" ततः वा

ङीप् ।) कलिका । इत्यमरटीकायां भरतः ॥

**कलुषं**, क्ली, (कं सुखं लुषति हिनस्ति । क + लुष् +

अण् । यद्वा कल् + "पॄनहिकलिभ्य उषच्" ।
उणां ४ । ७५ । इति उषच् ।) पापम् ।
इत्यमरः ।
१ । ४ । २८ ॥ (यथा शङ्कराचार्य्यकृतात्मबोधे
५ ।
"अज्ञानकलुषं जीवं ज्ञानाभ्यासाद्विनिर्म्मलम्
।
कृत्वा ज्ञानं स्वयं नश्येज्जलं कतकरेणुवत्"
॥
मालिन्यं यथा ऋतुसंहारे । ३ । २३ ।
"विगतकलुषमम्भः शालिपक्वा धरित्री ।
विमलकिरणचन्द्रं व्योम ताराविचित्रम्" ॥)

**कलुषः**, पुं, स्त्री, (कस्य जलस्य लुषः हिंसकः । आ

विलकारक इत्यर्थः । क + लुष् + क ।)
महिषः ।
इति राजनिर्घण्टः ॥ (बद्धः । यथा
शकुन्तलायां
"कण्ठः स्तम्भितवाष्पवृत्तिकलुषः" ॥
निन्दितः ।
यथा मनुः १ । ५७ ।
"वर्णापेतमविज्ञातं नरं कलुषयोनिजम्" ॥)

**कल्कः**, त्रि, (कलयति पापमाचरति । कल् + कः ।)

पापाशयः । पापात्मा । इति मेदिनी ॥

**कल्कफलः**, पुं, (कल्कस्य विभीतकस्य फलमिव फलं

यस्य अवयवसादृश्यात् ।) दाडिमवृक्षः । इति
राजनिर्घण्टः ॥ (दाडिमशब्देऽस्य गुणादयो ज्ञा-
तव्याः ॥)

**कल्किः**, पुं, (कल्कः पापं हार्य्यतया अस्ति अस्य ।

कल्क + इन् ।) विष्णोर्दशमावतारः । स तु
कलिशेषे पापात्मनां विनाशाय सम्मलग्रामे

तच्छ्रुत्वा पुण्डरीकाक्षस्तत्क्षणात्द्विभुजोऽभवत् ।
तदा तत्पितरौ दृष्ट्वा विस्मयापन्नमानसौ ॥
भ्रमसंस्कारवत्तत्र मेनाते तस्य मायया ।
ततस्तु सम्भलग्रामे सोत्सवा जीवजातयः ॥
मङ्गलाचारबहुलाः पापतापविवर्ज्जिताः ।
सुमतिस्तं सुतं लब्ध्वा विष्णुं जिष्णुं जगत्पतिम् ॥
पूर्णकामा विप्रमुख्यानाहूयादाद्गवां शतम् ।

:हरेः कल्याणकृद्विष्णुयशाः शुद्धेन चेतसा ॥

सामर्ग्यजुर्व्विद्भिरग्र्यैस्तन्नामकरणे रतः ।
तदा रामः कृपो व्यासो द्रौणिर्भिक्षुः शरीरिणः ॥
समायाता हरिं द्रष्टुं बालकत्वमुपागतम् ।
तानागतान् समालोक्य चतुरः सूर्य्यसन्निभान् ।
हृष्टरोमा द्विजवरः पूजां चक्रे स ईश्वरान् ॥
पूजितास्ते स्वासनेषु संविष्टाः स्वसुखाश्रयाः ।
हरिं क्रोडगतं तस्य ददृशुः सत्त्वमूर्त्तयः ॥
तं बालकं नराकारं विष्णुं नत्वा मुनीश्वराः ।
कल्किं कल्कविनाशार्थमाविर्भूतं विदुर्ब्बुधाः ।
नामाकुर्व्वंस्ततस्तस्य कल्किरित्यभिविश्रुतम् ॥
कृत्वा संस्कारकर्म्माणि ययुस्ते हृष्टमानसाः ।
ततः स ववृधे तत्र सुमत्या परिपालितः ॥
कालेनाल्पेन कंसारिः शुक्लपक्षे यथा शशी ।
कल्केर्ज्येष्ठास्त्रयः शूराः कविप्राज्ञसुमन्त्रकाः ॥
तातमातृप्रियकरा गुरुविप्रप्रतिष्ठिताः ।
कल्केरंशाः पुरो जाताः साधवो धर्म्मतत्पराः ॥
गार्ग्यभर्ग्यविशालाद्या ज्ञातयस्तदनुव्रताः ।
विशाखयूपभूपालपालितास्तापवर्ज्जिताः ।
ब्राह्मणाः कल्किमालोक्य परां प्रीतिमुपागताः ॥
ततो विष्णुयशाः पुत्रं धीरं सर्व्वगुणाकरम् ।
कल्किं कमलपत्राक्षं प्रोवाच पठनादृतम् ।
तात ते ब्रह्मसं स्कारं यज्ञसूत्रमनुत्तमम् ।
सावित्रीं वाचयिष्यामि ततो वेदान् पठिष्यसि ॥
इति श्रीकल्किपुराणेऽनुभागवते भविष्ये कल्कि-
जन्मोपनयनम् २ अध्यायः ॥

**कल्की**, [न्] पुं, (कल्कः पापं नाश्यतया अस्ति

अस्य । कल्क + इनि ।) कल्किः । भगवतो
दशा-
वतारेषु चरमोऽवतारः । यथा पुराणे ।
“मत्स्यः कूर्म्मो वराहश्च नरसिंहोऽथ वामनः ।
रामो रामश्चरामश्च बुद्धः कल्की च ते दश” ॥
(अस्य जन्मादिविवरणन्तु कल्किशब्दे द्रष्टव्यम्
॥)

**कल्पः**, पुं, (कल्प्यते विधीयते असौ । कृप् +

कर्म्मणि घञ् ।) विधिः । (यथा मनुः ३ । १४७
।
“एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः ।
अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः” ॥
(कल्पयति सृष्टिं नाशं वा अत्र । कृप् + णिच् +
अधिकरणे अप् ।) प्रलयः ।
(“युगानां सप्ततिः सैकामन्वन्तरमिहोच्यते” ।
“कृताब्दसंख्यस्तस्यान्ते सन्धिः प्रोक्तो
जलप्लवः” ॥
“कल्पान् कल्पविकल्पांश्च
चतुर्युगविकल्पितान् ।
कल्पान्तस्य स्वरूपञ्च युगधर्म्मांश्च कृत्स्नशः”
॥)
त्रिंशत्कल्पैर्ब्रह्मण एको मासो भवति तेषां
नामानि यथा । श्वेतवाराहः १ नीललोहितः २
वामदेवः ३ गाथान्तरः ४ रौरवः ५ प्राणः ६
वृहत्कल्पः ७ कन्दर्पः ८ सत्यः ९ ईशानः १०
ध्यानः ११ सारस्वतः १२ उदानः १३ गरुडः
१४
कौर्म्मः १५ अयं व्रह्मणः पौर्णमासी । नारसिंहः
१६ समाधिः १७ आग्नेयः १८ विष्णुजः १९
सौरः २० सोमकल्पः २१ भावनः २२
सुप्तमाली
२३ वैकुण्ठः २४ आर्च्चिषः २५ वल्मीकल्पः
२६
वैराजः २७ गौरीकल्पः २८ माहेश्वरः २९
पितृकल्पः ३० अयं ब्रह्मणोऽमाव्रास्या । इति
क्रमसन्दर्भे प्रभासखण्डम् ॥
एतादृशैर्द्वादशमासैर्ब्र-
ह्मणः सम्बत्सरो भवति । एवं वर्षशतं ब्रह्मण
आयुः । तत्र पञ्चाशद्वर्षानि व्यतीतानि एकपञ्चा-
शदारम्भे अधुना श्वेतवाराहकल्पः । इति महा-
भारतम् ॥ (कल्पारम्भकालश्च ब्रह्मसिद्धान्ते
उक्त-
स्तद्यथा, --
“चत्रसितादेर्भानोर्वर्षर्त्तुमासयुगकल्पाः ।
सृष्ठ्यादौ लङ्कायामिह प्रवृत्ता दिनैर्वत्स !” ॥
चैत्रसितादेश्चैत्रशुक्लप्रतिपदमारभ्य इत्यर्थः ।
तथा च ब्रह्मपुराणम् ।
“चैत्रे मासि जगत् ब्रह्मा ससर्ज प्रथमेऽहनि ।
शुक्लपक्षे समग्रन्तु तदा सूर्य्योदये सति ।
प्रवर्त्तयामास तदा कालस्य गणनामपि” ॥
इति कालसामान्यगणनायास्तदारभ्य कथनात्
॥
एवं चैत्रशुक्लप्रतिपदि कल्पारम्भेऽपि ।
“माघशुक्लतृतीयायां कृष्णायां फाल्गुनस्य च ।
पञ्चमी चैत्रमासाद्या यथैवाद्या तथा परा ।
शुक्ला त्रयोदशी माघे कार्त्तिकस्य तु सप्तमी ।
नवमी मार्गशीर्षस्य सप्तैताः संस्मराम्यहम् ।
कल्पनामादयो ह्येता दत्तस्याक्षयकारकाः” ॥
इति वराहवाक्यानि समूलानि चेत् तदा
कल्पभे-
दादविरुद्धानि कल्पादित्वेन तत्तत् तिथिषु
श्राद्ध-
व्याकरणस्य प्रत्ययविशेषः । स च स्याद्यन्ततया-
द्यन्तपदाभ्यामीषन्न्यूनार्थे भवति । तत्र वाच्यलिङ्गत्वे
यथा, ईषदूनो विद्वान् विद्वत्कल्पः । ईषदूनं
पचति पचतिकल्पम् । इति मुग्धबोधव्याकरणम् ।
(तथा महाभारते १ । १२६ । ५ ।
“ते परस्परमामन्त्र्य देवकल्पा महर्षयः” ॥)

**कल्पकः**, पुं, (कल्पयति क्षौरकर्म्मादिना वेशादिकं

रचयतीति । कृप् + णिच् + ण्वुल् ।) नापितः ।
इति शब्दमाला ॥ कर्च्चूरः । इति भावप्रकाशः ॥
(कल्पयति गद्यपद्यादिकमुद्भाव्य रचयतीति वाक्ये-
रचयिता । ग्रन्थकर्त्ता ॥)

**कल्पनं**, क्ली, (कृप् + भावे ल्युट् ।) कॢप्तिः । छेदनम् ।

इति त्रिकाण्डशेषः ॥

**कल्पना**, स्त्री, (कृप् + णिच् + भावे युच् टाप् ।)

हस्तिसज्जना । नायकस्यारोहणार्थं गजसज्जी-
करणम् । इत्यमरः । २ । ८ । ४२ ॥ अनुमितिः ।
इति न्यायशास्त्रम् ॥ रचना । यथा “प्रबन्ध-
कल्पना कथा” । इत्यमरः । १ । ६ । ६ ॥

**कल्पनी**, स्त्री, (कल्पयति केशानीन् छिनत्ति अनया ।

कृप् छेदने + करणे ल्युट् । ततो ङीप् ।)
कर्त्तनी । इति हेमचन्द्रः ॥ काँचि इति भाषा ॥

**कल्पपादपः**, पुं, (कल्पयति सर्व्वकामं सम्पादयति ।

इति कल्पः । स चासौ पादपश्चेति कर्म्मधारयः ।)
कल्पवृक्षः । यथा नैषधे । १ । १५ । “मृषा न
चक्रेऽल्पितकल्पपादपः” ॥

**कल्पपादपदानं**, क्ली, (कल्पपादपस्य सुवर्णनिर्मितपाद-

पाकृतेर्दानम् ।) महादानविशेषः । तद्विधानं यथा,
“कल्पपादपदानाख्यमतः परमनुत्तमम् ।
महादानं प्रवक्ष्यामि सर्व्वपातकनाशनम् ॥
पुण्यन्दिनमथासाद्य तुलापुरुषदानवत् ।
पुण्याहवाचनं कृत्वा लोकेशावाहनन्तथा ॥
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम् ।
काञ्चनं कारयेद्वृक्षं नानाफलसमन्वितम् ॥
नानाविहगवस्त्राणि भूषणानि च कारयेत् ।
शक्तितस्त्रिपलाद्रूर्द्ध्व मासहस्रात् प्रकल्पयेत् ॥
अर्द्धकॢप्तं सुवर्णस्य कारयेत् कल्पपादपम् ।
गुडप्रस्थोपरिष्टाच्च सितवस्त्रयुगावृतम्” ॥
अर्द्धकॢप्तं यावदुपात्तसुवर्णस्यार्द्धेन निर्मितम् ।
“ब्रह्मविष्णुशिवोपेतं पञ्चशाखं समास्करम् ।
कामदेवमधस्ताच्च सकलत्रं प्रकल्पयेत् ॥
सन्तानं पूर्ब्बतस्तद्वत्तुरीयांशेन कल्पयेत् ।

"ससन्धयस्ते मनवः कल्पे ज्ञेयाश्चतुर्दश ।
कृतप्रमाणकल्पादौ सन्धिः पञ्चदशस्मृतः" ॥
ते एकसप्ततियुगरूपा मनवः सायम्भुवाद्याः सस-
न्धयः स्वस्वसन्धिसहिताः कल्पकाले
ज्ञातव्याः ।
ससन्धियुक्तचतुर्द्दशसनुभिः कल्पो भवेदित्यर्थः
।
इति सूर्य्यसिद्धान्तोक्तकल्पपरिमाणम्॥ आका-
लिकनैमित्तिकदैनन्दिनमहाप्रलयानां विवृतिस्तु
ततच्छब्दे द्रष्टव्यम् ॥ * ॥

कल्पते स्वक्रियायै समर्थो भवत्यत्र ।
कृप् +

अधिकरणे घञ् ।) ब्राह्मं दिनम् । तत्तु दैवद्विस-
हस्रयुगम् । इत्यमरः । १ । ४ । २१ ॥ (यथा
विष्णुपुराणे १ मांशे १ । १२ ।

कर्त्तव्यतोपयोगिपारिभाषिकपरत्वेन वा समर्थ-
नीयानि ॥ अत एव सूर्य्यसिद्धान्ते उक्तम् ।
यथा--
"सुरासुराणामन्योन्यमहोरात्रविपर्य्ययात् ।
यत् प्रोक्तं तद्भवेद्दिव्यं भानोर्भगणपूरणात् ॥
मन्वन्तरव्यवस्था च प्राजापत्यमुदाहृतम् ।
न तत्र द्युनिशोर्भेदो ब्राह्मकल्पः प्रकृत्तितः" ॥

इत्यादीनां युगमन्वन्तरकल्पानां
सौरत्वेन उक्तिः ।

सौरमाणे च नियतयुगादिकालेषु अनियततिथि-
सम्भवेऽपि सर्व्वेषां कल्पानामादौ चैत्रसितादि-
तिथिरेव नियता प्रागुक्तवचनप्रामाण्यात् । किन्तु
प्रागुक्तमात्स्ये ब्राह्मकल्पानां चान्द्रत्वकथनात्
ति-
थिभेदसम्भवः । इति सूर्य्यसिद्धान्तवाक्यं ग्रह-
स्पष्टीकरणोपयोगीत्यविरोधः॥) विकल्पः ।
कल्प-
ष्टक्षः । न्यायः । शास्त्रविशेषः । स तु वेदषडङ्गा-
न्तर्गतो यागक्रियाणामुपदेशकः । इति हेमचन्द्रः
॥
(यथा रघुः १ । ९४ ।
"कल्पवित् कल्पयामास वन्यामेवास्य
संविधाम्" ॥)

मन्दारं दक्षिणे पार्श्वे श्रिया सार्द्धं घृतोपरि" ॥
सन्तानं पूर्ब्बतस्तद्वदिति गुडप्रस्थस्थं सितवस्त्रयुगा-
वृतमित्यर्थः । कामदेवमधस्ताच्चेति सन्तानवृक्षस्या-
धस्तात् सकलत्रं कामदेवं प्रकल्पयेदिति योजनम् ।
मन्दारादिष्वेकैकदेवतासम्बन्धश्रुतेः ॥
"पश्चिमे पारिभद्रन्तु सावित्र्या सह जीरके ।
सुरभीसंयुतं तद्वत्तिलेष हरिचन्दनम् ॥
तृतीयांशेन कुर्व्वीत सौम्येन फलसंयुतम् ।
कौषेयवस्त्रसंयुक्तानिक्षुमाल्यफलान्वितान्' ॥
तृतीयांशेनसन्तानघटनावस्थितसुवर्णतृतीयभागेन ।
सौम्येन उत्तरदिग्विभागेन ॥

:“तथाष्टपूर्णकलसान् पादुकासनभाजनान् ।
दीपिकोपानहच्छत्रचामरासनसंयुतम्” ॥
पादुकासनभाजनान्
पादुकासनभाजनसहि-
तानित्यर्थः । आसनपदञ्चात्र कलसावस्थानो-
चितासनपरम् । चामरासनसंयुतमिति पुन-
रासनपदश्रवणात् ।
“फलपक्षियुतं तद्वदुपरिष्टाद्वितानकम् ।
तथाष्टादशधान्यानि समन्तात् परिकल्पयेत् ॥
होमाधिवासनान्ते तु स्नापितो देवपुङ्गवैः ।
त्रिःप्रदक्षिणमावृत्य मन्त्रमेतमुदीरयेत् ॥
नमस्ते कल्पवृक्षाय चिन्तितान्नप्रदाय च ।
विश्वम्भराय देवाय नमस्ते विश्वमूर्त्तये ॥
यस्मात्त्वमेव विश्वात्मा ब्रह्मा स्थाणुर्द्दिवाकरः ।
मूर्त्तामूर्त्तपरं वीजमतः पाहि सनातन ! ॥
त्वमेवामृतसर्व्वस्वमनन्तपुरुषोऽव्ययः ।
सन्तानाद्यैरुपेतः सन् पाहि संसारसागरात् ॥
एवमामन्त्र्य तं दद्यारद्गुवे कल्पपादपम् ।
चतुर्भ्यश्चापि ऋत्विग्भ्यः सन्तानादीनि
कल्पयेत्” ॥
एतेन चत्वार एवर्त्विजः कर्त्तव्याः ।
कुशमया-
श्चत्वारो ब्रह्माण इत्युक्तं सम्भवति ॥
“स्वल्पेष्वेकाग्निवत् कुर्य्यात् गुरुरेवाभिपूजितः ।
न वित्तशाठ्यं कुर्व्वीत न च विस्मयवान् भवेत्” ।
न च विस्मयवान् इदम्मया दत्तमिति
नाह-
ङ्कारवान् भवेदित्यर्थः ॥
“अनेन विधिना यस्तु महादानं निवेदयेत् ।
सर्व्वपापविनिर्म्मुक्तः सोऽश्वमेधफलं लभेत् ॥
अप्सरोभिः परिवृतः सिद्धचारणकिन्नरैः ।
भूतान्भव्यांश्च मनुजांस्तारयेदात्मसम्मितान् ॥
स्तूयमानो दिवः पृष्ठे पुत्त्रपौत्त्रप्रपौत्त्रवान् ।
विमानेनार्कवर्णेन विष्णुलोकं स गच्छति ।
दिवि कल्पशतं तिष्ठेद्राजराजो भवेत्ततः ॥
नारायणबलोपेतो नारायणपरायणः ।
नारायणकथासक्तो नारायणपुरं व्रजेत् ॥
यो वा पठेत् कनककल्पतरुप्रदानं
यो वा शृणोति पुरुषोऽल्पधनः स्मरेद्वा ।
सोऽपीन्द्रलोकमधिगम्य सहाप्सरोभि-
र्म्मन्वन्तरं वसति पापविमुक्तदेहः” ॥ * ॥

नार्थमभिमतसुवर्णान्तरयन्त्रोत्खाटिताःसरति-
कामदेवलक्ष्मीसावित्रीसुरभिप्रतिमाश्चकल्पतरु-
पार्श्वस्थापनार्थमष्टौ कुम्भान् तदधःस्थापनार्थं
कुशादिनिर्म्मितासनाष्टकंकुम्भाच्छादनार्थं कौषेय-
वस्त्राष्टकं कुम्भपार्श्वस्थापनार्थमिक्षुदण्डाष्टकं पुष्प-
मालावृकसामग्रीं यथेष्टफलाष्टकं पादुकायुगा-
ष्टकं कांस्यभाजनाष्टकञ्च कल्पतरुपार्श्वार्पणार्थं
दीपिकोपानद्युगच्छत्रचामरासनाष्टादशधान्यानि
च उत्पादयेत् । ततस्तुलापुरुषोक्तसमयानामन्त्र्य
तमस्य पूर्ब्बतरदिने यजमानगुर्व्वृत्विग्जापकास्तुला
पुरुषवद्धविष्यभोजनादिकंकृत्वा निवेदनसङ्कल्प-
वाक्ययोस्तुलापुरुषपदस्थानेकल्पपादपपदं
प्रक्षिप्य
यथायथं निवेदनं सङ्कल्पञ्च कुर्य्युः । ततोऽपरदिने
यजमानस्तुलापुरुषवद्गोविन्दाद्याराधनादिमधुर्पक
दानान्तं गोविन्दाद्यभ्यर्च्चनब्राह्मणानुज्ञापनदान-
सङ्कल्पपुण्याहादिवाचनवरणवाक्येषु तुलापुरुष-
पदस्थाने कल्पपादपपदं प्रक्षिप्य कुर्य्यात् । ततो
गुर्व्वृत्विग्यजमानजापका उपवसेयुः । अपर-
दिने च
कृतनित्यास्तुलापुरुषवदग्निस्थापनादिमध्य
ब्राह्मणवाचनान्तं कर्म्म यथायथं कुर्य्युः । एवञ्च
मध्यब्राह्मणवाचनान्तंकर्म्म तुलापुरुषग्रन्थं अनु-
सन्धावानुष्ठातव्यम् । तत ऋत्विजः कल्पतरुमा-
नीय प्रधानवेद्यां लिखितचक्रमध्ये गुडप्रस्थं दत्त्वा
तदुपरि स्थापयेयुः । ततस्तस्याधो गुडप्रस्थोपरि
पङ्क्तिक्रमेण सुवर्णयन्त्रोत्खाटिता ब्रह्मविष्णुशिव-
भास्करप्रतिमाः स्थापयेयुः । तत्पूर्ब्बतः
अधस्तादा-
रोपितसरतिकामदेवप्रतिमां गुडप्रस्थोपरि स-
न्तानं कल्पतरुदक्षिणतः अधःसमारोपितलक्ष्मी-
प्रतिमां घृतप्रस्थोपरि मन्दारं कल्पतरोः पश्चि-
मतः अधःसमारोपितसावित्रीप्रतिमांजीरक-
प्रस्थोपरि पारिभद्रं कल्पतरूत्तरतः अधःसमारो-
पितसुरभिप्रतिमां तिलप्रस्थोपरि हरिचन्दनञ्चा-
रोपयेयुः । सर्व्वांश्च वृक्षान् प्रत्येकं सितवस्त्रयुगे-
नाच्छादयेयुः । अष्टासु दिक्षुप्रत्येकं कौषेयवस्त्रा-
च्छादितान् इक्षुदण्डफलान्वितान् माल्यालङ्कृता-
नष्टौ पूर्णकुम्भान् पार्श्वारोपितपादुकायुगभाज-
नानासनेष्वारोप्य कल्पतरुपार्श्वे पूर्ब्बोक्तदीपिका-
द्युपकरणमारोपयेयुः । ततो मङ्गलतूर्य्यगीतवन्दि-
घोषेषु सत्सु ऋत्विजः कुण्डसमीपस्थकुम्भचतुष्टय-
जलेन यजमानं स्नापयेयुः । ततो यजमानः शुक्ल-
माल्याम्बरधरो धृतसर्व्वालङ्कारः पुष्पाञ्जलिमादाय
कल्पपादपं त्रिः प्रदक्षिणीकृत्य नमस्ते कल्प-

सौवर्णलक्ष्मीप्रतिमासितवस्त्रयुगान्वितसौवर्णम-
न्दारसहितं जीरकप्रस्थारोपितसौवर्णसावित्री-
प्रतिमासितवसनयुगलान्वितसौवर्णपारिभद्रसहितं
तिलप्रस्थारोपितसौवर्णसुरभिप्रतिमासितवसन-
युगान्वितसौवर्णहरिचन्दनसहितं कौषेयवस्त्रयुग-
वेष्टितग्रीवेक्षुमाल्यफलान्वितकुशासनपादुकायुग-
कांस्यभाजनयुतपूर्णकुम्भाष्टकदीपिकोपानद्युगच्छ-
त्रचामरासनफलमाल्ययुक्तपञ्चवर्णवितानकाष्टादश-
धान्ययुतं कल्पपादपमहादानमहंददे ॥ प्रति-
ग्रहीतारः स्वस्तीत्युक्त्रा सावित्रीं पठित्वा यथायथं
अमुकपादपोऽयं विष्णुदैवतमित्युक्त्वा यथाशाखं
कामस्तुतिं पठेयुः । ततो दक्षिणादानम् ।
ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं युष्मभ्यमहन्दक्षिणा-
मिमां यदुत्पत्तियोग्यां भूमिमेतानि च रत्नानि-
ददे ॥ प्रतिग्रहीतारः स्वस्तीत्युक्त्वा प्रत्येकं तरून्
मूलेषु स्पृशेयुः । ततो यजमानस्तुलापुरुषवत्
जाप-
केभ्यो दक्षिणादानं दीनानाथादितर्पणं ब्राह्मण-
वाचनञ्च कुर्य्यात् । ततः कल्पपादपं गुरवे
सन्तान-
कादींश्चतुरो वृक्षान् ऋग्वेद्यादिक्रमेण चतुर्भ्य
ऋत्विग्भ्यो निवेदयेत् । स्वल्पकल्पपादपदाने तु
गुरुरेवैकाग्निवत् स्वगृह्योक्तविधिना सर्व्वं ब्रह्माण्ड-
दानवत् कुर्य्यात् । इति कल्पपादपमहादानं
समाप्तम् ॥ * ॥ इति
महाराजाधिराजनिःशङ्कसङ्कर-
श्रीमद्बल्लालसेनदेवविरचिते श्रीदानसागरे महा-
दानदानावर्त्तः ॥

**कल्पलतादानं**, क्ली, (महादानान्तर्गता सुवर्णकल्पिता
लता तस्या दानम् ।) महादानविशेषः ॥
तस्य विधिर्यथा ।
“अथातः संप्रवक्ष्यामि महादानमनुत्तमम् ।
महाकल्पलतं नाम पातकावलिनाशनम् ॥
पुण्यान्तिथिमथासाद्य कृत्वा ब्राह्मणवाचनम् ।
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम्॥
तुलापुरुषवत् कुर्य्यात् लोकेशावाहनादिकम् ।
चामीकरमयीः कुर्य्याद्दशकल्पलताः शुभाः ॥
नानापुष्पफलोपेता नानांशुकविभूषिताः ।
विद्याधरसुपर्णानां मिथुनैरुपशोभिताः” ॥
सुपर्णानां किन्नराणाम् ॥
“हारानादित्सुभिः सिद्धैः फलानि च विहङ्गमैः ।
लोकपालानुसारिण्यः कर्त्तव्यास्ताश्च देवताः” ॥
लोकपालानुसारिण्य इति लोकपालसमानाकृतयः
॥

| | | |
|---|---|---|
| अत्र यजमानः<br>समुपजातकल्पपादपमहादान-<br><br>दानेच्छुस्तुलापुरुषलिखितं<br>खड्गचर्म्ममयाच्छन्नस-<br>न्नाहतुलास्थाप्यहरिप्रतिमालङ्कारतुलाहस्तग्राह्य<br>प्रतिमाऋत्विक्चतुष्टयवरणादिदक्षिणासामग्री<br>वहिः सर्व्वसम्भारं अधिकत्वेन<br>पलत्रयादुद्ध्र्वसहस्र-<br>पलावधियथेष्टकाञ्चनमुपादाय तस्यार्द्धेन कल्प-<br>पादपमपरार्द्धेन समभागेन सन्तानं मन्दारं<br>पारिभद्रं हरिचन्दनमेवं पञ्चतरून् पञ्चशाखान्<br>सौवर्णनानाफलपक्षिसुवर्णनिर्म्मितानेकवसनाकार<br>सहितान् केयूरकुण्डलाद्यभिमतालङ्कारभूषितान्<br>एषामाच्छादनार्थं श्वेतवस्त्रयुगपञ्चकं तरूणाम-<br>वस्थापनार्थं गुडप्रस्थद्वयं प्रत्येकं प्रस्थपरिमितान्<br>पात्रस्थघृतजीरकतिलांश्च<br>कल्पवृक्षाधःस्थापनार्थ-<br>मभीष्टसुवर्णान्तरयन्त्रोत्खाटिताब्रह्मविष्णुशिव-<br>भास्करप्रतिमाः यथोक्तक्रमतरुचतुष्टयाधःस्थाप- | वृक्षायेत्यादि पाहि संसारसागरादित्यन्तमन्त्रान्<br>पठित्वा पुष्पाञ्जलिनाभ्यर्च्य गुर्वृत्विग्भ्यो यथायथं<br>दद्यात् ॥ ॐ अद्यासुकामुकसगोत्रेभ्योऽमुका-<br>मुकवेदामुकामुकशाखाध्यायिभ्यःअमुकामुकदेव-<br>शर्म्मभ्यो युष्मभ्यं मत्स्यपुराणोक्तकल्पपादपमहा<br>दानदानफलप्राप्तिकामोऽहंमत्स्यपुराणोक्तभाग-<br>व्यवस्थया एतं गुडप्रस्थारोपितसौवर्णब्रह्मविष्णु-<br>महेश्वरभास्करप्रतिमासितवसनयुग्मान्वितगुडप्र-<br>स्थारोपितसौवर्णसरतिकामदेवप्रतिमासितवसन-<br>युगान्वितसौवर्णसन्तानसहितं घृतप्रस्थारोपित- | “ब्राह्मीमनन्तशक्तिञ्च लवणस्योपरि न्यसेत् ।<br>अधस्ताच्च तयोर्मध्ये महाखड्गधरे शुभे” ॥<br>पद्मशङ्ककरे इति क्वचित् पाठः ॥<br>“स्वर्णासनस्था माहेन्द्री पूर्ब्बतः कुलिशायुधा ।<br>रजनीसंस्थिताग्नेयी श्रुवपाणिरथाचला” ॥<br>रजनी हरिद्रा ॥<br>“याम्या तु महिषारूढा गदिनी तण्डुलोपरि ।<br>नैरृत्यां नैरृती स्थाप्या सखड्गा च घृतोपरि ॥<br>वारुणे वारुणी क्षीरे सर्पस्था नागपाशिनी ।<br>पताकिनी च वायव्ये मृगस्था शर्करोपरि ॥<br>सौम्या तिलेषु संस्थाप्या कौवेरदिशि संस्थिता ।<br>माहेश्वरी वृषगता नवनीते तु शूलिनी ॥ |

:मौलिन्यो वरदास्तद्वत् कर्त्तव्या बालकान्विताः ।

शक्त्या पञ्चपलादूर्द्ध्वमासहस्रात् प्रकल्पयेत्” ॥

मौलिन्यो मुकुटवत्यः । वरदाः प्रसन्नमूर्त्तयः ।

वालकान्विताः क्रोडनिहितपुत्त्रकाः । एतेन क्रोडनिविष्टवामकरधृतपुत्रकादक्षिणहस्तविधृत यथोक्तशस्त्राः प्रसन्नमूर्त्तयो बद्धमुकुटाः सवाहना घटनीयाः । अनुक्तवाहनानान्तु ब्राह्म्याग्नेयी नैरृतीनान्तत्तल्लोकपालवाहनानि। लोकपालानुसारिण्य इति श्रुतेः । तेन हंसारूढा ब्राह्मी छागारूढाग्नेयी नरारूढा नैरृती घटनीया । अनन्तस्य तु क्वचिद्वाहनादर्शनात् अनन्तशक्तिर्व्वाहनशून्यैव कर्त्तव्या ॥
“सर्व्वासामुपरिष्टाच्च पञ्चवर्णवितानकम् ।
धेनवो दशकुम्भाश्च वस्त्रपुष्पाणि चैव हि ॥
मध्यमे द्वे तु गुरवे ऋत्विग्भ्योऽन्यास्तथैव च ।
ततो मङ्गलशब्देन स्नातः शुक्लाम्बरो बुधः ।
त्रिः प्रदक्षिणमावृत्य मन्त्रमेतमुदीरयेत्” ॥
“नमो नमः पापविनाशिनीभ्यो
ब्रह्माण्डलोकेश्वरपालनीभ्यः ।
आसंशिताधिक्यफलप्रदाभ्यो
दिग्भ्यस्तथा कल्पलताबधूभ्यः ॥
इति सकलदिगङ्गनाप्रदानं
भवभयसूदनकारियः करोति ।
अभिमतफलदे स नाकलोके
वसति पितामहवत्सराणि विंशत् ॥
पितृशतमथ तारयेद्भवाब्धेर्
गुरुदुरितौघविघातशुद्धदेहम् ।
सुरपतिवनितासहस्रसंघः
परिवृतमम्बुरुहोद्भवाभिनन्द्यम्॥
इति विधानमिदं सदिगङ्गना
कनककल्पलताविनिवेदने ।
पठति यः स्मरतीह तथेक्षते
स पदमेति पुरन्दरसेवितम्” ॥ * ॥
अत्र यजमानः समुपजातमहाकल्पलतामहादानदानेच्छः तुलापुरुषलिखितं खड्गचर्म्मयाच्छन्नसन्नाहतुलापुरुषस्थापनीयहरिप्रतिमासालङ्कारतुलाहस्तग्राह्यप्रतिमावहिःसर्व्वसम्भारमधिकत्वेन पलपञ्चकादूर्द्ध्वपलसहस्रावधियथेष्ट हेमनिर्म्मिताः स्थानस्थानघटितविद्याधरकिन्नरमिथुनसिद्धगणाः पल्लवाग्रनिर्म्मि तयथेच्छाकृतिफलकुसुमफलग्रहशोभितपक्षिण्यः सिद्धहस्तासक्तयथेच्छसङ्ख्यमुक्ताहारसहिता नानाविधचित्रनेत्रादिवस्त्रोपशोभिता दशलताः । तासामधः स्थापनार्थं यथेच्छहेमयन्त्रोत्खाटिता यथोक्तरूपा ब्राह्म्यादिदशमानः पूर्ब्बवद्गोविन्दाद्याराधनादिमधुपर्कदानान्तं कर्म्मगोविन्दाद्यभ्यर्च्चनब्राह्मणानुज्ञापनदानसङ्कल्पपुण्याहादिवाचनवरणवाक्येषु तुलापुरुषपदस्थाने महाकल्पलतापदं प्रक्षिप्य कुर्य्यात् । ततो गुर्व्वृत्विग्यजमानजापका उपवसेयुः । अपरदिने कृतनित्यास्तुलापुरुषवदग्निस्थापनादिमध्यब्राह्मणवाचनान्तं कर्म्म यथायथं कुर्य्युः । एवञ्च मध्यब्राह्मणवचनान्तं कर्म्म तुलापुरुषग्रन्थमनुसन्धायानुष्ठातव्यम् । तत ऋत्विजः प्रधानवेद्यां लिखित चक्रोपरि लतानां मध्ये पूर्ब्बादिदिक्क्रमेणाष्टौ लताः समारोप्य लतामण्डलमध्ये लताद्वयञ्चारोप्य तदधोलवणं दत्त्वा तत्र ब्राह्मीमनन्तशक्तिञ्च आरोप्य पूर्ब्बादिदिक्क्रमारोपिताष्टलताधःक्रमेण गुडादिद्रव्याणि दत्त्वा तेषु क्रमात् कुलिशायुधादिशक्तिप्रतिमाः समारोपयेयुः । लतापार्श्वे दशधेनूः पूर्णकुम्भदशकं दशवस्त्रयुगानि च स्थापयेयुः । ततो मङ्गलगीतवाद्यवन्दिघोषेषु सत्सु कुण्डसमीपस्थकुम्भचतुष्टयजलेन यजमानं स्नापयेयुः । ततो यजमानः शुक्लमाल्याम्बरधरो धृतसर्व्वालङ्कारः पुष्पाञ्जलिमादाय लताः त्रिः प्रदक्षिणीकृत्य नमो नमः पापविनाशिनीभ्य इत्यादिमन्त्रेण पुष्पाञ्जलिनाभ्यर्च्च्य गुर्व्वृ त्विग्भ्यो दद्यात् । तद्यथा । ॐ अद्यामुकामुकसगोत्रेभ्यः अमुकामुकवेदामुकामुकशाखाध्यायिभ्योऽमुकामुकदेवशर्म्मभ्यो युष्मभ्यं मत्स्यपुराणोक्तकल्पलतामहादानदानफलप्राप्तिकामोऽहं मत्स्यपुराणोक्तभागव्यवस्थयैता लवणगुडहरिद्रातण्डुलघृतक्षीरशर्करातिलनवनीतार्पितकलधौतब्रह्मानन्तकुलिशायुधवह्निशमननिरृतिवरुणवायुसोममहेश्वरशक्तिप्रतिमासहिताःपञ्चवर्णवितानकधेनुदशककुम्भदशकवसनयुगदशकान्विताः दशकल्पलता सम्प्रददे ॥ प्रतिग्रहीतारः स्वस्तीत्युक्त्वा सावित्रीं पठेयुः । ततो गुरुः कल्पलतेयं विष्णुदैवतेति ब्रूयात् । ऋत्विजस्तु प्रत्येकं कल्पलतेयं विष्णुदैवतेति ब्रूयुः । ततो यथाशाखं कामस्तुतिं पठेयुः । तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं युष्मभ्यमहं दक्षिणामिमां यदुत्पत्तियोग्यां भूमिमेतानि च रत्नानि सम्प्रददे ॥ ब्राह्मणाः स्वस्तीत्युक्त्वा कल्पलताः स्पृशेयुः । ततस्तुलापुरुषवज्जापकेभ्यो दक्षिणां दीनानाथादितर्पणं ब्राह्मणवाचनं त्वरया कल्पलतानां यथायथं प्रतिपादनञ्च कुर्य्यात् । इति कल्पलतामहादानं समाप्तम् । इति दानसागरः ॥

**कल्पवृक्षः**, पुं, कल्पस्य सङ्कल्पस्य दाता वृक्षः । कल्पस्थायी वृक्ष इति वा । इति सारसुन्दरी । देवतरुः । इत्यमरः । १ । १ । ५३ ॥ (यथा, दानसागरे । चन्द्रः ॥ रचिते त्रि ॥ (यथा, महानिर्व्वाणोक्ता त्मज्ञाननिर्णये ।
“ब्रह्मादितृणपर्य्यन्तं मायया कल्पितं जगत् ।
सत्यमेकं परं ब्रह्म विदित्वैवं सुखी भवेत्” ॥)

**कल्मषं**, क्ली, (कर्म्म शुभकर्म्म स्यति नाशयति रस्य लत्वे षत्वे च पृषोदरादित्वात् साधुः ।) पापम् । इत्यमरः । १ । ४ । २३ ॥ (यथा, मनुः १२ । २२ ।
“यामीस्ता यातनाः प्राप्य सजीवो वीतकल्मषः ।
तान्येव पञ्चभूतानि पुनरप्येति भागशः” ॥)
हस्तपुच्छम् । इति त्रिकाण्डशेषः ॥ (मालिन्यम् । यथा, हेः रामायणे २ । ३६ । २७ ।
“न हि कञ्चन पश्यामो राघवस्यागुणं वयम् ।
दुर्लभोऽह्यस्य निरयः शशाङ्कस्येव कल्मषम्” ॥)

**कल्मषः**, पुं, (कर्म्म शुभकर्म्म स्यति नाशयति । कर्म्म + सो + कः । रस्यः लः सस्य षत्वञ्च निपातनात् ।) नरकविशेषः । इति मेदिनी ॥ मलिने त्रि । इति जटाधरः ॥

**कल्माषः**, पुं, (कलयति इति क्विप् कल् । माषयति स्वभाषा अभिभवति अन्यवर्णान् । मष् हिंसायां णिच् + अच् । कल् चासौ माषश्चेति ।) चित्रवर्णः । तद्वति त्रि । इत्यमरः । १ । ६ । १७ ॥ कृष्णपाण्डरवर्णः । कृष्णवर्णः । (कलं शुभकर्म्म माषयति हिनस्ति । कल + मष् + णिच् + अच् वा ।) राक्षसः ॥

प्रतिमाः । तदारोपणार्थं लवणगुडहरिद्रातण्डुल-घृतक्षीरशर्करातिलनवनीतानि । लतापार्श्वस्थाप-नार्थं धेनुदशकं कुम्भदशकञ्च वस्त्रयुगदशकञ्चो-त्पादयेत् । ततो यजमानस्तुलापुरुषोक्तसमयानाम-न्यतमस्य पूर्ब्बतरदिने गुर्व्वृत्विग्यजमानजापकास्तु-लापुरुषवथविष्यभोजनादिकंकृत्वा निवेदनस-ङ्कल्पवाक्ययोस्तुलापुरुषपदस्थानेमहाकल्पलतापदं निदेश्य निषेदनं सङ्कल्पञ्चकुर्य्युः । अपरदिने चयज-

"नमस्ते कल्पवृक्षाय चिन्तितान्नप्रदाय च ।
विश्वम्भराय देवाय नमस्ते विश्वमूर्त्तये" ॥)

**कल्पान्तः**, पुं, (कल्पस्य अन्तो यत्र ।) ब्रह्मणोदिनान्तः ।

प्रलयः । इत्यमरः । १ । ४ । २२ ॥ (यथा, गोः रामायणे ३ । १० । ४ ।
"उपवासरताश्चैव जले कल्पान्तवासिनः" ॥)

**कल्पितः**, पुं, (कल्प्यते सज्जीक्रियते असौ । कृप् + णिच् + कर्म्मणि क्तः ।) सज्जितहस्ती । इति हेम-

इति मेदिनी ॥ गन्धशालः । इति राजनिर्घण्टः ॥
(नागविशेषः । यथा, महाभारते १ । ३५ । ७ ।
"नीलानोलौ तथा नागौ कल्माष शवलौ तथा" ॥)

**कल्माषकण्ठः**, पुं, (कल्माषः कृष्णवर्णः कण्ठो यस्य ।)

शिवः । इति हारावली ॥

**कल्माषपादः**, पुं, (कल्माषौ शापजलप्रक्षेपणात् कृष्ण-

वर्णौ पादौ यस्य ।) सौदासराजः । इति श्रीभा-
गवतम् ॥ (यथा, महाभारते १ । १७७ । १ ।
"कल्माषपाद इत्येवं लोके राजा बभूव ह ।
इक्ष्वाकुवंशजः पार्थ तेजसासदृशो भुवि" ॥)
अस्य यथा कल्माषपादत्वं जातं तदुच्यते ।
नलसखस्य ऋतुपर्णस्य वंशजः सौदासनामा नृपतिः
पुरा मृगयां चरन् एकं राक्षसमवधीत् ।
अस्य रक्षसो भ्राता तु वैरशोधनं चिकीर्षुः
सूदरूपधरोऽस्य राज्ञो गृहं प्रत्युवास । एकदा
तु असौ राक्षसः भोक्तुकामाय नृपतेः सौदा-
सस्य गुरवे वशिष्ठाय नरामिषं पक्त्वा ददौ ।
वशिष्ठस्तु तदभोज्यं दृष्ट्वातिक्रुद्धः "राक्षसो
भविष्यतीति" राजानमशपत् । राजा तु शाप-
वृत्तान्तं विदित्वा विनापराधेन प्रदत्तः शापः इति
विचिन्त्य जलमादाय गुरुं प्रतिशप्तुं समुद्यतः ।
एतस्मिन्नन्तरेऽस्य पत्नी मदयन्ती दृष्ट्वैवमकर-
णीयोद्यतं पतिं निवारयामास । राजा तु तया
निवारितः स्वपादयोः शापजलं प्रक्षिप्तवान् ।

| | | |
|---|---|---|
| | | एतदारभ्यायं पादयोः कल्माषतां प्राप्तवान् ॥ अस्य अन्या विस्तृतिस्तु भागवते ९ । ९ अध्याये, तथा महाभारते १ । १७७ अध्याये द्रष्टव्या ॥) <br> **कल्यं**, क्ली, (कल्यते आगम्यते । कल गतौ + कर्म्मणि यत् । प्रत्यूषः । इत्यमरः । १ । ४ । २ ॥ (यथा, |

:भागवते ४ । २४ । ७८ ।

"इदं यः कल्य उत्थाय प्राञ्जलिः श्रद्धयान्वितः ।
शृणुयाच्छ्रावयेन्मर्त्त्यो मुच्यते कर्म्मबन्धनैः" ॥

कलयति मिष्टतां सम्पादयतीति । अघ्न्यादित्वात् यक् ।) मधु । इति हेमचन्द्रः ॥

**कल्यः**, त्रि, (कलासु साधुः इति यत् ।) सज्जः । (यथा, महाभारते १ । ५ । ३ ।

कथयस्व कथामेतां कल्याः स्म श्रवणे तव" ॥) निरामयः । इत्यमरः । ३ । ३ । १५९ ॥ वाक्श्रुति- वर्जितः । दक्षः । कल्याणवचनम् । उपायवचनम् । इति मेदिनी ॥

**कल्यजग्धिः**, स्त्री, (कल्ये प्रातर्जग्धिर्भोजनम् ।) प्रात- राशः । प्रातर्भोजनम् । इति जटाधरः ॥

**कल्यत्वं**, क्ली, (कल्य + भावे "ता त्वम्" । इति त्वम्) आरोग्यम् । इति जटाधरः ॥

**कल्यपालः**, पुं, (कल्यं मधु मद्यमियर्थः पालयतीति । कल्य + पाल् + अण् ।) शौण्डिकः । इति हेमचन्द्रः ॥

**कल्यपालकः**, पुं, (कल्यं पालयति । कल्य + पाल् + ण्वुल् ।) शौण्डिकः । इति शब्दमाला ॥

**कल्यवर्त्तः**, पुं, (कल्ये प्रातः वर्त्यते प्राप्यते गृह्यते इति वा यद्वा वर्त्यते जीव्यते अनेन । वृत् + णिच् + कर्म्मणि करणे वा अप् ।) प्रातर्भोजनम् । इति त्रिकाण्डशेषः ॥

**कल्या**, स्त्री, (कडयति मादयति । कडमदे णिच् अ- घ्न्यादित्वात् यक् टाप् च । डस्य लत्वम । कलयति मादयति वा । कल् + णिच् + यक् टाप् च ।) मद्यम् । इति मेदिनी ॥ शुभात्मिका वाणी । कल्याण- कल्याणवती । यथा महाभारते । ३ । ७४ । ५ ।
"दमयन्त्यपि कल्याणी प्रासादस्था ह्युपैक्षत" ॥)

**कल्यापालः**, पुं, (कल्यां मद्यं पालयतीति । कल्या + पालि + अण् ।) शौण्डिकः । इति त्रिकाण्डशेषः ॥

**कल्ल**, ङ कूजने । शब्दे । अशब्दे । इति कविकल्प- द्रुमः ॥ (भ्वां--आत्मं--अकं--सेट् ।) लद्वयान्तः । ङ कल्लते लोकः अव्यक्तशब्दं करोति शब्दं न करोति वेत्यर्थः । कूजने इति चान्द्रा जौमराश्च ॥ शब्दमात्रे इति केचित् । अशब्दे इति कालापाः । इति दुर्गादासः ॥

**कल्लः**, त्रि, (कल्लते शब्दं न गृह्णाति इति । कल्ल + अच् ।) बधिरः । इति त्रिकाण्डशेषः । काला इति भाषा ॥

**कल्लत्वं**, क्ली, (कल्लस्य भावः । कल्ल + त्वम् ।) स्वरभेदः । इति हेमचन्द्रः ॥ बधिरता च ॥

**कल्लोलः**, पुं, (कल्ल + बाहुलकात् ओलच् । यद्वा कं जलं लोलं चपलं यस्मात् निपातनात् साधुः ।) महातरङ्गः । वड ढेउ इति भाषा । तत्पर्य्यायः । उल्लोलः २ । इत्यमरः । १ । १० । ६ ॥ ("कालिन्दीजलकल्लोलकोलाहलकुतूहली" ॥ इत्युद्भटः ॥) हर्षः । शत्रौ त्रि । इति मेदिनी ॥

**कव**, ऋ ङ स्तुतौ । वर्णे । इति कविकल्पद्रुमः । (भ्वां--आत्मं--सकं--सेट् । ऋदित् ।) ऋ अचका- वत् । ङ कवते । इति दुर्गादासः ॥

**कवकं**, क्ली, (कवते आच्छादयति विस्तारयति वा ॥ कव् + अच् । संज्ञायां कन् ।) छत्राकम् । यथा, --
"देवतार्थं हविः शिग्रुं लोहितान् व्रश्चनांस्तथा ।
अनुपाकृतमांसानि विड्जानि कवकानि च" ॥
कवकानि छत्राकाराणि । वर्ज्जयेदिति प्रत्येक- मभिसम्बध्यते । इति मिताक्षरायामाचाराध्यायः॥

**कवकः**, पुं, (कव + अच् + संज्ञायां कन् ।) कवलः । ग्रासः । इति हेमचन्द्रः ॥

**कवचः**, पुं, क्ली, (कं देहं वञ्चति विपक्षास्त्राणि वञ्चयित्वा रक्षति इति शेषः । क + वन्च् + अच् । कं वातं वञ्चति वा अन्तर्ण्यर्थो वा । यद्वा कवते- इति कुधातोरच् प्रत्यय इति केचित् इत्युणादि- कोषः ४२ । २ ।) सन्नाहः । साँजोया इति भाषा । (यथा, विष्णुपुराणे । १ । १३ । ४० ।
"शराश्च दिव्या नभसः कवचञ्च पपात ह" ॥)
कवचानां विनिर्द्दिष्टः समासाद्दोषसंग्रहः ।
अत्र वर्णो विनिर्द्दिष्टः क्रमादेवं चतुर्व्विधः ॥
सितो रक्तस्तथा पीतः कृष्णो ब्रह्मादिषु क्रमात् ।
केचित् कुर्व्वन्ति कुशलाः कवचं धातुसम्भवम् ॥
कनकं रजतं ताम्रं लौहं तेषु यथाक्रमम्" ॥
इति युक्तिकल्पतरुः ॥ * ॥
"यथा शस्त्रप्रहाराणां कवचं प्रति वारणम् ।
तथा दैवोपघातानां शान्तिर्भवति वारणम्" ॥
इति मलमासतत्त्वम् ॥ लौहादिवर्म्मवत् अङ्गादि- रक्षणार्थं देवतामन्त्रविग्रहम् । तत्तु पूजायां पाठ्यं भूर्ज्जे विलिख्य कण्ठादौ धार्य्यञ्च । इति तन्त्रम् ॥ गर्द्दभाण्डवृक्षः । पटहवाद्यम् । इति मेदिनी ॥

**कवचपत्रं**, क्ली, (कवचलेखनसाधनपत्रमिव पत्रं वल्कलं यस्य ।) भूर्ज्जपत्रम् । इति शब्दचन्द्रिका ॥

**कवटी**, स्त्री, (कौति शब्दायते इति । कु + अटन् + गौरादित्वात् ङीष् ।) कवाटः । इति भरतो द्विरूपकोषश्च ॥

**कवयी**, स्त्री, (कात् जलात् वयते गच्छति इति । क + वय् गतौ + इन् "कृदिकारान्तत्वात्" वा ङीष् ।) मत्स्यविशेषः । कयी माछ इति भाषा ॥ तत्पर्य्यायः । क्रकचपृष्ठी २ । इति त्रिकाण्डशेषः ॥ अस्या गुणाः । मधुरत्वम् । स्निग्धत्वम् । बलकारि- त्वम् । वायुकफनाशित्वञ्च । इति राजवल्लभः ॥ किञ्चित्पित्तकरीति केचित् ॥ ("कवय्यः स्निग्ध- मधुराः" । इति चक्रपाणिकृतद्रव्यगुणे ॥)

**कवरं**, त्रि, (के मस्तके वरं शोभमानत्वात् श्रेष्ठम् ।) केशपाशः । इत्यमरटीका ॥ (यथा भागवते ५ । २ । ७ । "वल्गुस्पन्दनस्तनकलशकवरभार रशनां देवीम्" ॥) संपृक्तम् । खचितम् । इति हलायुधः ॥

**कवरः**, पुं, क्ली, (कं जलं वृणोति । क + वृ + अच् ।) लवणः । अम्लः । इति मेदिनी हेमचन्द्रश्च ॥ (कौ- तीति । कुशब्दे + "कोररन्" । उणां ४ । १५४ । इति अरन् । पाठकः । इत्युज्ज्वलदत्तः ॥ कर्व्वुर- वर्णः । इति हलायुधः । यथा, माघे ५ । १९ ।
"दृष्ट्वैव निर्ज्जितकलापभरामधस्ता- द्व्याकीर्णमाल्यकवरां कवरीं तरुण्याः" ॥)

**कवरकी**, स्त्री, (कवरं केशपाशं किरति विक्षिपति यत्र इति । कवर + कॄ + बाहुलकात् ड गौरा- दित्वात् ङीष् । कारावासदुःखेन केशादिपारि- पाट्यराहित्यात् तथात्वम् ।) कारागारबद्धः । इति

वचनम् । इत्यमरः । १ । ६ । १८ ॥
हरीतकी ।
इति शब्दरत्नावली ॥

**कल्याणं**, क्ली, (कल्ये प्रातः अण्यते शब्द्यते इति ।
कल्य + अण् + “अकर्त्तरिचेति” ३ । ३ । १९ ।
घञ् ।) मङ्गलम् । (यथा, विष्णुपुराणे । १ । १२ । १०२ ।
“स्थानभ्रंशं न चाप्नोति दिवि वा यदि वा भुवि ।
सर्व्वकल्याणसंयुक्तो दीर्घकालञ्च जीवति” ॥)
तत्पर्य्यायः । श्वः २ श्रेयसम् ३ शिवम् ४ भद्रम् ५
शुभम् ६ भावुकम् ७ भविकम् ८ भव्यम् ९ कुश-
लम् १० क्षेमम् ११ शस्तम् १२ । तद्युक्ते त्रि । इत्य-
मरः । १ । ४ । २५, २६ ॥ (यथा, मनुः ८ । ३९२ ।
“प्रातिवेश्यानुवेश्यौ च कल्याणे विंशतिद्विजे” ॥)
स्वर्णम् । इति मेदिनीकरहेमचचन्द्रौ ॥

**कल्याणवीजः**, पुं, (कल्याणं वीजं यस्य ।) मसूरः ।
इति राजनिर्घण्टः ॥ (मसूरशब्दे विशेषोऽस्य ज्ञेयः ॥)

**कल्याणिका**, स्त्री, (कल्याण + संज्ञायां कन् तत-
ष्टाप् अत इत्वम् ।) मनःशिला । इति राज-
निर्घण्टः ॥ (मनःशिलाशब्देऽस्या विवृतिर्ज्ञेया ॥)

**कल्याणिनी**, स्त्री, (कल्याणमस्यास्तीतिइनिः ततः
स्त्रियां ङीप् ।) बला । इति राजनिर्घण्टः ॥
कल्याणविशिष्टेत्रि ॥

**कल्याणी**, स्त्री, (कल्याण + स्त्रियां ङीप् । माषपर्णी ।
गौः । इति राजनिर्घण्टः ॥ (यथा, रघुः १ । ८७ ।
“उपस्थितेयं कल्याणी नाम्नि कीर्त्तित एव यत्” ॥

तत्पर्य्यायः । तनुत्रम् २ वर्म्म ३ दंशनम् ४ उरश्छदः
५ कङ्कटकः ६ जगरः ७ । इत्यमरः । २ । ८ । ६४ ॥
दंसनम् ८ जागरः ९ अजगरः १० । इति तट्टीका ॥
कटकः ११ योगः १२ सन्नाहः १३ कञ्चुकः १४ ।
इति जटाधरः ॥ * ॥ तस्य युक्तिर्यथा ।
खड्गादीनान्तु गणना पूर्ब्बमेव निदर्शिता ।
अस्त्रात्मनैव निर्द्दिष्टकवचादिरपीष्यते ॥
तल्लक्षणं संग्रहेण प्रवक्ष्यामि निबोधत ।
काष्ठं चर्म्म च सकलं त्रयमेतत्तु दुस्तरम् ॥
यथोत्तरं गुणयुतं तथा पूर्ब्बन्तु निन्दितम् ।
शरीरावरकत्वन्तु लघुत्वं दृढता तथा ॥
दुर्भेद्यतेति कथितः कुवचे गुणसंग्रहः ।
सच्छिद्रतातिगुरुता तनुता सुखभेद्यता ॥

हारावली । कयेदी इति भाषा ॥

**कवरा**, स्त्री, (कवर + अजादित्वात् टाप् ।) खर-
पुष्पा । इति शब्दचन्द्रिका । वावुइ इति भाषा ॥

**कवरी**, स्त्री, (कं शिरः वृणोति आच्छादयति । क +
वृ + अच् + जानपदेत्यादिना ङीप् । कु + अरन्
ङीष् वा ।) केशविन्यासः । चुलेर खोपा टिकी
इति भाषा । तत्पर्य्यायः । केशवेशः २ कवरः ३
केशगर्भकः ४ । इति शब्दरत्नावली ॥
(“गोपीभर्त्तुर्व्विरहविधुरा काचिदिन्दीवराक्षी
उन्मत्तेव स्खलितकवरी निःश्वसन्ती विशालम्” ॥
इति पदाङ्कदूते । १ ॥) वर्व्वरा । वावुइ इति

:भाषा । कारवी । इत्यमरो मेदिनी च ॥ हिङ्गेर

पाता इति भाषा ॥

**कवलः**, पुं, (केन जलेन वलतेचलतीति । वल् + अच् ।)

ग्रासः । इत्यमरः । २ । ९ । ५४ ॥
("त्रिकटुकमजमोदा सैन्धवं जीरके द्वे
समधरणधृतानामष्टमो हिङ्गुभागः ।
प्रथमकवलभुक्तं सर्पिषा चूर्णमेत-
ज्जनयति जठराग्निं वातरोगांश्चं हन्ति" ॥
इति तैद्यकचक्रपाणिसंग्रहे अग्निमान्द्याधिकारे ॥
"व्यसृजन् कवलान्नागा गावोवत्सान् न पाययन्"
।
इति हेःरामायणे । २ । ४१ । ९ ॥)
मत्स्यविशेषः ।
इति शब्दचन्द्रिका ॥ वेले माच इति भाषा ॥

**कवलितः**, त्रि, (कवलं करोति । कवल + णिच् +

कर्म्मणि क्तः ।) भुक्तः । इति जटाधरः ॥
("शश्वत्
कवलितानेकजीवम्" । इति कथासरित्सागरः ।
२६ । १४२ ॥)

**कवसः**, पुं, (कौति कवते वा । कुशब्दे + "ऋतनी-

त्यादिना" उणां ४ । २ । अस् ।) कवचः । इत्यु-
णादिकोषः ॥

**कवाटः**, त्रि, (कुशब्दे + भावे अप् । कवं शब्दं

अटतीति । कव + अट् + अच् । यद्वा कं वातं
वटति वृणोति वारयतीत्यर्थः क + वट् + अण् ।)
कपाटः । इत्यमरटीकायां वाचस्पतिः ॥ (यथा
हेःरामायणे २ । ७१ । ३७ ।
"असंयतकवाटानि श्रीविहीनानि सर्व्वशः" ॥)

**कवाटवक्रं**, क्ली, (कवाटं वक्रं यस्मात् ।) वृक्षविशेषः ।

कवाटवेट्टु इति भाषा । कवाडवेण्टुया इति
केचित् ॥ तत्पर्य्यायः । वक्राग्रम् २ कपोतवक्रम्
३
अस्रजित् ४ । इति रत्नमाला ॥

**कवाटी**, स्त्री, (कवाट + अल्पार्थे + ङीप् ।) कपा-

टम् । इत्यमरटीकायां भरतः ॥

**कवारं**, क्ली, (कं जलं आश्रयत्वेन वृणोति । क + वृ +

अण् ।) पद्मम् । इति त्रिकाण्डशेषः ॥

**कविः**, पुं, (कवते सर्व्वं जानाति सर्व्वं वर्णयति सर्व्वं

सर्व्वतो गच्छति वा । कव् इन् । यद्वा कुशब्दे +
"अचः इः" । उणां ४ । १३८ । इति इः ।)

इति कल्किपुराणे २ अध्यायः ॥ * अपि च ।
"विशाखयूपभूपालः प्रायात् साधुजनप्रियः ।
कल्किं द्रष्टुं हरेरंशमाविर्भूतञ्च सम्भले ॥
कविं प्राज्ञं सुमन्त्रञ्च पुरस्कृत्य महाप्रभम् ।
गार्ग्यभर्ग्यविशालैश्च ज्ञातिभिः परिवारितम् ।
विशाखयूपो ददृशे चन्द्रं तारागणैरिव" ॥
इति तत्रैव ३ अध्यायः ॥ * ॥ चौरयोद्धा । यथा
।
"वेधस्थाने रणे भङ्गो दुर्गे खण्डिः प्रजायते ।
कविप्रवेशनं तत्र योधाघातश्च तत्र वै" ॥
इति सर्व्वतोयद्रचक्रे ज्योतिस्तत्त्वम् ॥

**कविः**, त्रि, (कवते श्लोकान् ग्रथते वर्णयति वा ।

कव् + इन् ।) पण्डितः । इत्यमरः । २ । ७ । ५
॥
(यथा मनुः २ । १५१ ।
"अध्यापयामास पितॄन् शिशुराङ्गिरसः कविः"
॥)

**कविः**, स्त्री, (कवति शब्दायते इति । कुशब्दे "अच्

इः" । उणां । ४ । १३८ इति इः । अश्वमुखे श-
ब्दायमानत्वात्तथात्वम् ।) खलीनः । इति मेदिनी
।
लागाम् इति भाषा ॥

**कविकं**, क्ली, (कवि + खार्थे कन् ।) खलीनः । इति

हलायुधः ॥

**कविका**, स्त्री, (कवि + स्वार्थे कन् टाप् च ।) खलीनः ।

इत्यमरः । २ । ८ । ४९ ॥ लागाम इति भाषा ।
केविकापुष्पम् । इति राजनिर्घण्टः ॥ कवयी
मत्स्यः ।
इति भावप्रकाशः ॥ (अस्या गुणा यथा, --
"कविका मधुरा स्निग्धा कफघ्ना रुचिकारिणी ।
किञ्चित् पित्तकरी वात-नाशिनी वह्निवर्द्धिनी" ॥
इति च भावप्रकाशस्य पूर्ब्बखण्डे मांसवर्गे ॥)

**कविज्येष्ठः**, पुं, (कविषु ज्येष्ठः ।) वाल्मीकिमुनिः ।

इति त्रिकाण्डशेषः ॥

**कविता**, स्त्री, (कवेः रचयितुर्भावः तल् ।) कवि-

त्वम् । काव्यम् । यथा, --
"कविता वनिता वापि आयाता सुखदायिनी" ।
इत्युद्भटः ॥

**कविवेदी**, [न्] त्रि, (कविं कवित्वं वेत्ति । कवि +

विद् + णिनिः ।) कविः । इति जटाधरः ॥

"मत्परं दुर्लभं मत्वा नूनमावर्ज्जितं मया ।
पयः पूर्ब्बैः स्वनिश्वासैः कवोष्णमुपभुज्यते" ॥)
तद्वति त्रि । इत्यमरः । १ । ४३५ ॥

**कव्यं**, क्ली, (कूयते पितृभ्यः । पित्रुद्देशेन दीयते यद-

न्नादिकम् । कु + "अचो यत्" ३ । १ । ९७ ।
इति यत् ।) पित्रन्नम् । पितृसम्प्रदानकान्नम् ।
इत्यमरः । २ । ७ । २४ ॥ (यथा, मनुः १ । ९५ ॥
"यस्यास्येन सदाश्नन्ति हव्यानि त्रिदिवौकसः ।
कव्यानि चैव पितरः किम्भूतमधिकं ततः" ॥

कव्यानि तु वेदतत्त्वविदे ब्राह्मणाय
दातव्यानि

अन्यथा तद्दानं निष्फलं स्यात्यदुक्तं मनौ ३
अध्याये ।
"श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः ।
अर्हत्तमाय विप्राय तस्मै दत्तं महाफलम् ॥
एकैकमपि विद्वांसं दैवे पित्र्ये च भोजयेत् ।
पुष्कलं फलमाप्नोति नामन्त्रज्ञान् बहूनपि ॥
दूरादेव परीक्षेत ब्राह्मणं वेदपारगम् ।
तीर्थं तद्धव्यकव्यानां प्रदाने सोऽतिथिः स्मृतः ॥
सहस्रं हि सहस्राणामनृचां यत्र भुञ्जते ।
एकस्तान् मन्त्रवित् प्रीतः सर्व्वानर्हति धर्म्मतः ॥
ज्ञानोत्कृष्टाय देयानि कव्यानि च हवींषि च ।
न हि हस्तावसृग्दिग्धौ रुधिरेणैव शुध्यतः ॥
यावतो ग्रसते ग्रासान् हव्यकव्येष्वमन्त्रवित् ।
तावतो ग्रसते प्रेत्य दीप्तशूलर्ष्टर्य्योगुडान् ॥
ज्ञाननिष्ठा द्विजाः केचित् तपोनिष्ठास्तथापरे ।
तपःस्वाध्यायनिष्ठाश्च कर्म्मनिष्ठास्तथापरे ॥
ज्ञाननिष्ठेषु कव्यानि प्रतिष्ठाप्यानि यत्नतः ।
हव्यानि तु यथान्यायं सर्व्वेष्वेव चतुर्ष्वपि ॥
एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः ।
अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः ॥
मातामहं मातुलञ्च स्वस्रीयं श्वशुरं गुरुम् ।
दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत् ॥
येस्तेनपतितक्लीवा ये च नास्तिकवृत्तयः ।
तान् हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीत् ॥
चिकित्सकान् देवलकान् मांसविक्रयिणस्तथा ।
विपणेन च जीवन्तो वर्ज्ज्याःस्युर्हव्यकव्ययोः" ॥
इत्यादि । विस्तृतिस्तु तत्रैव द्रष्टव्या ॥)

**कव्यबालः**, पुं, (कव्यं बल्यते दीयते अस्मै । कव्य +

बल् दाने + सम्प्रदाने घञ् ।) पितृगणविशेषः ।
इति त्रिकाण्डशेषः ॥ (यथा, वायुपुराणे ।
"कव्यबालोऽनलः सोमः यमश्चैवार्य्यमा तथा ।
अग्निस्वात्ता वर्हिषदः सोमपाः पितृदेवताः" ॥)

ब्रह्मा । इति हेमचन्द्रः ॥ (अयमादिकविः यथा,
“तेने ब्रह्महृदा य आदिकवये” इति भागवते ।
१ । १ ॥) “वाल्मीकिमुनिः । (एकोऽभून्नलिनात्
ततस्तु पुलिनात् वल्मीकतश्चापरस्त एव
प्रथिताः
कवीन्द्रगुरवस्तेभ्यो नमस्कुर्म्महे” । इत्युद्भटः ॥)
शुक्राचार्य्यः । (यथा महाभारते १ । ६६ । ४२ ।
“ब्रह्मणो हृदयं भित्त्वा निःसृतो भगवान् भृगुः ।
भृगोः पुत्त्रः कविर्विद्वान् शुक्रः कविसुतो ग्रहः”
॥)
मूर्य्यः । काव्यकरः । (यथा रघुः १ । ३ ।
“मन्दः कवियशः प्रार्थी गमिष्याम्युपहास्यताम्”
॥)
ग्वलीने स्त्री । इति मेदिनी ॥ (विष्णुः । यथा
महामारते १३ । १४९ । २७ ।
“वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित् कविः” ॥)
कल्किदेवस्य ज्येष्ठम्राता । यथा, --
“कल्केर्ज्येष्ठास्त्रयः शूराः कविप्राज्ञसुमन्त्रकाः ।
तातमातृप्रियकरा गुरुविप्रप्रतिष्ठिताः” ॥

**कवियं**, क्ली पुं, (कं सुखं अजति । क + अज् + क ।
अजस्थाने विः ।) खलीनः । इति त्रिकाण्डशेषः
॥

**कविरामायणः**, पुं, (कविना कवितया कविषु काव्येषु
वा रामः अयनं आश्रयो यस्य ।) वाल्मीकिमुनिः
।
इति शब्दरत्नावली ॥

**कविलासिका**, स्त्री, (कं सुखं विलासयति उद्दीपय-
तीति । क + वि + लस् + णिच् + ण्वुल् टाप्
अत
इत्वम् ।) वीणाविशेषः । इति शब्दरत्नावली ॥

**कविवाल्मीकिः**, पुं, (कविश्चासौ वाल्मीकिश्चेति ।)
वाल्मीकिमुनिः । इति शब्दरत्नावली ॥

**कवी**, स्त्री, (कवि वा ङीष् ।) खलीनः । इति मेदिनी
भरतश्च ॥

**कवीयं**, क्ली, (कवि + स्वार्थे च्छः ।) खलीनः । इति
जटाधरः ॥

**कवेलं**, क्ली, (कं जलं विलति स्तृणाति । क + विल् +
अण् ।) कुवलयम् । उत्पलम् । इति
शब्दचन्द्रिका ॥

**कवोष्णं**, क्ली, (कुत्सितं उष्णं ईषदुष्णं वा ।) ईषदु-
ष्णम् । (यथा रघुः १ । ६७ ।

**कश**, शब्दे । इति कविकल्पद्रुमः ॥ (भ्वां--परं--अकं--
सेट् ।) कशति । इति दुर्गादासः ॥

**कशा**, स्त्री, (कशति शब्दायते ताडयति वा । कश्
+ करणस्य कर्तृविवक्षया कर्त्तरि अच् टाप् च ।
ताडयत्यनया वा ।) अश्वादेस्ताडनी । इत्यमरः ।
२ । १० । ३१ । कोडा चावुक् इति च भाषा ॥
(“जघान कशया मोहात् तदा राक्षसवन्मुनिम्” ॥
इति महाभारते । १ । १७७ । १० ॥) मांस-
रोहिणी । इति भावप्रकाशः ॥

**कशार्हः**, त्रि, (कशां अर्हति इति । कशा + अर्ह +

:अण् ।) कशाघातयोग्यः । कोडा मारिवार उप-
युक्त इति भाषा । तत्पर्य्यायः । कश्यः २ । इत्यमरः ।
३ । १ । ४४ ॥

**कशिपुः**, पुं, (कशति दुःखं कश्यते वा कशगति-
शासनयोः । कश + मृगष्वादित्वात् निपातनात्
साधुः ।) भक्तम् । आच्छादनम् । एकोक्त्यान्नवस्त्रे
कशिपू इति द्विवचनान्तम् । इति मेदिनी ॥
(शय्या । यथा, भागवते २ । २ । ४ ।
"सत्यां क्षितौ किं कशिपोः प्रयासैः" ॥)

**कशेरु**, क्ली पुं, (के देहे शीर्य्यते । क + शॄ + "केश्र
एर ङ चास्य" । उणां १ । ९० । इति उः एरङ्-
चान्तादेशः ।) पृष्ठास्थि । पिठेर दाँडा इति
भाषा । इति हलायुधः ॥ (पुं सि उदाहरणं ।
"किं कुर्व्वता वराहेण खाद्यन्ते हि कशेरवः" ।
इत्युणाटिकाधृतचन्द्रवचनम् ।)

**कशेरु**, क्ली, (कं जलं वातं वा शृणाति । क + शॄ +
उणादित्वात् उः । एरङ्चान्तादेशः ।) कशेरुका ।
केशुर इति भाषा । इति रत्नामाला ॥
राजनिर्घण्टे दन्त्यसकारवान् पुंलिङ्गोऽप्ययं शब्दः ॥
("कशेरु द्विविधं तत्तु महद्राजकशेरुकम् ।
मुस्ताकृतिलघुः स्यात् यत् तच्चिवोटमिति स्मृतम्"
॥
इति वैद्यकम् ॥)

**कशेरुः**, पुं, (क + शॄ + उ + एरङ् ।) जम्बुद्वीपस्य
खण्डविशेषः । इति शब्दमाला ॥

**कशेरुकं**, क्ली, (कशेरु + स्वार्थे कन् ।) तृणकन्दः ।
केशुर इति भाषा । अस्य गुणाः । गुरुत्वम् ।
विष्टम्भकारित्वम् । शीतलत्वञ्च । इति राजवल्लभः ॥
("तरुठविसशालूकक्रौञ्चादनकशेरुकम् ।
शृङ्गाटकं कलोड्यञ्च गुरु विष्टम्भि शीतलम्" ॥
इति चरके सूत्रस्थाने २७ अध्याये ॥)

**कशेरुका**, स्त्री, (कशेरु + स्वार्थे कन् टाप् च ।)
पृष्ठास्थि । इति रत्नमाला । पिटेर दाँडा इति
भाषा ।

**कशेरूः**, स्त्री, (क + शॄ + "केश्र एरङ्चास्य" । उणां
१ । ९० । इति ऊः । एरङ्चान्तादेशः ।) तृणकन्दः
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ केशुर
इति भाषा ।

**कश्चन**, व्य, (किम् + चन् इति मुग्धबोधमतम् ।
पाणिनिमते पृथक्पदमिति भेदः ।) कश्चित् ।
पापम् । इति शब्दमाला ॥ मलिने त्रि । इति
हेमचन्द्रः ॥

**कश्मीरः**, पुं, (कश् + "कशेर्मुट् च । उणां ४ । ३०
इति ईरन् मुट् च ।) काश्मीरदेशः । इति त्रि-
काण्डशेषः ॥ (अस्य सीमादि र्यथा, -- शक्ति
सङ्ग
मतन्त्रे ७ पटले ।
"शारदामठमारभ्य कुङ्कुमादितटान्तकः ।
तावत् कश्मीरदेशः स्यात्
पञ्चाशद्योजनात्मकः" ॥)

**कश्मीरजन्मा**, [न्] पुं, (कश्मीरे कश्मीरदेशे जन्म
यस्य ।) काश्मीरजन्मा । कुङ्कुमम् । इत्यमरटी-
कायां रायमुकुटः ॥

**कश्यं**, क्ली, (कशां अर्हतीति । कशा + दन्तादित्वात् ।
५ । १ । ६६ । यत् ।) अश्वमध्यभागः ।
(कशति
अनेन । कश + बाहुलकात् करणे यत् ।) मद्यम्
।
यथा, -- मार्कण्डेयपुराणे १०४ । ३ ।
"ब्रह्मणस्तनयो योऽभूत् मरीचिरिति विश्रुतः ।
कश्यपस्तस्य पुत्त्रोऽभूत् कश्यपानात् स
कश्यपः" ॥
कशार्हे त्रि । इत्यमरः । ३ । १ । ४४ ॥

**कश्यपः**, पुं, (कश्यं सोमरसादिजनितं मद्यं पिब-
तीति । कश्य + पा + क । अस्य नामनिरुक्ति-
र्यथा मार्कण्डेयपुराणे । १०४ । ३ ।
"ब्रह्मणस्तनयो योऽभूत् मरीचिरिति विश्रुतः ।
कश्यपस्तस्य पुत्त्रोऽभूत् कश्यपानात् स
कश्यपः" ॥)
मुनिभेदः । कलागर्भजो मरीचिमुनेरौरसः पुत्त्रः
।
अस्य भार्य्या दक्षस्य सप्तदशकन्याः । तासां
तत्पु-
त्त्राणाञ्च नामानि यथा । अदितेर्देवाः १ दिते-
र्दैत्याः २ दनोर्दानवाः ३ काष्ठाया अश्वादयः
४
अरिष्टाया गन्धर्व्वाः ५ सुरसाया राक्षसाः ६
इलाया वृक्षाः ७ मुनेरप्सरोगणाः ८
कोधवशायाः
सर्पाः ९ ताम्रायाः श्येनगृध्रादयः १० सुरभेर्गो-
महिषाः ११ सरमायाः श्वापदाः १२
तिमेर्यादो-
र्य्यायासिद्धेः सिंहः कृतेस्तर्कुरित्यादिवत् कश्यप
इति हयवरट् इत्येतस्योपरि महाभाय्यप्रमाणेन
पदं सिध्यति" ॥ इति दयानन्दकृतायां वेदभाष्यो-
पक्रमणिकायां २९१ सङ्ख्यकपत्रे ॥ कश्यं अज्ञानं
अविद्यामित्यर्थः । तत्पिबति शोषयति नाश-
यति । यद्वा कश्यं विज्ञानघनम् पाति रक्षति
स्वात्मनीति । परब्रह्म । तथा च तापनिश्रुतिः
२ । ११ ॥
"सा होवाच गान्धर्व्वी ऋषिं वै दुर्व्वाससं कोऽयं
ब्रह्मन् ! दा एतस्य प्रजालोकस्य पालयिता भर्त्ता
वा जगतः । सहोवाच तत्त्ववित् प्रवरो महान्
दुर्व्वासाः । तदेव ब्रह्म वा आत्मा एतस्य पाता
हर्त्ता प्रजानां गोप्ता वावह कश्यपो ह योऽयम-
ज्ञानभोक्ता गान्धर्व्वि" ॥
कच्छपः । तथा च शतपथब्राह्मणे--
"स यत्कूर्म्मो नाम । प्रजापतिः प्रजा असृजत
यदसृजताकरोत्तद्यदकरोत्तस्मात्कूर्म्मः कश्यपो
वै कूर्म्मस्तस्मादाहुः सर्व्वाः प्रजाः काश्यप्यः" ॥
यथा यजुर्व्वेदे २४ । २७ ।
"अपामुद्रो मासां कश्यपः" । "कश्यपः कच्छपः" ।
इति वेददीधितिः ॥ कश्यं मद्यं पिबतीति ।
कश्य + पा + क । "सुरापः श्यावदन्तः स्यात्" ।
इति वचनात्तथात्त्वम् । श्यावदन्ते त्रि,
यथा, कात्यायनश्रौतसूत्रे १० । २ । ३५ ।
"प्रसृप्तेभ्यश्चान्यत् कण्वकश्यपयाचमानवर्ज्जम्"
॥)
मृगविशेषः । इति मेदिनी ॥ मत्स्यभेदः । इति
विश्वः ॥

**कश्यपनन्दनः**, पुं, (कश्यपस्य नन्दनः ।) गरुडः । इति
हलायुधः ॥ (देवासुरादयोऽपि ॥)

**कष** वधे । इति कविकल्पद्रुमः ॥ (भ्वां--परं--सकं--
सेट् ।) कषति । अयमुभयपदीति चतुर्भुजजुमरौ ॥
रमानाथरामौ तु इमं परस्मैपदिनं मत्वा उभ-
यपदिनं तालव्यान्तं अन्यं मन्येते । इति दुर्गा-
दासः ॥

**कषः**, पुं, (कषत्यत्र अनेन वा । कष् + अच् ।) कष-
पट्टिका । कष्टिपातर इति भाषा । तत्पर्य्यायः ।
शानः २ निकषः ३ । इत्यमरः । २ ! १० । ३२ ॥

**कषणः**, त्रि, (कष्यते विस्वाद्यते । कष् + कर्मणि
ल्युट् ।) अपक्वः । इति शब्दचन्द्रिका ॥ (पुं,
कषत्यत्र । अधिकरणे ल्युट् । निकषोपलम् ।
यथा, आर्य्यासप्तशती ४१८ ।

इति ब्याकरणम् ॥ कोन । केह इति च भाषा ।
(यथा माघः १६ । १ ।
"दमघोषसुतेन कश्चन
प्रतिशिष्टः प्रतिभानवानथ" ॥)

**कश्चित्**, व्य (किम् + चित् । पाणिनिमते पृथक्

पदम् ।) कश्चन । इति व्याकरणम् ॥ (यथा मेघ-
दूते १ ।
'कश्चित्कान्ता विरहगुरुणा स्वाधिकारप्रमत्तः' ॥)

**कश्मलं**, क्ली, (कश् गतिशातनयोः + कल । "कुटि-

कशिकौतिभ्यः प्रत्ययस्य मुट्" ॥ उणां १ । १०८
इति मुट् ।) मूर्च्छा । इत्यमरः । २ । ८ । १०९ ।
(मोहः । यथा, गीतायाम् २ । २ ।
"कुतस्त्वाकश्मलमिदं विषमे समुपस्थितम्" ॥)

गणाः १३ विनताया गरुडारुणौ १४
कद्रोर्नागाः
१५ पतङ्ग्याः पतङ्गाः १६ यामिन्याः शलभाः
१७ ।
इति श्रीभागवतम् ॥ * ॥
(मार्कण्डेयपुराणमते अस्य त्रयोदशभार्य्याः ।
यदुक्तं तत्रैव १०४ अध्याये । अदितिः १
दितिः २
दनुः ३ विनता ४ खसा ५ कद्रुः ६ मुनिः ७
क्रोधा ८ रिष्टा ९ इरा १० ताम्रा ११ इला १२
प्रधा १३ । महाभारतमतेऽपि अस्य त्रयोदश
भार्य्या । यदुक्तं तत्रैव १ । ६५ । ११--१३ ।
"मरीचेः कश्यपः पुत्रः कश्यपात्तु इमाः प्रजाः ।
प्रजज्ञिरे महाभागा दक्षकन्यास्त्रयोदश ॥
अदितिर्दितिर्दनुः काला दनायुः सिंहिका तथा
।
क्रोधा प्राधा च तिश्वा च विनता कपिला मुजिः
।
कद्रुश्च मनुजव्याघ्र ! दक्षकन्यैव भारत" ! ॥
परमेश्वरस्यैव कश्यप इति नामास्ति । यथा,
"तेनैवेमाः सर्व्वाः प्रजाः उत्पादितास्तस्मात्
सर्व्वा
इमाः प्रजाः काश्यप्य इत्युच्यन्ते । कश्यपः
कस्मात्
पश्यको भवतीति निरुक्त्या पश्यतीति पश्यः
सर्व्वज्ञतया सकलं जगद्विजानाति स पश्यः ।
पश्य एव निर्भ्रमतयातिसूक्ष्ममपिवस्तु यथार्थं
जानात्येवातः पश्यक इति । आद्यन्ताक्षरविप-

"भूषणतां भजतः सखि ! कषणविशुद्धस्य जात-
रूपस्य" ॥ भावे ल्युट् । क्ली, कण्डूयनम् ।
यथा किराते ५ । ४७ ।
"कषणकम्पनिरस्तमहाहिभिः
क्षणविमत्तमतङ्गजवर्जितैः" ॥
"इहाद्रौ कषणेन कण्डूयणेन यः कम्पस्तेन निरस्ता
महाहयो येभ्यस्तैः" ॥ इति तट्टीकायां मल्लिनाथः
॥)

**कषा**, स्त्री, (कष्यते ताड्यते अनया । कष् + बाहुल-

कात् करणे अप् । ततष्टाप् ।) कशा । इत्यमर
टीकायां रमानाथः ॥ चावुक् इति भाषा ॥ (यथा
गोःरा {?मा?}यणे ६ । ३७ । ४१ ।

:‘उष्ट्रान् हयान् खरान् नागान् जघ्नुर्दण्डकषाङ्कुशैः’ ॥)

**कषाकुः**, पुं, (कष् + आकुः ।) सूर्य्यः । अग्निः । इत्यु-

णादिकोषः ॥

**कषायः**, पुं, क्ली, (कषति कण्ठम् । कष् + आयः ।)

रसविशेषः । कषा इति भाषा । पृथिव्यनिलगुण-

बाहुल्यात्तस्योत्पत्तिः । इति शिवदासः ॥

(यथा, मनुः ११ । १५३ ।

“शुक्तानि च कषायांश्च पीत्वामेध्यान्यपि

द्विजः” ॥)

तत्पर्य्यायः । तुवरः २ तद्युक्ते त्रि । इत्यमरः ।

१ । ५ । ९ ॥ कुवरः ३ तूरवः ४ । इति तट्टीका

॥

अस्य गुणाः । व्रणादिरोपणत्वम् । ग्राहित्वम् ।

शोषणत्वम् । वायुकोपकारित्वञ्च । अतियुक्तस्य

तस्य गुणः । मलमूत्रग्रहाध्मानहृत्पीडाक्षेपणादि-

रोगकारित्वम् । अन्यच्च ।

“कषायः शोषणः स्तम्भी व्रणपाकार्त्तिनाशनः ।

कफशोणितवातघ्नी रूक्षः शीतो गुरुस्तथा” ॥

इति राजवल्लभः ॥ अपि च ।

“कषायनामा निरुणद्धि शोफं

वर्णन्तनोर्दीपनपाचनश्च ।

सत्त्वापहोऽसौ शिथिलत्वकारी

निषेवितः पाण्डु करोति मात्रम्” ॥

इति राजनिर्घण्टः ॥ * ॥ पाचनादिः । तस्य

पूर्ण-

वीर्य्यं याममेकं तिष्ठति । तत्पर्य्यायः । क्वाथः

२

निर्य्यूहः ३ । स तु पञ्चविधो यथा । स्वरसः १

कल्कः २ क्वथितः ३ शीतः ४ फाण्टम् ५ ।

इति

वैद्यकपरिभाषा ॥ * ॥

(“जिह्वां कण्ठं ग्रसति नितरां ग्राहकश्चातिसारे

श्लेष्मव्याधेरुपशमकरः श्वासकासापहर्त्ता ।

हिक्कां शूलं हरति नितरां शोधनं स्याद्व्रणानां

प्रोक्तश्चायं समधिकगुणो नाम श्रेष्ठः कषायः” ॥

इति हारीते प्रथम स्थाने ७ अध्याये ॥

“कषायो जडयेज्जिह्वां कण्ठस्रोतो विबन्धकृत्”

॥

“कषायः पित्तकफहा गुरुरस्रविशोधनः ।

पीडनो रोपणः शीतः क्लेदमेदो विशोषणः ।

आमसंस्तम्भनो ग्राही रूक्षोऽतित्वक्प्रसादनः ॥

करोति शीलितः सोऽति विष्टम्भाध्मानहृद्रुजः ।

तृट्कार्श्य पौरुषभ्रंशस्रोतोरोधमलग्रहान्’ ॥

इति वाभटे सूत्रस्थाने १० अध्याये ॥

“पवन पृथिव्यतिरेकात् कषायः” ॥

इति चरके सूत्रस्थाने २६ अध्याये ॥)

निर्यासः । (यथा, महाभारते अनुशासनपर्व्वणि ।

“घृष्टो वटकषायेण अनुलिप्तः प्रियङ्गुणा ।

क्षीरेण षष्टिकान् भुक्त्वा सर्व्वपापैः प्रमुच्यते” ॥)

विलेपनम् । (यथा कुमारे ७ । १७ ।

“कर्णार्पितो लोध्रकषायरूक्षे

गोरोचनाक्षेपनितान्तगौरे” ॥

“लोध्रस्य वृक्षविशेषस्य कषायेण विलेपनेन” ॥

इति मल्लिनाथः ॥) अङ्गरागः । इति मेदिनी ॥

**कषायः**, पुं, (कष् + आयः ।) श्योणाकवृक्षः । इति

धरणी ॥ रागः । इत्यमरटीकायां स्वामी ॥

(यथा छान्दग्योपनिषदि ।

“आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा

स्मृतिः । स्मृतिलम्भे सर्व्वग्रन्थीनां विप्रमोक्ष-

स्तस्मै मृदितकषायाय तमसः पारं दर्शयति” ।

“तस्मै मृदितकषायाय वार्क्षारादिरिव

कषायो

रागद्वेषादिदोषः सत्त्वस्य रञ्जनरूपत्वात् ज्ञान-

वैराग्याभ्यासरूपक्षारेण क्षालितो मृदितो विना-

शितो यस्य नारदस्य तस्मै” । इति भाष्यम् ॥)

कलियुगम् । इत्यमरटीकासारसुन्दरी ॥ (निर्व्वि-

कल्पसमाधेर्विघ्नभेदः । यथा, वेदान्तसारे समा-

धिकल्पे ८१ ।

“लयविक्षेपाभावेऽपि चित्तवृत्तेरागादिवासनया

स्तब्धीभावात् अखण्डवस्त्वनवलम्बनम्’ ।

तत्रानेक

जन्माभ्यस्त

वाह्याभ्यन्तररागाद्यनुभवजनितसंस्कारैः

कलुषीकृतं चित्तं कथञ्चित् श्रवणादिसाधनेनान्त-

र्मुखमपि चैतन्यग्रहणसामर्थ्याभावात्मध्य एव

स्तब्धीभवति यथा राजदर्शनाय स्वगृहान्निर्गत्य,

राजमन्दिरं प्रविष्टस्य कस्यचित् पुरुषस्य द्वार-

पालनिरोधेन स्तब्धीभावंः तथा परित्यक्त वाह्य-

विषयस्य अखण्डवस्तुग्रहणप्रवृत्तस्योद्बुद्धरागादि-

संस्कारैः स्तब्धीभावादखण्डवस्त्वग्रहणंकषायः

॥)

**कषायः**, त्रि, (कष + आयः ।) सुरभिः । (यथा मेघ-

दूते ३३ ।

“प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः” ॥)

लोहितः । इति मेदिनी ॥ (यथा कुमारे ३ । ३२ ।

“चूताङ्कुरास्वादकषायकण्ठः

यिकषातः, त्रि, (कषायो रक्तपीतवर्णादिर्जातोऽस्य ।

कषाय + तारकादित्वात् इतच ।) कृतलोहितः ।

(यथा कुमारे ४ । ३४ ।

“अमुनैव कषायितस्तनी

सुभगेन प्रियगात्रभस्मना” ॥)

**कषायी**, [न्] पुं, (कषायो विद्यते अस्य । कषाय +

इनिः ।) शालवृक्षः । इति जटाधरः ॥ लकुच-

वृक्षः । खर्जूरीवृक्षः । इति राजनिर्घण्टः ॥

**कषिः**, त्रि, (कषति हिनस्ति यः । कष + “खनि

कषि” इत्यादिना इः । उणां ४ । १३९ ।) हिं-

सकः । इत्युणादिकोषः ॥

**कषीका**, स्त्री, (कषतीति । कष + “कषि दुषिभ्यां

ईकन्” । उणां ४ । १६ । इति इकन् + टाप्च ।)

पक्षिजातिः । यदुक्तं उणादिकोषे ॥

“कषीका पक्षिजातौ स्यात् दूषिका नेत्रयोर्म्मले” ॥

**कषेरुका**, स्त्री, (कष + एरक् + ततः उः । संज्ञायां

कन् टाप् च ।) कशेरुका । पृष्ठास्थि । इत्यमर-

टीकायां रायमुकुटः ॥

**कष्टं**, क्ली, (कष्यते इति । कष् + भावे क्तः ।

“कृच्छ्रगहनयोः कषः” । ७ । २ । २२ । इति नेट् ।)

पीडामात्रम् । तत्पर्य्यायः । पीडा २ बाधा ३

व्यथा ४ दुःखम् ५ अमानस्यम् ६ प्रसूतिजम् ७

कृच्छ्रम् ८ आभीलम् ९ । इत्यमरः । १ । ९ ।

३ ॥ आबाधा १० वेदना ११ दुखम् १२ आमा-

नस्यम् १३ । इति तट्टीकायां भरतः ॥ कला-

कलम् १४ । इति वाचस्पतिः ॥ अर्त्तिः १५

आर्त्तिः १६ पीडनम् १७ बाधनम् १८ आम-

नस्यम् १९ विबाधनम् २० विहेठनम् २१ विधा-

नकम् २२ पीडितम् २३ । इति शब्दरत्नावली ॥

क्वाथः २४ अशर्म्म २५ । इति जटाधरः ॥ (यथा

महानिर्व्वाणोक्तात्मज्ञाननिर्ण्ये ।

“कुर्व्वाणः सततं कर्म्म कृत्वा कष्टशतान्यपि ।

तावन्न लभते मोक्षं यावज्ज्ञानं न जायते” ॥)

**कष्टः**, त्रि, (कष्यतेऽसौ । कष् + कर्मणि + क्तः ।) पी-

डायुक्तः । गहनः । इत्यमरमेदिनीकरौ ॥ (यथा

मनुः १२ । ७८ ।

“बन्धनानि च कष्टानि परप्रेष्यत्वमेव च” ॥

अतिकष्टकरम् । विषादादौप्रयोक्तव्यम् । यथा,

महाभारते १ । १ । २१५ ।

“कष्टं ! युद्धे दशशेषाः श्रुता मे ।

त्रयोऽस्माकं पाण्डवानाञ्च सप्त” ॥)

“कषायो रसः संशमनः संग्राही सन्धारणः

पीडनो रोपणः शोषणः स्तम्भनः श्लेष्मरक्तपित्त-
प्रशमनः शरीरक्लेदस्योपयोक्ता रूक्षः शीतो गुरुश्च ।

स एवं गुणोऽप्येक एवात्यर्थमुपयुज्यमानः आस्यं

शोषयति, हृदयं पीडयति, उदरमाध्मापयति, वाचां निगृह्णाति, स्रोतांस्यवबध्नाति, श्यावत्व-मापादयति, पौंस्त्वमुपहन्ति, विष्टभ्य जरां गच्छति, वातमूत्रपुरीषाण्यवगृह्णाति कर्षयति, ग्लापयति, तर्षयति, स्तम्भयति, खरविषद-रूक्षत्वात् पक्षवध-ग्रहापतानकार्द्दितप्रभृतींश्च वातविकारानुपजनयतीति’ ।
“वैषद्यस्तम्भजाड्यैर्यो रसनं योजयेद्रसः ।
बध्नातीवचयः कण्ठं कषायः स विकास्यपि” ॥

पुंस्कोकिलो यन्मधुरं चुकूज” ॥)
रक्तपीतमिश्रितवर्णः । इत्यमरटीकायां स्वामी ॥
धववृक्षः । इति राजनिर्वण्टः ॥

**कषायकृत्**, पुं, (कषायं कषायरागं करोति इति ।

कषाय + कृ + क्विप् तुगागमश्च ॥) रक्तलोध्रः ।
इति जटाधरः ॥

**कषाययावनालः**, पुं, (कषायः रक्तवर्णः यावनालः ।)

तुवरयावनालधान्यम् । इति राजनिर्घण्टः ॥

**कषाया**, स्त्री, (कष + आय टाप् च ।) क्षुद्रदुरा-

लभालता । इति राजनिर्घण्टः ॥ (अस्याः पर्य्यायो-
यथा, -- भावप्रकाशस्य पूर्ब्बखण्डे १ भागे ।
“यासोपवासो दुष्पर्शो धन्वयासः कुनाशकः ।
दुरालभादुरालम्भा सभुद्रान्ता च रोदिनी ॥
गान्धारी कच्छुरानन्ता कषाया हरविग्रहा” ।)

**कष्टकारकः**, पुं, (कष्टं करोति उत्पादयति बन्धक-

त्वात् । कष्ट + कृ + कर्मण्यण् । ततः कन् । कष्टं
करोतीति । कृ + ण्वुल् वा । कष्टस्य कारको वा ।)
संसारः । इति त्रिकाण्डशेषः ॥ पीडाकरे त्रि ॥

**कष्टस्थानं**, क्ली, (कष्टं कष्टकरं स्थानम् ।) दुःखजनक-

स्थानम् । इति हारावली ॥

**कस** ज गतौ । इति कविकल्पद्रुमः ॥ (भ्वां--परं--सकं

--सेट्--ज्वलादिः ।) ज कासः कसः । विपूर्ब्बोऽयं
प्रफुल्लीभावे । तथा च ।
“प्रफुल्लोत्फुल्लसंफुल्लव्याकोषविकचस्फुटाः ।
फुल्लश्चैते विकसिते” इत्यमरः । २ । ४ । ७-८ ।

:विकसित पङ्कजकलिका । इति दुर्गादासः ॥

**कस** इ ल ङ ध्वसे । गतौ । इति कविकल्पद्रुमः ॥

शाते च । (अदां--आत्मं--सकं--सेट् । इदित् ।) इ कंस्यते । ल ङ कंस्ते हरिः कंसम् । चकारात् गतौ च । शात इह ध्वंसना । इति दुर्गादासः ॥

**कस** ल ङ ध्वंसे । गतौ । इति कविकल्पद्रुमः ॥ (अदां--

शाते च । आत्मं--सकं--सेट् ।) ल ङ कस्ते हरिः कंसम् । चकारात् गतौ च । शात इह ध्वंसना । इति दुर्गादासः ॥

**कसः**, पुं, (कसति विकसतीति । कस + अच् । कसति

विकसति स्वर्णादिरत्र वा । कस + आधारे अच् ।)

कषः । इत्यमरटीकायां भरतः ॥ कष्टिपातर इति भाषा । पूर्ब्बोक्तधात्वर्थोऽप्यत्र ॥

(यथा नैषधे २ । ६९ ।

"कसपाषाणनिभे नभस्तले" ॥)

**कसनोत्पाटनः**, पुं, (उत्पाटयतीति उत्पाटनः । उत्

+ पाटि + ल्युः । कसनस्य कासरोगस्य उत्पाटनः नाशकः ।) वासकवृक्षः । इति शब्द-चन्द्रिका ॥

**कसिपुः**, पुं, (कशति शास्ति दुःखम् । कश गति-

शासनयोः निपातनात् सिद्धम् ।) कशिपुः । अन्नम् ।

इति जटाधरः ॥

**कसेरुः**, पुं, (कं शृणातीति शृगिहिंसायां बाहुलका-

दुप्रत्यये प्रकृतेरेरङादेशः । निपातनात् शस्य सत्वम् ।) कशेरुः । केशुर इति भाषा ।

तत्पर्य्यायः ।

गुण्डकन्दः २ क्षुद्रमुस्ता ३ कसेरुका ४ शूकरेष्टः ५ ।

सुगन्धिः ६ सुकन्दः ७ कसेरुकः ८ । अस्य गुणाः ।

कषायत्वम् । अल्पमधुरत्वम् । अतिकटुत्वम् । रक्त

पित्तप्रशमनत्वम् । शीतत्वम् । दाहश्रमापहत्वञ्च ।

इति राजनिर्घण्टः ॥

**कसेरुका**, स्त्री, (कसेरुरेव । स्वार्थे कन् स्त्रियां टाप् ।)

कसेरुः । पृष्ठास्थि । इति राजनिर्घण्टः ॥

**कस्तीरं**, क्ली, रङ्गम् । इति हेमचन्द्रः ॥ (अस्य

पर्य्यायो यथा, -- वैद्यकरत्नमालायाम् ।

मदनी १० गन्धकेलिका ११ वेधमुख्या १२ मा-
र्जारी १३ सुभगा १४ बहुगन्धदा १५ सहस्रवेधी १६ श्यामा १७ कामान्धा १८ मृगाङ्गजा १९ कुरङ्गनाभिः २० ललिता २१ श्यामला २२ मोदिनी २३ कस्तूरिका २४ कस्तुरिका २५ नाभि २६ लता २७ योजनगन्धा २८ मार्गः २९ गन्धबोधिका ३० कालाङ्गी ३१ धूपसञ्चारी ३२ मिश्रा ३३ गन्धपिशाचिका ३४ इति शब्दरत्नावली ॥ अस्या गुणाः । सुरभित्वम् । तिक्तत्वम् । चक्षुर्हितत्वम् । मुखरोगकिलासकफदौर्गन्ध्यबन्धालक्ष्मीमलापह-त्वञ्च । इति राजनिर्घण्टः ॥ रक्तपित्तच्छर्द्दिनाशि-त्वम् । इति राजवल्लभः ॥ तद्भेदाः । खरिका १ तिलका २ कुलत्था ३ पिण्डा ४ नायिका ५ ।

अपि च ।

"कपिला पिङ्गला कृष्णा कस्तूरी त्रिविधा क्रमात् ।

नेपालेऽपि च काश्मीरे कामरूपेऽपि जायते ॥

कामरूपोद्भवा श्रेष्ठा नैपाली मध्यमा भवेत् ।

काश्मीरदेशसम्भूता कस्तूरी ह्यधमा स्मृता" ॥

इति राजनिर्घण्टः ॥ (अस्याः पर्य्यायो गुणा उत्प-त्तिश्च यथा, -- भावप्रकाशस्य पूर्ब्बखण्डे १ भागे ।

"मृगनाभिर्मृगमदः कथितस्तु सहस्रभित् ।

कस्तूरिका च कस्तूरी वेधमुख्या च सा स्मृता ॥

काश्मरीकपिलच्छाया कस्तूरी त्रिविधा स्मृता ।

कामरूपोद्भवा श्रेष्ठा नैपाली मध्यमा भवेत् ॥

कामरूपोद्भवा कृष्णा नैपाली नीलवर्णयुक् ।

काश्मीरदेशसम्भूता कस्तूरीह्यधमा मता ॥

कस्तूरिका कटुस्तिक्ता क्षारोष्णा शुक्रला गुरुः ।

कफवातविषच्छर्द्दिशीतदौर्गन्ध्यशोषहृत्" ॥)

**कस्तूरीमल्लिका**, स्त्री, (कस्तूरीगन्धयुक्ता मल्लिका ।)

मृगमदवासा । इति राजनिर्घण्टः ॥

**कस्मलं**, क्ली, (कश गतिशातनयोः + कल + सुट् च ।

निपातनात् शस्य सः ।) कश्मलम् । मोहः । इत्य-मरटीकायां रायमुकुटः ॥

**कह्लारं**, क्ली, (कस्य जलस्य हार इव के जले ह्लादते

वा इति । क + ह्लाद + पचाद्यच् पृषोदरादि-त्वात् साधुः ।) श्वेतोत्पलम् । सुँदि इति भाषा । तत्पर्य्यायः । सौगन्धिकम् २ । इत्यमरः १ । १० । ३६ ॥ (कत्तृणम् ३ । गन्धकञ्च ४ । इति भाव-प्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥ यथा, भागवते ४ । ६ । १८ ।

"कुमुदोत्पलकह्लारशतपत्रवनर्द्धिभिः" ॥)

तत्पुष्पगुणाः । कषायत्वम् । मधुरत्वम् । शीतत्वम् । पित्तकफरक्तनाशित्वञ्च । इति राजवल्लभः ॥

४ । इति त्रिकाण्डशेषः ॥ सौराष्ट्रकम् ५ घोषम् ६

कांसीयम् ७ वह्निलोहकम् ८ दीप्तिलोहम् ९ घोरघुष्यम् १० दीप्तिकांस्यम् ११ कास्यम् १२ ।

अस्य गुणाः तिक्तत्वम् । उष्णत्वम् । चक्षुर्हितका-

रित्वम् । वातकफविकारनाशित्वम् ।

रूक्षत्वम् ।

कषायत्वम् रुचिकारित्वम् । लघुत्वम् ।

दीपनत्वम् ।

पाचनत्वम् । पथ्यत्वञ्च । इति राजनिर्घण्टः ॥ अम्ल-

रसत्वम् । विशदत्वम् । लेखनत्वम् ।

सारकत्वम् ।

पित्तनाशित्वम् इति राजवल्लभः ॥

दृढदेहायुर्वृद्धि-

कारित्वम् । इति सुखबोधः ॥

("उपधातुर्भवेत् कांस्यं द्वयोस्तरणिरङ्गयोः ।

कांस्यस्य तु गुणा ज्ञेयाः स्वयोनिसदृशा जनैः ।

संयोगजप्रभावेण तस्यान्येऽपि गुणाः स्मृताः ॥

कांस्यङ्कषायन्तिक्तोष्णं लेखनं विशदं सरम् ।

गुरुनेत्रहितं रूक्षं कफपित्तहरम्परम्" ॥

इति भांवप्रकाशस्य पूर्ब्बखण्डे १ भागे ॥)

तत्शोधनमारणमाह ।

"अनेनैव विधानेन कांस्यं विड्गन्धलेपितम् ।

मारयेद्बुद्धिमान् तैद्यो मृतं भवति चूर्णवत्" ॥

अन्यच्च ।

"द्विक्षारं पञ्चलवणं सप्तधाम्लेन भावयेत् ।

कांस्यारकुटपत्राणि तेन कल्केन लेपयेत् ।

बद्ध्वा गजपुटे पच्याच्छुद्धिमायाति नान्यथा" ॥

अन्यच्च ।

"ताम्रवच्छोधन कृत्वा ताम्रवन्मारयेद्बुधः" ॥

अन्यच्च ।

"कज्वलीं तत्समां दत्त्वा मर्द्दयेन्निम्बुकद्रवैः ।

एवं पुटत्रयेणैव निरुत्थं भस्म जायते" ॥

इति सुखबोधः ॥

**कांस्यकारः**, पुं, (कांस्यं तत्पात्रम् करोतीति । कांस्य

+ कृ + अण् ।) कंसकारः । इति जटाधरः । काँ-

सारि इति भाषा ॥

"रङ्गं वङ्गञ्च कस्तीरं मृद्वङ्गं पुत्त्रपिच्चठम्" ॥)

**कस्तुरिका**, स्त्री, (कसति गन्धोऽस्याः दूरतः । कस + ऊर । तुट् च । स्वार्थे कन् टाप् च पृषोदरादित्वात् साधुः ।) कस्तूरी । इति भूरिप्रयोगः ॥

**कस्तूरिका**, स्त्री, (कस्तूरी + स्वार्थे कन् टाप् पृषोदरादित्वात् साधुः ।) कस्तूरी । इति रत्नमाला ॥ (यथा, माघे । ४ । ६१ ।
"कस्तूरिकामृगविमर्द्दसुगन्धिरेति" ॥
अस्या गुणादयः कस्तूरीशब्दे ज्ञातव्याः । वैद्यकरसेन्द्रसारसंग्रहे वृहज्जवरचूडामणिरसे अस्याः प्रयोगो यथा "कस्तूरिकाविद्रुमरौप्यलौहं" ।
इत्यादि ॥)

**कस्तूरी**, स्त्री, (कसति गन्धोऽस्याः । कस + खर्ज्जूरादित्वात् ऊरः । ङीप्तुटि पृषोदरादित्वात् साधुः ।) मृगस्य नाभौजातसुगन्धिद्रव्यम् । तत्पर्य्यायः ।
मृगनाभिः २ मृगमदः ३ । इत्यमरः । २ । ६ ।
१२९ ।
मृगः ४ मृगी ५ नाभिः ६ मदः ७ । इति भरतः ॥
वातामोदः ८ योजनगन्धिका ९ । इति रभसः ॥

**कह्वः**, पुं, (के जले ह्वयति शब्दायते स्पर्द्धते वा । क + ह्वे + कः ।) वकपक्षी । इत्यमरः ॥ २ । ५ । २२ ॥

**कांसीयं**, क्ली, (कंसस्य विकारः इति च्छः ।) कांस्यम् ।
इति राजनिर्घण्टः ॥

**कांस्यं**, क्ली, (कंसाय पानपात्राय हितं कंसीयं तस्य विकारः इति । "कंसीयपरिसव्ययोरिति" । ४ । ३ ।
१६८ यञ् छस्य लुक् च । यद्वा कंसमेव इति स्वार्थे यञ् प्रत्ययः ।) ताम्ररङ्गमिश्रितधातुः । काँसा इति भाषा । तत्पर्य्यायः । कंसम् २ कंसास्थि ३ ताम्रार्द्धम्

**कांस्यनीलः**, पुं, (कांसेन कृतः नीलः ।) अञ्जनभेदः ।
नीलतुत्थम् । तत्पर्य्यायः । मूषातुत्थम् २ हेम-
तारम् ३ वितुन्नकम् ४ इति हेमचन्द्रः ॥ (कांस्यो-
द्भवाञ्जनवन्नीलः इति विग्रहे वाच्यलिङ्गत्वम् । यथा,
गोः रामायणे ४ । ३९ । २३ ।
"कांस्यनीलो हरिर्नीलः कोटिभिर्दशभिर्वृतः" ॥
क्वचित् कांश्यनील इति पाठः ॥)

**काकं**, क्ली, सुरतवन्धः । (काकस्य समूहः इति सङ्घार्थे अण् ।) काकसमूहः । इति मेदीनी ॥
(ईषत्कं जलम् कोः कादेशः । ईषज्जलम् । इति
व्याकरणम् ॥)

**काकः**, पुं, (कायते शब्दायते । कै शब्दे "इण्भीका-
पाशल्यतिमर्च्चिभ्यः कन्" । उणां ३ । ४३ । इति
कन् ।) स्वनामख्यातपक्षिविशेषः । काग् इति
भाषा । तत्पर्य्यायः । करटः २ अरिष्टः ३ बलि-
पुष्टः ४ सकृत्प्रजः ५ ध्माङ्क्षः ६ आत्मघोषः ७
परभृत् ८ बलिभुक् ९ वायसः १० । इत्यमरः
। २ । ५ । २० ॥ वातजवः ११ बलः १२ दीर्घायुः १३
सूचकः १४ कृष्णः १५ ग्रामीणः १६ पिशुनः १७
कटखादकः १८ द्विकः १९ कागः २० । इति

:जटाधरः ॥ काणः २१ धूलिजङ्घः २२ निमित्त-

कृत् २३ कौशिकारिः २४ चिरायुः २५ मुखरः
२६ खरः २७ महालोलः २८ चिरञ्जीवी २९
चलाचलः ३० करटकः ३१ नागवीरकः ३२
गाढ-
मैथुनः ३३ लुण्टाकः ३४ श्रावकः ३५ रत-
ज्वरः ३६ । इति शब्दरत्नावली ॥ * ॥ अस्य
शाकुनं काकचरित्रम् । तद्यथा ।
“अथोच्यते काकरुतं रुतानां
मूर्द्धिन स्थितं शाकुनभाषितानाम् ।
अचिन्तितावेदितकार्य्यसिद्धिं
पूर्ब्बादिकाष्ठाप्रहरक्रमेण ॥
ये ब्राह्मणक्षत्रियवैश्यशूद्राः
काका भवन्त्यन्त्यजपञ्चमास्ते ।
वर्णाकृतिभ्यां ऋषिभाषिताभ्यां
सदाभियुक्तैरुपलक्षणीयाः ॥
वृहत्प्रमाणो गुरुदीर्घतुण्डो
दृढस्वरः कृष्णवपुः स विप्रः ।
पिङ्गाक्षनीलाक्षविमिश्रवर्णः
स्यात् क्षत्रियस्तीक्ष्णरवोऽतिशूरः ॥
यः पाण्डुनीलः सितनीलचञ्चु-
र्नात्यर्थरूढो रटितश्च तैश्यः ।
भस्मच्छविर्भूरिककारशब्दः
शूद्रः कृशाङ्गश्चपलो निरूक्षः ॥
विरूक्षसूक्ष्मास्यतनुर्व्विशङ्को
यः कन्धरादीप्तनवं बिभर्त्ति ।
स्थिरारवः स्थैर्य्यसमेतबुद्धिः
काकोऽन्त्यजातिः खलु पञ्चमोऽत्र ॥
द्रोणाभिधः कृष्णवपुर्द्विजो यो
ग्राह्यः स काकः खलु मुख्यवृत्त्या ।
तस्मादृते श्यामगलो निरीक्ष्यः
श्वेतश्च निन्द्योऽद्भुतदर्शनोऽसौ ॥
विप्रः स्फूटे जल्पति पृच्छ्यमाने
न्यूनं ततः क्षत्रियजातिराहुः ।
आख्यातिवैश्यस्त्वधिवासनेन
ब्रवीति शूद्रो बलिदानलोभात् ॥
प्रश्नं कृतं जल्पति कृष्णवर्णः
सदा समस्तं विहगोऽन्त्यजातिः ।
सद्यस्त्रिसप्ताहदशाहपक्षैः
पञ्चापि काकाः फलदाः क्रमेण ॥
शान्ते प्रदीप्ते च रटन् विहङ्गः
शुभप्रदो दीप्तपराङ्मुखः सन् ।
न क्वापि रौद्रो रटितः प्रशस्तः
सव्वत्र शस्तो मधुरश्च रक्तः ॥
दीप्तस्थितो यः परुषस्वरेण

ततः प्रशान्ताभिमुखो विरौति ।
यो वायसोऽसौ विनिहन्त्यसम्यक्
कार्य्याणि सर्व्वाणि पुनः करोति ॥
सूर्य्योदये पूर्ब्बदिशि प्रशस्त-
स्थाने स्थितो योऽभिमुखं विरौति ।
नाशं रिपोश्चिन्तितकार्य्यसिद्धिं
स्त्रीरत्नलाभं स करोति काकः ॥
ध्माङ्क्षः प्रभाते यदि वह्निभागे
विरौति तिष्ठन् रमणीयदेशे ।
शत्रून् प्रणश्यत्यचिराद्विशङ्कः
प्रयाति योषित्समवाप्यते तत् ॥
रुवन् प्रभाते दिशि दक्षिणस्यां
काकः समावेदयतेऽतिदुःखम् ।
रोगार्त्तिमृत्युं परुषखरेण
रम्येण चेष्टागमयोषिदाप्तिम् ॥
नैरृत्यभागे यदि च प्रभाते
करोति काकः सहसा विरावम् ।
क्रूरं ततः कर्म्म समभ्युपैति
दूतागमो मध्यमिका च सिद्धिः ॥
प्रातः प्रतीच्यां यदि रौति काको
ध्रुवं तदा वर्षति वारिवाहः ।
स्त्रीवस्त्रभूभृत्पुरुषागमश्च
कलिः कलत्रेण समं तदा स्यात् ॥
ध्माङ्क्षस्य शब्दे पवनालयस्थे
वस्त्रान्नयानाभिमतागमाःस्युः ।
पान्थागमः प्राक्तनवृत्तिनाशः
स्यादन्यदेशे गमनं स्वदेशात् ॥
दिश्युत्तरस्यां सुरवः प्रभाते
निरीक्षमाणो बलिभुग् नराणाम् ।
ददाति दुःखं भुजगाच्च भीतिं
दरिद्रतां नष्टधनेष्टलाभम् ॥
दिशीशवत्यां यदि रौति काक
आगच्छतस्तद्वनितान्त्यजाती ।
व्याधेर्निमित्तं प्रियवस्त्रलाभो
भतेत्तदा रोगबलेऽवसानम् ॥
ब्रह्मप्रदेशे स्थितवायसस्य
प्रभातकाले मधुरस्वरेण ।
अभीप्सितार्थागमनं ध्रुवं स्यात्
स्वामिप्रसादो द्रविणस्य लाभः” ॥
ति वसन्तराजे दिक्प्रहरे सूर्य्योदयः ॥ * ॥
“पूर्ब्बत्र यामे प्रथमे सशब्दः
काको भवेच्चिन्तितकार्य्यसिद्ध्यै ।
अभीष्टलोकागमनं तथास्या-
न्नष्टार्थलाभो नियतं नराणाम् ॥
आग्नेयभागे यदि चाद्ययामे

वायव्यकोणे करटः शुभः स्यात्
नृपप्रसादोऽध्वगदर्शनं च ।
सौम्येच भीस्तस्करशोकवार्त्ता
सौम्या च वार्त्ता धनलाभवार्त्ता ॥
ईशानदेशेऽभिमतेन शंस-
स्त्रासो हुताशाद् बहुलोकसङ्गः ।
ब्रह्मप्रदेशे सुखकामभोगः
सम्मानसम्पद्द्रविणाष्टसिद्धिः” ॥
इति प्रथम प्रहरः ॥ * ॥
“प्राच्यां द्वितीये प्रहरे विरावैः
काकस्य कश्चित् पथिकोऽभ्युपैति ।
चैराद्भयं व्याकुलता च बह्वी
जायेत काचिन्महती च शङ्का ॥
हुताशदेशे नियतं कलिः स्यात्
प्रियागमाकर्णनयोषिदाप्तिः ।
याम्ये तु वृष्टिर्महती च भीतिः
प्रियस्य चेष्टस्य समागमः स्यात् ॥
रक्षोदिशि प्राणभयं तदा स्युः
स्त्रीभोज्यलाभाखिलरुक्प्रणाशाः ।
भवेत् प्रतीच्यां प्रबलाबलाप्ति-
र्योषागमो वृद्धि कुवर्षणञ्च ॥
समीरभागे ध्वजचौरसङ्गो
दूतागमस्त्रीपिशितान्नलाभः ।
सौम्ये गणेष्टागमनं जयञ्च
रम्ये रवे चैरभयं त्वरण्ये ॥
महेश्वराशाविरुतश्चकाक-
श्चौराग्निसन्त्रासविरुद्धवार्त्ताः ।
ब्रवीति रूक्षैरटनैररूक्षैः
सदार्य्यगुर्व्वागमनं जयञ्च ॥
ब्रह्मप्रदेशे प्रहरे द्वितीये
काकः सुशब्दो नृपतिप्रसादम् ।
मिष्टान्नभोज्यञ्च ददाति पुंसां
करोत्यसौ चौरभयं कुशब्दः” ॥
इति द्वितीयप्रहरः ॥ * ॥
“ऐन्द्र्यां विरूक्षः प्रहरे तृतीये
वृद्धिं तथा चौरभयं ब्रवीति ।
कृष्णस्तु राजागमनं जयञ्च
करोति यात्रां शुभकार्य्यसिद्धिम् ॥
अग्नेर्विभागेऽग्निभयं कलिश्च
विरुद्धवार्त्ता विफला च यात्रा ।
भवेद्विरुद्धैर्ब्बलिभुग्विरावै-
र्जयादिवार्त्ता च भवेद्विशुद्धिः ॥
काकुभ्यवाच्यां कुरुतेऽतितूर्णं
रोगं तथाप्तागमनं विहङ्गः ।
क्षुद्राणि कार्य्याणि च यान्ति सिद्धिं

| | | |
|---|---|---|
| विरौति दीप्ताभिमुखः स कार्य्यम् ।<br>निष्पाद्य निर्नाशयते च सम्य-<br>ग्दीप्तोन्मखः शान्तरवो हि सिद्ध्यै ॥<br>शान्तप्रदीप्ताभिमुखो विधाय<br>शब्दं प्रविश्याथ पुनः प्रदीप्तम् ।<br>यो रौति काको मधुरस्वरेण<br>हृत्वा विरुद्धं स ददाति सिद्धिम् ॥<br>विधाय दीप्ताभिमुखो विरावं | स्त्रीलाभविद्वेषिवधौ भवेताम् ।<br>कृतान्तभागे बलिभुग् विरावः<br>स्त्रीलाभसौ ख्यप्रियसङ्गकारी ॥<br>नैरृत्यकोणे प्रिययोषिदाप्ति-<br>र्म्मिष्टाशनं सिध्यति चिन्तितोऽर्थः ।<br>दिशि प्रतीच्यां विरुते भवेता-<br>मभ्यर्थनीयागमनाम्बुष्टष्टी ॥ | सर्व्वाणि तन्मुख्यतया नराणाम् ॥<br>क्रव्याददेशे जलदागमः स्या-<br>न्मिष्टान्नलाभो रिपवो न सन्ति ।<br>शूद्रागमः स्वामिविरुद्धवार्त्ता<br>भवन्ति यात्रासु च कार्य्यनाशः ॥<br>स्यात् पश्चिमे नष्टधनस्य लाभो<br>दूराध्वयानं सुहृदागमश्च । |

:योषागमोऽभीष्टजयादिवार्त्ता

यात्रासु रम्ये रटितेऽर्थसिद्धिः ॥
वातालये दुर्दिनमेव वार्त्ता
चौराभिनष्टार्थसमागमश्च ।
सन्तोषवार्त्ता वरयोषिदाप्ति-
र्यात्रा रवे स्यान्मधुरे प्रशस्ता ॥
यामे तृतीये विरुवन्त्युदीच्यां
कार्य्यार्थलाभो नृपसेवकानाम् ।
भोज्यप्रवृद्ध्यै शुभदा च वार्त्ता
प्रयाणकं वैश्यसमागमश्च ॥
दिश्यन्धकारेः कुरुते सुशब्दं
भोज्यं जयं हानिकली कुशब्दम् ।
ब्रह्मप्रदेशे तिलतण्डुलाभ्यां
भोज्यं च ताम्बूलयुतं ददाति" ॥
इति तृतीयप्रहरः ॥ * ॥
ऐन्द्र्यां तुरीयप्रहरेऽर्थलाभो
भूमीशपूजाभयवृद्धिरोगाः।
वह्नेर्व्विभागे भयरोगमृत्युः
शिष्टागमो वायसरासितेन ॥
याम्ये रवे तस्करवैरिभीती
स्यातां विशिष्टागमरोगमृत्युः ।
स्यात् यातुधान्यां महती प्रवृद्धि-
रभीष्टसिद्धिः पथि चैरयुद्धम् ॥
दिशि प्रतीच्यां प्रहरे चतुर्थे
द्विजातिरभ्येति ततोऽर्थलाभः ।
आयाति योषिद्विजयाम्बुवृष्टिः
सिद्धिः प्रयाणे नृपतेर्व्वरश्च ॥
वायव्यभागे करटस्य शब्दै-
रायाति योषित् प्रियमानिनी या ।
ध्रुवं प्रवासो दिनसप्तकेन
शीघ्रागमः स्यात् गमने कृते च ॥
कुवेरभागे पथिकोऽभ्युपैति
ताम्बूललाभः कुशलस्य वार्त्ता ।
वैश्याद्धनाप्तिस्तुरगादिरूढा
यात्राविरुद्धे म्रियते च रोगी ॥
स्थाणौ स्थितश्चेद् बलिभुग् विरौति
सुवर्णवार्त्ता सरुजो विनाशः ।
ब्रह्मप्रदेशे प्रहरे चतुर्थे
वार्त्ता भवेन्मध्यमिका च सिद्धिः" ॥
इति चतुर्थप्रहरः ॥ * ॥
"यद्भाषितं शाकुनिकैर्व्विमिश्रं
शुभाशुभं दिक्प्रहरक्रमेण ।
तत्राशुभं यच्छति दीप्तशब्दः
श्रेयस्करः शान्तरवश्च काकः ॥
रम्यं रवं दीप्तदिशि प्रसर्पन्

काकः प्रशान्ताभिमुखोऽतितुच्छं
दीप्ताश्रितो दुष्टफलं ददाति ।
शाखाश्रितः शान्तदिगोक्षणेन
रूक्षारवोऽल्पं कथयत्यनिष्टम् ॥
शान्तस्वरः शान्तककुप्प्रदेशे
तिष्ठन् प्रदोप्तां ककुभञ्च पश्यन् ।
ददात्यभीष्टं फलमेवमल्पं
दीप्तां स पश्यंस्तु तदेव तूर्णम् ॥
आकारचेष्टारवभागविज्ञा-
श्चत्वारि काष्ठादिनयोः क्रमेण ।
सदाभियुक्ताश्च निरूपयन्ति
यस्माच्च ते काकरुतं मनुष्याः" ॥
इति काकरुते दिक्चक्रप्रकरणम् ॥ * ॥
"वर्षाकालमधिकृत्य किञ्चन
प्रोच्यते बलिभुजो यथाक्रमात् ।
आलपाण्डकविचारसुन्दरं
शाकुनं सकलशाकुनोत्तमम् ॥
वैशाखमासे निरुपद्रवेषु
द्रुमेषु काकस्य शुभाय नीडम् ।
निन्द्येषु शुष्केषु सकण्टकेषु
द्रुमेषु दुर्भिक्षप्रयायहेतुः ॥
प्रशस्तवृक्षे यदि पूर्ब्बशाखा-
माश्रित्य काकेन कृतं कुलायम् ।
तद्वृष्टिरिष्टाशकुनप्रमोदो
नीरोगता स्याद्विजयश्च राज्ञः ॥
आग्नेयशाखारचिते च नीडे
स्याद्वृष्टिरिष्टास्ति भयं कलिश्च ।
दुर्भिक्षशत्रूद्भवदेशभङ्गो
भवन्ति रोगाश्च चतुष्पदानाम् ॥
याम्यासु शाखासु च वायसेन
नीडे कृतेऽल्पं जलपातमाहुः ।
व्याधिप्रकोपं मरणं समन्ता-
दन्नक्षयं शत्रुविरोधिताञ्च ॥
नैरृत्यशाखारचिते च नीडे
यस्माच्छनैर्व्वर्षति वर्षकाले ।
पीडा नृणां विध्वरचौरभीति-
दुर्भिक्षयुद्धानि भवन्त्यवश्यम् ॥
नीडे कृते पश्चिमवृक्षशाखा-
माश्रित्य काकैः कथिता च वृष्टिः ।
नीरोगताक्षेमसुभिक्षवृद्धि-
सम्पत्प्रमोदाश्च भवन्ति लोके ॥
वायव्यशाखासु कृते च नीडे
प्रभूतवाताल्पजलाश्चमेघाः ।
स्युर्मूषिकोपद्रवशस्यनाश-
पक्षद्वयोद्वेगमहाविरोधाः ॥

र्म्मर्य्यादया हीयत एष लोकः ॥
वृक्षाग्रनीडे त्वतिवर्षकाले
मध्ये पुनर्मध्यमतोयपातः ।
तुच्छापि वृष्टिर्न प्रवत्यधस्तात्
स्फुटं दिशोक्तं न दिशः स्फुटत्वम् ॥
अवृष्टिरोगादिभयादिवृद्धिं
विद्याच्च भूमौ बलिमुक्कुलाये ।
शुष्के च वृक्षे डमरान्ननाशौ
प्राकार रन्ध्रेषु भयं प्रभूतम् ॥
निम्नप्रदेशे तरुकोटरे वा
वल्मीकरन्ध्रे व्रततिष्वपीह ।
काकस्य नीडे रुगवृष्टिदोषै-
र्भवन्ति शून्या नियमेन देशाः" ॥
इति वसन्तराजे काकरुतप्रकरणम् ॥ * ॥
अथकाकाण्डविचारः ।
"एकं भवेद्वारुणमग्निसंज्ञं
द्वितीयकं मारुतकं तृतीयम् ।
ऐन्द्रं तथा नाम चतुर्थमेव-
मण्डानि काक्याः परिकीर्त्तितानि ॥
काक्या भवेद्वारुणमण्डकं चेत्
पृथ्वी तदा नन्दति सर्व्वशस्यैः ।
मन्दप्रवर्षोऽनलसंज्ञकेऽण्डे
नोप्तस्य वीजस्य भवेत् प्ररोहः ॥
जातानि शस्यानि समीरणेऽण्डे
खादन्ति कीटाः शलभाः शुकाद्याः ।
क्षेमं सुभिक्षं सुखिता धरित्री
स्यादैन्द्रजेऽण्डेऽभिमता च सिद्धिः" ॥
इत्यण्डप्रकरणम् ॥ * ॥
"यात्रा निमित्तानि च कीर्त्तयामः
सकृत्प्रजानां शकुनानि तानि ।
विज्ञाय यानि प्रजहात्यनर्था-
नर्थांश्च सर्व्वान् कुरुतेऽध्वनीनः ॥
भुङ्क्ष्व बलिं पक्षिषु मन्त्रपूतं
त्वं प्राणिषु प्राणिषि वर्षलक्षम् ।
गुप्तेन च स्त्रीं भजसे नमोऽस्तु
तुभ्यं खगेन्द्राय सकृत्प्रजाय ॥
विलोक्य काकं विनिवेद्य तस्मै
मन्त्रेण पूजां दधिभक्तयुक्ताम् ।
उदीर्य्य कार्य्यं निजमध्वगेन
विलोकनीयं शकुनं तदर्थम् ॥
वामेन शब्दं मधुरं विमुञ्चन्
व्रजंस्त्ववामेन करोति काकः ।
सर्व्वार्थसिद्धिं पुनरागमञ्च
शुभप्रदेशे तु तदन्यरूपः ॥
प्रदक्षिणं संप्रविधाय माग

| | | |
|---|---|---|
| शान्तां दिशं भूरि फलं ददाति ।<br>तदैव तुच्छं वितरत्यसौ वै<br>दीप्तस्थितः पश्यति दीप्तकाष्ठाम् ॥<br>यथोपदिष्टं फलमत्र दुष्टं<br>तथैव तद्दीप्तदिशि स्थितः सन् ।<br>ध्वाङ्क्षोऽधिरूढो विरुवन् करोति<br>निरीक्षमाणः ककुभं प्रदीप्ताम् ॥ | कौवेरशाखामधिकृत्य नीडे<br>कृते भवेत् प्रावृषि वृष्टिरिष्टा ।<br>भवन्ति च क्षेमसुभिक्षसौख्य-<br>नीरोगतावृद्धिसमृद्धयोऽस्मिन्॥<br>ईशानशाखासु च वृष्टिरल्पा<br>वैरं प्रजानामुपसर्गदोषः ।<br>स्याद्बान्धवानां कलहप्रवृत्ति- | वामेन काको विनिवर्त्ततेऽसौ ।<br>यातुः करोतीहितकार्य्यसिद्धिं<br>क्षेमञ्च शीघ्रं पुनरागमञ्च ॥<br>वामे कलं रौत्यनुलोमयायी<br>यो वायसोऽसौ सकलार्थसिद्ध्यै<br>स्यातां क्रमाद्दक्षिणवामशब्दौ<br>सिद्ध्यै विरुद्धौ विपरीतभूतौ ॥ |

:पृष्ठे विरावं मधुरं विमुञ्च-
न्ननुव्रजंश्चापि मतो हिताय ।
प्रायेण यातारमनुव्रजन्तः
सर्व्वेऽपि काकैः कथिता विहङ्गाः ॥
कृत्वा रवं यः पुरतः प्रयाति
उपस्थितो यो मुदमादधाति ।
कण्डूयते यः स्वशिरोऽङ्घ्रिणासौ
पुंसां तदाभीष्टफलं ददाति ॥
स्तम्भे गजानां नियतं गजाप्तिं
गजेऽधिरूढः पृथिवीपतित्वम् ।
तुरङ्गमे वाहनभूमिलाभं
करोति काको विजयं ध्वजेन ॥
प्रणष्टलाभं विजयं च कूपे
क्षिप्रं नदीरोधसि कार्य्यसिद्धिम् ।
पूर्णे घटेन्द्रे च धनाप्तिवृद्धिं
ध्वाङ्क्षोऽधिरूढः कुरुते सशब्दः ॥
प्रासादधान्योच्छ्र्यहर्म्म्यपृष्ठ-
निष्पन्नशस्यावनिशाद्वलादौ।
ध्वाङ्क्षोऽधिरूढो धनसाधनाय
रौति श्रियं यच्छति युग्मरावः ॥
पृष्ठे पुरो वा यदि गोमयस्थो
तथा वटाद्येषु तरुष्वपीह ।
स्थितो रुवन् भोजनपानमिष्टं
विष्ठां च कुर्व्वन् वितरत्यवश्यम् ॥
अन्नाद्यविष्ठाफलमूलपुष्प-
मत्स्यादिभिः पूर्णमुखः सदैव ।
संदृष्टमात्रोऽभिमतार्थसिद्ध्यै
मिष्टान्नभोज्याय सदैव काकः ॥
नारीशिरःपूर्णघटस्थितस्य
काकस्य शब्दैर्व्वनिताधनाप्तिः ॥
शय्याधिरूढस्य च तस्य शब्दैः
समागमः स्यात् सुजनेन सार्द्धम् ॥
गोपृष्ठदूर्व्वातरुगोमयेषु
तुण्डानि घर्षन्नवलोकिताग्रे ।
आहारमन्यस्य तथा ददानो
ददाति भोज्यं बलिभुग्विचित्रम् ॥
धान्यं यवं वा दधि वापि चाज्यं
विरौति पश्यन्निधिलामकारी ।
करोति लाभं पुरतः स दृष्टो
यस्यास्ति वक्त्रे तृणमप्यशुष्कम् ॥
वृक्षेषु रम्याङ्कुरपत्रपुष्प-
च्छायाफलाढ्येषु सकृत्प्रजस्य ।
शब्देन सिध्यन्त्यसकृन्नराणां
सदैव सर्व्वाणि समीहितानि ॥
प्रशान्तनादः शिखरे तरूणां
सद्यो ज्वरं सैरिभपृष्ठसंस्थो
मृताङ्गसंस्थो मरणं करोति ।
कार्य्यक्षतिं रिक्तघटस्य संस्थः
काकः कलिं काष्ठमधिष्ठितश्च ॥
यो दक्षिणं कूजति दक्षिणेन
प्रयाति यश्चाभिमुखोऽभ्युपैति ।
यो याति पृष्ठे प्रतिलोमगत्या
कृतारवः पातयते स रक्तम् ॥
वामे रवो दक्षिणतस्ततो यः
सोऽनर्थहेतुर्ब्बलिभोजनस्य ।
वामप्रदेशे प्रतिलोमयानं
विघ्नाय लाभो गृह एव तेन ॥
प्रयाति पृष्ठे यदि दक्षिणेन
कृतारवस्तद्रुधिरं पुरः स्यात् ।
वल्लीवरत्रादि च यो गृहीत्वा
प्रदक्षिणं याति स सर्पभीत्यै ॥
गोपुच्छवल्मीककृतास्पदश्च
रुवन् भवेत् सर्पविलोकनाय ।
स्यान्मृत्यवेऽङ्गारचितास्थिसंस्थः
काकः प्रकुर्व्वन् करचर्व्वणं च ॥
रुवन् पुरो हानिरुजौ करोति
मृत्युं पुनर्निष्ठुरपृष्ठशब्दः ।
प्रसार्य्य रिक्तं वदनं य आस्ते
सर्व्वत्र निन्द्यो बलिभोजनोऽसौ ॥
वामोऽप्यसृग्यातभयं मृतिं वा
संताडयित्वा रसचर्म्मखण्डम् ।
चञ्चास्थिभङ्गं ध्रुवमस्थिभङ्ग-
बन्धे वधं जल्पति युध्यमानः ॥
वामोऽपि रोगं कुरुते विशुष्के
तिक्तेऽपि वृक्षे कलिकार्य्यनाशौ ।
पक्षौ विधुन्वन् विरुवंश्च रूक्षं
सकण्टके मृत्युमुपाददाति ॥
वधो भवेद्भूरुहभग्नशाखे
बन्धो लताभिः परिवेष्टिते स्यात् ।
रम्ये तरौ कण्टकयुक्तवृक्षे
सदा भवेतां कलिकार्य्यसिद्धी ॥
छन्नाधिरूढो न रवेण यायात्
प्रयाति चेत् स्यात् खलु रक्तपातः ।
अवस्करं भूस्तृणकाष्ठकूप-
भस्मादिसंस्थो विनिहन्ति कार्य्यम् ॥
वल्लीवरत्राकचशुष्ककाष्ठ-
चर्म्मास्थिजीर्णाम्बरबल्कलानि।
अङ्गाररक्तोत्पलकर्पराणि
दृष्टानि चेत् काकमुखे तदानीम् ॥
पुण्यक्षयः पापसमागमश्च
सङ्कोचितैकाङ्घ्रिरुपेतवित्तो
दीप्तस्वरो भास्करमीक्षते च ।
काष्ठादिकं कुट्टयतेऽथवा यो
युद्धाधिकानर्थकरः खगोऽसौ ॥
तुण्डेन पिच्छं विलिखन् रवेण
यो रौति तूर्णञ्च निरीक्षते कम् ।
एकेन पादेन तथोपविष्टो
ब्रूते स बन्धं पुरतो जनस्य ॥
विङ्गोमयौ न्यस्यति यस्य मूर्द्ध्नि
तस्यानलत्रासरुजौ भवेताम् ।
यस्यास्थिखण्डं विसृजत्यसौ तु
प्रयाति तूर्णं नगरीं यमस्य ॥
ब्रह्मप्रदेशे विरुवन् यियासोः
कलत्रदोषं जनयत्यवश्यम् ।
मनुष्यमातङ्गतुरङ्गमाणां
शिरोऽधिरूढो निधनाय तेषाम् ॥
नदीतटे वाथ रटन्नटव्यां
खरस्वरो व्याघ्रभयाय गन्तुः ।
नैवातुरः क्वापिं मतो हिताय
न दुष्टचेष्टो वितनोति शान्तिम् ॥
यात्रोद्यमे सैन्यवधाय काको
दृष्टो रथे साश्वनृमस्तकेषु ।
आयाति यस्याभिमुखो बलस्य
युद्धोद्यमे तस्य पराजयः स्यात् ॥
सगृध्रकङ्कैः कटके नृपस्य
काकैः प्रविष्टैः पिशितं विनापि ।
संयुध्यमानैररिभिः समं स्या-
न्महाहवः सन्धिरयुध्यमानैः ॥
चिह्नध्वजच्छन्नकृताधिरोहः
समुद्यतं शत्रुबलं प्रपश्यन् ।
आजौ जयं जल्पंति भूमिपानां
कृतध्वनिः क्षीरतरौ च काकः ॥
गतिस्वरौ वायससंप्रयुक्तौ
प्राच्यां फलायोदितवैपरीत्यात् ।
एवं जनोऽप्याचरति प्रभूतौ
यथोदितं तत्र तथागमार्थम् ॥
दिग्यामचक्रेऽपि शुभाशुभानि
फलानि यानि प्रतिपादितानि ।
प्रतिष्ठमानस्य भवन्ति यानि
तथाविधानीति वदन्ति तज्ज्ञाः” ॥
इति काकरुते यात्राप्रकरणम् ॥ * ॥
“स्थानस्थितानां कथयन्ति काका-
श्चेष्टाविशेषेण शुभाशुभानि ।
प्रबोधिताः प्राक्तनकर्म्मभिर्ये
तल्लक्षणाय क्रियते प्रयत्नः ॥

स्त्रीसङ्गसौख्यं करटोऽभिधत्ते ।
धान्यादिकूटेषु तथान्नलाभो
गोपृष्ठगो गोवनिताधनाप्तिम् ॥
क्षेमं विधत्ते करभस्य पृष्ठे
खरस्य पृष्ठेऽरिभयं वधञ्च ।
क्रोडस्य पृष्ठे वधमर्थलाभं
तस्यैव पृष्ठे घनलग्नपङ्के ॥

महद्भयं रोगसमुद्भवश्च ।
बन्धो वधः सर्व्वधनापहार
इत्यादिकं स्यात् पथि मन्दिरे च ॥
ऊद्ध्र्वाननश्चञ्चलपक्षयुग्मः
काकः कुनादो विदधाति मृत्युम् ।
छायायुधच्छत्रघटास्थियान-
वादित्रकाष्ठादिककुट्टकानि ॥

निष्कारणं संवलिता रुवन्तो
ग्रामेऽन्ननाशाय भवन्ति काकाः ।
रोधञ्च चक्राकृतयो वदन्ति
सव्यापसव्यभ्रमणाद्भयञ्च ॥
विघातमाहुर्ब्बहुवर्गसंस्था
रात्रौ रुवन्तो जनताविनाशम् ।
लोकञ्च चञ्चूचरणप्रहारै-

:रुद्वेजयन्तः परचक्रवृद्धिम् ॥

यः स्नाति धूल्यान्तु विलोक्य रौति
वृष्टिं समाशंसति वायसोऽसौ ।
जलस्थलप्राणिविपर्य्ययेण
वर्षासु वृष्टिं भयमन्यदा तु ॥
मध्यं दिने वेश्मनि यस्य काको
विरौति रौद्रं विधुनोति वाङ्गे ।
हरन्ति चौरा द्रविणानि तस्य
ध्रुवं तथान्यो भवति प्रमादः ॥
रुवन्नदृष्टस्तृणपूर्णवक्त्रो
हुताशभीतिं करटः करोति ।
स्यात् प्रस्थितस्याप्यथवा स्थितस्य
दुःखं प्रभूतं दिवसत्रयेण ॥
छायासु लाभं भुवि भूमिलाभं
विघ्नं जले ग्रावणि कार्य्यनाशम् ।
करोति काको विरुवन्नरस्य
प्रास्थायिनः स्थानगतस्य वापि ॥
द्वारप्रदेशेरुधिरानुलिप्तो
विरौति काकः शिशुनाशनाय ।
पक्षौ विधुन्वन् विरुवंश्च रूक्षं
शान्ते च दीप्ते भवने न शस्तः ॥
भूयस्तथोद्‌र्ध्वे प्रविधाय पक्षौ
काकः कुनादं प्रलयं करोति ।
क्रुद्धोऽधिरूढः करटान्तरञ्च
रोगेण मृत्युं कुरुते नराणाम् ॥
द्रव्ये हते वापह्वते खगेन
विनाशलाभावपि तादृशस्य ।
रुक्मस्य पीते रजतस्य शुक्ले
चौलस्य कार्पासमये भवेताम् ॥
प्रश्ने कृते रोगविनाशबुद्‌ध्या
हन्त्याशु रोगं सुरवः प्रदीप्ते ।
शान्ते प्रदेशे करटश्चिरेण
बल्यारवो रोगमपाकरोति ॥
प्रश्ने शुभे शान्तदिगाश्रयस्थः
शान्तस्वरो यः शुभमादधाति ।
यो बायसस्तं शुभदं बदन्ति
तद्‌व्यत्यये व्यत्ययहेतुरुक्तः ॥
विरौति कुम्भे मणिकेऽथवा यः
स गर्भवत्याः सुतजन्महेतुः
उड्डीयते कण्टकिनीञ्च शाखा
मादाय राजागमनाय काक ॥
अन्नादिविष्ठापिशितादिभिर्य्यः
पूर्णाननोऽभोष्टफलप्रदोऽसौ।
मन्त्रादिसिद्धौ बणिजादिलाभे
शस्तो विवाहादिविधौ च काकः ॥

सर्व्वकार्य्यशुभदं वदत्यसौ ॥
इदं त्विहोत्पातयुगं पृथिव्यां
महाभयं शाकुनिका वदन्ति ।
यद्वायसो मैथुनसन्निविष्टो
दृश्येत यद्वा धवलः कदाचित् ॥
उद्वेगविद्वेषभयप्रवास-
धनक्षयव्याधिभयप्रहाराः।
बुद्धिप्रणाशाकुलताप्रवादा
नृणां भवन्त्यद्भुतदर्शनेन ॥
शमाय तत्सूचितदुःखराशेः
स्नानं वहिस्तत्क्षणमेव कुर्य्यात् ।
आत्मीयशक्त्या च सदक्षिणानि
द्विजाय दद्यात् वसनानि तानि ॥
नयेदहःशेषमपुण्यहान्या
शयीत भूमावकृतान्नभक्षः ।
हविष्यभोजी न भजेच्च नारीं
दिनानि सप्त त्रिगुणानि यावत् ॥
अकाकघातव्रतमादधीत
बलिं च दद्याद्बलिभोजनेभ्यः ।
स्नात्वा प्रभाते विदधीत शान्तिं
दद्यात् स्वशक्त्या द्रविणं गुणिभ्यः ॥
देशे तु यत्राद्भुतमेतदुग्र-
मालोक्यते तत्र समापतन्ति ।
अवृष्टिदुर्भिक्षभयोपसर्ग-
चौराग्निशत्रूद्रवधर्म्मनाशाः ॥
कर्म्माणि तस्योपशमाय राजा
प्रवर्त्तयेत् शान्तिकपौष्टिकानि ।
अन्नाद्यगोभूमिवसूनि दद्यात्
युद्धं विदध्यान्न च यावदब्दम्” ॥
इति काकरुते स्थानस्थितप्रकरणं पञ्चमम् ॥ * ॥
अथ स्वरविचारः ।
“ककामिति क्षेमविधो विरावः
केकामितीष्टाशनयानहेतुः ।
करोति कूं कूमिति चार्थलाभं
क्वं क्वं ध्वनिः काञ्चनलाभमाह ॥
कें केमिति स्त्रीवरयोषिदाप्त्यै
भोगाय कां कामिति शब्दितः स्यात् ।
अपत्यलाभः कु कु इत्यनेन
गन्तुः फलं केकव इत्यनेन ॥
क्रौ कोमितीदं शुभलाभकारि
कुं कुं निनादः प्रियसङ्गमाय ।
क्रां क्रूमिति क्रामिति च त्रयोऽमी
क्रां क्रामिति द्वौ च रवौ रणाय ॥
क्रां क्रामिति क्रौमिति च द्विरुक्तं
क्रूं क्रूमिति क्रौ कुकु कू इतीदम् ।

मित्राप्तये स्यात् क इतीदृशञ्च ।
काका इतीदं तु विघातकारि
करोति काको वदति स्वतुष्ट्यै ॥
आहारदोषाय च काकटीति
स्यादाकुलं कुक्कुनिभं रणाय ।
केकेध्वनिष्काकुटि किं टिकीति
त्रयं त्विदं स्यात् पुरदूषणाय ॥
यत् का इति त्रिस्तदनुस्वरेण
शब्दद्वयं स्यान्महते रणाय ।
कामित्ययं वाहननाशनञ्च
ददाति हर्षं कुकुकुर्व्वितीदम् ॥
यत्का इतीदं विरुतं सुदीर्घ-
कृतस्वरेणोच्चरितं प्रमादात् ।
उत्साहहीनः श्रमदैन्ययुक्तः
स वायसः कार्य्यविनाशनाय ॥
सामिषं वकवकेति भोजये-
द्वारयेत् कलिकलीति रासनम् ।
अभ्युपैति स्वररूक्षभाषिते
प्रोषितः शवशवारवे शवः ॥
स्यात् कलिः कवकवध्वनौ नृणां
जायते कणकणाध्वनौ स्वरः ।
आव्रजेत् कुलुकुलुध्वनौ प्रियः
सौदनं कटकटध्वनौ दधि ॥
एवं प्रकारा बहवोऽपरेऽपि
प्रशान्तदीप्तावलिभोजनानाम्।
भवन्ति शब्दाः खलु तेषु केचि-
दस्माभिरुक्ताः खलु लक्षणीयाः” ॥
इति काकरुते स्वरप्रकरणं षष्ठम् ॥ * ॥
“हितं नरेभ्यो मुनिभिः पुराणै-
र्ज्ञानं यदुक्तं बलिपिण्डयुक्त्या ।
तदुच्यते संप्रति येन काका
वदन्ति नित्यं बलिलाभतुष्टाः ॥
अदक्षिणस्यां दिशि यत्र काकै-
र्य्युतो भवेत् क्षीरतरुः प्रभूतौ ।
गत्वा निवृत्तेऽहनि तत्र काका
निमन्त्रणीया बलिपिण्डभाज्ये ॥
प्रातस्ततः क्षीरतरोरधस्ता-
द्विशोध्य लिख्येत् सह गोमयेन ।
भूमिप्रदेशे चतुरस्रमस्य
मध्येऽर्च्चयेत् ब्रह्ममुरारिभानून् ॥
इन्द्राग्निवैवस्वतयातुधान-
जलेशवायुद्रविणेशशम्भून् ।
अभ्यर्च्चयेदष्टसु दिक्षु भक्त्या
क्रमेण चाष्टावपि लोकपालान् ॥
नमोयुतैः सप्रणवैश्च सर्व्वा-

इष्टार्थदोऽश्वादिकवाहनस्थ-
श्छत्रादिसंस्थस्तदवाप्तकारी ।
बध्वागमं जल्पति तोरणस्थो
हृद्यार्थदो हृद्यतरुस्थितश्च ॥
वायसः कुलकुलध्वनिं यदा
व्याहरेद्व्रवनसंमुखं तदा ।
अभ्युपैति पथिकस्तदा ध्वनिं

रुतं प्रदिष्टं मरणाय नृणां
गन्तुः प्रणाशं कुतते खगाख्यः ॥
क्री क्रीमितीष्टार्थविनाशनाय
ज्वलज्वलेत्यग्निभयाय शब्दः ।
कीकीति कोकाविति यः कथञ्चिन्-
मुहुर्मुहुः स्यात् स मतो वधाय ॥
स्यात् का इतीदं विफलं सदैव

न्निजाभिधानैः प्रयतो मनुष्यः ।
अर्घासनालेपनपुष्पधूप-
नैवेद्यदीपाक्षतदक्षिणाभिः ॥
आब्रह्मकाकांस्तरुसन्निविष्टा-
नाध्याय तत्प्राक्तनमन्त्रयुक्त्या ।
ततस्तदर्थं बलिमाज्यसिक्तं
मन्त्रेण दद्यात् दधिपिण्डयुक्तम्" ॥

:मन्त्रः । इन्द्राय यमाय वरुणाय धनदाय भूतवाय-

साय बलिं गृह्णातु मे स्वाहा ॥

“उदीर्य्य कार्य्यं स्वमथावसृत्य

ततः प्रदेशे करटस्य चेष्टाः

स्पृष्टीकृताङ्गानि शुभाशुभार्थं

सलक्षयेन्निश्चलपाणिपादः ॥

पूर्ब्बेण खादन् सुखवित्तवृद्धिं

करोति वह्नेर्दिशि वह्निभीतिम् ।

काकोऽर्थनाशं दिशि दक्षिणस्यां

नैरृत्यगो दिग्वरकृत्यदिष्टः ॥

जलेशदेशेऽभिमतार्थसिद्धि-

र्व्वायोर्दिशीति प्रभवाल्पवृष्टिः ।

सौम्ये सुखारोग्यसमीहितार्थ-

मीशानदेशे वितरत्यभीष्टम् ॥

बलौ विलुप्ते करटः समन्तात्

कार्य्ये विमिश्रं परिभावनीयम् ।

बलिं विकीर्य्यापि न भक्षयन्ति

काकास्तदानीं भयदा भवन्ति ॥

क्षीरद्रुमारामचतुष्पथेषु

सरित्समीपे त्रिदशालयेषु ।

देयो बलिर्भूतदिनाष्टमीषु

कुल्माषदध्योदनतण्डुलाद्यैः” ॥

इति काकरुते पिण्डप्रकरणं सप्तमम् ॥ * ॥

“पिण्डत्रयस्याथ विधानमेत-

दाख्यायते यत् किल नारदाद्यैः ।

दृष्टं मुनीन्द्रैरशुभं शुभञ्च

यथावदस्मिन् कथयन्ति काकाः ॥

गत्वा शुभेऽह्नि प्रहरे चतुर्थे

देशेषु पूर्ब्बप्रतिपादितेषु ।

नरेण पिण्डत्रयभोजनार्थं

काकाः प्रयत्नेन निमन्त्रणीयाः ॥

ततः प्रभाते ह्युपलिप्य भूमिं

तस्याञ्च पूर्ब्बोदितमन्त्रयुक्त्या ।

ब्रह्माच्युतेशाप्पतिलोकपालाः

काकाश्च पुंसां क्रमतोर्च्चनीयाः ॥

दध्योदनाद्यैर्व्विहितं प्रवेश्य

पिण्डत्रये मण्डलकस्य मध्ये ।

अभ्यर्च्चयेदक्षतपुष्पधूपै-

र्मनोहरैर्यत्नपरो मनुष्यः ॥

तेषु क्षिपेत् प्राग्दिगनुक्रमेण

पिण्डेषु हेमप्रथमे द्वितीये ।

रूप्यं तथा लौहलवं तृतीये

शेषञ्च कुर्य्याद्बलिपिण्डतुल्यम् ॥

त्रिःसप्तकृत्वो विनिवेश्य पिण्डे

पिण्डा निवेश्या बलिभोजनेभ्यः ।

भुक्ते सरूप्ये खलु मध्यमं स्याद्-

भुक्ते सलौहे त्वधमं प्रदिष्टम् ॥

विवादबाणिज्यविवाहवृष्टि-

क्षेमाश्च वित्ताः कृषिभोगरोगाः ।

संग्रामसेवानृपकार्य्यदेशा

इत्यादयोऽस्मिन् परिभावनीयाः ॥

चेष्टामवामां विदधाति याति

प्रदक्षिणं दक्षिणपक्षमुच्चैः ।

ग्रीवां तथोच्चां कुरुते सशब्दः

स्थानं मनोज्ञं श्रयति द्रुमञ्च ॥

एवंविधां यो विदधाति चेष्टां

पिण्डं समादाय शुभं खगोऽसौ ।

अभीष्टकार्य्यादधिकं करोति

चेष्टाविपर्य्यासतयान्यथात्वम् ॥

पिण्डं समादाय यदि प्रधानं

शान्तं दिशं गच्छति काकपक्षी ।

पूर्णं फलं तत् कुरुते नराणां

चिकीर्षिते वस्तुनि यत्र तत्र ॥

काको गृहीत्वा यदि मुख्यपिण्डं

प्रयाति दीप्तां ककुभं तदानीम् ।

अत्युत्तमं कार्य्यफलं प्रदर्श्य

ततः सभस्तं विनिहन्त्यवश्यम् ॥

द्वितीयकं यद्यपहृत्य पिण्ड-

मुड्डीयते शान्तदिगाश्रयेण ।

फलं तदानीं शुभदं नराणाम्

याप्यं खगो जल्पति कार्य्यजातम् ॥

काके समादाय जघन्यपिण्डं

याते प्रदीप्तां ककुभं वदन्ति ।

कार्य्यं जघन्यादधिकं जघन्यं

स्यान्मध्यमं मध्यमपिण्डभागे” ॥

इति वसन्तराजे पिण्डत्रयप्रकरणमष्टमम् ॥ * ॥

“महर्षयो वायसशाकुनस्य

वदन्ति सारादपि सारभूतम् ।

पिण्डाष्टकं यत्तदशेषमेत-

दाख्यायते कार्य्यविनिश्चयार्थम् ॥

शुभेऽह्नि काकानधिवास्य सायं

पिण्डाष्टकं भोक्तुमथ प्रभाते ।

तत्कालयोग्यानि समस्तवस्तू-

न्यादाय यायाद्बहिरप्रमत्तः ॥

एकान्तदेशे तरुपार्श्वभूमौ

मृद्गोमयाभ्यामुपलेपितायाम् ।

सत्पञ्चगव्येन समुक्षितायां

सौम्योपहारैरुपशोभितायाम् ॥

विधाय पूजां कुलदेवतानां

मध्ये ततोऽष्टस्वपि दिक्षु देयम् ।

स्ततोऽर्च्चयेत्तन्निजनाममन्त्रैः ।

अर्घ्यासनालेपनपुष्पधूपै-

र्नैवेद्यदीपाक्षतदक्षिणाभिः ॥

अभ्यर्च्चितेभ्यो विधिनोदितेन

पिण्डाष्टकं तत् ददतु द्विजेभ्यः ।

मन्त्रेण संमन्त्र्य निवेदनार्थं

कार्य्यं विचिन्त्यापसरेच्च किञ्चित्” ॥

अथ मन्त्रः । ॐ नमः खगपतये गरुड य

द्रोणाय पक्षिराजाय स्वाहा ॥

“द्रोणाढकसमं पिण्डं गृहाण त्वमशङ्कितः ।

यथादृष्टं निमित्तं च कथयस्वाधमे स्फुटम् ॥

काकेन पिण्डे प्रथमे गृहीते

तिष्ठन् व्रजन् वापि भवेत् कृतार्थः ।

उद्वेगशोकौ विफलः प्रयाणे

हानिः कलिर्व्वा भवति द्वितीये ॥

याम्ये रुगापद्भयमृत्यवः स्युः

पिण्डे चतुर्थे विजयो रणेषु ।

स्याद्वैष्णवेऽभीष्टमकष्टसाध्यं

भवेत् प्रवासो विफलश्च षष्ठे ॥

नास्तीह तन्निश्चयमेव कार्य्यं

भुक्ते न यत् सिध्यति सौम्यपिण्डे ।

सन्तापशोकौ विफला च यात्रा

पिण्डेऽष्टमे वायसभक्षिते च ॥

पिण्डं न गृह्णात्यथवा न भुङ्क्ते

चञ्चूनखैर्व्विक्षिपति द्विजो यः ।

कार्य्येषु सर्व्वेषु स न प्रशस्तो

ब्रवीति घोरं समरं स पुंसाम्” ॥

इति वसन्तराजे काकरुते पिण्डाष्टकप्रकरणं

नवमम् ॥ * ॥

“आद्यं पञ्चाशता द्वाभ्यां वृत्तैर्दिक्चक्रमीरितम् ।

काकालयपरीक्षा च द्वितीये दशभिस्त्रिभिः ॥

वृत्तैस्त्रिभिस्तृतीये च काकाण्डकनिरूपणम् ।

द्वाचत्वारिंशता वृत्तैर्यात्रा तुर्य्ये प्रकीर्त्तिताः ॥

वृत्तानि विंशतिस्त्रीणि स्थानं स्थाप्ये च पञ्चमः ।

स्वरप्रकरणं षष्ठं वृत्तैर्द्वादशभिस्ततः ॥

एकादशभिराख्यानं बलिसंज्ञञ्च सप्तमम् ।

पिण्डत्रयविधानाय चतुर्द्दशभिरष्टमम् ॥

पिण्डाष्टकविधानाय नवमे यदुदाहृतम् ।

अन्त्यप्रकरणं तच्च वृत्तान्येकादशैव तु ॥

वसन्तराजशाकुने सदागमार्थशोभने ।

समस्तसत्वकौतुके विचारितोऽत्र वायसः” ॥ * ॥

समुदायेन १८१ वृत्तानि । इति वसन्तराजशाकु-

नान्तर्गतवायसशाकुननामकाकचरित्रं समाप्तम् ॥

काकमांसगुणाः । दोषक्षयापहत्वम् । चक्षुर्हितत्वम् ।

| | | |
|---|---|---|
| मन्त्रोक्तमावाहनतोषितेभ्यः<br>कार्य्यं बिचार्य्यापसरेत्ततश्च” ॥<br>मन्त्रः ॐ हिवि टिमि विटि काकचाण्डालाय<br>स्वाहा । इति पिण्डाभिमन्त्रणार्थम् ॥ ॐ ब्रह्मणे<br>विश्वाय काकचण्डालाय स्वाहा ।<br>काकाह्वानमन्त्रः ॥<br>“काकेन मुक्ते ससुवणपिण्डे<br>ज्ञेयं नरेणोत्तममात्मकार्य्यम् । | भक्तेन सर्पिर्दधिमिश्रितेन<br>पिण्डाष्टकं प्राग्दिगनुक्रमेण ॥<br>पक्षीन्द्रवह्न्यन्तकराक्षसेन्द्रान्<br>विष्णुं विरिञ्चिं धनदं महेशम् ।<br>पूर्ब्बादिकाष्ठाक्रमयोजितेषु<br>न्यसेत् क्रमादष्टसु पिण्डकेषु ॥<br>नमोयुतैस्तान् प्रणवश्च सर्व्वां- | वृंहणत्वम् । बलायुर्हितकारित्वम् । लधुत्वम् ।<br>दीपणत्वञ्च । इति राजनिर्घण्टः ॥<br>(“काकः कोकिलशूकरास्त्वथ खरो-<br>ष्ट्राश्वादयो भल्लुका<br>व्यालाः सौरभयो वृकप्रभृतयो<br>ये चान्यजीवा नृणाम् ।<br>मण्डूकाश्च सरीसृपादिकगणा<br>यूका कलिङ्गाश्च ये |

:कोकः सारसशारिका शुक इमे

भक्ष्या न शस्तास्तथा ॥
गृहचटकचकोराः काकजात्याश्च श्येनाः
पिकशुकविषशृङ्गीभृङ्गदात्यूहकल्काः ।
जलकरटकपोता पोतकी खञ्जरीटाः
कलविकमशकाद्या यूकपिङ्गादयोऽन्ये ॥
एते भक्ष्या नैव भक्ष्या न चेष्टा
ये चाप्यन्येऽज्ञातनामाण्डजाश्च ।
अन्ये चापि श्वापदा ये च निन्द्या-
स्ते चाखाद्या वर्ज्जिताश्चात्र सर्व्वे” ॥
इति हारीते प्रथमस्थाने । ११ अः ॥
“काककङ्कुररचाषभासशशघात्युलूकचिल्लिस्ये-
नगृध्रप्रभृतयः प्रसहाः ॥
“एते सिंहादिभिः सर्व्वे समाना वायसादयः ।
रसवीर्य्य विपाकेषु विशेषाच्छोषिणे हिताः” ॥
इति सुश्रुते सूत्रस्थाने । ४६ अः ॥) पीठसर्पी ।
खाँडा इति भाषा ॥ द्वीपविशेषः । परिमाणभेदः ।
वृक्षविशेषः । शिरोऽवक्षालनम् । इति हेमचन्द्र-
मेदिनीकरौ ॥ तिलकः । अतिधृष्टः । इति शब्द-
रत्नावली ॥

**काककङ्गुः**, स्त्री, (काकप्रियः कङ्गुः ।) चीनकः । इति

हेमचन्द्रः ॥

**काककला**, स्त्री, (काकस्य कला अङ्गं जङ्घावयवः

तद्वत् अङ्गं यस्याः ।) काकजङ्घावृक्षः । इति
जटाधरः ॥

**काकघ्नी**, स्त्री, (काकं हन्तीति । काक + हन् + टः

टित्त्वात् ङीप् ।) महाकरञ्जः । इति राज-
निर्घण्टः ॥

**काकचिञ्चा**, स्त्री, (काकवर्णा चञ्चा प्रान्तभागः फले

यस्याः । पृषोदरादित्वात् साधुः ।) गुञ्जा । इति
शब्दरत्नावली । कूँच् इति भाषा । (गुञ्जाशब्दे-
ऽस्या विवरणं बोद्धव्यम् ॥)

**काकचिञ्चिः**, स्त्री, (काकवर्णा चञ्चा प्रान्तभागः फले

यस्याः । पृषोदरादित्वात् साधुः ।) गुञ्जा । इति
शब्दरत्नावली ॥

**काकचिञ्ची**, स्त्री, (काकचिञ्चि + वा ङीप् ।) गुञ्जा ।

इत्यमरः । २ । ४ । ९८ ॥ (अस्याः पर्य्यायो भाव-
प्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे । यथा, --
“श्वेता रक्तोच्चटा प्रोक्ता कृष्णला चापि सा स्मृता ।
रक्ता सा काकचिञ्ची स्यात् काकानन्ती च रक्तिका ।
काकादनी काकपीलुः सा स्मृता काकवल्लरी” ॥

अस्या गुणाः । तिक्तत्वम् । उष्णत्वम् । कृमिव्रण-
कफबाधिर्य्यार्जीर्णजीर्णविषमज्वरनाशित्वञ्च । इति
राजनिर्घण्टः ॥
(“काकजङ्घा बला श्यामा ब्रह्मदण्डी कृताञ्जलिः ।
पश्निपर्णी त्वपामार्गस्तथा भृङ्गरजोऽष्टमः ॥
एषामन्यतमं मूलं पुष्येणोद्धृत्य यत्नतः ।
रक्तसूत्रेण संवेष्ट्य बद्धमैकाहिकं जयेत्” ॥
इति वैद्यकचक्रपाणिसंग्रहे ज्वराधिकारे ॥
मसीति लोके । अस्याः पर्य्याया गुणाश्च यथा, --
“काकजङ्घा नदीकान्ता काकतिक्ता सुलोमशा ।
पारावतपदी दासी काका चापि प्रकीर्त्तिता ॥
काकजङ्घा हिमा तिक्ता कषाया कफपित्तजित् ।
निहन्ति ज्वरपित्तास्रज्वरकण्डूविषक्रिमीन्” ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
गुञ्जा । इति रत्नमाला ॥

**काकजम्बुः**, स्त्री, (काकवर्णा जम्बुः ।) भूमिजम्बुः ।

क्षुद्रजम्बुः । इति शब्दमाला । वनजाम् इति
भाषा ॥

**काकजम्बूः**, स्त्री, (कं जलं अकति आश्रयत्वेन गृह्ना-

तीति । क + अक् + अण् + टाप् च । काका
जम्बूः । यद्वा काकवर्णा जम्बूः ।) जम्बूप्रभेदः ।
तत्पर्य्यायः । काकफला २ नादेयी ३ काकवल्लभा
४ भृङ्गेष्टा ५ काकनीला ६ ध्माङ्क्षजम्बूः ७ धन-
प्रिया ८ । अस्या गुणाः । कषायत्वम् । अम्लत्वम् ।
पाके मधुरत्वम् । गुरुत्वम् । दाहश्रमातिसार-
नाशित्वम् । वीर्य्यवृद्धिबलप्रदत्वञ्च । इति राज
निर्घण्टः ॥

**काकणं**, क्ली, (कु ईषत् कणति निमीलति इति ।

अच् काकणं गुञ्जाफलं तद्वदाकृतिरस्यास्तीति
कृष्णरक्तचिह्नितत्वादस्य तथात्वम् ।) कुष्ठविशेषः ।
तस्य लक्षणम् । यथा, --
“यत् काकणन्तिकावर्णमपाकं तीव्रवेदनम् ।
त्रिदोषलिङ्गं तत्कुष्ठं काकणं नैव सिध्यति” ॥
इति माधवकरः ॥ (“काकणं तीव्रदाहरुक् ॥
“पूर्ब्बं रक्तञ्च कृष्णञ्च काकणन्तीफलोपमम् ।
कुष्ठलिङ्गैर्युतं सर्व्वैर्नैकवर्णं ततो भवेत् ॥
दोषभेदीयविहितैरादिशेल्लिङ्गकर्म्मभिः” ॥
इति वाभटे निदानस्थाने १४ अः ॥

“काकणन्तिका वर्णान्यादौ पश्चात्
सर्व्वकुष्ठ-

लिङ्गसमन्वितानि पापीयसां सर्व्वकुष्ठलिङ्गसम्भवे
नानेकवर्णानि काकणानीति विद्यात् ।

पारावतपदी दासी काका चापि प्रकृर्त्तिता”
॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**काकतिन्दुकः**, पु, (कं जलं अकति इत्यण् । काकः

तिन्दुकः काकवर्णो वा तिन्दुकः
काकप्रियस्तिन्दुका
वा ।) वृक्षविशेषः । माकडा केन्दु । माकडो
गाव् । काकतेँदु इति च भाषा । तत्पर्य्यायः
। का-
केन्दुः २ कुलकः ३ काकपीलुकः ४ ।
इत्यमरः
। २ । ४ । ३९ ॥ काकपीलुः ५ काकाण्डः
६ काक
स्फूर्ज्जः ७ काकाह्वः ८ काकवीजकः ९ ।
अस्य
गुणाः । कषायत्वम् । अम्लत्वम् । गुरुत्वम्
।
वातविकारनाशित्वञ्च । पक्वस्य तस्य
गुणाः ।
मधुरत्वम् । किञ्चित्कफकारित्वम् ।
वान्तिपित्त-
नाशित्वञ्च । इति राजनिर्घण्टः ॥
(काकाण्डशब्दे-
ऽस्य विवरणं ज्ञेयम् ॥)

**काकतुण्डः**, पुं, (काकतुण्डस्येव वर्णोऽस्त्यस्य । अर्श-

आदित्वात् अच् ।) कालागुरु । इति
हेमचन्द्रः ॥

**काकतुण्डिका**, स्त्री, (काकतुण्डस्येव वर्णः फलांशेऽस्याः

इति ठन् । स्त्रियां टाप् च ।) काकचिञ्चा ।
गुञ्जा ।
इति हलायुधः ॥

**काकतुण्डी**, स्त्री, (काकं ईषद्दुःखं तुण्डते नाशयतीति ।

तुडि ङ बधे + अण् । गौरादित्वात् ङीष् ।)
राजरीतिः । राजपितल इति भाषा । इति
राज-
निर्घण्टः ॥ (काकतुण्डस्येवाकृतिर्विद्यते
ऽस्याः ।
अर्श आदित्वादच् । गौरादित्वात् ङीष् ।)
वृक्ष-
विशेषः । कौआडोडी । इति हिन्दी भाषा ।

गुञ्जाशब्दे विवरणान्तरं ज्ञेयम् ॥)

**काकच्छदः**, पुं, (काकस्य छदः पक्ष इव छदो यस्य ।)

खञ्जनपक्षी । इति शब्दरत्नावली ॥

**काकच्छदिः**, पुं, खञ्जनपक्षी । इति त्रिकाण्डशेषः ॥

(खञ्जरीटशब्देऽस्य विवृतिर्ज्ञेया ॥)

**काकजङ्घा**, स्त्री, (काकस्य जङ्घेवाकृतिर्यस्याः ।)

स्वनामख्यातवृक्षविशेषः । केउया ठेङ्गा इति भाषा । तत्पर्य्यायः । काकाङ्गी २ काकाञ्ची ३ काक-नासिका ४ । इति शब्दरत्नावली ॥ कृषीवलः । इति रत्नमाला ॥ ध्माङ्क्षजङ्घा ६ काकाह्वा ७ सुलोमशा ८ पारावतपदी ९ दासी १० नदीकान्ता ११ ।

इति निदानस्थाने ५ अः । चरकेणोक्तम् ॥)

**काकणन्तिका**, स्त्री, (कु ईषत् कणन्ती निमीलन्ती ।

कन् निमीलने शतृ ङीप् कोःकादेशः । ततः कन् टाप् च पृषोदरादित्वात् साधुः ।) गुञ्जा । इति रत्नमाला । कुँच् इति भाषा ॥ (“यत्काकणन्तिकावर्णमपाकं तीव्रवेदनम्” । इति चरके चिकित्सास्थाने ७ अः ॥)

**काकतिक्ता**, स्त्री, (काकमांसवत् तिक्ता इति मध्यपद-

लोपि समासः ।) काकचिञ्चा । इति रत्नमाला । कुँच् इति भाषा । (अस्याः पर्य्यायो यथा, -- “काकजङ्घा नदीकान्ता काकतिक्ता सुलोमशा ।

तत्पर्य्यायः । काकादनी २ काकपीलुः ३ काक-

शिम्बी ४ रक्तला ५ ध्माङ्क्षादनी ६ वक्रशल्या ७

दुर्म्मोहा ८ वायसादनी ९ ध्माङ्क्षनखी १० वायसी

११ काकदन्तिका १२ ध्माङ्क्षदन्ती १३ । अस्य

गुणाः । कटुत्वम् । उष्णत्वम् । तिक्तत्वम् । द्रव-

त्वम् । रसायनत्वम् । वातदोषहारित्वम् । रुचि-

कारित्वम् । पलितस्तम्भित्वञ्च । इति राज-

जिर्घण्टः ॥

**काकध्वजः**, पुं, (काकमीषज्जलं वास्पं ध्वज इवास्य ।)

वाडवाग्निः । इति त्रिकाण्डशेषः ॥

**काकनामा**, [न्] पुं, (काकस्य नाम नाम यस्य ।)

वकवृक्षः । इति रत्नमाला ॥ (काकशीर्षशब्दे-

ऽस्य विवरणं बोध्यम् ॥)

**काकनासः**, पुं, (काकस्य नासाया वर्णः इव फले यस्य ।)

विकण्टकवृक्षः । इति राजनिर्घण्टः ॥

**काकनासा**, स्त्री, (काकस्य नासा इव फलमस्याः ।)

काकजङ्घावृक्षः । इति जटाधरः ॥ (अस्याः पर्य्याया

गुणाश्च यथा, भावप्रकाशस्य पूर्ब्बखण्डे १ भागे ।

“काकनासा तु काकाङ्गी काकतुण्डफला च सा ।

काकनासा कषायोष्णा कटुका रस पाकयोः ।

कफघ्नी वामनीतिक्ता शोथार्शः

श्वित्रकुष्ठहृत्” ॥

**काकनासिका**, स्त्री, (काकनासा ततः स्वार्थे कन्

टाप् अत इत्वम् ।) काकजङ्घावृक्षः । इत्यमरः ।

२ । ४ । ११८ ॥ रक्तत्रिवृत् । इति राजनिर्घण्टः ।

**काकपक्षः**, पुं, (काकस्य पक्ष इव आकारोऽस्त्यस्य ।
काकपक्ष + अच् ।) मस्तकपार्श्वद्वये
कशरचना-
विशेषः । काण्पाटा जुल्पी इति च भाषा ।
तत्पर्य्यायः । शिखण्डकः २ । इत्यमरः ।
२ । ६ ।
९६ ॥ शिखाण्डकः ३ शिखण्डः ४ । इति
तट्टीका ॥
(यथा, रघुः । ११ । १ ।
“कौशिकेन स किल क्षितीश्वरो
राममध्वरविघातशान्तये ।
काकपक्षधरमेत्य याचित-
स्तेजसां हि न वयः समीक्ष्यते” ॥)

**काकपदः**, पुं, (बन्धस्य काकपदवदाकारवत्त्वात्
काकपद इव आकृतिरस्त्यस्य ।)
रतिबन्धविशेषः
तस्य लक्षणम् । यथा, --
“पादौ द्वौ स्कन्धयुग्मस्थौ क्षिप्त्वा लिङ्गंभगे
लघु ।
कामयेत् कामुकीं कामी बन्धः काकपदो
मतः” ॥
इति रतिमञ्जरी ॥

**काकपर्णी**, स्त्री, (काक इव कृष्णं पर्णं यस्याः । गौरा-
दित्वात् ङीष् ।) मुद्गपर्णी । इति
भावप्रकाशः ॥
(“मुद्गपर्णी हिमा रूक्षा तिक्ता स्वादुश्च
शुक्रला ।
चक्षुष्या क्षतशोथघ्नी ग्राहिणी ज्वरदाहनुत्
।
दोषत्रयहरी लघ्वी ग्रहण्यर्शोऽतिसारजित्’
॥
इति च भावप्रकाशस्य पूर्ब्बखण्डेप्रथमभागे
॥)

**काकपीलुः**, पुं, (काकप्रियः पीलुः ।) काकतिन्दुकः ।
काकतुण्डी । श्वेतगुञ्जा । इति राजनिर्घण्टः
। (पर्य्या-
योऽस्य यथा, भावप्रकाशस्य पूर्ब्बखण्डे १
भागे ।
“श्वेता रक्तोच्चटा प्रोक्ता कृष्णला चापि सा
स्मृता ।
वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं मयार्पितम्”
॥
ॐ काक्येभ्यो नमः । इति दद्यात् तदुपरि
अद्भिः
सिञ्चेत् । इत्याह्निकाचारतत्त्वम् ॥ * ॥
गयायां तद्विधिर्यथा, --
“बलिः काकशिलायाञ्च काकमोक्षणमोक्षदः”
।
इति श्रीवायुपुराणे श्वेतवाराहकल्पे गयामा-
हात्म्ये ४ अध्यायः ॥ तत्र तृतीयदिनकृत्ये
काक-
बलिदानं यथा, --
“ततः काकबलिं क्षिप्त्वा पुनः स्नानं
समाचरेत् ।
ऐन्द्रवारुणवायव्या याम्या वै नैरृतास्तथा ॥
वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं मयार्पितम्”
॥
इति श्रीवायुपुराणे ७ अध्यायः ॥

**काकभाण्डी**, स्त्री, (काकस्य मुखोद्भवरसकारणस्य
ईषज्जलस्य भाण्डी क्षुद्रभाण्डमिव ।
तत्फलभक्ष-
णेन मुखात् ईषज्जलक्षरणात्
अस्यास्तथात्वम् ।)
महाकरञ्जः । इति राजनिर्घण्टः ॥

**काकभीरुः**, पुं, (काकात् भीरुर्भयशीलः ।) पेचकः ।
इति त्रिकाण्डशेषः ॥

**काकमद्गुः**, पुं, (काक इव कृष्णो मद्गुर्जलचरपक्षि-
विशेषः ।) दात्यूहपक्षी । इति त्रिकाण्डशेषः
॥ (डा-
उकपाखी इति भाषा ॥ यथा, महाभारते
१३ ।
दानधर्म्मे संसारचक्रकथने १११ । १२१ ।
“घृतं हृत्वा तु दुर्ब्बुद्धिः काकमद्गुः
प्रजायते” ॥)

**काकमर्द्दः**, पुं, (काकं मृद्गातीति । काक + मृद् +
अण् ।) महाकालवृक्षः । इति राजनिर्घण्टः
॥

**काकमर्द्दकः**, पुं, (काकमर्द्द + संज्ञायां कन् ।) महा-
(अस्याः पर्य्यायो यथा, --
“मुद्गपर्णी काकपर्णी सूर्य्यपर्ण्यल्पिका सहा ।
काकमुद्गा च सा प्रोक्ता तथा मार्ज्जारगन्धिका” ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥ गुणा-
दयोऽस्या मुद्गपर्णीशब्दे ज्ञेयाः ॥)

**काकयवः**, पुं, (काकमीषज्जलं यत्र तादृशो यव इव
नीरसत्वात्, यद्वा काकवन्निर्गुणो यवः ।) तण्डुल-
शून्यधान्यम् । आग्डा इति भाषा ॥
(“यथा फलाः षण्डतिलाः यथा चर्म्ममया मृगाः ।
तथैव पाण्डवाः सर्व्वे यथा काकयवा इव” ॥ इति
महाभारते सभापर्व्व ॥ तथा पञ्चतन्त्रे २ । ९५ ।
“यथा काकयवाः प्रोक्ता यथारण्यभवास्तिलाः ।
नाममात्रा न सिद्धौ हि धनहीनास्तथा नराः” ॥)

**काकरुहा**, स्त्री, (काक इव रोहति मूलशून्यतया
वृक्षाद्यवलम्बनेन जायते इति । काक + रुह +
कः । काकवत् परपुष्टतयास्यास्तथात्वम् । यद्वा
काकपुरीशात् रोहति उत्पद्यते वृक्षोपरीत्यर्थः
अतएव तत् संज्ञयाख्यायते ।) वन्दावृक्षः । इति
त्रिकाण्डशेषः ॥

**काकरूकः**, पुं, (कु कुत्सितं करोतीति । कु + कृ +
ऊकः । कोः कादेशः ।) स्त्रीजितः । उलूकः ।
दम्भः । दिगम्बरभीरुकनिर्ध्नेषु त्रि । इति हेम-
चन्द्रः ॥

**काकलं**, क्ली, (ईषत्कलो यस्भात् । कोः कादेशः ।)
कण्ठमणिः । इति त्रिकाण्डशेषः ॥ (ग्रीवास्थोन्नत-
देशः । इति सुश्रुतः ॥ दुँटि इति भाषा ।)

**काकलः**, पुं, (का इत्याकारः कलो यस्य ।) द्रोण-
काकः । इति शब्दरत्नावली ॥

**काकलकः**, पुं, (काकलं ततः कप् पुंस्त्वञ्च ।)
कण्ठमणिः । इति हेमचन्द्रः ॥

**काकलिः**, स्त्री, (कल् + इन् कलिः । कु ईषत् कलिः ।
कोः कादेशः ।) सूक्ष्ममधुरास्फुटध्वनिः । इत्य-
मरटीकायां भरतः ॥ (“कोकिलकाकलिकूजित-
कुञ्जम्” । इति शिष्टप्रयोगः ॥)

**काकली**, स्त्री, (काकलि + कृदिकारान्तत्वात् वा
ङीप् ।) सूक्ष्ममधरास्फटध्वनिः । इत्वमरः । १ ।
७ । २ ॥ (यथा, गातगाविन्दे । १ । ४ । ११ ।

रक्ता सा काकचिञ्ची स्यात् काकानन्ती च रक्तिका ।
काकादनी ककापीलुः सा स्मृता काकवल्लरी" ॥
विशेषविवरणमस्य च गुञ्जाशब्दे ज्ञेयम् ॥)

**काकपीलुकः**, पुं, (काकपिलु + संज्ञायां कन् ।) काकतिन्दुकवृक्षः । इत्यमरः । २ । ४ । ३९ ।
माकडाकेन्दु इति भाषा ॥

**काकपुच्छः**, पुं, (काकस्य पुच्छ इव पुच्छा यस्य ।) कोकिलः । इति शब्दरत्नावली ॥

**काकपुष्टः**, पुं, (काकेन पुष्टः । कोकिल्या हि निजाण्ड-स्फोटनाशक्ततया काकाण्डं तन्नीडात् निक्षिप्य तत्र स्वकीयाण्डं स्थापयित्वा काकद्वारा स्वापत्य-पोषणात् अस्य तथात्वम् ।) कोकिलः । इति त्रिकाण्डशेषः ॥

**काकपुष्पं**, क्ली, (काकवत् कृष्णं पुष्पमस्य ।) गन्ध-पर्णम् । इति राजनिर्घण्टः ॥

**काकफलः**, पुं, (काकप्रियं फलमस्य ।) निम्बवृक्षः । इति राजनिर्घण्डः ॥ (निम्बशब्देऽस्य गुणादयो ज्ञातव्याः ॥)

**काकबलिः**, पुं, (काकेभ्यो देयो बलिरन्नादिकम् ।) काकसम्पदानकान्नादि । तद्दानविधिर्यथा । ॐ यमद्वारावस्थितनानादिग्देशीयवायसेभ्यो नमः ।
इति पाद्यादिभिरभ्यर्च्च्य प्रार्थयेत् ।
"ॐ काकत्वं यमदूतोऽसि गृहाण बलिमुत्तमम् ।
यमलोकगतं प्रेतं त्वमाप्यायितुमर्हसि ॥
ॐ काकाय काकपुरुषाय वायसाय महात्मने ।
अत्र पिण्डं प्रयच्छामि कथ्यतां धर्म्मराजनि" ॥
इति पूरकपिण्डदानान्त हलायुधः ॥ * ॥
बलिवैश्वदेवान्तर्गततद्विधिर्यथा, --
"उन्मीलन् मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर-क्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः ।
नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षण-प्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः" ॥

कालालता । इति रत्नमाला । माकाल् इति भाषा ॥

**काकमाचिका**, स्त्री, (काकमाची + स्वार्थे कन् ।) काकमाचीवृक्षः । इति शब्दरत्नावली ॥

**काकमाची**, स्त्री, (काकान् मञ्चते अर्च्चयति फल-दानेनेति । मचि + अण् + गौरादित्वात् ङीष् पृषोदरादित्वात् म लोपः ।) क्षुद्रवृक्षविशेषः । गुडकामाइ इति भाषा । तत्पर्य्यायः । वायसी २ । इत्यमरः । २ । ४ । १५१ ॥ ध्माङ्क्षमाची ३ वाय-साह्वा ४ सर्व्वतिक्ता ५ बहुफला ६ कट्फला ७ रसायनी ८ गुच्छफला ९ काकमाता १० स्वादु-पाका ११ सुन्दरी १२ तिक्तिका १३ बहुतिक्ता १४ । अस्या गुणाः । कटुत्वम् । तिक्तत्वम् । उष्ण-त्वम् । कफशूलार्शःशोथदोषकुष्ठकण्डूनाशित्वञ्च । इति राजनिर्घण्टः ॥ त्रिदोषशमताकारित्वम् । वृव्यत्वम् । रसायनत्वम् । नातिशीतत्वम् । नात्यु-ष्णत्वम् । हृद्यत्वम् । भेदकत्वञ्च । इति राज-वल्लभः ॥ (तथाच भावप्रकाशस्य पूर्ब्बखण्डे १ भागे ॥
"काकमाची त्रिदोषघ्नी स्निग्धोष्णास्वरशुक्रदा ॥
तिक्ता रसायनीशोथकुष्ठार्शोज्वरमेहजित् ।
कटुर्नेत्रहिता हिक्काच्छर्द्दिहृद्रोगनाशिनी" ॥)

**काकमाता**, स्त्री, (काकम्य मातेव पोषिका । काकस्य तत्फलप्रियत्वात् ।) काकमाची । इति राजनि-र्घण्टः ॥ (काकमाचीशब्दे पर्य्यायगुणादिकं द्रष्टव्यं ॥

**काकमुद्गा**, स्त्री, (काकेन ईषज्जलेन मुदं गच्छतीति ।

**काकलीद्राक्षा**, स्त्री, (काकलीव सूक्षा द्राक्षा ।) द्राक्षाप्रभेदः । किष्मिष् इति ख्याता । तत्प-र्य्यायः । जम्बूका २ फलोत्तमा ३ लघुद्राक्षा ४ निर्व्वीजा ५ सुवृत्ता ६ रसाधिका ७ । तस्या गुणाः । मधुरत्वम् । अम्लत्वम् । रसालत्वम् । रुचिकारित्वम् । शिशिरत्वम् । श्वासहृल्लास-नाशित्वम् । जनवल्लभत्वञ्च । इति राजनिर्घण्टः ॥

**काकलीरवः**, पुं, (काकली मधरास्फुटो रवो यस्य ।) कोकिलः । इति राजनिर्घण्टः ॥ (सूक्ष्ममधुरा-स्फुटध्वनौ तु कर्म्मधारयः ॥)

**काकवल्लरी**, स्त्री, (काकप्रिया वल्लरी ।) स्वर्णवल्ली ।

| | | |
|---|---|---|
| “ऐन्द्रवारुणवायष्याः सौम्या वै नैरृतास्तथा । | काकमुद् + गम् + ड + टाप् ।)<br>मुद्गपर्णोवृक्षः ।<br>इत्यमरः । २ । ४ । ११३ ॥ मुगाणी इति भाषा ॥ | |

:इति राजनिर्घण्टः ॥

**काकशीर्षः**, पुं, (काकः शीर्षे अग्रेऽस्य । काकस्य तदग्रे वासयोग्यत्वात् ।) वकवृक्षः । इति जटा-धरः ॥ (पर्य्यायोऽस्य यथा, -- वैद्यकरत्नमालायाम् ।
"वकपुष्पः काकशीर्षः स्थूलपुष्पः शिवप्रियः ।
वसुकः काकनामा च वसुहट्टः स्वपूरकः" ॥)

**काकस्फूर्ज्जः**, पुं, (काकः स्फूर्ज्जति यत्र । काक + स्फूर्ज्ज + आधारे घञ् ।) काकतिन्दुकवृक्षः । इति राजनिर्घण्टः ॥

**काका**, स्त्री, (काकवदाकारोऽस्त्यस्याइति अच् ततष्टाप् ।) काकनासालता । काकोलीवृक्षः ॥ काकजङ्घावृक्षः । पर्य्यायो यथा भावप्रकाशस्य पूर्ब्बखण्डे १ भागे ।
"काकजङ्घा नदी कान्ता काकतिक्ता सुलोमशा ।
पारावतपदी दासी काका चापि प्रकीर्त्तिता" ॥
गुणादयोऽस्याः काकजङ्घाशब्दे बोद्धव्याः ॥) रक्ति-कालता । मलपूवृक्षः । काकमाचीवृज्ञः । इति मेदिनी ॥

**काकाङ्गा**, स्त्री, (काकस्य अङ्गं जङ्घेवाकारो यस्याः वा ङीष् । पक्षे टाप् ।) काकाङ्गीवृक्षः । इत्य-मरटीकायां रमानाथः ॥

**काकाङ्गी**, स्त्री, (काकस्य अङ्गं जङ्घा इव आकृति-र्यस्याः । ङीष् ।) काकजङ्घावृक्षः । इत्यमरः । २ । ४ । १८ ॥ (अस्याः पर्य्यायो यथा, -- भावप्रकाशस्य पूर्ब्बखण्डे १ भागे ।
"काकनासातु काकाङ्गी काकतुण्डफला चसा" ॥)

**काकाञ्ची**, स्त्री, (काकं तज्जङ्घाकारं अञ्चति गच्छ-तीति । काक + अन्च् + अण् + ङीप् ।) काक-जङ्घावृक्षः । इति शब्दरत्नावली ॥

**काकाण्डः**, पुं, (काक्या अण्ड इव फलं यस्य । काकी-त्यस्य पुंवद्भावः ।) महानिम्बः । काकतिन्दुः । इति राजनिर्घण्टः ॥ वृक्षविशेषः । कालियाकडा इति भाषा । तत्पर्य्यायः । हिंस्रा २ गृध्रनखी ३ तुण्डी ४ काला ५ अहिंस्रा ६ कटुका ७ पाणिः ८ का-पालः ९ कुलिकः १० । इति रत्नमाला ॥ (अस्या-व्यवहारो यत्र तद्यथा, --
"विकङ्कतारग्वधकाकणन्ती
काकादनीतापसवृक्षमूलैः ।
आलेपयेदेनम्" ॥
इति वैद्यकचक्रपाणिसंग्रहे गण्डमालाद्यधिकारे ॥
अस्याः पर्य्यायो यथा, भावप्रकाशस्य पूर्ब्बखण्डे १ भागे ॥
"श्वेता रक्तोच्चटा प्रोक्ता कृष्णला चापि सा स्मृता ।
रक्ता सा काकचिञ्ची स्यात् काकानन्तीच रक्तिका ॥
काकादनी काकपीलुः सा स्मृता काकवल्लरी" ॥)

**काकायुः**, पुं, (काकस्य आयुर्यस्मात् ।) स्वर्णवल्ली । इति राजनिर्घण्टः ॥

**काकारिः**, पुं, (काकः अरिर्यस्य । काकस्यारिर्व्वा ।) पेचकः । इति हेमचन्द्रः ॥

**काकालः**, पुं, (का इति शब्दं कलते रौति । का + कल + अण् ।) द्रोणकाकः । इति शब्दरत्नावली ॥

**काकिणी**, स्त्री, (ककलौल्ये । ककते गणनाकाले चञ्चली-भवतीति । कक + णिनि + ङीप् । पृषोदरादि-त्वात् नस्य णः ।) पणचतुर्थांशः । पाँच गण्डा-कडि इति भाषा ॥ यथाह लीलावती ।
"वराटकानां दशकद्वयं यत् सा काकिणी" ॥)
मानदण्डः । काठा नल इत्यादि भाषा । कृष्णला । कुँच इति भाषा । एकवराटी । एक कडा इति भाषा । रामायणम् ॥ (यथा, रघुः १२ । ४६ ।
"असज्जनेन काकुत्स्थः प्रयुक्तमथ दूषणम् ।
न चक्षमे शुभाचारः स दूषणमिवात्मनः" ॥
ककुत्स्थवंशोद्भवमात्रम् । अजराजार्थे यथा रघु-वंशे ६ । २ ।
"काकुत्स्थमालोकयतां नृपाणां
मनो बभूवेन्दुमतीनिराशम्" ॥
दशरथार्थे यथा रामायणे ६ । १०५ । १ ।
"प्रतिप्रयाते काकुत्स्थे महेन्द्रः पाकशासनः" ॥
ककुत्स्थ एव स्वार्थे अण् । पुरा किल महोक्षरूप-धारिणो महेन्द्रस्य ककुदि स्थित्वा असुरान् जितवानतोऽस्य तथात्वम् ।) पुरञ्जयराजः । इति त्रिकाण्डशेषः ॥ (विवरणन्तुककुत्स्थशब्दे द्रष्टव्यम् ॥)

**काकुदं**, क्ली, (काकुं ददातीति । काकु + दा + क ।) तालु । इत्यमरः २ । ६ । ९१ ॥

**काकेक्षुः**, पुं, (काकमीषज्जलमत्र कोः कादेशः । ततः कर्म्मधारयः ।) खग्गडः । इति रत्नमाला त्रि-काण्डशेषश्च ॥ खाग्डा आक् इति भाषा ॥ काशः । इति राजनिर्घण्टः ॥

**काकेन्दुः**, पुं, (काकस्य इन्दुराह्लादकः ।) कुलकवृक्षः माकडा केन्दु इति ख्यातः । इत्यमरः । २ । ४ । ३९ ॥

**काकेष्टः**, पुं, (काकस्य इष्टः ।) निम्ववृक्षः । इति राज-निर्घण्टः ॥ (निम्बशब्देऽस्य गुणादयो ज्ञेयाः ॥)

**काकोचिकः**, पुं, (कु ईषत् कोची सङ्कोची । कुच + णिन् स्वार्थे कन् । कोः कादेशः ।) काकोची मत्स्यः । इति हारावली ॥ काउची इति भाषा ॥

**काकोची**, स्त्री, (काकोच + ङीष् ।) काकोचिमत्स्यः । इति हारावली ॥

**काकोडुम्बरः**, पुं, (काकप्रियः उडुम्बरः इति मध्य-

("माषैः समान फलमात्मगुप्त-
मुक्तञ्च काकाण्डफलन्तथैव" ॥
इति सुश्रुते सूत्रस्थाने । ४६ अध्याये ॥
यस्मिन्
व्यवह्रियते तद्यथा, --
"काकाण्डसुरसगवाक्ष्या
पुनर्नवा वायसी शिरीषफलैः ।
उद्बद्धविषजलमृत
लेपौषधनस्यपानानि" ॥
इति चरके चिकित्सास्थाने । २५ अध्याये ॥)

**काकाण्डा**, स्त्री, (काकस्याण्डमिव वीजमस्याः ।) को-
लशिम्बी । इति राजनिर्घण्टः ॥

**काकाण्डी**, स्त्री, (काकाण्ड + गौरादित्वात् ङीष् ।)
महाज्योतिष्मती लता । इति राजनिर्घण्टः ॥
(महाज्योतिष्मतीशब्देऽस्या गुणादयो
ज्ञातव्याः ॥)

**काकाण्डोला**, स्त्री, (काकाण्डमोरति तत्सादृश्यं वीजे
प्राप्नोतीति । उर गतौ + अच् । रस्य लत्वम्
।)
कोलशिम्बी । इति राजनिर्घण्टः ॥

**काकादनी**, स्त्री, (काकैरद्यते भुज्यतेऽसौ इति ।
काक + अद + कर्म्मणि ल्युट् ततो ङीप् च ।)
गुञ्जा । इति शब्दरत्नावली ॥ श्वेतगुञ्जा । इति
("तस्मात्पणं काकिणीं वा फलं पुष्पमथापि वा
।
प्रदद्याद् दक्षिणां यज्ञे यया स सफलो भवेत्" ॥
इति शुद्धितत्त्वे वृहस्पतिः ॥) उन्मानस्यांशकः
।
इति मेदिनी ॥

**काकिनी**, स्त्री, (ककलौल्ये । ककते गणनाकाले चञ्चली-
भवतीति । कक + णिनि + ङीप् ।) काकिणी ।
इत्यमरटीकायां रायमुकुटः ॥ (यथा, --
पञ्चतन्त्रे
२ । ७४ ।
"ईश्वरा भूरिदानेन यल्लभन्ते फलं किल ।
दरिद्रस्तच्च काकिन्या (ण्या) प्राप्नुयादिति
नःश्रुतिः" ॥)

**काकिलः**, पुं, (कु--ईषत् किरतीति । कु + कॄ + कः ।
कोः कादेशः रस्य लत्वम् ।) काकलः ।
कण्ठमणिः ।
इति शब्दमाला ॥

**काकुः**, स्त्री, (कक लौल्ये + उण् ।) शोकभयादिभि-
र्ध्वनिविकारः । इत्यमरः । १ । ६ । १२ ॥
(यथा, साहित्यदर्पणे । २ । २३ ।
"भिन्नकण्ठध्वनिर्धीरःकाकुरित्यभिधोयते" ।
इति
काकुं लक्ष्मीकृत्य उदाहरणं यथा, तत्रैव
"गुरुपरतन्त्रतया वत दूरतरं देशमुद्यतो गन्तुम्
।
अलिकुलकोकिलललिते नैष्यति सखि !
सुरभि
समयेऽसौ ॥ नैष्यति, अपि तु एष्यति एवेति-
काक्वा व्यज्यते" ॥) जिह्वा । इति
त्रिकाण्डशेषः ॥

**काकुत्स्थः**, पुं, (ककुत्स्थस्य नृपतेरपत्यम् । शिवादि-
त्वात् ४ । १ । २१२ । अण् ।) श्रीरामचन्द्रः ।
इति
पदलोपी कर्म्मधारयः ।) काकोडुम्बरिका ।
इति
शब्दरत्नावली । काकडुमुर इति भाषा ॥

**काकोडुम्बरिका**, स्त्री, (काकोडुम्बरस्ततः स्वार्थे कन्
टाप् च अत इत्वम् ।) वृक्षविशेषः । कोठडुमुरि
डुमुरि इति च ख्याता । काकडुमुर इति भाषा
।
तत्पर्य्यायः । फल्गुः २ मलपूः ३ जघनेफला
४ ।
इत्यमरः । २ । ४ । ६२ ॥ मलयुः ५
फल्गुफला ६ का-
कोडुम्बरः ७ । इति शब्दरत्नावली ॥
फलवाटिका
८ बहुफला ९ । इति जटाधरः ॥ अस्या
गुणाः ।
काकोदुम्बरिकाशब्दे द्रष्टव्याः ॥ (अस्याः
व्यवहारो
यत्र तद्यथा, -- वैद्यकचक्रपाणिसंग्रहे
मुखरोगा-
धिकारे ।
"काकोडुम्बरिका गोजी पत्रैर्विस्रावयेद्भिषक् ।
क्षौद्रयुक्तैश्च लवणैः सव्योषैः प्रतिसाधयेत्"
॥)

**काकोदरः**, पुं, (कु कुत्सितं अकति । कु + अक वक्र-
गतौ + अच् । कोः कादेशः । काकं
कुटिलगति-
कारि उदरं यस्य बहुब्रीहिः ।) सर्पः । इत्यमरः
।
१ । ८ । ७ ॥ (यथा, राघवपाण्डवीये ।
"यः पूतनामारणलब्धवर्णः
काकोदरो येन विनीतदर्पः ।
यशोदयालङ्कृतमूर्त्तिरव्या-
न्नाथो यदूनामथवा रघूणाम्" ॥)

**काकोदुम्बरिका**, स्त्री, (काकप्रिया कृष्णावा उदुम्ब-

:रिका ।) काकोडुम्बरिका । काकडुमुरि इति
भाषा । अस्याः पर्य्यायः । कृष्णोदुम्बरिका २ खरपत्री ३ राजिका ४ क्षुद्रोदुम्बरिका ५ कुष्ठघ्नो ६ फल्गुवाटिका ७ अजाजी ८ फल्गुनी ९ मलपूः १० चित्रभेषजा ११ ध्माङ्क्षनाम्नी १२ । अस्या गुणाः । शीतत्वम् । कषायत्वम् । व्रणनाशित्वम् । गर्भरक्षाहितत्वम् । स्तनदुग्धप्रदत्वञ्च । इति राजनिर्घण्टः ॥

**काकोलं**, क्ली, (काकयति लोलयति दुःखदत्वात् ।
ककलौल्ये + णिच् + ओल । काकेन उल्लायते भक्ष्यते अत्र वा आधारे घञर्थेकः पृषोदरादित्वात् साधुः ।) नरकविशेषः । इति मेदिनी ॥ (यथा, मनुः ॥
"महानरककाकोलं सञ्जीवनमहायसम्' ॥)

**काकोलः**, पुं क्ली, (कु कुत्सितं तीव्रतरं यथा स्यात्
तथा कोलति पीडयति विह्वलीकरोति वाऽनेन करणे घञ् ।) कृष्णवर्णस्थावरविषविशेषः । इत्यमरः । १ । ८ । १० ॥
"काकोलमुग्रतेजः स्यात् कृष्णच्छविमहाविषम्' । इति वैद्यकम् ॥ (अस्य पर्य्यायो यथा, --
"काकोलो गरलक्ष्वेडो वत्सनाभः प्रदीपनः ।
शौक्लिकेयो ब्रह्मपुत्रो विषं स्याद्गरलो विषः" ॥
इति वैद्यकरत्नमाला ॥)

**काकोलः**, पुं, (कं जलमाकोलति संस्त्यायतीति । आ
+ कुल संस्त्याने + अण् ।) कुलालः । (कक लौल्ये स्वार्थे णिच् + बाहुलकात् ओल ।) द्रोणकाकः । इति मेदिनी । (यथा, मनुः ५ । १४ ।
"वकञ्चैव बलाकाञ्च काकोलं खञ्जरीटकम् ।
मत्स्यादान् विड्वराहांश्च मत्स्यानेव च सर्व्वशः" ॥) सर्पः । शूकरभेदः । इति शब्दरत्नावली ॥ काकोली नामख्यातौषधिविशेषः । इति धरणी ॥

**काकोली**, स्त्री, (काकोल + गौरादित्वात् ङीष् ।)
अष्टवर्गे प्रसिद्धौषधविशेषः । तत्पर्य्यायः । मधुरा २ काकी ३ कालिका ४ वायसोली ५ क्षीरा ६ ध्माङ्क्षिका ७ वीरा ८ शुक्ला ९ धीरा १० मेदुरा ११ ध्माङ्क्षोली १२ स्वादुमांसी १३ वयःस्था १४ जीवनी १५ शुक्लक्षीरा १६ पयस्विनी १७ । इति राजनिर्घण्टः ॥ पयस्या १८ शीतपाकी १९ । इति रत्नमाला ॥ अस्या गुणाः । शीतत्वम् । मधुरत्वम् ।

**काक्ष** इ काङ्क्षणे । आकाङ्क्षायामिति यावत् । इति
कविकल्पद्रुमः ॥ (भ्वां--परं--सकं--सेट्--इदित् ।)
इ काङ्क्षति धनं लोकः । नमध्यपाठेनैवेष्टसिद्धे इदनुबन्धो वेदेषूच्चारणभेदार्थः । इति दुर्गादासः ॥

**काक्षः**, पुं, (कु कुत्सितं अक्षं अत्र । "का पथ्यक्षयोः"
६ । ३ । १०४ । इति कोः कादेशः ।)
कटाक्षः ।
इति हेमचन्द्रः ॥ (यथा, भट्टिः । ८ । २४ ।
"आज्ञालाभोन्मुखोदूरात्
काक्षेणानादरेक्षितः" ॥)

**काक्षी**, स्त्री, (कक्षे कच्छे भवः । "तत्र भवः" । ४ ।
३ । ५२ । इत्यण् ततो ङीप् च ।) तुवरिका ।
अडर
इति भाषा । सौराष्ट्रमृत्तिका । इति मेदिनी ॥

**काक्षीवः**, पुं, (कु ईषत् क्षीवयति । क्षीव + णिच् +
अच् । कोः कादेशः ।) शोभाञ्जनवृक्षः
इत्यमरः ।
(गौतमात् शूद्रायामौशीनर्य्यां जातः
पुत्त्रविशेषः ।
यथा महाभारते २ पर्व्वणि ।
"शूद्रायां गौतमो यत्र महात्मा संशितव्रतः ।
औशीनर्य्यामजनयत् काक्षीवाद्यान्
सुतान्मुनिः" ॥)

**काक्षीवकः**, पुं, (काक्षीव + स्वार्थे कन् । यद्वा ईषत्-
क्षीवयतीति । ण्वुल् ।) शोभाञ्जनः । इति
शब्द-
रत्नावली ॥

**कागः** पुं, (का इति शब्दं गायतीति । का + गै +
कः ।) काकः । इति जटाधरः ॥

**कागदं**, क्ली, (कागः काकवर्णः मस्यादिर्दीयते अत्र
इति । काग + दा + घञर्थे आधारे कः ।
कस्य
चित्तस्य आगदो विस्तारितभाषणं यत्र वा ।)
लेखन-
पत्रविशेषः । कागज इति आर्वी भाषा । यथा,
"भूर्जे वा वसने रक्ते क्षौमे वा तालपत्रके ।

स एव लिङ्गनाशस्तु
नीलिकाकाचसंज्ञितः" ॥
इति माधवकरः ॥
("प्राप्नोति काचतां दोषे
तृतीयपटलाश्रिते ।
तेनोर्द्धमीक्षते नाधस्तनुचेलावृतोपमम् ॥
यथावर्णञ्च रज्येत दृष्टिर्हीयेत च क्रमात् ।
तथाप्युपेक्षमाणस्य चतुर्थं पटलं गतः ॥
लिङ्गनाशं मनः कुर्व्वन्
छादयेद्दृष्टिमण्डलम् ।
तत्र वातेन तिमिरे व्याविद्धमिव पश्यति ॥
चलाविलारुणाभासं प्रसन्नञ्चेक्षते मुहुः ।
जालानि केशान् मशकान्
रश्मींश्चोपेक्षितेऽत्र च ॥
काचीभूते दृगरुणापश्यत्यास्य
मनासिकम् ।
चन्द्रदीपाद्यनेकत्वं वक्रमृज्वपि मन्यते ॥
वृद्धः काचोदृशं कुर्य्याद्रजोधूमवृतामिव ।
स्पष्टारुणाभां विस्तीर्णां सूक्ष्मां वा
हतदर्शनाम् ॥
सलिङ्गनाशो वाते तु सङ्कोचयति
दृक्शिराः ।
दृङ्मण्डलं विशत्यन्तर्गम्भीरा दृगसौ स्मृता
॥
पित्तजे तिमिरे विद्युत्
खद्योतोद्योतदीपितम् ।
शिखितित्तिरिपिच्छाभं प्रायोनीलञ्च
पश्यति ॥
काचे दृक् काचनीलाभा तादृगेव च
पश्यति ।
अर्केन्दुपरिवेषाग्निमरीचीन्द्रधनूंषि च ॥
भृङ्गनीला निरालोका
दृङ्स्निग्धालिङ्गनाशतः ।
दृष्टिःपित्तेन ह्रस्वाख्या सा ह्रस्वा
ह्रस्वदर्शना ॥
भवेत्पिण्डविदग्धाख्या पीतापीताभदर्शना
।
कफेन तिमिरे प्रायः स्निग्धं श्वेतञ्च
पश्यति ॥
शङ्खेन्दुकुन्दकुसुमैः कुमुदैरिव चाचितम् ।
काचे तु निष्प्रभेन्द्वर्कप्रदीपाद्यैरिवाचितम्
॥

क्षयपित्तानिलार्त्तिरक्तदाहज्वरनाशित्वम्। कफ-
शुक्रवर्द्धकत्वञ्च । इति राजनिर्घण्टः ॥
(क्षीरकाकोलीशब्दे चास्या विशेषविवरणं
ज्ञातव्यम् ॥ काकोल्यादिगणोयथा, "काकोली-
क्षीरकाकोलीजीवकर्षभकमुद्गपर्णीमाषपर्णीम्मिदा-
महामेदाछिन्नरुहाकर्कटशृङ्गीतुगाक्षीरीपद्मकप्र-
पौण्डरीकर्द्धिवृद्धिमृद्वीकाजीवन्त्योभधुकञ्चेति" ।
"क्राकोल्यादिरयं पित्तशोणितानिलनाशनः ।
जीवनो वृंहणो वृष्यः स्तन्यश्लेष्मकरस्तथा" ॥
इति सुश्रुते सूत्रस्थाने । ३८ अध्याये ॥)

**काकोलूकिका**, स्त्री, (काकश्च उलूकश्च नित्यविरो-
धित्वात् द्वन्दः । ततो वरे वुञ् स्त्रियां टाप् च ।)
काकोलूकयोर्व्वैरता । इति शब्दरत्नावली ॥

कागदे चाष्टगन्धेन पञ्चगन्धेन वा पुनः ॥
त्रिगन्धेनाथवैकेन विलिख्य धारयेन्नरः ।
पञ्च सप्तत्रिलोकैर्व्वा शोधितं कवचं शुभम्" ॥
इति श्रीघनानन्ददासविरचितमन्त्रकल्पद्रुमे हनू-
मत्कवचम् ॥

**काङ्गा**, स्त्री, (कुत्सितं अङ्गं यस्याः । काङ्ग + टाप् ।)
वचा । इति शब्दचन्द्रिका ॥

**काचं**, क्ली, (कच्यते बध्यते अनेन इति । कच बन्धने
+ घञ् न कुत्वम् । तस्य बन्धनहेतुत्वात्
तथात्वम् ।)
सिक्थकम् । मोम इति भाषा । (काचः क्षार-
मृत्तिकाऽस्त्यस्याकरत्वेन इति अच् ।)
काचलवणम् ।
इति राजनिर्घण्टः ॥

**काचः**, पुं, (कच दीप्तौ + णिच् + घञ् ।) मृत्तिका-
विशेषः । काँच् इति भाषा । तत्पर्य्यायः । क्षारः
२ । इत्यमरः । २ । ९ । ९९ ॥ अस्य गुणाः । क्षार-
रसत्वम् । उष्णवीर्य्यत्वम् । अञ्जनात् दृष्टिकारि-
त्वञ्च । इति राजवल्लभः ॥ शिक्यम् । शिका इति
भाषा ॥ मणिविशेषः । (यथा,
"आकरे पद्मरागाणां जन्म काचमणेः कुतः" ।
इत्युद्भटः ॥) नेत्ररोगविशेषः । इति मेदिनी ॥
तस्य लक्षणम् ।
"अस्मिन्नपि तमोभूते नातिरूढे महागदे ।
चन्द्रादित्यौ सनक्षत्रावन्तरीक्षे च विद्युतः ॥
निर्म्मलानि च तेजांसि भ्राजिष्णूनीव पश्यति ।
सिताभा सा च दृष्टिः स्यालिङ्गनाशे तु लक्ष्यते
मूर्त्तः कफोदृष्टिगतः स्निग्धोदर्शननाशनः ॥
विन्दुर्जलस्येव चलः पद्मिनीपुटसंस्थितः ।
उष्णे सङ्कोचमायाभिश्छायायांपरिसर्पति ॥
शङ्खकुन्देन्दु कुमुदस्फटिकोपमशुक्लिमा ।
रक्तेन तिमिरे रक्तं तमोभूतञ्च पश्यति ।
काचेन रक्ता कृष्णा वा दृष्टिस्तादृक् च पश्यति" ॥
इति वाभटे उत्तरस्थाने । १२ अध्याये ॥
विस्तृतविवरणमस्य नेत्ररोगशब्दे ज्ञातव्यम् ॥)

**काचनं**, क्ली, (कचबन्धने + स्वार्थे णिच् + भावे ल्युट् ।)
पत्रनिबन्धनम् । इति त्रिकाण्डशेषः ॥ काचेल इत्यपि
पाठो दृष्टः ॥ (मुग्धबोधमते "किमः क्त्यन्ताच्चि-
च्चनौ" इति । का + चनप्रत्ययेन) स्त्रीलिङ्गकिम्-
शब्दार्थे व्य । इति व्याकरणम् ॥ (यथा, प्रबोध-
चन्द्रोदये । "व्यूढा काचन कन्यका खलु मया
तेनास्मि वाताधिकः" ॥)

**काचनकं**, क्ली, काच्यते लेखो निबध्यते येन (कच् +
णिच् + ल्युट् । ततः स्वार्थे कन् ।) पत्रनिबन्धनम्
इति हारावली ॥

**काचनकी**, [न्] पुं, (काचनक + अस्त्यर्थे इनिः ।)
लिपिः । तत्पर्य्यायः । वर्णदूतः २ स्वस्तिमुखः ३
लेखः ४ वाचिकहारकः ५ तालिकः ६ । इति
जटाधरः ॥

**काचभाजनं**, क्ली, (काचनिर्म्मितं भाजनम् ।) काच-

**काचमलं**, क्ली, (काचस्य क्षारमृत्तिकायामलमिव ।)

काचलवणम् । इति राजनिर्घण्टः ॥

**काचलवणं**, क्ली, (काचात् क्षारमृत्तिकाया जातं लव-

णम् ।) लवणविशेषः । कालालुण इति भाषा ।
तत्पर्य्यायः । नीलम् २ काचोद्भवम् ३ काचम् ४
नीलकम् ५ काचसम्भवम् ६ काचसौवर्च्चलम् ७
कृष्णलवणम् ८ पाकजम् ९ काचोत्थम् १० हय-
गन्धम् ११ काललवणम् १२ कुरुविन्दम् १३ काच-
मलम् १४ कृत्रिमम् १५ । अस्य गुणाः । रुचि-
कारित्वम् । ईषत्क्षारत्वम् । पित्तवृद्धिकारित्वम् ।
दाहदातृत्वम् । कफवातगुल्मशूलनाशित्वम् । अग्नि-
दीपनत्वञ्च । इति राजनिर्घण्टः ॥

**काचसम्भवं**, क्ली, (सम्भवत्यस्मादिति सम्भवः । काचः

क्षारमृत्तिका सम्भव उत्पत्तिस्थानमस्य ।) काच-
लवणम् ॥ इति राजनिर्घण्टः ॥

**काचसौवर्च्चलं**, क्ली, (काचस्थानिकं सौवर्च्चलं लवणम् ।)

काचलवणम् । इति राजनिर्घण्टः ॥

**काचस्थाली**, स्त्री, (काचस्य क्षारस्य स्थालीव ।)

फलेरुहावृक्षः । पारुल गाछ इति भाषा । इत्य-
मरः । २ । ४ । ५४ ॥ (अस्याः पर्य्यायो यथा--
"पाटलिः पाटला मोघा मधुदूती फलेरुहा ।
कृष्णवृन्ता कुवेराक्षी कालस्थाल्यलिवल्लभा ॥
ताम्रपुष्पी च कथिता परा स्यात् पाटला सिता ।
"निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुध्यति" ॥)

**काञ्चनः**, पुं, (काञ्चते दीप्यते इति कर्त्तरि ल्युः ।)

स्वनामख्यातपुष्पवृक्षविशेषः । रक्तश्वेतभेदेन स
द्विविधः । आद्यस्य पर्य्यायः । रक्तपुष्पः २ कोवि-
दारः ३ युग्मपत्रः ४ कुण्डलः ५ ॥ द्वितीयस्य
पर्य्यायः । काञ्चनालः २ कर्ब्बुदारः ३ पाकारिः ४ ।
इति रत्नमाला ॥ अस्य राजनिर्घण्टोक्तगुणपर्य्यायौ
कोविदारशब्दे द्रष्टव्यौ ॥ * ॥ चम्पकः । नाग-
केशरः । उदुम्बरः । धुस्तूरः । इति मेदिनी ॥
(पुरूरवसो वंश उद्भवस्य भीमस्य पुत्त्रः । यथा,
भागवते । ९ । १५ । ३ ।
"भीमस्तु विजयस्याथ काञ्चनो होत्रकस्ततः" ॥)

**काञ्चनकं**, क्ली, (काञ्चन + संज्ञायां कन् ।) हरि-

तालम् । इति राजनिर्घण्टः ॥

**काञ्चनकः**, पुं, (काञ्चन + स्वार्थे कन् ।) कोविदार-

वृक्षः । इति वैद्यकम् ॥
("काञ्चनारः काञ्चनको गण्डारिः शोणपुष्पकः" ।
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥ गुणा-
दयोऽस्य कोविदारशब्दे ज्ञेयाः ॥)

**काञ्चनकदली**, स्त्री, (काञ्चनवर्णा कदली ।) सुवर्ण-

कदली । इति राजनिर्घण्टः । चाँपाकला इति
भाषा ॥

**काञ्चनकारिणी**, स्त्री, (काञ्चनं बहुमूलेन बन्धनं क-

करोति । काञ्चन + कृ + णिनिः । स्त्रियां ङीप् ।)
इति मध्यखण्डे २ अः शार्ङ्गधरेणोक्तम् ॥)

**काञ्चनालः**, पुं, (काञ्चनं काञ्चनवर्णं अलति । काञ्चन

+ अल + अण् ।) कोविदारवृक्षः । इति शब्द-
रत्नावली । (काञ्चनारशब्देऽस्य गुणादयो ज्ञेयाः ॥
अस्य विवृतिः कोविदारशब्दे द्रष्टव्या ॥)

**काञ्चनाह्वयः**, पुं, (काञ्चनं स्वर्णं आह्वयते स्पर्द्धते स्व-

भासा । आ + ह्वे + कः । काञ्चन इत्याह्वयो
नाम यस्य वा ।) नागकेशरवृक्षः । इत्यमरः ।
२ । ४ । ६५ ॥

**काञ्चनी**, स्त्री, (काञ्चते दीप्यते अनया । करणे ल्युट्

ङीप् ।) हरिद्रा । इति मेदिनी ॥ स्वर्णक्षीरी-
वृक्षः । गोरोचना । इति राजनिर्घण्टः ॥

**काञ्चनीया** स्त्री, (काञ्चनाय हिता । काञ्चन + च्छः

टाप् च ।) गोरोचना । इति राजनिर्घण्टः ॥

**काञ्चिः**, स्त्री, (काञ्चते इति "सर्व्वधातुभ्य इन्" ।

उणां ४ । ११७ । इति इन् ।) काञ्ची । इत्युणादि-
कोषः ॥ (यथा आर्य्यासप्तशती ६९३ ।
"हृतकाञ्चिवल्लिबन्धोत्तरजघनादपरभोगभुक्तायाः ।
उल्लसति रोमराजिः स्तनशम्भोर्गरलरेखेव" ॥)

**काञ्चिकं**, क्ली, (काञ्चि + संज्ञायां कन् ।) काञ्जिकम् ।

इति हेमचन्द्रः ॥

**काञ्ची**, स्त्री, (काञ्चि, "कृदिकारान्तत्वात्" वा ङीष् ।)

स्त्रीकट्याभरणम् । चन्द्रहार गोट् इत्यादि भाषा ।
तत्पर्य्यायः ॥ मेखला २ सप्तकी ३ रसना ४ सार-
सनम् ५ । इत्यमरः । २ । ६ । १०८ ॥ काञ्चिः ६
रशना ७ कक्षा ८ कक्ष्या ९ सप्तका १० सार-
शनम् ११ रसनम् १२ बन्धनम् १३ । इति शब्द-
रत्नावली ॥
("वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः" ॥
इति मेघदूते । ३० ॥) केचित्तु
एकयष्टिर्भवेत् काञ्ची मेखला त्वष्टयष्टिका ।
रसना षोडश ज्ञेया कलापः पञ्चविंशकः" ॥
इति पठन्ति इह त्वभेदात् पर्य्यायता । इति
तट्टीका ॥ मोक्षदसप्तपुर्य्यन्तर्गतपुरीविशेषः । इति
मेदिनी ॥ (यदुक्तम् ।
"अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।
पुरी द्वारावती चैव सप्तैता मोक्षदायिकाः" ॥

मुष्कको मोक्षकोघण्टा पाटलिः
काष्ठपाटला” ॥
कालस्थालीत्यत्र काचस्थालीत्येके ।
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
गुणादयोऽस्याः पाटलिशब्दे ज्ञेयाः ॥ काचनिर्म्मि-
ता स्थाली ।) काचपात्रम् ॥

**काचिघः**, पुं, (कचते दीप्यते इति बाहुलकात् इन् ।

काचिं कान्तिं हन्ति गच्छति । हन गतौ + ड ।
पृषोदरादित्वात् हस्य घः ।) काञ्चनम् । छेमण्डः ।
छिमडा । इति भाषा । मूषिकः । इति
मेदिनी ॥

**काचित्**, व्य (पाणिनिमते पदद्वयमेतत् । मुग्धबोध-

मते “किमःक्त्यन्ताच्चिच्चनौ” इति का + चित्प्र-
त्ययः ।) काचन । कापि स्त्री । इति
व्याकरणम् ।
(यथा, पदाङ्कदूते १ ।
“गोपीभर्त्तुर्व्विरहविधुरा काचिदिन्दीवराक्षी
उन्मत्तेव स्खलितकवरी निःश्वसन्ती
विशालम्” ॥)

**काचितं**, त्रि, (कच्यते बध्यतेऽसौ । कच् + णिच् +

कर्म्मणि क्तः ।) शिक्यितम् ।
शिक्यारोपितवस्तु ।
इत्यमरः । ३ । १ । ८९ ॥ शिकाय तोला द्रव्य
इति भाषा ॥

**काचिमः**, पुं, (कच बन्धे + णिच् + इमन् ।) देव-

कुलोद्भववृक्षः । तत्पर्य्यायः । भञ्जरुः २ । इति
त्रिकाण्डशेषः ॥

**काञ्चनं**, क्ली, (काञ्चते दीप्यते इति । कचि ङ दीप्तौ

+ ल्युः ।) स्वर्णम् । इत्यमरः । २ । ९ । ९५ ॥
(यथा मनुः । २ । २३९ ।
“अमित्रादपि सद्वृत्तममेध्यादपि काञ्चनम्” ॥)

शतमूली । इति शब्दचन्द्रिका ॥ (शतावरी शब्दे
ऽस्या विवरणं बोद्धव्यम् ॥)

**काञ्चनक्षीरी**, स्त्री, (काञ्चनमिव क्षीरमस्याः । गौरा-

दित्वात् ङीष् । काञ्चनवृक्षस्य क्षीरमिव क्षीर-
मस्य वा ।) क्षीरिणिलता । इति
राजनिर्घण्टः ॥

**काञ्चनगिरिः**, पुं, (काञ्चनमयो गिरिः । शाकपार्थि-

वादित्वात् समासः ।) सुमेरुपर्व्वतः । इति हेम-
चन्द्रः । (यथा भागवते । ५ । १६ । २८ ।
“जठरदेवकूटौ मेरुं
पूर्ब्बेणाष्टादशयोजनसहस्र-
मुदगायतौ द्विसहस्रं पृथुतुङ्गौ भवतः । एवमप-
रेण पवनपारियात्रौ दक्षिणेन
कैलासकरवीरौ
प्रागायतौ एवमुत्तरतस्त्रिशृङ्गककरौ
अष्टाभि-
रेतः परिस्तृतो ऽग्निरिव परितश्चकास्ति काञ्चन-
गिरिः” ॥ दानाय कृतः सुवर्णपर्व्वतः ॥)

**काञ्चनपुष्पकं**, क्ली, (काञ्चनमिव पीतं पुष्पं यस्य । का-

ञ्चनपुष्प + कप् ।) आहुल्यवृक्षः । इति राज-
निर्घण्टः ॥

**काञ्चनपुष्पी**, स्त्री, (काञ्चनमिव पुष्पं यस्याः ङीप् ।)

गणिकारीवृक्षः । इति राजनिर्घण्टः ॥
(गणिका-
रिका शब्दे ऽस्या विशेषो ज्ञातव्यः ॥)

**काञ्चनारः**, पुं, (काञ्चनं तद्वर्णं ऋच्छति पुष्पैः । काञ्चन

+ ऋ + अण् ।) कोविदारवृक्षः । इति राज-
निर्घण्टः ॥ कच्नार इति हिन्दी भाषा ॥
(“काञ्च-
नारः काञ्चनकः” इत्यादि पर्य्यायाः
काञ्चनकशब्दे
गुणाश्च कोविदारशब्दे ज्ञातव्याः ॥
व्यवहार्य्यते
यत्र तद्यथा, --

इयं हि कूर्म्मविभागे दक्षिणस्यां दिशि
स्थिते द्राविडदेशे अनुमीयते ॥) गुञ्जा । इति
विश्वः ॥

**काञ्चीपदं**, क्ली, (काञ्च्याः पदं स्थानम् ।) जघनम् ।

इति हलायुधहेमचन्द्रौ ॥

**काञ्जिकं**, क्ली, (अन्ज + धात्वर्थनिर्द्देशे ण्वुल् + टाप् अत

इत्वञ्च । अञ्जिका । कु कुत्सिता अञ्जिका व्यक्तिर्यस्य
कोः कादेशः ।) वारिपर्य्युषितान्नाम्लजलम् । काँजी
इति भाषा । तत्पर्य्यायः । आरनालकम् २ सौवीरम्
३ कुल्माषम् ४ अभियुतम् ५ अवन्तिसोमम्
६ धान्याम्लम् ७ कुञ्जलम् ८ । इत्यमरः । २ । ९ ।
३९ ॥
कुल्मासम् ९ कुल्माषाभियुतम् १० काञ्चिकम् ११
काञ्जीकम् १२ काञ्जिका १३ कञ्जिकम् १४ काञ्जी
१५ भक्तवारि १६ धान्यमूलम् १७ धान्ययोनि
१८ तुषाम्बु १९ । इति तट्टीका ॥ गृहाम्लम् २०

| पद्मकेशरम् । इति मेदिनी ॥ धनम् । नागकेशर-<br>पुष्पम् । इति राजनिर्घण्टः ॥ (भावे ल्युट्<br>। दीप्तिः ।<br>काञ्चनमये त्रि, यथा, सनुः । ५ । ११२ । | “काञ्चनारत्वचः क्वाथः शुण्ठीचूर्णेन नाशयेत् ।<br>गण्डमालान्तथाक्वाथःक्षौद्रेण वरुणत्वचः” ॥ | |
|---|---|---|

:महारसम् २१ । इति रत्नमाला ॥ तुषोदकम् २२

शुक्लम् २३ चुक्रम् २४ धातुघ्नम् २५ उन्नाहम् २६
रक्षोघ्नम् २७ कुण्डगोलकम् २८ सुवीराम्लम् २९ ।
इति हेमचन्द्रः ॥ वीरम् ३० अभिशवम् ३१ अम्ल-
सारकम् ३२ । अस्य गुणा । वातशोथपित्तज्वर-
दाहमूर्च्छाशूलाध्मानविबन्धनाशित्वम्।
"काञ्जिकं दधि तैलन्तु बलीपलितनाशनम्।
दाहकं गात्रशैथिल्यं बल्यं सन्तर्पणं परम्" ॥
मर्द्दनान्न च भक्षणात् । इति राजनिर्घण्टः ॥ अ-
पि च । भेदकत्वम् । तीक्ष्णत्वम् । उष्णत्वम् ।
पित्तरुचिवस्तिशुद्ध्यग्निवृद्धिकारित्वम्। स्पर्शे शी-
तलत्वम् । श्रमक्लमनाशित्वञ्च । पुरातनस्य तस्य
गुणः । हृत्पाण्डुकृमिरोगनाशित्वम् । अग्निवृद्धि-
कारित्वञ्च । इति राजबल्लभः ॥ * ॥
"कुल्माषधान्यमण्डेन चाशृतं काञ्जिकं भवेत् ॥
यन्मस्त्वादिशुचौ भाण्डे स गुडक्षौद्रकाञ्जिकम्।
धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते" ॥
इति वैद्यकपरिभाषा ॥

**काञ्जिकवटकः**, पुं, (काञ्जिकयोगेन कृतो वटकः ।)

वटकविशेषः । काँजि वडा इति भाषा । तस्य
पाकप्रकारो यथा, --
"मन्थनी नूतना धार्य्या कटुतैलेन लेपिता ।
निर्म्मलेनाम्बुनापूर्य्य तस्याञ्चूर्णं विनिक्षिपेत् ॥
राजिकाजीरलवणहिङ्गुशुण्ठीनिशाकृतम् ।
निक्षिपेद्वटकांस्तत्र भाण्डस्यास्यञ्च मुद्रयेत् ॥
ततो दिनत्रयादूर्द्ध्वमम्लाः स्युर्वटका ध्रुवम्" ॥
अस्य गुणाः ।
"काञ्जिकवटको रुच्यो वातहरः श्लेष्मकारकः शीतः ।
दाहं शूलमजीर्णं हरते नेत्रामयेष्वहितः" ॥
इति भावप्रकाशः ॥

**काञ्जिका**, स्त्री, (कुत्सिता ईषद्वा अञ्जिका ।) जीवन्ती-

लता । पलाशीलता । इति राजनिर्घण्टः ॥

**काञ्जी**, स्त्री (कं जलं अनक्ति । क + अन्ज + कर्म्मणि

+ अण् । गौरादित्वात् ङीष् ।) महाद्रोणावृक्षः ।
इति राजनिर्घण्टः ॥ काञ्जिकम् । इत्यमरटीका ॥
("तुम्बीवीजं सौद्भिदस्तु काञ्जीपिष्टं गुडीत्रयम् ।
अर्शोहरं गुदस्थं स्याद्दधिमाहिषमश्नुतः" ॥

घञ् ।) एकचक्षुः । इति मेदिनी ॥ काणा इति
भाषा । (यथा, मनुः । ३ । २४२ ।
"खञ्जोवा यदिवा काणो दातुः प्रेष्योऽपि वा
भवेत्" ॥)

**काणूकः**, पुं, (कणति शब्दायते । कण शब्दे + "मृक-

णिभ्यामूकोकणौ" । उणां ४ । ३९ । इत्यूकण् ।)
काकः । इत्युणादिकोषः ॥

**काण्डं**, क्ली, (कणतीति । कण शब्दे + डः । बाहुला-

कात् दीर्घः ।) सन्धिविच्छिन्नैकखण्डास्थि। यया ।
"भग्नं समासाद्द्विविधं हुताश-
काण्डे च सन्धौ च हि तत्र सन्धौ ।
उत्पिष्टविश्लिष्टविवर्त्तितञ्च
तिर्य्यग्गतं क्षिप्तमधश्च षट् च" ॥
इति रोगविनिश्चयः ॥
सन्धिविच्छिन्नमेकखण्डमस्थि-
काण्डम् । काण्डेन च ललककपालवलयत रुणरुच-
कानां ग्रहणम् । तत्र भग्नं काण्डभग्नम् । इति
तट्टीकाव्याख्यामधुकोषः॥

**काण्डः**, पुं, क्ली, (कणि दीप्तौ + ञमन्तात् डः ।

क्वादिभ्यः कित् अनुनासिकस्येति दीर्घः ।) दण्डः ।
(यथा, कात्यायनश्रौतसूत्रे ८ । ७ । २७ ।
"पृषता वरत्राकाण्डेनाहन्ति" ।
"वरत्राकाण्डेन वंशदण्डेन" । इति कर्कः ॥)
नालम् । वाणः । (यथा, महाभारते १३ । ५ । ३ ।
"विषये काशिराजस्य ग्रामान्निष्क्रम्य लुब्धकः ।
सविषं काण्डमादाय मृगयामास वै मृगम्" ॥)
शरवृक्षः । अर्व्वा । कुत्सितः । वर्गः । (वर्गश्च एक-
जातीयसमवायः । यथा, भागवते । ४ । २४ । ९ ।
"क्रियाकाण्डेषु निष्णातो योगेषु च कुरूद्वह ॥)
परिच्छेदः । (यथा, अथर्व्ववेदे १२ । ३ । ४५ ।

**काण्डकाण्डकः**, पुं, (काण्डस्य शरवृक्षस्य काण्डमिव

काण्डं यस्य । काण्डकाण्ड + कप् ।)
काशतृणम् ।
इति राजनिर्घण्टः ॥

**काण्डकारं**, क्ली, (काण्डं स्कन्धं किरति दीर्घतया उत्-

क्षिपति । काण्ड + कृ + अण् ।) गुवाकः । इति
शब्दमाला ॥ (पुंसि तु काण्डं वाणं करोति इति
काण्डकारः । वाणकारकः ॥)

**काण्डकीलकः**, पुं, (काण्डे स्कन्धे कीलकमिव यस्य ।

काण्डकील + कप् ।) लोध्रः । इति
राजनिर्घण्टः ।
लोधकाठ इति भाषा ॥

**काण्डगुण्डः**, पुं, (काण्डेन गुच्छेन गुण्डयति वेष्टयति

भूमिम् । काण्ड + गुडि वेष्टने + अण् ।) गुण्ड-
नामतृणम् । इति राजनिर्घण्टः ॥

**काण्डगोचरः**, पुं, (काण्डस्य वाणस्य गोचर इव गो-

चरो यस्य ।) नाराचः । लौहमयवाणः । इति
त्रिकाण्डशेषः ॥

**काण्डणी**, स्त्री, (काण्डेन स्तम्बेन नीयतेऽसौ काण्डं

नयति आत्मानं वा । काण्ड + नी + क्विप् । पृषो-
दरादित्वात् णत्वम् ।) सूक्ष्मपर्णलता । रामदूती
इति ख्याता । इति शब्दचन्द्रिका ॥

**काण्डतिक्तः**, पुं, (काण्डे स्कन्धे तिक्तः ।) भूनिम्बः । इति

राजनिर्घण्टः ॥ (अस्य पर्य्यायो यथा, --
"किराततिक्तः कैरातः कटुतिक्तः किरातकः ।
काण्डतिक्तो नोर्य्यतिक्तो भूनिम्बो रामसेनकः" ॥

इति तु काञ्जिकार्थे ज्ञेयम् ॥ इति वैद्यकचक्रपाणि-
संग्रहे अर्शोऽधिकारे ॥)

**काठः**, पुं, (काठ्यते तङ्क्यते इति । कठ + कर्म्मणि
घञ् ।) पाषाणः । इति त्रिकाण्डशेषः ॥

**काठिन्यं**, क्ली, (कठिनस्य भावः । कठिन + ष्यञ् ।)
कठिनता । यथा । "सीते मा कुरु सम्भ्रमञ्च मृदुना
काठिन्यमङ्गीकृतम्" । इत्युद्भटः ॥
(यथा च कुमारे । ६ । ७३ ।
"काठिन्यं स्थावरे काये भवता सर्व्वमर्पितम्" ॥)

**काठिन्यफलः**, पुं, (काठिन्यं फले यस्य ।) कपित्थवृक्षः ।
इति राजनिर्घण्टः ॥ (कपित्थशब्देऽस्य गुणादयो
बोद्धव्याः ॥)

**काणः**, पुं, (कणति एकचक्षुर्निमीलतीति । कण सं-
ज्ञायां कर्त्तरि घञ् ।) काकः । इति मेदिनी ॥

**काणः**, त्रि, (कणति एकचक्षषा पश्यति । कण् +
"इदं प्रापमुत्तमं काण्डमस्य
यस्माल्लोकात्परमेष्ठी
समाप" ॥) अवसरः । प्रस्तावः । वारि ।
जलम् ।
इत्यमरः । ३ । ३ । ४३ ॥ (यथा, हेः रामायणे
२ । ८९ । १८ ।
"तास्तु गत्वा परं तीरमवरोप्य च तं जनम् ।
निवृत्ताः काण्डचित्राणि क्रियन्ते दाशबन्धुभिः"
॥

"क्रीडार्थं काण्डचित्राणि काण्डे जले
चित्राणि

चित्रगमानानि लघुत्वात् क्रियन्ते स्मेत्यर्थः" ॥
इति तट्टीका ॥) स्तम्बः । (यथा, अमरुशतके
९५ ।
"उरुद्वयं मृगदृशः कदलस्य काण्डौ
मध्यञ्च वेणिरतुलं स्तनयुग्ममस्याः" ॥)
तृणादिगुच्छः । (यथा, भट्टिः ५ । १८ ।
"दूर्व्वाकाण्डमिव श्यामा न्यग्रोधपरिमण्डला"
॥)
तरुस्कन्धः । गुँडि इति भाषा । (यथा,
रामायणे ।
"वृक्षकाण्डमितो भाति" ॥ वृक्षाणां शाखा ।
यथा, मनुः १ । ४६ ।
"उद्भिज्जाः स्थावराः सर्व्वे
वीजकाण्डप्ररोहिणः" ।
"केचित्काण्डात् शाखा एव रोपिता
वृक्षतांयान्ति" ॥
इति तट्टीका ॥ वृन्दः । समूहः । रहः । निर्जन-
स्थानम् । इति मेदिनी ॥ श्लाघा । इति
हेमचन्द्रः ॥
पापोयान् । इति धरणिः ॥

**काण्डकटुकः**, पुं, (काण्डे स्तम्बे लतायामित्यर्थः
कटुक-
स्तिक्तः ।) कारवेल्लः । इति राजनिर्घण्टः ॥
(का-
रवेल्लशब्देऽस्य विवरणं ज्ञेयम् ॥)

इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
। गुणा-
दयोऽस्य किराततिक्तशब्दे ज्ञेयाः ॥)

**काण्डतिक्तकः**, पुं, (काण्डतिक्त + स्वार्थे कन् ।)
भूनिम्ब
वृक्षः । इति शब्दचन्द्रिका । चिराता इति
भाषा ॥

**काण्डनीलः**, पुं, (काण्डे स्कन्धे नीलः ।) लोध्रः ।
इति
राजनिर्घण्टः ॥

**काण्डपटः**, पुं, (काण्डे काष्ठादिनिर्म्मितस्तम्भे
आवर-
कत्वात् स्थितः पटः ।) यवनी ।
तिरस्करिणी ।
इति हेमचन्द्रः । कानात् इति भाषा ॥

**काण्डपुङ्खा**, स्त्री, (काण्डस्य वाणस्य पुङ्ख इव पुङ्खो
यस्याः ।) शरपुङ्खा । इति राजनिर्घण्ठः ॥

**काण्डपुष्पं**, क्ली, (काण्डात् स्कन्धं व्याप्य पुष्पं
यस्याः ।)
क्षुद्रसुगन्धिपुष्पविशेषः । इति
शब्दचन्द्रिका ।
दोना इति भाषा ॥

**काण्डपृष्ठं**, क्ली, (काण्डं तरुस्कन्ध इव स्थूलं पृष्ठं
यस्य ।) कर्णधनुः । इति महाभारतम् ॥

**काण्डपृष्ठः**, त्रि, (काण्डः वाणः पृष्ठे यस्य ।)
काण्ड-
स्पृष्टः । शस्त्राजीवः । इत्यमरटीकायां
स्वामी ॥
("स्त्रीपूर्ब्बाः काण्डपृष्ठाश्च यावन्तो
भरतर्षभ ! ।
अजपा ब्राह्मणाश्चैव श्राद्धे नार्हन्ति
केतनम्" ॥
इति महाभारते । १३ । २३ । २२ ॥)
वैश्यापतौ
पुं । इति दानधर्म्मः ॥

**काण्डवारिणी**, स्त्री, (काण्डान् संग्रामापतितान् वा-
णान् स्मरणादेव निवारयतीति । काण्ड +
वृ +
णिच् + णिनिः ।) दुर्गा । यथा, --
"महागजघटाटोपसंयुगे नरवाजिनाम् ।

| | | |
|---|---|---|
| | | स्मरणाद्वारते वाणान् तेन सा काण्डवारिणी" ॥<br>इति देवीपुराणे देवीनिरुक्तनाम ४५ अध्यायः ॥ |

**काण्डरुहा**, स्त्री, (काण्डात् छिन्नस्कन्धात् रोहतीति ।
काण्ड + रुह + कः टाप् च ।) कटुकी । इति
रत्नमाला ॥ (अस्याः पर्य्यायो यथा, --
"कट्वी तु कटुका तिक्ता कृष्णभेदा कटुम्भरा ।
अशोका मत्स्यशकला चक्राङ्गी शकुलादनी ॥
मत्स्यपित्ता काण्डरुहा रोहिणी कटुरोहिणी" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥ अस्याः
गुणाः कटुकाशब्दे ज्ञेयाः ॥)

**काण्डर्षिः**, पुं, (काण्डस्य वेदविभागस्य ऋषिः । यद्वा
काण्डेषु एकजातीयक्रियादिसमवायेषु ऋषिर्वि-
चारकः ।) वेदकाण्डविशेषाध्यापकमुनिभेदः । स
तु जैमिन्यादिः । इति त्रिकाण्डशेषः ॥ (जैमि-
निस्तु पूर्ब्बमीमांसाशास्त्रप्रणयनेन क्रियाकाण्डस्य
विचारकः । तथा वेदव्यासः उत्तरमीमांसारूप-
वेदान्तशास्त्रप्रणयनेन ज्ञानकाण्डस्य विचारकः ।
इत्यादि सूरिभिर्निरुक्तम् ॥)

**काण्डवान्**, [त्] त्रि, (काण्डः शरःप्रहरणतया अ-
स्यास्ति इति । काण्ड + मतुप् । मस्य वः ।) का-
ण्डीरः । इत्यमरः । २ । ८ । ६९ ॥ तीरान्दाज
इति भाषा ॥

**काण्डसन्धिः**, पुं, (काण्डस्य स्कन्धस्य सन्धिः मेलन-
स्थानम् ।) ग्रन्थिः । इति राजनिर्घण्टः ॥ पाव्
गाँट इति च भाषा ॥

**काण्डस्पृष्टः**, त्रि, (स्पष्टं गृहीतं काण्डं येन निष्ठान्त-
त्वात् परनिपातः ।) काण्डपृष्ठः । शस्त्राजीवी ।
इत्यमरः । २ । ८ । ६७ ॥

**काण्डहीनं**, क्ली, (काण्डेन स्कन्धेन हीनम् ।) भद्रमु-
स्तकम् । इति शब्दचन्द्रिका ॥

**काण्डिका**, स्त्री, (काण्डः गुच्छः प्राशस्त्येन अस्ति
अस्याः । काण्ड + ठन् + टाप् ।) लङ्कानामकधान्य-
विशेषः । वालुकीनामकर्क्कटीभेदः । इति राज-
निर्घण्टः ॥

**काण्डीरः**, त्रि, (काण्डः वाणः अस्त्यस्य । काण्ड +
"काण्डाण्डादीरन्नीरचौ" । ५ । २ । १११ । इति
ईरन् ।) काण्डास्त्रवान् । इत्यमरः । २ । ८ । ६९ ॥
तीरान्दाज इति भाषा ॥ (यथा भट्टिः ४ । १० ।
पूर्ब्बखण्डे १ भागे ॥
"कोकिलाक्षस्तु काकेक्षुरिक्षुरः क्षुरकः क्षुरः ।
भिक्षुः काण्डेक्षुरप्युक्त इक्षुगन्धेक्षु वालिका"
॥
गुणाऽस्य क्षुरकशब्दे ज्ञेयाः ॥) काशतृणम् ।
इति
राजनिर्घण्टः ॥

**काण्डेरी**, स्त्री, (काण्डं वाणाकारं पुष्पं ईर्त्ते । काण्ड
+ ईरङ् गतौ + अण् । गौरादेराकृतिगणत्वात्
ङीष् ।) नागदन्तीवृक्षः । इति रत्नमाला ॥

**काण्डेरुहा**, स्त्री, (काण्डे रोहति इति कः टाप् ।
सप्तम्या अलुक् ।) कटुकी । इति रत्नमाला
॥
(कटुकीशब्दे ऽस्या विशेषो बोध्यः ॥)

**कातरः**, त्रि, (कु कष्टेन तरतीति । कु + तॄ + अच् ।
कोः कादेशः ।) व्यसनाकुलचित्तः ।
व्याकुलः ।
तत्पर्य्यायः । अधीरः २ । इत्यमरः । ३ । १
। २६ ॥
(यथा रघुः ११ । ७८ ।
"कातरोऽसि यदि वोद्गतार्चिषा
तर्ज्जितः परशुधारया मम" ॥)

**कातरः**, पुं, (कं जलं आतरति । क + आ + तॄ +
अच् ।) कातलमत्स्यः । इति शब्दरत्नावली
॥

**कातलः**, पुं, (कातर एव रस्य लः । अयं हि रोहि-
तादिवत् न तेजस्वी अतोऽस्य तथात्वम् ।
यद्वा,
कस्य जलस्य तलं स्पृश्यत्वेन न अस्ति
अस्य । अर्श
आदित्वादच् ।) मत्स्यविशेषः । कात्ला इति
भाषा । तस्य गुणाः । उष्णत्वम् । मधुरत्वम्
।
गुरुपाकित्वम् । त्रिदोषकारित्वञ्च । इति
राज-
वल्लभः ॥ (यथा, वैद्यके ।
"कातलो मधुरश्चोष्णो गुरुपाकी
त्रिदोषकृत्" ॥)

**कातृणं**, क्ली, (कुत्सितं तृणं क्षुद्रं तृणं वा । कोः का-

**कादम्बः**, पुं, (कदम्बे समूहे भवः । कदम्ब + अण्
।)
कलहंसः । वालि हाँस् इति भाषा ।
इत्यमरः ।
२ । ५ । २३ । (यथा रघुः । १३ । ५५ ।
"क्वचित् खगानां प्रियमानसानां
कादम्बसंसर्गवतीव पङ्क्तिः" ॥)
अस्य मांसस्य गुणाः ।
वायुरक्तपित्तनाशित्वम् ।
भेदकत्वम् । शुक्रकारित्वम् । शीतत्वञ्च ।
इति
राजवल्लभः । (कदम्ब एव । स्वार्थे अण् ।)
कदम्ब-
वृक्षः । इत्यमरटीकायां भरतः ॥
(कदम्बस्येदमिति
व्युत्पत्त्या अण् । कदम्वसम्बन्धिनि, त्रि ।
कदम्ब-
कुसुमम् । यथा रघुः १३ । २७ ।
"गन्धश्च धाराहतपल्वलानां
कादम्बमर्द्धोद्गतकेसरञ्च" ॥)
वाणः । इति मेदिनी ॥

**कादम्बकः**, पुं, (कादम्ब + स्वार्थे कन् ।) वाणः ।
इति
हारावली ॥

**कादम्बरं**, क्ली, (कादम्बम् कदम्बोद्भवं रसं लाति
गृह्णातीति । कदम्ब + ला + कः । लस्य
रः ।)
कदम्बपुष्पोद्भवमद्यम् । इति मेदिनी ॥
(यथा, माघे ।
"निषेव्य मधुमाधवाः सरसमत्र
कादम्बरम्" ॥)
दधिसारः । इति हेमचन्द्रः ॥ शीधुः । इति
विश्वः ॥
(इक्षुजातगुडादि । इति मल्लिनाथः ॥)

**कादम्बरः**, पुं, (कादम्बं कदम्बरसवत् लाति
गृह्णातीति ।
ला + कः । लस्य रश्च ।) दध्यग्रम् ।
दधिसरः ।
इति मेदिनी ॥

**कादम्बरी**, स्त्री, (कु कृष्णवर्णं नीलवर्णमित्यर्थः
अम्बरं

"काण्डीरः खाड्गिकः शार्ङ्गी रक्षन् विप्रस्तनुत्रवान्" ॥)

**काण्डीरः**, पुं, (काण्डः स्तम्बः अस्यास्तीति । काण्ड + "काण्डाण्डादीरन्नीरचौ" । ५ । २ । १११ । इति ईरन् ।) अपामार्गवृक्षः । लताप्रभेदः । काण्ड-वेल इति ख्यातः । तत्पर्य्यायः । काण्डकटुकः २ नासासंवेदनः ३ पटुः ४ अग्रकाण्डः ५ स्तोमवल्ली ६ कारवल्ली ७ सुकाण्डिका ८ । अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । सारकत्वम् । दुष्टव्रणलूतागुल्मोदरप्लीहशूलमन्दाग्निनाशित्वञ्च । इति राजनिर्घण्टः ॥

**काण्डीरी**, स्त्री, (काण्डीर + गौरादित्वात् ङीष् ।) मञ्जिष्ठा । इति रत्नमाला ॥ काण्डीरा इत्यपि पाठः ॥ (मञ्जिष्ठाशब्देऽस्या गुणादयो ज्ञातव्याः ॥)

**काण्डेक्षुः**, पुं, (काण्डे इक्षुरिव ।) कोकिलाक्षवृक्षः । इत्यमरः । २ । ४ । १०४ ॥ कुलिया खाडा इति भाषा ॥ (अस्य पर्य्यायाः । यथा, भावप्रकाशस्य देशः ।) रोहिपतृणम् । इति राजनिर्घण्टः ॥

**कात्यः**, पुं, (कतस्य ऋषेर्गोत्रापत्यं । कत + "गर्गा-दिभ्यो यञ्" । ४ । १ । १०५ । इति यञ् ।) कात्यायन-मुनिः । इति त्रिकाण्डशेषः ॥

**कात्यायनः**, पुं, (कतस्य गोत्रापत्यम् । गर्गादित्वात् यञ् यञन्तत्वात् यनिष्फः ।) धर्म्मशास्त्रकर्तृमुनि-विशेषः । (यथोक्तं याज्ञवल्क्ये १ । ४ । ५ ।
"मन्वत्रिविष्णुहारीतयाज्ञ्यवल्क्योशनोऽङ्गिराः ।
यमापस्तम्बसम्बर्त्ताःकात्यायनवृहस्पती ॥
पराशरव्यासशङ्खलिखितादक्षगोतमौ ।
शातातपो वशिष्ठश्च धर्म्मशास्त्रप्रयोजकाः" ॥
वररुचिः । इति मेदिनी ॥

**कात्यायनी**, स्त्री, (कतस्यापत्यं स्त्री । "गर्गादिभ्यो यञ्" । ४ । १ । १०५ । इति यञ् । "सर्व्वत्र-लोहितादिकतस्तेभ्यः" । ४ । १ । १८ । इति ष्फः । षित्वात् ङीष् ।) दुर्गा । (यथा मार्कण्डेय ९१ । २३ ।
"एतत्ते वदनं सौम्यं लौचनत्रयभूषितम् ।
पातु नः सर्व्वभूतेभ्यः कात्यायणि नमोऽस्तुते" ॥)
अर्द्धवृद्धा काषायवसना विधवा । इत्यमरः । २ । ६ । १७ ॥ (याज्ञवल्क्यमुनेः पत्न्योरेका पत्नी । यदुक्तं वृहदारण्यकोपनिषदि । "याज्ञवल्क्यस्य द्वे भार्य्ये बभूवतुः मैत्रेयी कात्यायनी च । तयोर्हि मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञैव तर्हि कात्या-यनी" ॥ पत्न्यां ङीष् । कात्यायनस्य ऋषेः पत्नी" ॥)

वस्त्रं यस्य । कोः कदादेशः । कदम्बरो बलरामस्तस्य प्रिया । कदम्बर + अण् ततः स्त्रियां ङीप् । यद्वा कदम्बे जातो रसः कादम्बः । "तत्रजातः" । ४ । ३ । २५ । इत्यण् । कादम्बं राति ददा-तीति । रादाने + "आतोऽनुपसर्गे कः" । ३ । २ । ३ । इति कः । गौरादित्वात् ङीष् ।) मदिरा । इति मेदिनी ॥ (यथा, --
"कादम्बरीमदविघूर्णितलोचनस्य
युक्तं हि लाङ्गलभृतः पतनं पृथिव्याम्" ॥
इत्युद्भटः ॥) कोकिला । स्वरस्वती । शारिकाप-क्षिणी । इति मेदिनी ॥ (वाणभट्टविरचितकाव्य-विशेषः । स्वनायिकानाम्नैव प्रसिद्धोऽयं ग्रन्थः । इयं कादम्बरी तु वाणभट्टेनासमापितां पुनरस्य पुत्त्रेण समाप्तिं नीता ॥ नायिकाविशेषः । सातु तुम्बुरु-प्रभृतीनां षण्णां गन्धर्व्वाणां ज्येष्ठस्य हंस इत्याख्यया प्रसिद्धस्य गन्धर्व्वस्य कन्या । अस्या जननी सोम-मयूखसम्भवाप्सरसां कुले जाता गौरीति नाम्ना प्रसिद्धा । अस्या अन्यद्विवरणन्तु कादम्बर्य्यां द्रष्ट-व्यम् ॥)

**कादम्बरीवीजं**, क्ली, (कादम्बर्य्याः वीजं आसवः ।) सुरावीजम् । इति रत्नमाला ॥

**कादम्बर्य्यः**, पुं, (कादम्बर्य्यै हितः इति यत् ।) कदम्ब-वृक्षः । इति जटाधरः ॥

**कादम्बा**, स्त्री, (कादम्ब इव आचरति । कादम्ब + आचारे क्विप् + अच् + टाप् ।) कदम्बपुष्पीवृक्षः ।

:इति शब्दचन्द्रिका ॥ मुण्डिरी इति भाषा ॥

**कादम्बिनी**, स्त्री, (कादम्बाः कलहंसाः सन्ति अस्यां । कादम्ब + इनि ङीष् ।) मेघमाला । मेघश्रेणिः । इत्यमरः । १ । ३ । ८ ॥

**कादाचित्कं**, क्ली, कदाचिद्भवम् । इति मुग्धबोध-व्याकरणम् ७ । १५ ॥ (यथा, साहित्यदर्पणे ३ । २७ ।
"यद्यपि रसाभिन्नतया चर्व्वणस्यापि न कार्य्यत्वं
तथापि तस्य कादाचित्कतया उपचरितेन कार्य्य-
त्वेन कार्य्यत्वमुपचर्य्यते" ॥)

**काद्रवेयः**, पुं, (कद्रोरपत्यं पुमान् । कद्रु + "शुभ्रादि-भ्यश्च" । ४ । १ । १२३ । इति ढक् । "ढे लोपो-ऽकाद्र्वाः" । ६ । ४ । १४ । इति न लोपः ।) कद्रु-सन्तानः । नागः । इत्यमरः । १ । ८ । ४ ॥ (यथा, महाभारते १ । ६५ । ४१ ।
"शेषोऽनन्तो वासुकिश्च तक्षकश्च भुजङ्गमः ।
कूर्म्मश्च कुलिकश्चैव काद्रवेयाः प्रकीर्त्तिताः" ॥)

**कानकं**, क्ली, (कनकं फलमिव उग्रं फलं अस्त्यस्य । कनक + अण् ।) जयपालवीजम् । अस्य गुणाः । तीक्ष्णत्वम् । उष्णत्वम् । सारकत्वम् । उत्क्लेद-कारित्वञ्च । इति राजवल्लभः ॥ (वैद्यकचक्रपाणि-संग्रहे वृहत्सिंहनादगुग्गुलौ व्यवहारोऽस्य यथा ।
"सहस्रं कानकफलं सिद्धे संचूर्ण्य निक्षिपेत् ।
ततो माषद्वयं जग्ध्वा पिबेत्तप्तजलादिकम्" ॥)

**काननं**, क्ली, (कं जलं अननं जीवनमस्य । यद्वा कानयति दीपयति । कनदीप्तौ + णिच् + ल्युट् ।) वनम् । (यथा, मेघदूते ४४ ।
पाके दुग्धं भजति शिखराकारतां नैति भूमौ
कान्तं लौहं तदिदमुदितं लक्षणोक्तं न चान्यत्" ॥
इति सुखबोधः ॥ अपि च ।
"यत्पात्रे न प्रसरति जले तैलविन्दुर्निषिक्तो
हिङ्गुर्गन्धं त्यजति भजते स्वादुतां निम्बकल्कः ।
पाच्यं दुग्धं भवति सिकतापुञ्जवन्नैति भूमौ
कृष्णाङ्गः स्यात् सजलचणकः कान्तलौहंवदन्ति" ॥
इतिवैद्यकम् ॥ (वैद्यकरसेन्द्रसारसंग्रहे वृहत्सर्व्व ज्वरहरलौहेऽस्य व्यवहारो यथा, --
"पारदं गन्धकं शुद्धं ताम्रमभ्रञ्च माक्षिकम् ।
हिरण्यं तारतालञ्च कर्षमेकं पृथक् पृथक् ॥
मृतं कान्तं पलं देयं सर्व्वमेकीकृतं शुभम्" ॥)

**कान्तः**, त्रि, (काम्यते इति । कम् + कर्म्मणि क्तः "यस्य विभाषा" । ७ । २ । १५ । इति नेट् । अनुनासि-कस्येति दीर्घः ।) मनोरमः । शोभनः । इत्यमरमे-दिनीकरौ ॥ (यथा,
"मलिनमपि मृगाक्ष्या बल्कलं कान्तरूपं
न मनसि रुचिभङ्गं स्वल्पमप्यादधाति" ।
इति शाकुन्तले १ अङ्के ॥)

**कान्तः**, पुं, (कम् + क्त ।) श्रीकृष्णः । चन्द्रः । इति शब्दरत्नावली ॥ पतिः । (यथा मेघदूते । १०१ ।
'कान्तोदन्तः सुहृदुपनतः सङ्गमात् किञ्चिदूनः' ॥)
चन्द्रसूर्य्यायःपर्य्यायान्तःशिला। यथा । चन्द्रकान्त-सूर्य्यकान्तायस्कान्तादयः । इति मेदिनी ॥ हिज्जल-वृक्षः । वसन्त ऋतुः । इति राजनिर्घण्टः ॥ (विष्णुः । यथा, महाभारते १३ । १४९ । ४५ ।
"कामहा कामकृत् कान्तः कामः कामप्रदःप्रभुः" ॥
शिवः । यथा, तत्रैव १३ । १७ । १४८ ।
तीक्ष्णं मुण्डं कान्तलोहं निरुत्थं जायते भृशम्"
"ततः कोटिसहस्रैर्व्वा कान्तलोहं महागुणम्" ॥
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणा धिकारे ॥)

**कान्ता**, स्त्री, (काम्यते असौ । कम् + णिच् + कर्म्मणि क्त + टाप् ।) नारी । (यथा शृङ्गारतिलके ६ ।
"झटिति प्रविश गेहं मावहिस्तिष्ठ कान्ते !
ग्रहणसमयवेला वर्त्तते शीतरश्मेः ।
अयि ! सुविमलकान्तिं वीक्ष्य नूनं स राहु-
र्ग्रसति तव मुखेन्दुं पूर्णचन्द्रं विहाय" ॥) प्रिय-ङ्गुवृक्षः । इति मेदिनी ॥ सर्व्वाङ्गसुन्दरी स्त्री । इत्यमरः । २ । ६ । ३ ॥
(गङ्गा यथा, काशीखण्डे २९ । ४३ ।
"कूटस्था करुणा कान्ता कूर्म्मयाना कलावती" ॥)
वृहदेला । रेणुका । नागरमुस्ता । इति राज-निर्घण्टः ॥

**कान्ताङ्घ्रिदोहदः**, पुं, (कान्तायाः अङ्घ्रिणा चरणस्पर्शे-नैव दोहदः पुष्पोद्गमो यस्य । "पादाघाताद-शोको विकशति" इति कविप्रौढोक्तेस्तथात्वम् ।) अशोकवृक्षः । इति त्रिकाण्डशेषः ॥

**कान्ताचरणदोहदः**, पुं, (कान्ताचरणेन रमणीचरण-स्पर्शेन दोहदः पुष्पोद्गमो यस्य । "पादाघा-तादशोको विकशति" । इति कविप्रौढोक्तेस्तथा-त्वम् ।) अशोकवृक्षः । इति भूरिप्रयोगः ॥

**कान्तायसं**, क्ली, (अय एव आयसम् । कान्तं कम-नीयं आयसम् ।) अयस्कान्तः । इति राजनिर्घण्टः ॥

**कान्तारं**, क्ली, (कस्य सुखस्य अन्तं ऋच्छति गच्छ-तीति । कान्त + ऋ + "कर्म्मण्यण्" । ३ । २ । १ । इति अण् ।) उपसर्गादि । (कान्तं मनोज्ञं ऋच्छति प्राप्नोतीति । कर्म्मण्यण् ।) काननम् । (यथा, हेः रामायणे २ । २८ । ५ ।
"सीते विमुच्यतामेषा वनवासकृता मतिः ।
बहुदोषं हि कान्तारं वनमित्यभिधीयते" ॥)
पद्मविशेषः । इति हेमचन्द्रः ॥

"शीतो वायुः परिणमयिताकाननोडुम्बराणाम्"
॥
कस्य ब्रह्मणः आननं मुखम् ।) ब्रह्मणो मुखम् ।
गृहम् । इति मेदिनी ॥

**काननारिः**, पुं, (काननस्य अरिरिव । शमीगर्भोत्थि-

ताग्निना सर्व्वकाननस्य दहनात् तथात्वम् ।)
शमी-
वृक्षः । इति शब्दचन्द्रिका ॥ (अस्य गुणादयः
शमी
शब्दे बोद्धव्याः ॥)

**कानीनः**, पुं स्त्री, (कन्यायां अनूढायां जातः कन्याया

जातो वा । कन्या + "कन्यायाः कनीन च" ।
४ । १ ।
११६ । इति अण् कनीनादेशश्च ।)
अनूढापुत्त्रः ।
तत्पर्य्यायः । कन्यकाजातः २ । इत्यमरः । २
। ६ ।
२४ ॥ सा कन्या यद्यनूढा पितृगृह एव तिष्ठति
तदा तत्पुत्त्रो मातामहस्यैव यथा, --
"कानीनः कन्यकाजातो मातामहसुतो मतः"
॥
इति याज्ञवल्क्यः ॥ यद्यूढा तदा वोढुरेव यथा,
--
"पितृवेश्मनि कन्या तु यं पुत्त्रं जनयेद्रहः ।
तं कानीनं वदेन्नाम्ना वोढुःकन्यासमुद्भवम्" ॥
इति मनुः ॥ व्यासे कर्णे च पुं । इति मेदिनी ॥

**कान्तं**, क्ली, (कनते दीप्यते इति । कन + कर्त्तरि क्तः
।)

कुङ्कुमम् । इति राजनिर्घण्टः ॥ लौहविशेषः ।
तस्य लक्षणं यथा, --
"स्वादुर्य्यत्र भवेन्निम्बकल्को रात्रिन्दिवोषितः ।
कान्तं तदुत्तमं यच्च रूप्येणावर्त्तितं मिलेत्" ॥
तस्य परीक्षा । यथा ।
पात्रे यस्मिन् विसरति जले तैलविन्दुर्निषिक्तो
विद्धं गन्धं विसृजति निजं रूपितं निम्बकल्कैः
।

"गुहः कान्तो निजः सर्पः पवित्रं सर्व्वपावनः"
॥
कार्त्तिकेयः । यथा, तत्रैव २ । २३१ । ४ ।
"कामजित् कामदः कान्तः
सत्यवाग्भुवनेश्वरः" ॥)

**कान्तपक्षी**, [न्] पुं, (कान्तस्य कार्त्तिकेयस्य पक्षी ।

मयूरस्य कार्त्तिकवाहनत्वात्तथात्वम्।) मयूरः
।
इति शब्दचन्द्रिका ॥

**कान्तपुष्पः**, पुं, (कान्तानि मनोरमाणि पुष्पाण्यस्य ।)

कोविदारवृक्षः । इति राजनिर्घण्टः ॥

**कान्तलकः**, पुं, (कान्तं लक्यते आस्वाद्यते । कान्त + लक

आस्वादने + घञर्थे कः । यद्वा काम्यते इति
"मति
बुद्धिपूजार्थेभ्यश्च क्तः" । ३ । २ । १८८ ।
इति क्तः ।
कान्तः । ततः लकतीति । लक + अच् ।
कान्त-
श्चासौलकश्चेति ।) नन्दीवृक्षः । इत्यमरः ।
२ । ४ । १२८ ॥
तुँद इति भाषा ॥

**कान्तलोहं**, क्ली, (कान्तं लौहश्रेष्ठत्वात् कमनीयं

लोहम् ।) अयस्कान्तः । इति राजनिर्घण्टः ॥
(अस्य
परीक्षादिकं कान्तशब्दे द्रष्टव्यम् ॥ अस्य
निरुत्थी-
करणं यथा, ॥
"शुद्धस्य सुतराजस्य भागो भागद्वयं बलेः ।
द्वयोः समं लौहचूर्णं मर्द्दयेत् कन्यकाद्रवैः ॥
यामद्वयं ततो गोलं स्थापयेत्ताम्रभाजने ।
आच्छाद्यैरण्डजैः पत्रैरुष्णो यामद्वयाद्भवेत् ॥
त्रिदिनं धान्यराशिस्यं तत्ततोमर्द्दयेद्दृढम् ।
रजस्तद्वस्त्रगलितं नीरे तरति हंसवत् ॥

**कान्तारः**, पुं, (कान्तं मनोज्ञं रसं ऋच्छति प्राप्नोति ।

कान्त + ऋ + अण् ।) इक्षुविशेषः । कतारे इति
हिन्दी भाषा । (यथा, सुश्रुते सूत्रस्थाने ४५
अध्याये ।
"कान्तार तावसाविक्षुवंशकानुगुणौ मतौ" ।)
अस्य गुणाः । गुरुत्वम् ।
शुक्रश्लेष्मवृद्धिकारित्वम् ।
वृंहणत्वम् । सारकत्वञ्च । इति भावप्रकाशः ॥
कोविदारवृक्षः । वंशः । इति राजनिर्घण्टः ॥

**कान्तारः**, पुं, क्ली, (कस्य सुखस्य अन्तं ऋच्छति

यत्र । हिंस्रसङ्कु लत्वात् । कान्त + ऋ + आधारे
घञ् ।) महावनम् । (यथा, गोः रामायणे । ४ ।
४३ । ११ ।
"कैकेयान् सिन्धुसौवीरान् कान्तारगिरयश्च ये ।
गिरिजालावृतां दुर्गां मार्गध्वं पश्चिमां दिशम्" ॥)
दुर्गमपथः । इत्यमरः । ३ । ३ । १७१ ॥
(उक्तञ्च--
"सिंहक्षुण्णकरीन्द्रकपोलमूलगलितं
रक्ताक्तमुक्ता-
फलम् कान्तारे वदरीभ्रमाद्द्रुतमगाद्भिल्लस्य
पत्नी मुदा" इति ।) विलम् । छिद्रम् । इति
मेदिनी ॥

**कान्तारकः**, पुं, (कान्तार + स्वार्थे कन् । इक्षुविशेषः ।
इत्यमरः । २ । ४ । १६३ ॥ काजले आक्
इति भाषा ॥

**कान्तारी**, स्त्री, (कान्तार + गौरादित्वात् ङीष् ।)
इक्षुभेदः । काज्ले आक् इति भाषा । अस्या
गुणाः । मधुरत्वम् । लघुत्वम् । क्षाररसत्वम् ।
कफवातकारित्वञ्च । इति राजवल्लभः ॥

**कान्तिः**, स्त्री, (कमु कान्तौ कन् दीप्तौ वा + भावे
क्तिन् ।) दीप्तिः । तत्पर्य्यायः । शोभा २ द्युतिः
३
छविः ४ । इत्यमरः । १ । ३ । १० ॥ शुभा ५
दीप्तिः
६ भा ७ श्रीः ८ भासा ९ भाः १० । इति
शब्द-
रत्नावली ॥ अभिख्या ११ । इति जटाधरः ॥
* ॥
(यथा, विष्णुपुराणे १ मांशे ८ । २३ ।
"शशाङ्कः श्रीधरः कान्तिः
श्रीस्तस्यैवानपायिनी" ॥)
कान्तिकारकपर्य्यायायथा । रश्मि १ उश्मसि
२
वेति ३ वेनति ४ वेसति ५ वाञ्छति ६ वष्टि ७
वनोति ७ जूषते ९ हर्षति १० आचके ११
उशिक्
१२ मन्यते १३ छन्तसत् १४ चाकनत् १५
चक-
मानः १६ कमति १७ कानिषत् १८
इत्यष्टादश-
कान्तिकर्म्माणः । इति वेदनिघण्टौ २
अध्यायः ॥
स्त्रीशोभा । इति हेमचन्द्रः ॥ (यथा
साहित्यदर्पणे ।
"रूपयौवनलालित्यं भोगाद्यैरङ्गभूषणम् ।
शोभा प्रोक्ता सैव कान्तिर्मन्मथाप्यायिता
द्युतिः" ॥)
इच्छा । स्पृहार्थकमधातोभवि क्तिन् प्रत्ययः ।
दुर्गा । यथा, -- देविपुराणे देवीनिरुक्तनाम ४५
अध्याये ॥
"स्तुतिः सिद्धिरिति ख्याता श्रिया
संश्रयणाच्च या ।
२ कन्याकुब्जम् ३ गाधिपुरम् ४ कौशम् ५ कुश-
स्थलम् ६ । इति हेमचन्द्रः ॥ (यथा, महाभरते
३ । ११५ । १९ ।
"एतस्मिन्नेव काले तु पृथिव्याः पृथिवीपतिः ।
कान्यकुब्जे महानासीत् पार्थिवः सुमहाबलः ।
गाधीति विश्रुतो लोके वनवासं जगाम ह" ॥
एतद्पुरविवरणं कन्याकुब्जशब्दे द्रष्टव्यम् ॥)

**कान्यजा**, स्त्री, (कात् जलात् अन्यस्मिन् जायते ।
कान्य + जन + डः + टाप् ।) नलीनामगन्धद्रव्यम्
।
इति शब्दत्तन्द्रिका ॥

**कापटिकः**, पुं, (कपटेन चरति इति ठक् ।) छात्रः ।
अन्यमर्म्मज्ञः । ("तत्र परमर्म्मज्ञः प्रगल्मच्छात्रः
कपटव्यवहारित्वात्कापटिकः । तं वृत्त्यर्थिन-
मर्थमानाभ्यामुपगृह्य रक्षसि राजा ब्रूयात् यस्य
दुर्वृत्तं पश्यसि तत् तदानीमेव मयि वक्तव्यम् ।
इति
मनुसंहितायां ७ । १५४ । श्लोकस्थ टीकायां कु-
ल्लूकभट्टः ।) शठे त्रि । इति मेदिनी ॥

**कापट्यं**, क्ली, (कपटस्य कार्य्यं भावो वा । कपट
+ ष्यञ् ।) कपटता । शठता । कपटशब्दात्
भावार्थे ष्ण्यप्रत्ययः ॥ इति मुग्धबोधव्याकरणम् ।

**कापथः**, पुं, (कुत्सितः पन्थाः । कु + पथिन् + अच् ।
"कापथ्यक्षयोः" । ६ । ३ । १०४ । इति कादेशः
।)
कुत्सितपथः । तत्पर्य्यायः । व्यध्वः २ दुरध्वः ३
विपथः ४ कदध्वा ५ । इत्यमरः । २ । १ । १६
॥
कुपथः ६ असत्पथः ७ कुत्सितवर्त्म ८ । इति
शब्दरत्नावली ॥ ("आस्थातुं कापथं दुःखं विष-
मम् बहुकण्टकम्" ॥ इति हेः रामायणे । २ ।
१०८ । ७ ॥)

**कापालं**, क्ली, (कपालमेव कपालस्येदं वा । कपाल +
अण् ।) अष्टादशकुष्ठान्तर्गतवातिककुष्ठम् । इति
माधवकरः ॥ अस्य निदानं कपालशब्दे द्रष्टव्यम्
॥

**कापालः**, पुं, (कपाल + अण् ।) कर्कटा । इति शब्द-
चन्द्रिका रत्नमाला च ॥ कालिया कडा इति

**कापिलः**, पुं, (कपिलेन प्रोक्तं शास्त्रं वेत्ति अधीते वा
इति अण् ।) साङ्ख्यशास्त्रज्ञः । इति
हेमचन्द्रः ॥
(कपिलमधिकृत्य कृतो ग्रन्थः । अण् ।
कपिलाधि-
कारेण कृत उपपुराणभेदः । यथा
कूर्म्मपुराणे ।
"कापिलं मानवञ्चैव तथैवोशनसेरितम्" ॥)
पिङ्गलवर्णः । तद्वति त्रि । इत्यमरटीकायां
भरतः ॥

**कापिशं**, क्ली, (कापिशा माधवी तत्पुष्पमधूद्भवम् ।
कपिशा + अण् ।) मद्यम् । इति हेमचन्द्रः ॥

**कापिशायनं**, क्ली, (कपिशैव स्वार्थे अण् । तत्र जा-
तम् । "कापिश्याः ष्फक्" । ४ । २ । ९९ ।
इति
ष्फक् ।) मद्यम् । इति जटाधरः ॥ देवता ।
इति
धरणी ॥

**कापिशेयः**, पुं, (कपिशायाः अपत्यम् । ढक् ।)
पिशाचः ।
इति त्रिकाण्डशेषः ॥

**कापुरुषः**, पुं, (कुत्सितः पुरुषः । "विभाषा पुरुषे" ।
६ । ३ । १०६ । इति कोःकादेशः ।)
कुपुरुषः ।
कुत्सितपुरुषः । इति व्याकरणम् ॥ यथा
हितो-
पदेशे ॥
"उद्योगिणं पुरुषसिंहमुपैति लक्ष्मी-
र्दैवेन देयमिति कापुरुषा वदन्ति" ॥

**कापेयः**, त्रि, (कपेर्भावः कर्म्म वा । कपि + ढक् ।
कपिसम्बन्धी । इति हलायुधः ॥ (स्त्रियां
प्रमाणं
यथा, गोः रामायणे । ६ । १११ । १९ ।
"कच्चिन्नु खलु कापेयी सैव ते
चलचित्तता" ॥)

**कापोतं**, क्ली, (कपोतानां समूहः । अण् ।) कपोत-
गणः । इत्यमरः २ । ५ । ४७ । पायरार
झाँक्

लक्ष्मीर्वा ललना वापि क्रमात् सा
कान्तिरुच्यते" ॥
(गङ्गा । यथा, काशीखण्डे गङ्गास्तोत्रे २९ ।
४० ।
"कुमुद्वतो कमलिनी कान्तिः कल्पितदायिनी"
॥
"कान्तिश्चन्द्रतेजोरूपा" । इति तट्टीका ॥)

**कान्तिदं**, क्ली, (कान्तिं द्यति नाशयतीति । कान्ति + दो
+ क ।) पित्तम् । इति शब्दचन्द्रिका ॥
(कान्तिं
ददातीति । कान्ति + दा + कः ।)
शोभादायके त्रि ॥

**कान्तिदा**, स्त्री (कान्तिद + टाप् ।) वाकुचीवृक्षः ।
सोमराजी इति ख्याता । इति राजनिर्घण्टः ॥

**कान्तिदायकं**, क्ली, (कान्तिं ददातीति । कान्ति + दा
+ ण्वुल् ।) कालीयकवृक्षः । इति जटाधरः ॥
शो-
भादायके त्रि ॥

**कान्दविकः**, त्रि, (कन्दौ संस्कृतं कान्दवं । कन्दु + अण्
।
कान्दवं पण्यं अस्य "तदस्य पण्यम्" । ४ । ४
। ५१ ।
इति ठक् ।) आपूपिकः । पूपविक्रयकर्त्ता ।
इत्य-
मरः । २ । ९ । २८ ॥

**कान्दिग्भूतः**, त्रि, (कां दिशं गच्छामि इत्याकुलीभूतः ।
कान्दिश् + भू + कर्त्तरि क्तः ।) भयेन
पलायितः ।
इति पुराणम् ॥

**कान्दिशीकः**, त्रि, (कां दिशं यामि इत्याह । तदा
हेति मा शब्दादिम्य उपसङ्ख्यानमिति ठक्
पृषो-
दरादिस्वात् साधुः ।) भयद्रुतः । भयेन
पलायितः ।
इत्यमरः । ३ । १ । ४२ ॥

**कान्यकुब्जं**, क्ली, (कन्याः कुब्जा न्युब्जीकृता वायुना
यत्र । ततः स्वार्थे अण् ।)
गङ्गातीरस्थपुरविशेषः ।
कनज् इति भाषा । तत्पर्य्यायः । महोदयम्
भाषा ॥

**कापालिकः**, पुं, (कपालेन नृकपालेन चरति अभ्य-
वहारादिकं करोतीति । कपालं + ठक् ।) वर्ण-
सङ्करजातिविशेषः । इति तन्त्रसारः ॥ कपालि
इति भाषा । वामाचारिविशेषः । यथा, --
"अथ तीर्णकराग्रणीः प्रतस्थे
कापालिकजालकं विजेतुम्" ।
इति शङ्करविजयः ॥ (योगिविशेषः । यथा हट-
योगदीपिकायां १ । ८ ।
"भानुकी नारदेवश्च खण्डः कापालिकस्तथा" ॥
तत्सम्प्रदायश्च यथा तत्रैव ३ । ९६ ।
"निषेव्यते शीतलमध्यधारा
कापालिके खण्डमते ऽमरोली" ॥
"कापालिकस्यायं कापालिकस्तस्मिन् कापालिके
खण्डकापालिकसम्प्रदायेइत्यर्थः" ॥ इतितट्टीका
॥)

**कापाली**, स्त्री, (कपाल + ङीष् ।) विडङ्गा । इति
राजनिर्घण्टः ॥ (शिवः । यथा महाभारते । १३ ।
१७ । १०२ ।
"अजैकपाच्च कापाली त्रिशङ्कुरजितः शिवः" ॥)
इति भाषा ॥ (कपोतस्येदम् । "तस्येदम्" ।
४ ।
३ । १२० । इत्यण् । यथा भागवते । ९ ।
१८ । २५ ॥
"दुर्म्मना भगवान् काव्यः पौरहित्यं
विगर्हयन् ।
स्तुवन् वृत्तिं च कापोतीं दुहित्रा स ययौ
पुरात्" ॥
कापोतीं कपोतसम्बन्धिनीं वृत्तिं
परवृत्त्युपजीवित्व-
मित्यर्थः ॥) सौवीराञ्जवम् । इति
राजनिर्घण्टः ॥

**कापोतः**, पुं, (कपोत + अण् ।) सर्जिकाक्षारः ।
इत्यमर । २ । ९ । १०९ ॥ रुचकः । इति
मेदिनी ।
कपोताभवर्णः । तद्वति त्रि । इति हेमचन्द्रः
॥

**कापोताञ्जनं**, क्ली, (कापोतञ्च तत् अञ्जनञ्चेति ।)
सौवीराञ्जनम् । स्रोतोञ्जनम् । इत्यमरः । २
। ९ । १०० ॥

**काप्यकरः**, पुं, (कुत्सितं आप्यं काप्यं पापं करोतीति
।
काप्य + कृ + ताच्छील्यादौ टः ।) स्वयं
कृतं पापं
चित्ते आधाय यः कथयति सः । इति
शब्दरत्ना-
वली ॥

**काप्यकारः**, पुं, (काप्यं करोतीति । काप्य + कृ +
अण् ।
चित्ते पापं आधाय यः शसात सः । इति
त्रिका-
ण्डशेषः ॥ श्वपापवक्ता । इति
शब्दरत्नावली ॥

**काफलः**, पुं, (कुत्सितं फलं यस्य । कोः कादेशः ।)
कट्फलः । इति शब्दरत्नावली ॥

**काम**, व्य, अभ्यनुज्ञा । इति विश्वः ॥

**कामं**, क्ली, (कामाय हितम् । कम + अण् ।) रेतः ।
निकामः । काम्यम् । इति मेदिनी ॥ वाढम्
। अनु-
मतिः । इति हेमचन्द्रः ॥ (यथा माघे २ ।
४३ ।

| | | “मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी)” ॥<br>**कामः** पुं, (काम्यते असौ कर्म्मणि घञ् ।) काम्य |
|---|---|---|

:इच्छा । इति हेमचन्द्रः ॥ (यथा मनुः २ । ९४ ।

"न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते" ॥)
कामस्तु ब्रह्मणो हृदयाज्जातः । यथा ।
"हृदि कामो भ्रुवोः क्रोधो लोभश्चाधोरदच्छदात्' ।
इति श्रीभागवतम् ॥ (काम्यते इति । कर्म्मार्थे घञ्
वरः । यथा रघुः २ । ६५ ।
"सन्तानकामाय तथेति कामं राज्ञे प्रतिश्रुत्य पयस्विनी सा" ॥
कामं वरं प्रतिश्रुत्य प्रतिज्ञाय इत्यर्थः ॥
मनोरथः ।
यथा तत्रैव ३ । ६७ ।
"तथेति कामं प्रतिशुश्रुवान् रघोर्यथागतं मातलिसारथिर्य्ययौ" ॥
महादेवः । यथा महाभारते । १३ । १७ । ४१ ।
"गणकर्त्ता गणपतिर्दिग्वासाः काम एव च" ॥
विष्णुः । यथा तत्रैव १३ । १४९ । ४५ ।
"कामहाकामकृत् कान्तः कामः कामप्रदः प्रभुः" ॥)
बलदेवः । इति शब्दरत्नावली ॥
महाराजचूतः ।
इति राजनिर्घण्टः ॥ कामदेवः । (यथा कुमारे
३ । ६४ ।
"कामस्तु वाणावसरं प्रतीक्ष्य पतङ्गवद्वह्निमुखं विविक्षुः" ॥)
स तु श्रीकृष्णपुत्रः । तत्पर्य्यायः ।
मदनः २ मन्मथः
३ मारः ४ प्रद्युम्नः ५ मीनकेतनः ६ कन्दर्पः ७
दर्पकः ८ अनङ्गः ९ पञ्चशरः १० स्मरः ११ शम्ब-
रारिः १२ मनसिजः १३ कुसुमेषुः १४ अनन्यजः

दक्षे पुंसां स्त्रिया वामे शुक्ले कृष्णे विपर्य्ययः ॥
पादाङ्गुष्ठे प्रतिपदि द्वितीयायाञ्च गुल्फके ।
ऊरुदेशे तृतीयायां चतुर्थ्यां भगदेशतः ॥
नाभिस्थाने च पञ्चम्यां षष्ठ्यान्तु कुचमण्डले ।
सप्तम्यां हृदये चैव अष्टम्यां कक्षदेशतः ॥
नवम्यां कण्ठदेशे च दशम्यां चोष्ठदेशतः ।
एकादश्यां गण्डदेशे द्वादश्यां नयने तथा ॥
श्रवणे च त्रयोदश्यां चतुर्द्दश्यां ललाटके ।
पौर्णमास्यां शिखायाञ्च ज्ञातव्यञ्च इति क्रमात् ॥
यत्र स्थाते वसेत् कामस्तत्रैव नखचुम्बनम् ।
मन्त्रेणानेन कर्त्तव्यं ज्ञातव्यं रतिकोविदैः" ॥
इति स्मरदीपिका ॥ मन्त्रस्तु प्रणवादिसविन्दुप्र-
त्येकषोडशस्वरयुक्तनमोऽन्तप्रत्येकचन्द्रषोडशकला-
रूपः ॥ उत्पन्नमात्रशरीरिषु कामस्यानुत्पत्ति-
कारणं यथा । मार्कण्डेय उवाच ।
"ब्रह्मापि तनयां सन्ध्यां दृष्ट्वा पूर्ब्बमथात्मनः ।
कामायाशु मनश्चक्रे त्यक्त्वा सा च सुतेति वै ॥
तस्याश्च चलितं चित्तं कामवाणविलोडितम् ।
ऋषीणां प्रेक्षतां तेषां मानसानां महात्मनाम् ॥
मर्गस्य वचनं श्रुत्वा सोपहासं विधिं प्रति ।
आत्मनश्चलचित्तत्वममर्य्यादमृषीन्प्रति ॥
कामस्य तादृशं भावं मुनिमोहकरं मुहुः ।
दृष्ट्वा सन्ध्या स्वयं तत्र त्रपामापातिदुःखिता ॥
ततस्तु ब्रह्मणा शप्ते मदने तदनन्तरम् ।
अन्तर्भूते विधौ शम्भौ गते चापि निजास्पदे ॥
अभर्षवशमापन्ना सन्ध्या ध्यानपराभवत् ।
ध्यायन्ती क्षणमेवात्र पूर्ब्बवृत्तं मनस्विनी ॥
इदं विममृषे सन्ध्या तस्मिन् काले यथोदितम् ।
उत्पन्नमात्रां मां दृष्ट्वा युवतीं मदनेरितः ॥
अकार्षीत्सानुरागोऽयमभिलाषंपितामहः ।
दृष्ट्वैव माममर्य्यादं सकाममभवन्मनः ॥
ममापि मथितं चित्तं मदनेन दुरात्मना ।
येन दृष्ट्वा मुनीन् सर्व्वांश्चलितं मन्मनो भृशम् ॥
फलमेतस्य पापस्य मदनः खयमाप्तवान् ।
यत्तं शशाप कुपितः शम्भोरग्रे पितामहः ॥
ममोचितं फलमहमाप्तुमिच्छामि साम्प्रतम् ।
यन्मां पिता भ्रातरश्च सकामामपरोक्षतः ॥
दृष्ट्वा चक्रुः स्पृहां तस्मान्न मत्तः कापि पापकृत् ।
ममापि कामभावोऽभूदमर्य्यादंसमीक्ष्य तान् ॥
पत्याविव स्वके ताते सर्व्वेषु सहजेष्वपि ।
करिष्याम्यस्य पापस्य प्रायश्चित्तमहं स्वयम् ॥
आत्मानमग्नौ होष्यामि वेदमार्गानुसारतः ।

तया स शैलः समधिष्ठितः सदा
सौवर्णगौर्य्यादिसमप्रभाभृता ।
सोमेन सन्ध्यासमयोदितेन
यथोदयाद्रिर्व्विरराज शश्वत्' ॥
इति कालिकापुराणे १९ अध्यायः ॥ * ॥
मार्कण्डेय उवाच ।
"अथ तस्याः शरीरन्तु वल्कलाजिनसंवृतम् ।
परिक्षीणं जटाव्रातैः पवित्रं मूर्द्धिन राजितम् ॥
हिमानीतर्ज्जिताम्भोजसदृशं वदनं तदा ।
निरीक्ष्य कृपयाविष्टो हरिः प्रोवाच तामिदम्"
श्रीभगवानुवाच ।
"प्रीतोऽस्मि तपसा भद्रे भवत्याः परमेण वै ।
स्तवेन च शुभे प्रज्ञे वरं वरय साम्प्रतम् ॥
येन ते विद्यते कार्य्यं वरेणास्ति मनोगतम् ।
तत् करिष्ये च भद्रं ते प्रसन्नोऽहं तव व्रतैः" ॥
सन्ध्योवाच ।
"यदि देव प्रसन्नोऽसि तपसा मम संप्रति ।
वृतस्तदायं प्रथमं वरो मम विधीयताम् ॥
उत्पन्नमात्रा देवेश प्राणिनोऽस्मिन् भुवःस्थले ।
न भवन्तु क्रमेणैव सकामाः सम्भवन्तु वै" ॥
श्रीभगवानुवाच ।
"प्रथमं शैशवो भावः कौमाराख्यो द्वितीयकः ।
तृतीयो यौवनो भावश्चतुर्थं वार्द्धकं तथा ॥
तृतीयेष्वथ संप्राप्ते वयोभागे शरीरिणः ।
सकामाः स्युर्द्वितीयान्ते भविष्यन्ति क्वचित् क्वचित् ॥
तपसा तव मर्य्यादा जगति स्थापिता मया ।
उत्पन्नमात्रा न यथा सकामाः स्युः शरीरिणः" ॥
इत्यादि श्रीकालिकापुराणे २२ अध्यायः ॥ * ॥
अभिलाषः । तस्य रजोगुणादुत्पत्तिर्यथा, --

१५ पुष्पधन्वा १६ रतिपतिः १७
मकरध्वजः १८
आत्मभूः १९ ब्रह्मसूः २० विश्वकेतुः
२१ । इत्यमरः
१ । १ । २६--२८ ॥ * ॥ स तु
पञ्चाशद्विधो यथा ।
कामः १ कामदः २ कान्तः ३
कान्तिमान् ४
कामगः ५ कामचारः ६ कामी ७
कामुकः ८
कामवर्द्धनः ९ रामः १० रमः ११
रमणः १२
रतिनाथः १३ रतिप्रियः १४
रात्रिनाथः १५
रमाकान्तः १६ रममाणः १७
निशाचरः १८
नन्दकः १९ नन्दनः २० नन्दी २१
नन्दयिता २२
पञ्चवाणः २३ रतिसखः २४ पुष्पधन्वा
२५ महा-
धनुः २६ भ्रामणः २७ भ्रमणः २८
भ्रममाणः २९
भ्रमोऽपरः ३० भ्रान्तः ३१ भ्रामकः
३२ मृङ्गः ३३
भ्रान्तचारः ३४ भ्रमावहः ३५ मोहनः
३६
मोहकः ३७ मोहः ३८ मोहवर्द्धनः २९
मदनः
४० मन्मथः ४१ मातङ्गः ४२
भृङ्गनायकः ४३
गायनः ४४ गीतिजः ४५ नर्त्तकः ४६
खेलकः ४७
उन्मत्तोन्मत्तकः ४८ विलासः ४९
लोभवर्द्धनः ५० ॥
“दाडिमीकुसुमाभाश्च वामाङ्के
शक्तिसंयुताः ।
सौम्या रक्ताम्बराः सर्व्वे
पुष्पवाणेक्षुकार्म्मुके ॥
बिभ्राणाः सर्व्वभूषाढ्याः कामाः
पञ्चाशदीरिताः” ।
इति शारदातिलकटीकायांराघवसट्टः
॥ तेषा-
मेकपञ्चाशत्शक्तयो रतिशब्दे द्रष्टव्याः ॥
* ॥

किन्त्वेकां स्थापयिष्यामि मर्य्यादामिह भूतले ॥
उत्पन्नमात्रा न यथा सकामाः स्युः शरीरिणः ।
एतदर्थमहं कृत्वा तपः परमदारुणम् ॥
मर्य्यादां स्थापयित्वैव पश्चात् त्यक्ष्यामि जीवितम् ।
यस्मिन् शरीरे पित्रा मे ह्यभिलासः स्वयं कृतः ॥
भ्रातृमिस्तेन कायेन किञ्चिन्नास्ति प्रयोजनम् ।
येन स्वेन शरीरेण तातेऽथ सहजे स्वके ॥
उद्भावितः काममावी न तत्सुकृतसाधनम् ।
इति संचिन्त्य मनसा सन्ध्या शैलवरं ततः ।
जगाम चन्द्रभागाख्यं चन्द्रभागा यतः सृता ॥

“काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह
वैरिणम्” ॥
इति श्रीभगवद्गीतायां ३ । ३७ ॥

**कामकला**, स्त्री, (कामस्य कला प्रिया ।) रतिः ।
कामदेवपत्नी । इति शब्दरत्नावली ॥
चन्द्रस्य याः
षोडशकलास्ता एव कामकलाः ॥

**कामकूटः**, पुं, (काम एव कूटं प्रधान यस्य ।) वेश्या
प्रियः । वेश्याविम्बमः । इति मेदिनी ॥

**कामकेलिः**, त्रि, (कामे तद्धेतुकरतौ केलिर्यस्य ।)
षिङ्गः । इति त्रिकाण्डशेषः ॥
(कामनिमित्ता
केलिः ।) सुरते पुं । इति हेमचन्द्रः ॥

**कामखड्गदला**, स्त्री, (कामं कमनीयं खङ्ग इव दलं
पत्रं यस्याः ।) स्वर्णकेतकी । इति
राजनिर्घण्टः ॥

**कामगामी**, [न्] त्रि, (कामं यथेष्टं योनिविचारम-
कुर्व्वन्नेव वा गच्छतीति । काम + गम +
णिविः ।)
कामङ्गामी । स्वेच्छागमनशोलः ।
इत्यमरटीका ॥

**कामगुणः**, पुं, (कामकृतो गुणः ।) रागः । विषयः
आभोगः । इति मेदिनी ॥

**कामङ्गामी**, [न्] त्रि, (कामं यथेच्छं गमनशीलः ।
सुपीति णिनिः । काममत्राव्ययम् ।)
स्वेच्छागमन-
शीलः । तत्पर्य्यायः । अनुकामीनः २ ।
इत्यमरः ॥
२ । ८ । ७६ ॥

**कामचारी**, [न्] त्रि, (कामेन स्वेच्छया चरति ।

| | | |
|---|---|---|
| तस्य स्थानानि यथा ।<br>“पादे गुलफे तथोरौ च भगे नाभौ कुचे हृदि ।<br>कक्षे कण्ठे च ओष्टे च गण्डे नेत्रे श्रुतावपि ।<br>ललाटे शीर्षकेशेषु कामस्थानं तिथिक्रमात् ॥ | | |

:काम + चर + णिनिः ।) कामुकः । (यथा
“पुरन्दरं च जानीते परस्त्रीकामचारिणम्” ॥
इति महाभारतम् ॥) स्वच्छन्दः ॥
कलविङ्कः । इति
मेदिनी ॥

**कामचारी**, [न्] पुं, (कामेन इच्छानुसारेण चरति
विहरति । काम + चर + णिनिः ।) गरुडः ।
इति शब्दरत्नावली ॥

**कामजानः**, पुं, (कामं जनयति कुहुध्वनिना । काम
+ जन + णिच् + अच् । निपातनात् न
ह्रस्वः ।
यद्वा कामजं कन्दर्पभावं आनयति । कामज
+
आ + नी + ड ।) कोकिलः । इति
शब्दरत्ना-
वली ॥ कामजनि इति च पाठः ॥

**कामतालः**, पुं, (कामं तालयति प्रतिष्ठापयति ।
काम + तलप्रतिष्ठायां + णिच् + अण् ।)
को-
किलः । इति त्रिकाण्डशेषः ॥

**कामदः**, त्रि, (कामं अभिलाषं ददाति । काम + दा +
कः ।) कामदाता । अभिलाषदः । इति
मेदिनी ॥
(यथा हेः रामायणे २ । ३३ । ७ ।
“ऐश्वर्य्यस्य रसज्ञः सन् कामानाञ्चैव
कामदः” ॥
कामं कामस्य रूपं स्वसौन्दर्य्येण द्यति
अवखण्ड-
यतीति । यद्वा कामं मदनं द्यति नाशयतीति
।
ऊर्द्ध्वरेतस्त्वादस्य तथात्वम् । काम + दो
+ कः ।
कार्त्तिकेयः । यथा, महाभारते ३ । २३१ ।
४ ।
“कामजित् कामदः कान्तः
सत्यवाग्भुवनेश्वरः” ॥)

**कामदा**, स्त्री, (कामं अभीष्टं ददाति या । काम + दा
+ कः + टाप् ।) कामधेनुः । इति मेदिनी ॥

**कामदुघा**, स्त्री, (कामं दोग्धि । काम + दुह +

तस्यान्तु तनया जज्ञे कश्यपात्तु प्रजापतेः ।
नाम्ना सा रोहिणी शुभ्रा सर्व्वकामदुघा नृणाम् ॥
तस्यां जज्ञे शूरसेनाद्वसोरतितिपोज्वलात् ।
कामधेनुरिति ख्याता सर्व्वलक्षणसंयुता” ॥
“तस्यां जज्ञे शुनःशेफान्मुनेरतितमोज्वलात्” ।
इति पुस्तकान्तरे पाठः ॥
“सा सिताभ्रप्रतीकाशा चतुर्व्वेदचतुष्पदा ।
स्तनैश्चतुर्भिर्धर्म्मार्थकामाप्रसवकारिणी” ॥ * ॥
तस्या गर्भे शिववाहनवृषोत्पत्तिर्य्यथा, --
“सा स्वयम्भुशरीरात्तु कालेन महता सती ।
निर्म्मलं यौवनं कामधेनुराप मनोहरम् ॥
तां चरन्तीं मेरुपृष्ठे चारुरूपां मनोहराम् ।
ददर्श स तु वेतालः कामुकश्चाभ्यपद्यत ॥
तं कामुकन्तु वेतालं विदित्वा कामधेनुका ।
पशुधर्म्मात् स्वयं भेजे तं पुत्त्रं शशभृद्भृतः ॥
सोऽवाप तस्यां परममामोदं शङ्करात्मजः ।
सा चापि परमं तस्मिन् मदनात् प्रतिहर्षिता ॥
तयोः प्रवृत्ते सुरते तस्या गर्भोऽभवत्तदा ।
काले प्राप्ते तु सुसुवे कामधेनुर्म्महाबृषम् ॥
सोऽचिरेणैव कालेन सुमहान् वृषभोऽभवत् ।
भहाककुदसंयुक्तश्चारुशृङ्गद्वयान्वितः ॥
उत्क्षिप्तविचलत्कर्ण्णयुगलो दीर्घवालधिः ।
ककुदेन च शृङ्गाभ्यां कर्णाभ्यां स सिताभ्रवत् ॥
विचरन् ददृशे देवैः शृङ्गैरिव हिमाचलः ।
वेतालस्त्वकरोत्तस्य नाम भृङ्ग इति द्विजाः ! ॥
स तु भृङ्गो ज्ञानशाली समाराधयदीश्वरम् ।
सोऽपि तुष्टो वरं तस्मै ददाविष्टं महेश्वरः ॥
तमेव वाहनं चक्रे कृत्वा देवतनुं वृषम् ।
स चिरायुश्च बलवान् पृथिवीधरणक्षमः ॥
भृङ्गो नाम महातेजाः केतुश्चाप्यभवत् पतेः ।
भृङ्गोऽभूद्वाहनो यस्माच्छङ्करस्य महावृषः ॥
अतो भृङ्गिरिति ख्यातिं स च प्राप महेश्वरात्” ॥
इति श्रीकालिकापुराणे ९१ अध्यायः ॥ * ॥
अमीवृप्रदा धेनुः । तद्दानफलं यथा, --
“वर्षो हरिः सर्व्व एव पवित्र-
स्तत्रापि वर्षे शरदेव शुद्धा ।
तस्यां शुभः कार्त्तिको नाम मास-
स्तत्रापि पुण्यो हि बभूव दर्शः ॥
यस्यां हरेर्द्दैत्यमयाद्विमुक्ता
उरःस्थलं प्राप्य सुखं सुशेते ।
लक्ष्मीः पुराद्यापि विनिर्म्मिता वै
कामप्रदा धेनव एव यत्र ॥

काले फलं यल्लभते मनुष्यो
न कामधेनोश्च समं द्विजेभ्यः ॥
कन्यारथानां करिवाजियुक्तै
शतैः सहस्रैः सततं द्विजेभ्यः ।
दत्तैः फलं यल्लभते मनुष्यः
समं तथा स्यान्नतु कामधेनोः” ॥ * ॥
तद्भेदाः तद्दानविधिश्च यथा, --
“नन्दा सुनन्दा सुरभी सुशीला सुमनास्तथा
।
निर्गता मथ्यमानेऽब्धौ उषःस्नानं शुभप्रदम्
॥
तत्र स्नात्वा समभ्यर्च्च्य धेनुं पूज्य
प्रयत्नतः ।
गोदानफलमाप्नोति नरो विगतकल्मषः ॥
एकादश्यामुपोष्याथ नरो दिनचतुष्टयम् ।
घृतेन स्नापयेद्विष्णुं गव्येन पयसापि वा ॥
नक्ताशी गोरसैर्हव्यैः पूजयेन्मधुसूदनम् ।
गन्धपुष्पैः सुनैवेद्यैर्वस्त्राभरणकुण्डलैः ॥
शङ्खासिचक्रोद्यतबाहुविष्णो-
र्गदाब्जहस्तस्य तु शङ्खपाणेः ।
अर्घं प्रयच्छामि जनार्द्दनस्य
श्रिया युतस्यापि धराधरस्य ॥
श्रियः पतिं श्रीधरमेव कान्तं
श्रियाः सखायं हि श्रियोऽधिमूलम् ।
नमाम्यहं श्रीधरं श्रीनिवासं
समर्च्चितो मे प्रददातु कामान् ॥
एवं पूज्य विधानेन श्रिया युक्तैस्तु नामभिः ।
पृथक् जागरणं कुर्य्यात् श्रिया सार्द्धं
जगत्पतेः ॥
या देवी भार्गवं भेजे कुलंसर्व्वत्र पूजिता ।
आयातु सा गृहं नन्दा सुप्रीता वरदा मम ॥
याङ्गिरसञ्च सा देवी सुनन्दा प्रत्युपस्थिता ।
आयातु मे गृहे सा तु सुप्रीता वरदा सती ॥
सुरभी या भरद्वाजं कामधेनुः सुकामदा ।
सदाभवद्गृहं सात्र ममायातु सुरार्च्चिता ॥
सुशीला कश्यपं या तु भेजे सर्व्वत्र कामदा ।
सा मे भवतु सुप्रीता कामधेनुर्गृहे सदा ॥
सुमना या वशिष्ठन्तु संप्राप्य मुमुदे शुभा ।
सा मे गृहं सदायातु कामदा देवपूजिता ॥
एवं पूज्य विधानेन प्रभाते विमले शुभे ।
शुक्लाम्बरधरः स्नातः
शुक्लमाल्यानुलेपनः ॥

“इगुपधज्ञाप्रीकृषः कः” । ३ । १ । १३५ । इति
कः । ततष्टाप् ।) कामधेनुः । इति मुग्धबोधव्या-
करणम् ॥ (यथा, मागवते १ । १० । ४ ।
“कामं ववर्ष पर्जन्यः सर्व्वकासदुघा मही” ॥)

**कामदूतिका**, स्त्री, (कामस्य उद्दीपकत्वात् दूतिकेव ।)
नागदन्तीवृक्षः । इति रत्नमाला ॥

**कामदूती**, स्त्री, (कामस्य दूतीव कामोद्दीपकत्वात् ।)
पाटलावृक्षः । इति शब्दरत्नावली ॥

**कामधरः**, पुं, (कामरूपं कामस्य संज्ञां वा धरति
धारयति वा । काम + धृ + अच् ।) कामरूपस्य
मत्स्यध्वजपर्व्वतस्थसरोवरः । यथा, --
“मणिकूटाचलात् पूर्ब्बं मत्स्यध्वजकुलाचलः ।
निर्द्दग्धो यत्र मदनो हरनेत्राग्निना पुनः ॥
शरीरं प्राप्य तपसा समाराध्य वृषध्वजम् ।
तत्र मत्स्यस्वरूपस्तु कामदेवेन संस्थितः ॥
अधित्यकायां पृथिवीं वीक्ष्यमाणः समन्ततः ।
तदा तु शाश्वती नाम तत्रास्ते दक्षिणस्रवा ॥
सरः कामधरो नाम तस्मिन् शैले व्यवस्थितः ।
शाश्वत्यां विधिवत् स्नात्वा पीत्वा कामधराम्भसि ॥
विमुक्तपापः शुद्धात्मा शिवलोके महीयते” ॥
इति श्रीकालिकापुराणे ८१ अध्यायः ॥

**कामधेनुः**, स्त्री, (कामप्रतिपादिका धेनुः ।) स्वनाम-
ख्यातगौः । तस्या उत्पत्तिर्यथा, --
“दक्षस्य तनया याभूत् सुरभिर्नाम नामतः ।
गवां माता महाभागा सर्व्वलोकोपकारिणी” ॥

अहर्मुखे यत्र दिने समस्ताः
सुधेनवो भूमितले भ्रमन्ति ।
गृहे न यस्मिन् कथयन्ति लीलां
हानिः क्षयस्तत्र च प्रत्ययो मे ॥
तस्मात्त्वमत्रैव च कामधेनुं
दद्याः समुद्दिश्य तु केशवस्य ।
विप्राय वै सर्व्वगुणोपपन्नां
कृत्वा व्रतं कृच्छ्रमतो हरेस्तु ॥
सम्यक् प्रदत्तैस्तु गवां सहस्वैः
सवत्सवस्त्रैः सहितैश्च हेम्ना ।

कृतनित्यक्रियो हृष्टः कुण्डलाङ्गदभूषितः ।
अनुलिप्ते महीपृष्ठे कृष्णाजिनसुसंस्तृते ॥
तिलप्रस्थेन चाकीर्णे चतुःस्वर्णविभूषिते ।
क्षौमवस्त्रान्विते शुभ्रे मध्वाज्यपात्रसंयुते ॥
शुभवस्त्रैः समावृत्य सर्व्वरत्नैरलङ्कृताम् ।
सुवर्णशृङ्गीं सुखुरां चतुःस्वर्णां मनोरमाम् ॥
क्षीराब्धिपयसोपेतां धेनुं मन्त्रैः प्रपूजयेत् ।
या धेनुः सर्व्वदेवानां ऋषीणां भावितात्मनाम् ॥
क्षीराब्धेर्निर्गता या च सा मे भवतु सुस्थिरा ।
घृतक्षीराभिषेकञ्च कृत्वा विष्णोः प्रयत्नतः ॥
समभ्यर्च्च्य यथान्यायं गन्धपुष्पादिभिः क्रमात् ।
गावो ममाग्रतः सन्तु गावः पार्श्वे च पृष्ठतः ॥
गावो मे हृदये नित्यं गवां मध्ये वसाम्यहम् ।
प्राङ्मुखोदङ्मुखो वापि सितयज्ञोपवीतिनीम् ॥
इमां त्वं प्रतिगृह्णीष्व देवदेव ! जगत्पते ॥

:सवत्सालङ्कृतां धेनुं गोविन्द ! प्रीयतामिति ॥

एवं विप्राय तां दद्यात् कृत्वा चैव प्रदक्षिणम् ।
अनुव्रजेच्च गच्छन्तं पदान्यष्टौ नराधिप ! ॥
अनेन विधिना यस्तु कामधेनुं प्रयच्छति ।
सर्व्वकामसमृद्धार्थः स्वर्गलोकञ्च गच्छति ॥
किं दत्त्वा शतशोर्वीन्तु राहुग्रस्ते दिवाकरे ।
तत्फलं प्राप्यते राजन् कामधेन्वा यदश्नुते” ॥
इत्याद्ये बह्निपुराणे कामधेनुप्रदाननामाध्यायः ॥ * ॥
अन्यत् वाल्मीकीयरामायणे बालकाण्डे ५३ सर्गे महाभारते १ । १०१ अध्याये च द्रष्टव्यम् ॥ * ॥
अथ कामधेनुमहादानम् ।
“अथातः संप्रवक्ष्यामि कामधेनुविधिं परम् ।
सर्व्वकामफलं नृणां महापातकनाशनम् ॥
लोकेशावाहनं तद्वद्धोमकर्म्माधिवासनम् ।
तुलापुरुषवत्कार्य्यं कुण्डमण्डपवेदिकम् ॥
स्वल्पे ह्येकाग्निवत् कुर्य्यात् गुरुरेव समाहितः ।
काञ्चनस्यातिशुद्धस्य धेनुं वत्सञ्च कारयेत्” ॥
धेनुं वत्सञ्चेत्यनेन धेन्वर्थोपात्तसुवर्णेनैव स्वेच्छया वत्सकल्पनमुक्तम् ॥
“उत्तमा पलसाहस्री तदर्द्धेन तु मध्यमा ।
कनीयसी तदर्द्धेन कामधेनुः प्रकीर्त्तिता ॥
शक्तितस्त्रिपलादूर्द्ध्वमशक्तोऽपीह कारयेत् ।
प्राप्तोऽस्मि निर्वृतिमतीव परां नमामि ॥
लोके यथेप्सितफलार्थविधायिनीं त्वामासाद्य को हि भवदुःखमुपैति मर्त्यः ।
संसारदुःखशमनाय यतस्व कामं त्वां कामधेनुमिति देवगणा वदन्ति ॥
आमन्त्र्य शीलकुलरूपगुणान्विताय विप्राय यः कनकधेनुमिमां प्रदद्यात् ।
प्राप्नोति धाम स पुरन्दरदेवजुष्टं कन्यागणैः परिवृतः पदमिन्दुमौलेः” ॥ * ॥

अत्र यजमानः समुपजातकामधेनुमहादानेच्छः

तुलापुरुषलिखितं खड्गचर्म्ममयाच्छन्नसन्नाहतुलापुरुषस्थापनीयहरिप्रतिमासालङ्गारतुलाहस्तप्न म्नप्रतिमावहिःसर्व्वसम्भारमधिकत्वेन सुवर्णपलसहस्रनिर्म्मितामुत्तमां सुवर्णपलशतपञ्चकनिर्म्मितां मध्यमां सुवर्णसार्द्धपलशतद्वयनिर्म्मितां कनीयसीं अशक्तौ पलत्रयादूर्द्ध्वं यथाशक्त्युपात्तसुवर्णघटितामुत्कृष्टरत्नालङ्कृतां सवत्सां धेनुम् । धेन्ववस्थापनार्थं कृष्णाजिनं गुडप्रस्थञ्च धेन्वलङ्करणार्थं यथेच्छकाञ्चनघटितचन्द्रतिलकललाटपट्टिकाकुण्डलयुगघण्टारौप्यखुरचतुष्टयस्फाटिकाक्षमालाचामराणि । धेन्वाच्छादनार्थं कौषेयवस्त्रयुगम् । धेनुपार्श्वस्थापणार्थं कुम्भाष्टकातिप्रचुरविविधफलाष्टादशधान्येक्षुदण्डाष्टककांस्यपात्रासनताम्रदोहनदीपसामग्रीछत्रपाक्कायुगानि । धेन्वग्रतः स्थापनार्थं मधुरादिरसषट्कहरिद्रानानाविधकुसुमार्हणद्रव्यजीरकधन्याकशर्कराश्चोत्पादयेत् । ततस्तुलापुरुषोक्तसमयानामन्यतमस्यपूर्ब्बतरदिने गुर्वृत्विग्यजमानजापकास्तुलापुरुषबद्धविष्यभोजनादिकं कृत्वा निवेदनसङ्कल्पवाक्ययोस्तुलापुरुषपदस्थाने हिरण्यकामधेनुपदं प्रक्षिप्य निवेदनं सङ्कल्पञ्च कुर्य्युः । अपरदिने च यजमानस्तुलापुरुषवद्गोविन्दाद्याराधनादिमधुपर्कदानान्तं गोविन्दाद्यभ्यर्च्चनब्राह्मणानुज्ञापनदानसंकल्पपूण्याहादिवाचनवरणवाक्येषु तुलापुरुषपदस्थाने हिरण्यकामधेनुपदं प्रक्षिप्य कुर्य्यात् । ततो गुर्वृत्विग्यजमानजापका उपवसेयुः । अपरदिने च कृतनित्यास्तुलापुरुषवदग्निस्थापनादिमध्यब्राह्मणवाचनान्तं कर्म्म यथायथं कुर्य्युः । एवञ्च मध्यब्राह्मणवाचनान्तं कर्म्म तुलापुरुषग्रन्थमनुसन्धायानुष्ठातव्यम् । तत ऋत्विजः सवत्सां धेनुं प्रधानवेदीक्षिणीकृत्य या लक्ष्मीरित्यादि देवगणा वदन्तीत्यन्तं पठित्वा कामधेनुं पुष्पाञ्जलिना सम्पूज्य गुरवे दद्यात् । तद्यथा, ओं अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिने अमुकशर्म्मणे तुभ्यं मत्स्यपुराणोक्तहिरण्यकामधेनुमहादानफलप्राप्तिकामोऽहं एतां कृष्णाजिनन्यस्तगुडप्रस्थारोपितां उत्कृष्टरत्नसौवर्णचन्द्रतिलकपट्टककुण्डलयुगलघण्टारौप्यखुरस्फाटिकाक्षमालाचामरालंकृतां कौषेयवस्त्रयुगाच्छादितां पूर्णकुम्भाष्टकनानाफलाष्टादशधान्यफलसहितेक्षुदण्डाष्टककांस्यपात्रासनताम्रदोहनदीपछत्रपाक्कायुगसर्व्वरसहरिद्रानानाविधकुसुमफलजीरकधन्याकशर्करायुतां पञ्चवर्णवितानकसहितां सवाससां हिरण्यकामधेनुं ददे । गुरुः स्वस्तीत्युक्त्वा सावित्रीं पठित्वा हिरण्यकामधेनुरियं विष्णुदैवतेति उक्त्वा यथाशाखं कामस्तुतिं पठेत् । ततो गुर्वृत्विग्भ्यो दक्षिणान्दद्यात् । ओं अद्य कृतैतद्दानदक्षिणामिमां उत्पत्तियोग्यां भूमिमेतानि च रत्नानि ददे । स्वस्तीति ब्राह्मणा ब्रूयुः । गुरुस्तु स्वस्त्ययनान्तरं धेनुपुच्छं गृह्णीयात् । ततो यजमानस्तुलापुरुषवज्जापकेभ्यो दक्षिणां दत्त्वा दीनानाथादींस्तर्पयित्वा ब्राह्मणवाचनञ्च कृत्वा त्वरया गुरवे कामधेनुं प्रतिपादयेत् । पलत्रयादूर्द्ध्वं यथाशक्ति स्वल्पमहादानदाने तु गुरुरेव स्वगृह्योक्तविधिना सर्व्वं ब्रह्माण्डवत् कुर्य्यात् ॥ इति हिरण्यकामधेनुमहादानं समाप्तम् । इति दानसागरः ॥

**कामध्वंसी**, [न्] पुं, (कामं कन्दर्पं ध्वंसयतीति । काम + ध्वन्स् + णिच् + णिनिः ।) शिवः । इति हलायुधः ॥

**कामनः**, त्रि, (कामयति इति । कम् + णिङ् + युच् ।) कामुकः । इत्यमरः । २ । १ । २४ ॥

**कामना**, स्त्री, (कम + अनुदात्तादेश्चेति णिङन्तात् भावे युच् टाप् च ।) इच्छा । इति हलायुधः ॥

**कामन्धमी**, [न्] पुं, (कामं यथेष्टं धमति । काम + ध्मा + णिनिः । बाहुलकात् धमादेशः । निपातनात् मुमि साधुः ।) कांस्यकारः । इति जटाधरः ॥

**कामपत्नी**, स्त्री, (कामस्य पत्नी ।) रतिः । इति शब्दरत्नावली ॥

**कामपालः**, पुं, (कामान् पालयति । काम + पाल +

वेद्यां कृष्णाजिनं न्यस्य
गुडप्रस्थसमन्वितम् ॥
न्यसेदुपरि तां धेनुं
महारत्नैरलङ्कृताम् ।
कुम्भाष्टकसमोपेतां
नानाफलसमन्विताम्' ॥
महारत्नैरुत्कृष्टरत्नैः ॥
"तथाष्टादश धान्यानि समन्तात्
परिकल्पयेत् ।
इक्षुदण्डाष्टकं
तद्वन्नानाफलसमन्वितम्।
भाजनञ्चासनं तद्वत्ताम्रदोहनकन्तथा
॥
कौषेयवस्त्रद्वयसंप्रयुक्तां
दीपातपत्राभरणाभिरामाम्।
सचामरां कुण्डलिनीं सघण्टां
मणित्रिकां चन्द्रकरौप्यपादाम्' ॥
मणित्रिका अक्षमाला ।
"रसैश्च सर्व्वैः पुरतोऽभिजुष्टां
हरिद्रया पुष्पफलैरनेकैः ।
अजाजिकुस्तुम्बुरुशर्करभि-
र्व्वितानकञ्चोपरि पञ्चवर्णम्" ।
रसैः सर्व्वैरिति लवणादिभिः षड्भिः
। अजाजी
जीरकः । कुस्तुम्बुरु धन्याकम् ॥
"स्नातस्ततो मङ्गलवेदघोषैः
प्रदक्षिणीकृत्य सपुष्पहस्तः ।
आवाहयेत्तां गुडधेनुमन्त्रै-
र्द्विजाय दद्यादथ दर्भपाणिः" ॥

बहुतरमत्स्यपुराणपुस्तकेषु
गुडधेनुमन्त्रैरिति

पाठदर्शनात् गुडधेनूक्तया
लक्ष्मीरित्यादिमन्त्र-
पाठश्चात्र कर्त्तव्यः । द्विजाय
दद्यादिति श्रुतेः
कृत्स्नैव कामधेनुर्गुरवे देया
ऋत्विग्भ्यस्तु दक्षि-
णामात्रम् ॥
"त्वं सर्व्वदेवगणमन्दिरमङ्गभूता
विश्वेश्वरत्रिपथगोदधिपर्व्वतानाम् ।
तद्दानशस्त्रशकलीकृतपातकौघः

मध्यलिखितचक्रोपरि कृष्णाजिनमास्तीर्य्य तदुपरि गुडप्रस्थं निधाय तत्रारोप्य पूर्ब्बोक्तालङ्कारैरलङ्कृत्य कौषेयवस्त्रयुगेनाच्छाद्य धेनुपार्श्वे च पूर्णकुम्भाष्टकं नानाविधफलानि अष्टादशधान्यानि रत्ननानाविधफलमिक्षुदण्डाष्टककांस्यभाजनपट्टिकाताम्रदोहनदीपातपत्रपादुकायुगान्यारोपयेयुः । धेन्वग्रतः मधुरादिरसषट्कहरिद्राविविधपुष्पार्हणसामग्रीजीरकधन्याकशर्क्कराश्चारोप्य मङ्गलगीतवाद्यवन्दिघोषेषु यज्ञकुण्डसमीपस्थकुम्भचतुष्टयजलेन स्व-
स्ववेदोक्ताभिषेचनिकमन्त्रैर्यजमानं स्नापयेयुः । ततो यजमानः शुक्लमाल्याम्बरधरो धृतसर्व्वालङ्कारः कुशहस्तः पुष्पाञ्जलिमादाय कामधेनुं प्रद-

अण् ।) बलदेवः । इत्यमरः । १ । १ । २४ ॥

**कामप्रदः**, पुं, (कामं कामजरतिभेदं प्रददाति । काम + प्र + दा + कः ।) रतिबन्धविशेषः । यथा, --
"द्वौ पादौ स्कन्धसंलग्नौ क्षिप्त्वा लिङ्गं भगे तथा ।
कामयेत् कामुकः प्रीत्या बन्धः कामप्रदो हि सः"
॥
इति स्मरदीपिका ॥ (कामानां सर्व्वेषां पुरुषार्थाणां प्रदः । विष्णुः । यथा महाभारते । १३ । १४९ । ४५ ।
"कामहा कामकृत् कान्तः कामः कामप्रदः प्रभुः"
॥)

**कामफलः**, पुं, (कामं यथेष्टं फलमस्य ।) महाराजाम्रवृक्षः । इति दाजनिर्घण्टः ॥

**कामम्**, व्य (कमेर्णिजन्तात् अमु ।) अकामानुमतिः । इत्यमरः । ३ । ४ । १३ ॥ (यथा, शाकुन्तले ५ अङ्के

:"महाभागः कामं नरपतिरभिन्नस्थितिरसौ

न कश्चिद्वर्णानामपथमपकृष्टोऽपि भजते" ॥)

अनुमतिः । प्रकामम् । असूया । अनुगमनम् ।

इति मेदिनीकरहेमचन्द्रौ ॥

**काममहः**, पुं, (कामस्य महः उत्सवो यत्र ।) चैत्री

पूर्णिमा । इति त्रिकाण्डशेषः ॥

**कामयिता**, [ऋ] त्रि, (कामयते । कम् + णिच् +

तृच् ।) कामुकः । इत्यमरः । ३ । १ । २४ ॥

**कामरूपः**, पुं, (मूलप्रकृतिर्भगवती कामरूपिणी

सती यत्र देशे विराजमाना स देशस्तन्नाम्ना एव

उच्यते ।) स्वनामख्यातदेशः । तत्पर्य्यायः ।

प्राग्-

ज्योतिषः २ । इति त्रिकाण्डशेषः ॥ तत्र काम-

गिरौ योनिपीठे कामाख्या देवी वर्त्तते । यथा ।

"योनिपीठं कामगिरौ कामाख्या तत्र देवता" ।

"सर्व्वत्र विरला चाहं कामरूपे गृहे गृहे" ॥

इति तन्त्रचूडामणौ पीठमाला ॥ (अयं हि

गणेश-

गिरिशिखरस्थो देशः । यदुक्तं तन्त्रे ।

"कालेश्वरं श्वेतगिरिं त्रैपुरं नीलपर्व्वतम् ।

कामरूपाभिधो देशो गणेशगिरिमूर्द्ध्वनि" ॥

कालेश्वरं श्वेतगिरिं त्रैपुरं नीलपर्व्वतं यावत् ॥

अयं खलु वङ्गदेशस्य ईशानभागे

आसामप्रदेशस्य

पश्चिमभागे वर्त्तते ॥)

**कामरूपः**, त्रि, (कामं काम्यं मनोहरं रूपं यस्य ।)

मनोज्ञरूपः । स्वेच्छारूपः । (यथा महाभारते ।

१ । सुपर्णस्तुतौ २३ । ६ ।

"कामरूपः कामगर्भः कामबीर्य्यो विहङ्गमः" ॥)

तथा च । मेघदूते ६ ।

"जातं वंशे भूवनविदिते पुष्करावर्त्तकानां

जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः" ॥

**कामरूपिणी**, स्त्री, (कामं मनोज्ञं रूपं अस्त्यस्याः ।

कामरूप + इनि + ङीप् ।) अश्वगन्धावृक्षः ।

इति राजनिर्घण्टः ॥

**कामरूपी**, [न्] पुं, (कामं कमनीयं रुपमस्यास्तीति ।

कामरूप + इनिः ।) विद्याधरः । इति त्रि-

तस्यारिष्टलक्षणम् ।

"कृष्णपीतशकृन्मूत्रो मृशं शूवश्च मानवः ।

सरक्ताक्षिमुखच्छर्द्दिविण्मूत्रोयश्च ताम्यति ॥

दाहारुचितृडानाहतन्द्रामोहसमन्वितः।

नश्यति श्वासकासार्त्तो विड्भेदी कुम्भकामली"

॥

इति माधवकरः ॥

**कामलः**, पुं, (कामयते अभीष्टमस्मिन् । कम + अ-

धिकरणे + कलच् ।) वसन्तकालः । मरुभूमिः ।

(कामं लाति गृह्णातीति । काम + ला + कः ।)

का-

मुके त्रि इति मेदिनी ॥

**कामलता**, स्त्री, (कामस्य लतेव ।) शिश्नः । इति

हेभचन्द्रः ॥

**कामला**, स्त्री, पुं, (कामल + टाप् ।) खनामख्यात-

रोगः । अथ पाण्डुरोगभेदस्य कामलाया निदान-

पूर्ब्बिकां संप्राप्तिमाह ।

"पाण्डुरोगी तु योऽत्यर्थं पित्तलानि निषेवते ।

तस्य पित्तमसृङ्मांसं दग्ध्वा रोगाय कल्पते" ॥

पित्तं कर्तृ । दग्ध्वा संदूष्य । रोगाय कामला-

रूपाय । पाण्डुरोगिण एवातिशयितपित्तलसेवया

कामला भवति । नायं नियमः । किन्तु कामला

स्वतन्त्रापि भवति । यथा राजयक्ष्मा कासादुपे-

क्षिताद्भवति । नायं नियमः । किन्तु राजयक्ष्मा

स्वतन्त्रापि भवति । तद्वद्देषापि ॥ * ॥

कामलाया लक्षणमाह ।

"हारिद्रनेत्रः सुभृशं हारिद्रत्वङ्नखाननः ।

पीतरक्तशकृन्मूत्रो भेकवर्णो हतेन्द्रियः ॥

दाहाविपाकदौर्ब्बल्यसदनारुचिकर्षितः" ॥

हारिद्रं हरिद्रावर्णम् । पीतरक्तशकृन्मुत्रः । पीते

रक्ते वा शकृन्मूत्रे यस्य सः । भेकवर्णः वृहद्भेक-

वर्णः । तस्या भेदावाह । "कामला बहुपित्तैषा

कोष्ठशाखाश्रया मता" । एषा कोष्ठाश्रया अपरा

शाखाश्रया । तत्र कोष्ठकामलामाह । "कालान्त-

रात् खरीमूता कृच्छ्रा स्यात् कुम्भकामला" ।

कालान्तरात् खरीभूता अतिरूक्षीकृतसर्व्वधातुः

।

कुम्भकामला कोष्ठकामलेत्यर्थः । सा कृच्छ्रा

कष्ट-

साध्या ॥ * ॥ कुम्भकामलिनोऽरिष्टलक्षणमाह॥

दग्ध्वाक्षकाष्ठैर्मलमायसन्तु

गोमूत्रनिर्व्वापितमष्टवारान्।

विचूर्णलीढं मधुनाचिरेण

कुम्भाह्वयं पाण्डुगदं निहन्ति" ॥

इति भावप्रकाशः ॥ * ॥

"मरीचतिलपुष्पाभ्यामञ्जनंकामलापहम्"

॥

इति गारुडे १८७ अध्यायः ॥

"तण्डुलीयकगोक्षुरमूलं पीतं पयोऽन्वितम् ।

कामलादिहरं प्रोक्तं मुखरोगहरं तथा" ॥

इति तत्रैव १८८ अध्यायः ॥

**कामवती**, स्त्री, (कामः कमणीयता अस्त्यस्याः ।

काम

+ मतुप् । मस्य वः । ङीप् च ।) दारुहरिद्रा

।

इति राजनिर्घण्टः । (कामः कन्दर्पभावः

अस्त्य

स्याः । मैथुनानुरागयुक्ता स्त्री । यथा

महाभारते

१ । शान्तनूपाख्याने ९७ । ५ ।

"त्यागः कामवतीनां हि स्त्रीणां

सद्भिर्विगर्हितः" ॥)

**कामवल्लभः**, पुं, (कामः कमनीयः स्पृहणीय इत्यर्थः

अत एव वल्लभः प्रियः । यद्वा कामस्य

कन्दर्पस्य

बल्लभः । कन्दर्पप्रियवसन्तकालोद्भवत्वात्

तथात्वम् ।)

आम्रः । इति राजनिर्घण्टः ॥

**कामवल्लभा**, स्त्री, (कामस्य कन्दर्पस्य वल्लभा प्रिया ।

कामोद्दीपकत्वात् तथात्वम् ।) ज्योत्स्ना ।

इति

राजनिर्घण्टः ॥

**कामवृद्धिः**, पुं, (कामस्य वृद्धिर्यस्मात् ।) क्षुप-

विशेषः । कामव इति कर्णाटके प्रसिद्धः ।

तत्प-

र्य्यायः । स्मरवृद्धिसंज्ञः २ मनोजवृद्धिः ३

मदना-

युषः ४ कन्दर्पजीवः ५ जितेन्द्रियाह्वः ६

कामैक-

काण्डशेषः ॥ जाहकजन्तुः । इति राजनिर्घण्टः ॥

(कामेन स्वेच्छया रूपं धार्य्यत्वेनास्त्यस्य इनिः ।)

मनोज्ञरूपिणि स्वेच्छारूपिणि च त्रि । यथा, --

"सर्व्वमाशु विचेतव्यं हरिभिः कामरूपिभिः" ॥

इति रामायणम् ॥

**कामरेखा**, स्त्री, (कामानां कामव्यापाराणां रेखा चिह्नं लक्षणं राजिर्वा यत्र ।) वेश्या । इति शब्दमाला ॥

**कामलः**, पुं, स्त्री, (कम + णिच् + कलच् ।) रोग-विशेषः । काँओल कामला इति च प्रसिद्धिः । इति मेदिनी ॥ तस्य निदानसम्प्राप्ती यथा, --

"पाण्डुरोगी च योऽत्यर्थं पित्तलानि निषेवते ।

तस्य पित्तमसृङ्मांसं दग्ध्वा रोगाय कल्पते" ॥

तस्य लक्षणम् ।

"हारिद्रनेत्रः सुभृशं हारिद्रत्वङ्नखाननः ।

रक्तपीतशकृन्मूत्रो भेकवर्णो हतेन्द्रियः ॥

दाहाविपाकदौर्ब्बल्यसदनारुचिकर्षितः ।

कामला बहुपित्तैषा कोष्ठशाखाश्रया मता ।

कालान्तरात् खरीभूता कृच्छ्रा स्यात्कुम्भकामला" ॥

"छर्द्यरोचकहृल्लासज्वरक्लमनिपीडितः ।

नश्यति श्वासकासार्त्तो विड्भेदी कुम्भकामली" ॥

उभयोरपि कामलयोररिष्टलक्षणमाह ।

"कृष्णपीतशकृन्मूत्रो भृशं शूनश्च मानवः ।

सरक्ताक्षिमुखच्छर्द्दिविन्मूत्रोयश्च ताम्यति ॥

दाहारुचितृडानाहतन्द्रामोहसमन्वितः ।

नष्टाग्निसंज्ञः क्षिप्रं हि कामलावान् विपद्यते" ॥ * ॥

अथ कामलाचिकित्सा ।

"त्रिफलाया गुडूच्या वा दार्व्या निम्बस्य वा रसः ।

प्रातर्म्माक्षिकसंयुक्तः शीतलः कामलापहः ॥

अञ्जने कामलार्त्तानां द्रोणीपुष्पीरसी हितः ।

गुडूचीपत्रकल्कं वा पिबेत्तक्रेण कामली ॥

धात्रीलोहरजोव्योषनिशाक्षौद्राज्यशर्कराः ।

लीढा निवारयन्त्याशु कामलामुद्धतामपि ॥

कुम्भाख्यकामलायान्तु हितः कामलिको विधिः ।

गोमूत्रेण पिबेत् कुम्भकामलायां शिलाजतु ॥

जीवः ७ जीवसंज्ञः ८ । अस्य वीजगुणाः । मधु-रत्वम् । बलवर्द्धनत्वम् । कामवृद्धिरुचिकारित्वम् । बहुलेन्द्रियवृद्धिदत्वञ्च । इति राजनिर्घण्टः ॥

**कामवृन्ता**, स्त्री, (कामं कमनीयं वृन्तं यस्याः ।) पाटलावृक्षः । इति शब्दमाला ॥

**कामवृक्षः**, पुं, (कामं यथेच्छं वीजाद्यनपेक्षतया उत्पन्नो वृक्षः ।) वन्दाकः । इति राजनिर्घण्टः ॥

**कामशरः**, पुं, (कामस्य कन्दर्पस्य शर इव कामोद्दीप-कत्वात् ।) आम्रः । इति राजनिर्घण्टः ॥

**कामसखः**, पुं, (कामस्य सखा । "राजाहःसखि-भ्यष्टच्" । ५ । ४ । ९१ । इति टच् ।) वसन्त-कालः । इति राजनिर्घण्टः ॥

**कामसुतः**, पुं, (कामस्य सुतः ।) अनिरुद्धः । इति हेमचन्द्रः ॥

**कामाख्या**, स्त्री, (कामयते भक्तानां कामं पूरयति यद्वा भक्तैः साधकैः काम्यतेऽसौ इति कामा । कामा आख्या यस्याः ।) देवीविशेषः । तन्नाम-कारणं यथा ।

श्रीभगवानुवाच ।

"कामार्थमागता यस्मान्मया सार्द्धं महागिरौ ।

कामाख्या प्रोच्यते देवी नीलकूठे रहोगता ॥

कामदा कामिनी कामा कान्ता कामाङ्गदायिनी ।

कामाङ्गनाशिनी यस्मात् कामाख्या तेन चोच्यते ॥ * ॥

तत्पीठकारणं यथा, --

"अथ काले बहुतिथे व्यतीते प्राणिसर्ज्जने ।

:अगृह्णां दक्षतनयां भार्य्यार्थेऽहं बधूवराम् ॥

सा मेऽभूत् प्रेयसी भार्य्या प्रदाय समयं पितुः ।
अनिष्टकारी त्वञ्चेत् स्याः प्राणांस्त्यक्ष्ये तदा त्वहम् ॥
ततो यज्ञे समस्तन्तु स च वव्रे चराचरम् ।
न मां नापि सतीं वव्रे तदनिष्टान्मृता तु सा ॥
ततो मोहसमापन्नस्तामादाय मृतामहम् ।
प्राप्तः पीठवरं तन्तु भ्रममाण इतस्ततः ॥
तस्यास्त्वङ्गानि पर्य्यायात् पतितानि यतो यतः ।
तत्तत् पुण्यतमं जातं योगनिद्राप्रभावतः ॥
तस्मिंस्तु कुब्जिकापीठे सत्यास्तद्योनिमण्डलम् ।
पतितं तत्र सा देवी महामाया व्यलीयत ॥
लीनायां योगनिद्रायां मयि पर्व्वतरूपिणि ।
स नीलवर्णः शैलोऽभूत् पतिते योनिमण्डले ॥
स तु शैलो महातुङ्गः पातालतलमाविशत् ।
तस्या आक्रमणाद्वाढं ततस्तं द्रुहिणोऽभ्ययात् ॥
स तु पूर्ब्बं ब्रह्मशक्तिशिलां धर्त्तुं चतुमुखः ।
शैलरुपोऽभवत्तेन शैलरूपेण मामधात् ॥
ब्रह्मा पर्व्वतरूपेण मयि पर्व्वतरूपिणि ।
संसक्तोऽधोऽगमद्गाढमाक्रान्तोमायया विधेः ॥
ततो वराहः संसक्तो मयि मां स तु माधवः ।
शैलरूपः शैलरूपं धर्त्तुं समुपचक्रमे ॥
सोऽप्यधोऽयान्मया सार्द्धं तदा पर्व्वतरूपिणा ।
आक्रम्य देवीं पृथिवीं स्थितो भुवि निखातकः ॥
शतं शतं योजनानां तुङ्गमासीद्गिरित्रयम् ।
तदाक्रान्तं महादेव्या सर्व्वमेव ह्यधोगतम् ॥
क्रोशमात्रे स्थितं तुङ्गं शेषं तत्त्रितयस्य तु ।
एका समस्तजगतां प्रकृतिः सा यतस्ततः ॥
ब्रह्मविष्णुशिवैर्देवैर्धृता सा जगतां प्रसूः ।
तत्र पूर्ब्बो ब्रह्मशैलः श्वेत इत्युच्यते बुधैः ॥
मद्रूपधारी शैलस्तु नील इत्युच्यते तथा ।
स तु मध्यगतः शैलस्त्रिकोणोदूखलाकृतिः ॥
विभ्राजमानः सततं मध्ये ब्रह्मवराहयोः ।
वराहः शैलरूपो यः स चित्र इति कथ्यते ॥
स सर्व्वेषां स्थितः पश्चात् दीर्घः सर्व्वेभ्य एव तु ।
सा चापि प्रत्यहं तत्र पञ्चमूर्त्तिधरा भवेत् ॥
मोहार्थं सर्व्वलोकानां ममापि प्रीतये शिवा ।
अहं पञ्चमुखेनाशु पञ्चभागे व्यवस्थितः ॥
ईशानः पूर्ब्बभागस्थः कामेश्वर्य्याः प्रधानतः ।
ऐशान्यां तै तत्पुरुषो ह्यघोरस्तस्य सन्निधौ ॥
सद्योजातोऽथ वायव्यां वामदेवस्तु सङ्गतः ।
देव्याश्चापि नरश्रेष्ठ पञ्चरूपाणि भैरव ! ॥
शृणु वेताल ! गुह्यानि देवैरपि सदैव हि ।
कामाख्या त्रिपुरा चैव तथा कामेश्वरी शिवा ॥
सारदाथ महोत्साहा कामरूपगुणैर्युता ।
मयि लिङ्गत्वमापन्ने शिलायां योनिमण्डले ॥
सर्व्वे शिलात्वमगमन् शैलरूपाश्च निर्ज्जराः ।
यथाहं निजरूपेण रेमे वै सह कामया ॥
शिलारूपप्रतिच्छन्नास्तदासर्व्वास्तु देवताः ।
शिलारूपप्रतिच्छन्नाः शैले शैले व्यवस्थिताः ॥
रमन्ते च स्वरूपेण नित्यं रहसि सङ्गताः ।
ब्रह्माविष्णुरहञ्चात्र दिक्पालाः सर्व्व एव ते ॥
अन्येऽप्यत्र स्थिता देवाः सानुकूलाः सदा मयि ।
उपासितुं तदा देवीं कामाख्यां कामरूपिणीम् ॥
नीलशैलस्त्रिकोणस्तु मध्ये निम्नः सदाशिवः ।
तन्मध्ये मण्डलं चारु षष्टिशक्तिसमन्वितम् ॥
गुहा मनोभवा तत्र मनोभवविनिर्म्मिता ।
योनिस्तस्यां शिलायान्तु शिलारूपा मनोहरा ॥
वितस्तिमात्रविस्तीर्णा एकविंशाङ्गुलायता ।
क्रमसूक्ष्मविनिर्म्माणभस्मशैलानुगामिनी ॥
सिन्दूरकुङ्कुमारक्ता सर्व्वकामप्रदायिनी ।
तस्यां योनौ पञ्चरूपा नित्यं तिष्ठति कामिनी ॥
महामाया जगद्धात्री मूलभूता सनातनी ।
तत्राष्टौ योगिनीर्नित्यं मूलभूताः सनातनीः ॥
पूर्ब्बोक्ताः शैलपुत्राद्याः स्थिता देव्याः समन्ततः ।
तासान्तुपीठनामानि शृणु चैकत्र भैरव ! ॥
गुप्तकामा च श्रीकामा तथा च विन्ध्यवासिनी ।
कटीश्वरी धनस्था तु पाददुर्गा तथापरा ॥
दीर्घेश्वरी क्रमादेव प्रकटा भुवनेश्वरी ।
स्वयोगिन्यः पीठनाम्ना ख्याता अष्टौ च देवताः ॥
सर्व्वतीर्थानि चैकत्र जलरूपाणि भैरव ! ।
स्थितानि नाम्ना सौभाग्या वरेण्या प्राणिपुण्यदा ॥
विष्णुस्तु तीरे तस्याः स नाम्ना कमल इत्युत ।
कामुकायास्तु वटुकः कामाख्याभ्यर्णसंस्थितः ॥
लक्ष्मीः सरस्वती देव्यौ देव्या अङ्गे व्यवस्थिते ।
ललिताख्याऽभवल्लक्ष्मीर्मातङ्गीतु सरस्वती ॥
गणाध्यक्षः पूर्ब्बभागे तस्य शैलस्य संस्थितः ।
तत्रैवामृतकुण्डन्तु सुधासंघप्रपूरितम् ॥
मम प्रियार्थमिन्द्रेण स्थापितं सह निर्ज्जरैः ।
वामदेवाह्वयं शीर्षं श्रीकामेश्वरसंज्ञकम् ॥
कामकुण्डं महापुण्यं तस्यासन्ने व्यवस्थितम् ।
केदारसंज्ञकं क्षेत्रं मध्यस्थं सिद्धकामयोः ॥
दीर्घं चतुर्द्दशव्यामं छायाच्छत्राह्वयं तु तत् ।
तस्यासन्ने शैलपुत्री गुप्तकामाह्वया तु सा ॥
गुप्तकुण्डस्य मध्यस्था कामेशग्राब्णि सङ्गता ।
कामेश्वरशिलासक्ता कामाख्यासंज्ञिता सदा ॥
पूर्ब्बभागेन संसक्ता योनेस्तु परभागतः ।
कामकामाख्ययोर्म्मध्ये कालरात्रिर्व्यवस्थिता ॥
पीठे दीर्घेश्वरी नाम्ना सीमाभागे प्रचण्डिका ।
कामाख्या प्रस्तरप्रान्ते कुष्माण्डी नाम योगिनी ॥
पीठे कोटीश्वरी नाम्ना योनिरूपेण संस्थिता ।
यच्चाघोराह्वयं शीर्षं तत् कामायास्तु दक्षिणे ॥
पीठे भैरवनामा तु गीयते परमार्थिभिः ।
चामुण्डाभैरवी नाम्ना भैरवासन्नसंस्थिता ॥
नायिका कामदा भक्ते चण्डमुण्डविनाशिनी ।
कामाभैरवयोर्म्मध्ये स्वयं देवी सुरापगा ॥
हिताय सर्व्वजगतां देव्यास्तु प्रीतये स्थिता ।
सद्योजाताह्वयं शीर्षं पीठे त्वाम्रातकेश्वरम् ॥
भैरवाख्ये गह्वरे तु स्थितं देवर्षिसेवितम् ।
विद्धि तत्रैव दुर्गाख्यां नायिकां योगरूपिणीम् ॥
सिद्धकामेश्वरी नाम्ना ख्याता देवेषु नित्यशः ।

ऐशान्यां योऽभवत् कूर्म्मः शैलरूपो महाद्युतिः ॥
मणिकर्णः स नाम्ना तु ख्यातो देवौघसेवितः ।
योऽनन्तरूपः शैलस्तु वायव्यां समवस्थितः ॥
मणिपर्व्वतसंज्ञोऽसौ पर्व्वतो माधवप्रियः ।
महामायागिरिर्यस्त नैरृत्यां समवस्थितः ॥
स गन्धमादनो नाम्ना सर्व्वदा शङ्करप्रियः ।
वराहपृष्ठभवने यत्र च्छिन्नौ महासुरौ ॥
हरिणा तत्र संजातः पुण्डुनाथ इति स्मृतः ।
ब्रह्मशक्तिशिलायास्तु पूर्ब्बभागे तु मध्यतः ॥
यस्तु पर्व्वतरूपोऽहं स तु भस्माचलाह्वयः ।
एवं पुण्यतमे पीठे कुब्जिकापीठसंज्ञके ॥
नीलकूटे मया सार्द्धं देवी रहसि संस्थिता ।
सत्यास्तु पतितं तत्र विशीर्णं योनिमण्डलम् ॥
शिलात्वमगमत् शैले कामाख्या तत्र संस्थिता ।
संस्पृश्य तां शिलां मर्त्यो ह्यमर्त्यत्वमवाप्नुयात् ॥
अमर्त्यो ब्रह्मसदनं तत्स्थो मोक्षमवाप्नुयात् ।
तस्याः शिलाया माहात्म्यं यत्र कामेश्वरी स्थिता ॥
अद्भूतं यस्य गुह्ये तु लोहं मस्म भवेद्गतम् ।

सिद्धः स नाम्ना विख्यातो द्वारि देव्याः प्रियः सुतः ॥
कल्पवृक्षः कल्पवल्ली तिन्तिडी चापराजिता ।
भूतास्तस्मिन्महाशैले स्थिते देव्या धृतप्रिये ॥
वराहः पाण्डनाथाख्यः स्थितस्तत्र हरिर्यतः ।
जघने शिरसी कृत्वा जघान मधुकैटभौ ॥
तस्यासन्ने ब्रह्मकुण्डं ब्रह्मणा निर्म्मितं पुरा ।
ईशानाख्यं शिरोरत्नं तत् सिद्धेश्वरसंज्ञकम् ॥
शिलारूपं सिद्धकुण्डं मध्यस्थं विद्धि भैरव ! ।
तस्यासन्न गयाक्षेत्रं क्षेत्रं वाराणसी तथा ॥
योनिमण्डलसङ्काशं कुण्डं भूत्वा व्यवस्थितम् ।

अजीर्णपत्रः सुच्छायो वृक्षस्तत्र तु संस्थितः ॥
आम्रातकः कल्पवृक्षः कल्पवल्लीसमन्वितः ।
पीठे तु सिद्धगङ्गाख्या स्वयं गङ्गा समुत्थिता ॥
आम्रातकस्य निकटे मम प्रीतिविवृद्धये ।
पुष्कराख्यन्तु तत् क्षेत्रं पीठे त्वाम्रातकाह्वयम् ॥
ऐशान्यां तत्पुरुषाख्यं मम शीर्षं व्यवस्थितम् ।
भुवनेश्वरनाम्ना तु पीठे ख्यातञ्च भैरव ! ॥
गह्वरं भुवनेशस्य भुवनानन्दसंज्ञकम् ।
तस्यासन्ने तु सुरभिः शिलारूपेण संस्थिता ॥
कामधेनुरिति ख्याता पीठे कामप्रदायिनी ।
योऽसौ सरभमूर्त्तिर्म्मे मध्यखण्डः प्रचण्डकः ॥
महाभैरवनामाभूत् कोटिलिङ्गाह्वयस्तु सः ।
मूर्त्तिभिः पञ्चभिः पञ्चभागेषु सममास्थितः ॥
अहं पश्चादतिप्रीत्या भैरवाख्यः स्थितोऽधरे ।
महागौरी तु या देवी योगिनी सिद्धरूपिणी ॥
सा ब्रह्मपर्व्वते चास्ते शिलारूपेण चोद्ध्र्वतः ।
अतीवरूपसम्पन्ना नाम्ना सा भुवनेश्वरी ॥
यत्र ब्रह्मा तु संसक्तो मयि पर्व्वतरूपिणि ।
कल्पवल्ली तु तत्रास्ते नाम्ना सा त्वपराजिता ॥
कामधेनोरदूरस्था पूर्ब्बभागे महेश्वरी ।
श्रीकामाख्या योनिरूपा चण्डिका सा तुयोगिनी ॥
आग्नेय्यां विद्धि तां संस्थां सर्व्वकामप्रदां शुभाम् ।
योगिनी चण्डघण्टाख्या पीठेऽभूत् विन्ध्यवासिनी ॥
योगिनी स्कन्दमाता तत्पीठेऽभूद्वनवासिनी ।

| | | |
|---|---|---|
| | | कात्यायनी पीठनाम्ना पाददुर्गेति गद्यते ॥<br>नैरृत्यां नीलशैलस्य प्रान्ते सा संस्थिता शिवा ।<br>योऽसौ नन्दी मम तनुः स तु पाषाणरूपधृक् ॥<br>संस्थितः पश्चिमद्वारि हनूमान् पीठनामतः" ॥ * ॥ |

:श्रीऔर्व्व उवाच ।

"इति तस्य वचः श्रुत्वा शम्भोरमिततेजसः ।
भैरवस्तं तु पप्रच्छ वेतालोऽपि समुत्सुकः"
॥
श्रीवेतालभैरवावूचतुः ।
"श्रुतः पीठक्रमस्तात देव्याः पूजाक्रमन्ततः
।
श्रोतुमिच्छामि मूर्त्तीनां पञ्चानामपि शङ्कर ! ॥
रूपाणि पञ्चमूर्त्तीनां मन्त्राणि च समन्ततः ।
तथा यन्त्राणि तन्त्राणि वद नौ वृषभध्वज !"
॥
ईश्वर उवाच ।
"शृणु वक्ष्यामि वेताल मन्त्रं तन्त्रं पृथक्
पृथक् ।
कामाख्यापञ्चमूर्त्तीनां रूपं कल्पञ्च भैरव ! ॥
कामस्थं काममध्यस्थं कामदेवपुटीकृतम् ।
कामेन कमयेत् कामी कामं कामे नियोजयेत्
॥
ज्येष्ठन्तु व्यञ्जनं ब्रह्म न परः शान्त उच्यते ।
प्रथमं क्रमतः कुर्य्यात् तत्संसक्तं सुधामयम्
॥
प्रजापतिस्तथा शक्रवीजसंस्थादिसंयुतम् ।
चन्द्रार्द्धसहितं वीजं कामाख्यायाः प्रचक्षते ॥
इदं धर्म्मप्रदं काममोक्षार्थानां प्रदायकम् ।
इदं रहस्यं परममन्यत्र तु सुदुर्ल्लभम् ॥
श्रोत्रेणेदं यः शृणुयाद्गुरुवक्त्रान्नरोत्तमः ।
स कामानखिलान् प्राप्य शिवलोके महीयते
॥ * ॥
"श्रुतिसकलितसारं देवकण्ठौधहारं
सकलकलुषहारि श्रीधरामर्त्यकारि ।
सुनयशुभयशोभिर्योजयेद्यत्तु गोभि-
स्तदिह शिवसमस्तं विघ्नधर्म्माङ्गितास्तम्
॥
नयनकलितकारि ध्यानिनां दत्तपारि
प्रणयसुनयसंस्थं देवसत्यादिकस्थम् ।
परमपदविशीर्णं शुद्धदौर्भाग्यजीर्णं
शृणु शिवपदरूपं कामदेव्याः स्वरूपम् ॥
श्रवणगमनमात्रान्मार्ग्गितं यस्य नाम
प्रभवति बहुभूत्यै नीतिमार्गैकधाम ।
सुरगणगणसंधा कुण्डली यस्य शक्ति-
स्तदिह परमरूपं चिन्तनीयं कृतीशैः ॥
रविशशियुतकर्णा कुङ्कुमापीतवर्णा
देवीतन्त्रे सोऽत्र पूर्ब्बं विधेयः" ॥
इति श्रीकालिकापुराणे ६१ अध्यायः ॥

**कामाग्निसन्दीपनमोदकं**, क्ली, (सन्दीप्यते अनेनेति
सन्दीपनम् । कामाग्नीनां सन्दीपनमुद्दीपकम् ।
कामाग्निसन्दीपनञ्च तत् मोदकञ्चेति ।) औषध-
विशेषः । यथा, --
"कर्षो रसो गन्धकमभ्रकञ्च
द्विक्षारचित्रे लवणानि पञ्च ।
शटी यमानीद्वयकीटहारि
तालीशपत्राण्यपरं द्विकर्षम् ॥
जीरं चतुर्ज्जातलवङ्गजाती-
फलञ्च कर्षत्रयमेवमन्यत् ।
सवृद्धदारं कटुकत्रयञ्च
तथा चतुःकर्षमितं निबोध ॥
धन्याकयष्ठीमधुकं कशेरु-
कर्षाः पृथक् पञ्च वरी विदारी ।
वरेभकणेभबलात्मगुप्ता-
वीजं तथा गोक्षुरवीजयुक्तम् ॥
सवीजपत्रेन्द्ररजःसमानं
समासिता क्षौद्रघृतञ्च तुल्यम् ।
कर्षैकमिन्दोरथमोदकं तत्
कामाग्निसन्दीपनमेतदुक्तम्" ॥ * ॥
"वृष्यं ततः परतरं सततं न दृष्ट-
मेनं निषेव्य मनुजः प्रमदासहस्रम् ।
गच्छन्न लिङ्गशिथिलत्वमवाप्नुयाच्च
नागाधिपं विजयते बलतः प्रमत्तः ॥
कान्त्या हुताशनमपि स्वरतो मयूरान्
वाहं यवेन नयनेन महाविहङ्गम् ।
बातानशीतिमथपित्तगदंसमग्रं
श्लेष्मोत्थविंशतिरुजः परमग्निमान्द्यम् ॥
दुर्न्नामकामलभगन्दरपाण्डुरोग-
मेहातिसारकृमिहृद्ग्रहणीप्रदोषान् ।
कासज्वरश्वसनपीनसपार्श्वशूल-
शूलाम्लपित्तसहितांश्चिरजान्समस्तान् ॥
हत्वा गदानपि च तत् पुनरपत्यकारि
सर्व्वर्त्तुपथ्यमथ सर्व्वसुखप्रदायि ।
वृष्यं बलीपलितहारि रसायनं स्यात्
श्रीमूलदेवकथितं परमं प्रशस्तम्" ॥
इति भैषज्यरत्नावली ॥

**कामाङ्कुशः**, पुं, (कामे कामोद्दीपने अङ्कुश इव ।
कर्त्तव्यताज्ञानशून्यः ॥)

**कामान्धा**, स्त्री, (कामं यथेष्टं अन्धयति । अन्ध + णिच्
+ अच् + टाप् ।) कस्तूरी । इति राजनिर्घण्टः
।
(स्मरेण अन्धा । कर्त्तव्यज्ञानशून्या । प्रगल्भा-
नायिकाविशेषः । यथा, साहित्यदर्पणे ३ । ७०
।
"ल्मरान्धा गाढतारुण्या समस्तरतकोविदा ।
भावोन्नता दरव्रीडा प्रगल्भाक्रान्तनायका" ॥
अस्या उदाहरणं यथा तत्रैव ।
"धन्यासि या कथयसि प्रियसङ्गमेऽपि
विश्रब्धचाटुकशतानि रतान्तरेषु ।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः शपामि यदि किञ्चिदपि स्मरामि" ॥)

**कामायुः** [स्] पुं, (कामं यथेष्टं आयुर्यस्य ।) गरुडः ।
इति त्रिकाण्डशेषः ॥

**कामायुधः**, पुं, (कामस्य आयुधमिव मुकुले आकारो-
ऽस्ति अस्य । अर्श आदित्वात् अच् ।) महा-
राजचूतः । आम्रः । इति राजनिर्घण्टः ॥ काम-
देवास्त्रे क्ली ॥

**कामारण्यं** क्ली, (कामं मनोहरं अरण्यम् ।) मनोज्ञ-
वनम् । इति शब्दमाला ॥
(कामस्य अरण्यमिति विग्रहे कन्दर्पवनम् ॥)

**कामारिः**, पुं, (कामस्य अरिः ।) विटमाक्षिकधातुः ।
इति हेमचन्द्रः ॥ महादेवः कन्दर्पनाशकत्वात्
॥

**कामार्त्तः**, त्रि, (कामेन ऋतः ।) कामपीडितः ।
कामातुरः । यथा, मेघदूते ५ ।
"कामार्त्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु" ॥

**कामालुः**, पुं, (कामं यथेष्टं अलति पुष्पविकाशेन
पर्य्याप्नोतीति । अल पर्य्याप्तौ + उण् ।)
रक्तका-
ञ्चनवृक्षः । इति शब्दचन्द्रिका ॥

**कामावसायिता**, स्त्री, (कामेन स्वेच्छया अवसाययति
सर्व्वानि अविद्याबासनाजालानि । काम + अव
+
सो + णिच् णिनि ततो भावार्थे तल् ।) कामान्

मणिकनकविचित्रा लोलकर्णा त्रिनेत्रा ।
अभयवरदहस्ता साक्षसूत्रप्रशस्ता
प्रणतसुरवरेशा सिद्धकामेश्वरी सा ॥
अरुणकमलसंस्था रक्तपद्मासनस्था
नवतरुणशरीरा मुक्तकेशी सुहारा ।
शवहृदि पृथुतुङ्गस्तन्ययुग्मा मनोज्ञा
शिशुरविसमवस्त्रा सिद्धकामेश्वरी सा ॥
विपुलविभवदात्री स्मेरवक्त्रा सुकेशी
दलितकरकदन्ता सासिचन्द्रावनम्रा ।
मनसिजदृशदिस्था योनिमुद्रां लषन्ती
पवनचलनशक्ता संश्रुतस्थानभागा ॥
चिन्त्या चैवं विद्युदग्निप्रकाशा
धर्म्मार्थाद्यैः साधिता वाञ्छितार्थैः ।
कल्पं तन्त्रं शृण्विदं सम्यगर्थं
वेतालत्वं भैरवत्वं प्रतिष्ठम् ॥
तस्मिन्नाद्यं मण्डलं विद्धि पश्चात्
कार्य्यं तद्वै चन्दनैः पुष्पगन्धैः ।
तत्पर्य्यायो लेखने पूर्ब्बमुक्तो

नखाघातेन कामोद्दीपनादस्य तथात्वम् ।) नखः
।
इति त्रिकाण्डशेषः ॥ (कामस्य अङ्कुश इव ।)
शिश्नः ।
इति जटाधरः ॥

**कामाङ्गः**, पुं, (कामं कामोद्दीपकं अङ्गं मुकुलं यस्य ।)
आम्रवृक्षः । इति जटाधरः ॥

**कामातुरः**, त्रि, (कामेन आतुरः ।) कामार्त्तः । यथा ।
"अर्थीलाघवमुच्छ्रितो निपतनं कामातुरो लाञ्छ
नम्" ॥ इति नवरत्नमध्ये धन्वन्तरिः ॥

**कामान्धः**, पुं, (कामेन अन्धयति निजध्वनिजनित-
मन्मथोद्वोपनेन हतज्ञानं करोतीति । काम +
अन्ध + णिच् + अच् ।) कोकिलः । इति राज-
निर्घण्टः ॥ (कामेन अन्धः । स्मरान्धः ।
कामवेगेन
स्वेच्छया अवसाययितुं शीलमस्य
कामावसायी
तस्य भावः । इति सारसुन्दरी ॥
शिवस्याणिमा-
द्यष्टधैश्वर्य्यान्तर्गतैश्वर्य्यविशेषः । इत्यमरः
शब्द-
रत्नावली च ॥ सा तु सत्यसङ्कल्पता ॥
(अष्टैश्व-
र्य्याणि यथा,
"अणिमा लघिमा व्याप्तिः प्राकाम्यं गरिमा तथा
।
ईशित्वञ्च वशित्वञ्च तथा कामावसायिता" ॥)

**कामावसायित्वं**, क्ली (कामावसायिनो भावः । त्व-
प्रत्ययः ।) कामवसायिता । इति हेमचन्द्रः ॥

**कामिः**, पुं, (कामयते इति । कम् + णिच् + इण् ।)
कामुकः । रत्यां स्त्री । इति मेदिनी ॥

**कामिकः**, पुं, (कामः अस्त्यस्य ठन् ।) कारण्डवपक्षी ।
इति शब्दरत्नावली ॥ (कामेन निर्वृत्तम् । ठञ् ।
कामनिर्वृत्तकर्म्मणि क्ली । यथा, महाभारते
अनुशासनपर्व्वणि ।
"देवतास्तस्य तुष्यन्ति कामिकं तस्य
सिध्यति" ॥)

**कामिनी**, स्त्री, (अतिशयेन कामः अस्या अस्ति इति ।
काम + इनिः + ङीप् ।) अतिशयकामयुक्ता
नारी ।
इत्यमरः । २ । ६ । ३ ॥ (यथा, मनुः ८ ।
११२ ।
"कामिनीषु विवाहेषु गवाम्भक्ष्ये तथेन्धने ।

:ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकम्” ॥)

भीरुस्त्री । वन्दा । इति मेदिनी ॥ दारुहरिद्रा । मदिरा । स्त्रीसामान्यम् । इति राजनिर्घण्टः ॥ (यथा, आर्य्यासप्तशती २७० ।
“कर्ण श्व कामिनीनां न शोभते निर्भरः प्रेमा” ॥)

**कामिनीशः**, पुं, (कामिन्याः कामिनीप्रियाञ्जनस्य ईशः तत्साधनत्वात् ।) शोभाञ्जनवृक्षः । इति शब्दचन्द्रिका ॥

**कामी**, [न्] पुं, (अतिशयेन कामयते । कम + णिच् + णिनिः ।) चक्रवाकः । पारावतः । कामुकः । इति मेदिनी ॥ (यथा, मेघदूते । ७४ ।
“सभ्रूभङ्गं प्रहितनयनैः कामिलक्ष्येष्वमोघैः” ॥)
चटकः । इति शब्दरत्नावली ॥ चन्द्रः । इति त्रि-काण्डशेषः ॥ ऋषभौषधिः । सारसपक्षी । इति राजनिर्घण्ठः ॥ (सर्व्वकामवत्त्वात् विष्णुः । यथा, महामारते १३ । १४९ । ८३ ।
“कामदेवः कामपालः कामी कान्तः कृतागमः” ॥)

**कामीलः**, पुं, (काममनुगच्छति इति खः । पृषोदरा-दित्वात् साधुः ।) रामगुवाकः । इति त्रिकाण्ड-शेषः ॥ (कामीन इत्यपि दृश्यते ॥)

**कामुकः**, त्रि, (कामयते इति । “लषपतपदेत्या-दिना” । ३ । २ । १५४ । उकञ् ।) कामी । तत्प-
र्य्यायः । कमिता २ अनुकः ३ कम्रः ४ कामयिता ५ अभीकः ६ कमनः ७ कामनः ८ अभिकः ९ । इत्यमरः । ३ । १ । २० ॥ (यथा, भागवते ९ । २३ । १७ ।
“दुष्यन्तः स पुनर्भेजे स्ववंशं राज्यकामुकः” ॥)

**कामुकः**, पुं, (कम + उकञ् ।) अशोकवृक्षः । अति-मुक्तकलता । इति मेदिनी ॥ चटकः । इति राजनिर्घण्टः ॥

**कामुककान्ता**, स्त्री, (कामुकानां कान्ता प्रिया ।) अतिमुक्तकलता । इति राजनिर्घण्टः ॥

**कामुका**, स्त्री, (कम + उकञ + स्त्रियां टाप् । न ङीप् ।) धनादीच्छाविशिष्टा । तत्पर्य्यायः । इच्छा-

तन्त्रं तस्याः प्रथमतस्ततोऽनुध्यानगोचरम् ।
ततः पूलाकृमं वक्ष्ये क्रमाद्वेतालभैरव ! ॥
प्रजापतिस्ततो वह्निरिन्द्रवीजं ततः परम् ॥
चूडाचन्द्रार्द्धसहितं चतुर्थस्वरसंयुतम् ।
इदं कामेश्वरीमन्त्रं सर्व्वकामार्थसाधनम्” ॥ * ॥
तस्या ध्यानं यथा, --
“रूपन्तु चिन्तयेद्देव्याः कामेश्वर्य्या मनोहरम् ।
प्रभिन्नाञ्जनसंकाशां नीलस्निग्धशिरोरुहाम् ॥
षड्वक्त्रां द्वादशभुजां अष्टादशविलोचनाम् ।
प्रत्येकं षट्सु शीर्षेषु चन्द्रार्द्धकृतशेखराम् ॥
मणिमुक्तादिमाणिक्त्यकृतां मालामुरःस्थले ।
कण्ठे च बिभ्रतीं नित्यं सर्व्वालङ्कारमण्डिताम् ॥
पुस्तकं सिद्धसूत्रञ्च पञ्चवाणवरं तथा ।
खड्गं शक्तिञ्च शूलञ्च बिभ्रतीं दक्षिणैः करैः ॥
अक्षमालां महापद्मं कोदण्डञ्चाभयं तथा ।
चर्म्म पश्चात् पिनाकञ्च बिभ्रतीं वामपाणिभिः ॥
शुक्लं रक्तञ्च पीतञ्च हरितं कृष्णमेव च ।
विचित्रं क्रमतः शीर्षं ऐशान्यां पूर्ब्बमेव च ॥
दक्षिणं पश्चिमञ्चैव तथैवोत्तरशीर्षकम् ।
मध्यञ्चेति महाभाग ! क्रमात् शीर्षाणि वर्णतः ॥
शुक्लं माहेश्वरीवक्त्रं कामाख्यारक्तमुच्यते ।
त्रिपुरापीतसंकाशं सारदाहरितं तथा ॥
कृष्णं कामेश्वरीवक्त्रं चण्डायाश्चित्रमिष्यते ।
धम्मिल्लसंयतकचं प्रतिशीर्षं प्रकीर्त्तितम् ।
सिंहोपरिसितप्रेतं तस्मिँल्लोहितपङ्कजम् ।
कामेश्वरी स्थिता तत्र ईषत्प्रहसितानना ॥
विचित्रांशुकसंप्रीता व्याघ्रचर्म्माम्बरा तथा ।
एवं कामेश्वरीं ध्यायेद्धर्म्मकामार्थसिद्धये” ॥
इत्यादि कालिकापुराणे ६३ अध्यायः ॥

काम्पिल्लः । इति हारावली ॥ (क्वचित् क्लीवेऽपि दृश्यते । यथा सुश्रुते सूत्रस्थाने ४५ अः ।
“चूर्णं काम्पिल्लकं वापि तत्पीतं गुटिकाकृतम्” ।)

**काम्पीलः**, पुं, (काम्पिल + अण् निपातनात् साधुः ।) काम्पिल्लः । इति शब्दरत्नावली ॥ (“देवीं का-म्पीलवासिनीम्” । इति यजुर्व्वेदे ॥)

**काम्पीलकः** पुं, (काम्पील + स्वार्थेकन् ।) काम्पिल्लः । इति रत्नमाला ॥

**काम्बलः**, पुं, (कम्बलेनावृतः । कम्बल + अण् ।) क-म्बलावृतरथः । इत्यमरः । २ । ८ । ५४ ॥

**काम्बविकः**, पुं, (कम्बुः शङ्खं भूषणत्वेन शिल्पमस्य ठक् ।) शङ्खकारः । इत्यमरः । २ । १० । ८ । शाँखारी इति भाषा ॥

**काम्बुका**, स्त्री, (कुत्सितं अम्बु यस्याः कप् । कोः कादेशः ।) अश्वगन्धा । इति रत्नमाला ॥

**काम्बोजः**, पुं, (कम्बोजदेशे भवः इति । अण् ।) कम्बोजदेशजघोटकः । इत्यमरः । २ । ८ । ४५ ॥ सोम-
वल्कः । पुन्नागवृक्षः । इति मेदिनी ॥ (कम्बोजः अभिजनो यस्य सिन्ध्वादित्वात् अण् ।) म्लेच्छ-
जातिविशेषः । स तु यवनतुल्यः सगरराजेनास्य सर्व्वशिरोमुण्डनं कृतम् । यथा । हरिवंशे ॥
“अर्द्धं शकानां शिरसो मुण्डयित्वा व्यसर्ज्जयत् ।
यवनानां शिरः सर्व्वं काम्बोजानां तथैव च” ।

**काम्बोजी**, स्त्री (कम्बोजेषु भवः कच्छादित्वात् अण् ङीप् ।) माषपर्णी । माषाणी इति भाषा । इत्य-मरः २ । ४ । १३८ ॥ वलक्षखदिरः । इति मेदिनी ॥
पापिडि खएर इति भाषा ॥ गुञ्जा । कुँच इति भाषा । वाकुची । हाकुच् इति भाषा । इति राजनिर्घण्टः ॥

**काम्यं**, त्रि, (काम्यते इति । कम् + णिच् + कर्म्मणि यत् ।) कमनीयम् । सुन्दरम् । इति हेमचन्द्रः ॥

वती २ । इत्यमरः । २ । ६ । ९ ॥

**कामुकी**, स्त्री, (कम + उकञ् + "जानपदकुण्डेति"

। ४ । १ । ४२ । ङीष् ।) मैथुनेच्छावती । तत्प-
र्य्यायः । वृषस्यन्ती २ । इत्यमरः । २ । ६ । ९
॥
(यथा, नैषधे १९ । २४ ।
"अनिशभवदत्यागाद्वेनं जनः खलु कामुकी
सुभगमभिधास्यत्युद्धामापराङ्कवदावदः" ॥)

**कामेश्वरी**, स्त्री, (काम्यन्ते इति कामा विषयास्तेषां

भोग्यानां प्रदायित्वेन ईश्वरी ।) कामाख्यापञ्च-
मूर्त्यन्तर्गतमूर्त्तिविशेषः । यथा, --
"देव्याश्चापि नरश्रेष्ठ ! पञ्च रूपाणि भैरव ! ।
शृणु वेताल ! गुह्यानि देवैरपि सदैव हि ॥
कामाख्या त्रिपुरा चैव तथा कामेश्वरी शिवा ।
मारदाथ महोत्साहा कामरूपगुणैर्य्युता" ॥
इति कालिकापुराणे ६१ अध्यायः ॥ * ॥
अस्या मन्त्रं यथा, श्रीभगवानुवाच ।
"देव्याः कामेश्वरीं मूर्त्तिं शृणु वक्ष्यामि भैरव ! ।
यस्याश्चिन्तनमात्रेण साधको लमते प्रियान् ॥

**कामोदकं**, क्ली, (कामेन स्वेच्छया दत्तं उदकम् ।)

मृतोद्देशे स्वेच्छया दत्तोदकम् । इति
मिताक्षरा ॥

**कामोदा**, स्त्री, (कुत्सितो मोदो आमोदो यस्याः ।

सहृदयमनोहरत्वाभावात् ।) रागिणीविशेषः
।
इति हलायुधः ॥

**काम्पिलः**, पुं, (कम्पिलः नदीविशेषः तस्य अदूरे

भवः अण् ।) काम्पिल्यदेशः । इति
शब्दरत्नावली ॥
(अयन्तु पाञ्चालस्य दक्षिणांशे वर्त्तते । इति
हरिवंशः ॥)

**काम्पिल्यः**, पुं, (कम्पिल + जातार्थे ष्यञ् ।) गुण्डा-

रोचनीनामसुगन्धिद्रव्यम् । इत्यमरटीकायां
भरतः ॥
(कम्पिलाया अदूरे भवः इति
सङ्काशादित्वात्
ण्यः ।) उत्तरदेशविशेषः । इति
शब्दरत्नावली ॥
(यथा, महाभारते । १ । १३९ । ६८ ।
"माकन्दीमथगङ्गायास्तीरेजनपदायुताम् ।
सोऽध्यवात्सीत् दीनमनाः काम्पिल्यञ्च
पुरोत्तमम् ।
दक्षिणांश्चापि पाञ्चालान् यावच्चर्म्मन्वती
नदी" ॥)

**काम्पिल्लः**, पुं, (काम्पिल + अण् निपातनात् साधुः
।)

गुण्डारोचनी । कमलागुँडी इति भाषा ।
इत्य-
मरः । २ । ४ । १४६ ॥ तस्य
रूपान्तराणि
कम्पिल्लः । कम्पीलः । कम्पिलः ।
काम्पिल्यः ।
इति भरतः ॥

**काम्पिल्लका**, स्त्री, (काम्पिल्ल + स्वार्थे कन टाप च
।)

("काम्यानां स्वफलार्थञ्च दोषघातार्थमेव च ।
अतः काम्यं नैमित्तिकं प्रायश्चित्तमिति
स्थितिः" ॥
इति जावालः ॥) कामनायुक्तव्यक्तिः ।
कर्त्तव्यकर्म्म ।
यथा, मुग्धबोधटीकाकृद्रामतर्कवागीशधृता
स्मृतिः
"यत् किञ्चित् फलमुद्दिश्य यज्ञदानजपादिकम्
।
क्रियते कायिकं यच्च तत्काम्यं परिकीर्त्तितम्"
॥

**काम्यदानं**, क्ली, (काम्यञ्च तत् दानञ्चेति ।) कमनीयस्य

वस्तुनो वरस्त्रीरत्नादिनी दानं कामनया वा
दानं ।
इति भरतः ॥ तत्पर्य्यायः । प्रवारणम् २ ।
इत्य-
मरः । ३ । २ । ३ ॥ (यथा, गरुडपुराणे ।
"अपत्यविजयैश्वर्य्यस्वर्गार्थं यत्प्रदीयते ।
दानं तत् काम्यमाख्यातं
ऋषिभिर्धर्म्मचिन्तकैः" ॥)

**कायं**, क्ली, मनुष्यतीर्थम् । इति मेदिनी ॥ (कः प्रजा-

पतिर्देवतास्य । "कस्येत्" । ४ । २ । २५ ।
इत्यण्
इदन्तादेशश्च ततः आदिवृद्धिः ।) प्राजापत्य-
तीर्थम् । तत्तु स्वल्पांङ्गुल्योर्मूलम् । कनिष्ठा-
नामिकयोरधोभाग इति यावत् । इत्यमर-
भरतौ ॥ (यथा मनुः २ । ५९ ।
"अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते ।
कायमङ्गुलिमूले ऽग्रे दैवं पित्र्यं तयोरधः" ॥)

**कायः**, पुं, (को ब्रह्मास्य देवता “कस्येत्” । ४ । २ । २५ ।

इत्यण् । इदन्तादेशश्च । यस्येतिलोपात् पर-
त्त्वादादिवृद्धिः कदैवतम् । स तु ब्राह्मतीर्थम् ।
(कायति प्रकाशते इति अच् ।) मूर्त्तिः ।
(“कायः सन्निहितापायः सम्पदः पदमापदाम् ।
समागमाः सापगमाः सर्व्वमुत्पादि भङ्गुरम्” ॥
इति हितोपदेशः ॥) संघः । लक्ष्यः । स्वभावः ।
इति मेदिनी ॥ प्राजापत्यविवाहः । इति स्मृतिः ॥
(यथा मनुः ३ । ३८ ।
“आर्षोढाजः सुतस्त्रींस्त्रीन्
षट् षट् कायोढजः सुतः” ॥)
अस्य लक्षणं उद्वाहशब्दे द्रष्टव्यम् ॥
मूलधनम् ।
यथा, -- नारदः ।
“कायाविरोधिनी शश्वत् पणार्द्धाद्या तु कायिका” ॥

**कायमानं**, क्ली, (कायस्य मानमिव मानमस्य ।) तृण-

कुटीरः । इति त्रिकाण्डशेषः ॥

**कायवलनं**, क्ली, (कायो वल्यते आच्छाद्यते अनेन ।

वलस्तृतौ करणे ल्युट् ।) कवचम् । इति हारा-
वली । ७३ ॥

**कायस्थः**, पुं, (कायेषु सर्व्वभूतशरीरेषु अन्तर्यामि-

तया तिष्ठतीति । काय + स्था + कः ।) पर
मात्मा । (यथा उत्तरगीतायाम् ।
“कायस्थोऽपि न कायस्थः कायस्थोऽपि न जायते ।
कायस्थोऽपि न भुञ्जानः कायस्थोऽपि न बध्यते” ॥
काये ब्रह्मकाये तिष्ठतीति । काय + स्था + कः ।)
नरजातिविशेषः । इति मेदिनी ॥
तत्पर्य्यायः ।

पुलस्त्य उवाच ।
“चित्रगुप्तान्वये जाताः शृणु तान् कथयामि ते ।
श्रीमद्रा नागरा गौराः श्रौवत्सश्चैव माथुराः ॥
अहिफणाः सौरसेनाः शैवसेनास्तथैव च ।
वर्णावर्णद्वयञ्चैव अम्बष्ठाद्याश्च सत्तम् ! ॥
शृण तेषाञ्च कर्म्माणि कुरुवंशविवर्द्धन ! ।
पुत्रान् वै स्थापयामास चित्रगुप्तो महीतले ॥
धर्माधर्मविवेकज्ञश्चित्रगुप्ती महामतिः ।
भूस्थानं बोधयामास सर्व्वसाधनमुत्तमम् ॥
पूजनं देवतानाञ्च पितॄणां यज्ञसाधनम् ।
वर्णानां ब्राह्मणानाञ्च सर्व्वदातिथिसेवनम् ॥
प्रजाभ्यः करमादाय धर्माधर्मविलोकनम् ।
कर्त्तव्यं हि प्रयत्नेन पुत्त्राः स्वर्गस्य काम्यया ॥
या माया प्रकृतिः शक्तिश्चण्डौ चण्डप्रमर्द्दिनी ।
तस्यास्तु पूजनं कार्य्यं सिद्धिं प्राप्य दिवं गताः ॥
स्वर्गाधिकारमासाद्य यतो यज्ञभुजः सदा ।
भवद्भिः सा सदा पूज्या ध्यातव्या सफलादिभिः ॥
भवन्ती सिद्धिदा नित्यं पुत्त्रदा सा तु चण्डिका ।
तथाचोक्ता सुरापेया यानपेया द्विजातिभिः ॥
वैष्णवं धर्ममाश्रित्य मद्वाक्यं प्रतिपालय ।
कर्त्तव्यं हि प्रयत्नेन लोकद्वयहिताय वै ॥
अनुशिष्य सुतानेवं चित्रगुप्तो दिवं ययौ ।
धर्मराजस्याधिकारी चित्रगुप्तो बभूव ह ॥
खयं भीष्म ! समुत्पन्नाः कायस्था ये प्रकीर्त्तिताः ।
ये पृष्टास्वे मया ख्याताः संवादं शृणु तत्परः ॥
अहं ते कथयिष्यामि विचित्रं परमाद्भुतम् ।
प्रभावं चित्रगुप्तस्य समुद्भूतं यथा पुनः” ॥
पुलस्त्य उवाच ।
“सौदासो नाम राजाभूत् समस्ते क्षितिमण्डले ।
सदा पापरतः सोऽथ धर्माधर्मं न विन्दति ॥
स यथा स्वर्गमासाद्य लेभे पुण्यफलं शृणु ।
सर्व्वपापो दुराचारः सर्वधर्मविवर्जितः ॥
राजनीतिगतं धर्मं न जानाति कथञ्चन ।
आतिथ्यजयकर्माणि तत्तत्साधनमुत्तमम् ॥
न कर्त्तव्यं द्विजैः क्वापि मयाज्ञप्तैर्महीतले
एवमाज्ञप्तवाँल्लोके दैवपित्रेयकर्मणि ॥
परित्यज्य स्वकं देशं ततो देशान्तरं ययौ ।
ये केचिद्वसतिं चक्रुर्लोकेषु ब्राह्मणादिषु ॥
ततः प्रभृति गाङ्गेय ! न यज्ञहवनं क्वचित्” ॥

भीष्मोक्तप्रार्थना यथा, --
उत्पत्तौ प्रलये चैव भोग्ये दाने कृताकृते ।
लेखकस्त्वं सदा श्रीमांश्चित्रगुप्त नमोऽस्तुते ॥
श्रिया सह समुत्पन्न समुद्रमथनीद्भव ! ।
चित्रगुप्त महाबाहो ! ममाद्य वरदो भव ॥
चिबगुप्तस्तु सन्तुष्टो भीष्माय च वरं ददौ ।
मत्प्रसादान्महाबाहो मृत्युस्ते न भविष्यति ॥
स्मरिष्यसि यदा मृत्युं तदा मृत्युर्भविष्यति ।
इति तस्मै वरं दत्त्वा चित्रगुप्तो दिवं ययौ ॥
अनेन विधिना यस्तु चित्रगुप्तस्य पूजनम् ।
करिष्यति महाबुद्धे तस्य पुण्यफलं शृणु ॥
इहैव विपुलान् भोगान् भुक्त्वा सर्व्वान् मनोरथान् ।
अक्षय विष्णुलोकञ्च नरो याति न संशयः ॥
चित्रगुप्तकथां दिव्यां कायस्थोत्पत्तिसंज्ञकाम् ।
भक्तियुक्तेन मतसा ये शृण्वन्ति नरोत्तमाः ॥
दीर्घायुषो भविष्यन्ति सर्व्वव्याधिविवर्जिताः ।
सर्व्वे विष्णपदं यान्ति यत्र यान्ति तपोधनाः” ॥
इति भविष्यपुराणे
चित्रगुप्तकायस्थीत्पत्तिमाहात्म्यकथ
समाप्ता ॥ * ॥
“एवं हत्वार्ज्जुनं रामः सन्धाय निशितान् शरान् ।
एक एव ययौ हन्तुं सर्व्वानिवातुरान् नृपान् ॥
केचित् गहनमाश्रित्य केचित् पातालमाविशन् ।
सगर्भा चन्द्रसेनस्य भार्य्या दाल्भ्याश्रमं ययौ” ॥
“ततो रामः समायातो दालभ्याश्रममनुत्तमम् ।
पूजितो मुनिना सद्यः पाद्यार्घ्याचमनादिभिः ॥
ददौ मध्याह्नसमये तस्मै भोजनमादरात् ।
रामस्तु याचयामास हृदिस्थं स्वमनीरथम् ॥
याचयामास रामाच्च कामं दाल्भ्यो महामुनिः ।
ततस्तौ परमप्रीतौ भोजनं चक्रतुर्मुदा ॥
भोजनानन्तरं दाल्भ्यः पप्रच्छ भार्गवं प्रति ।
यत्त्वया प्रार्थितं देव तत् त्वं शंसितुमर्हसि ॥
राम उवाच ।
तवाश्रमे महाभाग सगर्भा स्त्रौ समागता ।
चन्द्रसेनस्य राजर्षेः क्षत्रियस्य महात्मनः ॥
तन्मे त्वं प्रार्थितं देहि हिंसेयं तां महामुने ।
ततो दाल्भ्यः प्रत्युवाच ददामि तव वाञ्छितम् ॥
दाल्भ्य उवाच ।
स्त्रियो गर्भममुं बालं तन्मे त्वं दातुमर्हसि ।
ततो रामोऽब्रवीद्दाल्भ्यं यदर्थमहमागतः ॥

कूटकृत् २ पञ्जीकरः ३ । इति
त्रिकाण्डशेषः ॥
करणः ४ पञ्जिकारकः ५ । इति जटाधरः
॥
तस्योत्पत्त्यादिर्य्यथा
<F>*) । कायस्थीत्पत्त्यादौ ग्रन्थकृता राज्ञा यानि प्रमाणानि
संगृहीतानि तदितराण्यधुना प्राप्तानि ।
कतिपयप्रशस्तप्रा-
माण्यप्रमाणान्यत्रोद्धृतानीति । तद् यथा, --
"क्षणं ध्यानस्थितस्यास्य
सर्व्वकायाद्विनिर्गतः ।
दिव्यरूपः पुमान् हस्ते मसीपात्रञ्च लेखनी
॥
चित्रगुप्त इति ख्यातो धर्म्मराजसमीपतः ।
प्राणिनां सदसत्कर्म्मलेख्याय स निरूपितः
।
ब्रह्मणातीन्द्रियज्ञानी देवाग्न्योर्यज्ञभुक् स वै
।
भोजनाच्च सदा तस्मादाहुतिर्दीयते द्विजैः
॥
ब्रह्मकायीद्भवो यस्मात् कायस्थी वर्ण
उच्यते ।
नानागोत्राश्च तद्वंश्याः कायस्था भुवि
सन्ति वै" ॥
इति पद्मपुराणे सृष्टिखण्डम् ॥ * ॥
दत्तात्रेय उवाच ।
"त्रिकालज्ञं महाप्राज्ञं पुलस्त्यमुनिपुङ्गवम् ।
उपसङ्गम्य पप्रच्छ भीष्मः शस्त्रभृताम्बरः ॥
चतुणामपि वर्णानामाश्रमाणां तथैवच ।
सम्भवः सङ्करादीनां श्रुतो विस्तरतो मया ॥
कायस्थोत्पत्तयो लोकेख्याताश्चैव महामने
।
भूय एव महाप्राज्ञ ! श्रोतुमिच्छामि तत्त्वतः
॥
वैष्णवा दानशीलाश्च पितृयज्ञपरायणाः ।
सुधियः सर्व्वशास्त्रेषु काव्यालङ्कारबोधकाः
॥
पोष्टारो निजवर्गाणां ब्राह्मणानां विशेषतः ।
तानहं श्रोतुमिच्छामि कथयस्व महामुने ! ॥
एतन्म संशयं विप्र ! वक्तुमर्हस्यशेषतः ।
इति पृष्टो मुनिप्राज्ञः, गाङ्गेय ! शृणु तत्त्वतः
॥
पलस्त्य उवाच ।
"न कोऽपि कुरुते भीष्म ! पुण्यं तत्र निषेवितम् ।
गृहीत्वा ब्राह्मणादिभ्यः करं कर्मविदूषकः ॥
अहो धर्मभृतां श्रेष्ठ शृणु कर्म विपाकजम् ॥
कालेनान्येन गाङ्गेय सौदासो विचरन् महीम् ।
कार्त्तिके शुक्लपक्षे च द्वितीया चीत्तमा तिथिः ।
तस्यां कार्य्यञ्च कायस्थैश्चित्रगुप्तस्य पूजनम् ॥
महतीभक्तिभावेन धूपदीपादिभिस्तथा ॥
दैवयोगात्तथायातः सौदासः पर्य्यटन्महीम् ।
श्रद्धायुक्तशरीरेण दृष्ट्वा च पजनं ततः ।
कृत्वा सुपूजनं तत्र चित्रगुप्तस्य भक्तितः ॥
गतपापोऽभवत् सद्यः सौदासोऽसौ महीपतिः ।
चित्रगुप्तप्रभावेण गतो लोकं सुणलयम् ॥
इदं विचित्रमाहात्म्यं चित्रगुप्तप्रभावजम् ।
कथितं नृपशार्द्दूल ! किमन्यत् श्रोतुमिच्छसि ॥
इत्याकर्ण्य ततो भीष्मः प्रत्युवाच मुनिं ततः ।
विधिना केन तत्रापि पूजा कार्य्या महामुने ! ॥
को मन्त्रः को विधिस्वत्र सर्व्वं तद्वद्र मे प्रभो ।
यामासाद्य मुनिश्रेष्ठ ! सौदासः स्वर्गमाप्तवान् ॥
पुलस्त्य उवाच ।
चित्रगुप्तस्य पूजाया विधानं कथयाम्यहम् ।
नैवेद्यैर्घृतपक्वैश्च यथाकालोद्भवैः फलैः ॥
गन्धपुष्पोपहारैश्व धूपदीपैः समासतः ।
चित्रगुप्तञ्च संपूज्य श्रद्धाभक्तिसमन्वितः ॥
नवकुम्भं समानीय पानीयपरिपूरितम् ।
शर्करापूरितं कृत्वा पात्रं तस्योपरि न्यस्येत् ॥
पूजान्ते च प्रयत्नेन दातव्यञ्च द्विजन्मने ।
ब्राह्मणान् भोजयेत्तत्र कायस्थानपि मन्त्रवित् ॥
मसीभाजनसंयुक्तः सदा चरसि भूतले ।
लेखनीच्छेदनीहस्तचित्रगुप्त ! नमोऽस्तु ते ॥
चित्रगुप्त नमस्तुभ्यं नमस्तं धर्मसृपिणे ।
तेषां त्वं पालकी नित्यं नमः शान्तिं प्रयच्छ मे ॥
सन्त्रेणानेन राजेन्द्र चित्रगुप्तस्य पूजनम् ।
एवं संपूज्य विधिवत् सौदासो भक्तिभावतः ॥
अचिरात् पापसंमुक्तो राज्यं कृत्वा मृतो नृपः ।
नीतोऽसौ यमदूतैश्च यमलोकं भयानकम् ॥
चित्रगुप्तन्तदापृच्छद्धर्म्मराजोऽपि भारत ! ॥
धर्मराज उवाच ।
सौदासोऽसौ दुराचारः पापकर्मसदारतः ।
यानि कानि च पापानि राजासौ कृतवान् भुवि ॥
पृष्टोऽसौ यमराजेन धर्माधर्मविशारदः ।
धर्मराजं ततः प्राह चित्रगुप्तो महामतिः ॥
विपाकं धर्मजं ज्ञात्वा तं प्रहस्याब्रवीद्वचः ॥
चिचगुप्न उवाच ।
जानेऽहं पापकर्मासौ राजायं विदितः सदा ।
क्षत्त्रियान्तकरश्चाहं तत् त्वं याचितवानसि ।
प्रार्थितश्च त्वया विप्र ! कायस्थो गर्भ उत्तमः ॥
तस्मात् कायस्थ इत्याख्या भविष्यति शिशोः
शुभा ॥
एवं रामो महाबाहुर्हित्वा तं गर्भमुत्तमम् ।
निर्जगामाश्रमात् तस्मात् क्षत्त्रियान्तकरः प्रभुः"
॥
"कायस्थ एष उत्पन्नः क्षत्त्रिय्यां क्षत्त्रियात्ततः ।
रामाज्ञया स दालभ्येन क्षत्त्रधर्माद्वहिष्कृतः ॥
कायस्थधर्मोऽस्मै दत्तश्चित्रगप्तश्च यः स्मृतः ।
तद्गीत्रजाश्च कायस्था
दाल्भ्यगोत्रास्ततोऽभवन् ॥
दालभ्योपदेशतस्त वै धर्मिष्ठाः सत्यवादिनः ।
सदाचारपरा नित्यं रता हरिहरार्च्चने ॥
देवविप्रपितृणाञ्च अतिथीनाञ्च पूजकाः" ॥
इति स्कान्दे रेणुकामाहात्म्यम् ॥ * ॥</F>
श्रीहर उवाच ।
"भूयस्तेऽहं प्रवक्ष्यामि वगलेति मनूत्तमम् ।
यस्य ग्रहणमात्रेण कायस्थो विप्रसेवकः ॥
पार्व्वत्युवाच ।
अतीव चित्रं शम्भो ! त्वमुक्तवानावयोरुप ।
शूद्रात् कनीयसी जातिरभवद्विप्रसेवकः ॥
श्रोष्याम्यादौ हि कायस्थवृत्तान्तं ब्रूहि विस्तरात्
।
कायस्थः क्षत्त्रविट्शूद्रानृते विप्रार्च्चकः कथम्
॥
केन प्रकारेण च वा वगलेति गृहीतवान् ।
ततश्च सिद्धविद्याया वगलाया वरेश्वर ! ॥
श्रोष्यामि महिमानञ्च साधनं त्वत्त एव हि ॥
हर उवाच ।
ब्रह्मपादांशतो जन्म चातः कायस्थनामभृत् ।
ककारं ब्राह्मणं विद्यादाकारं नित्यसंज्ञकम् ॥
आयन्तु निकटं ज्ञेयं तत्र काये हि तिष्ठति ।
कायस्थोऽतः समाख्यातो भसीशं प्रोक्तवांश्च
यम् ॥
जीवेक्षणे भृगुपदे जन्मत्वात् शोभना धियः ।
शठश्च शूरता किञ्चिदनेकप्रतिपालकृत् ॥
जन्मावधि द्विजार्च्चायां मतिरेव निरन्तरम् ।
कुशासनादि सकलं गृहीत्वा मस्तकोपरि ॥
अनुगच्छामि सततमिति चिन्तामनाः सदा ।
शठत्वाच्चतुरत्वाच्च विप्रसेवामनुक्षणम् ॥
वाञ्छत्येव मसीशः स सदोद्वेगीतिमावहन् ।
ब्राह्मणं हीश्वरं ज्ञात्वा भक्त्या स्तौति पुटाञ्जलिः
॥

श्रृणु गाङ्गेय ! वक्ष्यामि
कायस्थोत्पत्तिकारणम्।
न श्रुतं यत् त्वया पूर्ब्बं तन्मे कथयतः श्रृणु
॥
येनेदं सकलं विश्वं स्थावरं जङ्गमं तथा ।
उत्पाद्य पाल्यते भूयो निधनाय प्रकल्पते ॥
अव्यक्तः पुरुषः शान्तो ब्रह्मा लोकपितामहः
।
यथाऽसृजत् पुरा विश्वं कथयामि तव
प्रभो” ॥
“मुखतीऽस्य द्विजा जाता बाहुभ्यां
क्षत्त्रियास्थथा।
ऊरुभ्याञ्च तथा वैश्याः पद्भ्यां शूद्राः
समुद्भवाः ॥
द्विचतुःषट्पदादींश्च प्लवङ्गमसरीसृपान्।
एककालेऽसृजत् सर्व्वं चन्द्रसूर्य्यग्रहांस्तथा
॥
एवं बहुविधानेन विश्वमुत्पाद्य भारत ! ।
उवाच तं सुतं ज्येष्ठं कश्यपं चातिवेजसम् ॥
प्रतियत्नेन भोः पत्र जगत् पालय सुव्रत !
।
इत्याज्ञाप्य सुतं ज्येष्ठं ऋषिसम्भवहेतुकम्
॥
ततस्तु ब्रह्मणा तेन यत् कृतं तन्निबोध मे”
॥
“दशवर्षसहस्राणि दशवर्षशतानि च ।
समाधिस्थोऽभवत् प्राणान् संयम्य
शान्तमानसः ॥
ततः समाहितमतैर्य्यद्भूतं तद्वदामि ते ।
तच्छरीरान्महाबाहुः श्यामः कमललोचनः
॥
कम्बुग्रीवो गूढशिराः पूर्णचन्द्रनिभाननः ।
लेखनौच्छेदनाहस्तो मसीभाजनसंयुतः ॥
निःसृत्य दर्शने तस्थौ ब्रह्मणोऽव्यक्तजन्मनः
।
उत्तमः सुविचित्राङ्गः ध्यानस्तिमितलोचनः
॥
त्यक्त्वा समाधिं गाङ्गेय ! तं ददर्श
पितामह्नः ।
अधोऽर्द्धस्तन्निरीक्ष्याथ पुरुषश्चाग्रतः
स्थितः ॥
नामधेयं हि मे तात । वक्तुमर्हस्यतःपरम् ।
यथोचितञ्च यत् कार्य्यं तत् त्वं
मामनुशासय” ॥

त्वत्प्रसादादहं सौरे ! पूज्योऽस्मि वसुधातले ॥
त्वया दत्तं वरं स्यानं भक्तस्तेऽहं सदा प्रियः ।
इति ज्ञात्वा वदाम्यत्र राजापापोऽस्ति मे मतिः ॥
पूजां चकार राजासौ द्वष्ट्वा पूजाञ्च मामकीम् ।
अतस्तष्टोऽस्मि हे देव ! यातु विष्णुपदं नृपः ॥
यमेनाज्ञापितो राजा वैष्णवं पदमाप्तवान् ।
ये चान्ये पूजयिष्यन्ति चित्रगुप्तं महीतले ॥
कायस्थाः पापनिर्मुक्ता यास्यन्ति परमां गतिम् ।
तस्प्रात् लमपि गाङ्गेय ! पूजां कुरु विधानतः ॥
दत्तात्रेय उवाच ।
मुनेर्वचनमाकर्ण्य भीष्मः प्रयतमानसः ।
चकार पूजनं तत्र चित्रगुप्तस्य तत्परः ॥
कार्त्तिके शुक्लपक्षे तु द्वितीयायाञ्च भारत ! ।
यमञ्च चित्रगुप्तञ्च यमदूतांश्च पूजयेत् ॥
अतो यमद्वितीयेति संज्ञा लोके बभूव ह ।
तेनैव भगिनीहस्ते भोक्तव्यं पुष्टिवर्द्धनम् ॥
नित्यं यशस्यमायुष्यसर्व्वकामार्थसिद्धिदम् ।
दानानि दापयेद्यस्तु भगिन्यै च विशेषतः ॥
काले तत्र च संपूज्य चित्रगुप्तञ्च लेखकम्
चित्रैश्च चित्रपुष्पैश्च रक्तचन्दनमिश्रितैः ॥
नैवेद्यं दीयते तस्मै मोदकं गुडमिश्रितम् ॥

यं यं गच्छति विप्रश्च मसीशश्चानुगच्छति।
नद्यादौ गत्वा चेद्विप्रः स्नात्वा कुर्य्यात्तपोऽपि च
॥
यावत्तावच्च तिष्ठेत् स क्षुधया पीडितोऽपि च ।
तथापि नासनं लाति शिरे धर्त्तुं, द्विजोऽपि च ॥
मसीशायादीक्षिताय क्षत्त्रवैश्योपमाय च ।
अशूद्रायेति वोढुं न ददात्येवासनादिकम् ॥
पार्व्वत्युवाच ।
चित्रं ब्रवीषि हे नाथ कायस्थोऽशूद्र एव किम् ।
जाने शूद्रकनिष्ठं तं शूद्रतुल्यः कथं स न ॥
क्षत्रवैश्योपमो ह्युक्तस्त्वयैष कथमीश्वर ! ॥
हर उवाच ।
ब्रह्मपादांशत शूद्रमसीशौ द्वौ बभूवतुः ।
शूद्रात् परः कनिष्ठः स चातः वतलि ! ऋतञ्च
तत् ॥
किन्तु सामादिवेदान् हि क्षत्रो विट् शूद्र एव हि ।
गृहीतवान्न तत् किञ्चिन्मसीशोऽलसतःशिवे ! ॥
अतो यज्ञोपवीती न ते हि यज्ञोपवीतिनः ।
एते स्युर्वैदिकाचारा मसीशो हि स्वमावतः ॥
मस्या सह तु लेखन्या सर्व्वं लेखितुमीश्वरः ।
लेखितुं नैव शक्नोति वैदिकं किञ्चितं किल ॥
अतो हृदि विचार्याथ खेदेन विप्रमीश्वरम् ।
ज्ञात्वा भक्त्यानुगच्छेद्धि यत्र याति धरासुरः ॥
कृतत्रेताद्वापरेषु गतेष्वपि मसीशकः ।
तदपि त्यक्तवान्नैव दृढां भक्तिं द्विजेषु च ॥
ततो हि कृपया विप्रः कायस्थमनुगृह्य हि ।
सालसं प्राददद्विद्यां बगसेति तव प्रिये ! ॥
यतो दीक्षामात्रमेव पवित्रः कार्य्यसिद्धिता ।
ततः कुशासनादींश्च वोढुं प्रादात् शिरोपरि ॥
एवं प्रकारेण कालि ! विप्राणामनुगाः कलौ ॥
कायस्थाः कालिके ! देवि ! पुनस्तद्विभवं श्रृण ॥
कलिप्रथमतो राजा क्षत्त्रियाणां महाबलः ।
सुयज्ञनामा गोमेधमखमारब्धवान् प्रिये ॥
आहूतवांश्च सर्व्वान् स चतुर्योजनमध्यतः ।

| | | |
|---|---|---|
| पुलस्त्य उवाच ।<br>“इत्याकर्ण्य ततो ब्रह्मा पुरुषं स्वशरीरजम्<br>।<br>प्रहृष्य प्रत्युवाचेदमानन्दितमतिः पुनः ॥<br>स्थिरचित्तं समाधाय ध्यानस्थमतिसुन्दरम्<br>।<br>मच्छरीरात् समुद्भूतस्तस्मात्<br>कायस्थसंज्ञकः ॥<br>चित्रगुप्तेति नाम्ना वै ख्यातो भुवि<br>भविष्यसि ।<br>धर्म्माधर्मविवेकार्थं धर्मराजपुरे सदा ॥<br>स्थितिर्भवतु ते वत्स ! ममाज्ञां प्राप्य<br>निश्चलाम् ।<br>क्षत्तवर्णोचितो धर्मः पालनीयो यथाविधि ॥<br>प्रजाः सृजख भोः पुत्र भुवि<br>भारसमन्विताः ।<br>तस्मै दत्त्वा वरं ब्रह्मा तत्रैवान्तरधीयत” ॥ | | |

:ब्राह्मणान् भ्रान्तिवशतः केवलं सुतपसं विना ॥

प्राप्ताह्वानद्विजान् यातो दृष्ट्वा सुतपसः प्रिया ।
धवं तिरस्कृतवती यथैतच्छृणु कालिके ! ॥
हे स्वामिंस्त्वां नृपो मूर्खं मत्वा नाहूतवान् मखे ।
केवलं तव पाण्डित्यं मत्समीपे न शोभते ॥
सुतपा उवाच ।
कान्ते ! ब्रवीमि विप्राणां यत् कर्त्तव्यं शृणुष्व तत्
यात्रामात्रं वहन्नन्नं काङ्क्षितव्यं न चाधिकम् ॥
विद्वांश्चेद्विद्या दातव्या क्वापि नानार्ज्जवं चरेत् ।
मूर्खश्चेत् केवला सन्ध्या सदोपास्या प्रयत्नतः ॥
प्रिये तेन च वक्तव्यमृतमेवाप्रियन्त्वपि ।
विप्रेण सततं कार्य्यं वैद्यमागमिकञ्च तत् ॥
ऋतौ गच्छेच्च स्वां कान्तां मुदा कालञ्च पातयेत् ।
कालीं कालादिकं वापि जपेद्विप्रो निरन्तरम् ॥
स्वयं स्वभावतो नृणां क्षत्त्रादीनां शिवं वचः ।
वक्तव्यं चेन्न गृह्णन्ति विप्रहानिर्न तत्क्षतिः ॥
ब्राह्मण्युवाच ।
सुमानुषत्वं ते कान्त ! सुविप्रत्वं धव ! त्वयि ।
तिष्ठत्वेव चिरं विप्र तेऽन्तौ मे मरणं शिवम् ।
कांस्यकङ्कणवलयौ सङ्गिनौ मे मृतावधि ॥
सुतपा उवाच ।
प्रिये ते ह्यधुना तीव्रं धनान्तःकरणं सदा ।
विना निमन्त्रितेनापि गत्वा चानीयते धनम् ॥
इत्युक्त्वा सुतपाः कान्तां गत्वा राजसभां प्रिये ! ।
रान्तं सुयज्ञं वरणं प्रोवाच नृपतिं द्विजः ॥
रे सुयज्ञ ! विनाह्वानैरगच्छं ते सभामहम् ।
विप्राणां रणं राजन् ! क्षत्रियाणां तथैव च ॥
कृतं तदपि नाहं रे त्वया दृष्टः स्वचक्षुषा ।
भ्रष्टो भवतु ते यज्ञः श्रीश्च यातु स्थलान्तरम् ॥
क्रुधैतदुक्त्वा सुतपास्ततो नृपसदः स्थलात् ।
विप्रो निःसृतवान् राजा भीतेन मनसाब्रवीत् ॥
हे पुरोहित ! हे विप्र ! हेऽङ्गिरोऽसौ गतः स कः ।
रे इत्युक्त्वा सभामध्ये वृत्तान्तं वद विस्तरात् ॥
नृपाज्ञया क्षत्रियार्थं पट्टादिवस्त्रसंकुलम् ।
स्वर्णाङ्गुरीयकमपि चानेतुं गतवान् हि यः ।
कोषमन्दिरमालोक्य राजान्तिकमथागतः ॥
इत्यब्रवीच्च राजानं चित्रन्ते कोषमन्दिरे ।
किञ्चिच्च वस्तु दृष्टं न दृष्टं भस्मतृणादिकम् ॥
श्रुत्वैतत् विस्मितो राजाऽब्रवीच्चैतत् पुरोहितम् ।
हे पुरोहित ! विप्र ! त्वं कृतवान् यत्त्वभूच्च तत् ॥
कोऽपराधोऽस्ति मे विप्रः कथं शप्त्वा गतः प्रभो ! ।
कोषमन्दिरसंपातसंवादं दत्तवानयम् ॥
कोषे नास्ति धनं किञ्चित् सर्व्वं भस्मतृणादिकम् ।
श्रुत्वैतदङ्गिरा ब्रूते सुतपा यत्र तत्पट ॥
ततो दुर्गे स राजा च तूर्णं स्वर्णकुठारकम् ।
गले बद्ध्वा द्विजकुलैर्गतवान् सुतपोऽन्तिकम् ॥
अङ्गिरादिद्विजाः सर्व्वे तत्राट्य सुतपोद्विजम् ।
स्तुतिञ्चक्रुः स राजा च दूरस्थो भक्तितोऽस्तवीत् ॥
अङ्गिरःप्रभृतय ऊचुः ।
धरामरवर ! प्राज्ञ ! नो वरस्त्वं धरातले ।
राज्ञः शिवं नो मानं त्वद्याचामह उमेशहृत् ! ॥
देवस्त्वं देवताज्ञस्त्वं पण्डितानाञ्च पण्डितः ।
दयालो ! नो दयस्व ज्ञ ! नमस्ते वरतो वर ! ॥
ब्रह्म ब्रह्मज्ञ एव त्वं ब्राह्मणेश्वर मानद ! ।
हे नाथ ! हे धरेशेश ! धर्म्मकर्म्मविधायक ! ।
वर्णेश्वर ! नमस्तुभ्यं वन्दे ते चरणाम्बुजम् ॥
हे ब्रह्मण्यदेव ! हे नाथ हे धरामर हे प्रभो ! ।
कृपां कुरु नमस्तुभ्यं प्रणमामि पदं तव ।
नाहं जानामि ते पूजां नाहं जानामि ते स्तुतिम् ॥
नाहं जानामि ते ध्यानं मूढं मां कृपया दय ॥
सुतपा उवाच ।
किमर्थं स्तुथ हे विप्राः किमर्थं स्तौषि हे नृप ! ।
गच्छ यात मखं गव्यं सुखेन सफलं कुरु ॥
श्रुत्वेति सुतपोवाक्यं सुयज्ञः सुखमानसः ।
कृताञ्जलिपुटो राजा चाब्रावीदिदमुत्तमम् ॥
राजोवाच ।
निमन्त्रणन्तु विप्रेन्द्र ! भोज्यञ्च सकलोत्तमम् ।
गृह्णापराधसाहस्रं क्षमस्व मे कृपां कुरु ॥
अपराधसहस्राणि कृतवानहमव्यय ! ।
गृह्ण मद्राजतीं मुद्रामयुतां मां कृपां कुरु ॥
मत्सभास्था द्विजा ह्येते प्रोचुः पाण्डित्यमद्भुतम् ।
गुणांश्च ते बहुविधान् श्रुत्वाहं सुखमानसः ॥
क्षमस्व नाथ ! मे दोषमेकं प्रश्नोत्तरं वद ।
मत्सभास्थो बुधः कोऽपि न ब्रवीति विदाम्बर ! ॥
आगच्छति कलिर्घोरस्तत्र के भक्तितो द्विजान् ।
अर्च्चिष्यन्तीति श्रुत्वा मे वरञ्च मरणं शिवम् ॥
श्रुत्वैतत् सुतपा विप्रोऽब्रवीच्च सदयो नृपम् ॥
सुतपा उवाच ।
हे सुयज्ञ नृपश्रेष्ठ ! ब्राह्मणातिप्रियो नृपः ।
पश्यैतान् विप्रभृत्यांस्त्वमासनादिशिरोधृतान्॥
एतद्घोरकलावेते भविष्यन्ति द्विजार्च्चकाः ।
जात्या मसीशाः कायस्था ब्राह्मणेश्वरमानसाः ॥

:महाविद्योपासकाश्च गुणतः क्षत्रियोपमाः ।

कलौ हि क्षत्रियाभावात् वैश्याभावाच्च सुव्रत ! ॥
एते भक्त्या भविष्यन्ति विप्रामानसहिष्णवः ।
विप्रप्रिया विप्रभक्ता विप्रमानप्रदा यतः ॥
महाविद्याप्तितश्चैते क्षत्रकर्म्मकृतः कलौ ।
मस्या एवेश इत्यस्मात् मसीशोऽसौ निगद्यते ॥
ब्रह्मणो विप्रमूर्त्तेस्तु पादांशे सम्भवन्ति तत् ।
कायस्था इति संज्ञाः स्युः सुयज्ञैषां शिवा मतिः ॥
श्रुत्वैतत् सकलं राजा वृत्तान्तं सुतपोमुखात् ।
प्रेमाश्रुभिर्नृत्यकारी कृताञ्जलिपुटोऽब्रवीत् ॥
राजोवाच ।
इतः परमृषेऽहञ्चेत् म्रिये तदपि मच्छिवम् ।
श्रुतं यत्तव जातीनां क्षत्रहीनकलौ सुखम् ॥
ततो ऽतितुष्टः सुतपा उवाच मधुरं नृपम् ।
सुयज्ञ ! सुमतिस्त्वं हि त्वत्तो विप्रप्रियो न हि ॥
मानेन ब्राह्मणानां हि वरञ्च मरणं नयेः ॥
सुयज्ञोवाच ।
हे नाथ सुतपो विप्र ! श्रुतं यन्मेऽङ्गकृन्मुखात् ।
कृपया शृणु तत् सव्व ते जातेर्म्महिमानमु ॥
ब्राह्मणो ब्रह्म जानाति नान्यजातिरिति श्रुतिः ।
ब्रह्मज्ञानी सदा विप्रो न चेद्ब्राह्मणसंज्ञकः ॥
विना प्रयुक्तिं यो विप्र उपकारी स्वयं भवेत् ।
आशीः करोति ब्रूते च क्षत्रादीनां शिवं वचः ॥
स एव साक्षाद्ब्रह्मेति विप्राणां जातिलक्षणम् ।
ब्राह्मणाज्ञावचो ये न गृह्णन्ति पालयन्ति च ॥
गुर्व्वाज्ञालङ्घनं पापं स्पृशेत्तेषां शरीरतः ।
पित्रेति सकलं चोक्तं ते च सन्दिग्धजातयः ॥
वशीकारादि सकलं सृष्टिस्थितिलयञ्च यत् ।
शक्नुवन्ति हि कर्तुं ते विप्राः पित्रेति चोक्तमु ॥
विनायासैर्मुदा यो यत् विप्राय शक्तितो ददत् ।
मुदा तदेव गृह्णाति विप्राणामिति लक्षणम् ॥

आर्जवञ्चेन्द्रियग्रामान् स्ववशे स्थापयेच्चिरम् ॥
दयालुश्च सदा विप्र इति पुत्त्र हृदि स्मरन् ।
भीत्या भक्त्या सदा पूज्यः पितेति ब्रूतवांश्च मे ॥
कटूक्त्या यदि गृह्णाति हृदा दुःखेन राति चेत् ।
तद्विप्रो दुःखं भजते दातुर्नैव शिवं क्वचित् ॥
वित्तशाठ्यं गृह्णशाठ्यं कार्य्यं नोभयतः क्वचित् ।
इत्यप्यात्मज विप्राच्च श्रुतं शासनसम्मतम् ॥
शृणु पुत्र प्रवक्षामि सावधानं समाचर ।
घ्नन्तं बहुशपन्तं वा नैव द्रुह्यति भूसुरम् ॥
सुतपो नाथ मे पित्रा यद्यदुक्तं तदुक्तवान् ।
त्वञ्चापि ब्राह्मण ब्रह्म यथारुचि तथा कुरु ॥
श्रुत्वैतत् सुतपा विप्र उवाच परमादरम् ।
राजन् वरं वृणु वृणु यत्ते मनसि वाञ्छितम् ॥
सुयज्ञ उवाच ।
ऋषे ! वरेण ते नैक उपकार इहाधुना ।
यज्ञे समाप्तौ मे मस्तच्छेत्ता रामो भविष्यति ॥
सुतपा उवाच ।
यज्ञं समाप्य सुखतः प्रगच्छेर्विन्ध्यनैरृतिम् ! ।
तत्र वै स्वर्णदानद्या मध्ये द्वीपोऽस्ति सुन्दरः ॥
द्वादशक्रोशमानी हि तद्गत्वा वसतिं कुरु ।
यदा परशुरामस्ते कच्चिच्छेत्ता भविष्यति ॥
भविष्यति च काणः स नय ते वाञ्छितं वरम् ।
ततः पुनः कृते राजन् जम्बूद्वीपेश्वरो भवान् ॥
भविष्यतीति त्वं वीजरूपेण तिष्ठ तत्र हि ।
वरं ते वाञ्छितं गृह्ण तुष्टोऽहं भक्तितस्तव ॥
इहतः परतो यद्यत् परमानन्द मुत्तमम् ॥
सुयज्ञराजोवाच ।
नाथ ! नाहं वरं याचे याचे केवलमङ्घ्रिते ।
चिरं मम मतिस्तिष्ठेदिति देहि वरोत्तमम् ॥
तेऽङ्घ्रौ पवित्रे परमे सर्व्वत्र सुस्वदे किल ।
तदेवास्तु इति प्रोच्य सुतपा गतवान् गृहम् ॥
राजापि च मखं कृत्वा विप्रेभ्यो दक्षिणां ददत् ।
परिवारयुतोऽगच्छद्द्वीपे काञ्चनदान्तरे ॥
वसतिं वरतः प्राप्तां चतुर्द्दिक्षु जलप्लुताम् ।

अत्रस्थाः प्रापटन् विप्राः पण्डिताः स्वस्ववासभूम् ॥
एको मसीशः सर्व्वाख्यः सर्व्वाणीहृदयद्विजात् ।
कुलप्रदीपः स्वीयानां जातीनां पूततास्पृहः ॥
वगलेति महाविद्यां गृहीत्वा साधयन् मुदा ।
सर्व्वाणीहृदयाख्यस्य पण्डितस्य प्रसादतः ॥
वरं याचितवान् भक्त्या त्रिलोकाधिपतिं गुरो ! ।
कृपया कुरु मां नाथ ! त्वमेव वगला मम ॥
गुरुस्त्वपि वरं दत्तो राज्यं भुक्त्वा पुनर्भवन् ।
त्रिलोकाधिपतिर्भूय मुदा तत्र सुखिष्यसि ॥
गुर्व्वाज्ञया मसीशः स राज्यभोगी द्विजार्च्चितः ।
विहाय देहं भूयश्च त्रिधारुपो बभूव ह ॥
चित्रगुप्तश्चित्रसेनश्चित्राङ्गद इति त्रयः ।
स्वर्गे मर्त्ये च पाताले राजते चिरमुत्तमः ॥
चित्रगुप्तो महाविद्यां प्राप्य कुल्लाख्यविप्रतः ।
पुत्रान् याचितवान्नैव गुरोदर्वेत्वमावहन् ॥
यमान्तिस्थो बभूवापि स्वर्म्मर्त्याधोविवेचकः ।
चिरं शुभाशुभं कर्म्म विविच्य शमनान्तिके ॥
यद्वदेत् सकलानां तु तदेवाभोजयेत् यमः ।
चित्रसेनो महाविद्यां वगलेति गुरोर्नयन् ॥
जप्त्वा संतोष्य पुत्रादीन् याचित्वा प्राप्य मर्त्यतः ।
राज्यं चकार मुद्युक्तश्चित्राङ्गद अधोगतः ॥
अधोगतस्य हेतुं त्वं वगले शृणु कालिके ! ।
वगलेति भनुं प्राप्य विप्रोऽस्मि इति वाञ्छया ॥
तपश्चकार पञ्चाब्दं नान्नं किञ्चित् गृहीतवान् ।
फलमूलादिकं किञ्चित् सायमत्ति यथा मिलेत् ॥
विहाय विप्रस्य गुरोरपि पूजाञ्च पार्व्वति ! ।
जपेन्नित्यं हि वगलामन्यविप्रञ्च नेक्षयन् ॥
ज्ञात्वेति ब्राह्मणाः सर्व्वे ऊचुश्चित्राङ्गदं क्रुधा ।
वचो हि मधुरं किञ्चित् प्रियाद्वक्ताच्च सुन्दरि ! ॥
रे चित्राङ्गद ! अज्ञस्त्वं वत्स विप्रत्वमिच्छसि ।
कदाप्युपानन्मस्तस्थो नैवेति न हि बुध्यसि ॥
वत्स ! शीघ्रमधो गच्छ चिरं कुरु तपो मुदा ।
ततः श्रुत्वेति शापं स भक्त्यातिशयमानसः ॥
कृताञ्जलिपुटो ब्रूते चित्राङ्गद इतीश्वरि ! ॥

| केषामपि न कापट्यं कुरुते ब्राह्मणः क्वचित्<br>।<br>विनापराधैर्न शपेदिति तज्जातिलक्षणम् ॥<br>हिंस्रे भवति हिंस्रः स शठे शाठ्यं समाचरेत् । | | |
|---|---|---|

:चित्राङ्गद उवाच ।

"हे ब्राह्मणा हे गुरवो !
मामेवातिनिरागसम् ।
कथं शेपुर्भवन्तो हि विप्ररूपा ह ईश्वराः ॥
मुखाद्वो श्रुतवान् यद्यत्क्षतिः का तत्समाचरन् ।
उपास्यो यस्तद्भवितुं सर्व्वे ह्युद्योगिनः स्युरु ॥
जानेऽहं ब्राह्मणो ब्रह्म स्वेच्छया विविधाकृतिः ।
नानालीलामाचरितुं मानुषाकृतिरप्यभूत् ॥
तद्‌ब्रह्म ब्राह्मणं जाने जाने तत् सर्व्वरूपधृक् ।
राजेति संज्ञाधारी कः किं वा तच्च प्रजाभिधम् ॥
तदेव मकलस्थायि तदेव सर्व्वकर्त्तृ च ।
तदेव सर्व्वपातृ स्यात्तदेव सर्व्वहर्त्तृ च ॥
पुंरूपं चैव स्त्रीरूपं क्लीवरूपञ्च नान्यथा ।
आत्मा एवैकरूपं तत् स्वमेवानेकमाकरोत् ॥
नानाप्रकारजीवादि चात्मनात्मानमेव हि ।
स्थावरं जङ्गमं विप्रास्तदेव नात्र संशयः ॥
भवन्तो हीश्वराः सर्व्वे किमर्च्चयथ तत् कथम् ।
कथं चिन्तयथात्मानं देवमर्च्चनकालतः ॥
छलेन भूतशुद्‌ध्यादि कृत्वा देवाः स्युरेव किम् ।
ईशोऽपि मानुषाकृत्या ईशत्वप्राप्तये पुनः ॥
यद्युद्योगी भवेत्तत् किं मानुषोऽहं न तच्चरे ।
अन्यायि न भवेद्ब्रह्म यूयमन्यायिनः कथम् ॥
वगलापि च या जप्या सा च ब्राह्मण एव हि ।

ततस्त्रिलोकनाथस्त्वमिन्द्रतुल्योभविष्यसि ॥
राज्यं भुक्त्वा ततो नैव पुनरावर्त्तनं तव ।
सदा वयं तव शिवं चिन्तयामो न भीं कुरु ॥
के जानन्तीदृशं त्वां हि भक्तश्रेष्ठं विवेचकम् ।
शापं दारुणमाहुस्त्वमधुना तन्न खण्डति ॥
तात गच्छ सुखं भुङक्ष्व नागलोकेऽपि विस्तरात् ।
तत आनन्दमनसा गताश्चत्राङ्गदस्तलम् ॥
स्वस्थानं ब्राह्मणाश्चापि चागच्छन् लज्जितान्तराः ।
भूस्थो मसीशः सर्व्वोऽपि विप्रदासाभिधोऽभवत् ॥
विप्रप्रसादात् शूद्राणामपि श्रेष्ठो बभूव ह ।
वगलेति महामन्त्रं सर्व्वेषां सर्व्वकामदम् ॥
केवलेन जपेनैव लक्षेण कालि । सिध्यति ।
वशीकरणकर्म्मादि दशसाहस्रतो भवेत् ॥
अथ वक्ष्ये महेशानि । वगलासाधनं तव ।
वगलेति मनोः संख्या पुरश्चरणकर्म्मणि ॥
लक्षेण मन्त्रसिद्धिः स्यात् नास्त्यत्र युगसंख्यकम् ।
ततो वश्यादि कर्त्तव्यं दशसाहस्नसंख्यया ॥
शरीरारोग्यतो वापि धनेच्छुश्चायुतं जपेत् ।
कलावेतस्य हि मनोः प्रभावं किं ब्रवीमि ते ॥
सहस्रमात्रहोम्नै सर्व्वसिद्धिर्न चान्यथा ।
नास्त्यपेक्षा हि ऋष्यादेः स्तुतिपाठादिकस्य वा ॥
स्तुतिर्व्वा कवचं वापि ऋष्यादिन्यास एव वा ।
वगलेति स्वयं सर्व्वं सिद्धविद्या इति प्रिये ! ॥
त्वयाद्यारूपया कालि ! स्वयमुक्तं पुरैकदा ।
शरीरारोग्यतो देवि ! वैरिनिग्रहतोऽपि वा ॥
दिवा नक्तञ्च कर्त्तव्या सहस्रमानतो हुतिः ।
केवलाहुतिमात्रेण रात्रावारोग्यतां लभेत् ॥
वगले इति यो द्विश्चाप्युक्त्वोच्चैर्यत्र वारयेत् ।
पथिस्था विघ्नदाः सर्व्वे पलायन्ते तमीक्षिताः ॥
भवेद्धि सफलं कर्म्म वगलेति स्मरन् जनः ।
वगलाजापिनं दृष्ट्वा सर्व्वे भीतिमवाप्नुयुः ॥
केवलं पटलमिदं पठन् शृण्वन् मनोरथम् ।
लभेत् कालि ! वपुस्त्यक्त्वा वगलाञ्च न संशयः ॥
एषा विद्या मसीशेन सदोपास्या न संशयः ।
ब्राह्मणे वगलायाञ्च चिन्तयेदेकरूपतः ॥

सृष्ट्वा पातिष्यतीदं जगदिति प्रकृतिर्यः स्वयं पूरुषस्तं
वन्देऽहं देवदेवंत्रिगुणमयवरं सर्व्व लोकानुकम्पम्" ॥
अथ आदिशूरराजप्रशंसा ।
"श्रीमद्राजादिशूरोमवदवनिपतिर्धर्म्मराजो व शास्ता सल्लोकः सद्विचारैरदितिसुतपतिः स्वर्यथासी-द्‌तथासीत् । प्रातापादित्यतप्ताखिलतिमिररिपुस्तत्त्ववेत्ता महात्मा जित्वा बुद्धांश्चकार स्वयमपि नृपतिर्गौडराज्यान्निरस्तान्" ॥ * ॥ अथादि-शूरस्य पात्रं प्रति क्रतुज्ञब्राह्मणकुलीनशूद्रयोः प्रश्नस्तस्योत्तरञ्च । "पात्रं पप्रच्छ पूतं परमसुरपद-द्वन्द्वपद्मार्च्चकोऽसौ कासन्ते काश्यपीशाः क्रतु-कृतिकुशलाः क्वापि शूद्राः कुलीनाः । पात्रन्तेषा मवोचत् परिचयमखिलं भूपवाक्यात् द्विजास्ते कोलाञ्चस्थाः कुरङ्गा इव किल तपसा नैव केषा-मधीनाः ॥ कोलाञ्चस्य महीपतिः क्षितिभूजा-मेकप्रधानः प्रधी स्वेष्टे निष्ठमतिर्महाशयवरं श्रीवीरसिंहः स्वभूत् । तद्देशवासिनः समाधि-कृतिनः पापालिसंहारिणः सन्ति व्यासलमाः सभासद इतो गौडेन्द्रभूमीश्वराः" ॥ * ॥
अथ वीरसिंहं प्रति लिपिप्रेरणम् ।
"भूपोऽभूद्भवने स्वचेष्टितपरः सद्भृत्यभार्य्यान्वितान् भूदेवान् वृषवान् विचित्रलिखनैरानेतुकामः स्वयम् । पात्रेण प्रणयप्रमोदरचितां श्रीवीरसिंहे लिपिं गौडक्ष्मापतिरेव पुण्यसुमतिर्दूतेन प्रास्थापयत्" ॥ * ॥
अथ लिपिप्रकारः ।
"सुकृतसुकृतसंघाः सर्व्वशास्त्रार्थदक्षा
लपितहतविपक्षाः स्वस्तिवाक्याः श्रुतिज्ञाः ।
सुजितसुगतवृन्देगौडराज्ये मदीये
द्विजकुलवरजाताः सानुकम्पाः प्रयान्तु ॥
नृपतिसुकृतिसारः स्वीयवंशावतारः
प्रबलबलविचारो वीरसिंहोऽतिवीरः ।
मयि वरसखितास्ते भूमिदेवान् सशूद्रान्
पुनरपि मम गौडे प्रापय त्वं नितान्तम्" ॥ * ॥
अथ ब्राह्मणशूद्राणां गौडदेशे गमनेच्छा ।
"मुदा गन्तुकामाः पुरावासगौडाः
समाहाय कोलाञ्चदेशं क्षितीशम् ।
नृपाज्ञाञ्च लवध्वा सदारादिभृत्या
महायोगिनस्ते बभूवुः सशूद्राः" ॥ * ॥
अथादिशूरसमीपे ब्राह्मणप्रेरणम् ।
"महाराजराजादिशूरो महात्मा

कश्चिद्विशेषो भेदोऽपि वगलायां द्विजेऽपि न ॥
अतस्तद्भवितुं विप्रा अहमप्येव तापसः ।
गुर्व्वाज्ञा मे पुराभूच्च सर्व्वं त्यक्त्वा जपं कुरु ॥
अतोऽहं सकलं त्यक्त्वा केवलां वगलां जपे ।
वगलायां द्विजे नैव कश्चिद्भेदोऽस्ति शासने ॥
अतो विप्रोऽस्मीति कामं कृतवान् जपकर्म्मणि ।
गुरौ विप्रे मनौ चापि देवे चात्मनि भूसुराः ॥
मसीशजातिः किञ्चिच्च न विशषं विचिन्तयेत् ।
ब्राह्मणोऽप्यविशेषश्च तस्मिंस्तस्मिंश्च भूसुराः ॥
आत्मन्यात्मनि कीटेऽपि चेति वो जातिलक्षणम् ।
मूर्खोऽहं यच्च श्रुतवान् प्रभवो ब्राह्मणास्यतः ॥
तदाचरितवान् मे को दोषोऽस्ति वदत द्विजाः ।
विनापराधतो विप्रा यूयं वामनरूपतः ॥
बलिञ्चातिप्रियं भक्तमधः प्रास्थापयन् यदि ।
अहं कीटोऽत्र नाश्चर्य्यं किमधो न पटे कथम् ॥
कृताञ्जलिपुटोऽहं वश्चरणं शतसंख्यया ।
प्रणमे स्वगृहं विप्रा गच्छताहमधः पटे ॥
अधोगच्छाम्यहं तत्र किञ्चित् खेदं करोमि न ।
वाञ्छयामीति चाज्ञा वो न लङ्घ्या भवतु क्वचित् ॥
इत्यादि श्रुत्वा हे कालि ! लज्जां प्राप्यातिखेदिताः ।
ब्रुवन्ति चातिमधुरं क्रन्दन्त इव ते द्विजाः ॥
हे चित्राङ्गद ! हे विद्वन् ! दौर्ब्बल्यं त्यज वत्सक ! ।
दुश्चिन्तां कुरु मा तात भद्रं ते कथयामि ते ॥
जनस्तपोबलेनैव सर्व्वं भवितुमर्हति ।
विना प्रयुक्तिमपि च मसीशं श्रावयेद्द्विजः ।
श्रावणायां धनाकाङ्क्षी न भवेद्ब्राह्मणोत्तमः ॥
आलस्याद्वा प्रमादाद्वा श्रावयेन्न यदि द्विजः ।
मसीशहत्याभागी स्याच्छ्रावयित्वा तव प्रियः ॥
ब्राह्मणोऽपि वरारोहे ! शृणुयात् भक्तितत्परः ।
निर्व्वाणं लभते कालि ! निष्कामी कोऽपिचेत् पठेत् ।
एतदुक्तेऽपि कायस्थः शृणुयान्न यदि प्रिये ! ।
पटलं काम्यदञ्चाशु ब्रह्महत्याफलं लभेत्" ॥
इति आचारनिर्णयतन्त्रे वासुदेवसम्मते हर-पार्व्वतीसंवादे सप्तत्रिंशत्तमः पटलः ॥
"चाटचारणचौरेभ्यो वधबन्धभयादिभिः ।
पीड्यमानाः प्रजा रक्षेत् कायस्थेभ्यो विशेषतः" ॥
इति वह्निपुराणे पाशुपतदानाध्यायः ॥ * ॥
गौडदेशे तेषामागमनकारणम् । तत्रादौ मङ्गलाचरणं यथा, --
"यस्याभूद्भूमिदेवो वदनसरसिजेयद्भुजेभूमिपालो
यस्योर्व्वोर्व्वैश्य एव द्विजभजनरतिर्यस्य शूद्रःपदाब्जे ।
त्वया वीरसिंहस्य मेऽस्त्वादिसख्यम् ।
तवाज्ञानुसाराद्धि प्रस्थापयामि
द्विजान् पञ्चगोत्रान् सदारादिभृत्यान्" ॥ * ॥
अथ ब्राह्मणानां गमनम् ।
"चलच्चञ्चलाश्वालियानाःप्रधाना
वृहत्श्मश्रुगुम्फातिशोभानलाभाः ।
क्रतुज्ञाः श्रुतिज्ञाः प्रतिज्ञानसाध्याः
सवर्म्माश्वशस्त्राः प्रयाताः प्रयागम् ॥
ततः स्नानदानादि कृत्वा च विप्राः
ययस्तेऽपि वाराणसीं पञ्चगोत्राः ।
ततो विश्वनाथं समालोक्य दानै-
र्यशः प्राप्य तस्माद्गयाभू मिमापुः" ॥ * ॥

| नार्हतीशं विना तात ब्राह्मणो भवितुं किल ॥<br>इतीश्वराज्ञा वेदेऽस्ति प्रतिजानीहि तत्त्वतः ।<br>वरं प्राप्नोति देवत्वं ब्राह्मणत्वं कदापि न ॥<br>यथामरत्वमीशेन विना क्वापि न शासने ।<br>मा दुःखी त्वमधो गच्छ मुखेन वगलां जप ॥<br>कलेदशसहस्राणि नागलोकेश्वरो भव । | | |
|---|---|---|

::अथ ब्राह्मणानां गौडराज्यप्रवेशो राजसमीपे

आशिरर्थं गमनञ्च

"पितॄन् बान्धवांस्तारयित्वा गयायां
गताः शासितं गौडराज्येशराज्यम्।
ततस्तेजसा ते दिशो भासयन्तः
श्रुतिं व्याहृतिं भारतीं पाठयन्तः ॥
ततो हस्तदूर्व्वाक्षताः पञ्चगोत्रा
नृपञ्चाशिषं कर्त्तुमेव प्रतस्थुः।
अमी पञ्च मध्याह्नमार्त्तण्डतुल्या
द्विजाः स्थापिताश्वाः परश्रेयसञ्च" ॥ * ॥

अथैषां वेशं दृष्ट्वा राज्ञोऽवज्ञा तेषां शुष्कवृक्षे

आशिषो निक्षेपश्च। "दृष्ट्वैवं
वेशमेषामवनिपति-
रसौ भ्रात्तचित्तो द्विजानां तैरालापं न कृत्वा
स्वगृहमपि ययौ गन्तु कामाः पुनस्ते। बुद्ध्वा
भू-
पालबुद्धिं क्षणमपि च बुधाः शुष्कवृक्षाशिषस्ते
तद्धस्तात् प्राप्य दूर्बाक्षतमपि स वभौ
शुष्कवृक्षः
सुवृक्षः" ॥ * ॥ अथ राज्ञा ब्राह्मणानां प्रशान्तनं
गोत्रनामप्रश्नश्च।
"सविस्मया वै गलबद्धवस्त्रा
भूपादयस्ते चरणारविन्दम्।
पवित्रकीर्त्तिं भुवि भूसुराणां
श्रुत्वा च पेतुः सकलाः प्रणम्य ॥
क्षमध्वमस्माकमुच्चित्तवादं
मूढात्मनाञ्चापराधं हि विप्राः।
भो ब्रूत विप्राः किमु नाम गोत्रं
ततश्च सर्व्वे गदितुं प्रवृत्ताः" ॥ * ॥
अथ पञ्चब्राह्मणानां परिचयः।
"अभूद्वन्द्यवंशोद्भवो भट्टनारायणोऽयञ्च
शाण्डिल्य-
गोत्रे गरीयान्। तपस्वान् यशस्वान् दयावान्
सुविद्वान् विवस्वानिवास्यां सभायां विभाति ॥
श्रुतितत्त्वतदङ्गविचारकरोऽत्रनिपालककाश्यप-
गोत्रवरः। क्रतुदक्षसमः किल दक्षमहाशयो नाम
इति भुवि भाति यतिः ॥ समस्तशास्त्रपण्डित-
स्तथागवप्रखण्डितः
प्रचण्डसर्व्ववैरिदर्पगर्व्वखर्व्व-

स च घोषकुलाम्बुजभानुरयं
प्रथिमेन्दुयशःसुरलोकवशः।
सततं सुसुखी सुमतिश्च सुधीः
शरदिन्दुपयोऽम्बुधिकुन्दयशाः ॥
वसुधाधिपचक्रवर्त्तिनो
वसुतुल्या वसुवंशसम्भवाः।
वसुधाविदिता गुणार्णवै-
र्नियतं ते जयिनो भवन्तु नः ॥
दशरथो विदितो जगतीतले
दशरथप्रथितः प्रथमः कुले।
दशदिशां जयिनां यशसा जयी
विजयते विभवैः कुलसागरे ॥
यशस्विनां यशोधरः सदा हि सर्व्वसादरः
प्रमत्तसत्वमत्तहःशरत्सुधांशुवद्यशः।
प्रतापतापनोत्तपद्द्विषालियोषिदालिको
विभाति मित्रवंशसिन्धुकालिदासचन्द्रकः॥
द्विजालिपालनार्थकोऽप्यसौ च हर्षसेवकः।
कुलाम्बुजप्रकाशको यथान्धकारदीपकः॥
अयं गुहकुलोद्भवो दशरथामिधानो महान्
कुलाम्बुजमधुव्रतो विविधपुण्यपुञ्जान्तितः।
निशम्य गुहभाषितं सकलसभ्यहास्यं व्यभूत्
स वङ्गगमनोद्यतो विबिधमानभङ्गो यतः ॥
अहञ्च पुरुषोत्तमः कुलभृदग्रगण्यः कृती
सुदत्तकुलसम्भवो निखिलशास्त्रविद्योत्तमः।
विलोकितुमिहागतो द्विजवरैश्च राज्यं प्रभो!
चकार नृपतिः स तं विनयहीनतो निष्कुलम्"
॥ * ॥
अथाष्टौ सिद्धमौलिकाः।
"गौडेऽष्टौ कीर्त्तिमन्तश्चिरवसतिकृत्ता
मौलिका
ये हि सिद्धास्ते दत्ताः सेनदासाः
करगुहसहिताः
पालिताः सिंहदेवाः। ये वापाद्याभिमुख्याः
स्थि-
तिविनयजुषः सप्ततिस्ते द्विपूर्बा होडाद्या
वीक्ष्य
राज्ञा चरणगुणवुता मौलिकत्वेन साध्याः" ॥
* ॥
अथ द्विसप्ततिः साध्यमौलिकाः।
"होडः स्वर धर धरणी वान आइच सोमः
पैसुर

कायस्थस्य त्रयः पुत्राः विख्याता जगतीतले
॥
चित्रगुप्तश्चित्रसेनो विचित्रश्च तथैव च।
चित्रगुप्तो गतः स्वर्गे विचित्रो नागसन्निधौ ॥
चित्रसेनः पृथिव्यां वै इति शूद्रः प्रचक्ष्यते" ॥
* ॥
अथ चित्रसेनादिसुताः।
"वसुर्घोषो गुहो मित्रो दत्तः करण एव च।
मृत्युञ्जयश्च सप्तैते चित्रसेनसुता भुवि ॥
करणस्य सुता जाता नागो नाथश्च दासकः।
मृत्युञ्जयतनूद्भूता देवः सेनश्च पालितः ॥
सिंहश्चैव तथा ख्यातश्चैते पद्धतिकारकाः।
एते पद्धतिकाराश्च मुनिभिः कथिताः पुरा" ॥
* ॥
अथ द्वादशशुद्धवंशजाः।
"वसुर्घोषो गुहो मित्रो दत्तो नागश्च नाथकः।
दासो देवस्तथा सेनः पालितः सिंह एव च ॥
एते द्वादशनामानः प्रसिद्धाः शुद्धवंशजाः" ॥ *
॥
अथ सप्ताशीतिः पद्धतिकाराः।
"मृत्युञ्जयवंशभूतो नित्यानन्दो नृपेश्वरः।
तस्यापि वंशसंजाताः सप्ताशीतिः प्रकीर्त्तिताः
॥
तेऽपि पद्धतिकाराश्च मुनिभिः कथिताः पुरा"
॥ * ॥
तेषां नामानि।
करो भद्रो धरो नन्दी पालश्चाड्करदामकः।
स्मारो धरणिहोडौ च वानश्चाइचसोमकौ ॥
पै सुरः शोनकश्चैव भञ्जो विन्दुर्गुहस्तथा।
बलश्च लोदकश्चैव शर्म्मा वर्म्मा च भूमिकः ॥
हुइश्च रुद्रकश्चैव चन्द्रो रक्षितराजकौ।
आदित्यविष्णुगुप्ताश्च खिलश्च पीलकस्तथा
॥
चाञिर्हेशश्च बन्धुश्च शाञिश्च सुमनुस्तथा।
गण्डको राहकश्चैव राणाराहुतदाहकाः ॥
दाना गणश्च मानाश्च खामापक्षेमघारकाः।
वैतोषवेदकाश्चैन्दश्चार्णवश्चावशक्तिकः ॥
भूतो ब्रह्मः संज्ञः क्षीमो बर्द्धनो हेमरङ्गकौ।
भूञिः कीर्त्तिर्यशः कुण्डुः शीलश्चैव धनुर्गुणः
॥
दाँडिर्मनोरितिश्चैव चाकिश्च नन्दनस्तथा।

कारकः । सावर्णगोत्रसम्भवोऽत्र भाति
वेदगर्भकः
छान्दडः प्रभाति भूप वात्स्यगोत्रसम्भवः ॥
यशः-
सुधाकरोत्तपत्सपत्निसङ्गयोषिताननाम्बुजे
महा-
तपस्तपोवशीकृतेन्द्रियः ॥ अयं श्रीलहर्षोऽनिशं
दानहर्षो महर्षिर्यथास्यां तपोभिः प्रभाति । क्षि-
तीन्द्र ! क्षितौ यो भरद्वाजगोत्रेश्वरो विप्रवर्य्यः
प्रतापारिशौर्य्यः” ॥ * ॥
अथ शूद्रपरिचयप्रश्नः ।
“के यूयं नाम किं वा कथयत कृतिनः स्वागताः
क्वापि देशात् ? कोलाञ्चात् पञ्चशूद्रा वयमपि
नृपते ! किङ्करा भूसुराणाम् । धन्या यूयं पृथिव्यां
परिचयमखिलं ब्रूत भो विप्रभक्ताः श्रुत्वोचुर्व्वि-
प्रवर्य्याः सकलपरिचयं भूपतेरत्नि चैषाम् ॥ *
॥
अथ पञ्चशूद्राणां परिचयः ।
“सुकृतालिकृताम्बर एष कृती
क्षितिदेवपदाम्बुजचारुरतिः ।
मकरन्द इति प्रतिभाति यति-
र्द्विजवन्द्यकुलोद्भवभट्टगतिः ॥

सामः । भञ्जो विन्दो गुह वल लोधः शर्म्मा
वर्म्मा
हुइ भुइ चन्द्रः ॥ रुद्रो रक्षित राजादित्यो
विष्णु-
र्नागः खिल पिल गूतः । इन्द्रो गुप्तः पालो भद्र
ओमश्चाङ्कुर बन्धुर नाथः ॥ शाँइ हेशश्च मनो
गण्डो राहा राणा राहुत साना दाहा दाना गण
उपमाना । खामः क्षोमो घर वैओषो
वीदस्तेज-
श्चार्णव आशः ॥ शक्तिर्भूतो ब्रह्मः शानः क्षेमो
हेमो बर्द्धन रङ्गः । गुइः कीर्त्तिर्यशः कुण्डुर्नन्दी
शीलो धनुर्गुणः ॥ * ॥ इति
दक्षिणराढीयघटक-
कारिका ॥ * ॥ * ॥ * ॥
अथ वङ्गजकुलाचार्य्यकारिका लिख्यन्ते ।
अथ शूद्रोत्पत्तिः ।
तथा चाग्निपुराणोक्तजातिमालायाम्।
“आदौ प्रजापतेर्जाता मुखाद्विप्राः सदारकाः ।
बाह्वोश्च क्षत्त्रिया जाता उर्व्वोर्व्वैश्या विजज्ञिरे
॥
पादाच्छूद्रश्च सम्भूतस्त्रिवर्णस्य च सेवकः ।
हीमनामा सुतस्तस्य प्रदीपस्तस्य पुत्त्रकः ॥
कायस्थस्तस्य पुत्त्रोऽभूद्बभूव लिपिकारकः ।

श्यामश्चाढ्यश्च पूञिश्च तेजको नाद एव च
॥
रोइर्होमश्च हाथिश्च ढोलश्च दूतकस्तथा ।
एते पद्धतिकाराश्च सप्ताशीतिः प्रकीर्त्तिताः”
॥
एताः सप्ताशीतिपद्धतयः द्वादशशुद्धपद्धतयश्च
मि-
लित्वा नवाधिकनवतिपद्धतयो भवन्ति ॥
एतेषां पु-
रोहितगोत्रप्रवरेण गोत्रप्रवरत्वं मुनिभिरुक्तम् ॥
* ॥
अथ कान्यकुब्जात् पञ्चानां विप्राणां
शूद्राणाञ्चा-
गमनमाह देवीवरः ।
“अम्बष्ठकुलसम्भूत आदिशूरो नृपेश्वरः ।
राढगौडवरेन्द्राश्च वङ्गदेशस्तथैव च ॥
एतेषां नृपतिश्चैव सर्व्वभूमीश्वरो यथा ।
अमात्यैर्बान्धवैश्चैव मन्त्रिभिर्द्विजवृन्दकैः ॥
एतैः सह महीपाल एकदा स निजालये ।
उपविष्टो द्विजान् प्रष्टुं धर्म्मशास्त्रपरायणः ॥
केन यज्ञेन भगवत्प्रीतिर्भवति निश्चितम् ।
तत् सर्व्वं श्रोतुमिच्छामि कथयध्वं द्विजोत्तमाः
॥
इति श्रुत्वा द्विजाः सर्व्वेखर्व्वीकृतकलेवराः ।
कथयन्ति नृपाग्रे तु सर्व्वे विकृतमानसाः ॥
केन केन विधानेन यज्ञो वा क्रियते बुधैः ।

:वयं सर्व्वे न जानीमो विधानं कीदृशं क्रतोः ॥

इति तेषां वचः श्रुत्वा चिन्तायुक्तो महीपतिः ।
किं करोमि क्व गच्छामि विललाप पुनः पुनः ॥
कान्यकुब्जात् समानीतान् दूतेन द्बिजपञ्चकान् ।
वेदशास्त्रेष्ववगतान् सर्व्वास्त्रे च विशारदान् ॥
गोयानारोहितान् विप्रान्
खड्गचर्म्मादिभिर्युतान् ।
पत्तिवेशान् समालोच्य विषादो जायते हृदि ॥
अश्रद्धा जायते राज्ञ इति ज्ञात्वा द्बिजोत्तमाः ।
आशीर्व्वादार्थनिर्म्माल्यं मल्लकाष्ठोपरि स्थितम् ॥
तदा काष्टं सजीवं स्यात् फलपल्लवसंयुतम् ।
इति दृष्ट्वा नृपस्तस्मिन् कम्पान्वितकलेवरः ॥
स्तोत्रञ्च बहुधा तेषामकरोत् स नृपोत्तमः ।
आसनं पाद्यमानीय ददौ विनयपूर्ब्बकम् ।
उपविष्टा द्बिजाः पञ्च तथा च शूद्रपञ्चकाः ॥
राजंस्ते कुशलं सर्व्वं प्रोचुश्चेत्यवदत् स तान् ।
अद्य मे सफलं जन्म जीवितञ्च सुजीवितम् ॥
पूतञ्च भवनं जातं युष्माकं गमनं यतः ।
एवञ्च क्रियते स्तोत्रं पृष्ट्वान्यत् शूद्रपञ्चके ॥
युष्माकं गोत्रमाख्या च किमर्थं वा द्बिजैः सह ।
तत् सर्व्वं श्रोतुमिच्छामि ब्रूत भोः शूद्रपुङ्गवाः ॥
इति राज्ञो वचः श्रुत्वा कथयन् नामगोत्रके ।
काश्यपे चैव गोत्रे च दक्षनामा महामतिः ॥
तस्य दासो गौतमस्य गोत्रे दशरथो वसुः ।
शाण्डिल्यगोत्रे सम्भूतो भट्टनारायणः कृती ॥
सौकालिनश्च दासोऽयं घोषः श्रीमकरन्दकः ।
भरद्बाजेषु विख्यातः श्रीहर्षो मुनिसत्तमः ॥
दासस्तस्य विराटाख्यो गुहकः काश्यपः स्मृतः ।
सावर्णगोत्रनिर्द्दिष्टो वेदगर्भमुनिस्त्वयम् ॥
तस्य दासो मित्रवंशो विश्वामित्रश्च गोत्रकः ।
कालिदास इति ख्यातः शूद्रवंशसमुद्भवः ॥
वात्स्यगोत्रेषु सम्भूतश्छान्दडश्चेति संज्ञितः ।
मौद्गल्यगोत्रजो दत्तः पुरुषोत्तमसंज्ञकः ॥
एतेषां रक्षणार्थाय आगतोऽस्मि तवालये ।
इति श्रुत्वा नृपस्तत्र मनसा हर्षमागतः ॥

“तत्र वङ्गेषु यैः शूद्रैर्निवासः क्रियतेऽधुना ।
तेषां निर्णयमाचक्षे कुलञ्चैव विशेषतः ॥
वसुवंशे च मुख्यौ द्बौ नाम्ना लक्षणपूषणौ ।
घोषेषु च समाख्यातश्चतुर्भुजमहाकृती ॥
गुहे दशरथश्चैव मित्रे तारापतिस्तथा ।
दत्ते नारायणश्चैव एते च वङ्गजाः स्मृताः” ॥
अपरन्तु ।
“नागे दशरथश्चैव महानन्दस्तु नाथकः ।
चन्द्रशेखरदासस्तु सेने गङ्गाधरस्तथा ॥
दामोदरकरः ख्यातो दामस्तूषापतिस्तथा ।
पालिते जनसंज्ञः स्यात् चन्द्रे नारायणाख्यकः ॥
पाले आवः समाख्यातो राहावंशे च कृष्णकः ।
भद्रे दिगम्बरश्चैव धरे तु व्याससंज्ञकः ॥
प्रभाकरस्तु नन्दी स्यात् केशवो देववंशजः ।
अवीपतिरिति ख्यातः कुण्डुवंशे प्रकीर्त्तितः ॥
सोमे वंशधरश्चैव सिंहे रत्नाकरस्तथा ।
नारायणः समाख्यातो रक्षिते च तथापरे ॥
वेदगर्भाङ्कुरश्चैव दैत्यारिर्विष्णुसंज्ञकः ।
आढ्ये त्रिलोचनः ख्यातो नन्दने च उषापतिः ॥
एते वङ्गजनिर्द्दिष्टा वल्लालेन महात्मना ।
अन्येऽपि शूद्रा विख्यातास्तत्र देशनिवासिनः ॥
ते वङ्गजाः समाख्याताः करणेषु प्रतिष्ठिताः” ॥ * ॥
अथ वङ्गजकुलीनादिनिरूपणम् ।
“कुलीन इति संज्ञा स्यात् मध्यन्यश्च तथापरः ।
महापात्रोऽचलश्चैव इति संज्ञाचतुष्टयम्” ॥
तद्यथा ।
“वसुर्घोषो गुहो मित्रो दत्तो नागश्च नाथकः ।
दासः सेनः करो दामः पालितश्चन्द्रपालकौ ॥
राहो भद्रो धरो नन्दी देवः कुण्डुश्च सोमकः ।
रक्षिताङ्कुरसिंहाश्च विष्णुराढ्यश्च नन्दनः ॥
चत्वारोऽग्र्यास्त्रयो मध्या महापात्राः परे तथा ।
सप्तविंशतिः शूद्राणां वल्लालेन प्रशंसिताः” ॥ * ॥
इति कुलीनमध्यन्यमहापात्राः । अचलान् वक्ष्यामि ।
“होढश्च स्मारकश्चैव धरणीवान एव च ।
आइचः पैसुरश्चैव शानश्च भञ्जविन्दुकौ ॥
गुहश्च वललोधौ च शर्म्मा वर्म्मा च भूमिकः ।
हुइश्च रुद्रकश्चैव राणादित्यौ च पीलकः ॥

वृक्षः । इति जटाधरः ॥ काकोली । इत्यमरटीकायां भरतः ॥ एलाद्बयम् । तुलसी । इति राजनिर्घण्टः ॥ कायस्थस्त्रीजातिः । कायस्थपत्न्यां कायस्थी ॥

**कायिकः**, त्रि, (कायेन निष्पादितः निष्पन्नो वा कायेन निर्वृत्त इति वा । काय + ठक् ।) शारीरिकः । कायनिष्पन्नः । यथा ।
“अदत्तानामुपादानं हिंसा चैवाविधानतः ।
परदारोपसेवा च कायिकं त्रिविधं स्मृतम्” ॥
इति तिथ्यादितत्त्वम् ॥ (स्त्री, शरीरसम्बन्धिनी चक्रवृद्धिः । यथा मनुः ८ । १५३ ।
“चक्रवृद्धिः कालवृद्धिः कारिता कायिका च या” ॥)

**कायिकावृद्धिः**, स्त्री, (गोबलीवर्द्दादीनां कायपरिश्रमसाध्या या वृद्धिः ।) गवादिवलीवर्द्दादिकर्म्मयुता वृद्धिः । यथा ।
“दोह्यवाह्यकर्म्मयुता कायिका समुदाहृता” ॥
इति व्यासः ॥ मूलधनाविरोधिनी प्रत्यब्ददेयपणतदर्द्धादिरूपा वृद्धिः । यथा ।
“कायाविरोधिनी शश्वत् पणार्द्धाद्या तु कायिका” ।
इति नारदः ॥ हलायुधस्तु पणार्द्धाद्या इत्यत्र पणवाह्येति पठित्वा पणस्य मूलधनस्य यावदवस्थानं तावत् शश्वत् वर्षसहस्रमपि उत्तमर्णेन या वाह्यते प्राप्यते सा कायिकेति व्याख्यातवान् तत्राद्या भोगलाभान्तर्गता अपरा च तद्भिन्ना इति मिश्राः । इति विवादार्णवसेतुः ॥

**कारः**, पुं, (कृ हिंसायां + भावे घञ् ।) वधः । निश्चयः । (धातूनामनेकार्थत्वात् अत्र निश्चयार्थेऽपि ॥ कं सुखं ऋच्छत्यनेन । क + ऋ + करणे + घञ् ।) बलिः । यत्नः । यतिः । (कं सुखं निर्वृतिं ऋच्छतीति । क

विधानेनैव निर्वर्त्य क्रतुञ्च धर्म्मसंज्ञितम् ।
ग्रामं सुवर्णं गाञ्चैव वस्त्राणि विविधानि च ॥
दक्षिणार्थे द्विजातिभ्यः प्रददौ स नृपोत्तमः ।
अत्र देशे कृतावासाः सर्व्वे च द्विजशूद्रकाः ॥
बहवश्च प्रजा जाता नानादेशनिवासिनः” ॥ * ॥
अथ वल्लालकृतश्रेणिविभागः ।
“अथ वल्लालभूपश्च अम्बष्टकुलनन्दनः ।
कुरुतेऽतिप्रयत्नेन कुलशास्त्रनिरूपणम् ॥
आदिशूरानीतविप्रान् शूद्रांश्चैव तथापरान् ।
एतेषां सन्ततीः सर्व्वा आनयत् स निजालये ॥
यत्र यत्र स्थिता विप्रास्तत्र ग्रामे निरोपिताः ।
श्रेणीद्वयन्तु निर्णीतं राढीवारेन्द्रसंज्ञितम् ॥
तथैव द्विविधं प्रोक्तं कुलञ्च सद्विजोत्तमे ।
शूद्रस्याथ चतस्रश्च नृपेण श्रेणयः कृताः ॥
उदगदक्षिणराढौ च वङ्गवारेन्द्रकौ तथा ।
इति चतस्रः संज्ञाः स्युस्तत्तद्देशनिवासनात् ॥
कुलं चतुर्व्विधं तेषां श्रेणीश्रेणीविशेषतः” ॥ * ॥
अथ वङ्गजकायस्थश्रेणिनिर्णयः ।
खिलश्च गुप्तचाञी च बन्धुश्च शाञिसंज्ञकः ।
हेशश्च सुमनुर्गण्डो राणाराहुतदाहकाः ॥
दानागणापमानाख्याः खामः क्षेमश्च तोषकः ।
वैश्चापि घरवेदौ च भूतार्णवकब्रह्मकाः ॥
एन्दश्च शक्तिसङ्गौ च क्षेमाशौ वर्द्धनस्तथा ।
हेमश्च बन्धकश्चैव भूञिः कीर्त्तिश्च शीलकः ॥
धनुर्गुणो यशश्चैव मनोरीतिश्च दाडिकः ।
चाकिश्च श्याम पूञिश्च गण्डको नादकस्तथा ॥
रोइश्च होमकश्चैव चाशकश्च तथैव च ।
ढोलश्च दूतकश्चेति द्विसप्तत्यचलाः स्मृताः” ॥
एतेषां प्रतिपुरुषक्रमेण कुलार्च्चनात् महापात्र-भावो जायते ॥ * ॥ इति वङ्गजघटकरामानन्द-शर्म्मकृतकुलदीपिका ॥

**कायस्था**, स्त्री, (कायस्तिष्ठत्यनया । काय + स्था + घञर्थे कः ।) हरीतकी । इति मेदिनी ॥ धात्री-
+ ऋ + कर्त्तरि अण् ।) पतिः । इति शब्दरत्ना-वली ॥ (कं निष्यन्दजलमृच्छतीति ।) तुषारशैलः । इति मेदिनीकरहेमचन्द्रौ ॥। कर्म्मोपपदे कर्तृवाच-कः । यथा कर्म्मकारः स्वर्णकार इत्यादि । इति व्याकरणम् ॥ क्रिया । यथा करणं कारः क्रिया । इति रामतर्कवागीशः ॥ (अक्षरान्ते तदक्षर-वाचकः । यथा ककारः । मकारः । इत्यादिः ॥)

**कारकं**, क्ली, (क्रियाभिरन्वितं इति । भाष्यमते तु करोति क्रियां निर्वर्त्तयतीति । कृ + कर्त्तरि ण्वुल् ।) क्रियानिमित्तं लोकतः सिद्धम् । इति दुर्गसिंहः ॥ फणिभाष्यमते पुं, यथा भवितुः स प्रयोजकः कारकः । तत्तु षड्विधम् । कर्म्म १ यथा रामं नमति । करणम् २ यथा नेत्रैः शिवो दृष्टः । कर्त्ता ३ यथा जनैः शिवो दृष्टः । सम्प्रदानम् ४ यथा हरिः सद्भ्यः सुखं ददातु । अपादानम् ५ यथा विभीषणः पदाद्भ्रष्ठः । अधिकरणम् ६ यथा रेमे शरदि गोविन्दः । इति वोपदेवः ॥ वर्षोप-लोद्भवं जलम् । इति राजनिर्घण्टः ॥

**कारकः**, त्रि, (करोति कर्म्मादिकम् । कृ + “ण्वुल्तृ-चौ” । ३ । १ । १३३ । इति ण्वुल् ।) कर्त्ता । इति मेदिनी ॥ (यथा मनुः ७ । २०४ । “आदानमप्रियकरं दानञ्च प्रियकारकम्” ॥)

**कारकुक्षीयः**, पुं, (कारकुक्षि + च्छः ।) शाल्वदेशः ।
(तत्र भवः अण् बहुषु तस्य लुक् ।)
तद्देशीयजने
बहुवचनान्तः । इति हेमचन्द्रः ॥

**कारणं**, क्ली, (कार्य्यतेऽनेन । णिजन्तात् कृञो ल्युट् ।)
येन विना यन्न भवति तत् । तत्पर्य्यायः । हेतुः
२
वीजम् ३ । इत्यमरः । १ । ४ । २८ ॥
निमित्तम्
४ प्रत्ययः ५ । इति जटाधरः ॥ (यथा, विष्णु-
पुराणे । १ । १७ । ३० ।
"यतः प्रधानपुरुषौ यतश्चैतत् चराचरम् ।
कारणं सकलस्यास्य स नो विष्णुः प्रसीदतु"
॥)
कारणत्वमाह । अन्यथासिद्धिशून्यत्वे सति
नियत-
पूर्ब्बवर्त्तित्वम् । तत्रिविधम् ।
समवायिकारणत्वम्
१ असमवायिकारणत्वम् २ निमित्तकारणत्वम्
३
परमाणुपरिमाणभिन्नानां कारणत्वम् । इति
भाषापरिच्छेदः । १६-१७ ॥ अणुपरिमाणन्तु
न
कस्यापि कारणम् । इति सिद्धान्तमुक्तावली
(यथा, हेः रामायणे । १ । ६४ । ११ ।
"बहुभिः कारणैर्देव ! विश्वामित्रो महामुनिः ।
लोभितः क्रोधितश्चैव तपसा चाभिवर्द्धते" ॥)
करणम् । (कृ वधे + स्वार्थे णिच् भावे ल्युट् ।)
बधः । इति मेदिनी ॥ (आदिः । मूलम् । यथा,
मनुः । ११ । ८४ ।
"ब्राह्मणः सम्भवेनैव देवानामपि दैवतम् ।
प्रमाणञ्चैव लोकस्य ब्रह्मात्रैव हि कारणम्" ॥
प्रमाणम् । यथा, मनुः । ८ । २०० ।
"सम्भोगो दृश्यते यत्र न दृश्येतागमः क्वचित्
।
आगमः कारणं तत्र न सम्भोग इति स्थितिः"
॥)
इन्द्रियम् । (यथा, गीतायाम् । १३ । २० ।
"कार्य्यकारणकर्त्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तत्वे हेतुरुच्यते" ॥

"कार्य्यं शरीरं कारणानि
सुखदुःखसाधनानी-
स्थितिस्थापकसंस्कारः १२ । इति भाषा-
रिपच्छेदे । ९६ ॥

**कारणशरीरं**, क्ली, (कारणं अविद्या सैव शरी-
रम् । अनाद्यविद्याऽनिर्व्वचनीयं शरीरद्वयकारण-
मात्रम् । सत्स्वरूपाज्ञानं यदस्ति तत्कारण-
शरीरमित्याहुः ।) सत्त्वप्रधानमज्ञानम् । (किन्तु
वीजावस्थायां सूक्ष्मवृत्तित्वात् विषयव्यापाररहि-
तस्यान्तःकरणस्य सुतरांसुखस्वरूपेणानुभूयतेऽसौ
द्रष्टा ।) तत्पर्य्यायः । आनन्दमयकोषः २ सुषुप्तिः ३ ।
(यदुक्तं वेदान्तसारे । १६ ।

"अस्यापीयमहङ्कारादिकारणत्वात्
कारणश-

रीरं आनन्दप्रचुरत्वात् कोषवदाच्छादकत्वाच्च
आनन्दमयकोषः सर्व्वोपरमत्वात् सुषुप्तिः अत-
एव स्थूलसूक्ष्मशरीरलयस्थानमितिचोच्यते" ॥ अत्र
सुबोधनी यथा ।

"प्रलयकाले
हिरण्यगर्भादिप्रपञ्चोत्पादकेश्वर-

गतमूलप्रकृतिवत् सुषुप्तिकाले अहङ्कारादिशरी-
रोत्पादकसंस्कारमात्रावशिष्टजीवगताज्ञानस्यापि
कारणशरीरत्वं इन्द्रियतद्विषयाभावे व्यासङ्गा-
भावादानन्दबाहुल्यादानन्दमयत्वं आच्छादकत्वा-
त्कोषत्वञ्च युक्तमितिभावः । ननु स्थूलसूक्ष्मशरीर-
लयस्थानस्य कथं सुषुप्तिशब्दवाच्यत्वमित्याशङ्क्य
पूर्ब्बवत् सञ्ज्ञाभेद इति वक्तुं तत्र युक्तिमाह सर्व्वो-
परमत्वादिति । पञ्चीकृतस्थूलशरीरस्य व्यावहारि-
कस्य स्वाप्नप्रपञ्चस्य स्वकारणेऽज्ञाने लीनत्वात्
सर्व्वोपरतिरित्यर्थः । तथा चोक्तम् ।
"लये फेनस्य तद्धर्म्मा द्रव्याद्याः स्युस्तरङ्गके ।
तस्यापि विलये नीरे तिष्ठन्त्येते यथा पुरा ॥
व्यवहारिक देहस्य लयः स्यात् प्रतिभासिके ।
तल्लये सच्चिदानन्दाः पर्य्यवस्यन्ति साक्षिणि" ॥)

**कारणा**, स्त्री, (कृ हिंसायाम् । णिजन्तात् कृञो
"ण्यासश्रन्थेति" । ३ । ३ । १०७ । युच् ततः
टाप् ।) यातना । गाढवेदना । इत्यमरः । १ । ९ । ३
॥
नरकरुजा यमयातना । इति केचित् । इति
भरतः ॥

**कारणिकः**, त्रि, (करणैः कारणैर्वा चरति । "चर-
कारण्डं तदाकारं वाति वा ।) हंसविशेषः
इत्यमरः । २ । ५ । ३४ ॥ खडहाँस इति
भाषा
(यथा ऋतुसंहारे । शरद्वर्णणे ८ ।
"कारण्डवाननविघट्टितवीचिमालाः
कादम्बसारसकुलाकुलतीरदेशाः" ॥)

**कारण्डव्यूहः**, पुं, बुद्धभेदः । इति त्रिकाण्डशेषः ।
(बौद्धशास्त्रविशेषः ॥)

**कारन्धमी**, [न्] पुं, (कर एव कारस्तं धमतीति । ध्मा
+ इनिः । पृषोदरादित्वात् साधुः ।)
कांस्यकारः ।
धातुवादरतः इति मेदिनी ॥

**कारम्भा**, स्त्री, (ईषत् रम्भा । कोः कादेशः ।) प्रिय-
ङ्गुवृक्षः । इत्यमरः । २ । ४ । ५६ ॥

**कारवः**, पुं, (का इति रवो यस्य । कुत्सितो रवो
यस्येति वा ।) काकः । इति त्रिकाण्डशेषः
॥

**कारवल्ली**, स्त्री, (कारा इतस्ततो विक्षिप्ता बल्ली
यस्याः । यद्वा कुत्सित आरो गतिर्यस्याः ।
सा
चासौ वल्ली चेति ।) कारवेल्लः । काण्डीरः ।
इति
राजनिर्घण्टः ॥

**कारवी**, स्त्री, (कारं वाति । वा + कः । के जलोप-
लक्षितवर्षाकाले रवो यस्य । कारवः
केकावरो
मयूरस्तस्य पुच्छमिवाकारोऽस्त्यस्य अच् ।
यद्वा कृ
हिंसायां स्वार्थे णिच् ततः क्विप् ।
कारमवति । कर्म्म
ण्यण् । गौरादित्वात् ङीष् ।) मधुरा । मौरी
इति
भाषा । दीप्यः । मयूरशिखा । रुद्रजटा इति
भाषा । क्षेत्रयमानिका इति केचित् । सुषवी
।
केले जीरा इति भाषा । हिङ्गुपत्री । हिङ्गेर
पाता
इति भाषा । इत्यमरभरतौ ॥ क्षुद्रकारवेल्ली ।

न्द्रियाणि तेषां कर्त्तृत्वे तदाकारपरिणामे" ।
इति तट्टीकायां श्रीधरस्वामी ॥) देहः । (यथा,
शाङ्करात्मबोधे । १३ ।
"अनाद्यविद्याऽनिर्व्वाच्या कारणोपाधिरुच्यते
।
उपाधित्रितयादन्यमात्मानमवधारयेत्" ॥)
साधनम् । (करणमेव स्वार्थे अण् ।) कर्म्म ।
(यथा, चाणक्ये । २३ ।
"न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचित्
रिपुः ।
कारणेन हि जानाति मित्राणि च रिपूंस्तथा"
॥)
कायस्थः । (करणशब्देऽस्य विशेषो ज्ञेयः ॥)
वाद्य-
प्रभेदः । गीतप्रभेदः । इति भरतधृतरत्नकोषः
॥
(आदिकारणत्वात् विष्णुः । यथा महाभारते ।
१३ । १४९ । ५४ ।
"करणं कारणं कर्त्ता विकर्त्ता गहनो गुहः" ॥
शिवः । यथा शङ्करकृते वेदसारशिवस्तवे ७ ।
"अजं शाश्वतं कारणं कारणानाम्
शिवं केवलं भासकं भासकानाम्" ॥)

**कारणगुणोद्भवगुणः**, पुं, (कारणगुण उद्भवो यस्य ।
स चासौ गुणश्चेति कर्म्मधारयः ।) कारणगुण-
पूर्ब्बकगुणः । तद्यथा । रूपम् १ रसः २ गन्धः
३
अपाकजस्पर्शः ४ द्रवत्वम् ५ स्नेहः ६ वेगः
७ गुरु-
त्वम् ८ एकत्वम् ९ पृथक्त्वम् १० परिमाणम्
११

तीति" । ४ । ४ । ८ । ठक् ।) परीक्षकः । इत्य-
मरः । ३ । १ । ७ ॥

**कारणोत्तरं**, क्ली, (कारणेन उत्तरम् ।) प्रत्यव-
स्कन्दनम् । सत्यत्वेनाङ्गीकृत्य तत्प्रतिकूलरूप-
कारणं ब्रूयात् तदा तदुत्तरम् । तत्त्रिविधम् ।
बलवत् १ तुल्यबलम् २ दुर्ब्बलम् ३ । आद्यं यथा
मया त्वत्तः शतं गृहीतमिति सत्यं किन्तु तत्
परिशोधितम् । द्बितीयं यथा मदीयेयं भूमिः
क्रमागतत्वादिति वाद्युक्ते प्रतिवादिनोऽपि तथो
त्तरम् । तृतीयं यथा ममेयं भूमिः क्रमागतत्वात्
इति वाद्युक्ते ममेयं भूमिः दशवर्षोपभुज्यमानत्वात्
इति प्रत्युत्तरम् । इति व्यवहारतत्त्वम् ॥

**कारण्डवः**, पुं, स्त्री, (ऋमन्ताडड इति रमेर्ड ।
रण्डः । ईषत् रण्डः । "ईषदर्थे" ६ । ७ । १०५ ।
इति कोः कादेशः । कारण्डं वाति । वा गतौ +
"आतोनुपेति" । ३ । २ । ३ । कः । करण्डस्येदं

इति राजनिर्घण्टः । छोट करला इति भाषा
॥

**कारवेल्लं**, क्ली, (कारं वेल्लति । वेल्ल चलने कर्म्म-
ण्यण् । यद्वा कारेण वातगमनेन वेल्लति
चलति
गच्छति वा वेल्ल चलने अच् ।) कठिल्लकम् ।
करला इति भाषा । तत्पर्य्यायगुणाः ।
"कारवेल्लं कठिल्लं स्यात् कारवेल्ली ततो
लघुः ।
कारवेल्लं हिमं भेदि लघु तिक्तमवातलम् ॥
ज्वरपित्तकफास्रघ्नं पाण्डुमेहकृमीन् हरेत् ।
तद्गणा कारवेल्ली स्याद्विशेषाद्दीपनी लघुः"
॥
इति भावप्रकाशः ॥ अमरे पुंलिङ्गोऽयम् ॥

**कारवेल्लः**, पुं, (कारेण वायुवत् गत्या वेल्लति चल-
तीति । कार + वेल्ल + अच् ।) लताविशेषः
।
करला इति भाषा । तत्पर्य्यायः । कठिल्लकः
२
सुषवी ३ । इत्यमरः । २ । ४ । १५४ ॥
शुषवी ४
सुशवी ५ । इति तट्टीका ॥ कण्डुरः ६
काण्डकटुकः
७ सुकाण्डः ८ उग्रकाण्डः ९ कठिल्लः १०
नासा-
सम्बेदनः ११ पटुः १२ । इति
राजनिर्घण्ठः ।
तत्पुष्पगुणः । धारकत्वम् । रक्तपित्तरोगे
सुपथ्य-
त्वञ्च ॥ तत्फलगुणः ।
शुक्रकफपित्तनाशित्वम् ।
रुचिकरत्वञ्च । इति राजवल्लभः ॥

**कारवेल्लकः**, पुं, (कारवेल्ल एव । स्वार्थे कण् ।) कार-
वेल्लः । इति रत्नमाला ॥ (क्लीवत्वमपि
दृश्यते ।
यथा शुश्रुते सूत्रस्थाने ४६ अध्याये ।
"तद्वत् कर्कोटकं प्रोक्तं कारवेल्लकमेव च"
॥)

**कारवेल्ली**, स्त्री, (कारवेल्ल + अल्पार्थे ङीष् ।) क्षुद्र-

:कारवेल्लम् । करेली इति हिन्दी भाषा । उच्छे

इति वङ्गभाषा ॥ (यदुक्तं पाकराजेश्वरे ।
"कारवेल्लीफलं तक्रे श्वेदितं हिङ्गुमर्द्दितम् ।
भर्ज्जितं नवनीतेन सैन्धवेन समन्वितम् ॥
विदलितमुखमीषत् कारवेल्लीकठोरं
पुलकितमिव तैले साधितं रामठेन ।
रचितमरिचचूर्णं सैन्धवेनातिपूर्णम्
सुललितरसनाग्रं लोलता मातनोति" ॥
अन्यत् कारवेल्लशब्दे द्रष्टव्यम् ॥)

**कारमिहिका**, स्त्री, (कारस्य तुषारशैलस्य मिहिका

नीहार इव ।) कर्पूरम् । इति राजनिर्घण्टः ॥

**कारस्करः**, पुं, (कारं वधं करोतीति । कृ + "कृञो-

हेतुताच्छील्यानुलोम्येषु" । ३ । २ । २० । इति टः
निपातनात् सुट् ।) वृक्षविशेषः । तत्पर्य्यायः ।
किम्पाकः २ विषतिन्दुः ३ करद्रुमः ४ रम्यफलः ५
कुपीलुः ६ कालकूटः ७ । (यथा महाभारते
२ । द्यूतपर्व्वणि ४९ । २१ ।
"आवर्ज्जिता इवाभान्ति नीपाश्चित्रककौकुराः ।
कारस्करा लौहजङ्घा युधिष्ठिरनिवेशने" ॥)
अस्य गुणाः । कटुत्वम् । उष्णत्वम् । तिक्तत्वम् ।
कुष्ठवातामयास्रकण्डूतिकफार्शोव्रणनाशित्वञ्च ।
इति राजनिर्घण्टः ॥

**कारस्कराटिका**, स्त्री, (कारस्कर इव अटति । अट्

+ ण्वुल् टाप् अत इत्वञ्च ।) कर्णजलौका । इति
त्रिकाण्डशेषः ॥ केर्णो केनुइ इति च भाषा ॥

**कारा**, स्त्री, (कीर्य्यते क्षिप्यते दण्डार्हो यस्याम् । कृ

विक्षेपे भिदादित्वात् अङ् । "ऋदृशोऽङीति"
७ । ४ । १६ । गुणे दीर्घत्वं निपात्यते ।) कारागा-
रम् । तत्पर्य्यायः । बन्धनालयः २ इत्यमरः । २ ।
८ । ११९ ॥ दूती । प्रसेवकः । सुवर्णकारिका ।
बन्धनम् । इति मेदिनी ॥ पीडा । इति त्रिकाण्ड-
शेषः ॥

**कारागारं**, क्ली, (कारैव आगारं कारायै बन्धनाय

आगारं वा ।) बन्धनगृहम् । यथा । "रिपुः कारा-
गारं कलयति च तं केलिकलया" । इति तन्त्रसारे
श्यामास्तोत्रम् ॥

**कारागुप्तः**, स्त्रि, (कारायां बन्धनागारे गुप्तः रुद्धः

रक्षितो वा ।) कारागारस्थः । इति हेमचन्द्रः ।
कयेदी इति भाषा ॥

**कारिका**, स्त्री, (धात्वर्थे निर्द्देशे करोतेर्ण्वुल्

णित्त्वाद्वृद्धिः । यद्वा करोतीति ण्वुल्
प्रत्ययस्था-
दिति इत्वम् ।) नटस्त्री । कृतिः ।
विवरणश्लोकः ।
(यथा, महाभारते । २ । ११ । ३३ ।
"नाटका विविधाः काव्याः
कथाख्यायिककारिकाः" ॥)
शिल्पम् । यातना । इति मेदिनी ॥ वृद्धिः ।
इत्य-
मरटीकायां रमानाथः । सुद इति भाषा ॥ स्व-
ल्पाक्षरवृत्त्या बह्वर्थज्ञापिका कविता । यथा, --
"कारिका तु स्वल्पवृत्तौ बहोरर्थस्य सूचनी" ।
इति हेमचन्द्रः ॥

**कारितः**, त्रि, (कृ + णिच् + कर्म्मणि क्तः ।) कुर्व्वन्

प्रेरितः । कराण इति भाषा । यथा, मार्कण्डेये ।
देवीमाहात्म्ये ८१ । ६५ ।
"विष्णुः शरीरग्रहणमहमीशानएव च ।
कारितास्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान्
भवेत्" ॥

**कारिता**, स्त्री, (कारित + टाप् ।) ऋणिकेन या

स्वकार्य्यसाधकतया
अशीतितमभागद्विकशतादि
तोऽधिका वृद्धिर्व्यवस्थापिता सा । अधिक्
सुद
इति भाषा । यथा, विवादार्णवसेतौ कात्यायनः
॥
"ऋणिकेन तु या वृद्धिरधिका संप्रकीर्त्तिता ।
आपत्कालकृता नित्यं दातव्या सा तु कारिता"
॥
(तथा च मनुः ८ । १५३ ।
"नाति सम्बत्सरीं वृद्धिं न चादृष्टां पुनर्हरेत् ।
चक्रवृद्धिः कालवृद्धिः कारिता कायिका च या"
॥)
तत्पर्य्यायः । कारिका २ कारितावृद्धिः ३ ।
इति
मिताक्षरा ॥

**कारी**, स्त्री, (कृणाति हिनस्ति कण्टकैः । कृ

हिंसायां + इञ् ततो ङीष् ।) वृक्षविशेषः ।
कण्टकारी आकर्षकारीत्येषा द्विधा ।
तत्पर्य्यायः ।

(कारोः कारुतो जायते । कारु + जन + डः
।)
शिल्पिनां चित्रम् । स्वयं जाततिलः । इति
हेमचन्द्रः ॥

**कारुणिकः**, त्रि, (करुणा शीलमस्य । शीलमितिठक् ।)

दयालुः । इत्यमरः । ३ । १ । १५ ॥ (यथा,
रघुः ।
१५ । ७१ ।
"कविः कारुणिको वव्रे सीतायाः
सम्परिग्रहम्" ॥)

**कारुण्डी**, स्त्री, (कुत्सिता ईषत् वा रुण्डी मूर्द्धहीना

इव ।) जलौकाः । इति शब्दचन्द्रिका ॥
कारु-
ण्डिका इति च पाठः ॥

**कारुण्यं**, क्ली, (करुणः करुणावान् । तस्य भावः ।

करुणैव वा ष्यञ् ।) करुणा । इत्यमरः । १ ।
७ ।
१८ ॥ (यथा गोः रामायणे १ । २ । १५ ।
"मुनेः शिष्यसहायस्य कारुण्य समजायत"
॥)

**कारूषाः**, पुं, (करूषो अभिजन एषाम् । भर्गा-

दित्वात् अण् बहुषु न तस्य लुक् ।)
करूषदेश-
वासिनः । तत्पर्य्यायः । वृहद्गहाः २ । इति
हेमच-
न्द्रः ॥ बहुवचनान्तोऽयं शब्दः ॥ (यथा,
विष्णु-
पुराणे २ । ३ । १६ ।
"कारूषा मालवाश्चैव पारिपात्रनिवासिनः"
॥)

**कारोत्तमः**, पुं, (कारेण सुरागालनेन उत्तमः । मण्डस्य

उत्तमतया तथात्वम् ।) कारोत्तरः । इत्यमर-
टीकायां स्वामी ॥

**कारोत्तरः**, पुं, (कारेण सुरागालनक्रियया उत्तरति ।

उत् + तृ + अच् ।) सुराग्रभागः । तत्पर्य्यायः
।
सुरामण्डः २ । इत्यमरः । २ । १० । ४३ ॥
कूपः ।
इति हारावली ॥

**कारायिका**, स्त्री, (कं जलं आराति आदत्ते प्रचरण-

स्थानतया इति यावत् । आ + रा + ण्वुल् टाप्
इत्वञ्च ।) बलाका । इति जटाधरः ॥

**कारावेश्म**, [न्] क्ली, (कारैव कारायै वा वेश्म

गृहम् ।) कारागारम् । तत्पर्य्यायः । वधाङ्ककम् २ ।
इति त्रिकाण्डशेषः ॥

**कारिः**, स्त्री, (क्रियतेऽसौ । कृ + "विभाषाख्यानप-

रिप्रश्नयोरिञ्च" । ३ । ३ । ११ । इति इञ् ।)
क्रिया । (यदुक्तं सिद्धान्तकौमुद्यां । "त्वं कां
कारिमकार्षीः । सर्व्वां कारिमकार्षम्" ॥) करो-
तीति डु कृञ् करणे । "कृञ उदीचां कारुषु"
उणां । ४ । १२८ । इति इञ् ।) शिल्पिनि त्रि ।
इति मेदिनी ॥

कारिका २ कार्य्या ३ गिरिजा ४ कटुपत्रिका ५
।
अस्या गुणाः । कषायत्वम् । मधुरत्वम् । पित्त-
नाशित्वम् । दीपनत्वम् । ग्राहित्वम् ।
रुचिकण्ठ-
शोषकारित्वम् । गुरुत्वञ्च । इति राजनिर्घण्टः
॥

**कारीषं**, क्ली, (करीषाणां समूहः । भिदादित्वात्

अण् ।) करीषसमूहः । इत्यमरः । ३ । २ ।
४३ ॥
घुटेर राशि इति भाषा । (यथा, हरिवंशे ।
"कारीषेषु प्रकृप्तेषु दीप्यमानेषु सर्व्वशः" ॥

**कारुः**, पुं, (करोति इति । "कृवापाजिमीति" ।

उणां १ । १ । उण् ।) विश्वकर्म्मा । इति
मेदिनी ॥
(भावे उण ।) शिल्पम् । इति हेमचन्द्रः ॥

**कारुः**, त्रि, (करोति इति । कृ + उण् । उणां । १ । १ ।)

कारकः । (यथा, भट्टिः ७ । २८ ।
"राघवस्य ततः कार्य्यं कारुर्व्वानरपुङ्गवः ।
सर्व्ववानरसेनानामाश्वागमनमादिशत्" ॥)
शिल्पी । इति मेदिनी ॥ (यथा, कूर्म्मपुराणे ।
"कारयित्वा तु कर्म्माणि कारुं पश्चान्न
वञ्चयेत्" ॥)

**कारुकः**, त्रि, (कारु + स्वार्थे कन् ।) शिल्पी । (यथा

मनुः । ४ । २१९ ।
"कारुकान्नं प्रजां हन्ति बलं निर्णेजकस्य च
गणान्नं गणिकान्नञ्च लोकेभ्यः परिकृन्तति" ॥)

**कारुजः**, पुं, (कं जलं आरुजति । आ + रुज + कः ।)

करभः । फेनः । वल्मीकः । नागकेशरः ।
गैरिकम् ॥

**कार्कश्यं**, क्ली, (कर्कशस्य भावः । कर्कश + ष्यञ् ।)

कर्कशता । (यथा, अमरुशतके २४ ।
"कार्कश्यंगमितेपि चेतसि तनू
रोमाञ्चमालम्बते" ।)

**कार्त्तवीर्य्यः** पुं, (कृतवीर्य्यस्य अपत्यं अण् ।) चन्द्र-

वंशीयकृतवीर्य्यराजपुत्त्रः । तत्पर्य्यायः ।
हेहयः २
दोःसहस्रभृत् ३ अर्ज्जुनः ४ । (यथा,
भागवते ९ ।
२३ । २४ ।
"न नूनं कार्त्तवीर्य्यस्य गतिं यास्यन्ति
पार्थिवाः ।
यज्ञदानतपोयोगश्रुतवीर्य्यजयादिभिः" ॥

अस्य खलु माहिष्मती नाम पुरी
राजधान्या-

सीत् । मुजवीर्य्येणायं सप्तद्वीयां धरामजयत् ।
दत्तात्रेययोगात् बाहुसहस्रभावं लब्धवान् ।
दिग्विजये आगतो रावणोऽनेन पराजितो
निगडे
बद्धः पितामहेन पुलस्त्यमुनिना ततो मोचितः
।
अयन्तु जमदग्नेराश्रमं गात्वा बलात् सवत्सां
होम-
धेनुं जहार । ततः कद्धेन जामदग्नेन
सबलोनि-
हतोऽसौ कार्त्तवीर्य्यः । अथ वैरशुद्धिं
चिकीर्षुभिः
दुरात्मभिः कार्त्तवीर्य्यपुत्त्रैरागत्य स्वाश्रमे
ध्यानस्थो
जमदग्निर्निपातितः । ततोऽनेन पितृवधामर्षात्
जातक्रोधेन परुशुरामेण सर्व्वेहैहयाः
निपातिताः ॥
जैनराजचक्रवत्तिविशेषः । तत्पर्य्यायः ।
सुभूमः २ ।
इति हेमचद्रः ॥

**कार्त्तस्वरं** क्ली, (कृतस्वरे आकरभेदे भवम् अण्

कृताः पठिताः स्वरा येन सः कृतस्वरः
सामगान-
कर्त्ता तस्मै दक्षिणात्वेन देयं वा । "शेषे" । ४
। २

:९२ इत्यण ।) स्वर्णम् । (यथा, माघे १ । २० ।

"स तप्तकार्त्तस्वरभास्वराम्बरः" ॥)

धुस्तूरः । इत्यमरः । २ । ४ । ७७ ॥

**कार्त्तान्तिकः**, पुं, (कृतान्तं वेत्ति । "क्रतूक्थादि

सूत्रान्ताट्ठक्" । ४ । २ । ३० । इति ठक

।) ज्यो-

तिर्व्वित् । दैवज्ञः । इत्यमरः । २ । ८ । १४

॥

**कार्त्तिकः**, पुं, (कृत्तिकानक्षत्रयुक्ता पौर्णमासी यत्र

मासे इति पाक्षिको अण् ।) वैशाखादिद्वादश

मासान्तर्गतसप्तममासः । कृत्तिकानक्षत्रयुक्ता

पौणमासी यत्र मासे सः । अयं

तुलास्थरविप्रा-

रब्धशुक्लप्रतिपदादिदर्शान्तरूपगुख्यचान्द्रः

। सौ-

रस्तु तुलाराशिस्थरविककालः । इति

स्मृतिः ॥

तत्पर्य्यायः । बाहुलः २ ऊर्ज्जः ३

कार्त्तिकिकः ४ ।

इत्यमरः । १ । १७ ॥ कौमुदः ५ । इति

शब्द-

रत्नावली ॥ * ॥

अथ कार्त्तिककृत्यम् ।

पद्मपुराणे ।

"तुलामकरमेषेषु प्रातःस्नानं विधीयते" ।

तत्र संकल्पः अरुणोदयकाले मज्जनं

कृत्वाचम्य

ॐ तत्सदद्य कार्त्तिके मासि अमुकपक्षे

अमुक-

तिथावारभ्य तुलास्थरविं यावत् प्रत्यहं

अमुक-

गोत्रः श्री अमुकदेवशर्म्मा

श्रीविष्णुप्रीतिकामः

प्रातःस्नानमहं करिष्ये इति संकल्प्य

यथोक्तवि-

धिना इतिकर्त्तव्यतां विधाय --

"ॐकार्त्तिकेऽहं करिष्यामि प्रातःस्नानं

जनार्द्दन ! ।

प्रीत्यर्थं तव देवेश ! दामोदर ! मया सह" ॥

इति स्नायात् । मया लक्ष्म्या ।

प्रतिदिनसंकल्पे

तु आरभ्य तुलास्थरविं यावत् प्रत्यहं इति न

वा आकाशे मण्डपे वापि श्रीविष्णवे दीपदान-

महं करिष्ये । इति संकल्प्य दामोदरायेत्यादिना

दद्यात् । द्वितीयादिदिने ॐदामोदरायेत्यनेनेति

विशेषः । विष्णुगृहे तु । ॐअद्येत्यादि अमुकति-

थावारभ्य तुलास्थरविं यावत् प्रत्यहं अमुकगोत्रो-

ऽमुकदेवशर्म्माअग्निष्टोमसहस्रजन्यफलसमफलप्रा

प्तिकामः श्रीविष्णप्रीतिकामो वा श्रीविष्णुवेश्मनि

श्रीविष्णवे दीपदानमहं करिष्ये । इति संकल्प्य

ॐ दामोदरायेत्यादिना दद्यात् । द्वितीयादिदिने

ॐ दामोदरायेत्यनेनेति विशेषः ॥ * ॥

हविष्यान्नादौ तु ब्रह्मपुराणे ।

"व्रतोपवासनियमैः कार्त्तिको यस्य गच्छति ।

देवो वैमानिको भूत्वा स याति परमं पदम्" ॥

तत्र अद्येत्यादि अमुकतिथावारभ्य तुलास्थरविं

यावत् प्रत्यहं अमुकगोत्रोऽमुकदेवशर्म्मा वैमा-

निकदेवत्वभवनपूर्ब्बकपरमपदप्राप्तिकामः श्रीवि-

ष्णुप्रीतिकामो वा हविष्येतरभोजननिवृत्तिमहं

करिष्ये । इत्यादिवाक्ये विशेषः । एवं फलाहारा-

दावपि ॥ * ॥ हविष्यद्रव्याणि च ।

"हैमन्तिकं सितास्विन्नं धान्यं मुद्गास्तिला यवाः

।

कलायकङ्गुनीवारा वास्तूकं हिलमोचिका ॥

यष्टिका कालशाकञ्च मूलकं केमुकेतरत् ।

लवणे सैन्धवसामुद्रे गव्ये च दधिसर्पिषी ॥

पयोऽनुद्धृतसारञ्च पनसाम्रहरीतकी ।

तिन्तिडी जीरकञ्चैव नागरङ्गञ्च पिप्पली ॥

कदली लवली धात्री फलान्यगुडमैक्षवम् ।

अतैलपक्वं मुनयो हविष्यान्नं विदुर्ब्बुधाः" ॥

हैमन्तिकमित्यभिधायागस्त्यसंहितायाम् ।

"नारिकेलफलञ्चैव कदलीं लवलीन्तथा ।

आम्रमामलकञ्चैव पनसञ्च हरीतकीम् ॥

व्रतान्तरप्रशस्तञ्च हविष्यं मन्वते बुधाः" ।

अत्र च आरब्धव्रतोपवासादौ फलजलादिभक्षण-

मप्याहतुरुद्योगपर्व्वबौधायनौ ।

"अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ।

हविर्ब्राह्मणकास्या च गुरोर्व्वचनमौषधम्" ॥ * ॥

फलाहारादावपि तुलसीराहित्ये दोषमाह ।

"तुलसीं विना या क्रियते न पूजा

स्नानं न तद्यत् तुलसीं विना कृतम् ।

भुक्तं न तद्यत् तुलसीविवर्ज्जितं

पीतं न तद्यत्तुलसीविवर्ज्जितम्" ॥ * ॥

नारदीये ।

"न मात्स्य भक्षयेन्मांसं न कौर्म्मं नान्यदेव हि ।

पक्षतदेकादश्यादिपञ्चदिनानि शक्ताशक्तभेदात्

पापतारतम्याद्वा निषिद्धानि ।

"कार्त्तिके शौकरं मांसं यस्तु भुञ्जीत दुर्म्मतिः ।

षष्ठिवर्षसहस्राणि रौरवे परिपच्यते" ॥ ओल-

पटोलकदम्बवृन्ताककांस्यसन्धिजानिवर्ज्जयेत्

।

"पटोलानि फदम्बानि वृन्ताकसहितानि च ।

भुञ्जानः कार्त्तिके मासि याददाहूतनारकी" ॥ *

॥

भूतचतुर्द्दशीकृत्यं तत्शब्दे द्रष्टव्यम् । तत्र दीप-

दाने विशेषो सथा, --

"ततः प्रवोषसमये दीपान्दद्यात् प्रयत्नतः ।

ब्रह्मविष्णुशिवादीनां भवनेषु मठेषु च ।

कूटागारेषु चैत्येषु गुहासु च नदीषु च" ॥

दीपदानमन्त्रः ।

"ॐनमः पितृभ्यः प्रेतेभ्यो नमो धर्म्माय विष्णवे

।

नमो धर्म्माय रुद्राय कान्तारपतये नमः" ॥ * ॥

दीपान्विताकृत्यं तत्शब्दे द्रष्टव्यम् । तत्र विशेषो

यथा । तत्र बालातुरवृद्धव्यतिरेकेण दिवा न

भोक्तव्यम् । तत्र पार्व्वणश्राद्धं कृत्वा प्रदोषे प्राची-

नावीती दक्षिणामुखो ज्वलदुल्काम् ।

"ॐ शस्त्राशस्त्रहतानाञ्च भुतानां भूतदर्शयोः ।

उज्ज्वलज्योतिषा देहं दहेयं व्योमवह्निना" ॥

इत्यनेन गृह्णीयात् ।

"ॐ अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम

।

उज्ज्वलज्योतिषा दग्धास्ते यान्तु परमां गतिम्" ॥

इत्यनेन भूमौ स्थापयेत् ।

"ॐ यमलोकं परित्यज्य आगता ये महालये ।

उज्ज्वलज्योतिषा वर्त्म प्रपश्यन्तो व्रजन्तु ते" ॥

इत्यनेन पितॄन् विसर्ज्जयेत् । यद्येवं पूर्ब्बदिन एव

प्रदोषव्यापिन्यमावास्या तदा पूर्ब्बदिन एव श्राद्ध-

मकृत्वापि उल्कादानं कर्त्तव्यम् । आचारात्

पञ्चभूतोपाख्यानञ्च श्रोतव्यम् । उभयतः प्रदोष-

व्याप्तौ परदिन एव युग्मात् । उभयतः प्रदोषा-

प्राप्तावपि उल्कादानं परदिने पार्व्वणानुरोधात् ।

अत्रैव पूर्ब्बदिने लक्ष्मी रात्रौ पूज्या ।

"अमावस्या यदा रात्रौ दिवाभागे चतुर्द्दशी ।

पूजनीया तदा लक्ष्मीर्व्विज्ञेया सुखरात्रिका" ॥

इति वचनात् । लक्ष्मीपूजाविषयेऽप्येवं व्यवस्था

।

ततो गृहमध्ये उत्तराभिमुखो लक्ष्मीं पूजयेत् ।

वक्तव्यम् । किन्तु मासीत्यनन्तरं
तुलास्थरवा-
वित्यधिकं वक्तव्यम् । चान्द्रस्नानवाक्यन्तु
वैशाख-
कृत्ये अनुसन्धेयम् । तथा वायुपुराणे ।
“यदीच्छेद्विपुलान् भोगान्
चन्द्रसूर्य्यग्रहोपमान् ।
कार्त्तिकं सकलं व्याप्य प्रातःस्नायी
भवेन्नरः” ॥ * ॥
तथा च गारुडे ।
“गवामयुतदानेन यत् फलं लभते खग ! ।
तुलसीपत्रकैकेन तत् फलं कार्त्तिके स्मृतम्”
॥
ॐअद्येत्यादि
तुलसीपत्रकैकसमसंख्यायुतधेनु-
दानजन्यफलसमफलप्राप्तिकामःएतानि
तुलसी-
पत्राणि श्रीविष्णवेऽहं ददे । इत्यभिलप्य
एतानि
तुलसीपत्राणि श्रीविष्णवे नमः । इत्यनेन
दद्यात् ॥ * ॥
ब्रह्माण्डपुपाणे ।
“विष्णुवेश्मनि यो दद्यात् कार्त्तिके मासि
दीपकम् ।
अग्निष्टोमसहस्रस्य फलमाप्नोति मानवः ॥
ॐदामोदराय नभसि तुलायां लोलया सह ।
प्रदीपन्ते प्रयच्छामि नमोऽनन्ताय वेधसे” ॥
लोलया लक्ष्म्या ।
“इति मन्त्रेण यो दद्यात् प्रदीपं सर्पिरादिना ।
आकाशे मण्डपे वापि स चाक्षयफलं लभेत्”
॥
स्नानवत् । ॐअद्येत्यादि
अमुकतिथावारभ्य तुला-
स्थरविं यावत् प्रत्यहं
अमुकगोत्रोऽमुकदेवशर्म्मा
अक्षयदीपदानफलप्राप्तिकामः
श्रीविष्णुप्रीतिकामो
चण्डालो जायते राजन् कार्त्तिके मांसभक्षणात्” ॥
तथा च महाभारते ।
“कौमुदन्तु विशेषेण शुक्लपक्षे नराधिप ! ।
वर्ज्जयेत् सर्व्वमांसानि धर्म्मो ह्यत्र विधीयते” ॥
कौमुदं कार्त्तिकम् । कार्त्तिकमधिकृत्य ब्रह्म-
पुराणम् ।
“एकादश्यादिषु तथा तासु पञ्चसु रात्रिषु ।
दिने दिने च स्नातव्यं शीतलासु नदीषु च ।
वर्ज्जितव्या तथा हिंसा मांसभोजनमेव च” ॥
ततश्च मांसभोजननिषेधे कार्त्तिकमासतत्शुक्ल-
ततः स्वस्तिवाचनपूर्ब्बकं ॐ सूर्य्यः सोम इति
ॐ तद्विष्णोरिति च पठित्वा तिलपुष्पजलान्या-
दाय ॐ तत्सदित्युच्चार्य्य ॐ अद्येत्यादि
अमुक-
गोत्रोऽमुकदेवशर्मा परमविसूतिलाभकामो
लक्ष्मी-
पूजनमहं करिष्ये । इति संकल्प्य शालग्रामे
घटादिस्थजले वा भूतशुद्ध्यादिकं कृत्वा
लक्ष्मीं-
पूजयेत् । तद्यथा । ॐ पाशाक्षमालिकाम्भोज
इत्यादिना ध्यात्त्वां । ॐ भूर्भुवःस्वर्म्मह ।
लक्ष्मि !
इहागच्छ इत्याद्यावाह्य एतत्पाद्यं ॐ लक्ष्म्यै नमः
।
एवमर्घ्याचमनीयगन्धपुष्पधूपदीपनैवेद्यपुनराचम-
नीयताम्बूलादि प्रत्येकं दद्यात् ।
“ॐ नमस्ते सर्व्वदेवानां वरदासि हरिप्रिये ! ।
या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्च्चणात्”
॥
इत्यनेन पुष्पाञ्जलित्रयं दत्त्वा प्रणमेत् ।

:ॐ विश्वरूपस्य भार्य्यासि पद्मे पद्मालये ! शुभे ! ।

सर्व्वतः पाहि मां देवि महालक्ष्मि ! नमोऽस्तुते" ॥

ततः । "सुखरात्र्याः प्रदोषे तु कुवेरं पूजयन्ति ये" ॥

इति रुद्रधरवचनात् । कुवेरमपि पाद्यादिभिः पूजयेत् ।

"ॐ धनदाय नमस्तुभ्यं निधिपद्माधिपाय च ।
भवन्तु त्वत्प्रसादान्मे धनधान्यादिसम्पदः" ॥

इति पठित्वा । ॐ कुवेराय नम इति त्रिः पूज-येत् । ततो गृहादिषु दीपान्दद्यात् । तत्र मन्त्रः । ॐ अग्निज्योती रविज्योतिश्चन्द्रज्योतिस्तथैव च ।
उत्तमः सर्व्वज्योतीनां दीपोऽयं प्रतिगृह्यताम् ॥

ततो ब्राह्मणान् बन्धूंश्च भोजयित्वा स्वयं भुञ्जीत ।

तत्र प्रत्यूषे भविष्योक्तं कर्म्म कर्त्तव्यम् । गोरोचना-तिलकधारणं प्रदीपवन्दनं कृत्वा लक्ष्मीं त्रिः पूज-येत् ॥ तत्र मन्त्रः ।

"ॐ विश्वरूपस्य भार्य्यासि पद्मे पद्मालये ! शुभे ! ।
मलालक्ष्मि ! नमस्तुभ्यं सुखरात्रिं कुरुष्व मे ॥
वर्षाकाले महाघोरे यन्मया दुष्कृतं कृतम् ।
सुखरात्रि ! प्रभातेऽद्य तन्मे लक्ष्मीर्व्यपोहतु ॥
या रात्रिः सर्व्वभूतानां या च देवेष्ववस्थिता ।
सम्बत्सरप्रिया या च सा ममास्तु सुमङ्गला ॥
माता त्वं सर्व्वलोकानां देवानां सृष्टिसम्भवा ।
आख्याता भूतले देवि ! सुखरात्रि ! नमोऽस्तु ते" ॥

ॐ लक्ष्म्यै नमः इति त्रिः पूजयेत् ॥ अन्यत् सुख-रात्रिशब्दे द्रष्टव्यम् ॥ * ॥

अथ द्यूतप्रतिपत् । तत्र प्रभाते अक्षक्रीडादिकं

कार्य्यम् । तत्र जयेवर्षं शुभम् । पराजये वर्षम-शुभम् । ततः संकल्प्य शालग्रामे जले वा एतत् पाद्यं ॐ बलये नमः । इत्यादि संपूज्य ।

"ॐ बलिराज ! नमस्तुभ्यं विरोचनसुत प्रभो ! ।
भविष्येन्द्र सुराराते ! पूजेयं प्रतिगृह्यताम्" ॥

अनेन पुष्पाञ्जलित्रयं दद्यात् ।

तत ॐ चित्रगुप्ताय नमः । इत्यनेन पूजयेत् । तत ॐ यमदूतेभ्यो नमः । इत्यनेन पाद्यादिभिः पूजयेत् । यमुनाञ्च पाद्यादिभिः संपूज्य प्रणमेत् ।

"ॐ यमस्वसर्नमस्तेऽस्तु यमुने ! लोकपूजिते ।
वरदा भव मे नित्यं सूर्य्यपुत्त्रि ! नमोऽस्तु ते" ॥

ततो भ्रातृभोजनकाले अन्नादिकं दत्त्वा भगिनी पठेत् ।

"भ्रातस्तवानुजाताहं भुङ्क्ष्व भक्तमिदं शुभम् ।
प्रीतये यमराजस्य यमुनाया विशेषतः" ॥

ज्येष्ठा चेत् तवाग्रजाताहमिति वदेत् । ततः पुष्टिकामो भ्राता भुञ्जीत । "यत्नेन भगिनीह-स्तात् भोक्तव्यं पुष्टिवर्द्धनं" इति वचनात् ॥ * ॥

विष्णूत्थानं उत्थानैकादशीशब्दे द्रष्टव्यम् । तत्र

कार्त्तिकशुक्लैकादश्यादितिथिपञ्चके वकपञ्चकम् ।

"वकोऽपि तत्र नाश्नीयान्मत्स्यञ्चैव कदाचन" ।

इति वचनात् ॥ कार्त्तिक्यां गोदानादौ फलाधि-क्यम् । "कार्त्तिक्यां गोप्रदो भवेत्" । इति वच-नात् । इति कृत्यतत्त्वम् ॥ * ॥ * ॥ अपि च ।

अथं कार्त्तिकव्रतनित्यता ।

स्कान्देब्रह्मनारदसंवादे ।

"दुष्प्राप्यं प्राप्य मानुष्यं कार्त्तिकोक्तं चरेन्न हि ।
धर्म्मं धर्म्मभृतां श्रेष्ठ ! स मातृपितृघातकः ॥
अव्रतेन क्षिपेद्यस्तु मासं दामोदरप्रियम् ।
तिर्य्यग्योनिमवाप्नोति सर्व्वधर्म्मवहिष्कृतः ॥
स ब्रह्महा स गोघ्नश्च स्वर्णस्तेयी सदानृती ।
न करोति मुनिश्रेष्ठ ! यो नरः कार्त्तिके व्रतम् ॥
विधवा च विशेषेण व्रतं यदि न कार्त्तिके ।
करोति मुनिशार्दूल ! नरकं याति सा ध्रुवम् ॥
व्रतन्तु कांर्त्तिके मासि यदा न कुरुते गृही ।
इष्टापूर्त्तं वृथा तस्य यावदाहूतनारकी ॥
संप्राप्ते कार्त्तिके मासे द्विजो व्रतपराङ्मुखः ।
भवन्ति विमुखाः सर्व्वे तस्य देवाः सवासवाः ॥
इष्ट्वा च तहुभिर्यज्ञैः कृत्वा श्राद्धशतानि च ।
स्वर्गं नाप्नोति विप्रेन्द्र ! अकृत्वा कार्त्तिके व्रतम् ॥
यतिश्च विधवा चैव विशेषेण वनाश्रमी ।
कार्त्तिके नरकं यान्ति अकृत्वा वैष्णवं व्रतम् ॥
वेदैरधीतैः किं तस्य पुराणपठनैश्च किम् ।
कृतं यदि न विप्रेन्द्र ! कार्त्तिके वैष्णवं व्रतम् ॥
जन्मप्रभृति यत्पुण्यं विधिवत्समुपार्ज्जितम् ।
"पिण्डदानं पितृणाञ्च पितृपक्षे न वै कृतम् ।
व्रतं न कार्त्तिके मासि श्रावण्यामृषितर्पणम् ॥
चैत्रे नान्दोलितो विष्णुर्म्माघस्नानं न सज्जले ।
न कृता मर्द्दकी पुष्ये श्रावणे रोहिणाष्टमी ॥
सङ्गमे न कृता येन द्वादशी श्रवणान्विता ।
कुत्र यास्यन्ति ते मूढा नाहं जानामि नारद !" ॥

पाद्मे च । श्रीसौनकादिमुनिगणसंवादे ।

"मानुषः कर्म्मभूमौ यः कार्त्तिकं नयते मुधा
चिन्तामणिं करे प्राप्य क्षिपते कर्द्दमाम्बुनि ॥
नियमेन विना विप्राः कार्त्तिकं यः क्षिपेन्नरः ।
कृष्णः पराङ्मुखस्तस्य यस्मादूर्ज्जोऽस्य वल्लभः" ॥ * ॥

तत्र विशेषेण स्नानदानादिसत्कर्म्मनित्यता ।

स्कान्दे तत्रैव ।

"यैर्न्न दत्तं हुतं जप्तं न स्नानं न हरेर्व्रतम् ।
न कृतं कार्त्तिके पुत्त्र ! द्विजास्ते वै नराधमाः" ।

किञ्च ।

"यैन्न दत्तं हुतं जप्तं कार्त्तिके न व्रतं कृतम् ।
तेनात्मा हारितो नूनं न प्राप्तं प्रार्थितं फलम्" ।

किञ्च ।

"संप्राप्ते कार्त्तिके मासि ये रता न जनार्द्दने ।
तेषां सौरिपुरे वासः पितृभिः सह नारद" ॥

किञ्च ।

"कार्त्तिके नार्च्चितो यैस्तु भक्तिभावेन केशवः ।
नरकं ते गमिष्यन्ति यमदूतैस्तु यन्त्रिताः ॥
जन्मकोटिसहस्रैस्तु मानुष्यं प्राप्य दुर्ल्लभम् ।
कार्त्तिके नार्च्चितो विष्णुर्हारितं तेन जन्म वै ॥
विष्णोः पूजा कथा विष्णोर्वैष्णवानाञ्च दर्शनम् ।
न भवेत् कार्त्तिके यस्य हन्ति पुण्यं दशाब्दिकम्" ॥

अथ कार्त्तिकमाहात्म्यम् । स्कान्दे ।

"कार्त्तिकस्य तु माहात्म्यं प्राक् सामान्येन लिख्यते ।
ततो विशेषतस्तत्र कर्म्म देशादिभेदतः" ॥

अथ सामान्यतः स्कान्दे तत्रैव ।

"कार्त्तिकस्य तु मासस्य कोट्यंशेनापि नार्हति ।

"यो यो यादृशभावेन तिष्ठत्यस्यां युधिष्ठिर ! ।
हर्षदैन्यादिना तेन तस्य वर्षं प्रयाति हि" ॥
तथा ।
"महापुण्या तिथिरियंबलिराज्यविवर्द्धिनी ।
स्नानं दानं शतगुणं कार्त्तिकेऽस्यां तिथौ भवेत् ॥
* ॥

अथ भ्रातृद्वितीया ।
तत्राष्टधाविभक्तदिनपञ्चम-

यामार्द्धप्राप्तायां द्वितीयायां उभयादने तथा
चेत्परदिने कृत्यं युग्मात् । तत ॐ तत्सदि-
त्युच्चार्य्य ॐ अद्येत्यादि
अमुकगोत्रोऽमुकदेवशर्म्मा
स्वरक्षणकामो यमादिपूजनमहं करिष्ये । इति
संकल्प्य शालग्रामे घटादिस्थजले वा पूजयेत् ।
एतत् पाद्यं ॐ यमाय नमः । एवं क्रमेण संपूज्य ।
"एह्येहि मार्त्तण्डज ! पाशहस्त !
यमान्तकालोकधरामरेश ! ।
भ्रातृद्वितीयाकृतदेवपूजां
गृहाण चार्घ्यं भगवन्नमस्ते" ॥
इदमर्घ्यं ॐ यमाय नमः तत आचमनीयादिकं
दत्त्वा प्रणमेत् ।
"ॐ धर्म्मराज ! नमस्तुभ्यं नमस्ते यमुनाग्रज ! ।
पाहि मां किङ्करैः सार्द्धं सूर्य्यपुत्त्र ! नमोस्तु ते"
॥

भस्मी भवति तत्सर्व्वमकृत्वा कार्त्तिके व्रतम् ॥
यद्दत्तञ्च परं जप्तं कृतञ्च सुमहत्तपः ।
सर्व्वं विफलतामेति अकृत्वा कार्त्तिके व्रतम् ॥
सप्तजन्मार्ज्जितं पुण्यं वृथा भवति नारद ! ।
अकृत्वा कार्त्तिके मासि वैष्णवं व्रतमुत्तमम् ॥
पापभूतास्तु ते ज्ञेया लोके मर्त्या महामुने ! ।
वैष्णवाख्यं व्रतं यैस्तु न कृतं कार्त्तिके शुभम्" ॥
किञ्च ।
"अकृत्वा नियमं विष्णोः कार्त्तिकं यः क्षिपेन्नरः ।
जन्मार्ज्जितस्य पुण्यस्य फलं नाप्नोति नारद !"
॥
किञ्च ।
"नियमेन विना चैव यो नयेत् कार्त्तिकं मुने ! ।
चातुर्म्मास्यं तथा चैव ब्रह्महा स कुलाधमः" ॥
किञ्च ।

सर्व्वतीर्थेषु यत् स्नानं सर्व्वदानेषु यत् फलम्
॥
एकतः सर्व्वतीर्थानि सर्व्वे यज्ञा सदक्षिणाः ।
एकतः पुष्करे वासः कुरुक्षेत्रे हिमाचले ॥
मेरुतुल्यसुवर्णानि सर्व्वदानानि चैकतः ।
एकतः कार्त्तिको वत्स ! सर्व्वदा केशवप्रियः
॥
यत् किञ्चित् क्रियते पुण्यं विष्णुमुद्दिश्य
कार्त्तिके
तदक्षयं भवेत्सर्व्वं सत्योक्तं तव नारद ! ॥
कार्त्तिकं खलु वै मासं सर्व्वमासेषु चोत्तमम् ।
पुण्यानां परमं पुण्यं पावनानाञ्च पावनम् ॥
यथा नदीनां विप्रेन्द्र शैलानाञ्चैव नारद ! ।
उदधीनाञ्च विप्रर्षे ! क्षयो नैवोपपद्यते ॥
पुण्यं कार्त्तिकमासे तु यत् किञ्चित् क्रियते
मुने ! ।
न तस्यास्ति क्षयो ब्रह्मन् पापस्याप्येवमेव च
॥
न कार्त्तिकसमो मासो न कृतेन समं युगम् ।
न वेदसदृशं शास्त्रं न तीर्थं गङ्गया समम् ॥
कार्त्तिकः प्रवरो मासो वैष्णवानां प्रियः सदा ।
कार्त्तिकं सकलं यस्तु भक्त्या सेवेत वष्णवः
॥
पितृनुद्धरते सर्व्वान् नरकस्थान् महामुने" ! ।
पाद्मे च तत्रैव ।

:"द्वादशस्वपि मासेषु कार्त्तिकः कृष्णवल्लभः ।
तस्मिन् संपूजितो विष्णुरल्पकैरप्युपायनैः ॥
ददाति वैष्णवं लोकमित्येवं निश्चितं मया ।
यथा दामोदरो भक्तवत्सलो विदितो जनै
तस्यायन्तादृशो मासः स्वल्पमप्युरुकारकः ।
दुर्ल्लभो मानुषो देहो देहिनां क्षणभङ्गुरः ॥
तत्रापि दुर्ल्लभः कालः कार्त्तिको हरिवल्लभः ।
दीपेनापि हि यत्रासौ प्रीयते हरिरीश्वरः ॥
सुगतिञ्च ददात्येव परदीपप्रबोधनात्' ॥ * ॥
अथ व्रतमाहात्म्य स्कान्दे तत्रैव ।
"व्रतानामिह सर्व्वेषामेकजन्मानुगं फलम् ।
कार्त्तिके तु व्रतस्योक्तं फलं जन्मशतानुगम् ॥
अक्रूरतीर्थे विप्रेन्द्र ! कार्त्तिक्यां समुपोष्य च ।
स्नात्वा यत् फलमाप्नोति तच्छ्रुत्वा वैष्णवं व्रतम् ॥
वाराणस्यां कुरुक्षेत्रे नैमिषे पुष्करेऽर्ब्बुदे ।
गत्वा यत् फलमाप्नोति व्रतं कृत्वा तु कार्त्तिके ॥
अनिष्ट्वा च सदा यज्ञैर्न कृत्वा पितृभिः स्वधाम् ।
व्रतेन कार्त्तिके मासि वैष्णवन्तु पदं व्रजेत् ॥
प्रवृत्तानाञ्च भक्ष्याणां कार्त्तिके नियमे कृते ।
अवश्यं कृष्णरूपत्वं प्राप्यते मुक्तिदं शुभम्" ॥
किञ्च ।
"ब्राह्मणः क्षत्त्रियो वैश्यः शूद्रो वा मुनिसत्तम ! ।
वियोनिं न व्रजत्येव व्रतं कृत्वा तु कार्त्तिके" ॥
किञ्च ।
"कार्त्तिके मुनिशार्दूल ! स्वशक्त्या वैष्णवं व्रतम् ।
यः करोति यथोक्तन्तु मुक्तिस्तस्य करे स्थिता ॥
सुपुण्ये कार्त्तिके मासि देवर्षिपितृसेविते ।
क्रियमाणे व्रते नृणां स्वल्पेऽपि स्यान्महाफलम्" ॥ * ॥
अथ कर्म्मविशेषमाहात्म्यम् । स्कान्दे तत्रैव ।
"दानं दत्तं हुतं जप्तं तपश्चैव तथा कृतम् ।
तदक्षयफलं प्रोक्तं कार्त्तिके च द्विजोत्तम" ! ॥
किञ्च ।
"यत् किञ्चित् कार्त्तिके दत्तं विष्णुमुद्दिश्य मानवैः ।
तदक्षयं लभ्यते वै अन्नदानं विशेषतः" ॥
किञ्च ।

जागरं पश्चिमे यामे यः करोति महामुने ! ॥
कार्त्तिके सन्निधौ विष्णोस्तत्पदं करसंस्थितम् ।
साधुसेवा गवां ग्रासः कथा विष्णोरथार्च्चनम् ।
जागरः पश्चिमे यामे दुर्ल्लभः कार्त्तिके कलौ" ॥
किञ्च ।
"जलधेनुसहस्रञ्च वृषसंस्थे दिवाकरे ।
तोयं दत्त्वा यदाप्नोति स्नानं कृत्वा तु कार्त्तिके ॥
सन्निहत्यां कुरुक्षेत्रे राहुग्रस्ते दिवाकरे ।
सूर्य्यवारेण यत्स्नानं तदेकाहेन कार्त्तिके ॥
पितॄनुद्दिश्य यद्दत्तं कार्त्तिके कृष्णवल्लभे ।
अन्नोदकं मुनिश्रेष्ठ ! अक्षयं जायते नृणाम्" ॥ * ॥
किञ्च ।
"गीतशास्त्रविनोदेन कार्त्तिकं यो नयेन्नरः ।
न तस्य पुनरावृत्तिर्म्मया दृष्टा कलिप्रिय !" ॥
किञ्च ।
"प्रदक्षिणञ्च यः कुर्य्यात् कार्त्तिके विष्णुसद्मनि ।
पदे पदेऽश्वमेधस्य फलभागी भवेन्नरः ॥
गीतं वाद्यञ्च नृत्यञ्च कार्त्तिके पुरतो हरेः ।
यः करोति नरो भक्त्या लभते चाक्षयं फलम् ॥
हरेर्नाम सहस्राख्यं गजेन्द्रस्य च मोक्षणम् ।
कार्त्तिके पठते यस्तु पुनर्जन्म न विद्यते ॥
कार्त्तिके पश्चिमे यामे स्तवं गानं करोति यः ।
वसते श्वेतद्वीपे तु पितृभिः सह नारद ! ॥
नैवेद्यदानेन तु हरेः कार्त्तिके यवसंख्यया ।
युगानि वसते स्वर्गे तावन्ति मुनिसत्तम ! ॥
अगुरुन्तु सकर्पूरं यो दहेत् केशवाग्रतः ।
कार्त्तिके तु मुनिश्रेष्ठ ! युगान्ते न पुनर्भवः" ॥
किञ्च ।
"नियमेन कथां विष्णोर्ये शृण्वन्ति च भाविताः ।
श्लोकादर्द्धं श्लोकपादं वा कार्त्तिके गोशतं फलम् ॥
सर्व्वधर्म्मान् परित्यज्य कार्त्तिके केशवाग्रतः ।
शास्त्रस्योच्चारणं पुण्यं श्रोतव्यञ्च महामुने ! ॥
श्रेयसा लोभबुद्ध्या वा यः करोति हरेः कथाम् ।
कार्त्तिके मुनिशार्दूल ! कुलानां तारयेच्छतम् ॥
नित्यं शास्त्रविनोदेन कार्त्तिकं यः क्षिपेन्नरः ।

जपन् हविष्यभुक् दान्तः सर्व्वपापैः प्रमुच्यते ॥
कार्त्तिकन्तु नरो मासं यः कुर्य्यादिकभोजनम् ।
शूरश्च बहुवीर्य्यश्च कीर्त्तिमांश्च स जायते" ॥
किञ्च ।
"पलाशपत्रभोजी च कार्त्तिके पुरुषो नरः ।
निष्पापः स्यात्तु नैवेद्यं हरेर्भुक्त्वा विमुच्यते ॥
मध्यस्थमैश्वरं पत्रं वर्जयेद्ब्राह्मणेतरः" ।
किञ्च ।
"अपराधसहस्राणि पातकानि महान्त्यपि ।
क्षमतेऽस्य हरिर्द्देवः पूजितः कार्त्तिके प्रभुः ॥
नैवेद्यं पायसं विष्णोः प्रियं खण्डं घृतान्वितम् ।
विभज्य तच्च भुञ्जानो यज्ञसाम्यं दिने दिने" ॥
तत्रैव श्रीकृष्णसत्या संवादे ।
"स्नानं जागरणं दीपं तुलसीवनपालनम् ।
कार्त्तिके ये प्रकुर्व्वन्ति ते नरा विष्णुमूर्त्तयः ॥
इत्थं दिनत्रयमपि कार्त्तिके ये प्रकुर्व्वते ।
देवानामपि ते वन्द्याः किंयैराजन्मतत् कृतम्" ॥ * ॥
तत्रैव कार्त्तिकव्रताङ्गानि ।
"हरिजागरणं प्रातःस्नानं तुलसिसेवनम् ।
उद्यापनं दीपदानं व्रतान्येतानि कार्त्तिके" ॥
किञ्च ।
"पञ्चभिर्व्रतकैरेभिः सम्पूर्णं कार्त्तिके व्रती ।
फलमाप्नोति तत् प्रोक्तं भुक्तिमुक्तिफलप्रदम् ॥
विष्णोः शिवस्य वा कुर्य्यादालये हरिजागरम् ।
कुर्य्यादश्वत्थमूले वा तुलसीनां वनेषु च ॥
आपद्गतो यदाप्यम्भो न लभेत् सवनाय सः ।
व्याधितो वा पुनः कुर्य्याद्विष्णोर्न्नामापमार्ज्जनम् ॥
उद्यापनविधिं कर्त्तुमशक्तो यो व्रते स्थितः ।
ब्राह्मणान् भोजयेच्छक्त्या व्रतसम्पूर्णहेतवे ॥
अशक्तो दीपदानस्य परदीपान् प्रबोधयेत् ।
तेषां वा रक्षणं कुर्य्याद्वातादिभ्यः प्रयत्नतः ॥
अभावे तुलसीनाञ्च पूजयेद्वैष्णवं द्विजम् ।
सर्व्वाभावे व्रती कुर्य्याद्ब्राह्मणानां गवामपि ॥
सेवां वा बोधिवटयोर्व्रतसम्पूर्णहेतवे" ॥ * ॥
अथ दीपदानमाहात्म्यम् । स्कान्दे तत्रैव ।
"कृत्वा कोटिसहस्राणि पातकानि बहून्यपि ।
निमेषार्द्धेनदीपस्य विलयं यान्ति कार्त्तिके" ॥
किञ्च ।
"शृणु दीपस्य माहात्म्यं कार्त्तिके केशवप्रियम् ।
दीपदानेन विप्रेन्द्र ! न पुनर्जायते भुवि ॥
रविग्रहे कुरुक्षेत्रे नर्म्मदायां शशिग्रहे ।
तत् फलं कोटिगुणितं दीपदानेन कार्त्तिके ॥

"यस्तु सम्बत्सरं पूर्णमग्निहोत्रमुपासते ।
कार्त्तिके स्वस्तिकं कृत्वा सममेतन्न संशयः ॥
कार्त्तिके या करोत्येवं केशवालयमण्डलम् ।
स्वर्गस्था शोभते सा तु कपोती पक्षिणी यथा ॥
यः करोति नरो नित्यं कार्त्तिके पत्रभोजनम् ।
न स दुर्गतिमाप्नोति यावदिन्द्राश्चतुर्द्दश ॥
जन्मप्रभृति यत्पापं मानवैश्च कृतं भवेत् ।
तत्सर्व्वं नाशमाप्नोति ब्रह्मपत्रेषु भोजनात् ॥
सर्व्वकामफलं तस्य सर्व्वतीर्थफलं लभेत् ।
न वापि नरकं पश्येत्ब्रह्मपत्रेषु भोजनात् ॥
ब्रह्म चैष स्मृतः साक्षात् पलाशः सर्व्वकामदः ।
मध्यमं वर्ज्जितं पत्रं शूद्रस्य मुनिसत्तम ! ॥
भुञ्जन्नरकमाप्नोति यावदिन्द्राश्चतुर्द्दश ।
तिलदानं नदीस्नानं सत्कथा साधुसेवनम् ॥
भोजनं ब्रह्मपत्रेष कार्त्तिके मुक्तिदायकम् ।
जागरं कार्त्तिके मासि यः करोत्यरुणोदये ॥
दामोदराग्रे विप्रेन्द्र ! गोसहस्रफलं लभेत् ! ।

निर्द्दहेत् सर्व्वपापानि यज्ञायुतफलं लभेत् ॥
न तथा तुष्यते दानैर्न यज्ञैर्गोगजादिकैः ।
यथाशास्त्रकथालापैः कार्त्तिके मधुसूदनः ॥
कार्त्तिके मुनिशार्दूल ! यः शृणोति हरेः कथाम्
।
स निस्तरति दुर्गाणि जन्मकोटिशतानि च ॥
यः पठेत् प्रयतो नित्यं श्लोकं भागवतं मुने ! ।
अष्टादशपुराणानां कार्त्तिके फलमाप्नुयात्" ॥
किञ्च ।
"सर्व्वान् धर्म्मान् परित्यज्य
इष्टापूर्त्तादिकान्नरः ।
कार्त्तिके परया भक्त्या वैष्णवैः सह संवसेत्"
॥
पाद्मे च तत्रैव ।
"कार्त्तिके भूमिशायी यो ब्रह्मचारी हविष्यभुक्
।
पलाशपत्रे भुञ्जानो दामोदरमथार्च्चयेत् ॥
स सर्व्वपातकं हित्वा वैकुण्ठे हरिसन्निधौ ।
मोदते विष्णुसदृशो भजनानन्दनिर्वृतः" ॥
किञ्च ।
"कार्त्तिकं सकलं मासं प्रांतःस्नायी
जितेन्द्रियः ।

घृतेन दीपको यस्य तिलतैलेन वा पुनः ।
ज्वलते मुनिशार्दूल ! अश्वमेधेन तस्य किम् ॥
मन्त्रहीनं क्रियाहीनं शौचहीनं जनार्द्दने ।
सर्व्वं सम्पूर्णतां याति कार्त्तिके दीपदानतः ॥
तेनेष्टं क्रतुभिः सर्व्वैः कृतं तीर्थावगाहनम् ।
दीपदानं कृतं येन कार्त्तिके केशवाग्रतः ॥
तावद्गर्ज्जन्ति पुण्यानि स्वर्गे मर्त्ये रसातले ।
यावन्न ज्वलते ज्योतिः कार्त्तिके केशवाग्रतः ॥
श्रूयते चापि पितृभिर्गाथा गीता पुरा द्विज ! ।
भविष्यति कुलेऽस्माकं पितृभक्तः सुतो भुवि ॥

:कार्त्तिके दीपदानेन यस्तोषयति केशवम् ।
मुक्तिं प्राप्स्यामहे नूनं प्रसादाच्चक्रपाणिनः”
॥
किञ्च ।
“मेरुमन्दरमात्राणि कृत्वा पापान्यशेषतः ।
दहते नात्र सन्देहो दीपदानात्तु कार्त्तिके ॥
गृहे वायतने वापि दीपं दद्याच्च कार्त्तिके ।
पुरतो वासुदेवस्य महाफलविधायिनः ॥
स जातो मानुषो लोके स धन्यः स च
कीर्त्तिमान् ।
प्रदत्तः कार्त्तिके मासि दीपो वै मधुहाग्रतः ॥
निमिषार्द्धार्द्धमात्रेण दीपदानेन कार्त्तिके ।
न तत् क्रतुशतैः प्राप्यं फलं तीर्थशतैरपि ॥
सर्व्वानुष्ठानहीनोऽपि सर्व्वपापरतोऽपि सन् ।
पूयते नात्र सन्देहो दीपं दत्त्वा तु कार्त्तिके ॥
तन्नास्ति पातकं किञ्चित् त्रिषु लोकेषु नारद !
यन्न शोधयते दीपः कार्त्तिके केशवाग्रतः ॥
पुरतो वासुदेवस्य दीपं दत्त्वा तु कार्त्तिके ।
प्राप्नोति शाश्वतं स्थानं
सर्व्वाबाधाविवर्ज्जितम् ॥
यः कुर्य्यात् कार्त्तिके मासि कर्पूरेण तु
दीपकम् ।
द्वादश्याञ्च विशेषेण तस्य पुण्यं वदामि ते ॥
कुले तस्य प्रसूता ये ये भविष्यन्ति नारद ! ।
समतीताश्च ये केचिद् येषां सङ्ख्या न
विद्यते ॥
क्रीडित्वा सुचिरं कालं देवलोके यदृच्छया ।
ते सर्व्वे मुक्तिमायान्ति प्रसादाच्चक्रपाणिनः”
॥
किञ्च ।
“द्यूतव्याजेन विप्रेन्द्र ! कार्त्तिके केशवालयम्
।
द्योतयेद् यो महाभाग ! पुनात्यासप्तमं कुलम्
॥
कार्त्तिके दीपदानन्तु कुर्य्याद् यो वैष्णवालये
।
धनं पुत्त्रो यशः कीर्त्तिर्भवेत्तस्य च सर्व्वदा ॥
यथा च मथनाद्वह्निः सर्व्वकाष्ठेषु दृश्यते ।
तथा च दृश्यते धर्म्मो दीपदाने न संशयः” ॥
किञ्च ।
“निर्द्धनेनापि विप्रेन्द्र ! कृत्वा चैवात्मविक्रयम्
।
कर्त्तव्यं दीपदानन्तु यावत् कार्त्तिकपूर्णिमा ॥
मानुष्यं दुर्ल्लभं प्राप्य परां गतिमवाप सा” ॥ *
॥
अथ शिखरदीपमाहात्म्यम् ।
स्कान्दे तत्रैव ।
“यदा यदा भासयते दीपकः कलसोपरि ।
तदा तदा मुनिश्रेष्ठ ! द्रवते पापसञ्चयः ॥
यो ददाति द्विजातिभ्यो महीमुदधिमेखलाम् ।
हरेः शिखरदीपस्य कलां नार्हति षोडशीम् ॥
यो ददाति गवां कोटिं सवत्सां क्षीरसंयुताम् ।
हरेः शिखरदीपस्य कलां नार्हति षोडशीम् ॥
सर्व्वस्वदानं कुरुते वैष्णवानां महामुने ! ।
शिखरोपरि दीपस्य कलां नार्हति षोडशीम्”
॥
किञ्च ।
“यः करोति परं दीपं मूल्येनापि महामुने ! ।
शिखरोपरि मध्ये च कुलानां तारयेच्छतम् ॥
विमानं ज्योतिषा दीप्तं ये निरीक्षन्ति कार्त्तिके
।
केशवस्य महाभक्त्या कुले तेषां न नारकी ॥
दिवि देवा निरीक्षन्ते विष्णुदीपप्रदं नरम् ।
कदा भविष्यत्यस्माकं सङ्गमः पुण्यकर्म्मणा
॥
कार्त्तिके कार्त्तिकीं यावत् प्रासादोपरि
दीपकम् ।
यो ददाति बुनिश्रेष्ठ ! तस्येन्द्रत्वं न दुर्ल्लभम्”
॥ * ॥
अथ तत्र दीपमालामाहात्म्यम् ।
स्कान्दे तत्रैव ।
“दीपपङ्क्तेश्च रचनां सवाह्याभ्यन्तरे हरेः ।
विष्णोर्व्विमाने कुरुते स नरः शङ्खचक्रधृत् ॥
दीपपङ्क्तेश्च रचनां कुरुते केशवालये ।
तस्यालये प्रसूतानां लक्षाणां नरकं न हि ॥
विष्णोर्व्विमानं दीपाढ्यं सवाह्याभ्यन्तरे मुने !
।
दीपोद्यतकरे मार्गे तेन प्राप्तं परं पदम्” ॥
भविष्ये च ।
“यः कुर्य्यात् कार्त्तिके मासि शोभनां
दीपमालिकाम् ।
प्रबोधे चैव द्वादश्यामेकादश्यां विशेषतः ॥
सूर्य्यायतप्रकाशस्तु तेजसा भासयन् दिशः ।
तेजोराशिविमानस्थो जगदुद्योतयंस्त्विषा ॥
यावत्प्रदीपसङ्ख्या तु घृतेनापूर्य्य बोधिता ।
अथ देशविशेषे कार्त्तिकमाहात्म्यविशेषः ॥
पाद्मे तत्रैव ।
“यत्र कुत्रापि देशेऽयं कार्त्तिकः स्नानदानतः ।
अग्निहोत्रसमफलः पूजायाञ्च विशेषतः ॥
कुरुक्षेत्रे कोटिगुणो गङ्गायाञ्चापि तत्समः ।
ततोऽधिकः पुष्करे स्याद्द्वारकायाञ्च भार्गव ! ॥
कृष्णुसालोक्यदो मासः पूजास्नानैश्च कार्त्तिकः ।
अन्याः पूर्य्यास्तत्समाना मुनयो मथुरां विना ॥
दामोदरत्वं हि हरेस्तत्रैवासीद्यतः किल ।
मथुरायां ततश्चोर्ज्जो वैकुण्ठप्रीतिबर्द्धनः ।
कार्त्तिको मथुरायां वै परमावधिरिष्यते ।
यथा माघे प्रयागः स्याद्वैशाखे जाह्नवी यथा ॥
कार्त्तिके मथुरा सेव्या ततोत्कर्षः परो न हि ॥
मथुराया नरैरूर्ज्जे स्नात्वा दामोदरोऽर्च्चितः ।
कृष्णरूपा हि ते ज्ञेया नात्र कार्य्या विचारणा ।
दुर्ल्लभः कार्त्तिको विप्र ! मथुरायां नृणामिह ।
यत्रार्च्चितः स्वकं रूपं भक्तेभ्यः संप्रयच्छति ॥
भुक्तिं मुक्तिं हरिर्द्दद्यादर्च्चितोऽन्यत्र सेविनाम् ।
भक्तिञ्च न ददात्येष यतो वश्यकरी हरेः ॥
सा त्वञ्जसा हरेर्भक्तिर्लभ्यते कार्त्तिके नरैः ।
मथुरायां सकृदपि श्रीदामोदरपूजनात् ॥
मन्त्रद्रव्यविहीनञ्च विधिहीनञ्च पूजनम् ।
मन्यते कार्त्तिके देवो मथुरायां सदर्च्चनम् ॥
यस्य पापस्य युज्येत मरणान्ता हि निष्कृतिः ।
तच्छद्ध्यर्थमिदं प्रोक्तं प्रायश्चित्तं सुनिश्चितम् ।
कार्त्तिके मथुरायां वै श्रीदमोदरपूजनम् ॥
कार्त्तिके मथुरायां वै पूजनाद्दर्शनं ध्रुवः ।
शीघ्रं संप्राप्तवान् बालो दुर्ल्लभं योगतत्परैः ॥
सुलमा मथुरा भूमौ प्रत्यब्दं कार्त्तिकस्तथा ।
तथापि संसरन्तीह नरा मूढा भवाम्बुधौ ॥
किं यज्ञैः किं तपोभिश्च तीर्थैरन्यैश्च सेवितैः ।
कार्त्तिके मथुरायाञ्चेदर्च्च्यते राधिकाप्रियः ॥
यानि सर्व्वाणि तीर्थानि नदा नद्यः सरांसि च ।
कार्त्तिके निवसन्त्यत्र माथुरे सर्व्वमण्डले ॥
कार्त्तिके जन्मसदने केशवस्य च ये नराः ।
सकृत्प्रविष्टाः श्रीकृष्णं ते यान्ति परमव्ययम् ॥
परोपहासम्द्दिश्य कार्त्तिके हरिपूजया ।
मथुरायां लभेद्भक्तिं किं पुनः श्रद्धया नरः” ॥ इति ॥
“इत्थं कार्त्तिककृत्यानि व्यक्तान्येव स्वतोऽभवन् ।
तत्र किञ्चिद्विशेषेण तद्विधिर्लिख्यतेऽधुना” ॥ * ॥

अथ कार्त्तिककृत्यविधिः ।

तत्रोपक्रमकालश्चोक्तः

वैष्णवो न स मन्त्यव्यः संप्राप्ते कार्त्तिके मुने !
।
यो न यच्छति मूढात्मा दीपं केशवसद्मनि” ॥
नारदीये श्रीरुक्याङ्गदमोहिनीसंम्वादे ।
“एकतः सर्व्वदानानि दीपदानानि चैकतः ।
कार्त्तिके न समं प्रोक्तं दीपदो ह्यधिकः
स्मृतः” ॥
पाद्मे च तत्रैव ॥
“कार्त्तिके खण्डदीपं यो ददाति हरिसन्निधौ ।
दिव्यकान्तिविमानाग्रे रमते स हरेः पुरे” ॥ *
॥
अथ तत्र परदीपप्रबोधनमाहात्म्यम्।
स्कान्दे तत्रैव ।
“पितृपक्षेऽन्नदानेन ज्यैष्ठाषाढे च वारिणा ।
कार्त्तिके तत् फलं पुंसां परदीपप्रबोधनात्॥
बोधनात् परदीपस्य वैष्णवानाञ्च सेवनात् ।
कार्त्तिके फलमाप्नोति राजसूयाश्वमेधयोः ॥
दीयमानन्तु ये दीपं बोधयन्ति हरेर्गृहे ।
परेण नृपशार्दूल ! निस्तीर्णा यमयातना ॥
न तद्भवति विप्रेन्द्र ! इष्टैरपि महामखैः ।
कार्त्तिके यत् फलं प्रोक्तं परदीपप्रबोधनात्॥
एकादश्यां परैर्द्दत्तं दीपं प्रज्वाल्य मूषिका ।

तावद्वर्षसहस्राणि विष्णुलोके महीयते” ॥ *
॥
अथ आकाशादिदीपमाहात्म्यम्।
पाद्मे तत्रैव ।
“उच्चैः प्रदीपमाकाशे यो दद्यात् कार्त्तिके
नरः ।
सर्व्वं कुलं समुद्धृत्य विष्णुलोकमवाप्नुयात्॥
विष्णुकेशवमुद्दिश्य दीपं दद्यात्तु कार्त्तिके ।
आकाशस्थं जलस्थञ्च शृणु तस्यापि
यत्फलम्॥
धनं धान्यं समृद्धिश्च पुत्त्रवानीश्वरो गृहे ।
लोचने च शुभे तस्य विद्वानपि च जायते” ॥
किञ्च ।
“विप्रवेश्मनि यो दद्यात् कार्त्तिके मासि
दीपकम् ।
अग्निष्टोमफलं तस्य प्रवदन्ति मनीषिणः ॥
चतुष्पथेषु रथ्यासु ब्राह्मणावसथेषु च ।
वृक्षमूलेषु गोष्ठेषु कान्तारे गहनेषु च ॥
दीपदानाद्धि सर्व्वत्र महाफलमवाप्नुयात्' ॥
॥ *
आकाशदीपदानमन्त्रः। तत्रैव ।
“दामोदराय नभसि तुलायां लोलया सह ।
प्रदीपन्ते प्रयच्छामि नमोऽनन्ताय वेधसे” ॥

श्रीकृष्णसत्यासवादीयकार्त्तिकमाहात्म्ये।
“आश्विनस्य तु मासस्य या शुक्लैकादशी भवेत् ।
कार्त्तिकस्य व्रतानीह तस्यां कुर्य्यादतन्द्रितः ॥
नित्यं जागरणायान्ते यामे रात्रेः समुत्थितः ।
शुचिर्भूत्वा प्रबोध्याथ स्तोत्रैर्नीराजयेत् प्रभुम् ॥
निशम्य वैष्णवान् धर्म्मान् वैष्णवैः सह हर्षितः ।
कृत्वा गीतादिकं प्रातर्देवं नीराजयेत् पुनः ॥
नद्यादौ च ततो गत्वाचम्य सङ्कल्पमाचरेत् ।
प्रभुं प्रार्थ्याथ तस्मै च दद्यादर्घ्यं यथाविधि ॥
तत्र सङ्कल्पमन्त्रः ।
“कार्त्तिकेऽहं करिष्यामि प्रातःस्नानं जनार्दन ! ।

:प्रीत्यर्थं तव देवेश दामोदर ! मया सह” ॥

प्रार्थनमन्त्रस्तु ।
“तव ध्यानेन देवेश ! जलेऽस्मिन् स्नातुमुद्यतः ।
त्वत्प्रसादाच्च मे पापं दामोदर ! विनश्यतु” ॥
अर्घ्यमन्त्रः ।
“व्रतिनः कार्त्तिके मासि स्नातस्य विधिवन्मम” ।
अर्घ्यं गृहाण देवेश ! नमामि त्वां सुरेश्वर !” ॥
काशोखण्डे ।
“व्रतिनः कार्त्तिके मासि स्नातस्य विधिवन्मम ।
दामोदर ! गृहाणार्घ्यं दनुजेन्द्रनिसूदन ! ॥
नित्ये नैमित्तिके कृत्स्ने कार्त्तिके पापशोषणे ।
गृहाणार्घ्यं मया दत्तं राधया सहितो हरे !” ॥ * ॥
“तिलैरालिप्य देहं स्वं नामोच्चारणपूर्ब्बकम् ।
स्नात्वा स विधिना सन्ध्यामुपास्य गृहमाव्रजेत् ॥
उपलिप्याथ देवाग्रे निर्म्माय स्वस्तिकं प्रभुम् ।
तुलसीमालतीपद्मागस्त्यपुष्पादिनार्च्चयेत् ॥
नित्यं वैष्णवसङ्गत्या सेवेत भगवत्कथाम् ।
सर्पिषाहर्न्निशं दीपं तिलतैलेन चार्च्चयेत् ॥
विशेषतश्च नैवेद्यान्यर्पयेदाचरेत्तथा ।
प्रणामांश्च यथाशक्त्या एकभक्तादिकं व्रतम्” ॥
तथा च पाद्मे तत्रैव ।
“प्रातरुत्थाय शौचादि कृत्वा गत्वा जलाशये ।
कृत्वा च विधिवत् स्नानं ततो दामोदरार्च्चनम्” ॥
किञ्च ।
“मौनेन भोजनं कार्य्यं कार्त्तिके व्रतधारिणा ।
घृतेन दीपदानं स्यात्तिलतैलेन वा पुनः ॥
दिनञ्च कृष्णकथया वैष्णवानाञ्च सङ्गमैः ।
नीयतां कार्त्तिके मासि सङ्कल्पव्रतपालनम् ॥
आश्विने शुक्लपक्षस्य प्रारम्भो हरिवासरे ।
अथ वा पौर्णमासीतः संक्रान्तौ वा तुलागमे ॥
दीपदानमखण्डञ्च दद्याद्वै विष्णुसन्निधौ ।
देवालये तुलस्यां वा आकाशे वा तदुत्तमम्” ॥
किञ्च ।
“रजत कनकं दीपान् मणिमुक्ताफलादिकम् ।
दामोदरस्य प्रीत्यर्थं प्रदद्यात् कार्त्तिके नरः” ॥
स्कान्दे च श्रीरुक्माङ्गदमोहिनीसंवादे ।
“न गृहे कार्त्तिकं कुर्य्याद्विशेषेण तु कार्त्तिकीम् ।
तीर्थेतु कार्त्तिकीं कुर्य्यात् सर्व्वयत्नेन भाविनि !” ॥ * ॥
अथ कार्त्तिके वर्ज्यानि ।
तत्रैवब्रह्मनारदसंवादे ।
“कार्त्तिके तु विशेषेण राजमाषांश्च भक्षयन् ।
निष्पावान् मुनिशार्दूल ! यावदाहूतनारकी ॥
दिने दिने तु कृच्छ्रस्य फलं प्राप्नोति मानवः” ॥
तत्रैव श्रीरुक्माङ्गदमोहिनीसंवादे ।
“कार्त्तिके वर्ज्जयेत्तैलं कार्त्तिके वर्ज्जयेन्मधु ।
कार्त्तिके वर्ज्जयेत् कांस्यं कार्त्तिके शुक्लसन्धितम् ॥
न मात्स्यं भक्षयेन्मांसं स कौर्म्मं नान्यदेव हि ।
चाण्डालः स भवेत् सुभ्रु ! कार्त्तिके मांसभक्षणात्” ॥
अथ श्रीराधादामोदरपूजाविधिः । पाद्मे तत्रैव ।
“ततः प्रियतमा विष्णो राधिका गोपिकासु च ।
कार्त्तिके पूजनीया च श्रीदामोदरसन्निधौ ॥
द्विजं दामोदरं कृत्वा तत्पत्नों राधिकां तथा ।
कार्त्तिके पूजनीयौ तौ वासोऽलङ्कारभोजनैः ॥
राधिकाप्रतिमां विप्राः पूजयेत् कार्त्तिके तु यः ।
तस्य तुष्यति तत्प्रीत्यै श्रीमान् दामोदरो हरिः” ॥
“दामोदराष्टकं नाम स्तोत्रं दामोदरार्च्चने ।
नित्यं दामोदराकर्षि पठेत् सत्यव्रतोदितम्” ॥ * ॥
अथ श्रीदामोदराष्टकम् । तत्रैव ।
“नमामीश्वरं सच्चिदानरूपं
लसत्कुण्डलं गोकुले भ्राजमानम् ।
यशोदाभियोलूखलाद्धावमानं
परामृष्टमत्यन्ततो द्रुत्य गोप्या ॥
रुदन्तं मूहुर्न्नेत्रयुग्मं मृजन्तं
कराम्भोजयुग्मेन सातङ्कनेत्रम् ।
मुहुः श्वासकम्पत्रिरेखाङ्ककण्ठ-
स्थितग्रैवदामोदरं भक्तिबन्धम् ॥
इतीदृक् स्वलीलाभिरानन्दकुण्डे
स्वघोषं निमज्जन्तमाख्यापयन्तम् ।
तदीये शितज्ञेषु भक्तैर्ज्जितत्वं
पुनः प्रेमतस्त्वां शतावृत्ति वन्दे ॥
वरं देव मोक्षं न मोक्षावधिं वा
न चान्यं वृणेऽहं वरेशादपीह ।
इदन्ते वपुर्नाथ गोपालबालं
सदा मे मनस्याविरास्तां किमन्यैः ॥
नरो भक्तो भवेद्विप्रास्तद्धि तस्य प्रतोषणम् ॥
यथा राधा प्रिया विष्णोस्तस्याः कुण्डं प्रियं तथा ।
सर्व्वगोपीषु सैवैका विष्णोरत्यन्तवल्लभा” ॥
किञ्च । तत्रैव श्रीराधिकोपाख्यानान्ते ।
“वृन्दावनाधिपत्यञ्च दत्तं तस्याः प्रतुष्यता ।
कृष्णेनान्यत्र देवी तु राधा वृन्दावने वने ॥
तत्कुण्डे कार्त्ति काष्टम्या स्नात्वा पूज्यो जनार्द्दनः ।
सुबोधन्यां यथा प्रीतस्तथा प्रीतस्ततो भवेत्” ॥ * ॥
अथ तत्र कृष्णत्रयोदशीकृत्यम् ।
पाद्मे च तत्रैव ।
कार्त्तिके कृष्णपक्षे तु त्रयोदश्यां निशामुखे ।
यमदीपं वहिर्द्दद्यादपमृत्युर्विनश्यति” ॥
तत्र मन्त्रः ।
“मृत्युना पाशदण्डाभ्यां कालः श्यामलया सह ।
त्रयोदश्यां दीपदानात् सूर्य्यजः प्रीयतामिति” ॥ * ॥
अथ कृष्णचतुर्द्दशीकृत्यम् । तत्रैव ।
“चतुर्द्दश्यां धर्म्मराजपूजा कार्य्या प्रयत्नतः ।
स्नानमावश्यकं कार्य्यं नरैर्नरकभीरुभिः ॥
अरुणोदयतोऽन्यत्र रिक्तायां स्नाति यो नरः ।
तस्याब्दिकभवो धर्म्मो नश्यत्येव न संशयः” ॥
स्कान्दे च तत्रैव ।
“कार्त्तिके कृष्णपक्षे तु चतुर्द्दश्यां विधूदये ।
अवश्यमेव कर्त्तव्यं स्नानं नरकभीरुभिः” ॥
किञ्च । पाद्मे तत्रैव ।
“ततश्च तर्पणं कार्य्यं धर्म्मराजस्य नामभिः ।
जीवत्पिता न कुर्व्वीत तर्पणं यमभीष्मयोः ॥
यज्ञोपवीतिना कार्य्यं प्राचीनावीतिना तथा
देवत्वञ्च पितृत्वञ्च यमस्यास्ते द्विरूपता ॥
नक्तं यमचतुर्द्दश्यां यः कुर्य्याच्छिवसन्निधौ ।
न तत् क्रतुशतेनापि प्राप्यते पुण्यमीदृशम् ॥
कुमारीवटुकान् पूज्य तथा शैवतपोधनान् ।
राजसूयफलं तेन प्राप्यते नात्र संशयः ॥
कार्त्तिके भौमवारेण चित्रा कृष्णा चतुर्द्दशी ।
तस्यां भूतेशमभ्यर्च्च्य गच्छेच्छिवपुरं नरः” ॥
किञ्च ।
“अमावस्याचतुर्द्दश्योः प्रदोषे दीपदानतः ।

कलिङ्गानि पटोलानि वृन्ताकं सन्धितानि च ।
न त्यजेत् कार्त्तिके मासिं यावदाहूतनारकी ॥
कार्त्तिके मासि धर्म्मात्मा मत्स्यमांसं न भक्षयेत् ।
तत्रैव यत्नतस्त्याज्यं शाशकं शौकरं तथा" ॥
किञ्च ।
"परान्नं परशय्याञ्च परवादं पराङ्गनाम् ।
सर्व्वदा वर्ज्जयेत् प्राज्ञो विशेषेण तु कार्त्तिके ॥
तैलाभ्यङ्गं तथा शय्यां परान्नं कांस्यभोजनम् ।
कार्त्तिके वर्ज्जयेद्यस्तु परिपूर्णव्रती भवेत् ॥
संप्राप्तं कार्त्तिकं दृष्ट्वा परान्नं यस्तु वर्ज्जयेत् ।

इदन्ते मुखाम्भोजमत्यन्तनीलै-
र्वृतं कुन्तलैः स्निग्धरक्तैश्च गोप्या ।
मुहुश्चुम्बितं विम्बरक्ताधरं मे
मनस्याविरास्तामलं लक्षलाभैः ॥
नमो देव ! दामोदरानन्त ! विष्णो !
प्रसीद प्रभो ! दुःखजालाब्धिमग्नम् ।
कृपादृष्टिवृष्ट्यातिदीनं वतानु-
गृहाणेश मामङ्ग मेऽध्यक्षिदृश्यः ॥
कुवेरात्मजौ बद्धमूर्त्त्यैव यद्व-
त्त्वया मोचितौ भक्तिभाजौ कृतौ च ।
तथा प्रेमभक्तिं स्वकां मे प्रयच्छ
न मोक्षे ग्रहो मेऽस्ति दामोदरेह ॥
नमस्तेऽस्तु दाम्ने स्फुरद्दीप्तिधाम्ने
त्वदीयोदरायाथ विश्वस्य धाम्ने ।
मनो राधिकायै त्वदीयप्रियायै-
नमोऽनन्तलीलाय देवाय तुभ्यम्" ॥ * ॥
अथ तत्र श्रीकृष्णाष्टमीकृत्यम् ।
पाद्मे तत्रैव ।
"गोवर्द्धने गिरौ रम्ये राधाकुण्डं प्रियं हरेः ।
कार्त्तिके बहुलाष्टम्यां तत्र स्नात्वा हरेः प्रियः
॥

यममार्गान्धिकारेभ्यो मुच्यते कार्त्तिके नरः" ॥
* ॥
अथामावास्याकृत्यम् । पाद्मे तत्रैव ।
"दिवा तत्र न भोक्तव्यं विना बालातुरान्
जनान् ।
प्रदोषसमये लक्ष्मीं पूजयेच्च यथाक्रमम्" ॥
किञ्च ।
"प्रदोषसमये विप्राः कर्त्तव्या दीपमालिका ।
दीपदानात् ततः पश्चाल्लक्ष्मीं सुप्तां प्रबोधयेत्
॥
त्वं ज्योतिः श्रीरविश्चन्द्रो विद्युत्
सौवर्णतारकाः ।
सर्व्वेषां ज्योतिषां ज्योतिर्दीपज्योतिःस्थिते
नमः ॥
मन्त्रेणानेन कमलां दीपहस्ताः श्रियो द्विजाः ।
देवीं प्रबोधयेयुश्च ततः कुर्य्युश्च भोजनम् ॥
प्रदोषसमये लक्ष्मीं भोजयित्वा भुनक्ति यः ।
पुमान् संवत्सरं यावत् लक्ष्मीस्तं नैव मुञ्चति"
॥ * ॥

अथामावास्यानिर्णयः । यथा
निर्णयामृते ।

उपवासादिष्वमावास्याप्रतिपद्युतैव ग्राह्या
तदुक्तम् ।

:“अमावास्या तृतीया च सा उपोष्या परान्विता” ॥

इति । चतुर्द्दशीविद्धानिषेधश्च निगमे ।
“भूतविद्धा त्वमावास्या निष्फलं स्यात्त्रयं त्विदम्” ।
स्कान्देऽपि ।
“भूतविद्धा त्वमावास्या न ग्राह्या मुनिपुङ्गवैः” ॥
अथ शुक्लप्रतिपत्कृत्यम् । स्कान्दे ।
“प्रातर्गोवर्द्धनं पूज्य द्यूतञ्चैव समाचरेत् ।
भूषणीयास्तथा गावः पूज्याश्च दोहवाहनाः ॥
श्रीकृष्णदासवर्य्योऽयं श्रीगोवर्द्धनभूधरः ।
शुक्लप्रतिपदि प्रातः कार्त्तिकेऽर्च्च्योऽत्र वैष्णवैः” ॥
“प्रातर्गोवर्द्धनं पूज्य रात्रौ जागरणं चरेत्” । इति क्वचित् पाठः । तस्मात्तदिदं कर्म्म गोवर्द्धनप्राधा-
न्येन गोप्राधान्येन च ख्यातमप्येकमेव ज्ञेयम् ।
अत्र दिननिर्णयः । यदाह देवलः ।
“प्रतिपद्दर्शसंयोगे क्रीडनन्तु गवां मतम् ।
परविद्धान्तु यः कुर्य्यात् पुत्त्रदारधनक्षयः” ॥
निर्णयामृतधृतपुराणान्तरवचनम्।
“या कुहूः प्रतिपन्मिश्रा तत्र गाः पूजयेन्नृप ! ।
पूजामात्रेण वर्द्धन्ते प्रजा गावो महीपतेः” ॥
ततः प्रातर्गोवद्‌र्ध्वनं पूज्येति पूर्ब्बाह्णतात्पर्य्यकम् ।
द्वितीयासमये तु सर्व्वथा निषिद्धम् ।
तत्रैव । तद्यथा ।
“नन्दायां दर्शने रक्षाबलिदानदशासु च ।
भद्रायां गोकुलक्रीडा देशनाशाय जायते” ॥
पुराणसमुच्चये तु सम्भावितचन्द्रोदयद्वितीयासंयोग एव निषिध्यते ।
“गवां क्रीडादिने यत्र रात्रौ दृश्येत चन्द्रमाः ।
सोमो राजा पशून् हन्ति सुरभीपूजकांस्तथा” ॥

तदुदयसम्भावनञ्च निर्णयामृते निर्णीतम् ।

प्रतिपद्यापराह्णिकत्रिमुहूर्त्तव्यापिन्यां द्वितीयायां चन्द्रदर्शनं सम्भाव्यते । तदुक्तमग्न्याधानविषये वृद्धशातातपेन ।
“द्वितीया त्रिमुहूर्त्ता चेत् प्रतिपद्यापराह्णिकी ।
अग्न्याधानञ्चतुर्द्दश्यां परतः सोमदर्शनात्” ॥
इति

मथुरायां तथा साक्षात् कृत्वा चैव प्रदक्षिणम् ।
वैष्णवं धाम संप्राप्य मोदते हरिसन्निधौ” ॥
पूजामन्त्रः ।
“गोवर्द्धनधराधार गोकुलत्राणकारक ! ।
विष्णुबाहुकृतोच्छ्राय गवां कोटिप्रदो भव” ॥
इति
गोपूजामन्त्रः । स्कान्दे तत्रैव ।
“लक्ष्मी र्या लोकपालानां धेनुरूपेण सस्थिता ।
घृतं वहति यज्ञार्थं यमपाशं व्यपोहतु ॥
अग्रतः सन्तु मे गावो गावो मे सन्तु पृष्ठतः ।
गावो मे पार्श्वतः सन्तु गवां मध्ये वसाम्यहम्” ॥
अथ गोक्रीडा तत्रैव ।
“क्रोधापयेद्ध्वावयेच्च गोमहिष्यादिकं ततः ।
वृषान् कर्षापयेद्गोपैरुक्तिप्रत्युक्तिवादनात्” ॥
पाद्मे च तत्रैव ।
“महिष्यादेस्तथा भूषा क्रीडनं वारणन्तथा” ।
तन्माहात्म्यञ्च तत्रैव ।
“एवं गोवर्द्धनं गाश्च पूजनीया विधानतः ।
गोवर्द्धनमखो रम्यः कृष्णसन्तोषकारकः” ॥ * ॥
अथ श्रीबलिदैत्यराजपूजा ।
“लिखित्वा श्रीबलिं पट्टे विन्ध्यावल्यान्वितं मुदा ।
प्रदोषे तत्प्रतिपदो भगवद्भक्तमर्च्चयेत्” ॥
तथा च स्कान्दे ।
“बलिमालिख्य दैत्येन्द्रं वर्णकैः पञ्चरङ्गकैः ।
सर्व्वाभरणसम्पूर्णं विन्ध्यावल्या सहासितम् ॥
कुष्माण्डमयजम्भोरु मुरदानवसंवृतम् ।
सम्पूर्णहृष्टवदनं किरीटोत्कटकुण्डलम् ॥
द्विभुजं दैत्यराजानं कारयित्वार्च्चयेन्नृप !” ।
तत्पूजाकारणम् । पाद्मे तत्रैव ।
“यथार्पितं देहमनेन विष्णवे
भीतेन मिथ्यावचसो महात्मना ।
दैत्येन तेनाथ कठोरचेष्टया
बद्धो बलिर्व्वामनमूर्त्तिना वत ॥
बद्ध्वानीतोऽथ पातालं विमनाः खिन्नमानसः ।
नाभ्यसूयद्धरिं दैत्यस्त्यक्ताहंममतः सुधीः ॥
तदोवाच हरिः प्रीतस्तस्मै दैत्याय भागकृत् ॥
अश्रोत्रिये दत्तममन्त्रकं हुतं
जप्तं तथा व्यग्रधिया जनेन यत् ।
तथोर्ज्जशुक्लप्रतिपद्दिनेन तु
त्वामर्च्चयेत्तत्सुकृतं तवास्तु ॥
इति तस्मै वरो दत्तो हरिणा दितिजाय च ।

दानोपभोगसुखवृद्धिशताकुलानां
नूनं प्रयाति सकलं प्रमुदैव वर्षम्” ॥
अथ यमद्वितीयाकृत्यम् । स्कान्दे पाद्मे च ।
“ऊर्ज्जे शुक्लद्वितीयायां मध्याह्ने यममर्च्चयेत् ।
स्नानं कृत्वा भानुजायां यमलोकं न पश्यति” ॥
किञ्च ।
“तस्यां निजगृहे विप्र ! न भोक्तव्यं ततो बुधैः ।
स्नेहेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम् ॥
दानानि च प्रदेयानि भगिनीभ्यो विधानतः ।
सर्व्वा भगिन्यः संपूज्या अभावे प्रतिपत्नजाः” ॥
किञ्च ।
“यस्यां तिथौ यमुनया यमराजदेवः
संभोजितस्त्वतिशयस्वसृसौहृदेन ।
तस्यां स्वसुः करतलादिह यो मुनक्ति
प्राप्नोति वित्तसुभगं धनमुत्तमं सः” ॥ * ॥
अथ शुक्लाष्टमीकृत्यम् ।
पाद्मे तत्रैव कूर्म्मपुराणे च ।
“कार्त्तिके शुक्लपक्षे तु स्मृता गोपाष्टमी बुधैः ।
तद्दिने वासुदेवोऽभूद्गोपः पूर्ब्बन्तु वत्सपः ।
तत्र कुर्य्याद्गवां पूजां गोग्रासं गोप्रदक्षिणम् ।
गवानुगमनं कार्य्यं सर्व्वान् कामानभीप्सता ॥”
प्रबोधनीकृत्यं तत्शब्दे द्रष्टव्यम् । इति श्रीगोपालभट्टविलिखिते लिखिते भगवद्भक्तिविलासे श्रीदामोदरप्रियो नाम १६ षोडशविलासः ॥
तत्र जातस्य फलम् ।
“दक्षः क्रये विक्रयणे धनाढ्यः
स्याद्वावदूकोऽखिलकौशलज्ञः ।
यः कार्त्तिके कार्त्तिकरूपधारी
जातो भवेद्युद्धविशारदश्च” ॥
इति कोष्ठीप्रदीपः ॥ * ॥ वर्षविशेषः । स च कृत्ति-
कारोहिण्योरेकतरस्मिन् वृहस्पतेरस्तोदयैकतर-
सम्बन्धे भवति । इति मलमासतत्त्वम् ॥
कार्त्तिकेय
यथा, -- ब्रह्मवैवर्त्ते गणेशखण्डम् ॥
“दृष्ट्वा तान् कृत्तिकाः सर्व्वा
भयविह्वलमानसाः ।
कार्त्तिकं कथयामासुर्ज्वलन्तं ब्रह्मतेजसा” ॥

**कार्त्तिकिकः**, पुं, (कार्त्तिकी पौर्णमासी अस्मिन्

अपराह्णश्च
पञ्चधाविभक्तस्याह्नश्चतुर्थोभागः ।

ततश्च यत्र प्रतिपदि षन्मुहूर्त्त व्यापिनी द्वितीया
तत्र चन्द्रदर्शनसम्भावनमिति । अन्यदा तूत्तरैव
प्रतिपत्तत्र गृहीता । तथैव पुराणसमुच्चये ।
“वर्द्धमानतिथौ नन्दा यदा सार्द्धत्रियामिका ।
द्वितीयवृद्धिगामित्वाकुत्रा तत्र चोच्यते” ॥
किञ्च । यदा पूर्णप्रतिपत् परत्र च निष्क्रामति
तदाप्युत्तरैव कार्य्या । यथोक्तं भविष्योत्तरे ।
“यथा द्वादशभिर्म्मासैर्म्मासो वृद्धो मलिम्लुचः ।
तथैवाहोरात्रिवृद्ध्या तिथिः प्रोक्तो मलिम्लुचः ॥
यथा मलिम्लुचः पूर्ब्बा मासो दैवस्तथापरः ।
त्याज्या तिथिस्तथा पूर्ब्बा ग्राह्या चैव तथोत्तरा”
॥
इति निर्णयामृतमतम् । किन्तु बञ्जुलीन्यायेन
पूर्ब्बैव मन्तुं शक्यते । तद्वदवापि देवलादि
वचन-
प्रामाण्यमस्तीति ॥ * ॥
अथ गोवृर्द्धनपूजाविधिः । पाद्मे तत्रैव ।
“मथुरायां तथान्यत्र कृत्वा गोवर्द्धनं गिरिम् ।
गोमयेन महास्थलं तत्र पूज्यो गिरिर्यथा ॥
ततोऽवश्यं प्रपूज्योऽसौ बलिराजदिने मुदा ॥
कृष्णसान्निध्यतश्चापि पूजनीयः प्रयत्नतः” ॥
* ॥
अथ बलिपूजाविधिः । स्कान्दे तत्रैव ।
“गृहस्य मध्ये शालायां विशालायां ततोऽर्च्चयत्
।
भ्रातृमातृजनैः सार्द्धं सन्तुष्टो बन्धुभिस्तथा ॥
कमलः कुमुदैः पुष्पैः कह्लारै रक्तकोत्पलैः ।
गन्धपुष्पादिनैवेद्यैरक्षतैर्गुडपूपकैः” ॥
तत्र पूजामन्त्रः ।
“बलिराज ! नमस्तुभ्यं विरोचनसुतप्रभो ! ।
भविष्येन्द्रसुराराते ! पूजेयं प्रतिगृह्यताम् ॥
दीपोत्सवैर्जनितसर्व्वजनप्रमोदैः
कुर्व्वन्ति ये सुमतयो बलिराजपूजाम् ।
मासे इति । “विभाषा
फाल्गुनीश्रवणाकार्त्तिकी-
चैत्रीभ्यः” । ४ । २ । २३ । इति ठक् ।)
कार्त्तिक-
मासः । इत्यमरः । १ । ४ । १८ ॥

**कार्त्तिकेयः**, पुं, (कृत्तिकानामपत्यम् । “स्त्रीभ्योढक्” ।
४ । १ । १२० । इति ढक् ।) शिवपुत्त्रः ।
यथा, --
“या बभूव रहःक्रीडा पार्व्वतीशिवयोः पुरा ।
दृष्टस्य च सुरैः शम्भोर्व्वीर्य्यं भूमौ पपात ह ॥
भूमिस्तदक्षिपत् वह्नौ वह्निश्च शरकानने ।
तत्त्वं लब्धःकृत्तिकाभिरघुना गच्छ साम्प्रतम् ॥
तवाभिषेकं विष्णुश्च करिष्यति सुरैः सह ।
हनिष्यसि तारकाख्यं सर्व्वशस्त्रं लभिष्यसि ॥
पुत्त्रस्त्वं विश्वसंहर्तुस्त्वां गोप्तुमक्षमा इमाः ।
नाग्निं गोप्तुं यथाशक्तः शुष्कवृक्षः स्वकोटरे” ॥
इति ब्रह्मवैवर्त्ते गणेशखण्डम् ॥ * ॥
स एव कल्पभेदे अग्निपुत्त्रः । यथा, --
“कुमारश्चाभवत् तत्र तरुणार्कसमद्युतिः ।

:वह्नितेजोभवः श्रीमान् गङ्गाकुक्षिपरिच्युतः ॥

तं कुमारं ततो जातं दृष्ट्वा सेन्द्रा मरुद्गणाः ।
तदा क्षीरप्रदानार्थं कृत्तिकाः संन्ययोजयन् ॥
ताः क्षीरं तस्य देवस्य समयेन ददुस्तदा ।
स्यादस्माकमयं पुत्त्रः ख्यातो नाम्नेति
राघव ! ॥
अन्योन्यं पिबतस्तासां तनयस्य मुखानि षट्
।
समभूवन् महाबाहो ! षण्मुखस्तेन विश्रुतः ॥
ततस्ता देवता ऊचुः कार्त्तिकेय इति प्रभुः ।
पुत्त्रोऽयं जगति ख्यातो भविष्यति न संशयः”
॥
इति वाल्मीकीयरामायणम् ॥ * ॥ तत्पर्य्यायः
महा-
सेनः २ शरजन्मा ३ षडाननः ४
पार्व्वतीनन्दनः
५ स्कन्दः ६ सेनानीः ७ अग्निभूः ८ गुहः ९
बाहु
लेयः १० तारकजित् ११ विशाखः १२
शिखिवा-
हनः १३ षाण्मातुरः १४ शक्तिधरः १५
कुमारः १६
क्रौञ्चदारणः १७ । इत्यमरः । १ । १ ।
४१-४३ ॥ आग्नेयः
१८ दीप्तकीर्त्तिः १९ अनमेयः २० मयूरकेतुः
२१
धर्म्मात्मा २२ भूतेशः २३ महिषार्दनः २४
कामजित् २५ कामदः २६ कान्तः २७
सत्यवाक्
२८ भुवनेश्वरः २९ शिशुः ३० शीघ्रः ३१
शुचिः
३२ चण्डः ३३ दीप्तवर्णः ३४ शुभाननः ३५
अमोघः
३६ अनघः ३७ रौद्रः ३८ प्रियः ३९
चन्द्राननः ४३
दीप्तशक्तिः ४१ प्रशान्तात्मा ४२ भद्रकृत्
४३
कूटमोहनः ४४ षष्ठीप्रियः ४५ पवित्रः ४६
मातृ
वत्सलः ४७ कन्याहर्त्ता ४८ विभक्तः ४९
स्वाहेयः
५० रेवतीसुतः ५१ प्रभुः ५२ नेता ५३
नैगमेयः

भाषा ॥ (कर्पट एव ! स्वार्थे अण् । जीर्णवस्त्र-
खण्डम् ॥)

**कार्पटिकः**, पुं, (कार्पटं अन्तस्तत्त्वं वेत्ति इति कर्पटेन

चरति इति वा । ठक् । कार्पटोऽस्त्यस्य वा ठन्
।)
मर्म्मवेत्ता । इति त्रिकाण्डशेषः ॥ तीर्थसेवी ।
इति काशीखण्डम् ॥
(“सायं च तत्रैव वहिः सकुटुम्बस्तरोस्तले ।
समावसत् कार्पाटिकैः सोऽन्यदेशागतैः सह” ॥
इति कथासरित्सागरे ॥)

**कार्पण्यं**, क्ली, (कृपणस्य भावः । कृपण + ष्यञ् ।)

कृपणता । तत्पर्य्यायः । दैन्यम् २ । इति
हेमचन्द्रः ॥
(यथा, भगवद्गीतायाम् २ । ७ ।
“कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वां धर्म्मसंमूढचेताः” ॥)

**कार्पासः**, पुं, क्ली, (कर्पास एव । स्वार्थे अण् ।) कर्पास-

वृक्षः । कापास् इति भाषा ॥ (अस्य पत्रादिना
सर्पदष्टः पुरुषो नीरोगो भवति । इदानीं पत्रा-
दीनां व्यवहारक्रम उच्यते ।

दंशनानन्तरमेव दष्टं पुरुष
सार्द्धद्वितोलक-

परिमितः कार्पासपत्त्ररसः पाययितव्यः । अथ
क्षतप्रदेशं विधौतं परिष्कृतञ्च विधाय तत्र पत्र-
रसः प्रदेयः । क्षतस्थानोपरि च कार्पासपत्रैः
प्रलेपो दातव्यः । एवं कृतेऽपि यदि शरीरस्य
कश्चिद्देशः स्फीतो भवेत् तदा तत्रैव एतत्पत्र-
रसेन पेषयितव्यम् । आसुस्थात्
प्रतिसपाददण्ड-
मेवं कृते सर्पदष्टः पुरुषः सुस्थो भविष्यतीति
निश्चयः ॥)

**कार्पासं**, त्रि, (कर्पास्याः विकारे अवयवे वा अण्

विल्वाद्यण् वा ।) कार्पासजातवस्त्रादि ।
तत्पर्य्यायः ।
फालम् २ वादरम् ३ । इत्यमरः । २ । ६ ।
१११ ॥
(यथा, महाभारते २ । ५० । २४ ।
“श्लक्ष्णं वस्त्रमकार्पासमाविकं मृदु चाजिनम्”
॥)

पूर्ब्बोक्तस्तु विधिः कार्य्यो दानमन्त्रपुरःरः” ॥
पूर्ब्बोक्तविधिः लवणधेनूक्तविधिः ।
“यथा देवगणः सर्व्वस्त्वया हीनो न वर्त्तते ।
तथा मामुद्धरेर्द्देवि ! पाहि संसारसागरात्” ॥
इत्यादिवराहपुराणे श्वेतोपाख्याने कार्पासधेनु-
माहात्म्यम् ॥

**कार्पासनासिका**, स्त्री, (कार्पासस्य नासिका इव ।)

तर्कुः । इति शब्दरत्नावली । टेको इति भाषा ॥

**कार्पासिका**, स्त्री, (कार्पासी + कन् । ततष्टाप् ।)

कार्पासी । इति शब्दरत्नावली ॥ (त्रि, कार्पा-
साज्जातः । कार्पासनिर्म्मितम् । यथा गोः रामा-
यणे । ५ । ४९ । ५ ।
“अवेष्टयन्त लाङ्गूलं जीर्णैः कार्पासिकैः पटैः” ॥)

**कार्पासी**, स्त्री, (कार्पास + जातित्वात् ङीष् । यद्वा

कर्पासोऽस्त्यस्याः प्रज्ञाद्यण् ततो ङीप् ।) का-
र्पासवृक्षः । कापास इति भाषा ॥ तत्पर्य्यायः ।
बदरा २ तुण्डिकेरी ३ समुद्रान्ता ४ । इत्यमरः ।
२ । ४ । ११६ ॥ पटदः ५ । इति रत्नमाला ॥
सारिणी ६ चव्या ७ तूला ८ गुडः ९ तुण्डके-
रिका १० मरूद्भवा ११ पिचुः १२ बादरः
१३ । अस्या गुणाः । मधुरत्वम् । शीतत्वम् ।
स्तन-
दुग्धकारित्वम् । पित्तकफतृष्णादाहश्रमभ्रान्ति-
मूर्च्छानाशित्वम् । बलकारित्वञ्च । इति राज-
निर्घण्टः ॥ तत्पत्रगुणाः । वायुनाशित्वम् । रक्त-
कारित्वम् । मूत्रवर्द्धकत्वम् । कर्णपिण्डिकानाद-
पूयास्रावनाशित्वञ्च । तद्बीजगुणाः । स्तन्यदत्वम्
।
वृष्यत्वम् । स्निग्धत्वम् । कफकरत्वम् । गुरुत्वञ्च
।
इति भावप्रकाशः ॥

**कार्म्मः**, त्रि, (कर्म्म शीलं अस्य । छत्रादित्वात् णः ।

“कार्म्मस्ताच्छील्ये” । ६ । ४ । १९२ । इति
सूत्रानुसारेण निपातनात् टिलोपः । फल मन-
पेक्ष्य कर्म्मसु प्रवृत्तः ।) कर्म्मशीलः । इत्यमरः ।
३ । १ । १८ ॥

**कार्म्मणं**, क्ली, (कर्म्मैव इति । कर्म्मन् + “तद्युक्तत्वात्

कर्म्मणोऽण्” । ५ । ४ । ३६ । इति अण् ।
कर्म्मणे
हितमिति अण् वा ।) मूलकर्म्म । इत्यमरः । ३ ।

५४ सुदुश्चरः ५५ सुव्रतः ५६ ललितः ५७ बाल-
क्रीडनप्रियः ५८ खचारी ५९ ब्रह्मचारी ६० शूरः
६१ शरवणोद्भवः ६२ विश्वामित्रप्रियः ६३ देव-
सेनाप्रियः ६४ वासुदेवप्रियः ६५ प्रियकः । ६६
इति वनपर्व्व ॥ गाङ्गः ६७ स्वामी ६८ द्वादशलो-
चनः ६९ । इतिजटाधरः ॥ सिद्धसेनः ७० शम्भु-
तनयः ७१ देवसेनापतिः ७२ बालचर्य्यः ७३ कृक-
वाकुध्वजः ७४ महाबाहुः ७५ युद्धरङ्गः ७६
शिखिध्वजः ७७ । इति शब्दरत्नावली ॥ (पाव-
कात्मजः ७८ । रुद्रसूनुः ७९ । षट्शिराः ८० ।
दितिजान्तकः ८१ । इति महाभारतम् ॥ * ॥)
अस्य ध्यानम् । यथा ।
"कार्त्तिकेयं महाभागं मयूरोपरिसंस्थितम् ।
तप्तकाञ्चनवर्णाभं शक्तिहस्तं वरप्रदम् ॥
द्विभुजं शत्रुहन्तारं नानालङ्कारभूषितम् ।
प्रसन्नवदनं देवं सर्व्वसेनासमावृतम्" ॥
इति कार्त्तिकेयपूजापद्धतिः ॥

**कार्त्तिकेयप्रसूः**, स्त्री, (कार्त्तिकेयं प्रसूते या । प्र +
सू + क्विप् । कार्त्तिकेयस्य प्रसूर्वा ।) दुर्गा । इति
शब्दरत्नावली ॥

**कार्त्तिकोत्सवः**, पुं, (कार्त्तिक्यां कार्त्तिकीपौर्णमास्यां
भव उत्सवः । तत्सम्बन्धी तत्कर्त्तव्यः उत्सवो वा ।)
कौमुदी । कार्त्तिकी पूर्णिमा । इति त्रिकाण्ड-
शेषः ॥

**कार्पटः**, पुं, (कार्पट इव आकारोऽस्त्यस्य । कार्पट
+ अच् ।) जतु । जौ इति भाषा । कार्य्यी ! इति
हेमचन्द्रः ॥ दरवारी उमेदोयार इत्यादि पारस्य-

**कार्पासधेनुः**, स्त्री, (दानार्थं कल्पिता कार्पासवस्त्र-
निर्म्मिता धेनुः ।) दानार्थकार्पासादिनिर्म्मित-
धेनुः । यथा ।
होतोवाच ।
"अथातः संप्रवक्ष्यामि धेनुं कार्पासिकीं नृप ! ।
यत्प्रदानान्नरा यान्ति ऐन्द्रलोकमनुत्तमम् ॥
विषुवे त्वयने पुण्ये युगादिग्रहणे तथा ।
ग्रहपीडासु चोग्रासु दुःस्वप्नारिष्टदर्शने ॥
पुण्ये ह्यायतने राजन् शुचिदेशे गवां गणे ।
गोमयेनोपलिप्तायां दर्भानास्तीर्य्य तै तिलान् ॥
तन्मध्ये स्थापयेत् धेनुं वस्त्रमाल्यानुलेपनैः ।
नैवेद्यधूपदीपाद्यैः पूजयेच्च विमत्सरः ॥
उत्तमा चतुर्भिर्भारैस्तदर्द्धेन तु मध्यमा ।
भारेण चाधमा प्रोक्ता वित्तशाठ्यं विवर्जयेत् ॥
चतुर्थांशेन कृत्वा वै वत्सन्तु परिकल्पयेत् ।
कर्त्तव्या रुक्मशृङ्गैस्तु रजतक्षुरसंयुता ॥
नानाफलमया दन्ता रत्नगर्भसमन्विता ।
इत्येवं सर्व्वसंपूर्णं कृत्वा श्रद्धासमन्वितः ॥
आवाहयेत्तां कार्पासधेनुं मन्त्रैर्द्विजातये ।
दद्यादथ दर्भपाणिः प्रयतः श्रद्धयान्वितः ॥

२ । ४ ॥ ओषध्यादिमूलेन यत् त्रासनोच्चाटन-
स्तम्भनवशीकरणादिकर्म्मतत् । इति भरतः ॥
(यथा माघे । १० । ३७ ।
"चाटु चाकृतकसम्भ्रममासां
कार्म्मणत्वमगमन् रमणेषु" ॥
तथा च, काशीखण्डे ४५ । ९ ।
"काचित्कार्म्मणतत्त्वज्ञा काचिन्मौक्तिकगुम्फिका" ॥)
मन्त्रतन्त्रादियोजनम् । (कर्म्म साध्यत्वेन अस्त्यस्य
इति अण् ।) कर्म्मठे त्रि । इति मेदिनी ॥

**कार्म्मिकः**, त्रि, (कर्म्मणा चित्रकर्म्मणा निर्वृत्तः ।
इति ठक् ।) विचित्रवस्त्रादि । ("कार्म्मिकं कर्म्मणा
चित्रेण निर्म्मितं यत्र निष्पन्ने पटे चक्रस्वस्तिका-
दिकं चित्रसूत्रैः क्रियते तत्कार्म्मिकमित्युच्यते" ॥)
इति मिताक्षरा । (तथा च याज्ञवल्क्यः । २ । १८३ ।
"कार्म्मिके रोमबद्धे च त्रिंशद्भागक्षयो मतः" ॥)

**कार्म्मुकं** क्ली, (कर्म्मणे प्रभवतीति । "कर्म्मण

:उकञ्” । ५ । १ । १०३ । इति उकञ् ।) धनुः ।

इत्यमरः । २ । ८ । ८३ । धनुक् इति
भाषा ॥
(यथा, माघे । २ । ९७ ।
“कार्म्मुकेणेव गुणिना वाणः
सन्धानमेष्यति” ॥)

**कार्म्मुकः**, पुं, (कार्म्मुकं धनुः साध्यत्वेनास्त्यस्य इति

अच् ।) वंशः । वाँश् इति भाषा । (कर्म्मणे
कार्य्याय
प्रभवतीति । कर्म्मन् + उकञ् ।) कर्म्मक्षमे
त्रि ।
इति मेदिनी ॥ श्वेतखदिरः । हिज्जलः ।
महा-
निम्बः । इति राजनिर्घण्टः ॥

**कार्य्यं**, क्ली, (क्रियते यत् तत् । कृ + “विभाषा कृ

वृषोः” । ३ । १ । १२० । इति क्यवभावे
“ऋहलो-
र्ण्यत्” । ३ । १ । १२५ । इति ण्यत् ।
ततो वृद्धिः ।)
क्रियते यत् । इति व्याकरणम् । काज इति
भाषा ।
(“कार्य्यन्तु तद्यस्याभिनिर्वृत्तिरभिसन्धाय
प्रवर्त्तते
कर्त्ता” । इति चरके विमानस्थाने । ८
अध्यायः ॥
तथा मनुः । ९ । २९९ ।
“आरभेत ततः कार्य्यं सञ्चिन्त्य
गुरुलाघवम्” ॥
कर्त्तव्यम् । यथा तत्रैव । ३ । ८० ।
“आशासते कुटुम्बिभ्यस्तेभ्यः कार्य्यं
विजानता” ॥)
तत्प्रति कारणम् त्रिविधम् ।
समवायिकारणम् १
यथा घटकार्य्यं प्रति कपालम् ।
असमवायिकार-
णम् २ यथा घटकार्य्यं प्रति
कपालसंयोगादि ।
निमित्तकारणम् ३ यथा घटं प्रति
दण्डचक्रादि ।
इति तर्कशास्त्रम् ॥ हेतुः । प्रयोजनम् ।
इति

कार्श्मं तत् राति । रा + कः गौरादित्वात् ङीष्
।)
काश्मरी । गम्भारीवृक्षः । इत्यमरटीकायां
भरतः ॥

**कार्श्यः**, पुं, (कृश् + स्वार्थे ष्यञ् ।) कार्ष्यः । सालवृक्षः ।

इत्यमरटीकायां भरतः ॥ कच्चूरः । लकूचः ।
इति
राजनिर्घण्टः ॥ (कृशस्य भावः ।
“वर्णदृढादिभ्यः
ष्यञ्च” । ५ । १ । १२३ । इति ष्यञ् ।)
कृशतायां क्ली ॥
(यथा, मेघदूते ३१ ।
“सौभाग्यन्ते सुभग ! विरहावस्थया व्यञ्जयन्ती
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः”
॥)

**कार्षकः**, पुं, (कर्षति इति । कृष + “कृषेर्वृद्धिश्चो-

दीचां” । उणां । २ । ३८ । इति क्वुन् । यद्वा
कृषिः
शीलमस्य छत्रादित्वात् णः स्वार्थे कन् ।)
कर्षकः ।
इत्यमरटीकायां रायमुकुटः ॥

**कार्षापणः**, पुं क्ली, (कर्षस्यायं “तस्येदम्” । ४ । ३ । १२० ।

इत्यण् । नित्यं पणः परिमाणे इत्यप् गोचर-
सञ्चरेति घो वा कार्षस्य कार्षेण वा आपणः
व्यवहारो यत्र । यद्वा कर्षस्येदं स्वार्थे वा अण्
तेन आपण्यते । आ + पण कर्म्मणि घः ।) का-
र्षिकः । षोडशपणः । इति मेदिनी ॥ रूप्यकर्ष-
कृतव्यवहारद्रव्यम् । लोके तु तन्मूल्ये षोडश-
पणसमुदाये कार्षापणस्योपचारेण प्रवृत्तिः ।
तथा
हि शास्त्रीयो रजतमाषो द्विकृष्णलः । द्वे कृष्णले
समधृते विज्ञेयो रूप्यमाषकः । इति मनुः ॥
आद्ये कृतयुगे रजतकृष्णलयोर्द्दशगण्डा मूल्य-
मिति द्वात्रिंशता कृष्णलाभी रजतकर्षस्य षो-
डशपणा एव मूल्यम् । पुराणशब्दश्चात्र कार्षिकं
पुराणञ्च कार्षापण इति वोपालितः । इत्यमर-
टीकायां भरतः ॥ (यथा, मनुः । ८ । १३६ ।
“कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः”
॥)

**कार्षिकः**, पुं, (कर्ष + स्वार्थे ठक् ।) कार्षापणः । इत्य-

कालमियत्तया गणकः । एतावती वेलेति कथित-
वानित्यर्थः । इति दुर्गादासः ॥

**कालं**, क्ली, (ईषत् कृष्णत्वं लाति गृह्णाति । ला +

कः धातुषु कुत्सितरूपतया अलति वा । अल् +
अच् । कोः कादेशः ।) लौहम् । इति वाचस्पति-
रित्यमरटीकायां भरतः ॥ कक्वोलकम् । इति
राजनिर्घण्टः ॥ कालीयकम् । इति शब्दचन्द्रिका ॥

**कालः**, पुं, (कलयति आयुः । कल् संख्याने पचा-

द्यच् ततः प्रज्ञाद्यण् । यद्वा कालयति सर्व्वाणि
भूतानि । कल् प्रेरणे ण्यन्तात् पचाद्यच् ।) क्षण-
दण्डमुहूर्त्तप्रहरदिनरात्रिपक्षमासायनवत्सरादिः।
इति दुर्गादासः ॥ तत्पर्य्यायः । दिष्टः २ अनेहा ३
समयः ४ । इत्यमरः । १ । ४ । १ ॥ “जन्यानां
जनकः कालो
जगतामाश्रयो मतः । परापरत्वधीहेतुः क्षणादिः
स्यादुपाधितः” ॥ (यथा विष्णुपुराणे । १ । २ । १४ ।
“परस्य ब्रह्मणो रूपं पुरुषः प्रथमं द्विज ! ।
व्यक्ताव्यक्ते तथैवान्ये रूपे कालस्तथा परम्” ॥)
अस्य गुणाः । सङ्ख्या १ परिमितिः २ पृथक्त्वम्
३ संयोगः ४ विभागः ५ । इति भाषापरिच्छेदः ॥
“अनादिनिधनः कालो रुद्रः सङ्कर्षणः स्मृतः ।
कलनात् सर्व्वभूतानां स कालः परिकीर्त्तितः” ॥
इति तिथ्यादितत्त्वम् ॥ * ॥
(“कालस्तु त्रिविधो ज्ञेयोऽतीतोऽनागत एव च ।
वर्त्तमानस्तृतीयस्तु वक्ष्यामि शृणु लक्षणम् ॥
कालः कलयते लोकं कालः कलयते जगत् ।
कालः कलयते विश्वं तेन कालोऽभिधीयते ॥
कालस्य वशगाः सर्व्वे देवर्षिसिद्धकिन्नराः ।
कालो हि भगवान्देवः स साक्षात्परमेश्वरः ॥
सर्गपालनसंहर्त्ता स कालः सर्व्वतः समः ।
कालेन कल्प्यते विश्वं तेन कालोऽभिधीयते ॥
येनोत्पत्तिश्च जायेत येन वै कल्प्यते कला ।
सोऽन्तवच्च भवेत्कालो जगदुत्पत्तिकारकः ॥
यः कर्म्मणि प्रपश्येत प्रकर्षे वर्त्तमानके ।
सोऽपि प्रवर्त्तको ज्ञेयः कालः स्यात् प्रतिपालकः ॥
येन मृत्युवशं याति कृतं येन लयं व्रजेत् ।
संहर्त्ता सोऽपि विज्ञेयः कालः स्यात् कलनापरः ॥
कालः सृजति भूतानि कालः संहरते प्रजाः ।
कालः स्वपिति जागर्त्ति कालो हि दुरतिक्रमः ॥
काले देवा विनश्यन्ति काले चासुरपन्नगाः ।
नरेन्द्राः सर्व्वजीवाश्च काले सव्व विनश्यति ॥
त्रिकालात् परतो ज्ञेय आगन्तुर्गतचेष्टकः ।

मेदिनी ॥ ऋणादिविवादः यथा, --
"यस्मात् कार्य्यसमारम्भश्चिरात्तेन विनिश्चितः ।
तस्मान्न लभते कालमभियुक्तश्च कालभाक्" ॥
इति व्यवहारतत्त्वे कात्यायनः ॥
(तथा च मनुः । ८ । ४३ ।
"नोत्पादयेत् स्वयं कार्य्यं राजा नाप्यस्य पूरुषः" ॥)
अपूर्ब्बम् । यथा, --
"विधिप्रत्ययस्य कार्य्ये शक्तिरिति मीमांसकाः" ॥
व्याकरणमते आदेशप्रत्ययागमाः । इति दुर्गा-
दासः ॥ (त्रि, करणीयम् । कर्त्तव्यम् । यथा मनुः ।
२ । २४८ ।
"सहपिण्डक्रियायान्तु कृतायामस्य धर्म्मतः ।
अनयैवावृता कार्य्यं पिण्डनिर्व्वपनं सुतैः" ॥)

**कार्य्यकुशलः**, त्रि, (कार्य्ये कर्म्मणि कुशलः निपुणः ।)
कर्म्मठः । इति भूरिप्रयोगः ॥

**कार्य्यपुटः**, पुं, (कार्य्यां क्रियायां न पुटति । कारि +
पुट् संश्लेषणे + कः ।) क्षपणः । उन्मत्तः । अनर्थ-
करः । इति विश्वमेदिन्यौ ॥

**कार्य्यप्रद्वेषः**, पुं, (कार्य्यं प्रद्वेष्टि अनेन । प्र + द्विष्
+ करणे घञ् ।) आलस्यम् । इति राजनिर्घण्टः ॥

**कार्य्या**, स्त्री, (कृ + ण्यत् । टाप् ।) कारीवृक्षः । इति
राजनिर्घण्टः ॥

**कार्य्यी**, [न्] पुं, (कार्य्यं अस्त्यस्य इति इनिः ।) यस्य
निर्द्दिश्यते कार्य्यं सः । इति दुर्गादासः ॥ क-
र्म्मार्थी । इति कार्पटशब्दार्थे हेमचन्द्रः । (यथा
मना । ८ । २ ।
"विनीतवेषाभरणः पश्येत्कार्य्याणि कार्य्यिणाम्" ॥)

**कार्श्मरी**, स्त्री, (कृश् + स्वार्थे णिच् भावे मनिन्
मरः । २ । ९ । ८८ ॥ (यथा याज्ञवल्क्यः । १ । ३६५ ।
"निष्कः शुवर्णाश्चत्वारः कार्षिकस्ताम्रिकः पणः" ॥
कर्षः कर्षणं शीलमस्य । कर्ष + ठक् ।) कृषकः ।
इति हेमचन्द्रः ॥ (कर्षस्यायम् । कर्ष + ठञ् । शा-
स्त्रीयपलचतुर्भागः । कर्षः परिमाणमस्य ठक् ।
कर्षपरिमितद्रव्यम् । कर्षेण क्रीतः । ठञ् । कर्ष-
क्रीतः ॥)

**कार्ष्णिः**, पुं, (कृष्णस्यापत्यम् । अत इञ् ।) कामदेवः ।
इति त्रिकाण्डशेशः । (यथा हरिवंशे । १६३ । १९ ।
"तामापतन्तीं मायान्तु कार्ष्णिः कमललोचनः" ॥
गन्धर्व्वविशेषः । यथा महाभारते । १ । १२३ । ५३ ।
"युगपस्तृणपः कार्ष्णिर्नन्दिश्चित्ररथस्तथा" ॥)

**कार्ष्णी**, स्त्री, (कार्ष्ण + ङीप् ।) शतावरी । इति
राजनिर्घण्टः ॥ (शतावरीशब्देऽस्या विवरणं ज्ञा-
तव्यम् ॥)

**कार्ष्यः**, पुं, (कृष् + "इगुपधेति" ३ । १ । १४५ ।
कः । चतुर्वर्णादित्वात् स्वार्थे ष्यण् ।) सालवृक्षः ॥
इत्यमरः । २ । ४ । ४४ ॥ (अस्य पर्य्यायो यथा ।
"शालस्तु सर्ज्जकार्ष्याश्वकर्णिकाशस्यसम्बरः" ।
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**काल** त् क कालोपदेशे । इति कविकल्पद्रुमः ।
(अदन्तचुरां--परं--सकं--सेट् ।) यथा अचकालत्

तथा वर्षाहिमोष्णाख्यास्त्रयः काला इमे मताः ॥
तथा त्रयोऽन्येऽपि ज्ञेया उद्यन्मध्यास्तरूपिणः ।
सूक्ष्मोऽपि सर्व्वगः स वै व्यक्ताद्व्यक्ततरः शुभः" ॥
इति प्रथमस्थाने ४ अः । हारीतेनोक्तम् ॥)
यमः । (यथा गोः रामायणे । ३ । ३५ । ४३ ।
"आपतन्तीञ्चतां दृष्ट्वा कालदण्डोपमां गदाम्" ॥)
कृष्णवर्णः । कृष्णगुणवति त्रि । इत्यमरः । १ ।
५ । १४, १६ । (यथा गोः रामायणे । ६ । ६७ । २ ।
"उद्यतायुधनिस्त्रिंशे रथे च समलङ्कृते ।
कालाश्वयुक्ते महति स्थितः कालान्तकोपमः" ॥)
मृत्युः । (यथा भागवते । ९ । ९ । २ ।

:“दिलीपस्तत्सुतस्तद्वदशक्तःकालमेयिवान्
भगीरथस्तस्य पुत्रस्तेपे स सुमहत् तपः”
॥)
महाकालः । इति मेदिनी ॥ शनिः । इति
दीपिका ॥ कासमर्द्दः । रक्तचित्रकः । रालः ।
कोकिलः । इति राजनिर्घण्ठः ॥
(सर्व्वकलनात्
शिवः । यथा महाभारते । १३ । १७ । ४७
।
“गजहा दैत्यहा कालो लोकधाता गुणाकरः”
॥
कालनियन्तृत्वात् विष्णुः । यथा महाभारते
। १३ ।
१ । ४९ । ५८ ।
“ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः” ॥
पर्व्वतविशेषः । यथा गोः राभायणे । ४ ।
४४ । २१ ।
“ततो महाश्रमं गत्वा देवगन्धर्व्वसेवितम् ।
कालं नाम सदा शान्तं गमिष्यथ
शिलोच्चयम्” ॥)

**कालकं**, क्ली, (काल + स्वार्थे कन् । यद्वा, कलयति
नोदयति रक्तताम् । कल नोदने + ण्वुल् ।)
काल-
शाकम् । इति भावप्रकाशः ॥
(कालशाकशब्दे-
ऽस्य गुणादिकं बोध्यम् ॥) यकृत् । इति
हेमचन्द्रः ॥

**कालकः**, पुं, (कालयतीति । कलत्कक्षेपे +
“ण्वुल्तृचौ”
३ । १ । १३३ इति ण्वुल् ।) जतुकः ।
इत्यमरः ।
२ । ४ । ४९ ॥ जडुर इति भाषा ॥ (“वर्णे
चा-
नित्ये” । “रक्ते” । “कालाच्च” । ५ । ४ ।
३१, ३३
इति कन् । कालकः पटः । कालिका शाटी
।
कालकं मुखं इति सिद्धान्तकौमुदी ॥)
अलगर्द्द-
सर्पः । इति शब्दरत्नावली ॥ (राक्षसविशेषः
।
यथा गोः रामायणे ३ । २९ । ३० ।
दिकं कीलयति आवृणोति नाशयति वा । काल
+ कील + अण् । कोलाहलस्य सत्कथादिनाशक-
त्वात् तथात्वम् ।) कोहाहलः । इति शब्द-
रत्नावली ॥

**कालकुण्ठः**, पुं, (कालेन कालरूपिणा परमेश्वरेण
कुण्ठ्यते असौ । कुण्ठ + कर्म्मणि घञ् ।) यमः ।
इति शब्दमाला ॥

**कालकुष्टं**, क्ली, (कालात् कृष्णपर्व्वतात् कुष्यते
निष्कुष्यते । कुष् + कर्म्मणि क्तः ।) कङ्कुष्टम् ।
पर्व्वतीयमृत्तिकाविशेषः । इति राजनिर्घण्टः ॥

**कालकूटं**, क्ली, (कालं शिवमपि कूटयति अवसा-
दयति यद्वा कालस्य मृत्योः कूटं आयोजन
समष्टिः दूत इव वा ।) वोलम् । विषम् । इति
राजनिर्घण्टः ॥ (यथा, भागवते ८ । ६ । २५ ।
“नभेतव्यं कालकूटात् विषाज्जलधिसम्भवात्’
॥)

**कालकूटः**, पुं क्ली, (कालस्य मृत्योः कूटः छद्मदूत
इव ।) स्थावरविषभेदः । इत्यमरः ॥ १ । ८ । १०
।
(यथा भागवते ३ । २ । २३ ।
“अहो वकी यं स्तनकालकूटं
जिघांसयाऽपाययदप्यसाध्वी’ ॥
अस्य स्वरूपं यथा, --
“देवासुररणे देवैर्हतस्य पृथुमालिनः ।
दैत्यस्य रुधिराज्जातस्तरुरश्वत्थसन्निभः॥
निर्य्यासः कालकूटोऽस्य मुनिभिः परिकीर्त्तितः
सो हि क्षेत्रे शृङ्गवेरे कोङ्कणे मलये भवेत्” ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे १ भागे शोधन-
मारणाधिकारे ॥ * ॥
देशविशेषः । यथा, महाभारते २ । २० । २६ ।
“कुरुभ्यः प्रस्थितास्ते तु मध्येन कुरुजाङ्गलम् ।
रम्यं पद्मसरो गत्वा कालकूटमतीत्य च” ॥)

**कालकूटकः**, पुं, (कालस्य कूटमिव कायति प्रकाशते ।
कै + कः ।) कारस्करवृक्षः । इति राजनिर्घण्टः ॥
(यथा, महाभारते । १ । १२८ । ४४ ।
“ततो दुर्य्योधनः पापस्तद्भक्ष्ये कालकूटकम् ।
विषं प्रक्षेपयामास भीमसेनजिघांसया” ॥
कारस्करशब्देऽस्य गुणपर्य्याया ज्ञेयाः ॥)

**कालकृत्**, पुं, (कालं करोतीति । कालस्य परिमाणं
त्रिकाण्डशेषः ॥

**कालङ्कृतः**, पुं, (कुत्सितोऽपि अलङ्कृतः ईषदलङ्कृतो
वा । कोः कादेशः ।) वृक्षविशेषः । कालकासुन्दे
इति भाषा । तत्पर्य्यायः । अरिमर्द्दः २ कासमर्द्दः
३ कर्कशः ४ । इति रत्नमाला ॥

**कालचक्रं**, क्ली, (कालस्य कालगतेश्चक्रमिव ।) काल-
रूपचक्रम् । यथाह -- हेमचन्द्रः ॥
“कालो द्विविधोऽवसर्पिण्युत्सर्पिणीषु भेदतः ।
सागरकोटिकोटीनां विंशत्या स समाप्यते ॥
अवसर्पिण्यां षडरा उत्सर्पिण्यां त एव विपरीताः
।
एवं द्वादशभिरैर्विवर्त्तते कालचक्रमिदम्” ॥
ज्योतिश्चक्रविशेषः । यथा, --
“त्रिनाभिमति पञ्चारे षण्णेमिन्यक्षयात्मके ।
सम्बत्सरमये कृत्स्नं कालचक्रं प्रतिष्ठितम्” ॥
इति विष्णुपुराणे २ । ८ । ४ । चक्रमेवोपासनार्थं
विशिष्यन्नाह । त्रिनाभिमतीति । नाभिः स्तम्भः
यत्राक्षः प्रोतः स च त्रिमेखलः । अह्नश्चात्र
नाभित्वेनोपास्यत्वात् मेखलारूपास्तिस्रो
नाभयः
पूर्ब्बाह्णमध्याह्नापराह्णास्तद्युक्ते। पञ्चारे पञ्च संव-
त्सरपरिवत्सरादयो वक्ष्यमाणा अराः शलाका
यस्य सः तस्मिन् । षण्णेमिनि षट् ऋतवो नेमयः
प्रान्तबलयानि तद्वति ।
कालात्मकत्वादक्षयात्मके।
संवत्सरमये संवत्सरावयवमासा रम्भकत्वात्
संव-
त्सरत्वेनोपास्यत्वाच्च तन्मयम् । तदुक्तं मात्स्ये
।
“अहस्त्रिनाभिः सूर्य्यस्य त्वेकचक्रस्य वै स्मृतम्
।
अराः संवत्सराः पञ्च नेम्यः षड़ृतवः स्मृताः” ॥
इति । तस्मिन् कालचक्रं कालोपलक्षणभूतं
कृत्स्नं
ज्योतिश्चक्रं प्रतिष्ठितं आश्रितम् ।
सूर्य्यगत्यधीन-
त्वात् कालचक्रफलस्य । इति तट्टीकायां श्रीधर-
स्वामी ॥ (“स एष निमेषादियुगपर्य्यन्तः
कालश्चक्र-
वत् परिवर्त्त मानः कालचक्रमुच्यत इत्येके” ॥
इति
सुश्रुते सूत्रस्थाने ६ अध्याये ॥)

"दुर्ज्जयः कालकाख्यश्च परुषः कालिकामुखः" ॥)

**कालकटङ्कटः**, पुं, (कालरूपः कटङ्कटः ।) शिवः ।

शालकटङ्कटोऽपि पाठः । इति दानधर्म्मे शिव-
सहस्ननामसु पठितः ॥ (यथा, महाभारते १३ ।
शिवसहस्ननामकथने । १७ । ५७ ।
"वैणवी पणवी ताली खली कालकटङ्कटः" ॥)

**कालकण्ठः**, पुं, (कालः कृष्णवर्णः नीलो वा कण्ठो-

यस्य ।) शिवः । पीतसारः । मयूरः । खञ्जनः ।
कलविङ्कः । दात्यूहपक्षी । इति मेदिनी ॥

**कालकण्ठकः**, पुं, (कालः कृष्णः कण्ठोऽस्य । ततः

कप् स्वार्थे कन् वा ।) दात्यूहपक्षी । इत्यमरः । २
५ । २१ ॥ (दात्यूहशब्देऽस्य गुणपर्य्याया वक्तव्याः ॥)

**कालकन्दकः**, पुं, (कालं कृष्णसर्पं कन्दति स्पर्द्धते यद्वा

कालः सन् कन्दते वैक्लव्यं गच्छति । काल + कदि
+ अच् । स्वार्थे कन् ।) जलसर्पः । इति शब्द-
रत्नावली ॥

**कालकर्णिका**, स्त्री, (कालस्य कर्णिका इव ।) अलक्ष्मीः ।

इति हेमचन्द्रः ॥

**कालकर्णी**, स्त्री, (कालः कर्णोऽस्याः । अच् ततः

स्त्रियां ङीप् ।) अलक्ष्मीः । इति शब्दरत्नावली ॥

**कालका**, स्त्री, (कालकेयाख्यासुराणां माता काला

एव कन् । बाहुलकात् न इत्वम् ।) कालकेयनामा
ऽसुरगणमाता । इति जटाधरः ॥ (सा च वैश्वानर-
कन्या । यथा, भागवते ६ । ६ । ३२ ।
"वैश्वानरसुता यश्च चतस्रश्चारुदर्शनाः ।
उपदानवी हयशिरा पुलोमा कालका तथा" ॥)

उदयास्ताभ्यां दण्डपलादिक्रमेण सम्पादयतीति ।
कृ + क्विप् तुगागमश्च ।) सूर्य्यः । इति त्रिकाण्ड-
शेषः ॥

**कालकृतः**, पुं, (कालेन परमेश्वरेण कृतः सृष्टः । यद्वा

कालं काष्ठाकलादिमानं कृतः कर्त्ता । कृ + कर्त्तरि
+ क्तः ।) सूर्य्यः । इति शब्दरत्नावली ॥ कालजाते,
त्रि । यथा, पुराणे, --
"सर्व्वं कालकृतं मन्ये कालो हि बलवत्तरः" ॥

**कालखञ्जनं**, क्ली, (कालेन कालान्तरेण खञ्जति

विकृतिं गच्छतीति । काल + खजि + ल्युः ।) यकृत् ।
इति हेमचन्द्रः ॥

**कालखण्डं**, क्ली, (कालं कृष्णं खण्डम् ।) यकृत् । दक्षि-

णकुक्षिस्थमांसखण्डम् । इत्यमरः । २ । ६ । ६६ ॥
(यकृत्शब्देऽस्य विशेषो ज्ञातव्यः ॥)

**कालग्रन्थिः**, पुं, (कालस्य ग्रन्थिरिव ।) वत्सरः । इति

**कालज्ञः**, पुं, (कालं कालानुयायिकर्त्तव्यादिकं काल-

गतिं वा जानातीति । काल + ज्ञा + कः ।) कुक्कुटः ।
इति राजनिर्घण्टः ॥ (कालवेत्तरि त्रि,
यथा, मनुः ७ । २१७ ।
"तत्रात्मभूतैः कालज्ञैरहार्य्यैः परिचारकैः" ॥)

**कालञ्जरः**, पुं, (कालं जरयति । काल + जॄ + णिच्

+ अच् । बाहुलकात् मुम् ।) योगिचक्रमेलकम् ।
(कालं मृत्युं जरयतीति ।) भैरवः । (कालेन
जीर्य्यति । जॄ + अच् ।) पर्व्वतविशेषः । इति
मेदिनी ॥ (यथा, महाभारते ३ । तीर्थयात्रा-
पर्व्वणि ८५ । ५६ ।
"अत्र कालञ्जरं नाम पर्व्वतं लोकविश्रुतम् ।
तत्र देवह्रदे स्नात्वा गोसस्रफलं लभेत्" ॥)
देशविशेषः । इति धरणी ॥

**कालञ्जरी**, स्त्री, (कालं जरयति । काल + जॄ + णिच्

+ अच् । मृत्युञ्जयः तस्य पत्नी ङीप् ।) चण्डी ।
इति धरणी ॥ (स्वयमेव कालं जरयतीति व्युत्-
पत्त्या टावेव ।) तदा कालञ्जरा इति रूपान्तरम् ॥

**कालतालः**, पुं, (कालतायै कृष्णत्वात् अलति पर्य्या-

प्नोति । कालता + अल + अच् ।) तमालवृक्षः

:इति राजनिर्घण्टः ॥ (अस्य गुणादिकन्तमालशब्दे-

ज्ञेयम् ॥)

**कालधर्म्मः**, पुं, (कालस्य धर्म्मः । आयुषः परिणाम

काले पञ्चत्वप्राप्तिरूपो धर्म्मः ।) मृत्युः । इत्यमरः । २ । ८ । ११६ ॥ समयस्य स्वभावः ॥ (यथा, हेः रामायणे । २ । ७२ । ३७ ।
"कालधर्म्मपरिक्षिप्तः पाशैरिव महागजः" ॥)

**कालनिर्य्यासः**, पुं, (कालः कृष्णवर्णो निर्यासः ।)

गुग्गुलुः । इति रत्नमाला ॥

**कालनेमिः**, पुं, (कालम्य मृत्योः नेमिरिव चक्रवत् ।)

स्वनामख्यातराक्षसः । स च लङ्कापते रावणस्य मातुलः । यथा, --
"कालनेमिं दुराधर्षं रक्षःपरमदुर्जयम् ।
चतुरास्यं चतुर्हस्तमष्टनेत्रं भयावहम्" ॥
इति गोः रामायणे ६ । ८२ । ६४ ॥ दैत्यविशेषः । यथा, -- श्रीभागवते ।
"आत्मानमिह संजातं जानन् प्राग्विष्णुना हतम् ।
महासुरं कालनेमिं यदुभिः स व्यरुध्यत" ॥
स तु हिरण्यकशिपुपुत्त्रः । इति हरिवंशः ॥
(कालचक्रम् ॥)

**कालनेमिरिपुः**, पुं, (कालनेमेः कालनेमिसंज्ञका-

सुरस्य रिपुः हन्ता ।) विष्णुः । इति शब्दरत्नावली ॥ (कालनेमे रावणमातुलस्य रिपुः हन्ता । हनूमान् । इति व्युत्पत्तिलव्धोऽर्थः ॥)

**कालनेमिहा**, [न्] पुं, (कालनेमिं तन्नामानं असुरं

हतवान् । हन् + क्विप् ।) विष्णुः । इति त्रिकाण्डशेषः ॥ (यदुक्तं महाभारते १३ । १४९ । ८२ ।
"कालनेमिनिहा वीरः शौरिः शूरजनेश्वरः" ॥
कालनेमिं स्वनामख्यातरावणमातुलंहतवानिति व्युत्पत्था हनूमान् ॥)

**कालनेमी**, [न्] पुं, (कालस्येव नेमिरस्त्यस्य ब्रीह्या-

देराकृतिगणत्वात् इनिः ।) कालनेमिः । इति द्विस्वपकोषः ॥

**कालनेम्यरिः**, पुं, (कालनेमेः अरिः शत्रुः ।) विष्णुः ।

इति त्रिकाण्डशेषः ॥

**कालपर्णः**, पुं, (कालं कृष्णं पर्णं पत्त्रं यस्य ।) तगर-

वृक्षः । इति शब्दरत्नावली ॥

**कालपालकं**, क्ली, (कालं कृष्णवर्णं पालयति धार-

कानि । ऊरूजानुकजङ्घेचरणाविति च राशयोऽजाद्याः" ॥ इति दीपिका ॥ * ॥ नराणां शुभाशुभज्ञानार्थं
जन्मलग्नादिराशिद्रेक्काणघटितपुरु
षाकारः । यथा, "कं दृक्श्रोत्रनसाकपोलहनवो वक्त्रञ्च होरादयस्ते
कण्ठांशकबाहुपार्श्वहृदयक्रो-
डानिनाभिस्ततः । वस्तिः शिश्नगुदे ततश्च वृषणा-
वूरूततो जानुनी जङ्घाङ्घ्री ह्युभयत्र वाममुदितैर्द्रेक्काणभागैस्त्रिधा" ॥ इति
"कालनरस्याङ्गेसद-
सद्ग्रहयोगतः । पुंसामपि तदङ्गेषु शुभाशुभफलं वदेत्" ॥ इति वृहज्जातकम् ॥

**कालपृष्ठं**, क्ली, (कालं कृष्णं पृष्टं यस्य ।) कर्णधनुः ।

धनुर्मात्रम् । इति हेमचन्द्रः ॥

**कालपृष्ठः**, पुं, (कालं कृष्णवर्णं पृष्ठं पृष्टभागो यस्य ।)

कङ्कपक्षी । मृगविशेषः । इति हेमचन्द्रः ॥

**कालपेषी**, स्त्री, (पिष्यतेऽसौ । पिष् + कर्म्मणि घञ् ।

पेषः । कालः पेषः । ततः स्त्रियां ङीप् ।) श्यामालता । इति रत्नमाला ॥ (अस्या पर्य्याया यथा ॥
"कालपेषी महाश्यामा सुमद्रोत्पलशारिवा ।
दीर्घमूल च पालिन्दीमसूरविदलाच सा" ॥)

**कालप्रभातं**, क्ली, (कालं कृष्णं प्रभातं यत्र ।) शर-

दृतुः । शरत्कालः । इति त्रिकाण्डशेषः ॥

**कालभाण्डिका**, स्त्री, (कालभायै कृष्णप्रभायै अण्डति

उद्यच्छति । अडि + ण्वुल् टाप् इत्वञ्च ।) मञ्जिष्टा ।
इति राजनिर्घण्टः ॥

**कालमानः**, पुं, (कालो मन्यते यः जनैरितिशेषः ।

काल + मन + कर्म्मणि घञ् ।) कृष्णार्ज्जकः । इति
रत्नमाला ॥ कालतुलसी इति भाषा ।
राजनिर्घण्टे
लान्तशब्दोऽयम् ॥ (लकारान्तस्यास्य व्यवहारो
यत्र तद्यथा ॥ सुश्रुते सूत्रस्थाने । ३८ अः ॥

मसूरविदला कोलकैषिकाकालमेषिका" ॥
इति भावप्रकाशस्य पुर्ब्बखण्डे १ भागे ॥)

**कालमेषी**, स्त्री, (कालमेष + ङीष् ।) सोमराजी ।

इत्यमरः । २ । ४ । ९६ ॥ (अस्याः पर्य्यायो यथा, --
"अवल्गुजो वाकुची स्यात् सोमराजी सुपर्णिका ।
शशिलेखाकृष्णफला सोमा पूतिफलीति च" ॥
सोमवल्ली कालमेषी कुष्ठघ्नी च प्रकीर्त्तिता ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे । गुणा-
श्चास्या वाकुचीशब्दे ज्ञेयाः ॥) मञ्जिष्ठा । इति
शब्दरत्नावली ॥ त्रिवृत् । इति
राजनिर्घण्टः ॥

**कालरात्रिः**, स्त्री, (कालः कालरूपा ब्रह्मैकदिने चतु-

र्द्दशमनूनामधिकारावसाने
सृष्टिसंहारहेतुभूता
रात्रिः ।) रात्रिविशेषः । सा तु कालः संहारः ।
मरणं तदुपलक्षितारात्रिः
कल्पान्तरात्रिरित्यर्थः ।
इति देवीमाहात्म्यटीकायां विद्याविनोदः ॥ भीम-
रथी । इति हारावली ॥ दुर्गायाः शक्तिविशेषः ।
यथा, --
"सा दूर्गा शक्तिभिः सार्द्धं काशीं रक्षति सर्व्वतः ।
ताः प्रयत्नेन संपूज्याः कालरात्रिमुखा नरैः" ॥
इति काशीखण्डम् ॥ (दीपावली । यथा, --
"दीपावली तु या प्रोक्ता कालरात्रिश्च सा मता" ।
इत्यागमवचनात् ।
क्रियायोग्यकालविशेषः । यदुक्तं
दीपिकायाम् ।
"रवौ षष्ठं विधौ वेदं कुजवारे द्वितीयकम् ।
वुधे सप्त गुरौ पञ्च भृगुवारे तृतीयकम् ॥

यतीति । काल + पाल + ण्वु ल् ।) कङ्कुष्टमृत्तिका । इति राजनिर्घण्टः ॥

**कालपीलुकः**, पुं, (कालः कृष्णः पीलुः । स्वार्थे कन् ।)

कुपीलुः । इति भावप्रकाशः ॥ (गुणाः पर्य्याया-श्चास्य कुपीलुशब्दे बोद्धव्याः ॥)

**कालपुरुषः** पुं, (कालः कालचक्रं पुरुष इव ।) यम-

सहायः । इति जटाधरः ॥ ज्योतिःशास्त्रम् । यथा
“किन्त्वस्य कालपुरुषाख्यमहार्णवस्य
गच्छेत् कदाचिदनृषिर्म्मनसापि पारम्” ॥
कालपुरुषः स चाख्या नाम यस्यासौ तस्य
ज्योतिःशास्त्रविस्तीर्णसमुद्रस्य । इति भट्टोत्पलः ॥ * ॥
नराणां शुभाशुभज्ञानार्थं जन्मलग्नादिद्वादशरा-
शिकल्पितपुरुषाकारः । यथा, --
“शीर्षमुखबाहुहृदयोदराणिकटिवस्तिगुह्यसंज्ञ-
“सुरसा-श्वेतशुरसा-फणिज्झकार्ज्जक-भूस्तृण-सुग-
न्धक-सुमुख-कालमाल-कासमर्द्द-क्षवक-खरपुष्पा-
विडङ्ग-कट्फल-सुरसीत्यादयः, सुरसादिगणे ॥)

**कालमुष्ककः**, पुं, (कालो मुष्क इव कायति प्रका-

शते । कै + कः ।) घण्टापारलिवृक्षः । इति रत्न-
माला ॥ (यस्मिन्नस्य व्यवहारस्तद्यथा, --
“प्रशस्तेऽहनि नक्षत्रे कृतमङ्गलपूर्ब्बकम् ।
कालमुष्ककमाहृत्य दग्ध्वा भस्म समाहरेत्” ॥
इति वैद्यकचक्रपाणिसंग्रहे अर्शोऽधिकारे कुत्र-
चित्क्षारनामकौषधे ॥)

**कालमूलः**, पुं, (कालं मूलं यस्य ।) रक्तचित्रकवृक्षः ।

इति राजनिर्घण्टः ॥

**कालमेशिका**, स्त्री, (कालः मिश्यते कालोऽयमिति

कथ्यते जनैरिति शेषः । मिश + कर्म्मणि घञ्
गौरादित्वात् ङीष् ततः कन् टाप् ह्रस्वश्च ।)
कालमेषिका । इत्यमरटीकायां रायमुकुटः ॥

**कालमेशी**, स्त्री, (कलमेश + ङीष्) कालमेषिका ।

इत्यमरटीकायां भरतः ॥

**कालमेषिका**, स्त्री, (कालं मिषति स्पर्द्धते स्वकाण्डेन ।

मिष + अण् । गौरादित्वात् ङीष् स्वार्थेकन् टाप्
ह्रस्वश्च ।) मञ्जिष्ठा । कृष्णत्रिवृता । इत्यमरः २ ।
४ । १०९ ॥ अस्याः पर्य्याया यथा, --
“त्रिवृत्श्यामार्द्धचन्द्रा च पालिन्दी च सुषेणिका ।
शनावाद्यं तथा चान्तं रात्रौ कालं
विवर्जयेत्” ॥)

**कालरुद्रः**, पुं, (कालः कालरूपः सर्व्वसंहारको रुद्रः ।)

कालाग्निरुद्रः । यथा, देवीपुराणे, --
“येषु नः कालरुद्रस्य नानास्त्रीशतसङ्कुला ।
विचित्रहर्म्म्यविन्यासा कुतस्ते मेरुपृष्ठतः ॥
सा एव कालरुद्रस्य तनुरूपेण संस्थिता” ॥

**काललवणं**, क्ली, (कालं कृष्णवर्णं लवणम् ।) विड्-

लवणम् । इति रत्नमाला ॥
(“न काललवणे गन्धः सौवर्च्चलगुणाश्च ते” ॥
इति चरके सूत्रस्थाने २७ अः ॥)

**काललौहं**, क्ली, (कालं कृष्णं लौहं आयसमित्यर्थः ।)

कालायसम् । तिखा इति भाषा ।
तत्पर्य्यायः ।
कृष्णायसम् २ रुक्मम् ३ तीक्ष्णम् ४ । इति रत्न-
माला ॥ (कालायसशब्देऽस्य विवरणं
ज्ञातव्यम् ॥)

**कालवलनं**, क्ली, (कलयति उपभुनक्ति विषयं । कल +

णिच् + अच् । काल्यते प्रेर्य्यतेऽसौ कालेन वा णिच्
कर्म्मणि पञ् । कालः कायः तस्य वलनं आव-
रणम् । वल संवरणे + करणेल्युट् ।) वर्म्म । इति
त्रिकाण्डशेषः ॥ कायवलनमिति
साधुपाठः ॥

**कालवृन्तः**, पुं, (कालं वृन्तं यस्य ।) कुलत्थवृक्षः ।

इति रत्नमाला ॥

**कालवृन्ती**, स्त्री, (कालवृन्त + गौरादित्वात् ङीष् ।)

पाटलावृक्षः । इति राजनिर्घण्टः ॥

**कालवेला**, स्त्री, (कालस्य वेला ।) क्रेयानर्हकालवि-

शेषः । सा तु रव्यादिवारे कालस्य
शनेस्तत्तद्-

:नक्तं चतुर्थयामार्द्धम् । कुजे दिवा षष्टयामार्द्धं

नक्त्वं सप्तमयामार्द्धम् । वुधे दिवा तृतोय यामार्द्धं

नक्तं सप्तमयामार्द्धम् ॥ गुरौ दिवा सप्तमयामार्द्धं

नक्तं पञ्चमयामार्द्धम् । शुक्रे दिवा चतुर्थयामार्द्धं

नक्तं तृतीययामार्द्धम् । शनौ दिवा प्रथमाष्टम-

यामार्द्धं नक्तं तदेव । इति दीपिका ॥

लशाकं, क्ली, (कालं कृष्णं शाकम् ।) स्वनामख्यात-

शाकम् । नरचा इति हिन्दी भाषा । तत्पर्य्यायः ।

नाडिकम् २ श्राद्धशाकम् ३ कालकम् ४ । अस्य

गुणाः । सारकत्वम् । रुचिवायुबलकारित्वम् ।

कफशोथरक्तपित्तनाशित्वम् । मेध्यत्वम् । हिम-

त्वञ्च । इति भावप्रकाशः ॥ तिक्तपूतिका । कुलत्थ-

शाकं इति केचित् । अस्य गुणाः । कटुत्वम् ।

अग्निदीपनत्वम् । गुरुत्वम् । शोथनाशित्वञ्च ।

इति राजवल्लभः ॥ (यथा च वाभटे सूत्रस्थाने ।

६ अध्याये ।

“वर्षाभ्वौ कालशाकञ्च सक्षारं कटुतिक्तकम् ।

दीपनं भेदनं हन्ति गरशोफकफानिलान्” ॥)

**कालशालिः**, पुं, (कालः कृष्णः शालिः उत्कृष्टधान्य-

विशेषः ।) कृष्णशालिः । इति राजनिर्घण्टः ॥

**कालशेयं**, क्ली, (कलश्यां भवम् । कलशी + ढक् ।)

कालसेयम् । घोलम् । इत्यमरटीकायां भरतः ॥

**कालसंरोधः**, पुं, (कालस्य संरोधः ।) चिरकालाव-

स्थानम् । इति मिताक्षरा ॥ यथा ।

“न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः” ।

इति याज्ञवल्क्यः ॥

**कालसर्पः**, पुं, (कालः कृष्णः सर्पः ।) कृष्णसर्पः ।

तत्पर्य्यायः । अलगर्द्दः २ महाविषः ३ । इति

त्रिकाण्डशेषः ॥ (यथा काशीखण्डे १०० अध्याये ।

“स दष्टः कालसर्पेण स दष्टो मृत्युना स्फुटम् ।

स मुष्टस्तत्र दिवसे विश्वेशो यत्र नेक्षितः” ॥)

**कालसारं**, क्ली, (कालः सारः प्रधानं यस्य ।) पीत-

चन्दनम् । इति भावप्रकाशः ॥ (कालीयकशब्देऽस्य-

गुणादयो बोद्धव्याः ॥)

**कालसारः**, पुं, (कालः सारः प्रधानं यस्य ।) स्वनाम-

ख्यातहरिणः । तत्पर्य्यायः । कृष्णसारः २ । इति

शब्दरत्नावली ॥

**कालसूत्रं**, क्ली, (कालस्य यमस्य वन्धनहेतुकायाः

**काला**, स्त्री, (कालो वर्णोऽस्त्यस्य अर्श आदिभ्य अच्

टाप् च । अत्र वर्णस्याविवक्षायां

जानपदेति न

ङीष् । अर्श आद्यजन्तात् न ङीष्

इत्यर्थः ।)

नीलिनी । कृष्णत्रिवृता ।

कृष्णजीरकः । इत्यमरः ।

२ । ४ । ९४ ॥ मञ्जिष्ठा इति मेदिनी

॥ कुलिक-

वृक्षः । कालियाकडा इति भाषा ।

इति रत्न-

माला ॥ अश्वगन्धावृक्षः । इति

राजनिर्घण्टः ॥

पाटलावृक्षः । इति भावप्रकाशः ॥

(दक्षकन्या-

विशेषः । सा तु कश्यपपत्नी । यथा

महाभारते

१ । सम्भवपर्व्वणि ६५ । १२ ।

“अदितिर्दितिर्दनुः काला दनायुः

सिंहिका

तथा” ॥)

**कालागुरु**, क्ली, (कालं कृष्णं अगुरु ।) कृष्णागुरु ।

इत्यमरः । २ । ६ । १२७ ॥ (यथा

रघुः ४ । ८१ ।

“चकम्पेतीर्णलौहित्ये तस्मिन्

प्राग्ज्योतिषेश्वरः ।

तद्गजालानतां प्राप्तैः सह

कालागुरुद्रुमैः” ॥

कृष्णागुरुशब्देऽस्य पर्य्यायः

गुणाश्चज्ञेयाः ॥)

**कालाग्निः**, पुं, (कालः सर्व्वसंहारकः अग्निः । प्रल-

याग्निः । यथा महाभारते १ । ५४ ।

२५ ।

“ब्रह्मदण्डं महाघोरं

कालाग्निसमतेजसम् ।

नाशयिष्यामि माऽत्र त्वं भयं कार्षीः

कथञ्चन” ॥

तदधिष्टातृरुद्रेव्स्य प्रियत्वात्

पञ्चमुखरुद्राक्षो-

विद्युतश्चलशीघ्रश्च प्रसन्नः शान्तसौम्यदृक् ॥

सर्व्वज्ञो विविधो बुद्धो द्युतिमान् दीप्तिसुप्रभः ।

एते रुद्रा महात्मानः कालिकाशक्तिवृंहिताः ॥

संहरन्ति समस्तेदं ब्रह्माद्यं सचराचरम् ।

कालाग्निभुवनीशोऽयं बहुकोटिभिरावृतः ॥

तस्याः पुरस्य विस्तारं शतकोटिसुवर्त्तुला ।

देवगन्धर्व्वसिद्धानां तत्र भोगाः सुदुर्ल्लभाः ॥

पूर्ब्बोत्तरपरा पङ्क्तिर्याम्योत्तरस्थितापरा ।

अनलानिलपरा च नैरृतीशानगापरा ॥

एतेषां मध्यतो राजन् कालरुद्रस्तु शोभने ।

पङ्क्त्याकारैः पुरैः सर्व्वं कटकं तस्य संस्थितम्

॥

समन्ताद्वेष्टितवनं प्राकाराट्टालगोपुरैः ।

वज्रेन्द्रनीलवैदूर्य्यैः प्राकारैः सर्व्वतोऽन्वितम् ॥

कालाग्निनरकान्ते तु पुरं कालस्य संस्थितम् ।

पञ्चाशल्लक्षविस्तारं समन्तात् परिवर्त्तुलम् ॥

जाम्बूनदमयैर्हैमैः खचितं रत्नधातुभिः ॥

प्रमदाजनसंजुष्टं नानावर्णसमावृतम् ॥

कामोन्मत्तप्रमत्तश्च तद्भाति जनसंकुलम् ।

कालस्य भुवनं दिव्यं वृत्ताकारं मनोहरम् ॥

वेष्टितं हेमप्राकारैर्योजनायुतमुच्छ्रितम् ।

प्राकारावहिदण्डान्ते अन्तरं योजनायुतम् ॥

अग्निज्वालैश्च निविडैर्भयदैः किंशुकप्रभैः ।

हरितालनिभा ज्वाला सिन्दूरगैरिकाप्रभा ॥

अत उद्ध्वं प्रजज्वाल वातोद्धूताग्निभास्वरा ।

वीचितरङ्गकल्लोलज्वालामालाकुलाम्बरा ॥

प्रवृत्तास्ताः प्रमाणेन योजनद्वयकोटयः ।

अष्टानवतिलक्षाणि ज्वाला ऊद्ध्वन्ततः शिला

॥

वज्रभूता सदा तप्ता तस्य तेजोनियामिका ।

चत्वारि कोटिमानेन कारणेन तु स्थापिता ॥

तस्यार्द्धेन भवेत् किञ्चित् कोट्यश्चत्वारि

वासव ! ।

एवं कालाग्निरुद्रस्य माहात्म्यं कीर्त्तितं मया ॥

श्रवणात् सर्व्वपापानि शाम्यन्ति कालजान्यपि”

॥

इत्याद्ये देवीपुराणे कालाग्निरुद्रपुरकथनम् ॥

(कृष्णयजुर्व्वेदगतोपनिषद्विशेषः । यथा, मुक्ति-

कोपनिषदि ।

“कालाग्निरुद्रमैत्रेयी सुवालक्षरि मन्त्रिका” ॥

वटिकौषधविशेषः । यथा, --

“सूतकान्ताभ्रलौहानां भस्ममाक्षिकगन्धकम् ।

भूधराख्ये पुटे पश्चाद्दिनैकं तद्विपाचयेत् ॥

सूत्रमिव ।) नरकविशेषः । इत्यमरः । १ । ८ । २ ॥
तत्तु कुलालचक्रसूत्रच्छेदनरूपम् । इति मनुः ॥
(यथा मार्कण्डेये १४ । ८९ ।
"कालसूत्रे तथाच्छेदमनेकाश्चैव यातनाः ।
प्राप्य निष्कृतिमेतस्मात् न वेद्मि कथमेष्यति" ॥)

**कालसेयं**, क्ली, (कलस्यां भवम् । कलसी + ढक् ।)

घोलम् । इत्यमरः । २ । ९ । ५३ ॥

**कालस्कन्धः**, पुं, (कालः कृष्णः स्कन्धो यस्य ।) तमाल-

वृक्षः । तिन्दुकवृक्षः । जीवकद्रुमः । इति मेदिनी ॥
दुष्खदिरः । उदुम्बरः । इति राजनिर्घण्टः ॥
(अस्य व्यवहारो यथा, -- सुश्रुते सूत्रस्थाने ।
३८ अध्याये सालसादिवर्गे ॥
"सालसाराजकर्णखदिरकदरकालस्कन्धक्रमुकभूर्ज्ज
मेषशृङ्गीत्यादिषु" ॥)

ऽपि कालाग्निनाभ्नाख्यायते ।)
पञ्चमुखरुद्राक्षः ।
यथा स्कान्दे ।
"पञ्चवक्त्रः स्वयं रुद्रः कालाग्निर्नाम
नामतः ।
अगम्यागमनाञ्चेव अभक्ष्यस्य च
भक्षणात् ।
मुच्यते सर्व्वपापेभ्यः पञ्चवक्त्रस्य
धारणात्" ॥
इति तिथ्यादितत्त्वम् ॥

**कालाग्निरुद्रः**, पुं, (कालः संहारकः अग्निः सम्बर्त्त-

काग्निरित्यर्थः । तस्याधिष्ठाता रुद्रः ।
कालाग्नि
रिव रुद्रो वा ।) संहारकारिरुद्रः ।
यथा ।
कालाग्निरुद्र ऋषिरित्यादि
वैदिकसन्ध्यायां रुद्रो-
पस्थानम् ॥ * ॥ तद्विवरणं यथा, --
शक्र उवाच ।
"भगवंस्तव वाक्यानां न तृप्तिर्भवते
मम ।
कालाग्निपार्थिवं मानं श्रोतुमिच्छामि
तत्त्वतः" ॥
भगवानुवाच ।
"न हि पार्थिवद्वीपेषु मेरुपृष्ठेऽपि
वासव ! ।
भोगाह्लादकरा नृणां तथा
पातालवासिषु ॥
येषु नः कालरुद्रस्य
नानास्त्रीशतसंकुला ।
विचित्रहर्म्म्यविन्यासा कुतस्ते
मेरुपृष्ठतः ॥
सा एव कालरुद्रस्य तनुरुपेण
संस्थिता ।
सा पराशिवभावेन परमापददायिका
॥
तस्या यद्दुःसहं तेजो ब्रह्मादीनां क्षयं
करम् ।
तं विद्धि कालरुद्रेति सौम्यरूपं
सदाशिवम् ॥
कालाग्निव्यसनं लक्षं योजनानां
प्रमाणतः ।
अर्द्धेनोच्छ्र्यतस्तस्य पादाः पादेन
वासव ! ॥

दशमांशं विषं योज्यं माषमात्रञ्च भक्षयेत् ।
रसः कालाग्निरुद्रोऽयं दशाहेन विसपेनुत्" ॥
कालाग्निरुद्रोरसः ॥
इति रसेन्द्रसारसंग्रहे वीसर्पाधिकारे ॥ * ॥)

**कालाञ्जनी**, स्त्री, (अज्यतेऽनया । अन्ज् + करणे

ल्युट् + ङीप् । काली अञ्जनी ततः पुंवद्भावः ।)
क्षुपविशेषः । कालिकर्पसिकिनी इति ख्याता ।
तत्पर्य्यायः । अञ्जनी २ रेचनी ३ शिलाञ्जनी ४
नीलाञ्जनी ५ कृष्णाभा ६ काली ७ कृष्णाञ्जनी
८ ।
अस्या गुणाः । कटुत्वम् । उष्णत्वम् । अमलत्वम्
।
कृमिशोधनत्वम् । अपानावर्त्त शमनत्वम् ।
जाठरा-
मयनाशित्वञ्च । इति राजनिर्घण्टः ॥

**कालानुनादी**, [न्] पुं, (कल एव कालः अव्यक्तमधर-

| | | |
|---|---|---|
| | सिंहरूपा महाघोरा महानक्रा<br>महाबलाः ।<br>कालाग्निरुद्ररूपो यो बहुरूपसमावृतः<br>॥<br>अनन्तपद्मरूपश्च धातारः<br>कारणेश्वरः ।<br>दारुणाग्निश्च रुद्रश्च यमहन्ता<br>क्षमान्तकः ॥<br>लोहितः क्रूरतेजात्मा घनो<br>वृष्टिर्बलाहकः । | |

:ध्वनिः । तं अनुनदतीति । अनु + नद् + णिनिः ।)

रोलम्बः । भ्रमरः । कलविङ्कः । चटा इति भाषा ।

कपिञ्जलः । चातकपक्षी । इति मेदिनी ॥

**कालानुशारिवा**, स्त्री, (कालेन कृष्णवर्णेन अनु-

कृता शारिवा ।) तगरपादिकम् । तगरमूल इति भाषा । शीतलीजटा । इति रत्नमाला । शीउली-छोप् इति भाषा ॥ (तगरशब्दे ऽस्या गुणादयो बोध्याः ॥)

**कालानुसारकं**, क्ली, (कालं कृष्णवर्णं मृगमदं अनुस-

रति गन्धेन । अनु + सृ + ण्वुल् ।) तगरम् । इति राजनिर्घण्टः ॥ पीतचन्दनम् । इति भावप्रकाशः ॥

**कालानुसारिः**, पुं, (कालं कृष्णवर्णं मृगमदं अनुसर-

तीति । काल + अनु + सृ + इञ् ।) शैलेयम् । शैलजनामगन्धद्रव्यम् । इति शब्दरत्नावली ॥

**कालानुसार्य्यं**, क्ली, (कालेन मृगमदेनानुस्रियते ।

अनु + सृ गतौ + "ऋहलोर्ण्यत्" । ३ । १ । १२४ ।

इति ण्यत् ।) शैलेयम् । शैलज इति भाषा । कालीयकम् । कालीयानामपीतवर्णसुगन्धिकाष्ठम् । इत्यमरः । २ । ४ । १२२ ॥ शिंशपावृक्षः ।

इति मेदिनी । शिशु इति भाषा ॥ तगरम् । इति भावप्रकाशः ॥

**कालानुसार्य्यकं**, क्ली, (कालानुसार्य्य + कप् ।) शैले-

यम् । इति राजनिर्घण्टः ॥

**कालान्तरविषः**, पुं, (कालान्तरे दंशनादन्यस्मिन् काले

विष विकृतिकारि यस्य ।) मूषिकादिः । इति हेमचन्द्रः ॥

**कालापः**, पुं, (कालः मृत्युराप्यते यस्मात् । काल +

आप् + अपादाने घञ् ।) सर्पभोगः । राक्षसः । इति धरणी ॥ (कलापं स्वनामख्यातं व्याकरणं वेत्तीति । अण ।) कलापव्याकरणवेत्तरि त्रि । (ऋषिविशेषः । यथा महाभारते । २ । ४ । १७ ।
"कुक्कुरो वेणुजङ्घोऽथ कालापः कठ एव च ।
मुनयो धर्म्मविद्वांसो धृतात्मानो जितेन्द्रियाः" ॥)

**कालायसं**, क्ली, (कालञ्च तत् अयश्चेति । "अनो-

अलति पर्य्याप्नोति अल् + बाहुलकात् इकन् वा ।) क्रौञ्चः । इति शब्दरत्नावली ॥

**कालिका**, स्त्री, (कालो वर्णोऽस्त्यस्याः इनिठनाविति

ठन् । यद्वा, काल + जानपदात् ङीष् स्वार्थे कन् ह्रस्वश्च । चण्डिकाभेदः । काली । तन्नामकारणं यथा ।
"सर्व्वे सुरगणाः सेन्द्रास्ततो गत्वा हिमाचलम् ।
गङ्गावतारनिकटे महामायांप्र तुष्टुवुः ॥
अनेकसंस्तुता देवी तदा सर्व्वामरोत्करैः ।
मातङ्गवनितामूर्त्तिर्भूत्वा देवानपृच्छत ॥
युष्माभिरमरैरत्र स्तूयते का च भाविनी ।
किमर्थमागता यूयं मातङ्गस्याश्रमं प्रति ।
एवं ब्रुवन्त्या मातङ्ग्यास्तस्यास्तु कायकोषतः ।
समुद्भूताब्रवीद्देवी मां स्तुवन्ति सुरा इति ॥
शुम्भो निशुम्भो ह्यसुरौ वाधेते सकलान् सुरान् ।
तस्मात्तयोर्व्वधायाहं स्तूयेऽद्य सकलैः सुरैः ॥
विनिःसृतायां देव्यान्तु मातङ्ग्याः कायतस्तदा ।
भिन्नाञ्जननिभा कृष्णा साभूत् गौरी क्षणादपि ॥
कालिकाख्याऽभवत्सापिहिमाचलकृताश्रया ।
तामुग्रतारां ऋषयो वदन्तीह मनीषिणः ।
उग्रादपि भयात्राति यस्माद्भक्तान् सदाम्बिका ॥
एतस्याः प्रथमं वीजं कथितं तन्त्रमेव च ।
एषैवैकजटा ख्याता यस्मात्तस्या जटैकिका ।
शृणुतं चिन्तनं चास्याः सम्यग्वेतालभैरवौ ! ॥
यथा ध्यात्वा महादेवीं भक्तः प्राप्नोत्यभीप्सितम् ।
चतुर्भुजां कृष्णवणा मुण्डमालाविभूषिताम् ॥
खड्गं दक्षिणपाणिभ्यां बिभ्रतीन्दीवरं त्वधः ।
कर्त्रीञ्च खर्परञ्चैव क्रमाद्वामेन बिभ्रतीम् ॥
खं लिंखन्तीं जटामेकां बिभ्रतीं शिरसा स्वयम् ।
मुण्डमालाधरां शीर्षे ग्रीवायामपि सर्व्वदा ॥
वक्षसा नागहारन्तु बिभ्रतों रक्तलोचनाम् ।
कृष्णवस्त्रधरां कट्यां व्याघ्राजिनसमन्विताम् ॥
वामपादं शवहृदि संस्थाप्य दक्षिणं पदम् ।
विन्यस्य सिंहपृष्ठे तु लेलिहानासवं स्वयम् ॥
साट्टहासमहाघोररावयुक्तातिभीषणा ।
चिन्त्योग्रतारा सततं भक्तिमद्भिः सुखेप्सुभिः ॥
एतस्याः संप्रवक्ष्यामि या अष्टौ योगिनीस्तु ताः ।
महाकाल्यथ रुद्राणी उग्रा भीमा तथैव च ॥
घोरा च भ्रामरी चैव महारात्रिश्च सप्तमी ।
भैरवी चाष्टमी प्रोक्ता योगिनीस्ताः प्रपूजयेत्" ॥
इति कालिकापुराणे उत्तरतन्त्रे ६० अध्यायः ।

हेमचन्द्रः ॥ कुज्झटिका । इत्यमरटीकायां भरतः ॥

हिमाचलभवा त्रिशिरा हरीतकी । सा गन्ध-योगकरणे प्रशस्ता । इति राजवल्लभः ॥ (नदी-विशेषः । यथा महाभारते ३ । ८४ । १४६ ।
"कालिकासङ्गमे स्नात्वा
कौशिक्यारुणयोर्य्यतः ।
त्रिरात्रोपषितो विद्वान् सर्व्वपापैः प्रमुच्यते" ॥)

**कालिकाव्रतं**, क्ली, (कालिकायाः प्रीतये यद्व्रतं वि-

हितनियमादिकम् ।) अमावास्यायां स्त्राकर्त्तव्य-व्रतविशेषः । यथा, --
युधिष्ठिर उवाच ।
"कालिकाव्रतमाहात्म्यं वद वेदविदाम्बर ! ।
किमेतस्य फलं देव को वा तद्विधिरेव च ॥
कस्माद्व्रतमिदं भूतं मर्त्ये केन प्रकाशितम् ।
त्वत्तस्तत् श्रोतुमिच्छामि तत्सर्व्वं ब्रूहि केशव !" ॥
श्रीकृष्ण उवाच ।
"पुरा मविष्यशास्त्रेषु यदुक्तं धर्म्मसंहितम् ।
तत्सर्व्वं शृणु राजेन्द्र ! कालिकाव्रतमुत्तमम् ॥
स्वर्गे पुरन्दरश्चासीत्तस्यैव राजसद्मनि ।
यद्वृत्तान्तमभूत्तत्र तच्छृणुष्व युधिष्ठिर ! ॥
सभायां संस्थितो राजा नृत्यासक्तो हि नित्यशः ।
दिनैकस्य च वृत्तान्तं श्रुत्वा हृष्टो बभूव सः ॥
अत्यामोदं समभ्येत्य पुष्पवृष्टिरमुत्तदा ।
पुरन्दरः स्वयं प्राप्य पारिजातं गृहीतवान् ॥
घ्रात्वा राज्ञा तदा पुष्पं प्रदत्तं तद्द्विजातये ।
लज्जितो ब्राह्मणः सोऽपि मानहीनोऽभवत्तदा ॥
क्रोधेन महताविष्टः शमुं कामसमन्वितः ।
क्षणं विमृष्य चेन्द्राय शापो दत्तः सुदारुणः ॥
व्याधालयेषु माज्जारो द्वादशाब्दं भविष्यसि ।
तेन कर्म्मविपाकेन मदयुक्तो विचेतनः ॥
प्राप्तमार्ज्जारदेहोऽसौ राजा विपिनमास्थितः ।

श्मायः सरसां जातिसंज्ञयोः" । ५ । ४ । ९४ ।
इति टच् ।) लौहम् । इत्यमरः । २ । ९ । ९८ ।
(यथा, गोः रामायणे । ५ । ४९ । ३२ ।
"ददर्श वीक्षमाणश्च परिघं तोरणाश्रयम् ।
तमादाय महाबाहुः कालायसमयं दृढम्" ॥
अस्य पर्य्याया यथा, --
"लोहोऽस्त्री शस्त्रकं तीक्ष्णंपिण्डं
कालायसायसी" ।
अस्य सप्तदोषा यथा, --
"गुरुता दृढतोत्क्लेदः कश्मलं दाहकारिता ।
अश्मदोषः सुदुर्गन्धो दोषाः सप्तायसस्य तु" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**कालिकं**, क्ली, (कालः कृष्णो वर्णोऽस्त्यस्य इति ठन् ।)

कृष्णचन्दनम् । तत्पर्य्यायः । कालीयम् २
काला-
यकम् ३ हरिप्रियम् ४ । इति शब्दचन्द्रिका ॥
(काले भवम् । ठञ् । कालेन निर्वृत्तं ठक् वा ।)
सामयिके त्रि । (यथा, भाषापरिच्छेदे १२२ ।
"दैशिकं कालिकञ्चापि मूर्त्त एव तु दैशिकम्" ॥)

**कालिकः**, पुं, (काले वर्षाकाले चरति ठञ् । के जले

कार्ष्ण्यम् । वृश्चिकपत्रवृक्षः । क्रमदेयवस्तुमूल्यम्
।
धूसरी । नवमेघः । पटोलशाखां । रोमाली ॥
मांसी । काकी । शिवा । मेघावलिः । इति मे-
दिनी ॥ (यथा रघुः ११ । १५ ।
"ताडका चलकपालकुण्डला
कालिकेव निविडा वलाकिनी" ॥)
स्वर्णदोषः । इति जटाधरः ॥ क्षीरकीटः । इति
हारावली ॥ मसी । इति शब्दरत्नावली ॥ का-
कोली । श्यामापक्षी । इति राजनिर्घण्टः ॥ प्रति-
मासीया वृद्धिः । यथा, --
"प्रतिमासं स्रवति या वृद्धिः सा कालिका मता" ।
इति विवादार्णवसेतौ नारदः ॥ सुरा । इति

पत्नी तस्य च तत्रासीत् पत्युः
सर्व्वाधिकारिणी ॥
ततो व्याधगृहे राजा मार्ज्जारीभूय तिष्ठति ।
ततः पुरन्दरपुरं राजशून्यमभूत्तदा ॥
शची तु चिन्तायामास अन्नपानं विहाय सा ।
उपवासं समाचर्य्य मासमेकन्तु तिष्ठति ॥
ततो देवगणाः सर्व्वे चिन्तया व्याकुलेन्द्रियाः
।
गत्वा तु राजभवनं व्याकुलां तां विलोक्य च
॥
विमृष्य चामराः सर्व्वे शच्यै वाक्यमुदाहरन् ।
शचि ! त्वं राजजायासि कथमेतत् करोषि च
॥
मासमेकमनाहारं कृत्वा तिष्ठसि सुव्रते ! ।
किं वा त्वदीप्सितं देवि ! सत्येन वद पण्डिते
॥
तच्छ्रुत्वा तु तदा देवी कृताञ्जलिरभाषत ।
यूयमेव जगन्नाथाः सृष्टिस्थित्यन्तकारकाः
॥
क्व गतो मम भर्त्ता च तन्न जानामि
कत्थताम् ।
परिचिन्त्यामराः सर्व्व ध्यानमास्थाय
संस्थिताः ॥
मार्ज्जाररूपमास्थाय स्थीयते चान्त्यजाश्रमे
।
तच्छ्रुत्वा राजपत्नी च वेपमाना मुहुर्मुहुः ॥
उवाच कुशलं प्रश्नं राजार्थं किं करोम्यहम् ।
पत्युर्यथा विमोक्षः स्यात् तत् कुरुध्वं
सुधाशनाः ॥
प्रत्यूचुश्चामराः सर्व्वे याहि त्वं
दिजसन्निधिम् ।
संभाव्य मधुरं प्रश्नं द्विजसेवां समाचर ।
द्विजगेहं समागत्य द्विजसेवापराऽभवत् ॥

:स तस्याः प्रियकार्य्येण सन्तुष्टो द्विजसत्तमः ।

हिंसाद्रोहविमुक्तश्च बलिहोमपरायणः ।
शान्तो दान्तः क्षमायुक्तः सदा
मधुरभाषितः ॥
सर्व्वप्राणिहितार्थी च
लोभमोहविवर्ज्जितः ।
जितेन्द्रियो जितक्रोधो वृद्धोऽसौ
ब्राह्मणोत्तमः ॥
राजपत्न्याः सुसेवाभिः प्रीतोऽसौ
द्विजसत्तमः ।
प्रत्युवाच स तां प्रीत्या शचि ! त्वं
चातिदुर्ल्लभे ।
किं वा त्वदीप्सितं देवि ! सत्येन वद
पण्डिते” ॥
शच्युवाच ।
“पापं यज्ज्ञानतो भर्त्रा समस्तं कर्म्मणा
कृतम्
तत् क्षमस्व महाभाग ! रक्षस्व
सुरपालकम् ॥
वासवस्तव शापेन मार्ज्जारत्वमुपागतः
।
इन्द्रो व्याधगृहे देव ! विद्यते हि न
संशयः ।
पुरन्दरस्य शापान्तः केनोपायेन
सिध्यति” ॥
ब्राह्मण उवाच ।
“शचि ! त्वं पतिभक्तासि
मद्वाक्यमवधारय ।
पतिव्रते ! महाभागे ! कालिकाव्रतमाचर
॥
दारुणं यत् कृतं तेन व्रतेनैव विमुच्यते ।
कोपात् शापो मया दत्तो तन्मोक्षं कुरु
सुव्रते !” ॥
शच्युवाच ।
“विधानं ब्रूहि मे ब्रह्मन् कालिकाया
व्रतस्य च ।
तदा तव प्रसादेन करोमि तद्व्रतं
द्विज !” ॥
ब्राह्मण उवाच ।
“अश्वत्थतरुमूलेऽस्ति वटको नाम
हिंसकः ।
तस्यैव भवनं गच्छ शापान्मोक्षं च कारय
॥

शुद्धकाले समारभ्य कृष्णपक्षे चतुर्द्दशीम् ॥
संकल्प्य विधिना पूर्ब्बममावास्यां व्रतं चरेत् ।
समारभ्य गुणैकेन द्विगुणं परिशोधयेत् ॥
न रात्रौ भोजनं कार्य्यं वामहस्ते भुजिक्रिया ।
सिद्धमन्नं रात्रिकाले दग्धमीनञ्च सर्व्वदा ॥
वर्ज्जयेत् पिष्टकं किञ्चित् रक्तशाकस्य
चाम्लकम् ।
द्विषट्कां विप्रजायाञ्च सधवां भोजयेत्ततः ॥
एवं क्रमेण कृत्वा तु कतिकालं नयेद्व्रतम् ।
ततः शुद्धदिने प्राप्ते भौमाहे मन्दवासरे ॥
यथाशक्त्युपचारैश्च पूजां कुर्य्याद्विधानतः ।
तथापराह्णकाले तु सन्ध्योपसमये तथा ॥
रात्रौ तु कदलीकाण्डे गृहं निर्म्माय प्राङ्गणे ।
तस्य मध्ये समारोप्य कालिकां पूजयेत् सदा ॥
पाद्यार्घ्याचमनीयैश्च गन्धपुष्पादिभिस्तथा ।
धूपैर्दिव्यप्रदीपैश्च नैवेद्यैर्विविधैस्तथा ॥
पिष्टकं चैव सिद्धान्नं व्यञ्जनं दग्धमीनकम् ।
निवेद्य सकलं देव्यै बलिं दत्त्वा प्रणम्य च ॥
तदन्नं व्यञ्जनं सर्व्वं नैवेद्यादिबलिं तथा ।
महारण्ये प्रदातव्यं कृत्वैतत् व्रतमुत्तमम् ॥
वैणवे कदलीमूले या कुर्य्यात् कालिकाव्रतम् ।
कार्य्यसिद्धिर्भवेत् तस्या भविता गतिरुत्तमा ॥
एतद्व्रतविधानन्तु कृत्वा सिद्धिर्भविष्यति ।
एतद्व्रतमिदं भद्रे कुरु गत्वा निजालयम् ॥
तस्यास्तद्वचनं श्रुत्वा सा शची हर्षमानसा ।
गृहमागत्य सा तस्या वार्षिकं व्रतमाचरत् ॥
गन्धपुष्पैर्धूपदीपैर्नैवेद्यैरुत्तमैस्तथा ।
कृत्वा चाश्ममयीं देवीं पूजयेत् भक्तिसंयुता ॥
नानासुगन्धिपुष्पाणि दिव्यरत्नाद्यलङ्कृतम् ।
सिद्धान्नं पायसञ्चैव शर्करान्वितपिष्टकम् ॥
अमृतायुतहावञ्च दीयते च प्रयत्नतः ।
लुलापच्छागमेषादिबलिं दत्त्वा प्रभूतकम् ॥
नानावाद्यो द्यमैर्गीतैः प्रणिपत्य पुनः पुनः ।
कृताञ्जलिपुटा स्तोत्रं भक्तिनम्रा चकार सा ॥
तुष्टा प्राह महाकाली वरं वृणु शुभानने ! ।
तत् श्रुत्वा राजपत्नी सा बभाषे च मुदान्विता ॥
मत्प्रभुराखुभुक् भूतस्तन्मोक्षं कुरु चेश्वरि ! ।
वरं दत्त्वा हैमवती बभूवान्तर्हिता नृप ! ॥
द्वादशाब्दाच्च तत्शापान्मोचितो वत्सरे तदा ।
मार्ज्जाररूपं सन्त्यज्य स गतोऽन्तेऽमरावतीम्
॥
पुष्पवृष्टिश्च दुन्दुभ्या वाद्यं देवगणैः कृतम् ।
कालिकायाः प्रसादेन गतः शक्रो निजालयम् ॥

वातनाशित्वञ्च । तत्पत्रगुणौ । रुधिरस्थापनत्वम् ।
तिक्तत्वञ्च । इति पथ्यापथ्यविवेकः ॥

**कालिङ्गः**, पुं, (केन जलेनालिङ्ग्यते इति । क + आ
लिगि + कर्म्मणि घञ् ।) भूमिकर्करुः । (कं जल-
मालिङ्गति । आ + लिगि + कर्म्मण्यण् ।) हस्ती ।
(कं वातं आलिङ्गति गृह्णाति अश्नाति इत्यर्थः ।)
सर्पः । इति मेदिनी ॥ (कुत्सितं लिङ्गं अङ्गादि-
चिह्नं यस्येति कोः कादेशः ।) लौहभेदः । अस्य
लक्षणम् । “कालिङ्गो लिङ्गवान् यः स्याद्घनः
सूक्ष्माङ्गको मतः” । इति सुखबोधः ॥ (कलिङ्गे
भवः । अण् । कलिङ्गदेशोद्भवः । यथा महा-
भारते ८ । कर्णशल्यसंवादे ४५ । १४ ।
“कुरवः सहपाञ्चालाः शाल्वा मत्स्याः सनैमिषाः ।
कोमलाःकाशयोऽङ्गाश्चकालिङ्गा मागधा स्तथा” ॥
कलिङ्गदेशस्य राजा । अण् । कलिङ्गराजः ।
यथा रघुः ४ । ४० ।
“प्रतिजग्राह कालिङ्गः तमस्त्रैर्गजसाधनः ।
पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्व्वतः” ॥)

**कालिङ्गिका**, स्त्री, (कालिङ्ग + गौरादित्वात् ङीष् ।
स्वार्थे संज्ञायां वा कन् टाप् ह्रस्वश्च ।) त्रिवृत् ।
इति राजनिर्घण्टः ॥

**कालिङ्गी**, स्त्री, (कालिङ्ग + गौरादित्वात् ङीष् ।)
राजकर्कटी । इति मेदिनी ॥ (कालिङ्गदेशोद्भवा ।
यथा महाभारते १ । ९५ । २२ ।
“अक्रोधनः खलु कालिङ्गीं करम्भां नामोपयेमे” ॥)

**कालिदासः**, पुं, (काल्याः दासः । संज्ञायां ह्रखः ।) स्वना-
मख्यातकविः । तत्पर्य्यायः । रघुकारः २ मेधारुद्रः
३ कोटिजित् ४ । इति त्रिकाण्डशेषः ॥ स तु
रघुकुमारसम्भवश्रुतबोधमेघदूताभिज्ञानशकुन्तल-
नलोदयशृङ्गारतिलकादिग्रन्थकर्त्ताविक्रमादित्य-
राजसभास्थनवरत्नमध्येसप्तमरत्नञ्च ॥ (यदुक्तम् ।
“धन्वन्तरिक्षपणकामरसिंहशङ्कु-
वेतालभट्टघटकर्परकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य” ॥)

**कालिदासकः**, पुं, (कालिदास + स्वार्थे कन् ।) कालि-
दासः । इति शब्दरत्नावली ॥

**कालिनी**, स्त्री, (कालः शिवः अधिष्ठातृतया यद्वा
कालः पुरुषाकारः आकाशस्थो लुब्धकः सन्निकृष्ट-

पत्नी सुभद्रा तस्यास्ति पतिशुश्रूषणे रता ।
तस्याः कुलव्रतं कर्म्म तत्परा भव शोभने ।
ततश्च प्राङ्मुखीभूय गता सा तस्य मन्दिरम् ॥
दृष्ट्वा व्याधः शचीं देवीं प्रत्युवाच सुभद्रिकाम् ।
आयान्तीयं शची देवी तस्याः सम्भाषणं कुरु ॥
इति तस्य वचः श्रुत्वा सुभद्रा हृष्टमानसा ।
तस्याः सम्भाषणर्थन्तु सुभद्रा चागता वहिः ।
ताञ्च दृष्ट्वा शचीं देवों सार्घ्यपाद्यादिकं ददौ ॥
शचि ! त्वं राजभार्य्यासि कस्मादागमनं तव ।
किं कार्य्यं कथय त्वं हि इत्युवाच शचीं प्रति ॥
प्रत्युवाच शची तान्तु भर्ता मे सुरपालकः ।
स च ब्राह्माणशापेन माज्जारश्चाभवद्द्रुतम् ॥
क्व गतः प्राणआथोऽसाविति चिन्तापरानिशम् ।
ज्ञात्वा केनाप्युपायेन प्राप्ता च भवतीगृहम् ॥
इत्युक्ता राजपत्न्या च दृष्टो माज्जारकस्तदा ।
सा ज्ञात्वा तं प्रियं शक्रं चिन्तां प्राप्ता दुरत्ययाम् ॥
दृष्ट्वा माज्जारतां प्राप्तं विललापाकुलेन्द्रिया ।
विलपन्तीं शचीं दृष्ट्वा सुभद्रा प्रत्युवाच ताम् ॥
पतिव्रते महाभागे ! त्वमेव राजगेहिनी ।
त्वं दुःखेन विलिप्तासि सन्देहो नास्ति तत्र वै ॥
किल तस्याप्युपायोऽस्ति कालिकाव्रतमाचर ।
अतिप्रत्यक्षरूपा सा अस्माकं कुलदेवता ॥
कालिका सा महादेवी शुभसन्ततिदायिनी ।
अनेनैव विधानेन या कुर्य्यात् कालिकाव्रतम् ।
सत्वरं कार्य्यसिद्धिः स्यात्तस्या अत्र न संशयः” ॥
इति भविष्यपुराणे कालिकाव्रतकथा समाप्ता ॥

**कालिङ्गं**, क्ली, (केन जलेन आलिङ्ग्यतेऽसौ । आ + लिगि + कर्म्मणि घञ् ।) फलविशेषः । तरमुज् इति ख्यातम् । तत्पर्य्यायः । कालिन्दकम् २ कृष्ण-वीजम् ३ फलवर्त्तुलम् ४ । अस्य गुणाः । शीतल-त्वम् । ग्राहित्वम् । स्वादुपाकरसत्वम् । गुरुत्वम् । विष्टम्भित्वम् । स्यन्दित्वम् । दृक्शुक्रपित्तनाशि-त्वम् । कफवातकारित्वञ्च । पक्वस्य तस्य गुणाः । पित्तंवृद्धिकारित्वम् । उष्णत्वम् । क्षारत्वम् । कफ-त्वेन अस्त्यस्याः ।) आर्द्रानक्षत्रम् । इति हेमचन्द्रः ॥

**कालिन्दकं**, क्ली, (कालिं जलराशिं ददातीति । दा + कः । स्वार्थे कन् ।) कालिङ्गम् । इति राजनिर्घण्टः ॥

**कालिन्दी**, स्त्री, (कलिन्दाख्यपर्व्वते तत्सन्निहितदेशे वा जाता । कलिन्दात् निःसृता वा “तत्र भवः” । ४ । ३ । ५३ । इति अण् ततो ङीप् ।) यदुना नदी । इत्यमरः । १ । १० । ३२ ॥ (यथा रघुः १५ । २८ ।
“उपकूलं स कालिन्द्याः पुरीं पौरुषभूषणः ।
निर्म्ममे निर्म्ममोऽर्थेषु मथुरां मधुराकृतिः” ॥)
रक्तत्रिवृत् । इति राजनिर्घण्टः ॥

**कालिन्दीकर्षणः**, पुं, (कालिन्दीं कर्षति यः । कृष् + कर्त्तरि ल्युः । कालिन्द्याः कर्षणो वा ।) बलदेवः । इति हलायुधः ॥

| | | |
|---|---|---|
| व्रतस्यास्य प्रभावेण<br>साकल्यमुपजायते" ॥<br>शच्युवाच ।<br>"विधानं चास्य मे ब्रूहि कालिकाया<br>व्रतस्य च ।<br>ममोपदिश्यताम्मेव तद्व्रतञ्च करोभ्यहम्<br>॥ | | |

:(कालिन्दीसङ्कर्षणकथा हरिवंशे १०२ अध्याये

उक्ता । तद्यथा, --
"रामस्तु यमुनामाह स्नातुमिच्छे महानदि ! ।
एहि मामभिगच्छस्व रूपिणी सागरङ्गमे ॥
सङ्कर्षणस्य मत्तोक्तां भारतीं परिभूय सा ।
नाभ्यवर्त्तत तं देशं स्त्रीस्वभावेन मोहिता ॥
ततश्चुक्रोध बलवान् रामो मदसमीरितः ।
चकार स हलं हस्ते कर्षणधोमुखं बली ॥
तस्यामुपरि मेदिन्यां पेतुस्तामरसस्रजः ।
मुमुचुः पुष्पकोषैश्च पुष्परेण्वरुणं जलम् ॥
स हलेनानताग्रेण कुले गृह्य महानदीम् ।
चकर्ष यमुना रामो व्युत्थितां वनितामिव ॥
सा विह्वलजलस्रोता हृदप्रस्थितसञ्चया ।
व्यावर्त्तत नदी भीता हलमार्गानुसारिणी ॥
लाङ्गलादिष्टमार्गा सा वेगगा वक्रगामिणी ।
सङ्कर्षणभयत्रस्ता योषेवाकुलतां गता ॥
पुलिनश्रोणिविम्बोष्ठी मृदितैस्तोयताडितैः ।
फेनमेखलसूत्रैश्च वेगगाम्बुदगामिनी ॥
तरङ्गविषभापीडा चक्रवाकोन्मुखस्तनी ।
वेगगम्भीरवक्राङ्गी त्रस्तमीनविभूषणा ॥
सितहंसेक्षणापाङ्गी काशक्षौमोच्छ्रिताम्बरा ।
तीरजोद्धूतकेशान्ता जलस्खलितगामिनी ॥
नपदकुण्डगोलस्थलभाजनागकालनीलेत्यादिना" । ४ । १ । ४२ । ङीष् ।) शान्तनुराजपत्नी । इति त्रिकाण्डशेषः ॥ (कालः शिवः । तस्य पत्नीति ङीष् ।) कालिका । अम्बिकाललाटनिष्क्रान्तादेवी । यथा,
"ततः कोपं चकारोच्चैरम्बिका तानरीन् प्रति ।
कोपेन चास्या वदनं मसीवर्णमभूत्तदा ॥
भ्रुकुटीकुटिलात्तस्या ललाटफलकाद्द्रुतम् ।
काली करालवदना विनिष्क्रान्तासिपाशिनी" ॥
इति मार्कण्डेयपुराणे ८७ । ५ ॥ * ॥ अन्यच्च ।
"देव्या ललाटनिष्क्रान्ता या कालीति च विश्रुता ।
तस्यास्तन्त्रं प्रवक्ष्यामि कामद शृणु भैरव ! ॥
समाप्तिसहितो दन्त्यः प्रान्त्यस्तस्मात् पुरःसरः ।
षष्ठस्वराग्निविन्द्विन्दुसहितो मादिरेव च ॥
कालीतन्त्रमिति प्रोक्तं धर्म्मकामाथदायकम् ।
एतन्मूर्त्तिं प्रवक्ष्यामि वत्सैकाग्रमनाः शृण ॥
नीलोत्पलदलश्यामा चतुर्ब्बाहुसमन्विता ।
खटठ्वाङ्गं चन्द्रहासञ्च बिभ्रती दक्षिणे करे ॥
वामे चर्म्म च पाशञ्च ऊर्द्ध्वाधो भावतः पुनः ।
दधती मुण्डमालाञ्च व्याघ्रचर्म्मवराम्बरा ॥
कृशाङ्गी दोर्घदंष्ट्रा च अतिदीर्घातिभीषणा ।
लोलजिह्वा निम्नरक्तनयना नादभैरवा ॥
कवन्धवाहना पीनविस्तारश्रवणानना ।
एषा ताराह्वया देवी चामुण्डेति च कथ्यते ॥
एतस्या योगिनीश्चाष्टौ पूजयेच्चिन्तयेदपि ।
त्रिपुरा भीषणा चण्डी कर्त्री हन्त्री विधातृका ॥
कराला शूलिनी चेति अष्टौ ताः परिकीर्त्तिताः ।
एषातिकामदा देवी जाड्यहानिकरी सदा ॥
एतस्याः सदृशी काचित् कामदा न हि विद्यते" ।
इति श्रीकालिकापुराणे उत्तरतन्त्रे ६० अध्यायः । क्षीरकीटः । मातृभेदः । उमा । नवमेघसमूहः । परीवादः । इति हेमचन्द्रः ॥ कालाञ्जनी । तुवरी । त्रिवृत् । रात्रिः । इति राजनिर्घण्टः ॥ अग्निशिखाभेदः । इति जटाधरः ॥ (यथा, मुण्डकोपनिषदि १ । २ । ४ ।
"कालीकराली च मनोजवा च
सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरूपी च देवी
लेलायमाना इति सप्त जिह्वा" ॥
वृश्चिकालीवृक्षः । इति रत्नमाला । (कालिया विछाटी इति भाषा ॥ लता । यथा वैद्यके ।
"सप्तपर्णस्तथा काली गुडुची पिचुमर्द्दकम्" ॥ * ॥ भीमसेनस्य पत्नीभेदः । यथा, भागवते ९ । २२ । ३१ ।
कर्णावतंसतानीतशवयुग्मभयानकाम् ।
घोरदंष्ट्रां करालास्यां पीनोन्नतपयोधराम् ॥
शवानां करसंधातैः कृतकाञ्चीं हसन्मुखीम् ।
सृक्वद्वयगलद्रक्तधाराविष्फुरिताननाम् ॥
घोररावां महारौद्रीं श्मशानालयवासिनीम् ।
बालार्कमण्डलाकारलोचनत्रितयान्विताम्
दन्तुरां दक्षिणव्यापिमुक्तालम्बिकचोच्चयाम् ।
शवरूपमहादेवहृदयोपरिसंस्थिताम् ॥
शिवाभिर्घोररादभिश्चतुर्द्दिक्षुसमन्विताम् ।
महाकालेन च समं विपरीतरतातुराम् ॥
सुखप्रसन्नवदनां स्मेराननसरोरुहाम् ।
एवं सञ्चिन्तयेत् कालिं सर्व्वकामार्थ सिद्धिदाम्" ॥
इति तन्त्रसारधृतकालतन्त्रम् ॥
(कालशक्त्या सर्व्वमिदं जगत् परिचालयति सैव काली प्रकीर्त्तिता यद्वा कालयति कलयति वा उत्पादयति पालयति प्रलये पुनरात्मन्येव विलापयतीति काली आद्या मूलप्रकृतिः महत्तत्वादेरुत्पत्तिलयादीनामाधारभूता । कलिहलि कामधेनुरिति कलधातुः बह्वर्थबोधिनी स्वरूपतः ब्रह्मणः सकाशात् नानाविधजगद्विचित्रविर्म्माणसमर्था बुद्धिरूपा ब्रह्मशक्तिरेव प्रकृतिः कालीति संज्ञया प्रकीर्त्त्यते । एतत् प्रबोधनाय समासतः कतिपयवचनान्यत्रोद्धृतानि यथायथं द्रष्टव्यानि । तथाहि ज्ञानसङ्कलिनीतन्त्रे । भागवते च ।
"सा माया पालिनीशक्तिः सृष्टिसंहारकारिणी ।
सा वा एतस्य संस्रष्टुः शक्तिः सदसदात्मिका ॥
माया नाम महाभाग ! ययेदं निर्म्ममे विभुः" ।
एषैव पारमेश्वरी मूलशक्तिः दुर्ब्बलाधिकारिणामुपासनासौकर्य्याय तन्त्रादिशास्त्रेषु कालीश्यामातारादिविविधनामरूपैः कल्पिता ॥
यथा, --
"या देवी सर्व्वभूतेषु विष्णुमायेति शब्दिता" ।
चितिरूपेण या कृत्स्नमेतद्व्याप्य स्थिता जगदिति" ॥
इति मार्कण्डेयपुराणीयदेवीमाहात्म्ये देवकृतदेव्याः स्तुतौ । ८५ । १२, ३४ । तथा च महानिर्व्वाणोक्ते ४ र्थ उल्लासे । देवीं प्रति सदाशिवोक्तिः ।
"त्वं परा प्रकृतिः साक्षात् ब्रह्मणः परमात्मनः ।
महत्तत्त्वादिभूतान्तं त्वया सृष्टमिदं जगत् ॥
निमित्तमात्रं तद्ब्रह्म सर्व्वकारणकारणत् ।
तस्येच्छामात्रमालम्ब्य त्वं महायोगिनी परा ॥
करोषि पासि हंस्यन्ते जगदेतच्चराचरम् ।

लाङ्गलोल्लिखितापाङ्गी क्षुभिता सागरङ्गमा ।
मत्तेव कुटिला नारी राजमार्गेण गच्छती ॥
कृष्यते सा स्म वेगेन स्रोतःस्खलितगामिनी ।
उन्मार्गा नीतमार्गा सा येन वृन्दावनं वनम् ॥
वृन्दावनस्य मध्येन सा नीता यमुना नदी ।
रोरूयमाणेव खगैरन्विता तोयवासिभिः ॥
सा यदा समभिक्रान्ता नदी वृन्दावनं वनम् ।
तदा स्त्रीरूपिणी भूत्वा यमुना राममब्रवीत् ॥
प्रसीद नाथ ! भीतास्मि प्रतिलोमेन कर्म्मणा ।
विपरीतमिदं रूपं तोयञ्च मम जायते ॥
असत्यहं नदीमध्ये रौहिणेय ! त्वया कृता ।
कर्षणेन महाबाहो स्वमार्गव्यभिचारिणी ॥
प्राप्तां मां सागरे नूनं सपत्न्यो वेगगर्व्विताः ।
फेनहासैर्हसिष्यन्ति तोयव्यावृत्तगामिनीम् ॥
प्रसादं कुरु मे वीर ! याचे त्वां कृष्णपूर्ब्बज ! ।
सुप्रसन्नमना नित्यं भव त्वं सुरसत्तम ! ॥
कर्षणायुधकृष्टास्मि रोषोऽयं विनिवर्त्त्यताम् ॥
गच्छामि चरणौ मूर्द्ध्ना तवैषा लाङ्गलायुध ! ।
मार्गमादिष्टमिच्छामि क्व गच्छामि महाभुज !" ॥)

**कालिन्दीभेदनः**, पुं, (कालिन्दीं भिनत्ति । भिद् +
कर्त्तरि ल्युः । कालिन्द्या भेदनो वा ।) बलदेवः ।
इत्यमरः । १ । १ । २५ ॥
("कालिन्दीभेदनो हलीति" पुराणम् ॥)

"युधिष्ठिरात्तु पौरव्यां देवकोऽथ घटोत्कचः ।
भीमसेनात् हिडिम्बायां, काल्यां सर्व्वगतस्ततः" ॥
मातृकाध्यानं चामुण्डाशब्दे द्रष्टव्यम् । कालिकाया ध्यानं लिख्यते यथा --
"करालवदनां घोरां मुक्तकेशीं चतुर्भुजाम् ।
कालिकां दक्षिणां दिव्यां मुण्डमालाविभूषिताम् ॥
सद्यश्छिन्नशिरःखड्गवामाधोर्द्धकराम्बुजाम् ।
अभयं वरदञ्चैव दक्षिणोर्द्धाधपाणिकाम् ॥
महामेघप्रभां श्यामां तथा चैव दिगम्बरीम् ।
कण्ठावसक्तमुण्डालीगलद्रुधिरचर्च्चिताम् ॥

कलनात् सर्व्वभूतानां महाकालः प्रकीर्त्तितः ।
महाकालस्य कलनात् त्वमाद्या कालिकापरा ॥
कालत्वादादिभूतत्त्वादाद्याकालीति गीयते ॥
ध्यानन्तु द्विविधं प्रोक्तं स्वरूपारूपभेदतः ।
स्वरूपं तव यद्ध्यानमवाङ्मनसगोचरम् ॥
मनसोधारणार्थाय शीघ्रं स्वाभीष्टसिद्धये ।
सूक्ष्मध्यानप्रबोधाय स्थूलध्यानं वदामि ते ॥
अरूपायाः कालिकायाः कालमातुर्महाद्युतेः ।
गुणक्रियानुसारेण क्रियते रूपकल्पना" ॥
तस्या अरूपाया महाकाल्या कथमेव रूप-

**कालिन्दीसूः**, स्त्री, (सूते इति । सू + क्विप् । कालिन्द्याः

यमुनायाः सूः माता प्रसवित्रीत्यर्थः ।

कालिन्दीं

सूते सूतवती वा ।) सूर्य्यपत्नी ।

ग्रमुनामाता ।

इति त्रिकाण्डशेषः ॥

**कालिन्दीसोदरः**, पुं, (कालिन्द्याः सोदरः सहोदरः ।)

यमः । इति हेमचन्द्रः ॥

**काली**, स्त्री, (कालः कृष्णवर्णोऽभ्त्यस्याः । काल + “जा-

कल्पनादिकमिति जिज्ञासितवतीं पार्व्वतीं प्रति
भगवतः शिवस्योत्तरदानं तत्रैव १३ उल्लासे ॥
"उपासकानां कार्य्याय पुरैव कथितं प्रिये ! ।
गुणक्रियानुसारेण रूपं देव्याः प्रकल्पितम् ॥
श्वेतपीतादिको वर्णो यथा कृष्णे विलीयते ।
प्रविशन्ति तथा काल्यां सर्व्वभूतानि शैलजे ! ॥
अवस्तस्याः कालशक्तेर्निर्गुणाया निराकृतेः ।
हितायाः प्राप्तयोगानां वर्णः कृष्णो निरूपितः ॥
नित्यायाः कालरूपाया अव्ययायाः शिवात्मनः ।
अमृतत्वात् ललाटेऽस्याः शशिचिह्नं निरूपितम् ॥
शशिसूर्य्याग्निभिर्न्नित्यै रखिलं कालिकं जगत् ।
सम्पश्यति यतस्तस्मत् कल्पितं नयनत्रयम्" ॥
तस्याः स्थूलध्यानं यथा तत्रैव ५ म उल्लासे ।
"मेघाङ्गीं शशिशेखरां त्रिनयनां रक्ताम्बरं बिभ्रतीं पाणिभ्यामभयं वरञ्च विलसद्रक्तारविन्द स्थिताम् ॥
मेघाङ्गीमिति वर्णनेनास्याः कृष्णवर्णत्वं सूचितं
परो अरूपाया निराकृतेः कालशक्तेरेव ध्याना-
लम्बनतया ज्ञापकत्वमिति यावत् ॥

शशिशेखरेत्युक्त्या शशी चन्द्रः जीवसमष्टिः

सर्व्वजीववीजस्वरूपो हिरण्यगर्भो ब्रह्मा एव चन्द्रनाम्नाख्यायते अतएवास्या देव्या ललाटे ऊर्द्ध्व-
देशे इति निर्देशात् समस्तजडशक्तिभ्यः पृथक्
कृत्वा जीवशक्तेरुत्कर्षं बोधयति यथा, --
"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
प्रतिपादकशास्त्रेषु विशेषतोनिश्चितं किञ्च प्रकृ-
तिपुरुषयोरपि तत्तच्छास्त्रे भूयोभूयोऽविनश्वर-
त्वमनादित्वं चाङ्गीकृतम् ।
"प्रकृतिं पुरुषञ्चैव बिद्ध्यनादी उभावपीत्यादि" ।
भूरिभूरि प्रमाणाणि सन्ति बाहुल्यभिया नैवा स्मद्भिस्तान्युद्धृतानि ॥)

**कालीकः**, पुं, (के जले अलति पर्य्याप्नोति प्रभवती-
त्यर्थः । अल + इकन् पृषोदरादित्वात् दीर्घः ।
यद्वा के जले + अलीकः मत्स्यलाभाय कपटशान्त-
मूर्त्तिरिव ।) क्रौञ्चः । इति शब्दरत्नावली ॥

**कालीची**, स्त्री, (काल्या यमभगिन्या चीयतेऽत्र ।
चिञ् + बाहुलकात् अधिकरणे डः । गौरादि-
त्वात् ङीष् ।) यमविचारभूमिः । इति त्रिकाण्ड-
शेषः ॥

**कालीतनयः**, पुं, (काल्याः यमरूपाया यमभगिन्याः
यमत्वशक्ते र्वा तनयः इव यमवाहनत्वात्तथात्वम् ।
यद्वा, कालीं इतः ज्ञातः सन् बलिदानाय आत्मानं
नयति प्रापयति । नी + अच् । कालीं प्रति
उद्दिश्य वा इतः प्राप्तः उपस्थित इत्यर्थः आत्मनो
नयः प्रापणं यस्य । महिषस्य कालीसन्निधाने
बलिदानाय नीयमानतया तथात्वम् ।) महिषः ।
इति हेमचन्द्रः ॥

**कालीयं**, क्ली, (कालस्य कृष्णवर्णस्यायं कालस्थाने
भवं वा "वृद्धाच्छः" । ४ । २ । ११४ । इति च्छः ।)
कृष्णचन्दनम् । इति शब्दचन्द्रिका ॥ (अस्य व्यव-
हारो यथा, वैद्यकचक्रपाणिसंग्रहे एकादशश-
तिकप्रसारणीतैले । "कालीयोत्पलपद्मकाह्वय-
निशेत्यादि" ॥)

**कालीयकं**, क्ली, (कालीय + स्वार्थे कन् । कालीयमिव
कायति वा । कै + कः ।) कालिया इति ख्यातं
पीतवर्णसुगन्धिकाष्ठम् । इत्यमरटीकासारसुन्दरी ॥
(यथा, महाभारते २ । ५१ । १० ।
"चन्दनागुरुकाष्ठानां भारान् कालीयकस्य च ।
चर्म्मरत्नसुवर्णानां गन्धानाञ्चैव राशयः" ॥)
तत्पर्य्यायः । जायकं २ कालानुसार्य्यं ३ ।
इत्यमरः ।
सैवकालीयकः प्रोक्तस्तथा कालेयकोऽपि च ।
पीतद्रुश्च हरिद्रुश्च पीतदारुकपीतकम्' ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**कालेयं**, क्ली, (कं सुखं आलेयं आदेयं यस्मात् ।)
कालियानामपीतवर्णसुगन्धिकाष्ठम् । इति व्याडिः
रमानाथश्च ॥ (यथा, कुमारे ७ । ९ ।
"तां लोध्रकल्केन हृताङ्गतैला-
माश्यानकालेयकृताङ्गरागाम्" ॥
कलायै रक्तधारिण्यै हितं इति ढक् ।) काल-
खण्डनम् । यकृत् इति यावत् इति मेदिनी ॥

**कालेयः**, पुं, (कालाया अपत्यं ढक् ।) दैत्यभेदः । इति
मेदिनी ॥ (यथा, महाभारते १ । ६५ । ३४ ।
"कालायाःप्रथिताः पुत्त्राः कालकल्पाः प्रहारिणः ।
प्रविख्याता महावीर्य्या दानवेषु परन्तपाः ॥
विनाशनश्च क्रोधश्च क्रोधहन्ता तथैव च ।
क्रोधशत्रुस्तथैवान्यः कालेया इति विश्रुताः " ॥)

**कालेयकं**, क्ली, (कालेय + स्वार्थे कन् ।) कालीयकम् ।
कालियानाम पीतवर्णसुगन्धिकाष्टम् । इत्यमर-
टीका ॥ ("मधुकरकुलकलङ्ककालीकृतकालेयक-
कुसुमकुड्मलेषु" । इति कादम्बरी ॥)

**कालेयकः**, पुं, (कालेय + संज्ञायां स्वार्थे वा कन् ।)
दारुहरिद्रा । इत्यमरः २ । ४ । १०१ ॥ (यथा, सुश्रुते
सूत्रस्थाने ३९ अध्यायः । "कालेयकागुरुतिल-
पर्णी कुष्ठहरिद्रेति" ॥ कालीयकशब्देऽस्य विव-
रणं ज्ञातव्यम् ॥ कलये विवादाय साधुः । कल +
ढक् + संज्ञायां कन् । कुक्कुराणां हि अन्योन्य-
कलहपरत्वं प्रसिद्धम् ।) कुक्कुरः । इति राज-
निर्घण्टः ॥

**काल्पः**, पुं, (कल्पे विधौ भवः । "तत्र भवः" ४ । ३ ।
५३ । इति अण् ।) हरिद्राविशेषः । काँचा हलुद्
इति भाषा । तत्पर्य्यायः । कर्व्वूरः २ द्राविडकः ३
द्राविडभूतिकः ४ । इति शब्दरत्नावली ॥

**काल्पकः**, पुं, (कल्पे विधौ भवः । "तत्र भव" । ४ । ३ । ५३ ।
इत्यणन्तात् संज्ञायां खार्थे वा कन् ।) कर्व्वूरकः ।

अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवरूपां महाबाहो ! ययेदं धार्य्यते जगत्”
॥

अतोऽस्या जीवशक्त्याधायकतया सैव परमात्म-

रूपिणी चिदानन्दमयीति प्रबोध्यते । यदि च
स्थानमेदे क्वचित् परब्रह्मणः सकाशादस्याः पा-
र्थक्यं दृश्यते तत्तु केवलमज्ञानां क्रियाविशेषबोध-
नायैव स्वरूपतः अग्नेर्दाहिकाशक्तिवत् सर्व्वत्रैव
शास्त्रकृद्भिस्तयोरभेदः प्रतिपादितः । त्रिनयन-
मित्युक्त्या सर्व्वज्योतिःपदार्थानां प्रधानभूता-
श्चन्द्रसूर्य्याग्नयः प्रकाशशक्तेराधिक्यात् तैरेवास्या
देव्या नयनत्रितयत्वेन प्रकल्पितं वस्तुतः सर्व्व-
प्रकाशकानां सूर्य्यादीनां सैवान्तर्यामितयाधिष्ठा-
त्रीदेवतात्मरूपिणीति बोध्यम् ॥
रक्ताम्बरं बिभ्रतीं इति सृष्टिकरणर्थं सैव परमा-
त्मरूपिणी रजोगुणोद्रेकरूपमम्बरं वस्त्रं आवरण-
शक्तिमिति भावः बिभ्रतीं धारिणीं । पाणिभ्या-
ममयं वरञ्च इति भक्तसाधकानां रक्षार्थं कुशला-
र्थञ्च वराभयदानरूपशक्तिद्वयस्य पाणिद्वयत्वेन
कल्पितं रक्तारविन्दस्थितामिति रजोगुणसमुद्भ-
वाया इच्छाशक्तेरेवारविन्दत्वेन प्रकल्पनं कृतमिति
बोध्यम् । अतः स्थूलध्यानादीनां यदिचापाततः
स्थूलदृष्ट्या नामरूपादिस्थूलजडभावो लक्ष्यते परं

२ । ६ । १२६ ॥ जावकम् ४ । इति
टीकासर्व्वस्वम् ॥
कालेयम् ५ वर्णकम् ६ कान्तिदायकम् ७ । इति
भरतधृतव्याडिः ॥ राजनिर्घण्टोक्तगुणपर्य्यायौ पी-
तचन्दनशब्दे द्रष्टव्यौ ॥ कृष्णचन्दनम् ।
तत्पर्य्यायः ।
कालीयम् २ कालिकम् ३ हरिप्रियम् ४ । इति
शन्दचन्द्रिका ॥ दारुहरिद्रा । इति राजनिर्घण्टः ॥
(अस्य व्यवहारो यत्र तद्यथा, “सालसाराज-
कर्णस्वदिरकदरकालस्कन्धक्रमुकभूर्जमेष शृङ्गीति
निशचन्दनकुचन्दनशिंशपा शिरीषासनधवार्ज्जु-
नतालशाकनक्तमालपूतीकाश्वकर्णागुरूणिकाली-
यकञ्चेति” ॥ इति सुश्रुते सूत्रस्थाने । ३८
च्यध्यायः ॥)

**कालीयकः**, पुं, (कालीय + सञ्ज्ञायां स्वार्थे वा कन् ।)

दारुहरिद्रा । इति शब्दरत्नावली ॥ (अस्य पर्य्याया
यथा, --
“दार्व्वी दारुहरिद्रा च पर्ज्जन्यापर्ज्जनीति च ।
कटङ्कटेरी पीता च भवेत् सैव पचम्पचा ॥

इत्यमरः २ । ४ । १२५ ॥ काँचा हलुद् इति
भाषा ॥

**काल्पनिकः**, त्रि, (कल्पनायाः आगतः । ठञ् ।)

कल्पनाभवः । कल्पितः । यथा । “रसः स्वाद्यते
इति काल्पनिकं भेदमुरीकृत्य कर्म्मकर्त्तरि वा
प्रयोगः” । इति साहित्यदर्पणम् ॥

**काल्यं**, क्ली, (कलयति चेष्टाम् । अघ्न्यादयश्चेति

कलेर्यक् । ततः प्रज्ञाद्यण् ।) प्रत्यूषः । इति हेम-
चन्द्रः ॥ (यथा हेः रामायणे २ । ३४ । ३४ ।
“तर्पितः सर्व्वकामैस्त्वंश्वः काल्ये साधयिष्यसि”
॥)

**काल्यकः**, पुं, (काले साधुः । तत्र साधुरिति यत् ।

स्वार्थे कन् ।) काल्पकः । इति शब्दरत्नावली ॥

**काल्या**, स्त्री, (कालः प्राप्तोऽस्याः । कालाद्यत् ।

टाप् च ।) गर्भग्रहणप्राप्तकाला ऋतुमतो गौः ।
तत्पर्य्यायः । उपसर्य्या २ । इत्यमरः । २ । ९ ।
७० ॥
(“उपसर्य्या काल्या प्रजने” । इति पाणिनिः । ३
।
१ । १०४ ॥)

**कावचिकं**, क्ली, (कवचिनां समूहः । “ठञ् कव-

चिनश्च” । ४ । २ । ४१ । इति ठञ् ।) वर्म्मभृतां

| सर्व्वत्रैव तेषां सूक्ष्मार्थरूपपरमात्मन्येव गूढता-<br>त्पर्य्यार्थः प्रतिफलत्येव विजानद्भिरेव तत्सर्व्वतो-<br>ज्ञातुं शक्यते । न ह्येतदस्माकं केवलं स्वकपोल-<br>कल्पनामात्रं<br>श्रीमद्भगवद्गीताप्रभृतितत्त्वज्ञान- | | |
|---|---|---|

:गणः । कवचधारियोद्धृसमूहः । इत्यमरः । २ ।
८ । ६६ ॥

**कावारं**, क्ली, (कं जलं आवृणोतीति । आ + वृ + अण् ।) शैवलः । इति त्रिकाण्डशेषः ॥

**कावारी**, स्त्री, (कावार + ङीष् ।) तृणादिच्छत्रम् । तत्पर्य्यायः । जङ्गमकुटी २ भ्रमत्कुटी ३ । इति त्रिकाण्डशेषः ॥

**कावृकः**, पुं, (कुत्सितः वृक इव ईषत् वृक इव वा । कोः कादेशः ।) कुक्कुटः । चक्रवाकः । पीतमस्तक पक्षी । इति विश्वमेदिन्यौ ॥

**कावेरं**, क्ली, (कस्य सूर्य्यस्येव आ ईषत् वेरं अङ्गं यस्य । ज्योतिर्म्मयत्वात् तथात्वम् ।) कुङ्कुमम् । इति जटाधरः ॥ (कुङ्कुमशब्देऽस्य विवरणं ज्ञातव्यम् ॥)

**कावेरी**, स्त्री, (कं जलमेव वेरं शरीरं । तस्येयम् । "तस्येदम्" । ४ । ३ । १२० । इति अण् । ङीप् ।) नदीविशेषः । इत्यमरः । १ । १० । ३५ ॥ (यथा, महाभारते ३ । ८५ । २२ ।
"ततो गच्छेत कावेरीं वृतामप्सरसां गणैः ।
तत्र स्नात्वा नरो राजन् गोसहस्रफलं लभेत्" ॥
इयं हि सह्याद्रेः मलयपर्व्वतस्य च सानुसन्निकटस्था । इति रघुः ॥ कुत्सितं अपवित्रं वेरं शरीरं यस्याः । कोः कादेशः ।) वेश्या । हरिद्रा ॥ इति मेदिनी ॥

**काव्यं**, क्ली, (कवेरिदं कर्म्म भावो वा । ष्यञ् ।) ग्रन्थः । इति मेदिनी ॥ रसयुक्तवाक्यम् । यथा, --
"वाक्यं रसात्मकं काव्यं दोषास्तस्यापकर्षकाः ।
उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः" ॥
एषां प्रत्येकं लक्षणानि लिख्यन्ते । तत्रादौ वाक्यलक्षणं यथा, --
"वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः" ॥
रसलक्षणं यथा, --
"विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा ।
रसतामेति रत्यादिः स्थायी भावः सचेतसाम्" ॥
"शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्" ।
इति काव्यप्रकाशः ॥
"एतेषां विवरणानि तत्तच्छब्दे द्रष्टव्यानि" ॥

**काव्यः**, पुं, (कवेः भृगोरपत्यं पुमान् इति "कुर्व्वादिभ्यो ण्यः" ४ । १ । १५१ । इति ण्यः । यञ् इति केचित् ।) शुक्राचार्य्यः । इति मेदिनी ॥ (यथा, महाभारते १ । सम्भवपर्व्वणि ७६ । ६ ।
"जिगीषया ततो देवा वव्रिरेऽङ्गिरसं मुनिम् ।
पौरहित्येन याज्यत्वे काव्यं तूशनसं परे" ॥
तामसमन्वन्तरीयऋषिविशेषः । यथा, मार्कण्डेये ७४ । ५९ ।
"ज्यीतिर्धामा पृथुः काव्यश्चैत्रोऽग्निर्बलकस्तथा ।
पीबरश्च तथा ब्रहान् सप्त सप्तर्षयोऽभवन्" ॥)

**काव्यचौरः**, पुं, (काव्यस्य चौर इव । अन्यरचितकावस्य स्वकीयत्वेन प्रख्यापकत्वात् तस्य तथात्वं बोध्यम् ।) चन्द्ररेणुः । इति त्रिकाण्डशेषः ॥

**काव्या**, स्त्री, (कववर्णने स्तुतिगाने च । बाहुलकादित्वात् ण्यत् । टाप् च । पूतनाया हि वाक्विलासविन्यासादिना नारीणां मनो मोहयित्वा ताभ्यो शिशूनाकृष्य नाशकारितया तथात्वं बोध्यम् ।) पूतना । बुद्धिः । इति मेदिनी ॥

**काश** ऋ ङ द्युतौ । कविकल्पद्रुमः ॥ (भ्वां--आत्मं--अकं--सेट् ।) ऋ अचकाशत् । ङ काशते चन्द्रः । दन्त्यान्त इति केचित् । इति दुर्गादासः ॥

**काश** य उ ऋ ङ द्युतौ । इति कविकल्पद्रुमः ॥ (दिवां--आत्मं-अकं-सेट् ।) य ङ काश्यते । उ काशित्वा काष्ट्वा । ऋ अचकाशत् । इति दुर्गादासः ॥

**काशः**, पुं क्ली, (काशते दीप्यते शोभते इति यावत् । काशृ ङ दीप्तौ + पचाद्यच् ।) तृणभेदः । केश्या इति भाषा । इति मेदिनी ॥ (यथा रघुः ४ । १७ ।
"पुण्डरीकातपत्रस्तं विकसत् काशचामरः ।
इति शब्दरत्नावली ॥ स्वनामख्यातरोगविशेषः । काशी इति भाषा । इत्यमरटीकायां भरतः ॥ तत्पर्य्यायः । क्षवथुः २ काशिका ३ । इति शब्दरत्नावली ॥ कासः ४ । इत्यमरः । २ । ४ । १६१ ॥ कासयति कुत्सितशब्दं कारयति कासः । कासृङ् कुशब्दे ञ्यन्तात् पचाद्यन् कासो दन्त्यान्तः । कश शब्दे इत्यस्मात् ञ्यन्तात् पचाद्यनि काशस्तालव्यान्तश्च । शालूरकाशशल्लक्य इत्युष्मभेदे दन्त्यतालव्यान्तमध्ये पाठात् ।
"वाराणस्यां भवेत् काशी क्षवथौ ना तृणे स्त्रिंया" ।
मिति तालव्यान्तेषु रभसः । इति तट्टीकायां भरतः ॥ * ॥ तस्य निदानं यथा, -- धन्वन्तरिरुवाच ।
"आशुकारी यतः काशः स एवातः प्रवक्ष्यते ।
पञ्च काशाः स्मृता वातपित्तश्लेष्मक्षतक्षयैः ॥
क्षयायोपेक्षिताः सर्व्वे बलिनश्चोत्तरोत्तरम् ।
तेषां भविष्यतां रुपं कण्ठे कण्डूररोचकः ॥
शूककर्णास्यकण्ठत्वं तत्राधो विहितोऽनिलः ।
ऊदर्ध्वं प्रवृत्तः प्राप्योरस्तस्मिन् कण्ठे च संसृजन् ॥
शिरः श्रोतांसि संपूर्य्य ततोऽङ्गान्युत्क्षिपन्ति च ।
क्षिपन्निवाक्षिणी पृष्ठमुरः पार्श्वेच पीडयन् ॥
प्रवर्त्तते स वक्त्रेण भिन्नकांस्योपमध्वनिः ।
हृत्पार्श्वोरःशिरःशूलमोहक्षोभस्वरक्षयान्॥
करोति शुष्ककाशञ्च महावेगरुजा स्वनम् ।
सोऽङ्गहर्षी कफं शुष्कं कृच्छ्रान्मुक्तोऽल्पतां व्रजेत् ॥
पित्तात्तु पीताक्षिकता तिक्तास्यत्वं ज्वरो भ्रमः ।
पित्तासृग्वमनं तृष्णा वैस्वर्य्यं धूमको मदः ॥
प्रततं काशवेगे च ज्योतिषामिव दर्शनम् ।
कफादुरोऽल्परुङ्मूर्द्धहृदयं स्तिमितं गुरु ॥
कण्ठे प्रलेपदमनं पीनसच्छदर्द्यरोचकः ।
रोमहर्षघनस्निग्धश्लेष्मणश्च प्रवर्द्धनम् ॥
युद्धाद्यैः साहसैस्तैस्तैः सेवितैरयथाबलम् ।

दोषलक्षणं यथा, --
रसापकर्षका दोषास्ते पुनः पञ्चधा मताः ।
पदे तदंशे वाक्यार्थे सम्भवन्ति रसेऽपि यत्” ॥
गुणलक्षणं यथा, --
“रसस्याङ्गित्वमाप्तस्य धर्म्माः शौर्य्यादयो यथा ।
गुणा माधुर्य्यमोजोऽथ प्रसाद इति ते त्रिधा” ॥
अलङ्कारलक्षणं यथा, --
“शब्दार्थयोरस्थिरा ये धर्म्माः शोभातिशायिनः
॥
रसादीनुपकुर्व्वन्तोऽलङ्कारास्तेऽङ्गदादिवत्” ॥
रीतिलक्षणं यथा, --
“पदसंघटनारीतिरङ्गसंस्थाविशेषवत् ।
उपकर्त्री रसादीनां सा पुनः स्याच्चतुर्व्विधा ।
वैदर्मी चाथ गौडी च पाञ्चाली लाटिका तथा” ॥
इति साहित्यदर्पणम् ॥ * ॥ तत् काव्यं त्रिविधं
ध्वनिगुणीभूतव्यङ्ग्यचित्रभेदेन । तत्राद्यस्य
लक्षणम् ।
“इदमुत्तममतिशयिनि व्यङ्ग्य वाच्यात्
ध्वनिर्बुधैः
कथितः” । द्वितीयस्य लक्षणम् ।
“अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु
सध्यकम्” ॥
तृतीयस्य लक्षणम् ।

ऋतुर्विडम्बयामास न पुनः प्राप तच्छ्रियम्” ॥)
तत्पर्य्यायः ॥ इक्षुगन्धा २ पोटगलः ३ ।
इत्यमरः ।
२ । ४ । १६२ ॥ कासः ४ । इति भरतः ॥
काशी ।
५ । इति मुकुटादयः ॥ काशा ६ । इति नयना-
नन्दः ॥ वायसेक्षुः ७ काण्डेक्षुः ८
अमरपुष्पकः ९ ।
इति रत्नमाला ॥ काशकः १० वनहासकः
११ ।
इति शब्दरत्नावली ॥ इक्ष्वारिः १२ काकेक्षुः
१३
इक्षुरः १४ इक्षुकाण्डः १५ शारदः १६ सित-
पुष्पकः १७ नादेयः १८ दर्भपत्रः १९ लेखनः
२०
काण्डकाण्डकः २१ कच्छलकारकः २२ ।
अस्य
गुणाः । शिशिरत्वम् । गौल्यत्वम् ।
रुचिकारित्वम् ।
पित्तदाहनाशित्वम् । तृप्तिबलशुक्रकारित्वम् ।
श्रम-
शोषकफापहत्वञ्च । इति राजनिर्घण्टः ॥
कण्ठक-
ण्डूयनम् । इति शब्दरत्नावली ॥
तत्पर्य्यायगुणाः ।
“काशः काकेक्षुरुद्दिष्टः स स्यादिक्षुरसस्तथा ।
इक्ष्वालिकेक्षुगन्धा च तथा पोटगलः स्मृतः ॥
काशः म्यान्मधुरस्तिक्तः स्वादुपाके हिमः सरः
।
मूत्रकृच्छ्राश्मदाहास्रक्षयपित्तजरोगजित्” ॥
इति भावप्रकाशः ॥

**काशः**, पुं, (केन जलेन कफात्मकेन अश्यते व्याप्यते-
ऽत्र । क + अश + अधिकरणे घञ् ।) क्षतम् ।

उरस्यन्तःक्षितो वायुः पित्ते चानुगतो बली ॥
कुपितः कुरुते काशं कफं तेन सशोणितम् ।
पीतश्यावञ्च शुष्कञ्च ग्रथितं क्वणितं बहु ॥
ष्ठीवेत् कण्ठेन रुजता विभिन्नेनैव चोरसा ।
सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ॥
पर्व्वभेदज्वरश्वासतृष्णावैस्वर्य्यकम्पवान् ।
पारावत इवोत्कूजन् पार्श्वशूली ततोऽस्य च
कफाद्यैर्क्मनं पक्तिर्बलं वर्णश्च हीयते ।
क्षीणस्य सासृङ्मूत्रत्व श्यावपृष्ठकटीग्रहः ॥
वायप्रधानाः कुपिता धातवो राजयक्ष्मणः ।
कुर्व्वन्ति यक्ष्मायतनैः काशं ष्ठीवेत् कफं ततः ॥
पूतिपूयोपमं पीतं विस्रं हरितलोहितम् ।
लुप्यते तुद्यत इव हृदयं पचतीव च ॥
अकस्मादुष्णं शीतेच्छा बह्वाशित्वं बलक्षयः ।
स्निग्धप्रसन्नवक्त्रत्वं श्रीमद्दर्शननेत्रता ॥
ततोऽस्य क्षयरूपाणि सर्व्वाण्याविर्भवन्ति च ।
इत्थेवं क्षयजः काशः क्षीणानां देहनाशनः ॥
याप्यो वा बलिनां तद्वत् क्षतजोऽपि नवौ च तौ ।
सिध्येतामपि सामर्थ्यात् साध्यादौ च
पृथक्क्रमः ॥
मिश्रायाप्याशु ये सर्व्वे जरसः स्थविरस्य च ।

:काशश्वासक्षयच्छर्द्दिस्वरसादादयोगदाः ॥

भवन्त्युपेक्षया यस्मात् तस्मात्तं त्वरया जयेत् ।

इति गारुडे काशरोगनिदानं १५४ अध्यायः ॥ * ॥

अथ काशस्य चिकित्सा ।

तत्र वातकाशस्य चिकित्सा ॥

“वास्तूको वायसीशाकं मूलकं सुनिषण्णकम् ।

स्नेहास्तैलादयो भक्ष्याः क्षीरेक्षुरसगौडिकाः ॥

दध्यारणालाम्लफलं प्रसन्नापानमेव च ।

शस्यते वातकाशेषु स्वाद्वम्ललवणानि च ॥

वायसी काकमाची कवई इति लोके । सुनिषण्णकं सिनुयारि इति लोके शाकविशेषः । चाङ्गेरी-सदृशचतुष्पत्रा सजलदेशे भवति । चौपति इति लोके ॥

“ग्राम्यानूपोदकैः शालियवगोधूमषष्टिकान् ।

रसैर्म्माषात्मगुप्तानां यूषैर्व्वा भोजयेद्धितान्” ॥

ग्राम्यानूपोदकैः रसैरित्यन्वयः । आत्मगुप्ता कि-वाच्छ इति लोके ॥

“दशमूलीकृता काशश्वासहिक्कारुजापहा ।

यवागूर्दीपनी वृष्या वातरोगविनाशिनी ॥

रसः कर्क्कटकानां वा घृतभृष्टः स नागरः ।

वातकाशप्रशमनः शृङ्गिमत्स्यस्य वा पुनः” ॥ * ॥

अथ पित्तकाशस्य चिकित्सा ।

“कण्टकारीयुगद्राक्षावासाकर्च्चूरवालकैः ।

नागरेण च पिप्पल्या क्वथितं सलिलं पिबेत् ॥

शर्करामधुसंयुक्तं पित्तकाशहरं परम्” ॥ * ॥

अथ कफकाशस्य चिकित्सा ।

“पिप्पली कट्फलं शुण्ठी शृङ्गी भार्गी तथोषणम् ।

कारवी कण्टकारी च सिन्धुवारो यवानिका ॥

चित्रको वासकश्चैषां कषायं विधिवत् कृतम् ।

कफकाशविनाशाय पिबेत् कृष्णारजोयुतम्” ॥

पिप्पल्यादिक्वाथः ॥ * ॥

अथ क्षतजकाशस्य चिकित्सा ।

“इक्ष्विक्षुरालिकापद्ममृणालोत्पलचन्दनम् ।

मधुकं पिप्पली द्राक्षा लाक्षा शृङ्गी शतावरी ॥

द्विगुणा च तुगाक्षीरी सिता सर्व्वचतुर्गुणा ।

लिह्यात्तन्मधुसर्पिर्भ्यां क्षतकाशनिवृत्तये” ॥

इक्षुरालिका इक्षुभेदः । चन्द्र इति लोके । पद्मं पद्मकाष्ठम् । मृणालं विशम् । उत्पलं कमलम् । चन्दनमत्र धवलम् चूर्णत्वात् । शृङ्गी कर्कट-शृङ्गी । तुगाक्षीरी वंशलोचना । सा चेक्षोर्द्वि-गुणा ॥ * ॥ अथ क्षयकाशचिकित्सा । “चूर्णं काकु-

“बदरीदलमालिप्तं शिलाया घर्म्मशोषितम् ।

तद्धूमपानं सक्षीरं महाकाशनिवारणम् ॥

कण्टकारिकृतक्वाथः सकृष्णः सर्व्वकाशहा ।

कण्टकार्य्याः कणायाश्च चूर्णं समधु काशहृत् ॥

लवङ्गजातीफलपिप्पलीनां

भागान् प्रकल्प्याक्षसमानमीषाम् ।

पलार्द्धमानं मरिचं प्रदेयं

प्रलानि चत्वारि महौषधस्य ॥

सितासमस्तेन समाप्य चूर्णं

रोगानिमानाशु बलान्निहन्ति ।

काशज्वरारोचकमेहगुल्म-

श्वासाग्निमान्द्यग्रहणीविकारान्” ॥

समशर्करचूर्णं वटिका वा ॥

“कुनटीसैन्धवव्योषविडङ्गामयहिङ्गुभिः ।

लेहः साज्यमधुः काशश्वासहिक्कानिवारणः” ॥ * ॥

“हरीतकीकणा शुण्ठी मरिचं गुडसंयुतम् ।

काशघ्नो मोदकः प्रोक्तः परं वह्नेः प्रदीपनः” ॥ * ॥

“कर्षः कर्षांशौ पलं पलद्वयं स्यात्ततोऽर्द्धकर्षश्च ।

मरिचस्य पिप्पलीनां दाडिमगुडयावशूकानाम्” ॥

सर्व्वौषधैरसाध्याः काशा ये वैद्यनिर्म्मुक्ताः ।

अपि यूयं छर्द्दयतां तेषामिदमौषधम्” ॥

पथ्यम् ॥ वङ्गसेनस्तु कर्षांश इति पाठे कर्षांशः कर्षार्द्धमिति व्याचष्टे ॥

“मरिचं कर्षमात्रं स्यात् पिप्पली कर्षसंमिता ।

अर्द्धकर्षो यवक्षारः कर्षयुग्मञ्च दाडिमम् ॥

एतच्चूर्णीकृतं युञ्ज्यादष्टकर्षगुडेन हि ।

शाणप्रमाणं गुटिकां कृत्वा वक्त्रे विधारयेत् ॥

अस्याः प्रभावात् सर्व्वेऽपि कासा यान्त्येव संक्षयम्” ॥

दाडिमं दाडिमफलवल्कलं ग्राह्यम् । मरिचादि-वटिका ॥ * ॥

“समूलवल्कच्छदकण्टकार्य्या-

स्तुलां ततो द्रोणमितं जलञ्च ।

हरीतकीनां शतमेकपात्रे

विपच्य कुर्य्याच्चरणाम्बुशेषम् ॥

तस्मिन् कषाये तनुवस्त्रपूते

हरीतकीभिः सहितो गुडस्य ।

तुलां विनिःक्षिप्य पचेत् सुपक्व-

मेतत् समुत्तार्य्य सुशीतले च ॥

पलं पलञ्चापि कटुत्रयञ्च

तथा चतुर्जातपलं विचूर्ण्य ।

“कण्टकारीतुलां नीरद्रोणे पक्त्वा कषायकम् ।

पादशेषं गृहीत्वा च तत्र चूर्णानि दापयेत् ॥

पृथक् पलांशान्येतानि गुडूचीचव्यचित्रकाः ।

मुस्तं कर्कटशृङ्गी च त्र्युषणं धन्वयासकः ॥

भार्गी रास्ना सटी चैव शर्करा पलविंशतिः ।

प्रत्येकञ्च पलान्यष्टौ प्रदद्यात् घृततैलयोः ॥

पक्त्वा लेहत्वमानीय शीते मधुपलाष्टकम् ।

चतुष्पलं तुगाक्षीर्य्याः पिप्पलीञ्च चतुष्पलाम् ॥

क्षिप्त्वा निदध्यात् सुदृढे मृण्मये भाजने शुभे ।

लेहोऽयं हन्ति

हिक्कार्त्तिकासश्वासानशेषतः” ॥

कण्टकार्य्यावलेहः । इति कासाधिकारः । इति

भावप्रकाशः ॥ * ॥ अपि च ।

“हरीतकीकणा शुण्ठी मरिचं गुडसंयुतम् ।

काशघ्नो मोदकः प्रोक्तस्तृष्णारोचकनाशनः ॥

कण्टकारीगुडूचीभ्यां पृथक् त्रिंशत्पलाद्रसे ।

प्रस्थसिद्धो घृताद्वातकाशनुद्वह्निदीपनः” ॥

इति गारुडे १७४ अध्यायः ॥

“मनःशिला बलापूलं काकपर्णञ्च गुग्गुलुम् ।

जातिपत्रं कोलिपत्रं तथा चैव मनःशिला ॥

एभिश्चैव कृता वर्त्तिर्बदराग्नौ महेश्वर ! ।

धूमपानं काशहरं नात्र कार्य्या विचारणा” ॥

इति च गारुडे १९४ अध्यायः ॥

“कतकस्य फलं शङ्खं सैन्धवं त्र्युषणं वचा ।

फेनोरसाञ्जनं क्षौद्रं विडङ्गानि मनःशिला ।

एषां वर्त्तिर्हन्ति काशं तिमिरं पटलं यथा” ॥

इति तत्रैव १९८ अध्यायः ॥

“अभयामलकं द्राक्षा पिप्पली कण्टकारिका ।

शृङ्गं पुनर्नवा शुण्ठी जग्धा काशं निहन्ति वै” ॥

इति च तत्रैव १९९ अध्यायः ॥

**काशकः**, पुं, (काशते दीप्यते इति । काश + कर्त्तरि ण्वुल् ।) काशः । इति शब्दरत्नावली ॥ केश्या इति भाषा ॥

**काशमर्द्दः**, पुं, (काशं मृद्नाति उपशमयति नाश-

भमिष्टं वासकरसभावितं बहून् वारान् । मधु-
घृतसितोपलाभिर्लेह्यं क्षयकाशरक्तपित्तहरम्’ ॥
काकुभं चूर्णं ककुभत्वक्चूर्णम् ॥ * ॥
अथ काशस्य सामान्यतश्चिकित्सा ।
“ताम्यमानस्य काशेन नासास्रावे स्वरे जडे ।
क्षवथौ गन्धनाशे च धूमपानं प्रयोजयेत् ॥
मनःशिलालमरिचं मांसीमुस्तेङ्गुदैः पिबेत् ।
धूमं त्र्यहं च तस्यानु पयश्च सगुडं पिबेत् ॥
एष काशान् पृथक् द्वन्द्वसर्व्वदोषसमुद्भवान् ।
शतैरपि प्रयोगाणामसाध्यान् साधयेत् ध्रुवम्” ॥
आलं हरितालम् ॥ इङ्गुदमिह पुत्रजीवकफलम् ॥

पलानि षट् पुष्परसस्य चापि
विनिःक्षिपेत्तत्र विमिश्रयेच्च ॥
प्रयुज्यमानो विधिनष लेहो
यथाबलञ्चापि यथानलञ्च ।
वातात्मकं पित्तकृतं कफोत्थं
द्विदोषजातानपि च त्रिदोषम् ॥
क्षतोद्भवञ्च क्षयजञ्च काशं
श्वासञ्च हन्यात् सह पीनसेन ।
यक्ष्माणमेकादशमुग्ररूपं
हरीतकीयं भृगणोपदिष्टा” ॥
पुष्परसो मधु । चतुर्जातं त्वगेलापत्रनागकेशराः ।
भृगुहरीतकी ॥ * ॥

यति वा । मृद् + “कर्म्मण्यण्” । ३ । २ । १
।
इति अण् ।) कासमर्द्दवृक्षः । इत्यमरटीकायां
रायमुकुटः ॥ (कासमर्द्दशब्देऽस्य गुणाः
पर्य्या-
याश्च ज्ञेयाः ॥)

**काशा**, स्त्री, (काशते इति । काश + अच् + टाप् ।)
काशतृणम् । इत्यमर-टीकायां भरतः ॥

**काशाल्मलिः**, स्त्री, (कुत्सिता शाल्मलिः । कोः
कादेशः ।) कूटशाल्मलिः । इति जटाधरः ॥

**काशिः**, स्त्री, (काश् + “सर्व्वधातुभ्य इन्” । उणां
४ । ११७ । इति इन् ।) काशी ।
इत्युणादिकोषः ॥
(यथा हेः रामायणे १ । १३ । २३ ।
“तथा काशिपतिं स्निग्धं सततं प्रियवादिनम्
।
सद्वृत्तं देवसङ्काशं स्वयमेवानयस्व हि” ॥)
काशिनगरोपलक्षिते जनपदे पुंभूम्नि ।
यथा महाभारते ६ । ९ । ४१ ।
“अत ऊर्द्ध्वं जनपदान्निबोध गदतो मम” ।
“बोधा मब्राः कलिङ्गाश्च काशयो
परकाशयः” ॥
मुष्टिः । इति निरुक्तिः । यथा ऋग्वेदे ७ ।
१०४
। ८ । “आप इव काशिना संगृभीतो
असन्नस्त्वा-
सत इन्द्र वक्ता” ॥ “काशिना मुष्टिना” इति
भाष्यम् ॥) सूर्य्ये पुं । इति जुमरव्याकरणम्
॥

**काशिका**, स्त्री, (काशि + स्वार्थे कन् टाप् । यद्वा काशयति ज्ञानं भक्तानां इति । काश + णिच्
+ ण्वुल् टाप् अत इत्वञ्च ।) काशी । इति शब्द-
रत्नावली ॥ (पारिभाषिककाशिकाया लक्षण-
मुक्तं यथा शङ्कराचार्य्येण ।
“मनोनिवृत्तिः परमोपशान्तिः
सा तीर्थवर्य्या मणिकर्णिका वै ।
ज्ञानप्रवाहा विमला हि गङ्गा
सा काशिकाऽहं निजबोधरूपः” ॥ * ॥
वामनकृता पाणिनिवृत्तिः ॥)

**काशिकाप्रियः**, पुं, (काशिकाप्रिया यस्य । काशि-
कायाः प्रियो वा ।) दिवोदासः । इति शब्दरत्ना-
बली ॥

**काशिराजः**, पुं, (काश्याः राजा । “राजाहः सखि-
भ्यष्टच्” । ५ । ४ । ९१ इति टच् ।) वाराणसी-
राजः । तत्पर्य्यायः । धन्वन्तरिः २ दिवोदासः
३ सुधोद्भवः ४ । इति त्रिकाण्डशेषः ॥
(यदि च क्रगाण्वयेन तत्र बहवो राजान आसन् ।
तथापि तत्स्थानाधिकारित्वात्यदा योऽधि-
कारी स एव काशिराजः अतो नासाधुप्रयोग
इति मन्यामहे ॥ “अथ खलु भगवन्तममरवर-
मृषिगणपरिवृतमाश्रमस्थंकाशिराजं दिवोदासं
धन्वन्तरिमौपधेनव वैतरणौरभ्रपौष्कलावतकर-
वीर्य्यगोपुररक्षितसुश्रुतप्रभृतयऊचुः” ॥

तदा विहर्त्तुमिशेन क्षेत्रमेतत् विनिर्म्मितम् ॥
इति काशीखण्डम् ॥ तत्र कर्त्तव्ययात्राविधानं
यथा, --
सूत उवाच ।
“यात्रापरिक्रमं ब्रूहि जनानां हितकाम्यया ।
यथावत् सिद्धिकाप्तानां सत्यवत्याः सुतोत्तम !
॥
व्यास उवाच ।
निशामय महाप्राज्ञ लोमहर्षण ! वच्मि ते ।
यथा प्रथमतो यात्रा कर्त्तव्या यात्रिकैर्मुदा ॥
सचेलमादौ संस्नाय चक्रपुष्करिणीजले ।
सन्तर्प्य देवान् सपितॄन् ब्राह्मणांश्च तपस्विनः
॥
आदित्यं द्रौपदीं विष्णुं दण्डपाणिमहेश्वरम् ।
नमस्कृत्य ततो गच्छेत् द्रष्टुं ढुण्ढिविनायकम् ॥
ज्ञानवापीमुपस्पृश्य नन्दिकेशं ततोऽर्च्चयेत् ।
तारकेशं समभ्यर्च्च्य महाकालेश्वरं ततः ॥
ततः पुनर्दण्डपाणिमित्येषा पञ्चतीर्थिका ।
दैनन्दिनी विधातव्या महाफलमभीप्सुभिः” ॥
* ॥
“ततो वैश्वेश्वरी यात्रा कार्य्या सर्व्वार्थसिद्धये ।
द्विसप्तायतनानाञ्च कार्य्या यात्रा प्रयत्नतः ॥
कृष्णां प्रतिपदं प्राप्य भूतावधि यथाविधि ।
अथवा प्रतिभूतञ्च क्षेत्रशुद्धिमभीप्सुभिः ॥
तत्तत्तीर्थकृतस्नानस्तत्तल्लिङ्गकृतार्च्चनः ।
मौनेन यात्रां कुर्व्वाणः फलं प्राप्नोति यात्रिकः ॥
ओङ्कारं प्रथमं पश्येन्मत्स्योदर्य्यां कृतोदकः ।
त्रिपिष्टपं महादेवं ततो वै कृत्तिवाससम् ॥
रत्नेशञ्चाथ चन्द्रेशं केदारञ्च ततो व्रजेत् ।
धर्म्मेश्वरञ्च वीरेशं गच्छेत् कामेश्वरं ततः ॥
विश्वकर्म्मेश्वरं चाथ मणिकर्णीश्वरं ततः ।
अविमुक्तेश्वरं दृष्ट्वा ततो विश्वेशमर्च्चयेत् ॥
एषा यात्रा प्रयत्नेन कर्त्तव्या क्षेत्रवासिभिः ।
यस्तु क्षेत्रमुषित्वापि नैतां यात्रां समाचरेत् ॥
विघ्नास्तस्योपजायन्ते क्षेत्रोच्चाटनसूचकाः”
॥ * ॥
“अष्टायतनयात्रान्या कर्त्तव्या विघ्नशान्तये ॥
दक्षेशः पार्व्वतीशश्च तथा पशुपतीश्वरः ।
गङ्गेशो नर्म्मदेशश्च गभस्तीशः सतीश्वरः ॥

समारभ्य प्रतिपदं यावत्कृष्णां चतुर्द्दशीम्
॥
एतत्क्रमेण कर्त्तव्यान्येतदायतनानि वै ।
इमां यात्रां नरः कृत्वा न भूयोऽप्यपिजायते” ॥ * ॥
“अन्या यात्रा प्रकर्त्तव्यैकादशायतनोद्भवा
।
अग्नीध्रकुण्डे सुस्नातः पश्येदग्नीध्रमीश्वरम् ॥
उर्व्वशीशं ततो गच्छेत्ततस्तु नकुलीश्वरम् ।
आषाढीशं ततो दृष्ट्वा भारभूतेश्वरं ततः
॥
लाङ्गलीशमथालोक्य ततस्तु त्रिपुरान्तकम् ।
ततो मनःप्रकामेशं प्रीतिकेशमथो व्रजेत्
॥
भदालसेश्वरं तस्मात् तिलपर्णेश्वरं ततः
।
यात्रैकादशलिङ्गानामेषा कार्य्या प्रयत्नतः
॥
इमां यात्रां प्रकुर्व्वाणो रुद्रत्वं प्राप्नुयान्नरः” ॥ * ॥
“अतः परं प्रवक्ष्यामि गौरीयात्रामनुत्तमाम्
॥
शुक्लपक्षतृतीयायां या यात्रा विश्ववृद्धिका ।
गोप्रेक्ष्यतीर्थे सुस्नाय मुखनिर्मालिकां व्रजेत् ॥
ज्येष्ठवाप्यां नरः स्नात्वा ज्येष्ठां गौरों समर्चयेत् ।
सौभाग्यगौरी संपूज्या ज्ञानवाप्यां कृतोदकैः ॥
ततः शृङ्गारगौरीञ्च तत्रैव च कृतोदकः ।
स्नात्वा विशालगङ्गायां विशालाक्षीं ततो व्रजेत् ॥
सुस्नातो ललितातीर्थे ललितां पूलयेत्ततः ।

इति सुश्रुते सूत्रस्थाने १ अः ॥)

**काशी**, स्त्री, (काशते शिवत्रिशूलोपरि । काशृङ्

दीप्तौ + अच् गौरादित्वात् ङीष् । काश +
इन् ङीप् वा । अथवा काशयति प्रकाशयतीदं
सर्व्वं या । काश् + णिच् अच् गौरादित्वात्
ङीष् ।) स्वनामख्याततीर्थम् । शिवपुरी । तत्प-
र्य्यायः । वाराणसी २ तीर्थराजी ३ तपःस्थली ४ ।
इति जटाधरः ॥ काशिका ५ । इति शब्दरत्ना-
वली ॥ काशिः ६ । इत्युणादिकोषः ॥
अविमुक्तम् ७ आनन्दवनम् ८ आनन्दकाननम् ९
अपुनर्भवभूमिः १० रुद्रावासः ११ महाश्मशानम्
१२ । तस्या उत्पत्तिर्यथा, --
“ततस्तदैकलेनापि स्वैरं विहरता मया ।
स्वविग्रहात् स्वयं सृष्टा स्वशरीरानपायिनी ॥
प्रधानं प्रकृतिं त्वां तु मायां गुणवतीं पराम् ।
बुद्धितत्त्वस्य जननीमाहुर्व्विकृतिवर्जिताम् ॥
युगपच्च त्वया शक्त्या साकं कालस्वरूपिणा ।
मयाद्य पुरुषेणैतत् क्षेत्रञ्चापि विनिर्म्मितम्” ॥
स्कन्द उवाच ।
सा शक्तिः प्रकृतिः प्रोक्ता स पुमानीश्वरः परः ।
ताभ्याञ्च रममाणाभ्यां तस्मिन् क्षेत्रे घटोद्भव ! ॥
परमानन्दरूपाभ्यां परमानन्दरूपिणि ! ।
पञ्चक्रोशपरीमाणे स्वपादतलनिर्म्मिते ॥

अष्टमस्तारकेशश्च प्रत्यष्टमि विशेषतः ।
दृश्यान्येतानि लिङ्गानि महापापोपशान्तये” ॥ * ॥
“अपरापि शुभा यात्रा योगक्षेमकरी सदा ।
सर्व्वविघ्नोपहन्त्री च कर्त्तव्या क्षेत्रवासिभिः ॥
शैलेशं प्रथमं वीक्ष्य वरणास्नानपूर्ब्बकम् ।
स्नानन्तु सङ्गमे कृत्वा द्रष्टव्यः सङ्गमेश्वरः ॥
स्वर्नीलतीर्थे सुस्नातः पश्येत् स्वर्नीलमीश्वरम् ।
स्नात्वा मन्दाकिनीतीर्थे द्रष्टव्यो मध्यमेश्वरः ॥
पश्येद्धिरण्यगर्भेशं तत्र तीर्थकृतोदकः ।
पञ्चचूडह्रदे स्नात्वा ज्येष्ठस्थानं ततोऽर्च्चयेत् ॥
चतुःसमुद्रकूपे तु स्नात्वा देवं ततोऽर्च्चयेत् ।
देवस्याग्रे तु या वापी तत्रोपस्पर्शने कृते ॥
शुक्रेश्वरं ततः पश्येत् तत्कूपविहितोदकः ।
दण्डखाते नरः स्नात्वा व्याघ्रेशं पूजयेत्ततः ॥
मौनकेश्वरकुण्डे तु स्नानं कृत्वा ततोऽर्च्चयेत् ।
जम्बुकेशं महालिङ्गं कृत्वा मात्रामिमां नरः ॥
क्वचिन्न जायते भूयः संसारे दुःखसागरे ॥

स्नात्वा भवानीतीर्थे तु भवानीं परिपूजयेत् ॥
मङ्गला च ततोऽभ्यर्च्च्या विन्दुतीर्थकृतोदकैः ।
ततो गच्छेन्महालक्ष्मीं स्थिरलक्ष्मीसमृद्धये ॥
इमां यात्रां नरः कृत्वा क्षेत्रेऽस्मिन् मुक्तिजन्मनि
न दुःखैरभिभूयेत इहामुत्रापि कुत्रचित् ॥
कुर्य्यात् प्रतिचतुर्थोह पूजां विघ्नेशितुः सदा ।
ब्राह्मणेभ्यस्तदुद्देशाद्देया वै सोदका मुदे” ॥ * ॥
“भौमे भैरवयात्रा च कार्य्या पातकहारिणी ।
रविवारे रवेर्यात्रां षष्ठ्यां वा रविसंयुजि ॥
तथैव रविसप्तम्यां सर्व्वविघ्नोपशान्तये ।
नवम्यामथवा षष्ठ्यां चण्डीयात्रा शुभावहा” ॥ * ॥
“अन्तर्गृहस्य यात्रा वै कर्त्तव्या प्रतिवत्सरम् ।
प्रातः स्नानं विधायादौ नत्वा पञ्च विनायकान् ॥
नमस्कृत्याथ विश्वेशं स्थित्वा निर्व्वाणमण्डपे ।
अन्तर्गृहस्य यात्रां हि करिष्येऽघौघशान्तये ॥
गृहीत्वा नियमञ्चेति गत्वाथ मणिकर्णिकाम् ।
स्नात्वा मौनेन चागत्य मणिकर्णीशमर्च्चयेत् ॥
कम्बलाश्वतरौ नत्वा वासुकीशं प्रणम्य च ।
पर्व्वतेशं ततो दृष्ट्वा गङ्गाकेशवमप्यथ ॥
ततस्तु ललितां दृष्ट्वा जरासन्धेश्वरं ततः ।
ततो वै सोमनाथञ्च वराहञ्च ततो व्रजेत् ॥
ब्रह्मेश्वरं ततो नत्वा नत्वागस्तीश्वरं ततः ।
कश्यपेशं नमस्कृत्य हरिकेशवनन्ततः ॥
वैद्यनाथं ततो गत्या ध्रुवेशमथ वीक्ष्य च ।

| मुने प्रलयकालेऽपि न तत् क्षेत्रं कदाचन ।<br>विमुक्तं न शिवाभ्यां यदविमुक्तं ततो विदुः ॥<br>न यदा भूमिवलयं न यदापां समुद्भवः । | | गोकर्णेशं ततोऽभ्यच्चर्य हाटकेशमथो व्रजेत् ॥<br>अस्थिक्षेपतडागञ्च दृष्ट्वा वै कीकशेश्वरम् ।<br>भारभूतं ततो नत्वा चित्रगुप्तेश्वरं ततः ॥<br>चित्रघण्टां प्रणम्याथ ततः पशुपतीश्वरम् ।<br>पितामहेश्वरं गत्वा ततस्तु कलसेश्वरम् ॥<br>चन्द्रेशस्त्वथ वीरेशो विघ्नेशोऽग्नीश एव च ।<br>नागेश्वरो हरिश्चन्द्रश्चिन्तामणिविनायकः॥<br>सेनाविनायकश्चाथ द्रष्टव्यः सर्व्वविघ्नहत् । |
|---|---|---|

वशिष्ठवामदेवौ च
मूर्त्तिरूपधरावुभौ ॥
द्रष्टव्यौ यत्नतः काश्यां
महाविघ्नविनाशनौ ।
सीमाविनायकं नाथं करुणेशं ततो
व्रजेत् ॥
त्रिसन्ध्येशो विशालाक्षी धर्म्मेशो
विश्वबाहुका ।
आशाविनायकश्चाथ
वृद्धादित्यस्ततः पुनः ॥
चतुर्व्वक्त्रेश्वरं लिङ्गं ब्रह्मेशस्तु
ततः परम् ।
ततो भनःप्रकामेश ईशानेशस्ततः
परम् ॥
चण्डीचण्डेश्वरौ दृश्यौ
भवानीशङ्करौ ततः ।
ढुण्ढिं प्रणम्य च ततो
राजराजेशमर्च्चयेत् ॥
लाङ्गलीशन्ततोऽभ्यर्च्च्यततस्तु
नकुलीश्वरम् ।
परान्नेशमथो नत्वा परद्रव्येश्वरं
ततः ॥
प्रतिग्रहेश्वरञ्चापि निष्कलङ्केशमेव
च ।
मार्कण्डेयेशमभ्यर्च्च्य
ततश्चाप्सरसेश्वरम् ॥
गङ्गेशोऽर्च्च्यस्ततो ज्ञानवाप्यां
स्नानं समाचरेत्
नन्दिकेशं तारकेशं महाकालेश्वरं
ततः ॥
दण्डपाणिं महेशञ्च मोक्षेशं
प्रणमेत्ततः ।
वीरभद्रेश्वरं नत्वा अविमुक्तेश्वरं
ततः ॥
विनायकांस्ततः पञ्च विश्वनाथं
ततो व्रजेत् ।
ततो मौनं विसृज्याथ
मन्त्रमेनमुदीरयेत् ॥

"तदिदं मन्ये देवानां देवयजनं सर्व्वेषां
भूतानां

ब्रह्मसदनं अत्र हि जन्तोः प्राणैरुत्क्रममाणस्य रुद्रस्तारकं ब्रह्म व्याचष्टेयेनासावमृतीभूत्वा मोक्षी भवति तस्मादविमुक्तमेव निषेवेत अविमुक्तं न विमुञ्चेदेवमेवैतद्याज्ञवतक्यः । अथहैनमत्रिः पप्रच्छ याज्ञवल्क्यं । य एषोऽनन्तोऽव्यक्त आत्मा कथमहमिमं विजानीयामिति सोऽविमुक्त उपास्य इति सोऽविमुक्तः कस्मिन् प्रतिष्ठित इति वरणा-यामस्याञ्च प्रतिष्ठित इति का च वरणा भवति का चासिर्भवतिं । सर्व्वान् इन्द्रियकृतान् दोषान् वारयतितेन वरणा भवति सर्व्वाणि इन्द्रियकृतानि पापानि अस्यति तेनासि र्भवति कतममस्याः स्थानं भवति इति भ्रुवोर्घ्राणस्योभयसन्धिःस द्यौ-र्लोकस्य परस्य च सन्धिर्भवति । एवमेवैनं सन्धिं सन्ध्यां ब्रह्मविद उपासते कोऽसौ रुद्र इति रुद्र-स्तापत्रयात्मकं संसारदुःखं तद्धेतुर्वा तत्सर्व्वं द्राव-यति शरणागतानामुपासकानामितिअतएव चि-च्छक्तिमयः सर्व्वज्ञः परमेश्वर एव रुद्रः । तथा हि "एको रुद्रो न द्वितीयायावतस्थुः" ॥ इति श्रीश्री-मद्भगवत्पूज्यपादपरमहंसपरिव्राजकाचार्य्यसुरे-श्वरसूरिप्रणीतकाशीमुक्तिविवेकः ॥)
काशतृणम् । इत्यमरटीकायां भरतः ॥ (मुष्टिः । इति निरुक्तिः ॥)

**काशी**, [न्] त्रि, (काशोऽस्यास्ति इति । इनिः ।

काशरोगयुक्तः । इति राजवल्लभः ॥ (काशते इति काश णिनिः । प्रकाशशीलः ॥)

**काशीनाथः**, पुं, (काश्याः नाथः ।) शिवः । इति

शब्दरत्नावली ॥ (यथा काशीखण्डे, --
"काशीनाथं समाश्रित्य कुतः कालभयं नृणाम्" ॥)

**काशीराजः**, पुं, (काश्याः काशीप्रदेशस्य राजा ।

"राजाहः सखिभ्यष्टच्" । ५ । ७ । ९१ । इति टच् ।) दिवोदासः । इति शब्दरत्नावली ॥ (अयं हि योगरूढ्यर्थः । यौगिकार्थेन तु सर्व्वस्मिन्नेव काशीदेशाधिकारिणि प्रयोगो दृश्यते ।
यथा गीतायाम् १ । ५ ।
"धृष्टकेतुश्चेकितानः काशीराजश्च वीर्य्यवान्" ॥)

२ । ७५ । इति वनिप् "वनोरच" । ४ । १ । ७ ।
इति ङीर्ब्रौ । पृषोदरात् वस्य मत्वम् ।)
गम्भारी-
वृक्षः । इत्यमरः । २ । ४ । ३५ ॥ (अस्याः
पर्य्याया
यथा, --
"गम्भारी भद्रपर्णी च श्रीपर्णी मधुपर्णिका ॥
काश्मीरी काश्मरी हीरा काश्मर्य्यः
पीतरोहिणी ।
कृष्णवृन्ता मधुरसा महाकुसुमिकापि च" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥ गुणा-
श्चास्या यथात्रैव ॥
"काश्मरी तु वरा तिक्ता वीर्य्योष्णा मधुरा
गुरुः ।
दीपनी पाचनी मेध्या भेदिनी भ्रमशोषजित्
॥
दोषतृष्णाऽमशूलार्शोविषदाहज्वरापहा।
तत्फलं वृंहणं वृष्यं गुरुकेश्यं रसायनम् ॥
वातपित्ततृषारक्तक्षयमूत्रविवन्धनुत्।
स्वादु पाके हिमं स्निग्धं
तुवराम्लविशुद्धिकृत् ॥
हन्याद्दाहतृषावातरक्तपित्तक्षयान्तथा" ॥
* ॥
यथा, महाभारते ३ । १५८ । ४४ ।
"विल्वान् कपित्थान् जम्बूंश्च
काश्मरीर्बदरीस्तथा" ॥)

**काश्मर्य्यः**, पुं, (काश्मरीति शब्दोऽस्त्यस्य अस्मिन् वा ।

अन्येभ्योपीति यप् । स्वार्थे ष्यञ् इति केचित् ।)
गम्भारी । इत्यमरः । २ । ४ । ३६ ॥
क्लीवलिङ्गो-
ऽप्ययम् । इति भरतः ॥
("हृद्यं मूत्रविवन्धघ्नं पित्तासृग्वातनाशनम्
।
केश्यं रसायनं मेध्यं काश्मर्य्यं फलमुच्यते"
॥

अन्तर्गृहस्य यात्रेयं यथावत् या मया कृता ।
न्यूनातिरिक्तया शम्भुः
प्रीयतामनया विभुः ॥
इति मन्त्रं समुच्चार्य्य क्षणं वै मुक्तिमण्डपे ।
विश्राम्य यायात् भवनं निष्पापः पुण्यवान्नरः” ॥ *
“संप्राप्य वासरं विष्णोर्विष्णुतीर्थेषु सर्व्वतः ।
कार्य्या यात्रा प्रयत्नेन
महापुण्यसमृद्धये ॥
नमस्यपञ्चदश्याञ्च कुलस्तम्भं समर्च्चयेत् ।
दुःखं रुद्रपिशाचत्वं न भवेद्यस्य पूजनात् ॥
श्रद्धापूर्ब्बमिमा यात्राः कर्त्तव्याः क्षेत्रवासिभिः ।
पर्व्वखपि विशेषेण कार्य्या
यात्राश्च सर्व्वतः ॥
न वन्ध्यं दिवसं कुर्य्याद्विना यात्रां क्वचित् कृती ।
यात्राद्वयं प्रयत्नेन कर्त्तव्यं प्रतिवासरम् ॥
आदौ स्वर्गतरङ्गिण्यास्ततो विश्वेशितुर्ध्रुवम् ।
यस्य वन्ध्यं दिनं यातं काश्यां निवसतः सतः ॥
निराशाः पितरस्तस्य तस्मिन्नेव दिने भवेत् ।
स दष्टः कालसर्पेण स दष्टो मृत्युना स्फुटम् ॥
स मुष्टस्तत्र दिवसे विश्वेशो यत्र नेक्षितः ।
सर्व्वतीर्थेषु सस्नौ स सर्व्वयात्रा व्यधात् स च ॥
मणिकर्ण्यान्तु यः स्नातो यो विश्वेशं निरैक्षत ।
सत्यं सत्यं पुनः सत्यं सत्यं सत्यं पुनः पुनः ॥

**काशीशं**, क्ली, (कुत्सितं ईषत् वा शीशमिव । कोः कादेशः । काशिं दीप्तिं इष्टे इति केचित् । ईश् + कः ।) उपधातुविशेष । हिराकसी इति भाषा । तत् द्विविधम् । धातुकाशीशम् १ । तत् हरिद्वर्णं लोहितञ्च । पुष्पकाशीशम् २ । तत्- शुक्लवर्णं कृष्णञ्च । इति रत्नमाला ॥
(अस्य पर्य्याया गुणाश्च यथा, --
“काशीशं धातुकाशीशं पाशुकाशीशमित्यपि ।
तदेव किञ्चित् पीतन्तु पुष्पकाशीशमुच्यते ॥
काशीशमम्लमुष्णञ्च तिक्तञ्च तुवरन्तथा ।
वातश्लेष्महरङ्केश्यं नेत्रकण्डूविषप्रणुत् ॥
मूत्रकृच्छ्राश्मरीश्वित्रनाशनं परिकीर्त्तितम्” ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
द्विदन्त्यसकारोऽपि पाठः ॥ (काशीदेशाधिपतौ शिवे च पुं ॥)

**काश्मरी**, स्त्री, (काशते इति । “अनेभ्योऽपि” । ३ ।

इति सुश्रुते सूत्रस्थाने । ४६ अध्यायः ॥)

**काश्मीरं**, क्ली, (कश्मीरे काश्मीरे वा भवं “कच्छा- दिभ्यश्च” । ४ । २ । १३३ । इति अण् ।) पुष्कर-
मूलम् । इत्यमरः । २ । ४ । १४५ ॥ टङ्कः । कु-
ङ्कुमम् । इति मेदिनी ॥ (शोधनमस्य यथा, --
“काश्मीरञ्चापि सर्पिषा” ॥
इति वैद्यकचक्रपाणिसंग्रहे
वातव्याध्यधिकारे ॥)

**काश्मीरः**, पुं, (कश्मीर एव स्वार्थे अण् । काश्मीर इति नाम्नाख्यायते वा ।)
स्वनामख्यातदेशः ।
इति जटाधरः । (उक्तञ्च शक्तिसङ्गमतन्त्रे ।
“शारदामठमारभ्य कुङ्कुमाद्रितटान्तकम् ।
तावत्काश्मीरदेशः
स्यात्पञ्चाशत्योजनात्मकः” ॥

अत्र कपिलेश्वरनामा महादेवो वर्त्तते शि-
वनामकीर्त्तणे “काश्मीरे कपिलेश्वरः” ॥ इति
वचनात् ॥ (यथा गोः रामायणे ४ । ४३ । २२ ।
“काश्मीरमण्डलं चैव शमीपीलुवनानि च
पुराणि च सशैलानि विचिन्वन्तु वनौकसः” ॥
तद्देशवासिनि त्रि । यथा, महाभारते ६ । ९ । ५३ ।
‘काश्मीराः सिन्धुसौवीरा गन्धारा
दर्शकास्तथा’ ॥)

**काश्मीरजं**, क्ली, (काश्मीरे जायते । जन + “सप्त- म्यां जनेर्डः” । ३ । २ । ९७ । इति डः ।) कुष्ठम् ।
कुङ्कुमम् । इति मेदिनी ॥ पुष्करमूलम् । इति
विश्वः ॥ (गुणाः पर्य्यायाश्चास्य कुष्ठशब्देकुङ्कुमशब्दे
च ज्ञातव्याः ॥)

दृश्यो विश्वेश्वरो नित्यं स्नातव्या मणिकर्णिका” ॥
इति श्रीस्कन्दपुराणे काशीखण्डे १०० अध्यायः ॥

(चिच्छक्तिः ।
सुषुम्नाख्या नाडी च ।
अन्या

नाडी चिद्भासया सम्यगाभासिता सती प्रकाशते
अतएव इयं हि ब्रह्मप्रकाशरूपिणी चिन्मयी
ज्ञानप्रकाशकतया अस्यास्तथात्वं वेदतन्त्रादि-
ज्ञानप्रतिपादकशास्त्रैः सुषुम्नाया एव ब्रह्मनाडीत्वं
प्रतिपादितं तथा सर्व्वप्रकाशकतया चिच्छक्तेरेव
स्वरूपकाशीत्वं विज्ञाप्यते यथा, --
“ययेदं काश्यते सर्व्वं सा काशी परिकीर्त्यते” ॥

यदि चिच्छक्तिरेव
काश्याः
स्वरूपार्थवाचिका

तर्हि तस्या वाराणसीत्याख्यायां कागतिरिति
संशयश्चेत् ततोऽवधीयताम् ।

**काश्मीरजन्म**, [न्] क्ली, (काश्मीरे जन्म यस्य तत् ।)

कुङ्कमम् । इत्यमरः । २ । ६ । १२ ॥

**काश्मीरा**, स्त्री, (काश्मीरे भवः । “तत्र भवः” । ४ ।

३ । ५३ । इत्यण् । काश्मिरदेश
उत्पात्तस्थानत्व-

नास्ति अस्याः । अच् टाप् च इति केचित् ।) अतिविषा । इति मेदिनी ॥ कपिलद्राक्षा । इति राजनिर्घण्टः ॥

**काश्मीरी**, स्त्री, (काश्मीरदेशे भवः । "तत्र भवः" । ४ । ३ । ५३ । इत्यण् । स्त्रियां ङीप् ।) गम्भारी । इति भावप्रकाशः ॥ (अस्याः पर्य्यायगुणाः काश्मरीशब्दे ज्ञेयाः ॥)

**काश्यं**, क्ली, (कुत्सितं आश्यं यत्र । कं जलं आश्यं वा यत्र । (मद्यम् । इति राजनिर्घण्टः ॥) नृपविशेषेपुं । यथा महाभारते १ । १०२ । ४९ ।
"अक्षतः क्षययित्वारीन् संख्येऽसंख्येयविक्रमः ।
आनयामास काश्यस्य सुताः सागरगासुतः" ॥)

**काश्यपं**, क्ली, (काश्यं मद्यं पिबत्यत्र । पा + घञर्थे कः । मांसस्य हि मद्यपानाङ्गत्वेन प्रसिद्धेस्तथात्वम् ।) मांसम् । इति हेमचन्दः ॥

**काश्यपः**, पुं, (कश्यपस्य गोत्रापत्यम् । विदाद्यञ् ।) कणादभुनिः । इति त्रिकाण्डशेषः ॥ मृगभेदः ॥ इति मेदिनी ॥ गोत्रविशेषः । तत्प्रवरान्तर्गतमुनिविशेषः । इति स्मृतिः ॥ कश्यपस्यापत्यमात्रञ्च ॥ (विभाण्डकमुन्यर्थे यथा, भहाभारते ३ । १११ । २० ।
"स्वाध्यायवान् वृत्तसमाधियुक्तो तपसा वालिखिल्यानां मम सङ्कल्पजौ तथा" ॥)

**काश्यपी**, स्त्री, (कश्यपस्येयं । "तस्येदम्" । ४ । ३ । १२० । इत्यण् स्त्रियां ङीप् ।) पृथिवी । इत्यमरः । २ । १ । २ ॥ ("अथागम्य महाराज ! नमस्कृत्य च कश्यपम् ।
पृथिवी काश्यपी जज्ञे सुता तस्य मद्वात्मनः" ॥
इति महाभारते ॥ दानधर्म्मे । १३ । १५४ । ७ ॥ प्रजा । एतद्विषयकप्रमाणं कूर्म्मशब्दे द्रष्टव्यम् ॥)

**काश्यपेयः**, पुं, (कश्यपस्येयम् । कश्यप + अण् ङीप् च कश्यपी कश्यपपत्नी अदितिः । तत्र भवः इति ढक् ।) सूर्य्यः । इति शब्दरत्नावली ॥ (यथा,
"जवाकुसुमसङ्काशं काश्यपेयं महाद्युतिम् ।
ध्वान्तारिं सर्व्वपापघ्नं प्रणतोऽस्मि दिवाकरम्" ॥
इति सूर्य्यप्रणामः ॥ देवमात्रं । कश्यपीसुतत्वात् ॥)

**काश्वरी**, स्त्री, (काश + वनिप् "वनोरच" । ४ । १ । ७ इति ङीप् रश्च । जातौ ङीष् वा ।) काश्मरी । इति भरतो द्विरूपकोषश्च ॥

**काष्ठं**, क्ली, (काशते दीप्यते काशत्यनेन वा । काश + "हनिकुषीत्यादिना" उणां । २ । २ । क्थन् । व्रश्चेति षत्वम् तितुत्रेति नेट् ।) दारु । इत्यमरः । रथकारः । ५ । इत्यमरः । २ । १० । ९ ॥

**काष्ठतन्तुः**, पुं, (काष्ठे तन्तुरिव विस्तृततयावस्थितत्वात् ।) काष्ठकृमिः । तत्पर्य्यायः । कोषकारः २ । इति हारावली ॥

**काष्ठदारुः**, पुं, (काष्ठं दारुसंज्ञकं । काष्ठप्रधानो दारुरिति केचित् ।) देवकाष्ठम् । इति राजनिर्घण्टः ॥

**काष्ठद्रुः**, पुं, (काष्ठप्रधानो द्रुर्वृक्षः ।) । पलाशवृक्षः । इति राजनिर्घण्टः ॥

**काष्ठधात्रीफलं**, क्ली, (काष्ठमिव शुष्कं धात्रीफलम् ।) आमलकम् । इति राजनिर्घण्टः ॥

**काष्ठपाटला**, स्त्री, (काष्ठवत् कठिना पाटला ।) सितपाटलिका । इति राजनिर्घण्टः ॥ (अस्याः पर्य्याया यथा ॥ "अपरा स्यात्पाटला सिता । मुष्कको मोक्षको घण्टा पाटलिः काष्ठपाटला" ॥ इति भावप्रकाशस्य पूर्ब्बखण्डे १ म भागे ॥)

**काष्ठमठी**, स्त्री, (काष्ठरचिता मठीव ।) चिता । इति त्रिकाण्डशेषः ॥

**काष्ठमल्लः**, पुं, (काष्ठं मल्लः वाहक इव यत्र ।) शवयानम् । इति हारावली ॥

**काष्ठलेखकः**, पुं, (काष्ठं लिखति । कर्त्तनेन लेखनाकारं करोतीति । लिख + ण्वुल् ।) घुणः । इति हारावली ॥

**काष्ठलोही**, [न्] पुं, (काष्ठेन युक्तं लोहं विद्यते यत्र । यद्वा काष्ठं च लोहं च ते स्तोऽत्र । इनिः ।) लौहयुक्तमुद्गरः । तत्पर्य्यायः । वातर्द्दिः २ । इति त्रिकाण्डशेषः ॥

**काष्ठवल्लिका**, स्त्री, (काष्ठवत् शुष्का वल्लिका ।)

विभाण्डकः काश्यपः प्रादुरासीत्” ॥ * ॥
स्वनामख्यातो द्विजविशेषः । अयं हि विष-
विद्यापारदर्शी । अस्य विवरणमुच्यते ।

यदा शमीकपुत्त्रेण शृङ्गिणा ‘स कौरवाधमः

सप्तमेऽहनि सर्पराजेन तक्षकेन दष्टो यमसदनं
गमिष्यतीति’ शप्तः परीक्षित्, तदा राज्ञ एतच्छाप-
वृत्तान्तमाकर्ण्यासौ काश्यपो नाम ब्राह्मणः राजानं
परीक्षितं तक्षकविषात् रक्षितुं धनार्थी हस्तिना-
पुरमुद्दिश्य प्रस्थितः । गच्छन्तमेनं पथि तक्षको
दृष्टवानाह च को भवान् कुत्र वा गच्छति । अथ
तक्षकेनैवमुक्तोऽसौ काश्यपः सर्व्वं निवेदयामास ।
एवमुक्तवति तु काश्यपे तक्षकस्तस्य विद्याप्रभावं
दिदृक्षुः सम्मुखस्थमेकं न्यग्रोधं अदशत् । दष्टो
वृक्षस्तु प्रचण्डविषतेजसा क्षणात् प्रजज्वाल ।
एवम्भूतेऽसौ काश्यपः स्वविद्याप्रभावं विज्ञापयितु-
कामो न्यग्रोधभस्मकणामादायतरसा मन्त्रबलेन
पुनर्वनस्पतिं जीवयामास । अथ नागराजस्तक्षक
एतदालोक्य सविस्मयस्तस्मै प्रभूतधनं दत्त्वा
विसर्जयामास ॥ एतद्विवरणन्तु महाभारते १ ।
४३ । अध्याये द्रष्टव्यम् ॥)

**काश्यपिः**, पुं, (कश्यपस्यापत्यं बाहुलकात् इञ् ।)
२ । ४ । १३ ॥ काठ् इति भाषा ।
(उक्तञ्च ।
“संसारमतिशुष्कं यत् मुष्टिमध्ये समेष्यति ।
तत्काष्ठं काष्ठमित्याहुः खदिरादिससुद्भवम्” ॥)

**काष्ठकं**, क्ली, (काष्ठं सत्कायति । काष्ठ + कै + कः
केचित्तुकाष्ठं विद्यतेऽस्य नडादित्वात् च्छः कुक्
च विल्वकादित्वात् च्छमात्रस्य लुक् । प्रशस्तका-
ष्ठत्वात् अस्य तथात्वं ।) अगुरु । इति राजनिर्घण्टः ॥

**काष्ठकदली**, स्त्री, (काष्ठवत् कठिना कदली ।)
कदलीभेदः । काट्कला इति भाषा । तत्पर्य्यायः ।
सुकाष्ठा २ वनकदली ३ काष्ठिका ४ शिलारम्भा
५ दारुकदली ६ फलाढ्या ७ वनभोचा ८ अश्म-
कदली ९ । अस्या गुणाः । रुचिकारित्वम् । रक्त-
पित्तनाशित्वम् । हिमत्वम् । गुरुत्वम् । मन्दाग्नि-
जनकत्वम् । दुर्ज्जरत्वम् । मधुरत्वम् । हितत्वञ्च ।
इति राजनिर्घण्टः ॥

**काष्ठकीटः**, पुं, (काष्ठे जातः कीटः । काष्ठलेखकः
कीटो वा ।) घुणः । इति हेमचन्द्रः ॥

**काष्ठकुट्टः**, पुं, (काष्ठं कुट्टतीति । कुट्ट + अण् ।) पक्षि-
विशेषः । काट्ठोकरा इति भाषा । तत्पर्य्यायः ।
शतच्छदः २ । इति त्रिकाण्डशेषः ॥

**काष्ठकुद्दालः**, पुं, (कुं मलं उद्दालयति विदारयति
निपातनात् साधुः । काष्ठस्य कुद्दालः काष्ठेन
कटुका । इति वैद्यकम् ॥ (कट्वीशब्देऽस्या गुणा-
दयो बोद्धव्याः ॥)

**काष्ठशारिवा**, स्त्री, (काष्ठमिव शुष्का शारिवा ।)
शारिवा । इति राजनिर्घण्टः । अनन्तमूल इति भाषा ॥

**काष्ठा**, स्त्री, (काशते प्रकाशते । काश् दीप्तौ ।
“हनिकुषिनीरमिकाशिभ्यःक्थन्” । उणां २ । २ ।
इति क्थन् । व्रश्चेति षत्वं ततः टाप् ।) दिक् ।
(यथा, माघे ११ । १२ ।
“स्फुरति विशदमेषा पूर्ब्बकाष्ठाङ्गनायाः” ॥)
स्थितिः । सीमा । उत्कर्षः । (यथा, कठश्रुतौ ।
“इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः ॥
महतः परमव्यक्तं अव्यक्तात् पुरुषः परः ।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः” ॥
अष्टादशनिमेषात्मककालः । इत्यमरः । १ । ४ । ११ ॥
(यथा मनुः १ । ६४ ।
“निमेषा दश चाष्टौ च काष्टा त्रिंशत्तु ताः कला” ॥
विष्णुपुराणमते पञ्चदशनिमेषात्मकः कालः ।
यदुक्तं, तत्रैव १ । ३ । ७ ।
“काष्ठा पञ्चदश ख्याता निमेषा मुनिसत्तम ! ॥)
दारुहरिद्रा । इति मेदिनी ॥ (कश्यपपत्नीभेदः ।
यथा, भागवते ६ । ६ । २५ ।
“अदितिर्दितिर्दनुः काष्ठा अरिष्टा सुरसा इला” ॥)

**काष्ठाम्बुवाहिनी**, स्त्री, (अम्बूनां जलानां वाहिनी

अरुणः । "काश्यपिर्गरुडाग्रजः" ।
इत्यमरः १ । ३ ।
३२ ॥ गरुडः । इति हेमचन्द्रः ॥
(महाभारते
१ पर्व्वणि तयोरुत्पत्तिविवरणम् । यथा,
--
"एतस्मिन्नेव काले तु देवी दाक्षायणी
शुभा ।
विनता नाम कल्याणी पुत्त्रकामा
यशस्विनी ॥
तपस्तप्ता व्रतपरा स्नाता पुंसवने शुचिः ।
उपचक्राम भर्त्तारं तामुवाचाथ कश्यपः ॥
आरम्भः सफलो देवि ! भविता
यस्त्वयेप्सितः ।
जनयिष्यसि पुत्त्रौ द्वौ घीरौ त्रिभुवनेश्वरौ
।

निर्म्मितः काष्ठमयः कुद्दालो वा ।)
नौकादेर्मला-
पनयनार्थं काष्ठघटितकुद्दालः ।
तत्पर्य्यायः । अ-
वभ्रिः २ । इत्यमरः ॥

**काष्ठजम्बूः**, स्त्री, (काष्ठप्रधाना जम्बूः ।) भूमिजम्बूः ।

इति राजनिर्घण्टः ॥

**काष्ठतक्षकः**, पुं, (काष्ठं तक्षति । काष्ठ + तक्ष +

ण्वुल् ।) काष्ठतट् । इति शब्दरत्नावली
॥

**काष्ठतट्**, [क्ष] पुं, (काष्ठं तक्षति । तक्षू तनूकरणे

क्विप् ।) वर्णसङ्करजातिविशेषः । छुतार
इति
भाषा । तत्पर्य्यायः । तक्षा २ बर्द्धकिः
३ त्वष्टा ४

अम्बुवाहिनी । काष्ठेन निर्म्मिता काष्ठस्य वा
अम्बुवाहिनी ।)
काष्ठादिकृतच्छिन्नाग्रनौकाकृति
जलसेचनी । सेओत् इति भाषा ।
तत्पर्य्यायः ।
द्रोणी २ । इत्यमरः । १ । १० । ११ ॥

**काष्ठीलः**, पुं, (काष्ठिना इल्यते क्षिप्यते इति ।
काष्ठि + इल् क्षेपणे + कर्म्मणि घञ् ।)
राजार्कः ।
इति राजनिर्घण्टः ॥

**काष्ठीला**, स्त्री, (कुत्सिता ईषद्वा अष्ठीलेव । क्षुद्रा-
ष्ठीलेव इति वा ।) कदलीवृक्षः ।
इत्यमरः ।
२ । ४ । ११३ ॥

**कास**, ऋ ङ कुशब्दे । इति कविकल्पद्रुमः ॥ (भ्वां--
आत्मं-अकं-सेट्-ऋदित् ।) कुशब्द इह रोग
हेतुककुत्सितशब्दः । ऋ अचकासत् ।
ङ कासते
वृद्धः । इति दुर्गादासः ॥

**कासः**, पुं, (कासतेऽनेन । कासृ शब्दकुत्सनयोः ।
"हलश्च" ३ । ३ । १२१ । इति घञ् ।)
रोगविशेषः ।
कासी इति भाषा । तत्पर्य्यायः । क्षवथुः २ ।
इत्यमरः । २ । ६ । ५२ ॥ तस्य निदानं यथा, --
"धूमोपघाताद्रजसस्तथैव
व्यायामरूक्षान्ननिषेवणाच्च ।
विमार्गगत्वाच्च हि भोजनस्य
वेगावरोधात् क्षवथोस्तथैव" ॥
सम्प्राप्तिर्यथा । "प्राणो ह्युदानानुगतः
प्रदुष्टः" ॥
लक्षणं यथा ।
"संभिन्नकांस्यस्वनतुल्यघोषः ।
कण्ठेन रुजतात्यर्थं विरुग्नेनेव चोरसा ॥
सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ।
दुःखस्पर्शेन शूलेन भेदपीडाभितापिना ॥
पर्व्वभेदज्वरश्वासतृष्णावैस्वर्य्यपीडितः ।
पारावत इवाकूजन् कासवेगात् क्षतोद्भवात्" ॥
क्षयजो यथा, --
"विषमासात्म्यभोज्यातिव्यवायाद्वेगनिग्रहात् ।
घृणिनां शोचतां नृणां व्यापन्नेऽग्नौ त्रयो मलाः ।
कुपिताः क्षयजं कासं कुर्य्युर्द्देहक्षयप्रदम् ॥
सगात्रशूलज्वरदाहमोहान्
प्राणक्षयञ्चोपलभेत कासी ॥
शुष्यन् विनिष्ठीवति दुर्ब्बलस्तु
प्रक्षीणमांसो रुधिरं सपूयम् ।
तं सर्व्वलिङ्गं भृशदुश्चिकित्स्यं
चिकित्सितज्ञाः क्षयजं वदन्ति ॥
इत्येषः क्षयजः कासः क्षीणानां देहनाशनः ।
साध्यो बलवतां वा स्याद्याप्यस्त्वेवं क्षतोत्थितः ॥
नवौ कदाचित् सिध्येतामपि पादगुणान्वितौ ।
स्थविराणां जराकासः सर्व्वो याप्यः प्रकीर्त्तितः ।
त्रीन् पूर्ब्बान् साधयेत् साध्यान्
पथ्यैर्य्याप्यांस्तु याप
येत्" ॥ इति माधवकरः ॥ * ॥
("आशुकारी यतः कासस्तमेवातः
प्रवक्ष्यति" ॥
अस्य प्राग्रूपसहितासंप्राप्ती रूपाणि च यथा ॥
"तेषां भविष्यतां रूपं कण्ठे कण्डूररोचकः ॥
शूकपूर्णाभकण्ठत्वं, तत्राधो विहतोऽनिलः ।
ऊर्द्ध्वं प्रवृत्तः प्राप्योरस्तस्मिन् कण्ठे च संसजन् ॥
शिरः स्रोतांसि संपूर्य्य ततोऽङ्गान्युत्क्षिपन्निव ।
क्षिपन्निवाक्षिणी पृष्ठमुरः पार्श्वे च पीडयन् ॥
प्रवर्त्तते सवक्त्रेण भिन्नकांस्योपमध्वनिः ।
कुर्व्वन्ति यक्ष्मायतनैः कासं ष्ठीवेत् कफं ततः ।
पूतिपूयोपमं पीतं विस्रं हरितलोहितम् ॥
लुञ्च्येते इव पार्श्वे च हृदयं पततीव च ।
अकस्मादुष्णशीतेच्छा बह्वाशित्वं बलक्षयः ॥
स्निग्धप्रसन्नवक्तत्वं श्रीमद्दशननेत्रता ।
ततोऽस्य क्षयरूपाणि सर्व्वाण्याविर्भवन्ति च ॥
इत्येषः क्षयजः कासः क्षीणानां देहनाशनः ।
याप्यो वा बलिनां तद्वत् क्षतजोऽभिनवौ तु तौ ॥
सिध्येतामपि सानाथ्यात् साध्यादोषैः पृथक्त्रयः ।
मिश्रा याप्या द्वयात् सर्व्वे जरसा
स्थविरस्य च ॥
कासाच्छ्वासक्षयच्छर्द्दिस्वरसादादयो गदाः ।
भवन्त्वुपेक्षया यस्मात् तस्मात्तं त्वरया
जयेत्" ॥
इति वाभटे निदानस्थाने । ३ अध्याये ॥ * ॥
अथ कासस्य चिकित्सा यथा ॥
"केवलानिलजं कासं स्नेहैरादावुपाचरेत् ।
वातघ्नसिद्धैः स्निग्धैश्च पेयायूषरसादिभिः ॥
लेहैर्धूमैस्तथाभ्यङ्गैः स्वेदसेकावगाहनैः ।
वस्तिभिर्बद्धविड्वातं
सपित्तन्तूद्‌र्ध्वभक्तिकैः ॥
घृतैः क्षीरैश्च सकफं जयेत् स्नेहविरेचनैः ।
गुडूचीकण्टकारीभ्यां पृथक्त्रिंशत्पलाद्रसे ॥
प्रस्थः सिद्धो धृताद्वातकासनुत्
वह्निदीपनः ।
क्षाररास्नावचाहिङ्गुपाठायष्ट्याह्वधान्यकैः ॥
द्विशाणैः सर्पिषः प्रस्थं पञ्चकोलयुतैः पचेत् ॥
दशमूलस्य निर्य्यूहे पीतोमण्डानुपायिना ॥

निरेति वक्त्रात् सहसा सदोषो
मनीषिभिः कास इति प्रदिष्टः” ॥
स च पञ्चविधो यथा, --
“पञ्च कासाः स्मृता
वातपित्तश्लेष्मक्षतक्षयैः ।
क्षयायोपेक्षिताः सर्व्वे
बलिनश्चोत्तरोत्तरम्” ॥
तेषां पूर्ब्बरूपं यथा, --
“पूर्ब्बरूपं भवेत्तेषां शूकपूर्णगलास्यता ।
कण्ठे कण्डूश्च भोज्यानामवरोधश्च
जायते” ॥
वातिको यथा, --
“हृच्छङ्खमूर्द्धोदरपार्श्वशूली
क्षामाननः क्षीणबलस्वरौजाः ।
प्रसक्तवेगस्तु समीरणेन
भिन्नस्वरः कासति शुष्कमेव” ॥
पैत्तिको यथा, --
“उरोविदाहज्वरवक्त्रशोषै-
रभ्यर्द्दितस्तिक्तमुखस्तृषार्त्तः ।
पित्तेन पीतानि वमेत् कटूनि
कासेत् सपाण्डुः परिदह्यमानः” ॥
श्लैष्मिको यथा, --
“प्रलिप्यमानेन मुखेन सीदन्
शिरोरुजार्त्तः कफपूर्णदेहः ।
अभक्तरुग्गौरवसादयुक्तः
कासेद्भृशं सान्द्रकफः कफेन” ॥
क्षतजो यथा, --
“अतिव्यवायभाराध्वयुद्धाश्वगजविग्रहैः
।
रूक्षस्योरः क्षतं वायुर्गृहीत्वा
कासमावहेत् ॥
स पूर्ब्बं कासते शुष्कं ततः ष्ठीवेत्
सशोणितम् ।
हेतुभेदात् प्रतीघातभेदो वायोः सरंहसः ॥
यद्रुजा शब्दवैषम्यं कासानां जायते ततः ।
कुपितो वातलैर्वातः शुष्कोरःकण्ठवक्त्रताम्
॥
हृत्पार्श्वोरःशिरःशूलं मोहक्षोभस्वरक्षयान् ।
करोति शुष्कं कासञ्च महावेगरुजास्वनम् ॥
सोऽङ्गहर्षो कफं शुष्कं कृच्छ्रान्मुक्त्वाल्पतां
व्रजेत् ।
पित्तात् पीताक्षि कफता तिक्तास्यत्वं
ज्वरोभ्रमः ॥
पित्तासृग्वमनंतृष्णा वैस्वर्य्यं धूमको मदः ।
प्रततं कासवेगेन ज्योतिषामिव दर्शनम् ॥
कफादुरोऽल्परुङ्मूर्द्धहृदयं स्तिमितं गुरु ।
कण्ठोपलेपः सदनं पीनसच्छर्द्दयरोचकाः ॥
रोमहर्षोघनस्निग्धश्वेतश्लेष्मप्रवर्त्तनम् ।
युद्धाद्यैः साहसैस्तैस्तैः सेवितैरयथाबलम् ॥
उरस्यन्तःक्षते वायुः पित्तेनानुगतो बली ।
कुपितः कुरुते कासं कफं तेन सशोणितम् ॥
पीतं श्यामञ्च शुष्कञ्च ग्रथितं कुथितं बहु ।
ष्ठीवेत् कण्ठेन रुजता विभिन्नेनेव चोरसा ॥
सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ।
पर्ब्बभेदज्वरश्वासतृष्णावैस्वर्य्यकम्पवान् ॥
पारावत इवाकूजन् पार्श्वशूली ततोऽस्य च ।
क्रमाद्वीर्य्यं रुचिः पक्तिर्बलं वर्णश्च हीयते ॥
क्षीणस्य सासृङ्मूत्रत्वं स्याच्च पृष्ठकटीग्रहः ।
वायुप्रधानाः कुपिता धातवो राजयक्ष्मिणः ॥
सकासश्वासहृत्पार्श्वग्रहणीरोगगुल्मनुत् ।
द्रोणेऽपां साधयेद्रास्ना दशमूलशतावरीः ॥
पलोन्मिताद्विकुडवं कुलत्थं वदरं यवम् ।
तुलार्द्धञ्चाजमांसस्य तेन साध्यं घृताढकम्
॥
समक्षीरं पलांशैश्च जीवनीयैः समीक्ष्य तत्
।
प्रयुक्तं वातरोगेषु पाननावनवस्तिभिः ॥
पञ्चकासान् शिरःकम्पं योनिवङ्क्षणवेदनाम्
।
सर्व्वाङ्गैकाङ्गरोगांश्च
सप्लीहोद्र्ध्वानिलान्जयेत्” ॥ * ॥
“दुरालभां शृङ्गवेरं शठीं द्राक्षां सितोपलाम्
॥
लिह्यात् कर्कटशृङ्गीञ्च कासे तैलेन वातजे
।
दुष्पर्शां पिप्पलीं मुस्तां भार्गीं कर्कटकं
शठीम् ॥
पुराणगुडतैलाभ्यां चूर्णिताण्यवलेहयेत् ।
तद्वत् सकृष्णां शुण्ठीञ्च सभार्गीं तद्वदेव च
॥
पिबेच्च कृष्णां कोष्णेन सलिलेन
ससैन्धवाम् ।
मस्तुना ससितां शुण्ठीं दध्ना वा
कणरेणुकाम् ॥
पिबेद्वदरमज्ज्ञो वा मदिरा दधिमस्तुभिः ।
अथवा पिप्पलीकल्कं घृतभृष्टं ससैन्धवम्
॥
कासीसपीनसोधूमं स्नैहिकं विधिना
पिबेत्” ।
“यवानीपिप्पलीविल्वमध्यनागरचित्रकैः ।
रास्नाजाजी पृथक्पर्णी पलाशशठीपौष्करैः
॥
सिद्धां स्निग्धाम्ललवणां पेयामनिलजे
पिबेत् ।
कटिहृत्
पार्श्वकोष्ठार्त्तिश्वासहिक्काप्रणाशनीं” ॥
“पित्तकासे तनुकफे त्रिवृतां मधुरैर्युताम् ।
युञ्ज्याद्विरेकाययुतां घनश्लेष्मणि तिक्तकैः
॥

| | | |
|---|---|---|
| | | हृतदोषो हिमं स्वादु स्निग्धं संसर्ज्जनं भजेत् ।<br>घने कफे तु शिशिरं रूक्षं तिक्तोपसंहितम् ॥<br>लेहः पैत्ते सिता धात्री क्षौद्रद्राक्षा हिमोत्पलैः ।<br>सकफे साब्दमरिचः सघृतः सानिले हितः ॥ |

मृद्वीकार्द्धशतं त्रिंशत्पिप्पलीः शर्करापलम्
।
लेहयेन्मधना गोर्व्वा क्षीरपस्य शकृद्रसम्
॥
त्वगेलाव्योषमृद्वीकापिप्पलीमूलपौष्करैः ।
लाजमुस्ता शठीरास्ना
धात्रीफलविभीतकैः ॥
शर्कराक्षौद्रसर्पिर्भिर्लेहो हृद्रोगकासहा ।
मधुरैर्जाङ्गलरसैर्यवश्यामाककोद्रवाः ॥
मुद्गादियूषैः शाकैश्च तिक्तकैर्मात्रया
हिताः ।
घनश्लेष्मणि लेहाश्च तिक्तकामधुसंयुताः
॥
शालयः स्युस्तनुकफे षष्टिकाश्च
रसादिभिः ।
शर्कराम्भोऽनुपानार्थं द्राक्षेक्षुस्वरसाः पयः
॥
काकोली वृहतीमेदाद्वयैः स वृषनागरैः ।
पित्तकासे रसक्षीरपेयायूषान् प्रकल्पयेत्”
॥
“पुनर्नवा शिवाटिका सरलकासमर्द्दामृता
।
पटोलवृहतीफणिज्जकरसैः पयः संयुतैः
॥
घृतं त्रिकटुना च सिद्धमुपयुज्य सञ्जायते ।
न कासविषमज्वरक्षयगुदाङ्कुरेभ्यो भयम्”
॥ * ॥
“दशमूलं स्वयङ्गुप्तां शङ्खपुष्पीं शठीं बलाम्
॥
हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकान्
।
भार्गीं पुष्करमूलञ्च द्विपलांशान् यवाढकम्
॥
हरीतकीशतञ्चैकं जलेपञ्चाढके पचेत् ।
यवस्विन्ने कषायं तं पूतन्तञ्चाभयाशतम् ॥
पचेद्गुडतुलां दत्त्वा कुडवञ्च पृथग्घृतात् ।
तैलात् सपिप्पलीचूर्णात् सिद्धशीते च
माक्षिकात् ॥

कफं शुद्धैश्च तःपुष्टिं कुर्य्यात्सम्यग्वहन् रसः
।
चविकात्रिफलाभार्गीदशमूलः स चित्रकैः ॥
कुलत्थपिप्पलीमूलपाठाकालयवैर्जले ।
शृतैर्नागरदुस्पर्शा पिप्पलीशठिपौष्करैः ॥
पिष्टैः कर्कटशृङ्ग्या च समैः सर्पिर्विपाचयेत्
।
सिद्धेऽस्मिंश्चूर्णितौ क्षारौ द्वौ पञ्च लवणानि
च ॥
दत्त्वा युक्त्यापिबेन्मात्रां क्षयकासनिपीडितः
।
कासमर्द्दोऽभयामुस्तापाठाकट्फलनागरैः ॥
पिप्पल्या कटुरोहिण्या काश्मर्य्याः स्वरसेन
च ।
अक्षमात्रैर्घृतप्रस्थं क्षीरद्राक्षा रसाढके ॥
पचेच्छोषज्वरप्लीहसर्व्वकासहरं शिवम्” ॥
* ॥
“वृषव्याघ्री गुडूचीनां पञ्चमूलफलाङ्कुरान् ॥
रसकल्कैर्घृतं पक्वं हन्ति कासज्वरारुचीः”
।
“स्युर्दोषबद्धः कण्ठोरः स्रोतसाञ्च विशुद्धये
॥
प्रस्थोन्मिते यवक्वाथे विंशतिर्विजयाः पचेत्
।
स्विन्नामृदित्वा तास्तस्मिन् पुराणात्षट्पलं
गुडात् ॥
पिप्पल्या द्विपलं कर्षं मनोह्वाया रसाञ्जनात् ।
दत्त्वार्द्धाक्षं पचेद्भूयः सलेहः श्वासकासनुत्”
॥
“तद्वन्मरि चचूर्णं वा सघृतक्षौद्रशर्करम् ।
पथ्याशुण्ठी घनगुडैर्गुटिकां धारयेन्मुखे ॥
सर्व्वेषु श्वासकासेषु केवलं वा विभीतकम् ।
पत्रकल्कं घृतभृष्टं तिल्वकस्य सशर्करम् ॥
पेयावोत्कारिकाच्छर्द्दितृट्कासामातिसारनुत्
।
कण्टकारीरसे सिद्धो मुद्गयूषः सुसंस्कृतः ॥
स गौरामलकः साम्लः
सर्व्वक्वासभिषग्जितम् ॥
वातघ्नौषधनिःक्वाथे क्षीरं यूषान् रसानपि ।

निर्घोषीस्तनतो दैन्यदौर्ब्बल्यक्षयमोहकृत्
॥
शुष्ककासः कफं शुष्कं
कृच्छ्रान्मुक्ताल्पतां व्रजेत् ।
स्निग्धाम्ललवणोष्णैश्च भुक्तमात्रे
प्रशाम्यति ॥
ऊद्ध्र्ववातस्य जीर्णेऽन्ने वेगवान्मारुतो
भवेत् ।
कटुकोष्णविदाह्यम्लक्षाराणामतिसेवनम्
॥
पित्तकासकरं क्रोधः
सन्तापश्चाग्निसूर्य्यजः ।
पीतनिष्ठीवनाक्षित्वं तिक्तास्यत्वं
स्वरामयः ॥
उरो धूमायनं तृष्णा दाहोमोहोऽरुचिर्भ्रमः
।
प्रततं कासमानश्च ज्योतींषीव च पश्यति
।
श्लेष्माणं पित्तसंसृष्टं निष्ठीवति च पैत्तिके
॥
गुर्व्वभिष्यन्दिमधुरस्निग्धस्वप्नाविचेष्टनैः
।
वृद्धः श्लेष्मानिलं रुद्ध्वा कफकासं
करोति हि ॥
मन्दाग्नित्वारुचिच्छर्द्दि
पीनसोत्क्लेशगौरवैः ।
लोमहर्षास्यमाधुर्य्यक्लेदसंसदनैर्य्युतम् ।
वृंहणं मधुरं स्निग्धं निष्ठीवति घनं कफम्
।
कासमानोऽतिरुग्वक्षः सम्पूर्णमिव
मन्यते” ॥
“दुर्गन्धं हरितं रक्तं ष्ठीवेत् पूयोपमं कफम्
।
स्थानादुत्कासमानश्च हृदयं मन्यते
च्युतम् ॥
अकस्मादुष्णशीतार्त्तो बह्वाशीदुर्ब्बलः
कृशः ।
स्निग्धाच्छमुखवर्णत्वक्
श्रीमद्दर्शनलोचनैः ॥

लेहं द्वे चाभये नित्यमतः खादेद्रसायनात्
।
तद्वलीपलितं हन्याद्वर्णायुर्बलवर्द्धनम् ॥
पञ्चकासान् क्षयं श्वासं सहिक्कं
विषमज्वरम् ।
मेहगुल्मग्रहण्यर्शहृद्रोगारुचिपीनसान् ॥
अगस्तिविहितं धन्यमिदं श्रेष्ठं रसायनम्”
॥
इति आगस्त्यरसायनम् ॥ * ॥
“विधिश्च यक्ष्मविहितो यथावस्थं क्षते
हितः ॥
निवृत्ते क्षतदोषे तु कफे वृद्धे उरः शिरः ।
दाल्यते कासिनो यस्य
सधूमानापिबेदिमान् ॥
द्विमेदा द्विवलाषष्टीकल्कैः क्षौमे सुभाविते
।
वर्त्तिं कृत्वा पिबेद्धूमं जीवनीयघृतानुपः ॥
मनःशिला पलासाजगन्धात्वक्क्षीरिनागरैः
।
तद्वदेवानुपानन्तु शर्करेक्षुगुडोदकम् ॥
पिष्ट्वा मनःशिलां तुल्या मार्द्रया वटशृङ्गया
।
ससर्पिष्कं पिबेद्धूमं तित्तिरिप्रतिभोजनम्
॥
क्षयजे वृंहणं पूर्ब्बं कुर्य्यादग्नेश्च बर्द्धनम् ।
बहुदोषाय सस्नेहं मृदुदद्याद्विरेचनम् ॥
शस्याकेन त्रिवृतया मृद्वीकारसयुक्तया ।
तिल्वकस्य कषायेण विदारीस्वरसेन च ॥
सपिः सिद्धं पिबेद्युक्त्या ज्ञोणदेहो
विशोधनम् ।
पित्ते कफे धातुषु च क्षीणेषु क्षयकासवान्
॥
घृतं कर्कटकीक्षीरद्विवलासाधितं पिबेत् ।
विदारीभिः कदम्बैर्वा तालशम्यैश्च
साधितम् ॥
घृतं पयश्च मूत्रम्य ववर्णे कृच्छ्रनिर्गमे ।
शूने सवेदने मेढ्रे पायौ सश्रोणिवङ्क्षणे ॥
घृतमण्डेन लघुनानुवास्यो मिश्रकेण वा ।
जाङ्गलैः प्रतिमुक्तस्य वर्त्तकाद्या
यिलेशयाः ॥

वैष्किरान् प्रातुदान् वैलान् दापयेत्
क्षयकासिने ॥
क्षतकासे च येधूमाः सानुपानानि दर्शिताः ।
क्षयकाशेऽपि ते योज्या वक्ष्यन्ते यच्च
यक्ष्मणि ॥
वृंहणं दीपनञ्चाग्नेः स्रोतसाञ्च विशोधनम् ।
व्यत्यासात्क्षयकासिभ्यो बल्यं सर्व्वं
प्रशस्यते ॥
सन्निपातोद्भवो घोरः क्षयकासो यतस्ततः ।
यथादोषबलन्तस्य सन्निपातहितं हितम्” ॥
इति वाभटे चिकित्सास्थाने ३ अध्याये ॥ *
॥

अस्य सकारणसम्प्राप्तिकं लक्षणं
चिकित्सितञ्च

यथा, --
“तपसा यशसा धृत्या धिया च परयान्वितः
।
आत्रेयः कासशान्त्यर्थं सिद्धं प्राह
चिकित्सितम् ॥
वातादिभिस्त्रयो ये च क्षतजः क्षयजस्तथा ।
पञ्चैते स्युर्नृणां कासा वर्द्धमानाः क्षयप्रदाः”
॥
“अधःप्रतिहतो वायुरूद्‌र्ध्वस्रोतः समाश्रितः
।
उदानभावमापन्नः कण्ठे सक्तस्तथोरसि ॥
आविश्य शिरसः खानि सर्व्वाणि प्रति पूरयन्
।
आभञ्जन्नाक्षिपन्देहं हनुमन्ये तथाक्षिणी ॥
नेत्रे पृष्ठमुरः पार्श्वे निर्भज्य स्तम्भयंस्ततः ।
शुष्को वा सकफो वापि कसनात् कास
उच्यते ।
प्रतिघातविशेषेण तस्य वायोः सरंहसः ॥
वेदनाशब्दवैषम्यं कासानामुपजायते ।
रूक्षशीतकषायाल्पप्रमितानशनंस्त्रियः ॥
वेगधारणमायासो वातकासप्रवर्त्तकाः ।
हृत्पार्श्वोरः शिरःशूलस्वरभेदकरो भृशम् ॥
शुष्कोरःकण्टवक्त्रास्यहृष्टलोम्नःप्रताम्यतः
।

पाणिपादतलौ श्लक्ष्णौ सततासूयकोघृणी
।
ज्वरो मिश्राकृतिस्तस्य पार्श्वरुक्
पीनसोऽरुचिः ॥
भिन्नसङ्घातवर्च्चस्त्वं
स्वरभेदोऽनिमित्ततः ।
इत्येषः क्षयजः कासः क्षीणानां
देहनाशनः” ॥
“रूक्षस्यानिलजं कासं आदौ
स्नेहैरुपाचरेत् ।
सर्पिर्भिर्वस्तिभिः पेयायूषक्षीररसादिभिः ।
वातघ्नसिद्धैः स्नेहाद्यैर्धूमैर्लेहैश्च युक्तितः
॥
अभ्यङ्गैः परिषेकैश्च स्निग्धैः स्वेदैश्च
बुद्धिमान् ।
वस्तिभिर्वद्धविड्वातं शुष्कोद्‌र्ध्वं
चोद्‌र्ध्वभक्तिकैः ॥
घृतैः सपित्तं सकफं जयेत् स्नेहविरेचनैः”
।
“पिप्पली पिप्पलीमूलचव्यचित्रकनागरैः ।
धान्यपाठावचारास्ना
यष्ट्याह्वक्षारहिङ्गुभिः ।
कोलमात्रैर्घृतप्रस्थाद्दशमूली रसाढके ॥
सिद्धां चतुर्थिकां पीत्वा पेयामण्डं पिबेदनु
।
तच्छ्वासकासहृत्पार्श्वग्रहणीदोषगुल्मनुत्”
॥
“त्र्यूषणं त्रिफलां द्राक्षां काश्मर्य्याणि
परूषकम् ।
द्वे पाटे सरलं व्याघ्रीं स्वगुप्ताचित्रकं शठीम्
।
ब्राह्मीं तामलकीं मेदां काकनासां
शतावरीम् ।
त्रिकण्टकां विदारीञ्च पिष्ट्वा कर्षसमं
घृतात् ॥
प्रस्थं चतुर्गुणं क्षीरं सिद्धं कासहरं पिबेत् ।
ज्वरगुल्मारुचिप्लीहशिरोहृत्पार्श्वशूलनुत्
॥
कामलार्शोऽनिलाष्ठीला क्षतशोषक्षयापहम्
।
त्र्यूषणं नाम विख्यातमेतद्धृतमनुत्तमम्” ॥

| | | |
|---|---|---|
| कमशः प्रमहास्तद्वत् प्रयोज्याः<br>पिशिताशिनः ।<br>औष्ण्यात्प्रमाथिमावाच्च<br>स्रोतोभ्यश्च्यावयन्तिते ॥ | | इति त्र्यूषणाद्यं घृतम् ॥ * ॥<br>“द्रोणेऽपां साधयेद्रास्नां दशमूलीं<br>शतावरीम् ।<br>पलिकां माणिकां शांस्तु कुलत्थान्<br>वदरान् यवान् ॥<br>तुलार्द्धञ्चाजमासस्य पादशेषेण तेन च ।<br>घृताढकं समक्षीरं जीवनीयैः पलोन्मितैः<br>॥<br>सिद्धं तद्दशभिः कल्कैः<br>नस्यपानानुवासनैः ।<br>समीक्ष्य वातरोगेषु यथावस्थं प्रयोजयेत्<br>॥<br>पञ्च कासान् शिरःकम्पं शूलं<br>वङ्क्षणयोनिजम् ।<br>सर्व्वाङ्गैकाङ्गरोगांश्च<br>सप्लीहोद्ध्र्वानिलान्जयेत्” ॥ |

"दशमूलीं स्वयङ्गुप्तां शङ्खपुष्पीं शठीं बलाम् ।
हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकान् ॥
भार्गीं पुष्करमूलञ्च द्विपलांशयवाढकम् ।
हरीतकीशतञ्चैकं जलपञ्चाढके पचेत् ॥
यवे स्विन्ने कषायन्तम्पूतन्तच्चाभयाशतम् ।
पचेत् गुडतुलां दत्त्वा कुडवञ्च पृथग् घृतात् ॥
तैलात् सपिप्पलीचूर्णात् सिद्धशीते चमाक्षिकात् ॥
लिह्याद्द्वे चाभये नित्यमतः खादेद्रसायनात् ॥
तद्वलीपलितं हन्ति वर्णयुर्बलवर्द्धनम् ।
पञ्चकासान् क्षयं कासं हिक्कां सविषमज्वराम् ॥
हन्यात्तथार्शोग्रहणीहृद्रोगारुचिपीनसान् ।
अगस्त्यविहितं श्रेष्ठं रसायनमिदं शुभम्" ॥
इत्यगस्त्यहरीतकी ॥ * ॥
"शिरसः सदने स्रावे नासाया हृदि ताम्यति ।
कासप्रतिश्यायरसे धूमं वैद्यः प्रयोजयेत् ॥
दशाङ्गुलोन्मितां नाडीं अथवाष्टाङ्गुलोन्मिताम् ।
शरावसंपुटच्छिद्रे कृत्वाजृह्मां विचक्षणः ॥
वैरेचनं मुखेनैव कासवान् धूममापिबेत् ।
तमुरः केवलं प्राप्तं मुखेनैवोद्वमेत् पुनः ॥
सद्यस्य तैक्ष्ण्याद्विक्षिप्य श्लेष्माणमुरसि स्थितम् ।
निष्कृष्य शमयेत् कासं वातश्लेष्मसमुद्भवम्" ॥
"मनःशिलालमधुकमांसीमुस्तेङ्गुदैः पिबेत् ।
धूमं तस्यानु च क्षीरं सुखोष्णं सगुडं पिबेत् ॥
एष कासान् पृथग्दोषसन्निपातोद्भवान्जयेत् ।
प्रसह्य पर्य्यसंसिद्धानन्यैर्योगशतैरपि" ॥
"मनःशिलैलामरिचक्षाराञ्जनकुटन्नटैः ।
वंशलोचनशैवालक्षौमनक्तकरोहिषैः ॥
पूर्ब्बकल्पेन धूमोऽयं सानुपानो विधीयते ।
आलं मनःशिला तद्वत् पिप्पलीनागरैः राह ॥
त्वगैङ्गुदीवृहत्यौ द्वे तालमूलं मनःशिला ।
कार्पासास्थ्यश्वगन्धा च धूमः कासविनाशनः" ॥
"पैत्तिके स कफे कासे वमनं सर्पिषा हितम् ।
तथा मदनकाश्मर्य्यमधूकक्वथितैर्ज्जलैः ॥
यष्ट्याह्वफलकल्कैर्व्वा विदारीक्षुरसायुतैः ।
हृतदोषस्ततः शीतं मधुरञ्च क्रमं भजेत् ॥
सदाहं कासिनो रक्तं ष्ठीवतः सबलेऽनिले ।
मांसोचितेभ्यः कामेभ्यो लावादीनां रसा हिताः" ॥
"निवृत्ते क्षतदोषे तु कफे वृद्ध उरः शिरः ।
दाल्यते कासिनो यस्य सधूमान्नापिबेदिमान् ॥
द्वे मेदे मधुकं द्वे च बलेतैः क्षौमनक्तकैः ।
वर्त्तितैर्धूममापीय जीवनीयघृतं पिबेत्" ॥
"सम्पूर्णरूपं क्षयजं दुर्ब्बलस्य विवर्ज्जयेत् ।
नवोत्थितं बलवतः प्रत्याख्यायाचरेत् क्रियाम्" ॥
"पित्ते कफे च संक्षीणे परिक्षीणेषु धातुषु ।
घृतं कर्क्कटकीक्षीरद्विवलासाधितं पिबेत्" ॥
"क्षतकासे च ये धूमाः सानुपाना निदर्शिताः ।
क्षतकासेऽपि तानेव यथावस्थं प्रयोजयेत्" ॥
"सन्निपातभवोऽप्येष क्षयकासः सुदारुणः ।
सन्निपातहितं तस्मात् सदा कार्य्यं भिषग्जितम् ॥
दोषानुबलयोगाच्च हरेद्रोगबलाबलम् ।
कासेष्वेषु गरीयांसं जानीयादुत्तरोत्तरम्" ॥

इति चिकित्सास्थाने २२ अध्याये चरकेणोक्तम् ॥ * ॥

कासस्य निदानसम्प्राप्तिलक्षणसांहतंप्राग्रूपं चिकित्सितञ्च यथा, --
"उक्ता ये हेतवो नृणां रोगयोः श्वासहिक्कयोः ।
कासस्यापि च ते ज्ञेयास्तत्र वोत्पत्तिहेतवः" ॥
"स वातपित्तप्रभवः कफाच्च क्षतात्तथान्यः क्षयजोऽपरश्च ।
पञ्चप्रकारः कथितो भिषग्भि-
हरेणकां मागधिकाञ्च तुल्याम् दध्ना पिबेत् कासगदाभिभूतः" ॥
"पिबेच्च सीधुं मरिचान्वितं वा तेनाशु कासं शममभ्युपैति ।
द्राक्षाम्बुमञ्जिष्ठपुराह्वयाभिः क्षीरं श्रुतं माक्षिकसंप्रयुक्तम् ॥
निदिग्धिकानागरपिप्पलीभिः खादेच्च मुद्गान् मधुना सुसिद्धान् ।
उत्कारिकां सर्पिषि नागराढ्याम् पक्त्वा समूलैस्त्रुटिकोलपत्रैः ॥
एभिर्निषेवेत कृताञ्च पेयाम् तन्वीं सुशीतां मधुना विमिश्राम्
यत्प्लीह्नि सर्पिर्विहितं षडङ्गम् तद्वातकासं जयति प्रसह्य ॥
विदारि गन्धादिकृतं घृतं वा रसेन वा वासकजेन पक्वम् ।
विरेचनं स्नैहिकमत्र चोक्त-मास्थापनञ्चाप्यनुवासनञ्च ॥
धूमं पिबेत् स्नैहिकमप्रमत्तः पिबेत् सुखोष्णं घृतमेव चात्र ।
हिता यवाग्वश्च रसेषु सिद्धाः पयांसि लेहाः स घृतास्तथैव ॥
प्रच्छर्द्दनं कायशिरो विरेका स्तथैवधूमाकबलग्रहाश्च ।
उष्णाश्च लेहाः कटुकानि हन्युः कफं विशेषेण विशोषणं वा" ॥
"खर्ज्जूरभार्गीमगधापियाल-मधूलिकैलामलकैः समांशैः ।
चूर्णं सिताक्षौद्रघृतप्रगाढ-न्त्रीन् हन्ति कासानुपयुज्यमानः" ॥
"प्रस्थत्रयेणामलकीरसस्य शुद्धस्य दत्त्वार्द्धतुलां गुडस्य ॥
चूर्णीकृतैर्ग्रन्थिकचव्यजीर-व्योषेभकृष्णा ह पुषाजमोदैः ।
विडङ्गसिन्धुत्रिफलायमानी पाठाग्निधान्यैश्च पिचुप्रमाणैः ॥
दत्त्वा त्रिवृच्चूर्णपलानि चाष्टा-वष्टौ च तैलस्थ पचेद्यथावत् ।
तम्भक्षयेदक्षफलप्रमाणम्

पैत्ते तनुकफे कासे त्रिवृतां मधुरैर्युताम् ।
दद्याद्घनकफे तिक्तैर्विरेकार्थे युतां भिषक् ॥
“शर्कराचन्दनद्राक्षा मधुधात्रीफलोत्पलैः ।
पैत्तेसमुस्तमरिचः सकफे सघृतोऽनिले ॥
मृद्वीकार्द्धशतं त्रिंशत् पिप्पलीशर्करापलम् ।
लेहयेन्मधुना गोर्व्वा क्षीरपस्य शकृद्रसम्” ॥
“बलिनं वमनैरादौ शोधयेत् कफकासिनम् ।
यवान्नैः कटुरुक्षोष्णैः कफघ्नैश्चाप्युपाचरेत् ॥
पिप्पलीक्षारिकैर्यूषः कोलत्थं मूलकस्य च ।
लघून्यन्नानि भुञ्जीत रसैर्व्वा कटुकान्यितैः” ॥
कासमर्द्दाश्वबिट्भृङ्गराजोवार्त्ताकुजारसाः ।
सक्षौद्राः कफकासघ्नाः मुररस्यासितस्य च”
॥
“क्षतकासाभिभूतानां वृत्तिः स्यात्
पित्तकासिकी ।
क्षीरसर्पिर्मधुप्राया संसर्गे तु विशेषणम् ॥
वातपित्तार्द्दितेऽभ्यङ्गो गात्रभेदेघृतैर्हितः ।
तैलैर्मारुतरोगघ्नैः पीड्यमाने च वायुना ॥
हृत्पार्श्वार्त्तिषु पानं स्याज्जीवनीयस्य सर्पिषः ।

र्विवर्द्धितो यक्ष्मविकारकृत्स्यात् ॥
भविष्यतस्तस्य तु कण्ठकण्डू-
र्भोज्योपरोधोगलतालुलेपः ।
स्वशब्दवैषम्यमरोचकोऽग्नि-
सादश्च लिङ्गानि भवन्त्यमूनि” ॥
“वृद्धत्वमासाद्य भवत्यथो वै
याप्यन्तमाहुर्भिषजस्तु कासम् ॥
शृङ्गीवचा कट्फलकत्तृणाब्द-
धान्याभयाभार्ग्यमराह्वविश्वम् ।
उष्णाम्बुना हिङ्गुयुतं तु पीत्वा-
बद्धास्यमप्याशु जहाति कासम् ॥
फलत्रिकव्योषविडङ्गशृङ्गी
रोस्नावचापद्मकत्वेकाष्ठैः ।
लेहः समैः क्षौद्रसिताघृताक्तः
कासं निहन्यादचिराद्धुदीर्णम् ॥
पथ्यां सितामामलकानि लाजां
समागधीञ्चापि विचूर्ण्य शुण्ठीम् ।
सर्पिर्मधुभ्यां विलिहीतकासी
स सैन्धवां वोष्णजलेन कृष्णाम् ॥
खादेद्गुडं नागरपिप्पलीभ्यां
द्राक्षाञ्च सर्पिर्मधुनावलिह्यात् ।
द्राक्षां सितां मागधिकाञ्च तुल्याम्
सशृङ्गवेरं मधकन्तुगाञ्च ॥
लिह्याद्घृतक्षौद्रयुतां समांसां
सितोपलां वा मरिचांशयुक्ताम् ।
धात्रीकणाबिश्वसितोपलाश्च
सञ्चर्ण्य मण्डेन पिबेच्च दध्ना ॥

यथेष्टचेष्टं त्रिसुगन्धि युक्तम् ॥
अनेन सर्व्वे ग्रहणी विकाराः
स श्वासकासस्वरभेदशोषाः ।
शाम्यन्ति चायं चिरमन्तरग्ने-
र्हतस्य पुंस्त्वस्य च वृद्धिहेतुः ॥
स्त्रीणाञ्च बन्ध्यामयनाशनः स्यात्
कल्याणको नाम गुडः प्रतीतः” ॥
इति कल्याणको गुडः ॥ * ॥
“कुलीर शुक्ती चटकैणलावा-
न्निःक्वाथ्य वर्गैर्मधुरैस्तथान्यैः ॥
पचेद्घृतं तत्तु निषेव्यमानम्
हन्यात् क्षतोत्थं क्षयजञ्च काशम्” ॥
इति सुश्रुते उत्तरतन्त्रे । ५२ अध्याये
॥ * ॥

"पारदं गन्धकं शुद्धं मृतलौहञ्च टङ्कणम्
।
रास्ना विडङ्गत्रिफला
वेवदारुकचित्रकम् ।
अमृतां पद्मकं क्षौद्रं विषञ्चैव विचूर्णयेत् ।
द्विगुञ्जं वातकासार्त्तिः
सेवयेदमृतार्णवम्" ॥
इति अमृतार्णवो रसः ॥ * ॥
"भस्मताम्राभ्रकान्तानां कासमत्वर्द्चो
रसैः ।
मुनिजैर्वेतसाम्लेन दिनं मर्द्यं प्रयत्नतः
॥
निष्कार्द्धं पित्तकासार्त्तो भक्षयेच्च
दिनत्रयम् ।
श्वासकासाग्निमान्द्यञ्च क्षयकासं
निकृन्तति" ॥
इति पित्तकासान्तको रसः ॥ * ॥
"सुशुद्धं पारदं गन्धं प्रत्येकं
शुक्तिसम्मितम् ।
ततः कज्जलिकां कृत्वा मर्दयेच्च
पृथक् पृथक् ॥
विश्वाग्निमन्थश्योनाककाश्मर्य्यः
पाटला बला ।
मुस्तं पुनर्नदा धात्री वृहतीवृषपत्रकम् ॥
विदारी बहुपुत्त्री च एषां कर्षरसैः पृथक्
।
सुवर्णं रजतं ताम्रं प्रत्येकं शाणमानकम्
॥
पलमात्रन्तु कृष्णाभ्रं तदर्द्धन्तु
शिलाह्वयम् ।
जातीकोषफलं मांसी तालीशैला
लवङ्गकम् ।
प्रत्येकं कोलमानन्तु वासानीरैर्विमर्दयेत्
।
शोषयित्वा ततः पश्चाद्विदारी
रसमर्दितः ॥
त्रिगुञ्जां तां वटीं खादेत्पिप्पली
मधुसंयुताम् ।
गव्यदुग्धञ्च भूयः ।
भोज्यो योज्यो यथेष्टं ललितललनया-
दीयमानो मुदा यत्
शृङ्गाराभ्रेणकामी युवतिजनशता-
भोगयोगादतुष्टः ॥
वर्ज्यं शाकाम्लमादौ न च कतिपयचित्-
स्वेच्छया भोज्यमानः" ॥
इति शृङ्गाराभ्रः ॥ * ॥
"जीर्णं सुवर्णं लौहं वा यद्यत्रैव प्रदीयते ।
तदायं सर्व्वरोगाणां सार्व्वभौमो न संशयः" ॥
इति सार्व्वभौमो रसः ॥ * ॥
"त्रिकटु त्रिफलाधान्यं चव्यं चित्रकसैन्धवम्
।
दिव्यौषधिहतञ्चापि सर्व्वतुल्यन्त्वयोरजः ॥
नवगुञ्जाप्रमाणेन वटिकां कारयेद्भिषक् ।
प्रातःकाले शुचिर्भूत्वा चिन्तयित्वामृतेश्वरीम्
॥
एकैकां वटिकां खादेत् रक्तोत्पलरसप्लुताम्
।
नीलोत्पलरसैर्व्वापि कुलत्थस्य रसेन वा ॥
निहन्ति विविधं कासं दोषत्रयसमुद्भवम् ।
वातिकं पैत्तिकञ्चैव गरदोषसमुद्भवम् ।
सरक्तमथवा रक्तं कासश्वाससमन्वितम् ॥
तृड्दांहभ्रमशूलघ्नी रुच्या वह्निप्रदीपनी ।
बलवर्णकरी वृष्या जीर्णज्वरविनाशिनी ॥
इयं चन्द्रामृता नाम्ना चन्द्रनाथेन निर्म्मिता ।
वासागुडूचिका भार्गी मुस्तकं कण्टकारिका
॥
भोजनान्ते प्रकर्त्तव्या वटिका कार्य्यसिद्धये"
॥

इति श्रीचन्द्रामृता वटी ॥ चन्द्रामृतं
लौहमि-

त्यपि पाठः ॥ * ॥
"रसगन्धकलौहानां प्रत्येकं कार्षिकं क्षिपेत् ।
टङ्गणस्य पलं दत्त्वा मरिचस्य पलार्द्धकम् ॥
त्रिकटुत्रिफलाचष्य धान्यजीरकसैन्धवम् ।
प्रत्येकं तोलकं ग्राह्यं छागीदुग्धेन पेषयेत् ॥
नवगुञ्जाप्रमाणेन वटिकां कारयेद्भिषक् ।
लाजा दिवसनिद्रा च लघून्यन्नानि यानि च
॥
पथ्यमेतद्यथा दोषमुक्तं कासगदातुरे" ॥
अथापथ्यमाह ॥
"वस्तिं नस्यमसृङ्मोक्षं व्यायामं दन्तघर्षणम्
।
आतपं दुष्टपवनं रजोमार्गनिषेवणम् ॥
विष्टम्भीनि विदाहीनि रूक्षाणि विविधानि च
।
शकृन्मूत्रोद्गारकासवमिवेगनिधारणम् ॥
मत्स्यं कन्दं सर्षपञ्च तुम्बीफलमुपोदिकाम्
।
दुष्टाम्बु चान्नपानञ्च विरुद्धान्यशनानि च ॥
गुरुशीतञ्चान्नपानं कासरोगी परित्यजेत्" ॥
इति वैद्यकपथ्यापथ्यविधौ
कासरोगाधिकारः ॥ * ॥)
काशतृणम् । इत्यमरटीकायां भरतः ॥
शोभाञ्जनः ।
इति शब्दचन्द्रिका ॥

**कासकन्दः**, पुं, (कासहेतुः कन्दः ।) कासालुः । इति
राजनिर्घण्टः ॥

**कासघ्नी**, स्त्री, (कासं हन्ति । कास + हन् + टक् ।
स्त्रियां ङीप् ।) कण्टकारी । इति
शब्दचन्द्रिका ॥
(कण्टकारीशब्देऽस्या गुणादिविवरणं ज्ञेयम्
॥)

**कासजित्**, स्त्री, (कासं जयतीति । कास + जि +
क्विप् ।) भार्गी । इति राजनिर्घण्टः ॥

**कासनाशिनी**, स्त्री, (कासं नाशयतीति । कास +
नश + णिच् + णिनिः ।) कर्कटशृङ्गीवृक्षः ।
इति
रत्नमाला ॥

**कासन्दीवटिका**, स्त्री, (कासं द्यति नाशयतीति ।
दो + कः ततो ङीष् । कासन्दीं वटति वक्ति
तन्नाम्ना प्रकाशते इत्यर्थः । वट् + ण्वुल् ।
टाप्

नाम्ना नित्योदयश्चायं रसो
विष्णुविनिर्म्मितः ॥
पञ्च कासान्निहन्त्याशु
चिरकालसमुद्भवम् ।
राजयक्ष्माणमत्युग्रमित्यादि बहवो
गुणाः” ॥
इति नित्योदयो रसः ॥ * ॥
“शुद्धं कृष्णाभ्रचूर्णद्विपलपरिमितं
शाणमानं यदन्यत्
कर्पूरं जातिकोषं सजलमिभकणा-
तेजपत्रं लवङ्गम् ।
मांसीतालीशचोचं गजकुमुमगदं-
धातकीचेति तुल्यम्
पथ्याधात्री विभीतं त्रिकटुरपि पृथक्
त्वर्द्धशाणं द्विशाणम् ॥
एला जातीफलाख्यं क्षितितलविधिना
शुद्धगन्धस्य कोलम्
कोलार्द्धं पारदस्य प्रतिपदविहितं
पिष्टमेकत्र मिश्रम् ।
पाणीयेनैवकार्य्याः परिणतचणक-
स्विन्नतुल्याश्च वठ्यः
प्रातःखाद्याश्चतस्रस्तदनुखलु कियत्
शृङ्गवेरं सपर्णम् ॥
पाणीयं पीतमन्ते ध्रुवमपहरति-
क्षिप्रमेतान् विकारान्
कोष्टे दुष्टाग्निजातान् ज्वरमुदररुजं-
राजयक्ष्मक्षतञ्च ।
कासं श्वासं सशोथं नयनपरिभवं-
मेहमेदो विकारान्
हन्यादामानिलोत्थान् कफपवनकृतान्
पित्तरोगान् विशेषान् ॥
बल्योवृष्यश्च योगन्तरुणकरवरः-
सर्व्वरोगप्रशस्तः
पथ्यं मांसैश्च यूषैर्धृतपरिलुलित-
प्रातःकाले शुचिर्भूत्वा चिन्तयित्वामृतेश्वरीम्
॥
एकैकां वटिकां खादेत् रक्तोत्पलरसप्लुताम्
।
नीलोत्पलरसेनापि कुलत्थस्य रसेन वा ॥
निहन्ति विविधं कासं तातरक्तकफोद्भवम् ।
सरक्तमथवा रक्तं ज्वरश्वाससमन्वितम् ॥
हृच्छूलं पार्श्वशूलञ्च जीर्णज्वरविनाशनः ।
चन्द्रामृतरसो जाम चन्द्रनाथेन भाषितः” ॥
इति वृहच्चन्द्रामृतो रसः ॥ * ॥

इति वैद्यकरसेन्द्रसारसंग्रहे
कासरोगाधि-

कारे ॥ * ॥ * ॥
अथ कासपथ्यम् ॥
“स्वेदो विरेचनं छर्दिर्धूमपानं समाशनम् ।
शालिषष्टिकगोधूमश्यामाकयवकोद्रवाः ॥
आत्मगुप्ता माषमुद्गकुलत्थानां रसाः पृथक्
।
ग्राम्यौदकानूपधन्वमांसानिविविधानि च ॥
सुरा पुरातनं सर्पिश्छागञ्चापि पयो घृतम् ।
वास्तुकं वायसी शाकं वार्त्ताकुं बालमूलकम्
॥
कण्टकारी कासमर्द्दी जीवन्ती सुनिषण्णकम्
।
द्राक्षाविम्बी मातुलुङ्गं पौष्करं वासकस्त्रुटिः
॥
गोमूत्रं शुनं पथ्या व्योबुसष्णोदकं मधु ।
अत इत्वम् । कासन्दीवटिका इति
पारिभाषिक-
नाम्ना आख्यायते वा ।) वेसवारविशेषः ।
गोटा
कासुन् इति भाषा । अस्या गुणाः । हृद्यत्वम्
।
वातश्लेष्मरोगनाशित्वम् । रुच्यग्निकारित्वम्
। वायु-
मलानुलोमकारित्वञ्च । इति राजवल्लभः ॥

**कासमर्द्दः**, पुं, (कासं मृद्गाति । कास + मृद् + “कर्म्म-
ण्यण्” । ३ । २ । १ । इति अण् ।)
पेषितजल
मिश्रितवस्त्रगलितवेसवारः । इति
पाकराजेश्वरः ॥
कासुन्दी इति ख्यातः । गुल्मभेदः ।
इत्यमरभरतौ ॥
काल कासुन्दा इति भाषा ॥ शेषस्य
पर्य्यायः ।
अरिमर्द्दः २ कासारिः ३ कासमर्द्दकः ४
कालः ५
कनकः ६ जरणः ७ दीपनः ८ अस्य गुणाः
।
तिक्तत्वम् । उष्णत्वम् । मधुरत्वम् ।
कफवाता-
जीर्णकासपित्तनाशित्वम् । पाचकत्वम् ।
कण्ठ-
शोधनत्वञ्च । इति राजनिर्घण्टः ॥
अग्निदीपन-
त्वम् । स्वादुत्वञ्च । इति राजवल्लभः ॥
अस्य पत्र-
गुणाः । रुचिकारित्वम् । शुक्रवर्द्धकत्वम् ।
कास-
विषरक्तकफवातपित्तनाशित्वम् । मधुरत्वम्
। पा-
चनत्वम् । कण्ठशोधनत्वम् । लधुत्वम् ।
विशेषतः
कासहरत्वम् । ग्राहकत्वञ्च । इति
राजनिर्घण्टः ॥

**कासमर्द्दनः**, पुं, (कासं मृद्गाति । कास + मृद् +

| | | कर्त्तरि ल्युः । कासस्य मर्द्दनो वा ।) पटोलः ।<br>इति राजनिर्घण्टः ॥<br>**कासरः**, पुं, (के जले आसरति । आ + सृ + अच् ।<br>महिषस्य प्रायेण जलवासात्तथात्वम् ।) महिषः ।<br>इत्यमरः । २ । ५ । ४ ॥ (यथा, आर्य्यासप्तशती ५२१ । |
|---|---|---|

"व्यारोषं मानिन्यास्तमोदिवःकासरं कलमभूमेः ।
वद्धमलिं च नलिन्याः प्रभातसन्ध्यापसारयति" ॥)

**कासारः**, पुं, (कास + "तुषारादयश्च" उणां ३ । १३९
इति आरन् प्रत्ययः । कस्य जलस्य आसारो यत्र
वा । अथवा कासं शब्दं ऋच्छति प्राप्नोति जल-
गमनपतनादिकाले । ऋ + "कर्म्मण्यण्" । ३ । २ ।
१ ।
इति अण् ।) सपद्मो निष्पद्मो वा महाजलाशयः ।
सरोबरः । इत्यमरः । १ । १० । २८ ॥ (यथा, --
गीतगोविन्दे २ । २० ।
"दुरालोकस्तोकस्तवकनवकाशोकलतिका
विकाशः कासारोपवनपवनोऽपिव्यथयति" ॥)

**कासारिः**, पुं, (कासस्य अरिः नाशकः ।) कासमर्द्दः ।
इति राजनिर्घण्टः ॥

**कासालुः**, पुं, (कासहेतुः कासजनको वा आलुः ।)
कन्दविशेषः । कोकणदेशे प्रसिद्ध आलुविशेषः ।
तत्पर्य्यायः । कासकन्दः २ कन्दालुः ३ आलुकः
४
आलुः ५ विशालपत्रः ६ पत्रालुः ७ । अस्य
गुणाः । उग्रत्वम् । कण्डुवातश्लेष्मामयारोचक-
नाशित्वम् । स्वादुत्वम् । पथ्यत्वम् । अग्निदीपन-
त्वञ्च । इति राजनिर्घण्टः ॥

**कासीसं**, क्ली, (कासीं क्षुद्रकासं स्यति नाशयतीति ।
सो + कः ।) उपधातुविशेषः । हिराकसी इति
भाषा । (यथा सुश्रुते सूते ३६ अध्याये ।
"कासीसकदुरोहिण्योर्जातीकन्दहरिद्रयोः" ॥)
तत्पर्य्यायः । धातुकासीसम् २ खेचरम् ३ धातु-
शेखरम् ४ । इति हेमचन्द्रः ॥ केसरम् ५ हंस-
लोमशम् ६ शोधनम् ७ पांशुकासीसम् ८ शुभ्रम्
९ । अस्य गुणाः । कषायत्वम् । शिशिरत्वम् ।
विषकुष्ठकृमिखर्ज्जूनाशित्वम् चक्षुर्हितत्वम् ।
कान्तिवर्द्धनत्वञ्च । इति राजनिर्घण्टः ॥ (विस्तृत-
विवरणमस्य काशीशशब्दे ज्ञेयम् ॥)

**कासूः**, स्त्री, (कशति कुत्सितशब्दं गच्छतीति ।
कश गतौ + "णित् कशिपद्यतेः" । उणां १ । ८७ ।
इति ऊः पृषोदरादित्वात् सत्वम् ।) विकलवाक् ।
करोति । हल् + अच् टाप् च ।)
वाद्यभाण्डभेदः ।
(ईषदपि न हलं कुत्सितं अङ्गं यस्याः
। कोः का-
देशः ।) अप्सरोविशेषः । इति मेदिनी
॥

**काहलापुष्पः**, पुं, (काहलाकृतिरिव पुष्पमस्याः
।)
धुस्तूरः । इति शब्दमाला ॥

**काहली**, स्त्री, (कं सुखं आहलति ददातीति ।
आ +
हल + इन् । ततो ङीप् ।) तरुणी ।
युवती । इति
मेदिनी ॥

**काहारकः**, पुं, (कुत्सितं शिविकादिकमालम्ब्य
जी
वनयात्रामाहरति । आ + हृ + ण्वुल्
।) शिवि-
कावाहकजातिः । काहार इति वेहारा
इति च
भाषा । यथा, --
"तथा गारुडिका वीराः
क्षुरकर्म्मोपजीवकाः ।
व्याधाः काहारकाः पुष्टाः कृष्णं
संवाहयन्ति ये" ॥
इति जैमिनिभारते आश्वमेधिके
पर्व्वणि १० अ-
ध्यायः ॥

**काही**, स्त्री, (केन वायुना आहन्यते । आ + हन्
+
डः ङीप् । यद्वा कं सुखं आहन्ति
ददाति प्राप-
यति । आ + हन् + अन्तर्णिजन्तात्
डः । डीप् च ।)
कुटजवृक्षः । इति राजनिर्घण्टः ॥

**कि** र लि ज्ञाने । इति कविकल्पद्रुमः ॥ (ह्वादिं-
वृक्षः । इत्यमरः । २ । ४ । २९ ॥
(अस्य पर्य्यायो
यथा, -- भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ॥
"पलाशः किंशुकः पर्णो यज्ञियो
रक्तपुष्पकः ।
क्षारश्रेष्ठो वातहरो ब्रह्मवृक्षः समिद्वरः"
॥
यथा गोः रामायणे ६ । ६८ । ३१ ।
"तयोः कृतव्रणौ देहौ शुशुभाते
महात्मनोः ।
पुष्पिताविव निष्पत्रौ यथा
शाल्मलिकिंशुकौ" ॥
तत्पुष्पादयोऽपि । यथा चाणक्ये ७ ।
"रूपयौवनसम्पन्ना
विशालकुलसम्भवाः ।
विद्याहीनान शोभन्ते निर्गन्धा इव
किंशुकाः" ॥)
विवरणमस्यान्यत् पलाशशब्दे
ज्ञातव्यम् ॥ नन्दी
वृक्षः । इति राजनिर्घण्टः ॥

**किंशुलुकः**, पुं, (किंशुक + निपातनात् साधुः ।)
पलाशवृक्षविशेषः । इति
शब्दरत्नावली ॥

**किकिः**, पुं, (कक + इन् । पृषोदरादित्वात्
आदे-
रित्वम् ।) किकीदिविः । इति
शब्दमाला ।
नारिकेलः । इति राजनिर्घण्टः ॥

**किकिदिविः**, पुं, (किकीति अस्फुटनादेन
दीव्यतीति ।
दिव् + इन् ।) चाषपक्षी । इति
शब्दमाला ॥

**किकीदिवः**, पुं, (किकीति अव्यक्तशब्देन
दीव्यति ।
दिव + कः ।) चाषपक्षी । इति
शब्दमाला ॥

शक्त्यस्त्रम् । इति मेदिनी ॥ (कासते प्रकाशते इति कास् + ऊ ।) दीप्तिः । भाषा । इति शब्दरत्नावली ॥ रोगः । बुद्धिः । इति हेमचन्द्रः ॥

**काहका**, स्त्री, (काहला इति । पृषोदरादित्वात् लस्य कः ।) काहलावाद्यम् । इति द्विरूपकोषः ॥

**काहलं**, क्ली, (कुत्सितं अस्पष्टमव्यक्तं हलं वाक्यं ध्वनिर्वा यत्र । विलेखनार्थकस्यापि हलधातोरत्रधातूनामनेकार्थत्वात् तथात्वम् ।) अव्यक्तवाक्यम् । इति हेमचन्द्रः ॥

**काहलः**, पुं, (कुत्सितं यथा स्यात् तथा हलति । लिखति नखैर्भूमिमिति शेषः । हल + अच् । कोः कादेशः ।) कुक्कुटः । शब्दमात्रम् । इति मेदिनी ॥ विडालः । इति शब्दमाला ॥ वृहड्ढक्का । तत्पर्य्यायः । महानादः २ । इति हारावली ॥

**काहलः**, त्रि, (केन जलेन अहलः अस्पृष्टः ।) शुष्कः । भृशम् । खलः । इति मेदिनी ॥

**काहला**, स्त्री, (कुत्सितं अव्यक्तं वा हलति शब्दं परं-सकं-सेट् ।) र वैदिकः । लि चिकेति । इति दुर्गादासः ॥

**किं**, व्य, किम् । इति मेदिनी ॥ (यथा विष्णुपुराणे १ मांशे १७ । २४ ।
"न केवलं तात ! मम प्रजानां
स ब्रह्मभूतो भवतश्च विष्णुः ।
धाता विधाता परमेश्वरश्च
प्रसीद कोपं कुरुषे किमर्थम्" ॥)

**किं**, [म्] त्रि, जिज्ञासार्थम् । कि इति भाषा । सर्व्वनामकिम्शब्दस्य क्लीवलिङ्गे रूपमिदम् । इति व्याकरणम् ॥ अस्यार्थान्तराणि किम्शब्दे द्रष्टव्यानि ॥ (सर्व्वशब्दमयत्वात् विष्णुः । यथा, महाभारते १३ । १४९ । ९१ ।
"एको नैकः सवः कः किं
यत्तत्पदमनुत्तमम्" ॥)

**किंवदन्तिः**, स्त्री, (किं + वद + झिच् ।) किंवदन्ती । इत्यमरटीकायां भरतः ॥

**किंवदन्ती**, स्त्री, (किम् + वद + झिच् ङीष् च ।) जनश्रुतिः । सत्यमसत्यं वा लोकवादः । इत्यमरः । १ । ६ । ७ ॥ ("अस्ति किलैषा किंवदन्ती अस्माकं कुले कालरात्रिकल्पा विद्या नाम राक्षसी समुत्पत्स्यते" । इति प्रबोधचन्द्रोदयनाटकम् ॥)

**किंवा**, व्य, (किम् च वा च । इति द्वन्द्वसमासः ।) विकल्पः । अथवा । तत्पर्य्यायः । उताहो २ यदि वा ३ यद्वा ४ नेति ५ । इति त्रिकाण्डशेषः ॥

**किकीदिविः**, पुं, (किकी इति अस्फुटनादं कुर्व्वन् दीव्यति । "कृविधृष्विच्छविस्थवि किकीदिविः" । उणां ४ । ५६ इति क्विन् निपातनात् सिद्धम् ।) स्वर्णत्तातकः । सोणाचडा इति भाषा । नीलकण्ठ इति क्वचित् ख्यातः । इति भरतः ॥ तत्पर्य्यायः । चाषः २ । इत्यमरः । २ । ५ । १६ ॥ चासः ३ किकीदीविः ४ । इति भरतः ॥ किकी ५ दिविः ६ । इति स्वामी ॥ किकिः ७ किकिदिवः ८ किकिदीविः ९ । इति शब्दमाला ॥ किकीदिवः १० स्वर्णचूडः ११ इति जटाधरः ॥

**किकीदीविः**, पुं, (किकी इत्यव्यक्तशब्देन दीव्यति क्रीडति । निपातनात् दीर्घत्वे साधुः ।) चाषपक्षी । इति शब्दमाला ॥

**किखिः**, स्त्री, (खदति हिनस्ति । खद् हिंसायां निपातनात् साधुः ।) लघुशृगालः । इति हेमचन्द्रः ॥ ख्याँक्शेयालि इति भाषा ॥

**किखिः**, पुं, (किखिरिति कुत्सितशब्दं करोति यः ।) कपिः । इति भूरिप्रयोगः ॥

**किङ्करः**, त्रि, (किञ्चित् करीति । दिवाविभेतृ त्र किं यत्तद्बहुष्वित्यच् ।) दासः । इत्यमरः । २ । १० । १७ ॥ (यदुक्तं पुराणे ।
"विप्रस्य किङ्करो भूपो वैश्योभूपस्य भूमिप ! ।
सर्व्वेषां किङ्कराः शूद्रा ब्राह्मणस्य विशेषतः" ॥)

**किंशारुः**, पुं, (किं किञ्चित् कुत्सितं वा शृणातीति

शॄ हिंसायां + "किञ्जरयोः श्रिणः" । उणां

१ । ४ । इति ञुण् ।) शस्यशूकम् । शुँया इति

भाषा । इत्यमरः । २ । ९ । २१ ॥ वाणः । कङ्क-

पक्षी । इति मेदिनी ॥

**किंशुकः**, पुं, (किञ्चित् अवयवैकदेशः शुक इव शुक-

तुण्डाभपुष्पत्वात् तथात्वमिति बोध्यम् ।) पलाश-

**किङ्किणी**, स्त्री, (किमपि किञ्चिद् वा कणति ।

कण शब्दे + इन् + ङीप् च ।

पृषोदरात् साधुः ।)

कट्याभरणविशेषः । घाघर इति भाषा । तत्प-

र्य्यायः । क्षुद्रघण्टिका २ । इत्यमरः । २ । ६ । ११० ॥

कङ्कणी ३ । इति भरत ॥ किङ्कणिका ४ कि

ङ्किणिः ५ । इति केचित् ॥ क्षुद्रघण्टी ६ प्रतिसरा

७ किङ्किणीका ८ कङ्कणिका ९ क्षुद्रिका १० ।

इति शब्दरत्नाबली ॥ घर्घरी ११ । इति जटा-

धरः ॥ (यथा, महाभारते १३ । ५३ । ३१ ।
"किङ्किणीस्वननिर्घोषोयुक्तस्तोरणकल्पनैः" ॥)
विकङ्कतवृक्षः । इति राजनिर्घण्टः ॥

**किङ्किरं**, क्ली, (किं कुत्सितं मदवारि किरति विक्षि-
पति । कृ + कः ।) गजकुम्भः । इति
सारस्वतः ॥

**किङ्किरः**, पुं, (किमपि अनिर्व्वचनीयं मधुरास्फुटं
किरति रौति । किञ्चित् किरति क्षिपति चित्तं
विरहिणां वा ।) कोकिलः । भ्रमरः । घोटकः ।
कामदेवः । इति सारस्वतः ॥

**किङ्किरा**, स्त्री, (किञ्चित् कुत्सितं वा किरति शरी-
रात् निःसरति । किं + कृ + कः टाप् च ।) रक्तम् ।
इति सारस्वतः ॥

**किङ्किरातः**, पुं, (किङ्किरं रक्तवर्णत्वं अतति पुष्प-
काले निरन्तरं प्राप्नोति । अत + अण् ।) अशोक-
वृक्षः । कामदेवः । शुकपक्षी । कोकिलः । इति
सारस्वतः ॥ रक्ताम्लानः । राङ्गा झाँटी इति
भाषा । इति जटाधरः ॥ पुष्पवृक्षविशेषः । तत्प-
र्य्यायः । हेमगौरः २ पीतकः ३ पीतभद्रकः ४
विप्रलोभी ५ पीताम्लानः ६ षट्पदानन्दः ७ ।
अस्य गुणाः । कषायत्वम् । उष्णत्वम् । तिक्तत्वम् ।
अग्निदीपनत्वम् ।
कफवायुकण्डुशोथरक्तत्वग्दोष-
नाशित्वञ्च । इति राजनिर्घण्टः ॥
तत्पर्य्यायगुणाः ।
"किङ्करातो हेमगौरः पीतकः पीतभद्रकः ।
किङ्किरातो हिमस्तिक्तः कषायश्च हरेदसौ ॥
कफपित्तपिपासास्रदाहशोषवमिक्रिमीन्" ॥

**किञ्चुलुकः**, पुं, (किञ्चित् चुलुम्पति चुलुम्प् + डुः +
संज्ञायां कन् ।) कीटविशेषः । कँचो इति भाषा ।
तत्पर्य्यायः । महीलता २ गण्डूपदः ३ । इत्यमरः ।
१ । १० । २२ । ("वाह्या यूकाः प्रसिद्धाः स्युः किञ्चु
लूकास्थथान्तराः" ॥ इति हारीते चिकित्सित-
स्थाने ५ अध्याये ॥)

**किञ्जं**, क्ली, (किञ्चिज्जलं यत्र । पृषोदरादित्वात् ल लो-
पे साधुः ।) किञ्जल्कम् । इति राजनिर्घण्टः ॥

**किञ्जलः**, पुं, (किञ्चित् जलं अत्र ।) किञ्जल्कः । इति
शब्दरत्नावली ॥

**किञ्जल्कं**, क्ली, (किञ्चित् जलति । जल् अपवारणे
+ बाहुलकात् कः ।) नागकेशरपुष्पम् । पद्मा-
भ्यन्तरस्थं केशाकारं करहाटकवेष्ठनम् । केसर
इति ख्यातम् । (यथा, रघुः १५ । ५२ ।
"स तद्वक्त्रं हिमक्लिष्टकिञ्जल्कमिव पङ्कजम् ।
ज्योतिष्कणाहतश्मश्रु कण्ठनालादपातयत्" ॥)
तत्पर्य्यायः । मकरन्दम् २ किशरम् ३ पद्मकेशरम्
४ किञ्जम् ५ पीतपरागम् ६ तुङ्गम् ७ चाम्पे-
यकम् ८ । अस्य गुणाः । मधुरत्वम् । रूक्षत्वम् ।
कटुत्वम् । आस्यब्रणापहत्वम् । शिशिरत्वम् ।
रुच्यत्वम् । पित्ततृष्णादाहविनाशित्वञ्च । इति
राजनिर्घण्टः ।

**किञ्जल्कः**, पुं, (किम् + जल + बाहुलकात् कः ।)
केशरः । इत्यमरः । १ । १० । ४७ ॥ पद्मकेशरः ।
तत्पर्य्यायगुणाः ।
"किञ्जल्कः केशरः प्रोक्तश्चाम्पेयश्चापि स स्मृतः ।
किञ्जल्कः शीतलो रूक्षः कषायोग्राहकोऽपि सः ॥
कफपिंत्ततृषादाहरक्तार्शोविषशोथजित्" ।
इति भावप्रकाशः । (वैद्यचक्रपाणिसंग्रहे रक्त
पित्ताधिकारे दूर्व्वाद्यतैले व्यवहारो यथा, --

शुक्रम् । इति हेमचन्द्रः ॥

**किट्टालः**, पुं, (किट्टेन मलेन अलति पर्य्याप्नोति ।
अल + अच् ।) ताम्रकलसः ।
लोहगूथकम् इति
मेदिनी ॥

**किणः**, पुं, (कण् गतौ + अच् । पृषोदरादित्वात्
अत इत्वम् ।) मांसग्रन्थिः ।
निर्घर्षणजव्यथा-
चिह्नम् । इति लिङ्गादिसंग्रहे
अमरभरतौ ।
कडा इति भाषा ॥ (यथा, रघुवंशे
। १६ । ८४ ।
"तदेतदाजानुविलम्बिना ते
ज्याघातरेखाकिणलाञ्छनेन ।
भुजेन रक्षापरिघेण भूमे-
रुपैतु योगं पुनरंसलेन" ॥
यथा च -- वाभटे उत्तरस्थाने ३७
अध्याये ॥
"राजकोषातकी मूलं किणो वा
मथितोद्भवः" ॥)
घुणः । इति हारावली ॥

**किणिः**, स्त्री, (किणाय तन्निवृत्तये प्रभवति । बाहु-
लकात् इन् ।) अपामार्गः । इति
शब्दरत्नावली ।
(अपामार्गशब्देऽस्या गुणादयो
ज्ञातव्याः ॥)

**किणिही**, स्त्री, (किणः अस्त्यस्मिन् अस्य वा इति
इनिः । किणिनो ब्रणान् हन्ति ।
हन् + डः गौरा-
दित्वात् ङीष् ।) अपामार्गवृक्षः ।
इत्यमरः । २ ।
४ । ८९ । (यत्रास्य
व्यवहारस्तद्यथा, --

इति भावप्रकाशः ॥

**किङ्किरालः**, पुं, (किङ्किराय रक्तत्वाय अलति । पर्य्या-

प्नोति । अल + अच् । किङ्किरेण
रक्तत्वेनालति
वा । वर्व्वूरवृक्षः । इति वैद्यकम् ॥

**किङ्किरी**, [न्] पुं, (किङ्किरं रक्तवर्णफलमस्त्यस्मिन्

अस्य वा । किङ्किर + इनिः ।) विकङ्कतवृक्षः
।
इति जटाधरः ॥ वँइचि इति भाषा ॥
(विकङ्कत-
शब्देऽस्या गुणादिकं बोद्धव्यम् ॥)

**किञ्च**, व्य, (किम् च, च च । द्वन्द्वसमासः ।) आरम्भः
।

साकल्यम् । इति मेदिनी ॥ अवान्तरम् ।
इति
जटाधरः ॥

**किञ्चन**, व्य, (किम् च चन च । मुग्धबोधमते तु

"किमः क्त्यन्तात् चित् चनौ" । इति
चनप्रत्ययः ।)
असाकल्यम् । अकात्स्न्र्यम् । इत्यमरः । ३
। ४ । ३ ॥

**किञ्चनः**, पुं, (किम् + चन् + अच् ।) हस्तिकर्णप-

लाशः । इति शब्दरत्नावली ॥

**किञ्चित्** व्य, (किम्च चित्च पाणिनिमते पदद्वयम् ।

मुग्धबोधमते तु "किमः क्त्यन्तात् चिच्चनौ"
। इति
चित्प्रत्ययः ।) अल्पम् । तत्पर्य्यायः । ईषत्
२
मनाक् ३ । असाकल्यम् । यथा ।
असाकल्ये तु
चिच्चन । इत्यमरः । ३ । ४ । ३ ॥
(यथा विवेकचूडामणौ ११ ।
"चित्तस्य शुद्धये कर्म्म न तु वस्तूपललब्धये
।
वस्तुसिद्धिर्व्विचारेण न किञ्चित्
कर्म्मकोटिभिः" ॥)

**किञ्चिलिकः**, पुं, (किञ्चित् चुलुम्पति । चुलुम्प इति

"दूर्व्वासोत्पलकिञ्जल्कमञ्जिष्ठासैलवालुकाः" ॥)

**किट** गतौ । भयभीषयोः । इति कविकल्पद्रुमः ॥ (भ्वां-

परं--सकं अकञ्च--सेट् ।) भीषा स्वतो
भयोत्पादना ।
केटति जनो व्याघ्रो जनं भीषयतीत्यर्थः । इति
दुर्गादासः ॥

**किटिः**, पुं, (केटति शत्रुं प्रति वेगेन गच्छति मला-

दीनुद्दिश्य गच्छति वा । किट्-गतौ इन् इगुप-
धात् कित् च ।) शूकरः । इत्यमरः । २ । ५ । २
॥

**किटिभः**, पुं, (किटिरिव भाति । भा + कः ।) केश-

कीटः । इति हेमचन्द्रः । उकुण इति भाषा ॥

**किट्टं**, क्ली, (केटति लोहादिधात्ववयवात् निर्गच्छ-

तीति । गत्यर्थेतिक्तः ।
आगमशास्त्रस्यानित्यत्वात्
नेट् ।) मलः । इत्यमरः । ६ । २ । ६५ ॥
(यदुक्तं चिन्तामणौ ।
"ध्मायमानस्य लोहस्य मलं मण्डूरमुच्यते ।
यल्लोहं यद्गुणं प्रोक्तं तत्किट्टमपि तद्गुणम्" ॥
यस्य कस्यापि असारांशे । यथा, --)
"आहारस्य रसः सारः सारहीनो मलद्रवः ।
शिराभिस्तज्जलं नीतं वस्तिं मूत्रत्वमाप्नुयात् ॥
शेषं किट्टञ्च यत्तस्य तत्पुरीषं निगद्यते" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**किट्टवर्ज्जितं**, क्ली, (किट्टेन मलेन वर्ज्जितम् ।)

"रसं शिरीषा किणिही
पारिभद्रककेम्बुकात्" ॥
इति वाभटे त्रिकित्सास्थाने २१
अध्याये ॥
अस्याः पर्य्याया यथा, --
"अपामार्गस्तु शिखरी ह्यधः शल्यो
मयूरकः ।
मर्कटी दुर्ग्रहा चापि किणिही
खरमञ्जरी" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ॥)

**किण्वं**, क्ली, (कण + "उल्वादयश्च" । उणां ४ । ९५

इति साधुः । यद्वा "अशूप्रुषि
लटीति" । उणां
१ । १५१ । इति क्वन्
बहुलवचनादित्वम् ।) सुरा-
वीजम् । (यथा, मनुः । ८ । ३२६
।
"सूत्रकार्पासकिण्वानां गोमयस्य
गुडस्य च" ॥)
पापम् । इति मेदिनी ॥

**किण्वः**, पुं, क्ली, (कण् + "अशूप्रुषीति" उणां १ ।

१५१ । इति क्वन्
बहुलवचनादित्वम् ।) सुरा-
बीजम् । इति
वाचस्पतिरित्यमरटीकायांभरतः
॥

**कित** संशये । इच्छायां । वासे । आरोग्ये । इति

कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-
सकञ्च-सेट् ।)
विचिकित्सति मनः सशेते इत्यर्थः
। आरोग्ये
चिकित्सत्यातुरं वैद्यः ।
इच्छानिवासयोस्तु केत-
तीति वोपदेवः ॥ तत्र तिवादयो न
प्रयुज्यन्ते ।
इति रमानाथः ॥ इति न
वनितामेतां हन्तुं मनो

| | | |
|---|---|---|
| सौत्रधातुः । डुः संज्ञायां कन् । पृषोदरात् उभ-<br>यत्र उस्थाने इत्वम् ।) किञ्चुलुकः ।<br>इत्यमरटीका ॥ | | विचिकित्सते । इति तु<br>अन्तर्भूतञ्यर्थतया कर्म्म-<br>कर्त्तरि सन्श्रन्थग्रन्थैत्यादिना<br>यक्निपेधे सि-<br>द्धम् । इति दुर्गादासः ॥<br>**कित** र लि मतौ । इति कविकल्पद्रुमः ॥ (ह्वादिं-<br>परं-सकं-सेट् ।) र वैदिकः । लि<br>चिकेत्ति । इति<br>दुर्गादासः ॥<br>**कितवः**, पुं, (कितं वायति कितेन वाति वा । कित<br>+ वा + कः ।) अक्षदेवी । (यथा,<br>मनुः । ३ । १५१ ।<br>“जटिलञ्चानधीयानं दुर्ब्बलं<br>कितवन्तथा । |

याजयन्ति च ये पूगांस्तांश्च श्राद्धे न भोजयेत्” ॥)
धुस्तूरः । इत्यमरः । २ । ४ । ७७ ॥
(“कितवाडशयोर्वीजं नागरं सहरीतकम् । चूर्णीकृत्यार्द्रकरसैः” ॥ इति वैद्यककषायसंग्रहे कासाधिकारे शाम्भरीगुडिकायाम् ॥) मत्तः ।
वञ्चकः । इति मेदिनी ॥
(यथा, भागवते । ८ । २० । ३ ।
“स चाहं वित्तलोभेन प्रत्याचक्षे कथं द्विजम् ।
प्रतिश्रुत्य ददामीति प्राह्लादिः कितवो यथा” ॥
धूर्त्तः । यथा, आर्य्यासप्तशती ३३ ।
“अस्थिररागः कितवो मानी चपलो विदूषकस्त्व-
मसि । मम सख्याः पतसि करे पश्यामि यथा
ऋजुर्भवसि” ॥) खलः । इति शब्दरत्नावली ॥
(यथा महाभारते । १ । १ । १५६ ।
“यदाश्रौषं वाससां तत्र राशिं समाक्षिपत् कितवो मन्दबुद्धिः” ॥)
रोचननामगन्धद्रव्यम् । इति जटाधरः राज-
निर्घण्टश्च ॥

**किन्तनुः**, पुं, (किं कुत्सिता तनुरस्य ।) अष्टपादः ।
इति त्रिकाण्डशेषः । माकडसा इति भाषा ॥

**किन्तमाम्**, व्य, (कुत्सितार्थे किम् । बहूनां मध्ये
एकस्य अतिशये तमप् ।
“किमेत्तिङव्ययेति” । ५
४ । ११ । इति आमुः ।) पृष्टैकतमम् । इति
शब्दरत्नावली ॥ इदमेषामतिशयेन किम् । इति
व्याकरणम् ॥

इति महाभाते । १ । ६६ । ७ ॥)
अर्हदुपासकविशेषः ॥ इति हेमचन्द्रः ॥

**किन्नरेशः**, पुं, (किन्नराणां ईशो राजा ।) कुवेरः ।
इत्यमरः । १ । १ । ७२ ॥

**किन्नरेश्वरः**, पुं, (किन्नराणां ईश्वरः ।) कुवेरः । इति
हलायुधः ॥

**किन्नु**, व्य, (किं च नु च । इति द्वन्द्वसमासः ।) प्रश्नः ॥
(यथा हेः रामायणे । २ । ७४ । ३ ।
“किन्न तेऽदोषयद्राजा रामो वा भृशधार्म्मिकः ।
ययोर्मृत्युर्विवासश्च त्वत्कृते त्युल्यमागतौ” ॥)
वितर्कः । (यथा शकुन्तलायां १ अङ्के ।
“किन्नु खलु यथा वयमस्यामेवमियमस्मान् प्रति
स्यात्” ॥) स्थानम् । सादृश्यम् । करणम् । इति
जटाधरः ॥

**किम्**, व्य, (कु + बाहुलकात् डिम् ।) कुत्सा ।
(यथा गोः रामायणे । १ । २२ । २१ ।
“देवदानवगन्धर्व्वा यक्षाः पतगपन्नगाः ।
न शक्ता रावणं सोढुं किं पुनर्मानवा युधि” ॥)
वितर्कः । (यथा, हितोपेदेशे ।
“किमनुरक्तो विरक्तो वा मयि स्वामीति ज्ञा-
स्यामि तावत्” ॥) निषेधः । प्रश्नः ।
इतिमेदिनी ॥

**किम्**, त्रि, क्षेपः । वितर्कः । निन्दा । परिप्रश्नः ।
इति मेदिनी ॥ (यथा, मनुः ११ । १९५ ।
“प्रणतं परिपृच्छेयुः साम्यं सौम्येच्छसीति किम्” ॥
किमपि अनिर्व्वचनीयम् । यथा, विष्णुपुराणे
१ । १९ । ७५ ।

मार्कण्डेय उवाच ।
ततः सा राजमहिषी तद्व्रतं समुपोषिता ।
यथोक्तं साऽकरोत् पूजां राजराजस्य संयता ॥
निधीनामप्यशेषाणां निधिपालबलस्य च ।
लक्ष्म्याश्च परया भक्त्या यतवाक्कायमानसा ॥
विविक्ते तु गृहान्तःस्थः सोऽथ राजा करन्धमः ।
आसीन उक्तः सचिवैर्नीतिशास्त्रविशारदैः ॥
सचिवा ऊचुः ।
राजन् वयःपरिणतं तवैवं शासतो महीम् ।
एकस्ते तनयोऽवीक्षित् त्यक्तदारपरिग्रहः ॥
अपुत्रः स वने निष्ठां यदा भूप ! गमिष्यति ।
तदारिपक्षं पृथिवी निश्चितं तव यास्यति ॥
वंशक्षयस्ते भविता पितृपिण्डोदकक्षयः ।
एतन्महत्ते विवरं क्रिया हान्या भविष्यति ॥
तस्मात् कुरु तथा भूप ! यथा ते तनयः पुनः ।
करोति सततं बुद्धिं पितृणामुपकारिणीम् ॥
श्रीमार्कण्डेय उवाच ।
एतस्मिन्नन्तरे शब्दं शुश्राव जगतीपतिः ।
पुरोहितस्य वीराया गदतोऽर्थिजनं प्रति ॥
कः किमिच्छति दुःसाध्यं कस्य किं साध्यतामिति ।
करन्धमस्य महिषी किमिच्छकमुपोषिता ।
राजपुत्त्रोऽप्यवीक्षित्तु श्रुत्वा पौरोहितं वचः ।
प्रत्युवाचार्थिनः सर्व्वान् राजद्वारमुपागतान् ॥
मया साध्यं शरीरेण यस्य किञ्चित् ब्रवीतु सः ।
मम माता महाभागा किमिच्छकमुपोषिता ॥
शृण्वन्तु मेऽर्थिनः सर्व्वे प्रतिज्ञातं मयात्र च ।
किमिच्छथ ददाम्येष क्रियमाणे किमिच्छके ॥

**किन्तरां**, व्य, (द्वयोर्मध्ये एकस्यातिशये तरप् आमुश्च ।)

पृष्टैकतरम् । इति शब्दरत्नावली ॥

इदमनयो-

रतिशयेन किम् । किम् शब्दोऽत्र कुत्सार्थः

।

अतिकुत्सितं रूपमित्यर्थः । इति

मुग्धबोध-

टीकायां दुर्गादासः ॥

**किन्तु**, व्य, (किं च तु च इति द्वन्द्वसमासः ।) कि-

म्पुनः । प्रागुक्तिविरुद्धार्थम् । यथा, --

"भृत्याभावे भवति मरणं किन्तु

सम्भावितानाम्" ।

इति प्राचीनाः ॥

**किन्तुघ्नः**, पुं, ववाद्येकादशकरणान्तर्गतशेषकरणम् ।

इति दीपिका ॥ तत्र जातफलम् ।

"मित्रामित्रे नैव किञ्चित् विशेषो

धर्म्माधर्म्मे तुल्यता मानवस्य ।

स्तोत्रे वादे सर्व्वदा प्रीतियुक्तः

किन्तुघ्नाख्ये यस्य नूनं जनिः स्यात्" ॥

इति कोष्ठीप्रदीपः ॥

**किन्धी**, [न्] पुं, (किं कुत्सिता धीरस्त्यस्य । इनिः ।)

अश्वः । इति त्रिकाण्डशेषः ॥

**किन्नरः**, पुं, स्त्री, (किं कुत्सितो नरः । अश्वमुखत्वा

त्तथात्वम् ।) स्वनामख्यातदेवयोनिः । स

तु

अश्वमुखत्वात् कुत्सितनरः स्वर्गगायकः

तुम्बुरु-

प्रभृतिः । तत्पर्य्यायः । किम्पुरुषः २

तुरङ्गवदनः ३

मयुः ४ । इत्यमरः । १ । १ । ७४ ॥

अश्वमुखः ५ गीतमोदी ६ हरिणनर्त्तकः ७

।

इति शब्दरत्नावली ॥ (यथा, --

"राक्षसाश्च पुलस्त्यस्य वानराः

किन्नरास्तथा ।

यक्षाश्च मनुजव्याघ्र ! पुत्त्रास्तस्य च

धीमतः" ॥

"तस्माच्च सूक्ष्मादिविशेषाणां

अगोचरे यत् परमात्मरूपम् ।

किमप्यचिन्त्यं तव रूपमस्ति

तस्मै नमस्ते पुरुषोत्तमाय" ॥)

**किमिच्छकः**, पुं, (किमिच्छसीति प्रश्नेन दानार्थं का-

यति शब्दायतेऽत्र । निपातनात् साधुः ।)

व्रत-

विशेषः । तद्विवरणं यथा, --

मार्कण्डेय उवाच ।

"अथ साऽवीक्षितो माता वीरा

वीरप्रजावती ।

पुण्येऽहनि समाहूय प्राह पुत्त्रमवीक्षितम् ॥

पुत्त्राहमभ्यनुज्ञाता तव पित्रा महात्मना ।

उपवासं करिष्यामि दुष्करोऽयं

किमिच्छकः ॥

स चायत्तस्तव पितुस्त्वया साध्यो मयापि

वा ।

प्रतिज्ञाते त्वया पुत्त्र ! ततस्तत्र

यताम्यहम् ॥

द्रव्यस्यार्द्धं महाकोषात् तव दास्याम्यहं

पितुः ।

धनं ते पितुरायत्तमनुज्ञातास्मि तेन च ॥

क्लेशसाध्यो ममायत्तः स हि श्रेयो

भविष्यति ।

साध्यो भविष्यो यदि ते

कश्चिद्बलपराक्रमैः ॥

स ते साध्योऽन्यथा वापि दुःखसाध्यो

भविष्यति ।

तत्त्वं प्रतिज्ञां कुरुषे यदि पुत्त्रात्र वै व्रते ॥

तदेतदहमारप्स्ये कथ्यतां यन्मतं तव ।

अवीक्षिदुवाच ।

वित्तं मे पितुरायत्तं ममेशत्वं न तत्र वै ।

यन्मच्छरीरनिष्पाद्यं तत् करिष्ये

त्वयोदितम् ॥

किमिच्छकं व्रतं मातर्निश्चित्य भव

निर्व्यथा ।

राज्ञा पित्राभ्यनुज्ञातं यदि वित्तेश्वरेण मे ॥

मार्कण्डेय उवाच ।

ततो राजा निशम्यैतत् वाक्यं

पुत्त्रमुखाच्च्युतम् ।

समुपेत्याब्रवीत् पुत्त्रमहमर्थी प्रयच्छ मे ॥

अवीक्षिदुवाच ।

दातव्यं यन्मया तात ! भवते तद्ब्रवीहि

माम् ।

कर्त्तव्यं दुष्करं वा ते साध्यं दुःसाध्यमेव च

॥

राजोवाच ।

यदि सत्यप्रतिज्ञस्त्वं ददासि च

किमिच्छकम् ।

पौत्त्रस्य दर्शय मुखं ममोत्सङ्गगतस्य तत्

॥

अवीक्षिदुवाच ।

अहं तवैव तनयो ब्रह्मचर्य्यञ्च मे नृप ! ।

न मे पुत्त्रोऽस्ति पौत्त्रस्य दर्शयामि कथं

मुखम् ॥

राजोवाच ।

पापाय ब्रह्मचर्य्यं ते यदिदं धार्य्यते त्वया ।

तस्मात्त्वं मोचयात्मानं मम पौत्त्रं प्रदर्शय ॥

अवीक्षिदुवाच ।

विरमास्मान्महाराज ! यदन्यत्तत् समादिश

।

वैराग्येण मया त्यक्तः स्त्रीसम्भोगस्तथा

रसः ॥

राजोवाच ।

बहुभिर्युध्यमानस्य न दृष्टो वैरिभिर्ज्जयः ।

तत्रापि यदि वैराग्यमुपैषि तदपण्डितः ॥

किं वा नो बहुनोक्तेन ब्रह्मचर्य्यं परित्यज ।

मातुस्त्वमिच्छया वक्त्रं पौत्त्रस्य मम दर्शय

॥

भार्कण्डेय उवाच ।

यदा स बहुशस्तेन प्रोक्तः पत्त्रेण पार्थिवः ।

नान्यत् प्रार्थयते किञ्चित् तदा
पुत्त्रोऽब्रीत् पुनः ॥
दत्त्वा किमिच्छकं तुभ्यं प्राप्तोऽहं
तात ! सङ्कटम् ।
तत् करिष्यामि निर्लज्जोभूयो
दारपरिग्रहम् ॥
स्त्रियाः समक्षं विजितः पतितो
धरणीतले ।
स्त्रीपतिर्भविता
भूयस्तातैतदतिदुष्करम् ॥
तथापि किं करोम्येष
सत्यपाशवशङ्गतः ।
करिष्यामि यथात्थ त्वं भुज्यतां
निजशासनम्” ॥
इति श्रीमार्कण्डेयपुराणे
अवीक्षिच्चरितनामा-
ध्यायः ॥

**किमु**, व्य, (किम् च उच इति द्वन्द्वसमासः ।) सम्भा-

वना । विमर्षः । इति मेदिनी ॥ (यथा,
--
“निर्व्वाणदीपे किमुतैलदानं” इति
शिष्टोक्तिः ॥)

**किमुत**, व्य, (किम् च उत् च इति द्वन्द्वसमासः ।)

प्रश्नः । वितर्कः । विकल्पः ।
अतिशयः । इति
मेदिनी ॥

**किम्पचः**, त्रि, (किं कुत्सितं अतिथ्यादिभ्योऽप्रदाय

केवलं स्वोदरमात्रपूरणायैव पचतीति
। किम् +
पच् + अच् ।) किम्पचानः ।
इत्यमरटीकायां राय-
मुकुटः ॥

**किम्पचानः**, त्रि, (किं कुत्सितं कस्मैचिदपि न दत्त्वा

(“गन्तव्यमस्ति कियदित्यसकृद्ब्रुवाणा” ॥
इति साहित्यदर्पणम् ॥)

**कियदेतिका**, स्त्री, उत्साहः । उद्योगः । इति

हेमचन्द्रः ॥

**कियाहः**, पुं, (कियान् रक्तवर्णः हयः । पृषोद-

रादित्वात् निपातनात् साधुः ।)
रक्तवर्णघोटकः ।
इति हेमचन्द्रः ॥

**किरः**, पुं, (किरति विक्षिपति मलोपलक्षितस्थलम् ।

कृ + कः ।) शूकरः । इत्यमरः । २ । ५ । २
॥

**किरकः**, पुं, (किरति लिखतीति । कृ + ण्वुल् ।)

लेखकः । इति त्रिकाण्डशेषः ॥

**किरणः**, पुं, (कीर्य्यन्ते विक्षिप्यन्ते रश्मयः अस्मात्

“क्वृपॄवृजिमन्दिनिधाञः क्युः” । उणां २ ।
८१ ।
इति क्युः ।) सूर्य्यः । इति हेमचन्द्रः ॥
(कीर्य्यते
परितः क्षिप्यतेऽसौ । कृ + कर्म्मणि क्युः ।)
सूर्य्य-
रश्मिरिति भगीरथमाधव्यौ ॥
चन्द्रसूर्य्ययोरश्मि-
रिति रायमुकुटः ॥ रत्नरश्मौ
गभस्तिशब्दप्रयो-
गात् सामान्यरश्मिः । तथा च भट्टिः । १ । ६
।

“ऊर्द्ध्वस्फुरद्रत्नगभस्तिभिर्या” ।
इति मञ्जरी ।

इत्यमरटीकासारसुन्दरी ॥ तत्पर्य्यायः ।
अस्रः २
मयूखः ३ अंशुः ४ गभस्तिः ५ घृणिः ६
धृष्णिः ७
भानुः ८ करः ९ मरीचिः १० दीधितिः ११
।

वृक्षविशेषः । चिराता इति भाषा । तत्पर्य्यायः
।
भूनिम्बः २ अनार्य्यतिक्तः ३ । इत्यमरः । २
। ४ ।
१४३ ॥ कैरातम् ४ काण्डतिक्तकः ५ । इति
रत्न-
माला ॥ किरातकः ६ इति जटाधरः ॥
चिरतिक्तः
७ चिरातिक्तः ८ तिक्तकः ९ सुतिक्तकः १०
।
इति शब्दरत्नावली ॥ कटुतिक्तः ११
रामसेनकः
१२ ॥ अस्य गुणाः । वायुवृद्धिकारित्वम् ।
रूक्षत्वम् ।
कफपित्तज्वरनाशित्वञ्च । इति राजवल्लभः ॥
“किरातकोऽन्यो नैपालः सार्द्धतिक्तो
ज्वरान्तकः ।
किरातः सारको रूक्षः शीतलस्तिक्तको लघुः
॥
सन्निपातज्वरश्वासकफपित्तास्रदाहनुत् ।
काशशोषतृषाकुष्ठज्वरव्रणकृमिप्रणुत्” ॥
इति भावप्रकाशः ॥
राजनिर्घण्टोक्तगुणपर्य्यायौ
भूनिम्बशब्दे द्रष्टव्यौ ॥
(“किराततिक्तममृतां द्राक्षामामलकीं शठी ।
निष्क्वाथ्य पित्तानिलजे क्वाथन्तं सगुडं
पिबेत् ॥
इति वैद्यकचक्रपाणिसंग्रहे ज्वराधिकारे ॥)

**किराताशी**, [न्] पुं, (किरातान् निषादान् अ-

श्नातीति । अश भोजने + णिनिः ।) गरुडः ।
इति शब्दरत्नावली ॥ (अस्य विवरणं यथा
महा-
भारते १ । २८ अध्याये ।
“इत्युक्तो गरुडः सर्पैस्ततो मातरमब्रवीत् ।
गच्छाम्यमृतमाहर्त्तुं भक्ष्यमिच्छामि वेदितुम् ॥
विनतोवाच ।
समुद्रकुक्ष्यावेकान्ते निषादालयमुत्तमम् ।
निषादानां सहस्नाणि तान् भुक्त्वाऽमृतमानय
।

केवलं आत्मार्थं पचतीति । पच् + आनच् ।)
कृपणः । इत्यमरः । ३ । १ । ४८ ॥

**किम्पाकः**, त्रि, (किं कथमपि पाकः शिक्षाप्रकारो
यस्य ।) मातृशासितः । इति जटाधरः ॥

**किम्पाकः**, पुं, (कुत्सितः पाकः परिणामो यस्य ।)
महाकाललता । इति रत्नमाला । माकाल इति
भाषा ॥ (यथा, हेः रामायणे २ । ६६ । ६ ।
"न लुब्धो बुध्यते दोषान्
किम्पाकमिव भक्षयन्" ॥
महाकालशब्देऽस्य विवरणं बोद्धव्यम् ॥)

**किम्पुरुषः**, पुं, (कुत्सितः पुरुषः ।) किन्नरः । इत्य-
मरः । १ । १ । ७४ । (यथा, कुमारे ३ । ३८ ।
"पुष्पासवाघूर्णितनेत्रशोभि
प्रियासुखं किम्पुरुषश्चुचुम्बे" ॥)
लोकभेदः । इति मेदिनी ॥ (अग्निध्रस्य नवपुत्रा-
णामेकः । यथा, विष्णुपुराणे २ । १ । १६, १९ ।
"जम्बुद्वीपेश्वरो यस्तु आग्नीध्रो मुनिसत्तम ! ।
तस्य पुत्त्रा बभूवुस्ते प्रजापतिसमा नव ॥
नाभिः किम्पुरुषश्चैव हरिवर्ष इलावृतः" ॥
"हेमकूटं तथा वर्षं ददौ किम्पुरुषाय सः" ॥
किंपुरुष इति संज्ञा यस्य वर्षस्य ।) जम्बूद्वीपस्य नव-
खण्डान्तर्गतं हिमाचलहेमकूटयोर्म्मध्यवर्त्ति वर्षम् ।
इति श्रीभागवतम् ॥ कुत्सितपुरुषः । इति ब्युत्प-
त्त्यमरः । १ । ४ । ३३ ॥ त्विट् १२ द्युतिः १३ आभा
१४ प्रभा १५ विभा १६ रुक् १७ रुचिः १८ भाः
१९ छविः २० दीप्तिः २१ रश्मिः २२ अभीषुः २२
महः २४ ज्योतिः २५ सहः २६ रोचिः २७
शोचिः २८ त्विषा २९ पृश्निः ३० प्रकाशः ३१
आतपः ३२ द्योतः ३३ । इति शब्दरत्नावली ॥
पादः ३४ आलोकः ३५ वसुः ३६ ऋषिः ३७
भामः ३८ घर्म्मः ३९ लोकः ४० अर्च्चिः ४१ भासः
४२ वीचिः ४३ हेतिः ४४ धाम ४५ वर्च्चः ४६
शुष्म ४७ तेजः ४८ ओजः ४९ । इति जटाधरः ॥
(यथा, रघुवंशे ५ । ७४ ।
"भवति विरलभक्तिर्म्लानपुष्पोपहारः
स्वकिरणपरिवेषोद्भेदशून्याः प्रदीपाः" ॥)

**किरणमाली**, [न्] पुं, (किरणाणां माला अस्त्यस्य ।
किरणमाला + इनिः ।) सूर्य्यः । इति हारावली ॥

**किरातः**, पुं, (किरं अवस्कारादेर्निक्षेपस्थानभूमिं
अतति सततं अटतीति । अत + अण् । यद्वा
किरं शूकरादिकं अतति हिनस्तीति । अच् ।)
म्लेच्छभेदः ॥ (निषादः । यथा, किराते १२ । ५५ ।
"कच्छान्ते सुरसरितो निधाय सेना-
भन्वीतः स कतिपयैः किरातवर्य्यैः" ॥)
भूनिम्बः । (यथा, शार्ङ्गधरे मध्यखण्डे २ अः ।
१७ श्लोके ।
"पर्पटाब्दामृताविश्वकिरातैः साधितं जलम् ।
पञ्चभद्रमिदं ज्ञेयं वातपित्तज्वरापहम्" ॥)
अल्पतनुः । इति मेदिनी ॥ घोटकरक्षकः ।
इति सारस्वतः ॥

**किरातकः**, पुं, (किरात एव । स्वार्थे कन् ।) भूनिम्बः
नच ते ब्राह्मणं हन्तुं कार्य्या बुद्धिः कथञ्चन" ॥)

**किराती**, स्त्री, (किरेण समन्तात् जलक्षेपेण अतति
गच्छतीति । अत + इन् ।) गङ्गा । इति जटाधरः ॥

**किरातिनी**, स्त्री, (किरातदेश उत्पत्तिस्थानत्वेना-
स्त्यस्याः । इनिः । ङीप् ।) जटामांसी । इति
शब्दरत्नावली ॥ (जटामांसीशब्देऽस्या गुणादिवि-
षयो ज्ञेयः ॥)

**किराती**, स्त्री, (किराति + वा ङीष् ।) दुर्गा । गङ्गा
कुट्टिनी । इति मेदिनी ॥ स्वर्गगङ्गा । इति
शब्दमाला ॥

**किरिः**, पुं, (किरति समलभूमिम् । "कॄगॄशॄपॄ
कुटिभिदिच्छिदिभ्यः" । उणां ४ । १४२ । इति
इप्रत्ययः ।) शूकरः । इत्यमरः । २ । ५ । २ ॥

**किरिटि**, क्ली, (किरिणा शूकरेण टल्यते विक्लव्यते ।
टल विक्लवे + डिः ।) हिन्तालफलम् । इति
त्रिकाण्डशेषः ॥

**किरीटः**, पुं क्ली, (किरति कीर्य्यतेऽनेन वा ।
"कॄतॄकृषिभ्यः कीटन्" । उणां ४ । १८४ इति
कीटन् ।) मुकुटः । इत्यमरः । २ । ६ । १०२ ॥

**किरिटी**, [न्] पुं, (किरीटोऽस्त्यस्य । किरीट +
इनिः ।) अर्ज्जुनः । इति त्रिकाण्डशेषः ।
(यथा, महाभारते । ४ । ४२ । १७ ॥
"पुरा शक्रेण मे दत्तं युध्यतो दानवर्षभैः ।
किरीटं मुद्र्ध्नि सूर्य्यामं तेनाहुर्मां किरीटिनम्" ॥)
किरीटयुक्ते त्रि ॥ (यथा भगवद्गीतायां ११ । १७ ।
"किरीटिनं गदिनं चक्रिणञ्च तेजोराशिं सर्व्वतो

त्तिलब्धोऽर्थः ॥

**किम्पुरुषेश्वरः**, पुं, (किम्पुरुषाणां ईश्वरः शास्ता

राजा वा ।) कुवेरः । इति हेमचन्द्रः ॥

**किम्पूरुषं**, क्ली, (किम्पूरुष इत्याख्या यस्य वर्षस्य ।)

किम्पुरुषवर्षम् । इति त्रिकाण्डशेषः ॥

**किम्भरा**, स्त्री, (किञ्चित् बिभर्त्ति । किम् + भृ + अच् ।) नलीनामगन्धद्रव्यम् । इति शब्दचन्द्रिका ॥

**कियत्**, त्रि, किम्परिमाणमस्य (“किमिदंभ्यां वो घः” ।

५ । २ । ४० । इति वतुप् । किमः क्यादेशः । वस्य घः ।)

कियत् परिमाणम् ॥ कतो इति भाषा ॥

इति राजनिर्घण्टः ॥

**किराततिक्तः**, पुं, (किरातः भूनिम्बस्तद्वत् तिक्तः ।)

दीप्तिमन्तम् । पश्यामि त्वां दुर्न्निरीक्ष्यं समन्ताद्दी-
प्तानलार्कद्युतिमप्रमेयम्” ॥)

**किर्म्मी**, स्त्री, (कृ + कि + निपातनात् मुट् । ततो ङीप् ।) पलालः । गृहम् । स्वर्णपुत्तलिका । इति मेदिनी ॥ लोहपुत्तलिका । इति विश्वः ॥

**किर्म्मीरः**, पुं, (कृ + गम्भीरादित्वात् ईरन् निपा-
तनात् साधुः ।) नागरङ्गवृक्षः । राक्षसविशेषः ।
(यथा महाभारते ३ । ११ । २२ ।
“प्रत्युवाचाथ तद्रक्षो धर्म्मराजं युधिष्ठिरम् ।
अहं वकस्य वै भ्राता किर्म्मीर इति विश्रुतः” ॥)
कर्व्वूरवर्णः । इति मेदिनी ॥ तद्वर्णयुक्ते त्रि ।
इत्यमरः । १ । ५ । १७ ॥

**किर्म्मीरजित्**, पुं, (किर्म्मीरं जितवान् । जि +
भूते क्विप् ।) भीमसेनः । इति त्रिकाण्डशेषः ॥
(किर्म्मीरवधकथा महाभारते ३ । ११ अध्याये
उक्ता । तद्यथा, --
“प्रत्युवाचाथ तद्रक्षो धर्म्मराजं युधिष्ठिरम् ।
अहं वकस्य वै भ्राता किर्म्मीर इति विश्रुतः ॥
वनेऽस्मिन् काम्यके शून्ये निवसामि गतज्वरः ।
युधि निर्जित्य पुरुषानाहारं नित्यमाचरन् ॥
के यूयमभिसंप्राप्ता भक्ष्यभूता ममान्तिकम् ।
युधि निर्जित्य वः सर्व्वान् भक्षयिष्ये गतज्वरः” ॥
वैशम्पायन उवाच ।
योक्त्रयामास बाहुभ्यां पशुं रसनया यथा ॥
विनदन्तं महानादं भिन्नभेरीस्वनं बली ।
भ्रामयामास सुचिरं विष्फुरन्तमचेतनम् ॥
तं विसीदन्तमाज्ञाय राक्षसं पाण्डुनन्दनः ।
प्रगृह्य तरसा दोर्भ्यां पशुमारममारयत् ॥
अथ जर्जरसर्व्वाङ्गं व्याविद्धनयनाम्बरम् ।
भूतले भ्रामयामास वाक्यञ्चेदमुवाच ह ॥
हिडिम्बवकयोः पाप ! न त्वमश्रुप्रमार्जनम् ।
करिष्यसि गतश्चापि यमस्य सदनं प्रति ॥
इत्येवमुक्त्वा पुरुषप्रवीर-
स्तं राक्षसं क्रोधपरीतचेताः ।
विस्रस्तवस्त्राभरणं स्फुरन्त-
मुद्भ्रान्तचित्तं व्यसुमुत्ससज” ॥ * ॥)

**किर्म्मीरत्वक्** [च्] स्त्री, (किर्म्मीरा चित्रा त्वक्
यस्य ।) नारङ्गवृक्षः । इति त्रिकाण्डशेषः ॥ (ना-
रङ्गनागरङ्गशब्दयोरस्यागुणादयो बोध्याः ॥)

**किर्म्मीरभित्** [द्] पुं, (किर्म्मीरं राक्षसविशेषं
भिन्नवान् । भिद् + क्विप् भूते ।) भीमसेनः । इति
भूरिप्रयोगः ॥ (अस्य विवरणं किर्म्मीरजित्-शब्दे
द्रष्टव्यम् ॥)

**किर्म्मीरसूदनः**, पुं, (किर्म्मीरं सूदयति हन्तीति ।
सूद + णिच् + ल्युः । कर्त्तृविवक्षावशात् क्वचिद्
भूतार्थे वा ।) भीमसेनः । इति हेमचन्द्रः ॥
(अस्य विवरणं किर्म्मीरजिच्छब्दे द्रष्टव्यम् ॥)

**किल** क नुदौ । इति कविकल्पद्रुमः ॥ (चुरां-परं-
सकं-सेट् ।) क केलयति । नुदिरिति णुद ञौश्
प्रेरणे इत्यस्य औणादिककिप्रत्यये रूपम् । इति
दुर्गादासः ॥

**किल** श शौक्ल्ये । क्रीडे । इति कविकल्पद्रुमः ॥
(तुदां-परं-अकं-सेट् ।) श किलति प्रासादः
शिशुर्व्वा । केलिता । इति दुर्गादासः ॥

**किल**, व्य, (किल + कः ।) वार्त्ता । सम्भाव्यम् । इत्य-
कामिनः स्म कुरुते करभोरु
हारिशुष्करुदितञ्च सुखेऽपि” ॥)

**किलकिला**, स्त्री, (किल + कः । प्रकारे वीप्सायां
वा द्वित्वम् । स्त्रियां टाप् ।) हर्षध्वनिः । किलकिल-
शब्द इति यावत् । तत्पर्य्यायः । हर्षस्वनः २ ।
इति त्रिकाण्डशेषः ॥
(“आसीत् किलकिलाशब्द स्तस्मिन् गच्छति पा-
र्थिवे” । इति महाभारते १ । ६९ । ६ ॥)

**किलाटः**, पुं, क्षीरविकृतिः । इति जटाधरः ॥ दधि-
कूर्च्चिकातक्रकूर्च्चिकयोः पिण्डः । अस्य गुणाः ।
शीतत्वम् । स्निग्धत्वम् । गुरुत्वम् । गौल्यत्वम् ।
वृष्यत्वम् । पित्तापहत्वञ्च । इति राजनिर्घण्टः ॥
(“नष्टदुग्धस्य पक्वस्य पिण्डः प्रोक्तः किलाटकः” ॥
इति भावप्रकाशः । तथा चरके सूत्रस्थाने ।
२७ अध्याये ॥
“पीयूषो मोरटञ्चैव किलाटा विविधाश्च ये ।
दीप्ताग्नीनामनिद्राणां सर्व्व एते सुखप्रदाः ॥
गुरवस्तर्पणा वृष्या वृंहणाः पवनापहाः” ॥
अस्योत्पत्तिविवरणं यथा भावप्रकाशस्य पूर्ब्बखण्डे
द्वितीये भागे ॥ किलाटकः गिजिरी इति लोके ।
“अपक्वमेव यन्नष्टं क्षीरशाकं हि तत्पयः” ।
क्षीरशाकं तुषिभरा इति लोके ।

“युधिष्ठिरस्तु तच्छ्रुत्वा वचस्तस्य दुरात्मनः ।
आचचक्षे ततः सर्व्वं गोत्रनामादि भारत !” ॥
“किर्म्मीरस्त्वब्रवीद्वेनं दिष्ट्या देवैरिदं मम ।
उपपादितमद्येह चिरकालान्मनोगतम् ॥
भीमसेनवधार्थं हि नित्यमभ्युद्यतायुधः ।
चरामि पृथिवीं कृत्स्नां नैनञ्चासादयाम्यहम् ॥
सोऽयमासादितो दिष्ट्या भ्रातृहा काङ्क्षितश्चिरम् ।
अनेन हि मम भ्राता वको विनिहतः प्रियः ॥
वेत्रकीयगृहे राजन् ! ब्राह्मणच्छद्मरूपिणा ।
विद्याबलमुपाश्रित्य न ह्यस्त्यस्यौरसं बलम्” ॥
“यदि तेन पुरा मुक्तो भीमसेनो वकेन वै ।
अद्यैनं भक्षयिष्यामि पश्यतस्ते युधिष्ठिर !” ॥
“एवमुक्तस्तु धर्म्मात्मा सत्यसन्धो युधिष्ठिरः ।
नैतदस्तीति संक्रुद्धो भर्त्सयामास राक्षसम् ॥
ततो मीमो महाबाहुरारुल्य तरसा द्रुमम् ।
दशव्याममथोद्विद्धं निष्पत्रमकरोत्तदा” ॥
“किर्म्मीरश्चापि सहसा वृक्षमुत्पाट्य पाण्डवम् ।
दण्डपाणिरिव क्रुद्धः समये प्रत्यधावत” ॥
“तावन्योन्यं समाश्लिष्य प्रकर्षन्तौ परस्परम् ।
उभावपि चकाशेते प्रष्टद्धौ वृषभाविव ॥
तयोरासीत्सुतुमुलः संप्रहारः सुदारुणः ।
नखदंष्ट्रायुधवतोर्व्याघ्रयोरिव दीप्तयोः” ॥
“तयोर्भुजविनिष्पेषादुभयोर्बलिनोस्तदा ।
शब्दः समभवद्घोरो वेणुस्फोटसमो युधि ॥
अथैनमाक्षिप्य बलाद्गृह्य मध्ये वृकोदरः ।

मरः । ३ । ३ । २५३ ॥ निश्चयः । इति तट्टीका-
सारसुन्दरी ॥ (यथा शाकुन्तले १ माङ्के दुष्म-
न्तोक्तिः ।
“इदं किलाव्याजमनोहरं वपु-
स्तपःक्षमं साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया
शमीलतां छेत्तुमृषिर्व्यवस्यति” ॥)
अनुनयार्थम् इति मेदिनी ॥

**किलकिञ्चितं**, क्ली, (किल अलीकेन किं ईषत् चितं रचितम् ।) हावः । शृङ्गारभावजा क्रिया । इति जटाधरः ॥ तस्य लक्षणम् ।
यथा, अलङ्कारकौस्तुभे ।
“गर्व्वाऽभिलासरुदितस्मितासूयाभयक्रुधाम् ।
सङ्करीकरणं यत् स्यादुच्यते किलकिञ्चितम्” ॥
(तथा च साहित्यदर्पणे ३ । १०९ ।
“स्मितशुष्करुदितहसितत्रासक्रोधश्रमादीनाम् ।
साङ्कर्य्यं किलकिञ्चितमभाष्टतमसङ्गमादिजाद्धर्षात्” ॥
उदाहरणं तत्रैव यथा, --
“पाणिरोधमविरोधितवाञ्छं
भर्त्सनाश्च मधुरस्मितगर्भाः ।

“दध्ना तक्रेण वा नष्टं दुग्धं बद्धं सुवाससा ।
द्रवभावेन सहितं तक्रपिण्डः स उच्यते ॥
नष्टदुग्धं भवन्नीरं मोरटञ्जेञ्जटोऽब्रवीत् ।
पेयूषञ्च किलाटश्च क्षीरशाकं तथैव च ॥
तक्रपिण्ड इमे वृष्या वृंहणा बलवर्द्धनाः ।
गुरवः श्लेष्मला हृद्या वातपित्तविनाशनाः ॥
दीप्ताग्नीनां विनिद्राणां विद्रधौ चाभिपूजिताः ।
मुखशोषतृषादाहरक्तपित्तज्वरप्रणुत्” ।)

**किलाटी**, स्त्री, (किलाट + गौरादित्वात् ङीष् ।) क्षीरविकृतिः । तत्पर्य्यायः । कूर्च्चिका २ । इति हेमचन्द्रः ॥ (कूर्च्चिकाशब्देऽस्या गुणपर्य्याया ज्ञा-
तव्याः ॥)

**किलाटी**, [न्] पुं, (किलतीति । किल + कः । अट + णिनिः । ततः । किलश्चासौ आटी चेति कर्म्म-
धारयः । यद्वा किलमटतीति ।) वंशः । इति हारावली ॥ वाँश् इति भाषा ॥

**किलासं**, क्ली, (किलं वर्णं अस्यति क्षिपति विकृतिं करोति इति यावत् । किल + अस + “कर्म्म-
ण्यण्” । ३ । २ । १ । इति अण् ।) रोगविशेषः ।
छुली इति भाषा । तत्पर्य्यायः । सिध्मा २ । इत्यमरः । २ । ६ । ५३ ॥ सिध्मम् ३ । इति भरतः ॥ त्वक्पुष्पम् ४ त्वक्पुष्पी ५ । इति हेमचन्द्रः ॥

| | | |
|---|---|---|
| धूनयामास वेगेन वायुश्चण्ड इव द्रुमम् ॥<br>स भीमेन परामृष्टो दुर्ब्बलो बलिना रणे ।<br>व्यस्पन्दत यथा प्राणं विचकर्ष च पाण्डवम् ॥<br>तत एनं परिश्रान्तमुपलक्ष्य वृकोदरः । | | (“कुष्ठैकसम्भवं श्वित्रं किलासं दारुणञ्च तत् ।<br>निर्द्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयम् ॥<br>वाताद्रुक्षारुणं पित्तात्ताम्रं कमलपत्रवत् ।<br>सदाहं रोमविध्वंसि ककाच्छ्वेतं घनं गुरु ॥<br>सकण्डु च क्रमाद्रक्तमांसमेदः सुचादिशेत् ।<br>वर्णेनैवेदृगुभयं कृच्छ्रं तच्चोत्तरोत्तरम् ॥<br>अशुक्लरोमाबहुलमसंसृष्टं मिथो नवम् ।<br>अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा” ॥ |

इति वामटे निदानस्थाने १४
अध्याये ॥
अस्यौषधं यथा ॥
"कुष्ठं तमालपत्रं मरिचं समनःशिलं
सकाशीशम् ।
तैलेन युक्तमुचितं सप्ताहं भाजने
ताम्रे ॥
तेनालिप्तं सिध्मं सप्ताहाद्व्येति
तिष्ठतो घर्म्मे ।
मासान्नवं किलासं स्नानं मुक्त्वा
विशुद्धतनोः" ॥
इति सिध्मलेपः ॥ * ॥
"किलासहन्ता मूलान्यावल्गुजानि
लाक्षा च ।
गोपित्तमञ्जने द्वे पिप्पल्यः
काललोहरजः" ॥
इति श्वित्रे प्रलेपः ॥
"दारुणं वारुणं श्वित्रं किलासं
नामभिस्त्रिभिः ।
विज्ञेयं त्रिविधं तच्च त्रिदोषं
प्रायशश्च तत् ॥
दोषे रक्ताश्रिते रक्तं ताम्रं
माससमाश्रिते ।
श्वेतं मेदः श्रिते श्वित्रं गुरुता
चोत्तरोत्तरम्" ॥
असाध्यलक्षणमस्य यथा, --
"यत्परस्परतो भिन्नं बहु
यद्रक्तलोमवत् ।
यच्च वर्षगणोत्पन्नं तच्छ्वित्रं नैव
सिध्यति" ॥
अस्य निदानं यथा, --
"वचांस्यतथ्यानि कृतघ्नभावो
निन्दा भुराणां गुरुधर्षणञ्च ।
पापक्रिया पूर्ब्बकृतञ्च कर्म्म
हेतुः किलासस्य विरोधिचान्नम्" ॥
इति चरके चिकित्सास्थाने ६
अध्याये ॥)

**किलासघ्नः**, पुं, (किलासं हन्तीति । हन् + टक् ।)
बाहुलकात् विनिः ।) घोटकः । इति
त्रिकाण्डशेषः ॥

**किशलं**, क्ली पुं, (किञ्चित् शलति । शल चलने गतौ
वा + अच् पृषोदरादित्वात् मलोपः ।) पल्लवः ।
इति शब्दरत्नावली ॥

**किशलयं**, क्ली पुं, (किञ्चित् शलति । शल चलने +
बाहुलकात् कयन् प्रत्ययः पृषोदरात् मलोपे-
साधुः ।) पल्लवः । इति शब्दरत्नावली ॥
("कुल्याम्भोभिः पवनचपलैः शाखिनो धौतमूलाः
भिन्नो रागः किशलयरुचामाज्यधूमोद्गमेन" ॥
इति शाकुन्तले १ माङ्कः । अत्र केचित्
दन्त्यसका-
रमपि पठन्ति ॥)

**किशोरः**, पुं, (किञ्चित् शृणाति । शॄ हिंसायाम् ।
"किशोरादयश्च" । उणाम् । १ । ६६ । इति
ओरन् । निपातनात् साधुः ।) अश्वशिशुः ।
("कि-
शोरं वडवा यथा" । इति महाभारतम् ॥) तैल
पर्ण्योषधिः । सूर्य्यः । तरुणावस्थः । स तु एका-
दशवर्षावधिपञ्चदशवर्षपर्य्यन्तवयस्कः । इति मे-
दिनी ॥ कैशोरावस्थायुक्ते वाच्यलिङ्गोऽपि ॥
(यथा, श्रीभागवतटीकाकृत्स्वामिपादधृतवचनम्
।
"कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि ।
कैशोरमापञ्चदशात् यौवनञ्च ततः परम्" ॥)

**किष्क** क ङ वधे । इति कविकल्पद्रुमः ॥ (चुरां-
आत्मं-सकं-सेट् ।) मूर्द्धन्योपधः । क ङ किष्क-
यते । इति दुर्गादासः ॥

**किष्किन्धः**, पुं, (किं किं दधाति । धा + कः । पार-
स्करादित्वात् पूर्ब्बस्य किमो मलोपः सुट् षत्वञ्च
निपातनात् ।) ओड्रदेशस्थपर्व्वतविशेषः । तत्प-
र्व्वतगुहा च । इति शब्दरत्नावली ॥

**किष्किन्धी**, स्त्री, (किष्किन्ध + गौरादित्वात् ङीष् ।)
किष्किन्धपर्व्वतगुहा । इति शब्दरत्नावली ॥

**किष्किन्ध्यः**, पुं, (किं किं दधातीति धा पारस्करादि-
गलः । इति मेदिनी । नल इति भाषा ॥

**किसलं**, क्ली पुं, (किमीषत् सलति । सल गतौ +
अच् । पृषोदरादित्वात् मलोपे निपातनात्
साधुः ।)
किसलयम् । इति शब्दरत्नावली भरतश्च
॥

**किसलयं**, क्ली पुं, (किञ्चित् ईषत् वा सलति । सल
+ बाहुलकात् कयन् । पृषोदरात् मलोपे
साधुः ।)
पल्लवः । इत्यमरः । २ । ४ । १४ ॥ स तु
नवपत्रादि-
युक्तशाखाग्रपर्व्वणि नवपत्रस्तवकः इति
मधुः । इति
भरतः ॥ (यथा गोः रामायणे । ४ । ५० ।
२८ ।
"तरुणादित्यसङ्काशान् रक्तैः
किसलयैर्वृतान् ।
जातरूपमयैश्चापि चरद्भि र्मत्स्यकच्छपैः"
॥)

**कीकटः**, पुं, (की शनैर्द्रुतं वा कटति गच्छति धावति ।
की + कट् + अच् ।) घोटकः । देशभेदः ।
इति
विश्वः ॥ (यथा शक्तिसङ्गमतन्त्रे ।
"चरणाद्रिं समारभ्य गृध्रकूटान्तकं शिवे ! ।
तावत् कीकटदेशः स्यात् तदन्तर्मगधो
भवेत्" ॥
वेहार इति ख्यातः । अत्र बुद्धः समजनि ।
इति भागवतम् । १ । ३ । २४ ॥ अस्य
कीकट
इति पुरातननाम आसीत् ततो जरासन्धेन
मगध इत्याख्या प्रदत्ता ॥ स्वनामख्यातः
सङ्कट-
पुत्त्रः । यथा, मागवते ६ । ६ । ६ ।
"ककुभः सङ्कटस्तस्य कीकटस्तनयो
यतः" ॥)

**कीकटः**, त्रि, (की कुत्सितं धनाभावात् कटति प्रका-

वृक्षविशेषः । काँकरोल इति भाषा । तत्पर्य्यायः । कर्कोटकः २ तिक्तपत्रः ३ सुगन्धकः ४ । इति हेम चन्द्रः ॥ (कर्कोटकशब्देऽस्य गुणपर्य्याया ज्ञेयाः ॥)

**किलासी**, [न्] त्रि, (किलासं अस्यास्तीति इनिः ।) किलासरोगयुक्तः । तत्पर्य्यायः । सिध्मलः २ । इत्यमरः । २ । ६ । ६१ ॥

**किलिञ्चं**, क्ली, (किल्यतेऽनेन । किल् + इन् । किलिं चिनोतीति । चि + डः । पृषोदरात् साधुः ।) सूक्ष्म दारु । इति जटाधरः ॥ किलिञ्चमिति च पाठः ॥

**किलिञ्जः**, पुं, (किलितो जायते । जन + डः । पृषोदरादित्वात् मुम् च ।) सूक्ष्मदारु । इति त्रिकाण्डशेषः ॥ (क्वचित् नपुंसकत्वमपि दृश्यते ॥)

**किलिञ्जकः**, पुं, (किलिञ्ज + स्वार्थे कः ।) काशादिरज्जुः । येन कुसूलं वेष्ट्यते कुसूलञ्च मरायिरिति टीकान्तरम् । तृणरचितटाटी इति ख्यात इत्यन्ये । इत्यमरटीकायां मरतः ॥ तत्पर्य्यायः । कटः २ । इत्यमरः । २ । ९ । २६ ॥

**किलिमं**, क्ली, (किल + इमन् ।) देवदारु । इति शब्दरत्नावली राजनिर्घण्टश्च ॥ (“मरिचं पिप्पलीमूलं मगधागजपिप्पली । सरलः किलिमं हिङ्गु भार्गीतेजोवतीत्वचौ” ॥ सुटि पूर्ब्बमलोपे च स्वार्थे यत् प्रत्ययेन निपातनात् साधुः ।) स्वनामख्यातपर्व्वतः । इति शब्दरत्नावली ॥

**किष्किन्ध्या**, स्त्री, (किष्किन्ध्य + टाप् ।) किष्किन्ध्यपर्व्वतगुहा । इति शब्दरत्नावली ॥ सा तु पुरा- वालिनामवानरराजधान्यासीत्श्रीरामचन्द्रस्तं हत्वा सुग्रीवाय तद्राजधानीं दत्तवान् । इति रामायणम् ॥

**किष्किन्ध्याधिपः**, पुं, (किष्किन्ध्याया अधिपः ।) वालिनामवानरराजः । इति जटाधरः ॥ (सुग्रीवः । इति रामायणम् ॥)

**किष्कुः**, पुं, स्त्री, (कै + मृगय्वादित्वात् कुः । पारस्कारादित्वात् सुटि षत्वे च निपातनात् साधुः ।) वितस्तिः । द्वादशाङ्गुलिपरिमाणम् । प्रकोष्ठः । कफोणेरधोमणिबन्धपर्य्यन्तः । हस्तः । इति मेदिनी ॥ (यथा महाभारते २ । १ । १९ । “सर्व्वर्त्तुगुणसम्पन्नां दिव्यरूपां मनोरमाम् । दशकिष्कुसहस्रां तां मापयामास सर्व्वतः” ॥) कुत्सिते त्रि । इति विश्वो हेमचन्द्रश्च ॥

**किष्कुपर्व्वा**, [न्] पुं, (किष्कुमितं वितस्तिमितं हस्तमितं वा पर्व्व यस्य ।) इक्षुः । वेणुः । पोटशते । की + कट् + अच् ।) निर्धनः । (की कुत्सितं कटति वर्षति ददाति अर्थिने कार्पण्यात् इति ।) कृपणः । इति मेदिनी ॥

**कीकटाः**, पुं, (की कुत्सितं ईषत् वा कटति वर्षति येषु इन्द्रः । ईषद्वर्षतया तद्देशानां तथात्वम् । की + कट् + अधिकरणे अप् ।) देशविशेषः । बहुवचनान्तशब्दोऽयम् । इति मेदिनी ॥ वेहार इति ख्यातः । इति केचित् ॥ (यथा, भागवते १ । ३ । २४ ॥ “ततः कलौ संप्रवृत्ते संमोहाय सुरद्विषाम् । बूद्धो नाम्नाञ्जनसुतः कोकटेष भविष्यति” ॥ देशोऽयं कुत्सिताचारपरिपूर्णः । यथा, भागवते । ७ । १० । १८ । “साधवः समुदाचारास्ते पूयन्त्यऽपि कीकटाः” ॥)

**कीकसं**, क्ली, (की कुत्सितेन रक्तादिना देहाभ्यन्तरे कसति उत्पद्यते । की + कस + अच् ।) अस्थि । इत्यमरः । २ । ६ । ६८ ॥ (अस्थिशब्दे विवरणं ज्ञातव्यम् ॥)

**कीकसः**, पुं, (की कुत्सितं यथा स्यात् तथा कसति । कस गतौ + अच् ।) कृमिजातिः । इति मेदिनी ॥ कर्कशे त्रि । इति शब्दरत्नावली ॥

**कीकसास्यः**, पुं, (कीकसं अस्थि आस्येऽस्य ।) पक्षी । इति हारावली ॥

**कीकिः**, पुं, (कीति शब्दं कायति । कै + बाहुलकात्

इति चरके कल्पस्थाने ७ अध्याये ॥)

**किल्विषं**, क्ली, (“किलेर्वुक् च” । उणां १ । ५१ इति

टिषच् वुकागमश्च ।) पापम् । अपराधः । इत्य- मरः । ३ । ३ । २२२ ॥ (यथा गीतायां ३ । १३ । “यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्व्वकिल्विषैः” ॥) रोगः । इति मेदिनी ॥

**किल्वी**, [न्] पुं, (किल् + भावे क्विप् ततोऽस्त्यर्थे

डिः ।) किकिः । चाषपक्षी । इत्यमरटीका ॥

**कीचकः**, पुं, (चीकयति शब्दायते । चीक मर्षणे

“चीकयतेराद्यन्तविपर्य्ययश्च” । उणां ५ । ३६ इति वुन् आद्यन्तविपर्य्ययश्च ।) अनिलयोगात् शब्दायमानवंशः । इत्यमरः । २ । ४ । १६१ ॥ सर-

न्ध्रकवंशः । (यथा, कुमारे १ । ८ ।
“यः पूरयन् कीचकरन्ध्रभागान्
दरीमुखोत्थेन समीरणेन” ॥)
राक्षसविशेषः । इति शब्दरत्नावली ॥
दैत्यभेदः ।
वृक्षविशेषः । इति विश्वः ॥ नलः । इति
राज-
निर्घण्टः ॥ केकयराजपुत्त्रः । स च
विराटराजस्य
श्यालः सेनापतिश्च ॥ (यथा महाभारते
४ ।
कीचकवधपर्व्वणि १३ । ५ ।
“सेनापतिर्विराटस्य ददर्श द्रुपदात्मजाम्
।
तां दृष्ट्वा देवगर्भाभां चरन्तीं देवतामिव ।
कीचकः कामयामास
कामवाणप्रपीडितः” ॥
अयन्तु छद्मवेशधारिणा
विराटभवनस्थेन भीम-
सेनेन हतः । अस्य विवरणं महाभारते ४
पर्व्वणि
१३ अध्यायमारभ्य द्रष्टव्यम् ।
देशविशेषः । तत्र
बहुवचनान्तोऽयम् ॥ यथा, महाभारते १
। १५७ । २ ।
“मत्स्यान् त्रिगर्त्तान्
पाञ्चालान्कीचकानन्तरेणच ।
रमणीयान्वनोद्देशान् प्रेक्षमाणाः सरांसि
च” ॥)

**कीचकजित्,** पुं, (कीचकं जितवान् । जि + भूते
क्विप् तुक् च ।) भीमसेनः । इति
त्रिकाण्डशेषः ॥
(पुराकिल दुष्टात्मा कीचकः
विराटभवनस्थां
सैरिन्ध्रीरूपधारिणीं द्रौपदीमकामयत ।
द्रौपदी
तु तस्य कामुकस्य दुरभिसन्धिं विज्ञाय
तं बहुल

आग्नेयैरल्पसंस्रावो दाहरागविसर्पवान् ॥
पक्वपीलु फलप्रख्यः खर्ज्जूरसदृशोऽथवा ।
कफाधिकैर्म्मन्दरुजः पक्वोदुम्बरसन्निभः ॥
स्रावाढ्यः सर्व्वलिङ्गस्तु विवर्ज्यः सान्निपातिकैः ।
वेगाश्च सर्पवच्छोफो वर्द्धिष्णुर्विस्रस्क्तता ॥
शिरोऽक्षि गौरवं मूर्च्छाभ्रमः श्वासोऽतिवेदना ।
सर्व्वेषां कर्णिकाशोफो ज्वरः कण्डूररोचकः” ॥
अस्य चिकित्सा यथा ।
“अर्कस्य दुग्धेन शिरीषवीजं
त्रिर्भावितं पिप्पलीचूर्णमिश्रम् ।
एषो गदो हन्ति विषाणि कीट-
भुजङ्गलूतोन्दुरवृश्चिकानाम्” ॥
इति च वाभटे उत्तरतन्त्रे ३७ अध्याये ॥
अस्यौषधं यथा ॥
“जतुसेव्यपत्रगुग्गुलुभल्लातककुभपुष्पसर्ज्जरसाः
।
श्वेता एव धूम उरगाखुकीटवस्त्रकृमिनुदूग्रः” ॥
“क्षीरिवृक्षत्वगालेपः शुद्धः कीटविषापहः” ॥
इति चरके चिकित्सास्थाने २५ अध्याये ॥
“सर्पाणां शुक्रविण्मूत्रशवपूत्यण्डसम्भवाः ।
वाय्वग्न्यम्बुप्रकृतयः कीटास्तु विविधाः स्मृताः ॥
सर्व्वदोषप्रकृतिभिर्युक्ताश्चापरिणामतः ।
कीटत्वेऽपि सुघोरास्ते सर्व्व एव चतुर्व्विधाः ॥
कुम्भीनसस्तुण्डिकेरी शृङ्गीशतकुलीरकः ।
उच्चिटिङ्गोऽग्निनामाच चिच्चिटिङ्गो मयूरिका ॥
आवर्त्तकस्तथोरभ्रसारिकामुखवैदलौ ।
शरावकुर्द्दोऽभीराजी परुषश्चित्रशीर्षकः ॥
शतबाहुश्च यश्चापि रक्तराजिः प्रकीर्त्तितः ।
अष्टादशेति वायव्याः कीटाः पवनकोपनाः ॥
तैर्भवन्तीह दष्टानां रोगा वातनिमित्तजाः ॥ * ॥
कौण्डिल्यकः कणभको वरटी पत्रवृश्चिकः ॥
विनासिका ब्रह्मणिका विन्दुलो भ्रमरस्तथा ।
वाह्यकी पिच्चिटः कुम्भी वर्च्चः कीटोऽरिमेदकः ॥
पद्मकीटो दुन्दुभिको मकरः शतपादकः ।
पञ्चालकः पाकमत्स्यः कृष्णतुण्डोऽथ गर्द्दभी ॥
क्लीतःकृमिसरारी च यश्चाप्युत्केशकः स्मृतः ।
एते ह्यग्निप्रकृतयश्चतुर्व्विंशाः प्रक्रीर्त्तिताः ॥
तैर्भवन्तीह दष्टानां रोगाः पित्तनिमित्तजाः ॥ * ॥
“विश्वम्भरः पञ्चशुक्लः पञ्चकृष्णोऽथ कोकिलः ।

वेपथुश्वासहिक्काश्च दाहः शीतञ्च
दारुणम् ॥
पिडकोपचयः शोफो ग्रन्थयो
मण्डलानि च ।
दद्रवः कर्णिकाश्चैव विसर्पाः
किटिभानि च ॥
तैर्भवन्तीह दष्टानां
यथास्वञ्चाप्युपद्रवाः ।
येऽन्ये तेषां विशेषास्तु तूर्णं तेषां
समादिशेत् ॥
एकजातीनतस्तूर्द्ध्वं कीटान्
वक्ष्यामि भेदतः ।
सामान्यतो दष्टलिङ्गैः
साध्यासाध्यक्रमेण च ॥
त्रिकण्टकः कुणी चापि
हस्तिकक्षोऽपराजितः ।
चत्वार एते कणभा
व्याख्यातास्तीव्रवेदनाः ॥
तैर्दष्टस्य श्वयथुरङ्गमर्द्दो गुरुता
गात्राणां दंशः
कृष्णश्च भवति ॥
“प्रतिसूर्य्यः पिङ्गभासो बहुवर्णो
महाशिराः ।
तथा निरुपमश्चापि पञ्चगौधेरकाः
स्मृताः ॥
तैर्भवन्तीह दष्टानां वेगज्ञानानि
सर्पवत् ।
रुजश्च विविधाकारा ग्रन्थयश्च
सुदारुणाः ॥

गलगोली श्वेतकृष्णा
रक्तराजी रक्तमण्डला

सर्व्वश्वेता सर्षपिकेत्येवं षट्
ताभिर्दष्टे सर्षपिका-
वर्ज्जं दाहशोफक्लेदा भवन्ति ॥
सर्षपिकया हृदय
पीडातिसारश्च ॥

शतपद्यस्तु परुषा कृष्णा
चित्रा कपिलिका

कटूक्त्या निर्भर्त्सयामास । अथ कीचक एवमप-
मानितः क्रुधा तां पदा ताडितवान् । अथ सा-
भिमानिनी द्रौपदी निजदुःखं भीमं निवेदया-
मास । भीमस्तु एतदाकर्ण्य संजातरोषः कीचकं
हन्तुं मनो दधे । अथ सुबुद्धिर्भीमो द्रौपदीं
उपदिदेश श्वो निशायां यथा स दुरात्मा राज-
श्यालकः मत्स्यराजशुद्धान्तकन्यानर्त्तनशालायां त्व-
ल्लोभेन समुपतिष्ठेत तथाऽऽश्वास्य समयो विधी-
यताम् । ततस्त्वद्वेशेन तत्र सङ्गतोऽहमेनं कामार्त्तं
दुष्कार्य्यस्य फलं अनुभावयामि । एवं स्थिरीकृते
द्रौपदी पूर्ब्बोक्तमत्रितं स्थानं कीचकं विज्ञापित-
वतो । अथ निशायां मूढबुद्धिः कामुकवेशधारी
तत्रैव गतः प्रच्छन्नोपविष्टेन बलीयसा भीमेन
पशुमारं निपातितः ॥ एतद्विस्तृतिस्तु महाभा-
रते ४ । २१ अध्याये द्रष्टव्या ॥)

**कीचकनिसूदनः**, पुं, (कीचकं निसूदयतीति । नि +
सूद + णिच् ल्युः ।) भीमसेनः । इति हेमचन्द्रः ॥
(अस्य विवरणं कीचकजिच्छब्दे द्रष्टव्यम् ॥)

**कीचकभित्**, पुं, (कीचकं भिन्नवान् । भिद् + क्विप् ।)
भीमसेनः । इति भूरिप्रयोगः ॥ (अस्य विवरणं
कीचकजिच्छब्दे द्रष्टव्यम् ॥)

सैरेयकः प्रचलको वलभः किटिमस्तथा ॥
सूचीमुखा कृष्णगोधा यश्च काषायवासिकः ।
कीटगर्द्दभकश्चैव तथात्रोटक एव च ॥
त्रयोदशैते सौम्याः स्युः कीटाः श्लेष्मप्रकोपणाः ।
तैर्भवन्तीह दष्टानां रोगाः कफनिमित्तजाः ॥ * ॥
तुङ्गीनासो विचिलकस्तालको वाहकस्तथा ।
कोष्ठागारी क्रिमिकरो यश्च मण्डलपुच्छकः ॥
तुङ्गलाभः सर्षपिकोऽवल्गुली शम्बुकस्तथा ।
अग्निकीटश्च घोराः स्युर्द्वादश प्राणनाशनाः ॥
तैर्भवन्तीह दष्टानां वेगज्ञानानि सर्पवत् ।
तास्ताश्च वेदनास्तीव्रा रोगा वै सान्निपातिकाः” ॥
“क्षाराग्निदग्धवद्दंशो रक्तपीतसितारुणः ।
ज्वराङ्गमर्द्द रोमाञ्चवेदनाभिः समन्वितः ॥
छर्द्यतीसारतृष्णा च दाहो मोहविजृम्भिका ।

पीतिका रक्ता श्वेता अग्निप्रभा इत्यष्टौ ताभिर्दष्टे
शोफो वेदना दाहश्च हृदये । श्वेताग्निप्रभाभ्यामे-
तदेव दाहो मूर्च्छाचातिमात्रं श्वेतपिडकोत्पत्तिश्च ॥

मण्डूकाः कृष्णः सारः कुहको हरितो रक्तो
यववर्णभो भृकुटी कोटिकश्चेत्यष्टौ तैर्दष्टस्य
दंशकण्डूर्भवति पीतफेणागमश्च वक्त्रात् । भृकुटी
कोटिकाभ्यामेतदेव दाहश्छर्द्दिर्मूर्च्छाचाति मा-
त्रम् ॥

विश्वम्भराभिदष्टे दंशः सर्षपाकाराभिः पिड-
काभिश्चीयते शीतज्वरार्त्तश्च पुरुषो भवति ॥

अहितुण्डकाभिर्दष्टे तोददाहकण्डुश्वयथवो
मोहश्च । कण्डूमकाभिर्दष्टे पीताङ्गश्छर्द्यतीसारः
ज्वरादिभिरभिहन्यते। शूकवृन्तादिभिर्दष्टे कण्डू-
कोठाः प्रवर्द्धन्ते शूकश्चात्र लक्ष्यते ॥

पिपीलिकाः स्थूलशीर्षा सम्बाहिका ब्रह्मणि-
काङ्गलिका कपिलिका चित्रवर्णेति षट् ताभिर्दष्टे
दंशे श्वयथुरग्निस्पर्शवद्दाहशोफौ भवतः ॥

मक्षिकाः कान्तारिका कृष्णा पिङ्गलिका मधू-

**कीट**, क बन्धे । वर्णे । इति कविकल्पद्रुमः ॥ (चुरां-

परं-अकं-सेट् ।) क कीटयति कीटः ।

वर्णः

कैश्चिन्नमन्यते । इति दुर्गादासः ॥

**कीटः**, पुं, (कीट् + अच् ।) कृमिजातिः । इति शब्द-

रत्नावली ॥ (यथा मनुः १ । ४० ।

“कृमिकीटपतङ्गांश्च

यूकामक्षिकमत्कुणम्” ॥

“सर्पाणामेव

विण्मूत्रशुक्राण्डशवकोथजाः।

दोषैर्व्यस्तैः समस्तैश्व युक्ताः

कीटाश्चतुर्विधाः ॥

दष्टस्य कीटैर्वायव्यैर्दंशस्तोदरुजोल्वणः

।

लिका काषायी स्थालिकेत्येवं षट्

ताभिर्दष्टस्य

दाहशोफौ भवतः

स्थालिकाकाषायीभ्यामेतदेव

पिडकाश्च सोपद्रवा भवन्ति ॥

मशकाः सामुद्रः

परिमण्डलो हस्तिमशकः

कृष्णः पार्व्वतीय इति पञ्च तैर्दष्टस्य

तीव्रकण्डूर्दंश-

शोफश्च पार्व्वतीयस्तु कीटैः

प्राणहरैस्तुल्यलक्षणः ॥

नखावकृष्टेऽत्यर्थं पिडकाः

सदाहपाका भवन्ति ।

जलौकसां दष्टलक्षणमुक्तं

चिकित्सितञ्च ॥

भवन्ति चात्र ॥

गोधेरकः स्थालिका च ये च

श्वेताग्निसंप्रभे ।

भृकुटी कोटिकश्चैव न

सिध्यन्त्येकजातिषु ॥

शवमूत्रपुरीषैस्तु सविषैरवमर्षणात् ।

स्युः कण्डूदाहकोठारुः

पिडकातोदवेदनाः ॥

प्रक्लेदवांस्तथास्रावो भृशं

सम्पाचयेत्त्वचम् ॥

दिग्धविद्धक्रियास्तत्र
यथावदवचारयेत् ॥
नावसन्नं नचोत्सन्नमतिसंरम्भवेदनम्
।
दंशादौ विपरीतार्त्ति कीटदष्टं
सुबाधकम् ॥
कीटैर्दष्टानुग्रविषैः सर्पवत्
समुपाचरेत्” ॥
इति सुश्रुते कल्पस्थाने ८ अध्यायः
॥)

**कीटकः**, पुं, (कीट् + संज्ञायां अल्पार्थे स्वार्थे वा
कन् ।) मागधजातिः । इति धरणी ॥
कृमिजातिः ।
निष्ठरे त्रि । इति मेदिनी ॥

**कीटघ्नः**, पुं, (कीटं हन्ति । हन् + टक् ।) गन्धकः ।
इति राजनिर्घण्टः ॥
(गन्धकशब्देऽस्य गुणादयो
बोद्धव्याः ॥)

**कीटजा**, स्त्री, (कीटेभ्यो जायते । जन् + डः । टाप् ।)
लाक्षा । इति रत्नमाला ॥
(लाक्षाशब्दे ऽस्या
गुणादिकं ज्ञेयम् ॥ कीटसम्भवे, त्रि,
।
यथा महाभारते २ । ५ । २३ ।
“और्णञ्च राङ्कवञ्चैव पट्टजं
कीटजन्तथा” ॥)

**कीटपादिका**, स्त्री, (कीटाः पादे मूलेऽस्याः । कीट-
पाद + कप् । अत इत्वं टापि ।)
हंसपदीवृक्षः ।
इति राजनिर्घण्टः ॥

**कीटमाता**, स्त्री, (कीटानां माता इव । मूलदेशात्
बहुलकीटोत्पन्नत्वात्तथात्वम् ।)
हंसपदीवृक्षः ।
क्षुद्रः । पशुघाती । इति
मेदिनीकरहेमचन्द्रौ ॥

**कीरं**, क्ली, (कीलति बध्नाति शरीरम् । कील + अच् ।
लस्य रः ।) मांसम् । इति
राजनिर्घण्टः ॥

**कीरः**, पुं, (कीति अव्यक्तं ईरयतीति । ईर + णिच् +
अच् ।) शुकपक्षी । इत्यमरः २ । ५
। २१ ॥ (यथा,
नैषधे २ । १५ । “खगवागियं
इत्यतोऽपि किं
न मुदं धास्यति कीरगीरिव” ॥)

**कीरकः**, पुं, (कीर + संज्ञायां कन् ।) वृक्षभेदः ।
क्षपणकः । प्रापणम् । इति धरणी ॥
(शुकपक्षी ।
इति आचार्य्याः ॥)

**कीरवर्णकं**, क्ली, (कीरस्येव वर्णो यस्य । वर्ण + कप् ।)
स्थौणेयकनामसुगन्धिद्रव्यम् । इति
राजनिर्घण्टः ॥
(स्थौणेयकशब्दे विवरणमस्य
ज्ञातव्यम् ।)

**कीराः**, पुं, (क + ईर + णिच् + अच् पृषोदरात्
साधुः ।) काश्मीरदेशः ।
तद्देशस्थजनः । बहुवच-
नान्तोऽयं ब्दः । इति
मेदिनीत्रिकाण्डशेषौ ॥

**कीरेष्टः**, पुं, (कीरस्य शुकस्य इष्टः प्रियः ।) आम्र-
वृक्षः । आखोटवृक्षः ।
जलमधूकवृक्षः । इति
राजनिर्घण्टः ॥

**कीर्णः**, त्रि, (कीर्य्यतेऽसौ । कॄ + कर्म्मणि क्तः ।)
द्रोणाचार्य्यः । इति शब्दरत्नावली ॥ कीर्त्तियुक्तेत्रि ॥
यथा, -- महाभारते १ । ८३ । ४१ ।
“राज्यभाक् स भवेद्ब्रह्मन् ! पुण्यभाक् कीर्त्तिभाक्
तथा” ॥)

**कीर्त्तिमाण्** [त्] पुं, (कीत्तिरस्यास्तीति मतुप् ।)
वसुदेवज्येष्ठपुत्त्रः । (यथा भागवते ९ । २४ । ५३ ।
“वसुदेवस्तु देवक्यां अष्टपुत्रानजीजनत् ।
कीर्त्तिमन्तं सुषेणञ्च भद्रसेनमुदारधीः ।
ऋजुं संमर्दनं भद्रं सङ्कर्षणमहीश्वरम्” ॥)
कीर्त्तिविशिष्टे त्रि ॥ (यथा, हेः रामायणे १ । २ । ४२ ।
“उदारवृत्तार्थपदैर्मनोरमै-
स्तदास्य रामस्य चकार कीर्त्तिमान् ।
समाक्षरैः श्लोकशतैर्यशस्विनो
यशस्करं काव्यमुदारदर्शनः” ॥)

**कीर्त्तिशेषः**, पुं, (कीर्त्तिः शेषो यस्य ।) मरणम् । इति
जटाधरः ॥

**कील**, बन्धे । इति कविकल्पद्रुमः ॥ (भ्वां--परं--
सकं--सेट् ।) चतुर्थस्वरी । कीलति । इति
दुर्गादासः ॥

**कीलः**, पुं स्त्री, (कील्यते रुध्यतेऽसौ अनेनात्र बा ।
कील बन्धे + कर्म्मणि करणेऽधिकरणे च यथायथं
घञ् पुंसीति घोवा ।) अग्निशिखा । शङ्कुः ।
इत्यमरः ३ । ३ । १९६ ॥ (यथा, महाभारते ।
३ । १५ । १५ ।
“परिखाश्चापि कौरव्य ! कीलैः सुनिचिताः कृताः” ॥
तथा च आर्य्यासप्तशती ३७४ ।
“या लुप्तकीलभावं याता हृदि वहिरदृश्यापि” ॥)
स्तम्भः । लेशः । कफोणिः । इति मेदिनी ॥ कफो-
णिनिर्घातः । इति विश्वः ॥ (मूढगर्भस्य प्रकारभेदः ।
यथा ॥ “तत्र ऊद्‌र्ध्वबाहुशिरः पादौ यो योनि-
मुखं निरुणद्धि कील इव स कीलः” ॥
इति सुश्रुते निदानस्थाने ८ अध्याये ॥)

**कीलकः**, पुं, (कीलति बध्नाति अनेन । करणे घञ्
स्वार्थे कः ।) कीलः । खौँटा गौँज खिल इत्यादि
भाषा । गवां गात्रकण्डूयनार्थं गोष्ठे निखातस्तम्भः ।
इति सुभूतिः ॥ कण्डूयणार्थं काष्ठम् । इति के-

इति भावप्रकाशः ॥ (हंसपदीशब्देऽस्या गुण-
पर्य्याया बोध्याः ॥)

**कीटमारी**, स्त्री, (कीटं मारयति । मृ + णिच् +
अण् । उपपद मासः । गौरादित्वात् ङीष् ।)
हंसपदीवृक्षः । इति राजर्घण्टः ॥

**कीडेरः**, पुं, (कील + एरच् । लस्य डः ।) तण्डुलीय-
शाकः । इति भावप्रकाशः ॥

**कीदृक्**, [श्] त्रि, (कस्येव दर्शनमस्य क इव दृश्यते
इत्यादि वा । किम् + दृश् + क्विन् । "इदं किमो-
रीश्की" । ६ । ३ । ९० । इति क्यादेशः ।) किम्प्रकारः ।
इति व्याकरणम् ॥ (यथा नैषधे १ । १३७ ।
"विलोकयन्त्या रुदतोऽथ पक्षिणः
प्रिये स कीदृक् भविता तव क्षणः" ॥)

**कीदृशः**, त्रि, (क इव दृश्यते ऽसौ कस्येव वा दर्शनमस्य ।
किम् + दृश् + कञ् ।) किम्प्रकारः । इति व्याक-
रणम् ॥ (यथा, महाभारतम् ॥)
"कीदृशाः साधवो विप्राःकेभ्यो दत्तं महाफलम् ।
कीदृशानाञ्च भोक्तव्यं तन्मे ब्रूहि पितामह !" ॥)

**कीनाशः**, पुं, (क्लिश्नातीति । क्लिशू विबाधने वधे वा ।
"क्लिशेरीच्चोपधायाः लोपश्च लो नाम् च" ।
उणां ५ । ५६ ॥ इति कन् उपधाया ईत्वं ललोपो
नामागमश्च ।) यमः । इत्यमरः ३ । ३ । २१४ ॥
("विधेहि कीनाशनिकेतनातिथिं ।" माघः ।
आच्छन्नः । विक्षिप्तः । (यथा, शाकुन्तले १ माङ्के ॥
"ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्त-
दृष्टिः पश्चार्द्धेन प्रविष्टः शरपतनभयात् भूयसा
पूर्ब्बकायम् । शष्पैरर्द्धावलीढैः श्रमविवृतमुख-
भ्रंशिभिः कीर्णवर्त्मा पश्योदग्रप्लुतत्वात् वियति
बहुतरं स्तोकमुर्व्यां प्रयाति" ॥) हिंसितः । इति
मेदिनी ॥

**कीर्त्तनं**, क्ली, (कृत् + भावे ल्युट् ।) कथनम् । वचनम् ।
इति जटाधरः ॥ (यथा, मार्कण्डेये ९२ । २२ ।
"रक्षां करोति भूतेभ्यो जन्मनां कीर्त्तनं मम" ॥)

**कीर्त्तना**, स्त्री (कृत् + कर्म्मणि युच् टाप् च ।) यशः ।
इति शब्दरत्नावली ॥

**कीर्त्तिः**, स्त्री, (कृत् + क्तिन् । यद्वा, कृत् संशब्दने
"हृपिषिरुहीति" उणां ४ । ११८ । इरादि-
कार्य्ये इन् ।) सुख्यातिः । तत्पर्य्यायः । यशः ।
समज्ञा ३ । इत्यमरः १ । ६ । ११ ॥ समाज्ञा ४
समाख्या ५ समज्या ६ । इति तट्टीकायां भरतः ॥
अभिख्या ७ श्लोकः ८ वर्णः ९ । इति जटाधरः ॥
कीर्त्तना १० । इति शब्दरत्नावली ॥
"दानादिप्रभवा कीर्त्तिः शौर्य्यादिप्रभवं यशः" ॥
इति माधवी ॥ अत एव यशःकीर्त्योर्भेदस्याति
चित् । बन्धनखण्टः । इति केचित् । यत्र बद्धा
गौर्दुह्यते सः । इति केचित् । इति भरतः ॥
तत्पर्य्यायः । शिवकः २ । इत्यमरः २ । ९ । ८३ ॥

**कीलसंस्पर्शः**, पुं, (कीलं संस्पृशति । सम् + स्पृश् +
अच् ।) वृक्षविशेषः । इति शब्दचन्द्रिका ॥ गाव
इति भाषा ॥

**कीला**, स्त्री पुं, (कील + टाप् ।) कीलः । द्वत्यमर-
मेदिनीकरौ ॥

**कीलालं**, क्ली, (कीलं वह्निज्वालां अलति वारय-
तीति । कील + अल् + कर्म्मण्यण् । यद्वा कीलात्
वह्निशिखायाः शिखाग्रहणेनात्र वह्नेरेव ग्रहण-
मिति ध्येयम्, अतएवाग्नेः सकाशात् अलति-
पर्य्याप्नोति उत्पद्यते इति यावत् "अग्नेरापः"
इति श्रुतेः । अल् + अच् ।) जलम् । (यथा, शङ्क-
रकविकृते अम्बाष्टके २ ।
"कूलातिगामिभयतूलावलिज्वलनकीलानिजस्तुति

१ । ७३ ॥) वानरविशेषः । इति तट्टीकायां
स्वामी ॥

**कीनाशः**, त्रि, (क्लिश्नातीति । क्लिशूविवाधने वधे

च । “क्लिशेरीच्चोपधाया लोपश्च लो नाम् च” ।
उणां ५ । ५६ । इति कन् उपधाया ईत्वं ललोपो
नामागमश्च ।) कर्षकः । (यथा मनुः ९ । १५० ।
“कीनाशो गोवृषो यानमलङ्कारश्च वेश्म च ।
विप्रस्योद्धारिकं देयमेकांशश्च प्रधानतः” ॥)

दर्शनात् “यशःकीर्त्तिप्रविभ्रष्टो जीवन्नपि न
जीवति” इति कस्यचित् प्रयोगः । जीवतः ख्या-
तिर्यशो मृतस्य ख्यातिः कीर्त्तिरिति केचित्तन्न
साधु “कीर्त्तिस्ते नृपदूतिकेति” प्रयोगदर्शनात् ।
इति भरतः ॥ * ॥ प्रसादः । इति मेदिनी ॥
शब्दः । दीप्तिः । मातृकाविशेषः । इति शब्द-
रत्नावली ॥ विस्तारः । कर्द्दमः । इति विश्वः ॥

**कीर्त्तितः**, त्रि, (कृत् + क्तः ।) कथितः । ख्यातः ।

यथा, -- भावप्रकाशे ॥
“कुष्माण्डी तु भृशं लध्वी कर्करुरपि कीर्त्तिता” ॥

**कीर्त्तिभाक्**, [ज्] पुं, (कीर्त्तिं भजते । भज + ण्विः ।)

विधाकोलाहलक्षपितकालामरी
कुशलकीलाल-
पोषणनभाः” ॥) रक्तम् । इत्यमरः ३ । ३
। १९९ ॥
(और्व्वाग्निः कीलं आलाति । आला + कः
।)
अमृतम् । मधु । इति शब्दरत्नावली ॥ (पुं
कीलाय
वन्धाय अलति पर्य्याप्नोतीति । पशुः ॥)

**कीलालधिः**, पुं, (कीलालं जलं धीयतेऽस्मिन् । धा
+
किः ।) समुद्रः । इति शब्दरत्नावली ॥

**कीलालपः**, पुं, (कीलालं रुधिरं पिबति । पा +
“आतोऽनुपसर्गे कः” । ३ । २ । ३ । इति
कः ।)
राक्षसः । इति शब्दरत्नावली ॥

**कीलितः**, त्रि, (कील्यतेऽसौ ॥ कील + कर्म्मणि क्तः
।)
बद्धः । इत्यमरः । ३ । १ । ४२ ॥ (यथा,
राजेन्द्र-
कर्णपूरे ३० ।
“किं वान्यत्तव देव ! वेल्लति यदि
भ्रूवल्लरीपल्लवः
सोऽपि क्षामकपोलकीलितकरः संक्रन्दनः
क्रन्दति” ॥)
कीशः, पुं, (की इति शब्दं ईष्टे । ईश् + कः
। यद्वा
कस्य वायोरपत्यं अत इञ् । किः हनुमान्
ईशो
यस्य ।) वानरः । इत्यमरः । २ । ५ । ३ ॥
(यथा,
काशीखण्डे ४२ । ३१ ।
“रासभैः करभैः कीशैः श्येनैरश्वरैर्वकैः” ॥
के आकाशे ईष्टे प्रभवतीति । क + ईश् +
कः ।)
सूर्य्यः । पक्षी । इति शब्दरत्नावली ॥ नग्ने
त्रि ।
इति मेदिनी ॥

“शितिवार शितिवरः स्वस्तिकः
सुनिषण्णकः ।
श्रीवारकः सूचिपत्रः पर्णकः कुकुटः
शिखी” ॥
गुणाश्चास्य सुनिषण्णकशब्दे ज्ञेयाः ॥)

**कुकुदः**, पुं, (कुकु इत्यव्ययं अलङ्कृता कन्या । ता सत्-
कृत्य पात्राय ददाति यः ।) कूकुदः ।
सत्कारपूर्ब्ब-
कालङ्कृतकन्यादानकर्त्ता ।
इत्यमरटीकायां राय-
मुकुटः ॥

**कुकुन्दरं**, क्ली, (स्कुन्द्यते कामिनाऽत्र । स्कुदि आप्ल-
वने मद्गुरादयश्चेति निपातनात् साधुः
।) नितम्ब-
स्थकूपकद्वयम् । पृष्ठवंशादधोगर्त्तद्वयम्
। इत्यमरः ।
२ । ६ । ७९ ॥ कुकुन्दरे इति
द्विवचनान्तोऽपि
प्रयोगः ॥ (यथा सुश्रुते शारीरस्थाने ।
६ अ ॥
“पार्श्वजधनवहिभगि पृष्ठवंशमुभयतो
नातिनिम्ने
कुकुन्दरे नाम मर्म्मणी तत्र
स्पर्शाज्ञानमधःकाये
चेष्टोपघातश्च” ॥)

**कुकुन्दरः**, पुं, (कुं भूमिं दरयति दारयति वा अन्त-
र्भूतण्यन्तात् दृ अण् निपातनात्
वृद्ध्यभावेन
साधुः । कु ईषत् कुत्सितं वा कुन्दरमत्र
।)
कुक्कुरद्रुः । कुकुरौदा इति हिन्दी
भाषा । तत्-
पर्य्यायगुणाः । यथा भावप्रकाशे ॥
“कुकुन्दरस्ताम्रचूडः सूक्ष्मपत्रो
मृदुच्छदः ।

(“शिरीषादपि मृद्वङ्गी क्वेयमायतलोचना
अयं क्वच कुकूलाग्निकर्कशो मदनानिलः” ।
इति
उद्भट्टः । केचित्तु “कुकूलाग्निः कर्कशो
मदनानलः”
इत्येवमाहुः ॥)

**कुकोलं**, क्ली, (कुत्सितं कोलति । कुल + अच् ।)
कोलिवृक्षः । इति शब्दचन्द्रिका ॥

**कुक्कुटः**, पुं स्त्री, (कुक् + सम्पदादित्वात् क्विप् ।
कुका आदानेन कुटतीति । कुट + कः ।)
पक्षि-
विशेषः । कुकुडा इति भाषा । तत्पर्य्यायः ।
कृकवाकुः २ ताम्रचूडः ३ चरणायुधः ४ ।
इत्य-
मरः । २ । ५ । १७ ॥ कालज्ञः ५ नियोद्धा ६
विष्किरः ७ नखरायुधः ८ ताम्रशिखी ९ ।
इति
जटाधरः ॥ रात्रिवेदः १० उषाकरः ११
वृताक्षः
१२ काहलः १३ । इति शब्दरत्नावली ॥
दक्षः
१४ यामनादी १५ शिखण्डिकः १६ ।
तन्मांस-
गुणाः । (यथा, भावप्रकाशे ।
“कुक्कुटो वृंहणः स्निग्धो
वीर्य्योष्णोऽनिलकृद्गुरुः ।
चक्षुष्यः शुक्रकफकृद्बल्यो रूक्षः कषायकः ॥
आरण्यकुक्कुटः स्निग्धो वृंहणः श्लेष्मलो
गुरुः ।
वातपित्तक्षयवमिविषमज्वरनाशनः” ॥

अरण्यकुक्कुटमांसगुणाः । हृद्यत्वम्
। श्लेष्म-

हरत्वम् । लघुत्वञ्च । इति राजनिर्घण्टः ॥
रूक्ष-
त्वम् । कषायत्वम् । स्वादुत्वम् । शीतलत्वञ्च
।

**कीशपर्णः**, पुं, (कीशः वानरः तस्य लोमेव पर्ण-
मस्य ।) अपामार्गः । इति शब्दरत्नावली ॥

**कीशपर्णी**, स्त्री, (कीशपर्ण + जातौ ङीष् ।) अपा-
मार्गः । इत्यमरः । २ । ४ । ८९ ॥

**कु** ङ शब्दे । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-अकं-
सेट् ।) ङ कवते इति दुर्गादासः ॥

**कु** ल शब्दे । इति कविकल्पद्रुमः ॥ (अदां-परं-अकं-
सेट् ।) ल कौति । इति दुर्गादासः ॥

**कु** शि ङ आर्त्तस्वरे । इति कविकल्पद्रुमः ॥ (तुदां-
आत्मं-अकं-सेट् ।) शि ङ कुवते अकुत । इति
दुर्गादासः ॥

**कु**, व्य, (कु + डुः ।) पापम् । कुत्सा । ईषदर्थः ।
निवारणम् । इति मेदिनी ॥

**कुः**, स्त्री, (कु + मितादित्वात् डुः ।) पृथिवी । इत्य-
मरः । २ । १ । ७ ॥

**कुक्**, ङ आदाने । इति कविकल्पद्रुमः । (भ्वां-आत्मं-
सकं-सेट् ।) ङ कोकते । इति दुर्गादासः ॥

**कुकभं**, क्ली, (कुकेन आदानेन पानेनेत्यर्थः भातीति ।
भा + कः ।) मद्यम् । इति शब्दचन्द्रिका ॥

**कुकरः**, त्रिं, (कुत्सितः करोः यस्य ।) कुत्सितहस्त-
युक्तः रोगादिना कुञ्चितकरः । तत्पर्य्यायः । कुणिः
२ । इत्यमरः । २ । ६ । ४८ ॥ कूणिः ३ कोणिः
४ । इति तट्टीका ॥

**कुकीलः**, पुं, (कुः पृथिवो तस्याः कील इव ।) पर्व्वतः ।
इति त्रिकाण्डशेषः ॥

**कुकुटः**, पुं, (कु ईषत् कुत्सितं यथा स्यात् तथा वा
कुटतीति । कुट् + कः ।) सितावरः । इति राज-
कुकुन्दरः कटुस्तिक्तो
ज्वररक्तकफापहः ॥
तन्मूलमार्द्रं निःक्षिप्तं वदने
मुखशोषहृत्' ॥
(पुंलिङ्गोऽयं शब्दोऽपि
नितम्बस्थकूपकद्वये वर्त्तते
यथा ॥
"पृष्ठवंशं ह्युभयतो यौ सन्धी
कटिपार्श्वयोः ।
जघनस्य वहिभगि मर्म्मणी तौ
कुकुन्दरौ" ॥
इति वाभटे शारीरस्थाने । ४ अध्याये
॥)

**कुकुभा**, स्त्री, (कु ईषत् कुः पृथ्व्यधिष्ठात्री देवता इव
भा यस्याः ।) रागिणीविशेषः । इति
हलायुधः ॥

**कुकुरः**, पुं, (कु कुत्सितं कुरति शब्दायते । कुर् +
अच् ।) कुक्कुरः । (कुं पृथिवीं कुरति
स्वामित्वेन
आदत्तवान् । कुर् + कः । यद्वा --
कुक्धातोः
"मद्गुरादयश्च" । उणां १ । ४२ ।
इति साधुः ।)
क्षत्रियविशेषः । इत्युणादिकोषः । स तु
यदुवंशी-
यान्धकराजपुत्रः । इति श्रीभागवतम् ॥
(यथा
माघे १३ । १६ ।
"परिफुल्लगण्डफलकाः परस्परम्
परिरेभिरे कुकुरकौरवस्त्रियः" ॥)
ग्रन्थिपर्णीवृक्षः । इति त्रि काण्डशेषः ॥

**कुकुराः**, पुं, (कुकुराः स्वनामख्याताः क्षत्रियाः तेषां
जनपदः ।) देशविशेषः ।
तद्देशस्थलोकश्च । तत्-
पर्य्यायः । यदवः २ दशार्हाः ३
सात्वताः ४ ।
बहुवचनान्तोऽयं शब्दः । इति
त्रिकाण्डशेषः ॥

इति राजवल्लभः ॥ ग्राम्यकुक्कुटमांसगुणाः ।
स्नि-
ग्धत्वम् । वातहरत्वम् । दीपनत्वम् ॥ गुरुत्वञ्च
।
इति राजनिर्घण्टः ॥ बलकारित्वम् ।
उष्णत्वम् ।
मधुरत्वञ्च । इति राजवल्लवः ॥ * ॥
निषादपुत्त्रः ।
शूद्रपुत्त्रः । तृणोल्का । कुक्कुभपक्षी । इति मे-
दिनी ॥ वह्निकणः । इति हेमचन्द्रः ॥
(आसन-
विशेषः । यथा हठयोगदीपिकायाम् । १ । २३
।
"पद्मासनन्तु संस्थाप्य जान्वोर्वोरन्तरे करौ ।
निवेश्य भूमौ संस्थाप्य व्योमस्थं
कुक्कटासनम्" ॥)

**कुक्कुटकः** पुं, (कुक्कुट + सांज्ञायां कन् ।) कुक्कुभपक्षी ।
इति शब्दरत्नावली ॥ स्वार्थे कन् प्रत्यये
कुक्कुट-
शब्दार्थोऽप्यत्र ॥)

**कुक्कुटव्रतं**, क्ली, (कुक्कुट इत्याख्यं व्रतम् ।) सन्तानार्थं
स्त्रीकर्त्तव्यव्रतम् । इति शब्दमाला ॥
कुक्कुटीव्रत-
मपि पाठः । ललितासप्तमीव्रतमिदम् । यथा, --
"भाद्रे मासि सिते पक्षे सप्तम्यां नियमेन या ।
स्नात्वा शिवं लेखयित्वा मण्डले च
सहाम्बिकम् ॥
पूजयेच्च तदा तस्या दुष्प्रापं नैव विद्यते" ॥
इति तिथ्यादितत्त्वे भविष्यपुराणम् ॥

**कुक्कुटमण्डपः**, पुं, मुक्तिमण्डपः । यथा, काशीखण्डे ।
"ततो लोकास्तदारभ्य कथयिष्यन्ति सर्व्वतः
।
मुक्तिमण्डपनाम्नैतदेष कुक्कुटमण्डपः" ॥

**कुक्कुटमस्तकं**, क्ली, (कुक्कुटस्येव मस्तकं शिखा यस्य ।)
चव्यम् । इति राजनिर्घण्टः । चौँइ इति भाषा
॥

निर्घण्टः ॥ सुषणि शाक इति भाषा ॥ (अस्य
पर्य्याया यथा भावप्रकाशस्य पूर्ब्बखण्डे १ भागे ।

**कुकूटी**, पुं, (कोः पृथिव्याः कूटोऽस्त्यस्याः । अच्
गौरादित्वात् ङीष् ।) शाल्मलिवृक्षः । इति राज-
निर्घण्टः ॥ (शाल्मलिशब्देऽस्य विवरणं ज्ञेयम् ॥)

**कुकूलं**, क्ली, (कोः भूमेः कूलं । कुत्सितं कूलं वा ।)
शङ्कुभिः सङ्कीर्णं श्वभ्रम् । इत्यमरः । ३ । ३ । २०२ ।
तनुत्रम् । इति हारावली ॥

**कुकूलः**, पुं, (कु + ऊलच् कुगागमश्च ।) तुषानलः ।
इत्यमरः । ३ । ३ । २०२ ॥

(चव्यशब्देऽस्य गुणादयो बोद्धव्याः ॥)

**कुक्कुटशिखः**, पुं, (कुक्कुटस्य शिखेव शिखा यस्य ।)
कुसुम्भवृक्षः । इति शब्दचन्द्रिका ॥

**कुक्कुटाभः**, पुं, (कुक्कुट इव आभाति । आ + भा +
कः ।) कुक्कुटतुल्यवर्णचरणसर्पविशेषः ।
तत्पर्य्यायः ।

कुक्कुटाहिः २ । इति हेमचन्द्रः ॥

**कुक्कुटाहिः**, पुं, (कुक्कुटः तच्चरण इव अहिः सर्पः ।)

कुक्कुटाभसर्पः । इति हेमचन्द्रः ॥

**कुक्कुटिः**, स्त्री, (कुक्कुट इव आचरति । आचारे

क्विपि इन् ।) दम्भचर्य्या । इति हेमचन्द्रः ॥

**कुक्कुटी**, स्त्री, (कुक्कुटि + वा ङीप् ।) अनृतचर्य्या ।

इति मेदिनी ॥ ज्येष्ठी । इति शब्दरत्नावली ॥

टिक् टिकि इति भाषा शाल्मलीवृक्षः । इति जटाधरः । (यथा, सुश्रुते उत्तरतन्त्रे । ६० अ० ॥)

"कुक्कुटी सर्पगन्धाश्च तथाकाणविषाणिके" ॥

योषिद्विशेषः । इति चिन्तामणिः ॥)

**कुक्कुटीव्रतं**, क्ली, (कुक्कुटी इति संज्ञकं व्रतं नियमविशेषः ।)

भाद्रशुक्लसप्तमीकर्त्तव्यनियमविशेषः ।

तद्विवरणं ललितासप्तमीशब्दे द्रष्टव्यम् ॥

**कुक्कुभः**, पुं, (कुक्कुशब्दं भाषते । भाष् + बाहुल-

कात् डः । यद्वा कुक् इत्यव्यक्तं कौति शब्दायते ।

कु + बाहुलकात् भक् ।) पक्षिविशेषः । इत्यमरः ।

२ । ५ । ३५ । पात्कुका इति भाषा ॥

**कुक्कुरं** क्ली, ग्रन्थिपर्णम् । इत्यमरः । २ । ४ । १३२ ।

गाँठियाला इति भाषा ॥ (अस्य पर्य्याया यथा, --

"स्थौणेयकं वर्हिर्वहं शुष्कवर्हञ्च कुक्कुरम् ।

शीर्णरोम शुकञ्चापि शुकपुष्पं शुकच्छदम्" ॥

इति भावप्रकाशस्य पूर्ब्बखण्डे १ भागे ॥ गुणा-

श्चास्य स्थौणेयकशब्दे ज्ञेयाः ॥)

**कुक्कुरः**, पुं, (कोकते आदत्ते इति । कुक् + क्विप् । कुक्

दीर्घा दीर्घा नखरदाः श्वानस्ते

क्षत्त्रजातयः । २

ये पीतवर्णा मृदवस्तनुलोमान एव च ॥

क्रुद्धा क्रुद्धा ललज्जिह्वास्ते श्वानो

वैश्यजातयः ॥ ३

कृष्णवर्णास्तनुमुखा दीर्घरोमाण एव च ॥

अक्रुद्धाः श्रमयुक्ताश्च ते श्वानः

शूद्रजातयः ॥ ४

लघुप्रमाणास्तु गुरूदरा ये

येऽमेध्यभक्षा बहुपुत्त्रकाश्च ।

प्रवृद्धपुच्छा लघुसूक्ष्मदन्ता

स्तेचान्त्यजाः कुक्कु रजातयः स्युः ॥ ५ ॥

द्विजातिचिह्नसंसर्गात् द्विजातिः श्वा

भयावहः ।

लक्षणत्रयसम्बन्धात्

त्रिजातिर्धननाशनः ॥

भोजोऽपि ।

द्विजातिर्व्वा त्रिजातिर्व्वा

विजातिःश्वामहीभृताम् ।

भयं धनक्षयं शोकं विदधाति यथाक्रमम् ॥

इति भोजराजकृतयुक्तिकल्पतरुः ॥ (मुनिविशेषः ।

यथा महाभारते । २ । ४ । १७ ।

"कुक्कुरो वेणुजङ्घोऽथ कालापः कठ

एव च ।

मुनयो धर्म्मविद्वांसो धृतात्मानो

जितेन्द्रियाः" ॥)

**कुक्कुरद्रुः**, पुं, (कुक्कुरः कुक्कुरगन्धोपलक्षितः द्रुर्वृक्षः ।)

वृक्षविशेषः । कुकुरशोँका इति भाषा । तत्-

पर्य्यायः । ताम्रचूडः २ सूक्ष्मपत्रः ३ मृदुच्छदः

४ । अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । ज्वर-

मलयरुहरजोभिर्भूषयन् पश्चिमाशाम्" ॥)

तत्पर्य्यायः । काश्मीरजन्म २ अग्निशिखम् ३

वरम् ४ वाह्लीकम् ५ पीतनम् ६ रक्त्वम् ७

सङ्कोचम् ८ पिशुनम् ९ धीरम् १० लोहित-

चन्दनम् ११ । इत्यमरः । २ । ६ । १२४ । चारु

१२ वाह्लिकम् १३ वरवाह्लीकम् १४ रक्तचन्दनम्

१५ । इति तट्टीका ॥ अग्निशेखरम् १६ असृक्

१७ काश्मीरजम् १८ पीतकम् १९ काश्मीरम्

२० रुचिरम् २१ शठम् २२ शोणितम् २३

घुसृणम् २४ वरेण्यम् २५ अरुणम् २६ कालेयकम्

२७ जागुडम् २८ कान्तम् २९ वह्निशिखम् ३०

केशरवरम् ३१ गौरम् ३२ केसरम् ३३ हरि-

चन्दनम् ३४ खलम् ३५ रजम् ३६ दीपकम् ३७

लोहितम् ३८ सौरभम् ३९ चन्दनम् ४० इति

शब्दरत्नावली ॥ अस्य गुणाः । सुरभित्वम् ।

तिक्तत्वम् । कटुत्वम् उष्णत्वम् । कासवातकफ-

कण्ठरोगमूर्द्धशूलविषदोषनाशित्वम् । रोच-

नत्वम् । तनुकान्तिकरत्वञ्च । इति राजनिर्घण्टः ॥

रेचकत्वम् विवर्णताकण्डूनाशित्वञ्च । इति राज-

वल्लभः ॥ स्निग्धत्वम् ।

शिरोरुग्व्रणजन्तुवमिव्यङ्ग-

दोषत्रयापहत्वम् । बल्यत्वञ्च । इति भावप्रकाशः ॥

त्वग्दोषनाशित्वम् । इति रत्नावली तत्त्वचन्द्रिका

यत्किञ्चिदपि गृह्णन्तं जनं दृष्ट्वा कुरति शब्दा-
यते । कुर + कः ।) जन्तुविशेषः । कुकुर इति
भाषा ॥ तत्पर्य्यायः । कौलेयकः २ सारमेयः ३
मृगदंशकः ४ शुनकः ५ भषकः ६ श्वा ७ । इत्य-
मरः । २ । १० । २१ ॥ कुक्कुरः ८ शुनः ९ शुनिः १०
श्वानः ११ । इति तट्टीका ॥ भषणः १२ भल्लूकः
१३ वक्रलाङ्गूलः १४ वृकारिः १५ रात्रिजागरः
१६ कालेयकः १७ ग्राम्यमृगः १८ मृगारिः १९
शूरः २० शयालुः २१ । इति राजनिर्घण्टः ॥
तस्य गुणाः ।
"बह्वाशी स्वल्पसन्तुष्टः सुनिद्रः शीघ्रचेतनः ।
प्रभुभक्तश्च शूरश्च षडेते च शुनो गुणाः" ॥
इति चाणक्यम् ॥ तस्य परीक्षा यथा ।
"मृगयार्थं शाकुनार्थं कौतुकार्थिमहीक्षिता ।
श्वानः पोष्यास्ततस्तेषामत्र वक्ष्यामि लक्षणम् ॥
गुणजातिप्रभेदेन शुनो भेदो ह्यनेकधा" ।
तद्यथा ।
"सात्त्विका राजसाश्चैव तामसाश्च त्रिधामताः ॥
अश्रान्ता अपरिक्षीणाः पवित्राः स्वल्पभोजिनः ।
श्वानस्ते सात्त्विकाः प्रोक्ता दृश्यन्तेच क्वचित् क्वचित् ॥ १
क्रुद्धा बहुभुजो दीर्घा गुरुवक्षस्तनूदराः ।
जाङ्गलस्था जाङ्गिकाश्च श्वानस्ते राजसा मताः ॥ २
अल्पश्रमेण ये श्रान्ता ललज्जिह्वा गुरूदराः ।
श्वानस्ते तामसा ज्ञेयाः सन्ध्यावनसमाश्रयाः ॥ ३
ब्रह्मादिजातिभेदेन चतुर्द्धा सर्व्व एव हि ।
रक्तकफनाशित्वञ्च । इति मदनविनोदः ॥
"तन्मूलमार्द्रं निक्षिप्तं वदने मुखशोषहृत्" ॥
इति भाप्रकाशः ॥

**कुक्कुरी**, स्त्री, (कुक्कुर + स्त्रियां जातित्वात् ङीष् ।)
कुक्कुरस्त्री । कुत्ती इति भाषा । तत्पर्य्यायः ।
सरमा २ श्वानी ३ सारमेयी ४ शुनी ५ भषी ६ ।
इति शब्दरत्नावली ॥

**कुक्कुवाक्**, पुं, (कुक्कुरस्य वाक् शब्द इव शब्दो-
यस्य ।) सारङ्गमृगः । इति राजनिर्घण्टः ॥

**कुक्षः**, पुं, (कुषनिष्कर्षे + "उन्दिगुधिकुषिभ्यश्च" ।
उणां ३ । ६८ । इति सः किच्च ।) कुक्षिः । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

**कुक्षिः**, पुं, (कुषनिष्कर्षे + "प्लुषिकुषिशुषिभ्यःक्सिः" ।
उणां ३ । १५५ इति किसः ।) उदरम् । इत्यमरः ।
२ । ६ । ७७ ॥ (यथा, महाभारते १ । ७७ । १३ ।
"यात्रोषितं विशालाक्षि ! त्वया चन्द्रनिभानने ! ।
तत्राहमुषितो भद्रेकुक्षौ काव्यस्य भाविनि !" ॥
दानवविशेषः । यथा महाभारते १ । ६७ । ५७ ।
"कुक्षिस्तु राजन् विख्यातो दानवानां महाबलः" ॥)

**कुक्षिम्भरिः**, त्रि, (कुक्षिं बिभर्त्तीति । भृ + खः
+ मुम् च ।) आत्मम्भरिः । स्वोदरपूरकः । इत्य-
मरः ३ । १ । २१ ॥

च ॥ देशभेदे तत् त्रिविधम् । यथा, --
"काश्मीरदेशजे क्षेत्रे कुङ्कुमम् यद्भवेद्धि तत् ।
सूक्ष्मकेशरमारक्तं पद्मगन्धि तदुत्तमम् ॥ १ ॥
वाह्लीकदेशसंजातं कुङ्कुमं पाण्डुरं भवेत् ।
केतकीगन्धयुक्तं तन्मध्यमं सूक्ष्मकेशरम् ॥ २ ॥
कुङ्कुमं पारसीकेय्यं मधुगन्धि तदीरितम् ।
ईषत्पाण्डुरवर्णं तदधमं स्थूलकेशरम्" ॥ ३ ॥
इति भावप्रकाशः ॥

**कुङ्गनी**, स्त्री, (कुङ्कुमवर्णोऽस्त्यस्याः । अच् गौरा-
दित्वात् ङीष् । ततः पृषोदरादित्वात् साधुः ।)
महाज्योतिष्मती । इति राजनिर्घण्टः ॥ (कुङ्कु-
मीति केचित् ॥)

**कुच**, ज रोधपर्ककौटिल्यलेखने । इति कविकल्य-
द्रुमः ॥ (भ्वां-परं-सक, अकं च-सेट्-ज्वलां ।)
ज कोचः कुचः । रोधः क्रियारोधः जडीभाव
इत्यर्थः । अस्मिन्नर्थ एव प्रायो वर्त्तते । यस्मिन्
प्रमुदिते राज्ञि तमः सङ्कोचति क्षितौ । पर्कः
सम्पर्कः । इति दुर्गादासः ॥

**कुच**, शि सङ्कोचे । इति कविकल्पद्रुमः ॥ (तुदां-
पर-अकं, सेट् ।) प्रायः संपूर्ब्बस्य प्रयोगः । शि-
संकुचति अकुचीत् चुकोच । इति दुर्गादासः ॥

**कुच**, तारशब्दे । उच्चैःशब्द इति यावत् । इति कवि-
कल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) कोचति ढक्वा ।
भट्टमल्लस्तु तारे शब्दे च कोचति इति नानार्थे
पठति । तन्मते तारश्चिक्कणता । कोचति काञ्चीं

| | | |
|---|---|---|
| शुभ्रा दीर्घा स्तब्धकर्णा लघुपुच्छास्तनूदराः ॥<br>सुशुक्तखरदन्ताश्च श्वानस्ते ब्रह्मजातयः ॥ १<br>रक्ताङ्गास्तनुलोमानो ललत्कर्णास्तनूदराः ॥ | **कुक्षिरन्ध्रः**, पुं, (कुक्षौ रन्ध्रं छिद्रं यस्य ।) नलः । इति<br>निर्घण्टः ।<br>**कुङ्कुमं**, क्ली, (कुम्कुम् इति शब्दोऽस्ति वाचकत्वेनास्य<br>अर्श आद्यच् । यद्वा कुक्यते<br>आदीयतेऽसौ । कुक्<br>आदाने उमक् निपतनात् मुम् ।)<br>स्वनामख्यात-<br>गन्धद्रव्यम् । कुम्कुम् इति केशर इति<br>भाषा ।<br>(यथा माघे ११ । १४ ।<br>"कृतधवलिमभेदैः कुङ्कुमेनेव किञ्चित् । | वणिक् चिक्कणयतीत्यर्थः । इति दुर्गादासः<br>॥ |

**कुचः**, पुं, (कुचति संकुचतीति । कुच् संकोचे ।
"इगुपधेति" । ३ । १ । १३५ । कः ।) स्तनः ।
इत्यमरः । २ । ६ । ७७ । (यथा गोः रामायणे ।
५ । १३ । ५७ ।
"अन्या वक्षसि चान्यस्यास्तस्याश्चाप्यपराः कुचे ।
उरूपार्श्वकटीपृष्ठमन्योन्यं समुपाश्रिताः" ॥
स्त्रीणां यौवने कुचपरिवृद्धिर्भवति ।
यथाह भावप्रकाशे ।
"पुष्पाणां मुकुले गन्धो यथा सन्नपि नाप्यते ।
तेषां तदपि तारुण्ये पुष्टत्वात् व्यक्तिमेति हि ॥
कुसुमानां प्रफुल्लानां गन्धः प्रादुर्भवेद्यथा ।
रोमराज्यादयः पुंसां नारीणामपि यौवने ॥
जायते ऽत्र च यो भेदो ज्ञेयो व्याख्यानतः स च" ॥
व्याख्यानं यथा, --
"पुंसां रोमराजिश्मश्रुप्रभृतयः
नारीणान्तु रोमराजी स्त नार्त्तवादयः" ॥)

**कुचण्डिका**, स्त्री, (कुत्सिता चण्डिका कोपना इव ।
विकृतिकारितया तथात्वम् ।) मूर्व्वालता । इति
शब्दचन्द्रिका ॥

**कुचन्दनम्**, क्ली, (कुत्सितं गन्धहीनतया यच्चन्दनं
यद्वा कौ पृथिव्यां चन्दनमिव ।) रक्तचन्दनम् ।
इत्यमरः । २ । ६ । १३२ ॥ पत्राङ्गम् । वकम्
काठ् इति भाषा । वृक्षभेदः । इति मेदिनी ॥
कुङ्कुमम् । इति शब्दचन्द्रिका । (अस्य पर्य्याया
यथा, -- वैद्यकरत्नमालायाम् ।
"पतङ्गं रञ्जनं रक्तं पत्राङ्गञ्च कुचन्दनम्" ॥)

**कुचफलः**, पुं, (कुच इव फलं यस्य । कुचसदृशत्वा-
त्तथात्वम् ।) दाडिमवृक्षः । इति राजनिर्घण्टः ॥
(गुणपर्य्याया दाडिमशब्दे ऽस्य ज्ञातव्याः ॥)

**कुचरः**, त्रि, (कुत्सितं चरतीति । कु + चर् + अच् ।)
रत्नावल्याम् ।
"कुचेला कुलका रात्रिर्मेघनामा च
ग्रन्थिका" ॥
अस्याः पर्य्याया यथा ।
"अम्बष्ठाम्बष्ठकीपाटा कुचेला पापचेलिका ।
एकाष्ठीला वरा तिक्ता
प्राचीनौकाशिवावुका" ॥
इति वैद्यकरत्नमालायाम् ॥)

**कुचेली**, स्त्री, (कुचेल + गौरादित्वात् ङीष् ।) अम्वष्ठा ।
इति रत्नमाला ॥ आकनादि इति भाषा ॥

**कुच्छं**, क्ली, (कोः पृथिव्याः दुःखं छ्यति दर्शनाघ्राणा-
दिना लुनातीति । कु + छो + कः ।)
कुमुदम् ।
इति शब्दचन्द्रिका ॥ (कुमुदशब्देऽस्य
गुणपर्य्याया
बोद्धव्याः ॥)

**कुज** उ स्तेये । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-
सेट् ।) उ कोजित्वा कुक्त्वा । स्तेयं
चौर्य्यम् । इति
दुर्गादासः ॥

**कुज**, इ अव्यक्तशब्दे । इति चन्द्रः । (भ्वां-परं-अकं-
सेट्-इदित् ।) कुञ्जति कुञ्जरः । इति
दुर्गादासः ॥

**कुजः**, पुं, (कोः पृथिव्याः जायते । कु + जन् + डः ।)
भङ्गलग्रहः । (यथा, मङ्गलग्रहस्तुतौ ।
"अङ्गारकः
कुजो भौमः" इति ।) नरकासुरः । (यथा, --
"तत्राहृतास्ता नरदेवकन्याः
कुजेन दृष्ट्वा हरिमार्त्तवन्धुम्" ॥
श्रीमद्भागवते ३ । ३ । ८ ॥) वृक्षः । इति
हेमचन्द्रः ॥
कुजम्भलः, त्रि, (कोः पृथिव्याः कौ वा
जम्भलः

**कुज्झटिका**, स्त्री, (कुज्झटि + स्वार्थे कन् टाप् ।)
कुज्झटिः । इति शब्दरत्नावली ॥

**कुज्झटी**, स्त्री, (कुज्झटि + स्त्रियां वा ङीप् ।)
कुज्झटिः । इति शब्दरत्नावली ॥

**कुञ्चनं**, क्ली, (कुञ्चति अनेन । कुन्च + करणे ल्युट् ।)
नेत्ररोगविशेषः । तस्य लक्षणं यथा, --
"वाताद्या वर्त्मसङ्कोचं जनयन्ति यदा मलाः ।
तदा द्रष्टुं न शक्नोति कुञ्चनं नाम तद्विदुः" ॥
इति माधवकरः ॥ (भावे ल्युट् । सङ्कोचः । यथा
सुश्रुते ।
"कुर्य्यात् शिरागतं मूलशिरा कुञ्चनपूरणम्" ॥)

**कुञ्चफला**, स्त्री, (कुञ्चं कुञ्चितं फलं अस्याः ।) कुष्माण्डी ।
इति राजनिर्घण्टः ॥

**कुञ्चिः**, पुं, (कुन्च + इन् ।) अष्टमुष्टिपरिमाणम् ।
यथा, स्मृतिः ॥
"अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च
पुष्कलम्" ॥

**कुञ्चिका**, स्त्री, (कुन्च + ण्वुल् + टाप् इत्वंञ्च ।)
गुञ्जा । कुँच् इति भाषा । वंशशाखा । कञ्चि इति
भाषा । इति शब्दचन्द्रिका ॥ कृष्णजीरकः । इति
जटाधरः ॥
(अस्या व्यवहारो यथा मरिचाद्यचूर्णे ।
"मरिचः कुञ्चिकाम्बष्ठा वृक्षाम्लाः कुडवाः
पृथक्" ॥
इत्यादिषु द्रष्टव्यम् । इति चरके
चिकित्सास्थाने ।
१९ अः ॥) कूर्च्चिका । कुँजि चावि इति च
भाषा ।
इति हेमचन्द्रः ॥ मेथिका । इति राजनिर्घण्टः ॥
मत्स्यभेदः । कुँचे इति भाषा । यथा ।
"कुञ्चिकयैनं
विस्माययति भाययति" । इति मुग्धबोधम् ॥

कुवादः । परदोषकथनशीलः । इत्यमरः । ३ । १
३७ ॥ (दुर्गमदेशगन्ता । यथा, ऋग्वेदे । १ । १५४ । २ ।
"प्र तद्विष्णुः स्तवते वीर्य्येण मृगो न मीमः कुचरो
गिरिष्ठाः" ॥ कुस्थाने चरतीति । कान्तारादि-
पर्य्यटकः । कौ पृथ्व्यां चरतीति । भूमिचरः ॥
यथा महाभारते । १४ । ३८ । १३, १४ ।
"दृष्ट्वा त्वादित्यमुद्यन्तं कुचराणां भयं भवेत् ।
अध्वगाः परितप्येयुरुष्णतो दुःखभागिनः ॥
आदित्यः सत्वमुद्रिक्तं कुचरास्तु तथा तमः ।
परितापोऽध्वगानाञ्च रजसो गुण उच्यते" ॥)

**कुचाग्रं**, क्ली, (कुचस्य कुचयोर्वा अग्रम् ।) स्तनाग्र-
भागः । तत्पर्य्यायः । चूचुकम् २ । इत्यमरः । २ ।
६ । ७७ ॥ चुचुकम् ३ । इति तट्टीका ॥

**कुचाङ्गेरी**, स्त्री, (कुत्सिता चाङ्गेरी ।) इति रत्न-
माला ॥ चुक्रिका । चुकापालं इति भाषा ॥

**कुचिकः**, पुं स्त्री, (कुच + बाहुलकात् इकन् ।)
मत्स्यविशेषः । इति त्रिकाण्डशेषः । कुँचिया इति भाषा ॥

**कुचेलः**, त्रि, (कुत्सितं चेलं वस्त्रं यस्य ।) कुवासाः ।
परिहितकुत्सितवस्त्रो जनः । इति मेदिनी ॥
(कुत्सितं चेलमिति विग्रहे । क्ली, जीर्णवस्त्रम् ।
यथा, मनुः ६ । ४४ ।
"कपालं वृक्षमूलानि कुचेलमसहायता ।
समता चव सर्व्वस्मिन्नेतन्मुक्तस्य लक्षणम्" ॥)

**कुचेला**, स्त्री, (कुचा सङ्कुचा इला भूमिः निद्रा वा
यस्याः ।) विद्धकर्णी । इति मेदिनी (यथा, भैषज्य-
मृत्तिकादिखननेन सन्धिचौरः ।)
चौरविशेषः ।
इति हारावली । सिँदेल चोर इति भाषा ॥

**कुजम्भलः**, त्रि, (कुजम्भोऽस्यास्तीति । इलच् ।)
कुजम्भलः । इति शब्दरत्नावली ॥

**कुजा**, स्त्री, (कुजाः पृथिवीजाः वृक्षाः आश्रयत्वेन
सन्ति अस्याः इति अच् ततष्टाप् । यथा, --
"कदली दाडिमी धान्यं हरिद्रा मानकं कचुः ।
विल्वाशोकौ जयन्ती च विज्ञेया नवपत्रिका" ॥
इति मन्त्रोक्तनवपत्रिकासु "तव स्थानमिदं मर्त्त्ये"
इत्यादि निर्द्देशेन चास्याः आश्रयत्वात् तथात्वम् ।)
कात्यायनी देवी । इति मेदिनी ॥ (कोः पृथिव्याः
जायते । जन + डः टाप् च । सोता देषी भूमेः
तदुत्पत्तिकथा कालिका पुराणे ३७ अध्यायेः ।
"ततः पुरोधसं राजा गोतमं मुनिसत्तमम् ।
तत्पुत्रञ्च शतानन्दं पुरोधायाकरोन्मखम् ॥
द्वौ पुत्रौ तस्य सञ्जातौ यज्ञभूमौ परौ स्मृतौ ।
एका च दुहिता साध्वी भूम्यन्तरगता शुभा" ॥)

**कुज्जिशः**, पुं, मत्स्यभेदः । अस्य गुणाः । मधुरत्वम् ।
हृद्यत्वम् । कषायत्वम् । दीपनत्वम् । बलकारित्वम् ।
स्निग्धत्वम् । गुरुत्वम् । ग्राहित्वम् । वाते हित-
त्वम् । रोचनत्वञ्च । इति राजनिर्घण्टः ॥

**कुज्झटिः**, स्त्रो, (कोजति अपहरति सूर्य्यप्रकाशम् ।
कुज् + क्विप् न कुत्वम् । झट् संघाते इन् । ततः
कर्म्मधारयः ।) कुज्झटिका । कुया । कुयासा इति

**कुञ्चितं**, त्रि, (कुन्च + क्तः ।) वक्रम् । इत्यमरः ।
३ । १ । ७१ ॥ (यथा, नैषधे ३ । १ ।
"आकुञ्चिताभ्यामथ पक्षतिभ्यां
नभोविभागात्तरसावतीर्य्य" ॥)
तगरपुष्पे क्ली । इति राजनिर्घण्टः ॥

**कुञ्जः**, पुं क्ली, (कौ जायते जन + डः । पृषोदरा-
दित्वात् मुमि साधः ।) पर्व्वतादेर्लतापल्लवादिभिः
समन्ताच्छादितगर्भो गह्वरादिदेशः । इति मधु-
प्रभृतयः ॥ उपरि चतुर्दिक्षु च लतादिभिराच्छा-
दितस्य स्थानस्य मध्ये शून्यदेशः । इत्यन्ये । इति
भरतः ॥ तत्पर्य्यायः । निकुञ्जः । इत्यमरः । २ । ३ । ८ ॥
(यथा, पदाङ्कदूते १ ।
"गोपीभर्त्तुर्व्विरहविधुरा काचिदिन्दीवराक्षी
उन्मत्तेव स्खलितकवरी निःश्वसन्ती विशालम् ।
अत्रैवास्ते मुररिपुरिति भ्रान्तिदूतीसहाया
त्यक्त्वा गेहं झटिति यमुना मञ्जुकुञ्जं जगाम" ॥)
हनुः । हस्तिदन्तः । इति मेदिनी ॥

**कुञ्जरः**, पुं, (प्रशस्तः कुञ्जः हनुर्दन्तो वा अस्त्यस्य ।
कुञ्ज + "रप्रकरणे खमुखकुञ्जेभ्यः उपसंख्यानम्" ।
वार्त्तिकं इति रः ।) हस्ती । (यथा, महाभारते
३ । द्वैतवनप्रवेशे २६ । १५ ।
"कुञ्जरस्येव संग्रामे परिगृह्याङ्कुशग्रहम्" ॥)
उत्तरपदे श्रेष्ठवाचकः । यथा पुरुषकुञ्जर इत्यादि ।
इत्यमरः । २ । ८ । ३४ ॥ (सर्पविशेषः । यथा,
महाभारते । ३५ । १५ ।

| | | |
|---|---|---|
| | च भाषा । तत्पर्य्यायः । धूममहिषी २ रतान्ध्री ३ कुहेलिका ४ धूमिका ५ नभोरेणुः ६ । इति त्रिकाण्डशेषः ॥ अस्य गुणाः । रूक्षत्वम् । तमोगुण-प्रायत्वम् । कफपित्तकारित्वञ्च । इति राजवल्लभः ॥ | |

"कुठरः कुञ्जरश्चैव तथा नागः प्रभाकरः" ॥)
केशः । इति मेदिनी ॥ देशभेदः । इति शब्द-
रत्नावली ॥ (पर्व्वतविशेषः ॥ यथा गोः रामायणे
४ । ४१ । ५० ।
"ततः शक्रध्वजाकारः कुञ्जरो नाम पर्व्वतः ।
अगस्त्यभवनं तत्र निर्म्मितं विश्वकर्म्मणा" ॥)

**कुञ्जरपिप्पली**, स्त्री, (कुञ्जरनाम्नी पिप्पली ।) गज-
पिप्पली । इति शब्दमाला ॥ (गजपिप्पलीशब्दे-
ऽस्या विवृतिर्ज्ञेया ॥)

**कुञ्जरक्षारमूलं**, क्ली, (कुञ्जरपिप्पल्या इव क्षारं उग्रं
मूलमस्य ।) मूलकम् । इति राजनिर्घण्टः ॥

**कुञ्जरा**, स्त्री, (कुञ्जः हस्तिदन्त इव पुष्पं अस्त्यस्याः ।
रप्रत्यये अच् तत अजादित्वात् टाप् ।) धातकी ।
धाइफुल इति भाषा । (अस्याः पर्य्याया यथा, --
"धातकी धातुपुष्पी च ताम्रपुष्पी च कुञ्जरा ।
सुभिक्षा बहुपुष्पी च वह्निज्वाला च सा स्मृता" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे । गुणा-
श्चास्या धातकीशब्दे ज्ञातव्याः ॥)
पाटलावृक्षः । इति मेदिनो ॥ (कुञ्जर + टाप् ।)
हस्तिनी । इति शब्दचन्द्रिका ॥

**कुञ्जरारातिः**, पुं, (कुञ्जरस्य अरातिः शत्रुः ।) शरभः
इत्यादि भाषा ॥ शिलाकुट्टम् । पातरभाङ्गा हातुडी
इति भाषा । वृक्षः । इति हेमचन्द्रः ॥ पर्व्वतः ।
इति हारावली ॥ (कुटिले त्रि, यथा, ऋगवेदे
१ । ४६ । ४ । "हविषाजारो अपां पिपर्त्ति
पपुरिर्नरा । पिता कुटस्य चर्षणिः" ॥)

**कुटङ्कः**, पुं, (कुर्गृहभूमिः टङ्क्यते आच्छाद्यतेऽनेन ।
कु + टकि आच्छादने । करणे घञ् ।) गृहाच्छाद-
नम् । इति शब्दमाला ॥ चाल इति ख्यातः ॥

**कुटङ्गकः**, पुं, (कुटस्याङ्गमिव । शकन्ध्वादित्वात् साधुः ।)
वृक्षलतागहनम् । छदिः । चाल इति भाषा ।
गृहभेदः । इत्यमरटीकायां मुकुटादयः ॥ कुँडे
इति भाषा ॥

**कुटचः**, पु, (कुटे गिरौ चीयते उत्पद्यते । चि + डः ।)
कुटजवृक्षः । इति शब्दचन्द्रिका ॥ (कुटजशब्दे
गुणादयोऽस्य बोद्धव्याः ॥)

**कुटजः**, पुं, (कुटे पर्व्वते जायते । जन् + डः ।) पुष्प-
वृक्षविशेषः । यस्य फलं इन्द्रयवः । कुडची इति
भाषा ॥ (यथा, माघे ६ । ३५ ।
"कुटजपुष्पपरागकणाः स्फुटं
विदधिरे दधिरेणुविडम्बनाम्" ॥)
तत्पर्य्यायः । शक्रः २ वत्सकः ३ गिरिमल्लिका ४ ।
इत्यमरः । २ । ४ । ६६ ॥ कौटजः ५ । इति
तट्टीका ॥
वृक्षकः ६ शक्रपर्य्यायः ७ । इति रत्नमाला ॥
कुटजः ८ काही ९ कालिङ्गः १० मल्लिकापुष्पः
११ प्राष्टष्यः १२ शत्रुपादपः १३ वरतिक्तः १४
यवफलः १५ संग्राही १६ पाण्डुरद्रुमः १७ प्रावृ-
षेण्यः १८ महागन्धः १९ पाण्डरः २० । इति
शब्दरत्नावली ॥ अपि च ।
"कुटजः कूटजः कौटो वत्सको गिरिमल्लिका ।
कालिङ्गः शत्रुशाखी च मल्लिकापुष्प इत्यपि ॥
इन्द्रो यवफलः प्रोक्तो वृक्षकः पाण्डुरद्रुमः ।
कुटजः कटुको रूक्षो दीपनस्तुवरो हिमः" ॥
इति भावप्रकाशः ॥ अस्य गुणाः । कटुत्वम् ।
इति वाभटे चिकित्सास्थाने १० अध्याये ।
अस्य पर्य्यायाः यथा ।
"कुटन्नटं परं बल्यं मुस्ताभञ्च परीलवम्" ॥
इति वैद्यकरत्नमालायाम् ॥
कोसची मोथा । गुडतजी इति च । इयन्तु वितु-
न्नकनाम्नो वृक्षस्य त्वक् मुस्ताकृतिः ॥
पर्य्यायाश्च-यथा ।
"कुटन्नटं दासपुरं बालेयं परिपेलवम् ।
प्लवगोपुरगोनर्द्दकैवर्त्तीमुस्तकानि च ।
मुस्तावत् पेलवपुटं शुक्राभं स्याद्वितुन्नकम्" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमभागे ॥ गुणा
श्चास्य वितुन्नकशब्दे ज्ञातव्याः ॥)

**कुटन्नटः**, पुं, (कुटन् सन् नटति । नट् + अच् ।)
श्योनाकवृक्षः । इत्यमरः । २ । ४ । ५७ ॥
(अस्य पर्य्याया यथा ।
"श्योनाकः शोषणश्च स्यान्नटकट्वङ्गटुण्टुकः ।
मण्डूकपर्णपत्रोणं शुकनासकुटन्नटाः ।
दीर्घवृन्तो रलुश्चापि पृथुशिम्वः कटम्भरः" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥ श्यो-
नाकशब्देऽस्य गुणाश्च बोद्धव्याः ॥)

**कुटपः**, पुं, (कुटात् विपज्जालात् पाति रक्षति । कुट्
+ पा + कः ।) मुनिः । निष्कुटः । गृहसमीपोपव-
नम् । (कुट + "उषिकुटिदलीति" । उणां ३ ।
१४२ । इति कपन् ।) मानभेदः । स तु कुडव-
परिमाणम् । इति हेमचन्द्रः ॥ कमले क्ली । इति
राजनिर्घण्टः ॥

**कुटरं**, क्ली, (कुट + बाहुलकात् करन् ।) कुठरः
मन्थानदण्डबन्धनस्तम्भः । इत्यमरटीकायां नील-
कण्ठः ॥

**कुटरुः**, पुं, (कुट + "कुटः किञ्च्च" । उणां ४ । ८० ।
इत्यरुः किञ्च ।) वस्त्रगृहम् । इत्युणादिकोषः ॥
कानात् तांबु इति भाषा ॥

इति हेमचन्द्रः ॥ (सिंहः । इति व्युत्पत्तिलब्धोऽर्थः ॥)

**कुञ्जरालुकं**, क्ली, (कुञ्जरसंज्ञकं आलुकम् ।) आलुकविशेषः । हस्त्यालु । इति शब्दचन्द्रिका ॥

**कुञ्जराशनः**, पुं, (कुञ्जरेण अश्यते । अश भोजने + कर्म्मणि ल्युट् ।) अश्वत्थवृक्षः । इत्यमरः । २ । ४ । २० ॥ (अश्वत्थशब्देऽस्य विवरणं ज्ञेयम् ॥)

**कुञ्जरी**, स्त्री, (कुञ्जर + जातित्वात् ङीष् ।) हस्तिनी । इति शब्दचन्द्रिका ॥

**कुञ्जलं**, क्ली, (कुत्सितं जलमिव जलं यत्र । पृषोदरात् साधुः ।) काञ्जिकम् । इत्यमरः । २ । ९ । ३९ ॥

**कुञ्जवल्लरी**, स्त्री, (कुञ्जाकृतिरिव कुञ्जाकारा वा वल्लरी ।) निकुञ्जिकाम्लावृक्षः । इति राजनिर्घण्टः ॥

**कुञ्जिका**, स्त्री, (कुन्ज + ण्वुल् + टाप् इत्वं च ।) कृष्णजीरकः । कुञ्चिका इति क्वचित् पाठः । इति जटाधरः ॥ निकुञ्जिकाम्लावृक्षः । इति राजनिर्घण्टः ॥

**कुट** इ वैकल्ये । इति कविकल्पद्रुमः ॥ (भ्वां--परं--सकं--सेट् । इदित् ।) पञ्चमस्वरी । इ कुण्ट्यते । वैकल्यमिह विकलीकरणम् । कुण्टति जनं शोकः । इति दुर्गादासः ॥

**कुट** शि कौटिल्ये । इति कविकल्पद्रुमः ॥ (तुदां-परं-अकं-सकञ्च-सेट् ।) शि कुटति अकुटीत् चुकोट

तिक्तत्वम् । उष्णत्वम् । कषायत्वम् । अतिसारनाशित्वञ्च । असितस्य तस्य गुणः । रक्तपित्तत्वग्दोषार्शोनाशित्वम् । इति राजनिर्घण्टः ॥ कफनाशकत्वम् । इति राजवल्लभः ॥ (“कुटजत्वक्कृतः क्वाथो घनीभूतः सुशीतलः । लेहितोऽतिविषायुक्तः सर्व्वातीसारनुद्भवेत्” ॥ “कुटजस्य पलं ग्राह्यमष्टभागजले शृतम् । तथैव विपचेद्भूयो दाडिमोदकसंयुतम् ॥ यावच्चैवलसीकाभं शृतं तमुपकल्पयेत् । तस्यार्द्धकर्षतक्रेण पिबेद्रक्तातिसारवान् ॥ अवश्यमरणीयोऽपि मृत्योर्याति न गोचरम्” । इति वैद्यकचक्रपाणिसंग्रहेऽतिसाराधिकारे ॥) अगस्त्यमुनिः । द्रोणाचार्य्यः । इति मेदिनी ॥

**कुटन्नटं**, क्ली, (कुटन् वक्रीभवन् सन् नटति । नट स्पन्दने + पचाद्यच् ।) कैवर्त्तीमुस्तकम् । इत्यमरः । २ । ४ । १३१ ॥ केउटिया मुता इति ख्यातम् । केशुर इति नीचोक्तिः । इति तट्टीका ॥ (अस्य व्यवहारो यत्र तद्यथा । “पद्मकं चन्दनोशीरं पाठं मूर्व्वां कुटन्नटम्” ॥

**कुटरुणा**, स्त्री, (कुटेषु वृक्षेषु अरुणा । शकन्ध्वादित्वात् साधुः ।) त्रिवृता । इति रत्नमाला ॥ तेउडी इति भाषा ॥

**कुटलं**, क्ली, (कुटति आच्छादयत्यनेन । कुट् + करणे कलच् ।) पटलम् । इति हारावली ॥ चाल छाद इति भाषा ॥

**कुटहारिका**, स्त्री, (कुटं कलशं हरति जलाद्यानयनार्थं गृह्णाति या । कुट + हृ + ण्वुल् टाप् इत्वं च ।) दासी । इति हेमचन्द्रः ॥

**कुटिः**, स्त्री, (कुट्यते सञ्चीयते द्रव्यादिभिः असौ । कुट् + “कृ गृ शृ पृ कुटीति” । उणां ४ । १४२ । इति इः स च कित् ।) गृहम् । इत्यमरटीकायां भरतः ॥

**कुटिः**, पुं, (कुठ्यते छिद्यते ऽसौ । कुट छेदने + “कुटि कंप्योर्नलोपश्च” । उणां ४ । १४३ । इति इः । स च कित् । धातोर्नलोपश्च ।) वृक्षः । इति शब्दरत्नावली ॥ शरीरम् । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ (पर्व्वतः । इत्युज्वलदत्तः । ४ । १४३ ॥)

**कुटिचरः**, पुं, (कुटि कुटिलं जले चरतीति । कुटि +

कौटिल्यमिह कुटिलीभावः

कुटिलीकरणञ्च ।

इति दुर्गादासः ॥

**कुट** क ङ प्रतापने । इति कविकल्पद्रुमः ॥ (चुरां-

आत्मं--सकं--सेट् ।) पञ्चमस्वरी । क

ङ कोट-

यते । एषोऽन्यैर्न मन्यते । इति

दुर्गादासः ॥

**कुटः**, पुं क्ली, (कुट + कः ।) कलशः । इत्यमरः ।

२ । ९ । ३२ ॥

**कुटः**, पुं, (कुट् + कः ।) कोटः । इति मेदिनी । गड

चर + टः ।) जलशूकरः । इति
शब्दरत्नावली ॥
शुशुक् इति भाषा ॥

**कुटितं**, त्रि, (कुटं कौटिल्यं जातमस्य । कुट् + इतच्
किच्च ।) कुटिलम् । इत्युणादिकोषः ॥

**कुटिरम्**, क्ली, (कुट्यते निर्म्मीयते यत् । कुट् + इरन् ।)
कुटीरम् । लघुकुटी । इत्यमरटीकायां
मरतः ॥

**कुटिलं**, त्रि, (कुट् वक्रीभावे + बाहुलकात् इलच् ।)
अनृजु । वाँका इति भाषा । तत्पर्य्यायः । अरालम्
२ वृजिनम् ३ जिह्मम् ४ ऊर्म्मिमत् ५ कुञ्चितम् ६
नतम् ७ आविद्धम् ८ भुग्नम् ९ वेल्लितम् १०
वक्रम् ११ । इत्यमरः । ३ । १ । ७१ ॥ मङ्गुरम् १२ ।
इति हेमचन्द्रः ॥ वेङ्कु १३ विनतम् १४ उन्दुरम्
१५ । इति शब्दरत्नावली ॥
(यथा, विष्णुपुराणे १ । ९ । २३ ।
"ज्वलज्जटाकलापस्य भृकुटीकुटिलं मुखम् ।
निरीक्ष्य कस्त्रिभुवने मम यो न गतो भयम्" ॥)
तगरपुष्पे क्ली । इति राजनिर्घण्टः ॥ (अस्य पर्य्याया
यथा, --
"कालानुशारिवा वक्रं तगरं कुटिलं शठम् ।
महोरगं नतं जिह्मं दीनं तगरपादिकम्" ॥
इति वैद्यकरत्नमालायाम् ॥ क्ली,
छन्दोभेदः ॥)

**कुटिला**, स्त्री, (कुटति वक्रं व्रजतीति । कुट् + इलच्
+ स्त्रियां टाप् ।) नदीविशेषः । इति
मेदिनी ॥

**कुटुम्ब**, क ङ धृत्याम् । इति कविकल्पद्रुमः । (चुरां-
आत्मं-अकं-सेट् ।) ओष्ठवर्गशेषोपधः । क ङ
कुटुम्बयते । अयं कैश्चिन्न मन्यते । इति
दुर्गादासः ॥

**कुटुम्बः**, पुं, (कुटुम्बयते पालयति । कुटुम्ब + अच । यद्वा
कुटुम्ब्यते पाल्यते सम्बध्यते वा । कुटुम्ब + कर्म्मणि
घञ् ।) नाम । ज्ञातिः । बान्धवः । सन्ततिः । इति
शब्दरत्नावली ॥ पोष्यवर्गः । इत्यमरमाला ॥
(यथा, मनुः । ११ । २२ ॥
"तस्य भृत्यजनं ज्ञात्वा स्वकुटुम्बान्महीपतिः ।
श्रुतशीले च विज्ञाय वृत्तिं धर्म्यां प्रकल्पयेत्" ॥)

**कुटुम्बव्यापृतः**, त्रि, (कुटुम्बभरणाय व्यापृतः नियुक्तः ।)
कुटुम्बपोषणासक्तः । तत्पर्य्यायः । अभ्यागारिकः २
उपाधिः ३ । इत्यमरः । ३ । १ । ११ ॥ (कुटुम्बेन
पुत्त्रदारादिपोष्यवर्गेण व्यापृतः संयुक्तः । बहु-
परिवारविशिष्टः पुरुषः ॥)

**कुटुम्बिनी**, स्त्री, (कुटुम्बः अतिशयेन अस्त्यस्याः ।
अस्त्यर्थे इनिः । ततो ङीप् ।) कुटुम्बविशिष्टा ।
पतिपुत्त्रदुहित्रादिमती प्रतिष्ठिता स्त्री । तत्प-
र्य्यायः । पुरन्ध्री २ । इत्यमरः । २ । ६ । ६ ॥
पुरन्ध्रिः ३ । इति भरतः ॥ पुरन्ध्रिका ४ । इति
शब्दरत्नावली ॥ (यथा रघुवंशे । ८ । ८६ ।

"अपशोकमनाः कुटुम्बिनीमनुगृह्णीष्व निवा-

पदत्तिभिः" ॥) क्षुद्रक्षुपविषेषः । तत्पर्य्यायः ।
पयस्या २ क्षीरिणी ३ जलकामुका ४ वक्रशल्या
५ दुराधर्षा ६ क्रूरकर्म्मा ७ सिरिण्टिका ८
शीता ९ प्रहरकुटुवी १० शीतला ११ जलेरुहा
१२ । अस्या गुणाः । मधुरत्वम् । ग्राहित्वम् ।
कफपित्तव्रणरक्तदोषकण्डूनाशित्वम् ।
रसायत्वञ्च ।
इति राजनिर्घण्टः ॥

**कुटुम्बी**, [न्] पुं, (कुटुम्बः अस्त्यस्य । अस्त्यर्थे इनिः ।)

क्षेपश्चैतद्दुष्टमुद्दिष्टमेव" ॥
उदाहरणं यथा ।
"एकविंशतियुतं शतद्वयं
यद्गुणं गुणकपञ्चषष्टियुक् ।
पञ्चवर्जितशतद्वयोद्धृतं
शुद्धिमेति गुणकं वदाशु तम्" ॥
इति लीलावती ॥ (कुट्टयति उपलदन्तादिमिर्भि-
नत्ति छिनत्ति चूर्णयति वा । कुट्ट छेदे + ण्वुल् ।
छेदके, त्रि । यथा, याज्ञवल्क्यः । ३ । ४९ ।
"दन्तोलूखलिकः कालपक्वाशी
वाश्मकुट्टकः" ॥)

**कुट्टनं**, क्ली, (कुट्टते इति । कुट्ट छेदने + भावे ल्युट् ।)
छेदनम् । कोटा इति भाषा । कुत्सनम् । प्रता-
पणम् ॥

**कुट्टनी**, स्त्री, (कुट्टयति छिनत्ति नाशयति स्त्रीणां
कुलमनया । कुट्ट + स्वार्थे णिच् ततः ल्युट् ङीप् ।
यद्वा कुट्ट्यते छिद्यते स्त्रीणां कुलं अनया । कुट्ट
छेदने + करणे ल्युट् ङीप् च ।) पुरुषेण सह
परस्त्रीयोगकर्त्री । कुट्नी इति भाषा । तत्प-
र्य्यायः । शम्भली २ । इत्यमरः । २ । ६ । १९ ॥
कुटुनी ३ सम्भली ४ । इति तट्टीका ॥ माधवी
५ रङ्गमाता ६ अर्ज्जुनी ७ । इति जटाधरः ॥
कुम्भदासी ८ गणेरुका ९ । इति शब्दरत्ना-
वली ॥ (यथा, हितोपदेशे । १ । २४३ ।
"तदालिङ्गनमवलोक्य समीपवर्त्तिनीं कुट्टन्यचि-
न्तयत्" ॥)

**कुट्टमितं**, क्ली, स्त्रीणां दशधाशृङ्गारचेष्टान्तर्गत-

सरस्वती नदी । स्पृक्कानामगन्धद्रव्यम् । इति रा-
जनिर्घण्टः ॥ (राधिकाभर्तृभगिनी ॥ त्रि, अस-
रलम् ॥)

**कुटी**, स्त्री पुं, (कुटि + वा ङीप् ।) कुटः । गृहम् ।

इत्यमरः । २ । २ । ६ ॥ (यथा मनुः । ११ । ७२ ।
“ब्रह्महा द्वादशसमाः कुटीं कृत्वा वने
वसेत्” ॥)

**कुटी**, स्त्री, कुम्भदासी । कुटिनी इति भाषा ॥ मुरा-

नामगन्धद्रव्यम् । चित्रगुच्छः । इति
मेदिनी ॥

**कुटीचकः**, पुं, (कुट्या क्लेशेन पुत्रान्नेन चकते तृप्नोति ।

कुटी + चक् + अच् ।) पुत्रान्नजीवी । तत्पर्य्यायः ।
पुत्रान्नादः २ । इति त्रिकाण्डशेषः ॥ (कुट्यां
पर्णकुटीरे चकते तृप्नोति वसतीति । सन्न्यासि-
भेदः । स च कर्म्मनिष्ठः । यथा -- महाभारते
१३ । १४ अध्याये ।
“चतुर्व्विधा भिक्षवस्ते कुटीचकबहूदकौ ।
हंसः परमहंसश्च योऽत्र पश्चात् स उत्तमः” ॥)

**कुटीचरकः**, पुं, (कुट्यां चरति । कुटी + चर + टः

स्वार्थे कन् ।) यतिविशेषः । इति
यतिधर्म्मसंग्रहः ॥

**कुटीरः**, पुं, (कुटी + स्वल्पार्थे रः ।) क्षुद्रगृहम् ।

कुँडे इति भाषा । तत्पर्य्यायः । स्वल्पवेश्म २ ।
इति जटाधरः ॥ (यथा, गीतगोविन्दे । १० । २८ ।
“ललित-लवङ्ग-लता-परिशीलन-कोमल-मलय-
समीरे । मधुकर-निकर-करम्बित-कोकिल-कूजि-
त-कुञ्ज-कुटीरे” ॥)

गार्हस्थ्याश्रमविशिष्टः । तत्पर्य्यायः । गृही २
गृहमेधी ३ गृहस्थः ४ । इति जटाधरः ॥ (यथा,
कुमारे । ६ । ८ । ५ ।
“शैलः सम्पूर्णकामोऽपि मेनामुखमुदैक्षत ।
प्रायेण गृहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः” ॥)

**कुटुम्बी** [न्], त्रि, (कुटुम्बः पोष्यवर्गो ऽस्त्यस्य अस्त्यर्थे

इनिः ।) कृषकः । इति शब्दचन्द्रिका ॥ कुटुम्ब-
विशिष्टश्च ॥

**कुटुम्बौकः**, [स्] क्ली, (कुटुम्बानां ज्ञातिबान्धवानां

दार-पुत्रादीनां ओकः वासस्थानम् ।) कुटुम्बवास-
स्थानम् । इति जटाधरः ॥

**कुट्ट**, क कुत्सायाम् । छिदि । इति कविकल्पद्रुमः ॥

(चुरां-परं-सकं-सेट् ।) क कुट्टयति । इति दुर्गा-
दासः ॥

**कुट्ट**, क ङ प्रतापने । इति कविकल्पद्रुमः ॥ (चुरां--

आत्मं--सकं--सेट् ।) पञ्चमस्वरी । टद्वयान्तः । क ङ
कुट्टयते । एषोऽन्यैर्न मन्यते । इति दुर्गादासः ॥

**कुट्टकः**, पुं, (कुट्टकः भाज्यभाजकादिगणनं यत्र ।)

अङ्कविशेषः । तस्य सूत्रं यथा,
“भाज्यो हारः क्षेपकश्चापवर्त्यः
केनाप्यादौ संभवेत् कुट्टकार्थम् ।
येन च्छिन्नौ भाज्यहारौ न तेन

चेष्टाविशेषः । स्त्रीणां स्वाभाविकदशालङ्कारान्त-
र्गतमिदम् । इति हेमचन्द्रः ॥ तस्य लक्षणं यथा,
साहित्यदर्पणे । ३ । १११ ।
“केशस्तनाधरादीनां यत्तु हर्षोऽपि सम्भ्रमात् ।
प्राहुः कुट्टमितं नाम शिरःकरविधूननम्” ॥

**कुट्टारं**, क्ली, (कुट्ट + आरन् ।) केवलम् । रतिः । इति

मेदिनी ॥ कम्बलम् । इति विश्वः ॥

**कुट्टारः**, पु, (कुट्टते भिद्यते हन्यते वाऽस्मिन् पतने-

नेति शेषः । कुट्ट + आरन् ।) पर्व्वतः । इति त्रि-
काण्डशेषः ॥

**कुट्टिमः**, पुं क्ली, (कुट्ट + भावे घञ् । तेन निर्वृत्तः

निष्पन्नः इत्यर्थे इमप् ।) मणिभूः । इत्यमर-
टीकायां भरतः ॥ (यथा रघुः ११ । ९ ।
“मम्लतुर्न मणिकुट्टिमोचितौ
मातृपार्श्वपरिवर्त्तिनाविव” ॥)
सुधाघटितभूतलम् । इति सुभूतिः ॥ कुटीरः ।
इति मथुरानाथः ॥ दाडिमवृक्षः । इति राज-
निर्घण्टः ॥

**कुट्टिहारिका**, स्त्री, (कुट्टते यत् । कुट्ट + इन् । कुट्टिं

मत्स्यमांसादिकं हरति । कुट्टि + हृ + ण्वुल्टाप्
अत इत्वं च ।) दासी । इति हलायुधः ॥

**कुट्टीरः**, पुं, (कुट्ट्यते ऽस्मिन् । कुट्ट + ईरन् ।) पर्व्वतः ।

इति हारावली ॥

**कुद्मलं**, क्ली, (कुट्टते नारकिभ्यो यन्त्वणा दीयते यत्र ।

कुट + “वृषादित्वात्” । उणां १ । १०८ । इति कलच्
तस्य मुट् च ।) नरकभेदः । इति मेदिनी ॥ यत्र

| | | |
|---|---|---|
| **कुटुङ्गकः**, पुं, (कुटुङ्ग + स्वार्थे कन् ।) वृक्षलतागहनम् । पिटः । डोल इति भाषा । छदिः । चाल इति भाषा । इत्यमरटीकायां भरतः ॥ वृक्षलता । गृहभेदः । इत्यमरटीकासारसुन्दरी ॥ कुँडे इति भाषा ॥ | | |

रज्जुभिः पीडनम् । इति मनुः ॥

**कुड्मलः**, पुं, क्ली, (कुटति ईषत् विकासोन्मुखीभवतीति ।

कुटि + "वृषादिभ्यश्चित्" । उणां १ । १०८ । इति क्मलच् ।) विकासोन्मुखप्रौढकलिका । ईषद्विक-सिता कलिका । तत्पर्य्यायः । मुकुलः २ । इत्यमरः ॥ कोषः ३ । इति जटाधरः ॥ (यथा, माघे । २ । ७ ।
"द्योतितान्तः सभैः कुन्दकुड्मलाग्रदतः स्मितैः" ॥)

**कुठ** छिदि । सौत्रधातुरयम् । इति कविकल्पद्रुमः ॥

(भ्वां-परं-सकं-सेट् ।) कुठेरः कुठारः कुठाकुः । इति दुर्गादासः ॥

**कुठ** इ खोटने । वैकल्ये । आलस्ये । इति कविकल्प-

द्रुमः ॥ (भ्वां-परं-अकं-सेट्-इदित् ।) पञ्चमस्वरी । कर्म्मणि इ कुण्ठ्यते । वैकल्यं विकलीभावः । आलस्यं मन्दीभावः । कुण्ठति खञ्जः शोकार्त्तो वृद्धो वा । इति दुर्गादासः ॥

**कुठः**, पुं, (कुठ्यते छिद्यतेऽसौ । कुठ छेदने + कर्म्मणि

घञर्थे कः ।) वृक्षः । इत्यमरः । २ । ४ । ५ ॥

**कुठरः**, पुं, (कुट + बाहुलकात् करन् ।) मन्थान-

दण्डबन्धनार्थस्तम्भः । तत्पर्य्यायः । दण्डविष्कम्भः २ । इत्यमरः । २ । ९ । ७४ ॥ (नागविशेषः । (यथा, महाभारते १ । ३५ । १५ ।
"कुठरः कुञ्जरश्चैव तथा नागः प्रभाकरः" ॥

**कुठाकुः**, पुं, (कोठति आहन्ति भिनत्ति काष्ठम् ।

कुठ छेंदने + आकुन् किच्च ।) पक्षिविशेषः ।

"दाडिमान् करबीरांश्च
अशोकांस्तिलकांस्तथा ।
अङ्कोटांश्च कुठेरांश्च नीलाशोकांश्च सर्व्वशः" ॥)

**कुठेरकः**, पुं, (कुठेर इव कायति प्रकाशते । कै + कः ।)

पर्णासः । इत्यमरः । २ । ४ । ७९ ॥ तुलसी इति ख्यातः । श्वेतच्छदः । इति शब्दचन्द्रिका ॥ श्वेततुलसी वाबुइ तुलसी इति च ख्यातः । (अस्य पर्य्यायाः ।
"अर्ज्जुकः श्वेतपर्णासो गन्धपुत्त्रः कुठेरकः" ।
इति वैद्यकरत्नमालायाम् । वर्व्वरी । एतदर्थे-ऽस्य पर्य्याया यथा, -- मावप्रकाशस्य पूर्ब्बखण्डे प्रथमभागे ।
"वर्व्वरी तुवरीतुङ्गी खरपुष्पाजगन्धिका ।
पर्णाशस्तत्र कृष्णे तु कठिल्लककुठेरकौ" ॥
गुणाश्चास्य वर्व्वरीशब्दे ज्ञेयाः ॥) नन्दीवृक्षः । इति राजनिर्घण्टः ॥

**कुठेरजः**, पुं, (कुठेर इव जायते । जन् + डः ।) कुठे-

रकः । श्वेततुलसी । इति शब्दरत्नावली ॥

**कुठेरुः**, पुं, (कुठ + एरुक् ।) चामरवातः । चाम-

रेर वातास इति माषा । तत्पर्य्यायः । मन्थरुः २ । इति त्रिकाण्डशेषः ॥

**कुड** शि बाल्ये । अदने । इति कविकल्पद्रुमः ॥ (तुदां --

परं-अकं-सकञ्च-सेट् ।) एतदाद्याश्चत्वारः पञ्चम-स्वरिणः । बाल्यमिह शिशुव्यापारः । शि कुडति अकुडीत् सिताभिः शिशुः । इति दुर्गादासः ॥

**कुड** इ वैकल्ये । इति कविकल्पद्रुमः ॥ (भ्वां-परं-

सकं-सेत्-इदित् ।) इ कर्म्मणि कुण्ड्यते । कुण्डति जनं दैवः विकलं करोतीत्यर्थः । इति दुर्गादासः ॥

बाहुलकात् शः तत इट् ।) मत्स्यविशेषः । कुडचि माच् इति भाषा । अस्य गुणाः । मधुरत्वम् । हृद्यत्वम् । कषायत्वम् । अग्निदीपनत्वम् । लघुत्वम् । स्निग्धत्वम् । वातरोगे पथ्यत्वम् । रोचनत्वम् । बलकोष्ठबन्धकारित्वञ्च । इति राजवल्लभः ॥

**कुड्मलः**, पुं, (कुड बाल्ये + "वृषादिभ्यश्चित्" ।

उणां १ । १०८ । इति कलच् कुडेरपि । मुट् च ।) कुड्मलः । इत्यमरटीका सिद्धान्तकौमुदी च ॥

**कुड्यं**, क्ली, (कुडि + तत्र साधुरिति यत् । कौते-

रघ्न्यादित्वात् यक् डुगागमश्च इत्युज्ज्वलदत्तादयः ।) भित्तिः । भित् देयाल इत्यादि भाषा । इत्यमरः । २ । २ । ४ ॥ (यथा, महाभारते १ । १४५ । १० ।
"सर्पिस्तैलवसाभिश्च लाक्षया चाप्यनल्पया ।
मृत्तिकां मिश्रयित्वा त्वं लेपं कुड्येषु दापय" ॥)
विलेपनम् । इति मेदिनी ॥ कौतूहलम् । इति शब्दरत्नावली ॥

**कुड्यकं**, क्ली, (कुड्य + स्वार्थे कन् ।) कुड्यम् । भित्तिः ।

इति शब्दरत्नावली ॥

**कुड्यच्छेदी**, [न्] पुं, (कुड्यं भित्तिं छिनत्ति विदार-

यतीति । कुड्य + छिद् + णिनिः ।) चौरविशेषः । इति शब्दरत्नावली ॥ सिँदेल चोर इति भाषा ॥

**कुड्यच्छेद्यं**, क्ली, (कुड्यस्थितं कुड्यस्य वा छेद्यम् ।)

इत्युणादिकोषः । काट्ठोक्रा इति भाषा ॥

**कुठाटङ्कः**, पुं स्त्री, (कुठारष्टङ्क इव । पृषोदरादित्वात् रलोपे साधुः ।) कुठारः । इति जटाधरः ॥

**कुठारः**, पुं स्त्री, (कोठतीत्यनेन । कुठ + करणे आरन् ।) अस्त्रविशेषः । कुडाल इति भाषा । तत्पर्य्यायः । सुधितिः २ परशुः ३ परश्वधः ४ । इत्यमरः । २ । ८ । ९२ ॥ कुठारी ५ पर्शुः ६ परश्वधः ७ पर्श्वधः ८ । इति तट्टीका ॥ कुठाटङ्कः ९ द्रुघणः १० । इति जटाधरः ॥ (यथा, श्रीमद्भागवते ३ । २५ । १२ ।
"तं त्वागताहं शरणं शरण्यं
स्वभृत्यसंसारतरोः कुठारम्" ॥)

**कुठारः**, पुं, (कुठ्यते छिद्यतेऽसौ । कुठ + कर्म्मणि आरन् ।) वृक्षः । इति शब्दरत्नावली ॥

**कुठारुः**, पुं, (कुठ + आरु ।) वृक्षः । वानरः । इति मेदिनी ॥ शस्त्रकारः । इति शब्दरत्नावली ॥

**कुठिः**, पुं, (कुठ + "कुठिकंप्योर्नलोपश्च" । उणां ४ । १४३ । इति इन् किच्च ।) पर्व्वतः । वृक्षः । इत्युणादिकोषः ॥

**कुठिकः**, पुं, (कुठ + इकन् किच्च ।) कुष्ठम् । इति हारावली । कुड् इति भाषा ॥

**कुठेरः**, पुं, (कुण्ठति तापयति वैकल्यं करोति वा । कुठि खोठने वैकल्ये आलस्ये च + "पतिकठि- कुठीति" । उणां १ । ५९ । इति एरक् बाहुल- कात् नुमोऽभावः ।) अग्निः । इति शब्दमाला ॥ तुलसी । इत्युणादिकोषः ॥ अर्जकः । इति राज- निर्घण्टः ॥ वर्व्वरी इति ख्यातः । (यथा, गोः रामायणे ३ । १७ । १० ।

**कुड** इ ङ दाहे । इति कविकल्पद्रुमः । (भ्वां-आत्मं- सकं-सेट्-इदित् ।) इ कर्म्मणि कुण्ड्यते । ङ कुण्डते इति दुर्गादासः ॥

**कुड** इ क रक्षे । इति कविकल्पद्रुमः ॥ (चुरां-परं- सकं-सेट्-इदित् ।) इ क कुण्डयति । इति दुर्गा- दासः ॥

**कुडपः**, पुं, (कुड + कपन् ।) कुडवपरिमाणम् । इत्थ- मरटीकायां स्वामी ॥

**कुडवः**, पुं, (कुण्डति परिमाति अनेनास्मिन् वा । कुड + कवन् ।) परिमाणविशेषः । (यथा, आर्य्या- सप्तशत्थाम् । १३० । "उपनीय कमलकुडवं कथयति समयश्चिकित्सके हलिकः" ॥) स तु प्रस्थ- चतुर्थांशः । इति लीलावती ॥ वैद्यकमते विप्र- सृतपरिमाणम् । द्वात्रिंशत्तोलकमिति यावत् । तत्पर्य्यायः । अञ्जलिः २ अष्टमारम् ३ शरावार्द्धम् ४ । इति परिभाषा ॥ (यदुक्तं वैद्यकपरिभाषायाम् ॥
"रत्तिकादिषु मानेषु यावन्न कुडवो भवेत् ।
शुष्कद्रवार्द्रयोश्चापि तुल्यमानं प्रकीर्त्तितम्" ॥
"प्रसृतिभ्यामञ्जलिः स्यात् कुडवोऽर्द्धशरावकः ॥
अष्टमानञ्च स ज्ञेयः" । इति शार्ङ्गधरस्य पूर्ब्ब- खण्डे । १ अः ॥)

**कुडहुञ्ची**, स्त्री, (कुडी क्षुद्रा हुञ्ची कारवेल्ली ।) क्षुद्र- कारवेल्ली । इति राजनिर्घण्टः ॥

**कुडिः**, पुं, (कुण्ड्यते दह्यते इति । कुडि दाहे + इन् ।) शरीरम् । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**कुडिशः**, पुं, (कुड्यते भक्ष्यतेऽसौ । कुड अदने + खानिकम् । इति त्रिकाण्डशेषः । देयालेर गर्त्त इति भाषा ॥

**कुड्यमत्सी**, स्त्री, (कुड्ये मस्ती इव । मत्स्य + जाति- त्वात् ङीष् यलोपः ।) गृहगोधिका । इति शब्द- रत्नावली ॥

**कुड्यमत्स्यः**, पुं, (कुड्ये मत्स्य इव ।) गृहगोधिका । इति हेमचन्द्रः ॥

**कुण** त् क आभाषे । मन्त्रे । इति कविकल्पद्रमः ॥ (अदन्त-चुरां-परं-सकं-सेट् ।) ह्रस्वो मूर्द्धन्योपधः । कुणयति । मन्त्रोऽभिमुखीकरणम् । गुप्तोक्तिरि- त्येके । इति दुर्गादासः ॥

**कुण** श उपकरणे । शब्दे । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-सेट् ।) उपकरणं दानादिना पोषणम् । श कुणति दीनं दयालुः । कोणिता । इति दुर्गादासः ॥

**कुणञ्जरः**, पुं, (कुणं भुक्तान्नादिकं जरयति । कुण + जॄ + बाहुलकात् खच् ।) वृक्षविशेषः । वनवेतुया इति भाषा । तत्पर्य्यायः । कुणञ्जा २ कृणञ्जः ३ अरण्यवास्तूकः ४ । अस्य गुणाः । मधुरत्वम् । रुचिकारित्वम् । दीपनत्वम् । पाचनत्वम् । हित- त्वञ्च । एतच्छाकगुणाः । त्रिदोषनाशित्वम् । मधुरत्वम् । रुचिकारित्वम् । दीपनत्वम् । ईष- त्कषायत्वम् । संग्राहित्वम् । पित्तश्लेष्महरत्वम् । लघुत्वञ्च । इति राजनिर्घण्टः ॥

**कुणपः**, पुं, (क्वणेः + कपन् सम्प्रसारणञ्च ।) शवम् । मृतशरीरम् । इत्यमरः । २ । ८ । ११८ ॥ (यथा,

| | | महाभारते १४ । ६ । २२-२३ ।<br>नारद उवाच ।<br>“उन्मत्तवेशं बिभ्रत् स चंक्रमीति यथासुखम्<br>वाराणस्यां महाराज ! दर्शनेप्सुर्महेश्वरम् ॥ |
|---|---|---|

तस्या द्वारं समासाद्य न्यसेथाः कुणपं क्वचित् ।
तं दृष्ट्वा यो निवर्त्तेत स सम्बर्त्तो महीपते !” ॥)

एतदर्थे नपुंसकलिङ्गोऽपीति नयनानन्दः ॥ पूति-

गन्धिः । इति मेदिनी ॥ अस्त्रविशेषः । वडशा
इति भाषा । इत्यमरटीकायां रायमुकुटः ॥ पूति-
गन्धौ त्रिलिङ्गोऽपि यथा, --
“कुणपं मस्तुलुङ्गाभं सुगन्धं क्वथितं बहु” ॥
इति माधवकरः ॥ (रोगविशेषः । यथा ॥ “कुण-
पञ्चास्रपित्ताभ्याम्” । इति शार्ङ्गधरे मध्यखण्डे ।
१ अध्यायः ॥)

**कुणपी**, स्त्री, (कुणप + गौरादित्वात् ङीष् ।) विट्-

शारिका । इति मेदिनी ॥ गयेशालिक इति
भाषा ॥

**कुणलः**, पुं, (क्वण + “पीयुक्वणिभ्यामिति” उणां ३ ।

७६ । इति । कालन् । सम्प्रसारणञ्च ।) देशभेदः ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ (अशोक-
राजपुत्रेष्वेकः । स च बौद्धः ॥)

**कुणिः** पुं, (कुण + इन् ।) तुन्नवृक्षः । इत्यमरमेदिनी-

करौ ॥ तुँद् इति भाषा । (शरीरस्य स्थानविशेषः ।
“कक्षाक्षमध्ये कक्षाधृक् कुणित्वं तत्र जायते” ॥
इति वाभटे शारीरस्थाने ४ अध्याये ॥)

**कुणिः**, त्रि, (कुण + इन् ।) कुकरः । इति मेदिनी ॥

होमीयाग्न्यालयः । तत्तु प्रायश्चतुर्हस्तमितं भवति
तस्य विधिः । तत्र मत्स्यपुराणम् ।
“प्रागुदक्प्लवनां भूमिं कारयेद्यत्नतो नरः” ॥
प्रागुदक्प्लवनां पूर्ब्बनीचां उत्तरनीचां वा ॥
तत्र वशिष्ठपञ्चरात्रे विज्ञानललितायाञ्च ।
“सर्व्वाधिकारिकं कुण्डं चतुरस्रन्तु सर्व्वदम्” ।
चतुरस्रं चतुष्कोणम् ॥ भविष्योत्तरम् ।
“सहस्रे त्वथ होतव्ये कुर्य्यात् कुण्डं करात्मकम् ।
द्विहस्तमयुते तच्च लक्षहोमे चतुष्करम्” ॥
द्विहस्तादिके यामलः ।
“पूर्ब्बपूर्ब्बस्य कुण्डस्य कोणसूत्रेण निर्म्मितम् ।
उत्तरोत्तरकुण्डानां मानं तत्परिकीर्त्तितम्” ॥
पूर्ब्बपूर्ब्बस्य कुण्डस्य हस्तद्विहस्तादिमितस्य कोण-
सूत्रेण ईशानान्निरृतिकोणदत्तसूत्रेणपरिमितं
यन्मानं उत्तरोत्तरकुण्डानां तदेव पारिभाषिकं
द्विहस्तादिमानं न तु प्रकृतहस्तद्वैगुण्यादिमितम् ।
तथात्वे द्विहस्तादिमितस्य चतुर्हस्तपरिमाणा-
पत्तेः । कृषकस्य भूमेः परिमाणवत् ॥
वशिष्ठपञ्चरात्रे ।
“यावान् कुण्डस्य विस्तारः खननं तावदिष्यते ।
हस्तैके मेखलास्तिस्रो वेदाग्निनयनाङ्गुलाः ॥
कुण्डे द्विहस्ते ता ज्ञेया रसवेदगुणाङ्गुलाः ।
चतुर्हस्ते तु कुण्डे ता वसुतर्कयुगाङ्गुलाः” ॥
मेखला ब्रह्मचारिमेखलावत् कुण्डवेष्टिता मृद्ध-
टिताः । ताश्च खातदेशाद्वाह्ये एकाङ्गुलरूपं कण्ठं
परित्यज्य उच्छ्रायेण विस्तारेण चेत्यादिक्रमेण
वेदाद्यङ्गुलाः । एतद्विपरीतास्तन्त्रान्तरोक्ताव्यव-
हारविरुद्धाः । वेदाश्चत्वारः अग्नयस्त्रयः नयने द्वे
रसाः षट् गुणास्त्रयः वसुतर्कयुगानि अष्टषट्-
चत्वारि ॥ पिङ्गलामते ।
“खातादेकाङ्गुलं त्यक्त्वा मेखलानां विधिर्भवेत्” ॥
एककुण्डस्य पश्चिमदिक्कर्त्तव्यतामाहमहादा-
ननिर्णये वशिष्ठपञ्चरात्रम् ।
“भुक्तौ मुक्तौ तथा पुष्टौ जीर्णोद्धारे तथैव च ।
सदा होमे सदा शान्तावेकं वारुणदिग्गतम्” ॥
शारदातिलके ।
“होतुरग्र योनिरासामुपर्य्यश्वत्थपत्रवत् ।
मुष्ट्यरत्न्येकहस्तानां कुण्डानां योनिरीरिता ॥
न्यसेत् परिधिमन्यश्चेदुदगग्रः स पूर्ब्बतः” ॥

अव्रणाः छिद्ररहिताः अभितोऽग्नेः पार्श्वद्वये

दक्षिणतः उत्तरतः पश्चात् पश्चिमे उदगग्रं उत्तरा-
ग्रम् ॥ त्रैलोक्यसारेऽपि ।
“कुम्भद्वयसमायुक्ता अश्वत्थदलवन्नता ।
अङ्गुष्ठमेखलायुक्ता मध्ये त्वाज्यस्थितिर्य्यथा” ॥

कुम्भद्वयसमायुक्ता गजकुम्भाकारमूलदेशयुक्ता

नता नम्रा
अङ्गुष्ठमितमृद्घटितमेखलावेष्टनयुक्ता
तथात्वे हस्तगलिताज्यस्थित्या कुण्डे तत्पातो भव-
तीत्यर्थः ॥ पञ्चरात्रे ।
“कल्पयेदन्तरे नाभिं कुण्डस्याम्बुजसन्निमाम् ।
मुष्ट्यरत्न्येकहस्तानां नाभिरुत्सेधविस्तृता ॥
नेत्रवेदाङ्गुलोपेता कुण्डेष्वन्येषु वर्द्धयेत् ।
यवद्वयक्रमेणैव नाभिं पृथगुदारधीः ॥
नाभिक्षेत्रं त्रिधा कृत्वा मध्ये कुर्व्वीत कर्णिकाम् ।
वहिरंशद्वये नाष्टौ पत्राणि परिकल्पयेत्” ॥ * ॥

तत्र कुण्डस्य दोषानाह विश्वकर्म्मा ।

“खाताधिके भवेद्रोगी हीने धेनुधनक्षयः ।
वक्रकुण्डेच सन्तापो मरणं छिन्नमेखले ॥
मेखलारहिते शोको ह्यधिके वित्तसंक्षयः ।
भार्य्याविनाशकं कुण्डं प्रोक्तं योन्या विना कृतम् ॥
अपत्यध्वंसनं प्रोक्तं कुण्डं यत् कण्ठवर्जितम्” ॥
अत एव वशिष्ठसंहितायाम् ।
“तस्मात् सम्यक् परीक्ष्यैवं कर्त्तव्यं शुभवेदिकम् ।

कोपा इति भाषा ॥ (यथा, सुश्रुते ।
"गर्भवातप्रकोपेण दोहदे चावमानिते ।
भवेत् कुब्जः कुणिः पङ्गुः" इति ॥)

**कुणिन्दः**, पुं, (कुण शब्दे + "कुणिपुल्योः किन्दच्" ।
उणां ४ । ८५ । इति किन्दच् ।) शब्दः । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

**कुण्टकः**, त्रि, (कुटि + ण्वुल् ।) स्थूलः । इति शब्द-
माला । मोटा इति भाषा ॥

**कुण्ठः**, त्रि, (कुण्ठति क्रियासु मन्दीभूतो भवति ।
कुठि + अच् ।) क्रियासु मन्दः । अकर्म्मण्यः । इत्य-
मरः । २ । १ । १७ ॥
(यथा, शङ्करकविकृते विष्णुस्तोत्रे ३४ ।
"वैकुण्ठीये ऽत्रकण्ठे वसतु मम मतिः कुण्ठभावं
विहाय" ॥) मूर्खः । इति मेदिनी ॥

**कुण्ठकः**, त्रि, (कुण्ठति कुण्ठयति वा आत्मानं जडी-
भूतं करोति । कुठि + ण्वुल् ।) मूर्खः । इति शब्द-
माला ॥

**कुण्ठितः**, त्रि, (कुठि + कर्त्तरि क्तः ।) सङ्कुचितः ।
यथा । "दशवदनभुजानां कुण्ठिता यत्र शक्तिः" ॥
इति महानाटकम् ॥

**कुण्डं**, क्ली, (कुणतीति । "ञमन्तात् डः" । उणां
१ । ११३ । इति डः ।) मानभेदः । (कुण्ड्यते
रक्ष्यते जलं यत्र । कुडि + अधिकरणे अप् ।)
देवजलाशयः । इति मेदिनी ॥
जलाधारविशेषः । चौवाच्चा इति भाषा ॥
तज्जलगुणाः । अग्निकफकारित्वम् । रूक्षत्वम् ।
षट्चतुर्द्व्यङ्गुलायामविस्तारोन्नतिशालिनी ।
एकाङ्गुलन्तु योन्यग्रं कुर्य्यादीषदधोमुखम् ॥
एकैकाङ्गुलतो योनिं कुण्डेष्वन्येषु वर्द्धयेत् ।
यवद्वयक्रमेणैव योन्यग्रमपि वर्द्धयेत् ॥
स्थलादारभ्य नालं स्याद्योन्या मध्ये सरन्ध्रकम्" ॥
आसां मेखलानां अश्वत्थपत्रवदित्यन्ये
चतुरङ्गुल-
विस्तृतमूलात् यथोक्तक्रमेण एकाङ्गुलान्तःसंकु-
चितविस्तारा ॥ यामले ।
"नालमेखलयोर्म्मध्ये परिधेः स्थापनाय च ।
रन्ध्रं कुर्य्यात्तथा विद्वान् द्वितीयमेखलोपरि" ॥
परिधीं स्तद्विन्यासानाह छन्दोगपरिशिष्टे ।
"बाहुमात्राः परिधय ऋजवः सत्वचोऽव्रणाः ।
त्रयो भवन्त्यशीर्णाग्रा एकेषान्तु चतुर्द्दिशम् ॥
प्रागग्रावभितः पश्चादुदगग्रमथापरम् ।
हस्तमात्रं स्थण्डिलं वा संक्षिप्ते होमकर्म्मणि" ॥
इति तिथ्यादितत्त्वम् ॥

**कुण्डं**, क्ली स्त्री, (कुण्ड्यते रक्ष्यते मक्ष्यादि अस्मिन् ।
कुडि रक्षणे + अच् ।) स्थाली । इत्यमरभरतौ ।

**कुण्डः**, पुं, (कुण्ड्यते दह्यते कुलं अनेन । कुडि-दाहे
+ करणे-घञ् ।) अमृते भर्त्तरि जारजः । जीवति
भर्त्तरि उपपतिजातः । इत्यमरः । २ । ६ । ३६ ॥
स्वामी वाँचिया थाकिते उपपतिजात विजन्म
सन्तान इति भाषा ॥ (यथा मनुः ३ । १७४ ।
"पत्यौ जीवति कुण्डः स्यान्मृते भर्त्तरि गोलकः" ॥
सर्पविशेषः । यथा महाभारते । १ । १२३ । ६८ ।
"कच्छपश्चाथ कुण्डश्च तक्षकश्च महोरगः" ॥)

**कुण्डकीटः**, पुं, (कुण्डे नरककुण्डे स्थितः कीट इव
चार्व्वाकसंसृष्टत्वात् ।) चार्व्वाकवचनाभिज्ञपुरुषः ।
पतितब्राह्मणीपुत्त्रः ॥ (कुण्डे योनिकुण्डे कीट-
इव ।) दासीकामुकः । इति मेदिनी ॥

**कुण्डगोलकं**, क्ली, (कुण्डे पात्रविशेषे गोलं गोलाकारं
कं जलं अत्र ।) काञ्जिकम् । इति हेमचन्द्रः ॥
(काञ्जी इति भाषा ॥ * ॥ कुण्डश्च गोलकश्च इति
द्वन्द्वेकृते कुण्डगोलकौ । यथा मनुः । ३ । १७४ ।
"परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ ।
पत्यौ जीवति कुण्डः स्यात् मृते भर्त्तरि गोलकः" ॥)

**कुण्डङ्गः**, पुं, (कुण्डं तदाकारं गच्छति । गम +
बाहुलकात् खः डिच्च ।) कुञ्जम् । वृक्षच्छादि-
तस्थानम् । इति हेमचन्द्रः ॥

| | | |
|---|---|---|
| मधुरत्वम् । लघुत्वञ्च । इति राजनिर्घण्टः ॥ कफा-जनकत्वम् । इति राजवल्लभः ॥ * ॥ (पात्रविशेषः । यथा, रघौ १ । ८४ । “भुवं कोष्णेण कुण्डोध्नी मेध्येनावभृतादपि” ॥) | | **कुण्डपाय्यः**, पुं, (कुण्डैः चमसैः पीयतेऽत्र सोमः । कुण्ड + पा + अधिकरणे यत् युगागमश्च निपात्थते ।) क्रतुः । इति मुग्धबोधम् ॥ |

**कुण्डलं**, क्ली, (कुण्ड्यते रक्ष्यते इति कुडि रक्षायां + वृषादित्वात् कलच् । यद्वा कुण्डं तदाकारं लाति गृह्णातीति । ला + कः ।) स्वनामख्यात-कर्णभूषणम् । (यथा विष्णुध्याने ।
"ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः
केयूरवान् कनककुण्डलवान् किरीटी" ॥)
तत्पर्य्यायः । कर्णवेष्टनम् २ । इत्यमरः । २ । ६ । १०३ ।
पाशः । वलयः । इति मेदिनी ॥ (पुं, कौरव्यकुलज-सर्पविशेषः । यथा महाभारते १ । ५७ । १३ ।
"एरकः कुण्डलो वेणी वेणीस्कन्धः कुमारकः ।
बाहुकः शृङ्गवेरश्च धूर्त्तकः प्रातरातकौ ।
कौरव्यकुलजास्त्वेते प्रविष्टा हव्यवाहनम्" ॥
पुंलिङ्गे ऽस्य रक्तकाञ्चनवाचकता उक्ता । यथा,
वैद्यकरत्नमालायाम् ।
"रक्तपुष्पः कोविदारो युग्मपत्रस्तु कुण्डलः" ॥)

**कुण्डलिनी**, स्त्री, (कुण्डलिन् + स्त्रियां ङीप् ।) कुल-कुण्डलिनी शक्तिः । यथा, --
"ध्यायेत् कुण्डलिनीं सूक्ष्मां
मूलाधारनिवासिनीम् ।
तामिष्टदेवतारूपां सार्द्धत्रिवलयान्विताम् ॥
कोटिसौदामिनीमासां स्वयम्भूलिङ्गवेष्टिनीम् ।
तामुत्थाप्य महादेवीं प्राणमन्त्रेण साधकः ॥
उद्यद्दिनकरोद्योतां यावच्छ्वासं दृढासनः ।
अशेषाशुभशान्त्यर्थं समाहितमनाश्चिरम् ।
तत्प्रभापटलव्याप्तं शरीरमपि चिन्तयेत्" ॥
इति तन्त्रसारः ॥ * ॥
गुडूची । इति राजनिर्घण्टः ॥ मिष्टान्नविशेषः ।
जिलिपी इति भाषा । तस्य पाकप्रकारो यथा ।
"नूतनं घटमानीय तस्यान्तः कुशलो जनः ।

कुण्डलिनी ३ भुजङ्गी ४ शक्तिः ५ ईश्वरी ६ अरु-न्धती ७ ॥) गुडूची । काञ्चनवृक्षः । इति मेदिनी ।
(अस्याः पर्य्याया यथा, --
"कोविदारश्चमरिकः कुद्दालो युगपत्रकः ।
कुण्डलीताम्रपुष्पश्च स्मन्तकः
स्वल्पकेशरी" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे १ भागे ॥)
कपिकच्छुः । सर्पिणीवृक्षः । इति राजनिर्घण्टः ॥

**कुण्डली**, [न्] पुं, (कुण्डलं अस्त्यस्य इति इनिः । कुण्डलाकारेण स्थितिरस्य तथात्वम् ।) सर्पः । इत्य-मरः । १ । ८ । ७ ॥ वरुणः । (कुण्डलं कुण्डलवदा-कारं शरीरे अस्त्यस्य ।) मयूरः । इति मेदिनी ॥
चित्तलमृगः । इत्यजयपालः । (विष्णुः । यथा,
महाभारते १३ । १४९ । ११० ।
"अरौद्रः कुण्डली चक्री
विक्रम्यूर्ज्जितशासनः" ॥)
कुण्डलयुक्ते, त्रि । इति मेदिनी । (यथा गोः रामा-यणे । ३ । ९ । ११ ।
"इमे च पुरुषा दिव्या यान्त्यस्य
रथमन्तिकात् ।
परं शुभाः कुण्डलिनो युवानः खड्गपाणयः" ॥)

**कुण्डाशी**, [न्] त्रि, (कुण्डं योनिकुण्डं तदुप-लक्षीकृत्य अश्नाति जीवनयात्रां यापयतीति । कुण्ड + अश् + णिनिः ।) भगभक्षकः । कोट्ना
इति भाषा । इति महाभारते दानधर्म्मः । (कुण्ड-स्य जारजातस्य अन्नं अश्नातीति ।) कुण्डान्नभोजी ।

त्रापि" । उणां । २ । ४९ । इति इनच् ।) मुनि-विशेषः । इत्युणादिकोषः । (यथा, आश्वलायने ।
"कुण्डिनानां वाशिष्ठमैत्रावरुणकौण्डिन्येति" ॥
कुरुवंशीयनृपभेदः । स च घृतराष्ट्रस्य पुत्त्रः ।
यथा महाभारते १ । ९४ । ५६ ।
"हस्ती वितर्कः क्राथश्च कुण्डिनश्चापि
पञ्चमः" ॥)

**कुण्डी**, स्त्री, (कुडि + इन् । ततो वा ङीप् । कुण्ड + संज्ञायां वा ङीष् ।) कमण्डलुः । इत्यमरः । २ । ७ । ४६ ॥ स्थाली । इत्यमरटीकायां भरतः ॥

**कुण्डीरः**, पुं, (कुण्ड्यते दह्यते संसारानलसन्तापेन । कुडि + ईरन् ।) मनुष्यः । (कुण्ड्यते रक्ष्यते दुर्ब्ब-लो येन ।) बलवति त्रि । इति धरणी ॥

**कुत्** आस्तृतौ । सौत्रधातुरयम् । इति कविकल्प-द्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) कुतपः । इति दुर्गा-दासः ॥ कुत् अपस्त्यः कुतपः कालविशेषः । कृत्ति-रचितस्नेहपात्रञ्च । इति केचित् ॥

**कुतः**, [स्] व्य, प्रश्नः । पञ्चम्यर्थः । निह्नवः । इति विश्वः । (यथा, विष्णुपुराणे । १ । १९ । ३७ ।
"सर्व्वभूतात्मके तात ! जगन्नाथे जगन्मये ।
परमात्मनि गोविन्दे मित्रामित्रकथा कुतः" ॥)

**कुतनुः**, पुं, (कुत्सिता तनुर्यस्य । पिङ्गलनेत्रत्वात् तथा-त्वम् ।) कुवेरः । इति त्रिकाण्डशेषः ॥ (त्रि, कुत्सितशरीरः । इति व्युत्पत्तिलब्धोऽर्थः ॥)

**कुतपः**, पुं क्ली, अह्नोऽष्टमोऽंशः । दिवसस्याष्टमो मूहूर्त्तः । यथा, --
"अह्नो मुहूर्त्ता विख्याता दश पञ्च च सर्व्वदा ।

प्रस्थार्द्धपरिमाणेन दध्यम्लेन प्रलेपयेत् ॥
द्विप्रस्थां समितां तत्र दध्यम्लं
प्रस्थसम्मितम् ।
घृतमर्द्धशरावञ्च घोलयित्वा घटे क्षिपेत् ॥
आतपे स्थापयेत्तावद्यावद्याति तदम्लताम् ।
तां सुपक्वां घृतान्नीत्वा सितापाके तनुद्रवे ॥
कर्पूरादिसुगन्धे च स्लपयित्वोद्धरेत्ततः” ॥
अस्या गुणाः ।
“एषा कुण्डलिनी नाम्ना पुष्टिकान्तिबलप्रदा
।
धातुवृद्धिकरी वृष्या रुच्या चेन्द्रियतर्पणी” ॥
इति भावप्रकाशः ॥

**कुण्डली**, स्त्री, (कुण्डल + जातौ ङीष् ।) मिष्टान्न-
विशेषः । जिलिपी इति भाषा । इति
पाकराजे-
श्वरः ॥ * ॥ कुलकुण्डलिनी शक्तिः । यथा,
--
“त्रिकोणं तत्तु विज्ञेयं शक्तिपीठं मनोहरम् ।
तद्गह्वरे कामवायुर्जीवरूपोऽतिचञ्चलः ॥
अधोमुखस्तत्र लिङ्गः स्वयम्भुस्तेन चाल्यते
॥
नीवारशूकवत्तन्वी कुण्डली परदेवता ॥
शङ्खतुल्यनिभा देवी सार्द्धत्रिवलयान्विता ।
मुखेनाच्छाद्य ब्रह्मास्यं तया संवेष्टितः प्रभुः ॥
डाकिनी ह्यत्र वसति द्वारपाली सयष्टिका ।
यः साधकोऽत्र रमते स दिव्यो नैव मानुषः”
॥
इति सम्भोहनतन्त्रम् ॥ (अस्याः पर्य्याया
यथा,
हठयोगदीपिकायाम् । ३ । १०४ ॥
कुटिलाङ्गी २
तस्य नरको यथा, --
“रङ्गोपजीवी कैवर्त्तः कुण्डाशी गरदस्तथा ।
सूची माहिषकश्चैव पर्व्वकारी च यो द्विजः
॥
आगारदाही मित्रघ्नः शाकुनिर्ग्रामयाजकः ।
रुधिरान्धे पतन्त्येते सोमं विक्रीणते च ये”
॥
इति विष्णुपुराणे । २ । ६ । २०, २१ ॥
“रङ्गो-
पजीवी नटमल्लादिवृत्तिः । कैवर्त्तः
धीवरवृत्तिः
पत्यौ जीवति जाराज्जातः कुण्डः
तदन्नभोजी
कुण्डाशी । सूची पिशुनः । माहिषो
महिषोप-
जीवी । यद्वा ।
‘महिषीत्युच्यते भार्य्याभगेनोपार्ज्जितं धनम्
।
उपजीवति यस्तस्याः स वै माहिषकः
स्मृतः’ ॥
इति स्मृतिप्रोक्तः । पव्वकारी
धनादिलोभेना-
पर्व्वसु अमावस्यादिक्रियाप्रवर्त्तकः।
पर्व्वगामीति
पाठे पर्व्वसु स्त्रीगामी । शाकुनिः पक्षिजीवी
।
शुभनिमित्तशकुनोपजीवी वा । ग्रामयाजकः
ग्रा-
मार्थे यज्वा” । इति तट्टीकायां श्रीधरस्वामी
॥
(धृतराष्ट्रपुत्त्रः । यथा महाभारते । १ ।
११७ । १३ ।
“कुण्डाशी विरजाश्चैव दुःशला च
शताधिका” ॥)

**कुण्डिका**, स्त्री, (कुण्ड + स्वार्थे कन् टाप् अत इत्वं
च ।) कमण्डलुः । इति हेमचन्द्रः ॥ पिठरः
। इति
शब्दचन्द्रिका । कुँडि इति भाषा ॥
(ताम्रकुण्डम् ।
स्थाली । सामवेदान्तर्गत उपनिषद्विशेषः ।
यथा,
मुक्तिकोपनिषदि ।
तत्राष्टमो मुहूर्त्तो यः स कालः कुतपः स्मृतः”
॥
इति श्राद्ध्वतत्त्वे मत्स्यपुराणवचनम् ॥ * ॥
पारि-
भाषिककुतपा यथा, --
“मध्याह्नः खड्गपात्रञ्च तथा नेपालकम्बलः ।
रौप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः
॥
पापं कुत्सितमित्याहुस्तस्य सन्तापकारिणः ।
अष्टावेते यतस्तस्मात् कुतपा इति विश्रुताः”
॥
इति मिताक्षरायामाचाराध्यायः ॥ स च त्रिंश-
द्दण्डदिनमाने द्वितीहप्रहरशेषदण्डावधि
तृतीय-
प्रहरप्रथमदण्डपर्य्यन्तकालः । इत्यमरः । २
। ७ । ३१ ॥
स तु एकोद्दिष्टश्राद्धारम्भकालः । यथा, --
“आरभ्य कुतपे श्राद्धं कुर्य्यादारौहिणं बुधः ।
विधिज्ञो विधिमास्थाय रौहिणन्तु न लङ्घयेत्”
॥
इति श्राद्धतत्त्वम् ॥
“दिवसस्याष्टमे भागे मन्दीमवति भास्करः ।
स कालः कुतपो ज्ञेयः पितॄणामन्नमक्षयम्’ ॥
इति शातातपः ॥ * ॥ दौहित्रः । वाद्यम् ।
छाग-
लोमजकम्बलम् । कुशतृणम् । इति मेदिनी ॥

**कुतपः**, पुं, (कुत्सितं पापं तपति कुं भूमिं तपति वा ।
तप + अच् । कुत् + कपन् वा ।) सूर्य्यः ।
वैश्वा-
नरः । द्विजन्मा । अतिथिः । गौः । भागिनेयः
।
इति हेमचन्द्रः ॥

**कुतुकं**, क्ली, (कुत् + बाहुलकात् उकञ् ।) कौतु-
कम् । इत्यमरः । १ । ७ । ३१ ॥ (यथा,
गुमानि-
कविकृतोपदेशशतके । १०२ ।
“कुतुकाय कोविदानां मूढमतीनां महोपकाराय
।

| | | |
|---|---|---|
| | “अव्यक्तैकाक्षरं पूर्णा सूर्य्याक्ष्यध्यात्मकुण्डिका” ॥)<br>**कुण्डिनं**, क्ली, विदर्भनगरम् । इति हेमचन्द्रः ।<br>(यथा, हरिवंशे ।<br>“कुण्डिने पुण्डरीकाक्ष ! भोजपुत्त्रस्य शासनात्” ॥)<br>**कुण्डिनः**, पुं, (कुडि रक्षायां दाहे च “बहुलमन्य- | |

निरमात्कविर्गुमानिः शतोपदेशप्रबन्धममुम्” ॥)

**कुतुपं**, क्ली पुं, (कुतप + पृषोदरादित्वात् साधुः ।)

कुतषः । दिनस्याष्टममुहूर्त्तः । इति
शब्दरत्नावली ॥

**कुतुपः**, पुं, (ह्रस्वा कुतुः ततो डुप् च । ततः पृषोद-

रात् अकारागमे साधुः ।) चर्म्मनिर्म्मिताल्प-
स्नेहपात्रम् । इत्यमरः । २ । ९ । ३३ ॥ छोट
कुपो
इति भाषा ॥

**कुतूः**, स्त्री, (कुत्सितं तन्यते । तन् बाहुलकात् कूः ।

टिलोपश्च ।) चर्म्मनिर्म्मितस्नेहपात्रम् ।
इत्यमरः ।
२ । ९ । ३३ ॥ मसक इति कुपो इति च भाषा
॥

**कुतूणकः**, पुं, (कु ईषत् तूणयति सङ्कोचयति चक्षुः यः ।

कु + तूण सङ्कोचे + ण्वुल् ।) बालरोगविशेषः ।
स तु नेत्ररोगः । कतुया इति भाषा । तस्य लक्ष-
णम् ॥
“कुतूणकः क्षीरदोषाच्छिशूनामेव वर्त्मनि ।
जायते तेन तन्नेत्रं कण्डूरञ्च स्रवेन्मुहुः ॥
शिशुः कुर्य्याल्ललाटाक्षिकूटनासावघर्षणम् ।
शक्तो नार्कप्रभां द्रष्टुं न वर्त्मोन्मीलनक्षमः” ॥
इति माधवकरः ॥ कुकूणक इत्यपि पाटः ॥
(यथा, --
“कुकूणकः शिशोरेव दन्तोत्पत्तिनिमित्तजः ॥
स्यात्तेन शिशुरुच्छूनताम्राक्षो वीक्षणाक्षमः ।
स वर्त्मशूलपैच्छिल्यकर्णनासाक्षिमर्द्दनः” ॥
इत्युत्तरतन्त्रे ८ अध्याये वाभटेनोक्तम् ॥ * ॥
चिकित्सा यथा ॥
“शुण्ठी भृङ्गनिशाकल्कः पुटपाकः ससैन्धवः ।
कुकूणकेऽक्षिरोगेषु भद्रमाश्च्योतनं हितम् ॥
क्रिमिघ्नालशिलादार्व्वीलाक्षाकाञ्जिकगैरिकैः ।
चूर्णाञ्जनं कुकूणे स्याच्छिशूनां पोथकीषु च ।
सुदर्शनामूलचूर्णादञ्जनं स्यात् कुकूणके” ॥
इति वैद्यकचक्रपाणिसंग्रहे बालरोगाधिकारे ॥)

**कुतूहलं**, क्ली, (कुतूं चर्म्ममयतैलादिपात्रबत् अन्त-

मुग्धबोधमते “किमः
क्त्यन्ताच्चिच्चनौ” । इति-
चित् ।) कोनखाने इति भाषा । इति
व्याकरणम् ।
(यथा महाभारते । ३ । १४२ । ५३ ।
“असुरेभ्यो भयं नास्ति युष्माकं
कुत्रचित् क्वचित्” ॥)

**कुत्स** ङ क ञ अवक्षेपे । इति कविकल्पद्रुमः ॥
चुरां--

आत्मं--उभञ्च--सकं--सेट् ।)
पञ्चमस्वरी । दन्त्यवर्गा-
द्योपधः । अवक्षेपो निन्दा । ङ क, यो न
कुत्सयते
कुत्स्यमिति हलायुधः ॥ ञ, कुत्सयति
कुत्सयते ।
अयमात्मनेपदीत्यन्ये । कदाचित्
परस्मैपदार्थो
ञकारः । इति दुर्गादासः ॥

**कुत्सनं**, क्ली, (कुत्स् + भावे ल्युट् ।) निन्दनम् ।
इति

शब्दरत्नावली ॥ (यथा मनौ ४ । १६३
।
“नास्तिक्यं वेदनिन्दाञ्च देवतानाञ्च
कुत्सनम्” ॥
कुत्स्यते निन्द्यतेऽनेन । करणे ल्युट् ।
निन्दासा-
धनधर्म्मः । त्रि कुत्सायुक्तः ॥)

**कुत्सला**, स्त्री, (कुत्सं क्रयविक्रययोर्निषिद्धतया
निन्दां

लाति । ला + कः + टाप् ।) नीलीवृक्षः
। इति
शब्दचन्द्रिका ॥

**कुत्सा**, स्त्री, (कुत्स् निन्दने + भावे अप्--टाप् च
।)

कुत्सनम् । तत्पर्य्यायः । अवर्णः २
आक्षेपः ३
निर्व्वादः ४ परीवादः ५ अपवादः ६
उपक्रोशः ७
जुगुप्सा ८ निन्दा ९ गर्हणम् १० ।
इत्यमरः । १ ।

११ । इति शब्दरत्नावली ॥
(यथा शब्दर्थचिन्तामणौ ।
“कुथा कन्या समाख्याता कुथः स्यात्
करिकम्बलम् ।
कुथः कुशः कुथः कीटः प्रातःस्नायी द्विजः
कुथः” ॥
यथा महाभारते २ । ५१ । ३६ ।
“शतशश्च कुथांस्तत्र सिंहलाः समुपाहरन्”
॥)

**कुथः**, पुं, (कुथ + अच् ।) कुशतृणम् । इत्यमरः ।

२ । ४ । १६६ ॥ (यथा हेः रामायणे । २ ।
३० । १४ ।
“शाद्वलेषु यदा शिश्ये वनान्ते वनगोचरा ।
कुथास्तरणतल्पेषु किं स्यात् सुखतरं ततः”
॥)

**कुथोदरी**, स्त्री, (कुथं हिंसात्मकमुदरं यस्याः सा ।)

निकुम्भदुहिता । कुम्भकर्णपौत्री । सा च
कल्कि
देवेन हता । यथा ।
मुनय ऊचुः ।
“शृणु विष्णुयशःपुत्र ! कुम्भकर्णात्मजात्मजा
।
कुथोदरीति विख्याता गगनार्द्धसमुत्थिता ॥
कीलकञ्जस्य महिषी विकञ्जजननी च सा ।
हिमालये शिरः कृत्वा पादौ च निषधाचले ॥
शेते स्तनं पाययन्ती विकञ्जं प्रस्नुतस्तनी ।
तस्या निश्वासवातेन विवशा वयमागताः ॥
दैवेनैव समानीताः प्राप्तास्तव पदाम्बुजम् ।
मुनयो रक्षणीयास्ते रक्षःसु च विपत्सु च ॥
इति तेषां वचः श्रुत्वा कल्किः परपुरञ्जयः ।
सेनागणैः परिवृतो जगाम हिमवद्गिरिम्” ॥
इत्यादि ॥
“सा क्रुधोत्थाय सहसा ननर्द्द परमाद्भुतम् ।
तेन नादेन महाता वित्रस्तांश्चाभवन् जनाः ।
निपेतुः सैनिकाः सर्व्वे मूर्च्छिता धरणीतले ॥
सा रथांश्च गजांश्चापि विवृतास्या भयानका ।
जघास प्रश्वासवातैः समानीय कुथोदरी ॥
सेनागणास्तदुदरं प्रविष्टाः कल्किना सह ।
यथर्क्षमुखवातेन प्रविशन्ति पिपीलिकाः ॥

र्हलति सोत्सुकं करोति । हल् + अच् ।)
अपूर्ब्ब-
बस्तुदिदृक्षाद्यतिशयः । तत्पर्य्यायः ।
कौतूहलम् २ कौतुकः ३ कुतुकम् ४ । इत्यमरः
।
१ । ७ । ३१ ॥ चित्रम् ५ । इति शब्दरत्नावली
।
(यथा, नैषधे । १ । ११९ ।
“प्रियावियोगाद्विधुरोऽपि निभर
कुतूहलाक्रान्तमना मनागभूत्” ॥
नायकालङ्कारविशेषः । तल्लक्षणं यथा साहित्य-
दर्पणे । ३ । ११९ ।
“रम्यवस्तुसमालोके लोलता स्यात्कुतूहलम्”
॥)

**कुतूहलः**, त्रि, प्रशस्तः । अद्भुतः । इति हेमचन्द्रः ॥

**कुतृणं**, क्ली, (कुत्सितं तृणमिव ।) कुम्भी । इति हारा
वली । पाना इति भाषा ॥ (कुम्भिकाशब्देऽस्य
विष्टतिर्ज्ञेया ॥)

**कुत्र**, व्य, (“सप्तम्यास्त्रल्” । ५ । ३ । १० । इति
त्रल् ।) कस्मिन् इति व्याकरणम् । कोथाय इति
भाषा ॥ (यथा, माहानाटके ।
“हा ! सीता केन नीता मम हृदयगता केन वा
कुत्र दृष्टा” ॥)

**कुत्रचित्**, व्य, (कुत्र च चित् च इति द्वन्द्वसमासः ।
६ । १३ ॥ गर्हा ११ निन्दनम् १२
कुत्सनम् १३
परिवादः १४ जुगुप्सनम् १५ अपक्रोशः
१६ भर्त्स-
नम् १७ अपवादः १८ । इति
शब्दरत्नावली ॥
उपरागः १९ अवध्वंसः २० घृणा २१
धिक् २२
सामि २३ । इति जटाधरः ॥

**कुत्सितं**, क्ली, (कुत्स + कर्म्मणि क्तः ।) कुष्ठनामौषधम् ।
इति राजनिर्घण्टः ॥ (कुड् इति भाषा ॥)

**कुत्सितः**, त्रि, (कुत्स् + क्तः ।) निन्दितः । तत्पर्य्यायः ।
निकृष्टः २ प्रतिकृष्टः ३ अर्व्वा ४ रेफः ५
याप्यः
६ । अवमः ७ अधमः ८ कुपूयः ९
अवद्यः १०
खेटः ११ गर्ह्यः १२ अणकः १३
इत्यमरः ।
३ । १ । ५४ ॥ रेपः १४ अरमः १५
आणकः १६
अनकः १७ । इति तट्टीका ॥ कुप्रियः
१८ । इति
जटाधरः ॥ आखेटः १९ रेपसः २०
काण्डः २१
गर्हितः २२ अपकृष्टकः २३ । इति
शब्दरत्नावली ॥

**कुथ** इ क्लेशे । वधे । इति कविकल्पद्रुमः ॥ (भ्वां--परं--
अकं--सकञ्च--सेट् इदित् ।) पञ्चमस्वरी
। इ कर्मणि
कुन्थ्यते । क्लेश इह दुःखानुभवः ।
शीतार्त्तश्च न
कुन्थतीति हलायुधः । इति दुर्गादासः ॥

**कुथ** य पूतित्वे । इति कविकल्पद्रुमः ॥ (दिवां-पर-
अकं-सेट् ।) पूतित्वं दुर्गन्धीभावः । य,
कुथ्यति
मीनो दुर्गन्धः स्यादित्यर्थः । चुकोथ ।
इति दुर्गा-
दासः ॥

तद्दृष्ट्वा देवगन्धर्व्वा हाहाकारं प्रचक्रिरे ।
तत्रस्था मुनयः शेपुर्जेपुश्चान्ये महर्षयः ॥
निपेतुरन्ये दुःखार्त्ता ब्राह्मणा ब्रह्मवादिनः ।
रुरुदुः पृष्ठयोधा ये जहृषुस्तन्निशाचराः ॥
जगतां कदनं दृष्ट्वा सस्मारात्मानमात्मना ।
कल्किः कमलपत्राक्षः सुरारातिनिसूदनः ॥
वाणाग्निं चेलचर्म्मभ्यां कम्बलैर्यानदारुभिः ।
प्रज्वाल्योदरमध्येन् करवालं समाददे ॥
तेन खड्गेन महता कुक्षिं निर्भिद्य बन्धुभिः ।
बलिभिर्भ्रातृभिर्व्वार्हैर्वृतः शस्त्रास्त्रपाणिभिः ॥
वहिर्ब्बभूव सर्व्वेशः कल्किः कल्कविनाशनः ।
सहस्राक्षो यथा वृत्रकुक्षिं दम्भोलिनेमिना ॥
योनिरन्ध्राद्गजरथास्तुरगाश्चाभवन्वहिः ।
नासिकाकर्णविवरात् केऽपि तस्या विनिर्गताः
॥
ते निर्गतास्ततस्तस्याः सैनिकारुधिरोक्षिताः ।
तां विव्यधुर्निःक्षिपन्तीं तरसा चरणौ करौ ॥
ममार सा भिन्नदेहा भिन्नकुक्षिशिरोधरा ।
नादयन्ती दिशो द्यां खं चूर्णयन्ती च पर्व्वतान्”
।
इति कल्किपुराणे १६ अध्यायः ॥

**कुदालः**, पुं, (कुं भूमिं दालयति विदारयति । कु +

| | **कुथः**, पुं स्त्री, (कुन्थति अशोभां क्लेशं वा । कुथ इ<br><br>हिंसायां अच् । आगमविधेरनित्यत्वात् न नुमा-<br>गमः ।) गजपृष्टस्थितचित्रकम्बलम्। हातिर<br>पिठेर झुल् इति भाषा । तत्पर्य्यायः । प्रवेणी २<br>आस्तरणम् ३ वर्णः ४ परिस्तोमः ५ । इत्थमरः ।<br>२ । ८ । ४२ ॥ प्रवेणिः ६ परिष्टोमः ७ कुथा ८<br>कुथम् ९ । इति तट्टीका ॥ वोलः १० आस्तरः | |
|---|---|---|

दल् विदारणे + णिच् + अण् ।) कुद्दालः । इत्य-
मरटीकायां रमानाथः ॥

**कुद्दारः**, पुं, (कुं पृथ्वीं दारयति विदारयति । कु +
दॄ + णिच् + कर्म्मण्यण् । पृषोदरात् साधुः ।) कु-
द्दालः । इति जटाधरः ॥ (काञ्चनवृक्षः । वृक्षमा-
त्रम् । भूविदारणेन समुत्थितत्वात् ॥)

**कुद्दालः**, पुं, (कुं भूमिं दालयति । कु + दल् + णिच्
+ अण् । पृषोदरात् द्वित्वे साधुः ।) कोविदार-
वृक्षः । इत्यमरः । २ । ४ । २२ ॥ (यथास्य पर्य्यायाः
।
"कोविदारश्चमरिकः कुद्दालो युगपत्रकः ।
कुण्डलीताम्रपुष्पश्च स्मन्तकः स्वल्पकेशरी" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे १ भागे ॥ गुणा-
श्चास्य काञ्चनारशब्दे उक्ताः ॥) भूमिदारणास्त्रम् ।
इति मेदिनी ॥ कोदाल इति भाषा । (यथा
महाभारते । ३ । १०७ । २३ ।
"समासाद्य विलं तच्चाप्यखनन् सगरात्मजाः ।
कुद्दालैर्हेषुकैश्चैव समुद्रं यत्नमास्थिताः" ॥)

**कुद्यं**, क्ली, (कुद् + क्यप् ।) कुड्यम् । भित्तिः । इत्यमर-
टीका ॥

**कुद्र**, इ क मिथ्योक्तौ । इति कविकल्पद्रुमः ॥ (चुरां-
परं-सकं-सेट् । इदित् ।) पञ्चमस्वरी । दन्त्यवर्ग-
तृतीयोपधः । इ क कुन्द्रयति नीचः । मिथ्यां
वदतीत्यर्थः । कुन्द्र इत्यनेनैवेष्टसिद्धे इदनुबन्धो
वेदेषूच्चारणभेदार्थः । इति दुर्गादासः ॥

**कुद्रङ्कः**, पुं, (कुद्रं मिथ्येव कायते अनित्यत्वात् क्षणभङ्गु-
रत्वाच्च । कै + कः । निपातनात् साधुः ।) गृह-
विशेषः । मञ्चोपरिमण्डपः । तत्पर्य्यायः । उद्घाटः
२ पिठरः ३ । इति त्रिकाण्डशेषः ॥

**कुद्रङ्गः**, पुं, (कु ईषत् उद्गतो रङ्गः रञ्जनं यत्र अनित्य-
त्वात् । कु + उत् + रन्ज + अधिकरणे घञ् ।
पृषोदरादित्वात् साधुः ।) मञ्चमण्डपः । इति हारा-
वली ॥

**कुद्रवः**, पुं, (कुं भूमिं द्रावयति । कु + द्रु + अन्तर्णिच्
अच् ।) कोद्रवः । इत्यमरटीकायां भरतः ॥ (को-
दधान् इति भाषा ॥)

"अभिघातात् प्रदुष्टो यो
नखोरूक्षोऽसितःखरः ।
भवेत्तु कुनखं विद्यात् कुलीनमिति
संज्ञितम्" ॥

अयं हि रोगः
जन्मान्तरीणसुवर्णापहरणा-

कृतप्रायश्चित्तस्य
भुक्तावशिष्टमहापातकस्यचिह्न-
रूपः । यथा विष्णुसंहितायाम् ।
"नरकानुभूतदुःखानां तिर्य्यक्त्वमुत्तीर्णानां
मानुष्ये
लक्षणानि भवन्ति । कुष्ठ्यतिपातकी
ब्रह्महा यक्ष्मी
सुरापः श्यावदन्तकः सुवर्णहारी कुनखी
गुरुत-
ल्पगो दुश्चर्म्मा" ॥) कुत्सितनखयुक्ते, त्रि
॥

**कुनखी** [न्] त्रि, (कुनख इति स्वनामविश्रुतरोगो
ऽस्यास्तीति ।) कुनखरोगयुक्तः ।
सङ्कुचितनखः ।
यथा । "सुवर्णहारी कुनखी । कुनखी
श्यावदन्तश्च
द्वादशरात्रं व्रतं चरित्वा
तद्दन्तनखावुद्धरेयाताम्" ॥
इति शुद्धितत्त्वम् ॥

**कुनटः**, पुं, (कुत्सितं नटतीति । कु + नट् + अच् ।)
श्योनाकप्रभेदः । इति राजनिर्घण्टः ॥
(कुत्सितो
नटः इति विग्रहे नटाधमः ॥
श्योनाकशब्दे ऽस्य विवरणं ज्ञातव्यम् ॥)

**कुनटी**, स्त्री, (कुनट + गौरादित्वात् ङीष् ।) मनः-
शिला । इत्यमरः । २ । ९ । १०८ ॥
(अस्याः पर्य्यायाः ॥
"मनः शिला मनोज्ञा च नैपाली कुनटी
शिला" ।
इति वैद्यकरत्नमालायाम् ॥
अन्यद्विवरणमस्य मनःशिला शब्दे
व्याख्येयम् ॥)

**कुन्तः**, पुं, (कुं भूमिं उनत्ति क्लेदयति । कुं
शरीर
उनत्ति भेदयति दारयति वा
धातूनामनेकार्थ-
त्वात् उन्द + बाहुलकात् तः ।
शकन्ध्वादिवत्
साधुः ।) गवेधुका । प्रासास्त्रम् । इति
मेदिनी ॥
(भल्लास्त्रम् । भाला इति भाषा । यथा
कथासरित्
सागरे ।
"कुन्तदन्ता कथंकुर्य्यात् राक्षसीव हि
सा शिवम्" ॥)
चण्डभावः । क्षुद्रजन्तुः । इति विश्वः
॥ क्षुद्रकीटः ।
उत्कुनम् । (उकुन् इति भाषा ॥)

**कुन्तलः**, पुं, (कुन्तं उत्कुनं लाति गृह्णाति । ला
+ कः ।)
केशः । (यथा साहित्यदर्पणे ३ ।
१२४ ।
"कापि
कुन्तलसंव्यानसंयमव्यपदेशतः ।
बाहुमूलं स्तनौ नाभिपङ्कजं दर्शयेत्
स्फुटम्" ॥)
ह्रीवेरम् । इत्यमरः २ । ६ । ९५ ॥
चषकः । यवः ।
इति मेदिनी ॥ (कुन्तस्य
अग्राकारमिव लाति ।)
लाङ्गलः । इति विश्वः ॥ ध्रुवकभेदः ।
यथा, --
"वर्णैः षोडशभिः कार्य्यः कुन्तलो
लघुशेखरे ।
शृङ्गारे च रसे
प्रोक्तमानन्दफलदायकः" ॥
इति सङ्गीतदामोदरः ॥
(दाक्षिणात्यजनपद-
विशेषः । तदधिष्ठाता राजा च यथा
महाभारते
२ । राजसूयिकपर्व्वणि ३४ । ११ ।
"आकर्षः कुन्तलश्चैव
मालवाश्चान्ध्रकास्तथा ।

**कुध्रः**, पुं, (कुं पृथ्वीं भूमिं धारयति । कु + धृ + मूल-
विभुजादित्वात् कः ।) पर्व्वतः । इति हलायुधः ॥
(यथा कालिदासोक्तौ ।
“वाचरिड्ध्वजधग्धृतोड्वधिपतिःकुध्रेड्जजानिर्गणेड्
गोराडारुड्डुरःसरेड्डुतरग्रैवेयकभ्राडडम् ।
उड्वीड्ड्नरकाग्निभिस्त्रिदृगिभेडार्द्राजिनाच्छच्छविः
स स्तादम्बुमदम्बुदालिगलरुग्घ्नो मुदे वो मृडः” ॥)

**कुनखः**, पुं, (कुत्सितो नखो यत्र ।) क्षुद्ररोगविशेषः ।
तस्य लक्षणं यथा ।
“नखमांसमधिष्ठाय वातः पित्तञ्च देहिनाम् ।
कुर्व्वति दाहपाकौ च तं व्याधिं चिप्पमादिशेत् ॥
तदेवाल्पतरैर्दोषैः परुषं कुनखं वदेत्” ॥
इति माधवकरः ॥
(अस्य चिकित्सा यथा ॥
“चिप्पे सटङ्कणास्फोता मूललेपो नखप्रदः” ।
इति वैद्यकचक्रपाणिसंग्रहे क्षद्ररोगाधिकारे ॥
तथाच सुश्रते ।
धन्याकम् । इति राजनिर्घण्टः ॥
(पर्य्याया यथा ॥
“धान्यकं धानकं धान्यं
धानाधानेयकन्तथा ।
कुनटी धेनुकाच्छत्रा
कुस्तुम्बुरुवितुन्नकम्” ॥
गुणाश्चास्य धन्याकशब्दे ज्ञातव्याः ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)
नेपालदेशजमनःशिला । इति केचित् ।
इति
भरतः ॥ (कुत्सिता नर्त्तकी । अनिपुणा
नर्त्तकी ॥)

**कुनली**, [न्] पुं, (कुत्सित ईषद् वा नलोऽस्यास्तीति
इनिः ।) वकवृक्षः । इति त्रिकाण्डशेषः ॥

**कुनाभिः**, पुं, (ईषत् नाभिरिव आवर्त्तवत्त्वात् ।)
वातमण्डली । इति त्रिकाण्डशेषः ॥
घूर्णवातास
इति भाषा ॥ निधिः । इति हेमचन्द्रः ॥

**कुनाशकः**, पुं, (ईषत् नाशयति स्पर्शनेन । कु + नश +
णिच् + ण्वुल् ।) यवासः । इत्यमरः । २ ।
४ । ९१ ॥
(दुरालभा । आल्कुशीति भाषा ॥
अस्य पर्य्याया यथा ॥
“यासोपवासो दुष्पर्शो धन्वयासः
कुनाशकः ।
दुरालभादुरालम्भा समुद्रान्ता च रोदिनी ॥
गान्धारी कच्छुरानन्ता कषाया हरविग्रहा”
॥
इति भावप्रकाशस्य पूर्ब्बखण्डे १ म भागे
॥)

**कुन्च** वक्रणे । तौच्छ्ये । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-अकं-सकं-सेट् ।) पञ्चमस्वरी ।
वक्रणमिति वक्र
इवाचरतीति क्वौ वक्रं करोतीति ञौ च
रूपम् ।
तेन कुटिलीभावः कुटिलीकरणञ्च ।
तौच्छ्यमल्पी-
द्राविडाः सिंहलाश्चैव राजा
काश्मीरकस्तथा” ॥)

**कुन्तलवर्द्धनः**, पुं, (कुन्तलान् केशान् स्वरसेन वर्द्ध-
यति । वृध् + णिच् + ल्युः ।)
भृङ्गराजवृक्षः । इति
राजनिर्घण्टः ॥

**कुन्तलाः**, पुं, (कुन्ता अस्त्रविशेषा लीयन्ते गृह्यन्ते
यत्र । ला + घञर्थे कः ।) देशविशेषः
। बहुवब-
नान्तशब्दोऽयम् । इति मेदिनी ॥ (स
च दाक्षि-
णात्यप्रदेश इत्युच्यते । यथा
महाभारते ६ । ९ । ५९ ।
“झिल्लिकाः कुन्तलाश्चैव सौहृदा
नलकाननाः ।
कोकुट्टकास्तथा चोलाः कोङ्कणा
मालवा नराः” ॥)

**कुन्तलिका**, स्त्री, (कुन्तलस्य लाङ्गलस्याग्राकारइव
विद्यतेऽस्याः इति ठन् । टाप् अत
इत्वं च ।)
दध्यादिच्छेदनो । दैकाटा छुरी इति
भाषा ।
तत्पर्य्यायः । पालिका २ । इति
हारावली ॥
(बालानामौषधम् । युथा सुश्रुते ।
“कुन्तलिका कुरण्टिका
प्रभृतीनीत्युपक्रम्य ॥
अस्याः गुणास्तत्रैवोक्ताः ।
“स्वादुपाकरसाः शीताः
कफघ्नाश्चातिपित्तलाः ।
लवणार्द्ररसा रुक्षाः सक्षारा वातलाः
सराः” ॥
स्वादुतिक्ता कुन्तलिका” ॥)

**कुन्तलीशीरं**, क्ली, (कुन्तल इव उशीरम् ।) बा-
लकम् । इति राजनिर्घण्टः ॥ बाला
इति
भषा ॥

| | | |
|---|---|---|
| | भावः अल्पोकरणञ्च । कुञ्चति खलः कुटिलोऽल्पो<br>बा स्यादित्यर्थः । कुञ्चति लतां वायुः कुटिलामल्पां<br>वा करोतीत्यर्थः । इति दुर्गादासः ॥ | **कुन्ती**, स्त्री, (राज्ञा कुन्तभोजेन आबाल्यात् पा-<br>लिता सती पृथा वसुदेवभगिनी कुन्तीति नाम्ना<br>विख्याता । यथा, हरिवंशे ३४ । २३-२४ ।<br>“पृथां दुहितरं वव्रे कुन्तिस्तु कुरुनन्दन ! ।<br>शूरः पूज्याय वृद्धाय कुन्तिभोजाय तां ददौ ॥<br>तस्मात्कुन्तीति विख्याता कुन्तिभोजात्मजा पृथा” ॥)<br>पाण्डुराजभार्य्या । सा च शूरसेनराजकन्या पृथा |

नाम्ना ख्याता । तत्पिता शूरसेनः तां राज्ञे कुन्ति-
भोजाय दत्तवान् । इयं हि कन्यावस्थायां मुनिदत्त-
विद्यापरीक्षार्थं मन्त्रबलाहूतात् सूर्य्यात् कर्णं
प्रासोष्ट । विवाहात् परञ्च सा मृगीभूतस्य मुनेः
शापात् स्त्रीसङ्गमवञ्चितस्य स्वामिनो महाराज-
पाण्डोराज्ञया धर्म्माद्युधिष्ठिरं पवनाद्भीमं इन्द्रा-
दर्ज्जुनं सुषुवे । इति महाभारते १ । १११ अध्यायः ॥
इयञ्च परमसाध्वीतया भगवद्बादरायणादिमह-
र्षिगणवरप्रभावेण प्रातःस्मरणीया रमणी ।
यदुक्तम्, --
"अहल्या द्रौपदी कुन्ती तारा मन्दोदरी तथा ।
पञ्चकन्याः स्मरेन्नित्थं महापातकनाशनम्" ॥)
गुग्गुलुवृक्षः । शल्लकी । इति विश्वमेदिन्यौ ॥
ब्राह्मणी । इति जटाधरः ॥

**कुन्थ** ग श्लिषि । क्लिशि । इति कविकल्पद्रुमः ॥
(क्र्यां-परं-सकं-अकं च-सेट् ।) पञ्चमस्वरी । क्लिशि
दुःखानुभवे । ग कुथ्नाति बुभुक्षार्त्तः । इति हला-
युधः । चुकुन्थ । इति दुर्गादासः ॥

**कुन्थुः**, पुं, (कुथ्नाति दुःखसहनक्षमो भवति । कुन्थ +
उन् ।) बौद्धविशेषः । जिनचक्रवर्त्तिविशेषः । इति
हेमचन्द्रः ॥

**कुन्दः**, पुं क्ली, (कु कुत्सितं दुर्गन्धादिजनितक्लेशं
यद्वा कुं पृथ्वीं कश्यपाय दत्तवान् । दा + कः ।
द्वितीयाया अलुक् । परशुरामावतारे क्षत्रिय-
हत्यापापशुद्ध्यर्थं मारीचाय अश्वमेधयज्ञे महा-
दानस्य दक्षिणास्वरूपवसुन्धरादानादस्य तथा-
त्वम् । तत्कथा यथा हरिवंशे ।
"सर्व्वपापविशुद्ध्यर्थं वाजिमेधेन चेष्टवान् ।
तस्मिन् यज्ञे महादाने दक्षिणां भृगुनन्दनः ।
मारीचाय ददौ प्रीतः कश्यपाय वसुन्धराम्" ॥)

**कुन्दकः**, पुं, (कुन्द + संज्ञायां कन् ।) कुन्दुरुकः ।
इति राजनिर्घण्टः ॥

**कुन्दमः**, पुं, (अनिष्टकारित्वात् कुत्सितं उन्दुरादिकं
दमयति नाशयतीति । दम + णिच् + अच् पृषो-
दरात् मुमि साधुः । यद्वा कुन्देन मीयते प्रायेण
शुभ्रवर्णत्वात् । कुन्द + मा + घञर्थे कः ।) वि-
डालः । इति त्रिकाण्डशेषः ॥

**कुन्दरः**, पुं, (कुं भूमिं दारयति । अन्तर्भूतणिजर्थे दॄ
+ अच् पृषोदरात् मुमि साधुः ।) तृणभेदः ।
कुन्दरा इति कलिङ्गे ख्यातः । तत्पर्य्यायः ।
कण्डुरः । २ झिण्टी ३ दीर्घपत्रः ४ खरच्छदः ५ रसालः ६
क्षेत्रसम्भूतः ७ सुतृणः ८ मृगवल्लभः ९ । अस्य
मूलगुणाः । गौल्यत्वम् । शीतत्वम् । पित्ताति-
सारनाशित्वम् । गोधनानां प्रशस्तत्वम् । बल-
पुष्टिविवर्द्धनत्वञ्च । इति राजनिर्घण्टः ॥ (कुन्दवत्
निर्म्मलानि धर्म्मानुवन्धीनि फलानि राति ददाति ।
कुन्द + रा + कः । यद्वा कुं पृथ्वीं, हिरण्याक्षदैत्यं
हन्तुकामो भगवान् विष्णुः वराहरूपेण दार-
ज्वरस्वेदग्रहालक्ष्मीमुखरोगकफानिलान्" ॥
इति भावप्रकाशः ॥ अस्य गुणाः । मधुरत्वम् ।
तिक्तत्वम् । कफपित्तार्त्तिदाहनाशित्वञ्च । अस्य
पानलेपनयोर्गुणः । शिशिरत्वम् । प्रदरामयशान्ति
कारित्वञ्च । इति राजनिर्घण्टः ॥ अलक्ष्मीरक्षो-
ज्वरनाशित्वम् । इति राजवल्लभः ॥
(अस्य व्यवहारो यथा वैद्यकचक्रपाणि-संग्रहे
ऽष्टादशशतिकप्रसारणीतैले ॥
"कर्पूरं कुन्दुरुनिशालवङ्गध्यामचन्दनम्" ॥ * ॥)

**कुन्दुरुकः**, पुं, स्त्री, (कुन्दुरु + स्वार्थे कन् ।) कुन्दुरुनाम
सुगन्धिद्रव्यम् । इति राजनिर्घण्टः ॥

**कुन्दुरुकी**, स्त्री, (कुन्दुरुक + जातित्वात् ङीष् ।)
शल्लकीवृक्षः । इत्यमरः । २ । ४ । १२४ ॥

**कुप** इ कि स्तृतौ । इति कविकल्पद्रुमः ॥ (चुरां-
परं-सकं-सेट्-इदित् ।) पञ्चमस्वरी । इ कुम्प्यते ।
कि कुम्पयति कुम्पति । स्तृतिराच्छादनम् । इति
दुर्गादासः ॥

**कुप**, क द्युतौ । इति कविकल्पद्रुमः ॥ (चुरां-परं-
अकं-सेट् ।) क कोपयति । इति दुर्गादासः ॥

**कुप** य इर् कोपे । इति कविकल्पद्रुमः ॥ (दिवां-
परं-अकं-सेट्-इरित् ।) कोपो नेत्रलौहित्यादि-
हेतुश्चित्तविकारः । य, कुप्यति माता शिशवे । इर्
अकुपत् अकोपीत् । अस्मात् पुषादित्वान्नित्यं
ङ इत्यन्ये । "कदाचित् कुप्यते माता नोदरस्था
हरीतकी" । इति तु कुप्यतीति कुप् ततः स
इवाचरति इति ङ्ये साध्यम् । इति दुर्गादासः ॥

**कुपथः**, पुं, कुत्सितः पन्थाः । (पाणिनिमते कापथ
इति नित्यं स्यात् । वोपदेवमते तु "पथि पुरुषे
वा" । इति सूत्रेण विभाषया कोः कादेशः ।) का-
पथः । इति शब्दरत्नावली । (यथा, श्रीमद्भागवते
५ । ६ । १० । "स्वधर्म्मपथमकुतोभयमपहाय
कुपथपाषण्डमसमञ्जसं निजमनीषया मन्दः प्रवर्त्त-
यिष्यति" ॥
कुपथः सेव्यत्वेनास्त्यस्य । अर्श आदित्वात् अच् ।

द्यति नाशयति । कु + दो छेदने + कः । पृषोद-
रात् नुंम् । यद्वा कौतीति । "अब्दादयश्च" ।
उणां ४ । ९८ । इति निपातनात्
सिद्धम् ।)
पुष्पवृक्षविशेषः । कुँद्फुलेर गाछ इति भाषा ।
तत्पर्य्यायः । माघ्यम् २ । इत्यमरः । २ । ४ । ७३ ॥
शुक्लपुष्पः ३ । इति रत्नमाला ॥ मकरन्दः ४
महामोदः ५ मनोहरः ६ मुक्तापुष्पः ७ सदापुष्पः
८ तारपुष्पः ९ अट्टहासकः १० दमनः ११ वन-
हासः १२ मनोज्ञः १३ वोरटम् १४ वरटम्
१५ । इति शब्दरत्नावली ॥
(यथा, नवग्रहस्तोत्रे शुक्रस्तुतिः ।
"ॐ हिमकुन्दमृणालाभं दैत्यानां परमं गुरुम् ।
सर्व्वशास्त्रप्रवक्तारं भार्गवं प्रणमाम्यहम्" ॥)
अपि च । भावप्रकाशे ॥
"कुन्दन्तु कथितं माध्यं सदापुष्पञ्च तत् स्मृतम् ।
कुन्दंशीतं लघु श्लेष्मशिरोरुग्विषपित्तहृत्' ॥
अस्य गुणाः । अतिमधुरत्वम् । शीतत्वम् । कषा-
यत्वम् । कैश्यभावनत्वम् । कफपित्तहरत्वम् ।
सारकत्वम् । दीपनत्वम् । पाचनत्वञ्च । इति राज-
निर्घण्टः ॥ तत्पुष्पगुणौ । श्लेष्मकारित्वम् । ग्राहि-
त्वञ्च । इति राजवल्लभः ॥

**कुन्दः**, पुं, कुन्दुरुनामगन्धद्रव्यम् । (अस्य पर्य्याया यथा ॥

"कुन्दुरुस्तु मुकुन्दः स्यात् सुगन्धः कुन्द इत्यपि" ॥
यति । दॄ + णिच् + अच् पृषोदरात् मुमि साधुः ।
विष्णुः । यथा महाभारते १३ । १४९ । १०० ।
"कुमुदः कुन्दरः कुन्दः पर्ज्जन्यः पवनोऽनिलः" ॥)

**कुन्दिनी**, स्त्री, (कुन्दानां पद्मानां समूहः । खला-

दित्वात् इनिः । स्त्रियां ङीप् ।) पद्मिनी । पद्म-
समूहः । इति त्रिकाण्डशेषः ॥

**कुन्दुः**, स्त्री, (कुं भूमिं दृणातीति । कु + दॄ + बाहुल-

कात् डुः ।) कुन्दुरुनामगन्धद्रव्यम् । इति शब्द-
माला अमरटीका च ॥ (कुन्दरुशब्दे ऽस्या विव-
रणं ज्ञातव्यम् ॥) मूषिके पुं । इतिशब्दरत्ना-
वली ॥

**कुन्दुरः**, पुं, (कुं भूमिं दारयति । दॄ विदारे +

उरन् ।) कुन्दुरुनामगन्धद्रव्यम् । इत्यमरटीकायां
भरतः ॥

**कुन्दुरुः**, पुं, स्त्री, (कुं भूमिं उनत्ति । उन्द् + जत्र्वा-

दित्वात् निपातनात् साधुः ।) स्वनामख्यातसुग-
न्धिद्रव्यम् । यस्य निर्यासे कुन्दुरुखोटि इति
ख्यातिः । तत्पर्य्यायः । पालङ्क्या २ मुकुन्दः ३
कुन्दः ४ । इत्यमरः । २ । ४ । १२१ ॥ पालङ्की ५
मुकुन्दुः ६ कुन्दुः ७ कुन्दुरः ८ । इति तट्टीकायां
भरतः ॥ कुन्दुरुकः ९ सौराष्ट्रः १० शिखरी ११
कुन्दकः १२ तीक्ष्णः १३ गोपुरकः १४ बहुगन्धः
१५ पालिन्दः १६ भीषणः १७ तीक्ष्णगन्धः १८
बली १९ । इति जटाधरः ॥ अपि च ।
"कुन्दुरुस्तु मुकुन्दः स्यात् सुगन्धः कुन्द इत्याप ।
कुपथगामिनि, त्रि । यथा महाभारते । १ । ६७ । २९ ।
"कुपथस्तु महावीर्य्यः श्रीमान् राजन् ! महासुरः ।
सुपार्श्व इति विख्यातः क्षितौ जज्ञे महीपतिः" ॥)

**कुपाणिः**, त्रि, (कुत्सितः पाणिर्यस्य ।) वक्रहस्तः ।

इति जटाधरः । कोपा इति भाषा ॥

**कुपिनी**, [न्] पुं, (कुपिनी मत्स्यधानी अस्यास्तीति ।

व्रीह्यादित्वात् इनिः ।) कैवर्त्तः ॥ इति त्रिकाण्ड-
शेषः । जालिया इति भाषा ॥

**कुपिनी**, स्त्री, (कुम्प्यते रक्ष्यते मत्सोऽत्र । कुप इ कि

स्तृतौ अधिकरणे बाहुलकात् इनि । किच्च ङीप्
पृषोदरादित्वात् साधुः ।) स्वल्पमत्स्यधानी । इति
शब्दरत्नावली । खालुइ इति भाषा ॥

**कुपिन्दः**, पुं, (कुम्पयति विस्तारयति सूत्राणि । कुप

इ कि स्तृतौ + "कुपेर्वा वश्च" । उणां ४ । ८६ ।
इति किन्दच् ।) तन्त्रवायः । इत्युणादिकोषः ॥

**कुपीलुः**, पुं, (कुत्सितः पीलुः ।) कारस्करवृक्षः

तिन्दुकविशेषः । मधुरतेन्दु माकडाकैँदु इति च
भाषा । तत्पर्य्यायः । जलजः २ दीर्घपत्रकः ३
कुलकः

| | | |
|---|---|---|
| इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)<br>भ्रमियन्त्रम् । कुँद् इति भाषा । कुवेरस्य निधि-<br>विशेषः । इति मेदिनी ॥ करवीरवृक्षः । इति<br>राजनिर्घण्टः ॥ (कुन्दपुष्पवर्ण इव श्वेततया<br>सत्ययुगे हंसावतारत्वाच्च । विष्णुः । यथा महा-<br>भारते १३ । १४९ । १०० ।<br>"कुमुदः कुन्दरः कुन्दः पर्ज्यन्यः पवनोऽनिलः" ॥ | कुन्दुरुर्म्मधुरस्तिक्तस्तीक्ष्णस्त्वच्यःकटुर्हरेत्<br>। | |

४ कालतिन्दुकः ५ कालपीलुकः ६ काकेन्दुः ७
विषतिन्दुः ८ मर्कटतिन्दुकः ९ । अस्य गुणाः ।
शीतलत्वम् । तिक्तत्वम् । वातमदकारित्वम् ।
लघुत्वम् । व्यथाहरत्वम् । ग्राहित्वम् । कफपित्ता-
स्रनाशित्वञ्च । इति भावप्रकाशः ॥

**कुपूयः**, त्रि, (कुत्सितं पूयते । पूयीङ् विसरणे + पचा

द्यच् ।) कुत्सितः । जात्याचारादिनिन्दितः । इत्य-
मरभरतौ ॥

**कुप्यं**, क्ली, (गुप्यते रक्ष्यते द्रव्यादिकमत्र । गुपू

रक्षणे ।
"राजसूयसूर्य्यमृषोद्यरुच्यकुप्यकृष्टपच्या-
ष्यथ्याः" । ३ । १ । ११४ । इति क्यवन्तो निपा-
तितः । गुपेरादेः कत्वं च संज्ञायाम् ।) स्वर्णरूप्य-
भिन्नधातुः । इत्यमरः । २ । ९ । ९१ ॥ (यथा, महा-
भारते । १५ । ६ । ११ ।
"भूमिरल्पफला देया विपरीतस्य भारत ! ।
हिरण्यं कुप्यभूयिष्ठं मित्रं क्षीणमथो बलम्" ॥)
दस्ता इति ख्यातधातुः । इत्यष्टधातुमध्ये
वैद्यकम् ॥

**कुप्यशाला**, स्त्री, (कुप्यानां स्वर्णरूप्याभ्यामन्येषां

भाजनादीनां शाला गृहम् ।) स्वर्णरूप्यभिन्न-
धातुपात्रादिनिर्म्माणादिगृहम् । काँसारिर दो-
कान इति भाषा । तत्पर्य्यायः । सन्धानी २ । इति
हेमचन्द्रः ॥

**कुप्रियः**, त्रि, (कुत्सितं प्रीणातीति । कु + प्री +

"इगुपधज्ञेति" । ३ । १ । १३५ । कः ।) जघन्यः ।
इति हलायुधः ॥ (बहुव्रीहौ तु कुत्सित-
प्रियः ॥)

**कुब** इ कि स्तृतौ । इति कविकल्पद्रुमः । (चुरां-पक्षे-

प्रकृतस्यैवान्तःशरीरस्य
वहिःशरीरस्य चावन-
मनमत्र तु हृदयं पृष्ठं वा
शरीराद्बहिर्भवतीति
भेदः ॥ * ॥
अथ चिकित्सा ।
"वाह्यायामेऽन्तरायामे धनुस्तब्धे च कुब्जके ।
योज्यं प्रसारिणीतैलं तेन तेषां शमो भवेत् ॥
वातव्याधिषु सामान्या याःक्रियाः कथिताः पुरा ।
कर्त्तव्या एव ताः सर्व्वास्तैलमेतद्विशेषतः" ॥
इति भावप्रकाशः ॥ (यथा, हरिवंशे ८३ । ३४ ।
"तान्तु कुब्जां स्थडोर्मध्ये द्व्यङ्गुलेनाग्रपाणिना ।
शनैः सन्तोडयामास कृष्णो लीलाविधानवित्" ॥
रोगविशेषस्यास्य चिकित्सार्थं वटिकौषधं
यथा ॥ * ॥
"रसौ गन्धौ समौ शुद्धौ तालकञ्चाभया तथा ।
विषं व्योषञ्च कटुकीं वोलजैपालकौ समौ" ॥
"भृङ्गराजरसैमर्द्दर्यं स्नुह्यर्कस्वरसैस्तथा ।
गुञ्जाद्वयं प्रदातव्यं रसः कुब्जविनोदकः ॥
आमवाताढ्यवातादीन्कटीशूलञ्च नाशयेत् ।
अग्निञ्च कुरुते दीप्तं स्थौल्यानां नाशनं परम्" ॥
कुब्जविनोदो रसः ॥
इति वैद्यकरसेन्द्रसारसंग्रहे वातरोगाधि-
कारे ॥ * ॥)

**कुब्जः**, पुं, (कु ईषदुब्जं आर्जवमस्य । शकन्ध्वादित्वात्

**कुमार**, त् क केलौ । इति कविकल्पद्रुमः ॥ (अदन्त-

चुरां-परं-अकं-सेट् ।) ह्रस्वी । अचुकुमारत् ।
इति दुर्गादासः ॥

**कुमारं**, क्ली, (कुमारयति नन्दति यत्र यस्मिन् सती-

त्यर्थः ।) जात्यकाञ्चनम् । इति मेदिनी । खाँटि
सोणा इति भाषा ॥

**कुमारः**, पुं, (कुत्सितो मारः कन्दर्पो यस्मात् ।)

कार्त्तिकेयः तदुत्पत्तिविवरणन्तु कार्त्तिकेयशब्दे
द्रष्टव्यम् ॥
(तथा महाभारते । १ । ६६ । २३-२४ ।
"अग्नेः पुत्त्रः कुमारस्तु श्रीमान् शरवणालयः ।
तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठजः ।
कीर्त्तिकाभ्युपपत्तेश्च कार्त्तिकेय इति स्मृतः" ॥
कौ पृथिव्यां मारयति दुष्टान् । कु + मृ + णिच् +
अच् ।) नाठ्योक्तौ युवराजः । इत्यमरः ॥ (राज-
कुमारः । यथा, रघौ ७ । ६३ ।
"ततः प्रियोपात्तरसेऽधरौष्ठे
निवेश्य दध्मौ जलजं कुमारः" ॥)
शुकः । अश्ववारकः । (कुमारयति क्रीडतीति ।
कुमार-त् क क्रीडने + अच् ।) पञ्चवर्षीयबालकः ।
(यथा मनौ ७ । १७५ ।
"कन्यानां सम्प्रदानञ्च कुमाराणाञ्च रक्षणम्" ॥
"तस्यास्तु खल्वमरायाः प्रपतनार्थे खल्वेवमेव-
कर्म्मणि क्रियमाणे जातमात्रे ऽस्यैव कुमारस्य
कार्य्याण्येतानि कर्म्माणि भवन्ति तद्यथा-अश्म-
नोः सङ्घट्टनं कर्णयोर्मूले शीतोदकेनोष्णोदकेन वा
सुखपरिषेकः । तथा संक्लेशविहतान् प्राणान्
पुनर्लभेत कृष्णकपालिका शूर्पेण चैनमभिनिष्पु-
नीयाद् यद् यच्चेष्टं स्यात् यावत् प्राणानां प्रत्यागमं
तत्तत् सर्व्वमेव कुर्य्युः । ततः प्रत्यागतप्राणं प्रकृति-
भूतमभिसमीक्ष्य स्नानोदकग्रहणाभ्यामुपपाद
येत् । अथास्य ताल्वोष्ठकण्ठ-जिह्वा-प्रमार्ज्जन-
मारभेत अङ्गुल्या सुपरिलिखितनखयासुप्रक्षा-
लितोपधानकार्पासपिचुमत्याप्रथमं प्रमार्ज्जित-
स्यास्यच शिरस्तालू कार्पासपिचुना स्नेहगर्भेण
प्रतिच्छादयेत् । ततो ऽस्यानन्तरं कार्यं सैन्धवोप-
हितेन सर्पिषा प्रच्छर्द्दनम्" ।

भ्वां-परं-सकं-सेट् ।) पञ्चमस्वरी । इ कुम्ब्यते ।
कि कुम्बयति कुम्बति । स्तृतिराच्छादनम् । इति
दुर्गादासः ॥

**कुबे(वे)रः**, पुं, (कुम्बतीति । कुब इ कि आच्छादने
"कुम्बेर्नलोपश्च" । उणां १ । ६० । इति एरक् ।
नलोपश्च । यद्वा कुत्सितं वेरं शरीरं यस्य । पिङ्गल
नेत्रत्वात्तथात्वम् ।) यक्षराजः । इति सिद्धान्त-
कौमुद्यामुणादिवृत्तिः ॥ (स च विश्रवस ऋषे
रिलविलायां जातः । स तु त्रिपात् अष्टदन्तः
केकराक्षश्च । यथा, वायुपुराणे ।
"कुत्सायां क्वितिशब्दोऽयं शरीरं वेरमुच्यते ।
कुवेरः कुशरीरत्वात् नाम्ना तेनैव सोऽङ्कितः" ॥
तथा काशीखण्डे देवीदत्तशापोक्तौ च ।
"कुवेरो भव नाम्ना त्वं मम रूपेर्ष्यया सुत !" ॥)

**कुब्जः**, त्रि, (कु ईषत् उब्ज आर्ज्जवमस्य । उब्ज आर्जवे
घञ् शकन्ध्वादिवद्धलोपः ।) वायुनोन्नतहृदयः ।
उन्नतपृष्ठश्च । कुजा इति भाषा । तत्पर्य्यायः ।
गड्डः २ गड्डुलः ३ इत्यमरः ॥ न्युब्जः ४ गड्डुरः ५
इति शब्दरत्नावली ॥ तस्य लक्षणमाह ।
"हृदयं यदि वा पृष्ठमुन्नतं क्रमशः सरुक् ।
क्रुद्धो वायुर्यदा कुर्य्यात्तदा तं कुब्जमादिशेत्" ॥
इति माधवकरः ॥ यदेत्युक्त्या यदिवेति विकल्पार्थ-
स्तेन न पुनरुक्तिदोषः । नन्वन्तरायामः क्रोडनतो
भयति वहिरायामः पृष्टनतो भवति ताभ्यामस्य
को भेदः । उच्यते । अन्तरायामवहिरायामयोः
साधुः ।) अपामार्गः । इति
राजनिर्घण्टः ॥ खड्गः ।
इति शब्दमाला ॥

**कुब्जकः**, पुं, (कौ पृथिव्यां उब्जति । उब्ज + ण्वुल् ।
शकन्ध्वादित्वात् उलोपे साधुः ।) पुष्पवृक्षविशेषः ।
कूजा इति ख्यातः । (यथा, शब्दार्थचिन्तामणि-
घृतनृसिंहपुराणे ।
"चम्पकात् पुष्पशतकादशोकं पुष्पमुत्तमम् ।
अशोकात् पुष्पसाहस्रात् सेवतीपुष्पमुत्तमम् ।
सेवतीपुष्पसाहस्रात् कुब्जकः पुष्पमुत्तमम्" ॥
तत्पर्य्यायः । भद्रतरुणी २ वृत्तपुष्पः ३ अतिकेशरः
४ महासहः ५ कण्टकाढ्यः ६ खर्व्वः ७ अलिकुल-
सङ्कुलः ८ वारिकण्टकः ९ । इति त्रिकाण्डशेषः ॥
अपि च ।
"कुब्जको भद्रतरणिर्वृहत्पुष्पोऽतिकेशरः ।
महासहा कण्टकाढ्या नीलालिकुलसङ्कुला" ॥
राजनिर्घण्टे महासहेत्यादिशब्दाः पुंलिङ्गाः ।
अस्य गुणाः ।
"कुब्जकः सुरभिः स्वादुः कषायानुरसः सरः ।
त्रिदोषशमनो वृष्यः शीतहर्त्ता च स स्मृतः" ॥
इति भावप्रकाशः ॥ सुरभित्वम् । रक्तपित्तकफ-
नाशित्वञ्च ॥ तत्पुष्पगुणाः । शीतलत्वम् । वर्णका-
रित्वम् । दाहवातपित्तनाशित्वञ्च । इति राज-
निर्घण्टः ॥

**कुब्जकण्टकः**, पुं, (कुब्जः कण्टकोऽत्र ।) श्वेतखदिरः ।

"दशम्यां निश्यतीतायां सपुत्त्रास्त्री सर्व्वगन्धौ-
षधैर्गौरसर्षप-लोध्रैश्च स्नाता लघ्वहतवस्त्रं परि-
धाय पवित्रेष्टलघुविचित्रभूषणवतीसंस्पृश्य मङ्ग-
लान्युचितामर्च्चयित्वा च देवतां शिखिनः शुक्ल-
वाससो व्यङ्ग्यांश्च ब्राह्मणान् स्वस्तिवाचयित्वा कुमार-
महतेन शुचिवाससाच्छादयेत् । प्राक् शिरस-
मुदक्शिरसं वा संवेश्य देवतापूर्ब्बं द्विजातिभ्यः
प्रणमतीत्युक्त्वा कुमारस्य पिता द्वे नामबी कार-
येत् नाक्षत्रिकं नामाभिप्रायिकञ्च" ।

"कृते च नामकर्म्मणि कुमारं परीक्षितुमुपक्रामे
दायुषः प्रमाण ज्ञान-हेतोः । तत्रेमान्यायुष्मतां
कुमाराणां लक्षणानि भवन्ति तद्यथा -- एकै-
कजा मृदवोऽल्पाः स्निग्धाः सुबद्धमूलाः कृष्णाः
केशाः प्रशस्यन्ते । स्थिरा बहला त्वक् प्रकृत्या-
कृतिसुसम्पन्नमीषत्प्रमाणातिरिक्तमनुरूपमात

| | | |
|---|---|---|
| | इति राजनिर्घण्टः ॥<br><br>**कुब्रं**, (व्रं)क्ली, (कुबि आच्छादने + ‘ऋज्रेन्द्राग्रबज्रेति’ ।<br><br>उणां २ । २८ । इति निपातनात् रन् ।) वनम् ।<br>इत्युणादिकोषः ॥ कुण्डम् ।<br>कुण्डलम् । तन्तुः । शर-<br>णम् । शकटम् । इति सङ्क्षिप्तसारे<br>उणादिवृत्तिः ॥ | |

पत्रोपमं शिरः प्रशस्यते । व्यूढं दृढं समं सु-
श्लिष्टशङ्खसन्ध्यर्द्धव्यञ्जनमुपचितं
बलिनमर्द्धचन्द्रा-
कृतिललाटं बहलौ विपुलसमपिठौ समौ नीचौ
वृद्धौ पृष्ठतोऽवनतौ सुश्लिष्टकर्णपुटकौ महा-
च्छिद्रौ कर्णौ ईषत् प्रलम्बिन्यावसङ्गते समे
संहते महत्यौ भ्रुवौ समे समाहितदर्शने व्यक्त-
भागविभागे बलवती तेजसोपपन्ने स्वाङ्गोपाङ्गे
चक्षुषी । ऋज्वी महोच्छ्वासावंशसम्पन्नेषदवन-
ताग्रा नासिका । महदृजु-सुनिविष्टदन्तमास्यम्
।
आयामविस्तरोपपन्ना श्लक्ष्णा तन्वी
प्रकृतियुक्ता
पाटलवर्णा जिह्वा । श्लक्ष्णं
युक्तोपचयमुष्णोपपन्नं
रक्तं तालु । महानदीनः स्निग्धोऽनुनादी
गम्भीर-
समुत्थो धीरस्वरः । नातिस्थूलौ नातिकृशौ
विस्तारोपपन्नावास्य प्रच्छादनौ रक्तावोष्ठौ । म-
हत्थौ हनुवृत्तौ । नातिमहती ग्रीवा । व्यूढमुप-
चितमुरो गूढं जत्रु पृष्ठवंशश्च । विकृष्टान्तरौ
स्तनौ, अंसपातिनी स्थिरे पार्श्वे,
वृत्तपरिपूर्णायतौ
बाहू, सक्थिनी अङ्गुलयश्च । महदुपचितं पाणि-
पादम् । स्थिरावृत्ताः स्निग्धास्ताम्रास्तुङ्गाः
कूर्म्मा-
काराः करजाः, प्रदक्षिणावर्त्ता सोत्सङ्गा च
नाभिः । नाभ्युरस्त्रिभागहीना समासमुपचित-
मांसा कृटीवृत्तौ स्थिरोपचितमांसौ नात्युन्नतौ
नात्यवनतौ स्फिचावनुपूर्ब्बवृत्तौ उपचययुक्ता-
वुरू । नात्युपचिते नात्यपचिते ण्णीपदे प्रगूढ-
सिरास्थिसन्धी जङ्घे । नात्युपचितौ
नात्यपचितौ
गुल्फौ पूर्ब्बोपदिष्टगुणौ पादौ कूर्म्माकारौ ।
प्रकृतियुक्तानि वात-मूत्र-पुरीषगुह्यानि तथा
स्वप्नजागरणायासस्मितरुदितस्तनग्रहणानि।
यच्च
किञ्चिदन्यदपि अनुक्तमस्तिं तदपि सर्व्वं
प्रकृति-
सम्पन्नमिष्टं विपरीतं पुनरनिष्टमिति दीर्घायु-
र्लक्षणानि" ॥ * ॥

णि गृहीतानि स्युः । मन्त्राद्याश्चौषधयो जीवकर्ष-
भकौ यान्यप्यन्यानि ब्राह्मणाः प्रशंसेयुः ।

क्रीडनकानि खल्वस्य तु विचित्राणि
घोषव-

न्त्यभिरामाणि अगुरूण्यतीक्ष्णाग्राणि अनास्य-
प्रवेशीनि अप्राणहराणि अवित्रासनानि स्युः ।

नह्यस्य वित्रासनं साधु तस्मात्तस्मिन्
रुदत्य-

भुञ्जाने वान्यत्र विधेयतामगच्छति राक्षसपि-
शाचपूतनाद्यानां नामान्याह्वयता कुमारस्य वि-
त्रासनार्थं नामग्रहणं न कार्य्यं स्यात् ।

यदि त्वातुर्य्यं किञ्चित् कुमारमागच्छेत्
तत्प्र-

कृतिनिमित्तपूर्ब्बरूपलिङ्गोपशयविशेषैस्तत्ततोऽनु-
बुध्यसर्व्वविशेषानातुरौषध-देश-कालाश्रयानवेक्ष-
माणश्चिकित्सितुमारभेतैनं मधुरमृदुलघुसुरभि-
शीतसङ्करं कर्म्मप्रवर्त्तयन्नेवं सात्म्याहि कुमारा
भवन्ति तथा ते शर्म्म लभन्ते चिराय रोगत्वे-
ऽरोगवृत्तमातिष्ठेत् देशकालात्मगुणविपर्य्ययेण
वर्त्तमानः ।

क्रमेणासात्म्यानि परिवर्त्योपयुञ्जानः
सर्व्वाण्य-

हितानि वर्जयेत्तथाबलवर्णशरीरायुषां सम्पद-
मवाप्नोतीति ।

एवमेनं
कुमारमायौवनप्राप्तेर्धर्म्मार्थकुशला-

गमनाच्चानुपालयेदिति पुत्राशिषां समृद्धिकरं
कर्म्म व्याख्यातम् । तदाचरन् यथोक्तैर्विधिभिः
पूजां यथेष्टं लभते ऽनसूयक इति" ॥
इति शारीरस्थाने ऽष्टमेऽध्याये चरकेणोक्तम् ॥ *
॥

"अथ कुमारं शीताभिरद्भिराश्वास्य
जात-

कर्म्मणि कृते मधुसर्पिरनन्ता ब्राह्मीरसेन सुवर्ण-

षण्मासञ्चैनमन्नं
प्राशयेल्लघुहितञ्च ।
नित्यमव-

रोधरतश्च स्यात् कृतरक्ष
उपसर्गभयात् । प्रयत्न-
तश्च ग्रहोपसर्गेभ्यो रक्ष्या बाला
भवन्ति ॥

अथ कुमार उद्विजते
त्रस्यति रोदिति नष्ट-

संज्ञो भवति नखदशनैर्धत्रीमात्मानञ्च
परिणु-
दति दन्तान् खादति । कूजति
जृम्भते भ्रुवौ
विक्षिपत्यूद्र्ध्वं निरीक्षते फेनमुद्वमति
सन्दष्टौष्ठः
क्रूरो भिन्नामवर्च्चा दीनार्त्तस्वरो
निशि जागर्त्ति
दुर्ब्बलो म्लानाङ्गो
मत्स्यच्छुच्छुन्दरिमत्कुणगन्धो
यथा पुरा धात्र्याः स्तन्यमभिलषति
तथा नाभिल-
षतीति सामान्येन
ग्रहोपसृष्टलक्षणमुक्तं विस्तरे-
णोत्तरे वक्ष्यामः" ॥
इति सुश्रुतेनोत्तरतन्त्रे १० अध्याये
उक्तम् ॥)
वरुणवृक्षः । इति मेदिनी ॥
अर्हदुपासकविशेषः ।
इति हेमचन्द्रः ॥ सिन्धुनदः । इति
शब्दरत्नावली ॥
(सनकसनातनसनत्सनन्दाएते
चत्वारोऽपि बा-
ल्यत एव ब्रह्मचारित्वात् कुमारा
इत्युच्यन्ते ॥
त इव ये च कौमारतो
ब्रह्मचारिणस्तेऽपि विज्ञे-
याः । यथा, मनौ । ५ । १५९ ।
"अनेकानि सहस्राणि
कुमारब्रह्मचारिणाम् ।

अतोऽनन्तरं कुमारागारविधिमनु-
व्याख्यास्यामः ॥

"वास्तुविद्याकुशलः प्रशस्तं
रम्यतमस्कं निवातं

प्रवातैकदेशं दृढमपगतश्वापदपशुदंष्ट्रिमूषिका-
पतङ्गं
सुसंविभक्तसलिलोदूखलमूत्रवर्च्चस्थानस्नान-
भूमिमहानसमृतुसुखं यथर्त्तुशयनासनास्तरण-
सम्पन्नं कुर्य्यात् । तथा सुविहितरक्षाविधान-
बलिमङ्गलहोमप्रायश्चित्तं शुचिवृद्धवैद्यानुरक्त-
जनसम्पूर्णमिति कुमारागारविधिः ।

शयनास्तरणप्रावरणानि कुमारस्य
मृदुलघु-

शुचिसुगन्धीनि स्युः । स्वेदमलजन्तुमन्ति मूत्र-
पुरीषोपसृष्टानि च वर्ज्ज्यानि स्युः ।

असति सम्भवेऽन्येषां तान्येव च
सुप्रक्षालि-

तोपधानानि सुधूपितानि सुशुद्धशुष्कान्युपयोगं
गच्छेयुः ।

धूपनानि पुनर्वाससां
शयनास्तरणप्रावरणानाञ्च

यवसर्षपातसी-हिङ्गु-
गुग्गुलुवचारोचकवयःस्थागो-
लोमीजटिलापलङ्कषाशाकरोहिणीसर्पनिर्म्मोका-
नि घृतसंप्रयुक्तानि स्युः ।

मणयश्च धारणीयाः कुमारस्य
खड्गरुरुगवय-

वृषभाणां जीवतामेव दक्षिणेभ्यो विषाणेभ्यो
ऽग्रा-

चूर्णमङ्गुल्यनामिकया लेहयेत्ततो
बलातैलेनाभ्यज्य
क्षीरवृक्षकषायेण सर्व्वगन्धोदकेन वा रूप्यहेम-
प्रतप्तेन वा वारिणा स्नापयेदेनं कपित्थपत्र-
कषायेण वा कोष्णेन यथाकालं यथादेशं यथा
विभवञ्च ॥

क्षीराहाराय सर्पिः पाययेत् सिद्धार्थक-

वचामांसीपयस्यापामार्गशतावरीसारिवाब्राह्मी-
पिप्पलीहरिद्राकुष्ठसैन्धवसिद्धं क्षीरान्नमादाय म-
धुकवचा पिप्पली चित्रकत्रिफला सिद्धमन्नमादाय
द्विपञ्चमूलीक्षीर-तगर-भद्रदारु-मरिच-मधु-विड-
ङ्ग-द्राक्षा-द्विब्राह्मी सिद्धम् । तेनारोग्यबलमे-
धायूंषि शिशोर्मवन्ति ॥

बालं पुनर्गात्रसुखं गृह्णीयात् नचैनं
तर्जयेत्

सहसा न प्रतिबोधयेत् वित्रासभयात् सहसा
नापहरेदुत्क्षिपेद्वा वातादिविघातभयात् नोप-
वेशयेत् कौब्ज्यभयात् नित्यञ्चैनमनुवर्त्तेत प्रिय-
शतैरजिघांसुः । एवमनभिहतमनास्त्वभिवर्द्धते
नित्यमुदग्रसत्त्व-सम्पन्नो नीरोगः सुप्रसन्नमनाश्च
भवति । वातातपविद्युत्प्रभापादपलताशून्यागार-
निम्नस्थानगृहच्छायादिभ्योदुर्ग्रहोपसर्गतश्च
बालं
रक्षेत् ।
"नाशुचौ विसृजेद्बालं नाकाशे विषमे न च ।
नोष्ममारुतवर्षेषु रजोधूमोदकेषु च ॥
क्षीरसात्म्यतयाक्षीरमाजंगव्यमथापि वा ।
दद्यादास्तन्यपर्य्याप्तेर्बालानांवीक्ष्य मात्रया ॥

दिवं गतानि विप्राणामकृत्वा
कुलसन्ततिम्" ॥
मङ्गलग्रहः । यथा, नवग्रहस्तोत्रे ।
"धरणीगर्भसम्भूतं
विद्युत्पुञ्जसमप्रभम् ।
कुमारं शक्तिहस्तञ्च लोहिताङ्गं
नमाम्यहम्" ॥
शुक्तिमत्पर्व्वतोद्भूतऋषिकुल्याविशेषः
।
यथा, विष्णुपुराणे ।
"ऋषिकुल्याः कुमाराद्याः
शुक्तिमत्पादसम्भवाः" ॥
शाकद्वीपाधिपतेः सप्तपुत्त्राणामेकः ।
तन्नाम्ना तद्व-
र्षस्यापि तथा संज्ञा ।
यथा, विष्णुपुराणे २ । ४ । ५९-६०
।
"शाकद्वीपेश्वरस्यापि भवस्य
सुमहात्मनः ।
सप्तैव तनयास्तेषां ददौ वर्षाणि सप्त
सः ॥
जलदश्च कुमारश्च सुकुमारो
मनीचकः ।
कुसुमोदश्च मौदाकिः सप्तमश्च
महाद्रुमः ॥
तत्संज्ञान्येव तत्रापि
सप्तवर्षाण्यनुक्रमात्" ॥

मन्त्रविशेषः । यथा,
तन्त्रसारधृतविश्वसार-

वचनम् ।
"हृतवीर्य्यश्च भीमश्च प्रध्वस्तो
बालकः पुनः ।
कुमारश्च युवा प्रौढो वृद्धो
निस्त्रिंशकस्तथा" ॥
स्वरोदयोक्तबालचक्रस्थस्वरभेदः ।
बालोपद्रवक-
ग्रहभेदः । यथा, सुश्रुते उत्तरतन्त्रे
३७ अः ॥
"स्कन्दः सृष्टो भगवता देवेन
त्रिपुरारिणा ।
बिभर्त्ति चापरां संज्ञां कुमार इति स
ग्रहः" ॥

| | | त्रि, सुन्दरः ॥)<br><br>**कुमारकः**, पुं, (कुमार + संज्ञायां स्वार्थे वा कन् ।)<br><br>वरुणवृक्षः । इत्यमरः । २ । ४ । २५ ॥ बालकः ॥ इति हेमचन्द्रः ॥ (यथा, महाभारते । १ । १२८ । २२ ।<br>“प्रहारवेगाभिहता द्रुमा व्याघूर्णितास्ततः ।<br>सफलाः प्रपतन्ति स्म द्रुतं स्रस्ताः कुमारकाः” ॥<br>राजकुमारः । यथा महाभारते । १ । १३३ । ७ ।<br>“ते तं दृष्ट्वा महात्मानमुपगम्य कुमारकाः ।<br>भग्नोत्साहक्रियात्मानो ब्राह्मणं पर्य्यवारयन्” ॥) |
|---|---|---|

कौरव्यवंशोद्भवो नागविशेषः । यथा,
महाभारते
१ । आस्तीकपर्व्वणि ५७ । १३ ।
“एरकः कुण्डलो वेणी वेणीस्कन्धः
कुमारकः ।
बाहुकः शृङ्गवेरश्च धूर्त्तकः प्रातरातकौ ।
कौरव्यकुलजास्त्वेते प्रविष्टा हव्यवाहनम्”
॥)

**कुमारजीवः**, पुं, (कुमारं जीवयतीति । जीव + णिच् +
अण् ।) पुत्त्रञ्जीवकवृक्षः । इति रत्नमाला । जी-
यापुता इति भाषा ॥

**कुमारपालः**, पुं, (कुमारं पालयति । पाल् + णिच्
+ अच् ।) शालिवाहनराजः । इति
हेमचन्द्रः ॥
(शिशुपालके, त्रि ॥)

**कुमारभृत्या**, स्त्री, (कुमारस्य गर्भस्य निर्विघ्नप्रस-
वार्थं गर्भचिकित्साकुशलैः भिषग्भिः धात्र्या
वा
भृत्या पालनम् ।) गर्भिण्याः परिचर्य्या ।
इति
हारावली ॥ तत्पर्य्यायः । बालतन्त्रम् २
गर्भिण्य-
वेक्षणम् ३ । इति त्रिकाण्डशेषः ॥
(यथा, रघुः । ३ । १२ ।
“कुमारभृत्याकुशलैरनुष्ठिते
भिषग्भिराप्तैरथ गर्भभर्म्मणि ।
पतिः प्रतीतः प्रसवोन्मुखीं प्रियां
ददर्श काले दिवमभ्रितामिव” ॥)

**कुमारयुः**, पुं, (कुमारं कौमारं याति । मित्रय्वादि-
त्वात् कुः निपातनात् साधुः ।) युवराजः ।
इत्यु-
णादिकोषः ॥

**कुमारवाही**, [न्] पुं, (कुमारं कार्त्तिकेयं वहति ।
वह + णिनिः ।) मयूरः । इति शब्दरत्ना-
वली ॥

सम्प्राप्ते द्वादशे वर्षे कुमारीत्यभिधीयते” ॥
इति स्मृतौ भेदः । इह अभेदोपचारात्
कन्या
कुमारीत्थमरः ॥ इति भरतः ॥ आगमे तु
कुमारी-
पूजने अजातपुष्पा चेत् तदा
षोडशवर्षपर्य्यन्त-
वयस्का । तस्या वयोभेदेन नामभेदाः ।
यथा, --
“एकवर्षा भवेत् सन्ध्या द्विवर्षा च सरस्वती
।
त्रिवर्षा तु त्रिधामूर्त्तिश्चतुर्व्वर्षा तु कालिका
॥
सुभगा पञ्चवर्षा च षड्वर्षा च उमा भवेत् ।
सप्तभिर्मालिनी साक्षादष्टवर्षा च कुब्जिका ॥
नवभिः कालसङ्कर्षा दशभिश्चापराजिता ।
एकादशे तु रुद्राणी द्वादशाब्दे तु भैरवी ॥
त्रयोदशे महालक्ष्मीर्द्विसप्ता पीठनायिका ।
क्षेत्रज्ञा पञ्चदशभिः षोडशे चान्नदा मता ॥
एवं क्रमेण सम्पूज्या यावत् पुष्पं न जायते ।
पुष्पितापि च सम्पूज्या
तत्पुष्पादानकर्म्मणि” ॥ * ॥
तत्पूजाविधिर्य्यथा ।
“अथान्यत् साधनं वक्ष्ये महाचीनक्रमोद्भवम्
।
येनानुष्ठितमात्रेण शीघ्रं देवी प्रसीदति ॥
अष्टम्याञ्च चतुर्द्दश्यां कुह्वां वा रविसंक्रमे ।
कुमारीपूजनं कुर्य्याद्यथा विभवमात्मनः ॥
वस्त्रालङ्करणाद्यैश्च भक्ष्यैर्भोज्यैः सुविस्तरैः
।
पञ्चतत्त्वादिभिः सम्यग्देवीबुद्ध्या
सुसाधकः” ॥
इत्यन्नदाकल्पः ॥ * ॥ (स्वनामख्याता
परीक्षित्-
पुत्त्रस्य भीमसेनस्य पत्नी । यथा, --
महाभारते
१ । पूरुवंशानुकीर्त्तने ९५ । ४३ ।

“भीमसेनः खलु कैकेयीमुपयेमे
कुमारीं नाम

तस्यामस्य जज्ञे प्रतिश्रवा नाम” ॥)

इति वैद्यकरत्नमालायाम् ॥)

**कुमुत्** [द्] त्रि, (कुत्सिते विषये मुत् हर्षो यस्य
कुत्सिता मुद् अस्य वा ।) कृपणः । इति मेदिनी
॥
अप्रीतः । इति शब्दरत्नावली ॥

**कुमुदं**, क्ली, (कौ मोदते । मुद् “इगुपधेति” । ३ ।
१ । १३५ । कः ।) श्वेतोत्पलम् । हेला सुँदि
इत्यादि भाषा ॥ (यथा, रामायणे ५ । ५५ । १
।
“सचन्द्रकुमुदं रम्यं सार्ककारण्डवं शुभम् ।
पुष्पश्रवणकादम्बमभ्रशैवलशाद्वलम्” ॥)
तत्पर्य्यायः । कैरवम् २ । इत्यमरः । १ । १०
।
३७ । चन्द्रकान्तम् ३ गर्द्दभम् ४ कुमुत् ५ ।
इति
रत्नमाला ॥ धवलोत्पलम् ६ कह्लारम् ७ शीत-
लकम् ८ शशिकान्तम् ९ इन्दुकमलम् १०
चन्द्रि-
काम्बुजम् ११ गन्धसोमम् १२ । इति शब्द-
रत्नावली ॥ अपि च ।
“श्वेतं कुवलयं प्रोक्तं कुमुदं कैरवं तथा ।
कुमुदं पिच्छिलं स्निग्धं मधुरं ह्लादि शीतलम्”
॥
इति भावप्रकाशः ॥ अस्य गुणाः । शीतलत्वम्
।
स्वादुत्वम् । पाके तिक्तत्वम् । कफरक्तदोषदाह-
श्रमपित्तनाशित्वञ्च । इति राजनिर्घण्टः । रक्त-
पद्मम् । इति मेदिनी ॥ रूप्यम् ॥ इति हेम-
चन्द्रः ॥

**कुमुदः**, पुं, (कुत्सिते नैरृतकोणे मोदते इति । कु +
मुद् + कः ।) नैरृतकोणस्थदिघस्ती । इत्यमरः
।
१ । ३ । ३ ॥ वानरविशेषः । (अयं खलु राम-
चन्द्रस्य सेनापतिवानराणां एकतमः ।
यथा, रामायणे । ६ । २ । २८ ।
“नाम्ना संकोचलो नाम नानाद्विजयुतो गिरिः ।
तत्र राज्यं प्रशास्त्येष कुमुदो नाम वानरः ।
योऽसौ शतसहस्राणि सहस्रं परिकर्षति” ॥)

**कुमारसूः**, स्त्री, (कुमारं कार्त्तिकेयं सूते । सू + क्विप् ।)

गङ्गा । इति हेमचन्द्रः ॥ दुर्गा । इति व्युत्पत्ति-
लभ्योऽर्थः ॥ (पुं वह्निः । यथा, महाभारते । २ । सहदेवदिग्विजये ३१ । ४३ ।
"वैश्वानरस्त्वं पिङ्गेशः प्लवङ्गो भूरितेजसः ।
कुमारसूस्त्वं भगवान् रुद्रगर्भो हिरण्यकृत्" ॥)

**कुमारिका**, स्त्री, (कुमारयति आनन्देन क्रीडति ।

कुमार + णिच् + ण्वुल् + टाप् अत इत्यम् ।) कुमा-
री । इति शब्दरत्नावली ॥ नवमल्लिका । इति
रत्नमाला ॥ भारतवर्षस्य खण्डविशेषः । यथा, --
"वर्णव्यवस्थितिरिहैव कुमारिकाख्ये
शेषेषु चान्त्यजजना निवसन्ति सर्व्वे" ॥
इति सिद्धान्तशिरोमणौ गोलाध्यायः ॥ स्थूलैला ।
इति राजनिर्घण्टः ॥ (ओषधिविशेषः । घृत-
कुमारी इति ख्याता । अस्या व्यवहारो यथा
त्रैलोक्यचिन्तामणिरसे द्रष्टव्यः ।
"खल्वे द्रवेणैव कुमारिकायाः" ।
इति रसेन्द्रसारसङ्ग्रहे वातव्याध्यधिकारे ।
नेत्रमण्डलस्थप्रतिविम्बविशेषः । यथा, --
"दृष्टा यस्य विजानीयात् पन्नरूपां कुमारिकाम् ।
प्रतिच्छायामयोमक्ष्णो नैनमिच्छेच्चिकित्सितुम्" ॥
इति चरके इन्द्रियस्थाने ७ अध्याये ॥)

**कुमारी**, स्त्री, (कुमार + प्रथमवयोवचनत्वात् स्त्रियां

ङीष ।) द्वादशवर्षीया कन्या । यथा, --
"अष्टवर्षा मवेद्गौरी दशवर्षा च कन्यका ।

पार्व्वती । नवमल्लिका । नदीविशेषः । (इयं हि
शाकद्वीपान्तर्गतसप्तनदीनामेका ।
यथा, विष्णुपुराणे २ । ४ । ६५ ।
"नद्यश्चात्र महापुण्याः सर्व्वपापभयापहा ।
सुकुमारी कुमारी च नलिनीधेनुका च या" ॥)
सहा । घृतकुमारी इति ख्याता । अपराजिता ।
जम्बुद्वीपः । इति मेदिनी ॥ सीता । इति हेम-
चन्द्रः ॥ बन्ध्याकर्कोटकी । स्थूलैला । मोदिनी-
पुष्पम् । तरुणीपुष्पम् । श्यामापक्षी । इति राजनिर्घण्टः ॥

**कुमाल** त् क केलौ । इति कविकल्पद्रुमः ॥ (अदन्त-

चुरां-परं-अकं-सेट् ।) ह्रस्वीं । अचुकुमालत् ।
इति दुर्गादासः ॥

**कुमालकः**, पुं, (कुमाल + संज्ञायां कन् । कुमाल

त्क केलौ + ण्वुल् वा ।) सौवीरदेशः । इति हेमचन्द्रः ॥

**कुमुत्**, [द्] क्ली, (कौ पृथिव्यां मोदते इति ।

कु + मुद् + क्विप् ।) कुमुदम् । इति मेदिनी । हेला
इति भाषा । रक्तोत्पलम् । इति त्रिकाण्डशेषः ॥
(यथा, भागवते ३ । २३ । ३८ ।
"बभ्राज उत्कचकुमुद्गणवानपीब्य
स्ताराभिरावृत इवोडुपतिर्नभस्थः" ॥
कुमुदस्य कन्दविशेषः । शालुक इति यस्य ख्यातिः ।
अस्य पर्य्याया यथा, --
"कैरवं चन्द्रकान्तञ्च गर्दभं कुमुदं कुमुत्" ॥

नागविशेषः । (यथा, महाभारते । १ । ३५ । १५ ।
"कुठरः कुञ्जरश्चैव तथा नागः प्रभाकरः ।
कुमुदः कुमुदाक्षश्च तित्तिरिर्हलिकस्तथा" ॥)
दैत्यभेदः । सितोत्पलम् । इति हेमचन्द्रः ॥ क-
र्पूरः । इति राजनिर्घण्टः ॥ ध्रुवकभेदः । यथा, --
"एकाविंशतिवर्णाङ्घ्रिर्म्भवेत् शृङ्गारके रसे ।
कुमुदोऽभोष्टदश्चैव ताले तुरगलीलके" ॥
इति सङ्गीतदामोदरः ॥ (कुं पृथ्वीं भूमिं वा मोद-
यति । अन्तर्भूतणिजन्तात् मुदः कः । विष्णुः ।
यथा, महाभारते । १३ । १४९ । ७६ ।
"शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः" ॥
विष्णुपार्श्वदः । यथा, भागवते । ८ । २१ । १० ।
"कुमुदः कुमुदाक्षश्च विश्वक्सेनः पतत्रिराट्" ॥
मेरोरुपष्टम्भगिरिविशेषः । स चायुतयोजनवि-
स्तृतः । यथा, भागवते ५ । १६ । १२ ।
"मन्दरो मेरुमन्दरः सुपार्श्वः कुमुद इति ।
अयुतयोजनविस्तारोन्नाहा मेरोश्चतुर्द्दिशमवष्टम्भ-
गिरय उपकॢप्ताः" ॥ शाल्मलद्वीपान्तर्गतप्रथम-
पर्व्वतः । यथा, विष्णुपुराणे २ । ४ । २६ ।
"कुमुदश्चान्नतश्चैव तृतीयश्च वलाहकः" ॥
आनूपजन्तुविशेषः । यथा, --
"हंससारसचक्राद्याः कुमुदाश्च कपिञ्जलाः ।

आनूपास्तेषु विज्ञेयाः श्लेष्मला
वातकोपनाः” ॥
इति हारीते प्रथमेस्थाने ११ अध्यायः
॥)

**कुमुदबान्धवः**, पुं, (कुमुदस्य बान्धवः ।) चन्द्रः । क-
र्पूरः । इत्यमरः । १ । ३ । १३ ॥

**कुमुदवती**, स्त्री, (कुमुदानि सन्त्यस्यां इति । मतुप्
मस्य वः ङीप् ।) कुमुद्वती ।
कुमुदसमूहः । इत्य-
मरटीकायां भरतः ॥

**कुमुदा**, स्त्री, (कुत्सितं मोदते । कु + मुद् + कः ।
टाप् च ।) कुम्भिका । पाना इति भाषा
। गम्भा-
रीवृक्षः । इति मेदिनीकरहेमचन्द्रौ ॥
(अस्याः पर्य्याया यथा, --
“श्रीपर्णी काश्मरी भद्रा गाम्भारी
गोपभद्रिका ।
कुमुदा च सदा भद्रा कट्फला
कृष्णवृन्तिका” ॥
इति वैद्यकरत्नमालायाम् ॥)
शालपर्णोवृक्षः ।
धातकीवृक्षः । कट्फलः । इति
राजनिर्घण्टः ॥

**कुमुदावासः**, पुं, (कुमुदानां आवासः । कुमुदानि-
आवसन्त्यत्र वा । आ + वस् +
अधिकरणे घञ् ।)
कुमुदप्रायदेशः । इति हेमचन्द्रः ॥

**कुमुदिका**, स्त्री, (कौ भूमौ मोदते इति । मुद् +
कर्त्तरि ण्वुल् टाप् अत इत्वञ्च ।)
कट्फलः ।
इत्यमरः । २ । ४ । ४० ॥ (अस्याः
पर्य्याया
यथा, --
“कट्फलः सोमवल्कश्च कैटर्य्यः
कुम्भिकापि च ।
न मानिनीशं सहतेऽन्यसङ्गमम्” ॥
अस्याः पर्य्याया यथा, --
“कुमुद्वती कैरविका तथा कुमुदिनीति च” ।
गुणाश्चास्या कुमुदिनीशब्दे ज्ञेयाः । इति
भावप्रका-
शस्य पूर्ब्बखण्डे प्रथमे भागे ॥
कुमुदाख्यनागराजस्य यवीयसी स्वसा सा तु
रामचन्द्रपुत्त्रस्य कुशस्य पत्नी ।
यथा, रघुः १७ । ६ ।
“तं स्वसा नागराजस्य कुमुदस्य कुमुद्वती ।
अन्वगात् कुमुदानन्दं शशाङ्कमिव कौमुदी” ॥
क्रौञ्चद्वीपान्तर्गतानां सप्तनदीनामेका नदी ।
यथा, विष्णुपुराणे २ । ४ । ५५ ।
“गौरी कुमुद्वती चैव सन्ध्यारात्रिर्म्मनोजबा ।
क्षान्तिश्च पुण्डरीका च सप्तैता वर्षनिम्नगाः”
॥)

**कुमुद्वान्**, त्रि, (कुमुद् + “कुमुदनडवेतसेभ्यः” । ४ ।
२ । ८७ । इति ड्मतुप् मस्य वः ।)
कुमुदबहुल-
देशः । इत्यमरः । २ । १ । ९ ॥
(यथा रघुवंशे ४ । १९ ।
“हंसश्रेणीषु तारासु कुमुद्वत्सु च वारिषु ।
विभूतयस्तदीयानां पर्य्यस्ता यशसामिव” ॥)

**कुमोदकः**, पुं, (कुं पृथ्वीं मोदयति । कु + मुद् +
णिच् + ण्वुल् । पृथिव्याः
भारावतारणादिलीला-
कर्म्मभिः सर्व्वेषामानन्दकारकत्वात् तस्य
तथा-
त्वम् ।) विष्णुः । इति हेमचन्द्रः ॥

**कुम्पः**, त्रि, (कुम्पति कुम्पयति वा । कुपि वेष्ठने +
अच् इदित्वात् नुम् ।) बाहुकुण्ठः । इति
जटा-
धरः । कोपा इति भाषा ॥

**कुम्बा**, स्त्री, (कुवि वेष्टने + अच् टाप् च ।) सुग-
हनावृतिः । अस्पृश्यादिदर्शनवारणाय
वेष्टनम् ।
इत्यमरः । २ । ७ । १८ ॥ (यथा
तैत्तिरीयसंहि-
विरोचनश्च कुम्भश्च निकुम्भश्चेति भारत !” ॥
विष्णुः । यथा महाभारते १३ । १४९ । ८१ ।
“अर्च्चिष्मानर्च्चितः कुम्भो विशुद्धात्मा विशोधनः”
॥)

द्रोणद्वयपरिमाणम् । ६४ सेर इति भाषा ।

तत्पर्य्यायः । सूर्पः २ । इति वैद्यकपरिभाषा ॥
मेषादिद्वादशराश्यन्तर्गतैकादशराशिः । तस्य
पर्य्यायः । हृद्रोगः २ । इति दीपिका ॥ स
च धनिष्ठाशेषार्द्धसम्पूर्णशतभिषायुक्तपूर्ब्बभाद्रपदा
प्रथमपादत्रयेण भवति । अस्याधिष्ठात्री देवता
कलसधारी पुरुषः । स तु शीर्षोदयः । चरण-
रहितः । मध्यसन्तानः । मध्यमस्त्रीसङ्गः । कर्व्वूर-
वर्णः । वनचारी । वायुराशिः । स्निग्धः । उष्णः ।
अर्द्धस्वरः । वातपित्तकफप्रकृतिः । शूद्रवर्णः ।
पश्चिमदिक्स्वामी । श्लथाङ्गः । तत्र जातफलम् ॥
“मेधावी हस्तिघोटकधनेश्वरो दन्तपीडायुक्तः
स्नेहशून्यः” । इति ज्योतिषम् ।
जन्मकालीनचन्द्रा-
श्रितैतद्राशिफलम् ।
“अलसतासहितोऽन्यसुतप्रियः
कुशलताकलितोऽतिविचक्षणः ।
कलसगामिनि शीतकरे नरः
सदसि सज्जनमानसुरोचनः” ॥
इति कोष्ठीप्रदीपः ॥ तस्योदये तन्नामकलग्नं
भवति । तस्य गणितप्राप्तपरिमाणं यथा । दश-
व्यङ्गुलाधिकः पञ्चाङ्गुलप्रभे देशे वर्त्तमानोनविंशा-
यनांशे अष्टपञ्चाशत्पलाधिकत्रिदण्डाः । इति
ज्योतिषम् । तत्र जातफलम् ।
“कुम्भलग्ने समुद्भूतश्चलचित्तोऽतिसौहृदः ।
परदाररतो नित्यं सत्त्वकायो महासुखी” ॥
इति कोष्ठीप्रदीपः ॥

**कुम्भकः**, पुं, (कुम्भ इव कायति प्रकाशते निश्चलत्वात् ।
कै + कः । यद्वा कुम्भ + स्वार्थे कः ।) दक्षिण-
हस्तेन नासापुटद्वयं धृत्वा प्राणायामाङ्गं वायु-
स्तम्भनम् । इति तन्त्रम् ॥ (पातञ्जलयाज्ञव-
ल्क्यादौ तु ।
“कुम्भकः पूरको रेचः प्राणायामस्त्रिलक्षणः ।
पूरकं पूरणं वायोः कुम्भकः स्थापनं क्वचित् ॥
वहिर्निःसारणं तस्य रेचकः परिकीर्त्तितः ॥

श्रीपर्णिका कुमुदिका भद्राभद्रवतीति च” ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे । गुणा-
श्चास्य कट्फलशब्दे व्यक्ताः ॥)

**कुमुदिनी**, स्त्री, (कुमुदानि सन्त्यस्याम् । कुमुद +
इनिः ङीप् ।) कुमुदयुक्तपुष्करिण्यादिः । कुमुद-
समूहः । कुमुदलता । इति भरतः ॥
(यथा भ्रमराष्टके । ७ ।
“अलिरसौ नलिनीवनवल्लभः
कुमुदिनी कुलकेलिकलारसः ।
विधिवशेन विदेशमुपागतः
कुटजपुष्परसं बहु मन्यते” ॥)
तत्पर्य्यायः । कुमुद्वती २ । इत्यमरः । १ । १० ।
३९ ॥ उत्पलिनी । इति राजनिर्घण्टः ॥ छोट
सुँदि इति भाषा ॥

**कुमुदिनीपतिः**, पुं, (कुमुदिन्याः पतिः वल्लभः ।)
चन्द्रः । इति हेमचन्द्रः ॥

**कुमुदी**, स्त्री, (कुमुद + स्त्रियां ङीष् ।) कट्फलः ।
इति शब्दरत्नावली ॥
(अस्या गुणादयः कट्फलशब्दे ज्ञातव्याः ॥)

**कुमुदेशः**, पुं, (कुमुदानां ईशः ।) चन्द्रः । इति शब्द-
रत्नावली ॥

**कुमुद्वती**, स्त्री, (कुमुद + “कुमुदनडवेतसेभ्यो ड्मतुप्” ।
४ । २ । ८७ । इति ड्मतुप्
“मादुपधायाश्च” ।
८ । २ । ९ । इति मस्य वः ।
उगितश्चेति ङीप् ।)
कुमुदिनी । इत्यमरः । १ । १० । ३८ ॥
(यथा, भट्टिकाव्ये । २ । ६ ।
“प्रभातवाताहतिकम्पिताकृतिः
कुमुद्वतीरेणुपिशङ्गविग्रहम् ।
तायाम् । “तस्मिनुदीचीनकुम्बां शम्यां निद-
धाति” ॥ तथा शङ्करकविकृते अम्बाष्टके । ७ ।
“कुम्बावतीसमविडम्बा गलेन
नवतुम्बाभवीणस-
विधा शं
बाहुलेयशशिबिम्बाभिराममुखसम्बाधि-
तस्तनभरा” ॥ इति ॥)

**कुम्भं**, क्ली, (कुं भूमिं उम्भति गन्धेन पूरयति । कु +
उन्भ पूरणे + अच् ॥ शकन्ध्वादित्वात् साधुः ।)
गुग्गुलुः । इत्यमरः । ३ । ३ । १३४ ॥
त्रिवृत् ।
इति हेमचन्द्रः ॥

**कुम्भः**, पुं, (कुं भूमिं उम्भति जलेन । उन्भ + अच् ।
शकन्ध्वादित्वात् साधुः ।) घटः । अस्य परिमाणं
कलसशब्दे द्रष्टव्यम् ॥ गजकुम्भः । हस्तिशिरसः
पिण्डद्वयम् । इत्यमरः । ३ । ३ । १३४ ॥
(यथा प्रसन्नराघवे, -- “तैः किं मत्तकरीन्द्रकुम्भ-
कुहरेनारोपणीयाः कराः” ॥) कुम्भकर्णपुत्त्रः ।
(यथा, गोः रामायणे । ५ । ७९ । १५ ।
“सुतोऽथ कुम्भकर्णस्य कुम्भः परमकोपनः ।
अब्रवीत् परमक्रुद्धो रावणं लोकरावणम्” ॥)
वेश्यापतिः । इति विश्वमेदिन्यौ ॥
समाधिविशेषः ।
प्राणायामाङ्गकुम्भक इति यावत् । इति धरणी ॥
(प्रह्लादपुत्त्रः । यथा महाभारते १ । ६५ । १९ ।
“प्रह्लादस्य त्रयः पुत्त्राः ख्याताः सर्व्वत्र भारत ! ॥
दक्षिणे रेचयेद् वायुं वामेन पूरितोदरः ।
कुम्भेन धारयेन्नित्यं प्राणायामं विदुर्बुधाः ॥
अङ्गुष्ठेन पुटं ग्राह्यं नासया दक्षिणं पुनः ।
कनिष्ठानामिकाभ्याञ्च वामं प्राणस्य संग्रहे ॥
अङ्गुष्ठतर्जनीभ्यान्तु ऋग्वेदी सामगायनः ।
अङ्गुष्ठानामिकाभ्यान्तु ग्राह्यं सर्व्वैरथर्व्वभिः” ॥)
(तथा च, हठयोगदीपिकायाम् । २ । ४३ ।
“तत्सिद्धये विधानज्ञाश्चित्रान् कुर्व्वन्ति कुम्भकान् ।
विचित्रकुम्भकाभ्यासाद्विचित्रां सिद्धिमाप्नुयात्” ॥

“तत्सिद्धये उन्मन्यवस्थासिद्धये” । इति त-
ट्टीका ॥ अस्य भेदाः यथा तत्रैव २ । ४४ ।
“सूर्य्यभेदनमुज्जायी सीत्कारी सीतली तथा ।
भस्त्रिकाभ्रामरीमूर्च्छाप्लाविनीत्यष्टकुम्भकाः” ॥
तथा पुनस्तत्रैव २ । ७१ ।
“प्राणायामस्त्रिधा प्रोक्तो रेचपूरककुम्भकैः ।

सहितः केवलश्चेति कुम्भको द्विविधो मतः” ॥ * ॥)

**कुम्भकारः**, पुं, (कुम्भं करोति । कुम्भ + कृ + “कर्म्म-ण्यण्” । ३ । २ । १ । इति अण् ।) जातिविशेषः । कुमोर इति भाषा । स तु शूद्रागर्भे विश्वकर्म्मऐर-साज्जातः । इति ब्रह्मवैवर्त्तपुराणम् ॥ तत्पर्य्यायः । कुलालः २ । इत्यमरः । २ । १० । ६ ॥ चक्री ३ । इति जटाधरः ॥ (एतज्जातिविषये तु पुराण-भेदेन मतभेदो दृश्यते । यथा । “वैश्यायां विप्रतश्चौरात् कुम्भकारः स उच्यते” ॥ “मालाकाराच्चर्म्मकार्य्यां कुम्भकारो व्यजायत” ॥ “पट्टीकाराच्च तैलिक्यां कुम्भकारो बभूव ह” ॥ इत्यादि बहुलमतमस्ति बाहुल्यभिया नास्माभि-रुद्ध्रियते ॥) कुक्कुभपक्षी । इति हेमचन्द्रः ॥

**कुम्भकारिका**, स्त्री, (कुम्भस्येव कार आकारो यस्याः । कुम्भकार + कप् + टाप् अत इत्वञ्च ।) कुलत्था । इति राजनिर्घण्टः ॥ (कुम्भं करोतीति । कुम्भ + कृ + ण्वुल् स्त्रियां टाप् अत इत्वम् । कुम्भकारस्त्री । इति व्युत्पत्तिलब्धोऽर्थः ॥)

**कुम्भकारी**, स्त्री, (कुम्भस्येव कार आकारो यस्याः । गौरादित्वात् ङीष् ।) कुलत्थाञ्जनम् । कुलत्थिका । इति राजनिर्घण्टः ॥ मनःशीला । इति जटाधरः ॥

रोविशेषः । यथा महाभारते । ३ । ४३ । ३० । “गोपाली सहजन्या च कुम्भयोनिः प्रजागरा । चित्रसेना चित्रलेखा सहा च मधुरस्वना” ॥)

**कुम्भला**, स्त्री, (कुम्भं कुम्भाकारं लाति आदत्ते । कुम्भ + ला आदाने + कः टाप् च ।) मुण्डितिका । इति रत्नमाला ॥ मुण्डिरी इति भाषा ॥ (मुण्डी-शब्दे विवृतिरस्या ज्ञेया ॥)

**कुम्भवीजकः**, पुं, (कुम्भ इव वीजं यस्य । ततः स्वार्थे कः ।) रीठाकरञ्जः । इति राजनिर्घण्टः ॥

**कुम्भशाला**, स्त्री, (कुम्भाय कुम्भनिर्म्माणार्थं या शाला ।) कुम्भनिर्म्माणादिगृहम् । तत्पर्य्यायः । पाकपुटी २ । इति हेमचन्द्रः ॥

**कुम्भसन्धिः**, पुं, (कुम्भयोः सन्धिर्मिलनम् ।) हस्ति-कुम्भद्वयमध्यस्थानम् । तत्पर्य्यायः । आरक्षः २ । इति त्रिकाण्डशेषः ॥

**कुम्भसम्भवः**, पुं, (कुम्भः सम्भव उत्पत्तिस्थानं यस्य ।) अगस्त्यमुनिः । इत्यमरः । १ । ३ । २० ॥ (यथा राजेन्द्रकर्णपुरे ७१ । “तद्युक्तं ननु कुम्भसम्भव ! भवत् प्रज्ञारहस्येन यत् द्याञ्च क्ष्माञ्च तिरोदधन्निरवधिर्विन्ध्योऽपि वन्ध्यः कृतः” ॥ वशिष्ठः । द्रोणः । एतयोरपि कुम्भो-

गुणाः वारिपर्णीशब्दे द्रष्टव्याः । पाटलावृक्षः । द्रोणपुष्पी । इति राजनिर्घण्टः ॥ नेत्ररोगविशेषः । तस्यं लक्षणं यथा, -- “वर्त्मान्ते पिडकाध्माता भिद्यन्ते च स्रवन्ति च । कुम्भीकवीजसदृशाः कुम्भिकाः सन्निपातजाः” ॥ इति माधवकरः ॥ (कुम्भा + स्वार्थे कन् टाप् इत्वञ्च । वेश्या । इति शब्दमाला । कट्फलम् । भावप्रकाशे अस्याः पर्य्यायाः यथा, -- “कट्फलः सोमवल्कश्च कैटर्य्यः कुम्भिकापि च । श्रीपर्णिका कुमुदिका भद्रा भद्रवतीति च” ॥ गुणाश्चास्याः कट्फलशब्दे बोद्धव्याः ॥)

**कुम्भिनीवीजं**, क्ली, (कुम्भिन्या वीजम् ।) जयपालः । इति राजनिर्घण्टः ॥

**कुम्भिपाकी**, स्त्री, (कुम्भिना पाकोऽस्याः । गौरादि-त्वात् ङीष् ।) कट्फलः । इति भावप्रकाशः ॥

**कुम्भिमदः**, पुं, (कुम्भोऽस्त्यस्य कुम्भी हस्ती तस्य मदः ।) हस्तिमदः । इति राजनिर्घण्टः ॥ (गन्धद्रव्यविशेषः ॥)

**कुम्भिलः**, पुं, (कुम्भ + इलच् ।) चोरः । शालमत्स्यः । श्लोकार्थचौरः । श्यालः । इति हेमचन्द्रः ॥

**कुम्भी**, [न्] पुं, (कुम्भोऽस्यास्तीति । इनिः ।) हस्ती । कुम्भीरः । इति हेमचन्द्रः ॥ गुग्गुलुः । इति जटाधरः ॥ (अग्निप्रकृतिविषकीटविशेषः । यथा, “वाह्यकी पिच्चिटः कुम्मी” ॥ इति सुश्रुते कल्प-स्थाने ८ अध्याये ॥)

**कुम्भी**, स्त्री, (कुम्भ + अल्पार्थे ङीप् । क्षुद्रकुम्भः ।) उखा पाटलावृक्षः । वारिपर्णी । कट्फलः । इति हेमचन्द्रः ॥ वृक्षविशेषः । कुम्भीपुष्प इति कोकणे प्रसिद्धा । तत्पर्य्यायः । रोमालुविटपी २ रोमशः ३ पर्पटद्रुमः ४ । अस्य गुणाः । कटुत्वम् । कषाय-त्वम् । उष्णत्वम् । ग्राहित्वम् । वातकफापहत्वञ्च । दन्तीवृक्षः । इति राजनिर्घण्टः ॥

**कुम्भीकः**, पुं, (कुम्भीव कायते प्रकाशते । कै + कः ।) पुन्नागवृक्षः । इति रत्नमाला ॥ (यथा, सुश्रुते । “प्रियङ्गुसमङ्गाधातकीपुन्नागरक्तचन्दनचन्दनमो चरसरसाञ्जनकुम्भीकस्रोतोऽञ्जनपद्मकेसरयोजन-

(कुम्भकारस्य पत्नीति ङीष् ।) कुम्भकारभार्य्या ॥

**कुम्भतुम्बी**, स्त्री, (कुम्भ इव तुम्बी ।) अलावुप्रभेदः । गोल लाउ इति भाषा । तत्पर्य्यायः । कुम्भालावुः २ गोरक्षतुम्बी ३ गोरक्षी ४ नागालावुः ५ घटाभिधा ६ घटालावुः ७ । अस्या गुणाः । मधुरत्वम् । शीतत्वम् । पित्तश्वासकफास्रज्वरकाशनाशित्वम् । रम्यत्वञ्च । इति राजनिर्घण्टः ॥

**कुम्भदासी**, स्त्री, (कुम्भस्य वेश्यापतेर्दासी ।) कुट्टनी । इति शब्दरत्नावली ॥

**कुम्भयोनिः**, पुं, (कुम्भः योनिर्जन्मस्थानं यस्य ।) अगस्त्यमुनिः । (यथा रघुः ४ । २१ । "प्रससादोदयादम्भः कुम्भयोनेर्महौजसः" ॥) वशिष्ठमुनिः । (एतयोर्मुनिसत्तमयोरुत्पत्तिविवरणं तु उर्व्वशीकृते कन्दर्पपीडितयोर्मित्रावरुणयोः स्खलितेनैकस्मिन् कुम्भे सङ्गतेन रेतसा यथा घटितं तथा तत् रामायणोत्तरकाण्डे ६६ -- ६७ सर्गे विशेषतो द्रष्टव्यम् ॥) द्रोणाचार्य्यः । इति मेदिनी ॥ (अस्य उत्पत्तिकथायथा महाभारते १ । १३१ । ९-१४ ।
"गङ्गाद्वारं प्रति महान् बभूव भगवानृषिः ।
भरद्वाज इति ख्यातः सततं शंसितव्रतः ॥
सोऽभिषेक्तुं ततो गङ्गां पूर्ब्बमेवागमन्नदीम् ।
महर्षिभिर्भरद्वाजो हविर्द्धाने चरन् पुरा ॥
ददर्शाप्सरसं साक्षात् घृताचीमाप्लुतामृषिः ।
रूपयौवनसंम्पन्नां मददृप्तां मदालसाम् ॥
तस्याः पुनर्नदीतीरे वसनं पर्य्यवर्त्तत ।
व्यपकृष्टाम्बरां दृष्ट्वा तामृषिश्चकमे ततः ॥
तत्र संसक्तमनसो मरद्वाजस्य धीमतः ।
ततोऽस्य रेतश्चस्कन्द तदृषिर्द्रोण आदधे ॥
त्पत्तेस्तथात्वम् । एतद्विवरणन्तु कुम्भयोनिशब्दे द्रष्टव्यम् ॥)

**कुम्भा**, स्त्री, (कु कुत्सितया निन्दितवृत्त्या उम्भा पूर्त्तिर्देहादेर्भरणं यस्याः । शकन्ध्वादित्वात् साधुः ।) वेश्या । इति शब्दमाला ॥

**कुम्भाण्डः**, पुं, (कुम्भ इव अण्डं यस्य ।) वाणासुरस्यामात्यविशेषः । इति श्रीभागवतम् ॥ (यथा, हरिवंशे १७५ । १६३ ।
"कुम्भाण्डवचनैरेवं दानवेन्द्रः प्रचोदितः ।
वाचं रूक्षामतिक्रुद्धः प्रोवाच वदताम्बरः" ॥
अयञ्च वाणपराजयान्ते श्रीकृष्णप्रसादात् तद्राष्ट्रस्वामी बभूव ॥ यदुक्तं तत्रैव १८३ । २७ -३८ ।
श्रीकृष्ण उवाच ।
"कुम्भाण्ड ! मन्त्रिणां श्रेष्ठ ! प्रीतोऽस्मि तव सुव्रत ! ।
सुकृतन्ते विजानामि राष्ट्रिकोऽस्तु भवानिह ॥
सज्ञातिपक्षः सुसुखी निर्वृतोऽस्तु भवानिह ।
राज्यञ्चं ते मया दत्तं चिरं जीव ममाश्रयात्" ॥)
कुष्माण्डम् । कुष्माण्डीपर्य्यायि कुम्भाण्डीदर्शनात् ॥

**कुम्भाण्डी**, स्त्री, (कुम्भाण्ड + स्त्रियां जातित्वात् ङीष् ।) कुष्माण्डी । इति राजनिर्घण्टः ॥

**कुम्भिका**, स्त्री, (कु कुत्सितरूपेण उम्भति पूरयति आच्छादयति वारि पुष्करिण्यादेः । शकन्ध्वादित्वात् साधुः ।) जलजतृणविशेषः । पाना इति भाषा । तत्पर्य्यायः । वारिपर्णी २ । इत्यमरः । १ । १० । ३८ ॥ वल्ल्यो दीर्घमूलाचेति" ॥) कुम्भिका । यथा, -- "दूर्व्वाकशेरुपूतीककुम्भीकप्लवशैवलम्" । इति चक्रपाणिदत्तः ॥ (विकृतगर्भविशेषः । यथा,
"पुंस्त्वदोषास्तु पञ्चैव प्रोक्तास्तत्रेर्ष्यकः स्मृतः ।
आसेक्यश्चैव कुम्भीकः सुगीन्धखण्डसंज्ञितः" ॥
इति शार्ङ्गधरेण पूर्ब्बखण्डे सप्तमेऽध्याये उक्तम् ॥
"स्वे गुदेऽब्रह्मचर्य्याद्यः स्त्रीषु पुंवत् प्रवर्त्तते ।
कुम्भीकः स च विज्ञेयः" । इति सुश्रुते शारीरस्थाने २ अध्याये ॥)

**कुम्भीनसः**, पुं, (कुम्भीव नसा नासा यस्य ।) क्रूरसर्पः । इति मेदिनी ॥ (वायुप्रकृतिकविषकीटविशेषः । यथा । "कुम्भीनसस्तुण्डिकेरी" ॥ इति सुश्रुते कल्पस्थाने ८ अध्याये उक्तम् ॥)

**कुम्भीनसी**, स्त्री, (कुम्भीनस + स्त्रियां ङीष् ।) लवणदानवमाता । इति मेदिनी ॥ (यथा, रामायणे । ७ । ३० । १९ ।
"ज्ञातींस्तान् धर्षयित्वेमास्त्वया नीता वराङ्गनाः ।

| | | |
|---|---|---|
| ततः सममवद्रोणः कलसे तस्य धीमतः ।<br>अध्यगीष्ट स वेदांश्च वेदाङ्गानि च सर्व्वशः ॥)<br>द्रोणपुष्पीष्टक्षः । इति राजनिर्घण्टः ॥ (स्त्रो, अप्स- | श्वेतपर्णा ३ अशकुम्भी ४<br>पानीयपृष्ठजः ५ । इति<br>रत्नमाला ॥ आकाशमूली ६<br>कुतृणम् ७ जलव-<br>ल्कलम् ८ । इति हारावली ॥<br>वारिमूली ९ खमू-<br>लिका १० पर्णी ११ पृश्नी १२<br>खमूली १३ खमूलिः<br>१४ वारिकणिका १५ । इति<br>शब्दरत्नावली ॥<br>कुमुदा १६ दलाढकः १७ । इति<br>जटाधरः ॥ अस्य | |

त्वामतिक्रम्य मधुना राजन् कुम्भीनसी
हृता” ॥)

**कुम्भीपाकः**, पुं, (कुम्भ्यां उखायां पाक इव पाको यत्र ।) नरकविशेषः । इति जटाधरः ॥
तत्पर्य्यायः ।
सम्प्रतापनः २ । इति मनुः ॥ “य इह पशून्
पक्षिणो वा प्राणतो रन्धयति तं परत्र यमदूता-
स्तप्ततैले रन्धयन्ति यत्र । इति श्रीमागवते ।
६ । २६ । ७ ॥

**कुम्भीरः**, पुं, (कुम्भिनं हस्तिनमपि ईरयति । ईर + “कर्म्मण्यण्” । ३ । २ । १ ।)
जलजन्तुविशेषः ।
कुमीरं इति भाषा । तत्पर्य्यायः । नक्रः २ । इत्य-
मरः । १ । १० । २१ ॥ कुम्भीलः ३ । इति तट्टीका ॥
गिलग्राहः ४ महाबलः ५ । इति राजनिर्घण्टः ॥
वार्भटः ६ अम्बुकिरातः ७ अम्बुकण्टकः ८ ।
इति शब्दरत्नावली ॥
(यथा, महाभारते । १३ । १११ । ५८ ।
“गर्दभत्वन्तु संप्राप्य दशवर्षाणि जीवति ।
संवत्सरन्तु कुम्भीरस्ततो जायेत मानवः” ॥)

**कुम्भीरमक्षिका**, स्त्री, (कुम्भीर इत्याख्या मक्षिका । यद्वा कुम्भीरोपपदयुक्ता मक्षिका ।)
मक्षिका-
विशेषः । कुमीरा पोका इति भाषा ।
तत्पर्य्यायः ।
कणा २ । इति हारावली ॥

**कुम्भीलः**, पुं, (कुम्भीर + रस्य लः ।) कुम्भीरः । इत्य-
मरटीका ॥

मृगनयना नारी । इति राजनिर्घण्टः ॥
(उक्तञ्च,
“किन्त्वेकायमुना कुरङ्गनयना
नेत्राम्बुभिर्वर्द्धते” ॥)

**कुरङ्गनाभिः**, पुं, (कुरङ्गस्य नाभिः ।) कस्तूरी । इति राजनिर्घण्टः ॥ (कस्तूरीशब्दे ऽस्य
गुणादयो
बोद्धव्याः ॥)

**कुरङ्गमः**, पुं, (कौ भूमौ रङ्गं मिमीते । मा + डः ।) हरिणविशेषः । तत्पर्य्यायः । एणः २ ऋश्यः ३
रिश्यः ४ चारुलोचनः ५ । इति
त्रिकाण्डशेषः ॥

**कुरङ्गिका**, स्त्री, (कौ रङ्गोऽस्या अस्तीति । ठन् टाप् च ।) मुद्गपर्णी । इति राजनिर्घण्टः ॥

**कुरचिल्लः**, पुं, (कुरे शब्दे चिल्लति । चिल्ल शैथिल्ये + अच् ।) कर्कटः । इति हेमचन्द्रः ॥

**कुरटः**, पुं, (कुर् + अटन् किच्च । कु कुत्सितवृत्त्या रटति जीवति देहयात्रां सम्पादयति वा । रट + अच् ।) चर्म्मकारः । इति त्रिकाण्डशेषः ॥

**कुरण्टकः**, पुं, (कुर्य्यते शब्द्यते इति । कुर् + कर्म्मणि बाहुलकात् अण्टक् स्वार्थे कन् ।)
पीताम्लानः ।
पीतझिण्टी । इति राजनिर्घण्टः ॥ (अस्य पर्य्याय-
लक्षणगुणा यथा, --
“सैरेयकः श्वेतपुष्पः सैरेयः कटसारिका ।
सहाचरः सहचरः स च मिन्द्यपि कथ्यते ॥
कुरण्टकोऽत्र पीते स्याद्रक्ते कुरवकः स्मृतः ।
नीले वाणाद्वयोरुक्तो दासे आर्त्तगलश्च सः ॥
सैरेयः कुष्ठवातास्रकफकण्डूविषापहः ।
तिक्तोष्णो मधुरोऽनम्लः सुस्निग्धः केशरञ्जनः” ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥

माध्मानरुक् स्तम्भवतीं स वायुः ।
प्रपीडितोऽन्तःस्वनवान्प्रयाति
प्रध्मापयन्नेति पुनश्च मुक्तः ॥
अन्त्रवृद्धिरसाध्योऽयं वातवृद्धिसमाकृतिः” ॥
इति वृद्धिनिदानम् ॥ इति माधवकरः ॥ * ॥
तस्यौषधं यथा, --
“द्विजयष्ट्याश्च वै मूलं पिष्टं तण्डुलवारिणा ।
गण्डमालां हरेल्लेपात् कुरण्डगलगण्डकम् ॥
रसाञ्जनं हरीतक्याश्चूर्णं तेनैव गुण्ठनात् ।
नश्येद्वै पुरुषव्याधिं नात्र कार्य्या विचारणा” ॥
इति गारुडे १९० अध्यायः ॥ * ॥ अन्यच्च ।
“गव्यं घृतं सैन्धवसंप्रयुक्तं
शम्बूकभाण्डे निहितं तदेव ।
सप्ताहमादित्यकरैर्व्विपक्वं
हन्यात् कुरण्डं चिरजं प्रवृद्धम्” ॥

गव्यघृत कर्ष १ । सैन्धव मा ४ । शम्बूकभाण्डे

कृत्वा सप्तदिनं यावत् रौद्रे भावयेत् तेन कुरण्ड-
म्रक्षणम् ॥
“सैन्धवञ्च घृताभ्यक्तं ताम्रभाजन आतपे ।
प्रतप्तमूर्ण्या घृष्टं तन्मलञ्च समाहरेत् ॥
कुरण्डं म्रक्षयेत्तेन स निर्व्विघ्नं दिवानिशम् ।
कुरण्डं तेन संलिप्तं नास्तीत्याह पुनर्व्वसुः ॥

ताम्रभाजने घृतं सैन्धवं दत्त्वा रौद्रे तप्तं कृत्वा

मेषलोमलुण्डिकया घृष्ट्वा मलग्रहं कृत्वा तेन
म्रक्षयेत् ॥
बहुवारस्य वीजञ्च पिष्ट्वा तच्चार्द्रकैः सह ।
कुरण्डं नाशयेद्भद्रे लेपनान्नात्र संशयः ॥
घृतैर्नीलोत्पलं मूलं पिष्ट्वा लिम्पेत् कुरण्डकम् ।
अथवा लेपनं कुर्य्यात् गृहमण्डूकशोणितैः” ॥
इति भैषज्यरत्नावली ॥ * ॥ अपरञ्च ।
“गुग्गुलुं रुवुतैलं वा गोमूत्रेण पिबेन्नरः ।
वातवृद्धिं निहन्त्याशु चिरकालानुबन्धिनीम् ॥
सक्षीरं वा पिबेत्तैलं मासमेरण्डसम्भवम् ।
पुनर्नवायास्तैलं वा तैलं नारायणन्तथा ॥
पाने वस्तौ रुवोस्तैलं पेयं वा दशकाम्भसा ।
चन्दनं मधुकं पद्ममुशीरं नीलमुत्पलम् ॥
क्षीरपिष्टैः प्रदेहः स्याद्दाहशोथरुजापहः ।

**कुम्भीवीजं**, क्ली, (कुम्भ्या वीजम् ।) जयपालः । इति
राजनिर्घण्टः ॥ (जयपालशब्देऽस्य गुणादिकं
ज्ञेयम् ॥)

**कुर** श शब्दे । इति कविकल्पद्रुमः ॥ (तुदां-परं-
अकं-सेट् ।) श कुरति कोरिता । इति
दुर्गादासः ॥

**कुरका**, स्त्री, (कुर् + कः । कुरः शब्दः कायति
प्रकाशतेऽस्मिन् । कै + कः ।) सल्लकीवृक्षः । इति
राजनिर्घण्टः ॥

**कुरङ्करः**, पुं, (कुरमित्यव्यक्तशब्दं करोति । कुरम्
+ कृ + टः ।) सारसपक्षी । इति
हेमचन्द्रः ॥

**कुरङ्कुरः**, पुं, (कुरं इत्यस्फुटशब्दं कुरति । कुर् + कः ।)
सारसपक्षी । इति हारावली ॥

**कुरङ्गः** पुं, (कौ पृथिव्यां भूमौ वा रङ्गति । रगि +
अच् । यद्वा, "विडादिभ्यः किच्च" ।
उणां १ । १२०
इति अङ्गच् बाहुलकात् उत्वं रपरत्वञ्च । कुरङ्ग-
विहङ्गादयःसर्व्वेनिपात्यन्ते । इति वा ।) हरिणः ।
इत्यमरः । २ । ५ । ८ ॥ कुतङ्गकोऽपि ॥
(यथा, भागवतटीकायां स्वामिना प्रोक्तम् ।
"कुरङ्गमातङ्गपतङ्गभृङ्ग-
मीना हताः पंञ्चभिरेव पञ्च" ॥
अस्य गुणाः यथा, --
"कुरङ्गो वृंहणो बल्यः शोतलः पित्तहृद्गुरुः ।
मधुरो वातहृद्ग्राही किञ्चित्कफकरः स्मृतः" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये
भागे ॥ * ॥
अस्य लक्षणं यथा, --
"न कृष्णो न च ताम्रश्च कुरङ्गः
सोऽभिधोयते" ॥
"किंशुकं कफपित्तघ्नं तद्वदेव कुरण्टकम्"
॥
इति शुश्रुते सूत्रस्थाने ४६ अः ॥ अत्रास्य नपुं-
सकत्वं व्यज्यते ॥)

**कुरण्डः**, पुं, (कुर + अण्डक् ।) मुष्कवृद्धिरोगः ।
कोरण्ड इति भाषा । तत्पर्य्यायः । वृद्धिः
२ अण्डवर्द्धनः ३ । इति हेमचन्द्रः ॥ तस्य सम्प्राप्ति-
पूर्ब्बकं लक्षणं यथा, --
"क्रुद्धोऽनूद्र्ध्वगतिर्वायुः शोथशूलकरश्चरन्
।
मुष्कौ वङ्क्षणतः प्राप्य फलकोषाभिवाहिनीः
॥
प्रपीड्य धमनीर्वृद्धिं करोति फलकोषयोः ।
दोषास्रमेदोमूत्रान्त्रैः सवृद्धिः सप्तधा मतः ॥
मूत्रान्त्रजावप्यनिलाद्धेतुभेद्स्तु केवलम् ।
वातपूर्णदृतिस्पर्शो रूक्षो वातादहेतुरुक् ॥
पक्वोडुम्बरसङ्काशः पित्ताद्दाहोष्मपाकवान्
।
कफाच्छीतो गुरुः स्निग्धः कण्डूमान्कठिनोऽल्परुक् ॥
कृष्णस्फोटावृतः पित्तवृद्धिलिङ्गश्च रक्तजः
।
कफवन्मेदसा वृद्धिर्मृदुस्तालफलोपमः ॥
मूत्रधारणशीलस्य मूत्रजः स तु गच्छतः ।
अम्भोभिः पूर्णदृतिवत् क्षोभं याति सरुङ्मृदुः
॥
मूत्रकृच्छ्रमधः स्याच्च चालयन् फलकोषयोः ।
वातकोपिभिराहारैः शीततोयावगाहनैः ॥
धारणे रणभाराध्वविषमाङ्गप्रवर्त्तनैः ।
क्षोभणैः क्षुभितश्चान्यैः क्षुद्रान्त्रावयवं यदा
॥
पवनो विगुणीकृत्य स्वनिवेशादधो नयेत् ।
कुर्य्याद्वङ्क्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुं तदा ॥
उपेक्ष्यमाणस्य च मुष्कवृद्धि-
पञ्चवल्कलकल्केन सघृतेन प्रलेपनम् ॥
सर्व्वं पित्तहरं कार्य्यं रक्तजे रक्तमोक्षणम् ।
श्लेष्मवृद्धिं तूष्णवीर्य्यैर्मूत्रपिष्टैः प्रलेपयेत् ॥
पीतदारुकषायञ्च पिबेन्मूत्रेण संयुतम् ।
स्विन्नां मेदःसमुत्थान्तु लेपयेत् सुरसादिना ॥
शिरोविरेकद्रव्यैर्व्वा सुखोष्णैर्मूत्रसंयुतैः ।
संस्वेद्य मूत्रप्रभवां वस्त्रपट्टेन वेष्टयेत् ॥
सेवन्याः पार्श्वतोऽधस्ताद्विध्येद्व्रीहिमुखेन वै ।
शङ्खोपरि च कर्णान्ते त्यक्त्वा सेवनिमादरात् ॥
व्यत्यासाद्वा सिरा विध्येदन्त्रवृद्धिनिवृत्तये ।
अङ्गुष्ठमध्ये त्वक् छित्वा दहेदङ्गविपर्य्यये ॥
रास्नायष्ट्यमृतैरण्डबलागोक्षुरसाधितः ।
क्वाथोऽन्त्रवृद्धिं हन्त्याशु रुवुतैलेन मिश्रितः ॥
तैलमेरण्डजं पीत्वा बलासिद्धपयोऽन्वितम् ।
आध्मानशूलोपचितामन्त्रवृद्धिं जयेन्नरः ॥

| इति सूत्रस्थाने षट्चत्वारिंशेऽध्याये सुश्रुते- नोक्तम् ॥) <br><br> **कुरङ्गनयना**, स्त्री, (कुरङ्गस्य नयने इव नयने यस्याः ।) | | |
|---|---|---|

हरीतकीं मूत्रसिद्धां सतैललवणान्विताम् ।
प्रातःप्रातश्च सेवेत कफवातामयापहाम् ॥
गोमूत्रपिष्टां रुवुतैलभृष्टां
हरीतकीं सैन्धवचूर्णयुक्ताम् ।
खादेन्नरः कोष्णजलानुपानां
निहन्ति वृद्धिं चिरजां प्रवृद्धाम् ॥
त्रिफलाक्वाथगोमूत्रं पिबेत् प्रातरतन्द्रितः ।
कफवातोद्भवं हन्ति श्वयथुं वृषणोत्थितम् ॥
सरलागुरुकुष्ठानि देवदारुमहौषधम् ।
मूत्रारनालसंपिष्टं शोथघ्नं कफवातनुत् ॥
त्रिफलाक्वाथगोमूत्रं कल्कः पथ्यासमुद्भवः ।
कृष्णासैन्धवसंयुक्तो वृद्धिरोगहरः परः ॥
गव्यं घृतं सैन्धवसंप्रयुक्तं
शम्बूकभाण्डे निहितं प्रयत्नात् ।
सप्ताहमादित्यकरैर्व्विपक्वं
निहन्ति कुरण्डमतिप्रवृद्धम् ॥
ऐन्द्रीमूलभवं चूर्णं रुवुतैलेन मर्द्दितम् ।
त्र्यहाद्गोपयसा पीतं सर्व्ववृद्धिनिवारणम् ॥
रुद्रजटामूललिप्ता करटव्यङ्गचर्म्मणा ।
बद्धा वृद्धिः शमं याति चिरजापि न संशयः ॥
निपिष्टेनारनालेन रूपिकामूलवल्कलम् ।
लेपोवृद्ध्यामयं हन्ति बद्धमूलमपि दृढम् ॥
वचासर्षपकल्केन लेपो वृद्धिविनाशनः ।
लज्जागृध्रमलाभ्यान्तु लेपो वृद्धिहरः परः” ॥ * ॥
“मूलं विल्वकपित्थयोरल्लकस्याग्रेर्कृत्योर्द्वयोः
श्यामापूतिकरञ्जशिग्रुकतरोर्व्विश्वौषधारुष्करम् ।
कृष्णाग्रन्थिकचव्यपञ्चलवणंक्षाराजमोदान्वितं
पीतङ्काञ्जिककोष्णतोयमथितैश्चूर्णीकृतं
ब्रध्नजित् ॥
अवीक्षीरेण गोधूमकल्कं कुन्दुरुकस्य वा ।
प्रलेपनं सुखोष्णं स्यात् ब्रध्नशूलहरं परम् ॥
मृत्पात्रे तु वै काकोदरे तत्तु प्रवेशयेत् ।
ब्रध्नं मुहूर्त्तं मेधावी तत्क्षणादरुजो भवेत् ॥
अजाजी हवुषा कुष्ठं गोधूमं वदरणि च ।
काञ्जिकेन समं पिष्ट्वा कुर्य्याद्ब्रध्नप्रलेपनम् ॥
सैन्धवं मदनं कुष्ठं शताह्वां निचुलं वचाम् ॥
ह्रीवेरं मधुकं भार्गी देवदारु सनागरम् ॥
कट्फलं पौष्करं मेदां चविकां चित्रकं शटीम् ।
विडङ्गातिविषे श्यामां रेणुकां नीलिनीं स्थिराम् ॥

रूपाणि वस्तिकटीमुष्कमेढ्रेषु वेदना मारुत-
निग्रहः फलकोशशोफश्चेति ॥

तत्रानिलपरिपूर्णां वस्तिमिवाततां परुषा-
मनिमित्तानिलरुजं वातवृद्धिमाचक्षते, पक्वोडु-
म्बरसङ्काशां ज्वरदाहोष्मवती
चाशुसमुत्थानपाकां
पित्तवृद्धिं कठिनामल्पवेदनां शीतां कण्डूमतीं
श्लेष्मवृद्धिं कृष्णस्कोटावृतां पित्तवृद्धिलिङ्गां रक्त-
वृद्धिं मृदुस्निग्धां कण्डूमतीमल्पवेदनां तालफल-
प्रकाशां मेदोवृद्धिम् ॥ मूत्रसन्धारण-शीलस्य मूत्र-
वृद्धिर्भवति सा गच्छतोऽम्बुपूर्णा दृतिरिव क्षुभ्यति
मूत्रकृच्छ्रवेदनां वृषणयोःश्वयथुं कोषयोश्चापाद-
यति तां मूचवृद्धिं विद्यात् ॥ भारहरणबलवद्वि-
ग्रहवृक्षप्रपतनादिभिरायासविशेषैर्वायुरतिप्रवृद्धः
प्रकुपितश्च स्थूलान्त्रस्यैतरस्य चैकदेशं द्विगुणमा-
दायाधोगत्वा वङ्क्षणसन्धिमुपेत्य ग्रन्थिरूपेण स्थि-
त्वाऽप्रतिक्रियमाणे च कालान्तरेण फलकोषं प्र-
विश्य मुष्कशोफमापादयत्याध्मातो वस्तिरिवाततः
प्रदीर्घः शोफो भवति
सशब्दमवपीडितश्चोद्र्ध्वमुपैति
विमुक्तश्च पुनराधमति तामन्त्रवृद्धिमसाध्या-
माचक्षते” ॥ * ॥ इति सुश्रुते निदानस्थाने ।
१२ अध्याये ॥
चिकित्सतञ्चास्य यथा, --
“अन्त्रवृद्ध्या विना षड् या वृद्धयस्तासु वर्जयेत् ।
अश्वादियानं व्यायामं मैथुनं वेगनिग्रहम् ॥
अत्यासनञ्चङ्क्रमणमुपवासंगुरूणि च ।
तत्रादितो वातवृद्धौ त्रैवृतस्निग्धमातुरम् ॥
स्विन्नञ्चैनं यथान्यायं पाययेत विरेचनम् ।
कोशाम्रतिल्वकैरण्डफलतैलानि वा नरम् ॥
सक्षीरं वा पिबेन्मासं तैलमेरण्डसम्भवम् ।
ततः कालेऽनिलध्नानां क्वाथैः कल्कैश्च बुद्धिमान् ॥

मनःशिलाललवणैः सिद्धमारुष्करेषु च ॥
मूत्रजां स्वेदयित्वा तु वस्त्रपट्टेन वेष्टयेत् ।
सेवन्याः
पार्श्वतोऽधस्ताद्विध्येद्व्रीहिमुखेन तु ॥
अथात्र विमुखां नाडीं दत्त्वा विस्रावयेद्भिषक्
मूत्रं नाडीमथोद्धृत्य स्थगिकाबन्धमाचरेत् ॥
शुद्धायां रोपणं दद्याद्वर्ज्जयेदन्त्रहेतुकीम् ॥
अप्राप्तफलकोशायां वातवृद्धिक्रमो हितः ।
तत्र या वङ्क्षणस्था तां दहेदर्द्धेन्दुवक्त्रया ॥
सम्यग्मार्गावरोधार्थं कोशप्राप्तान्तु वर्जयेत् ।
त्वचं भित्त्वाङ्गुष्ठमध्ये दहेच्चाङ्गविपर्य्ययात् ॥
अनेनैव विधानेन वृद्धी वातकफात्मिके ।
प्रदहेत् प्रयतः किन्तु स्नायुच्छेदोऽधिकस्तयोः ॥
शङ्खोपरि च कर्णान्ते त्यक्त्वा यत्नेन सेवनीम् ।
व्यत्यासाद्वा सिरां विध्येदन्त्रवृद्धिनिवृत्तये” ॥
इति सुश्रुते चिकित्सितस्याने १९ अः ॥ * ॥)
भावप्रकाशोक्तचिकित्सादिः अन्त्रवृद्धिशब्दे द्रष्टव्यः ॥
साकरुण्डवृक्षः । इति राजनिर्घण्टः ।

**कुरण्डकः**, पुं, (कुर्य्यते शब्द्यते इति । कुर् + बाहुल-
कात् अण्टक् । पृषोदरात् साधुः ।
ततः स्वार्थे
कन् ।) कुरण्टकवृक्षः ।
इत्यमरटीकायां रायमु-

विल्वाजमोदां कृष्णाञ्च दन्तीं रास्नां प्रपिष्य च ।
साध्यसेरण्डजं तैलं तैलं वा कफवातनुत् ॥
ब्रध्नोदरार्त्तगुल्मार्शःप्लीहमेहाढ्यमारुतान् ।
आनाहमश्मरीञ्चैव हन्यात्तदनुवासनात्’ ॥
वृहत्सैन्धवाद्यं तैलम् ॥
“सौरेश्वरघृतं योज्यं ब्रध्नवृद्धिनिवृत्तये” ॥
इतिब्रध्नवृद्ध्यधिकारः । इति चक्रपाणिदत्तः ॥
* ॥

(अस्य सनिदानं पूर्ब्बरूपसहितं लक्षणं संप्रा-

प्तिश्च यथा । “वातपित्तश्लेष्मशोणितमेदो मूत्रान्त्र-
निमित्ताः सप्त वृद्धयः । तासां मूत्रान्त्रनिमित्ते
वृद्धी वातसमुत्थे केवलमुत्पत्तिहेतुरन्यतमः ॥ अधः
प्रकुपितोऽन्यतमो हि दोषः फलकोशवाहिनी-
रभिप्रपद्यधमनीः फलकोषयोर्वृद्धिं जनयति तां
वृद्धिमित्याचक्षते ॥ तासां भविष्यतीनां पूर्ब्ब-

निरूहयेन्निरूढञ्च भुक्तवन्तं रसौदनम् ॥
यष्टीमधुकसिद्धेन ततस्तैलेन योजयेत् ।
स्नेहोपनाहौ कुर्य्याच्च प्रदेहांश्चानिलापहान् ॥
विदग्धां पाचयित्वा वा सेवनीं परिवर्ज्जयेत् ॥
भिन्द्यात्ततः प्रभिन्नायां यथोक्तं क्रममाचरेत् ।
पित्तजायामपक्वायां पित्तग्रन्थिक्रमो हितः ॥
पक्वां वा भेदयेद्भिन्नां शोधयेत् क्षौद्रसर्पिषा ।
शुद्धायाञ्च भिषग्दद्यात् तैलं कल्कञ्च रोपणम् ॥
रक्तजायां जलौकोभिः शोणितं निर्हरेद्भिषक् ।
पिबेद्विरेचनं वापि शर्कराक्षौद्रसंयुतम् ॥
पित्तग्रन्थिक्रमं कुर्य्यादामे पक्वे च सर्व्वदा ।
वृद्धिं कफात्मिकामुष्णैर्मूत्रपिष्टैः प्रलेपयेत् ॥
पीतदारु कषायञ्च पिबेन्मूत्रेण संयुतम् ॥
विम्लापनादृते वापि श्लेष्मग्रन्थिक्रमो हितः ।
पक्वायाञ्च विभिन्नायां तैलं शोधनमिष्यते ॥
सुमनारुष्कराङ्कोठसप्तपर्णेषु साधितम् ।
मेदःसमुत्थां संस्वेद्य लेपयेत् सुरसादिना ॥
शिरोविरेकैर्द्रव्यैर्व्वा सुखोष्णैर्मूत्रसंयुतैः ।
स्विन्नाञ्चावेष्ट्य पट्टेन समाश्वास्य तु मानवम् ॥
रक्षेत् फले सेवनीञ्च वृद्धिपत्रेण दारयेत् ।
मेदस्ततः समुद्धृत्य दद्यात्कासीससैन्धवे ॥
बध्नीयाच्च यथोद्दिष्टं शुद्धे तैलञ्च दापयेत् ।

कुटः ॥ (कुरण्टकशब्देऽस्य विवरणं ज्ञातव्यम् ॥)

**कुररः**, पुं, (कुङ्शब्दे + “कुवः क्ररच्” । उणां ३ । १३३ । इति क्ररच् प्रत्ययः ।) कुरलपक्षी । तत्पर्य्यायः । उत्क्रोशः २ । इत्यमरः । २ । ५ । २३ ॥ खरशब्दः ३ क्रौञ्चः ४ पंक्तिचरः ५ खरः ६ । इति राजनिर्घण्टः ॥ (यथा महाभारते ३ नलोपाख्यान-पर्व्वणि । ६४ । ११० ।
“प्रोद्घुष्टां क्रौञ्चकुररैश्चक्रवाकोपकूजिताम्” ॥
अयं जलचरान्तर्गतपक्षिविशेषः । यथा, --
“कुररवकमकराः कङ्कचटकपिकभृङ्गसारसाः ।
आडिदात्यूहहंसा जलकरटिकपिङ्गा टिट्टिभाद्याः ।
जलेचरा विहङ्गास्ते भासकाः खञ्जरीटकाः ।
इत्येते जलजा जीवाः” ॥ इति हारीते प्रथमे स्थाने ११ अध्याये ॥)

**कुराङ्घ्रिः**, पुं, (कुररस्य अङ्घ्रिरिव ।) देवसर्षपः । इति राजनिर्घण्टः ॥

**कुररी**, स्त्री, (कुरर + स्त्रियां जातित्वात् ङीष् ।) मेषी । इति हेमचन्द्रः ॥ कुररपक्षिस्त्री । इत्य-मरः ॥ (यथा, महाभारते । १ । ६ । १२ ।
“ततो मामनयद्रक्षः क्रोशन्तीं कुररीमिव” ॥)

**कुरलः**, पुं, (कुरर इति रस्य लः ।) कुररपक्षी । चूर्णकुन्तलः । इति धरणी ॥

**कुरवः**, पुं, (कु ईषत् रबः गुञ्जनध्वनिर्मधुकराणां

| | | स्वल्पमधुतया यत्र ।) सितमन्दारः ।<br>इति राज-<br>निर्घण्टः ॥ कुरवकः । रक्तझिण्टी ।<br>इति शब्द-<br>रत्नावली ॥ पीतझिण्टी । इति<br>हेमचन्द्रः ॥<br>(कुत्सितो रव इति कर्म्मधारयः ।)<br>कुत्सितशब्दः ॥<br>(कुत्सितो रवो यस्य ।)<br>कुत्सितशब्दयुक्ते त्रि ॥<br>**कुरवकः**, पुं, (कुरव + स्वार्थे कन् ।) रक्ताम्लानः ।<br>रक्तझिण्टी । इति राजनिर्घण्टः ॥<br>(यथा राजे-<br>न्द्रकर्णपूरे ६५ ।<br>“किञ्चित्कुड्मलितैकलोचनपुटं<br>कण्डूं मुहुर्गण्डयोः |
|---|---|---|

झम्पाकम्पितकुड्मले कुरवके निर्वाप्य
वन्यद्विपैः” ॥

तस्य पुष्पादिरपि । यथा
कुमारटीकायां

मल्लिनाथः । “आलोकितः कुरवकः कुरुते
विका-
शम्” ॥ अस्य पर्य्याया लक्षणञ्च यथा ॥
“सैरेयकः श्वेतपुष्पः सैरेयः कटसारिका ।
सहाचरः सहचरः स च भिन्द्यपि कथ्यते ।
कुरण्टकोऽत्र पीते स्याद्रक्ते कुरवकः
स्मृतः” ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)
कुत्सितरवे त्रि ॥

**कुरसः**, पुं, (कुत्सितो रसो यत्र ।) मद्यभेदः । इति

हारावली ॥ कर्म्मधारये कुत्सितरसः ।
बहुव्रीहौ
कुत्सितरसयुक्ते त्रि ॥

**कुरसा**, स्त्री, (कुत्सितः ईषत् वा रसो यस्याः ।)

गोजिह्वा लता । इति शब्दचन्द्रिका ॥

**कुराहः**, पुं, कुलाहः । ईषत्पाण्डुः कृष्णजङ्घो घोटकः
।

इति हेमचन्द्रः ॥

**कुरी**, स्त्री, (कुं भूमिं राति ददाति । कु + रा + कः ।

ततो गौरादित्वात् ङीष् ।) तृणधान्यभेदः ।
इति
राजनिर्घण्टः ॥

**कुरीरं**, क्ली, (“कृञ उच्च” । उणां ४ । ३३ । इति

ईरन् उकारादेशश्च ।) मैथुनम । इति
सिद्धान्त-
कौमुद्यामुणादिवृत्तिः ॥

**कुरुः**, पुं, (कृ + “कृग्रोरुच्च” । उणां १ । २५ । इति

कुः उच्च ।) आग्नीध्रराजपुत्त्रः । स तु
प्रियव्रत-
राजपौत्त्रः । (स्वायम्भुवमनोः प्रपौत्त्रः
उत्तरकुरु-

“उवाच पार्थ ! पश्यैतान् समवेतान् कुरूनिति” ॥)
कण्टकारिका । इति शब्दचन्द्रिका ॥

**कुरुकन्दकं**, क्ली, (कुरुः इव विस्तीर्णः कन्दो यस्य ।

कप् ।) मूलकम् । इति शब्दमाला ॥

**कुरुक्षेत्रं**, क्ली, (कुरुणा चन्द्रवंशोद्भवेन राजविशेषेण

भूरितपसोपार्ज्जितं धर्म्मक्षेत्रनाम्ना प्रसिद्धं
कुरुदेशान्तर्गतं क्षेत्रम् । शाकपार्थिवादित्वात्
मध्यपदलोपः ।) देशविशेषः । तत्तु धर्म्मक्षेत्रम् ।
(किञ्चास्मिन्नेव क्षेत्रे क्षत्त्रियकुलारण्यकुठारेण भृ-
गुवंशधुरन्धरेण भगवता जामदग्न्यरामेण क्षत्त्रि-
यशोणितैः पञ्च ह्रदाः कृताः तदारभ्य च क्षेत्रमेतत्
समन्तपञ्चकनाम्नोच्यते। नितरामेवात्र युध्यतां
क्षत्त्रियाणां शरीरविसर्ज्जनेन पुण्यप्राचुर्य्यात्
वैकुण्ठप्राप्तिः । तत एवात्र कुरुपाण्डवानां सुमह-
द्युद्धं निर्वृत्तम् । एतद्विवरणं महाभारतीये १२ ।
४८ अध्याये श्रीकृष्णयुधिष्ठिरसंवादे द्रष्टव्यम् ॥
यथा भगवद्गीतायाम् १ । १ ।
“धर्म्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्व्वत सञ्जय !” ॥
एतत्क्षेत्रस्य सीमानिर्द्देशे बहूनि मतानि लक्ष्यन्ते
दिङ्मात्रमुदाहृतमत्र। यथा, हेमचन्द्रः ।
“धर्म्मक्षेत्रं कुरुक्षेत्रं द्वादशयोजनावधि” ॥
तथा त्रिकाण्डशेषेऽपि ।
“कुरुक्षेत्रं प्रयागञ्च हिमाद्रिं विन्ध्यमन्तरा” ॥
एष हि ब्रह्मर्षिदेशः । यथा, मनौ । २ । १९ ।
“कुरुक्षेत्रं च मत्स्याश्च पञ्चालाः शूरसेनकाः ।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरः” ॥)

**कुरुक्षेत्रीयोगः**, पुं, एकस्मिन् सावनदिने तिथित्रय-

नक्षत्रत्रययोगत्रयाणाञ्च स्पर्शः । इति स्मृतिः ॥
कुरुक्षेत्रे मृत्युयोगः । यथा, --
“पञ्चग्रहयुते मृत्यौ लग्नसंस्थे वृहस्पतौ ।
सौम्यक्षेत्रगते लग्ने कुरुक्षेत्रे मृतिर्भवेत्” ॥
इति जातकामृतसंग्रहे योगाध्यायः ॥

**कुरुटः**, पुं, (कुत्सितं रोटते दीप्यते प्रतिहन्ति वा ।

रुट दीप्तौ प्रतिघातादिषु च + “इगुपधेति” ३ ।
१ । १३५ । कः ।) सितावरशाकः । इति
राजनिर्घण्टः ॥

**कुरुण्टः**, पुं, (कुत्सितं दुर्गन्धादिकं रुण्टति लुण्ठ-

लिका । इति मेदिनी ॥ (कु कुत्सितं
पापं रुण्टति
नाशयति ब्रह्मणः पत्युर्वा परिचर्य्यया
।) ब्राह्मणी ।
इति जटाधरः ॥

**कुरुम्बं**, क्ली, (कुर् + बाहुलकात् उम्बच् ।)
कूल-

पालकम् । इति शब्दचन्द्रिका ॥
कमलालेवु इति
भाषा ॥

**कुरुम्बा**, स्त्री, (कुरुम्ब + स्त्रियां टाप् ।)
द्रोणपुष्पी ।

इति राजनिर्घण्टः ॥
(द्रोणपुष्पीशब्देऽस्या गुणा-
दयो ज्ञेयाः ॥)

**कुरुम्बिका**, स्त्री, (कुरुम्बा + स्वार्थे कः टाप्
इत्वं च ।)

द्रोणपुष्पी । इति राजनिर्घण्टः ॥

**कुरुम्बी**, स्त्री, (कुरुम्ब + स्त्रियां गौरादित्वात्
ङीष् ।)

सैहलीवृक्षः । इति राजनिर्घण्टः ॥

**कुरुराट्** [ज्] पुं, (कुरुषु राजते । राज् + क्विप्
।)

दुर्य्योधनः । इति त्रिकाण्डशेषः ॥

**कुरुलः**, पुं, (कुर् + उलक् ।)
भालस्थितचूर्णकुन्तलः ।

तत्पर्य्यायः । भ्रमरकः २ भ्रमरालकः
३ । इति
हेमचन्द्रः ॥

**कुरुवकः**, पुं, (रौतीति रुवो भ्रमरः । कुत्सितः
स्वल्प-

मधुलाभात् विरक्तो रुवो यत्र ।
स्वल्पमधुत्वादस्य
तथात्वम् ।) रक्तझिण्टी । रक्ताम्लानः
। इत्यमरः ।
२ । ४ । ७४ ॥ पीतझिण्टी । इति
हेमचन्द्रः ॥ (कुरवक-
शब्दे पीतझिण्टीशब्दे च अस्य
विवृतिर्ज्ञातव्या ॥)

राज्यं प्राप्तवांश्च । तत्रत्या नदी च भद्रेति नाम्ना
विश्रुता । यथा विष्णुपुराणे । २ । १ । १६-२२ ।
“जम्बुद्वीपेश्वरो यस्तु आग्नीध्रो मुनिसत्तम ! ।
तस्य पुत्त्रा बभूवुस्ते प्रजापतिसमा नव ॥
नाभिः किम्पुरुषश्चैव हरिवर्ष इलावृतः ।
रम्यो हिरण्वान् षष्ठश्च कुरुर्भद्राश्व एव च ॥
केतुमालस्तथैवान्यः साधुचेष्टो नृपोऽभवत् ।
जम्बुद्वीपविभागांश्च तेषां विप्र ! निशामय ॥
पित्रा दत्तं हिमाह्वन्तु वर्षं नाभेस्त दक्षिणम् ।
हेमकूटं तथा वर्षं ददौ किम्पुरुषाय सः ॥
तृतीयं नैषधं वर्षं हरिवर्षाय दत्तवान् ।
इलावृताय प्रददौ मेरुर्यत्र तु मध्यगः ॥
नीलाचलाश्रितं वर्षं रम्याय प्रददौ पिता ।
श्वेतं तदुत्तरं वर्षं पित्रा दत्तं हिरण्वते ॥
यदुत्तरं शृङ्गवतो वर्षं तत्कुरवे ददौ ।
मेरोः पूर्ब्बेण यद्वर्षं भद्राश्वाय प्रदत्तवान्” ॥
वैवस्वतमनुवंश्यश्चन्द्रवंशीयराजविशेषः । स तु
सम्बरणराजभार्य्यायां सूर्य्यकन्यायां तपत्यां जातः ।
अयमेव कुरुक्षेत्रपतिः । धार्त्तराष्ट्रपाण्डवानां पूर्ब्बपुरुषः । यथा, --
“योऽजमीढसुतस्त्वन्य ऋक्षः सम्बरणस्ततः ।
तपत्यां सूर्य्यकन्यायां कुरुक्षेत्रपतिः कुरुः ॥
परीक्षित् सधनुर्जह्नुर्निषधाश्वः कुरोः सुताः” ॥
इति श्रीभागवते । ९ । २२ । ४ ॥) भक्तम् । देशविशेषः ।
इति मेदिनी ॥ स तु जम्बुद्वीपस्य नववर्षान्तर्गत-
वर्षविशेषः । इति ज्योतिषम् ॥ तद्देशवासी । तत्र
बहुवचनान्तः । (यथा गीतायाम् १ । २५ । तीति । कु + रुटि स्तेये + अच् ।) पीतझिण्टी ।
पीताम्लानः । इति मेदिनी ॥ (कुरुण्टकशब्देऽस्य
विवृतिरुक्ता ॥)

**कुरुण्टकः**, पुं, (कुरुण्ट + स्वार्थे कन् ।) पीताम्लानः ।
पीतझिण्टी । तत्पर्य्यायः । सहचरी २ सहचरः
३ । इत्यमरः । २ । ४ । ७५ ॥ सहाचरः ४ कुर-
ण्टकः । इति भरतः ॥
(“वीरः सहचरः पीतपुष्पो दासीकुरुण्टकः” ॥
इति वैद्यकरत्नमालायाम् । यत्रास्य व्यवहारस्त-
द्यथा, सुश्रुते सूत्रस्थाने ३८ अध्याये आरग्वधा-
दिवर्गे ॥ “आरग्वधमदनगोपघोण्टाकुटजपाठा
कण्टकीपाटलामूर्व्वेन्द्रयवसप्तपर्णनिम्बकुरुण्टकदा-
सीत्यादिषु द्रष्टव्यः ॥)

**कुरुण्टी**, स्त्री, (कु कुत्सितं रुण्टति स्वभासा । कु +
रुटि + अच् । गौरादित्वात् ङीष् ।) दारुपुत्त-

**कुरुविन्दं**, क्ली, (कुरून् विन्दति + विदिलाभे “अनु-
पसर्गात्
लिम्पविन्दधारिपारिवेद्युदेजिचेति साति
साहिभ्यश्च” । ३ । १ । १३८ । इति शः मुचा-
दित्वात् नुम् च ।) काचलवणम् । माणिक्यम् ।
इति राजनिर्घण्टः ॥ कुरुविल्वरत्नम् । कुल्माष-
शस्यम् । इति मेदिनी ॥ (क्वचिदस्य पुंलिङ्गत्व-
मपि दृश्यते । यथा, सुश्रुते सूत्रस्थाने ३६ अः ।
“कासीससैन्धवं किण्वं कुरुविन्दो मनःशिला” ॥)

**कुरुविन्दः**, पुं, (कुरु + विद् + शः नुम् च ।) मुस्तकम् ।
इत्यमरः । २ । ४ । १५९ ॥ माषः । इति राज-
निर्घण्टः ॥ (अस्य पर्य्याया यथा, --
“मुस्तकं न स्त्रियां मुस्तं त्रिषु वारिदनामकम् ।
कुरुविन्दश्च सङ्ख्यातोऽपरः क्रोडकसेरुकः ।
भद्रमुस्तञ्च गुन्द्रा च तथा नागरमुस्तकः” ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**कुरुविल्वः**, पुं, (कुरुषु विल्व इव ।) पद्मरागमणिः ।
इति त्रिकाण्डशेषः ॥

**कुरुविल्वकः**, पुं, (कुरुविल्व + संज्ञायां कन् ।) कु-
ल्माषः । वनकुलत्थिका । इति रत्नमाला ॥ (गुणा-
श्चास्य कुल्माषशब्दे ज्ञेयाः ॥)

**कुरुविस्तः**, पुं, (कुरुषु विख्यातः विस्तः ।) स्वर्णपलम् ।
इत्यमरः । २ । ९ । ८६ ॥ चारि तोला सोणा ।

| | | |
|---|---|---|
| | | इति भाषा ॥<br><br>**कुरूप्यं**, क्ली, (कु ईषत् रूप्यमिव । रूप्यवत् शुभ्र-<br>त्वात्तथात्वम् ।) रङ्गम् । इति<br>राजनिर्घण्टः ॥<br><br>**कुर्कुरः**, पुं स्त्री, (कुर् इत्यस्फुटं शब्दं कुरति शब्दायते ।<br>कुर् + कुर् + कः ।) कुक्कुरः ।<br>इत्यमरटीकायां<br>रायमुकुटः ॥<br><br>**कुर्णजः**, पुं, कुलञ्जनवृक्षः । इति राजनिर्घण्टः ॥ |

**कुर्द्द** ङ क्रीडायाम् । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-

अकं-सेट् ।) पञ्चमस्वरी । दीर्घिणः

पृथक् पाठ-

सामर्थ्यात् पूर्ब्बस्य र्वनच्तयीति

दीर्घो न स्यात् ।

ङ कुर्द्दते । इति दुर्गादासः ॥

**कुर्द्दनं**, क्ली, (कुर्द्द + भावे ल्युट् ।) क्रीडा । इत्यमर-

टीकायां स्वामी ॥

**कुर्परः**, पुं, (कुर् + क्विप् कुः । पिपर्त्ति । पृ + अच् परः ।

ततः कर्म्मधारयः ।) कफोणिः ।

जानु । इति मे-

दिनीकरहेमचन्द्रौ ॥ (कुर्परशब्देऽस्य

विवरणं

व्याख्येयम् ॥)

**कुर्पासः**, पुं, (कुर्परे अस्यते आस्ते वा । अस्, आस्

वा + घञ् ततः पृषोदरात् साधुः ।)

अर्द्धचोलकः ।

इति हारावली ॥

**कुर्पासकः**, पुं, (कुर्पास + स्वार्थे कन् ।) कञ्चुलिका ।

इत्यमरः ॥ काँचुलि इति भाषा ।

(यथा रत्ना-

वलीनाटके ।

"मनोज्ञकुर्पासकपीडितस्तना" ॥)

**कुर्व्वत्**, त्रि, (करोति इति । कृ + शतृ ।) कर्म्म-

कारः । भृत्यः । इति विश्वः ॥

**कुल** ज बन्धौ । संहतौ । इति कविकल्पद्रुमः ॥

(भ्वां-परं-अकं-क्वचित् सकं सेट् ।

ज्वलादिः ।)

ज कोलः कुलः । कोलति कुलीनः

सर्व्वेषां बन्धुः

स्यादित्यर्थः । संहती

राशीकरणमिति चतुर्भुजः ॥

"दशी कुलन्तु भुञ्जीत विंशी पञ्चकुलानि च"

॥)

**कुलः**, पुं, (कुल् + कः ।) कुलिकः । शिल्पिकुल-

प्रधानः । इत्यमरटीकायां भरतः ॥

**कुलकं**, क्ली, (कौ भूमौ लीयते । कु + ली + डः ।

संज्ञायां कन् ।) पटोललता ।

सम्बद्धश्लोकसमूहः ।

इति मेदिनी ॥ (यथा, साहित्यदर्पणे ६ ।

२८७ ।

"कलापकं चतुर्भिश्च तदूर्द्ध्वं कुलकं मतम्"

॥

पटोलार्थे यथा, -- "करीरं कुलकं नन्दी"

इति

वाभटे सूत्रस्थाने । ६ अः । कुलकं

पटोलभेदः ।

तित्पल्ला इति ख्यातम् ॥ इति तट्टीका ॥)

**कुलकः**, पुं, (कुल् + संज्ञायां कन् ।) काकेन्दुः ।

इत्यमरः । २ । ४ । ३९ ॥ वल्मीकः ।

कुलश्रेष्ठः ।

इति मेदिनी ॥ मरुवकवृक्षः । इति

रत्नमाला ॥

हरितसर्पः । इति राजनिर्घण्टः ॥ कुपीलुः ।

इति

भावप्रकाशः ॥ शिल्पिकुलप्रधानः ।

इत्यमरटी-

कायां भरतः ॥

**कुलकर्कटी**, स्त्री, (कुला कर्कटी इति नित्यकर्म्मधा-

रयः ।) चीनाकर्कटी । इति राजनिर्घण्टः ॥

**कुलकुण्डलिनी** स्त्री, (कुले कुलचक्रे पृथिवीतत्त्व-

रूपेमूलाधारे कुण्डलाकृत्या सार्द्ध-

त्रिवलयाकारेण स्वयम्भुलिङ्गं वेष्टयित्वा

तिष्ठतीति ।

कुल + कुण्डलिन् + ङीप् । कुण्डल + ङीष्

। यद्वा

कौ पृथिवीतत्त्वाधारे मूलाधारे इत्यर्थः

लीयते

**कुलजः**, पुं, (कुले सत्कुले जायते । जन् + डः ।)

कुलीनः । सत्कुलोद्भवः । इति शब्दरत्नावली ॥

(यथा, मनुः ८ । १७९ ।

"कुलजे वृत्तसम्पन्ने धर्म्मज्ञे सत्यवादिनि ।

महापक्षे धनिन्यार्य्ये निक्षेपं निक्षिपेद्बुधः" ॥)

**कुलञ्जः**, पुं, (कुं पृथिवीं रञ्जयति । रञ्ज + णिच् + अण्

रस्य लः ।) कुलञ्जनवृक्षः । इति राजनिर्घण्टः ॥

**कुलञ्जनः**, पुं, (कु + रञ्ज + णिच् + ल्युः । रस्य लः ।)

स्वनामख्यातवृक्षः । तत्पर्य्यायः । कुर्णजः २

गन्धमूलः ३ कुलञ्जः ४ । अस्य गुणाः । कटुत्वम् ।

तिक्तत्वम् । उष्णत्वम् । दीपनत्वम् । मुखदोषना-

शित्वञ्च । इति राजनिर्घण्टः ॥

**कुलटा**, स्त्री, (कुलात् व्यभिचारार्थं कुलान्तरं अट-

तीति । कुल + अट् + अच् । शकन्ध्वादित्वात्

अलोपः ।) व्यभिचारिणी । भ्रष्टा ।

(यथाह, आर्य्यासप्तशती ३९३ ।

"परपतिनिर्द्दयकुलटाशोषितशठ ! नेर्षया न कोपेन ।

दग्धममतोपतप्ता रोदिमि तव तानवं वीक्ष्य" ॥)

तत्पर्य्यायः । पुंश्चली २ धर्षिणी ३ बन्धकी ४

असती ५ इत्वरी ६ स्वैरिणी ७ पांशुला ८ । इत्य-

मरः । २ । ६ । १० ॥ धर्षणी ९ पांसुला १० । इति

तट्टीका ॥ घृष्टा ११ दुष्टा १२ धर्षिता १३ । इति

शब्दरत्नावली ॥ लङ्का १४ निशाचरी १५ त्रपा-

रण्डा १६ । इति जटाधरः ॥ * ॥ परकीयान्तर्गत-

नायिकाविशेषः । यथा, --

"एते वारिकणान् किरन्ति पुरुषान् वर्षन्ति

नाम्भोधराः शैलाः शाद्वलमुद्वहन्ति न सृजन्त्येते

पुनर्नायिकान् । त्रैलोक्ये तरवः फलानि सुवते

नैवारभन्ते जनान् धातः ! कातरमालपामि कुल-

टाहेतोस्त्वया किं कृतम्" ॥ इति रसमञ्जरी ॥ * ॥

अस्या अन्नभोजनप्रायश्चित्तं प्रायश्चित्तशब्दे अभो-

ज्यान्नभक्षणप्रकरणे द्रष्टव्यम् ॥

**कुलटी**, स्त्री, (कुत्सितं रट्यते । रट भाषणे +

घञर्थे कः । गौरादित्वात् ङीष् रस्य लः ।) मनः-

शिला । इति रत्नमाला अमरटीका च ॥ (अस्या

गुणादयो मनःशिलाशब्दे बोद्धव्याः ॥)

**कुलतिथिः**, स्त्री पुं, (कुला तिथिः ।) चतुर्थ्यष्टमीद्वा-

केचित्तु संहतिस्थाने संख्यानं
पठित्वा कोलति
कुलालः गणयति इत्यर्थः इत्याहुः ।
संस्त्यानं
पठित्वा संस्त्यानं उपचयः । इति
रामः ॥ अन्ये तु
बन्धुषु ज्ञातिषु वर्त्तमानोऽयं
अन्यत्रास्य न प्रयोगः ।
गडि गण्डे इतिवदित्याहुः । इति
दुर्गादासः ॥

**कुलं**, क्ली, (कुल् + "इगुपधेति" । ३ । १ । १३५ ।
कः ।) वंशः । (यथा, रघौ । १६ ।
८६ ।
"इत्यूचिवानुपहृताभरणः क्षितीशं
श्लाघ्यो भवान् स्वजन
इत्यनुभाषितारम् ।
संयोजयां विधिवदास समेतबन्धुः
कन्यामयेन कुमुदः कुलभूषणेन" ॥
तस्य लक्षणं यथा, शिष्टोक्तौ ।
"आचारो विनयो विद्या प्रतिष्ठा
तीर्थदर्शनम् ।
निष्ठा वृत्तिस्तपो दानं नवधा
कुललक्षणम्" ॥)
तन्नाशकारणं यथा ।
"गोभिश्च दैवतैर्विप्रकृष्या
राजोपसेवया ।
कुलान्यकुलतां यान्ति यानि हीनानि
वृत्ततः ॥
कुविवाहः क्रियालोपैर्वेदानध्ययनेन
च ।
कुलान्यकुलतां यान्ति
ब्राह्मणातिक्रमेण वै ॥
अनृतात् पारदार्य्याच्च तथाऽभक्षस्य
भक्षणात् ।
अश्रौतधर्म्माचरणात् क्षिप्रं नश्यति वै
कुलम् ॥
अश्रोत्रिये वै वेदानां वृषलेषु तथैव च
।
विहिताचारहीनेषु क्षिप्रं नश्यति वै
कुलम्" ॥
इति कूर्म्मपुराणे उपरिभागे १५
अध्यायः ॥
इति । कु + ली + अन्येभ्योपीति डः । ततः
कर्म्म
धारयः ।)
मूलाधारपद्मस्थितशिवशक्तिविशेषः ।
यथा । पूर्णानन्दकृतषट्चक्रप्रकाशः ।

**कुलकुण्डलिनी** स्त्री, (कुले कुलचक्रे पृथिवीतत्त्व-
रूपे मूलाधारे कुण्डलाकृत्या सार्द्ध-
त्रिवलयाकारेण स्वयम्भुलिङ्गं वेष्टयित्वा
तिष्ठतीति ।
कुल + कुण्डलिन् + ङीप् । कुण्डल + ङीष्
। यद्वा
कौ पृथिवीतत्त्वाधारे मूलाधारे इत्यर्थः
लीयते
इति । कु + ली + अन्येभ्योपीति डः । ततः
कर्म्म
धारयः ।)
मूलाधारपद्मस्थितशिवशक्तिविशेषः ।
यथा । पूर्णानन्दकृतषट्चक्रप्रकाशः ।
"कूजन्ती कुलकुण्डली च मधुरं
मत्तालिमालास्फुटं
वाचः
कोमलकाव्यबन्धरचनाभेद्रातिभेदक्रमैः ।
श्वासोच्छ्वासविवर्त्तनेन जगतां जीवो यया
धार्य्यते
सा मूलाम्बुजगह्वरे विलसति
प्रोद्दामदीप्तावली" ॥

कूजन्तीति । सा मूलाम्बुजगह्वर
इत्यादि व्या-

ख्यातम् । कीदृशी
कोमलकाव्यबन्धरचनाभेद्रा-
तिभेदक्रमैः कोमला कमनीयत्वविशिष्टा या
काव्य-
बन्धरचना तस्याः भेदातिभेदक्रमैः
भेदातिशयभेद-
क्रमैर्व्विशिष्टा वाचः मत्तालिमालास्फुटं मत्ता
या
अलिमाला भ्रमरसमूहस्तद्वदस्फुटं यथा
स्यात्
एवं मधुरं यथा स्यात् तथा कूजन्ती
अव्यक्त-
दशीचतुर्द्दश्यः । यथा, तन्त्रसारे ।
"द्वितीया दशमी षष्ठी कुलाकुलमुदाहृतम् ।
विषमाश्चाकुलाः सर्व्वे शेषाश्च तिथयः कुलाः" ॥

**कुलत्थः**, पुं, (कुलं भूमिलग्नं सत् तिष्ठति । कुल +
स्था + कः । पृषोदरात् साधुः ।) शस्यभेदः । कुल-
त्थकडाइ इति भाषा ॥ (यथा, मार्कण्डेये । १५ । ७
।
"धान्यंयवांस्तिलान्माषान्कुलत्थान्सर्षपांश्चणान्"
॥)
तत्पर्य्यायः । कालवृन्तः २ ताम्रवृक्षः ३ कुल-
त्थिका ४ । इति रत्नमाला ॥ ताम्रवृन्तः ५ । इति
त्रिकाण्डशेषः ॥ ताम्रवीजः ६ सितेतरः ७ । इति
राजनिर्घण्टः ॥ अस्य गुणाः । कफवातगुल्म-
शुक्राश्मरीमेदःश्वासकासप्रमेहनाशित्वम् । वृंह-
णत्वम् । उष्णत्वम् । कटुत्वम् । ग्राहित्वञ्च । इति
राजवल्लभः ॥ कषायत्वम् । रूक्षत्वम् । रक्तपित्त-
कारित्वम् । बलनाशित्वञ्च । अस्य यूषगुणः । वायु-

सजातीयगणः । इत्यमरः । २ । ७ । १ ॥ (कुं भूमिं लाति गृह्णाति । ला + कः ।) जनपदः । गृहम् । (कौ भूमौ जीयते । अन्येभ्योपीति डः ।) शरीरम् । इति मेदिनी ॥ अग्रम् । इति महाभारतम् ॥ (मध्यम-हलद्वयेन यावती भूमिः कृष्यते तावतो भूमिः । यथा, मनुः । ७ । १११ ।

मधुरध्वनिं कुर्व्वन्तीत्यर्थः । सा का इत्याकाङ्क्षा-यामाह यथा कुलकुण्डलिन्या श्वासोच्छ्वासविवर्त्त-नेन श्वासोच्छ्वासयोः परिवर्त्तनेन गमनागमनेन जगतां संसाराणां जीवः प्राणो धार्य्यते । पुनः कीदृशी प्रोद्दामदीप्तावली प्रकृष्टोत्तुङ्गदीप्ति-श्रेणीस्वरूपा । तथा च मूलाधारपद्मे सर्पाकार-सार्द्धत्रितयवेष्टनविशिष्टा विद्युत्समूहरूपा कुल-कुण्डलिनी तिष्ठतीत्यर्थः । इति तट्टीका ॥ * ॥ अन्यत् चक्रशब्दे मूलाधारशब्दे षट्चक्रशब्दे च द्रष्टव्यम् ॥

**कुलक्कः**, पुं, (कु + लक्क + भावे घञ् ।) करताली ।

तत्पर्य्यायः । तालमर्द्दलः २ । इति हारावली ॥

**कुलक्षया**, स्त्री, (कुलस्य मूलस्य विस्तृतवल्लीजालस्य वा क्षयो यस्याः ।) शूकशिम्बी । इति शब्दच-न्द्रिका ॥

शर्क्कराश्मरीनाशित्वम् । इति राजनिर्घण्टः ॥

(अस्य अपरे पर्य्यायगुणा यथा, --

“कुलत्थिका कुलत्थश्च कथ्यन्ते तद्गुणा अथ ।

कुलत्थः कटुकः पाके कषायः पित्तरक्तकृत् ।

लघुर्व्विदाही वीर्य्योष्णः श्वासकासकफानिलान्॥

हन्ति हिक्काश्मरीशुक्रदाहानाहान् सपीनसान् ।

स्वेदसंग्राहको मेदोज्वरक्रिमिहरः परः” ॥

इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥ * ॥

“उष्णः कुलत्थो रसतः कषायः कटुर्व्विपाके कफमारुतघ्नः ।

शुक्राश्मरीगुल्म-निषूदनश्च संग्राहकः पीनसकासहारी ॥

आनाहमेदोगुदकीलहिक्का श्वासापहः शोणितपित्तकृच्च ।

कफस्य हन्ता नयनामयघ्नो विशेषतो वन्यकुलत्थ उक्तः” ॥

इति सुश्रुते सूत्रस्थाने ४६ अध्याये ॥ * ॥)

**कुलत्था**, स्त्री, (कुलत्थ + स्त्रियां टाप् ।) वनकुलत्थः ।

तत्पर्य्यायः । दृक्प्रसादा २ अरण्यकुलत्थिका ३ कुलाली ४ लोचनहिता ५ चक्षुष्या ६ कुम्भका-रिका ७ कुलत्थिका ८ । इति राजनिर्घण्टः ॥

कुल्माषः ९ कुरुविल्वकः १० । इति रत्नमाला ॥

अस्या गुणाः । कटुत्वम् । तिक्तत्वम् । अर्शःशूल-नाशित्वम् । विबन्धाध्मानशमनत्वम् । चक्षुर्हित-त्वम् । व्रणरोपणत्वञ्च । कुलत्थाञ्जनम् । अस्य पुष्यमघोत्तरफल्गुनीचित्राविशाखाज्येष्ठापूर्ब्बाषा-ढाश्रवणोत्तरभाद्रपदः । यथा, --

“वारुणार्द्राभिजिन्मूलं कुलाकुलमुदाहृतम् ।

कुलानि समधिष्ट्यानि शेषाणि चाकुलानि च” ॥

इति तन्त्रसारः ॥

**कुलनाशः**, पुं, (कुलं मूमिलग्नं न अश्नाति । न + अश् + अच् । सुप्सुपेति समासः । उष्ट्रस्य हि उन्नत-कन्धरत्वात् भूमिलग्नस्याभक्षकतया तथात्वम् ।) उष्ट्रः । इति हेमचन्द्रः ॥ (कुलस्य नाशः ध्वसः ।) कुलध्वंसः ॥

**कुलपतिः**, पुं, (कुलस्य वंशस्य गोत्रस्य वा पतिः स्वामी ।) कुलस्वामी । गोत्रप्रधानः । कुलनाथः । यथा । “अथ सिन्धुसौवीरपतेरहूगणस्य व्रजत इक्षुमत्यास्तटे तत्कुलपतिना शिविकावाहपुरु-षान्वेषणसमये दैवेनोपसादितः स द्विजवर उप-लब्धः” । इति श्रीभागवते ५ । १० । १ ॥ (कुलस्य छात्रवर्गस्य पतिः पालकः । अन्नदानपोषणपूर्ब्बकं अध्यापको मुनिविशेषः । उक्तञ्च ।

“मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात् ।

अध्यापयति विप्रर्षिः स वै कुलपतिः स्मृतः” ॥)

**कुलपत्रः**, पुं, (कुलं भूलग्नं पत्रं पर्णमस्य ।) दमनक-वृक्षः । इति राजनिर्घण्टः ॥

**कुलपालकं**, क्ली, (कुलं समूहं पालयतीति । पालि + ण्वुल् । बहुफलोत्पत्तेस्तथात्वम् ।) कुरुम्बम् । कमलानेवु इति भाषा । इति शब्दचन्द्रिका ॥ (कुलं वंशं पालयति । पाल + णिच् + ण्वुल् ।) वंशप्रतिपालके, त्रि ॥

**कुलपालिः**, स्त्री, (कुलं पालयति या । पालि + इन् ।) कुलवती । इति शब्दमाला ॥

**कुलपालिका**, स्त्री, (कुलं पालयति । पालि + ण्वुल् टाप् इत्वम् । यद्वा कुलपालि + स्वार्थे कन् टाप् ।) कुलस्त्री । इत्यमरः । २ । ६ । ७ ॥

**कुलभृत्या**, स्त्री, (कुलैः वंशभवैः भृत्था भरणम् । कुल + भृ + भावे क्यप् ।) गर्भिणीपर्य्युपासना । इति जटाधरः ॥ (कुलस्य भृत्या । वंशभरणम् ॥)

**कुलम्भरः**, पुं, (कुलं गृहं भलति हन्ति सन्धिकर्त्त-

इति तट्टीकायां भरतः ॥

**कुलसम्भवः**, पुं, (कुले कस्यचित् वंशे सम्भवः उत्-पत्तिरस्य ।) यस्य कस्यचित् कुले जातः । तत्प-र्य्यायः । वीज्यः २ । इत्यमरः । २ । ७ । २ ॥

**कुलसौरभं**, क्ली, (कुलं श्रेष्ठं सौरभं यस्य ।) मरुवक-वृक्षः । इति शब्दमाला ॥

**कुलस्त्री**, स्त्री, (कुले कुलस्थिता स्त्री ।) कुलपालिका ।

अनन्यगामिनी कुलरक्षिका स्त्री । इत्यमरः । २ । ६ । ७ ॥ (तथा च चाणक्ये ।

“असन्तुष्टा द्विजा नष्टाः सन्तुष्टा इव प्रार्थिवाः ।

सलज्जा गणिका नष्टा निर्लज्जाश्च कुलस्त्रियः” ॥

कुले कुलचक्रे मूलाधारे विराजते या स्त्री । कुलकुण्डलिनीशक्तिः । यथा, कुलार्णवे ।

“कुलस्त्रीज्ञानमात्रेण जीवन्मुक्तो भवेन्नरः” ॥)

**कुलहण्डकः**, पुं, (कुलाय संघाय हुण्डते । हुडि संघे + ण्वुल् । पृषोदरात् उकारलोपः ।) आरणिः ।

आवर्त्तः । इति हारावली ॥

**कुलाकुलतिथिः**, पुं स्त्री, (तन्त्रोक्तकुलाकुलनाम्ना प्र-सिद्धा तिथिः ।) द्वितीयाषष्ठीदशम्यः । यथा ।

“द्वितीया दशमी षष्ठी कुलाकुलमुदाहृतम्” ॥

इति तन्त्रसारः ॥

**कुलाकुलनक्षत्रं**, क्ली, (तन्त्रोक्तकुलाकुलसंज्ञकं नक्ष-त्रम् ।) आर्द्रामूलाभिजिच्छतभिषानक्षत्राणि । यथा, तन्त्रसारे ॥

पर्य्यायः पूर्ब्बवत्तदधिकस्तुं ।
कुम्भकारी १ प्रला-
पहा २ । अस्य गुणाः । चक्षुर्हितत्वम् ।
कषाय-
त्वम् । कटुत्वम् । हिमत्वम् ।
विषविस्फोटकण्डू-
व्रणदोषनाशित्वञ्च । इति राजनिर्घण्टः
॥

**कुलत्थिका**, स्त्री, (कुलत्था स्वार्थे संज्ञायां वा कन्

अत इत्वम् ।)
कुलत्थाकाराञ्जनप्रस्तरविशेषः । इत्य-
मरः । २ । ९ । १०२ ॥ अस्य
गुणपर्य्यायौ कुलत्थाशब्दे
द्रष्टव्यौ । वनकुलत्थः । इति
राजनिर्घण्टः ॥

**कुलधर्म्मः**, पुं, (कुलस्य कुले वा आचरितो धर्म्मः ।)

स्वजातीयधर्म्मः । कुलाचारः । यथा, --
“उत्सन्नकुलधर्म्माणां मनुष्याणां
जनार्द्दन ! ।
नरके नियतं वासो भवतीत्यनुशुश्रुम”
॥
इति श्रीभगवद्गीतायाम् । १ । ४३ ॥

**कुलधारकः**, पुं, (कुलं धारयति रक्षति यः । कुल +

धृ + णिच् + ण्वुल् ।) पुत्त्रः । इति
त्रिकाण्डशेषः ॥

**कुलनायिका**, स्त्री, (कुले कुलाचारयजनकाले पूज्या

या नायिका ।) पञ्च-मकारयजने पूज्या
स्त्री ।
यथा, --
“रक्तमाल्येन सम्बीतो
रक्तपुष्पविभूषितः ।
पञ्चीकरणसङ्केतैः पूजयेत्
कुलनायिकाम्” ॥
सा नवविधा यथा, --
“नटी कापालिनी वेश्या रजकी
नापिताङ्गना ।
नादिना इति । कुल + भल + अच् । निपातनात्
मुम् लस्य रः ।) कुजम्भलः । चौरः । इति
हारावली ॥

**कुलवर्णा**, स्त्री, (कुलेषु भिषक्कुलेषु वर्णः वर्णनं गुण-

कथनं यस्याः ।) रक्तत्रिवृत् । इति राजनिर्घण्टः ॥

**कुलवारः**, पुं, (कुलस्तदाख्यया प्रसिद्धो वारः ।) मङ्गल-

शुक्रवारौ । यथा ।
“रविश्चन्द्रो गुरुः सौरिश्चत्वारश्चाकुला इमे ।
भौमशुक्रौ कुलाख्यौ हि बुधवारः कुलाकुलः” ॥
इति तन्त्रसारः ॥

**कुलविप्रः**, पुं, (कुलपरम्परागतः कुलहिताय नियुक्तो

वा विप्रः ।) कुलपुरोहितः । इत्यमरटीकायां
स्वामी ॥

**कुलश्रेष्ठी**, [न्] त्रि, (कुलेषु शिल्पिकुलेषु श्रेष्ठी ।)

शिल्पिकुलप्रधानः । तत्पर्य्यायः । कुलिकः २ ।
इत्य-
मरः । २ । १० । ५ ॥ कुलकः ३ कुलः ४ श्रेष्ठी ५ ।
“वारुणार्द्राभिजिन्मूलं कुलाकुलमुदाहृतम्”
॥

**कुलाकुलवारः**, पुं, (तन्त्रोक्तकुलाकुलनामा वारः ।)

बुधवारः । यथा, तन्त्रसारे ॥
“भौमशुक्रौ कुलाख्यौ हि बुधवारः
कुलाकुलः” ॥

**कुलाचलः**, पुं (कुलसंज्ञकः अचलः पर्व्वतः । शाक-

पार्थिवादिवत् मध्यपदलोपः ।)
कुलपर्व्वतः । यथा ।
“अष्टकुलाचलसप्तसमुद्रा
ब्रह्मपुरन्दरदिनकररुद्राः ।
न त्वं नाहं नायं लोक-
स्तदपि किमर्थं क्रियते शोकः” ॥
इति मोहमुद्गरे ७ ॥ सप्तकुलपर्व्वता यथा
।
“सप्त येऽस्मिन् महापर्व्वाः विस्तृताः
कुलपर्व्वताः ।
माहेन्द्रो मलयः सह्यः शुक्तिमानृक्षवानपि ॥
विन्ध्यश्च पारिपात्रश्च इत्येते
कुलपर्व्वताः” ॥
इति मात्स्ये ९५ अध्यायः ॥

**कुलाचार्य्यः**, पुं, (कुलस्य वंशस्य व्याख्यायां वर्णनादौ

गुणकीर्त्तनविषये वा आचार्य्यः ।) कुलज्ञः
। कुली-
नादीनां वंशांशव्याख्याकर्त्तृब्राह्मणः ।
अस्य विव-
रणं घटकशब्दे द्रष्टव्यम् ॥

**कुलाटः**, पुं, (कुलेन संघेन अटतीति । अट् + अच् ।)

क्षुद्रमत्स्यभेदः । इति शब्दमाला ॥

**कुलाद्रिः**, पुं, (कुलनाम्ना ख्यातोऽद्रिरचलः ।) कुला-

चलः । इति सिद्धान्तशिरोमणिः ॥

**कुलाधारकः**, पुं, (कुलस्य वंशस्य आधारकः प्रति-

ष्ठापकः ।) पुत्त्रः । इति शब्दरत्नावली ॥

**कुलायं**, क्ली, (कौ पृथिव्यां लायो लयो यस्य ।)

शरीरम् । इति पुराणम् ॥

| | | |
|---|---|---|
| ब्राह्मणी शूद्रकन्या च तथा<br>गोपालकन्यका ।<br>मालाकारस्य कन्या च नव कन्याः<br>प्रकीर्त्तिताः” ॥<br>इति तन्त्रसारः ॥<br><br>**कुलनक्षत्रं**, क्ली, (तन्त्रसारोक्तपारिभाषिकलक्षणंकुलं<br>तत्र तत्सम्बन्धि वा नक्षत्रम् ।)<br>भरणीरोहिणी- | | |

**कुलायः**, पुं, (कुलानां पक्षिसमूहानां अयः वास-
स्थानम् ।) नीडः । (यथा, माघे ।
“खगकुलायकुलायनिलायिताम्” ।)
स्थानमात्रम् । इति मेदिनी ॥

**कुलायस्थः**, पुं, (कुलाये नीडे तिष्ठति । स्था + कः ।)
पक्षी । इति शब्दचन्द्रिका ॥

**कुलायिका**, स्त्री, (कुलायः पक्षिवासस्थानं विद्यते
ऽस्याम् । ठन् ।) पक्षिशाला । इति
त्रिकाण्डशेषः ॥

**कुलालः**, पुं, (कुलं घटादिनिर्म्माणोपयोगिमृदाद्युपा-
दानं आलाति सम्यगादत्ते । आ + ला + कः
। कुलं
वंशं घटादिसमूहं वा अलति पर्य्याप्नोति वा
अल् + कर्म्मण्यण् । कुल् + “तमिविशि
विडीति”
उणां १ । ११७ । इति कालन् वा ।)
कुम्भकारः ।
इत्यमरः । २ । १० । ६ ॥ तस्योत्पत्तिर्यथा
।
“मालाकारात् कर्म्मकार्य्यां कुम्भकारो
व्यजायत” ॥
इति परासरसंहिता ॥
“पट्टिकाराच्च तैलिक्यां कुम्भकारो बभूव
ह” ॥
इति पराशरपद्धतिः ॥ ब्रह्मवैवर्त्तोक्ता च
कुम्भका-
रशब्दे द्रष्टव्या ॥ कुक्कुभपक्षी । इति मेदिनी
॥

**कुलाली**, स्त्री, (कुलं पर्व्वतकुलं कलायकुलं वा
अलति
परिवर्द्धयति । अल् + अण् । ङीप् ।)
कुलत्था-
काराञ्जनप्रस्तरविशेषः । कुलत्थाञ्जनमिति
ख्याता ।
इत्यमरः । २ । ९ । १०२ ॥
अरण्यकुलत्थिका वन-
कुलत्थकडाइ इति भाषा । इति
राजनिर्घण्टः ॥

कालविशेषः । यथा । रवौ सप्तमयामार्द्धम्
सोमे षष्ठयामार्द्धम् । मङ्गले पञ्चमयामार्द्धम् ।
बुधे चतुर्थयामार्द्धम् । गुरौ तृतीययामार्द्धम् ।
शुक्रे द्वितीययामार्द्धम् । शनौ प्रथमयामार्द्धम् ।
राघवभट्टमते तु पूर्ब्बोक्तयामार्द्धानां दिवाशेष-
भागः । रात्रौ प्रथमभागः । इति ज्योतिषतत्त्वम् ॥

**कुलिङ्गः**, पुं, (कौ पृथिव्यां लिङ्गति गच्छतीति । कु
+ लिगि + अच् + इदित्वात् नुम् । यद्वा कुत्सितं
कृष्णवर्णं लिङ्गं वर्णं यस्य ।) पक्षिविशेषः । फिङ्गा
इति भाषा । तत्पर्य्यायः । कलिङ्गः २ धुम्याटः ३
फिङ्गकः ४ । इति शब्दमाला ॥ भृङ्गः ५ । इत्य-
मरः ॥ अस्य मांसगुणाः । मधुरत्वम् । स्निग्धत्वम्
।
कफपित्तकारित्वञ्च । इति राजवल्लभः ॥

**कुलिङ्गकः**, पुं, (कुलिङ्ग + अल्पार्थे कन् ।) चटक-
पक्षी । इति हेमचन्द्रः ॥

**कुलिङ्गाक्षी**, स्त्री, (कुलिङ्गस्य अक्षिवत् फलं यस्य ।)
पेटिकावृक्षः । इति रत्नमाला । पेटारी इति
भाषा ॥

**कुलिङ्गी**, क्ली, (कुलिङ्ग + स्त्रियां गौरादित्वात् ङीष् ।)
कर्कटशृङ्गीवृक्षः । इति रत्नमाला ॥

**कुलिरः**, पुं, (कुल् + बाहुलकात् इरन् किच्च ।)
कर्कटः । इति शब्दरत्नावली ॥

**कुलिशं**, क्ली, पुं, (कुलौ हस्ते शेते अवतिष्ठते । कुल +
शी + डः । यद्वा कुलिनः पर्व्वतान् श्यति दारय-
तीति । शो + डः । “आतोनुपसर्गे कः” । ३ । २ ।
३ ।
इति को वा ।) वज्रम् । इत्यमरभरतौ ॥
(यथा, कुमारे । १ । २० ।
“क्रुद्धेऽपि पक्षच्छिदि वृत्रशत्रा-
ववेदनाज्ञं कुलिशक्षतानाम्” ॥
कु ईषत् कुत्सितं वा लिशति । कु + लिश अल्पी-
भावे गतौ च + कः ।) मत्स्यविशेषः । तत्पर्य्यायः
।
कण्टकाष्ठीलः २ । इति त्रिकाण्डशेषः ॥
(यथा, सुश्रुते सूत्रस्थाने ६४ अध्याये ।
“तिमिमिङ्गिलकुलिशापाकमस्त्यनिरालकनन्दिवा-

**कुलीनः**, पुं, (कुले प्रशस्तवंशे जातः । “कुलात्
खः” ।
४ । १ । १३९ । इति खः ।)
श्रेष्ठघोटकः ।
तत्पर्य्यायः । आजानेयः २ । इत्यमरः
॥ अजा-
नेयः ३ । इति तट्टीका ॥ स्वजानेयः ४
जात्यः ५
बालाश्विः ६ । इति शब्दरत्नावली ॥
(तन्त्र-
शास्त्रोक्तकुलाचारव्रते स्थितः कौलः ॥)
उत्तम
कुलोद्भवे, त्रि । तत्पर्य्यायः । महाकुलः
२ आर्य्यः
३ सभ्यः ४ सज्जनः ५ साधुः ६ ।
इत्यमरः । २ । ७ ।
३ ॥ * ॥ अथाधुनिककुलीनलक्षणम् ।
कुलं
उत्कर्षविशेषवंशः । इति सङ्केतम् ।
अथवा रूढ्य-
र्थम् ।
तस्यापत्यमित्यर्थेकुलशब्दादीनप्रत्ययेन
कुलीन
इति पदसिद्धिरिति केचित् । अर्थात्
कुलीन-
शब्देन
उत्कर्षविशेषवंशजातकव्यक्तिरिति ।
तथा
च लक्षणम् ।
उत्कर्षविशेषधर्म्मावच्छिन्नवंशजात-
कत्वे सति तद्धर्म्मवत्त्वं कुलीनत्वमिति ।
उत्कर्ष-
विशेषस्तु नवधा गुणाः । ते च यथा ।
“आचारो विनयो विद्या प्रतिष्ठा
तीर्थदर्शनम् ।
निष्ठाऽऽष्टत्तिस्तपो दानं नवधा
कुलक्षणम्” ॥
अत एव
उत्कर्षविशेषात्मकनवधागुणविशिष्टत्वं
कुलीनत्वम् । एतेन इदानों
साधारणसामान्य-

(कुलाल + स्त्रियां ङीष् ।) कुलालभार्य्या ॥

**कुलाहः**, पुं, (कुलं पालककुलं स्वकुलं वा आहन्ति । आ + हन् + डः ।) ईषत्पीतवर्णः कृष्णजानुर्घोटकः । इति हेमचन्द्रः ॥

**कुलाहकः** पुं, (कुलाह + संज्ञायां कन् ।) कृकलासः । इति शब्दमाला ॥ वृक्षविशेषः । राङ्गा कुले खाडा इति भाषा । अस्य गुणः । आमवात-वात-रक्तरोगनाशित्वम् । इति राजवल्लभः ॥

**कुलाहलः**, पुं, (कुलं आहलति स्पृशति स्पर्द्धते वा । आ + हल विलेखने + अच् ।) क्षुद्रवृक्षविशेषः । कोकसीमा इति भाषा । तत्पर्य्यायः । अलम्बुषः २ गोच्छालः ३ भूकदम्बः ४ । इति रत्नमाला ॥

**कुलिः**, पुं, (कुल् + इन् किच्च ।) हस्तः । इति त्रिकाण्डशेषः ॥

**कुलिः**, स्त्री, (कुल् इन् किच्च ।) कण्टकारी । इति शब्दरत्नावली ॥

**कुलिकः**, त्रि, (कुलं अधीनतया प्रशस्ततया वा अस्त्यस्य । इति ठन् ।) शिल्पिकुलप्रधानः । इत्यमरः । २ । १० । ५ ॥ कुलसत्तमः इति मेदिनी ॥

**कुलिकः**, पुं, अष्टमहानागान्तर्गतनागविशेषः । (यथा, भागवते । ५ । २४ । ३१ । "ततोऽधस्तात् पाताले नागलोकपतयो वासुकिप्रमुखाः शङ्खकुलिकमहाशङ्खश्वेतधनञ्जयधृतराष्ट्रशङ्खचूडकम्बलाश्वतरदेवदत्तादयो महाभोगिनो महामर्षा निवसन्ति" ॥ अम्य रूपमप्युक्तं हेमाद्रौ यथा । "कुलिकोऽर्द्धचन्द्रमौलिर्ज्वालाधूमसमप्रभः" ॥) रलकमकरगर्गरकचन्द्रकमहामीनराजीवप्रभृतयः सामुद्राः" ॥ कौ भूमौ लिशति अल्पीभवति कुंभूमिं लिशति गच्छति ह्रस्वतया प्राप्नोति वा ।) अस्थिसंहारवृक्षः । इति रत्नमाला ॥

**कुलिशनायकः**, पुं, (कुलिशवत् नायको यस्मिन् ।) शृङ्गारबन्धविशेषः । तस्य लक्षणम् । "स्त्रीपादद्वयमाकृष्य विमुमुक्षितलिङ्गकः । योनिञ्च पीडयेत् कामी बन्धः कुलिशनायकः" ॥ इति रतिमञ्जरी ॥

**कुलिशाङ्कुशा**, स्त्री, (कुलिशेनाङ्कुशेन चैव निमृह्यते मनो यया । यद्वा कुलिशवत् दृढमङ्कुशं यस्याः ।) बौद्धानां विद्यादेवीतिशेषः । इति हेमचन्द्रः ॥

**कुलिशासनः**, पुं, (कुलिशं वज्रं तद्वत् दृढमासनमस्व ।) शाक्यमुनिः । इति त्रिकाण्डशेषः ॥

**कुली**, स्त्री, (कुलि + कृदिकारान्तत्वात् वा ङीष् ।) कण्टकारी । इत्यमरः । २ । ४ । ९४ ॥ पत्नीज्येष्ठभगिनी । इति हेमचन्द्रः ॥ वृहती । इति राजनिर्घण्टः ॥

जनानां यदि नवधा गुणा वर्त्तन्ते तदा तेऽपि कुलीनाः स्युस्तन्न । अनवच्छिन्नपर्य्यायत्वं कुलीनत्वम् । प्रमाणं यथा, -- "सपर्य्यायं समासाद्य दानग्रहणमुत्तमम् । कन्याऽभावे कुशत्यागः प्रतिज्ञा वा परस्परम्" ॥ तथा च । "कुलीनस्य सुतां लब्ध्वा कुलीनाय सुतां ददौ । पर्य्यायक्रमतश्चैव स एव कुलदीपकः" ॥ तथा च । "आदानञ्च प्रदानञ्च कुशत्यागस्तथैव च । प्रतिज्ञाघटकाग्रे च कुलकर्म्म चतुर्व्विधम्" ॥ इति कुलदीपिका ॥ * ॥ अथ वल्लालभूपालकृताः पञ्चगोत्रजराढीयब्राह्मणस्य ग्रामविशिष्टस्य मुख्यगौणभेदेन द्वाविंशतिकुलीनाः यथा । शाण्डिल्यगोत्रे भट्टनारायणवंशज आदिवराहवन्द्यः स मुख्यः । रामगडगडः निपकेशरकोणी गुँयी कुलभी वट्टु दिर्घाटिः वैकुण्ठपारियालः एते पञ्च गौणाः ॥ काश्यपगोत्रे दक्षवंशजः सुलोचनचट्टः स मुख्यः । जगहडः धीरगुडः काकपीतमण्डी एते त्रयो गौणाः ॥ भरद्वाजगोत्रे श्रीहर्षवंशजः धुरन्धर मुखयटी स च सुख्यः । विनायकदिण्डीसाँयी गन्धर्व्वरायी एतौ द्वौ गौणौ ॥ सावर्णगोत्रे वेदगर्भवंशजःवीरव्रतगाङ्गली सुधीरकुन्दः एतौ द्वौ मुख्यौ ।

| | | |
|---|---|---|
| वृक्षविशेषः । इति मेदिनी ॥ केलेकडा इति भाषा ॥<br>लिकषेला, स्त्री, रव्यादिवारेषु शुभकर्म्मषु निषिद्ध- | | वीरसूदनघण्टेश्वरः एष गौणः ॥ वात्स्यगोत्रे छान्दडवंशजः सुरभिघोषवालः कविकाञ्जिलालः रविपूतितण्डः एते मुख्याः । भानुचौटखण्डो पनिकालुमहिन्त्या वनमालिपिप्पली एते गौणाः ॥<br>अधुना एषां मध्ये मुख्या अष्टौ कुलीना गौणा-श्चौर्द्दशश्रोत्रियाः । अन्येऽपि पञ्चगोत्राज्जाताः सप्तत्रिंशच्छ्रोत्रियाः सन्ति ॥ ततो लक्षणसेनेन मुख्याष्टकुलीनो न विंशतिपुत्त्राणां समीकरणं कृतम् । तत एतेषां नानादोषदर्शनात् देवीवरेण |

फुलिया खडदहवल्लवीसर्व्वानन्दी
इत्याद्याः षट्-
त्रिंशन्मेलाः कृताः । ततो भागयूथथाक
इति
तिस्रः संज्ञा जाताः कुलाचार्य्यग्रन्थात्
ज्ञेयाः ॥ * ॥
अथ वारेन्द्रब्राह्मणकुलीनाः ।
“आदौ मैत्रस्ततो भीमो रुद्रः
संजामिनिस्तथा ।
लाहिडिर्भादुडिः साधुर्भादडाः
पङ्क्तिपूरकाः” ॥
एषां नानादोषदर्शनात् कुलाचार्य्येण अष्टौ
पटी
इति संज्ञा कृता । तद्यथा । निराविला १
रोहिला
२ भूष्णा ३ आलेखानी ४ कुतलखानी ५
वेणी ६
जोनाली ७ भवानीपुर ८ । एतेषां
कुलाघातात्
काप इति संज्ञा जाता ॥ * ॥
अथ वैद्यस्यादिकुलीनाः ।
धन्वन्तरिगोत्रे विनायकसेनः ।
मौद्गल्यगीत्रे चायु-
दासः । काश्यपे कायुगुप्तः । वल्लालेनैषां
कुलं
महामध्यमकनिष्ठकुलभेदेन त्रिधा कृतम् ।
तत्र
महाकुलीनाः पञ्च । यथा ।
कृष्णसेनखानः १ हरि-
हरसेनखानः २ चण्डीवरदासः ३
गणपतिदासः
४ दुर्जयदासः ५ । अधुनैषां कुलस्य
ह्रासवृद्धि-
भङ्गा न सन्ति ॥ * ॥
अथ दक्षिणराढीयकायस्थकुलीनाः ।
तत्रादिशूरराजेन
कान्यकुब्जदेशादानीतैर्ब्राह्मण-
पञ्चकैः सह घोषवसुमित्रदत्तगुहाः
पञ्चागता
आदिकुलीनाः यथा । सौकालीनगोत्रे
मकरन्द-

तृतीयपुत्त्रयोः कुलस्य वाडिमुख्य इति संज्ञा
चतुर्थपञ्चमषष्ठपुत्त्राणां कुलस्य वाडिकनिष्ठ इति
संज्ञा सप्तमाष्टमनवमपुत्त्राणां कुलस्य वाडिम-
ध्यांश इति संज्ञा दशमैकादशद्वादशपुत्त्राणां
कुलस्य वाडितेओज इति संज्ञा भवति ॥ कनिष्ठ-
नामकुलीनस्य द्वितीयपुत्त्रस्य कुलस्य तेओज इति
संज्ञा भवति । मुख्यकुलीनस्य तृतीयपुत्त्रस्य
द्वितीयपुत्त्रस्य कुलस्य तेओज इति संज्ञा ॥ मध्यां-
शद्वितीयपुत्त्र इति संज्ञं कुलं मुख्यकनिष्ठछभाया-
मध्यश्रेष्ठमध्यांश इति कुलपञ्चकात् भवति ॥ * ॥
मुख्यकुलन्तु त्रिविधं यथा । प्रकृतम् १ सहजम् २
कोमलम् ३ । आदौ षट्समाजे षट् प्रकृतामुख्या
अभूवन् । ततस्तेषां द्वितीयतृतीयपुत्त्रयोः कुलस्य
वृद्ध्या क्रमेण सहजकोमल इति संज्ञा जाता ।
प्रकृतमुख्यकुले दानग्रहणाभ्यां सहज इति संज्ञा
कोमलमुख्यकुले दानग्रहणाभ्यां कोमल इति
संज्ञा भवति । सहजः सहजेन कोमलः कोमले-
नापि कुलं कृत्वा तत्तद्भावापन्नौ भवतः ॥ पितृकु-
लानुसारेण ज्येष्ठपुत्त्राणां कुलस्य जन्ममुख्यजन्म-
कनिष्ठादिसंज्ञा ॥ * ॥ प्रकृवमुख्यकुलस्य ह्रास-
वृद्धी न भवतः । सहजमुख्यकुलस्य ह्रासवृद्धी
भवतः । कोमलमुख्यकुलस्यापि ह्रासवृद्धी न
भवतः । कनिष्ठकुलस्य मुख्यत्वं छभायाकुलस्य
कनिष्ठत्वं भवति । मध्यांशकुलस्य स्थिरतरत्वम् ।
कनिष्ठद्वितीयपुत्त्रः वाडितेओज इति संज्ञां
प्राप्नोति । मुख्यतृतीयपुत्त्रस्य द्वितीयपुत्त्रः तेओज
इति संज्ञामपि प्राप्तुमर्हति । छभायाद्वितीयपुत्त्र-
मध्यांशद्वितीयपुत्त्रयोः कुले ह्रासवृद्धी न स्तः ।
सर्व्वे कुलीनाः कुलनाशात् वंशजभावापन्ना
भवन्ति ॥ * ॥ आदौ यदि पितृपर्य्यायाय अथवा
मौलिकाय कन्यां दद्यात् तद्दानं प्रामाणिकसंज्ञं
भवति । पश्चात् कुलकर्म्मकर्त्तव्यम् । तद्यथा ।
मुख्यस्य कन्यायाः प्रदाने तस्याः छेइ संज्ञा षष्ठ-
कन्यावधि गरछेइ इति संज्ञा भवति । अन्य-
कुलानां ज्येष्ठकन्यायाः प्रदाने तस्या आकृतिरिति
संज्ञा तदनन्तरं यावत्कन्यानां प्रदाने तासां क्रमेण
प्रतिसारणी जघन्या इति संज्ञाद्वयं भवति ॥
आत्मसमकुलीनाय आकृतिनामकन्यादाने कुलस्य
श्रेष्ठत्वम् । अनुजकन्याग्रहणे तु कुलह्रासो भवति ।
मुख्यस्य गरछेइ इति नाम्नीं कन्यां अन्यकुलीनस्य
प्रतिसारणीञ्च कन्यां मौलिको वंशजश्च ग्रहीतु-

कन्दर्पी च सदानन्दी षडेते
कुलकण्टकाः” ॥
इति कुलाचार्य्यकारिका ॥ * ॥
अथ मुख्यकुलीनस्य कार्य्यम् । स च
आगछेइ
अर्थादग्रिमां कन्यां आत्मतुल्याय
द्वितीयां कनि-
ष्ठकुलीनायतृतीयां
छभायानामकुलयुक्ताय चतुर्थीं
मध्यश्रेष्ठनामकुलविशिष्टाय अथवा
मुख्यतृतीय-
पुत्त्रमध्यांशकुलीनाय पञ्चमीं
तेओजनामकुल
युक्ताय दद्यात् । तनदन्तरजातानां
गरछेइ इति
संज्ञा ताः
मौलिकमध्यांशद्वितीयपुत्त्रमुख्यकुली
नेभ्यो दातुमर्हति । स एवादौ
मुख्यकुलीनस्या-
ग्रिमां कन्यां ततः कनिष्ठकुलीनस्य
कन्यां ततो
मध्यांश इति नामकुलयुक्तस्य कन्यां
ततो जन्म-
तेओज इतिनामकुलविशिष्टस्य कन्यां
गृह्णी-
यात् ॥ * ॥ अथ कनिष्ठकुलीनस्य
कार्य्यम् ।
स प्रथमां कन्यां आत्मतुल्यकुलीनाय
द्वितीयां
तेओज इति नामकुलयुक्ताय दद्यात् ।
मुख्यतृती-
यपुत्त्राय मध्यांशनामकुलयुक्ताय अथवा
मुख्य-
द्वितीयपुत्त्राय कन्यां दातुमर्हति ।
मुख्यकुलीनस्य
द्वितीयां कन्यां अथवा कनिष्ठकुलीनस्य
प्रथमां
गृह्णीयात् । ततो मुख्यकुलीनस्य
तृतीयपुत्त्रस्य
मध्यांशनामकुलयुक्तस्य कन्यां
गृह्णीयात् ॥ * ॥

घोषः १ । गौतमे दशरथवसुः २ ।
विश्वामित्रे
कालिदासमित्रः ३ । काश्यपगोत्रे
दशरथगुहः
स्वाहङ्कारादवमानितो वङ्गे गतः ४ ।
भरद्वाज-
गोत्रे पुरुषोत्तमदत्तः विनयहीनतो
निष्कुलः ५ ।
वङ्गजकुलाचार्य्यग्रन्थे स एव
मौद्गल्यगोत्रः ॥ * ॥
अथ वल्लालसेनकृतसमाजादयः ।

तत्राद्यस्य षष्ठ
पुरुषयोर्निशापतिप्रभाकरघोष-

योर्वासस्थाने क्रमेण वालीआकनाख्यौ
ग्रामौ ।
द्वितीयस्य पञ्चमपुरुषयोः
शुक्तिमुक्तिवस्वोर्वासस्थाने
क्रमेण वागाण्डिमाहिनगराख्यौग्रामौ ।
तृतीय-
स्याष्टमपुरुषयोः धूँइ गुँइ
मित्रयोर्वासस्थाने
क्रमेण वडिशाटेकानामग्रामौ ॥
अपरेऽष्टादश-
समाजास्तत्स्थानां कुलाभावात् न
लिखिताः ॥ * ॥
तेषां कुलन्तु नवविधम् । मुख्य १ ।
कनिष्ठ २
छभाया ३ मध्यांश ४ तेओज ५ एतानि
प्रधा-
नानि । कनिष्ठद्वितीयपुत्र ६
छभायाद्वितीयपुत्र
७ मध्यांशद्वितीयपुत्र ८
तेओजद्वितीयपुत्र इति
च ९ । नवरङ्गानुरोधात्
छभायाज्येष्ठपुत्रस्य
मध्यश्रेष्ठ इति संज्ञा जाता ॥ * ॥
अथ कुलानां विवरणम् ।

मुख्यकुलीनस्य प्रथमपुत्रः
पितृतुल्यः द्वितीयः

कनिष्ठनामकुलविशिष्टः तृतीयो
मध्यांशनामकुल-
मर्हति । उत्तममध्यमाधमकर्म्मभिः शौर्य्यसमा-
वेशनिन्दा इति त्रयं कुलस्यांशकर्म्म ॥ * ॥ पूर्ब्बं
विपर्य्याये विवाहो जातः । पुरन्दरवसुनैषां त्रयो-
दशपर्य्यायावधिश्रेणीपर्य्यायबन्धभ्रमकृतकुलोद्धरणे
कृते । यथा ।
“विपर्य्याये कुलं नास्ति न कुलं रण्डपिण्डयोः” ॥ *
॥
अथ मुख्येतरकुलीनानां पाणिदोषाः ।
“देवी गङ्गा तथा गौरी भैरवी भास्करी तथा ।
वलायी चण्डिदासी च सप्तैते कुलकण्टकाः” ॥
अपि च ।
“श्रीनाथी श्रीकरी विष्णुदासी हृदय एव च ।
अथ छभाया कुलीनस्य कार्य्यम् । स
मध्यांशनाम-
कुलविशिष्टाय प्रथमां कन्यां मध्यांश
इतिकुल-
युक्तानुजाय अर्थात्
वाडितेओजनामकुलविशि-
ष्टाय द्वितीयां दद्यात् । मुख्यकुलीनस्य
तृतीय-
कन्यां अथवा कनिष्ठकुलीनस्य प्रथमां
कन्यां
गृह्णीयात् ॥ * ॥ अथ
मुख्यतृतीयपुत्रस्य मध्यां-
शनामकुलीनस्य कार्य्यम् । स
प्रथमकन्यां जन्मते-
ओजनामकुलविशिष्टाय द्वितीयां
मध्यांशकुल-
विशिष्टस्य द्वितीयपुत्राय दद्यात् ।
कनिष्ठस्य
प्रथमां कन्यां ततस्तेओजकुलयुक्तस्य
प्रथमां कन्यां
ततस्तेओजानुजकुलीनस्य प्रथमां
कन्यां गृह्णीयात्
मुख्यस्य तृतीयकन्याग्रहणं तस्य महत्
कर्म्म ॥ * ॥
अथ जन्मतेओजनामकुलीनस्य
कार्य्यम् । स
प्रथमां कन्यां मुख्यकुलीनस्य
चतुर्थपुत्राय अथवा
मध्यांशनामकुलविशिष्टस्य
द्वितीयपुत्राय द्वितीयां
तेओजनामकुलविशिष्टस्य
द्वितीयपुत्राय दद्यात् ।
मुख्यकुलीनस्य पञ्चमकन्यां अथवा
मध्यांशनामकु-
लीनस्य प्रथमकन्यां गृह्णीयात् ॥ * ॥
अथ कनिष्ठ-
कुलीनस्य द्वितीयपुत्रस्य कार्य्यम् । स
आत्म-
तुल्याय अथवा
तेओजनामकुलविशिष्टद्वितीय-
पुत्राय प्रथमां कन्यां दद्यात् ।
मुख्यचतुर्थपुत्र-

| युक्तः चतुर्थः तेओजनामकुलान्वितः पञ्चमादियाव-<br>त्पुत्राः मध्यांशद्वितीयपुत्रनामकुलयुक्ता भवन्ति ॥<br>कनिष्ठकुलीनस्य ज्येष्ठपुत्रः छभायानामकुलयुक्तः<br>तस्य ज्येष्ठपुत्रः मध्यश्रेष्ठनामकुलयुक्तः तस्य ज्येष्ठ-<br>पुत्रः मध्यांशनामकुलविशिष्टः स एव अपरम-<br>ध्यांशवारभायामध्यांशइति संज्ञाद्वययुक्तः ॥ * ॥<br>एषां कर्म्मणा वृद्धिर्यथा । मुख्यकुलीनस्य द्वितीय- | | जन्मतेओजनामकुलयुक्तस्य प्रथमां अथवा कनि-<br>ष्ठनामकुलीनस्य द्वितीयां कन्यां गृह्णीयात् ॥ * ॥<br>अथ छभायानामकुलीनस्य द्वितीयपुत्रस्य कार्य्यम् ।<br>स आत्मतुल्याय अथवा तेओजनामकुलविशिष्ट-<br>द्वितीयपुत्राय प्रथमां कन्यां दद्यात् । तेओज-<br>नामकुलविशिष्टस्य प्रथमां कन्यां अथवा छभाया-<br>नामकुलयुक्तस्य द्वितीयां गृह्णीयात् ॥ * ॥ अथ<br>मध्यांशनामकुलीनस्य द्वितीयपुंत्रस्य कार्य्यम् । स<br>आत्मतुल्याय अथवा तेओजनामकुलविशिष्टस्य<br>द्वितीयपुत्राय प्रथमां कन्यां दद्यात् । तेओज- |
|---|---|---|

नामकुलविशिष्टस्य प्रथमां अथवा अन्यकुलीनानां
मध्यांशनामकुलविशिष्टस्य वा द्वितीयां कन्यां
गृह्णीयात् ॥ * ॥ अथ तेओजनामकुलीनस्य द्वि-
तीयपुत्त्रस्य कार्य्यम् । स आत्मतुल्याय अथवा
वंशजाय प्रथमां कन्यां दद्यात् । मध्यांशनाम-
कुलविशिष्टस्य द्वितीयपुत्त्रस्य प्रथमां कन्यां
अथवा
तेओजनामकुलविशिष्टस्य द्वितीयां गृह्णीयात् ॥ *
॥
अथ मध्यश्रेष्ठनामकुलीनस्य कार्य्यम् । स मध्य-
श्रेष्ठपुत्त्रवारभायामध्यांशनामकुलीनाय प्रथमां
मध्यांशकुलविशिष्टस्य द्वितीयपुत्त्राय तेओजनाम-
कुलीनाय द्वितीयां कन्यां दद्यात् । मुख्यकुलीनस्य
चतुर्थीं कन्यां अथवा कनिष्ठकुलीनस्य प्रथमां
कन्यां गृह्णीयात् । ततः तेओजनामकुलविशिष्टस्य
प्रथमां कन्यां गृह्णीयात् । ततः तेओजानुज-
कुलीनस्य अग्रिमां कन्यां गृह्णीयात् ॥ * ॥ अथ
मध्यश्रेष्ठपुत्त्रवारभायामध्यांशनामकुलीनस्य का-
र्य्यम् । स तेओजनामकुलयुक्ताय प्रथमां कन्यां
दद्यात् । कनिष्ठकुलविशिष्टस्य अथवा छभाया-
नामकुलयुक्तस्य किं बा मध्यश्रेष्ठकुलीनस्य प्रथमां
कन्यां गृह्णीयात् ॥ * ॥ अथ चतुस्त्रिंशदधिक-
सप्तदशशतशकाब्दे मत्पित्रा तावत्कुलीनकुला-
चार्य्यमतेन मुख्यकुलीनस्य द्वितीयतृतीययोः क-
न्ययोः क्रमेण ग्रहणेन तदलाभे शौर्य्यकुले दानेन
समानकुले ग्रहणेन च कनिष्ठछभायानामकुलयोः
पुरुषानुक्रमेण स्थिरतरत्वं निर्णीतम् । तद्यथा, --
"कनिष्ठकुलवेश्मनि क्वचन केऽपि केऽपीच्छया
परेऽपि पुरुषत्रयादगमनेव दोच्छेयिकाम् ।
निषेधमिह नेक्षते कमपि तत्र षड्भ्रातृजः
सुतः पितृपदं कथं जननतो हि न प्राप्स्यति ॥
शाके पद्यपदत्रिसप्तवसुधागण्येवरेण्ये तथा
पर्य्यायि परिपूरिते हि विषमे धन्ये त्रयोविंशके ।
गोपीमोहनदेववंशतिलकेनापूर्ब्बकं श्रीमता
निर्णीतं यदपीह तच्च घटकैः सर्व्वैः कुलीनैर्म्मतम्
॥
कनिष्ठषड्भ्रातृकुलस्य तद्वत्
स्वच्छेयिकायामिदमेव मूलम् ।
आदानतः पित्र्यपदस्य लाभो
ज्येष्ठत्वभावः पुरुषक्रमेण ॥
छेयिकायामशक्तस्य दानञ्चेत् प्रबलं भवेत् ।
सर्व्वादौ दशरथवसुसुतौ कृष्णवसुपरमवसुकौ
कृष्णवसुदक्षिणराढे ख्यातस्तस्य सुतः
भववसुः
तत्सुतः हंसवसुः तत्सुताः
शुक्तिमुक्त्यलङ्कारवसुकाः ।
अलङ्कारवसुः राढात् वङ्गे गतः तस्य वङ्गे
कुल-
हानिर्जाता तस्य सुतः मधुवसुः तत्सुतः
गुणाकर-
वसुः तत्सुता अनन्तादयः । दशरथसुतः
परम-
वसुस्तत्सुतौ लक्ष्मणवसुपूषणवसुकौ वङ्गे
ख्यातौ ।
सौकालीनगोत्रे मकरन्दघोषसुतौ
भवनाथघोष-
सुभाषितघोषौ भवनाथघोषो दक्षिणराढे
ख्यातः
सुभाषितघोषो वङ्गे ख्यातः तस्य
सुतश्चतुर्भुज-
घोषः ॥ विश्वामित्रगोत्रे सर्व्वादौ कालिदास-
मित्रसुतौ अश्वपतिमित्रश्रीधरमित्रौ श्रीधर-
मित्रो दक्षिणराढे ख्यातः अश्वपतिमित्रो वङ्गे
ख्यातस्तस्य सुतस्तारापतिमित्रः ॥ इति
वङ्गकुला-
चार्य्यग्रन्थः कुलदीपिका ॥

**कुलीनकः**, पुं, (कुलीन + संज्ञायां कन् ।) वनमुद्गः ।

इति हेमचन्द्रः ॥

**कुलीनसं**, क्ली, (कौ लीनं भूलग्नं द्रव्यादिकं स्यतीति ।

सो + कः ।) जलम् । इति हेमचन्द्रः ॥

**कुलीरः**, पुं, (कुल् संस्त्याने + ईरन् किच्च ।) क-

र्कटः । इत्यमरः । १ । १० । २१ ॥ काँक्डा
इति
भाषा । ("अथ कुलीरप्रभृतयो
जलजन्तवस्तमभ्यु-
पेत्य प्रोचुः" । इति हितोपदेशः ॥)
कर्कटराशिः
इति ज्योतिषम् ॥

**कुलीरशृङ्गी**, स्त्री, (कुलीरावयव इव शृङ्गं यस्य ।
कुलीर-
र्व्विवेदे २ । ३० । ३ ।
"तत्र मे गच्छताद्धवं शल्य इव कुल्मलं
यथा" ॥)

**कुल्माषं**, क्ली, (कोलतीति । कुल् + क्विप । ततः कुलं

भक्तमिश्रितजलं मस्यतीति । मसीर्य्य
परिणामे +
अण् पृषोदरात् षत्वम् ।) काञ्जिकम् ।
इत्यमरः ।
२ । ९ । ३९ ॥

**कुल्माषः**, पुं, (कोलति इति । कुल् + क्विप् । कुल्

अर्द्धस्विन्नो माषोऽस्मिन् ।) यावकः ।
इत्यमरः ।
२ । ९ । १८ ॥
(यथा, सुश्रुते सूत्रस्थाने ४६ अध्याये
॥
"कुल्माषा वातला रूक्षा गुरवो
भिन्नवर्च्चसः" ॥)
वोरवधान्यम् । कुलत्थ इत्यन्ये ।
माषाकृतिपत्रः ।
काश्मीरेषु तुलसी इति ख्यातः इति
सुभूतिः ।
इति भरतः ॥ राजमाष इत्यन्ये । इति
नयना-
नन्दः ॥ माषादिमिश्रमर्द्धस्विन्नभक्तम् ।
खिच्चडी
इति ख्यातश्च । इति
लिङ्गादिसंग्रहटीकायां
भरतः ॥ पाचितमाषादिरिति भीमः ।
इति सार-
सुन्दरी ॥ अर्द्धस्विन्नगोधूमचणकादयः
। (यथा,
शब्दार्थचिन्तामणौ ।
"अर्द्धस्विन्नास्तु गोधूमा अन्येऽपि
चणकादयः ।
कुल्माषा इति कथ्यन्ते शब्दशास्त्रेषु
पण्डितैः" ॥)
अस्य गुणाः । गुरुत्वम् । रूक्षत्वम् ।
वातकारि-

पर्य्यायस्य समानस्य ग्रहणादपि तिष्ठति ॥
शौर्य्यं निन्दा समावेशस्त्रिविधोऽंशः कुलस्य वै ।
तस्य ध्वंसो न हि भवेद्यत्नतो रक्षितः स हि ॥
अत्र यद्यन्यथाभावो भवेदपि यथाविधि ।
क्रमागतेषु वर्गेषु तदा हानिर्भविष्यति ॥
सर्व्वैः कुलज्ञैश्च कुलीनवर्गै-
र्गोष्ठीपतीनां पुरतः सहर्षैः ।
इदं हि पत्रं लिखितं प्रयत्नात्
निर्णीत एष प्रचलिष्यतीति" ॥ * ॥
अथ वङ्गजकुलीनाः ।
"वसुवंशे च मुख्यौ द्वौ नाम्ना लक्ष्मणपूषणौ ।
घोषेषु च समख्यितश्चतुर्भुजमहाकृती ॥
दशरथो गुहश्चैव मित्रस्तारापतिस्तथा" ॥
एतेषामादिपरुषनिर्णयो यथा । गौतमगोत्रे

शृङ्ग + गौरादित्वात् ङीष् ।) कर्कटशृङ्गीवृक्षः । इति रत्नमाला ॥

**कुलीरात्,** [द्] पुं, (कुलीरं अत्तीति । अद् + क्विप् । उत्पत्तिमात्रेणैवात्मप्रसूतिभक्षणादस्य तथात्वम् ।) कर्कटशिशुः । तत्पर्य्यायः । स्येगविः २ । इति त्रिकाण्डशेषः ॥

**कुलीशः**, पुं क्ली, (कुलिश + पृषोदरात् दीर्घः ।) कुलिशम् । इत्यमरटीकासारसुन्दरी ॥

**कुलुकं**, क्ली, (कुल् + बाहुलकात् उलच् किच्च निपातनात् लस्य कः ।) जिह्वामलम् । इति हेम-चन्द्रः ॥

**कुलुक्कगुञ्जा**, स्त्री, (कौ भूमौ लुक्का गुप्ता गुञ्जा इव ।) उल्काग्निः । इति हारावली ॥

**कुलेश्वरः**, पुं, (कुलस्य जगत्समूहस्य कुलचक्रस्य वा ईश्वरः ।) शिवः । (कुलस्य वंशस्य ईश्वरः नेता कर्त्ता वा ।) कुलपतिः । इति शब्दमाला ॥

**कुलोत्कटः**, पुं, (कुले कुलेन वा उत्कटः उद्रिक्त उग्रो वा ।) कुलीनाश्वः । इति शब्दचन्द्रिका ॥ उत्कट-कुलोद्भवे त्रि ॥

**कुल्फः**, पुं क्ली, (कल संख्याने "कलिगलिभ्यां फग-स्योच्च" । उणां ५ । २६ । इति फक् अस्य उच्च ।) रोगः । गुल्फे पुं इत्युणादिकोषः ॥ (यथा, ऋग्वेदे ७ । ५० । २ । "यद्विजामन्परुषि वन्दनं भुवदष्ठी-वन्तौ परिकुल्फौ च देहत्" ॥)

**कुल्मलं**, क्ली, (कुष् निष्कर्षे "कुषेर्लश्चं" । उणां ४ । १८७ । इति क्मलन् लश्चान्तादेशः ।) पापम् । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ (यथा, अथ-

त्वम् । मलभेदित्वञ्च । इति भावप्रकाशः ॥ रोग-विशेषः । इति शब्दरत्नावली ॥ वनकुलत्थः । इति रत्नमाला ॥

**कुल्माषाभिषुतं**, क्ली, (कुल्माषैर्यवादिभिरर्द्धस्विन्नै-रभिषूयते स्म इति । अभि + षु + क्तः ।) काञ्जि-कम् । इत्यमरटीकायां स्वामी ॥

**कुल्मासं**, क्ली, (कोलतीति कुल् भक्तमिश्रितजलम् । तत् मस्यति परिणमयतीति अण् ।) कुल्माषम । इत्यमरटीकायां भरतः ॥

**कुल्यं**, क्ली, (कुल् बन्धे + क्यप् ।) अस्थि । इत्यमरः । २ । ६ । ६८ ॥ अष्टद्रोणपरिमाणम् । सूर्पम् । आमिषम् । इति मेदिनी ॥

**कुल्यः**, त्रि, (कुलस्यापत्यम् । "अपूर्ब्बपदादन्यतरस्या-मिति" । ४ । १ । १४० । इति यत् । यद्वा कुले भवः कुलाय हितः कुले साधुः वा दिगादित्वात् तत्र साधुरिवि वा यत् ।) कुलोद्भवः । कुलहितः । (यथा, भागवते ७ । ६ । १३ । "गृहान् मनोज्ञोरुपरिच्छदांश्च वृत्तीश्च कुल्याः पशुभृत्यवर्गान्" ॥) मान्ये पुं इति । मेदिनी ।

**कुल्या**, स्त्री, (कुले प्राणिगणे साधुः तत्र साधु-रिति यत् ।) क्षुद्रा कृत्रिमा नदी । इत्यमरः । १ । १० । ३४ ॥ (यथा, शाकुन्तले १ माङ्के । "कुल्याम्भोभिः पवनचपलैः शाखिनो धौतमूलाः" ॥) पयःप्रणाली । पयनाला इति भाषा । जीवन्ति-

|  |  |  |
| --- | --- | --- |
|  |  | कौषधिः । नदीमात्रम् । इति मेदिनी ॥ (यथा, महाभारते ३ पर्व्वणि । “सैन्धवारण्यमासाद्य कुल्यानां कुरु दर्शनम्” ॥) कुलस्त्री । इति हलायुधः ॥ स्थूलवार्त्ताकुः । इति रत्नमाला ॥ |

**कुवं**, क्ली, (कौ पृथिव्यां वलते मण्डलाकारपुष्पावय-
वेन संवृणोतीव । वल संवरणे अन्येभ्योऽपीति डः ।
यद्वा कुं भूमिं वाति । कु + वा + कः ।) उत्पलम् ।
जलजपुष्पमात्रम् । इति हेमचन्द्रः ॥

**कुवकालुका**, स्त्री, (कुवमिव कायते प्रकाशते ।
कुव + कै + कः । कुवका आलुका इव ।) घोली-
शाकम् । इति राजनिर्घण्टः ॥

**कुवङ्गं**, क्ली, (कुत्सितं वङ्गमिव गुणैः ।) सीसकम् ।
इति राजनिर्घण्टः ॥

**कुवचः**, त्रि, (कुत्सितं वचः यस्य ।) कुवादः । पर-
दोषकथनशीलः । इत्यमरः ॥

**कुवज्रकं**, क्ली, (कु ईषत् वज्रं हीरकमिव कायते ।
कै + कः ।) वैक्रान्तमणिः । इति राजनिर्घण्टः ॥

**कुवरः**, पुं, (कुत्सितं यथा स्यात् तथा व्रियते । वृ +
अप् । यद्वा कुत्सितं रसं वृणोति गृह्णाति । कु +
वृ + अच् ।) तुवरः । इत्यमरटीकायां रायमुकुटः ॥

**कुवलं**, क्ली, (कौ वलते । वल् + पचाद्यच् ।) उत्पलम् ।
मुक्ताफलम् । वदरीफलम् । इति मेदिनी ॥

**कुवलयं**, क्ली, (कोः पृथिव्या भूमेर्वा वलयमिव शोभा-
कारकत्वात् ।) उत्पलम् । इत्यमरः । ६ । १० । ३७ ॥
नीलोत्पलम् । इति राजनिर्घण्ठः ॥
(यथा, -- मेघदूते ४६ ।
"ज्योतिर्लेखा वलयिगलितं यस्य वर्हं भवानी ।

**कुवाहुलः**, पुं, (कुत्सितं वहतीति । कु + वह +
उलञ् ।) उष्ट्रः । इति शब्दचन्द्रिका ॥

**कुविन्दः**, पुं, (कुत्सितं भक्तादिम्रक्षितसूत्रादिकं कुत्सि-
तवृत्या वा जीविकां विन्दतीति ।) तन्त्रवायः ।
स तु शूद्रागर्भे विश्वकर्म्मौरसजातः । इति ब्रह्म-
वैवर्त्तपुराणम् ॥

**कुवृत्तिकृत्**, पुं, (कुवृत्तिं ईषदावरणरूपं चरणं
करोति कुत्सितैः कण्टकादिभिर्वा वृत्तिं आव-
रणं करोति आत्मानमिति शेषः । कुवृत्ति +
कृ + क्विप् तुगागमश्च ।) पूतिकः । इति शब्द-
चन्द्रिका ॥ काँटा करञ्ज इति भाषा ॥ (कुत्सि-
तां वृत्तिं व्यवहारं करोतीति असद्व्यवहार-
कारी ॥)

**कुवेणी**, स्त्री (कु ईषत् वेणन्ते गच्छन्ति मत्स्या
अस्याम् । कु + वेण् + इन् । ततः कृदिकारान्ता-
दिति वा ङीप् ।) मत्स्यधानी इत्यमरः । १ । १० ।
१६ ॥ खालै इति भाषा । कुत्सिता वेणी यस्याः ।
निन्दितवेणी नारी च ॥

**कुवेरः**, पुं, (कुत्सितं वेरं शरीरमस्य ।) तथा च वायु-
मार्कण्डेयपुराणे ।
"कुत्सायां क्विति शब्दोऽयं शरीरं वेरमुच्यते ।
कुवेरः कुशरीरत्वात् नाम्ना तेनैव सोऽङ्कितः" ॥
इत्यमरटीकायां भरतः ॥ देवताविशेषः । स तु
विश्रवोमुनेरिडविडाभार्य्यायां जातः । धनयक्षो-

इ कुंश्यते । कि कुंशयति कुंशति । इति दुर्गा-
दासः ॥

**कुश** य इर् श्लिषि । आलिङ्गन इति यावत् । इति
कविकल्पद्रुमः ॥ (दिवां-परं-सकं-सेट् ।) य कुश्यति
बाला कान्तम् । इर् अकुशत् अकोशीत् ।
अस्मात् पूषादित्वान्नित्यं ङ इत्यन्ये । इति दुर्गा-
दासः ॥

**कुशं**, क्ली पुं, (कु पापं श्यति नाशयति । कु + शो
+ डः । यद्वा कौ भूमौ शेते राजते शोभते
इत्यर्थः ।) स्वनामख्याततृणम् । तत्पर्य्यायः । कुथः
२ दर्भः ३ पवित्रम् ४ । इत्यमरः । २ । ४ । १६६ ॥
याज्ञिकः ५ ह्रस्वगर्भः ६ वर्हिः ७ कुतुपः ८ । इति
शब्दरत्नावली ॥ अपि च ।
"कुशो दर्भस्तथा वर्हिः सूच्यग्रो यत्र भूषणः ।
ततोऽन्यो दीर्घपत्रः स्यात् क्षुरपत्रस्तथैव च" ॥
तस्योत्पत्तिर्यथा, --
"वर्हिष्मती नाम पुरी सर्व्वसम्पत्समन्विता ।
न्यपतन् यत्र रोमाणि यज्ञस्याङ्गं विधुन्वतः ॥
कुशकाशास्त एवासन् शश्वद्धरितवर्च्चसः ।
ऋषयो यैः पराभाव्य यज्ञघ्नान् यज्ञमीजिरे" ॥
इति श्रीभागवतम् ॥ अस्य गुणाः ।
"दर्भद्वयं त्रिदोषघ्नं मधुरं तुवरं हिमम् ।
मूत्रकृच्छ्राश्मरीतृष्णावस्तिरुक्प्रदरास्रजित्" ॥
इति भावप्रकाशः ॥ * ॥ तस्य धारणविधिस्तत्
प्रतिनिधिश्च यथा, --
"पूजाकाले सर्व्वदैव कुशहस्तो भवेच्छुचिः ।
तर्ज्जन्या रजतं धार्य्यं स्वर्णं धार्य्यमनामया ॥
कुशकार्य्यकरं यस्मान्न तु वन्याः कुशाः कुशाः ।
कुशेन रहिता पूजा विफला कथिता मया ॥
नान्यस्य रजतं स्वर्णं धार्य्यं हि निजमङ्गले" ॥
इति वरदातन्त्रे १ पटलः ॥ * ॥
सधवायास्तत्स्पर्शनिषेधो यथा, --
"न स्पृशेत्तिलदर्भांश्च सधवा तु कथञ्चन" ॥
इति हलायुधकृतब्राह्मणसर्व्वस्वम् ॥ अन्यत् दर्भ-
शब्दे द्रष्टव्यम् ॥

**कुशं**, क्ली, (कौ पृथिव्यां भूमौ शेते । भूलग्नत्वात्
तथात्वम् ।) जलम् । इति मेदिनी ॥

**कुशः**, पुं, (कु पापं श्यति नाशयति विहितराजधर्म्मा-

पुत्रप्रेम्ना कुवलयदलप्रापि कर्णे
करोति" ॥)

**कुवलयापीडः**, पुं, (कुवलयं उत्पलं आ सम्यक् पीड-
यति । कुवलयं सर्व्वं भूवलयं आपीडयति वा आ
+ पीड् + अच् ।) कंसस्य हस्तिरूपो दैत्य-
विशेषः । इति श्रीभागवतम् ॥ (यथा, हरिवंशे
१०५ । २६-२७ ।
"शकुनिं केशिनञ्चैव यमलार्ज्जुनकावपि ।
नागं कुवलयापीडं चानूरं मुष्टिकं तथा ॥
कंसञ्च बलिनां श्रेष्ठं सगणं देवकीसुतः ।
निहत्य गोपवेशेन क्रीडयामास केशवः" ॥
कुवलयं नीलोत्पलं आपीडः भूषणं यस्य इति
व्युत्पत्या नीलोत्पलालङ्कृतो जनः ॥)

**कुवलयिनी**, स्त्री, (कुवलयानां सङ्घः ततः खलादि-
त्वात् इनिः । यद्वा कुवलयानि सन्त्यस्यां इति
इनिः ङीष् ।) उत्पलिनी । इति राजनिर्घण्टः ॥

**कुवलाश्वः**, पुं, (कौ पृथिव्यां वलते विचरणसमर्थो
भवति यद्वा कुं भूमिं पृथिवीं वा वलते व्याप्नोतीव ।
वल् + अच् । कुवलः वेगगमनेन भूवलयभ्रमणक्षमः
अश्वो यस्य ।) धुन्धुमारराजः । इति हेम-
चन्द्रः ॥ (यथा, विष्णुपुराणे ४ । २ । १२ । "श्राव-
स्तस्य वृहदश्वस्तस्यापि कुवलाश्वः योऽसावुतङ्कस्य
महर्षेरपकारिणं धुन्धुनामानमसुरं वैष्णवेन तेज-
साऽऽप्यायितः पुत्त्रसहस्रैरेकविंशतिभिः परिवृतो
त्तरदिशां पतिश्च । इति श्रीभागवतम् ॥ त्रिच-
रणोऽष्टदंष्ट्रोऽयं जातः । तत्पर्य्यायः । त्र्यम्बकसखः २
यक्षराट् ३ गुह्यकेश्वरः ४ मनुष्यधर्म्मा ५ धनदः ६
राजराजः ७ धनाधिपः ८ किन्नरेशः ९ वैश्र-
वणः १० पौलस्त्यः ११ नरवाहनः १२ यक्षः
१३ एकपिङ्गः १४ ऐलविलः १५ श्रीदः १६ पुण्य-
जनेश्वरः १७ । इत्यमरः । १ । १ । ७१ -- ७३ । हर्य्यक्षः
१८ अलकाधिपः १९ । इति जटाधरः ॥ * ॥
नन्दीवृक्षः । इति मेदिनी ॥ अर्हदुपासकविशेषः ।
इति हेमचन्द्रः ॥

**कुवेरः**, त्रि, (कुत्सितं वेरं क्षेपणं दानादिकं गति-
र्वा यस्य ।) मन्दः । इति धरणी ॥ (कुत्सितं वेरं
शरीरं यस्य ।) कुशरीरः । इति त्रिकाण्डशेषः ॥

**कुवेरकः**, पुं, (कुवेर + संज्ञायां कन् ।) नन्दीवृक्षः ।
इत्यमरः । २ । ४ । १२७ ॥

**कुवेराक्षी**, स्त्री, (कुवेरस्य अक्षीव पिङ्गलं पुष्प-
मस्याः ।) पाटलावृक्षः । इत्यमरः । २ । ४ । ५५ ॥
लताकरञ्जः । सितपाटलिकावृक्षः । इति राज-
निर्घण्टः ॥

**कुवेराचलः**, पुं, (कुवेरस्य अचलः ।) कैलासपर्व्वतः ।
इति त्रिकाण्डशेषः ॥

**कुवेराद्रिः**, पुं, (कुवेरस्य अद्रिः पर्व्वतः ।) कैलास-
पर्व्वतः । इति जटाधरः ॥

**कुवेलं**, क्ली, (कुवेषु जलजपुष्पेषु मध्ये इं शोभां लाति
नुष्ठानेन । कु + शो + डः । अपरा व्युत्पत्तिर्यथा
यथा, रामायणे ।
"यस्तयोः पूर्ब्बजो जातः स कुशेर्मन्त्रसत्कृतैः ।
निर्म्मार्ज्जनीयस्तु तदा कुश इत्यस्य नाम तत्" ॥)
रामसुतः । (यथा, रघुः १६ । ७२ ।
"यत् कुम्भयोनेरधिगम्य रामः
कुशाय राज्येन समं दिदेश ।
तदस्य जैत्राभरणं विहर्त्तु-
रज्ञातपातं सलिले ममज्ज" ॥)
योक्त्रम् । इति मेदिनी ॥ पुराणोक्तसप्तद्वीपेषु
द्वीपभेदः । स तु घृतसमुद्रेणावृतः । तत्र देव
निर्म्मितोऽग्नितुल्यः कुशस्तम्बोऽस्ति । (अतः कुश-
द्वीप इति संज्ञया विख्यातः ।) तदधिपः प्रिय-
व्रतराजपुत्त्रो हिरण्यरेताः तद्द्वीपं विभज्य सप्त-

जघान धुन्धुमारसंज्ञामवाप च” ॥

अयमेव कुवल-

याश्व इति नाम्नापि विश्रुतः ॥)

**कुवली**, स्त्री, (कुबल + स्त्रियां गौरादित्वात् ङीष् ।)

कोलिष्टक्षः । इति रत्नमाला ॥

**कुवादः**, त्रि, (कुत्सितो वादः भाषणं यस्य ।) कुवचः ।

परदोषकथनशीलः । इत्यमरः । ३ । १

। ३७ ॥

गृह्णातीति । ला + कः ।) कुवलयम् । इति

हेम-

चन्द्रः ॥

**कुश** इ कि द्युतौ । इति कविकल्पद्रुमः ॥ (चुरां

पक्षे भ्वां--परं-अकं-सेट्-इदित् ।)

पञ्चमस्वरी ।

पुत्त्रेभ्यो दत्तवान् । तेषां नामानि यथा ।
वसुः १
वसुदानः २ दृढरुचिः ३ नाभिगुप्तः ४
स्तुत्यव्रतः ५
विप्रनामा ६ देवनामा ७ । एषां वर्षेषु सप्त
सीमा-
गिरयः । यथा । बभ्रुः १ चतुःशृङ्गः २
कपिलः ३
चित्रकूटः ४ देवानीकः ५ ऊद्र्ध्वरोमा ६
द्रविणः
७ । सप्त नद्यश्च यथा । रसकुल्या १
मित्रविन्दा
२ श्रुतविन्दा ३ देवगर्भा ४ घृतच्युता ५
मधुः ६ माला
७ । तत्र स्थिताः
कुशलकोविदाभिमुक्तकुलकसंज्ञाः
क्रमेण ब्राह्मणक्षत्त्रियवैश्यशूद्राः
भगवन्तमग्नि-
रूपिणं आसां नदीनां पयोभिर्यजन्ते । इति
श्रीभागवतम् ॥ (विष्णुपुराणे तु
एतद्द्वीपाधिपते-
स्तत्पुत्त्राणां गिरीणां नदीनाञ्च
नामान्तराणि
दृश्यन्ते । यथा २ । ४ । ३६ -- ४४ ।
"ज्योतिष्मतः कुशद्वीपे सप्त पुत्त्राः शृणुष्व
तान् ।
उद्भिदो वेणुमांश्चैव वैरथो लम्बनो धृतिः ॥
प्रभाकरोऽथ कपिलस्तन्नामा वर्षपद्धतिः ।
तस्मिन् वसन्ति मनुजाः सह दैवेयदानवैः
॥
तथैव देवगन्धर्व्वयक्षकिंपुरुषादयः ।
वर्णास्तत्रापि चत्वारो निजानुष्ठानतत्पराः
॥
दमिनः शुष्मिणः स्नेहा मन्देहाश्च
महामुने ! ।
ब्राह्मणाः क्षत्त्रिया वैश्याः
शूद्राश्चानुक्रमोदिताः ॥
यथोक्तकर्म्मकर्त्तृत्वात् स्वाधिकारक्षयाय
ते ।
तत्रैव तं कुशद्वीपे ब्रह्मरूपं जनार्द्दनम् ॥
यजन्तः क्षपयन्त्युग्रमधिकारं फलप्रदम् ।

मुल्लिख्य रेखेयं अग्निदेवताका लोहितवर्णा इति
ध्यायेत् । ततः प्रथमरेखायाः उत्तरतः
सप्ताङ्गुला-
न्तरितां प्रादेशप्रमाणां पूर्ब्बाभिमुखीं
रेखामुल्लिख्य
रेखेयं प्रजापतिदेवताका कृष्णवर्णा इति
ध्यायेत् ।
ततः सप्ताङ्गुलान्तरितां प्रादेशप्रमाणां पूर्ब्बभि-
मुखीं रेखामुल्लिख्य रेखेयं इन्द्रदेवताका
नीलवर्णा
इति ध्यायेत् । ततोऽपि सप्ताङ्गुलान्तरितां
प्रादे-
शप्रमाणां पूर्ब्बाभिमुखीं रेखामुल्लिख्य रेखेयं
सोमदेवताका शुक्लवर्णा इति ध्यायेत् । ततः
क्रमेण दक्षिणहस्ताङ्गुष्ठानामिकाभ्यां
रेखासूत्करं
गृहीत्वा प्रजापतिरृषिस्त्रिष्टुप्छन्दोऽग्निर्द्देवता
रेखासूत्करनिरसने विनियोगः । ॐ निरस्तः
परावसुरित्यैशान्यां दिशि अरत्निमात्रान्तरिते
देशे प्रक्षिपेत् । ततः पूर्ब्बस्थापितजलेन रेखा-
भ्युक्षणं कृत्वा
दक्षिणदिक्स्थकांस्यपात्रस्थाग्नेर्न्न-
शरावस्थाग्नेर्व्वा ज्वलदिन्धनं गृहीत्वा
प्रजापति-
रृषिस्त्रिष्टुप्छन्दः अग्निर्द्देवताग्निसंस्कारे विनि-
योगः । ॐ क्रव्यादमग्निं प्रहिणोमि दूरं यम-
राज्यं गच्छतु रिप्रवाहः । अनेन दक्षिणपश्चिम-
कोणे प्रक्षिपेत् । ततोऽपरमग्निं गृहीत्वा प्रजा-
पतिरृषिर्व्वृहतीच्छन्दः प्रजापतिर्द्देवता अग्नि-
स्थापने विनियोगः । ॐ भूर्भुवः स्वरोम् ।
इत्य-
नेनाग्निमात्माभिमुखं तृतीयरेखोपरि स्थापयेत्
ततो वामहस्तमुत्तोल्याञ्जलिं बद्ध्वा पठेत् ।
प्रजा-
पतिरृषिस्त्रिष्टुप्छन्दोऽग्निर्द्देवताग्निस्थापनेविनि-
योगः । ॐ इहैवायमितरो जातवेदा देवेभ्यो
हव्यं वहतु प्रजानन् ॥ ततोऽग्ने ! त्वं विश्वरूप-
नामासि इति नाम कृत्वा ध्यात्वाऽऽवाह्य
विश्व-
रूपनाम्ने अग्नये नमः इति पाद्यादिनाभ्यर्च्च्य ।
ॐ

रर्च्चयेत् । ततस्तेनैव पथा प्रत्यावृत्यासने
पूर्ब्बा-
भिमुख उपविष्टो भूमिजपादिकं कुर्य्यात् ।
यदि
तु ब्रह्मत्वेनारोपितो ब्राह्मणः अयज्ञीयवाचं
वदे-
त्तदा इमं मन्त्रं जपेत् । प्रजापतिरृषिर्गायत्री-
च्छन्दो विष्णुर्देवता
अयज्ञीयवाग्वचननिमित्तजपे
विनियोगः । ॐ इदं विष्णुर्विचक्रमे त्रेधा
निदधे
पदं समूढमस्य पांशुले । इति जपेत् ।
कुशादि-
ब्रह्मपक्षे तु कर्म्मकर्त्तुरेव
कृताकृतावेक्षणादिब्रह्म-
कार्य्यकर्तृत्वादयज्ञीयवाग्वचननिमित्तंस एव
जपेत् । यदि प्रकृते कर्म्मणि चरुहोमोऽस्ति
तदा
अस्मिन्नेव समये चरुं श्रपयित्वा तदुपरि घृतं
दत्त्वा अग्नेरुत्तरतः कुशोपरि संस्थाप्य भूमि-
जपादिकं कुर्य्यात् । दक्षिणजानु भूमौ
पातयित्वा
दक्षिणहस्तोपरिभाक्न अधोमुखौ हस्तौ भूमौ
निधाय । परमेष्ठी ऋषिरनुष्टुप्छन्दोऽग्निर्द्वता
भूमिजपे विनियोगः । ॐ इदं भूमेर्भजामह
इदं भद्रं सुमङ्गलम् । परासपत्नान्
बाधस्वान्येषां
विन्दते धनम् । इति जप्त्वा रात्रौ चेत् कर्म्म
तदा
धनमितिस्थाने वस्विति प्रयोक्तव्यम् । ततो
दक्षिणहस्तेन कुशान् गृहीत्वा अग्नेरुत्तरतः
प्रभृति दक्षिणावर्त्तेन तृणादिकमनेन मन्त्रेण
परिशोधयेत् । त्रयाणां मन्त्राणामृष्यादयः
साधा-
रणाः । कौत्सऋषिर्ज्जगतीच्छन्दोऽग्निर्द्देवता
पृष्ठस्य
षडहस्य षष्ठेऽहन्यग्निमारुते शस्ते परिसमूहने
विनियोगः । ॐ इमं स्तोममर्हते जातवेद-
रथमिव सम्महे मा मनीषया भद्रा हि नः प्रम-
तिरस्य संसद्यग्ने सख्ये मा रिषामा वयन्तव ।
ॐ भरामेध्मं कृणवामा हवींषि ते चितयन्तः

विद्रुमो हेमशैलश्च द्युतिमान् पुष्पवांस्तथा
॥
कुशेशयो हविश्चैव सप्तमो मन्दराचलः ।
वर्षाचलास्तु तत्रैते सप्तद्वीपे महामुने ! ॥
नद्यस्तु सप्त तासान्तु शृणु
नामान्यनुक्रमात् ।
धूतपापा शिवा चैव पवित्रा सम्मतिस्तथा
॥
विद्युदम्भा मही चान्या
सर्व्वपापहरास्त्विमाः ।
अन्याः सहस्रशस्तत्र क्षुद्रनद्यस्तथाचलाः
॥
कुशद्वीपे कुशस्तम्बः सञ्ज्ञया तस्य तत्
स्मृतः ।
तत्प्रमाणेन स द्वीपो घृतोदेन समावृतः”
॥)

**कुशः**, त्रि, (कु कुत्सिते कर्म्मणि शेते अवतिष्ठते ।
कु + शी + कः ।) पापिष्ठः ॥ (कुत्सिते
मदशय्यायां
शेते इति ।) मत्तः । इति मेदिनी ॥

**कुशण्डिका**, स्त्री, (कुशैः कण्डिका इव ।
कुशकण्डिका
पृषोदरात् कस्य लोपः ।)
सर्व्वहोमार्थाग्निसंस्का-
रकक्रिया । तत्र सर्व्वेषामाहुतियुक्तकर्म्मणां
कुश-
ण्डिकासंस्कृताग्निसाध्यत्वात् सैव
प्रथममभिधीयते ।
तत्र हस्तप्रमाणं चतुरस्रं स्थण्डिलं
शर्कराङ्गारास्थि-
केशतुषादिरहितं पूर्ब्बोत्तरप्लवं समं वा
छाया-
मण्डपसहितं गोमयेनोपलिप्य स्नातः
शुचिरा-
चान्तः प्राङ्मुखः कुशसहितासनोपविष्टः
कर्त्ता
उत्तरस्यां दिश्यभ्युक्षणार्थं
कुशकुसुमसहितजल-
पात्रं निधाय दक्षिणं जानु भूमौ पातयित्वा
उत्तराग्रकुशोपरि सव्यहस्तप्रादेशमुत्तानं
वह्नि-
सर्व्वतः पाणिपादान्तः सर्व्वतोऽक्षिशिरोमुखः ।
विश्वरूपो महानग्निः प्रणीतः सर्व्वकर्म्मसु ॥
इति
पठेत् ॥ ततः प्रादेशप्रमाणां घृताक्तां समिधं
तूष्णीमग्नौ हुत्वा ब्रह्मस्थापनं कुर्य्यात् । समाग्र-
पञ्चाशत्कुशपत्ररचितं द्विर्दक्षिणावर्त्तमूर्द्ध्वमुखं
दर्भ-
वटुं अधीतवेदं ब्राह्मणं वा छत्रमुत्तरासङ्गं वा
कमण्डलुं वा ब्रह्मत्वेन परिकल्प्य धारासहित-
मुदकपात्रं गृहीत्वा अग्नेरुत्तरतः प्रभृति दक्षि-
णावर्त्तेन दक्षिणदेशं गत्वा अरत्निमात्रान्तरिते
देशे पूर्ब्बाभिमुखीं वारिधारां दत्त्वा तदुपरि
प्रागग्रान् कुशानास्तीर्य्य
पश्चिमाभिमुखोऽनुपवि-
ष्टस्तिष्ठेत् ।
वामहस्तानामिकाङ्गुष्ठाभ्यामास्तीर्ण-
कुशपत्रमेकं गृहीत्वा प्रजापतिरृषिरनुष्टुप्छन्दो-
ऽग्निर्देवता तृणनिरसने विनियोगः । ॐ
निरस्तः
परावसुरित्यनेन दक्षिणपश्चिमकोणे प्रक्षिपेत् ।
ततोऽप उपस्पृश्य दक्षिणपादेन
सव्यपादमवष्टभ्य
उत्तराभिमुखीभूय आस्तीर्णकुशानद्भिरभ्युक्ष्य
प्रजा-
पतिरृषिरनुष्टुप्छन्दः अग्निर्देवता ब्रह्मोपवेशने
विनियोगः । ॐ आवसोः सदने सीद इति ।
ब्राह्मणब्रह्मपक्षे तु ब्राह्मण एव सीदामीति
ब्रूयात् । अनेन कुशोपरि पूर्ब्बाग्रं कुशब्राह्मणं
ब्राह्मणब्रह्मपक्षे तु उत्तराभिमुखं स्थापयित्वा
तदुपरि कुशान् दत्त्वा अद्भिरभ्यक्ष्य कुशकुसुमै-
पर्व्वणा पर्व्वणा वयम् । जीवातवे प्रतरां
साधया
धियोऽग्ने सख्ये मा रिषामा वयन्तव । ॐ
शकेम
त्वा समिधं साधया धियस्ते देवा
हविरदन्त्या-
हुतं त्वमादित्यानावहतां ह्युश्मस्यग्ने सख्ये मा
रिषामा वयन्तव । ततस्तान् कुशान् ऐशान्यां
दिशि प्रक्षिपेत् । ततोऽग्नेः पूर्ब्बतः
उत्तरान्ताद्द-
क्षिणान्तं यावत् उपमूललूनान् एकपत्रीकृतान्
कुशान् अग्रेण मूलमाच्छादयन् वारत्रयमास्त-
रेत् । एवं दक्षिणस्यां पूर्ब्बान्तात् पश्चिमान्तं
यावत् । प्रतीच्याञ्च दक्षिणादुत्तरान्तं यावत् ।
एव-
मुत्तरस्यां पश्चिमान्तात् पूर्ब्बान्तं यावत्
क्रमेणास्त-
रेत् । ततो घृताक्तस्वस्तिकान् दशदिक्षु
पूर्ब्बादि-
क्रमेण दद्यात् । ॐ इन्द्राय लोकपालाय
स्वाहा । एवं अग्नये इत्यादि । ततः प्रादेशद्वय-
प्रमाणां
धवखदिरपलाशोडुम्बराणामन्यतमस्य
विंशतिकाष्ठिकां मध्ये घृतस्रुवं दत्त्वा प्रजापतिं
मनसा ध्यात्वा तूष्णीमग्नौ जुहुयात् । ततः
स्तरण-
कुशादेव समाग्रकुशपत्रद्वयं गृहीत्वा प्रजापतिं-
रृषिः पवित्रे देवते पवित्रच्छेदने विनियोगः ।
ॐ पवित्रे स्थो वैष्णव्यौ इति मन्त्रेण प्रादेश-
प्रमाणं कृत्वा कुशान्तरेण वेष्टयित्वा
नखव्यति-
रेकेण छित्वा प्रजापतिरृषिः पवित्रे देवते
पवित्र-
मार्ज्जने विनियोगः । ॐ विष्णोर्म्मनसा पूते
स्थः इत्यनेनाभ्यक्ष्य ताम्रादिपात्रे
पवित्रमुत्तराग्रं

| | | |
|---|---|---|
| स्थापनपर्य्यन्तं भूमौ निधाय दक्षिणहस्तानामि-काङ्गुष्ठगृहीतकुशमूलेन स्थण्डिलदक्षिणप्रान्ते द्वा-दशाङ्गुलप्रमाणां प्राङ्मुखीं रेखामुल्लिख्य रेखेयं पृथ्वीदेवताका पीतवर्णा इति ध्यायेत् । तन्मूलतः प्रभृत्येकविंशत्यङ्गुलप्रमाणां उत्तराभिमुखीं रेखा- | | |

निधाय तत्र होमार्थं घृतं निःक्षिपेत् । ततस्तत्कुश-
पत्रद्वयमग्रे दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां मूले च
वामहस्तानामिकाङ्गुष्ठाभ्यां गृहीत्वा दक्षिण-
हस्तोपरिभावेनाधोमुखव्यस्तपाणिः प्रजापति-
ऋषिराज्यं देवता आज्योत्पवने विनियोगः । ॐ
देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः
सूर्य्यस्य रश्मिभिः स्वाहा । इत्यनेन कुशपत्रद्वय-
मध्येन घृतमग्नौ सकृज्जुहुयात् । तूष्णीं वारद्वयम् ।
ततस्तत्कुशपत्रद्वयमद्भिरभ्युक्ष्याग्नौ निःक्षिपेत् ।
ततस्तस्याज्यपात्रस्योदकेनानुमार्ज्जनमग्नेरुपरि
नि-
धानं उत्तरस्यां दिश्यवतारणं इत्थमेव वारत्रयं
संस्कुर्य्यात् इत्याज्यसंस्कारः । ततो धवखदिर-
पलाशोडुम्बराणामन्यतमस्य अरत्निमात्रं भ्रमि-
ताङ्गुष्ठपर्व्वविलं नासारन्ध्रवन्मध्यस्थितमर्य्यादं
स्रुवं
इत्थमेव वारत्रयं संस्कुर्य्यादिति । स्रुवसंस्कारः ।
एवं स्रुङ्क्षेक्षणादिकं संस्कुर्य्यात् । ततो दक्षिणं
जानु भूमौ पातयित्वा उदकाञ्जलिं गृहीत्वा
प्रजापतिरृषिरदितिर्द्देवताउदकाञ्जलिसेके वि-
नियोगः । ॐ अदिते अनुमन्यस्व इत्यनेनाग्ने-
र्द्दक्षिणतः पश्चिमान्तात् पूर्ब्बान्तं यावदुदकाञ्ज-
लिना सिञ्चेत् । ततः प्रजापतिरृषिरनुमतिर्द्देवता
उदकाञ्जलिसेके विनियोगः । ॐ अनुमते अनु-
मन्यस्व इत्यनेनाग्नेः पश्चिमतो दक्षिणान्तादुत्त-
रान्तं यावदुदकाञ्जलिना सिञ्चेत् । ततः प्रजा-
पतिरृषिः सरस्वती देवता उदकाञ्जलिसेके
विनियोगः । ॐ सरस्वत्यनुमन्यस्व इत्यनेनाग्ने-
रुत्तरतः पश्चिमान्तात् पूर्ब्बान्तं यावदुदकाञ्जलिना
सिञ्चेत् । ततः प्रजापतिरृषिः सविता देवता
अग्निपर्य्युक्षणे विनियोगः । ॐ देव सवितः
प्रसुवयज्ञं प्रसुवयज्ञपतिं भगाय दिव्यो गन्धर्व्वः
केतपूः केतन्नः पुनातु वाचस्पतिर्वाचन्नः स्वदतु
इत्यनेनोदकाञ्जलिना दक्षिणावर्त्तेनाग्निं वेष्टयेत् ।
ततो दक्षिणं जानूत्थाप्य उपर्य्यधःस्थितदक्षिण-
वाममुंष्टिभ्यां फलपुष्पकुशान् गृहीत्वा विरूपाक्ष-
जपं कुर्य्यात् । परमेष्ठी ऋषी रुद्ररूपोऽग्निर्द्देवता
विरूपाक्षजपे विनियोगः । ॐ भूर्भुवः स्वरोम्
महान्तमात्मानं प्रपद्ये विरूपाक्षोऽसि दन्ताञ्जि-
स्तस्य ते शय्या पर्णे गृहान्तरीक्षे विमितं हिर-
ण्मयं तद्देवानां हृदयान्ययस्मये कुम्भेऽन्तः सन्नि-

स्राक्षाय ब्रह्मणः पुत्त्राय नमः । इति
जपित्वा
गृहीतकुशान् प्रागुदीच्यां दिशि क्षिपेत् ।
फल-
पुष्पे ब्रह्मणे निवेदयेत् ॥ * ॥ अथ
काम्यकर्म्मार्थं
कुशण्डिका तदा प्राणान् संयम्य प्रथमं
पुटाञ्जलिः ।
ॐ तपश्च तेजश्च श्रद्धा च ह्रीश्च
सत्यञ्चाक्रोधश्च
त्यागश्च घृतिश्च धर्म्मश्च सत्वञ्च वाक् च
मन-
श्चात्मा च ब्रह्म च तानि प्रपद्ये तानि
मामवन्तु ।
इति जपित्वा पश्चात् विरूपाक्षजपं
कुर्य्यात् ।
इति सामवेदिनां सर्व्वसाधारणी
कुशण्डिका
समाप्ता । इति भवदेवभट्टः ॥ * ॥ अन्यत्
रघु-
नन्दनभट्टाचार्य्यकृतसंस्कारतत्त्वे द्रष्टव्यम्
॥ यजु-
र्व्वेदिनां कुशण्डिका
पशुपतिकृतदशकर्म्मपद्धतौ
ऋग्वेदिनां कुशण्डिका
कालेशिकृतदशकर्म्मपद्धतौ
च द्रष्टव्या ॥ * ॥ * ॥ अथ
कुशण्डिकानन्तरं प्रकृतं
कर्म्म कर्त्तव्यम् । तत्र प्रथमं प्रादेशप्रमाणां
घृताक्तां
समिधं तूष्णीमग्नौ हुत्वा महाव्याहृतिहोमं
कुर्य्यात् ।
प्रजापतिरृषिर्गायत्रीच्छन्दोऽग्निर्द्देवता
महाव्याहृतिहोमे विनियोगः । ॐ भूः
स्वाहा ।
प्रजापतिरृषिरुष्णिक्छन्दोवायुर्देवता
महाव्या-
हृतिहोमे विनियोगः । ॐ भुवः स्वाहा ।
प्रजा-
पतिरृषिरनुष्टुप्छन्दः सूर्य्यो देवता
महाव्याहृति-

निवर्त्तस्वाग्ने पिनुस्व धारया विश्वप्स्याः
विश्वतः
परि स्वाहा ।
प्रजापतिरृषिरनुष्टुप्छन्दोऽग्निर्दे-
वता प्रायश्चित्तहोमे विनियोगः । ॐ
आज्ञा-
यदनाज्ञातं यज्ञस्य क्रियते मिथः अग्ने
तदस्य
कल्पय त्वं हि वेत्थ यथायथं स्वाहा ।
प्रजापति-
ऋषिः पङ्क्तिच्छन्दः प्रजापतिर्द्देवता
प्रायश्चित्त-
होमे विनियोगः । ॐ प्रजापते न
त्वदेतान्यन्यो
विश्वा जातानि परिता बभूव ।
यत्कामास्ते
जुहुमस्तन्नोऽस्तु वयं स्यामः पतयो
रयीणां स्वाहा ।
ततः पूर्ब्बवदेव महाव्याहृतिहोमः
समित्प्रक्षे-
पश्च ।
प्रजापतिरृषिर्गायत्रीच्छन्दोऽग्निर्द्देवता
महाव्याहृतिहोमे विनियोगः । ॐ भूः
स्वाहा ।
प्रजापतिरृषिरुष्णिक्छन्दोवायुर्देवता
महाव्या-
हृतिहोमे विनियोगः । ॐ भुवः स्वाहा ।
प्रजा-
पतिरृषिरनुष्टुप्छन्दः सूर्य्यो देवता
महाव्याहृति-
होमे विनियोगः ॐ स्वः स्वाहा ॥ * ॥
ततोनवग्रहहोमः । ॐ आकृष्णेन रजसा
वर्त्त-
मानो निवेशयन्नमृतं मर्त्यञ्च हिरण्ययेन
सविता
रथेना देवो याति भुवनानि पश्यन् स्वाहा
। ॐ
आप्यायस्व समेतु ते विश्वतः सोमवृष्ट्यं
भवा
वाजस्य सङ्गथे स्वाहा । ॐ अग्निर्मूर्द्धा
दिवः

हितानि तानि बलभृच्च बलसाच्च रक्षतोऽप्रमणी अनिमिषत्तत् सत्यं यत्ते द्वादशपुत्त्रांस्ते त्वा संवत्सरे संवत्सरे कामप्रेण यज्ञेन याजयित्वा पुनर्ब्रह्मचर्य्यमुपयन्ति त्वं देवेषु ब्राह्मणोऽस्म्यहं मनुष्येषु ब्राह्मणो वै ब्राह्मणमुपधावत्युपधावामि जपन्तं मा मा प्रतिजापीर्ज्जुह्वन्तं मा मा प्रतिहौषीः कुर्व्वन्तं मा मा प्रतिकार्षीस्त्वां प्रपद्ये त्वया प्रसूत इदं कर्म्म करिष्यामि तन्मे राध्यतां तन्मे समृद्ध्यतां तन्म उपपद्यतां समुद्रो मा विश्वव्यचा ब्रह्माऽनुजानातु तुथो मा विश्ववेदा ब्रह्मणः पुत्त्रोऽनुजानातु श्वात्रो मा प्रचेता मैत्रावरुणोऽनुजानातु तस्मै विरूपाक्षाय दन्ताञ्जये समुद्राय विश्वव्यचसे तुथाय विश्ववेदसे श्वात्राय प्रचेतसे सह-

होमे विनियोगः । ॐ स्वः स्वाहा । इति स्रुवे-
णाज्याहुतित्रयन्दद्यात् । यदि प्रकृते कर्म्मणि
चरुहोमोऽस्ति तदा आज्यतन्त्रोपक्रमविहितत्वात्
महाव्याहृतिहोमस्य प्रथमं महाव्याहृतिहोमो
न कर्त्तव्योऽन्ते तु कर्त्तव्य एव विहितत्वात् । ततः
प्रकृतं कर्म्म समाप्य पुनर्महाव्याहृतिहोमं कृत्वा
प्रादेशप्रमाणां समिधं तूष्णीमग्नौ हुत्वा शाट्या-
यनहोमादिवामदेव्यगानान्तं उदीच्यं साधारणं
कर्म्म करणीयम् । तदभिधीयते । तत्र प्रथमं ॐ
अद्येत्यादि अत्रामुककर्म्मणि यत्किञ्चिद्वैगुण्यं जातं
तद्दोषप्रशमनाय शाट्यायनहोममहं कुर्व्वीय
इति सङ्कल्पं कृत्वा अग्ने त्वं विधुनामासि इति
नाम कृत्वा संपूज्य पुनर्घृताक्तां प्रादेशप्रमाणां
समिधं तूष्णीमग्नौ हुत्वा महाव्याहृतिहोमञ्च
पूर्ब्बवत् कृत्वा प्रायश्चित्तहोमं कुर्य्यात् । प्रजापति
रृषिरग्निर्द्देवता प्रायश्चित्तहोमे विनियोगः ।
ॐ पाहि नोऽग्न एनसे स्वाहा । प्रजापतिरृषि-
र्व्विश्वेदेवा देवताः प्रायश्चित्तहोमे विनियोगः ।
ॐ पाहि नो विश्ववेदसे स्वाहा । प्रजापतिरृषि-
र्व्विभावसुर्द्देवता प्रायश्चित्तहोमे विनियोगः ।
ॐ यज्ञं पाहि विभावसो स्वाहा । प्रजापतिरृ-
षिः शतक्रतुर्द्देवता प्रायश्चित्तहोमे विनियोगः ।

ककुत् पतिः पृथिव्या अयं अपां रेतांसिं जिन्वति
स्वाहा । ॐ अग्ने विवस्वदुषसश्चित्रं राधोऽमर्त्य
आदाशुषे जातवेदो वहा त्वमद्याँ देवाँ उषर्वुधः
स्वाहा । ॐ वृहस्पते परिदीया रथेन रक्षोहा-
ऽमित्राँ अपबाधमानः प्रभञ्जत्सेनाः प्रमृणो युधा
जयन्नस्माकमेध्यविता रथानां स्वाहा । ॐ शुक्र-
न्तेऽन्यद्यजन्तेऽन्यद्विषुरूपेऽहनी द्यौरिवासि ।
विश्वा हि माया अवसि स्वधावन् भद्रा ते पूषन्निह
रातिरस्तु स्वाहा । ॐ शन्नो देवी रभीष्टये शन्नो
भवन्तु पीतये । शंयोरभिस्रवन्तु नः स्वाहा ।
ॐ कयानश्चित्र आभुवदूती सदावृधः सखा
कया सचीष्टया वृता स्वाहा । ॐ केतुं कृन्वन्नके-
तवे पेशो मर्य्या अपेशसे समुशद्भिरजायथाः
स्वाहा ॥ * ॥ ततः इन्द्राद्यष्टलोकपालहोमं प्रत्यक्ष-
देवताहोमञ्च कृत्वा घृताक्तां प्रादेशप्रमाणां समिधं
तूष्णीमग्नौ हुत्वा उदकाञ्जलिसेकं कुर्य्यात् । प्रजा-
पतिरृषिः सविता देवताग्निपर्य्युक्षणे विनियोगः ।
ॐ देव सवितः प्रसुवयज्ञं प्रसुवयज्ञपतिं भगाय
दिव्यो गन्धर्व्वः केतपूः केतन्नः पुनातु वाचस्पति-
र्व्वाचन्नः स्वदतु । अनेनोदकाञ्जलिना दक्षिणा-
वर्त्तेनाग्निं वेष्टयेत् । प्रजापतिरृषिरदितिर्द्देवता

| | | |
|---|---|---|
| | ॐ सव्यं पाहि शतक्रतो स्वाहा । प्रजापतिरृषि- रनुष्टुप्छन्दोऽग्निर्देवता प्रायश्चित्तहोमे विनि- योगः । ॐ पाहि नो अग्न एकया पाह्युत द्वितीयया पाहि गीर्भिस्तिसृभिरुर्जांपते पाहि चतसृभिर्वसो स्वाहा । प्रजापतिरृषिर्गायत्री- च्छन्दोऽग्निर्देवता प्रायश्चित्तहोमे विनियोगः । ॐ पुनरूर्ज्जा निवर्त्तस्व पुनरग्न इषायुषा पुनर्नः पाह्यंहसः स्वाहा । प्रजापतिरृषिर्गायत्रीच्छन्दो- ऽग्निर्देवता प्रायश्चित्तहोमे विनियोगः । ॐ सहर्ज्जा | उदकाञ्जलिसेके विनियोगः । ॐ अदितेऽन्व- मंस्थाः अनेनाग्नेर्दक्षिणतः पश्चिमान्तात् पूर्ब्बान्तं यावदुदकाञ्जलिना सिञ्चेत् । प्रजापतिरृषिरनु- मतिर्देवता उदकाञ्जलिसेके विनियोगः । ॐ अनुमतेऽन्वमंस्थाः अनेनाग्नेः पश्चिमतो दक्षिणा- न्तादुत्तरान्तं यावदुदकाञ्जलिना सिञ्चेत् । प्रजा- पतिरृषिः सरस्वती देवता उदकाञ्जलिसेके वि- नियोगः । ॐ सरस्वत्यन्वमंस्थाः । अनेनाग्नेरुत्त- रतः पश्चिमान्तात् पूर्ब्बान्तं यावदुदकाञ्जलिना सिञ्चेत् । तत उत्तानहस्तद्वयेन कतिपयास्तरण- |

कुशान् गृहीत्वा प्रजापतिरृषिर्व्वायो देवता दर्भ-
तृणाभ्यञ्जने विनियोगः । ॐ अक्तं रिहा णाव्यन्तु
वयः । अनेनाग्रमध्यमूलानि घृतेनाभ्यनक्ति वार-
त्रयं मन्त्रश्च वारत्रयमेव पठनीयः । ततस्तान्
कुशानद्भिरभ्युक्ष्य प्रजापतिरृषिरनुष्टुप्छन्दो रुद्र-
रूपोऽग्निर्देवता दर्भजुटिकाहोमे विनियोगः ।
ॐ यः पशूनामधिपती रुद्रस्तन्तिचरो वृषा ।
पशूनस्माकं मा हिंसीरेतदस्तु हुतन्तव स्वाहा ।
अनेनाग्नौ क्षिपेत् । तत अग्ने त्वं मृडनामासीति
नाम कृत्वा गन्धमाल्यवस्त्रताम्बूलैरग्निमभ्यर्च्च्य
प्रजापतिरृषिर्व्विराट्छन्द इन्द्रो देवता यशस्का-
मस्य यजनीयप्रयोगे विनियोगः । ॐ पूर्णहोमं
यशसे जुहोमि योऽस्मै जुहोति वरमस्मै ददाति
वरं वृणे यशसा भामि लोके स्वाहा । अनेन
पूर्णाहुतिं दद्यात् । ततो ब्रह्मणे पूर्णपात्रादि
दक्षिणां दत्त्वा होमदक्षिणां कुर्य्यात् । ततः प्रद-
क्षिणेन दक्षिणं देशं गत्वा ब्रह्मग्रन्थिं मुक्त्वा
प्रत्या-
वृत्यासने पुनरुपविश्य कुशकुसुमसहितजलपात्रे
हस्तं निधाय महावामदेव्य ऋषिर्व्विराडगाय-
त्रीच्छन्द इन्द्रो देवता शान्तिकर्म्मणि जपे विनि-
योगः । ॐ कया न श्चित्र आभुवदूती सदा
वृधः सखा कया सचीष्टया वृता । ॐ कस्त्वा
सत्यो मदानां मंहिष्ठो मत्सदन्धसः
दृढाचिदारुजे
वसु । ॐ अभीषुणः सखीनामविता जरितृणां
शतम्भवास्यूतये । ॐ स्वस्ति न इन्द्रो
वृद्धश्रवाः
स्वस्ति नः पूषा विश्ववेदाः स्वस्ति
नस्तार्क्ष्योऽरिष्ट-
नेमिः स्वस्ति नो वृहस्पतिर्दधातु ॥ "एता ऋचो
गीत्वा शान्तिं कुर्य्यात् । गानाशक्तौ एता एव
ऋचस्त्रिरावृत्त्या पठेदिति । ततो दक्षिणां दत्त्वा
अच्छिद्रावधारणं कुर्य्यात् । इति सर्व्वकर्म्मसा-
धारणमुदीच्यं कर्म्म समाप्तम् ॥

**कुशपः**, पुं, (कुश् य संश्लेषे + बाहुलकात् कपन् ।)
पानपात्रम् । इत्युणादिकोषः ॥

**कुशपुष्पं**, क्ली, (कुशाकारं पुष्पमस्य ।) ग्रन्थिपर्णम् ।
इति रत्नमाला ॥ गाँठियाला इति भाषा ॥

स्थापयन्ति तु यां वृद्धिं सा तत्राधिगमं प्रति"
॥
कुशं लाति गृह्णाति । कुश + ला + कः ।
कुश-
ग्राहकः । इति व्युत्पत्तिलब्धोऽर्थः ॥)

**कुशलवौ**, पुं, (पुष्पवतोरिव एकशक्त्या तयोरेव
बोधकत्वम् द्वन्द्वसमासे तु कुशश्च लवश्च
तौ कुशी-
लवौ मित्रावरुणावित्यादिवज्ज्ञेयम् ।)
एकयोक्त्या
रामपुत्रौ । इति हेमचन्द्रः ॥ तयोर्नामकारणं
यथा, --
"यस्तयोः प्रथमं जातः स
कुशैर्म्मन्त्रसंस्कृतैः ।
निर्म्मार्ज्जनीयो नाम्ना हि भविता कुश
इत्यसौ ॥
यश्चावरज एवासील्लवणेन समाहितः ।
निर्म्मार्ज्जनीयो वृद्धाभिर्नाम्ना स भविता
लवः ॥
एवं कुशलवौ नाम्ना यमौ तौ सम्बभूवतुः ।
भगवत्कृतनामानौ सुखिनावक्षयौ च तौ" ॥
इति रामायणम् ॥

**कुशलप्रश्नः**, पुं, (कुशलः शुभः प्रश्नः ।)
कुशलजिज्ञासा ।
तत्पर्य्यायः । कौशली २ । इति
त्रिकाण्डशेषः ॥

**कुशली**, स्त्री, (कुश इव लीयते । ली + डः गौरादि-
त्वात् ङीष् ।) अश्मन्तकवृक्षः । क्षुद्राम्लिका
।
इति वैद्यकम् ॥

**कुशली**, [न्] त्रि, (कुशलं अस्त्यस्य । कुशल + इनिः
।)
मङ्गलान्वितः । (यथा, रघौ ५ । ४ ।
"अप्यग्रणीर्मन्त्रकृतामृषीणां
कुशाग्रबुद्धे ! कुशली गुरुस्ते" ॥)

**कुशस्थलं**, क्ली, (कुशप्रधानं स्थलम् ।) कान्यकुब्ज-
देशः । इति हेमचन्द्रः ॥ (यथा, वेणीसंहारे ।
"कुशस्थलं वृकस्थलं माकन्दं वारणावतम् ।

नैव शब्दाम्बुधेः पारं किमन्ये जडबुद्धयः"
॥)
तत्पर्य्यायः । सूक्ष्मदर्शी २ तत्कालधीः ३
प्रत्युत्पन्न-
मतिः ४ । इति हेमचन्द्रः ॥ सूक्ष्मायां बुद्धौ
कर्म्म-
धारयस्तत्र स्त्री ॥

**कुशारणिः**, पुं, (कुशं शापप्रदानार्थं जलं अरणिरिव
यस्य ।) दुर्व्वासाः । इति त्रिकाण्डशेषः ॥

**कुशाल्मलिः**, पुं, (कुत्सितः शाल्मलिः ।) रोहित-
वृक्षः । इति राजनिर्घण्टः ॥

**कुशिंशपा**, स्त्री, (कुत्सिता शिंशपा ।) कपिलशिं-
शपा । इति राजनिर्घण्टः ॥

**कुशिकः**, पुं, (कुशः कुशसंज्ञको महीपालो
जनकत्वे-
नास्त्यस्य । कुश + ठन् ।)
स्वनामख्यातनृपविशेषः ।
(स तु विश्वामित्रपितामहः गाधेः पिता ।
एत-
द्विवरणन्तु महाभारते १३ ।
भीष्मयुधिष्ठिरसंवादे
५२ अध्यायमारभ्य द्रष्टव्यम् ॥) फालः ।
सर्ज्जवृक्षः ।
विभीतकवृक्षः । इति हेमचन्द्रः ॥
अश्वकर्णवृक्षः ।
इति राजनिर्घण्टः ॥ तैलशेषः । इति
विश्वः ॥
केकरे त्रि । इति शब्दमाला ॥

**कुशितं**, त्रि, (कुश् + इतच् । यद्वा कुशसंश्लेषे + क्त
इट् च ।) जलमिश्रितम् । इत्युणादिकोषः
॥

**कुशी**, स्त्री, (कुश + अयोविकारार्थे "जानपदेति"
४ । १ । ४२ । इति ङीष् ।) फालः । इति
मेदिनी ॥

**कुशी**, [न्] पुं, (कुशाः सन्त्यस्य । समाधियोगकाले
अङ्गेषु कुशोत्पत्तेस्तथात्वम् ।)
वाल्मीकिमुनिः ।

**कुशलं**, क्ली, (कुश् + वृषादित्वात् कलन् । यद्वा कुं
पापं तस्मात् शलति गच्छति पृथक्त्वं
प्राप्नोतीत्यर्थः ।
कु + शल् + अच् ।) कल्याणम् । (यथा, रघुः १
। ५८ ।
"प्रप्रच्छ कुशलं राज्ये राज्याश्रममुनिं मुनिः" ॥
* ॥

समागमे विहिते
अभिवादकमवरवयस्कंस-

मानवयस्कमनभिवादकमपिब्राह्मणं कुशलमिति
शब्दविशेषोच्चारणेनैव कल्याणप्रश्नं पृच्छेत् ।
य-
दुक्तं मनौ २ । १२७ ।
"ब्राह्मणं कुशलं पृच्छेत् क्षत्त्रबन्धुमनामयम् ।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च" ॥)
पर्य्याप्तिः । पुण्यम् । (तद्वति, त्रि ।
यथा, गीतायाम् १८ । १० ।
"नद्वेष्ट्यकुशलं कर्म्म कुशले नानुषज्जते" ॥
कौ पृथिव्यां शलति श्लाघा प्राप्नोतीति । शल
+ अच् ।) शिक्षिते, त्रि । इत्यमरः । ३ । ३ ।
२०३ ॥ (यथा, मनुः ८ । १५७ ।
"समुद्रयानकुशला देशकालार्थदर्शिनः ।
देहि मे चतुरो ग्रामान् कञ्चिदेकञ्च पञ्चमम्"
॥)

**कुशस्थली**, स्त्री, (कुशस्थल + स्त्रियां ङीष् ।) द्वा-
रिका । इति जटाधरः ॥ (यथा, --
महाभारते
२ । मन्त्रणापर्व्वणि १४ । ४९ ।
"इति सञ्चिन्त्य सर्व्वे स्म प्रतीचीं
दिशमांश्रिताः ।
कुशस्थलीं पुरीं रम्यां रैवतेनोपशोभिताम्" ॥
पुर्य्येषा तु पुरा रेवतनाम्ना केनचित्
नरपतिना
निर्म्मिता कालवशात् राक्षसैरुत्सादिता
श्वापदा-
श्रयीभूताऽऽसीत् ततो देवप्रमुखैर्यादवैः
संस्कृता
सती तेषामेव वासभूमिरासीत् ॥)

**कुशा**, स्त्री, (कुश् य संश्लेषे + कः टाप् च ।) रज्जुः ।
इति मेदिनी । मधुकर्कटिका । इति शब्द-
चन्द्रिका ॥ वल्गा । इति हेमचन्द्रः ॥
(छन्दोगाः
स्तोत्रीयागणनार्थानौडुम्बरान् शङ्कून् कुशा
इति
व्यवहरन्ति ॥ इति चिन्तामणिः ॥)

**कुशाकरः**, पुं, (कुशैराकीर्य्यते समन्तात् अग्रेण
मूलाच्छादनेन वेष्ट्यतेऽत्र । आ + कॄ +
अधिक-
रणे अप् । कुशण्डिकासमये कुशैर्वेष्टनात्
तथा-
त्वम् ।) अग्निः । इति शब्दमाला ॥ (कुशां
रज्जुं
करोतीति व्युत्पत्त्या रज्जुकारकः ॥)

**कुशाक्षः**, पुं, (कुश इव सूक्ष्मं क्षुद्रमित्यर्थः अक्षि
यस्य । समासे अच् ।) वानरः । इति
शब्दमाला ॥

**कुशाग्रीयमतिः**, त्रि, (कुशाग्रीया कुशानां अग्रवत्
सूक्ष्मा मतिर्यस्य ।) तीक्ष्णबुद्धिः । (यदुक्तं
शिष्टैः ।
"अहञ्च भाष्यकारश्च कुशाग्रीयधियाबुभौ ।
इति हेमचन्द्रः ॥ (कुशविशिष्टे, त्रि । यथा,
महा-
भारते १३ । मेघवाहनोपाख्याने १४ ।
३७४ ।
"दिनेऽष्टमे तु विप्रेण दीक्षितोऽहं यथाविधि
।
दण्डी मुण्डी कुशी चीरी घृताक्तो
मेखलीकृतः" ॥)

**कुशीदं**, क्ली, (कुसीद + पृषोदरात् सस्य शत्वम् ।)
वृद्धिजीविका । इत्यमरटीकायां भरतः ॥
रक्त-
चन्दनम् । इति मुण्डमालातन्त्रम् ॥

**कुशीलवः**, पुं, (कुत्सितं शीलं अस्य इति कुशीलः ।
कुगतीतिसमासः अन्यत्रापि दृश्यते इति
वः ।
यद्वा कुशीलं वाति गच्छति प्राप्नातीति
यावत् ।
वा + कः ।) चारणः । इत्यमरः । २ । १०
। १२ ॥
नटविशेषः । कथकादिः । इत्यन्ये ।
देशान्तरे
कीर्त्तिं प्रचारयति यो नटः । इत्यन्ये । इति
भरतः ॥ (एते हि अपाङ्क्तेया
हव्यकव्ययोर्व्वर्ज्याः ।
यथा, मनुः ३ । १५५ ।
"कुशीलवोऽवकीर्णी च वृषलीपतिरेव च"
॥
कुशीलववृत्त्यर्थं नाट्यशास्त्रप्रचारकत्वात्
वाल्मी-
किमुनिः ॥)

**कुशीलवौ**, पुं, (कुशश्च लवश्च तौ कुशीलवौ ।)
एक-
योक्त्या रामपुत्त्रौ । इति हेमचन्द्रः ॥
(यथा, रामायणे ७ । १०७ । सग ।
"अभिषिच्य महात्मानावुभौ रामः
कुशीलवौ" ॥)

**कुशीवशः**, पुं, (कुशीव कुशवान् सन् शेते समाधौ
अवतिष्ठते इति । शी + ड ।)
वाल्मीकिमुनिः ।
इति त्रिकाण्डशेषः ॥

| | | **कुशूलः**, पुं, (कुसूल + पुषोदरात् शत्वम् ।) तुषानलः ।<br><br>इति जटाधरः ॥ धान्यागारम् ।<br>तत्पर्य्यायः । अन्न-<br>कोष्ठकः २ । इति हेमचन्द्रः ॥ व्रीह्यगारम्<br>३ । |
|---|---|---|

इति त्रिकाण्डशेषः ॥ (यथा, मनुः ४ । ७ ।
"कुशूलधान्यको वा स्यात् कुम्भीधान्यक
एव वा ।
त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा"
॥)

**कुशेशयं**, क्ली, (कुशे जले शेते । कुश + शी + अच् ।
अलुक् समासः ।) पद्मम् । (यथा, रघुः ६
। १८ ।
"कुशेशयाताम्रतलेन कश्चित् करेण
रेखाध्वजला-
ञ्छनेन" ॥) सारसपक्षी । इत्यमरः । १ ।
१० । ४० ॥

**कुशेशयः**, पुं, (कुशेशयं पद्ममिव आकृतिर्विद्यतेऽस्य ।
अर्श आद्यच् ।) कर्णिकारवृक्षः । इति
शब्दचन्द्रिका ॥
(कुशद्वीपस्थपर्व्वतविशेषः । इति
विष्णुपुराणे ॥
२ । ४ । ३६ ॥)

**कुष** ग निष्कर्षे । इति कविकल्पद्रुमः । (क्र्यां --
परं -- सकं -सेट् ।) ग कुष्णाति चुकोष ।
निष्कर्ष
इयत्तापरिच्छेदः । तूलैरवकुष्णातीति
वोपदेवः ॥
निष्कर्षोऽन्तःप्रकाशनमितिगोविन्दभट्टः
॥ "ततो-
ऽकुष्णाद्दशग्रीवः क्रुद्धः प्राणान्
वनौकसाम्" । इति
भट्टौ अनेकार्थत्वांन्निष्कोषणार्थः । इति
दुर्गादासः ॥

**कुषलः**, त्रि, (कुष् + बाहुलकात् कलच् ।) कुशलः ।
इत्यमरटीकायां भरतः ॥

**कुषाकुः**, पुं, (कुष + "कठिकुषिभ्यां काकुः" । उणां
३ । ७७ । इति काकुः ।) कपिः । अग्निः ।
अर्कः ।
परोत्तापिनि, त्रि । इति मेदिनी ॥

**कुषितः**, त्रि, (कुष् निष्कर्षे + क्तः ।) जलमिश्रितः ।

श्वित्रम् २ । इत्यमरः । २ । ४ । ५४ ॥ श्वेतम्
३
श्वेत्रम् ४ । इति तट्टीका ।
तस्य निदानपूर्ब्बिका संप्राप्तिर्यथा ।
"विरोधीन्यन्नपानानि द्रवस्निग्धगुरूणि च ।
भजतामागतां छर्दिं वेगांश्चान्यान् प्रतिघ्नताम्
॥
व्यायाममतिसन्तापमतिभुक्त्वानिषेविणाम् ।
शीतोष्णलङ्घनाहारान् क्रमं मुक्त्वा निषेविणाम्
॥
घर्म्मश्रमभयार्त्तनां द्रुतं शीताम्बुसेविनाम् ।
अजीर्णाध्यशिनाञ्चैव पञ्चकर्म्मापचारिणाम् ॥
नवान्नदधिमत्स्यातिलवणाम्लनिषेविणाम् ।
मांसमूलकपिष्टान्नतिलक्षीरगुडाशिनाम् ॥
व्यायामञ्चाप्यजीर्णेऽन्ने निद्राञ्च भजतां दिवा ।
विप्रान् गुरून् धर्षयतां पापं कर्म्म च कुर्व्वताम्
॥
वातादयस्त्रयो दुष्टास्त्वग्रक्तं मांसमम्बु च ।
दूषयन्ति स कुष्ठानां सप्तको द्रव्यसंग्रहः ॥
अतः कुष्ठानि जायन्ते सप्त चैकादशैव तु ।
कुष्ठानिं सप्तधा दोषैः पृथग्द्वन्द्वैः समागतैः ॥
सर्व्वेष्वपि त्रिदोषेषु व्यपदेशोऽधिकत्वतः" ॥ *
॥
तस्य पूर्ब्बरूपं यथा ।
"अतिश्लक्ष्णः खरः स्पर्शः स्वेदास्वेदौ
विवर्णता ।
दाहः कण्डुस्त्वचि स्वापस्तोदः
कोठोन्नतिर्भ्रमः ॥
व्रणाणामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः ।
रूढानामतिरूक्षत्वं निभित्तेऽल्पेऽपि कोपणम्
॥
रोमहर्षोऽसृजः कार्ष्ण्यं कुष्ठलक्षणमग्रजम्" ॥
* ॥
तच्च वातादिभेदेन अष्टादशप्रकारम् ।
तत्र सप्तमहाकुष्ठानि यथा ।
"कृष्णारुणकपालाभं यद्रूक्षं परुषं तनु ।
कापालं तोदबहुलं तत्कुष्ठं विषमं स्मृतम् ॥ १
॥
रुग्दाहरागकण्डूभिः परीतं रोमपिञ्जरम् ।
उडुम्बरफलाभासं कुष्ठमौडुम्बरं वदेत् ॥ २ ॥

ज्ञेया पाण्योः कच्छुरुग्रास्फिचोश्च ॥ ८ ॥
स्फोटाः श्यावारुणा भासा विष्फोटाः
स्युस्तनुत्वचः ॥ ९ ॥
रक्तं श्यावं सदाहार्त्ति शतारुः स्याद्बहुव्रणम् ॥
१० ॥
सकण्डुपिडका श्यावा बहुस्रावा विचर्च्चिका"
॥ ११ ॥
इति माधवकरः ॥

**कुष्ठः**, पुं, (कुष्णाति शरीरस्थशोणितं विकुरुते इति ।
निष्कर्षार्थकस्य कुष्धातोरत्र विकारार्थत्वं
बोध्य-
ते धातूनामनेकार्थत्वात् । कुष् निष्कर्षे +
"हनि-
कुषीति" । उणां २ । २ । इति क्थन् ।)
स्वनामख्यातरोगः ।
तस्य निदानं पूर्ब्बलिखितम् । औषधं यथा ।
"सर्व्वकुष्ठेषु वमनं रेचनं रक्तमोक्षणम् ।
वचावासापटोलानां निम्बस्य फलिनीत्वचः ॥
कषायो मधुना पीतो वातहृन्मदनान्वितः ।
विरेचनं प्रयोक्तव्यं त्रिवृद्दन्तीफलत्रिकैः ॥
मनःशिला मरीचानि तैलपाकं पयो हरेत् ।
सर्व्वकुष्ठानुलेपोऽयं शिवा पञ्चगुडोदनम् ॥
करञ्जैडगजौ कुष्ठं गोमूत्रेण प्रलेपतः ।
करवीरोद्वर्त्तनञ्च तैलाक्तस्य तु कुष्ठहृत् ॥
हरिद्रामलयं रास्ना गुडूच्येडगजस्तथा ।
आरग्वधः करञ्जश्च लेपः कुष्ठहरः परः ॥
मनःशिला विडङ्गानि वाकुची सर्षपस्तथा ।
करञ्जो मूत्रपिष्टोऽयं लेपः कुष्ठहरोऽर्कवत् ॥
विडङ्गैडगजाकुष्ठनिशासिन्धूत्थसर्षपैः ।
मूत्राम्बुपिष्टो लेपोऽयं दद्रुकुष्ठविनाशनः ॥
प्रपुन्नाटकवीजानि धात्री सर्ज्जरसः स्नूही ।
सौवीरपिष्टं दद्रू णामेतदुद्वर्त्तनं परम् ॥
आरग्वधस्य पत्राणि आरनालेन पेषयेत् ।
दद्रुकिट्टिमकुष्ठानि हन्ति सिध्मानमेव च ॥
उष्णा पीता वाकुची च कुष्ठजित् क्षीरभोजिनः
।
तिलाज्यत्रिफलाक्षौद्रव्योषभल्लातशर्क्कराः ॥
वृष्यः सप्तसमो मेध्यः कुष्ठहा कामचारिणः ।
विडङ्गत्रिफलाकृष्णाचूर्णं लीढं समाक्षिकम् ॥
हन्ति कुष्ठं कृमीन्मेहनाडीव्रणभगन्दरान् ।

इत्युणादिकोषः ॥

**कुषीदं**, क्ली, (कुसीद + पृषोदरात् षत्वम् ।) कुसी-

दम् । इत्यमरटीकायां भरतः ॥

**कुष्ठं**, क्ली, (कुष्णाति रोगम् । कुष् + “हनि कुषीति” ।

उणां २ । २ । इति क्थन् ।) विषभेदः । इति
हेमचन्द्रः ॥ औषधविशेषः । कुड् इति भाषा ।
तत्पर्य्यायः । व्याधिः २ पारिभव्यम् ३ वाप्यम् ४
पाकलम् ५ उत्पलम् ६ । इत्यमरः । २ । ४ ।
१२६ ॥ आप्यम् ७ । इति तट्टीका ॥ जरणम् ८ ।
इति रत्नमाला ॥ रुजा ९ गदः १० आमयः ११
पारिभद्रकम् १२ रामम् १३ वाणीरजम् १४
पावनम् १५ कुत्सितम् १६ पद्मकम् १७ गदा-
ह्वम् १८ गदाह्वयम् १९ कौवेरम् २० भासु-
रम् २१ । इति शब्दरत्नावली ॥ काकलम् २२
नीरुजम् २३ । इति जटाधरः ॥
“कुष्ठं रोगाह्वयं वाप्यं पारिभव्यं तथोत्पलम् ।
कुष्ठमुष्णं कटु स्वादु शुक्रलं तिक्तकं लघु ।
हन्ति वातास्रवीसर्पकासकुष्ठमरुत्कफान्” ॥ * ॥
अथ कुष्ठभेदपुष्करमूलम् ।
“उक्तं पुष्करमूलन्तु पुष्करं पौष्करञ्च तत् ।
पद्मपत्रञ्च काश्मीरं कुष्ठभेदमिदं जगुः ॥
पौष्करं कटुकं तिक्तमुष्णं वातकफज्वरान् ।
हन्तिशोथारुचिश्वासान् विशेषात् पार्श्वशूलनुत्” ॥
इति भावप्रकाशः ॥ अस्य गुणाः । कटुत्वम् ।
श्वेतं रक्तं स्थिरं स्त्यानं स्निग्धमुत्सन्नमण्डलम् ।
कृच्छ्रमन्योन्यसंयुक्तं कुष्टं मण्डलमुच्यते ॥ ३ ॥
कर्कशं रक्तपर्य्यन्तमन्तःश्यावं सवेदनम् ।
यदृष्यजिह्वासंस्थानमृष्यजिह्वं तदुच्यते ॥ ४ ॥
सश्वेतं रक्तपर्य्यन्तं पुण्डरीकदलोपमम् ।
सोत्सेधञ्च सरागञ्च पुण्डरीकं प्रचक्षते ॥ ५ ॥
श्वेतं ताम्रं तनु च यद्रजो घृष्टं विमुञ्चति ।
प्रायश्चोरसि तत् सिध्ममलावुकुसुमोपमम् ॥ ६ ॥
यत् काकणन्तिकावर्णमपाकं तीव्रवेदनम् ।
त्रिदोषलिङ्गं तत्कुष्ठं काकणं नैव सिध्यति” ॥ ७ ॥
एकादशक्षुद्रकुष्ठानि यथा ।
“अस्वेदनं महाकास्तु यन्मत्स्यसकलोपमम् ।
तदेव कुष्ठं चर्म्माख्यं बहुलं हस्तिचर्म्मवत् ॥ १ ॥
श्यावं किणखरस्पर्शं परुषं किटिमं स्मृतम् ॥ २ ॥
वैपादिकं पाणिपादस्फुटितं तीव्रवेदनम् ॥ ३ ॥
कण्डुमद्भिः सरागैश्च गण्डैरलसकं चितम् ॥ ४ ॥
सकण्डुरागपिडकं दद्रुमण्डलमुद्गतम् ॥ ५ ॥
रक्तं सशूलं कण्डूमत् सस्फोटं यद्गलत्यपि ।
तच्चर्म्मदलमाख्यातं संस्पर्शासहमुच्यते ॥ ६ ॥
सूक्ष्मा बह्व्यः पिडकाः स्राववत्यः पामेत्युक्ताः कण्डुमत्यः सदाहाः । ७ ॥
सैव स्फोटैस्तीव्रदाहैरुपेता
यः खादेदभयारिष्टामलकानि तथा निशा ॥
स जयेत् सर्व्वकुष्ठानि मासादूर्द्ध्वं न संशयः ।
दह्यमानाच्युतः कुम्भे मूलगे खदिराङ्कुरः ॥
साक्षधात्रीरसक्षौद्रं हन्यात् कुष्ठं रसायनम् ।
धात्रीखदिरयोः क्वाथं पीत्वावल्गुजसंयुतम् ॥
शङ्खेन्दुधवलं श्वित्रं हन्ति तूर्णं न संशयः ।
पीत्वा भल्लातकं तैलं मांसव्याधिं जयेन्नरः ॥
सेवितं खादिरं वारि पानाद्यैः कुष्ठजिद्भवेत् ।
वासा गुडूची त्रिफला पटोलञ्च करञ्जकम् ॥
निम्बासनं कृष्णवेत्रं क्वाथकल्केन यद्युतम् ।
वज्रकं तद्धरेत् कुष्ठं शतं वर्षाणि जीवति ॥
स्वरसेन च दूर्व्वायाः पचेत्तैलं चतुर्गुणम् ।
कच्छुर्विचर्च्चिका पामा अभ्यङ्गादेव नश्यति ॥
द्रुमत्वगर्ककुष्ठानि लवणानि च मूत्रकम् ।
गण्डीरिका चित्रकैस्तैस्तैलं कुष्ठव्रणादिनुत्” ॥
इति गारुडे १७५ अध्यायः ॥
“कुष्ठेन्द्रयवसिद्धार्थनिशा दूर्व्वा च कुष्ठजित्” ॥
इति तत्रैव १७५ अध्यायः ॥

| | | |
|---|---|---|
| उष्णत्वम् । तिक्तत्वम् । कफवायुकुष्ठरोगविसर्प-विषकण्डूखर्ज्जूदद्रुनाशित्वम् । कान्तिकारित्वञ्च । इति राजनिर्घण्टः ॥ श्वासकासज्वरहिक्कानाशित्वम् । इति राजवल्लभः ॥ * ॥ स्वनामख्यातरोगः । कुट् इति भाषा । तत्पर्य्यायः । | | |

"करवीरं भृङ्गराजं लवणं कुष्ठमर्द्दकम् ।
चतुर्गुणेन मूत्रेण पचेत्तैलं हरेच्च तत् ।
पामां विचर्च्चिकां कुष्ठमभ्यङ्गाद्धि व्रणानि वै"
॥
"सैन्यवञ्च विडङ्गानि सोसराजी तु सर्षपाः ।
रजनी द्वे विषाञ्चैव गोमूत्रेण च पेषयेत् ।
कुष्ठनाशश्च तत्क्षेपान्निम्बपत्रादनात्तथा" ॥
इति च गारुडे १८७ अध्यायः ॥
"सतक्रकाशमूलं वा वाकुचीमूलमेव वा ।
काञ्जिकेन च वाकुच्या मूलं वै कुष्ठरोगनुत्"
॥
इति गारुडे १८८ अध्यायः ॥
"पीतं वृश्चिकमूलन्तु पर्य्युषितजलेन वै ।
सार्द्धं विनाशयेद्दाहज्वरञ्च परमेश्वर ! ॥
शिखायाञ्चैव तद्बद्धं भवेदैकाहिकादिनुत् ।
एतत् सकाञ्जिकं पीतं वातकुष्ठज्वरादिनुत्"
॥
इति गारुडे १९३ अध्यायः ॥
"नित्यं निम्बदलानाञ्च चूर्णमामलकस्य च ।
प्रत्यूषे भक्षयेच्चैव तस्य कुष्ठं विनश्यति ॥
हरीतकी विडङ्गञ्च हरिद्रा सितसर्षपाः ।
सोमराजस्य वीजानि करञ्जस्य च सैन्धवम् ।
गोमूत्रपिष्टान्येतानि कुष्ठरोगहराणि च" ॥
वीजानि स्थाने मूलानि वा पाठः ।
इति तत्रैव १९४ अध्यायः ॥
"चन्दनं कुङ्कुमं मांसी कर्पूरो जातिपत्रिका ।
जातीकक्कोलपूगाणां लवङ्गस्य फलानि च
॥
अगुरूशीरकस्तूर्य्यः कुष्ठं तगरनालिका ।
गोरोचना प्रियङ्गुश्च वोलं मदनकं नखम् ॥
सरलः सप्तपर्णश्च लाक्षा चामलकी तथा ।
कर्व्वूरकः पद्मकञ्च एतैस्तैलं प्रसाधितम् ।
प्रस्वेदमलदौर्गन्ध्यकण्डूकुष्ठहरं परम्" ॥
इति गारुडे १९८ अध्यायः ॥ * ॥
अथ वैद्यकमते कुष्ठचिकित्सामाह ।
"वातोत्तरेषु सर्पिर्व्वमनं श्लेष्मोत्तरेषु कुष्ठेषु ।
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनं श्रेष्ठम् ॥
पुराणधान्यानि च जाङ्गलानि
मांसानि मुद्गाश्च पटोलयुक्ताः ।
यवादयश्चात्र हिताः पुराणा
घृतानि शाकानि च तिक्तकानि" ॥

एडगजकुष्ठसैन्धवसौवीरसर्षपैः क्रिमिघ्नैः ।
क्रिमिसिध्मदद्रुमण्डलकुष्ठानां नाशनो लेपः
॥
पर्णानि पिष्ट्वा चतुरङ्गुलस्य
तक्रेण पर्णान्यथ काकमाच्याः ।
तैलाक्तगात्रस्य नरस्य कुष्ठा-
न्युद्वर्त्तयेदश्वहनच्छदैश्च ॥ ५ ॥
विडङ्गसैन्धवशिवाशशिरेखा-
सर्षपकरञ्जरजनीभिश्च ।
गोजलपिष्टो लेपः
कुष्ठहरो दिवसनाथसमः ॥ ६ ॥
कासमर्द्दकमूलञ्च काञ्जिकेन प्रपेषितम् ।
दद्रुकिट्टिमकुष्ठानि जयेदेतत्प्रलेपनात् ॥ ७ ॥
आरग्वधस्य पत्राणि आरनालेन पेषयेत् ।
दद्रुकिट्टिमकुष्ठानि हन्ति सिध्मानमेव च ॥ ८
॥
चक्राह्वयं स्नुहीक्षीरं भावितं मूत्रसंयुतम् ।
रवितप्तं हि किञ्चित्तु लेपनं किट्टिमापहम् ॥ ९
॥
शिखरीरसेन सुपिष्टं मूलकवीजं प्रलेपतः
सिध्म ।
क्षारेण वा कदल्या रजनीमिश्रेण नाशयति ॥
१० ॥
॥ ११ ॥
सक्षारं गन्धकं लेपात् कटुतैलेन सिध्मजित्
॥
कासमर्द्दकवीजानि मूलकानां तथैव च ॥
१२ ॥ १३ ॥
गन्धाश्वचूर्णमिश्राणि सिध्मनां परमौषधम् ॥
उपदेशात् काञ्जिकपिष्टैर्लेपः ॥ १४ ॥
गन्धपाषाणचूर्णेन यवक्षारेण लेपितम् ।
सिध्मनाशं व्रजत्याशु कटुतैलयुतेन च ॥
द्वयं समं कटुतैलेन लेपः ॥ १५ ॥
कुष्ठं मूलकवीजं प्रियङ्गवः सर्षपास्तथा
रजनी ।
एतत् केशरषष्ठं निहन्ति बहुवार्षिकं सिध्म ॥
१६ ॥
नीलकुरुण्टकपत्रैरालिप्य गात्रमतिबहुशः ।
लिम्पेन्मूलकवीजैः पिष्टैस्तक्रेण
सिध्मनाशाय ॥ १७ ॥

क्षारद्वयं लाङ्गलिकाञ्च पक्त्वा ॥
स्नुह्यर्कदुग्धं घनमायसस्थं
शलाकया तद्विदधीत लेपम् ।
कुष्ठे किलासे तिलकालके च
अशेषदुर्नामसचर्म्मकीले ॥
भल्लातका द्वीपि चित्रकं तन्मूलम् ॥
एषां समभागचूर्णं सिजार्कयोः क्षीरे दत्त्वा
किञ्चित् पाकं कुर्य्यात् । अथ वा क्षीरद्वयं चतु-
र्गुणं चूर्णं पादिकं लेपयोग्यं पाकं कुर्य्यात् ।
शला-
कया कुष्ठस्थाने दद्यात् ॥ २४ ॥
"स्नुक्काण्डशुशिरे दग्ध्वा गृहधूमं ससैन्धवम्
।
अन्तर्धूमं तैलयुक्तं लेपाद्धन्ति विचर्च्चिकाम्"
॥
सिजनलके सैन्धवगृहधूमं समभागं प्रपूर्य्य
स्थाल्य-
भ्यन्तरे कृत्वा शरावेण पिधाय दग्ध्वा पिष्ट्वा
कटुतैलेन लेपः ॥ २५ ॥
"स्नुक्काण्डे सर्षपात् कल्कः
कुकूलानलपाचितः ।
लेपाद्विचर्च्चिकां हन्ति रागवेगं इव त्रपाम्" ॥
सिजनलके राइकल्कं प्रपूर्य्य शुष्कगोमयाग्नौ
दग्ध्वा कटुतैलेन लेपः ॥ २६ ॥
"नारिकेलोदरे न्यस्तस्तण्डुलः पूतिता गतः ।
लेपाद्विपादिकां हन्ति चिरकालानुबन्धिनीम्॥
२७
तिलकुसुमलवणगोजलकटुतैलं लौहभाजने
कृत्वा ।
शोषितमर्कमयूखैः पादस्फुटनं निहन्ति
लेपेन" ॥ २८
"उन्मत्तकस्य वीजेन माणकक्षारवारिणा ।
कटुतैलं विपक्तव्यं शीघ्रं हन्ति विपादिकाम्"
॥
कटुतैल शं ४ भाणनालपत्राणां क्षार पल ६४
जल शं ६४ शेष शं १६ कल्क धुस्तूरवीज
पल
८ । उन्मत्ततैलम् ॥ २९ ॥
"अवल्गुजं कासमर्द्दं चक्रमर्द्दं निशायुगम् ।
माणिमन्थञ्च तुल्यांशं मस्तुकाञ्जिकपेषितम् ॥

तन्त्रान्तरे।
“पुराणाः शालिगोधूममुद्गाद्याः कुष्ठिनो हिताः।
तिक्तशाकं जाङ्गलञ्च पानादौ खदिरोदकम्॥
ये लेपाः कुष्ठानां यज्यन्ते निर्गतास्रदोषाणाम्।
संशोधिताशयानां सद्यः सिद्धिर्भवेत्तेषाम्॥
दूर्व्वाऽभयासैन्धवचक्रमर्द्द-
कुठेरकाः काञ्जिकतक्रपिष्टाः।
एभिः प्रलेपैरपि बद्धमूलां
कण्डूञ्च दद्रुञ्च निवारयन्ति॥
तुल्यो रसः शालतरोस्तुषेण
सचक्रमर्द्दोऽप्यभयाविमिश्रः।
पानीयभुक्तेन तदम्लपिष्टो
लेपः कृतो दद्रुगजेन्द्रसिंहः॥
विडङ्गैडगजाकुष्ठनिशासिन्धूत्थसषपैः।
धान्याम्लपिष्टैर्लेपोऽयं दद्रुकुष्ठविनाशनः॥

एडगजातिलसर्षपकुष्ठं
मागधिकालवणत्रयमस्तु।
पूतिकृतं दिवसत्रयमेतद्धन्ति
विचर्च्चिकदद्रुककुष्ठम्
॥ १८ ॥
सिन्दूरमरिचचूर्णं महिषीनबनीतसंयुतं बहुशः।
लेपान्निहन्ति पामां तैलं करवीरसिद्धं वा॥
१९ ॥ २० ॥
पारदं शङ्खगन्धञ्च शिलाचोत्तरवारुणी।
प्रपून्नाडश्च सर्पाक्षिमेघनादाग्निलाङ्गली॥
उत्तरवारुणी, राखालशशा इति ख्याता॥
भल्लातं गृहधूमञ्च मुनिगुञ्जा स्नुहीपयः।
अरिष्टञ्च गुडः क्षौद्रं वागुजीवीजतुल्यकम्॥
गोमूत्रैरारनालैर्व्वा पिष्ट्वा लेपञ्च कारयेत्।
दद्रुमण्डलकण्डूञ्च विचर्च्चिञ्च विनाशयेत्॥
२१ ॥
मनःशिलाले मरिचञ्च तैल-
मार्कं पयः कुष्ठहरः प्रलेपः॥ २२ ॥
विषवरुणहरिद्राचित्रकागारधूम-
मनलमरिचदूर्व्वाक्षीरमर्क्कस्नुहीभ्याम्।
दहति पतितमात्रात् कुष्ठजातीरशेषाः।
कुलिशमिव सरोषाच्छक्रहस्ताद्विमुक्तम्॥
अत्र अनलं भल्लातकः॥ २३ ॥
भल्लातका द्वीपि सुधार्कमूलं
गुञ्जाफलत्र्यूषणशङ्खचूर्णम्।
तुत्थं सकुष्ठं लवणानि पञ्च

कण्डूं कच्छूं जयत्युग्रां सिद्ध एष प्रयोगराट्॥
३० ॥
कोमलसिंहास्यदलं सनिशं सुरभीजलेन पिष्टम्।
दिवसत्रयेण नियतं क्षपयति कच्छूं विलेपनतः
॥ ३१
“वायस्येडगजाकुष्ठकृष्णाभिर्गुडिका कृता।
वस्तमूत्रेण संपिष्ट्वा लेपाच्छ्वित्रविनाशिनी” ॥
समभागचूर्णं छागमूत्रेण पिष्ट्वा गुडिका कार्य्या।
तेनैव लेपः॥ ३२ ॥
“पूतिकार्कस्नुक्नरेन्द्रद्रुमाणां
मूत्रैः पिष्ट्वा पल्लवाः सौमनाश्च।
लेपाच्छ्वित्रं हन्ति दद्रुव्रणांश्च
कुष्ठान्यर्शांस्यस्रनाडीव्रणांश्च’ ॥
सौमना जातीपत्री॥ सर्व्वेषां पल्लवान् गोमूत्रेण पिष्ट्वा लेपो देयः॥ ३३ ॥
“गजचित्रव्याघ्रचर्म्ममसीतैलविलेपनात्।
श्वित्रं नाशं व्रजेत् किं वा पूतिकीटविलेपनात्”
॥
गजचर्म्म चित्ररोमव्याघ्रचर्म्म अनयोर्भस्म कटु-
तैलञ्च लेपः। अथवा पादुडियाकीटं पिष्ट्वा लेपः॥
३४ ॥ ३५ ॥ “कुडवोऽवल्गुजवीजात् हरिताल-
चतुर्थभागसंमिश्रः। गवां मूत्रेण पिष्टः स्ववर्ण-
करणः परं श्वित्रे” ॥ आयुर्व्वेदसारेऽपि।
“कुडवो वागुजीवीजात् हरितालपलान्वितः।
गवां मूत्रेण संपिष्य लेपनात् श्वित्रनाशनम्॥
३६ ॥

धात्रीखदिरयोः क्वाथं पीत्वा च मधुसंयुतम् ।
शङ्खकुन्देन्दुधवलं जयेच्छित्रं न संशयः ॥ ३७ ॥
धात्रीखदिरयोः क्वाथमवल्गुजरजोऽन्वितम्।
पीत्वा शङ्खेन्दुकुन्दाभं हन्ति श्वित्रं न संशयः ॥ ३८ ॥
क्षारे सुदग्धे गजलण्डजे च
गजस्य मूत्रेण बहुश्रुते च ।
द्रोणप्रमाणं दशभागयुक्तं
दत्त्वा पचेत् वीजमवल्गुजस्य ॥
एतद्यदा चिक्वणतामुपैति
तदाशु सिद्धां गुडिकां प्रकुर्य्यात् ।
श्वित्रं प्रलिम्पेदथ तेन घृष्टं
तदा व्रजत्याशु स्ववर्णभावम् ॥ ३९ ॥
श्वेतजयन्तीमूलं पीतं पिष्टञ्च पयसैव ।
श्वित्रं निहन्ति नियतं रविवारे वैद्यनाथाज्ञा ॥ ४० ॥
गुञ्जाफलाग्निचूर्णन्तु लेपितं श्वेतकुष्ठनुत् ।
शिलापामार्गभस्मापि लिप्त्वा श्वित्रं विनाशयेत् ॥
४१ ॥ ४२ ॥
एरण्डतुलसीवीजं वागुजी चक्रमर्द्दकम् ।
तिक्तकोषातकीवीजं कृष्णाङ्कोठस्य वीजकम् ॥
गोमूत्रदधिदुग्धैश्च पचेदप्याजमूत्रकैः ।
कल्कं दत्त्वा शिला काशी पथ्या कुष्ठं विडङ्गकम् ॥
कटुतैलञ्च तल्लेपाद्धृष्ट्वा घृष्ट्वा विलेपनैः ।
पञ्चाननमिदं तैलं श्वेतकुष्ठकुलापहम्” ॥
कुटुतैल शं ४
क्वाथ्यएरण्डवीजादीनांमिलित्वा शं

यः खादेदभयारिष्टमरिष्टामलकानिवा ।
स जयेत् सर्व्वकुष्ठानि मासादूद्र्ध्वं न संशयः ॥ ५१ ॥ ५२ ॥
निम्बस्य पत्रं मूलानि सत्वक्पुष्पफलानि च ।
चूर्णितानि घृतक्षौद्रसंयुतानि दिने दिने ॥
लिह्यात् पिबेद्वा मूत्रेण संयक्तान्युदकेन वा ।
मदिरामलतोयेन पयसा वा यथाबलम् ॥
भुञ्जीत घृतयूषाद्यैः शाल्यन्नं पयसापि वा ।
सर्व्वकुष्ठविसर्पार्शोनाडीदुष्टव्रणानपि ॥
कामलाञ्च गदानन्यांस्तथा पित्तकफास्रजान् ।
संवत्सरप्रयोगेण सर्व्ववर्ज्यविवर्ज्जितः ॥
जयत्येतत् पञ्चनिम्बं रसायनमनुत्तमम्’ ॥
इति पञ्चनिम्बम् ॥ ५३ ॥
“पुष्पकाले च पुष्पाणि फलकाले फलानि च ।
संचूर्ण्य पिचुमर्द्दस्य त्वङ्मूलानि दलानि च ॥
द्विरंशानि समाहृत्य भागिकानि प्रकल्पयेत् ।
त्रिफलात्र्युषणं ब्रह्मी श्वदंष्ट्रारुष्कराग्निकाः ॥
विडङ्गसारवाराहीलौहचूर्णामृताःसमाः ।
हरिद्राद्वयावल्गुजव्याधिघाताःसशर्कराः ॥
कुष्ठेन्द्रयवपाठाश्च कृत्वा चूर्णं सुसंयुतम् ।
खदिरासननिम्बानां घनक्वाथेन भावयेत् ॥
सप्तधा पञ्चनिम्बञ्च मार्करस्वरसेन च ।
स्निग्धशुद्धतनुर्धीमान्योजयेच्च शुभे दिने ॥
अधुना तिक्तहविषा खदिरासनवारिणा ।
सेव्यमुष्णाम्बुना वापि कोलवृद्ध्या पलं पिबेत् ॥
तिक्तहविषा वक्ष्यमाणपञ्चतिक्तघृतेन ॥
जीर्णे च भोजनं कार्य्यं स्निग्धं लघु हितञ्च यत् ॥
विचर्च्चिकोडुम्बरपुण्डरीक-
कपालदद्रूकिटिमालसादि।
शतारुविस्फोटविसर्पपामां
कुष्ठप्रकोपं विविधं किलासम् ॥
भगन्दरं श्लीपदवातरक्तं
जडान्ध्यनाडीव्रणशीर्षरोगान् ।
सर्व्वप्रमेहान् प्रदरांश्च सर्व्वान्
दंष्ट्राविषं मूलविषं निहन्ति ॥
स्थूलोदरः सिंहकृशोदरश्च
सुश्लिष्टसन्धिर्मधुनोपयोगात् ।
समीपयोगादपि ये दशन्ति
सर्पादयो यान्ति विनाशमाशु ॥
जीवेच्चिरं व्याधिजराविमुक्तः
शुभे रतश्चन्द्रसमानकान्तिः” ॥

पीनसञ्च प्रतिश्यायं प्लीहानमुदरं तथा ॥
एतान् रोगान्निहन्त्याशु भास्करस्तिमिरं यथा” ॥
अमृतागुग्गुलुः । अयं वातरक्ते प्रशस्तः ॥ ५५ ॥
“निम्बामृतावृषपटोलनिदिग्धिकानां
भागान् पृथग्दशपलान् विपचेद्घटेऽपाम् ।
अष्टांशशेषितरसेन सुनिश्चितेन
प्रस्थं घृतस्य विपचेत् पिचुभागकल्कैः ॥
पाठाविडङ्गसुरदारुगजोपकुल्या-
द्विक्षारनागरनिशामिषिचव्यकुष्ठैः ।
तेजोवतीमरिचवत्सकदीप्यकाग्नि
रोहिण्यरुष्करवचाकणमूलयुक्तैः ॥
मञ्जिष्ठयातिविषया वरया यमान्या
संशुद्धगुग्गुलुपलैरपि पञ्चसंख्यैः ।
तत् सेवितं विधमति प्रबलं समीरं
सन्ध्यस्थिमज्जगतमप्यथकुष्ठमीदृक् ॥
नाडीव्रणार्व्वुदभगन्दरगण्डमाला-
जत्रूद्र्ध्वसर्व्वगदगुल्मगुदोत्थमेहान् ।
यक्ष्मारुचिश्वसनपीनसकासशोष
हृत् पाण्डुरोगगलविद्रधिवातरक्तम्’ ॥
इति पञ्चतिक्तघृतगुग्गुलुः ॥ ५६ ॥ * ॥
“श्वेतकरवीरमूलं विषांशकं साधितं गोमूत्रे ।
चर्म्मदलसिध्मपामाविस्फोटक्रिमिकिटिमजित्तैलम्” ॥
तिलतैल ४ शेर, गोमूत्र १६ शेर, श्वेतकरवीर-मूल ४ पल, विष ४ पल । करवीरतैलम् ॥ ५७ ॥
“मृतस्य कृष्णसर्पस्य शिरःपुच्छान्त्रवर्ज्जितम् ।
अन्तर्धूमं कृतं भस्म वागुजीतैलमिश्रितम् ।
एतेन मर्दनादेव गलत्कुष्ठं विनश्यति” ॥
इति कृष्णसर्पतैलम् ॥ ५८ ॥
“सूतकं गन्धकं कुष्ठं सप्तपर्णञ्च चित्रकम् ।
सिन्दूरञ्च रसोनञ्च हरितालमवल्गुजम् ॥
आरग्वधस्य वीजानि जीर्णताम्रं मनःशिला ।
प्रत्येकं कर्षमेतेषां कटुतैलं पलाष्टकम् ॥
साधयेत् सूर्य्यतापेन सर्व्वकुष्ठविनाशनम् ।
श्वित्रमौडुम्बरं कच्छूं मांसवृद्धिं भगन्दरम् ॥
विचर्च्चिकाञ्च पामानं वातरक्तं सुदारुणम् ।
गम्भीरञ्च तथोत्तानं नाशयेत् यस्य म्रक्षणात् ॥
कुष्ठराक्षसनामेदं स्ववर्णकरणं परम् ।
अश्विभ्यां निर्म्मितं ह्येतत् लोकानुग्रहहेतवे” ॥
इति कुष्ठराक्षसतैलम् ॥ ५९ ॥
“सूतं गन्धं शिला तालं काञ्जिकैर्मर्दयेद्दिनम् ।

२ कल्कशिलाकाश्यादीनांमिलित्वा शं १ ।
इति श्वित्रे पञ्चाननतैलम् ॥ ४३ ॥
“आरग्वधं धवं कुष्ठं हरितालं मनःशिला ।
रजनीद्वयसंयुक्तं पचेत्तैलं विधानवित् ॥
एतेनाभ्यञ्जनादेव क्षिप्रं श्वित्रं विनश्यति” ॥
तिलतैल शं ४ पा शं १६
कल्कमिलित शं १ ।
इति आरग्वधाद्यं तैलम् ॥ ४४ ॥
“शुद्धसूतं समं गन्धं त्रिफला भृङ्गवागुजी ।
भल्लातकं तिलः कृष्णो निम्बवीजं समं समम् ।
मर्द्दयेद्भृङ्गजद्रावैः शोष्यं पेष्यं पुनः पुनः ॥
इत्थं कुर्य्युस्त्रिसप्ताहं रसः श्वेतारिको भवेत् ।
मध्वाज्यैर्निष्कमात्रन्तु खादेत् श्वेतं विनाशयेत्” ॥
इति श्वेतारिः ॥ ४५ ॥
“पिबति सकटुतैलं गन्धपाषाणचूर्णं रविकिरणसुतप्तं पामनो यः पलार्द्धम् ।
त्रिदिनतदनुसिक्तः क्षीरभोजी च शीघ्रं भवति कनकदीप्तिः कामरूपी मनुष्यः” ॥ ६६ ॥
“तीव्रेण कुष्टेन परीतदेहो यः सोमराजीं नियमेन खादेत् ।
संवत्सरं कृष्णतिलद्वितीयां स सोमराजीं वपुषाऽतिशेते ॥ ४७ ॥
घर्म्मसेवी कदुष्णेन वारिणा वागुजीं पिबेत् ।
क्षीरभोजी च सप्ताहात् कुष्ठी कुष्ठं व्यपोहति ॥ ४८
अवल्गुजवीजकर्षं पीत्वा कोष्णेन वारिणा ।
भोजनं सर्पिषा कार्य्यं सर्व्वकुष्ठविनाशनम् ॥ ४९ ॥
छिन्नायाः स्वरसो वापि सेव्यमानो यथाबलम् ।

इति पञ्चनिम्बः ॥ ५४ ॥
“अमृतायाः पलशतं दशमूल्यास्तथा शतम् ।
पाठामूर्व्वाबलातिक्तादार्व्वीगन्धर्व्वहस्तकाः ॥
एषां दशपलान् भागान् विभीतक्याः शतं हरेत् ।
द्वे शते च हरीतक्या आमलक्यास्तथा शतम् ॥
जलद्रोणद्वये पक्त्वा अष्टभागावशेषितम् ।
प्रस्थं गुग्गुलुमाहृत्य प्रस्थार्द्धञ्च घृतं पचेत् ॥
पाकसिद्धौ प्रदातव्यं गुडूच्याः सत्त्वमेव च ।
पलद्वयं तथा शुण्ठ्याः पिप्पल्याश्च पलद्वयम् ॥
ततो मात्रां प्रयुञ्जीत ज्ञात्वा दोषबलाबलम् ।
अष्टादशसु कुष्ठेषु वातरक्तगदेषु च ॥
कामलामामवातञ्च अग्निमान्द्यं भगन्दरम् ।

तल्लिप्तवस्त्रवर्त्तीं तां तैलाक्तां ज्वालयेदधः ॥
स्थिते पात्रे पचेत्तैलं गृहीत्वा लेपयेत्ततः ।
कुष्ठस्थानं विशेषेण सर्व्वकुष्ठं हरत्यलम् ॥
इदं कालानलं तैलं वातकुष्ठे महौषधम्” ॥

> “एषां समं काञ्जिकं सर्व्वेषां द्विगुणं तिलतैलंम् ।

कल्कं वस्त्रे संलिप्य संशोष्य वर्त्तीं कुर्य्यात् तां तैलाक्तां सम्दंशिकया ज्वालयित्वा उपरि तैलं दत्त्वा ततः पतितं तैलं अधःपात्रे गृह्णीयात् ततः कुष्ठस्थाने दद्यात्” ॥
इति कुष्ठकालानलतैलम् ॥ ६० ॥
“सिन्दूरामृततालगैरिकहलाजाजीगदत्र्यूषणै-
र्हत्पाषाणरसोनवाणदहनस्नुह्यर्कदुग्धैर्निशा ।

| | | |
|---|---|---|
| जीर्णे घृतेन भुञ्जीत मुद्गयूषौदनेन च ॥<br>अपि पूतिशरीरोऽपि दिव्यरूपी भवेन्नरः ॥ ५० ॥ | | |

राजीगन्धकहिङ्गुभिः परिमितैः शुक्त्या पचेत् सार्षपं
तैलं प्रस्थमितं घृतस्य कुडवं पात्रं तथार्कद्रसम्" ॥
हृत्पाषाणं मनःशिला ।
"गोमूत्रञ्च तथा विनीय सकलं पूतं शृतं रोगिण दद्यात् कुष्ठविचर्च्चिकादिषु भिषक् नाम्ना तु षड्-
विन्दुकम्" ॥ इति षड्विन्दुतैलम् ॥ ६१ ॥
"सर्व्वकुष्ठे सर्व्वव्रणे सर्व्वत्र गलिते क्षते ।
नक्तमालं हरिद्रे द्वे अर्कं तगरमेव च ॥
करवीरवचाकुष्ठं आस्फोता रक्तचन्दनम् ।
मालती सिन्धुवारञ्च मञ्जिष्ठा सप्तपर्णकम् ॥
एषामर्द्धपलान् भागान् विषस्य द्विपलं तथा ।
चतुर्गुणे गवां मूत्रे तैलप्रस्थं विपाचयेत् ॥
श्वित्रविस्फोटकिटिमकीटलूताविचर्च्चिकाः ।
कण्डूकच्छुरिकायाश्च ये व्रणा विषदूषिताः ॥
ते सर्व्वे नाशमायान्ति तमः सूर्य्योदये यथा ॥
विषतैलमिदं नाम्ना सर्व्वब्रणविशोधनम्" ॥
इति विषतैलम् ॥ ६२ ॥
"सोमराजी हरिद्रे द्वे सर्षपाः कुष्ठमेव च ।
करञ्जैडगजावीजं पत्राण्यारग्वधस्य च ॥
विपचेत् सार्षपं तैलं नाडीदुष्टव्रणापहम् ।
अनेनाशु प्रशाम्यन्ति कुष्ठान्यष्टादशैव तु ॥
नीलिका पिडका व्यङ्गा गम्भीरं वातशोणितम् ।
कण्डूकच्छुप्रशमनं दद्रुपामानिवारणम्" ॥
इति सोमराजीतैलम् ॥ ६३ ॥
"सोमराजीतुलाक्वाथे यथा दद्रुहनस्य च ।
गोमूत्रस्य तथा पात्रे कल्कं दत्त्वा विचक्षणः ॥
विपचेत् कार्षिकैभर्गैः कटुतैलाढकं भिषक् ।
चित्रकं लाङ्गलाख्या च नागरं कुष्ठमेव च ॥
हरिद्रा नक्तमालञ्च हरितालं मनःशिला ।
आस्फोतार्ककरवीरं सप्तपर्णञ्च गोमयम् ॥
खदिरो निम्बपत्रञ्च मरिचं कासमर्द्दकम् ।
एतानि श्लक्ष्णपिष्टानि कल्कं दत्त्वा विचक्षणः ॥
हन्ति सर्व्वाणि कुष्ठानि क्रिमिदुष्टव्रणानि च ।
किटिमं दद्रुजातञ्च गात्रवैवर्ण्यमेव च ॥
विशीर्णचर्म्ममांसादिदृढीकरणमुत्तमम् ।
पाण्डुरोगं तथा कण्डूं विसर्पं हन्ति दारुणम् ।
मृत्पात्रे लौहपात्रे वा शनैर्मृद्वग्निना पचेत् ।
पक्त्वा तैलवरं ह्येतन्म्रक्षयेत् कुष्ठकान् व्रणान् ॥
पामाविचर्च्चिकादद्रुकण्डूविस्फोटकानि च ।
वलयः पलितं छाया नली व्यङ्गं तथैव च ॥
अभ्यङ्गेन प्रणश्यन्ति सौकुमार्य्यञ्च जायते ।
प्रथमे वयसि स्त्रीणां यासां नस्यन्तु दीयते ॥
परामपि जरां प्राप्य न स्तना यान्ति नम्रताम् ।
बलीवर्द्दस्तुरङ्गो वा गजो वा वायुपीडितः ॥
त्रिभिरभ्यञ्जनैर्गाढं भवेन्मारुतविक्रमः" ॥

कटुतैल १६ शेर, गोमूत्र ६४ शेर, कल्कार्थं

मरिचादीनां प्रत्येकं १ पल, विष २ पल ।
इति वृहन्मरिचाद्यं तैलम् ॥ ६६ ॥
"सप्तपर्णस्तथा काली गुडूची पिचुमर्द्दकम् ।
शिरीषञ्च महातिक्ता जया तुम्बी मृगादनी" ॥
काली कालिः लता ॥
"निशादशपलान् मागान् जलद्रोणे विपाचयेत् ।
तैलप्रस्थं समादाय गोमूत्रञ्च चतुर्गुणम् ॥
आरग्वधो भृङ्गराजो जयाधुस्तूररात्रयः ।
इन्द्राशनाग्निखर्ज्जूरं गोमयार्कस्नुहीच्छदम् ॥
तैलतुल्यं प्रदातव्यं स्वरसञ्च पृथक् पृथक् ।
महाकालवचा ब्रह्मी तुम्ब्यग्निगृहपुत्त्रिका ॥
कुचेला कुलका रात्रिर्मेघनामा च ग्रन्थिका ।
सम्पाकमर्कक्षीरञ्च कासुन्देश्वरमूलकम्" ॥

कासुन्दमूलकं कालकासुन्दामूलम् । कासुन्दः

खरमर्द्दकमिति क्वचित्पाठः तन्मते ईश्वरमूलस्थाने अपामार्गमूलम् ॥
"आचु जिङ्गी महातिक्ता विशाला छपिपत्रकम् ।
प्रक्षालयित्वा विसृजेत् प्रवाते ॥
शुष्कं पुनस्तद्विदलीकृतञ्च
ततः पचेदप्सु चतुर्गुणासु ।
तत्पादशेषं परिपूतशीतम्
क्षीरेण तुल्येन पुनः पचेत्तु ॥
तदर्द्धया शर्करया विकीर्णं
ततः खजेनोन्मथितं विधाय ।
तत् सप्तरात्रादुपजातवीर्य्यं
सुधारसादप्यधिकत्वमेति ॥
प्रातर्विबुद्धः कृतदेवकार्य्यो
मात्राञ्च खादेत् स्वशरीरयोग्याम् ।
न चान्नपाने परिहार्य्यमस्ति
न चातपे चाध्वनि मैथुने च ॥
यथेष्टचेष्टो विहितोपयोगा-
द्भवेन्नरः काञ्चनराशिगौरः ।
अनन्यमेधा नरसिंहतेजा
हृष्टेन्द्रियोऽव्याहतबुद्धिसत्त्वः ॥
दन्ताश्च शीर्णाः पुनरुद्भवन्ति
केशाश्च शुक्लाः पुनरेव दिव्याः ।
नीलाञ्जनालिप्रतिमा भवन्ति
त्वचो विवर्णाः पुनरेव दिव्याः ॥
विशीर्णकर्णाङ्गुलिनासिकोऽपि
क्रिम्यर्द्दितो भिन्नगलोऽपि कुष्ठी ।
सोऽपि क्रमादङ्कुरिताग्रशाख-
स्तरुर्यथा भाति नभोऽम्बुसिक्तः ॥
उष्ट्रान् मयूरान् जयति स्वरेण
बलेन नागस्तुरगो जवेन ।
रसायनस्यास्य नरः प्रसादा-
द्वृहस्पतेरप्यधिकोऽपि बुद्ध्या ॥
ग्रन्थान् विशालान् पुनरुक्तिदोषान्
गृह्णाति शीघ्रं न च नश्यते तु ।
कुर्व्वन्निमं कल्पमनल्पबुद्धि-
र्जीवेन्नरो वर्षशतानि पञ्च ॥
राजा ह्ययं सर्व्वरसायनानां
चकार योगं भगवानगस्त्यः" ॥
इति अमृतभल्लातकम् ॥ ६८ ॥
"निम्बं गोपारुणा कठ्वी त्रायन्ती त्रिफला घनम् ।
पप्पटारण्डजानन्तावचाखदिरचन्दनम्" ॥
अरण्डजं हाकुचवीजम् ।

ये चान्ये त्वग्गता रोगास्तांस्तु शीघ्रं व्यपोहति”
॥
इति वृहत्सोमराजीतैलम् ॥ ६४ ॥
“मरिचालशिलाब्दार्कपयोऽश्वारिजटात्रिवृत्।
शकृद्रसविशालारुक् निशायुक्दारुचन्दनैः ॥
कटुतैलात् पचेत् प्रस्थं द्व्यक्षैर्विषपलान्वितैः ।
सगोमूत्रैस्तदभ्यङ्गाद्दद्रुश्वित्रविनाशनम्॥
सर्व्वेष्वपि च कुष्ठेषु तैलमेतत् प्रशस्यते” ॥
इति मरिचाद्यं तैलम् ॥ ६५ ॥
“मरिचं त्रिवृता दन्ती क्षीरमार्कं शकृद्रसः ।
देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम् ॥
विशाला करवीरञ्च हरितालं मनःशिला ।
चित्रको लाङ्गलाख्या च विडङ्गं चक्रमर्द्दकम् ॥
शिरीषं कुटजो निम्बः सप्तपर्णः स्नुहामृता ।
शम्पाको नक्तमालोऽब्दं खदिरं पिप्पली वचा ॥
ज्योतिष्मती च पलिका विषस्य द्विपलं भवेत् ।
आढकं कटुतैलस्य गोमूत्रञ्च चतुर्गुणम् ॥

पूतिकास्फोत मूर्व्वा च सप्तपर्णं शिरीषकम्”
॥
छपिपत्रकं विछातिपत्रम् ॥
“कुटजं पिचुमर्द्दश्च महानिम्बं तथैव च ।
गुडूची चन्द्ररेखा च सोमराट् चक्रमर्द्दकम् ॥
तुम्बुरुभृङ्गषष्ट्याह्वकन्दकंकटुरोहिणी ।
शटीदार्व्वी त्रिवृत् पद्मग्रन्थिकागुरुपुष्करम्
॥
कर्पूरं कट्फलं मांसी मुरैलाटरुषाभयम् ।
एतेषां कार्षिकैः कल्कैर्नाम्ना कन्दर्प उच्यते
॥
अष्टादशविधं कुष्ठं ग्रन्थिमज्जगतं तथा ।
हस्तपादाङ्गुलीसन्धिगलितं सर्व्वसन्धिषु ॥
अधिकानि च मांसानि यस्य गात्रे भविष्यति
।
नासाकर्णास्यवैकल्यं भेकाकारवपुस्त्वचम्
॥
श्वेतं रक्तं तथा कुष्ठं नानावर्णं विपादिकम् ।
श्वित्रं बहुविधञ्चैव वातशोणितमेव च ॥
कपालं क्रिमिजं कुष्ठं कण्डूदद्रुविचर्च्चिकाम्
।
पामादिस्फोटकादीनि क्रिमिवृद्धिं तथैव च
॥
कटीदद्रुं मसूरीञ्च किटिमं रक्तमण्डलम् ।
कुष्ठमौडुम्बरं पद्मं महापद्मं तथैव च ॥
गलगण्डार्व्वुदं हन्याद्गण्डमालां भगन्दरम् ।
वातजं पित्तजञ्चैव श्लेष्मजं सान्निपातिकम्
॥
एकोल्वणं द्व्युल्वणञ्च कुष्ठं हन्यान्न
संशयः” ॥
इति कन्दर्पसारतैलम् ॥ ६७ ॥ * ॥
“भल्लातकानां पवनोद्धतानां
वृन्तव्युदानाञ्च यदाढकं स्यात् ।
तच्चेष्टकाचूर्णकणैर्विघृष्य

“पाठा शुण्ठी शटी भार्गी वासा
भूनिम्बवत्सकम् ।
श्यामेन्द्रवारुणी मूर्व्वा विडङ्गेन्द्रविषानलम् ॥
हस्तिकर्णामृता द्रेका पटोलं रजनीद्वयम् ।
कर्णारग्वधसप्ताह्वकृष्णवेत्रोच्चटाफलम्” ॥
द्रेका महानिम्बम् । कर्णारग्वधः
शोणालिफल
मज्जा ।
“भूकन्दं तृणपर्णञ्च जिङ्गी पद्माटमूषली ।
विश्वक्सेना च कैटर्य्यं शरपुङ्खा क्षीरकञ्चुकी
॥
एषां द्विपलिकान् भागान् जलद्रोणे
विपाचयेत् ।
अष्टमागावशेषन्तु कषायमवतारयेत् ॥
भल्लातकसहस्राणि त्रीणि छित्वार्म्मणेऽम्भसि
।
चतुर्भागावशेषन्तु कषायमवतारयेत् ॥
तौ कषायौ समादाय वस्त्रपूतौ च कारयेत् ।

गुडस्य तु तुला ताभ्यां कषायं विपचेत् भिषक् ॥
भल्लातकसहस्राणां मज्जानं तत्र दापयेत् ।
त्रिकटुत्रिफलामुस्तसैन्धवानां पलं पलम् ॥
दीपकस्य पलञ्चैव चातुर्ज्जातं पलांशिकम् ।
संचूर्ण्य प्रक्षिपेदत्र कन्दकञ्च चतुःपलम् ॥
स्निग्धभाण्डे विनिक्षिप्य स्थापयेत् कुशलो भिषक् ।
महाभल्लातको ह्येष महादेवेन निर्म्मितः ॥
जगतस्तु हितार्थाय जयेच्छीघ्रं न संशयः ।
श्वित्रमौडम्बरं दद्रुमृष्यजिह्वं सकाकणम् ॥
पुण्डरीकञ्च चर्म्माख्यं विष्फोटं मण्डलं तथा ।
कण्डं कपालं कण्डूञ्च पामानं सविपादिकम् ॥
वातरक्तमुदावर्त्तं पाण्डुरोगं ब्रणक्रिमीन् ।
अर्शांसि षट्प्रकाराणि कासं श्वासं भगन्दरम् ॥
सदाभ्यासेन पलितमामवातं सुदुस्तरम् ।
अनुपाने प्रयोक्तव्यं छिन्नाक्वाथं पयोऽथवा ।
भोजने च सदा भोज्यमुष्णञ्चान्नं विशेषतः” ॥
इति महाभल्लातकगुडः ॥ ६९ ॥
“हुताशमुखसंशुद्धं पलमेकं रसस्य वै ।
पलं लौहस्य ताम्रस्य पलं भल्लातकस्य च ॥
गन्धकञ्च पलञ्चैकमभ्रकस्य च गुग्गुलोः ।
हरीतकीविभीतक्योश्चूर्णं कर्षद्वयं द्वयोः ॥
अष्टमाषाधिकं तत्र धात्र्याः पाणितलानि षट् ।
गलिते स्फुटिते चैव विपुले मण्डले तथा ॥
विचर्च्चिकादद्रुपामासर्व्वकुष्ठप्रशान्तये” ॥
इति उदयभास्करः ॥ ७१ ॥
“तालकं वंशपत्राख्यं कुष्माण्डसलिले क्षिपेत् ।
सप्तधा वा त्रिधा वापि दध्नाम्लेन तथैव च ॥
शोधयित्वा पुनः शुष्कं चूर्णयेत् तण्डुलाकृतिः ।
ततः शरावके यन्त्रे स्थापयेत् कुशलो भिषक् ॥
वदरीपल्लवोत्थेन लेपनं कारयेत् ततः ।
अरुणाभमधःपात्रं तावज्ज्वाला प्रदीयते ॥
स्वाङ्गशीतं समुद्धृत्य माणिक्याभो भवेद्रसः ।
घृतक्षौद्रेण संमर्द्य खादयेद्रक्तिकाद्वयम् ॥
संपूज्य देवदेवेशं कुष्ठरोगाद्विमुच्यते ।
स्फुटितं गलितं कुष्ठं वातरक्तं भगन्दरम् ॥
नाडीव्रणं व्रणं दुष्टमुपदंशं विचर्च्चिकाम् । [णान् ।
नासास्यसम्भवान् रोगान् क्षतान् हन्यात् सुदारु-
पुण्डरीकञ्च चर्स्माख्यं विस्फोटं मण्डलं तथा” ॥
इति रसमाणिक्यम् ॥ ७२ ॥
“कुष्माण्डत्रिफलातैलकन्याकाञ्जिकभावितम् ।
तालकं तुल्यगन्धं स्याद्दर्द्धपारदमर्द्दितम् ॥
अजाक्षीरेण निम्बूककन्यातोयैर्दिनत्रयम् ।
प्रत्येकं भावयेत् शुष्कं चक्रिकाकारतां गतम् ॥
विपचेत् हण्डिकामध्ये पलाशक्षारमध्यगम् ।
यामान् द्वादश शीतेऽस्मिन् प्रयोज्यं रक्तिकाद्वयम् ॥
हन्त्यष्टादशकुष्ठानि रोमविध्वंसनं तथा ।
द्विविधं वातरक्तञ्च नाडीदुष्टव्रणानि च” ॥
इति तालकेश्वरः ॥ ७३ ॥
“दद्रुघ्नवाणाङ्घ्रिरसं दत्त्वा तालं सुचूर्णितम्
पुनः पुनश्च संमर्द्य शुष्कं कृत्वा पुटे दहेत्” ॥
वाणाङ्घ्रिरसं शरपुङ्खपत्ररसम् ॥
दृढस्थाल्यां घृतं क्षारं पालाशञ्चाप्युपर्य्यधः ।
ततो ज्वाला प्रदातव्या दिनरात्रे मृतं भवेत् ॥
शुक्लवर्णो यदा च स्यादग्नौ दत्ते न धूमकम् ।
तदा ज्ञातं मृतं तालं सर्व्वकुष्ठविनाशनम् ॥
गलत् कुष्ठं वातरक्तं ताम्रवर्णञ्च मण्डलम् ।
रक्तमण्डलमत्युग्रं स्फुटितं गलितं तथा ॥
बहुरूपं सर्व्वजातं नाशयेदविकल्पतः ।
दुष्टव्रणञ्च वीसर्पं त्वग्दोषञ्च विनाशयेत् ॥
दृष्टो वारसहस्रञ्च रोगवारणकेशरी” ॥
इति महातालकेश्वरः ॥ ७५ ॥
“कुष्माण्डत्रिफलातैलकन्याकाञ्जिकभावितम्
तालुकं तुल्यगन्धं स्याद्दर्द्धपारदमर्द्दितम् ॥
अजाक्षीरेण निम्बूककन्यातोयैर्दिनत्रयम् ।
प्रत्येकं भावयेच्छुष्कं चक्रिकाकारतां गतम् ॥
विपचेत् हण्डिकामध्ये पलाशक्षारमध्यगम् ।
यामान् द्वादशशीतेऽस्मिन् प्रयोज्यं रक्तिकाद्वयम् ।
हन्त्यष्टादश कुष्ठानि रोमविध्वंसनादिकम्” ॥
इति तालकेश्वरः ॥ ७६ ॥
इति गोविन्दविशारदकृतभैषज्यरत्नावल्यां कुष्ट-चिकित्सा समाप्ता ॥

**कुष्ठकेतुः**, पुं, (कुष्ठस्तन्नाशकः केतुरिव ।) भूभ्याहुल्यः ।
इति राजनिर्घण्टः ॥

**कुष्ठगन्धि**, क्ली, (कुष्ठस्येव गन्धोऽस्य । समासे इच् ।)
एलवालुकम् । इति राजनिर्घण्टः ॥

**कुष्ठघ्नः**, पुं, (कुष्ठं हन्ति इति । हन् + टक् ।) हिता-
वली । इति राजनिर्घण्टः ॥

**कुष्ठघ्नी**, स्त्री, (कुष्ठघ्न + स्त्रियां टित्वात् ङीप् ।) काको-
दुम्बरिका । इति राजनिर्घण्टः ॥
(वाकुची । अस्याः पर्य्याया यथा ।
“अवल्गुजो वाकुची स्यात् सोमराजी सुपर्णिका ।
शशिलेखा कृष्णफला सोमापूति फलीति च ॥
सोमवल्ली कालमेषी कुष्ठघ्नी च प्रकीर्त्तिता” ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
अस्या व्यवहारो यथा --
“कुटजाग्निनिम्बनृपतरुखदिरासनसप्तपर्णनिर्यूहे ।
सिद्धा मधु-घृतयुक्ताः कुष्ठघ्नीर्भक्षयेदभयाः” ॥
इति वाभटे चिकित्सास्थाने १९ अध्याये ॥)

**कुष्ठनाशनः**, पुं, (कुष्ठं नाशयतीति । नश् + णिच् +
ल्युः ।) वाराहीकन्दः । गौरसर्षपः । इति राज-
निर्घण्टः । क्षीरीशवृक्षः । इति रत्नमाला ॥

घृतं द्व्यष्टगुणं लोहात्
द्वात्रिंशत्त्रिफलाजलम् ॥
एकं कृत्वा पचेत् पात्रे लौहे च
विधिपूर्ब्बकम् ।
पाकमेतस्य जानीयात् कुशलो
लोहपाकवित् ॥
विबुद्धः प्रातरुत्थाय गुरुदेवद्विजार्च्चकः
।
रक्तिकादिक्रमेणैव घृतभ्रामरमर्द्दितम् ॥
लौहे लौहस्य दण्डेन
कुर्य्यादितद्रशायनम् ।
अनुपानञ्च कुर्व्वीत नारिकेलोदकं पयः
॥
सर्व्वकुष्ठहरं श्रेष्ठं वलीपलितनाशनम् ।
पाण्डुमेहामवातघ्नं वातरक्तरुजापहम् ॥
क्रिमिशोथाश्मरीशूलकुर्नामवातरोगनुत् ।
क्षयं हन्ति महाश्वासमत्यर्थं शुक्रवर्द्धनम्
।
अग्निसन्दीपनं हृद्यं
कान्त्यायुर्बलवृद्धिकृत् ॥
विवर्ज्ज्य शाकाम्लमपि स्त्रियञ्च
सेव्यो रसो जाङ्गलजाविकानाम् ।
शाल्योदनं षष्ठिकमाज्यमुद्ग-
क्षौद्रं गुडः क्षीरमिह क्रियायाम् ॥
शालिञ्च गुर्व्वादिवृहत्करञ्ज-
शिलाजतुक्षौद्रयुतं पयश्च ।
सर्पिर्युतं भक्षयतो विहङ्गान्
प्रपूर्य्यते दुर्ब्बलदेहधातुः ॥
कृष्णस्य पक्षस्य सिते तु पक्षे
त्रिपञ्चरात्रेण यथा शशाङ्कः” ॥
पाकलक्षणं यथा, --
“वस्त्रे निष्पीडितं सूक्ष्मे स्थूलतन्तौ घने
दृढे ।
समुद्रं जायते व्यक्तं न निःसरति
सन्धिभिः ।
न च शब्दायते बह्नौ तदा सिद्धिं
विनिर्द्दिशेत्” ॥
इति अमृताङ्कुरलौहम् ॥ ७० ॥
“गन्धकेन हतं ताम्रं दशभागं समुद्धरेत् ।
उषणं पञ्चभागं स्यादमृतञ्च द्विभागिकम्
॥
दातव्यं कुष्ठिने सम्यगनुपानस्य योगतः
।
शीतपित्तमहादद्रुघ्नुच्छुन्दरविनाशनम् ।
पथ्यं मसूरचणकं मुद्गसूपं यथेच्छया” ॥
इति तालकेश्वरः ॥ ७४ ॥ अतिदृष्टफलोऽयम्
।
“संमर्द्य तालकं शुष्कं वंशपत्राख्यमुच्चकैः ।
कुष्माण्डनीरे सम्भाव्य त्रिदिनं शोधयेत् पुनः
॥
घृतकन्याद्रवैर्भूयो भावयेच्च दिनत्रयम् ।
संमर्द्य काञ्जिकेनैव दध्नाम्लेन विमर्द्दयेत् ॥
संमर्द्य चूर्णसलिले रसे पौनर्नवे पुनः ।
त्रिदिनं मर्द्दयित्वा तु कारयेत् स्वटिकाकृतिम्
॥
स्थाल्यां दृढतरायान्तु पलाशक्षारसञ्चयम् ।
उपर्य्यधस्तालकस्य क्षारं दत्त्वा शरावकैः ॥
पिधाय लेपयेत् यत्नात् पूरयेत् क्षारसञ्चयम् ।
पुनरूर्द्ध्वं शरावेण लेपयेत्तत् दृढं ततः ॥
द्वात्रिंशद्यामपर्य्यन्तं वह्निज्वाला प्रदीयते ।
एवं सिद्धेन तालेन गन्धतुल्ये न मेलयेत् ॥
द्वयोस्तुल्यं जीर्णताम्रं वालुकायन्त्रगं पचेत् ।
अयं तालेश्वरो नाम रसः परमदुर्लभः ॥
हन्त्यष्टादश कुष्ठानि वातशोणितनाशनः ।

**कुष्ठनाशिनी**, स्त्री, (कुष्ठं नाशयतीति । नश + णिच्
णिनिः । स्त्रियां नान्तत्वात् ङीप् ।) सोमराजिः ।
इति रत्नमाला ॥

**कुष्ठलं**, क्ली, (कु कुत्सितं स्थलम् । अम्बष्ठादित्वात्
षत्वम् ।) कुत्सितस्थलम् । इति संक्षिप्तसारव्या-
करणम् ॥

**कुष्ठसूदनः**, पुं, (कुष्ठं सूदयति नाशयतीति । सूदि +
ल्युः ।) आरग्बधः । इति राजनिर्घण्टः ॥
(आरग्बधशब्दे गुणपर्य्याया अस्य ज्ञातव्याः ॥)

**कुष्ठहन्ता**, [तृ] पुं, (कुष्ठं हन्ति इति । कुष्ठ + हन्
+ तृच् ।) हस्तिकन्दः । इति राजनिर्घण्टः ॥

**कुष्ठहन्त्री**, स्त्री, (कुष्ठहन्तृ + स्त्रियां ऋदन्तात्
ङीप् ।) वाकुची । इति राजनिर्घण्टः । हाकुच्
इति भाषा ॥

**कुष्ठहृत्**, पुं, (कुष्ठं हरतीति । कुष्ठ + हृ + क्विप
तुगागमश्च ।) खदिरवृक्षः । इति त्रिकाण्डशेषः ॥

**कुष्ठारिः**, पुं, (कुष्ठस्य अरिः शत्रः नाशक इत्यर्थः ।)

विट्खदिरः । इति शब्दचन्द्रिका ॥ पटोलः ।
आदित्यपत्रः । खदिरः । गन्धकः । इति राज-
निर्घण्टः ॥

**कुष्ठी**, [न्] त्रि, (कुष्ठः अस्यास्तीति । कुष्ठ +
इनिः ।) कुष्ठरोगयुक्तः । (यथा, मनुः । ३ । ७ ।
"क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च" ॥)

**कुष्मलं**, क्ली, (कुष् + "कुटिकुषिभ्यां क्मलन्" । उणां
४ । १८६ । इति क्मलन् ।) छेदनम् ।
विकशितम् ।
इत्युणादिकोषः ॥

**कुष्माण्डः**, पुं स्त्री, शिवस्य गणदेवताभेदः । (यथा,
विष्णुपुराणे । १ । १२ । १३ ।
"कुष्माण्डा विविधै रूपैः सहेन्द्रेण महामुने ! ।
समाधिभङ्गमत्यन्तं आरब्धाः कर्त्तुमातुराः" ॥)
भ्रूणविशेषः इति मेदिनी ॥ (कुष्माण्डाकारत्वात्
शिवगणभ्रूणयोस्तथात्वम्॥ कु ईषत् उष्मा
अण्डेषु वीजेषु यस्य ।) वृहत्फललताविशेषः ।
कुम्डा इति कोहडा इति च भाषा । तत्प-
र्य्यायः । धृणावासः २ तिमिषः ३ ग्राम्यकर्कटी
४ । इति त्रिकाण्डशेषः ॥ कुष्माण्डकः ५
कर्कारुः
६ । इत्यमरः ॥ पुष्पफलः ७ । इति रत्नमाला ॥
कुष्माण्डी ८ कर्कोटिका ९ कुम्भाण्डी १०
वृहत्फला
११ सुफला १२ कुञ्चफला १३ नागपुष्पफला
१४
शुनी १५ कूष्माण्डः १६ शिखिवर्द्धकः १७ ।
इति
शब्दरत्नावली ॥ कूष्माण्डकः १८ ।
इत्यमरटीका ॥
अपि च ।
"कुष्माण्डं स्यात् पुष्पफलं पीतपुष्पं वृहत्फलम् ।
कुष्माण्डं वृंहणं वृष्यं गुरुपित्तास्रवातनुत् ॥
बालं पित्तापहं शीतं मध्यमं कफकारकम् ।
वृद्धं नातिहिमं स्वादु सक्षारं दीपनं लघु ॥
वस्तिशुद्धिकरं चेतोरोगहृत् सर्व्वदोषजित्" ॥ * ॥
अथ कोहण्डी ।
"कुष्माण्डी तु भृशं लघ्वी कर्क्कारुरपि कीर्त्तिता
।
"घृते तप्ते विनिःक्षिप्य खण्डान्
कुष्माण्डसम्भवान् ।
वार्त्ताकुविधिना कुर्य्यात्
प्रलेहतलनादिकम् ॥
वेसवाराम्लतक्रेण धृते तलनपूर्ब्बकम् ।
कुष्माण्डकं फलं सिद्धं विदुः सुस्वादु
सुन्दरम्" ॥
नागविशेषः । यथा, महाभारते । १ । २५
। ११ ।
"नागः शङ्खमुखश्चैव तथा
कुष्माण्डकोऽपरः" ॥)

**कुष्माण्डी**, स्त्री, (कुष्माण्ड + स्त्रियां जातित्वात्
ङीष् ।)
उमा । (मसिना ।) ओषधी । इति
हेमचन्द्रः ॥
कर्कारुः । इति राजनिर्घण्टः ॥
यागक्रियाविशेषः ।
इति शब्दरत्नावली ॥

**कुस** इ कि भासने । इति कविकल्पद्रुमः ॥ (चुरां-
पक्षे भ्वां--परं--अकं--सेट्--इदित् ।)
पञ्चमस्वरी ।
इ कुंस्यते । किं कुंसयति कुंसति ।
भासनं दीप्तिः ।
इति दुर्गादासः ॥

**कुस** य इर् श्लिषि । इति कविकल्पद्रुमः ॥ (दिवां-
परं--सकं--सेट् ।) य, कुस्यति बाला
कान्तम् । इर्
अकुसत् अकोसीत् । अस्मात्
पुषादित्वान्नित्यं ङ
इत्यन्ये । इति दुर्गादासः ॥

**कुसलं**, क्ली, (कुस् + कलच् ।) कुशलम् ।
इत्यमर-
टीका ॥

**कुसितः**, पुं, (कुस + "कुसेरुम्भोमेदेताः" । उणां
४ ।
१०६ । इति इतः ।) जनपदः । इति
सिद्धान्त-
कौमुद्यामुणादिवृत्तिः ॥

**कुसिदायी**, स्त्री, (स्त्रीत्यर्थे "वृषाकप्यग्निकुसित-
लब्धलाभः पितॄन् देवान् ब्राह्मणांश्चैव
पूजयेत् ।
ते तृप्तास्तस्य तद्दोषं शमयन्ति न संशयः ॥
वणिक् कुसीदो दद्यात्तु वस्त्रं गां
काञ्चनादिकम् ।
कृषीवलोऽन्नपानानि यानशय्यासनानि च ॥
पण्येभ्यो विंशतिं दत्त्वा पशुस्वर्णादिकं शतम्
।
पादेनायस्य पारक्यं कुर्य्यात्
सञ्चयमात्मवान् ॥
अर्द्धेन चात्मभरणं नित्यनैमित्तिकान्वितम् ।
पादञ्च प्रार्थमायस्य मूलभूतं विवर्द्धयेत् ॥
विद्या शिल्पं भृतिः सेवा गोरक्षं विपणिः
कृषिः ।
वृत्तिर्भैक्षं कुसीदञ्च दश जीवनहेतवः" ॥
इति गारुडे २१५ अध्यायः ॥ * ॥ गोतमः
।
"कृषिगोरक्षवाणिज्यञ्चास्वयंकृतं
कुसीदञ्चेति ।
कुसीदस्य पृथक् ग्रहणं
स्वयंकृतस्याभ्यनुज्ञानार्थम्" ॥
कुसीदं वृद्धिकर्म्मेति प्रदेशान्तरेऽभिधानात्
इति
कल्पतरुः ॥ वृहस्पतिः ।
"कुसीदं कृषिवाणिज्यं प्रकुर्व्वीतास्वयं
कृतम् ।
आपत्काले स्वयं कुर्व्वन् नैनसा युज्यते
द्विजः ॥
लब्धलाभः पितॄन् देवान् ब्राह्मणांश्चैव
भोजयेत् ।
ते तृप्तास्तस्य तं दोषं शमयन्ति न संशयः ॥
वणिक् कुसीदी दद्यात्तु वस्त्रगोकाञ्चनादिकम्
।
कृषीवलोऽन्नपानानि यानशय्यासनानि च ॥
पण्येभ्यो विंशकं दत्त्वा पशुस्वर्णादिकं शतम्
॥
वणिक् कुसीद्यदोषः स्यात्
ब्राह्मणानाञ्चपूजनात् ।
राज्ञे दत्त्वा तु षड्भागं देवतानाञ्च विंशकम् ॥
त्रिंशद्भागञ्च विप्राणां कृषिं कृत्वा न
दोषभाक्" ॥

कक्कारुर्ग्राहिणी शीता रक्तपित्तहरा गुरुः ।
पक्वा तिक्ताग्निजननी सक्षारा कफवातनुत्” ॥
इति भावप्रकाशः ॥ अस्य फलगुणाः । मूत्राघात-
प्रमेहकृच्छ्राश्मरीनाशित्वम् । विण्मूत्रग्लपनत्वम् ।
तृष्णार्त्तिशमनत्वम् । जीर्णाङ्गपुष्टिप्रदत्वम् । शुक्र-
वृद्धिकारित्वम् । स्वादुतरत्वम् । अरोचकहरत्वम्
।
बलकारित्वम् । पित्तापहत्वम् । वल्लीफलानां मध्ये
प्रवरत्वञ्च । इति राजनिर्घण्टः ॥ तस्य बालफल-
गुणः । पित्तहरत्वम् । मध्यमफलगुणौ । कफ-
कारित्वम् । अतिगुरुपाकित्वम् ॥ पक्वफलगुणाः
।
लघुपाकित्वम् । उष्णत्वम् । क्षाररसत्वम् । अग्नि-
दीपनत्वम् । वस्तिशोधनत्वम् । सर्व्वदोषनाशि-
त्वम् । हृद्यत्वम् । चित्तविकारिणः पथ्यत्वञ्च ॥
अस्य नाडिकागुणाः । क्षाररसत्वम् । मधुरत्वम् ।
गुरुत्वम् । रूक्षत्वम् । रुचिकारित्वम् । वायुकफा-
श्मरीशर्कराराेगनाशित्वञ्च ॥ अस्य मज्जगुणाः ।
शुक्रकारित्वम् । पित्तनाशित्वम् । वस्तिशोधन-
त्वञ्च । इति राजवल्लभः ॥

**कुष्माण्डकः**, पुं, (कुष्माण्ड + स्वार्थे कन् ।) कुष्माण्डः ।
इत्यमरः । २ । ४ । १५५ ॥ (यथा, भावप्रकाशे ।

कुसिदानामुदात्तः” । ४ । १ । ३७ ।
इति प्रकृतेरैकारा
देशो ङीप् च ।) कुसीदपत्नी । इति
जटाधरः ॥

**कुसिम्बी**, स्त्री, (कौ पृथिव्यां शिम्बीति ख्याता ।
पृषोदरात् सः ।) शिम्बी । इति
राजनिर्घण्टः ॥
(“कुसिम्बिवल्लीप्रभवास्तु शिम्बाः” ॥
इति सुश्रुते सूत्रस्थाने ४६ अध्याये ॥)

**कुसीदं**, क्ली, (कुस् + “कुसेरुम्भोमेदेताः” उणां । ४
१०६ । इति ईदप्रत्ययः । इह सूत्रे
तृतीयप्रत्ययो
ह्रस्वादिर्दोर्घादिश्चेति तन्त्रेणोपात्तः ।
वृषाकप्य-
ग्नीति सूत्रे ह्रस्व एवेति
वृत्तिकारहरदत्तादयः ।
यद्वा कुत्सितं निकृष्टरूपवृद्धिदानेनेत्यर्थः
सीदति-
अधोमर्णो यत्र । पृषोदरात् साधुः । यथा
वृह-
स्पत्युक्तौ “कुत्सितात् सीदतश्चैव
निर्विशङ्कैः प्रगृ-
ह्यते । चतुर्गुणं वाष्टगुणं
कुसीदाख्यमृणन्ततः” ॥)
ऋणदानजीविका । वृद्ध्याजीवनम् ।
सुद् वाडि
देओया इत्यादि भाषा । तत्पर्य्यायः ।
अर्थ
प्रयोगः २ वृद्धिजीविका ३ । इत्यमरः ।
२ । ९ ।
४ ॥ यथा, --
“कुसीदकृषिवाणिज्यं
प्रकुर्व्वीतास्वयंकृतम् ।
आपत्काले स्वयं कुर्व्वन्नैनसा युज्यते
द्विजः ॥
बहवो वर्त्तनोपाया ऋषिभिः
परिकीर्त्तिताः ।
सर्व्वेषामपि चैवैषां कुसीदमधिकं विदुः ॥
अनावृष्ट्या राजभयान्मूषिकाद्यैरुपद्रवैः
।

तथा, मनुः ।
“अशीतिभागं गृह्णीयात् मासाद्वार्द्धुषिकः
शतात् ।
द्विकं शतं वा गृह्णीयात् सतां धर्म्ममनुस्मरन्
॥
द्विकं शतञ्च गृह्णानो न भवत्यर्थकिल्विषी ।
शतकार्षापणे अशीतिभागं विंशतिं पणान्” ॥
द्विकं पुराणद्वयम् । एवंविधनियममतिक्रम्य
अनापदि स्वयमन्यद्वारा वा यः स्वाच्छन्द्येन
व्यव-
हरति तस्यैव प्रायश्चित्तम् । आपदि तु
स्वयंकरण
नियमातिक्रमे च न दोषः । इति प्रायश्चित्त-
विवेकः । इत्याह्निकाचारतत्त्वम् ॥ कुसीदिके
त्रि ।
इति मेदिनी ॥

**कुसीदायी**, स्त्री, (कुसीदः कुसीदजीवी तस्य पत्नी ।
मुग्धबोधमते ईप् ऐङ्च । पाणिन्यादिमते तु
कुसितकुसिदशब्दाभ्यां ह्रस्वमध्याभ्यामेव
ङीप् ऐच्च
इति विशेषः । तदा
“वृषाकप्यग्निकुसितकुसिदानामु
दात्तः” । ४ । १ ३७ । इति
प्रकृतेरैकारादेशो
ङीप् च ।) कुसीदपत्नी । इति जटाधरः ॥

**कुसीदिकः**, त्रि, (कुसीदं वृद्धिस्तदर्थं द्रव्यं कुसीदं तत्
प्रयच्छति । “कुसीददशैकादशात् ष्ठन्ष्ठचौ”
। ४ ।
४ । ३१ । इति ष्ठन् ।) वृद्धिजीवी ।
तत्पर्य्यायः ।
वार्द्धुषिकः २ वृद्ध्याजीवः ३ वार्द्धुषिः ४ ।
इत्यमरः ।
२ । ९ । ५ ॥ कुसीदः ५ । इति
शब्दरत्नावली ॥
कुसीदी ६ । यथा, आह्निकतत्त्वे ॥
“वणिक् कुसीद्यदोषः स्यात् ब्राह्मणानाञ्च
पूजनात्” ॥

**कुसुमं**, क्ली, (“कुसेरुम्भोमेदेताः” । उणां ४ । १०६
।
इति उमः । निपातनात् गुणाभावः ।) पुष्पम्
।

|  |  |  |
|---|---|---|
|  | कृष्यादिके भवेद्बाधा सा कुसीदे न विद्यते ॥<br>शुक्लपक्षे तथा कृष्णे रजन्यां दिवसेऽपि वा ।<br>उष्णे वर्षति शीते वा वद्र्ध्वनं न निवर्त्तते ॥<br>देशं गतानां या वृद्धिर्नानापण्योपजीविनाम्।<br>कुसीदं सर्व्वतः सम्यक् संस्थितस्यैव जायते ॥ | (यथा, ऋतुसंहारे वसन्तवर्णने ४ । |

"वापीजलानां मणिमेखलानां
शशाङ्कभासां प्रमदाजनानां ।
चूतद्रुमाणां कुसुमानतानां
ददाति सौरभ्यमयं वसन्तः" ॥
फलकुसुमविशेषाणां
द्रव्यान्तरसुलभत्वादिसूचकत्वं
दर्शितं यथा वृहत्संहितायां २९ अध्याये ।
"फलकुसुमसम्प्रवृद्धिं वनस्पतीनां विलोक्य विज्ञे-
यम् । सुलभत्वं द्रव्याणां निष्पत्तिश्चापि शस्यानाम्" ॥
केन कस्य वृद्धिर्ज्ञेया तदाह ।
"शालेन कलमशालीरक्ताशोकेन रक्तशालिश्च ।
पाण्डूकः क्षीरिकया नीलाशोकेन मसूरकः ॥
न्यग्रोधेन तु यवकस्तिन्दुकवृद्ध्या च षष्टिको भवति ।
अश्वत्थेन ज्ञेया निष्पत्तिः सर्व्वशस्यानाम् ॥
जम्बूभिस्तिलमाषाः शिरीषवृद्ध्या च कङ्गु निष्पत्तिः ।
गोधूमाश्च मधुकैर्यववृद्धिः सप्तपर्णेन ॥
अतिमुक्तककुन्दाभ्यां कर्पासं सर्षपान् वदेदसनैः ।
बदरीभिश्च कुलत्थांश्चिरविल्वेनादिशेन्मुद्गान् ॥
अतसीवेतसपुष्पैः पलाशकुसुमैश्च कोद्रवा ज्ञेयाः ।
तिलकेन शङ्खमौक्तिकरजतान्यथ चेङ्गुदेन शणः ॥
करिणश्च हस्तिकर्णै रादेश्या वाजिनोऽश्वकर्णेन ।
गावश्च पाटलाभिः कदलीभिरजाविकं भवति ॥
चम्पककुसुमैः कनकं विद्रुमसम्पच्च बन्धजीवेन ।
कुरुवकवृद्ध्या वज्रं वैदूर्य्यं नन्दिकावर्त्तैः ॥
विद्याच्च सिन्धुवारेण मौक्तिकं कुङ्कुमं कुसुम्भेन ।
रक्तोत्पलेन राजा मन्त्री नीलोत्पलेनोक्तः ॥
श्रेष्ठी सुवर्णपुष्पैः पद्मैर्विप्राः पुरोहिताः कुमुदैः ।
सौगन्धिकेन बलपतिरर्केण हिरण्यपरिवृद्धिः ॥
आम्रैः क्षेमं भल्लातकैर्भयं पीलुभिस्तथारोग्यम् ।
खदिरशमीभ्यां दुर्भिक्षमर्ज्जुनैः शोभना वृष्टिः ॥

**कुसुमाधिपः**, पुं, (कुसुमेषु कुसुमप्रधानवृक्षेषु अधिपः श्रेष्ठः ।) चम्पकवृक्षः । इति शब्दरत्नावली ॥
(चम्पकशब्देऽस्य विवृतिर्व्याख्येया ॥)

**कुसुमाधिराट्**, [ज्] पुं, (कुसुमेषु कुसुमप्रधानवृक्षेषु अधिराजते दूरव्यापिसुगन्धित्वात् । अधि + राज् + क्विप् ।) चम्पकवृक्षः । इति त्रिकाण्डशेषः ॥

**कुसुमायुधः**, पुं, (कुसुमानि आयुधानि अस्त्राणि अस्य ।) कामदेवः । इति शब्दरत्नावली ॥
(यथा, शाकुन्तले ३ याङ्के ।
"भगवन् मन्मथ ! कुतस्ते कुसुमायुधस्य सत-
स्तैक्ष्ण्यमेतत्" ॥ तथा, कुमारे च । ४ । ४० ।
"कुसुमायुधपत्नि ! दुर्लभ-
स्तव भर्त्ता न चिराद्भविष्यति" ॥ इति ॥)

**कुसुमालः**, पुं, (कुसुमवत् लोभनीयं द्रव्यादिकं आ-लाति सम्यक् अगोचरेणैव गृह्णाति । आ + ला + कः ।) चौरः । इति हारावली ॥

**कुसुमासवं**, क्ली, (कुसुमानां तद्रसानां आसवम् मद्यम् ।) मधु । इति राजनिर्घण्टः ॥

**कुसुमेषुः**, पुं, (कुसुमानि इषवो वाणा यस्य ।) काम-देवः । इत्यमरः । १ । १ । २७ ॥ (यथा, माघे । ८ । ७० ।
"स्वच्छाम्भः स्नपनविधौ तमङ्गमौष्ठ
स्ताम्बूलद्युतिविशदो विलासिनीनाम् ।
वासश्च प्रतनु विविक्तमस्त्वितीया-
नाकल्पो यदि कुसुमेषुणा न शून्यः" ॥)

**कुसुम्भं**, क्ली, (कौ पृथिव्यां सुम्भति शोभते दीप्तिं प्राप्नोतीत्यर्थः । कु + सुभि + अच् इदित्वात् नुम् ।)
स्वर्णम् । इति मेदिनी ॥ पुष्पंविशेषः । कुसुमफुल
"क्लप्तकेशनखश्मश्रुः पात्री दण्डी कुसुम्भवान्" ॥)
महारजनवृक्षः । इति राजनिर्घण्टः ॥
(कुसुम फुल इति भाषा ॥ अस्य पर्य्याया यथा ।
"पद्मोत्तमविकाशः स्यात् कुसुम्भः शरटस्तथा" ॥
इति वैद्यकरत्नमालायाम् ॥ अस्य गुणाश्च यथा ।
"कटुर्विपाके कटुकः कफघ्नो
विदाहिभावादहितः कुसुम्भः" ॥
इति सुश्रुते सूत्रस्थावे ४६ अध्याये ॥)

**कुसूः**, पुं, (कुस् + कूप्रत्ययः ।) किञ्चुलुकः । इति हेमचन्द्रः ॥

**कुसूलः**, पुं, (कुस् + कूलच् । यद्वा कुशूलः निपा-तनात् सत्वम् ।) कुशूलः । इति कटशब्दार्थे भरतः ॥

**कुसृतिः**, स्त्री, (कुत्सिता सृतिः उपायः व्यवहारो वा ।)
शाठ्यम् । इत्यमरः । १ । ७ । ३० ।
इन्द्रजालम् ।
इति हेमचन्द्रः । (कर्म्मधारये कुत्सितपथः । इति
व्युत्पत्तिलब्धोऽर्थः ॥ कुत्सिता सृतिराचारो
यस्येति विग्रहे, दुराचारे त्रि ।
यथा, भागवते ८ । २३ । ७ ।
"कस्माद्वयं कुसृतयः खलयोनयस्ते
दाक्षिण्यदृष्टिपदवीं भवतः प्रणीताः" ॥)

**कुस्तुभः**, पुं, (कुं भुवं स्तुभ्नोति । स्तुन्भ + मूला दित्वात् कः ।) विष्णुः । इत्यमरटीकायां भरता-दयः ॥ (समुद्रः । तस्येदं अण् कौस्तुभम् इति शब्दार्थचिन्तामणिः ।

**कुस्तुम्बरी**, स्त्री, (कुत्सिता तुम्बरी । पृषोदरात् सुटि

पिचुमर्द्दनाग कुसुमैः सुभिक्षमथमारुतः कपित्थेन ।
निचुलेनावृष्टिमयं व्याधिभयं भवति कुटजेन ॥
दूर्व्वाकुशकुमुमाभ्यां भिक्षुर्वह्निश्च कोविदारेण ।
श्यामालताभिवृद्‌ध्या बन्धक्यो वृद्धिमायान्ति” ॥)
फलम् । स्त्रीरजः । (यथा, ज्योतिषशास्त्रे ।
“यदा नार्य्याः पितुर्गेहे कुसुमस्तनसम्भवः” ॥)
नेत्ररोगविशेषः । इति मेदिनी ॥

**कुसुमपुरं**, क्ली, (कुसुमाख्यं पुरम् ।) पुरविशेषः ।

पाटना इति ख्यातम् । तत्पर्य्यायः । पाटलि-
पुत्त्रम् २ । इति हेमचन्द्रः ॥ (यथा, मुद्राराक्षसे
२याङ्के । “सखे ! विराधगुप्त ! वर्णयेदानीं कुसुम-
पुरवृत्तान्तशेषं अपि क्षमन्ते कुसुमपुरनिवासि-
नोऽस्मदुपजापं चन्द्रगुप्तप्रकृतयः” ॥)

**कुसुममध्यं**, क्ली, (कुसुमं मध्ये अभ्यन्तरे यस्य ।)

वृक्षविशेषः । इति शब्दचन्द्रिका । चालिता
गाछ इति भाषा ॥

**कुसुमाञ्जनं**, क्ली, (कुसुमाकारमञ्जनं शाकपार्थि-

वादिवत् समासः ।) कुसुमाकाररीतिमलसम्भव-
मञ्जनम् । तत्पर्य्यायः । पौष्पकम् २ रीतिपुष्पम् ३
पुष्पकेतु ४ । इत्यमरः । २ । ९ । १०३ ॥ राज-
निर्घण्टोक्तगुणपर्य्यायौ पुष्पाञ्जनशब्दे द्रष्टव्यौ ॥

**कुसुमात्मकं**, क्ली, (कुसुममेवात्मा स्वरूपं यस्य ।

कप् ।) कुङ्कुमम् । इति हारावली ॥

इति भाषा ॥ (यथा, ऋतुसंहारे वसन्तवर्णने ६ ।
“कुसुम्भरागारुणितैर्द्दुकूलै
र्नितम्बविम्बानि विलासिनीनाम् ।
तन्वंशुकैः कुङ्कुमरागगौरैः
अलङ्क्रियन्ते स्तनमण्डलानि” ॥)
तत्पर्य्यायः । कमलोत्तमम् २ वह्निशिखम् ३ महा-
रजनम् ४ । इत्यमरः । २ । ९ । १०६ ॥ पावकम् ५
पीतम् ६ पद्मोत्तरम् ७ रक्तम् ८ लोहितम् ९
वस्त्ररञ्जनम् १० अग्निशिखम् ११ । अस्य शाक-
गुणाः । मधुरत्वम् । कटुत्वम् । उष्णत्वम् । विण्मूत्र-
दोषमदनाशित्वम् । दृष्टिप्रसादनत्वम् । रुचि-
प्रदत्वम् । अग्निदीप्तिकारित्वञ्च । इति राज-
निर्घण्टः ॥ रूक्षत्वम् । कफवायुनाशित्वम् । पित्त-
कारित्वञ्च । तत्तैलगुणाः । कटुत्वम् । उष्णत्वम् ।
त्रिदोषकारित्वम् । गुरुत्वञ्च । इति राजवल्लभः ॥
कृमियक्ष्ममलनाशित्वम् ।
तेजोबलकारित्वञ्च ।
घर्षणेनास्य गुणाः । त्रिदोषकारित्वम् । पुष्टिबल-
क्षयकण्डूकारित्वञ्च । इति राजनिर्घण्टः ॥ (कुसु-
म्भशाकभक्षणे निषेधमाह तिथितत्त्वधृतोशनो-
वचने यथा, --
“कुसुम्भं ललिताशाकं वृन्ताकं पूतिकां तथा ।
भक्षयन् पतितस्तु स्यादपि वेदान्तगो द्विजः” ॥)

**कुसुम्भः**, पुं, (“कुसेरुम्भोमेदेताः” । उणां । ४ । १०६ ।

इति उम्भ प्रत्ययः ।) कमण्डलुः । इत्यमरः । ३ ।
३ । १३६ ॥ (यथा, मनौ । ६ । ५२ ।

साधुः ।) धन्याकम् । इत्यमरटीकायां भरतः ॥
(यथा, सुश्रुते सूत्रस्थाने ४६ अध्यायः ।
“आर्द्रा कुस्तुम्बरों कुर्य्यात्
स्वादुसौगन्ध्यहृद्यताम् ।
सा शुष्का मधुरापाके स्निग्धा
तृड्‌दाहनाशनी” ॥)

**कुस्तुम्बुरु**, क्ली, (कुत्सितं तुम्बति अर्द्दयति यत् ।

तुवि अर्द्दने + बाहुलकात् उरुप्रत्ययः । जाति-
निर्द्देशात् सुट् ।) धन्याकम् । इत्यमरः । २ । ९ । ३८ ॥
(अस्य पर्य्याया यथा, वैद्यकरत्नमालायाम् ॥
“धन्याकं धन्यक धान्यं कुस्तुम्बुरु धनीयकम् ।
धन्या कुस्तुम्बुरी चान्या वेषलोग्रा वितुन्नकम्” ॥)
(पुं, यक्षविशेषः । यथा, महाभारते । २ । १० । १५ ।
“कुस्तुम्बुरुः पिशाचश्च गजकर्णो विशालकः ।
एते चान्ये च बहवो यक्षाः शतसहस्रशः” ॥)

**कुस्म** क ङ मतीक्षिते । इति कविकल्पद्रुमः ॥ (चुरां-

आत्मं-सकं-सेट् ।) कुस्मिति च । (अत्र अकं) ह्रस्वी
दन्त्योपधः । मतीक्षितं बुद्धिपूर्ब्बकदर्शनम् । कुस्मित्
कुत्सितमीषद्धास्यम् । क ङ, कुस्मयते जनः । बुद्‌ध्या
पश्यति कुत्सितं स्मयते वेत्यर्थः । इति दुर्गादासः ॥

**कुह** त् क ङ विस्मायने । इति कविकल्पद्रुमः ॥

(अदन्तचुरां-आत्मं-सकं-सेट् ।) ह्रस्वी । विस्मा-
यनमन्यतो विस्मयोत्पादनम् । ङ कुहयते । कुह-
केनेन्द्रजालिको लोकं विस्मापयति इत्यर्थः ।

| | | स्यातां कुहयते विस्मापयते हेतुतो<br>भयमिति<br>भट्टमल्लदर्शनाद्विस्मापने इति पाठ इत्येके ।<br>इति<br>दुर्गादासः ॥<br>**कुह**, व्य, ("वा ह च छन्दसि" । ५ । ३ । १३ । |
|---|---|---|

इति हः । "कु तिहोः" । ७ । २ । १०४ ।
इति किमः
कुः ।) कुत्र । वैदिकप्रयोगोऽयम् । इति
व्याकरणम् ॥
(यथा, ऋग्वेदे २ । १२ । ५ । "यं स्मा
पृच्छन्ति
कुह सेतिघोरमुतेमाहुर्नैषो अस्तीत्येनम्" ॥)

**कुहः**, पुं, (कुहयति विस्माययति ऐश्वर्य्यप्रभावेन यः ।
कुह + णिच् + अच् ।) कुवेरः । इति
हेमचन्द्रः ॥
(क्ली, माया । कुहकम् । यथा, रामायणे २
। १०९ । २७ ।
सन्तुष्टपञ्चवर्गोऽहं लोकयात्रां प्रवाहये ।
"अकुहः श्रद्दधानः सन्
कार्य्याकार्य्यविचक्षणः" ॥)

**कुहकं**, क्ली, (कुह + "बहुलमन्यत्रापि" । उणां
२ । ३७ इति क्वुब् ।) माया ।
(यथा, भागवते । १ । १ । १ ।
"जन्माद्यस्य
यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्व-
राट् तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति
यत्
सूरयः । तेजोवारिमृदां यथा विनिमयो यत्र
त्रिसर्गो मृषा धाम्ना स्वेन सदा
निरस्तकुहकं सत्यं
परं धीमहि" ॥) तत्पर्य्यायः । इन्द्रजालम्
२ जा-
लम् ३ कुसृतिः ४ । तद्युक्ते त्रि ।
तत्पर्य्यायः ।
धूर्त्तः २ वञ्चकः ३ व्यंसकः ४
दाण्डाजिनिकः ५
मायी ६ जालिकः ७ । इति हेमचन्द्रः ॥
दाम्भिकः ।
इत्युणादिकोषः । (सर्पविशेषः । यथा,
विष्णु-
पुराणे १ । १७ । ३८ ॥
"इत्युक्तास्तेन ते सर्पाः
कुहकास्तक्षकान्धकाः ।
गह्वरम् । छिद्रम् । इति मेदिनी ॥
(यथा, प्रसन्न-
राघवे ।
'तैः किं मत्तकरीन्द्रकुम्भकुहरे
नारोपणीयाः कराः' ॥)
कर्णः कण्ठशब्दः । गलः ।
अन्तिकम् । इत्यजय-
पालः ॥

**कुहरः**, पुं, (कुह विस्मायने + कः । कुहं विस्मा-
यनं भयमित्यर्थः राति ददाति भयं
जनयतीति
भावः । रा + कः ।) नागविशेषः ।
इति मेदिनी ॥

**कुहरितं**, क्ली, (कुहरयति कण्ठशब्दं करोति ।
कुहर + कृतौ णिच् + भावे क्तः ।)
पिकालापः ।
रतिध्वनिः । इति मेदिनी ॥ रटितम्
। इति
विश्वः ॥

**कुहलिः**, पुं, (कु + हलि + इन् ।) पूगपुष्पिका । इति
त्रिकाण्डशेषः । पान इति भाषा ॥

**कुहा**, स्त्री, (कुह + कः टाप् च ।) कटुकी । इति
शब्दचन्द्रिका ॥
(वदरी ॥ इति भावप्रकाशस्य
पूर्ब्बखण्डे प्रथमे
भागे ॥ गुणाश्चास्य वदरशब्दे ज्ञेयाः
॥)

**कुहुः**, स्त्री, (कुह + मृगष्वादित्वात् कुः ।) कुहूः ।
इति हेमचन्द्रः ॥ (यथा, महाभारते ।
"कोकिलानां कुहुरवैः सुखैः
श्रुतिमनोहरैः" ॥)

**कुहूः**, स्त्री, (कुह + बाहुलकात् कूप्रत्ययः ।) नष्टेन्दु-
"पिक ! विधुस्तव हन्ति समं तम-
स्त्वमपि चन्द्रविरोधिकुहूरवः" ॥)

**कुहूलं**, क्ली, (कुह + ऊलक्प्रत्ययः ।) सशल्यभूरन्ध्रम् ।
इति जटाधरः ॥

**कुहेडिका**, स्त्री, (कु ईषत् हेडति वेष्टते नेत्रसञ्चा-
रोऽस्याम् । हेड़ ङ वेष्टने + इन् ततः स्वार्थेकन्
ततः टाप् ।) कुज्झटिका । इति भूरिप्रयोगः ॥

**कुहेडी**, स्त्री, (कु ईषत् हेडति वेष्टते नेत्रसञ्चारो
ऽस्याम् । हेड वेष्टने + "सर्व्वधातुभ्यः इन्" उणां
४ । ११७ । इति इन् । ततः कृदिकारान्तात् वा
ङीष् ।) कुहेडिका । इति शब्दमाला ॥

**कुहेलिका**, स्त्री, (कु ईषत् हेडति षेष्टते नेत्रसञ्चारो-
ऽस्याम् । हेडवेष्टने + इन् । ततः स्वार्थे कन् ।
टाप् । डस्य लत्वम् ।) कुज्झटिः । इति त्रिकाण्ड-
शेषः ॥

**कू** शि ङ आर्त्तस्वरे । इति कविकल्पद्रुमः ॥ (तुदां--
आत्मं--अकं--सेट् ।) शि ङ कुवते अकुविष्ट ।
इति दुर्गादासः ॥

**कू** ञ ग शंब्दे । इति कविकल्पद्रुमः ॥ (क्र्यां--उभं
--अकं--सेट् ।) ञ ग कूनाति कूनीते । ह्रस्वान्तो-
ऽयमिति जैमिनिः । दन्त्यनोपधोऽपि । नकार-
रहितो ह्रस्वान्त इति रमानाथः । दीर्घान्त इति
जौमराः । इति दुर्गादासः ॥

**कूः**, स्त्री, (कूनाति शब्दायते इति । कू + क्विप् ।)
पिशाची । इति शब्दमाला ॥

**कूकुदः**, त्रि, (कू शब्दे भावे क्विप् । कुवः शब्दस्य
कीर्त्तेरित्यर्थः कुं भूमिं आस्पदस्वरूपामिति
यावत् ददातीति । कूकु + दा + कः ।) सत्कृत्या-
लङ्कृतां कन्यां यो ददाति सः । इत्यमरः । ३ । १ ।
१४ ॥

**कूचः**, पुं, (कु शब्दे "कुवश्चट् दीर्घश्च" । उणां
४ । ९१ । इति चट् दीर्घश्च ।) स्तनः । इत्युणादि-
कोषः ॥

**कूचिका**, स्त्री, (कूच + टित्वात् ङीप् । स्वार्थे कन् ।)

अदशन्त समस्तेषु गात्रेष्वतिविषोल्वणाः”
॥)

**कुहकजीवी**, [न्] त्रि, (कुहकेन इन्द्रजालविद्यया
जीवति जीवनयात्रां सम्पादयतीति । कुहक
+ जीव्
+ णिनिः ।) मायाजीवी । इति महाभारतम्
॥
वाजिकर इति भाषा ॥ (सर्पजीवि । इति
व्युत्प-
त्तिलब्धोऽर्थः । सापुडे इति भाषा ॥)

**कुहकस्वनः**, पुं, (कुहकः विस्मापकः स्वनः शब्दो-
ऽस्य ।) कुक्कुटपक्षी । इति हेमचन्द्रः ॥

**कुहकस्वरः**, पुं, (कुहकः विस्मापकः स्वरो यस्य ।
कुक्कुटः । इति हारावली ॥

**कुहक्कः**, पुं, तालभेदः । यथा, सङ्गीतदामोदरे ।
“द्रुतद्वन्द्वं लघुद्वन्द्वं ताले कुहक्कसंज्ञके” ॥

**कुहनं**, क्ली, (कु ईषत् प्रयत्नेन हन्यते इति । हन् +
कर्म्मणि अप् ।) मृद्भाण्डविशेषः ।
काचभाजनम् ।
(कुत्सिताचारेण हन्तीति । हन् + अच् ।)
ई-
र्ष्यालौ त्रि । इति मेदिनी ॥

**कुहनः**, पुं, (कुं पृथ्वीं भूमिं वा हन्ति खनतीत्यर्थः ।
हन् + अच् ।) मूषिकः । (कौ पृथिव्यां
कुत्सितं
वा हन्ति दशतीति । हन् + अच् ।) सर्पः ।
इति
हेमचन्द्रः ॥

**कुहना**, स्त्री, (कुह + “ण्यासश्रन्थो युच्” । ३ । ३ ।
१०७ । इति युच् ।) दम्भचर्य्या । इति
मेदिनी ॥
लोमान्मिथ्येर्य्यापथकल्पना । इत्यमरः । २
। ७ ।
५३ ॥ अर्थलिप्सया मिथ्याचारभेदस्य
सम्पादना ।
दम्भमात्रकृतध्यानमौनादिः । अर्थलिप्सया
धर्म्मा-
श्रवणं इत्यन्ये । इति भरतः ॥

कलामावास्य । इत्यमरः । १ । ४ ।
९ ॥
(यथा, श्रुतौ । “द्वे ह वा अमावास्या
या
पूर्ब्बामावास्या सिनीवाली योत्तरा
सा कुहूरिति” ॥
व्यक्तमाह कालमाधवीये व्यासः ।
“दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा
कुहूर्मता” ॥
मतान्तरे तु ।
“तिथिक्षये सिनीवाली नष्टचन्द्रा
कुहूर्मता ।
बाहुल्येपि कुहूर्ज्ञेया
वेदवेदान्तवेदिभिः” ॥
तत्र श्राद्धाधिकारिभेदमाह । यथा,
जावालिः ।
“अपराह्णद्वयाव्यापी यदि
दर्शस्तिथिक्षये ।
आहिताग्नेः सिनीवाली निरग्न्यादेः
कुहूर्मता” ॥
आदिशब्दात् स्त्रीशूद्रयोरपि ग्रहणं
यथाह
लोगाक्षिः ।
“सिनीवाली द्विजैः कार्य्या साग्निकैः
पितृकर्म्मणि ।
स्त्रीभिः शूद्रैः कुहूः कार्य्या तथा
चानग्निकैर्द्विजैः” ॥
तदधिष्ठत्री देवपत्नी । यथा, निरुक्ते
।
“सिनीवाली कुहूरिति
देवपत्न्याविति” ॥
सा च अङ्गिरसः सुता । यथाह
भागवते ४ ।
१ । २९ ।
“श्रद्धा त्वङ्गिरसः पत्नी चतस्रोऽसूत
कन्यकाः ।
सिनीवाली कुहूराका
चतुर्थ्यनुमतिस्तथा” ॥)
कोकिलालापः । इति मेदिनी ॥
(यथा, आर्य्या-
सप्तशती ६३० ।
“केनाश्रावि पिकानां कुहूं विहायेतरः
शब्दः” ॥)

तूलिका । इति हेमचन्द्रः ॥

**कूज** हिक्वने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-
सेट् ।) दीर्घी । हिक्वनमव्यक्तशब्दः । कूजति
कोकिलः । इति दुर्गादासः ॥

**कूजितं**, क्ली (कूज् + भावे क्तः ।) पक्षिध्वनिः इति
हेमचन्द्रः ॥ (यथा, गीतगोविन्दे १ । ४ । २ ।
“ललितलवङ्गलतापरिशीलनकोमलमलयसमीरे
मधुकरनिकरकरम्बितकोकिलकूजितकुञ्जकुटीरे” ॥)

**कूट** क ङ अप्रसादाप्रदोः । इति कविकल्पद्रमः ॥
(चुरां-आत्मं-अकं-सेट् ।) अप्रदा दानाभावः । क
ङ कूटयते खलः स्फुटमप्यर्थं प्रसन्नं न करोति ।
किञ्चिन्न ददाति वेत्यर्थः । इति दुर्गादास ॥

**कूट** त् क दाहे । मन्त्रे । इति कविकल्पद्रुमः ॥
(अदन्तचुरां-परं-सकं-सेट् ।) दीर्घो । अचुकूटत् ।
इति दुर्गादासः ॥

**कूटः**, पुं, (कूटयति दग्धीकरोति शापप्रभावेन सा-
पराधान् इति । कूट दाहे + णिच् + अच् ।)
अगस्त्यमुनिः । इति शब्दरत्नावली ॥

**कुहनिका**, स्त्री, (कुह + युच् स्वार्थे कः टाप् अत

इत्वम् ।) कुहना । इति शब्दरत्नावली ॥

**कुहरं**, क्ली, (कुं भूमिं हरतीति । कु + हृ + अच् ।)

**कुहूकण्ठः**, पुं, (कुहूरितिशब्दः कण्ठे यस्य ।) को-

किलः । इति शब्दरत्नावली ॥

**कुहूमुखः**, पुं, (कुहूरिति शब्दः मुखे यस्य ।) कोकिलः

इति त्रिकाण्डशेषः ॥

**कुहूरवः**, पुं, (कुहूरिति रवो यस्य ।) कोकिलः ।

इति राजनिर्घण्टः ॥ (यदुक्तम् ।

**कूटः**, पुं, स्त्री, (कूट्यते दातुं न शक्यते स्थावरत्वादिति । कूट अप्रदाने + कर्म्मणि घञ् ।) गृहम् । इति शब्दरत्नावली ॥

**कूटः**, पुं, क्ली, (कूट् + घञ् ।) निश्चलः । राशिः । (यथा, हेः रामायणे । १ । १४ । १५ ।
"अन्नकूटाश्च दृश्यन्ते बहवः पर्व्वतोपमाः" ॥)
लौहमुद्गरः ॥ (यथा, भागवते । ४ । २५ । ८ ।
"एते त्वां संप्रतीक्षन्ते स्मरन्तो वैशसं तव ।
संपरेतमयःकूटैश्छिन्दन्त्युत्थितमन्यवः" ॥)
माया । (यथा, महाभारते वनपर्व्वणि ।
"नैव धर्म्मेण तद्राज्यं नार्ज्जवेन न चौजसा ।
अक्षकूटमधिष्ठाय हृतं दुर्य्योधनेन वै" ॥)
पर्व्वतशृङ्गम् । (यथा, महाभारते आनुशासनिके ।
"अद्रीणामिव कूटानि धातुरक्तानि शेरते" ॥)
तुच्छः । सीरावयवः । यन्त्रम् । फाँद् इति भाषा ।
(यथा, रामायणे ।
"वागुराभिश्च पाशैश्च कूटैश्च विविधैस्तथा" ॥)
अनृतम् । इति मेदिनी ॥ भग्नशृङ्गषण्डः । इति हेमचन्द्रः ॥ कैतवम् । इत्यमरः । ३ । ३ । ३६ ॥
(यथा, भागवते । ६ । ५ । १० ।
"वाचः कूटन्तु देवर्षेः स्वयं विममृशुर्धिया" ॥
तद्वति त्रि । यथा, मनुः । ७ । ९० ।
"न कूटैरायुधैर्हन्यात् युध्यमानो रणे रिपून्" ॥
मिथ्याभूते त्रि । यथा, याज्ञवल्क्यः ।
"द्विगुणा वान्यथा ब्रूयुः कूटाःस्युः पूर्ब्बसाक्षिणः" ॥
पुरद्वारम् । यथा, महाभारते । ४ । ५ । १४ ।
"इयं कूटे मनुष्येन्द्र ! गहने महती शमी ।
भीमशाखा दुरारोहा श्मशानस्य समीपतः" ॥
अत्र कूटशब्दस्तु टीकाकृन्मतभेदेन अर्थान्तरेऽपि वर्त्तते । अग्रभागमात्रम् । यथा, रामायणे ।
"किरीटकूटैर्ज्वलितं शृङ्गारं दीप्तकुण्डलम्" ॥
भागवते च । ३ । १३ । २९ ।
"सवज्रकूटाङ्गनिपातवेग-
त्रिकाण्डशेषः ॥ कूटपर्ब्बोऽपि क्वचित्पाठः ॥

**कूटपालकः**, पुं, (कूटं मृत्स्तोमं पालयतीति । पालि + ण्वुल् ।) कुलालस्य पवनम् । कुमारेर पोयान् इति भाषा । पित्तज्वरः । इति हारावली ॥

**कूटयन्त्रं**, क्ली, (कूटं कैतववत् यन्त्रम् ।) आमिषं दत्त्वा मृगपक्षिबन्धनार्थं यत् सन्धानयन्त्रं निवेश्यते तत् । फाँद् इति भाषा । तत्पर्य्यायः । उन्माथः २ । इत्यमरः । २ । १० । २६ ॥

**कूटशाल्मलिः**, पुं, (कूटः शाल्मलिः ।) शाल्मलिविशेषः । काशिमाला इति ख्यातः । कुत्सितशाल्मलिः अनृतशाल्मलिर्वा । इत्यन्ये । इति भरतः ॥ तत्पर्य्यायः । रोचनः २ । इत्यमरः । २ । ४ । ४७ ॥
(क्वचित् स्त्रीलिङ्गेऽपि दृश्यते । कूटशाल्मलिरिव इति व्युत्पत्त्या यमस्य गदायाः गौणी संज्ञा । यथा, रघौ १२ । ९५ ।
"अयःशङ्कुचितां रक्षः शतघ्नीमथ शत्रवे ।
हृतां वैवस्वतस्येव कूटशाल्मलिमक्षिपत्" ॥
नरकस्थकण्टकाचितलोहशाल्मलिवृक्षविशेषः । स च दुरारोहः । यथा, महाभारते १८ । ३ । ४ ।
"नादृश्यन्त च तास्तत्र यातनाः पापकर्म्मिणाम् ।
नदी वैतरणी चैव कूटशाल्मलिना सह" ॥)
राजनिर्घण्टोक्तगुणपर्य्यायौ रोहितकशब्दे द्रष्टव्यौ ॥

**कूटसंक्रान्तिः**, स्त्री, अर्द्धरात्रातीते सूर्य्यस्य राश्यन्तरगभनम् । यथा, --
"संक्रान्तिर्द्विविधा यत्र पूर्ब्बं तत्र परित्यजेत् ।
कर्त्तव्यं कूटसंक्रान्त्यां स्नानदानतपोव्रतम् ॥
अर्द्धरात्रव्यतीते तु यदा संक्रमते रविः ।
सा ज्ञेया कूटसंक्रान्तिर्मुनिभिः परिकीर्त्तिता" ॥
इति विद्यानिधिकृतज्योतिःसागरसारधृतंवचनम् ॥ * ॥ अपि च ।
"अर्द्धरात्रे व्यतीते तु संक्रान्तिर्यदहर्भवेत् ।
पूर्ब्बे व्रतादिकं कुर्य्यात् परेद्युः स्नानदानयोः ॥
इति भीमपराक्रमीयम् ॥ स्नानदानयोरित्यत्र सप्तमीनिर्द्देशात् परदिवसीयस्नानदाननिमित्तकं पूर्ब्बदिने उपवाससंयमनरूपव्रतादिकं कुर्य्यादित्यर्थः । इति तिथ्यादितत्त्वम् ॥

**कूटस्थः**, त्रि, (कूटे मायायां तिष्ठतीति । यद्वा, कूटवत् निर्व्विकारेण निश्चलः सन् तिष्ठतीति । कूट् +
कूटस्थचैतन्यस्य अविद्याध्यस्ततत्यैव जीवत्वं नतु स्वरूपतः नितरां तस्मादपि निरध्यस्तत्वात् निर्म्मलः सच्चिदानन्दस्वरूपावस्थः पुरुषोत्तमः परमात्मेत्युच्यते । यथा, गीतायां १५ । १६-१७ ।
"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्व्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य विभर्त्त्यव्यय ईश्वरः" ॥)
एकेनैव स्वभावेन निरवधिकालस्य व्यापको य आकाशादिः । इति भरतः ॥ (कूटे भयावहे तिष्ठति यः । स्था + कः ।) व्यालनखः । इति राजनिर्घण्टः ॥
(व्याघ्रनख इति भाषा ॥)

**कूटस्थं**, क्ली, (कूटस्थ इव प्रकाशते यत् । अर्शआदेरच् ।) व्याघ्रनखाख्यगन्धद्रव्यम् । इति जटाधरः ॥

**कूटसाक्षी**, [न्] त्रि, (कूटः मायावी मिथ्यावादी कपटीत्यर्थः साक्षी ।) मिथ्यासाक्षी इति व्यवहारतत्त्वम् ॥ (याज्ञवल्क्ये कूटसाक्षिलक्षणम् । यथा, --
"द्विगुणा वान्यथा ब्रूयुः कूटाः स्युः पूर्ब्बसाक्षिणः" ॥
ते तु गुरुदण्डार्हाः । अकृतप्रायश्चित्ताः रौरवाख्यनरकं व्रजेयुः ॥ यो हि जानन्नपि साक्ष्यं न ददाति स कूटसाक्षितुल्यः । तथा च तत्रैव ।

विशीर्णकुक्षिः स्तनयन्नुदन्वान् ।
उत्सृष्टदीर्घोर्म्मिभुजैरिवार्त्त-
श्चुक्रोश यज्ञेश्वर ! पाहि मेति” ॥)

**कूटकं**, क्ली, (कूट् + संज्ञायां कन् ।) फालम् । इत्य-

मरः । २ । ९ । १३ ॥

**कूटकः**, पुं, (कूट् + ण्वुल् ।) कवरी । इति त्रिकाण्ड-

शेषः ॥ मुरानामगन्धद्रव्यम् । इति शब्दमाला ॥
(पर्व्वतविशेषः । यथा, भागवते । ५ । १९ ।
१७ ।
“भारते ऽस्मिन्वर्षे सरिच्छैलाः सन्ति बहवः” ।
“त्रिकूट ऋषभः कूटकः क्रौञ्चः सह्यः” इति ॥)

**कूटकृत्**, पुं, (कूटं करोतीति । कूट + कृ + क्विप्

तुगागमश्च ।) शिवः । कायस्थः । इति
त्रिकाण्ड-
शेषः । कितवे, त्रि ॥ (तुलाकर्म्मणि कैतवकारी
।
यथा, याज्ञवल्क्यः । २ । २४३ ।
“तुलाशासनमानानां कूटकृन्नाणकस्य च” ॥)

**कूटजः**, पुं, (कूटे पर्व्वते एव जायते । जन + डः ।)

कुटजवृक्षः । इति राजनिर्घण्टः ॥ (कुटजशब्दे
ऽस्य गुणादयो ज्ञेयाः ॥)

**कूटपूर्व्वं**, पुं, हस्तिनां त्रिदोषजज्वरः । इति

स्था + कः ।) एकरूपतया यः कालव्यापी सः ।
इत्य-
मरः ॥ (परमात्मा । यथा, पञ्चदश्यां ६ । २२-२७
।
“अधिष्ठानतया देहद्वयावच्छिन्नचेतनः ।
कूटवन्निर्व्विकारेण स्थितः कूटस्थ उच्यते ॥
कूटस्थे कल्पिता बुद्धिस्तत्र चित्प्रतिविम्बकः ।
प्राणानां धारणाज्जीवः संसारेण स युज्यते ॥
जलव्योम्ना घटाकाशो यथा सर्व्वस्तिरोहितः ।
तथा जीवेन कूटस्थः सोऽन्योन्याध्यास उच्यते ॥
अयं जीवो न कूटस्थं विविनक्ति कदाचन ।
अनादिरविवेकोऽयं मूलाविद्येति गम्यताम् ॥
विक्षेपावृतिरूपाभ्यां द्विधा ऽविद्या प्रकल्पिता ।
न भाति नास्ति कूटस्थ इत्यापादनमावृतिः ॥
अज्ञानी विदुषा पृष्टः कूटस्थं न प्रबुध्यते ।
न भाति नास्ति कूटस्थ इति बुद्ध्वा वदत्यपि” ॥

“न ददाति तु यः साक्ष्यं जानन्नपि
नराधमः ।
स कूटसाक्षिणां पापैस्तुल्यो दण्डेन
चैव हि” ॥)

**कूटागारं**, क्ली, (कूटं आगारं गृहम् ।) वडभी ।

तत्पर्य्यायः । चन्द्रशालिका २ । इति
त्रिकाण्ड-
शेषः ॥ स्त्रीणां क्रीडागारम् ।
इत्यादिकाण्ड-
टीका ॥

**कूटार्थभाषिता**, स्त्री, (कूटार्थस्य दुर्भेद्यार्थस्य कल्पि-

तार्थस्य वा या भाषिता ।)
प्रबन्धकल्पनाकथा ।
इति शब्दरत्नावली ॥ रूपकथा इति
भाषा ॥

**कूड**, शि घान्ये । भक्षे । इति कविकल्पद्रुमः । (तुदा-

पर-अकं-सकञ्च-सेट् ।) षष्ठस्वरी ।
फलाभावे
ऽप्यस्य कूटादौ पाठः
प्राचामनुरोधात् । प्राञ्चोऽपि
डान्तप्रस्तावादिमं कूटादौ
पठितवन्तः । शि,
कूडती कूडन्ती । घान्यं घनीभावः ।
कूडति
दुग्धं वह्नियोगात् । कूडत्यन्नं लोकः ।
इति
दुर्गादासः ॥

**कूड्यं**, क्ली, (कूडति घनीभवति मृदादिना । कूड् +

ण्यत् ।) भित्तिः । इति शब्दरत्नावली
॥ देयाल
इति भाषा ॥

**कूण**, त् क सङ्कोचे । इति कविकल्पद्रुमः ॥ (अद-

न्तचुरां-परं-अकं-सेट् ।) दीर्घी
मूर्द्धन्योपधः
अचुकूणच्चक्षुः सङ्कुचितमभूदित्यर्थः
। इति दुर्गा-
दासः ॥

| | | |
|---|---|---|
| | | **कूण**, क ङ सङ्कुचि । इति कविकल्पद्रुमः ॥ (चुरा- आत्मं-अकं-सेट् ।) षष्ठस्वरी । क ङ, कूणयते चक्षुः सङ्कुचितं स्यादित्यर्थः । पञ्चमस्वरीत्येके । इति दुर्गादासः ॥<br><br>**कूणिः**, त्रि, (कूणति कुञ्चितो भवति रोगादिभिरिति शेषः । कूण सङ्कोचे "सर्व्वधातुभ्य इन्" । उणां ४ । ११७ । इति इन् ।) कूणिः । रोगादिना |

कुञ्चितकरः । इत्यमरटीकायां भरतः ॥

**कूणिका**, स्त्री, (कूण् + ण्वुल् टाप् अत इत्वञ्च ।)

शृङ्गम् । वीणामूलस्थवशशलाका।
तत्पर्य्यायः ।
कलिका २ । इति हेमचन्द्रः ॥

**कूदरः**, पुं, (कुत्सितं उदरं यस्य । ऋतुदोषतः पापो-

दरजातत्वात् तथात्वम् ।) जातिविशेषः ।
यथा, --
ब्रह्मवैवर्त्तपुराणे ।
"ब्राह्मण्यामृषिवीर्य्येण ऋतोः प्रथमवासरे ।
कुत्सिते चोदरे जातः कूदरस्तेन कीर्त्तितः
॥
तदशौचं विप्रतुल्यं पतितो ह्यृतुदोषतः ।
सद्यः कोटकसंसर्गादधमो जगतीतले" ॥

**कूद्दालः**, पुं, (कुद्दाल + पृषोदरात् दीर्घत्वे साधुः ।)

कुद्दालवृक्षः । इत्यमरटीकायां रमानाथः ॥

**कूप**, त् क दौर्ब्बल्ये । (अदन्तचुरां--परं--अकं--सेट्
।)

अयं षष्ठस्वरी । इति त्रिलोचनः ॥
सप्तमखरी ।
इति कविकल्पद्रुमटीकायां दुर्गादासः ॥

**कूपः**, पुं, (कु ईषत् आपी यत्र । "ऋक्पूरित्यः" ।

५ । ४ । ७४ । ऊदनोरित्यत्र
दीर्घनिर्द्देशादन्यत्रा-
प्यूदिति वा । यद्वा कुतन्ति मण्डूकाः अत्र
। "कुपु
भ्याञ्च" । उणां ३ । २७ इति पो दीर्घश्च
।) स्वना-
मख्यातो जलाधारः ॥ कूया इति पात्कूया
इति
च भाषा । तत्पर्य्यायः । अन्धुः २ प्रहिः ३
उद-
पानम् ४ । इत्यमरः । १ । १० । २६ ॥
अवटः ५
कोट्टारः ६ । इति जटाधरः ॥ कात्तः ७
कर्त्तः ८
वज्रः ९ काटः १० खातः ११ अवतः
१२ क्रिविः

खानयेत् स दिवं याति विन्दौ विन्दौ शतं
समाः" ॥
तत्संस्कारकर्त्तुरपि फलमुच्यते विष्णौ ।
यथा, --
"कूपारामतडागेषु देवतायतनेषु च ।
पुनः संस्कारकर्त्ता च लभते मौलिकं फलम्"
॥
परं जलशून्यदेशखनने एव प्रतिष्ठा न तु पङ्को-
द्धारमात्रे । "अजले जलमुत्पाद्य" इति
वचनात् ॥)
गर्त्तः । गुणवृक्षः । नदीमध्यस्थितो वृक्षः
पर्व्वतो
वा । इत्युणादिकोषः । कूपकः । कूपा इति
भाषा ।
मृन्मानम् । इति मेदिनी ॥

**कूपकः**, पुं, (कूपे गर्त्ते कायते प्रकाशते इति । कै +

कः ।) नौकागुणबन्धनस्तम्भः । इत्यमरः । १
। १० ।
१२ । मास्तुल इति भाषा । तैलपात्रम् । कूपा
इति
भाषा । कुकुन्दरम् । उदपानम् । चिता । इति
मेदिनी ॥ (शुष्कनद्यादौ जलार्थं कृतो गर्त्तः ।
इत्यमरः । १ । १० । १० ॥)

**कूपाङ्गः**, पुं, (कूपाकारं अङ्गं अस्मिन् ।) रोमाञ्चः ।

इति शब्दरत्नावली ॥ कूपाङ्कोऽपि पाठः ॥

**कूपारः**, पुं, (कुं पृथिवीं पिपर्त्ति पूरयति । पृ +

अण् पृषोदरात् उकारस्य दीर्घः ।) अकूपारः ।
इत्यमरटीका ॥ कूवारोऽपि पाठः ॥

**कूपिका**, स्त्री, (कूप + संज्ञायां कन् ततष्टाप् अत-

इत्वञ्च ।) अम्भोगतोपलम् ।
जलमध्यस्थितपर्व्व-
तादिः । इति मेदिनी ॥

**कूपी**, स्त्री, (कूप् + इन् ततो ङीप् ।) पात्रविशेषः ।

यथा, अजीर्णचिकित्सायां भावप्रकाशः ॥
"भावयेत् सप्तकृत्वस्तच्चणकाम्लजलेन च ।
ततः संशोष्य संपिष्य कूपीमध्ये निधापयेत्"
॥

"कालीवीजद्वयं देवि ! दीर्घं हूंकारमेव च ।
त्र्यक्षरी सा महाविद्या चामुण्डा कालिका
स्मृता" ॥)

**कूर्च्चः**, पुं, (कुर् + बाहुलकात् चट् निपातनात् दीर्घः ।)

शीर्षम् । इति धरणी ॥

**कूर्च्चशिरः**, [स्] क्ली, (कूर्च्चस्य शिरः इव शिरो-

ऽस्य ।) अङ्घ्रिस्कन्धः । इति हेमचन्द्रः ।
गुड़्मुडा
इति भाषा ॥ ("गुल्फसन्धेरध उभयतः
कूर्च्चशिरो
नाम तत्र रुजा शोफौ" ॥ "द्वेद्वे कूर्च्चशिरांसि
च" ॥
इति सुश्रुते शारीरस्थाने ६ अध्याये ॥)

**कूर्च्चशीर्षः**, पुं, (कूर्च्चं श्मश्रु तद्वत् शीर्षं यस्य ।)

जीवकवृक्षः । स तु अष्टवर्गमध्यपठितौषधिः ।
इत्यमरः । २ । ४ । १४२ ॥ (जीवकशब्दे
ऽस्य विव-
रणं व्याख्येयम् ॥)

**कूर्च्चशीर्षकः**, पुं, (कूर्च्चं श्मश्रु तद्वत् शीर्षं यस्य । कप्
।)

जीवकः । इति राजनिर्घण्टः । (नारिकेलवृक्षः
।
इति चिन्तामणिः ॥)

**कूर्च्चशेखरः**, पुं, (कूर्च्चमिव शेखरमस्य ।) नारिकेल-

वृक्षः । इति राजनिर्घण्टः ॥

**कूर्च्चिका**, स्त्री, (कूर्च्चाकारोऽस्त्यस्याः । कूर्च्च + ठन्
।)

क्षीरविकृतिः । क्षीरसा इति भाषा । इत्यमरः ।
२ । ९ । ४४ ॥ सा द्विधा यथा, --
"दध्ना सह च यत् पक्वं क्षीरं सा दधिकूर्च्चिका
।
तक्रेण पक्वं यत् क्षीरं सा भवेत्तक्रकूर्च्चिका"
॥
इति भरतः ॥
("कूर्च्चिका विकृता भक्ष्या गुरवो
नातिपित्तलाः" ॥
इति सुश्रुते सूत्रस्थाने ४६ अध्याये ॥)

१३ सूदः १४ उत्सः १५ ऋष्यदात् १६ कारोत-
रात् १७ कुशेषः १८ केवटः १९ । इति वेद-
निघण्टौ ३ अध्याये त्रयोदशकूपनामानि ॥
तस्य लक्षणं यथा, --
"भूमौ खातोऽल्पविस्तारो गम्भीरो मण्डलाकृतिः ।
बद्धोऽबद्धः स कूपः स्यात्तदम्भः कौपमुच्यते" ॥
इति भावप्रकाशः ॥ तज्जलगुणाः । वातकफ-
नाशित्वम् । अग्निदीपनत्वम् । लघुत्वम् । पित्त-
वर्द्धनत्वम् । क्षारत्वम् । शीतकाले उष्णत्वम् ।
उष्णकाले शीतत्वम् । वसन्तकाले प्रशस्तत्वञ्च ।
इति राजवल्लभः ॥
("रूक्षं कफघ्नं लवणात्मकञ्च
सन्दीपनं पित्तकरं लघूष्णम् ।
कूपोदकं वातहरं प्रदिष्टं
हितं न शस्तं शरदो वदन्ति" ॥
इति हारीते प्रथमस्थाने ७ अध्याये ॥
कूपादिकरणफलादिकं जलाशयतत्त्वधृतादित्य-
पुराणवचनम् । यथा, --
"सेतुबन्धरता ये च तीर्थशौचरताश्च ये ।
तडागकूपकर्त्तारो मुच्यन्ते ते तृषाभयात्" ॥
विष्णौ च । "अथ कूपकर्त्तुस्तत्प्रवृत्ते पानीये
दुष्कृतार्द्धं विनश्यति" । तत्प्रवृत्ते कृतकूपा-
दुत्थिते । विष्णुधर्म्मोत्तरे च ।
"तडागकूपकर्त्तारस्तथा कन्याप्रदायिनः ।
छत्रोपानहदातारस्ते नराः स्वर्गगामिनः" ॥
तथा, नन्दिकेश्वरपुराणे ।
"यो वापीमथवा कूपं देशे तोयविवर्ज्जिते ।

**कूमं**, क्ली, (कोः पृथिव्याः भूमेर्वा उमा कान्तिर्य-
स्मात् ।) सरोवरः । इति जटाधरः ॥

**कूरः**, पुं, (वेञ स्यूतौ + भावे क्विप् ऊः । कौ भूमौ
उवं वयनं लाति गृह्णातीति । ला + कः । लस्य
रः ।) भक्तम् । इति हलायुधः ॥

**कूर्च्चं**, क्ली, (कुर्य्यते इति कुर् बाहुलकात् चट् निपा-
तनात् दीर्घः ।) मलापकर्षार्थकेशादिमुष्टिः । कुँचि
इति भाषा । यथा, -- नरसिंहपुराणे ।
"ततः समर्पयेत् कूर्च्चमुशीरादिविनिर्म्मितम् ।
मलापकर्षणाद्यर्थं श्रीमन्मूर्त्यङ्गसन्धितः" ॥
विष्णुधर्म्मोत्तरे च ।
"उशीरकूर्च्चकं दत्त्वा सर्व्वपापैः प्रमुच्यते ।
दत्त्वा गोदालजं कूर्च्चं सर्व्वांस्तापान् व्यपोहति ।
दत्त्वा चामरकं कूर्च्चं श्रियमाप्नोत्यनुत्तमाम्" ॥
इति श्रीहरिभक्तिविलासस्य ६ विलासे ४८ श्लोकः ॥

**कूर्च्चः**, पुं क्ली, (कुर् + चट् निपातनात् दीर्घः ।)
भ्रुवोर्मध्यम् । भ्रूद्वयमध्यस्थानम् । इत्यमरः । २ ।
६ । ९२ ॥ मयूरपुच्छमुष्टिः । कुशमुष्टिः । इति
हरिवंशे पुण्यकव्रतटीकायां नीलकण्ठः ॥ कठि-
नम् । श्मश्रु । कैतवम् । इति मेदिनी ॥ विकत्थ-
नम् । दम्भः । क्षिप्रोपरिभागः । स तु अङ्गुष्ठाङ्गु-
लिमध्यस्य उपरिभागः । इति हेमचन्द्रः ॥ हूं
वीजम् । इति तन्त्रम् ॥ (यथा, कर्पूरस्तवे
"वर्गाद्यं वह्निसंस्थं विधुरतिवलितं तत्त्रयं
कूर्च्चयुग्मम्" ॥
तथा, भैरवतन्त्रे ।

सूचिका । सूँच इति भाषा । तूलिका । तुली इति
भाषा । कुड्मलः । कुँडि इति भाषा । कुञ्चिका ।
कुँजि इति भाषा । इति हेमचन्द्रो मेदिनी च ॥

**कूर्द्द** ङ क्रीडायाम् । इति कविकल्पद्रुमः । (भ्वां-
आत्मं--अकं--सेट् ।) षष्ठस्वरी । ङ, कूर्द्दते । इति
दुर्गादासः ॥

**कूर्द्दनं**, क्ली, (कूर्द्द + भावे ल्युट् ।) क्रीडा । खेला ।
इत्यमरः । १ । ७ । ३३ ॥

**कूर्द्दनी**, स्त्री, (कूर्द्दयतेऽस्याम् । कूर्द्द + अधिकरणे
ल्युट् ततो ङीप् ।) चैत्रीपूर्णिमा । सा तु काम-
देवोत्सवतिथिः । इति त्रिकाण्डशेषः ॥

**कूर्पं**, क्ली, (कुरं पाति । पा + कः ।) भ्रूद्वयमध्यस्थ-
लम् । इति हेमचन्द्रः ॥

**कूर्पासः**, पुं, (कुर्परे शरीरे अस्यते आस्ते वा । अस्
+ वञ् । पृषोदरात् रलोपः पूर्ब्बदीर्घश्च ।) क-
ञ्चुकः । धारवाणः । इति हेमचन्द्रः ॥ (स्वार्थे कन्
प्रत्ययेनास्योदाहरणं यथा, माघे । ५ । २३ ।
"प्रस्वेदवारिसविशेषविषक्तमङ्गे
कूर्पासकं क्षतनखक्षतमुत्क्षिपन्ती" ॥)

**कूर्म्मः**, पुं, (कुत्सितः ईषद् वा ऊर्म्मिः वेगो यस्य ।
के जले ऊर्म्मिर्यस्येति वा पृषोदरात् साधुः ।)
जलजन्तुविशेषः । काछिम् इति भाषा । (यथा,
भगवद्गीतायाम् । २ । ५८ ।
"यदा संहरते चायं कूर्म्मोऽङ्गानीव सर्व्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता" ॥)
तत्पर्य्यायः । कच्छपः २ पञ्चनखः ३ गुह्यः ४ पञ्च-

गुप्तः ५ पीवरः ६ कमठः ७ जलगुल्मः ८ ।
इति
जटाधरः ॥ अस्य
मांसादिगुणपर्य्यायान्तरौ
कच्छपशब्दे द्रष्टव्यौ ॥ * ॥ (तल्लक्षणं
यथा, --
वृहत्संहितायाम् ६४ अध्याये ।
"स्फटिकरजतवर्णो नीलराजीव चित्रः
कलशसदृशमूर्त्तिश्चारुवंशश्च कूर्म्मः ।
अरुणसमवपुर्व्वा सर्षपाकारचित्रः
सकलनृपमहत्त्वं मन्दिरस्थः करोति ॥
अञ्जनमृङ्गश्यामवपुर्वा
विन्दुविचित्रोऽव्यङ्गशरीरः ।
सर्पशिरा वा स्थूलगलोयः सोपि नृपाणां
राष्ट्रविवृद्ध्यै ॥
वैदूर्य्यत्विट् स्थूलकण्ठस्त्रिकोणो
गूढश्छिद्रश्चारुवंशश्च शस्तः ।
क्रीडावाप्यां तोयपूर्णे मणौ वा
कार्य्यः कूर्म्मो मङ्गलार्थं नरेन्द्रैः" ॥
परमेश्वरः । यथाह
ऋग्वेदभाष्योपक्रमणिकायां
दयानन्दः ।
"परमेश्वरेणेदं सकलं जगत्क्रियते तस्मात्
तस्य
कूर्म्म इति संज्ञा" ॥ प्रजापतेरवतारविशेषः
।
यथा, शतपथब्राह्मणे । ७ । ५ । १ । ५ ।
"स यत् कूर्म्मो नाम एतद्वा रूपं कृत्वा
प्रजा-
पतिः प्रजा असृजत यदसृजताकरोत्तद्
यदकरोत्
तस्मात् कूर्म्मः कश्यपो वै
कूर्म्मस्तस्मादाहुः सर्व्वाः
प्रजाः काश्यप्य इति । स यः स
कूर्म्मोऽस्य स
आदित्यः" ॥ इति ॥ * ॥)
वाह्यवायुविशेषः । यथा, --
"उन्मीलने स्मृतः कूर्म्मो
भिन्नाञ्जनसमप्रभः" ॥
इति शारदातिलकटीका ॥ * ॥
मुद्राविशेषः ।
कूर्म्मश्च कुलिकश्चैव काद्रवेयाः प्रकीर्त्तिताः" ॥)

**कूर्म्मचक्रं**, क्ली (कूर्म्माकारं चक्रम् । मध्यपदलोपी
कर्म्मधारयः ।) कृषिकर्म्मोक्तकच्छपाकारचक्रम्।
तस्याकारो यथा, --
"प्राङ्मुखो भगवान् देवः कूर्म्मरूपी व्यवस्थितः ।
आक्रम्य भारतं वर्षं नवभेदं यथाक्रमम्" ॥
तत्र नक्षत्रन्यासक्रमः ।
"मध्यप्रागग्नियाम्यादिकृत्तिकादित्रयत्रयैः ।
क्रूरवेधयुतैस्तैस्तु पीड्यन्ते तन्निवासिनः" ॥
तत्र वेधो यथा, --
"पूर्व्वापरे भवेद्वेधो वेधश्चोत्तरदक्षिणे ।
ईशाने राक्षसे वेधो वेध आग्नेयमारुते ।
तारात्रयान्वितं तत्र सौरिं यत्नेन चिन्तयेत्" ॥
तत्र वेधादिजन्यदोषाः ।
"अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः ।
स्वचक्रं परचक्रञ्च सप्तैते सम्भवन्ति च ॥
एवं देशगृहग्रामक्षेत्रनामर्क्षतो वदेत् ।
तथा च यत्र नक्षत्रे दिव्यपार्थिवनाभसाः ॥
दृश्यन्ते सुमहोत्पाताः स्वां दिशं तत्र पीडयेत् ।
सौरिर्बलाधिपो दुष्टः स्वल्पवीर्य्यः शुभावहः ॥
एकदा पीडयेद्यत्र भानुजः कूर्म्मपञ्चके ।
तत्र स्थाने महाविघ्नो जायते नात्र संशयः ॥
दुष्टस्थाने गते चन्द्रे कर्त्तव्यं शान्तिपौष्टिकम्" ॥
तच्चक्रमध्यस्था देशाः ।
"मध्ये सारस्वता मत्स्याः शूरसेनाः समाथुराः ।
पञ्चालशाल्वमाण्डव्यकुरुक्षेत्रगजाह्वयाः ॥
मरुनैमिषविन्ध्याद्रिपाण्ड्यघोषाःसयामुनाः ।
काश्ययोध्या प्रयागश्च गया वैदेहकादयः" ॥
तत्र पूर्व्वस्थदेशाः ।
"प्राच्यां मागधशोणौ च वारेन्द्रोगौडरा ढकाः ।
वर्द्धमानतमोलिप्तप्राग्ज्योतिषोदयाद्रयः" ॥
तत्राग्निकोणस्थदेशाः ।
"आग्नेय्यामङ्गवङ्गोपवङ्गत्रैपुरकोशलाः।
कलिङ्गौड्रान्ध्रकिष्किन्ध्याविदर्भशवरादयः" ॥
तत्र दक्षिणस्थदेशाः ।
"दक्षिणेऽवन्तिमाहेन्द्रमलया ऋष्यमूककाः ।
चित्रकूटमहारण्यकाञ्चीसिंहलकोङ्कणाः ।
कावेरी ताम्रपर्णी च लङ्कात्रिकूटकादयः" ॥
तत्र नैरृतकोणस्थदेशाः ।
"नैरृते द्रविडानर्त्तमहाराष्ट्रश्च रैवतः ।
इति ज्योतिस्तत्त्वम् ॥ * ॥
जपयज्ञकर्म्मोक्तकमठा-
कारचक्रम् । तस्य लिखनक्रमः ।
"चतुरस्रां भुवं भित्त्वा कोष्ठानां नवकं
लिखेत् ।
पूर्व्वकोष्ठादि विलिखेत्
सप्तवर्गाननुक्रमात् ॥
लक्ष्मीशे मध्यकोष्ठे स्वरान्
युग्मक्रमाल्लिखेत् ।
दिक्षु पूर्व्वादितो यत्र क्षेत्राद्यक्षरसंस्थितिः
॥
मुखं तत्तस्य जानीयात् हस्तावुभयतः
स्थितौ ॥
कोष्ठे कुक्षी उभे पादौ द्वे शिष्टं
पुच्छमीरितम् ॥
क्रमेणानेन विभजेन्मध्यस्थमपि भागतः"
॥ * ॥
तस्याङ्गविशेषे स्थितस्य जपादौ
गुणदोषाः यथा ।
"मुखस्थो लभते सिद्धिं करस्थः
स्वल्पजीवनः ।
उदासीनः कुक्षिसंस्थः पादस्थो
दुःखमाप्नुयात् ॥
पुच्छस्थः पीड्यते मन्त्री
बन्धनोच्चाटनादिभिः ।
कूर्म्मचक्रमिदं प्रोक्तं मन्त्रिणां
सिद्धिदायकम्" ॥ * ॥
तदज्ञाने दोषो यथा, पिङ्गलायाम् ।
"कूर्म्मचक्रमविज्ञाय यः कुर्य्यात्
जपयज्ञकम् ।
तस्य यज्ञफलं नास्ति सर्व्वानर्थाय
कल्पते" ॥
इति तन्त्रसारः ॥
(तन्त्रोक्तग्रहणीयमन्त्रशुभादि-
सूचककूर्म्माकारचक्रविशेषः ।
तत्स्वरूपादि रुद्र-
यामले उक्तम् । यथा ।
"कूर्म्मचक्रं प्रवक्ष्यामि
शुभाशुभफलात्मकम् ।
यज्ज्ञात्वा सर्व्वशास्त्रार्थं जानाति
पण्डितोत्तमः ॥

यथा, --
"वामहस्तस्य तर्जन्यां दक्षिणस्य कनिष्ठया ।
तथा दक्षिणतर्जन्यां वामाङ्गुष्ठेन योजयेत् ॥
उन्नतं दक्षिणाङ्गुष्ठं वामस्य मध्यमादिकाः ।
अङ्गुलीर्योजयेत् पृष्ठे दक्षिणस्य करस्य च ॥
वामस्य पितृतीर्थेन मध्यमानामिके तथा ।
अधोमुखे च ते कुर्य्याद्दक्षिणस्य करस्य च ॥
कूर्म्मपृष्ठसमं कुर्य्याद्दक्षपाणिञ्च सर्व्वतः ।
कूर्म्ममुद्रेयमाख्याता देवताध्यानकर्म्मणि" ॥
इति तन्त्रसारः ॥ * ॥ (आसनविशेषः । यथा
हठयोगदीपिकायाम् । १ । २२ ।
"गुदं निरुध्य गुल्फाभ्यां व्युत्क्रमेण समाहितः ।
कूर्म्मासनं भवेदेतदिति योगविदो विदुः" ॥)
सत्ययुगे समुद्रमन्थनकाले मन्दरपर्व्वतधारणार्थं
कच्छपरूपभगवदवतारविशेषः । यथा, --
"क्षीरोदमध्ये भगवान् कूर्म्मरूपी स्वयं हरिः" ॥
इति पद्मपुराणम् ॥ अपि च ।
"विलोक्य विघ्नेशविधिं तदेश्वरो
दुरन्तवीर्य्योऽवितथोऽभिसन्धिः ।
कृत्वा वपुः काच्छपमद्भुतं महत्
प्रविश्य तोयं गिरिमुज्जहार" ॥
इति श्रीभागवतम् ॥ * ॥
("काश्यपपत्न्याः कद्रोः
पुत्त्रेषु एकः । स च नागविशेषः । यथा, महा-
भारते । १ । ६५ । ४१ ।
"शेषोऽनन्तो वासुकिश्च तक्षकश्च भुजङ्गमः ।
यवनः पह्लवः सिन्धुः पारसीकादयो मताः" ॥
तत्र पश्चिमस्थदेशाः ।
"पश्चिमे हैहयाऽस्ताद्रिम्लेच्छवासशकादयः" ॥
तत्र वायुकोणस्थदेशाः ।
"वायव्ये गुज्जराटश्च नाटजालन्धरादयः" ॥
तत्र उत्तरस्थदेशाः ।
"उत्तरे चीननेपालहूनकैकेयमन्दराः ।
गान्धारहिमवत्क्रौञ्चगन्धमादनमालवाः ।
कैलासमद्रकाश्मीरम्लेच्छदेशाः खसादयः" ॥
तत्रेशानकोणस्थदेशाः ।
"ऐशाने स्वर्णभौमश्च गङ्गाद्वारस्तु टङ्कणः ।
वाह्लीकब्रह्मपुरककीराताद‌रदादयः" ॥
अभेद्यं भेदकं चक्रं शृणुष्वादरपूर्ब्बकम् ।
कूर्म्माकारं महाचक्रं चतुष्पादसमावृतम् ॥
तुण्डे स्वरान्, दक्षपादे कवर्गं, वामपादके ।
चवर्गं, कीर्त्तितं पश्चात् अधःपादे टवर्गकम् ॥
तदधस्तु तवर्गः स्यादुदरे च पवर्गकम् ।
यवान्तं हृदये प्रोक्तं शहान्तं पृष्ठमध्यके ॥
लाङ्गूले शक्रवीजञ्च क्षकारं लिङ्गमध्यके ।
लिखित्वा गणयेन्मन्त्री चक्राकारं मलापहम् ॥
स्वरे लाभः कवर्गे श्रीश्चवर्गश्च विवेकदः ।
टवर्गे राजपदवी तवर्गे धनवान् भवेत् ॥
उदरे सर्व्वनाशः स्यात् हृदये बहुदुःखभाक् ।
पृष्ठे च सर्व्वसन्तापः लाङ्गूले मरणं ध्रुवम् ॥
वैष्णवे पृष्ठेदेशे तु दुःखञ्च वामपादके ।
विरुद्धद्वयलाभे तु न कुर्य्याच्चक्रचिन्तनम् ॥
विरुद्धैके धर्म्मनाशो युग्मदोषे च मारणम् ।
यत्र देवाक्षरञ्चास्ति तत्र चेन्निजवर्णकम् ॥
विरुद्धञ्च त्यजेच्चक्रमन्यमन्त्रं विचारयेत् ।
पृथक् होमे यदि भवेत् वर्णमाला महेश्वर ! ॥
यदि तत्सौख्यभावः स्यात् तत्सौख्यं नापि वर्ज्जयेत् ॥
विभिन्नगेहे दोषश्चेत् शुभमन्त्रञ्च संत्यजेत् ॥
इति ते कथितं देव ! दृष्टादृष्टफलप्रदम् ।
ये शोधयन्ति चक्रेन्द्रं मन्त्रसिद्धिप्रदं शुभम्" ॥ * ॥
कूर्म्मरूपी विष्णुः केन रूपेण विराजते तत्संस्थान-
विवरणं मार्कण्डेयपुराणे ५८ अध्याये उक्तम् ॥
तद्-यथा । क्रोष्टुकिरुवाच ।
"भगवन् ! कथितं सम्यक् भवता भारतं मम ।

| | | |
|---|---|---|
| | | सरितः पर्व्वता देशा ये च तत्रं वसन्ति व ॥<br>किन्तु कूर्म्मस्त्वया पूर्ब्बं भारते भगवान् हरिः ।<br>कथितस्तस्य संस्यानं श्रोतुमिच्छाम्यशेषतः ॥<br>कथं स संस्थितो देवः कूर्म्मरूपी जनार्द्दनः ॥ |

शुभाशुभ मनुष्याणां व्यज्यते च ततः कथम् ।
यथामुखं यथापादस्तस्य तद्ब्रूह्यशेषतः ॥
मार्कण्डेय उवाच ।
प्राङ्मुखो भगवान् ! देवः कूर्म्मरूपी व्यवस्थितः ।
आक्रम्य भारतं वर्षं नवभेदमिदं द्विज ! ॥
नवधा संस्थितान्यस्य नक्षत्राणि समन्ततः ।
विषयाश्च द्विजश्रेष्ठ ! ये सम्यक् तान्निबोध मे ॥
वेदमन्त्रा विमाण्डव्याः शाल्वनीपास्तथा शकाः ।
उज्जिहानास्तथा वत्स ! घोषसङ्ख्यास्तथा खशाः ॥
मध्ये सारस्वता मत्स्याः शूरसेनाः समाथुराः ।
धर्म्मारण्या ज्योतिषिका गौरग्रीवा गुडाश्मकाः ॥
विदेहकाः सपाञ्चालाः सङ्केताः कङ्कमारुताः ।
कालकोटिसपाषण्डाःपारिपात्रनिवासिनः ॥
कापिङ्गलाः कुरुर्वाह्यस्तथैवोडुम्बरा जनाः ।
गजाह्वयाश्च कूर्म्मस्य जलमध्यनिवासिनः ॥
कृत्तिका रोहिणी सौम्या एतेषां मध्यवासिनाम् ।
नक्षत्रत्रितयं विप्र ! शुभाशुभविपाटकम् ॥
वृषध्वजोऽञ्जनश्चैव जम्बवाख्यो मानवाचलः ।
सूर्पकर्णो व्याघ्रमुखः खर्मकः कर्व्वटाशनः ॥
तथा चन्द्रेश्वराश्चैव खशाश्च मगधास्तथा ।
गिरयो मैथिलाः शुभ्रास्तथा वदनदन्तुराः ॥
प्राग्ज्योतिषाः सलौहित्याः सामुद्राः पुरुषादकाः ।
पूर्णोत्कटो भद्रगौरस्तथोदयगिरिर्द्विज! ॥
कशाया मेखलामुष्टास्ताम्रलिप्तैकपादपाः।
वर्द्धमानाः कोशलाश्च मुखे कूर्म्मस्य संस्थिताः ॥
रौद्रः पुनर्व्वसुः पुष्यो नक्षत्रत्रितयं मुखे ।
पादे तु दक्षिणे देशाः क्रोष्टुके वदतः शृणु ॥
कलिङ्गवङ्गजठराः कोशला मृषिकास्तथा ।
चेदयश्चोर्द्धकर्णाश्च मत्स्याद्या विन्ध्यवासिनः ॥
विदर्भा नारिकेलाश्च धर्म्मद्वीपास्तथैलिकाः ।
व्याघ्रग्रीवा महाग्रीवास्त्रैपुराः श्मश्रुधारिणः ॥
कैस्किन्धा हैमकूटाश्च निषधाः कटकस्थलाः ।
दशार्णाहारिका नग्ना निषादाः काकुलालकाः ॥
तथैव पर्णशवराः पादे वै पूर्ब्बदक्षिणे ।
अश्लेषर्क्षं तथा पैत्र्यं फालगुन्यः प्रथमास्तथा ॥
नक्षत्रत्रितयं पादमाश्रितं पूर्ब्बदक्षिणम् ।
लङ्का कालाजिनाश्चैव शैलिका निकटास्तथा ॥
महेन्द्रमलयाद्रौ च दर्द्दुरे च वसन्ति ये ।
ताम्रपर्णी तथा कुक्षिरिति कूर्म्मस्य दक्षिणः ।
फालगुन्यश्चोत्तरा हस्ता चित्रा चर्क्षत्रयं द्विज ! ।
कूर्म्मस्य दक्षिणे कुक्षौ वाह्यपादस्तथापरम् ॥
काम्बोजाः पह्नवाश्चैव तथैव वडवामुखाः ।
तथा च सिन्धुसौवीराः सानर्त्ता वनितामुखाः ॥
द्रावणाः सार्गिगाः शूद्राः कर्णप्राधेयवर्व्वराः ।
किराताः पारदाः पाण्ड्यास्तथा पारशवाः कलाः ॥
धूर्त्तका हैमगिरिकाः सिन्धुकालककैरताः ।
सौराष्ट्रा दरदाश्चैव द्राविडाश्च महार्णवाः ॥
एते जनपदाः पादे स्थिता वै दक्षिणेऽपरे !
स्वात्यो विशाखा मैत्रञ्च नक्षत्रत्रयमेव च ॥
मणिमेघः क्षुराद्रिश्च खञ्जनोऽस्तगिरिस्तथा।
अपरान्तिका हैहयाश्च शान्तिका विप्रशस्तकाः ॥
कोकङ्कणाः पञ्चदकाः वमना ह्यवरास्तथा ।
तारक्षुरा ह्यङ्गतकाः शर्कराः शाल्मवेश्मकाः ॥
गुरुस्वराः फल्गुनकाः वेणुमत्याञ्च ये जनाः ।
तथा फल्गुलुका घोरा गुरुहाश्च कलास्तथा ॥
एकेक्षणा वाजिकेशा दीर्घग्रीवाः सचूलिकाः ।
अश्वकेशास्तथा पुच्छे जनाः कूर्म्मस्य संस्थिताः ॥
ऐन्द्रमूलन्तथाषाढा नक्षत्रत्रयमेव च ।
माण्डव्याश्चण्डखाराश्च अश्वकालनतास्तथा ॥
कुन्यतालडहाश्चैव स्त्रीवाह्या बालिकास्तथा ।
देशेष्वेतेषु चैतानि नक्षत्राण्यपि वै द्विज ! ॥
एतत्पीडा अमी देशाः पीड्यन्ते ये क्रमोदिताः ।
यान्ति चाभ्युदयं विप्र ! ग्रहैः सम्यगवस्थितैः ।
यस्यर्क्षस्य पतिर्यो वै ग्रहस्तद्भावितो भयम् ॥
तद्देशस्य मुनिश्रेष्ठ ! तदुत्कर्षे शुभागमः ।
प्रत्येकं देशसामान्यं नक्षत्रग्रहसम्भवम् ॥
भयं लोकस्य भवति शोभनं वा द्विजोत्तम ! ।
स्वर्क्षैरशोभनैर्जन्तोः सामान्यमिति भीतिदम् ॥
ग्रहैर्भवति पीडोत्थमल्पायासमशोभनम्।
तथैव शोभनः पाको दुःस्थितैश्च तथा ग्रहैः ॥
अल्पोपकाराय नृणां देशज्ञैश्चात्मनो बुधैः ।
द्रव्ये गोष्ठेऽथ भृत्येषु सुहृत्सु तनयेषु वा ॥
भार्य्यायाञ्च ग्रहे दुःस्थे भयं पुण्यवतां नृणाम् ॥
आत्मन्यथाल्पपुण्यानां सर्वत्रैवातिपापिनाम् ।
नैकत्रापि ह्यपापानां भयमस्ति कदाचन ॥
दिग्देशजनसामान्यं नृपसामान्यमात्मजम्।
नक्षत्रग्रहसामान्यं नरो भुङ्क्ते शुभाशुभम् ॥
परस्पराभिरक्षा च ग्रहादौःस्थ्येन जायते ।
एतेभ्य एव विप्रेन्द्र ! शुभहानिस्तथाशुभैः ॥
यदेतत् कूर्मसंस्थानं नक्षत्रेषु मयोदितम् ।
एतत् तु देशसामान्यमशुभं शुभमेव च ।
तस्मात् विज्ञाय देशर्क्षं ग्रहपीडान्तथात्मनः ॥
कुर्व्वीत शान्तिं मेधावी लोकवादांश्च सत्तम ! ।
आकाशाद्देवतानाञ्च दैत्यादीनाञ्च दौर्हृदाः ॥
पृथ्व्यां पतन्ति ते लोके लोकवादा इति श्रुताः ।
तां तथैव बुधःकुर्य्यात् लोकवादान्न हापयेत् ॥
तेषान्तत्करणान्नृणां युक्तो दुष्टागमक्षयः ॥
शुभोदयं प्रहाणिञ्च पापानां द्विजसत्तम ! ।
प्रज्ञाहानिं प्रकुर्य्युस्ते द्रव्यादीनाञ्च कुर्वते ॥

कर्कोटकवने ये च भृगुकच्छाः सकोङ्कणाः ॥
सर्व्वाश्चैव तथाऽऽभीरा वैण्यास्तीरनिवासिनः ।
अवन्तयो दासपुरा स्तथैवाकणिनो जनाः ॥
महाराष्ट्राः सकर्णाटा गोनर्द्दाश्चित्रकूटकाः ।
चोलाःकोलगिराश्चैव क्रौञ्चद्वीपजढाधराः ॥
कावेरी ऋष्यमूकस्था नासिक्याश्चैव ये जनाः ।
शङ्खशुक्त्यादिवैदूर्य्यशैलप्रान्तचराश्च ये ।
तथा वारिचराः कोलाः चर्म्मपट्टनिवासिनः ।
गणवाह्याः पराः कृष्णाद्वीपवासनिवासिनः ॥
सूर्य्याद्रौ कुमुदाद्रौ च ते वसन्ति तथा जनाः ।
औखावनाः सपिशिका स्तथा ये कर्म्मनायकाः ॥
दक्षिणाः कौरुषा ये च ऋषिकास्तापसाश्रमाः ॥
ऋषभाः सिंहलाश्चैव तथा काञ्चीनिवासिनः ।
तिलङ्गा कुञ्जरदरी कच्छवासाश्च ये जनाः ।

नृसिंहा वेणुमत्याञ्च बलावस्थास्तथापरे
॥
धर्म्मबद्धास्तथालूका उरुकर्म्मस्थिता
जनाः ।
वामपादे जनाः पार्श्वे स्थिताः कूर्म्मस्य
भागुरे ॥
आषाढाश्रबणे चैव धनिष्ठा यत्र संस्थिता ।
कैलासो हिमवांश्चैव धनुष्मान्
वसुमांस्तथा ॥
क्रौञ्चाः कुरुवकाश्चैव क्षुद्रवीणाश्च ये
जनाः ।
रसालयाः सकैकेया भोगप्रस्थाः
सयामुनाः ॥
अन्तर्द्वीपास्त्रिगर्त्ताश्च अग्नीज्याः सार्दना
जनाः ।
तथैवाश्वमुखाः प्राप्ताश्चिविडाः
केशधारिणः ॥
दासेरका वाटधानाः शवधानास्तथैव च ।
पुष्कलाधमकैराता स्तथा तक्षशिलाश्रयाः
॥
अम्बाला मालवा मद्रा वेणुकाः
सवदन्तिकाः ।
पिङ्गला मानकलहा हूणाः
कोहलकास्तथा ॥
माण्डव्या भूतियुवकाः शातका
हेमतारकाः ।
यशोमत्याः सगान्धाराः स्वरसागरराशयः
॥
यौधेया दासमेयाश्च राजन्याः
श्यामकास्तथा ।
क्षेमधूर्त्ताश्च कूर्म्मस्य वामकुक्षिमुपाश्रिताः
॥
वारुणञ्चात्र नक्षत्रं तत्र प्रौष्ठपदाद्वयम् ।
येन किन्नरराज्यञ्च पशुपालं सकीचकम् ॥
काश्मीरकं तथा राष्ट्रमभिसारजनस्तथा ।
दवदास्त्वङ्गनाश्चैव कुलटा वनराष्ट्रकाः ॥
सैरिष्टा ब्रह्मपुरकास्तथैव वनवाह्यकाः ।
किरातकौशकानन्दा जनाः पह्लवलोलनाः
॥
दार्वादा मरकाश्चैव कुरटाश्चान्नदारकाः ।
एकपादाः खशा घोषाः
स्वर्गभौमानवद्यकाः ॥
तथा सयवना हिङ्गाश्चीरप्रावरणाश्चये ।

तस्माच्छान्तिपरः प्राज्ञो लोकवादरतस्तथा
।
लोकवादांश्च शान्तीश्च ग्रहपीडासु कारयेत्
॥
अद्रोहानुपवासांश्च शस्तं चैत्यादिवन्दनम् ।
जपं होमं तथा दानं स्नानं क्रोधादिवर्जनम्
॥
अद्रोहः सर्व्वभूतेषु मैत्रीं कुर्य्याच्च पण्डितः
।
वर्जयेदसतीं वाचमतिवादांस्तथैव च ॥
ग्रहपूजाञ्च कुर्व्वीत सर्व्वपीडासु मानवः ।
एवं शाम्यन्त्यशेषाणि घोराणि द्विजसत्तम !
॥
प्रयतानां मनुष्याणां ग्रहर्क्षोत्थान्यशेषतः ।
एष कूर्मो मया ख्यातो भारते भगवान् विभुः
॥
नारायणो ह्यचिन्तात्मा यत्र सर्व्वं प्रतिष्ठितम्
।
तत्र देवाः स्थिताः सर्व्वे प्रतिनक्षत्रसंश्रयाः
॥
तथा मध्ये हुतवहः पृथ्वी सोमश्च वै द्विज !
।
मेषादयस्त्रयो मध्ये मुखे द्वौ मिथुनादिकौ ॥
प्राग्दक्षिणे तथा पादे कर्किसिंहौ व्यवस्थितौ
।
सिंहकन्यातुलाश्चैव कुक्षौ राशित्रयं स्थितम्
।
तुलाथ वृश्चिकश्चोभौ पादे दक्षिणपश्चिमे ॥
पृष्ठे च वृश्चिकेनैव सह धन्वी व्यवस्थितः ।
वायव्ये चास्य वै पादे धनुर्ग्राहादिकं त्रयम् ॥
कुम्भमीनौ तथैवास्य उत्तरां कुक्षिमाश्रितौ ।
मीनमेषौ द्विजश्रेष्ठ ! पादे पूर्ब्बोत्तरे स्थितौ ॥
कूर्मे देशास्तथर्क्षाणि देशेष्वेतेषु वै द्विज ! ॥
राशयश्च तथर्क्षेषु ग्रहराशिष्ववस्थिताः ।

| | त्रिनेत्राः पौरवाश्चैव गन्धर्व्वाश्च द्विजोत्तम ! ॥<br>पूर्ब्बोत्तरन्तु कूर्म्मस्य पादमेते समाश्रिताः ।<br>रेवत्याश्चाश्विदैवत्यं याम्यञ्चर्क्षमिति त्रयम् ॥<br>तत्र पादे समाख्यातं पाकाय मुनिसत्तम ! । | |
|---|---|---|

तस्माद्ग्रहर्क्षपीडासु देशपीडां
विनिर्दिशेत् ॥
तत्र स्नात्वा प्रकुर्वीत दानहोमादिकं
विधिम् ।
स एष वैष्णवः पादो ब्रह्मा मध्ये ग्रहस्य
यः” ॥ * ॥
विष्णुः । स एव कश्यपसंज्ञया
परिकीर्त्यते तत्प्रमा-
णादिकं यथा, -- शतपथब्राह्मणे । ७ ।
५ । १ । ५ ।
“स यत्कूर्म्मो नाम । प्रजापतिः प्रजा
असृजत
यदसृजताकरोत् तद् यदकरोत् तस्मात्
कूर्म्मः
कश्यपो वै कूर्म्मस्तस्मादाहुः सर्व्वाः
प्रजाः का-
श्यप्य” इति ॥ अत्र
स्वामिदयानन्दकृतभाष्यम् ।
स यत् कूर्म्म इति । “परमेश्वरेणेदं
सकलं जगत्
क्रियते तस्मात्तस्य कूर्म्म इति संज्ञा ।
कश्यपो वै
कूर्म्म इत्यनेन परमेश्वरस्यैव
कश्यपनामास्ति ।
तेनैव इमाः सर्व्वाः प्रजा
उत्पादितास्तस्मात्
सर्व्वा इमाः प्रजाः काश्यप्य इत्युच्यन्ते
। कश्यपः
कस्मात् पश्यको भवतीति निरुक्त्या
पश्यतीति
पश्यः सर्व्वज्ञतया सकलं जगत्
विजानाति स पश्यः
पश्य एव निर्भ्रमतयातिसूक्ष्ममपि वस्तु
यथार्थं जा-
नात्येव अतः पश्यक इति ।
आद्यान्ताक्षरविपर्य्यया-
सिद्धेःसिंहः कृतेस्तर्कुरित्यादिवत्
कश्यप इति हय-
वरट् इत्येतस्योपरि महाभाष्यप्रमाणेन
पदं सिध्य-

“इत्यध्वनः कैश्चिदहोभिरन्ते
कूलं समासाद्य कुशः सरय्वाः” ॥)
तत्पर्य्यायः । रोधः २ तीरम् ३ प्रतीरम् ४ तटम्
५ तटः ६ तटी ७ । इत्यमरः । १ । १० । ७ ॥
रोधम् ८ । इति शब्दरत्नावली ॥ वेला ९ । इति
जटाधरः ॥ (कूल्यते आव्रियतेऽसौ । कूल +
घञर्थे
कः ।) स्तूपः । सैन्यपृष्ठम् । तडागः । इति विश्वः
॥

**कूलकं**, क्ली, पुं, (कूल + स्वार्थे संज्ञायां वा कन् ।)
स्तूपः । इति मेदिनी । तीरम् । इति विश्वः ॥

**कूलकः**, पुं, (कूल + संज्ञायां कन् ।) कृमिपर्ब्बतः ।
इति मेदिनी । उएर ढिपि इति भाषा ॥

**कूलङ्कषः**, पुं, (कूलं तीरं कषति भिनत्तीति । कष् +
खश् मुम् च ।) समुद्रः । इति त्रिकाण्डशेषः ॥

**कूलङ्कषा**, स्त्री, (कूलङ्कष + टाप् ।) नदी । इति
हलायुधः ॥ (यथा, शाकुन्तले ५ माङ्के ।
“व्यपदेशमाविलयितुं समीहसे माञ्च नाम पात-
यितुम् । कूलङ्कषेव सिन्धुः प्रसन्नमोघं तटतरुञ्च”
॥)

**कूलभूः**, स्त्री, (कूलस्य तीरस्य भूः भूमिः ।) तीर-
भूमिः । इति हेमचन्द्रः ॥

**कूलवती**, स्त्री, (कूलं तटः अस्त्यस्याः । अस्त्यर्थे
मतुप् मस्य वः । ततो ङीप् ।) नदी । इति राज-
निर्घण्टः ॥

**कूलहण्डकः**, पुं, (कूले तडागादौ हुण्डते संघीभव-
तीति । हुडि सघे + ण्वुल् इदित्वात् नुम् च ।
पृषोदरात् उकारलोपः ।) जलावर्त्तः । इति
त्रिकाण्डशेषः ॥

**कूवरः**, पुं, क्ली, (कू शब्दे + वरच् ।) युगन्धरः ।
यत्र रथस्य यूपकाष्ठमासज्यते तत्र । इत्यम-
रमेदिनीकरौ ॥ (यथा, रामायणे ३ । २८ । ३० ।
“हेमचन्द्रमसम्बाधं वैदूर्य्यमणिकूवरम्” ॥
रथमित्यर्थः ॥)

**कूवरः**, पुं, (कू + वरच् ।) कुब्जकः । कुँजा इति

मन्त्रात्मकदेवतासु ऋक्षु तु स्त्रियां ङीप् ।
यथा,
याज्ञवल्क्ये ।
“त्रिरात्रोपोषितो भूत्वा कूष्माण्डीभिर्घृतं
शुचिः ।
सुरापः स्वर्ण्णहारी च रुद्रजापी जले
स्थितः” ॥
“त्रिरात्रसुपोषितः कूष्माण्डीभिर्यद्देवा
देवहेडन-
मित्याद्याभिः
कूष्माण्डदृष्टाभिरनुष्टुब्भिर्मन्त्रलिङ्ग-
देवताभिरृग्भिश्चत्वारिंशद्धृताहुतीर्हुत्वा शुचि-
र्भवेत्” ॥ तथा, मिताक्षरायाम् । “अथ
कूष्माण्डी-
भिर्जुहुयाद्योऽपूतमिवात्मानं मन्येत
यदर्व्वाची-
नमेनोभ्रूणहत्यायास्तस्मान्मुच्यतेअयोनौ वा
रेतः
सिक्त्वा अन्यत्र स्वप्नादिति” । वशिष्ठस्मृतौ
च ।
“सर्व्ववेदपवित्राणि वक्ष्यामहमतः परम् ।
येषां जपैश्च होमैश्च पूयन्ते नात्रसंशयः ॥
अघमर्षणं देवकृतः शुद्धवत्यस्तरत् समाः ।
कूष्माण्ड्यः पावमान्यश्च दुर्गासावित्र्यथैव
च” ॥)

**कूहना**, स्त्री, (कुह + युच् । पृषोदरात् पूर्ब्बदीर्घः ।)
कुहना । इति शब्दरत्न्यवली ॥

**कूहा**, स्त्री, (कु कुत्सितं ईषद्वा ऊह्यतेऽत्र । ऊह
वितर्के + अधिकरणे घञर्थे कः । यद्वा
कुहयति
मोहयति लोकान् । कुह + कः
पृषोदरादित्वाद्
दीर्घः ।) कुज्झटिका । इति शब्दरत्नावली ।
कुया इति भाषः ॥

**कृ**, ञ कृतौ । इति कविकल्पद्रुमः ॥ (भ्वां-उभं-सकं-
अनिट् ।) ञ, करति करते । अयं कैश्चित् न
मन्यते । इति दुर्गादासः ॥

**कृ**, ञ न वधे । इति कविकल्पद्रुमः ॥ (स्वां--उभं--
सकं--

ति अतः सुष्टु विज्ञायते काश्यप्यः प्रजा इति" ॥ * ॥)

**कूर्म्मपृष्ठः**, पुं, (कूर्म्मस्य पृष्ठमिव । कठोरत्वात् तथा-
त्वम् ।) अम्लानवृक्षः । इति शब्दचन्द्रिका ॥ कच्छ-
पस्य पृष्ठदेशः ॥ (यथा, महाभारते ३ । ४६ । ११ ।
"गूढगुल्फशिरौ पादौ ताम्रायततलाङ्गुली ।
कूर्म्मपृष्ठोन्नतौ चापि शोभेते किङ्किणीकिणौ" ॥)

**कूर्म्मपृष्ठकं**, क्ली, (कूर्म्मपृष्ठमिव कायते प्रकाशते
इति । कै + कः ।) शरावम् । इति शब्दचन्द्रिका ।
शरा इति भाषा ॥

**कूर्म्मराजः**, पुं, (कूर्म्मरूपेण कूर्म्मेषु वा राजते यः ।
राज् + अच् ।) कच्छपराजः । तत्पर्य्यायः । अकू-
पारः २ परीवर्त्तः ३ । इति जटाधरः । तथाहि ।
"पृथ्वि ! स्थिरा भव भुजङ्गम ! धारयैनां
त्वं कूर्म्मराज ! तदिदं द्वितयं दधीथाः ।
दिक्कुञ्जराः कुरुत तत्त्रितये दिधीर्षा-
मार्य्यः करोतु हरकार्म्मुकमाततज्यम्" ॥
इति महानाटकम् ॥ स एवादिकच्छपः । यथा ।
"विलोक्य विघ्नेशविधिं तदेश्वरो
दुरन्तवीर्य्योऽवितथोऽभिसन्धिः।
कृत्वा वपुः काच्छपमद्भुतं महत्
प्रविश्य तोयं गिरिमुज्जहार ॥
सुरासुरेन्द्रैर्भुजवीर्य्यवेपितं
परिभ्रमन्तं गिरिमङ्ग ! पृष्ठतः ।
बिभ्रत्तदावर्त्तनमादिकच्छपो
मेनेऽङ्गकण्डूयनमप्रमेयः" ॥
इति श्रीभागवते । ८ । ७ । ८, १० ॥

**कूल**, आवृतौ । इति कविकल्पद्रुमः ॥ (भ्वां--परं--
सकं--सेट् ।) षष्ठस्वरी । कूलति वाटी प्राचीरम् ।
भाषा । मनोज्ञे, त्रि । इति मेदिनी ॥

**कूवरी**, स्त्री, (कूवर + गौरादित्वात् ङीष् ।) कम्ब-
लाच्छादितरथः । इति हलायुधः ॥

**कूष्माण्डः**, पुं, (कु ईषत् ऊष्मा अण्डेषु वीजेषु यस्य ।)
कर्कारुः । गणदेवताविशेषः । इति हेमचन्द्रः ॥
(कूष्माण्डाकारत्वात् शिवगणोऽपि तन्नाम्नाऽऽख्या-
यते । यथा, भागवते २ । ६ । ४२ । "अन्ये च ये
प्रेतपिशाचभूतकूष्माण्डयादोमृगपक्ष्यधीशाः" ॥
ऋषिविशेषः । यथा, याज्ञवल्क्ये ।
"कुष्माण्डो राजपुत्त्रश्चेत्यन्ते स्वाहासमन्वितैः" ॥
यजुर्वेदिकमन्त्रविशेषः । यथा, मनुः ८ । १०६ ।
"कुष्माण्डैर्वापि जुहुयाद् घृतमग्नौ यथाविधि" ॥
"कुष्माण्डमन्त्रा यजुर्वेदिकाः यद्देवा देवहेलनमित्ये-
वमादयः । तैर्मन्त्रदेवतायै घृतमग्नौ जुहुयात्" ।
इति तट्टीकायां कुल्लूकभट्टः ॥)

**कूष्माण्डकः**, पुं, (कूष्माण्ड + स्वार्थे कन् ।) कूष्माण्डः ।
इत्यमरटीकायां स्वामी ॥

**कूष्माण्डी**, स्त्री, (कूष्माण्ड + गौरादित्वात् जातित्वात्
वा ङीष् ।) ओषधिः । अम्बिका । इति हेमचन्द्रः ॥
(अम्बिकायाश्च कूष्माण्डबलिप्रियत्वात् तथात्वम् ।
अनिट् ।) ञ न, कृणोति कृणुते । इति दुर्गादासः ॥

**कृ**, ञ द डु कृतौ । इति कविकल्पद्रुमः ॥ (तनां--उभं
--सकं--अनिट् ।) ञ द, करोति कुरुते । डु, कृत्रि-
मम् । अस्माद्गुणी मकारोऽप्यगुणी वा वक्तव्य
इति वररुचिः ॥ "तेन किं करोमि कथं कुर्मि
क्वानु गच्छामि माधव ! । दुर्य्योधनविहीनन्तु
शून्यं सर्व्वमिदं जगत्" ॥ इति दुर्गादासः ॥

**कृकः**, पुं, (कृ + कक् ।) गलः । इति हेमचन्द्रः ॥

**कृकणः**, पुं, (कृ इति कणति शब्दं करोतीति । कृ +
कणशब्दे + अच् ।) क्रकरपक्षी । कयार इति
भाषा । इत्यमरः । २ । ५ । १९ ॥ कृमिः । इति
हारावली ॥

**कृकरः**, पुं, (कृ करणं सृष्ट्यादिकार्य्यं करोतीति ।
कृ + ट ।) शिवः । इति त्रिकाण्डशेषः ॥ (कृ
इति क्षुतादिशब्दं करोतीति ।) शरीरवाह्यपञ्च-
वाय्वन्तर्गतवायुविशेषः । यथा, --
"कृकरस्तु क्षुते चैव जवाकुसुमसन्निभः" ।
इति शारदातिलकटीका ॥ कृकणपक्षी । इति
शब्दरत्नावली ॥ चव्यकम् । करवीरवृक्षः । इति
राजनिर्घण्टः ॥

**कृकला**, स्त्री, (कृकाकारं गलदेशाकृतिं लातीति ।
ला + कः टाप् च ।) पिप्पली । इति राजनिर्घण्टः ॥
(कृकं शोभितगलं लातीति । कृकलासस्त्री । यथा,
इन्द्रजालतन्त्रे ।
"सर्पदन्तं गृहीत्वा तु कृष्णवृश्चिककण्टकम् ।
कृकलारक्तसंयुक्तं सूक्ष्मचूर्णन्तु कारयेत्" ॥)

| | | |
|---|---|---|
| इति दुर्गादासः ॥<br><br>**कूलं**, क्ली, (कूलति जलप्रवाहं आवृणोतीति । कूल्<br><br>+ अच् ।) नद्या जलसमीपस्थानम् ।<br><br>(यथा, रघुः । १६ । ३५ । | | |

**कृकलाशः**, पुं, (कृकं कण्टं लासयति शोभायुक्तं करोति । कृक + लस + णिच् + अच् । पृषो-दरात् तालव्यशकारः ।) कृकलासः । इति त्रिकाण्डशेषः ॥

**कृकलासः**, पुं, (कृकं कण्टं लासयति शोभान्वितं करोतीति । कृक + लस + णिच् अच् ।) जन्तु-विशेषः । काँकलास् इति भाषा ॥
(यथा, भागवते । ८ । १० । ११ ।
"शिवाभिराखुभिः केचित् कृकलासैः शशैर्नरैः" ।)
तत्पर्य्यायः । सरटः २ । इत्यमरः । २ । ५ । १२ ॥
वेदारः ३ क्रकचपात् ४ तृणाञ्जनः ५ प्रतिसूर्य्यः ६ ।
इति त्रिकाण्डशेषः ॥ प्रतिसूर्य्यकयानकः ७
वृत्तिस्थः ८ कण्टकागारः ९ दुरारोहः १० द्रुमा-श्रयः ११ । इति राजनिर्घण्टः ॥ (सूर्य्यवंशोद्भवो-नृगनामको राजा ब्रह्मगोहरणेन कृकलासत्वं गतस्तद्विवरणं महाभारते १३ । ७० अध्याये ।
उक्तं यथा, --
"अत्रैव कीर्त्त्यते सद्भिर्ब्राह्मणस्वाभिमर्षणे ।
नृगेण सुमहत्कृच्छ्रं यदवाप्तं कुरूद्वह ! ॥
अदृश्यत महाकूपस्तृणवीरुत्समावृतः ।
प्रयत्नं तत्र कुर्व्वाणास्तस्मात् कूपाज्जलार्थिनः ॥
श्रमेण महता युक्तास्तस्मिंस्तोये सुसंवृते ।
ददृशुस्ते महाकायं कृकलासमवस्थितम् ॥
तस्य चोद्धरणे यत्नमकुर्व्वंस्ते सहस्रशः ।
प्रग्रहैश्चर्म्मपट्टैश्च तं बद्ध्वा पर्व्वतोपमम् ।
नाशक्नुवन् समुद्धर्त्तुं ततो जग्मुर्जनार्द्दनम् ।
खमावृत्योदपानस्य कृकलासः स्थितो महान् ।
तस्य नास्ति समुद्धर्त्तेत्येतत् कृष्णे न्यवेदयन्" ॥)

**कृकवाकुः**, पुं, (कृकेन गलेन वक्ति । "कृके वचः कश्च" । उणां १ । ६ । इति कृकशब्द उपपदे ञुण् कश्चा-न्तादेशः ।) कुक्कुटः । इत्यमरः । २ । ५ । १७ ॥
(यथा, माघे ११ । ९ । "अनुनयमगृहीत्वा व्याज-सुप्ता पराची रुतमथ कृकवाकोस्तारमाकर्ण्य-कल्ये" ॥) मयूरः । सरटः । इति मेदिनी ॥

**कृकवाकुध्वजः**, पुं, (कृकवाकुः मयूरः ध्वजे रथध्वजे यस्य ।) कार्त्तिकेयः । इति त्रिकाण्डशेषः ॥

**कृकाटिका**, स्त्री, (कृकं कण्ठं अटति आप्नोति कण्ठं

"रेतोविघातप्रभवे तु कृच्छ्रे
समीक्ष्य दोषं प्रतिकर्म कुर्य्यात्" ॥
इति चरके चिकित्सास्थाने २६
अध्याये ॥)
तद्वति त्रि ॥ कृन्तत्यनेन पापमिति ।
सान्तपनादि-
व्रतम् । इत्यमरः । २ । ७ । ४२ ॥
(यथा, याज्ञवल्क्ये ।
"गोमूत्रं गोमयं क्षीरं
दधिसर्पिःकुशोदकम् ।
जग्ध्वा परेह्न्युपवसेत् कृच्छ्रं
सान्तपनं चरन्" ॥)
स्मृतौ व्रते पुंलिङ्गोऽप्ययम् ॥
पापम् । इति मेदिनी ॥ मूत्रकृच्छ्ररोगः
। इति
राजनिर्घण्टः ॥
("हरीतकीगोक्षुरराजवृक्ष-
पाषाणभिद्धन्नयवासकानाम् ।
क्वाथं पिबेन्माक्षिकसंप्रयुक्तम् ॥"
इति वैद्यकचक्रपाणिसङ्ग्रहे
मूत्रकृच्छ्राधिकारे ॥
व्यसनम् । यथा, रामायणे ४ । १४ ।
१४ ।
"अनृतं नोक्तपूर्ब्बं मे चिरं कृच्छ्रेऽपि
तिष्ठता ।
धर्म्मलोभपरीतेन न च वक्ष्ये
कथञ्चन" ॥)

**कृच्छ्रातिकृच्छ्रः**, पुं, (कृच्छ्रात् कष्टादपि अतिकृच्छ्रः ।)
व्रतविशेषः । यथा, वशिष्ठः ।
"अब्भक्षस्तृतीयः
कृच्छ्रातिकृच्छ्रो यावत् सकृदाददीत ।
यावदेकवार-
मुदकं हस्तेनं ग्रहीतुं शक्नोति
तावन्नवसु दिवसेषु
भक्षयित्वा त्र्यहमुपवासः
कृच्छ्रातिकृच्छ्रः" ॥ सुमन्तु-
र्यथा । "द्वादशरात्रं निराहारः स
कृच्छ्रातिकृच्छ्रः ।

सिद्धमिति रमानाथः । मनितः यतितं
इत्यादि
सिद्धमिति क्रमदीश्वरः ।
ईदित्करणमाभ्यां यङ्-
लुकि निष्ठायां इम्निषेधार्थं इति केचित् ।
चरीकृत्त इति । किञ्चैतन्मते धावितादीनां
धावनं धावः धावोऽस्य जातः धावितः
इत्यादि
समाधानम् ।
"विरहिनिकृन्तनकुन्तमुखाकृति-
केतकिदन्तुरिताशे" इत्यत्र निकृन्तन
इति जय-
देवोक्तं निकृन्तं करोति इति शत्रन्तात्
ञौ
नन्द्यादित्वादने साध्यम् । इति दुर्गादासः
॥

**कृत्**, ई ध वेष्टे । इति कविकल्पद्रुमः ॥ (रुधां-परं-सकं-सेट् । ईर्निष्ठायामनिट् ।) ई, कृत्तः । ध,
कृणत्ति चकर्त्त । इति दुर्गादासः ॥

**कृतं**, क्ली, (क्रियते सत्यमेवानुष्ठीयतेऽस्मिन् यद्वा क्रियते सत्ये स्थाप्यते लोको यत्र । कृ + क्तः ।)
सत्ययुगम् । (यथा, विष्णुपुराणे । २ । १
। ४३ ।
"कृतत्रेतादिसर्गेण युगाख्यां
ह्येकसप्ततिः" ॥)
पर्य्याप्तम् । इत्यमरः । ३ । ३ । ७६ ॥
फलम् । इति
हेमचन्द्रः ॥ अलमर्थः । इति मेदिनी ॥
(यथा, --
शाकुन्तले १ माङ्के । "अथवा कृतं
सन्देहेन" ॥
पुं, वसुदेवस्य रोहिण्यां पत्न्यां जातः
पुत्त्रविशेषः ।
यथा, भागवते ९ । २४ । ४६ ।
"बलं गदं सारणञ्च दुर्म्मदं विमलं ध्रुवम् ।
वसुदेवस्तु रोहिण्यां कृतादीनुदपादयत्"
॥)

व्याप्यास्तीति भावः । अट् + ण्वुल् टाप् अत इत्वं च ।) घाटा । इत्यमरः । २ । ६ । ८८ ॥ घाड इति भाषा ॥ (यथा, सुश्रुते "जत्रूद्र्ध्वं मर्म्माणि चतस्रो धमन्योऽष्टौ मातृका द्वे कृकाटिके" ॥ "जानुकूर्परसीमन्ताधिपतिगुल्फमणिबन्धकुकुन्द-रावर्त्तकृकाश्चेति सन्धिमर्म्माणि" ॥)

**कृकूलासः**, पुं, (कृकलास + पृषोदरात् दीर्घऊ-कारः ।) कृकलासः । इत्यमरटीका ॥

**कृच्छ्रं**, क्ली, (कृन्तति सुखम् । कृति छेदने "कृतेश्छ-क्रू च" । उणां । २ । २१ इति रक् छश्चान्तादेशः ।) कष्टम् । (यथा, मनुः ६ । ७८ ।
"नदीकूलं यथा वृक्षो वृक्षं वा शकुनिर्यथा ।
तथा त्यजन्निमन्देहं कृच्छ्राद्ग्राहाद्विमुच्यते" ॥
"मिवोपला वा समयावशूका
कृच्छ्रेय सर्व्वेष्वपि भेषनं स्यात्" ॥
एतत् कृच्छ्रातिकृच्छ्रद्वयं द्वादशाहसाध्यमशक्तविषयम्" ॥ ब्रह्मपुराणम् ।
"चरेत् कृच्छ्रातिकृच्छ्रञ्च पिबेत्तोयञ्च शीतलम् ।
एकविंशतिरात्रन्तु कालेष्वेतेषु संयतः" ॥
कालेष्विति प्रातःसायंमध्याह्नेष्वित्यर्थः । इति प्रायश्चित्तविवेकः ॥ (यथा, मनुः ११ । २०८ ।
"अवगूर्य्य चरेत् कृच्छ्रमतिकृच्छ्रं निपातने ।
कृच्छ्रातिकृच्छ्रौ कुर्व्वीत विप्रस्योत्पाद्य शोणितम्" ॥)

**कृच्छ्रारिः**, पुं, (कृच्छ्रास्य मूत्रकृच्छ्ररोगस्य कष्टस्य वा अरिर्नाशकः ।) विल्वान्तरवृक्षः । इति राजनिर्घण्टः ॥

**कृच्छ्रार्द्धः**, पुं, (कृच्छ्रस्य अतीवक्लेशसहव्रतविशेषस्य अर्द्धः अंशविशेषः । दिनषट्कसाध्यत्वात्तथात्वम् ।) दिनषट्कसाध्यव्रतविशेषः । यथा, आपस्तम्बः ।
"सायं प्रातस्तथैकैकं दिनद्वयमयाचितम् ।
दिनद्वयञ्च नाश्नीयात् कृच्छ्रार्द्धः सोऽभिधीयते" ॥
इति प्रायश्चित्तविवेकः ॥

**कृणुः**, पुं, (करोति प्रतिमूर्त्यादिकम् । कृ + बाहुलकात् नु णत्वञ्च ।) चित्रकरजातिः । इति त्रिकाण्डशेषः ॥

**कृत्**, ई श प छिदि । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-सेट् ।) ई, कृत्तः । श प, कृन्तति । (यथा, हितोपदेशे, --

**कृतं**, त्रि, (क्रियते विधीयते हन्यते निष्पाद्यते वा । कृ + कर्म्मणि क्तः ।) विहितम् । (यथा, वेणीसंहारे ।
"कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकम्" ॥)
हिंसितम् । इति मेदिनी ॥ निष्पादितम् । इत्यमरटीकायां मथुरानाथः ॥

**कृतकं**, क्ली, (कृत + संज्ञायां कन् ।) विडलवणम् । इत्यमरः ॥ (अस्य पर्य्याया यथा,
"विडम्पाक्यञ्च कृतकं तथा द्राविडमासुरम्" ॥
इति भावप्रकाशे पूर्ब्बखण्डे प्रथमे भागे ॥ कृन्ततीति कृती छेदने + "बहुलमन्यत्रापि" । उणां २ । ३७ । इति क्वुन् । मिथ्या । इत्युज्ज्वलदत्तः ॥ पुं, वसुदेवस्य मदिरायां पत्न्यां जातः पुत्त्रविशेषः । यथा, भागवते ९ । २४ । ४८ ।
"नन्दोपनन्दकृतकशूराद्या मदिरात्मजाः" ॥
त्रैलोक्यमेतत् कृतकमित्युच्यते कार्य्यत्वात् । यथा, विष्णुपुराणे । २ । ७ । १६-२० ।
"पादगम्यन्तु यत्किञ्चित् वस्त्वस्ति पृथिवीमयम् ।
स भूर्लोकः समाख्यातो विस्तारोऽस्य मयोदितः ॥
भूमिसूर्य्यान्तरं यत्तु सिद्धादिमुनिसेवितम् ।
भुवर्लोकस्तु सोऽप्युक्तो द्वितीयो मुनिसत्तम ! ॥
ध्रुवसूर्य्यान्तरं यच्च नियुतानि चतुर्द्दश ।
स्वर्लोकः सोऽपि गदितो लोकसंस्थानचिन्तकैः ॥
त्रैलोक्यमेतत् कृतकं मैत्रेय ! परिपठ्यते ।
जनस्तपस्तथा सत्यमिति चाकृतकं त्रयम् ॥

|  |  |  |
| --- | --- | --- |
|  | “न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।<br>विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति” ॥)<br>नृत्कृत्वृदित्यादिसूत्रेण वेमत्वादेव निष्ठायां<br>अनिमत्वे सिद्धे अस्य पूर्ब्बस्य च ईदनुबन्धो नेम्-<br>डीश्वीत्यस्य व्यभिचारसूचनार्थः ।<br>तेन धावुञ जवे<br>मृजीत्यादीनां धाविताः पान्थसार्था इत्यादि | कृताकृतकयोर्मध्ये मर्हलोक इति स्मृतः ।<br>शून्यो भवति कल्पान्ते योऽत्यन्तं न विनश्यति” ॥<br>अत्र व्याख्यायां श्रीमत्स्वामिपादेनोक्तम् ।<br>यथा, --<br>“त्रैलोक्यं कृतकं प्रतिकल्पं कार्य्यत्वात् । |

जनर्लोकादित्रयं अकृतकं
प्रतिकल्पमकार्य्यत्वात् ॥
महलाकस्य कृताकृतत्वे हेतुमाह शून्य
इति” ॥)

**कृतकः**, त्रि, (कृन्तति स्वरूपम् । कृत् + क्कुन् । करणा-
ज्जात इत्यर्थः । कृत्रिमस्य
स्वरूपाच्छादकत्वात्
तथात्वम् ।) कृत्रिमः । इत्युणादिकोषः ॥
(यथा, महाभारते । ४ । २ । २९ ।
“एतेन विधिना छन्नः कृतकेन यथानलः”
॥)

**कृतकर्म्मा**, [न्] त्रि, (कृतं कर्म्म येन सः ।) कार्य्य-
क्षमः । तत्पर्य्यायः । प्रवीणः २ शिक्षितः
३ नि-
ष्णातः ४ निपुणः ५ दक्षः ६ कृतहस्तः
७ कृतमुखः
८ कुशलः ९ चतुरः १० अभिज्ञः ११
विज्ञः १२
वैज्ञानिकः १३ पटुः १४ छेकः १५
विदग्धः १६ ।
इति हेमचन्द्रः ॥ (यथा, महाभारते १ ।
१५५ । २९ ।
“अथवाप्यहमेवैनं हनिष्यामि वृकोदर ! ।
कृतकर्म्मा परिश्रान्तः साधु तावदुपारम”
॥
पुं, विष्णुः । यथा, महाभारते १३ ।
१४९ । ९७ ।
“इन्द्रकर्म्मा महाकर्म्मा कृतकर्म्मा
कृतागमः” ॥)

**कृतकृत्यः**, त्रि, (कृतं निष्पादितं कृत्यं कार्य्यं येन सः ।)
निष्पन्नकर्म्मा । समाप्तकार्य्यः । यथा,
माघे । २ । ३२ ।
“कृतकृत्यो विधिर्मन्ये न वर्द्धयति तस्य
ताम्” ॥

**कृतकोटिः**, पुं, (कृता विहिता कोटिः शास्त्राणां
(यथा, मनुः । ७ । २०९--२१०
“धर्म्मज्ञञ्च कृतज्ञञ्च तुष्टिप्रकृतिमेव च ।
अनुरक्तं स्थिरारम्भं लघुमित्रं प्रशस्यते ॥
प्राज्ञं कुलीनं शूरञ्च दक्षं दातारमेव च ।
कृतज्ञं धृतिमन्तञ्च कष्टमाहुररिं बुधाः” ॥)
कुक्कुरे, पुं । इति मेदिनी ॥
(पुं, विष्णुः । यथा, महाभारते १३ । १४९ ।
२२ ।
“अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान्” ॥)

**कृतत्रा**, स्त्री, (कृतं त्रायते । कृत + त्रै + कः ।)
त्रायमाणा लता । इति राजनिर्घण्टः ॥

**कृतदासः**, पुं, (कृतः विहितः कृतनियमो वा दासः ।)
नारदोक्तपञ्चदशदासान्तर्गतदासविशेषः । स तु
केनचिन्निमित्तेन एतावत्कालपर्य्यन्तं तवाहं दास
इति कृतसमयः । इति क्रमसंग्रहः ॥

**कृतपुङ्खः**, त्रि, (कृतः अभ्यस्तः पुङ्खः पुङ्खयुक्तो वाणो
येन ।) वाणशिक्षाविचक्षणः । भाल तिरान्दाज
इति भाषा । तत्पर्य्यायः । कृतहस्तः २ सुप्रयोग-
विशिखः ३ । इत्यमरः । २ । ८ । ६८ ॥

**कृतपूर्व्वी**, [न्] त्रि, (कृतं निष्पादितं पूर्व्वमनेन ।
कृतपूर्ब्ब + “सपूर्ब्बाच्च” । ५ । २ । ८७ । इति
इनिः ।) पूर्ब्बनिष्पन्नकर्म्मा । यथा । कृतपूर्ब्बो
कटम् । इति संक्षिप्तसारव्याकरणम् ॥

**कृतफलं**, क्ली, (कृतं फलं अस्य ।) कक्कोलम् । इति
राजनिर्घण्टः ॥

**कृतफला**, स्त्री, (कृतं फलं अस्याः ।) कोलशिम्बी
इति राजनिर्घण्टः ॥

**कृतमालः**, पुं, (कृता माला अस्य । मालावदुत्पन्नप्रसु-
नत्वादस्य तथात्वम् ।) आरग्बधवृक्षः । सोँदालि
इति भाषा । इत्यमरः । २ । ४ । २४ ॥
कर्णिका-
रवृक्षः । स तु लघ्वारग्बधः । इति राजनिर्घण्टः ।
छोट शोनालु इति भाषा ॥ (अस्य पर्य्याया यथा
।
“आरेवतो राजवृक्षः प्रग्रहश्च तुरङ्गलः ।
आरग्बधोऽथ शम्पाकः कृतमालः सुवर्णकः” ॥

**कृतसापत्निका**, स्त्री, (कृतं सापत्न्यं यस्याः । कप् टाप
ततः अत इत्वे य लोपः ।)
कृतसपत्नीभावा ।
प्रथमविवाहिता स्त्री । तत्पर्य्यायः ।
अध्यूढा २
अधिविन्ना ३ । इत्यमरः । २ । ६ । ७ ॥
कृतसा-
पत्नका ४ कृतसापत्नी ५
कृतसापत्नीका ६ । इति
तट्टीकायां रमानाथः ॥

**कृतहस्तः**, त्रि, (कृतः अभ्यस्तः हस्तः वाणादिनिक्षेप-
लाघंवरूपा शिक्षा येन सः ।) कृतपुङ्खः ।
सुशि-
क्षितशरमोक्षयोधादिः । इत्यमरः २ । ८ ।
६८ ॥
(यथा, महाभारते । ४ । ५६ । २० ।
“अप्राप्तांश्चैव तान्पार्थश्चिच्छेद
कृतहस्ततत्” ॥)

**कृताञ्जलिः**, त्रि, कृतः अञ्जलिः येन सः । बद्धाञ्जलिः ।
यथा, छन्दोगपरिशिष्टे ।
“तदसंयुक्तपार्ष्णिर्व्वा एकपादर्द्धपादपि ।
कुर्य्यात्कृताञ्जलिर्व्वापि
ऊदर्ध्वबाहुरथापि वा” ॥
इति सूर्य्योपस्थाने आह्निकाचारतत्त्वम् ॥
(कृतः
अञ्जलिरिव पत्रसङ्कोचो येन ।)
ओषधिभेदे, पुं ।
इति धरणी ॥

**कृतान्तः**, पुं, (कृतः अन्तः नाशः, शास्त्रनिर्णयः, विप-
र्य्ययो वा येन । यथायथं
व्युत्पत्तिर्दर्शनीया ।)
यमः । (यथा, गोः रामायणे । ५ । ३५ ।
३ ।
“ऐश्वर्य्ये वा सुविस्तीर्णे व्यसने वा
सुदारुणे ।

अन्तरर्थादिभेदने पूर्ब्बपक्षविशेषो येन । यद्वा,
कृता लब्धा कोटिः श्रेष्ठता येन । धातूनामने-
कार्थत्वात् कृधातुरत्र प्राप्त्यर्थे युज्यते ।) काश्यप-
मुनिः । उपवर्षमुनिः । इति त्रिकाण्डशेषः ॥

**कृतक्रियः**, त्रि, (कृता क्रिया कार्य्यं येन सः ।) कृत-
कार्य्यः । यथा, मनुः । ५ । ९९ ।
"विप्रः शुध्यत्यपः स्पृष्टा क्षत्त्रियो वाहनायुधम् ।
तैश्यः प्रतोदं रश्मीन् वा यष्टिं शूद्रः कृतक्रियः" ॥

**कृतघ्नः**, त्रि, (कृतं येन केनचिज्जनेन उपकृतं
हन्ति नाशयति यः । अहङ्कारादिप्रयुक्तया दुष्ट-
बुद्ध्या उपकृतस्यानङ्गीकारकत्वात् तथात्वम् ।)
कृतहन्ता । अर्थात् येन केनचित्कृतस्य उपकारा-
देर्घातकः अस्वीकर्त्ता । नेमखाराम इति पारस्य
भाषा ॥ (यथा, मनुः ४ । २१४ ।
"पिशुनानृतिनोश्चान्नं क्रतुविक्रयिणस्तथा ।
शैलूषतुन्नवायान्नं कृतघ्नस्यान्नमेव च" ॥)
तस्य प्रायश्चित्ताभावो यथा, --
"ब्रह्मघ्ने च सुरापे च चौरे च गुरुतल्पगे ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः" ॥
स तु बहुविधो यथा, --
"भर्त्तृपिण्डापहर्त्ता च पितृपिण्डापहारकः ।
यस्माद्गृहीत्वा विद्याञ्च दक्षिणां न प्रयच्छति ॥
पुत्त्रान् स्त्रियश्च यो द्वेष्टि यश्च तान् घातयेन्नरः ।
कृतस्य दोषं वदति सकामान् न करोति यः ॥
इति वैद्यकरत्नमालायाम् ॥
चरके कल्पस्थाने ऽष्टमेऽध्याये ऽस्य पर्य्याया यथा ।
"आरग्बधो राजवृक्षः सम्पाकश्च तुरङ्गुलः ।
प्रग्रहः कृतमालश्च कर्णिकारोऽवघातकः" ॥)

**कृतमुखः**, त्रि, (कृपं संस्कृतं मुखं यस्य ।) कृतकर्म्मा ।
कृती । इत्यमरः । ३ । १ । ४ ॥

**कृतलक्षणः**, त्रि, (कृतानि लक्षणानि अस्य ।) गुणैः
प्रतीतः । शौर्य्यादिगुणैः ख्यातः । इत्यमरः । ३ ।
१ । १० ॥ (पुं, सर्व्वलक्षणवत्त्वात् विष्णुः । यथा,
महाभारते । १३ । १४९ । ६४ ।
"अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः" ॥)

**कृतवेतनः**, त्रि, (कृतं विहितं वेतनं यस्य ।) वेतनेन
नियुक्तदासादिः । इति स्मृतिः ॥

**कृतवेधकः**, पुं, (कृतः वेधोऽस्य । ततः कप् ।) घोषा-
तकी । इति रत्नमाला । श्वेतघोषा इति भाषा ॥

**कृतवेधना**, स्त्री, (कृतं वेधनं अस्याः ।) कोषातकी
लता । इति राजनिर्घण्टः ॥

**कृतश्रमः**, त्रि, (कृतः श्रमो यत्र ।) महोत्साहः । येन
श्रमः कृतः सः । इति शब्दमाला ॥
रज्ज्वेव पुरुषो बद्ध्वा कृतान्तेनोपनीयते" ॥)
सिद्धान्तः । (यथा, भगवद्गीतायाम् । १४ । १३ ।
"पञ्चेमानि महाबाहो कारणानि निबोध मे ।
साङ्ख्ये कृतान्ते प्रोक्तानि सिद्धये सर्व्वकर्म्मणाम्" ॥)
दैवम् । पूर्ब्बदेहकृतं फलोन्मुखीभूतं शुभाशुभ-
कर्म्म । अकुशलकर्म्म । इत्यमरः । ३ । ३ । ६४ ॥
शनिवारः । इति शब्दचन्द्रिका ॥ (यथा, तिथि-
तत्त्वधृतज्योतिषवचने ।
"कृतान्तकुजयोवरि यस्य जन्मदिनं भवेत्" ॥
यमदैवत्यमरणीनक्षत्रम् । तेन द्वित्वसङ्ख्या ॥ अश्वि-
यमदहनेति वचनात् ॥)

**कृतान्तजनकः**, पुं, (कृतान्तस्य यमस्य जनकः जन्म-
दाता ।) सूर्य्यः । इति हेमचन्द्रः ॥

**कृतान्ता**, स्त्री, (कृतान्त + टाप् ।) रेणुकानामगन्ध-
द्रव्यम् । इति शब्दचन्द्रिका ॥

**कृतार्थः**, त्रि, (कृतः निष्पादितः प्राप्तो वा अर्थः
प्रयोजनं येन ।) कृतप्रयोजनः । कृतकार्य्यः ।
यथा, माघे । १ । ९ । "विलोकनेनैव तवामुनामुने
कृतः कृताथोऽस्मि निवर्हितांहसा" ॥

**कृतालयः**, पुं, (कृते अन्यकृतगर्त्ते जलाशयादो आलयः
आश्रयो यस्य ।) भेकः । इति त्रिकाण्डशेषः ॥
(कृतः आलयः येन । कृतवासे, त्रि । यथा,
रामायणे ।
"यत्र ते दयिता भार्य्या तनयाश्च कृतालयाः" ॥)

न स्मरेच्च कृतं यस्तु आश्रमान् यस्तु दूषयेत् ।
सर्व्वांस्तानृषिभिः सार्द्धं कृतघ्नानब्रवीन्मनुः” ॥
इति प्रायश्चित्ततत्त्वे स्कन्दपुराणवचनम् ॥

**कृतच्छिद्रा**, स्त्री, (कृतं छिद्रं यस्याम् ।) कोशातकी लता । इति राजनिर्घण्टः ॥

**कृतज्ञः**, त्रि, (कृतं उपकृतं जानाति स्वीकरोति यः । ज्ञा + कः ।) मर्य्यादी ।

**कृतावशक्थिकः**, त्रि, (कृता आवशक्थिका येन ।) वस्त्रादिना कृतपृष्ठजानुजङ्घादिबन्धः । इति कात्यायनः ॥ (यथा, आह्निकतत्त्वधृतकात्यायन-वचने ।
“प्रौढपादो न कुर्व्वीत स्वाध्यायपितृतर्पणम् ।
आसनारूढपादस्तु जानुनोर्जङ्घयोस्तथा ।

कृतावशक्थिको यस्तु प्रौढपादः स उच्यते”
॥)

**कृतिः**, स्त्री, (कृ + भावे क्तिन् ।) करणम् । हिंसा ।
इति मेदिनी ॥ (पुरुषप्रयत्नः । कर्त्तृव्यापारः
।
क्रिया । यथा, मुग्धबोधे ।
“जगतां कारकः कृष्णः कृतिर्मुररिपोरियम्”
॥
पुं, ऋषिविशेषः । यथा, विष्णुपुराणे । ३ । ६
। ७ ।
“हिरण्यनाभशिष्यश्चचतुर्विंशतिसंहिताः ।
प्रोवाच कृतिनामासौ शिष्येभ्यः स
महामतिः” ॥
नृपभेदः । यथा, भार्कण्डेयपुराणे । ८ । २१
।
“सप्ताश्वमेधानाहृत्य राजसूयञ्च पार्थिवः ।
कृतिर्नाम च्युतः स्वर्गात् असत्यवचनात्
सकृत्” ॥
स तु जनकवंशजातः । यथा, भागवते । ९ ।
१३ । २६ ।
“बहुलाश्वो घृतेस्तस्य कृतिरस्य महाबलः”
॥
विंशत्यक्षरपादकछन्दोभेदः ॥ यथा, “कृतिः
प्रकृ
तिराकृतिः” ॥ विंशतिसङ्ख्या । कर्त्तनी ।
यथा,
ऋग्वेदे । १ । १६९ । ३ ।
“ऐषामंसेषु रम्भिणीव रारभे
हस्तेषु खादिश्च कृतिश्च सन्दधे” ॥
विष्णुः । यथा, महाभारते । १३ । १४९ ।
२२ ।
“अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान्”
॥)

**कृतिकरः**, पुं, (कृतिसङ्ख्या विंशतिसङ्ख्या करा यस्य ।)
रावणः । इति शब्दमाला ॥

**कृती**, [न्] त्रि, (कृतं कर्म्म प्रशस्तमस्यास्तातिे । अत
इनिः ।) निपुणः । पण्डितः । इत्यमरः । ३ ।
१ । ४ ॥

**कृत्तिकासुतः** पुं, (कृत्तिकायाः सुतः तया पालित-
त्वात् ।) कार्त्तिक्यः । इति हेमचन्द्रः ॥

**कृत्तिवासः**, पुं, (कृत्त्या गजासुरचर्म्मणा वस्ते स्व-
कटिदेशं आच्छादयति यः । वस्
आच्छादने +
“कर्म्मण्यण्” । ३ । २ । १ । इति अण् ।)
शिवः ।
इति द्विरूपकोषः ॥

**कृत्तिवासाः**, [स्] पुं, (कृत्तिर्गजासुरस्य चर्म्म वासो-
ऽस्य ।) शिवः । इत्यमरः । १ । १ । ३३ ॥
(यथा च महादेवस्य चर्म्मवसनत्वं जातं
तथा
काशीखण्डे ६४ अध्याये वर्णितं यथा, --
“कोलाहलो महानासीत् त्रात त्रातेति
सर्व्वतः ।
महिषासुरपुत्त्रोऽसौ समायाति गजासुरः ॥
प्रमघ्नन् प्रमथान् सर्व्वान्
निजबीर्य्यमदोद्धतः ।
यत्र यत्र धरायां स चरणं प्रमिणोति हि ॥
अचलान् दोलयाञ्चक्रे तत्र तत्रास्य भारतः
।
उरुवेगेण तरवः पतन्ति शिखरैः सह ॥
तस्य दोर्दण्डवातेन चूर्णाः स्युश्च
शिलोच्चयाः ।
यस्य मौलिजसंघर्षात् घना व्योम
त्यजन्त्यलम् ॥
नीलिमानं न चाद्यापि जहुस्तत्केशसङ्गजम्
।
यस्य निःश्वाससम्भारैरुत्तरङ्ग महाब्धयः
॥
नाद्याप्यमन्दकल्लोला भवन्ति तिमिभिः सह
।
योजनानां सहस्राणि नव यस्य समुच्छ्रयः
॥
तावानेव हि विस्तारस्तनोर्मायाविनोऽस्य
हि ।
यन्नेत्रयोः पिङ्गलिमा तथा तरलिमा पुनः ॥
विद्युता नोह्यतेऽद्यापि सोऽयमायाति
सत्वरः ।
इष्टगन्धिः सदैवास्तु सदैवास्त्वतिकोमला ।
सदैव निर्म्मला चास्तु सदैवास्त्वतिमङ्गलम्
॥
महातपानलज्वालां प्राप्यापि सुचिरं विभो !
।
न दग्धा कृत्तिरेषा मे पुण्यगन्धनिधिस्ततः
॥
यदि पुण्यवती नैषा मम कृत्तिर्दिगम्बर ! ।
तदा त्वदङ्गसङ्गोऽस्याः कथं जातो रणाङ्गने
॥
अन्यच्च मे वरं देहि यदि तुष्टोऽसि शङ्कर ! ।
नामास्तु कृत्तिवासास्ते प्रारभ्याद्यतनं
दिनम् ॥
इति तस्य वचः श्रुत्वा तथेत्युक्त्वा च
शङ्करः ।
पुनः प्रोवाच तं दैत्यं मक्तिनिर्म्मलमानसम्
॥
ईश्वर उवाच ।
शृणु पुण्यनिधे ! दैत्य ! वरमन्यं सुदुर्लभम् ।
अविमुक्ते महाक्षेत्रे रणत्यक्तकलेवर ! ॥
इदं पुण्यशरीरं ते क्षेत्रेऽस्मिन् मुक्तिसाधने ।
मम लिङ्गं भवत्वत्र सर्वेषां मुक्तिदायकम् ॥
कृत्तिवासेश्वरं नाम महापातकनाशनम्।
सर्व्वेषामेव लिङ्गानां शिरोभूतमिदं वरम् ॥
यावन्ति सन्ति लिङ्गानि वारानस्यां
महान्त्यपि ।
उत्तमं तावतामेतदुत्तमाङ्गवदुत्तमम्” ॥ * ॥
यदि चात्र गजासुरचर्म्मणाच्छादकत्वं वर्णितं
तथापि कार्य्यावस्थाविशेषेण
व्याध्रचर्म्मणाप्यस्य
परिधेयकत्वं दृश्यते यथा व्याघ्रकृत्तिं
वसानमिति
ध्यानादौ स्फुटमेव वस्तुतस्तु नचैतत्
वाह्य-
चर्म्मादिविषय एव ग्रन्थकारेण भगवता मह-
र्षिणा वर्णितः त्रिगुणात्मिका प्रकृतिरेव
तस्या-
च्छादिका इति आध्यात्मिकी स्वरूपोक्तिः
। यथा,

साधुः । पुण्यवान् । इति शब्दरत्नावली ॥
(कृत
क्रियः । यथा, रघौ ३ । ५१ ।
“गृहाण शस्त्रं यदि सर्ग एष ते
नखल्वनिर्जित्य रघुं कृती भवान्” ॥)

**कृत्तं**, त्रि, (कृती श प् छिदि + क्तः ।) छिन्नम् । चेष्टि-

तम् । इति हेमचन्द्रः ॥

**कृत्तिः**, स्त्री, (कृत्यते इति । कृत् + कर्म्मणि क्तिन् ।)

कृष्णसारादिचर्म्म । इत्यमरः । २ । ७ । ४७
॥
(यथा, महादेवध्याने ।
“समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं
वसानम्” ॥)
त्वक् । भूर्जः । कृत्तिकानक्षत्रम् । इति मेदिनी
॥

**कृत्तिका**, स्त्री, (कृन्तति उग्रत्वात् । कृत् + “कृति-

भिदिलतिभ्यः कित्” । उणां ३ । १४७ ।
इति
तिकन् किच्च ।)
अश्विन्यादिसप्तविंशत्यन्तर्गततृ-
तीयनक्षत्रम् । तत्पर्य्यायः । बहुला २
अग्निदेवा
३ । इति हेमचन्द्रः ॥ तस्या रूपम् । अग्निशि-
खाकृतिषट्तारकामयम् । इति कालिदासः ।
क्षुरनिभषट्तारामयम् । इति केचित् । तस्या
अधिष्ठात्री देवता अग्निः । सा तु मिश्रगणान्त-
र्गता । इति दीपिका ॥ तत्र जातस्य फलम् ।
“क्षुधाधिकः सत्यधनैर्व्विहीनो
वृथाटनोत्पन्नमतिः कृतघ्नः ।
कठोरवाक् चाहितकर्म्मकृत् स्यात्
चेत् कृत्तिकायां मनुजः प्रसूतः” ॥
इति कोष्ठीप्रदीपः ॥

**कृत्तिकाभवः**, पुं, (कृत्तिकायाः भवोऽस्य ।) चन्द्रः ।

इति शब्दचन्द्रिका ॥ (कृत्तिकाधवः । इति
के-
चित ॥)

यां यां दिशं समभ्येति सोयं दुःसहदानवः
॥
नाद्य समीभवेदस्य साध्वसादिव दिग्भयम्
।
ब्रह्मलब्धवरश्चायं तृणीकृतजगत्त्रयः ॥
अवध्योऽहं भवामीति स्त्रीपुंभिः
कामनिर्जितैः ।
ततस्त्रिशूलहेतिस्तमायान्तं दैत्यपुङ्गवम् ॥
विज्ञायावध्यमन्येन शूलेनाभिजघान तम् ।
प्रोतस्तेन त्रिशूलेन स च दैत्यो गजासुरः ॥
छत्रीकृतमिवात्मानं मन्यमानो जगौ हरम् ॥
गजासुर उवाच ।
त्रिशूलपाणे ! देवेश ! जाने त्वां
स्मरहारिणम् ॥
तव हस्ते मम वधः श्रेयानेव पुरान्तक ! ।
किञ्चिद्विज्ञप्तुमिच्छामि अवधेहि ममेरितम् ॥
सत्यं ब्रवीमि नासत्यं मृत्युञ्जय ! विचारय ।
त्वमेको जगतीबन्धो ! विश्वस्योपरि
संस्थितः ॥
अहत्वदुपरिष्टाच्च स्थितोस्मीति जितं मया
।
धन्योस्म्यनुगृहीतोस्मि
त्वत्त्रिशूलाग्रसंस्थितः ॥
कालेन सर्व्वैर्मर्त्तव्यं श्रेयसे मृत्युरीदृशः ।
इति तस्य वचः श्रुत्वा देवदेवः कृपानिधिः
।
प्रोवाच प्रहसन् शम्भुर्घटोद्भवगजासुरम् ॥
ईश्वर उवाच ।
गजासुर ! प्रसन्नोस्मि महापौरुषसेवधे ! ।
स्वानुकूलं वरं ब्रूहि ददामि सुमते ऽसुर ! ॥
इत्याकर्ण्य स दैत्येन्द्रः प्रत्युवाच महेश्वरम्
॥
गजासुर उवाच ।
यदि प्रसन्नो दिग्वासस्तदा नित्यं वसान मे
।
इमां कृत्तिं विरूपाक्ष !
त्वत्त्रिशूलाग्निपाविताम् ।
सुप्रमाणां सुखस्पर्शां रणाङ्गणपणीकृताम् ॥

“गुणमयी मायैषा वावह तस्य परमस्य
आच्छा-
दनी” । व्याघ्रहस्त्यादेरुक्तिस्तु मायाया
वैचित्रप्रदर्श-
नायैव । अपि च
कटिदेशपर्य्यन्तोक्तिरेकपाद एव
मायाच्छादितत्वात् । यथा, श्रुतिः ।
“पादोऽस्य विश्वाभूतानि त्रिपादोऽस्ति
स्वयंप्रभः” ॥)

**कृत्नुः**, त्रि, (कृ + “कृहनिभ्यां क्त्नु” । उणां ३ । ३० ।

इति क्त्नुः ।) शिल्पी । इत्युणादिकोषः ॥
(यथा, --
ऋग्वेदे १ । ९२ । १० । “श्वघ्नीव
कृत्नुर्विज आमिनाना
मर्त्तस्य देवी जरयन्त्यायाः” ॥)

**कृत्यं**, क्ली, (कृ + “विभाषा कृविषोः” । ३ । १ । १२० ।

इति क्यप् तुगागमश्च ।) कार्य्यम् ।
(यथा, गोः रामायणे ३ । ६० । २७ ।
“तथा स राक्षसीरुक्त्वा राक्षसेन्द्रः
प्रतापवान् ।
निष्क्रम्यान्तःपुरात्तस्थौ किं कृत्यमिति
चिन्तयन्” ॥)
प्रयोजनम् । इति हेमचन्द्रः ॥

**कृत्यः**, त्रि, (कृ + क्यप् तुगागमश्च ।) विद्विष्टः ।

इति मेदिनी ॥ धनादिभिर्भेद्यः । इति
जटाधरः ॥
प्रत्ययविशेषः । यथा, --
“कृत्याः षट्तेसमाख्याताःक्यप्ण्यतौ
भावकर्म्मणोः ।
तव्यानीयावनन्ताद्यत्केलिमः कर्म्मकर्त्तरि”
॥
इति सुपद्मसम्मता कारिका ॥ कर्त्तरि
कर्म्मणि
चार्थे विहिताः कृत्या वाच्यलिङ्गाः स्युः ।
कृत्यास्त-
व्यादयः वोपदेवमते “ते ल्याः” “कृद्धोः
कभावे”
इत्युक्तेः क्वचित् कृत्थाः कर्त्तर्य्यपि स्युः ।
कर्त्तरि

| | | |
|---|---|---|
| | | यथा भव्यस्तरुः भव्या लता भव्यं वनम् ।<br>कर्म्मणि<br>यथा, ग्रामो गन्तव्यः नगरी गन्तव्या पुरं गन्तव्यम् । |

कर्त्तरि कर्म्मणि किं स्थातव्यं स्थेयं ब्रह्म-
भूयम् ॥ ब्रह्महत्या इह भावे कृत्याः । असं-
ज्ञायामित्येव सूर्य्योऽर्कः भिद्योद्ध्यौ नदौ ।
इत्यमर-
टीकायां भरतः ॥

**कृत्या**, स्त्री, (कृ + भावे क्यप् ।) क्रिया । यथा कां
कृत्यामकार्षीः । देवता । यज्ञदेवताविशेषः ।
इत्य-
मरभरतौ ॥ यथा, प्रह्लादचरिते ।
"कृत्यामुत्पादयामासुर्ज्वालामालोज्ज्वलाकृतिम्"
॥
तस्या ध्यानं यथा, --
"क्रोधाज्ज्वलन्तीं ज्वलनं वमन्तीं
सृष्टिं दहन्तीं दितिजं ग्रसन्तीम् ।
भीमं नदन्तीं प्रणमामि कृत्यां
रोरूयमाणां क्षुधयोग्रकालीम्" ॥ * ॥
आभिचारिकी क्रिया । यथा, --
"रोगकृत्याग्रहादीनां निरासः शान्तिरीरिता ।
वश्यं जनानां सर्व्वेषां विधेयत्वमुदीरितम्" ॥
इति षट्कर्म्मदीपिका ॥

**कृत्रिमं**, क्ली, (कृ + क्त्रिः मप् च ।) विड्लवणम् ।
इति मेदिनी । काचलवणम् । जवादिनामगन्ध-
द्रव्यम् । रसाञ्जनम् । इति राजनिर्घण्टः ॥

**कृत्रिमः**, पुं, सिह्लकः । (तुरस्कनामगन्धद्रव्यविशेषः ।)
इति मेदिनी ॥ (कृ + "ड्वितः क्त्रिः" । कृत्या
क्रियया
निर्वृत्त इति "त्रेर्मप् नित्यम् ।" इति मप् ।) द्वाद-
शविधपुत्रान्तर्गतपुत्रविशेषः । इति जटाधरः ।
(एतद्विषयकविववरणन्तुपुत्त्रशब्दे द्रष्टव्यम् ॥)

**कृत्रिमः**, त्रि, ("ड्वितः क्त्रिः" । ३ । ३ । ८८ । इति
क्त्रिः । ततः कृत्या निर्वृत्तः । "त्रेर्मप् नित्यम्"
४ । ४ । २० । इति मप् ।) करणाज्जातः ।
रचितः ।
इति मेदिनी ॥ (यथा, रघौ १९ । ३७ ।
"प्रावृषि प्रमदवर्हिणेष्वभूत्
कृत्रिमाद्रिषु विहारविभ्रमः" ॥)

**कृत्रिमकः**, पुं, (कृत्रिग + स्वार्थे संज्ञायां वा कन् ।)
इति सः किच्च ।) जलम् । इति सिद्धान्तकौमुद्या-
मुणादिवृत्तिः ॥ समुदायः । इत्युणादिकोषः ॥

**कृत्स्नं**, क्ली, (कृत् + क्स्न प्रत्ययः ।) जलम् । सर्व्वम् ।
(यथा, गीतायाम् । ११ । १३ ।
"तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा" ॥)
कुक्षिः । इति मेदिनी ॥

**कृत्स्नः**, त्रि, (कृत् + "कृत्यशूभ्यां क्स्नः" । उणां ३ ।
१७ । इति क्स्नः ।) अशेषः । समस्तः । इत्यमरः ।
३ । १ । ६५ ॥ (यथा, मनुः २ । १६५ ।
"तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः ।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना" ॥)

**कृदरः**, पुं, (कृ + अच् । "कृदरादयश्च" । उणां ५ ।
४१ । इति साधुः ।) धान्यादिगृहम् । गोला इति
भाषा ॥ इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

**कृन्तत्रं**, क्ली, (कृन्तति इति । "कृतेर्नुम् चेति" । उणां
३ । १०९ । इति कत्रन् नुम् च ।) लाङ्गलम् । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

**कृन्तनं**, क्ली, (कृत्यते इति । कृत् + भावे ल्युट् ।)
छेदनम् । यथा, कर्म्मलोचने नारदवचनम् ॥
"कृन्तनं नखकेशानां छेदनञ्च वनस्पतेः ।
शावाशौचे न कर्त्तव्यं पाठनं पठनन्तथा" ॥
(तथा च गीतगोविन्दे, १ । ३२ ।
"विगलितलज्जितजगदवलोकनतरुणकरुणकृतहा-
से । विरहिनिकृन्तनकुन्तमुखाकृतिकेतकिदन्तुरि
ताशे" ॥)

**कृप**, ऊ ङ व ऌ कल्पने । इति कविकल्पद्रुमः ॥
(भ्वां--आत्मं--अकं--सेट् ।) सप्तमस्वरी । कल्पनं
सामर्थ्यम् । ऊ, अकल्पिष्ट अक्लप्त । ङ, कल्पते
कल्पवृक्षवदिति हलायुधः ॥ व, कल्प्स्यति चिकॢ-
प्सति । ऌ, अकॢपत् । हते तस्मिन् प्रियं श्रुत्वा
कल्पा प्रीतिं परां प्रभुरिति अनेकार्थत्वेऽन्तर्भूत-
ञ्यर्थत्वात् जनयितेत्यर्थः । इति दुर्गादासः ॥

**कृप**, त्क दौर्ब्बल्ये । इति कविकल्पद्रुमः ॥ (अदन्त
चुरां--परं--अकं--सेट् ।) सप्तमस्वरी । कृपयति ।
षष्ठस्वरीति त्रिलोचनः । इति दुर्गादासः ॥

उत्पत्तिविवरणन्तु महाभारते
१ । १३० अध्याये
द्रष्टव्यम् ॥) व्यासः । इति
धरणी । (राजर्षि-
विशेषः । यथा, ऋग्वेदे । ८ ।
३ । १२ ।
"शग्धि यथा रुशमं श्यावकं
कृपमिन्द्र ! प्रावः
स्वर्णरम्" । "रुशमं श्यावकं
कृपं च एतन्नामकां-
स्त्रीन् राजर्षीन् यथा प्रावः" ।
इति भाष्यम् ॥)

**कृपणः**, त्रि, (कल्पते स्वल्पमपि दातुम्
। कृप् +
बाहुलकात् क्युन् अत एव न
लत्वम् ।) अदाता ।
(यथा, व्यासोक्तौ ।
"दातारं कृपणं मन्ये
मृतोऽप्यर्थं न मुञ्चति" ॥)
तत्पर्य्यायः । कदर्य्यः २
किम्पचानः ३ मितम्पचः ४
क्षुद्रः ५ । इत्यमरः । ३ । १ ।
४८ ॥ किम्पचः ६
अनमितम्पचः ७ । इति
तट्टीका ॥ मन्दः ८
कीकटः ९ कुमुत् १०
कीणाशः ११ । इति जटा-
धरः ॥ (यथा, पञ्चतन्त्रे । २ ।
७५ ।
"दाता लघुरपि सेव्यो भवति
न कृपणो महा-
नपि समृद्ध्या । कूपोऽन्तः
स्वादुजलः प्रीत्यै लोकस्य
न समुद्रः" ॥ दीनः । यथा, हेः
रामायणे २ । ३२ । २८ ।
"ततः स पुरुषव्याघ्रस्तद्धनं
सहलक्षणः ।
द्विजेभ्यो बालवृद्धेभ्यः
कृपणेभ्यो ह्यदापयत्" ॥

तुरष्कनामगन्धद्रव्यम् । इति राजनिर्घण्टः ॥

**कृत्रिमधूपकः**, पुं, (कृत्रिमः विविधसुगन्धिद्रव्यादि-
कल्पितो धूपः । ततः स्वार्थे कन् ।)
नानासुगन्धि-
द्रव्यकृतदशाङ्गादिधूपः । तत्पर्य्यायः वृकधूपः २
।
इत्यमरः । २ । ६ । १२८ ॥

**कृत्रिमपुत्त्रः**, पुं, (कृत्रिमश्चासौ पुत्त्रश्चेति ।) द्वादश-
पुत्त्रमध्ये पुत्त्रविशेषः । तथा च मनुः ।
"सदृशन्तु प्रकुर्य्याद्यं गुणदोषविचक्षणम् ।
पुत्त्रं पुत्त्रगुणैर्युक्तं स विज्ञेयश्च कृत्रिमः" ॥
अस्यार्थः । "यः पुनः समानजातीयं पित्रोःपार-
लौकिकश्राद्धादिकरणाकरणाभ्यांगुणदोषौ भवत
इत्येवमादिज्ञं पुत्त्रगुणैश्च मातापित्रोराराधनादि-
भिर्युक्तं पुत्त्रं कुर्य्यात् स कृत्रिमाख्यः पुत्त्रो
बोध्यः" ।
इति कुल्लूकभट्टः ॥ पुत्तलिका । यथा । कुमारे ।
१ । २९ ।
"सा कन्दुकैः कृत्रिमपुत्त्रकैश्च
रेमे मुहुमध्यगता सखीनाम्" ॥

**कृत्रिममित्रः**, पुं, (कृत्रिमं मित्रं इति । पुं स्त्वं निया-
मकात् ।) रचितबन्धुः । इति स्मृतिः ॥

**कृत्सं**, क्ली, (कृन्तति कृणत्ति वा । कृत् छेदे वेष्टने
च । "स्नुव्रश्चिकृत्यषिभ्यः कित्" । उणां ३ ।
६६ ।

**कृप**, कि युतौ । चित्रे । कल्पने । इति कविकल्पद्रुमः ॥
(चुरां पक्षे भ्वां--परं--अकं सकञ्च--सेट् ।) सप्तम-
स्वरी । कि कल्पयति कल्पति । कृपः कृपोऽकृ-
पादाविति कृपादेशः । इति दुर्गादासः ॥

**कृपः**, पुं, (कृपा अस्त्यस्य पालनसाधनत्वेन । अर्श-
आदित्वात् अच् ।) कृपाचार्य्यः । स तु द्रोणाचार्य्य-
श्यालकः । इति मेदिनी ॥ तथा चोक्तम् ।
"गौतमान्मिथुनं जज्ञे शरस्तम्बाच्छरद्वतः ।
अश्वत्थाम्नश्च जननी कृपश्चैव महाबलः" ॥
इति महाभारतम् ॥ (स तु गोतमवंश्यस्य शरद्वतः
पुत्त्रः राज्ञा शान्तनुना कृपया पालितः अतः कृप
इति नाम्ना प्रसिद्धः । सोऽसौ यावज्जीवं कौमार-
ब्रह्मचर्य्यमालम्ब्य कुरुबालकानामाचार्य्यत्वे भीष्मा-
दिभिर्नियोजितः कुरुक्षेत्रयुद्धे दुर्य्योधनपक्षमा-
श्रित्य पाण्डवैः सह संग्रामं कृत्वा लोकक्षयकरे
तस्मिन् समरे अमरत्वात् न निहतः ॥ अस्य
पारिभाषिककृपणानाह ॥
महाव्यसनप्राप्तो दीनः ।
यथा, रामायणे ४ । २१ । १९
।
"आदितः कृशवृत्तिर्यः कृपणो
न स राघव ! ।
महात्मा व्यसनं प्राप्तो दीनः
कृपण उच्यते" ॥
यो हि अक्षरं ब्रह्म अविज्ञाय
लोकान्तरगामी
भवति सः । यदुक्तं
वृहदारण्यके याज्ञवल्क्यप्रक-
रणे । "यो वा
एतदक्षरमविदित्वा गार्ग्यस्मा-
ल्लोकात् प्रैति स कृपणः" इति
॥ दुहिता हि
कृपापात्रत्वात् कृपणम् ।
यदुक्तं मनौ ४ । १८५ ।
"भ्राता ज्येष्ठः समः पित्रा
भार्य्या पुत्त्रः स्वकातनुः ।
छाया स्वोदासवर्गश्च दुहिता
कृपणं परम्" ॥)
कुत्सितः । इति मेदिनी ॥

**कृपणः**, पुं, कृमिः । इति मेदिनी ॥

**कृपा**, स्त्री, (क्रपेः सम्प्रसारणञ्चेति भिदादिपाठादङ्
टाप् च ।) करुणा । इत्यमरः ।
१ । ७ । १८ ॥
(यथा, महाभारते ।
"उवाच भीमं कल्याणी
कृपान्वितमिदं वचः" ॥)

**कृपाणः**, पुं, (कृपां नुदति प्रेरयति दूरीकरोतीत्यर्थः ।
नुद प्रेरणे + अन्येभ्योऽपीति
डः । पूर्ब्बपदादिति
णत्वम् ।) खड्गः । इत्यमरः ।
२ । ८ । ८९ ॥
(यथा, कालिकापुराणे ।
"जघान दैत्यमतिरक्तलोचना
कृपाणपाशाङ्कुशशूलपट्टिशैः"
॥)

**कृपाणकः**, पुं, (कृपाण + स्वार्थे कन् ।) खड्गः । इति

हारावली ॥

**कृपाणिका**, स्त्री, (कृपाणक + स्त्रियां टाप् अत इत्वं

च ।) छुरिका । इति हेमचन्द्रः

॥

**कृपाणी**, स्त्री, (कृपाण + गौरादित्वात् ङीष् ।)

कर्त्तरी । इत्यमरः । २ । १०

। ३४ ॥ छुरिका ।

इति मेदिनी ॥

**कृपाद्वैतः**, पुं, (कृपायां कृपावितरणे वा अद्वैतः अद्वि-

तीयः ।) बुद्धभेदः । इति

त्रिकाण्डशेषः ॥

**कृपालुः**, त्रि, (कृपां लाति आदत्ते । ला + डुः ।
यद्वा कृपाविद्यते ऽस्यास्मिन् वा ।
कृपा + आलुच् ।)
दयालुः । इत्यमरः । ३ । १ । १५ ॥
(यथा भागवते । ४ । १२ । ५१ ।
कृपालोर्दीननाथस्य
देवास्तस्यानुगृह्णते” ॥)

**कृपी**, स्त्री, (कृप + ङीष् ।) द्रोणाचार्य्यपत्नी । इति
मेदिनी ॥ (यथा, महाभारते । १ ।
१३१ । २२ ।
“शारद्वतीं ततो भार्य्यां कृपीं
द्रोणोऽन्वविन्दत” ॥
अस्या जन्मविवरणं यथा, --
पुरा किल महर्षे र्गोतमस्य पुत्त्रः
शरद्वान् नाम
ऋषिः धनुर्व्वेदपरत्वात् विपुलेन
तपसा च इन्द्रं
सन्तापयामास । इन्द्रस्तु अस्य
तपोविघ्नं चिकीर्षु-
र्जानपदीं नाम स्वर्व्वेश्यां प्राहिणोत् ।
अथ रूप-
यौवनाढ्यां तामवलोकयतस्तस्य
सहसा रेतश्च-
स्कन्द तच्चु शरस्तम्बे स्थापितं सत्
द्विधाऽभवत् ।
ततस्तस्मात् मिथुनं समजायत ।
तदैव राजा
शान्तनुर्मृगयामागतः अपत्यमिथुनं
समवलोक्य
राजधानीमानीय संस्कारादिभिः
संवर्द्धयामास ।
कृपया संवर्द्धनाच्च कृपः कृपीति
तयोर्नाम चक्रे ।
सेयं कृपाचार्य्यस्य भगिनी । एषैव
अश्वत्थाम्नो
जननीत्यवगन्तव्या ॥)

**कृपीटं**, क्ली, (कृप + “कृतॄकृपिभ्यः कीटन्” ।

सप्तधा हि भवेद्वाह्याः षड्धाश्चान्तः
समुद्भवाः ।
तेषां वक्ष्यामि सभूतिं वाह्यानाभ्यन्तरे
नृणाम् ॥
रूक्षादतिबलात् स्वेदात् चिन्तया
शोचनादपि ।
कफधातुसमुद्भूतास्तीक्ष्णा यूका भवन्ति हि
॥
यूकाः कृष्णाः पराः श्वेतास्तृतीयाश्चर्म्मणि
स्थिताः ।
सूक्ष्मातिविकटा
रूक्षाश्चर्म्माभाश्चर्म्मयूकिकाः ।
चतुर्थी विन्दुकी नाम वर्त्तुला मूत्रसम्भवा ॥
मत्कुणाद्याश्च पञ्चम्यो वाह्योपद्रवकारिणः
।
यूका मस्तकसंस्थाने श्वेता
वस्त्रनिवासिनी ॥
चर्म्मयूका नेत्रचर्म्मे सूक्ष्मे रोमणि यष्टिका ।
उष्णद्रव्यनिषेवाच्च अजीर्णे मधुरद्रवात् ॥
रूक्षान्नगोधूमयवान्नपिष्ट-
र्गुडेन वा क्षीरविपर्य्ययेण ।
दिवाशयाने च सपिच्छलेन
घर्म्मेण पापोदकसेचनेन ॥
सञ्जायते तेन मलाशयेषु
कृमिव्रजं कोष्ठविकारकारि ॥
षड्विधास्ते समुद्दिष्टास्तेषां वक्ष्यामि
लक्षणम् ।
कफकोष्ठं मलाधारं कोष्ठे सर्पन्ति सर्पवत्
॥
पृथुमण्डा भवन्त्येके केचित्
किञ्चुकसन्निभाः ।
धान्याङ्कुरनिभाः केचित् केचित्
सूक्ष्मास्तथाणवः ॥
सूचीमुखाः परिज्ञेयाश्चान्त्राणि सादयन्ति
ते ।
वक्ष्यामि लक्षणं तेषां चिकित्साञ्च शृणुष्व मे
॥
ज्वरोहृद्रोगशूलं वा वमिकृत् क्लेदनं भ्रमः ।
अरुचिर्बन्धवैवर्ण्यमतीसारं सफोनिलम् ॥
गर्ज्जनं जठरे चैव मन्दाग्नित्वञ्च जायते ।

तथा हुताशनोद्भ्तं न हुताशेन जीर्य्यति ।
भेषजं संप्रवक्ष्यामि येन तेऽपि तरन्ति वै ॥
पतन्ति वा शमंयान्ति भेषजानि शृणुष्व मे ।
वचाऽजमोदा कृमिजित्पलाश
वीजं शठी रामठकं त्रिवृच्च ।
उष्णोदके तत्परिपिष्यपेयं
पतन्ति शीघ्रं शतधातुकीटाः ॥
शठी यवानी पिचुमर्द्दपत्रान्
विडङ्गकृष्णातिविषा रसोनम् ।
सम्पिष्य मूत्रेण त्रिवृत्प्रयुक्तम्
विनाशनं सर्व्वकृमीरुजानाम् ॥
मरिचं पिप्पलीमूलं विडङ्गशिग्रुयवानिकात्रिवृतः ।
गोमूत्रेण तु पेष्यं पानं शीघ्रं कृमीन् हन्ति ॥
मुस्ता विशाला त्रिफला सुपर्णा
शिग्रुः सुवाह्नं सलिलेन कल्कः ।
पानं सकृष्णा कृमिशत्रुचूर्णं
विनाशनं सर्व्वकृमीरुजाञ्च” ॥
“मातुलुङ्गस्य मूलानि रसोनं कृमिजित्त्रिवृत् ।
अजमोदा निम्बपत्रं गोमूत्रेण तु पेषयेत् ॥
पानमेतत् प्रशंसन्ति कृमिदोषनिवारणम् ।
ज्वरप्रोक्तानि पथ्यानि कृमिदोषे प्रदापयेत् ॥
इति कृमिचिकित्सा” ॥ * ॥
इति महर्ष्यात्रेयभाषिते हारीतोत्तरे कृमिचि-
कित्सा नाम पञ्चमोऽध्यायः ॥ * ॥
अस्य निदानपूर्ब्बकससम्प्राप्तिचिकित्सितं यथा ।
“अजीर्णाध्यशनासात्म्यैर्विरुद्धमलिनाशनैः ।
अव्यायामदिवास्वप्नगुर्व्वतिस्निग्धशीतलैः ।
माषपिष्टान्नविदलविसशालूकशेरुकैः ॥
पर्णशाकसुवाशुक्तदधिक्षीरगुडेक्षुभिः ।
पलालानूपपिशितपिण्याकपृथुकादिभिः ॥
स्वाद्वम्लद्रव्यपानैश्च श्लेष्मा पित्तञ्च कुप्यति ।
कृमीन् बहुविधाकारान् करोति विविधाश्रयान् ॥
आमपक्काशयस्तेषां प्रसवः प्रायशः स्मृतः ।
विंशतेः कृमिजातीनां त्रिविधः सम्भवः स्मृतः ॥
पुरीषकफरक्तानि तेषां वक्ष्यामि लक्षणम् ।
अयवा वियवाः किप्याश्चिप्या गण्डूपदास्तथा ।
चूरवो द्विमुखाश्चैव सप्तैवैते पुरीषजाः ॥
श्वेताः सूक्ष्मास्तुदन्त्येते गुदं प्रतिसरन्ति च ।
तेषामेवापरे पुच्छैः पृथवश्च भवन्ति हि ॥
शूलाग्निमान्द्यपाण्डुत्वविष्टम्भबलसंक्षयाः ।

उणां ४ । १८४ । इति कीटन् ।
बाहुलकात्
लत्वाभावः ।) उदरम् । जलम् । इति
मेदिनी ॥
विपिनम् । इन्धनम् । इति
शब्दरत्नावली ॥

**कृपीटपालः**, पुं, (कृपीटं जलं पालयतीति । पालि +
अण् ।) केनिपातः । समुद्रः । इति
मेदिनी । पवनः ।
इति शब्दरत्नावली ॥

**कृपीटयोनिः**, पुं, (कृपीटस्य जलस्य योनिः कारणं ।
"वायोरग्निरग्नेरापः" इति
श्रुतेस्तथात्वम् । यद्वा
कृपीटं काष्ठं योनिरुत्पत्तिस्थानं यस्य
।) अग्निः ।
इत्यमरः । १ । १ । ५६ ॥

**कृपीपतिः**, पुं, (कृप्याः कृपभगिन्याः पतिर्भर्त्ता ।)
द्रोणाचार्य्यः । इति शब्दमाला ॥

**कृपीपुत्त्रः**, पुं, (कृप्याः पुत्त्रः ।) अश्वत्थामा । इति
भूरिप्रयोगः ॥

**कृपीसुतः**, पुं, (कृप्याः सुतः ।) अश्वत्थामा । इति
त्रिकाण्डशेषः ॥

**कृमिः** पुं, (क्रामतीति । क्रमु पादविक्षेपे + "क्रमित-
मिशतिस्तम्भामत इच्च" । उणां । ४
। १२१ । इति
इन् "भ्रमेः सम्प्रसारणञ्च" इति
अनुवृत्तेः सम्प्र-
सारणञ्च ।) कीटः । पोका इति भाषा
। तत्प-
र्य्यायः । नीलाङ्गः २ । इत्यमरः । २ ।
५ । १३ ।
निलाङ्गुः ३ क्रिमिः ४ । इति तट्टीका
॥ पुण्ड्रः ५ ।
इति जटाधरः ॥ लाक्षा । कृमिलः ।
खरः । इति

पिपासा पीतता नेत्रे किञ्चुकैः पीडितस्य च
॥
इति गण्डूपदलक्षणम् ॥ * ॥
सूचीवत्तुद्यतेऽन्त्राणि रक्तञ्चैवातिसार्य्यते ।
यकृद्वा भक्षयन्त्यन्ते रक्तं वा वमते भृशम् ॥
क्लेदो मुखेऽरुचिर्जाड्यं मन्दाग्नित्वञ्च
वेपथुः ।
क्षुत्तृष्णा च ज्वरो ज्ञेयाः
सूचीमुखकृमोरुजाम् ॥
इति शूचीमुखलक्षणम् ॥ * ॥
ये च धान्याङ्कुरास्तेषां वक्ष्याम्यथ च
लक्षणम् ।
मलाशयस्थाः कृमयो मलं जघ्नन्ति ते
भृशम् ॥
तैस्तु संपीड्यते देहे विड्विभेदं परूषता ।
कृशत्वञ्चापि हृत्क्लेदं कृमयो जनयन्ति ते
॥
हारीतः संशयापन्नः पादौ संगृह्य पृच्छति ।
कथं देहे मनुष्यस्य मलमूत्रवसाशये ॥
सम्भवन्ति कथञ्चादौ वर्द्धयन्ति कथं पुनः
।
कथं वा शीर्णेऽन्नरसे नानाहारावभक्षणे ॥
जायन्ते केन कृमयः
सूक्ष्माधोगामिनोऽप्यथ ।
नानाऽऽमपक्वभक्षान्नं दहते वा हुताशनः ॥
कथन्ते कृमयश्चान्ते न दह्यन्तेऽन्तराग्निना
।
एवं पृष्टो महाचार्य्यः प्रोवाच मुनिपुङ्गवः ॥
आत्रेय उवाच ।
शृणुपुत्त्र ! महाबाहो ! कृमिसम्भवकारणम्
।
विरुद्धान्नरसैः पुत्त्र ! रक्तञ्चैवास्य कुप्यति
॥
कफेनैकदिनं याति शुक्रेणाकारणं व्रजेत् ।
पञ्चभूतात्मके वायौ ते तु जाताः सचेतनाः
॥
कोष्ठाग्निना न दह्यन्ते न जीर्य्यन्ते
रसानिति ।
विषे जातो यथा कीटो न विषेण मृतिं व्रजेत्
॥

प्रसेकारुचिहृद्रोगविड्भेदास्तु पुरीषजैः ॥
रक्ता गण्डूपदा दीर्घा गुदकण्डूनिपातिनः ।
शूलाटोपशकृद्भेदपक्तिनाशकराश्च ते ॥
दर्भपुष्पा महापुष्पाः प्रलूनाश्चिपिटास्तथा ।
पिपीलिका दारुणाश्च कफकोपसमुद्भवाः ॥
रोमशा रोममूर्द्धानः सपुच्छाः श्यावमण्डलाः ।
मूढधान्याङ्कुराकाराः शुक्लास्ते तनवस्तथा ॥
मज्जादा नेत्रलेढारस्तालुश्रोत्रभुजस्तथा ।
शिरोहृद्रोगवमथुप्रतिश्यायकराश्च ते ॥
केशरोमनस्वादाश्च दन्तादाः किक्विशास्तथा ।
कुष्ठजाश्च परीसर्प्पाः ज्ञेयाः शोणितसम्भवाः ॥
ते सरक्ताश्च कृष्णाश्च स्निग्धाश्च पृथवस्तथा ।

| विश्वमेदिन्यौ ॥ उदरजातकीटरोगः ।<br>तस्यौ-<br>षधं यथा, --<br>“वदरीकारवीमूलं गुडाज्येन<br>समन्वितम् ।<br>अग्निना साधितं जग्ध्वा कृमीन्सर्व्वान्<br>हरेच्छिव !” ॥<br>इति गारुडे १९४ अध्यायः ॥<br>(“कृमयो द्विविधाः प्रोक्ता<br>वाह्याभ्यन्तरसम्भवाः ।<br>वाह्या यूकाः प्रिसद्गाः स्युः<br>किञ्चुलूकास्तथान्तराः ॥ | | |
|---|---|---|

रक्ताधिष्ठानजान् प्रायो विकारान् जनयन्ति ते ॥
माषपिष्टान्नलवणगुडशाकैः पुरीषजाः ।
मांसमाषगुडक्षीरदधिशुक्तैः कफोद्भवाः ॥
विरुद्धा जीर्णशाकाद्यैः शोणितोत्था भवन्ति हि ॥
ज्वरो विवर्णताशूलं हृद्रोगः सदनं भ्रमः ॥
भक्तद्वेषोऽतिमारश्च सञ्जातकृमिलक्षणम् ।
दृश्यास्त्रयोदशाद्यास्तु कृमीणां परिकीर्त्तिताः ॥
केशादाद्यास्त्वदृश्यास्ते द्वावाद्यौ परिवर्ज्जयेत् ।
एषामन्यतमं ज्ञात्वा जिघांसुः स्निग्धमातुरम् ॥
सुरसादिविपक्वेन सर्पिषा वान्तमादितः ।
विरेचयेत्तीक्ष्णतरैर्योगैरास्थापयेच्च तम् ॥
यवकोलकुलत्थानां सुरसादेर्गणस्य च ।
विडङ्गस्नेहयुक्तेन क्वाथेन लवणेन च ॥
प्रत्यागते निरूहे तु नरं स्नातं सुखाम्बुना ।
युञ्ज्यात् कृमिघ्नैरशनैस्ततः शीघ्रं भिषग्वरः ॥
स्नेहेनोक्तेन चैनन्तु योजयेत् स्नेहवस्तिना ।
ततः शिरीषकिणिही-रसं क्षौद्रयुतं पिबेत् ।
केचूकस्वरसं वापि पूर्ब्बवत्तीक्ष्णभोजनः ॥
पलाशवीजस्वरसं कल्कं वा तण्डुलाम्बुना ।
पारिभद्रकपत्राणां क्षौद्रेण स्वरसं पिबेत् ॥
पत्तूरस्वरसं वापि पिबेद्वा सुरसादिजम् ।
लिह्यादश्वशकृच्चूर्णं विडङ्गं वा समाक्षिकम् ॥
पत्रैर्मूषिकपर्ण्या वा सुपिष्टैः पिष्टमिश्रितैः ।
खादेत् पूपालिकान् पक्वान् धान्याम्लञ्च पिबेदनु ॥
सुरसादिगणे तैलं पक्वं वा पानमिष्यते ।
विडङ्गचूर्ण-पिष्टाभ्यां तस्मिन् भक्ष्यन्तु कारयेत् ॥
तत्कषायप्रपीतानां तिलानां स्नेहमेव वा ।
श्वाविधः शकृतश्चूर्णं सप्तकृत्वः सुभावितम् ॥
विडङ्गानां कषायेण त्रैफलेन तथैव च ॥
क्षौद्रेण लिढ्वानुपिबेद्रसमामलकोद्भवम् ।
अक्षाभया रसञ्चापि विधिरेषोऽयसामपि ॥
पूतीकस्वरसं वापि पिबेद्वा मधुना सह ।

**कृमिकण्टकं**, क्ली, (कृमेः कृमिरोगस्य रोगे वा कण्टकमिव । तन्नाशकतया तथात्वम् ।) विडङ्गम् ।
चित्राङ्गः । उडुम्बरः । इति मेदिनी ॥

**कृमिकोषोत्थं**, त्रि, (कृमेःकृमिभिर्निर्मितो वा कोषः ।
शाकपार्थिववत् मध्यपदलोपः ।
तस्मात् उत्तिष्ठति
उत्पद्यते । उत् + स्था + कः ।)
कौषेयम् । इत्य-
मरः । २ । ६ । ११११ । रेसमिकापड
इति भाषा ।

**कृमिघ्नः**, पुं, (कृमिं हन्ति इति । हन् + टक् । "हन्ते-
रत् पूर्ब्बस्य" । ८ । ४ । २२ । इति
नियमात् न
णत्वम् ।) विडङ्गः । इत्यमरः । २ । ४ ।
१०६ ॥
पलाण्डुः । कोलकन्दः । पारिभद्रः ।
भल्लातकः ।
इति राजनिर्घण्टः ॥ (विडङ्गहरिद्रा च ।
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये
भागे ॥)

**कृमिघ्ना**, स्त्री, (कृमिघ्न + अजादित्वात् टाप् ।) ह-
रिद्रा । इति भावप्रकाशः ॥

**कृमिघ्नी**, स्त्री, (कृमिघ्न + टित्वात् ङीप् ।) धूमपत्रा ।
विडङ्गः । इति राजनिर्घण्टः ॥

**कृमिजं**, क्ली, (कृमिभ्यो जायते इति । अन्येभ्योपीति
डः ।) अगुरु ॥ इत्यमरः । २ । ६ ।
१२६ ॥ (कृमि-
जातमात्रे, त्रि । यथा, पञ्चतन्त्रे । १ ।
१०३ ।
"कौषेयं कृमिजं सुवर्णमुपलाद्दूर्व्वापि
गोरोमतः ।
पङ्कात्तामरसं शशाङ्क उदधेरिन्दीवरं
गोमयात्" ॥

कन् ।) वल्मीकः । इति शब्दरत्नावली ॥

**कृमीलकः**, पुं, (कृमीन् ईरयति जनयतीति । ईर् +
ण्वुल् । रस्य लत्वम् ।) वनमुद्गः । इति राज-
निर्घण्टः ॥

**कृव**, इ न कृतौ । हिंसे । इति कविकल्पद्रुमः ॥
(स्वां--परं--सकं--सेट् । इदित् ।) ह्रस्वी । न,
कृ-
णोति । इ, कर्म्मणि कृण्व्यते । इति दुर्गा-
दासः ॥

**कृविः**, पुं, (क्रियते वस्त्रादिकमनेन । डु कृञ्
करणे "कृविघृष्विच्छविस्थविकिकीदिवि" ।
उणां
४ । ५६ । इति क्विन् निपातनात् ।)
वापयन्त्रम् ।
इति उणादिवृत्तिः । ताँत इति भाषा ॥

**कृश**, इर् य कार्श्ये । इति कविकल्पद्रुमः ॥ (दिवां-
परं-सकं-सेट् । इरित् ।) कार्श्यं कृशकरणम् ।
इर्, अकृशत् अकर्शीत् । अस्मात्
पुषादित्वान्नित्ये
ङ इत्यन्ये । य, कृश्यति चन्द्रं कष्णपक्षः ।
इति
दुर्गादासः ॥

**कृशः**, त्रि, (कृशधातोः क्तप्रत्यये "अनुपसर्गात्
फुल्लक्षीवेति" । ८ । २ । ५५ । निपातनात्
साधुः ।)
अल्पः । (यथा, मनौ । ४ । १८४ ।
"आकाशेशाश्च विज्ञेया बालवृद्धकृशातुराः"
॥)
सूक्ष्मः । इत्यमरः । ३ । १ । ६१ ॥
(यथा, आर्य्यासप्तशती । ४९५ ।
"राजसि कृशाङ्गि ! मङ्गलकलसी सहकारपल्ल-
वेनेव । तेनैव चूम्बितमुखी प्रथमाविर्भूतरागेण"
॥
"व्यायाममतिसौहित्यं क्षुत्पिपासामथौषधम् ।
कृशो न सहते तद्वदतिशीतोष्णमैथुनम् ॥
प्लीहा कासः क्षयः श्वासो गुल्मार्शांस्युदराणि
च ।

पिबेद्वा पिप्पलीमूलमजामूत्रेण संयुतम् ॥
सप्तरात्रं पिबेद्धृष्टन्त्रपुवा दधिमस्तुना ।
पुरीषजान् कफोत्थांश्च हन्यादेवं कृमीन्
भिषक् ॥
शिरोहृद्घ्राणवक्त्राक्षिसंसृतांश्च पृथग्विधान्
।
विशेषेणाञ्जनैर्नस्यैरवपीडैश्च साधयेत् ॥
शकृद्रसन्तुरङ्गस्य सुशुष्कं भावयेदति ।
निःक्वाथेन विडङ्गानां चूर्णं प्रधमनन्तु तत् ॥
अयश्चूर्णान्यनेनैव विधिना योजयेद्भिषक् ।
सकांस्यनीलं तैलञ्च नस्यं स्यात् सुरसादिके
॥
इन्द्रलुप्तविधिश्चापि विधेयो रोमभोजिषु ।
दन्तादानां समुद्दिष्टं विधानं मुखरोगिकम् ॥
रक्तजानां समुद्दिष्टं कुर्य्यात् कुष्ठचिकित्सिते ।
सुरसादिन्तु सर्व्वेषु सर्व्वथैवोपयोजयेत् ॥
प्रव्यक्ततिक्तकटुकं भोजनञ्च हितं भवेत् ।
कुलत्थक्वाथसंसृष्टं क्षीरपानञ्च पूजितम् ॥ *
॥
क्षीराणि मांसानि घृतानि चैव
दधीनि शाकानि च पर्व्ववन्ति ।
समासतोऽम्लान् मधुरान् हिमांश्च
कृमीन् जिघांसुः परिवर्ज्जयेत्तु" ॥
इति सुश्रुत उत्तरतन्त्रे
चतुःपञ्चाशत्तमोऽध्यायः ॥)

अस्य पर्य्याया यथा ।
"अगुरु प्रवरं लोहं राजार्हं योगजन्तथा
।
वंशिकं कृमिजं वापि
कृमिजग्धमनार्य्यकम्" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥
गुणाश्चास्यागुरुशब्दे ज्ञातव्याः ॥)

**कृमिजग्धं**, क्ली, (कृमिभिर्जग्धं भुक्तम् । उपचारात्
तज्जनिततया तथात्वम् ।) अगुरु ।
इति राज-
निर्घण्टः ॥ ("कृमिजग्धमनार्य्यकम्" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**कृमिजा**, स्त्री, (कृमिभ्यो जायते या । जन + डः
टाप् च । लाक्षा ।) इति राजनिर्घण्टः ॥
(अस्य पर्य्याया यथा, --
"कीटजा कृमिजा लाक्षा जतुका च
गवायिका" ॥
इति वैद्यकरत्नमालायाम् ॥)

**कृमिरिपुः**, पुं, (कृमीणां रिपुर्नाशकः । तन्नाशक-
त्वात् तथात्वम् ।) विडङ्गः । इति
शब्दरत्नावली ॥
(विडङ्गशब्देऽस्य विशेषो ज्ञेयः ॥)

**कृमिला**, स्त्री, (कृमीन् कृमिवत् सन्तानान् लाति
आदत्ते । ला + कः टाप् च ।) बहुप्रसूः
। बहु-
सन्तानप्रसवा । इति हेमचन्द्रः ॥
कृमियुक्तेत्रि ॥

**कृमिवृक्षः**, पुं, (कृमिप्रधानः कृमिमयो वा वृक्षः ।)
कोषाम्रः । इति भावप्रकाशः ॥
(कोषाम्रशब्दे ऽस्य विवृतिर्ज्ञातव्या ॥)

**कृमिशङ्खः**, पुं, (कृमिरिव जीवन् शङ्खः ।) जीवशङ्खः ।
तत्पर्य्यायः । कृमिजलजः २
कृमिवारिरुहः ३
जन्तुकम्बुः ४ । अस्य गुणः ।
रसवीर्य्यादौ शङ्ख-

कृशं प्रायोऽभिधावन्ति, रोगाश्च ग्रहणीमताः"
॥
"सततं व्याधितावेतावतिस्थूलकृशौ नरौ ।
सततञ्चोपचर्य्यौ हि कर्षणैर्वृंहणैरपि" ॥
"स्थौल्यकार्श्ये वरं कार्श्यं समोपकरणौ हितौ ।
यद्युभौ व्याधिरागच्छेत् स्थूलमेवाति पीडयेत्"
॥
इति चरके सूत्रस्थाने २१ अध्याये ॥
"कश्चिदन्यः कृशोऽतीव बलवान् दृश्यते
तदा" ॥
तत्र हेतुमाह ।
"आधानसमये यस्य शुकभागोऽधिको भवेत् ।
मेदोभागस्तु हीनः स्यात् स कृशोऽपि
महाबलः" ॥
यस्याधानसमये जनयितुः शुक्रस्याधिक्यं
भवति ।
मेदसोऽल्पता तस्य कृशस्यापि बहु
बलमित्यर्थः ॥
अथ कार्श्यस्य चिकित्सा ।
"रूक्षान्नादि निमित्ते तु कृशे युञ्जीत भेषजम् ।
वृंहणं बलकृद्वृष्यं तथा वाजीकरञ्च यत् ॥
पीताश्वगन्धा पयसार्द्धमासं
घृतेन तैलेन सुखाम्बुना वा ।
कृशस्य पुष्टिं वपुषो विधत्ते
बालस्य शस्यस्य यथाम्बुवृष्टी ॥
अश्वगन्धस्य कल्केन क्वाथे तस्मिन्
पयस्यपि ।
सिद्धं तैलं कृशाङ्गानामभ्यङ्गादङ्गपुष्टिदम्' ॥
इति अश्वगन्धातैलम् ॥ * ॥
इति भावप्रकाशस्य मध्यखण्डे तृतीयभागे
कार्श्या-
धिकारे ॥) (अक्षमः । यथा, मनौ । ४ । १३५
।

सदृशत्वम् । इति राजनिर्घण्टः ॥

**कृमिशुक्तिः**, स्त्री, (वृमिरिव शुक्तिः ।) जलशुक्तिः ।

इति राजनिर्घण्टः ॥

**कृमिशैलकः**, पुं, (कृमिनिर्म्मितः शैल इव । ततः स्वार्थे

"क्षत्त्रियञ्चैव सर्पञ्च ब्राह्मणं वा बहुश्रुतम् ।
नावमन्येत वै भूष्णुः कृशानपि कदाचन"
॥
पुं, सर्व्वाकारवत्त्वात् विष्णुः । यथा,
महाभारते ।
१३ । १४९ । १०३ ।
"अणुर्वृहत्कृशः स्थूलो गुणभृन्निर्गुणो
महान्" ॥
स्वनामख्यातो मुनिपुत्त्रः । स तु
परीक्षिच्छाप-
प्रदातुः शृङ्गिणः सखा ।
यथा, महाभारते । १ । ४१ । २ ।
"स तं कृशमभिप्रेक्ष्य सूनृतां
वाचमुत्सृजन् ।
अपृच्छत्तं कथं तातः स मेऽद्य
मृतधारकः" ॥
ऐरावतकुलोत्पन्नो नागविशेषः । यथा,
तत्रैव ।
१ । आस्तीकपर्व्वणि । ५७ । ११ ।
"पारावतः पारिजातः पाण्डरो हरिणः
कृशः ।
ऐरावतकुलादेते प्रविष्टा हव्यवाहनम्" ॥)

**कृशरः**, पुं, (कृशं अल्पमात्रां रातीति । रा + कः ।
कृशयोऽपि बलं राति वा ।) तुल्यतिलान्नम्
। तत्प-
र्य्यायः । त्रिसरः २ । इति हेमचन्द्रः ॥
(यथा, मत्स्यपुराणे, --
"गुडौदनं रवेर्दद्यात् सोमाय घृतपायसम् ।
संयावकं कुजे दद्यात् क्षीरान्नं सोमसूनवे ।
दध्योदनञ्च जीवाय शुक्राय तु घृतोदनम् ।
शनैश्चराय कृशरमाजमांसञ्च राहवे ।
चित्रौदनञ्च केतुभ्यः सर्व्वभक्षैः
समर्च्चयेत्" ॥)

**कृशरा**, स्त्री, (कृशर + टाप् ।) तिलौदनम् । इति
हारावली ॥ द्विदलमिश्रितान्नम् । खिचडी
इति
भाषा । यथा, --
"तण्डुला दालिसंमिश्रा
लवणार्द्रकहिङ्गुभिः ।

**कृशानुरेताः**, [स्] पुं, (कृशानौ अग्नौ रेतः निःक्षिप्तं
तेजो यस्य ।) शिवः । इत्यमरः । १ । १
३५ ॥
(अस्य कृशानुरेतोनाम्नः कारणं
कालिकापुराणे
४७ अध्याये दृश्यम् ॥)

**कृशाश्वी**, [न्] पुं, (कृशाश्वेन धुन्धुमारवंश्यनृपवि
शेषेण प्रोक्तं नाट्यसूत्रादिकं अधीते वेत्ति
वा
"कर्मन्दकृशाश्वादिनिः" । ४ । ३ । १११
। इति
इनिः ।) नटः । इत्यमरः । २ । १० । १२
॥

**कृशिका**, स्त्री, (कृश इव कायतीति । कैः + कः ।
टाप्
इत्वञ्च ।) आखुकर्णीलता । इति
राजनिर्घण्टः ॥

**कृष**, औ आकृषि । विलेखने । इति कविकल्प-
द्रुमः । (भ्वां-परं-सकं-अनिट् ।) औ,
अकार्क्षीत्
अकृक्षत् अक्राक्षीत् । आकृषि आकर्षणे ।
क-
र्षन्ति तुरगा रथम् । इति दुर्गादासः ॥
(यथा, मनुः ३ । ६६ ।
"मन्त्रतस्तु समृद्धानि
कुलान्यल्पधनान्यपि ।
कुलसङ्ख्याञ्च गच्छन्ति कर्षन्ति च
महद्यशः" ॥
आखुकर्णीशब्दे ऽस्या विशेषो ज्ञेयः ॥)

**कृष**, औ ञ श आकर्षणे । विलेखने । इति कवि-
कल्पद्रुमः । (तुदां-उभं-सकं-अनिट् ।) श
ञ, कृ-
षति कृशते भूमिं कृषकः । औ, अकार्क्षीत्
।
अक्राक्षीत् अकृक्षत् । इति दुर्गादासः ।

**कृषकः**, त्रि, (कृषति भूमिं यः । "कृषेर्वृद्धिश्चो

**कृष्टं**, त्रि, (कृष्यते यत् तत् । कृष् + कर्म्मणि क्तः ।)
कृष्टक्षेत्रम् । चसा क्षेत् इति भाषा । तत्पर्य्यायः ।
सीत्यम् २ हल्यम् ३ । इत्यमरः । २ । ९ । ८
॥
(यथा, मनौ । ११ । १४५ ।
"कृष्टजानामोषधीनां जातानाञ्च स्वयं वने" ॥
भावे क्तः । कर्षणम् ॥)

**कृष्टपच्यः**, त्रि, (कृष्टे क्षेत्रे स्वयमेव पच्यते इति कम्म-
कर्त्तरि कृष्ट + पच् + "राजसूयसूर्य्यमृषोद्यरुच्य
कूप्य कृष्टपच्याव्यथ्याः" । ३ । १ । ११४ ।
इति
क्यवन्तो निपातितः ।) व्रीहिः । धान्यम् । इति
व्याकरणम् ॥ (यथा, भागवते । ७ । १२ । १८
।
"न कृष्टपच्यमश्नीयादकृष्टञ्चाप्यकालतः" ॥)

**कृष्टपाक्यं**, त्रि, (कृष्टे पच्यते इति । कृष्ट + पच् + क-
र्म्मणि ण्यत् । "चजोः कु घिण्यतोः" । ७ । ३ ।
५२ । इति चस्य कुत्वम् ।) कृष्टपच्यम् । इति
व्याक-
रणम् ॥

**कृष्टिः**, पुं, (कृषत्यन्तर्भुवं विद्यालोचनाभ्यासादि-
भिरसौ । कृष् + कर्त्तरि क्तिच् बाहुलकात्
तिर्वा ।) पण्डितः । इत्यमरः । २ । ७ । ६ ॥
(यथा, ऋग्वेदे । ६ । १८ । २ ।
"वृहद्रेणुश्च्यवनो
मानुषीणामेकः कृष्टीनामभवत् सहावा" ॥)
कर्षणे, स्त्री । इति मेदिनी ॥ (कृष् + भावे क्तिन्
।
आकर्षणम् ॥ जनमात्रम् । इति निरुक्तम् ।
यथा ऋग्वेदे । ८ । ६ । ४ । "विश्वा नमन्त
कृष्टयः" ।
"कृष्टयः प्रजाः" । इति भाष्यम् ॥)

**कृष्णं**, क्ली, ("कृषेर्व्वर्णे" । उणां ३ । ४ । इति नक्
ततो णत्वम् ।) मरिचम् । इत्यमरः । २ । ९ ।
३६ ॥
(अस्य पर्य्याया यथा, --
"मरिचं वेल्लजं कृष्णमूषणं धर्म्मपत्तनम्" ।

संयुक्ताः सलिलैः सिद्धाः कृशराः कथिता बुधैः” ॥
अस्या गुणाः । शुक्रबलकारित्वम् । गुरुत्वम् ।
पित्तकफप्रदत्वम् । दुर्जरत्वम् । विष्टम्भमलमूत्र-
कारित्वञ्च । इति भावप्रकाशः ॥
(“मांसेक्षुपिष्टकृशरा तिलशस्कुलीभिः” । इति माधवकरीयरोगविनिश्चयस्य कफशूलव्या-
ख्यानेविजयेनोक्तं यथा, --
“कृशरा तिलतण्डुलमाषयवागूः” ॥)

**कृशला**, स्त्री, (कृशं कार्श्यं लातीति । ला + कः ।
टाप् ।) केशः । इति शब्दचन्द्रिका ॥

**कृशशाखः**, पुं, (कृशा क्षीणा शाखा यस्य ।) षर्पटः ।
इति राजनिर्घण्टः ॥

**कृशाङ्गी**, स्त्री, (कृशानि सूक्ष्माणि अङ्गानि यस्याः ।
स्वाङ्गवाचित्वात् ङीष् ।) प्रियङ्गुवृक्षः । इति
शब्दचन्द्रिका ॥ सूक्ष्माङ्गविशिष्टे, त्रि । (यथा, --
आर्य्यासप्तशती । ४९५ ।
“राजसि कृशाङ्गि ! मङ्गलकलशी सहकारपल्ल-
वेनेव । तेनैव चुम्बितमुखी प्रथमाविर्भूतरागेण” ॥)

**कृशानुः**, पुं, (कृश्यति तनूकरोति तृणकाष्ठादिवस्तु-
जातमिति । “ऋतन्यञ्जीति” । उणां । ४ । २ । इति
आनुक् ।) अग्निः । इत्यमरः । १ । १ । ५७ ॥
(यथा, रघुः । ७ । २४ ।
“प्रदक्षिणप्रक्रमणात् कृशानो-
रुदर्च्चिषस्तन्मिथुनं चकाशे” ॥
चित्रकवृक्षः । इति राजनिर्घण्टः ॥

दीचाम्” । उणां । २ । ३८ । इति क्वुन् ।) कर्षकः ।
इति मेदिनी ॥

**कृषकः**, पुं, (कृषति भूमिमनेन इति करणे क्वुन् ।)
फालः । इति मेदिनी ॥ वृषः । इति शब्दचन्द्रिका ॥

**कृषाणुः**, पुं, (कृश् + आनुक् । पृषोदरात् षत्वम् ।)
कृशानुः । इत्यमरटीका ॥

**कृषिः**, स्त्री, (कृष् विलेखने । “सर्व्वधातुभ्य इन्” ।
उणां ४ । ११७ । इति इन् । “इगुपधात् कित्” ।
उणां । ४ । ११९ । इति कित् ।) वैश्यवृत्ति-
विशेषः । कर्षणम् । चास इति भाषा । तत्प-
र्य्यायः । अनृतम् २ । इत्यमरः । २ । ९ । २ ।
प्रनृतम् ३ । इति जटाधरः ॥
(यथा, मेघदूते । १६ ।
“त्वय्यायत्तं कृषिफलमिति भ्रूविकारानभिज्ञैः
प्रीतिस्निग्धैर्जनपदवधूलोचनैः पीयमानः” ॥)

**कृषिकः**, पुं, (कृषत्यनेन “वृश्चिकृष्योः किकन्” ।
उणां । २ । ४० । इति किकन् ।) फालः । इत्य-
मरः । २ । ९ । ६ ॥ कर्षकः । इति केचित् ॥

**कृषीवलः**, त्रि, (कृषिरस्यास्ति वृत्तित्वेन इति “रजः
कृष्यासुतिपरिषदो वलच्” ५ । २ । ११२ । इति
वलच् । “वले” ६ । ३ । ११८ । इति दीर्घः ।)
कर्षकः । कृषिजीवी । इत्यमरः । २ । ९ । ६ ॥
(यथा, महाभारते । २ । ५ । ७७ ।
“कच्चिन्न चौरैर्लुब्धैर्वा कुमारैः स्त्रीबलेन वा ।

इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
गुणाश्चास्य मरिचशब्दे ज्ञातव्याः ॥)
लोहम् । इति जटाधरः ॥ नीलाञ्जनम् । इति
राजनिर्घण्टः ॥ कालागुरु । इति रत्नमाला ॥

**कृष्णः**, पुं, (कर्षत्यरीन् महाप्रभावशक्त्या । यद्वा,
कर्षति आत्मसात् करोति आनन्दत्वेन परिण-
मयतीति मनो भक्तानां इति यावत् “कृषे
र्व्वर्णे” । उणां । ३ । ४ । इति बाहुलकात् वर्णं
विनापि । नक् णत्वञ्च । यद्वा, कर्षति सर्व्वान्
स्वकुक्षौ प्रलयकाले । “कर्षणात् कृष्णो रमणात्
रामो व्यापनात् विष्णुः” । इति श्रुते स्तथात्वम् ॥
अपरा व्युत्पत्तिर्यथा, --
“कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यात् परं ब्रह्म कृष्ण इत्यभिधीयते” ॥
इति श्रीधरस्वामी ॥ तथा च, महाभारते । ५
यानसन्धिपर्व्वणि ७० । ५ ।
“कृषिर्भूवाचकः शब्दो णश्चनिर्वृतिवाचकः ।
कृष्णस्तद्भावयोगाच्च कृष्णो भवति सात्त्वतः” ॥)
भगवदवतारविशेषः । स च भूभारहरणार्थं द्वाप-
रयुगशेषे भाद्रकृष्णाष्टम्यां रोहिणीनक्षत्रे निशीथे
देवकीगर्भे आविर्भूतः । तस्य जन्मसमयो यथा,
“उच्चस्थाः शशिभौमचान्द्रिशनयो लग्नं वृषो
लाभगो जीवः सिंहतुलालिषु क्रमवशात् पूषो-

| | | |
|---|---|---|
| | त्वया वा पीड्यते राष्ट्रं कच्चित् तुष्टाः कृषीवलाः” ॥)<br>काकजङ्घावृक्षः । इति रत्नामाला ॥<br>**कृष्करः**, पुं, (कृषं करोति सृष्टिस्थित्यादिकं शक्तियोगात् सन्पादयतीति । कृष + कृ + टक् ।)<br>शिवः । इति त्रिकाण्डशेषः ॥ | |

शनोराहवः। नैशीथः समयोऽष्टमी
बुधदिनं
ब्रह्मर्क्षमत्रक्षणे
श्रीकृष्णाभिधमम्बुजेक्षणमभू-
दाविः परं ब्रह्म तत्" ॥ इति
खमाणिक्यनाम-
ज्योतिर्ग्रन्थः ॥ (यदि च भगवतो
विष्णोः कृष्णाव-
तारकालः क्वचित् द्वापरयुगशेषे इत्ययं
पाठो
लक्ष्यते तथापि कलावेव कृष्णावतार
इत्येव भूरि-
सम्मतमिति बोध्यम्। तत्र भूरि
भूरिप्रमाणानि
च सन्ति तेषां कानिचिदत्रोद्धृतानि।
तद्यथा, ब्रह्मपुराणे, --
"अथ भाद्रपदे मासि कृष्णाष्टम्यां कलौ
युगे।
अष्टाविंशतिमे जातः कृष्णोऽसौ
देवकीसुतः" ॥

परं कस्मिन्नेव कलौ प्रादुर्बभूव
भगवानिति जि-

ज्ञासायां
वैवस्वतमन्वन्तरीयाष्टाविंशतिमे युगे
इत्युक्त्या वर्त्तमानकलेः प्रथम एव
निर्णीयते। तथा
च उच्चस्थाः शशिभौमचान्द्रिशनय
इति।
खमाणिक्यनामज्योतिर्ग्रन्थोक्तेः
कलियुगस्य ६४७
वर्षेषु गतेषु एतत्समयस्य सम्भवः ततः
पूर्ब्बं
कलौ तादृशसमयासम्भवात्। किञ्च
राजतरङ्गि-
ण्याम्। १। ५१।
"शतेषु षट्सु सार्द्धेषु त्र्यधिकेषु च
भूतले।
कलेर्गतेषु वर्षाणामभवन् कुरुपाण्डवाः"
॥

तन्निबध्नाति कौन्तेय! कर्म्मसङ्गेन देहिनम्" ॥

द्वापरे पीतवर्णं इत्युक्त्या
रजोमिश्रिततमसो

निर्देशः। यथा, --

"वावह रजो वै यदा अन्धकारात्मकेन
तमसा

संगच्छते तदा ऽस्य घोरमौढ्यादिबहवो दोषा
प्रकाशन्ते" ॥ तथा, हरिवंशे वर्णभेदकथने वैश्य-
त्वप्राप्तिहेतुमाह।
"गोभ्योवृत्तिं समास्थाय पीताः कृष्यनुजीविनः।
स्वधर्म्मान्नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः" ॥
पीताः रजस्तमःप्रधाना इति तट्टीका ॥
कलौ कृष्णतामागत इत्युक्त्या तु केवलं तमः
प्राधान्यनिर्द्देशः यथा, --
"तमस्त्वज्ञानजं विद्धि मोहनं सर्व्वदेहिनाम्।
निद्रा तन्द्रा तथालस्यं प्रमादो दीर्घसूत्रिता" ॥

इत्यतः दुरात्माक्रान्तायाः पृथिव्या
भारहरणाय

तमःप्रधानां मायामधिष्ठायैव कलावेव भगवतः
प्रादुर्भावः सम्भवति ॥

यदा तु शालिवाहनस्य शकाब्दाख्याः
प्रचलितु-

मारब्धास्तदा वै पाण्डुकुलनन्दनमहाराजयुधि-
ष्ठिरप्रवर्त्तिताब्दानां षड्विंशाधिकसार्द्धद्विस-
हस्राण्येवातीतानि। महाभारतभागवतादिशा-
स्त्रोक्त्या भगवतः कृष्णस्य
तृतीयपाण्डवेनार्ज्जुनेन
तुल्यवयस्कत्वात्
उपर्य्युक्तराजतरङ्गिणीमतानुसा-
रेण च कलेः त्रिपञ्चाशदधिकषट्शतेषु वर्षेषु
गतेषु युधिष्ठिराविर्भावकालः। तद्गणनया हि
कलेः सप्तपञ्चाशदधिकेषु षट्शतेषु वर्षेषु गतेष्वेव
कथञ्चित् कृष्णावतारसमयो निश्चीयते। किञ्च,
एतावदपि निर्द्धारितं यत् विक्रमादित्याब्दा यिषु-
ख्रीष्टाविर्भावादेकोनाशीतिवर्षोत्तरकाल एव प्रव-
र्त्तितुमारब्धाः। अतः षड्विंशाधिकचतुर्व्विंशति-

चक्रं छत्रयवाङ्कुशं
ध्वजपवीजम्बूर्द्धरेखाम्बुजं
बिभ्राणं
हरिमूनविंशतिमहालक्ष्मार्च्चिताङ्घ्रिं भजे"
॥
इति रूपचिन्तामणिः ॥ * ॥ अस्यावतारा
ह्यसं-
ख्येयाः। तत्र युगावताराश्चत्वारः। यथा, -
-
"कृते शुक्लश्चतुर्ब्बाहुर्जटिलो
वल्कलाम्बरः।
कृष्णाजिनोपवीताक्षान्
बिभ्रद्दण्डकमण्डलुम् ॥
त्रेतायां रक्तवर्णोऽसौ चतुर्ब्बाहुस्त्रिमेखलः।
हिरण्यकेशस्त्रय्यात्मा स्रुक्स्रुवाद्युपलक्षणः
॥
द्वापरे भगवान् श्यामः पीतवासा निजायुधः
।
श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः ॥
नानातन्त्रविधानेन कलावपि यथा शृणु।
कृष्णवर्णं त्विषाऽकृष्णं
साङ्गोपाङ्गास्त्रपार्श्वदम् ॥
यज्ञैः संकीर्त्तनप्रायैर्यजन्ति हि सुमेधसः" ॥
* ॥
अस्य कल्पावतारा दश यथा। मत्स्यः १
कूर्म्मः २
वराहः ३ नृसिंहः ४ वामनः ५ परशुरामः ६
रामः ७ कृष्णः ८ बुद्धः ९ कल्की १०।
इति
श्रीभागवतम् ॥ * ॥ अस्य
गुणाश्चतुःषष्टिर्यथा।
"अयं नेता सुरम्याङ्गः १
सर्व्वसल्लक्षणान्वितः २।
रुचिर -३ स्तेजसा युक्तो ४ बलीयान् ५
वयसा-
न्वितः ६ ॥ विविधाद्भुतभाषावित् ७
सत्यवाक्यः ८
प्रियम्बदः ९। वावदूकः १० सुपाण्डित्यो
११ बुद्धि-
मान् १२ प्रतिभान्वितः १३ ॥ विदग्ध -१४
श्च-

इत्यनेन कलियुगस्य ६५३
वर्षेषु गतेषु तत्सम-

कालीनयोः कुरुपाण्डवयोरुत्पत्तिः
कथिता अतो
भगवतः कृष्णस्यापि
तत्कालोत्पत्तिकत्वं सूचितम् ।
अपि च कृष्णस्य नामकरणे यच्च
गर्गर्षिराह
ततोऽपि कलेरादावेव भगवदाविर्भावः
सूच्यते ।
यथा, भागवते । १० । ८ । ९ ।
"आसन् वर्णास्त्रयोह्यस्य गृह्णतोऽनुयुगं
तनूः ।
शुक्लो रक्तस्तथाऽपीत इदानीं कृष्णतां
गतः" ॥
इदानीं कलावित्यर्थः । तथा,
पुराणान्तरे, --
"कृते शुक्लं हरिं विद्याद् त्रेतायां
रक्तवर्णकम् ।
द्वापरे पीतवर्णञ्च कलौ कृष्णत्वमागतः"
॥
तथा तत्रैव ११ अध्याये
यगावतारकथने ।
"कृते शुक्लश्चतुर्बाहुर्जटिलो
वल्कलाम्बरः ।
कृष्णाजिनोपवीताक्षान्
बिभ्रद्दण्डकमण्डलुम् ॥
हिरण्यकेशस्त्रय्यात्मा
स्रुक्स्रुवाद्युपलक्षणः ।
त्रेतायां रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः
॥
द्वापरे भगवान् श्यामः पीतवासा
निजायुधः ।
श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः
॥
नानातन्त्रविधानेन कलावपि यथा शृणु
॥
कृष्णवर्णं त्विषाऽकृष्टं
साङ्गोपाङ्गास्त्रपार्श्वदम् ।
यज्ञैः संकीर्त्तनप्रायैर्यजन्ति हि
सुमेधसः" ॥

शतवर्षेभ्य एकोनाशीतिवर्षेषु वियुक्तेषु यिष-
ख्रीष्टाविर्भावात् सप्तचत्वारिंशदधिकशतवर्षपूर्ब्ब-
मेव युधिष्ठिराविर्भावकालः । ततो नितरामेव
यिषुखीष्टात् सप्तचत्वारिंशदधिकषड्विंशतिशत-
वर्षेभ्यः प्राग्भगवतः कृष्णस्य प्रादुर्भावः कथमपि
निरूप्यते ॥)
अधुना अस्य ध्यानम् कथ्यते यथा, --
"स्मरेद्वृन्दावने रम्ये मोहयन्तमनारतम् ।
गोविन्दं पुण्डरीकाक्षं गोपकन्याः सहस्रशः ॥
आत्मनो वदनाम्भोजे प्रेषिताक्षिमधुव्रताः ।
पीडिताः कामवाणेन चिरमाश्लेषणोत्सुकाः ॥
मुक्ताहारलसत्पीनतुङ्गस्तनभरानताः।
स्रस्तधम्मिल्लवसना मदस्खलितभाषणाः ॥
दन्तपङ्क्तिप्रभोद्भासिस्पन्दमानाधराञ्चिताः।
विलोभयन्ती विविधैर्विभ्रमैर्भावगर्व्वितैः ॥
फुल्लेन्दीवरकान्तिमिन्दुवदनं वर्हावतंसप्रियं
श्रीवत्साङ्कमुदारकौस्तुभधरंपीताम्बरं सुन्दरम् ।
गोपीनां नयनोत्पलाच्चिततनुंगोगोपसंघावृतं
गोविन्दं कलवेणुवादनपरं दिव्याङ्गभूषं भजे" ॥
इति तन्त्रसारः ॥ * ॥ अस्य पादचिह्नानि यथा,
"चन्द्रार्द्धं कलसं त्रिकोणधनुषी खं गोष्पदं
प्रोष्ठिकां
शङ्खं सव्यपदेऽथ दक्षिणपदे कोणाष्टकं
स्वस्तिकम् ।

तुरो १५ दक्षः १६ कृतज्ञः १७ सुदृढव्रतः
१८ ।
देशकालसुपात्रज्ञः १९ शास्त्रचक्षुः २०
शुचि -२१
र्व्वशी २२ ॥ स्थिरो २३ दान्तः २४
क्षमाशीलो २५
गम्भीरो २६ घृतिमान् २७ समः २८ ।
वदान्यो
२९ धार्म्मिकः ३० शूरः ३१ करुणो ३२
मान्य-
मानकृत् ३३ ॥ दक्षिणो ३४ विनयी ३५
ह्रीमान्
३६ शरणागतपालकः ३७ । सुखी ३८
भक्तसुहृत्
३९ प्रेमवश्यः ४० सर्व्वशुभङ्करः ४१ ॥
प्रतापी ४२
कीर्त्तिमान् ४३ रक्तलोकः ४४
साधुसमाश्रयः ४५ ।
नारीगणमनोहारी ४६ सर्व्वाराध्यः ४७
समृद्धि-
मान् ४८ ॥ वरीया -४९ नीश्वर -५०
श्चेति गुणा-
स्तस्यानुकीर्त्तिताः । सदास्वरूपसम्प्राप्तः
५१
सर्व्वज्ञो ५२ नित्यनूतनः ५३ ॥
सच्चिदानन्दसान्द्राङ्गः
५४ सर्व्वसिद्धिनिषेवितः ५५ ।
अविचिन्त्यमहाशक्तिः
५६ कोटिब्रह्माण्डविग्रहः ५७ ॥
अवतारावलीः
वीजं ५८ हतारिगतिदायकः ५९ ।
आत्माराम-
गणाकर्षी -६० त्यमी कृष्णे किलाद्भुताः ॥
सर्व्वा-
द्भुतचमत्कारलीलाकल्लोलवारिधिः ६१ ।
अतुल्य-
मधुरप्रेममण्डितप्रियमण्डलः ६२ ॥
त्रिजगन्मान
साकर्षी मुरलीकलकूजितः ६३ ।
असमानोर्द्ध-
रूपश्रीविस्मापितचराचरः ६४ ॥

अपि चकृते शुक्ल इत्यादयो ये ये वर्णा निर्णीताः

नतु केवलं तेषां वाह्यवर्णत्वेन
पर्य्यवसीतत्वं किन्तु
युगभेदानुसारेण लोकानां
गुणधर्म्मत्वमेव निश्ची-
यते । यथा, कृते शुक्लं इति कथनात्
सत्वगुणः
प्रदर्शितः सत्वस्य हि शुक्लत्वं प्रसिद्धं
यथा, --
"तत्र सत्त्वं निर्म्मलत्वात्
प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन
चानघ !" ॥

त्रेतायां रक्तवर्णकं इत्युक्त्या रजस एव निर्द्देशः

कृतः यथा, --
"रजो रागात्मकं विद्धि
तृष्णासङ्गसमुद्भवम्

लीलाप्रेम्नाप्रियाधिक्यं माधुर्य्ये वेणुरूपयोः
।
इत्यसाधारणं प्रोक्तं गोविन्दस्य चतुष्टयम् ।
एवं गुणाश्चतुर्भेदाश्चतुःषष्ठिरुदाहृताः" ॥ *
॥

अस्य गदा कौमोदकी । खड्गः नन्दकः । धनुः

शार्ङ्गम् । शङ्खः पाञ्चजन्यः । चक्रं सुदर्शनः ।
मणिः
कौस्तुभः । वाहनं गरुडः । रथः
गरुडध्वजः ।
रथस्याश्वाः शैव्यसुग्रीवमेघवाहनपुष्कराः ।
इति
श्रीभागवतम् ॥ * ॥ अस्य पत्न्यः गोलोके
वृन्दा-
वने च श्रीराधा । वैकुण्ठे लक्ष्मीः । इति
ब्रह्म-
वैवर्त्तम् ॥ द्वारकायां रुक्मिणी १ जाम्बवती
२

सत्यभामा ३ कालिन्दी ४
मित्रविन्दा ५ नाग्न-
जिती ६ भद्रा ७ लक्ष्मणा ८ एताः
प्रधानाः ।
अन्या अपि
शताधिकषोडशसहस्राणिस्थिताः
।
इति श्रीभागवतम् ॥ * ॥
व्रजस्थितस्यास्य सखाय-
श्चतुर्व्विधाः । तत्र
किञ्चिद्वयसाधिकाः सुहृदो
यथा । सुभद्रः १ मण्डलीभद्रः २
भद्रवर्द्धनः ३
गोभटः ४ यक्षेन्द्रभटः ५ भद्राङ्गः
६ वीरभद्रः ७
महागुणः ८ विजयः ९ बलभद्रः
१० इत्याद्याः ॥
वयसा न्यूनाः सखायो यथा ।
विशालः १ वृषभः
२ ओजस्वी ३ देवप्रस्थः ४
वरूथपः ५ मणिबन्धः
६ करन्धमः ७ इत्याद्याः ॥ वयसा
तुल्याः प्रिय-
सखायो यथा । श्रीदामा १ सुदामा
२ वसुदामकः
३ किङ्किणी ४ स्तोककृष्णः ५
अंशुः ६ भद्रसेनः ७
विलासी ८ पुण्डरीकविटङ्काक्षः ९
कलविङ्कः १०
इत्याद्याः ॥ पूर्ब्बतः श्रेष्ठा
आत्यन्तिकरहस्येषु युक्ताः
भावविशेषविशिष्टाः
प्रियनर्म्मसखायो यथा ।
सुवलः १ अर्ज्जुनः २ गन्धर्व्वः ३
वसन्तः ४ उज्ज्वलः
५ इत्याद्याः ॥ इति
भक्तिरसामृतसिन्धुः ॥ * ॥
वृन्दावनस्थितस्य अस्य सख्यः
शतकोटयः । तत्र

२१ अस्याः सहचर्य्यः चतुर्दशसहस्राणि ।
अम्बिका २२ अस्याः सहचर्य्यः षोडशसहस्राणि ।
सती २३ अस्याः सहचर्य्यः त्रयोदशसहस्राणि ।
नन्दिनी २४ अस्याः सहचर्य्यः दशसहस्राणि ।
सुन्दरी २५ अस्याः सहचर्य्यः त्रयोदशसहश्राणि ।
कृष्णप्रिया २६ अस्याः सहचर्य्यः षोडशसह-
स्राणि । मधुमती २७ अस्याः सहचर्य्यः चतु-
र्दशसहस्राणि । चम्पा २८ अस्याः सहचर्य्यः
त्रयोदशसहस्राणि । चन्दना २९ अस्याः सहचर्य्यः
चतुर्दशसहस्राणि । इति ब्रह्मवैवर्त्तपुराणम् ॥ * ॥ * ॥
(महादेवः । यथा, महाभारते १३ । १७ । ४४ ।
“दीर्घश्च हरिकेशश्च सुतीर्थः कृष्ण एव च” ॥)
व्यासः । (अयन्तु द्वैपायनः वासव्यां सत्यवत्यां महर्षेः
पराशराज्जातः कृष्णवर्णत्वात् कृष्णकलावतीर्णत्वाद्
वा कृष्ण इत्यभिधीयते ।
यथा, महाभारते १ । १०५ । १४ ।
“यो व्यस्य वेदांश्चतुरस्तपसा भगवानृषिः ।
लोके व्यासत्वमापेदे कार्ष्णात् कृष्णत्वमेव च” ॥)
अर्ज्जुनः । (अयन्तु तृतीयपाण्डवः । अस्य दशनाम-
स्वन्यतमं नाम । यथा, महाभारते ३ । ४२ । २२ ।
“कृष्ण इत्येव दशमं नाम चक्रे पिता मम ।
कृष्णावदातस्य सदा प्रियत्वाद् बालकस्य वै” ॥
कृष्णो वर्णोऽस्यास्तीति । नगन्ताद् गुणवचनेभ्यो
मतुपो लुगिति लुक् ॥) कोकिलः । इति विश्वः ॥
काकः । इति मेदिनी ॥ करमर्दकः । इति शब्द-
रत्नावली ॥ वर्णविशेषः । कालवर्णः । तत्पर्य्यायः ।
नीलः १ असितः ३ श्यामः ४ कालः ५ श्यामल
६ मेचकः ७ बहुलः ८ रामः ९ शितिः १० । इति
जटाधरः ॥ तद्वति, त्रि । इत्यमरः ॥ (कर्षति
पापानि शरणागतानां बाहुलकात् कृषेर्नक् वर्णं
विनापि णत्वञ्च । परब्रह्म । यथा, पौराणिकी-
गाथायाम् ।
“कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्त्तते ।
मस्मीभवन्ति राजेन्द्र ! महापातककोटयः” ॥

चन्द्रहासकरप्रथमादिपञ्चादशकलाक्रियारूपः

प्रतिपदादिदर्शान्तात्मकपञ्चदशतिथ्यात्मकःका-
लभेदोऽर्द्धमासः । यथा, तिथितत्त्वे ३६ ।
“चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः” ॥
कृष्णपक्षाभिमानिदेवताविशेषः । यथा, गीतायाम् ।

**कृष्णकर्म्मा**, [न्] त्रि, (कृष्णं अशुभं कर्म्म यस्य ।)
पापाचारयुक्तः । तत्पर्य्यायः ।
शिश्विदानः २ । इत्य-
मरः । ३ । १ । ४६ ॥ (श्वेतितुमिच्छति
श्वितावर्णे
इत्यस्य श्वितेर्दश्चेत्यानच् दत्वं सनो
लुक् च इति
शिश्विदानः । केचित्तु अकृष्णकर्म्मा
इति पठन्ति ।
अकृष्णं निष्पापत्वात् शुक्लं कर्म्मास्य
अकृष्ण-
कर्म्मा शुक्लकर्म्मा इत्यर्थः । इति
व्याचक्षते ।
इति भरतः ॥
“शिश्विदानः कृष्णकर्म्मा शुक्लकर्म्मेति
कस्यचित्” ॥
इति जटाधरः ॥ क्ली, व्रणानां
कृष्णत्वसम्पादक-
क्रियाविशेषः । यथा, सुश्रुतोक्तौ “अथ
व्रणस्योप-
क्रमा भवन्तीत्युपक्रम्य
दारुणकर्म्मक्षारकर्म्माग्नि-
कर्म्म कृष्णकर्म्मपाण्डुकर्म्म” । इति ॥)

**कृष्णकलिः**, स्त्री, (कृष्णस्य चूडा इव कलिः कलिका
यस्याः ।) स्वनामख्यातपुष्पवृक्षः ।
तस्य शाखा
रक्ततण्डुलीयनालवद्ग्रन्थियुक्ता पत्रं
क्षुद्रताम्बूल-
दलवद्भवति । तस्य पुष्पं
श्वेतरक्तपीतपाटलवर्ण-
मिलितपञ्चदलं षट्केशरमध्यं
स्वल्पसद्गन्धयुक्तं
अपराह्णे प्रस्फुटति । तस्य वीजं
कृष्णमरि चतुल्यं
पुष्पं सर्व्वकाले सुलमं वर्षाकाले प्रचुरं
भवति ।
तदुत्पत्तिस्तस्य मूलतो वीजतश्च ।
इति लोक-

वेदमुनिदेवस्त्रियोऽपि
कृष्णाराधानार्थं गोपाङ्गना
रूपेण जाताः । व्रजे अस्य
नित्यप्रिया यथा ।
राधा १ चन्द्रावली २ विशाखा ३
ललिता ४
श्यामा ५ पद्मा ६ शैव्या ७ भद्रिका
८ तारा ९
विचित्रा १० गोपाली ११ धनिष्ठा
१२ पालिका
१३ खञ्जनाक्षी १४ मनोरमा १५
मङ्गला १६
विमला १७ लीला १८ कृष्णा
१९ शारी २०
विशारदा २१ तारावली २२
चकोराक्षी २३
शङ्करी २४ कुङ्कुमादयः २५ ।
एतासां मध्ये
विशाखा ललिता पद्मा शैव्या
एताश्चतस्रः सख्यः ।
अन्या यूथाधिपाः । तासां मध्ये
राधादयोऽष्टौ
सुभगाः । आसां राधात्रन्द्रावल्यौ
श्रेष्ठे । अनयो-
रपि राधाधिका ।
इत्युज्वलनीलमणिः ॥ * ॥
अपि च । चन्द्रावली १ सुशीला २
तस्याः सह-
चर्य्यः चतुर्द्दशसहस्राणि ।
शशिकला ३ अस्याः
सहचर्य्यः षोडशसहस्राणि ।
चन्द्रमुखी ४ अस्याः
सहचर्य्यः षोडशसहस्राणि ।
माधवी ५ अस्याः
सहचर्य्यः एकादशसहस्राणि ।
कदम्बमाला ६
अस्याः सहचर्य्यः
त्रयोदशसहस्राणि । कुन्ती ७
अस्याः सहचर्य्यः दशसहश्राणि ।
यमुना ८ अस्याः
सहचर्य्यः चतुर्दशसहस्राणि ।
जाह्नवी ९ अस्याः

"धूमो रात्रिस्तथाकृष्णः षण्मासा दक्षिणायनम्" ॥
कृष्णसारमृगः । यथा, महाभारते १ । १३० । १५ ।
"धनुश्च सशरं दृष्ट्वा तथा कृष्णाजिनानि च" ॥
अशुभकर्म्म । वेदोक्तासुरविशेषः । अयन्तु इन्द्रेण
सगणो निहतः । ऋषिविशेषः । अयन्तु ऋग्वेदस्य
अष्टममण्डलस्य ८५ -- ८७ सूक्तानि, तथा दशम
मण्डलस्य ४२ -- ४४ सूक्तानि च प्रणिनाय ॥ अथर्व्व-
वेदान्तर्गतोपनिषद्विशेषः । यथा, मुक्तिकोप-
निषदि । "गोपालतापनकृष्णहयग्रीवदत्तात्रेयगा-
रुडानामथर्व्ववेदगतानामेकत्रिशत्सङ्ख्यकानां उप-
निषदां भद्रं कर्णेभिरिति शान्तिः" ॥)

**कृष्णकन्दं**, क्ली, (कृष्णः कृष्णवर्णः कन्दो यस्य ।) रक्तो-

त्पलम् । इति त्रिकाण्डशेषः ॥

प्रसिद्धम् ॥ अस्या । पिष्टपत्रमूलादिना
व्रणस्फोटनं
भवति इति वैद्यकम् ॥

**कृष्णकाष्ठं**, क्ली, (कृष्णं काष्टं यस्य ।) कालागुरु ।

इति राजनिर्घण्टः ॥ (अगुरुशब्दे ऽस्य
विषयो
ज्ञातव्यः ॥)

**कृष्णकेलिः**, स्त्री, (कृष्णस्य केलिः क्रीडा द्रव्यं

चूडा इव पुष्पकलिका यस्याः ।)
स्वनामख्यात-
पुष्पवृक्षः । (अस्याः अन्यद्विवरणं
कृष्णकलिशब्दे
द्रष्टव्यम् ॥)

**कृष्णकोहलः**, पुं, (कृष्णकस्य कुत्सितकर्म्मण ऊहं

वितर्कं लाति गृह्णातीति । ला + कः ।)
द्यूतकृत् ।
इति त्रिकाण्डशेषः ॥

**कृष्णगन्धा**, स्त्री, (कृष्णः उग्रो गन्धो यस्याः ।) शोभा-

ञ्जनः । इति राजनिर्घण्टः ॥
("इमांस्त्रीनपरान् वृक्षानाहुर्येषां
हितांस्त्वचः ।
पूतिकः कृष्णगन्धा च तिल्वकश्च
तथातरुः ॥
विरेचने प्रयोक्तव्यः
पूतिकस्तिल्वकस्तथा ।
कृष्णगन्धा परीसर्पे शोथेष्वर्शःसु
चोच्यते" ॥
इति चरके सूत्रस्थाने १ अध्याये ॥

**कृष्णगर्भः**, पुं, (कृष्णः कृष्णवर्णो गर्भः अभ्यन्तरदेशो

यस्य ।) कट्फलः । इति राजनिर्घण्टः
॥

**कृष्णचञ्चुकः**, पुं, (कृष्णा चञ्चुरस्य । ततः कप् ।)

चणकः । इति राजनिर्घण्टः ॥
(चणकशब्दे विवरणमस्य व्याख्येयम् ॥)

**कृष्णचतुर्द्दशी**, स्त्री, (कृष्णा कृष्णपक्षसम्बन्धिनी

सहचर्य्यः नवसहस्राणि। पद्ममुखी १० अस्याः सहचर्य्यः नवसहस्राणि। सावित्री ११ अस्याः सहचर्य्यः पञ्चदशसहस्राणि। सुधामुखी १२ अस्याः सहचर्य्यः चतुर्दशसहस्राणि। शुभा १३ अस्याः सहचर्य्यः चतुर्दशसहस्राणि। पद्मा १४ अस्याः सहचर्य्यः चतुर्दशसहस्राणि। गौरी १५ अस्याः सहचर्य्यः चतुर्द्दशसहस्राणि। सर्व्वमङ्गला १६ अस्याः सहचर्य्यः षोडशसहस्राणि। सरस्वती १७ अस्याः सहचर्य्यः त्रयोदशसहस्राणि। भारती १८ अस्याः सहचर्य्यः दशसहस्राणि। अपर्णा १९ अस्याः सहचर्य्यः चतुर्दशसहस्राणि। रतिः २० अस्याः सहचर्य्यः दशसहस्राणि। गङ्गा

चतुर्दशी ।) कृष्णपक्षीयचतुर्द्दशी । तत्पर्य्यायः । भूतः २ । इति त्रिकाण्डशेषः ॥

**कृष्णचरः**, त्रि, (कृष्णस्य भूतपूर्ब्बा गौः चरट् ॥) कृष्णस्य भूतपूर्ब्बो गवादिः । इति मुग्धबोधम् ॥

**कृष्णचूडा**, स्त्री, (कृष्णस्य चूडेव पुष्पचूडा यस्याः ।) स्वनामख्यातसकण्टकपुष्पवृक्षः। तस्य पत्रं वक-

वृक्षदलवद्भवति । तस्य पुष्पं पीतरक्तवर्णं
उपर्य्यधः
स्थूलसूक्ष्मदशदलं दीर्घवृन्तं
दशदीर्घकेशरमध्यं
ईषत्सद्गन्धयुक्तञ्च जायते । तत्फलं
शिम्बीसदृशं
पुष्पं सर्व्वकाले सुलभं वर्षाकाले प्रचुरं भवति
।
तदुत्पत्तिस्तस्य मूलतो वीजाच्च भवति इति
लोकप्रसिद्धम् ॥

**कृष्णचूडिका**, स्त्री, (कृष्णा चूडा अग्रं यस्याः । ततः
कप् ततष्टाप् अत इत्वञ्च ।) गुञ्जा । इति
राज-
निर्घण्टः ॥ (कुँच्फल इति भाषा ॥)

**कृष्णचूर्णं**, क्ली, (कृष्णस्य लोहस्य चूर्णम् । दग्धाल्लो-
हान्निःसृतकीट्टमित्यर्थः ।) लौहमलम् । इति
राजनिर्घण्टः ॥

**कृष्णजटा**, स्त्री, (कृष्णा कृष्णवर्ण जटा यस्याः ।)
जटामांसी । इति रत्नमाला ॥

**कृष्णजीरकः**, पुं, (कृष्णः कृष्णवर्णो जीरकः ।) कृष्ण-
वर्णस्थूलजीरकः । केलेजीरा इति भाषा ।
तत्-
पर्य्यायः । सुषवी २ कारवी ३ पृथ्वी ४ पृथुः
५ काला ६ उपकुञ्चिका ७ । इत्यमरः ॥
सुशवी
८ कुञ्चिका ९ । इति तट्टीकायां नयनानन्दः
॥
उपकुञ्चिः १० । इति रत्नमाला ॥ कृष्णा
११
जरणा १२ शाली १३ बहुगन्धा १४ ।
पृथुका
१५ पृथिवी १६ भेषजम् १७ । इति
शब्दरत्ना
वली ॥ अपि च ।
"कृष्णजीरः सुगन्धश्च तथैवोद्गारशोधनः ।
कणाजाजी तु सुषवी कालिका चोपकालिका
॥

(कृष्णदन्तविशिष्टे, त्रि । दन्तस्तु मद्यपानादिना
कृष्णत्वं प्राप्नोति ॥)

**कृष्णदेहः**, पुं, (कृष्णः कृष्णवर्णो देहो यस्य ।) भ्रमरः ।
इति सारस्वतः ॥ कृष्णवर्णशरीरे, त्रि ॥

**कृष्णद्वैपायनः**, पुं, (द्वीपे भव इत्यण् । यद्वा द्वीपः
अयनं उत्पत्तिस्थानं यस्य । प्रज्ञाद्यण् । कृष्ण-
श्चासौ द्वैपायनश्चेति ।) वेदव्यासः । इति
त्रिकाण्ड-
शेषः ॥ (यथा, महाभारते १ । १०५ । १३ ।
"ततस्तस्मिन् प्रतिज्ञाते भीष्मेण कुरुनन्दन ! ।
कृष्णद्वैपायनं काली चिन्तयामास वै मुनिम्" ॥
अस्य यमुनाद्वीपोत्पत्तिकथा यथा तत्रैव १ ।
१०५ । ७ -- १४ ।
"धर्म्मयुक्तस्य धर्म्मार्थं पितुरासीत्तरी मम ।
सा कदाचिदहं तत्र गता प्रथमयौवने ॥
अथ धर्म्मविदां श्रेष्ठः परमर्षिः पराशरः ।
आजगाम तरीं धीमांस्तरिष्यन् यमुनां नदीम् ॥
स तार्य्यमाणो यमुनां मामुपेत्याब्रवीत्तदा ।
सान्त्वपूर्ब्बं मुनिश्रेष्ठः कामार्त्तो मधुरं वचः ॥
तमहं शापभीता च पितुर्भीता च भारत ! ।
वरैरसुलभैरुक्ता न प्रत्याख्यातुमुत्सहे ॥
अभिभूय स मां बालां तेजसा वशमानयत् ।
तमसा लोकमावृत्य नौगतामेव भारत ! ॥
मत्स्यगन्धो महानासीत् पुरा मम जुगुप्सितः ।
तमपास्य शुभं गन्धमिमं प्रादात् स मे मुनिः ॥
ततो मामाह स मुनिर्गर्भमुत्सृज्य मामकम् ।
द्वीपेऽस्या एव सरितः कन्यैव त्वं भविष्यसि ॥
पाराशर्य्यो महायोगी स बभूव महानृषिः ।
कन्यापुत्त्रो मम पुरा द्वैपायन इति श्रुतः" ॥
अन्यत् विवरणादिकमस्य व्यासशब्दे द्रष्टव्यम् ॥)

**कृष्णधत्तूरकः**, पुं, (कृष्णवर्णो धत्तूरकः ।) कृष्णवर्ण-
धुस्तूरः । कालधुतुरा इति भाषा । तत्पर्य्यायः ।
सिद्धः २ कनकः ३ सचिवः ४ शिवः ५ कृष्ण-
पुष्पः ६ विषारातिः ७ क्रूरधूर्त्तः ८ । अस्य गुणाः
।
कटुत्वम् । उष्णत्वम् । कान्तिकारित्वम् । व्रणा
र्त्तित्वग्दोषखर्जुकण्डूतिज्वरभ्रमनाशित्वञ्च ॥
"सि-

**कृष्णपिङ्गला**, स्त्री, ("वर्णो वर्णेन" । २ । १ ।
६९ ।
इति कर्म्मधारयः ।) दुर्गा । इति
त्रिकाण्डशेषः ॥
(कृष्णपिङ्गलवर्णयुक्ते, त्रि ।
ॐ "ऋतं सत्यं परं ब्रह्म पुरुषं
कृष्णपिङ्गलम् ।
ऊर्द्धलिङ्गं विरूपाक्षं विश्वरूपं नमो
नमः" ॥)

**कृष्णपिण्डीतकः**, पुं, (कृष्णः पिण्डीतकः ।
नित्यकर्म्म-
धारयः ।) वृक्षविशेषः । तत्पर्य्यायः ।
वराहः २
कृष्णपिण्डीरः ३ । इति रत्नमाला ॥

**कृष्णपिण्डीरः**, पुं, (कृष्णः पिण्डीरः ।)
कृष्णपिण्डीत-
कवृक्षः । इति रत्नमाला ॥

**कृष्णपिपीली**, स्त्री, (कृष्णा पिपीली ।)
कृष्णवर्णपिपी-
लिका । कालपिपीडा इति भाषा ।
तत्पर्य्यायः ।
स्थूला २ वृक्षरुहा ३ । इति
राजनिर्घण्टः ॥

**कृष्णपुष्पः**, पुं, (कृष्णं पुष्पं यस्य ।)
कृष्णधत्तूरकः । इति
राजनिर्घण्टः ॥ (कृष्णधत्तूरशब्दे
ऽस्य पर्य्याया
ज्ञेयाः ॥)

**कृष्णपुष्पी**, स्त्री, (कृष्णपुष्प + जातित्वात्
ङीष ।)
प्रियङ्गुवृक्षः । इति शब्दचन्द्रिका ॥

**कृष्णफलः**, पुं, (कृष्णं उग्रं कुत्सितं वा फलं
अस्य ।)
करमर्द्दकः । इत्यमरटीकायां भरतः
॥

**कृष्णफलपाकः**, पुं, (कृष्णं फलरूपेण पाको
यस्य ।)
करमर्दकः । इति द्विरूपकोषः ॥

पृथ्वीका कारवी पृथ्वी पृथुः कृष्णोपकुञ्चिका ।
उपकुञ्ची च कुञ्ची च वृहज्जीरक इत्यपि ॥
जीरकत्रितयं रूक्षं कदूष्णं दीपनं लघु ।
संग्राहि पित्तलं मेध्यं गर्भाशयविशुद्धिकृत् ॥
ज्वरघ्नं पाचनं बल्यं वृष्यं रुच्यं कफापहम् ।
चक्षुष्यं पवनाध्मानगुल्मच्छर्द्यतिसारहृत्' ॥
इति भावप्रकाशः ॥ अस्य गुणाः । कटुत्वम् ।
उष्णत्वम् । कफशोथजीर्णज्वरनाशित्वम् । रुचि-
चक्षुर्हितकारित्वम् । ग्राहित्वञ्च । इति राज-
निर्घण्टः ॥ स तु स्थूलसूक्ष्मभेदेन द्विधा ॥

**कृष्णतण्डुला**, स्त्री, (कृष्णः तण्डुलो वीजं यस्याः ।) कर्ण-
स्फोटालता । इति राजनिर्घण्टः ॥

**कृष्णताम्रं**, क्ली, (कृष्णं ताम्रम् । "वर्णो वर्णेन" । २ । १ ।
६९ । इति कर्म्मधारयः ।) गोशीर्षचन्दनम् । इति
शब्दमाला ॥

**कृष्णतारः**, पुं, (कृष्णा तारा यस्य ।) हरिणः । इति
राजनिर्घण्टः ॥

**कृष्णत्रिवृता**, स्त्री, (कृष्णा त्रिवृता ।) कृष्णवर्णा
त्रिवृत् । काल तेउडी इति भाषा ॥
तत्पर्य्यायः ।
श्यामा २ पालिन्दी ३ कालमेषिका ४ काला ५
मसूरविदला ६ अर्द्धचन्द्रा ७ सुषेणिका ८ । इति
जटाधरः ॥ (अस्या गुणा यथा,
कषायत्वम् । मधुरुत्वम् । रूक्षत्वम् । विपाकेकटु-
कत्वम् । कफपित्तप्रशमकारित्वम् । रूक्षत्वात् वात-
कोपनत्वञ्च ॥ इति चरके कल्पस्थाने ७
अध्याये ॥)

**कृष्णदन्ता**, स्त्री, (कृष्णः कृष्णवर्णो दन्तः शिखरदेशो
यस्याः ।) काश्मरीवृक्षः । इति राजनिर्घण्टः ॥

तनीलकृष्णलोहितपीतप्रसवाश्चसन्ति धत्तूराः ।
सामान्यगुणोपेतास्तेषु गुणाढ्यस्तु कृष्णकुसुमः
स्यात्" ॥ इति राजनिर्घण्टः ॥

**कृष्णपर्णी**, स्त्री, (कृष्णवर्णानि पर्णानि यस्याः ।)
कालतुलसी । इति रत्नमाला ॥

**कृष्णपक्षः**, पुं, (कृष्णस्तमसावृतश्चन्द्रक्षयात्मकः
पक्षः ।) असितपक्षः । स तु प्रतिपदाद्यमावास्या-
न्तानि पञ्चदश दिनानि । यथा, तिथ्यादितत्त्वम् ॥
"तत्र पक्षावुभौ मासे शुक्लकृष्णौ क्रमेण हि ।
चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः ॥
पक्षत्याद्यास्तु तिथयः क्रमात् पञ्चदश स्मृताः ।
दर्शान्ताः कृष्णपक्षे ताः पूर्णिमान्ताश्च शुक्लके" ॥

**कृष्णपाकः**, पुं, (पच्यतेऽसौ । पच + घञ् । पाकः
फलम् । कृष्णः कृष्णवर्णः पाकः फलं यस्य ।)
करमर्द्दः । इति शब्दरत्नावली ॥

**कृष्णपाकफलः**, पुं, (कृष्णपाकरूपं फलं यस्य ।) कर
मर्दकः । इत्यमरः । २ । ४ । ६७ ॥

**कृष्णफला**, स्त्री, (कृष्णं फलं यस्याः ।) सोमराजी ।
इत्यमरः । २ । ४ । ९६ ॥
(कोलशिम्बी । आल्कुशी
इति भाषा । छोट जाम इति भाषा ।
अस्याः
पर्य्याया यथा ॥
"सूक्ष्मकृष्णफला जम्बू दीर्घपत्रा च
मध्यमा" ॥
इति बैद्यकरत्नमालायाम् ॥
कोलशिम्बिः ॥ सुवरा
शेण्डि इति भाषा ॥ अस्याः पर्य्याया ।
यथा, --
"कोलशिम्बिः कृष्णफला तथा
पर्य्यङ्कपट्टिका" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**कृष्णभूमः**, पुं, (कृष्णा कृष्णवर्णा भूमिर्मृत्तिका यत्र
देशे । समासे अच् ।)
कृष्णवर्णमृत्तिकायुक्तो
देशः । इति हेमचन्द्रः ॥

**कृष्णभूमिजा**, स्त्री, (कृष्णाया भूमेजायते इति । जन +
डः । ततष्टाप् ।) गोमूत्रिकातृणम् ।
इति राज-
निर्घण्टः ॥

**कृष्णभेदा**, स्त्री, (कृष्णवर्णेन भेदश्छेदोऽस्याः ।) क-
टुका । इति राजनिर्घण्टः ॥
(अस्याः पर्य्याया यथा ॥
"कट्वी तु कटुका तिक्ता कृष्णभेदा
कटुम्भरा ।
अशोका मत्स्यशकला चक्राङ्गी
शकुलादनी ॥
मत्स्यपित्ता काण्डरुहा रोहिणी
कटुरोहिणी" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**कृष्णभेदी**, स्त्री, (कृष्णेन वर्णेन भेदोऽस्याः । गौरादि-

त्वात् ङीष् ।) कटुकी । इत्यमरः । २ । ४ । ८६ ॥
(कटुकीशब्दे ऽस्या गुणपर्य्याया बोद्धव्याः ।)

**कृष्णमुद्गः**, पुं, (कृष्णः कृष्णवर्णः निकृष्टो वा मुद्गः वन-

जातत्वात् ।) मुद्गविशेषः । कालमुग् इति भाषा ।
तत्पर्य्यायः । वासन्तः २ माधवः ३ सुराष्ट्रजः ४ ।
अस्य गुणाः । त्रिदोषदाहनाशित्वम् । मधुर-
त्वम् । लघुत्वम् । दीपनत्वम् । पथ्यत्वम् । बल-

वीर्य्याङ्गपुष्टिदातृत्वञ्च । इति राजनिर्घण्टः ॥
(यथाह भावप्रकाशः ।
“मुद्गो रूक्षो लघुर्ग्राही कफपित्तरसो हि सः ।
स्वादुरल्पानिलो नेत्र्यो ज्वरघ्नो वनजस्तथा ॥
मुद्गो बहुविधः श्यामो हरितः पीतकस्तथा ।
श्वेतो रक्तश्च तेषान्तु पूर्ब्बः पूर्ब्बो लघुः स्मृतः ॥
शुश्रुतेन पुनः प्रोक्तो हरितः प्रवरो गुणैः ।
चरकादिभिरप्युक्त एष एव गुणाधिकः” ॥)

**कृष्णमूली**, स्त्री, (कृष्णं मूलमस्याः । स्त्रियां ङीप् ।)
शारिवाविशेषः । इति राजनिर्घण्टः ॥

**कृष्णमृत्**, स्त्री, (कृष्णा मृत् मृत्तिका ।) कालमृत्तिका ।
तत्पर्य्यायः । श्लक्ष्णभूमिः २ । अस्या गुणः ।
क्षत-
दाहास्रप्रदरश्लेष्मपित्तहरत्वम् । इति राजनि-
र्घण्टः ॥

**कृष्णमृत्तिकः**, पुं, (कृष्णा मृत्तिका भूमिर्यत्र ।) कृष्ण-
भूमः । इति हेमचन्द्रः ॥

**कृष्णरुहा**, स्त्री, (कृष्णा सती रोहतीति । रुह +
कः ।) जतुका लता । इति राजनिर्घण्टः ॥

**कृष्णरूप्यः**, त्रि, (कृष्णस्य भूतपूर्ब्बा गौः भूतपूर्ब्बो
रूप्यः । कृष्णचरः । कृष्णस्य भूतपूर्ब्बो गवादिः
।
इति मुग्धबोधव्याकरणम् ॥

**कृष्णलकः**, पुं, (कृष्णो वर्णोऽस्त्यस्यार्द्धफलेसिध्मादि-
त्वात् लच् । ततः स्वार्थे कन् ।) गुञ्जा । परिमाण-
विशेषः । यथा, मनुः । ८ । १७ ।
“पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश” ॥

**कृष्णलवणं**, क्ली, (कृष्णं लवणम् ।) सौवर्च्चललवणम् ।
काचलवणम् । इति राजनिर्घण्टः ॥ (यथा,
गारुडे
१८४ अध्याये ।
“सैन्धवं कृष्णलवणं सौवीरं मत्स्यपित्तकम्” ॥
अस्य पर्य्याया यथा । वैद्यकरत्नमालायाम् ।
“रुचकं कृष्णलवणमक्षं सौवर्च्चलञ्च तत्” ॥)

**कृष्णला**, स्त्री, (कृष्णल + टाप् ।) गुञ्जा । इत्यमरः ।

**कृष्णवक्त्रः**, पुं, (कृष्णं कृष्णवर्णं वक्त्रं मुखं यस्य ।) वानरः ।
इति हलायुधः ॥

**कृष्णवर्त्मा**, [न्] पुं, (कृष्णं कृष्णवर्णं वर्त्म यस्य ।
वायुप्रसारितधूमपथाभ्यन्तरएव
गतिरस्येति
भावः ।) अग्निः । (यथा, महाभारते १ ।
८५ । १२ ।
“हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते” ॥)
चित्रक
वृक्षः । इत्यमरः ॥ (कृष्णं अपवित्रं कर्म्म
आच-
रणं यस्य ।) दुराचारः । राहुः । इति मेदिनी
॥
(कृष्णः वासुदेवः परब्रह्म इत्यर्थः वर्त्म
गतिर्यस्य ।
ब्रह्मनिष्ठपुरुषः । इति व्युत्पत्तिलभ्योऽर्थः
॥)

**कृष्णवल्ली**, स्त्री, (कृष्णा वल्ली ।) कृष्णार्जकः । इति
शब्दचन्द्रिका ॥ सारिवाविशेषः । इति
राज-
निर्घण्टः ॥ (अस्याः पर्य्याया यथा ।
“कृष्णार्ज्जकः कृष्णबल्ली कालमालः
करालकः” ॥
इति वैद्यकरत्नमालायाम् ॥)

**कृष्णवल्लिका**, स्त्री, (कृष्णा वल्लिका ।) जतुका लता
।
इति राजनिर्घण्टः ॥

**कृष्णवर्व्वरकः**, पुं, (कृष्णः वर्व्वरकः ।) वर्व्वरवृक्षः ।
इति राजनिर्घण्टः ॥
(वर्व्वरशब्दे ऽस्य विवृतिर्ज्ञेया ॥)

**कृष्णवानरः**, पुं, (कृष्णः वानरः ।) कालवानरः ।
तत्पर्य्यायः । गोलाङ्गूलः २ गौरास्यः ३
कपिः ४
कृष्णमुखः ५ । इति राजनिर्घण्टः ॥

**कृष्णवीजं**, क्ली, (कृष्णं वीजं यस्य ।) कालिङ्गम् ।
इति राजनिर्घण्टः ॥ (कालिन्दं तरवूज इति

**कृष्णशारः**, पुं, (कृष्णः शारः शवलश्च ।) कृष्णसार-
मृगः । इत्यमरटीकायां रमानाथः ॥

**कृष्णशालिः**, पुं, (कृष्णः शालिर्धान्यविशेषः ।) काल
धान इति भाषा । तत्पर्य्यायः ।
कालशालिः
२ श्यामशालिः ३ सितेतरः ४ । अस्य
गुणाः ।
त्रिदोषदाहनाशित्वम् । मधुरत्वम् ।
पुष्टिवीर्य्य-
वर्द्धनत्वम् । वर्णकान्तिबलकारित्वञ्च ।
इति राज-
निर्घण्टः ॥

**कृष्णशिग्रुः**, पुं, (कृष्णः रूक्षगुणयुक्तः शिग्रुः ।) शो-
भाञ्जनवृक्षः । इति राजनिर्घण्टः ॥

**कृष्णशिम्बिका**, स्त्री, (कृष्णा कृष्णवर्णा शिम्बिका
कुत्सिता शिम्बिका वा ।)
कृष्णवर्णशिम्बी । काल
शिम इति भाषा । तत्पर्य्यायः ।
काकाण्डी २ ।
इति रत्नमाला ।
(अस्या गुणा गाम्भारीशब्दे ज्ञातव्याः ॥
“सितासिताः पीतकरक्तवर्णा
भवन्ति येऽनेकविधास्तु शिम्बाः ।
यथोदितास्ते गुणतः प्रधाना
ज्ञेया कटूष्णा रसपाकयोश्च” ॥
इति सुश्रुते सूत्रस्थाने ४६ अध्याये ॥)

**कृष्णशृङ्गः**, पुं, (कृष्णं शृङ्गं विषाणो यस्य ।)
महिषः । इति हेमचन्द्रः ॥

**कृष्णसखः**, पुं, कृष्णस्य सखा । (“राजाहःसखिभ्य-
ष्टच्” । ५ । ४ । ९१ । इति टच् ।)
अर्ज्जुनः ।
इति मुग्धबोधव्याकरणम् ॥
(अर्ज्जुनवृक्षः ॥)

**कृष्णसखी**, स्त्री, (कृष्णस्य सखी । द्रौपदी । सा
तु

२ । ४ । ९८ ॥ (क्ली, परिमाणविशेषः ।
यथा, मनुः । ८ । १३४ ।
“सर्षपाः षट् यवो मध्यस्त्रियवास्त्वेककृष्णलम् ।
पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश” ॥
अस्य टीकायां कुल्लूकभट्टेन यद्व्याख्यातं तद्यथा ।
“गौरसर्षपाः षट् मध्यो न स्थूलो नापि सूक्ष्मो यवो भवति । त्रिभिर्यवैः कृष्णलं रत्तिकेति प्रसिद्धं पञ्चभिः कृष्णलैर्माषाः षोडशमाषाः सुवर्णः स्यात्” ॥
अस्याः पर्य्याया यथा ।
“साङ्कुष्ठा कृष्णला गुञ्जा रक्तिका काकणन्तिका ।
काकादनी काकतिक्ता काकजङ्घा शिखण्डनी” ॥
इति वैद्यकरत्नमालायाम् ॥)

**कृष्णलोहं**, क्ली, (कृष्णं लोहम् ।) अयस्कान्तः । इति राजनिर्घण्टः ॥
(“त्रपुसीसताम्ररजतकृष्णलोहसुवर्णानि लोह-मलञ्चेति” ॥ इति सुश्रुते सूत्रस्थाने । ३६ अध्याये ॥)

**कृष्णलोहितः**, पुं, (कृष्णः लोहितश्च । “वर्णो वर्णेन २ । १ । ६९ । इति समासः ।) कृष्णरक्तमिश्र-वर्णः । धूम्रवर्णः । तद्वति त्रि । इत्यमरः २ । ५ । १६ ॥

लोके । अस्य पर्य्याया गुणाश्च यथा ।
“कालिन्दङ्कृष्णवीजं स्यात् कालिङ्गश्च सुवर्त्तुलम् ।
कालिन्दं ग्राहिदृक्पित्तशुक्रहृच्छीतलंगुरु ।
पक्वन्तु सोष्णं सक्षारं पित्तलं कफवातजित्” ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**कृष्णवीजः**, पुं, (कृष्णं उग्रं वीजं यस्य ।) रक्तशिग्रु-वृक्षः । इति जटाधरः ॥

**कृष्णवृन्ता**, स्त्री, (कृष्णं वृन्तं अस्याः ।) पाटलावृक्षः । इत्यमरः । २ । ४ । ५५ ॥ (अस्याः पर्य्याया यथा ।
“पाटलिः पाटला मोघा मधुदूती फलेरुहा ।
कृष्णवृन्ता कुवेराक्षी कालस्थाल्यलिवल्लभा ॥
ताम्रपुष्पी च कथिता परा स्यात् पाटला सिता” ॥
इति च तस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
माषपर्णी । इति मेदिनी (अस्याः पर्य्याया यथा ।
“सिंहपुच्छी ऋषिप्रोक्ता माषपर्णा महासहा ।
कृष्णवृन्ता च काम्बोजी पाण्डुलोमशपर्णिनी” ॥
इति वैद्यकरत्नमालायाम् ॥ * ॥
गम्भारीवृक्षः ।
अस्य पर्य्याया यथा ।
“गम्भारी भद्रपर्णी च श्रीपर्णी मधुपर्विका ॥
काश्मीरी काश्मरीहीरा काश्मर्य्यः पीतरोहिणी ।
कृष्णवृन्ता मधुरसा महाकुसुमिकाऽपि च” ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
गुणाश्चास्याः पाटलामाषपर्णीगम्भारीशब्देषु व्याख्येयाः ॥)

**कृष्णवृन्तिका**, स्त्री, (कृष्णं वृन्तं अस्याः ततः संज्ञायां

पञ्चपाण्डवमहिषी पञ्चालराजदुहिता । कृष्णस्य सखी सहचरी इव कृष्णवणत्वात् ।)
जीरकः ।
इति शब्दचन्द्रिका ॥

**कृष्णसर्षपः**, पुं, (कृष्णः कृष्णवर्णः सर्षपः ।) राजसर्षपः ।
इति राजनिर्घण्टः ॥ (यथास्य पर्य्यायाः ।
“क्षवः क्षताभिजनकः कृमिकृत् कृष्णसर्षपः” ॥
अस्थ गुणाश्च ।
“अति तीक्ष्णा विशेषेण तद्वत्कृष्णापि राजिका” ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**कृष्णसारः**, पुं, (कृष्णश्चासौ सारःशवलश्चेति ।) हरिण भेदः । इत्यमरः । २ । ४ । १० ।
कालसार इति भाषा ॥ (यथा, मनौ २ । २३ ।
“कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततः परः” ॥)
अस्य मांसगुणाः । संग्राहित्वम् । रूचिबलकारि-त्वम् । ज्वरनाशित्वञ्च । इति राजवल्लभः ॥ स्नुही-वृक्षः । शिंशपावृक्षः । इति मेदिनी ॥ खदिर-वृक्षः । इति शब्दरत्नावली ॥

**कृष्णसारङ्गः** पुं, कृष्णवर्णः सारङ्गो मृगः । कृष्णसारः ।
(यथा, कात्यायनश्रौतवचने । ७ । ९ । २१ ।
“कृष्णसारङ्गं मेध्यमभावे लोहितसारङ्गम्” ॥
तथा, शतपथब्राह्मणे । ३ । ३ । ४ । १३ । “कृष्ण-सारङ्गः स्यादित्याह यदि कृष्ण सारङ्गं न विन्देत

| | | |
|---|---|---|
| | कन् ततष्टाप् अत इत्वञ्च ।) गम्भारीवृक्षः । पेटिकावृक्षः । इति रत्नमाला ॥ | अथो अपि लोहितसारङ्गम्' । "कृष्णसारङ्गः श्यामशवलः" । इति भाष्यम् । पक्षे परब्रह्म । यथा, "कृष्णः नित्यनिर्व्वाणरूपः तदङ्गं तत्स्वरूपं |

यदि चेत् न विन्देत लभेत अथो अपि तर्हि
लोहितसारङ्गं सगुणभावं उपासीत इत्यर्थः ॥)

**कृष्णसारथिः**, पुं, (अर्ज्जुनवृक्षः । इति राजनिर्घण्टः ॥
(कृष्णः सारथिः युद्धे सहायोऽस्य इति विग्रहे
।)
पार्थः । (स तु तृतीयपाण्डवः ।
भारतीयमहायुद्धे
पार्थप्रार्थनया श्रीकृष्णस्य तत्सारथ्याङ्गीकारः
।
यथा, महाभारते । ५ । ७ । ३५-३८ ।
अर्ज्जुन उवाच ।
"भवान् समर्थस्तान् सर्व्वान् निहन्तु नात्र
संशयः ।
निहन्तुमहमप्येकः समर्थः पुरुषर्षम ! ॥
भवांस्तु कीर्त्तिमान् लोके तद्यशस्त्वां
गमिष्यति ।
यशसा चाहमप्यर्थी तस्मादसि मया वृतः ॥
सारथ्यन्तु त्वया कार्य्यं इति मे मानसं सदा ।
चिररात्रेप्सितं कामं तद्भवान् कर्तुमर्हति ॥
वासुदेव उवाच ।
उपपन्नमिदं पार्थ ! यत् स्पर्द्धेथा मया सह ।
सारथ्यं ते करिष्यामि कामः सम्पद्यतां तव"
॥)

**कृष्णसारा**, स्त्री, (कृष्णसार + अजादित्वात् टाप् ।)
शिंशपावृक्षः । इति रत्नमाला ॥
(अस्याः पर्य्यायाः यथा,
"शिंशपा पिच्छिला श्यामा कृष्णसारा च सा
गुरुः ।
कपिला सैव मुनिभिर्भस्मगर्भेति कीर्त्तिता" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**कृष्णस्कन्धः**, पुं, (कृष्णः कृष्णवर्णः स्कन्धो यस्य ।)
कालस्कन्धः । तमालवृक्षः । इत्यमरटीकायां
भरतः ॥

**कृष्णा**, स्त्री, (कृषे र्नक् णत्वं ततः टाप् ।) द्रौपदी ।
(सा तु पञ्चपाण्डवमहिषी । कृष्णवर्णत्वादेव
अस्याः नाम तथा जातम् । यथा, महाभारते
१ ।
१६८ । ४४ ।

लेपे शीतलत्वम् । पाने पित्तहरत्वम् ।
केषाञ्चित्
मते त्रिदोषघ्नत्वम् । इति राजनिर्घण्टः ॥
तत्पपर्य्यायगुणाः । अथ अगुरु कृष्णागुरु ।
"अगुरुप्रवरं लोहं राजार्हं जोङ्गजं तथा ।
वंशिकं कृमिजं चापि कृमिजग्धमनार्य्यकम्
।
अगुरूष्णं कटु त्वच्यं तिक्तं तीक्ष्णञ्च
पित्तलम् ॥
लघु कर्णाक्षिरोगघ्नं शीतवातकफप्रणुत् ॥
कृष्णं गुणाधिकं तत्तु लौहवद्वारि मज्जति ।
अगुरुप्रभवः स्नेहः कृष्णागुरुसमः स्मृतः"
॥
इति भावप्रकाशः ॥

**कृष्णाचलः**, पुं, (कृष्णस्य प्रियः अचलः पर्व्वतः ।
तद्-
वसतेस्तथात्वम् ।) रैवतपर्व्वतः । इति
जटाधरः ॥
(अस्मिन्नेव गिरौ भगवतः कृष्णस्य
द्वारकाधाम ।
इति पुराणप्रसिद्धम् ॥)

**कृष्णाञ्जनी**, स्त्री, (अज्यतेऽनया इति । अन्ज् +
करणे
ल्युट् ततो ङीप् । कृष्णा कृष्णवर्णा अञ्जनी
।)
कालाञ्जनीवृक्षः । इति राजनिर्घण्टः ॥

**कृष्णानदी**, स्त्री, (कृष्णा इत्याख्याता नदी ।)
नदीभेदः ।
तत्पर्य्यायः । कृष्णसमुद्भवा २ कृष्णवेण्या
३ कृष्ण-
गङ्गा ४ । (यथा, महाभारते ६ । ९ । ३३ ।
"सदा निरामयां कृष्णां मन्दगां
मन्दवाहिनीम्" ॥
अस्य जलगुणाः । स्वच्छत्वम् । रुच्यत्वम्
। दीपन-
त्वम् । पाचनत्वञ्च । इति राजनिर्घण्टः ॥

**कृष्णाभा**, स्त्री, (कृष्णा सती आभाति । आ + भा +
कः । ततष्टाप् ।) कालाञ्जनी । इति
राजनि-

**कृष्णिका**, स्त्री, (कृष्णैव इति । कृष्ण + संज्ञायां कन्
टाप् अत इत्वम् । यद्वा, कृष्णवर्णो
भूम्नाऽस्त्यस्य
इति ठन् टाप् च ।) राजिका । इत्यमरः ।
२ ।
९ । १९ ॥ राइ सर्षा इति भाषा ॥
("कृष्णिका राजिकासुरी कुष्ठको
राजसर्षपः" ॥
इति वैद्यकरत्नमालायाम् ॥)
श्यामापक्षिणी । तस्या नामानि यथा,
"श्यामा वराही शकुनी कुमारी
दुर्गा च देवी चटिका तथोमा ।
त्वं पोतकी पाण्डविका त्वमेव
त्वं कृष्णिका त्वं मितपक्षिणी च ॥
त्वं ब्रह्मपुत्री शकुनैकदेवी
धनुर्द्धरी पान्थसमूहमाता ।
प्रत्यक्षरूपा भगवत्यहोमा
नमोऽस्तु तुभ्यं कुरु मेऽर्थसिद्धिम्" ॥
इति वसन्तराजशाकुनम् ॥

**कृष्णेक्षुः**, पुं, (कृष्णः कृष्णवर्ण इक्षुः ।) इक्षुभेदः ।
काजली आक् इति भाषा । तत्पर्य्यायः ।
श्या-
मेक्षुः २ कोकिलेक्षुकः ३ कोकिलाक्षः ४
कान्ता-
रकः ५ । इत्यमरः ॥ अस्य गुणाः ।
तिक्तत्वम् ।
पाके मधुरत्वम् । स्वादुत्वम् । सुहृद्यत्वम् ।
कटुत्वम् । रसाढ्यत्वम् । त्रिदोषहारित्वम्
। सम-
वीर्य्य बहुवीर्य्यसुवर्णदातृत्वञ्च । इति
राजनि-
र्घण्टः ॥ अस्य भावप्रकाशोक्तगुणाः
कान्तारशब्दे
द्रष्टव्याः ॥

**कृष्णोदुम्बरिका**, स्त्री, (कृष्णस्य काकस्य प्रिया
उदुम्ब-
रिका । यद्वा कृष्णा कृष्णवर्णा उदुम्बरिका
।)
काकोदुम्बरिका । इति राजनिर्घण्टः ॥

"कृष्णेत्येवाब्रुवन् कृष्णां कृष्णाऽभूत् सा हि वर्णतः ।
तथा तन्मिथुनं यज्ञे द्रुपदस्य महामखे" ॥)
नीलीवृक्षः । पिप्पली । (अस्याः पर्य्याया यथा ।
"पिप्पली चपला शौण्डी वैदेही मागधी कणा ।
कृष्णोपकुल्या मगधी कोला स्यात्तिक्ततण्डुला" ॥
इति वैद्यकरत्नमालायाम् ॥) द्राक्षा । इति मेदिनी ॥
नीलपुनर्नवा । कृष्णजीरकः । गम्भारी । कटुका ।
सारिवाविशेषः । राजसर्षपः । इति राजनिर्घण्टः ॥
पर्पटी । इति भावप्रकाशः ॥ काकोली । सोम-
राजी । इति जटाधरः ॥ (द्वादशप्रकाराणां जलौ-
कसां मध्ये सविषप्रकारीयजलौकोविशेषः । तस्य
लक्षण यथा ।
"तास्वञ्जनचूर्णवर्णा पृथुशिराः कृष्णा" ॥
इति सुश्रुते सूत्रस्थाने १३ अध्याये ॥)

**कृष्णागुरु**, क्ली, (कृष्णं कृष्णवर्णं अगुरु ।) कृष्णवर्ण-
सुगन्धिकाष्ठविशेषः । तत्पर्य्यायः । अगुरु २ शृङ्गा-
रम् ३ विश्वरूपकम् ४ शीर्षम् ५ कालागुरु ६
केश्यम् ७ वसुकम् ८ कृष्णकाष्ठम् ९ धूपार्हम्
१० वल्लरम् ११ मिश्रवर्णम् १२ गन्धम् १३ ।
(यथा, भविष्यपुराणे आत्मतत्त्वोपदेशे ।
"विलिप्य कृष्णागुरुणा वाजपेयफलं लभेत्" ॥)
षस्य गुणाः । कटुत्वम् । उष्णत्वम् । तिक्तत्वम् ।
र्घण्टः ॥

**कृष्णामिषं**, क्ली, (कृष्णं कृष्णेन इत्यर्थः आमिषति
स्पर्द्धते वर्णेन । आ + मिष् + कः ।) कृष्णायसम् ।
इति हेमचन्द्रः ॥

**कृष्णायसं**, क्ली, (कृष्णं कालं आयसम् ।) स्वार्थे अण् ।)
कृष्णवर्णलौहम् । इति रत्नमाला ॥

**कृष्णार्च्चिः**, [स्] पुं, (कृष्णं कृष्णवर्णं अर्च्चिर्यस्य कृष्ण-
वर्णधूमेन सह अर्च्चिर्यस्येति वा ।) अग्निः । इति
भूरिप्रयोगः ॥

**कृष्णार्जकः**, पुं, (कृष्णः अर्जकः वनवर्व्वरः ।) काल-
तुलसी । तत्पर्य्यायः । कालमालः २ मालूकः ३
कृष्णमालुकः ४ कृष्णमल्लिका ५ गरघ्नः ६ वन-
वर्व्वरः ७ वर्व्वरी ८ जातिः ९ ।
(अन्ये पर्य्याया यथा, वैद्यकरत्नमालायाम् ॥
"कृष्णार्ज्जकः कृष्णवल्ली कालमालः करालकः" ॥)
अस्य गुणाः । कटुत्वम् । उष्णत्वम् । कफवा-
तामयनेत्ररोगनाशित्वम् । रुचिसुखप्रसवकारि-
त्वञ्च । इति राजनिर्घण्टः ॥

**कृष्णालुः**, पुं, (कृष्णः कृष्णवर्ण आलुः ।) नीलालुः ।
इति राजनिर्घण्टः ॥

**कृष्णावासः**, पुं, (आवसत्यस्मिन् इति । आ + वस् +
अधिकरणे घञ् । कृष्णस्य आवासः आलयः ।)
अश्वत्थवृक्षः । इति हेमचन्द्रः ॥ (रैवतपर्व्वतः ॥
इति भारतम् ॥ अश्वत्थशब्देऽस्य गुणादयो

**कृसरः**, पुं, (डु कृ ञ् करणे + "कृधूमादिभ्यः कित्" ।
उणां ३ । ७३ । इति सरन् किच्च । बाहुलकात्
न षत्वम् ।) कृशरः । इति जटाधरः ॥
(यथा, छन्दोगपरिशिष्टे --
"तिलतण्डुलसम्पक्वः कृसरः सोऽभिधीयते" ॥
खिचुडी इति भाषा । यथा, च मनौ ५ । ७ ।
"वृथा कृसरसंयावं पायसापूपमेव च ।
अनुपाकृतमांसानि देवान्नानि हवींषि च" ॥)

**कॄ**, श विक्षेपे । इति कविकल्पद्रुमः ॥ (तुदां-परं-
सकं-सेट् ।) श, किरति । अस्यापि निष्ठायां कीर्ण
इति । सूल्वाद्योदिदित्यत्र मूर्च्छवर्जनसामर्थ्यात्
येन केनापि प्रकारेण रेफान्तान्निष्ठातस्य न इति
व्याख्यानात् ॠदिरणाविति इति उरि च कृते
रान्तत्वात् निष्ठा तस्य न स्यात् । एवं गॄ श निग-
रणे इत्यादेरपि गीर्ण इत्यादि बोध्यम् । इति
दुर्गादासः ॥

**कॄ**, ञ गि हिंसे । इति कविकल्पद्रुमः ॥ (क्र्यां-उभं-
सकं-सेट् ।) ञ गि, कृणाति कृणीते । कीर्णः
किर्णिः । इति दुर्गादासः ॥

**कॄ**, क ङ विज्ञाने । इति कविकल्पद्रुमः ॥ (चुरां-
आत्मं-सकं-सेट् ।) क ङ, कारयते । इति दुर्गा-
दासः ॥

**कॄत्**, क संशब्दे । इति कविकल्पद्रुमः ॥ (चुरां
--परं--सकं--सेट् ।) दीर्घी । क, कीर्त्तयन्ति च

| | | |
|---|---|---|
| | ज्ञेयाः ॥)<br><br>**कृष्णाश्रितः**, त्रि, (कृष्णं आश्रितः प्राप्ताश्रयः ।) यस्य<br><br>आश्रयः कृष्णः सः । इति मुग्धबोधम् ॥ | |

गोष्ठीषु यद्गुणानप्सरोगणाः । कीर्त्तादिशस्य नि-
त्यत्वेऽपि कृतपाठः कीर्त्तादिशस्य व्यभिचारसूच-
नार्थः तेन अचीकृतदिति सिद्धम् । इति दुर्गा-
दासः ॥

**कॢप्तः**, त्रि, कल्पनार्थकृपधातोः कर्म्मणि क्ते कॢपादेशः ।
नियतः । कृतकल्पनः । कल्पनं सामर्थ्यं
तद्विशिष्टः ।
यथा, "अवश्यकॢप्ताभिः
पर्व्वतत्वचत्वरत्वादितत्तद्ध-
र्म्मावच्छिन्नाधिकरणताव्यक्तिभिस्तोपपत्तौ" ।
इति
जगदीशः ॥ (यथा, मनौ । ११ । २७ ।
"इष्टिं वैश्वानरीं नित्यं निर्व्वपेदब्दपर्य्यये ।
कॢप्तानां पशुसोमानां निष्कृत्यर्थमसम्भवे" ॥)

**कॢप्तकीला**, स्त्री, (कॢप्तं कीलयति । कील् + "कर्म्भ-
ण्यण्" । ३ । २ । १ । इति अण् ।) व्यवस्थापत्रम्
।
तत्पर्य्यायः । पट्टोलिका ३ । इति त्रिकाण्डशेषः
॥

**कॢप्तधूपः**, पुं, (कॢप्तः कृतः धूपो येन गन्धद्रव्यविशेषेण ।)
सिह्लकः । इति जटाधरः ॥ (कॢप्तश्चासौ
धूपश्चेति
विग्रहे कृत्रिमो धूपः ॥)

**कॢप्तिकः**, त्रि, (कॢप्तं मूल्यदानेन सत्त्वं देयत्वेनास्त्यस्य ।
कॢप्त + ठन् ।) क्रीतः । इति हलायुधः ॥

**केकयः**, पुं, (केकयस्तदाख्यया प्रसिद्धः प्रदेशो राज्य-
त्वेनास्त्यस्य ।) सूर्य्यवंशीयराजविशेषः । इति
श्री-
भागवतम् ॥ (स तु केकयदेशाधीश्वरः दशरथ-
श्वशुरश्च । यथा, रामायणे १ । १३ । २३ ।
"तथा केकयराजानं वृद्धं परमधार्म्मिकम् ।
श्वशुरं राजसिंहस्य सपुत्त्रन्तमिहानय" ॥
जनपदवाच्ये तु बहुवचनान्तः । यथा, महाभारते
।
६ । जम्बूखण्डविनिर्म्माणपर्व्वणि ९ । ४८ ।
"उपावृत्तानुपावृत्ताः सुराष्ट्राः केकयास्तथा" ॥)

**केकयी**, स्त्री, (केकयस्यापत्यं स्त्री । सङ्कोचे माना-

**केकी**, [न्] पुं, (केका ध्वनिभेदः अस्यास्तीति ।
व्रीह्यादिश्चेति इनिः ।) मयूरः ।
इत्यमरः २ । ५ ।
३० ॥ (यथा, काशीखण्डे । ३ । ७१ ।
"केकी केकां परित्यज्य मौनं तिष्ठति
तद्भयात् ।
चकोरश्चन्द्रिकाभोक्ता
नक्तव्रतमिवास्थितः" ॥)

**केकेयी**, स्त्री, (कैकेयी पृषोदरात् एकारत्वम् ।)
केकयी । इति शब्दरत्नावली ॥

**केचन**, व्य, (पाणिनिमते पदद्वयम् । मुग्धबोधमते
"किमः क्त्यन्ताच्चिच्चनौ" । इति
चनप्रत्ययः ।)
केचित् । इति व्याकरणम् ॥
(यथा, पञ्चदशी । ६ । ५९ ।
"पूर्ब्बापरपरामर्शविकलास्तत्र केचन"
॥)

**केचित्**, व्य, (पाणिनिमते पदद्वयम् । मुग्धबोधभते
तु "किमः क्त्यन्ताच्चिच्चनौ" । इति
चित् प्रत्ययः ।)
केचन । इति व्याकरणम् । कोन
व्यक्तिरा इति
भाषा ॥ (यथा, रामगीतायाम् । १४ ।
"केचिद्-
वदन्तीति वितर्कवादिनः" ।
केचित्कालापकोविदाः
इति रामतर्कवागीशः ॥)

**केचुकं**, क्ली, (कचु + स्वार्थे कन् । पृषोदरात्
एत्वे
साधुः ।) कचुः । इति त्रिकाण्डशेषः ॥

**केणिका**, स्त्री, (के शिरसि कुत्सितो वा अणकः
ततः
टाप् अत इत्वम् । स्त्रीत्वं लौकिकम् ।)
पटकुटी ।
इति हेमचन्द्रः ॥ कानात् इति भाषा ॥

**केत**, त् क मन्त्रणे । निःश्रावणे । इति कविकल्प-

शिशिरत्वम् । कटुत्वम् । पित्तकफापहत्वम्
।
रसायनत्वम् । वर्णदेहदार्ढ्यकारित्वञ्च ।
इति राज-
निर्घण्टः ॥

**केतनं**, क्ली, (कित् निवासाद्यर्थेषु +
कर्म्मभावकरणा-
धिकरणादिषु यथायथं ल्युट् ।) ध्वजः ।
(यथा, रघुवंशे ९ । ३९ ।
"अपतुषारतया विशदप्रभैः
सुरतसङ्गपरिश्रमनोदिभिः ।
कुसुमचापमतेजयदंशुभि-
र्हिमकरो मकरोर्ज्जितकेतनम्" ॥)
कार्य्यम् । निमन्त्रणम् । इत्यमरः । ३ । ३
। ११३ ॥
(यथा, मनुः । ४ । ११० ।
"प्रतिगृह्य द्विजो विद्वान् एकोद्दिष्टस्य
केतनम् ।
त्र्यहं न कीर्त्तयेद्ब्रह्म राज्ञो राहोश्च सूतके"
॥)
चिह्नम् । गृहम् । इति हेमचन्द्रः ।
(यथा, रामायणे १ । ७४ । ८ ।
"स त्वं धर्म्मपरो भूत्वा कश्यपाय
वसुन्धराम् ।
दत्त्वा वनमुपागम्य महेन्द्रकृतकेतनः" ॥)
स्थानम् । इति शब्दरत्नावली ॥
(यथा, विष्णुपुराणे १ । ११ । ९ ।
"एतद्राजासनं सर्व्वभूभृत्संश्रयकेतनम्"
॥)

**केतुः**, पुं, नवग्रहान्तग्रहविशेषः । स तु राहोः
शरीरम् । तत्पर्य्यायः । शिखी २ । इति
दीपिका ॥
अयं पापग्रहः । यथा, --
"अर्द्धो नेन्द्वर्कसौराराः पापाः
सौम्यास्तथापरे ।
पापयुक्तो बुधः पापो राहुकेतू च पापदौ" ॥
इति ॥
अयन्तु जन्मराश्यपेक्षया
षष्ठत्रिदशमैकादश-

भावात् केकयाज्जन्यजनकभावोऽपिपुंयोग इति पुंयोगादाख्यायां ङीष् ।) दशरथराजपत्नी । सा तु केकयराजपुत्त्री भरतमाता च । इति शब्दरत्नावली ॥ (यथा, रामायणे ।
"सत्कृत्य केकयीपुत्त्रं केकयो धनमादिशत्" ॥)

**केकरः**, त्रि, (के शिरसि मूर्द्ध्नि इत्यर्थः करुं नेत्र-
तारां शीलमस्य । "कृञो
हेतुताच्छील्यानुलोम्येषु" ।
३ । २ । २० । इति टः । "हलदन्तात् सप्तम्याः संज्ञा-
याम्" । ६ । ३ । ९ । इत्यलुक् ॥) वलीरः ।
इत्यमरः ।
२ । ६ । ४९ ॥ टेरा इति भाषा । (यथा, मनौ ।
"पित्रा विवदमानश्च केकरो मद्यपस्तथा" ॥
चतुवर्णात्मकमन्त्रः ॥ यथा, विश्वसारतन्त्रे ।
"चतु-
र्वर्णस्तु केकरः" ॥)

**केका**, स्त्री, (के मूर्द्ध्नि कायति । कै + कः टाप् ।
अलुक् समासः । यद्वा, अन्येभ्योऽपीति कर्म्मणि डः । "हलदन्तात् सप्तम्याः संज्ञायाम्" । ६ । ३ ।
९ । इत्यलुक् ।) मयूरवाणी । इत्यमरः । २ । ५ । ३१ ॥ (यथा, रघौ १ । ३९ ।
"षड्जसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः" ॥)

**केकाबलः**, पुं, (केकां ध्वनिविशेषं वलते स्तृणातीति ।
केका + वल् + अच् । यद्वा, केका + अस्त्यर्थे बाहु-
लकात् वलच् प्रत्ययः ।) मयूरः । इति शब्द-
चन्द्रिका ॥

द्रुमः ॥ (अदन्तचुरां-परं-सकं-सेट् ।
मन्त्रणे नि-
मन्त्रणे । अचिकेतत् । निःश्रावणं समयोद्धा-
षणम् । इति दुर्गादासः ॥

**केतकः**, पुं, (कितनिवासे + ण्वुल् ।) केतकीवृक्षः ।
इति त्रिकाण्डशेषः ॥ (यथा, रघुः ६ ।
१७ ।
"विलासिनीविभ्रमदन्तपत्र-
मापाण्डुरं केतकबर्हमन्यः" ॥
अस्य पर्य्याया गुणाश्च यथा, --
"केतकः सूचिकापुष्पो जम्बुकः क्रकचच्छदः" ॥
"केतकः कटुकः स्वादुर्लधुस्तिक्तः कफापहः" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**केतकी**, स्त्री, (केतक + गौरादित्वात् ङीष् ।) पुष्प-
वृक्षविशेषः । केया इति भाषा ॥
(यथा, भ्रमराष्टके । १ ।
"गन्धाढ्यासौ भुवनविदिता केतकी स्वर्णवर्णा
पद्मभ्रान्त्या क्षुधितमधुपः पुष्पमध्ये पपात" ॥)
तत्पर्य्यायः । सूचीपुष्पः २ हलीनः ३ जम्बुलः ४ ।
इति रत्नमाला ॥ केतकः ५
सूचिकापुष्पः ६
जम्बुकः ७ क्रकचच्छदः ८ । इति भावप्रकाशः ॥
तीक्ष्णपुष्पा ९ विफला १०
धूलिपुष्पिका ११
मेध्या १२ कण्टदला १३ शिवद्विष्टा १४ नृपप्रिया
१५ क्रकचा १६ दीर्घपत्रा १७
स्थिरगन्धा १८
गन्धपुष्पा १९ इन्दुकलिका २०
दलपुष्पा २१
पांशुला २२ । अस्या गुणाः । मधुरत्वम् । तिक्तत्वम् ।

स्थानस्थितश्चेत् शुभः । यथा, --
"केतूपप्लवभौममन्दगतयःषष्ठत्रिसंस्थाः शुभा-
श्चन्द्रार्कावपि ते च तौ च दशमौ चन्द्रः पुनः सप्तमः ।
जीवः सप्तनवद्विपञ्चमगतो युग्मेषु सोमात्मजः
शुक्रः षड्दशसप्तवर्जमितरे सर्व्वेऽप्युपान्त्ये शुभाः" ॥
इति ॥ * ॥ अस्य त्रिकोण
उच्चस्वगृहशत्रुमित्र-
समनीचा यथा, --
"सिंहस्त्रिकोणं धनुरुच्चसंज्ञं
मीनो गृहं शुक्रशनी विपक्षौ ।
सूर्य्यारचन्द्राः सुहृदः समानौ
जीवेन्दुजौ षट् शिखिनः परांशाः" ॥ इति ॥
"स्वोच्चाच्च सप्तमं नीचं
प्राग्वद्भावैर्विनिर्द्दिशेत्" ॥
इति ॥ * ॥ अस्य रिष्टिर्यथा, --
"केतुर्यस्मिन्नृक्षेऽभ्युदितस्तस्मिन् प्रसूयते जन्तुः ।
रौद्रे सर्पमुहूर्त्ते वा प्राणैः संत्यज्यते चाशु" ॥
इति च ज्योतिस्तत्त्वम् ॥ * ॥ अस्य दशाफलं
केरलीनामग्रन्थे द्रष्टव्यम् ॥ * ॥ अथातः केतुचा-
राध्यायो व्याख्यायते ।
तत्रादावेवागमप्रदर्शनार्थ-
माह ।
"गार्गीयं शिखिचारं
पराशरमसितद्देवलकृतञ्च ।
अन्यांश्च बहून्दृष्ट्वा
क्रियतेऽयमनाकुलश्चारः" ॥
गार्गीयं गर्गप्रोक्तं केतूनां चार तत् पराशरेण कृतं
असितनामाचार्य्येण कृतं देवलविरचितं एतान्
केतुचारान् अवलोक्य तथान्यानपि कश्यपऋषि-

| | | |
|---|---|---|
| | कफनाशित्वम् । कटुत्वम् । लघुत्वञ्च ॥ तत्पुष्पगुणाः । वर्ण्यत्वम् । केशदौर्गन्ध्यनाशित्वञ्च ॥ हेमाभाया-स्तस्या गुणाः । मदनोन्मादकत्वम् । वृंहणत्वम् । सौख्यकारित्वञ्च ॥ तस्याः स्तनगुणाः । अति- | पुत्त्रनारदवज्रादिरचितान्बहून् दृष्ट्वा मया अयं |

अनाकुलो निःसन्देहः केतुचारः क्रियते ॥ * ॥
अथोदयास्तमयलक्षणं आह ।
"दर्शनमस्तमयो वा न गणितविधिनास्य शक्यते ज्ञातुम् । दिव्यान्तरीक्षभौमास्त्रिविधाःस्युः केतवो यस्मात्" ॥
अस्य केतोर्दर्शनं उदयः अस्तमयोऽदर्शनं गणित-विधानेन ज्ञातुं न शक्यते । यस्मात् केतवस्त्रि-विधास्त्रिप्रकाराः । दिवि आकाशे भवा दिव्याः । अन्तरीक्षे भवा आन्तरीक्षाः । ग्रहनक्षत्रस्थानं विहायान्यत्र आकाशे ये दृश्यन्ते ते आन्त-रीक्षाः । भूमौ भवाः भौमाः । इति हेतोरुत्पात-रूपत्वात् एषामुदयास्तमयौ न ज्ञायेते इति ॥ * ॥
अथ केतूनां दिव्यवर्ज्जितानां अन्येषां स्वरूपमाह ।
"अहुताशेऽनलरूपं यस्मिंस्तत्केतुरूपमेवोक्तम् । खद्योतपिशाचालयमणिरत्नादीन्परित्यज्य" ॥

अहुताशे अनलवर्ज्जिते यस्मिन् देशे अनलरूप-

मग्निरूपं दृश्यतेयत् तदेव केतुरूपमुक्तम् । किन्तु खद्योत इन्द्रगोपककृमिविशेषः । पिशाचालयं यक्षस्थानम् । मणयश्चन्द्रकान्तप्रभृतयः । रत्नानि मरकतप्रभृतीनि । आदिग्रहणादन्यान्यपि काष्ठ-प्रभृतीनि तेजोरूपाणि एतान् त्यक्त्वा । यत एषां खभावादेवानलरूपमहुताशे दृश्यते अतो न तत् केतुरूपमिति ॥ * ॥
अथ दिव्यान्तरीक्षभौमानां केतूनां लक्षणमाह ।
"ध्वजशस्त्रभवनतरुतुरगकुञ्जराद्येष्वान्तरीक्षास्ते । दिव्या नक्षत्रस्था भौमाः स्युरतोऽन्यथा शिखिनः" ॥

ध्वजश्चिह्नम् । शस्त्रमायुधादि । भवनं गृहम् ।

तरुर्वृक्षः । तुरगोऽश्वः । कुञ्जरो हस्ती । आदिग्रह-णादन्येषु चतुष्पदेषु ये दृश्यन्ते ते आन्तरीक्षाः । दिव्या नक्षत्रस्थाः । अतोऽस्मादुक्तादन्यथा भूमौ ये दृश्यन्ते ते भौमाः । शिखिनः केतवः इति ॥ * ॥

अथ केतूनां संस्थानं मतान्तरेणाह ।

"शतमेकाधिकमेके सहस्रमपरे वदन्ति केतूनाम् । शुभाशुभफलं लोके ददात्यस्तमयोदयैः" इति ॥ * ॥

एवं मतान्तराण्युक्त्वा स्वसिद्धान्तमाह ।

"यद्येको यदि बहवः किमनेन फलन्तु सर्व्वथा वाच्यम् । उदयास्तमयैः स्थानैः स्पर्शैराधूपनैर्वर्णैः"

यद्येक एव केतुः यदि वा बहवः केतवः किम-

नेन । सर्व्वथा तेषामुदयास्तमयैः स्थानैः स्पर्शैरा-धूपनैवर्णैश्च शुभाशुभं फलं पुनर्वक्तव्यम् । उदयः कस्यां दिश्युदितः । अस्तमयः कस्यामेवास्तमितः । स्थानं यथा कस्मिन्नाकाशमागे कस्य नक्षत्रस्य वा समीपे उदितोऽस्तमितश्च । स्पर्शनं कस्तेन ग्रहो नक्षत्रं वा स्पृष्टम् । आधूपनं कोऽपि शि-खयाभिधूपितः । वर्णाः सितरक्तपीतकष्णादिकाः । एवमादिभिस्तस्य फलं वाच्यं तस्मादेको बहवो वा भवन्तु का नः क्षतिरिति ॥ * ॥

अथ केतुचारे येषां केतूनामभिदृष्टानां कियन्तं

कालं यावत् फलपाको भवति तेषां फलपाक-नियमार्थमाह ।
"यावन्त्यहानि दृश्यो मासास्तावन्त एव फलपाकः । मासैरब्दांश्च वदेत् प्रथमात् पक्षत्रयात् परतः" ॥
पक्षत्रयात् परतः फलपाकस्य कालसङ्ख्या प्रवर्त्तते
तस्मादुक्तं यद्दिष्टमुदये केतोः फलं नेहादिशेद्बुधः इति । यदुक्तं मासैरब्दांश्च वदेत् तदेकदेशेनापि प्रतिमासमेकद्वित्रिदिनदर्शनेन माससङ्ख्या लभ्यत एवेत्यर्थः । सर्व्वथा किमनेनास्माकमसद्विकल्पेन ।
दिवसैः पक्षत्रयात् परतो मासान् वदेत् । मासै-स्तस्मादेव पक्षत्रयात् परतोऽब्दान् वदेत् । मा-सात् परतो दिनाधिक्यं दृष्ट्यनुपातवशात् वाच्यम् ।
यथा यदि दिनत्रिंशता वर्षं लभ्यते तद्दृष्ट्या दिनै-केन मासैकमिति ।
तथा च समाससंहितायाम् ।
"केचित् केतुसहस्रं शतमेकसमन्वितं वदन्त्येके । नारदमतमेकोऽयं त्रिस्थानसमुद्भवो विविधरूपः ॥
दिव्या ग्रहर्क्षजातास्तीव्रफलकरा भौमाः । प्राणिध्वजादितुङ्गेषु चान्तरीक्षा न चात्यशुभाः ॥
उदयास्तमयाधूपनसंयोगाकारमार्गदिक्पातैः । फलानि दिवसैर्म्मासान् मासैस्तु वर्षाणि सन्दि-शेत् केतोः" ॥ * ॥
अथ शुभस्य केतोर्लक्षणमाह ।
"ह्रस्वतनुः प्रसन्नः स्निग्ध ऋजुरचिरसंस्थितः शुक्लः । उदितो वाप्यभिदृष्टः सुभिक्षसौख्यावहः केतुः" ॥
ऋजुरकुटिलः । अचिरसंस्थितः शीघ्रमेवा-दर्शनं याति । शुक्लः श्वेतः । उदितो-वाप्यभिदृष्टः अथवोदित एवाभिदृष्टस्तस्मिंस्तु उदितमात्रे यदि दृष्टिर्भवति तदा शुभः । अन्यथा अशुभः ॥
अशुभस्य केतोर्लक्षणमाह ।
"उक्तविपरीतरूपो न शुभकरो धूमकेतुरुत्पन्नः ।

बहुरूपमेकमेव प्राह मुनिर्नारदः केतुम्” ॥

एके पराशरादयः एकाधिकं शतं केतूनां कथ-

यन्ति । तथा च पराशरः । “शतमेकोत्तरं केतूनां भवन्ति तेषां षोडश मृत्युनिश्वासजाः । द्वादशा-दित्थसम्भवाः । दश दक्षमखविलयने रुद्रक्रोधजाः ।
सप्त पैतामहाः । पञ्चदश ऋषेरौद्दालिकस्य पुत्राः । सप्तदश मरीचिकश्यपललाटजाः । पञ्च च प्रजा-पतिसहजाः । त्रयोविभावसुजाः । धूमोद्भवश्चैकः । चतुर्दश मथ्यमानेऽमृते सोमेन सह सम्भूताः । एकस्तु ब्रह्मकोपजः” इति ॥ * ॥ अपरे गर्गादयः सहस्रं केतूनां वदन्ति ।
तथा च गर्गः ।
“अनित्योदयचाराणामशुभानाञ्चदर्शनम् ।
आगन्तूनां सहस्रं स्यात् ग्रहाणां सन्निबोध मे” ॥

बहुरूपमेकमेवेति नारदाख्यो मुनिरेकमेव

केतुं बहुरूपं प्राह । तन्मते एक एव केतुस्तस्य बहूनि रूपाणि स एव दिव्यान्तरीक्षभौम इत्यर्थः । तथा च नारदः ।
“दिव्यान्तरीक्षभौमस्थ एकः केतुः प्रकीर्त्तितः ।

दृश्यः केतुरिति सम्बध्यते । फलस्य पाकः फल-

पाकः । यः केतुर्यावन्त्यहानि दृश्यो भवति तस्य तावन्तो मासास्तस्य केतोस्तावतो मासान् फल-पाको ब्रूयात् ।
यावत्सङ्ख्यकानि दिनानि दृष्टो भवति तत्तुल्यान् मासान् तस्य फलपाको वदेत् ।
मासैस्तु पुनरब्दान् संवत्सरान् ब्रूयात् । मास-सङ्ख्यादर्शने मासतुल्यानि वर्षाणि च वदेत् ।
यावत् सङ्ख्यान्मासान् दृश्यो भवति तावत्सङ्ख्यानि वर्षाणि तस्य फलपाको वदेत् ।
कस्मात् कालात् प्रभृतिरित्यत आह प्रथमात् पक्षत्रयात् परतः ।
सर्व्वेषां केतूनां दिनसाम्यत्वम् ।
यावन्ति दिनानि दृश्यः केतुस्तस्माद्दर्शनादूर्द्ध्वं प्रथमं पक्षत्रयं पञ्च-चत्वारिंशद्दिनानि यावत् निष्फलानि तस्मात् पक्षत्रयात् परतः तावतो मासान् फलपाकः ।
अथ मासान् दृश्यते तदा तस्मादेव दर्शनात् परतः पक्षत्त्रयमतिक्रम्य मासतुल्यानि वर्षाणि वदेत् । प्रथमात् पक्षत्रयात् परतः तत्र पक्षत्त्रयं यावद्दिनसङ्ख्या गृह्यते ।
पक्षत्त्रयादूर्द्ध्वं यदा दृश्यते केतुस्तदा मासतुल्यानि वर्षाणि वदेत् । अत्र सन्देहव्युदासार्थं गर्गोक्तं नियमकमभिलिख्यते।
तथा च गर्गः ।

इन्द्रायुधानुकारी विशेषतो द्वित्रिचूलो वा” ॥
ह्रस्वतनुः प्रसन्न इत्यस्मादुक्तात् यो विपरीतरूपः
केतुरुत्पन्नः स धूमकेतुः । स च न शुभकरः पापं
करोतीत्यर्थः । इन्द्रधनुःसदृशो न शुभकर एव ।
तथा द्विशिखस्त्रिशिखश्च विशेषतः पापफलदः ।
तथा च समाससंहितायाम् ।
“अचिरस्थितोऽभिदृष्टस्त्वजुःसितः स्निग्धमूर्त्ति-रुदगुदितः । ह्रस्वतनुः प्रसन्नः केतुर्लोकस्य भवाय ॥
न शुभो विपरीतो विशेषतः शक्रचापसंकाशः । द्वित्रिचतुश्चूलो वा दक्षिणसंस्थश्च मृत्युकरः” ॥ * ॥
अधुना केतुसहस्रलक्षणं विवक्षुस्तत्रादावेव रविजाः
पञ्चविंशतिः केतवो भवन्ति । तेषां लक्षणमाह ।
“हारमणिहेमरूपाः किरणाख्याः पञ्चविंशतिः सशिखाः । प्रागपरदिशोर्दृश्या नृपतिविरोधा-वहा रविजाः” ॥ हारो मुक्ताहारः । मणयश्चन्द्र-कान्तप्रभृतयः । हेम सुवर्णम् । तत्समानवर्णा ये केतवस्ते किरणाख्याः किरणसंज्ञाः । सशिखाः सचूलाः । ते च पञ्चविंशती रविजाः सूर्य्यसुताः प्रागपरयोश्च दिशोर्दृश्याः । प्राक् पूर्ब्बस्याम-परस्यां पश्चिमायां दिशि दृश्यन्ते । एतेषां मध्या-देक एव दृश्यते न सर्व्वे युगपदिति । सर्व्वत्रेयं परिभाषा । ते च नृपते राज्ञो विरोधप्रदाः अ-निष्टा इत्यर्थः ।
तथा च गर्ग
“शुद्धस्फटिकसंकाशा मृणालरजतप्रभाः ॥

| | | |
|---|---|---|
| | "यावन्त्यहानि दृश्यः<br>स्यात्तावन्मासान् फलं भवेत् ।<br>मासांस्तु यावद्दृश्येत<br>तावतोऽब्दांस्तु वैकृतान् ॥<br>त्रिपक्षात् परतः कर्म्म पचेत्तस्य<br>शुभाशुभम् ।<br>यद्विष्टमुदिते केतौ फलं<br>नेहादिशेद्बुधः" ॥<br>तथा वृद्धगर्गः ।<br>"यावतो<br>दिवसांस्तिष्ठेत्तावन्मासान्<br>विनिर्द्दिशेत् ।<br>त्रिपक्षात् परतश्चापि कर्म्म केतोः<br>प्रपच्यते ॥<br>तस्मात् कालात् परं ब्रूयात्<br>फलमस्य शुभाशुभम् ।<br>यद्विष्टमुदये केतोः फलं<br>नेहादिशेद्बुधः" ॥<br>यद्येवं तदा द्वितीयव्याख्यानमत्र<br>न घटते प्रथम-<br>व्याख्यानमेव ज्याय इति । यथा<br>प्रथमात् पक्ष-<br>त्रयात् परतः दर्शनादूद्र्ध्वं पक्षत्रयं<br>यावन्निष्फलं | |

मुक्ताहारसुवर्णाभाः सशिखाः
पञ्चविंशतिः ॥
किरणाख्या रवेः पुत्रा दृश्यन्ते
प्राग्दिशि स्थिताः ।
तथा च परभागस्था नृपतेर्मयदाश्च ते”
॥ * ॥
अथाग्निपुत्रास्तावन्त आह ।
“शुकदहनबन्धुजीवकलाक्षाक्षतजोपमा
हुताशसुताः ।
आग्नेय्यां दृश्यन्ते तावन्तस्तेऽपि
शिखिनो भयदाः” ॥
शुकपक्षी नीलपीतवर्णः । दहनोऽग्निः ।
बन्धु-
जीवकः पुष्पविशेषोऽतिलोहितः ।
लाक्षा वृक्ष-
निर्यासः । क्षतजं रक्तम् ।
तदुपमास्तत्तुल्यवर्णाः ।
ते च तावन्तः पञ्चविंशतिः आग्नेय्यां
दिशि दृश्य-
न्ते । ते च हुताशसुताः अग्निपुत्राः
अग्निभयदाः ।
तथा च गर्गः ।
“नानावर्णाग्निसङ्काशा दीप्तिमन्तोऽपि
चूलिनः ।
सृजन्त्यग्निमिवाकाशात्
सर्व्वज्योतिषनाशनाः ॥
तेऽग्निपुत्रा ग्रहा ज्ञेया
लोकेऽग्निभयवेदिनः ।
आग्नेय्यां दिशि दृश्यन्ते पञ्चविंशाः
प्रकीर्त्तिताः” ॥
अथ मृत्युसुतास्तावन्त एवाह ।
“वक्रशिखा मृत्युसुता रूक्षाः कृष्णाश्च
तेऽपि तावन्तः ।
दृश्यन्ते याम्यायां जनमरकावेदिनस्ते
च” ॥

वक्रशिखाः अस्पष्टचूडाः । ते
च रूक्षा अस्नि-

ग्धास्तेऽपि पञ्चविंशतिरेव । ते च
मृत्योः पुत्रा

तथा च गर्गः ।
“एको ब्रह्मसुतः क्रूरस्त्रिवर्णस्त्रिशिखान्वितः ।
सर्व्वास्वाशासु दृश्यः स्यात् ब्रह्मदण्डः
क्षयावहः” ॥

एकाधिकं शतं कथितं अन्यानि
नवशतान्येको-

नानि कथनीयानि इत्यत आह ।
“शतमभिहितमेकसमेतमेकाधिकाच्छतात्परतः
।
एकोनानि नवशतानि केतूनां स्पष्टैर्लक्षणैः
कथयिष्ये” ॥

शतमभिहितमेकसमेतं एकेनाधिकं
केतूनां

शतमभिहितमुक्तम् । तस्मादेकाधिकाच्छतात्
परतः एकोनानि एकेन विरहितानि नवशतानि
केतूनां स्पष्टैर्व्यक्तैर्लक्षणैश्चिह्नैः कथयिष्ये ॥

अथ शुक्रपुत्राश्चतुरशीतिसंज्ञाश्चाह
।

“शुक्रसुता विसर्पकाः सौम्यैशान्योरुदयं यान्ति
चतुरशीत्याख्याः । विपुलसिततारकास्ते
स्निग्धाश्च
भवन्ति तीव्रफलाः” ॥ सौम्या उत्तरा । ऐशानी
ईशा-
नदिक् । तयोरुदयं दर्शनं गच्छन्ति ! ते च
विपुला
विस्तीर्णाः सिताः शुक्लाः तारका येषाम् ।
स्निग्धा
निर्म्मलदेहाः ते च तीव्रफला अनिष्टफला इति
।
तथा च गर्गः ।
“स्थूलैकतारकाः श्वेताः स्नेहवन्तश्च सुप्रभाः
।
अर्च्चिष्मन्तः प्रसन्नाश्च तीव्रेण च सुखान्विताः
॥
एते विसर्पका नाम शुक्रपुत्राः पुरोदयाः ।
अशीतिश्चतुरश्चैव लोकक्षयकराः स्मृताः” ॥
* ॥

“अरुन्धतिसमा व्यक्ताः केचिदव्यक्ततारकाः ।
पाण्डुवर्णाः सुदीर्घाश्च सूक्ष्मा रश्मिभिरावृताः
॥
एते बुधात्मजा ज्ञेयास्तस्कराख्या भयावहाः ।
एकाधिकास्ते पञ्चाशदथोऽत्यर्थचरा ग्रहाः” ॥
* ॥
अथ षष्टिभौमपुत्रानाह ।
“क्षतजानलानुरूपास्त्रिचूलताराःकुजात्मजाः
षष्टिः । नाम्ना च कौङ्कुमास्ते
सौम्याशासंस्थिताः
पापाः” ॥ कौङ्कुमनामानः षष्टिकेतवो
मङ्गलपुत्राः
रक्तवह्निसदृशाः लोहिता इत्यर्थः । त्रिचूला-
स्त्रिशिखास्तारा येषां ते च उत्तरस्यां दृश्यन्ते
पापफलाश्च ।
तथा च गर्गः ।
“त्रिशिखाश्च त्रिताराश्च रक्तलोहितरश्मयः ।
प्रायशस्तूत्तरामाशां सेवन्ते नित्यमेव ते ॥
लोहिताङ्गात्मजा ज्ञेया ग्रहाः षष्टिः समासतः ।
नामतः कौङ्कुमा ज्ञेया राज्ञां संग्रामकारकाः” ॥
* ॥
अथ त्रयस्त्रिंशद्राहुपुत्रानाह ।
“त्रिंशत्तु त्र्यधिका राहोस्ते तामसकीलका इति
ख्याताः । रविशशिना दृश्यन्ते तेषां
फलमर्कच्चा-
रोक्तम्” ॥

त्रयस्त्रिंशत् स्वर्भानुपुत्रास्ते च
नामतः तामस-

कीलका इति प्रसिद्धाः । ते च
अर्कचन्द्रमण्डलस्था
दृश्यन्ते तेषाञ्च फलं सूर्य्यचारे कथितं तामस-
कीलकसंज्ञा राहुसुता इति ।
तथा च गर्गः ।
“कृष्णाभाः कृष्णपर्य्यन्ताः संकुलाः
कृष्णरश्मयः ।
राहुपुत्रास्त्रयस्त्रिंशत् कीलकाश्चातिदारुणाः
॥
रविमण्डलगाश्चैते दृश्यन्ते चन्द्रगास्तथा” ॥
तथा च पराशरः ।

दक्षिणस्यां दिशि दृश्यन्ते । ते च
जनानां मरकं
आवेदयन्ति ।
तथा च गर्गः ॥
"कृष्णा रूक्षा वक्रशिखा ह्टश्यन्ते
याम्यदिक्स्थिताः ।
पञ्चविंशा मृत्युसुताः प्रजाक्षयकराः
स्मृताः" ॥
अथ भूपुत्त्रा द्वाविंशतिरेवाह ।
"दर्पणवृत्ताकारा विशिखाः
किरणान्विता धरा-
तनयाः । क्षुद्भयदा
द्वाविंशतिरैशान्यामम्बुतैल-
निभाः" ॥ दर्पणवत् वृत्तं वर्त्तुलं
आकारो येषां
ते विशिखा विचूलाः रश्मिसंयुक्ताः
भूमेः पुत्त्राः ।
ते च द्वाविंशतिरैशान्यां दृश्यन्ते ।
जलस्य तैलस्य
च सदृशकान्तयः । एते दृष्टा दुर्भिक्षं
ददति ॥
तथा च गर्गः ।
"समन्तवृत्ता विशिखा रश्मिभिः
परिवारिताः ।
अम्बुतैलप्रतीकाशा द्वाविंशा भूसुताः
स्मृताः ।
ऐशान्यां दिशि दृश्यन्ते
दुर्भिक्षभयदाश्च ते" ॥ * ॥

अथ चन्द्रसुतास्त्रय आह ।
"शशिकिरणहिम-

रजतकुमुदकुन्दकुसुमोपमाः सुताः
शशिनः । उत्त-
रतो दृश्यन्ते त्रयः सुभिक्षावहाः
शिखिनः" ॥ एते
सौम्यायां दिशि दृश्यन्ते । ते च सुभिक्षं
कुर्व्वन्ति ।
तथा च गर्गः ।
"चन्द्ररश्मिसुवर्णाभा
हिमकुन्देन्दुसुप्रभाः ।
त्रयस्ते शशिनः पुत्त्राः सौम्याशास्थाः
शुभावहाः" ॥

अथ षष्टिशनैश्चरपुत्त्रानाह ।
"स्निग्धाः प्रभासमेता द्विशिखाः षष्टिः
शनैश्चरा-
ङ्गरुहाः । अतिकष्टफला दृश्याः सर्व्वत्रैते
कनक-
संज्ञाः" ॥ ईदृशाःषष्टिः शनैश्चरपुत्त्राः
कनककेतवः
सर्व्वत्र सर्व्वासु दिक्षु दृष्टाः अत्यशुभफलाश्च ते
।
तथा च गर्गः ।
"सुस्निग्धा रश्मिसंयुक्ता द्विशिखाः
सिततारकाः ।
षष्ठिस्ते कनका घोराः शनैश्चरसुता ग्रहाः" ॥
* ॥
अथ गुरुसुताः पञ्चषष्टिराह ।
"विकचा नाम गुरुसुताः सितैकताराः शिखाप-
रित्यक्ताः । षष्टिपञ्चभिरधिकाः स्निग्धा याम्या-
श्रिताः पापाः" ॥

पञ्चषष्टिः केतवो विकचा नाम
वृहस्पतिपुत्त्राः ।

ते च सितः श्वेतः एकस्तारको येषां
चूडारहिताः ।
ते च दक्षिणस्यां दृश्यन्ते पापा अनिष्टफलदा
इत्यर्थः ।
तथा च गर्गः ।
"स्निग्धाः शुक्लाः प्रसन्नाश्च महारूपाः
प्रभान्विताः ।
एकतारा वपुष्मन्तो विशिखा रश्मिभिर्वृताः ॥
एते वृहस्पतेः पुत्त्राः प्रायशो दक्षिणाश्रयाः ।
नामतो विकचा घोराः पञ्चषष्टिर्भयावहाः" ॥
अथैकपञ्च शद्बुधपुत्त्रानाह ।
"नातिव्यक्ताः सूक्ष्मा दीर्घाः शुक्ला
यथेष्टदिक्प्रभवाः ।
बुधजास्तस्करसंज्ञाः
पापफलास्त्वेकपञ्चाशत्" ॥

तस्करनामान एकपञ्चाशत् केतवो
बुधस्य

पुत्त्राः । नातिस्फुटाः अल्पदेहाः यथेष्टायां
दिशि

"अपर्व्वण्येव दृश्यन्ते ह्यङ्गिराः काककीलकाः
।
रवेरिवाङ्गिरामध्ये ह्युभयोः काककीलकौ ॥
अङ्गिराः सरथो वापि दृश्यते पुरुषाकृतिः ।
काकः काकाकृतिर्घोरस्त्रिकोणो वाथ लक्ष्यते
॥
मण्डलं कीलको मध्ये मण्डलस्यासितो ग्रहः ।
महानृपविरोधाय यस्यर्क्षं तस्य मृत्यवे" इति ॥
* ॥

अथ विंशत्यधिकं शतमग्निपुत्त्रानाह
।

"विंशत्यधिकमन्यच्छतमग्नेर्व्विश्वरूपसंज्ञानाम्
।
तीव्रानलभयदानां ज्वालामालाकुलतनूनाम्"
॥

अन्यत् अपरं शतं विंशत्यधिकं
केतूनामग्नेः

सुतानां विश्वरूपनाम्नां कीदृशानां
ज्वालामाला-
भिराकुला व्याप्तास्तनवो मूर्त्तयो येषाम् । तथा
तीव्रं घोरमग्निभयं ददति ।
तथा च गर्गः ।
"नानावर्णा हुताशाभा दीप्तिमन्तो विचूलिनः ।
सृजन्त्यग्निमिवाकाशे सर्व्वज्योतिर्व्विनाशनाः
॥
तेऽग्निपुत्त्रा ग्रहा ज्ञेया लोकेऽग्निभयवेदिनः ।
विंशं ग्रहशतं घोरं विश्वरूपेति विश्रुतम्" ॥ *
॥
अथ सप्तसप्ततिवायुपुत्त्रानाह ।
"श्यावारुणा विताराश्चामररूपा
विकीर्णदीधितयः ।
अरुणाख्या वायोः सप्तसप्ततिः पापदाः
परुषाः" ॥

अरुणसंज्ञा वायोः पुत्त्राः
श्यावलोहित-

वर्णाः तारकवर्जिताश्चामररूपा
वालव्यजनाकृतयः

| | | |
|---|---|---|
| अथ ब्रह्मदण्डाख्यस्य लक्षणमाह । “ब्रह्मसुत एक एव त्रिशिखो वर्णैस्त्रिभिर्युगान्तकरः । अनियतदिकसंप्रभवो विज्ञेयो ब्रह्मदण्डाख्यः” ॥ ब्रह्मपुत्त्र एक एव । स च त्रिचूडः । वर्णैः सिता-दिमिश्चोपलक्षितः । स तु ब्रह्मदण्डसंज्ञो ज्ञेयः । अनियतायां अनिश्चितायां दिशि संप्रभवः उत्पद्यते सर्व्वासु दिक्षु दृश्यत इत्यर्थः । स तु युगस्यान्तं करोति सर्व्वक्षयकरः इत्यर्थः । | प्रभव उत्पत्तिर्येषां सर्व्वासु दिक्षु दृंश्यन्त इत्यर्थः । ते चानिष्टफलाः । तथा च गर्गः । | |

व्याक्षिप्तरश्मयः रूक्षाः दुष्टफलप्रदाः। अत्र
येषां
दिङ्नियमो नास्ति तेऽनियतदर्शनाः
सर्व्वास्वपि
दिक्षु दृश्यन्ते।
तथा च गर्गः।
"अताररूपप्रतिमाः श्यावरक्तसुवर्णिनः।
वालरुपा इवाभान्ति शुक्लविस्तीर्णरश्मयः
॥
सप्तसप्तति चैवान्ये वायोः पुत्राः प्रचक्षते।
लोकविध्वंसना वृक्षा नामतस्त्वरुणा ग्रहाः"
॥ * ॥

अथाष्टौ प्रजापतिसुता द्वे च शते
चतुरधिके

ब्रह्मणः पुत्रास्तानाह।
"तारापुञ्जनिकाशा गणका नाम प्रजापतेरष्टौ
।
द्वे च शते चतुरधिके चतुरस्रा ब्रह्मसन्तानाः
॥
अष्टौ केतवो गणका नाम प्रजापतेः पुत्राः"।

ते च ताराणां नक्षत्राणां पुञ्जः
समूहस्तदाकाराः।

ते च अशुभदायिनः। तथा च। द्वे शते
चतुर-
धिके केतूनां ते च चतुरस्रसंज्ञाः
चतुराकृतयस्ते
च ब्रह्मणः पुत्राः पापफला एव ज्ञेयाः ते
चाग्नेय-
दिग्भवाः। तथा च गर्गः।
"तारापुञ्जप्रतीकाशा व्योममण्डलसंस्थिताः
।
प्राजापत्या ग्रहास्त्वष्टौ गणका भयवेदिनः॥
त्र्यस्राश्च चतुरस्रा वा सशिखाः श्वेतरश्मयः
।
द्वे शते चतुरश्चैव ब्रह्मजा भयदाश्च ते" ॥ *
॥
अथ द्वात्रिंशद्वरुणपुत्रानाह।

विदिक्पुत्रा इत्यर्थः। किम्भूताः शुक्लः
श्वेतवर्णो
विपुलो विस्तीर्ण एकतारो येषां ते विदिक्केतवो
दृश्यन्ते दृष्टाश्च पापफलाः।
तथा च गर्गः।
"शुक्लैकतारा विपुला विदिक्पुत्रा नवग्रहाः।
विदिक्षु संस्थिता एव दृश्यन्ते भयदायकाः" ॥

एवं केतुसहस्रमिति। एवं केतूनां
सहस्रं उक्तं

एषामेव विशेषलक्षणं वक्ष्ये। एषां मध्यात्
केचित् दृश्यन्ते न सर्व्व एव। तत्र ये दृश्यन्ते
तेषां लक्षणं वक्तुकामस्तत्रादावेव केतोर्लक्षण-
माह ॥ * ॥
"उदगायतो महान् स्निग्धमूर्त्तिरपरोदयी वसा
केतुः। सद्यः करोति मरकं सुभिक्षमप्युत्तमं
कुरुते" ॥ उदगायत उत्तरस्यां दिश्यायतो
दीर्घः
महानतिस्थूलः निर्म्मलतनुः अपरोदयी पश्चि-
मायां दिश्युदयं याति। स च नाम्ना
वसाकेतुर्दृष्टः
सद्य एव तस्मिन्नहनि मरणं करोति। उत्तममपि
प्रधानं सुभिक्षञ्च कुरुते ॥ * ॥
अथास्थिकेतोः शस्त्राख्यस्य च लक्षणमाह।
"तल्लक्षणोऽस्थिकेतुः स तु रूक्षः क्षुद्भयावहः
प्रोक्तः
स्निग्धस्तादृक् प्राच्यां शस्त्राख्यो
डमरमरकाय" ॥

तदित्यनेन वसाकेतोः परामर्शः।
अस्थिकेतुश्च

तल्लक्षणैर्वसाकेतुसदृशैर्युक्तः। उदगायत
इत्यादि
किन्त्वयं विशेषः स तु रूक्षः स्नेहरहितः
दृष्टश्च
क्षुद्भयावहः कथितः। स्निग्धस्तादृगिति
तादृग्व-
साकेतुसदृशोऽन्यः स्निग्धो निर्म्मलदेहः
प्राच्यां
दृश्यते। स तु शस्त्रनामा केतर्दृष्टः डमरं शस्त्र-

त्सरान् पञ्चप्रस्थं वर्षाधान्यस्यार्घ्यं
कृत्वा प्रजाना-
मेकमुपयुङ्क्ते" ॥
अथ रौद्रकेतोर्लक्षणमाह।
"प्राग्वैश्वानरमार्गे शूलाग्रः
श्यावरूक्षताम्राच्चिंः।
नभसस्त्रिभागगामी रौद्र इति
कपालतुल्यफलः" ॥

रौद्रनामा केतुः पूर्ब्बस्यां दिशि
वैश्वानरमार्गे

दहनवीथ्यां दृश्यते।
पूर्ब्बाषाढोत्तराषाढयोः
समीप इत्यर्थः। कीदृशः शूलाग्रः
शूलाकृतिरग्रं
यस्य केतोः स शूलाग्रः त्रिशिख इत्यर्थः
। तस्यैव
विशेषणं श्यावरूक्षताम्राच्चिंः श्यावरूक्षं
ताम्रं
चार्च्चिस्तेजो यस्य स
श्यावरूक्षताम्राच्चिंः। नभस
आकाशस्य त्रिभागगमनशीलः। स च
कपाल-
केतोः समफलः। एतदुक्तं भवति
क्षुन्मरकावृष्टि-
रोगकृत्। आचार्य्येण शुक्राचारे
वैश्वानरमार्गः
प्रदर्शित एव आषाढाद्वयं दहन इति।
तथा च पराशरः।
"अथ दक्षयज्ञे रुद्रक्रोधोद्भवः
कालकेतुस्त्रीणि
वर्षशतानि नव च मासान् प्रोष्य उदयते
। पूर्ब्बेण
वैश्वानरमार्गे इत्यमृतमयस्य
मणिकेतोश्चारान्ते
श्यावरूक्षताम्रारुणां शूलाकारसदृशीं
शिखां
कृत्वा नभसस्त्रिभागचारी स
शस्त्रभयरोगदुर्भि-

"कङ्का नाम वरुणजा द्वात्रिंशत्
गुल्मसंस्थानाः ।
शशिवत्प्रभासमेतास्तीव्रफलाः केतवः
प्रोक्ताः" ॥

ते वरुणपुत्राः वंशगुल्मवत्
संस्थानमाकृति-

र्येषां । गुल्म एकमूलजो लतासमूहः ।
शशिवत्
चन्द्रवत् प्रभया कान्त्या समेतास्ते च
तीव्रफलाः
कष्टफलाः प्रोक्ताः कथितास्ते
चानियतदिक्-
प्रभवाः । तथा च गर्गः ।
"वंशगुल्मप्रतीकाशा महान्तः पूर्णरश्मयः ।
काकतुण्डनिभैश्चाभि रश्मिभिः
केचिदावृताः ॥
मयूखानुन्मृजन्तीव स्निग्धत्वात्
सौम्यदर्शनाः ।
एते कष्टफलाः कङ्का द्वात्रिंशद्वारुणा ग्रहाः"
॥ * ॥
अथ षण्णवतिकालपुत्रानाह।
"षण्णवतिः कालसूताः कबन्धसंज्ञाः
कबन्धसंस्थानाः ।
पुण्ड्राऽभयप्रदाः स्युर्व्विरूपतारास्ते
शिखिनः" ॥

कालपुत्राः कबन्धसंस्थानाः
षण्णवतिः । कबन्ध-

श्छिन्नशिरःपुरुषस्तद्वत् संस्थानमाकृतिर्येषां
ते
च विरूपा अस्फुटास्तारका येषां ते
शिखिनः
केतवः पुण्डा नाम जनपदास्तेषां श्रेयस्कराः
स्युः ।
अन्यत्र पुनर्भयदास्ते चानियतदिकसंप्रभवाः
।
तथा च गर्गः ।
"तारापुञ्जविरूपाश्च कबन्धाकृतिसंस्थिताः
।
पीतारुणाः सवर्णाश्च भस्मकर्पूररश्मयः ॥

कलहं मरकञ्च करोति । तथा च पराशरः ।
"एभिः षड्विंशतिरुदयैः फलमावेदयन्ति ।
तन्नामतो रूपतः फलतः
कालतोऽभिधास्यामः" ॥

तत्र मार्त्तिवास्त्रय उदयं यान्ति ।
एकैकशो

वसास्थिशस्त्रकेतुर्व्वा । तत्र वसाकेतुः स्निग्धो
महानुदगायतशिखस्त्रिंशद्वर्षशतं प्रोष्य संप्लवे
युगे पश्चिमोदितः सद्यो मरकफलः
सौभिक्षकरः
रूक्षोऽस्थिकेतुः
सौभिक्षकरस्तुल्यप्रवासकालफलः
पूर्ब्बेण स्निग्ध एव
शस्त्रकेतूराजविरोधमरकफलः
समोदयः ॥ * ॥
अथ कपालकेतोर्लक्षणमाह ।
"दृश्योऽमावास्यायां कपालकेतुः
सधूम्ररश्मिशिखः ।
प्राङ्नभसोऽर्द्धविचारी क्षुन्मरकावृष्टिरोगकरः"
॥

कपालकेतुर्नाम अमावस्यायां दृश्यते
पूर्ब्बदिशि

उद्यं याति । कीदृशः सधूम्रा रश्मिशिखा यस्य
किरणकान्तिर्धूम्रवर्णेत्यर्थः । नभस
आकाशस्य
अर्द्धं यावद्विचरति । स च दुर्भिक्षमरकावर्षण-
रोगप्रदः ।
तथा च पराशरः ।
"अथादित्यजानां कपालकेतुरुदयते
अमावास्यायां
पूर्ब्बस्यां दिशि सधूम्रार्च्चिशिखो नभसो
विषयार्द्ध-
चरो दृश्यते । पञ्चविंशवर्षशतं प्रोष्य त्रींश्च
पक्षान् सृतिर्यस्य कुमुदकेतोश्चारान्ते स दृष्ट
एव ।
दुर्भिक्षानावृष्टिव्याधिभयं प्रत्युपद्रवान् सृजति ।
यावतो दिवसान् दृश्यते तावन्मासान्मासैः
संव-

क्षावृष्टिमरकैर्यावन्मासान् दृश्यते
तावद्वर्षाणि
त्रिभागशेषां प्रजां कृत्वा" ॥
शारदधान्यस्याढक-
मर्धं कृत्वा चास्तं व्रजति ।
तथा च वृद्धगर्गः ।
"ज्यैष्ठमूलमनुराधा या वीथी
संप्रकीर्त्तिता ।
ताञ्च वीर्थी समारुह्य केतुश्चेत् क्रीडते
भृशम् ॥
दक्षिणाभिनतां कृत्वा शिखां घोरां
भयङ्कराम् ।
शूलाग्रसदृशीं तीक्ष्णां
श्यावताम्रारुणप्रभाम् ॥
पूर्ब्बेण उदितश्चैव नक्षत्राण्युपधूपयेत् ।
घोरं प्रजासूत्सृजति फलं मासे त्रयोदशे
॥
त्रिभागं नभसो गत्वा ततो
गच्छत्यदर्शनम् ।
यावतो दिवसांस्तिष्ठेत् तावद्वर्षाणि
तद्भयम् ॥
शास्त्राग्निभयरोगैश्च दुर्भिक्षमरकैर्हताः ।
घूर्णमानाः प्रजाः सर्व्वा विद्रवन्ति दिशो
दश" ॥ * ॥
अथ चलकेतोर्लक्षणमाह ।
"अपरस्यां चलकेतुः शिखया
याम्याग्रयाङ्गुलोच्छ्रि-
तया । गच्छेत् यथोदक् तथा तया
दैर्घ्यमायाति ॥
सप्तमुनीन् संस्पृश्य ध्रुवमभिजितमेव
प्रतिनि-
वृत्तः स्यात् । नभसोऽर्द्धभागमित्वा
याम्येनास्त
समुपयाति ॥ हन्यात् प्रयागकूलात्
यावदवन्तीञ्च
पुष्करारण्यम् । उदगपि च देविकामपि
भूयिष्ठं
मध्यदेशाख्यम् ॥ अन्यानपि च स देशान्
क्वचित्
क्वचिद्धन्ति रोगदुर्भिक्षैः । दश मासान्
फलपाको
ऽस्य कैश्चिदष्टादश प्रोक्तः" ॥

कालपुत्राः कबन्धाश्च नबतिः षट्
प्रकीर्त्तिताः ।
लोकरोगकरा घोराः पुण्ड्राणामभयप्रदाः” ॥
* ॥

अथ नवविदिक्पुत्राः सर्व्वेषाञ्च संख्यामन्येषाञ्च

वक्ष्यामीत्येतदाह ।
“शुक्लविपुलैकतारा नवविदिशां केतवः समुत्पन्नाः ।
एवं केतुसहस्रं विशेषमेषामतो वक्ष्ये” ॥

विदिशां दिगन्तराणाञ्च नव केतवः समुत्पन्नाः

अपरस्यामिति पश्चियामां दिशि चलकेतुनामा

केतुर्दृश्यते । स च कीदृशः याम्यायां दिशि अग्रं
यस्याः तया अङ्गुलप्रमाणोच्छ्रितया यथा येन
प्रकारेण उदक उत्तरस्यां दिशि याति तथा
तेनैव प्रकारेण दैर्घ्यं दीर्घतां प्राप्नोति । सप्तमुनीत्
वशिष्ठादीन् संस्पृश्य तथा ध्रुवं ध्रुवतारकं अभि-
जितञ्च नक्षत्रं संस्पृश्य ततः प्रतिनिवृत्तः प्रत्या-

गतः नभस आकाशस्य
अर्द्धभागमित्वा गत्वा
प्राप्य याम्येन दक्षिणस्यां दिशि
अदर्शनं याति ।
स एव चलकेतुः
प्रयागकूलादारभ्य यावदवन्तीं
पुष्करारण्यनामस्थानं तावत्
नाशयेत् । उदगपि
चोत्तरस्यां दिश्यपि च यावत्
देविकां नदीं ताव-
द्धन्यात् । मध्यदेशाख्यं मध्यदेशं
भूयिष्ठमतिशयेन
हन्यात् । अन्यानपि च स
देशानिति । स चल-
केतुः अन्यान् अपरान् देशानपि
रोगदुर्भिक्षैः
क्वचित् क्वचित् नाशयति न
सर्व्वत्र । अस्य केतो-
र्दशमासान् यावत् फलपाकः ।
अदर्शनात् त्रिप-
क्षात् परतो यावद्दश
मासांस्तावदशुभं फलं
ददादि ।
कैश्चिदन्यैर्गर्गादिभिरष्टादश
मासान्
यावत् फलपाकः प्रोक्तः । तथा च
पराशरः ।

"अथ पैतामहश्चलकेतुः
पञ्चदशवर्षशतं प्रोष्य

उदितः पश्चिमेनाङ्गुलिपर्व्वमात्रां
शिखां दक्षिणा-
भिनतां कृत्वा चलकेतुश्चारान्ते
नभसस्त्रिभाग-
मनुचरन् यथा यथोत्तरां व्रजति
तथा तथा शूला
ग्राकारां शिखां दर्शयन् ब्राह्मं
नक्षत्रमुपसृत्य
मनाक् ध्रुवं व्रजराशिं सप्तर्षीन्
संस्पृश्य नभसो-

अथ श्वेतस्य लक्षणमाह ।
"श्वेत इति जटाकारो रूक्षः श्यावो वियत्त्रिभाग-
गतिः । विनिवर्त्ततेऽपसव्यं त्रिभागशेषाः प्रजाः
कुरुते" ॥

श्वेतनामा केतुः जटाकारो जटासदृशः श्यावः

कृष्णवर्णः वियत्याकाशे त्रिभागं यावद्गच्छति ततो-
ऽपसव्यं प्रदक्षिणं वामभागे निवर्त्तते तृतीयांशा-
वशेषाः प्रजाः कुरुते ।
तथा च पराशरः ।

"अथ काश्यपः श्वेतकेतुः पञ्चदशवर्षशतं प्रो-

ष्योग्रः सोमसहजस्य वप्रकेतोश्चारान्ते श्यावरूक्षो
नभसस्त्रिभागमाक्रम्यापसव्यंनिवृत्योद्ध्वं प्रदक्षिण-
जटाकारशिखः स यावन्मासान् दृश्यते तावद्-
वर्षाणि सुभिक्षमावहति । मध्यदेशे आर्य्यगणा
नामदो नामोदीच्यैर्भूमिष्ठस्त्रिभागशेषां प्रजाम-
वशेषयति" ॥ * ॥
अथ रश्मिकेतोर्लक्षणमाह ।

"आधूम्रयातिशिखया दर्शनमायाति कृत्तिका-

संस्थः । ज्ञेयः स रश्मिकेतुः श्वेतसमानं फलं धत्ते" ॥
यः केतुराधूम्रवर्णया शिखयोपलक्षितस्तथा कृत्ति-
कासंस्थः कविकानां समीपे दर्शनं गच्छति स
रश्मिकेतुः श्वेतकेतोः सदृशं फलं धत्ते ।
तथा च पराशरः ।

"अथ रश्मिकेतुर्व्विभावसुजः प्रोष्यवर्षशत-

मावर्त्तकेतोः । उदितश्चारान्ते कृत्तिकासु धूम्र-
केतुः" ॥ * ॥
ध्रुवकेतोर्लक्षणमाह ।

"ध्रुवकेतुरनियतगतिः प्रमाणाकृतिर्भवति । वि-

श्वक् दिव्यान्तरीक्षभौमो भवत्ययं स्निग्ध इष्टफलः ॥
सेनाङ्गेषु नृपाणां गृहतरुशैलेषु चापि देशानाम् ।
गृहिणामुपस्करेषु च विनाशिनां दर्शनं याति" ॥

ध्रुवेति । अनियता अनिश्चिता गतिर्गमनं
प्रमाणं

स्थूलसूक्ष्ममध्यभावमाकृतिः आकारो यस्य स तथा-

च प्रागुदयान्निमित्तान्यर्व्वाचीनचलनमग्नेः
प्रभा-
मत्स्यप्रधूपनं दिशां शीतोष्णविपर्य्यय
ईतिर्व्यक्षि-
बाहुसम्भवश्च" ॥ * ॥
अथ कुमुदकेतोर्लक्षणमाह ।

"कुमुद इति
कुमुदकान्तिर्व्वारुण्यां
प्राक्शिखो

निशामेकाम् । दृष्टः सुभिक्षमतुलं दश
किल
वर्षाणि स करोति" ॥ कुमुद इति श्वेतवर्ण
इत्यर्थः ।
पश्चिमायां प्राक्शिखः पूर्ब्बाग्रो निशामेकां
दृश्यते । किलेत्यागमसूचने । स च दृष्टो
दश
वर्षाण्यतुलमसमं सुभिक्षं करोति । तथा च
परा-
शरः । "अथामृतजः कुमुदो मणिर्जलो
भवः पद्मः
आवर्त्तः सम्बर्त्तः शङ्खो हिमो रूक्षः कुक्षिः
फलो
विसर्पणः शीतश्चेति । तत्र
कुमुदकेतुर्व्वसाकेतो-
श्चार्द्धसमाप्तौ वारुण्यां दर्शनमुपैति ।
गोक्षीर-
विमलस्निग्धप्रभां पूर्ब्बेणाभिगतां शिखां
घृत्वैक-
रात्रिचरः स दृष्ट एव सुभिक्षमुत्पादयति
दश
वर्षाणि प्रजानामविरोधञ्च । प्रतीच्यानाञ्च
मुख-
रोगारोचकप्रतिश्यायपाण्डुरोगज्वरैः
प्रजानां
बाधत इति" ॥ * ॥
अथ मणिकेतोर्लक्षणमाह ।
"सकृदेकयामदृश्यो सुसूक्ष्मतारः
परिणमति

ऽर्द्धमात्रं दक्षिणमनुपरिक्रम्य अस्तं व्रजति । स
स्वर्गे दारुणकर्म्मा
स्वर्गप्राप्तित्वादेव वक्रास्तमभि-
निहन्ति लोकमपि च । भूमिं
कम्पयित्वा दश
मासान् मध्यदेशे भूयिष्ठं
जनपदमवशेषं कुरुते ।
तेष्वपि च क्वचित् क्वचित्
शस्त्रदुर्भिक्षमरक-
व्याधिभयैः
क्लिष्णात्यष्टादशमासानिति॥
तथा च गर्गः ।
"क्षुच्छस्त्रमरकव्याधिभयैः
संपीडयेत् प्रजाः ।
मासान् दश तथाष्टौ च चलकेतुः
सुदारुणः" ॥ * ॥
तत श्वेतकेतोर्लक्षणमाह ।
"प्रागर्द्धरात्रदृश्यो याम्याग्रः
श्वेतकेतुरन्यश्च ।
क इति युगाकृतिरपरे युगपत्तौ
सप्तदिनदृश्यौ ॥
स्निग्धौ मुभिक्षशिवदौ अथाधिकं
दृश्यते कनामा
यः । दशवर्षाण्युपतापं जनयति
शस्त्रप्रकोपकृत्तं ॥
प्रागर्द्धरात्रदृश्य इति ।
श्वेतकेतुनामा केतुः प्राक्
पूर्ब्बस्यां दिशि अर्द्धरात्रकाले
दृश्यते याम्याग्रो
दक्षिणशिखः अन्यश्च द्वितीयः क
इति कनामा
केतुरपरे पश्चिमायां दिशि दृश्यते
। युगाकृतिः
युगसंस्थानाकारः तौ द्वावपि
युगपत्तुल्यकालं
सप्त दिवसान् दृश्येते । तौ च
द्वावपि स्निग्धावति
निर्म्मलौ दृश्यौ च सुभिक्षशिवदौ ।
अथ यः
कनामा स यदि सप्तभ्योऽधिकं
दृश्यते तदा शस्त्र-

भूतः । स च विश्वक् समन्ततो भवति सर्व्वासु
दिक्ष्वित्यर्थः । स च दिव्यान्तरीक्षभौमस्त्रिविधो
भवति । क्वचिद्द्विविधो नानाकारो भवति । स च
स्निग्धो निर्म्मलशरीर इष्टफलः । एष च एवं
विधानां विनाशिनां मुमूर्षूणां दर्शनमुदयं याति ।
नृपाणां विनाशिनां सेनाङ्गेषु सोपकरणेषु खली-
नतोरणादिषु दर्शनं याति । देशानां विनाशिनां
गृहवृक्षपर्व्वतेषु च दृश्यते । तथा गृहिणामुप-
स्करेषु उपस्करभाण्डेषु दर्व्वीसूर्पमार्ज्जन्यादिषु
गृहतरुशैलेषु विनाशिनामेव दर्शनं याति ।
तथा च पराशरः ।

"अथानियतदिक्कालरूपवर्णप्रमाणसंस्थानो

धूमकेतुः परा भविष्यतां देशानां राज्ञां जन-
पदानाञ्च वृक्षपुरपर्व्वतवेश्मध्वजपताकाशस्त्रव-
र्म्मायुधावरणरथनागोष्ट्रपुरुषशयनासनभाण्डेषु च
दृश्यते । स एव दिवि स्निग्धो विमलः प्रदक्षिण-
शिखो गजनागवीथीनामुत्तरेण व्रजन् सुभिक्ष-
क्षेमारोग्यं चावहति । दशैकविंशतिद्विषष्टिश-
तधा वा दर्शनमिच्छन्ति मुनयो धूमकेतोस्तस्य

मणिकेतुः । ऋज्वी शिखाऽस्य शुक्ला
स्तनोद्गता
क्षीरधारेव ॥ उदयन्नेव सुभिक्षं चतुरो
मासान्
करोत्यसौ सार्द्धान् । प्रादुर्भावं प्रायः
करोति च
क्षुद्रजन्तूनाम्" ॥ सकृदिति । मणिकेतुः स
च
पश्चिमायां दिशि सूक्ष्मतारोऽल्पतारकः
सकृदेक-
वारमेकयामदृश्यः । यामशब्देन
रात्रिचतुर्भागः ।
अस्य केतोरृज्वी स्पष्टा शिखा चूडा
श्वेतवर्णा
दृश्यते । कीदृशी स्तनोत्था क्षीरधारेव
स्तनात्
निःसृता क्षीरधारा यथा दृश्यते
तद्वत्तच्छिखा ।
उदयन्नेवेति । असौ
केतुरुदयन्नेवोदितमात्र एव
चतुरः सार्द्धानर्द्धोनपञ्चमासान् सुभिक्षं
क्षेममुत्पा-
दयति । प्रायो बाहुल्येन क्षुद्रजन्तूनां
नकुलादीनां
प्रादुर्भावमूत्पत्तिं करोति ।
तथा च पराशरः ।

मणिकेतुरपि कपालकेतोरवसाने
प्रतीच्यामुदयं

याति । स तु सूक्ष्मतारकः श्वेतवर्णया
क्षीरप्रसे-
कया पूर्ब्बाभिनतया शिखया
शर्व्वर्य्यामिकयाम-
दृश्यः । स उदयात् प्रभृति पञ्च मासान्
क्षेमं
सुभिक्षमुत्पादयति ॥ क्षुद्रजन्तूनां प्रादुर्भावं
करो-
त्यतिमात्रकालदृष्टः" ॥ * ॥
अथ जलकेतोर्लक्षणमाह ।

"जलकेतुरपि च पश्चात्
स्निग्धः शिखयाऽपरेण

| | | |
|---|---|---|
| प्रकोपजं संग्रामजमुपतापं जनयति ।<br>तथा च पराशरः ।<br>"अथोद्दालकः श्वेतकेतुर्द्दशोत्तरं वर्षशतं प्रोष्य<br>भटकेतोश्चारान्ते पूर्ब्बस्यां दक्षिणाभिनतशिखो-<br>ऽर्द्धरात्रकाले दृश्यस्तेनैव सह द्वितीयः कः प्रजा-<br>पतिपुत्रः । पश्चिमकेन गृहकेतुर्यूपसंस्थायी-<br>युगपद्दृश्येत । ततस्तावुमौ सप्तरात्रदृश्यौ दश-<br>वर्षाणि प्रजाः पीडयेते । कः प्रजापतिपुत्रो यद्य-<br>धिकं दृश्यते तदा दारुणतरं प्रजानां शस्त्रकोपं<br>कुर्य्यात् । तथैव स्नेहवर्णयुक्तौ क्षेमारोग्यसुभिक्षदौ<br>भवतः" ॥ | | चोन्नतया । नव मासान् सुभिक्षं करोति शोक-<br>शान्तिञ्च लोकस्य" ॥ पश्चात् पश्चिमायां दिशि<br>दृश्यते अपरेण पश्चिमेन चोन्नतया उच्चया शिखया<br>युक्तः । स च दृष्टः नवमासपर्य्यन्तं सुभिक्षं करोति<br>लोकमङ्गलकरश्च । तथा च पराशरः । "अथ<br>जलकेतुः पैतामहः यस्य चलकेतोर्नवमासावशिष्टे<br>कर्म्मणि कृते प्रवर्त्तयति । पश्चिमेनोदितः स्निग्धः<br>सुजातोऽनुपश्चिमाभिनतः। स च शिखी नव-<br>मासान्तात् क्षेमसुभिक्षारोग्याणि प्रजाभ्यो वत्ते । |

अन्यग्रहकृतानां चाशुभानां व्याघातायेति”
॥ * ॥
अथ भवकेतोर्लक्षणमाह ।

“भवकेतुरेकरात्रं दृश्यः प्राक्
सुसूक्ष्मतारकः

स्निग्धः । हरिलाङ्गूलोपमया
प्रदक्षिणावर्त्तया
शिखया ॥ यावदेव मुहूर्त्तान् दर्शनमायाति
निर्द्दि-
शेन्मासान् । तावदतुलं सुभिक्षं रूक्षे
प्राणान्ति-
कान् रोगान्” ॥ भवकेतुः पूर्ब्बस्यां दिशि
एकां
निशां दृश्यः सुसूक्ष्मोऽल्पः तारको यस्य
स्निग्धो निर्म्मलदेहः शिखयोपलक्षितः ।
कीदृ-
शया हरिः सिंहस्तस्य लाङ्गूलं पुच्छं
तदुपमया
तदाकारया प्रदक्षिणेनावर्त्तो यस्याः
तथाभूतया
स च यावत्संख्यान् क्षणान् दृश्यते
तावन्मासान्
समं सुभिक्षं निर्द्दिशेत् यदि स्निग्धः । रूक्षे
तु
पुनः प्राणान्तिकान् रोगान् वदेत् । तथा च
पराशरः । “अथ जलकेतोः कर्म्मसमाप्ताः
धूम्रा-
दयः शीतार्त्ता अष्टौ प्रादुर्भवन्ति । तत्र
त्रयोदश-
चतुर्द्दशाष्टादशवर्षान्तात् दृश्यते । सुभिक्ष्या
क्षेम्या
विपर्य्यया विपरीताः क्षुद्रजन्तूनाञ्च वधाय
तेषा-
मष्टानां कर्म्मण्यतीते भवकेतुर्दृश्यते ।
पूर्ब्बेणैक-
रात्रं यावत् कृत्तिकानामन्तरतो वा
तत्प्रमाणया
स्निग्धपारुष्याभया सिंहलाङ्गूलसंस्थानया
प्रदक्षिण-

यस्मिन्नक्षत्रे उदितो दृश्यते तच्च पीडयति
। तथा
च पराशरः । अथ सम्बर्त्तको
वर्षसहस्रमष्टोत्तरं
प्रोष्य पश्चिमेनास्तं गते सवितरि
सन्ध्यायां दृश्यते
तन्वीं ताम्ररूपां शूलाभां धूमं विमुञ्चन्तीं
दारुणां
शिखां कृत्वा नभस्त्रिभागमाक्रम्य
यावन्मुहूर्त्तान्
निशि तिष्ठति तावद्वर्षाणि हन्ति परस्परं
शस्त्रौघमपि पार्थिवाः । यानि नक्षत्राणि
समा-
श्रयति यत्र वोदेति तानि दाहनतरं
पीडयति
तदाश्रितांश्च देशानिति” ।
तथा च गर्गः ।
“येषां नक्षत्रविषये रूक्षः स ज्वाललोहितः
।
दृश्यते बहुमूर्त्तिश्च तेषां विद्यात् महाभयम्
॥
अवर्षशस्त्रपारुष्यकोपं दुर्भिक्षमेव च ।
कुर्य्यान्नृपतिपीडाञ्च सचक्रपरचक्रतः ॥
यत्र तिष्ठति नक्षत्रे प्रवासं यत्र गच्छति ।
धूपयेद्वा स्पृशेद्वापि हन्याद्देशांस्तथाश्रयान्
॥
यस्याभिषेकनक्षत्रं जन्मभं कर्म्मभं तथा ।
देशर्क्षं पीडयेद्वापि स शान्तिपरमो भवेत् ॥
स्निग्धः प्रसन्नो विमलः
प्रदक्षिणशिखस्तथा।
दृश्यते येषु देशेषु शिवं तेषु विनिर्द्दिशेत्” ॥
अथ शुभान् केतून् वर्ज्जयित्वाशुभानां
नक्षत्रस्पर्श-
नाधूपनाद्दुष्टफलं वक्ष्यामीत्याह ।
“ये शस्तास्तान् हित्वा
केतुभिराधूपितेऽथवा स्पृष्टे ।
नक्षत्रे भवति वधो येषां राज्ञां प्रवक्ष्ये तान्”
॥

ये केतवः शस्ताः
प्रशस्तफलास्तान् त्यक्त्वान्यैः

नृमद्रकपती जलदेवे काशिपो मरणमेति ।
यौधेयकार्ज्जुनायनशिविवैद्यान् वैश्वदेवे च” ॥
मूले केतुनाभिधूपिते स्पृष्टे वा नृपतिं मद्रकपतिं
च हन्ति । जलदेवे पूर्ब्बाषाढायां काशिपति-
र्म्मरणमेति । वैश्वदेवे उत्तराषाढायां यौधेयकः
अर्ज्जुनायनः शिविः वैद्यः एतान्नृपतीन् हन्ति ।
अथान्येष्वप्याह । “हन्यात् कैकयनाथं
पाञ्चनदं
सिंहलाधिपं वङ्गपम् । नैमिषनृपं किरातपं
श्रवणादिषु षट्सु षडिमान् क्रमशः” ॥ षट्सु
श्रवणादिषु हतेषु षडिमान्नृपान् क्रमशः क्रमेण
हन्यात् ॥ तद्यथा ।

श्रवणे हते कैकयनाथम् । धनिष्ठायां
पञ्चन-

दाधिपतिम् । शतभिषायां सिंहलाधिपतिम् ।
प्राग्भाद्रपदायां वङ्गाधिपतिम् । उत्तरासु नैमिष-
नृपम् । रेवत्यां किराताधिपं हन्यात् ॥ * ॥
अथ केतोर्व्विशेषमाह ।

“उल्काभिताडितशिखः शिखी शिवः
शिव-

तरोऽभिदृष्टः । अशुभः स एव
चोलवङ्गसितहून-
चीनानाम्” ॥ यः शिखी केतुः उल्कयाभि-
मुख्येन ताडिता हता शिखा चूडा यस्य स
शिवः श्रेयस्करः योऽभिदृष्ट उदितमात्र एव
दृष्टः स शिवतरः अतिशयेन शुभप्रदः केतु-
रेवं विधश्चोलानां वङ्गानां सितानां हूनानां चा-
शुभः । चोलाद्याः सर्व्व एव जनाः ॥ * ॥
अन्यद्विशेषमाह ।
“नम्रा यतः शिखिशिखाभिसृता यतो वा-
थर्क्षं च संस्पृशति तत्कथितांश्च देशान् ।
दिव्यप्रभावनिहतान् स यथा गरुत्मान्
भुङ्क्ते गतो नरपतिः परभोगिभोगान्” ॥

यतो यस्यां दिशि शिखिनः शिखा
केतुशिखा

नम्रा वक्रा तत्र ये देशा यस्यां वा गन्तुं प्रवृत्ता
अथ यदि ऋक्षं नक्षत्रं संस्पृशति तत्कथितांश्च

ताम्रया शिखयोदितः। स यावन्मुहूर्त्तान् दृश्यते
तावन्मासान् भवत्यतीव सुभिक्षाय ॥ रूक्षः प्राणहराणाञ्च रोगाणां प्रादुर्भावायेति" ॥ * ॥
अथ पद्मकेतोर्लक्षणमाह।
"अपरेण पद्मकेतुर्मृणालगौरो भवेन्निशामेकाम्।
सप्त करोति सुभिक्षं वर्षाण्यतिहर्षयुक्तानि" ॥

पद्मकेतुः पश्चिमायां दिशि रात्रिमेकां दृश्यते

कीदृशः मृणालवत् गौरः श्वेत इत्यर्थः। दृष्टः
सप्तवर्षाणि अतिहर्षयुक्तानि सुभिक्षं करोति।
तथा च पराशरः।
"सप्तवर्षाण्यत्युच्छ्रितं हर्षमावहति जगतः" ॥ * ॥
अथावर्त्तकेतोर्लक्षणमाह।
"आवर्त्त इति निशार्द्धेऽसव्यशिखोऽरुणनिभोऽपरे
स्निग्धः। यावत्क्षणान् स दृश्यस्तावन्मासान् सुभि-
क्षकरः" ॥ निशार्द्धे पश्चिमायां दिशि दक्षिण-
दिगाश्रितशिखः स्निग्धो निर्म्मलमूर्त्तिर्दृश्यते स
तु यावत्संख्यान् मुहूर्त्तान् दृश्यते तावदेव मासान्
सुभिक्षं करोति।
तथा च पराशरः।

"अथावर्त्तकेतुः श्वेतकेतोः कर्म्मण्यतीतेऽपरे-

ऽर्द्धरात्रेऽसव्योदितारुणाभयाप्रदक्षिणेन ताम्रया
शिखयोदितः। स यावन्मुहूर्त्तान् दृश्यते तावन्मा-
सान् अतीव सुभिक्षं नित्ययज्ञोत्सवं जगत्" ॥ * ॥

केतुभिः नक्षत्रे धूपिते अथवा स्पृष्टे येषां नृपाणां
वधो मरणं भवति तान् नृपान् कथयिष्ये
तांश्चाधुनाह। "अश्विन्यामश्मकपं भरणीषु किरा-
तपार्थिवं हन्यात्। बहुलासु कलिङ्गेशं रो-
हिण्यां शूरसेनापतिम्" ॥
अश्विन्यामभिधूपितायां स्पृष्टायां वा केतुना अश्मकानां जनानामधिपतिं
नाशयेत् एवं सर्व्वत्र। अन्येष्वाह।
"उशीनरमपि भाग्ये उज्जयनीपमार्य्यम्णे। सावित्रे दण्डकाधिपतिं
भौजङ्गे असिकेशम्। मघायां अङ्गाधिपं
पूर्ब्बफल्गुन्यां पाण्ड्यनाथम्" ॥ भाग्ये पूर्ब्बफल्गुन्यां
उशीनरम्। आर्य्यम्णे उत्तरफल्गुन्यां उज्जयनी-
पतिम्। सावित्रे हस्तायां दण्डकारण्यनाथम्।
भौजङ्गे अश्लेषायां असिका जनास्तेषामीशम्।
अन्येष्वाह।
"चित्रासु कुरुक्षेत्राधिपस्य मरणं समादिशेत्।
वाचा काश्मीरकाम्बोजौ नृपती प्राभञ्जने न स्तः" ॥

चित्रासु केतुनाभिधूपितासु स्पृष्टासु च कुरु-

क्षेत्राधिपस्य मरणं वधं केतूपघातज्ञः समा-
दिशेत्। प्राभञ्जने स्वात्यां काश्मीरकाम्बोजाधिपौ
न स्तः न भवतः। अन्येष्वाह।
"इक्ष्वाक्वलकनाथश्च हन्यते यदि भवेद्विशाखासु। मैत्रे पुण्ड्राधिपतिं
ज्येष्ठासु च सार्व्वभौमकान्यकुब्जाधिपवधः" ॥

देशान् यस्यां दिशि शिखा नम्रा तत्र च ये देशा
वक्ष्यमाणास्तांस्तत्कथितान्नरपती राजा गतो
भुङ्क्ते स्वीकरोति। कीदृशान् दिव्येनाप्रतिहतेन
प्रभावेण पराक्रमेण निहतान् निर्ज्जितान् कीदृ-
शान् परैरन्यैर्भोगिभिर्भुज्यन्ते भोगा ग्रामास्तान्
कथं स राजा भुङ्क्ते यथा गरुत्मान् गरुडः दिव्य-
प्रभावनिहतान् परभोगिभोगान् भुङ्क्ते परा उत्-
कृष्टा ये भोगिनः सर्पास्तेषां भोगाः शरीराण्य-
ङ्गानि च तान् यथा येन प्रकारेण तथा।
तथा च पराशरः।
"यस्यां दिशि समुत्तिष्ठेत् तां दिशं नाभियोजयेत्।
यतः शिखा यतो धूमस्ततो यायान्नराधिपः ॥
प्रतिलोमो यतः केतुर्यया ध्यायति पार्थिवः।
सामान्यवाहनबलस्तन्नाशमधिगच्छति" ॥

इति भट्टोत्पलविरचितायां संहितावृत्तौ केतु-

चाराध्यायः ॥ * ॥
अन्यच्च।
"अनग्नावग्निरूपं वा ध्वजशस्त्रगृहोपमम्।
तुरङ्गगजवृक्षादिनानारूपाणिकेतवः ॥
शतमेकोत्तरं व्योम्नि सहस्रमपरे विदुः।

| | | |
|---|---|---|
| अथ सम्बर्त्तकेतोर्लक्षणमाह ।<br>“पश्चात् सन्ध्याकाले सम्बर्त्तो नाम धूम्रताम्रशिखः ।<br>नभस्त्रिभागमाक्रम्य समूलाग्रस्थितो रौद्रः” ॥<br>यावत एव मुहूर्त्तान् दृश्यो वर्षाणि हन्ति<br>तावन्ति । भूपांश्च शस्त्रनिपातैरुदयर्क्षं चापि<br>पीडयति” ॥ पश्चादिति । पश्चिमायां दिशि यावतो मुहूर्त्तान् दृश्यस्तावन्ति तत्संख्यानि वर्षाणि<br>नाशयति तथा नृपान् संग्रामैर्हन्ति । तथोदयर्क्षं | विशाखासु यदि केतूपघातो भवेत् तदा इक्ष्वा-<br>कुनाथोऽलकनाथश्च हन्यते । इक्ष्वाकवो जनाः ।<br>अलका नगरी । अनुराधायां पुण्ड्राधिपतिं<br>हन्यात् । ज्येष्ठासु च सार्व्वभौमस्य राज्ञो वधः<br>कान्यकुब्जाधिपस्य च वधः । अन्येष्वाह । “मूले | |

नानारूपमनेकञ्चाप्येकमेवाह नारदः ॥
दिव्या नक्षत्रगा भौमाः केतवस्त्रिविधा मताः ।
शुक्लो ह्रस्वतनुः स्निग्ध ऋजुश्चाचिरसंस्थितः ॥
उदितोऽप्यतिवृष्टिः स्यात् सुभिक्षसुखकृच्छिखी ।
विपरीतस्वरूपस्तु धूमकेतुर्न शोभनः ॥
इन्द्रायुधानुकारी च द्विचूडो वा त्रिचूडकः ।
श्वेतः शस्त्राकुलं कुर्य्याल्लोहितस्त्वग्निजं भयम् ॥
क्षुद्भयं पीतकः कुर्य्यात् कृष्णो रोगमथोल्वणम् ।
शक्त्याकारो विनाशाय सुखाय मुषलाकृतिः ॥
दीर्घः सूक्ष्मः सुखायैव ह्रस्वः स्थूलो विनाशकृत् ।
मणिवर्णसुवर्णाभ्यां किरणाभ्यां शिखान्विताः ॥
प्राक् पश्चिमदिशोदृश्या नृपयुद्धाय तेऽर्कजाः ।
वह्निजाः शुक्लवर्णाश्च लाक्षाबन्धूकसन्निभाः ॥
आग्नेय्यां दिशि दृश्यन्ते ते च वह्निभयप्रदाः ।
कृष्णा वक्रशिखा रुक्षा मृत्युजाः पञ्चविंशतिः ॥
याम्यायां ते च दृश्यन्ते नृणां मरकसूचकाः ।
आदर्शवृत्ताकृतयो विशिखाः क्षितिसम्भवाः ॥
सांशवस्तैलतोयाभा ऐशान्यां क्षुद्भयप्रदाः ।
चन्द्रजा हिमकुन्देन्दुकुमुदाभाश्च तैलवत् ॥
जलाभाश्चोत्तरे दृश्याः केतवस्ते सुभिक्षदाः ।
त्रिवर्णस्त्रिशिखश्चैको ब्रह्मजोऽसौ युगान्तकृत् ॥
स चानियतदिक्संस्थो ब्रह्मदण्डः स उच्यते ।
अर्कजा वह्निजा याम्यास्त्रयस्ते तत्त्वसङ्ख्यया (२५) ॥
क्षितिजा जातिसङ्ख्याश्च(२२) त्रयोऽन्ये ब्रह्मजोऽप्ययं ।
एकोत्तरशतं ह्येते सहस्रन्त्वथ लक्षणैः ॥
शुक्राच्चतुरशीत्याख्या विपुलाः सिततारकाः ।
स्निग्धास्तीव्रफला ज्ञेयाः सप्रभा द्विशिखाः परे ॥
षष्टिः शनितनूद्भूतास्तेऽतिनष्टफलप्रदाः ।
सर्व्वत्र कनकोद्दीप्ता विकचा नाम जीवजाः ॥
शितैकतारा विशिखाः पापा याम्याश्रितास्तु ते ।
नातिव्यक्ताः सूक्ष्मदीर्घाः शुक्ला बुधसमुद्भवाः ॥
पापदास्तस्कराख्यास्तेयथेष्टदिक्प्रभान्विताः ।
त्रिचूडताराः क्षतजा नानारूपाः कुजात्मजाः ॥
कौङ्कुमाख्या हि ते सौम्य दिक्स्थाः पापफलप्रदाः ।
त्रिशिखाश्च त्रिताराश्च रक्तलोहितरश्मयः ॥
यत्रार्कविम्बस्तत्र स्याद्राजाऽन्यत्र प्रजाक्षयः ॥
एको दुर्भिक्षकृद्वात्यानृपनाशभयप्रदः ॥
सितरक्तहरित्कृष्णैर्व्विद्धो द्विजनृपादिहा ।
वह्निजा विश्वरूपाख्या ज्वालामालाकुलाः शतम् ॥
श्यामारुणा विताराश्च विकीर्णामरसन्निभाः ।
तारापुञ्जनिभा रुक्षा वायुजाः सप्तसप्ततिः ॥
ब्रह्मजाश्चतुरस्रास्ते वेदाधिकशतद्वयम् ।
द्वात्रिंशद्वंशगुल्माभाः कङ्काख्या वरुणोद्भवाः ॥
प्रभाढ्याः शशिवत्ते च ज्ञेयास्तीक्ष्णफलप्रदाः ।
विरूपताराश्चित्रा वा शिखिनस्तेऽशुभप्रदाः ॥
सर्व्वदिक्प्रभवाः शुक्लाः केतवो भयदायिनः ।
एवं केतुसहस्रञ्च तद्विशेषश्च वक्ष्यते" ॥ * ॥
"उत्तरायतसुस्निग्धो महान् यश्चापरोदयी ।
करोति मरकं सद्यः सुभिक्षञ्च तथोत्तमम् ॥
रूक्षोऽस्थिकेतुः क्षुद्भीत्यै प्राच्यां स्निग्धोऽप्युपप्लवः ।
कपालकेतुर्य्यो दर्शे सधूम्रांशुशिखो भवेत् ॥
प्रागर्द्धचारी नभसः क्षुन्मारावृष्टिकारकः ।
प्रागग्निमार्गाच्छूलाग्रो रूक्षः श्यामलताम्ररुक् ॥
त्रिभागचारी नभसो रौद्राख्यः पूर्ब्बवत् फलम् ।
अपरस्यां चलकेतुः शिखया दक्षिणाग्रया ॥
अङ्गुलोच्छ्राययया गच्छेदुत्तराशां यथा यथा ।
तथा दैर्घ्यं समायाति मुनीन् संस्पृश्य सप्त च ॥
ध्रुवं प्रतिनिवृत्तोऽभिजितञ्च नभसोऽर्द्धकम् ।
गत्वाऽस्तं याति याम्येन स प्रयागकुलावधि ॥
अवन्तीं पुष्करारण्यं यावद्धन्यात्तथापरान् ।
देशान् क्वचित् क्वचिद्रोगदुर्भिक्षैः परिपीडितान् ॥
श्वेताख्यस्तु जटाकारो श्यामो व्योमत्रिभागगः ।
निवर्त्ततेऽपसव्येन त्रिमागी कुरुते प्रजाः ॥
नित्योद्विग्नाः प्रजाः सर्व्वा भवन्ति हि न संशयः ।
पुनर्व्वसुस्तथा पुष्यः पृथिव्याः पूर्ब्बमुच्यते ॥
केतवो ह्यत्र दृश्यन्ते रौद्रास्तेऽप्येकविंशतिः ।
यदा रौद्राः प्रदृश्यन्ते दुर्भिक्षं निर्द्दिशेत्तदा ॥
घूर्णन्ते च प्रजाः सर्व्वा मृत्युक्षुद्रोगपीडिताः ।
अश्लेषापित्र्यभाग्यानि विद्याद्दक्षिणपूर्ब्बतः ॥
केतवो ह्यत्र दृश्यन्ते औद्दालकिसुता दश ।
सुभिक्षं क्षेममारोग्यं सुवृष्टिः शस्यसम्पदः ॥
आर्य्यम्नादीनि च त्रीणि विद्याद्दक्षिणभागतः ।
केतवो ह्यत्र दृश्यन्ते काश्यपेयाश्चतुर्द्दश ॥
अनावृष्टिभयं घोरं प्रजानामतिदारुणम् ।
स्वाती विशाखा मित्रञ्च भागो दक्षिणपश्चिमः ॥
केतवो ह्यत्र दृश्यन्ते चत्वारो मृत्युसम्भवाः ।
दुर्भिक्षं मरकं घोरमनावृष्टिस्तथैव च ॥
उपद्रवश्च भूतानां तदा भवति दारुणः ।
ज्येष्ठा मूलमथाषाढा भाग उत्तरपश्चिमः ॥
केतवो ह्यत्र दृश्यन्ते त्रयस्ते सोमसम्भवाः ।
मुभिक्षञ्च सुवृष्टिञ्च मही यज्ञोत्सवाकुला ॥
उत्तरा श्रवणा चैव नक्षत्रं वसुदैवतम् ।
केतवो ह्यत्र दृश्यन्ते माहेयाः पञ्चविंशतिः ॥

लोहिताङ्गात्मजाः षष्टिः संग्रामभयकारकाः ।
तामसाः कीलकाख्याश्च राहुजाः सूर्य्यविम्वगाः ॥
दृष्टाः शुभफलास्ते च चन्द्रस्थाः पापदायिनः ।
कबन्धध्मांक्षशस्त्राभाश्चन्द्रेऽर्केऽप्यशुभप्रदाः ॥
कृष्णाभाः कृष्णपर्य्यन्ताः संकुलाः कृष्णरश्मयः ।
राहुपुत्त्रास्त्रयस्त्रिंशत् केतवश्चातिदारुणाः ॥
यत्रार्कविम्बे दृश्यन्ते व्यसनन्तन्महीपतेः ।
स्वचक्रं परचक्रेण पीड्यते क्षुद्भुजान्वितम् ॥
अनोधनुःक्षेत्ररूपा नृपवित्तक्षयावहाः ।
ध्माङ्क्षो वा कृष्णशङ्कुर्व्वा कबन्धो वार्कमण्डले ॥
दृश्यते यत्र तत्राशु भूमिपालो विनश्यति ।
दण्डकीलकपीठास्त्रं दृश्यते सूर्य्यमण्डले ॥
दुर्भिक्षेतिभयव्याधिवह्निचौरादिपीडनम्।
शृगालान् गर्दभानश्वान् यांश्चान्यान् मृगपक्षिणः ॥
आदित्यमण्डले दृष्ट्वा देशभङ्गं विनिर्दिशेत् ।
मण्डलाभ्यन्तरस्थैश्च क्रव्यादैर्मृगपक्षिभिः ॥
परचक्रागमो वाच्यः प्रजानाशस्तथैव च ।

आधूम्रशिखया दृश्यः कृत्तिकासंस्थितोऽपरः ।
रश्मिकेतुरिति ख्यातस्त्रिभागी कुरुते प्रजाः ॥
पश्चात् सन्ध्यासु सम्बर्त्तो धूमताम्रशिखो वियत् ।
त्र्यंशमाक्रम्य शूलाग्रावस्थितो रौद्रदर्शनः ॥
मुहूर्त्तान् यावतो दृश्यस्तावद्वर्षाणि हन्ति सः ।
भूपशस्त्रनिपाताद्यैरुदयर्क्षं निपीडयेत्” ॥ * ॥
“चैत्रवैशाखयोर्म्मध्ये कौवेरांस्तु विनिर्द्दिशेत् ।
उच्छ्रितैर्यूपवेदीभिरुच्छ्रितैर्ध्वजतोरणैः ॥
हविर्धूमाकुला तत्र दृश्यते च वसुन्धरा ।
ज्यैष्ठे चैव तथाषाढे वायुपुत्त्रांश्च निर्द्दिशेत् ॥
वान्ति चैव तथा वाता महायुद्धं महाभयम् ।
श्रावणप्रौष्ठपदयोर्व्वारुणांस्तुविनिर्द्दिशेत् ॥
आरोहयन्ति ते मेघान् पूर्णां कुर्य्युर्व्वसुन्धराम् ।
धान्यं समार्घ्यतां याति ईतयो न भवन्ति च ॥
आश्विने कार्त्तिके चैव सूर्य्यपुत्त्रान् विनिर्द्दिशेत् ।
ततो दहति तीव्रांशुः सर्व्वान्नानि दिवाकरः ॥
म्रियन्ते च तदा गावः श्वापदाश्च विशेषतः ।
मार्गशीर्षे च पौषे च वह्निपुत्त्रान् विनिर्द्दिशेत् ॥
शीघ्रं भवति दुर्भिक्षं हाहाभूतमचेतनम् ।
माघे च फाल्गुने चैव यमपुत्त्रान् विनिर्द्दिशेत् ॥
छर्द्दिर्ज्वरातिसारश्च ग्लानिश्चैवाक्षिवेदना ॥ * ॥
कृत्तिका रोहिणी सौम्यं पृथिव्या मध्यमुच्यते ॥
केतवो ह्यत्र दृश्यन्ते आग्नेया दश पञ्च च ।
आग्नेयेषु च दृष्टेषु लोकानां संक्षयो भवेत् ॥

माहेयेषु च दृष्टेषु लोकानां संक्षयो ध्रुवम् ।
तदा राजसहस्राणां मही पिबति शोणितम् ॥
वारुणञ्चैव नक्षत्रं तथा भाद्रपदद्वयम् ।
केतवो ह्यत्र दृश्यन्ते वारुणास्त्रय एव ते” ॥ * ॥
“ऊर्म्मिकेतुः
श्वेतकेतुर्धूमकेतुस्तृतीयकः ।
ऊर्म्मिकेतुर्यदा दृश्येत्तदाप्युदकजं भयम् ॥
श्वेतकेतुर्यदा दृश्येत् श्वेतास्थि कुरुते महीम् ।
तदा मानुषमांसानि भक्षयन्तीह मानुषाः ॥
क्षुद्भयार्त्तं जगत् कृत्स्नं चक्रवद्भ्रमते तदा ।
धूमकेतुर्यदा दृश्येत्तस्य वक्ष्यामि लक्षणम् ॥
स हन्ति शिखया योधान् राजानं मन्त्रिणं जनान् ।
रेवत्याश्वयुजञ्चैव नक्षत्रं यमदैवतम् ॥
केतवो ह्यत्र दृश्यन्ते यमपुत्त्रास्त्रयोदश ।
यमपुत्त्रेषु दृष्टेषु लोकानां संक्षयो ध्रुवम् ॥
चतुर्व्विधानां भूतानां संशयो जायते महान्” ॥ * ॥
“अपरे विविधाः सन्ति वृहस्पत्यादिकेतवः ॥
नृपदेशविनाशाय दुर्भिक्षभयदायकाः ।
कुमुदाभस्तु कुमुदो वारुण्यां प्राक्शिखो निशाम् ॥
एकां दृष्टः सुभिक्षाय दशवर्षाणि सौख्यदः ।
पश्चिमाभ्युदिताश्चान्ये कुर्व्वन्ति प्रबलान् ज्वरान् ॥
पाण्डुरोगं प्रतिश्यायं मुखरोगमरोचकम् ।
क्षीरधारेव शुक्लाभा ऋज्वी सूक्ष्मतरा शिखा ॥

| | | |
|---|---|---|
| | | सकृद्यामैकदृश्यास्ते चतुर्म्मासं सुभिक्षदाः ।<br>जलकेतुस्तु यः पश्चात् शिखया नतया परे ॥<br>सुभिक्षं कुरुते शान्तिं प्रजानां नवमासतः ।<br>भवकेतुस्त्वेकरात्रं दृश्यः प्राक् सूक्ष्मतारकः ॥<br>दक्षिणावर्त्तशिखया हरिलङ्गूलतुल्यया ।<br>मुहूर्त्तान् यावतो दृश्यस्तावन्मासान् सुभिक्षदः ॥<br>स एव रूक्षो दृश्यश्चेद्रोगप्राणान्तकारणम् ।<br>पद्मकेतुर्मृणालाभो निशामेकां प्रदृश्यते ॥<br>सप्त मासान् सुभिक्षं स हर्व्वर्षणदायकः ।<br>आवर्त्तः सव्यशिखयारणाभश्च निशार्द्धगः ॥ |

"वने यूथपरिभ्रष्टा मृगी कोकैरिवार्द्दिता"
॥)
ज्येष्ठी । खर्ज्जूरीवृक्षः । भेकः । इति
मेदिनी ॥
विष्णुः । इति त्रिकाण्डशेषः ॥

**कोकडः**, पुं, (कोकं कोकरवं वृकध्वनिवत् ध्वनिमि-
त्यर्थः लाति गृह्णातीति । ला + कः ।
लस्य डत्वम् ।)
विलेशयमृगविशेषः । तत्पर्य्यायः ।
जविनः २
कोकवाचः ३ विलेशयः ४ चमरपुच्छः ५
लोमशः
६ धूम्रवर्णकः ७ । तन्मांसगुणः ।
श्वासानिल-
कासहरत्वम् । पित्तदाहकरत्वञ्च । इति
राज-
निर्घण्टः ॥

**कोकदेवः**, पुं, (कोकश्चक्रवाकः स इव दीव्यति क्रीड-
तीति । दिव् + अच् ।) कपोतः । इति
राज-
निर्घण्टः ॥

**कोकनदं**, क्ली, (कोकान् चक्रवाकान् नदति नादयति
वात्मविकासेन । कोक + नद् +
अन्तर्णिच् ततोऽच्
मूलविभुजादित्वात् को वा ।) रक्तकुमुदम्
। रक्त-
पद्मम् । इति मेदिनी ॥ (यथा, गीतगोविन्दे
। १० । ५ ।
"नीलनलीनाभमपि तन्वि ! तव लोचनं
धारयति
कोकनदरूपम्" ॥ अस्य पर्य्याया यथा, -
-
"रक्तं कोकनदं पद्ममल्पमन्यदलोहितम्"
॥
इति वैद्यकरत्नमालायाम् ॥)

**कोकनदच्छविः**, पुं, (कोकनदस्य रक्तोत्पलस्य छवि-
"ग्रन्थयः कोकिलेनोग्रा ज्वरो दाहश्च
दारुणः" ॥
इति सुश्रुतेन कल्पस्थाने षष्ठाध्याय
उक्तम् ॥)
अङ्गारः । इति त्रिकाण्डशेषः ।
(छन्दोविशेषः ।
इति वृत्तरत्नाकरः ॥)

**कोकिलनयनः**, पुं, (कोकिलस्य नयनमिव रक्तवर्णं
पुष्पमस्य ।) कोकिलाक्षवृक्षः ।
इत्यमरटीकायां
रमानाथः ॥ (कोकिलाक्षशब्देऽस्य
विवृतिर्ज्ञेया ॥)

**कोकिलाक्षः**, पुं, (कोकिलस्याक्षीव रक्तं पुष्पमस्य ।
"अक्ष्णोऽदर्शनात्" । ५ । ४ । ३६ । इति
अच् ।)
वृक्षविशेषः । कुलियाखाडा इति भाषा ।
तालम
खाना इति हिन्दी भाषा ॥ तत्पर्य्यायः ।
इक्षुगन्धा
२ काण्डेक्षुः ३ इक्षुरः ४ क्षुरः ५ ।
इत्यमरः । २ ।
४ । १०४ ॥ शृगाली ६ शृङ्खली ७ शुरकः
८
शृगालघण्टी ९ वज्रास्थिः १० शृङ्खला
११ वज्र-
कण्टकः १२ इक्षुः १३ इक्षुरकः १४ वज्रः
१५
शृङ्खलीका १६ पिकेक्षणा १७ पिच्छिला
१८ ।
इति राजनिर्घण्टः ॥ श्वेतस्य तस्य
पर्य्यायः । वीर-
तरुः २ त्रिक्षुरः ३ क्षुरकः ४ शुक्लपुष्पः ५
॥ रक्तस्य
तस्य पर्य्यायः ॥ छत्रकः २ अतिच्छत्रः ३
। इति
रत्नमाला ॥ सामान्यस्य तस्य गुणाः ।
आमवात-
वातरक्तरोगनाशित्वम् । इति राजवल्लभः ॥
मधुरत्वम् । शीतत्वम् ।
पित्तातिसारनाशित्वम् ।
"मालवे गौडदेशे च सिन्धुदेशे च कोङ्कणे ।
व्रतं चूडां विवाहञ्च वर्ज्जयेत् मकरे गुरौ" ॥)

**कोङ्कणासुतः**, पुं, (कोङ्कणे तदाख्यप्रदेशे भवा । अण्
तस्य लुक् च । कोङ्कणा रेणुका तस्याः
सुतः पुत्त्रः ।)
परशुरामः । इति शब्दमाला ॥

**कोचः**, पुं, (कुच् + ज्वलादित्वात् कर्त्तरि णः ।)
जातिविशेषः । स तु मांसच्छेदिगर्भे
तीवरस्यौरस-
जातः । इति ब्रह्मवैवर्त्तपुराणम् ॥

**कोजागरः**, पुं, (को जागर्त्ति अस्यां पौर्णमासी-
निशायां इति लक्ष्म्या देव्या उक्तिर्यत्र समये
।
पृषोदरात् साधुः ।) आश्विनी पूर्णिमा ।
तत्पर्य्यायः ।
शारदी २ द्यूतपूर्णिमा ३ शरत्पर्व्व ४
कौमुदी ५ ।
इति त्रिकाण्डशेषः ॥ अथ
कोजागरकृत्यानि ।
तत्र ब्रह्मपुराणम् ।
"आश्वयुज्यां पौर्णमास्यां निकुम्भो
वालुकाणवात् ।
आयाति सेनया सार्द्धं कृत्वा युद्धं सुदारुणम्
॥
तस्मात् तत्र नरैर्मार्गाः स्वगेहस्य समीपतः ।
शोधितव्याः प्रयत्नेन भूषितव्याश्च मण्डनैः
॥
पुष्पार्घ्यफलमूलौघसर्षपप्रकरैस्तथा ।
वेश्मानि भूषितव्यानि नानावर्णैर्विशेषतः ॥
सुस्नातैरनुलिप्तैश्च नरैर्भाव्यं सबान्धवैः ।
दिवा तत्र न भोक्तव्यं मनुष्यैश्च विवेकिभिः
॥
स्त्रीबालवृद्धमूर्खैश्च भोक्तव्यं पूजितैः सुरैः ।
पूज्याश्च सफलैः पत्रैस्तथा
द्वारोद्‌र्ध्वभित्तयः ॥
द्वारोपान्ते सुदीप्तस्तु संपूज्यो हव्यवाहनः ।
यवाऽक्षतघृतोपेतैस्तण्डुलैश्च सुतर्पितः ॥

रिव छविर्दीप्तिर्यस्य ।) रक्तवर्णः । तद्वति त्रि ।

इत्यमरः ॥

**कोकवन्धुः**, पुं, (कोकयोः चक्रवाकयुगलयोर्दिवस-

प्रभया संयोगकारितया बन्धुरिव ।) सूर्य्यः । इति

शब्दचन्द्रिका ॥

**कोकाग्रः**, पुं, (कोकः खर्ज्जुरीवृक्षन्तद्वदग्रमागोऽस्य ।)

शुक्रकफबलरुचिकारित्वम्।

सन्तपर्णत्वञ्च । इति

राजनिर्घण्टः ॥ (श्वेतकोकिलाक्षमूलं छागीदुग्धेन

पिष्टं सत् भक्षितं क्षयरोगं नाशयेत् । यदुक्तं गारुडे १९३ अध्याये ।

“श्वेतकोकिलाक्षमूलं छागीक्षीरेण संयुतम् ।

त्रिसप्ताहेन वै पीतं क्षयरोगं क्षयं नयेत्” ॥)

**कोकिलाक्षकः**, पुं, (कोकिलाक्ष + स्वार्थे कन् ।)

कोकिलाक्षतृक्षः । इत्यमरटीकायां स्वामी ॥

(यस्मिन्नस्य व्यवहारस्तद्यथा, --

संपूजितव्यः पूर्णेन्दुः पयसा पायसेन च ।
रुद्रः मभार्य्यः स्कन्दश्च तथा नन्दीश्वरो मुनिः ॥
गोमद्भिः सुरभिः पूज्या छागवद्भिर्हुताशनः ।
उरभ्रवद्भिर्वरुणा गजवद्भिर्विनायकः ॥
पूज्यः साश्वैश्च रेवन्तो यथाविभवविस्तरैः ।
ततः पूज्यो निकुम्भोऽपि समाषैस्तिलतण्डुलैः ॥
सुगन्धिभिर्घृतोपेतैः कृशराख्यैश्च भूरिभिः ।
ब्राह्मणान् भोजयित्वा तु भोक्तव्यं मांसवर्जितम् ॥
वह्निपार्श्वगतैर्नेया दृष्ट्वा क्रीडाः पृथग्विधाः” ॥ * ॥
लिङ्गपुराणे यथा, --
“आश्विने पौर्णमास्यान्तु चरेज्जागरणं निशि ।
कौमुदी सा समाख्याता कार्य्या लोकविभूतये ॥
कौमुद्यां पूजयेल्लक्ष्मीमिन्द्रमैरावतं स्थिरम् ।
सुगन्धिर्निशि सद्वेशश्चाक्षैर्जागरणञ्चरेत् ॥
निशीथे वरदा लक्ष्मीः को जागर्त्तीति भाषिणी ।
तस्मै वित्त प्रयच्छामि अक्षैः क्रीडां करोति यः ॥
नारिकेलैश्चिपिटकैः पितॄन् देवान् समर्च्चयेत् ॥
बन्धूंश्च प्रीणयेत्तेन स्वयं तदशनो भवेत्” ॥
इति तिथ्यादितत्त्वम् ॥ (अत्र निशायां बन्धुभिरक्षैः क्रीडयित्वा लक्ष्मीप्रसादात् धनभाग्भवेत् । अक्ष-
दुर्गा । इति धरणी ॥

**कोटिः**, स्त्री, (कोट्यते छिद्यतेऽनया । कुट छेदे ।
“सर्व्वधातुभ्य इन्” । उणां । ४ । ११७ । इति इन् । बाहुलकात् गुणः ।) अस्त्रादेः कोणः ।
(यथा, रघुवंशे । ७ । ४६ ।
“हृतान्यपि श्येननखाग्रकोटि
व्यासक्तकेशानि चिरेण पेतुः” ॥)
उत्कर्षः । शतलक्षसङ्ख्या । क्रोर इति भाषा ॥
(यदुक्तं अङ्कशास्त्रे ।
“एकं दशं शतञ्चैव सहस्रमयुतन्तथा ।
लक्षञ्च नियुतञ्चैव कोटिरर्व्वुदमेव च” ॥)
धनुरग्रम् । इत्यमरमेदिनीकरौ ॥
(यथा, महाभारते । १ । ४० । २२ ।
“तस्य स्कन्धे मृतं सर्पं क्रुद्धो राजा समासृजत् ।
समुत्क्षिप्य धनुष्कोट्या स चैनं समुपैक्षत” ॥)
(रेखा । यथा, कुमारे । २ । २६ ।
“आवर्ज्जितजटामौलिविलम्बिशशिकोटयः ।
रुद्राणामपि मूर्द्धानः क्षतहूङ्कारशंसिनः” ॥
वादविचारः । संशयनिर्णयाय पूर्ब्बपक्षः । यथा, गादाधरीसंशयहेतूक्तिः ।
“विप्रतिपत्तिवाक्यजन्यकोट्युपस्थितिः” । लीलावत्युक्तत्रिकोणादिक्षेत्रावयवरेखाभेदः । यथा,
“इष्टाद्बाहोर्यःस्यात् तत्स्पर्द्धिन्यां दिशीतरोबाहुः ।
त्र्यस्रे चतुरस्रे वा सा कोटिः कीर्त्तिता तज्ज्ञैः” ॥
सिद्धान्तशिरीमण्युक्तराशिचक्रस्य तृतीयांशः । यथा,
“त्रिभिर्भैः पदं तानि चत्वारि चक्रे क्रमात् स्याद-
युग्युग्मसंज्ञा च तेषां । अयुग्मे पदे यातमेष्यन्तु
युग्मे भुजबाहुहीनं त्रिभं कोटिरुक्ता” ॥ छाया-
निरूपणार्थं कल्प्यमानक्षेत्रावयवरेखाविशेषः । यथा, सिद्धान्तशिरोमणौ ।
“दिक्सूत्रसम्पातगतस्य शङ्को-
श्छायाग्रपूर्ब्बापरसूत्रमध्यम् ।
दोर्दोः प्रभा वर्गवियोगमूलं
कोटिर्नरात् प्रागपरा ततः स्यात्” ॥ * ॥
“दिक्सम्पातस्थस्य शङ्कोर्भाग्रं यत्र पतति तस्य पूर्ब्बापरसूत्रस्य च यदन्तरं स दोरित्युच्यते । दो-
शशिनः शृङ्गमुन्नतमवलोक्यम् । अतः स्वाव-
स्थानसमसूत्राद्धूर्ध्वरूपिण्या कोट्या भवितव्यम् ।
भुजकोटिकर्णकृतं त्र्यस्रं दृष्टेरग्रत आदर्शवत्
सम्मुखं यथा भवति तथा कल्प्यम् ॥
किञ्च, उदया-
स्तसूत्रकल्पितक्षेत्रावयवविशेषः । तत्रैव यथा, --
“सूत्राद्दिवा शङ्कुतलं यमंशं
याम्यां गतं हि द्युनिशं कुजोर्द्ध्वे ।
अधश्च सौम्यां निशि सौम्यमस्मात्
सद्युक्तियुक्तं नृतलं निरुक्तम् ॥
सौम्याग्रकाग्रान्नृतलं हि याम्यं
याम्याग्रकाग्रात् पुनरेव याम्यम् ।
तदन्तरैक्यं समवृत्तखेट-
मध्यांशजीवां भुवि बाहुमाहुः ।
दृग्ज्यां श्रुतिं चाथ तयोस्तु कोटिं
पूर्ब्बापरां वर्गवियोगमूलम्” ॥
“क्षितिजस्याहोरात्रवृत्तसम्पातयोर्बद्धं सूत्रमुद-
यास्तसूत्रम् । ग्रहस्थानात् लम्बः शङ्कुः तस्य
तलं उदयास्तसूत्रात् दक्षिणतो भवति । यतः
क्षितिजादुपरि दक्षिणतोऽहोरात्रवृत्तं गतम् ।
अधस्तु उत्तरतो गतम् । अतो निशि उत्तरं
नृतलम् । अथ भुज उच्यते । उत्तरगोलेऽग्रोत्तरं
नृतलं याम्यम् । अतस्तेनोनाग्रा बाहुर्भवति ।
बाहुर्नामशङ्कुः प्राचि अपरसूत्रयोरन्तरम् । य-
दाऽग्रा शङ्कुतलादूना तदा तयोरन्तरं दक्षिणं
शङ्कुतलं बाहुः स्यात् । एवं समवृत्तप्रवेशादुपरि
दक्षिणगोले तु अग्रा याम्या शङ्कुतलं च याम्यं

क्रीडानियमश्च चतुरङ्गशब्दे द्रष्टव्यः ॥)

**कोटः**, पुं, (कुट्यते प्रताप्यते शत्रुरत्र अनेन वा । दुर्ग-
माश्रित्य प्रबलविपक्षमपि प्रतापयितुं शक्यते
इत्यर्थः । कुट प्रतापने + अधिकरणे करणे वा
घञ् ।) दुर्गम् । इति कुटशब्दार्थे मेदिनी ॥ गड
केल्ला इति च भाषा ॥ (कुट् + भावे घञ् । कौ-
टिल्यम् प्रतापनम् ॥)

**कोटकः**, पुं, (कुट् + कर्त्तरि ण्वुल् ।) गृहकारकः ।
घरामि इति भाषा । स तु कुम्भकार्य्यां गर्भे
अट्टालिकाकारस्यौरसजातः। इति ब्रह्मवैवर्त्त
पुराणम् ॥

**कोटरं**, क्ली पुं, (कोटं कौटिल्याकारं स्थानं गर्त्त-
मिति यावत् । रातीति । रा + कः ।) वृक्ष-
स्थितगह्वरम् । गाछेर खोडोल इति भाषा ॥
तत्पर्य्यायः । निष्कुहः २ । इत्यमरः । २ । ४ । १३ ॥
निर्गूढः ३ कोटरः ४ । इति शब्दरत्नावली ॥ प्रा-
न्तरम् ५ । तरुविवरम् ६ । इति जटाधरः ॥
(कोटशब्दात् चतुरर्थ्यां अश्मरादित्वात् रः । पां,
४ । २ । ८० ॥ दुर्गसन्निहितदेशादौ, त्रि ॥)

**कोटरावणं**, क्ली, (कोटरान्वितानां तरूणां वनम् ।
पूर्ब्बदीर्वत्वं णत्वञ्च ।) सकोटरवृक्षयुक्तवनम् ।
श्छाययोर्वर्गान्तरपदं पूर्ब्बपरा कोटिः” । इति ॥
चन्द्रस्य शृङ्गोन्नतिज्ञानार्थं क्षेत्रावयवविशेषः ।
यथा, तत्रैव “योऽधो नरो दिनकृतः स विधो-
रुदग्रशङ्क्वन्वितो मम मता खलु सैव कोटिः”
॥
अपि च अर्कस्य योऽसौ अधः शङ्कुःयस्य
ऊद्ध्र्वशङ्कुना युक्तश्चेत् तर्ह्येव कोटिर्मतेति । यथा,
तत्रैव ।

“यो रवेरधः शङ्कुरसौ
विधोरूद्ध्र्वशङ्कुना युतः ।

सैव कोटिर्मम मता । अत्रोपपत्तिः । इहार्केन्द्वो-
र्याम्योत्तरभावेन यदन्तरं स भुजः । ऊद्ध्र्वाधो-
भावेन यदन्तरं सा कोटिः । सा चैव भवति ।
उदयेऽस्ते वा यदि शृङ्गोन्नतिस्तदारविशङ्कोर-
भावात् शशिशङ्कुरेव कोटिः । यदा निशि रवेरधः
शङ्कु स्तदा स शङ्कुर्विधोरुदयशङ्कुना युतो यावां-
स्तावत् तेयोर्यत्रस्थयोः ऊद्ध्र्वाधरमन्तरं सैव कोटि-
रुचिता । यतो द्रष्ट्रा पुरुषेणात्मनोऽवस्थानवशेन
तयोर्योगे कृते बाहुः स्यात् रविसममण्डलयो-
रन्तरांशानां ज्या बाहुः । तत्र या दृग्ज्या स
कर्णः । तयोर्वर्गान्तरपदं पूर्ब्बापरा कोटिः”
॥)
पृक्का । इत्यमरः ॥ पिडिङ्ग शाक इति भाषा ॥

**कोटिकः**, पुं, (कोट्या बहुसङ्ख्यया कायति प्रका-
शते । कै + कः ।) इन्द्रगोपनामकीटः । इति
जटाधरः ॥

**कोटिजित्**, पुं, (कोटिं पण्डितानां समूहं विचारपणे
कोटिपरिमितं द्रव्यं वा जितवान् । कोटि
+ जि + क्विप् तुगागमश्च ।) कालिदासः । इति
त्रिकाण्डशेषः ॥ (मेधारुद्रः । इति शब्दार्थचिन्ता-
मणिः ॥)

**कोटिपात्रः**, पुं, (कोटिरग्रमागः पात्रं पत्राकारमस्य ।
यद्वा, कोटिरग्रं पात्रे जलांशेऽस्यं जलक्षेपणा-
दिति भावः ।) केनिपातकः । इति हेमचन्द्रः ॥
केरोआल इति भाषा ॥

**कोटिरः**, पुं, (कोटि असङ्ख्यं राति ददातीति । रा
+ कः ।) इन्द्रः । नकुलः । शक्रगोपककीटः । इति
मेदिनी ।

**कोटिवर्षं**, क्ली, (कोटिसङ्ख्यकानि अस्त्राणि उप-
स्थितान् शत्रून् प्रति वर्षत्यत्र । कोटि +
वृष् + अप् ।) वाणपुरम् । इति शब्दरत्ना-
वली ॥

**कोटिवर्षा**, स्त्री, (कोटिभिरग्रभागैर्वर्षति मधु ।
कोटि + वृष् + अप् । स्त्रियां टाप् ।) पृक्का ।
इत्यमरः ॥ पिडिङ्ग शाक इति भाषा ॥

इति मुग्धबोधटीकायां दुर्गादासः ॥

**कोटरी**, स्त्री, (कोटं कौटिल्यं रीणाति गच्छतीति ।

रीगगतौ + क्विप् ।) नग्ना स्त्री ।

इत्यमरः । २ ।

६ । १७ ॥ (कोटं कुटिलस्वमावं

राक्षसासुरा-

दिकं रीणाति हन्ति । री + क्विप् ।)

चण्डिका ॥

इत्यमरटीका ॥

**कोटवी**, स्त्री, (कोटं कौटिल्यं निर्लज्जतां वाति

गच्छतीति । कोट + वा

गमनहिंसयोः "आतो-

ऽनुपसर्गे कः" । ३ । २ । ३ । इति

कः । ततो गौ-

रादित्वात् ङीष् ।) विवस्त्रा स्त्री ।

इत्यमरटीका ।

(कोटं दुर्गं दुर्गनामानमसुरं वाति

नाशयतीति ।)

(अस्याः पर्य्यायाः यथा ।
"स्पृक्कासृक् ब्राह्मणी देवी मरुन्माला
लता लघुः ।
समुद्रान्ता वधूः कोटिवर्षा
लङ्कोपिकेत्यपि" ॥
इति भावप्रकाशस्थ पूर्ब्बखण्डे प्रथमे भागे
॥
गुणाश्चास्याः स्पृक्काशब्दे ज्ञेयाः ॥)

**कोटिशः**, पुं, (कोट्या अग्रेण श्यति नाशयति
चूर्णीकरोतीत्यर्थः । कोटि + शो + कः ।)
लोष्ट-
भञ्जसाधनमुद्गरः ॥ इति भरतः ॥ मै
इति ख्यात
इति केचित् । तत्पर्य्यायः । लेष्टुभेदनः २
। इत्य-
मरः । २ । ९ । १२ ॥ लेष्टुघ्नः ३
कोटीशः ४ । इति
रत्नकोषः ॥ लेष्टुभेदी ५ चूर्णदण्डः ६
लोष्टभङ्गा-
र्थमुद्गरः ७ । इति शब्दरत्नावली ॥
लोष्टघ्नः
८ । इति जटाधरः ॥ (कोटिरस्यास्तीति
लोमा-
दित्वात् शः । कोटियुक्ते, त्रि ॥
वासुकीवंशीय-
नागविशेषः । यथा, महाभारते । १ । ५७
। ५ ।
"कोटिशो मानसः पूर्णः शलः पालो
हलीमकः" ॥)

**कोटिशः**, [स्] व्य, (कोटि + वारार्थे चशस् ।)
कोटिः कोटिः । इति व्याकरणम् ।
(यथा, रघौ । २ । ४९ ।
"गाः कोटिशः स्पर्शयता घटोध्नीः" ॥)

**कोटी**, स्त्री, (कुट् + "सर्व्वधातुभ्य इन्" । उणां
४ । ११७ । इतीन् ततो वा ङीष् ।)
खड्गादेर-
वार काठी इति भाषा ॥ (यथा, रामायणे
२ । ७१ । २९ ।
"भेरीमृदङ्गवीणानां कोणसंघट्टितः पुनः" ॥)
अस्त्रादेरग्रभागः । तत्पर्य्यायः । पालिः २
अश्रिः
३ कोटिः ४ । इत्यमरः । २ । ८ । ९३ ॥
(यथा,
कादम्बर्य्याम् । "कनक कोणैरभिहन्यमानः"
॥)
वाद्यप्रभेदः । गृहादेरेकदेशः । (यथा, कथा-
सरित्सागरे । १९ । ३३ ।
"स्वगृहस्याङ्गने तेन चत्वारः स्वर्णपूरिताः ।
कुम्भाश्चतुर्षु कोणेषु निगूढाः स्थापिता भुवि"
॥)
लगुडः । इति मेदिनी । मङ्गलग्रहः । इति हेम-
चन्द्रः ॥ शनिः । इति विश्वः ॥
द्वयोर्दिशोर्म्मध्य-
भागः । इति राजनिर्घण्टः ॥ अस्य विवरणं
विदिक्शब्दे द्रष्टव्यम् ॥ (कोणमात्रम् । यथा,
तन्त्रसारे ।
"विन्दुत्रिकोणवसुकोणदशारयुग्मम्" ॥)

स्त्री । इति शब्दरत्नावली ॥
नग्नमुक्तकेशी नारी ।
"या त्ववासा मुक्तकेशी कोट्टवी नग्निका
च सा" ॥
इति जटाधरः ॥ (कोट्टं कुट्टनं छेदनं
स्वपुत्रस्येति
यावत् वाति हिनस्ति निवारयतीत्यर्थः
। यद्वा,
कोट्टे कुट्टने संग्रामे स्वसुतस्य रक्षार्थं
वाति
गच्छतीति । कोट्ट + वा गमनहिंसयोः +
कः
गौरादित्वात् ङीष् ॥) नग्ना
स्त्रीरूपिणीदुर्गा ।
"तन्माता कोट्टवी नाम नग्ना
मुक्तशिरोरुहा ।
पुरोऽवतस्थे कृष्णस्य
पुत्रप्राणरिरक्षया" ॥
इति भागवते । १० । ६३ । २० ॥
(नहीयं स्वयमाद्याशक्तिरूपिणी दुर्गा
किन्त्वस्याः
लम्बाख्योऽष्टमो भागः । यथा, हरिवंशे
वाण-
कृष्णयुद्धे १८२ अध्याये २२-२३ ।
"व्याविध्यभाने चक्रे तु
कृष्णेनाप्रतिभौजसा ।
कुमाररक्षणार्थाय बिभ्रती सुतनुं तदा ॥
दिग्वासा देववचनात् प्रातिष्ठत्तत्र कोट्टवी
॥
लम्बा नाम महाभागा भागो
देव्यास्तथाष्टमः ।
चित्राकनकशक्तिस्तु सा च नग्ना
स्थितान्तरे" ॥)

**कोट्टवीपुरं**, क्ली, (कोट्टव्याः पुरम् ।) वाणपुरम् ।
इति शब्दरत्नावली ॥

**कोट्टारः**, पुं, (कुट्ट + आरक्प्रत्ययः । पृषोदरात्
साधुः । कोट्टं कोटं दुर्गमित्यर्थः
ऋच्छति प्राप्नोति ।

**कोणकुणः**, पुं, (कोणे मस्तकैकदेशभागे कुणति
विचरतीति । कुण् + अच् ।) उत्कुणः । इति
हेमचन्द्रः ॥ उकुण इति भाषा । (मत्कुणम् ।
छारपोका इति भाषा । खट्मल इति हिन्दी-
भाषा ॥)

**कोणिः**, त्रि, (कुण + "सर्व्वधातुभ्य इन्" । उणां ४ ।
११७ । इति इन् बाहुलकात् गुणः ।) कुणिः ।
इत्यमरटीका ॥ कोपा इति भाषा ॥

**कोथः**, पुं, (कुथ्यते पूतित्वं गम्यते अनेन । कुथ्
पूतित्वे + करणे घञ् ।) नेत्ररोगभेदः । कथो
इति भाषा । (कुथ्यति गुदं क्षिणोति । कुथ्
कर्त्तरि अच् । गुह्यक्षयकारकभगन्दररोग-
विशेषः । यथा, सुश्रुते ।
"मूढेन मांसलुब्धेन यदस्थिशल्यमन्नेन
सहाभ्यव-
हृतं यदावगाढपुरीषोन्मिश्रमपानेनाधः प्रेरितं

ग्रभागः । इत्यमरटीका ॥ पृक्काशाकम् । इति
शब्दरत्नावली । कोटिसङ्ख्या । इति लिङ्गादि-
संग्रहटीकायां भरतः ॥ (यथा, महाभारते ।
७ । जयद्रथवधपर्व्वणि । ८७ । ३० ।
"प्रतोदैश्चापकोटीभिर्हुङ्कारैः साधु वाहितैः ।
कशापार्ष्ण्यभिघातैश्च वाग्भिरुग्राभिरेव च" ॥)

**कोटीरः**, पुं, (कोटीभिः ईरयति प्रेरयति ।
कोटी + ईर् + णिच् अच् ।) जटा । इति
त्रिकाण्डशेषः ॥ (यथा, आनन्दलहर्य्याम् । ३० ।
"किरीटं वैरञ्चं परिहर पुरः कैटभभिदः
कठोरेकोटीरे स्खलसि जहि जम्भारिमुकुटम्" ॥)
किरीटम् । इति हेमचन्द्रः ॥

**कोटीवर्षं**, क्ली, (कोटीसङ्ख्यकानि वाणाद्यस्त्राणि
विपक्षान् प्रति वर्षन्ति अत्र । कोटी + वृष् +
अप् ।) वाणपुरम् । इति त्रिकाण्डशेषः ॥ (इदानीं
देवीकोट इत्याख्ययाख्यायते ॥)

**कोटीवर्षा**, स्त्री, (कोटीं कोटीर्वा वर्षति माधुर्य्यादि-
स्वादम् । वृष् + अच् + टाप् ।) कोटिवर्षा । इति
शब्दरत्नावली । पिडिङ्ग शाक इति भाषा ॥

**कोटीशः**, पुं, (कोटीं लोष्ट्रादोनां कोटीसंख्यां श्यति
चूर्णयंतीति । कोटी + शो + कः ।) कोटिशः ।
इत्यमरटीकायां भरतः ॥

**कोट्टं**, क्ली, (कुट्ट्यते विपक्षोऽस्मिन् अत्र वा ।
कुट्ट + अधिकरणे घञ् । निपातनात् गुणः ।)
कोट्ट + ऋ + "कर्म्मण्यण्" । इति अण् ।) नागरः ।
कूपः । पुष्करिण्याः पाटकः । इति मेदिनी ॥ दुर्ग-
पुरम् । इति लिङ्गादिसंग्रहटीकायां भरतः ॥

**कोठः**, पुं, (कुठि + अच् निपातनात् नलोपे साधुः ।)
चक्राकारकुष्ठरोगः । तत्पर्य्यायः । मण्डलकम् २ ।
इत्यमरः । २ । ६ । ५४ ॥ दुश्चर्म्मा ३ त्वग्दोषः ४
चर्म्मदूषिका ५ । इति राजनिर्घण्टः ॥ तस्य लक्षणं
यथाह माधवकरः ।
"असम्यग्वमनोदीर्णपित्तश्लेष्मान्ननिग्रहैः ।
मण्डलानि सकण्डूनि रागवन्ति बहूनि च ।
उत्कोठः सानुबन्धश्च कोठ इत्यभिधीयते" ॥
अन्यच्च । "वरटीदष्टनिकाशः कण्डूमान् लोहितो-
ऽस्रकफपित्तात् । क्षणिकोत्पादविनाशः कोठ
इति निगद्यते तज्ज्ञैः" ॥ इति रक्षितः ॥
(अस्य चिकित्सा यथा, वैद्यकचक्रपाणिसंग्रहे
शीतपित्तोदर्द्धाद्यधिकारे।
"अग्निमन्थभवं मूलं पिष्टं पीतञ्च सर्पिषा ।
शीतपित्तोदर्द्धकोठान् सप्ताहादेव नाशयेत् ॥
उदर्द्धोक्तां क्रियाञ्चापि कोठरोगे समासतः ।
सर्पिः पीत्वा महातिक्तं कार्य्यं शोणितमोक्षणम्" ॥)

**कोठरः**, पुं, (कुठ्यते छिद्यतेऽसौ । कुठ + अरप्र-
त्ययः ।) अङ्कोठवृक्षः । इति राजनिर्घण्टः ॥
असम्यगागतं गुदं क्षिणोति तत्र क्षतनिमित्तः
कोथ उपजायते" । भावे घञ् । गलनम् । यथा,
तत्रैव ।
"तस्मिन् क्षते पूयरुधिरावकीर्णमांसकोथे
भूमाविव जलसिक्तायां कृमयो जायन्ते" ॥)
शटिते मथिते च त्रि । इति मेदिनीकर-
हेमचन्द्रौ ॥

**कोदण्डं**, क्ली, (कु शब्दे + विच् । कौः शब्दायमानो
दण्डोऽस्य ।) धनुः । इत्यमरः । २ । ८ । ८३ ॥
(यथा, भागवते ३ । २१ । ५२ ।
"विस्फूर्ज्जच्चण्डकोदण्डो रथेन त्रासयन्नघान्" ॥)

**कोदण्डः**, पुं, (कोदण्डं धनुः तत्सदृशमाकारो विद्यते
अस्य । अर्श आदित्वादच ।) भ्रूः । जनपदविशेषः ।
इति मेदिनी ॥

**कोद्रवः**, पुं, (कु + विच् । कौः सन् द्रवतीति । द्रु +
अच् । द्रवः । कौ र्द्रव इति कर्म्मधारयः । केन
वायुना द्रवति वा पृषोदरात् पूर्ब्बस्य ओकारा-
देशे साधुः ।) धान्यविशेषः । कोदो इति भाषा ।
तत्पर्य्यायः । कोरदूषः २ । इत्यमरः । २ । ९ । १३ ॥
कुद्रवः ३ । इति तट्टीका ॥ कुद्दालः ४ मदनाग्रकः
५ कोर्द्रवः ६ कोरदुष्कः ७ । इति शब्दरत्नावली ॥

दुर्गम् । इति हेमचन्द्रः । केल्ला गड

इत्यादि

भांषा ॥

**कोट्टः**, पुं, (कुट्ट्यन्ते शत्रवोऽत्र । कुट्ट छेदे + घञ् ।

निपातनात् गुणः ।) दुर्गपुरम् । इति

लिङ्गादि-

संग्रहे अमरः ॥

**कोट्टवी**, स्त्री, दुर्गा । इति त्रिकाण्डशेषः ॥ नग्ना

आँकोड इति भाषा ॥

**कोठरपुष्पी**, स्त्री, (कोठरस्य पुष्पमिव पुष्पमस्याः ।

कोठरपुष्प + ङीप् ।) वृद्धदारकः । इति

राज-

निर्घण्टः ॥ (वृद्धदारकशब्देऽस्या

गुणादयो

ज्ञातव्याः ॥)

**कोणः**, पुं, (कुणति वादयत्यनेन कुणति वादयतीति

वा । कुण शब्दे + करणे घञ् । कर्त्तरि

+ अच्

वा ।) वीणादिवादनम् । भेरीप्रभृति यन्त्र

वाजाइ-

(यथा श्रुतौ । "अयज्ञिया वै कोद्रवाः" ॥)
आप च ।
"कोद्रवः कोरदूषः स्यादुद्दालो वनकोद्रवः
।
कोद्रवो वातलो ग्राही हिमः पित्तकफापहः
।
उद्दालस्तु भवेदुष्णो ग्राही वातकरो
भृशम्" ॥
इति भावप्रकाशः ॥ अस्य गुणाः ।
मधुरत्वम् ।
तिक्तत्वम् । व्रणिनां पथ्यकारकत्वम् ।
कफपित्त-
हरत्वम् । रूक्षत्वम् । मोहकारित्वम् ।
नूतनस्य
तु गुरुत्वञ्च । इति राजनिर्घण्टः ॥
परमग्राहि-
त्वम् । वातलत्वम् । इति राजवल्लभः ॥

**कोपः**, पुं, (कुप्यते इति । कुप् + भावे घञ् ।)
क्रोधः । इत्यमरः । १ । ७ । २६ ॥
(यथा, विष्णुपुराणे १ । ११ । १३ ।
"वत्स ! कः कोपहेतुस्ते कश्च त्वां
नाभिनन्दति" ॥)

**कोपक्रमं**, क्ली, (उपक्रम्यते आरभ्यते यत् तत्
उपक्रमं सृष्टादिकम् । उप + क्रम् +
कर्म्मणि
घञ् । कस्य ब्रह्मणः उपक्रमं सृष्टिः ।)
ब्रह्मणः
सृष्टिः । इत्यमरटीकायां रायमुकुटः ॥
(कोपेन
क्रम्यते इति । यद्वा, कोपस्य क्रमः
उद्योगोऽस्य ।)
कोपयुक्ते, त्रि ॥

**कोपनः**, त्रि, (कुप् + युच् ।) कोपविशिष्टः । इति
जटाधरः ॥ (यथा, महाभारते १ । २९ ।
१६ ।
"आसीद्विभावसुर्नाम महर्षिः कोपनो
भृशम्" ॥
च । बाहुलकात् गुणः ।) जलम् ॥ इति
मेदिनी ॥

**कोमलः**, त्रि, (कमु कान्तौ + बाहुलकात् कलच्
अत उत्वं गुणश्च ॥) अकठिनः । नरम
इति भाषा ।
तत्पर्य्यायः । सुकुमारः २ मृदुलः ३ मृदुः
४ ।
इत्यमरः । ३ । १ । ७८ । पेलवः ५ ।
इति जटा-
धरः ॥ मनोज्ञः । इति शब्दरत्नावली ॥
(यथा, रघुः । ९ । ३५ ।
"श्रुतिसुखभ्रमरस्वनगीतयः
कुसुमकोमलदन्तरुचो वभुः ।
उपवनान्तलताः पवनाहतैः
किसलयैः सलयैरिव पाणिभिः" ॥)

**कोमलकं**, क्ली, (कोमल + संज्ञायां कन् ।)
मृणालम् ।
इति शब्दचन्द्रिका ॥ (स्वार्थे कन् ।
जलम् ॥)

**कोमला**, स्त्री, (कोमल + स्त्रियां टाप् ।) क्षीरिका ।
इति शब्दचन्द्रिका ॥
(वृत्त्यनुप्रासघटकवृत्तिभेदः ।
क्षीरिकाशब्देऽस्य विवरणं ज्ञेयम् ॥)

**कोमासिका**, स्त्री, (कु ईषत् उमा अतसीवृक्षः स
इव आस्ते । आस् + ण्वुल् + टाप् अत
इत्वम् ।
कोः कादेशः ।) जालिका । इति हारावली
॥
फंलेर जालि इति भाषा ॥

**कोयष्टिः**, पुं, (कं जलं यष्टिरिवास्य पृषोदरात् अत
उत्वे गुणत्वे च साधुः ।) जलकुक्कुभपक्षी
। इति
त्रिकाण्डशेषः ॥ (यथा, मनौ । ५ । १३ ।
"प्रतुदान् जालपादांश्च
कोयष्टिनखविष्किरान्" ॥)

**कोयष्टिकः**, पुं, (कोयष्टि + संज्ञायां कन् ।) पक्षि-
अस्य गुणा यथा, --
"स कोरदूषः श्यामाकः कषायमधुरो लघुः ।
वातलः कफपित्तघ्नः शीतसंग्राहि शोषणः"
॥
इति सूत्रस्थाने सप्तविंशेऽध्याये
चरकेणोक्तम् ॥)

**कोलं**, क्ली, (कुल् अच् गौरादित्वात् ङीष् । कोली
तस्याः
फलमित्यण् तस्य लुक् "लुक्तद्धितलुकि" ।
१ । २ ।
४९ । इति ङीषो लुक् ।) वदरीफलम् ।
तत्पर्य्यायः ।
कुवलम् २ फेनिलम् ३ सौवीरम् ४ वदरम्
५ घोण्टा
६ । इत्यमरः । १ । ४ । ३६ ॥ पिच्छिलम्
७ स्वादु-
फलम् ८ वदरीफलम् ९ । इति
शब्दरत्नावली ॥
कोकिलम् १० । इति जटाधरः ॥ अपि च ।
"पुंसि स्त्रियाञ्च कर्कन्धुर्वदरीकोलमित्यपि ।
फेनिलं कुवलं घोण्टा सौवीरं वदरञ्च तत् ॥
अजाप्रिया कुहा कोलिविषमो भयकण्टकः"
॥
अथ वदरविशेषाणां लक्षणानि गुणाश्च ।
"पच्यमानं सुमधुरं सौवीरं वदरं महत् ।
सौवीरं वदरं शीतं भेदनं गुरु शुक्रलम् ॥
वृंहणं पित्तदाहास्रक्षयतृष्णानिवारणम् ।
सौवीराल्लघु संपक्वं मधुरं कोलमुच्यते ॥
कोलन्तु वदरं दाहि रुच्यमुष्णञ्च वातहृत् ।
कफपित्तकरं चापि गुरु सारकमीरितम् ॥
कर्क्कन्धुः क्षुद्रवदरं कथितं पूर्ब्बसूरिभिः ।
अम्लं स्यात् क्षुद्रवदरं कषायं मधुरं मनाक् ॥
स्निग्धं गुरु च तिक्तञ्च वातपित्तापहं स्मृतम्
।
शुष्कं भेद्यग्निकृत् सर्व्वं लघु
तृष्णाक्लमास्रजित्' ॥
इति भावप्रकाशः ॥ वदरादिद्वयं
शृगालकोलौ ।

पुं, बलिवंशीयः कोपनो नामासुरः ।
यथा, हरिवंशे । ४१ । ८४ ।
“शरभः शलभश्चैव कुपनः कोपनः
क्रथः” ॥
क्लीं, कुप् + णिच् भावे ल्युट् ।
दोषविकारकारक-
व्यापारविशेषकोपनिष्पादनम् । यथा,
महा-
भारते अनुगीतायाम् । १४ । १७ । १३ ।
“स्वदोषकोपनाद्रोगं लभते मरणान्तिकम्
।
अपि वोद्बन्धनादीनि परीतानि व्यवस्यति”
॥)

**कोपनकः**, पुं, (कोपनः कोपशील इव कायति
प्रकाशते । कै + कः ।)
चोरकनामगन्धद्रव्यम् ।
इति राजनिर्घण्टः ॥

**कोपना**, स्त्री, (कुप्यतीति । कुप् + ताच्छील्ये युच्
+
टाप् ।) कोपवती । तत्पर्य्यायः । भामिनी
२ ।
इत्यमरः । २ । ६ । ४ ॥ चण्डी ३ । इति
जटा-
धरः ॥ भीमा ४ । इति शब्दरत्नावली ॥
(यथा,
कुमारे । ३ । ८ ।
“कयासि कामिन् सुरतापराधात्
पादानतः कोपनयावधूतः ।
तस्याः करिष्यामि दृढानुतापं
प्रवालशय्याशरणं शरीरम्” ॥)

**कोपलता**, स्त्री, (कोपहेतुर्लता ।) कर्णस्फोटालता ।
इति राजनिर्घण्टः ॥

**कोपी**, [न्] त्रि, (अवश्यं कुप्यति इति आवश्यके
णिनिः ।) क्रोधनः । इत्यमरः । ३ । १ ।
३२ ॥
(यथा, मार्कण्डेये २८ । २९ ।
“सर्व्वसङ्गपरित्यागो ब्रह्मचर्य्यमकोपिता ।
यतेन्द्रियत्वमावासे नैकस्मिन्
वसतिश्चिरम्” ॥)

भेदः । कौँडापक्षी इति भाषा । इत्यमरः ।
२ ।
५ । ३५ ॥

**कोरकः**, पुं, (कुल संस्त्याने + कर्त्तरि ण्वुल् ।
लस्य
रत्वम् ।) कलिका । इत्यमरः । २ । ४ ।
१६ ॥
(“कलिका कोरकः पुमान्” इत्यमरवाक्यं
प्रायिका-
भिप्रायेण इति बोध्यम् । यतः “कोरकं
कुट्मलेऽपि-
स्यात् कक्कोलकमृणालयोरिति”
“कोरकोऽस्त्री
कुट्मले स्यादिति” च
विश्वमेदिनीकाराभ्यामुक्तम् ॥)

**कोरकः**, पुं क्ली, (कुल् + ण्वुल् । लस्य रः ।)
मुकुलम् ।
(यथा, माघे । ७ । २६ ।
“मरुदवनिरुहां रजोवधूभ्यः
समुपहरन् विचकार कोरकाणि” ॥)
कक्कोलकम् । मृणालम् । इति मेदिनी ॥
चोर-
नामगन्धद्रव्यम् । इति जटाधरः ॥

**कोरङ्गी**, स्त्री, (कुरति कोरङ्गीत्याख्यां गच्छतीति-
कुर् + अङ्गच् गौरादित्वात् ङीष् ।)
सूक्ष्मैला । इत्य-
मरः । २ । ४ । १२५ ॥ (अस्याः
पर्य्यायाः यथा,
“सूक्ष्मोपकुञ्चिका तुच्छा कोरङ्गी
द्राविडीगुटिः” ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)
पिप्पली । इति राजनिर्घण्टः ॥

**कोरदूषः**, पुं, (कोलं संस्त्यानं दूषयति । दूष् +
णिच्
“कर्म्मण्यण्” । ३ । २ । १ । इत्यण् ।
लस्य रत्वम् ।)
कोद्रवः । इत्यमरः । २ । ९ । १६ ॥
(यथा, महा-
भारते । ३ । १९० । १८--१९ ।

वदरीसदृशा घोण्टा शृगालकोलिः । यदुक्तम्
।
“वदरीसदृशाकारो वृक्षः सूक्ष्मफलो भवेत् ।
अटव्यामेव सा घोण्टा गोपघोण्टेति
चोच्यते” ॥
इति सुभूतिः ॥
“हस्तिकोलिर्गोपघोण्टा घोण्टा च
वदरीच्छदा ।
शृगालकोलिः कर्कन्धुः” इति । रत्नकोषः ॥
केचित्तु
कोलादित्रयं वदरीफले सौवीरादित्रयं
शृगाल-
कोलावित्याहुः ॥ स्वामी तु “कर्कन्धुर्वदरी
कोलि-
र्घोण्टा कुवलफेनिलौ । सौवीरं वदरं
कोलम्” ॥
इति पठति । तत्राद्यास्त्रयो वृक्षार्थाः अन्ये
फलार्था
घोण्टा तूभयस्पृगिति व्याचष्टे । “सौवीरं
वदरं
कोलं वदरीणां फलं मतम्” । इति
कोषान्तरञ्च ।
इति भरतः ॥ * ॥ अस्य गुणः । अम्लत्वम्
। वायु-
कफनाशित्वञ्च ॥ पक्वस्यास्य गुणाः ।
वायुपित्त-
नाशित्वम् । स्निग्धत्वम् । सुमधुरत्वम् ।
सारकत्वञ्च ॥
शुष्कस्यास्य गुणः । कफवायुनाशित्वम् ।
पित्तविरोधि-
त्वञ्च ॥ पुरातनस्यास्य गुणाः ।
श्रमतृष्णानाशित्वम्
स्निग्धत्वम् । लघुत्वञ्च ॥ अस्य मज्जगुणः
। मधुर-
त्वम् । पित्तच्छर्द्दितृष्णानाशित्वञ्च । इति
राज-
वल्लभः ॥ * ॥ तोलकपरिमाणम् । इति
वैद्यक-
परिभाषा ॥ (यथा, चरके कल्पस्थाने १२
अः ।

जलपारावते, पुं, । इति राजनिर्घण्टः ॥

**कोमलं**, क्ली, (कौति शब्दायते वाष्वादियोगेन स्रोतो-

वेगेन वा । कु शब्दे वृषादित्वात् कलच् तस्य मुट्

"ईदृशो भविता लोको युगान्ते पर्य्युपस्थिते ।
वस्त्राणां प्रवरा शाणी धान्यानां कोरदूषकः ।
भार्य्यामित्राश्च पुरुषा भविष्यन्ति युगक्षये" ॥

"शाणौ द्वौ द्रंक्षणं विद्यात् कोलं वदरमेव च" ॥)
मरिचम् । इति राजनिर्घण्टः ॥ चव्यम् । इति
वैद्यकम् ॥

**कोलः**, पुं, (कोलति कामपि बाधां न मत्वैव शत्रुं प्रति-

धावतीति । कुल + अच् ।) शूकरः । (कोलति प्लवते

जले इति ।) प्लवः । इत्यमरः । १ । १० । ११ ॥ भेला माड इत्यादि भाषा । अङ्कपालिः । शनिः । चित्रम् । चिता इति भाषा । (कोलन्ति आलिङ्गन्त्यङ्गान्यत्र । कुल + अधिकरणे हलश्चेति घञ् ।) क्रोडम् । इति मेदिनी । देशविशेषः । इति शब्दरत्नावली ॥ अस्त्रभेदः । इति धरणी ॥ वर्णसङ्करजातिविशेषः । (यथा, हरिवंशे । ३२ । १२३ ।
"पाण्ड्यश्च केरलश्चैव कोलश्चोलश्च पार्थिव ! ।
तेषां जनपदाः स्फीताः पाण्ड्याश्चोलाः सकेरलाः" ॥)
स तु लेटात् तीवरकन्यायां जातः । इति ब्रह्म-वैवर्त्तपुराणम् ॥ श्मश्रुधारिम्लेच्छजातिविशेषः । स च पूर्ब्बं क्षत्त्रिय आसीत् सगरराजेनासौ वेदयागादावनधिकारी कृतः । एतद्विवरणं हरि-वंशे १४ अध्याये द्रष्टव्यम् ॥

(अयन्तु कोलः यजातिवंशीयस्य राज्ञो दुष्मन्तस्य

पौत्रेष्वन्यतमः ॥ इदानीं पार्व्वत्यः असभ्यजाति-विशेषः । उत्कलदेशादुत्तरभागे ह्यस्य वसतिः । इयन्तु कोलजातिः सत्यप्रिया सरलप्रकृतिः आतिथ्यसत्कारप्रिया चेति उच्यते ॥)

**कोलकं**, क्ली, (कोल् + संज्ञायां कन् । कुल् + कृञादि

त्वात् वुन् वा ।) गन्धद्रव्यविशेषः । काँकला इति भाषा । मरिचम् । इत्यमरः । २ । ९ । ३६ ॥

**कोलकः**, पुं, (कुल् + कर्त्तरि ण्वुल् कृञादित्वात्

वुन् वा ।) अङ्कोठवृक्षः । इति राजनिर्घण्टः ॥ पिप्पली । इत्यमरः । २ । ४ । ९७ ॥ चव्यम् । इति राजनिर्घण्टः ॥ (अस्याः पर्य्याया यथा, --
"चविकायाः फलं प्राज्ञैः कथिता गजपिप्पली ।
कपिवल्ली कोलवल्ली श्रेयसीवशिरश्च सा" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**कोलशिम्बी**, स्त्री, (कोलस्य शूकरस्य पादाकारा

शिम्बिरस्याः । ततो वा ङीष् ।) लताविशेषः । आल्कुसी इति भाषा । तत्पर्य्यायः । कृतफला २ खठ्वा ३ शूकरपादिका ४ काकाण्डोला ५ दधि-पुष्पा ६ काकाण्डा ७ पर्य्यङ्कपादिका ८ । अस्या गुणाः । वायुनाशित्वम् । गुरुत्वम् । उष्णत्वम् । कफपित्तकारित्वञ्च । इति राजनिर्घण्टः ॥ (तत्पर्य्यायगुणाः । यथा, भावप्रकाशे ।
"कोलशिम्बी कृष्णफला तथा पर्य्यङ्कपालिका ।
कोलशिम्बी समीरघ्नी गुरूष्णा कफवातहृत् ।
शुक्राग्निस्वादकृद्बल्या रुचिकृत् बद्धविड्गुरुः" ॥)

**कोला**, स्त्री, (कुल् + ज्वलादित्वात् णः ततष्टाप् ।)

कोलिवृक्षः । इति शब्दरत्नावली ॥ पिप्पली । (अस्याः पर्य्याया यथा, --
"पिप्पली चपला शौण्डी वैदेही मागधी कणा ।
न्यग्रोधादिगणे व्यवहारोऽस्य यथा, --
"कोली कदम्बविरला मधुकं मधूकम्" ॥
इति सूत्रस्थाने पञ्चदशेऽध्याये वाभटेनोक्तम् ॥)

**कोल्या**, स्त्री, (कोलमर्हतीति यत् ।) पिप्पली ।

इति रत्नमाला ॥

**कोविदः**, त्रि, (कुङ् शब्दे विच् कौः वेदः तं वेत्ति

जानातीति । विद् + "इगुपधेति" । ३ । १ । ११५ । इति कः ।) पण्डितः । इत्यमरः । २ । ७ । ५ ॥ (यथा, भागवते । १ । १२ । २९ ।
"इति राज्ञ उपादिश्य विप्रा जातककोविदाः ।
लब्धोपचितयः सर्व्वे प्रतिजग्मुः स्वकान् गृहान्" ॥)

**कोविदारः**, पुं, (कुं भुवं विदृणाति विदारयति भूमिं

विदार्य्योद्भवतीत्यर्थः । दॄ + "कर्म्मण्यण्" । ३ । २ । १ । इति अण् । ततः पृषोदरात् साधुः ।) रक्तकाञ्चनवृक्षः । तत्पर्य्यायः । चमरिकः २ कुद्दालः ३ युगपत्रकः ४ । इत्यमरः । ३ । ४ । २२ ॥ काञ्चनारः ५ कणकारकः ६ कान्तपुष्पः ७ करकः ८ कान्तारः ९ यमलच्छदः १० काञ्चनालः ११ ताम्रपुष्पः १२ कुदारः १३ रक्तकाञ्चनः १४ । इति जटाधरः ॥ विदलः १५ । इति शब्दरत्नावली ॥ अपि च ।
"काञ्चनालः काञ्चनको गण्डारिः शोणपुष्पकः" ॥
अथ कचनारभेदः ।
"कोविदारश्चमरिकः कुद्दालो युगपत्रकः ।

बहुवारवृक्षः । इति जटाधरः ॥

**कोलकन्दः**, पुं, (कोल इव कन्दोऽस्य ।) महाकन्द-

विशेषः । तत्पर्य्यायः । कृमिघ्नः २ पञ्जलः ३ वस्त्र-

पञ्जलः ४ पुटालुः ५ सुपुटः ६ पुटकन्दः ७ । अस्य

गुणाः । कटुत्वम् । उष्णत्वम् ।

क्रमिदोषनाशित्वम् ।

वान्तिविच्छर्द्दिशमनत्वम् ।

विषदोषनिवारणत्वञ्च ।

इति राजनिर्घण्टः ॥

**कोलकर्कटिका**, स्त्री, (कोल इव कर्कटिका ।) मधु-

खर्ज्जूरिका । इति राजनिर्घण्टः ॥

**कोलदलं**, क्ली, (कोलं वदरीफलं तद्वत्दलमस्य ।)

नखीनामगन्धद्रव्यम् । इत्यमरः । २ । ४ । १३० ॥

(नखीशब्देऽस्य गुणादयो ज्ञातव्याः ॥)

**कोलनाशिका**, स्त्री, (कोलस्य शूकरस्य नाशिका

नाशिनी । नश् + ण्वुल् टाप् अत इत्वम् ।)

वङ्किणीवृक्षः । इति हारावली ॥

**कोलपुच्छः**, पुं, (कोलस्य शूकरस्य पुच्छ इव पुच्छो-

ऽस्य ।) कङ्कपक्षी । इति हारावली ॥

**कोलमूलं**, क्ली, (कोलस्य वदरीफलस्य मूलवत् मूल-

मस्य । यद्वा, कोलं वदरीफलमिव मूलमस्य ।)

पिप्पलीमूलम् । इति राजनिर्घण्टः ॥

**कोलम्बकः**, पुं, (कुल् + बाहुलकात् अम्बच् । ततः

संज्ञायां कन् ।) वीणायाः कायः । इत्यमरः । १ ।

७ । ७ ॥ स तु तन्त्रीदण्डादिसमुदायःशरीरम् ।

अलावुदण्डककुभसमुदायस्तन्त्रीहीन इत्यन्ये ।

इति भरतः ॥

**कोलवल्ली**, स्त्री, (कोलो वराहः तल्लोमवत् वल्ली ।

वराहलोमतुल्यशूङ्गावत्त्वात्तथात्वम् ।) गज-

कृष्णोपकुल्या मगधी कोला

स्यात्तिक्ततण्डुला" ॥)

चव्यम् । इति मेदिनी ॥ (अस्याः

पर्य्याया यथा, --

"चव्यं तेजोवती कोला नाकुली च

विकोषणा" ॥

इति वैद्यकरत्नमालायाम् ॥)

**कोलाञ्चः**, पुं, देशविशेषः । इति शब्दरत्नावली ॥

तत्र पुरं कान्यकुब्जम् ॥

**कोलाहलः**, पुं, (कोल एकीभूताव्यक्तशब्दविशेषः तं

आहलति आलिखतीति । हल्

विलेखने + अच् ।)

बहुविधदूरगाव्यक्तध्वनिः ।

तत्पर्य्यायः । कलकलः

२ । इत्यमरः । १ । ६ । २५ ॥

कालकीलः ३ ।

इति शब्दरत्नावली ॥ (यथा,

रामायणे । ३ ।

३१ । ४१ ।

"ततो हलहलाशब्दः पुनः कोलाहलो

महान् ।

महान् राक्षसनादस्तु पुनस्तूर्य्यरवो

महान्" ॥)

**कोलिः** पुं स्त्री, (कुल् + "सर्व्वधातुभ्य इन्" । उणां

४ । ११७ । इतीन् ।) वृक्षविशेषः ।

कुलगाछ इति

भाषा । तत्पर्य्यायः । कर्कन्धुः २

वदरी ३ । इत्य-

मरः । २ । ४ । ३६ ॥ कर्कन्धूः ४

वदरः ५ कोली

६ कोला ७ कुवली ८ । इति

तट्टीकायां भरतः ॥

कोलः ९ । इति तट्टीका सारसुन्दरी

॥ (यथा,

गारुडे १९४ अध्याये ।

"जातीपत्रं कोलिपत्रं तथाचैव

मनःशिला ।

कुण्डली ताम्रपुष्पश्चाश्मान्तकः

स्वल्पकेशरी ॥

काञ्चनालो हिमो ग्राही तुवरः श्लेष्मपित्तनुत् ।

कृमिकुष्ठगुदभ्रंशगण्डमालाव्रणापहः ॥

कोविदारोऽपि तद्वत्स्यात् तयोः पुष्पंलघु

स्मृतम् ।

रुक्षं संग्राहि पित्तास्रप्रदरक्षयकासनुत्' ॥

इति भावप्रकाशः । अस्य गुणाः ।

कषायत्वम् ।

संग्राहित्वम् । व्रणरोपणत्वम् ॥ दीपनत्वम् ।

कफवातमूत्रकृच्छ्रनाशित्वञ्च । इति

राजनिर्घण्टः ॥

तत्पुष्पगुणाः । धारकत्वम् । रुचिकारित्वम् ।

रक्तपित्तरोगे सुपथ्यत्वञ्च । इति राजवल्लभः

॥

(यथा, पाकशास्त्रे ।

"कोविदारकलिकांतिकोमला

तक्रसिद्धतिलतैलपाचिता ।

हिङ्गुवासकसुवासवासिता

वेसवारलुलितातिलोभदा' ॥

पारिजातः । हरिवंशे कोविदारस्य व्युत्पत्ति-

कथने एतद्विवृतिर्यथा । १२४ । ७०-७१ ।

"कोऽप्ययं दारुरित्याहुरजानन्तो यतो जनाः

।

कोविदार इति ख्यातस्ततः स मुमहातरुः ॥

मन्दारः कोविदारश्च पारिजातश्च नामभिः

।

स वृक्षो ज्ञायते दिव्यो यस्यैतत्

कुसुमोत्तमम्" ॥)

**कोशः**, पुं, (कुश्यते संश्लिष्यते । कुश संश्लेषणे +

घञकर्त्तरि चेति अधिकरणादौ घञ् ।)

अण्डम् ।

इति शब्दरत्नावली ॥ कुष्यते आकृष्यते

आय-

स्थानेभ्यः कोषः । कुष ग निष्कर्षे घञ्

कोषो

मूर्द्धन्यान्तः तालव्यान्त इत्यन्ये । इति

भरतः ।

कृताकृतं हेमरूप्यम् । तत्पर्य्यायः ।

हिरण्यम्

| | | |
|---|---|---|
| | एभिश्चैव कृता वर्त्तिवदराग्नौ महेश्वर ॥<br>धूमपानं कासहरं नात्र कार्य्या विचारणा” ॥)<br>**कोली**, स्त्री, (कोलति पीनत्वेन जायते बर्द्धते वा ।<br>कुल् + अच् + गौरादित्वात् ङीष् । यद्वा, कोलि<br>+ वा ङीष् ।) कोलिवृक्षः इत्यमरटीकायां<br>भरतः ॥ (अस्याः पर्य्याया यथा, --<br>“पुंसि स्त्रियान्तु कर्कन्धुर्वदरी कोलमित्यपि ।<br>फेनिलं कुवलं घोटा सौवीरं वदरं महत् ।<br>अजप्रिया कुहा कोली विषमोभयकण्टका” ॥<br>इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥ | २ । इत्यमरः । २ । ९ । ९१ ॥ कृताकृतं हेम- |

रूप्यञ्च मिलितं प्रत्येकञ्च
कोशादिद्वयवाच्यम् ।
कृतमावर्त्तितं अकृतमाकरोत्थं चूर्णं
घटिताघ-
टितमिति स्वामी ॥ कृतमाभरणीकृतं
अकृतं
चूर्णादिरूपमाकरोत्थमितिकेचित् ।
(आवरण-
विशेषः । यथा, भागवते । २ । १ । ३४ ।
"अव्यक्तमाहुर्हृदयं मनश्च
स चन्द्रमाः सर्व्वविकारकोशः" ॥
मुकुलम् । यथा, रघौ । ३ । ८ ।
"तिरश्चकार भ्रमराभिलीनयोः
सुजातयोः पङ्कजकोशयोः श्रियम्" ॥)

**कोशकारः**, पुं, (कोशं करोति त्वक्पत्रादिभि-

रात्मानमाच्छादयति । कोश + कृ + अण्
।) इक्षुः ।
इति शब्दरत्नावली ॥ मूर्द्धन्यमध्योऽप्ययम्
॥
(कोशं करोति
स्वमुखलालारूपतन्तुभिरात्मान-
मावृणोतीति । कीटविशेषः । गुटिपोका इति
भाषा । यथा, भागवते । ६ । १ । ५२ ।
"कोशकार इवात्मानं कर्म्मणाछाद्य मुह्यति"
॥)

**कोशफलं**, क्ली, (कोशे फलं वीजं अस्य ।) कक्कोलकम् ।

इत्यमरः । २ । ६ । १३० ।
(कक्कोलकशब्देऽस्य
विवरणं ज्ञेयम् ॥)

**कोशफला**, स्त्री, (कोशे फलं यस्याः ।) महाकोशा-

तकी । अपुषी । इति राजनिर्घण्टः ॥

**कोशलः**, पुं स्त्री, (कुश् + "वृषादित्वात्" उणां । १ ।

१०८ । कलः बाहुलकात् गुणः ।)
अयोध्यानगरी ।
इति शब्दमाला उणादिकोषश्च ।
मूर्द्धन्यमध्यो-
यम् । महाकोशातकी । राजकोशातकी ।
यथा ।
अथ नेनुआ ।
"महाकोशातकी प्रोक्ता हस्तिघोषा
महाफला ।
धामार्गवो घोषकश्च हस्तिपर्णश्च स स्मृतः
॥
महाकोशातकी स्निग्धा सरा
पित्तानिलापहा" ॥
अथ तोरै ।
"धामार्गवो पीतपुष्पो जालिनी कृतवोधना ।
राजकोशातकी चेति तथोक्ता राजिमत्फला
॥
राजकोशातकी शीता मधुरा कफवातला ।
पित्तघ्नी दीपनी
श्वासज्वरकासकृमिप्रणुत्" ॥
इति भावप्रकाशः ॥ (अस्या गुणा यथा, --
"कोशातकी फलं स्वादु मधुरं वातपित्तनुत्
।
विपाके च कफं हन्ति ज्वरे शस्तं
प्रदिश्यते" ॥
इति हारीते प्रथमस्थाने १० अध्याये ॥)

**कोशातकी**, [न्] पुं, (कोशातकोऽस्यास्तीति । इनिः ।)

वाणिज्यम् । वणिक् । वाडवाग्निः । इति
विश्वः ॥

**कोशाम्रः**, पुं, (कोशे + आम्र इव फलमस्य ।) फल-

वृक्षविशेषः । कोशाम इति भाषा ।
तत्पर्य्यायः ।
कृमिवृक्षः २ सुकेशकः ३ । इति
भावप्रकाशः ॥
घनस्कन्धः ४ वनाम्रः ५ जन्तुपादपः ६
क्षुद्राम्रः ७
रक्ताम्रः ८ लाक्षावृक्षः ९ सुरक्तकः १० ।
अस्य
गुणः । कुष्ठशोथास्रपित्तव्रणकफापहत्वम् ।
तत्-
निस्त्रिंशोऽयं गुरुः पीतः शैक्यः
परमनिर्व्रणः" ॥)
अर्थसमूहः । (यथा, रघौ । ५ । १ ।
"तमध्वरे विश्वजिति क्षितीशं
निःशेषविश्राणितकोषजातम्" ॥)
दिव्यम् । (यथा, राजतरङ्गिण्यां । ५ ।
३३५ ।
"ततो निक्षिप्य चरणं रक्ताक्ते मेषचर्मणि ।
कोषं चक्रतुरन्योऽन्यं सखड्गौ
नृपडामरौ" ॥)
अण्डम् । कृताकृतं हेमरूप्यम् । इत्यमरः
। २ ।
९ । ९१ । अस्य विवरणं तालव्यान्ते
द्रष्टव्यम् ।
पात्रम् । जातीकोषः । जायफल इति
भाषा ।
(जातीपत्री । जयित्री-अर्थे व्यवहारो ।
यथा,
गर्भचिन्तामणिरसे ।
"रसं तालं तथा लौहं प्रत्येकं
कर्षमात्रकम् ।
कर्षद्वयन्तथाचाभ्रं कर्पूरं वङ्गताम्रकम् ॥
जातीफलं तथा कोषं गोक्षुरञ्च शतावरीम्
।
बलातिबलयोर्मूलं प्रत्येकं तोलकं शुभम्
॥
वारिणा वटिका कार्य्या द्विगुञ्जा
फलमानतः ।
सन्निपातं निहन्त्याशु स्त्रीणाञ्चैव
विशेषतः ॥
गर्भिण्या ज्वरदाहञ्च प्रदरं सूतिकामयम्"
॥
इति वैद्यकभैषज्यधन्वन्तरिग्रन्थे
स्त्रीरोगाधि-
कारे ॥) शब्दादिसंग्रहः । इति मेदिनी ।
(यथा,
अमरकोषः ॥) भाण्डागारम् ।
पानपात्रचषकः ।

ऽप्ययम् । (यथा, रामायणे । १ । ५ । ५ ।
"कोशलो नाम मुदितः स्फीतो जनपदो
महान् ।
निविष्टः सरयूतीरे प्रभूतधनधान्यवान्' ॥)

**कोशलात्मजा**, स्त्री, (कोशलस्य कोशलनृपतेरात्मजा
दुहिता ।) कौशल्या । सा तु श्रीराममाता
दश-
रथराजपत्नी च । इति शब्दरत्नावली ॥

**कोशलिकं**, क्ली, (कुशलाय कर्म्मणे हितजनककार्य्य-
सिद्ध्यर्थमिति भावः दीयते यत् । कुशल
+ ठक्
निपातनात् पूर्ब्बस्य ओकारत्वम् ।)
उत्कोचः । इति
हेमचन्द्रः । घुष इति भाषा ।
मूद्ध्र्वन्यमध्योऽप्ययम् ॥

**कोशाङ्गं**, क्ली, (कोश इव अङ्गमस्य ।) इत्कटः । इति
हारावली ॥ ओकडा इति भाषा ॥
मूर्द्धन्यमध्यो-
ऽप्ययम् ॥

**कोशातकः**, पुं, (कोशं शिरःकोशं अतति गच्छति
सातत्येन प्राप्नोतीति । अत + क्वुन् ।)
कचः । इति
विश्वमेदिन्यौ ॥ (कोशं
वेदात्मकमाकरमतति प्राप्नो
तीति वाक्ये । यजुर्वेदीयशाखाविशेषः ।
कठवल्ली
उपनिषद् ॥)

**कोशातकी**, स्त्री, (कोशं अततीति । अत + क्वुन् ।
ततः कोशातक + गौरादित्वात् ङीष् ।)
पटोली ।
घोषकः । इति मेदिनी ॥ फलशाकविंशेषः ।
झिङ्गा इति भाषा । तत्पर्य्यायः ।
कृतच्छिद्रा २
जालिनी ३ कृतवेधना ४ क्ष्वेडा ५ सुतिक्ता
६
फलगुणाः । ग्राहित्वम् । वातघ्नत्वम् ।
अम्लत्वम् ।
उष्णत्वम् । गुरुत्वम् । पित्तदत्वञ्च । इति
भाव-
प्रकाशः ॥ कफार्त्तिप्रदत्वम् । विदाहित्वम्
विशोफ-
कारित्वञ्च ॥ पक्वस्य तस्य गुणः ।
मधुरत्वम् ।
अम्लत्त्वञ्च ॥ पञ्चादियुक्तस्य तस्य गुणः ।
दीपनत्वम् ।
रुचिपुष्टिबलकारित्वञ्च । तत्तैलस्य गुणाः ।
सार-
कत्वम् । कृमिकुष्ठव्रणापहत्वम् ।
अम्लमधुरत्वम् ।
बल्यत्वम् । पथ्यत्वम् । रोचनत्वम् ।
पाचनत्वञ्च ।
इति राजनिर्घण्टः ॥ (रोगविशेषेऽस्य
व्यवहारो
यथा, सुश्रुते चिकित्सितस्थाने ९ अध्याये
॥
"कारञ्जं वा सार्षपं वा क्षतेषु
क्षेप्यं तैलं शिग्रुकोशाम्रयोर्वा' ॥)

**कोशिला**, स्त्री, (कोशः कोश इव पदार्थो वा अस्याः
अस्तीति । कोश + पिच्छादित्वात् इलच्
।) मुद्ग-
पर्णी । इति राजनिर्घण्टः ॥

**कोशी**, स्त्री, (कुश् संश्लेषे + अच् गौरादित्वात्
ङीष् ।) उपानत् । जुता मोजा इति च भाषा
।
तत्पर्य्यायः । पन्न ध्री २ पादविरजाः ३
पादरथी ४ ।
इति हारावली ॥ शुङ्गा । इति हेमचन्द्रः ।
धा-
न्यादिर शुँया इति भाषा ॥

**कोषः**, पुं क्ली, (कुष्यन्ते आकृष्यन्ते फलपुष्पोत्पादक-
मधुमयपरागादयो यस्मिन् । कुष् ग निष्कर्षे
+
घञकर्त्तरि चेति अधिकरणे घञ् ।) कुड्मलः
।
योनिः । शिम्बा । इति हेमचन्द्रः ॥
पनसादिफल-
स्यान्तः । इति धरणी ॥ शब्दान्तरसंयोगे
गोलक-
वाचकः । यथा सूत्रकोषः नेत्रकोष
इत्यादि । प्रत्य-
मरटीकायां स्वामी ॥ धनसंहतिः । इति
जटाधरः ॥
(यथा, मार्कण्डेयपुराणे देवीमाहात्म्ये ।
"कोषो बलञ्चापहृतं तत्रापि स्वपुरे ततः"
॥)
तत्सञ्चयगुणाः ।
"कोषो महीपतेर्जीवो न तु प्राणाः
कथञ्चन ।
द्रव्यं हि राजा भूपस्य न शरीरमिति
स्थितिः ॥
धर्म्महेतोः सुखार्थाय भृत्यानां भरणाय च
।
आपदर्थञ्च संरक्ष्यः कोषः कोषवता सदा
॥
धनात् कुलं प्रभवति धनाद्धर्म्मः प्रवर्त्तते
।
नाधनस्य भवेद्धर्म्मः कामश्चैव कथञ्चन
॥
अधर्म्मान्न धनं कुर्य्यात्तद्धनं गृह्यते परैः ।
स्वयं पापस्य पात्रं स्यात् सिंहो
हस्तिवधादिव ॥
तादात्मिको मूलहरः
कदर्य्यस्त्रिविधोऽर्जकः ।
उत्पन्नार्थव्ययकरो यो भविष्यद्धनाशया
॥
स तादात्मिक आख्यातः कल्याणी तस्य
नायतिः ।
यः पित्राद्यर्ज्जितं वित्तमन्यायेन तु
भक्षयेत् ॥
स मूलहर आख्यातस्तद्धर्कोऽपि
चाशुभः ।
स कदर्य्यस्तु भृत्यात्मपीडनैरर्थसञ्चयी ॥
तद्धनं राजदायादतस्कराणां निधिर्भवेत्
।

घण्टाली ७ मृदङ्गफलिनी ८ कर्कशच्छदा ९ ।
अस्या गुणाः । शिशिरत्वम् । कटुत्वम् ॥ कषा-
यत्वम् । पित्तवातकफनाशित्वम् । मलाध्मानविशो-
धनत्वञ्च । इति राजनिर्घण्टः ॥ मूर्द्धन्यमध्योऽप्य-

कुँडि इति भाषा । खङ्गपिधानम् । खाप इति
भाषा । (यथा, महाभारते । ४ । ४० । १३-१५ ।
“कस्यायं विपुलः खड्गो गव्ये कोषे समर्पितः ।
हेमत्सरुरनाधृष्यो नैषध्यो भारसाधनः ॥
कस्य पाञ्चनखे कोषे शायको हेमविग्रहः ।
प्रमाणरूपसम्पन्नः पीत आकाशसन्निभः ॥
कस्य हेममये कोषे सुतप्ते पावकप्रभे ।

भिक्षा च राजकोषश्च स्तोकस्तोकेन वर्द्धते ॥
अञ्जनञ्च धनञ्चैव स्तोकस्तोकेन हीयते ।
कोवस्य साधनोपायो मुख्यं राष्ट्रमिति स्मृतम् ॥
भूगुणेर्वर्द्धते राष्ट्रं तद्वृद्धिर्नृपवृत्तता ।
राज्ञोपायेन संरक्ष्या ग्रामे ग्रामे कृषीतलाः ॥
तेभ्यः कृषिस्ततश्चार्था अर्थेभ्यः सर्व्वसम्पदः ।
शरीरकर्षणात् प्राणाः क्षीयन्ते प्राणिनां यथा ॥
तथा वर्षेषु वर्षेषु कर्षणात् भूगुणक्षयः ।

एकस्यां गुणहीनायां कृषिमन्यत्र
कारयेत्” ॥
इति युक्तिकल्पतरुः ॥ * ॥
(वेदान्तशास्त्रोक्तस्थूल-
सूक्ष्मादिभेदेन शरीरत्रयावच्छिन्नः
अन्नमयः प्राण-
मयः मनोमयः विज्ञानमयः
आनन्दमयश्च इत्येते
पञ्च कोषवदाच्छादकत्वादात्मनः
कोषतयोच्यन्ते ।
यथा, पञ्चदश्यां ३ । १-११ ।
“गुहाहितं ब्रह्म यत्तत् पञ्चकोषविवेकतः
।
बोद्धुं शक्यं ततः कोषपञ्चकं
प्रविविच्यते ॥
देहादभ्यन्तरः प्राणः प्राणादभ्यन्तरं
मनः ।
ततः कर्त्ता ततो भोक्ता गुहा सेयं
परम्परा ॥
पितृभुक्तान्नजाद्वीर्य्याज्जातोऽन्नेनैव
वर्द्धते ।
देहः सोऽन्नमयो नात्मा प्राक्चोद्ध्र्वं
तदभावतः ॥
पूर्ब्बजन्मन्यसत्वे तज्जन्म सम्पादयेत्
कथम् ।
भाविजन्मन्यसत्कर्म्म न भुञ्जीतेह
सञ्चितम् ॥
पूर्णो देहे बलं यच्छन्नक्षाणां यः प्रवर्त्तकः
।
वायुः प्राणमयो नासावात्मा
चैतन्यवर्ज्जनात् ॥
अहन्तां ममतां देहे गृहादौ च करोति यः
।
कामाद्यवस्थया भ्रान्तो नासावात्मा
मनोमयः ॥
लीना सुप्तौ वपुर्बोधे
व्याप्नुयादानखाग्रगा ।
चिच्छायोपेतधीर्नात्मा
विज्ञानमयशब्दभाक् ॥

संसूचकाव्यसनिनोः कोषपानं विधीयत ॥
इच्छतः श्रद्दधानस्य देवब्राह्मणसन्निधौ ।
मद्यपस्त्रीव्यसनिनां किरातानान्तथैव च ॥
कोषः प्राज्ञैर्न दातव्यो ये च नास्तिकवृत्तयः ।
महापराधे निर्द्धर्म्मे कृतघ्ने क्लीवकुत्सिते ॥
नास्तिकव्रात्यदासेषु कोषपानं विवर्ज्जयेत् ।
तमाहूयाभिशस्तन्तु मण्डलाभ्यन्तरे स्थितम्
॥
आदित्याभिमुखं कृत्वा पाययेत् प्रसृतित्रयम् ।
ऊद्ध्र्वं यस्य हि सप्ताहाद्वैकृतन्तु भहद्भवेत् ॥
नाभियोज्यः स विदुषा
कृतकालव्यतिक्रमात्” ॥
संसूचक आस्तिक इति मिताक्षरा ॥ महाप-
राधी महापातकी । निर्द्धर्म्मो वर्णाश्रमरहितः ।
कुत्सितः प्रतिलोमजः । दासः कैवर्त्तः ।
मण्डला-
भ्यन्तरे गोमयकृतमण्डलाम्यन्तरे । वैकृतं
रोगादि ।
महन्नाल्पम् । तस्य देहिनामपरिहार्य्यत्वात् ।
तदाह कात्यायनः ।
“अथ दैवविसम्बादे द्विसप्ताहन्तु दापयेत् ।
अभियुक्तं प्रयत्नेन तदर्थं दण्डमेव च ॥
तस्यैकस्य न सर्व्वस्य जनस्य यदि तद्भवेत् ।
रोगोऽग्निर्ज्ञातिमरणमृणंदाप्यो दमश्च सः ॥
ज्वरातिसारविस्फोटगूढास्थिपरिपीडनम्।
नेत्ररुक् गलरोगश्च तथोन्मादः प्रजायते ॥
शिरोरुग्भजभङ्गश्च दैविका व्याधयो नृणाम्”
॥
गलरोग इत्यत्र शूलरोग इति क्वचित् पाठः ।
द्विसप्ताहन्तु महाभियोगभवविषयम् । महाभि-
योगेष्वेतानीति प्रस्तुत्य चतुर्द्दशकादह्न इति
याज्ञ-
वल्क्याभिधानात् । मिताक्षराप्येवम् । यत्तु
“त्रिरात्रात्सप्तरात्राद्वा द्वादशाहात् द्विसप्तकात्
।
वैकृतं यस्य दृश्येत पापकृत् स उदाहृतः” ॥
इति पितामहोक्तं तन्महाभियोगात् कृत्स्नद्र-
व्यादर्व्वाचीनं द्रव्यं त्रिधा विभज्य त्रिरात्रादि

अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे” ॥
इत्याभ्यामभिमन्त्र्य
गोमयकृतमण्डलाभ्यन्तरे स्थितं
सोपवासं स्नातार्द्रवाससमादित्याभिमुखं
ॐ
सत्येन मामभिरक्षस्व वरुणेत्यनेन शोध्य
पठिते-
नाभिमन्त्रितं प्रसृतित्रयं जलं पाययेत् ।
ततो
यदि अदधिकालाभ्यन्तरे रोगपीडा न
भवति
तदा शुद्ध इति । ततो दक्षिणा देया । इति
दिव्यतत्त्वम् ॥

**कोषफलं**, क्ली, (कोषे फलमस्य ।) कक्वोलम् । तच्च
कर्पूरतुल्यगन्धद्रव्यविशेषः ।
इत्यमरटीकायां रमा-
नाथः सारसुन्दरी च ॥

**कोषफलः**, पुं, (कोषे फलमस्य ।) घोषकलता ।
इति जटाधरः ॥

**कोषफला**, स्त्री, (कोषफल + अजादित्वात् टाप् ।)
पीतघोषा । इति रत्नमाला ॥
तालव्यमध्यापीयम् ॥
(घोषकशब्देऽस्या विवरणं ज्ञेयम् ॥)

**कोषला**, स्त्री, (कुश् + वृषादित्वात् कलप्रत्ययः बाहु-
लकाद् गुणः पृषोदराद् षकारादेशः ।)
अयोध्या ।
इति शब्दरत्नावली ॥ (सा च
सरयूतटस्था-
राजधानी । यथा, मार्कण्डेये । ८ । २४९
।
“मच्छोकमग्नमनसः कोषलानगरे जनाः ।
तिष्ठन्ति तानपोह्याद्य कथं यास्याम्यहं
दिवम्” ॥
परन्तु कोषलदेशो द्विविधः
प्राच्योत्तरभेदेन ।

कर्तृत्वकरणत्वाभ्यां
विक्रियेतान्तरिन्द्रियम् ।
विज्ञानमनसी अन्तर्व्वहिश्चैते परस्परम्
॥
काचिदन्तर्मुखा
वृत्तिरानन्दप्रतिविम्बभाक् ।
पुण्यभोगे भोगशान्तौ निद्रारूपेण लीयते
॥
कादाचित्कत्वतो नात्मा
स्यादानन्दमयोऽप्ययम् ।
विम्बभूतो य आनन्द आत्माऽसौ
सर्व्वदास्थितेः ॥
ननु देहमुपक्रम्य निद्रानन्दान्तवस्तुषु ।
माभूदात्मत्वमन्यस्तु न
कश्चिदनुभूयते" ॥)

**कोषकः**, पुं, (कोष एव । कोष + स्वार्थे कन् ।)

अण्डम् । अण्डकोषः । इति
शब्दरत्नावली ॥

**कोषकारः**, पुं, (कोषं करोति स्वपत्रत्वगादिभिरा-

त्मानं छादयति । कोष + कृ +
"कर्म्मण्यण्" । ३ ।
२ । १ । इति अण् ।) इक्षुः । इति
शब्दरत्नावली ॥
इक्षुविशेषः । कुषारि इति भाषा । अस्य
गुणाः ।
गुरुत्वम् । शीतत्वम् ।
रक्तपित्तक्षयापहत्वञ्च ।
इति राजवल्लभः ॥ (कोषं स्ववेष्टनं
स्वमुखनिःसृत-
लालारूपतन्तुभिः करोतीति । कृ +
अण् ।)
कीटविशेषः । गुटिपोका इति भाषा ।
तत्प-
र्य्यायः । तन्त्रकीटः २ । इति जटाधरः
॥
(यथा, महाभारते १२ । ३२९ । २९ ।
"अलं परिग्रहेणेह दोषवान् हि परिग्रहः ।
कृमिर्हि कोषकारस्तु बध्यते
स्वपरिग्रहात्" ॥

पक्षत्रयव्यवस्थापनीयमितिमिताक्षरा ॥ तथा
।
"भक्तो यो यस्य देवस्य पाययेत्तस्य
तज्जलम् ।
समभावे तु देवानामादित्यस्य तु पाययेत् ॥
दुर्गायाः पाययेच्चौरान् ये च शस्त्रोपजीविनः ।
भास्करस्य तु यत्तोयं ब्राह्मणं तन्न पाययेत् ॥
दुर्गायाः स्नापयेच्छूलमादित्यस्य च मण्डलम्
।
अन्येषामपि देवानां स्नापयेदायुधानि च ॥
अत्र, स्वल्पापराधे देवानां
स्नापयित्वायुधोदकम् ।
पाय्यो विकारे चाशुद्धो नियम्यः शुचिरन्यथा"
॥
इति कात्यायनोक्तविशेषान्महापराधे
देवस्नानो-
दकमिति विषयभेदः । रत्नाकरोऽप्येवम् ।
मण्डलं
व्योमेति व्यवहारदीपिका ॥ तस्यां विष्णुः ।
उग्रान्
देवान् समभ्यर्च्च्य तत्स्नानोदकप्रसृतित्रयं
पिबेत् ।
इदं मया न कृतमिति व्याहरन्देवतामुख इति
।
एतदनुसाराद्देवान्यत्र प्रतिज्ञा प्रागुक्ता । तत्र
क्रमः ।
प्राड्विवाको गोमयकृतमण्डलाभ्यन्तरे
धर्म्मावाह-
नादिसर्व्वदेवतापूजां हवनान्तां निर्व्वर्त्य
दक्षिणां
दत्वा समन्त्रकं प्रतिज्ञापत्रं शोध्य शिरसि नि-
धाय यथाविहितं देवं संपूज्य
तत्स्नानोदकमानीय ।
ॐताय त्वंप्राणिनां प्राणः सृष्टेराद्यन्तु
निर्म्मितम् ।
शुद्धेश्च कारणं प्रोक्तं द्रव्याणां देहिनान्तथा ।

तत्रायोध्यायुक्तदेशस्योत्तरकोषलत्वम् ।
यथा,
रघुवंशे । ९ । १ ।
"पितुरनन्तरमुत्तरकोषलान्
समधिगम्य समाधिजितेन्द्रियः ।
दशरथः प्रशशास महारथो
यमवतामवताञ्च धुरि स्थितः" ॥
प्राच्यकोषलस्तु राममातामहस्य । तस्य
राजा अभि-
जनो वा ष्यञ् बहुषु तस्य लुक् ।
तद्देशवासिनि ।
यथा, महाभारते । २ । ३१ । १२ ।
"स विजित्य दुराधर्षं भीष्मकं माद्रिनन्दनः
।
कोषलाधिपतिञ्चैव तथा वेण्वास्तटाधिपम्
।
कान्तारकांश्च समरे तथा प्राक्कोषलान्
नृपान्" ॥)

**कोषवृद्धिः**, स्त्री, (कोषस्य अण्डकोषस्य वृद्धिः ।)

कुरण्डः । इति शब्दरत्नावली ॥ (कोषस्य
वृद्धि-
रिति विग्रहे अर्थसञ्चयवृद्धिः ॥)

**कोषशायिका**, स्त्री, (कोषे पिधानमध्ये शेते तिष्ठ-

तीत्यर्थः । कोष + शी + कर्त्तरि ण्वुल्
ततष्टाप्
अत इत्वम् ।) छुरिका । इति जटाधरः ॥

**कोषातकः**, पुं, (कोषाकारं अतति प्राप्नोतीति ।

कोष + अत + क्वुन् ।) केशः । इति
जटाधरः ॥
(कोषं गच्छति प्राप्नोति
ज्ञानानामाकरत्वात् ।
वेदकठशाखाविशेषः ॥)

**कोषातकी**, स्त्री, (कोषातक + गौरादित्वात् ङीष् ।)

घोषालता । अस्याः फलगुणः ।
कफार्शोनाशि-
त्वम् ॥ पक्वफलगुणः ।
आमाशयशुद्धिकारित्वम्॥
इति राजवल्लभः ॥ (इयमेव क्वचित्
राजपूर्ब्बा

कोषं अथः सह

शब्दसंयोजनरूपग्रन्थविशेषं

करोतीति ।) अभिधानकर्त्ता च ।

तालव्यमध्यो-

ऽप्ययम् ॥

**कोषचञ्चुः**, पुं, (कोषः खङ्गकोष इव चञ्चुर्यस्य ।)

सारसपक्षी । इति शब्दमाला ॥

**कोषपानं**, क्ली, (परीक्षाविशेषार्थं कोषजलस्य प्रसृ-

तित्रयजलस्य पानम् ।)

तत्तदितिकर्त्तव्यताकप्रसृ

तित्रयजलपानरूपपरीक्षाविशेषः । यथा,

--

अथ कोषविधिः । नारदः ।

“पब्बाह्ण सोपवासस्य

स्नातस्यार्द्रपटस्य च ।

कोषातकीति च ख्याता । यथा,

भावप्रकाशे ।

“धामार्गवः पीतपुष्पा जालिनी कृतवेधना

।

राजकोषातकी चेति तथोक्ता राजिमत्फला

॥

राजकोषातकी शीता मधुरा कफवातला

।

पित्तघ्नी दीपनी

श्वासज्वरकासकृमिप्रणुत्” ॥

अस्या व्यवहारो यत्र तद्यथा, --

“कोषातकीनां स्वरसेन नस्यं

तुम्ब्यास्तु वा पिप्पलिसंयुतेन ।

तैलेन वारिष्टभवेन कुर्य्या-

द्वचोपकुल्ये सह माक्षिकेण” ॥

इति वैद्यकचक्रपाणिसंग्रहे

गलगण्डाद्यधिकारे ॥)

ज्योत्स्निका । झिङ्गा इति भाषा ।

ज्योत्स्नावती

रात्रिः । इत्यमरभरतौ ॥

तालव्यमध्यापीयम् ॥

**कोषाम्रं**, क्ली, (कोषे आम्रफलमिव ।) फलविशेषः ।

केओडा इति भाषा । अस्य गुणाः ।

कफवायुना-

शित्वम् । अग्निदीपनत्वम् ।

मलबद्धताकारित्वञ्च ।

इति राजवल्लभः ॥ (क्वचित् पुंलिङ्गोऽपि

दृश्यते ।

यथा, भावप्रकाशे ।

“कोषाम्रः कुष्ठशोथास्रपित्तव्रणकफापहः

।

तत्फलं ग्राहि वातघ्नमम्लोष्णं गुरु

पित्तलम् ।

पक्वन्तु दीपनं रुच्यं लघूष्णं

कफवातहृत्” ॥)

तालव्यमध्यमपीदम् ॥

**कोषी**, स्त्री, (कुष् + अच् । गौरादित्वात् ङीष् ।)

पादुका । इति शब्दरत्नावली ॥ शुङ्गा ।

इति

तालव्यान्ते हेमचन्द्रः ॥ शस्येर शुँया

इति भाषा ॥

**कोषी**, [न्] पुं, (कोषोऽस्त्यस्य इति इनिः ।) आम्र-

“पतिं भार्य्योपतिष्ठेत ध्यायेत् कोष्ठगतञ्च

तम्” ॥

नाभेरुपरिस्थितमणिपूरपद्मम् । यथा, तत्रैव ।

४ । २३ । १४ ।

“संपीड्य पायुं पाष्णिर्भ्यां वायुमुत्सारयन्

शनैः ।

नाभ्यां कोष्ठेष्ववस्थाप्य हृदुरःकण्टशीर्षणि”

॥

प्राकारः । यथा, भागवते । ४ । २८ । ५६ ।

“पञ्चारामं नवद्वारमेकपालं त्रिकोष्ठकम् ।

षट्कुलं पञ्चविपणं पञ्चपृकृति स्त्रीधवम्” ॥

अत्र टीकाचूर्णी त्रिकोष्ठकं त्रिप्राकारमित्याह

॥

तन्त्रोक्तमन्त्रदीक्षाप्रकरणे

अकथहादिचक्रचतुः-

पार्श्वस्थितरेखाचतुष्कयुतस्थानभेदः ॥)

आत्मीये

त्रि । इति मेदिनी ॥

**कोष्णं**, क्ली, (कु ईषत् उष्णम् । कोः कादेशः ।)

ईषदुष्णम् । तत्पर्य्यायः । कवोष्णम् २

मन्दोष्णम् ३

कदुष्णम् ४ । तद्वति त्रि । इत्यमरः । १ । ४

। ३५ ॥

(यथा, रघौ । १ । ८४ ।

“भुवं कोष्णेन कुण्डोध्नी मेध्येनावभृथादपि ।

प्रस्रवेणाभिवर्षन्ती वत्सालोकप्रवर्त्तिना” ॥)

**कोहलः**, पुं, (कोहयति विस्मापयतीति । कुहत्क

विस्मापने + बाहुलकात् कलच् । पृषोदरात्

गुणः ।) मद्यभेदः । इति हेमचन्द्रः ॥

(अस्य गुणा यथा, --

“त्रिदोषो भेद्यवृष्यश्च कोहलो वदनप्रियः” ॥

इति सुश्रुते सूत्रस्थाने ४५ अध्याये ॥ * ॥

कौ

पृथिव्यां पार्थिवकोलाहलेन सह हलति

स्पर्द्धते

पृषोदरात् ओत्वं ।) वाद्यभेदः ।

नाट्यशास्त्रप्रवक्ता

मुनिविशेषः । इति मेदिनी ॥ (अयमेव सर्पसत्रे

**कौञ्चः**, पुं, (क्रुञ्च एव स्वार्थे अण् । पृषोदरात् रलोपः ।)

क्रौञ्चपर्व्वतः । इति त्रिकाण्डशेषः ॥

**कौञ्जायनः**, पुं, (कुञ्जस्य पुमपत्यम् । “गोत्रेकुञ्जादिभ्यश्च

फञ्” । ४ । १ । ९८ । इति फञ् ।)

कुञ्जस्य

पुत्रादिः । इति । व्याकरणम् ॥

**कौञ्जायनी**, स्त्री, (कुञ्जस्यापत्यं स्त्री । “गोत्रे कुञ्जा-

दिभ्यश्च फञ्” । ४ । १ । ९८ । इति

फञ् । ततः स्त्रियां

ङीष् ।) ब्राह्मणी । इति जटाधरः ॥

कुञ्जस्य स्त्र्यप-

त्यम् । इति मुग्धबोधम् ॥

**कौञ्जायन्यः**, पुं, (“गोत्रे कुञ्जादिभ्यश्च फञ्” । ४ । १ ।

९८ । इति फञ् । ततः स्वार्थे ञ्य

प्रत्ययः ।) कुञ्जस्य

पुमपत्यम् । इति मुग्धबोधम् ॥

**कौटः**, पुं, (कुटे गिरौ भवः । “तत्र भवः” । ४ ।

३ । ५३ । इत्यण् ।) कुटजवृक्षः । इति

भाव-

प्रकाशः ॥ (अस्य गुणादयः कुटजशब्दे

दर्शनीयाः ॥

कूटे मायायां भवः अण् । कपटसाक्षी ॥

कूट्यां

वशीकृतमायायां भव इत्यण् ।

स्वाधीनतन्त्रः ॥

इति व्युत्पत्तिलभ्योऽर्थः ॥)

**कौटकिकः**, त्रि, (कूटमेव इति स्वार्थे कन् । कूटकं

मांसं पण्यमस्य इति ठञ् ।) मांसिकः ।

मांस-

विक्रेता । इति शब्दरत्नावली ॥

**कौटजः**, पुं, (कुटमेव कौटं स्वार्थे अण् । तत्र जायते

इति । “अन्येभ्योऽपीति” । जनेर्डः ।)

कुटजवृक्षः ।

वृक्षः । इति शब्दमाला ॥

**कोष्ठः**, पुं, (कुष् ग निष्कर्षे + "उषिकुषिगतिभ्यस्थन्" ।
उणां । २ । ४ । इति थन् ।) कुसूलः । (यथा,
महाभारते । २ । ५ । ६८ ।
"कच्चित् कोषश्च कोष्ठश्च वाहनं
द्वारमायुधम् ।
आयश्च कृतकल्याणैस्तव
भक्तैरनुष्ठितः" ॥)
गृहमध्यम् । (यथा, भागवते । ९ । १० ।
१७ ।
"सा वानरेन्द्रबलरुद्धविहारकोष्ठ-
श्रीद्वारगोपुरसदोभलभीविटङ्का॥)
कुक्षिमध्यम् । यथा, वैद्यके ।
"स्थानान्यामाग्निपक्वानांमूत्रस्य
रुधिरस्य च ।
हृदूण्डुकः फुष्फुषश्च कोष्ठ
इत्यभिधीयते" ॥
"कोष्ठः पुनरुच्यते महास्रोतः शरीरमध्यं
महा-
निम्नमामपक्वाशयश्चेति
पर्य्यायशब्दैस्तन्त्रे सरोग-
मार्ग आभ्यन्तरः" ॥
"वीसर्पश्वयथुगुल्मार्शो विद्र-
ध्यादयः कोष्ठमार्गानुसारिणो भवन्ति
रोगाः" ॥
इति चरके सूत्रस्थाने ११ अध्याये ॥
कोष्ठाङ्गानि
यथा, --
"सप्तचाधाराः रक्तस्यास्य क्रमात् परे ।
कफामपित्तपक्वानां वायोर्मूत्रस्य च
स्मृताः ॥
गर्भाशयोऽष्टमः स्त्रीणां
पित्तपक्वाशयान्तरे ।
कोष्ठाङ्गानि स्थितान्येषु हृदयं
क्लोमफुष्फषम्" ॥
इति च वाभटे शारीरस्थाने ३ अः ॥
पञ्चदश
कोष्ठाङ्गानि तद्यथा, "नाभिश्च हृदयञ्च
क्लोम च
सदस्य आसीत् । यथा, महाभारते । १ ।
५३ । ९ ।
"कोहलो देवशर्म्मा च मौद्गल्यः समसौरभः"
॥)

**कौकृत्यं**, क्ली, (कुत्सितं अज्ञानजन्यं कृत्यं कार्य्यम् ।
तस्मात् भवमित्यण् ।) अनुतापः ॥ (स्वार्थे
अण् ।)
अयुक्तकरणम् । इति मेदिनी ॥

**कौक्कुटिकः**, पुं, (कुक्कटवद्दम्भेन विहरति । यद्वा,
कुक्कुटीं मायां कापट्यादिकं वा
पादविक्षेपस्थानञ्च
पश्यति इति । "संज्ञायां ललाटकुक्कुट्यौ
पश्यति" ।
४ । ४ । ४६ । इति ठक् ।) दाम्भिकः ।
अदूरे-
रितेक्षणः । कीटादिवधभीत्या संयतचक्षुः
पाद-
निक्षेपदेशदर्शी भिक्षुः । इत्यमरभरतौ ॥
अदूर-
दर्शनशीलः । इति सारसुन्दरी ॥

**कौक्कुटिकन्दलः**, पुं, (कुक्कुटस्य वह्निस्फुलिङ्गस्यायं
इति इञ् कौक्कुटिः । कौक्कुटिरिव कन्दलः
कपालो
यस्य । अस्याग्निस्फुलिङ्गवत् चक्षुष्मत्त्वात्
भोगादौ
च स्फुलिङ्गवत् चाकचिक्यत्वात्तथात्वम् ।)
सर्प-
विशेषः । वोडासाप इति भाषा । तत्पर्य्यायः
।
भाण्डपुष्पः २ । इति त्रिकाण्डशेषः ॥

**कौक्षेयकः**, पुं, (कुक्षौ कोषे तिष्ठति इति ढकञ् ।)
खड्गः । इत्यमरः । २ । ८ । ८९ ॥

**कौङ्कः**, पुं, (कोङ्क + खार्थे अण् ।) देशविशेषः । इति
शब्दरत्नावली ॥ कोकण इति ख्यातः ॥

**कौङ्किणः**, पुं, (कोङ्कण + खार्थे अण् । ततः पृषोदरा-
दित्वात् इकारः ।) कोङ्कणदेशः ॥ इति शब्द-
रत्नावली ॥
इत्यमरटीकायां रायमुकुटः ॥ (अस्य
गुणादयः
कुटजशब्दे ज्ञेयाः ॥)

**कौटतक्षः**, पुं, (कौटः स्वाधीनः स चासौ तक्षाचेति
कर्म्मधारयः । "ग्रामकौटाभ्याञ्च तक्ष्णः"
। ५ । ४
९५ । इति टच् ।) स्वकर्म्मजीवी
स्वगृहस्थितो-
ऽनधीनस्तक्षा । इत्यमरः । २ । १० । ९
॥ स्वाधीन
छुतर इति भाषा ॥

**कौटल्यः**, पुं, (कुटः घटः तं लान्ति कुटलाः कुल-
धान्याः तेषामपत्यं कौटल्यः । गगदिर्यञ्
।)
वात्सायनमुनिः । इति हेमचन्द्रः ॥

**कौटसाक्षी**, [न्] पुं, कूटमेव कौटं स्वार्थे अण् ।
तादृशः साक्षी ।) मिथ्यासाक्षी इति
मिताक्षरा ॥

**कौटिकः**, त्रि, (कूटेन मृगादिबन्धनयन्त्रेण चरति ।
"चरति" । ४ । ४ । ८ । इति ठक् ।)
मांस-
विक्रेता । कषाइ इति भाषा । तत्पर्य्यायः
। वैतं-
सिकः २ मांसिकः ३ । इत्यमरः । २ ।
१० । १४ ॥

**कौटिलिकः**, पुं, (कुटिलिका व्याधानां गतिविशेषः
कर्म्मारनिर्म्मितलोहास्त्रविशेषश्च । तया
हरति
मृगान् अङ्गारान् वा । "अण्
कुटिलिकायाः" ।
४ । ४ । १८ । इत्यण् ।) व्याधः ।
लौहकारः । इति
केचित् ॥

**कौटिल्यं**, क्ली, (कुटिलस्य भावः इति ष्यञ् ।
चाणक्यमूलकम् । इति राजनिर्घण्टः ॥
कुटिलता ।

| | | |
|---|---|---|
| यकृच्च प्लीहा च वुक्कौ च वस्तिश्च पुरीषाधार-<br>श्चामाशयश्चेति पक्वाशयश्चोत्तरगुदञ्चाधरगुदञ्च क्षुद्रान्त्रञ्च स्थूलान्त्रञ्च वपावहनञ्चेति” । इति च<br>चरके शारीरस्थाने ७ अध्याये ॥<br>उदरम् । यथा, भागवते । ६ । १८ । ५३ । | | यथा । “कौटिल्यं कचनिचये करचरणाधरतलेषु<br>रागस्ते । काठिन्यं कुचयुगले तरलत्वं नयनयो-<br>र्वसति” ॥ इति कात्यप्रकाशः ॥<br>**कौटुम्बिकः**, पुं, (कुटुम्बे कुटुम्बभरणे प्रसृतः व्याप्त<br>आसक्तो वा । कुटुम्ब + ठक् ।) कुटुम्बी । कुटुम्ब-<br>विशिष्टः । कुटुम्वोऽस्यास्तीत्यर्थे ष्णिकप्रत्ययः । इति |

मुग्धबोधमतम् ॥ (यथा, श्रीमद्भागवते ।
५ । १३ । ८ ।
"पदे पदेऽभ्यन्तरवह्निनार्द्दितः
कौटुम्बिकः क्रुध्यति वै जनाय" ॥)

**कौडविकं**, त्रि, (कुडवस्य वापः । "तस्य वापः" । ५ ।
१ । ४५ । इति ठञ् ।)
कुडवपरिमितवीजवपन-
योग्यक्षेत्रम् । इत्यमरटीकायां रायमुकुटः
॥

**कौणपः**, पुं, (कुणपस्त्रिधातुकं शरीरं शवो वा तं
भक्षयितुं शीलमस्य । इत्यण् ।) राक्षसः । इत्य-
मरः । १ । १ । ६२ ॥ (यथा, महाभारते । १ ।
१७१ । १४ ।
"न कौणपाः शृङ्गिणो वा न च
देवाङ्गनस्रजः" ॥
वासुकिवंशोद्भवः सर्पविशेषः । यथा, महाभा-
रते । १ । ५७ । ५ ।
"पिच्छलः कौणपश्चक्रः कालवेगः
प्रकालनः ।
हिरण्यबाहुः शरणः कक्षकः कालदण्डकः
।
एते वासुकिजा नागाः प्रविष्टा हव्यवाहने"
॥)

**कौणपदन्तः**, पुं, (कौणपस्य दन्ता इव दन्ता अस्य ।)
भीष्मः । इति त्रिकाण्डशेषः ॥

**कौण्डिन्यः**, पुं, (कुण्डिनस्य स्वनामख्यातमुनिविशेषस्य
गोत्रापत्यं इति । गर्गादित्वात् यञ् ।) कुण्डिन-
मुनिपुत्त्रः । तत्पर्य्यायः । विष्णुगुप्तः २ । इति
त्रिकाण्डशेषः ॥

इति ब्रह्मवैवर्त्तपुराणम् ॥

**कौद्रविकं**, क्ली, (कोद्रवं तत् निमित्तमस्य इति
ठञ् ।) सौवर्च्चललवणम् । इति
राजनिर्घण्टः ॥

**कौद्रवीणं**, त्रि, (कुत्सितं यथा तथा द्रवति इति ।
पृषोदरात् सिद्धे कोद्रवं
कुत्सितधान्यभेदः तस्य
भवनं उत्पत्तिस्थानं । "धान्यानां भवने
क्षेत्रे खञ्" ।
५ । २ । १ । इति खञ् ।)
कोद्रवधान्योद्भवयोग्यक्षेत्रम् ।
इत्यमरः । २ । ९ । ८ । कोदोर क्षेव
इति भाषा ॥

**कौन्तिकः**, पुं, (कुन्तास्त्रेण प्रासेन युध्यते । कुन्तः
प्रासः प्रहरणमस्येति वा । ठञ् ।)
प्रासिकः ।
प्रासास्त्रधारी योद्धा । इत्यमरः । २ । ८
। ७० ॥

**कौन्ती**, स्त्री, (कुन्तिषु देशविशेषेषु भवा । "तत्रभवः" ॥
४ । ३ । ५३ । इति अण् । ततो ङीष् ।) रेणुका-
नामगन्धद्रव्यम् । इत्यमरः । २ । ४ ।
१२० ॥
(अस्याः पर्य्यायाः यथा, --
"रेणुका राजपुत्त्री च नन्दिनी कपिला
द्विजा ।
भस्मगन्धा पाण्डुपुत्त्री स्मृता कौन्ती
हरेणुका" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमभागे ॥
पर्य्यायान्तरञ्च यथा, --
"हरेणु रेणुका कौन्ती ब्राह्मणी
हेमगन्धिनी" ॥
इति वैद्यकरत्नमालायाम् । गुणाश्चास्या
रेणुका-

इत्युक्तावधिके "कौमारं पञ्चमावधि" । इत्यन्ते
वयोवस्थाभेदे । सा तु
जन्मावधिपञ्चमवर्षपर्य्यन्ता ।
इत्यर्थः ॥) तन्त्रमते षोडशवर्षपर्य्यन्ता ।
(यथा,
भगवद्गीतायाम् । २ । १३ ।
"देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति" ॥
पुं, कुमारस्य सनत्कुमारस्य इदं अण् सृष्टिभेदः
।
यथा, "कौमार आर्षः प्राजापत्यो मानव
इत्यादि
सर्गनामानि" । इति श्रीधरः । तथा च भाग-
वते । १ । ३ । ६ ।
"स एव प्रथमं देवः कौमारं सर्गमाश्रितः ।
चचार दुश्चरं ब्रह्मा ब्रह्मचर्य्यमखण्डितम्" ॥)
तद्वति पुं, स्त्री । इति शब्दमाला ॥ अपूर्ब्बपतिं
कुमारीं पतिरुपपन्नः "कौमारापूर्ब्बवचने । ४ ।
२ । १३ । इति
द्वितीयान्तादुपयमनकर्त्तर्य्यण्प्रत्य-
येन साधुः ॥ अपूर्ब्बपतिकुमारीपतिः । इति
सिद्धान्तकौमुदी ॥)

**कौमारी**, स्त्री, मातृकाविशेषः । सा तु कार्त्तिकेय-
शक्तिः । इति शब्दमाला ॥ यथा, --
"कौमारी शक्तिहस्ता च मयूरवरवाहना ।
योद्धुमभ्याययौ दैत्यानम्बिका गुहरूपिणी" ॥
इति मार्कण्डेयपुराणे देवीमाहात्म्ये । ८१ ।
१६ ॥
(अपूर्ब्बपतिः कुमारी पतिमुपपन्ना । "कौमारा-
पूर्ब्बवचने" । ४ । २ । १३ । इति स्वार्थे अण्
प्रत्ययेन साधुः ततो ङीष् ।
अपूर्ब्बभार्य्यकुमार-
पत्नी । यथा, भट्टौ । ७ । ९० ।
"उपलम्भ्यामपश्यन्तः कौमारीं पतताम्बर" !
॥
पञ्चमवर्षीया बालिका । कौमारी अवस्था ।
यथा,
भागवते । ३ । २ । २८ ।

**कौतुकं**, क्ली, (कुतुक + प्रज्ञादित्वात् स्वार्थे अण् ।

कुतुकस्य भावः इति युवादित्वात् अण्

वा ।)

कुतूहलम् इत्यमरः । १ । ७ । ३१ ॥

(यथा,

राजतरङ्गिणी । ५ । ३६४ ।

"चक्रतुः कौतुकोद्ग्रीवां सभां

चित्रार्पितामिव ॥)

अभिलाषः । (यथा, कथासरित्सागरे ।

"पश्यन्त्यास्तं नृपं तस्या

लज्जाकौतुकयोर्दृशि ।

अभूदन्योन्यसंमर्द्दो रचयन्त्यां गतागतम्"

॥)

उत्सवः । (यथा, भागवते । ४ । ३ । १३

।

"कथं सुतायाः पितृगेहकौतुकं

निशम्य देहः सुरवर्य्य ! नेङ्गते" ॥)

नर्म्म । हर्षः । (यथा, भागवते । १ । १७

। २५ ।

"इयञ्च भूर्भगवता न्यासितोरुभरा सती ।

श्रीमद्भिस्तत्पदन्यासैः सर्व्वतः

कृतकौतुका" ॥)

परस्परायातपङ्गलम् । विवाहसूत्रम् ।

(यथा,

कुमारे । ७ । २ ।

"वैवाहिकैः कौतुकसंविधानै-

र्गृहे गृहे व्यग्रपुरन्ध्रीवर्गम्" ॥)

गीतादिभोगः । इति मेदिनी ॥ गीतादिः ।

भोग-

कालः । इति हेमचन्द्रः ॥

**कौतूहलं**, क्ली, (कुतूहलस्य भावः कर्म्म वा युवादि-

त्वात् अण् । यद्वा, कुतूहलमेव इति

प्रज्ञाद्यण् ।)

कुतूहलम् । अपूर्ब्बवस्तुदिदृक्षाद्यतिशयः

। इत्य-

मरः । १ । ८ । ३१ ॥ (यथा, मार्कण्डेये

। ८ । १ ।

"भवद्भिरिदमाख्यातं यथाप्रश्नमनुक्रमात्

।

शब्दे बोद्धव्याः ॥)

**कौन्तेयः**, पुं, (कुन्त्या अपत्यं इति ढक् ।) कुन्तीपुत्त्रः ।

स तु युधिष्ठिरादिः । इति महाभारतम् ।

(यथा, भगवद्गीतायाम् । २ । ३ ।

"मा क्लैव्यं गच्छ कौन्तेय !

नैतत्त्वय्युपपद्यते" ॥)

अर्ज्जुनवृक्षः । इति राजनिर्घण्टः ॥

**कौपं**, क्ली, (कूपे भवं कूपस्येदं वा इत्यण् ।) कूपोद-

कम् । अस्य गुणाः यथा, --

"कौपं पयो यदि स्वादु त्रिदोषघ्नं हिमं

लघु ।

तत्क्षारं कफवातघ्नं दीपनं पित्तकृत्

परम्" ॥

इति भावप्रकाशः ॥ (सुश्रुतोक्ता गुणा

यथा, --

"सक्षारं पित्तलं कौपं श्लेष्मघ्नं दीपनं

लघु" ॥

कौपसलिलसेवने कालनिर्द्देशः । यथा,

तत्रैव ।

"वसन्ते कौपं प्रास्रवणं वा ग्रीष्मेष्वेवम्"

॥)

**कौपीनं**, क्ली, (कूपपतनमर्हतीति । "शालीनकौपीने

अघृष्टा कार्य्ययोः" । ५ । २ । २० ।

इति साधुः ।)

पापम् । तत्साधनत्वात् तद्वद्गोप्यत्त्वात्

पुरुषलि-

ङ्गमपि । तत्सम्बन्धात् तदाच्छादनमपि

। इति सि-

द्धान्तकौमुदी ॥ अकार्य्यम् । गुह्यदेशः ।

इत्यमरः ॥

चीरम् । इति मेदिनी ॥ तत्तु

मेखलाबद्धपरिधेय-

वस्त्रखण्डम् । कपिनी इति भाषा ।

तत्पर्य्यायः ।

कच्छा २ कच्छटिका ३ कक्षा ४ धटी

५ । इति

त्रिकाण्डशेषः ॥ (यथा, भागवते । ७ ।

१३ । २ ।

"कौमारीं दर्शयंश्चेष्टां प्रेक्षणीयो व्रजौकसाम्"

॥)

वाराहीकन्दः । इति राजनिर्घण्टः ॥

**कौमुदः**, पुं, (कौ पृथिव्यां मोदन्ते जना यस्मिन् ।

मुद् + कः । सप्तम्या अलुक् ।) कार्त्तिकमासः

।

इति त्रिकाण्डशेषः ॥ (यथा, महाभारते ।

"एतैरन्यैश्च राजेन्द्रैः पुरा मांसं न भक्षितम् ।

शारदं कौमुदं मासं ततस्ते स्वर्गमाप्नुयुः ॥

कौमुदन्तु विशेषेण शुक्लपक्षं नराधिपः ।

वर्ज्जयेत् सर्व्वमांसानि धर्म्मो ह्यत्र विधीयते"

॥)

**कौमुदिका**, स्त्री, (कौमुदी + संज्ञायां कन् ततो

ह्रस्वः टाप् च ।) उमासखीविशेषः । इति

शब्द-

माला ॥ (स्वार्थे कन् ह्रस्वः टाप् च ।

ज्योत्स्ना ।

त्रि, चतुरर्थ्यां कुमुदादित्वात् ठक् । कौमुदिकः

।

कुमुदाख्यपर्व्वतसन्निकृष्टदेशविशेषः ॥)

**कौमुदी**, स्त्री, (कुमुदस्य इयं प्रकाशकत्वात् "तस्येदं" ।

४ । ३ । १२० । इत्यण् ततो ङीप् ।)

ज्योत्स्ना ।

इत्यमरः । १ । ३ । १६ । (यथा, कुमारे । ४

३३ ।

"शशिना सह याति कौमुदी ॥

सह मेघेन तडित्प्रलीयते ।

प्रमदाः पतिवर्त्मगा इति

प्रतिपन्नं हि विचेतनैरपि" ॥)

उत्सवः । इति धरणी । (यथा, महाभारते १३

पर्व्वणि ।

महत् कौतूहलं मेऽस्ति हरिश्चन्द्रकथां प्रति” ॥)

**कौदालीकः**, पुं, (कुं भूमिं दारयतीति । कुदारः ।

तेन आचरतीति ईकन् रलयो रैक्यात् रस्य लत्वम् ।)
कुदालीकः ततः स्वार्थे अण् ।)
वर्णसङ्करजाति-
विशेषः । स तु रजक्यां तीवराज्जातः ।

“विभृयाद् यद्यसौ वासः
कौपीनाच्छादनंपरम्” ॥)

**कौपोदकी**, स्त्री, (कौमोदकी इति पृषोदरादित्वात्

मस्य पत्वम् ।) कौमोदकी । इति भरतो
द्विरूप-
कोषश्च ॥

**कौमारं**, क्ली, (कुमारस्य कर्म्म भावो वा । वयोवचन-

त्वादञ् ।) कुमारावस्था ।
(“जातः कुं पृथिवीं पद्भ्यां भारयेत्
तत्कुमारकः ।
इति प्रमाणतो विद्धि कौमारं
प्राग्भवाब्दतः” ॥

"अकालकौमुदीञ्चैव चक्रतुः
सार्व्वकालिकीम्" ॥
कौमुदस्य कार्त्तिकमासस्य इयं
"तस्येदम्" । ४ ।
३ । १२० । इति अण् । ततो ङीप् ।
यदुक्तम् ।
"कुशब्देन मही ज्ञेया मुद हर्षे ततो द्वयम्
।
धातुज्ञैर्नियमैश्चैव तेन सा कौमुदी
स्मृता" ॥)
कार्त्तिकोत्सवः । स तु
कार्त्तिकीपूर्णिमायां कर्त्तव्यः ।
इति त्रिकाण्डशेषः । कार्त्तिकीपूर्णिमा ॥
आश्विनीपूर्णिमा । इति शब्दरत्नावली ।
(यथा, --
"आश्विने पौर्णमास्यान्तु चरेज्जागरणं
निशि ।
कौमुदी सा समाख्याता कार्य्या
लोकविभूतये" ॥
दीपोत्सवतिथिः । यथा,
रघुप्रभृतिटीकाकृ-
न्मल्लिनाथधृतभविष्योत्तरवचनम्।
"कौ मोदन्ते जना यस्यां तेनासौ कौमुदी
स्मृता" ॥
कुमुदान्येव कौमुदी । सुदी वा सालुक
इति भाषा ॥)

**कौमुदीचारः**, पुं क्ली, (कौमुद्याः ज्योत्स्नायाः चारः
प्राशस्त्यमत्र समये ।) कोजागरपूर्णिमा ।
इति
त्रिकाण्डशेषः ॥

**कौमुदीपतिः**, पुं, (कौमुद्याः ज्योत्स्नायाः पतिः ।)
चन्द्रः । इति हेमचन्द्रः ॥

**कौमुदीवृक्षः**, पुं, (कौमुद्याः इव प्रकाशिकायाः
दीपशिखाया वृक्ष इवाधारः ।) दीपवृक्षः
।
इति हारावली ॥ दीपगाच्छा पिलसुज
इत्यादि
नागविशेषः । यथा, महाभारते । १ । ३५ ।
१३-१४ ।
"कौरव्यो धृतराष्ट्रश्च शङ्कपिण्डश्च वीर्य्यवान् ।
विरजाश्च सुबाहुश्च शालिपिण्डश्च वीर्य्यवान्" ॥)

**कौर्प्यः**, पुं, वृश्चिकराशिः । यथा, दीपिकायाम् ।
"क्रियतावरिजित्तमकुलीरलेयपाथेय
यूककौर्पाख्याः ।
तौक्षिक आकोकेरो हृद्रोगश्चान्त्यभं चेत्थम्" ॥)

**कौलः**, त्रि, (कुले सत्कुले भव इत्यण् ।) सत्कुलोद्भवः ।
तत्पर्य्यायः । आन्वयिकः २ । इति त्रिकाण्डशेषः
॥
(कुले कुलाचारे रतः कुलं कुलतत्त्वं वेत्ति वा
इत्यण् ।) दिव्यवीरपशुभावत्रयान्तर्गतदिव्यभाव-
रतः । स तु ब्रह्मज्ञानी । तद्यथा, --
"दिव्यभावरतः कौलः सर्व्वत्र समदर्शनः" ॥
इति कुलार्णवतन्त्रम् ॥
"पशोर्वक्त्राल्लब्धमन्त्रः पशुरेव न संशयः ।
वीराल्लब्धमनुर्व्वीरः कौलाच्च ब्रह्मविद्भवेत्" ॥ इति
महानीलतन्त्रम् ॥ (कुलमधिकृत्य कृतो ग्रन्थः ।
कुलाचारतत्त्वविधिप्रतिषेधोपदेशसाध्यसाधन-
व्यापारविशिष्टकुलोपनिषदादिग्रन्थविशेषः ॥)

**कौलकेय्यः**, त्रि, (कुले सत्कुले भव इति ढक् कुक् च ।)
सत्कुलोद्भवः । (कुलटायाः अपत्यं इति ढक् ।
पृषोदरात् ततः कश्च ।) असतीपुत्रे, पुं । इति
शब्दरत्नावली ॥

**कौलटिनेयः**, पुं स्त्री, (कुलटाया अपत्यं । "कुलटाया-
वा" । ४ । १ । १२७ । इति । इनङ् । स्त्रीभ्यो
ढक् ।) असतीपुत्रः । तत्पर्य्यायः । कौलटेयः २ ।
इत्यमरः ॥ कौलटेरः ३ । इति तट्टीकासार-
सुन्दरी । २ । ६ । २७ ॥ सती या भिक्षार्थं कुलानि
गृहाणि अटति न तु जारार्थं सापि कुलटा
तत्पुत्त्रोऽपि ॥

**कौलटेयः**, पुं, स्त्री, (कुलटायाः असत्याः अपत्यं इति
ढक् ।) कौलटिनेयः । असतीसुतः । इत्यमरः ।
२ । ६ । २६ ॥ (कुलानि गृहाणि भिक्षार्थं अटति
या

**कौलिकः**, पुं, (कुलं सूत्रादिकं वयति वस्त्रत्वेनावरणा-
दिकं आपादयतीति । ठक् ।)
तन्त्रवायः । इति
शब्दमाला ॥ (कु कुत्सितं
जघन्याचारं लातीति ।
कुलः दुःशीलः ततः स्वार्थे ठक् ।)
पाषण्डः । इति
त्रिकाण्डशेषः । (कुलादागतमिति
ठक् ।) कुलपर-
म्परायाते, त्रि ॥ (यथा, पञ्चतन्त्रे ।
"वर्जयेत् कौलिकाचारं मित्रं
प्राज्ञतरो नरः" ॥
कुले कुलागमे कुलतन्त्रे
शिवोक्तशास्त्रे इति यावत्
सिद्धः इति ठक् । कुलतन्त्रज्ञः ॥
कौलं कुलधर्म्मं
प्रवर्त्तयति तत्त्वज्ञानं
शिष्यपरम्परोपदेशेन विस्ता-
रयति इति ठक् । कुलधर्म्मप्रवर्त्तकः
शिवः ॥ कुलं
कुलाचारः प्रयोजनमस्य इति ठक् ।
ब्रह्मतत्त्वज्ञः ।
यथा, श्रुतौ । "शन्नः कौलिकः" ॥)

**कौलीनं**, क्ली, (कौ पृथिव्यां लीनम् । भूलीनपदार्था-
नामिव एतेषामप्रकाशतया तथात्वम्
।) गुह्यम् ।
जन्यम् । कुकर्म्म । (कुलीनस्य
भावः । युवादित्वा-
दण् ।) कुलीनत्वम् । (यथा,
रामायणे ।
"सदश्व इव मर्य्यादां कौलीनां
नाभ्यवर्त्तत" ॥)
पश्वहिपक्षिणां युद्धम् । इति मेदिनी
॥ कौलेय-
कः । इति विश्वः ॥ (ली भावे क्तः
तस्य नत्वम् । लीनं

भाषा ॥

**कौमोदकी**, स्त्री, (कोः पृथिव्याः पालकत्वात् मो-

दकः । कुमोदको विष्णुः । तस्येयं
इत्यण् ततो
ङीप् ।) विष्णुगदा । इत्यमरः । १ । १ ।
३० ॥
(यथा, भागवते । ८ । ४ । १९ ।
"श्रीवत्सं कौस्तुभं मालां गदां कौमोदकीं
मम" ॥)

**कौमोदो**, स्त्री, (कुं पृथ्वीं मोदयति नन्दयतीति ।

कुमोदः विष्णुः तस्येयं इति अण् ततो
ङीप् ।)
विष्णुगदा । इति शब्दरत्नावली ॥

**कौरवः**, पुं स्त्री, (कुरोरपत्यमिति अण् । कुरोरयं

इति कच्छादित्वादण् वा ।
कुरुराजसन्ततिः ।
इति महाभारतम् ॥ (यथा, महाभारते ।
१ ।
द्रुपदशासने १३९ । १६ ।
"तमुद्यतं रथेनैकमाशुकारिणम्बहवे ।
अनेकमिव सन्त्रासान्मेनिरे तत्र
कौरवाः" ॥
कुरुसम्बन्धिदेशः । यथा, मेघदूते । ५०
।
"क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं
तद्भजेथाः" ॥
स्त्रियां ङीप् कौरवी
कुरुसम्बन्धिनीत्यर्थः । यथा,
महाभारते । १ । १३०१ । १५ ।
"द्रुपदः कौरवान् दृष्ट्वा प्राधावत
समन्ततः ।
शरजालेन महता मोहयन् कौरवीं चमूम्"
॥)

**कौरव्यः**, पुं, (कुरोरपत्यम् । "कुर्व्वादिभ्यो ण्यः" । ४ ।

१ । १५१ । इति ण्यः ।) कौरवः ।
(यथा, महाभारते । ३ । २३२ । ५५ ।
"अनिशायां निशायाञ्च सहायाः
क्षुत्पिपासयोः ।

सती सापि कुलटा । तस्या अपत्येऽपि इति
कश्चित् ॥ स्त्रियां ङीप् कौलटेयी ॥)

**कौलटेरः**, पुं स्त्री, (कुलानि गृहाणि व्यभिचारार्थं

अटति सा कुलटा । तस्याः असत्याः अपत्यम् ।
"क्षुद्राभ्यो वा" । ४ । १ । १३१ । इति द्रक् ।)
असतीसुतः । इत्यमरः । २ । ६ । २६ ॥
कौलटिनेयः ।
इति सारसुन्दरी । (कुलानि गृहाणि भिक्षार्थ-
मटति या सती सापि कुलटा तस्या अपत्येऽपि ।
इति कश्चित् । स्त्रियां ङीप् कौलटेरी ॥)

**कौलत्थीनं** त्रि, (कुलत्थस्य कुलत्थाख्यकलायविशेषस्य

भवनं क्षेत्रं वा इति । "धान्यानां भवने क्षेत्रे
खञ्" । ५ । २१ । इति । खञ् ।) कुलत्थकला-
योद्भवक्षेत्रम् । इत्यमरटीकायां भरतः ॥

**कौलवः**, पुं, ववाद्येकादशान्तर्गततृतीयकरणम् ।

तत्र जातस्य फलं यथा, --
"वाग्मी विनीतो नितरां स्वतन्त्रः
प्रागल्भ्ययुक्तो मनुजो महौजाः ।
सुसम्मतः स्याद्विदुषां कृतघ्न-
श्चेत् कौलवाख्यं करणं प्रसूतौ" ॥
इति कोष्ठीप्रदीपः ॥

लयः । कौ पृथिव्यां लीनं लयो
यस्मात् । कुलीनं
भूमिलयमर्हतीति अण् वा ।)
लोकवादः ।
इत्यमरः । ३ । ३ । ११६ ।
(यथा, रघौ । १४ । ८४ ।
"कौलीनभीतेन गृहान्निरस्ता
न तेन वैदेहसुता मनस्तः" ॥
निन्दा । यथा, तत्रैव । १४ । ३६ ।
"कौलीनमात्माश्रयमाचचक्षे
तेभ्यः पुनश्चेदमुवाच वाक्यम्" ॥)

**कौलीरा**, स्त्री, (कुलीरः कर्कटः तच्छृङ्गाकारो-

ऽस्त्यस्या इत्यण् । ततष्टाप् ।)
कर्कटशृङ्गी । इति
राजनिर्घण्टः ॥
(कर्कटशृङ्गीशब्देऽस्या विवृति-
र्ज्ञेया ॥)

**कौलेयः**, त्रि, (कुले सत्कुले भवः इति बाहुलकात्

ढक् ।) कुलीनः । इति भरतो
द्विरूपकोषश्च ॥

**कौलेयकः**, पुं, (कुले भवः । "कुलकुक्षिग्रीवाभ्यः श्वास्य-

लङ्कारेषु । ४ । २ । ९६ । इति
ढकञ् ।) कुक्कुरः ।
इत्यमरः । २ । १० । २१ ॥
(कुलस्यापत्यम् । "अपूर्ब्ब-
पदादन्यतरस्यां यड्ढकञौ" । ४ । १
। १४० ।
इति ढकञ् ।) कुलीने त्रि । इति
मेदिनी ॥

**कौल्माषीणं**, त्रि, (कुल्माषाणां धान्यकुलत्थादीना

भवनं क्षेत्रं इति खञ् ।)
कुल्माषधान्योद्भवक्षेत्रम् ।
इत्यमरटीकायां रायमुकुटः ॥

**कौल्यः**, त्रि, (कुले सत्कुले भवः बाहुलकात् ष्यञ् ।)

| | | |
|---|---|---|
| आराधयन्त्याः कौरव्यांस्तुल्या रात्रिरहश्च मे” ॥ कौरव्याः ब्राह्मणाः कुरुसम्बन्धिनो ब्राह्मणा इत्यर्थः । क्षत्त्रिये तु । “कुर्व्वादिभ्यो ण्यः” । ४ । १ । १७२ । इति ण्ये कृते तद्राजस्य बहुषु तेनै- वास्त्रियामिति बहुत्वे लुकि कुरव इति बोध्यम् ॥ | | कुलीनः । इति भरतो द्विरूपकोषश्च ॥ **कौवलं**, क्ली, (कुवलमेव इति । प्रज्ञादित्वात् स्वार्थे णः ।) कुवलम् । कोलिफलम् । इति भरतो द्विरूपकोषश्च ॥ **कौवेरं**, क्ली, (कुवेरो अधिष्ठात्री देवताऽस्य इत्यण् ।) कुष्ठम् । कुड् इति भाषा । इति शब्दरत्नावली ॥ (कुवेरस्य इदं इत्यण् ।) कुवेरसम्बन्धिनि तत्कार्य्ये च त्रि । यथा, मार्कण्डेये । ८५ । २ । |

"कौवेरमथ यास्यञ्च चक्राते वरुणस्य च" ॥

**कौवेरी**, स्त्री, (कुवेरः अधिष्ठात्री देवता अस्या इत्यण् । ततो ङीप् ।) उत्तरा दिक् । यथा, --
"द्विग्विभागे तु कौवेरी दिक् शिवा प्रीतिदायिनी" ॥
इति तिथ्यादितत्त्वम् । कुवेरशक्तिश्च ॥

**कौशं**, क्ली, (कुशाः प्राचुर्य्येण भूम्ना वा सन्त्यत्र इत्यण् ।)
कान्यकुब्जदेशः । इति हेमचन्द्रः ॥ (कुश + स्वार्थे अण् । कुशद्वीपः । यथा, सिद्धान्तशिरोमणौ ।
"शाकं ततः शाल्मलमत्र कौशम्" ॥
कोशे भवम् । कृमिकोशोद्भवं पट्टवस्त्रम् । यथा, भागवते । ३ । ४ । ७ ।
"दोर्भिश्चतुर्भिर्विदितं पीतकौशाम्बरेण च" ॥
एतदुपलक्षितं कृष्णं अद्राक्षमित्यन्वयः ॥
कुशस्येदं तद्विकारो वा अण् । कुशमयम् । कुश-सम्बन्धि वा । यथा, महाभारते । १३ । १९ । २९ ।
"तत्र वासाय शयने कौश्ये सुखमुवास ह" ॥
स्त्रियां ङीप् । कौशी । तत्रैव । १३ । ५४ । २१ ।
"कौश्यां वृष्यां समासीनं जपमानं महाव्रतम्" ॥)

**कौशलं**, क्ली, (कुशलस्य भावः कर्म्म वा इति । युवा-दित्वात् अण् ।) कुशलता । यथा, --
"क्व चातिकर्कशः शान्तः क्व चातिलिलितः शुचिः ।
यथा, महाभारते । ६ । ९ । ४० ।
"मत्स्याः कुशट्टाः कौशल्याः कुन्तयः काशिकोशलाः" ॥
कुशलस्य भावः कर्म्म वा कुशलमेव वा इति ब्राह्मणादित्वात् ष्यञ् । कुशलत्वे, क्ली । यथा,
महाभारते । ३ । ४४ । ३० ।
"पृष्ट्वा कौशल्यमन्योन्यं रथेष्वेवावतस्थिरे" ॥)

**कौशल्यानन्दनः**, पुं, (कौशल्यायाः दशरथपत्न्याः नन्दनः पुत्त्रः ।) श्रीरामः । इति शब्दरत्नावली ॥

**कौशल्यायनिः**, पुं, (कौशल्याया अपत्यं । "कौशल्य-कार्मार्य्याभ्याञ्च" । ४ । १ । १५५ । इति फिञ् ।
फस्यायनादेशः ।) श्रीरामः । इति त्रिकाण्डशेषः ॥
(यथा, भट्टौ । ७ । ९० ।
"म्रियामहे न गच्छामः कौशल्यायनिवल्लभाम् ।
उपलम्भ्यामपशन्तः कौमारीं पततां वर !" ॥)

**कौशाम्बी**, स्त्री, (राज्ञः कुशस्य पुत्त्रेण स्वनामप्रसि-द्धेन कुशाम्बेन निर्वृ त्ता या । "तेन निर्वृत्तम्" । ४ । २ । ६८ । इति अण् ततो ङीप् ।) देशविशेषः ।
तत्पर्य्यायः । वत्सपत्तनम् २ । इति हेमचन्द्रः ॥
(यथा, रामायणे । १ । ३२ । ५
("कुशाम्बस्तु महातेजाः कौशाम्बीमकरोत्पुरीम्" ॥
सा तु गौडदेशान्तर्गतमत्स्यराजभूमिगता नगरी
ततः चाणक्येन चन्द्रगुप्तादिसमये कुसुमपुरी-त्याख्या प्रदत्ता इदानीं सैव पुरी पाटलीपुत्त्रनगरी
पाटना इति भाषायां प्रसिद्धा जाता । यथा,
कौशिकं चित्रसेनञ्च तस्मिन् युद्ध उपस्थिते ॥
ययोस्तु नामनी राजन् ! हंसेति डिभकेति च ।
पूर्ब्बं संकथिते पुंभिनृलोके लोकसत्कृते" ॥
कुशिकस्य गोत्रापत्यं इति विदाद्यञ् । कुशिकस्य पुत्त्रो गाधिस्तत्पुत्त्रो विश्वामित्रोऽपि कुशिकवंश-जातत्वात् कौशिकः । (विश्वामित्रमुनिः । इति मेदिनी । (यथा, रामायणे । १ । २१ । १ ।
"तच्छ्रुत्वा वचनं तस्य स्नेहपर्य्याकुलाक्षरम् ।
समन्युः कौशिको वाक्यं प्रत्युवाच महीपतिम्" ॥
पुरुवंशीयनृपविशेषः । यथा, हरिवंशे ।
"प्रतिष्ठायाश्च द्वौ पुत्त्रौ पैप्पलादिश्च कौशिकः" ॥
कोशं करोतीति । कोश + ठक् ठञ् वा बाहुल-कात् ।) कोषकारः । इति शब्दरत्नावली ॥ शृङ्गार-रसः । इति त्रिकाण्डशेषः ॥ मज्जा । इति हेम-चन्द्रः ॥ अश्वकर्णवृक्षः । इति राजनिर्घण्टः ॥
(कोशात् कृमिकोशाज्जातम् । कृमिकोषोद्भवे, त्रि । यथा, महाभारते । ३ । २७ । १४ ।
"या त्वाहं कौशिकैर्वस्त्रैः शुभैराच्छादितं पुरा ।
दृष्टवत्यस्मि राजेन्द्र ! सात्वां पश्यामि चीरिणम्" ॥)

**कौशिकप्रियः**, पुं, (कौशिकस्य कुशिकपौ त्त्रस्य रांजर्षेः विश्वामित्रस्य प्रियः ।) श्रीरामः । इति शब्दरत्नावली ॥

एकत्र काव्ये व्याख्यातुस्तावहो
कौशलं कवेः” ॥
इति अमरुशतकटीका ॥ (नैपुण्यम् ।
यथा, भाग-
वते । १ । १६ । २७ ।
“स्वातन्त्र्यं कौशलं कान्तिर्धैर्य्यं
मार्दवमेव च” ॥
कुशलमेव इति । स्वार्थे अण् ।
मङ्गलम् । यथा,
तत्रैव । ३ । १ । १३ ।
“स एष दोषः पुरुषद्विडास्ते
गृहान् प्रविष्टोऽयमपत्यमत्या ।
पुष्णासि कृष्णाद् विमुखो गतश्री-
स्त्यजाश्वशैवं कुलकौशलाय” ॥
चातुर्य्यम् । यथा, भगवद्गीतायाम् ।
२ । ५० ।
“तस्माद्योगाय युज्यस्व योगः कर्म्मसु
कौशलम्” ॥)

**कौशलिका**, स्त्री, (कुशलाय मङ्गलाय हिता । इति
ठक् टाप् च ।) प्राभृतकम् । इति
हारावली ।
नजर इति भाषा ॥ (कुशलस्य पृच्छा
इति ठक्
टाप् च । कुशलप्रश्नः ॥)

**कौशली**, स्त्री, (कुशलस्य पृच्छा कुशलाय दीयते वा ।
अण् ततो ङीप् ।) कुशलप्रश्नः ।
प्राभृतम् । इति
त्रिकाण्डशेषः ॥

**कौशलेयः**, पुं, (कौशल्यायाः अपत्यं पुमान् इति
ढक् । यलोपश्च ।) श्रीरामः । इति
शब्दरत्ना-
वली ॥ (यथा, रामायणे ।
उज्जहार प्रियां देवो हत्वा तु
निकशात्मजम् ।
श्रीमान् दाशरथिर्वीरः कौशलेयः
प्रतापवान्” ॥)

**कौशल्या**, स्त्री, (कोशलम्य राज्ञोऽपत्यं स्त्री । कोशल
कथासरित्सागरे । “अस्ति वत्स इति
ख्यातोदेशः ।
इत्युपक्रम्य कौशाम्बी नाम तत्रास्ति मध्यभागे
महापुरी” इत्युक्तम् ॥)

**कौशिकः**, पुं, (कुशिकस्यापत्यम् ऋष्यण् । कुशिके
तद्वंशे भवो वा इत्यण् ।) इन्द्रः । (अयं हि
तप-
स्विनः कुशिकराज्ञस्तपःप्रभावं विचार्य्य
त्रासात्
तत्पुत्त्रतामङ्गीचकार ।
यथा, हविवंशे । २७ । १३-१६ ।
“कुशिकस्तु तपस्तेपे पुत्त्रमिन्द्रसमं विभुः ।
लभेयमिति तं शक्रस्त्रासादभ्येत्य जज्ञिवान् ॥
पूर्णे वर्षसहस्ने वै तन्तु शक्रो ह्यपश्यत ।
अत्युग्रतपसं दृष्ट्वा सहस्राक्षः पुरन्दरः ॥
समर्थं पुत्त्रजनने स्वमेवांशमवासयत् ।
पुत्त्रत्वे कल्पयामास स देवेन्द्रः सुरोत्तमः ॥
स गाधिरभवद्राजा मघवान् कौशिकः स्वयम्”
॥
पक्षे तु देवेन्द्रस्य जन्मकाले कुशावृतत्वात्
कौशि-
कत्वमिति । कुशेन वृत इति ठञ् ।
यथा, हरिवंशे । २१९ । २--३ ॥
“स वज्री कवची जिष्णुरदित्यामभिजज्ञिवान्
।
स्मृतेः सहायो द्युतिमान् यथा सोऽध्वर्युभिः
स्तुतः ।
जातमात्रस्तु भगवान् अदित्यां स कुशैर्वृतः ।
तदाप्रभृति देवेशः कौशिकत्वमुपागतः” ॥)
गुग्गुलुः । उलूकः । व्यालग्राही । इत्यमरः । २
। ४ ।
३४ ॥ नकुलः । कोशज्ञः ।
(मगधराजजरासन्धस्य
सेनापतिर्हंसनामा नरपतिरपि कौशिकनाम्ना
विश्रुत आसीत् । यथा, महाभारते । २ ।
जरासन्धवधपर्व्वणि । २२ । ३१-३२ ।
“स तु सेनापतिं राजा सस्मार भरतर्षभ ! ।

**कौशिकफलः**, पुं, (कौशिकं कोशगतं फलमस्य ।)
नारिकेलवृक्षः । इति शब्दरत्नावली ॥

**कौशिका**, स्त्री, (कोश एव स्वार्थे कः ततोऽण् ततः
टाप् अत इत्वञ्च ।) चषकम् । पानभाजनम्
।
इति हेमचन्द्रः ॥

**कौशिकात्मजः**, पुं, (कौशिकस्य इन्द्रस्य आत्मजः ।
जयन्तः ॥ पाण्डुराजपत्न्यां कुन्त्यां
इन्द्रौरसजातत्वात्
अर्ज्जुनस्यापि तथात्वम् ।) अर्ज्जुनः । इति
शब्द-
माला ॥ (अस्य जन्मविवरणं यथा,
महाभारते ।
१ । १२३ । ३२ ।
“एवमुक्ता ततः शक्रमाजुहाव यशस्विनी ।
अथाजगाम देवेन्द्रो जनयामास चार्ज्जुनम्”
॥
कौशिकस्य विश्वामित्रस्य आत्मजः । इति
विग्रहे
विश्वामित्रपुत्त्रः शुनःशेर्फादिः ॥)

**कौशिकायुधं**, क्ली, (कौशिकस्य इन्द्रस्य आयुधम् ।)
इन्द्रधनुः । इति शब्दरत्नावली ॥

**कौशिकारातिः**, पुं, (कौशिकस्य पेचकस्य अरातिः
शत्रुः ।) काकः । इति राजनिर्घण्टः ॥

**कौशिकारिः**, पुं, (कौशिकस्य उलूकस्य अरिः
शत्रुः ।) काकः । इति राजनिर्घण्टः ॥

**कौशिकी**, स्त्री, (कौशिकस्य गोत्रापत्यम् । कुशिक
+ अण् + ङीप् । सुरराजस्य इन्द्रस्य
कुशिक-
नृपतेः सकाशात् पुत्त्रत्वेनोत्पद्यमानत्वात्
कौशि-
काभिधानप्राप्तेस्तेनैवेन्द्रेणास्या योगमायाया
भगि-
नीतयाङ्गीकृतत्वात्तथात्वम् ।) चण्डिका ।
(यथा,
हरिवंशे । ५७ । ४८ ।
“तत्रैव त्वां भगिन्यर्थे ग्रहीष्यति स वासवः ।

| + ष्यञ् । यद्वा, कुशलैव स्वार्थे ष्यञ् ।) श्रीराममाता ।<br>सा तु कोशलराजकन्या दशरथपत्नी च । इति<br>शब्दरत्नावली । (यथा, रामायणे १ । १६ । २६ ।<br>“सोऽन्तःपुरं प्रविश्यैव<br>कौशल्यामिदमब्रवीत्’ ॥<br>कोशले भवाः । तद्देशवामिन्यर्थे ञ्य । कोशल-<br>देशीयाः । अत्र बहुवचनम् । | | कुशिकस्य तु गोत्रेण कौशिकी त्वं भविष्यसि” ॥<br>तत्रैवास्याः स्तुतौ । ५८ । ३ ।<br>“आर्य्या कात्यायनी देवी कौशिकी ब्रह्मचारिणी । |
|---|---|---|

जननी सिद्धसेनस्य उग्रचारी महातपाः”
॥
कुशिकस्य गोत्रापत्यं इति विदाद्यञ् ।
कुशि-
काख्यनरपतेः पौत्री गाधिराजस्य कन्या
विश्वा-
मित्रस्य भगिनी ऋचीकमुनिपत्नी ।
कुशिकवंश-
जातत्वात् तस्यास्तथात्वम् ॥)
नदीविशेषः । इति
मेदिनी ॥ (यथा, रामायणे । १ । ३४ । ६-
-११ ।
“स पिता मम काकुत्स्थ ! गाधिः
परमधार्म्मिकः ।
कुशवंशप्रसूतोऽस्मि कौशिको रघुनन्दन !
॥
पूर्ब्बजा भगिनी चापि मम राघव ! सुव्रता ।
नाम्ना सत्यवती नाम ऋचीके प्रतिपादिता
॥
सशरीरागता स्वर्गं भर्त्तारमनुवर्त्तिनी ।
कौशिकी परमोदारा प्रवृत्ता च महा नदी ॥
दिव्या पुष्पोदका रम्या हिमवन्तमुपाश्रिता
।
लोकस्य हितकार्य्यार्थं प्रवृत्ता भगिनी मम
॥
ततोऽहं हिमवत्पार्श्वे वसामि नियतः
सुखम् ।
भगिन्यां स्नेहसंयुक्तः कौशिक्यां
रघुनन्दन ! ॥
सा तु सत्यवती पुण्या सत्ये धर्म्मे
प्रतिष्ठिता ।
पतिव्रता महाभागा कौशिकी सरितां वरा”
॥
“कौशिकी सरितां श्रेष्ठा कुलोद्द्योतकरी
तव” ॥ २१
असावेवेदानीं कुशी नदीति ख्याता ।
इयन्तु नेपाल-
राज्यान्तर्गताया हिमवच्छाखाया निःसृता
सती

षष्ठस्वरेण संसृष्ठो विन्दुना समलङ्कृतः ।
कौषिकीतन्त्रमन्त्रोऽयं धर्म्मकामार्थदायकः
॥
एतस्याः सम्प्रवक्ष्यामि मूर्त्तिरूपञ्च भैरव !
।
शृणुष्वैकमना भूत्वा जगदाह्लादकारकम् ॥
धम्मिल्लसंयतकचा विधोश्चाधोमुखीं
कलाम् ।
केशान्ते तिलकस्यीर्द्धे दधती सुमनोहरा
॥
मणिकुण्डलसंघृष्टगण्डा मुकुटमण्डिता ।
सज्योतिःकर्णपूराभ्यां कर्णमापूर्य्य सङ्गता
॥
सुवर्णमणिमाणिक्यनागहारविराजिता।
सदा सुगन्धिभिः पुष्पैरम्लानैरतिसुन्दरी ॥
मालां बिभर्त्ति ग्रीवायां रत्नकेयूरधारिणी ।
मृणालायतवृत्तैस्तु बाहुभिः कोमलैः शुभैः
॥
राजन्ती कञ्चुकोपेतपीनोन्नतपयोधरा ।
क्षीणमध्या पीतवस्त्रा त्रिवलीपरिभूषिता ॥
शूलं वज्रञ्च वाणञ्च खड्गं शक्तिं तथैव च ।
दक्षिणैः पाणिभिर्द्देवी गृहीत्वातिविराजिता
॥
गदां घण्टाञ्च चापञ्च चर्म्म शङ्खं तथैव च ।
ऊद्र्ध्वादिक्रमतो देवी दधती
वामपाणिभिः ॥
सिंहस्योपरि तिष्ठन्ती व्याघ्रचर्म्मणि
कौषिकी ।
बिभ्रती रूपमतुलं सुरासुरमनोहरम् ॥
एतस्याः शृणु वत्स त्वं याः पूज्या
अष्टयोगिनीः ।
ताः पूजिताश्च कुर्व्वन्ति चतुर्व्वर्गं नृणां
सदा ॥
ब्रह्माणी प्रथमा प्रोक्ता ततो माहेश्वरी परा
।
कौमारी वैष्णवी चैव वाराही पञ्चमी तथा
॥
नारसिंही तथैवैन्द्री शिवदूती तथाष्टमी ।

प्रणयिनि ! कौसुममाननानिलेन” ॥)

**कौसुम्भः**, पुं, (कुसुम्भ + स्वार्थे अण् ।)
अरण्यकुसुम्भः ।
इति राजनिर्घण्टः ॥ (शाकविशेषः । यथा,
--
“कौसुम्मं कोमलं शाकं कासमर्द्दविमर्द्दितम्
।
पाचितं तप्तसुघृते माणिमन्थविमिश्रितम्” ॥
इति शब्दार्थचिन्तामणिः ॥ कुसुम्भेन रक्तम्
।
“तेन रक्तं रागात्” । ४ । २ । १ । इत्यण् ।)
कुसुम्भ-
पुष्परागयुक्ते त्रि । इत्यमरटीकायां
रायमुकुटः ।
(यथा, माघे ।
“कौसुम्भं पृथुकुचकुम्भसङ्गिवासः” ॥
कुसुम्भस्येदं तस्येदमित्यण् ।
कुसुम्भसम्बन्धिवस्तु-
मात्रम् । यथा, माघे । ११ । ५२ ।
“दिनकरकरसङ्गव्यक्तकौसुम्भकान्ति” ॥)

**कौसृतिकः**, त्रि, (कुसृत्या कुत्सितगत्या चरति इति
।
ठक् ।) मायाकारः । इति जटाधरः ॥

**कौस्तुभः**, पुं, (कुं भुवं स्तुभ्नाति व्याप्नोति इति ।
कुस्तुभः
सागरः तत्र भव इत्यण् । यद्वा, कुं भूमिं
जग-
दित्यर्थः स्तुभते व्याप्नोति सर्व्वमाक्रम्य
तिष्ठतीति
भावः । कुस्तुभो विष्णुः तस्यायं
मणिरित्यण् ।)
स्वनामख्यातो विष्णुवक्षःस्थो मणिः ।
इत्यमरः
१ । १ । ३० ॥ (यथा, भागवते । ८ । ८ ।
५ ।
“कौस्तुभाख्यमभूद्रत्नं पद्मरागो महोदधेः ।
तस्मिन् हरिः स्पृहां चक्रे वक्षोऽलङ्करणे
मणौ” ॥

१६६ क्रोशान्तं गता गङ्गया सङ्गता ॥)

**कौशिक्योजः**, पुं, (कौशिक्या इव तीव्रं ओजो यस्य ।
पृषोदरात् सलोपः ।) शाखोटवृक्षः । इति राज-
निर्घण्टः । श्याओडा इति भाषा ॥

**कौशीतकी**, स्त्री, (कुशितकस्यापत्यम् । ऋष्यण् ततो
ङीप् ।) अगस्त्यपत्नी । इति त्रिकाण्डशेषः ॥ (कु-
शीतकेनाधीता प्रणीता वा या शाखा सा कौशी-
तकी । स्वनामख्यातवेदान्तर्गतशाखाविशेषः ॥
(ऋग्वेदान्तर्गत उपनिषद्विशेषः । यदुक्तं मुक्ति-
कोपनिषदि । 'मैत्रायणो कौशी(षी)तकी
वृहज्जावालतापनी' ॥)

**कौशेयं**, त्रि, (कोशे भवम् । इति ढक् ।) कृमिको-
शोत्थवस्त्रादि । इत्यमरः । २ । ६ । १११ ॥ मूर्द्धन्य-
मध्यञ्च ॥ (यथा, माघे । ८ । ६ ।
"कौशेयं व्रजदपि गाढतामजस्रम् ।
सस्रंसे विगलितनीविनीरजाक्ष्याः" ॥)

**कौषिकः**, पुं, (कौशिक + पृषोदरात् षकारादेशः ।)
कौशिकः । इति मेदिनी ॥

**कौषिकी**, स्त्री, (कौशिकी + पृषोदरात् षकारा-
देशः ।) कौशिकी । इति मेदिनी ॥ कालिका-
कायकोषनिःसृतदेवीविशेषः । यथा, --
"कायकोषान्निःसृता या कालिकायास्तु भैरव ! ।
सा कौषिकीति विख्याता चारुरूपा मनोहरा ॥
निःसृता हृदयाद्देव्या रसनाग्रेण चण्डिका ।
नैतस्याः सदृशी मूर्त्त्या चारुरूपेण विद्यते ॥
एताः पूज्या महाभागा योगिनीः कामदायिनीः" ॥
इति कालिकापुराणे उत्तरतन्त्रे ६० अध्यायः ॥ * ॥
अन्यच्च ।
"शरीरकोषतश्चास्याः समुद्भूताब्रवीच्छिवा ।
स्तोत्रं ममैतत् क्रियते शुम्भदैत्यनिराकृतैः ॥
देवैः समेतैः समरे निशुम्भेन पराजितैः ।
शरीरकोषाद्यत्तस्याः पार्व्वत्या निःसृताम्बिका ॥
कौषिकीति समस्तेषु ततो लोकेषु गीयते" ॥
इति मार्कण्डेयपुराणे देवीमाहात्म्ये ५ अध्यायः ॥
अपरा व्युत्पत्तिर्यथा, --
"अल्पेनैवोपकारेण यस्माल्लोके सुखप्रदा ।
कौषेयधारणाद्वापि सप्रसादाथ कौषिकी" ॥
इति देवीपुराणे देवीनिरुक्ताध्यायः ४५ ॥

**कोषेयं**, त्रि, (कौशेय + पृषोदरात् षकारादेशः ।)
कृमिकोषोत्थवस्त्रादि । रेसमी कापड इति
भाषा । इत्यमरटीकायां भरतः ॥ (यथा, मार्कण्डेय-
पुराणे । १५ । २७ ।
"कोषकारश्च कौषेये हृते वस्त्रेऽभिजायते" ॥)

**कौसीद्यं**, क्ली, (कुत्सितं सीदति अस्मिन् इति ।
सीद् + शः । ततः स्वार्थे ष्यञ् ।) आलस्यम् । तन्द्रा ।
इति हेमचन्द्रः । (कुसीदस्य कर्म्म भावो वा ।
इति ष्यञ् ।) कुसीदत्वम् ॥

**कौसुमं**, क्ली, (कुसुमेन निर्वृत्तम् । इत्यण् ।) कुसुमा-
ञ्जनम् । पुष्पाञ्जनम् । इति राजनिर्घण्टः ॥ (कुसुम-
स्येदम् । तस्येदमित्यण् । कुसुमसम्बन्धि वस्तुजातम् ।
"कौस्तुभस्तु महातेजाः कोटिसूर्य्यसमप्रभः ।
इदं किमुत वक्तव्यं प्रदीपाद्दीप्तिमानिति" ॥
इति भागवतामृतम् ॥ मुद्राविशेषः । यथा, --
"अनामाङ्गुष्ठसंलग्ना दक्षिणस्य कनिष्ठिका ।
कनिष्ठयान्यया बद्धा तर्जन्या दक्षया तथा ॥
वामानामाञ्च बध्नीयात् दक्षिणाङ्गुष्ठमूलके ।
अङ्गुष्ठमध्यमे भूयः संयोज्य सरलाः पराः ।
चतस्रोऽप्यग्रसंलग्ना मुद्रा कौस्तुभसंज्ञिका" ॥
इति तन्त्रसारः ॥

**कौस्तुभवक्षाः**, [स्] पुं, (कौस्तुभः वक्षसि उरःस्थले
यस्य ।) विष्णुः । इति हारावली ॥

**क्नथ**, कि म वधे । इति कविकल्पद्रुमः । (चुरां पक्षे
भ्वां--परं--सकं--सेट् ।) कि म, क्नथयति । इति
दुर्गादासः ॥

**क्नस**, उ म य ह्वृतौ । भासने । इति कविकल्प-
द्रुमः ॥ (दिवां--परं--अकं--सेट् ।) एष दन्त्यन-
कारयुक्तः । उ, क्नसित्वा क्नस्त्वा । म, क्नसयति
कान्त्यां जगत्पान्थः । य, क्नस्यति खलः कुटिलः
स्यादित्यर्थः । ह्वृतिरिह कौटिल्यम् । इति दुर्गा-
दासः ॥

**क्नस**, इ कि भासने । इति कविकल्पद्रुमः ॥ (चुरां
पक्षे भ्वां--परं--अकं--सेट् ।) इ, क्नंस्यते । कि,
क्नंसयति क्नंसति । भासनं दीप्तिः । इति दुर्गा-
दासः ॥

**क्नूय**, ई ङ दुर्गन्धे । आर्द्रत्वे । शब्दे । इति कविकल्प-
द्रुमः ॥ दन्त्यनकारयुक्तो दीर्घी । (भ्वां--आत्मं--

| | | |
|---|---|---|
| त्रिषु लोकेषु कान्त्या वा नास्यास्तुल्या भविष्यति ।<br>योगनिद्रा महामाया या मूलप्रकृतिः स्मृता ॥<br>तस्याः प्राणस्वरूपेयं देवी सा कौषिकी स्मृता ।<br>नेत्रवीजं तथैतस्या वीजन्तु परिकीर्त्तितम् ॥<br>तन्त्रमस्याः प्रवक्ष्यामि सर्व्वकामप्रदं नृणाम् ।<br>समाप्ति नान्त्यदन्त्यस्तु षष्ठवर्गादिविन्दुना ॥ | कुसुमेषु भवम् । यथा, माघे । ७ । ५७ ।<br>“विनयति सुदृशो दृशः परागं | अकं--सेट्--ईर्निष्ठायामनिट् ।) तथा च ।<br>क्नूयो<br>स्फायति ते विदेव य इमे सेविश्च मेविस्तता ।<br>इति शार्द्दूलविक्रीडिते चण्डेश्वरः ॥ ई, क्नूतः । ङ, |

क्नूयते मत्स्यः दुर्गन्धः स्यादित्यर्थः । क्नूयते वस्त्र-
मम्भसा । इति दुर्गादासः ॥

**क्मरं**, कौटिल्ये । इति कविकल्पद्रुमः ॥ (भ्वां--परं--

अकं--सेट् ।) ओष्ठवर्गशेषयुक्तः । क्मरति खलः कुटिलः स्यादित्यर्थः । इति दुर्गादासः ॥

**क्रकचः**, पुं क्ली, ग्रन्थिलवृक्षः । इति मेदिनी ॥

(ज्योतिषोक्तयोगभेदः । तस्य लक्षणं यथा, --
"षष्ठ्यादितिथयो मन्दाद् विलोमं क्रकचः स्मृतः" ॥
अस्य विवृतिर्यथा ।
"शनौ षष्ठी, शुक्रे सप्तमी, गुरौ अष्टमी, बुधे नवमी, भौमे दशमी, सोमे एकादशी, रवौ द्वादशी, एते योगाः क्रकचाख्या विज्ञेयाः" । यथा,
नारदोक्तिः ।
"त्रयोदशस्युर्मिलने सख्ययोस्तिथिवारयोः ।
क्रकचो नाम योगोऽयं मङ्गलेष्वतिगर्हितः" ॥ * ॥
क्र इति कृत्वा कचति शब्दायते । कच शब्दे + पचाद्यच् ।) करपत्रम् । काष्ठविदारणास्त्रविशेषः । करात् इति भाषा । इत्यमरः । १ । १० । ३५ ॥
(यथा, महाभारते ३ । २२ । ३४ ।
"मध्येन पाटयामास क्रकचो दार्व्विवोच्छ्रितम्" ॥)
"अथ क्रकचव्यवहारे करणसूत्रं वृत्तम् । पि-
ण्डयोगदलमग्रमूलयोर्द्दैर्घ्यसंगुणितमङ्गुलात्मकम् ।
दारुदारणपथैः समाहतं षट्स्वरेषु विहृतं करा-
त्मकम् ॥ उदाहरणम् ।
मूले नखाङ्गुलमितोऽथ नृपाङ्गुलोऽग्रे
पिण्डः शताङ्गुलमितं किल यस्य दैर्घ्यम् ।
तद्दारुदारणपथेषु चतुर्षु किं स्या-
द्धस्तात्मकं वद सखे गणितं द्रुतं मे ॥
न्यासः
२० क्राकच्यं दारुविषमं १६
१००
पिण्डयोगदलम् । १८ । दैर्घ्येण । १०० । संगुणितम् ।
विस्तृतिहतिः । ५१२ । दारुदारणमार्ग । ९ ।
घ्ना । ४६०८ । षट्स्वरेषु । ५७६ । विहृतं जातं
फलं हस्ताः । ८ । इति लीलावत्यां क्रकचव्यव-
हारः ॥ * ॥

**क्रकचच्छदः**, पुं, (क्रकचः करपत्रमिव च्छदाः पत्राणि

यस्य ।) केतकीवृक्षः । इति त्रिकाण्डशेषः ॥

**क्रकचपत्रः**, पुं, (क्रकचवत् पत्रं अस्य ।) शाकवृक्षः ।

इति राजनिर्घण्टः ॥ (केतकीवृक्षः ॥)

**क्रकचपात्**, [द्] पुं, (क्रकच इव पादो यस्य ।

अन्त्यलोपः ।) कृकलासः । इति त्रिकाण्डशेषः ॥

**क्रकचपादः**, पुं, (क्रकचमिव पादो यस्य ।) कृकलासः ।

इति हारावली ॥

**क्रकचपृष्ठी**, स्त्री, (क्रकचवत् पृष्ठं पृष्ठदेशो यस्याः ।

इति ङीष् ।) कवयी मत्स्यः । इति शब्दरत्नावली ॥

**क्रकचा**, स्त्री, (क्रकचस्तदाकारोऽस्त्यस्याः । अर्श आ-

दिभ्यः अच् ततष्टाप् ।) केतकी इति रत्नमाला ॥

**क्रकणः**, पुं, (क्र इति कणति शब्दायते । कण शब्दे +

अच् । जातित्वात् स्त्रियां ङीष् ।) पक्षिविशेषः ।
इत्यमरः ॥ कयार इति भाषा ॥

**क्रकरः**, पुं, (क्र इति शब्दं कर्त्तुं शीलमस्य इति । कृ +

ताच्छील्ये टः ।) करीरवृक्षः । उट्काटार इति
ऋषीन् षष्टिसहस्राणि ज्वलतो ब्रह्मतेजसा" ॥
विश्वेदेवविशेषः । यथा, हरिवंशे ।
आत्मार्थे चासृजत्पुत्त्रान् लोककर्त्तॄन् पितामहः ॥
विश्वे प्रजानां पतयो येभ्यो लोका विनिःसृताः" ॥
तत उक्तं "दक्षं मरीचिमत्रिञ्च पुलस्तं पुलहं
क्रतुं । वशिष्ठं गौतमञ्चैव भृगुमङ्गिरसं म-
नुम्" । इत्याद्युपक्रम्य ।
"अथर्व्वभूता इत्येते ख्याताश्चैव महर्षयः ।
त्रयोदशसुता येषां वंशा वै संप्रतिष्ठिताः" ॥
जटाधरेण तु "विश्वेदेवा दशस्मृताः" । इत्युक्तं
तत्कल्पभेदादविरुद्धम् ॥
यथा, शतपथब्राह्मणे १० । ६ । ३ । १ ।
"यावत् क्रतुरयमस्माल्लोकात् प्रेत्यैवं क्रतुरमुं
लोकं प्रेत्य सम्भवति" ॥
यूपसहितः सोमसाध्यो यज्ञः ।
विष्णुः । यथा,
विष्णुसंहितायाम् ।
"यज्ञ ईज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः" ॥
अस्य भाष्यं यथा, --
"अस्य सर्व्वयज्ञस्वरूपत्वात् यज्ञः यूपसहितो
यज्ञः क्रतुरिति" । अतएव विष्णोः सर्व्वयज्ञ-
मयत्वात् यज्ञत्वं क्रतुशब्दस्यापि यूपसहितयज्ञ-
बोधकत्वं प्रसिद्धम् ॥ तद्यागे शतपथब्राह्मणादा-

१८०० । दारुदारणपथैः । ४ । गुणितम् । ७२०० ।
षट्स्वरेषु । ५७६ । विहृतं जातं करात्मकं गणि-तम् । २५२ ॥ क्रकचान्तरे करणसूत्रं सार्द्धवृत्तम् ।
छिद्यते तु यदि तिर्य्यगुक्तवत् पिण्डविस्तृतिहते फलं तदा । इष्टिकाचितिदृषच्चितिखातक्राकच व्यवहृतौ खलु मूल्यम् । कर्म्मकारजनसम्प्रति-पत्त्या तन्मृदुत्वकठिनत्ववशेन ॥ उदाहरणम् ।
यद्विस्ततिर्द्दन्तमिताङ्गुलानि
पिण्डस्तथा षोडश यत्र कोष्ठे ।
छेदेषु तिर्य्यङ्नवसु प्रचक्ष्व
किं स्यात् फलं तत्र करात्मकं मे ॥

भाषा । क्रकणपक्षी । इत्यमरः । २ । ५ । १९ ॥
कयार इति करकरा इति च भाषा ॥
(यथा, --
महाभारते १३ । १११ । १०३ ।
"पत्रोर्णं चोरयित्वा तु क्रकरत्वं
नियच्छति" ॥)
अस्य मांसस्य गुणः । लघुत्वम् । हृद्यत्वम् । इति
राजनिर्घण्टः ॥ (यथा, सुश्रुते ।
"चकोरकलविङ्कमयूरक्रकर इत्याद्युपक्रम्य
लघवः क्रकरा हृद्यास्तथा चैवोपचक्रकाः" ॥
इत्यन्तेनोपसंहृताः ॥) दीनः । क्रकचः । इति
मेदिनी ॥

**क्रतुः**, पुं, (क्रियतेऽसौ इति । कृ + "कृञः कुः" ।
उणां १ । ७८ । इति कर्म्मणि कु प्रत्ययः ।) यज्ञः
इत्यमरः ॥
सप्तर्ष्यन्तर्गतब्रह्ममानसपुत्त्रमुनिविशषः। इति मेदिनी । अयन्तु ब्रह्मणः कराज्जातः ।
(यथा, महाभारते । १ । ६५ । १० ।
"ब्रह्मणो मानसाः पुत्रा विदिताः षण्महर्षयः ।
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः" ॥)
एतस्य भार्य्या प्रजापतेः कर्द्दमस्य कन्या क्रिया ।
पुत्राः षाष्ठिसहस्रवालिखिल्याख्याङ्गुष्ठमात्रा ऋ-षयः ।
(यथा, -- भागवते । ४ । १ । ३८ ।
"क्रतोरपि क्रिया भार्य्या
वालखिल्यानसूयत ।

वुल्लिखिता यूपविशेषाः । यथा, तत्र सोमसाध्य-
यागाश्च त्रयः क्रतवः । तथाहि श्रुतौ "त्रीन्-
क्रतूनन्वाहाग्नेयमुषस्यमाश्विनम्' ।
सङ्कल्पः । स
ङ्कल्पस्तु
कामनाधीनश्चित्तवृत्तिविशेषः ।
उक्तञ्च
"कामः क्रतुः कर्म्म जन्मेत्येवमेषां
क्रमो भवेत्" ।
पुंसो या विषयापेक्षा स काम इति
भण्यते ।
स एव वर्द्धमानश्चेत् क्रतुत्वं
प्रतिपद्यते" ॥
रुचेरातिशय्यम् । यथा, --
"रुचेरतिशयः काम्ये विषये
क्रतुरीर्य्यते" ॥
स्तुत्यादिकर्म्म । यथा, ऋग्वेदे । ४ । २१ । १० ।
"पुरुष्टुत ! क्रत्वा नः स्वस्ति" ।
"क्रत्वा कर्म्मणा
स्तुत्यादिहेतुना" । इति भाष्यम् ॥
प्रज्ञा । यथा, छान्दोग्योपनिषदि ।
"अथ खलु
क्रतुमयः पुरषो यथा क्रतुरस्मिन्
लोके पुरुषो
भवति । तथेतः प्रेत्य भवति स क्रतुं
कुर्व्वीत" ॥
अस्य भाष्यं यथा, --
"कथमुपासीत । स क्रतुं कुर्व्वीत
क्रतुर्निश्चयोऽध्य-
वसायश्च एवमेव नान्यथेति
अविचलः प्रत्ययस्तं
क्रतुं कुर्व्वीतोपासीत इत्यनेन
व्यवहितेन सम्बन्धः ।
किं पुनः क्रतुकरणेन कर्त्तव्यं
प्रयोजनम् ? कथं
वा क्रतुः कर्त्तव्यः ? क्रतुकरणं
वाभिप्रेतार्थसाधनं

| | | |
|---|---|---|
| | | कथम् ? इत्यस्यार्थस्य प्रतिपादनार्थमथेत्थादि- ग्रन्थः । अथ खल्विति हेत्वर्थः । यस्मात् क्रतुमयः क्रतूपायोऽध्यवसायात्मकःपुरुषो जीवः । यथा क्रतुर्यादृशः क्रतुरस्य सोऽयं यथा क्रतुर्यथाऽध्य- वसायो यादृङ्निश्चयोऽस्मिँल्लोके जीवन्निह पुरुषो भवति । तथेतोऽस्याद्देहात् प्रेत्य मृत्वा भवति । क्रत्वनुरूपफलात्मको भवतीत्यर्थः । एव ह्येतच्छा- स्त्रतो दृष्टम् । 'यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरमित्यादि' । यत एवं व्यवस्था शास्त्र- |

दृष्ट्याऽतः स एवं जानन् क्रतुं कुर्व्वीत यादृशं क्रतुं
वक्ष्यामस्तम् । यत एवं शास्त्रप्रामाण्यादुपपद्यते
क्रत्वनुरूपं फलमतः स कर्त्तव्यः क्रतुः” । आषाढ-
मासः । अस्मिन्नेव मासे चातुर्मास्यादियागप्रा-
चुर्य्यात् तस्य तथात्वम् । यथा, यजुर्व्वेदे । १८ । २८ ।
“वाजाय स्वाहा, प्रसवाय स्वाहा, अपिजाय स्वाहा,
क्रतवे स्वाहा, वसवे स्वाहा” । इति । “क्रतवे याग-
रूपाय चातुर्मास्यादियागप्राचुर्य्यात् क्रतुराषाढः” ॥
इति वेददीधितिः ॥ अश्वमेधयज्ञः । यथा, मनौ ।
७ । ७९ ।
“यजेत राजा क्रतुभिर्विविधैराप्तदक्षिणैः ।
धर्म्मार्थञ्चैव विप्रेभ्यो दद्याद्भोगान् धनानि च” ॥)

**क्रतुद्विट्**, [ष्] पुं, (क्रतुं यज्ञं द्वेष्टीति । द्विष् + “सत्सूद्विषेति” । ३ । २ । ६१ । क्विप् ।) असुरः । इति त्रिकाण्डशेषः ॥

**क्रतुध्रुक्**, [ह्] पुं, (क्रतवे यज्ञाय द्रुह्यति द्रोहमा-चरतीति । द्रुह् + क्विप् ।) असुरः । इति जटा-धरः ॥ अस्य रूपान्तराणि । क्रतुध्रुग् । क्रतुध्रुट् । क्रतुध्रुड् ॥

**क्रतुध्वंसी**, [न्] पुं, (क्रतुं दक्षयज्ञं ध्वंसयतीति । ध्वन्स् + णिनिः । स्वजटोत्पादितवीरभद्रेण क्रतु-ध्वंसकारितत्वादस्य तथात्वम् ।) शिवः । इत्यमरः ॥

“रूपं तवैतन्ननु दुष्कृतात्मनां
दुर्द्दर्शनं देव ! यदध्वरात्मकम् ।
छन्दांसि यस्य त्वचि वर्हिरोम
स्वाज्यं दृशि त्वङ्घ्रिषु चातुर्होत्रम् ॥
स्रुक् तुण्ड आसीत् स्रुव ईश ! नासयो-
रिडोदरे चमसाः कर्णरन्ध्रे ।
प्राशित्रमास्ये ग्रसने ग्रहास्तु ते
यच्चर्वणन्ते भगवन्नग्निहोत्रम् ॥
दीक्षानुजन्मोपसदः शिरोधरं
ते प्रायणीयोदयनीयदंष्ट्रः ।
जिह्वा प्रवर्ग्यस्तव शीर्षकं क्रतोः
सभ्यावसथ्यं चितयोऽसवो हि ते ॥
सोमस्तु रेतः सवनान्यवस्थितिः
संस्थाविभेदास्तव देव ! धातवः ।
सत्राणि सर्व्वाणि शरीरसन्धय-
स्त्वं सर्व्वयज्ञक्रतुरिष्टिबन्धनः” ॥
अत्र श्रीधरस्वामिना यद्व्याख्यातं तद्यथा,
“यज्ञात्मतां प्रपञ्चयन्तः स्तुवन्ति रूपमित्यादि
चतुर्भिः । छन्दांसि गायत्र्यादीनि यज्ञाङ्गभूतछन्द-
आद्यनुवादेन भगवदवयवता विधीयते वर्हिः
शब्दे दीर्घाभावः आर्षः । दृशि चक्षुषि चातु-
र्होत्रं होत्रादिचतुष्टयं कर्म्म । स्रुक् जुहूः ।
तुण्डे मुखाग्रे । स्रुवो नासिकयोः । इडा भक्षण-
पात्रं चमसा ग्रहाश्च सोमपात्राणि । प्राशित्रं
ब्रह्मभागपात्रम् । ग्रस्यतेऽनेनेति ग्रसनं मुखान्त-
र्वर्त्तिच्छिद्रं चर्व्वणं भक्षणम् । दीक्षा दीक्षणीयेष्टिः
अनुजन्म वारंवारं अभिव्याप्तिः । उपसदस्तिस्र
इष्टयः शिरोधरं ग्रीवा । प्रायणीया दीक्षानन्त-
रेष्टिः । उदयनीया समाप्तीष्टिः ते एव दंष्ट्रे यस्य ।
प्रवर्ग्यो महावीरः प्रत्युपसदः पूर्ब्बं क्रियते । सभ्यो

**क्रथ**, क प्रतिहर्षे । इति कविकल्पद्रुमः ॥ (चुरां--परं--सकं--सेट् ।) रेफयुक्तः । प्रतिहर्षः पुनः
पुनर्हृष्टीकरणम् । क, क्रथयति शिशुं लोकः
पुनःपुनर्हर्षयति इत्यर्थः । इति दुर्गादासः ॥

**क्रथ**, कि वधे । इति कविकल्पद्रुमः ॥ (चुरां पक्षे भ्वां--परं--सकं--सेट् ।) रेफयुक्तः । कि, क्राथयति
क्रथति । इति दुर्गादासः ॥

**क्रथ**, कि म वधे । इति कविकल्पद्रुमः ॥ (चुरां पक्षे भ्वां--परं--सकं--सेट् ।) रेफयुक्तः । पुनः
पाठात् पूर्ब्बो न मित् । कि म, क्रथयति । इति दुर्गादासः ॥

**क्रथनं**, क्ली, (क्रथ्यते इति । क्रथ् वधे + भावे ल्युट् ।)
मारणम् । इत्यमरः । २ । ८ । ११५ ॥ (शुक्लागुरु ।
इति शब्दार्थचिन्तामणिः ॥ पुं, देवयोनिविशेषः ।
यथा, महाभारते । १ । ३२ । १८ ।
“अश्वक्रन्द्रेन वीरेण रेंणुकेन च पक्षिराट् ।
क्रथनेन च शूरेण तपनेन च खेचरः ॥
प्ररुजेन च संग्रामं चकार पुलिनेन च” ॥
दानवविशेषः । यथा, महाभारते । १ । ६७ । ५८ ।
“क्रथनस्तु महावीर्य्यः श्रीमान् राजन् महासुरः” ॥)

**क्रथनकं**, क्ली, (क्रथन + स्वार्थे कन् ।) सितागुरु ।
इति शब्दचन्द्रिका ॥ (पुं, क्रथने दन्तकरणक-

(यथाहि अनेन दक्षयज्ञध्वंसः कृतस्तथा तद्विवरण-
मुच्यते । पुरा किल कोपपरवशो दक्षः वैरनिर्या-
तनाय शिवरहितयज्ञं चिकीर्षुस्तत्र सर्व्वान्
देवापदेवब्रह्मर्षिप्रभृतीन् आहूतवान् । अथ पत्यु-
र्भवस्यावमाननामसहमानाभवानी सती दाक्षा-
यणी पितुर्दक्षस्य यज्ञं दिदृक्षुरनाहूताऽपि दक्ष-
गृहं समाययौ । दक्षस्तु तां शिवां दृष्ट्वा मोहान्धः
कालप्रेरितः शिवनिन्दया सतीं तिरश्चकार ।
सा तु शिवनिन्दामाकर्ण्य समाधियोगाग्निना
स्वशरीरं परितत्याज । एतच्छ्रुत्वा रुद्ररूपी देव-
देवः स्वजाटातः वीरभद्रमुत्पादयन् दक्षयज्ञक्षय-
मनैषीत् । एतद्विवरणन्तु काशीखण्डे ८९ अ-
ध्याये तथा श्रीमद्भागवतप्रभृतिग्रन्थेच विस्त-
रशो द्रष्टव्यम् ॥)

**क्रतुपशुः**, पुं, (क्रतोरश्वमेधादेर्यज्ञस्य अङ्गविशेषः
पशुः ।) अश्वः । इति हारावली ॥

**क्रतुपुरुषः**, पुं, (क्रतुः यज्ञः तन्मयः तदधिष्ठाता वा
पुरुषः ।) विष्णुः । इति त्रिकाण्डशेषः ॥
(अयं हि वराहरूपियज्ञपुरुषः । यदुक्तं भाग-
वते । ३ । १३ । २१--२४ ।
“किमेतत्शौकरव्याजं सत्त्वं दिव्यमवस्थितम् ।
अहोवताश्चर्य्यमिदं नासाया मे विनिःसृतम् ॥
दृष्टोऽङ्गुष्ठशिरोमात्रः क्षणाद् गण्डशिलासमः ।
अपिस्विद्भगवानेष यज्ञो मे खेदयन् मनः ॥
इति मीमांसतस्तस्य ब्रह्मणः सह सूनुभिः ।
भगवान् यज्ञपुरुषो जगर्जाऽङ्गेन्द्रसन्निभः ॥
होमरहितोऽग्निः । आवसथ्य औपासनाग्निः ततो
द्वन्दैक्यं क्रतुजपस्य शीर्षकं शिरः । चितयः इष्ट-
कावचयनानि पञ्च असवः प्राणाः । प्रातः सवना-
दीनि अवस्थितिरासनं बाल्याद्यवस्था वा । अग्नि-
ष्टोमो इत्यग्निष्टोमः उक्थः षोडशी वाजपेयो-
ऽतिरात्रः आप्तोर्यामः इति सप्तसंस्थाविभेदाः
सप्तत्वङ्मांसादिधातवः । सत्राणि द्वादशाहा-
दीनि बहुयागसङ्घातरूपाणि असोमा यज्ञाः
ससोमाः क्रतवस्तद्यूपस्त्वं इष्टिर्यजनं अनुष्ठानञ्च
तदेवबन्धनं यस्य सः” ॥)

**क्रतुभुक्**, [ज्] पुं, (क्रतौ यज्ञे देयं आज्यादिकं भुङ्क्ते ।
क्रतु + भुज् + क्विप् ।) देवता । इत्यमरः
१ । १ । ९ ॥

**क्रतुराजः**, पुं, (क्रतुषु यज्ञेषु राजते इति । राज् +
अच् । यद्वा, क्रतूनां राजा । राजन् + टच् ।)
राजसूययज्ञः । इति शब्दरत्नावली ॥ (क्रतुराट् ।
अश्वमेधयज्ञः । यथा, मनौ ११ । २६० ।
“यथाश्वमेधः क्रतुराट् सर्व्वपापापनोदनः ।
यथाघमर्षणं सूक्तं सर्व्वपापापनोदनम्” ॥)

**क्रतूत्तमः**, पुं, (क्रतुषु यज्ञेषु उत्तमः ।) राजसूययज्ञः ।
इति त्रिकाण्डशेषः ॥

**क्रथ**, म वधे । इति कविकल्पद्रुमः ॥ (भ्वां--परं--सकं--
सेट् । घटां । क्रथति । म, क्रथयति ॥)
कण्टकछेदने प्रसृतः कन् । उष्ट्रः । इति पञ्च-
तन्त्रम् ॥)

**क्रद**, इ रोदने । आह्वाने । इति कविकल्पद्रुमः ॥
(भ्वां--परं--अकं--आह्वाने सकं--सेट् । इदित् ।)
इ, क्रन्द्यते । ततोऽक्रन्दीद्दशग्रीव इति । क्रन्दति
भर्त्तारमिवाभिपन्नम् । दुर्गादासमते तु षमङानु
बन्धी । यथा, ष, क्रन्दा । म, क्रन्दयति । ङ,
क्रन्दते । इति ॥

**क्रद**, ष म ङ वैक्लव्यविकलत्वयोः । इति कविकल्प-
द्रुमः ॥ (भ्वां--आत्मं--अकं--सेट्--घटां ।) ष, क्रदा ।
म, क्रदयति । ङ, क्रदते । इति दुर्गादासः ॥

**क्रन्द**, क शब्दसातत्ये । इति कविकल्पद्रुमः ॥ (चुरां--
परं--अकं--सेट् ।) रेफयुक्तः । आ उपसर्गपूर्ब्बकः ।
क, आक्रन्दयति । शब्दसातत्यं निरन्तरशब्दक्रिया ।
इतिदुर्गादासः ॥

**क्रन्दनं**, क्ली, (क्रदि + भावे ल्युट् ।) शोकादिनाऽस्रु-
पतनम् । काँदन इति भाषा । तत्पर्य्यायः । क्रन्दि-
तम् २ रुदितम् ३ क्रुष्टम् ४ रोदनम् ५ । इति
शब्दरत्नावली ॥ (यथा, पञ्चतन्त्रे ४ । ३१ ।
“तं भक्षितं मत्वा गङ्गदत्तस्तारस्वरेण धिग्धिक्
प्रलापपरः कथञ्चिदपि न क्रन्दनात् विरराम” ॥)
योधसंरावः । आह्वानम् । इत्यमरः । २ । ८ । १०७ ॥

| | | |
|---|---|---|
| ब्रह्माणं हर्षयामास हरिस्तांश्च द्विजोत्तमान् ।<br>स्वगर्जितेन ककुभः प्रतिस्वनतया विभुः” ॥<br>अस्य रूपवर्णनं यथा, तत्रैव । ३५--३८ । | | **क्रन्दनः**, पुं, (क्रन्दनं रोदनमिव शब्दविशेषः अस्या-<br>स्तीति अच् ।) विडालः । इति<br>शब्दमाला ॥<br>**क्रन्दितं**, क्ली, (क्रदि + भावे क्तः ।) रोदनम् । इत्य-<br>मरः । १ । ७ । ३५ ॥ आह्वानम् । इति<br>मेदिनी ॥<br>योधचीत्करणम् । इति शब्दरत्नावली ॥<br>**क्रप**, ष म ङ कृपायाम् । इति कविकल्पद्रुमः ॥<br>(भ्वां--आत्मं--अकं--सेट् ।) कृपा दया<br>। ष, कृपा ।<br>भीषि चिन्तीति ङे मनीषाद्या इति<br>निपात-<br>नात् रेफस्य ऋकारः । म, क्रपयति ।<br>ङ, क्रपते<br>दयालुर्दीनम् । इति दुर्गादासः ॥ |

**क्रम**, उ गतौ । इति कविकल्पद्रुमः ॥ (भ्वां--परं--
सकं--सेट् ।) उ, क्रमित्वा क्रान्त्वा क्रन्त्वा ।
क्रामति ।
वारिपूर्णां महीं कृत्वा पश्चात् संक्रमते गुरु-
रिति संशब्दस्योपसर्गप्रतिरूपकत्वे वागेरित्या-
त्मनेपदम् । वृत्त्युत्साहतायनेषूपसर्गान्तरपूर्ब्बा-
दप्यात्मनेपदमिति शरणदेवः । संक्रामयतीत्यादि
तु संक्रामन्तं करोतीति शत्रन्तात् ञौ साध्यम् ।
अन्यथा अमन्तत्वाद्ध्रस्वः स्यात् । हरेर्यदक्रामि
पदैककेन खमिति तु धातुपारायणमते चुरादि-
विवक्षया सिद्धम् । तन्मतन्तु परिभाषायां लिखि-
तम् । अथवा आत्मेति कर्म्मणोऽध्याहारे प्रेरणे
ञौ साध्यम् । हरेः पदं आत्मानं यत् खं क्रामया-
मास । इत्यर्थः । इति दुर्गादासः ॥

**क्रम**, य गतौ । इति कविकल्पद्रुमः ॥ (दिवां-परं-
सकं-सेट् ।) य, क्रम्यति ।
गोविन्दभट्टक्रमदीश्वरौ
तु दीर्घं विधाय । क्राम्यतीत्याहतुः । तथा च ।
“इष्यते श्यनि दीर्घत्वं दाक्षिलक्षणवेदिभिः ।
तेन क्राम्यति कौमारे श्यनीत्यस्योपलक्षणात्’ ॥
इति दुर्गादासः ॥

**क्रमः**, पुं, (क्रम्यते प्राप्यते पाठभेदो ऽनेन । क्रम +
घञ् । “नोदात्तोपदेशस्येति” । ७ । ३ । ३४ ।
इति न वृद्धिः ।) वैदिकविधानम् । तत्पर्य्यायः ।
कल्पः २ विधिः ३ । इत्यमरः । २ । ७ । ४० ॥
(क्रम + भावे घञ् ।) अनुक्रमः ।
(यथा, रघुः । ११ । २४ ।
“लोकमन्धतमसात् क्रमोदितौ
रश्मिभिः शशिदिवाकराविव” ॥)
शक्तिः । आक्रमणम् । इति मेदिनी ॥ (क्रा-
मत्यनेन घञ् न वृद्धिः ।) चरणः । इति हेम-
चन्द्रः ॥ (स्वनामख्यातो वत्सप्रीपुत्त्रः ।
यथा, मार्कण्डेये ११८ । १ ।
“तस्य तस्यां सुनन्दायां पुत्त्रा द्वादश जज्ञिरे ।
प्रांशुः प्रवीरः शूरश्च सुचक्रो विक्रमः क्रमः” ॥
सर्व्वाक्रमणात् रुद्रः ।
यथा, महाभारते । १३ । १७ । १२९ ।
“छत्रं सुच्छत्रो विख्यातो लोकः सर्व्वाश्रयः
क्रमः” ॥
त्रिपादेन सर्व्वाक्रमणात् विष्णुः ।
ण्वुल् । पुष्पवृन्ते क्रमेणास्य वीजपूरकत्वात्
तथा-
त्वम् ।) वकवृक्षः । इति राजनिर्घण्टः ॥

**क्रमशः**, [स्] व्य, (कारकार्थवृत्तेः क्रमात् + वीप्सायां
शस् ।) क्रमेण क्रमेण । क्रमेक्रमे इति भाषा ।
यथा । “भवति विज्ञतमःक्रमशो जनः” । इति
प्राचीनाः ॥ (तथा च मनौ । ३ । १२ ।
“सवर्णाऽग्रे द्बिजातीनां प्रशस्ता दारकर्म्मणि ।
कामतस्तु प्रवृत्तानामिमाः स्युः
क्रमशोऽवराः” ॥)

**क्रमागतं**, त्रि, (क्रमेणागतं आयातम् ।) क्रमायातम् ।
पितृपितामहादिक्रमेण प्राप्तम् । यथा, --
“अस्वतन्त्राः स्त्रियः सर्व्वाः
पुत्त्रदासपरिग्रहाः ।
अस्वतन्त्रस्तत्र गृही यत्र तत् स्यात्
क्रमागतम्” ॥
इति व्यवहारतत्त्वे नारदः ॥ (तथा च मनुः ।
२ । १८ ।
“तस्मिन् देशे य आचारः पारम्पर्य्यक्रमागतः
।
वर्णानां सान्तरालानां स सदाचार उच्यते”
॥)

**क्रमायातः**, त्रि, (क्रमेणायातः आगतः ।) क्रमागतः ।
इति मिताक्षरा ॥

**क्रमिः**, पुं, (क्रम् + इन् ।) कृमिः । इति भरतो
द्बिरूपकोषश्च ॥ रोगविशेषः । तच्चिकित्सा
यथा,
“विडङ्गव्योषसंयुक्तमन्नमण्डं पिबेन्नरः ।
दीपनं क्रिमिनाशाय जठराग्निविवृद्धये ॥
प्रत्यहं कटुकं तिक्तं भोजनं कफनाशनम् ।
क्रिमीणां नाशनं रुच्यमग्निसन्दीपनं परम् ॥
विडङ्गशृतपानीयं विडङ्गेनावधूलितम् ।
पीतं क्रिमिहरं दृष्टं क्रिमिजांश्च गदान् जयेत्
॥
लिह्याद्विडङ्गचूर्णं वा मधुना क्रिमिनाशनम् ।
पलाशवीजस्य रसं पिबेन्माक्षिकसंयुतम् ॥
पिबेत्तद्वीजकल्कं वा तक्रेण क्रिमिनाशनम् ।
काम्पिल्यचूर्णकर्षार्द्धं गुडेन सह भक्षितम् ॥
पातयेत क्रिमीन् सर्व्वानुदरस्थान्न संशयः ।

**क्रमिजं**, क्ली, (क्रमेः क्रमिभ्यो वा जायते इति ।
जन्
+ डः ।) अगुरु । इत्यमरः ॥

**क्रमिजा**, स्त्री, (क्रमिज + टाप् ।) लाक्षा । इति
इति रत्नमाला ॥

**क्रमिशत्रुः**, पुं, (क्रमेः क्रमीणां वा शत्रुरिव नाश-
कत्वात् ।) विडङ्गः । इति रत्नमाला ॥

**क्रमुः**, पुं, (क्रमु + बाहुलकादुः ।) गुवाकः । इति
भरतो द्बिरूपकोषश्च ॥

**क्रमुकः**, पुं, (क्रमु + संज्ञायां कन् ।) पट्टिकालोध्रः ।
गुवाकवृक्षः । ब्रह्मदारुवृक्षः । इत्यमरः । २
। ४ ।
४१ ॥ भद्रमुस्तकम् । कार्पासिकाफलम् ।
इति
मेदिनी ।

**क्रमुकफलं**, क्ली, (क्रमुक एव फलम् । क्रमुकस्य
गुवाकादिवृक्षस्य फलं वा ।) गुवाकम् ।
इति
राजनिर्घण्टः ॥ (यथा, माघे ।
“आस्वादितार्द्रक्रमुकाः समुद्रात्” ॥
क्रमुकाः क्रमुकफलानीत्यर्थः ॥) अस्य
गुणपर्य्यायौ
गुवाकशब्दे द्रष्टव्यौ ॥

**क्रमुकी**, स्त्री, (क्रमुक + स्त्रियां गौरादित्वात् ङीष् ।)
गुवाकः । इति शब्दरत्नावली ॥

**क्रमेलः**, पुं, (क्रममालम्ब्य एलति गच्छतीति । एल्
+
अच् ।) उष्ट्रः । इत्युणादिकोषः ॥

**क्रमेलकः**, पुं, (क्रममालम्ब्य एलति गच्छति । एल्-
गतौ + ण्वुल् । यद्वा, क्रमेल + स्वार्थे कन्
।) उष्ट्रः ।
इत्यमरः २ । ९ । ७५ ॥ (यथा पञ्चतन्त्रे ।
१ । ४१४ ।
“भो ममाग्रेऽपि क्रमेलकहृदयं भक्षयित्वा
अधुना
मम मुखमवलोकयसि” ॥)

**क्रमोद्वेगः**, पुं, (क्रमेण उद्गतः उत्कृष्टो वा वेगो

यथा, तत्रैव १३ । १४९ । २२ ।
"ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः" ॥)

**क्रमकः**, पुं, (क्रमं वेदपाठभेदं अधीते वेत्ति वा ।
"क्रमादिभ्यो वुन्" । ४ । २ । ६१ । इति वुन् ।) क्रमज्ञः । इति मुग्धबोधम् ॥

**क्रमणः**, पुं, (क्रामत्यनेन करणे ल्युट् ।) चरणः ।
इति हेमचन्द्रः ॥ (यदुवंशीयनृपविशेषः । यथा हरिवंशे ।
"कृमिश्च क्रमणश्चैव धृष्टः शूरः पुरञ्जयः" ॥
क्ली । भावे ल्युट् । पादविक्षेपः । यथा, भागवते ८ ।
१० । २१ ।
"पृष्ठे त्वधर्म्मं क्रमणेषु यज्ञम्" ॥)

**क्रमपूरकः**, पुं, (क्रमेण पूरयति वीजम् । पूर + णिच्

विडङ्गं कौटजं वीजं तथा वीजं पलाशजम् ॥
संचूर्ण्य खादेत् खण्डेन क्रिमीन्नाशयितुं नरः ।
निम्बपत्रसमुद्भूतं रसं क्षौद्रयुतं पिबेत् ॥
धूस्तूरपत्रजं वापि क्रिमिनाशमनुत्तमम् ।
रसेन्द्रेण समायुक्तो रसो धुस्तूरपत्रजः ॥
ताम्बूलपत्रजो वापि लेपाद्यूकाविनाशनः ।
धत्तूरपत्रकल्केन तद्रसेनैव पाचितम् ॥
तैलमभ्यङ्गमात्रेण यूकान्नाशयति क्षणात् ।
क्रिमीणां विट्कफोत्थानाम्मेतदुक्तं चिकित्सितम् ॥
रक्तजानान्तु संहारं कुर्य्यात् कुष्ठचिकित्सया ॥
क्षीराणि मांसानि घृतानि वापि
दधीनि शाकानि च पर्णवन्ति ।
अम्लञ्च मिष्टञ्च रसं विशेषात्
क्रिमीन् जिघांसुः परिवर्ज्जयेद्धि" ॥
इति क्रिम्यधिकारः । इति भावप्रकाशः ॥

**क्रमिकण्टकं**, क्ली, (क्रमौ क्रमिनाशे कण्टकमिव ।
तस्य नाशकत्वात्तथात्वम् ।) चित्राङ्गः ।
विडङ्गम् ।
उडुम्बरः । इति मेदिनी ॥

**क्रमिघ्नं**, क्ली, (क्रमिं हन्ति । हन् + टः ।) विडङ्गम् ।
इति रत्नमाला ॥

यस्य ।) वृषः । इति भूरिप्रयोगः ॥

**क्रयः**, पुं, (क्री + भावे अच् ।) पणपूरणादिमूल्य-
दानेन विक्रेतुः स्वत्वापनयनेन स्वत्वापादनव्या-
पारविशेषः । मूल्येन द्रव्यग्रहणम् । केना इति
भाषा । यथा, --
"प्रकाशं वा क्रयं कुर्य्यात् मूल्यं वापि समर्पयेत्" ॥
इति प्रायश्चित्ततत्त्वे वृहस्पतिः ॥

**क्रयलेख्यं**, क्ली, (क्रयस्य क्रये क्रयमधिकृत्य वा
लेख्यम् ।) भूम्यादिक्रयलिपिः । कवाला इति
पारस्य भाषा । यथा,
"गृहं क्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम् ।
पत्रं कारयते यत्तु क्रयलेख्यं तदुच्यते" ॥
इति प्रायश्चित्ततत्वे वृहस्पतिः ॥

**क्रयविक्रयः**, पुं, (क्रयेण सह विक्रयः ।) वाणिज्यम् ।
केना वेचा इति भाषा । यथा, --
"ऋणदानं तथादानं वस्तूनां क्रयविक्रयम् ।
न कुर्य्यात् गुरुणा सार्द्धं शिष्यो भूत्वा कदाचन" ॥
इति तन्त्रसारः ॥
(केचित्तु एतौ द्विवचनान्ताविच्छन्ति । तत्र द्वन्दः
यथा, क्रयश्च विक्रयश्च तौ क्रयविक्रयौ ।
यदुक्तं मनुसंहितायाम् ।
"आगमं निर्गमस्थानं तथा वृद्धिक्षयावुभौ ।
विचार्य्य सर्व्वपण्यानां कारयेत् क्रयविक्रयौ ॥
पञ्चरात्रे पञ्चरात्रे पक्षे पक्षे ऽथवा गते ।

कुर्व्वीत चैषां प्रत्यक्षमर्थसंस्थापनं नृपः” ॥

**क्रयविक्रयानुशयः**, पुं, (क्रये विक्रये च क्रयविक्रयोर्वा

अनुशयः पश्चात्तापः ।)
अष्टादशविवादान्तर्गतवि-
वादविशेषः । यथा ।
“वेतनस्यैव चादानं संविदश्च व्यतिक्रमः ।
क्रयविक्रयानुशयो विवादः स्वामिपालयोः” ॥
अस्य विवरणम् । यथा, मनौ ।
“क्रीत्वा विक्रीय वा किञ्चित् यस्येहानुशयो
भवेत् ।
योऽन्तर्दशाहात् तद्द्रव्यं दद्याच्चैवाददीत
वा” ॥

**क्रयविक्रयिकः**, पुं, (क्रयविक्रयाभ्यां जीवतीति ।

“वस्नक्रयविक्रयात् ठन्” । ४ । ४ । १३ ।
इति ठन् ।)
वणिक् । इत्यमरः । २ । ९ । ७८ ॥

**क्रयशीर्षं**, क्ली, (कपिशीर्ष + पृषोदरात् साधुः ।)

कपिशीर्षम् । इति त्रिकाण्डशेषः ॥

**क्रयारोहः**, पुं, (आ + रुह + अधिकरणे घञ् ।

क्रयार्थं आरोहः समारोहोऽत्र ।) हट्टः । इति
त्रिकाण्डशेषः ॥

**क्रयिकः**, पुं, (क्रयः प्रयोजनमस्त्यस्य इति ठन् ।)

क्रेता । तत्पर्य्यायः । क्रायकः २ । इत्यमरः
॥ क्रयी
३ । इति हेमचन्द्रः ॥ (यथा, महाभारते ।
१३ ।
“धनेन क्रयिको हन्ति खादकश्चोपभोगतः”
॥
क्रयेण जीवतीति । “वस्नक्रयविक्रयात् ठन्”
।
४ । ४ । १३ । इति व्यस्तादपि ठन्)
क्रयजीवी ।
वणिक् । इत्यमरटीकायां भरतः ॥ (यथा,
माघे ।
“पर्य्यापतत् क्रयिकलोकमगण्यपण्या” ॥)

**क्रयी**, [न्] त्रि, (क्रयोऽस्त्यस्य इति । क्रय + इनिः ।)

क्रयकर्त्ता । इति हेमचन्द्रः ॥

ग्राम्यक्रव्यादो मार्ज्जारादयः ।
यथा, मनौ । ११ । १९९ ।
“श्वशृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव च” ।
“ग्राम्यैः क्रव्याद्भिराममांसार्द्भिर्मार्ज्जारादिभिः” ।
इति कुल्लूकभट्टः ॥ गुरुपत्नीगामिनां
नरकभोगा-
वसाने क्रव्यादां आममांसाशिनां
योनिप्राप्तिर्भवति ।
यथा, तत्रैव । १२ । ५८ ।
“तृणगुल्मलतानाञ्च क्रव्यादां दंष्ट्रिणामपि ।
क्रूरकर्म्मकृताञ्चैव शतशो गुरुतल्पगः” ॥
शवदाहकाग्निभेदः । यथा, शतपथब्राह्मणे । १ ।
२ । १ । ४ ।
“अपाग्ने ! अग्निमामादं जहि निष्क्रव्यादं सेध
इत्ययं वा आमाद् येनेदं मनुष्याः
पक्त्वाऽश्नन्ति
अथ येन पुरुषं दहन्ति स क्रव्याद् एतावेवैत-
दुभावतोऽपहन्ति” । “हे अग्ने ! गार्हपत्य ! आ-
मादमग्निमपजहि परित्यज तथा, --
“क्रव्यादमग्निं निःसेधनिःशेषं दूरे गमय” ।
इति भाष्यम् ॥ ऋग्वेदे च । १० । १६ । १० ।
“योऽग्निं क्रव्यात् प्रविवेश यो गृहम्” ॥)

**क्रव्यादः**, पुं, (क्रव्यं मांसमत्ति । अद् उपपदे “कर्म्म-

ण्यण्” । ३ । २ । १ । इति अण् । कृत्तं छिन्नं
तदेव
पुनर्व्विशेषतः कृत्तं पक्वञ्च भुङ्क्ते इति
कृत्तविकृत्त-
पक्वशब्दस्य पृषोदरात् क्रव्यादेशः । इति का-
शिका ।) राक्षसः । इत्यमरः ॥ सिंहः । श्येनः ।
इति राजनिर्घण्टः ॥ शवभक्षकाग्निः । यथा,
“क्रव्यादो मृतभक्षणे” । इति तिथ्यादितत्त्वम् ॥
मांसाशिनि त्रि । इति धरणी ॥ (पुरा किल केन-
चिद्रक्षसाग्निमुखादियम्ब सा भृगुभार्य्या पुलो-
मेति विदितेनैवापहृतायान्तस्यां पुलोमायां मह-
र्षिर्भृगुरत्यन्ताऽमर्षमाहरन् त्वं सर्व्वभक्षो
भविष्य-
सीति तस्मै वह्नये शापं प्रददौ तेन हि तस्य
क्रव्यादत्वं प्रसिद्धम् । ततः शप्तेनापि
तेनाग्निदेवे-
नात्मनः सर्व्वभक्षकत्वरूपशापं परिहर्त्तुकामेन
सर्व्वभक्षः सन्कथं देवादीनां मुखं भविष्यामीति

“शप्तस्तु भृगुणा वह्निः क्रुद्धो
वाक्यमथाब्रवीत् ।
किमिदं साहसं ब्रह्मन् कृतवानसि मां प्रति”
॥
“अमावास्याञ्च पितरः पौर्णमास्याञ्च देवताः
।
मन्मुखेनैव हूयन्ते भुञ्जते च हुतं हविः ॥
सर्व्वभक्षः कथं तेषां भविष्यामि मुखं त्वहम्”
॥
“चिन्तयित्वा ततो वह्निश्चक्रे संहारमात्मनः
।
द्विजानामग्निहोत्रेषु यज्ञसत्रक्रियासु च ॥
निरोङ्कारवषट्काराः
स्वधास्वाहाविवर्ज्जिताः ।
विनाग्निना प्रजाः सर्व्वास्तत आसन्
सुदुःखिताः ॥
अथर्षयः समुद्विग्ना देवान् गत्वाब्रुवन् वचः ।
अग्निशापात्क्रियाभ्रंशात्भ्रान्ता
लोकास्त्रयोऽनघाः ।
विदध्वमत्र यत्कार्य्यं न स्यात् कालात्ययो
यथा ।
अथर्षयश्च देवाश्च ब्रह्माणमुपगम्य तु ॥
अग्नेरावेदयच्छापं क्रियासंहारमेव च ।
भृगुणा वै महाभाग ! शप्तोऽग्निः कारणान्तरे
॥
कथं देवमुखो भूत्वा यज्ञभागाग्रभुक् तथा ।
हुतभुक् सर्व्वभूतेषु सर्व्वभक्षत्वमेष्यति ॥
श्रुत्वा तु तद्वचस्तेषामग्निमाहूय विश्वकृत् ।
उवाच वचनं श्लक्ष्णं भूतभावनमव्ययम् ॥
लोकानामिह सर्व्वेषां त्वं कर्त्ता चान्त एव च
।
त्वं धारयसि लोकांस्त्रीन् क्रियाणाञ्च
प्रवर्त्तकः ॥
स तथा कुरु लोकेश ! नोच्छिद्येरन् क्रिया
यथा ।
कस्मादेवं विमूढस्त्वमीश्वरः सन् हुताशन !
॥
त्वं पवित्रः सदा लोके सर्व्वलोकगतिश्च ह ।
न त्वं सर्व्वशरीरेण सर्व्वभक्षत्वमेष्यसि ॥
अपाने ह्यर्च्चिषो यास्ते सर्व्वं भोक्ष्यन्तिताः
शिखिन् ! ।

**क्रय्यं**, त्रि, (डुक्रीञ् द्रव्यपर्य्यये + "अतो यत्" । ३ । १ ।

९७ । "क्रय्यस्तदर्थे" ६ । १ । ८२ । इति साधुः ।)
क्रये प्रसारितम् । क्रयनिमित्तं हट्टादौ न्यस्तं यत्
द्रव्यम् । इत्यमरः ॥ (यथा, शतपथब्राह्मणे । ३ ।
३ । ३ । १ । "क्रय्यस्ते सोमो राजा इति क्रय
इत्याह सोमविक्रयी" ॥)

**क्रव्यं**, क्ली, (क्लव + यत् । लस्य रत्वम् ।) मांसम् ।

इत्यमरः ॥ (यथा, भागवते । ४ । १८ । २४ ।
"क्रव्यादाः प्राणिनः क्रव्यं दुदुहुः स्वे कलेवरे ।
सुपर्णवत्सा विहगाश्चरं वाऽचरमेव च" ॥)

**क्रव्यघातनः**, पुं, (क्रव्यस्य क्रव्यार्थं वा घात्यतेऽसौ । हन्

+ स्वार्थे णिच् + कर्म्मणि ल्युट् ।) मृगः । इति
शब्दचन्द्रिका ॥

**क्रव्यात्**, [द्] पुं, (क्रव्यं मांसं अत्तीति । "क्रव्ये च विट्" ।

२ । २ । ६९ । इति ।) राक्षसः । इत्यमरः ॥ मांसा-
शिनि त्रि । इति मेदिनी । (गृध्रादिमांसभुक्
पक्षिविशेषश्चापि । यथा, रघौ । १५ । १६ ।
"धूमधूम्रो वसागन्धी ज्वालाबभ्रुशिरोरुहः ॥
क्रव्याद्गणपरीवारश्चिताग्निरिवजङ्गमः" ॥
"कृशानुपक्षे क्रव्यादो गृध्रादयः" । इति मल्लि-
नाथः । व्याघ्रादिर्हिंस्रपशुभेदः ।
यथा, मनुः ५ । १३१ ।
"श्वभिर्हतस्य यन्मांसं शुचि तन्मनुरब्रवीत् ।
क्रव्याद्भिश्च हतस्यान्यैश्चण्डालाद्यैश्च दस्युभिः" ॥
"क्रव्याद्भिः व्याघ्रश्येनादिभिश्चेति" ।
कुल्लूकभट्टः ॥

चिन्तयता अग्निहोत्रेषु यज्ञसत्रक्रियासु च आ
त्मनः संहारश्चक्रे । पितामहस्तु देवादिभिरनुरुद्धो
वह्नेः स्वप्रभावमनुस्मारयन् कौशलेन हुतभागग्र-
हणस्वीकारमकारयत् । एतद्विवरणन्तु महाभा-
रते । १ । ६--७ अध्याययोर्द्रष्टव्यम् । तद्यथा,
भृगुरुवाच ।
"केनासि रक्षसे तस्मै कथिता त्वं जिहीर्षते ।
न हि त्वां वेद तद्रक्षो मद्भार्य्यां चारुहासिनीम् ॥
तत्त्वमाख्याहि तं ह्यद्य शप्तुमिच्छाम्यहं रुषा ।
विभेति को न शापान्मे कस्य चायं व्यतिक्रमः ॥
पुलोमोवाच ।
अग्निना भगवंस्तस्मै रक्षसेऽहं निवेदिता ।
ततो मामनयद्रक्षः क्रोशन्तीं कुररीमिव ॥
साहं तव सुतस्यास्य तेजसा परिमोक्षिता ।
भस्मीभूतन्तु तद्रक्षो मामुत्सृज्य पपात वै ॥
सूत उवाच ।
इति श्रुत्वा पुलोमाया भृगुः परममन्युमान् ।
शशापाग्निमतिक्रुद्धः सर्व्वमक्षो भविष्यसि" ॥

क्रव्यादा च तनुर्य्या ते सा सर्व्वं भक्षयिष्यति ॥
यथा सूर्य्यांशुभिः स्पृष्टं सर्व्वं शुचि विभाव्यते ।
तथा त्वदर्च्चिर्निर्द्दग्धं सर्व्वं शुचि भविष्यति ॥
त्वमग्ने ! परमं तेजः स्वप्रभावाद्विनिर्गतम् ।
स्वतेजसैव तं शापं कुरु सत्यमृषेर्विभो ! ॥
देवानाञ्चात्मनो भागं गृहाण त्वं मुखे हुतम्" ।
"एवमस्त्विति तं वह्निः प्रत्युवाच पितामहम् ॥
जगाम शासनं कर्त्तुं देवस्य परमेष्ठिनः" ॥ * ॥
अतएव ऋङ्मन्त्रेण क्रव्यादाख्याग्नेः शान्तिकर्म्मा-
दिष्वपसारणं जातवेदोऽग्नेरादानं प्रोक्तम् ।
यथा, ऋग्वेदे । १० । १६ । ९ ।
"क्रव्यादमग्निं प्रहिणोमि दूरं
यमराज्ञो गच्छतु रिप्रवाहः ।
इहैवायमितरो जातवेदा
देवेभ्यो हव्यं वहतु प्रजानन्" ॥

"क्रव्यं आमिषं अत्ति क्रव्यादः तं तीव्रमग्निं दूरं

विप्रकृष्टे देशे प्रहिणोमि प्रगमयामि । रिप्रं पापं
तस्य वाहः वोढा यद्वा रिप्रं पापं वहति उपपदे
"कर्म्मण्यण्" इति वह + अण् । सोऽग्निः यमराज्ञः
यमो राजा येषां तान् यमराजकान् प्रदेशान्
गच्छतु प्राप्नोतु । अथ शान्तिकर्म्मार्थं उपासने
इतरः क्रव्यादादन्यः जातवेदा अग्निः इहैव देशे
देवेभ्यः देवार्थं हव्यं वहतु" ॥ इति भाष्यम् ॥
क्रव्यं मांसं अत्ति । अद् + उपपदे "कर्म्मण्यण्" ।
३ । २ । १ । इत्यण् ।
रुरुनामाममांसाशिमृगभेदः ।
यथा, भागवते । ५ । २६ । ११ ।

“एवमेव महारौरवो यत्र निपतितं पुरुषं क्रव्यादा
नाम रुरवस्तं क्रव्येण घातयन्ति यः केवलं देह-
म्भरः” ॥)

**क्रान्तः**, पुं, (क्रम्यते आक्रम्यते इति । क्रम + क्तः ।)
घोटकः । इति त्रिकाण्डशेषः ॥ (पादेन्द्रियम् ।
यथा, मनौ । १२ । १२१ ।
“मनसीन्दुं दिशः श्रोत्रे क्रान्ते विष्णुं बले हरम् ।
वाच्यग्निं मित्रमुत्सर्गे प्रजने च प्रजापतिम्” ॥
“क्रान्ते पादेन्द्रिये विष्णुमिति” । कुल्लूकभट्टः ॥
भावे + क्तः । क्ली, आरूढम् । क्रमणम् ।
यथा माघे ।
“क्रान्तं रुचा काञ्चनवप्रभाजा” ॥
यथा च शतपथब्राह्मणे ५ । ४ । २ । ६ ।
“विष्णोः क्रान्तमसीतीमे लोकाः विष्णो-
र्विक्रमणं विष्णोर्विक्रान्तं विष्णोः क्रान्तम्” ॥)
आक्रान्ते त्रि ॥

**क्रान्ता**, स्त्री, (क्रम + कर्त्तरि क्त । स्त्रियां जाति-
त्वेपि संयोगोपधत्वात् टाप् ।) वृहती । इति
राजनिर्घण्टः ॥

**क्रान्तिः**, स्त्री, (क्रम + भावे क्तिन् ।) खगोलमध्य-
वर्त्तिसूर्य्यगमनार्थतिर्य्यग्गोलरेखा । यथा, --
“अयनादयनं यावत् कक्षा तिर्य्यक् तथापरा ।
क्रान्तिसंज्ञा तया सूर्य्यः सदा पर्य्येति भासयन्” ॥
इति सूर्य्यसिद्धान्ते गोलाध्यायः ॥
“नाडीमण्डलात्
दक्षिणोत्तरं क्रान्तिमण्डलावधियदन्तरंतत्” ।
इति तट्टीकायां नृसिंहविदाम्बरः ॥
तत्पर्य्यायः ।
अपमण्डलम् २ अपवृत्तम् ३ अपक्रमः ४ अप-

बहुपादाश्च सूक्ष्माश्च यूका लिख्याश्च नामतः ।
द्विधा ते कोठपिडका कण्डूगण्डान् प्रकुर्व्वते ॥ * ॥
निदानम् यथा ।
“अजीर्णभोजी मधुराम्लनित्यो
द्रवप्रियः पिष्टगुडोपभोक्ता ।
व्यायामवर्जी च दिवाशयानो
विरुद्धभुक् संलभते क्रमींश्च” ॥
पुरीषजनिदानं यथा, --
“मांसपिष्टान्नलवणगुडशाकैः पुरीषजाः” ॥ * ॥
कफजनिदानं यथा, --
“मांसमाषगुडक्षीरदधिशुक्तैः कफोद्भवाः” ॥
रक्तजनिदानं यथा, --
“विरुद्धाजीर्णशाकाद्यैः शोणितोत्था भवन्ति हि” ॥
अभ्यन्तरक्रिमिलक्षणं यथा, --
“ज्वरो विवर्णता शूलं हृद्रोगच्छर्द्दनं भ्रमः ।
भक्तद्वेषोऽतिसारश्च संजातक्रिमिलक्षणम्” ॥
कफजरूपं यथा, --
“कफादामाशये जाता वृद्धाः सर्पन्ति सर्व्वतः ॥
पृथुब्रध्ननिभाः केचित् केचिद्गण्डूपदोपमाः ।
रूढधान्याङ्कुराकारास्तनुदीर्घास्तथाणवः॥
श्वेतास्ताम्रावभासाश्च नामतः सप्तधा तु ते ।
अन्त्रादा उदरावेष्टा हृदयादा महागुदाः ॥
चुरवो दर्भकुसुमाः सुगन्धास्ते च कुर्व्वते ।
हृल्लासमास्यस्रवणमविपाकमरोचकम्॥
मूर्च्छाच्छर्द्दिज्वरानाहकार्श्यक्षवथुपीनसान्” ॥ * ॥
रक्तजरूपं यथा, --
“रक्तवाहिशिरास्थाना रक्तजा जन्तवोऽणवः ॥
अपादा वृत्तताम्राश्च सौक्ष्मात् केचिददर्शनाः ।
केशादा रोमविध्वंसा रोमद्वीपा उडुम्बराः ॥
षट् ते कुष्ठैककर्म्माणः सहसौरसमातरः” ॥
विड्जरूपं यथा, --
“पक्वाशये पुरीषोत्था जायन्तेऽधोविसर्पिणः ।
वृद्धास्ते स्युर्भवेयुश्च ते यदामाशयोन्मुखाः ।
तदास्योद्गारनिश्वासविड्गन्धानुविधायिनः॥
पृथुवृत्ततनुस्थूलाः श्यावपीतसितासिताः ।
ते पञ्च नाम्ना क्रिमयः ककेरुकमकेरुकाः ॥

त्सितं त्वेषामपकर्षणं मलोपघातो मलकराणाञ्च
भावानामुपसेवनमिति । शोणितजानान्तु कुष्ठैः
समानं समुत्थानं, स्थानं रक्तवाहिन्यो धमन्यः,
संस्थानमणवो वृत्ताश्चापादाश्च सूक्ष्मत्वाच्चैके भव-
न्त्यदृश्याः, वर्णस्ताम्रः, नामानि केशादा लोमादा
लोमद्वीपाः सौरसा औदुम्बरा जन्तुमातर इति ।
प्रभावः केशश्मश्रुनखलोमापध्वंसो ब्रणगतानाञ्च
हर्षकण्डूतोदसंसर्पणान्यवृद्धानाञ्च त्वक्सिरास्नायु-
मांसतरुणास्थिभक्षणमिति, चिकित्सितमप्येषां
कुष्ठैः समानं तदुत्तरकालमुपदेक्ष्यते ।

श्लेष्मजाः क्षीरगुडतिलमत्स्यानूप-
मांस-पिष्टान्न-

परमान्नकुसुम्भस्नेहाजीर्ण-पूतिक्लिन्नसङ्कीर्ण-विरु-
द्धासात्म्यभोजनसमुत्थानाः । तेषामाशयः स्थानं
प्रवर्द्धमानास्तूद्ध्वर्मधो वा विसर्पन्ति, उभयतो वा ।
संस्थानवर्णविशेषास्तु श्वेताः पृथुब्रध्नसंस्थानाः
केचित्, केचिद्वृत्तपरिणाहाः गण्डूपदाकृतयश्च
श्वेतास्ताम्रावभासाः, केचिदणवो दीर्घास्तन्त्वा-
कृतयः श्वेताः । तेषां त्रिविधानां श्लेष्मनिमित्तानां
क्रिमीणां नामानि, अन्त्रादा, उदरादा, हृदया-
दाश्चुरवो दर्भपुष्पाः, सौगन्धिकाः, महागुदाश्च
इति । प्रभावो हृल्लासास्यसंस्रवणमरोचका वि-

क्रान्तिः ५ । इति सूर्य्यसिद्धान्तः ॥ अपमः ६ ।
इति सिद्धान्तशिरोमणिः ॥
इष्टक्रान्त्यानयनक्रमो
यथा, --
"परमापक्रमज्या च सप्तरन्ध्रगुणेन्दवः ।
तद्‌गुणाज्या त्रिजीवाप्ता
तच्चापक्रान्तिरुच्यते' ॥
इति सूर्य्यसिद्धान्तः ॥ * ॥ आक्रमः । इति हेम-
चन्द्रः ॥ गतिः । गत्यर्थात् क्रमधातोभवि क्तिन्-
प्रत्ययात् तथात्वम् ॥

**क्रान्तिवलयः**, पुं, (सूर्य्यसिद्धान्तोक्ता क्रान्तिरेव

वलयः वृत्तम् ।) क्रान्तिमण्डलम् ।
विषुवद्वृत्तात्
चतुर्विंशतिभागैर्दक्षिणे चोत्तरे यद्वृत्तं तत् । इति
सिद्धान्तशिरोमणिः ॥

**क्रान्तुः**, पुं, (क्रामतीति । "क्रमिगमिक्षमिभ्यस्तुन्

वृद्धिश्चेति" । उणां ५ । ४३ । इति तुन् वृद्धिश्च ।)
पक्षी । इत्युणादिकोषः ॥

**क्रायकः**, पुं, (क्रीणाति इति । कर्त्तरि ण्वुल् ।) क्रेता ।

इत्यमरः ॥ क्रयजीवी । इत्यमरटीकायां भरतः ॥

**क्रिमिः**, पुं, (क्रमु पादविक्षेपे । "क्रमितमिशतिस्तं-

भामत इच्च" । उणां ४ । १२१ । इति इन् कित्
अत इच्च ।) कीटः । द्रुमामयः ।
इत्यमरटीकायां
भरतः ॥ रोगविशेषः । तस्य प्रकारो यथा, --
"क्रिमयस्तु द्विधा प्रोक्ता वाह्याभ्यन्तरभेदतः ।
वहिर्मलकफासृग्विड्‌जन्मभेदाच्चतुर्व्विधाः ॥
नामतो विंशतिविधा वाह्यास्तत्र मलोद्भवाः ।
तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः ॥
सौस्वरादाः सशूलाख्या लेलिहा जनयन्ति
हि" ॥
विमार्गगक्रिमिलक्षणं यथा, --
"विड्‌भेदशूलविष्टम्भकार्श्यपारुष्यपाण्डुताः ।
रोमहर्षाग्निसदनगुदकण्डूर्व्विमार्गगाः" ॥
इति माधवकरः ॥
(अस्य सहेतुकलक्षणचिकित्सितानियथा, --

"इह खल्वग्निवेशविंशतिविधाः क्रिमयः पूर्ब्ब-

मुक्ता नानाविधेन प्रविभागेनान्यत्र सहजेभ्यः ।
ते पुनः प्रकृतिभिर्भिद्यमानाश्चतुर्व्विधास्तद्यथा ।
पुरीषजाः श्लेष्मजाः शोणितजाः मलजाश्चेति ।
तत्र मलो वाह्यश्चाभ्यन्तरश्च । तत्र वाह्ये
मले जातान् मलजान् सञ्चक्ष्महे, तेषां
समुत्थानं
मृजावर्ज्जनं,
स्थानकेशश्मश्रुलोमपक्ष्मवासांसि,
संस्थानमणवस्तिलाकृतयो बहुपादा वर्णः कृष्णः
शुक्लश्च, नामानि यूकाः पिपीलिकाश्चेति, प्रभावः
कण्डूजननं कोठपिडकाभिनिर्व्वर्त्तनञ्च, चिकि-
पाको ज्वरो मूर्च्छाजृम्भाक्षवथुरानाहोऽङ्गमर्द्दः
छर्द्दिः कार्श्यं पारुष्यमिति ।

पुरीषजास्तुल्यसमुत्थानाः श्लेष्मजैस्तेषां स्थानं

पक्वाशयः । प्रवर्द्धमानास्त्वधो विसर्पन्ति । यस्य
पुनरामाशयाभिमुखाः स्युस्तदनन्तरं तस्योद्‌गार-
निःश्वासाः पुरीषगन्धिनः स्युः । संस्थानवर्णविशे-
षास्तु सूक्ष्मवृत्तपरीणाहाः श्वेता दीर्घोर्णांशुक-
सङ्काशाः केचित् केचित् पुनः स्थूलवृत्तपरी-
णाहाः श्यावनीलहरितपीताः । तेषां नामानि
ककेरुकमकेरुकाः लेलिहाः शालूवकाः सौसुरा-
दाश्चेति । प्रभावः पुरीषभेदः कार्श्यं पारुष्यं लोम-
हर्षाभिनिर्व्वर्त्तनञ्च । तत्र वास्य गुदमुखं परितु-
दन्तः कण्डूश्चोपजनयन्तो गुदमुखं पर्य्यासते । स
जातहर्षो गुदान्निष्क्रमणमतिवेलं करोति !

इत्येषश्लेष्मजांनां पुरीषजानाञ्च क्रिमीणां समु-

त्थानादिविशेषः । चिकित्सितन्तु खल्वेषां समा-
सेनोपदिश्य पश्चाद्विस्तरेणोपदेक्ष्यते । तत्र सर्व्व-
क्रिमीणामपकर्षणमेवादितः कार्य्यम् । ततः प्रकृ-
तिविघातोऽनन्तरं निदानोक्तानां भावानामनुप-
सेवनमिति ।

तत्रापकर्षणं हस्तेनाभिमृश्यापनयनमुपकरण-

वतानुंपकरणेन वा । स्थानगतानान्तु क्रिमीणां
भेषजेनापकर्षणं न्यायतश्चतुर्विधमिति । तद्-

|  |  |  |
|---|---|---|
|  |  | यथा, -- शिरोविरेचनं वमनं<br>विरेचनमास्थापन-<br>मित्यपकर्षणविधिः ।<br><br>प्रकृतिविघातस्त्वेषां<br>कटुतिक्तकषायक्षारो-<br><br>ष्णानां द्रव्याणामुपयोगो यच्चान्यदपि<br>किञ्चित्<br>श्लेष्मपुरीषप्रत्यनीकभूतं तत्स्यादिति<br>प्रकृति-<br>विघातः ।<br><br>अनन्तरं निदानोक्तानां<br>भावानामनुपसेवनम् ।<br><br>यदुक्तं निदानविधौ, तस्य वर्ज्जनं तथाविध- |

प्रायाणां चापरेषां द्रव्याणामिति लक्षणतश्चिकि-
त्सितमनुव्याख्यातमेतदेव पुनर्विस्तरेणोपदेक्ष्यते
।

अथैनं क्रिमिकोष्ठमातुरमग्रे षड्रात्रं सप्त-

रात्रं वा स्नेहस्वेदाभ्यामुपपाद्य श्वोभूते एनं
संशोधनं पाययितास्मीति, क्षीरदधिगुडतिल-
मत्स्यानूपमांसपिष्टान्नपरमान्नकुसुम्भस्नेह
सम्प्रयुक्तै-
र्भोज्यैः सायम्प्रातरुपपादयेत् समुदीरणार्थञ्चैव
क्रिमीणाङ्कोष्ठाभिसरणार्थञ्च । भिषगथ व्युष्टायां
रजन्यां सुखोषितं सुप्रजीर्णभुक्तञ्चाज्ञायास्थाप-
नवमनविरेचनैस्तदहरेवोपपादयेत् । उपपादनी-
यश्चेत्स्यात् सर्व्वान् परीक्ष्य विशेषान् समीक्ष्य
सम्यक् । अथाहरेति ब्रूयात् । मूलक-
सर्षपलशुनक-
रञ्ज-शिग्रु-खरपुष्पभूस्तृण-सुमुख-सुरस-कुठेरक-
कण्डीर-कालमालपर्णासक्षवकफणिज्झकानि
स-
र्व्वाण्यथवा यथालाभम् ।
तान्याहृतान्यभिसमीक्ष्य
खण्डशश्छेदयित्वा प्रक्षाल्य पानीयेन सुप्रक्षालि
तायां स्थाल्यां समावाप्य गोमूत्रेणार्द्धोदकेनाभ्या-
सिच्य साधयेत् । सततमवघट्टयन् दर्व्व्या तमु-
पयुक्तं भूयिष्टेऽम्भसि । गतरसेष्वौषधेषु स्थाली-
मवतार्य्य सुपरिपूतं कषायं सुखोष्णं मदनफल-
विडङ्गकल्कतैलोपहितं
सर्ज्जिकालवणमभ्यासिच्य
वस्तौ विधिवदास्थापयेदेनम्" ।

"मदनफलपिप्पलीकषायेष्वञ्जलिमात्रेण
त्रिवृत्

कल्काक्षमात्रामालोड्य पातुमस्मै प्रयच्छेत् ।
तदस्य
दोषमभयतो निर्हरति साधु । एवमेव कल्पो-
क्तानि वमनविरेचनानि संसृज्य पाययेदेनं
बुद्ध्या
सर्व्वविशेषानवेक्षमाणः ।

अथैनं सम्यग्विरिक्तं विज्ञायापराह्णे
शैख-

येण त्रिफलाकषायेण वा अष्टकृत्वो
दशकृत्वो
वा आतपे सुपरिभाषितानि भावयित्वा
दुशदि
पुंनः सूक्ष्माणि चूर्णानि कारयित्वा नवे
कलसे
समवाप्यानुगुप्तं निधापयेत् । तेषान्तु
खलु चूर्णानां
पाणितलं पूर्णं यावद्वा साधु मन्येत
क्षौद्रेण संसृज्य
क्रिमिकोष्ठाय लेढुम्प्रयच्छेत् ॥

तथा भल्लातकास्थीन्याहार्य्य
कलसप्रमाणेन

सम्पोथ्य स्नेहभाविते दृढे कलसे
सूक्ष्मानेकच्छिद्र-
ब्रध्ने मृदावलिप्ते समवाप्योडुपेन पिधाय
भूमा-
वाकण्ठं निखातस्य स्नेहभावितस्यैव
दृढस्योपरि
कुम्भस्यारोप्य समन्तात्
गोमयैण्पचित्य दाह-
येत् । स यदा जानीयात् साधु दग्धानि
गोम-
यानि विगतस्नेहानि
भल्लातकास्थीनीति ततस्तं
कुम्भमुद्धारयेत् । अथ तस्मात्
द्वितीयात् कुम्भात्तं
स्नेहमादाय विडङ्गतण्डुलचूर्णैः
स्नेहार्द्धमात्रैः प्रति
संसृज्यातपे सर्व्वमहः स्थापयित्वा
ततोऽस्मै मात्रां
प्रयच्छेत् पानाय । तेन साधु विरिच्यते
विरि-
क्तस्य चानुपूर्ब्बी यथोक्ता" ॥

"अथाहरेति ब्रूयात्
शारदान्नवांस्तिलान्

सम्पदुपेतानाहृत्य सुनिष्पूतान्निष्पूय
सुशुद्धान्

क्रिमीणां समुत्थानस्थानसंस्थानवर्ण-नाम-
प्रभाव-
चिकित्सितविशेषा व्याख्याताः सामान्यतः ।
वि-
शेषतस्त्वल्पमात्रमास्थापनानुवासनानुलोमहरणं
भूयिष्ठं तेष्वौषधेषु पुरीषजानां क्रिमीणां चिकि-
त्सितं कार्य्यं मात्राधिकं पुनः शिरोविरेचनवमनो-
पशमनभूयिष्ठं तेष्वौषधेषु श्लेष्मजानां क्रिमीणां
चिकित्सितं कार्य्यम् । इत्येष क्रिमिघ्नो भेषज-
विधिरनुव्याख्यातो भवति" ॥ इति चरके
विमान-
स्थाने सप्तमोऽध्यायः ॥ * ॥
"सूतं गन्धं मृतं लौहं मरिचं विषमेव च ।
मुस्तकं त्रिफला शुण्ठी धातकी सरसाञ्जनम् ॥
त्र्यूषणं मुस्तकं पाठा बालकं विल्वमेव च ।
एतानि समभागानि स्वरसैर्भृङ्गजैस्तथा ॥
वराटिका प्रमाणेन भक्षणाय विशेषतः ।
क्रिमिरोगविनाशाय क्रिमिरोगविनाशनः" ॥
इति क्रिमिरोगारिरसः ॥ * ॥
"क्रमेण वृद्धं रसगन्धकाज-
मोदा विडङ्गं विषमुष्टिका च ।
पलाशवीजञ्च विचूर्ण्यमस्य
निष्कप्रमाणं मधुनावलीढम् ॥
पिवेत् कषायं षनजं तदूद्ध्वं
रसोऽयमुक्तः क्रिमिमुद्गराख्यः ।
क्रिमीन्निहन्यात् क्रिमिजांश्च रोगान्
सन्दीपयत्यग्निमयं त्रिरात्रात्" ॥
इति क्रिमिमुद्गरो रसः ॥
इति वैद्यकरसेन्द्रसारसंग्रहे क्रिमिरोगाधिकारे ॥
* ॥
अथास्य पथ्यापथ्यविधिः । पथ्यानि यथा, --
"आस्थापनं कायशिरोविरेचनं
धूमः कफघ्नानि शरीरमार्ज्जना ।
चिरन्तना वैणवरक्तशालयः
पटोलवेत्राग्ररसोनवास्तुकम् ॥
हुताशमन्दारदलानि सर्षपा
नवीनमोचं वृहतीफलान्यपि ।
तिक्तानि नाली च दलानि मौषिकं
मांसं विडङ्गं पिचुमर्द्दपल्लवम् ॥
पथ्या च तैलन्तिलसर्षपोद्भवं
सौवीरशुक्तञ्च तुषोदकं मधु ।

रिककषायेण सुखोष्णेन परिषेचयेत् । तेनैव च कषायेण वाह्याभ्यन्तरान् सर्व्वोदकार्थान् कारयेत्
शश्वत् । तदभावे वा कटुकतिक्तकषायाणामौषधानां क्वाथैर्मूत्रक्षारैर्वा परिषेचयेत् । परिषिक्तञ्च एवं निवातमागारमनुप्रवेश्य पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरसिद्धेन यवाग्वादिना क्रमेणोपक्रामयेत् । विलेप्याक्रमागतञ्चैनमनुवासयेत् विडङ्गतैलेनैकान्तरं द्विस्त्रिर्व्वा । यदि पुनरस्यातिप्रवृद्धान् शीर्षादीन् क्रिमीन् मन्येत, शिरस्येवाभिसर्पतः कदाचित् । ततः स्नेहस्वेदाभ्यामस्य शिर
उपपाद्य, विरेचयेदपामार्गतण्डुलादिना शिरोविरेचनेन ।

यस्त्वभ्याहार्य्यविधिः प्रकृतिविघातोक्तः क्रिमीणां

सोऽनुव्याख्यास्यते । मूषिकपर्णी समूलाग्रप्रतानामपहृत्य खण्डशश्छेदयित्वा उदूखले क्षोदयित्वा पाणिभ्यां पीडयित्वा च रसं गृह्णीयात् । तेन रसेन लोहितशालितण्डुलपिष्टं समालोड्य पूपलिकां कृत्वा विधूमेष्वङ्गारेषूपकुड्य विडङ्गतैललवणोपहितां क्रिमिकोष्ठाय भक्षयितुमुपयच्छेत् । तदनन्तरमम्लकाञ्जिकमुदश्विद्वापिप्पल्यादि पञ्चवर्गसंसृष्टं सलवणमनुपाययेत्" ।

"अथाश्वशकृदाहृत्य महति किलिञ्जे प्रती-

र्य्यातपे शोषयित्वोदूखले क्षोदयित्वा दृशदि पुनः सूक्ष्माणि चूर्णानि कारयित्वा विडङ्गकषाशोधयित्वा विडङ्गकषाये सुखोष्णे प्रक्षिप्य
सुनिर्व्वापितान् निर्व्वापयेत्
आदोषशमनात् ।
गतदोषानभिसमीक्ष्य सप्रलूनान्
प्रलुच्य पुनरेव
सुनिष्पूतान्निष्पूय सुशुद्धान् शोधयित्वा विडङ्गकषायेण त्रिःसप्तकृत्वः सुपरिभावितान् भावयित्वातपे शोधयित्वोदूखले संक्षुद्य दृशदि पुनः
श्लक्ष्णपिष्टान् कारयित्वा
द्रोण्यामभ्यवधाय विडङ्गकषायेण मुहुर्मुहुरवसिञ्च्य पाणिमर्द्दं मर्द्दयेत् । तस्मिन् खलु प्रपीड्यमाने यत्तैलमुपदियात्
तत्पाणिभ्यां पर्य्यादाय शुचौ दृढे कलसे समासिच्यानुगुप्तन्निधापयेत् । अथाहरेति ब्रूयात्
तिल्वकोद्दालकयोर्द्वौ विल्वमात्रौ पिण्डौ श्लक्ष्णपिष्टौ विडङ्गकषायेण, ततोऽर्द्धमात्रौ श्यामात्रिवृतयोरर्द्धमात्रौ दन्तीद्रवन्त्योरतो अर्द्धमात्रौ चव्यचित्रकयोरित्येतत् सम्भारं विडङ्गकषायस्यार्द्धाढकमात्रेण प्रतिसंसृज्य
ततस्तैलप्रस्थमावाप्य
सर्व्वमालोड्य महति पर्य्योगे समासिच्याग्नावधिश्रित्य महत्यासने सुखोपविष्टः सर्व्वतः स्नेहमवलोकयन्नजस्रं मृद्वग्निना साधयेद्दर्व्या सततमवघट्टयन् । स यदा जानीयाद्विरमति शब्दः, प्रशाम्यति च फेणः, प्रसादमापद्यते स्नेहो यथास्वञ्चन्धवर्णरसोत्पत्तिः संवर्त्तते,
भेषजमङ्गुलिभ्यां मृद्य-

पचेलिमं तालमरुष्करं गवां
मूत्रञ्च ताम्बूलसुरामृगाण्डजम् ॥
औष्ट्राणि मूत्राज्यपयांसि रामठं
क्षाराजमोदा खदिरञ्च वत्सकम् ।
जम्बीरनीरं सुषवी यमानिका
क्षाराः सुराह्वा गुरुशिंशपोद्भवाः ॥
तिक्तः कषायः कटुको रसोऽप्ययं
वर्गो नराणां क्रिमिरोगिणां सुखः" ॥ * ॥
अपथ्यानि यथा, --
"छर्द्दिञ्च तद्वेगविधारणञ्च
विरुद्धपानाशनवह्निनिद्राम् ।
द्रवञ्च पिष्टान्नमजीर्णताञ्च
घृतानि माषान् दधिपत्रशाकम् ॥
मांसं पयोऽम्लं मधुरं रसञ्च
क्रिमीन् जिघांसुः परिवर्ज्जयेच्च" ॥

| | | |
|---|---|---|
| | मानमनतिमृदुमनतिदारुणमनङ्गुलिग्राहि<br>चेति ।<br>सकालस्तस्यावतारणाय।<br>ततस्तमवतीर्णं हृतं<br>शीतीभूतं महता वाससा परिपूय शुचौ<br>दृढे<br>कलसे समासिच्य पिधानेन पिधाय<br>शुक्लेन<br>वस्त्रपट्टेनाच्छाद्य सूत्रेण सुबद्धं<br>अनुगुप्तन्निधाप-<br>येत् । ततोऽस्मै मात्राम्प्रयच्छेत् पानाय<br>। तेन<br>साधु विरिच्यते । सम्यगपहृतदोषस्य<br>चास्यानु-<br>पूर्ब्वी यथोक्ता ।<br>ततश्चैनमनुवासयेदनुवासन-<br>काले” ॥<br><br>“इत्येतत् द्वयानां श्लेष्म-<br>पुरीष-सम्भवानां | |

इति वैद्यकक्रिमिरोगपथ्यापथ्यविधिग्रन्थे॥)

**क्रिमिकण्टकं**, क्ली, (क्रिमौ कण्टकमिव ।) कृमि-
कण्टकम् । इति मेदिनी ॥

**क्रिमिघ्नः**, पुं, (क्रिमिं हन्ति नाशयतीति । "अमनु-
ष्यकर्तृके च" । ३ । २ । ५३ । इति टक् । मूलवि-
भूजादित्वात् सिद्धः । अत् पूर्ब्बस्येति नियमान्न
णत्वम् ।) कृमिघ्नः । विडङ्गः । इत्यमरटीकायां
रमानाथः ॥ (क्रिमिरोगनाशकौषधविशेषः ।
"क्रिमिघ्नं किंशुकारिष्टवीजं सरसभस्मकम् ।
वल्वद्वयञ्चाखुपर्णीरसैः क्रिमिविनाशनः" ॥
इति क्रिमिघ्नो रसः ॥
इति वैद्यकरसेन्द्रसारसंग्रहे क्रिम्यधिकारे ॥)

**क्रिमिघ्नी**, स्त्री, (क्रिमिघ्न + टित्वात् स्त्रियां ङीप् ।)
सोमराजी । इति शब्दचन्द्रिका ॥

**क्रिमिजं**, क्ली, (क्रिमिभ्यः जायते इति । "अन्येष्वपि
दृश्यते" । ३ । २ । १०१ । इति डः ।) अगुरु ।
इत्यमरः ॥

**क्रिमिजा**, स्त्री, (क्रिमिज + स्त्रियां टाप् ।) लाक्षा ।
इति रत्नमाला ॥

**क्रिमिशत्रुः**, पुं, (क्रिमेः शत्रुरिव नाशकत्वात् ।) रक्त-
पुष्पकः । इति शब्दचन्द्रिका । पालितामादार
रति भाषा ॥

**क्रिमिशात्रवः**, पुं, (शत्रु + स्वार्थे अण् शात्रवः ।
क्रिमेः शात्रव इव तन्नाशकत्वात् ।) विट्खदिरः ।
इति शब्दचन्द्रिका ॥

**क्रिमिशैलः**, पुं, (क्रिमिभिनिर्म्मितः शैल इव ।)
वल्मीकः । इति त्रिकाण्डशेषः ॥

**क्रियः**, पुं, (क्रिया ग्रहाणामाद्यगतिक्रिया विद्यते-
अत्र अर्शआदेरच् ।) मेषराशिः । इति दीपिका ॥

**क्रिया**, स्त्री, (क्रियते अनया असौ अस्मिन् इति
वा । डु कृ ञ् करणे करणकर्म्माधिकरणादौच
यथायथं श प्रत्ययः । "रिङ् शयग्लिङ्क्षु" ।
७ । ४ । १८ । इति रिङादेशः । "अचिश्नुधातु-
भ्रुवां य्वोरियङुवङौ" । ६ । ४ । ७७ । इति

साक्ष्यलेख्यानुमानञ्च मानुषी त्रिविधा स्मृता
।
धटाद्या धर्म्मजान्ताश्च दैविकी नवधा
स्मृता" ॥
इति व्यवहारतत्त्वे वृहस्पतिः ॥
(चिकित्साकार्य्यं
यथा, -- चरके सूत्रस्थाने १७ अध्याये ॥
"याभिः क्रियाभिर्जायन्ते शरीरे धातवः समाः
।
सा चिकित्सा विकाराणां कर्म्मतद्भिषजां
मतम् ॥
कथं शरीरे धातूनां वैषम्यं न भवेदिति ।
समानाञ्चानुबन्धः स्यादित्यर्थं क्रियते
क्रियाः" ॥
"यात्युदीर्णं शमयति नान्यं व्याधिं करोति च
।
सा क्रिया न तु या व्याधिं हरत्यन्यमुदीरयेत्"
॥
शीते शीतप्रतीकार उष्णेचोष्मनिवारणम् ।
कृत्वाकुर्य्यात् क्रियांप्राप्तां क्रियाकालं न
हापयेत्" ॥
इति च सुश्रुते सूत्रस्थाने ३५ अध्याये ॥)

**क्रियाकारः**, पुं, (क्रियां शिक्षारम्भं करोतीति । कृ +
उपपदे "कर्म्मण्यण्" ३ । १ । १ । इत्यण् ।) नव-
च्छात्रः । नूतन पडुया इतिभाषा । इति त्रिकाण्ड-
शेषः ॥ कर्म्मकर्त्तरि त्रि ॥

**क्रियाद्वेषी**, [न्] पुं, (क्रियां व्यवहाराङ्गसाधनं
साक्षिलेख्यादिकं द्वेष्टि । द्विष् + णिनिः ।)
साक्ष्यलिखितभुक्तियुक्तिशपथद्वेष्टा । स चं व्यव-
हारविषये पञ्चधा । हीनान्तर्गतहीनविशेषः ।
यथाह, -- व्यवहारतत्त्वे नारदः ।
"अन्यवादी क्रियाद्वेषी नोपस्थायी निरुत्तरः
।
आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः" ॥
(तल्लक्षणं यथा । वीरमित्रधृतकात्यायनवचने
।

यस्तु वाह्यार्थसंयोगः क्रियायोगः स
उच्यते ॥
प्रधानं कारणं योगो मुक्तेर्मुनिवरोत्तम ! ।
क्रियायोगस्तु योगस्य परमं तात !
साधनम् ॥
यदेतद्भवता पृष्टं तदिहैकमनाः शृणु ।
यैस्तु देवालयं विष्णोः शुभं दारुमयं
कृतम् ॥
कारयेन्मृण्मयं वापि शृणु तस्य फलं मुने !
।
अहन्यहनि योगेन यजतो यन्महाफलम्
॥
प्राप्नोति तत् फलं विष्णोर्यः कारयति
मन्दिरम् ।
कुलानां शतमागामि समतीतं तथा शतम्
॥
कारयेद्भगवद्धाम नयत्यच्युतमन्दिरम् ।
सप्तजन्मकृतं पापं स्वल्पं वा यदि वा बहु
॥
विष्णोरालयविन्यासप्रारम्भाद्वे नश्यति
।
पतितं पतमानन्तु तथार्द्धपतितं तथा ॥
समुद्धृत्य हरेर्द्धाम द्विगुणं फलमाप्नुयात्
॥
"प्रतिमां लक्षणवतीं यः कुर्य्याच्चैव
मानवः ॥
केशवस्य परं लोकमक्षयं प्रतिपद्यते ।
अनुज्ञातो मया राज्ये यमो राजाथ
किङ्कराः ॥
केवलं ये जगद्धाममनन्तं समुपाश्रिताः ।
भवद्भिः परिहार्य्यास्ते तेषां नास्तीह
संस्थितिः ॥
नमः कृष्णाच्युतानन्त
वासुदेवेत्युदीरितम् ।
यैर्भावभावितैर्दूतास्ते च त्याज्याः
सुदूरतः ॥
दानं ददद्भिर्यैरुक्तमच्युतः प्रीयतामिति ।
श्रद्धापुरःसरैर्नित्यं ते च त्याज्याः
सुदूरतः" ॥
इत्याद्ये वह्निपुराणे वैष्णवक्रियायोगे
यमानुशासन-

इयङ् ।) आरम्भः । निष्कृतिः । शिक्षा । पूजनम् । सम्प्रधारणम् । उपायः । कर्म्म । तन्नवविधम् । यथा, --
"आरम्भो निष्कृतिः शिक्षा पूजनं सम्प्रधारणम् ।
उपायः कर्म्म चेष्टा च चिकित्सा च नव क्रियाः" ॥
इति भावप्रकाशः ॥ चेष्टा । चिकित्सा । इत्यमरः । ३ । ३ । १५६ ॥ कारणम् । इति हेमचन्द्रः ॥ श्राद्धम् । इत्यमरटीकायां स्वामी ॥ शौचम् । इति शब्दरत्नावली ॥ धात्वर्थः करोत्यर्थो
वा । इति वैयाकरणाः ॥ क्रियाः साध्यरूपाः वस्तधर्म्माः पाकादयः एषु हि अधिश्रयणाद्यवश्रयणान्तादिः पूर्ब्बापरीभूतो व्यापारकलापः पाकादिशब्दवाच्यः । इति साहित्यदर्पणम् ॥ चतुः-
प्रकारव्यवहारपादान्तर्गतव्यवहारपादविशेषः । सा द्विधा मानुषी दैविकी च । तत्राद्या साक्ष्यलेख्यानुमानभेदेन त्रिधा । द्वितीया धटाग्न्युदकविषकोषतण्डलतप्तमाषकफालधर्म्मजभेदेन नवधा दिष्यानि । यथा, --
"द्विप्रकारा क्रिया प्रोक्ता मानुषी दैविकी । तथा
"लेख्यञ्च दाक्षिणञ्चैव क्रिया ज्ञेया मनीषिभिः
।
तां क्रियां द्वेष्टि यो मोहात् क्रियाद्वेषी स उच्यते" ॥)
कर्म्मद्वेष्टरि त्रि ॥

**क्रियापादः**, पुं, (क्रिया विवादसाधनं पाद इव ।)
चतुष्पादव्यवहारान्तर्गततृतीयपादः । यथा, --
"पूर्ब्बपक्षः स्मृतः पादो द्वितीयश्चोत्तरः स्मृतः ।
क्रियापादस्तथा चान्यश्चतुर्थो निर्णयः स्मृतः" ॥
इति वृहस्पतिः ॥ स च साक्ष्यलिखितभुक्तियुक्ति-
शपथरूपः । इति व्यवहारतत्त्वम् ॥

**क्रियाभ्युपगमः**, पुं, (क्रियायाः कर्षणादिक्रियार्थं
अभ्युपगमः स्वीकारः ।) परस्परक्रियास्वीकारः ।
द्वयोः पुरुषयोः कस्मिंश्चिद्विषये परस्पराङ्गीका-
रेण अनुमतिः । यथा, --
"क्रियाभ्युपगमात् क्षेत्रं वीजार्थं यत् प्रदीयते ।
तस्येह भागिनौ दृष्टौ वीजी क्षेत्रिक एव च" ॥
इति मनुः ॥ अस्यार्थः । "यदत्रापत्यं भविष्यति
तदावयोरुभयोरेवेति नियम्यैतत् क्षेत्रस्वामिना
वीजवपनार्थं यद्वीजिनो दीयते तस्यापत्यस्य लोके
वीजिक्षेत्रिणौ द्वावपि भागिनौ दृष्टौ" । इति
कुल्लूकभट्टः ॥ उपलक्षणमेतत् ॥

**क्रियायोगः**, पुं, (क्रियैव योगः योग उपायः ।) देवा-
राधनतदालयादिकरणरूपपुण्यक्रिया। यथा, --
नारद उवाच ।
"क्रियायोगः कथं प्रोक्तस्त्वया मे प्रपितामह !
।
तदहं श्रोतुमिच्छामि फलं चास्य यथातथम्
॥
ब्रह्मोवाच ।
ज्ञानयोगस्तु योगस्य यस्तु साधनमात्मना ।
नामाध्यायः ॥ तथा च पातञ्जले ।
"तपः स्वाध्यायेश्वरप्रणिधानानि
क्रियायोगाः" ॥)

**क्रियावसन्नः**, त्रि, (क्रियया अवसन्नः ।) साक्ष्यादिना
प्राप्तपराजयः । यथा, --
"स्वयमभ्युपपन्नो हि स्वचर्य्यावसितोऽपि सन् ।
क्रियावसन्नो वादे तु परं सभ्यावधारणम्"
॥
इति व्यवहारतत्त्वम् ॥

**क्रियावान्**, [त्] त्रि, (क्रिया अस्यास्तीति मतुम् ।
मस्य वः ।) कर्म्मसूद्यतः । क्रियासु नियुक्तः ।
इत्यमरः । ३ । १ । १८ ॥ (यथा, भट्टिः । १ । १० ।
"पुत्त्रीयता तेन वराङ्गनाभि-
रानायि विद्वान् क्रतुषु क्रियावान्" ॥)

**क्रियावादी**, [न्] पुं, (क्रियां क्रियासाध्यं वदति ।
वद + णिनिः ।) प्रमाणवादी । कार्य्यवादी । इति
मिताक्षरा ॥ फरियादी इति पारस्यभाषा
॥

**क्रियेन्द्रियं**, क्ली, (क्रियायाः कर्म्मणः साधनं इन्द्रि-
यम् ।) कर्म्मेन्द्रियम् । इति हेमचन्द्रः ॥ (तानि च
पञ्चसंख्यकानि ज्ञानकर्म्मभेदेन दशसंख्यकानि च
प्रसिद्धानि मनस्तु उभयात्मकं सर्व्वेषां प्रवर्त्तकम् ।
यथा मनौ ।
"श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी ।
पायूपस्थापाणिपादवाक् चैव दशमी स्मृता" ॥)

**क्री**, डु ञ ग द्रव्यपर्य्यये । इति कविकल्पद्रुमः ॥
(क्र्यां--उभं-सकं-अनिट् ।) पर्य्यायः परीवर्त्तः ।
डु, क्रीत्रिमम् । ञ ग, क्रीणाति क्रीणीते धान्यं

| | | |
|---|---|---|
| | | धनेन लोकः । इति दुर्गादासः ॥<br>**क्रीड**, ऋ खेले । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) ऋ, अचिक्रीडत् । क्रीडति |

बालः शिशुभिः । इति दुर्गादासः ॥

**क्रीडः**, पुं, (क्रीड + भावे घञ् ।) परीहासः । इति

शब्दरत्नावली ॥

**क्रीडनं**, क्ली, (क्रीड + भावे ल्युट् ।) खेला । यथा ।

"बालक्रीडनमिन्दुशेखरधनुर्भङ्गावधि प्रह्वता

ताते काननसेवनावधि कृपा सुग्रीवसख्यावधि" ।

इति महानाटकम् ॥

**क्रीडा**, स्त्री, (क्रीड + भावे अप् ततष्टाप् ।) परी-

हासः । खेला । इत्यमरः । १ । ७ । ३३ ॥

(यथा, भागवते । २ । ३ । १५ ।

"स वै भागवतो राजा पाण्डवेयो महारथः ।

बालक्रीडनकैः क्रीडन् कृष्णक्रीडां य आददे" ॥)

अवज्ञानम् । इति मेदिनी ॥

**क्रीडातालः**, पुं, (क्रीडानामकस्तालः ।) तालप्रभेदः ।

यथा, --

"एक एव प्लुतो यत्र क्रीडातालः स कथ्यते ।

अपरं नियमं विना" । इति सङ्गीतदामोदरः ॥

**क्रीडारत्नं**, क्ली, (क्रीडायां क्रीडायाः वा रत्नमिव ।)

रतिः । इति त्रिकाण्डशेषः ॥

**क्रीडारथः**, पुं, (क्रीडायै रथः ।) क्रीडार्थरथः । इति हलायुधः ॥

**क्रीतः**, पुं, (क्री + कर्म्मणि क्तः ।) क्रीतकपुत्त्रः । स

तु द्वादशविधपुत्त्रान्तर्गतपुत्त्रभेदः । इति जटा-

धरः ॥ (यथाह, याज्ञवल्क्यः ।

"दद्यात् मातापिता वा यं स पुत्त्रो दत्तको भवेत् ।

क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयं

कृतः" ॥)

कृतक्रये त्रि । केना इति भाषा । यथा, --

"दीयमानं न गृह्णाति क्रीतं पण्यन्तु यः क्रयी ।

स एवास्य भवेद्दोषो विक्रेतुर्योऽप्रयच्छतः" ॥

इति प्रायश्चित्ततत्त्वे नारदः ॥

**क्रीतकः**, पुं, (क्रीत + स्वार्थे कन् ।) क्रीतपुत्त्रः ।

यथा, मनुः । ९ । १७४ ।

"क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात् ।

स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वा" ॥

**क्रीतानुशयः**, पुं, (क्रीते क्रये अनुशयः पश्चात्तापः ।)

"वायवे वलाका इन्द्राग्निभ्यां क्रुञ्चान्" ॥)

**क्रुञ्चा**, स्त्री, (क्रुञ्च + स्त्रियां संयोगोपधत्वात् टाप् ।)

अजादित्वात् टावित्येके । वीणाभेदः ।

इति शब्द-

रत्नावली ॥

**क्रुत्**, [ध्] स्त्री, (क्रुध् + सम्पदादित्वात् क्विप् भावे ।)

क्रोधः । इत्यमरहेमचन्द्रौ ॥ अस्या

रूपान्तराणि ।

क्रुद् । क्रुत्त क्रुद्ध । इति

संक्षिप्तसारव्याकरणम् ॥

**क्रुद्धः**, त्रि, (क्रुध् + कर्त्तरि क्तः ।) क्रोधयुक्तः । यथा ।

"योद्धुमभ्याययौ क्रुद्धो रक्तवीजो

महासुरः" ॥

इति देवीमाहात्म्यम् ॥ (भावे क्तः ।) क्रोधे

क्ली ॥

**क्रुध**, ऌ य औ कोपे । इति कविकल्पद्रुमः ॥

(दिवां-परं-अकं-अनिट् ।) ऌ, अक्रुधत् ।

य, क्रुध्य-

ति लोकः शिशवे । औ, क्रोद्धा । इति

दुर्गा-

दासः ॥ * ॥ रेलते १ हेलते २ भ्रामते ३

भृणी-

यते ४ भ्रीणाति ५ भ्रेयति ६ दोधति ७

वनय्यति

८ कम्पते ९ भोजते १० । इति दश

क्रुध्यति-

कर्म्माणः । इति वेदनिघण्टौ २ अध्यायः

॥

**क्रुधा**, स्त्री, (क्रुध् + क्विप् स्त्रियां हलन्तत्वात् वा टाप् ।)

क्रोधः । इत्यमरटीकायां भरतः ॥

**क्रुन्च**, गत्याम् । वक्रणे । इति कविकल्पद्रुमः ॥ (भ्वां-

परं-सकं-अकं च-सेट् ।) रेफयुक्तादिः

पञ्चमस्वरी ।

क्रुञ्चति । इति दुर्गादासः ॥

**क्रुन्थ**, ग श्लिषि । क्लिशि । इति कविकल्पद्रुमः ॥

नवमैकादशराशयः । यथा, --

"ओजोऽथ युग्मं विषमः समश्च

क्रूरोऽथ सौम्यः पुरुषोऽङ्गना च ।

चरस्थिरद्व्यात्मकनामधेया

मेषादयोऽमी क्रमशः प्रदिष्टाः" ॥

इति दीपिका ॥

**क्रूरः**, पुं, (कृन्ततीति । "कृतेश्छक्रूच" । उणां २ । २१ ।

इति रक् धातोः क्रूवादेशश्च ।) भूताङ्कुशवृक्षः

।

रक्तकरवीरवृक्षः । श्येनपक्षी । कङ्कपक्षी । इति

राजनिर्घण्टः ॥

**क्रूरकर्म्मा**, [न्] पुं, (क्रूरं कर्म्म यस्य ।) भयानक-

कर्म्मकर्त्तरि त्रि ॥ (यथा, पञ्चतन्त्रे । १ । ७०

।

"द्विजिह्वा क्रूरकर्म्माणो निष्ठाच्छिद्रानुसारिणः

।

दूरतोऽपि हि पश्यन्ति राजानो भुजगा इव"

॥)

कटुतुम्बिनीवृक्षः । इति राजनिर्घण्टः ॥

(अक-

पुष्पी । अस्याः पर्य्याया यथा, --

भावप्रकाशस्य

पूर्ब्बखण्डे प्रथमे भागे ।

"अर्कपुष्पी क्रूरकर्म्मा पयस्या जलकामुका"

॥)

**क्रूरगन्धः**, पुं, (क्रूरः उग्रो गन्धोऽस्य ।) गन्धकः । इति

राजनिर्घण्टः ॥

**क्रूरगन्धा**, स्त्री, (क्रूरः उग्रो गन्ध एकदेशं ऽस्याः । स्त्रियां

टाप् ।) कन्थारीवृक्षः । इति राजनिर्घण्टः ॥

**क्रूरदृक्**, [श्] त्रि, (क्रूरा दृक् दृष्टिर्यस्य । क्रूरं

यथा स्यात् तथा पश्यति वा । दृश् + क्विन्

।)

पिशुनः । शनैश्चरे पुं । इति मेदिनी ॥ (यथा,

--

ज्योतिषतत्त्वे । "आरोवक्रः क्रूरदृक्

चावनेयः" ॥)

**क्रूरधूर्त्तः** पुं, (क्रूरः कृष्णवर्णतया धूर्त्त इव ।) कृष्ण-

द्रव्यं क्रीत्वा पश्चादनुतापः । यथा, --
"क्रीत्वा मूल्येन यः पण्यं क्रेता न बहु मन्यते ।
क्रीतानुशय इत्येतत् विवादपदमुच्यते" ॥
इति याज्ञवल्क्यः ॥

**क्रुङ्**, [ञ्], पुं स्त्री, (क्रुञ्चति वक्रं यथा स्यात् तथा गच्छति । "ऋत्विग् दधृक् स्रगिति" । ३ । २ । ५९ । इति निपातनात् साधुः ।) क्रौञ्चः । इत्यमरः । २ । ५ । २२ ॥ कोच् वक इति भाषा । (यथा, यजुर्व्वेदे १६ । ७३ ।
"अद्भ्यः क्षीरं व्यापिबत् क्रुङङाङ्गिरसो धिया ।
ऋतेन सत्यमिन्द्रियम्" ।
"आङ्गिरसः अङ्गानां रसः प्राणो यथा, क्रुङ् हंसो भूत्वा धिया प्रज्ञया अद्भ्यः सकाशात् क्षीरं दुग्धं व्यापिबत् पिबति संसृष्टाभ्यां क्षीरोदकाभ्यां क्षीरमेव हंसः पिबतीति जातिस्वभावः" । इति भाष्यम् ॥)

**क्रुञ्चः**, पुं, (क्रुन्च + अच् ।) क्रौञ्चपर्व्वतः । इति हेमचन्द्रः ॥ (वकविशेषः । यथा, यजुर्व्वेदे २४ । २२ । (क्र्यां-परं-अकं-सेट् ।) पञ्चमस्वरी रेफयुक्तः ।
क्लिशि दुःखानुभवे । ग, क्रुथ्नाति बुभुक्षार्त्तः । इति हलायुधः । चुक्रुन्थ । इति दुर्गादासः ॥

**क्रुश**, ज औ रोदे । हूतौ । इति कविकल्पद्रुमः ॥
(भ्वां-परं-रोदने अकं-आह्वाने सकं-अनिट् ।)
ज, क्रोशः क्रुशः । औ, अक्रुक्षत् । रोदोऽश्रुविमोचनम् । हूतिराह्वानम् । इति दुर्गादासः ॥

**क्रुश्वा**, [न्] पुं स्त्री, (क्रोशति रौतीति । क्रुश + "लीङ् क्रुशिरुहीति" । उणां ४ । ११३ । इति क्वनिप् ।) शृगालः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**क्रुष्टं**, क्ली, (क्रुश् + भावे क्तः ।) रोदनम् । इत्यमरः । १ । ७ । ३५ ॥ रावः । इति मेदिनी ॥

**क्रूरः**, त्रि, (कृत् छेदने + "कृतेश्छक्रूच" । उणां २ । २१ । इति रक्प्रत्ययः धातोः क्रूवादेशश्च ।) परद्रोहकारी । (यथा, मेघदूते । १०७ ।
"क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः" ॥)
निर्दयः । तत्पर्य्यायः । नृशंसः २ घातुकः ३ पापः ४ ।
(यथा, भागवते । ९ । १४ । ३७ ।
"स्त्रियो ह्यकरुणाः क्रूरा दुर्मर्षाः प्रियसाहसाः" ॥
यथा, च कुमारे । २ । ४८ ।
"तस्मिन्नुपायाः सर्व्वे नः क्रूरे प्रतिहतक्रियाः" ।
"क्रूरे घातुके" इति मल्लिनाथः ॥)
कठिनः । इत्यमरः । ३ । ३ । १९० ॥
(यथा, रघुवंशे । १२ । ४ ।
"तस्याभिषेकसम्भारं कल्पितं क्रूरनिश्चया" ॥)
धत्तूरकः । इति राजनिर्घण्टः ॥
(कृष्णधत्तूरकशब्देऽस्य गुणपर्य्याया ज्ञातव्याः ॥)

**क्रूररावी**, [न्] पुं, (क्रूरं कर्क्कशं उग्रं वा रौतीति । रु + णिनिः ।) द्रोणकाकः । इति राजनिर्घण्टः ॥

**क्रूरलोचनः**, पुं, (क्रूरे लोचने क्रूरं लोचनं वा अस्य ।) शनिः । इति हारावली ॥

**क्रूरस्वरः**, त्रि, (क्रूरः कर्क्कशः स्वरोऽस्य ।) कर्क्कशध्वनियुक्तः । यथा, --
"क्रूरस्वरा काकोलूकघरट्टोष्ट्रश्वगर्द्दभाः" ॥
इति कविकल्पलतायां द्वितीयश्लेषस्तवके तृतीयकुसुमम् ॥

**क्रूरा**, स्त्री, (क्रूर + स्त्रियां जातित्वेपि न ङीष् अतः टाप् ।) रक्तपुनर्नवा । इति राजनिर्घण्टः ॥

**क्रूराकृतिः**, पुं, (क्रूरा आकृतिर्यस्य ।) रावणः । इति शब्दमाला ॥ (कठोरमूर्त्तौ, त्रि ॥)

**क्रेणिः**, पुं, (क्री + निः ।) क्रयणम् । इत्युणादिकोषः ।

**क्रेतव्यं**, त्रि, (क्री + कर्म्मणि तव्यत् ।) क्रेयवस्तु । यथा,
"क्रेयं क्रेतव्यमात्रके" । इत्यमरः । २ । ९ । ८१ ॥

**क्रेता**, [ऋ] त्रि, (क्री + तृच् ।) क्रयकर्त्ता । यथा ।
"विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपो दमम् ॥
क्रेता मूल्यमवाप्नोति तस्माद्यस्तस्य विक्रयी" ॥
इति प्रायश्चित्ततत्त्वे याज्ञवल्क्यः ॥

**क्रेयं**, त्रि, (क्री + कर्म्मणि यत् ।) क्रेतव्यमात्रकम् । इत्यमरः । १ । ९ । ८१ ॥ किनिवार उपयुक्त द्रव्य इति भाषा ॥

| | | |
|---|---|---|
| | घोरः । इति मेदिनी ॥ (यथा, पञ्चतन्त्रे ३ । २५ ।<br>"क्रूरो लुब्धोऽलसोऽसत्यः प्रमादी भीरुरस्थिरः" ॥)<br>उष्णः । इति हेमचन्द्रः ॥<br>प्रथमतृतीषपञ्चमसप्तम- | |

क्रोञ्चदारणः, पुं, (क्रुञ्च + अच्
बाहुलकाद्गुणः ।
क्रोञ्चः पर्व्वतविशेषः । तस्य दारणः
दारकैत्यर्थः ।
कोञ्चं दारयति वा । दृ + णिच् + ल्युः ।)
कार्त्ति-
केयः । इत्यमरटीकायां रायमुकुटः ॥

**क्रोडं**, क्ली, स्त्री, (क्रूड + घञ् ।) बाह्वोर्मध्यम् । कोल
इति भाषा । तत्पर्य्यायः । भूजान्तरम् २
उरः ३
वत्सम् ४ वक्षः ५ । इत्यमरः । २ । ६ ।
७७ ॥ उत्सङ्गः ६
भोगः ७ वपुषःप्राक् ८ । इति राजनिर्घण्टः
॥
(यथा, यजुर्व्वेदे । २५ । ८ । "इन्द्रस्य
क्रोडोऽदित्यै-
पाजस्यम्" । कात्यायनश्रौतसूत्रे च । ६ ।
८ । १३ ।
"शेषमिडा पात्र्यामासिच्य क्रोडमनस्थीनि
च
पास्यति" ॥ हितोपदेशे च ।
"तत्र तरोर्निर्म्मितनीडक्रोडे पक्षिणः सुखं
वर्षासु
निवसन्ति" ॥)

**क्रोडः**, पुं, (कूड + घञ् । क्रोडोऽस्यास्तीति अर्श
आदिभ्यः अच् वा ।) शूकरः । इत्यमरः । २
। ५ । २ ॥
शनिः । इति मेदिनी ॥ वाराहीकन्दः । इति
राज-
निर्घण्टः ॥ (यथा, महाभारते । १३ । ५०
। २० ।
"नदी शैवालदिग्धाङ्गं हरिश्मश्रुजटाधरम् ।
नग्रैः शङ्खनखैगात्रैः क्रोडैश्चित्रैरिवार्पितम्"
॥)

**क्रोडकन्या**, स्त्री, (क्रोडस्य शूकरस्य कन्या इव ।)
वाराहीकन्दः । इति राजनिर्घण्टः ॥

**क्रोडचूडा**, स्त्री, (क्रोडे चूडा यस्याः ।) महाश्राव-
रुट् ६ क्रुत् ७ क्रुद् ८ । इत्यमरः । १ । ७ । २६
॥
आमर्षः ९ इति तट्टीकासारसुन्दरी ॥ भीमः १०
क्रुधा ११ रुषा १२ । इति शब्दार्णवः ॥ स तु
ब्रह्मणो भ्रुवो जातः शरीरस्थषड्रिपोरन्तर्गतश्च ।
इति पुराणम् ॥ हेलः १ हरः २ हृणिः ३ त्यजः ४
भामः ५ एहः ६ ह्वरः ७ तपुषी ८ जूर्णिः ९
मन्युः १० व्यथिः ११ । इत्येकादश
क्रोधनामानि ।
इति वेदनिघण्टौ २ अध्यायः ॥ (वत्सरभेदः ।
यथा,
"विषमस्थं जगत् सर्व्वं व्याकुलं समुदाहृतम् ।
जनानां जायते भद्रे ! क्रोधे क्रोधः परस्परम्" ॥
इति शब्दार्थचिन्तामणिः । स्त्रियां टाप् । दक्ष-
कन्याविशेषः । यथा, महाभारते १ । ६५ । १२ ।
"क्रोधा प्राधा च विश्वा च विनता कपिला मुनिः"
॥)

**क्रोधजः**, पुं, (क्रोधात् जायते । जन् + डः ।) मोहः ।
यथा, भगवद्गीतायाम् । २ । ६२ ।
"सङ्गात् संजायते कामः कामात् क्रोधोऽभिजायते
।
क्रोधात्भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः"
॥
द्विधाव्यसनगणान्तर्गतव्यसनगणः । यथा, मनुः ।
"पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् ।
वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः" ॥

**क्रोधनः**, त्रि, (क्रुध् + "क्रुधमण्डार्थेभ्यश्च" । ३ । २ ।
१५१ । इति युच् ।) क्रोधविशिष्टः । तत्पर्य्यायः ।
अमर्षणः २ कोपी ३ । इत्यमरः । ३ । १ । ३२
॥
क्रोधी ४ रोषणः ५ । इति हेमचन्द्रः ॥ (यथा,
वेणीसंहारे तृतीयाङ्के ।
"यद्रामेण कृतं तदेव कुरुते द्रौणायणिः क्रोधनः"
॥
कुरुवंशीयनृपविशेषः ।
यथा, भागवते । ९ । २२ । ११ ।
"ततश्च क्रोधनस्तस्माद् देवातिथिरमुष्य च" ॥
षष्टिवर्षान्तर्गतोनषष्टितमवर्षभेदः । यथा तन्त्रे ।
"रोगो मरणदुर्भिक्षं विरोधोत्तरसङ्कुलम् ।
क्रोधने विषमं सर्व्वं समाख्यातं हरप्रिये !" ॥
इति भाषा । तत्पर्य्यायः । गव्यूतम् २ ।
इति
हेमचन्द्रः ॥ (यथा, रघुवंशे । १३ । ७९ ।
"क्रोशार्द्धं प्रकृतिपुरःसरेण गत्वा
काकुत्स्थः स्तिमितजवेन पुष्पकेण" ॥)
द्विसहस्रदण्डः । अष्टसहस्रपरिमाणम् ।
इति
लोलावती ॥ मुहूर्त्तः । यथा, --
"दशदण्डे तु या पूजा तत्सर्व्वमक्षयं भवेत् ।
षष्ठक्रोशे महेशानि तत् ! सर्व्वममृतोपमम् ॥
सप्तमक्रोशके देवि ! सर्व्वं क्षीरोपमं भवेत् ।
अष्टमक्रोशके देवि ! द्रव्यतुल्यं न संशयः ॥
अतः परं महेशानि ! विषतुल्यं न संशयः" ।
इति गुप्तसाधनतन्त्रे षष्ठः पटलः ॥ क्रुश् +
भावे
घञ् । रोदनम् । आह्वानम् ॥)

**क्रोशतालः**, पुं, (क्रोशं व्याप्य तालः शब्दभेदः यस्य
।)
ढक्का । इति हारावली ॥

**क्रोशध्वनिः**, पुं, (क्रोशं व्याप्य ध्वनिरस्य ।) ढक्का ।
इति हारावली ॥

**क्रोशयुगं**, क्ली, (क्रोशस्य क्रोशपरिमिताध्वनो युगं
युग्मम् ।) क्रोशद्वयम् । तत्पर्य्यायः ।
गव्यूतिः २ ।
इत्यमरः ॥ गोरुतम् ३ गव्या ४ गव्युतम् ५
। इति
हेमचन्द्रः ॥

**क्रोष्टा**, [ष्टृ] पुं, स्त्री, (क्रोशति रौतीति । क्रुश् +
"सितनिगमिमसीति" । उणां १ । ७० ।
इति तुन् ।
"तृज्वत् क्रोष्टुः" । ७ । १ । ९५ । इति
तृज्वत् ।)
शृगालः इत्यमरः । २ । १ । १८ ॥ (यथा,
महाभारते-
१ । २१४ । ८ ।
"ब्राह्मणस्य प्रशान्तस्य हविर्धाङ्क्षैः प्रलुप्यते
।
शार्द्दूलस्य गुहां शून्यां नीचः
क्रोष्टाभिमर्द्दति" ॥

णिकावृक्षः । इति राजनिर्घण्टः ॥ वड
थुलकुडि
इति भाषा ।

**क्रोडपर्णी**, स्त्री, (क्रोडे कण्टकमध्ये पर्णं यस्याः ।)

कण्टकारिका । इति शब्दचन्द्रिका ॥
(कण्ट-
कारीशब्दे विवरणमस्य ज्ञेयम् ॥)

**क्रोडपादः**, पुं, (क्रोडे शरीराभ्यन्तरे पादोऽस्य ।)

कच्छपः । इति हेमचन्द्रः ॥

**क्रोडाङ्गः**, पुं, (क्रोडे अङ्गानि अस्य ।) कच्छपः । इति

शब्दरत्नावली ॥

**क्रोडाङ्घ्रिः**, पुं, (क्रोडे अङ्घ्रिरस्य ।) कच्छपः । इति

त्रिकाण्डशेषः ॥

**क्रोडी**, स्त्री, (क्रोड + जातिवाचकत्वात् गौरादित्वात्

ङीष् ।) वाराहीकन्दः । इति राजनिर्घण्टः
॥

**क्रोडीकरणं**, क्ली, (क्रोड + कृ + भावे ल्युट् । अभूत-

तद्भावे च्विः ।) आलिङ्गनम् । इति
हलायुधः ॥

**कोडीकृतिः**, स्त्री, (क्रोड + कृ + भावे + क्तिन् । अभूत-

तद्भावे चिः ।) आलिङ्गनम् । इति हेमचन्द्रः
॥

**क्रोडीमुखः**, पुं, (क्रोड्याः शूकर्य्याः मुखमिव मुखं

अम्य ।) गण्डकः । गण्डारः । इति
राजनिर्घण्टः ॥
गण्डार इति भाषा ।

**क्रोडेष्टा**, स्त्री, (क्रोडस्य शूकरस्य इष्टा प्रिया ।)

मुस्ता इति राजनिर्घण्टः ॥

**क्रोथः**, पुं, (क्रुथ् हिंसने + भावे घञ् ।) हननम् ।

इति हेमचन्द्रः ॥

**क्रोधः**, पुं, (क्रध् + भावे घञ् ।) प्रतिकूले सति

तैक्ष्णम्य प्रबोधः । (यथा, भमवद्गीतायाम्
। ३ अ०
"काम एष क्रोध एष रजोगुणसमुद्भवः ।
भैरवभेदः । यदुक्तं तन्त्रे ।
"असिताङ्गो रुरुश्चण्ड उन्मत्तः क्रोधनस्तथा"
॥)

**क्रोधना**, स्त्री, (क्रुध् + युच् + स्त्रियां टाप् ।) कोप-

वती । तत्पर्य्यायः । भामिनी २ चण्डी ३ । इति
त्रिकाण्डशेषः ॥ (यथा, रामायणे । २ । ७० ।
१० ।
"आत्मकामा सदा चण्डी क्रोधना प्राज्ञमानिनी"
॥)

**क्रोधमूर्च्छितः**, पुं, (क्रोधः क्रोधमय इव मूर्च्छितः ।)

चोरनामगन्धद्रव्यम् । इति शब्दरत्नावली ॥ (क्रो-
धेन मूर्च्छितः ।) अतिकोपने त्रि ॥ (यथा, रामा-
यणे । १ । १ । ४९ ।
"रक्षसां निहतान्यासन् सहस्राणि चतुर्द्दश ।
ततो ज्ञातिवधं श्रुत्वा रावणः क्रोधमूर्च्छितः" ॥)

**क्रोधी**, [न्] त्रि, (क्रोधोऽस्यास्तीति इनिः । यद्वा,

क्रुध्यति इति । क्रुध् + णिनिः ।) क्रोधयुक्तः इति
हेमचन्द्रः ॥ महिषः । इति राजनिर्घण्टः ॥ (यथा
सुश्रुते । "तत्र जागरुकः शीतद्वेषी दुर्भगस्तेनो
मत्सर्य्यनार्य्यो गान्धर्व्वचित्तः
स्फुटितकरचरणोऽति-
रूक्षश्मश्रुनखकेशः क्रोधी दन्तनखखादी च" ॥)

**क्रोशः**, पुं, (क्रोशति यतः । क्रुश् + अपादाने घञ् ।)

सहस्रधनुः । चतुःसहस्रहस्तपरिमाणम् । कोश
यदुवंशीयो राजविशेषः । यथा, हरिवंशे ३३
। ६१
"क्रोष्टोस्तु शृणु राजेन्द्र ! वंशमुत्तमपौरुषम्
।
यदोर्वंशधरस्याथ यज्वनः पुण्यकर्म्मणः ॥
क्रोष्टोर्हि वंशं श्रुत्वेमं सर्व्वपापैः प्रमुच्यते"
॥)

**क्रोष्टुकपुच्छिका**, स्त्री, (क्रोष्टुकस्य शृगालस्य पुच्छ-

मिव अस्त्यस्याः । ठन् टाप ।) पृश्निपर्णी ।
चाकु
लिया इति भाषा । रामवासक इति ख्याता
।
इति केचित् । इत्यमरटीकायां स्वामी ॥
गोलो-
मिका । इति राजनिर्घण्टः ॥

**क्रोष्टुकमेखला**, स्त्री, (क्रोष्टुकस्येव मेखला कट्यधःपश्चाद्

भागो वा अस्त्यस्याः "अर्शआदिभ्यः" । ५
। २ । १२७ ।
इति अच् टाप् ।) पृश्निपर्णी । इति
रत्नमाला ॥

**क्रोष्टुपुच्छिका**, स्त्री, (क्रोष्ठो शृगालस्य पुच्छमिव

अस्त्यस्याः । ठन् टाप् अत इत्वं च ।)
पृश्निपर्णी ।
इति रत्नमाला ॥

**क्रोष्टुपुच्छी**, स्त्री, (क्रोष्टोः पुच्छमिव अस्त्यस्याः इति

"अर्शआदिभ्यः" । ५ । २ । १२७ । इति
अच् ङीष् ।)
पृश्निपर्णी । इति शब्दरत्नावली ॥

**क्रोष्टुफलः**, पुं, (क्रोष्टोः प्रियं फलं अस्य अस्मिन् वा
।)

इङ्गुदीबृक्षः । इति राजनिर्घण्टः ॥

**क्रोष्टुविन्ना**, स्त्री, (क्रोष्टुभिः विन्ना ज्ञाता वा लब्धा

इव ।) पृश्निपर्णी । इत्यमरः । २ । ४ । ९३
॥ वि-
रालछाञि इति ख्याता इति केचित् । इति
भरतः ॥ (अस्याः पर्य्यायाः । यथा, --

| | | |
|---|---|---|
| महाशको हापाप्मा विद्ध्येनमिह वैरिणम्” ॥)<br>तत्पर्य्यायः । कोपः २ अमर्षः ३ रोषः ४ प्रतिघः ५ | | |

"पृष्ठिपर्णी पृथक्पर्णी चित्रपर्ण्यहिपर्ण्यपि ।
क्रोष्टुविन्ना सिंहपुच्छी कलशीद्धावनिर्गुहा" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**क्रोष्टेक्षुः**, पुं, (क्रोष्टोः प्रियः इक्षुः । पृषोदरात् उकारस्य अत्वे सन्धिः ।) श्वेतेक्षुः । इति राज-निर्घण्टः ॥

**क्रोष्ट्री**, स्त्री, (क्रोष्टु + "तृज्वत् क्रोष्टुः" । इति ऋदन्तात् स्त्रियां ङीप् ।) शुक्लभूमिकुष्माण्डः । इत्यमरः । २ । ४ । ११० ॥
('विदारी स्वादुगन्धा च सा तु क्रोष्ट्री सिता स्मृता' ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥) शृगा-
लिका । कृष्णविदारी । लाङ्गली । इति मेदिनी ॥

**क्रौञ्चः**, पुं, (क्रुञ्च + प्रज्ञाद्यण् स्वार्थे ।) पक्षिभेदः । काँच वक इति भाषा । (यथा, रामायणे । १ । १ । १५ ।
"मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम्" ॥)
तत्पर्य्यायः । क्रुङ् २ क्रुञ्चः ३ क्रुञ्चा ४ क्रौञ्चा ५ ।
इत्यमरभरतौ ॥ कालिकः ६ कालीकः ७ कलि-
कः ८ । इति शब्दरत्नावली ॥ (अस्य गुणा यथा, --
"क्रौञ्चो वृष्योऽतिरुचिकृद्दश्मरीं हन्ति नित्यशः ।
शोषमूर्च्छाहरो दीप्यो हन्ति कासमरोचकम्" ॥
इति हारीते प्रथमस्थाने ११ अध्याये ॥)
पर्व्वतविशेषः । इति मेदिनी ॥ (अयन्तु हिमवतः पौत्त्रः मैनाकस्य पुत्त्रः ।
यथा, हरिवंशे १८ । १३-१४ ।
"एतेषां मानसी कन्या मेना नाम महागिरेः ।
पत्नी हिमवतः श्रेष्ठा यस्या मैनाक उच्यते ॥
मैनाकस्य सुतः श्रीमान् क्रौञ्चो नाम महागिरिः ।
पर्व्वतप्रवरः शुभ्रो नानारत्नसमन्वितः" ॥)
कुररपक्षी । इति राजनिर्घण्टः ॥ द्वीपभेदः । स च दधिमण्डोदसमुद्रेणावृतःषोडशलक्षयोजन-
स शिलाजालविततां
गण्डशैलाट्टहासिनीम् ।
पादपोत्कटकूटाग्रां कन्दराकीर्णकाननाम् ॥
सिंहव्याघ्रगजाकीर्णां नदन्तीमिव यूथपैः ।
ईहामृगगणाकीर्णां पवनाघूर्णितद्रुमाम् ॥
निर्म्मितां स्वेन पुत्त्रेण क्रौञ्चेन दिविकामगाम् ।
प्रसृतां पार्व्वतीं मायां ससृजे दानवोत्तमः" ॥
अयमेवासुरः क्रौञ्चद्वीपे क्रौञ्चपर्व्वते हेमकन्दरे
भगवता स्कन्देन निहतः । यथा, --
मृगेन्द्रसंहि-
तायाम् ।
"क्रौञ्चे क्रौञ्चो हतो दैत्यः क्रौञ्चाद्रौ हेमकन्दरे ।
स्कन्देन युद्ध्वा सुचिरं चित्रमायी सुमायिना ।
स शैलस्तस्य दैत्यस्य ख्यातश्चित्रेण कर्म्मणा ।
केतुतामगमत्तस्य नाम्ना क्रौञ्चः स उच्यते" ॥)
अर्हतां ध्वजः । राक्षसविशेषः । इति हेमचन्द्रः ॥

**क्रौञ्चदारणः**, पु, (क्रौञ्चं स्वनामख्यातपर्व्वतविशेषं दारयतीति । दॄ + णिच् + ल्युः । क्रौञ्चस्य दारण
इति केचित् ।) कार्त्तिकेयः । इत्यमरः । १ । १ । ४३ ॥
अस्य क्रौञ्चदारणकथा महाभारते ३ । मार्कण्डेय-
समस्यापर्व्वणि २२४ । ३१-३६ ।
"स तूत्थाय महाबाहुरुपसान्त्व्य च तान् जनान् ।
धनुर्व्विकृष्य व्यसृजद्वाणान् श्वेते महागिरौ ॥
बिभेद स शरैः शैलं क्रौञ्चं हिमवतः सुतम् ।
तेन हंसाश्च गृध्राश्च मेरुं गच्छन्ति पर्व्वतम् ॥

**क्रौशशतिकः**, पुं, (क्रोशशतं गच्छति । "क्रोशशतयो-जनशतयोरुपसंख्यानम्" । वार्त्ति ५ । १ । ७४ । इति
ठञ् ।) शतक्रोशगमनकर्त्ता । इति व्याकरणम् ॥
(क्रोशशतादभिगमनमर्हतीति । "ततोऽभिगमन मर्हति" । इति ठञ् क्रोशशतादागन्ता भिक्षुः ॥)

**क्लथ**, कि म वधे । इति कविकल्पद्रुमः ॥ (चुरां पक्षे भ्वां-परं-सकं-सेट् ।) अन्तःस्थतृतीययुक्वः । कि, क्लथ-
यति क्लथति । म, क्लथयति । इति दुर्गादासः ॥

**क्लद**, इ ञ ङ रुदि । इति कविकल्पद्रुमः ॥ (भ्वां-उभं-आत्मं च-अकं-सेट् ।) अन्तःस्थ तृतीययुक्तः ।
इ, कर्म्मणि क्लन्द्यते । ञ, क्लन्दति क्लन्दते । ङ,
क्लन्दते । रुदि रोदने । इति दुर्गादासः ॥

**क्लद**, इ ष म ङ रोदने । आह्वाने । इति कवि-कल्पद्रुमः ॥ (भ्वां-आत्मं-अकं-आह्वाने सकं-सेट् ।)
इ, कर्म्मणि क्लन्द्यते । ष, क्लन्दा । म, क्लन्दयति ।
ङ, क्लन्दते । इति दुर्गादासः ॥

**क्लद**, ष म ङ वैक्लव्यविकलत्वयोः । इति कविकल्प-द्रुमः ॥ (भ्वां-आत्मं-अकं-सेट् ।) वैक्लव्यं विह्वली-
भावः । ष, क्लदा । म, क्लदयति । ङ, क्लदते
शोकार्त्तः । इति दुर्गादासः ॥

**क्लम**, उ भ इर् ग्लानौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् । उदित्वात् क्त्वावेट् ।) अन्तःस्थ-
तृतीययुक्तः । उ, क्लमित्वा क्लान्त्वा । भ, क्ला-
म्यति । भ्वादिपक्षेऽपि शमादित्वं "ष्ठिवुक्लमाचम"

परिमितः । (यथा, विष्णुपुराणे । २ । ४ । ५७-५८ ।
"क्रौञ्चद्वीपः समुद्रेण दधिमण्डोदकेन च ।
आवृतः सर्व्वतः क्रौञ्चद्वीपतुल्येन मानतः ॥
दधिमण्डोदकश्चापि शाकद्वीपेन संवृतः ।
क्रौञ्चद्वीपस्य विस्ताराद् द्विगुणेन महामुने !" ॥
तस्याधिपतिः प्रियव्रतराजपुत्त्रो घृतपृष्ठः ।
यथा, भागवते । ५ । २० । १८-२० ।
"तथा च वहिः क्रौञ्चद्वीपो द्विगुणः स्वमानेन क्षीरोदेन परीत उपकॢप्तो वृतो यथा, कुशद्वीपो घृतोदेन । यस्मिन् क्रौञ्चो नाम पर्व्वतराजो द्वीप-नामनिर्व्वर्त्तक आस्ते ॥ योऽसौ गुहप्रहरणोन्म-थितनितम्बकुञ्जोऽपि क्षीरोदेनासिच्यमानो भग-वता वरुणेनाभिगुप्तो विभयो बभूव ॥ तस्मि-न्नपि प्रैयव्रतो घृतपृष्ठो नामाधिपतिः स्वे द्वीपे वर्षाणि सप्त विभज्य तेषु पुत्त्रनामसु सप्त रिक्थादान्
वर्षपान् निवेश्य स्वयं भगवान् भगवतः परम-कल्याणयशस आत्मभूतस्य
हरेश्चरणारविन्दमुप-
जगाम" । दैत्यविशेषः । स च मयदानवपुत्त्रः । यथा, हरिवंशे । ४६ । २१--२४ ।
"तान्पाशहस्तग्रथितांश्छादितान्शीतरश्मिना ।
मयो ददर्श मायां वै दानवानां महात्मनाम् ॥
स विशीर्णोऽपतच्छैलो भृशमार्त्तस्वरान् रुवन् ।
तस्मिन्निपतिते त्वन्ये नेदुः शैला भृशं तदा ॥
स तं नादं भृशार्त्तानां श्रुत्वापि बलिनाम्बरः ।
न प्राव्यथदमेयात्मा शक्तिमुद्यम्य चानदत् ॥
सा तदा विमला शक्तिः क्षिप्ता तेन महात्मना ।
बिभेद शिखरं घोरं श्वेतस्य तरसा गिरेः ॥
स तेनाभिहतो दीर्णो गिरिः श्वेतोऽचलैः सह ।
उत्पपात महीं त्यक्त्वा भीतः स सुमहात्मनः" ॥
क्रौञ्चं असुरविशेषं दारयति नाशयतीति च ।
क्रौञ्चासुरवधकथा क्रौञ्चशब्दे द्रष्टव्या ॥)

**क्रौञ्चा**, स्त्री, (क्रौञ्च + टाप् ।) क्रौञ्चभार्य्या । कोँचवकी
इति भाषा । इति जटाधरः ॥ (केचित्तु टावन्तं
न मन्यन्ते ङीवन्तमेवेच्छन्ति । तथा च रामायणे
१ । २ । १४ ।
"निशाम्य रुदतीं क्रौञ्चीमिदं वचनमब्रवोत्" ॥)

**क्रौञ्चादनं**, क्ली, (अद्यते इति । अद् + कर्म्मणि ल्युट् ।
क्रौञ्चस्य अदनं भक्ष्यम् ।) मृणालम् । घेञ्चुली ।
घेँचु इति भाषा । चिञ्चोटकः । इति मेदिनी ॥
चेँचको इति भाषा । शेषस्य गुणाः । गुरुत्वम् ।
अजीर्णकारित्वम् । शीतत्वञ्च । इति राजवल्लभः ॥
("क्रौञ्चादनं घेञ्चुलिका" । इति वैद्यकरत्नमाला-
याम् ।) पिप्पली । इति शब्दरत्नावली ॥

**क्रौञ्चादनी**, स्त्री, (क्रौञ्चादन + ङीप् ।) पद्मवीजम् ।
इति राजनिर्घण्टः ॥

इति दीर्घज्ञापनार्थम् । इर्, अक्लमत् अक्लमीत् ।
इवि दुर्गादासः ॥

**क्लम**, ञि य भ ग्लानौ । इति कविकल्पद्रुमः ॥
(दिवां-परं-अकं-सेट् ।) अन्तःस्थतृतीययुक्तः । ञि,
क्लान्तोऽस्ति । य भ, क्लाम्यति । इति दुर्गादासः ॥

**क्लमः**, पुं, (क्लम + भावे घञ् । "नोदात्तोपदेशस्येति" ।
७ । ३ । ३४ । इति न वृद्धिः ।) आयामः । इत्यमरः ।
३ । २ । १० ॥ (यथा, मनौ । ७ । २२५ ।
"तत्र भुक्त्वा पुनः किञ्चित् तूर्य्यघोवैः प्रहर्षितः ।
संविशेत्तु यथाकालमुत्तिष्ठेच्च गतक्लमः ॥
अस्य
लक्षणं यथा, --
"योऽनायासः श्रमो देहे प्रवृद्धः श्वासवर्ज्जितः ।
क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः" ॥
इति सुश्रुतेन शारीरस्थाने चतुर्थाध्याये उक्तम् ॥)

**क्लमथः**, पुं, (क्लम् + "शमादिभ्योऽथच् इति"
अथच् ।) आयासः । इत्यमरः । ३ । २ । १० ॥

**क्लव**, ष म ङ भये । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-अकं-सेट् ।) ष, क्लवा । म, क्लवयति ।
ङ, क्लवते । विक्लवन्ति दिवि ग्रहाः । इति पचा-
दित्वादनि विक्लवा इवाचरन्तीति क्वौ साध्यम् ।
इति दुर्गादासः ॥

**क्लान्तः**, त्रि, (क्लम + कर्त्तरि क्तः ।) क्लान्तियुक्तः ।
श्रान्तः । यथाह, जयदेवः ।
"मदनकदनक्लान्तः कान्ते ! प्रियस्तव वर्त्तते" ॥
(महाभारते च । ३ । ७३ । २७ ।
"विश्राम्यतामित्युवाच क्लान्तोऽसीति पुनःपुनः" ॥)

**क्रौञ्चारातिः**, पुं, (क्रौञ्चस्य स्वनामख्यातस्य पर्व्वतस्य
दैत्यस्य वा अरातिः शत्रुः ।) कार्त्तिकेयः । इति
हलायुधः ॥

**क्रौञ्चारिः**, पुं, (क्रौञ्चस्य अरिः ।) कार्त्तिकेयः । इति
हेमचन्द्रः ॥ परशुरामः । इति शब्दमाला ॥

**क्लिद**, इ ञ ङ रुदि । इति कविकल्पद्रुमः ॥ (भ्वां
उभं-आत्मं च-अकं-सेट् ।)
अन्तःस्थतृतीययुक्तः ।

इ, कर्म्मणि क्लिन्द्यते । ञ, क्लिन्दति क्लिन्दते । ङ, क्लिन्दते । रुदि रोदने । इति दुर्गादासः ॥

**क्लिद**, य ऊ इर् क्लेदे । इति कविकल्पद्रुमः । (दिवां-परं-अकं-वेट् ।) अन्तःस्थतृतीययुक्तः । क्लेद आर्द्रीभावः । य, क्लिद्यति वस्त्रं पयसा । ऊ, क्लेदिष्यति क्लेत्स्यति । इर्, अक्लिदत् अक्लेदीत् । अस्मात् पुषादित्वात् ङ इत्यन्ये । इति दुर्गादासः ॥ (यथा, नारदपञ्चरात्रे ।
"सुवेशं पुरुषं दृष्ट्वा भ्रातरं यदि वा सुतम् ।
योनिः क्लिद्यति नारीणां सत्यं सत्यं हि नारद !" ॥)

**क्लिन्नं**, त्रि, (क्लिद् कर्त्तरि क्तः ।) आर्द्रम् । इत्यमरः । ३ । १ । १०५ ॥ भिजा इति भाषा । (यथा, रामायणे १ । ४२ । १९ ।
"गङ्गायाः सलिलक्लिन्ने भस्मन्येषां महात्मनाम् ।
स्वर्गं गच्छेयुरत्यन्तं सर्व्वे च प्रपितामहाः" ॥)

**क्लिन्नाक्षः** त्रि, (श्लेष्मादिक्लेदेन क्लिन्ने क्लेदयुक्ते अक्षिणी यस्य ।) श्लेष्मादिना क्लिन्नचक्षुः । कफादिजनितक्लेदयुक्तं चक्षुर्यस्य सः । तत्पर्य्यायः । चुल्लः २ चिल्लः ३ पिल्ल ४ । कर्म्मधारयेण क्लिन्ने चक्षुषि क्ली । इत्यमरः । २ । ६ । ६० ॥

**क्लिश**, य उ ञ उपतापे । इति कविकल्पद्रुमः ॥ (दिवां--उभं--अकं--सकंच--सेट् । उदित्वात् क्त्वा "यष्ट्याह्वं मधुकं यष्टि क्लीतकं मधुयष्टिका" ॥
इति वैद्यकरत्नमालायाम् ॥
"आनूपं स्थलजञ्चैव क्लीतकं द्विविधं स्मृतम्" ॥
इति चरके सूत्रस्थाने प्रथमेऽध्याये ।
"श्यामा गिरिह्वाञ्जनकी रसेषु
द्राक्षारसे सप्तलिकारसे च ।
घृतं पिबेत् क्लीतकसंप्रसिद्धम्
पित्तार्व्वुदी तज्जठरी च जन्तुः" ॥
इति सुश्रुते चिकित्सितस्थाने १८ अध्याये ॥)

**क्लीतकिका**, स्त्री, (क्रीतकं क्रयोऽस्त्यस्याः । "अत इनिठनौ" । ५ । २ । ११५ । इति ठन् रस्य लत्वम् ॥) नीलीवृक्षः । इत्यमरः । २ । ४ । ९४ ॥ (क्लीतक + स्वार्थे कन् टाप् अत इत्वं च । यष्टिमधुका ॥)

**क्लीव**, ऋ ङ अधाष्टर्य्ये । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-अकं-सेट् ।) अन्तःस्थतृतीययुक्तः । अधाष्टर्य्यमप्रगल्भीभावः । ङ, शोकेन क्लीवते सर्व्वः । इति हलायुधः । ऋ, अचिक्लीवत् । इति दुर्गादासः ॥

**क्लीव**, ऋ ङ वान्तवत् । (भ्वां--आत्मं--अकं--सेट् ।) ऋ, अचिक्लीवत् । ङ, क्लीवते । वान्तवदिति क्लीवृङ अधाष्टर्य्ये इत्यर्थः । इति दुर्गादासः ॥

**क्लीवः**, पुं क्ली, (क्लीवृङ अध्याष्टर्य्ये "इगुपधेति" । ३ । १ । १३५ । इति कः ।) स्त्रीपुरुषभिन्नः । तत्पर्य्यायः । पण्डः २ नपुंसकम् ३ तृतीयाप्रकृतिः ४ (यथा, महाभारते ३ । अर्ज्जुनाभिगमने । ३३ । १३ ।
"कच्चिद्राजन् न निर्व्वेदादापन्नः क्लीवजीविकाम्" ॥
धर्म्मकार्य्यादौ निरुत्साहः । यथा, मनौ ३ । १६५ ।
"आचारहीनः क्लीवश्च नित्यं याचनकस्तथा" ॥)

**क्लेदः**, पुं, (क्लिद् + भावे घञ् ।) आर्द्रम् । यथा, --
"पदस्थितस्य पद्मस्य बन्धू वरुणभास्करौ ।
पदच्युतस्य तस्यैव क्लेदक्लेशकरावुभौ" ॥
इत्युद्भटः ॥ (यथा च याज्ञवल्क्यसंहितायाम् ।
"रसात्तु रसनं शैत्यं स्नेहं क्लेदं समार्द्दवम्" ॥
अत्र मिताक्षरा । "रसादुदकात् रसनेन्द्रियं शैत्यमङ्गानां स्नेहं स्निग्धतां मृदुतासहितं क्लेदमार्द्रताम्" ॥)

**क्लेदनः**, पुं, (क्लेदयति श्लेष्मादिभिरिति । क्लिद् + णिच् + कर्त्तरि ल्युः ।) कफः । इति शब्दचन्द्रिका ॥ पञ्चप्रकारश्लेष्मान्तर्गतश्लेष्मविशेषः । इति सुखबोधः ॥ (भावे + ल्युट् । आर्द्रीकरणम् । यथा, भागवते ३ । २६ । ४३ ।
"क्लेदनं पिण्डनं तृप्तिः प्राणानाप्यायनोदनम्" ॥)

**क्लेदा** [न्] पुं, (क्लेदयति शीतरश्मिभिर्जनम् । क्लिद + णिच् + "श्वन् उक्षन् पूषन् प्लीहन्निति" । उणां १ । १५८ । इति कनिन् । न लोपे पूर्ब्बदीर्घः ।) चन्द्रः । इत्युणादिकोषः ॥

**क्लेदुः**, पुं, (क्लेदयति इति । क्लिद् + "शॄ स्वृ स्निहीति" । उणां १ । ११ । इति उन् ।) चन्द्रः । इति त्रिकाण्डशेषः ॥ सन्निपातः । इति संक्षिप्तसार उणादिवृत्तिः ॥

**क्लेश**, ङ वधे । उपतापे । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-सकं उपतापार्थे अकं-सेट् ।) ङ, क्लेशते चिक्लेशे । धातुप्रदीपे तु क्लेष व्यक्तायां वाचीति मूर्द्धन्यान्तो दृश्यते । क्लेषते न वृथावाक्यमिति । हलायुधोऽपि । इति दुर्गादासः ॥

**क्लेशा**, पुं, (क्लिश् + भावे घञ् ।) दुःखम् । तत्प-

वेट् ।) य ञ, क्लिश्यति क्लिश्यते । उ, क्लिशित्वा
क्लिष्ट्वा । उपताप इह उपतप्तीभावः । तत्करणञ्च ।
क्लिश्यते न च निष्फलमिति हलायुधः । क्लिश्यते
कृपणः स्वर्गमपीति चतुर्भुजः । अन्ये त्वस्मात् परस्मै-
पदममन्यमानाः क्लिश्यन्नपि हि मेधावीति । प्रत्या-
सन्नतुषारदीधितिकरक्लिश्यत्तमो वल्लवीत्यादि च
क्लिशं करोतीति कण्ड्वादित्वात् क्ये शत्रन्तमाहुः ।
मृपात्मजौ चिक्लिशतुः ससीताविति भट्टिप्रयोगञ्च
क्रैयादिकात् समादधते तद्धेयम् । क्रैयादिकस्य
सकर्म्मकत्वात् । इति दुर्गादासः ॥

**क्लिश**, ऊ ग विहतौ । इति कविकल्पद्रुमः ॥ (क्र्यां--
परं--सकं--वेट् ।) ऊ, अक्लेशीत् अक्लिक्षत् । ग,
"इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम्" ।
इति दुर्गादासः ॥

**क्लिशितः**, त्रि, (क्लिश् + कर्त्तरि क्तः इट् वा ।)
क्लिष्टः । इत्यमरः । ३ । १ । ९८ ॥

**क्लिष्टः**, त्रि, (क्लिश् + क्तः पक्षे नेट् ।) क्लेशयुक्तः ।
(यथा, मेघदूते ८४ ।
"इन्दोर्दैन्यं त्वदनुसरणक्लिष्टकान्तेर्बिभर्त्ति" ॥)
तत्पर्य्यायः । क्लिषितः २ । पूर्ब्बापरविरुद्धवाक्ये,
क्ली । तत्पर्य्यायः । संकुलम् २ परस्परपराहतम्
३ । इत्यमरः । ३ । १ । ९७ ॥ (यथा, भागवते ।
१ । ९ । १२ ।
"जीवितुं नार्हथ क्लिष्टं विप्रधर्म्माच्युताश्रयाः" ॥)

शण्डः ५ । इत्यमरः । २ । ६ । ३९ ॥ तृतीयप्रकृतिः ६
षण्डः ७ सण्डः ८ शण्ढः ९ । इति तट्टीका ॥ पुरुष-
त्वहीनः । तस्य लक्षणम् । यथा, उद्वाहतत्त्वे ।
"न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति ।
मेढ्रश्चोन्मादशुक्राभ्यां हीनः क्लीवः स उच्यते" ॥
(यथा, पराशरसंहितायाम् ।
"नष्टे मृते प्रव्रजिते क्लीवे च पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते" ॥
क्लीवस्तु चतुर्द्दशप्रकारः । यथाह नारदः ।
"चतुर्द्दशविधः शास्त्रे षण्डो दृष्टो मनीषिभिः ।
चिकित्स्यश्चाचिकित्स्यश्चतेषामुक्तो विधिः क्रमात् ॥
निसर्गषण्डोऽनण्डश्च पक्षषण्डस्तथैव च ।
अभिशापाद्गुरो रोगाद् देवक्रोधात् तथैव च ॥
ईर्ष्याषण्डस्तथाऽसेक्यो वातरेता मुखेभगः ।
आक्षेप्ता मोघवीजश्च शालीनोऽन्यापतिस्तथा ॥
तत्राद्यावप्रतीकार्य्यौ पक्षाख्यं मासमाचरेत् ।
अनुक्रमात् त्रयस्याथ कालः संवत्सरः स्मृतः ॥
ईर्ष्याषण्डादयो येऽन्ये चत्वारः समुदाहृताः ।
त्यक्तव्यास्ते पतितवत् क्षतयोन्या अपि स्त्रियाः ॥
आक्षेपृमोघवीजाभ्यां कृतेपि पतिकर्म्मणि ।
पतिरन्यः स्मृतो नार्य्या वत्सरार्द्धं प्रतीक्ष्य तु ॥
शालीनस्यापि दृष्टस्त्री संयोगादुच्छ्रयेद्ध्वजः ।
तं हीनवेगमन्यस्त्रीबालाद्याभिरुपाचरेत् ॥
अन्यस्यां यो मनुष्यः स्यादमनुष्यः स्वयोषिति ।
लभेत स्वाम्यं भर्त्ता नो एतत्कार्य्यं प्रजाकृते ॥

र्य्यायः । आदीनवः २ आस्रवः ३ । इत्यमरः ॥
(यथा, भगवद्गीतायाम् । १२ । ५ ।
"क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्" ॥)
स तु पञ्चविधः । अविद्या १ विद्याविरोधिनी ।
अस्मिता २ अहमस्मीत्यहङ्कारः । रागः ३ इच्छा-
विशेषः । द्वेषः ४ वैरिता । अभिनिवेशः ५ मरण-
भयम् । इति कुसुमाञ्जलिः ॥ (तथाच पातञ्जले
साधनपादे २ । २--३ ।
"समाधिभावनार्थः क्लेशतनूकरणार्थश्च । अवि-
द्याऽस्मितारागद्वेषाभिनिवेशाः" ॥
"क्लेशतनूकरणार्थ इत्युक्तं तत्र के क्लेशा इत्याह ।
अविद्यादयो वक्ष्यमाणलक्षणाः पञ्च ते पाधना-
लक्षणं परितापमुपजनयन्तः क्लेशशब्दवाच्याः
भवन्ति । ते हि चेतसि प्रवर्त्तमानाः तस्कार-
लक्षणं गुणपरिणामं द्रढयन्ति" । इति तट्टीका-
कृद्राजमार्त्तण्डः ॥) कोपः । व्यवसायः । इति
मेदिनी ॥

**क्लेशितः**, त्रि, (क्लेशोऽस्य जातः । क्लेश + इतच् ।)
क्लेशयुक्तः । यथा, -- शृङ्गारतिलके ।
"निद्रां यातो मम पतिरसौ क्लेशितः कर्म्मदुःखी" ॥

**क्लिष्टिः**, स्त्री, (क्लिश् + भावे क्तिन् ।) क्लेशः । सेवा ।

इति धरणी ॥

**क्लीवकं**, क्ली, (क्लीव + क्तः । निपातनात् वलोपः ।

क्लीतमधाष्टर्य्यं कलतीति । कल क्षेपे +

अन्येभ्यो-

ऽपीति डः ।) यष्टिमधुका । इत्यमरः । २

। ४ । २०९ ॥

(अस्य पर्य्यायाः यथा ।

अपत्यार्थं स्त्रियः सृष्टाः स्त्रीक्षेत्रं वीजिनो

नराः ।

क्षेत्रं वीजवते देयं सवीजी क्षेत्रमर्हति" ॥)

**क्लीवः**, त्रि, बिक्रमहीनः । इत्यमरः । ३ । ३ । २१२ ।

**क्लैतकिकं**, क्ली, (क्लीतकेन यष्टिमधुकया निर्व्वृत्तं इति
ठञ् ।) मद्यम् । इति शब्दचन्द्रिका ॥
(विवरण-
मस्य मद्यशब्दे ज्ञातव्यम् ॥)

**क्लोम**, [न्] क्ली, (क्लुङ् गतौ + मनिन् ।)
फुप्फुसम् । फाँफडा इति फुलघरा इति च
ख्यातम् । इति भरतः ॥ तत्पर्य्यायः ।
तिलकम् २ ।
इत्यमरः ॥ २ । ६ । ६५ ॥ क्लोमम् ३
कोमम् ४ ।
इति तट्टीका ॥
"बाह्वोर्द्वयोर्मध्ये वक्षः तन्मध्ये हृदयं
तत्पार्श्वे
क्लोम पिपासास्थानम्" । इति वैद्यकम् ॥
("उदकवहे द्वे तयोर्मूलं तालु क्लोम च" ॥
इति सुश्रुते शारीरस्थाने नवमाध्यायः ॥)

**क्व**, व्य, (कस्मिन्निति "किमोऽत्" । ५ । ३ । १२ ।
इति अत् ततः "क्वाति" । ७ । २ । १०५
। इति
क्वादेशः ।) कुत्र । कोथा इति भाषा । इति
व्याकरणम् ॥ अत्यन्तासम्भावनायां
पण्डितैः क्वद्वयं
प्रयुज्यते । यथा, रघुः । १ । २ ।
"क्व सूर्य्यप्रभवो वंशः क्व चाल्पविषया
मतिः" ॥

**क्वङ्गुः**, पुं, (कु + अगि + उन् ।) कङ्गुः । इति हेम-
चन्द्रः ॥

**क्वचन**, व्य, (पाणिनिमते पदद्वयमेतत् । मुग्धबोध-
मते तु "किमः क्त्यन्ताच्चिच्चनौ" । इति
चनः ।)
क्वचित् । इति व्याकरणम् ॥

**क्वचित्**, व्य, (पाणिनिमते पदद्वयम् । मुग्धबोधमते तु
"किमः क्त्यन्ताच्चिच्चनौ" । इति चित् ।)
कस्मिं-
श्चित् । कुत्रचित् । कोनस्थाने इत्यादि
भाषा ।
इति व्याकरणम् ॥

(यथा, राजेन्द्रकर्णपूरे १७ ॥
"सञ्जाते त्वयि हारिहारवलयक्वाणं
क्वणत्कङ्कणं
चञ्चत्काञ्चनकाञ्चि सा भगवती नर्नर्त्ति
वाग्देवता" ॥)

**क्वाथः**, पुं, (क्वथ् + भावे घञ् ।) दुःखम् । व्यसनम् ।
द्रव्यनिष्पाकः । इति हेमचन्द्रः ॥ क्वाथ्यमानं
तोयं
त्रिविधम् । पादावशेषम् १ अर्द्धावशेषम् २ त्रि-
पादावशेषञ्च ३ । अस्य नाम पारिभाषिको-
ष्णोदकम् । तत्र त्रिपादावशेषं वातनाशकम् ।
अर्द्धावशेषं पित्तनाशकम् । पादावशेषं
कफनाश-
कम् । लघु अग्निवर्द्धकञ्च । तेषां मध्ये
त्रिपादाव-
शेषजलं हेमन्ते शिशिरे च प्रशस्तम् । वसन्ते
पादावशेषजलं प्रशस्तम् । शरदि ग्रीष्मे च अ-
र्द्धावशेषजलं प्रशस्तम् । वर्षायां
अष्टभागावशेष-
जलं प्रशस्तम् । तत्काले बहुदोषत्वात् ।
दिनपक्व-
जलं रात्रौ गुरु रात्रिपक्वजलं दिवा गुरु । इति
राजवल्लभः ॥ यथास्य करणप्रणाली ॥
"पानीयं षोडशगुणं क्षुण्णे द्रव्यपले क्षिपेत् ।
मृत्पात्रे क्वाथयेद्ग्राह्यमष्टमांशावशेषितम् ॥
तज्जलं पाययेद्धीमान् कोष्णं मृद्वग्निसाधितम् ।
शृतः क्वाथः कषायश्च निर्यूहः स निगद्यते" ॥
इति शार्ङ्गधरेण मध्यखण्डे द्वितीयाध्याये
उक्तम् ॥)

**क्वाथोद्भवं**, क्ली, (क्वाथादुद्भवो यस्य । क्वाथाद् उद्भव-
तीति वा ।) तुत्थाञ्जनम् । इत्यमरः । २ । ९ ।
१०२ ॥

**क्वेल**, ऋ चाले । गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-अकं-गतौ सकं-सेट् ।) वकारयुक्तः । ऋ,
अचिक्वलत् । चालः कम्पः । चालः कैश्चिन्न
मन्यते ।
इति दुर्गादासः ॥

**क्ष**, क्षकारः । (अयन्तु ककारषकारयोगेन जातः ।
परात्मा क्रोधसंहारौ बलान्तो मेरुवाचकः ।
सर्व्वाङ्गः सागरः कामः संयोगान्त्यस्त्रिपूरकः
॥
क्षेत्रपालो महाक्षोभो मातृकान्तानलः क्षयः ।
मुखं कव्यवहानन्ता कालजिह्वा गणेश्वरः ।
छायापुत्त्रश्च संघातो मलयश्रीर्ल्ललाटकः" ॥
इति तन्त्रशास्त्रे वर्णाभिधानम् ॥ * ॥ अपि च ।
"क्षकारो नरसिंहश्च मेरुः सम्बर्त्तकोऽपि च ।
तव स्नेहान्मया देवि ! कथितं मातृकाक्षरम् ।
पर्य्यायैरपि विज्ञेयं न प्रकाश्यं कदाचन" ॥
इति श्रीरुद्रयामले ८ पटले मन्त्राभिधानम् ॥
* ॥
अस्य ध्यानं यथा, --
"चतुर्भुजां रक्तवर्णां शुक्लाम्बरविभूषिताम् ।
रत्नालङ्कारसंयुक्तां वरदां पद्मलोचनाम् ॥
ईषद्धास्यमुखीं लोलां रक्तचन्दनचर्च्चिताम् ।
शंदात्रीञ्च चतुर्व्वर्गप्रदां सौम्यां मनोहराम् ॥
गन्धर्व्वसिद्धदेवाद्यैर्ध्यातामाद्यां सुरेश्वरीम् ।
एवं ध्यात्वा क्षकारन्तु तन्मन्त्रं दशधा जपेत्"
॥
इति वर्णोद्धारतन्त्रम् ॥ क्षकारस्य
ककारषकार-
योगजत्वेन केचित् पृथग्वर्णत्वेन न मन्यन्ते ।
तेषां
मते तन्त्रोक्तैकपञ्चाशद्वर्णानुपपत्तिः तन्त्रशास्त्रे
तस्य मेरुत्वेन गणनानुपपत्तिश्च भवति ।
अतः
पृथङ्निर्द्दिश्यते इति केचित् । तथा च ।
"षान्ताः स्युर्यद्यपि क्षान्ता वर्णानामनुरोधतः ।
पृथक्क्रमेण कथ्यन्ते तथाप्येते समन्वयात्" ॥
इति विश्वप्रकाशः ॥ अपि च ।
"अकारादिलकारान्ता वर्णाः पञ्चाशदीरिताः ।
संयोगात् कषयोरेषः क्षकारो मेरुरीरितः" ॥
इति कृष्णानन्दधृततन्त्रशास्त्रम् ॥

**क्षः**, पुं, (क्षयति लोकान् युगान्तकाले प्रलये सर्व्वाणि
भूतानि महाकालोदरं प्रेरयतीति । क्षि क्षये +
ड प्रत्ययः ।) सम्बर्त्तः । (क्षिणोति हन्ति मनु-
ष्यादिजीवानिति । राक्षसः । (क्षिणोति हन्ति
हिरण्यकशिपाद्यसुरानिति ।) नरसिंहः ।
(क्षयति
क्षिणोति वा भूतानि स्वकीयाग्निना इति ।)

(यथा, विष्णुपुराणे १ । २२ । ३८ ।
"हन्ति वा यत् क्वचित् किञ्चित् भूतं स्थावरज-
ङ्गमम्" ॥)

**क्वण**, शब्दे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-
सेट् ।) वकारयुक्तः । क्वणति वीणा । इति दुर्गा-
दासः ॥

**क्वणः**, पुं, (क्वण् + भावे अप् ।) कणकणेति शब्द-
विशेषः । इत्यमरटीकायां सारसुन्दरी ॥ वीणायाः
शब्दः अन्यस्य च शब्दः । इति भरतः ॥ तत्प-
र्य्यायः । णिक्वाणः २ निक्वणः ३ क्वाणः ४ क्वणनम्
५ । इत्यमरः । १ । ७ । २४ ॥

**क्वणनं**, क्ली, (क्वण् + भावे ल्युट् ।) क्वणः । इत्यमरः ।
१ । ७ । २४ ॥

**क्वणनः**, पुं, (क्वणति इति । क्वण् + ल्युः ।) हण्डिकासुतः ।
इति त्रिकाण्डशेषः ॥ छोटहाँडी इति भाषा ॥

**क्वथ**, ए ज निष्पचने । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-सकं-सेट् ।) वकारयुक्तः । ए, अक्वथीत् ।
ज, क्वाथः क्वथः । क्वथति वैद्य औषधं निष्पच-
तीत्यर्थः । इति दुर्गादासः ॥

**क्वथितः**, त्रि, (क्वथ्यते स्म इति । क्वथ + कर्म्मणि क्तः ।)
अतिपक्वव्यञ्जनदशमूलादिः । तत्पर्य्यायः । निष्पक्वः
२ । इत्यमरः । ३ । १ । ९५ ॥ कषायः ३ निर्य्यूहः ४
क्वाथः ५ शृतः ६ । इति वैद्यकपरिभाषा ॥

**क्वाणः**, पुं, (क्वण् + भावे कर्म्मादिवाच्ये च यथायथं
घञ् ।) क्वणः । इत्यमरः । १ । ७ । २४ ॥

अतोऽस्य पृथक् वर्णत्वशङ्का नास्त्येव ।) तन्त्रमते
तु व्यञ्जनचतुस्त्रिंशवर्णः । अष्टमवर्गीयपञ्चमवर्णः ।
एकपञ्चाशन्मातृकावर्णानांचरमवर्णश्च । यथा, --
"पञ्चाशल्लिपिभिर्माला विहिता सर्व्वकर्म्मसु ।
अकारादिक्षकारान्ता वर्णमाला प्रकीर्त्तिता ॥
क्षार्णं मेरु मुखं तत्र कल्पयेन्मुनिसत्तमः ।
अनया सर्व्वमन्त्राणां जपः सर्व्वसमृद्धिदः" ॥
इति गौतमीयतन्त्रम् ॥ * ॥
कण्टदेशोद्भवोऽयम् । यथा, --
श्रीशिव उवाच ।
"विशेषं कथयाम्यद्य प्रोच्चार्य्याः कण्ठतः स्वराः ।
ऋद्वयं जिह्वया मूद्र्ध्नां ऌद्वयं जिह्वदन्तजम् ।
मुखस्थानाद्धलो वाच्याः क्षकारः कण्ठघातजः" ॥
इति वरदातन्त्रे १० पटलः ॥ * ॥
अस्य स्वरूपं यथा, --
"क्षकारं शृणु चार्व्वङ्गि ! कुण्डलीत्रयसंयुतम् ।
चतुर्व्वर्गमयं वर्णं पञ्चदेवमयं सदा ।
पञ्चप्राणात्मकं वर्णं त्रिशक्तिसहितं सदा ॥
त्रिविन्दुसहितं वर्णमात्मादितत्त्वसंयुतम् ।
शरच्चन्द्रप्रतीकाशं हृदि भावय सुन्दरि !" ॥
इति कामधेनुतन्त्रम् ॥ * ॥
अस्याभिधानानि यथा, --
"क्षः कोपस्तुम्बुकः कालो रूक्षः सम्बर्त्तकः परः ।
नृसिंहो विद्युता माया महातेजा युगान्तकः ॥

विद्युत् । (क्षयति शस्याद्युत्पत्त्या क्रमशः इति ।
क्षि + डः ।) क्षेत्रम् । क्षेत्रपालः । (क्षि क्षये +
भावे डः ।) नाशः । इति मुद्राङ्कितमेदिनी ॥

**क्षज**, इ क तङ्के । इति कविकल्पद्रुमः ॥ (चुरां-परं-
अकं-सेट् ।) तङ्को दुःखेन जीवनम् । इ क,
क्षञ्जयति दीनः । इति दुर्गादासः ॥

**क्षज**, इ ष म ङ दागत्योः । इति कविकल्पद्रुमः ॥
भ्वां-आत्मं-सकं-सेट् ।) इ, क्षञ्ज्यते । ष, क्षञ्जा । सेमक्तात् सरोरित्यने-
नैवेष्टसिद्धौ अस्य षानुबन्धस्त्वरपर्य्यन्तघटादिभ्यो
ङ इति प्राचीनमतानुरोधात् । म, अक्षञ्जि
अक्षाञ्जि क्षञ्जं क्षञ्जं क्षाञ्जं क्षाञ्जम् । मानुबन्ध-
बलात् अनुपधाया अपि दीर्घः । स्रमते तु अत्र
दीर्घविधिरुपधां नापेक्षते । ङ, क्षञ्जते । ष, क्षजा ।
म, क्षजयति । ङ, क्षजयते । दा दानम् । इति
दुर्गादासः ॥

**क्षज**, ष म ङ दागत्योः । इति कविकल्पद्रुमः ॥
भ्वां-आत्मं-सकं-सेट् ।) इ, क्षञ्ज्यते । ष, क्षञ्जा । सेमक्तात् सरोरित्यने-
नैवेष्टसिद्धौ अस्य षानुबन्धस्त्वरपर्य्यन्तघटादिभ्यो
ङ इति प्राचीनमतानुरोधात् । म, अक्षञ्जि
अक्षाञ्जि क्षञ्जं क्षञ्जं क्षाञ्जं क्षाञ्जम् । मानुबन्ध-
बलात् अनुपधाया अपि दीर्घः । स्वमते तु अत्र
दीर्घविधिरुपधां नापेक्षते । ङ, क्षञ्जते । ष, क्षजा ।
म, क्षजयति । ङ, क्षजयते । दा दानम् । इति
दुर्गादासः ॥

**क्षण**, द ञ उ वधे । इति कविकल्पद्रुमः । (तनां-
उभं-सकं-सेट ।) द ञ, क्षणोति क्षणुते । उ

क्षणित्वा क्षत्वा । इति दुर्गादासः ॥

**क्षणः**, पुं, (क्षणोति हन्ति नाशयति वा सर्व्वं यथा-

कालं आयुरवसाने वा । काल एव युगान्ते सर्व्व-
मात्मसात् करोतीत्यर्थः । स एवांशभेदेन नाना-
ख्यो भवतीत्यर्थः ।)
त्रिंशत्कलापरिमितकालः ।
स च दशपलपरिमितः ।
(निमेषक्रियावच्छिन्नस्य कालस्य चतुर्थभागः । यथा, --
"आयुषः क्षण एकोऽपि न लभ्यः स्वर्णकोटिभिः ॥
सचेत्तु विफलो याति का नो हानिस्ततोऽधिका" ॥
इति शब्दार्थचिन्तामणिः । अपि च ।
"क्वचिद्रुष्टः क्वचित्तुष्टो रुष्टस्तुष्टः क्षणे क्षणे ।
अव्यवस्थितचित्तस्य प्रसादोऽपि भयावहः" ॥
इति शिष्टोपदेशः ॥ क्षणोति दुःखं नाशयति
उत्सवकाले । क्षण्-वधे- + अच् ।)
उत्सवः ।
(यथा, माघे १ । ४ ।
"नवानधोऽधो वृहतः पयोधरान्
समूढकर्पूरपरागपाण्डरम् ।
क्षणं क्षणोत्क्षिप्तगजेन्द्रकृत्तिना
स्फुटोपमं भूतिसितेन शम्भुना" ॥)
निर्व्यापारस्थितिः । इत्यमरः । ३ । ३ । ४७ ॥ पर्व्व ।
अवसरः । परतन्त्रत्वम् । मध्यम् ।
इति हेमचन्द्रः ॥
(प्रशस्तमूहूर्त्तः । यथा, नलोपाख्याने । ५ । १ ।
"अथ काले शुभे प्राप्ते तिथौ पुण्ये क्षणे तथा" ॥)

**क्षणतुः**, पुं, (क्षण भावे + बाहुलकात् अतुप्रत्ययः ।)

स्वाधिकरणसमयप्रागभावाधिकरणक्षणानुत्पत्ति
कत्वे सति कादाचित्कत्वं उत्पत्तिमत्त्वं वा । उत्प-
त्तिश्च स्वाधिकरणक्षणावृत्तिप्रामभावप्रतियोगि
क्षणसम्बन्धः । क्षणश्च स्वाधेयपदार्थप्रागभावाना-
धारः समयः । प्रसिद्धिस्तु विधेर्नैयायिकानां प्राग-
भावे चरमध्वंसे च निषेधस्य बौद्धानामलीके ।
स्वाधिकरणसमयप्रागभावाधिकरणक्षणावृत्तित्वं
क्षणिकत्वमिति तु ज्यायः" । इति बौद्धाधिकारे
रघुनाथशिरोमणिः ॥ अन्यच्च ।
"द्रव्यारम्भश्चतुर्षु स्यादथाकाशशरीरिणाम् ।
अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते" ॥
इति भाषापरिच्छेदे २७ ॥ "क्षणिकत्वञ्च तृतीय-
क्षणवृत्तिध्वंसप्रतियोगित्वम्" । इति सिद्धान्त-
मुक्तावली ॥

**क्षणिका**, स्त्री, (क्षणिक + स्त्रियां टाप् (। विद्युत् ।

इति हेमचन्द्रः ॥ (क्षणकालमात्रस्थायिनी ।
यथा, हितोपदेशे । १ । १५४ ।
"योऽत्ति यस्य यदा मांसमुभयोः पश्यतान्तरम् ।
एकस्य क्षणिका प्रीतिरन्यः प्राणैर्वियुज्यते" ॥)

**क्षणिनी**, स्त्री, (क्षणः उत्सवोऽस्त्यस्याम् । क्षण +

इनि । ङीप् ।) रात्रिः । इति शब्दरत्नावली ॥
(उत्सववति, त्रि । यथा, महाभारते । २ ।
मन्त्रणापर्ब्बणि १३ । ४४ ।
"तं विश्रान्तं शुभे देशे क्षणिनं कल्यमच्युतम् ।
धर्म्मराजः समागम्याज्ञापयत् स्वं प्रयोजनम्" ॥)

**क्षतं**, क्ली, (क्षण्यते वध्यतेऽनेन । क्षण + करणे क्तः ।)

स्रवद्रक्तपूयादि । घा इति भाषा । तत्पर्य्यायः ।
व्रणः २ अरुः ३ ईर्म्मम् ४ क्षणनुः ५ । इति
हेमचन्द्रः ॥ तद्वति त्रि ॥ * ॥
क्षतेन मृतस्याशौचं यथा, व्याघ्रः ।
"क्षतेन म्रियते यस्तु तस्याशौचं भवेद्द्विधा ।
आसप्ताहात् त्रिरात्रं स्याद्दशरात्रमतः परम् ॥
शस्त्रघाते त्र्यहादूर्द्ध्वं यदि कश्चित् प्रमीयते ।
अशौचं प्राकृतं तत्र सर्व्ववर्णेषु नित्यशः ॥
अत्र अस्त्रघातपदं क्षतेतरशस्त्रघातपरं पारि-
भाषिकशस्त्राघातपरमपि । अन्यथा क्षतं विना
पतनादिभिर्विलम्बमृतानां दिनग्रहणेऽनध्यवसायः
स्यात्" । इति शुद्धितत्त्वम् ॥ * ॥ चन्द्रग्रहणादौ
क्षतदोषाभावो यथा, -- पुलस्त्यः ।
"क्षतात् किल त्रायत इत्युदग्रः
क्षत्त्रस्य शब्दो भुवनेषु रूढः" ॥
त्रि, ताडितः । विद्धः । यथा, रघुः । ३ । ५३ ।
"रघोरवष्टम्भमयेन पत्रिणा
हृदि क्षतो गोत्रभिदोऽप्यमर्षणः" ॥
क्षतियुक्तः । यथा, कुमारे । २ । २६ ।
"रुद्राणामपि मूर्द्धानः क्षतहूङ्कारशंसिनः" ॥
(रोगविशेषः । तस्य सकारणसम्प्राप्तिलक्षणानि
चिकित्सितञ्च यथा, --
"धनुषायस्यतोऽत्यर्थं भारमुद्वहतो गुरुम् ।
पततो विषमोच्चेभ्यो युध्यमानस्य चाधिकैः ॥
वृषं हयं वा धावन्तं दम्यं वान्यं निगृह्णतः ।
शिलाकाष्ठाश्मनिर्धातान् क्षिपतो निघ्नतः परान् ॥
अधीयानस्य वात्युच्चैर्दूरं वा व्रजतो द्रुतम् ।
महानदीं वा तरतो गजैर्वा सह धावतः ॥
सहसोत्पततो दूरं तूर्णञ्चातिप्रणृत्यतः ।
तथान्यैः कर्म्मभिः क्रूरैर्भृशमभ्याहतस्य वा ॥
विक्षते वक्षसि व्याधिर्बलवान् समुदीर्य्यते ।
स्त्रीषु चातिप्रसक्तस्य रूक्षाल्पप्रमिताशिनः ॥
उरो विरुज्यते तस्य भिद्यतेऽर्थ बिदह्यते ।
प्रपीड्यते ततः पार्श्वे शुष्यत्यङ्गं प्रवेपते ॥
क्रमाद्वीर्य्यं बलं वर्णो रुचिरग्निश्च हीयते ।
ज्वरो व्यथा मनोदैन्यं विड्भेदाग्निवधावपि ॥
दुष्टः श्यावः सदुर्गन्धः पीतो विग्रथितो बहुः
कासमानस्य च श्लेष्मा सरक्तः संप्रवर्त्तते ॥
सक्षतः क्षीयतेऽत्यर्थं तथाशुक्रौजसोः क्षयात्" ॥
पूर्ब्बरूपं यथा, --
"अव्यक्तं लक्षणं तस्य पूर्ब्बरूपमिति स्मृतम् ।
उरोरुक् शोणितच्छर्द्दिः कासो वैशेषिकः क्षते" ॥
अस्यासाध्यलक्षणादिकंयथा, --
"अल्पलिङ्गस्य दीप्ताग्नेः साध्यो बलवतो नवः ।
गते संवत्सरे याप्यः सर्व्वलिङ्गन्तु वर्ज्जयेत्" ॥
चिकित्सास्य यथा ।
"उरोमत्वाक्षतं लाक्षां पयसा मधुसंयुताम् ।

क्षतः । इति हेमचन्द्रः ॥ क्षणनुरिति च पाठः ॥

**क्षणदं**, क्ली, (क्षणं उत्सवं ददातीति । दा + कः ।)

जलम् । इति मेदिनी ॥

**क्षणदः**, पुं, (क्षणं यात्रादिशुभमुहूर्त्तं ददातीति । दा

+ कः ।) गणकः । इति मेदिनी ॥

**क्षणदा**, स्त्री, (क्षणद + स्त्रियां टाप् ।) रात्रिः ।

(यथा, भागवते । ३ । ३ । २१ ।
"इमं लोकममुं चैव रमयन् सुतरां यदून् ।
रेमे क्षणदया दत्तक्षणस्त्रीक्षणसौहृदः" ॥)
हरिद्रा । इत्यमरः । १ । ४ । ४ ॥
(हरिद्राशब्देऽस्या विवृतिर्ज्ञातव्या ॥)

**क्षणनं**, क्ली, (क्षण + भावे ल्युट् ।) वधः । इत्यमरः ॥

**क्षणनिश्वासः**, पुं, (क्षणात् क्षणकालात् परं निः-

श्वासोऽस्य ।) शिशुमारः । इति शब्दरत्नावली ॥

**क्षणप्रभा**, स्त्री, (क्षणं व्याप्य प्रभाऽस्याः ।) विद्युत् ।

इत्यमरः । २ । ८ । ११४ ॥

**क्षणभङ्गुरः**, त्रि, (क्षणात् भङ्गुरः ।) क्षणैकनाश्यः ।

यथा । "यदि पुनरमी किमपि नाहमास्पदमस्ति
किञ्चिदपि वस्तु स्थिरं विश्वमेव क्षणभङ्गुरं
अलीकं वेत्यवधारयेरन् न किञ्चिदपि काम
येरन् न चाकामयमानाः केचिदपि प्रवर्त्तन्ते" ।
इति बौद्धाधिकारेशिरोमणिः ॥

**क्षणरामी**, [न्] पुं, (क्षणात् परं क्षणे क्षणे वा

रमते इति । रम + णिनिः ।) पारावतः । इति
शब्दमाला ॥ (चटकः । इति केचित् ॥)

"चन्द्रसूर्य्यग्रहे चैव मृतानां पिण्डकर्म्मसु ।
महातीर्थे च संप्राप्ते क्षतदोषो न विद्यते" ॥
अन्यत्र तु देवलः ।
"सव्रणः सूतकी सूयी मत्तोन्मत्तरजस्वलाः ।
मृतबन्धुरवन्धुश्च वर्ज्यान्यष्टौ स्वकालतः" ॥
इत्यनेन वर्ज्यतामाह । अशुचित्वमप्याह ।
"दन्तलग्नमसंहार्य्यं लेपं मन्येत दन्तवत् ।
न तत्र बहुशः कुर्य्यात् यत्नमुद्धरणे पुनः ॥
भवेदशौचमत्यर्थं तृणवेधात् व्रणे कृते" ॥
इति प्रायश्चित्ततत्त्वम् ॥ (विदारणम् ।
यथा, कुमारे । ३ । २९ ।
"नखक्षतानीव वनस्थलीनाम्" ॥
विनाशः । यथा, रघुः । २ । ५३ ।

सद्य एव पिबेज्जीर्णे पयसाद्यात् सशर्कराम् ॥
पार्श्ववस्तिरुजश्वाल्पपित्ताग्निस्तांसुरायुताम् ।
भिन्नविट्कः समुस्तातिविधां पाठां सवत्सकाम् ॥
लाक्षां सर्पिर्मधूच्छिष्टं जीवनीयगणं सिताम् ।
त्वक्क्षीरी सम्मितं क्षीरे पक्त्वा दीप्तानलः पिबेत् ॥
इक्ष्वालिकविसग्रन्थिपद्मकेशरचन्दनैः ।
शृतं पयो मधुयुतं सन्धानार्थं पिबेत् क्षतो ॥
यवानां चूर्णमादाय क्षीरसिद्धं घृतप्लुतम् ।
ज्वरदाहे सिताक्षौद्रशक्तून् वा पयसा पिबेत् ॥
कासी पर्व्वास्थिशूली च लिह्यात्सघृतमाक्षिकाः ।
मधूकमधुकद्राक्षा त्वक्क्षीरापिप्पलीबलाः" ॥
"रक्तेऽतिवृत्ते दक्षान्तं यूषैस्तोयेन वा पिबेत्
चटकाण्डरसं वापि रक्तं वा छागजाङ्गलम् ॥
चूर्णं पौनर्नवं रक्तशालितण्डुलशार्करम् ॥
रक्तष्ठीवी पिबेत् सिद्धं द्राक्षारसपयोघृतैः ।
मधूकग्रधुकक्षीरसिद्धंवा तण्डुलीयकम् ॥
यष्ट्याह्वानागबलयोः क्वाथे क्षीरसमं घृतम् ।
पयसा पिप्पलीवांशीकल्कसिद्धंक्षते शुभम् ॥

| | | |
|---|---|---|
| **क्षणिकः**, त्रि, (क्षणः स्वस्वत्ताव्याप्यतयाऽस्त्यस्य। ठन् ।) क्षणमात्रस्थायी । यथा । “क्षणभङ्गे विप्रतिपत्तिः शब्दादिः क्षणिको न वा । क्षणिकत्वञ्च | | |

कोललाक्षारसे तद्वत् क्षीराष्टगुणसाधितम्।
कल्कैः कट्वम्लदार्व्वीत्वग्वत्सकत्वक्फलैर्घृतम्
॥
जीवकर्षभकौ वीरां जीवन्तीं नागरं शठीम्।
चतस्रः पर्णिनीर्मेदे काकोल्यौ द्वे निदिग्धिके॥
पुनर्नवे द्वे मधुकं आत्मगुप्तां शतावरीम्।
ऋद्धिं परूषकं भार्गीं मृद्वीकां वृहतीन्तथा॥
शृङ्गाटकीं तामलकीं पयस्यां पिप्पलीं बलाम्।
वदराक्षोटखर्जूरवातामाभिषुकाण्यपि॥
फलानि चैवमाद्यानि कल्कान् कूर्व्वीत
कार्षिकान्।
धात्रीरसविदारीक्षु छागमांसरसं पयः॥
कुर्य्यात्प्रस्थोन्मितं तेन घृतप्रस्थं विपाचयेत्।
प्रस्थार्द्धं मधुनः शीते शर्करार्द्धतुलान्तथा॥
द्विकार्षिकाणि पत्रैला हेमत्वङ्गरिचानि च।
चूर्णितानि विनीयास्माल्लिह्यान्मात्रांसदा नरः
॥
अमृतप्राशमित्येतन्नराणाममृतं घृतम्।
सुधामृतरसं प्रास्य क्षीरमांसरसाशिना॥
नष्टशुक्रक्षतक्षीणदुर्ब्बलव्याधिकर्षितान्।
स्त्रीप्रसक्तान् कृशान् वर्णस्वरहीनांश्च वृंहयेत्
॥
कासहिक्काज्वरश्वासदाहतृष्णास्रपित्तनुत्।
पुत्त्रदं वमिमूर्च्छाह्वयोनिमूत्रामयापहम्' ॥
इत्यमृतप्राशघृतम्॥
"मधुकाष्टपलं द्राक्षा प्रस्थक्वाथे घृतं पचेत्।
पिप्पल्यष्टपले कल्के प्रस्थं सिद्धे च शीतले॥
पृथगष्टपलं क्षौद्रशर्कराभ्यां विमिश्रयेत्।
समं शक्तुक्षतक्षीणे रक्तगुल्मेषु तद्धितम्" ॥
इति शक्तुप्रयोगः॥
"शक्तूनां वस्त्रपूतानां मन्थं क्षौद्रघृतान्वितम्।
यावान्नसात्म्यो दीप्ताग्निः क्षतः क्षीणः पिबेन्नरः"
॥
"एका षोडशिका धान्याद्धि
द्वेऽजाज्यजमोदयोः।
ताभ्यां दाडिमवृक्षाम्लद्विर्द्विः सौवर्च्चलात्पलम्
॥
शुण्ठ्याः कर्षं दधित्थस्य मेध्यात्पञ्च पलानि
च।
तच्चूर्णं षोडशपले शर्कराया विमिश्रयेत्॥
षाडवोऽयं प्रदेयः स्यादन्नपानेषु पूर्ब्बवत्" ॥

सूचीभिरिव तीक्ष्णाभिः तुद्यमानेन शूलिना।
दुःखस्पर्शेन शूलेन भेदपीडाभितापिना॥
पर्व्वभेदज्वरश्वासः तृष्णावैस्वर्य्यपीडितः।
पारावत इवाकूजेत् कासवेगात् क्षतो द्रवात्"
॥
कण्ठेनेत्युपलक्षणे तृतीया एवमुरसाऽपि॥
तस्य चिकित्सा यथा, --
"इक्ष्विक्षुवालिकापद्ममृणालोत्पलचन्दनम्।
मधुकं पिप्पली द्राक्षा लाक्षा शृङ्गी शतावरी॥
द्विगुणा च तुगाक्षीरी सिता सर्व्वचतुर्गुणा।
लिह्यात्तन्मधुसर्पिर्भ्यां क्षतकासनिवृत्तये" ॥
इक्षुवालिका इक्षुभेदः। चन्द्र इति लोके। पद्मं
पद्मकाष्ठम्। मृणालं विसम्। उत्पलं कमलम्
।
चन्दनमत्र धवलं चूर्णत्वात्। शृङ्गी
कर्कटशृङ्गी।
तुगाक्षीरी वंशरोचना। सा चेक्षोर्द्विगुणा। इति
भावप्रकाशः॥
("युद्धाद्यैः साहसैस्तैस्तैः सेवितैरयथाबलम्
॥
उरस्यन्तः क्षते वायुः पित्तेनानुगतो बली।
कुपितः कुरुते कासं कफं तेन सशोणितम्॥
पीतं श्यामञ्च शुष्कञ्च प्रथितं कुथितं बहु।
ष्ठीवेत् कण्ठेन रुजता विभिन्नेनेव चोरसा॥
सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना।
पर्व्वभेदज्वरश्वासतृष्णावैस्वर्य्यकम्पवान्॥
पारावत इवाकूजन् पार्श्वशूली ततोऽस्य च।
क्रमाद्वीर्य्यं रुचिः पक्तिर्बलं वर्णश्च हीयते" ॥
अस्य चिकित्सा यथा--
"उरस्यन्तः क्षते सद्यो लाक्षां क्षौद्रयुतां पिबेत्
॥
क्षीरेण शालीन् जीर्णेऽद्यात् क्षीरेनैव सशर्करान्
।
पार्श्ववस्ति सरुक्चाल्पपित्ताग्निस्तां
सुरायुताम्।
भिन्नविट्कः समुस्तातिविषा पाठां
सवत्सकाम्॥
लाक्षा सर्पिर्मधूच्छिष्टं जीवनीयं गणं सितम्।
त्वक्क्षीरी सस्मितं क्षीरे पक्त्वा दीप्तानलः
पिबेत्॥
इक्ष्वाविकाविषग्रन्थिपद्मकेशरचन्दनैः।

**क्षतजतृष्णा**, स्त्री, (क्षतजा शस्त्रादिभिः क्षताज्जाता
या तृष्णा पिपासा।) शस्त्रादिक्षतयुक्तस्य
पिपासा।
तस्या निदानपूर्ब्बिकां सम्प्राप्तिमाह।
"भयश्रमाभ्यां बलसंक्षयाद्वा
ऊर्द्ध्वं चितं पित्तविवर्द्धनैश्च।
पित्तं सवातं कुपितं नराणां
तालुप्रपन्नं जनयेत् पिपासाम्॥
स्रोतःस्वपांवाहिषु दूषितेषु
दोषैश्च तृट्सम्भवतीह जन्तोः।
तिस्रः स्मृतास्ताः क्षतजा चतुर्थी
क्षयात्तथान्यामसमुद्भवाच॥
भक्तोद्भवा सप्तमिकेति तासां
निबोध लिङ्गान्यनुपूर्ब्बशस्तु" ॥

नराणां चितं स्वस्थान एव सञ्चितं
पित्तं सवातं

कट्वम्लोष्णापित्तविवर्द्धनैः।
कट्वम्लोष्णादिभिः कु-
पितं भयश्रमाभ्यां बलसंक्षयादुपवासादेश्च
वातः
कुपितः। तद्द्वयं ऊर्द्ध्वं प्रसरत् तालुप्रपन्नं
सत्पि-
पासां जनयेत्। न केवलं तालुन्येव दूषिते
तृतीया
भवति। किन्तु जलवाहिस्रोतःस्वपि। अत
आह
स्रोतःस्वित्यादि नन्वत्र बहुवचनं न युक्तम्।
यतो
जलवहे द्वे स्रोतसी सुश्रुतेनोक्ते। उच्यते।
तयो-
रेवानेकप्रतानयोगान्न दोषः। अपां वाहिषु
स्रोतःस्विति जिह्वादेरप्युपलक्षणम्। यत
आह
चरकः। रसवाहिनीश्च
धमनीर्जिह्वाहृदयगल-
तालुक्लोम च। संशोष्य नृणां देहेषु कुरुतः
तृष्णामतिप्रबलौ पित्तानिलाविति॥
संख्यामाह
तिस्र इत्यादि॥ तृष्णायाः सामान्यलक्षण-
माह।

इति षाडवः ॥
“यच्चोक्तं यक्ष्मिणां पथ्यं कासिनां
रक्तपित्तिनाम् ।
तच्च कुर्य्यादपेक्ष्याग्निं व्याधिं
सात्म्यबलांस्तथा” ॥
इति चरके चिकित्सास्थाने १६ अध्याये ॥)

**क्षतकासः**, पुं, (क्षतजः कासः । मध्यपदलोपी

समासः ।) पञ्चविधकासरोगान्तर्गतकासरोग-
विशेषः । यथा, --
“पञ्चकासाः स्मृता वातपित्तश्लेष्मक्षतक्षयैः ।
क्षयायोपेक्षिताः सर्व्वे बलिनश्चोत्तरोत्तरम्” ॥
एषां पूर्ब्बरूपसाह ।
“पूर्ब्बरूपं भवेत्तेषां शूकपूर्णगलास्यता ।
कण्ठेकण्डुश्च भोज्यानामवरोधश्च जायते” ॥
भोज्यानाभवरोधः कवलगिलने कण्ठव्यथा ॥
अस्य निदानपूर्ब्बिकां सम्प्राप्तिमाह ।
“अतिव्यवायभाराध्वयुद्धाश्वगजनिग्रहैः ।
रूक्षस्योरक्षतं वायुर्गृहीत्वा कासमावहेत्” ॥
अश्वगजयोर्न्निग्रहो दमनम् । लक्षणमाह ।
“संपूर्ब्बं कासते शुष्कं ततः ष्ठीवेत् सशोणितम्
।
कण्ठेन रुजतात्यर्थं विरुद्धेनेव चोरसा ॥
शृतं पयो मधुयुतं सन्धानार्थं क्षती पिबेत् ॥
क्षतकासे च ये धूमाः सानुपाना निदर्शिताः” ।
इति वाभटे निदानस्थाने चिकित्सास्थाने च
चतु-
र्थाध्याये ॥)

**क्षतघ्नः**, पुं, (क्षतं हन्ति नाशयतीति । हन् + “अम-

नुष्यकर्तृके च” । ३ । २ । ५३ । इति टक् ।)
क्षुपविशेषः । इति शब्दचन्द्रिका ॥
कुकुरशौँखा
इति भाषा ॥

**क्षतघ्नी**, स्त्री, (क्षतं हन्ति । हन् + “अमनुष्य-

कर्त्तृके च” । ३ । २ । ५३ । इति टक् स्त्रियां
ङीप् ।) लाक्षा । यथा, --
“लाक्षा द्रुमामयो राक्षा रङ्गमाता पलङ्कषा ।
जतु क्षतघ्नी क्रमिजा यावालक्तौ तु तद्रसः”
॥
इति हेमचन्द्रः । क्षतघ्नापि पाठः ॥

**क्षतजं**, क्ली, (क्षतात् व्रणात् जायते उत्पद्यते इति ।

जन् डः ।) रक्तम् । इत्यमरः । २ । ६ । ६४
॥
(यथा, रघौ । ७ । ४३ ।
“स च्छिन्नमूलः क्षतजेन रेणु-
स्तस्योपरिष्टात् पवनावधूतः” ॥)
पूयम् । इति शब्दचन्द्रिका ॥
“सततं यः पिबेत्तोयं न तृप्तिमधिगच्छति ।
मुहुः काङ्क्षति तोयन्तु तं तृष्णार्द्दितमादिशेत्”
॥
क्षतजामाह ।
“क्षतस्य रुक् शोणितनिर्गमाभ्यां
तृष्णा चतुर्थी क्षतजा मता तु” ।
क्षतस्य शस्त्रादिक्षतयुक्तस्य । रुक् पीडा ॥
अथ तृष्णायाश्चिकित्सा ॥
“वातघ्नमन्नपानं मृदु लघु शीतञ्च
वाततृष्णायाम् ।
तृष्णायां पवनोत्थायां सगुडं दधि शस्यते ॥
स्वादु तिक्तं द्रवं शीतं पित्ततृष्णाहरं परम् ।
मुस्तपर्पटकोदीच्यच्छत्राख्योशीरचन्दनैः ॥
शृतं शीतं जलं दद्यात् तृड्दाहज्वरशान्तये”
॥
छत्रा धान्याकम् । कश्चित् धात्रीञ्च दद्यात्
चन्दनमत्र धवलं दद्यात् ।
तस्यातितृष्णाहरत्वात् ।
शृतं अर्द्धपक्वमत्र कर्त्तव्यम् । षडङ्गपानम् ।
“लाजोदकं मधुयुतं शीतं गुडविमर्द्दितम् ।
काश्मरीशर्करायुक्तं पिबेत् तृष्णार्द्दितो नरः ॥
आस्तरणमार्द्रवासः प्रावरणं चार्द्रमेव स्यात् ।
तेन पिपासा शाम्यति दाहश्चोग्रोऽपि देहिनां
नियतम् ॥
गोस्तनीक्षुरसक्षीरयष्टीमधुमधूत्पलैः ।
नियतं नासिकापीतैस्तृष्णा शाम्यति दारुणां
॥
वैशद्यञ्च नयत्यास्ये सन्दधाति मुखे जलम् ।
तृष्णादाहप्रशमनं मधुगण्डूषधारणम् ॥

जिह्वातालुगलक्लोमशोषमूर्द्धनि दापयेत् ।
केशरं मातुलुङ्गस्य धृतसैन्धवसंयुतम् ॥
दाडिमं बदरं लोध्रं कपित्थं वीजपूरकम् ।
पिष्ट्वा मूर्द्धनि लेपस्तु पिपासादाहनाशनः ॥
वारि शीतं मधुयुतमाकण्ठाद्वा पिपासितम् ।
पाययेद्वामयेच्चापि तेन तृष्णा प्रशाम्यति ॥
प्रातः सशर्करः पेयो हिमो धान्याकसम्भवः ।
जयेत् तृष्णां तथा दाहं भवेत् स्रोतोविशोधनम् ॥
अमलं कमलं कुष्ठं लाजाश्च वटरोहकम् ।
एतच्चूर्णस्य मधुना गुटिकां धारयेन्मुखे ॥
तृष्णां प्रवृद्धां हन्त्येषा मुखशोषञ्च दारुणम् ।
क्षतोद्भवां रुग्विनिवारणेन
जयेत् क्षतानामसृजश्च पातैः ।
क्षयोत्थितां क्षीरजलं निहन्या-
न्मांसोदकं वा मधुकोदकं वा ॥
आमोद्भवां विल्ववचायुतानां
जयेत् कषायैरथ दीपनानाम् ।
गुर्व्वन्नजामुल्लिखनैर्जयेच्च
क्षयं विना सर्व्वकृताञ्च तृष्णाम्” ॥
उल्लिखनैः लेखनद्रव्यैः । स्निग्धेऽन्ने भुक्ते या
तृष्णा
स्यात्ताञ्च गुडाम्बुना शमयेत् । अतिरोगदुर्ब्ब-
लानां तृष्णां शमयेन्नृणामिहाशु पयः ॥ पयोऽत्र
दुग्धम् ।
“मूर्च्छाच्छार्द्दितृषादाहस्त्रीमद्यभृशकर्षिताः ।
पिबेयुः शीतलं तोयं रक्तपित्ते मदात्यये ॥
सात्म्यान्नपानभैषज्यैस्तृष्णा तस्य जयेत् पुनः ।
तस्यां जितायामन्योऽपि व्याधिः
शक्यश्चिकित्सितुम् ॥
तृष्यन् पूर्ब्बामयक्षीणो न लभेत जलं यदि ।
मरणं दीर्घरोगं वा प्राप्नुयात् त्वरितं नरः ॥
तृषितो मोहमायाति मोहात् प्राणान् विमुञ्चति ।
तस्मात् सर्व्वास्ववस्थासु स क्वचिद्वारि वारयेत्
॥
अन्नेनापि विना जन्तुः प्राणान् धारयते चिरम् ।
तोयाभावात् पिपासार्त्तः क्षणात् प्राणैर्विमुच्यते”
॥
इति तृष्णाधिकारः । इति भावप्रकाशः ॥

**क्षतविध्वंसी**, [न्] पुं, (क्षतं व्रणं स्रवद्रक्तपूयादिकं
विध्वंसयतीति । वि + ध्वन्स + णिच् + णिनि ।)
वृद्धदारवृक्षः । इति शब्दचन्द्रिका ॥

का क्षतिरस्त्यखिलाम्बुपातॄणाम् ।
केवलघनरसभक्षी
चातकपक्षी कमाश्रयति” ॥
इत्युद्भटश्च ॥

**क्षतोदरः**, पुं, (क्षतं शर्करादिभिन्नं उदरमत्र रोगे ।
अथवा क्षतात् स्रुतात् जातं उदरं उदररोग-
विशेषो यत्र ।) उदररोगविशेषः । तस्य सामा-
न्यरूपमाह ।
“आध्मानं गमनेऽशक्तिर्द्दौर्ब्बल्यं दुर्ब्बलाग्निना ।
शोथः सदनमङ्गानां सङ्गो वातपुरीषयोः ।
दाहस्तन्द्रा च सर्व्वेषु जठरेषु भवन्ति हि” ॥
सन्निकृष्टनिदानपूर्ब्बिकां संख्यामाह ।
“पृथक्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः ।
सम्भवन्त्युदरान्यष्टौ तेषां लिङ्गं पृथक् शृणु” ॥
क्षतोदरमाह ।
“शल्यं तथान्नोपहितं यदन्नं
भुक्तं भिनत्त्यागतमन्यथा वा ।
तस्मात् स्रुतोऽन्त्रात् सलिलप्रकाशः
स्रावः स्रवेद्वै गुदतस्तु भूयः ॥
नाभेरधश्चोदरमेति वृद्धिं
निस्तुद्यते दाल्यति चातिमात्रम् ।
एतत् परिस्राव्युदरं प्रदिष्टं
दकोदरं कीर्त्तयतो निबोध” ॥

शल्यं कण्टककर्क्करादि अन्नोपहितं
अन्ननिहितं

भुक्तं यत् अन्नं भिनत्ति तथा अन्यथा आगतं
भोजनं विना आगतं शरादि तदपि यदन्नं
भिनत्ति
एतदुपलक्षणम् । जृम्भणमत्यशनञ्च अत्र
भिनत्ति ।
यत उक्तं चरके ।
“शर्करातृणकाष्ठास्थिकण्टकैरन्नसंयुतैः ।
भिद्येतान्त्रं यदा भुक्तं जृम्भयात्यशनेन च” ॥
इति
तस्मात् भिन्नादन्त्रात् । गुदतस्तु भूयः अन्त्रात्
संस्रुत्य पुनर्गुदतः स्रवेदित्यर्थः । दाल्यति
विदीर्य्यत
इव । पदसिद्धिरार्षत्वात् । एतत् क्षतोदरं तन्त्रा-
न्तरे परिस्राव्युदरं प्रदिष्टम् ॥
तस्य चिकित्सा ।

उवाच दिष्ट्या कुरवो वर्द्धन्त इति
विस्मितः” ॥)
नियुक्तः । ब्रह्मा । इति मेदिनी ॥
क्षत्रियायां
शूद्राज्जातः । (यथा, मनुः । १० । १२
।
“शूद्रादायोगवः क्षत्ता चाण्डालश्चाधमो
नृणाम् ।
वैश्यराजन्यविप्रासु जायन्ते
वर्णसङ्कराः” ॥)
मत्स्यः । इति संक्षिप्तसारोणादिवृत्तिः ।

**क्षत्त्रं**, क्ली, (क्षतः त्रायते इति । क्षत् + त्रै + कः
।)
शरीरम् इत्युणादिकोषः । तगरम् । इति
राजनिर्घण्टः । (क्षत्त्रियकुलम् । यथा,
ऋग्वेदे ।
५ । ६२ । ६ ।
“अक्रविहस्ता सुकृते परस्पा
यं त्रासाथे वरुणेलास्वंतः ।
राजाना क्षत्त्रमहृणीयमाना
सहस्रस्थूणं विभृथः सह द्वौ” ॥)

**क्षत्त्रः**, पुं, (क्षद् + “गुधृवीपचिवचियमिसदिक्षदि
भ्यस्त्रः” । उणां ४ । १६६ । इति त्रः
।) क्षत्त्रियः ।
इत्यणादिकोषः ॥ (यद्वा, क्षतः क्षतात्
त्रायते इति ।
त्रै + कः । यथा, रघुः । २ । ५३ ।
“क्षतात् किल त्रायत इत्युदग्रः
क्षत्त्रस्य शब्दो भुवनेषु रूढः” ।
“नाश्वकर्णादिवत् केवलरूढः किन्तु
पङ्कजादिवत्
योगरूढः” इत्यर्थः । इति मल्लिनाथः
॥)

**क्षत्त्रबन्धुः**, पुं, (क्षत्त्रियस्य बन्धुरिव ।)
निन्दितक्षत्त्रि-
यः । इत्यमरटीका । (यथा, मार्कण्डेये
। ८ । ७४ ।
“क्षत्त्रवन्धो ! ममेतां त्वं सदृशीं
यज्ञदक्षिणाम् ।

**क्षतव्रणः**, पुं, (क्षतजन्यः व्रणः क्षतजो व्रणो वा ।)

षट्प्रकारव्रणरोगान्तर्गतव्रणरोगविशेषः । इति भावप्रकाशः ॥ तद्विवरणं व्रणशब्दे द्रष्टव्यम् ॥

**क्षतव्रतः**, त्रि, (क्षतं भ्रष्टं व्रतमस्य ।) ध्वस्तनियमः ।

तत्पर्य्यायः । अवकीर्णी २ । इत्यमरः । २ । ७ । ५४ ॥
तथा च याज्ञवल्क्यः ।
"अवकीर्णी भवेद्गत्वा ब्रह्मचारी तु योषितम् ।
गर्द्दभं पशुमालभ्य नैरृतं स विशुद्ध्यति" ॥
इति प्रायश्चित्ततत्वम् ॥

**क्षतहरं**, क्ली, (क्षतं हरतीति । हृ + टः ।) अगुरु ।

इति शब्दचन्द्रिका ॥

**क्षतिः**, स्त्री, (क्षण् + क्तिन् ।) अपचयः । क्षयः ।

(यथा, महाभारते । ३ । १७२ । १९ ।
"हयानां न क्षतिः काचित् न रथस्य न मातलेः" ॥)
"जलमुचि वितरणविमुखे
"शालिषष्टिकगोधूमयवनीवारभोजनम्।
निरूहो रेचनं श्रेष्ठं सर्व्वेषु जठरेषु च ॥
आनूपमौदकं मांसं शाकं पिष्टकृतं तिलाः ।
व्यायामाध्वदिवास्वप्नयानप्रानानिवर्ज्जयेत् ॥
तथाम्ललवणोष्णानि विदाहीनि गुरूणि च ।
नाद्यादन्नानि जठरे तोयपानञ्च वर्ज्जयेत् ॥
उदराणां मलाढ्यत्वात् बहुशः शोधनं हितम् ।
क्षीरेणैरण्डजं तैलं पिबेन्मूत्रेण वा सकृत्" ॥
इति भावप्रकाशः । (उदररोगशब्दे विशेषविवृतिरस्य ज्ञेया ॥)

**क्षत्ता**, [ऋ] पुं, (क्षद् संवृतौ । सौत्रधातुरयम् ।

"तृण्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ" । उणां । २ । ९४ । इति संज्ञायां तृच् स चानिट् ।)
सारथिः । द्वाःस्थः । इत्यमरः । ३ । ३ । ६२ ॥
दासीपुत्त्रः । (यथा, महाभारते । १ । विदुरागमनपर्व्वणि । २०१ । १७ ।
"ततः प्रीतमनाः क्षत्ता धृतराष्ट्रं विशाम्पते ! ।
मन्यसे यदि तत् क्षिप्रं पश्य त्वं मे बलं परम्" ॥
क्षत्त्रं राज्यं देहो वा बन्धुरिवास्य ।)
क्षत्त्रमात्रम् ।
(यथा, मनुः । २ । ३८ ।
"आषोडशात् ब्राह्मणस्य सावित्री नातिवर्त्तते" ।
आद्वाविंशात्
क्षत्त्रबन्धोराचतुर्व्विंशतेर्विशः ॥)

**क्षत्त्रवृक्षः**, पुं, (क्षत्त्रसंज्ञकः वृक्षः ।) मुचुकुन्दः ।

इति राजनिर्घण्टः । (पर्य्यायोऽस्य यथा, --
"मुचुकुन्दः क्षत्त्रवृक्षश्चित्रकः प्रतिविष्णुकः" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥ गुणाश्चास्य मुचुकुन्दशब्दे ज्ञातव्याः ॥)

**क्षत्त्रियः**, पुं, (क्षत्त्रे राष्ट्रे साधुः । क्षत्त्रस्यापत्यं वा ।

"क्षत्राद् घः" । ४ । १ । १३८ । इति जातौ घः ।)
क्षदति रक्षति जनान् क्षत्त्रः । क्षद संवृतौ सौत्रः
ततस्त्रासुसिति त्रः । क्षतात् त्रायते इति डे
मनीषादित्वात् क्षतान्त्याकारलोपे वा क्षत्त्रः ।
क्षत्त्रो द्वितकारः । पुंनपुंसकयोः क्षत्त्रः ।
पतिर्म्मम क्षत्त्रमशेषभूभृत् प्रमाभिरामो भर-
तश्च जिष्णुरिति राघवपाण्डवीये ।
क्षत्त्र एव
क्षत्त्रियः स्वार्थे इयः । अपत्यार्थे इय इत्यन्ये ।
इति भरतः ॥ * ॥
ब्रह्मबाहुजवर्णविशेषः । क्षत्री इति भाषा ।
(यथा, मनुः । १ । ३१ ।
"लोकानां तु विवृद्ध्यर्थं मुखबाहूरुपादतः ।
ब्राह्मणं क्षत्त्रियं वैश्यं शूद्रञ्च निरवर्त्तयत्" ॥)

| | | |
|---|---|---|
| | | तत्पर्य्यायः । मूर्द्धाभिषिक्तः २ राजन्यः ३ बाहुजः ४ विराट् ५ । इत्यमरः । २ । ८ । १ ॥ क्षत्त्रः ६ द्विजलिङ्गी ७ राजा ८ नाभिः ९ । इति जटाधरः ॥ नृपः १० |

मूर्द्धकः ११ । इति शब्दरत्नावली ॥
पार्थिवः १२
सार्व्वभौमः १३ । इति राजनिर्घण्टः । ते च
सूर्य्यचन्द्रवंशीयराजानः कलेः
सहस्रवर्षपर्य्यन्तं
आसन् ततः महानन्दिसुतो नन्दः शूद्रायां
समु-
त्पन्नः शतवर्षं राज्यं चकार तदन्ते
चाणक्यनामा
ब्राह्मणो नन्दं तत्पुत्त्रांश्च हत्वा मुरुवंशजं
चन्द्रगुप्तं
राजानं कृतबान् कलौ नन्दान्तक्षत्त्रियवंशः
।
इति श्रीभागवते १२ स्कन्धे १ अध्यायात्
संगृ-
हीतम् ॥ * ॥ प्लक्षद्वीपे क्षत्त्रियस्य नाम
पतङ्गः ।
शाल्मलद्वीपे वीर्य्यधरः । कुशद्वोपे कोविदः ।
क्रौञ्चद्वीपे ऋषभः । शाकद्वीपे सत्यव्रतः
पुष्करद्वीपे
सर्व्वे एकवर्णाः ॥ अस्य
शास्त्रनिरूपितधर्म्मास्त्रयः।
अध्ययनं यजनं दानञ्च । प्रजारक्षणं जीविका
।
अस्याश्रमास्त्रयः । गार्हस्थ्यं ब्रह्मचर्य्यं
वानप्रस्थञ्च ।
इति तत्रैव २० अध्यायादितः संगृहीतम् ॥
* ॥
तल्लक्षणं यथा, --
“क्षत्त्रजं सेवते कर्म्म वेदाध्ययनसंयुतः ।
दानादानवहिर्य्यस्तु स वै क्षत्त्रिय उच्यते” ॥
तस्य धर्म्मो यथा, --
नारद उवाच ।
“क्षत्त्रियस्यापि यो धर्म्मस्तं ते वक्ष्यामि
पार्थिव ! ।
दद्याद्राजा न याचेत यजेत न च याजयेत् ॥
नाध्यापयेदधीयीत प्रजाश्च परिपालयेत् ।
नित्योद्युक्तो दस्युवधे रणे कुर्य्यात् पराक्रमम्
॥
ये तु क्रतुभिरीजानाः श्रुतवन्तश्च पार्थिवाः ।
ये तु युद्धे विजेतारस्ते तु लोकजितो नृपाः ॥
स्थापयित्वा प्रजापालं पुत्त्रं राज्ये च
पार्थिव ! ।
अन्यगोत्रं प्रशस्तं वा क्षत्त्रियं क्षत्त्रियर्षभ !
॥
अर्च्चयित्वा पितॄन् सम्यक् पितृयज्ञे
यथाविधि ।
देवान् यज्ञैरृषीन् वेदैरर्च्चयित्वां प्रयत्नतः ॥
अन्तकाले च सम्प्राप्ते य इच्छेदाश्रमान्तरम्
।
सोऽनुपूर्ब्ब्याश्रमान्राजन् गत्वा
सिद्धिमवाप्नुयात् ॥
राजर्षित्वेन राजेन्द्र ! भैक्षचर्य्याध्वसेवया ।
अपेतगृहधर्म्मोऽपि चरेज्जीवितकाम्यया ॥
न चैतन्नैष्ठिकं कर्म्म त्रयाणां भूरिदक्षिणम् ।
चतुर्णां राजशार्दूल ! प्राहुराश्रमवासिनाम् ॥
बाह्वायत्तं क्षत्त्रियैर्मानवानां
लोकश्रेष्ठं धर्म्ममासेवमानैः ।
सर्व्वे धर्म्माः सोपधर्म्मास्त्रयाणां
राज्ञो धर्म्मादिति वेदात् शृणोमि ॥
एवं धर्म्मान्राजधर्म्मेषु सर्व्वान्
सर्व्वावस्थं सम्प्रलीनान्निबोध ।
अल्पश्रमानल्पफलान् वदन्ति
धर्म्मानन्यान् वेदविदो मनुष्याः ॥
महाश्रमं बहुकल्याणरूपं
क्षात्त्रं धर्म्मं नेतरं प्राहुरार्य्याः ।
सर्व्वे धर्म्मा राजधर्म्मप्रधानाः
सर्व्वे धर्म्माः पाल्यमानाश्चरन्ति ॥
सर्व्वत्यागो राजधर्म्मेषु राजं-
स्त्यागं धर्म्मञ्चाहुरग्र्यं पुराणम् ।
मज्जेत्त्रयी दण्डनीतौ हतायां
सर्व्वे धर्म्माः प्रक्षयेयुर्व्विरुद्धाः ॥
सर्व्वे धर्म्माश्चाश्रमाणां हताः स्युः
क्षात्त्रे त्यक्ते राजधर्म्मे पुराणे ।
सर्व्वे त्यागा राजधर्म्मेषु चोक्ताः
सर्व्वा विद्या राजधर्म्मेषु युक्ताः ॥
सर्व्वे लोका राजधर्म्मे प्रविष्टा
यथा जीवाः प्राकृतैर्व्वध्यमानाः ।
धर्म्मश्रुतानामुपपीडनाय
एवं धर्म्मा राजधर्म्मैर्व्विमुक्ताः ॥
सच्चिन्वन्ते नाद्रियन्ते स्वधर्म्मम् ॥
रणे यो वा त्यजेत् प्राणान् तस्य
स्वर्गोयशस्करः” ॥
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ८३ अध्यायः
॥ * ॥
अथ सूर्य्यवंशीय क्षत्त्रियविवरणम् ।

> परमेश्वरात् ब्रह्मा जातः तस्य पुत्त्रो
> मरीचिस्तस्य

कश्यपस्तस्य सूर्य्यस्तस्य वैवस्वतो मनुः ।
सत्ययुगे
मनुरेव राजासीत् । त्रेतायुगे तस्य पुत्त्र इक्ष्वाकुः
अयोध्यायां राजा आसीत् । त्रेतायुगे अतिदीर्घा-
युषो राजानो बहुकालं राज्यं कृतवन्तः । द्वापरे
ततः किञ्चित्-न्यूनायुषः । युगस्य प्रथमापेक्षया
उत्तरोत्तरं आयुषो ह्रासः । कलियुगे अल्पमेवायुः
शेषे अत्यल्पं भविष्यति । तस्य पुत्त्रो विकुक्षि-
स्तस्य ककुत्स्थः तस्य अनेनाः तस्य पृथुः
तस्य
विश्वगन्धिः तस्य चन्द्रः तस्य युवनाश्वः तस्य
श्रावः
तस्य वृहदश्वः तस्य धुन्धुमारः तस्य दृढाश्वः
तस्य
हर्य्यश्वः तस्य निकुम्भः तस्य कृशाश्वः तस्य
सेन-
जित् तस्य युवनाश्वस्तस्य मान्धाता
चक्रवर्त्त्यभूत् ।
तस्य पुरुकुत्सः तस्य त्रसदस्युः तस्य अनरण्यः
तस्य हर्य्यश्वः तस्य प्रारुणः तस्य त्रिबन्धनः
तस्य
सत्यव्रतः तस्य त्रिशङ्कुः तस्य हरिश्चन्द्रः यः
राजसूयं कृतवान् । तस्य रोहितः तस्य हरितः
तस्य चम्पः तस्य सुदेवः तस्य विजय तस्य
भरुकः
तस्य वृकः तस्य बाहुकः तस्य सगरश्चक्रवर्त्ती ।
तस्य असमञ्जाः तस्य अंशुमान् तस्य भगीरथः ।
यस्तपः कृत्वा पृथिव्यां गङ्गामानीतवान् । तस्य
श्रुतः तस्य नाभः तस्य सिन्धुद्वीपः तस्य
अयुतायुः
तस्य ऋतुपर्ण्णः तस्य सौदासः तस्य अश्मकः
तस्य

अविक्षतशरीरो हि संगराद्यो निवर्त्तते ।
क्षत्रियस्य तु तत् कर्म्म नोभयत्र यशःप्रदम्
॥
क्षत्रियाणामयं धर्म्मो निर्णीतो मुनिभिः परः
।
नास्य कृत्यतमं किञ्चिद्राज्ञो दस्युविनिग्रहात्
॥
दानमध्ययनं यज्ञो राज्ञां क्षेमोऽभिधीयते ।
तस्माद्राज्ञा महाराज ! योद्धव्यं धर्म्मशीलिना
॥
प्रजाः स्वेषु च धर्म्मेषु स्थापयेत महीपतिः ।
धर्म्म्याण्येव हि कर्म्माणि कारयेत् सततं
प्रजाः ॥
परमां सिद्धिमाप्नोति नृपतिः परिपालनात् ।
कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रो राजन्य
उच्यते" ॥
इति पाद्मे स्वर्गखण्डे २६ अध्यायः ॥ * ॥
अपि च ।
"राजन्यानां करादानं विना तैवाहिकञ्च यः ।
प्रतिग्रहः स निन्द्योऽत्रं परत्र चासुखप्रदः ॥
युद्धे पलायनञ्चैव तथा कातरतार्थिषु ।
अपालनं प्रजानाञ्च दाने धर्म्मे विरक्तता ॥
अनवेक्षा स्वराष्ट्रस्य ब्राह्मणानामनादरः ।
अमात्यानामसम्मानं तेषां कर्म्मानवेक्षणम् ।
भृत्यानाञ्च परीहासो निषिद्धः
क्षत्रजन्मनाम्" ॥
"राजन्यस्तु महाराज ! यथाश्रममवाप्नुयात्
।
तत् शृणुष्व तवाख्यास्ये धर्म्मसंग्रहतत्परः ॥
वेदानधीत्य धर्म्मेण राजशास्त्राणि चानघ ! ।
सन्तानादीनि कर्म्माणि कृत्वा सोमं निषेव्य
च ॥
पालयित्वा प्रजाः सर्व्वा घर्म्मेण जयताम्बर !
।
राजसूयाश्वमेधादीन् मखानन्यांस्तथैव च ॥
आनयित्वा यथापाठं विप्रेभ्यो दत्तदक्षिणः ।
संग्रामे विजवं प्राप्य तथाल्पं यदि वा बहु ॥

चातुराश्रम्यधर्म्माश्चयतिधर्म्माश्च
पार्थिव ! ।
लोकवेदोत्तराश्चैव क्षात्रे धर्म्मे समाहिताः
॥
सर्व्वाण्येतानि धर्म्माणि क्षात्रे
राजन्यसत्तम ! ।
अप्रत्यक्षं बहुद्वारं धर्म्ममाश्रमवासिनाम् ।
क्षात्रेणैव हि धर्म्मेण प्रत्यक्षं क्रियते नृप !"
॥
इति पाद्मे स्वर्गखण्डे २८ अध्यायः ॥ * ॥
अपि च ।
"द्विजार्च्चनं क्षत्रियाणां तथा
नारायणार्च्चनम् ।
राज्यानां पालनञ्चैव रणे निर्भयता तथा ॥
नित्यं दानं ब्राह्मणेभ्यः शरणागतरक्षणम् ।
पुत्त्रतुल्यं प्रजानाञ्च दुःखिनां परिपालनम्
॥
शस्त्रास्त्राणाञ्च नैपुण्यं रणे सौन्दर्य्यमेव च ।
तपश्च धर्म्मकृत्यञ्च यत्नतः कुरुते मुदा ॥
पण्डितं नीतिशास्त्रज्ञं नित्यञ्च परिपालयेत्
।
नियोजयेत् सभामध्ये नित्यं सद्भिश्च
संयुतः ॥
हस्त्यश्वरथपादातं सेनाङ्गञ्च चतुष्टयम् ।
पालयेत् यत्नतो नित्यं यशस्वी च
प्रतापवान् ॥
रणे निमन्त्रितश्चैव दाने न विमुखो भवेत् ।

मूलकः तस्य दशरथः तस्य ऐडविडिः तस्य
विश्व-
सहः तस्य खट्वाङ्गश्चक्रवर्त्ती । तस्य दीर्घबाहुः
तस्य रघुः तस्य अजः तस्य दशरथः । विष्णुः
श्रीरामरूपेण तस्य पुत्त्रत्वं प्राप्तवान् ।
तस्यानुजा
भरतलक्ष्मणशत्रघ्नाः । श्रीरामचरितं
बहुविस्तीर्णं
वाल्मीकिव्यासादिमुनिभिर्व्वर्णितम् । असौ त्रेता-
द्वापरयोः सन्धौ अवतीर्णः । एते खट्वाङ्गमारभ्य
श्रीरामपर्य्यन्ताश्चक्रवर्त्तिनः । द्वापरस्य प्रथमे
तस्य पुत्त्रः कुशो जातः । तस्य अतिथिः तस्य
निषधः तस्य नभः तस्य पुण्डरीकः तस्य
क्षेसधन्वा
तस्य देवानीकः तस्य हीनः तस्य पारियात्रः
तस्य
बलस्थलः तस्य वज्रनाभः तस्य अर्कः तस्य
सगणः
तस्य विधृतिः तस्य हिरण्यनाभः तस्य पुष्पः
तस्य
ध्रुवसन्धिः तस्य सुदर्शनः तस्य अंग्रिवर्णः तस्य
शीघ्रः तस्य मरुः यो योगसिद्धः सन् सुमेरु-
निकटे कलापग्रामे आस्ते कलेरन्ते नष्टं सूर्य्यवंशं
पुनर्भावयिष्यति । मरोः पुत्त्रः प्रसुश्रुतः तस्य
सन्धिः तस्य अमर्षणः तस्य महस्वान् तस्य
विश्व-
बाहुः तस्य प्रसेनजित् तस्य तक्षकः तस्य वृह-
द्बलः । असौ युधिष्ठिरस्य समकालीनः
भारतयुद्धे
अभिमन्युना हतः । तस्य वृहद्रणः तस्य उरु-
क्रियः तस्य वत्सवृद्धः तस्य प्रतिव्योमः तस्य
भानुः
तस्य दिवाकः तस्य सहदेवः तस्य वीरः तस्य
वृहदश्वः तस्य भानुमान् तस्य प्रतीकाश्वः तस्य
सुप्रतीकः तस्य मरुदेवः तस्य सुनक्षत्रः तस्य
पुष्करः
तस्य अनारीक्षः तस्य सुतपाः तस्य अमित्रजित्

तस्य वृहद्राजः तस्य वर्हिः तस्य कृतञ्जयः तस्य
रणञ्जयः तस्य सञ्जयः तस्य शाक्यः तस्य शुद्धोदः
तस्य लाङ्गलः तस्य प्रसेनजित् तस्य क्षुद्रकः तस्य
सुमित्रः । एते राजानः कलेः सहस्रवत्सरपर्य्यन्तं
राज्यं कृतवन्तः । एतत्पर्य्यन्तं सूर्य्यवंशविश्रान्तिः
पुन सत्ययुगे सूर्य्यवंशोत्पत्तिर्भविष्यति । इति
श्रीभागवतनवमस्कन्धमतम्॥
चन्द्रवंशविवरणं
चन्द्रवंशशब्दे द्रष्टव्यम्

<F>*)क्षत्त्रियाणामन्यतराख्याःकायस्थाः ।

यथा प्रथमतः--वेदानाम्
आपस्तम्बशाखायाम्।
"बाह्वोश्च क्षत्त्रिया जाताः कायस्था जगतीतले ।
चित्रगुप्तः स्थितः स्वर्गे विचित्रो भूमिमण्डले ॥
चैत्ररथः सुतस्तस्य यशस्वी कुलदीपकः ।
ऋषिवंशे समुद्भूतो गौतमी नाम सत्तमः ।
तस्य शिष्यो महाप्राज्ञश्चित्रकूटाचलाधिपः" ॥
द्बितीयतः, --

माण्डव्यशापात् चित्रगुप्तस्य पुत्रचैत्ररथस्य क्षत्त्रिय-

त्वगते पुनरुपनयनसंस्कारे कृते तेन क्षत्त्रियत्वं प्राप्तं
यथा, -- वेदान्ते प्रथमाध्याथे तृतीयपादे ३५ । ३७
सूत्रे क्षत्त्रियत्वगते चोत्तरत्र चैत्ररथेन लिङ्गात् तद-
भावे निर्द्धरिणे च प्रवृत्तेः ॥
तृतीयतः, --
"नाम्ना त्वं चित्रगुप्ताऽसि मम कायादभूर्यतः ।

**क्षत्त्रिया**, स्त्री, (क्षत्त्रियाणां स्त्रीजातिः । "अ-

र्य्यक्षत्त्रियाभ्यां वा" । वार्त्तिं इति
स्वार्थे आनुगभावे टाप् योपधत्वात् न ङीष् ।
पक्षे आनुगागमः ङीष् च ।) क्षत्त्रियस्त्रीजातिः ।
इत्यमरः ॥ (यथा, मनुः । ३ । ४४ ।

**क्षत्त्रियाणी**, स्त्री, (क्षत्त्रियाणां स्त्रीजातिः । "अ-

र्य्यक्षत्त्रियाभ्यां वा" । वार्त्तिं इति
स्वार्थे आनुगभावे टाप् योपधत्वात् न ङीष् ।
पक्षे आनुगागमः ङीष् च ।) क्षत्त्रियस्त्रीजातिः ।
इत्यमरः ॥ (यथा, मनुः । ३ । ४४ ।
"शरः क्षत्त्रियया ग्राह्यः प्रतोदो वैश्यकन्यया" ॥
दुर्गा । यथा, हरिवंशे विष्णुपर्व्वणि । ५८ । २३ ।
"निद्रा च सर्व्वभूतानां मोहनी क्षत्त्रिया तथा" ॥)

**क्षत्त्रियी**, स्त्री, (क्षत्त्रियस्य पत्नी इति । "पुंयोगा-

दाख्यायाम्" । ४ । १ । ४८ । इति ङीष् ।)
क्षत्त्रियपत्नी । इत्यमरः । २ । ६ । १५ ॥

**क्षद**, संवृतौ । इति कविकल्पद्रुमः ॥ (सौत्रं--आत्मं--

सकं--सेट् ।) क्षत्ता । इति दुर्गादासः ॥
(यथा, ऐतरेयब्राह्मणे । १ । १५ ।
"तद्यथैवादो
मनुष्यराज आगतेऽन्यस्मिन् वार्हत्युक्षाणं वा
वेहतं वा क्षदन्त एवमेवास्मा एतत्" ॥)

**क्षन्ता**, [ऋ] त्रि, (क्षम् + कर्त्तरि तृच् ।) क्षमा-

शीलः । इत्यमरः । ३ । १ । ३१ ॥ अस्य पर्य्यायः सहि-
ष्णुशब्दे द्रष्टव्यः ॥ (यथा, महाभारते । १३ । १०२ । ३१ ।
"ये क्षन्तारो नाभिजल्पन्ति चान्यान्
सत्रीभूताः सततं पुण्यशीलाः ।
तथाविधानामेष लोको महर्षे !
परं गन्ता धृतराष्ट्रो न तत्र" ॥)

**क्षप**, इ क शक्तौ । इति कविकल्पद्रुमः ॥ (चुरां--

इति जटाधरः ॥ सन्न्यासी । यथा । "एक क्षपणक
शाकाहर्त्ता तत्र क्षपणक दशशाकाशा । यत्र
क्षपणक दशशाकाशा तत्र क्षपणक का शा-
काशा" ॥ इत्युद्भटः ॥ (यथा च महाभारते । १ ।
३ । १२४ ।
"सोऽपश्यदथ पथि नग्नं क्षपणकमागच्छन्तम्" ॥
विक्रमादित्यसभास्थनवरत्नानामेकः । यथा, --
"धन्वन्तरिक्षपणकामरसिंहशङ्कु-
वेतालभट्टघटकर्परकालिदासाः" ॥)

**क्षपण्युः**, पुं, (क्षप् + बाहुलकात् अन्युः ततो णत्वम् ।)

अपराधः । इति शब्दमाला ॥

**क्षपा**, स्त्री, (क्षपयति वारयति चेष्टामिन्द्रिया-

णाम् । क्षप् + अच् ।) रात्रिः । (यथा, महाभारते
। ३ । अरण्ययात्रापर्व्वणि । १ । ४३ ।
"राजानन्तु कुरुश्रेष्ठं ते हंसमधुरस्वराः ।
आश्वासयन्तो विप्राग्र्याः क्षपां सर्व्वां व्यनोदयन्" ॥)
हरिद्रा । इत्यमरः ॥

**क्षपाकरः**, पुं, (क्षपां रात्रिं करोतीति । कृ + टः ।)

चन्द्रः । कर्पूरः । इत्यमरः । ४ । ५३ । ७ ॥

**क्षपाचरः**, पुं, (क्षपायां रजन्यां चरतीति । चर +

टः ।) राक्षसः । (यथा, महाभारते । ३ । इन्द्रजि-
द्वधपर्व्वणि । २८८ । ३३ ।
"निर्याणे स मतिं कृत्वा निधायासिं क्षपाचरः ।
आज्ञापयामास तदा रथो मे कल्प्यतामिति" ॥)

**क्षपाटः**, पुं, (क्षपायां अटतीति । अट् गतौ + अच् ।

राक्षसः । इति त्रिकाण्डशेषः । (यथा, भट्टिः २ । ३० ।
"ततः क्षपाटैः पृथुपिङ्गलाक्षैः
खं प्रावृषेण्यैरिव चानशेऽब्दैः" ॥)

**क्षपापतिः**, पुं, (क्षपायाः रजन्याः पतिः ।) चन्द्रः ।

कर्पूरः । इति निशापतिशब्ददर्शनात् ॥

**क्षम**, उ इर् भ य मर्षे । इति कविकल्पद्रुमः ॥

तस्मात् कायस्थविख्यातिर्लोकेतव
भविष्यति ॥
कायस्थः क्षत्त्रियो वर्णो न तु शूद्रः कदाचन
।
अतो भवेयुः संस्कारा गर्भाधानादिका दश
॥
गर्भाधानमृतौ कार्य्यं तृतीये मासि पुंस्क्रिया
।
मासाष्टमे स्यात् सीमन्त उत्पत्तौ जातकर्म्म
च ॥
शताहे नामकरणं पञ्चमे मासि निष्क्रमः ।
षष्ठेऽन्नप्राशनं मासि चूडा कार्य्या यथाकुलम्
॥
तथोपनयने भिक्षाव्रह्मचर्य्यव्रतादिकम् ।
वासो गुरुकुलेषु स्यात् स्वाध्यायाध्ययनं
तथा ॥
कृत्वा तु मातृकापूजां वसोर्धारां विधाय च ।
आयुष्याणि च शान्त्यर्थं जपेदत्र समाहितः
॥
कुर्य्यान्नान्दीमुखं श्राद्धं
दधिसध्वाज्यसंयुतम् ।
ततः प्रधानसंस्काराः कार्य्या एष विधिः
स्मृतः” ॥
इत्यादि विज्ञानतन्त्रे ॥
चतुर्थतः, --

कायप्रकाशो नाम्ना
विद्यानगर्य्यधिपतिः क्षत्त्रवशजः

कायस्य आसीत् । यथा, --
“विराटकायजो वंशः कायस्थ इति
विस्मृतः ।
आर्य्याच्छन्दःप्रकाशात्तु आर्य्यावर्त्तः
प्रमुच्यते ॥
अयं तु नवमस्तेषां द्वीपसागरसंवृतः
योजनानां सहस्रं तु द्वीपीऽयं दक्षिणोत्तरात्”
॥
इति मेरुतन्त्रे १९९ पटले ।
पञ्चमतः, --
“राजन् ! ब्रह्मकायसमुद्भूतः कायस्थो
वर्म्मसंज्ञकः कलौ
हि क्षत्त्रियः म चास्त्यधिकारो जपयज्ञेषु” ॥
इति व्योमसंहितायाम् माधवाचार्य्यधृतम् ॥
षष्ठतः, --

परं--सकं--सेट्--इदित् ।) शक्तिरिह क्षमा ।
इक,
क्षम्पयति दुःखं मुनिः । सहत इत्यर्थः । इति
दुर्गादासः ॥

**क्षप**, त् क म क्षेपे । इति कविकल्पद्रुमः ॥ (अदन्त

चुरां--परं--सकं--सेट् ।) म, अक्षपि अक्षापि
क्षपं
क्षपं क्षापं क्षापम् । मानुबन्धसामर्थ्यात्
स्थानिव-
त्त्वाभावे दीर्घः । स्वमते तु अत्र
दीर्घविधिरुपधां
नापेक्षते । इति दुर्गादासः ॥

**क्षपणः**, त्रि, (क्षपयति क्षिपति दूरीकरोति लज्जां

इति । क्षप क्षेपे + कर्त्तरि ल्युः ।) निर्लज्जः ।
इति त्रिकाण्डशेषः ॥ (क्षपयति विषयरागं
इति ।
बौद्धसन्न्यासी ॥ (भावे ल्युट् क्षपणम् । यथा,
मनुः । ४ । २२२ ।
“भुक्त्वाऽतोऽन्यतमस्यान्नममत्याक्षपणं
त्र्यहम्” ॥)

**क्षपणकः**, पुं, (क्षप् + ल्युः । स्वार्थे कन् ।) बुद्धभेदः ।

(दिवां--परं--सकं--सेट् । उदित्वात् क्त्वावेट् ।)
मर्षः सहनम् । उ, क्षमित्वा क्षान्त्वा । षष्ठस्वरा-
नुबन्ध इत्येके । इ र, अक्षमत् अक्षमीत् ।
अस्मात्
पुषादित्वान्नित्यं ङ इत्यन्ये । भ य, क्षाम्यति
दोषं
साधुः । इति दुर्गादासः ॥

**क्षम**, ऊ ङ ञि ष मर्षे । इति कविकल्पद्रुमः ॥

(म्वां--आत्मं--सकं--वेट् ।) ऊ, अक्षमिष्ट
अक्षंस्त ।
ङ, क्षमते । ञि, क्षन्तोऽस्ति । ष, क्षमा । इति
दुर्गादासः ॥

**क्षमं**, क्ली, (क्षम् + पचाद्यच् ।) युक्तम् । इत्यमरः ।

३ । ३ । १२२ ॥ (यथा, शाकुन्तले ५ अङ्के ।
“यदि यथा वदति क्षितिपस्तथा
त्वमसि किं पुनरुत्कुलया त्वया ।
अथ तु वेत्सि शुचिव्रतमात्मनः
पतिगृहे तव दास्यमपि क्षमम्” ॥)

**क्षमः**, त्रि, (क्षमते इति । क्षम् + अच् ।) शक्तः ।

हितः । इत्यमरः । ३ । ३ । १२२ ॥ आद्यस्य
पर्य्यायः ।
सहः २ प्रभुष्णुः ३ । इति हेमचन्द्रः ॥
(यथा, शाकुन्तले १ माङ्के ।
“इदं किलाव्याजमनोहरं वपु-
स्तपःक्षमं साधयितुं य इच्छति” ॥

| यदा पृथिवीनिक्षत्त्रियकाले<br>परशुरामस्य भयात्<br><br>चन्द्रमेनस्य नृपतेभार्य्या मुनेर्दाल्भ्यस्याश्रयं<br>गता तदा<br>परशराम उवाच ।<br>“तवाश्रमे महाभाग । सगर्भा स्त्री समागता<br>चन्द्रसेनस्य राजर्षः क्षत्त्रियस्य महात्मनः<br>॥<br>तम्मेवं प्रार्थितं देहि हिंसेयं तां महामुने ! ।<br>ततो दालभ्यः प्रत्युबाच ददामि<br>वरमीप्सितम् ॥<br>स्त्रियं गर्भममुं बालं तन्मे त्वं दातुमर्हसि ।<br>ततो रामोऽब्रवीद्दाल्भ्यं यदर्थमहमागतः ॥<br>क्षत्त्रियान्तकरश्चाहं तत्त्वं याचितवानसि ।<br>प्रार्थितश्च त्वया विप्र ! कायस्थो गर्भ<br>उत्तमः ॥<br>तस्मात् कायस्थ इत्याख्यो भविष्यति<br>शिशूत्तमः ।<br>एवं रामो महाबाहुर्हित्वा तं गर्भमुत्तमम् ॥<br>निर्जगामाश्रमात्तस्मात् क्षत्त्रियान्तकरः<br>प्रभुः ।<br>कायस्थ एष उत्पन्नः क्षत्त्रिय्यां<br>क्षत्त्रियात्ततः ॥<br>तद्गर्भजाश्व कायस्था धर्म्मिष्ठाः<br>सत्यवादिनः ।<br>सदाचारपरा नित्यं रता हरिहरार्च्चने ॥<br>देवविप्रपितृणाञ्च अतिथीनाञ्च पूजकाः” ॥<br>इति स्कन्दपुराणे रेणुकामाहात्म्य<br>परशुरामदाल्भ्य-<br>संवादे ॥ </F> ॥ | | |
|---|---|---|

रघौ च । ११ । ६ ।
"आशिषं प्रयुयुजे न वाहिनीं
सा हि रक्षणविधौ तयोः क्षमा" ॥)

**क्षमता**, स्त्री, (क्षमस्य भावः इति । क्षम + तल् ।)

योग्यता । सामर्थ्यम् । यथा, --
"श्रुतिर्द्धितीया क्षमता च लिङ्गं
वाक्यं पदान्येव तु संहतानि ।
सा प्रक्रिया या करणस्य काङ्क्षा
स्थानं क्रमो योगबलं समाख्या" ॥
इति भट्टवार्त्तिकम् ॥ क्षमता अर्थप्रकाशनसा-
मर्थ्यम् । यथा । वर्हिर्देवसदनं दासीत्यत्र दा-
सीति पदस्य छेदनप्रकाशनसामर्थ्यात्
वर्हिरित्यस्य
आस्तृतदर्भप्रकाशनसामर्त्यात्
आस्तृतदर्भच्छेदने
समुदायमन्त्रस्य नियोगोऽवगम्यते । इति
धर्म्म-
दीपिका ॥

**क्षमा**, स्त्री, (क्षमते आत्मोपरिस्थितानां जीवाना-

मपराधं या । क्षम् अच् षित्वादङ् वा तत-
ष्टाप् ।) क्षितिः । (यथा, भट्टिः । ३ । २२ ।
"विभूषणान्युन्मुमुचुः क्षमायां
पेतुर्बभञ्जुर्वलयानि चैव" ॥)
क्षान्तिः । इत्यमरः । ३ । ३ । १२२ ॥
क्षमालक्षणम् ।
यथाह, वृहस्पतिः ।
"वाह्ये चाध्यात्मिके चैव दुःखे चोत्पादिते
क्वचित् ।
न कुप्यति न वा हन्ति सा क्षमा परिकीर्त्तिता"
॥
इत्येकादशीतत्त्वम् । अपि च ।
"आक्रुष्टोऽभिहतो यस्तु नाक्रोशेन्न हनेदपि ।
अदुष्टैर्वाङ्मनःकायैस्तितिक्षुश्च क्षमा स्मृता" ॥
इति मात्स्ये १२० अध्यायः ॥ अन्यच्च ।
"विभागशीलः सततं क्षमायुक्तो दयात्मकः ।
गृहस्थस्तु क्षमायुक्तो न गृहेण गृही भवेत् ॥
क्षमा दया च विज्ञानं सत्यञ्चैव दमः शमः ।
अध्यात्मनित्यताज्ञानमेतद्ब्राह्मणलक्षणम् ॥
विगर्हातिक्रमक्षेपहिंसाबन्धवधात्सनाम् ।
अन्यमन्युसमुत्थानां दोषाणां वर्ज्जनं क्षमा" ॥
क्षमावतामयं लोकः परश्चैव क्षमावताम् ।
इह सम्मानमर्हन्ति परत्र च शुभां गतिम् ॥
येषां मन्युर्मनुष्याणां क्षमयाभिहतः सदा ।
तेषां परतरे लोकास्तस्मात् क्षान्तिः परा
मता" ॥)
रात्रिः । इति शब्दरत्नावली ॥ * ॥ दुर्गा ।
इत्यमर-
टीकायाम् मथुरानाथः ॥ तथा हि ।
"जयन्ती मङ्गला काली भद्रकाली
कपालिनी ।
दुर्गा शिवा क्षमा धात्री स्वाहा स्वधा
नमोऽस्तुते" ॥
इति दुर्गार्च्चातत्त्वम् ॥ अपि च ।
"क्षमा तु श्रीमुखे कार्य्या योगपट्टोत्तरीयका
।
पद्मासनकृताधारा वरदोद्यतपाणिनी ॥
शूलमेखलसंयुक्ता प्रशान्ता योगसंस्थिता
।
सितपुष्पोपहारेण सितहोमेन सिद्धिदा" ॥

इति देवीपुराणे
संवत्सरदेवताविंशतिविधिः

प्रथमः ॥ खदिरः । इति राजनिर्घण्टः ॥
गोपी-
विशेषः । यथा । राधिकोवाच ।
"मया पूर्ब्बञ्च त्वं दृष्टो गोप्या च क्षमया सह
।
सुवेशयुक्तो मालावान् गन्धचन्दनसंयुतः ॥
रत्नभूषितया गन्धचन्दनोक्षितया तया ।
सुखेन मूर्च्छितस्तल्पे पुष्पचन्दनसंयुते ॥
श्लिष्टो निद्रितया सद्यः सुखेन
नवसङ्गमात् ।
मया प्रबोधिता सा च भवांश्च स्मरणं कुरु
॥
गृहीतं पीतवस्त्रन्ते मुरली च मनोहरा ।
वनमाला कौस्तुभश्चाप्यमूल्यं
रत्नकुण्डलम् ॥
पश्चात् प्रदत्तं प्रेम्ना च सखीनां वचनादहो
।
लज्जया कृष्णवर्णश्च तेनाप्यद्यापि
पश्यतः ॥
इति अच् ।) नीतिवेदिनां त्रिवर्गान्तर्गतप्रथम-
वर्गः । स तु राज्ञामष्टवर्गस्यापचयः । यथा, --
"क्षयः स्थानञ्च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम्"
॥
इत्यमरः ३ । १ । १३४ ॥ नीतिवेदिनां
नीतिशास्त्र-
ज्ञानां क्षयादिभिस्त्रिवर्गः अन्येषान्तु
धर्म्मकामाथः
पूर्ब्बमुक्तः । अष्टवर्गस्यापचयः क्षयः ।
तस्यैवोपचयो
वृद्धिः । तस्य नोपचयो नाप्यपचवः स्थानम् ।
अष्टवर्गो यथा, --
"ऋषिर्व्वणिक्पथो दुर्गं सेतुकुञ्जरबन्धनम् ।
कन्याकरबलादानं सैन्यानाञ्च निवेशनम् ॥
अष्टवर्गः स्मृतो राज्ञां" । इति तट्टीकायां भरतः
॥
लयः । तत्पर्य्यायः । सम्बर्त्तः २ प्रलयः ३
कल्पः ४
कल्पान्तः ५ ॥ अपचयः । तत्पर्य्यायः । क्षिया
२ ॥
निलयः । तत्पर्य्यायः गृहशब्दे द्रष्टव्यः ॥
काशरोग-
विशेषः । तत्पर्य्यायः । यक्ष्मा २ शोषः ३ ।
इत्य-
मरः ॥ राजयक्ष्मा ४ रोगराजः ५ गदाग्रणीः ६
उष्मा ७ अतिरोगः ८ रोगाधीशः ९ नृपामयः
१० । इति राजनिर्घण्टः ॥
(लक्षणाणि चिकित्सितञ्च यथा, --
"शृणुत गुणगरिष्ठा व्याधिघोरं नराणां
भवति रहितचेष्टो वातुलः प्राणिनां वै ।
चिरनिरयकरोऽयं प्राकृतैः कर्म्मपाकै-
रिह परिभवकारी मानुषस्य क्षयोऽयम् ॥
देवानां प्रकरोति भङ्गमथवा भ्रूणस्य सम्पातनं
गोपृथ्वीधरविप्रबालहननञ्चावासविध्वंसनम् ।
योऽयं स्थानविनाशनञ्च कुरुते स्त्रीणांवधो यो
नर-
स्तस्यैतैर्गुरुकर्म्मभिः क्षयगदो देहार्थहारी महान्
॥
देवानां दमतो धनञ्च दहतो भ्रूणप्रपातेऽपि च
देवत्वं हरतो विषञ्च ददत आरामकं निघ्नतः ।
तेनासौ नियमेन सम्भवति वै नृणाञ्च तीव्रा रुजा

इति कौर्म्मे १४ अध्यायः ॥ (अपरञ्च यथा, महा-
भारते । ३ । द्रौपदी-युधिष्ठिरसंवादे । २९ । ३५-- ।
"अत्राप्युदाहरन्तीमा गाथा नित्यं क्षमावताम् ।
गीताः क्षमावता कृष्णे ! काश्यपेन महात्मना ॥
क्षमा धर्म्मः क्षमा यज्ञः क्षमा वेदाः क्षमा श्रुतम् ।
य एतदेव जानाति स सर्व्वं क्षन्तुमर्हति ॥
क्षमा ब्रह्म क्षमा सत्यं क्षमा भूतञ्च भावि च ।
क्षमा तपः क्षमा शौचं क्षमयेदं धृतं जगत् ॥
अतियज्ञविदां लोकान् क्षमिणः प्राप्नुवन्ति च ।
अतिब्रह्मविदां लोकानति चापि तपस्विनाम् ॥
अन्ये वै यजुषां लोकाः कर्म्मिणामपरे तथा ।
क्षमावतां ब्रह्मलोके लोकाः परमपूजिताः ॥
क्षमा तेजस्विनां तेजः क्षमा ब्रह्म तपस्विनाम् ।
क्षमा सत्यं सत्यवतां क्षमा यज्ञः क्षमा शमः ॥
तां क्षमामीदृशीं कृष्णे ! कथमस्मद्विधस्त्यजेत् ।
यस्यां ब्रह्म च सत्यञ्च यज्ञा लोकाश्च धिष्ठिताः ॥
क्षन्तव्यमेव सततं पुरुषेण विजानता ।
यदा हि क्षमते सर्व्वं ब्रह्म सम्पद्यते तदा ॥
क्षमा देहं परित्यज्य लज्जया पृथिवीं गता ।
ततस्तस्याः शरीरञ्च गुणश्रेष्ठं बभूव ह ॥
संविभज्य त्वया दत्तं प्रेम्ना प्ररुदता पुरा ।
किञ्चिद्दत्तं विष्णवे च वैष्णवेभ्यश्च किञ्चन ॥
धर्म्मिष्ठेभ्यश्च धर्म्माय दुर्ब्बलेभ्यश्च किञ्चन ।
तपस्विभ्योऽपि देवेभ्यः पण्डितेभ्यश्च किञ्चन ॥
एतत्ते कथितं सर्व्वं किं भूयः श्रोतुमिच्छसि" ॥
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ९ अध्यायः ॥ * ॥

**क्षमादंशः**, पुं, (क्षमां पृथिवीं दंशतीति । दन्श + अच् । तीक्ष्णमूलत्वात् तथात्वम् ।) शिग्रुः । इति राजनिर्घण्टः ॥

**क्षमावान्,** [त्] त्रि, (क्षमा विद्यते अस्य अस्मिन् वा इति मतुप् मस्य वत्वम् ।) क्षान्तियुक्तः । यथा,
"एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः" ॥
इति गारुडे ११४ अध्यायः ॥

**क्षमिता**, [ऋ] त्रि, (क्षम् + तृच् ।) क्षमाशीलः । इत्यमरः । ३ । १ । ३१ ॥

**क्षमी**, [न्] त्रि, (क्षम् + "शमीत्यष्टाभ्यो घिनुण्" । ३ । २ । १४१ । इति घिनुण् ।) क्षमाशीलः । तत्पर्य्यायः । सहिष्णुः २ सहनः ३ क्षन्ता ४ तितिक्षुः ५ क्ष-
मिता ६ । इत्यमरः । ३ । १ । ३१ ॥ क्षमः ७ शक्तः ८ सहः ९ प्रभूष्णुः १० । इति हेमचन्द्रः ॥ (यथा,
भागवते । ९ । १५ । ४० ।
"क्षमिणामाशु भगवांस्तुष्यते हरिरीश्वरः" ॥)

**क्षयः**, पुं, (क्षि क्षये । "नन्दिग्रहिपचादिभ्यः" । ३ । १ । १३४ ।
धातूनां क्षयकारिणी च मनुजस्यात्मापहा दारुणा
क्षयो दशविधश्चैव विज्ञातव्यो भिषग्वरैः ॥
श्रान्त्या भाराद्विषमशयनैर्द्दीर्घमार्गाक्रमैर्व्वा
भुक्तेर्दोषादतिशयरतेः सेवनाद्वै नरश्च ।
ज्वरेणातिक्रान्तो विषमशयनात् कूटनपरैः
जाता रोगा मनुजवपुषः क्षीणतां संनयन्ति ।
रोगाक्रान्तो विषमशयनात्तस्य मन्दज्वराद्वा ।
श्लेष्मा पित्तं मरुदथशयनैर्य्यातिदेहक्षयं वा ।
रसरक्तमांसमेदश्चास्थिमज्जानि शुक्रतः ॥
एवं दशविधा ज्ञेयाः क्षया नृणां वपुःषु च ।
पुनश्च लक्षणन्त्वेषां वक्ष्यते शृणु साम्प्रतम् ।
अतिस्वेदातिघर्म्मेण चिन्ताशोषभयादिना ॥
वाताद्यैः सेवितैश्चापि जायते मारुतक्षयः ।
तेन तन्द्राङ्गदाहश्च पिपासारुचिवेपथुः ॥
तमः क्लमो भ्रमश्चैव भवेच्च मारुतक्षये ।
तस्मादिमानि सेव्यानि रसानि पललानि च ॥
रसोनादिककल्कञ्च सेवयेद्वातवर्द्धनम् ।
पित्तक्षयेऽग्निमान्द्यञ्च जायतेऽरुचिजाड्यता ॥
कासहृल्लासशोफश्च जायते मन्दचेष्टता ।
स्वेदाभ्यङ्गान्नि पानानि दीपनानि प्रयोजयेत् ॥
जाङ्गलानि रसान्नानि सेवयेत् पित्तकृत्क्षये ।
व्यायामे च व्यवाये च रूक्षानाहारसेवनैः ॥

सन्तापक्रोधनैश्चापि जायते कफसंक्षयः ।
तेनदाहोऽथवा पाण्डुः शोषो निःश्वसनं भ्रमः ॥
विनिद्रता क्षुत् तृष्णा च स्त्रीसङ्गे नाभिनन्दति ।
तस्य शीतान्नपानानि कन्दशाकादिकैरसैः ॥
आनूपैर्दधिदुग्धैर्वा सेवनं न समीहितम् ।
त्रिभिर्दोषैः क्षयं प्राप्तैस्तदा हि मरणं ध्रुवम् ॥
तस्य क्रिया प्रयोक्तव्या साधारण्या महामते ! ॥
अथ धातुः क्षयं वक्ष्ये हारीत ! शृणु साम्प्रतम् ।
रसरक्तमांसम्मेदः प्रत्येकं क्षयलक्षणम् ॥
रसक्षयेऽतिशोषश्च मम्दाग्नित्वञ्च वेपथुः ।
शिरोरुक् मन्दचेष्टत्वं जायते च क्लमो भ्रमः ॥
रक्तक्षये क्षयः पाण्डु र्मन्दचेष्टो भवेन्नरः ।
श्वासनिष्ठीवनं शोषो मन्दाग्नित्वञ्च जायते ॥
मांसक्षयेऽतिकृशता चेष्टनञ्चाङ्गभङ्गता ।
निद्रानाशोऽतिनिद्रास्य विसंज्ञो लघुविक्रमः ॥
मेदः क्षये मन्दबलो विसंज्ञता
चाङ्गस्य भङ्गो वमनं परूषता ।
श्वासाभिकासोऽरुचिताग्निमन्दता
विशेषकम्पो वपुषश्च शुष्कता ॥
अस्थिक्षये स्यात् अतिमन्दचेष्टता
भन्दञ्च वीर्य्यं खलु मेदसः क्षये ।
विसंज्ञता स्यात् कृशता च कम्पनं
अङ्गस्य भङ्गो वमनं परूषता ॥
शोषश्च देहे सदनञ्च शोफिता
विकम्पनं शोषरुजा च जायते ।
भिषग्वरस्तत् परिवेदलक्षणं
मज्जक्षये कम्पनमेव जायते ॥
भ्रमः क्लमः स्यादतिमन्दचेष्टः
शोफो निशाजागरणञ्च तन्त्रा ॥
मन्दज्वरः शोषसमो मनुष्ये
शुक्रक्षये चाल्प विचेष्टितानि ।
रूक्षं भ्रमः कम्पनशोषरोधः
स्त्रीद्वेषितादीनि विरूपता च ॥
इदानीं संप्रवक्ष्यामि भेषजानि यथाक्रमम् ।
स्नेहनं रूक्षणञ्चैव तथा विम्लापनं हितम् ।
जाङ्गलानि च मांसानि भोजनानि च सेवयेत् ॥
गुडूची शृङ्गवेरञ्च यवानी क्वथितं जलम् ।
मरिचैः क्वथितं दुग्धं पाने रात्रौ प्रशस्यते ॥
जाङ्गलानि च सर्व्वाणि सेवनीयानि पुत्रक ! ।
अम्लानि मधुराणीह सर्व्वाणि च प्रयोजयेत्" ॥
इत्यस्थिवृद्धिकरणम् ॥ * ॥
"शुक्रक्षये प्रपाकानि रसानि च विशेषतः ।
नवनीतं तथा क्षीरं मधुराणि च सेवयेत् ॥
कर्क्कटी मूलपयसा विदारी कन्दशाल्मली ।
सिताढ्यञ्च हितं पानं शस्यन्ते भधुराणि च" ॥
इति शुक्रक्षयवृद्धिकरणम् ॥ * ॥
"बला विदारी लघुपञ्चमूली
क्षीरद्रुमत्वक् च ततः प्रयोज्या ।
पुनर्नवा मेघतुगारजन्यः
सञ्जीवनीयैर्मधुकैः समांशैः ॥
अक्षप्रमाणानि समानि तानि
सर्व्वाणि चैतान्यपि चूर्णयित्वा ।
विमिश्रयेत् तत्र कणाशतानि
यवान्नगोधूमयवांश्च पिष्ट्वा ॥
तुगासमांशा सिततण्डुलानां
पेयं तु शृङ्गाटकमिश्रितञ्च ।
प्रकीर्णकार्द्धेन वियोजनीयं
सर्व्वांशकेनापि सिता प्रयोज्या ॥
विभावयेच्चामलकीरसेन
वारत्रयं गोपयसा विभाव्य ।
ततोऽस्य सर्व्वैः सह शर्कराभि
र्धृतेन चैवं पुनरेव भाव्यम् ।
तं भक्षयेत् क्षौद्रयुतं पलार्द्ध
जीर्णे च भोज्यं कटुकाम्लवर्ज्यम् ॥
क्षीरं घृतं वा सितशर्करां वा
यवान्नगोधूमकशालिभक्षान् ।
ज्ञात्वाग्निपाकं जठरे नरस्य
देयो विधिज्ञैः क्षयरोगशान्त्यै ।
पथ्यक्षये श्रान्तचिरामितापसंपीडितानाञ्च तथाशिरोऽर्त्तौ ॥
"पित्तातुराणां रुधिरक्षयाणां
श्रमाध्वसंपीडितकामलानाम् ।
श्वासातुराणां मधुमेहिनाञ्च
क्षीणेन्द्रियाणां बलकारिशस्तम्" ॥
इति बालादि बूर्णम् ॥ * ॥
"पिप्पली वर्द्धमानन्तु ज्वरे जीर्णे प्रशस्यते ।
पटोलनिम्बस्य दलानि मुस्तम्
सत्रायमाणा सदुरालभा च ॥
कृत्वा कषायञ्च पदावशेषं
पूते ततश्चूर्णमिदं प्रयुञ्ज्यात् ।
द्राक्षा शठी पुष्करमूलधात्री
दुग्धं समं तामलकीकषायम् ॥
सर्पिः प्रयक्तं नवनीतकञ्च
सर्पिस्तदर्द्धेन वियोजनीयम् ।
सिद्धं घृतं पानमथैव वस्तौ
नस्ये तथाभ्यञ्जनभोजने च ॥
स पाण्डुकाशक्षयकापलानाम्
राजक्षये क्षीणवलेन्द्रियाणाम् ।
क्षतेषु शोफेषु व्रणेषु शस्तं
शिरोऽर्त्तिपार्श्वार्त्तिगुदामयघ्नम्" ॥
इति बलाद्यं घृतम् ॥ * ॥
"चन्दनं सरलं दारु पक्षैला बालकं शठी ।
नलशैलेयकं पृक्का पद्मकं नागकेशरम् ॥
कक्कोलकं सुरामांसी शैलेयं द्वे हरीतकी ।
रेणुकात्वक् कुङ्कुमञ्च शारिवे द्वे निशागुरु ॥
वला द्राक्षा च नलिका कषायं सुपरिस्रुतम् ।
तैलमस्तु तथा लाक्षा रसेन समभागिकम् ॥
मन्दाग्निना पचेत्तैलं सिद्धं पाने च वस्तिषु ।
नस्ये चाभ्यञ्जने चैव योजयेत्तद्भिषग्वरः ॥
हन्ति पाण्डु क्षयं कासं ग्रहघ्नं बलवर्णकृत् ।
मन्दज्वरमपस्मारकुष्ठपाम हरेत् पुनः ।
करोति बलपुष्ट्योजःप्रज्ञायुर्बलवर्द्धनम् ॥
रूपसौभाग्यदं पुण्यं सर्व्वभूतयशस्करम्" ॥
इति चन्दनाद्यं तैलम् ॥
इति क्षयरोगचिकित्सा ॥ इति हारीते चिकित्सितस्थाने दशमेऽध्याये ॥ * ॥
"त्रिकटु त्रिफलैलाभिर्जातीफललवङ्गकैः ।
नवभागोन्मितं तुल्यं लौहं पारदसिन्दुरम् ।
मधुना क्षयरोगाणां हन्तायं क्षयकेशरी" ॥
इति क्षयकेशरी रसः ॥
इति वैद्यकरसेन्द्रसारसंग्रहे यक्ष्माधिकारे ॥ * ॥)
अस्य अन्यत् निदानादि यक्ष्मशब्दे द्रष्टव्यम् ।
तस्यौषधान्तरं यथा, --
"श्वेतकोकिलाक्षमूलं छागीक्षीरेण संयुतम् ।
त्रिसप्ताहेन वै पीतं क्षयरोगं क्षयं नयेत्" ॥

रसानां तेन वृद्धिः स्यात् शीघ्रं तस्माद्विमुच्यते ॥
रसानां वृद्धिकरणं गोधूमयवशालिभिः ।
क्वथितानि भिषक् श्रेष्ठैर्जाङ्गलानि विशेषतः ॥
घृतदुग्धसिताक्षौद्रमरिचानिच पिप्पली ।
पानं शस्तं मनुष्याणां रक्तवृद्धिकरं मतम्” ॥
इति रसरक्तवृद्धिकरम् ॥ * ॥
“आनूपानि च धान्यानि लघुनामानि कल्पयेत् ।
कल्यांश्च घृतदुग्धादीन् सेवयेन्मधुराणि च ॥
रसाश्च जाङ्गलानि स्युः सेवनार्थे भिषग्वर ! ।
सितोपलादिकं चूर्णं अजाक्षीरं सकोलकम् ॥
हितं पानं क्षये चैव कल्पमप्रातराशने” ।
इति मांसमेदोवृद्धिकरम् ॥ * ॥
“घृतानि च मुपक्वानि क्षीराणि विविधानि च ।
चन्दनानि च द्राक्षादि-चूर्णानि च भिषग्वर ! ॥
मन्दाग्नौ पीतमेवाथ गुदजे वा तथा पुनः” ॥
इति पिप्पलीवर्द्धमानम् ॥ * ॥
“द्वे पले मार्कवं धातु साक्षकञ्च पुनर्नवा ।
तुगा पृक्का शालिपर्णी वासकञ्च दुरालभा ॥
चूर्णार्द्धेन समं योज्यं त्रिगन्धं मरिचानि च ।
तालीशं मगधा चैव तदर्द्धेन शिलोद्भवम् ॥
शिलाभेदन्तदर्द्धेन सर्व्वञ्चैकत्र मिश्रयेत् ।
समेन तिलचूर्णन्तु शर्कराभिः समायुतम् ॥
तेन क्षयो राजयक्ष्मा कामला च विनश्यति ।
अपस्मारं जयत्याशु बलवीर्य्याधिको भवेत् ॥
शाम्यन्ति च महारोगाः शुक्राढ्यो जायते नरः” ॥
इति शिलाजतुचूर्णम् ॥ * ॥
“बलाश्वद्दंष्ट्रा वृहतीद्वयञ्च
पर्णोद्वयं गोक्षुरकं स्थिरा च ।
इति गारुडे १९३ अध्यायः ॥
(क्षयत्यस्मादनेन वा
क्षि + क्षये + अप् । क्षयति विनाशयति इति ।
अन्तर्भूतणिच् ततोऽच् ।) रोगमात्रम् । इति
राजनिर्घण्टः ॥

**क्षयतरुः**, पुं, (क्षयस्य क्षयार्थं । वा तरुः ।) स्थाली
वृक्षः । इति राजनिर्घण्टः ॥ (यथास्य
पर्य्यायाः ।
“नन्दीवृक्षोऽश्वत्थभेदः प्ररोहो गजपादपः ।
स्थाली वृक्षः क्षयतरुः क्षीरी च
स्याद्वनस्पतिः” ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमभागे ॥)

**क्षयथुः**, पुं, (क्षि + अथुच् ।) कासः । इति हेमचन्द्रः ॥

**क्षयनाशिनी**, स्त्री, (क्षयं क्षयाख्यरोगं नाशयतीति ।
क्षय + नश् + णिच् + णिनि + ङीप् ।)
जीवन्ती-
वृक्षः । इति शब्दमाला ॥

(गुणादयोऽस्य जीवन्तीशब्दे ज्ञेया ॥)

**क्षय्यं**, त्रि, (क्षेतुं शक्यम् । क्षि + “क्षय्यजय्यौ शक्या-
र्थे” । ६ । १ । ८१ । इति यत् ।) क्षयणीयम् । क्षयि-
तव्यम् । क्षययोग्यम् । इति व्याकरणम् ॥ “क्षेतुं
जेतुं योग्यं क्षेयं पापं जेयं मनः” । इति सिद्धान्त-
कौमुदी ॥ (यथा, महाभारते ।
“अपवर्गे तु वैशयस्य श्राद्धकर्म्मणि भारत ! ।
अक्षय्यमभिधातव्यम्’ इति ॥)

**क्षर**, ज सञ्चलने । इति कविकल्पद्रुमः ॥ (भ्वां-- परं--
अकं-सेट् । क्वचित् सकञ्च ।) ज, क्षारः क्षरः ।
सञ्चलनमिह मोचनं स्रवणञ्च । आदौ सकर्म्मकः ।
“स्रोतोभिस्त्रिदशगजा मदं क्षरन्तः” । इति
किराते । ७ । ८ ॥ स्रवणे तु । क्षरत् क्षतजवृत्तयः ।
इति दुर्गादासः ॥

**क्षरं**, क्ली, (क्षरति स्रवति वर्षति च । क्षर् + अच् ।)
जलम् । तथा च सत्यसावित्र्योपनिषदि । १ । ८ । १० ।
“क्षरन्त्वविद्या ह्यमृतं तु विद्या” ॥) मेघे पुं । इति
मेदिनी ॥

**क्षरः**, पुं, (क्षर् + अच् ।) नश्वरवस्तु । यथा, --
“द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्व्वाणि भृतानि कूटस्थोऽक्षर उच्यते” ॥
इति श्रीभगवद्गीतायाम् । १५ । १७ ।
“क्षरश्चाक्षरश्चेति द्वाविमौ लोके प्रसिद्धौ । तावेवाह
कषायत्वम् । मधुरत्वम् । शीतलत्वम् । कफपित्त-
श्रमहरत्वम् । वृष्यत्वम् । रुच्यत्वम् । पवनाध्मान-
पुष्टिदत्वञ्च । इति राजनिर्घण्टः ॥

**क्षवकः**, पुं, (क्षु + अप् + स्वार्थे कन् ।) अपामार्गः ।
राजिका । भूताङ्कुशः । इति राजनिर्घण्टः ।
(व्यवहारोऽस्य यथा सुरसादिगणपाठे ।
“क्षवकसरसिभार्गी कामुका काकमाची
कुलहलविषमुष्टी भूस्तृणो भूतकेशी” ॥
इति वाभटे सूत्रस्थाने १५ अध्याये ॥)

**क्षवकृत्**, स्त्री, (क्षवं करोतीति । कृ + क्विप् ।)
छिक्कनी । इति भावप्रकाशः ॥

**क्षवथुः**, पुं, (क्षु + अथुच् ।) क्षुतम् । कासः । इति
मेदिनी । कण्ठकण्डूयनम् । इति शब्दरत्नावली ॥
(क्षवथुर्नाम रोगविशेषः । तस्य सकारणसम्प्रा-
प्तिकलक्षणानि यथा, --
“तीक्ष्णघ्राणोपयोगार्करश्मिसूत्रतृणादिभिः ।
वातकोपिभिरन्यैर्वा नासिका तरुणास्यनि ॥
विघट्टितेऽनिलः क्रुद्धो रुद्धः शृङ्गाटकं व्रजेत् ।
निवृत्तः कुरुतेऽत्यर्थं क्षवथुं स भृशं क्षवः” ॥
इति वाभटे उत्तरस्थाने १९ अध्याये ॥
“घ्राणाश्रिते मर्म्मणि संप्रदुष्टे
यस्यानिलो नासिकया निरेति ।
कफानुयातो बहुशः सशब्द-
स्तं रोगमाहुः क्षरथुं विधिज्ञाः ॥
तीक्ष्णोपयोगादतिजिघ्रतोवा
भावान् कटूनर्कनिरीक्षणाद्वा ।
सूत्रादिभिर्वा तरुणास्थिमर्म्म-
ण्युद्घाटिते यः क्षवथुर्निरेति” ॥
इत्युत्तरतन्त्रे द्वाविंशेऽध्याये सुश्रुतेनोक्तम् ॥
चिकित्सा यथा ।
“क्षेप्यं नस्यं मूर्द्धवैरेचनीयै-
र्नाड्याचूर्णं क्षवथौ भ्रंशथौ च” ॥
इति चात्रैव २३ अध्याये तेनोक्तम् ॥ अस्य
विधारणाज्जातो यः स यथा, --
“भवन्ति गाढं क्षवथोर्विघाता-
च्छिरोऽक्षिनासाश्रवणेषु रोगाः ।
कण्ठास्यपूर्णत्वमतीवतोदः
कूजश्च वायोरथवा प्रवृत्तिः” ॥
इति चोत्तरतन्त्रे पञ्चपञ्चाशत्तमेऽध्याये च
जटाधरः ॥ (यथा, हरिवंशे । २१ । २१ ।
“निर्व्वैरो निर्व्वृतः क्षान्तो निर्म्मन्युः कृतिरेव
च” ॥)

**क्षान्तिः**, स्त्री, (क्षम + भावे क्तिन् ।) सत्यपि
सामर्थ्ये अपकारिणि अपकाराचिकीर्षा । इति
देवीमाहात्म्यटीकायां नागभट्टः ॥ तत्पर्य्यायः ।
तितिक्षा २ । इत्यमरः ॥ सहिष्णुता ३ क्षमा ४ ।
इति जटाधरः ॥ (यथा, भगवद्गीतायाम् १८ । ४२ ।
“शमो दमस्तपः शौचं क्षान्तिरार्ज्जवमेव च” ॥)

**क्षान्तुः**, त्रि, (क्षम् + “क्रमिगमिक्षमिभ्यस्तुन्वृ-
द्धिश्च” । उणां । ५ । ४३ । इति तुन् वृद्धिश्च ।)
क्षमाशीलः । तत्पर्य्यायः । मर्षकः २ । इत्युणादि-
कोषः ॥

**क्षान्तुः**, पुं, (क्षम् + तुन् वृद्धिश्च ।) पिता । इति
संक्षिप्तसारोणादिवृत्तिः ॥

**क्षामः**, त्रि, (क्षै + कर्त्तरि क्तः । “क्षायो मः” ।
८ । २ । ५३ । इति निष्ठा तस्य मत्वम् ।) क्षीणः ।
अबलः । इति शब्दरत्नावली ॥ (यथा, भागवते
३ । २१ । ४६ ।
“विद्योतमानं वपुषा तपस्युग्रयुजा चिरम् ।
नातिक्षामं भगवतः स्निग्धापाङ्गावलोकनात्’ ॥
स्त्रियां टाप् । यथा, मेघदूते । ८९ ।
“आधिक्षामां विरहशयने सन्निषण्णैकपार्श्वाम्” ॥
सर्व्वरूपवत्त्वात् विष्णुः । यथा, महाभारते । १३
विष्णुसहस्रनामकीर्त्तने । १४९ । १०४ ।
“आश्रमः स्रमणः क्षामः सुपर्णो वायुवाहनः” ॥)

तत्र क्षरः पुरुषो नाम सर्व्वाणि भूतानि ब्रह्मादि-
स्थावरान्तानि शरीराणि अविवेकिलोकस्य
शरीरेष्वेव पुरुषत्वप्रसिद्धेः । कूटो राशिः शिला
राशिः । पर्व्वत इव एकदेशेषु नश्यत्स्वपि निर्व्वि-
कारतया तिष्ठतीति कुटस्थश्चेतनो भोक्ता स
त्वक्षरः पुरुष उच्यते विवेकिभिः” । इति तट्टीकायां
श्रीधरस्वामी ॥ (तथा, महाभारते । १४ । अनु-
गीतापर्व्वाध्याये । १७ । १७ ।
“ततः सवेदनः सद्यो जीवः प्रच्यवते क्षरात्” ॥)

**क्षरणं**, क्ली, (क्षर् + भावे ल्युट् ।) मोचनम् ।

स्रवणम् । (यथा, रघुः । १९ । १९ ।
“लौल्यमेत्य गृहिणीपरिग्रहात्
नर्त्तकीष्वसुलभासु तद्वपुः ।
वर्त्तते स्म सकथञ्चिदालिख-
न्नङ्गुलीक्षरणसन्नवर्त्तिका” ॥)

**क्षरी**, (न्] (क्षरः क्षरणं वर्षणं अस्त्वस्मिन् काले

क्षरोऽस्त्यस्य वा । क्षर् + इनिः ।) वर्षाकालः ।
इति हेमचन्द्रः । क्षरणविशिष्टे त्रि ॥

**क्षल**, क शौचे । इति कविकल्पद्रुमः । (चुरां-परं-

सकं-सेट् ।) शौचमिह शुद्धीकरणम् । क, क्षाल-
यति पात्रं पयसा लोकः । इति दुर्गादासः ॥

**क्षल**, ज चाले । चये । इति कविकल्पद्रुमः । (भ्वां-परं

अकं-सेट् ।) ज, क्षालः क्षलः । चालः कम्पः ।
चयश्चयनम् । इति दुर्गादासः ॥

**क्षवः**, पुं, (क्षु शब्दे क्षुते च + भावे अप् ।) क्षुतम् ।

राजिका । इत्यमरः ॥ कासः ॥ इति शब्दरत्ना-
तेनोक्तम् ॥)

**क्षवपत्रा**, स्त्री, (क्षवः क्षुतहेतुः पत्रं यस्याः । एतत्

पत्राघ्राणेन हि क्षुतं जायते । अतस्तथात्वम् ।)
द्रोणपुष्पी । इति राजनिर्घण्टः ॥

**क्षविका**, स्त्री, (क्षवः क्षुतं साध्यतयाऽस्त्यस्य इति

ठन् + टाप् च ।) वृहतीभेदः । तत्पर्य्यायः । सर्प-
तनुः २ पीततण्डुला ३ पुत्त्रप्रदा ४ बहुफला ५
गोधिनी ६ । अस्या गुणाः । “क्षविका वृहती
तिक्ता कटुरुष्णा च तत्समा” । इति राजनि-
र्घण्टः ॥

**क्षान्तः**, त्रि, (क्षम् + कर्त्तरि क्तः ।) सहनशीलः ।

तत्पर्य्यायः । सोढः २ । इत्यमरः ॥ क्षमान्वितः ३ ।
इति शब्दरत्नावली ॥ तितिक्षितः ४ । इति

**क्षामवती** स्त्री, (क्षामं दोषक्षयः साध्यतया-

स्त्यस्या मतुप् मस्य वत्वम् । स्त्रियां
ङीप् । पक्षे कर्म्मधारयः ।) यागविशेषः ।
यथा, भविष्ये ।

**क्षामवतीष्टिः** स्त्री, (क्षामं दोषक्षयः साध्यतया-

स्त्यस्या मतुप् मस्य वत्वम् । स्त्रियां
ङीप् । पक्षे कर्म्मधारयः ।) यागविशेषः ।
यथा, भविष्ये ।
“क्षामवत्यादिना यद्वत् कर्म्मणा पृतनापते ! ।
दैवदोषादकरणे जाते दोषकदम्बके ।
होमेनैकेन दोषाणां सर्व्वेषां क्षयमादिशेत् ॥
एवञ्च एकप्रायश्चित्तेनानेकदोषक्षयाय क्षाम-
वतीष्टिः सर्व्वत्र दृष्टान्तः” । इति प्रायश्चित्त-
तत्त्वम् ॥

**क्षामास्यं**, क्ली, (क्षामस्य क्षयस्य आस्यं स्थानम् ।)

कुपथ्यम् । यथा, शब्दचन्द्रिकायाम् ।
“अपथ्यमहितं रोग्यं क्षामास्यं परिकीर्त्तितम्” ॥
पुस्तकान्तरे क्षमस्यमिति च पाठः ॥

**क्षारं**, क्ली, (क्षरतीति । क्षर् सञ्चलने + “ज्वलितिक-

सन्तेभ्यो णः” । ३ । १ । १४० । इति ज्वलादि-
त्वात् णः ।) विड्लवणम् । इति राजनिर्घण्टः ॥
यवक्षारः । इति त्रिकाण्डशेषः ॥

**क्षारः**, पुं, (क्षर् सञ्चलने + ज्वलादित्वात् णः ॥)

रसविशेषः । (यथा, पञ्चतन्त्रे । १ । ३१५ ।
“तातस्य कूपोऽयमिति ब्रुवाणाः
क्षारं जलं कापुरुषः पिबन्ति” ॥
अस्य गुणा यथा ।
“क्षारः क्लेदं जनयति मुखे स्वादुरुष्णो विदाही
शूलश्लेष्मा रुचिभृशतृषामूत्रकृच्छ्रोषणश्च ।
आनाहं सञ्जनयति पुनर्वह्निसन्धुक्षणः स्या-
देवं प्रोक्तं विदितगणकः कोविदैः क्षारवीर्य्यम्” ॥

| | | |
|---|---|---|
| वली । राजिकाभेदः । तत्पर्य्यायः । क्षुधाभिजननः २ चपलः ३ दीर्घशिम्बिकः ४ सुकुमारः ५ वृत्त-बीजः ६ मधुरः ७ क्षवकः ८ । अस्य गुणाः । | | |

इति हारीते प्रथमस्थाने ६ अध्याये ॥)
धूर्त्तः ।
लवणम् । (यथा, रामायणे । २ । ७३ । ३ ।
"दुःखे मे दुःखमकरोर्व्रणे क्षारमिवाददाः ।
राजानं प्रेतभावस्थं कृत्वा रामञ्च तापसम्"
॥)
काचः । भस्म । इति मेदिनी ॥ गुडः इति
हेम-
चन्द्रः ॥ टङ्कणः । (अस्य पर्य्याया यथा, --
"सौभाग्यं टङ्कणं क्षारो धातुद्रावकमुच्यते"
॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)
सर्जिक्षारः । इति राजनिर्घण्टः ॥ * ॥
क्षारविशेषगुणाः ।
"पलाशधवपूतीककरञ्जपाटलादिजाः।
क्षारास्तु पाचनाः सर्व्वे रक्तपित्तकराः सराः
।
गुल्मार्शःक्रिमिपुंस्त्वघ्नाः
शर्कराश्मरिनाशनाः" ॥
इति राजवल्लभः ॥ (क्षारसामान्यगुणा यथा,
--
"क्षारः सर्व्वश्च परमं तीक्ष्णोष्णः
क्रिमिजिल्लघुः ।
पित्तासृग्दूषणः पाकी च्छेद्यहृद्यो विदारणः ।
अपथ्यः कटुलावण्याच्छुक्रौजः
केशचक्षुवाम्" ॥
इति सूत्रस्थाने षष्ठेऽध्याये वाभटेनोक्तम् ॥)

**क्षारकः**, पुं, (क्षरतीति । क्षर् + ण्वुल् ।) अचिर-
जातफलम् । तत्पर्य्यायः । जालकम् २ ।
इत्यमरः ॥
जालि इति भाषा । पक्षिमत्स्यादिपिटकम्।
खाँचा इति भाषा । इति मेदिनी ॥ रजकः ।
इति शब्दमाला ॥ (स्वार्थे कन् । क्षारः ।
यथा,
सुश्रुते ।
"तन्मालती क्षारकसैन्धवायुतं
सदाञ्जनं स्यात्तिमिरेऽथ रागिणि" ॥)

**क्षारतैलं**, क्ली, (क्षारयुतं क्षाराख्यं वा तैलम् ।) पक्व-
तैलविशेषः । यथा, --
"शिग्रुमूलकपलाशचुक्रिका-
चित्रकार्द्रकसंनिम्बसम्भवैः ।
इक्षुशैखरिकमोचिकोद्भवैः
क्षारपूर्ब्बदशकं प्रकीर्त्तितम्" ॥
इति राजनिर्घण्टः ॥

**क्षारद्रुः**, पुं, (क्षारप्रधानको द्रुर्द्रमः ।) घण्टापाटलि-
वृक्षः । इति रत्नमाला ॥ (घण्टापाटलिशब्दे-
ऽस्य गुणाः पर्य्यायाश्च ज्ञातव्याः ॥)

**क्षारपत्रः**, पुं, (क्षारः पत्रेषु यस्य ।) वास्तूकः । इति
राजनिर्घण्टः ॥ (अस्य पर्य्याया यथा, --
"वास्तूकं वास्तुकञ्च स्यात् क्षारपत्रञ्च
शाकराट्" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
गुणा-
श्चास्य वास्तूकशब्दे ज्ञातव्याः ॥)

**क्षारपत्रकः**, पुं, (क्षारपत्र + स्वार्थे कन् कप् वा ।)
वास्तूकः । इति हेमचन्द्रः ॥

**क्षारभूमिः**, पुं, (क्षारोत्पादनक्षमा भूमिः ।) लवण-
मृत्तिकदेशः । यथा, --
"जीवनं जीवनं हन्ति प्राणान् हन्ति समीरणः
।
किमाश्चर्य्यं क्षारभूमौ प्राणदा यमदूतिका" ॥
इत्युद्भटः ॥ (क्षारस्य भूमिः स्थानम् ।) लवण-
भूम्यां स्त्री ॥

**क्षारमध्यः**, पुं, (क्षारो मध्येऽस्य ।) अपामार्गः । इति
रत्नमाला ॥ (अपामार्गशब्दे ऽस्य गुणादयो
व्याख्याताः ॥)

**क्षारमृत्तिका**, स्त्री, । (क्षारयुक्ता मृत्तिका ।) लवण-
मृत्तिका । तत्पर्य्यायः । ऊषः २ । इत्यमरः ॥
उषः
३ । इति शब्दरत्नावली ॥

**क्षारवृक्षः**, पुं, (क्षारप्रधानको वृक्षः ।) मुष्ककः ।
इति राजनिर्घण्टः ॥

**क्षारश्रेष्ठं**, क्ली, (क्षारेषु श्रेष्ठम् ।) वज्रक्षारम् ।
इति राजनिर्घण्टः ॥

**क्षारश्रेष्ठः**, पुं, (क्षारःश्रेष्ठोऽत्र ।) पलाशः । मुष्ककः ।
इति सिद्धान्तशिरोमणौ गोलाध्यायः ॥

**क्षारमेलकः**, पुं, (क्षाराणां मेलः संघः । ततः स्वार्थे-
कन् ।) सर्व्वक्षारः । इति राजनिर्घण्टः ॥

**क्षाराच्छं**, क्ली, (क्षारेषु अच्छं निर्म्मलम् । समुद्र-
जातलवणस्य स्वच्छतया तथोक्तम् ।)
सामुद्रलव-
णम् । इति हाराबली ॥ (सामुद्रलवणशब्देऽस्य
गुणादिकं ज्ञेयम् ॥)

**क्षाराष्टकं**, क्ली, (क्षाराणां अष्टकम् ।) अष्टप्रकार-
क्षारः । तद्यथा, --
"पलाशवज्रिशिखरिचिञ्चार्कतिलनालजाः ।
यवजः सर्ज्जिका चेति क्षाराष्टकमुदाहृतम्॥
क्षारा एतेऽग्निना तुल्या गुल्मशूलहरा भृशम्" ॥
इति भावप्रकाशः ॥

**क्षारिका**, स्त्री, (क्षर् + ण्वुल् + टाप् च । अत
इत्वम् ।) क्षुधा । इति हारावली ॥

**क्षारितः**, त्रि, (क्षर् + णिच् + कर्म्मणि क्तः ।) अ-
भिशस्तः । अपवादग्रस्तः । इत्यमरः ॥ (यथा,
महाभारते २ । युधिष्ठिरनारदसंवादे । ५ ।
१०५ ।
"कच्चिदार्य्यो विशुद्धात्मा क्षारितश्चौरकर्म्मणि
।
अदृष्टशास्त्रकुशलैर्न लोभाद्बध्यते शुचिः" ॥)
स्रावितः । क्षारः । इति मेदिनी ॥

**क्षारोदः**, पुं, (क्षारं उदकं यस्मिन् । क्षार उदके
यस्य वा । उत्तरपदस्य चेत्युदकस्य उदादेशः
।)
लवणसमुद्रः । यथा, "क्षारोदेक्षुरसोद-सुरोद-
घृतोद-क्षीरोद-दधिमण्डोद-शुद्धोदाः
सप्तजलधयः ।
सप्तद्वीपपरिखा इवाभ्यन्तरद्वीपसमाना
एकैकश्येन
यथानुपूर्ब्बं सप्तस्वपि वहिर्द्वीपेषु पृथक् परित
उपकल्पिताः" । इति श्रीभागवते ६ स्कन्धे १
अः ॥

**क्षालनं**, क्ली, (क्षल् + णिच् + भावे ल्युट् ।) प्रक्षा-
लनम् । धौतकरणं यथा, --

"शुष्कमूलकशुण्ठीनां क्षारो हिङ्गुलनागरम् ।
शतपुष्पी वचा कुष्ठं दारु शिग्रु रसाञ्जनम् ॥
सौवर्च्चलं यवक्षारं सामुद्र सैन्धवन्तथा ।
भुजग्रन्थि विडं मुस्तं मधु शुक्लं चतुर्गुणम् ॥
मातुलुङ्गरसञ्चैव कदलीरसमेव च ।
तैलमेभिर्व्विपक्तव्यं कर्णशूलापहं परम् ॥
बाधिर्य्यं कर्णनादश्च पूयस्रावश्च दारुणः ।
पूरणादस्य तैलस्य कृमयः कर्णयोः खिलाः ॥
क्षिप्रं विनाशमायान्ति शशाङ्ककृतशेखर ! ।
क्षारतैलमिदं श्रेष्ठं मुखदन्तामयापहम्' ॥
इति गरुडे १९८ अध्यायः ॥

**क्षारत्रयं**, क्ली, (क्षाराणां त्रयम् ।) त्रिविधक्षारः ।

तद्यथा, राजनिर्घण्टे ।
"सर्जिकञ्च यवक्षारं टङ्कणक्षारमेव च ।
क्षारत्रयञ्च त्रिक्षारं क्षारत्रितयमेव च" ॥
("सर्ज्जिका यावशूकश्च क्षारद्वयमुदाहृतम् ।
टङ्गणेन यतं तत्तु क्षारत्रयमुदीरितम् ।
मिलितन्तूक्तगुणकृद्विशेषाद् गुल्महृत् परम्" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**क्षारदला**, स्त्री, (क्षारो दलेषु पत्रेषु अस्याः । क्षुद्र-

वास्तूकशाकविशेषः ।) चिल्ली । इति राजनिर्घण्टः ॥
(चिल्लीशब्देऽस्या विवृतिर्ज्ञातव्या ॥)

**क्षारदशजं**, क्ली, (दशविधाः क्षाराः अत्र । कप्

क्षाराणां दशकमित्येके ।) दशविधक्षारः ।
यथा, --

इति राजनिर्घण्टः ॥ (अस्य पर्य्याया यथा ।
"पलाशः किंशुकः पर्णो यज्ञियो रक्तपुष्पकः ।
क्षारश्रेष्ठो वातहरो ब्रह्मवृक्षः समिद्वरः" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**क्षारषट्कं**, क्ली, (क्षाराणां षट्कम् ।) षड्विध-

क्षारः । यथा, --
"धारापामार्गकुटजलाङ्गलीतिलमुष्ककैः ।
क्षारैरेतैस्तु मिलितैः क्षारषट्कादयो गणः" ॥
इति राजनिर्घण्टः ॥

**क्षारसिन्धुः**, पुं, (क्षारैर्युक्तः क्षारप्रधानः सिन्धुर्वा ।)

लवणसमुद्रः । स तु जम्बुद्वीपस्य दक्षिणे शाक-
द्वीपस्य उत्तरे वर्त्तते । यथा, --
"भूमेरर्द्धं क्षारसिन्धोरुदकस्थं
जम्बुद्वीपं प्राहुराचार्य्यवर्य्याः ।
अर्द्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये
क्षारक्षीराद्यम्बधीनां निवेशः ॥
शाकं ततः शाल्मलमत्र कौशं
क्रौञ्चञ्च गोमेदकपुष्करे च ।
द्वयोर्द्वयोरन्तरमेकमेकं
समुद्रयोर्द्वीपमुदाहरन्ति' ॥

"स्त्रीशूद्रौ वाथ नित्याम्भःक्षालनाच्च
करौष्ठयोः" ॥
इति ब्रह्मपुराणम् । इत्याह्निकाचारतत्त्वम् ॥
(यथा च, मार्कण्डेयपुराणे । १६ । १६ ।
"श्लेष्ममूत्रपुरीशासृक्प्रवाहक्षालनेन च ।
रहश्चैवोपचारेण प्रियसम्भाषणेन च" ॥)

**क्षालितं**, त्रि, (क्षल् + णिच् + क्तः ।) कृतप्रक्षालनम् ।

तत्पर्य्यायः निर्णिक्तम् २ शोधितम् ३ मृष्टम् ४
धौतम् ५ । इति हेमचन्द्रः ॥ (यथा, माघे ।
१० । १३ ।
"अप्रसन्नमपराद्धरि पत्यौ
कोपदीप्तनुररीकृतधैर्य्यम् ।
क्षालितन्नु शमितन्नु बधूना-
न्द्रावितन्नु हृदयम्मधुवारैः" ॥)

**क्षि**, क्षयैश्वर्य्ययोः । इति कविकल्पद्रुमः । (भ्वां--परं-
सकं, ऐश्वर्य्ये--अकं-अनिट् ।) क्षयति पापम् । इति दुर्गादासः ॥

**क्षि**, न ग ष हिंसायाम् । इति कविकल्पद्रुमः । (स्वां-
क्र्यां च-परं-सकं-अनिट् ।) न, क्षिणोति । ग, क्षिणाति । ष, क्षिया । (यथा, शान्तिशतके ५ ।
"धन्यानां गिरिकन्दरोदरभुवि ज्योतिः परं ध्यायतामानन्दाश्रुजलं पिबन्ति शकुना निःशङ्कमङ्के
स्थिताः । अस्माकन्तु मनोरथोपरचितप्रासाद-वापीतटक्रीडाकाननकेलिमण्डपयुषामायुः परं क्षीयते" । इति कर्म्मकर्त्तरि साध्यम् । इति दुर्गादासः ॥

**क्षि**, श वासगत्योः । इति कविकल्पद्रुमः ॥ (तुदां--
परं-अकं-सकंच-अनिट् ।) श, क्षियति । इति दुर्गादासः ॥

**क्षि**, त्रि, (क्षि + बाहुलकात् डिः ।) निवासः ।
गतिः । क्षयः । इति मेदिनी ॥

**क्षिण**, दु ञ वधे । इति कविकल्पद्रुमः ॥ (तनां-उभं-
सकं-सेट्-उदित्त्वात् क्त्वा वेट् ।) द ञ, क्षिणोति क्षिणुते । उ, क्षिणित्वा क्षित्वा । इति दुर्गा-
दासः ॥

**क्षितः**, त्रि, (क्षि + कर्म्मणि क्तः ।) हिंसितः ।
क्षितः कामो मया हिंसित इत्यर्थः । इति मुग्ध-
बोधटीकायां दुर्गादासः ॥

**क्षितिः**, स्त्री, (क्षियति वसत्यस्याम् । क्षि + अधि-
करणे क्तिन् ।) अस्या अपरा व्युत्पत्तिर्यथा, --
"महालये क्षयं याति क्षितिस्तेन प्रकीर्त्तिता ।
काश्यपी कश्यपस्येयमचला स्थिररूपतः" ॥
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ७ अध्यायः ॥
पृथिवी । (यथा, मनौ ४ । २४१ ।
"मृतं शरीरमुत्सृज्य काष्ठलोष्ट्रसमं क्षितौ ।
विमुखा बान्धवा यान्ति धर्म्मस्तमनुगच्छति" ॥)
वासः । क्षयः । इत्यमरः । ३ । ३ । ७० ॥
काल-
भेदः । स तु प्रलयः । इति मेदिनी ॥ रोचना-
कूर्म्मवासुकिदिग्गजाश्च ॥

**क्षितिनागः**, पुं, (क्षितिजातो नागः । मध्यपदलोपी
समासः ।) भूनागः । इति राजनिर्घण्टः ॥

**क्षितिनाथः**, पुं, (क्षितेः पृथिव्याः नाथः सहायः
शास्ता इत्यर्थः ।) राजा ।
(क्षितिपतिदर्शनात् ॥)

**क्षितिपः**, पुं, (क्षितिं पातीति । पा + डः ।) राजा ।
यथा, -- "अहंयुनाथ क्षितिपः शुभंयु-
रूचे वचस्तापसकुञ्जरेण" ॥
इति भट्टौ । १ । २० ॥ (यथा च पञ्चतन्त्रे ।
२ । २४ ।
"यः सम्मानं सदा धत्ते भृत्यानां
क्षितिपोऽधिकम् ।
वित्ताभावेऽपि तं दृष्ट्वा ते त्यजन्ति न
कर्हिचित्" ॥)

**क्षितिपतिः**, पुं, (क्षितेः पतिः पालकः ।) राजा ।
यथा, --
"मूर्खोऽशान्तस्तपस्वी क्षितिपतिरलसो
मत्सरो
धर्म्मशीलो दुःस्थो मानी गृहस्थः
प्रभुरतिकृपणः
शास्त्रविद्धर्म्महीनः" । इति नवरत्ने । ६ ।
(तथा
च रघुः । ६ । ८६ ।
"प्रभुदितवरपक्षमेकतस्तत्
क्षितिपतिमण्डलमन्यतोवितानम्" ॥)

**क्षितिपालः**, पुं, (क्षितिं पालयतीति । पालि +
"कर्म्मण्यण्" । ३ । २ । १ । इत्यण् ।)
राजा ।
यथा, प्रबोधचन्द्रोदयनाटके १ अङ्के ।
"नीताः क्षयं क्षितिभुजो नृपतेर्विपक्षा
रक्षावती क्षितिरभूत् प्रथितैरमात्यैः ।
साम्राज्यमस्य विहितं क्षितिपालमौलि-
मालार्च्चितं भुवि पयोनिधिमेखलायाम्" ।
(तथा, रघुश्च । २ । ५१ ।
"एतावदुक्त्वा विरते मृगेन्द्रे
प्रतिस्वनेनास्यगुहागतेन ।
शिलोच्चयोऽपि क्षितिपालमुच्चैः

**क्षितिरुहः**, पुं, (क्षितौ रोहतीति । रुह + कः ।)
वृक्षः । इति हेमचन्द्रः ॥ (यथा,
विष्णुपुराणे ।
१ । १५ । ६ ।
"सन्धानं वः करिष्यामि
सहक्षितिरुहैरहम्" ॥)

**क्षितिवर्द्धनः**, पुं, (क्षितिं वर्द्धयति । वृध् + णिच्
ल्युः ।) शवः । इति त्रिकाण्डशेषः ॥
भूमिवर्द्धके त्रि ॥

**क्षितिव्युदासः**, पुं, (क्षितिं व्युदस्यति । वि + उत् +
अस् + अण् ।) गर्त्तः । भाँडसी इति
तहखाना
इति च भाषा । इति केचित् ॥

**क्षित्यदितिः**, स्त्री, (क्षितौ अदितिः ।
देवमातुरदित्याः
पृथिव्यां देवकीरूपेणाविर्भावात्तथात्वम्
।) देवकी ।
इति त्रिकाण्डशेषः ॥ (एतद्विवरणं यथा, --
हरिवंशे ५५ अध्याये ।
वैशम्पायन उवाच ।
"नारदस्य वचः श्रुत्वा सस्मितं
मधुसूदनः ।
प्रत्युवाच शुभं वाक्यं देवानां प्रभुरीश्वरः
॥
त्रैलोकस्य हितार्थाय यन्मां वदसि
नारद ! ।
तस्य सम्यक् प्रवृत्तस्य श्रूयतामुत्तरं वचः
॥
विदिता देहिनो जाता मयैते भुवि दानवाः
।
याञ्च यस्तनुमास्थाय दैत्यः पुष्यति
विग्रहम् ॥
जानामि कंसं सम्भूतमुग्रसेनसुतं भुवि ।
केशिनञ्चैव जानामि दैत्यं तुरगरूपिणम् ॥
नागं कुवलयापीडं मल्लौ चानूरमुष्टिकौ ।
अरिष्टञ्चैव जानामि दैत्यं वृषभरूपिणम् ॥
विदितो मे खरश्चैव प्रलम्बश्च महासुरः ।

नामगन्धद्रव्यम् । इति शब्दचन्द्रिका ॥ * ॥

**क्षितिकणः**, पुं, (क्षितेः पृथिव्याः कणः ।) धूलिः ।

इति त्रिकाण्डशेषः ॥

**क्षितिक्षमः**, पुं, (क्षितिरिव क्षमते क्षिताविव क्षमा-

कारणीभूता शक्तिरस्मिन् वा ।) खदिरवृक्षः ।
इति राजनिर्घण्टः ॥

**क्षितिजं**, क्ली, (क्षिति + जन् + डः ।) खगोले

आकाशमध्यान्नवत्यंशान्तरे तिर्य्यग्वृत्तम् । यथा, --
"पर्ब्बापरं विरचयेत् सममण्डलाख्यं
याम्योत्तरञ्च विदिशोर्व्वलयद्वयञ्च ।
ऊर्द्ध्वाध एवमिह वृत्तचतुष्कमेत-
दावेष्ट्य तिर्य्यगपरं क्षितिजं तदर्द्धे" ॥
इति सिद्धान्तशिरोमणौ गोलबन्धाधिकारः ॥

**क्षितिजः**, पुं, (क्षितेर्जायते इति । जन् + डः ।)

भूनागः । इति राजनिर्घण्टः । मङ्गलग्रहः ।
यथा, --
"परमैश्वर्य्यमतुलं नानाविधसुखाश्रयम् ।
करोति सोमपुत्त्रस्तु क्षितिजान्तर्द्दशाङ्गतः" ॥
इति ज्योतिस्तत्त्वम् ॥ भूजाते त्रि ॥

**क्षितिजन्तुः**, पुं, (क्षितौ क्षितेर्बा जन्तुरिव ।)

भूनागः । इति राजनिर्घण्टः ॥

**क्षितिधरः**, पुं, (क्षितिं पृथ्वीं धरति धारयति वा ।

धृ धारि + वा अच् णिच्पक्षेपूर्ब्बह्रस्वः ।) पर्व्वतः ।
इति हलायुधः ॥ (यथा, कुमारे । ७ । ९४ ।
"अथ विबुधगणांस्तानिन्दुमौलिर्विसृज्य
क्षितिधरपतिकन्यामाददानःकरेण" ॥)

प्रीत्या तमेवार्थमभाषतेव" ॥)

**क्षितिपालभाक्**, [ज्] पुं, (क्षितिपालं भजते इति ।

भज् + क्विप् ।) राजा । यथा, भट्टौ ३ । २१ ।
"आसिष्ट नैकत्र शुचा व्यरंसीत्
कृताकृतेभ्यः क्षितिपालभाग्भ्यः ।
स चन्दनोशीरमृणालदिग्धः
शोकाग्निनागाद्द्युनिवासभूयम्" ॥

**क्षितिपुत्त्रः**, पुं, (क्षितेः पृथिव्याः पुत्त्रः ।) नरकराजः ।

(पुरा किल सिद्धेश्वरकपिलव्वकोपेन रसातल-
गतां भगवतीं क्षितिमुद्धर्त्तुं भगवान् विष्णुः वराह-
रूपेणावतीर्णः सन् तत्र दुर्द्धान्तं दितिनन्दनं
हिरण्याक्षं निपात्य रसातलात्तामुद्धृत्य तस्यामेव
धरायां नरकनामानं पुत्त्रमुत्पादयामास ।)
यथा, --
"स तीरे नदराजस्य लौहित्यस्य महात्मनः ।
ब्रह्मार्च्चनं समारभ्य तपस्तप्तुमुपस्थितः ॥
स मानुषेण मानेन क्षितिपुत्त्रः शतं समाः ।
जलाहारव्रतेनैव समानर्च्च पितामहम् ॥
स तुष्टः शतवर्षान्ते ब्रह्मा लोकपितामहः ।
प्रत्यक्षीभूय नरकस्याग्रतः समुपस्थितः" ॥
इति कालिकापुराणे ३८ अध्यायः ॥ अन्यत् नरक-
शब्दे द्रष्टव्यम् ॥ (मङ्गलग्रहः । इति
ज्योतिस्तत्वम् ॥)

**क्षितिबदरी**, स्त्री, (क्षितौ स्थिता सक्ता वा बदरी ।)

भूबदरी । इति राजनिर्घण्टः ॥

सा च मे विदिता विप्र ! पूतना दुहिता बलेः ॥
कालियञ्चैव जानामि यमुनाह्रदगोचरम् ।
वैनतेयभयाद् यस्तु यमुनाह्रदमाविशत् ॥
विदितो मे जरासन्धः स्थितो मूर्ध्नि महीक्षिताम् ।
प्राग्ज्योतिषपुरे चापि नरकं साधु तर्कये ॥
मानुषे पार्थिवे लोके मानुषत्वमुपागतम् ।
वाणञ्च शोणितपुरे गुहप्रतिमतेजसम् ॥
दृप्तं बाहुसहस्रेण देवैरपि सुदुर्ज्जयम् ।
मय्यासक्ताञ्च जानामि भारतीं महतीं धुरम् ॥
तच्च सर्व्वं विजानामि यथा यास्यन्ति ते नृपाः ।
क्षयो भुवि मया दृष्टः शक्रलोके च सत्क्रिया ॥
तेषां पुरुषदेहानामपरावृत्तिवर्त्तिनाम् ।
सम्प्रवेक्ष्याम्यहं योगमात्मनश्च परस्य च ॥
सम्प्राप्य मानुषं लोकं मानुषत्वमुपागतः ।
कंसादींस्तांश्च सर्व्वांश्च वधिष्यामि महासुरान् ॥
तेन तेन विधानेन येन यः शान्तिमेष्यति ।
अनुप्रविश्य योगेन तास्ता हि गतयो मया ॥
अमीषां हि सुरेन्द्राणां हन्तव्या रिपवो युधि ।
जगत्यर्थे कृतो योऽयमंशोत्सर्गो महात्मभिः ॥
सुरदेवर्षिगन्धर्व्वैरितश्चानुमते मम ।
विनिश्चयो हि प्रागेव नारदायं कृतो मया ॥
निवासं तत्र मे ब्रह्मा विदधातु पितामहः ॥
यत्र देशे यथा जातो येन वेशेन वा वसन् ॥
तानहं समरे हन्यां तन्मे ब्रूहि पितामह ! ॥
ब्रह्मोवाच ।
नारायणेमं सिद्धार्थमुपायं श्रृणु मे विभो ! ।

यत्र त्वं च महावाहो जातः कुलकरो भुवि ।
यादवानां महद्वंशमखिलं धारयिष्यसि ॥
तांश्चासुरान् समुत्पाट्य वंशं कृत्वात्मनो महत् ।
स्थापयिष्यसि मर्य्यादां नृणां तन्मे निशामय ॥
पुरा हि कश्यपो विष्णो ! वरुणस्य महात्मनः ।
जहार यज्ञिया गा वै पयोदाश्च महामखे ॥
अदितिः सुरभिश्चैव द्वे भार्य्ये कश्यपस्य तु ।
प्रदीयमाना गास्तास्तु नेच्छेतां वरुणस्य च ॥
ततो मां वरुणोऽभ्येत्य प्रणम्य शिरसा नतः ॥
उवाच भगवन् ! गावो गुरुणा मे हृता इति ॥
कृतकार्य्यो हि गास्तात ! नानुजानाति मे गुरुः ।
अन्ववर्त्तत भार्य्ये द्वे अदितिं सुरभिन्तथा ॥
मम ता ह्यक्षया गावो दिव्याः कामदुघाः प्रभो ! ।
चरन्ति सागरान् सर्व्वान् रक्षिताः स्वेन तेजसा ॥
कस्ता धर्षयितुं शक्तो मम गाः कश्यपादृते ।
अक्षयं याः क्षरन्त्यग्र्यं पयो देवामृतोपमम् ॥
प्रभुर्व्वा व्युत्थितो ब्रह्मन् गुरुर्व्वा यदि वेतरः ।
त्वया नियम्याः सर्व्वे वै त्वं हि नः परमा गतिः ॥
यदि प्रभवतां दण्डो लोके कार्य्यमजानताम् ।
न विद्यते लोकगुरो ! नासते लोकसेतवः ॥
यथा वास्तु तथा वास्तु कर्त्तव्यो भगवान् प्रभुः ।
मम गावः प्रदीयन्तां ततो गन्तास्मि सागरम् ॥

**क्षिप**, श ञ औ नुदि । इति कविकल्पद्रुमः ॥

(तुदां-उभं-सकं-अनिट् ।) नुदि प्रेरणे । श ञ, क्षिपति क्षिपते शरं योधः । औ, क्षेप्ता । इति दुर्गादासः ॥

**क्षिपः**, पुं, (क्षिप् + "इगुपधज्ञाप्रीकिरः कः" । ३ । १ । १३५ । इति कः ।) क्षेप्ता । क्षेपणम् । इति व्याकरणम् ॥

**क्षिपकः**, पुं, (क्षिप् + कः ततः संज्ञायां कन् ।) योद्धा । इत्युणादिकोषः ॥

**क्षिपका**, स्त्री, (क्षिप् + कन् + टाप् अतो नेत्वम् । "न यासयोः" । ७ । ३ । ४५ । इत्यस्य वार्त्तिके "क्षिपकादीनाञ्च न" । इति कथनात् ।) क्षेपणम् । इति व्याकरणम् ॥

**क्षिपणं**, क्ली, (क्षिप् + क्युन् भावे किच्च ।) क्षेपणम् । तत्पर्य्यायः । क्षिपा २ । इति जटाधरः ॥

**क्षिपणिः**, पुं, (क्षिप्यते इति । क्षिप् + कर्म्मणि अनिः ।) अस्त्रम् । इत्युणादिकोषः ॥

**क्षिपणिः**, स्त्री, (क्षिप्यते असौ अनया वा । क्षिप् + कर्म्मणि करणे वा अनिः ।) क्षेपणी । नौका-दण्डः । इत्यमरटीकायां भरतः ॥ जालविशेषः । मन्त्रः । अध्वर्य्युः । इति संक्षिप्तसारोणादिवृत्तिः ॥ (यथा, ऋग्वेदे । ४ । ४१ । ४ । "उतस्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि" ॥)

**क्षिपणी**, स्त्री, (क्षिप् + अनिः ङीष् ।) क्षिपणिः । इत्यमरटीकायां भरतः ॥

**क्षिपणुः**, पुं, (क्षिपति इति । क्षिप् + "अनुङ् नदे-श्च" । उणां ३ । ५२ । इति अनुङ् ।) वायुः । "केशरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः" ॥ अवज्ञातः । यथा, भागवते । २ । १८ । ४८ । "तिरस्कृता विप्रलब्धाः शप्ताः क्षिप्ता हता अपि" ॥ विस्रस्तः । यथा, मार्कण्डेये । ८८ । १९ । "नारसिंही नृसिंहस्य विभ्रती सदृशं वपुः । प्राप्ता तत्र सटाक्षेपक्षिप्तनक्षत्रसंहतिः" ॥) वायुग्रस्तः । क्षेपा इति भाषा । इति लोक-प्रसिद्धः ॥

**क्षिप्ता**, स्त्री, (क्षिप्त + टाप् ।) रात्रिः । इति हला-युधः ॥

**क्षिप्नुः**, त्रि, (क्षिप् + "त्रसगृधिवृषिक्षिपेः क्नुः" । ३ । २ । १४० । इति क्नुप्रत्ययः ।) निराकरिष्णुः । निराकरणशीलः । इत्यमरः । ३ । १ ३० ॥

**क्षिप्रं**, क्ली, (क्षिप् + "स्फायितञ्चिवञ्चीति" । उणां २ । १३ । इति रक् ।) शीघ्रम् । तद्युक्ते त्रि । इत्यमरः । १ । २ । ६८ ॥ (यथा, मनुः । ३ । १७९ । "विनाशं व्रजति क्षिप्रमामपात्रमिवा-म्भसि" ॥ मर्म्मविशेषः । यथा, -- "तत्र पादाङ्गु-ष्ठाङ्गुल्योर्मध्ये क्षिप्रं नाम मर्म्म तत्र विद्धस्याक्षेप-केण मरणम्" ॥ इति सुश्रुते शारीरस्थाने षष्ठे-ऽध्याये ॥)

**क्षिप्रपाकी**, [न्] पुं, (क्षिप्रं पच्यतेऽनेन । क्षिप्रं पचति पाचयति वा । पच् + बाहुलकात् घिनुण् ।) गर्द्दभाण्डवृक्षः । इति रत्नमाला ॥ (ज्ञातव्या गर्द्द-भाण्डशब्दे ऽस्य गुणपर्य्यायाः ॥) शीघ्रपाकविशिष्टे त्रि ॥

**क्षिया**, स्त्री, (क्षि क्षये + "षिद्भिदादिभ्यो ऽङ्" ।

आत्मा मम हि ता गावो या गावः सत्त्वमव्ययम् ।
लोकानां त्वत्प्रवृत्तानामेकं गोब्राह्मणं स्मृतम् ॥
त्रातव्याः प्रथमं गावस्त्रातास्त्रायन्ति या द्विजान् ।
गोब्राह्मणपरित्राणात् परित्रातं जगत् भवेत् ॥
इत्यम्बुपतिना प्रोक्तो वरुणेनाहमच्युत ! ।
गवां कारणतत्वज्ञः कश्यपे शापमुत्सृजम् ॥
येनांशेन हृता गावः कश्यपेन महात्मना ।
स तेनांशेन तु महीं गत्वा गोपत्वमेष्यति ॥
या च सा सुरभिर्नाम अदितिश्च सुरारणी ।
ते प्युभे तस्य भार्य्ये वै तेनैव सह यास्यतः ।
स ताभ्यां सह गोपत्वे कश्यपो भुवि रंस्यते ॥
तदस्य कश्यपस्यांशस्तेजसा कश्यपोपमः ।
वसुदेव इति ख्यातो गोषु तिष्ठति भूतले ॥
गिरिर्गोवर्द्धनो नाम मथुरायास्त्वदूरतः ।
तत्रासौ गोष्वभिरतः कंसस्य करदायकः ॥
तस्य भार्य्याद्वयञ्चैव अदितिः सुरभिस्तथा ।
देवकी रोहिणी चैव वसुदेवस्य धीमतः ॥
तत्रावतर लोकानां भवाय मधुसूदन ! ।
जयाशीर्व्वचनैस्त्वेते वर्द्धयन्ति दिवौकसः ॥
आत्मानमात्मना हि त्वमवतार्य्य महीतले ।
देवकीं रोहिणीञ्चैव गर्भाभ्यां परितोषय" ॥)

**क्षित्वा**, [न्] पुं, (क्षि निवासगत्योः + "शीङ् क्रुशि-रुहिजिक्षिमृधृभ्यः क्वनिप्" । उणां ४ । ११३ । इति क्वनिप् तुक् च ।) वायुः । इति सिद्धान्त-कौमुद्यामुणादिवृत्तिः ॥

**क्षिद्रः**, पुं, (क्षिद् + रक् ।) रोगः । सूर्य्यः । विषाणम् । इति संक्षिप्तसारोणादिवृत्तिः ॥

**क्षिप**, य औ नुदि । इति कविकल्पद्रुमः ॥ (दिवां-इति त्रिकाण्डशेषः ॥ (यथा, ऋग्वेदे । ४ । ५८ । ६ ।
"सम्यक् स्रवन्ति सरितो न धेना
अन्तर्हृदा मनसा पूयमानाः ।
एते अर्षन्त्यूर्म्मयो घृतस्य
मृगा इव क्षिपणोरीषमाणाः" ॥)

**क्षिपण्युः**, पुं, (क्षिप् + "कन्युच् क्षिपेश्च" । उणां ३ । ५१ । इति कन्युच् प्रत्ययः ।) वसन्तकालः । इत्युणादिकोषः ॥ देहः । सुरभौ त्रि । इति मेदिनी ॥

**क्षिपा**, स्त्री, (क्षिप् + "षिद्भिदादिभ्योऽङ्" । ३ । ३ । १०४ । इत्यङ् । ततष्टाप् ।) क्षेपणम् । इत्यमरः । ३ । २ । ११ ॥ रात्रिः । इति तट्टीकायां भरतः ॥

**क्षिप्तः**, त्रि, (क्षिप् + कर्म्मणि क्तः ।) निक्षेपकृतवस्तु । त्यक्तः । तत्पर्य्यायः । नुत्तः २ नुन्नः ३ अस्तः ४ निष्ठुतः ५ विद्धः ६ ईरितः ७ । इत्यमरः । ३ । १ । ८७ ॥
(उद्गीर्णः । यथा, माघे । ३ । ७३ ।
"क्षिप्ता इवेन्दोः स रुचोधिवेलं
मुक्तावलीराकलयाञ्चकार" ॥
कर्त्तरि क्तः । पतितः । यथा, माघे १० । ७७ ।
"क्षिप्तमायतमदर्शयदुर्व्यां
काञ्चिदामजघनस्य महत्वम्" ॥
"रतेषु उर्व्यां क्षिप्तं पतितम्" । इति मल्लिनाथः ॥
हतः । यथा, माघे २ । ५३ ।
३ । ३ । १०४ । इत्यङ् । टाप् च ।) अपचयः । इत्यमरः । ३ । २ । ७ ॥

**क्षिव**, उ निरासे । इति कविकल्पद्रुमः ॥ (भ्वां-पर-सकं-सेट् उदित्वात् क्त्वावेट् ।) ह्रस्वी । निरास इह कुत्कारः इति भट्टमल्लः । मुखेन श्लेष्मादेर्वमन-मिति केचित् । पृथक् पाठात् पूर्ब्बो भ्वादिः । क्षेवति । उ, क्षेवित्वा क्ष्यूत्वा । इति दुर्गादासः ॥

**क्षिव**, य उ निरासे । इति कविकल्पद्रुमः ॥ (दिवां-परं-सकं-सेट् । उदित्वात् क्त्वावेट्) ह्रस्वी । य, क्षीव्यति । उ, क्षेवित्वा क्ष्यूत्वा । इति दुर्गादासः ॥

**क्षी**, ञ हिंसे । इति कविकल्पद्रुमः ॥ (भ्वां-उभं-सकं-अनिट् ।) ञ, क्षयति क्षयते । इति दुर्गा-दासः ॥

**क्षीज**, हिक्कने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) दीर्घी । हिक्कनमव्यक्तशब्दः । सखेद-स्यैवाव्यक्तशब्दे क्षीजेः प्रयोगः । इति रक्षितः । क्षीजति सखेदो जनः । इति दुर्गादासः ॥

**क्षीजनं**, क्ली, (क्षीज् + भावे ल्युट् ।) कीचकानां नादः । इति हेमचन्द्रः ॥

**क्षीणः**, त्रि, (क्षि + क्तः । "निष्ठायामण्यदर्थे" । ६ । ४ । ६० । इति दीर्घः । "क्षियोदीर्घात्" । ८ । २ । ४६ । इति निष्ठातस्य नः ।) सूक्ष्मः । अबलः । तत्पर्य्यायः । दुर्ब्बलः २ कृशः ३ क्षामः ४ तनुः ५ छातः ६ तलिनः ७ अमांसः ८ पेलवः ९ । इति हेमचन्द्रः ॥ (यथा, गीतायाम् ९ । २१ ।

| परं-सकं-अनिट् ।) य, क्षिप्यति । औ, क्षेप्ता ।<br>इति दुर्गादासः ॥ | | |
|---|---|---|

"ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति" ॥
राजयक्ष्मान्तर्गतरोगविशेषे, पुं ।
"क्षीणे सरक्तमूत्रत्वं पार्श्वपृष्ठकटीग्रहः" ॥
अस्य चिकित्सा यथा, --
"क्षामः क्षीणः क्षतोरस्कस्त्वनिद्रः सबलेऽनले
शृतक्षीररसेनाद्यात् सक्षौद्रघृतशर्करम् ॥
शर्कराञ्च यवक्षौद्रजीवकर्षभकौ मधु ।
शृतक्षीरानुपानं वा लिह्यात् क्षीणः क्षतः कृशः ॥
क्रव्यादमांसनिर्य्यूहं घृतभृष्टं पिबेच्च सः" ॥
"क्षामक्षीणकृशाङ्गानां एतान्येव घृतानि च ।
त्वक्क्षीरीशर्करालाजचूर्णैः पानानि योजयेत् ।
सर्पिर्गुडान् समध्वंशान् जग्ध्वा दद्यात्पयोऽनु च ॥
रेतो वीर्य्यं बलं पुष्टिं तैराशुतरमाप्नुयात्' ॥
"फलाम्लं सर्पिषा भृष्टं विदारीक्षुरसे शृतम् ।
स्त्रीषु क्षीणः पिबेद्यूषं जीवनं बृंहणं परम् ॥
जीवनीयोपसिद्धं वा घृतभृष्टन्तु जाङ्गलम् ।
रसं प्रयोजयेत् क्षीणो व्यञ्जनार्थे सशर्करम्" ॥
"यद्यत् सन्तर्पणं शीतमविदाहि हितं लघु ।
अन्नपानं निषेव्यन्तत् क्षतक्षीणैः सुखार्थिभिः" ॥
इति चिकित्सास्थाने षोडशेऽध्याये चरकेणोक्तम् ॥)

**क्षीणवान्,** [त्] त्रि, (क्षि + क्तवतु "क्षियोदीर्घात् । ८ । २ । ४६ । इति निष्ठातस्य नः ।) क्षयविशिष्टः ।
इति व्याकरणम् ॥

**क्षीणाष्टकर्म्मा,** [न्] पुं, (क्षीणानि अष्टकर्म्माणि अस्य ।) जिनः । इति हेमचन्द्रः ॥

**क्षीब,** (व) ऋ ङ मदे । इति कविकल्पद्रुमः । (भ्वां-आत्मं-अकं-सेट् ।) मदे मत्तीभावे । ऋ, अचिक्षी-बत् । ङ, क्षीबते मद्यपः । इति दुर्गादासः ॥

पच्यमानं शिराप्राप्तं क्षीरं तद्विद्धि पुत्रक ! ॥
तेन क्षीरमिति ख्यातमग्निसोमात्मकं पयः ।
अमृतं सर्व्वभूतानां जीवनं बलकृन्मतम् ॥
हारीतः संशयापन्नः पप्रच्छ पितरं पुनः ।
कथं रसस्य सम्पत्तिः कथं सञ्चीयते विभो ! ॥
कथं रक्तस्य संस्थाने क्षीरं पाण्डुत्वमीयते ।
कथं तत्र कुमारीणां बन्ध्यानां न कथं भवेत् ॥
एवं पृष्टो महाचार्य्यः प्रोवाच मुनिपुङ्गवः ।
अतिहर्षप्रदं पुत्र ! परिपृष्टं भिषग्वर ! ॥
सितास्निग्धं तथारक्तं पित्तेन पाकतां गतम् ।
रक्तं श्वेतत्वमायाति तथा क्षीरं सितं भवेत् ॥
अपधातुबलं यस्सात् तस्मात् क्षीरं न जायते ।
बन्ध्यानां क्षीरनाड्यस्तु वांतेन परिपूरिताः ॥
क्षीरञ्च न भवेत्तस्माच्चार्त्तवं चाधिकं यतः ।
प्रसूतासु च नारीषु बलेन सह सूयते ॥
तेन स्रोतोविशुद्धिः स्यात् क्षीरमाशु प्रवर्त्तते ।
तस्मात् सद्यः प्रसूतायां जायते श्लैष्मिकं पयः ॥
तेन काठिन्यमायाति तस्मात्तत् परिवर्जयेत् ।
श्रेयश्चाविकृतं नार्य्या बलकृद्दोषनाशनम् ॥
पयस्त्रिदोषशमनं वृष्यञ्चाग्निप्रवर्द्धनम्' ॥
अथ प्राभातिकक्षीरगुणाः ।
"निशा शीतांशुसंशीतं निद्रालस्याश्रमावहम् ।
कफकृत्सघनं शीतं क्षीरं प्राभातिकं भवेत्" ॥

तदेव गुणमेवौजः सामान्यादभिवर्द्धयेत् ।
प्रवरं जीवनीयानां क्षीरमुक्तं रसायनम् ॥
महिषीणां गुरुतरं गव्याच्छीततरं पयः ।
स्नेहानूनमनिन्द्राय हितमत्यग्नये च तत् ॥
रूओष्णं क्षीरमुष्ट्रीणामीषत्सलवणं लघु ।
शस्तं वातकफानाह क्रिमिशोफोदरार्शसाम् ॥
बल्यं स्थैर्य्यकरं सर्व्वमुष्णञ्चैकशफं पयः ।
साम्लं सलवणं रूक्षं शाखावातहरं लघु ॥
छागं कषायमधुरं शीतं ग्राहि पयो लघु ।
रक्तपित्तातिसारघ्नं क्षयकाशज्वरापहम् ॥
हिक्काश्वासकरन्तूष्णं पित्तश्लेष्मलमाविकम् ।
हस्तिनीनां पयो बल्यं गुरु स्थैर्य्यकरं परम् ॥
जीवनं बृंहणं साङ्ख्यं स्नेहनं मानुषं पयः ।
लावणं रक्तपित्ते च तर्पणञ्चाक्षिशूलिनाम्' ॥
इति च तत्र सूत्रस्थाने २७ अध्याये ॥
"सर्व्वप्राणभृतां तस्मात् सात्म्यं क्षीरमिहोच्यते" ॥

तत्र सर्व्वमेव क्षीरं प्राणिनामप्रतिषिद्धं जाति-सात्म्यात् । वातपित्तशोणितमानसविकारेष्व-विरुद्धम् । जीर्णज्वर-कास-श्वास-शोष-क्षय-गुल्मो-न्मादोदर-मूर्च्छा-भ्रम-मद-दाह-पिपासा-हृद्बस्ति पाण्डरोग-ग्रहणीदोषार्शःशूलोदावर्त्तातिसारप्र-वाहिकायोनिरोग-गर्भास्राव-रक्तपित्तश्रमक्लमहरं पाप्मापहम् बल्यं वृष्यं वाजीकरणं रसायनं मेध्यं सन्धानं स्थापनं वयःस्थापनमायुष्यं जीवनं बृंहणं वमनं विरेचनञ्च तुल्यगुणत्वाच्चौजसो वर्द्धनमिति बालवृद्धक्षतक्षीणानां क्षुद्व्यवायव्यायामकर्शिता-नाञ्च पथ्यतमम् ।
"गोक्षीरमनभिष्यन्दि स्निग्धं गुरु रसायनम् ।
रक्तपित्तहरं शीतं मधुरं रसपाकयोः ॥
जीवनीयं यथावातपित्तघ्नं परमं स्मृतम् ।
गव्यतुल्यगुणन्त्वाजं विशेषाच्छोषिणां हितम् ॥
दीपनं लघु संग्राहि श्वासकासास्रपित्तनुत् ।
अजानामल्पकायत्वात् कटुतिक्तनिषेवणात् ॥
नात्यम्बुपानाद्व्यायामात् सर्व्वव्याधिहरं पयः ।

**क्षीबः**, त्रि, (क्षिब + "अनुपसर्गात् फुल्लक्षीबकृशो-
ल्लाघाः" । ८ । २ । ५५ । इति तलोपे
साधुः ।)
मत्तः । इत्यमरः ॥ (यथा, रामायणे । ५ ।
१० ।
१३ ।
"अथारोहणमासाद्य वेदिकान्तरमाश्रितः ।
क्षीवं राक्षसशार्द्दूलं प्रेक्षते स्म महाकपिः" ॥)

**क्षीर**, क्ली, (घस्यते अद्यते इति । "घसे किच्च"
उणां ४ । ३४ । इति ईरन् उपधालोपे कत्वं
षत्वञ्च ।) जलम् । यथा, ऋग्वेदे । १ ।
१०४ । ३ ।
"अव त्मना भरते केतवेदा अव त्मना भरते
फेन-
मुदन् । क्षीरेण स्नातः कुयवस्य योषे हते ते
स्यातां
प्रवणे शिफायाः" । दुग्धम् । इत्यमरः । २ ।
९ ।
५१ ॥ (यथा, मनुः । ५ । ९ ।
"स्त्रीक्षीरञ्चैव वर्ज्यानि सर्व्वशुक्तानि चैव
हि" ॥)
"आसप्तरात्रं प्रसवात् क्षीरं पेयूषमुच्यते ।
परतो मोरटं विद्यादप्रसन्नं कफात्मकम्" ॥
इति रत्नमाला ॥
(क्षीरस्य लक्षणं गुणाश्च यथा, --
"अथातः संप्रक्ष्यामि क्षीरवर्गन्तु वत्सक ! ।
दधिसर्पिर्वसातक्रं तेषां सर्व्वगुणागुणम् ॥
यद्यदाहारजातन्तु रसं क्षीरशिरानुगम् ।
सरं जलञ्च भुक्तञ्च तथा पित्तेन संयुतम् ॥
पाचितं जाठरे वह्नौ पित्तेन सह मूर्च्छितम् ।
अथ दिनक्षीरगुणाः ।
"वामरे सूर्य्यसन्तापात् सदोष्णं
कफवातजित् ।
हितं तत्पित्तशमनं सुशीतं भोजने निशि"
॥
अथ क्षीरपानविधिः ।
"क्षीणानां दुर्ब्बलानाञ्च
तथाजीर्णज्वरार्द्दिते ।
दीप्providedाग्नीनामतन्द्राणां
श्रमशोषविकारिणाम् ॥
राजयक्ष्मयुतानाञ्च क्षीरपानं विधीयते ॥
न शस्तं लवणैर्युक्तं क्षीरञ्चाम्लेन वा पुनः
।
करोति कुष्ठं त्वग्दोषं तस्मान्नैव हितं
मतम्" ॥
इति प्रथमे स्थाने ऽष्टमे ऽध्याये
हारीतेनोक्तम् ॥
"अथ क्षीराणि वक्ष्यन्ते कर्म्म चैषां
गुणाश्च ये ॥
अविक्षीरमजाक्षीरं गोक्षीरं माहिषञ्च यत् ।
उष्ट्रीणामथ नागीनां वडवायाः
स्त्रियास्तथा ॥
प्रायशो मधुरं स्निग्धं शीतं स्तन्यं पयो
मतम् ।
प्रीणनं बृंहणं वृष्यं मेध्यं बल्यं मनस्करम्
॥
जीवनीयं श्रमहरं श्वासकासनिवर्हणम् ।
हन्ति शोणितपित्तञ्च सन्धानं विहतस्य
च ॥
सर्व्वप्राणभृतां सात्म्यं शमनं
शोधनन्तथा ।
तृष्णाघ्नं दीपनीयञ्च श्रेष्टं क्षीणक्षतेषु च
॥
पाण्डुरोगेऽम्लपित्ते च शोषे गुल्मे तथोदरे
।
अतीसारे ज्वरे दाहे श्वयथौ च विधीयते
॥
योनिशुक्रप्रदोषे च मूत्रेषु प्रदरेषु च ।
पुरीषे ग्रथिते पथ्यं वातपित्तविकारिणाम्
॥
नस्यालेपावगाहेषु वमनास्थापनेषु च ।
विरेचने स्नेहने च पयः सर्व्वत्र युज्यते"
॥
रूक्षोष्णं लवणं किञ्चिदौष्ट्रं स्वादुरसं लघु ॥
शोफगुल्मोदरार्शोघ्नं क्रिमिकुष्ठविषापहम् ।
आविकं मधुरं स्निग्धं गुरु पित्तकफावहम् ॥
पथ्यं केवलवातेषु कासे चानिलसम्भवे ।
महाभिष्यन्दि मधुरं माहिषं वह्निनाशनम् ॥
निद्राकरं शीतकरं गव्यात्स्निग्धतरं गुरु ।
उष्णञ्चैकशफं बल्यं शाखावातहरं पयः ॥
मधुराम्लरसं रूक्षं लवणानुरसं लघु ।
नार्य्यास्तु मधुरं स्तन्यं कषायानुरसं हिमम् ॥
नस्याश्चोतनयोः पथ्यं जीवनं लघु दीपनम् ।
हस्तिन्या मधुरं वृष्यं कषायानुरसं गुरु ॥
स्निग्धं स्थैर्य्यकरं शीतं चक्षुष्यं बलवर्द्धनम् ।
प्रायः प्राभातिकं क्षीरं गुरु विष्टम्भि शीतलम् ॥
रात्रौ सोमगुणत्वाच्च व्यायामाभावतस्तथा ।
दिवाकराभितप्तानां व्यायामानिलसेवनात् ॥
वातानुलोमिश्यन्तिघ्नं चक्षुष्यञ्चापराह्णिकम् ।
पयोऽभिष्यन्दिगुर्व्वामं प्रायशः परिकीर्त्तितम् ॥
तदेवोक्तं लघुतरमनभिष्यन्दि वैशृतम् ।

|  | इति चरके सूत्रस्थाने प्रथमेऽध्याये ॥<br>प्राणिभेदेनास्य गुणविशेषा यथा, --<br>“स्वादु शीतं मृदु स्निग्धं वहलं श्लक्ष्णपिच्छिलम्।<br>गरु मन्दं प्रसन्नञ्च गव्यं दशगुणं पयः ॥ |  |
|---|---|---|

वर्ज्जयित्वा स्त्रियाः स्तन्यमाममेव हि
तद्धितम् ॥
धारोष्णं गुणवत् क्षीरं
विपरीतमतोऽन्यथा ।
तदेवातिशृतं सर्व्वं गुरु बृंहणमुच्यते ॥
अनिष्टगन्धमम्लञ्च विवर्णं विरसञ्च यत् ।
वर्ज्यं सलवणं क्षीरं यच्च विग्रथितं भवेत्
॥
इति क्षीरवर्गः ॥
इति सूत्रस्थाने पञ्चचत्वारिंशत्तमे
ऽध्याये सुश्रुते-
नोक्तम् ॥ * ॥)
दुग्धधारास्नानफलम् । यथा,
वराहपुराणे ।
"धेनुस्तनाद्विनिष्क्रान्तां धारां क्षीरस्य
यो नरः ।
शिरसा प्रति गृह्णाति स पापेभ्यः
प्रमुच्यते" ॥
क्षीरेण विष्णोः स्नाने फलम् । यथा, --
"येषु क्षीरवहा नद्यो ह्रदाः पायसकर्दमाः
।
तान् लोकान् पुरुषा यान्ति
क्षीरस्नापनका हरेः ॥
आह्लादं निर्वृतिं स्वाग्यं आरोग्यं
चानुरूपताम् ।
सप्तजन्मस्ववाप्नोति क्षीरस्नानपरो हरेः
॥
दध्यादीनां विकाराणां क्षीरतः सम्भवा
यथा ।
तथैवाशेषकामानां क्षीरस्नपनमुत्तमम् ॥
यथा च विमलं क्षीरं यथा
निर्वृतिकारकम् ।
तथास्य विमलं ज्ञानं भविष्यति
फलप्रदम् ॥
ग्रहानुकूलतां पुष्टिं प्रियत्वञ्चाखिले जने
।
करोति भगवान् विष्णुः
क्षीरस्नपनतोषितः ॥
सर्व्वोऽस्य स्निग्धतामेति दृष्टमात्रे
प्रसीदति ।

ह्रस्वश्च ।) क्षीरकाकोली । इति शब्दचन्द्रिका
॥

**क्षीरकाकोली**, स्त्री, (क्षीरमिव शुभ्रा काकोली ।)

अष्टवर्गे प्रसिद्धौषधिविशेषः । तत्पर्य्यायः ।
महा-
वीरा २ सुकोली ३ पयस्विनी ४ । इति रत्न-
माला ॥ क्षीरशुक्ला ५ पयस्या ६ क्षीरविषा-
णिका ७ जीववल्ली ८ जीवशुक्ला ९ । यथा,
राज-
निर्घण्टे ।
"रसवीर्य्यविपाकेषु काकोल्याः सदृशी च सा"
॥
अथ काकोल्योरुत्पत्तिलक्षणनामगुणाः
"जायते क्षीरकाकोली महाभेदोद्भवस्थले ।
यत्र स्यात् क्षीरकाकोली काकोली तत्र जायते
॥
पीवरी सदृशः कन्दः सक्षीरः प्रियगन्धवान् ।
सा प्रोक्ता क्षीरकाकोली काकोली लिङ्गमुच्यते
॥
यथा स्यात्क्षीरकाकोली काकोल्यपि तथा
भवेत् ।
एषा किञ्चित् भवेत् कृष्णा भेदोऽयमुभयोरपि ।
काकोली वायसोली च वीरा कायस्थिका तथा
।
सा शुक्ला क्षीरकाकोली वयस्या क्षीरवल्लिका
॥
कथिता क्षीरिणी धीरा शुक्लक्षीरा पयस्विनी ।
काकोलीयुगलं शीतं शुक्रलं मधुरं गुरु ।
बृंहणं वातदाहास्रपित्तशोषज्वरापहम्' ॥
काकोली क्षीरकाकोलीस्थाने अश्वगन्धामूलम्
।
इति भावप्रकाशः ॥ (शुक्रजननान्तर्गतौषध-
विशेषः । यथा । "जीवकर्षभककाकोली क्षीर-
काकोली मुद्गपर्णी माषपर्णी मेदा वृक्षरुहा
जटिला कुलिङ्गा इति दशेमानि शुक्रजननानि
भवन्ति ॥ इति चरके सूत्रस्थाने ४ अध्याये
॥)

**क्षीरकाण्डकः**, पुं, (क्षीरयुक्तं काण्डं यस्य । ततः

फलप्रशस्तदशनां मुक्ताफलमयेक्षणाम् ॥
इक्षुपादां दर्भरोमां सितकम्बलकम्बलाम् ।
ताम्रपृष्ठीं कांस्यदोहां पट्टसूत्रमयीं तथा ॥
पुच्छञ्च नृपशार्दूल ! नवनीतमयस्तनीम् ।
स्वर्णशृङ्गां रौप्यखुरां पञ्चरत्नसमन्विताम् ॥
चत्वारि तिलपात्राणि चतुर्दिक्ष्वपि स्थापयेत् ।
आच्छाद्य वस्त्रयुग्मेन गन्धपुष्पैः समर्च्चयेत् ॥
धूपदीप्रादिकं कृत्वा ब्राह्मणाय निवेदयेत् ।
आच्छाद्यालङ्कृतां कृत्वा मुद्रिकाकर्णकुण्डलैः ।
पट्टकोपानहौ छत्रं दत्त्वा दानं समर्पयेत् ॥
अनेनैव तु मन्त्रेण क्षीरधेनुं प्रसादयेत् ॥
या धेनुः सर्व्वभूतानामित्यादि नरपुङ्गव ! ।
आप्यायस्वेति मन्त्रेण क्षीरधेनुं प्रसादयेत् ॥
यो गृह्णाति पठेन्मन्त्रं ग्राहको राजसत्तम ! ॥
दीयमानां प्रयश्यन्ति ते यान्ति परमां गतिम् ॥
एतां हेमसहस्रेण शतेनाथ स्वशक्तितः ।
शतार्द्धमथवाप्यद्ध तथार्द्धञ्च यथेच्छया ॥
दत्त्वा धेनुं महाराज ! शृणु तस्यापि यत् फलम्
।
षष्टिवर्षसहस्रन्तु रुद्रलोके महीयते ॥
पितृपितामहैः सार्द्धं ब्रह्मणो भवनं व्रजेत् ।
दिव्यं विमानमारूढो दिव्यस्रगनुलेपनः ॥
क्रीडित्वा सुचिरं कालं विष्णुलोकं स गच्छति
।
द्वादशादित्यसङ्काशे विमाने वरमण्डिते ॥
गीतवादित्रनिर्घोषैरप्सरोगणसेविते ।
तत्रोष्य विष्णोः सौराज्यं विष्णसायुज्यतां
व्रजेत् ॥
य इदं श्रावयेद्राजन् पठेद्वा भक्तिभावितः ।
सर्व्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति" ॥
इति वाराहे श्वेतोपाख्याने क्षीरधेनुमाहात्म्य-
नामाध्यायः ॥

**क्षीरनाशः**, पुं, (क्षीरं नाशयतीति । नश् + णिच्

"कर्म्मण्यण्" । ३ । २ । १ । इत्यण् ।)
शाखोटवृक्षः ।
इति राजनिर्घण्टः ॥ (क्षीरस्य नाशः इति
दुग्ध-
क्षयश्च ॥)

**क्षीरनीरं**, क्ली, (क्षीरमिश्रं नीरमिव एकीभूतप्रा-

श्रृतक्षीरेण देवेशे स्नापिते मधुसूदने” ॥
इत्याद्ये वह्निपुराणे
क्रियायोगनामाध्यायः ॥ * ॥
क्षीरपाकविधिर्य्यथा, --
“क्षीरमष्टगुणं द्रव्यात् क्षीरान्नीरं चतुर्गुणम्
।
क्षीरावशेषं तत्पीतं शूलमामोद्भवं जयेत्”
॥
इति भावप्रकाशः ॥ सरलद्रवः । इति
शब्द-
रत्नावली ॥ (यथा, रामायणे । २ । ५२
। ६९ ।
“जटाः कृत्वा गमिष्यामि
न्यग्रोधक्षीरमानय ।
तत्क्षीरं राजपुत्राय गुहः क्षिप्रमुपाहरत्”
॥)

**क्षीरकः**, पुं, (क्षीरमिव कायति प्रकाशते । कै +
कः ।) क्षीरमोरटलता । इति रत्नमाला
॥

**क्षीरकञ्चुकी**, स्त्री, (क्षीरं क्षीरप्रधानं कञ्चुकं
आवरणं तदिव त्वगस्याः ।) क्षीरीशवृक्षः
। इति
रत्नमाला ॥

**क्षीरकण्ठः**, पुं, (क्षीरं कण्ठेऽस्य ।) बालकः ।
यथा,-
“बालः पाकः शिशुर्डिम्भःपोतः शावः
स्तनन्धयः ।
पृथुकोऽर्भोत्तानशयः क्षीरकण्ठः
कुमारकः” ॥
इति हेमचन्द्रः ॥

**क्षीरकण्टकः**, पुं, (क्षीरकण्ट + स्वार्थे कन् ।)
शिशुः ।
इति त्रिकाण्डशेषः ॥

**क्षीरकन्दः**, पुं, (क्षीरं कन्दे यस्य । क्षीरः
क्षीरप्रधानः
कन्दोऽम्य वा ।) क्षीरविदारी । इति
राज-
निर्घण्टः ॥

**क्षीरकन्दा**, स्त्री, (क्षीरकन्द + टाप् ।) क्षीरवल्ली ।
कप् ।) स्नुही । अर्कवृक्षः । इति राजनिर्घण्टः
॥

**क्षीरकाष्ठा**, स्त्री, (क्षीरमयं क्षीरप्रधानं वा काष्टं
यस्याः ।) वटीवृक्षः । इति राजनिर्घण्टः ॥

**क्षीरकीटः**, पुं, (क्षीरजातः कीटः क्षीरस्य कीटो
वा ।) दुग्धजातकीटः । तत्पर्य्यायः । कालिका
२ ।
इति हारावली ॥

**क्षीरजं**, क्ली, (क्षीराज्जायते । जन् + डः ।) दधि ।
इति राजनिर्घण्टो हेमचन्द्रश्च ॥ क्षीरजातद्रव्ये
त्रि ॥ (दधिशब्देऽस्या विवरणं ज्ञातव्यम् ॥)

**क्षीरदलः**, पुं, (क्षीरयुक्तं दलं यस्य क्षीरं दले यस्य
वा ।) अर्कवृक्षः । इति राजनिर्घण्टः ॥

**क्षीरद्रुमः**, पुं, (क्षीरप्रधानो द्रुमः ।) च्यश्वत्थः ।
इति राजनिर्घण्टः ॥

**क्षीरधेनुः**, स्त्री, (क्षीरेण निर्म्मिता धेनुः ।) दानार्थ-
क्षीरनिर्म्मितधेनुः । यथा, --
होतोवाच ।
“क्षीरधेनं प्रवक्ष्यामि तां निबोध नराधिप ! ।
अनुलिप्ते महीपृष्टे गोमयेन मृपोत्तम ! ॥
गोचर्म्ममात्रमानेन कुशानास्तीर्य्य सर्व्वतः ।
तत्रोपरि महाराज ! न्यसेत् कृष्णाजिनं बुधः ॥
तत्रोपरि कुण्डलिकां गोमयेन कृतामपि ।
क्षीरकुम्भं ततः स्थाप्य चतुर्थांशेन वत्सकम् ॥
सुवर्णमुखश्रृङ्गाणि चन्दनागुरुकाणि च ।
प्रशस्तपत्रश्रवणां तिलपात्रोपरि न्यसेत् ॥
मुखं गुडमयं तस्या जिह्वा शर्करया तथा ।
यत्वात् तथत्वम् ।) आलिङ्गनम् । इति शब्द-
माला ॥ (क्षीरञ्च नीरञ्च द्वयोः समाहारः ।)
दुग्धजलञ्च ॥
(यथा, वेतालपञ्चविंशतौ । १२ । १८ ।
“क्षीरनीरसमं मित्रं प्रशंसन्ति विचक्षणाः ।
नीरं क्षीरयते तत्र वह्नौ तप्यति तत्पयः” ॥)

**क्षीरपर्णी**, [न्] पुं, (क्षीरयुक्तं पर्णं अस्यास्तीति ।
इनिः ।) अर्कवृक्षः । इति राजनिर्घण्टः ॥
(विवृतिरस्यार्कशब्दे बोद्धव्या ॥)

**क्षीरपाणं**, क्ली, (पोयते इति । पा + भावे ल्युट्
क्षीरस्य पानम् । “वा भावकरणयोः” ।
८ । ४ । १० । पाक्षिको णत्वम् ।) दुग्धपानम्
।
दुग्धपानयुक्तदेशे तत्कर्त्तरि च त्रि । यथा ।
देशे पानस्य ।
पूर्ब्बपदस्थितषकाररेफऋवर्णेभ्यः
परस्य पानस्य नस्य णः स्यात् देशे वाच्ये ।
पीयते यत्तत् पानं कर्म्मण्यनट् । क्षीरं पानं
येषां ते क्षीरपाणा उशीनराः । सौवीरपाणा
वाह्लीकाः । कषायपाणा गान्धाराः ।
उशीनरादि-

**क्षीरपानं**, क्ली, (पोयते इति । पा + भावे ल्युट्
क्षीरस्य पानम् । “वा भावकरणयोः” ।
८ । ४ । १० । पाक्षिको णत्वम् ।) दुग्धपानम्
।
दुग्धपानयुक्तदेशे तत्कर्त्तरि च त्रि । यथा ।
देशे पानस्य ।
पूर्ब्बपदस्थितषकाररेफऋवर्णेभ्यः
परस्य पानस्य नस्य णः स्यात् देशे वाच्ये ।
पीयते यत्तत् पानं कर्म्मण्यनट् । क्षीरं पानं
येषां ते क्षीरपाणा उशीनराः । सौवीरपाणा
वाह्लीकाः । कषायपाणा गान्धाराः ।
उशीनरादि-

| | | |
|---|---|---|
| काल भूमि कुष्माण्ड इति ख्यातः ।<br>यथा, --<br>"क्षीरवल्ली क्षीरकन्दा<br>महाश्वेतर्क्षगन्धिका" ॥<br>इति जटाधरः ॥<br>**क्षीरकाकोलिका**, स्त्री, (क्षीरवत् शुभ्रा काकोली ।<br>ततः स्वार्थे संज्ञायां स्वल्पार्थे वा कन्<br>टाप् पूर्ब्ब- | | |

शब्दानां देशवादिचत्वेऽपि तन्निवाससम्बन्धेन मनुष्येषु प्रवृत्तिः । अथवा क्षीरं पानं यत्र इति व्यत्पत्त्या देशो वाच्यः । भावकरणयोरनटो वा ।
क्षीरपाणं क्षीरपानम् । क्षीरं पीयतेऽनयेति क्षीरपाणी क्षीरपानी पात्री । इति मुग्धबोध-टीकायां दुर्गादासः ॥
शब्दानां देशवादिचत्वेऽपि तन्निवाससम्बन्धेन मनुष्येषु प्रवृत्तिः । अथवा क्षीरं पानं यत्र इति व्यत्पत्त्या देशो वाच्यः । भावकरणयोरनटो वा ।
क्षीरपाणं क्षीरपानम् । क्षीरं पीयतेऽनयेति क्षीरपाणी क्षीरपानी पात्री । इति मुग्धबोध-टीकायां दुर्गादासः ॥

**क्षीरपायी**, [न्] त्रि, (क्षीरं पिबति इति । "बहुल-माभीक्ष्णे" । ३ । २ । ८१ । सुप्युपदे णिनिः ।)
दुग्धपानकर्त्ता । यथा । "क्षीरपायीत्यादिकस्तु प्रकृत्यर्थावच्छिन्नकृदन्तार्थस्यान्वयबोधे समर्थोऽपि
न प्रकृत्यर्थमात्रावच्छिन्नस्य ततः पानशीलसामान्य-स्याप्रत्ययात्" । इति शब्दशक्तिप्रकाशिका ॥

**क्षीरमोरटः**, पुं, (क्षीरवत् स्वाद्यः स्वादुर्वा मोरटः ।)
लताभेदः । तत्पर्य्यायः । सितद्रुः २ सुदलः ३ क्षी-रकः ४ । इति रत्नमाला । अन्यत् मोरटशब्दे द्रष्टव्यम् ॥

**क्षीरवल्ली**, स्त्री, (क्षीरयुक्ता क्षीरप्रधाना वा वल्ली ।)
क्षीरविदारी । इति राजनिर्घण्टः ॥
(यथास्याः पर्य्यायाः ।
"विदारी स्वादुकन्दा च सातु क्रोष्ट्री सिता स्मृता ॥
इक्षुगन्धा क्षीरवल्ली क्षीरशुक्ला पयस्विनी ।
वाराहवदना गृष्टिर्वदरेत्यपि कथ्यते" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**क्षीरविकृतिः**, स्त्री, (क्षीरं विकृतिर्विकारोऽस्याः

**क्षीरशरः**, पुं, (क्षीरं दुग्धं शीर्य्यतेऽस्मात् अत्र वा । शॄ + अपादानेऽधिकरणेवा अप् । क्षीरं शॄ-णाति विकृतीकरोतीति । शॄ + कर्त्तरि अच् ।)
दधियोगात् पक्वोष्णदुग्धजातः । छाना इति भाषा । तत्पर्य्यायः । आमिक्षा २ पयस्या ३ ।
इति हेमचन्द्रः ॥

**क्षीरशीर्षः**, पुं, (क्षीरं शीर्षेऽस्य ।) श्रीवासः । इति राजनिर्घण्टः ॥

**क्षीरशुक्ता**, स्त्री, (क्षीरवत् शुभ्रा शुक्ता ।) क्षीर-विदारी । क्षीरकाकोली । इति राजनिर्घण्टः ॥
(क्षीरविदारीशब्दे विवरणमस्या ज्ञेयम् ॥)

**क्षीरशुक्लः**, पुं, (क्षीरवत् शुक्लः ।) जलकण्टकः ।
पानिफल इति भाषा । इति शब्दचन्द्रिका ॥
राजादनी । क्षीरणी इति भाषा । इति राज-निर्घण्टः ॥

**क्षीरशुक्ला**, स्त्री, (क्षीरमिव शुक्ला ।) शुक्लभूमि-कुष्माण्डः । इत्यमरः । २ । ४ । ११० ॥
(यथास्याः पर्य्यायाः ।
"क्षीरशुक्ला विदारीक्षुविदारी च पलाशिका ।
प्रसिद्धो भूमिकुष्माण्डो विदारीकन्द इत्यपि" ॥
इति वैद्यकरत्नमालायाम् ॥
"विदारी स्वादुकन्दा च सा तु क्रोष्ट्री सिता स्मृता ।
इक्षुगन्धा क्षीरवल्ली क्षीरशुक्ला पयस्विनी ।

**क्षीरस्फटिकः**, पुं, (क्षीरवत् शुभ्रः स्फटिकः ।)
क्षीरवर्णस्फटिकविशेषः । यथा, --
"सूर्य्यकान्तः सूर्य्यमणिः सूर्य्याश्मा दहनोपलः ।
चन्द्रकान्तश्चन्द्रमणिश्चान्द्रश्चन्द्रोपलश्चसः ॥
क्षीरतैलस्फटिकाभ्यामन्यौ खस्फटिकाविमौ" ॥
इति हेमचन्द्रः ॥

**क्षीरक्षवः** पुं, (क्षीरस्य क्षवः कासोत्यश्लेष्मा इव । घणीभूतत्वात्तथात्वम् ।) दुग्धपाषाणः । इति राज-निर्घण्टः ॥

**क्षीरा**, स्त्री, (क्षीरवर्णोऽस्त्यायाः इति "अर्शआदिभ्यो-ऽच्" । ५ । २ । १२७ । इत्यच् । ततष्टाप् ।) का-कोली । इति राजनिर्घण्टः ॥
(काकोलीशब्देऽस्या गुणादयो ज्ञातव्याः ॥)

**क्षीराब्धिः**, पुं, (क्षीरमयोऽब्धिः क्षीरस्याब्धिर्वा ।)
क्षीरसमुद्रः । इति शब्दरत्नावली ॥

**क्षीराब्धिजं**, क्ली, (क्षीराब्धेः क्षीरोदसागरात् जा-यते इति । जन् + डः ।) सामुद्रलवणम् । मौक्ति-कम् । इति मेदिनी ॥

**क्षीराब्धिजः**, पुं, (क्षीराब्धेर्जायते इति । जन् + डा ।)
चन्द्रः । इति मेदिनी ॥

**क्षीराब्धिजा**, स्त्री, (क्षीराब्धिज + टाप् ।) लक्ष्मीः ।
इति मेदिनी ॥ (यथा, भागवते ८ । ८ । ८ ।
"ततश्चाविरभूत्साक्षात् श्रीरमा भगवत्परा ।
रञ्जयन्ती दिशः कान्त्या विद्युत्सौदामनी यथा" ॥)

**क्षीराब्धितनया**, स्त्री, (क्षीराब्धेः तनया कन्या ।)
लक्ष्मीः । इत्यमरः । १ । १ । २९ ॥

**क्षीराविका**, स्त्री, (क्षीरं अवतीति । "कर्म्मण्यण्" ।
ततो ङीप् ततः स्वार्थे कन् टापि पूर्ब्बह्रस्वः ।)
क्षीरावी । इति शब्दरत्नावली ॥

**क्षीरावी**, स्त्री, (क्षीरं अवतीति "कार्म्मण्यण्" । ३ ।

क्षीरवत् विकृतिर्निर्य्यासोऽस्याः वा ।)
कूर्च्चिका ।
इत्यमरः । २ । ९ । ४४ ॥ क्षीरसा इति भाषा
॥

**क्षीरविदारिका**, स्त्री, (क्षीरयुक्ता क्षीरवत् शुभ्रां

वा विदारिका ।) क्षीरविदारी । इति शब्द-
रत्नावली ॥

**क्षीरविदारी**, स्त्री, (क्षीरवत् शुभ्रा क्षीरप्रचुरा

वा विदारी ।) कृष्णभूमिकुष्माण्डः ।
तत्पर्य्यायः ।
महाश्वेता २ ऋक्षगन्धिका ३ । इत्यमरः ।
इक्षु-
वल्लरी ५ इक्षुवल्ली ६ क्षीरकन्दः ७ क्षीरवल्ली ८
पयस्विनी ९ क्षीरशुक्ता १० क्षीरलता ११
पयः-
कन्दा १२ पयोलता १३ पयोविदारिका १४ ।
अस्या गुणाः । मधुरत्वम् । अम्लत्वम् ।
कषाय-
त्वम् । तिक्तत्वम् । पित्तशूल मूत्रमेहामयनाशि-
त्वञ्च । (विदारीशब्देऽस्या अपर गुणा ज्ञेयाः ॥)
“क्षीरकन्दो द्विधा प्रोक्तो विनालस्तु सनालकः
।
विनालो रोगहर्त्ता स्याद्वयःस्तम्भी सनालकः”
॥
इति राजनिर्घण्टः ॥

**क्षीरविषाणिका**, स्त्री, (क्षीरमिव शुभ्रं क्षीरयुक्तं वा

विषाणं अग्रभागो यस्याः ततः कन् टाप् च ।)
वृश्चिकाली । क्षीरकाकोली । इति
राजनिर्घण्टः ॥

**क्षीरवृक्षः**, पुं, (क्षीरमयः क्षीरप्रधानो वा वृक्षः ।)

उडम्बरवृक्षः । इति जटाधरः ॥ क्षीरिका । इति
भरतः ॥ राजादनी । इति राजनिर्घण्टः ॥
(यथा,
सुश्रुते २४ अध्याये चिकित्सास्थाने ।
“क्षीरवृक्षकषायैर्वा क्षीरेण च विमिश्रितैः” ॥
राजादन्यर्थे पर्य्याया यथा, --
“राजादनः क्षीरवृक्षः पालाशी वानरप्रियः” ॥
इति वैद्यकरत्नमालायाम् ॥)

वाराहवदना गृष्टिर्वदरेत्यपि कथ्यते”
॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥
“जीवकर्षभकौ मेदां श्रावणी
कर्कटाह्वयम् ।
मुद्गमाषाख्यपर्ण्यौ च महतीं
श्रावणीन्तथा” ॥
काकोलीं क्षीरकाकोलीं क्षुद्रां
छिन्नरुहान्तथा ।
क्षीरशुक्लांपयस्याञ्च यष्ट्याह्वं
विधिना पिबेत् ।
वातपित्तहितान्येतान्यादीनि तु
कफानिले” ॥
इति चरके कल्पस्थाने ७ अध्यायः
॥)

**क्षीरसः**, पुं, (क्षीरं स्यतीति । सो + कः ।) क्षीर-

सारः । इति राजनिर्घण्टः ॥

**क्षीरसन्तानिका**, स्त्री, (क्षीरस्य दुग्धस्य सन्तानिका

इव ।) दुग्धविकारविशेषः । छाना इति
नट्क्षीर
इति च भाषा । अस्या गुणाः ।
“क्षीरसन्तानिका
वृष्या स्निग्धा पित्तानिलापहा” । इति
राज-
वल्लभः ॥

**क्षीरसमुद्रः**, पुं, (क्षीरतुल्यः स्वादुरसः क्षीरमयो

वा समुद्रः ।) दुग्धसागरः । स तु
श्वेतद्वीपे वर्त्तते ।
यथा । क्षीरसमुद्राय नमः श्वेतद्वीपाय
नमः
इत्यादि पीठन्यासप्रकरणे तन्त्रसारः
॥

**क्षीरसागरसुता**, स्त्री, (क्षीरसागरस्य क्षीरोदसमु-

द्रस्य सुता ।) लक्ष्मीः । इति
कविकल्पलता ॥

**क्षीरसारः**, पुं, (क्षीरस्य दुग्धस्य सारः । यद्वा क्षीरं

२ । १ । इत्यण् । ङीप् च ।) दुग्धिका । इत्यमरः
।
२ । ४ । १०० ॥ तत्पर्य्यायः । ग्राहिणी २
कच्छरा ३
ताम्रमूला ४ मरूद्भवा ५ । इति रत्नमाला ॥ द्वे
क्षीरायि इति ख्यातायाम् । इयञ्च
वकुलपत्रतुल्य-
पत्रा लताछेदे क्षीरं स्रवतीति सुभूतिः । तन्मते
दुदिया कौँगा इति ख्यातायामित्यनुमीयते । द्वे
क्षीरकाकोल्यामिति स्वामी । क्षीरमवति रक्षति
क्षीरावी अव रक्षे षण् ईप् । दुग्धमस्त्यस्याः
दुग्धिका विकारसंघेति ष्णिकः । इति भरतः ॥
अन्यद्दुग्धिकाशब्दे द्रष्टव्यम् ॥

**क्षीराह्वः**, पुं, (क्षीरं आह्वयते स्पर्द्धते इति । ह्व

+ कः ।) सरलवृक्षः । इति त्रिकाण्डशेषः ॥

**क्षीरिका**, स्त्री, (क्षीरवत् स्वादोऽस्त्यस्य इति ठन् ।)

क्षीरीवृक्षः । क्षीरखर्ज्जूर इति पिण्डखर्ज्जूर इति
च केचित् । तत्पर्य्यायः । राजादनः २
फलाध्यक्षः
३ । इत्यमरः । २ । ४ । ४५ ॥ राजातनः ४
राजादन-
फलम् ५ अध्यक्षम् ६ मधुका ७ क्षीरवृक्षः ८
पलाशो ९ पर्क्कटप्रियः १० गुरुस्कन्धः ११
श्लेष्मला
१२ आतपली १३ वृषा १४ मौलिकाजाली १५
।
इति भरतधृतवाचस्पतिः ॥ क्षीरिवृक्षः १६
वानर-
प्रियः १७ । इति रत्नमाला ॥ राजन्यः १८
प्रिय-
दर्शनः १९ दृढस्कन्धः २० कपीठः २१ । इति
जटा-

| | | |
|---|---|---|
| | सरति प्राप्नोति कारणत्वेन इति । क्षीर + सृ + "कर्म्मण्यण्" । ३ । २ । १ । इति अण् ।) क्षीर-विशेषः । पालजिनु इति हिन्दी भाषा । तत्प-र्य्यायः । क्षीरसः २ । यथा, -- "ईषच्छलेष्मकरं गौल्यं पित्तघ्नं तर्पणं गुरु । पुष्टि चैवामिधा तस्य क्षीरसारस्त क्षीरसः" । इति राजनिर्घण्टः ॥ | |

धरः ॥ वरादनम् २२ क्षीरी २३ क्षीरी [न्] २४ ।
इति शब्दरत्नावली ॥ अस्याः फलगुणाः ।
"क्षीरिकायाः फलं पक्कं गुरु विष्टम्भि शीतलम् ।
कषायं मधुरं साम्लं नातिवातप्रकोपणम्" ॥
इति राजबल्लभः ॥ अपि च ।
"क्षीरिकायाः फलं वृष्यं बल्यं स्निग्धं हिमं गुरु ।
तृष्णामूर्च्छामदभ्रान्तिक्षयदोषत्रयास्रजित्" ॥
इति भावप्रकाशः ॥ अन्यत् राजादनीशब्दे द्रष्ट-
व्यम् ॥ * ॥ परमान्नम् । इति राजनिर्घण्टः ॥
("क्षीरिका मधुरा चैते फलवर्गे प्रकीर्त्तिताः" ॥
इति हारीते प्रथमस्थाने १० अध्याये ॥
परमान्नार्थे पर्य्यायाः पाकप्रकारश्चास्या यथा, --
"पायसं परमान्नं स्यात् क्षीरिकापि तदुच्यते ।
शुद्धेऽर्द्धपक्वे दुग्धे तु घृताक्तांस्तण्डुलान् पचेत् ॥
ते सिद्धाः क्षीरिका ख्याता ससिताज्ययुतोत्तमा" ॥
गुणाश्च यथा, --
"क्षीरिका दुर्ज्जरा प्रोक्ता वृंहणी बलबर्द्धिनी" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥)

**क्षीरिणी**, स्त्री, (क्षीरं क्षीरसदृशो निर्यासो-
ऽस्त्यस्य इति इनिः । ततः ङीप् ।)
वृक्षविशेषः ।
तत्पर्य्यायः । काञ्चनक्षीरी २ कर्षणी ३ पटुक-
र्णिका ४ तिक्तदुग्धा ५ हैमवती ६ हिमदुग्धा ७
हिमावती ८ हिमाद्रिजा ९ पीतदुग्धा १० यव-
चिच्ची ११ हिमोद्भवा १२ हैमी १३ हिमजा । १४ । अस्या गुणाः ।
"क्षीरिणी तिक्तशीता च रेचनी शोफतापनुत् ।
क्रमिदोषकफघ्नी च पित्तज्वरहरा परा" ॥
इति राजनिर्घण्टः ॥ * ॥ वराहक्रान्ता । इति

**क्षीरी**, [न्] पुं, (क्षीरं क्षीरवन्निर्यासोऽस्त्यस्य, इनिः ।)
क्षीरिकावृक्षः । इति शब्दरत्नावली ॥
(अस्य व्यवहारो यथा, कनकतैले ।
"कनकक्षीरी शैला भार्गी दन्तीफलानि मूलञ्च ।
जातिफलानि प्रवालसर्षपलशुनविडङ्गकरञ्जत्वक् ॥
सप्तच्छदार्कपल्लवमूलत्वङ्निम्बचित्रकास्फोताः ।
गुञ्जैरण्डवृहतीमूलकसुरसार्ज्जकफलानि ॥
कुष्ठं पाठामुस्तं तुम्बुरुमूर्व्वा वचा सषडग्रन्थाः ।
एडगजकुटजशिग्रुत्र्यूषणभल्लातकक्षवकाः ॥
हरितालमवाक्पुष्प्री तुत्थं कम्पिल्लकोऽमृतासङ्गः ।
सौराष्ट्रिकाससीसं दार्व्वीत्वक्सर्ज्जिकालवणम् ॥
कल्कैरेतैस्तैलं करवीरकमूलकपल्लवकषाये ।
सार्षपमथवा तैलं गोमूत्रचतुर्गुणं साध्यम् ॥
स्थाप्यं कटुकालावूनि तत्सिद्धं तेनास्य मण्डलान्यास्त ।
भिन्द्याद्भिषगभ्यङ्गात् क्रिमींश्च कण्डूं विनिहन्यात्" ॥
इति कनकतैलम् ॥ इति चरके चिकित्सास्थाने सप्तमेऽध्याये ॥
यथा, मनुः । ८ । २४६ ।
"सीमावृक्षांश्च कुर्व्वीत न्यग्रोधाश्वत्थकिंशुकान् ।
शाल्मलीन् शालतालांश्च क्षीरिणश्चैव पादपान्" ॥)
दुग्धिका । इति शब्दचन्द्रिका ॥ स्नुही । अर्क-
वृक्षः । राजादनी । दुग्धपाषाणः । वटः । प्लक्षः ।
(अस्य पर्य्याया यथा, --
"वटो रक्तफलः शृङ्गी न्यग्रोधः स्कन्धजो ध्रुवः ।
क्षीरी वैश्रवणो वासो बहुपादो वनस्पतिः" ॥
इति भावप्रकाशस्य पूब्बखण्डे प्रथमे भागे ॥)
सोमलता । स्यालीवृक्षः । इति राजनिर्घण्टः ॥

**क्षीरी**, स्त्रीं, (क्षीर + अस्त्यर्थे अच् गौरादित्वात्
ङीष् ।) क्षीरीवृक्षः । इति शब्दरत्नावली ॥
(पक्वान्नविशेषः । तस्य पाकप्रणाली यथा, --
"नारिकेलन्तनूकृत्य च्छिन्नं पयसि गोः क्षिपेत् ।
सिता गव्याज्यसंयुक्ते तत्पचेन्मृदुनाग्निना" ॥
अस्या गुणाश्च ।
"नारीकेलोद्भवा क्षीरी स्निग्धाशीतातिपुष्टिदा ।
गुर्व्वी सुमधुरा वृष्या रक्तपित्तानिलापहा" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥)

"मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम् ।
दानवैः सहिता भूत्वा मथध्वं क्षीरसागरम् ॥
अहञ्च तत्र साहाय्यं करिष्यामि दिवौकसः ।
भविष्यत्यमृतं तत्र तत्पानाद्बलवत्तराः ॥
भविष्यन्ति क्षणादेव अमृतस्य प्रभावतः ।
यूयं सर्व्वे महावीर्य्या भुञ्जिष्ठा रणविक्रमाः ॥
इन्द्राद्यास्तु महोत्साहाः स्थानलब्धा महानरीन् ।
ततो हि दानवान् जेतुं समर्था नात्र संशयः ॥
इत्युक्ता देवदेवेन देवाः सर्व्वे जगत्पतिम् ।
प्रणम्यागत्य निलयं सन्धिं कृत्वाथ दानवैः ॥
ओराब्धिमथने सर्व्वे चक्रुरुद्योगमुत्तमम् ।
बलिना चोद्धृतो राजन् मन्दराख्यो महागिरिः ॥
क्षीराब्धौ क्षेपितश्चैव तेनैकेन नृपोत्तम ! ।
सर्व्वौषधिश्च प्रक्षिप्ता देवैर्दैत्यैः पयोदधौ ॥
वासुकिश्च ततस्तत्र राजन् ! नारायणाज्ञया ।
सर्व्वदेवहितार्थाय विष्णुश्च स्वयमागतः ॥
ततो विष्णुसमादेशात्तत्र सर्व्वे सुरासुराः ।
समेत्य मित्रभावेन क्षीराब्धेस्तटमाश्रिताः ॥
मन्थानं मन्दरं कृत्वा नेत्रं कृत्वाथ वासुकिम् ।
ततो मथितुमारब्धा नृपते ! तरसाऽमृतम् ॥

शब्दचन्द्रिका ॥ कुटुम्बिनी । काश्मरी । दुग्धिका ।
इति च राजनिर्घण्टः ॥
(व्यवहारोऽस्या यत्र तद्यथा ।
“तथादन्तीद्रवन्त्योः
स्यादजशृङ्ग्यजगन्धयोः ।
क्षीरिण्या नीलिकायाश्च तथैव च करञ्जयोः ॥
ससूरविदलायाश्च प्रत्यक् श्रेण्यास्तथैव च ।
विडङ्गार्द्धा शकल्केन तद्वत् साध्यं घृतं पुनः ।
शङ्खिनी सप्तलाधात्री कषाये साधयेद्घृतम्” ॥
इति कल्पस्थाने ११ अध्याये चरकेणोक्तम् ॥)

**क्षीरिवृक्षः**, पुं, (क्षीरी क्षीरयुक्तः वृक्षः ।) क्षीरयुक्त-

पञ्चप्रकारवृक्षः । यथा, --
“न्यग्रोधोदुम्बराश्वत्थपारिशप्लक्षपादपाः ।
पञ्चैते क्षीरिणो वृक्षास्तेषां त्वक्पञ्चलक्षणम्” ॥
केचित्तु पारिशस्थाने “शिरीषं वेतसं परे” ।
तदन्तीति शेषः । अस्य गुणाः ।
“क्षीरिवृक्षा हिमा वर्ण्या योनिरोगव्रणापहाः ।
रूक्षाः कषाया मेदोघ्ना विसर्पामयनाशनाः ।
शोथपित्तकफास्रघ्नाः स्तन्या
भग्नास्थियोजकाः” ॥
एषां त्वगुणाः ।
“त्वक्पञ्चकं हिमं ग्राहि व्रणशोथविसर्पजित्” ॥
तेषां पत्रगुणाः ।
“तेषां पत्रं हिमं ग्राहि कफवातास्रनुल्लघ ।
विष्टम्भाध्मानजित्तिक्तं कषायं लघुं लेखनम्” ॥
इति राजनिर्घण्टः ॥

**क्षीरीशः**, पुं, (क्षीरिणां क्षीरप्रधानानां वृक्षाणां

ईशः श्रेष्ठः ।) क्षीरकञ्चुकी । तत्पर्य्यायः । वरपर्णः २ स्नुक्छदः ३ कुष्ठनाशनः ४ बल्यः ५ मूलकमूला
६ खसकन्धः ७ कञ्चुकी ८ । इति रत्नमाला ॥

**क्षीरेयी**, स्त्री, (क्षीर + बाहुलकात् ढञ् ततो ङीप् ।

यद्वा, क्षीरेण ईं शोभां यातीति । या + कः गौरादित्वात् ङीष् ।) पायसम् । यथा, --
“क्षीरेयी पायसं प्रोक्तं परमान्नञ्च सूरिभिः” ॥
इति हलायुधः ॥

**क्षीरोदः**, पुं, (क्षीर + “उदकस्योदः संज्ञायाम्” ।

६ । ३ । ५७ । “उत्तरपदस्य चेति व्यक्तव्यम्” ।
इति वार्त्तिकम् ।) दुग्धसमुद्रः । इत्यमरः । १ । १० । २ ॥
(यथा, महाभारते । १३ । १४ । ३५३ ।
“अक्षयं यौवनं तेऽस्तु तेजश्चैवानलोपमम् ।
क्षीरोदसागरश्चैव यत्र यत्रेच्छसि प्रियम्” ॥)
तस्य मन्थनं यथा, --

विष्णुना मुखभागे तु वासुकेर्दानवाः कृताः ।
देवास्य पुच्छभागे तु मन्थनार्थं नियोजिताः ॥
एवन्तु मन्थनात्तत्र मन्दरोऽथ प्रविश्य वै ।
आधारेण विना राजंस्तं दृष्ट्वा सहसा हरिः ॥
सर्व्वलोकहितार्थाय कूर्म्मरूपमधारयत् ।
आत्मानं संप्रवेश्याथ मन्दरस्य गिरेरधः ॥
प्रविश्य धृतवान् शैलं पृथग्रूपेण केशवः ।
उपर्य्याक्रान्तवान् शैलं पृथग्रूपेण केशवः ॥
चकर्ष नागराजानं देवैः सार्द्ध जनार्द्दनः ।
असुरैरदृश्यरूपेण दैत्यमध्ये च केशवः ॥
ततस्ते तु त्वरायुक्ता ममन्थुः क्षीरसागरम् ॥
यावच्छक्त्या नृपश्रेष्ठ ! बलवन्तः सुरासुराः ॥
मथ्यमानात् ततस्तस्मात् क्षीराब्धेरभवन्नृप ।
कालकूटमिति ख्यातं विषमत्यन्तदुःसहम् ॥
तन्नागा जगृहुः सर्व्वे तच्छेषं शङ्करोऽग्रहीत् ।
नारायणाज्ञया तेन नीलकण्ठत्वमाप्नुयात् ॥
ऐरावतश्च नागेन्द्रो हयश्चोच्चैःश्रवाः पुनः ।
द्वितीयावर्त्तनाद्राजन्नुत्पन्नावितिनः श्रुतम् ॥
तृतीयावर्त्तनादप्सरोगणोजातः सुशोभनः ।
चतुर्थात् पारिजातश्च उत्पन्नः स महातरुः ॥
पञ्चमात् हिमगुस्तस्मात् उत्थितः क्षीरसागरात् ।

| | | |
|---|---|---|
| | | तं भवः शिरसा धत्ते नारी च स्वस्तिको नृप ॥<br>नानाविधानि रत्नानि दिव्यान्याभरणानि च ।<br>क्षीरोदधेस्तूत्थितानि गन्धर्व्वाश्च सहस्रशः ॥<br>एतान् दृष्ट्वा तदोत्पन्नान् नित्याश्चर्य्यसमन्विताः ।<br>अभवन् जातहर्षास्ते तत्र सर्व्वे सुरासुराः ॥<br>दैवपक्षे ततो मेघाः सत्यं वर्षन्ति संस्थिताः ।<br>कृष्णाज्ञया तु वायुस्तु सुखं वाति सुरान् प्रति ॥<br>विषनिश्वासवात्तेन वासुकेश्चार्कतापनात् ।<br>निस्तेजसोऽभवन् दैत्या निर्व्वीर्य्याश्च महामते ॥<br>ततः श्रीरुत्थिता तस्मात् क्षीरोदोद्धृतपङ्कजा ।<br>विभ्राजमाना राजेन्द्र ! दिशः सर्व्वाः स्वतेजसा ॥ |

ततस्तीर्थोदकैः स्नाता दिव्यवस्त्रैरलङ्कृता
।
दिव्यगन्धानुलेपैस्तु सुमनोभिः सुपूजिता ॥
देवपक्षं समासाद्य स्थिता क्षणमरिन्दम ! ।
हरिवक्षःस्थलं प्राप्ता ततः सा कमलालया
॥
ततोऽमृतघटं पूर्णं गृहीत्वा पयसोनिधेः ।
धन्वन्तरिः समुत्तस्थौ ततः प्रीताः सुरा
नृप ॥
दैत्याः श्रिया परित्यक्ता दुःखितास्तत्र ते
पुनः ।
आदायामृतघटं शीघ्रं ते च जग्मुर्यथेच्छया
॥
ततः स्त्रीरूपमकरोद्विष्णुर्देवहिताय वै ।
आत्मानं नृपशार्दूल ! नार्य्या लक्षणसंयुतम्
॥
ततो जगाम भगवान् स्त्रीरूपेण सुरान् प्रति
।
दिव्यरूपान्तु तां दृष्ट्वा मोहितास्ते सुरद्विषः
॥
अमृतपूर्णं घटं भूमौ हैमं संस्थाप्य सत्तम ।
कामेन पीडिता ह्यासन्नसुरास्तत्र तत्क्षणात्
॥
मोहयित्वा तु तानेवमसुरानवनीषते ! ।
अमृतभाजनमादाय देवेभ्यः प्रददौ हरिः ॥
तत् पीत्वा तु ततो देवा देवदेवप्रसादतः ।
बलवन्तो महावीर्य्या रणे जग्मुर्महासुरान्"
॥
इति नृसिंपुराणे ३६ अध्यायः ॥

**क्षीरोदतनया**, स्त्री, (क्षीरोदस्य क्षीरसमुद्रस्य त-
नया ।) लक्ष्मीः । इति हेमचन्द्रः ॥ (अस्या
उत्पत्ति-
कथा क्षीरोदशब्दे द्रष्टव्या ॥)

**क्षीरोदतनयापतिः**, पुं, (क्षीरोदतनयाया लक्ष्म्याः
पतिः ।) विष्णुः । इति कविकल्पलता ॥

**क्षीरोदनन्दनः**, पुं, (क्षीरोदस्य दुग्धसमुद्रस्य
नन्दनः ।) चन्द्रः । इति शब्दरत्नावली ॥

**क्षीव**, ऋ ङ दर्पे ॥ इति कविकल्पद्रुमः । (म्बां-
तम् । (अभ्यस्तम् । यथा, रघौ । १ । १७ ।
"रेखामात्रमपि क्षुण्णादामनोर्वर्त्मनः परम्" ॥
माघे च । १ । ३२ ।
"उदीर्णरागप्रतिरोधकं जनै-
रभीक्ष्णमक्षुण्णतयातिर्दुर्गमम् ।
उपेयुषो मोक्षपथं मनस्विन-
स्त्वमग्रभूमिर्निरपायसंश्रया" ॥)
चूर्णीकृतम् । इति जटाधरः ॥
(यथा, मार्कण्डेयपुराणे । ८३ । २४-२५ ।
"सोऽपि कोपान्महावीर्य्यः क्षुरक्षुण्णमहीतलः ।
शृङ्गाभ्यां पर्व्वतानुच्चांश्चिक्षेप च ननाद च ॥
वेगभ्रमणविक्षुण्णा मही तस्य व्यशीर्य्यत" ॥)

**क्षुत्**, स्त्री, (क्षु शब्दे क्षुते च + सम्पदादित्वात् भावे
क्विप् तुगागमश्च ।) क्षुतम् । इत्यमरः । २ । ६ ।
५२ ॥
(धान्यविशेषः । देधान इति लोके । अस्य प-
र्य्याया यथा, वैद्यकरत्नमालायाम् ।
"क्षुतुघुल्वञ्चो गोजिह्वा च गुन्द्रागुल्मा गवेधुका" ॥)

**क्षुत्**, [ध्] स्त्री, (क्षुध् + सम्पदादित्वात् भावे
क्विप् ।) क्षुधा । इत्यमरः । २ । ९ । ५४ ॥
(यथा, मार्कण्डेयपुराणे । ८ । ३५ ।
"तात ! तात ! ददस्वान्नमम्बाम्ब ! भोजनं दद ।
क्षुन्मे बलवती जाता जिह्वाग्रं शुष्यते तथा" ॥)

**क्षुतं**, क्ली, (क्षु शब्दे क्षुते च + भावे क्तः ।) ना-
सिकाभिघातजन्यसशब्दवायुनिःसरणम् । हाँची
इति भाषा । तत्पर्य्यायः । क्षुत् २ क्षवः ३ ।
इत्यमरः । २ । ६ । ५२ ॥ क्षुता ४ छिक्का ५
क्षवथुः ६ क्षुतः ७ । इति शब्दरत्नावली ॥ हञ्छिः
८ । इति जटाधरः ॥ * ॥ तस्य शकुनानि यथा, -
-
"अथ क्षुताख्यं शकुनं क्रमेण
महाप्रभावं प्रतिभावयामः ।
नश्यन्ति यस्माच्छकुनाः समस्ता
मृगाधिनाथादिव वन्यसत्त्वाः ॥
सर्व्वस्य सर्व्वत्र च सर्व्वकालं
क्षुतं न कार्य्यं क्वचिदेव शस्तम् ।
यातुः क्षुते तेन न किञ्चिदेव
कुर्य्यात् क्षुतं प्राणहरञ्च गन्तुः ॥
निषेधमग्रेऽक्षिणि दक्षिणे च
आद्यन्तयोर्न स्वजने प्रशस्त
क्षुतं प्रशंसन्ति न भोजनादौ
भवेत् कथञ्चिद्यदि भोजनान्ते
भवेत्तदाग्रे न हि भोज्यलाभः ॥
आदौ क्षुतञ्चेत् शकुनैस्ततः किं
जातानजातान् शकुनान्निहन्ति ।
क्षुतं क्षणेनात्र न संशयोऽस्मिन्
प्रयोजने यत्नकृतेऽपि जातम् ॥
क्षुतं क्षणात्तद्विनिहन्त्यवश्यं
कार्य्यात्मकेनापि मनागपीदम् ॥
तस्मादुपेक्ष्यं न विचक्षणेन
क्षुतं यतश्चाशु फलं विधत्ते" ॥
इति वसन्तराजशाकुने क्षुत्प्रकरणं
तृतीयम् ॥
अपि च ।
"छिक्काया लक्षणं वक्ष्ये लभेत् पूर्ब्बे
महाफलम् ।
आग्नेये शोकसन्तापौ दक्षिणे
हानिमाप्नुयात् ॥
नैरृत्ये शोकसन्तापौ मिष्ठान्नञ्चैव
पश्चिमे ।
अन्नं प्राप्नोति वायव्ये उत्तरे कलहो
भवेत् ।
ईशाने मरणं प्रोक्तं प्रोक्तं
छिक्काफलाफलम्' ॥
इति गारुडे ज्योतिश्चक्रे ६० अध्यायः
॥ * ॥
अन्यच्च । वर्षकृत्ये ।
"वित्तं ब्रह्मणि कार्य्यसिद्धिरतुला शक्रे
हुताशे भयं
याम्यामग्निभयं सुरद्विषि कलिर्लाभः
समुद्रालये ।
वायव्यां वरवस्त्रगन्धसलिलं दिव्याङ्गना
चोत्तरे
ऐशान्यां मरणं ध्रुवं निगदितं दिग्लक्षणं
खञ्जने ॥
ज्यैष्ठीरुते क्षुतेऽप्येवमूचुः केचिच्च
कोविदाः" ॥
इति ॥ * ॥ क्षुते जीवेति प्रयोगः
कर्त्तव्यः । यथा,

आत्मं-अकं-सेट् ।) ऋ, अचिक्षीवत् । ङ, क्षीवते ।
इति दुर्गादासः ॥

**क्षीव**, निरासे । इति कविकल्पद्रुमः ॥ (भ्वां--परं-
सकं-सेट् ।) निरास इह फुत्कारः । इति भट्ट-
मल्लः ॥ मुखेन श्लेष्मादेर्व्वमनमिति केचित् । क्षीव-
त्यन्नं लोकः । इति दुर्गादासः ॥

**क्षीवः**, त्रि, (क्षीवृ ङ मदे + क्तः । "अनुपसर्गात्
फुल्लक्षीवेति" । ८ । २ । ५५ । तलोपो निपात
नात् ।) सुरामत्तः । यथा । "मत्ते शौण्डोत्कट-
क्षीवाः" । इत्यमरः । २ । २ । २३ ॥ दन्त्योष्ठ-
वकारान्तोऽयम् ॥
(यथा, रामायणे । ५ । ६० । १२ ।
"उन्मत्तभूताः प्लवगा मधुपानप्रहर्षिताः ।
क्षीवाः कुर्व्वन्ति हास्यं च कलहांश्च तथाऽपरे" ॥)

**क्षु**, दु ल क्षुते । इति कविकल्पद्रुमः ॥ (अदां-परं-
अकं-सेट् ।) क्षुतं हाँची इति ख्यातम् । टु,
क्षवथुः । ल, क्षौति कफी । कृतकं कामिनि
चुक्षुवे मृगाक्ष्या । इति माघे । इति दुर्गादासः ॥

**क्षुः**, पुं, (क्षणोति हिनस्ति जीवान् इति । क्षण्
हिंसायां + डुः ।) सिंहः । इत्येकाक्षरकोषः ॥

**क्षुणः**, पुं, (क्षु + नक् ।) अरिष्टवृक्षः । यथा, --
"अरिष्टो वस्तिकर्म्माढ्यो वेणीवः फेनिलः क्षुणः" ।
इति शब्दचन्द्रिका ॥ (अरिष्टशब्देऽस्य विवरणं
ज्ञातव्यम् ॥)

**क्षुण्णं**, त्रि, (क्षुद् संपेषणे + कर्म्मणि क्तः ।) प्रह-

धनक्षयं दक्षिणकर्णदेशे ।
तत् पृष्ठभागे कुरुतेऽर्थवृद्धिं
क्षुतं कदाचित् शुभमादधाति ॥
भोगाय वामश्रवणस्य पृष्ठे
कर्णे च वामे कथितं जयाय ।
सर्व्वार्थलाभाय च वामनेत्रे
जातं क्षुतं स्यात् क्रमशोऽष्टधैव ॥
क्रमान्निषेधं गमनस्य विघ्नं
कलिं समृद्धिं क्षुतमुग्ररोगम् ।
करोति रोगक्षयमर्थलाभं
दीप्त्यादिनाशञ्च क्षुतं करोति ॥
प्रागास्य पुंसः परतोऽपरा स्यात्
पुनः पुनर्व्वा तत एव जातः ।
वृद्धाच्छिशोर्व्वा कफतो हठाद्वा
जातं क्षुतं केऽपि वदन्ति सत्यम् ॥

मदनपारिजातधृतम् ।
"जीवेति क्षुवतो ब्रूयात्
जीवेत्युक्तस्त्वया सह" ॥
इति ॥ * ॥
"क्षुतोत्पतनजृम्भासु
जोवोत्तिष्ठाङ्गुलिध्वनिः ।
शत्रोरपि च कर्त्तव्यमन्यथा ब्रह्महा भवेत्" ॥
इति च तिथ्यादितत्त्वम् ॥ * ॥ तस्य शुभजन-
कत्वम् । यथा, दाक्षिणात्यास्तु ।
"आसने शयने दाने भोजने वस्त्रसंग्रहे ।
विवादे च विवाहे च क्षुतं सप्तसु शोभनम्" ॥
अन्यत्र विष्णोरित्यधिकृत्य विष्णुधर्म्मोत्तरम् ।
"नामसंकीर्त्तनं नित्यं क्षुतप्रस्खलितादिषु ।
वियोगं शीघ्रमाप्नोति सर्व्वानर्थो न संशयः" ॥
इति ॥ * ॥ असंवृतमुखस्य क्षुन्निषेधो यथा, --
विष्णुधर्म्मोत्तरे ।
"नासंवृतमुखः कुर्य्याद्धास्यं जृम्भां तथा क्षुतम्" ।
इति ॥ * ॥ क्षुते आचमनं कर्त्तव्यं यथा । याज्ञ-
वल्क्यः ।
"स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे ।
आचान्तः पुनराचामेत् वासोविपरिधाय च" ॥
इति ॥ * ॥ अशक्तौ स्मृतिः ।
"क्षुते निष्ठीविते सुप्ते परिधानेऽश्रुपातने ।
कर्म्मस्थ एषु नाचामेद्दक्षिणं श्रवणं स्पृशेत्" ॥
इति च उद्वाहतत्त्वम् ॥ * ॥ बलिनां सकृत् क्षुतं
भवति यथा, --
"क्रूरे दक्षिणवक्रा स्याद्बलिनाञ्च क्षतं सकृत्" ।

दक्षिणवक्रेति नासाविशेषणम् । इति च गारुडे
६६ अध्यायः ॥

**क्षुतः**, पुं, (क्षु + क्तः । आभिधानात् पुंस्त्वम् ।) क्षुतम् । इति शब्दरत्नावली ॥

**क्षुतकः**, पुं, (क्षुताय साधुरिति कन् स्वार्थे वा ।) राजिका । इति राजनिर्घण्टः ॥

**क्षुता**, स्त्री, (क्षुत + टाप् ।) क्षुतम् । इति शब्द-रत्नावली ॥

**क्षुताभिजननः**, पुं, (क्षुतं अभिजनयति । अभि + जन् + णिच् + ल्युः ।) कृष्णसर्षपः । इत्यमर-
टीकायां स्वामी ॥

**क्षुत्करी**, स्त्री, (क्षुतं करोतीति । कृ + टः + ङीप् च ।) कङ्कालिका । यथा,
शब्दचन्द्रिकायाम् ।
"भुजङ्गघातिनी सूरिः सर्पाक्षी क्षुत्करी स्पृहा" ॥

**क्षुद**, ञ ध औ इर् क्षुदि । इति कविकल्पद्रुमः ॥
(रुधां--उभं--सकं--अनिट् ।) ञ ध,
क्षुणत्ति क्षुन्ते ।
औ, क्षोत्ता । इर्, अक्षुदत् अक्षौत्सीत् ।
क्षुदि
चूर्णीकरणे । इति दुर्गादासः ॥ (यथा,
भट्टिः ।
१४ । ३३ ।
"मित्रघ्नस्य प्रचुक्षोद गदयाङ्गं
विभीषणः ।
सुग्रीवः प्रघसं नेभे बहूंन्नामस्ततर्द्द च"
॥)

**क्षुद्**, [ध्] स्त्री, (क्षुध् + सम्पदादित्वात् भावे क्विप् ।)
क्षुधा । इत्यमरः । २ । ९ । ५४ ॥
(विष्णुपुराणे । १ । ५ । ३९ ।
"रजोमात्रात्मिकामेव ततोऽन्यां जगृहे
तनुम् ।

**क्षुद्रकम्बुः**, पुं, (क्षुद्रश्चासौ कम्बुश्चेति ।) क्षुद्रशङ्खः ।
तत्पर्य्यायः । शङ्खनखः २ क्षुल्लकः ३ ।
इति
हेमचन्द्रः ॥

**क्षुद्रकारवेल्ली**, स्त्री, (क्षुद्रा कारवेल्ली ।) कारवेल्ल-
विशेषः । छोट करला इति भाषा ।
तत्पर्य्यायः ।
कुडहुञ्ची २ श्रीफलिका ३ प्रतिपत्रफला ४
सुषवी ५ कारवी ६ बहुफला ७ क्षुद्रकार-
लिका ८ कन्दफला ९ । कन्दफलास्थाने
कन्दलता
इति च पाठः । अस्या गुणाः । कटुत्वम् ।
उष्ण-
त्वम् । तिक्तत्वम् । रुचिकारित्वम् ।
दीपनदत्वम् ।
रक्तानिलदोषकारित्वम् । पथ्यत्वञ्च ।
तत्फल-
स्याप्येते गुणाः ॥ तत्कन्दगुणाः ।
अर्शोनाशि-
त्वम् । मलरोधविशोधनत्वम् ।
योनिनिर्गतदोष-
गर्भस्रावविषापहत्वञ्च । इति राजनिर्घण्टः
॥

**क्षुद्रकारलिका**, स्त्री, (क्षुद्रा कारलिका ।) क्षुद्र-
कारवेल्ली । इति राजनिर्घण्टः ॥

**क्षुद्रकुलिशः**, पुं, (क्षुद्रः कुलिशः वज्रमणिविशेषः ।
नित्यकर्म्मधारयः ।) वैक्रान्तमणिः । इति
राज-
निघण्टः ॥

**क्षुद्रकुष्ठं**, क्ली, (क्षुद्रं अल्पं कुष्ठम् ।) स्वल्पकुष्ठरोगः ।
तत्तु एकादशविधम् । यथा ।
क्षुद्रकुष्ठान्याह ।
"एककुष्ठं १ स्मृतं पूर्ब्बं गजचर्म्म २ ततः
परम् ।
ततश्चर्म्मदलं ३ प्रोक्तं ततश्चापि
विचर्च्चिका ४ ॥

भावेऽपि स्वेदः । अथवा घर्म्मादिप्रसङ्गेऽपि स्वेदा-
भावः । त्वचि स्वापः स्पर्शाज्ञता । शीघ्रोत्पत्तिः
शीघ्रा उत्पत्तिर्व्रणानामित्यन्वयः ॥ * ॥ सम्प्राप्ति-
पूर्ब्बकं सामान्यं लक्षणमाह ।
"शिराः प्रपद्य तिर्य्यक् च त्वग्लसीकासृगामिषम् ।
दूषयन्ति श्लथीकृत्य निश्चरन्तो वहिस्ततः ॥
त्वचः कुर्व्वन्ति वैवर्ण्यं दोषाः कुष्ठमुषन्ति तत्" ॥

तिर्य्यक् तिर्य्यग्गताः शिराः प्रपद्येत्यन्वयः
॥ * ॥

येनोल्वणेन दोषेण यत् कुष्ठं समुत्पद्यते तदाह ।
"वातेन कुष्ठं कापालं पित्तेनौडुम्बरं कफात् ।
मण्डलाख्यं विचर्च्ची च ऋक्षाख्यं वातपित्ततः ॥
चर्म्मैककुष्ठकिटिभसिध्मालसविपादिकाः॥
वातश्लेष्मोद्भवाः पित्तकफात् दद्रुशतारुषी ॥
पुण्डरीकं सविस्फोटं पामा चर्म्मदलन्तथा ।
सर्व्वैरेवोल्वणैर्दोषैराहुः काकणकं बुधाः" ॥
विचर्च्ची च कफादित्यन्वयः ॥
"पुण्डरीकं सविस्फोटं पामा चर्म्मदलन्तथा" ॥
पित्तकफादित्यन्वयः ॥ * ॥ अथ क्षुद्रकुष्ठानां
मध्ये एककुष्ठस्य लक्षणमाह ।
"अस्वेदनं महावास्तु यन्मत्स्यशकलोपमम् ।
तदेव कुष्ठंचर्म्माख्यं बहुलं हस्तिचर्म्मवत्" ॥

महावास्तु महास्थानम् ।
मत्स्यशकलोपमं अत्र

शकलशब्देन लक्षणया त्वचमुच्यते । तेन चक्रा-
कारमभ्रकपत्रसदृशं भवति । एककुष्ठमितिक्षुद्र-
कुष्ठेषु मुख्यत्वात् ॥ * ॥ गजचर्म्माह ।
"चर्म्माख्यं बहुलं हस्तिचर्म्मवत् रूक्षं कृष्णं च" ।
गजचर्म्माख्यं बहुलं स्थूलं हस्तिचर्म्मवत् रूक्षं
कृष्णञ्च ॥ २ ॥ चर्म्मदलमाह ।
"रक्तं सशूलं कण्डूमत् सस्फोटं दलयत्यपि ।
तच्चर्म्मदलमाख्यातं संस्पर्शासहमुच्यते" ॥
दलयत्यपि विदारयत्यपि चर्म्मेति शेषः ॥ * ॥
विचर्च्चिकामाह ।
"सकण्डूः पिडका श्यावा बहुस्रावा विचर्च्चिका"
पिडका क्षुद्रपिडका ॥ * ॥ ननु क्षुद्रकुष्ठानां कथ-
मेकादशत्वम् । विपादिकया द्वादशत्वसम्भवात्
उच्यते । विचर्च्चिकैव पादयोर्भवति विदारण-

ततः क्षुद् ब्रह्मणो जाता जज्ञे कोपस्तया ततः” ॥)

**क्षुदः**, पुं, (क्षुद् + “इगुपधज्ञाप्रीकिरः कः” । ३ । १ । १३५ । इति कः ।) तण्डुलादिचूर्णम् । क्षुद् इति भाषा ॥

**क्षुद्रः**, पुं, (क्षुदि + “स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदीति” । उणां । २ । १३ । इति रक् ।) तण्डुलावयवः । इति मंक्षिप्तसारोणादिवृत्तिः ॥ डहुः । इति शब्दरत्नावली ॥ (मक्षिकाविशेषः । यदुक्तम् ।
“मक्षिकाः कपिलाः सूक्ष्माः क्षुद्राख्यास्तत्कृतं मधु ।
मुनिभिः क्षौद्रमित्युक्तं तद्वर्णात् कपिलं भवेत्” ॥)

**क्षुद्रः**, त्रि, (क्षुद् + “स्फायितञ्चीति” उणां । २ । १३ । इति रक् ।) कृपणः । अधमः । (यथा, कुमारे । १ । १२ ।
“क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वभुच्चैः शिरसां सतीव” ॥
तुच्छः । यथा, गीतायाम् । २ । ३ ।
“क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोतिष्ठ परन्तप !” ॥)
क्रूरः । अल्पः । इत्यमरमेदिनीकरौ ॥ (यथा, महाभारते । ३ । आरण्ययात्रापर्व्वणि । १० । २४ ।
“तं भीमः समरश्लाघी बलेन बलिनाम्बरः ।
जघान पशुमारेण व्याध्रः क्षुद्रमृगं यथा” ॥)
दरिद्रः । इति हेमचन्द्रः ॥

**क्षद्रकण्टकारी**, स्त्री, (क्षुद्रः कण्टकारी ।) अग्निदमनी । इति राजनिर्घण्टः ॥

**क्षुद्रकण्टकी**, स्त्री, (क्षुद्रं कण्टकं यस्याः । गौरा-

विपादिकाभिधा ५ स्यैव पामाकच्छू--६ स्ततः परा ।
ततो दद्रुश्च ७ विस्फोटः ८ किटिभञ्च ९ ततः परम् ॥
ततश्चालसकं १० प्रोक्तं शतारुश्च ११ ततः परम् ।
क्षुद्रकुष्टानि चैतानि कथितानि भिषग्वरैः” ॥
ननु दद्रोः कथं क्षुद्रकुष्ठेषु गणना सुश्रुतेन महाकुष्ठेषूक्तत्वात् । उच्यते । असिता च गाढमूला दद्रुः मुश्रुते महाकुष्ठेपूक्ता असितेतरा नवगाढमूला दद्रुः क्षुद्रकुष्ठमेव । एवं विधाया दद्रोश्चरकेण क्षुद्रकुष्ठेषु दर्शितत्वात् ॥ * ॥ कुष्ठानां त्रिदोषजत्वेनैकत्वे त्रिदोषस्योल्वणतया सप्तधात्वमाह ।
“सर्व्वेष्वपि त्रिदोषेषु व्यपदेशाधिकत्वतः ।
कुष्ठानि सप्तधा दोषैः पृथग्द्वन्द्वं समागतैः” ॥

सर्व्वेष्वपि कुष्ठेषु त्रिदोषजेषु सत्सु व्यपदेशा

धिकत्वतः व्यपदेशः कापालादिसंज्ञास्तेषामष्टादशत्वरूपं यदधिकत्वं ततः कुष्ठानि सप्तधा । कैर्दोषैः कथम्भूतैः पृथग्द्वन्द्वं समागतैः । समागतैः सङ्गतैम्मिलितैरिति यावत् । अस्यायमर्थः ।

किमपि कुष्ठंवातोल्वणं किमपि पित्तोल्वणं कि-

मपि कफोल्वणं किमपि वातपित्तोल्वणं किमपि वातश्लेष्मोल्वणं किमपि पित्तश्लेष्मोल्वणं किमपि त्रिदोषोल्वणमिति ॥ * ॥ पूर्ब्बरूपमाह ।

योगात् विपादिका तेन न सङ्ख्यातिरेकः । अतएव भोजः ।
“दाल्यते त्वक्खरा रूक्षा पाण्योर्ज्ञेया विचर्च्चिका ॥
पादे विपादिका ज्ञेयां स्थानभेदाद्विचर्च्चिका” ॥
दाल्यते विदार्य्यते । केचिद्विचर्च्चिकातो विपादिकां भिन्नमाहुः ।
“वैपादिकं पाणिपादस्फुटनं तीव्रवेदनम्” ॥
पाणिपादस्फुटनं पाण्योः पादयोश्च स्फटनं विदारणं येन तत् ॥ ४ ॥ पामामाह ।
“सूक्ष्मा बह्व्यः स्रावयत्यः प्रदाहाः
पामेत्युक्ता पिडकाः कण्डुमत्यः” ।
पिडकाः पीडयन्ति इति पिडका इति क्षिपकादित्वान्निपात्यते ॥ ५ ॥ कच्छूमाह ।
“सैव स्फोटैस्तीव्रदाहैरुपेता
ज्ञेया पाण्योः कच्छरुग्रा स्फिचोश्च” ॥

| | | |
|---|---|---|
| दित्वात् ङीष् ।) बृहती । इति भावप्रकाशः ।<br>क्षुद्रभण्टाकीति च पाठः ॥ | “अतिश्लक्ष्णः खरस्पर्शः स्वेदास्वेदौ विवर्णता ।<br>दाहःकण्डूस्त्वचि स्वापस्तोदः कोठोन्नतिः क्लमः ॥<br>व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः ।<br>रूढानामपि रूक्षत्वं निमित्तेऽल्पेऽपि केवलम् ।<br>रोमहर्षोऽसृजः कार्ष्ण्यं कुष्ठलक्षणमग्रजम्” ॥<br>अतिश्लक्ष्णः अतिमृदुः । अथवा खरः रूक्षः<br>कर्क्वशो वा स्पर्शः । स्वेदास्वेदौ घर्म्मादि सप्तसङ्गा- | |

सैव पामा । स्फोटैर्म्महद्भिः । स्फिचौ प्रोथौ
॥ ६ ॥
दद्रूमाह ।
“सकण्डूरागपिडकं दद्रूमण्डलमुद्गतम्” ॥
दद्रूमण्डलं भण्डलरूपेणोत्पद्यते ।
उद्गतमुच्छूनम्
॥ ७ ॥ विस्फोटमाह । “स्फोटाः श्यावारुणाभासा
विस्फोटाः स्युस्तनुत्वचः ॥ ८ ॥
किटिभमाह । “श्यावं
किणखरस्पर्शं परुषं किटिभं स्मृतम्” ।
किणखर-
स्पर्शं किणः शुष्कव्रणस्थानं तद्वत्
कर्क्कशस्पर्शम् ॥
परुषं रूक्षम् ॥ ९ ॥ अलसकमाह ।
“कण्डूमद्भिः सरागैश्च गण्डैरलसकञ्चितम्”
।
गण्डैर्म्महापिडकाभिः । चितं विचेष्टितम् ॥
१० ॥
शतारुषमाह ।
“रक्तं श्यावं सदाहार्त्तिशतारुः स्याद्बहुव्रणम्”
॥ ११ ॥
अथ सप्तधातुगतानां कुष्ठानां लक्षणमाह ।
तत्र
रसगतस्य लक्षणमाह ।
“त्वक्स्थे वैवर्ण्यमङ्गेषु कुष्ठे रौक्ष्यञ्च जायते ।
त्वक्स्वापो रोमहर्षश्च स्वेदस्यातिप्रवर्त्तनम्”
॥
त्वक्शब्देनात्र रस उच्यते । धातुप्रस्तावात्
त्वक्-
स्थाच्च । त्वक्स्वापः स्पर्शाज्ञत्वम् ।
त्वक्स्वाप इत्या-
दिकं केचिदत्र रक्तगतस्य लिङ्गं मन्यन्ते ॥ १
॥
रुधिरगतमाह ।
“कण्डूर्व्विपूयकश्चैव कुष्ठे शोणितसम्भवे” ॥
विपूयः विशेषेण पूयः ॥ २ ॥ मांसगतमाह ।
“बाहुल्यं रक्तशोषश्च । कार्कश्यं
पिडकोद्गमः ।

“खरं श्यावारुणं रूक्षं वातकुष्ठं सवेदनम्
।
पित्तात् प्रकुपितं दाहरागस्रावान्वितं
मतम् ॥
कफात् क्लेदि घनं स्निग्धं सकण्डू
शैत्यगौरवम् ।
द्विलिङ्गद्वन्द्वजं कुष्ठं त्रिलिङ्गं
सान्निपातिकम्” ॥
खरं कर्क्कशम् । श्यावारुणं श्यावं
चारुणञ्च । प्रकु-
पितं क्लेदपूतिबहुलम् । क्लेदि
आर्द्रतायुक्तम् ।
घनं पुष्टम् ॥ * ॥ साध्यत्वादिकमाह ।
“साध्यं त्वग्रक्तमांसस्थं
वातश्लेष्माधिकञ्च यत् ।
मेदोगं द्वन्द्वजं जाप्यं वर्ज्यं
मज्जास्थिसंश्रितम् ॥
कृमिकृद्दाहमन्दाग्निसंयुक्तं यत्त्रिदोषजम्”
।
वातश्लेष्माधिकञ्च यत् एतेन
सिद्ध्मैककुष्ठगजचर्म्म-
विपादिकाकिटिभालसकानिसाध्यानि ।
मज्ज-
प्रत्यासत्त्या शुक्रगतमप्यसाध्यम् ।
कृमिकृदाद्यपि
वर्ज्यमित्यन्वयः ॥ * ॥ अरिष्टमाह ।
“प्रभिन्नं प्रश्रुताङ्गञ्च रक्तनेत्रं हतस्वरम् ।
पञ्चकर्म्मगुणातीतं कुष्ठं हन्तीह कुष्ठिनम्”
॥
प्रभिन्नं विदीर्णम् । हतस्वरं घर्घरस्वरम् ।
पञ्च-
कर्म्मगुणातीतं
असंजाताचमनादिपञ्चकर्म्मगुणम् ॥
अथ त्वग्दृष्टिसाम्यात् कुष्ठभेदत्वाच्चात्रैव
श्वित्रमाह ।
“कुष्ठैकसम्भवं श्वित्रं किलासञ्चारुणं
भवेत् ।
निर्द्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयम्” ॥
कुष्ठैकसम्भवं कुष्ठेन सह एकस्तुल्यः
सम्भवो

गुह्यं मेहनं भगञ्च । तलमत्र पादतलम् । सुश्रुते-
नान्ते जातमिति सामान्यतो निर्द्दिष्टत्वात् । अ-
चिरन्तनं नवमपि ॥ * ॥ कुष्ठस्य संसर्गजत्वे
प्रस-
ङ्गेनान्यानपि संसर्गजान् रोगानाह ।
“प्रसङ्गात् गात्रसंस्पर्शात् निश्वासात्
सहभोजनात् ।
एकशय्याशनाच्चापि वस्त्रमाल्यानुलेपनात् ॥
कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च ।
औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरम्” ॥
प्रसङ्गात् प्रकर्षेण सङ्गः प्रसङ्गो मैथुनं तस्मात् ।
गात्रसंस्पर्शात् तर्हि मैथुनादिति विशेषार्थम् ।
वस्त्रमाल्यानुलेपनात् एकस्मादेव । शोषो यक्ष्मा
।
औपसर्गिकरोगाः शीतलादयः ॥ * ॥ सकुष्ठस्य
मृतस्य पुनर्जातस्यापि कुष्ठं भवतीत्याह ।
“म्रियते यदि कुष्ठेन पुनर्जातस्य तद्भवेत् ।
नातो निन्द्यतरो रोगो यथा कुष्ठं प्रकीर्त्तितम्” ॥
एतावता कुष्ठिनां कुष्ठं सर्व्वथा प्रतिकरणीयं न
तदुपेक्षणीयम् ॥
अथ कुष्ठस्य चिकित्सा ।
“वातोत्तरेषु सर्पिर्व्वमनं श्लेष्मोत्तरेषु कुष्ठेषु ।
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनञ्चेष्टम्” ॥
“पथ्याकरञ्जसिद्धार्थनिशावल्गुजसैन्धवैः ।
विडङ्गसहितैः पिष्टैर्लेपो मूत्रेण कुष्ठनुत्” ॥
अवल्गुजः वकुचीति लोके । पथ्यादिर्लेपः ॥ *
॥
“सोमराजीभवं चूर्णं शृङ्गवेरसमन्वितम् ।
उद्वर्त्तनमिदं हन्ति कुष्ठे रागकृतास्पदभ्” ॥
सोमराजी वकुचीति लोके । सोमराज्युद्वर्त्तनम्
॥
“रसायनं प्रवक्ष्यामि ब्रह्मणा यदुदाहृतम् ।
मार्कण्डेयप्रभृतिभिर्यत् प्रयुक्तं महर्षिभिः ॥ * ॥
पुष्पकाले तु पुष्पाणि फलकाले फलानि च ।
संगृह्य पिचुमर्द्दस्य त्वङ्गलानि दलानि च ॥
द्विरंशानि समाहृत्य भागिकानि प्रकल्पयेत् ।
त्रिफला त्र्युषणं ब्राह्मी स्वदंष्ट्रारुष्कराग्नयः ॥
विडङ्गसारवाराहीलोहचूर्णामृताःसमाः ।
निशाद्वयावल्गुजकव्याधिघाताःसशर्क्कराः ॥
कुष्ठमिन्द्रयवाः पाठा चूर्णमेषान्तु संयुतम् ।

तोदः स्फोटाः स्थिरत्वञ्च कुष्ठे
मांससमाश्रिते” ॥
बाहुल्यं कुष्ठस्य पुष्टिः । पिडकोद्गमः
क्षुद्रपिडको-
द्गमः । स्फोटाः बृहत्पिडकाः । स्थिरत्वं
अंश-
चारित्वम् ॥ ३ ॥ मेदोगतमाह ।
“कौण्यं गतिक्षयोऽङ्गानां सम्भेदः क्षतसर्पणम्
।
मेदःस्थानगते लिङ्गं प्रागुक्तानि तथैव च” ॥
कौण्यं हस्तनाशः । अङ्गानां सम्भेदः
अङ्गभङ्गः ।
क्षतसर्पणं क्षतप्रसरणम् । प्रागुक्तानि
रक्तमांस-
गतलिङ्गानि ॥ ४ ॥ अस्थिमज्जगतमाह ।
“नासाभङ्गोऽक्षिरोगश्च क्षतेषु कृमिसम्भवः ।
स्वरोपघातः पिडका भवेत्
कुष्ठेऽस्थिमज्जगे” ॥ ५ ॥ ६ ॥
शुक्रगतमाह ।
“दम्पत्योः कुष्ठबाहुल्याद्दुष्टशोणितशुक्रयोः ।
यदपत्यं तयोर्ज्जातं ज्ञेयं तदपि कुष्ठितम्” ॥
दम्पत्थोः
स्त्रीपुरुषयोर्द्दुष्टशोणितशुक्रयोर्य्यदपत्यं
तयोर्ज्जातमिति ॥ ८ ॥ * ॥ ननु
शुद्धशोणित-
शुक्रयोरेव
दम्पत्योर्गर्भसम्भवाद्दुष्टशोणितशुक्रयोः
कथमपत्योत्पत्तिः । यत आह सुश्रुतः ।
“कामान्मिथुनसंयोगे शुद्धशोणितशुक्रजः ।
गर्भः सञ्जायते नार्य्याः स जातो बाल
उच्यते” ॥
इति । अन्यच्च । वातादिदुष्टरेतसः
प्रजोत्पादने न
समर्थाः । इति । उच्यते । गर्भोऽत्र शुद्धो
बोद्धव्यः ॥
अशुद्धस्तु गर्भो दुष्टशोणितशुक्रयोरपि भवति
पङ्गुजन्मान्धबधिरादीनां सम्भवात् ।
शोणितमत्रा-
र्त्तवम् । कुष्ठितं कुष्ठं संजातमस्येति
तारकादि-
त्वादितच् । शुक्रार्त्तवगतं कुष्ठमपत्येन
व्यज्यते

निदानं यस्य तत् ॥ * ॥ श्वित्रस्य
भेदानाह । किलास-
ञ्चारुणं भवेत् । श्वित्रमेव रक्तमांसाश्रयात्
कि-
लासमरुणञ्च भवेदित्यर्थः ॥ * ॥ ननु
कुष्ठस्य
श्वित्रस्य च को भेद इत्यत आह ।
निर्द्दिष्टमपरि-
स्रावीति । श्वित्रमपरिस्रावि भवति
कुष्ठन्तु स्रावि
अथ च त्रिधातूद्भवसंश्रयमिति त्रयो
धातवो
वातपित्तकफास्तेभ्यः पृथग्भूतेभ्य उद्भवो
यस्य
तत् । अथ च त्रयो धातवो
रक्तमांसमेदांसि सं-
श्रयोऽधिष्ठानं यस्य तत् । कुष्ठं
सान्निपातिकं
सर्व्वधातुगतञ्च भवतीति भेदः ॥ * ॥
दोषभेदेन लक्षणभेदाणाह ।
“वाताद्रूक्षारुणं पित्तात्ताम्रं कमलपत्रवत् ।
सदाहं रोमविध्वंसि कफाच्छेतं घनं गुरु
॥
सकण्डूकं क्रमाद्रक्तं मांसमेदःसु चादिशेत्
।
वर्णे नैवेदृगुभयं कुष्ठं तच्चोत्तरोत्तरम्” ॥
अरुणमीषल्लोहितम् ।
कमलपत्रवदित्यनेन मध्ये
श्वेतमन्ते लोहितं बोधयति । घनं पुष्टम् ।
क्रमा-
द्रक्तं मांसमेदःसु चादिशेत् । तथा च
चरकः ।
“अरुणं रक्तगे वाते ताम्रं पित्ते पलं गते ।
श्वेतं श्लेष्मणि मेदःस्थे श्वित्रं कुष्ठं परं
परम्” ॥
उभयं द्विविधमपि श्वित्रं वर्णेन ईदृगेव
अरुणं
ताम्रं श्वेतञ्च । दोषभेदात् द्विविधं दोषजं
व्रण-
जञ्च । तथा च भोजः ॥ श्वित्रन्तु द्विविधं
विद्या-
द्दोषजं व्रणजं तथा” । इति ॥ * ॥
श्वित्रं साध्यमसाध्यञ्चाह ।

खदिरासननिम्बानां घनक्वाथेन भावयेत् ॥
सप्तधा पञ्चनिम्बन्तु मार्कवस्य रसेन च ।
स्निग्धः शुद्धतनुर्द्धीमान् योजयेत्तच्छुभे दिने ॥
मधुना तिक्तहविषा खदिरासनवारिणा ।
लेह्यमुष्णाम्भसा वापि कोलवृद्ध्या पलं भवेत्
॥
जीर्णे तस्मिन् सभश्नीयाद् स्निग्धं लधुहितञ्च
यत् ॥
विचर्च्चिकोदुम्बरपुण्डरीक-
कपालदद्रूकिटिभालसादि ।
शतारुविस्फोटविसर्पमालाः
कफप्रकोपं त्रिविधं किलासम् ॥
भगन्दरश्लीपदवातरक्त-
जडान्ध्यनाडीव्रणशीर्षरोगान् ।
सर्व्वान् प्रमेहान् प्रदरांश्च सर्व्वान्
दंष्ट्राविषं मूलविषं निहन्ति ॥
स्थूलोदरः सिंहकृशोदरः स्यात्
सुश्लिष्टसन्धिर्म्मधुनोपयोगात् ।
सदोषरोगादपि ये दशन्ति

| | | |
|---|---|---|
| इति तात्पर्य्यम् ॥ * ॥ कुष्ठेषूल्वणवातादि दोष-<br>लिङ्गमाह । | “अशुक्लरोमाबहलमसंसृष्टमथो नवम् ।<br>अनग्निदग्धजं साध्यं श्वित्रं<br>वर्ज्यमतोऽन्यथा” ॥<br>अबहलं तनु । अन्यच्च ।<br>“गुह्यपाणितलौष्ठेषु जातमप्यचिरन्तनम् ।<br>वर्ज्जनीयं विशेषेण किलासं<br>सिद्धिमिच्छता” ॥ | |

सर्पादयो यान्ति विनाशमाशु ॥
जीवेच्चिरं व्याधिजराविमुक्तः
शुभे रतश्चन्द्रसमानकान्तिः" ॥
अयमर्थः । निम्बस्य फल-पुष्प-त्वक्-पत्र-
मूलानि
सर्व्वाणि समुदितानि द्विगुणानि चूर्णितानि भृङ्ग-
राजस्य रसेन सप्तवारान् भावयेत् ।
त्रिफलादीनि
पाठान्तानि समुदितान्येकभागानि चूर्णितानि
खदिरासननिम्बानां निविडक्वाथेन भावयेत् ।
ततः
सर्व्वमेकीकृत्य मध्वादिनावलिह्यात् ।
पञ्चनिम्बा-
वलेहः ॥ * ॥
"शशिलेखापञ्चपलं तावद्गिरिजस्य गुग्गुलोर्द्दश
च ।
ताप्यस्य पलत्रितयं द्वे लोहश्रावणीकायाः ॥
त्रिफलाकरञ्जपल्लवखदिरगुडूचीत्रिवृद्दन्त्यः ।
मुस्ताविडङ्गरजनीकुटजत्वक्निम्बवह्निसम्पाकाः
॥
एतै रचितां वटिकां मधुघृतमिश्रां गिलेत् प्रातः ।
गोमूत्रेण च कुष्ठं नुदन्त्यसृग्वातमचिरेण ॥
श्वित्राणि पाण्डुरोगं विषमानुदरप्रमेहगुल्मांश्च ।
नाशयति वलीपलितं योगः स्वायम्भुवो नाम्ना"
॥
शशिलेखा सोमराजी । गिरिजस्य शिलाजतुनः
।
ताप्यस्य सुवर्णमाक्षिकस्य । श्रावणिका मुण्डी
इति लोके । स्वायम्भुवो गुग्गुलुः ॥ * ॥
"चित्रकं त्रिफला व्योषमजाजी कारवी वचा ।
सैन्धवातिविषे कुष्ठं चव्यैलायवशूकजम् ॥
विडङ्गान्यजमोदा च मुस्ता चामरदारु च ।
यावन्त्येतानि सर्व्वाणि तावन्मात्रन्तु गुग्गुलुम् ॥
सङ्क्षुद्य सर्पिषा सार्द्धं गुटिकां कारयेद्भिषक् ।
प्रातर्भोजनकाले च खादेदग्निबलं यथा ॥
हन्त्यष्टादश कुष्ठानि कृमीन् दुष्टव्रणानि च ।
ग्रहण्यर्शोविकारांश्च मुखामयगलग्रहान् ॥
गृध्रसीमस्थिभग्नञ्च गुल्मञ्चापि नियच्छति ।
व्याधीन् कोष्ठगतांश्चापि जयेद्विष्णुरिवासुरान्"
॥

वातरक्तानि सर्व्वाणि सर्व्वाण्यर्शांसि
मेवितः ॥
व्यायाममातपं वह्निमम्लं मांसं दधि
स्त्रियम् ।
तैलाभ्यङ्गं तथाध्वानं नरो भल्लातके
त्यजेत्" ॥
इति अमृतभल्लातकावलेहः ॥ * ॥
"निम्बं गोपारुणा कट्वी त्रायन्ती
त्रिफला घनम् ।
पर्पठावल्गुजानन्ता वचा
खदिरचन्दनम् ॥
पाठा शुण्ठी शटी भार्गी वासा
भूनिम्बवत्सकम् ।
श्यामेन्द्रवारुणी मूर्व्वा
विडङ्गेन्द्रयवानलम् ॥
हस्तिकर्णोऽमृता द्रेका पटोलं
रजनीद्वयम् ।
कणारग्बधसप्ताह्वकृष्णवेत्रोच्चटाफलम्
॥
मञ्जिष्ठा लाङ्गली रास्ना नक्तमालः
पुनर्नवा ।
दन्ती विजयसारश्च भृङ्गराजः
कुरण्टकम् ॥
अङ्कोठकं च शाखोटं द्विपलांशं पृथक्
पृथक् ।
गृह्णीयात्तानि सर्व्वाणि जलद्रोणे
पचेच्छनैः ॥
अष्टमांशावशेषन्तु कषायमवतारयेत् ।
विधाय वाससा पूतं स्थापयेद्भाजने
दृढे ॥
भल्लातकसहस्राणि क्षिप्त्वा
त्रीण्यर्म्मणेऽम्भसि ।
पचेदष्टावशेषन्तु कषायमवतारयेत् ॥
तच्च वस्त्रेण संशोध्य द्वौ कषायौ
विमिश्रयेत् ।
गुडस्य तु तुलां दत्त्वा लेहवत् साधु
साधयेत् ॥
भल्लातकसहस्राणि तच्च बीजानि
विक्षिपेत् ।

"मञ्जिष्ठा वाकुची चक्रमर्द्दश्च पिचुमर्द्दकः ।
हरीतकी हरिद्रा च धात्री वासा शतावरी ॥
बला नागबला षष्टीमधुकं क्षु रकोऽपि च ।
पटोलस्य लतोशीरं गुडूची रक्तचन्दनम् ॥
मञ्जिष्ठादिरयं क्वाथः कुष्ठानां नाशनः परः ।
वातरक्तस्य संहर्त्ता कण्डू मण्डलखण्डनः" ॥
इति मध्यममञ्जिष्ठादिक्वाथः ॥ * ॥
"मञ्जिष्ठा कुटजामृता घनवचाशुण्ठीहरिद्राद्वयं
क्षुद्रारिष्टपटोलकुष्ठकटुकाभार्गीविडङ्गाग्निकम् ।
मूर्व्वादारुकलिङ्गभृङ्गमगधात्रायन्तिपाठावरी।
गायत्रीत्रिफलाकिरातकमहानिम्बासनारग्बधम्
॥
श्यामावल्गुजचन्दनं वरुणकं दन्तो च
शाखोटकं
वासा पर्पटसारिवा प्रतिविषानन्ता विशाला
जलम् ॥
मञ्जिष्ठादिरयं कषायमिति यः संसेवते तस्य तु
त्वग्दोषा ह्यचिरेण यान्ति विलयं कुष्ठानि
चाष्टादश ॥
नाशं गच्छति वातरक्तमखिलं नश्यन्ति
रक्तामवा
वीसर्पस्त्वचि शून्यता नयनजा रोगाः
प्रशाम्यन्ति च" ॥
अरिष्टः निम्बः । कलिङ्गमिन्द्रयवम् । भृङ्गं
भङ्गरा ।
वरी शतावरी । गायत्री खदिरः । असनः वि-
जयसारः । श्यामा प्रियङ्गुः । चन्दनमत्र रक्तं
ग्राह्यम् । सारिवा साउ । अनन्ता दुरालभा ।
विशाला इन्द्रवारुणी । जलं नेत्रवांला ।
इति बृहन्मञ्जिष्ठादिक्वाथः ॥ * ॥
"मरिचं त्रिवृता मुस्ता हरितालं मनःशिला ।
देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम् ॥
विशालां करवीरञ्च क्षीरमर्कसमुद्भवम् ।
गोमयस्य रसं कुर्य्यात् प्रत्येकं कर्षसंमितम् ॥
विषस्यार्द्धपलं देयं तैलं प्रस्थमितं कटु ।
पचेच्चतुर्गुणे नीरे गोमूत्रे द्विगुणे तथा ॥
मरिचाद्यमिदं तैलमभ्यङ्गात् कुष्ठनाशनम् ।
एतस्याभ्यङ्गतः श्वित्रं विवर्णं तत्क्षणात् भवेत्
॥

एकविंशतिको गुग्गुलुः ॥ * ॥
"वातरक्ताधिकारोक्तः पुरः कैशोरकाविधः ।
कुष्ठानां वातरक्तानां नाशाय परमौषधम्" ॥
कैशोरको गुग्गुलुः ॥ * ॥
"भल्लातकं प्रस्थयुगं छित्त्वा द्रोणजले क्षिपेत् ।
प्रस्थद्वयं गुडूच्याश्च क्षुण्णं तत्राम्भसि क्षिपेत् ॥
चतुर्थांशावशेषन्तु कषायमवतारयेत् ।
वस्त्रपूते कषाये च वक्ष्यमाणानि निःक्षिपेत् ॥
सरावमात्रं गोसर्पिर्गोदुग्धस्याढकं तथा ।
सितां प्रस्थमितां दद्यात् प्रस्थार्द्धं माक्षिकं क्षिपेत्
॥
सर्व्वाण्येकत्र भाण्डे तु पचेन्मृद्वग्निना शनैः ।
सर्व्वद्रव्ये घनीभूते पावकादवतारयेत् ॥
तत्र क्षेप्याणि चूर्णानि ब्रूमो विल्वमितामृता ।
वाकुची चाथ दद्रुघ्नः पिचुमर्द्दो हरीतकी ॥
धात्री रात्रिश्च मञ्जिष्ठा मरिचं नागरं कणा ।
यवानी सैन्धवं मुस्तं त्यगेला नागकेशरम् ॥
पर्पटः पत्रकं बालमुशीरं चन्दनं तथा ।
गोक्षुरम्य च वीजानि कर्च्चूरो रक्तचन्दनम् ॥
पृथक पलार्द्धमानानां चूर्णमेषामिह क्षिपेत् ।
पलमात्रमिदं प्रातः समश्नीयाज्जलेन हि ॥
नाशयेदवलेहोऽयं कुष्ठानि निखिलान्यपि ।
त्रिकटु त्रिफला मुस्तं विडङ्गं चित्रकं
तथा ॥
सैन्धवं चन्दनं कुष्ठं दीप्यकञ्च पलं
पृथक् ।
सौगन्ध्यर्थं क्षिपेत्तत्र चातुर्जातं पलं
पलम् ॥
महाभल्लातको ह्येष महादेवेन भाषितः
।
प्राणिनां हितकामाय जयेच्छीघ्रं
प्रयोगतः ॥
श्वित्रमौडुम्बरं दद्रूमृक्षजिह्वं सकाकणम्
।
पुण्डरीकञ्च चर्म्माख्यं विस्फोटं
रक्तमण्डलम् ॥
फण्डुं कापालकं कुष्ठं पामानञ्च
विपादिकाम् ।
वातरक्तं षडर्शांसि पाण्डुरोगं व्रणं
कृमीन् ॥
रक्तपित्तमुदावर्त्तं कासं श्वासं
भगन्दरम् ।
सदाभ्यासेन पलितमामवातं
सुदुस्तरम् ॥
निर्यन्त्रणस्तु कथितो
विहाराहारमैथुनैः ।
कुरुते परमां कान्तिं प्रदीप्तं
जठरानलम् ॥
अनुपानं प्रयोक्तव्यं छिन्नातोयं
पयोऽथवा ।
भोजने तु सदा त्याज्यमुष्णमम्लं
विशेषतः" ॥
गोपा गां पातीति गोपा गोपकन्या श्वेत
साउ
इति लोके । यत आह निर्घण्टः ।
"शारिवाशार-
दास्फोटा गोपकन्या प्रतानिका" इति
। तद्वाचको
गोपीशब्दश्च । यत आह । गोपी
श्यामा शारीवा
स्यादनन्तोत्पलशारिवेयमरः ॥
गोपाङ्गना गोप-
वल्ली लताह्वा काष्ठशारिवेति
मदनपालः ॥ अरुणा
तैलमेतत् जयेत् कण्डूं पामां सिघ्मं
विचर्च्चिकाम् ।
पुण्डरीकं तथा दद्रुं शून्यतां नित्यसेविनाम् ॥
इति लघुमरिचाद्यं तैलम् ॥ * ॥
"मरिचं त्रिवृता दन्ती क्षीरमार्कशकृद्रसः ।
देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम् ॥
विशाला करवीरश्च हरितालं मनःशिला ।
चित्रकं लाङ्गली मुस्ता विडङ्गं चक्रमर्द्दकः ॥
शिरीषः कुटजो निम्बः सप्तपर्णोऽमृता स्नुही ।
सम्पाको नक्तमालश्च खदिरो वाकुची वचा ॥
ज्योतिष्मती च पलिका विषं द्विपलिकं भवेत् ।
आढकं कटुतैलस्य गोमूत्रञ्च चतुर्गुणम् ॥
मृत्पात्रे लोहपात्रे वा शनैर्म्मृ द्वग्निना पचेत् ।
मरिचाद्यमिदं तैलं महन्मुनिभिरीरितम् ॥
भिषगेतेन तैलेन म्रक्षयेत् कोष्ठिकान् व्रणान् ।
पामाविचर्च्चि कादद्रुकण्डू विस्फोटकानि च ॥
वली च पलितं छाया नीलं व्यङ्गं तथैव च ।
अभ्यङ्गेन प्रणश्यन्ति सौकुमार्य्यञ्च जायते ॥
प्रथमे वयसि स्त्रीणां यासां नस्यं प्रदीयते ।
तासामपि जरां प्राप्य न स्यातां स्खलितौ
स्तनौ ॥
वलीवर्द्दस्तुरङ्गो वा गजो वा वायुपीडितः ।
त्रिभिरभ्यञ्जनैरस्य भवेन्मारुतविक्रमः" ॥

| | अतीस । अवल्गुजः सोमराजी । अनन्ता दुरा-<br>लभा । चन्दनं श्वेतम् । भार्ग्या अलाभे कण्टकारी-<br>मूलं गृह्णीयात् । श्यामा कृष्ण साउ । हस्तिकर्णः<br>हथिकण । द्रेका वकाइनि । सप्ताह्वः छतिवन ।<br>कृष्णवेत्रः जलवेतस । उच्चटाफलं आरक्तगुञ्जा-<br>फलम् । कुरण्टकः पीतपुष्पकटसरैया । दीप्यकः<br>यवानी । महाभल्लातकः ॥ * ॥<br>"मञ्जिष्ठा त्रिफला तिक्ता वचा दारु निशामृता ।<br>निम्बश्चैषां कृतः क्वाथः सर्व्वकुष्ठानि नाशयेत्" ॥<br>इति लघमञ्जिष्ठादिक्वाथः ॥ * ॥ | |
|---|---|---|

ज्योतिष्मती मालकङ्गुनी इति लोके ।
इति महामरिचादितैलम् ॥ * ॥
“तालकस्य तु पत्राणि यस्य सन्ति पृथक् पृथक् ।
अभ्रकस्यैव तद्ग्राह्यं हरितालं चिकित्सकैः ॥
पुनर्नवायाः सरसे तालकं तद्विमर्द्दयेत् ।
दिनमेकं ततस्तस्मिन् घनत्वं गमिते सति ॥
कुर्व्वीत चक्रिकां तां तु शोषयेत् सम्यगातपे ।
पुनर्नवासमस्ताङ्गक्षारे स्थालीं गलावधि ॥
पूरयेच्च ततः क्षारं द्रढयेत् पीडनेन हि ।
क्षारस्योपरि तां दद्यात् तालकस्य तु चक्रिकाम् ॥
तत आच्छादनं दत्त्वा मुद्रां कृत्वा विशोषयेत् ।
स्थालीं चुल्ल्यां निधायाग्निममन्दं ज्वालयेत् भिषक् ॥
निरन्तरमहोरात्रपञ्चकं तेन सिध्यति ।
स्वाङ्गशीतं समुत्तार्य्य गृह्णीयाद्रसमुत्तमम् ॥
तालकेश्वरनामायं भुक्तो गुञ्जामितो रसः ।
गुडूच्यादिकषायेण गदानेतान् विनाशयेत् ॥
अष्टादशापि कुष्ठानि वातरक्तं तथोद्धतम् ।
फिरङ्गदेशजं रोगं दुस्तरञ्च व्यपोहति ॥
एतद्भेषजसेवी तु लवणाम्लौ विवर्जयेत् ।
तथा कटुरसं वह्निमातपं दूरतस्तजेत् ॥
लवणं यः परित्यक्तुं न शक्नोति कथञ्चन ।
स तु सैन्धवमश्नीयात् मधुरोपरसो हि सः” ॥
इति तालकेश्वरो रसः ॥ * ॥
“तालताप्यशिलासूतटङ्कणं सिन्धुसंयुतम् ।
यश्चिकित्सकजनैः समाहृतः ।
यस्तु कुष्ठपरमोपकारको
नागमारणविधिः स लिख्यते ॥
सुपक्वां स्थालिकामेकामाढकाम्बुधृतिक्षमाम् ।
गुडचूर्णकृतैः पङ्कैरागलं लेपयेद्बहिः ॥
गन्धकं भिषगानीय शरावमितमुत्तमम् ।
चूर्णयित्वा तदर्द्धन्तु तस्यां स्थाल्यां प्रसारयेत् ॥
शरावार्द्धस्य ताम्रस्य पत्राण्यतितनूनि च ।
स्थाल्यां यद्गन्धकं तस्मिन्नुपर्य्युपरि धारयेत् ॥
शरावार्द्धस्य सीसस्य पत्राणि च तनूनि च ।
धारयेत्ताम्रपत्राणामुपर्य्येव तथैव च ॥
गन्धकस्य शरावार्द्धं यत्राणामन्तरान्तरा ।
दत्त्वा तस्यावशेषन्तु सर्व्वेषामुपरि क्षिपेत् ॥
ततः पिधानं दत्त्वा तु विदध्यात् सन्धिमुद्रणम् ।
गुडं चूर्णञ्च खदिरं मिश्रयेत्तेन मुद्रयेत् ॥
मुद्रां संशोष्य तां स्थालीं चुल्ल्यामुपरि धारयेत् ।
तदधो ज्वालयेदग्निं द्वादशप्रहरावधि ॥
स्वाङ्गशीतं समुत्तार्य्य ततो निष्काश्य चौषधम् ।
शिलायां चूर्णयित्वा तु वस्त्रपूतञ्च कारयेत् ॥
त्रिद्रोणजलयोग्यन्तु विशालास्यं महाघटम् ।
गुडचूर्णकृतैः पङ्कैरागलं लेपयेद्बहिः ॥
सर्पः षष्ट्यङ्गुलायामः सार्द्धषष्ट्यङ्गुलोऽथवा ।
फणिकः कृष्णवर्णः स्यात् किं वा गोधूमवर्णवान् ॥
वधस्तस्य विधातव्यो यथा देहो न भिद्यते ।
तालकं सदलं यत्तच्चूर्णयेत् कुडवद्वयम् ॥
विषं पलमितं क्षुण्णं दत्त्वा दत्त्वान्तरान्तरम् ।
हरितालस्य चूर्णेन पूरयेद्भुजगोदरम् ॥
विषं पलमितं क्षुण्णं वाकुचीं पलसंमिताम् ।
भल्लातकं सुपक्वं यत् प्रस्थमैन्द्रयवं तथा ॥
सर्व्वाणि सम्यगास्तीर्य्य धारयेत महाघटे ।
तेषामुपरि सर्पञ्च धारयेत् कुण्डलीकृतम् ॥
वर्द्धयेन्मरिचञ्चापि तथैव हि यथारसम् ॥
यवस्य पर्पटीं भोक्तुं दद्याद्वा षष्टिकौदनम् ।
लवणं वर्जयेत् सप्त दिनानि गुणलोलुपः ॥
लवणं यः परित्यक्तुं न शक्नोति कथञ्चन ।
सैन्धवं खादयेत्तेन तच्च सप्तदिनोपरि ॥
रसेनानेन नश्यन्ति कुष्ठानि सकलान्यपि ।
सन्निपाताश्च नश्यन्ति राजयक्ष्मादयस्तथा ॥
इति नागवधाख्यो रसः ॥ * ॥ अथ विशिष्टानां कुष्ठानां चिकित्सा । तत्र सिध्मस्य चिकित्सा ।
“कुष्ठं मूलकबीजं प्रियङ्गवः सर्षपा रजनी ।
एतत् केशरषष्ठं निहन्ति च बहुवार्षिकं सिध्मम् ॥
शिरीषरसेन पिष्टं मूलकबीजं प्रलेपतः सिध्मम् ।
क्षारेण वा कदल्या रजनीमिश्रेण नाशयति ॥
दार्व्वी मूलकबीजानि तालकः सुरदारु च ।
ताम्बूलपत्रं सर्व्वाणि कार्षिकाणि पृथक् पृथक् ॥
शङ्खचूर्णन्तु शाणः स्यात् सर्व्वाण्येकत्र वारिणा ।
पेषयेत प्रलेपोऽयं सिध्मानां नाशनः परः” ॥ * ॥
अथ चर्म्मदलस्य चिकित्सा ।
“सलिले चाम्रपेशी तु किञ्चित्सैन्धवसंयुता ।
ताम्रपात्रे विनिर्घृष्टा लेपाच्चर्म्मदलापहा” ॥
आम्रपेशी आमचूर ।
“सलिलेन तु शुष्काणि घृष्ट्वा धात्रीफलानि च ।
कराभ्यां सुखमाप्नोति नरश्चर्म्मदलान्वितः” ॥ * ॥
अथ पामाचिकित्सा ।
“जीरकस्य पलं पिष्टं सिन्दूरार्द्धपलं तथा ।
कटुतैलं पचेदाभ्यां सद्यः पामाहरं परम्” ॥
कटुतैलं षट्पलमितम् । जीरकादितैलम् ॥ * ॥
“मञ्जिष्ठात्रिफलालाक्षालाङ्गलीरात्रिगन्धकैः ।
चूर्णितैस्तैलमादित्यपाकं पामाहरं परम्” ॥
इति आदित्यपाकतैलम् ॥
“सैन्धवं चक्रमर्द्दश्च सर्षपाः पिप्पली तथा ।
आरनालेन संपिष्टाः पामकण्डूहराः स्मृताः” ॥ * ॥
अथ कच्छूचिकित्सा ।
“अर्क्कपत्ररसे पक्वं हरिद्राकल्कसंयुतम् ।
नाशयेत् सार्षपं तैलं पामां कच्छूं विचर्च्चिकाम्” ॥
अर्कतैलम् ।
“मनःशिलालं कासीसं गन्धाश्मा सिन्धुजन्म च ।

गन्धार्कौ द्विगुणौ सूताज्जम्बीराद्भिः प्रमर्द्दयेत् ॥
षडहं पुटितं षोढा भूधरे सकलं त्विदम् ।
षट्पलं द्विपलं ताम्रं लोहभस्म चतुष्पलम् ।
जम्बीराद्भिर्दिनं घृष्टं त्रिंशदंशं विषं क्षिपेत् ।
अस्य माषद्वयं खादेन्महिषीघृतसंयुतम् ॥
मध्वाज्यैर्व्वाकुचीबीजैः कर्षं लिह्यात्ततः परम् ।
तालकेश्वरनामायं सर्व्वकुष्ठहरो रसः” ।
अर्को मारितं ताम्रम् ।
द्वितीयतालकेश्वरो रसः ॥ * ॥
“रसो वलिस्ताम्रमयः पुरोऽग्निः शिलाजतु स्याद्विषतिन्दुकश्च ।
वरा च तुल्यं गगनं करञ्ज-बीजं पृथग्भागचतुष्टयञ्च ॥
संमर्द्य सर्व्वं मधुना घृतेन घृतस्य पात्रे निहितं प्रंयत्नात् ।
कर्षं भजेत् प्रत्यहमस्य पथ्यं शाल्योदनं दुग्धमधुत्रयञ्च ॥
विशीर्णकर्णाङ्गुलिनासिकोऽपि भवेदनेन स्मरतुल्यमूर्त्तिः ।
दारापरित्याग इह प्रदिष्टो जलौदनं तत्र निबद्धमूले” ॥
ताम्रमयश्च मारितम् । पुरो गुग्गुलुः । अग्नि-श्चित्रकम् । विषतिन्दुकः कुचिला । वरा त्रिफला ।
रसादि त्रिफलान्तं सर्व्वं तुल्यम् । गगनमभ्रकम् ।
करञ्जबीजञ्च पृथक् चतुर्गुणं रसात् । तत्र कुष्ठे बद्धमूले सति जलौदनमेव पथ्यम् ।
इति गलत्कुष्ठारिरसः ॥ * ॥
“अथ नागवधाख्यस्य रसस्य विधिरुच्यत ॥
यः पुरा मुनिवरैरुदाहृतो सर्पस्योपरि संछिद्य धार्य्याण्येतानि पीडनैः ।
सनालमर्कपत्रं तु शरावयुगलं क्षिपेत् ॥
स्नुहीदलं सनालञ्च क्षिपेत् प्रस्थमितं तथा ।
वटप्ररोहं प्रस्थं च कुमारीं प्रस्थसंमिताम् ॥
दत्त्वा पिधानं चूर्णेन गुडेन खदिरेण च ।
मुद्रयेत् सह वस्त्रेण मृदा कुटितयापि च ॥
मुद्रां संशोष्य चुल्ल्यान्तु धारयेत्तं महाघटे ।
तदधो ज्वालयेदग्निं याममेकं यथौदने ॥
ततो हठाग्निर्दातव्यो यावत् स्युः प्रहरा दश ।
पुनः प्रहरमेकञ्च वह्निं दद्याद्यथौदने ॥
ततो लौहे कटाहे तु शरावत्रितयोन्मिते ।
गोघृतं प्रक्षिपेत् सर्व्वमौषधं यद्घटे स्थितम् ॥
दत्त्वाग्निं चालयेत्तावद्यावदुत्तिष्ठतेऽनलः ।
भेषजं च भवेच्छ्वेतं ततस्तस्मिन् परिक्षिपेत् ॥
भृष्टायाः स्फटिकाख्याया द्वे पले तत्र निःक्षिपेत् ।
भृष्टस्य टङ्कणस्यापि पलयुग्मञ्च निःक्षिपेत् ॥
ततः प्रहरमेकं तच्चालयेच्चुल्लिकोपरि ।
ततस्ताम्रञ्च सासञ्च मिश्रयित्वावतारयेत् ॥
रसो नागवधाख्योऽयं विधिनानेन सिध्यति
आदौ गुञ्जामितं खादेत्तावन्मरिचसंयुतम् ॥
क्रमेण वर्द्धयेत्तावद्यावद्गुञ्जाचतुष्टयम् ।
स्वर्णक्षीरी शिलाभेदी शुण्ठी कुष्ठञ्च मागधी ॥
लाङ्गलीकरवीरश्च दद्रुघ्नः कृमिहानलः ।
दन्तीनिम्बदलञ्चैभिः पृथक्कर्षमितैर्भिषक् ॥
कल्कीकृतैः पचेत्तैलं कटुप्रस्थद्वयोन्मितम् ।
अर्कसीहुण्डदुग्धेन पृथक्पलमितेन च ॥
गोमूत्रस्याढकेनापि शनैर्मृद्वग्निना पचेत् ।
अभ्यङ्गेन हरेदेतत् कच्छूदुःसाध्यतामपि ॥
पामानञ्च तथा कण्डू त्वग्व्याधिरुधिरामयान् ।
कच्छूराक्षसनामेदं तैलं हारीतभाषितम् ॥
इति कच्छूराक्षसनामतैलम् ॥ * ॥
अथ दद्रुचिकित्सा ।
“कुष्ठं कृमिघ्नो दद्रुघ्नो निशासैन्धवसर्षपाः ।
अम्लपिष्टाः प्रलेपोऽयं दद्रुकुष्ठनिसूदनः ॥
दूर्व्वाऽभयासैन्धवचक्रमर्द-कुठेरकाः काञ्चिकतक्रपिष्टाः ।

त्रिभिः प्रलेपैरपि बद्धमूलं
दद्रुञ्च कुष्ठञ्च विनाशयन्ति ॥
कुठेरकः ममरी इति लोके ।
लोके गण्डिलकाख्या सिद्धार्थश्च
स्नुहीक्षीरम् ।
त्रयमिति समभागं स्यादेषां द्विगुणस्तु दद्रुघ्नः
॥
अष्टगुणे गोतक्रे तानि प्रकृतानि सन्दध्यात् ।
दिवसत्रितयादूर्द्ध्वं सम्यङ्निष्पेषयेत्तानि ॥
वन्योपलेन घृष्ट्वा दद्रुमालेपयेत्तेन ॥
सप्ताहाल्लेपोऽयं दद्रुमवश्यं विनाशयति" ॥ *
॥
अथ श्वित्रस्य चिकित्सा ।
"विभीतकत्वङ्नलपूजटानां
क्वाथेन कृत्वा गुडसंयुतेन ।
अवल्गुजं बीजमपाकरोति
श्वित्राणि कृच्छ्राण्यपि पुण्डरीकम्" ॥
मलपूः काकोडुम्बरिका । अवल्गुजः
सोमराजी ।
"कुडवावल्गुजबीजं हरितालं तच्चतुर्थांशम्
।
मनःशिला तालकार्द्धा गुञ्जाफलमग्निमूलञ्च ॥
मूत्रेण गवां पिष्टं सुवर्णताकारकं श्वित्रस्य ।
श्वित्रकुष्ठं व्रजत्यस्तं पक्षार्द्धेनाधिकेन वा ॥
गिरिकर्ण्या सितायाश्च मूलेन परिलेपितम्"
॥
गिरिकर्णी नीलापराजिता ॥
"क्वाथः सवाकुचीचूर्णो धात्रीखदिरसारयोः
।
शङ्खेन्दुकुन्दधवलं श्वित्रं संसेवितो हन्ति ॥
मथितेन पिबेत् चूर्णं काकोडुम्बर्य्यवल्गुजम् ।
तैलाक्तो घर्म्मसेवी स्यात्तक्राशी श्वित्रहृत्
भवेत्" ॥
मथितं निर्ज्जलं विलोडितं दधि ।
तक्रं चतुर्थांशजलयुक्तं वस्त्रपूतं दधि ।
"खदिरस्य पलान्यष्टौ सोमराज्याः पलद्वयम्
।
त्रिफला पिचुमर्द्दश्च दारु दार्व्वथ पर्पटी ॥
पृथक् पलांशमुद्धृत्य सिंहिकायाः पलद्वयम् ।
जलाढकद्वये साध्यं यावत् पादावशेषितम् ॥
दुष्टनाडीषु मर्त्यानां स्राविणां कीटिनां तथा ॥
असृक्स्रावपरीता ये ये च त्यक्तभिषक्क्रियाः
।
सर्व्वग्रहवियुक्तानां शीर्णाङ्गानां विशेषतः ॥
सर्व्वधातुगते कुष्ठे पतितं भूशिरोरुहम् ।
घर्घराव्यक्तघोषाणां तथा सर्व्वाङ्गवातिनाम् ॥
पानेऽभ्यङ्गे तथा नस्ये वस्तिकर्म्मणि
नित्यशः ।
सप्तरात्रप्रयोगेण सर्व्वकुष्ठानि नाशयेत् ॥
द्विसप्ताहप्रयोगेण पूर्णचन्द्रनिभाननः ।
जातकेशनखश्मश्रुर्भाति षोडषवर्षवत् ॥
अनङ्गसदृशः साक्षात् सर्व्वामयविनाशनः ।
एतत् घृतं महाश्रेष्ठं भार्गवेणावतारितम् ॥
मनुष्याणां हितार्थाय सर्व्वव्याधिहरं परम् ।
महामार्त्तण्डकमिदं घृतं सर्व्वामरार्च्चितम्" ॥
इति महामार्त्तण्डघृतम् ॥ * ॥ इति कुष्ठाधि-
कारः ॥ इति भावप्रकाशः ॥

**क्षुद्रगोक्षुरकः**, पुं, (क्षुद्रः गोक्षुरः । ततः स्वल्पार्थे
कन् क्षुद्रगोक्षुर इव कायति इत्येके ।) गोक्षुर-
वृक्षभेदः । छोटा गोक्षुरु इति हरचिकार
इति च हिन्दी भावा । तत्पर्य्यायः । त्रिक-
ण्टकः २ कण्टी ३ षडङ्गः ४ बहुकण्टकः ५
क्षुरः ६ गोकण्टकः ७ कण्टफलः ८
पलङ्कषा
९ क्षुद्रक्षुरः १० भक्षटकः ११
स्थलशृङ्गाटकः
१२ वनशृङ्गाटकः १३ इक्षुगन्धः १४
स्वादुकण्टः
१५ । अस्य गुणाः । सुशीतलत्वम् ।
बलप्रदत्वम् ।
मधुरत्वम् । बृंहणत्वम् ।
कृच्छ्राश्मरीभेहविदाह-
नाशित्वम् । रसायनत्वम् । तत्र बृहतो गुणो-
त्तरत्वञ्च । इति राजनिर्घण्टः ॥

**क्षुद्रघण्टिका**, स्त्री, (घण्टा अल्पार्थे कन् टाप्
इत्वञ्च ततः क्षुद्रा घण्टिका इति कर्म्मधारयः
।)
कट्यलङ्कारविशेषः । घाघर इति घुङ्गुर इति
च

**क्षुद्रचूडः**, पुं, (क्षुद्रा चूडा यस्य ।) पक्षिविशेषः । गो-
सालिक इति भाषा । यथा, --
"शवमल्लः क्षुद्रचूडो गूथलक्तश्च साल्लिकः"
॥
इति शब्दचन्द्रिका ॥

**क्षुद्रजन्तुः**, पुं, (क्षुद्रः जन्तुर्जीवभेदः ।) शतपदी । इति
शब्दमाला ॥ खल्पप्राणिमात्रञ्च ॥
(आमलकशब्दे-
ऽस्य विवृतिर्ज्ञातव्या ॥)

**क्षुद्रजातीफलं**, क्ली, (क्षुद्रं जातीफलग् ।) आम-
लकम् । इति राजनिर्घण्टः ॥

**क्षुद्रजीरः**, पुं, (क्षुद्रः जीरः ।) स्वल्पजीरकः । इति
शब्दचन्द्रिका । क्षुदिया जीरा इति भाषा ॥

**क्षुद्रजीवा**, स्त्री, (क्षुद्रा जीवा कर्म्मधारयः ।) जीवन्ती
।
इति राजनिर्घण्टः ॥

**क्षुद्रता**, स्त्री, (क्षुद्रस्य भावः । क्षुद्र + तल् टाप् च ।)
क्षुद्रत्वम् । इति व्याकरणम् ॥

**क्षुद्रत्वं**, क्ली, (क्षुद्रस्य भावः । क्षुद्र + त्वप्रत्ययः ।)
अल्पता
क्रूरता । अधमत्वम् । दरिद्रत्वम् ॥

**क्षुद्रतुलसी**, स्त्री, (क्षुद्रा तुलसीति नित्यकर्म्मधारयः
।)
अर्जकः । स तु वर्व्वरीभेदः । इति
राजनिर्घण्टः ॥

**क्षुद्रदंशिका**, स्त्री, (क्षुद्रा दंशिका ।) स्वल्पदंशकः ।
छोट डाँश इति भाषा । यथा, --
"पतङ्गिका पुत्तिका स्यात् दंशस्तु
वनमक्षिका ।
प्राचिका चाल्पतज्जातिर्दंशी स्यात्
क्षुद्रदंशिका" ॥
इति जटाधरः ॥

**क्षुद्रदंशी**, स्त्री, (दंश + ङीष् । क्षुद्रा दंशी ।) क्षुद्र-
दंशिका । इति जटाधरदर्शनात् ॥

**क्षुद्रदुरालभा**, स्त्री, (क्षुद्रा दुरालभा लतविशेषः ।)

क्वाथ्यमानञ्च मृद्वग्नौ घृतप्रस्थं विपाचयेत् ।
चतुष्पलं सोमराज्याः खदिरस्य पलं तथा ॥
पटोलमूलं त्रिफलां त्रायमाणां दुरालभाम् ।
कर्षार्द्धं कटुकं चापि कार्षिकं सूक्ष्मपेषितम् ॥
पलद्वयं कौषिकस्य शुद्धस्यात्र प्रदापयेत् ।
सिद्धं सर्पिरिदं श्वित्रं हन्यादम्भ इवानलम् ॥
अष्टादशानां कुष्ठानां परमञ्चैतदौषधम् ।
सोमराजीघृतं नाम निर्म्मितं ब्रह्मणा पुरा ॥
लोकानामुपकाराव श्वित्रकुष्ठादिरोगिणाम्”
॥
इति सोमराजीघृतम् ॥
“महौषधं महामेदा निम्बपत्राणि सर्षपाः ।
मनःशिला च सिन्दूरं पद्मचारिण्यवल्गुजम् ॥
हरिद्रे हरितालञ्च त्रिफला पीतगन्धकः ।
एतानि सभभागानि विषार्द्धांशानि योजयेत् ॥
सर्पिषश्च पलान्यष्टौ देवदारुरसं शुभम् ।
द्विगुणं त्रिगुणं क्षीरं गोमूत्रञ्च चतुर्गुणम् ॥
ताम्रपात्रे तु संस्थाप्य शनैर्म्मृद्वग्निना पचेत् ।
चतुर्भागावशेषन्तु सकल्कमवतारयेत् ॥
अग्नौ क्षिप्तन्तु निःशब्दं जलमुक्तं विचक्षणः ।
अभ्यङ्गपानयोर्गोगादाशुसर्व्वान् गदान् जयेत्
॥
अष्टादशाना कुष्ठानां दद्रूणां श्वित्रिणां तथा ।

भाषा ॥ तत्पर्य्यायः । किङ्किणी २ ।
इत्यमरः
। २ । ६ । ११० ॥ क्षुद्रघण्टी ३ प्रतिसरा ४
किङ्किणीका ५ कङ्कणी ६ कङ्कणिका ७
क्षुद्रिका
८ । इति शब्दरत्नावली ॥ घर्घरी ९ । इति
जटाधरः ॥

**क्षुद्रघोली**, स्त्री, (क्षुद्रा घोली ।) चिविल्लिकाक्षुपः । इति राजनिर्घण्टः ॥

**क्षुद्रचञ्चुः**, स्त्री, (क्षुद्रा चञ्चुः सा इवाकृतिरस्याः ।)

क्षुपविशेषः । तत्पर्य्यायः । चञ्चुः २ चञ्चूः ३
शुनक-
चञ्चुका ४ त्वक्सारभेदिनी ५ क्षुद्रा ६ कटुका
७
कटुपत्रिका ८ । अस्या गुणाः । मधुरत्वम् ।
कटु-
त्वम् । उष्णत्वम् । कषायत्वम् । दीपनत्वम्
। शूल-
गुल्मार्शोविबन्धनाशित्वञ्च । इति
राजनिर्घण्टः ॥
स्वल्पोष्ठश्च ॥

**क्षुद्रचन्दनं**, क्ली, (क्षुद्रं चन्दनमिति नित्यकर्म्मधारयः ।)

रक्तचन्दनम् । इति राजनिर्घण्टः ॥
(यथास्य पर्य्यायाः ।
“रक्तचन्दनमाख्यातं रक्ताङ्गं क्षुद्रचन्दनम् ।
तिलपर्णं रक्तसारं तत्प्रवालफलं स्मृतम्” ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमभागे ॥)

**क्षुद्रचिर्भिटा**, स्त्री, (क्षुद्रा चिर्भिटा ।) गोपाल-

कर्कटी । इति राजनिर्घण्टः ॥
(क्षुद्रचिर्भिटीति
च क्कचित् दृश्यत ॥)

स्वल्पदुरालभावृक्षः । तत्पर्य्यायः ।
मरुस्था २
मरुसम्भवा ३ विशारदा ४ अजभक्ष्या ५
अजा-
दनी ६ उष्ट्रभक्षिका ७ कषाया ८ फणिहृत्
९
ग्राहिणी १० करभप्रिया ११ करभादनिका
१२ ।
अस्या गुणाः । गौल्यत्वम् । अप्लत्वम् ।
ज्वरकुष्ठ-
श्वासकासभ्रमनाशित्वम् ।
पारदशुद्धिकारित्वञ्च ।
इति राजनिर्घण्टः ॥

**क्षुद्रदुस्पर्शा**, स्त्री, (दुःसहः स्पर्शो यस्याः दुस्पर्शा ।

क्षुद्रा दुस्पर्शा इति कर्म्मधारयः ।)
अग्निदमनी ।
इति राजनिर्घण्टः ॥ (ज्ञेयास्या
अग्निदमनीशब्दे
विवृतिः ॥)

**क्षुद्रधात्री**, स्त्री, (क्षुद्रा धात्री ।) कर्क्कटबृक्षः । इति

राजनिर्घण्टः ॥

**क्षुद्रनासिकः**, त्री, (क्षुद्रा नासिका नासा ऽस्य ।)

स्वल्पनासायुक्तः । तत्पर्य्यायः । नः क्षुद्रः
२ । इति
हेमचन्द्रः ॥

**क्षुद्रपत्रा**, स्त्री, (क्षुद्रं पत्रं पर्णं यस्याः । ततष्टाप् ।)

चाङ्गेरी । इति हारावली ॥

**क्षुद्रपत्री**, स्त्री, (क्षुद्रं पत्रं अस्याः । ततो गौरादि-

त्वात् ङीष् ।) वचा । इति राजनिर्घण्टः ॥
(यथास्याः
पर्य्याया ।
“वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्व्विका
।
क्षुद्रपत्री च मङ्गल्या जटिलोग्रा च लोमशा”
॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**क्षुद्रपनसः** पुं, (क्षुद्रश्चासौ पनसश्चेति कर्म्मधारयः ।)

लकुचः । इति राजनिर्घण्टः ॥

स्वल्पकण्टाफलञ्च ॥

(पर्य्यायोऽस्य यथा, --

"लकुचः क्षुद्रपनशो लकुचो डहु

इत्यपि" ॥

इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे

भागे ॥)

**क्षुद्रपर्णः** पुं, (क्षुद्रं पर्णं पत्रं यस्य ।) अर्जकः । इति

राजनिर्घण्टः ॥ सूक्ष्मपत्रे त्रि ॥

(विवरणमस्यार्ज्जक-

शब्दे ज्ञातव्यम् ॥)

**क्षुद्रपाषाणभेदा**, स्त्री, (क्षुद्रा पाषाणभेदा इति नित्य-

कर्म्मधारयः ।) क्षुपविशेषः ।

क्षुद्रपाषाणभेदी इति

ख्याता । तत्पर्य्यायः । चतुःपत्री २

पार्व्वती ३

नगभूः ४ अश्मकेतुः ५ गिरिभूः ६

कन्दरोद्भवा ७

शैलोद्भवा ८ गिरिजा ९ नगजा १० ।

अस्या

गुणाः । व्रणकृच्छ्राश्मरीहरत्वम् । इति

राज-

निर्घण्टः ॥

**क्षुद्रपिप्पली**, स्त्री, (क्षुद्रा पिप्पली ।) वनपिप्पली ।

इति राजनिर्घण्टः ॥

**क्षुद्रपोतिका**, स्त्री, (क्षुद्रा पोतिका । नित्यकर्म्मधारयः ।)

मूलपोती । इति राजनिर्घण्टः ॥

**क्षुद्रफलकः**, पुं, (क्षुद्रं फलमस्य इति कप् ।) जीवन-

वृक्षः । इति शब्दचन्द्रिका ॥

**क्षुद्रफला**, स्त्री, (क्षुद्रं फलं अस्या इति टाप् ।) भूमि-

जम्बुः । इति शब्दमाला । इन्द्रवारुणी

। गोपाल-

सैन्धवं पक्वमेतैस्तु तैलं हन्यादरुंषिकाम्" ॥

इति त्रिकलाद्यं तैलम् ॥ * ॥

अथाग्निरोहिणीलक्षणमाह ।

"कक्षाभागेषु ये स्फोटा जायन्ते मांसदारुणाः ।

अन्तर्द्दाहज्वरकरा दीप्तपावकसन्निभाः ॥

सप्ताहात् द्वादशाहाद्वा पक्षाद्वा घ्नन्ति मानवम् ।

तामग्निरोहिणीं विद्यादसाध्यां सान्निपातिकाम्"

॥

सप्ताहादित्यादि वातपित्तकफाधिकापेक्षया बो-

द्धव्यम् । घ्नन्तीत्यनुपक्रान्ताः । उपक्रान्तास्तु

साध्या एव । चरकेणाग्निरोहिण्याश्चिकित्साया

उक्तत्वात् ।

तस्याश्चिकित्सा ।

"पित्तं वीसर्पविधिना साधयेदग्निरोहिणीम् ।

रोहिण्यां लङ्घनं कुर्य्याद्रक्तमो क्षणरूपताम् ॥

शरीरस्य च संशुद्धिं तान्तु वृद्धां परित्यजेत्" ॥

* ॥

अथ विदारिकालक्षणमाह ।

"विदारिकन्दवद्वृत्तो कक्षावङ्क्षणसन्धिषु ।

रक्तो विदारिकां विद्यात् सर्व्वजां सर्व्वलक्षणाम्"

॥

अत्र पिडकामिति विशेष्यपदमध्याहरणीयम् ॥

अथ तच्चिकित्सा ।

"विदारिकायां प्रथमं जलौकायोजनं हितम् ।

पाटनञ्च विपक्वायां ततो व्रणविधिः स्मृतः" ॥ *

॥

अथावपाटिकालक्षणमाह ।

"अल्पीयसीं यदा हर्षात् बलाद्गच्छेत् स्त्रियं

नरः ।

हस्ताभिघातादथवा चर्म्मण्युद्वर्त्तते बलात् ॥

मर्द्दनात् पीडनाद्वापि शुक्रवेगविघाततः ।

यत्रावपाट्यते चर्म्म तां विद्यादवपाटिकाम् ॥

वातेन कर्कशा रूक्षा सूक्ष्मा कृष्णा रुगन्विता ।

पित्तेन पीता रक्ता वा दाहतृष्णासमन्विता ॥

श्लेष्मणा कठिना स्निग्धा कण्डुमत्यल्पवेदना"

॥

अल्पीयः अल्पतरं योनिच्छिद्रं यस्यास्ताम् ।

अवपाट्यते विदार्य्यते ।

अथ तस्याश्चिकित्सा ।

"स्नेहस्वेदैरिमां वैद्यश्चिकित्सेदवपाठिकाम्" ॥

अथान्त्रालजीलक्षणमाह ।

"घनामवक्त्रां पिडकामुन्नतां परिमण्डलाम् ।

अन्त्रालजीमल्पपूयां तां विद्यात् कफवातजाम्"

॥

घनां कठिनाम् । परिमण्डलां वर्त्तुलाम् । अल्प-

पूयां स्वल्पस्रावाम् ॥

अथ तस्याश्चिकित्सा ।

"अन्त्रालजीं यवप्रख्यां पूर्ब्बं स्वेदैरुपाचरेत् ।

मनःशिलादेवदारुकुष्ठकल्कैः प्रलेपयेत् ॥

पक्वां ब्रणविधानेन यथोक्तेन प्रसाधयेत्" ॥

इति भावप्रकाशे क्षुद्ररोगाधिकारः ॥

(अस्य सकारणलक्षणसम्प्राप्तिचिकित्सितानि

यथा,

"स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसम्मिता

।

पिटिका कफवाताभ्यां बालानामजगल्लिका ॥

यवप्रख्या यवप्रख्या ताभ्यां मांसाश्रिता घना ।

अवक्त्राश्चालजीवृत्तास्तोकपूयाघनोन्नताः ॥

ग्रन्थयः पञ्च वा षड् वा कच्छपी कच्छपोन्नता ।

कर्णस्योद्ध्वं समन्ताद्वा पिटिका कठिनोग्ररुक्

॥

शालूकाभा पनसिका शोफस्त्वल्परुजः स्थिरः

।

हनुसन्धिसमुद्भूतस्ताभ्यां पाषाणगर्द्दभः ॥

शाल्मलीकण्टकाकाराः पिटिकाः सरुजो

घनाः ।

मेदोगर्भा मुखे यूनां ताभ्याञ्च मुखदूषिकाः ॥

ते पद्मकण्टका ज्ञेया यैः पद्ममिव कण्ठकैः ।

चीयते नीरुजैश्चैतैः शरीरं कफवातजैः ॥

पित्तेन पिटिकावृत्ता पक्वोदुम्बरसन्निभा ।

महादाहज्वरकरी विवृता विवृतानना ॥

गात्रेष्वन्तश्च वक्त्रस्य दाहज्वररुजान्विताः ।

मसूरमात्रास्तद्वर्णास्तत्संज्ञाः पिटिका घनाः ॥

ततः कष्टतराः स्फोटा विस्फोटाख्या

महारुजाः ।

या पद्मकर्णिकाकारा पिटिका पिटिकान्विता ॥

सा विद्धा वातपित्ताभ्यां ताभ्यामेव च गर्दभी ।

मण्डला विपुलोत्सन्ना सरागपिटिकाचिता ॥

कक्षेति कक्षासन्नेषु प्रायोदेशेषु सानिलात् ।

कर्कटी । कण्टकारी । अग्निदमनी ।
इति राज-
निर्घण्टः ॥

**क्षुद्रबुद्धिः**, त्रि (क्षुद्रा अला अधमा क्रूरा वा बुद्धि-
र्मतिर्यस्य ।) अल्पमतिः । क्रूरधीः ।
अधमचेतनः ॥

**क्षुद्रमुस्ता**, स्त्री, (क्षुद्रा मुस्ता इति कर्म्मधारयः ।)
कसेरुः । इति राजनिर्घण्टः ॥
(कसेरुशब्देऽस्या
गुणपर्य्याया ज्ञेपाः ॥)

**क्षुद्ररोगः**, पुं, (क्षुद्रः रोगः ।) स्वल्पव्याधिः । तस्य
गणना यथा । पलितः १ इन्द्रलुप्तः २
दारुणकः
३ अरुषिका ४ इरिवेल्लिका ५
पनसिका ६ पा-
षाणगर्द्दभः ७ मुखदूषिका ८ व्यङ्गः ९
नीलिका
१० वल्मीकः ११ कक्षा १२
गन्धिनाम १३
अग्निरोहिणी १४ विदारिका १५
चिप्पः १६
परिवर्त्तिका १७ अवपाटिका १८
निरुद्ध-
प्रकाशः १९ सन्निरुद्धगुदः २०
वृषणकच्छः २१
अहिपूतनः २२ गुदभ्रंशः २३
शूकरदंष्ट्रः २४
अनुशयी २५ अलसः २६ दारी २७
कदरः २८
तिलकालकः २९ मसकः ३०
जतुमणिः ३१ न्यच्छः
३२ पद्मिनीकण्टकम् ३३
अजगल्लिका ३४ यव-
प्रख्या ३५ अन्त्रालजी ३६ विवृता
३७ इन्द्रवृद्धा
३८ गर्द्दभिका ३९ जालगर्द्दभः ४०
कच्छपी ४१
शर्कराब्बुर्दः ४२ । एषां मध्ये येषां
लक्षणचिकित्सा

अथ सन्निरुद्धगुदस्य लक्षणमाह ।
"वेगसन्धारणाद्वायुर्विहतो गुदसंश्रितः ।
निरुणद्धि महास्रोतः सूक्ष्मं द्वारं करोति हि ॥
मार्गस्य सौक्ष्म्यात कृच्छ्रेण पुरीषं तस्य गच्छति
।
सन्निरुद्धगुदं व्याधिमेतं विद्यात् सुदुस्तरम्" ॥
अथ तस्य चिकित्सा ।
"सन्निरुद्धगुदे तैलैः सेको वातहरैर्हितः ।
तथा निरुद्धप्रकाशक्रियापि कथिता हिता" ॥
अथाजगल्लिकालक्षणमाह।
"स्निग्धा सवर्णा ग्रथिता निरुजा मुद्गसन्निभा ।
कफवातोत्थिता ज्ञेया बालानामजगल्लिका" ॥
ग्रथिता गुम्फितेव मुद्गसन्निभा मुद्गाकृतिः ॥
अथ तस्याश्चिकित्सा ।
"तत्राजगल्लिकामामां जलौकोभिरुपाचरेत् ।
शुक्तिशौराष्ट्रिकाक्षारकल्कैश्चालेपयेन्मुहुः ॥
कठिना क्षारयोगैश्च द्रावयेदजगल्लिकाम् ।
श्यामालाङ्गलिकामूर्व्वाकल्कैरपि विलेपयेत् ॥
पक्वां व्रणविधानेन यथोक्तेन प्रसाधयेत्" ॥

पिजाद्भवन्ति पिटिकाः सूक्ष्मा लाजोपमा घनाः
।
तादृशी महती त्वेका गन्धनामेति कीर्त्तिता ।
घर्म्मस्वेदपरीतेऽङ्गे पिटिकाः सरुजो घनाः ॥
राजिकावर्णसंस्थानप्रमाणा राजिकाह्वयाः ।
दोषैः पित्तोल्वणैर्मन्दैर्विसर्पति विसर्पवत् ॥
शोफोऽपाकस्तनुस्ताम्रो ज्वरकृज्जालगर्द्दभः ।
मलैः पित्तोल्वणैः स्फोटा ज्वरिणो
मांसदारुणाः ॥
कक्षाभागेषु जायन्ते येऽग्न्याभाः साग्निरोहिणी ।
पञ्चाहात्सप्तरात्राद्वा पक्षाद्वा हन्ति जीरितम् ॥
त्रिलिङ्गा पिटिका वृत्ता जत्रूद्र्ध्वमिरिवेल्लिका ।
विदारी कन्दकठिना विदारी कक्षवङ्क्षणे ॥
मेदोऽनिलकफैर्ग्रन्थिः स्नायुमांससिराश्रयैः ।
भिन्नो वसाज्यमध्वाभं स्रवेत्तत्रोल्वणोऽनिलः ॥
मांसं विशोष्य ग्रथितां शर्करामुपपादयेत् ॥
दुर्गन्धं रुधिरं क्लिन्नं नानावर्णं ततो मलाः ॥
तां स्रावयन्ति निचितां विन्द्यात्तच्छर्कराब्बुर्दम्
।
पाणिपादतले सन्धौ जत्रूद्र्ध्वं वोपचीयते ॥
वल्मीकवच्छनैर्ग्रन्थिस्तद्वद्बह्वणुभिर्मुखैः ।
रुग्दाहकण्डूक्लेदाढ्यो वल्मीकोऽसौ
समस्तजः ॥
शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः ।

| | | |
|---|---|---|
| पूर्ब्बं न लिखिता ते चात्र लिख्यन्ते ॥<br>* ॥<br>अथ अरुंषिकालक्षणमाह ।<br>"अरूषि बहुवक्त्राणि बहुक्लेदीनि मूर्द्धनि ।<br>कफासृक्कृमिकोपेन तानि विद्यादरुंषिकाम्" ॥<br>अरूंषि व्रणानि ।<br>अथारुंषिकायाश्चिकित्सा ।<br>"नीलोत्पलस्य किञ्जल्को धात्रीफलसमन्वितः ॥<br>यष्टीमधुकयुक्तश्च लेपाद्धन्यादरुंषिकाम् ।<br>जिफलाया रजो यष्टी मार्क्कवोत्पलसारिवा । | | |

ग्रन्थिः कोलवदुत्सन्नो जायते कदरन्तु तत् ॥
वेगसन्धारणाद्वायुरपानोऽपानसंश्रयम् ।
अणूकरोति वाह्यान्तर्मार्गमस्य ततः शकृत् ॥
कृच्छ्रान्निर्गच्छति व्याधिरयं रुद्धगुदस्ततः ।
कुर्य्यात् पित्तानिलं पाकं नखमांसे सरुग्ज्वरम् ॥
चिप्यमक्षतरोगञ्च विद्यादुपनखञ्च तम् ।
कृष्णोऽभिघाताद्रूक्षश्च खरश्च कुनखो नखः ॥
दुष्टकर्दमसंस्पर्शात् कण्डूक्लेदान्वितान्तराः ।
अङ्गुल्योऽलसमित्याहुस्तिलाभांस्तिलकालकान्
॥
कृष्णानवेदनांस्त्वक्स्थान् मांसांस्तानेव चोन्नतान्
।
माषेभ्यस्तून्नततरांश्चर्म्मकीलान् सितासितान् ॥
तथाविधो जतुमणिः सहजो लोहितस्तु सः ।
कृष्णं सितं वा सहजं मण्डलं लाञ्छनं समम् ॥
शोकक्रोधादिकुपिताद्वातपित्तान्मुखे तनु ।
ण्यामलं मण्डल व्यङ्गं वक्त्रादन्यत्र नीलिका ॥
परुषं परुषस्पर्शं व्यङ्गं श्यानञ्च मारुतात् ।
पित्तात्ताम्रान्तमानीलं श्वेतान्तं कण्डुमत्कफात् ॥
रक्ताद्रक्तान्तमाताम्रं शोषं चिमचिमायते ।
वायुनोदीरितः श्लेष्मा त्वचं प्राप्य विशुष्यति ॥
ततस्त्वग् जायते पाण्डुः क्रमेण च विचेतना ।
अल्पकण्डूरविक्लेदा सा प्रसुप्ति प्रसुप्तितः ॥
असम्यग्वमनोदीर्णपित्तश्लेष्मान्ननिग्रहैः ।
मण्डलान्यतिकण्डूनि रागवन्ति बहूनि च ॥
उत्कोठः सोऽनुबन्धस्तु कोठ इत्यभिधीयते ।
प्रोक्ताः षट् त्रिंशदित्येते क्षुद्ररोगा विभागशः” ॥
इति वाभटे उत्तरस्याने एकत्रिंशोऽध्यायः ॥
अतोऽस्य प्रतिषेधो यथा, --
“विस्राववेज्जलौकोभिरपक्वामजगल्लिकाम्।
स्वेदयित्वा यवप्रख्यां विलयाय विलेपयेत् ॥
दारुकुष्ठमनोह्वालैरित्यापाषाणगर्द्दभात्।
विधिसांश्चाचरेत् पक्वान् प्रणवत्साजगल्लिकान्
॥
रोध्रकुस्तम्बरुवचाप्रलेपो मुखदूषिके ।
वटपल्लवयुक्ता वा नारिकेलोत्थशुक्तयः ॥
अशान्तौ वभनं नस्यं ललाटे च शिराव्यधः ।
निम्बाम्बु वान्तो निम्बान्बु साधितं पद्मकण्टके ॥
प्रिबेत् क्षौद्रान्वितं सर्पिनिम्बारग्बधलेपनम् ।
चिप्यं शुद्ध्या जितोष्माणं
साधयेच्छस्त्रकर्म्मणा ।
दुष्टं कुनखमप्येवं चरणावलसे पुनः ॥
धान्याम्लसिक्तौकासीसपटोलीरोचनातिलै ।
सनिम्बपत्रैरालिम्पेद्बहेत्तु तिलकालकान् ॥
माषांश्च सूर्य्यकान्तेन क्षारेण यदि वाग्निना ।
तद्वदुत्कृत्य शस्त्रेण चर्म्मकीलजतुमणी ॥
लाञ्छनादित्रये कुर्य्याद् यथासन्न सिराव्यधम्
।
लेपयेत् क्षीरपिष्टैश्च क्षीरिवृक्षत्वगङ्कुरैः ॥
व्यङ्गेषु चार्ज्जुनत्वग्वा मञ्जिष्ठा वा समाक्षिका
।
लेपः सनवनीतावा श्वेताश्वखुरजामषी ॥
रक्तचन्दनमञ्जिष्ठा कुष्ठरोध्रप्रियङ्गवः ।
वटाङ्कुरा मसूराश्च व्यङ्गघ्ना मुखकान्तिदाः
॥
द्वे जीरके कृष्णतिलाः सर्षपाः पयसा सह ।
पिष्टाः कुर्व्वन्ति
वक्त्रेन्दुमपास्तव्यङ्गलाञ्छनम् ॥
क्षीरपिष्टा घृतक्षौद्रयुक्ता वा भृष्टनिस्तुषाः ।
मसूराः क्षीरपिष्टा वातीक्ष्णाः
शाल्मलिकण्टकाः ॥
स गुडः कोलमज्जा वा शशासृक्
क्षौद्रकल्कितः ।
सप्ताहं मातुलुङ्गस्थं कुष्ठं वा मधुनान्वितम् ॥
पिष्टा वाच्छालपयसा सक्षौद्रा मौशलीजटा ।
गौरस्थिमुशलीमूल-युक्तं वा साज्यमाक्षिकम्
॥
जम्ब्बाम्रपल्लवामस्तु हरिद्रे द्वे नवो गुडः ।
लेपः सवर्णकृत् पिष्टं स्वरसेन च तिन्दुकम् ॥
उत्पलपत्रं तगरं
प्रियङ्गुकालीयकदम्बदरमज्जा ।
इदमुद्वर्त्तनमास्यं करोति शतपत्रसङ्काशम् ॥
एभिरेवौषधैः पिष्टैर्मुखाभ्यङ्गाय साधयेत् ।
यथादोषर्त्तुकान् स्नेहान् मधुकक्वाथसंयुतैः
॥
यवान् सर्ज्जरसं रोध्रमुशीरं चन्दनं मधु ।
घृतं गुडञ्च गोमूत्रे पचेदादर्व्विलेपनात् ॥
तदभ्यङ्गान्निहन्त्याशु नीलिकाव्यङ्गदूषिकान्
।
कच्छपिका वल्माकमिन्द्रवृद्धा
पनसिका पाषाण-
गर्द्दभो जालगर्द्दभः कक्षा
विस्फोटकोऽग्निरो-
हिणी चिप्पं कुनखोऽनुशयी विदारिका
शर्करा-
र्ब्बुदं पामा विचर्च्चिका रकसा
पाददारिकाकदर-
मलसेन्द्रलुप्तौ दारुणकोऽरुंषिका
पलितं मसू-
रिका यौवनपिडका पद्मिनीकण्टको
जतुमणि-
र्म्यशकश्चर्म्मकीलस्तिलकालको
न्यच्छं व्यङ्गः परि-
वर्त्तिकाऽवपाटिका निरुद्धप्रकाशः
निरुद्धगुदो-
ऽहिपूतनं वृषणकच्छूर्गुदभ्रंशश्चेति” ॥
इति सुश्रुते
निदानस्थाने त्रयोदशेऽध्याये ॥
अत्रोक्तचिकित्सा-
दिकं यथारोगं ज्ञेयम् ॥ * ॥
अस्य पथ्यापथ्यानि यथा, --
“क्षुद्ररोगेषु सर्व्वेषु नानारोगानुकारिषु ।
दोषान् दूष्यानवस्थाञ्च निरीक्ष्य
मतिमान् भिषक् ॥
तस्य तस्य च रोगस्य पथ्यापथ्यानि
सर्व्वशः ।
यथादोषं यथादुष्टं यथावस्थञ्च
कल्पयेत्” ॥
इति वैद्यकपथ्यापथ्यविधौ
क्षुद्ररोगाधिकारः ॥)

**क्षुद्रवंशा**, स्त्री, (क्षुद्रा वंशा ।) वराहक्रान्ता । इति केचित् ॥

**क्षुद्रवर्व्वणा**, स्त्री, (क्षुद्रा वर्व्वणा ।) वरटा । इति राजनिर्घण्टः ॥

**क्षुद्रवल्ली**, स्त्री, (क्षुद्रा वल्ली ।) मूलपोती । इति राजनिर्घण्टः

**क्षुद्रवार्त्ताकी**, स्त्री, (क्षुद्रा वार्त्ताकी ।) बृहती ।

विवृतादींस्त जातान्तांश्चिकित्सेन्निरिवेल्लिकान्
॥
पित्तवीसर्पवत्तद्वत् प्रत्याख्यायाग्निरोहिणीम्॥
विलङ्घनं रक्तविमोक्षणञ्च
विरूक्षणं कायविशोधनञ्च ।
धात्रीप्रयोगान् शिशिरप्रदेहान्
कुर्य्यात् सदा जालकगर्द्दभस्य ॥
विदारिकां हृते रक्ते श्लेष्मग्रन्थितदाचरेत् ।
मेदोऽर्ब्बुदक्रियां कुर्य्यात् सुतरां शर्कराब्बुर्दे ॥
प्रवृद्ध सुबहुच्छिद्रं सशोफं मर्म्मणि स्थितम् ।
वल्मीकं हस्तपादे च वर्ज्जयेदितरत् पुनः ॥
शुद्धस्यास्रे हृते लिम्बेत् सपद्वारैवतामृतैः ।
श्यामाकुलत्थिकामूलदन्तीपललसक्तुभिः ॥
पक्वे तु दुष्टमांसानि गतीः सर्व्वाश्च शोधयेत् ।
शस्त्रेण सम्यगनु च क्षारेण ज्वलनेन वा ॥
शस्त्रेणोत्कृत्य निःशेषं स्नेहेन कदरं दहेत् ।
निरुद्धमणिवत्कार्य्यं रुद्धपायोश्चिकित्सितम्॥

मुखं करोति पद्माभं पादौ पद्मदलोपमौ ॥
कुङ्कुमोशीरकालीयलाक्षायष्ट्याह्वचन्दनम्।
न्यग्रोधपादांस्तरुणान् पद्मकं पद्मकेशरम् ॥
सनीलोत्पलमञ्जिष्ठं पालिकं सतिलाढके ।
पक्त्वा पादावशेषेण तेन पिष्टैश्च कार्षिकैः ॥
लाक्षापत्तङ्गमञ्जिष्ठा यष्टीमधुककुङ्कुमैः ।
अजाक्षीरद्विगुणितं तैलस्य कुडवं पचेत् ॥
नीलिकापलितव्यङ्गवलीतिलकदूषिकान् ।
हन्ति तन्नस्यमभ्यस्तं मुखोपचयवर्णकृत् ॥
मञ्जिष्ठा शवरोद्भवस्तु वरिकालाक्षा हरिद्राद्वयं
नेपालीहरितालकुङ्कुमगदागोरोचनागैरिकम् ।
पत्रं पाण्डुरटस्य चन्दनयुगं कालीयकं पारदं
पत्तङ्गं कनकत्वचं कमलजं बीजं तथा
केसरम् ॥
सिक्थं तुत्थं पद्मकाद्योतसाज्यं
मज्जाक्षीरं क्षीरिवृक्षाम्बुचाग्नौ ।
सिद्धं सिद्धं व्यङ्गनील्यादिनाशे
वक्त्रेच्छायामैन्दवीञ्चाशु धत्ते ॥
मार्कवस्वरसक्षीरतोयपिष्टानिनावने ।
प्रसुप्तौ वातकुष्ठोक्तं कुर्य्याद्दाहञ्च वह्निना ।
उत्कोठे कफपित्तोक्तं कोठे सर्व्वञ्च
कौष्ठिकम्” ॥
इति वाभट उत्तरतन्त्रे द्वात्रिंशोऽध्यायः ॥
“समासेन चतुश्चत्वारिंशत् क्षुद्ररोगा भवन्ति
।
तद्यथा, -- अजगल्लिका यवप्रख्याऽन्धालजी
विवृता

इत्यमरः ॥

**क्षुद्रवार्त्ताकिनी**, स्त्री, (क्षुद्रा वार्त्ताकिनीति ।)

श्वेतकण्टकारी । इति राजनिर्घण्टः ॥

**क्षुद्रशङ्खः**, पुं, (क्षुद्रः शङ्खः स्वल्पशङ्खजातिः ।

जोङ्डा इति भाषा । तत्पर्य्यायः ।
शङ्खनखः २ ।
इत्यमरः । १ । १० । २३ ॥
शङ्खनकः ३ इति
तट्टीका ॥ क्षुल्लकः ४ शम्बूकः ५
भषशङ्खकः ६ ।
अस्य गुणाः । कटुत्वम् । तिक्तत्वम् ।
शूलहरत्वम् ।
दीपनत्वञ्च । इति राजनिर्घण्टः ॥

**क्षुद्रशर्करा**, स्त्री, (क्षद्रा शर्क्करा
नित्यकर्म्मधारयः ।)

यावनालशर्करा । इति राजनिर्घण्टः ॥

**क्षुद्रशार्द्दूलः**, पुं, (क्षुद्रः शार्द्दूलः ।
नित्यकर्म्मधारयः ।)

चित्रव्याघ्रः । इति राजनिर्घण्टः ॥

**क्षुद्रशीर्षः**, पुं, (क्षुद्रं शीर्षं यस्य ।)
मयूरशिखाष्टक्षः ।

इति शब्दचन्द्रिका ॥

**क्षुद्रशुक्तिः**, स्त्री, (क्षुद्रा शुक्तिः ।
नित्यकर्म्मधारयः ।)

जलशुक्तिः । इति राजनिर्घण्टः ॥

**क्षुद्रश्यामा**, स्त्री, (क्षुद्रा श्यामा ।) कटभी । इति

राजनिर्घण्टः ॥ (कटभीशब्देऽस्या
विवृतिर्ज्ञातव्या ॥)

**क्षुद्रश्लेष्मान्तकः**, पुं, (श्लेष्मणां अन्तकः
श्लेष्मान्तकः ।

क्षुद्रः श्लेष्मान्तकः ।) भूकर्व्वुदारकः ।
इति राज-
निर्घण्टः ॥

**क्षुद्रश्वासः**, पुं, (क्षुद्रः अल्पः श्वासः ।)
अल्पश्वास-

रोगः । यथा, --
“रसनिमित्तमेव स्थौल्यं कार्श्यञ्च तत्र
श्लेष्मलाहार-

| | | |
|---|---|---|
| | | सेविनोऽध्यशनशीलस्याव्यायामिनो दिवास्वप्न- रतस्य चाम एवान्नरसो मधुरतरश्च शरीरमनु- क्रामन्नतिस्नेहान्मेदो जनयति तदतिस्थौल्यमापा- |

दयति तं अतिस्थूलं क्षुद्रश्वासपिपासाक्षुत्स्वप्न-
स्वेदगात्रदौर्गन्ध्यक्रथनगात्रसादगद्गदत्वानिक्षिप्र-
मेवाविशन्ति” । इत्यादि सुश्रुते १६ अध्यायः ॥
तस्य निदानादि यथा, --
“यैरेव कारणैर्हिक्का बहुभिः संप्रवर्त्तते ।
तैरेव कारणैः श्वासो घोरो भवति देहिनाम् ॥
विहाय प्रकृतिं वायुः प्राणोऽथ कफसंयुतः ।
श्वासयत्यूद्ध्वगो भूत्वा तं श्वासं परिचक्षते ॥
क्षुद्रकस्तमकश्छिन्नो महानूद्ध्वश्च पञ्चधा ।
भिद्यते स महाव्याधिः श्वास एको विशेषतः ॥
प्राग्रूपं तस्य हृत्पीडा भक्तद्वेषोऽरतिः परा ।
आनाहः पार्श्वयोः स्थूलं वैरस्यं वदनस्य च ॥
किञ्चिदारभमाणस्य यस्य श्वासः प्रवर्त्तते ।
निषण्णस्यैति शान्तिञ्च स क्षुद्र इति संज्ञितः” ॥
इति च सुश्रुते उत्तरतन्त्रे ५१ अध्यायः ॥
(“रूक्षायाः सोद्भवः कोष्ठे क्षुद्रवात् उदीरयन् ।
क्षुद्रश्वासो न सोऽत्यर्थं दुःखेनाङ्गप्रबाधकः ॥
हिनस्ति न स गात्राणि न च दुःखा यथेतरे ।
न च भोजनपानानां निरुणद्ध्युचितां गतिम् ॥
नेन्द्रियाणां व्यथां नापि काञ्चिदुत्पादयेद्रुजम् ।
स साध्य उक्तो बलिनः सर्व्वे चाव्यक्तलक्षणाः” ॥
इति चरके चिकित्सास्थाने २१ अध्याये ॥)

**क्षुद्रश्वेता**, स्त्री, (क्षुद्रा श्वेता ।) अर्क्कादिगणान्तर्गत-
वृक्षविशेषः । यथा, -- “अर्कालर्क्ककरञ्जद्वयना-
गदन्तीमयूरकभार्गीरास्नेन्द्रपुष्पीक्षुद्रश्वेतामहाश्वे-
तावृश्चिकाल्यलवणास्तापसवृक्षश्चेति ॥
अर्कादिको गणो ह्येष कफमेदोविषापहः ।
कृमिकुष्ठप्रशमनो विशेषाद्व्रणशोधनः” ॥
इति सुश्रुते ३९ अध्यायः ॥

**क्षुद्रसहा**, स्त्री, (सह + अच् टप् च । क्षुद्रा सहा
कर्म्मधारयः क्षुद्रस्य सहेत्येके ।) मुद्गपर्णी । (अस्याः
पर्य्याया यथा, --
“मुद्गपर्णी क्षुद्रसहा कामुद्गा सिहपर्णिका ।
वन्या माज्जारगन्धेति सूर्पपर्ण्यावुभे च ते” ॥
इति वैद्यकरत्नमालायाम् ॥ अस्या व्यवहारो
यथा, वमनमेषजान्तर्गतकषायविशेषे । “सुमनाः
सौमनसायिनी हरिद्रा दारुहरिद्रा वृश्चीरपुनर्नवा
महासहा क्षुद्रसहा कषायैश्च” । इति चरके
विमानस्थाने ८ अध्याये ॥) इन्द्रवारुणी । इति
धारयः ।) कण्टकारी । इति
शब्दचन्द्रिका ॥
(गुणादयोऽस्य कण्टकारीशब्दे
बोद्धव्याः ॥)

**क्षुद्रहिङ्गुली**, स्त्री, (क्षुद्रा हिङ्गुली ।
नित्यकर्म्मधारयः ।)
कण्टकारी । इति शब्दचन्द्रिकायां
क्षुद्रहिङ्गु-
लिकाशब्ददर्शनात् ॥

**क्षुद्रा**, स्त्री, (क्षुद् + “स्फायितञ्चिवञ्चिशकिक्षिपि
क्षुदीति” । उणां । २ । १३ । इति रक्
ततष्टाप् ।)
व्यङ्गा । नटी । वेश्या । सरघा ।
कण्टकारिका ।
इत्यमरः । २ । ४ । ९४ ॥ (अस्याः
पर्य्याया यथा, --
“अनाक्रान्ता स्पृही व्याघ्री भण्डाकीव
निदिग्धिका ।
सिंही धामनिका क्षुद्रा बृहती
कण्टकारिका” ॥
इति वैद्यकरत्नमालायाम् ॥
“कण्टकारी तु दुष्पर्शा क्षुद्रा व्याघ्री
निदिग्धिका ।
कण्ठालिका कण्टिकिनी धावनी बृहती
तथा” ॥
उभे च बृहत्यौ । यत आह सुश्रुतः ।
“क्षुद्रा या क्षुद्रभद्राख्या बृहतीति
निगद्यते” ।
गुणाश्चास्याः कण्टकारीशब्दे ज्ञातव्याः
॥ इति
भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
अस्या
व्यवहारो यथा, पञ्चतिक्तकषाये ।
“क्षुद्रामृताभ्यां सहनागरेण
सपौष्करञ्चैव किराततिक्तम् ।
पिबेत्कषायन्त्विह पञ्च तिक्तं
ज्वरं निहन्त्यष्टविधं समग्रम्” ॥
इति वैद्यकचक्रपाणिसंग्रहे ज्वराधिकारे
॥)
सश्वासकासारुचिपार्श्वरुग्ज्वरे
ज्वरे त्रिदोषप्रभवेऽपि शस्यते” ॥
इति भैषज्यरत्नावली ॥

**क्षुद्रान्त्रं**, क्ली, (क्षुद्रं अन्त्रं उदरस्थनाडीभेदः ।)
हृदयस्थितसूक्ष्मान्त्रम् । यथा, --
समाननाम्नः पव-
नस्य सकलाङ्गचारित्वेऽपि
नाभ्यादिस्थानविशेषा
वाचो युक्तिप्राचुर्य्याभिप्रायेण
प्राणायतनानि प्रप-
ञ्चयितुमाह ।
“वपा वसावहननं नाभिः क्लोम यकृत्
प्लिहा ।
क्षुद्रान्त्रं वृक्ककौ वस्तिः पुरीषाधानमेव
च ॥
प्राणाशयोऽथ हृदयं स्थूलान्त्रं गुद एव च
।
उदरञ्च गुदौ कौद्व्यौ
विस्तारोऽयमुदाहृतः” ॥
वपा प्रसिद्धा । वसा मांसस्नेहः । नाभिः
प्रसिद्धा ।
अवहननं पुष्फुसः । प्लीहा
आयुर्व्वेदप्रसिद्धः ।
ते च मांसपिण्डाकारे सव्यकुक्षिगते ।
यकृत्
कालिका । क्लोम मांसपिण्डः । ते च
दक्षिण-
कुक्षिगते । क्षुद्रान्त्रं हृत्स्थान्त्रम् ।
वृक्ककौ
हृदयसमीपस्थौ मांसपिण्डौ ।
वस्तिर्मूत्राशयः ।
पुरीषाधानं पुरीषाशयः ।
आमाशयोऽपक्वान्न-
स्थानम् । हृदयं हृत्पुण्डरीकम् ।
स्थूलान्त्रगुदो-
दराणि प्रसिद्धानि ।
वाह्याद्गुदवलयादन्तर्गुद-
वलये द्वे । तौ च गुदौ कौष्ठ्यौ कोष्ठे
नाभेरधः

राजनिर्घण्टः ॥

**क्षुद्रसुवर्णं**, क्ली, (क्षुद्रं सुवर्णम् । नित्यकर्म्मधारयः ।)

रीतिः । इति राजनिर्घण्टः । (पित्तलम् ॥)

**क्षुद्रहा**, [न्] पुं, (क्षुद्रान् नीचान् क्रूरस्वभावान्

हन्तीति । हन् + क्विप् ।) महादेवः । इति शिव-
सहस्रनामस्तोत्रम् । इति कश्चित् । महाभार-
तीयानुशासनपर्व्वणि शिवसहस्रनामसु एतन्नाम
नास्ति । लिङ्गपुराणोक्तविष्णुकृतशिवसहस्रनाम-
स्तोत्रे क्षत्रहा इति नाम वर्त्तते । यथा, --
"प्रशान्तबुद्धिरक्षुद्रः क्षत्रहा नित्यसुन्दरः ।
धैर्य्याग्रधूर्य्यो धात्रीशः साकल्यः शर्करीपतिः" ॥
इति वृहत्तन्त्रसारः ॥

**क्षुद्रहिङ्गलिका**, स्त्री, (क्षुद्रा हिङ्गुलिला नित्यकर्म्म-

चाङ्गेरिका । हिंस्रा । मक्षिकामात्रम् ।
इति
हेमचन्द्रः ॥ वादरता । इति
शब्दरत्नावली ॥
गवेधुका । इति रत्नमाला ॥

**क्षुद्राग्निमन्थः**, पुं, (क्षुद्रः अग्निमन्थः ।) दशमूले

प्रसिद्धवृक्षतिशेषः । छोटा गणियारि
इति हिन्दी-
भाषा । तत्पर्य्यायः । तपनः २ विजया
३ गणिका-
रिका ४ अरणिः ५ लघुमन्थः ६
तेजोवृक्षः ७
तनुत्वचा ८ । अस्य गुणाः ।
"अग्निमन्थद्वयञ्चैव तुल्यं वीर्य्यरसादिषु
।
तत्प्रयोगानुसारेण योजयेत्
स्वमनीषया" ॥
इति राजनिर्घण्टः ॥

**क्षुद्राञ्जनं**, क्ली, (क्षुद्रं अञ्जनम् ।) चक्षूरोगस्यौषध-

विशेषः । यथा, --
"गोमूत्रपित्तमदिराशकृद्धात्रीरसे पचेत् ।
क्षुद्राञ्जनं रसे चान्यत् यकृतस्त्रैफलेऽपि
वा ॥
मैन्घवोपहितं युज्ज्यान्निहितं वेणुगह्वरे ॥
मेदो यकृद्धृतञ्चाजं पिप्पलं सैन्धवं मधु ।
रसमामलकञ्चापि पक्वं
सम्यङ्निधापयेत् ॥
कोशे खदिरनिर्म्माणे तद्वत् क्षुद्राञ्जनं
हितम्" ॥
इति सुश्रुते १८ अध्यायः ॥

**क्षुद्राण्डमत्स्यसंघातः**, पुं, (क्षुद्राणां अण्डमत्स्यानां

अण्डात् अभिनवजातानां
मत्स्यानामित्यर्थः सङ्घातः
समूहः ।) पोताधानम् । इत्यमरः । १ ।
१० । १९ ॥
पोना इति भाषा ॥

**क्षुद्रादिकषायः**, पुं, (क्षुद्रः आदिर्यस्य स कषायः ।)

कण्टकार्य्यादिकषायः । यथा, --

प्रदेशे भवौ । अयञ्च प्राणायतनस्य
विस्तार-
उक्तः । पूर्ब्बश्लोके तु सङ्क्षेपः । अतएव
पूर्ब्बश्लोको-
क्तानां केषाञ्चिदिह पाठः । इति
मिताक्षरायां
प्रायश्चित्ताध्यायः ॥
("पञ्चदशकोष्ठाङ्गानि तद्यथा, --
"नाभिश्च हृदयञ्च क्लोम च यकृच्च
प्लीहा च वुक्कौ
च वस्तिश्च पुरीषाधाराश्चामाशयश्चेति
पक्वा-
शयश्चोत्तरगुदञ्चाधरगुदञ्च क्षुद्रान्त्रञ्च
स्थूलान्त्रञ्च
वपावहञ्चेति" । इति चरके शारीरस्थाने
७
अध्याये ॥)

**क्षुद्रापामार्गः**, पुं, (क्षुद्रः अपामार्गः । कर्म्मधारयः ।)

रक्तापामार्गः । इति राजनिर्घण्टः ॥
(रक्तापा-
मार्गशब्देऽस्य विवरणं ज्ञेयम् ॥)

**क्षुद्रामलकं**, क्ली, (क्षुद्रं आमलकम् । नित्यकर्म्मधारयः ।)

आमलकम् । इति राजनिर्घण्टः ॥ काठ
आमला
इति भाषा ॥

**क्षुद्रामलकसंज्ञः**, पुं, (क्षुद्रामलकस्य संज्ञा यस्य ।)

कर्क्कटवृक्षः । इति राजनिर्घण्टः ॥

**क्षुद्राम्रः**, पुं, (क्षुद्रः आम्रः । नित्यकर्म्मधारयः ।)

कोषाम्रः । इति राजनिर्घण्टः ॥
(यथास्य
पर्य्यायाः ।
"कोशाम्र उक्तः क्षुद्राम्रः कृमिवृक्षः
सुकोशकः" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥
गुणाश्चास्य कोशाम्रशब्दे ज्ञेयाः ॥)

**क्षुद्राम्लपनसः**, पुं, (क्षुद्रः अम्लपनसः ।) लकुचः ।

| | | |
|---|---|---|
| | "क्षद्रामृतानागरपुष्कराह्वयैः<br>कृतः कषायः कफमारुतोत्तरे। | इति त्रिकाण्डशेषः ॥ (लकुचशब्दे<br>विवृतिरस्य<br>व्याख्येया ॥)<br>**क्षुद्राम्ला**, स्त्री, (क्षुद्रा अम्ला ।) अम्ललोणिका।<br>यथा, --<br>"क्षुद्रपत्रा च चाङ्गेरी क्षुद्राम्ला चाम्ललो<br>णिका" ॥<br>इति हारावली। शशाण्डली। इति<br>राजनिघण्टः ॥ |

**क्षुद्राम्लिका**, स्त्री, (क्षुद्रा अम्लिका ।) वृक्षविशेषः ।

आववति इति आवता इति च हिन्दी भाषा ॥

तत्पर्य्यायः । चाङ्गेरी २ चुक्राम्ला ३ चुक्रिका ४
लोणाम्ला ५ चतुःपत्री ६ लोणा ७ वोढा ८
अम्लपत्रिका ९ अम्बष्ठा १० अम्लवती ११ अम्ला
१२ दन्तशठा १३ शाखाम्ला १४ अम्लपत्री १५ ।
अस्या गुणाः । अम्लरसत्वम् । उष्णत्वम् । वह्नि-
वर्द्धनत्वम् । रुचिकारित्वम् । ग्राहित्वम् । दोष-
दुर्नामकफनाशित्वञ्च । इति राजनिर्घण्टः ॥

**क्षुद्रिका**, स्त्री, (क्षुद्र + संज्ञाया कन् ततः टाप् पूर्ब्बातः

इत्वञ्च ।) दंशः । इति राजनिर्घण्टः ॥ (हिक्का-
रोगप्रकारभेदः । यथा, --
“विकृष्टकालैर्या वेगैर्मन्दैः समभिवर्त्तते ।
क्षुद्रिका नान सा हिक्का जत्रुमूलात् प्रधाविता” ॥
इत्युत्तरतन्त्रे पञ्चाशत्तमेऽध्याये भुश्रुतेनोक्तम् ॥)

**क्षुद्रेङ्गुदी**, स्त्री, (क्षुद्रा इङ्गुदी कर्म्मधारयः ।) यवासः ।

इति राजनिर्घण्टः ॥ (यवासशब्दे ज्ञातव्यमस्या
विवरणम् ॥)

**क्षुद्रेर्व्वारुः**, पुं, (क्षुद्रा इर्व्वारुः कर्म्मधारयः ।) गोपाल

कर्कटी । इति राजनिर्घण्टः ॥

**क्षुद्रोदुम्बरिका**, स्त्री, (क्षुद्रा उदुम्बरिका ।) काको-

दुम्बरिका । इति राजनिर्घण्टः ॥

रौद्रं मर्य्यादहीनत्वं क्षुधा सर्व्वं प्रवर्त्तते ॥
भगिनीं जननीं पुत्त्रं भार्य्यां दुहितरं तथा ।
भ्रातरं स्वजनं वापि क्षुधाविष्टो न विन्दति” ॥
इति वह्निपुराणे प्रेतोपाख्याननामाध्यायः ॥

**क्षुधाकुशलः**, पुं, (क्षुधायां क्षुधोद्रेकविषये कुशलः

निपुणः विशेषेण क्षुधोत्पादकः ।)
विल्वान्तरवृक्षः ।
इति राजनिर्घण्टः ॥

**क्षुधातुरः**, त्रि, (क्षुधा क्षुधया आतुरः ।) क्षुधा-

पीडितः । यथा, --
“अर्थातुराणां न सुहृन्न बन्धुः
कामातुराणां न भयं न लज्जा ।
चिन्तातुराणां न सुखं न निद्रा
क्षुधातुराणां न बलं न तेजः” ॥
इति गारुडे ११६ अध्यायः ॥

**क्षुधार्त्तः**, त्रि, (क्षुधया आर्त्तः ऋतो वा तृतीयातत्पु-

रुषे ऋतस्य वृद्धिः ।) क्षुत्पीडितः । यथा, --
“शीतार्त्तश्च क्षुधार्त्तश्च कम्पान्वितकलेवरः ।
जजागार तदा रात्रौ प्लुतो नीहारवारिणा” ॥
इति शिवरहस्ये शिवरात्रिव्रतकथा ॥ (यथा, च
मनुः । १० । १०७ ।
“भरद्वाजः क्षुधार्त्तस्तु सपुत्त्रो विजने वने ।
बह्वीर्गाः प्रतिजग्राह वृधोस्तक्ष्णो महातपाः” ॥)

**क्षुधाभिजननः**, पुं, (क्षुधां अभिजवयतीति । अभि +

जन् + ल्युः ।) राजिका । इत्यमरः । २ । ९ । १९ ॥
क्षुधाजनकद्रव्यमात्रे त्रि ॥

**क्षुधावती**, स्त्री, (क्षुधाऽस्यामस्तीति । मतुप् मस्य

वत्वम् ।) क्षुधाजनकौषधवटी । अजीर्णादि-
रोगनाशकगुडिका । यथा, --
“रसायो गन्धकाभ्राणि त्र्युषणं त्रिफला वचा ।
यमानी शतपुष्पा च चविका जीरकद्वयम् ॥
प्रत्येकं पलमेषान्तु घण्टकणपुनर्न्वा ।
माणकं ग्रन्थिकञ्चेन्द्रकेशराजसुदर्शनाः ॥
दण्डोत्पला त्रिवृद्दन्ती जामातृरक्तचन्दनम् ।
भृङ्गापामार्गकुलका मण्डूकञ्च पलार्द्धकम् ॥
आर्द्रकस्वरसेनाथ गुडिकां संप्रकल्पयेत् ।
अस्याः प्रसादान्मन्दाग्निर्भवेद्दावानलो नरः” ॥
इति चिकित्सारत्ननिधौ मन्दाग्न्यधिकारे ॥)

**क्षुधासागररसः**, पुं, (क्षुधायां क्षुधाया वा सागररस

इव क्षुधोद्रेकात् तथात्वम् ।) औषधविशेषः ।
यथा, --
“त्रिकटु त्रिफला चैव तथा लवणपञ्चकम् ।
क्षारत्रयं रसं गन्धं भागैकं पूर्ब्बवद्विषम् ॥
गुञ्जामात्रां वटीं कुर्य्याल्लवङ्गैः पञ्चभिः सह ।
क्षुधासागरनाभायं रसः सूर्य्येण निर्म्मितः” ॥
पूर्ब्बवद्विषमित्यमृतवट्युक्तभागवत् । तेनात्र विषस्य
भागद्वयम् । इति भैषज्यरत्नावली ॥

**क्षुधितः**, त्रि, (क्षुध + कर्त्तरि क्तः । यद्वा क्षुधा जाता-

ऽस्य इति तारकादित्वादितच् प्रत्ययः ।) क्षुधा-
न्वितः । तत्पर्य्यायः । बुभुक्षितः २ जिघत्सुः ३
अशनायितः ४ । इत्यमरः । ३ । १ । २० ॥

**क्षुधुनः**, पुं, (क्षुध बुभुक्षायां + “क्षुधिपिसिमिथः

कित्” । उणां । ३ । ४४ । इति उनन् स च
कित् ।) म्लेच्छभेदः । इत्युणादिकोषः ॥

**क्षुप**, सादे । इति कविकल्पद्रुमः ॥ (सौं-परं-अकं-

सेट् ।) सौत्रधातुरयम् । क्षुपः । इति दुर्गा-
दासः ॥

**क्षुपः**, पुं, (क्षुप् + “इगुपधेति कः” । ३ । १ । १३५ ।)

ह्रस्वशाखाशिफः । क्षुद्रवृक्षः । इत्यमरः । २ ।
४ । ८ ॥
(यथा, महाभारते । १ । १७२ । २८ ।
“तस्या रूपेण स गिरिर्वेशेन च विशेषतः ।
स सवृक्षक्षुपलतो हिरण्मय इवाभवत्” ॥)
श्रीकृष्णात् सत्यभामायां जातपुत्त्रविशेषः ।
यथा,
“जज्ञिरे सत्यभामायां भानुर्भोमरथः क्षुपः ।
रौहितो दीप्तिमांश्चैव ताम्रजाक्षो जलान्तकः ॥
भानुर्भीमरिका चैव ताम्रपक्षा जलन्धमा ।
चतस्रो जज्ञिरे तेषां स्वसारो गरुडध्वजात्” ॥
इति महाभारते हरिवंशे १६३ अध्यायः ॥ * ॥

**क्षुद्रोपोदकनाम्नी**, स्त्री, (क्षुद्रा उपोदकनाम्नी ।)

मूलपोती । इति राजनिर्घण्टः ॥

**क्षुद्रोपोदकी**, स्त्री, (क्षुद्रा उपोदकी ।) स्वल्पपूतिका-

शाकः । तत्पर्य्यायः । सूक्ष्मपत्रा २

मण्टपी ३ ।

अस्या गुणाः । "रसवीर्य्यविपाकेषु

सदृशी पूर्ब्बया

स्वयम्" । पूर्ब्बया उपोदक्या । इति

राजनिर्घण्टः ॥

**क्षुद्रोलूकः**, पुं, (क्षुद्र उलूकः नित्यकर्म्मधारयः ।)

डुडुलः । इति राजनिर्घण्टः ॥

**क्षुध**, लृ य औ क्षुदि । इति कविकल्पद्रुमः ॥ (दिवां

--परं-सकं-अनिट् ।) क्षुद्भक्षणेच्छा ।

लृ, अक्षु-

धत् । य, क्षुध्यत्यन्नं बुभुक्षितः । औ,

क्षोद्धा ।

इति दुर्गादासः ॥

**क्षुधा**, स्त्री, (क्षुध् बुभुक्षायां सम्पदादित्वाद्

क्विप् हलन्तत्वाद् वा टाप् ।)

भोजनेच्छा । इति

दुर्गादासः ॥ अभ्यवहारजिहीर्षा इति

॥ "या देवी

सर्व्वभूतेषु क्षुधारूपेण संस्थिता" ।

इति देवी-

माहात्म्यटीकायां नागोजीभट्टः ॥

तत्पर्य्यायः ।

अशनाया २ बुभुक्षा ३ क्षुत् ४ ।

इत्यमरः शब्द-

रत्नावली च ॥ जिघत्सा ५ । इति

जटाधरः ॥ * ॥

तत्कार्य्याणि यथा, --

"व्याधयो निर्जिताः सर्व्वे क्षुधया

नृपसत्तम ! ॥

कुण्डली मुकुटी स्रग्वी तथैवालङ्कृतो

नरः ।

क्षुधार्त्तो न विराजेत प्रेतवत्तृषितो

नृणाम् ॥

वदरास्थिसमाञ्चैषां भक्षयित्वा पिबेदनु ॥

वारिभक्तं जलञ्चैव प्रातरुत्थाय मानवः ।

वटी क्षुधावती नाम सर्व्वाजीर्णविनाशिनी ॥

अग्निञ्च कुरुते दीप्तं भस्मकञ्च नियच्छति ।

अम्लपित्तञ्च शूलञ्च परिणामकृतञ्च यत् ॥

तत्सर्व्वं शमयत्याशु भास्करस्तिमिरं यथा ।

मधुरं वर्ज्जयेदत्र विशेषात् क्षीरशर्करे" ॥

इति भैषज्यरत्नावल्यामम्लपितचिकित्सा॥

तस्याः

स्वल्पनृहद्भेदौ तत्रैव द्रष्टव्यौ ॥ * ॥ क्षुधायुक्ते त्रि

॥

(क्षुधाजनकापरौषधम् । यथा, --

"सप्त पञ्चचतुर्भागाष्टङ्गणक्षारकद्वये।

त्रयस्त्रयः पदूनाञ्च द्वौ द्वौ मरिचचित्रयोः ॥

शुण्ठीलवङ्गयोर्द्व्यौद्वावस्नयोर्गेन्न भावयेत् ।

वटीङ्कोलप्रमाणेन कारयेद्भिषजां वरः ॥

आमशूलमम्लपित्तं पित्तशूलं विशेषतः ।

दुर्नामग्रहणीमुग्रा मजीर्णानि विनाशयेत् ॥

नाम्न क्षुधावती ह्येषा वह्निदेवेन निर्म्मिता ।

इक्ष्वाकुराजपिता । यथा, --

"आसीत् कृतयुगे तात ! मनुर्द्दण्डधरः प्रभुः ।

तस्य पुत्रो महाबाहुः प्रसन्धिरिति विश्रुतः ॥

प्रसन्धेरभवद् पुत्रः क्षुप इत्यभिसंज्ञितः ।

क्षुपस्य पुत्रस्त्विक्ष्वाकुर्म्महीपालोऽभवत् प्रभुः"

॥

इति महाभारते । १४ । ४ । २-४ ॥

द्वारकापश्चिम-

दिक्स्थपर्व्वतः । यथा, --

"दक्षिणस्यां लतावेष्टः पञ्चवर्णो विराजते ।

इन्द्रकेतुप्रतीकाशः पश्चिमस्यां तथा क्षुपः" ॥

इति महाभारते हरिवंशे द्वारवतीविशेष-

निर्म्माणे १५७ अध्यायः ॥

**क्षुपकः**, पुं, (क्षप + स्वार्थे कन् ।) क्षुपः । क्षुद्रवृक्षः ।

यथा, --

"अतो यो विपरीतः स्यात् सुखसाध्यः स

उष्पते ।

अबद्धमूलः क्षुपको यद्वदुत्पाटने सुखः" ॥

इति सुश्रुते प्रथममागे २४ अध्यायः ॥

**क्षुपालुः**, पुं, (क्षुप + आलुप्रत्ययः ।) पानीयालुः ।

इति राजनिर्घण्टः ॥

**क्षुपडोडमुष्टिः**, पुं, (दुल् उत्क्षेपे + अच् ततो

गुणः लकारस्य डत्वम् । दस्यापि डत्वं

पृषोदरात्

| | | |
|---|---|---|
| स्त्रीरत्नविविधान् भोगान् वस्त्राण्याभरणानि च ।<br>न चेच्छति नरः किञ्चित् क्षुधया कलुषीकृतः ॥<br>यथा भूमिगतं तोयं रविरश्मिभिः शुष्यति ।<br>शरीरस्थस्तथा धातुः शुष्यते जाठराग्निना ॥<br>न शृणोति न चाघ्राति चक्षुषा न च पश्यति ।<br>दह्यते वेपते भूढः शुष्यते च क्षुधार्द्दितः ॥<br>मूकत्वं बधिरत्वञ्च जरान्धत्वन्तु पङ्गुताम् । | | |

साधुः । तादृक मुष्टिर्यस्य ।) विषमुष्टिक्षुपः ।
इति राजनिर्घण्टः ॥ (विषमुष्टिशब्देऽस्या गुणा-
दयो ज्ञेयाः ॥)

**क्षुब्धः**, पुं, (क्षुभ् + "क्षुब्धस्यान्तध्वान्तलग्नेति' । ७ ।
२ । १८ । इति निपातनात् साधुः ।) मन्थान-
दण्डः । इति हेमचन्द्रः ॥ षोडशरतिबन्धान्त-
र्गतैकादशबन्धः । यथा, --
"पार्श्वोपरि पदौ कृत्वा योनौ लिङ्गेन ताडयेत् ।
बाहुभ्यां धारणं गाढं बन्धो वै क्षुब्धसंज्ञकः" ॥
इति रतिमञ्जरी ॥ क्षोभविशिष्टे त्रि ॥

**क्षुभ**, लृ ङ सञ्चलने । इति कविकल्पद्रुमः ॥ (भ्वां--
आत्मं--अकं--सेट् । लृदित् ।) लृ, अक्षुभत् ।
ङ,
क्षोभते नानुजीविषु । इति हलायुधः । इति
दुर्गादासः ॥

**क्षुभ**, य ग सञ्चलने । इति कविकल्पद्रुमः ॥ (दिवां--
क्र्यां च--परं--अकं--सेट् ।) य, क्षुभ्यति
रिपुष्वेवेति
हलायुधः । ग, क्षुभ्नाति चुक्षोभ । इति दुर्गा-
दासः ॥

**क्षुभः**, पुं, (क्षुभ् + "इगुपधज्ञाप्रीकिरः" । ३ । १ ।
१३५ । इति कः ।) प्रवर्त्तकः । यथा, --
"ये च तेऽनुचराः सर्व्वे पादोपान्तं समाश्रिताः ।
माठरारुणदण्डाद्यास्तांस्तान्
वन्देऽशनिक्षुभान्' ॥
इति महाभारते । ३ । ३ । ६८ ॥
"अशनिक्षुभान्
विद्युदशन्यादिप्रवर्त्तकान्' । इति तट्टीकायां
नी-
लकण्ठः ॥

**क्षुभा**, स्त्री, (क्षुभ + स्त्रियां टाप् ।) निग्रहानुग्रह-
कर्त्री देवता । यथा, महाभारते ३ । ३ । ६९ ।
"क्षुमंया सहिता मैत्री याश्चान्या भूतमातरः ।
ताश्च सर्व्वा नमस्यामि पान्तु मां शरणागतम्"
॥
"क्षुभा मैत्र्यौ निग्रहानुग्रहकर्त्र्यौ देवते । भूत-

"सर्व्वकण्टकपापिष्ठं हेमकारन्तु पार्थिवः
।
प्रवर्त्तमानमन्याये छेदयेल्लवशः क्षुरैः" ॥)
गोक्षुरः । इति मेदिनी ॥ (अस्य पर्य्याया
यथा, --
वैद्यकरत्नमालायाम् ।
"त्रिकण्टः स्थलशृङ्गाटो गोकण्टोऽथ
त्रिकण्टकः ।
त्रिपुटः कण्टकफलः स्वदंष्ट्रा गोक्षुरः
क्षुरः" ॥
महापिण्डीतकः । शरः । इति
राजनिर्घण्टः ॥
(यथा, महाभारते । १ । १३४ । ९० ।
"ततस्तस्य नगस्थस्य क्षुरेण निशितेन
च ।
शिर उत्कृत्य तरसा पातयामास
पाण्डवः" ॥
खट्वादिपादुका । इति धरणिः । क्षुरा इति
भाषा ॥

**क्षुरकः**, पुं, (क्षुर + स्वार्थेकन् ।) तिलकवृक्षः । इत्य-
मरः । २ । ४ । ४० ॥ कोकिलाक्षः ।
(अस्य प-
र्य्याया यथा, --
"कोकिलाक्षस्तु काकेक्षुरिक्षुरः क्षुरकः
क्षुरः ।
भिक्षुः काण्डेक्षुरप्युक्त
इक्षुगन्धेक्षुबालिका" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥
अस्य व्यवहारो यथा, --
"यवानी जीरके द्वे च वानरीगजपिप्पली
।
जातीफलं सपत्रञ्च लवङ्गागुरुचन्दनम् ॥
तालीशं तिलमाषञ्च क्षुरकं गोक्षुरन्तथा ।
शतावरी शताह्वा च वचा दार्व्वी पुनर्नवा
॥
निकुम्भकुम्भौ मार्ज्जारी कन्दो नागवला
तथा ।

विपाठान् क्षुरधारांश्च धनुर्भिर्निदधुः सह" ॥
"विपाटान् वाणविशेषान्तादृशान् क्षुरधारांश्च"
।
इति तट्टीकायां नीलकण्ठः ॥ * ॥ क्षुरस्य
शाणित-
मुखम् । तद्युक्ते त्रि । (यथा, महाभारते ।
४ । ६२ । २७ ।
"अथ जिष्णुरुपावृत्य क्षुरधारेण कार्मुकम् ।
चकर्त्त भीष्मस्य तदा जातरूपपरिष्कृतम्"
॥)

**क्षुरधारा**, स्त्री, (क्षुरस्य धारा ।) क्षुरधारः । यथा,
"अन्तकः पवनो मृत्युः पातालं वडवामुखम् ।
क्षुरधारा विषं सर्पो वह्निरित्येकतः स्त्रियः" ॥
इति महाभारते । १२ । पञ्चचूडानारदसंवादे
३८ ।
२९ ॥ "अन्तकादिवत् सद्यो नाशका
इत्यर्थः" ।
इति तट्टीकायां नीलकण्ठः ॥

**क्षुरपत्रः**, पुं, (क्षुरस्य पत्रमिव पत्रमस्य क्षुरवत्
पत्रमस्य वा ।) शरः । इति राजनिर्घण्टः ॥
(दर्भ-
विशेषः । यथा, --
"ततोऽन्यो दीर्घपत्रः स्यात् क्षुरपत्रस्तथैव च"
॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
क्षुर-
तुल्यपर्णयुक्ते त्रि ॥

**क्षुरपत्रिका**, स्त्री, (क्षुर इव पत्रमस्या स्वार्थे कन्
स्त्रियां टापि अत इत्वम् ।) पालङ्क्यशाकम्
। इति
राजनिर्घण्टः ॥

**क्षुरप्रः**, पुं, (क्षुर इव पृणाति हिनस्ति । छेदनक्रियां
पूरयति वा पृ + कः । कित्वान्न गणः ।)
वाणवि-
शेषः । इति हेमचन्द्रः ॥ (यथा, महाभारते ।
४ ।
५३ । ४६ ।

मातरः गौरीपद्मादयः ।
ब्राह्मीमाहेश्वर्य्यादयश्च” ।
इति तट्टीकायां नीलकण्ठः ॥

**क्षुभितः**, त्रि, (क्षुभ + कर्त्तरि क्तः ।) भीतः । इति
हलायुधः ॥ सञ्चलितः । इति क्षुभधात्वर्थदर्श-
नात् ॥

**क्षुमा**, स्त्री, (क्षु + मक् टाप् ।) अतसी । इत्यमरः ।
२ । ९ । २० ॥ शणः । इति
तट्टीकासारसुन्दरी ॥
नीलिका । इति मेदिनी ॥ लताभेदः । इति
शब्द-
रत्नावली ॥

**क्षुर**, श विलेखने । खनने । इति कविकल्पद्रुमः ॥
(तुदां--परं--सकं--सेट् ।) श, क्षुरति भूमिं
लोकः ।
क्षोरिता । क्षुरो लोमच्छेदनः । इति दुर्गादासः ॥

**क्षुरः**, पुं, (क्षुर + “इगुपधेति” । ३ । १ । १३५ । कः ।
यद्वा, “ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरेति” ।
उणां । २ । २८ । इति निपातनात् सिद्धम् ।)
कोकिलाक्षः । इत्यमरः । २ । ८ । ४९ ॥
(अस्य
पर्य्याया यथा, --
“कोकिलाक्षस्तु काकेक्षुरिक्षुरः क्षुरकः क्षुरः
भिक्षुः काण्डेक्षुरप्युक्त इक्षुगन्धेक्षुबालिका” ॥
इति भावप्रकाशस्य पूर्ब्बखण्डेप्रथमे भागे ॥)
शफम् । इति तट्टीका । छेदनद्रव्यम् । तत्तु
नापि-
तस्य लोमच्छेदकास्त्रम् । (यथा, मनुः । ९ ।
२९२ ।
वासामांसी मुरामुस्तं पिप्पलीमूलमेव च
॥
मूषली वानरी ब्रह्मी शाल्मली मूलमेव च
।
मेथिकागजकर्णी च शर्करा
चाब्धिशोषणम् ।
माजुफलञ्चाश्वगन्धा द्राक्षा च चोचकं
समम्” ॥
इत्यादिषु द्रष्टव्यम् । इति
वैद्यककषायणसंग्रहे
बृहत्कामेश्वरमोदकान्तर्गते ॥) गोक्षुरः ।
इति
मेदिनी ॥ भूताङ्कुशः । इति राजनिर्घण्टः
॥

**क्षुरकर्म्म**, [न्] क्ली, (क्षुरेणोचितं क्षुरसाध्यं वा
कर्म्म ।) क्षौरम् । क्षुरद्वारा
केशादिकर्त्तनम् ॥
यथा, --
“यो जन्ममासे क्षुरकर्म्म यात्रां
कर्णस्य वेधं कुरुते च मोहात् ।
नूनं स रोगं धनपुत्त्रनाशं
प्राप्नोति मूढो वधबन्धनानि ॥
जातं दिनं दूषयते वशिष्ठ-
श्चाष्टौ च गर्गो यवनो दशाहम् ।
जन्माख्यमासं किल भागुरिश्च
चूडे विवाहे क्षुरकर्णवेधे ॥
देवकार्य्ये पितृश्राद्धे रवेरंशपरिक्षये ।
क्षुरिकर्म्म न कुर्व्वीत जन्ममासेऽथ
जन्मभे” ॥
इति तिथ्यादितत्त्वम् ॥ क्षौरानन्तरं
स्नानं कर्त्त-
व्यम् । यथा, --
“दुःस्वप्ने मैथुने वान्ते विरिक्ते
क्षुरकर्म्मणि ।
चिति पूयश्मशानास्थ्नां स्पर्शने
स्नानमाचरेत्” ॥
इति मिताक्षरायां प्रायश्चित्ताध्याये
पराशर-
वचनम् ॥ अन्यत् क्षौरशब्दे द्रष्टव्यम् ॥

**क्षुरधारः**, पुं, (क्षुरस्य धारा इव धारा अस्य ।)
अस्त्र-
“स तु द्रोणं त्रिसप्तत्या क्षुरप्राणां समार्पयत्”
॥)
क्षुरपानामकघासच्छेदनास्त्रञ्च ॥

**क्षुरप्रगं**, क्ली, (क्षुरप्रं क्षुरप्रतां गच्छतीति । गम +
डः ।) क्षुरप्रास्त्रम् । इति केचित् ॥ (क्षुरप्र इव
गच्छतीति । क्षुरप्रसदृशास्त्रविशेषः ॥)

**क्षुरभाण्डं**, क्ली, (क्षुरस्य भाण्डं आधारः ।) क्षुराधारः ।
भाँडि इति भाषा । यथा, -- “भद्रे !
शीघ्रमानीयतां
क्षुरभाण्डं येन क्षौरकर्म्मकरणाय गच्छामि ।
सापि छिन्ननासिका गृहमध्यस्थितैव
कार्य्यकरणो-
पेक्षया क्षुरभाण्डात् क्षुरमेकं समाकृष्य
तस्याभि-
मुखं प्रेषयामास” । इति
विष्णुशर्म्मविरचितपञ्च-
तन्त्रे १ तन्त्रम् ॥

**क्षुरमर्दी**, [न्] पुं, (क्षुरं मृद्‌गातीति । क्षुर + मृद् +
णिनिः ।) नापितः । यथा, --
“पुस्तं लेप्यादिकर्म्म स्यात् नापितश्चण्डिलः
क्षुरी ।
क्षुरमर्दी दिवाकीर्त्तिर्मुण्डकोऽन्तावसाय्यपि”
॥
इति हेमचन्द्रः ॥

**क्षुराङ्गः**, पुं, (क्षुर इवाङ्गमस्य ।) गोक्षुरकः । इति
राजनिर्घण्टः ॥

| | | |
|---|---|---|
| | विशेषः । यथा, महाभारते । ४ । ६ । २८ ।<br>“खड्गांश्च दीप्तान् दीर्घांश्च कलापांश्च महाधनान् । | |

**क्षुरिका**, स्त्री, (क्षुर + ङीप् स्वार्थे कन् टाप् पूर्ब्ब-
ह्रस्वश्च ।) पालङ्क्यशाकम् । इति राजनिर्घण्टः ॥
(पालङ्क्यशब्देऽस्या विवृतिर्ज्ञातव्या ॥)
मृत्पात्रविशेषः । क्षुरी इति भाषा । (कृष्णयजु-
र्व्वेदान्तर्गत उपनिषद्विशेषः । यदुक्तं मुक्तिकोप-
निषदि ।
"अमृतनादकालाग्निरुद्रक्षुरिकासर्व्व-
सारेत्युपक्रम्य सरस्वतीरहस्यानां कृष्णयजुर्व्वेद-
गतानां द्वात्रिंशत् सङ्ख्याकानां उपनिषदां सह-
नाव वत्विति शान्तिरिति" ॥)

**क्षुरिकापत्रः**, पुं, (क्षुरिका इव क्षुरवदित्यर्थः पत्र-
मस्य ।) शरः । इति राजनिर्घण्टः ॥

**क्षुरिणी**, स्त्री, (क्षुरः अस्या अस्तीति । इनिः ङीप्
च ।) वराहक्रान्ता । इति शब्दचन्द्रिका ॥ नापित-
भार्य्या च ॥

**क्षुरी**, [न्] पुं, (क्षुरोऽस्यास्तीति । क्षुर + इनिः ।)
नापितः । इत्यमरः । २ । १० । १० ॥

**क्षुरो**, स्त्री, (क्षुद्रः क्षुरः क्षुर इव वा । क्षुर + स्वल्पार्थे
ङीप् ।) छुरिका । इति हेमचन्द्रः ॥ क्षुरीति
च पाठः ॥

**क्षुल्लः**, त्रि, (क्षुद् सम्पेषणे + सम्पदादित्वात् क्विप् ।
क्षुदं लाति गृह्णातीति । क्षुद् + ला + कः ।) लघुः ।

एवं माष्यन्तु माषीणं कौद्रव्यं कौद्रवीणवत् ॥
तथा भङ्ग्यञ्च भाङ्गीनमुम्यमौमीनमित्यपि ।
अथ मौद्ग्यञ्च मौद्गीनमणव्यमाणवीनवत् ॥
माषकोद्रवभङ्गोमामुद्गाणुप्रभवोचितम् ।
बीजाकृतमुप्तकृष्टमुत नीतिसमाह्वये ॥
सीत्यं कृष्टञ्च हल्यञ्च तृतीयाकृतमित्यपि ।
त्रिगुणाकृतमित्येवं त्रिवारकृष्णभूमिषु ॥
शम्वाकृतं द्विहल्यञ्च द्विसीत्यं द्विगुणाकृतम् ।
द्वितीयाकृतमप्यत्र द्विवारकृष्टभूमिषु ॥
द्रोणाढकखाय्यर्व्विापादौ द्रौणिकस्तथा ।
स्यादाढकिकखारोकौ उत्तमर्णादयस्त्रिषु ।
आदिभ्यां प्रास्थिकादिश्च पाकादौ द्रौणिकोऽपि च" ॥
इति च शब्दरत्नाषली ॥
परक्षेत्रे गोचारणकथननिषेधो यथा, --
"न कुर्य्यात् सख्यवैराणि विवादं न च पैशुनम् ।
परक्षेत्रे गां चरन्तीं न चाचक्षीत कस्यचित्" ॥
इति कूर्म्मपुराणे उपविभागे १५ अध्यायः ॥ * ॥
अपि च । मनुः ।
"आत्मनो यदि वान्येषां गृहे क्षेत्रऽथवा खले ।
भक्षयन्तीं न कथयेत् पिबन्तञ्चैव वत्सकम्" ॥
इति प्रायश्चित्ततत्त्वम् ॥ * ॥
तत्रस्थजलगुणाः ।
"कैदारं मघुरं प्रोक्तं विपाके गुरु दोषलम्" ॥
इति राजवल्लभः ॥ * ॥
अथ सिद्धक्षेत्राणि ।
तत्र वाराणसीक्षेत्रं यथा, --
"आसन्नं युवयोः क्षेत्रमिदं वाराणसी तु यत् ।
कथितं नातिदूरे च वर्त्तते नरसत्तमौ" ॥ * ॥
कामरूपक्षेत्रं यथा, --
"नाचिरात् कामदं पुण्यं क्षेत्रं पीठं निगद्यते ।
चिरात्तु कामदो देवो न चिराद्यत्र ज्ञानदः ॥
तत् क्षेत्रमिति लोके यद्गद्यते पूर्ब्बसूरिभिः ।

जैमिनिरुवाच ।
"एतत् क्षेत्रवरञ्चास्य वपुर्भूतं महात्मनः ।
स्वयं वपुष्मान् यत्रास्ते स्वनाम्ना ख्यापितं हि तत्
इत्युत्कलखण्डम् ॥ * ॥ विष्णुक्षेत्राणि यथा, --
श्रीभगवानुवाच ।
"शृणुष्वावहितो ब्रह्मन् ! गुह्यनामानि मेऽधुना
क्षेत्राणि चैव गुह्यानि तव वक्ष्यामि यत्नतः ॥
कोकामुखे वराहञ्च मन्दरे मधुसूदनम् ।
अनन्तं कपिलद्वीपे प्रभासे रविनन्दनम् ॥
माल्योदये तु वैकुण्ठं महेन्द्रे तु नृपान्तकम् ।
ऋषभे तु महाविष्णुं द्वारकायान्तु भूपतिम् ॥
पाण्डिसह्ये तु देवेशं वसुकुण्डे जगत्पतिम् ।
वन्दीवने महायोगं चित्रकूटे नराधिपम् ॥
नैमिशे पीतवासञ्च गवां निष्क्रमणे हरिम् ।
शालग्रामे तपोवासमचिन्त्यं गन्धमादने ॥
कुब्जाम्रके हृषीकेशं गङ्गाद्वारे गदाधरम् ।
गरुडध्वजं तोषके च गोविन्दं नागसाह्वये ॥
बृन्दावने तु गोपालं मथुरायां स्वयम्भुवम् ।
केदारे माधवं विद्यात् वाराणस्यान्तु केशवम् ॥
पुष्करे पुष्कराक्षन्तु दृषद्वत्यां जयध्वजम् ।
तृणबिन्दुवने वीरमशोकं सिन्धुसागरे ॥
केशे वटे महाबाहुममृतं तेजसो वने ।
विशाखसूर्य्ये विश्वेशं नारसिंहं वने वने ॥
लोहाकुले रिपुहरं देवशाले त्रिविक्रमम् ।
पुरुषोत्तमं दशपुरे कुब्जके वामनं विदुः ॥
विद्याधरं तिस्तायां वारणे धरणीधरम् ।
देवदारुवने गुह्यं कावेर्य्यां नागशायिनम् ॥
प्रयागे योगमूर्त्तिञ्च पयोष्ण्यां सुन्दरं विदुः ।
कुमारतीर्थे कौमारं लौहित्ये हयशीरषम् ।
उज्जयन्यां त्रिविक्रमं लिङ्गस्फोटे चतुर्भुजम् ।
हरिहरं तुङ्गभद्रायां दृष्ट्वा पापात् प्रमुच्यते ॥
विश्वरूपं कुरुक्षेत्रे मणिकुण्डे हलायुधम् ।
लोकतीरमयोध्यायां कुण्डिने रुक्मिणीपतिम् ॥
भञ्जीरे वासुदेवञ्च चक्रतीर्थे सुदर्शनम् ।
आद्यं विष्णुपदे विद्यात् शूकरे शूकरं विदुः ॥
कुशेशं मानसे तीर्थे दण्डके श्यामलं विदुः ।

इति हेमचन्द्रः ॥ (यथा, भागवते । ३ । ५ । १० ।
"अतृप्नुमः क्षुल्लसुखावहानां
तेषामृते कृष्णकथामृऽतौघात्' ॥)

**क्षुल्लकः**, त्रि, (क्षुल्ल + स्वार्थे कन् ।) क्षुद्रः । इत्य-
मरः । ३ । ३ । १० ॥ स्वल्पः ।
नीचकः । कनिष्ठः ।
दरिद्रः । इति भरतः ॥ पामरः ।
दुःखितः ।
(यथा, भागवते । ४ । ३० । २९ ।
"येनोपशान्तिर्भूतानां
क्षुल्लकानामपीहताम् ।
अन्तर्हितोऽस्तर्हृदये कस्मान्नो वेद
नाशिषः" ॥)
खलः । इति हेमचन्द्रः ॥
शब्दरत्नावल्यां खुल्लक
इति च पाठः ॥

**क्षुल्लकः**, पुं, (क्षुल्ल + संज्ञायां स्वल्पार्थे वा कन् ।) क्षुद्र-
शङ्खः । इति हेमचन्द्रः राजनिर्घण्टश्च ॥ (शोधना-
दिप्रकरणेऽस्य विषयो यथा, --
"कङ्कुष्ठं गैरिकं शङ्खं कासीसं
टङ्कणन्तथा ।
नीलाञ्जनं शुक्तिभेदाः क्षुल्लकाः
सवराटकाः ॥
जम्बीरवारिणा स्विन्नाः क्षालिताः
कोष्णवारिणा
शुद्धिमायान्त्यमी योज्या
भिषग्भिर्योगसिद्धये' ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे द्बितीये
भागे ॥)

**क्षुल्लतातः**, पुं, (क्षुल्लः पितुः कनिष्ठः स चासौ
तातश्चेति नित्यकर्म्मधारयः ।)
पितृकनिष्ठभ्राता ।
इति क्षुल्लतातकशब्ददर्शनात् ॥
शब्दरत्नावल्यां
खुल्लतात इति पाठः ॥

कामरूपं भहापीठं गुह्याद्गुह्यतमं परम्" ॥
इति च कालिकापुराण ५० अध्यायः ॥ * ॥
गङ्गाक्षेत्रं यथा, स्कान्दे ।
"तीराद्गव्यूतिमात्रन्तु परितः क्षेत्रमुच्यते" ॥
नारायणक्षेत्रं यथा, --
"प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् ।
तत्र नारायणः स्वामी गङ्गागर्भान्तिरे वरे ॥
तत्र नारायणक्षेत्रे कुरुक्षेत्रे हरेः पदे ।
एतेष्वन्येषु यो दानं प्रतिगृह्णाति कामतः ।
स च तीर्थप्रतिग्राही कुम्भीपाकं प्रयाति च"
॥
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २७ अध्यायः
॥ * ॥
भास्करक्षेत्रं यथा,
स्मृतिसमुच्चयलिखितवचने ।
"गङ्गायां भास्करक्षेत्रे मातापित्रोर्म्मते गुरौ ।
आधाने सोमपाने च वपनं सप्तसु स्मृतम्" ॥
भास्करक्षेत्रं प्रयागः । इति प्रायश्चित्ततत्त्वम्
॥ * ॥
गयाक्षेत्रं यथा, --
"पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः" ॥
इति वायुपुराणम् ॥ * ॥ पुरुषोत्तमक्षेत्रं यथा,
--
मुनय ऊचुः ।
"पुरुषोत्तमाख्यं सुमहत् क्षेत्रं परमपावनम्"
॥
इत्यादि ।

त्रिकूटे नागमोक्षञ्च मेरुपृष्ठे च भास्करम् ॥
विरजं पुष्पमत्यायां बालञ्चामीकरे विदुः ।
यशस्करं विपाशायां माहिष्मत्यां हुताशनम् ॥
क्षीराब्धौ पद्मनाभञ्च विमले तु सनातनम् ।
शिवनद्यां शिवकरं गयायाञ्च गदाधरम् ॥
सर्व्वत्र परमात्मानं यः पश्यति स मुच्यते ॥
अष्टषष्टिस्तु नामानि कीर्त्तितानि मया तव ।
क्षेत्राणि चैव गुह्यानि कथितानि विशेषतः ॥
द्रष्टव्यानि यथाशक्त्या क्षेत्राण्येतानि मानवैः ।
वैष्णवैस्तु विशेषेण तेषां मुक्तिं ददाम्यहम्" ॥
इति नारसिंहे ६२ अध्यांयः ॥ * ॥ मेषादि-
द्वादशराशिः । यथा, --
"राशिनामानि च क्षेत्रं भमृक्षं गृहनाम च ।
मेषादीनाञ्च पर्य्यायं लोकादेव विचिन्तयेत्" ॥
* ॥
ग्रहाणां क्षेत्राणि यथा, --
"कुजशुक्रबुधेन्द्वर्कसौम्यशुक्रावनीभुवाम् ।

**क्षुल्लतातकः**, पुं, (क्षुल्लतात + स्वार्थे कन् ।) पितृव्यः ।

इति जटाधरः । खुडा इति भाषा ॥

**क्षेत्रं**, क्ली, (क्षि + ष्ट्रन् ।) भूमिः । क्षेत इति भाषा ॥

तत्पर्य्यायः । वप्रम् । २ केदारः ३ ।
इत्यमरः । २ ।
९ । ११ ॥ वलजम् ४ निष्कुटः ५
राजिका ६
पाटीरः ७ । इति जटाधरः ॥ * ॥
तत्समूहवाच-
कानि यथा, --
"कैदारकन्तु कैदार्य्यं क्षेत्रं कैदारकं
तथा ।
वारटञ्चेति पर्य्यायः क्षेत्रबृन्दे निगद्यते"
॥
इति शब्दरत्नावली ॥ * ॥ तद्भेदा
यथा, --
"व्रीहिभवोचितं क्षेत्रं व्रैहेयं तत्
समीरितम् ।
शाल्यद्भवोचितं यत्तु शालेयमभिधीयते
॥
यव्यं यवोचितं क्षेत्रं यवक्यं
यवकोचितम् ।
षष्टिकोद्भवनं यत्तु षष्टिक्यं तत्
प्रकीर्त्तितम् ॥
तिलोद्भवोचितं यत्तु तिल्यं
तैलीनमित्यपि ।

जीवार्किभानुजेज्यानां क्षेत्राणि स्युरजादयः” ॥
इति ज्योतिस्तत्त्वम् ॥ * ॥ अपि च ।
“मेषमङ्गारकक्षत्रं वृषं शुक्रस्य कीर्त्तितम् ।
मिथुनस्य बुधो ज्ञेयः सोमः कर्क्कटकस्य तु ॥
सूर्य्यक्षेत्रं भवेत् सिंहः कन्या क्षत्रं बुधस्य च ।
धनुः सुरगुरोश्चैव शनेर्मकरकुम्भकौ ॥
मीनः सुरगुरोश्चैव ग्रहक्षेत्रं प्रकीर्त्तितम्” ॥
इति गारुडे ६० अध्यायः ॥ * ॥ शरीरम् ।
(यथा, भगवद्गीतायाम् । १३ । १ ।
“इदं शरीरं कौन्तेय ! क्षेत्रमित्यभिधीयते” ॥
कुतः शरीरस्य क्षेत्रत्वमित्यत्र शाङ्करभाष्यम् ।
यथा, -- “इदमिति सर्व्वनाम्नोक्तं विशिनष्टि शरीर-
मिति । हे कौन्तेय ! क्षतत्राणात् क्षयात् क्षर-
णात् क्षेत्रवद्वास्मिन् कर्म्मफलनिर्वृतेः क्षेत्र-
मितीतिशब्दः एवं शब्दपदार्थकः क्षेत्रमित्येव-
मभिधीयते कथ्यते” ॥ इच्छा । द्वेषः । सुखम् ।
दुःखम् । चेतना । धृतिः । यथा, भगवद्गीतायाम् ।
१३ । ६ ।
“इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः ।
एतत् क्षेत्रं समासेन सविकारमुदाहृतम्” ॥
इत्यत्र शाङ्करभाष्यं यथा, -- “अथेदानीं आत्मगुणा
इति यानाचक्षते वैशेषिकास्तेऽपि क्षेत्रधर्म्मा एव
न तु क्षेत्रज्ञस्येत्याह भगवान् इच्छा द्वेष इति ।
इच्छा यज्जातीयं सुखहेतुमर्थमुपलब्धवान् पूर्ब्ब
पुनस्तज्जातीयमुपलभ्यमानस्तमादातुमिच्छत्तिसु-
खहेतुरिति सेयमिच्छान्तःकरणधर्म्मोज्ञेयत्वात्
क्षेत्रं तथा द्वेषो यज्जातीयमर्थं दुःखहेतुत्वे-
नानुभूतवान् पूर्ब्बं पुनस्तज्जातीयमुपलभ्यमानस्तं
द्वेष्टि सोऽयं द्वेषो ज्ञेयत्वात् क्षेत्रमेव तथा सुख-
मनुकूलं प्रसन्नं सत्त्वात्मकं ज्ञेयत्वात् क्षेत्रमेव दुःखं
प्रतिकूलात्मकं ज्ञेयत्वात् तदपि क्षेत्रं संघातो
देहेन्द्रियाणां संहतिस्तस्यामभिव्यक्तान्तःकरण
वृतिः तप्त इव लौहपिण्डेऽग्निरात्मचैतन्याभास-
रसविद्धा चेतना सा च क्षेत्रं ज्ञेयत्वात् धृति-
र्ययावसादं प्राप्तानि देहेन्द्रियाणि ध्रियन्ते सा च
ज्ञेयत्वात् क्षेत्रं सर्व्वान्तःकरणधर्म्मोपलक्षणार्थ
मिच्छादिग्रहणं यत उक्तं तदुपसंहरति एतत्
क्षेत्रं समासेन सविकारं सह विकारेण महदा-
दिनोदाहृतमुक्तं यस्य क्षेत्रभेदजातस्य संहतिरिदं

इति मेदिनी ॥ (यथा मनुः । ९ । ३३
।
“क्षेत्रभूता स्मृता नारी बीजभूतः
स्मृतः पुमान् ।
क्षेत्रबीजसमायोगात् सम्भवः
सर्व्वदेहिनाम्” ॥)
गृहम् । नगरम् । इति वैजयन्तीकोषः
॥ * ॥
अथ क्षेत्रव्यवहारो लिख्यते ।
तत्र भुजकोटिकर्णानामन्यतमे
ज्ञातेऽन्यतमयो-
र्ज्ञानाय करणसूत्रं वृत्तद्वयम् ।
इष्टाद्बाहोर्यः स्यात्तत्स्पर्द्धिन्यां
दिशीतरो बाहुः ।
त्र्यस्रे चतुरस्रे वा सा कोटिः कीर्त्तिता
तज्ज्ञैः ॥
तत्कृत्योर्योगपदं कर्णो
दोःकर्णवर्गयोर्व्विवरात् ।
मूलं कोटिः कोटिश्रुतिकृत्योरन्तरात्
पदं बाहुः ॥
उदाहरणम् ।
कोटिश्चतुष्टयं यत्र दोस्त्रयं तत्र का
श्रुतिः ।
कोटिं दोःकर्णतः कोटिश्रुतिभ्याञ्च
भुजं वद ॥
कोटिः ४ । भुजः ३ । भुज-
वर्गः ९ । कोटिवर्गः १६ ।
एतयोर्योगात् २५ । मूलं
५ कर्णो जातः ॥
अथ कर्णभुजाभ्यां कोट्यानयनम् ।
कर्णः ५ । भुजः ३ । अन-
योर्वर्गान्तरम् १६ । एत-
न्मूलं कोटिः ४ ॥
अथ कोटिकर्णाभ्यां भुजानयनम् ।
कोटिः ४ । कर्णः ५ । अ-
नयोर्वर्गान्तरम् ९ । एत-
न्मूलं भुजः ३ ॥
प्रकारान्तरेण तज्ज्ञानाय करणसूत्रं
सार्द्धवृत्तम् ।

अथ कर्णभुजाभ्यां कोट्यानयनम् ।
कर्णः ५ । भुजः ३ । अनयो-
र्योगः ८ । पुनरेतयोरन्त
रेणा-(२) हतो वा १६ ।
वर्गान्तरमस्य मूलं कोटिः ४ ॥
अथ भुजज्ञानम् ।
कोटिः ४ । कर्णः ५ । एवं
जातो भुजः ३ ॥
उदाहरणम् ।
साङ्घ्रित्रयमितो बाहुर्यत्र कोटिश्च
तादृशी ।
तत्र कर्णप्रमाणं किं गणक ! ब्रूहि मे
द्रुतम् ॥
भुजः (१३४) । कोटिः (१४) । अ-
नयोर्वर्गयोर्योमः (१६९८) । अस्य
मूलाभावात् करणीगत ए-
वायं कर्णः ॥ अस्यासन्नमूल-
ज्ञानार्थमुपायः ।
वर्गेण महतेष्टेन हताच्छेदांशयोर्वधात्
।
पदं गुणपदक्षुण्णच्छिद्भक्तं निकटं
भवेत् ॥
इयं कर्णकरणी (१६९८) । अस्याः
छेदांशघातः १३५२ ।
अयुतघ्नः १३,५२०,००० ।
अस्यासन्नमूलं ३६७७ ।
इदं गुणमूलं १०० । गुणितच्छेदेन
८०० । भक्तं
लब्धमासन्नपदम् ४ । भागाः
(४७७८००) । अयं कर्णः ।
एवं सर्व्वत्र ॥
त्र्यस्रजात्ये करणसूत्रं वृत्तद्वयम् ।
इष्टो भुजोऽस्माद्द्विगुणेष्ट{??}घ्ना-
दिष्टस्य कृत्यैकवियुक्तयाप्तम् ।
कोटिः पृथक् सेष्टगुणा भुजोना
कर्णो भवेत्त्र्यस्रमिदन्तु जात्यम् ॥
इष्टो भुजस्तत्कृतिरिष्टभक्ता
द्विःस्थापितेष्टोनयुतार्द्धिता वा ।
तौ कोटिकर्णाविति कोटितो वा

| | | |
|---|---|---|
| शरीरं क्षेत्रं इत्युक्तं तत् क्षेत्रं व्याख्यातं महाभूतादि-भेदादभिन्नं धृत्यन्तम्” ॥ इत्यत्र श्रीधरस्वामिनापि यदुक्तं तदुच्यते । “एते चेच्छादयो दृश्यत्वान्नात्म-धर्म्मा अपि तु मनोधर्म्मा अतः क्षेत्रान्तःपातिन एवोपलक्षणञ्चैतत् सङ्कल्पादीनाम् । तथा च श्रुतिः । कामः सङ्कल्पो विचिकित्सा श्रद्धा अश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्व्वं मन एवेति” ॥ * ॥ सप्तद्वीपा पृथिवी । यथा, भाग-वते ९ । ६ । ३७ ।<br>“यावत् सूर्य्य उदेति स्म यावच्च प्रतितिष्ठति ।<br>सर्व्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रसुच्यते” ॥)<br>सिद्धस्थानम् । (यथा, कथासरित्सागरे । ३ । ७८ ।<br>“पाटलिपुत्त्रं क्षेत्रं लक्ष्मीस्वरस्वत्यौ” ।) कलत्रम् । | राश्योरन्तरवर्गेण द्विघ्ने घाते युते तयोः ।<br>वर्गयोगो भवेदेवं तयोर्योगान्तराहतिः ।<br>वर्गान्तरं भवेदेवं ज्ञेयं सर्व्वत्र धीमता ॥<br>कोटिश्चतुष्टयमिति पूर्ब्बोक्तोदाहरणे । कोटिः ४ । भुजः । ३ अनयोर्घाते १२ । द्वि-घ्ने २४ । अन्तरवर्गेण १ । युते वर्गयोगः २५ । अस्य मूलं कर्णः ५ ॥ | बाहुश्रुती वाकरणीगते स्तः ॥<br>उदाहरणम् ।<br>भुजे द्वादशके यौ या<br>कोटिकर्णावनेकधा ।<br>प्रकाराभ्यां वद क्षिप्र तौ<br>तावकरणीगतौ ॥<br>इष्टो भुजः १२ । इष्टं २ । अनेन द्विगुणेन ४ । गुणितो भुजः ४८ । इष्टः २ । कृत्या ४ । एको-नया ३ । भक्तो लब्धा कोटिः १६ । इयमिष्ट-गुणा ३२ । मुजोना १२ । जातः कर्णः २० ॥<br>त्रिकेणेष्टेन वा । |

कोटिः ९ ।
कर्णः १५ ।
पञ्चकेन वा ।
कोटिः ५ ।
कर्णः १३ ।
इत्यादि ॥
अथ द्वितीयप्रकारेण ।
इष्टो भुजः १२ । अस्य
कृतिः १४४ । इष्टेन २ ।
भक्तालब्धं ७२ । इष्टेन
२ । ऊन ७० । युता
७४ । वर्द्धितौ जातौ
कोटिकर्णौ ३५ । ३७ ।
चतुष्टयेन वा ।
कोटिः १६ ।
कर्णः २० ।
षट्केन वा ।
कोटिः ९ ।
कर्णः १५ ।
अथेष्टकर्णात् कोटिभुजानयने
करणसूत्रं वृत्तम् ।
इष्टेन निघ्नात् द्विगुणाच्च कर्णा-
दिष्टस्य कृत्यैकयुजा यदाप्तः ।
कोटिर्भवेत् सा पृथगिष्टनिघ्नी
तत्कर्णयोरन्तरमत्र बाहुः ॥
उदाहरणम् ।
पञ्चाशीतिमिते कर्णे या यावकरणीगतौ ।
स्यातां कोटिभुजौ तौ तौ वद कोविद ! सत्वरम् ॥

कर्णः ८५ । अयं द्वि-
गुणः १७० । द्विकेने-
ष्टेन हतः ३४० । इष्ट
२ । कृत्या ४ । सैकया
५ । भक्ते जाता कोटिः
६८ । इयमिष्टगुणा
१३६ । कर्णो ८५ ।
निता जातो भुजः ८५ ।
चतुष्केणेष्टेन वा ।
कोटिः ४० ।
भुजः ७५ ।
पुनः प्रकारान्तरेण तत्करणसूत्रं वृत्तम् ।
इष्टवर्गेण सैकेन द्विघ्नः कर्णोऽथवा हतः ।
फलोनः श्रवणः कोटिः फलमिष्टगुणं भुजः ॥
पूर्ब्बोदाहरणे ।
कर्णः ८५ । अत्र
द्विकेन इष्टेन
जातौ कोटि-
भुजौ ५१ । ६८ ।
चतुष्केण वा ।
कोटिः ७५ ।
भुजः ४० । अत्र
दोःकोट्योर्नाम-
भेद एव केवलं न
स्वरूपभेदः ॥
अथेष्टाभ्यां भुजकोटिकर्णानयने
करणसूत्रं वृत्तम् ।
इष्टयोराहतिर्द्विघ्नी कोटिर्वर्गान्तरं भुजः ।
कृतियोगस्तयोरेवं कर्णश्चाकरणीगतः ॥
उदाहरणम् ।
यैर्यैस्त्र्यस्रं भवेत् जात्यं कोटिदोःश्रवणैः सखे ! ।
त्रीनप्यविदितान्तेतान् क्षिप्रं ब्रूहि विचक्षण ! ॥
अत्रेष्टे २ । १ । आभ्यां
कोटिभुजकर्णाः ४ । ३
। ५ ।

अथवेष्टे २ । ३ । आ-
भ्यां कोटिभुजकर्णाः
१२ । ५ । १३ ।
अथवा २ । ४ । आभ्यां को-
टिभुजकर्णाः १६ । १२ ।
२० । एवमन्यत्रानेकधा ।
कर्णकोटियुतौ भुजे च ज्ञाते पृथक्-
करणसूत्रं वृत्तम् ।
वंशाग्रमूलान्तरभूमिवर्गो-
वंशोद्ध्र्वतस्तेन पृथक्युतोनौ ।
वंशौ तदर्द्धे भवतः क्रमेण
वंशस्य खण्डे श्रुतिकोटिरूपे ॥
उदाहरणम् ।
यदि समभुवि वेणुर्द्वित्रिपाणिप्रमाणो
गणक ! पवनवेगादेकदेशे सभग्नः ।
भुवि नृपमितहस्तेष्वङ्गलग्नं तदग्रं
कथय कतिषु मूलादेष भग्नः करेषु ॥
वंशाग्रमूलान्तरभूमिः १६ ।
वंशः ३२ । कोटिकर्णयुतिः
३२ । भुजः १६ । जाते
उद्ध्र्वाधःखण्डे २० । १२ ।
बाहुकर्णयोगे दृष्टे कोट्याञ्च ज्ञातायां पृथक्-
करणसूत्रं वृत्तम् ।
स्तम्भस्य वर्गोऽहिविलान्तरेण
भक्तः फलं व्यालविलान्तरालात् ।
शोध्यं तदर्द्धप्रमितैः करैः स्यात्
विलाग्रतो व्यालकलापियोगः ॥
उदाहरणम् ।
अस्ति स्तम्भतले विलं तदुपरि क्रीडाशिखण्डी
स्थितः स्तम्भे हस्तनवोच्छ्रिते त्रिगुणिते स्तम्भप्रमा-
णान्तरे । दृष्ट्वाहिं विलमाव्रजन्तमपतत् तिर्य्यक्
स तस्योपरि क्षिप्रं ब्रूहि तयोर्विलात् कतिमितौ
साम्येन गत्योर्युतिः ॥

स्तम्भः ९ अहिविलान्तरम् २७ ।
जाता विल-
युत्योर्मध्यहस्ताः १२ ॥
कोटिकर्णान्तरे भुजे च दृष्टे पृथक्करण-
सूत्रं वृत्तम् ।
भुजाद्वर्गितात् कोटिकर्णान्तराप्तं
द्विधा कोटिकर्णान्तरेणोनयुक्तम् ।
तदर्द्धे क्रमात् कोटिकर्णौ भवेता-
मिदं धीमता वेद्य सर्व्वत्र योज्यम् ॥
सखे ! पद्म तन्मज्जनस्थानमध्यं
भुजः कोटिकर्णान्तरं पद्मदृश्यम् ।
नलः कोटिरेतन्मितं स्याद्यदम्भो
वदैवं समानीय पानीयमानम् ॥
उदाहरणम् ।
चक्रक्रौञ्चाकुलितसलिले क्वापि दृष्टं
तडागे
तोयादूद्र्ध्वं कमलकलिकाग्रं
वितस्तिप्रमाणम् ।
मन्दं मन्दं चलितमनिलेनाहतं
हस्तयुग्मे
तस्मिन्मग्नं गणक ! कथय
क्षिप्रमम्भःप्रमाणम् ॥
कोटिकर्णान्तरं (१२) । भुजः
२ । लब्धं जलगाम्भीर्य्यं (१५४) ।
इयं कोटिः (१५४) । इयमेव
कोटिः कलिकामानयुता
जातः कर्णः (१७४) ॥
कोट्येकदेशेन युते कर्णे भुजे च दृष्टे
कोटिकर्ण-
ज्ञानाय करणसूत्रं वृत्तम् ।
द्विनिघ्नतालोच्छ्रितिसंयुतं यत्
सरोऽन्तरं तेन विभाजितायाः ।
तालोच्छ्रितेस्तालसरोऽन्तरघ्न्या
उड्डीयमानं खलु लभ्यते तत् ॥
उदाहरणम् ।
बृक्षाद्धस्तशतोच्छ्र्याच्छतयुगे वापीं
कपिः कोऽप्यगा-
दुत्तीर्य्याथ परो द्रुतं श्रुतिपथेनोड्डीय
किञ्चिद्द्रुमात् ।

भुजकोट्योर्योगे कर्णे च ज्ञाते पृथक्
करणसूत्रं वृत्तम् ।
कर्णस्य वर्गाद्द्विगुणाद्विशोध्यो
दोःकोटियोगः स्वगुणोऽस्य मूलम् ।
योगो द्विधा मूलविहीनयुक्तः
स्यातां तदर्द्धे भुजकोटिमाने ॥
उदाहरणम् ।
दशसप्ताधिकः कर्णस्त्यधिका विंशतिः सखे !
भुजकोटियुतिर्यत्र तत्र ते मे पृथग्वद ॥
कर्णः १७ । दोः
कोटियोगः २३ ।
जाते भुजकोटी
८ । १५ ।
उदाहरणम् ।
दोःकोट्योरन्तरं शैलाः कर्णो यत्र त्रयोदश ।
भुजकोटी पृथक् तत्र वदाशु गणकोत्तम ! ॥
कर्णः १३ । भुजकोट्य-
न्तरम् ७ । लब्धे भुज-
कोटी ५ । १२ ॥
लम्बाववाधाज्ञानाय करणसूत्रं वृत्तम् ।
अन्योन्यमूलाग्रगसूत्रयोगात्
वेण्वोर्वधे योगहृते च लम्बः ।
वंशौ स्वयोगेन हृतावभीष्ट-
भूघ्नौ च लम्बोभयतः कुखण्डे ॥
उदाहरणम् ।
पञ्चदशदशकरोच्छ्र्यवेण्वोरज्ञातमध्यभूमिकयोः ।
इतरेतरमूलाग्रगसूत्रयुतेर्लम्बमानमाचक्ष्व ॥
वंशौ १५ । १० ।
जातो लम्बः ६ ।
वंशान्तरभूः ५ ।
अत्र जाते भू-
खण्डे ३ । २ ।
अथवा भूः १० ।
१५ १०
खण्डे ६ । ४ । वा
भूः १५ । खण्डे
९ । ६ । वा भूः २० ।
खण्डे १२ । ८ । एवं
सर्व्वत्र लम्बः । स एव यद्यत्र भूमितुल्ये भुजे वंशः

अथ अक्षेत्रलक्षणे सूत्रम् ।
धृष्टोद्दिष्टमृजुभुजं क्षेत्रं यत्रैकबाहुतः
स्वल्पा ।
तदितरभुजयुतिरथवा तुल्या ज्ञेयं
तदक्षेत्रम् ॥
उदाहरणम् ।
चतुरस्रे त्रिषड्द्व्यर्का भुजास्त्र्यस्रे
त्रिषण्णवाः ।
उद्दिष्टा यत्र धृष्टेन तदक्षेत्रं विनिर्दिशेत्
॥
एते अनुपपन्ने क्षेत्रे ।

भुजप्रमाणा ऋजुशलाकाः
भुजस्थानेषु विन्य-

स्यानुपपत्तिर्द्दर्शनीया ॥

आबाधादिज्ञानाय
करणसूत्रमार्य्याद्वयम् ।

त्रिभुजे भुजयोर्योगस्तदन्तरगुणो भुवा
हतो लब्ध्या ।
द्विःस्था भूरूनयुता दलिताबाधे
तयोः स्याताम् ॥
स्वाबाधा भुजकृत्योरन्तरमूलं
प्रजायते लम्बः ।
लम्बगुणं भूम्यर्द्धं स्पष्टं त्रिभुजे फलं
भवति ॥
उदाहरणम् ।
क्षेत्रे महीमनुमिता त्रिभुजे भुजौ तु यत्र
त्रयोदशतिथिप्रमितौ च यस्य ।
तत्रावलम्बकमथो कथयावबाधे
क्षिप्रं तथा च समकोष्ठमितिं
फलाख्याम् ॥
भूः १४ । भुजौ १३ ।
१५ । लब्धे आबाधे ५ ।
९ । लम्बश्च १२ । क्षेत्र-
फलञ्च ८४ ॥
ऋणाबाधोदाहरणम् ।
दशसप्तदशप्रमौ भुजौ
त्रिभुजे यत्र नवप्रमा मही ।

| | | |
|---|---|---|
| जातैवं समता तयोर्यदि गतावुड्डीयमानं किय-<br>द्विद्वन् ! चेत्सुपरिश्रमोऽस्ति गणिते क्षिप्रं तदाचक्ष्व मे ।<br>वृक्षवाप्यन्तरं २०० ।<br>वृक्षोच्छ्रायः १००<br>लब्धमुड्डीयमानं ५० ।<br>कोटिः १५० । कर्णः<br>२५० । भुजः २०० ॥ | कोटिस्तदा भूखण्डेन किमिति त्रैराशिकेन सर्व्वत्र प्रतीतिः | अवधे वद लम्बकं तथा<br>गणितं गाणितिकाशु तत्र मे ॥<br>भुजौ १० ।<br>१७ । भूमिः<br>९ । अत्रत्रि-<br>मुजेभुजयो-<br>र्योग इत्या- |

दिना लब्धम् २१ । अनेन भूरूना न स्यात् । अस्मा-
देव भूरपनीता । शेषार्द्धमृणगता बाधा दिग्वै-
परीत्येनेत्यर्थः । तथा जाते आबाधे ६ । १५ । अत
उभयत्रापि जातो लम्बः ८ । फलम् ३६ ॥
चतुर्भुजत्रिभुजयोरस्पष्टस्पष्टफलानयने
करणसूत्रं वृत्तम् ।
सर्व्वदोर्युतिदलं चतुःस्थितं
बाहुभिर्विरहितञ्च तद्वधात् ।
मूलमस्फुटफलं चतुर्भुजे
स्पष्टमेव मुदितं त्रिबाहुके ॥
उदाहरणम् ।
भूमिश्चतुर्द्दशमिता मुखमङ्कसङ्ख्यं
बाहू त्रयोदशदिवाकरसम्मितौच ।
लम्बोऽपि यत्र रविसंज्ञक एव तत्र
क्षेत्रे फलं कथय तत् कथितं यदाद्यैः ॥
भूमिः १४ । मु-
खम् ९ । बाहू १३ ।
१२ । लम्बः १२ ।
१३ १२
उक्तवत् करणेन
जातं क्षेत्रफलं
करणी २९८० ।
अस्याः पदं किञ्चिन्नूनमेकचत्वारिंशच्छतम्
१४१ ।
इदमत्र क्षेत्रे न वास्तवं फलं किन्तु लम्बेन
निघ्नं
कुमुखैक्यखण्डमिति वक्ष्यमाणकरणेन
वास्तवं फलं
१३८ ।
अत्र त्रिभुजस्य पूर्ब्बोदाहृतस्य ।
भूमिः १४ । भुजौ
१३ । १५ । अनेनापि
प्रकारेण त्रिबाहुके
तदेव वास्तवं फलं
८४ । अत्र चतु-
र्भुजस्यास्पष्टमुदि-
तम् ॥

समचतुर्भुजायतयोः फलानयने
करणसूत्रं
सार्द्धश्लोकद्वयम् ।
इष्टा श्रुतिस्तुल्यचतुर्भुजस्य
कल्प्या च तद्वर्गविवर्जिता या ।
चतुर्गुणा बाहुकृतिस्तदीयं
मूलं द्वितीयश्रवणप्रमाणम्॥
अतुल्यकर्णाभिहतिर्द्विभक्ता
फलं स्फुटं तुल्यचतुर्भुजे स्यात् ।
समश्रुतौ तुल्यचतुर्भुजे च
तथायते तद्भुजकोटिघातः ॥
चतुर्भुजेऽन्यत्र समानलम्बे
लम्बेन निघ्नं कुमुखैक्यखण्डम् ॥
अत्रोद्देशकः ।
क्षेत्रस्य पञ्चकृतितुल्यचतुर्भुजस्य
कर्णौ ततश्च गणितं गणक ! प्रचक्ष्व ।
तुल्यश्रुतेश्च खलु तस्य तथायतस्य
यद्विस्तृती रसमिताष्टमितञ्च दैर्घ्यम् ॥
प्रथमोदाहरणे ।

भुजाः २५ । २५ । २५ । २५ । अत्र त्रिंश

न्मितामेकां ३० श्रुतिं प्रकल्प्य
यथोक्तकरणेन
जातान्या श्रुतिः ४० फलञ्च ६०० ॥
चतुर्द्दशमितामे-
कां १४ । श्रुतिं
प्र ल्प्योक्तवत्
करणेन जाता
अन्या श्रुतिः
८४ । फलञ्च
३३६ ॥

तत्कृत्योर्योगपदं कण इति जाता करणीगता

श्रुतिरुभयत्र तुल्यैव १, २५० । गणितञ्च
६२५ ।
अथायतस्य ।
विस्तृतिः ६ । दैर्घ्यम् ८ । अस्य गणितम्
४८ ।
उदाहरणम् ।
क्षेत्रस्य यस्य वदनं मदनारितुल्यं
विश्वम्भरा द्विगुणितेन मुखेन तुल्या ।
बाहू त्रयोदशनखप्रमितौ च लम्बः
सूर्य्योन्मितश्च गणितं वद तत्र किं स्यात् ॥

ददनम् ११ । विश्वम्भरा २२ । बाहू १३ । २०

लम्बः १२ ।

अत्र सर्व्वदोर्युतिदलमित्यादिना स्थूलफलं

२५० । वास्तवन्तु लम्बेन निघ्नं
कुमुखैक्यखण्डमिति
जातं फलम् १९८ । क्षेत्रस्य खण्डत्रयं
कृत्वा फलानि
पृथगानीय ऐक्यं कृत्वास्य
फलोपपत्तिर्दर्शनीया
खण्डत्रयदर्शनम् ।

प्रथमस्य भुजकोटिकर्णाः ५ । १२ । १३ ।

द्वितीयस्यायतस्य विस्तृतिः ६ । दैर्घ्यम्
१२ । तृती-
यस्य भुजकोटिकर्णाः १६ । १२ । २० ।

अत्र त्रिभुजयोः क्षेत्रयोर्भुजकोटिघातार्द्धं फलं

आयते चतुरस्रे क्षे त्रे तद्भुजकोटिघातः फलं
यथा ।

| | | |
|---|---|---|
| अथ स्थूलत्वनिरूपणार्थं सूत्रं सार्द्धवृत्तम् ।<br>चतुर्भुजस्यानियतौ हि कर्णौ<br>कथं ततोऽस्मिन्नियतं फलं स्यात् ।<br>प्रसाधितौ तच्छ्रवणौ यदाद्यैः<br>स्वकल्पितौ तावितरत्र न स्तः ॥<br>तेष्वेव बाहुष्वपरौ च कर्णा-<br>वनेकधा क्षेत्रफलं ततश्च ॥<br><br>चतुर्भुजे हि<br>एकान्तरकोणावाक्रम्यान्तःप्रवे-<br><br>श्यमानौ तत्संसक्तं स्वकर्णं सङ्कोचयतः ।<br>इतरौ<br>तु वहिः प्रसरन्तौ स्वकर्णं वर्द्धयतः अत उक्तं<br>तेष्वेव बाहुष्वपरौ च कर्णाविति ।<br>लम्बयोः कर्णयोर्व्वैकमनिर्द्दिश्यापरः कथम् ।<br>पृच्छत्यनियतत्वेऽपि नियतञ्चापि तत्फलम् ॥<br>स पृच्छकः पिशाचो वा वक्ता वा नितरां ततः<br>।<br>यो न वेत्ति चतुर्ब्बाहुक्षेत्रस्यानियतां स्थितिम्<br>॥ | | प्रथमक्षेत्रे फलम् ३० । द्वितीये ७२ । तृतीये<br>९६ ।<br>एषामैक्यं सर्व्वक्षे त्रफलम् १९८ । |

अथान्यदुदाहरणम् ।
पञ्चाशदेकसहिता वदनं यदीयं
भूः पञ्चसप्ततिमिता प्रमितोऽष्टषष्ट्या ।
सव्यो भुजो द्विगुणविंशतिसन्मितोऽन्य-
स्तस्मिन् फलं श्रवणलम्बमिती प्रचक्ष्व
॥
वदनम् ५१ ।
भूमिः ७५ ।
भुजौ ६८ ।
४० ।
अत्र फलावलम्बश्रुतीनां सूत्रं वृत्तार्द्धम् ।
ज्ञातेऽवलम्बे श्रवणः श्रुतौ तु
लम्बः फलं स्यान्नियतन्तु तत्र ।
कर्णस्यानियतत्वात् लम्बोऽप्यनियत
इत्यर्थः ॥
लम्बज्ञानाय करणसूत्रं वृत्तार्द्धम् ।
चतुर्भुजान्तस्त्रिभुजेऽवलम्बः
प्राग्वत् भुजौ कर्णभुजौ मही भूः ॥

अत्र लम्बज्ञानार्थं
सव्यभुजाग्राद्दक्षिणभुजमूल-

गामी इष्टः कर्णः सप्तसप्ततिमितः ७७
कल्पित-
स्तेन चतुर्भुजान्तस्त्रिभुजं कल्पितं
तत्रासौ कर्ण
एको भुजः ७७ । द्वितीयस्तु सव्यभुजः
६८ । भूः
सैव ७५ । अत्र प्राग्वल्लब्धो लम्बः
(३०८५) ।
लम्बे ज्ञाते कर्णज्ञानार्थं सूत्रं वृत्तम् ।
यल्लम्बलम्बाश्रितबाहुवर्ग-
विश्लेषमूलं कथिताबधा सा ।
तदूनभूवर्गसमन्वितस्य
यल्लम्बवर्गस्य पदं स कर्णः ॥

अत्र सव्यभुजाग्राल्लम्बः किल
कल्पितः (३०८५) ।

अतो जाताबाधा (१४४५) ।
तदूनभूवर्गसमन्वितेत्या-

तत्र चतुर्भुजे सव्यभुजाग्रात्
दक्षिणभुजमूल-

गामिनः कर्णस्य मानं कल्पितम् ७७ ।
तत्कर्ण-
रेखावच्छिन्नस्य क्षेत्रस्य मध्ये
कर्णरेखोभयतो ये
त्र्यस्रे उत्पन्ने तयोः कर्णः भूमी तदितरौ
च भुजौ
प्रकल्प्य प्राग्वल्लम्बः आबाधा च
साधिता तद्द-
र्शनं लम्बः ६० । द्वितीयलम्बः २४ ।
आबाधयो
४५ । ३२ । रेकककुप्स्थयोरन्तरस्य
१३ । कृते
१६९ लम्बैक्य ८४ । कृतेश्च ७०५६
। योगः ७२२५ ।
तस्य पदं द्वितीयकर्णप्रमाणम् ७५ ।
अत्रेष्टकर्णकल्पने विशेषोक्तिसूत्रं
सार्द्धवृत्तम् ।
कर्णाश्रितं स्वल्पभुजैक्यमुर्व्वी
प्रकल्प्य तच्छेषमितौ च बाहू ।
साध्योऽवलम्बोऽथ तथान्यकर्णः
सोर्व्याः कथञ्चिच्छ्रवणो न दीर्घः ॥
तदन्यलम्बान्न लघुस्तथेदं
ज्ञात्वेष्टकर्णः सुधिया प्रकल्प्यः ॥

चतुर्भुजं हि
एकान्तरकोणावाक्रम्य
सङ्कोच्य-

मानं त्रिभुजत्वं याति तत्रैककोणे
लग्नलघुभुजयो-
रैक्यं भूमिरितरौ भुजौ प्रकल्प्य साधितं
स च
लम्बादूनः सङ्कोच्यमानः कर्णः
कथञ्चिदपि न
म्यात् तदितरौ भुजौ भूमेरधिकौ न
स्यातामेव-
मुभयथापि एतदनुक्तमपि बुद्धिमता
ज्ञायते ॥

षट्पञ्चाशत् त्रिषष्टिश्च नियते कर्णयोर्मिती ॥
कर्णौ तत्रापरौ ब्रूहि समलम्बञ्च तच्छ्रुती ॥
अत्र बृहत्
कर्णं त्रिषष्टि-
मितं प्रकल्प्या-
त्रं ज्ञातः प्रा-
ग्वदन्यः कर्णः
५६ ॥

अथ षट्पञ्चाशत्स्थाने द्वात्रिंशन्मितं
कर्णं ३२

प्रकल्प्य प्राग्वत् साध्यमाने कर्णे ।

जातं करणीखण्डद्वयम् ६२१ ।
२७०० अनयो-

र्मूलयोः २४(२३२५) । ५१(२४२५) । ऐक्यं
द्वितीयः कर्णः
७६(२२२५) ।
अथ तदेव क्षेत्रञ्चेत् समलम्बम् ।

तदा मुखोनभूमिं परिकल्प्य
भूमिमिति-

ज्ञानार्थं त्र्यस्रङ्कल्पितम् । अत्र क्षेत्रे
लम्बांशहारयोः
षट्शते पतिते ।
अत्राबाधे जाते (३५)
(१७२५) लम्बश्च कर-
णीगतो जातः
(३८०१६२५) आसन्न-
मूलकरणेन जातः
३८(६२२६२५) । अयं तत्र
चतुर्भुजे समलम्बः
लब्धाबाधोनित-
भूमेः समलम्बस्य च वर्गयोगः ५०४९ । अयं
कर्णवर्गः । एवं बृहदावाधातो द्वितीयकर्णवर्गः
२१७६ । अनयोरासन्नमूलकरणेन जातौ कर्णौ
७१(१२०) ४६(१३२०) एवं चतुरस्रे तेष्वेव
बाहुष्वन्यौ

<table>
<tr>
<td>दिना जातः कर्णः ७७ ॥<br>द्वितीयकरणज्ञानार्थं सूत्रं वृत्तद्वयम् ।<br>इष्टोऽत्र कर्णः प्रथमं प्रकल्प्य<br>स्त्र्यस्रे तु कर्णोभयतः स्थिते ये ।<br>कर्णं तयोः क्ष्मामितरौ च बाहू<br>प्रकल्प्य लम्बाववधे च साध्ये ॥<br>आबाधयोरेककुप्स्थयोर्यत्<br>स्यादन्तरं तत् कृतिसंयुतस्य ।<br>लम्बैक्यवर्गस्य पदं द्वितीयः<br>कर्णो भवेत् सर्व्वचतुर्भुजेषु ॥</td>
<td>विषमचतुर्भुजफलानयनाय करणसूत्रं<br>वृत्तार्द्धम् ।<br>त्र्यस्रे तु कर्णोभयतः स्थिते ये<br>तयोः फलैक्यं फलमत्र नूनम् ॥<br>अनन्तरोक्तक्षेत्रान्तस्त्र्यस्रयोः फले ।<br>९२४ । २३१० ।<br>अनयोरैक्यम् ३२३४ । तस्य फलम् ॥<br>समानलम्बस्यावधादिज्ञानायकरणसूत्रं<br>वृत्तद्वयम् ।<br>सभानलम्बस्य चतुर्भुजस्य<br>मुखोनभूमिं परिकल्प्य भूमिम् ।<br>भुजौ भुजौ त्र्यस्रवदेव साध्ये<br>तस्यावधे लम्बमितिस्ततश्च ॥<br>अबाधयोना चतुरस्रभूमि-<br>स्तल्लम्बवर्गैक्यपदं श्रुतिः स्यात् ।<br>समानलम्बे लघुदोः कुयोगा-<br>न्मुखान्यदोःसंयुतिरल्पिका स्यात् ॥<br>उदाहरणम् ।<br>द्विपञ्चाशन्मितव्येकचत्वारिंशन्मितो<br>भुजौ ।<br>मुखन्तु पञ्चविंशत्या तुल्यं षष्ट्या मही<br>किल ॥<br>अतुल्यलम्बकं क्षेत्रमिदं पूर्ब्बैरुदाहृतम्<br>।</td>
<td>कर्णौ बहुधा भवतः एवगनियतत्वेऽपि<br>नियतावेव<br>कर्णावानीतौ ब्रह्मगुप्ताद्यैस्तदानयनं यथा ।<br>कर्णाश्रितभुजघातैक्यमभयथान्योन्यभाजितं<br>गण-<br>येत । योगेन भुजप्रतिभुजहत्योः कर्णौ पदे<br>विषमे ॥</td>
</tr>
</table>

कर्णाश्रितभुजघातेति
एकवारमनयोः २५ ।

३९ । घातः ९७५ । तथा ५२ । ६० ।
अनयोर्घातः
३१२० । घातयोर्द्वयोरैक्यम् ४०९५ ।
तथा द्वितीय-
वारम् २५ । ५२ । अनयोर्घाते जातम्
१३०० ।
तथा द्वितीयवारम् ३९ । ६० अनयोर्घाते
२३४० ।
घातयोर्द्वयोरैक्यम् ३६४० । एतदैक्यं
भुजप्रतिभुज-
योः ५२ । ३९ । घातः २०२८ । पश्चात्
२५ । ६० ।
अनयोर्वधः १५०० । तयोरैक्यम् ३५२८
। अनेनै
क्येन ३६४० गुणितं जातं पूर्ब्बैक्यं
१२,८४१,९२० ।
प्रथमकर्णाश्रितभुजघातैक्येन ४०९५ ।
भक्तं
लब्धं ३१ ३६ । अस्य मूलं ५६ ।
एककर्णस्तथा
द्वितीयकर्णार्थं
प्रथमकर्णाश्रितभुजघातैक्यम् ४०
९५ । भुजप्रतिभुज-३५२८ ।
वधयोगगुणितं जातं
१४,४४७,१६० ।
अन्यकर्णाश्रितघातैक्येन ३६४०
भक्तं लब्धं ३९६९ । अस्य भूलम् ६३ ।
द्वितीयः
कर्णः । अस्मिन् विषमे क्षेत्रे कर्णौ साधनं
अस्य
कर्णानयनस्य प्रक्रिया गौरवम् ॥
लघुप्रक्रियादर्शनद्वारेणाह ।
अभीष्टजात्यद्वयबाहुकोटयः
परस्परं कर्णहता भुजा इति ॥
चतुर्भुजं यद्विषमं प्रकल्पितं
श्रुती तु तत्र त्रिभुजद्वयात्ततः ॥
बाह्वोर्वधः कोटिवधेन युक् स्या-

रैक्यमन्यः कर्णः ६३ । एवं श्रुती
स्यातां एवं
सुखेन जाते ॥

अथ यदि पार्श्वभुजयोर्व्यत्ययं
कृत्वा न्यस्तं

क्षेत्रम् ।
सूच्यावाधा (१५३६१७) सूच्यावाधा
(३५६४१७) ।

भूमानम् ३०० । मुखम्
१२५ । बाहू २६० ।

१९५ । कर्णौ २८० । ३१५ । लम्बौ
१८९ । २२४ ॥
अथ सन्ध्याद्यानयनाय करणसूत्रं
वृत्तद्वयम् ।
लम्बतदाश्रितबाह्वोर्म्मध्यं
सन्ध्याख्यमस्य लम्बस्य ।
सन्ध्योना भूः पीठं साध्यं यस्याधरं
खण्डम् ॥
सन्धिर्द्विस्थः परलम्बश्रवणहतः परस्य
पीठेन ।
भक्तो लम्बश्रुत्योर्योगात्
स्यातामधःखण्डे ॥

लम्बः १८९ । तदाश्रितभुजः
१९५ । अनयो

र्मध्ये यल्लम्बलम्बाश्रितबाह्वर्गेत्यादिना
गता वाधा
सन्धिसंज्ञा ४८ । तदूनितभूरिति
द्वितीया वाधा
सा पीठसंज्ञा २५२ ।

एवं द्वितीयलम्बः २२४ ।
तदाश्रितभुजः २६० ।

पूर्ब्बवत् सन्धिः १३२ । पीठम् १६८
।
अथाद्यलम्बस्याधः १८९ । खण्डं
साध्यम् ।

तदा जात्यद्वयकर्णयोर्व्वधः ६५ ।
द्वितीयकर्णः ॥
अथ सूचीक्षेत्रोदाहरणम् ।

क्षेत्रे यत्र शतत्रयं ३००
क्षितिमितिस्तत्वेन्दु

१२५ तुल्यं मुखं बाहू खोत्कृतिभिः २६०
शराति-
धृतिभिः १९५ तुल्यौ च तत्र श्रुती । एका
खाष्टयमैः २८० समा तिथिगुणैः ३१५
अन्याथ
तल्लम्बकौ तुल्यौ गोधृतिभिः १८९ तथा
जिनयमै
२२४ र्योगाच्छ्रवो लम्बयोः ॥
तत् खण्डे कथयाधरे श्रवणयोर्योगाच्च
लम्बावधे
तत्सूची निजमार्गवृद्धभुजयोर्योगाद्यथा
स्यात्ततः ।
सावाधं वद लम्बकञ्च भुजयोः सूच्याः प्रमाणे
च के
सर्व्वं गाणितिक । प्रचक्ष्व नितरां क्षेत्रेऽत्र
दक्षो-
ऽसि चेत् ॥
परस्य पीठेन २५२ । भक्तो लब्धं
लम्बाधःखण्डम् ।
९९ । श्रवणाधःखण्डञ्च १६५ ।
अथ कर्णयोर्योगादधोलम्बज्ञानार्थं
सूत्रं वृत्तम् ।
लम्बौ भूघ्नौ निजनिजपीठविभक्तौ च वंशौ
स्तः ।
ताभ्यां प्राग्वत् श्रुत्योर्योगालम्बः कुखण्डे च ॥

लम्बौ १८९ । २२४ । भू ३०० ।
घ्नौ जातौ

५६७०० । ६७२०० । स्वस्वपीठाभ्यां
२५२ । १६८ ।
भक्तौ एवमत्र लब्धौ वंशौ २२५ । ४०० ।
आभ्या-

देका श्रुतिः कोटिमुजा वधैक्यम् ।
अन्या लघौ सत्यपि साधनेऽस्मिन्
पूर्ब्बैः कृतं यद्वहु तन्न विद्मः ॥
जात्यक्षेत्रद्वयम् ।

एतयोः इतरेतरकर्णहता भुजाः कोटय

इतरेतरकर्णहताः कोटयो भुजा इति कृते जा-
तम् २५ । ६० । ५२ । ३९ । तेषां महती भूर्लघु-
मुखमितरौ बाहू इति प्रकल्प्य क्षेत्रदर्शनं इमौ
कर्णौ महतायासेनानीतौ ६३ । ५६ । अस्यैव
जात्यद्वयस्योत्तरोत्तरभुजकोट्योर्घातौ जातौ ३६ ।
२० । अनयोरैक्यमेकः कर्णः ५६ । बाह्वोः ३ । ५ ।
कोट्योश्च ४ । १२ । घातौ १५ । ४८ । अनयो-

अस्य सन्धिः ४८ । द्विस्थः ४८ । परलम्बेन

२२४ । श्रवणेन च २८० ।
पृथग्गुणितः १०७५२ ।
१३४४० । परस्य पीठेन १६८ ।
भक्तो लब्धं
लम्बाधःखण्डम् ६४ ।
श्रवणाधःखण्डञ्च ८० ।

एवं द्वितीयलम्बस्य २२४ । सन्धिः १३२ । पर-

लम्बेन १८९ । कर्णेन च ३१५ ।
पृथग्गुणितः

मन्योन्यमूलाग्रगसूत्रयोगादित्यादिकरणेन लब्धः
कर्णयोगादधोलम्बः । १४४ । भूखण्डे च १०८ ।
१९२ ॥
अथ सूच्यावाधालम्बभुजज्ञानार्थंसूत्रं वृत्तत्रयम् ।
लम्बहृतो निजसन्धिः परलम्बगुणः समाह्वयो ज्ञेयः ।
समपरसन्ध्योरैक्यं हारस्तेनोद्धृतौ तौ च ॥
समपरसन्धी भूघ्नौ सूच्यावाधे पृथक् स्याताम् ।
हारहृतः परलम्बः सूचीलम्बो भवेद्भूघ्नः ॥
सूचीलम्बघ्नभुजौ निजनिजलम्बोद्धृतौ सूच्याः ।
एवं क्षेत्रक्षोदः प्राज्ञैस्त्रैराशिकात् ज्ञेयः ॥

अत्र किलायं लम्बः २२४ ।
अस्य सन्धिः १३२ ।

अयं परलम्बेन १८९ । गुणितो २२४ ।
अनेन
भक्तो जातः समाह्वयः (८९१८) । अस्य
परसन्धेश्च
४८ । योगो हारः (१२७५८) । अनेन
भूघ्नः ३०० ।
समः (२६७३००८) । परसन्धिश्च ।
(१४४००१) भक्तो
जाते सूच्याबाधे (३५६४१७) ।
(१५३६१७) । एवं द्वितीयः
समाह्वयः (५१२९) ।
द्वितीयो हारः (१७००९) । अनेन
भूघ्नः स्वीयः
समः (१५३६००९) । परसन्धिश्च
(३९६००१) । भक्तो
जाते सूच्याबाधे (१५३६१७)
(३५६४१७) । परलम्बः २२४ ।
भूमि ३०० । गुणो हारेण (१७००९) ।
भक्तो जातः
सूचीलम्बः (६०४८१७) । सूचीलम्बेन
भुजौ १९५ ।
२६० । गुणितौ स्वस्वलम्बाभ्याम् १८९
। २२४ ।
यथाक्रमं भक्तौ जातौ स्वमार्गवृद्धौ
सूचीभुजौ
(६२४०१७) (७०२०१७) ।

एवमत्र सर्व्वत्र भागहारराशिं
प्रमाणं गुण्य-

गुणकौ तु यथायोग्यं फलेच्छे प्रकल्प्य
सुधिया
त्रिराशिकमूह्यम् ॥

अथ वृत्तक्षेत्रे करणसूत्रं वृत्तम् ।

व्यासे भनन्दाग्नि ३९२७ हते विभक्ते
खवाणसूर्य्यैः १२५० परिधिः स सूक्ष्मः
।

अथवा परिधितो व्यासानयनाय ।
गुणहारविपर्य्ययेण व्यासमानं सूक्ष्मम् ७
(११३९२७) ।
स्थूलं वा ७ ।
वृत्तगोलयोः फलानयने करणसूत्रं वृत्तम् ।
वृत्तक्षेत्रे परिधिगुणितव्यासपादः फलं यत्
क्षुण्णं वेदैरुपरि परितः कन्दुकस्येव
जालम् ।
गोलस्यैवं तदपि च फलं पृष्ठजं
व्यासनिघ्नं
षड् भिर्भक्तं भवति नियतं गोलगर्भे
घनाख्यम् ॥
उदाहरणम् ।
यद्व्यासस्तुरगैर्मितः किल फलं क्षेत्रे समे
तत्र किं
व्यासः सप्तमितश्च यस्य सुमते गोलस्य
तस्यापि किम् ।
पृष्ठे कन्दुकजालसन्निभफलं गोलस्य
तस्यापि किं
मध्ये ब्रूहि घनं फलञ्च विमलां चेद्वेत्सि
लीला-
वतीम् ॥
वृत्रक्षेत्रफलदर्शनाय ।
व्यासः ७ । परिधिः २१
(१२३९१२५०) । क्षेत्रफलम्
३८ (२४२३५०००) ।
गोलपृष्ठफलदर्शनाय ।
व्यासः ७ । गोलपृष्ठफलम् १५३
(११७३१२५०) ।

गोलान्तर्गतधनफलदर्शनाय ।
व्यासः ७ । गोलस्यान्तर्गतं घनफलम्
१७९ (२४८७२५००) ।
अथ प्रकारान्तरेण तत्फलानयने
करणसूत्रं सार्द्धवृत्तम् ।
व्यासस्य वर्गे भनवाग्निनिघ्ने
सूक्ष्मं फलं पञ्चसहस्रभक्ते ।
रुद्राहते शक्रहृतेऽथवा स्यात्
स्थूलं फलं तद्व्यवहारयोग्यम् ॥
घनीकृतव्यासदलं निजैक-
विंशांशयुग्गोलघनं फलं स्यात् ॥
व्यासः ७ । अस्य वर्गे ४९ । भनवाग्निनिघ्ने
पञ्चसहस्रभक्ते तदेव सूक्ष्मं फलम् ३८
(२२३४५०००) ।
अथवा व्यासस्य वर्गे ४९ । रुद्राहते ५३९ ।
शक्रहृते लब्धं स्थूलं फलम् ३८ (१२) ।
धनीकृत-
व्यासदलम् (३४३२) ।
निजैकतिंशांशयुग्गोलस्य
घनफलं स्थूलम् १७९ (२३) ।
शरजीवानयनाय करणसूत्रं
सार्द्धवृत्तम् ।
ज्याव्यासयोगान्तरघातमूलं
व्यासस्तदूनो दलितः शरः स्यात् ॥
व्यासाच्छरोनाच्छरसंगुणाच्च
मूलं द्विनिघ्नं भवतीह जीवा ।
जीवार्द्धवर्गे शरभक्तयुक्ते
व्यासप्रमाणं प्रवदन्ति वृत्ते ॥
उदाहरणम् ।
दशविस्तृतिवृत्तान्तर्यत्र ज्या षण्मिता सखे !
।
तत्रेषुं वद वाणाज्ज्यां ज्यावाणाभ्याञ्च
विस्तृतिम् ॥
व्यासः १० । ज्या ६ । योगः १६ । अन्तरम्
४ ।
षातः ६४ । मूलम् ८ । एतदूनो व्यासः २ ।

| | | |
|---|---|---|
| द्वाविंशतिघ्ने विहृतेऽथ शैलैः ७<br>स्थूलोऽथवा स्याद्व्यवहारयोग्यः ॥<br>उदाहरणम् ।<br>विष्कम्भमानं किल सप्त यत्र<br>तत्र प्रमाणं परिधेः प्रचक्ष्व ।<br>द्वाविंशतिर्यत् परिधिप्रमाणं<br>तद्व्याससंख्याञ्च सखे विचिन्त्य ॥<br>आसमानम् ७ । लब्धं परिधिमानम् २१<br>(१२३९१२५०) ।<br>स्थूलो वा परिधिर्लब्धः २२ । | | |

दलितः १ । जातः शरः १ । व्यासात् १० ।
शरोनात् ९ । शर १ । सङ्गुणात् ९ । मूलम् ३
।
द्विनिघ्नं जाता जीवा ६ । एवं ज्ञाताभ्यां ज्या-
वाणाभ्यां व्यासानयनं यथा जीवा- ६ । र्द्ध ३
।
घर्गे ९ । शर १ । भक्ते ९ । शर १ । युक्ते
जातो व्यासः १० ।
अथ वृत्तान्तस्त्र्यस्रादिनवास्रान्तक्षेत्राणां
भुजमानानयनाय करणसूत्रं
वृत्तत्रयम् ।
त्रिद्व्यङ्काग्निनभश्चन्द्रैः १०३९२३
स्त्रिवाणाष्टयुगाष्टभिः ८४८५३ ।
वेदाग्निवाणखाश्वैश्च ७०५३४
खखाभ्राभ्ररसैः ६०००० क्रमात् ॥
वाणेषुनखवाणैश्च ५२०५५
द्विद्विनन्देषुसागरैः ४५९२२ ।
कुरामदशवेदैश्च ४१०३१ वृत्तव्यासे
समाहते ॥
खखखाभ्रार्क- १२०००० संभक्ते
लभ्यन्ते क्रमशो भुजाः ।
वृत्तान्तस्त्र्यस्रपूर्ब्बेषां
नवास्रान्तं पृथक् पृथक् ॥
उदाहरणम् ।
सहस्रद्वितयव्यासं यद्वृत्तं तस्य मध्यतः ।
समत्र्यस्रादिकानांमे भुजान् वद पृथक् पृथक्
॥
अथ वृत्तान्तस्त्रिभुजे भुजमानानयनाय ।
व्यासः २००० । त्रिद्व्यङ्काग्निनभश्चन्द्रैः
१०३९२३ ।
गुणितः २०७८४६००० । खखखाभ्रार्कैः
१२०००० ।
भक्ते लब्धं त्र्यस्रे भुजमानं १७३२ (१२०) ।
वृत्तान्तश्चतुर्भुजे भुजमानानयनाय ।
व्यासः २००० त्रिवाणाष्टयुगाष्टभिः
८४८५३ गुणितः
१६९,७०६,००० । खखखाभ्रार्कैः
१२०००० । भक्ते
लब्धं चतुरस्रे भुजमानं १४१४ (१३६०) ।

वृत्तान्तःपञ्चभुजे भुजमानानयनाय
।
व्यासः २००० ।
वेदाग्निवाणखाश्वैः ७०५३४ ।
गुणितः १४१०६८०००
खखखाभ्रार्कैः १२०००० ।
भक्ते लब्धं पञ्चास्रे भुजमानं
११७५ (१७३०) ।
वृत्तान्तःषड्भुजे भुजमानानयनाय
।
व्यासः २००० खखाभ्राभ्ररसैः
६०००० । गुणितः
१२०,०००,००० ।
खखखाभ्रार्कैः १२०००० । भक्ते
लब्धं षडस्रे भुजमानं १००० ।
वृत्तान्तः सप्तभुजे भुजमानानयनाय
।
व्यासः २००० वाणेषुनखवाणैः
५२०५५ । गुणितः
१०४,११०,००० ।
खखखाभ्रार्कैः १२०००० । भक्ते
लब्धं सप्तास्रे भुजमानं ८६७
(७१२) ।
वृत्तान्तरष्टभुजे भुजमानानयनाय ।
व्यासः २००० ।
द्विद्विनन्देषुसागरैः ४५९२२ ।
गुणितः ९१,८४४,००० ।
खखखाभ्रार्कैः १२००००
भक्ते लब्धमष्टास्रे भुजमानं ७६५
(११३०) ।

वृत्तान्तर्नवभुजे भुजमानानयनाय ।
व्यासः २००० । कुरामदशवेदैः ४१०३१
गुणितः
८२,०६२,००० । खखखाभ्रार्कैः
१२०००० । भक्ते
लब्धं नवास्रे भुजमानं ६८३(१७२०) ।

एवमिष्टव्यासादेभ्योऽन्यापि जीवाः
सिध्य-

न्तीति तास्तु गोले ज्योत्पत्तौ वक्ष्ये ।
अथ स्थूलजीवाज्ञानार्थं लघुक्रियया
करणसूत्रं वृत्तम् ।
चापोननिघ्नपरिधिः प्रथमाह्वयः स्यात्
पञ्चाहतः परिधिवर्गचतुर्थभागः ।
आद्योनितेन खलु तेन भजेच्चतुर्घ्नं-
व्यासाहतं प्रथममाप्तमिह ज्यका स्यात् ॥
उदाहरणम् ।
अष्टादशांशेन वृतेः समान-
मेकादिनिघ्नेन च यत्र चापम् ।
पृथक् पृथक् तत्र वदाशु जीवां
खाकर्मितं व्यासदलञ्च यत्र ॥

व्यासः २४० । अत्र
किलाङ्कलाघवाय विंशतेः

सार्द्धैकशतांशमिलितः सूक्ष्मपरिधिः ७५४ ।
अस्याष्टादशांशः ४२ । अत्रापि अङ्कलाघवाय
द्वयोरष्टादशांशयुतो गृहीतः अनेन पृथक्
पृथगेकादिगुणितेन तुल्ये धनुषि कल्पिते ज्याः
साध्याः ।

अथवात्र सुखार्थं परिधेरष्टादशांशेन
परिधिं

घनूंषि चापवर्त्त्य ज्याः साध्यास्तथापि ता एव
भवन्ति ।

अपवर्त्तिते न्यासः । परिधिः १८ ।
चापानि

च १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ ।
यथोक्त-

अथ चापानयनाय करणसूत्रं वृत्तम् ।
व्यासाब्धिघातयुतमौर्व्विकया विभक्तो
जीवाङ्घ्रिपञ्चगुणितः परिधेस्तु वर्गः ।
लब्धोनितात् परिधिवर्गचतुर्थभागा-
दाप्ते पदे वृतिदलात् पतिते धनुः स्यात् ॥
उदाहरणम् ।
विहिता इह ये गुणास्ततो
वद तेषामधुना धनुर्मितिम् ।
यदि तेऽस्ति धनुर्गुणक्रिया
गणिते गाणितिकातिनैपुणम् ॥

न्यासः ४२ । ८२ । १२० ।
१५४ । १८४ ।

२०८ । २२६ । २३६ । २४० । स
एवापवर्त्तित-
परिधिः १८ । जीवाङ्घ्रिणा । (२१२)
पञ्चभिश्च ५ ।
परिधेः १८ । वर्गो ३२४ गुणितः
१७०१० । व्यासा-
२४० । ब्धि ४ । घात ९६० ।
युतमौर्व्विकयानया
१००२ भक्तो लब्धः १७ ।
अत्राङ्कलाघवाय चतु-
र्व्विंशतेर्द्व्यधिकसहस्रांशयुतो
गृहीतोऽनेनोनितात्
परिधिः १८ । वर्ग ३२४ । चतुर्थभागात्
६४ ।
पदे प्राप्ते ८ । वृति १८ । दलात् ९ । पतिते
१ ।
जातं धनुः एवं जातानि धनूंषि । १ । २ ।
३ ।
४ । ५ । ६ । ७ । ८ । ९ । एतानि
परिधिष्वष्टा-
दशांशेन गुणितानि स्युः । इति
श्रीभास्करा-
चार्य्यविरचितायां लीलावत्यां क्षेत्रव्यवहारः
समाप्तः ॥

**क्षेत्रकर्कटी**, स्त्री, (क्षेत्रजाता कर्कटी । मध्य-
तत्पर्य्यायः । देवरादिजः २ । इति
हेमचन्द्रः ॥ * ॥
तस्य पितृरिकथभागित्वं यथा, मनुः । ९
। १६५ ।
"औरसक्षेत्रजौ पुत्त्रौ पितृरिक्थस्य
भागिनौ ।
दशापरे च क्रमशो गोत्ररिक्थांशभागिनः
॥" *
अनियोगोत्पन्न क्षेत्रजस्य औरसेन सह
विभाग-
माह मनुः । ९ । १६२ ।
"यद्येकरिक्थिनौ स्यातामौरसक्षेत्रजौ
सुतौ ।
यद्यस्य पैत्रिकं रिक्थं स तद्गृह्णीत
नेतरः ॥"
(अत्र कुल्लूकभट्टः । "यदीति । अपुत्त्रेण
पर-
क्षेत्रे नियोगोत्पादितः सुतः ।
उभयोरप्यसौ
रिक्थी पिण्डदाता च धर्म्मत इति याज्ञ-
वल्क्योक्तविषये यदा क्षेत्रिकस्य पितुः
क्षेत्रजा-
नन्तरमौरसः पुत्त्रो भवति तदा तौ
औरसक्षेत्रजौ
एकरिक्थिनौ एकस्य पितुर्यद्यपि
रिकथार्हौ
भवतस्तथापि यद्यस्य जनकसम्बन्धि
धनं तदेव
स गृह्णीयात् न क्षेत्रजः क्षेत्रिकपितुः ।
यत्तु
वक्ष्यति षष्ठन्तु क्षेत्रजस्यांशं प्रदद्यात्
पैतृका-
द्धनात् । औरसो विभजन् दायमिति
तत्पुत्त्रवत्
बीजिविषयम् । यत्तु याज्ञवल्क्येन
उभयसम्बन्धि-
रिक्थहरत्वमुक्तं तत्
क्षेत्रिकपितुरौरसपत्त्रा-
भोक्तृत्वादित्यर्थः । ज्ञा +
"इगुपधज्ञाप्रीकिरःकः ।"
३ । १ । १३५ । इति कः ।)
शरीराधिदैवतम् ।
तत्पर्य्यायः । आत्मा २ पुरुषः ३ । इत्यमरः
।
१ । ४ । २९ ॥ त्रीणि
शरीराधिदैवतेऽन्तर्भोक्तरि ।
(क्षेत्रेषु सर्व्वदेहेषु सर्व्वान्तर्य्यामितया
विराज-
मानः सन् "सर्व्वज्ञः सर्व्वशक्तिमान्
सर्व्वक्षेत्र-
पालयिता" इत्यात्मस्वरूपं जानाति
अनुभवति
यः प्रज्ञानघनः परमपुरुषः स
सर्व्वान्तरात्मा
असंसारी परमेश्वरः ।) क्षेत्रं शरीरं जाना-
तीति क्षेत्रे शरीरे जानाति ज्ञानवान् भव-
तीति वा क्षेत्रज्ञः । हनजनादिति डः । इति
भरतः ॥ तस्य पर्य्यायान्तरम् । सुबीजः ४
पुरुषः ५ अन्तर्यामी ६ ईश्वरः ७ पुद्गलः
८
परसंज्ञकः ९ । इति शब्दरत्नावली ॥
प्रधानम्
१० । इति जटाधरः ॥ * ॥ (उभयतः
प्रमाणं
यथा, भगवद्गीतायाम् । १३ । १--२ ।
"इदं शरीरं कौन्तेय ! क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥
क्षेत्रज्ञञ्चापि मां विद्धि सर्व्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥"
ईश्वरपक्षे भाष्यकृदर्थो यथा, --
"क्षेत्रक्षेत्रज्ञा-
वुक्तौ किमेतावन्मात्रेण ज्ञानेन ज्ञातव्याविति
नेत्युच्यते क्षेत्रज्ञमिति । क्षेत्रज्ञं
यथोक्तलक्षण-
ञ्चापि मां परमेश्वरमसंसारिणं विद्धि जानीहि
योऽसौ सर्व्वक्षेत्रेष्वेकः क्षेत्रज्ञो
ब्रह्मादिस्तम्ब-

पदलोपिकर्म्मधारयः ।) वालुकी । इति राज-
निर्घण्टः ॥

**क्षेत्रचिर्भिटा**, स्त्री, (क्षेत्रजाता चिर्भिटा । शाक-
पार्थिववत् मध्यपदलोपिसमासः ।) चिर्भिटा-
कर्कटी । इति राजनिर्घण्टः ॥

**क्षेत्रजः**, पुं, (क्षेत्रे स्त्रीरूपक्षेत्रे गुर्व्वाद्यनुज्ञात-
देवरादिशुक्रात् जायते इति । क्षेत्र + जन् +
डः ।) स्वस्त्रियामन्यद्वारा जनितः पुत्त्रः ।
द्वादशविधपुत्त्रान्तर्गतपुत्त्रविशेषः । (यथाह
मनुः । ९ । १६७ ।
"यस्तल्पजः प्रमीतस्य क्लीवस्य व्याधितस्य वा ।
स्वधर्म्मेण नियुक्तायां स पुत्त्रः क्षेत्रजः स्मृतः ॥"
द्वादशविधपुत्त्रा यथा तत्रैव । ९ । १५८-
-१६० ।
"पुत्त्रान् द्वादश यानाह नृणां स्वायम्भुवो मनुः ।
तेषां षड्बन्धुदायादाः षडदायादबान्धवाः ॥
औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ।
गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट् ॥
कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ।
स्वयन्दत्तश्च शौद्रश्च षडदायादबान्धवाः ॥")
स च देवरादिना भ्रात्रादिभार्य्यायां यथोक्त-
विधानोत्पन्नः । यथा, --
"अपुत्त्रां गुर्व्वनुज्ञातो देवरः पुत्त्रकाम्यया ।
सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात् ॥
आगर्भसम्भवाद्गच्छेत् पतितस्त्वन्यथा भवेत् ।
अनेन विधिना जातः क्षेत्रजोऽस्य भवेत् सुतः ॥"
इति मिताक्षरायामाचाराध्यायः ॥
भावे बोद्धव्यम् । मेधातिथिगोविन्दराजौ तु
औरसमनियुक्तापुत्त्रञ्च विषयीकृत्य इमं श्लोकं
व्याचक्षाते । तन्न ।
अनियुक्तापुत्त्रस्याक्षेत्रजत्वात्
अनियुक्तासुतश्चेत्यनेन तस्य रिक्थग्रहणनिषे-
धात् यद्येकरिक्थिनौ इत्यनन्वयाच्च ॥") एक-
रिक्थिनौ एकस्यां जातौ रिक्थिनौ यस्य
बीजाद्यो जातः स तस्य रिक्थं गृह्णीयात् ।
इतरोऽन्यबीजजो न गृह्णीयादित्यर्थः । स्त्रीधने
यत्पितृदत्तं यद्धनं स्त्रियै तद्बीजजस्तद्धनं
गृह्णीयात् नान्य इत्याह नारदः ।
"द्वौ सुतौ विवदेयातां द्वाभ्यां जातौ स्त्रिया धने ।
तयोर्यद्यस्य पित्र्यं स्यात् स तद्गृह्णीत नेतरः ॥"
इति दायतत्त्वम् ॥ * ॥
कलौ क्षेत्रजपुत्त्रकरणनिषेधो यथा, आदित्य-
पुराणे ।
"दीर्घकालं ब्रह्मचर्य्यं धारणञ्च कमण्डलोः ।
देवरेण सुतोपत्तिर्द्दत्तकन्या प्रदीयते ॥"
इत्यादि ।
"दत्तौरसेतरेषान्तु पुत्त्रत्वेन परिग्रहः ।"
इत्यादि ।
"एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः ।
निवर्त्तितानि कर्म्माणि व्यवस्थापूर्ब्बकं बुधैः ॥"
इत्यादि च उद्वाहतत्त्वम् ॥ * ॥
क्षेत्रजाते त्रि ॥

**क्षेत्रजा**, स्त्री, (क्षेत्रज + स्त्रियां टाप् ।) श्वेतकण्ट-
कारी । शशाण्डुली । गोमूत्रिका ।
शिल्पिका ।
पर्य्यन्तानेकक्षेत्रोपाधिप्रविभक्तस्तं निरस्तसर्व्वो-
पाधिभेदं सदसदादिशब्दप्रत्ययागोचरं विद्धी-
त्यभिप्रायः । हे भारत ! यस्मात् क्षेत्रक्षेत्रज्ञे-
श्वरयाथात्म्यव्यतिरेकेण न ज्ञानगोचरमन्यद-
वशिष्टमस्ति तस्मात् क्षेत्रक्षेत्रज्ञयोर्ज्ञेयभूतयोर्यज्
ज्ञानं क्षेत्रक्षेत्रज्ञौ येन ज्ञानेन विषयीक्रियेते
तज्ज्ञानं सम्यक्ज्ञानमिति मतं अभिप्रेत-
मित्यभिप्रायो मम ईश्वरस्य विष्णोः ॥" अपि च
तत्रैव । १३ । २२ ।
"उपद्रष्टानुमन्ता च भर्त्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥"
विष्णुः । यथा, महाभारते । १३ । विष्णुसहस्र-
नामकीर्त्तने । १४९ । १५ ।
"पूतात्मा परमात्मा च मुक्तानां परमा गतिः ।
अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च ॥")
वटुकभैरवः । यथा, -- "क्षेत्रज्ञः क्षत्त्रियो
विराट् ।" इति तस्य स्तोत्रम् ॥ छेकः । इति
मेदिनी ॥ विदग्धः । कृषकः । इति शब्दरत्ना-
वली ॥ शेषद्वयार्थे त्रि ॥

**क्षेत्रदः**, पुं, (क्षेत्रं शरीरं ददाति रोगादिभ्यो
मोचयति स्तुतिपाठिनो भक्तस्येति भावः । क्षेत्र
+ दा + कः ।) वटुकभैरवः । यथा, --
"क्षेत्रदः क्षेत्रपालश्च क्षेत्रज्ञः क्षत्त्रियो विराट् ।
श्मशानवासी मांसाशी खर्पराशी मखान्तकृत् ॥"
इति विश्वसारोद्धारतन्त्रे आपदुद्धारकल्पे वटुक-
भैरवस्तोत्रम् ॥ * ॥ (क्षेत्रं शस्याद्युत्पादनक्षमां
भूमिं ददातीति ।) क्षेत्रदातरि त्रि ॥

| | चणिका । इति राजनिर्घण्टः ॥<br>स्वस्त्रियामन्य-<br>द्वारा जाता कन्या च ॥<br>**क्षेत्रज्ञः**, पुं, (क्षेत्रं शरीरं एतच्छरीरं ममेति<br>कृत्वा यो जानाति आपादतलमस्तकं<br>ज्ञानेन<br>विषयीकरोति स्वाभाविकेन<br>औपदेशिकेन वेद-<br>नेन विषयीकरोति वा कृषीवलवत्<br>तत्फल- | |
|---|---|---|

**क्षेत्रदूती**, स्त्री, (क्षेत्रस्य क्षेत्रे वा दूतीव । यद्वा, क्षेत्रे शरीरे दूतीव । औषधान्तर्य्युक्तस्यास्य आरोग्यसं घटकतया तथात्वम् ।) श्वेतकण्ट-कारी । इति राजनिर्घण्टः ॥

**क्षेत्रदेवता**, स्त्री, (क्षेत्राधिष्ठात्री देवता ।) केदाराधिष्ठात्री । सा च सर्पादिरूपा । यथा, "रक्ताक्षः कथयति । अस्ति कस्मिंश्चिदधि-ष्ठाने हरिदत्तो नाम ब्राह्मणः । तस्य च कृषिं कुर्व्वतस्तदैव निष्फलः कालोऽतिवर्त्तते । अथै-कस्मिन् दिवसे स ब्राह्मणः उष्णकालावसाने घर्म्मार्त्तः स्वक्षेत्रमध्ये वृक्षच्छायायां प्रसुप्तः । अनतिदूरे वल्मीकोपरि प्रसारितं वृहत्फुटाटीयं भीषणं भुजङ्गमं दृष्ट्वा चिन्तयामास । नूनमेषा क्षेत्रदेवता मवा कदापि न पूजिता । तेनेदं मे कृषिकर्म्म विफलीभवति ।" इति पञ्चतन्त्रे काको-लूकीयं नाम ३ तन्त्रम् ॥

**क्षेत्रपः**, पुं, (क्षेत्रं शरीरं पाति रक्षति स्तोत्र-कारिणो भक्तस्येति यावत् । क्षेत्र + पा रक्षणे "आतोऽनुपसर्गे कः ।" ३ । २ । ३ । इति कः ।) वटुकभैरवः । यथा, --
"अक्ष्णोर्भूताश्रयं न्यस्य वदने तीक्ष्णदर्शनम् ।
क्षेत्रपं कर्णयोर्म्मध्ये क्षेत्रपालं हृदि न्यसेत् ॥"

टङ्कपाणिस्तथा चान्यष्ठानबन्धुश्च डामरः ॥
ढक्कारवो णवार्णश्च तडिद्देहस्थिरस्तथा ।
दन्तुरो धनदश्चान्यो नत्तिक्तान्तः प्रचण्डकः ॥
फट्कारो बीरसंघश्च भृङ्गाख्यो मेघभासुरः ।
युगान्तौ रौद्यवश्चाथ लम्बोष्ठो वसवस्तथा ॥
शूकनन्दः षडालाख्यः सुनामाहंव्रुकस्तथा ।
एते भेदाः समाख्याता मातृकाक्षरयोनिकाः ॥" * ॥
क्षेत्रपालकथनप्रयोजनं यथा, --
"नामपद्यस्य वर्णानां यो वर्णो मातृकान्तरे ।
दृश्यते प्रथमं तत्र तत्रायं क्षेत्रपालकः ॥
तत्र तत्र विशिष्टात्मा भेदैरेतैर्व्यवस्थितः ।
ततो विशिष्टो यष्टव्यः क्षेत्रपालस्तु सर्व्वतः ॥
क्षेत्रपालमसंपूज्य यः कर्म्म कुरुते क्वचित् ।
तस्य कर्म्मफलं हन्ति क्षेत्रपालो न संशयः ॥"
इति एकोनपञ्चाशत्क्षेत्रपालकथनम् ।
इति क्षेत्रपालप्रकरणे प्रयोगसारः ॥ * ॥
अथ क्षेत्रपालमन्त्राः । मन्त्रदेवप्रकाशिन्याम् ।
क्षौमितिबीजादि क्षेत्रपालाय इति नमोऽन्तः ।
अयं प्रणवादिर्व्वा मन्त्रः । तथा, --
"वर्णान्त्यमौ बिन्दुयुक्तं क्षेत्रपालाय हृन्मनुः ।
ताराद्यो वसुवर्णोऽयं क्षेत्रपालस्य ईरितः ॥"
प्रातःकृत्याद्यनन्तरं प्राणायामान्तामस्य पूजां विधाय धर्म्मादिपीठं विन्यस्य ऋष्यादिन्यासं कुर्य्यात् । अस्य ब्रह्मा ऋषिर्गायत्री च्छन्दः क्षेत्रपालो देवता क्षौं बीजं आयेतिशक्तिः षड्-दीर्घभाजा बीजेनाङ्गन्यासः । ततो ध्यानम् ।
"भ्राजच्चन्द्रलटाधरं त्रिनयनं नीलाञ्जनाद्रिप्रभं
दोर्द्दण्डात्तगदाकपालमरुणस्रग्गन्धवस्त्रोज्जलम्।
धण्टामेखलघर्घरध्वनिमिलज्झङ्कारभीमं विभुं
वन्दे संहितसर्पकुण्डलधरं श्रीक्षेत्रपालं सदा ॥"
एवं ध्यात्वा मानसैः सम्पूज्यार्घ्यस्थापनं कृत्वा धर्म्मादिकल्पितपीठपूजां विधाय पुनर्ध्यात्वावाह-नादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधायावरण-पूजामारभेत् । अङ्गैः प्रथममावरणम् । अनला-क्षाग्निकेशकरालघण्टारवमहाक्रोधपिशिताशन पिङ्गलाक्षोर्ड्धकेशैरष्टभिर्द्वितीयम् । इन्द्रादिभि-स्तृतीयम् । वज्रादिभिश्चतुर्थम् । ततो धूपादि-विसर्ज्जनान्तं कर्म्म समापयेत् । अस्य पुरश्चरणं

"पूर्ब्बमेहिद्वयं पश्चात् विदुषि स्यात् सुरुद्वयम् ।
भुञ्जयद्वितयं भूयस्तर्ज्जयद्वितयं पुनः ॥
ततो विघ्नपदद्वन्द्वं महाभैरव तत्परम् ।
क्षेत्रपाल बलिं गृह्ण द्वयं पावकसुन्दरी ॥"
यद्वा, एह्येहि तुरु तुरु सुरु सुरु जम्भ जम्भ हन हन विघ्नं विनाशय विनाशंय महाबलिं क्षेत्रपाल गृह्ण गृह्ण स्वाहा । इति मन्त्रः । एष बलिविधिः सर्व्वग्रहनिवारको विजयश्रीकरश्च भवति । बलिमपि सोपदंशबृहत्पिण्डेन दद्यात् ॥ फलन्तु ।
"बलिदानेन सन्तुष्टः क्षेत्रपालः प्रयच्छति ।
कान्तिमेधाबलारोग्यतेजःपुष्टियशःश्रियः ॥"
इति तन्त्रसारः ।
(द्वारपालो भैरवविशेषः । यथा, तन्त्रशास्त्रे ।
"गणेशं वटुकञ्चैव क्षेत्रपालञ्च योगिनीः ।
पूर्ब्बादिक्रमयोगेन द्वारपालान् प्रपूजयेत् ॥"
क्षेत्ररक्षके त्रि । यथा, --
"स एव ग्रामपालोऽभूत् पशुपालः स एव च ।
क्षेत्रपालः स एवासीद् द्विजातीनाञ्च रक्षिता ॥"
इति मार्कण्डेयपुराणे । १९ । २४ ॥)

**क्षेत्रपालरसः**, पुं, (क्षेत्रपाल इति संज्ञा विद्यते यस्य । स एव रसः औषधविशेषः ।) ग्रहणीयुक्त-शोथस्यौषधम् । दुग्धवटीति ख्यातम् । यथा, --
"हिङ्गुलञ्च विषं ताम्रं लौहं तालकटङ्गणम् ।
जीरमाहूरफेनञ्च समभागं विमर्द्दयेत् ॥
यवार्द्धा वटिका कार्य्या पथ्यं दुग्धौदनं हितम् ।
अलवणं वारिहीनञ्च दातव्यं भिषजां वरैः ॥
गुरुशोथमग्निमान्द्यं ग्रहणीमतिदुस्तराम् ।

इति विश्वसारोद्धारतन्त्रे आपदुद्धारकल्पे वटुक-भैरवस्तोत्रम् ॥ * ॥ (क्षेत्रं शस्योत्पादनक्षमां भूमिं पातीति । क्षेत्र + पा + कः ।) क्षेत्ररक्षके त्रि ॥ (क्षेत्रं शरीरं विश्वं जगद् वा पाति अपरिमेयात्मैश्वर्य्यप्रभावेन चैतन्यदानेन वा इति व्युत्पत्त्या परमात्मा परमेश्वरः ॥)

**क्षेत्रपतिः**, पुं, (क्षेत्रस्य शस्यभूमेः पतिः ।) केदा-राधिपः । वप्रस्वामी । यथा, -- "अथ प्रभाते स क्षेत्रपतिर्लगुडहस्तस्तं प्रदेशमागच्छन् काके-नावलोकितः ।" इति हितोपदेशे मित्रलाभ-प्रकरणम् ॥ (क्षेत्रस्य शरीरस्य विश्वस्य वा पतिः । जीवः । अग्निः । परमात्मा । यथा, तन्त्रसारे । "जीवं क्षेत्रपतिं प्राहुः केचिदग्निमथापरे । स्वतन्त्र एव स कश्चित् क्षेत्रस्य पतिरिष्यते ॥")

**क्षेत्रपर्पटी**, स्त्री, (क्षेत्रे पर्पटीव । यद्वा, क्षेत्रे जाता पर्पटी ।) क्षुपविशेषः । इति वैद्यकम् ॥ क्षेत-पाप्ड़ा इति भाषा ॥

**क्षेत्रपालः**, पुं, (क्षेत्रं पालयति रक्षतीति । क्षेत्र + पाल् + णिच् + अण् अच् वा ।) देवताविशेषः । तद्भेदा यथा, -- "भेदा एकोनपञ्चाशत् क्षेत्रपालस्य कीर्त्तिताः । लक्षजपः । साज्येन चरुणा दशांशहोमः । तथा च निबन्धे । "लक्षमेकं जपेन्मन्त्रं जुहुयात्तद्दशांशतः । चरुणा घृतसिक्तेन ततः क्षेत्रेशभर्च्चयेत् ॥" मन्त्रदेवप्रकाशिकायान्तु प्रणवरहितोऽयं मन्त्रः । अस्य पुरश्चरणमयुतसंख्यजपः ॥ * ॥ अथास्य लिविधानम् । रात्रौ गृहाङ्गने स्थण्डिलं कृत्वा तत्र देवं सपरिवारं संपूज्य देवस्य हस्ते बलिमन्त्रेण त्रिवारं बलिं दत्वा सपरिवारगणेभ्यः स्वस्वनामभिर्व्वलिं दद्यात् । बलिमन्त्रस्तु । एह्येहि विदुषि सुरु सुरु भुञ्जय भुञ्जय तर्ज्जय तर्ज्जय विघ्नपद विघ्नपद महा-भैरव क्षेत्रपाल बलिं गृह्ण गृह्ण स्वाहा । तथा त्त निबन्धे । ज्वरञ्च विषमं जीर्णं नाशयेन्नात्र संशयः ॥" इति भैषज्यरत्नावली ॥ आहूरफेनं अहिफेनम् ॥

**क्षेत्रयमानिका**, स्त्री, (क्षेत्रे जाता यमानिका ।) क्षेत्रजातयमानी । यथा, -- "उपाधिरुग्रगन्धे तु वचाक्षेत्रयमानिके ।" इति नानार्थे त्रिकाण्डशेषः ॥

**क्षेत्ररुहा**, स्त्री, (क्षेत्रे रोहति उत्पद्यते इति । क्षेत्र + रह + कः ।) वालुकीकर्क्कटी । इति राजनिर्घण्टः ॥ क्षेत्रजाते त्रि ॥

**क्षेत्रलिप्ता**, स्त्री, भूमण्डलस्य कला । यथा । अथ यदि दृग्ग्रहोदयासुभिरष्टादशशतानिक्षेत्र-लिप्ता लभ्यन्ते तदा तदन्तरकलासुभिः किमिति फलं क्षेत्रलिप्ताः ता ग्रहार्कभुक्त्यन्तरेण भाज्याः । भुक्त्यन्तरं हि क्षेत्रलिप्तान्तरात्मकमतः सजातीय-करणाय क्षेत्रलिप्तीकरणं भुक्त्यन्तरेणैकी दिवसो लभ्यत इति युक्तमुक्तम् । इति सिद्धान्तशिरो-मणौ गणिताध्याये ग्रहोदयास्ताधिकारः ॥ * ॥ असुभिः दशविपलैः । यथा, -- "गुर्व्वक्षरैः खेन्दुमितैरसुस्तैः षड्भिः पलं तैर्घटिका खषड्भिः ॥" इति तत्रैव कालमानाध्यायः ॥

**क्षेत्रवत्** [द्] पुं, (क्षेत्रं शरीरं अहमित्यात्म-त्वेन वेत्ति जानाति इदं सर्व्वशरीरमेवाहमिति

| | | |
|---|---|---|
| मातृकाबीजभेदेन सम्भिन्ना<br>नामभेदतः ॥<br>अजरश्चापकुम्भश्च<br>इन्द्रस्तुतिस्ततः परः ।<br>ईडाचारश्चोक्तसंज्ञ ऊष्माद<br>ऋषिसूदनः ॥<br>ऋमुक्तो ऌप्तकेशश्च<br>ऌपकश्चैकदंष्ट्रकः ।<br>ऐरावतश्चौषबन्धुरौषधीशस्तथैव च<br>॥<br>अञ्जनश्चास्त्रवारश्च कवलः<br>खरुखानलः ।<br>गामुख्यश्चैव घण्टादोङ्गनाश्च<br>चण्डवारणः ॥<br>छटाटोपो जटालाख्यो झङ्गीवश्च<br>ञडश्चरः । | | |

आत्मत्वेन मन्यते इत्यर्थः । क्षेत्र + विद् + क्विप् ।) क्षेत्रज्ञः । जीवात्मा । यथा, --

"तत्त्वं नरेन्द्र ! जगतामथ तस्थुषाञ्च
देहेन्द्रियासुधिषणात्मभिरावृतानाम्।
यः क्षेत्रवित्तपतया हृदि विष्वगाविः
प्रत्यक् चकास्ति भगवांस्तमबैहि सोऽस्मि ॥"
इति श्रीभागवते । ४ । २२ । ३५ ॥

"यस्मादनात्मरतिरनर्थहेतुः तत् तस्माज्जगतां जङ्गमानां तस्थुषां स्थावराणाञ्च देहादिभिः आत्मना अहङ्कारेण चावृतानां हृदि यश्चकास्ति प्रकाशते तमवैहि । कथं सोऽस्मीति । सो-ऽस्तीति पाठे स एवैकोऽस्ति ततोऽन्यदसत् इत्यर्थः । ननु जीवो हृदि चकास्ति नान्यस्तत्राह ।

क्षेत्रविदं जीवं तपति नियमयतीति क्षेत्रवित्तपः तस्य भावस्तत्ता तया अन्तर्यामिरूपेण । यद्वा क्षेत्रवित्ते अहं ममतास्पदे पातीति क्षेत्रवित्तपः तेन रूपेण । जीवस्तु पारतन्त्र्यान्न पाति । ननु कर्म्म जीवं नियच्छति न आविः प्रत्यक्षः । तर्हि बुद्धिर्न प्रत्यक् प्रतिलोमं चकास्ति बुद्धिस्तु पराक् विषयाकारेण । तर्ह्यहङ्कारः न विष्वक् आपकत्वेन स तु परिच्छिन्नः । एवम्भूतो यो भगवान् तमवैहीति ।" इति तट्टीकायां श्रीधर-स्वामी ॥

**क्षेत्रसम्भवः**, पुं, (क्षेत्रे सम्भवति उत्पद्यते इति । क्षेत्र + सम् + भू + अच् ।) चञ्चुक्षुपः । भिण्डा-क्षुपः । इति राजनिर्घण्टः ॥ भूमिजे त्रि ॥

**क्षेत्रसम्भूतः**, पुं, (क्षेत्रे सम्भूतः जातः ।) कुन्दरः । इति राजनिर्घण्टः ॥ क्षेत्रोद्भवे त्रि ॥

**क्षेत्रसीमा**, स्त्री, (क्षेत्रस्य भूमेः सीमा मर्य्यादा ।) अङ्गारतुषवृक्षादिद्वाराचिह्नितभूमिमर्य्यादा। यथा "सीमा क्षेत्रादिमर्य्यादा सा चतुर्व्विधा । अनपदसीमा ग्रामसीमा क्षेत्रसीमा गृहसीमा चेति ।" इति मिताक्षरायां व्यवहाराध्याये सीमाविवादशब्दे द्रष्टव्यः ॥

**क्षेत्रजीवः**, त्रि, (क्षेत्रेण क्षेत्रोद्भवशस्यादिना आर्जावतीति । आ + जीव् + कर्त्तरि अच् ।)

**क्षेत्रिकः**, पुं, (क्षेत्रं अस्यास्तीति । ठन् ।) क्षेत्र-स्वामी । यथा, मनुः । ९ । ५४--५५ ।

"ओघवाताहृतं बीजं यस्य क्षेत्रे प्ररोहति ।
क्षेत्रिकस्यैव तदबीजं न वप्ता फलमर्हति ॥
एष धर्म्मो गवाश्वस्य दास्युष्ट्राजाविकस्य च ।
विहङ्गमहिषाणाञ्च विज्ञेयः प्रसवं प्रति ॥"

"तत्र दासीपदं परोढापरं तस्यामन्येन जातो दासीभर्त्तुर्न बीजिभर्त्तुः ।" इत्युद्वाहतत्त्वम् ॥

कलत्रस्वामी । यथा, भनुः । ९ । १४५ ।

"हरेत्तत्र नियुक्तायां जातः पत्रो यथौरसः ।
क्षेत्रिकस्य तु तद्बीजं धर्म्मतः प्रसवश्च सः ॥"

"हरेदिति । तत्र नियुक्तायां यो जातः क्षेत्रजः पुत्त्र औरस इव धनं हरेत् यस्मात् यत्तस्य कारणभूतं बीजं तत् क्षेत्रस्वामित एव तत्-कार्य्यकरणत्वात् ।" इति तट्टीकायां कुल्लूकभट्टः ॥

**क्षेत्रियं**, क्ली, क्षेत्रजतृणम् । परदेहचिकित्स्या । इति मेदिनी ॥

**क्षेत्रियः**, पुं, (परक्षेत्रे चिकित्स्यः । "क्षेत्रियच् पर-क्षेत्रे चिकित्स्यः ।" ५ । २ । ९२ । इति पर-क्षेत्रस्य क्षेत्रियजादेशः ।) असाध्यरोगः । पर-

**क्षेत्रोपेक्षः**, पुं, स्वफल्कपुत्त्रः । इति केचित् ॥ यथा, --

"युगन्धरोऽनमित्रस्य वृष्णिः पुत्त्रोऽपरस्ततः ।
स्वफल्कश्चित्ररथश्चैव गान्दिन्याञ्च स्वफल्कतः ॥
अक्रूरप्रमुखा आसन् पुत्त्रा द्वादश विश्रुताः ।
आसङ्गः सारमेयश्च मृदरो मृदुरिर्गिरिः ॥
धर्म्मवृद्धिः सुकर्म्मा च क्षेत्रोपेक्षोऽरिमर्द्दनः ।
शत्रुघ्नो गन्धमादश्च प्रतिबाहुश्च द्वादश ॥"
इति श्रीभागवते । ९ । २४ । १४--१६ ॥

क्षत्त्रोपेक्ष इति साधुपाठः । (तत्र क्षत्त्रेषु क्षत्त्रिय-कुलेषु उपेक्षा यस्य ॥)

**क्षेपः**, पुं, (क्षिप + वञ् ।) निन्दा । (यथा, याज्ञ-वल्क्यः । २ । २०७ ।

"क्षेपंकरोति चेद्दण्ड्यः पणानर्द्धत्रयोदश ॥")

विक्षेपः । (यथा, गोः रामायणे । ४ । ६२ । १२ ।

"पक्षक्षेपपरिक्लिष्टाः सुपार्श्वेऽभ्यपयास्यति ॥")

लेपनम् । गर्व्वः । प्रेरणम् । इति मेदिनी ॥ विलम्बः । हेला । लङ्घनम् । इति हेमचन्द्रः ॥ गुच्छः । इति त्रिकाण्डशेषः ॥ (यथा, मेघ-दूते । ४९ ।

"कुन्दक्षेपानुगमधुकरश्रीयुषामात्मविम्बम् ॥")

**क्षेपकः**, त्रि, (क्षिपतीति । क्षिप् + ण्वुल् ।) क्षेपकर्त्ता । इति व्याकरणम् ॥

**क्षेपणं**, क्ली, (क्षिप + भावकर्म्मादिषु ल्युट् ।) प्रेर-णम् । तत्पर्य्यायः । क्षिपा २ । इत्यमरः । ३ । २ । ११ ॥ यापनम् । यथा, --

"विधवा यौवनस्था च नारी भवति कर्कशा ।
आयुषः क्षेपणार्थन्तु दातव्यं स्त्रीधनं सदा ॥"
इति विवादचिन्तामणिधृतहारीतवचनम्॥

प्रस्तरादीनां दूरप्रेरणार्थरज्जुनिर्म्मितशिक्यम् । फिङ्गा इति भाषा । यथा, श्रीभागवते । ३ । १९ ।

"प्रववुर्व्वायवश्चण्डास्तमःपांशवमैरयन् ।
दिग्भ्यो निपेतुर्ग्रावाणः क्षेपणैः प्रहिता इव ॥"
"पांशुकृततमश्च प्रेरितवन्तः । क्षेपणैर्यन्त्रैः ।"

कर्षकः । इत्यमरः । २ । ९ । ६ ॥

**क्षेत्राधिदेवता**, स्त्री, (क्षेत्रस्य अधिदेवता अधि-

छात्री देवता ।) तीर्थाधिपदेवता । यथा, --
"देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम् ।
सिद्धं सिद्धाधिकारांश्च श्रीपूर्ब्बं समुदीरयेत् ॥"
इति संस्कारतत्त्वे प्रयोगसारः ॥

**क्षेत्राधिपः**, पुं, (क्षेत्रस्य अधिपः स्वामी अधिष्ठाता

वा ।) मेषादिद्वादशराशीनामधिपतिग्रहगणः।
यथा, --
"कुजशुक्रबुधेन्द्वर्कसौम्यशुक्रावनीभुवाम्।
जीवार्किभानुजेज्यानां क्षेत्राणि स्युरजादयः ॥"
इति ज्योतिस्तत्त्वम् ॥
क्षत्राधिष्ठात्री देवता च ॥

**क्षेत्रामलकी**, स्त्री, (क्षेत्रे भूमौ जाता आमलकी ।

शाकपार्थिववत् मध्यपदलोपी समासः ।)
भूम्या-
मलकी । इति शब्दमाला ॥

दाररतः । इति मेदिनी ॥ (त्रि,
परदेहचिकि-
त्स्योरोगादिः । यथा, भट्टिः । ४
। ३२ ।
"अहं सूर्पनखा नाम्ना नूनं
नाज्ञायिषि त्वया ।
दण्डोऽयं क्षेत्रियो येन
मय्यपातीति साब्रवीत् ॥")

**क्षेत्री**, [न्] त्रि, (क्षेत्रमस्यास्तीति इनिः ।) क्षेत्र-

विशिष्टः । कृषीवलः । यथा,
हेमचन्द्रः ।
"कुटुम्बी कर्षकः क्षेत्री हली
कृषिककार्षिकौ ॥"
(यथा च मानवे । ९ । ५१ ।
"तथैवाक्षेत्रिणो बीजं
परक्षेत्रप्रवापिणः ।
कुर्व्वन्ति क्षत्रिणामर्थं न बीजी
लभते फलम् ॥")
परगवादिना शस्यविनाशे
तत्प्राप्तिर्यथा, --
"यावत् शस्यं विनश्येत्तु क्षेत्री
तावत् फलं लभेत् ।
पालस्ताड्योऽथ गोस्वामी
पूर्ब्बोक्तं दण्डमर्हति ॥
इति याज्ञवल्क्यवचने
गवादिदोषेण यावत् शस्यं
विनश्यति तावदेव पालकात्
प्राप्तव्यं पालका-
शक्तौ पालकस्ताड्यः गोस्वामी
पूर्ब्बोक्तं दण्डा-
दिकं अर्हति ।" इति
प्रायश्चित्ततत्त्वम् ॥

**क्षेत्री**, [न्] पुं, (क्षेत्रं स्त्री अस्त्यस्य । क्षेत्र +

इनिः ।) स्वामी । भर्त्ता । यथा,
मनुः । ९ । ३२ ॥
"भर्त्तुः पुत्त्रं विजानन्ति
श्रुतिद्वैधन्तु भर्त्तरि ।
आहुरुत्पादकं केचिदपरे क्षेत्रिणं
विदुः ॥"

इति तट्टीकायां श्रीधरस्वामी ॥ (परित्यागः ।
यथाह मनुः । ४ । ११९ ।
"उपाकर्म्मणि चोत्सर्गे त्रिरात्रं क्षेपणं स्मृतम् ॥"
"उपाकर्म्मणि उत्सर्गे त्रिरात्रमध्ययनक्षेपणम् ।"
इति कुल्लूकभट्टः ॥ मल्लयोद्धणां सहसा भूपा-
तनरूपनियुद्धकौशलविशेषः । यथा, महा-
भारते । ४ । १२ । २८ ।
"क्षेपणैर्मुष्टिभिश्चैव वराहोद्धूतनिस्वनैः ।
तलैर्वज्रनिपातैश्च प्रसृष्टाभिस्तथैव च ॥"
"क्षेपणं कथ्यते यत्तु स्थानात् प्रच्यवनं हटात्
॥"
इति तट्टीकाकृन्नीलकण्ठधृतमल्लशास्त्रम् ॥

**क्षेपणिः**, स्त्री, (क्षिप + बाहुलकात् अनिः

ङीप् वा ।) नौकादण्डः । इत्यमरः ।
१ । १० । १३ ॥ डाँड् इति भाषा । जालमेदः ।
इति मेदिनी ॥ (अस्त्रविशेषः । यथा, रामा-
यणे । ६ । ७ । २४ ।

**क्षेपणी**, स्त्री, (क्षिप + बाहुलकात् अनिः

ङीप् वा ।) नौकादण्डः । इत्यमरः ।
१ । १० । १३ ॥ डाँड् इति भाषा । जालभेदः ।
इति मेदिनी ॥ (अस्त्रविशेषः । यथा, रामा-
यणे । ६ । ७ । २४ ।
"क्षेपण्यस्तोमराश्चोग्राश्चक्राणिमुषलानि च
॥")

**क्षेपणीयं** क्ली, (क्षिप + अनीयर् ।) पाषाणप्रक्षेप-

णास्त्रम् । यथा, रघुवंशे ४ । ७७ ।

"भर्त्तुरिति । भर्त्तुः पुत्त्रो
भवतीति मुनयो
मन्यन्ते । भर्त्तरि द्विप्रकारा
श्रुतिर्वर्त्तते । केचिदुत्
पादकमवोढारमपि भर्त्तारं तेन
पुत्त्रेण पुत्त्रिण-
माहुः । अन्ये तु वोढारं
भर्त्तारमनुत्पादक-
मपि अन्यजनितेन पुत्त्रेण
पुत्त्रिणमाहुः ।"
इति तट्टीकायां कुल्लूकभट्टः ॥
(परमात्मा ।
यथा, गीतायाम् । १३ । ३३ ।
"यथा प्रकाशयत्येकः कृत्स्नं
लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं
प्रकाशयति भारत ! ॥")

**क्षेत्रेक्षुः**, पुं, (क्षेत्रे इक्षुरिव ।) यावनालः । इति
राजनिर्घण्टः ॥

"तत्र घोरं रघोर्युद्धं पार्व्वतीयैर्गणैरभूत् ।
नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम्
॥"
"तत्रेति । तत्र हिमाद्रो गणैः सह रघोर्युद्धं
अभूत् । किंगणैः पर्व्वते उत्पन्नैः । किं
युद्धं
भयङ्करम् । पुनः किं नाराचानां
वाणविशेषाणां
क्षेपणीयानां पाषाणप्रक्षेपणशस्त्राणां ये
अश्मान-
स्तेषाञ्च घर्षणेन उत्पतिता अग्नयो
यस्मिन् ।"
इति तट्टीका ॥ क्षेपणयोग्ये त्रि ॥

**क्षेपदिनं**, क्ली, अहर्गणानयनार्थं स्वीयविंशांशयुत-

क्षयनाडी । यथा । "इदानीमहर्गणार्थं
क्षेप-
दिनान्याह । स्वीयनखांशयुताः
क्षयनाड्यः क्षेप-
दिनानि दिवागणसिद्‌ध्यै । पूर्ब्बमानीता ये
क्षयाहास्तेषामधो यन्नाडिकाद्यं तत्
स्वीय-
विंशांशयुतं सद्दिनाद्यं कल्प्यम् । या
घटिका-
स्तानि दिनानि । या विघटिकास्ता
घटिका-
स्तासामप्यधो ये षष्ट्यंशास्तानि
पानीयपलानि
कल्प्यानीति । इति सिद्धान्तशिरोमणौ
गणि-
ताध्याये प्रत्यब्दशुद्धिः ॥

**क्षेपपातः**, पुं, ग्रहकक्षाक्रान्तिमण्डलयोर्योगः ।

यथा । इदानीं क्रान्तिवृत्तमाह ।
"क्रान्तिवृत्तं
विधेयं ग्रहाङ्कं भ्रमत्यत्र भानुश्च भार्द्धे
कुभा
भानुतः । क्रान्तिपातः प्रतीपं तथा
प्रस्फुटाः

क्षीति ।" उणां । १ । १३९ । इति मन् ।
(कुश-
लम् । (यथा, मनुः । २ । १२७ ।
"ब्राह्मणं कुशलं पृच्छेत् क्षत्त्रबन्धुमनामयम्
।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥")
तद्वति त्रि । इत्यमरः २ । ४ । २६ ॥
(यथा, गोः
रामायणे । ५ । ८ । १७ ।
"कृताः क्षेमाश्च पन्थानः सुखं गच्छन्ति
खेचराः ॥")
लब्धरक्षणम् । इति मेदिनी ॥ मोक्षः । इति
हेमचन्द्रः ॥

**क्षेमः**, पुं, (क्षेमं मङ्गलमस्मिन्नस्तीति । अर्श आद्यच् ।)

चोरनामगन्धद्रव्यम् । चण्डानामौषधम् ।
इति
शब्दरत्नावली मेदिनी च ॥ धर्म्मेण
शान्त्यामुत्-
पादितः पुत्त्रः । यथा, विष्णुपुराणे । १ । ७
। २८ ।
"व्यवसायं प्रजज्ञे वै क्षेमं शान्तिरसूयत ।
सुखमृद्धिर्यशःकीर्त्तिरित्येते धर्म्मसूनवः ॥"
कलिङ्गदेशस्य राजा । यथा, --
"क्षेमोऽग्रतीर्थः कुहरः कलिङ्गेषु नराधिपः ।
मतिमांश्च मनुष्येन्द्र ! ईश्वरश्चेति विश्रुतः
॥"
इति महभारते । १ । ६७ । ६५ ॥ * ॥
चन्द्रवंशीयशुचिराजपुत्त्रः । यथा, --
"ततः सुतञ्जयाद्विप्रः शुचिस्तस्य भविष्यति
।
क्षेमोऽथ सुव्रतस्तस्माद्धर्म्मसूत्रः सनस्ततः
॥"
इति श्रीभागवते । ९ । २२ । ४७ ॥ * ॥
लब्धपरिपालनम् । यथा, --
"उपेयादीश्वरञ्चैव योगक्षेमार्थसिद्धये ।
स्नात्वा देवान् पितॄं श्चैव तर्पयेदर्च्चयेत्तथा
॥"
इति याज्ञवल्क्यसंहितायामाचाराध्यायः ॥

शून्यां निवेशयामास क्षेमको नाम राक्षसः
॥"
इति हरिवंशे । २९ । ७६ ॥

**क्षेमकरः**, त्रि, (करोतीति । कृ + अच् ।) मङ्गल-

कारकः । इति सिद्धान्तकौमुदी ॥ (यथा,
महाभारते । १४ । ३५ । ३७ ।
"पन्थानं वः प्रवक्ष्यामि शिवं क्षेमकरं
द्विजाः ॥")

**क्षेमकारः**, त्रि, (क्षेमं करोतीति । क्षेम + कृ +

"कर्म्मणि अण् ।" ३ । २ । १ । इति अण्
।)
शुभङ्करः । इति भूरिप्रयोगः ॥ क्षेमङ्करः ।
मङ्गलकर्त्ता । यथा, "क्षेमप्रियमद्रात्
कुर्व्वा" इति
सूत्रेण क्षेमशब्दात् परस्य कृधातोः
खप्रत्यया-
भावपक्षे ढात् षण्णिति षण्प्रत्ययेन
निष्पन्नः ।
इति मुग्धबोधव्याकरणम् ॥ (यथा, भट्टिः ।
५ । ७७ ।
"पितुः प्रियङ्करो भर्त्ता
क्षेमकारस्तपस्विनाम् ॥")

**क्षेमकृत्**, त्रि, (क्षेमं करोतीति । क्षेम + कृ +

क्विप् ।) मङ्गलकारकः । यथा, --
"दुर्लभं प्राकृतं वाक्यं दुर्लभः क्षेमकृत्
सुतः ।
दुर्लभा सदृशी भार्य्या दुर्लभः स्वजनः
प्रियः ॥"
इति चाणक्ये । ५४ ॥

**क्षेमगुप्तः**, पुं, (क्षेमेण मङ्गलमयेन परमेश्वरेण गुप्तः

रक्षितः यद्वा क्षेमः लब्धलरक्षणं तेन गुप्तः
।)
काश्मीरदेशस्य राजविशेषः । यथा, --
"क्षेमगुप्ताभिधानोऽभूदथ राजा तदात्मजः ।
आसवासेवनोत्सिक्तवित्ततारुण्यसंज्वरः
॥"
इति राजतरङ्गिण्यां ६ तरङ्गः ॥

क्षेपपाताश्च बलनबोधकृत् ॥” इति
सिद्धान्त-
शिरोमणौ गोलाध्यायः ॥

**क्षेपिमा**, [न्] पुं, (क्षिप्रस्य भावः “पृथ्वादिभ्य

इमनिज् वा ।” ५ । १ । १२२ । इति
इमनिच् ।
“स्थूलदूरयुवह्रस्वक्षिप्रक्षेद्राणां यणादिपरं
पूर्ब्बस्य
च गुणः ।” ६ । ४ । १५६ । इति साधुः
।) अति-
शयक्षेपः । इति सिद्धान्तकौमुदी ॥

**क्षेपिष्ठः**, त्रि, (अतिशयेन क्षिप्रः । क्षिप्र + इष्टल् ।

“स्थूलदूरेति ।” ६ । ४ । १५६ । इति
साधुः ।) अति-
शीघ्रः । क्षिप्रतरः । इत्यमरः । ३ । २ ।
१११ ॥

**क्षेपीयान्**, [स्] त्रि, (अतिशयेन क्षिप्रः । इयसुन् ।

“स्थूलदूरेति ।” ६ । ४ । १५६ । इति
साधुः ।) अति-
शयक्षिप्रः । इति सिद्धान्तकौमुदी ॥

**क्षेप्ता**, [ऋ] त्रि, (क्षिपति इति । क्षिप् + तृच् ।)

क्षेपणकर्त्ता । इति सिद्धान्तकौमुदी ॥
(यथा,
रामायणे । ४ । ९ । ८४ ।
“उपास्पृश्य ददौ शापं क्षेप्तारं वालिनं प्रति
॥”)

**क्षेमं**, क्ली, प्लक्षद्वीपस्य वर्षविशेषः । यथा । “प्लक्षो

जम्बुप्रमाणो द्वीपाख्यातिकरो हिरण्मय
उत्थितो
यत्राग्निरुपास्ते सप्तजिह्वः । तस्याधिपतिः
प्रिय-
व्रतात्मज इध्मजिह्वः स्वं द्वीपं सप्त वर्षाणि
विभज्य सप्तवर्षनामभ्य आत्मजेभ्य
आकलय्य
स्वयमात्मयोगेनोपरराम । शिवं वयसं
सुभद्रं

“तदनन्तरमीश्वरमभिषेकादिगुणयुक्तमन्यं
वा
श्रीमन्तमकुत्सितं योगक्षेमार्थम् ।
अलब्धलाभो
योगः । लब्धपरिपालनं क्षेमः तदर्थमुपेयात्
।
उपासीत उपेयादित्यनेन सेवां प्रतिषेधति ।
वेतनग्रहणेन आज्ञाकरणं सेवा तस्याः
श्ववृत्ति-
त्वेन निषेधात् ।” इति तट्टीका मिताक्षरा ॥
(यथाच मनुः । ८ । २३० ।
“योगक्षेमेऽन्यथा चेत्तु पालो
वक्तव्यतामियात् ॥”)

**क्षेमकः**, पुं, (क्षेम + स्वार्थे संज्ञायां वा कन् ।)

चोरनामगन्धद्रव्यम् । इति जटाधरः ॥ * ॥
नागविशेषः । यथा, --
“नागः शङ्खमुखश्चैव तथा
कुष्माण्डकोऽपरः ।
क्षेमकश्च तथा नागो नागः पिण्डारकस्तथा
॥”
इति महाभारते । १ । ३५ । ११ ॥
जनमेजयवंशोत्पन्नराजविशेषः । यथा, --
“शतानीकाद्दुर्द्दमनस्तस्यापत्यं महीनरः ।
दण्डपाणिर्निमिस्तस्य क्षेमको भविता यतः
॥”
इति श्रीभागवते । ९ । २२ । ४३ ॥
एतत्पर्य्यन्तं अस्य वंशस्य विश्रान्तिः ।
परी-
क्षिदादयः क्षेमकान्ताः कलेः सहस्रवत्सर-
पर्य्यन्तं राजान आसन् । ततः
सोमवंशशाखा-
न्तरे मगधवंश्या राजानः कलौ बहुकालं
स्थिताः । इति श्रीभागवतमतम् ॥ राक्षस-
विशेषः । यथा, --
“एतस्मिन्नेव काले तु पुरीं वाराणसीं नृप ! ।

(क्षेमगुप्ते त्रि ॥)

**क्षेमङ्करः**, त्रि, (क्षेमं करोतीति । क्षेम + कृ +

“क्षेमप्रियमद्रेऽण् च ।” ३ । २ । ४४ । इति
अण् ।
चात् खच् मुम् च ।) मङ्गलकारकः ।
तत्पर्य्यायः ।
अरिष्टतातिः २ शिवतातिः ३ शिवङ्करः ४
।
इति हेमचन्द्रः ॥ क्षेमकारः ५ मद्रङ्करः ६
शुभ-
ङ्करः ७ । इति भूरिप्रयोगः ॥

**क्षेमङ्करी**, स्त्री, (क्षेभङ्कर + स्त्रियां ङीप् ।) देवी-

विशेषः । यथा, --
“क्षेमान् देवेषु सा देवी कृत्वा दैत्यपतेः
क्षयम् ।
क्षेमङ्करी शिवेनोक्ता पूज्या लोके भविष्यसि
॥
अनेनैव तु रूपेण विद्याष्टकसमन्विता ।
एका वा नगरान्तस्था पूजिता स्थापिता
शुभा ॥
प्रासादे पटकुड्ये वा पुस्तके जलवह्निगा ।
निस्त्रिंशे पूजयेत् क्षेमां सर्व्वकामफलप्रदाम्
॥
दमनी पदमाला च श्रीघोणा वज्रशासना ।
अस्त्रं प्रत्यङ्गिरादेव्याः पूजयेत् समुदाहृता
।
एताभिः स्थापनं कार्य्यं शिवासनसमानुगम्
॥”
इति देवीपुराणे क्षेमङ्करीप्रादुर्भावः ४७
अध्यायः ॥
शङ्खचिल्ली । सा च भगवत्या मूर्त्तिः । तस्या
नमस्कारमन्त्रः । यथा, --
“कुङ्कुमारुणसर्व्वाङ्गि ! कुन्देन्दुधवलानने !
।
मत्स्यमांसप्रिये देवि ! क्षेमङ्करि ! नमोऽस्तु
ते ॥”
अपि च ।
“कृशोदरि महाचण्डे ! मुक्तकेशि !
बलिप्रिये ! ।

| | | |
|---|---|---|
| शान्तं क्षेममभयमिति वर्षाणि ।”<br>इति<br>श्रीभागवते । ५ । २० । २-३ ॥ * ॥<br>मठविशेषः ।<br>यथा, --<br>“मर्त्तुं ययौ च वाराहक्षेत्रं यत्राविधायकः<br>श्रीकण्ठक्षेममठयोरासीद्धुष्कपुरान्तिके<br>॥”<br>इति राजतरङ्गिण्यां ६ तरङ्गः ॥<br>**क्षेमः**, पुं, क्ली, (क्षि क्षये + “अर्त्तिस्तुसुहुसृधृ- | | कुलाचारप्रसन्नास्ये नमस्ते शङ्करप्रिये !<br>॥”<br>इति तन्त्रम् ॥ |

**क्षेमजित्**, पुं, (क्षेमं मङ्गलं जयति जितवान् वा सर्व्वदा पुण्यात्मककर्म्मणा । यद्वा क्षेमं प्राप्तस्य रक्षणं जितवान् स्वायत्तीकृतवान् दैवपुरुषकारादिप्रभावेणेति यावत् ।) राजविशेषः । स तु मगधदेशे षट्त्रिंशद्वर्षपर्य्यन्तं राजा भविष्यति । तस्य नामान्तरं क्षेमार्च्चिः । इति मत्स्यपुराणमिति केचित् ॥

**क्षेमदर्शी**, [न्] पुं, (क्षेमं द्रष्टुं शीलमस्य यद्वा क्षेमं मङ्गलं प्राप्तस्य रक्षणं वा पश्यतीति । क्षेम + दृश् + णिनिः ।) चन्द्रवंशीयराजविशेषः । यथा, महाभारते । १२ । ८२ । ६ ।
"कोशलानामाधिपत्यं संप्राप्तं क्षेमदर्शिनम् । मुनिः कालकवृक्षीय आजगामेति नः श्रुतम् ॥"

**क्षेमधन्वा**, [न्] पुं, (क्षेमं लब्धरक्षणपटु धनुर्यस्य यद्वा क्षेमं प्रजानां मङ्गलसाधनं जगद्धितकरमित्यर्थः धनुर्यस्य ।) सूर्य्यवंशीयराजविशेषः । स तु पुण्डरीकपुत्त्रः । यथा, --
"नभस्य पुण्डरीकस्तु क्षेमधन्वा ततः स्मृतः । क्षेमवन्वसुतस्त्वासीद्देवानीकःप्रतापवान् ॥"
इति हरिवंशे । १५ । २७ ॥ सांवर्णनामकतृतीयमनुपुत्त्रविशेषः । यथा, --
"सर्व्वत्रगः सुशर्म्मा च देवानीकः पुरूद्वहः । क्षेमधन्वा दृढायुश्च आदर्शः पण्डको मनुः । सावर्णस्य तु पुत्त्रा वै तृतीयस्य नव स्मृताः ॥"

ष्टेन न क्वचिदपि वहिर्दृष्टेन इत्यर्थः । पुरुषप्रवेशरहितमिलावृतवनं ओको यस्य तेन शम्भुना ।" इति तट्टीकायां श्रीधरस्वामी ॥

**क्षेमा**, स्त्री, (क्षेम + टाप् ।) कात्यायनी । इति मेदिनी ॥ क्षेमङ्करी । यथा, --
"निस्त्रिंशे पूजयेत् क्षेमां सर्व्वकामफलप्रदाम् ।"
इति देवीपुराणे क्षेमङ्करीप्रादुर्भावनामाध्यायः ॥ (अप्सरोभेदः । यथा, महाभारते । १ । १२३ । ५९ ।
"अम्बिका लक्षणा क्षेमा देवीरम्भामनोरमा ॥")

**क्षेमाधिः**, पुं, (क्षेमा मङ्गलमयी क्षेमे मङ्गलविषये धीर्यस्य पृषोदरात् ह्रस्वः ।) मिथिलादेशस्थसूर्य्यवंशीयराजविशेषः । यथा, --
"अरिष्टनेमिस्तस्यापि श्रुतायुस्तत् सुपाश्वकः । ततश्चित्ररथो यस्य क्षेमाधिर्म्मिथिलाधिपः ॥"
इति श्रीभागवते । ९ । १३ । २३ ॥

**क्षेमाफला**, स्त्री, (क्षेमं मङ्गलजनकं हितकरं फलं यस्याः । पृषोदरादाकारत्वे साधुः ।) क्षेमफला इति वा पाठः ॥ उडम्बरवृक्षः । इति शब्दचन्द्रिका ॥

**क्षेम्यं**, त्रि, (क्षेमाय साधुः "प्राग्घिताद्यत् ।" ४ । ४ । ७५ । इति यत् । यद्वा, क्षेममर्हति "दण्डादिभ्यो यत् ।" । ५ । १ । ६६ । इति यत् ।) क्षेमीयम् । कुशल-

**क्षैरेयी**, स्त्री, (क्षीरे संस्कृतं यदन्नम । ततः स्त्रियां ङीप् ।) परमान्नम् । इति हेमचन्द्रः ॥ क्षीरसम्बन्धिनि त्रि । क्षीरेयी इति च पाठः ॥

**क्षोडः**, पुं, (क्षोड्यते बध्यते अस्मिन् । क्षोड + अधिकरणे + अप् । घञ् इति केचित् वृद्धिर्न्न वैदिकधातुश्चायम् ।) आलानम् । गजबन्धनी । इति भूरिप्रयोगः ॥

**क्षोणिः**, स्त्री, (क्षै + बाहुलकात् डोनिः वा ङीप् ।) पृथिवी । इति शब्दरत्नावली ॥ अमरटीका च ॥ (यथा, ऋग्वेदे १ । ५४ । १ ।
"अक्रन्दयो नद्योऽरोरुवद्वना कथा न क्षोणीभिर्यसा समारत ॥")

**क्षोणी**, स्त्री, (क्षै + बाहुलकात् डोनिः वा ङीप् ।) पृथिवी । इति शब्दरत्नावली ॥ अमरटीका च ॥ (यथा, ऋग्वेदे १ । ५४ । १ ।
"अक्रन्दयो नद्योऽरोरुवद्वना कथा न क्षोणीभिर्यसा समारत ॥")

**क्षोदः**, पुं, (क्षुद्यते इति । क्षुद् पेषणे + कर्म्मणि भावे च घञ् ।) चूर्णः । इत्यमरः । २ । ८ । ९९ ॥ (यथा, काशीखण्डे । ३३ । ९३ ।
"सापि प्राग्वासना योगाल्लिङ्गार्च्चनरता सती । हित्वा मलयजक्षोद विभूतीं बह्वमंस्त वै ॥") रजः । पेषणम् । इति मेदिनी ॥ (यथा, रत्नावलीनाटिकायाम् १ अङ्के ।
"कीर्णैः पिष्टातकौघैः कृतदिवसमुखैः कुङ्कमक्षोदगौरैर्हेमालङ्कारभाभिर्भरनमितशिरःशेखराङ्कैः किरातैः ॥")

**क्षोदितं**, क्ली, (क्षुद् + भावे क्तः । वाच्यलिङ्गे तु कर्म्मणि + क्तः ।) चूर्णम् । इति शब्दचन्द्रिका ॥ पेषिते त्रि ॥

इति च तत्रैव । ७ । ७४ ॥

**क्षेमधर्म्मा** [न्,] पुं, (क्षेमं मङ्गलरूपं क्षेमे वा
घर्म्मो यस्य । यद्वा क्षेमरक्षणे धर्म्मो यस्य ।)
राजविशेषः । यथा, "ततश्च शिशुनागस्तस्य
पुत्त्रश्च काकवर्णो भविता तस्य पुत्त्रः क्षेमधर्म्मा
तस्यापि क्षत्त्रौजाः ।" इति विष्णुपुराणे । ४ । २४ । ३ ॥

**क्षेमधूर्त्तिः**, पुं, (क्षेमे मङ्गले लब्धरक्षणे वा धूर्त्ति-
र्घारणा यस्य ।) राजविशेषः । यथा, --
"बृहत्क्षत्त्रमथायान्तं कैकयं दृढविक्रमम् ।
क्षेमधूर्त्तिर्महाराज ! विव्याधोरसि मार्गणैः ॥"
इति महाभारते । ७ । १०६ । १ ॥

**क्षेममूर्त्तिः**, पुं, (क्षेमा मङ्गलमयी प्रियदर्शना
मूर्त्तिरस्य ।) करूषदेशीयराजविशेषः । इति
केचित् ॥ क्षेमघूर्त्तिरिति साधुपाठः । यथा, --
"कारूषकाश्च राजानः क्षेमधूर्त्तिस्तथैव च ।
शुतायुरुद्वहश्चैव बृहत्सेनस्तथैव च ॥"
इति महाभारते आदिपर्व्वणि ६७ अध्यायः ॥

**क्षेमवान्** [त्] त्रि, (क्षेमं मङ्गलं अस्यास्तीति ।
अस्त्यर्थे मतुप् मस्य वत्वम् ।) मङ्गलयुक्तः ।
इति सिद्धान्तकौमुदी ॥

**क्षेमशूरः**, पुं, (क्षेमे मङ्गलस्थाने निर्विघ्नस्थाने वा
शूरः ।) निर्भयस्थाने बलप्रकाशकः । यथा, --
"किं क्षेमशूरैर्विबुधैरसंयुगविकत्थनैः ।
रहोजषा वा हरिणा शम्भुना वा वनौकसा ॥"
इति श्रीभागवते । १० । ४ । ३६ ॥

योग्यम् । इति सिद्धान्तकौमुदी ॥ (यथा, मनुः ।
७ । २१२ ।
"क्षेम्यां शस्यप्रदां नित्यं पशुवृद्धिकरीमपि ।
परित्यजत् नृपो भूमिमात्मार्थमविचारयन् ॥")

**क्षेम्यः**, पुं, (क्षेममर्हत्यसौ । क्षेम + यत् ।) राज-
विशेषः । यथा, हरिवंशे । २० । ४६ ।
"उग्रायुधस्य दायादः क्षेम्यो नाम महायशाः ॥
क्षेम्यात् सुवीरो नृपतिः सुवीराच्चु नृपञ्जयः ।
नृपञ्जयाद् बहुरथ इत्येते पौरवाः स्मृताः ॥"

**क्षै**, क्षये । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-
अनिट् ।) क्षादिः । क्षायति । इति दुर्गादासः ॥

**क्षैण्यं**, क्ली, (क्षीणस्य भावः । क्षीण + ञ्यः ।)
क्षीणता । यथा, "क्षैण्यज्ञाने तु प्रायिकमरणं
ज्ञात्वा प्रवृत्तस्य चान्द्रायणपादादिकम् ॥" इति
प्रायश्चित्ततत्त्वम् ॥ अपि च ।
"अस्मिन् धनजनक्षैण्यनिभित्तं मण्डलोत्तमे ।
सर्व्वतो दिक्कमुत्तस्थावथानर्थपरम्परा ॥"
इति राजतरङ्गिण्याम् ५ तरङ्गः ॥

**क्षैत्रं**, क्ली, (क्षेत्राणां समूहः । "भिक्षादिभ्यो-
ऽण् ।" ४ । २ । ३८ । इति अण् ।) क्षेत्रसमूहः ।
तत्पर्य्यायः । कैदारिकम् २ कैदर्य्यम् ३ कैदा-
रकम् ४ । इत्यमरः । २ । ९ । ११ ॥ वारटम् ५ ।
इति शब्दरत्नावली ॥

**क्षैत्रज्ञं**, क्ली, (क्षेत्रज्ञ + "हायनान्तयुवा-

**क्षोदिमा**, [न्] पुं, (क्षुद् + "पृथ्वादिभ्य ईमनिज्
वा ।" ५ । १ । १२२ । इति इमनिच् ।) अति-
शयक्षुद्रता । इति व्याकरणम् ॥

**क्षोदिष्ठः**, त्रि, (अतिशयेन क्षुद्र इति । इष्ठल्
प्रत्ययः ।) अतिशयक्षद्रः । इत्यमरः । ३ । २ । १११ ॥

**क्षोदीयान्**, [स्] त्रि, (क्षुद् + इयसुन् ।) अतिक्षुद्रः ।
इति सिद्धान्तकौमुदी ॥ (यथा, माघे । २ । १०० ।
"बृहत्सहायः कार्य्यान्तं क्षोदीयानपि गच्छति ।
सम्भूयाम्भोधिमभ्येति महानद्या नगापगा ॥")

**क्षोद्यः**, त्रि, (क्षोदनयोग्यः क्षोदितुमर्हति वा ।
क्षुद् + "अचो यत् ।" ३ । १ । ९७ । इति यत् ।)
क्षोदनीयः । चूर्णीकरणीयः । यथा, --
"वबन्धुर्बन्धनीयांश्च क्षोद्यान् सञ्चुक्षुदुस्तथा ।
बिभिदुर्भेदनीयांश्च तांस्तान् देशान्नरास्तदा ॥"
इति रामायणे । २ । ८० । १० ॥
"बन्धनीयान् सेतून् । क्षोद्यान् क्षोदनीयान्
शर्कराभूयिष्ठप्रदेशान् । सञ्चुक्षुदुः चूर्णया-
मासुः । भेदनीयान् जलनिर्गमार्थं भेद्यान् ॥"
इति तट्टीका ॥

**क्षोभः**, पुं, (क्षुभ् + भावे घञ् ।) क्षोभणम् । सञ्च-
लनम् । चित्तचाञ्चल्यम् । यथा, --
"पूरोत्पीडे तडागस्य परीवाहः प्रतिक्रिया ।
शोकक्षोभे तु हृदयं प्रलापैरेव धार्य्यते ॥"
इति उत्तरचरिते । ३ अङ्के ॥
परीबाहः सेतुभेदः । शोकजोभे शोकाधीन-
चित्तचाञ्चल्ये । प्रलापैः रोदनादिभिरित्यर्थः ॥

"क्षेमे निर्भयदेशे शूरैः । संयुगादन्यत्र विकत्थनं
प्रौढवादो येषां तैः । ननु हरेर्बिभेमि शम्भो-
श्चेति चेत्तत्राहू रहोजुषेति । सर्व्वस्यान्तःप्रवि-

दिभ्योऽण् ।" ५ । १ । १३० । इति अण् ।
"कुशलचपलनिपुणपिशुनकुतूहल क्षेत्रज्ञाः युवा-
दिषु ब्राह्मणादिषु च पठ्यन्ते ।" क्षैत्रज्ञ्य पक्षे +
"गुणवचनब्राह्मणादिभ्यः कर्म्मणि च ।" ५ । १ ।
१२४ । इति ष्यञ् ।) क्षेत्रज्ञस्य भावः । इति
सिद्धान्तकौमुदी ॥

**क्षैत्रज्ञ्यं**, क्ली, (क्षेत्रज्ञ + "हायनान्तयुवा-
दिभ्योऽण् ।" ५ । १ । १३० । इति अण् ।
"कुशलचपलनिपुणपिशुनकुतूहल क्षेत्रज्ञाः युवा-
दिषु ब्राह्मणादिषु च पठ्यन्ते ।" क्षैत्रज्ञ्य पक्षे +
"गुणवचनब्राह्मणादिभ्यः कर्म्मणि च ।" ५ । १ ।
१२४ । इति ष्यञ् ।) क्षेत्रज्ञस्य भावः । इति
सिद्धान्तकौमुदी ॥

अपि च शाक्तानन्दतरङ्गिणीधृततन्त्रे।
"भुक्त्वा पीत्वा चरेत् पूजां जपं देव्याः
समाहितः ।
साधके क्षोभमापन्ने मम क्षोभं प्रजायते
।
तस्माद्भुक्त्वा च पीत्वा च अक्षुव्वो
यजनं चरेत् ॥"

**क्षोभकः**, पुं, (क्षोभ + संज्ञायां कन् ।) कामाख्यास्थ-

पर्व्वतविशेषः । यथा, --
"दुर्ज्जराख्यस्य पूर्ब्बस्यां पुरं नाम
वरासनम् ।
तद्दक्षिणे महाशैलः क्षोभको नाम
नामतः ॥
तस्मिन् गिरौ शिलापृष्ठे वक्त्रे देवी
व्यवस्थिता ।
पञ्चपुष्करिणी नाम्ना
पञ्चयोनिस्वरूपिणी ॥
एकत्र पञ्चभिर्दुर्गा योनिभिः
पञ्चवक्त्रकम् ।
स्थिता रमयितुं तत्र नित्यमेव
हिमाद्रिजा ॥"
इति कालिकापुराणे
कामाख्यारूपनिर्णये
८१ अध्यायः ॥ * ॥ (क्षुभ् + कर्त्तरि
+ ण्वुल् ।)
क्षोभजनके त्रि ॥

**क्षोभणं**, त्रि, (क्षुभ् + णिच् + ल्युः ।) क्षोभजन-

कम् । सञ्चलनकारकम् । यथा, --
"आहताङ्गैः ससस्तैस्तं
देवप्रहरणैस्तदा ।
अक्षोभ्याणां समुद्राणां क्षोभणं
क्षिप्रकारिणम् ॥"
इति रामायणे । ३ । ३६ । १० ॥
"क्षोभणं क्षोभकर्त्तारम् ।" इति तट्टीका
॥
(की भावे ल्य ट । क्षोभः ॥)

**क्षोभणः**, पुं, (क्षुभ + णिच् + ल्युः ।) वटुकभैरवः
।

विद्वांसोऽपि वयं किल त्रिजगतां
सर्गस्थितिव्यापदा-
मीशस्तत्परिचर्य्यया न गणितो यैरेष
नारायणः ॥"
इति शान्तिशतके । १ । ११ ॥

**क्षौणीमयः**, पुं, (क्षौणी + मयट् ।) मृण्मयः ।

पृथिव्याश्रयः । यथा, --
"मत्स्यो युगान्तसमये मनुनोपलब्धः
क्षौणीमयो निखिलजीवनिकायकेक्तः ।
विस्रंसितानुरुभये सलिले मुखान्म
आदाय तत्र विजहार ह वेदमार्गान् ॥"
इति श्रीभागवते । २ । ७ । १२ ॥
"मत्स्यावतारमाह । मत्स्यो भाविना
वैवस्वतेन
मनुना दृष्टः । क्षौणीमयः पृथ्वीमयः पृथिवी-
प्रधानस्तदाश्रय इत्यर्थः । अत एव निखिल-
जीवनिकायानायाश्रयः । मे सुखाद्विस्रंसितान्
गलितान् वेदस्य मार्गान् वेदानादाय तत्र
युगान्तसलिल विजहार । ह हर्षे ।" इति
तट्टी-
कायां श्रीधरखामी ॥ * ॥ क्षोणीमयोऽपि
पाठः ॥

**क्षौद्रं**, क्ली, (क्षुद्राभिः पिङ्गलवर्णमक्षिकाभिः

सरघाभिर्निर्म्मितम् । क्षुद्र + "क्षुद्राभ्रमरवटर-
पादपादञ् ।" ४ । ३ । ११९ । इति अञ् ।)
मधु । इत्यमरः । २ । ९ । १०७ ॥ जलम् ।
इति
मेदिनी ॥
पिङ्गलवर्णक्षुद्रमक्षिकाकृतकपिलवर्ण-
मघु । अस्य गुणाः । अतिशीतलत्वम् ।
लघुत्वम् ।
क्लेदनाशित्वम् ।
घृतयुक्तक्षौद्रञ्चेद्विषतुल्यत्वञ्च ।
इति राजवल्लभः ॥ अपि च ।
"माक्षिकाः कपिलाः सूक्ष्माः
क्षुद्राख्यास्तत्कृतं
मधु ।

**क्षौद्रजं**, क्ली, (क्षौद्रात् जायते इति । जन + डः ।)

शिक्थकम् । इति राजनिर्घण्टः ॥ मधुजात-
मात्रे त्रि ॥

**क्षौद्रधातुः**, पुं, (क्षौद्रजातो धातुः क्षौद्रं धातु-

रिव वा ।) माक्षिकम् । इति राजनिर्घण्टः ॥

**क्षौद्रप्रियः**, पुं, (क्षौद्राणां सरघाणां प्रियः क्षौद्र-

वत् मधुवत् प्रियो वा ।) जलमधुकवृक्षः ।
इति राजनिर्घण्टः ॥ मधुप्रिये त्रि ॥

**क्षौद्रमेहः**, पुं, (क्षौद्रसंज्ञको मेहः ।) प्रमेह-

रोगविशेषः । मधुमेह इति वैद्यकम् ।)
तल्लक्षणं
यथा, --
"कषायं मधुरं रूक्षं क्षौद्रमेहं वदेद्बुधः ।
कषायं कषायवर्णम् ।" इतिभावप्रकाशः ॥
अस्य
चिकित्सा प्रमेहशब्दे द्रष्टव्या ॥

**क्षौद्रेयं**, क्ली, (क्षौद्रे भवं इति । ढञ् ।) शिक्थ-

कम् । इति राजनिर्घण्टः ॥ क्षौद्रसम्बन्धिनि
त्रि ॥

**क्षौमं**, त्रि, (क्षु + "अर्त्तिस्तुसुहुसृधृक्षिक्ष्विति ।"

उणां । १ । १३९ । इति मन् । ततः प्रज्ञा-
दित्वात् अण् । वृद्धिः ।) क्षुमाया विकारः
स्त्रियां क्षौमी कन्था इत्यादि ।
इत्यमरटीकायां
भरतः ॥

**क्षौमं**, पुं, क्ली, (क्षु + मन् । ततोऽण् वृद्धिश्च ।) अट्टा-

लकः । तत्पर्य्यायः । अट्टः २ । इत्यमरः ।
२ । २ । १२ ॥
"द्वे हर्म्यादिगृहे । प्राकाराग्रस्थितरणगृहे
इति
कौदिल्यः । अट्टेति ख्याते गृहविशेषे इति
कोङ्कटः ।
प्राकारमण्डपस्योपरिशालायामिति

यथा, विश्वसारोद्धारतन्त्रे तस्य स्तोत्रम् ।
"कङ्कालधारी मुण्डी च व्यालयज्ञोपवीतवान् ।
जृम्भणो भोहनस्तम्भी मारणः क्षोभणस्तथा ॥"

**क्षोभितः**, त्रि, (क्षुभ् + णिच् + कर्म्मणि क्तः ।) क्षोभयुक्तः । सञ्चालितः । यथा, --
"पादाक्रान्त्या नतभुवं किरीटोल्लिखिताम्बराम् ।
क्षोभिताशेषपातालां धनुर्ज्यानिःस्वनेन ताम् ॥"
इति मार्कण्डेये देवीमाहात्म्ये । ८२ । ३७ ॥

**क्षोमं**, क्ली, (क्षुम + मन् । पृषोदरात् वृद्धिर्वा ।) दूकूलम् । इत्यमरः । २ । २ । १२ । क्षौमं इति च पाठः ॥

**क्षोमः**, पुं क्ली, (क्षुम + मन् ।) अट्टः । इत्यमरटीकायां भरतः ॥ क्षौमोऽपि पाठः ॥

**क्षोमकः**, पुं, (क्षोम + संज्ञायां कन् ।) गणहासकः । इति जटाधरः ॥

**क्षौणिः**, स्त्री, (क्षु + बाहुलकात् निः णत्वं वृद्धिः वा ङीप् च ।) पृथिवी । इत्यमरः । २ । १ । २ ॥ अस्या व्युत्पत्तिर्यथा, --

**क्षौणी**, स्त्री, (क्षु + बाहुलकात् निः णत्वं वृद्धिः वा ङीप् च ।) पृथिवी । इत्यमरः । २ । १ । २ ॥ अस्या व्युत्पत्तिर्यथा, --
"इज्या च यागाधाराच्च क्षौणी क्षीणालये च या ।
महालये क्षयं याति क्षितिस्तेन प्रकीर्त्तिता ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ७ अध्यायः ॥
(यथा, भागवते । ३ । १४ । ३ ।
मुनिभिः क्षौद्रमित्युक्तं तद्वर्णात् कपिलं भवेत् ॥
गुणैर्माक्षिकवत् क्षौद्रं विशेषान्मेहनाशनम् ॥"
इति भावप्रकाशः ॥

**क्षौद्रः**, पुं, (क्षुद्र + अण् ।) चम्पकवृक्षः । इति शब्दचन्द्रिका ॥ वर्णसङ्करविशेषः । स तु सजातीयात् मागध्यां जातः । यथा, --
"चतुरो मागधी सूते क्रूरान् मायोपजीविनः ।
मांसं स्वादुकरं क्षौद्रं सौगन्ध्यमिति विशुतम् ॥"
इति महाभारते । १३ । ४८ । २२ ॥
"एते मागध्यामायोगवादिभ्यश्चतुर्भ्यः क्रमाज्जायन्ते । इत्युपसंहरति चतुर इति । एते चत्वारो वागुरादिना जीवन्तीति मायोपजीविनः । अन्येऽपि त्तत्वारो मागध्यां विश्रुताः सजातीयादुत्पद्यन्ते । तेषां नामानि मांसमित्यादि । मांसं मांसविक्रेतारम् । स्वादुकरं मांसस्यैव संस्कारकम् । क्षौद्रं सूदं शूद्रमिति पाठत्रयेऽपि शाकाद्यन्नपाककरम् । सौगन्ध्यम् उक्तलक्षणं सैरन्ध्रम् । एकस्यैव मागधस्य एतद्वृत्तिचतुष्टयमुक्तमिति ज्ञेयम् ।" इति तट्टीकायां नीलकण्ठः ॥ * ॥ क्षुद्रता । इति पाणिनिव्याकरणम् ॥

**क्षौद्रक्यं**, त्रि, (क्षुद्रकः आयुधजीविसंघः । "आयुधजीविसंघाञ्ञ्यटीति ।" ५ । ३ । ११४ । इति ञ्यट् ।) क्षुद्रम् । इति सिद्धान्तकौमुदी ॥

केचित् । हर्म्म्यादिवातकुटिकायामिति केचित् ।
मण्डपोपरि हर्म्म्यपृष्ठे इति केचित् । प्राकारधारणार्थोऽभ्यन्तरे क्षोमाख्योऽट्टः । इति भट्टः ।
अट्‌ट्यतेऽसौ अट्टः । अट्ट ङ विक्रमे वधे अल् ।
क्षुवन्ति शब्दायन्तेऽत्र क्षौमं । टु क्षु ल क्षुते नाम्नि इति मः गुणः स्वार्थे ष्णे क्षौमञ्च । पट्टदुकूलयोः क्षोमं गुणवत् । वस्त्रभेदे क्षौमं वृद्धिमदिति बहवः । क्षौममट्टे दुकूले स्यादतसीवसनेऽपि चेति विश्वप्रकाशे अतसीवनेन सह पाठादट्टेऽपि क्षौममन्त्यस्वरवच्च । तत्र हि परेषां वृद्धिविधानात् ।" इति पुरवर्गे भरतः ॥ * ॥
अतसीवस्त्रम् । इति हेमचन्द्रः ॥ (यथाह याज्ञवल्क्यः । १ । १८७ ।
"स गौरसर्षपैः क्षौमं पुनः पाकान्महीमयम् ।
कारुहस्तः शुचिः पण्यं भैक्षं योषिन्मुखन्तथा ॥")
"क्षुमायाः विकारः क्षौमं वृद्‌ध्यादि वाच्यलिङ्गञ्च स्त्रियां क्षौमी कन्थेत्यादि ।" इति नृवर्गे भरतः ॥ * ॥ पट्टवस्त्रम् । तत्पर्य्यायः । दुकूलम् २ । इत्यमरः । २ । ६ । ११३ । "द्वे पट्टवस्त्रे ।
सौत्रवस्त्रादधिकं क्षौति क्षोमं टु क्षु शब्दे बाम्नीति मः गुणः । यत् पुनरतसीविकारवाचि प्रकृत्यन्तरं तद्वृद्धिमत् दुकूलार्थात् क्षोमात् स्वार्थे प्रज्ञादित्वादणि क्षौमञ्चेतिकेचित् । दुनोति उपतापयति अधिकग्रीष्मजननादिति नाम्नीति कूलकि दुकूलम् ।" इति च नृवर्गे भरतः ॥ * ॥
शणजवस्त्रम् । यथा, शब्दरत्नावल्याम् ।

| | | |
|---|---|---|
| “तस्य चोद्धरतः क्षौणीं स्वदंष्ट्राग्रेण लीलया ॥”)<br>**क्षौणीप्राचीरः**, पुं, (क्षौण्याः प्राचीर इव ।)<br>समुद्रः । इति जटाधरः ॥<br>**क्षौणीभुक्** [ज्,] पुं, (क्षौणीं पृथ्वीं भुनक्तीति ।<br>भुज् + क्विप् ।) राजा । यथा, --<br>“कृत्वा शस्त्रविभीषिकां कतिपयग्रामेषु दीनाः प्रजा<br>मथन्तो विटजल्पितैरुपहताः<br>क्षौणीभुजस्ते किला | | |

"क्षौमं दुकूले स्यादट्टे पुंनपुंसकयोरिह ।
क्षौमन्तु शणजेऽपि स्यादतसीजे नपुंसकम् ॥"
(यथा, महाभारते । १ । २०० । ३ ।
"कृष्णा च क्षौमसंवीता कृतकौतुकमङ्गला ।
कृताभिवादना शश्वास्तस्थौ प्रह्वा कृताञ्जली
॥")

**क्षौमकः**, पुं, (क्षुमा एव क्षौमः प्रज्ञादित्वात्
अण् । ततः संज्ञायां कन् ।) चोरनामगन्ध-
द्रव्यम् । इति केचित् ॥

**क्षौमी**, स्त्री, (क्षुमा एव इति स्वार्थे अणि वृद्धिः
ततो गौरादित्वात् ङीष् ।) अतसी । इति
रत्नमाला ॥ (विकारार्थे अणि) क्षुमानिर्म्मित-
कन्था । इति क्षौमशब्दटीकायां भरतः ॥

**क्षौरं**, क्ली, (क्षुरस्य कार्य्यं कर्म्म क्षुरकृतं कर्म्मेति
भावः क्षुरस्येदं वा ।) क्षुरकर्म्म । कामान इति
भाषा । तत्पर्य्यायः । मुण्डनम् २ भद्रकरणम्
३
वपनम् ४ परिवापनम् ५ । इति हेमचन्द्रः ॥
अस्य गुणः ।
"केशश्मश्रुनखादीनां कर्त्तनं संप्रसाधनम् ।"
संप्रसाधनं पवित्रीकरणमिति यावत् । इति
राजवल्लभः ॥ * ॥ व्रतादिसंयमे क्षौरकर्म्मा-
करणे दोषो यथा, --
"व्रतानामुपवासानां श्राद्धादीनाञ्च संयमे ।
न करोति क्षौरकर्म्म अशुचिः सर्व्वकर्म्मसु ॥
स च तिष्ठति कुण्डेषु नखादीनाञ्च सुन्दरि ! ।
तदेव दिनमानाब्दं तद्भोजी दण्डताडितः ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २७ अध्यायः ॥
* ॥
नित्यक्षौरविहितनिषिद्धदिनादियथाह राज-
मार्त्तण्डः ।
"न स्नानमात्रगमनोत्सुकभूषितानाम्
मभ्यक्तभुक्तरणकालनिरासनानाम्।
सन्ध्यानिशाशनिकुजार्कदिनेषु रिक्ते
क्षौरं हितं प्रतिपदह्नि न चापि विष्ट्याम् ॥" *
॥
"प्राचीसुखः सौम्यमुखोऽपि भूत्वा
"केशवमानर्त्तपुरं पाटलिपुत्रं पुरीमहिच्छत्रम् ।
दितिमदितिञ्च स्मरतां क्षौरविधौ भवति
कल्या-
णम् ॥ * ॥"
अत्र क्रमो वराहपुराणे ।
"श्मश्रुकर्म्म कारयित्वा नखच्छेदमनन्तरम्
॥"
इति ज्योतिस्तत्त्वम् ॥
अपि च । गोभिलः । "केशश्मश्रुलोमनखानि
वाप-
यीत शिखावर्ज्जम् ।" इति शुद्धितत्त्वम् ॥ * ॥
अन्यच्च ।
"रोहिण्याञ्च विशाखायां मैत्रे चैवोत्तरासु च ।
मघायां कृत्तिकायाञ्च द्विजैः क्षौरं विवर्ज्जितम्
॥
कृत्वा तु मैथुनं क्षौरं यो देवांस्तर्पयेत् पितॄन् ।
रुधिरं तद्भवेत्तोयं दाता च नरकं व्रजेत् ॥"
इति ब्रह्मवैवर्त्तपुराणम् ॥ * ॥
नापितगृहे क्षौरनिषेधो यथा, --
"स्वयं माल्यं स्वयं पुष्पं स्वयं घृष्टञ्च चन्दनम्
।
नापितस्य गृहे क्षौरं शक्रादपि हरेत् श्रियम् ॥
रवौ दुःखं सुखं चन्द्रे कुजे मृत्युर्बुधे धनम् ।
मानं हन्ति गुरोर्व्वारि शुक्रे शुक्रक्षयो भवेत् ॥
शनौ च सर्व्वदोषाः स्युः क्षौरमत्र विवर्ज्जयेत्
॥"
इति कर्म्मलोचनम् ॥ * ॥ * ॥

अथ प्रथमक्षौरस्य चूडाकरणस्य
विहित-

दिनादि । ज्योतिषे ।
"अयुग्माब्दे तथा मासि चूडा भौमशनीतरे ।
अर्केन्दकालशुद्धौ च जन्ममासेन्दुभेतरे ।
रिक्तादर्शाष्टमीषष्ठीप्रतिपद्वर्ज्जिते सिते ॥"
दक्षोऽपि सामान्यतो दोषमाह ।
"षष्ठ्यष्टमी पञ्चदशी उभे पक्षे चतुर्द्दशी ।
अत्र सन्निहितं पापं तैले मांसे भगे क्षुरे ॥
मेषसिंहतुलाकर्किवृश्चिकेतरलग्नके ।
श्रवणादित्रयस्वातीचित्रापुष्याश्विचन्द्रभे॥
ज्येष्ठपुत्रकन्ययोस्तु
ज्यैष्ठदशाहाभ्यन्तरे चूडा-
निषेधो विवाहप्रकरणे उक्तः । इति
ज्योति-
स्तत्त्वम् ॥ * ॥
अपि च । भोजराजः ।
"यो जन्ममासे क्षुरकर्म्म यात्रां
कर्णस्य वेधं कुरुते च मोहात् ।
नूनं स रोगं धनपुत्रनाशं
प्राप्नोति मूढो वधबन्धनानि ॥
जातं दिनं दूषयते वशिष्ठ-
श्चाष्टौ च गर्गो यवनो दशाहम् ।
जन्माख्यमासं किल भागुरिश्च
चूडे विवाहे क्षुरकर्णवेधे ॥"
एतद्विषयभेदस्तु राजमार्त्तण्डे ।
"उक्तानि प्रतिषिद्धानि पुनः
सम्भावितानि च ।
सापेक्षनिरपेक्षाणि श्रुतिवाक्यानि
कोविदैः ॥
सापेक्षनिरपेक्षाणि
समर्थासमर्थविषयकाणि ।
क्षुरेति क्षुरकर्म्म ।" इति
तिथ्यादितत्त्वम् ॥

**क्षौरपव्यं**, क्ली, (क्षुरैः पविभिर्व्वज्रैर्निर्म्मितं
निर्वृत्त-
मिव वा गृहम् ।)
क्षुरवज्रतुल्यतीक्ष्णदृढगृहम्।
यथा, श्रीभागवते । ६ । ५ । ८ ।
"नदीमुभयतो वाहां पञ्चपञ्चाद्भुतं
गृहम् ।
क्वचिद्धंसं चित्रकथं क्षौरपव्यं स्वयं
भ्रमि ॥"
"पञ्चपञ्चानां पञ्चविंशतेः । अद्भुतं
गृहम् ।
क्षौरपव्यं क्षुरैः पविभिर्व्वज्रैश्च
निर्म्मितमिव
तीक्ष्णं दृढञ्चेत्यर्थः । स्वयं
स्वतन्त्रम् । भ्रमि भ्रमण-

कुर्य्यान्नरः क्षौरमनुत्कटस्थः ॥
उत्तरात्रितययाम्यरोहिणी-
रौद्रसर्पपितृभेषु चाग्निभे ।
श्मश्रुकर्म्म सकलं विवर्ज्जयेत्
प्रेतकार्य्यमपि बुद्धिमान्नरः ॥”
प्रेतकार्य्यं
पतितप्रेतसंप्रदानकदासीघटदानविषय-
कम् । अन्यथा वक्ष्यमाणवचनविरोधः स्यात्
॥
“चन्द्रशुद्धिर्यदा नास्ति तारायाश्च विशेषतः ।
अक्षौरिभेऽपि कर्त्तव्यं चन्द्रचन्द्रजयोर्द्दिने ॥
मानं हन्ति गुरुः क्षौरे शुक्रं शुक्रो धनं रविः ।
आयुरङ्गारको हन्ति सर्व्वं हन्ति शनैश्चरः ॥”
* ॥
श्रीपतिरत्नमालायाम् ।
“आज्ञया नरपतेर्द्विजन्मनां
दारकर्म्ममृतसूतकेषु च ।
ब्रन्धमोक्षमखदीक्षणेष्वपि
क्षौरमिष्टमखिलेषु चोडुषु ॥
देवकार्य्ये पितृश्राद्धे रवेरंशपरिक्षये ।
क्षुरिकर्म्म न कुर्व्वीत जन्ममासे च जन्मभे ॥”
* ॥
वृद्धगार्ग्यः ।

आदित्यरेवतीहस्ता ज्येष्ठामूले च चौडकम् ॥
पौष्णाश्विपुष्यवसुरामकवासुदेव-
ब्रह्मार्क्कचन्द्रवरुणादितिचित्रभेषु ।
वारेषु सोमबुधवाक्पतिभार्गवाणां
क्षौरं करोति कुशलं खलु मानवानाम् ॥”
इति वचनात् रोहिण्यामपि चूडाकरणम् ।
अत्रापि तिथ्यङ्गादिविद्धमृक्षं विवर्ज्जयेत् ॥
“सूर्य्ये दक्षिणमार्गगामिनि हरौ सुप्ते निरंशे रवौ
क्षीणे शीतरुचौ
महीजयमयोर्व्वारनिशासन्ध्ययोः ।
भुक्तेऽभ्यक्ततनौ निषिद्धसमयेऽलङ्कारयुक्ते
शिशौ
क्षौराद्रोगभयं वदन्ति यवना मृत्युं तथान्ये
जगुः ॥”
राजमार्त्तण्डे ।
“मानं हरेत् क्षौरमिहायुषोऽर्कः
शनैश्चरः पञ्च कुजस्तथाष्टौ ।
आचार्य्यभृग्विन्दुबुधाः क्रमेण
दद्युर्द्दशैकादश सप्त पञ्च ॥”
जीवादिवारे क्षौरं प्रशस्तम् ॥ * ॥ भोजराजः ।
“शिखिसन्निधाने च चूडाकरणं जगुः शुभं
यवनाः ।
चैत्रे मासि दिवाकरवारे उत्तरवर्त्मनि सवितरि
॥”
दिवाकरवारविनिर्मोकि तु गर्गः ।
“जन्मर्क्षे जन्ममासे च युग्ममासे च वत्सरे ।
न कुर्य्यात् प्रथमं क्षौरं विशेषाच्चैत्रपौषयोः ॥”

स्वभावम् ।” इति तट्टीकायां
श्रीधरस्वामी ॥

**क्षौरिकः**, पुं, (क्षुरकर्म्म क्षुरेण वा कर्म्म करोति ।
यद्वा क्षुरिकर्म्म कार्य्यत्वेनास्त्यस्य ।
इति ठञ् ।
क्षौरं शिल्पत्वेनास्त्यस्य इति तु ठन्
।)
नापितः । इति शब्दमाला ॥

**क्ष्णु**, ल तेजने । इति कविकल्पद्रुमः ॥ (अदां-परं-
सकं-सेट् ।) मूर्द्धन्यणकारोपधः ।
क्ष्णादिः ।
क्ष्णौति खड्गं कर्म्मकारः । इति
दुर्गादासः ॥

**क्ष्णुतः**, त्रि, (क्ष्णु + कर्म्मणि क्तः ।) शाणितः ।
तीक्ष्णीकृतः । इत्यमरः । ३ । १ ।
९१ ॥

**क्ष्मा**, स्त्री, (क्षमते सहते भारं अपराधजनितं
वात्मस्थानां जीवानां चतुर्व्विधानां
इति । क्षम्
+ अच् उपधायाः लोपश्च ।) पृथ्वी
। इत्य-
मरः । २ । ६७ । ३ ॥ (यथा,
भागवते । ७ । ८ । ३३ ।
“द्यौस्तत् सटोत्क्षिप्तविमानसङ्कुला
प्रोत्सर्पत क्ष्मा च पदातिपीडिता
॥”)

**क्ष्माजः**, पुं, (क्ष्मा पृथ्वी तस्यां तस्याः वा जातवान्
इति । क्ष्मा + जन् + डः ।)
मङ्गलग्रहः । इति
ज्योतिषम् ॥

**क्ष्मातलं**, क्ली, (क्ष्मायाः तलम् ।) भूतलम् ।
(यथा, मार्कण्डेये । २३ । ४७ ।
“यद्दिव्यस्ति क्ष्मातले खेऽन्यतो वा
त्वत्सम्बन्धं त्वत्स्वरैर्व्यञ्जनैश्च ॥”)
पृथिवीमध्यम् । इति केचित् ॥

| | | **क्ष्माधृतिः**, पुं, (क्ष्मायां पृथ्व्यां धृतिर्धारणा पालनी-<br>शक्तिर्यस्य ।)<br>काश्मीरदेशीयराजविशेषः । यथा,<br>राजतरङ्गिण्याम् । ५ । ४८२ । |
|---|---|---|

"अथाभ्यषिच्यत क्षिप्रं विप्रैरेत्य यशस्करः ।
क्षमाधृतिः प्रौढसामर्थ्यः सानुमानिव तोयदैः ॥"

**क्ष्मापः**, पुं, (क्ष्मां पाति रक्षतीति । क्ष्मा + पा + कः ।) राजा । यथा, --
"आमयार्त्तिरिपुत्रासक्षुदादौदृष्टवैकृतान् ।
लब्धोदया ह्रीभयेन क्ष्मापा घ्नन्त्यनुयायिनः ॥"
इति राजतरङ्गिण्याम् । ५ । ३१९ ॥

**क्ष्मापालः**, पुं, (क्ष्मां पालयतीति । क्ष्मा + पाल् + णिच् + अण् । क्ष्मायाः पालो वा ।) राजा । यथा, राजतरङ्गिण्याम् । ५ । ३२४ ।
"न के लोभं समुत्पाद्य जिह्वया स्निग्धदीर्घया ।
पिपीलिका इव ग्रस्ताः क्ष्मापालैः शल्यकैरिव ॥"

**क्ष्माभुक्** [ज्,] पुं, (क्ष्मां पृथ्वीं भुनक्ति उपभुनक्ति इत्यर्थः । क्ष्मा + भुज् + क्विप् । कुत्वं त्त ।) राजा । इत्यमरः । २ । ८ । १ ॥ (यथा, राजतरङ्गिण्याम् । ५ । ५५ ।
"तत्रस्थाः क्ष्माभुजा पृष्टास्तन्निर्वेदनकारणम् ।
व्यजिज्ञपन् क्षितिन्यस्तजानुप्राञ्जलयस्ततः ॥")

**क्ष्माभृत्**, पुं, (क्ष्मां पृथ्वीं बिभर्त्ति । क्ष्मा + भृ + क्विप् तुगागमश्च ।) राजा । (यथा, पञ्चतन्त्रे । १ । १६६ ।
"देशानामुपरि क्ष्माभृदातुराणां चिकित्सकाः ।
बणिजो ग्राहकाणाञ्च मूर्खाणामपि पण्डिताः ॥")
पर्व्वतः । इत्यमरः । २ । ८ । १ ॥ (यथा, राजेन्द्रकर्णपूरे । ६७ ।
"मुग्धे कण्ठभुवं ब्रवीषि मम किं सक्ष्वेडतामीयुषीम् ।
क्ष्वेडाराव इहोचितस्तव गणव्रातैः सह क्रीडतो
युष्मान्नीलगलोऽवतादितिगिरा गौर्य्या कृतोऽनुत्तरः ॥"
"सागरसङ्गतेति । सागरेण समुद्रेण सङ्गता । अर्थाद्गङ्गा । उत्तरे तु सेति सर्व्वनामपदम् । गरो विषम् । तदाह सक्ष्वेडेति । क्ष्वेडेन विषेण क्ष्वेडया शब्दविशेषेण च सक्ष्वेडम् । क्ष्वेडं विषम् । क्ष्वेडा जनस्य शब्दविशेषः ॥" इति तट्टीका ॥)
कोषातकी । इति राजनिर्घण्टः ॥

**क्ष्विड**, ऌ आ ङ ञि स्नेहे । मोक्षे । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-अकं-मोक्षे सकं-सेट् ।) वकारयुक्तः । ऌ, अक्ष्विडत् । आ, क्ष्विडितं क्ष्विट्टं तेन । ङ, क्ष्वेडते । ञि, क्ष्विट्टोऽस्ति । स्नेहः स्निग्धीभावः । मोक्षे क्ष्वेडते तिलः तैलं मुञ्चतीत्यर्थः । इति दुर्गादासः ॥

**क्ष्विण्णः**, त्रि, (क्ष्विद् + क्तः ।) मुक्तः । स्निग्धः । इति व्याकरणम् ॥

**क्ष्विद**, आ ञि कूजने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) आ, क्ष्वेदितं क्ष्विण्णं तेन । ञि, क्ष्विण्णोऽस्ति । मूर्द्धन्यवर्गतृतीयान्तोऽयमित्येके । इति दुर्गादासः ॥

**क्ष्विद**, इर् य आ मोक्षे । स्नेहे । इति कविकल्पद्रुमः ॥ (दिवां-परं-अकं-मोक्षे तु सकं-सेट् ।) इर्, अक्ष्विदत् अक्ष्वेदीत् । अस्मात् पुषादित्वान्नित्यं ङ इत्यन्ये । य, क्ष्विद्यति । आ, क्ष्वेदितं क्षिण्णं तेन । इति दुर्गादासः ॥

**क्ष्विद**, ऌ आ ङ ञि मोक्षे । स्नेहे । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-सकं-स्नेहे तु अकं-सेट् ।) निमेषः पक्ष्मभिश्चक्षुष आवरणम् । क्ष्मीलति चक्षुः पक्ष्मभिरावृतं स्यादित्यर्थः । इति दुर्गादासः ॥

**क्ष्वेडितं**, क्ली, (क्ष्विड् + भावे क्तः ।) सिंहनादः । इत्यमरः । ३ । ५ । ३४ ॥ (यथा, महाभारते । १ । ६९ । ६ ।
"नानायुधधरैश्चापि नानावेशधरैस्तथा ।
हेषितस्वनमिश्रैश्च क्ष्वेडितास्फोटितस्वनैः ।
आसीत् किलकिलाशब्दस्तस्मिन्गच्छति पार्थिवे ॥")

**क्ष्वेल**, ऋ चालगत्योः । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-गतौ तु सकं-सेट् ।) वकारयुक्तः । क्षादिः । ऋ, अचिक्ष्वेलत् । चालः कम्पः । चालः कैश्चिन्न मन्यते । इति दुर्गादासः ॥ (क्रीडायामिति केचित् । यथा, रामायणे । ५ । १० । १३ ।
"आस्फोटननिनादांश्च बालानां क्ष्वेलतां तथा ॥")

**क्ष्वेलिका**, स्त्री, (क्ष्वेला + स्वार्थे कन् अत इत्वञ्च ।) क्रीडा । यथा, श्रीभागवते । ५ । ८ । १८ ।
"क्ष्वेलिकायां मां मृषा समाधिना आमीलितदृशं प्रेमसंरम्भेण चकितचकित आगत्य पृषदपरुषविषाणाग्रेण लुठति ।" "सम्भवति चैतदित्याह । क्ष्वेलिकायां क्रीडायां मृषा यः समाधिस्तेनामीलिते दृशौ येन तं मां प्रेम-

"कान्तारेषु च काननेषु च सरित्तीरेषु च क्ष्माभृता-
मुत्सङ्गेषु च पत्तनेषु च सरिद्भर्त्तुस्तटान्तेषु च ॥")

**क्ष्माय**, ई ङ विधूनने । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-अकं-सेट् ।) पवर्गशेषयुक्तः । क्षादिः ।
विधूननमिति विधून्यतेऽसाविति कर्म्मणि घञि
विधूनः सकम्पः ततो विधून इवाचरतीति कौ
कृते अनटि रूपम् । कम्पनमित्यर्थः । ई, क्ष्मातः ।
ङ, क्ष्मायते वृक्षः । (तथाच, भट्टिः । १४ । २१ ।
"उल्का ददृशिरे दीप्ता रुरुवुश्चाशिवं शिवाः ।
चक्ष्माये च मही रामः शशङ्के चाशुभागमम् ॥")
क्ष्मायते कम्पते त्वङ्गत्येजतीर्त्ते च वेपते
इति कम्पार्थे भट्टमल्लोऽपि । रमानाथस्तु विधू-
ननशब्दस्येणन्ताद्व्युत्पत्तेः सकर्म्मकोऽयं इति
प्रतीमः । प्रयोगस्त्वन्यथा दृश्यते इत्याह । इति
दुर्गादासः ॥

**क्ष्मायितः**, त्रि, (क्ष्माय + इतच् ।) कम्पितः । इति व्याकरणम् ॥

**क्ष्मायिता**, [ऋ] त्रि, (क्ष्माय + तृच्प्रत्ययः ।) कम्पकः । इति व्याकरणम् ॥

**क्ष्मील**, निमेषे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सेट् ।) एतदाद्यास्त्रयो वकारयुक्ताः क्षाद्याः ।
ऌ, अक्ष्विदत् । आ, क्ष्वेदितं क्ष्विण्णं तेन । ङ,
क्ष्वे दते तिलः तैलं मुञ्चतीत्यर्थः । ञि, क्ष्विण्णो-
ऽस्ति । स्नेहः स्निग्धीभावः । इति दुर्गादासः ॥

**क्ष्वेडं**, क्ली, (क्ष्विड + घञ् ।) लोहितार्कपर्ण-फलम् । घोषापुष्पम् । इति मेदिनी । डे । ६ ॥

**क्ष्वेडः**, पुं, (क्ष्विड + भावादौ धञ् । क्ष्वेडते इति अच् वा ।) ध्वनिः । कर्णामयः । विषम् । इति
मेदिनी । डे । ५ ॥ (यथा, आनन्दलहर्य्याम् । २९ ।
"करालं यत् क्ष्वेडं कवलितवतः कालकलना
न शम्भोस्तन्मूलं जननि तव ताडाङ्कमहिमा ॥")
पीतघोषावृक्षः । इति रत्नमाला ॥ * ॥ क्ष्वेड-
रोगस्य निदानादि कर्णरोगशब्दे द्रष्टव्यम् ॥

**क्ष्वेडः**, त्रि, (क्ष्विड + कर्म्मणि घञ् ।) दुरासदः । कुटिलः । इति मेदिनी । डे । ६ ॥

**क्ष्वेडनं**, क्ली, (क्ष्विड + भावे ल्युट् ।) मोचनम् । त्यागः । यथा, महाभारते । ३ । १७८ । २६ ।
"त्रासनं सर्व्वभूतानां कालान्तकयमोपमम् ।
निश्वासक्ष्वे डनादेव भर्त् सयन्तमिव स्थितम् ॥"

**क्ष्वेडा**, स्त्री, (क्ष्विड + घञ् + टाप् च ।) वंश-शलाका । सिंहनादः । इति मेदिनी । डे । ५ ॥
(स तु लोकस्य शब्दविशेषः । यथा, वक्रोक्ति-
संरम्भेण प्रणयकोपेन
पृषत्जलबिन्दुस्तद्वदपरु-
षेण विषाणाग्रेण लुठति संघट्टयति ।" इति
तट्टीकायां श्रीधरस्वामी ॥

**क्ष्वेली**, स्त्री, (क्ष्वेल + गौरादित्वात् ङीष् ।) क्रीडा । यथा, श्रीभागवते । १० । २९ । ४६ ।
"बाहुप्रसारपरिरम्भकरालकोरु-
नीविस्तनालभननर्म्मनखाग्रपातैः ।
क्ष्वेल्यावलोकहसितैर्व्रजसुन्दरीणा-
मुत्तम्भयन् रतिपतिं रमयाञ्चकार ॥"
"बाहुप्रसारश्च परिरम्भश्च करालकादीनामा-
लभनं स्पर्शश्च नर्म्म परिहासश्च नखाग्रपातश्च
तैः । क्ष्वेल्या क्रीडया च अवलोकैश्च हसितैश्च
कामं तासां उद्दीपयन् ता रमयामास ।" इति
तट्टीकायां श्रीधरस्वामी ॥ * ॥ अत्र क्ष्वेल्यमिति
प्रमादात् केनचिल्लिखितम् ॥

ख

**ख**, खकारः । स तु व्यञ्जनद्बितीयवर्णः । अस्यो-
च्चारणस्थानं कण्ठः । (यथा, सिद्धान्तकौमु-
द्याम् । "अ-कु-ह-विसर्ज्जनीयानां कण्ठः ।"
इति । शिक्षाग्रन्थे तु अस्य जिह्वामूलीयत्वमुक्तम् ।
यथा, -- "जिह्वामूले तु कुः प्रोक्तः ।" इति ।
परं जिह्वामूलीयस्यापि कण्ठमूलोच्चारणपर-
त्वात् न दोषाय एव ॥) यथा, कामधेनुतन्त्रे ।
"खकारं परमाश्चर्य्यं शङ्खकुन्दसमप्रभम् ।
कोणत्रययुतं शून्यं बिन्दुत्रयसमन्वितम् ॥
गुणत्रययुतं देवि ! पञ्चदेवमयं सदा ।
त्रिशक्तिसंयुतं वर्णं खकारं प्रणमाम्यहम् ॥"
तस्योत्पत्तिर्य्यथा, प्रपञ्चसारे ।
"स सर्गः श्लेषितः कण्ठे वायुना कादिमीरयेत् ।
वर्गस्पर्शनमात्रेण कं स्वरस्पर्शनात्तु खम् ॥"
(वङ्गाक्षरैः) तस्य लेखनप्रकारादिर्यथा, --
"शिवरूपा वामरेखा दक्षरेखा प्रजापतिः ।
अधोरेखा विष्णुरूपा साक्षाद्ब्रह्मस्वरूपिणी ॥
वामाद्वामगता रेखा वह्निरूपा च सा स्मृता ।
मात्रा कुण्डलिनी साक्षात् खकारः पञ्चदैवतः ॥
ध्यानमस्याः प्रवक्ष्यामि शृणुष्व कमलानने ! ।
बन्धूकपुष्पसङ्काशां रत्नालङ्कारभूषिताम् ॥
वराभयकरीं नित्यामीषद्धास्यमुखीं पराम् ।
त्रिलाभे ॥") अभ्रकम् । इति राजनिर्घण्टः ॥
(शब्दतन्मात्रम् । यथा, मण्डूकोपनिषदि ।
"एतस्माज्जायते प्राणो मनः सर्व्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथ्वी सर्व्वस्य धारिणी ॥"
चिदानन्दमयब्रह्माकाशम् । यथा, छान्दोग्योप-
निषदि "कं ब्रह्म खं ब्रह्म यदेव कं तदेव खं
गङ्काकारो वै पुरुषो घकारो घोषयंस्तथा ॥"
छिद्रम् । यथा भागवते । ७ । १२ । २५ ।
"खे खानि वायौ निःश्वासांस्तेजस्युष्माणमात्म-
वान् ॥")

**खः**, पुं, (खर्व्वयति स्वरश्मिभिरिति । खर्व्व + अन्त-
र्भूतणिच् + डः ।) सूर्य्यः । इति हेमचन्द्रः ॥

**खकुन्तलः**, पुं, (खं आकाशं कुन्तलं कुन्तल-
स्थानीयं यस्य ।) शिवः । इति त्रिकाण्डशेषः ॥
(विष्णुः । "आकाशं वै विष्णुर्व्योमकेशः शिवो
महर्षिः ।" इति श्रुतिः ॥)

**खक्ख**, हासे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
अकं-सेट् ।) कोपधः । खादिः । खक्खति ।
इति दुर्गादासः ॥

**खक्खटः**, पुं, (खक्ख् + अटन् ।) कक्खटः ।
कठिनः । इत्यमरटीकायां रायमुकुटः ॥

**खखोल्कः**, पुं, (खे आकाशे सूर्य्यरूपेण खेषु
इन्द्रियेषु आत्मरूपेण उल्का इव । अन्तर्व्वहिः-
प्रकाशकत्वात् तथात्वम् ।) सूर्य्यः । यथा, --

**खगपतिः**, पुं, (खगान् पातीति । खग + पा +
"आतोऽनुपसर्गे कः ।" ३ । २ । ३ । इति कः ।)
गरुडः । इति शब्दरत्नावली ॥

**खगवक्त्रः**, पुं, (खगस्य वक्त्रमिव वक्त्रं अग्रभागः
आकृतिर्वा यस्य ।) लकुचवृक्षः । इति शब्द-
चन्द्रिका ॥

**खगवती**, स्त्री, (पृथिव्याः स्वकक्षायामाकाशगति-
मत्त्वात् खगतुल्यगतित्वेन सादृश्यमस्त्यस्या इति
आर्य्यभट्टः । सूर्य्यसिद्धान्तमते तु खगसादृश्यं
आकाशस्थितित्वेनास्त्यस्याः । मतुप् । मस्य
वः ।) पृथ्वी । इति जटाधरः ॥

**खगशत्रुः**, पुं, (खगानां शत्रुरिव ।) पृश्निपर्णी
चाकुलिया इति भाषा ॥ इति शब्दचन्द्रिका ॥

**खगान्तकः**, पुं, (खगानां अन्तकः यम इव । यद्वा,
अन्तयति अन्तं करोति इति । अन्तर्णिच्
ततो ण्वुल् ।) श्येनपक्षी । इति राजनिर्घण्टः ॥

**खगासनः**, पुं, (खगस्य सूर्य्यस्य आसनमिव उदय-
स्थानं यत्र । आसनत्वेन कल्पितत्वात्तथात्वम् ।)
उदयपर्व्वतः । इति शब्दमाला ॥ (खगो गरुड
आसनं यस्येति विग्रहे ।) विष्णुः । (एतद्विवरणं
यथा, महाभारते । १ । सौपर्णे । ३३ । १२--१८ ।
"तमुवाचाव्ययो देवो वरदोऽस्मीति खेचरम् ।
स वव्रे तव तिष्ठेयमुपरीत्यन्तरीक्षगः ॥
उवाच चैनं भूयोऽपि नारायणमिदं वचः ।

एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत् ॥”
इति वर्णोद्धारतन्त्रम् ॥ * ॥
तस्य नामानि यथा, नानातन्त्रेषु, --
“खः प्रचण्डः कामरूपी ऋद्धिर्वह्निः सरस्वती ।
आकाशमिन्द्रियं दुर्गा चण्डीशस्तापिनी गुरुः ॥
शिखण्डी दन्तजातीशः कफोणिर्गरुतो यदि ।
शून्यं कपाली कल्याणी सूर्पकर्णीऽजरामरः ।
शुभ्राग्नेया चण्डलिङ्गो जना व्यङ्गारखड्गकौ ॥”

**खं**, क्ली, (खर्व्वति मनोऽस्मिन् खन्यते क्षुभ्यते मनोऽनेन वा । खर्व्व गतौ, खन दारणे वा अन्येभ्योपीति डः ।) इन्द्रियम् । (यथा, मनौ । २ । ६० ।
“त्रिराचामेदपः पूर्ब्बं द्विः प्रमृज्यात् ततो मुखम् ।
खानि चैव स्पृशेदद्भिरात्मानं शिर एव च ॥”)
पुरम् । क्षेत्रम् । शून्यम् । (यथा, महाभारते । १ । ८८ । ७ ।
“पतस्युदीर्णाम्बुधरान्धकारात् खात् खेचराणां प्रवरो यथार्कः ॥”)
बिन्दुः । (यथा, लीलावत्यां क्षेत्रव्यवहारे ।
“वेदाग्निवाणखाश्वैश्च खखाभ्राभ्ररसैः क्रमात् ॥”)
आकाशम् । (यथा, मनौ । १२ । १२० ।
“खं सन्निवेशयेत् खेषु चेष्टनस्पर्शनेऽनिलम् ॥”
“खं वाह्याकाशं खेषु उदराद्यवछिन्नशरीरा-काशेषु ।” इति कुल्लूकभट्टः ॥) संवेदनम् । देव-लोकः । शर्म्म । इति मेदिनी । खे । १ ॥ लग्नात्

हरिरुवाच ।
“पुनः सूर्य्यार्च्चनं वक्ष्ये यदुक्तं भृगवे पुरा ।
ओम् खखोल्काय ओम् नमः ॥”
इति गारुडे १६ अध्यायः ॥
खषोल्कायेति च पाठः ॥ (अयं हि काशीस्थिता-दित्यः । इति काशीखण्डम् ॥ यदुक्तं तत्रैव ५० अध्याये ।
“खखोल्को नाम भगवानादित्यः परिकीर्त्तितः ॥”
एतद्विवरणं तत्रैवाध्याये विशेषतो द्रष्टव्यम् ॥)

**खगः**, पुं, (खे आकाशे गच्छति । ख + गम् + डः ।) सूर्य्यः । ग्रहः । (यथा, ज्योतिषे ।
“आपोक्लिमे यदि खगाः स किलेन्दुवारः ॥”)
देवः । वाणः । पक्षी । इति मेदिनी । गे । ६ ॥
(यथा, महाभारते । १ । ३३ । १९ ।
“तं व्रजन्तं खगश्रेष्ठं वज्रेणेन्द्रोऽभ्यताडयत् ॥”)
वायुः । इति शब्दचन्द्रिका ॥ (यथा, महाभारते वनपर्व्वणि ।
“तमांसीव यथा सूर्य्यो वृक्षानग्निर्घनान् खगः ॥”)
शलभः । इत्यमरटीकायां भरतः ॥ (यथा, मनुः । १२ । ६३ ।
“मांसं गृध्रो वपां मद्गुस्तैलं तैलपकः खगः ॥”
महादेवः । यथा, महाभारते । १३ । १७ । ६६ ।
“आकाशनिर्व्विरूपश्च निपाती ह्यवशः खगः ॥”)

**खगखानं**, क्ली, (खन्यते इति । खन् + कर्म्मणि घञ् । खगानां पक्षिणां खानं वासार्थ-कोटरम् ।) वृक्षकोटरम् । इति शब्द-चन्द्रिका ॥

अजरश्चामरश्च स्याममृतेन विनाप्यहम् ॥
एवमस्त्विति तं विष्णुरुवाच विनतासुतम् ।
प्रतिगृह्य वरौ तौ च गरुडो विष्णुमब्रवीत् ॥
भवतेऽपि वरं दद्यां वृणोतु भगवानपि ।
तं वव्रे वाहनं विष्णुर्गरुत्मन्तं महाबलम् ।
ध्वजञ्च चक्रे भगवानुपरि स्थास्यतीति तम् ॥
एवमस्त्विति तं देवमुक्त्वा नारायणं खगः ।
वव्राज तरसा वेगाद् वायुं स्पर्द्धन् महाजवः ॥”)

**खगेन्द्रः**, पुं, (खगानां पक्षिणां इन्द्रः ।) गरुडः । इति राजनिर्घण्टः ॥ (यथा, महाभारते । १ । सौपर्णे । ३१ । ३५ ।
“पतत्रीणाञ्च गरुड इन्द्रत्वेनाभ्यषिच्यत ॥”
अस्य खगेन्द्रत्वकथा यथा तत्रैव । १६- -२० ।
“तच्छ्रुत्वा देवराजस्य कश्यपोऽथ प्रजापतिः ।
वालिखिल्यानुपागम्य कर्म्मसिद्धिमपृच्छत ॥
एवमस्त्विति तच्चापि प्रत्यूचुः सत्यवादिनः ।
तान् कश्यप उवाचेदं सान्त्वपूर्ब्बं प्रजापतिः ॥
अयमिन्द्रस्त्रिभुवने नियोगाद् ब्रह्मणः कृतः ।
इन्द्रार्थे च भवन्तोऽपि यत्नवन्तस्तपोधनाः ॥
न मिथ्या ब्रह्मणो वाक्यं कर्त्तुमर्हथ सत्तमाः ! ॥
भवतां हि न मिथ्याऽयं सङ्कल्पो वै चिकीर्षितः ॥
भवत्वेष पतत्रीणामिन्द्रोऽतिबलसत्त्ववान् ।
प्रसादः क्रियतामस्य देवराजस्य याचतः ॥”)

**खगेन्द्रध्वजः**, पुं, (खगेन्द्रो गरुडो ध्वजः केतुर्वाहनं च यस्य ।) विष्णुः । (यथा, भागवते । १ । १८ । १६ ।
“ज्ञानेन वैयासकिशब्दितेन

| दशमराशिः । इति दीपिका ॥ (यथा, जातक-<br>प्रकरणे । "तनुनिधनखभेशाः केन्द्रकोणे | | भेजे खगेन्द्रध्वजपादमूलम् ॥") |
|---|---|---|

**खगेश्वरः**, पुं, (खगानां ईश्वरः ।) गरुडः । इत्यमरः । १ । १ । ३१ ॥

**खगोलः**, पुं, आकाशमण्डलम् । तस्य विवरणं यथा । एतदब्रह्माण्डं सच्छिद्रं कटाहद्वयस्य गोलाकारसम्पुटतुल्यम् । यत्र भूर्भुवःस्वर्महर्जनतपःसत्य-

संज्ञकानि सप्तभुवनानि सन्ति । ब्रह्माण्डमध्ये यः परिधिः स आकाशकक्ष्या । तन्मध्ये परावह-परिवह-सुवह-सम्बहोद्वहाख्यानां पञ्चानां वायूनां

स्थानानि अधोऽधःक्रमेण सन्ति । तदधस्तातधोऽधःस्थितपूर्ब्बाभिमुखशनिबृहस्पतिराहुकेतुमङ्गलसूर्य्यशुक्रबुधचन्द्रग्रहयुक्तं दक्षिणोत्तरस्थितध्रुवाख्य-

ताराद्वयेन बद्धं नक्षत्रचक्रं सदापश्चिमगतिना प्रवहवायुना भ्रमति । ततः अधोऽधःक्रमेण सिद्धविद्याधरमेघविद्युदादियुक्तः सदोत्तरगतिरावहवायुर्भ्रमति

एतद्ब्रह्माण्डस्य मध्ये समन्तात् ईश्वरस्य धारणात्मिकां शक्तिं बिभ्राणो भूगोलः शून्ये तिष्ठति । पृथ्व्यन्तर्गता नागासुरसमाश्रया दिव्यौषधिरसोपेता रम्याः

पाताल-रसातल-महातल-तलातल-सुतल-वितलातल-संज्ञका ऊद्ध्वोद्ध्वक्रमेण सप्तपातालभूमयश्च सन्ति । सुमेरुपर्व्वतोपरि शून्ये एका ध्रुवतारा भ्रमति ।

एवं वडवानलोपरि शून्ये अन्या ध्रुवतारा भ्रमति ।

अथ कक्ष्यायोजनानि व्यासयोजनानि पृथिव्युच्चयोजनानि

आकाशस्य ब्रह्माण्डस्य वा १८७१२०८०८६४०००००० ५९५३८४३९११२७२७२७ २९७६९२१९५५६३६३६३

नक्षत्रस्य २५९८९०००० ८२६९२२७३ ४१३४५३३६

शनेः १२७६६८२५५ ४०६२०२१७ २१३१००५८

राहुकेत्वोः ८०५७२८६३२ २५६३६८२०१ १२८१८८३३००

गुरोः ५१३७५७६४ १६३४६८३४ ८१७२६१७

चन्द्रोच्चस्य ३८३२८४८४ १२७४२८२८ ६३७०६१४

मङ्गलस्य ८१४६९०९ २५९२१९८ १२९५२९९

सूर्य्यस्य ४३३१५०० १३७८२०४ ६८८३०२

शुक्रशीघ्रस्य २६६४६३७ ८४७८३९ ४२३११९

बुधशीघ्रस्य १०४३२०९ ३३१९३० १६५१६५

बुधशुक्रयोः ४३६१५० १३८७७५ ६८५८८

चन्द्रस्य ३२४००० १०३०९१ ५७४५

आवहवायोः ५१०४ १६२४ १२

भूगोलस्य ४९६७ १५८१ ०

अथ ग्रहाणां मध्यभुक्तयः ।

रवेः चन्द्रस्य मङ्गलस्य

दिने-- ५९ । ८ । १० । ० ७९० । ३४ । ५२ ३१ । २६ । २८

कलाद्याः ५९ । ८ । १० । ० ७९० । ३४ । ५२ ३१ । २६ । २८

वर्षे-- १२ । ० । ० । ० ४ । १२ । ४६ । ४० । ४८ ६ । ११ । २४ । ९ । ३६

राश्याद्याः १२ । ० । ० । ० ४ । १२ । ४६ । ४० । ४८ ६ । ११ । २४ । ९ । ३६

युगे-- ४३२०००० ५७७५३३३६ २२९५८३२

भगणाद्याः ४३२०००० ५७७५३३३६ २२९५८३२

कल्पे-- ४३२०००००००० ५७७५३३३६००० २२९५८३२०००

भगणाद्याः ४३२०००००००० ५७७५३३३६००० २२९५८३२०००

बधशीघ्रस्य बृहस्पतेः शुक्रशीघ्रस्य

दिने-- २४५ । ३२ । २१ ४ । २९ । ९ ९६ । ७ । ४३

कलाद्याः २४५ । ३२ । २१ ४ । २९ । ९ ९६ । ७ । ४३

वर्षे-- १ । २४ । ४५ । २२ । ४८ १ । ० । २१ । ३ । ३६ ७ । १५ । ११ । ४९ । १२

राश्याद्याः १ । २४ । ४५ । २२ । ४८ १ । ० । २१ । ३ । ३६ ७ । १५ । ११ । ४९ । १२

युगे-- ७१९३७०६० ३६४२२० ३०१२३७६

भगणाद्याः ७१९३७०६० ३६४२२० ३०१२३७६

कल्पे-- ७१९३७०६०००० ३६४२२०००० ३०१२३७६०००

भगणाद्याः ७१९३७०६०००० ३६४२२०००० ३०१२३७६०००

**अथ ग्रहाणां मध्यभुक्तयः ।**

शनेः राहोः चन्द्रोच्चस्य

दिने-- २ । ० । २३ ३ । १० । ४४ ६ । ४१ । ०

कलाद्याः २ । ० । २३ ३ । १० । ४४ ६ । ४१ । ०

वर्षे-- ० । १२ । १२ । ५४ ० । १९ । २१ । १२ । ३६ १ । १० । ४० । ५९ । ४२

राश्याद्याः ० । १२ । १२ । ५४ ० । १९ । २१ । १२ । ३६ १ । १० । ४० । ५९ । ४२

युगे-- २४६५६८ २३१२३८ ४८८१०३

भगणाद्याः २४६५६८ २३१२३८ ४८८१०३

कल्पे-- २४६५६८००० २३१२३८००० ४८८१०३०००

भगणाद्याः २४६५६८००० २३१२३८००० ४८८१०३०००

**अथ राशिषु नक्षत्राणां स्थितिः ।**

| | अश्विनी | भरणी | कृत्तिका | रोहिणी | मृगशिरा | आर्द्रा | पुनर्व्वसुः | पुष्या | अश्लेषा | |
|---|---|---|---|---|---|---|---|---|---|---|
| राशिः | ० | ० | १ | १ | २ | २ | २ | ३ | ३ | |
| अंशः | १ | २० | १ | २९ | ३ | १ | २० | १६ | २९ | |
| कला | ० | ० | ३ | ३० | ० | १० | ४० | २० | २० | |
| अपक्रम- | १० | १२ | ५ | ५ | १० | ९ | ६ | ० | ७ | |
| भागाः | उत्तरः | उत्तरः | उत्तरः | दक्षिणः | दक्षिणः | दक्षिणः | उत्तरः | उत्तरः | दक्षिणः | |
| | **मघा** | **पूर्ब्बफल्गुनी** | **उत्तरफल्गुनी** | **हस्ता** | **चित्रा** | **स्वाती** | **विशाखा** | **अनुराधा** | **ज्येष्ठा** | |
| राशिः | ४ | ४ | ५ | ५ | ५ | ६ | ६ | ७ | ७ | |
| अंशः | २ | २२ | ५ | १० | २४ | २६ | २६ | २४ | २९ | |
| कला | २० | २० | ४० | ० | १० | ४ | ४० | ० | ० | |
| अपक्रम- | | १२ | १३ | ११ | २ | २७ | ३४ | ३ | ४ | |
| भागाः | उ | उ | उ | द | द | उ | द | द | द | |
| | **मूला** | **पूर्ब्बाषाढा** | **उत्तराषाढा** | **अभिजित्** | **श्रवणा** | **धनिष्ठा** | **शतभिषा** | **पूर्ब्बभाद्रपद्** | **उत्तरभाद्रपद्** | **रेवती** |
| राशिः | ८ | ८ | ८ | ८ | ९ | ९ | १० | १० | ११ | ११ |
| अंशः | १ | १४ | २० | २४ | १० | २० | २० | २६ | १ | २६ |
| कला | १० | ० | ० | ४० | ० | ० | ० | ० | ० | ५० |
| अपक्रम- | ९ | ५ | ५ | ३० | ३० | ३३ | ३० | २४ | २६ | ० |
| भागाः | द | ३०द | द | उ | उ | उ | द | उ | उ | उ |

## अथ राशिषु नक्षत्राणां स्थितिः ।

| | | **मृगव्याधः ।** | | | |
|---|---|---|---|---|---|
| | **अगस्त्यः** | **कालपुरुषः** | **हुतभुक्** | **ब्रह्महृदयं** | **सप्तर्षितारा** |
| राशिः | ३ | २ | १ | १ | १ |
| भागः | ० | २० | २२ | २२ | १ |
| कला | ० | ० | ० | ० | ३ |
| अपक्रम- | ६० | ६४० | ३८ | ३३० | ५ |
| भागाः | द | द | द | द | उ |
| | पुनर्व्वसौ | आर्द्रायाम् | रोहिण्याम् | रोहिण्याम् | कृत्तिकायाम् |

**अथ खगोलरचना।**

स्ववाञ्छितं काष्ठनिर्म्मितं भूगोलं तन्मध्यगं

सुमेरोरुभयत्र निर्गतं दण्डञ्च कृत्वा षष्ट्युत्तर-
शतत्रय-परिमितं समविभक्तं आधारकक्ष्याद्वयं
विषवकक्ष्यैका च कार्य्या ॥
अथ मेषादिराशिस्थितिः।

स्वाहोरात्रार्द्धकर्णैः तत्प्रमाणानुमानेन च

क्रान्तिस्थानात् दक्षिणोत्तरविभक्तैर्विक्षेपभागै-
र्निजनिजापक्रमैश्च मेषादीनां राशीनां तिस्रः
कक्ष्याः कुर्य्यात्। ता एव कक्ष्याः कर्कादीनां
वैपरीत्येन कुर्य्यात्। तादृश्यस्तिस्रस्तुलादीनांतथा
विपर्य्ययात् मकरादीनाञ्च कुर्य्यात् ॥
अहोरात्रार्द्धकर्णज्ञानं यथा।

स्वक्रान्तेरुत्क्रमक्रमज्ये द्वे कुर्य्यात्। तत्र

उत्क्रमज्यया हीना त्रिज्या दक्षिणोत्तरं दिन-
व्यासदलं स्यात् ॥
विक्षेपज्ञानं यथा।

चन्द्रः स्वक्रान्त्यंशात् निजपातेन राशिचक्र-

कलाशीतिभागैः परमं दक्षिणोत्तरं विक्षिप्यते।
तस्य नवभागं द्विगुणितं बृहस्पतिः मङ्गल-
स्त्रिगुणितं अन्ये चतुर्गुणं विक्षिप्यन्ते। तत्र
क्रमः चन्द्रस्य मध्यविक्षेपकलाः २७० मङ्गलस्य ९०
बुधस्य १२० बृहस्पतेः ६० शुक्रस्य १२०
शनेः १२० रवेर्व्विक्षेपकला नास्ति ॥
अथ नक्षत्रादिकक्ष्यास्थानम्।

आधारकक्ष्याद्वयोपरियाम्योदग्गोलसंस्थितानां

नक्षत्रादीनां कक्ष्याः कुर्य्यात्। सर्व्वासां कक्ष्याणां
मध्यस्थाने विषुवत्कक्ष्या स्थिता। तदाधार-
कक्ष्ययोर्युतेरूर्द्ध्वं द्वे अयने विषुवद्वयञ्च कुर्य्यात्।
वियुवस्थानात् भगणसञ्चारपर्य्यन्तं स्फुटभागै-
र्मङ्गलादीनां क्षेत्राण्येव कुर्य्यात् अर्थात् मेषादि-
राशीन् तिर्य्यक्ज्याभी रचयेत्। तथा अयन-
स्थानात् अन्यायनपर्य्यन्तं तिर्य्यक् अपरा कक्ष्या-
क्रान्तिसंज्ञा कार्य्या। तया कक्ष्यया सूर्य्यः

क्षितिजे उदयन् राशिः लग्नं स्यात्
तद्वशात्
अस्तं गच्छंश्च अस्ताख्यं स्यात्।
लङ्कोदयैर्य्यथा
सिद्धं दशचतुर्थस्थानञ्च कुर्य्यात्।
मध्यक्षिति-
जयोर्म्मध्ये या ज्या सा अन्त्या
कथ्यते। विषु-
वत्क्षितिजयोरन्तरज्या चरदलज्या
। उपरि
स्वकं स्थानं मध्ये क्षितिजमण्डलं
कृत्वा वस्त्र-
वेष्टितं लोकालोकवेष्टितञ्च कृत्वा
जलपतनयोगेन
पारदस्रावयोगेन वा कालभ्रमणं
साधयेत्।
इति सूर्य्यसिद्धान्तसम्मतम् ॥

**खग्गडः**, पुं, (खे आकाशे गलतीति। गल + अच्

पृषोदरात् साधु।) तृणविशेषः।
खाग्डा
इति भाषा ॥ तत्पर्य्यायः पोटगलः
२ बृहत्-
काशः ३ काकेक्षुः ४। इति
रत्नमाला ॥

**खङ्करः**, पुं, (खन्यते कङ्कतिकया इति। खन् दारणे +

क्विप्। कीर्य्यते विकीर्य्यते इति।
कृ विक्षेपे +
अप्। ततः कर्म्मधारयः।)
चूर्णकुन्तलः। इति
हेमचन्द्रः ॥

**खच**, ग भूतिपूत्योरुत्पत्तौ। इति कविकल्पद्रुमः ॥

(क्र्यां-परं-अकं-सेट्।) भूतिः
सम्पत्तिः पूतिः
पवित्रता तयोरुत्पत्तिः प्रादुर्भावः।
भूत्युत्पत्तौ

आकाशगामिनि त्रि। यथा।
स्मृतिः।
"पवनो दिक्पतिर्भूमि-राकाशं
स्वचरामराः ॥"
रूपकभेदः। यथा।
सङ्गीतदामोदरः।
"खचरो रङ्गताले स्यात् गुरुरादौ
लघुस्तथा ॥
शान्तेऽथवा हास्यरसे भवेदेष
दशाक्षरः ॥"

**खचितं**, त्रि, (खच् + क्तः।) संयुक्तम्। तत्पर्य्यायः

करम्बितम् २ रूषितम् ३
गुरुगुण्डितम् ४। इति
त्रिकाण्डशेषः ॥ करम्बम् ५
कवरम् ६ मिश्रम् ७
संपृक्तम् ८। इति हेमचन्द्रः ॥
व्याप्तम् ९। इति
शब्दरत्नावली ॥ गुण्ठितम् १०
छुरितम् ११।
इति जटाधरः ॥

**खज**, मन्थे। इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-

सेट्।) मन्थो विलोडनम्।
खजति जलं
मत्स्यः। इति दुर्गादासः ॥

**खज**, इ पाङ्ग्युल्ये। इति कविकल्पद्रुमः ॥ (भ्वां-परं-

अकं-सेट्। इदित्।) इ, खञ्ज्यते
। पङ्गुः खोडः
भावप्रधाननिर्द्देशात् पङ्गुत्वमिति
यावत्। सो-
ऽस्यास्तीति चूडादित्वाल्लः।
पङ्गुलस्तस्य भावः
पाङ्ग्युल्यं खोटनमित्यर्थः।
खञ्जति खोडः।
भावप्रधाननिर्द्देशो यथा।
वुदसवर्णं इति का-

प्रकाशयन् सदा भ्रमति ॥ चन्द्राद्या ग्रहाः अपमण्डलमाश्रितैः स्वस्वपातांशैरपक्रमात् विक्षे-पान्तेषु अपक्रमेणाकृष्टाः सन्तो लोकैर्दृश्यन्ते ।

पूत्युत्पत्तौ चेत्यर्थः । ग, खच्चाति राजा समृद्धः स्यादित्यर्थः । शेषार्थः कातन्त्राद्यसम्मतः । इति दुर्गादासः ॥

**खच**, त् क बन्धने । इति कविकल्पद्रुमः ॥ (अदन्त-चुरां-परं-सकं-सेट् ।) खचयति । इति दुर्गादासः ॥

**खचमसः**, पुं, (खे आकाशे चम्यते भक्ष्यतेऽसौ पितृलोकस्थैः पुण्यात्मभिरित्यर्थः । चमु भक्षणे + असच् । खे चमसः यज्ञीयपात्रमिव अमृतमय-त्वात्तथात्वम् ।) चन्द्रः । इति त्रिकाण्डशेषः ॥

**खचरः**, पुं, (खे आकाशे चरतीति । चर + “चरेष्टः ।” ३ । २ । १६ । इति टः ।) मेघः । इति शब्दचन्द्रिका ॥ वायुः । राक्षसः । सूर्य्यः । एतेषां प्रमाणं यथा । महाभारते द्रोणपर्व्वणि ।
“खचरस्य सुतस्य सुतः खचरः
खचरस्य पिता न पुनः खचरः ।
खचरस्य सुतेन हतः खचरः
खचरी परिरोदिति हा खचर ! ॥”

तन्त्रसूत्रम् । अत्र असवर्णे परे उवर्णो वकारत्वं प्राप्नोतीत्येवार्थः । इति दुर्गादासः ॥

**खजः**, पुं, (खज्यते निर्म्मथ्यतेऽनेन । खज् + करणे अप् । यद्वा, खजति मथ्नातीति । खज् + अच् ।) दर्व्विः । इत्यमरटीकायां भरतः ॥ हाता इति भाषा ॥ (यथा, महाभारते । १२ । २१४ । २१ ।
“पयस्यन्तर्हितं सर्पिर्यद्वद् निर्म्मथ्यते खजैः ।
शुक्रं निर्म्मथ्यते तद्वद्देहसङ्कल्पजैः खजैः ॥”
“खजेनामथ्य च स्थाप्यं तन्निहन्त्युपयोजितम् ॥”
इति वाभट्टे चिकित्सास्थाने तृतीयेऽध्याये ॥

**खजकः**, पुं, (खजति मथ्नातीति । खज् + ण्वुल् ।) मन्थानदण्डः । इति हेमचन्द्रः ॥

**खजपं**, क्ली, (खज्यते मथ्यते इति । “उषिकुटि-दलिकचिखजिभ्यः कपन् ।” उणां ३ । १४२ । इति कपन् ।) घृतम् । इत्युणादिवृत्तिः ॥

**खजलं**, क्ली, (खे आकाशे निचितं यज्जलम् ।)

नीहारः । इति त्रिकाण्डशेषः ॥ आकाशवारि ।
यथाह राजवल्लभः ।
"वर्षासु चरन्ति घनैः सहोरगा वियति कीटलुताश्च ।
तद्विषजुष्टमपेयं खजलमगस्त्योदयात् पूर्ब्बम् ॥"

**खजा**, स्त्री, (खज् + भावे अप् टाप् च ।) मन्थः ।
मओया इति भाषा ॥ प्रहस्तः । इति मेदिनी ॥
(खज् + करणे अप् स्त्रियां टाप् ।) दर्व्वी ।
इति हेमचन्द्रः ॥ (यथा, चिकित्सितस्थाने षड्-विंशेऽध्याये सुश्रुतेनोक्तम् ।
"गुप्ताफलं गोक्षुरकाच्च बीजं तथोच्चटां गोपयसा विपाच्य ।
खजाहतं शर्करया च युक्तं पीत्वा नरो हृष्यति सर्व्वरात्रम् ॥"
पाकसाधनद्रव्यविशेषः ।
यथा, महाभारते । ४ । ७ । १ ।
"खजाञ्च दर्व्वीञ्च करेण धारय-न्नसिञ्च कालाङ्गमकोषमव्रणम् ।")
मारणम् । इति शब्दरत्नावली ॥

**खजाकः**, पुं, (खज् मन्थे + "खजेराकः ।" उणा
४ । १३ । इति आकः ।)
पक्षी । इत्युणादिवृत्तिः ॥

**खजाका**, स्त्री, पुं, (खजति मथ्नाति पाकम् ।
त्यर्थः । खेल् + अच् ।) खञ्जनपक्षी । इति त्रिकाण्डशेषः ॥

**खञ्जनं**, क्ली, (खजि विकलगतौ + भावे ल्युट् ।)
गमनम् । इति मेदिनी । ने । ५५ ॥

**खञ्जनः**, पुं, (खजि + कर्त्तरि ल्युः ।) स्वनामख्यात-
पक्षी । तत्पर्य्यायः । खञ्जरीटः २ । इत्यमरः । २ । ५ । १५ ॥ कणाटीनः ३ काकच्छर्द्दिः ४ खञ्जखेलः ५
तातनः ६ मुनिपुत्त्रकः ७ भद्रनामा ८ रत्न-निधिः ९ । इति त्रिकाण्डशेषः ॥ खञ्जखेटः १० गूढनीडः ११ तण्डकः १२ चरः १३ । इति शब्दमाला ॥ काकच्छदः १४ नीलकण्ठः १५ कणाटीरः १६ कणाटारकः १७ । इति शब्द-रत्नावली ॥ (अस्य दर्शनेन यत् शुभाशुभं फलं भवति तदुक्तं बृहत्संहितायां ४५ अध्याये ।
तद्यथा, --
"खञ्जनको नामायं यो विहगस्तस्य दर्शने प्रथमे ।
प्रोक्तानि यानि मुनिभिः फलानि तानि प्रवक्ष्यामि ॥"
तत्र चत्वारः खञ्जना भवन्ति । तेषां नामान्याह ।
"स्थूलोऽभ्युन्नतकण्ठः कृष्णगलो भद्रकारको भद्रः ।
आकण्ठमुखात् कृष्णः सम्पूर्णः पूरयत्याशाम् ॥
कृष्णो गलेऽस्य विन्दुः सितकरटान्तः स रिक्त-कृद्रिक्तः ।
पीतो गोपीत इति क्लेशकरः खञ्जनो दृष्टः ॥"
अथ कस्मिन् काले दृष्टः कीदृक्फलं करोति इत्याह ।
"अथ मधुरसुरभिफलकुसुमतरुषु सलिलाशयेषु पुण्येषु ।
करितुरगभुजगमूर्द्धिन प्रासादोद्यानहर्म्म्येषु ॥
गोगोष्ठसत्समागमयज्ञोत्सवपार्थिवद्विजसमीपे ।
हस्तितुरङ्गमशालाच्छत्रध्वजचामराद्येषु॥
हेमसमीपसिताम्बरकमलोत्पलपूजितोपलिप्तेषु।
दधिपात्रधान्यकूटेषु च श्रियं खञ्जनः कुरुते ॥
पङ्के स्वाद्वन्नाप्तिर्गोरससम्पच्चगोमयोपगते ।
शाद्वलगे वस्त्राप्तिः शकटस्थे देशविभ्रंशः ॥
गृहपटलेऽर्थभ्रंशो वध्रे बन्धोऽशुचौ भवति रोगः ।
नृपतिरपि शुभं शुभप्रदेशे खगमवलोक्य महीतले विदध्यात् ।
सुरभिकुसुमधूपयुक्तमर्घं शुभमभिनन्दितमेवमेति वृद्धिम् ॥
अशुभमपि विलोक्य खञ्जनं द्विजगुरुसाधुसुरार्च्चने रतः ।
न नृपतिरशुभं समाप्नुया-न्न यदि दिनानि च सप्त मांसभुक् ॥"
ततः कालफलप्रदर्शनार्थमाह ।
"आ वर्षात् प्रथमे दर्शने फलं प्रतिदिनं तु दिनशेषे ।
दिक्स्थानमूर्त्तिलग्नर्क्षशान्तदीप्तादिभिश्चोह्यम् ॥"
शाकुने दिग्विशेषेऽस्य शब्दफलं यथा, --
"वित्तं ब्रह्मणि कार्य्यसिद्धिरतुला शक्रे हुताशे भयं
याम्यामग्निभयं सुरद्विषि कलिर्लाभः समुद्रालये ।
वायव्यां वरवस्त्रगन्धसलिलं दित्याङ्गना चोत्तरे-
ऐशान्यां मरणं ध्रुवं निगदितंदिग्लक्षणं खञ्जने ॥")

**खञ्जनरतं**, क्ली, (खञ्जनस्य रतमिव गोपनीयं
अव्यक्तं रतं रतिः ।) यमिनां गोप्यं रतम् ।
यतिनां गोपनीयमैथुनम् । इति हारावली ॥

**खञ्जना**, स्त्री, (खञ्जन इवाचरति । खञ्जन + ङ्यच्
+ क्विप् टाप् च । यद्वा, खजि + युच् + टाप् ।)
सर्षपी । क्षुद्रखञ्जनजातिः । इति मेदिनी ॥

**खञ्जनाकृतिः**, स्त्री, (खञ्जनस्याकृतिरिवाकृतिरस्य ।)
खञ्जनविशेषः । इति शब्दचन्द्रिका ॥ तत्-पर्य्यायः । हापुत्त्रिका २ खञ्जनिका ३ सर्षपी ४ ।
इति शब्दरत्नावली ॥

**खञ्जनिका**, स्त्री, (खञ्जनस्तदाकारोऽस्त्यस्याःइति ।
खञ्जन + ठन् टाप् च ।) खञ्जनाकारपक्षि-विशेषः । तत्पर्य्यायः । हापुत्त्रिका २ तुलिका ३ स्कोटिका ४ सर्षपी ५ । इति त्रिकाण्डशेषः ॥
खञ्जनाकृतिः ६ । इति शब्दचन्द्रिका ॥

**खञ्जरीटः**, पुं, (खञ्ज इव ऋच्छतीति । ऋ गतौ +
बाहुलकात् कीटन् ।) खञ्जनपक्षी । इत्यमरः ।

खज् मन्थे + "खजेराकः ।" उणां ४ । १३ । इति आकः ततष्टाप् ।) दर्व्वी । इत्यमरः । २ । ९ । ३४ । हाता चमस इत्यादि भाषा ॥ ("खजाकः पक्षिणि ख्यातः खजाका दर्व्विरुच्यते ॥" इत्युणादिवृत्तिटीका ।)

**खजित्**, पुं, (खेन आकाशध्यानेन शून्यभावनयेति भावः जयति संसारभावं यः । जि + क्विप् । शून्यवादिनां बौद्धानां शून्यं सर्व्वमेव इत्याकारभावनया संसारभावजयनात् तथात्वम् ।) बुद्धविशेषः । इति हेमचन्द्रः । २ । १४९ ॥

**खज्योतिः**, [स्] पुं, (खे आकाशे ज्योतिर्यस्य ।) खद्योतः । इति राजनिर्घण्टः ॥

**खञ्जः**, त्रि, (खजि गतिवैकल्ये + अच् ।) विकलगतिः । खौँडा इति भाषा ॥ यथा, मनुः । ३ । २४२ । "खञ्जो वा यदि वा काणो दातुः प्रेष्योऽपि वा भवेत ॥") तत्पर्य्यायः । खोडः २ । इत्यमरः । २ । ६ । ४९ । खोलः ३ । इति शब्दरत्नावली ॥ खोरः ४ खञ्जकः ५ । इति हेमचन्द्रः ॥ खोटः ६ । इति खोडधात्वर्थदर्शनात् ॥ तस्य लक्षणं यथाह माधवकरः ।
"वायुः कट्याश्रितः सक्थ्नः कण्डरामाक्षिपेद्यदा ।

पृष्ठे त्वजाविकानां प्रियसङ्गममावहत्याशु ॥
महिषोष्ट्रगर्द्दभास्थिश्मशानगृहकोणशर्करा-
द्रिस्थः ।
प्राकारभस्मकेशेषु चाशुभो मरणरुग्भयदः ॥
पक्षौ धुन्वन्नशुभः शुभः पिबन्वारि निम्नगासंस्थः
।
सूर्य्योदयेऽथ शस्तो नेष्टफलः खञ्जनोऽस्तमये ॥
नीराजने निवृत्ते यया दिशा खञ्जनं नृपो यान्तम् ।
पश्येत्तया गतस्य क्षिप्रमरातिर्वशमुपैति ॥
तस्मिन् निधिर्भवति मैथुनमेति यस्मिन्
यस्मिंस्तु छर्द्दयति तत्रतलेऽस्ति काचः ।
अङ्गारमप्युपदिशन्ति पुरीषणेऽस्य
तत्कौतुकापनयनाय खनेद्धरित्रीम् ॥
मृतविकलविभिन्नरोगितः
स्वतनुसमानफलप्रदः खगः ।
धनकृदभिनिलीयमानको
वियति च बन्धुसमागमप्रदः ॥

२ । ५ । १५ ॥ (यथा, अमरुशतके । ९९ ।
"तन्वी शरत्त्रिपथगापुलिने कपोलौ
लोले दृशौ रुचिरचञ्चलखञ्जरीटौ ॥")

**खट**, काङ्क्षि । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) खटति । काङ्क्षि आकाङ्क्षायाम् । इति दुर्गादासः ॥

**खटः** पुं, (खट् + अच् ।) अन्धकूपः । कफः । प्रहारान्तरम् । टङ्कः । इति मेदिनी ॥ तृणम् । इति हेमचन्द्रः ॥ लाङ्गलम् । कत्तृणम् । इत्यजयपालः ॥

**खटकः**, पुं, (खट् + बाहुलकाद् बुन् ।) घटकः । तत्पर्य्यायः । नागवीटः २ टाङ्करः ३ त्र्यक्षरः ४ । इति त्रिकाण्डशेषः ॥ कुब्जितपाणिः । इति शब्दमाला ॥

**खटिकः**, पुं, (खटः अस्त्यस्य इति ठन् ।) कुब्जितपाणिः । इति हेमचन्द्रः ॥

**खटिका**, स्त्री, (खट् + अच् । ततः संज्ञायां कन् टाप् अत इत्वञ्च ।) लेखनद्रव्यम् । खडी इति भाषा । (यथा, कलाविलासे । २ । २३ ।

खञ्जस्तदा भवेज्जन्तुः

पङ्गुसक्थ्नोर्द्वयोर्वधात् ॥”

**खञ्जकः**, त्रि, (खञ्जतीति । खजि + कर्त्तरि ण्वुल् ।

स्वार्थे कन् वा ।) खञ्जः ।

इति हेमचन्द्रः । ३ । ११९ ॥

**खञ्जकारिः**, पुं, (खञ्जकस्य अरिः नाशकः ।) सुस्ना ।

इति राजनिर्घण्टः ॥ खैँसारि

इति भाषा ॥

**खञ्जखेटः**, पुं, (खञ्ज इव खेटति गच्छति नृत्यन्निव

भूमौ चरतीत्यर्थः । खिट् +

अच् ।) खञ्जन-

पक्षी । इति शब्दमाला ॥

**खञ्जखेलः**, पुं, (खञ्ज इव खेलति तद्वच्चलनादि-

"विविधनवांशुकमृगमदचन्दनकर्पूमरिच पूगफलैः ।
खटिकाहस्तः स सदा गणयति कोटीर्मुहूर्त्तेन ॥")
कर्णरन्ध्रम् । वीरणम् । इति विश्वः ॥

**खटिनी** स्त्री, (खट् + बाहुलकात् इनिः । ङीप् च ।)

खटी । इति राजनिर्घण्टः ॥ (यथा, हितापदेशे ।
"न पतति खटिनी ससम्भ्रमा यस्य महद्गण-नायाम् ॥")

**खटी**, स्त्री, (खट् + अच् । गौरादित्वात् ङीष् ।)

लेखनद्रव्यम् । खडी इति भाषा । तत्पर्य्यायः । खटिनी २ खटिका ३ धवलमृत्तिका ४ सितधातुः ५
पाण्डुमृत् ६ पाण्डुमृत्तिका ७ । अस्या गुणाः । मधुरत्वम् । तिक्तत्वम् । शीतलत्वम् । पित्तदाह-
व्रणदोपकफास्रनेत्ररोगनाशित्वञ्च । इति राज-निर्धण्टः ॥ अस्याः पर्य्यायान्तराणि कठिनीशब्दे
द्रवृव्यानि ॥ (यथास्याः पर्य्याया गुणाश्च भाव-प्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ।
"खटिका कठिनी चापि लेखनी च निगद्यते ।
खटिका दाहजिच्छीता मधुरा विषशोथजित् ॥
लेपादेतद्गुणाः प्रोक्ता भक्षिता मृत्तिका समा ।
खटी गौरखटी द्वे च गुणैस्तुल्ये प्रकीर्त्तिते ॥")

**खट्ट**, क वृतौ । इति कविकल्पद्रुम ॥ (चुरां-परं-

सकं-सेट् ।) टद्वयान्तः । क, खट्टयति । वृतिः संवरणम् । इति दुर्गादासः ॥

**खट्टनः**, त्रि, (खट्ट्यते व्रियते शय्यादिभिः इति ।

खट्ट वृतौ + कर्म्मणि ल्युट् ।) खर्व्वः । इति हेम-
चन्द्रः । छोट इति भाषा ॥ खदृत इति पाठो-ऽपि दृष्टः ॥

**खट्टा**, स्त्री, (खट्ट + टाप् ।) खट्वा । इति शब्द-

चन्द्रिका ॥

अत इत्वञ्च ।) क्षुद्रखट्टा ।
तत्पर्य्यायः । निषद्या २
सन्दी ३ । इति त्रिकाण्डशेषः ॥
आसन्दी ४ ।
इति जटाधरः । शवयानम् । इति शब्दमाला ॥

**खट्टेरकः**, त्रि (खट्ट + बाहुलकात् कर्म्मणि एरक् ।)

खर्व्वः । इति शब्दमाला ॥

**खट्वा**, स्त्रा, (खट्यते काङ्क्ष्यते शयनार्थिभिरिति ।

खट् काङ्क्षायां + "अशूप्रुषिलटीति ।" उणां
१ । १५१ । इति क्वन् ।) काष्ठादिरचितशय्या-
धारः । खाट् इति भाषा । तत्पर्य्यायः । शय-
नम् २ मञ्चः ३ पर्य्यङ्कः ४ पल्यङ्कः ५ । इत्यमरः ।
२ । ६ । १३८ ॥ तल्पम् ६ शयः ७ । इति शब्द-
रत्नावली ॥ * ॥ तद्युक्तिर्यथा, --
"अष्टाभिः काष्ठखण्डैश्च खट्वेति प्रतिचक्षते ॥"
अथैषां नामानि ।
"तिष्ठेत् यदालम्ब्य खट्वा तज्ज्ञेयं चरणाह्वयम् ।
शिरःस्थं व्युपधानं स्यात् अधःस्थं स्यात् निरूपकम् ॥
आलिङ्गने उभे पार्श्वे प्राह भोजमहीपतिः ।
आलिङ्गने चतुर्हस्ते व्युपधाननिरूपके ॥
तदर्द्धेन तदर्द्धेन चत्वारश्चरणा इति ।
सर्व्वषोडशिका खट्वा सर्व्वत्राभयदायिका ॥
आलिङ्गने सार्द्धवेदे व्युपधाननिरूपके ।
एकैकहस्तवृद्ध्या तु भवेन्मञ्चमतः परम् ।

जयोऽथ मङ्गलः प्रेयान् चित्रकान्तः परो महान् ॥
एकैकहस्तवृद्ध्या तु मञ्चानामिति लक्षणम् ।
सा तुङ्गा ह्यतितुङ्ग च शिखरी विषयेक्षणा ॥
एकैकहस्तवृद्ध्या तु टङ्क इत्यभिधीयते ।
यात्रासिद्धिं समारभ्य येऽमी षोडश कीर्त्तिताः ॥
आदित्यादिदशाजानामाद्यन्त्यैकद्वयं क्रमात् ।
दूरदर्शी दीर्घदर्शी दुर्ल्लङ्घ्योऽथ दुरासदः ॥
यथोत्तरं दशगुणाः पादैकपरिणाहिनः ।
प्रासादसंज्ञकाः कार्य्या राज्ञा सुखमभीप्सता ॥
चत्वार एते सर्व्वेषां भूपतीनां सुखावहाः ॥" * ॥
भोजमते च ।
"सर्व्वत्रिंशतिकां यावत् आरभ्याभयषोडशीम् ।
खट्वानामिति नामानि अष्टौ हस्तद्वयाधिकाम् ॥"
तद्यथा, --
"मङ्गला विजया पुष्टिः क्षमा तुष्टिः सुखासनम् ।
प्रचण्डा सर्व्वतोभद्रा खट्वानामाष्टकं विदुः ॥"
आसां विभागः पूर्ब्बवत् ॥ * ॥
पराशरसंहितायान्तु ।
"अष्टाभिः काष्टखण्डैस्तु योऽक्षपिण्डो विजायते ।
स चेत् समो भवेत् खट्वा प्रणश्या स्यादतोऽन्यथा ॥
समे सर्व्वायसम्पत्तिर्विषमे विषमास्पदम् ।
तस्मात् खट्वाङ्गपिण्डो यः समः कार्य्यः स सूरिभिः ॥"
इदन्तु सामान्यं सर्व्वसम्मतञ्च ।
काष्ठनियमस्तु

**खट्टाशः**, पुं स्त्री, (खट्टः आत्मा वृतः सन् अश्नाति

इति । अश् + अच् । अश्नुते व्याप्नोति गात्र-
गन्धेन वा । अशूङ् नव्याप्तौ + अच् ।)
वनजन्तु-
विशेषः । खटाश इति गन्धगोकुला इति च
भाषा । तत्पर्य्यायः । गन्धौतुः २ वनवासनः ३
।
इति त्रिकाण्डशेषः ॥ खट्टाशी ४ वनाखुः ५ ।
इति
शब्दरत्नावली ॥ खट्टासः ६ गन्धमार्जारः ७
वनश्वा ८ शालिः ९ । इति जटाधरः ॥ पुष्य-
लकः १० । इति दुर्गादासधृतवचनम् ॥

**खट्टासः**, पुं, (खट्टाश + पृषोदरात् शकारस्य सत्वम् ।

यद्वा, खट्ट इवासति दीप्यते प्रकाशते । अस
दीप्तौ + अच् ।) खट्टाशः । इति जटाधरः ॥
(लक्षणमस्य यथा भैषज्यरत्नावल्यां
वातव्याध्य-
धिकारे ।
"खट्टासोऽनूपजः श्रेष्ठो वर्त्तुलो मांसलश्च यः ।
सम्मतो मध्यदेशीयो मध्यमो मरुजोऽधमः ॥")

**खट्टिः**, पुं, (खट्ट + इन् ।) शवयानम् । तत्पर्य्यायः ।

अन्तशय्या २ वारुठः ३ । इति त्रिकाण्डशेषः
॥

**खट्टिकः**, त्रि, (खट्टनं आवरणं खट्टः स शिल्पत्वेना-

स्यास्तीति । ठन् ।) शाकुनिकः । इति शब्द-
माला । पाखिमारा इति भाषा ॥

**खट्टिका**, स्त्री, (खट्ट + स्वार्थे स्वल्पार्थे वा कन् + टाप्

सार्द्धद्वये च चरणा
हस्तैकपरिसम्मिताः ॥
सर्व्वाष्टादशका खट्वा
सर्व्वकामफलप्रदा ।
आलिङ्गने पञ्चहस्ते व्युपधाने
निरूपके ॥
तदर्धेन तदर्द्धेन चत्वारश्चरणा इति ।
सर्व्वविंशतिका खट्वा
धनधान्यजयप्रदा ॥
आलिङ्गने पञ्चहस्ते व्युपधाने
निरूपके ।
त्रिहस्तसम्मिते पादा
हस्तैकपरिसम्मिताः ॥
सर्व्वविंशतिका खट्वा एवमप्युपजायते
।
आलिङ्गने सार्द्धपञ्चे व्युपधाने
निरूपके ॥
तदर्द्धेन तदर्द्धेन चत्वारश्चरणा इति ।
सर्व्वद्वाविंशिका खट्वा
सर्व्वसम्पत्प्रदायिनी ॥
आलिङ्गने च षड्हस्ते व्युपधाने
निरूपके ।
त्रिहस्तसम्मिते पादाश्चत्वारश्चरणा
इति ॥
चतुर्विंशतिका खट्वा सर्व्वरोगक्षयङ्करी
।
आलिङ्गने सप्तहस्ते व्युपधाने
निरूपके ॥
त्रिहस्ते सार्द्धहस्ताश्च चत्वारश्चरणा
इति ।
सर्व्वषड्विंशिका खट्वा
सर्व्वसौभाग्यकारिका ॥
आलिङ्गने सार्द्धसप्ते व्युपधाने
निरूपके ।
सार्द्धत्रिहस्ते सार्द्धाश्च चत्वारश्चरणा
इति ॥
सर्व्वाष्टाविंशिका खट्वा
सर्व्वभोगप्रदायिका ।
आलिङ्गने चाष्टहस्ते व्युपधाने
निरूपके ॥

पूर्ब्बवदेव । इत्यासनयुक्तौ स्वट्वोद्देशः ॥ *
॥
तस्या दोषगुणा यथा, --
"खट्वायां यो गुणो दोषो मानञ्च
परिकीर्त्तितम् ।
तेनैव खट्वा काष्ठोत्था तथैव गुणमावहेत् ॥
अनेनैव विधानेन कार्य्यं बहुविधासनम् ।
विना नौकां समं कार्य्यं सर्व्वत्रैवासनं गुरु
॥"
इति तत्रैव युक्तिकल्पतरुः ॥
अस्या गुणः । वातलत्वम् । इति
राजवल्लभः ॥
प्रेङ्खा । इत्यमरटीका ॥ कोलशिम्बी । इति
राजनिर्घण्टः ॥

**खट्वाङ्गं**, क्ली, (खट्वाया अङ्गम् । तदिवाकृति-

र्यस्य इति ।) शिवस्यास्त्रविशेषः ।
तत्पर्य्यायः ।
सुखंसुणः २ ॥ इति हेमचन्द्रः ॥ (यथा,
मार्कण्डेये । ८७ । ६ ।
"विचित्रखट्वाङ्गधरा नरमालाविभूषणा ॥")

**खट्वाङ्गः**, पुं, (खट्वाङ्ग इत्याख्याऽस्य । शिवस्य

खट्वाङ्गास्त्रवत् सर्व्वत्र दुर्लङ्घ्यशासनत्वात्
अमोघ-
वीर्य्यवत्त्वाच्चास्य तथात्वम् ।)
सूर्य्यवंशीयराज-
विशेषः । स तु विश्वसहराजपुत्त्रः । यथा,
--
श्रीमद्भागवते । ९ । ९ । ४१ ।
"ततो दशरथस्तस्मात् पुत्त्र ऐडविडस्ततः
।
राजा विश्वसहो यस्य खट्वाङ्गश्चक्रवर्त्त्यभूत्
॥"

**खट्वाङ्गभृत्**, पुं, (खट्वाङ्गं बिभर्त्ति इति । भृ +

क्विप् ।) शिवः । इति हेमचन्द्रः ॥

**खट्वाङ्गी**, [न्] पुं, (खट्वाङ्गं अस्त्वविशेषः सोऽस्या-

स्थीति इनिः ।) शिवः । इति हारावली ॥
(प्रायश्चित्तार्थं धारणीयं खट्वाङ्गाकृतिकाष्ठ-
खण्डविशेषः । यथा, मनुः । ११ । १०५ ।

|  |  |  |
| --- | --- | --- |
|  | चतुर्हस्ते सार्द्धहस्ताश्चत्वारश्चरणा<br>इति ।<br>सर्व्वत्रिंशतिका खट्वा<br>सर्व्वकामार्थदायिनी ॥<br>एवमष्टविधाः खट्वाः<br>समासेनोपदर्शिताः ।<br>आदित्यादिदशाजानां नृणां<br>सम्पत्तिदायिकाः ॥<br>कार्य्याः शिल्पिभिरेतासु<br>विविधाकृतिकल्पनाः ।<br>सर्व्वषोडशिका खट्वा सर्व्वेषामेव<br>युज्यते ॥<br>अष्टौ खण्डानि यस्याः<br>स्युश्चतुर्हस्तयुतानि च ।<br>श्रीसर्व्वमङ्गला नाम खट्वैषा<br>पृथिवीपतेः ॥<br>इयं यदा सच्छदना तदा<br>सर्व्वजयाभिधा ।<br>यात्रासिद्धिः सर्व्वसिद्धिर्विजया<br>चाष्टमङ्गला ॥ * ॥ |  |

"खट्वाङ्गी चीरवासा वा श्मश्रुलो विजने वने ।
प्राजापत्यं चरेत् कृच्छ्रमब्दमेकं समाहितः ॥")

**खट्वारूढः**, त्रि, (खट्वामारूढः । "खट्वा क्षेपे ।"
२ । १ । २६ । इति निन्दायां द्वितीयान्तस्य क्तान्तेन नित्यसमासः ।) अविनीतः । प्रमादवान् । इति त्रिकाण्डशेषभूरिप्रयोगौ ॥ (यथा, भट्टौ । ५ । १० ।
"वृतस्त्वं पात्रेसमितैः खट्वारूढः प्रमादवान् ।
पानशौण्डः श्रियं नेता नात्यन्तीनत्वमुन्मनाः ॥"
"खट्वारूढः उत्पथस्थितः । खट्वा क्षेपे इति द्वितीया ।" इति जयमङ्गलटीका ॥) खट्वारूढो नरो जाल्मः । इति कलापव्याकरणम् ॥ (वेदं व्रतानि च समाप्य समावृत्तेन हि खट्वा रोढव्या ब्रह्मचर्य्य एव भूमिशयनार्होऽपि यः खट्वामारोहति स जाल्मः । रूढश्चायं तेन खट्वामारोहतु मा वा निषिद्धानुष्ठानपरः सर्व्वोऽपि खट्वारूढ उच्यतो इति शब्दार्थचिन्तामणिः ॥) खट्वोपरिस्थितश्च ॥

**खट्विका**, स्त्री, (अल्पा खट्वा । अल्पार्थे कन् ।
अत इत्वञ्च ।) क्षुद्रखट्वा । इति जटाधरः ॥ खट्वाविशेषः । तद्युक्तिर्यथा, --
"ब्रह्मक्षत्त्रियवैश्यानां चतुःषडष्टकोणिकाः ।
खट्विकाः सुखसम्भूताः शुक्लरक्तासिताम्बराः ॥"

**खड्गं**, क्ली, (खड भेदे + "छापूखडिभ्यः कित् ।"
उणां । १ । १२३ । इति गन् प्रत्ययः ।) लोहम् । इति राजनिर्घण्टः ॥

**खड्गः**, पुं, (खडति भिनत्तीति । खड् + "छापू-
खडिभ्यः कित् ।" उणां । १ । १२३ । इति गन् ।) गण्डकः । गण्डार इति भाषा ॥ (यथा, मनुः । ३ । २७२ ।
"कालशाकं महाशल्काः खड्गलोहामिषं मधु ।
आनन्त्यायैव कल्पन्ते मुन्यन्नानि च सर्व्वशः ॥"
"खड्गो गण्डकः लोहो लोहितवर्णश्छाग एव ।" इति कुल्लूकभट्टः ॥) गण्डकशृङ्गम् । खाग इति भाषा । बुद्धभेदः । इति मेदिनी ॥ चोरकनाम-गन्धद्रव्यम् । इति राजनिर्घण्टः ॥ अस्त्रविशेषः । खाँडा तरवाल इत्यादि भाषा ॥ (यथा, महा-भारते । ४ । ४१ । २५ ।
"यस्त्वयं विपुलः खड्गो गव्ये कोषे समर्पितः ।
सहदेवस्य विद्ध्येनं सर्व्वभारसहं दृढम् ॥")
तत्पर्य्यायः । निस्त्रिंशः २ चन्द्रहासः ३ असिः ४ रिष्टिः ५ कौक्षेयकः ६ मण्डलाग्रः ७ करबालः ८ कृपाणः ९ । इत्यमरः । २ । ८ । ८९ ॥ ऋष्टिः १० कर-पालः ११ । इति तट्टीका ॥ विशसनः १२

खड्गस्याग्रेण तद्देहस्पर्शनं प्रसृतं मतम् ॥
वञ्चयित्वा रिपौ शस्त्रपातनं गदितं स्मृतम् ।
परिवृत्यं भवेत् शत्रोर्वामदक्षिणतो गतिः ॥
पश्चात् पदापसरणं निवृत्यं संप्रचक्षते ।
अन्योऽन्यताडनं प्राहुः सम्पातमुभयोरपि ॥
आधिक्यमात्मनो यत् तत् समुदीर्णमुदीरितम् ।
अङ्गप्रत्यङ्गदेशेषु भ्रामणं भारतं स्मृतम् ॥
विचित्रखड्गसञ्चारदर्शनं कौशिकं स्मृतम् ।
निलीय चर्म्मणि क्षेपो यदसेः सात्वतं हि तत् ॥"
तस्य परीक्षा तरवारिशब्दे द्रष्टव्या ॥ (अस्य लक्षणादिकं यथा, बृहत्संहितायां ५० अध्याये ।
"अङ्गलशतार्धमुत्तम ऊनः स्यात्पञ्चविंशतिं खड्गः ।
अङ्गलमानाज्ज्ञेयो व्रणोऽशुभो विषमपर्वस्थः ॥
श्रीवृक्षवर्धमानातपत्रशिवलिङ्गकुण्डलाब्जानाम् ।
सदृशा व्रणाः प्रशस्ता ध्वजायुधस्वस्तिकानाञ्च ॥
कृकलासकाककङ्कक्रव्यादकबन्धवृश्चिकाकृतयः ।
खड्गे व्रणा न शुभदा वंशानुगाः प्रभूताश्च ॥
स्फुटितो ह्रस्वः कुण्ठो वंशच्छिन्नो न दृङ्गनो-ऽनुगतः ।
अस्वन इति त्तानिष्टः प्रोक्तविपर्यस्त इष्टफलः ॥
क्वणितं मरणायोक्तं पराजयाय प्रवर्त्तनं कोशात् ।
स्वयमुद्गीर्णे युद्धं ज्वलिते विजयो भवति खड्गे ॥
नाकारणं विवृणुयान्न विघट्टयेच्च
पश्येन्न तत्र वदनं न वदेच्च मूल्यम् ।
देशं न चास्य कथयेत् प्रतिमानयेच्च
नैव स्पृशेन्नृपतिरप्रयतोऽसियष्टिम् ॥
गोजिह्वासंस्थानो नीलोत्पलवंशपत्रसदृशश्च ।
करवीरपत्रशूलाग्रमण्डलाग्राःप्रशस्ताः स्युः ॥
निष्पन्नो न च्छेद्यो निकषैः कार्य्यः प्रमाणयुक्तः सः ।
मूले म्रियते स्वामी जननी तस्याग्रतश्छिन्ने ॥
यस्मिन् त्सरुप्रदेशे व्रणो भवेत्तद्वदेव खड्गस्य ।
वनितानामिव तिलको गुह्ये वाच्यो मुखे दृष्ट्वा ॥
अथषा स्पशति यदङ्गं प्रष्टा निस्त्रिंशभृत्तद्-वधार्य्यं ।
कोशस्थस्यादेश्यो व्रणोऽस्ति शास्त्रं विदित्वेदम् ॥
शिरसि स्पृष्टे प्रथमेऽङ्गुले द्वितीये ललाटसंस्पर्शे ।
भ्रूमध्ये च तृतीये नेत्रे स्पृष्टे चतुर्थे च ॥
नासोष्ठकपोलहनुश्रवणग्रीवांसकेषु पञ्चाद्याः ।

इति युक्तिकल्पतरौ खड्गिकोद्देशः ॥

**खड**, इ ङ मथि । इति कविकल्पद्रुमः ॥ (भ्वां-

आत्मं-सकं-सेट् । इदित् ।) मथि मन्थने
मन्थनञ्चेह भञ्जनम् । इ, खण्ड्यते । ङ,
खण्डते
दण्डेन भाण्डं लोकः । इति दुर्गादासः ॥

**खड**, क भेदे । इति कविकल्पद्रुमः ॥ (चुरां-

परं-सकं-सेट् ।) क, खाडयति । इति
दुर्गादासः ॥

**खडं**, क्ली, पुं, (खण्ड्यते छिद्यते धान्ये पक्वे सति

इति । खड + कर्म्मणि अप् ।) लघुतृणम् ।
इति
शब्दरत्नावली । खड् इति भाषा ॥

**खडः**, पुं, (खड + भावकर्म्मादौ यथायथं अप् ।)

पानान्तरम् । भेदः । इति मेदिनी । डे । ८
॥
खडयूषो यथा, चक्रदत्ते ।
"तक्रं कपित्थचाङ्गेरीमरिचाजाजिचित्रकैः
।
सुपक्वं खडयूषोऽयमयं काम्बलिकोऽपरः
॥"

**खडक्किका**, स्त्री, (खडक् इत्यव्यक्तशब्दं करोतीति
।

कृ + बाहुलकात् डः ततो गौरादित्वात्
ङीष् ।
ततः स्वार्थे कन् टाप् पूर्ब्बह्रस्वश्च ।)
पक्षद्वारम् ।
इति हाराबली ॥ खड्किद्वार इति भाषा ॥

**खडतूः**, पुं, (खड + अतूप्रत्ययः ।) बाहुजङ्घा-

भरणम् । इति संक्षिप्तसारे उणादिवृत्तिः ॥

**खडिका**, स्त्री, (खड् + अप् + गौरादित्वात् ङीष् ।

ततः स्वार्थे कन् पूर्ब्बह्रस्वः ।) कठिनी ।
इति
जटाधरः ॥

**खडी**, स्त्री, (खड् + अप् + ततो ङीष् ।) कठिनी ।

तीक्ष्णधारः १३ दुरासदः १४
श्रीगर्भः १५ विजयः १६
धर्म्मपालः १७ कौक्षेयः १८
तरवारिः १९
तवराजः २० कृपाणकः २१
कृपाणी २२
शस्त्रः २३ । इति शब्दरत्नावली
॥ * ॥ तस्योत्-
पत्तिर्ब्रह्मणो यज्ञाग्नौ यथा, --
"विकीर्य्याग्निं तथाभूतमुत्थितं
श्रूयते तदा ।
नीलोत्पलसवर्णाभं तीक्ष्णदंष्ट्रं
कृशोदरम् ॥
प्रांशुं सुदुर्द्धर्षतरं तथैव
ह्यमितौजसम् ।
ततस्तद्रूपमुत्सृज्य बभौ निस्त्रिंश
एव सः ॥
विमलस्तीक्ष्णधारश्च
कालान्तक इवोद्यतः ।
ततः स शितिकण्ठाय
रुद्रायर्षभकेतवे ॥
ब्रह्मा ददावसिं
तीक्ष्णमधर्म्मप्रतिवारणम् ।
ततः स भगवान् रुद्रो
दानवक्षतजोक्षितम् ॥
असिं धर्म्मस्य गोप्तारं ददौ
सत्कृत्य विष्णवे ।
विष्णुर्मरीचये स महर्षिभ्यः ते
इन्द्राय स लोक-
पालेभ्यः ते मनवे सूर्य्यपुत्राय स
क्षुपाय स
इक्ष्वाकवे स पुरूरवसे स आयवे
स नहुषाय स
ययातये स पूरवे स अमूर्त्तरयसे
स भूमिशयाय
सभरताय स ऐडविडाय स
धुन्धुमाराय स
काम्बोजाय स मुचुकुन्दाय स
मरुत्ताय स रैव-
ताय स यौवनाश्वाय स रघवे स
हरिणाश्वाय

उरसि द्वादशसंस्थस्त्रयोदशे कक्षयोर्ज्ञेयः ॥
स्तनहृदयोदरकुक्षीनाभीषु चतुर्द्दशादयो ज्ञेयाः ।
नाभीमूले कट्यां गुह्ये चैकोनविंशतितः ॥
ऊर्वोर्द्वाविंशे स्याद् ऊर्वोर्मध्ये व्रणस्त्रयोविंशे ।
जानुनि च चतुर्विंशे जङ्घायां पञ्चविंशे च ॥
जङ्घामध्ये गुल्फे पार्ष्ण्यां पादे तदङ्गलीष्वपि च ।
षड् विंशतिकाद्यावत्त्रिंशदिति मतेन गर्गस्य ॥
पुत्त्रमरणं धनाप्तिर्धनहानिः सम्पदश्च बन्धश्च ।
एकाद्यङ्गुलसंस्थैर्व्रणैः फलं निर्द्दिशेत् क्रमशः ॥
सुतलाभः कलहो हस्तिलब्धयः पुत्त्रमरण-
धनलाभौ ।
क्रमशो विनाशवनिताप्तिचित्तदुःखानि षट्प्रभृति ॥
लब्धिर्हानिस्त्रीलब्धयो वधो वृद्धिमरणपरितोषाः ।
ज्ञेयाश्चतुर्द्दशादिषु धनहानिश्चैकविंशे स्मात् ॥

स्वनामख्यातश्वेतवर्णमृत्तिकाविशेषः । इति शब्द-
चन्द्रिका ॥ अस्या गुणपर्य्यायौ कठिनीशब्दे
खटीशब्दे च द्रष्टव्यौ ॥

**खट्वाः**, स्त्री, (खड् + “खडेर्ड्ड्वा ।” उणां । १ । ८४ ।
इति ऊः ।) मृतशय्या । (बाहुजङ्घाभरणम् ।
इत्युज्ज्वलदत्तः ॥)

स शुनकाय स उशीनराय स भोजाय स शिवये
स प्रतर्द्दनाय स अष्टकाय स ऋषदश्वाय स भर-
द्वाजाय स द्रोणाय स कृपाय स पाण्डवेभ्यो
दत्तवान् ॥ * ॥ अथ खड्गविषयकत्रयोदश-
विधसञ्चरणं यथा, महाभारते ।
“मण्डलाकारतः खड्गभ्रामणं भ्रान्तमुच्यते ।
तदेव बाहुमुद्यम्य कृतमुद्भ्रान्तमीरितम् ॥
भ्रामणं स्वस्य परितः खड्गस्याविद्धमुच्यते ।
परप्रयुक्तशस्त्रस्य वारणार्थमिदं त्रयम् ॥
णत्रोराक्रमणार्थाय गमनन्त्वाप्लुतं मतम् ।

वित्ताप्तिरनिर्वाणं धनागमो मृत्युसम्पदोऽस्वत्वम् ।
ऐश्वर्य्यमृत्युराज्यानि च क्रमात्त्रिंशदिति यावत् ॥
परतो न विशेषफलं विषमसमस्थास्तु पाप-
शुभफलदाः ।
कैश्चिदफलाः प्रदिष्टास्त्रिंशत्परतोऽग्रमितियावत्॥
करवीरोत्पलगजमदघृतकुङ्कुमकुन्दचम्पकसगन्धः ।
शुभदोऽनिष्टो गोमूत्रपङ्कमेदःसदृशगन्धः ॥
कूर्म्मवसासृक्क्षारोपमश्च भयदुःखदो भवति गन्धः ।
वैदूर्य्यकनकविद्युत्प्रभो जयारोग्यवृद्धिकरः ॥
इदमौशनसं त्त शस्त्रपानं
रुधिरेण श्रियमिच्छतः प्रदीप्ताम् ।
हविषा गुणवत्सुताभिलिप्सोः
सलिलेनाक्षयमिच्छतश्च वित्तम् ॥
वडवोष्ट्रकरेणुदुग्धपानं
यदि पापेन समीहतेऽर्थसिद्धिम् ।
झषपित्तमृगाश्ववस्तदुग्धैः
करिहस्तच्छिदये सतालगर्भैः ॥
आर्कं पयो हुडुविषाणमषीसमेतं
पारावताखुशकृता च युतं प्रलेपः ।
शस्त्रस्य तैलमथितस्य ततोऽस्य पानं
पश्चाच्छितस्य न शिलासु भवेद्विघातः ॥
क्षारे कदल्या मथितेन युक्ते
दिनोषिते पायितमायसं यत् ।
सम्यक् छितं चाश्मनि नैति भङ्गं
न चान्यलोहेष्वपि तस्य कौण्ठ्यम् ॥”)

**खड्गकोषः**, पुं, खड्गलता । तत्पर्य्यायः ।
खड्गपत्रः २ खड्गिमारः ३ अश्वपुच्छकः ४ । इति शब्दचन्द्रिका ॥ (खड्गस्य कोषः ।) खड्गाधारः । खाप इति भाषा । अयं व्युत्-पत्तिलब्धोऽर्थः ॥

**खड्गटः**, पुं, (खड्गैव अटतीति । अट् + अच् ।
शकन्ध्वादित्वात् साधुः ।) बृहत्काशः । इति हारावली ॥

**खड्गधेनुः**, स्त्री, खड्गपुत्त्रिका । छुरि इति
भाषा । (खड्गस्य गण्डकस्य धेनुः पत्नी ।) गण्डकस्त्री । इति मेदिनी ॥ मादी गण्डार इति भाषा ॥

**खड्गिमारः**, पुं, (खड्गिनं गण्डकं मारयतीति ।
मृ + णिच् “कर्म्मण्यण् ।” ३ । २ । १ । इत्यण् ।
अस्त्रविशेषः ।) खड्गकोषलता ॥ इति शब्द-
चन्द्रिका ॥

**खड्गी**, [न्] पुं, (खड्गस्तदाकारं शृङ्गमस्या-
स्तीति । इनिः ।) वनजन्तुविशेषः । गण्डार
इति भाषा । तत्पर्य्यायः । गण्डकः २ खड्गः ३ ।
इत्यमरः । २ । ५ । ४ ॥ खड्गमृगः ४ क्रोडीमुखः ५
तुङ्गमुखः ६ बली ७ वज्रचर्म्मा ८ वाद्ध्रीनसः ९ ।
इति राजनिर्घण्टः ॥ एकचरः १० गणोत्-
साहः ११ । इति त्रिकाण्डशेषः ॥ गण्डः १२
स्वनोत्साहः १३ । इति शब्दरत्नावली ॥ अस्य
मांसगुणाः । बलकारित्वम् । बृंहणत्वम् । गुरु-
त्वम् । इति राजनिर्घण्टः ॥
कफवायुनाशित्वम् ।
कषायत्वम् । पितृलोकतृप्तिकारित्वम् । पवित्र-
त्वम् । आयुर्हितत्वम् ।
मूत्रबन्धकारित्वम् ।
रूक्षत्वञ्च । इति राजवल्लभः ॥
(“कफघ्नं खड्गिपिशितं कषायमनिलापहम् ।
पित्र्यं पवित्रमायुष्यं बद्धमूत्रं विरूक्षणम् ॥”
इति सुश्रुते सूत्रस्थाने
षट्चत्वारिंशत्तमेऽध्याये ॥
महादेवः । यथा, महाभारते । १३ । १७ । ४२ ।

**खण्डकथा**, स्त्री, (खण्डा खण्डिता कथा ।)
वाङ्मयभेदः । इति त्रिकाण्डशेषः ॥

**खण्डकर्णः**, पुं, (खण्ड इव कर्णः कन्दो यस्य ।)
आलुविशेषः । शकरकन्द आलु इति भाषा ॥
तत्पर्य्यायः । वज्रकन्दः २ । इति रत्नमाला ॥
अस्य गुणाः । कफपित्तनाशित्वम् । कटुपाकि-
त्वम् । इति राजवल्लभः ॥

**खण्डकालु**, क्ली, (खण्ड इव कायतीति । कै + कः ।
ततः खण्डकं आलु इति कर्म्मधारयः ।) आलु-
विशेषः । इति शब्दचन्द्रिका ॥

**खण्डजः**, पुं, (खण्ड इव जायते खण्डाकारेण
जायते वा । जन् + डः ।) गुडः । यवासशर्करा ।
इति राजनिर्घण्टः ॥

**खण्डजोद्भवजः**, पुं, (खण्डज उद्भवोऽस्य इति खण्ड-
जोद्भवः तस्माज्जायते इति । जन् + डः ।) तव-
राजोद्भवखण्डः । इति राजनिर्घण्टः ॥

**खण्डतालः**, पुं, (खण्डेन वाद्यांशभेदेन निर्वृत्त-
स्तालः ।) तालविशेषः । यथा, --
“द्रुतमेकं भवेद्यत्र खण्डतालः स उच्यते ।
अपरं नियमं विना ।”
इति सङ्गीतदामोदरः ॥

**खण्डधारा**, स्त्री, (खण्डे एकदेशे धारो यस्याः ।)

**खड्गपत्रः**, पुं, (खड्गाकाराणि पत्राणि अस्य ।)

खड्गलता । इति शब्दचन्द्रिका ॥

**खड्गपिधानं**, क्ली, (खड्गस्य पिधानमाच्छा-

दनम् ।) खड्गकोषः । खाप इति भाषा ।

इति हलायुधः ॥

**खड्गपिधानकं**, क्ली, (खड्गस्य पिधानकम् ।)

खड्गपिधानम् । खाप इति भाषा । तत्-

पर्य्यायः । प्रत्याकारः २ परीवारः ३ कोशः ४ ।

इति हेमचन्द्रः ॥

**खड्गारीटः**, त्रि, (खड्गं ऋच्छतीति । ऋ + कीटन् ।

निपातनात् पूर्ब्बवृद्धिः । यद्वा खड्गारिरिवा-

चरति इति । क्विः ततः कीटन् ।) फलकः ।

असिधाराव्रतधारी । इति मेदिनी ॥

**खड्गिकः**, पुं, महिषीक्षीरफेनः । शौनिकः । इति

मेदिनी ॥

"अशनी शतघ्नी खड्गी पट्टिशी चायुधी

महान् ॥"

खड्गो विद्यतेऽस्य इति व्युत्पत्या तु

वाच्य-

लिङ्गः । यथा, भागवते । ८ । १५ । ८

।

"सुस्रग्धरोऽथ सन्नह्य धन्वी खड्गी

धृतेषुधिः ॥")

**खड्गीकं**, क्ली, (खड्गस्तत् कर्म्मणि कुशलम् । बाहु-

लकात् ईकः ।) दात्रम् । इति

शब्दरत्नावली ॥

**खण्डं**, क्ली, (खडि + धञ् । इदित्वात् नुम् ।)

विड्लवणम् । इति राजनिर्घण्टः ॥

इक्षुवि-

कारः । अस्य गुणाः । वृष्यतमत्वम् ।

चक्षु-

ष्यत्वम् ॥ वातपित्तनाशित्वञ्च । इति

राजवल्लभः ॥

(अस्य गुणाः यथा, --

"खण्डन्तु मधुरं वृष्यं चक्षुष्यं बृंहणं

हिमम् ।

वातपित्तहरं स्निग्धं बल्यं वान्तिहरं

परम् ॥"

मधुखण्डगुणाः यथा, --

"मधुजा शर्करा रूक्षा कफपित्तहरी गुरुः

।

छर्द्यतीसारतृड्दाहरक्तहृत्तुवराहिमा ॥"

इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये

भागे ॥)

**खण्डः**, पुं, क्ली, (खडि + घञ् इदित्वात् नुम् ।) एक-

देशः । तत्पर्य्यायः । भित्तम् २ शकलम्

३ । इत्य-

मरः । १ । ३ । १६ ॥ (यथा,

मार्कण्डेये । ८३ । २६ ।

"धुतशृङ्गविभिन्नाश्च खण्डखण्डं

ययुर्घनाः ॥"

अब्जादिसमूहः । इत्यमरः । १ । १० ।

४२ ।)

कर्त्तरी । इति शब्दमाला ॥ काँचि

इति भाषा ॥

**खण्डनं**, क्ली, (खडि भावे + ल्युट् ।) भञ्जनम् ।

भेदनम् । निराकरणम् । छेदनम् ।

यथा, --

"घटय भुजबन्धनं जनय

रदखण्डनं देहि पद-

पल्लवमुदारम् ॥" इति जयदेवः ॥

**खण्डपरशुः**, पुं, (खण्डयति शत्रून् इति खण्ड-

स्तादृशः परशुरस्य ।) शिवः ।

इत्यमरः । १ । १ । ३३ ॥

(यथा, महाभारते ७ ।

रुद्रमाहात्म्ये । २०० । ४१ ।

"पिनाकिनं खण्डपरशुं लोकानां

पतिमीश्वरम् ॥"

विष्णुः । यथा, महाभारते । १३ ।

१४९ । ७४ ।

"सुधन्वा खण्डपरशुर्द्दारुणो

द्रविणप्रदः ॥")

**खण्डपर्शुः**, पुं, (शत्रून् खण्डयति विदारयति इति

खण्डस्तथाविधः पर्शुरस्य ।)

परशुरामः । शिवः ।

चूर्णलेपी । खण्डामलकभैषज्यम्

। राहुः । इति

मेदिनी ॥ भग्नदन्तहस्ती । इति

शब्दरत्नावली ॥

**खण्डपालः**, पुं, (खण्डं पालयतीति । पालि + "कर्म्म-

ण्यण् ।" ३ । २ । १ । इत्यण् ।)

मोदकः । मयरा

इति भाषा । तत्पर्य्यायः ।

खाण्डिकः २ । इति

हारावली ॥

**खण्डमोदकः**, पुं, (खण्डेन खण्डोत्पादितलड्डुका-

दिना वा मोदयतीति । खण्ड +

मुद् + णिच् +

**खण्डः**, पुं, (खडि + घञ् ।) इक्षुविकारः । खाँड

इति भाषा । मणिदोषः । इति मेदिनी ॥ (योगि-

विशेषः । यथा, हठयोगदीपिकायाम् । १ । ८ ।

“भानुकीनारदेवश्च खण्डः कापालिकस्तथा ॥”)

**खण्डकः**, पुं, (खण्डेन निर्वृत्तः इति संज्ञायां कः ।)

निर्नखः । इति शब्दचन्द्रिका ॥ सिताखण्डः ।

इति राजनिर्घण्टः ॥ (खण्डयतीति । खडि +

ण्वुल् । छेदकारी ॥)

ण्वुल ।) यवासशर्करा । इति

राजनिर्घण्टः ॥

**खण्डलवणं**, क्ली, (खण्ड्यते इति खण्डम् । खडि +

कर्म्मणि घञ् । तच्च तत्

लवणञ्चेति ।) विड्-

लवणम् । इति राजनिर्घण्टः ॥ (विडशब्देऽस्य

विवरणं ज्ञातव्यम् ॥)

**खण्डशाखा**, स्त्री, (खण्डा खण्डिता शाखा

अस्याः ।) महिषवल्ली । इति

राजनिर्घण्टः ॥

**खण्डसरः**, पुं, (खण्ड इव सरतीति । सृ + अच् ।)

यवासशर्करा । इति राजनिर्घण्टः

॥

**खण्डाभ्रं**, क्ली, (खण्डं अभ्रं मेघः ।) अभ्रलेशः ।
छेँडा मेघ इति भाषा । दन्तक्षतविशेषः ।
इति
मेदिनी ॥

**खण्डिकः**, पुं, (खण्डोऽस्यास्तीति । ठन् ।) कलायः ।
कडाइ इति भाषा । इत्यमरः ॥ (अस्य
पर्य्याया
यथा, --
"त्रिपुटः खण्डिकोऽपि स्यात् कथ्यन्ते
तदगुणा अथ ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥
गुणाश्चास्य त्रिपुटशब्दे वक्तव्याः ॥)
कक्षः । इति
हेमचन्द्रः ॥ वगल इति भाषा ॥

**खण्डितं**, त्रि, (खडि + क्तः ।) खण्डीकृतम् । तत-
पर्य्यायः । छिन्नम् २ लूनम् ३ छितम् ४
दितम्
५ छेदितम् ६ वृक्नम् ७ वृत्तम् ८ । इति
हेम-
चन्द्रः ॥ (यथाह शब्दार्थचिन्तामणिः ।
"चन्द्रे कलङ्कः सुजने दरिद्रता
विकाशलक्ष्मीः कमलेषु चञ्चला ।
मुखेऽप्रसादः सधनेषु सर्व्वदा
यशो विधातुः कथयन्ति खण्डितम् ॥"
खण्डिताङ्गः । खण्डिताङ्गत्वं
दुष्टवचनकर्म्म-
विपाकः । यथाह शातातपः । ३ अध्याये
।
"दुष्टवादी खण्डितः स्यात् स वै दद्यात्
द्विजातये ।
रूप्यं पलद्वयं दुग्धं घटद्वयसमन्वितम्
॥")

**खण्डिता**, स्त्री, (खण्डित + टाप् ।) स्वीयादि-
नायिकाया भेदः । अस्या लक्षणम् ।
अन्योप-
कः । ततः संज्ञायां कन् टाप् अत इत्वञ्च ।)
लाजाः । इति त्रिकाण्डशेषः ॥ खै इति
भाषा ॥

**खदिरः**, पुं, (खद स्थैर्य्यहिंसयोः + "अजिर-
शिशिरशिथिलेति ।" उणां । १ । ५४ । इति
किरच् ।) वृक्षविशेषः । खयेरगाछ इति भाषा ।
तत्पर्य्यायः । गायत्री २ बालतनयः ३ दन्त-
धावनः ४ । इत्यमरः । २ । ४ । ४९ ॥ तिक्तसारः
५ कण्टकीद्रुमः ६ । इति रत्नमाला ॥ बालपत्रः
७ खद्यपत्री ८ क्षितिक्षमः ९ सुशल्यः १० वक्र-
कण्टः ११ यज्ञाङ्गः १२ जिह्वाशल्यः १३ कण्टी
१४ सारद्रुमः १५ कुष्ठारिः १६ बहुसारः १७
मेध्यः १८ बालपुत्त्रः १९ रक्तसारः २० कर्कटी
२१ जिह्वशल्यः २२ । इति जटाधरः ॥ कुष्ठ-
हृत् २३ बालपत्रकम् २४ यूपद्रुमः २५ ।
इति शब्दरत्नावली ॥ अपि च भावप्रकाशे ।
"खदिरो रक्तसारश्च गायत्री दन्तधावनः ।
कण्टकी बालपत्रश्च बहुशल्यश्च पाक्षिकः ॥
खदिरः शीतलो दन्त्यः कण्डूकासारुचिप्रणुत् ।
तिक्तः कषायो मेदोघ्नः कृमिमेहज्वरव्रणान् ।
श्वित्रशोथामपित्तास्रपाण्डुकुष्ठकफान् हरेत् ॥"

अस्य गुणाः । तिक्तरसत्वम् । शीतत्वम् ।

पित्तकफकुष्ठकासरक्तशोफकण्डुव्रणनाशित्वम् ।
पाचनत्वञ्च । इति राजनिर्घण्टः ॥ विसर्पवेदना-
मेहमेदोनाशित्वम् । इति राजवल्लभः ॥ * ॥ (अथ
श्वेतखदिरः । पपरी खयेर इति भाषा ॥
"खदिरः श्वेतसारोऽन्यः कदरः सोमवल्कलः ।
कदरो विशदो वर्ण्यो मुखरोगकफास्रजित् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे च ॥
खदति हन्ति शत्रून् इति । खद् + किरच् ।)
इन्द्रः । इति त्रिकाण्डशेषः ॥ (खे आकाशे
दीर्य्यते यस्माच्चन्द्रलोकादिष्ट्यापूर्त्तादिकर्म्मिभिः
।
दृ + बाहुलकात् अपादाने किरच । इष्ट्या-
पूर्त्तादिकर्म्मिणां हि आरब्धाम्मयदेहविदारेण
चन्द्रमण्डलात् आकाशे पतनात् तथात्वम् ।)
ऽस्त्यस्याः । अस्त्यर्थे + ठन् ततः
टाप् ।) लाक्षा ।
इति राजनिर्घण्टः ॥

**खदिरी**, स्त्री, (खद् + किरच् । गौरादित्वात्
ङीष् ।) खदिरीशाकम् । लाजालु
इति
ख्याता । इति केचित् । किन्तु
रभसेन
वराहक्रान्ता लज्जालुः समङ्गा
जलकारिकेति
खदिरिकायांसङ्कोचपत्री
लज्जालुरिति लज्जालु-
कायां पठितम् । इति भरतः ॥
तत्पर्य्यायः ।
नमस्कारी २ गण्डकाली ३ समङ्गा
४ । इत्य-
मरः । २ । ४ । १४१ ॥ (क्वचित्
खदिरेति पाठो
दृश्यते ॥) गण्डकारी ५ । इति
भरतः ॥ शमी
पत्रा ६ रक्तपत्री ७ अञ्जलिकारिका
८ रास्ना ९ ।
इति जटाधरः ॥
("गण्डकाली नमस्कारी समङ्गा
खदिरी क्वचित् ।"
इति वैद्यरत्नमालायाम् ॥)

**खदिरोपमं**, क्ली, (खदिरेण उपमीयते इति । खदिर
उपमा अस्य वा ।) कदरः । इति
रत्नमाला ।
काँटा वावला इति भाषा ॥

**खदूरवासिनी**, स्त्री, (खे शून्ये दूरे च वसतीति ।
वस् + णिनिः । ततो ङीप् ।)
बुद्धशक्तिविशेषः ।
इति त्रिकाण्डशेषः ॥

**खद्योतः**, पुं, (खं आकाशं द्योतयतीति । द्युत्

भोगचिह्नितः पतिः प्रातरागच्छति
यस्याःसा ।
अस्याश्चेष्टा ।
“अस्फुटालापचिन्तासन्ताप-
निश्वासतूष्णीम्भावाश्रुपातादयः।” इति
रस-
मञ्जरी ॥ (साहित्यदर्पणोक्तलक्षणं यथा,
तत्रैव । ३ । ८३ ।
“पार्श्वमेति प्रियो यस्या
अन्यसम्भोगचिह्नितः ।
सा खण्डितेति कथिता
धीरैरीर्षाकषायिता ॥
उदाहरणं यथा, तत्रैव ।
“तदवितथमवादीर्य्यन्मम त्वं प्रियेति
प्रियजनपरिभुक्तं यद्दुकूलं दधानः ।
मदधिवसतिमागाः कामिनां मण्डनश्री-
र्व्रजति हि सफलत्वं वल्लभालोकनेन ॥”)

**खण्डिनी**, स्त्री, (खण्डोऽस्यास्तीति । खण्ड + इनिः ।
स्त्रियां ङीप् । यद्वा, खण्डयति आत्मानं
द्वीप-
पर्व्वतसमुद्रादिव्यवच्छेदेनेति शेषः ।
खडि +
णिनिः ।) पृथ्वी । इति शब्दरत्नावली ॥

**खण्डी**, [न्] पुं, (खण्डयति आत्मानं द्विदलरूपेण
इति । खडि + णिनिः ।) वनमुद्गः । इति
हेमचन्द्रः ॥

**खण्डीरः**, पुं, (खण्डी + शुण्डादित्वात् रः ।) पीत-
मुद्गः । इति हेमचन्द्रः ॥

**खतमालः**, पुं, (खे आकाशे अन्तरीक्षे तमाल
इव । तत्वर्णसादृश्यात्तथात्वम् ।) धूमः ।
मेघः ।
इति मेदिनी ॥

**खद**, स्थैर्य्ये । वधे । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-अकं-वधे तु सकं-सेट् ।) खदति ।
इति
दुर्गादासः ॥

**खदिका**, स्त्री, (खे भर्ज्जनपात्राद्‌दूर्ध्वाकाशे दीयते
चन्द्रः । इति मेदिनी ॥ (तथा च
साङ्ख्यदर्शनभाष्ये ।
“येन कर्म्मबृन्देन चन्द्रमसमारूढाः फलोप-
भोगाय तस्मिन् उपभोगेन क्षयिते तेषां यद-
म्मयं शरीरं चन्द्रमस्युपभोगायारब्धं तदुपभोग-
क्षयदर्शनशोकाग्निसम्पर्कात् प्रलीयते सवितृ-
सम्पर्कात् हिमकरका इव हुतभुगर्च्चिःसम्प-
र्कादिव च घृतकाठिन्यम् । ततः कृतात्यये कृतस्य
इष्ट्यादेः कर्म्मणः फलोपभोगेनोपक्षये सति
सानुशया एवेममवरोहन्ति ॥”)

**खदिरपत्रिका**, स्त्री, (खदिरस्य पत्रमिव पत्रमस्याः ।
कप् कापि अत इत्वम् ।) अरिखदिरः ।
लज्जालुलता । इति राजनिर्घण्टः ॥

**खदिरपत्री**, स्त्री, (खदिरस्य पत्रमिव पत्रमस्याः ।)
लज्जालुलता । इति वैद्यकम् ॥

**खदिरा**, स्त्री, (खदिरस्तत्पत्राकारोऽस्त्यस्याः। अच्
टाप् च ।) लज्जालुलता । इति राजनिर्घण्टः ॥

**खदरिका**, स्त्री, (खदिरेण खदिररसेन समो रसो-
दीप्तौ + णिच् + “कर्म्मण्यण् ।” ३
। २ । १ । इति
अण् ।) सूर्य्यः । इति जटाधरः ॥
(यथा, भाग-
वते । ४ । २९ । १० ।
“खद्योताविर्म्मुखी चात्र नेत्रे एकत्र
निर्म्मिते ।
रूपं विभ्राजितं ताभ्यां विचष्टे
चक्षषेश्वरः ॥”
नेत्रस्य हि सूर्य्याधिष्टातृतया
रूपादिदर्शनशक्ति-
रिति प्रसिद्धेस्तथात्वम् ॥ खे
आकाशे द्योतते
इति । द्युत् + अच् ।) कीटविशेषः
। जोनाक
पोका इति भाषा । तत्पर्य्यायः ।
ज्योतिरिङ्गणः २ ।
इत्यमरः । २ । ५ । २८ ॥
खज्योतिः ३ प्रभाकीटः ४
उपसूर्य्यकः ५ । इति राजनिर्घण्टः
॥ ध्वान्तो-
न्मेषः ६ तमोमणिः ७ दृष्टिबन्धुः ८
तमोज्योतिः ९
ज्योतिरिङ्गः १० निमेषकः ११ ।
इति शब्द-
रत्नावली ॥ (यथा, श्रीमद्भागवते ।
६ । १६ । ४६ ।
“विदितमनन्तसमस्तं
तव जगदात्मनो जनैरिहाचरितम् ।
विज्ञाप्यं परमगुरोः
कियदिव सवितुरिव खद्योतैः ॥”)

**खद्योतनः**, पुं, (द्योतयतीति । द्युत् + णिच् + कर्त्तरि
ल्युः । ततः खस्य आकाशस्य
द्योतनः प्रका-
शकः ।) सूर्य्यः । इति जटाधरः ॥

**खधूपः**, पुं, (खं आकाशं धूपयति । खे धूपः
ज्वलच्छिखवह्निरिव वा । धूप् +
“कर्म्मण्यण् ।”

| | | |
|---|---|---|
| खण्ड्यते इति । ख + दो अवखण्डने + घञर्थे | | । ३ । २ । १ । इति अण् ।) अग्निक्रीडा-विशेषः । हाउइ इति भाषा । यथा, भट्टौ । ३ । ५ । “उक्षाम्प्रचक्रुर्नगरस्य मार्गान् ध्वजान् बबन्धुर्मुमुचुः खधूपान् ॥” |

**खन**, उ ञ विदारे । इति कविकल्पद्रुमः ॥ (भ्वां-

उभं-सकं-सेट् ।) उ, खनित्वा खान्त्वा । ञ,

तृषितो जाह्नवीतीरे कूपं खनति दुर्म्मतिः ।

खनते । इति दुर्गादासः ॥

**खनकः**, पुं, (खन् + “शिल्पिनि ष्वुन् ।” ३ । १ । १४५ ।

इति वुन् स च षित् ।) उन्दुरुः । सन्धितस्करः ।

सिँदेल चोर इति भाषा । भूमिवित्तज्ञः ।

स्वर्णाद्युत्पत्तिस्थानज्ञः । इति हेमचन्द्रः ॥

(स्वनामप्रसिद्धो विदुरस्य बन्धुविशेषः । यथा,

महाभारते जतुगृहे । १ । १४८ । १ ।

“विदुरस्य सुहृत् कश्चित् खनकः

कुशलो नरः ॥”)

**खनकः**, त्रि, (खन् + वुन् ।) अवदारकः । खनन-

कर्त्ता । इति मेदिनी ॥ (यथा, गोः रामा-

यणे । १ । १२ । ६ ।

“स्थापत्ये चेह स्थाप्यन्तां वृद्धाः परमधार्म्मिकाः ।

कर्म्मान्तिका लिपिकरा वर्धकाः खनका अपि ॥”)

**खननं**, क्ली, (खन् + भावे ल्युट् ।) विदारणम् ।

खाँडन खोदन इति च भाषा । यथाह कश्चित् ।

“पश्य त्वं खननं नखेन तद्भूदालोक्य

मूकः शठः ॥”

**खनयित्री**, स्त्री, (खन् + णिच् न वृद्धिर्निपातनात् ।

ततस्तृच् ङीप् च ।) अस्त्रभेदः । खन्तीति

भाषा । यथा, नारदपञ्चरात्रे पाद्मसंहिता ।

“खनयित्री शुभा यात्रा जयार्थं जयकाङ्क्षि-

णाम् ।

ब्रह्मणा भरतश्रेष्ठ ! कालकेयकृते कृतम् ।

तदेतत् खपुरं दिव्यं चरत्यमरवर्ज्जितम् ॥”

खे आकाशे उत्थितं पुरम् । शुभाशुभादि-

सूचनार्थं प्रकाशितं गन्धर्व्वनगरम् । अस्यो-

त्तरादिदिग्भेदेनोदये फलभेदो यथा, बृहत्-

संहितायाम् ३६ अध्याये ।

“उदगादिपुरोहितनृपबलपतियुवराजदोषदं

खपुरम् ।

सितरक्तपीतकृष्णं विप्रादीनामभावाय ॥

नागरनृपतिजयावहमुदग्विदिक्स्थंविवर्ण-

नाशाय ।

शान्ताशायां दृष्टं सतोरणं विजयाय ॥

सर्व्वदिगुत्थं सततोत्थितञ्च भयदं नरेन्द्रराष्ट्रा-

णाम् ।

चौराटविकान् हन्याद्धूमानलशक्रचापाभम् ॥

गन्धर्व्वनगरमुत्थितमापाण्डुरमशनिनिपातवात-

करम् ।

दीप्ते नरेन्द्रमृत्युर्वामेऽरिभयं जयः सव्ये ॥

अनेकवर्णाकृति खे प्रकाशते

पुरं पताकाध्वजतोरणान्वितम् ।

यदा तदा नागमनुष्यवाजिनां

पिबत्यसृग्भूरि रणे वसुन्धरा ॥”)

हरिश्चन्द्रपुरम् । इति त्रिकाण्डशेषः ॥

**खपुरः**, पुं, (खं पिपर्त्ति उच्छ्रयत्वेन । पॄ + कः ।)

गुवाकः । (अस्य पर्य्याया यथा ।

“खपुरो ह्रस्वकः पूगः ।” इति वैद्यकरत्नमाला-

याम् ॥ खेन आकाशागतेन हिमकरादिना

पूर्य्यते इति । पॄ + कर्म्मणि घञर्थे कः ।) भद्रमुस्त-

कम् । (खमिन्द्रियं पिपर्त्ति । पॄ + कः ।)

अलसके त्रि । इति मेदिनी ॥ व्यालनखः । इति

राजनिर्घण्टः ॥

**खभ्रान्तिः**, पुं, (खे आकाशे अन्तरिक्षे भ्रान्तिर्भ्रमणं

आमिषार्थं यस्य ।) चिल्लः । इति शब्दरत्ना-

वली ॥ चिल् इति भाषा ॥

**खेमणिः**, पुं, (खे आकाशे मणिरिव ज्योतिर्मय-

त्वात् प्रकाशकत्वाद्वा ।) सूर्य्यः । इति त्रिकाण्ड-

शेषः ॥

“कृत्वाऽट्टहासं खरमुत् स्वनोल्वणं

निमीलिताक्षं जगृहे महाजवः ॥”

तद्वति त्रि । यथा, रघुवंशे । ८ । ९ ।

“न खरो न च भूयसा मृदुः

पवमानः पृथिवीरुहानिव ॥”)

**खरः**, पुं, (खं मुखकुहरं छिद्रंमतिशयेनास्या-

स्तीति । रः ।) गर्द्दभः । इत्यमरः । २ । ९ । ७७

(यथा, मनुः । २ । २०१ ।

“परीवादात् खरो भवति श्वा वै भवति

निन्दकः ॥”

अश्वतरः । यथा, तत्रैव । ११ । २० ।

“उष्ट्रयानं समारुह्य खरयानन्तु

कामतः ॥”)

घर्म्मः । इति मेदिनी ॥ निष्ठुरः ।

राक्षसविशेषः ।

स तु रावणभ्राता । इतिं हेमचन्द्रः ॥ (यथा,

रामायणे । १ । ३ । २० ।

“वधं खरत्रिशिरसोरुत्थानं

रावणस्य च ॥”)

दैत्यः । इति त्रिकाण्डशेषः ॥ (यथा, भाग-

वते । २ । ७ । ३४ ।

“ये च प्रलम्बखरदर्दुरकेश्यरिष्ट-

मल्लेभकंसयवनाः कुजपौण्ड्रकाद्याः ॥”)

कण्टकिवृक्षविशेषः । इत्यजयः ॥ कङ्कः । काकः ।

कुररपक्षी । इति राजनिर्घण्टः ॥ (वत्सर-

विशेषः । यथा, ज्योतिषतत्त्वे ।

“उपद्रुतं जगत् सर्व्वं तस्करैर्मूषिकैः खगैः ।

पीडिताश्च प्रजाः सर्व्वाः देशभङ्गः

खरे प्रिये ! ॥”

पञ्चवर्णांशुकयुता चालनीया पुरः सताम् ॥”

**खनिः**, स्त्री, (खन विदारे + “खनिकष्यज्यसीति ।”
उणां । ४ । १३९ । इति इन् ।)
रत्नाद्युत्पत्तिस्थानम्।
खानि इति भाषा ॥ (यथा, रघुः । १८ । २२ ।
“उत्खातशत्रुं वसुधोपतस्थे
रत्नोपहारैरुदितैः खनिभ्यः ॥”)
तत्पर्य्यायः । आकरः २ । इत्यमरः । २ । ३ । ७ ॥
खानी ३ खनी ४ खानिः ५ । इति शब्दरत्ना-
वली ॥ गञ्जा ६ । इति हेमचन्द्रः ॥

**खनित्रं**, क्ली, (खन् + “अर्त्तिलूधूसूखनेति ।”
। ३ । २ । १८४ । इत्र ।) अस्त्रविशेषः । खन्ता इति
भाषा । तत्पर्य्यायः । अघदारणम् । इत्यमरः ।
२ । ९ । १२ ॥ (“तथाहि भागवते । ७ । २ । १५ ।
“केचित् खनित्रैर्बिभिदुः
सेतुप्राकारगोपुरान् ॥”)

**खनी**, स्त्री, (खनि + वा ङीष् ।) रत्नाद्युत्पत्ति-
स्थानम् । इति शब्दरत्नावली ॥

**खपुरं**, क्ली, (खं आकाशं पिपर्त्ति । पृ + कः ।)
घटः । इति हेमचन्द्रः ॥ (खे आकाशे चरं
पुरम् ।) ऊर्द्ध्वगं पुरम् । (स तु दैत्यपुरविशेषः ।
तदुत्पत्तिकथा यथा, महाभारते । ३ । १७३ ।
निवातकवचवधे । ७-११ ।
“पुलोमा नाम दैतेयी कालका च महासुरी ।
दिव्यवर्षसहस्रं ते चेरतुः परमं तपः ॥
तपसोऽन्ते ततस्ताभ्यां
स्वयम्भूरददद्वरम् ॥

**खमीलनं**, क्ली, (खानां इन्द्रियाणां मीलनम् ।)
तन्द्रा । इति शब्दरत्नावली ॥

**खमूलिः**, स्त्री, (खं शून्यभूतं मूलमस्याः पृषो-
दरात् साधुः । मूलराहित्यादस्यास्तथात्वम्।)
कुम्भिका । इति शब्दरत्नावली ॥ पाना इति
भाषा ॥

**खमूलिका**, स्त्री, (खमूलि + स्वार्थे कन् ततष्टाप् ।)
खमूली । कुम्भिका । इति शब्दरत्नावली ॥

**खम्ब**, गतौ, इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-
सेट् ।) ओष्ठवर्गशेषोपधः । खम्बति । इति
दुर्गादासः ॥

**खरं**, क्ली, (खाय अन्तरिन्द्रियाय खस्य वा तीव्रता-
रूपगुणं रातीति । ख + रा + कः ।) तीव्रम् ।
तत्पर्य्यायः । तिग्मम् २ तीक्ष्णम् ३ ॥ इत्य-
मरः । १ । ३ । ३५ ॥ (यथा, भागवते । ७ । ८ ।
२८ ।
कठिनम् । रविपार्श्वगः ।
पश्चिमद्वारगृहम् ।
इति शब्दार्थचिन्तामणिः ॥)

**खरकाष्ठिका**, स्त्री, (खरं उग्रं काष्ठं यस्याः ।
ततः कप् टाप् च । कापि अत
इत्वम् ।)
बला । इति राजनिर्घण्टः ॥

**खरकुटी**, स्त्री, (खरा क्षुरवत्तया तीव्रा कुटी ।)
नापितशालिका । नापितस्य गृहम्
। इति
त्रिकाण्डशेषः ॥

**खरकोणः**, पुं, (खरवत् कोणयति शब्दायते ।
अत्र सङ्कोचार्यकुणधातोः शब्दार्थ
इति बोध्यं
धातूनामनेकार्थत्वात् । यद्वा
कोणयति आत्मानं
सङ्कोचयति वा । कुण + अच् ।
“कर्म्मण्यण् ।”
३ । २ । १ । इति अण् वा ।)
तित्तिरिपक्षी ।
इति हेमचन्द्रः ॥

**खरगन्धनिभा**, स्त्री, (खरगन्धेन तीव्रगन्धेन
नितरां अतिशयेन भातीति । नि +
भा + कः ।)
नागबला । इति जटाधरः ॥

**खरगन्धा**, स्त्री, (खरो गन्धो यस्याः ।) नाग-
बला । इति राजनिर्घण्टः ॥

**खरगृहं**, क्ली, (खरस्य गर्द्दभस्य गृहम् ।) गर्द्दभ-
शाला । गादार घर इति भाषा ।
तत्पर्य्यायः ।
खरग्रहः २ । इति त्रिकाण्डशेषः ॥

**खरगेहं**, क्ली, (खरस्य गेहम् ।) खरगृहम् ।
इति शब्दरत्नावली ॥

**खरग्रहः**, पुं, (खरस्य ग्रहः गृहम् ।) खरगृहम्
।

| | | | |
|---|---|---|---|
| अगृह्णीतां वरं ते तु सुतानामपदुःखिताम् ।<br>अवध्यताञ्च राजेन्द्र ! सुरराक्षसपन्नगैः ॥<br>पुरं सुरमणियञ्च खेचरञ्च महाप्रभम् ।<br>सर्व्वरत्नैः समुदितं दुर्द्धर्षममरैरपि ॥<br>महर्षियक्षगन्धर्व्वपन्नगासुरराक्षसैः ।<br>सर्व्वकामगुणोपेतं वीतशोकमनामयम् ॥ | | | इति त्रिकाण्डशेषः । (खरो गृह्यते निपीड्यते<br>ऽस्मात् । ग्रह + अप् ।<br>गर्द्दभग्रहभेदः ॥) |

**खरघातनः**, पुं, (खरं उग्रं रोगविशेषं धात-
यतीति । हन् + स्वार्थे णिच् +
कर्त्तरि ल्युः ।)
नागकेशरः । इति शब्दचन्द्रिका ॥
(खरं एतन्नाम्ना
प्रसिद्धं राक्षसं धातयतीति ।
श्रीरामचन्द्रः ।
इति व्युत्पत्तिलब्धोऽर्थः ॥)

**खरच्छदः**, पुं, (खरस्तीव्रश्छदः पत्रमस्य ।) उलू-
कम् । उलुखड इति भाषा ॥
इत्कटः । ओकडा
इति भाषा । इति रत्नमाला ॥
कुन्दरतृणम् ।
इति राजनिर्घण्टः ॥

**खरणसः**, त्रि, (खरा तीक्ष्णा नासिका अस्य ।
“खुरखराभ्यां वा नस् ।” इति
वार्त्तिं पक्षे “अच्
नासिकायाः ।” ५ । ४ । ११८ ।
इत्यच् नसा-
देशश्च । ततः “पूर्ब्बपदात्
संज्ञायामगः ।” ८ । ४ । ३ ।
इति णत्वम् ।) तीक्ष्णनासिकः ।
तत्पर्य्यायः ।
खरणाः २ । इत्यमरः । २ । ६ ।
४६ ॥

**खरणाः**, [स्] त्रि, (खरा तीक्ष्णा नासिका यस्य ।
“खुरखराभ्यां वा नस् ।” वार्त्तिं
इति नसा-
देशः । “पूर्ब्बपदात् संज्ञायामगः
।” ८ । ४ । ३ ।
इति णत्वम् ।) तीक्ष्णनासिकः ।
इत्यमरः ।
२ । ६ । ४६ ॥

**खरत्वक्**, स्त्री, (खरा तीक्ष्णा त्वक् यस्याः ।) अल-

**खरपुष्पः**, पुं, (खरं पुष्पमस्य ।) मरुवकवृक्षः ।
इति रत्नमाला ॥

**खरपुष्पा**, स्त्री, (खरं पुष्पं खराणि पुष्पाणि वा
अस्याः ।) वर्व्वरा । इत्यमरः । २ । ४ । १३९ ॥
वावुइ तुलसी इति भाषा ॥ (यथास्याः पर्य्यायाः ।
“वर्व्वरी तुवरी तुङ्गी खरपुष्पाजगन्धिका ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
व्यवहारोऽस्या यथा चरके विमानस्थानेऽष्टमे-
ऽध्याये कटुकस्कन्धे । “एला-कुष्ठ-भल्लातकास्थि-
हिङ्गु-किलिम-मूलक-सर्षप-लशुन-करञ्ज-शिग्रुक-
मधुरशिग्रुक-खरपुष्पा” इत्यादिषु ॥)

**खरप्रियः**, पुं, (खलः धान्यकलायादिशस्यमर्द्दन-
स्थानं प्रियोऽस्य । लस्य रत्वम् ।) पारावतः ।
इति शब्दमाला ॥

**खरमञ्जरी**, स्त्री, (खरा मञ्जरी यस्याः ।) अपा-
मार्गः । इत्यमरः । २ । ४ । ८९ ॥ (स्वर्ज्जिकाद्य-
तैलेऽस्या व्यवहारो यथा, --
“स्वर्ज्जिकासिन्धुदन्त्यग्निरूपिकानलनीलिका।
खरमञ्जरीबीजेषु तैलं गोमूत्रपाचितम् ।
दुष्टव्रणप्रशमनं कफनाडीव्रणापहम् ॥”
इति वैद्यकचक्रपाणिसंग्रहे नाडीव्रणाधिकारे ॥)

**खररोमा** [न्,] पुं, (खरं रोम अस्य ।) नाग-
भेदः । इति जटाधरः ॥

**खरवल्लिका**, स्त्री, (खरा वल्लरी ततः स्वार्थे
कन् टाप् च ईकारस्य ह्रस्वत्वं रस्य लत्वञ्च ।)
नागबला । इति रत्नमाला ॥ गोरक्षचाउलिया
इति भाषा ॥

**खरशब्दः**, पुं, (खर उग्रः शब्दोऽस्य ।) कुरर-
पक्षी । इति राजनिर्घण्टः ॥

**खरशाकः**, पुं, (खरं शाकमस्य ।) भार्गी । इति
भावप्रकाशः ॥ वामणहाटी इति भाषा ॥

**खरस्कन्धः**, पुं, (खरः स्कन्धोऽस्य ।) प्रियालवृक्षः ।
इति राजनिर्घण्टः ॥

**खरस्कन्धा**, स्त्री, (खरः स्कन्धोऽस्याः ।) खर्ज्जूरी ।

**खराश्वा**, स्त्री, (खरैरश्यते भुज्यतेऽसौ । अश्
भोजने + “उल्वादयश्च ।” उणां । ४ ।
९५ ।
इति वः ।) मयूरशिखा । रुद्रजटा इति
ख्याता ।
क्षेत्रयमानिका इति केचित् ।
इत्यमरभरतौ ॥
(यथास्या गुणाः ।
“खराश्वा कफवातघ्नी
वस्तिरोगरुजापहा ॥”
इति चरके सूत्रस्थाने सप्तविंशेऽध्याये ॥)

**खराह्वा**, स्त्री, (खरं तीव्रगन्धं आह्वयतीति । ह्वे +
कः । स्त्रियां टाप् ।) अजमोदा । इति
राज-
निर्घण्टः ॥ (पर्य्यायोऽस्या यथा, --
“अजगन्धाजमोदाख्या खराह्वा कारवी च
सा ॥”
इति वैद्यकरत्नमालायाम् ॥)

**खरिका**, स्त्री, (खात् शून्यात् गन्धविशेषं रातीति ।
रा + कः ततः संज्ञायां कन् टाप् अत
इत्वञ्च ।)
कस्तूरीभेदः । सा तु चूर्णाकृतिः । इति
राज-
निर्घण्टः ॥

**खरुः**, पुं, (खन् + “खरुशङ्कुपीयुनीलङ्गुलिगु ।”
उणां १ । ३७ । इति कुः रश्चान्तादेशः
।)
शिवः । हयः । दर्पः । दन्तः । इति
मेदिनी ।
रे । २१ ॥ कामदेवः । इति
सिद्धान्तकौमुद्या-
मुणादिवृत्तिः ॥ शुक्लवर्णः । इति
हेमचन्द्रः ॥

**खरुः**, त्रि, (खन् + “खरुशङ्कुपीयुनीलङ्गुलिगु ।”
उणां १ । ३७ । इति कुः रश्चान्तादेशः
।)

म्बुषा । लज्जालुप्रभेदः । इति भावप्रकाशः ॥

**खरदण्डं**, क्ली, (खरः कर्कशः दण्डो मृणालं यस्य कण्टकावृततयेति भावः ।) पद्मम् । इति धरणी ॥

**खरदला**, स्त्री, (खरं कर्कशं दलं पत्रमस्याः ।) क्षेमाफला । इति शब्दचन्द्रिका ॥ डुमुर इति भाषा ॥

**खरदूषणः**, पुं, (खरं उग्रं दूषणं मादकताजनक-दोषो यत्र ।) धुस्तूरः । इति शब्दचन्द्रिका ॥ खरेण राक्षसेन सह दूषणश्च ॥ (त्रि, बहु-दोषः ॥)

**खरध्वंसी** [न्,] पुं, (खरं स्वनामविश्रुतं राक्षसं ध्वंसयतीति । ध्वन्स् + णिच् + णिनिः ।) श्रीरामः । इति शब्दरत्नावली ॥ (खरं कंसचरं दैत्यं ध्वंसयतीति । कृष्णः । इति व्युत्पत्ति-लब्धोऽर्थः ॥)

**खरनादिनी**, स्त्री, (खरं कर्कशं नदतीति । नद् + णिनिः । ततः स्त्रियां ङीप् ।) रेणुकानामगन्ध-द्रव्यम् । इति शब्दचन्द्रिका ॥

**खरपत्रः**, पुं, (खरं पत्रमस्य ।) क्षुद्रपत्रतुलसी । शाकाख्यवृक्षः । इति रत्नमाला ॥ यावनाल-शरः । हरिदर्भः । मरुवकः । इति राज-निर्घण्टः ॥

**खरपत्रकः**, पुं, (खरपत्र + कप् संज्ञायां कन् इति राजनिर्घण्टः ॥

**खरस्वरा**, स्त्री, (खरं रौद्रं स्वृणाति नाशयतीति । स्वृ + अच् ।) वनमल्लिका । इति रत्नमाला ॥

**खरा**, स्त्री, (खं आकाशं लाति गृह्णातीति । ला + कः । लस्य रत्वम् ।) देवताडवृक्षः । इत्यमरः । २ । ४ । ६९ ॥

**खरांशुः**, पुं, (खरा अंशवो रश्मयो यस्य ।) सूर्य्यः । इति त्रिकाण्डशेषः ॥

**खरागरी**, स्त्री, (खरं आगिरतीति । आ + गॄ + अच् । ततो गौरादित्वात् ङीष् ।) देवताड-वृक्षः । इत्यमरटीकायां रायमुकुटः ॥ (पर्य्यायो-ऽस्या यथा, वैद्यकरत्नमालायाम् ।
“वेणी जीमूतकश्चाखुविवाजिलोमशच्छदः ।
खरागरी कदम्बश्च खुड्डाको देवताडकः ॥”)

**खराब्दाङ्कुरकं**, क्ली, (खराब्दात् तीव्रगर्ज्जनमेघात् अङ्कुरयतीति । अङ्कुरि + ण्वुल् । अस्य हि नूतनजलदध्वनेरङ्कुरोत्पत्तेस्तथात्वम् ।) वैदूर्य्य-मणिः । इति राजनिर्घण्टः ॥

श्वेतः । इति मेदिनी । रे । २२ ॥ निषिद्ध्वैकरुचिः । इति हेमचन्द्रः ॥ निर्बोधः । क्रूरः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥ तीक्ष्णः । इति संक्षिप्तसारे उणादिवृत्तिः ॥

**खर्ज्ज**, व्यथामृजोः । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) खर्ज्जति । मृट् मार्ज्जनम् । इति दुर्गादासः ॥

**खर्ज्जिका**, स्त्री, (खर्ज्ज + ण्वुल् + स्त्रियां टाप् अत इत्वञ्च ।) अवदंशः । इति शब्दचन्द्रिका ॥

**खर्ज्जुः**, पुं, (खर्ज्ज + उन् ।) खर्ज्जूरी । कण्डुः । कीटः । इति हेमचन्द्रः ॥

**खर्ज्जुरं**, क्ली, (खर्ज्ज + उरच् ।) रौप्यम् । इत्य-मरटीकायां रमानाथः ॥

**खर्ज्जूः**, स्त्री, (खर्ज्ज व्यथने + “कृषिचमितनीति ।” उणां १ । ८२ । इति ऊः ।) कण्डुः । कीटः । इत्युणादिकोषः ॥

**खर्ज्जूघ्नः**, पुं, (खर्ज्जूं कण्डूयनं हन्तीति । हन् + टक् ।) चक्रमर्द्दः । धत्तूरः । अर्कवृक्षः । इति राजनिर्घण्टः ॥

**खर्ज्जूरं**, क्ली, (खर्ज्जूरस्य फलम् । फले विहि-तस्याणो लुप् ।) खर्ज्जूरफलम् । अस्य गुणाः । मधुरत्वम् । शीतलत्वम् । गुरुत्वम् । क्षयाभि-घातदाहवातपित्तरोगे हितत्वम् । बृंहणत्वम् । शुक्रवृद्धिकारित्वञ्च । इति राजवल्लभः ॥ (“अपक्वखर्ज्जूरफलं त्रिदोषशमनं मतम् ।

वा ।) तिलकवृक्षः । इति

शब्दचन्द्रिका ॥

**खरपत्री**, स्त्री, (खरपत्र + गौरादित्वात् ङीष् ।)

गोजिह्वावृक्षः । काकोदुम्बरिका ।

इति राज-

निर्घण्टः ॥

**खरपात्रं**, क्ली, (खरं कठोरं कठिनं वा पात्रम् ।)

लौहपात्रम् । इति त्रिकाण्डशेषः ॥

**खरपादाढ्यः**, पुं, (खरैः दृढैः पादैर्मूलैराढ्यः ।)

कपित्थवृक्षः । इति शब्दचन्द्रिका

॥

पक्वमेव हितं श्रेष्ठं त्रिदोषशमनं परम् ॥”

इति प्रथमे स्थाने दशमेऽध्याये

हारीतेनोक्तम् ॥

यथा च चरके सूत्रस्थाने सप्तविंशेऽध्याये

।

“मधुरं बृंहणं वृष्यं खर्ज्जूरं गुरु शीतलम्

।

क्षयेऽभिघाते दाहे च वातपित्ते च तद्धितम् ॥”) रौप्यम् । हरितालम् । इति हेमचन्द्रः ॥ खलः । इति मेदिनी ॥

**खर्ज्जूरः**, पुं स्त्री, (खर्ज्ज मार्ज्जने + “खर्ज्जिपिञ्जा- दिभ्य ऊरोलचौ ।” उणां ४ । ९० । इति ऊरः ।) खर्ज्जूरीवृक्षः । खेजुर गाछ इति भाषा ॥ अस्य मस्तिष्कगुणाः । स्वादुत्वम् । तिक्तत्वम् । कषायत्वम् । मूत्रातङ्करोगनाशि- त्वम् । बलप्राणशुक्रवृद्धिकारित्वञ्च । इति राज- वल्लभः ॥
(“खर्ज्जूरश्च विषं हन्ति तदा वै नात्र संशयः ।” इति वैद्यकभैषज्यधन्वन्तरिग्रन्थे विषाधिकारे ॥) वृश्चिकः । इति मेदिनी ॥

**खर्ज्जूरिका**, स्त्री, (खर्ज्जूर + स्त्रियां गौरादित्वात् ङीष् ततः संज्ञायां कन् टाप् च ततो ह्रस्वः ।) मिष्टान्नविशेषः । इति पाकराजेश्वरः । मिटा गजा इति भाषा ॥

**खर्ज्जूरी**, स्त्री, (खर्ज्जूर + गौरादित्वात् ङीष् ।) वनखर्ज्जूरः । इत्यमरः । २ । ४ । १७० ॥ खर्ज्जूर- वृक्षः । खेजरगाछ इति भाषा । तत्पर्य्यायः । खरस्कन्धा २ दुष्प्रधर्षा ३ दुरारुहा ४ निश्रेणी ५ कषायी ६ यवनेष्टा ७ हरप्रिया ८ । अस्या गुणाः । कषायत्वम् । पक्वे गौल्यत्वम् । कषायि- कत्वम् । पित्तकृमिनाशित्वम् । बृंहणत्वम् । कफ- शुक्रवृद्धिकारित्वञ्च । इति राजनिर्घण्टः ॥ तत्- पर्य्यायगुणाः ।
“भूमिखर्ज्जूरिका स्वाद्वी दुरारोहा मृदुच्छदा ।
तथा स्कन्धफला काककर्कटी स्वादुमस्तका ॥ * ॥
पिण्डखर्ज्जूरिका त्वन्या सा देशे पश्चिमे भवेत् ।
खर्ज्जूरी गोस्तनाकारा परद्द्वीपादिहागता ॥
जायन्ते पश्चिमे देशे सा च्छोहारेति कीर्त्त्यते ।
खर्ज्जूरीत्रितयं शीतं मधुरं रसपाकयोः ॥
स्निग्धं रुचिकरं हृद्यं क्षतक्षयहरं गुरु ।
तर्पणं रक्तपित्तघ्नं पुष्टिविष्टम्भशुक्रदम् ॥
कोष्ठमारुतकृद्बल्यं वाह्यवातकफापहम् ।
त्वेनास्त्यस्या इति अच् ततो गौरादित्वात् ङीष् ।) कर्परीतुत्थम् । इत्यमरटीका ॥

**खर्परीतुत्थं**, क्ली, (खर्पर्य्येव तुत्थं खर्परीरूपं तदाख्यं तुत्थं वा ।) तुत्थविशेषः । तत्पर्य्यायः । खर्परीरसकम् २ चक्षुष्यम् ३ अमृतोत्पन्नम् ४ तुत्थम् ५ खर्परिका ६ । अस्य गुणाः । कटु- त्वम् । तिक्तत्वम् । चक्षुर्हितत्वम् । रसायन- त्वम् । त्वग्दोषशमनत्वम् । दीप्यत्वम् । बल- पुष्टिप्रदत्वञ्च । इति राजनिर्घण्टः ॥

**खर्ब्ब**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं- सकं-सेट् ।) खर्ब्बति । इति दुर्गादासः ॥

**खर्ब्ब**, क्ली, (खर्ब्ब + अच् ।) संख्याविशेषः । इति मेदिनी ॥ तत्तु दशाब्जसंख्या । इति लीलावती ॥ दशवृन्दसंख्या । १०,०००,०००,००० । इति स्मृतिः ॥ (सहस्रमहापद्मसंख्या । इति गोः रामायणम् । यथा, तत्रैव । ६ । ४ । ५६-५९ ।
“शतं शतसहस्राणां कोटिमाहुर्मनीषिणः ।
शतं कीटिसहस्राणां शङ्क इत्यभिधीयते ॥
शतं शङ्कसहस्राणां वृन्दमाहुर्मनीषिणः ।
शतं वृन्दसहस्राणां महावृन्दमिति स्मृतम् ॥

**खर्व्वूजं**, क्ली, (खर्व्वू + जन् + डः ।) षड्भुजा । इति भावप्रकाशः ॥ खरवुजा इति भाषा ॥
(अस्य लक्षणं गुणाश्च यथा, --
“दशाङ्गुलन्तु खर्व्वूजं कथ्यते तद्गुणा अथ ।
खर्व्वूजं मूत्रलं बल्यं कोष्ठशुद्धिकरं गुरु ॥
स्निग्धं स्वादुतरं शीतं वृष्यम्पित्तानिलापहम् ।
तेषु यच्चाम्लमधरं सक्षारश्च रसाद्भवेत् ॥
रक्तपित्तकरन्तत्तु मूत्रकृच्छ्रकरम्परम् ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**खल**, क्षलजार्थे । इति कविकल्पद्रुमः ॥ (भ्वां- परं- अकं-सेट् ।) क्षलजार्थश्चालचयौ । चालश्चेह स्खलनम् । खलति खलो धर्म्मात् । इति दुर्गा- दासः ॥

**खलं**, क्ली, (खल् + अच् ।) भूः । स्थानम् । कल्कः । इति मेदिनी । खलाधानम् । इति हेमचन्द्रः ॥ धान्यमाडिवार खामार इति भाषा ॥ (यथा, मनुः । ११ । १७ ।
“खलात् क्षेत्रादगाराद्वा यतो वाऽप्युपलभ्यते ॥”)

**खलः**, पुं, (खल् + अच्) सूर्य्यः । इति भूरि- प्रयोगः ॥ तमालवृक्षः । इति शब्दचन्द्रिका ॥ धत्तूरवृक्षः । इति राजनिर्घण्टः ॥ (प्रवाहिका- रोगे भेषजादिविहितपथ्यविशेषः । यथा, चिकित्सास्थाने नवमेऽध्याये वाभटेनोक्तम् ।

ज्वराभिघातक्षुत्तृष्णाकासश्वासनिवारकम्॥
मदमूर्च्छामरुत्पित्तमद्योद्भूतगदान्तकृत् ।
महतीभ्यां गुणैरल्पा स्वल्पा खर्ज्जूरिका स्मृता ॥ * ॥
खर्ज्जूरीतरुतोयन्तु मदपित्तकरं भवेत् ।
वातश्लेष्महरं रुच्यं दीपनं बलशुक्रकृत् ॥ * ॥
सुनेपाली तु मृदुला बलिहीनफला च सा ।
सुनेपाली श्रमभ्रान्तिदाहमूर्च्छास्रपित्तहृत्॥"
इति भावप्रकाशः ॥

**खर्द्द**, दशने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) दशनं दन्तकरणकक्रिया । खर्द्दति मूलकं लोकः । केचित्तु दन्दशूके इति पठित्वा दन्दशूकः दन्दशूककर्त्तृकक्रियेत्याहुः । इति दुर्गादासः ॥

**खर्परः**, पुं, (कर्परः । पृषोदरात् खत्वम् ।) तस्करः । धूर्त्तः । भिक्षापात्रम् । कपालम् । इति मेदिनी ॥ छत्रम् । इति त्रिकाण्डशेषः ॥

**खर्परी**, स्त्री क्ली, (खर्परं उपधातुभेदकारक-

महावृन्दसहस्राणां शतं पद्मं परिश्रुतम् ।
शतं पद्मसहस्राणां महापद्मं विभाव्यते ॥
महापद्मसहस्राणां तथा खर्ब्बमिहोच्यते ॥")

**खर्ब्बः**, पुं, (खर्ब्ब + अच् ।) कुवेरस्य निधि-विशेषः । इति शब्दरत्नावली ॥ दशवृन्दसंख्या । इति स्मृतिः ॥ कुब्जकवृक्षः । इति राजनिर्घण्टः । (वामनः । इत्यमरः । २ । ६ । ४६ ॥ स्त्री । गायत्रीस्वरूपा भगवती । यथा, देवीभाग-वते । १२ । ६ । ३८ ।
"खड् गखेटकरा खर्ब्बा खेचरी खगवाहना ॥")

**ख(र्व्व)र्ब्बः**, त्रि, (खर्ब्ब + अच् ।) क्षुद्रः । खाटो छोट इत्यादि भाषा । तत्पर्य्यायः । न्यङ् २ नीचः ३ वामनः ४ ह्रस्वः ५ । इत्यमरः । ३ । १ । ७० ॥ निखर्व्वः ६ खदृतः ७ खर्व्वशाखः ८ । इति हेमचन्द्रः ॥ अनुच्चः ९ अनायतः १० । इति जटाधरः ॥

**खर्ब्बशाखः**, त्रि, (खर्ब्बा शाखा हस्तपदाद्यवयवाः यस्य ।) वामनः । खर्व्वः । इति हेमचन्द्रः ॥

**खर्म्मः**, पुं, (खुर + बाहुलकात् मक् पृषोदरात् उकारस्य लोपः ।) पौरुषम् । कोषजांशुकम् । पट्टवस्त्रम् । इति मेदिनी ॥

**खर्व्व**, गर्व्वे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-

"कल्को विल्वशलाटूनां तिलकल्कश्च तत्समः ।
दध्नः सरोऽम्लः सस्नेहः खलो हन्ति प्रवाहिकाम् ॥")

**खलः**, त्रि, नीचः । अधमः । इति मेदिनी ॥ क्रूरः । (यथा, मृच्छकटिकायां १ मे अङ्के ।
"खलस्वभावं भवितव्यतां तथा चकार सर्व्वं किल शूद्रको नृपः ॥")
तत्पर्य्यायः । दुर्जनः २ पिशुनः ३ । इत्यमरः । ३ । १ । ४७ ॥ दुर्व्विधः ४ विश्वकद्रुः ५ नृशंसः ६ घातुकः ७ क्रूरः ८ पापः ९ । इति जटाधरः ॥

**खलतिः**, पुं, (स्खलन्ति केशा अस्मात् । स्खल सञ्चलने + "खलतिः ।" उणां ३ । ११२ । इति निपातनात् साधुः ।) इन्द्रलुप्तरोगयुक्तः । टाक-पडा माथा इति भाषा । तत्पर्य्यायः । खल्वाटः २ ऐन्द्रलुप्तिकः ३ शिपिविष्टः ४ वभ्रु-रथः ५ । इति हेमचन्द्रः ॥ खल्लीटः ६ । इति त्रिकाण्डशेषः । खल्लिटः ७ । इति शब्दरत्नावली ॥
("रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम् ॥
प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः ।
रोमकूपान् रुणद्ध्यस्य तेबान्येषामसम्भवः ॥
तदिन्द्रलुप्तं रूढ्याञ्च प्राहुश्चाचेति चापरे ।
खलतेरपि जन्मैवं सदनं तत्र तु क्रमात् ॥"
इति वाभट्टे उत्तरस्थाने त्रयोविंशेऽध्याये ॥)

**खलपूः**, त्रि, (खलं भूमिं पुणाति परिष्कृतं करो-

अकं-सेट् ।) अन्तःस्थवकारान्तोऽयम् ॥

खर्व्वति । इति दुर्गादासः ॥

**खर्व्वः**, त्रि, (खर्व्व + अच् ।) ह्रस्वः । वर्ग्यबका-

रान्तखर्ब्बशब्दार्थोऽप्यत्र ॥

**खर्व्वटः**, पुं क्ली, (खर्व्व् + अटन्) चतुःशतग्राम-

मध्यस्थलम् । इति भूरिप्रयोगः ॥

पर्व्वतप्रान्त-

ग्रामः । इति श्रीभागवतटीकायां

श्रीधर-

स्वामी ॥

**खर्व्वुरा**, स्त्री, (खर्व्व् + उरच् टाप् च ।)

तरदीवृक्षः । इति राजनिर्घण्टः ॥

तीति । खल + पू + क्विप् ।)

मार्जनकारी ।

झाड़ुकष फरास इत्यादि भाषा ।

तत्पर्य्यायः ।

बहुकरः २ । इत्यमरः । ३ । १ । १७ ॥

**खलमूर्त्तिः**, पुं, (खल इव अनिष्टकारकत्वात्

उग्रा मूर्त्तिरस्य ।) पारदः । इति

शब्दचन्द्रिका ॥

पारा इति भाषा ॥

**खलाधारा**, स्त्री, (खल आधारो यस्याः ।) तैल-
पायिका । इति जटाधरः ॥ आरसुला इति
भाषा ॥

**खलिः**, पुं, (खल + इन् ।) तैलकिट्टम् । इति
राजनिर्घण्टः ॥ (यथा, भारतरत्नाकरे । २ ।
९८ ।
“स्थाल्यां वैदूर्य्यमय्यां पचति तिलखलिं
चन्दनै-
रिन्धनौघैः ॥”)

**खलिनः**, पुं क्ली, (खे अश्चमुखच्छिद्रे लीनः पृषो-
दरादित्वात् वा ह्रस्वः ।) खलीनः । इत्यमर-
टीकायां रायमुकुटः ॥ (यथा, कादम्बर्य्याम्
“उभयतः खलिनकनककटकावलग्नाभ्यां
पदे पदे
कृताकुञ्चनप्रयत्नाभ्यां
पुरुषाभ्यामवकृष्यमाणम् ।”
अश्वमित्यर्थः ॥)

**खलिनी**, स्त्री, (खलानां समूहः । “इनि त्रकड्यचश्च
।”
४ । २ । ५१ । इति इनिः । ततो ङीष् ।)
खलसमूहः । धानेर अनेक खामार इति
भाषा ॥ तत्पर्य्यायः । खल्या २ । इत्यमरः
।
३ । २ । ४२ ॥ तालमूली । इति रत्नमाला
॥

**खलिशः**, पुं, (खे जलादूद्द्ध्वाकाशे लिशति ईषदुद्-
गच्छतीति । यद्वा, खे जलाभ्यन्तरे छिद्रादौ
लिशति स्वल्पीभावेन तिष्ठतीति । लिश् +
कः ।)
स्वनामख्यातमत्स्यः । खलिशामाछ इति
भाषा ॥
तत्पर्य्यायः । कङ्कत्रोटः २ खलेशयः ३ ।
इति
शब्दरत्नावली ॥ अस्य गुणाः । ग्राहित्वम् ।
कषायत्वम् । वायुकोपनत्वम् । रूक्षत्वम् ।
लघु-
शाकुन्तले १ मे अङ्के ।
“न खलु न खलु वाणः
सन्निपात्योऽयमस्मिन्
मृदुनि मृगशरीरे तूलराशाविवाग्निः ॥”)

**खलुक्**, [ज्] पुं, (खं इन्द्रियं दर्शनेन्द्रियं लुञ्ज-
यति हन्तीति । ख + लुञ्ज + क्विप् ।)
अन्धकारः ।
इति त्रिकाण्डशेषः ॥

**खलुरेषः**, पुं, (खलुरिष्यते वध्यतेऽसौ । खलु + रिष्
+ कर्म्मणि घञ् ।) मृगभेदः । इति
शब्दचन्द्रिका ॥

**खलूरिका**, स्त्री, (खलु + रिष् + निपातनात्
साधुः ।) शस्त्राभ्यासभूमिः । इति
हेमचन्द्रः ॥

**खलेधानी**, स्त्री, (खले धीयन्ते वृषभा अस्मिन् ।
धा + अधिकरणे ल्युट् ततो ङीप् ।) मेधिः
।
खलेपशुबन्धनदारु । इति जटाधरः ॥

**खलेवाली**, स्त्री, (खले वाल्यन्ते चाल्यन्तेऽत्र
वृषभा इति । वल् + अधिकरणे घञ् गौरा-
दित्वात् ङीष् ।) खले गोबन्धनदारु । इति
हेमचन्द्रः ॥ मेइ काठ इति भाषा ॥ (यथा,
कात्यायनश्रौतसूत्रे । २२ । ३ । ४८ ।
“खलेवालीयूपो लाङ्गलेषा ॥”)

**खलेशः**, पुं, (खे जलादूद्द्ध्वाकाशे गमनकाले
लिशति संश्लिष्यतीति । लिश् + अच् ।)
खलिश-
मत्स्यः । इति हारावली ॥

**खलेशयः**, पुं, (खलेशं जलादूद्ध्वस्थाकाशसंसर्गं
यातीति । या + कः ।) खलिशमत्स्यः ।
इति
शब्दरत्नावली ॥

**खल्या**, स्त्री, (खलानां समूहः । यत् ।) खलिनी ।
लकात् डः ।) खलतिः । इति
त्रिकाण्डशेषः ॥
(तच्चिकित्सा यथा, गारुडे । १८० । १
।
“सप्तरात्रात्प्रजायन्ते खल्लीटस्य कचाः
शुभाः ।
दग्धहस्तिदन्तलेपात्
साजाक्षीररसाञ्जनात् ॥”)

**खव**, ग भूतिपूत्योरुत्पत्तौ । इति कविकल्पद्रुमः ॥
(क्र्यां-परं-अकं-सेट् ।) भूतिः सम्पत्तिः
पूतिः
पवित्रता तयोरुत्पत्तिः प्रादुर्भावः ॥

**खवल्ली**, स्त्री, (खे आकाशे स्थिता वल्ली ।)
आकाशवल्ली । इति राजनिर्घण्टः ॥
(यथास्याः
पर्य्याया गुणाश्च । अथ आकाशवल्ली ।
अमर-
वेलि इति च भाषा ।
“आकाशवल्ली तु बुधैः कथितामरवल्लरी
।
खवल्ली ग्राहिणी तिक्ता पिच्छिला
क्ष्मामयापहा ।
तुवराग्निकरी हृद्या पित्तश्लेष्मामनाशिनी
॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रममे
भागे ॥)

**खवारि**, क्ली, (खे आकाशे स्थितं वारि उद-
कम् । खादागतं वारि वा ।) दिव्योदकम्
।
इति राजनिर्घण्टः ॥

**खवास्पः**, पुं, (खे आकाशे शून्ये स्थितो वास्पः ।)
हिमम् । इति हारावली ॥

**खशः**, पुं, देशविशेषः । इति त्रिकाण्डशेषः ॥
(तद्देशवासिनि तद्देशनृपे च बहुषु अणो
लुक् ।)
तथा हि मनुः । १० । ४४ ।

त्वम् । शूलहरत्वम् । किञ्चिदामविनाशित्वञ्च ।
इति राजवल्लभः ॥ खल्लिशोऽपि पाठः ॥

**खलीकारः**, पुं, (खल + कृ + घञ् । अभूततद्भावे

च्विः ।) अपकारः । इति जटाधरः ॥ (निर्भत्स-
नम् । इति चिन्तामणिः ॥)

**खलीनः**, पुंक्ली, (खे अश्वमुखच्छिद्रेलीनः ।) कविका ।

इत्यमरः । २ । ८ । ४९ ॥ कडियालि इति भाषा ॥
(यथा, महाभारते । १ । १९९ । १५ ।
"शतं रथानां वरहेममालिनां
चतुर्युजां हेमखलीनशालिनाम् ॥")

**खलु**, व्य, (खल् + बाहुलकात् उन् ।) निषेधः ।

वाक्यालङ्कारः । (यथा, माघे । २ । ७० ।
"सम्प्रत्यसाम्प्रतं वक्तुमुक्ते मुषलपाणिना ।
निर्द्धारितेऽर्थे लेखेन खलूक्त्वा खलु वाचिकम् ॥"
"अत्राद्यखलुशब्दः प्रतिषेधार्थे द्वितीयः वाक्या-
लङ्कारे ॥" इति तट्टीकायां मल्लिनाथः ॥)
जिज्ञासा ।
(यथा, गणरत्ने । "स खल्वधीते वेदम् ?") अनु-
नयः । इत्यमरः । ३ । ४ । १८ ॥ (यथा, गणरत्ने ।
"न खलु न खलु मुग्धे ! साहसं कार्य्यमेतत्" ॥)
निश्चितम् । (यथा, कुमारे । ४ । २८ ।
"दयितास्वनवस्थितं नृणां
न खलु प्रेम चलं सुहृज्जने ॥")
पदवाक्यादिपूरणम् । (यथा, रामायणे । ३ । ४१ । ६ ।
"वध्याः खलु न वध्यन्ते सचिवास्तव रावण ! ।
ये त्वामुत्पथमारूढं न निगृह्णन्ति सर्व्वशः ॥")
वीप्सा । इति शब्दरत्नावली ॥ (यथा, --

इत्यमरः । ३ । ३ । ४२ ॥ धानमाडार अनेक
खामार इति भाषा ॥

**खल्लः**, पुं, (खलतीति क्विप् खल् तं लातीति ।

ला आदाने + कः ।) वस्त्रप्रभेदः । गर्त्तः ।
चर्म्म । चातकपक्षी । इति मेदिनी ॥ दृतिः ।
इति हेमचन्द्रः ॥ मशक इति भाषा । औषध-
मर्द्दनपात्रम् । खल इति भाषा । इति वैद्यकम् ॥
("अजाशकृत्तुषाग्निञ्च भूगर्भे द्वितयं क्षिपेत् ।
तस्योपरिस्थितं खल्लं तप्तखल्लमिति स्मृतम् ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणाधि-
कारे ॥)

**खल्लिका**, स्त्री, (खल्ल + संज्ञायां कन् ततष्टाप् ।

कापि अत इत्वम् ।) ऋजीषम् । पिष्टकादि-
भर्जनपात्रम् । इति शब्द चन्द्रिका ॥

**खल्लिटः**, त्रि, (खल्ल + इन् । खल्लि इव टलतीति ।

टल् + डः ।) खलतिः । इति शब्दरत्नावली ॥

**खल्ली**, स्त्री, (खल्ल + गौरादित्वात् ङीष् ।) हस्त-

पादावमर्द्दनाख्यरोगः । इति मेदिनी ॥ तस्य
लक्षणं यथा, माधवकरः ।
"खल्ली तु पादजङ्घोरुकरमूलावमोटनी ॥"
तच्चिकित्सा यथा, भावप्रकाशे ।
"कुष्ठसैन्धवयोः कल्कश्चुक्रतैलसमन्वितः ।
सुखोष्णो मर्द्दने योज्यः खल्लीशूलनिवारणः ॥"
अपि च भैषज्यरत्नावल्याम् ।
"खल्ल्यां स्निग्धाम्ललवणैः
स्वेदोन्मादोपनाहनम् ॥"

**खल्लीटः**, त्रि, (खल्लीव टलतीति । टल् + बाहु-

"पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा जवनाः शकाः ।
पारदाः पह्नवाश्चीनाः कीराता दरदाः खशाः ॥")

**खशा**, स्त्री, मुरानामगन्धद्रव्यम् । इति शब्द-

चन्द्रिका ॥ (कखयोस्तुल्यार्थत्वात् खः प्रजा-
पतिर्दक्षः आदौ तद्गर्भे कन्यात्मकबीजभावेन
शेते इति । ख + शी + डः ततष्टाप् ।) दक्ष-
कन्या । सा च कश्यपपत्नी । यथा, --
"धर्म्मपत्न्यः समाख्याताः कश्यपस्य वदाम्यहम् ।
अदितिर्द्दितिर्द्दनुः काला अनायुः सिंहिका मुनिः ॥
कद्रुः प्राधा इरा क्रोधा विनता सुरभिः खशा ॥"
"इरा वृक्षलतावल्लीः तृणजातीश्च सर्व्वशः ।
खशा च यक्षरक्षांसि मुनिरप्सरसस्तथा ॥"
इति गारुडे ६ अध्यायः ॥

**खशेटः**, पुं, (खं शेटति इति । शिट् अनादरे

अण् । अस्य गमनसमये खस्यानादरत्वेन गति-
योग्यत्वाभावेऽपि तद्वत्तानादरेण गमनात्तथा-
त्वम् ।) खलिशमत्स्यः । इति त्रिकाण्डशेषः ॥

**खश्वासः**, पुं, (खस्य आकाशस्य श्वास इव ।)

वायुः । इति त्रिकाण्डशेषः ॥

**खष**, वधे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-

सेट् ।) खषति । इति दुर्गादासः ॥

**खष्पं**, क्ली, (खन् + "खष्पशिल्पवाष्पेति ।" उणां

३ । २८ । इति पप्रत्ययात् निपातनात्
सिद्धम् ।)

| | | |
|---|---|---|
| | | क्रोधः । बलात्कारः । इत्युणादिकोषः ॥<br>**खसः**, पुं, (खं हस्तादीन्द्रियं स्यति निश्चलीकरो-<br>तीति । सो + कः ।) पामा । खोस इति<br>भाषा ॥<br>तत्पर्य्यायः । पाम २ कच्छूः ३<br>विचर्च्चिका ४<br>इति हेमचन्द्रः ॥ (पामन्शब्दोस्य विवरणं<br>व्याख्येयम् ॥) |

**खसकन्दः**, पुं, (खस इव कन्दोऽस्य ।) क्षीर-

कञ्चुकीवृक्षः । इति रत्नमाला ॥

खसगन्धोऽपि

क्वचित् पाठः ॥

**खसतिलः**, पुं, (खसपूय इव तिलति स्निह्यतीति ।

तिल स्नेहे + कः । अस्य

शुक्लस्नेहनिःसरणात्

तथात्वम् ।) खस्खसः । इति

राजनिर्घण्टः ॥

(गुणादयोऽस्य यथा, --

"तिलभेदः खसतिलः

कासश्वासहरः स्मृतः ।

स्याद्वा खसफलोद्भूतं वल्कलं

शीतलं लघु ॥

ग्राहि तिक्तं कषायञ्च वातकृच्च

कफास्रहृत् ।

धातूनां शोषणं रूक्षं

मदकृद्वाग्विवर्द्धनम् ॥

मुहुर्मोहकरं रुच्यं सेवनात्

पुंस्त्वनाशनम् ॥"

इति भावप्रकाशस्य पूर्ब्बखण्डे

प्रथमे भागे ॥)

**खसमः**, पुं, (खेनाकाशेन समः ।) बुद्धः । इति

त्रिकाण्डशेषः ॥

**खसम्भवा**, स्त्री, (खे सम्भवतीति । सम् + भू + अच् ।)

आकाशमांसी । इति राजनिर्घण्टः

॥

**खसर्पणः**, पुं, (खे शून्ये सर्पणमस्य योगप्रभा-

वात् ।) बुद्धविशेषः । इति

त्रिकाण्डशेषः ॥

**खसात्मजः**, पुं, (खसायाः कश्यपपत्न्या आत्मजः ।)

राक्षसः । इति त्रिकाण्डशेषः ॥

**खसृमः**, पुं, विप्रचित्तिदैत्यपुत्रः । यथा, --

अथ अफेनम् ।

उक्तं खसफलक्षीरमाफुक्रमहिफेनकम् ।

आफुकं शोषणं ग्राहि श्लेष्मघ्नं वातपित्तलम् ॥

तथा खसफलोद्भूतं वल्कलप्रायमित्यपि ।

अथ खसबीजम् ।

उच्यन्ते खसबीजानि ते खाखसतिला अपि ॥

खसबीजानि बल्यानि वृष्याणि सुगुरूणि च ।

जनयन्ति कफं तानि शमयन्ति समीरणम् ॥"

इति भावप्रकाशः ॥

**खाजिकः**, पुं, (खे ऊद्‌र्ध्वदेशे आजः क्षेपः तत्र

साधुः ठन् ।) लाजाः । इति हारावली ॥

खै इति भाषा ॥

**खाटः** पुं, स्त्री, (खे ऊर्द्ध्वमार्गे अटत्यनेन । अट् +

करणे घञ् ।) शवरथः । इति शब्दरत्नावली ॥

मरार खाट् इति भाषा ॥

**खाटिः**, स्त्री, (खट् काङ्क्षायां बाहुलकात्

इञ् ।) असद्‌ग्रहः । किणः । शवरथः । इति

मेदिनी ॥

**खाटिका**, स्त्री, (खाटि + स्वार्थे संज्ञायां वा कन्

ततष्टाप् ।) खाटः । शवरथः । इति शब्द-

रत्नावली ॥

**खाण्डवं**, क्ली, (खाण्डव्यास्तदाख्यया प्रसिद्धाया

नगर्य्या जातम् । खाण्डवी + अण् । यदुक्तं

कालिकापुराणे ९० अध्याये ।

"पुरा तु विजयो राजा खाण्डवीं नाम तां पुरीम् ।

भङ्क्त्वा वनं ततश्चक्रे तेन तत् खाण्डवं वनम्

॥")

वनविशेषः । तद्विवरणं यथा, --

"विरूपस्याभवद्‌गाधिर्गाधिर्म्मित्रोऽभवत् सुतः ।

तेषां कल्पोऽभवद्राजा कल्पात्तु विजयोऽभवत् ।

यो विजित्य क्षितिं सर्व्वां पार्थिवान् भूरितेजसा ।

शक्रस्यानुमते चक्रे खाण्डवं शतयोजनम् ॥

यत् सव्यसाची ह्यदहत् पाण्डुपुत्त्रः प्रतापवान् ।

आवहन् परमां प्रीतिं ज्वलनस्य महात्मनः ॥

ऋषय ऊचुः ।

कथं स खाण्डवं चक्रे विजयः शतयोजनम् ।

आप्लाव्य खाण्डवीमध्यं तेन खातैश्च

वर्त्मभिः ॥

वक्रासु वक्रगा भूत्वा याति सीतां नदीं प्रति ।

स जित्वा सकलान् भूपान् वित्तान्याहृत्य

भूरिशः ॥

राशीचकार खाण्डव्या मध्ये रत्नैरनेकशः ।

अन्येषां नगरेभ्यस्तु जनानानीयं भूपतिः ॥

खाण्डव्यां वासयामास हठादपि सुदर्शनः ।

देवदानवगन्धर्व्वान् जित्वा जित्वा युधा

कृती ॥

देववृक्षं देवरत्नं देवीश्चापि तथौषधीम् ।

खाण्डव्यां रोपयामास सहामात्यः सुदर्शनः

॥

असहिष्णुस्ततोजिष्णुर्भूपतिन्तं सुदर्शनम् ।

कृतापचारं बहुधा देवानाञ्च तथा नृणाम् ॥

वाराणसीपतिं वीरं विजयं जयशालिनम् ।

सन्धाय कृत्वा साचिव्यं तत्रैवासौ

न्ययोजयत् ॥

विजयो विवरं प्राप्य महाबलपराक्रमः ।

सुदर्शनस्य नृपतेरवस्कन्दमथाकरोत् ॥

नासहत् सोऽप्यवस्कन्दं विजयस्य सुदर्शनः

।

चतुरङ्गबलेनाशु युद्धायाभिमुखोऽभवत् ॥

विजयो रथमारुह्य नियुज्य चतुरङ्गिणीम् ।

सेनां सुदर्शनं योद्धुं सम्मुखोऽभवदञ्जसा ॥

तदा महद्युद्धमासीद्विजयेन महात्मना ।

सुदर्शनस्य नृपतेर्व्वृत्रवासवयोरिव ॥

ततः सुदर्शनो राजा दारितो गदयाऽपतत् ।

तस्मिन्निपतिते वीरे सेनाभिस्तस्य सैनिकाः

॥

भयात् संप्राद्रवन्नस्माद्दिशः प्रदिश एव च ।

नष्टेषु तस्य सैन्येषु विजयः खाण्डवीं पुरीम्

॥

प्रविश्य ददृशे तत्र राशीभूतान् गिरीनिव ।

सुवर्णानाञ्च रत्नानां सञ्चयान् बहुशः पुरः ॥

दृष्ट्वा सरांसि तत्राथ प्रफुल्लकमलानि तु ।

हंसकारण्डवानादनादितानिसमन्ततः ॥

राशीन् सुवर्णरत्नानां पर्व्वतानिव विस्तृतान्

।

"सिंहिकायां समुत्पन्ना
विप्रचित्तिसुतास्तथा ।
व्यंशः शल्यश्च बलवान् नभश्चैव
महाबलः ॥
वातापिर्न्नमुचिश्चैव इल्वलः
खसृमस्तथा ।
अन्तको नरकश्चैव
कालनाभस्तथैव च ॥
निवातकवचा दैत्याः प्रह्लादस्य
कुलेऽभवन् ॥"
इति गारुडे ६ अध्यायः ॥

**खस्खसः**, पुं, (खस + पृषोदरात् द्वित्वम् ।) वृक्ष-
विशेषः । पोस्ता इति भाषा ॥
तत्पर्य्यायः ।
सूक्ष्मबीजः २ सूक्ष्मतण्डुलः ३
सुबीजः ४ ।
अस्य गुणः । पाके मधुरत्वम् ।
कान्तिवीर्य्यबल-
प्रदत्वञ्च । इति राजनिर्घण्टः ॥
(खसतिलशब्दे-
ऽस्य गुणादयो ज्ञातव्याः ॥)

**खस्खसरसः**, पुं, (खस्खसस्य क्षुद्रबीजवृक्षविशेषस्य
रसः ।) अहिफेनः । इति
राजनिर्घण्टः ॥ आफिं
इति भाषा ॥

**खस्तनी**, स्त्री, (खं आकाशं स्तनवद्यस्याः मेघ-
वारिपतनेन शस्याद्युत्पत्तेः
पुत्त्रस्थानीयानां
पृथिवीस्थजीवानां जीवनधारणात्
तथात्वम् ।)
पृथिवी । इति त्रिकाण्डशेषः ॥

**खस्फाटिकः**, पुं, (खवत् निर्म्मलः स्फाटिकः । यद्वा
खस्फटिकः सूर्य्यः स
अधिष्ठाताऽस्य ।) सूर्य्य-
कान्तमणिः । चन्द्रकान्तमणिः ।
इति हेमचन्द्रः ॥

तद्वयं श्रोतुमिच्छामः कथयस्व तपोधन ! ॥
मार्कण्डेय उवाच ।
सोमवंशेऽभवद्राजा महात्मा स महाबलः ॥
धीरः सुदर्शनो नाम चारुरूपः प्रतापवान् ।
स वै हिमवतो नातिदूरे भङ्क्त्वा महावनम् ॥
सिंहान् व्याघ्रान् समुत्सार्य्य क्वचिच्चापि तपो-
धनान् ।
खाण्डवीं नाम नगरीमकरोत्तत्र शोभनाम् ॥
त्रिंशद्योजनविस्तीर्णामायतांशतयोजनम् ।
उच्चप्राकारसंयुक्तां साट्टालाम्बुदतोरणाम् ॥
निम्नाभिरतिदीर्घाभिः परिखाभिः समावृताम् ।
दीर्घिकाभिश्चोपवनैर्ब्बहुभिश्चाप्सरोगणैः ॥
आकीर्णाञ्च तथावासैरुत्तमैरपि मानवैः ।
सोत्सवाः सततं यत्र जना देवान् दिवि स्थितान्
॥
स्पर्द्धन्ते स्म मुदा युक्ता आढ्या भोगसमन्विताः
।
स वै सुदर्शनो राजा खात्वा भूमिं विदार्य्य च ॥
गङ्गां कनखलां देवीं वाहयामास खाण्डवीम् ।

पुष्पितान् देववृक्षांश्च भ्रमदभ्रमरभूषितान् ॥
प्रासादान् विपुलान् शुभ्रान् कैलाससदृशान्
गजान् ।
विस्फुटांश्च सुगन्धाढ्यान् प्रतिगेहे
व्यवस्थितान् ॥
उत्फुल्लनयनो राजा विजयः परवीरहा ।
मेनेऽमरावतीं तान्तु पुरीं क्षितिगतामिव ॥
तं वीक्षन्तं नरपतिं नगरीं तां सुरेश्वरः ।
समेत्यविजयं प्राह सान्त्वयन् श्लक्ष्णयागिरा
॥
इन्द्र उवाच ।
राजन्महद्वनमिदमासीद्देवगणावृतम् ।
नरगन्धर्व्वयक्षाणां मुनीनाञ्च मनोहरम् ॥
सर्व्वानुत्सार्य्य देवादीन्मम चाप्यप्रिये रतः ।
भङ्क्त्वा वनमिदं गुह्यं समुत्साद्य तपोधनम्
॥
खाण्डवीं नगरीं चक्रे हठाद्राजा सुदर्शनः ।
तदिदं पुनरेव त्वं वनं कुरु नृपोत्तम ! ॥
तत्राहं विहरिष्यामि तक्षकेण समं रहः ।
मुनीनाञ्च तपः स्थानं मण्डलं ते प्रसादतः ॥
भविष्यति च यक्षाणां किन्नराणाञ्च पार्थिव !
॥
मार्कण्डेय उवाच ।
एतत् श्रुत्वा वचस्तस्य शक्रस्य विजय
स्तदा ।
वनमेवाकरोत्तान्तु स्वाण्डवीं शक्रगौरवात् ॥
गच्छन्तु भो यथास्थानं प्रजाः सर्व्व
येथछया ।

| | | |
|---|---|---|
| **खाखसः**, पुं, (खस प्रकारे द्वित्वं ततः पृषो-<br>दरात् साधुः ।) बीजविशेषः ।<br>पोस्तादाना<br>इति भाषा । तत्पर्य्यायगुणाः ।<br>“तिलभेदः खसतिलः<br>खाखसश्चापि स स्मृतः ।<br>स्याद्वा खसफलोद्भूतं वल्कलं<br>शीतलं लघु ॥<br>ग्राहि तिक्तं कषायञ्च वातकृत्<br>कफकासहृत् ।<br>धातूनां शोषकं रूक्षं<br>मदकृद्वाग्विवर्द्धनम् ॥<br>सुहुर्म्मोहकरं रुच्यं सेवनात्<br>पस्त्वनाशनम् ॥ | | |

येषां वाञ्छास्ति लोकानां
मद्राज्यगमने पुनः ॥
वाराणसीं ते गच्छन्तु मयैव
प्रतिपालिताम् ।
ततस्तस्य वचः श्रुत्वा जनाः
केचिन्निजं पदम् ॥
जम्मु र्व्वाराणसीं
केचिद्विजयेनाभिपालिताम् ।
ततो धनानां तान्राशीन्रत्नानाञ्च
पृथक् पृथक् ॥
अश्मनां कनकानाञ्च कूप्यानां
विजयस्तदा ।
धीवरैर्व्वाहयामास पुरीं वाराणसीं
प्रति ॥
गन्धर्व्वाणाञ्च देवानां यदानीतं
हठात् पुरा ।
रत्नदार्व्वादिकं यत्तु विजयं तत्
प्रसाद्य च ॥
तैस्तैर्नीतन्तु खाण्डव्याः स्वस्थानं
प्रति हर्षितैः ।
त्रिंशद्योजनविस्तीर्णां
शतयोजनमायताम् ।
तां पुरीं विजयश्चक्रे न चिरादेव वै
वनम् ।
तस्मिन् शक्रस्य सम्मत्या तक्षकः
सहितो गणैः ॥
उवास सुचिरं तत्र ततोऽभून्निर्ज्जनं
वनम् ।
तत्र देवाः सगन्धर्व्वाः
क्रीडन्तेऽप्सरसां गणाः ॥
आशंसयंश्च विजयं रणेषु
विजयावहम् ॥" * ॥
"अष्टाविंशतिमे प्राप्ते युगे
द्वापरशेषतः ॥
वह्निर्ब्राह्मणरूपेण भिक्षां
जिष्णुमयाचत ।
दातुमङ्गीकृते भिक्षां तदा
पाण्डुसुतेन वै ॥

निर्म्मिता या पुरी सा ।) चन्द्रवंशीयसुद-
र्शनराजकृतहिमवत्पर्व्वतनिकटस्थपुरीविशेषः ।
तद्विरणं खाण्डवशब्दे द्रष्टव्यम् ॥

**खाण्डिकः**, पुं, (खण्डं मोदकादिकं शिल्पमस्य ।
इति ठञ् ।) खण्डपालः । मोदकः । इति
हारावली ॥ मयरा इति भाषा ॥ (क्लीवे तु
खण्डिकानां समूहः "खण्डिकादिभ्यश्च ।" । ४ ।
२ । ४५ । इत्यञ् । खण्डिकसमूहः ॥)

**खातं**, क्ली, (खन्यते इति । खन् + कर्म्मणि क्तः ।)
पुष्करिणी । इत्यमरः । १ । १० । २७ ॥ तस्य
परिमाणं यथा, -- शतेन धनुर्भिः पुष्करिणी
त्रिभिः शतैर्दीर्घिकाचतुर्भिर्द्रोणः पञ्चभि-
स्तडागः द्रोणदशगुणा वापीति ॥
"चतुर्विंशाङ्गुलो हस्तो धनुस्तच्चतुरुत्तरः ।
शतधन्वन्तरञ्चैव तावत् पुष्करिणी शुभा ।
एतत्पञ्चगुणः प्रोक्तस्तडाग इति निर्णयः ॥"
इति नव्यवर्द्धमानधृतो वशिष्ठः ॥

**खातकं**, क्ली, (खात + संज्ञायां कन् ।) परिखा ।
इति हेमचन्द्रः ॥ खाना पगार इत्यादि भाषा ॥

**खातकः**, पुं, अधमर्णः । धारी । ऋणी । यथा, --
"उत्तमर्णो धनस्वामी अधमर्णस्तु खातकः ॥"
इति संक्षिप्तसारटीकायां गोयीचन्द्रः ॥
(परसैन्यविदारकः । यथा, महाभारते । १२ ।
११८ । ११ ।
"खातकं व्यूहतत्त्वज्ञं बलहर्षणकोविदम् ॥"
"खातकः परसैन्यविदारकः ।" इति तट्टीकाकृ-
न्नीलकण्ठः ॥)

**खातभूः**, स्त्री, (खातयुक्ता भूर्भूमिः ।) प्रतिकूपः ।
परिखा । इति हारावली ॥

**खातव्यवहारः**, पुं, (खातस्य पुष्करिण्यादेर्व्यवहारः
परिमाणम् ।) पुष्करिण्यादिपरिमाणम् । पुकुरे
कालीति भाषा ॥
"अथ खातव्यवहारे करणसूत्रं सार्द्धार्य्या ।
गणयित्वा विस्तारं बहुषु स्थानेषु तद्युतिर्भाज्या ।
स्थानकमित्या सममितिरेवं दैर्घ्ये च बेधे च ।
अत्र सममितिकरणेन विस्तारे
हस्ताः ।

दैर्घ्ये । ११ । बेधे । ३ । तत्क्षेत्रदर्शनं
यथा, --
यथोक्तकरणेन लब्धा घनहस्तसंख्या ॥
१९८ ॥
खातान्तरे करणसूत्रं सार्द्धवृत्तम् ।
मुखजतलजतद्युतिजक्षेत्रफलैक्यं हृतं
षड्भिः ।
क्षेत्रफलं सममेतत् बेधहतं फलं घनफलं
स्पष्टम् ।
समखातफलत्र्यंशः सूचीखाते फलं
भवति ॥
उदाहरणम् ।
मुखे दशद्वादशहस्ततुल्यं
विस्तारदैर्घ्यन्तु तले तदर्द्धम् ।
यस्याः सखे सप्तकरश्च बेधः
का खातसंख्या वद तत्र वाप्याम् ॥
मुखजं क्षेत्रफलम् । १२० । तलजम् ।
३० ।
तद्युतिजम् । २७० । एषामैक्यम् । ४२०
।
षड् भिः । ६ । हृतं जातं समफलम् ।
७० । बेध-
७ हतं जातं खातफलं घनहस्ताः ।
४९० ।
द्वितीयोदाहरणम् ।
खातेऽथ तिग्मकरतुल्यचतुर्भुजे च
किं स्यात् फलं नवमितः किल यत्र बेधेः
।
वृत्ते तथैव दशविस्तृतिपञ्चबेधे
सूचीफलं वद तयोश्च पृथक् पृथङ्के ॥
भुजः । १२ । बेधः । ९ । जातं
यथोक्तकरणेन
खातफलं घनहस्ताः । १२९६ ।
सूचीफलम् । ४३२ ।

वह्निः स्वरूपमास्थाय जिष्णुं
वचनमब्रवीत् ।
अहमग्निः पाण्डुपुत्र !
यज्ञभागातिभोजनात् ॥
व्याधितोऽहं ततो व्याधिं मम त्वं
नाशयाधुना ।
खाण्डवं नाम विपिनं
सपक्षिमृगराक्षसम् ॥
यदि त्वं मां भोजयितुं शक्नोषि
श्वेतवाहन ! ।
तदा ममात्यसौ व्याधिरपयास्यति
नोचिरात् ॥
पुरा तु विजयो राजा खाण्डवीं नाम
तां पुरीम् ।
भङ्क्त्रा वनं ततश्चक्रे तेन तत्
खाण्डवं वनम् ॥
तदर्थं देवविहितं वनं तच्छ्वेतवाहन !
।
विरोधात्ततु शक्रस्य न स्वयं
भोक्तुमुत्सहे ॥
तन्मां त्राहि महाभाग ! वने
तस्मिन्नियोजय ।
यथाऽहं सकलं भोक्तुं प्राप्नोमि
त्वत्प्रसादतः ॥
तस्य तद्वचनं श्रुत्वा सव्यसाची
महाबलः ।
दाहयामास विपिनं तत् सर्व्वं
प्राणिसंयुतम् ।
देवकीतनयेनासौ वासुदेवेन
पालितः ।
खाण्डवं दाहयामास ज्वलनस्य
हिते रतः ॥”
“सुप्रीतः प्रददौ तस्मादर्ज्जुनाय
महात्मने ।
वह्निर्धनुश्च गाण्डीवं वारुणं
देवनिर्म्मितम् ॥
अक्षयाविषुधी द्वौ च
रूप्याभांश्चतुरो हयान् ।
हनूमताधिष्ठितन्तु महान्तं
वानरध्वजम् ॥

क्षेत्रफलं बेघगुणं खाते घनहस्तसंख्या स्यात् ॥
उदाहरणम् ।
भुजवक्रतया दैर्घ्यं दशेशार्क्ककरैर्म्मितम् ।
त्रिषु स्थानेषु षट्पञ्चसप्तहस्ता च विस्तृतिः ॥
यस्य खातस्य बेधोऽपि द्विचतुस्त्रिकरः सखे ! ।
तत्र खाते कियन्तः स्युर्घनहस्ताः प्रचक्ष्व मे ॥”

| | | |
|---|---|---|
| खड्गञ्च त्रिशिखं तीक्ष्णं दहनः सव्यसाचिने । नीरोगश्चाभवद्वह्निस्तदा जिष्णुप्रसादतः ॥ तैर्व्वाणैस्तेन धनुषा तेन खड्गेन केतुना । तदश्वस्यन्दनेनापि विजिग्ये फाल्गुनो रणे ॥ एवं भैरववर्गेषु संजातो विजयो नृपः । खाण्डवं नाम विपिनं चकार सुमहाकृती ॥" इति श्रीकालिकापुराणे ९० अध्यायः ॥ (खण्डस्य इक्षुखण्डादेर्विकार इत्यण् । गुडादि-विकारमिष्टान्नद्रव्यम् । यथा, महाभारते । १३ । ५३ । १८ । "रसानापूपकांश्चित्रान्मोदकानथ खाण्डवान् ॥") | | |
| **खाण्डवी**, स्त्री, (हिमवतः सन्निहितं बृहद्वनं खण्डयित्वा चन्द्रवंशीयेन राज्ञा सुदर्शनेन | | |

वृत्तखातदर्शनाय ।
व्यासः । १० । वेधः । ५ । अत्र
सूक्ष्मपरिधिः
(३९२७१२५) । सूक्ष्मक्षेत्रफलम्
(३९२७५०) । बेधगुणं
जातं सूक्ष्मखातफलम्(३९२७१०)
सूक्ष्मसूची-
फलम्(१३०९१०) । यद्वा
स्थूलखातफलम्(२७५०७) ।
सूचीफलं स्थूलम्(२७५०२१) ।
इति लीलावत्यां खातव्यवहारः समाप्तः
॥

**खात्रं**, क्ली, (खनु विदारे + "उषिखनिभ्यां कित् ।"
उणां । ४ । १६१ । इति ष्ट्रन् किच्च ।)
खातम् ।
खनित्रम् । इत्युणादिकोषः ॥ दारुणम् ।
वनम् ।
सूत्रम् । इति संक्षिप्तसारे उणादिवृत्तिः
॥ (जला-
धारविशेषश्च । इति उज्ज्वलदत्तः ॥)

**खाद**, ऋ भक्षणे । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-सकं-सेट् । ऋदित् ।) ऋ,
अचखादत् ।
इति दुर्गादासः ॥

**खादकः**, त्रि, (खाद् भक्षणे + ण्वुल् ।) ऋण-
ग्रहीता । खातक इति ख्यातः । इति
मिता-
क्षरा ॥ भक्षकः । यथा, --
"विक्रयैर्गोविनिमयैर्दत्त्वा गोमांसखादके
।
व्रतं चान्द्रायणं कुर्य्याद्वधे साक्षाद्वधी
भवेत् ॥"
इति प्रायश्चित्ततत्त्वे गोभिलः ॥

**खादनं**, क्ली, (खाद् + भावे ल्युट् ।) भक्षणम् ।
आहारः । (खादति चर्व्वयत्यनेन इति
।) दन्ते पुं ।

**खादुकः**, त्रि, (खादति हिनस्ति इति । खाद् + उन्
संज्ञायां कन् ।) हिंसालुकः । इति
हारावली ॥

**खाद्यं**, त्रि, (खाद्यते इति । खाद् + कर्म्मणि ण्यत् ।)
भक्षणीयद्रव्यम् । यथा, --
"कस्त्वं भद्रखलेश्वरोऽहमिह किं घोरे वने
स्थीयते
शार्द्दूलादिभिरेव हिंस्रपशुभिः
खाद्योऽहमित्या-
शया ।" इत्युद्भटः ॥

**खानपानं**, क्ली, (धातूनामनेकार्थत्वात् खै भक्षणे
+ भावे ल्युट् खानम् । पा पाने + भावे
ल्युट्
पानम् । खानेन सह पानं यद्वा खानञ्च
पानञ्च
तयोः समाहारः ।)
कठिनद्रवद्रव्ययोर्गलाधः-
करणम् । खाना पिना इति हिन्दी भाषा ॥
यथा, गारुडे नीतिसारे १०९ अध्यायः ।
"सद्भावेन हि तुष्यन्ति देवाः सत्पुरुषा
द्विजाः ।
इतरे खानपानेन वाक्प्रदानेन पण्डिताः
॥"

**खानिः**, स्त्री, (खन + इन् । पृषोदरात् वृद्धिः ।)
खनिः । इति हेमचन्द्रः ॥

**खानिकं**, क्ली, (खानेन खननेन निर्वृत्तं इति ठञ् ।)
कुड्यच्छेद्यम् । इति त्रिकाण्डशेषः ॥
देयालेर
गर्त्त इति माषा ॥

**खानिलः**, त्रि, (खानं खननं शिल्पत्वेनास्त्यस्य ।
इति बाहुलकात् इलच् ।) भित्तिचौरः ।
इति
शब्दरत्नावली ॥ सिँदेल चोर इति भाषा
॥

**खानी**, स्त्री, (खानि + वा ङीष् ।) खनिः । इति
षण्णवत्यधिकचतुःसहस्रपलानि। पाँचशत
वार-
शेर इति भाषा । इति वैद्यकपरिभाषा ॥ द्रोण-
चतुष्टयम् । यथा, --
"चतुराढको भवेद्द्रोणः खारी द्रोणचतुष्टयम्
॥"
इति स्मृतिः ॥

**खारीकं**, त्रि, (खारीं खारीवापमर्हतीति । "खार्य्या
ईकन् ।" ५ । १ । ३३ । "केवलायाश्चेति
वक्त-
व्यम् ।" इति वार्त्तिं इति ईकन् ।) खारी-
क्षेत्रम् । खारीपरिमितबीजवपनोपयुक्तक्षेत्रम् ।
तत्पर्य्यायः । खारीवापः २ । इत्यमरः । २ ।
९ । १० ॥

**खारीवापः**, त्रि, (खारी तत्परिमितधान्यं उप्यते
ऽत्र । वप् + अधिकरणे घञ् ।) खारीकः ।
इत्य-
मरः । २ । ९ । १० ॥ (खारीं वपतीति । वप्
+ कर्त्तरि अण् । धान्यादिवपनकारी ॥)

**खिखिः**, स्त्री, (खिरित्यव्यक्तशब्देन खेटति भीरूणां
भयमुत्पादयतीति । खि + खिट् + डः । पृषो-
दरात् साधुः ।) किखिः । इति क्वचित्
त्रिकाण्ड-
शेषे पाठः ॥ ख्याँक्शेयाली इति भाषा ॥

**खिङ्गिरः**, पुं, (खिं अव्यक्तध्वनिविशेषं किरति
विकृतिभावेन शब्दं करोतीत्यर्थः । कॄ + कः ।
पृषोदरात् खत्वेन साधुः ।) शिवाभेदः ।
ख्याँक्-
शेयाली इति भाषा । खट्वाङ्गम् । तत्तु शिव-
स्यास्त्रम् । वारिबालकम् । तत्तु गन्धद्रव्यम् ।
इति विश्वो हेमचन्द्रश्च ॥

**खिट**, भयभीषयोः । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-भये अकं-भयोत्पादने सकं-सेट् ।) भीषा
स्वतो भयोत्पादना । खेटति जनो व्याघ्राद्बिभे-
तीत्यर्थः । खेटति व्याघ्र्यो जनं भीषयते
इत्यर्थः ।

इति हेमचन्द्रः ॥

**खादितं**, त्रि, (खाद + क्तः ।) भक्षितम् । इत्य-

मरः । ३ । १ । ११० ॥ खाओया इति भाषा ॥

("अशितं खादितं पीतं लीढं कोष्ठगतं नृणाम् ।
तज्जीर्य्यति यथाकालं शोषितं पित्ततेजसा ॥"
इति शारीरस्थाने चतुर्थेऽध्याये सुश्रुतेनोक्तम् ॥)

**खादिरसारः**, पुं, (खदिर + स्वार्थे अण् ततः षष्ठी-

तत्पुरुषः ।) खदिरवृक्षनिर्यासः । खएर इति
भाषा ॥ तत्पर्य्यायः । खादिरः २ अद्भुतसारः ३
सत्सारः ४ रङ्गदः ५ रङ्गः ६ । अस्य गुणाः ।
कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । कफवातव्रण-
कण्ठामयनाशित्वम् । रुचिकारित्वम् । दीपनत्वञ्च ।
इति राजनिर्घण्टः ॥ खदिरसारोऽपि पाठः ॥
(यथा, --
"विना खदिरसारेण हारेण हरिणीदृशाम् ।
नाधरे आयते रागो नानुरागः पयोधरे ॥"
इति उद्भटः ॥)

शब्दरत्नावली ॥

**खानोदकः**, पुं, (खानाय पानार्थं उदकमत्र ।)

नारिकेलः । इति त्रिकाण्डशेषः ॥

**खापगा**, स्त्री, (खे आकाशे स्थिता खात् आगता

वा आपगा नदी ।) गङ्गा । इति हेमचन्द्रः ॥

**खारः**, पुं, (खं अवकाशमाधिक्येन ऋच्छतीति ।

ऋ + अण् ।) खारीपरिमाणम् । इति हड्डचन्द्रः ॥

**खारिः**, स्त्री, (खं मध्यावकाशं आरातीति । आ

+ रा + इन् ।) खारीपरिमाणम् । इति भरत-
धृतहड्डचन्द्रः ॥

**खारिकं**, क्ली, (खारि + संज्ञायां कन् ।) महा-

पारेवतम् । इति राजनिर्घण्टः ॥

**खारिम्पचः**, त्रि, (खारिं खारीपरिमितधान्य-

मित्यर्थः पचतीति । पच् + "परिमाणे पचः ।"
३ । २ । ३१ । इति खश् + ततो मुम् ।) खारि-
परिमितान्नादिपाककर्त्ता । इति व्याकरणम् ॥

**खारी**, स्त्री, (खं मध्यावकाशं आरातीति । आ +

रा + इन् । "कृदिकारान्तादक्तिनः ।" ४ । १ । ४५ ।
इत्यस्य वार्त्तिं इति पक्षे ङीष् ।) परिमाण-
विशेषः । इत्यमरः । २ । ९ । ८८ ॥ यदाह तट्टी-
कायां भरतः ।
"पलं प्रकुञ्चकं मुष्टिः कुडवस्तच्चतुष्टयम् ।
चत्वारः कुडवाः प्रस्थश्चतुःप्रस्थमथाढकम् ॥
अष्टाढको भवेद्द्रोणो द्विद्रोणः सूर्प उच्यते ।
सार्द्धसूर्पो भवेत् खारी द्वे खार्य्यौ गोण्युदाहृता ॥

इति दुर्गादासः ॥

**खिद**, श प औ परिघाते । इति कविकल्पद्रुमः ॥

(तुदां-परं-सकं-अनिट् ।) श प, खिन्दति दुष्टं
राजा । औ, खेत्त्वा । इति दुर्गादासः ॥

**खिद**, ङ ध य औ दैन्यके । इति कविकल्पद्रुमः ॥

(दिवां-रुधां च-आत्मं-अकं-अनिट् ।) दैन्यक-
मुपतप्तीभावः । ङ ध, खिन्ते तेष्वेव ये द्रव्यम्
दीयमानं न गृह्णते । इति हलायुधः ॥ ङ य,
स्वसुखनिरभिलाषः खिद्यते लोकहेतोरिति
शाकुन्तले । औ, खेत्त्वा । इति दुर्गादासः ॥

**खिदिरः**, पुं, (खिद्यते कृष्णपक्षेण दुःखेन तपसा

वा । यथायथं व्युत्पत्तिर्ज्ञातव्या । खिद् + "इषि-
मदि-मुदि-खिदीति ।" उणां । १ । ५२ । इति
किरच् ।) चन्द्रः । इत्युणादिकोषः ॥ दीनः ।
तापसः । इति संक्षिप्तसारे उणादिवृत्तिः ॥

**खिद्यमानः**, त्रि, (खिद् + ताच्छील्ये चानश् ।)

खेदयुक्तः । दैन्यग्रस्तः । उपतप्तः । यथा, --
"खिद्यमानन्तु तं दृष्ट्वा सूर्य्यः कृष्णात्मजं तदा ।"
इति शाम्बपुराणे सूर्य्यस्तवः ॥

**खिद्रः**, पुं, (खिद् दैन्ये + "स्फायि तञ्चिवञ्चीति ।"

उणां । २ । १३ । इति रक् ।) रोगः । दरिद्रः ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**खिन्नः**, त्रि, (खिद् + क्तः ।) दैन्यग्रस्तः । खेद-

युक्तः । यथा, श्रीभागवते ।

|  | तामेव भारं जानीयात् वाहो भारचतुष्टयम् ॥"<br>"षोडशद्रोणपरिमाणम्।" इत्यमरटीकायां स्वामी लीलावती च ॥ गोणीचतुष्टयम्। तत्तु |  |
| --- | --- | --- |

"गौर्भूत्वास्रुमुखी खिन्ना रुदन्ती करुणं विभोः ॥"

**खिरहिट्टी**, स्त्री, महासमङ्गा । इति राज-
निर्घण्टः ॥

**खिलं**, त्रि, (खिल् + कः ।) हलादिना कृष्टभूमिः ।
खिल भूँइ इति भाषा ॥ तत्पर्य्यायः । अप्र-
हतम् २ । इत्यमरः । २ । १ । ५ ॥ सारसंक्षिप्ते
वेधसि च पुं । इति मेदिनी ॥
"खिलोनारायणः प्रोक्तैषवस्तद्गुणाः स्मृताः ।"
इति खिलेषु हरिवंशे इत्यत्र नीलकण्ठटीका ॥

**खु**, ङ ध्वनौ । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-
अकं-अनिट् ।) ङ, खवते । इति दुर्गादासः ॥

**खुङ्गाहः**, पुं, (खुं इत्यव्यक्तशब्दं कुर्व्वन् गाहते
रणस्थलं विलोडयतीति । गाह् + अच् ।) कृष्ण-
वर्णघोटकः । इति हेमचन्द्रः ॥

**खुज**, उ स्तेये । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् । उदित्त्वात् क्त्वा वेट् ।) उ, खोजित्वा
खुक्त्वा । स्तेयं चौर्य्यम् । इति दुर्गादासः ॥

**खुज्जाकः**, पुं, (खुज् + आकः निपातनात् जस्य
द्वित्वम् ।) देवताडकवृक्षः । इति रत्नमाला ॥
खुञ्जाक इति क्वचित् पाठः ॥

**खुड**, इ ङ खञ्जे । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-अकं-सेट्-इदित् ।) पञ्चमस्वरी । खञ्जः
सिकाया इति ।" ५ । ४ । ११८ । इति अच्
नसाद्रेशश्च "पूर्ब्बपदात् संज्ञायामगः ।" ८ । ४ । ३ ।
इति णत्वम् ।) चिपिटनासिकः । इत्यमरः ।
२ । ६ । ४७ ॥ चेपटानाकयुक्त इति भाषा ॥

**खुरणाः**, त्रि, (खुर इव नासिका अस्य "खुर
खराभ्यां वा नस् ।" इति नसादेशः "पूर्ब्बपदा-
दीति ।" ८ । ४ । ३ । इति णत्वं च ।) खुरणसः ।
इत्यमरः । २ । ६ । ४७ ॥ छेपडानासिकायुक्त इति
भाषा ॥

**खुरप्रः**, पुं, (खुर इव प्राति खुरास्त्रवत् कार्य्यं
पूरयतीत्यर्थः । खुर + प्रा + कः ।) बाणविशेषः ।
इत्यमरटीकायां स्वामी ॥ खुरपा इति भाषा ॥

**खुरली**, स्त्री, (खुरैः सह विविधानि अस्त्रादीनि
लाति पौनःपुन्येन शिक्षार्थमत्र । ला ग्रहणे +
इन् + वा ङीष् ।) शराभ्यासः । इति हेमचन्द्रः ॥

**खुराकः**, पुं, (खुर + आकन् ।) पशुः । इत्यु-
णादिकोषः ॥

**खुरालकः**, पुं, (खुर इव अलति पर्य्याप्नोतीति ।
अल + ण्वुल् ।) लौहमयवाणः । इति शब्द-
माला ॥

**खुरालिकः**, पुं, (खुराणां आलिभिः कायति
प्रकाशते । कै + कः ।) ग्रामणीभण्डिः । नापि-
("हतो हन्ति जराव्याधिं मूर्च्छितो व्याधिघातकः ।
बद्धः खेचरतां धत्ते कोऽन्यः मूतात् कृपाकरः ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे जारमारणाधि-
कारः ॥
मेषादिराशिः । यथा ज्योतिषतत्त्वे-
-"खेचराश्च सर्व्वे ॥")

**खेचरान्नं**, क्लो, (खेचरं द्विदलादिमिश्रितं अन्नम् ।)
द्विदलादिसहितपक्वतण्डुलम् । खिचडीति भाषा ॥
इति पाकराजेश्वरः ॥

**खेट**, त् क भक्षणे । इति कविकल्पद्रुमः ॥ (अदन्त-
चुरां-परं-सकं-सेट् ।) अचिखेटत् । इति दुर्गादासः ॥

**खेटं**, क्ली, (खे + अट् + अच् ।) तृणम् । इति
शब्दरत्नावली ॥ खेट्टमपि पाठ ॥

**खेटः**, पुं, (खे आकाशे अटति । अट् + अच् ।)
ग्रहः । यथा, भावविवेके ।
"यस्मिन् राशौ स्थितः खेटस्तेन तं परिपूरयेत् ॥"

**खेटः**, त्रि, (खिट् + अच् । खेट् + कः वा ।) अधमः ।
इत्यमरः । ३ । १ । ५४ ॥ घोटकः । इति शब्दरत्ना-
वली ॥ सुनिन्दकः । इति विश्वः ॥ सुनन्दक इति
पाठे बलरामस्य गदा इति कश्चित् ॥

**खेटः**, पुं, क्ली, (खिट्यते भवमुत्पद्यते अस्मा-
दनेन वा । खिट् + अपादाने करणे वा घञ् ।)
मृगया । इत्यमरहेमचन्द्रौ ॥ कफः । (खेट्यते
भक्षोपयोगिशस्यादिनाउपजीव्यते अस्मात् ।)
ग्रामभेदः । स तु कर्षकग्रामः । (तथा च भाग-
वते । १ । ६ । ११ ।
"खेटखर्ब्बटवाटीश्च वनान्युपवनानि च ॥"

खोटनम् । इ, कर्म्मणि खुण्ड्यते । ङ, खुण्डते
खोडः । इति दुर्गादासः ॥

**खुड**, क भेदे । इति कविकल्पद्रुमः ॥

(चुरां-परं-सकं-सेट् । पाक्षिक इदित् ।) द्वौ पञ्चमस्वरिणौ । क, खोडयति ।
द्वितीय आद्यस्वरीति कातन्त्राद्याः । स्वमते तु
द्वितीयस्याद्यस्वरित्वे पूर्ब्बोऽपीदनुवन्धः स्यात् ।
पञ्चमस्वरित्वे तु स्वजातीयस्य पुनःपाठात् पूर्ब्बो
नेदनुबन्धः । खुण्डयति । खण्डयतीति प्रयोगस्तु
खडि ङ मथीत्यस्मात् घञि खण्डं करोतीति ञौ
साध्यम् । तस्य भेदवाचित्वन्तु धातूनामनेकार्थ-
त्वात् । इति दुर्गादासः ॥

**खुड**, इ क भेदे । इति कविकल्पद्रुमः ॥

(चुरां-परं-सकं-सेट् । पाक्षिक इदित् ।) द्वौ पञ्चमस्वरिणौ । क, खोडयति ।
द्वितीय आद्यस्वरीति कातन्त्राद्याः । स्वमते तु
द्वितीयस्याद्यस्वरित्वे पूर्ब्बोऽपीदनुवन्धः स्यात् ।
पञ्चमस्वरित्वे तु स्वजातीयस्य पुनःपाठात् पूर्ब्बो
नेदनुबन्धः । खुण्डयति । खण्डयतीति प्रयोगस्तु
खडि ङ मथीत्यस्मात् घञि खण्डं करोतीति ञौ
साध्यम् । तस्य भेदवाचित्वन्तु धातूनामनेकार्थ-
त्वात् । इति दुर्गादासः ॥

**खुर**, श विलेखने । छेदने । इति कविकल्पद्रुमः ॥

तेर भाँडि इति भाषा । नाराचः । उपधानम् ।
इति मेदिनी ॥ खरालिकोऽपि पाठः ॥

**खुर्द्द**, ङ क्रीडायाम् । इति कविकल्पद्रुमः (भ्वां-

आत्मं-अकं-सेट् ।) पञ्चमस्वरी । दीर्घिणः
पृथक्पाठात् पूर्ब्बस्य न दीर्घः । ङ, खुर्द्दते । इति
दुर्गादासः ॥

**खुल्लं**, क्ली, (क्षुद् + सम्पदादित्वात् क्विप् । क्षुदं

लातीति । ला + कः । पृषोदरात् साधुः ।)
नखीनामगन्धद्रव्यम् । इति शब्दचन्द्रिका ॥
क्षुद्रे नीचे च त्रि ॥

**खुल्लकः**, त्रि, (खुल्ल + स्वार्थे कन् ।) स्वल्पः ।

नीचः ॥ कनिष्ठः । दरिद्रः । निष्ठुरः खलः ।
इत्यमरटीका ॥

**खुल्लतातः**, पुं, (खुल्लः कनिष्ठः तातस्य पितुरिति

पूर्ब्बनिपातः ।) पितृकनिष्ठभ्राता । इति शब्द-
रत्नावली ॥ खुडा इति भाषा ॥

**खुल्लमः**, पुं, (खुल्लेन मीयते इति । मा + घञर्थे

कः ।) पन्थाः । इति त्रिकाण्डशेषः ॥

**खूर्द्द**, ङ क्रीडायाम् । इति कविकल्पद्रुमः ॥ (भ्वां-

आत्मं-अकं-सेट् ।) षष्ठस्वरी । ङ, खूर्द्दते ।
इति दुर्गादासः ॥

**खेखीरकः**, पुं, (खे आकाशे खीलक इव लस्य

रत्वम् ।) शब्दवती यष्टिः । इति हारावली ॥

**खेगमनः**, पुं, (खे आकाशे गमनं अस्य ।) काल-

कण्ठपक्षी । इति शब्दमाला ॥

**खेचरः**, पुं, (खे चरतीति । चर + "चरेष्टः ।"

"खेटाः कर्षकग्रामाः ।" इति श्रीधरस्वामी ॥)
चर्म्म । इति मेदिनीशब्दरत्नावल्यौ ॥

**खेटकः**, पुं, (खेट + स्वार्थे कः ।) ग्रामभेदः ।

चासार गाँ इति भाषा ॥ इति जटाधरः ॥
फलकम् । इति हेमचन्द्रः ॥ "खेटकं वसुनन्दके ।"
इति हारावली ॥ वसुनन्दको धनवृद्धिजीवकः ।
इति तत्सूची ॥ बलदेवस्य गदा इति कश्चित् ॥

**खेटः** पुं, (खेटति भयमुत्पादयत्यनेन । खिट्

+ करणे घञ् । खेट + स्वार्थे कः ।)
यष्टिः । यथा, --

**खेटकः** पुं, (खेटति भयमुत्पादयत्यनेन । खिट्

+ करणे घञ् । खेट + स्वार्थे कः ।)
यष्टिः । यथा, --
"यष्टिरूपेण खेट ! त्वमरिसंहारकारकः ।
देवीहस्तस्थितो नित्यं मम रक्षां कुरुष्व च ॥"
इति शारदीयदुर्गापूजापद्धतौ अस्त्रपूजाप्रकरणम् ॥
"खेटकं पूर्णचापञ्च पाशमङ्कुशमेव च ॥"
इति च तत्र दशभुजाया दुर्गाया ध्यानम् ॥

**खेटितालः**, पुं, (खे अटतीति अट् इन् । खिट् +

इन् वा । खेटिः तालोऽस्य ।) वैतालिकः । इति
शब्दमाला ॥

**खेटी**, [न्] पुं, (खेट् + णिनिः ।) नागरः । कामी ।

इति शब्दमाला ॥

**खेड**, त् क भक्षणे । इति कविकल्पद्रुमः ॥ (अदन्त

चुरां परं-सकं-सेट् ।) अचिखेडत् । इति दुर्गा-
दासः ॥

(तुदां-परं-सकं सेट् ।) श, खुरति भूमिं तृणं
वा लोकः । खोरिता । खुरः शफम् । इति दुर्गादासः ॥

**खुरः**, पुं, (खुर छेदने + कः । यद्वा "ऋज्रेन्द्राग्र-
वज्रेति ।" उणां । २ । २८ । इति रन् गुणा-
भावोऽन्त्यलोपश्च ।) शफम् । गवादीनां पादा-
ग्रम् । (यथा, मनुः । ४ । ६७ ।
"न भिन्नशृङ्गाक्षिखुरैर्न वालधिविरूपितैः ॥")
कोलदलम् । नखीनामगन्धद्रव्यम् । इति मेदिनी ॥
छेदनवस्तु । नापितस्य खुरः । इति शब्दरत्ना-
वली ॥ खट्वादीनां पादुकम् । इति धरणी ॥ खुरा
इति भाषा ॥

**खुरकः**, पुं, (खुर + संज्ञायां कन् । खुरो गन्धद्रव्य-
विशेषः स इव कायति वा । कै + कः ।) तिल-
वृक्षः । इति शब्दचन्द्रिका ॥ (तिलशब्देऽस्य
गुणादवो बोद्धव्याः ॥)

**खुरणसः**, त्रि, (खुर इव नासिका अस्य "अञ्ना-
३ । २ । १६ । इति टः । अलुक् समासः ।)
शिवः । इति शब्दरत्नावली ॥ विद्याधरः । इति
जटाधरः ॥ पारदः । इति राजनिर्घण्टः ॥
आकाशचारिणि त्रि ॥

**खेदः**, पुं, (खिद् + भावे घञ् ।) शोकः । इति हेमचन्द्रः ॥ अवसन्नता । इति जटाधरः ॥
(यथा, हेः रामायणे । ४ । ४९ । ७ ।
"अद्यापीदं वनं दुर्गं विचिन्वन्तु वनौकसः ।
खेदं त्यक्त्वा पुनः सर्व्वं वनमेव विचिन्वताम् ॥")

**खेदिनी**, स्त्री, (खिद् + णिच् + णिनिः । स्त्रियां ङीप् ।) अशनपर्णीवृक्षः । लता । इति शब्द-
चन्द्रिका ॥ (दैन्यकारिणी । शोककारिणी ॥ इति
व्युत्पत्तिलब्धोऽर्थः ॥)

**खेयं**, क्ली, (खन्यते इति । खनु विदारे + "ई च खनः ।" ३ । १ । १११ इति कर्म्मणि क्यप् ईकार-
श्चान्तादेशः ।) परिखा । गडखाइ इति भाषा ।
इत्यमरः ॥ खननीयम् । इति व्याकरणम् ॥ (सेतु-
भेदः । यथा मिताक्षराघृतनारदवचनम् ।
"सेतुश्च द्विविधो ज्ञेयः खेयो बन्ध्यस्तथैव च ।
तोयप्रवर्त्तनात् खेयः ।" इति ॥)

**खेल**, ऋ चाले । गत्याम् । इति कविकल्पद्रुमः ॥
(भ्वां-परं-चलने अकं गत्यां सकं-सेट् ।) कवर्ग-
द्वितीयादिः । अचिखेलत् । चालः कम्पः ।
चालः कैश्चिन्न मन्यते । इति दुर्गादासः ॥

**खेलनं**, क्ली, (खेल् + भावे ल्युट् ।) क्रीडनम् ।
इति हलायुधः ॥ (यथा, गीतगोविन्दे । १ । ४१ ।
"कापि विलासविलोलविलोचन-

**खोट**, त् क क्षेपे । इति कविकल्पद्रुमः ॥ (अदन्त-
चुरां-परं-सकं-सेट् ।) अचुखोटत् । इति दुर्गा-
दासः ॥

**खोटिः**, स्त्री, (खोट् + इन् ।) चतुरा स्त्री । इति
शब्दमाला ॥ खोरिरित्यपि पाठः ॥

**खोटी**, स्त्री, (खोटि + वा ङीष् ।) पालङ्की-
वृक्षः । इति शब्दचन्द्रिका ॥ चतुरापि ॥

**खोड**, ऋ खोटने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
अकं-सेट् ।) ऋ, अचुखोडत् । खोडति
खञ्जः । रमानाथस्तु खोडति बाला क्रिमि-
मित्युदाहृतवान् । इति दुर्गादासः ॥

**खोड**, त् क क्षेपे । इति कविकल्पद्रुमः ॥ (अदन्त-
चुरां-परं-सकं-सेट् ।) अचुखोडत् । इति
दुर्गादासः ॥

**खोडः**, त्रि, (खोडति इति । खोड + अच् ।)
खञ्जः । खौँडा इति भाषा ॥ इत्यमरः
२ । ६ । ४९ ॥

**खोडकशीर्षकं**, क्ली, (खोड क्षेपे + ण्वुल् । खोडकं
शीर्षं अस्य इति कप् ।) कपिशीर्षम् । क्रय-
शीर्षम् । इति त्रिकाण्डशेषः ॥

**खोर**, ऋ खोटने । गतिवैकल्ये इति यावत् । इति
कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) ऋ,
अचुखोरत् । खोरति खञ्जः । इति दुर्गा-

"अमितम्पचमीशानं सर्व्वभोगीणमुत्तमम् ।
आवयोः पितरं विद्धि ख्यातं दशरथं भुवि ॥")

**ख्यातगर्हणः**, त्रि, (ख्याता विश्रुता गर्हणा निन्दा
अस्य ।) प्रसिद्धकुत्सनः । तत्पर्य्यायः । अव-
गीतः २ । इत्यमरः । ३ । १ । ९३ ॥

**ख्यातगर्हितः**, त्रि, (ख्यातं गर्हितं गर्हणमस्य ।)
ख्यातगर्हणः । इति जटाधरः ॥

**ख्यातिः**, स्त्री, (ख्या + क्तिन् ।) प्रसिद्धिः । तत्-
पर्य्यायः । प्रथा २ । इत्यमरः । ३ । २ । ९ ॥
(यथा, पञ्चतन्त्रे । १ । ४०२ ।
"लोके ख्यातिमुपागताऽत्र सकले लोकोक्तिरेषा यतः ।"
मनुश्च । १२ । ३६ ।
"येनास्मिन् कर्म्मणा लोके ख्यातिमिच्छति पुष्कलाम् ।
न च शोचत्यसम्पत्तौ तद्विज्ञेयन्तु राजसम् ॥")
प्रकाशः । ज्ञानम् । यथा, माघे । ४ । ५५ ।
"मैत्रादिचित्तपरिकर्म्मविदो विधाय
क्लेशप्रहाणमिह लब्धसबीजयोगाः ।
ख्यातिं च सत्त्वपुरुषान्यतयाऽधिगम्य
वाञ्छन्ति तामपि समाधिभृतो निरोद्धुम् ॥"
"मैत्रीति । इहाद्रौ समाधिभृतो योगिनः ।
मैत्री करुणा मुदिता उपेक्षेति चतस्रश्चित्तवृत्तयः ।
तत्र पुण्यकृत्सु मैत्री दुःखिषु करुणा सुखिषु
मुदिता अनुमोदनं पापिषु उपेक्षा । मैत्री
आदिर्येषां तानि चित्तस्य परिकर्म्माणि प्रसाध-
कानि शोधकानीत्यर्थः तानि विन्दन्ति लभन्ते
इति तद्विदः तद्वाजस्तैः क्षीणान्तःकरणमलाः
इत्यर्थः । अतएव क्लेशप्रहाणं विधाय । अविद्या-
स्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः । तत्रा-
नित्येषु नित्यत्वाभिमानः अनात्मनि च देहेन्द्रि-
यादौ आत्मधीरित्यादि विभ्रमोऽविद्या । अस्मिता
अहङ्कारः । रागोऽभिमतविषयाभिलाषः । द्वेषो-
ऽनभिमतविषयेषुरोषः । अभिनिवेशः । कार्य्या-
कार्य्येष्वाग्रहः । ते हि पुरुषं क्लिश्यन्ति इति

खेलनजनितमनोजम् ॥”)

**खेलनी**, स्त्री, (खेलति अस्मिन् इति । खेल + अधिकरणे ल्युट् + स्त्रियां ङीप् ।) शारि-फलम् । इति हेमचन्द्रः ॥

**खेला**, स्त्री, (खेल + भावे + अप् टाप् ।) खेलनम् । तत्पर्य्यायः । क्रीडा २ कूर्द्दनम् ३ । इत्यमरः । १ । ७० । ३३ ॥

**खेलिः**, स्त्री, (खे आकाशे अलति पर्य्याप्नोति । अल् + इन् ।) गीतम् । बाणः । सूर्य्यः । पक्षी । जन्तुः । इत्यजयपालः ॥

**खेव**, ऋ ङ सेवे । इति कविकल्कद्रुमः ॥ (भ्वां-आत्मं-सकं-सेट् ऋदित् ।) ऋ, अचिखेवत् । ङ, खेवते । इति दुर्गादासः ॥

**खेसरः**, पुं, (खे आकाशे इव द्रुतगामित्वात् सरतीति । सृ + टः ।) जन्तुविशेषः । खचर इति भाषा । तत्पर्य्यायः । अश्वखरजः २ सकृद्गर्भः ३ अध्वगः ४ क्षमी ५ सन्तुष्टः ६ मिश्रजः ७ मिश्र-शब्दः ८ अतिभारगः ९ । इति राजनिर्घण्टः ॥

**खै**, स्थैर्य्ये । खनने । हिंसायाम् । इति कविकल्प-द्रुमः ॥ (भ्वां-परं-स्थैर्य्ये अकं-खननादौ सकं-अनिट् ।) खायति । इति दुर्गादासः ॥

**खोङ्गाहः**, पुं, (खे आकाशे उङ् इत्यव्यक्तशब्दं कुर्व्वन् गाहते इव प्रधावतीत्यर्थः । गाह + अच् । पृषोदरात् साधुः ।) श्वेतपिङ्गलाश्वः । इति हेमचन्द्रः ॥ खाङ्गाहोऽपि पाठः ॥

दासः ॥

**खोरः**, त्रि, (खोरति इति । खोर् + अच् ।) खञ्जः । इति हेमचन्द्रः ॥

**खोल**, ऋ खोटने । गतिवैकल्ये । इति कविकल्प-द्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) ऋ, अचु-खोलत् । खोलति खञ्जः । रमानाथस्तु खोलति बाला क्रिमिमित्युदाहृतवान् । इति दुर्गादासः ॥

**खोलः**, त्रि, (खोलति इति । खोल + अच् ।) खञ्जः । इति शब्दमाला ॥

**खोलकः**, पुं, (खोल + संज्ञायां कन् ।) पाकः । खोला इति भाषा ॥ शिरस्त्रः । खोपडा इति भाषा ॥ वल्मीकः । उयेर ढिपि इति भाषा ॥ पूगकोषः । इति मेदिनी ॥ गुयार छोवडा इति भाषा ॥

**खोलिः**, स्त्री, (खोल + इन् ।) तूणः । इति शब्द-माला ॥

**खोल्मुकः**, पुं, (खे आकाशे उल्मुक इव लोहित-वर्णतयेति बोध्यम् ।) मङ्गलग्रहः । इति त्रिकाण्डशेषः ॥

**ख्या**, ल ख्यातौ । कथने । इति कविकल्पद्रुमः ॥ (अदां-परं-अकं-कथनादौ तु सकं--अनिट् ।) ख्यातिः प्रसिद्धिः । ल, ख्याति गुणी प्रसिद्धः स्यादित्यर्थः । ख्याति साधुः कथां हरेः । तथा

क्लेशाः क्लेशहेतवः तेषां प्रहाणं क्षयः तद्विधाय क्लेशान् हित्वा इत्यर्थः । अतो लब्धः सबीजः सावलम्बयोगो यैस्ते लब्धसबीजयोगाः सन्तः आलम्बनमेव व्यनक्ति । सत्त्वपुरुषयोरन्यतया अन्यत्वेन मिथो भिन्नत्वेन ख्यातिं ज्ञानं अधि-गम्य प्रकृतिपुरुषौ भिन्नाविति ज्ञात्वा प्रकृति पुरुषयोर्विवेकाग्रहणात् संसारः । विवेकग्रह-णात् मुक्तिरिति साङ्ख्याः । अथ तां ख्यातिमपि निरोद्धुं निवर्त्तयितुं वाञ्छन्ति वृत्तिरूपां तां निवर्त्त्य स्वयम्प्रकाशतयैवावस्थातुमिच्छन्ती-त्यर्थः । प्रकृतावुपरतायां पुरुषस्वरूपेणावस्थानं मुक्तिरिति सांङ्ख्यसिद्धान्तः ॥” इति तट्टीकायां मल्लिनाथः ॥)

| | | |
|---|---|---|
| **खोट**, ऋ गत्याघाते । इति कविकल्पद्रुमः ॥ (भ्वां-<br>परं-अकं-सेट् ।) ऋ, अचुखोटत् । गत्या-<br>घातः स्वोटनम् । खोटति खञ्जः । इति<br>दुर्गा-<br>दासः ॥ | च । ख्या प्रकथने । प्रकथनं<br>प्रसिद्धिरिति<br>गोविन्दभट्टः । ख्या प्रकथने इति<br>चतुर्भुज-<br>जुमरौ । इति दुर्गादासः ॥<br>**ख्यातः**, त्रि, (ख्या + क्तः ।) ख्यातियुक्तः । तत्-<br>पर्य्यायः । प्रतीतः २ प्रथितः ३ वित्तः<br>४<br>विज्ञातः ५ विश्रुतः ६ । इत्यमरः । ३<br>। १ । ९ ॥<br>(यथा, भट्टिः । ६ । ९७ । | |

**ग**

**ग**, गकारः । स तु व्यञ्जनतृतीयवर्णः । अस्यो-
च्चारणस्थानं कण्ठः । (यथा, “अ-कु-ह-विस-
र्ज्जनीयानां कण्ठः ।”) इति व्याकरणम् ॥ * ॥
“गकारं परमेशानि ! पञ्चदेवात्मकं सदा ।
निर्गुणं त्रिगुणोपेतं निरीहं निर्म्मलं सदा ॥
पञ्चप्राणमयं वर्णं सर्व्वशक्त्यात्मकं प्रिये ! ।
अरुणादित्यसङ्काशां कुण्डलीं प्रणमाम्यहम् ॥”
इति कामधेनुतन्त्रम् ॥ * ॥
“ससर्गः श्लेषितः कण्ठे वायुना कादिमीरयेत् ।
वर्गस्पर्शनमात्रेण कं स्वरस्पर्शनात्तु खम् ।
स्तोकगम्भीरसंस्पर्शाद्गवौ ङञ्च वहिर्गतम् ॥”
इति प्रपञ्चसारः ॥ * ॥
(वङ्गाक्षरैस्तस्य लेखनप्रकारादिर्यथा, --
“अधःकुञ्चितरेखा या गाणेशा सा प्रकीर्त्तिता ।
ततो दक्षगता या तु कमला तत्र संस्थिता ।
अधोगता ततो या तु तस्यामीशः सदा वसेत् ॥”
अधोमुखेन गता पुनरूद्‌र्ध्वमुखेनागतेत्यर्थः ॥ * ॥
तस्य ध्यानं यथा, --
“ध्यानमस्याः प्रवक्ष्यामि शृणुष्व वरवर्णिनि ! ।
दाडिमीपुष्पसङ्काशां चतुर्ब्बाहुसमन्विताम् ॥
रक्ताम्बरधरां नित्यां रत्नालङ्कारभूषिताम् ।
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत् ॥”
इति वर्णोद्धारतन्त्रम् ॥ * ॥
तस्य नामानि यथा, --
“गोगौरी गौरवो गङ्गा गणेशो गोकुलेश्वरः ।
शार्ङ्गी पञ्चात्मको गाथा गन्धर्व्वः सर्व्वगः स्मृतिः ॥
सर्व्वसिद्धिः प्रभा धूम्रा द्विजाख्यः शिवदर्शनः ।
विश्वात्मा गौः पृथग्रूपा बालबद्धस्त्रिलोचनः ॥
गीतं सरस्वती विद्या भोगिनी नन्दनो धरा ।
भोगवती च हृदयं ज्ञानं जालन्धरो लवः ॥”
इति नानातन्त्राहृतनामानि ॥

**गं**, क्ली, (गीयते इति । गै गाने + भावे बाहु-
लकात् डः ।) गीतम् । इत्येकाक्षरकोषः ॥

**गः**, पुं, (गच्छति सर्व्वं जानाति इच्छामात्रेण
अभिलषितं सर्व्वं प्राप्नोति वा सर्व्वज्ञत्वात् प्राप्त-

**गगनं**, क्ली, (गं गानं शब्दात्मकं गुणं गच्छति
यद्वा गकारं भूतेषु प्रथमभूतत्वात् प्राधान्यं
गच्छति । यद्वा गच्छन्त्यस्मिन् देवादय इति ।
“गमेर्गश्च ।” उणां । २ । ७७ । इति युच्
गश्चान्तादेशः ।) आकाशम् । इत्यमरः । १ । २ । १ ॥
(यथा मेघदूते । ४८ ।
“प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टी-
रेकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम् ॥”)
तत्पर्य्यायः । अमरोक्तपर्य्यायाः आकाशशब्दे
द्रष्टव्याः ॥ (तेभ्यः परम् ।) वर्हिः १९ धन्व २०
आपः २१ पृथिवी २२ भूः २३ स्वयम्भूः २४
अध्वा २५ सगरः २६ ससुद्रः २७ अध्वरः २८ ।
इति वेदनिघण्टौ १ अध्यायः ॥ * ॥
“आकाशं प्रथमं भूतं श्रोत्रमध्यात्ममुच्यते ।
अधिभूतं तथा शब्दो दिशस्तत्राधिदैवतम् ॥”
इत्याश्वमेधिकपर्व्व ॥
तस्य गुणाः । शब्दः १ व्यापृत्त्वम् २ छिद्रता ३
अनाश्रयम् ४ अनालम्बम् ५ आश्रयान्तर-
शून्यम् । अव्यक्तम् ६ रूपस्पर्शशून्यत्त्वात् । अधि-
कारिता ७ द्रव्यान्तरानारम्भकत्वम् । अप्रती-
घातिता ८ भूतत्वम् ९ श्रोत्रेन्द्रियोपादानत्वात् ।
विकृतानि १० देहान्तर्गतच्छिद्राणि । तद्यथा, --
“आकाशस्य गुणः शब्दो व्यापृत्त्वं छिद्रमेव च ।
अनाश्रयमनालम्बमव्यक्तमविकारिता ॥
अप्रतीघातिता चैव भूतत्वं विकृतानि च ।
गुणाः पञ्चाशतः प्रोक्ताः पञ्चभूतात्मभूतता ॥”
पञ्चानां भूतानां आत्मा प्राप्तिः स्वकं स्वरूपं
तत्र लक्षिता । इति मोक्षधर्म्मः ॥ (गगनात्
पतिताम्बुगुणविशेषो यथा, --
“गगनाम्बु त्रिदोषघ्नं गृहीतं यत् सुभाजने ।
बल्यं रसायनं मेध्यं पात्रापेक्षि ततः परम् ॥
रक्षोघ्नं शीतलं ह्लादि ज्वरदाहविषापहम् ॥”
इति सुश्रुते सूत्रस्थाने ४५ अध्यायः ॥)

**गगनध्वजः**, पुं, (गगने गगनस्य वा ध्वज इव ।)
मेघः । इति हारावली ॥ सूर्य्यः । इति हेम-
चन्द्रः ॥

**गङ्गका**, स्त्री, (गङ्गा + अज्ञाताद्यर्थे कः । ततो
ह्रस्वः । “अभाषितपुंस्काच्च ।” ७ । ३ । ४८
इति पक्षे इत्वाभावः ।) गङ्गा । इति
मुग्धबोधम् ॥

**गङ्गा**, स्त्री, (गमयति प्रापयति ज्ञापयति वा
भगवतपदं या शक्तिः यद्वा गम्यते प्राप्यते
ज्ञाप्यते मोक्षार्थिभिर्या । गम गतौ + “गन्
गम्यद्योः ।” उणां । १ । १२२ । इति गन् तत-
ष्टाप् ।) स्वनामख्यातनदी ।
तदधिष्ठात्री देवता च ।
तत्पर्य्यायः । विष्णुपदी २ जह्नुतनया ३
सुरनिम्नगा ४ भागीरथी ५ त्रिपथगा ६
तिस्रोताः ७ भीष्मसूः ८ । इत्यमरः । १ । १० । ३१ ॥
अर्घ्यतीर्थम् ९ तीर्थराजः १० । इति
पद्मपुराणम् ॥
त्रिदशदीर्घिका ११ कुमारसूः १२ सरिद्वरा १३
सिद्धापगा १४ स्वरापगा १५ स्वर्ग्यापगा १६
खापगा १७ ऋषिकुल्या १८ हैमवती १९
स्वर्व्वापी २० हरशेखरा २१ । इति
हेमचन्द्रः ॥
सुरापगा २२ धर्म्मद्रवी २३ सुधा २४ जह्न-
कन्या २५ गान्दिनी २६ रुद्रशेखरा २७
नन्दिनी २८ अलकनन्दा २९
सितसिन्धुः ३० ।
इति जटाधरः ॥ अध्वगा ३१ उग्रशेखरा ३२
सिद्धसिन्धः ३३ इति त्रिकाण्डशेषः ॥ स्वर्ग-

सर्व्वैश्वर्य्यत्वाच्च । गम् + डः ।) गणेशः । (गायति
इति । गै + डः ।) गन्धर्व्वः । इत्येकाक्षरकोषः ॥
(गुरुसंज्ञकवर्णः स तु छन्दसो गणविशेषः । यथा,
छन्दोमञ्जर्य्यां १ मे स्तवके ।
"म्यरस्तजभ्नगैर्लान्तैरभिर्दशभिरक्षरैः ।
समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥"
"गुरुरेको गकारस्तु लकारो लघुरेककः ॥"
वाच्यलिङ्गे तु उपसर्गरहितः कर्म्मोपपदश्च
स्यात् । तत्र "गापोष्टक् ।" ३ । २ । ८ । इति
टक् । यथा, साम गायतीति सामगः । तथा च
मनुः । २ । ६२ ।
"हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः ।
वैश्योऽद्भिः प्राशिताभिस्तु शूद्रः स्पृष्टाभि-
रन्ततः ॥")

**गगनाध्वगः**, पुं, (गगनरूपाध्वना आकाशपथेन
गच्छतीति यद्वा गगनाध्वानं व्याप्य गच्छति ।
अनन्तगगनरूपमद्धानं व्याप्य सर्व्वतः स्थित
इत्येव प्रकृततातपर्य्यार्थः । गम + डः ।) सूर्य्यः ।
इति हेमचन्द्रः ॥

**गगनेचरः**, पुं, (गगने चरतीति । "चरेष्टः ।" ३ ।
२ । १६ । इति टः । अलुक् समासः ।) ग्रहः ।
नक्षत्रम् । इति सिद्धान्तशिरोमणिः ॥ (गगन-
चारिणि त्रि । यथा, महाभारते । १ । २७ । १५ ।
"तस्मिंस्तु कथिते मात्रा कारणे गगनेचरः ॥")

**गगनोल्मुकः**, पुं, (गगने गगनस्य वा उल्मुक
इव । मङ्गलग्रहस्य रक्तवर्णत्वात् तथात्वम् ।)
मङ्गलग्रहः । इति हारावली ॥

**गग्घ**, हसने । इति कविकल्पद्रुमः ॥ (भ्वां परं-
अकं-सेट् ।) कण्ठ्यवर्गतृतीयोपधः । गग घति ।
इति दुर्गादासः ॥

सरिद्वरा ३४ मन्दाकिनी ३५ जाह्नवी ३६
पुण्या ३७ समुद्रसुभगा ३८ स्वर्नदी ३९ सुर-
दीर्घिका ४० सुरनदी ४१ स्वर्धुनी ४२ ज्येष्ठा ४३
जह्नुसुता ४४ भीष्मजननी ४५ शुभ्रा ४६ शैले-
न्द्रजा ४७ भवायना ४८ । इति शब्दरत्ना-
वली ॥ अस्या जलस्य गुणाः । शीतत्वम् । स्वादु-
त्वम् । स्वच्छत्वम् ।
अत्यन्तरुच्यत्वम् । पथ्यत्वम् ।
पावनत्वम् । पापहारित्वम् ।
तृष्णामोहध्वंसन-
त्वम् । दीपनत्वम् । प्रज्ञाधारित्वञ्च । इति राज-
निर्घण्टः ॥ * ॥
("गङ्गा सरस्वती कोनं यमुना सरयूः सची ।
वेणा इरावती नीला उत्तरात् पूर्ब्बवाहिनी ॥
हिमवत्-प्रभवा ह्येता हिमसम्भवशीतलाः ।
समाः सर्व्वगुणैर्नद्यो वातश्लेष्महरा नृणाम् ॥
आसां नवशतैर्युक्ता गङ्गा पूर्ब्बसमुद्रगा ॥"
इति हारीते प्रथमस्थाने सप्तमेऽध्याये ॥)
अस्या उत्पत्तिस्तु हिमालयात् सुमेरु-
दुहितरि मनोरमायाम् । हिमालयः प्रार्थितः
सन् देवेभ्य इमां दत्तवान् । तां नीत्वा
देवाः स्वर्गं गतवन्तः ॥ * ॥ पृथिव्यामस्या अव-
तरणकारणम् । सगरराजस्य सुतान् कपिल-
शापेन भस्मीभूतानुद्धर्त्तं भगीरथराजः पृथिव्यां

| | | |
|---|---|---|
| | | गङ्गानयनाय तपस्तेपे । ततो ब्रह्मा तुष्टस्तस्मै<br>तं वरं दत्त्वा गङ्गाधारणार्थं शिवाराधनं कर्त्तु-<br>मुक्तवान् । स शिवं पर्य्यतोषयत् । शिवोऽपि<br>हिमालयपर्व्वतं गत्वा जटा विकीर्य्य पतेति<br>गङ्गामब्रवीत् । सा तज्जटासु पतित्वा संवत्सर-<br>पर्य्यन्तं बभ्राम । ततः शिवो भगीरथप्रार्थनया<br>जटामेकामुत्क्षिप्य तामुत्ससर्ज्ज । साऽतिवेगेन<br>पृथिवीतलमागत्य भगीरथस्य पश्चात् षश्चा-<br>दाजगाम । स सगरपुत्त्रकृतखातेन तां रसातल- |

मानीय तज्जलेन सगरसुतान् तांस्तर्पयामास । ते पूताः स्वर्गं गतवन्तः । इति वाल्मीकिरामायणमतम् ॥ * ॥ प्रकारान्तरम् । वामनदेवस्य बलेः सकाशात्त्रिलोकहरणकालेब्रह्माण्डोपरिगतवामपादाङ्गुष्ठनखजनितविवरेण ब्रह्माण्डोर्द्ध्वस्थिता या जलधारा तच्चरणस्पर्शेन समधिकपूता सती ध्रुवलोके पपात । ततो देवमार्गेण सुमेरुपर्व्वतोपरि ब्रह्मसदने पतित्वा सीतालकनन्दा वंक्षुर्भद्रेति चतुर्द्ध्वा भूत्वा चतुर्दिशमाश्रित्य लवणसमुद्रं प्रविष्टा । तत्र सीता ब्रह्मसदनात् केशराचलशृङ्गेभ्योऽधोऽधः स्रवन्ती गन्धमादनमूर्द्धसु पतित्वा भद्राश्ववर्षमध्येन प्राच्यां दिशि एवं वंक्षुर्माल्यवच्छिखरान्निपत्यकेतुमालवर्षमध्येन प्रतीच्यामपरं भद्रा गिरिशृङ्गाण्यतिक्रम्य शृङ्गवतः शिखरान्निपत्य उत्तरकुरुवर्षमध्येनोदीच्यामतोऽलकनन्दा बहुपर्व्वतशृङ्गाण्यतिक्रम्य हिमकूटान्निपत्य भारतवर्षमध्येन दक्षिणस्यां दिश्येवंक्रमेण लवणसमुद्रं सर्व्वाः प्रविष्टाः । इति भागतवमतम् ॥ * ॥ अस्याः पृथिव्यामवतरणकालस्तु आदित्यपुराणे ।

"वैशाखशुक्लपक्षे तु तृतीयायां युधिष्ठिर ! ।
यवानुत्पादयामास युगञ्चारब्धवान् कृतम् ॥
ब्रह्मलोकात् त्रिपथगां पृथिव्यामवतारयत् ।
तस्यां कार्य्यो यवैर्होमो यवैर्विष्णुं समर्च्चयेत् ॥"
* ॥

अस्या हिमालयान्निर्गताया दशहरा संज्ञा ।
तथा च स्मृतिः ।

"ज्यैष्ठे मासि क्षितिसुतदिने शुक्लपक्षे दशम्यां
हस्ते शैलान्निरगमदियं जाह्नवी मर्त्यलोकम् ।
पापान्यस्यां हरति च तिथौ सा दशेत्याहुरार्य्याः
पुण्यं दद्यादपि शतगुणं बाजिमेधायुतस्य ॥" * ॥

अथ गङ्गाध्यानम् । भविष्ये ।

"चतुर्भुजां त्रिनेत्राञ्च सर्व्वावयवभूषिताम् ।
रत्नकुम्भां सिताम्भोजां वरदामभयप्रदाम् ॥
श्वेतवस्त्रपरीधानां मुक्तामणिविभूषिताम् ।
ततो ध्यायेत् सुरूपाञ्च चन्द्रायुतसमप्रभाम् ॥
चामरैर्वीज्यमानाञ्च श्वेतच्छत्रोपशोभिताम् ।
सुप्रसन्नां सुवदनां करुणार्द्रनिजान्तराम् ॥
सुधाप्लावितभूपृष्ठामार्द्रगन्धानुलेपनाम् ।
त्रैलोक्यनमितां गङ्गां देवादिभिरभिष्टुताम् ॥
दिव्यरूपविभूषाञ्च दिव्यमाल्यानुलेपनाम् ॥"
भवनानि विचित्राणि विचित्राभरणाः
स्त्रियः ।
आरोग्यं वित्तसम्पत्तिर्गङ्गास्मरणजं फलम्
॥"

अस्या दर्शनादिफलम् । ब्रह्माण्डाग्नेययोः
।

"दृष्टा तु हरते पापं स्पृष्टा तु त्रिदिवं नयेत्
।
प्रसङ्गेनापि या गङ्गा मोक्षदा त्ववगाहिता
॥"

तथा भविष्ये ।

"यत् फलं जायते पुंसां दर्शनात्
परमात्मनः ।
तद्भवेदेव गङ्गाया दर्शने भक्तिभावतः ॥"

अस्यां स्नानफलम् । ब्रह्माण्डपुराणे ।

"यैः पुण्यवाहिनी गङ्गा
सकृद्भक्त्याऽवगाहिता ।
तेषां कुलानां लक्षन्तु भवात्तारयते शिवा
॥
अनेकजन्मसम्भूतं पापं पुंसां प्रणश्यति ।
स्नानमात्रेण गङ्गायां सद्यः पुण्यस्य
भाजनम् ॥"

दानधर्म्मे ।

"अन्धाः क्लीवा जडा व्यङ्गाः पतिता
रोगिणोऽन्त्यजाः ।
गङ्गां संसेव्य पुरुषा देवैर्गच्छन्ति
तुल्यताम् ॥
स्नानन्तु भक्त्या गङ्गायां कर्त्तुकामस्य
गच्छतः ।
पदे पदेऽश्वमेघस्य फलं मर्त्यस्य जायते
॥"

तथा, ब्रह्माण्डे ।

"ये गच्छन्ति स्वतो गङ्गां परांश्च प्रेरयन्ति
ये ।
इह ते सर्व्वभोगानामन्ते ज्ञानस्य भाजनम्
॥"

अस्याः पूजायाः फलम् । आग्नेये ।

"गङ्गायां पूजितायान्तु पूजिताः
सर्व्वदेवताः ।
तस्मात् सर्व्वप्रयत्नेन पूजयेदमरापगाम्
॥" * ॥
गङ्गायां मरणे यादृक् स तादृक्
फलमाप्नुयात् ॥" *

तत्र त्रयोदशक्रियावर्ज्जनं यथा, ब्रह्माण्डे ।

"गङ्गां पुण्यजलां प्राप्य त्रयोदश
विवर्ज्जयेत् ।
शौचमाचमनं सेकं निर्माल्यं मलघर्षणम् ॥
गात्रसम्बाहनं क्रीडां प्रतिग्रहमथो रतिम् ।
अन्यतीर्थरतिञ्चैव अन्यतीर्थप्रशंसनम् ।
वस्त्रत्यागमथाघातं सन्तारञ्च विशेषतः ॥"
* ॥

अथ नारायणक्षेत्रलक्षणम् । ब्रह्मपुराणे ।

"प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् ।
अत्र नारायणः स्वामी नान्यः स्वामी
कदाचन ॥"

अथ गर्भतीरयोर्लक्षणम् ।

"भाद्रकृष्णचतुर्द्दश्यां यावदाक्रमते जलम् ।
तावद्गर्भं विजानीयात् तदूर्द्ध्वं तीरमुच्यते
।
सार्द्धहस्तशतं यावद्गर्भतस्तीरमुच्यते ॥"
* ॥

तीरे प्रतिग्रहादिनिषेधो यथा, --

"तीरे प्रतिग्रहस्त्याज्यस्त्याज्योधर्म्मस्य
विक्रयः ॥"

अथ गङ्गाक्षेत्रफलम् । स्कान्दे ।

"तीराद्गव्यूतिमात्रन्तु परितः क्षेत्रमुच्यत ।
अत्र यद्यत् कृतं कर्म्म गङ्गायां नात्र संशयः
।
अत्रस्थास्त्रिदिवं यान्ति ये
मृतास्तेऽपुनर्भवाः ॥"

इति प्रायश्चित्ततत्त्वम् ॥ * ॥
(अस्या माहात्म्यं यथा, महाभारते । ३ ।
८५ । ९४ ।

"न गङ्गा सदृशं तीर्थं न देवः केशवात् परः
।
ब्राह्मणेभ्यः परं नास्ति एवमाह पितामहः
॥"

अस्या श्च माहात्म्यवर्णने सहस्रनामकथनं
यथा,
काशीखण्डे २९ अध्याये ।
अगस्त्य उवाच ।

अपि च ।
"सितमकरनिषण्णां शुक्लवर्णां त्रिनेत्रां
करधृतकमलोद्यत्सूत्पलाऽभीत्यभीष्टाम्।
विधिहरहरिरूपां सेन्दुकोटीरचूडां
कलितसितदुकूलां जाह्नवीं तां नमामि ॥" * ॥
अथ गङ्गामाहात्म्यश्रवणपठनफलम्। यथा, --
भविष्ये ।
"माहात्म्यं ये च गङ्गायाः शृण्वन्ति च पठन्ति च ।
तेऽप्यसंख्यैर्महापापैर्मुच्यन्ते नात्र संशयः ॥"
अस्याः स्मरणफलम् ।
"गच्छंस्तिष्ठन् स्वपन् ध्यायन् जाग्रद्भुञ्जन् श्वसन् वदन् ।
यः स्मरेत् सततं गङ्गां स च मुच्येत बन्धनात् ॥

तस्यां यज्ञादिकरणफलम् । स्कान्दे ।
"यज्ञो दानं तपो जप्यं श्राद्धञ्च सुरपूजनम् ।
गङ्गायां यत् कृतं सर्व्वं कोटिकोटिगुणं भवेत् ॥"
तथा भविष्ये ।
"मुलभं सकलं पुण्यं यज्ञदानादिजं फलम् ।
गङ्गातोयैश्च सतिलैर्दुर्ल्लभं पितृतर्पणम् ॥
गयाश्राद्धं कृतं तेन उत्सृष्टस्तु वृषस्तथा ।
येन तद्वीचिसंसिक्ते तीरे श्राद्धमकारि च ॥" * ॥
तज्जलपानफलम् । भविष्ये ।
"गण्डूषमात्रपानेन अश्वमेधफलं लभेत् ।
स्वच्छन्दं यः पिबेदापस्तस्य मुक्तिः करे स्थिता ॥
त्रिभिः सारस्वतं तोयं सप्तभिस्त्वथ यामुनम् ।
नार्मदं दशभिर्मासैर्गाङ्गं वर्षेण जीर्य्यति ॥
नाभ्यन्तर्गततोयानां मृतानां क्वापि देहिनाम् ।
तत्तत्तीर्थफलप्राप्तिर्नात्र कार्य्या विचारणा ॥"
यमोक्तौ ।
"क्षेत्रस्थमुद्धृतं वापि शीतमुष्णमथापि वा ।
गाङ्गेयं हरते पापमाजन्ममरणान्तिकम् ॥" * ॥
अस्यां मरणफलम् । कूर्म्मपुराणे ।
"गङ्गायां ज्ञानतो मृत्वा मुक्तिमाप्नोति मानवः ।
अज्ञानाद्ब्रह्मलोकञ्च याति नास्त्यत्र संशयः ॥
गङ्गायाञ्च जले मोक्षो वाराणस्यां जले स्थले ।
अन्तरीक्षे च गङ्गायां गङ्गासागरसङ्गमे ॥"
तथा च, स्मृतौ ।
"शुक्लपक्षे दिवा भूमौ गङ्गायामुत्तरायणे ।
धन्या देहं विमुञ्चन्ति हृदयस्थे जनार्द्दने ॥" * ॥
तत्रास्थिनिक्षेपफलम् ।
"दशाहाभ्यन्तरे यस्य गङ्गातोयेऽस्थि मज्जति ।

"विना स्नानेन गङ्गायां नृणां जन्म निरर्थकम् ।
उपायान्तरमस्त्यन्यद्येन स्नानफलं लभेत् ॥
अशक्तानां च पङ्गूनामालस्योपहतात्मनाम् ।
दूरदेशान्तरस्थानां गङ्गास्नानं कथं भवेत् ॥
दानं वाथ व्रतं वाथ मन्त्रः स्तोत्रं जपोऽथवा ।
तीर्थान्तराभिषेको वा देवतोपासनन्तु वा ॥
यद्यस्ति किञ्चित् षड्वक्त्र !
गङ्गास्नानफलप्रदम् ।
विधानान्तरमात्रेण तद्वद प्रणताय मे ॥
त्वत्तो न वेद स्कन्दान्यो गङ्गागर्भसमुद्भव ! ।
परं स्वर्गतरङ्गिण्या महिमानं महामते ! ॥
स्कन्द उवाच ।
सन्ति पुण्यजलानीह सरांसि सरितो मुने ! ।
स्थाने स्थाने च तीर्थानि जितात्माध्युषितानि च ॥
दृष्टप्रत्ययकारीणि महामहिमभाञ्ज्यपि ।
परं स्वर्गतरङ्गिण्याः कोट्यंशोऽपि न तत्र वै ॥
अनेनैवानुमानेन बुध्यस्व कलशोद्भव ! ।
दध्रे गङ्गोत्तमाङ्गेन देवदेवेन शम्भुना ॥
स्नानकालेऽन्यतीर्थेषु जप्यते जाह्नवी जनैः ।
विना विष्णुपदीं क्वान्यत् समर्थमघमोचने ॥
गङ्गास्नानफलं ब्रह्मन् ! गङ्गायामेव लभ्यते ।
यथा द्राक्षाफलस्वादोद्राक्षायाम्न नान्यतः ॥ १० ॥
अस्त्युपाय इह त्वेकः स्याद्येनाविकलं फलम् ।
स्नानस्य देवसरितो महागुह्यतमो मुने ! ॥
शिवभक्ताय शान्ताय विष्णुभक्तिपराय च ।
श्रद्धालवे त्वास्तिकाय गर्भवासमुमुक्षवे ॥

कथनीयं न चान्यस्य कस्यचित् केनचित्
क्वचित् ।
इदं रहस्यं परमं महापातकनाशनम् ॥
महाश्रेयस्करं पुण्यं मनोरथकरं परम् ।
द्युनदीप्रीतिजनकं शिवसन्तोषसन्तति ॥
नाम्नां सहस्रं गङ्गायाः स्तवराजेषु शोभनम् ।
जप्यानां परमं जप्यं वेदोपनिषदा समम् ॥
जपनीयं प्रयत्नेन मौनिना वाचकं विना ।
शुचिस्थानेषु शुचिना सुस्पष्टाक्षरमेव च ॥
स्कन्द उवाच । ॐ नमो गङ्गादेव्यै ॥
ॐ काररूपिण्यजराऽतुलाऽनन्ताऽमृतस्रवा।
अत्युदाराऽभयाऽशोकाऽलकनन्दाऽमृताऽमला॥
अनाथवत्सलाऽमोवाऽपांयोनिरमृतप्रदा ।
अव्यक्तलक्षणाऽक्षोभ्याऽनवच्छिन्नाऽपराजिता॥
अनाथनाथाऽभीष्टार्थसिद्धिदानङ्गवर्द्धिनी ।
अणिमादिगुणाधाराऽग्रगण्याऽलीकहारिणी॥
अचिन्त्यशक्तिरनघाऽद्भुतरूपाऽघहारिणी ।
अद्रिराजसुताऽष्टाङ्गयोगसिद्धिप्रदाऽच्युता ॥ २०
॥
अक्षुण्णशक्तिरसुदाऽनन्ततीर्थाऽमृतोदका ।
अनन्तमहिमाऽपाराऽनन्तसौख्यप्रदाऽन्नदा॥
अशेषदेवतामूर्त्तिरघोराऽमृतरूपिणी।
अविद्याजालशमनी ह्यप्रतर्क्यगतिप्रदा ॥
अशेषविघ्नसंहर्त्री त्वशेषगुणगुम्फिता ।
अज्ञानतिमिरज्योतिरनुग्रहपरायणा॥
अभिरामानवद्याङ्ग्यनन्तसाराऽकलङ्किनी॥
आरोग्यदानन्दवल्ली त्वापन्नार्त्तिविनाशिनी ॥
राश्चर्य्यमूर्त्तिरायुष्या ह्याढ्याद्याप्रार्य्यसेविता ।
आप्यायिन्याप्तविद्याख्यात्वानन्दाश्वासदायिनी
॥
आलस्यघ्न्यापदां हन्त्री ह्यानन्दामृतवर्षिणी ।
इरावतीष्टदात्रीष्टा त्विष्टापूर्त्तफलप्रदा ॥
इतिहासश्रुतीड्यार्था त्विहामुत्र शुभप्रदा ।
इज्या शीलसमिज्येष्ठा त्विन्द्रादिपरिवन्दिता ॥
इलालङ्कारमालेद्धा त्विन्दिरा रम्यमन्दिरा ।
इदिन्दिरादिसंसेव्या त्वीश्वरीश्वरवल्लभा ॥
ईतिभीतिहरेड्या च त्वीडनीयचरित्रभृत् ।
उत्कृष्टशक्तिरुत्कृष्टोडुपमण्डलचारिणी ॥
उदिताम्बरमार्गोस्रोरगलोकविहारिणी।
उक्षोर्वरोत्पलोत्कुम्भा उपेन्द्रचरणद्रवा ॥ ३० ॥
उदन्वत्पूर्त्तिहेतुश्चोदारोत्साहप्रवर्द्धिनी।

अम्बिकाम्बुमहायोनिरन्धोदान्धकहारिणी॥
अंशुमाला ह्यंशुमती त्वङ्गीकृतषडानना ।
अन्धतामिस्रहन्त्र्यन्धुरञ्जनाह्यञ्जनावती ॥
कल्याणकारिणी काम्या कमलोत्पलगन्धिनी
।
कुमुद्वती कमलिनी कान्तिः कल्पितदायिनी
॥
काञ्चनाक्षी कामधेनुः कीर्त्तिकृत्
क्लेशनाशिनी ।
क्रतुश्रेष्ठा क्रतुफला कर्म्मबन्धविभेदिनी ॥
४१ ॥
कमलाक्षी क्लमहरा कृशानुंतपनद्युतिः ।
करुणार्द्रा च कल्याणी कलिकल्मषनाशिनी
॥
कामरूपा क्रियाशक्तिः कमलोत्पलमालिनी ।
कूटस्था करुणा कान्ता कूर्म्मयाना कलावती
॥
कमला कल्पलतिका काली कलुषवैरिणी ।
कमनीयजला कम्रा कपर्दिसुकपर्दगा ॥
कालकूटप्रशमनी कदम्बकुसुमप्रिया ।
कालिन्दी केलिललिता कलकल्लोलमालिका
॥
कान्तलोकत्रया कण्डूः कण्डूतनयवत्सला ।
खड्गिणी खड्गधाराभा खगा
खण्डेन्दुधारिणी ॥
खे खेलगामिनी स्वस्था खण्डेन्दुतिलकप्रिया
।
खेचरी खेचरीबन्द्या ख्यातिः
ख्यातिप्रदायिनी ॥
खण्डितप्रणताघौघा खलबुद्धिविनाशिनी ।
खातैनःकन्दसन्दोहा खड्गखट्वाङ्गखेटिनी ॥
खरसन्तापशमनी खनिः पीयूषपाथसाम् ।
गङ्गा गन्धवती गौरी गन्धर्व्वनगरप्रिया ॥
गम्भीराङ्गी गुणमयी गतातङ्का गतिप्रिया ।
गणनाथाम्बिका गीता गद्यपद्यपरिष्टुता ॥ ५०
॥
गान्धारी गर्भशमनी गतिभ्रष्टगतिप्रदा ।
गोमती गुह्यविद्या गौर्गोप्त्री गगनगामिनी ॥
गोत्रप्रवर्द्धिनी गुण्या गुणातीता गुणाग्रणीः ।
गुहाम्बिका गिरिसुता गोविन्दाङ्घ्रिसमुद्भवा ॥
गुणनीयचरित्रा च गायत्री गिरिशप्रिया ।

जया जनार्द्दनप्रीता जुषणीया जगद्धिता
॥
जीवनं जीवणप्राणा जगज्ज्येष्ठा जगन्मयी
।
जीवजीवातुलतिका
जन्मिजन्मनिवर्हिणी ॥
जाड्यविध्वंसनकरी
जगद्योनिर्जलाविला ।
जगदानन्दजननी जलजा जलजेक्षणा ॥
जनलोचनपीयूषा जटातटविहारिणी ।
जयन्ती जन्तुपापघ्नी जनितज्ञानविग्रहा
॥
झल्लरीवाद्यकुशला झलज्झालजलावृता
।
झिण्टीशवन्द्या झाङ्कारकारिणी
झर्झरावती ।
टीकिताऽशेषपाताला
टङ्किकैनोऽद्रिपाटने ।
टङ्कारनृत्यत्कल्लोला टीकनीयमहातटा
॥
डम्बरप्रवहा डीनराजहंसकुलाकुला ।
डमड्डमरुहस्ता च डामरोक्तमहाण्डका
॥ ७० ॥
ढौकिताऽशेषनिर्व्वाणा
ढक्कानादचलज्जला।
ढुण्डिविघ्नेशजननी ढणड्डुणितपातका
॥
तर्पणी तीर्थतीर्था च त्रिपथा त्रिदशेश्वरी
।
त्रिलोकगोप्त्री तोयेशी
त्रैलोक्यपरिवन्दिता ॥
तापत्रितयसंहर्त्री तेजोबलविवर्द्धिनी ।
त्रिलक्षा तारणी तारा
तारापतिकरार्च्चिता ॥
त्रैलोक्यपावनी पुण्या तुष्टिदा
तुष्टिरूपिणी ।
तृष्णाच्छेत्री तीर्थमाता
त्रिविक्रमपदोद्भवा ॥
तपोमयी तपोरूपा तपस्तोमफलप्रदा ।
त्रैलोक्यव्यापिनी
तृप्तिस्तृप्तिकृत्तत्त्वरूपिणी ॥

उद्वेगघ्न्युष्णशमनी उष्णरश्मिसुता प्रिया ॥
उत्पत्तिस्थितिसंहारकारिण्युपरिचारिणी ।
ऊर्ज्जं वहन्त्यूर्ज्जं धरोर्ज्जावती चोर्म्मिमालिनी ॥
उर्द्ध्वरेतःप्रियोर्द्ध्वाध्वा ह्यूर्म्मिलोर्द्ध्वगतिप्रदा ।
ऋषिबृन्दस्तुतर्द्धिश्च ऋणत्रयविनाशिनी ॥
ऋतम्भरर्द्धिदात्री च ऋक्स्वरूपा ऋजुप्रिया ।
ऋक्षमार्गवहर्क्षार्च्चिरृ जुमार्गप्रदर्शिनी ॥
एधिताखिलधर्म्मार्था त्वेकैकामृतदायिनी ।
एधनीयस्वभावैज्या त्वेजिताशेषपातका ॥
ऐश्वर्य्यदैश्वर्य्यरूपा ह्यैतिह्यं ह्यैन्दवीद्युतिः ।
ओजस्विन्योषधीक्षेत्रमोजोदौदनदायिनी ॥
ओष्ठामृतौन्नत्यदात्री त्वौषधं भवरोगिणाम् ।
औदार्य्यचञ्चुरौपेन्द्री त्वौग्री ह्यौमेयरूपिणी ॥
अम्बराध्ववहाम्बष्ठाम्बरमालाम्बुजेक्षणा ।

गूढरूपा गुणवती गुर्व्वी गौरववर्द्धिनी ॥
ग्रहपीडाहरा गुन्द्रा गरघ्नी गानवत्सला ।
घर्म्महन्त्री घृतवती घृततुष्टिप्रदायिनी ॥
घण्टारवप्रिया घोराऽघौघविध्वंसकारिणी ।
घ्राणतुष्टिकरी घोषा घनानन्दा घनप्रिया ॥
घातुका घूर्णितजला घृष्टपातकसन्ततिः ।
घटकोटिप्रपीतापा घटिताशेषमङ्गला ॥
घृणावती घृणनिधिर्घस्मरा घूकनादिनी ।
घुसृणापिञ्जरतनुर्घर्घरा घर्घरस्वना ॥
चन्द्रिका चन्द्रकान्ताम्बुश्चञ्चदापा चलद्युतिः ।
चिन्मयी चितिरूपा च चन्द्रायुतशतानना ॥
चाम्पेयलोचना चारुश्चार्व्वङ्गी चारुगामिनी ।
चार्य्या चारित्रनिलया चित्रकृच्चित्ररूपिणी ॥
चम्पूश्चन्दनशुच्यम्बुश्चर्च्चनीया चिरस्थिरा ।
चारुचम्पकमालाढ्या चमिताऽशेषदुष्कृता ॥ ६० ॥
चिदाकाशवहाऽचिन्त्या चञ्चच्चामरवीजिता ।
चोरिता शेषवृजिना चरिताऽशेषमण्डला ॥
छेदिताऽखिलपापौघा छद्मघ्नी छलहारिणी ।
छन्नत्रिविष्टपतला छोटिताऽशेषबन्धना ॥
छुरिताऽमृतधारौघा छिन्नैनाश्छन्दगामिनी ।
छत्रीकृतमरालौघा छटीकृतनिजामृता ॥
जाह्नवीज्या जगन्माता जप्या जङ्घालवीचिका ।

त्रैलोक्यसुन्दरी तुर्य्या तुर्य्यातीतपदप्रदा ।
त्रैलोक्यलक्ष्मीस्त्रिपदी तथ्या तिमिरचन्द्रिका ॥
तेजोगर्भा तपःसारा त्रिपुरारिशिरोगृहा ।
त्रयीस्वरूपिणी तन्वी तपनाङ्गजभीतिनुत् ॥
तरिस्तरणिजामित्रं तर्पिताऽशेषपूर्ब्बजा ।
तुलाविरहिता तीव्रपापतूलतनूनपात् ॥
दारिद्र्यदमनी दक्षा दुष्प्रेक्षा दिव्यमण्डना ।
दीक्षावती दुरावाप्या द्राक्षामधुरवारिभृत् ॥
दर्शिताऽनेककुतुका दुष्टदुर्ज्जयदुःखहृत् ।
दैन्यहृद्दुरितघ्नी च दानवारिपदाब्जजा ॥ ८० ॥
दन्दशूकविषघ्नी च दारिताऽघौघसन्ततिः ।
द्रुता देवद्रुमच्छन्ना दुर्व्वाराघविघातिनी ॥
दमग्राह्या देवमाता देवलोकप्रदर्शिनी ।
देवदेवप्रिया देवी दिक्पालपददायिनी ॥
दीर्घायुःकारिणी दीर्घा दोग्ध्री दूषणवर्ज्जिता ।
दुग्धाम्बुवाहिनी दोह्या दिव्या दिव्यगतिप्रदा ॥
द्युनदी दीनशरणं देहिदेहनिवारिणी ।
द्राघीयसी दाघहन्त्री दितपातकसन्ततिः ॥
दूरदेशान्तरचरी दुर्गमा देववल्लभा ।
दुर्वृत्तघ्नी दुर्विगाह्या दयाधारा दयावती ॥
दुरासदा दानशीला द्राविणी द्रुहिणस्तुता ।
दैत्यदानवसंशुद्धिकर्त्री दुर्बुद्धिहारिणी ॥
दानसारा दयासारा द्यावाभूमिविगाहिनी ।
दृष्टादृष्टफलप्राप्तिर्देवताबृन्दवन्दिता ॥
दीर्घव्रता दीर्घदृष्टिर्दीप्ततोया दुरालभा ।
दण्डयित्री दण्डनीतिर्दुष्टदण्डधरार्च्चिता ॥

| | | |
|---|---|---|
| | | दुरोदरघ्नी दावार्च्चिर्द्रवद्द्रव्यैकशेवधिः ।<br>दीनसन्तापशमनी दात्री दवथुवैरिणी ॥<br>दरीविदारणपरा दान्ता दान्तजनप्रिया । |

दारिताद्रितटा दुर्गा दुर्गारण्यप्रचारिणी ॥ ९० ॥
धर्म्मद्रवा धर्म्मधुरा धेनुर्धीरा धृतिर्ध्रुवा ।
धेनुदानफलस्पर्शा धर्म्मकामार्थमोक्षदा ॥
धर्म्मोर्म्मिवाहिनीधुर्य्या धात्री धात्रीविभूषणम् ।
धर्म्मिणी धर्म्मशीला च धन्विकोटिकृतावना ॥
ध्यातृपापहरा ध्येया धावनी धूतकल्मषा ।
धर्म्मधारा धर्म्मसारा धनदा धनवर्द्धिनी ॥
धर्म्माधर्म्मगुणच्छेत्री धत्तूरकुसुमप्रिया ।
धर्म्मेशी धर्म्मशास्त्रज्ञा धनधान्यसमृद्धिकृत् ॥
धर्म्मलभ्या धर्म्मजला धर्म्मप्रसवधर्म्मिणी ।
ध्यानगम्यस्वरूपा च धरणी धातृपूजिता ॥
धूर्धूर्जटिजटासंस्था धन्या धीर्धारणावती ।
नन्दा निर्व्वाणजननी नन्दिनी नुन्नपातका ॥
निषिद्धविघ्ननिचया निजानन्दप्रकाशिनी ।
नभोऽङ्गनचरी नूतिर्नम्या नारायणी नुता ॥
निर्म्मला निर्म्मलाख्याना नाशिनी तापसम्पदाम् ।
नियता नित्यसुखदा नानाश्चर्य्यमहानिधिः ॥
नदीनदसरोमाता नायिका नाकदीर्घिका ।
नष्टोद्धारणधीरा च नन्दनानन्ददायिनी ॥
निर्णिक्ताशेषभुवना निःसङ्गा निरुपद्रवा ।
निरालम्बा निष्प्रपञ्चा निर्णाशितमहामला ॥ १०० ॥

ब्रह्मण्या ब्रह्मकृद् ब्राह्मी ब्रह्मिष्ठा विमलोदका ॥
विभावरी च विरजा विक्रान्तानेकविष्टपा ।
विश्वमित्रं विष्णुपदी वैष्णवी वैष्णवप्रिया ॥
विरूपाक्षप्रियकरी विभूतिर्विश्वतोमुखी ।
विपाशा वैबुधी वेद्या वेदाक्षररसस्रवा ॥
विद्या वेगवती वन्द्या बृंहणी ब्रह्मवादिनी ।
वरदा विप्रकृष्टा च वरिष्टा च विशोधनी ॥
विद्याधरी विशोका च वयोबृन्दनिषेविता ।
बहूदका बलवती व्योमस्था विबुधप्रिया ॥ १२० ॥
वाणी वेदवती वित्ता ब्रह्मविद्यातरङ्गिणी ।
ब्रह्माण्डकोटिव्याप्ताम्बुर्ब्रह्महत्यापहारिणी॥
ब्रह्मेशविष्णुरूपा च बुद्धिर्विभववर्द्धिनी ।
विलासिसुखदा वैश्या व्यापिनी च वृषारणिः ॥
वृषाङ्कमौलिनिलया विपन्नार्त्तिप्रभञ्जिनी ।
विनीता विनता ब्रध्नतनया विनयान्विता ॥
विपञ्ची वाद्यकुशला वेणुश्रुतिविचक्षणा ।
वर्च्चस्करी बलकरी बलोन्मूलितकल्मषा ॥
विपाप्मा विगतातङ्का विकल्पपरिवर्ज्जिता ।
वृष्टिकर्त्री वृष्टिजला विधिर्विच्छिन्नबन्धना ॥
व्रतरूपा वित्तरूपा बहुविघ्नविनाशकृत् ।
वसुधारा वसुमती विचित्राङ्गी विभावसुः ॥
विजया विश्वबीजं च वामदेवी वरप्रदा ।
वृषाश्रिता विषघ्नी च विज्ञानोर्म्यंशुमालिनी ॥
भव्या भोगवती भद्रा भवानी भूतभाविनी ।
भूतधात्री भयहरा भक्तदारिद्र्यघातिनी ॥
भुक्तिमुक्तिप्रदा भेशी भक्तस्वर्गापवर्गदा ।
भागीरथी भानुमती भाग्यं भोगवती भृतिः ॥
भवप्रिया भवद्वेष्ट्री भूतिदा भूतिभूषणा ।
भाललोचनभावज्ञा भूतभव्यभवत्प्रभुः ॥ १३० ॥
भ्रान्तिज्ञानप्रशमनी भिन्नब्रह्माण्डमण्डपा ।
भूरिदा भक्तिसुलभा भाग्यवद्दृष्टिगोचरी ॥
भञ्जितोपप्लवकुला भक्ष्यभोज्यसुखप्रदा ।
भिक्षणीया भिक्षुमाता भावाभावस्वरूपिणी ॥
मन्दाकिनी महानन्दा माता मुक्तितरङ्गिणी ।
महोदया मधुमती महापुण्या मुदाकरी ॥
मुनिस्तुता मोहहन्त्री महातीर्था मधुस्रवा ।
माधवी मानिनी मान्या मनोरथपथातिगा ॥
मोक्षदा मतिदा मुख्या महाभाग्यजनाश्रिता ।
महावेगवती मेध्या महामहिमभूषणा ॥
महाप्रभावा महती मीनचञ्चललोचना ।

यज्ञेशी यज्ञफलदा यचनीया यशस्करी ॥
यमिसेव्या योगयोनिर्योगिनी युक्तबुद्धिदा ।
योगज्ञानप्रदा युक्ता यमाद्यष्टाङ्गयोगयुक् ॥
यन्त्रिताघौघसञ्चारा यमलोकनिवारिणी ।
यातायातप्रशमनी यातनानामकृन्तनी ॥
यामिनीशहिमाच्छोदा युगधर्म्मविवर्ज्जिता ।
रेवतीरतिकृद्रम्या रत्नगर्भा रमा रतिः ॥
रत्नाकरप्रेमपात्रं रसज्ञा रसरूपिणी ।
रत्नप्रासादगर्भा च रमणीयतरङ्गिणी ॥
रत्नार्च्ची रुद्ररमणी रागद्वेषविनाशिनी ।
रमा रामा रम्यरूपा रोगिजीवातुरूपिणी ॥
रुचिकृद्रोचनी रम्या रुचिरा रोगहारिणी ।
राजहंसा रत्नवती राजत्कल्लोलराजिका ॥
रामणीयकरेखा च रुजारी रोगरोषिणी ।
राका रङ्कार्त्तिशमनी रम्या रोलम्बराविणी ॥
रागिणी रञ्जितशिवा रूपलावण्यशेवधिः ।
लोकप्रसूर्लोकवन्द्या लोलत्कल्लोलमालिनी ॥
लीलावती लोकभूमिर्लोकलोचनचन्द्रिका ।
लेखस्रवन्ती लटभा लघुवेगा लघुत्वहृत् ॥ १५१ ॥
लास्यत्तरङ्गहस्ता च ललितालयभङ्गिगा ।
लोकबन्धुर्लोकधात्री लोकोत्तरगुणोर्ज्जिता ॥
लोकत्रयहिता लोका लक्ष्मीर्लक्षणलक्षिता ।
लीलालक्षितनिर्व्वाणा लावण्यामृतवर्षिणी ॥
वैश्वानरी वासवेद्या बन्ध्यत्वपरिहारिणी ।
वासुदेवाङ्घ्रिरेणुघ्नी वज्रिवज्रनिवारिणी ॥
शुभावती शुभफला शान्तिः शान्तनुवल्लभा ।
शूलिनी शैशववयाः शीतलामृतवाहिनी ॥
शोभावती शीलवती शोषिताशेषकिल्विषा ।
शरण्या शिवदा शिष्टा शरजन्मप्रसूः शिवा ॥
शक्तिः शशाङ्कविमला शमनस्वसृसम्मता ।
शमा शमनमार्गघ्नी शितिकण्ठमहाप्रिया ॥
शुचिः शुचिकरी शेषा शेषशायिपदोद्भवा ।
श्रीनिवासश्रुतिः श्रद्धा श्रीमती श्रीः शुभव्रता ॥
शुद्धविद्या शुभावर्त्ता श्रुतानन्दा श्रुतिस्तुतिः ।
शिवेतरघ्नी शबरी शाम्बरीरूपधारिणी ॥
श्मशानशोधनी शान्ता शश्वच्छतधृतिष्टुता ।

निर्म्मलज्ञानजननी
निःशेषप्राणितापहृत्।
नित्योत्सवा नित्यतृप्ता नमस्कार्य्या
निरञ्जना ॥
निष्ठावती निरातङ्का निर्लेपा
निश्चयात्मिका।
निरवद्या निरीहा च नीललोहितमूर्द्धगा
॥
नन्दिभृङ्गिगणस्तुत्या नागानन्दा
नगात्मजा।
निष्प्रत्यूहा नाकनदी निरयार्णवदीर्घनौः
॥
पुण्यप्रदा पुण्यगर्भा पुण्यापुण्यतरङ्गिणी
।
पृथुः पृथुफला पूर्णा प्रणतार्त्तिप्रभञ्जिनी
॥
प्राणदा प्राणिजननी प्राणेशी
प्राणरूपिणी।
पद्मालया पराशक्तिः पुरजित्परमप्रिया
॥
परापरफलप्राप्तिः पावनी च पयस्विनी
।
परानन्दा प्रकृष्टार्था प्रतिष्ठा पालनी परा
॥
पुराणपठिता प्रीता प्रणवाक्षररूपिणी।
पार्व्वती प्रेमसम्पन्ना पशुपाशविमोचनी
॥
परमात्मस्वरूपा च परब्रह्मप्रकाशिनी।
परमानन्दनिष्पन्दा
प्रायश्चित्तस्वरूपिणी॥
पानीयरूपनिर्व्वाणा परित्राणपरायणा।
पापेन्धनदवज्याला पापारिः
पापनामनुत्॥
परमैश्वर्य्यजननी प्रज्ञा प्राज्ञा परापरा।
प्रत्यक्षलक्ष्मीः पद्माक्षी
परव्योमामृतस्रवा॥ ११० ॥
प्रसन्नरूपा प्रणिधिः पूता प्रत्यक्षदेवता
।
पिनाकिपरमप्रीता परमेष्ठिकमण्डलुः॥
पद्मनाभपदार्घेण प्रसूता पद्ममालिनी।
परर्द्धिदा पुष्टिकरी पथ्या पूर्त्तिः
प्रभावती॥

महाकारुण्यसंपूर्णा महर्द्धिश्च महोत्पला॥
मूर्त्तिमन्मुक्तिरमणी मणिमाणिक्यभूषणा।
मुक्ताकलापनेपथ्या मनोनयननन्दिनी॥
महापातकराशिघ्नी महादेवार्द्धहारिणी।
महोर्म्मिमालिनी मुक्ता महादेवी मनोन्मनी॥
महापुण्योदयप्राप्या मायातिमिरचन्द्रिका।
महाविद्या महामाया महामेधा महौषधम्॥
मालाधरी महोपाया महोरगविभूषणा।
महामोहप्रशमनी महामङ्गलमङ्गलम्॥ १४० ॥
मार्त्तण्डमण्डलचरी महालक्ष्मीर्मदोज्झिता।
यशस्विनी यशोदा च योग्या युक्तात्मसेविता॥
योगसिद्धिप्रदा याज्या यज्ञेशपरिपूरिता।

शालिनी शालिशोभाढ्या
शिखिवाहनगर्भभृत्॥
शंसनीयचरित्रा च शातिताशेषपातका।
षड्गुणैश्वर्य्यसम्पन्ना षडङ्गश्रुतिरूपिणी॥
१६१॥
षण्ढताहारिसलिला ष्टयायन्नदनदीशता।
सरिद्वरा च सुरसा सुप्रभा सुरदीर्घिका॥
स्वःसिन्धुः सर्व्वदुःखघ्नी
सर्व्वव्याधिमहौषधम्।
सेव्या सिद्धिः सती सूक्तिः स्कन्दसूश्च
सरस्वती॥
सम्पत्तरङ्गिणी स्तुत्या स्थानुमौलिकृतालया
।
स्थैर्य्यदा सुभगा सौख्या स्त्रीषु
सौभाग्यदायिनी॥
स्वर्गनिःश्रेणिका सूक्ष्मा स्वधा स्वाहा
सुधाजला।
समुद्ररूपिणी स्वर्ग्या सर्व्वपातकवैरिणी॥
स्मृताघहारिणी सीता संसाराब्धितरण्डिका
।
सौभाग्यसुन्दरी सन्ध्या सर्व्वसारसमन्विता
॥
हरप्रिया हृषीकेशी हंसरूपा हिरण्मयी।
हृताघसङ्घा हितकृत् हेला हेलाघगर्व्वहृत्॥
क्षेमदा क्षालिताघौघा क्षुद्रविद्राविणी क्षमा।

| | | |
|---|---|---|
| पुनाना पीतगर्भघ्नी पापपर्व्वतनाशिनी ।<br>फलिनी फलहस्ता च फुल्लाम्बुजविलोचना ॥<br>फालितैनोमहाक्षेत्रा फणिलोकविभूषणम् ।<br>फेनच्छलप्रणुन्नैनाः फुल्लकैरवगन्धिनी ॥<br>फेनिलाच्छाम्बुधाराभा फुडुच्चाटितपातका ।<br>फाणितस्वादुसलिला फाण्टपथ्यजलाविला ॥<br>विश्वमाता च विश्वेशी विश्वा विश्वेश्वरप्रिया । | | |

इति नामसहस्रं हि गङ्गायाः कलशोद्भव ! ।
कीर्त्तयित्वा नरः सम्यग् गङ्गास्नानफलं
लभेत् ॥
सर्व्वपापप्रशमनं सर्व्वविघ्नविनाशनम् ।
सर्व्वस्तोत्रजपाच्छ्रेष्टं सर्व्वपावनपावनम् ॥
श्रद्धयाभीष्टफलदं चतुर्व्वर्गसमृद्धिकृत् ।
सकृज्जपादवाप्नोति ह्येकक्रतुफलं मुने ! ॥
१७० ॥
सर्व्वतीर्थेषु यः स्नातः सर्व्वयज्ञेषु दीक्षितः ।
तस्य यत् फलमुद्दिष्टं त्रिकालपठनाच्च तत्
॥
सर्व्वव्रतेषु यत् पुण्यं सम्यक् तीर्थेषु वाडव!
।
तत् फलं समवाप्नोति त्रिसन्ध्यं नियतः
पठन् ॥
स्नानकाले पठेद्यस्तु यत्र कुत्र जलाशये ।
तत्र सन्निहिता नूनं गङ्गा त्रिपथगा मुने ! ।
श्रेयोऽर्थी लभते श्रेयो धनार्थी लभते धनम् ।
कामी कामानवाप्नोति मोक्षार्थी
मोक्षमाप्नुयात् ॥
वर्षं त्रिकालपठनात् श्रद्धया शुचिमानसः ।
ऋतुकालाभिगमनादपुत्त्रः पुत्त्रवान् भवेत् ॥
नाकालमरणं तस्य नाग्निचौराहिसाध्वसम् ।
नाम्नां सहस्रं गङ्गायाः यो जपेच्छ्रद्धया मुने !
॥
गङ्गानामसहस्रन्तु जप्त्वा ग्रामान्तरं व्रजेत् ।
कार्य्यसिद्धिमवाप्नोति निर्व्विघ्नो
गेहमाविशेत् ॥
तिथिवारर्क्षयोगानां न दोषः प्रभवेत् तदा ।
यदा जप्त्वा व्रजेदेतत् स्तोत्रं ग्रामान्तरं नरः
॥
आयुरारोग्यजननं सर्व्वोपद्रवनाशनम् ।
सर्व्वसिद्धिकरं पुंसां गङ्गानामसहस्रकम् ॥
१७९ ॥
जन्मान्तरसहस्रेषु यत् पापं सम्यगर्ज्जितम् ।
गङ्गानामसहस्रस्य जपनात् तत् क्षयं व्रजेत्
॥
ब्रह्मघ्नो मद्यपः स्वर्णस्तेयी च गुरुतल्पगः ।
तत्संयोगी भ्रूणहन्ता मातृहा पितृहा मुने ! ॥
विश्वासघाती गरदः कृतघ्नो मित्रघातकः ।
अग्निदो गोवधकरो गुरुद्रव्यापहारकः ॥

सर्व्वत्र पूज्यो भवति सर्व्वत्र विजयी भवेत् ।
सर्व्वत्र सुखमाप्नोति जाह्नवीस्तोत्रपाठतः ॥
सदाचारी स विज्ञेयः स शुचिस्तु सदैव हि ।
कृतसर्व्वसुरार्च्चः स कीर्त्तयेद् य इमां स्तुतिम्
॥
तस्मिंस्तृप्ते भवेत् तृप्ता जाह्नवी नात्र संशयः ।
तस्मात् सर्व्वप्रयत्नेन गङ्गाभक्तं समर्च्चयेत् ॥
स्तवराजमिमं गाङ्गं शृणुयाद्यश्च वै पठेत् ।
श्रावयेदथ तद्भक्तान् दम्भलोभविवर्ज्जितः ॥
मुच्यते त्रिविधैः पापैर्मनोवाक्कायसम्भवैः ।
क्षणान्निष्पापतामेति पितॄणाञ्च प्रियो भवेत् ॥
सर्व्वदेवप्रियश्चापि सर्व्वर्षिगणसम्मतः ।
अन्ते विमानमारुह्य दिव्यस्त्रीशतसंवृतः ॥
दिव्याभरणसम्पन्नो दिव्यभोगसमन्वितः ।
नन्दनादिवने स्वैरं देववत् स प्रमोदते ॥ २००
॥
भुज्यमानेषु विप्रेषु श्राद्धकाले विशेषतः ।
जपन्निदं महास्तोत्रं पितॄणां तृप्तिकारकम् ॥
यावन्ति तत्र सिक्थानि यावन्तोऽम्बुकणाः
स्थिताः
तावन्त्येव हि वर्षाणि मोदन्ते स्वः पितामहाः
॥
यथा प्रीणन्ति पितरो गङ्गायां पिण्डदानतः ।
तथैव तृप्नुयुः श्राद्धे स्तवस्यास्यानुसंश्रवात्
॥
एतत् स्तोत्रं गृहे यस्य लिखितं परिपूज्यते ।
तत्र पापभयं नास्ति शुचि तद्भवनं सदा ॥
अगस्ते ! किं बहूक्तेन शृणु मे निश्चितं वचः ।
संशयो नात्र कर्त्तव्यः सन्देग्धरि फलं न हि ॥
यावन्ति मर्त्ये स्तोत्राणि मन्त्रजालान्यनेकशः
।
तावन्ति स्तवराजस्य गाङ्गेयस्य समानि न ॥
यावज्जम्म जपेद्यस्तु नाम्नामेतत् सहस्रकम्
।
स कीकटेष्वपि मृतो न पुनर्गर्भमाविशेत् ॥
नित्यं नियमवानेतद्यो जपेत् स्तोत्रमुत्तमम् ।
अन्यत्रापि विपन्नः स गङ्गातीरे मृतो भवेत् ॥
एतत् स्तोत्रवरं रम्यं पुरा प्रोक्तं पिनाकिना ।
विष्णवे निजभक्ताय मुक्तिवीजाक्षरास्पदम् ॥
गङ्गास्नानप्रतिनिधिः स्तोत्रमेतन्मयेरितम् ।

शरीरस्था इडा नाडी । यथा, हटयोगदीपि-
कायाम् । ३ । ११० ।
“इडा भगवती गङ्गा पिङ्गला यमुनानदी ।
इडापिङ्गलयोर्म्मध्ये बालरण्डा च कुण्डली
॥”)
दुर्गा । यथा, देवीपुराणे ४५ अध्याये ।
“क्रियाकारणरूपत्वात् सरणाच्च सरिन्मता
।
सङ्गमाद्गमनाद्गङ्गा लोके देवी विभाव्यते
॥”

**गङ्गाका**, स्त्री, (गङ्गा एव । स्वार्थे कन् ततः
“अभाषितपुंस्काच्च ।” ७ । ३ । ४८ ।
इति पाणिनि-
मतेन गङ्गका गङ्गिका इत्येव पदद्वयं सिद्धं
परं मुग्धवोधमतेन “वाच्चापोऽनुक्तपुंस्कस्य
।”
इति सूत्रेण । गङ्गिका गङ्गाका गङ्गका इति
पदत्रयं सिद्धम् । “वाग्रहणमकारस्यापि
स्थित्य-
र्थम् ।” इति मुग्धबोधटीकाकृद् दुर्गादासः
।)
गङ्गा । इति मुग्धबोधम् ॥

**गङ्गाचिल्ली**, स्त्री, (गङ्गास्थिता चिल्ली ।) चिल्ल-
विशेषः । गाङ्चिल इति भाषा । तत्पर्य्यायः
।
देवट्टी २ विश्वका ३ जंलकुक्कुटी ४ ।
इति
हारावली ॥

**गङ्गाजः**, पुं, (गङ्गायाः गङ्गागर्भात् जायते इति ।
जन् + डः ।) भीष्मः । इति शब्दरत्नावली
॥
कार्त्तिकेयः । इति भारतम् ॥

**गङ्गाटेयः**, पुं, (गङ्गायां गङ्गादिनद्यामित्यर्थः
अटतीति । अट् + अच् । ततो ढक् । यद्वा
गङ्गातटेयातीति । या + कः । पृषोदरात्
तकार-
लोपे साधुः ।) मत्स्यभेदः । चिङ्गिडि इति
भाषा । तत्पर्य्यायः । गलानिलः २ । इति

महापातकयुक्तोऽपि संयुक्तोऽप्युपपातकैः ।
मुच्यते श्रद्धया जप्त्वा गङ्गानामसहस्रकम् ॥
आधिव्याधिपरिक्षिप्तो घोरतापपरिप्लितः ।
मुच्यते सर्व्वदुःखेभ्यः
स्तवस्यास्यानुकीर्त्तनात् ॥
संवत्सरेण युक्तात्मा पठन् भक्तिपरायणः ।
अभीप्सितां लभेत् सिद्धिं सर्व्वैः पापैः
प्रमुच्यते ॥
संशयाविष्टचित्तस्य धर्म्मविद्वेषिणोऽपि च ।
दाम्भिकस्यापि हिंस्रस्य चेतो धर्म्मपरं भवेत्
॥
वर्णाश्रमपथीनस्तु कामक्रोधविवर्ज्जितः ।
यत् फलं लभते ज्ञानी तदाप्नोत्यस्य
कीर्त्तनात् ॥
गायत्र्ययुतजप्येन यत् फलं समुपार्ज्जितम् ।
सकृत् पठनतः सम्यक् तदशेषमवाप्नुयात्
॥ १८८ ॥
गां दत्त्वा वेदविदुषे यत् फलं लभते कृती ।
तत् पुण्यं सम्यगाख्यातं
स्तवराजसकृज्जपात् ॥
गुरुशुश्रूषणं कुर्व्वन् यावज्जीवं नरोत्तमः ।
यत् पुण्यमर्ज्जयेत् तद्वाग् वर्षं त्रिषवणं जपन्
॥
वेदपारायणात् पुण्यं यदत्र परिपठ्यते ।
तत् षण्मासेन लभते त्रिसन्ध्यं परिकीर्त्तनात्
॥
गङ्गायाः स्तवराजस्य प्रत्यहं परिशीलनात् ।
शिवभक्तिमवाप्नोति विष्णुभक्तोऽथवा भवेत्
॥
यः कीर्त्तयेदनुदिनं गङ्गानामसहस्रकम् ।
ततसमीपे सहचरी गङ्गादेवी सदा भवेत् ॥

सिस्नासुर्जाह्नवीं तस्मादेतत् स्तोत्रं जपेत्
सुधीः ॥”
इति श्रीस्कन्दपुराणे काशीखण्डे गङ्गासहस्र-
नामकथनं नामैकोनत्रिंशत्तमोऽध्यायः ॥ * ॥
* ॥
इयमेव शिवस्य तोयरूपा परा मूर्त्तिः । यथा,
काशीखण्डे । २७ । २--७ ।
ईश्वर उवाच ।
“निशामय महावाहो ! विष्णो !
त्रैलोक्यसुन्दर ! ।
प्राप्तं वाराणसीत्याख्यामविमुक्तंयथा तथा ॥
निर्द्दग्धान् सागरान् श्रुत्वा कपिलक्रोधवह्निना
।
अश्वमेधाश्वसंयुक्तान् पूर्ब्बजान् स्वान्
भगीरथः ॥
सूर्य्यवंशे महातेजा राजा परमधार्म्मिकः ।
आरिराधयिषुर्गङ्गां तंपसे कृतनिश्चयः ॥
हिमवन्तं नगश्रेष्ठममात्यन्यस्तराज्यधूः ।
जगाम यशसां राशिरुद्दिधीर्षुः पितामहान् ॥
ब्रह्मशापाग्निनिर्द्दग्धान् महादुर्गतिगानपि ।
विना त्रिमार्गगां विष्णो ! को जन्तूंस्त्रिदिवं
नयेत् ॥
ममैव सा परा मूर्त्तिस्तोयरूपा शिवात्मिका ।
ब्रह्माण्डानामनेकानामाधारः प्रकृतिः परा ॥

त्रिकाण्डशेषः ॥

**गङ्गाधरः**, पुं, (धरतीति धरः । धृ + अच् । गङ्गाया
धरः । स्वशिरोजटाभिरिति शेषः ।) शिवः ।
इत्य-
मरः । १ । १ । ३६ ॥ (अस्य
गङ्गाधारणविवरणं
यथा, रामायणे । १ । ४३ । १-११ ।
“देवदेवे गते तस्मिन् सोऽङ्गुष्ठाग्रनिपीडिताम्
।
कृत्वा वसुमतीं राम ! वत्सरं समुपासत ॥
अथ संवत्सरे पूर्णे सर्व्वलोकनमस्कृतः ।
उमापतिः पशुपती राजानमिदमब्रवीत् ॥
प्रीतस्तेऽहं नरश्रेष्ठ ! करिष्यामि तव प्रियम्
।
शिरसा धारयिष्यामि शैलराजसुतामहम् ॥
ततो हैमवती ज्येष्ठा सर्व्वलोकनमस्कता ।
तदा सातिमहद्रूपं कृत्वा वेगञ्च दुःसहम् ॥
आकाशादपतद्राम ! शिवे शिवशिरस्युत ।
अचिन्तयच्च सा देवी गङ्गा परमदुर्द्धरा ॥
विशाम्यहं हि पातालं स्रोतसा गृह्य शङ्करम्
।
तस्यावलेपनं ज्ञात्वा क्रुद्धस्तु भगवान् हरः
॥
तिरोभावयितुं बुद्धिं चक्रे त्रिनयनस्तदा ।
सा तस्मिन् पतिता पुण्या पुण्ये रुद्रस्य
मूर्द्धनि ॥
हिमवत्प्रतिमे राम ! जटामण्डलगह्वरे ।
सा कथञ्चित् महीं गन्तुं नाशक्नोत्
यत्नमास्थिता ॥
नैव सा निर्गमं लोभे जटामण्डलमन्ततः ।
तत्रैवावभ्रमद्देवी संवत्सरगणान् बहून् ॥
तामपश्यत् पुनस्तत्र तपः परममास्थितः ।
स तेन तोषितश्चासीदत्यन्तं रघुनन्दन ! ॥

विससर्ज ततो गङ्गां हरो विन्दुसरः प्रति ॥”)
समुद्रः । इति त्रिकाण्डशेषः ॥ * ॥ (जीर्णाति-
साररोगनाशकचूर्णौषधविशेषः । यथा, --
“धातक्यामलकीपयोधरवृकीकट्वङ्गयष्ठीमधु
श्रीजम्ब्वाम्रफलास्थिनागरविषाह्रीबेरलोध्रेन्द्रजैः ।
तुल्यांशं विहितं सतण्डुलजलं गङ्गाधराख्यं मह-
च्चूर्णं तूर्णमपाकरोति सकलं जीर्णातिसारं परम् ॥”
इति शब्दार्थचिन्तामणिः ॥)

**गङ्गापत्री**, स्त्री, (गङ्गावत् पवित्रं शुभ्रं वा पत्रमस्या
इति ङीष् ।) वृक्षविशेषः । तत्पर्य्यायः । पत्री २
सुगन्धा ३ गन्धपत्रिका ४ । अस्या गुणाः ।
कटुत्वम् । उष्णत्वम् । वातनाशित्वम् । व्रण-
रोपणत्वञ्च । इति राजनिर्घण्टः ॥

**गङ्गापुत्त्रः**, पुं, (गङ्गायाः पुत्त्रः ।) भीष्मः । इति
पुराणम् ॥ वर्णसङ्करजातिविशेषः । मुरदा-
फराश इति पारस्य भाषा । स तु लेटात् तीवर
कन्यायां जातः । इति ब्रह्मवैवर्त्तपुराणम् ॥
(कार्त्तिकश्च ॥)

**गङ्गासुतः**, पुं, (गङ्गायाः सुतः पुत्त्रः ।) कार्त्ति-
केयः । इति हेमचन्द्रः ॥ (यथा, महाभारते ।
३ । २३१ । १५ ।
“सहस्रशीर्षस्त्वमनन्तरूपः
सहस्रपात्त्वं गुरुशक्तिधारी ।
गङ्गासुतस्त्वं स्वमतेन देव !
स्वाहामहीकृत्तिकानां तथैव ॥”)
भीष्मश्च । इति पुराणम् ॥

**गङ्गिका**, स्त्री, (गङ्गा एव । स्वार्थे कन् ततः
“अभाषितपुंस्काच्च ।” ७ । ३ । ४८ । इति पक्षे इत्
।)
गङ्गा । इति मुग्धबोधम् ॥

**गच्छः**, पुं, (गम् + सम्पदादित्वात् क्विप् तुक् च गतं
गमनं क्व्यति नाशयतीति । गत् + छो + कः ।)
वृक्षः । इति हेमचन्द्रः ॥ गाछ इति भाषा ॥
निर्विसर्गे गमनक्रियानुमतिः । (तदा गमधातो-
र्लोटि मध्यमपुरुषस्यैकवचनस्य रूपम् ।) इति
व्याकरणम् ॥ याओ इति भाषा ॥

**गज**, स्वने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
वक्षोऽथ कक्षावलयः श्लथाश्च
लम्बोदरस्त्वग्बृहती गलश्च ।
स्थूला च कुक्षिः सह पेचकेन
सैंही च दृग्मन्दमतङ्गजस्य ॥
मृगास्तु ह्रस्वाधरवालमेढ्रा-
स्तन्वङ्घ्रिकण्ठद्विजहस्तकर्णाः ।
स्थूलेक्षणाश्चेति यथोक्तचिह्नैः
सङ्कीर्णनागा व्यतिमिश्रचिह्नाः ॥
पञ्चोन्नतिः सप्त मृगस्य दैर्घ्य-
मष्टौ च हस्ताः परिणाहमानम् ।
एकद्विवृद्धावथ मन्दभद्रौ
सङ्कीर्णनागोऽनियतप्रमाणः ॥
भद्रस्य वर्णो हरितो मदस्य
मन्दस्य हारिद्रकंसन्निकाशः ।
कृष्णो मदश्चाभिहितो मृगस्य
सङ्कीर्णनागस्य मदो विमिश्रः ॥
ताम्रोष्ठतालुवदनाः कलविङ्कनेत्राः
स्निग्धोन्नताग्रदशनाः पृथुलायतास्याः ।
चापोन्नतायतनिगूढनिमग्नवंशा-
स्तन्वेकरोमचितकूर्म्मसमानकुम्भाः ॥
विस्तीर्णकर्णहनुनाभिललाटगुह्याः
कूर्म्मोन्नतद्विनवविंशतिभिर्नखैश्च ।
रेखात्रयोपचितवृत्तकराः सुवाला
धन्याः सुगन्धिमदपुष्करमारुताश्च ॥
दीर्घाङ्गुलिरक्तपुष्कराः
सजलाम्भोदनिनादबृंहिणः ।
बृहदायतवृत्तकन्धरा
धन्या भूमिपतेर्मतङ्गजाः ॥
निर्मदाभ्यधिकहीननखाङ्गान्
कुब्जवामनकमेषविषाणान् ।
दृश्यकोशफलपुष्करहीनान्
श्यावनीलशबलासिततालून् ॥
स्वल्पवक्त्ररुहमत्कुणषण्ढान्
हस्तिनीं च गजलक्षणयुक्ताम् ।
गर्भिनीं च नृपतिः परदेशं
प्रापयेदतिविरूपफलास्ते ॥ * ॥
यथा, भट्टिः । १४ । ५ ।
“हया जिहेषिरे हर्षाद्गम्भीरं जगजुर्गजाः
॥”)
परिमाणविशेषः । स तु हस्तद्वयं
पादोनहस्त-
औपधपाकार्थगर्त्तविशेषः । यथा, --
“हस्तप्रमाणगर्त्तो यः पुटः स तु
गजाह्वयः ।
इत्थं चारत्निके कुण्डे पुटो वाराह
उच्यते ॥”
इति वैद्यकप्रयोगामृतम् ॥
(असुरविशेषः । स तु
महिषासुरपुत्त्रः । यथा,
काशीखण्डे । ६८ । ३ ।
“महिषासुरपुत्त्रोऽसौ समायाति
गजासुरः ।
प्रमथन् प्रमथान् सर्व्वान्
निजवीर्य्यमदोद्धतः ॥”)

**गजकन्दः**, पुं, (गज इव स्थूलः गजस्य दन्त इव वा
कन्दो यस्य ।) हस्तिकन्दः । इति
राज-
निर्घण्टः ॥

**गजकूर्म्माशी**, [न्] पुं, (गजश्च कूर्म्मश्च तौ गज-
कूर्म्मौ । तौ अश्नातीति । अश ग
भोजने +
णिनि ।) गरुडः । इति
शब्दरत्नावली ॥
(पुरा हि कदाचित्
विभावसुसुप्रतीकनामानौ
द्वौ भ्रातरौ ब्राह्मणकुमारौ
पितृधनार्थमन्योन्य-
मभिशप्तौ गजत्वं कूर्म्मत्वं च गतावपि
पूर्ब्ववैर-
मनुस्मरन्तो सुचिरं युध्यमानौ
प्रजापतिकश्यपा-
दिष्टेन पतगेश्वरेण गरुडेन भक्षितौ ।
एतद्वि-
वरणन्तु महाभारतीयादिपर्व्वणि
सौपर्णे २९
अध्याये सविस्तरं दर्शनीयम् ॥)

**गजचिर्भटा**, स्त्री, (गजस्पृहणीया चिर्भटा ।)

अकं-सेट् ।) गजति । इति दुर्गादासः ॥

**गज**, इ मदे स्वने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-

अकं-सेट् इदित् ।) इ, कर्म्मणि गञ्ज्यते । इति
दुर्गादासः ॥

**गज**, क स्वने । (चुरां-परं-अकं-सेट् ।) क, गाज-

यति । इति दुर्गादासः ॥

**गजः**, पुं, (गजति मदेन मत्तो भवतीति । गज् +

अच् ।) हस्ती । इत्यमरः । २ । ८ । ३४ ॥ (स तु
त्रिविधः । यथाह शब्दार्थचिन्तामणिः ।
"भद्रो मन्दो मृगश्चैव विज्ञेयास्त्रिविघा गजाः ॥"
अस्य लक्षणादिकं यथा, वृहत्संहितायां ६७
अध्याये ।
"मध्वाभदन्ताः सुविभक्तदेहा
न चोपदिग्धाश्च कृशाः क्षमाश्च ।
गात्रैः समैश्चापसमानवंशा
वराहतुल्यैर्जघनैश्च भद्राः ॥

द्वयञ्च । (यथा, शब्दार्थचिन्तामणौ ।
"अरत्नीनां शतान्यष्टावेकः षष्ट्यधिकानि
च ।
गजप्रमाणमाख्यातं मुनिभिर्ब्रह्मवादिभिः ॥")
वास्तुनः स्थानभेदः । इति मेदिनी ॥
"प्रस्तारे दैर्घ्यमानन्तु स्वहस्तेन तथा नरैः ।
कृत्वा त्रिघ्नं गजैर्हृत्वा
वास्तुस्थाननिरूपणम् ॥
ध्वजो धूमश्च सिंहश्च श्वां वृषः खर एव च
।
गजः काकपदञ्चैव स्थानान्यष्टौ च वास्तुनः
॥
ध्वजे विभूतिर्म्मरणञ्च धूमे
सिंहे जयः श्वा च करोत्यनर्थम् ।
वृषे च भोगी क्षयणं खरे च
पुष्टिर्गजे काकपदे विनाशः ॥"
इति ज्योतिषम् ॥ * ॥

इन्द्रवारुणी । इति रत्नमाला ॥
गोरक्षलाड
राखालशसा इति च भाषा ॥

**गजचिर्भिटः**, पुं, (गजप्रियश्चिर्भिटः ।)
गोडुम्बा ।

इति त्रिकाण्डशेषः ॥

**गजचिर्भिटा**, स्त्री, (गजभक्ष्या चिर्भिटा ।)

महेन्द्रवारुणी । इति राजनिर्घण्टः ॥

**गजच्छाया**, स्त्री, (गजस्य कुञ्जरस्य छाया
प्रति-

विम्बः । हस्तिच्छाया ।) योगविशेषः
। यथा, --
"यदेन्दुः पितृदैवत्ये हंसश्चैव करे
स्थितः ।
याम्या तिथिर्भवेत् सा हि गजच्छाया
प्रकी
र्त्तिता ॥"
इति मिताक्षरापरिभाषा ॥
अपि च । कृत्यचिन्तामणौ ।
"कृष्णपक्षे त्रयोदश्यां मघास्विन्दुः
करे रविः ।
यदा तदा गजच्छाया श्राद्धे
पुण्यैरवाप्यते ॥"
अन्यच्च ।
"योगो मघात्रयोदश्यां
कुञ्जरच्छायसंज्ञितः ।
भवेन्मघायां संस्थे च शशिन्यर्के करे
स्थिते ॥" * ॥
चन्द्रसूर्य्ययोर्ग्रहणकालः । यथा,
वराहः ।
"सैंहिकेयो यदा भानुं ग्रसते
पर्व्वसन्धिषु ।
गजच्छायातु सा प्रोक्ता तत्र श्राद्धं
प्रकल्पयेत् ॥"
अमावास्याश्राद्धकालः । यथा, --
"अमावास्यां गते सोमे छाया या
प्राङ्मुखी भवेत् ।
गजच्छाया तु सा प्रोक्ता तत्र श्राद्धं
प्रकल्पयेत् ॥"
इति च मलमासतत्त्वम् ॥

**गजढक्का**, स्त्री, (गजस्य उपरिभागे स्थिता
या

| | | बृहड्ढक्का ।) गजोपरिस्थबृहड्ढक्का । तत्-<br>पर्य्यायः । मदाम्नातः २ । इति हारावली ॥<br><br>**गजता**, स्त्री, (गजानां समूहः । “ग्रामजनबन्धु-<br>भ्यस्तल् ।” ४ । २ । ४३ । एतस्य सूत्रस्य |
|---|---|---|

"गजसहायाभ्याञ्चेति वक्तव्यम् ।" वार्त्ति इति तल् ।) गजसमूहः । तत्पर्य्यायः । हास्तिकम् २ । इत्यमरः । २ । ८ । ३६ ॥

**गजदघ्नः**, पुं, (गजेन परिमाणमस्य इति परिमाणार्थे दघ्नच् ।) गजपरिमाणम् । इति मुग्धबोधम् ॥

**गजदन्तः**, पुं, (गजस्य दन्तौ इव दन्तोऽस्य ।) गणेशः । इति शब्दरत्नावली ॥ (गजस्य दन्तः ।)
गजसम्बन्धिदन्तः । नागदन्तः । हातिर दाँत इति भाषा । स तु द्रव्यस्थापनार्थं भित्तिस्थदण्डद्वयम् । दाण्डा इति भाषा ॥

**गजदन्तफला**, स्त्री, (गजदन्ताकृति गजदन्त इव शुभ्रं वा फलमस्याः ।) डङ्गरीलता । इति राजनिर्घण्टः ॥

**गजदानं**, क्ली, (गजस्य दानं मदः गजकटादिभ्यः क्षरितो मद इत्यर्थः ।) हस्तिमदः । इति राजनिर्घण्टः ॥ (तस्य प्रस्रवणस्थानानि ।
यथा, --
"करात् कटाभ्यां मेढ्राच्च नेत्राभ्याञ्च मदच्युतिः ।"
इति पालकाव्यम् ॥
तथा च रघुः । ४ । ४५ ।
"स सैन्यपरिभोगेण गजदानसुगन्धिना ।
कावेरीं सरितां पत्यः शङ्कनीयामिवाऽकरोत् ॥"
गजस्य हस्तिनो दानं प्रदानम् । गजसम्पदानम् ।
इति व्युत्पत्तिलभ्योऽर्थः ॥)

**गजद्वयसः**, त्रि, (गजेन परिमाणमस्य इति । गज + "दघ्नमात्रद्वयसट्माने ।" इति परिमाणार्थे द्वयसट् ।) परिमितः । इति मुग्धबोधम् ॥

**गजपादपः**, पुं, (गजस्य नाम्ना ख्यातः पादपः गजप्रियः पादपो वा ।) स्थालीवृक्षः । इति भावप्रकाशः ॥

**गजपिप्पली**, स्त्री, (गजोपपदेन युक्ता पिप्पली । गजनाम्ना ख्याता पिप्पली वा ।) पिप्पलीभेदः ।
इति वैद्यकभैषज्यधन्वन्तरिग्रन्थे जारणविध्यधिकारे ॥ क्वचित् क्लीवलिङ्गत्वमपि दृश्यते । यथा,
भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ।
"सपादहस्तमानेन कुण्डे निम्ने यथायते ।
वनोपलसहस्रेण पूर्णो मध्ये विधारयेत् ॥
पुटनद्रव्यसंयुक्तां कोष्ठिकां मुद्रितां मुखे ।
अथार्द्धानि करण्डानि अर्द्धान्युपरि निःक्षिपेत् ॥
एतद्गजपुटं प्रोक्तं ख्यातं सर्व्वपुटोत्तमम् ॥
हस्तश्चतुर्व्विंशत्यङ्गुलप्रमाणः सपादस्तेन त्रिंशदङ्गलप्रमाणेनेत्यर्थः । अतएवोक्तम् ।
साधारणनराङ्गुल्या त्रिंशदङ्गुलको गजः ॥"
इति गजपुटम् ॥)

**गजप्रिया**, स्त्री, (गजस्य प्रिया ।) शल्लकीवृक्षः । इति हेमचन्द्रः ॥

**गजबन्धनी**, स्त्री, (गजः हस्ती बध्यते लौहशृङ्खलादिभिः रुध्यतेऽस्याम् । बन्ध + ल्युट् ङीप् च ।) गजबन्धनस्थानम् । हातिशाला इति भाषा । तत्पर्य्यायः । वारी २ । इत्यमरः । २ । ८ ।
४३ ॥ वारिः ३ । इति भरतः ॥ प्रारब्धिः ४ ।
इति जटाधरशब्दरत्नावल्यौ ॥

**गजभक्षकः**, पुं, (गजेन हस्तिना भक्ष्यते इति । भक्ष + कर्म्मणि अप् ततः कप् स्वार्थे कन् वा ।
यद्वा गजः हस्ती भक्षकोऽस्य ।)
अस्वत्थवृक्षः ।
इति राजनिर्घण्टः ॥

**गजभक्षा**, स्त्री, (गजेन भक्ष्यतेऽसौ । भक्ष् + अप् + टाप् ।) शल्लकीवृक्षः । इति शब्दरत्नावली ॥

**गजभक्ष्या**, स्त्री, (गजेन भक्ष्या भक्षणीया ।) गजानां अग्रणीः श्रेष्ठः ।) ऐरावतहस्ती । इति शब्दरत्नावली ॥

**गजाजीवः**, पुं, (आजीव्यतेऽस्मादनेन वा आजीवः आ + जीव् + कर्म्मण्यप् । गजः आजीवः जीवनोपायोऽस्य ।
गजपरिचालनपालनादिकार्य्यमालम्ब्य आजीवतीति । जीव् + कर्त्तरि अच् वा ।)
हस्तिपालकः । तत्पर्य्याया । आधोरणः २ हस्तिपकः ३ इभपालकः ४ । इति हेमचन्द्रः ॥

**गजाण्डं**, क्ली, (गजस्याण्डवत् मूलमस्य ।) पिण्डमूलम् । इति राजनिर्घण्टः ॥

**गजाननः**, पुं, (गजस्य हस्तिन आननं मुखमेव आननं यस्य ।) गणेशः । इत्यमरः । १ । १ । ४१ ॥
(यथा, ब्रह्मवैवर्त्ते गणेशखण्डे ६ अध्याये ।
"शनिदृष्ट्या शिरश्छेदात् गजवक्त्रेण योजितः ।
गजाननः शिशुस्तेन नियतिः केन बाध्यते ॥"
पुराणान्तरे मतभेदोऽपि दृश्यते यथा, स्कान्दे
गणेशखण्डे ११ अध्याये ।
गुरुरुवाच ।
"अवतारो यदि धृतः साधुत्राणाय भो विभो !
प्रकाशयाशु वदनं सर्व्वेषां शोकनाशनम् ॥
नयस्व सर्व्वदेवानामानन्दं हृदये प्रभो ! ।
शिव उवाच ।
प्रत्युवाच गुरुं पुत्रः पार्व्वत्या हीनमस्तकः ॥
शिशुरुवाच ।
महेशाख्येन राज्ञा ते प्रणतौ चरणौ यदा ।
तदाशीर्या त्वया दत्ता तस्मै राज्ञे गुरो मुदा ॥
गजयोनौ जनिर्मुक्तिः शिवहस्तादुदीरिता ।

गजपिँपुल इति भाषा । तत्पर्य्यायः । करि-
पिप्पली २ इभकणा ३ कपिवल्ली ४ कपिल्लिका
५
श्रेयसी ६ वशिरः ७ गजाह्वा ८ । इति रत्न-
माला ॥ कोलवल्ली ९ । इत्यमरः ॥ वसिरः १०
।
इति तट्टीका ॥ गजोषणा ११ चव्यफलम् १२
चव्यजा १३ छिद्रवैदेही १४ दीर्घग्रन्थिः १५
तैजसी १६ वर्त्तली १७ स्थूलवैदेही १८ ।
अस्या गुणाः । कटुत्वम् । उष्णत्वम् ।
रुजामल-
विशोषणत्वम् । वलासवातहरत्वम् । स्तनकर्ण-
विवर्द्ध्वनत्वञ्च । इति राजनिर्घण्टः ॥ भेदाग्नि-
कारित्वम् । इति राजवल्लभः ॥ तत्पर्य्याय-
मुणाः । यथा, भावप्रकाशः ।
"चविकायाः फलं प्राज्ञैः कथिता गजपिप्पली ।
कपिवल्ली कोलवल्ली श्रेयसी वशिरश्च सा ॥
गजकृष्णा कटुर्वातश्लेष्मनुद्वह्विबर्द्धिनी ।
उष्णा निहन्त्यतीसारश्वासकण्ठामयक्रिमीन्
॥"

**गजपुटः**, पुं, (गजाह्वयः पुटः हस्तप्रमाणो गर्त्तः ।)
औषधपाकार्थं हस्तपरिमितगर्त्तः । इति वैद्य-
कम् ॥ अस्य प्रमाणं गजशब्दे द्रष्टव्यम् ॥ (लौह-
मारणादावस्य प्रयोजनं यथा, --
"दशादिशतपर्य्यन्तो गजपुटविधिर्म्मतः ॥
शल्लकीवृक्षः । इत्यमरः । २ । ४ । १२३
॥

**गजमाचलः**, पुं, स्त्री, (मच् + भावे घञ् माचः ।
गजस्य हस्तिनः माचं दम्भं लाति आदत्ते
लुनाति वा बाहुलकात् डः ।) सिंहः । इति
हारावली ॥

**गजमात्रः**, त्रि, (गजेन परिमाणमस्य इति । "दघ्न-
मात्रद्वयसट् माने ।" इति परिमाणार्थे मात्र
।)
गजपरिमितः । इति मुग्धबोधम् ॥

**गजमोटनः**, पुं, स्त्री, (गजं हस्तिनं मोटयति
मर्द्दयतीति । मुट् मर्द्दने + कर्त्तरि ल्युः ।)
सिंहः । इति शब्दमाला ॥

**गजवदनः**, पुं, (गजस्य वदनमेव वदनं यस्य ।)
गणेशः । इति हलायुधः ॥

**गजवल्लभा**, स्त्री, (गजस्य वल्लभा प्रिया ।) गिरि-
कदली । शल्लकी । इति राजनिर्घण्टः ॥

**गजसाह्वयं**, क्ली, (गजनाम्ना नरपतिना सह
आह्वयो नाम यस्य ।) हस्तिनापुरम् । इति
शब्दरत्नावली ॥ (यथा, महाभारते । ३ ।
१ । ८ ।
"ततोद्यूतजिताः पार्थाः कोपिताश्च
दुरात्मभिः ।
घार्त्तराष्ट्रैः सहामात्यैर्निर्य्ययुर्गजसाह्वयात्
॥")

**गजाख्यः**, पुं, (गजाख्यया आख्यातः गजेन सह
आख्या यस्येति वा गजकर्णवदस्य
पत्राकारत्वा-
त्तथात्वमिति केचित् ।) चक्रमर्द्दवृक्षः ।
इति
राजनिर्घण्टः ॥

**गजाग्रणीः**, पुं, (अग्रे नीयते इति अग्रणीः ।
तत् सर्व्वमभवत् तस्य विद्यते चारुमस्तकः
॥
पूज्यमानः शिवेनास्ते शुण्डादण्डः
सुशोभनः ।
अवतारकरोऽसौ मे गुरोऽस्ति भविता मुखम्
॥
शिव उवाच ।
आश्चर्य्यपूर्णहृदयो गुरुरूचे पुनः शिशुम् ॥
गुरुरुवाच ।
भगवत ! विश्वरूपोऽसि
त्रिकालज्ञोऽखिलेश्वरः ।
मया यदुदितं तस्मै त्वया ज्ञातं यतः प्रभो !
॥
अहमीशस्वरूपं ते परिच्छेत्तुं न च क्षमः ।
श्रुत्वैव ब्रह्मणः पुत्रो नारदस्तत्र चाब्रवीत् ॥
नारद उवाच ।
एवमेवावतीर्णोऽसि हीनमूर्द्धा कथं प्रभो ! ।
अथवा बालरूपस्य छिन्नं ते केन तच्छिरः
॥
एतन्मे संशयं छिन्धि कृपया परमेश्वर ! ।
शिव उवाच ।
निपीय नारदीं वाणीमुवाच शिशुरुच्चकैः ॥
शिशुरुवाच ।
सिन्दूरः कोऽपि दैत्यो मे
वायुरूपधरोऽच्छिनत् ।
अष्टमे मासि सम्पूर्णे प्रविश्योमोदरं शिरः ॥
तमिदानीं हनिष्येऽहं गजास्यं साम्प्रतं
द्विज ! ।
शिव उवाच ।
श्रुत्वैव नारदः प्राह शिशुरूपिणमीश्वरम् ॥
नारद उवाच ।
अकिञ्चिज्ज्ञा वयं देव ! योजनेऽस्य मुखस्य
ते ।
त्वमेव च स्वभावेन मखमेतन्नियोजय ॥

शिव उवाच ।
वदतीत्थं मुनिर्यावत् तावत् स ददृशेऽखिलैः ।
सर्व्वावयवसम्पूर्णो गजानन उमासुतः ॥
किरीटकुण्डलधरो युगबाहुः सुलोचनः ।
वामदक्षिणभागे च सिद्धिवृद्धिविराजितः ॥
दृष्ट्वा विनायकं स्कन्द ! तथाभूतं निजेच्छया ।
हर्षेणोत्फुल्लनयना देवाः सर्व्वे तदाब्रुवन् ॥
गजानन इति ख्यातो भविताऽयं जगत्रये ।
एवं भाद्रचतुर्थ्यां स अवतीर्णो गजाननः ॥”)

**गजारिः**, पुं, (गजस्य अरिः शत्रुः । तन्नाशकत्वात् तथात्वम् ।) वृक्षविशेषः । सिंहः । यथा, “गजारिस्तरुसिंहयोः ।” इति हड्डचन्द्रः ॥

**गजाशनः**, पुं, (गजेन हस्तिना अश्यते अद्यते इति । गज + अश् + कर्म्मणि ल्युट् ।) अश्वत्थ-वृक्षः । इति रत्नमाला ॥ गजादनोऽपि ॥

**गजाशना**, स्त्री, (अश्नातीति । अश ग भोजने + कर्त्तरि ल्युः । गजः अशनो भक्षको यस्याः ।) भङ्गा । इति शब्दचन्द्रिका ॥ (यस्मिन्निय व्यवह्रि-यते तद्यथा, -- “गजाशना-कुम्भिक-दाडिमानां रसैः कृते तैलघृते सदध्नि ॥” इति सुश्रुते उत्तरतन्त्रे चत्वारिंशत्तमेऽध्याये ॥) शल्लकीवृक्षः । पद्ममूलम् । इति रत्नमाला ॥

**गजास्यः**, पुं, (गजस्य आस्यं मुखमेव आस्यं अस्य ।) गणेशः । इति हेमचन्द्रः ॥ (गजस्य आस्यम् ।) हस्तिमुखे क्ली ॥

**गजाह्वं**, क्ली, (गजेन गजनाम्ना आहूयते इति

**गड**, इ गण्डे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट्-इदित् ।) इ, कर्म्मणि गण्ड्यते । गण्डे कपोलविषयक्रियायाम् । तथा च । यत्र द्रव्य-निर्द्देशस्तत्र तन्निष्ठक्रियाविशेषो लक्ष्यते । इति मैत्रयवोपदेवौ ॥ रमानाथस्तु कड्ड कार्क्श्य इत्य-स्मात् कार्कश्य इत्यनुवृत्त्या कपोलकर्त्तृककार्कश्य-मिति व्याख्याय गण्डति कपोलः पांशुना इत्युदा-हृतवान् । केचित्तु गण्ड इति शब्दस्य व्युत्-पत्त्यर्थमेवायं धातुर्मन्तव्यो न त्वस्यान्यत्र प्रयोगः इत्याह । इति दुर्गादासः ॥

**गड**, म सेके । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् । घटादिः ।) म, गडयति । सेकः क्षर-णम् । गडयति घटात् पानीयम् । डलयोरेक-त्वात् लस्यैव प्रायः प्रयोगः । इति रमानाथः ॥ तन्मते तु लान्तपक्षेऽपि मानुबन्धः । स्वमते तु लान्तो वक्ष्यमाणः स त्वनुबन्धशून्यः इति विरोधः । इति दुर्गादासः ॥

**गडः**, पुं, (गडति गलति हस्ताज्जालादिभ्यो वा क्षरतीत्यर्थः । गड् + अच् ।) मत्स्यभेदः । गड्डइ माछ इति भाषा ॥ अन्तरायः । इति मेदिनी ॥ परिखा । व्यवधानम् । इति शब्द-रत्नावली ॥ देशविशेषः । राजनिर्घण्टे गडलवण-पर्य्याये गडदेशजमिति दर्शनात् ॥

**गडकः**, पुं, (गड + स्वार्थे कन् ।) मत्स्यविशेषः । गड्डइ माछ इति भाषा । तत्पर्य्यायः । शकु-लार्भकः २ । इत्यमरः । १ । १० । १७ ॥ गडः ३ गलः ४ गलकः ५ । इति शब्द-रत्नावली ॥ अस्य गुणाः । मधुरत्वम् । रूक्ष-त्वम् । कषायत्वम् । शीतलत्वम् । लघुत्वञ्च । इति राजवल्लभः ॥

**गडयन्तः**, पुं, (गडयति जलमिति । गड क्षरणे + णिच । “तभूवहिवसिभासिसाधिगडीति ।”

पृष्ठगुडः । स तु घाटामस्तकयोर्म्मध्ये मांसवृद्धिः । इति लिङ्गादिसंग्रहे अमरभरतौ ॥ कुब्जः । इति मेदिनी ॥ शल्यास्त्रम् । इति शब्दरत्ना-वली ॥ किञ्चुलुकः । इति त्रिकाण्डशेषः ॥ विषम-ग्रन्थिः । यथा काव्यप्रकाशे तदेतत् काव्यान्त-र्गड्डभूतमिति नास्य मेदलक्षणं कृतमित्यत्र तट्टीकाकारः ॥ (“न च अजागलस्तनवदन्त-र्गड्डना तेन किं वेति वाच्यम् ।” इति वेदान्त-भाष्यम् ॥)

**गड्डुरः**, त्रि, (गड्डुल + रस्य लत्वम् ।) कुब्जः । इति शब्दरत्नावली ॥

**गड्डुलः**, त्रि, (गड्डुः स्थूलमांसपिण्डविशेषः अस्या स्तीति । गड्डु + “सिध्मादिभ्यश्चेति ।” ५ । २ । ९७ । इति लच् ।) कुब्जः । इत्यमरः । २ । ६ । ४८ ॥

**गडेरः**, पुं, (गड + “पतिकठिकुठिगडिगुडिदन्शिभ्य एरक् ।” उणां । १ । ५९ । इति एरक् ।) मेघः । इति त्रिकाण्डशेषः ॥

**गडोत्थं** क्ली, (गडदेशात् उत्तिष्ठति संजायते इति । गड + उत् + स्था + कः ।) गडलवणम् । इति राजनिर्घण्टः ॥

**गडोलः**, पुं, (गड + “कपिगडिगण्डिकटिपटिभ्य ओलच् ।” उणां । १ । ६७ । इति ओलच् ।) गुडः । इत्युणादिकोषः ॥ ग्रासः । इति हेम-चन्द्रः ॥

**गड्डरिका**, स्त्री, (गड्डरः जलप्रवाहः सोऽस्या-

गजेन सह आह्वा संज्ञा यस्य इति वा ।)
हस्तिनापुरम् । इति मेदिनी ॥

**गजाह्वयं**, क्ली, (गजेन गजनाम्ना आह्वयोऽस्य ।)
हस्तिनापुरम् । इति शब्दरत्नावली ॥

**गजाह्वा**, स्त्री, (गजस्य आह्वया संज्ञया आह्वा
संज्ञा यस्याः ।) गजपिप्पली । इति मेदिनी ॥
(पर्य्यायोऽस्या यथा, --
"करिपिप्पलीभकणा कपिवल्ली कपिवल्लिका ।
श्रेयसी वशिरश्चापि गजाह्वा गजपिप्पली ॥"
इति वैद्यकरत्नमालायाम् ॥)

**गजेष्टा**, स्त्री, (गजस्य इष्टा प्रिया ।) विदारी ।
इति राजनिर्घण्टः ॥ भुँइकुम्डा इति भाषा ॥

**गजोषणा**, स्त्री, (गजोपपदेन युता उषणा
पिप्पली ।) गजपिप्पली । इति राजनिर्घण्टः ॥

**गञ्जः**, पुं, (गजि भावे + घञ् ।) अवज्ञा । भाण्डा-
गारम् । खनिः । इति हेमचन्द्रः ॥ गोष्ठा-
गारम् । इति हारावली ॥ गोयालिघर इति
भाषा ॥

**गञ्जः**, पुं क्ली, (गजि भावे + घञ् ।) भाण्डागारम् ।
दति मेदिनी ॥

**गञ्जा**, स्त्री, (गञ्ज + टाप् ।) मदिरागृहम् । इत्य-
मरः । २ । २ । ८ ॥ खनिः । इति मेदिनी ॥ पामरसद्म ।
मद्यभाण्डम् । इति शब्दरत्नावली ॥

**गञ्जिका**, स्त्री, (गञ्जा + स्वार्थे कन् अत इत्वम् ।)
मदिरागृहम् । इति शब्दरत्नावली ॥

उणां । ३ । १२८ । इति झच् । घटादित्वात् मित्त्वे
मितां ह्रस्वः अयामन्तेति णेरयादेशः ।) मेघः ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**गडलवणं**, क्ली, (गडदेशाज्जातं लवणम् । शाक-
पार्थिवादिवत् मध्यपदलोपिसमासः ।) संवर-
देशोद्भवलवणम् । सामरलुण इति भाषा ॥ तत्-
पर्य्यायः । शुभ्रम् २ पृथ्वीजम् ३ गडदेशजम् ४
गडोत्थम् ५ महारम्भम् ६ सांवरम् ७ संवरो-
द्भवम् ८ । अस्य गुणाः । उष्णत्वम् । लवणत्वम् ।
ईषदम्लत्वम् । मलापहत्वम् । दीपनत्वम् । कफ-
वातार्शोनाशित्वम् । कोष्ठशोधनत्वञ्च । इति
राजनिर्घण्टः ॥

**गडदेशजं**, क्ली, (गडदेशात् जायते इति । जन् +
डः ।) सांवरलवणम् । इति राजनिर्घण्टः ॥

**गडि**, पुं, (गड + इन् ।) वत्सतरः । इति राज-
निर्घण्टः ॥ अलसो गवादिः । गडिया इति
भाषा ॥ यथा, काव्यप्रकाशे ।
"गुणानामेव दौरात्म्याद्धुरि धूर्य्यो नियुज्यते ।
असं जातकिणस्कन्धः सुखं स्वपिति गौर्गडिः ॥"

**गडुः**, पुं, (गड + बाहुलकात् उन् ।) गलगण्डः ।

मस्तीति । यद्वा गड्डुरः मेषपालः तमनुगच्छ-
तीति । ठन् टाप् च ।) अज्ञातप्रवाहागम-
मूलो धारावाही नदीविशेषः । इति केचित् ।
मेषयूथैरनुगम्वमाना मेषी । इत्यन्ये । इति
काव्यप्रकाशटीकायां महेश्वरः ॥

**गड्डुकः**, पुं, (गडुक इति निपातनात् द्वित्वम् ।)
जलपात्रविशेषः । इति शब्दरत्नावली ॥ गाड
इति भाषा ॥

**गड्डूकः**, पुं, (गड्डुक इति पृषोदरात् उकारस्य
दीर्घत्वम् ।) गड्डुकः । इति शब्दरत्नावली ॥

**गण**, त् क संख्याने । इति कविकल्पद्रुमः ॥
(अदन्तचुरां-परं-सकं-सेट् ।) मूर्द्धन्योपधः ।
गणयति । इति दुर्गादासः ॥

**गणः**, पुं, (गण्यते गणयति वा कर्म्मण्यप् । कर्त्तरि
अच् वा ।) समूहः । (यथा, हितोपदेशे १ । ९३ ।
"न गणस्याग्रतो गच्छेत् सिद्धे कार्य्ये समं फलम् ॥")
प्रमथः । (यथा, मेघदूते । ३५ ।
"भर्त्तुः कण्ठच्छविरितिगणैः सादरं वीक्ष्यमाणः ॥")
रुद्रानुचरः । (यथा, गोः रामायणे । ५ । ८९ । ७ ।
"धनाध्यक्षसभां देवः प्राप्तो हि वृषभध्यजः ।
उमासहायो देवेशो गणैश्च बहुभिर्वृतः ॥")
सेनासंख्याविशेषः । तद्यथा । गजाः २७
रथाः २७ अश्वाः ८१ पदातिकाः १३५ समु-
दायेन २७० । इत्यमरः । २ । ८ । ८१ ॥
(यथा, महाभारते ।
"त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः ॥")

संख्या । चोरनामगन्धद्रव्यम् । इति मेदिनी ॥ * ॥
गणेशः । यथा, महानिर्व्वाणतन्त्रे ।
"गाणपस्तु महेशानि ! गणदीक्षाप्रवर्त्तकः ॥"
अश्विन्यादिजन्मनक्षत्रानुसारेण देवमानुष-राक्षसगण इति तु पारिभाषिकम् । यथा, --
"दे म रा म दे मा दे दे रा रा म म द रा द रा ॥
दे रा रा म म दे रा रा म म देति गणत्रयम् ॥"
इति ज्योतिषरत्नमाला ॥
"पूर्ब्बोत्तरात्रयञ्चैव भरण्यार्द्रा च रोहिणी ।
इमानि मानुषाण्याहुर्नक्षत्राणि मनीषिणः ॥
ज्येष्ठाशतभिषामूलधनिष्ठाश्लेषकृत्तिकाः ।
चित्रामघाविशाखाःस्युस्तारा राक्षसदेवताः ॥
अश्विनी रेवती पुष्यः स्वाती हस्तः पुनर्व्वसुः ।
अनुराधा मृगशिरः श्रवणं देवतारकाः ॥"
इति निबन्धः ॥
(तस्य मिलनकथनं यथा, ज्योतिषे ।
"सजातौ परमा प्रीतिर्मध्यमा देवमानुषे ।
देवासुरे कनिष्ठा च मृत्युर्मानुषराक्षसे ॥")
धातुसमूहः । यथा, मनोरमा ।
"भ्वाद्यदादिजुहोत्यादिदिवादिःस्वादिरेव च ।
तुदारुधातनुक्र्यादिश्चुरादिश्चगणा दश ॥"
(छन्दःशास्त्रोक्तपारिभाषिकाक्षरविशेषः । स तु म-न-भ-य-ज-र-स-त-ग-लसंज्ञः । इति छन्दोमञ्जरी ॥ * ॥ महादेवः । यथा, महाभारते । १३ । १७ । ४० ।
"विश्वरूपः स्वयं श्रेष्ठो बलवीरो बलो गणः ॥"
दैत्यविशेषः । स तु अभिजिदिति नामान्तरस्य दैत्यस्य गुणवतो भार्य्यायां गुणवत्यां सम्भूतः । यथा, स्कन्दपुराणे गणेशखण्डे ३ अध्याये ।
"अथ सोऽप्यभिजित् पत्न्या समुद्रस्नानमाययौ ।
पर्व्वणि श्रद्धया युक्तश्चक्रे स्नानं तया सह ॥
तृषिता सा गुणवती पपौ चाञ्जलिना जलम् ।
यद्वीर्य्यं ब्रह्मणा त्यक्तं दैवात्तदुरे गतम् ॥"
"भार्य्यागुणवती तस्य नवमासादनन्तरम् ।
पुत्त्रं प्रसूताह्नि शुंभे दिव्यरूपं गुणाद्भुतम् ॥
ज्योतिर्विद्भिरनुज्ञातो गण इत्यभिधां पिता ।
कृत्वाभ्युदयिकं चक्रे व्यत्यीते दशमेऽहनि ॥"
स च महादेवमाराध्य वरं लब्ध्वा त्रैलोक्यं
"कलिकाले महाशानि ! पाषण्डा बहवो जनाः ।
सङ्गदोषान्महेशानि ! तत्क्षणाद्धानितां व्रजेत् ॥
तस्मात् प्रयत्नतो देवि ! संसर्गं वर्ज्जयेत् सुधीः ।
वरं चाण्डालसंस्पर्शं कुर्य्यात्तु साधकोत्तमः ॥
तथाप्यस्पृश्यगणकं सर्व्वदा तं परित्यजेत् ॥"
इति शाक्तानन्दतरङ्गिण्यां षोडशोल्लासे महिष-मर्द्दिनीतन्त्रवचनम् ॥ तस्य लक्षणं यथा, --
"ज्योतिःशास्त्रविशेषज्ञः सुन्दराङ्गः सभापटुः ।
कुलक्रमागतः शुद्धो गणकः स्यान्महीपतेः ॥"
इति युक्तिकल्पतरुः ॥
(यदि च शास्त्रविशेषे गणकस्य निन्दादिकं श्रूयते तत्तु केवलं नक्षत्रजीविन एवेति बोध्यम् । प्रकृतज्योतिःशास्त्रन्तु द्विजातिभिरेवा-वश्यमध्ययनीयं वेदाङ्गत्वात् । यथा, --
"संयुतोऽपीतरैः कर्णनासादिभि-श्चक्षुषाङ्गेन हीनो न किञ्चित् करः ।
तस्माद्द्विजैरध्ययनीयमेतत्
पुण्यं रहस्यं परमञ्च तत्त्वम् ॥"
इति सिद्धान्तशिरोमणिः ॥ * ॥
प्रजापतिपुत्त्रास्ताराविशेषकेतवः । यथा, --
"ताराः पुञ्जनिकाशा गणका नाम प्रजापतेरष्टौ पुत्त्राः ॥"
इति बृहत्संहिता । ११ । २५ ॥
संकीर्णजातिविशेषः । यथोक्तम् ।
"चर्म्मकारस्य द्वौ पुत्त्रौ गणको वाद्यपूरकः ॥")

**गणकर्णिका**, स्त्री, (गणस्य गणाधिपस्य कर्णवत् पत्रमस्याः ।) इन्द्रवारुणी । इति राजनिर्घण्टः ॥

महाराजिकसाध्याश्च रुद्राश्च गणदेवताः ॥
आदित्या द्वादश प्रोक्ता विश्वेदेवा दश स्मृताः ।
वसवश्चाष्टसंख्याताः षट्त्रिंशत् तुषिता मताः ॥
आभास्वराश्चतुःषष्टिर्वाताःपञ्चाशदूनकाः ।
महाराजिकनामानो द्वे शते चापि विंशतिः ॥
साध्या द्वादश विख्याता रुद्राश्चैकादश स्मृताः ।
एते च संहता देवास्तत्रादित्याः स्वनामतः ॥"
इति जटाधरः ॥

**गणद्रव्यं**, क्ली, (गणानां साधारणानां द्रव्यम् । यद्वा द्रव्याणां गण इति परनिपातः ।) साधारण-द्रव्यम् ।
मिलितानेकस्वामिकासम्बन्धिद्रव्यम् । द्रव्यसमूहः । तत्र द्रव्याणां गण इति व्युत्-पत्तिः ॥

**गणनं**, क्ली, (गण्यते इति । गण + भावे ल्युट् ।) संख्यानम् । गणा ठिक् देया इति च भाषा ॥
यथा, विश्वसारतन्त्रे ।
"येनैव लिखनं कुर्य्यात्तेनैव गणनं स्मृतम् ॥"

**गणना**, स्त्री, (गण + युच् टाप् च ।) गणनम् ।
संख्या । (यथा, नैषधे । ३ । ४० ।
"यदि त्रिलोकी गणनापरा स्या-त्तस्याः समाप्तिर्यदि नायुषः स्यात् ।
पारे परार्द्धं गणितं यदि स्यात्
गणेयनिःशेषगुणोऽपि स स्यात् ॥")

**गणनाथः**, पुं, (गणानां विघ्नकर्त्तृदेवविशेषाणां नाथः ।) गणेशः । इति शब्दरत्नावली ॥
(गणानां प्रमथानां नाथः स्वामी इति व्युत्पत्त्या शिवः ॥)

**गणनायकः**, पुं, (गणानां नायकः ।) गणेशः ।
इति शब्दरत्नावली ॥ (यथा, महाभारते । १ । १ । ७७ ।

निर्जित्य च कपिलमुनेश्चिन्तामणिमपहृतवान् ।
कपिलमुनिस्तु अस्मादपराधात्
जातमन्युर्गणेश-
माराधयामास । अथ प्रसन्नेन गणपतिना तद्-
गृहे अवतीर्य्य तं गणदैत्यं विनाशितवान्
इत्येषा-
कथा तत्रैवाध्याये विस्तरशो द्रष्टव्या ॥)

**गणकः**, पुं, (गणयति शुभाशुभग्रहभोगजनितफलं
निरूपयतीति । गण त् क सङ्ख्याने + कर्त्तरि
ण्वुल् ।) दैवज्ञः । ज्योतिर्वित् । तत्पर्य्यायः । साम्बत्-
सरः २ ज्योतिषिकः ३ दैवज्ञः ३ मौहूर्त्तिकः ५
मौहूर्त्तः ६ ज्ञानी ७ कार्त्तान्तिकः ८ । इत्यमरः ।
२ । ८ । १४ ॥ ज्योतिषिकः ९ । इति तट्टीका ॥ स तु
वर्णसङ्करजातिविशेषः । देवलाद्वैश्यागर्भजातः ।
तस्य कर्म्म तिथिवारादिज्ञापनम् । इति परा-
शरपद्धतिः ॥ स तु अस्पृश्यः । यथा, --

**गणकारः**, पुं, (गणानां सैन्यानां कारः कर्त्ता
सेनापरिचालनदक्षः ।) भीमसेनः । इति शब्द-
रत्नावली ॥ (गणं
धात्वर्थप्रकाशकग्रन्थविशेषं
करोतीति । कृ + अण् ।) धातुसंग्रहकर्त्ता ।
यथा, "गणकारवचनप्रमाणार्थमिदम् ।" इति
कातन्त्रवृत्तिः ॥

**गणकी**, स्त्री, (गणकस्य पत्नी इति । तत्पत्न्यामिति
ङीष् ।) गणकपत्नी । इति जटाधरः ॥

**गणचक्रकं**, क्ली, (गणाः धार्म्मिकगणास्तेषां चक्रं
सम्भूय भोजनमत्र इति कप् ।) धार्म्मिकाणां
सम्भूय भोजनम् । इति त्रिकाण्डशेषः ॥

**गणता**, स्त्री, (गणस्य धर्म्मः भावो वा इति तल् ।)
गणस्य भावः । समूहत्वम् । पक्षपातित्वम् ।
इति लोकप्रसिद्धिः ॥

**गणदीक्षी**, [न्] पुं, (गणान् बहुशिष्यान् दीक्ष-
यति दीक्षां कारयतीति ।) बहुयाजकः । इति
मिताक्षरा ॥ (वाच्यलिङ्गे तु गणस्य शिवस्य
गणेशस्य वा दीक्षा विद्यते अस्मिन् अस्य वा ।
दीक्षा + इनिः । शिवदीक्षितः ।) गणेशदीक्षिते
त्रि । गणस्य गणेशस्य दीक्षा गणदीक्षा । इति
महानिर्व्वाणतन्त्रम् ॥

**गणदेवता**, स्त्री, (गणः सङ्घः तद्रूपा देवता
सम्भूय स्थिता देवता इत्यर्थः ।) संहतदेवता-
विशेषः । यथा, --
"आदित्या विश्ववसवस्तुषिता भास्वरानिलाः ।
"लेखको भारतस्यास्य भव त्वं गणनायक ! ॥"
गणानां देवसङ्घानां नायकः । यथा, भागवते ।
५ । १७ । १३ । "यत्र ह देवपतयः स्वैः स्वैर्गण-
नायकैर्विहितमहार्हणाः ॥" इति ॥ * ॥ गणानां
प्रमथानां नायकः । शिवः ॥)

**गणनायिका**, स्त्री, (गणानां नायकः शिवः तस्य
शक्तिरिति टाप् अत इत्वं च गणनेत्री इत्यर्थः ।)
दुर्गा । इति त्रिकाण्डशेषः ॥

**गणनीयं**, त्रि, (गण + अनीयर् ।) गणनार्हम् ।
संख्येयम् । तत्पर्य्यायः । गणेयम् २ । इत्यमरः ।
३ । १ । ६४ ॥ गणितव्यम् ३ गण्यम् ४ । इति
व्याकरणम् ॥ संख्येयम् ५ । इति जटाधरः ॥

**गणपतिः**, पुं, (गणानां गणसंज्ञकानां देवानां
पतिः अधीश्वरः स्वामी वा ।) गणेशः । इति
हलायुधः ॥ (यथा, पञ्चतन्त्रे । १ । १७० ।
"अत्तुं वाञ्छति शाम्भवो गणपतेराखुं क्षुधार्त्तः फणी
तं च क्रौञ्चरिपोः शिखी गिरिसुतासिंहोऽपि नागाशनम् ॥"
अग्रपूजनीयप्रधानदेवताविशेषः । यथा, यजु-
र्वेदीयवाजसनेयसंहितायाम् । १६ । २५ ।
"नमो गणेभ्यो गणपतिभ्यश्च वो नमो नम इति ॥"

बृहस्पतिः । यथा, ऋग्वेदे । २ । २३ । १ ।
"गणानां त्वा गणपतिं हवामहे
कविं कवीनामुपमश्रवस्तमम् ॥"
शिवः । यथा, महाभारते । १३ । १७ । ४१ ।
"गणकर्त्ता गणपतिर्द्दिग्वासाः काम एव च ।
मन्त्रवित् परमो मन्त्रः सर्व्वभावकरो हरः ॥"
आथर्व्वणोपनिषद्विशेषः । यथा, मौक्तिकोप-
निषदि प्रथमाध्याये ।
"त्रिपुरातपनद्वेवीभावनाभस्मजावालगणपति-
महावाक्यगोपालतपनकृष्णहयग्रीवेति ॥")

**गणपर्व्वतः**, पुं, (गणानां प्रमथगणानां गणपत्यादि-
देवानां वा आवासरूपः पर्व्वतः । गणभूयिष्ठः
पर्व्वतो वा ।) कैलासपर्व्वतः । इति त्रिकाण्ड-
शेषः ॥

**गणपीठकं**, क्ली, (गणस्य शिवस्य परमेश्वर-
स्येति यावत् पीठः आसनमिव कायति प्रका-
शते इति । कै + कः ।) वृक्षः । इति शब्द-
चन्द्रिका ॥

**गणरात्रं**, पुं, (गणानां बह्वीनां रात्रीणां समाहारः
गणशब्दस्य सङ्ख्यावत्त्वात् तद्धितार्थेति द्विगु-
समासः । "अहः सर्व्वैकदेशसङ्ख्यातपुण्याच्च
रात्रेः ।" ५ । ४ । ७८ । इत्यच् । सङ्ख्यापूर्ब्बं
रात्रं
क्लीवमिति लिङ्गानुशासने क्लीवत्वविधानात्
"रात्राह्नाहाः पुंसि ।" २ । ४ । २९ । इति
क्लीवत्वम् ।) रात्रिसमूहः । इत्यमरः । १ । ४ । ६
॥

**गणरूपः**, पुं, (गणाः बहुप्रकाराणि रूपाणि
अस्य ।) अर्कवृक्षः । इत्यमरः । २ । ४ । ८० ॥

**गणरूपकः**, पुं, (गणरूप + संज्ञायां कन् । गण-
रूप इव कायति प्रकाशते इति वा । कै + कः ।)
राजार्कः । इति राजनिर्घण्टः ॥

**गणरूपी**, [न्] पुं, (गणाः बहुविधाणि रूपाणि
वर्णाकृत्यादयः सन्त्यस्य इति अस्त्यर्थे इनिः ।)
श्वेतार्कः । इति रत्नमाला ॥

**गणवतीसुतः**, पुं, (गणवत्याः सुतः ।) दिवोदासः ।

**गणिका**, स्त्री, (गणः लम्पटगणः उपपतित्वेना-
स्त्यस्याः इति ठन् ।) वेश्या । (यथा,
हरिवंशे ।
८५ । ९ ।
"गणिकानां पृथङ्गच्चाः शुभैरास्तरणाम्बरैः
॥")
यूथिका । इत्यमरः । २ । ६ । १९ ॥ गणि-
कारिकावृक्षः । इति शब्दरत्नावली ॥
हस्तिनी ।
इति जटाधरः ॥

**गणिकारिका**, स्त्री, (गणिः गणनं करोतीति । कृ +
ण्वुल् + टाप् + अत इत्वञ्च । यद्वा
गणिकेत्याख्यां
ऋच्छतीति । ऋ + "कर्म्मण्यण् ।" ३ । २ ।
१ । इत्यणु ।
स्वार्थे कन् अत इत्वञ्च ।) वृक्षविशेषः । वड
गणियारी इति भाषा ॥ तत्पर्य्यायः ।
श्रीपर्णम् २
अग्निमन्थः ३ कणिका ४ जया ५ ।
इत्यमरः । २ ।
४ । ६६ ॥ तेजोमन्थः ६ हविर्मन्थः ७
ज्योतिष्कः ८
पावकः ९ अरणिः १० वह्निमन्थः ११
मथनः १२ ।
इति रत्नमाला ॥ अग्निमथनः १३ तर्कारी
१४
वैजयन्तिका १५ अरणीकेतुः १६ श्रीपर्णी
१७
कर्णिका १८ नादेयी १९ विजया २०
अनन्ता २१
नदीजा २२ । अस्या गुणाः । कटुत्वम् ।
उष्ण-
त्वम् । तिक्तत्वम् ।
अनिलकफशोफश्लेष्माग्नि-
मान्द्यार्शोमलबन्धश्रमनाशित्वञ्च । इति
राज-
निर्घण्ट ॥ क्षुद्रगणिकारिकागुणपर्य्यायौ
क्षुद्राग्नि-
मन्थशब्दे द्रष्टव्यौ ॥

**गणिकारी**, स्त्री, (गणिर्गणनं करोति पूजादिषु

**गणेरुका**, स्त्री, (गणेरूणां गणिकानां गणिकासु
वा मध्ये कायति प्रकाशते इति । कै +
कः ।)
कुट्टिनी । इति त्रिकाण्डशेषः ॥

**गणेशः**, पुं, (गणानां प्रमथसमूहानां यद्वा
गणानां जीवजातानां ईशः ईश्वरः ।)
शिवः ।
इति हारावली । ८ ॥ (यथा, महाभारते
। ३ ।
कैराते । ३९ । ७८ ।
"प्रसादये त्वां भगवन् !
सर्व्वभूतमहेश्वर ! ।
गणेशं जगतः शम्भुं
लोककारणकारणम् ॥"
गणानां गणाख्यदेवविशेषाणां
विघ्नाख्यदेवानां
वा ईशः नियन्ता ।) शिवपुत्त्रः । (यथा,
महा-
भारते । १ । १ । ७३ ।
"काव्यस्य लेखनार्थाय गणेशः
स्मर्य्यतां मुने ! ॥")
तत्पर्य्यायः । विनायकः २ विघ्नराजः
७ द्वैमा-
तुरः ४ गणाधिपः ५ एकदन्तः ६
हेरम्बः ७
लम्बोदरः ८ गजाननः ९ । इत्यमरः ।
१ । १ । ४० ॥
विघ्नेशः १० पर्शुपाणिः ११ गजास्यः
१२
आखुगः १३ । इति हेमचन्द्रः । २ ।
१२१ ॥
शूर्पकर्णः १४ । इति ब्रह्मवैवर्त्तपुराणम्
॥ * ॥
तस्योत्पत्तिः । तत्र पार्व्वतीं प्रति
वृद्धब्राह्मण-
रूपश्रीकृष्णवाक्यम् । यथा, --
"न भवेद्विष्णुभक्तिश्च विष्णुमाये !
त्वया विना ।
त्वद्व्रतं लोकशिक्षार्थं त्वत्तपस्तव
पूजनम् ॥

यथा, त्रिकाण्डशेषे ।
"धन्वन्तरिर्द्दिवोदासः काशिराजः सुधोद्भवः ।
पालकाख्यागणवतीकरेणुरुचिरासुतः ॥"

**गणहासः**, पुं, (गणान् गन्धद्रव्यगणान् हासयतीति ।
गण + हस् + णिच् + अण् ।) चोरकनामगन्ध-
द्रव्यम् । इति राजनिर्घण्टः ॥

**गणहासकः**, पुं, (गणहास + स्वार्थे कः ।) चोरक-
नामगन्धद्रव्यम् । इत्यमरः । २ । ४ । १२८ ॥

**गणाग्रणीः**, पुं, (अग्रे नीयते इति अग्रणीः ।
गणानां गणाख्यदेवविशेषाणां अग्रणीः ।)
गणेशः । इति त्रिकाण्डशेषः ॥

**गणाचलः**, पुं, (गणानां वासाय अचलः गणभूयिष्ठो-
ऽत्तलो वा ।) कैलासपर्व्वतः । इति जटाधरः ॥

**गणाधिपः**, पुं, (गणानां अधिपः अधीश्वरः ।)
गणेशः । इत्यमरः । १ । १ । ४० ॥ शिवः ।
इति हलायुधः ॥

**गणिः**, स्त्री, (गण + "सर्व्वद्यातुभ्य इन् ।" उणां ।
४ । ११७ । इति इन् ।) गणनम इति व्याकरणम्
॥
आत्मानं गणनं कारयतीत्यर्थः । कृ +
कर्म्मण्यण्
ततो ङीष् ।) पुष्पवृक्षविशेषः । गणियारी
इति
भाषा । तत्पर्य्यायः । काञ्चनिका २ काञ्चन-
पुष्पी ३ वसन्तदूती ४ गन्धकुसुमा ५
अलिमोदा
६ वासन्ती ७ मदनमादिनी ८ । अस्या
गुणाः ।
सुरभितरत्वम् । त्रिदोषशमनत्वम् ।
दाहशोष-
कामक्रीडाडम्बरसम्बरहरत्वम् ।
चापलप्रसर-
त्वञ्च । इति राजनिर्घण्टः ॥ (विशेषश्चास्या
गणिकारिकाग्निमन्थशब्दयोर्बोद्धव्यः ॥)

**गणितं**, त्रि, (गण + कर्म्मणि क्तः ।) कृतगण-
नम् । तत्पर्य्यायः । संख्यातम् २ । इत्यमरः
।
३ । १ । ६४ ॥ (चिन्तितम् । यथा,
शिवपुराणे
ज्ञानसंहितायाम् । १२ । २७ ।
"दुःखं च विविधं तत्र गणितं न तया तथा
॥")

**गणितं**, क्ली, (गण्यते इति । गण + क्तः ।) अङ्क-
शास्त्रम् । तत् द्विविधं व्यक्तं पाटीगणितम् ।
अव्यक्तं बीजगणितम् । इति लीलावती ॥
गण-
नम् । यथा, नैषधे । ३ । ४० ।
"पारे परार्द्धं गणितं यदि स्यात् ॥"

**गणिपिटका**, स्त्री, द्वादशाङ्गी । सा तु जिनानां
विद्याविभागः । इति हेमचन्द्रः । २ । १५९
॥

**गणेयः**, त्रि, (गण + एय ।) संख्येयः । गणनीयः ।
इत्यमरः । ३ । १ । ६४ ॥ (यथा, नैषधे ।
३ । ४० ।
"गणेयनिःशेष गुणोऽपि स स्यात् ॥")

**गणेरुः**, पुं, (गण + बाहुलकात् एरुः ।) कर्णि-
कारवृक्षः । इति मेदिनी । रे । १४८ ॥

**गणेरुः**, स्त्री, (गण + बाहुलकात् एरुः ।) वेश्या ।
सर्व्वेज्याफलदात्री त्वं नित्यरूपा
सनातनी ।
गणेशरूपः श्रीकृष्णः कल्पे कल्पे
तवात्मजः ॥
त्वत्क्रोडमागतः
क्षिप्रमित्युक्त्वान्तरधीयत ।
कृत्वान्तर्द्धानमीशश्च बालरूपं विधाय
सः ॥
जगाम पार्व्वतीतल्पं
मन्दिराभ्यन्तरस्थितम् ।
तल्पस्थे शिवबीर्य्ये च मिश्रितः स
बभूव ह ॥
ददर्श गेहशिखरं प्रसूतबालको यथा ।
शुद्धचम्पकवर्णाभः कोटिचन्द्रसमप्रभः
॥
सुखदृश्यः
सर्व्वजनैश्चक्षूरश्मिविवर्द्धकः ।
अतीवसुन्दरतनुः कामदेवविमोहनः ॥
मुखं निरुपमं बिभ्रत्
शारदेन्दुविनिन्दकम् ।
सुन्दरे लोचने बिभ्रत्
चारुपद्मविनिन्दके ॥
ओष्ठाधरपुटं बिभ्रत्
पक्वविम्बविनिन्दकम् ।
कपालञ्च कपोलन्तदतीव सुमनोहरम्
॥
नासाग्रं रुचिरं बिभ्रत्
खगेन्द्रचञ्चुनिन्दकम् ।
त्रैलोक्येषु निरुपमं सर्व्वाङ्गं विभ्रदुत्तमम्
॥
शयानः शयने रम्ये प्रेरयन्
हस्तपादकम् ॥"
तस्य शनैश्चरदर्शनात् मस्तकविनाशः
विष्णु-
कर्त्तृकगजमस्तकसंयोगश्च यथा, --
"सा च देववशीभूता शनिं प्रोवाच
कौतुकात् ।
पश्य मां मत्शिशुमिति नियतिः केन
वार्य्यते ॥
पार्व्वतीवचनं श्रुत्वा सोऽनुमेने हृदा
स्वयम् ।
पश्यामि किं न पश्यामि
पार्व्वतीसुतमित्यहो ॥

| | | |
|---|---|---|
| | हस्तिनी । इति मेदिनी । रे । १४८ ॥ | बालं द्रष्टुं मनश्चक्रे न बालमातरं शानि ।<br>विषण्णमानसः पूर्ब्बं शुष्ककण्ठौष्ठतालुकः ॥<br>सव्यलोचनकोणेन ददर्श च शिशोर्म्मुखम् ।<br>शनिश्च दृष्टिमात्रेण चिच्छेद मस्तकं मुने ! ॥<br>विस्मितास्ते सुराः सर्व्वे चित्रपुत्तलिका यथा ।<br>देव्यश्च शैला गन्धर्व्वाः शिवः कैलासवासिनः ॥ |

तान् सर्व्वान् मूर्च्छितान् दृष्ट्वा चारुह्य गरुडं हरिः ।
जगाम पुष्पभद्रां स उत्तरस्यां दिशि स्थिताम् ॥
पुष्पभद्रानदीतीरे ददर्श काननस्थितम् ।
गजेन्द्रं निद्रितं तत्र शयानं हस्तिनीयुतम् ॥
शीघ्रं सुदर्शनेनैव चिच्छेद तच्छिरो मुदा ।
स्थापयामास गरुडे रुधिराक्तं मनोहरम् ॥
आगत्य पार्व्वतीस्थानं बालं कृत्वा स्ववक्षसि ।
रुचिरं तच्छिरः कृत्वा योजयामास बालके ॥
ब्रह्मस्वरूपो भगवान् ब्रह्मज्ञानेन लीलया ।
जीवनं जीवयामास हूंकारोच्चारणेन च ॥”
इति ब्रह्मवैवर्त्तपुराणम् ॥ * ॥
अस्य ध्यानम् ।
“खर्व्वं स्थूलतनुं गजेन्द्रवदनं लम्बोदरं सुन्दरं
प्रस्यन्दन्मदगन्धलुब्धमधुपव्यालोलगण्डस्थलम् ।
दन्ताघातविदारितारिरुधिरैः सिन्दूरशोभाकरं
बन्देशैलसुतासुतं गणपतिं सिद्धिप्रदं कामदम् ॥”
इति पुराणम् ॥ * ॥
ध्यानान्तरं यथा, --
“सिन्दूराभं त्रिनेत्रं पृथतरजठरं हस्तपद्मैर्दधानं
दन्तं पाशाङ्कुशेष्टान्युरुकरविलसद्बीजपूराभिरामम् ।
बालेन्दुद्योतमौलिं करिपतिवदनं दानपूरार्द्रगण्डं
भोगीन्द्राबद्धभूषं भजत गणपतिं रक्तवस्त्राङ्गरागम् ॥”
इति तन्त्रसारः ॥
(तस्य नमस्कारमन्त्रो यथा, --
“देवेन्द्रमौलिमन्दारमकरन्दकणारुणाः।
विघ्नं हरन्तु हेरम्बचरणाम्बुजरेणवः ॥”
इति पूजापद्धतिः ॥)
एकपञ्चाशद्गणेशाः । यथा, --
“विघ्नेशो विघ्नराजश्च विनायकशिवोत्तमौ ।
विघ्नकृत् विघ्नहर्त्ता च गणैकद्विसुदन्तकाः ॥
गजवक्त्रनिरञ्जनौ कपर्द्दी दीर्घजिह्वकः ।
शङ्कुकर्णश्च वृषभध्वजश्च गणनायकः ॥
गजेन्द्रः सूर्पकर्णश्च स्यात्त्रिलोचनसंज्ञकः ।
लम्बोदरमहानन्दौ चतुर्म्मूर्त्तिसदाशिवौ ॥
आमोददुर्म्मुखौ चैव सुमुखश्च प्रमोदकः ।
एकपादो द्विजिह्वश्च सुरवीरः सषण्मुखः ॥
वरदो वामदेवश्च वक्रतुण्डो द्विरण्डकः ।
भ्रुकुटिः स्यात्तथा लज्जा दीर्घघोणा धनुर्द्धरा ।
यामिनी रात्रिसंज्ञा च कामान्धा च शशिप्रभा ॥
लोलाक्षी चञ्चला दीप्तिः सुभगा दुर्भगा शिवा ।
भर्गा च भगिनी चैव भोगिनी सुभगा मता ॥
कालरात्रिः कालिका च पञ्चाशच्छक्तयः स्मृताः ।
सर्व्वालङ्करणोद्दीप्ताः प्रियाङ्कस्थाः सुशोभनाः ॥
रक्तोत्पलकरा ध्येया रक्तमाल्याम्बरारुणाः ॥”
इति शारदातिलकटीकायां राघवभट्टः ॥

**गणेशकुसुमं**, क्ली, (गणेश इव कुसुमम् । रक्तवर्णसादृश्यात्तथात्वम् ।) रक्तकरवीरः । इति राजनिर्घण्टः ॥

**गणेषभूषणं**, क्ली, (गणेशस्य भूषणमिव ।) सिन्दूरम् । इति राजनिर्घण्टः ॥

**गणोत्साहः**, पुं, (गणाय गणार्थं वा यूथीकरणायेत्यर्थः उत्साहोऽस्य । यद्वा गणान् यूथान् उत्साहयतीति । उत् + साहि + अण् ।) गण्डकः ।
इति त्रिकाण्डशेषः ॥ गण्डार इति भाषा ॥

**गण्डः**, पुं, (गडि आस्यैकदेशे + अच् । यद्वा गम गतौ + “अमन्ताड्डः ।” उणां । १ । ११३ । इति डः ।) हस्तिकपोलः । (यथा, पञ्चतन्त्रे । १ । ३५६ ।
“प्रमाणाभ्यधिकस्यापि गण्डश्याममदच्युतेः ।
पदं मूर्द्ध्नि समाधत्ते केशरी मत्तदन्तिनः ॥”)
तत्पर्य्यायः । कटः २ । इत्यमरः । २ । ८ । ३७ ॥
करटः ३ । इति तट्टीका ॥ कटकः ४ हस्तिगण्डकः ५ । इति शब्दरत्नावली ॥ कपोलः ।
तातेनादर्शनं वापि यावत् पाण्मासिको भवेत् ॥
कुङ्कुमं चन्दनं कुष्ठं गोरोचनमथापि वा ।
घृतैरेवान्वितं कृत्वा चतुर्भिः कलसैर्बुधः ॥
सहस्राक्षेण मन्त्रेण बालकं स्नापयेत्ततः ।
पितृयुक्तं दिवाजातं मातृयुक्तञ्च रात्रिजम् ॥
स्नापयेत् पितृमातृभ्यां सन्ध्ययोरुभयोरपि ।
कांस्यपात्रं घृतैः पूर्णं गण्डदोषोपशान्तये ॥
दद्याद्धेनुं हिरण्यञ्च ग्रहांश्चापि प्रपूजयेत् ।
मूलायाः प्रथमे पादे पितुर्व्वपुर्व्विनश्यति ॥
द्वितीये नियतां पीडां मातुः कुर्य्यात् पितुस्तथा ।
तृतीये धननाशाय चतुर्थे सर्व्वसम्पदः ॥
व्यत्ययेन फलं ज्ञेयमश्लेषास्वपि पूर्ब्बवत् ।
वल्मीकमृत्तिकां नद्यास्तूभयतटमृत्तिकाम्॥
गोविषाणमृदञ्चापि दन्तिमृदञ्च निःक्षिपेत् ।
तीर्थाम्भिःपञ्चगव्यैश्च स्नानं मातुः पितुः शिशोः ॥
दिवा जाता तु या कन्या निशि जातस्तु यः पुमान् ।
नोभयोर्गण्डदोषः स्यात् नाचलो हन्ति पर्व्वतम् ॥”
इति ज्योतिषतत्त्वम् ॥

**गण्डकः**, पुं, (गण्ड + स्वार्थे कन् ।) खड्गी । इत्यमरः । १ । १० । १७ ॥ गण्डार इति भाषा ॥
खड्गः । संख्याप्रभेदः । गण्डा इति भाषा ।

सेनानीर्ग्रामणीर्म्मत्तो विमत्तो मत्तवाहनः ॥
जटौ मुण्डी तथा खड्गी वरेण्यो वृषकेतनः ।
भक्षप्रियो गणेशश्च मेघनादकसंज्ञकः ॥
व्यापी गणेश्वरः प्रोक्ताः पञ्चाशद्गणपा इमे ।
तरुणारुणसङ्काशा गजवक्त्रास्त्रिलोचनाः ॥
पाशाङ्कुशवराभीतिहस्ताः शक्तिसमन्विताः ॥" * ॥
तेषामेकपञ्चाशच्छक्तयश्च यथा, --
"ह्रीः श्रीश्च पुष्टिः शान्तिश्च स्वस्तिश्चैव सरस्वती ।
स्वाहामेधाकान्तिकामिन्यो मोहिन्यपि वैनटी ॥
पार्व्वती ज्वलिनी नन्दा सुयशाः कामरूपिणी ।
उमा तेजोवती सत्या विघ्नेशानी सुरूपिणी ॥
कामदा मदजिह्वा च भूतिः स्याद्भौतिका सिता ।
रमा च महिषी प्रोक्ता शृङ्गिणी च विकर्णपा ॥

इत्यमरः । २ । ६ । ९० ॥ गाल इति भाषा ॥
(यथा, कुमारे । ७ । ८२ ।
"तदीषदार्द्रारुणगण्डलेखं
उच्छासिकालाञ्जनरागमक्ष्णोः ॥")
खड् गी । वीथ्यङ्गम् । पिटकः । चिह्नम् ।
वीरः । हयभूषणम् । वुद्बुदः । इति मेदिनी ॥
स्फोटकः । ग्रन्थिः । इत्यमरटीकायां रमानाथः ॥
विष्कुम्भादिसप्तविंशतियोगान्तर्गतदशमयोगः ।
(यथा, ज्योतिषवचने ।
"गण्डो वृद्धिर्ध्रुवश्चैव व्याघातो हर्षणस्तथा ॥")
तत्र जातफलम् ।
"स्वकार्य्यकर्त्ता परकार्य्यहर्त्ता
गण्डोद्भवः स्यादतिगण्डवाक्यः ।
अत्यन्तधूर्त्तः पुरुषः कुरूपः
सुहृद्गणानामतितापदाता ॥"
इति कोष्ठीप्रदीपः ॥ * ॥
दोषजनकोऽश्विन्यादिनक्षत्राणांभागविशेषः ।
यथा, --
"अश्विनीमघमूलानां तिस्रो गण्डाद्यनाडिकाः ।
अन्त्याः पौष्णोरगेन्द्राणां पञ्चैव जवना जगुः ॥
मूलेन्द्रयोर्दिवा गण्डो निशायां पितृसर्पयोः ।
सन्ध्याद्वये तथा ज्ञेयो रेवतीतुरगर्क्षयोः ॥" * ॥
तत्र जातस्य दोषो यथा, --
"सन्ध्यारात्रिदिवाभागे गण्डयोगोद्भवः शिशुः ।
आत्मानं मातरं तातं विनिहन्ति यथाक्रमम् ॥"
तस्य शान्तिर्यथा, --
"सर्व्वेषां गण्डजातानां परित्यागो विधीयते ।

विद्याविशेषः । अवच्छेदः । अन्तरायः । इति
मेदिनी । के ८२ ॥ (देशविशेषः । यथा, महा-
भारते । २ । २९ । ४ ।
"ततः स गण्डकान् शूरो विदेहान् भरतर्षभः ॥"
भूषणम् । यथा, कादम्बर्य्याम् ।
"व्याघ्रनखपङ्क्ति-
मण्डिता गण्डकाभरणा च ॥" ग्रन्थिः । यथा,
तत्रैव ।
"गोरोचनालिखितभूर्ज्जपत्रगर्भान् मन्त्र-
गण्डकान् ॥" स्फोटकरोगविशेषः ।
यथा, तत्रैव ।
"अनेकवेत्राघातनिर्म्मितबहुगात्रगण्डकम् ॥")

**गण्डकारी**, स्त्री, (गण्डं भग्नास्थिग्रन्थिमित्यर्थः करोति संयोजयतीति ।) खदिरीवृक्षः । इति
शब्दचन्द्रिका ॥ वराहक्रान्ता । इति रत्नमाला ॥

**गण्डकाली**, स्त्री, (गण्ड + कृ + "कर्म्मण्यण् ।" ३ । २ । १ । इत्यण् ततो ङीप् । रस्य लत्वं यद्वा
गण्डेषु ग्रन्थिषु काली यस्याः ।) खदिरीवृक्षः ।
इत्यमरः । २ । ४ । १४१ ॥
("गण्डकालीनमस्कारी समङ्गा खदिरी क्वचित् ॥"
इति वैद्यकरत्नमालायाम् ॥)

**गण्डकी**, स्त्री, (गण्डक + स्त्रियां जातौ ङीष् ।) स्वनाम-ख्याता नदी । इति मेदिनी । ८२ ॥
यथा, स्मृतिः ।
"गण्डक्याश्चैकदेशे च शालग्रामस्थलं स्मृतम् ।
पाषाणं तद्भवं यत्तत् शालग्राममिति स्मृतम् ॥"
तत्र शालग्रामोत्पत्तिकारणंयथा, --

| | | |
|---|---|---|
| | | "गण्डक्यापि पुरा तप्तं वर्षाणामयुतं विधेः ।<br>शीर्णपर्णाशनं कृत्वा वायुभक्षाप्यनन्तरम् ॥<br>दिव्यं वर्षशतं तेपे विष्णुं चिन्तयती तदा ।<br>ततः साक्षाज्जगन्नाथो हरिर्भक्तजनप्रियः ॥<br>उवाच मधुरं वाक्यं प्रीतः प्रणतवत्सलः ।<br>गण्डकि ! त्वां प्रसन्नोऽस्मि तपसा विस्मितोऽनघे ! ॥<br>अनवच्छिन्नया भक्त्या वरं वरय सुव्रते ! ।<br>किं देयं तद्वदस्वाशु प्रीतोऽस्मि वरवर्णिनि ! ॥ |

गण्डक्यपि पुरो दृष्ट्वा शङ्खचक्रगदाधरम् ।
दण्डवत् प्रणता भूत्वा ततः स्तोतुं प्रचक्रमे ॥
अहो देव ! मया दृष्टो दुर्द्दर्शो योगिनामपि ।
त्वया सर्व्वमिदं सृष्टं जगत् स्थावरजङ्गमम् ॥
तदनु त्वं प्रविष्टोऽसि पुरुषस्तेन त्तोच्यते ।
त्वल्लीलोन्मीलिते विश्वे कः स्वतन्त्रोऽस्ति वै पुमान् ॥
अनाद्यन्तमपर्य्यन्तं यद्ब्रह्म श्रुतिबोधितम् ।
तदेव त्वं महाविष्णो ! यस्त्वां वेद स वेदवित् ॥
तवैवाद्या जगन्माता या शक्तिः परमा स्मृता ।
तां योगमायां प्रकृतिप्रधानमिति वक्ष्यते ॥
निर्गुणः पुरुषोऽव्यक्तश्चित्स्वरूपी निरञ्जनः ।
आनन्दरूपः शुद्धात्मा ह्यकर्त्ता निर्विकारकः ॥
स्वां योगमायामाविश्य कर्त्तृत्वं प्राप्तवानसि ।
प्रकृत्या सृज्यमानेऽस्मिन् द्रष्टा साक्षी निगद्यते ॥
प्रकृतेस्त्रिगुणैरस्मिन् सृज्यमानेऽपि नान्यथा ।
सान्निध्यमात्रतो देव ! त्वयि स्पुरति कारणे ॥
स्फटिके हि यथा स्वच्छे जवाकुसुमरागतः ।
प्रकाशते त्वत्प्रकाशात् ज्योतीरूप ! नतास्मि ते ॥
ब्रह्मादयोऽपि कवयो न विन्दन्ति ययार्थतः ।
तत् कथं वेद्म्यहं मूढा तव रूपं निरञ्जनम् ॥
मूढस्य जगतो मध्ये स्थिता किञ्चिदजानती ।
त्वया धृष्टा कृता चास्मि योग्यायोग्यमविन्दती ॥
तेन लोके महत्त्वञ्च त्वत्प्रसादेन चेच्छती ।
यदयाचे तत्तपोदार ! तन्मे दातुं त्वमहसि ॥
दयालुरसि दीनेषु नेति मां न वद प्रभो ! ।
ततः प्रोवाच भगवान् देवि ! यद्यत्त्वमिच्छसि ॥
तद्याचय वरारोहे ! अदेयमपि सर्वथा ।
यद्दुर्लभं मनुष्याणां शीघ्रं याचय मां प्रति ॥
मद्दर्शनमनुप्राप्य कोवाऽपूर्णमनोरथः ।
ततो हिमांशो ! सा देवी गण्डकी लोकतारिणी ॥
प्राञ्जलिः प्रणता भूत्वा मधुरं वाक्यमब्रवीत् ।
यदि देव ! प्रसन्नोऽसि देयो मे वाञ्छितो वरः ॥
मम गर्भगतो भूत्वा विष्णो ! मत्पुत्त्रतां व्रज ।
ततः प्रसन्नो भगवान् चिन्तयामास गोपते ! ॥
किं याचितं निम्नगया नित्यं मत्सङ्गलुब्धया ।

**गण्डकुसुमं**, क्ली, (गण्डेषु गजानां कपोलदेशेषु कुसुममिव । हस्तिनां हि कटदेशात् कपोलयोरेव मदवारि क्षरति ।) हस्तिमदः । तत्पर्य्यायः । उत्कटः २ । इति हारावली । १६१ ॥

**गण्डकूपः**, पुं, (गण्डे गिरेरूद्र्ध्वदेशे कूप इव ।) पर्व्वतस्योच्चस्थानम् । (यथा, --
"उद्देशो गण्डकूपस्तु पर्व्वतस्याभिधीयते ॥"
इति हारावली । ५१ ॥)

**गण्डगात्रं**, क्ली, (गण्डः स्फोटक इव बन्धुरत्वं उच्चनीचत्वं गात्रेऽस्य ।) फलविशेषः । इति शब्दचन्द्रिका ॥ आता इति भाषा ॥

**गण्डदूर्व्वा**, स्त्री, (गण्डा ग्रन्थिला दूर्व्वेति कर्म्मधारयः ।) दूर्व्वाविशेषः । गाँटिया दूर्व्वा इति भाषा ॥ तत्पर्य्यायः । गण्डाली २ अतितीव्रा ३ मत्स्याक्षी ४ वारुणी ५ मीनपर्णी ९ सूचीनेत्रा ६ श्यामग्रन्थिः ७ ग्रन्थिला ८ ग्रन्थिपर्णी ९ सूचीपत्रा १० श्यामकाण्डा ११ जलस्था १२ शकुलाक्षी १३ कलाया १४ चित्रा १५ । अस्या गुणाः । मधुरत्वम् । वातपित्तज्वरभ्रमतृष्णाश्रमद्वन्द्वदोषनाशित्वम् । शिशिरत्वञ्च । इति राजनिर्घण्टः ॥ यथा, भावप्रकाशे ।
"गण्डदूर्व्वा तु गण्डाली मत्स्याक्षी शकुलाक्षकः ।
गण्डदूर्व्वा हिमा लोहद्राविणी ग्राहिणी लघुः ॥
तिक्ता कषाया मधुरा वातकृत् कटुपाकिनी ।
दाहतृष्णावलाशास्रकुष्ठपित्तज्वरापहा ॥"

**गण्डमाला**, स्त्री, (गण्डानां ग्रीवाजातस्फोटविशेषाणां माला समूहोऽस्याम् ।) गलरोगविशेषः । तत्पर्य्यायः । गलगण्डः २ । इति हेमचन्द्रः । ३ । १३१ ॥ तस्यौषधं यथा, --
"अजमोदः ससिन्दूरो हरितालनिशाद्वयम् ।
क्षारद्वयं फेनयुतमार्द्रकं शरलोद्भवम् ॥
इन्द्रवारुण्यपामार्गक्रदलैः कन्दलैः समैः ।
एभिः सर्षपजं तैलमजामूत्रैश्च योजितम् ॥
मृद्वग्निना पचेदेतदर्कक्षीरेण संयुतम् ।
अजमोदादिकं तैलं गण्डमालां व्यपोहति ॥
विदग्धस्तु पचेत् पक्वं पक्वञ्चैव विशोधयेत् ।
रोपणं मृदुभावञ्च तैलेनानेन कारयेत् ॥
अजमोदादिकं तैलं महावीर्य्यञ्च रोगनुत् ॥"

तेन पादावशेषेण तैलं पात्रे विपाचयेत् ॥
आजं वा यदि वा गव्यं क्षीरं दत्त्वा चतुर्गुणम् ।
शतावरीरसञ्चैव तैलतुल्यं प्रदापयेत् ॥
द्रव्याणि यानि पेव्याणि तानि वक्ष्यामि तत् शृणु ।
शतपुष्पा देवदारु शालपर्णी वचागुरु ॥
कुष्ठं मांसी सैन्धवञ्च पलमेकं पुनर्नवा ।
पाने नस्ये तथाभ्यङ्गे तैलमेतत् प्रदापयेत् ॥
हृच्छूलं पार्श्वशूलञ्च गण्डमालाञ्च नाशयेत् ।
अपस्मारं वातरक्तमायुष्मांश्च पुमान् भवेत् ॥
गर्भमश्वतरी विन्द्यात् किं पुनर्मानुषी शिव ! ।
अश्वानां वातभग्नानां कुञ्जराणां नृणां तथा ॥
तैलमेतत् प्रदातव्यं सर्व्ववातविकारिणाम् ॥"
इति गारुडे १९८ अध्यायः ॥ * ॥
अन्यच्च ।
अथ गण्डमालाया लक्षणमाह ।
"कर्कन्धुकोलामलकप्रमाणैः
कक्षांसमत्या गलवंक्षणेषु ।
मेदःकफाभ्यां चिरमन्दपाकैः
स्याद्गण्डमाला बहुभिस्तु गण्डैः ॥"
कर्कन्धुः क्षुद्रवदरी । कोलं बृहद्बदरम् । चिरमन्दपाकैः चिरेण मन्दोऽल्पः पाको येषां तैः ॥ * ॥
अथ गण्डमालाया एवावस्थाविशेषमपचीमाह ।
"ते ग्रन्थयः केचिदवाप्तपाकाः
स्रवन्ति नश्यन्ति भवन्ति चान्ये ।
कालानुबन्धं चिरमादधाति
सैवापचीति यवदन्ति केचित् ॥"

दास्यामि याचितं येन लोकानां भवमोक्षणम् ॥
इत्येवं कृपया देवो निश्चित्य मनसा स्वयम् ।
गण्डकीमवदत् प्रीतः शृणु देवि ! वचो मम ॥
शालग्रामशिलारूपी तव गर्भगतः सदा ।
तिष्ठामि तव पुत्रत्वे भक्तानुग्रहकारणात् ॥
मत्सान्निध्यात् नदीनां त्वमतिश्रेष्ठा भविष्यसि ।
दर्शनात् स्पर्शनात् स्नानात्
पानाच्चैवावगाहनात्
हरिष्यसि महापापं वाङ्मनःकायसम्भवम् ।
यः स्नास्यति विधानेन देवर्षिपितृतर्पकः ॥
तर्पयेत् स्वपितॄंश्चापि तारयित्वा दिवं नयेत् ।
स्वयं मम प्रियो भूत्वा ब्रह्मलोकं गमिष्यति ॥
यदि त्वय्युत्सृजेत् प्राणान् मम कर्म्मपरायणः ।
सोऽपि याति परं स्थानं यत्र गत्वा न शोचति ॥
एवं दत्त्वा वरान देव्यै तत्रैवान्तरधीयत ।
ततः प्रभृति तिष्ठामः क्षेत्रेऽस्मिन्
शशलाञ्छन ! ॥”
इति वराहपुराणे सोमेश्वरादिलिङ्गमहिमा-
ऽविमुक्तक्षेत्रत्रिवेण्यादिमहिमनामाध्यायः ॥

इति गारुडे १७८ अध्यायः ॥
अपि च । तत्रैव १९० अध्याये ।
“द्विजयष्ट्याश्च वै मूलं पिष्ट्वं तण्डुलवारिणा ।
गण्डमालां हरेल्लेपात् कुरुण्डगलगण्डकम् ॥”
अपि च । तत्रैव १९४ अध्याये ।
“अपराजिताया मूलञ्च गोमूत्रेण समन्वितम् ।
पीतञ्चापि हरत्येव गण्डमालां न संशयः ॥”
अपि च ।
“बिल्वाग्निमन्थश्योनाकपाटलापारिभद्रकम् ।
प्रशारण्यश्वगन्धा च बृहती कण्टकारिका ॥
बला चातिबला रास्ना प्रदंष्ट्रा च पुनर्नवा ।
एरण्डशारिवा पर्णी गुडूची कपिकच्छुरा ॥
एषां दशपलिकान् भागान् क्वाथयेत् सलिले-
ऽमले ।

ते ग्रन्थयः गण्डमालाया एवं गण्डाः केचिद-
वाप्तपाकाः सन्तः स्रवन्ति केचित् नश्यन्ति अन्ये
भवन्ति च ।
कालानुबन्धाच्चिरमादधातिया
गण्डमाला चिरं तिष्ठति सैवापची इति
केचिद्वदन्ति ॥ * ॥
अपच्याः साध्यत्वादिकमाह ।
“साध्या स्मृता पीनसपार्श्वशूल-
काशज्वरच्छर्द्दियुता त्वसाध्या ॥” * ॥
अथ ग्रन्थिः । ग्रन्थेर्लक्षणमाह ।
“वातादयो मांसमसृक् च दुष्टा
संदूष्य मेदश्च तथा शिराश्च ।
वृत्तोन्नतं विग्रथितन्तु शोथं
कुर्व्वन्त्यतो ग्रन्थिरिति प्रदिष्टः ॥”
विग्रथितं ग्रन्थिरूपम् । अतो ग्रन्थिः ॥ * ॥
अस्या निदानादिपूर्ब्बलिखितम् । अथ गण्ड-
मालायाश्चिकित्सा ।
“काञ्चनारत्वचः क्वाथः शुण्ठीचूर्णेन संयुतः ।
माक्षिकाढ्यः सकृत्पीतः क्वाथो वरुणमूलजः ॥
गण्डमालां हरत्याशु
चिरकालानुबन्धिनीम् ।
पलमर्द्धपलं वापि पिष्ट्वा
तण्डुलवारिणा ॥
काञ्चनारत्वचं पीत्वा गण्डमालां
व्यपोहति ।
काञ्चनारस्य गृह्णीयात् त्वचं
पञ्चपलीन्मितम् ॥
नागरस्य कणायाश्च मरीचस्य पलं पलम् ।
पथ्याविभीतधात्रीणां पलमर्द्धं पृथक् पृथक् ॥
वरुणस्याक्षमेकञ्च पत्रकैलात्वचं पुनः ।
टङ्कं टङ्कं समादाय सर्व्वाण्येकत्र
चूर्णयेत् ॥

यावच्चूर्णमिदं सर्व्वं तावानेवात्र गुग्गुलुः ॥
सङ्कुट्य सर्व्वमेकत्र पिण्डं कृत्वा विधारयेत् ।
गुटिकाः शाणिकाः कृत्वा प्रभाते भक्षयेन्नरः ॥
गण्डमालां जयत्युग्रामपचीमर्व्वुदानि च ।
ग्रन्थ्यर्व्वुदानि गुल्मांश्च कुष्ठानि च भगन्दरम् ॥
प्रदेयश्चानुपानार्थं क्वाथो मुण्डितिकाभवः ।
क्वाथः खदिरसारस्य क्वाथः कोष्णोऽभयाभवः ॥"
इति काञ्चनारगुग्गुलुः ॥ * ॥
"चक्रमर्द्दकमूलस्य कल्कं दत्त्वा विपाचयेत् ।
केशराजरसे तैलं कटुकं मृदुनाग्निना ॥
पादशेषे विनिःक्षिप्य सिन्दूरमवतारयेत् ।
एततैलं निहन्त्याशु गण्डमालां सुदारुणाम् ॥"
इति चक्रमर्द्दतैलम् ॥ * ॥
"गुञ्जामूलफलैस्तैलं विपक्वं द्विगुणाम्भसा ।
हरेदभ्यञ्जनस्याभ्यां गण्डमालां सुदारुणाम् ॥"
इति गुञ्जतैलम् ॥ * ॥ अथापच्याश्चिकित्सा ।
"चन्दनं साभया लाक्षा वचा कटुकरोहिणी ।
एभिस्तैलं शृतं पीतं समूलामपचीं हरेत् ॥"
इति चन्दनादितैलम् ॥ * ॥
"व्योषं विडङ्गं मधुकं सैन्धवं देवदारु च ।
तैलमेभिः शृतं नस्यात् सकृच्छ्रामपचीं हरेत् ॥"
व्योषादितैलम् ॥ * ॥ अथ ग्रन्थिचिकित्सा ।
"सर्ज्जिकामूलकक्षारशङ्खचूर्णसमन्वितम् ।
एतेन सहितो लेपो हन्ति ग्रन्थिं तथार्व्वुदम् ॥
ग्रन्थिर्न यो नश्यति भेषजेन
निष्काश्य तं शस्त्रचिकित्सकेन ।
जात्यादिपक्वेन घृतेन वैद्यो
व्रणेन चान्येन च संचिकित्सेत् ॥
ग्रन्थिमुत्कृत्य पश्चात्तु व्रणोक्तं क्रममाचरेत् ।
शिराग्रन्थिं विहायान्ये शेषे शस्त्रं प्रयुज्यते ॥"
इति भावप्रकाशः ॥
(यथास्याः सकारणलक्षणचिकित्सितानि ।
"दुष्टाम्बुपानसकदन्ननिषेवणाच्च
सञ्जायते च क्रिमिसम्भवगण्डमाला ।
सा मारुतेन कफपित्तभवे विकारे
संसर्पते क्रिमिजदोषगणश्च गण्डात् ॥
वातेन वातसदृशानि च लक्षणानि
पित्तेनु दाहसरुजव्रणशोषतापाः ।
सा श्लेष्मणा च घनशीतलसम्प्रयोगात्
स्यात् सन्निपातविहिता च समस्तलिङ्गैः ॥
विजया च यवाकारा वर्त्तुला विजया तथा ।
अन्या नणाञ्च विज्ञेया तण्डुली कण्टकानिभा ॥
रोहिणी विजया विंशा मांसस्थानसमाश्रिता ।
गुल्फे वा चास्थिसन्धौ च दृश्यते भेदिनी नरे ॥
कुक्षौ कर्णान्तरेऽपाङ्गे कान्तारी विद्धि पुत्रक ! ।
वज्रपुष्पा शिरसि च शिरान्तार्त्तिप्रदा मता ॥
अतो वक्ष्यामि भैषज्यं शृणु पुत्र ! प्रयत्नतः ।
सान्द्रपूयविस्रावञ्च गण्डीरञ्च व्रणं विदुः ॥
अन्यञ्च सरुजञ्चैव पक्वजम्बूसमप्रभम् ।
लूताव्रणानाञ्चैतानि अपक्वं यदि दृश्यते ॥
त्यक्त्वा सन्धिस्थमर्म्मस्थां लूताञ्चैव हि तद्व्रणम् ।
तदा तप्तेन तैलेन दाहश्चाशु विधीयते ॥
अङ्कोलश्चैवमद्यानि पारिभद्रदलानि च ।
गृहधूमं कृष्णजीरं गोमूत्रेण तु पेषितम् ॥
लेपनञ्च प्रशस्तञ्च लूतानां मारणे परम् ।
पिण्डीतकं विडङ्गानि तथा चेङ्गुदिमूलकम् ॥
बीजपूरकमूलानि पेषितानि विलेपयेत् ।
गण्डमालां तथा घोरां हन्ति शीघ्रं प्रकण्टकाम् ।
स्नुहीक्षीरञ्चार्कक्षीरं लूतारन्ध्रे नियोजयेत् ॥
तेन कीटस्तु तन्मध्ये म्रियते नात्र संशयः ।
आस्यतो गिरिकर्णीञ्च चन्दनञ्च समांशकम् ॥
पिष्ट्वा लेपः प्रयोक्तव्यो लूतां हन्ति सुदारुणाम् ।
करवीरञ्चार्कदुग्धं तथा च कटुतुम्बिकाम् ॥
निशाद्वयं जाङ्गलिकां तिलतैले विपाचयेत् ।
लूतामभ्यञ्जने हन्ति गण्डमालाञ्च दारुणाम् ॥
घृतं जात्यादिकं नाम तथा चात्र प्रयोजयेत् ।
अन्यान्यपि व्रणे यानि प्रोक्तानि च यथाविधि ॥"
इति महर्ष्यात्रेयभाषिते हारीतोत्तरे तृतीय-स्थाने लूतागण्डमालाचिकित्सानाम सप्तत्रिंशो-

**गण्डाङ्गः**, पुं, (गण्ड इव उच्छ्रयमङ्गमस्य ।) खड्गी । इति शब्दचन्द्रिका ॥

**गण्डारिः**, पुं, (गण्डस्य रोगविशेषस्य अरिः । तन्ना-शकत्वात्तथात्वम् ।) कोविदारवृक्षः । (यथा, --
"काञ्चनाल ! काञ्चनकीगण्डारिः शोणपुष्पकः ॥"
इति भावप्रकाशः ॥)

**गण्डाली**, स्त्री, (गण्डं अलतीति । अल् + "कर्म्म-ण्यण् ।" ३ । २ । १ । इत्यण् । गण्डेन ग्रन्थिना आल्यते भूष्यते वा । अल् + घञ् स्त्रियां ङीष् ।) श्वेतदूर्व्वा । इत्यमरः । २ । ४ । १५९ ॥ सर्पाक्षी । इति भावप्रकाशः ॥ गण्डदूर्व्वा । इति राजनिर्घण्टः ॥

**गण्डिः**, पुं, (गडि + इन् ।) वृक्षस्य मूलाच्छाखा-वधिभागः । इति हेमचन्द्रः । ४ । १८६ ॥ गुँडि इति भाषा ॥

**गण्डीरः**, पुं, (गण्ड + ईरन् ।) समष्ठिला । शसा इति ख्यातः । समठ इति ख्यातः । अनूप-देशजं शाकम् । इति केचित् । गुण्ठिया इति ख्यातशाकम् । इति सर्व्वानन्दः । इत्यमरटीकायां भरतः ॥ ("गण्डीरः शाकविशेषो गण्डीनीति लोके गण्डारी मञ्जिष्ठा च ।" इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥ अस्य गुणा यथा, चरके सूत्रस्थाने २७ अध्याये ।
"वायुं वत्सादनी हन्यात्
कफङ्गण्डीरचित्रकौ ॥")

तस्य चेमं प्रतीकारं वक्ष्यामि शृणु पुत्त्रक ! ।
रोहिणी विशदा चैव विजया च विभेदिनी ॥
कान्तारी वज्रपुष्पा च तथा चेन्द्रायुधा परा ।
इति सप्तविधा लूताः शृणु पश्चात् पृथक् पृथक् ॥
रक्तमुण्डा भवेद्रक्ता रक्तस्थाने च रोहिणी ।
विशदा मांसल त्थाने श्वेतवर्णा च दीर्घिका ॥
विजया च शिरो मध्ये पीतवर्णा यवप्रभा ।
भेदिनी मेदसः स्थाने श्वेता च नीलरेखिका ॥
कान्तारी च वस्तिमध्ये श्वेताङ्गा रक्तमुण्डिका ।
बज्रपुष्पा चास्थिमध्ये श्वेताकृष्णा शिरा मता ॥
बज्रायुधा शिरान्ते च धूम्रा कृष्णा शिरा मता ।
रोहिण्यङ्गुलिमात्रेण मूत्रेण विशदा समा ॥

ऽध्यायः ॥
"गलस्य पार्श्वे गलगण्ड एकः
स्याद्गण्डमाला बहुभिस्तु गण्डैः ।
साध्याः स्मृताः पीनसपार्श्वशूल-
कासज्वरच्छर्द्दियुतास्त्वसाध्याः ॥
तेषां सिरा-काय-शिरो-विरेको
धूमः पुराणस्य घृतस्य पानम् ॥"
इति चरके चिकित्सास्थाने सप्तदशेऽध्याये ॥)

**गण्डमालिका**, स्त्री, (गण्डानां ग्रन्थीनां मालाऽस्या
अस्यां वा इति कप् । ततष्टाप् अत इत्वच्च ।)
लज्जालुवृक्षः । इति रत्नमाला ॥

**गण्डशैलः**, पुं, (गण्ड इव शैलः स्खलितस्थूलोपलः ।
शैलशब्दोऽत्र शैलावयवे वर्त्तते । "विशेषणं विशेष्येण बहुलम् ।" २ । १ । ५७ । इति समासः । यद्वा शैलस्य पर्व्वतस्य गण्ड इव ।
राजदन्तादित्वात् पूर्ब्बनिपातः ।)
गिरेश्च्युतः
स्थूलोपलः । भूकम्पादिना पर्व्वतात् गलितो महान् प्रस्तरः । इत्यमरः । २ । ३ । ६ ॥
(यथा,
आर्य्यासप्तशत्याम् । १७९ ।
"किं पुत्त्रि ! गण्डशैलभ्रमेण
नवनीरदेषुनिद्रासि ।
अनुभव चपलाविलसितगर्ज्जितदेशान्तर-
भ्रान्तीः ॥")
ललाटम् । इति हेमचन्द्रः । ४ । १०२ ॥

वीरः । इति जटाधरः ॥

**गण्डीरी**, स्त्री, (गण्डीर + गौरादित्वात् ङीष् ।
यद्वा गण्डं रोगविशेषं ईरयति दूरीकरोति स्वनिर्जासादिभिरिति शेषः ।)
सेहुण्डवृक्षः ।
इति राजनिर्घण्टः ॥ सिज इति भाषा ॥

**गण्डुः**, पुं स्त्री, (गण्ड्यते शिरोभागः स्थाप्यतेऽत्र ।
गडि + अधिकरणे उन् ।) उपधानम् ।
इति
जटाधरः ॥

**गण्डुपदः**, पुं, (गण्ड्वः ग्रन्थयः ताभिरन्वितानि
पदानि यस्य । शाकपार्थिवादित्वात् समासः ।)
किञ्चुलुकः । इत्यमरः । १ । १० । २२ ॥
("गण्डूपदस्य रूपाणि पिच्छिलानि
मृदूनि च ॥"
इति वैद्यकमाधवकररोगविनिश्चये
अर्शोऽधि-
कारे ॥)

**गण्डूपदभवं**, क्ली, (गण्डूपद इव भवति उत्पद्यते इति ।
भू + अच् ।) सीसकम् । इति हेमचन्द्रः । ३ । १०७ ॥

**गण्डूपदी**, स्त्री, (गण्डूपद + स्त्रियां अल्पार्थे ङीप् ।)
किञ्चुलुकपत्नी । तत्पर्य्यायः । शिली २ । इत्य-
मरः । १ । १० । २४ ॥ सिली ३
क्षुद्रकिञ्चुलुक-
जातिः । इत्यमरटीकायां भरतः ॥
छोटजाति
कैँचुया इति भाषा ॥

**गण्डूषः**, पुं, (गडि + "गण्डेश्च ।" उणां । ४ । ७८ ।
इति ऊषन् ।) मुखपूरणम् । (यथा,
भागवते ।
९ । १५ । ३ ।
"भीमस्तु विजयस्याथ काञ्चनो
होत्रकस्ततः ।

|  |  | तस्य जह्नुः सुतो गङ्गां गण्डषीकृत्य योऽपिबत् ॥”) हस्तिशुण्डाग्रभागः । प्रसृतिपरिमितम् । इति मेदिनी । षे ३५ ॥ (यदाह कश्चित् । |

"अगाधजलसञ्चारी विकारी न च रोहितः ।
गण्डूषजलमात्रेण शफरी फर्फरायते ॥")

**गण्डूषा**, पुं, (गण्डूष + टाप् ।) गण्डूषः । इति

लिङ्गादिसंग्रहे अमरः । "मुखपूर्णतोयमिति
भगी ॥ रायमुकुटस्तु गण्डूषाशब्दो मुखपूरणे
स्त्रीलिङ्गः । पुंलिङ्गस्तु
गण्डूषशब्दश्चुलुकपरि-
माण इति । यथा, --
अपां द्वादशगण्डूषैर्मुखशुद्धिर्विधीयते ॥"
इति तट्टीकासारसुन्दरी ॥

**गण्डोलः**, पुं, (गडि + "कपिगडिगण्डिकटीति ।"

उणां १ । ६७ । इति ओलच् ।) गुडः । ग्रासः
।
इति हेमचन्द्रः । ३ । ९० ॥

**गण्यं**, त्रि, (गणं लब्धा इति । "धनगणं लब्धा ।"

४ । ४ । ८४ । इति यत् । यद्वा गण्यते इति ।
कर्म्मणि यत् । गणे भवः । "दिगादिभ्यो यत्
।"
४ । ३ । ५४ । इति यदित्येके ।) गणनीयम् ।
गणि-
तव्यम् । तत्पर्य्यायः । गणेयम् २ संख्येयम्
३ ।
इति हेमचन्द्रः । ३ । ३३६ ॥ (यथा, ऋग्वेदे
। ३ । ७ । ५ ।
"दिवौ रुचः सुरुचो रोचमाना इला येषां
गण्या माहिना गीः ॥")

**गतं**, त्रि, (गच्छति जानाति यातीति वा ।

"गत्यर्थाऽकर्म्मकेति ।" ३ । ४ । ७२ । इति
कर्त्तरि क्तः ।) विज्ञातम् । यातम् । इति
मेदिनी ।
ते १५ ॥ (यथा, किराताज्जुर्णीये । ४ । ५ ।
"नुनोद तस्य स्थलपद्मिनीगतं
वितर्कमाविष्कृतफेनसन्तति ॥"
गम्यते इति । भावे क्ते तु गमने क्ली ॥ यथा,
माघे । १ । २ ।
"गतं तिरश्चीनमनूरुसारथेः
प्रसिद्धमूद्‌र्ध्वज्वलनं हविर्भुजः ॥")

**गतनासिकः**, त्रि, (गता विरहिता नासिका अस्य ।)

"नीतिर्ह्यनीतिः शुद्धात्मा शुद्धो मान्यो
गतागतः ॥")

**गतार्त्तवा**, स्त्री, (गतं निवृत्तं आर्त्तवं रजोऽस्याः
।)

वृद्धा । (गतं दुष्टं आर्त्तवमस्या इति ।)
बन्ध्या ।
इति राजनिर्घण्टः ॥

**गतिः**, स्त्री, (गम् + भावे क्तिन् ।) गमनकर्म्म ।

(यथा, रघुवंशे । १ । ४ ।
"अथवा कृतवाग्द्वारे वंशेऽस्मिन्
पूर्ब्बसूरिभिः ।
मणौ बज्रसमुत्कीर्णे सूत्रस्येवास्ति मे
गतिः ॥")
तत्पर्य्यायः । वर्त्तति १ अयते २ लोटते
३
लोठते ४ स्यन्दते ५ कसति ६ सर्पति
७ स्यमति ८
स्रवति ९ स्रंशते १० अवति ११
श्चोतति १२
ध्वंसति १३ वेनति १४ मार्ष्टि १५
गुरण्यति १६
शवति १७ कालयति १८ पेलयति
१९ कण्टति २०
पिस्यति २१ विस्यति २२ मिस्यति
२३
प्रवते २४ प्लवते २५ च्यवते २६
कवते २७
गवते २८ नवते २९ क्षोदति ३०
नक्षति ३१
सक्षति ३२ म्यक्षति ३३ सचति ३४
ऋच्छति ३५
तुरीयति ३६ चतति ३७ अतति ३८
गाति ३९
इयक्षति ४० सश्चति ४१ सरति ४२
रंहति ४३
यतते ४४ भ्रमति ४५ धजति ४६
रजति ४७
लजति ४८ क्षियति ४९ घमति ५०
मिनाति ५१

अन्धा यथान्धैरुपणीयमाना
स्तेऽपीशतन्त्र्यामुरुदाम्नि बद्धाः ॥"
"स्वस्मिन्नेव आत्मन्येव अर्थः प्रयोजनं येषां ते
स्वार्थास्तत्त्वविदस्तेषां गतिर्ज्ञानस्वरूपं विष्णुं
दुराशया वहिरर्थमानिनो न विदुः जानन्ति ।"
इति तट्टीकायां स्वामी ॥) यात्रा । (गम्यते
प्राप्यतेऽनया इति । गम् + करणे क्तिन् ।)
अभ्युपायः । (यथा, महाभारते । १३ । १४९ ।
६१ ।
"यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः
॥")
नाडीव्रणम् । सरणी । इति मदिनी । १४ ॥
(गम् + भावे क्तिन् । परिणति । यथा, किराता-
र्जुनीये । १० । ४० ।
"मदनमुपदधे स एव तासा
दुरधिगमा हि गतिः प्रयोजनानाम् ॥"
"गतिः प्ररिणतिः ।" इति तट्टीकाकृन्मल्लि-
नाथः ॥ प्रमाणम् । यथा, तत्रैव । १४ । १५ ।
कृपेति चेदस्तु मृगः क्षतः क्षणा-
दनेन पूर्ब्बं न मयेति का गतिः ॥
"मया नेत्यत्र का गतिः किं प्रमाणम् ।" इति
तट्टीकायां मल्लिनाथः ॥ मन्यते इति । गम् +
कर्म्मणि क्तिन् । स्वरूपम् । यथा, तत्रैव । ६ ।
३६ ।
चरतस्तपस्तव वनेषु सहा
न वयं निरूपयितुमस्य गतिम् ।"
"तव वनेषु तपश्चरतोऽस्य गतिं स्वरूप निरू-
पयितुम् ।" इति मल्लिनाथः ॥ विषयः । यथा,
कुमारे । ५ । ६४ ।
"तपः किलेदं तदवाप्तिसाधनं
मनोरथानामगतिर्न विद्यते ।"
"मनोरथानां कामानां अगतिः अविषयः
इति मल्लिनाथः ॥ कर्म्मफलम् । यथा, भगव-
द्गीतायाम् । । ९ । १८ ।
"गतिर्भर्त्ता प्रभुः साक्षी निवासः शरणं सुहृत् ॥"
"गतिः कर्म्मफलम् ।" इति शाङ्करभाष्यम्
ग्रहभेदेन गतिभेदो यथा, --
"अदृश्यरूपा कालस्य मूर्त्तयो भगणाश्रिताः ।
शीघ्रमन्दोच्चपाताख्याग्रहाणां गतिहेतवः ॥"
इति सूर्य्यसिद्धान्तः ॥
तत्र तु नक्षत्रभेदेन बुधग्रहस्य गतिभेदो यथा,

नासिकारहितः । तत्पर्य्यायः । विग्रः २ ।
इत्य-
मरः । २ । ३ । ४६ ॥ विख्रः ३ ।
छिन्ननासिकः ४ ।
इति शब्दरत्नावली ॥ विनासिकः ५ विनसः
६ ।
इति जटाधरः ॥

**गतसन्नकः**, पुं, (गतं सन्नं सादहेतुको मदो यस्मात्

यस्य वा इति कप् ।) निर्म्मदहस्ती । इति
शब्द-
चन्द्रिका ॥

**गतागतं**, क्ली, (गतं ऊर्द्ध्वगमनं आगतं अधोगमनं

यत्र ।) पक्षिगतिविशेषः । इति जटाधरः ॥
(गतञ्च आगतञ्च द्वयोः समाहारः ।)
यातायातम् ।
यथा, रसमञ्जर्य्याम् ।
"गतागतकुतूहल नयनयारपाङ्गावधि ॥"
(तथा च भगवदगीतायाम् । ९ । २१ ।
"ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्म्मममनुप्रपन्ना
गतागतं कामकामा लभन्ते
गतं विनष्टं आगतं पुनः संसारागमन यस्मात्
।
यं प्राप्य जीवो न पुनर्निवर्त्तते इति वाक्यात्
तथात्वम् । पुं, महादेवः । यथा, महाभारते ।
१३ । १७ । ७९ ।

ऋण्वति ५२ ऋणोति ५३ स्वरति ५४
सिसर्त्ति ५५
वेषिष्टिः ५६ योषिष्टिः ५७ ऋणाति
५८ ऋयते ५९
तेजति ६० दध्यति ६१ दध्नोति ६२
युध्यति ६३
घन्वति ६४ अरुषति ६५ आर्य्यन्ति
६६ डीयते ६७
तकति ६८ टीयते ६९ इषति ७०
फणति ७१
हनति ७२ अर्द्धति ७३ मर्द्दति ७४
ससृते ७५
नसते ७६ हर्षति ७७ इयर्त्ति ७८ ईर्त्ते
७९
ईङ्कते ८० ज्रयति ८१ स्वात्रति ८२
गन्ति ८३
आगनीगन्ति ८४ जंगन्ति ८५ जिन्वति
८६
जसति ८७ गमति ८८ ध्रति ८९
ध्नाति ९०
ध्रयति ९१ वहते ९२ रथर्य्यति ९३
जेहते ९४
स्वःकति ९५ क्षुम्पति ९६ प्साति ९७
वाति ९८
याति ९९ दृयति १०० द्राति १०१
डूलति १०२
एजति १०३ जमति १०४ जवति
१०५ वञ्चति १०६
अनिति १०७ पवते १०८ हन्ति
१०९ सेधति ११०
अगन् १११ अजगन् ११२ जिगाति
११३ पतति
११४ इन्वति ११५ द्रमति ११६
द्रवति ११७ वेति
११८ हयन्तात् ११९ एति १२०
जगायात् १२१
अयुथुः १२२ । इति द्वाविंशं शतं
गतिकर्म्म ।
इति वेदनिघण्टौ २ अध्यायः ॥
(गम्यतेऽस्या-
मिति । गम् + अधिकरणे क्तिन् ।) मार्गः
।
(यथा, भगवद्गीतायाम् । ८ । २६ ।

बृहत्संहितायाम् । ७ अध्याये ।
"नोत्पातपरित्यक्तः कदाचिदपि चन्द्रजो व्रज-
त्युदयम् ।
जलदहनपवनभयकृत् धान्यार्घक्षयविवृद्ध्यै वा
॥
विचरच्छ्रवणधनिष्ठा प्राजापत्येन्दुविश्वदैवानि ।
मृद्नन् हिमकरतनयः करोत्यवृष्टिं सरोगभयाम् ॥
रौद्रादीनि मघान्तान्युपाश्रिते चन्द्रजे प्रजापीडा ।
शस्त्रनिपातक्षुद्भयरोगानावृष्टिसन्तापैः ॥
हस्तादीनि विचरन् षड्क्षाण्युपपीडयन् गवा-
मशुभः ।
स्नेहरसार्घविवृद्धिं करोति चोर्व्वीं प्रभूतान्नाम् ॥
आर्य्यम्णं हौतभुजं भद्रपदामुत्तरां यमेशञ्च ।
चन्द्रस्य सुतो निघ्नन प्राणभृतां धातुसङ्क्षयकृत्
॥
आश्विनवारुणमूलान्युपमृद्नन् रेवतीञ्च
चन्द्रसुतः ।

| | | |
|---|---|---|
| | “शुक्लकृष्ण गती ह्येते जगतः शाश्वते मते ।<br>एकया यात्यनावृत्तिमन्यया वर्त्तते पुनः ॥”)<br>दशा । (यथा, तत्रैव । ६ । ३७ ।<br>“अयतिः श्रद्धयोपेतो योगाच्चलितमानसः।<br>अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण ! गच्छति ॥”<br>गम्यते ज्ञायतेऽनया । करणे क्तिन् ।)<br>ज्ञानम् ।<br>(यथा, श्रीमद्भागवते । ७ । ५ । ३१ ।<br>“न ते विदुः स्वार्थगतिं हि विष्णुं दुराशया ये बहिरर्थमानिनः । | |

पण्यभिषग्नौजीविकसलिलजतुरगोपघातकरः॥
पूर्ब्बाद्यृक्षत्रितयाद्वेकमपीन्दोः सुतोऽभिमृद्नी-
यात् ॥
क्षुच्छस्त्रतस्करामयभयप्रदायीचरन् जगतः ॥
प्राकृतविमिश्रसङ्क्षिप्ततीक्ष्णयोगान्तघोर
पापाख्याः ।
सप्तपराशरतन्त्रे नक्षत्रैः कीर्त्तिता गतयः ॥
प्राकृतसंज्ञा वायव्ययाम्यपैतामहानि बहुलाश्च ।
मिश्रा गतिः प्रदिष्टा शशिशिवपितृभुजगव्वानि ॥
सङ्क्षिप्तायां पुष्यः पुनर्वसुः फल्गुनीद्वयं चेति ।
तीक्ष्णायां भद्रपदाद्वयं सशाक्राश्वयुक् पौष्णम् ॥
योगान्तिकेति मूलं द्वे चाषाढे गतिः सुतस्येन्दोः ।
घोराश्रवणस्त्वाष्ट्रं वसुदेवं वारुणं चैव ॥
पापाख्या सावित्रं मैत्रं शक्राग्निदैवतं चेति ।
उदयप्रवासदिवसैः स एव गतिलक्षणं प्राह ॥
चत्वारिंशत्त्रिंशद्द्विसमेता विंशतिर्द्विनवकञ्च ।
नव मासार्द्धं दश चैकसंयुताः प्राकृताद्यानाम् ॥
प्राकृतगत्यामारोग्यवृष्टिसस्यप्रवृद्धयःक्षेमम् ।
सङ्क्षिप्तमिश्रयोर्म्मिश्रमेतदन्यासु विपरीतम् ॥
ऋज्व्यतिवक्रा वक्रा विकला च मतेन देवल-
स्यैताः ।
पञ्च चतुर्द्व्येकाहा ऋज्व्यादीनां षडभ्यस्ताः ॥
ऋज्वी हिता प्रजानामतिवक्रार्थं गतिर्वि-
नाशयति ।
शस्त्रभयदा च वक्रा विकला भयरोगसञ्जननी ॥
पौषाषाढश्रावणवैशाखेष्विन्दजः समाघेषु ।
दृष्टो भयाय जगतः शुभफलकृत् प्रोषितस्तेषु ॥
कार्त्तिकेऽश्वयजि वा यदि मासे
दृश्यते तनुभवः शिशिरांशोः ।
शस्त्रचौरहुतभुग्गदतोय-
क्षुद्भयानि च तदा विदधाति ॥
रुद्धानि सौम्येऽस्तमिते पुराणि
यान्युद्गते तान्युपयान्ति मोक्षम् ।
अन्ये तु पश्चादुदिते वदन्ति
लाभः पुराणां भवतीति तज्ज्ञाः ॥
हेमकान्तिरथवा शुकवर्णः
सम्यकेन मणिना सदृशो वा ।
स्निग्धमूर्त्तिरलघुश्च हिताय
व्यत्यये न शुभकृच्छशिपुत्रः ॥”
अन्येषामपि ग्रहाणां गतिस्तत्रव क्रमशो विशे-
षतो द्रष्टव्या ॥)

**गद**, त् क अभ्रध्वनौ । इति कविकल्पद्रुमः ॥ (अदन्त-
चुरां-परं-अकं-सेट् ।) अभ्रध्वनौ
मेघकर्त्तृक-
शब्दे । गदयति मेघः । इति दुर्गादासः ॥

**गद**, भाषे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-
सेट् ।) गदति । सारङ्गं कतिचिच्च
संजगदिरे
इति गणकृतानित्यत्वात् । इति दुर्गादासः
॥

**गदं**, क्ली, (गद्यते पीड्यतेऽस्मादनेन वा । गद +
अपादाने करणे वा अप् ।) विषम् । इति
राज-
निर्घण्टः ॥

**गदः**, पुं, (गद्यते रुज्यतेऽनेन गदयति वा । गद +
करणे अप् । कर्त्तरि णिच् अच् वा ।) रोगः ।
(यथा, हारीते चिकित्सितस्थाने
द्बितीयेऽध्याये ।
“शत्रुः स्थानबलं प्राप्य विक्रमं कुरुते बली
।
तथा धान्वन्तरं प्राप्य विक्रमं कुरुते गदः ॥
“यावत् स्थानं समाश्रित्य विकारं कुरुते
गदः ।
तावत्तस्य प्रतीकारः स्थानत्यागाद्बलीयसः
॥”)
श्रीकृष्णभ्राता । इति हेमचन्द्रः । ३ । १२७
॥
(यथा, भागवते । १ । १४ । २८ ।
“हृदीकः ससुतोऽक्रूरो जयन्तगदशारणाः
॥”)
भाषणञ्च । (औषधम् । यथा, महाभारते ।
१ ।
४३ । २१ ।
“अथ श्रुश्राव गच्छन् स तक्षको
जगतीपतिम् ।
मन्त्रैर्गदैर्विषहरै रक्ष्यमाणं प्रयत्नतः ॥”
असुरविशेषः । यथा, वायुपुराणे ५ अध्याये
“गदो नामासुरो ह्यासीत् वज्राद्वज्रतरो दृढः
॥”)
अतएवासौ गदेति नाम्ना प्रसिद्धा
अपरा गदा
तु एतदुपलक्षणेनैव सिद्धेति बोध्यम् ।
यथा, वायु-
पुराणे गयामाहात्म्ये ५ अध्याये ।
“गदो नामासुरो ह्यासीत् वज्राद्वज्रतरो
दृढः ।
प्रार्थितो ब्रह्मणे प्रादात् स्वशरीरास्थि
दुस्त्यजम् ।
ब्रह्मोक्तो विश्वकर्म्मापि गदां चक्रेऽद्भुतां
तदा ॥”
योगविशेषः । यथा, लघुजातकप्रकरणे
। १० । ३ ।
“अनन्तरयोः केन्द्रयोर्यदा सर्व्वे ग्रहा
भवन्ति ।
तदा गदानाम योगो भवति ॥”)
पाटलावृक्षः । इति शब्दचन्द्रिका ॥

**गदाख्यं**, क्ली, (गदत्वेन रोगनाशकतया आख्या-
यते विश्रूयते इति गद इत्याख्याऽस्येति
वा ।)
कुष्ठम् । इति रत्नमाला ॥ कुड् इति
भाषा ॥

**गदागदौ**, पुं, (गदं रोगं आगदयतः नाशयतः
इति । आ + गद + णिच् + अच् । यद्वा
गदं रोगं
आगच्छति प्राप्नोतीति गदागं रुग्नं
दायतः
विशोधयतः इति । दैप शोधने + कः ।)
अश्विनी-
कुमारौ । इति त्रिकाण्डशेषः ॥
द्बिवचनान्तोऽयं
शब्दः ॥

**गदाग्रजः**, पुं, (गदस्य वसुदेवपुत्त्रभेदस्य अग्रजः
।)
श्रीकृष्णः । इति त्रिकाण्डशेषः ॥
(यथा, भागवते ।
४ । २३ । १२ ।
“तावन्न योगगतिभिर्यतिरप्रमत्तो

**गतिला**, स्त्री, (गम् + "मिथिलादयश्च ।" उणां ।
१ । ५८ । इति इलच् मलोपे तुक् च ।) नदी-
विशेषः । परम्पराभेदः । इत्युणादिकोषः ॥ (वेत्र-
लता । इत्युज्ज्वलदत्तः ॥)

**गत्वरः**, त्रि, (गच्छतीति । गम् + "इन्नशजि-
सर्त्तिभ्यः क्वरप् ।" ३ । २ । १६३ । इति क्वरप्
।)
गमनशीलः । इति व्याकरणम् ॥ (यथा, शान्ति-
शतके । १ । २० ।
"वीभतसा विषया जुगुप्सिततमः कायो वयो
गत्वरं
सर्व्वैर्बन्धुभिरध्वनीव पथिकैर्य्योगे वियोगावहः ॥")

**गदयित्नुः**, पुं, (गदयति कामयुक्तं करोतीति ।
"स्तनिहृषिपुषिगदिमदिभ्योणेरित्नुच् ।"
उणां ।
३ । २९ । इति इत्नुच् णेरयादेशश्च ।)
कन्दर्पः ।
इति मेदिनी । १८२ ॥

**गदयित्नुः**, त्रि, (गदयति वाचालं वावदूकं काम-
युक्तं वा करोतीति । "स्तनिहृषीति ।" उणां
।
३ । २९० । इति इत्नुच् णेरयादेशश्च ।)
जल्पाकः । कामुकः । इति मेदिनी । १८२
॥

**गदा**, स्त्री, (गदयति पीडयत्यनया विपक्षमितिशेषः ।
गद् + णिच् + करणे अप + टाप् च ।
गदयतीति
णिच् अच् वा ।)
स्वनामख्यातलौहमयास्त्रम्।
इति मेदिनी । दे । ४ ॥ (यथा महाभारते ।
९ ।
५६ । ४५ ।
"तं महात्मा महात्मातं गदामद्यम्य पाण्डवः
।
आमदुद्राव वेगेन धार्त्तराष्ट्र वृकादरः ॥
गदायुद्धस्य गतिप्रहारादिभेदो यथा तत्रैव ।
९ । ५७ । १७--२० ।
"अचरद्भीमसेनस्तु मागान् बहुविधांस्तथा
मण्डलानि विचित्राणि गतप्रत्यागतानि च ॥
अस्त्रयन्त्राणि चित्राणि स्थानानि विविधानि
च ।
परिमोक्षं प्रहराणां वर्ज्जनं परिवारणम् ॥
अभिद्रवणमाक्षेपमवस्थानं सविग्रहम् ।
परिवर्त्तनसंवर्त्तमवप्लुतमुपप्लुतम्॥
उपन्यस्तमपन्यस्तं गदायुद्धविशारदौ ।
एवं तौ विचरन्तौ तु न्यघ्नतां वै परस्परम्
॥"
भगवतो विष्णोर्गदा तु
गदसंज्ञकस्यासुरविशेष-
स्यास्थ्ना देवशिल्पिना विश्वकर्म्मणा
निर्म्मिता ।
यावन्न गदाग्रजकथासु रतिं न कुर्य्यात्
॥")

**गदाग्रणीः**, पुं, (अग्रे नीयते । अग्र + नी + क्विप्
गदानां रोगाणां गदेषु वा अग्रणीः
ज्यायान् ।
अचिरात् संहारकत्वात् तथात्वम् ।)
क्षय-
रोगः । इति राजनिर्घण्टः ॥

**गदाधरः**, पुं, (गदां धरति धारयति वा । धृ +
अच् ।
यद्वा धरति इति धरः गदायाः धरः । धृ
+
अन्तर्णिजन्तात् अजित्येके ।) विष्णुः ।
इति
हलायुधः ॥ (यथा, भागवते । १ । ८ ।
३९ ।
"नेयं शोभिष्यते तत्र यथेदानीं
गदाधर ! ।
त्वत्पदैरङ्किता भाति
स्वलक्षणविलक्षितैः ॥"
अस्य गदाधारणकथा यथा, वायुपुराणे
गया-
माहात्म्ये ५ अध्याये ।
"अथ कालेन महता मनौ
स्वायम्भुवेऽन्तरे ।
हेतिरक्षो ब्रह्मपुत्रस्तपस्तेपे सुदारुणम्
॥
दिव्यवर्षसहस्राणां शतं वायुमभक्षयत् ।
उम्मुखश्चाद्ध्वबाहुश्च पादाङ्गुष्ठभरेण
हि ॥
एकेनातिष्ठदव्यग्रः शीर्णपर्णानिलाशनः
।
ब्रह्मादींस्तपसा तुष्टान् वरं वव्रे वरप्रदान्
॥
देवैर्दैत्यैश्च
शस्त्रास्त्रैर्विविधैर्मनुजादिभिः ।
कृष्णेशानस्य चक्राद्यैरवध्यः स्यां
महाबलः ॥
तथेत्युक्त्वान्तर्हितास्ते
हेतिर्देवानथाऽजयत् ।
इन्द्रत्वमकरोद्धेतिर्भीता ब्रह्महरादयः ॥

| | | |
|---|---|---|
| | | हरिन्त शरणं जग्मुरूचुर्हेतिं जहीति तान् ।<br>ऊचे हरिरवध्योऽयं हेतिर्देवासुरैः सुराः ॥<br>महास्त्रं मे प्रयच्छध्वं हेतिं हन्मि हि येन तम् ।<br>इत्युक्तास्ते ततो देवा गदान्तां हरये ददुः ॥<br>दधार तां गदामादौ देवैरुक्तो गदाधरः ।<br>गदया हेतिमाहत्य देवेभ्यस्त्रिदिवं ददौ ॥” |

बुद्धितत्त्वात्मिकैव भगवतो विष्णोः
कौमुदीनाम
गदेति अध्यात्मशास्त्रेषु परिदृश्यते ।
तथाच
विष्णुसहस्रनामभाष्ये ।
“मनस्तत्त्वात्मकं चक्रं बुद्धितत्त्वात्मिकां
गदाम् ।
धारयन् लोकरक्षार्थमुक्तश्चक्रगदाधरः
॥”
महादेवः । स तु गयातीर्थे वर्त्तते । यथा,
महालिङ्गेश्वरतन्त्रे शिवशतनामस्तोत्रे ।
“भोजपुरे भोजनाथो गयायाञ्च गदाधरः
॥”
गदाधारिणि त्रि ॥)

**गदाभृत्**, पुं, (गदां बिभर्त्ति इति । गदा + भृ +
क्विप् । तुक् च ।) विष्णुः । इति
हेमचन्द्रः ।
२ । १३३ ॥ (यथा, भागवते । १ ।
१३ । १० ।
“भवद्विधा भागवतास्तीर्थीभूता स्वयं
विभो ! ।
तीर्थीकुर्व्वन्ति तीर्थानि स्वान्तःस्थेन
गदाभृता ॥”)

**गदाम्बरः**, पुं, (गदं सशब्दं अम्बरं यस्मात् ।)
मेघः । इति त्रिकाण्डशेषः ॥

**गदारातिः**, पुं, (गदस्य रोगस्य अरातिः शत्रुः
तन्नाशकत्वात् ।) औषधम् । इति
राजनिर्घण्टः ॥

**गदाह्वं**, क्ली, (गद एव आह्वा आख्या यस्य ।)
कुष्ठम् । इति शब्दरत्नावली ॥ कुड्
इति भाषा ॥

**गदी**, [न्] पुं, (गदा विद्यते अस्ति वास्य । गदा +
इनिः ।) विष्णुः । इति हारावली । ९ ॥
(यथा,
भगवद्गीतायाम् । ११ । १७ ।
“किरीटिनं गदिनं चक्रिणञ्च
तेजोराशिं सर्व्वतो दीप्तिमन्तम् ॥”)

आख्यायिका अत्र नायकेन स्वयमुपलब्धोऽर्थ
आख्यायते इत्येके । ज्ञातायां सत्यार्थायां
कथाया-
माख्यायिका । सा च माधविका-वासवदत्ता-
हर्षचरितादिः । कथा तु । प्रबन्धस्य कल्पना
रचना बह्वनृता स्तोकसत्या कथा ।
प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञाः कथां विदुः
।
परम्पराश्रया यस्मात् सा मताख्यायिका
क्वचित् ॥
इति कोलाहलाचार्य्यः ॥
कथा कादम्बर्य्यादिः ।” इत्यमरटीकायां
भरतः ॥
(गद्यन्तु त्रिधा विभक्तं यथा छन्दोमञ्जर्य्याम् ।
“अपादं पदसन्तानं गद्यं तत्तु त्रिधा मतम् ।
वृत्तकोत्कलिकाप्रायवृत्तगन्धिप्रभेदतः ॥”
एतेषामपि लक्षणं यथा तत्रैव ।
“अकठोराक्षरं स्वल्पसमासं वृत्तकं सतम् ।
तत्तु वैदर्भरीतिस्थं गद्यं हृद्यतरं भवेत् ॥
भवेदुत्कलिकाप्रायं समासाढ्यं दृढाक्षरम् ।
वृत्तैकदेशसम्बन्धात् वृत्तगन्धि पुनः स्मृतम्
॥”
मतभेदेनैतत् क्वचित् चतुर्द्धापि दृश्यते । यथा,
साहित्यदर्पणे । ६ । २९५ ।
“वृत्तबन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च ।
भवेदुत् कलिकाप्रायं चूर्णकञ्च चतुर्व्विधम् ॥
आद्यं समासरहितं वृत्तभागयुतं परम् ।
अन्यद्दीर्घसमासाढ्यं तुर्य्यञ्चाल्पसमासकम्
॥”)

**गद्यानकं**, क्ली, (गद्येन औषधादिपरिमाणभेदेन
आनीयते इति । आ + नी + डः । ततः स्वार्थे
कन् ।) अष्टचत्वारिंशत्रक्तिकापरिमाणम् ।
(“तुल्या यवाभ्यां कथिताऽत्र गुञ्जा
वल्लस्त्रिगुञ्जो धरणं गतेऽष्टौ ।
गद्यानकन्तद्द्वयमिन्द्रतुल्यै-
र्वल्लैस्तथैको घटकः प्रदिष्टः ॥”
इति लीलावती ॥)
चतुःषष्टिगुञ्जापरिमाणम् । इति वैद्यकम् ॥
गद्यालकमिति कुत्रचित् पाठः ॥

**गन्ता**, [ऋ] त्रि, (गच्छतीति । गम् + कर्त्तरि तृच् ।)

(गच्छतीति । गम् + कर्त्तरि तृन् + स्त्रियां ङीप्
।
गमनशीला गमनकरिणी वा । यथा, याज्ञ-
वल्क्ये । ३ । १० ।
“गन्त्री वसुमतीनाशमुदधिर्द्दैवतानि च ।
फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति
॥”)

**गन्त्रीरथः**, पुं, (गन्त्रीणां गच्छन्तीनां स्त्रीणां गम-
नाय यो रथः ।) शकटम् । तत्पर्य्यायः । मठः २
।
इति हारावली । १४९ ॥

**गन्ध**, क ङ द्रुहि । इति कविकल्पद्रुमः ॥ (चुरां-
आत्मं-सकं-सेट् ।) क ङ, गन्धयते । द्रुहि
हिंसायाम् । गतिहिंसायाचनेष्विति रमानाथः ।
इति दुर्गादासः ॥

**गन्धं**, क्ली, (गन्धो विद्यतेऽस्य । अर्श आदित्वादच् ।
कृष्णागुरु । इति राजनिर्घण्टः ॥

**गन्धः**, पुं, (गन्ध + पचाद्यच् ।) आमोदः । इति
विश्वः । स तु घ्राणग्राह्यपृथिवीगुणः । यथा, --
“घ्राणग्राह्यो भवेद्गन्धो घ्राणस्यैवोपकारकः ।
सौरभश्चासौरभश्च स द्वेधा परिकीर्त्तितः ॥”
इति भाषापरिच्छेदे । १०३ ॥
(अस्य लक्षणान्तरं यथा, घ्राणमात्रग्राह्यगुणत्व-
व्याप्यजातिमत्वं गन्धत्वं यद्वा पृथिवीवृत्तिमात्र-
वृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्वमिति॥) स
तु
दशविधः । (यथा, महाभारते । १४ । ५० ।
४०-४२ ।
“शब्दः स्पर्शस्तथारूपं रसो गन्धश्च पञ्चमः ।
एते पञ्च गुणा भूमेर्विज्ञेया द्विजसत्तमाः ॥
पार्थिवश्च सदागन्धो गन्धश्च बहुधा स्मृतः ।
तस्य गन्धस्य वक्ष्यामि विस्तरेण बहून् गुणान्
॥
इष्टश्चानिष्टगन्धश्च मधुरोऽम्नः कटुस्तथा ।
निर्हारी संहतः स्निग्धो रूक्षो विशद एव च ।
एवं दशविधो ज्ञेयः पार्थिवो गन्ध इत्युत ॥”
एतेषामपि केषु को गन्ध इत्येतद्विवृतिमाह ।)
इष्टः १ कस्तूरिकादौ । अनिष्टः २ शवादौ ।

गदाविशिष्टे रोगयुक्ते च त्रि ॥

**गद्गदः**, पुं, लुप्तपदव्यञ्जनाभिधायी। अत्यस्पष्टवक्ता।

तस्य सम्प्राप्तिपूर्ब्बकलक्षणं यथा, --
"आवृत्य वायुः सकफो धमनीः
शब्दवाहिनीः।
नरान् करोत्यक्रियकान्
मूकमिन्मिनगद्गदान् ॥"
इति माधवकरः ॥
(अस्पष्टोक्ते त्रि । यथा, अमरुशतके ।
५३ ।
"खेदोऽस्मासु न मेऽपराध्यति भवान्
सर्व्वेऽप-
राधा मयि ।
तत् किं रोदिषि गद्गदेन वचसा
कस्याग्रतो
रुद्यते ॥")

**गद्गदध्वनिः**, पुं, (गद्गदेन वायुपरिचालितश्लेष्मा-

दिना योऽस्पष्टीकृतो ध्वनिः ।
गद्गदरूपो ध्वनिः
वा ।) हर्षशोकादिना अस्पष्टध्वनिः ।
तत्-
पर्य्यायः । मन्मनः २ । इति
त्रिकाण्डशेषः ॥

**गद्यं**, क्ली, (गव्यते च्छन्दसा विना केवलं कथाप्रबन्धै-

रेव विरच्यत इति । गद +
"गदमदचरयमश्चानुप-
मर्गे ।" ३ । १ । १०० । इति पत् ।)
पद्यभिन्नम् ।
कविकृतम् । अपादः पदसन्तानः ।
इत्यमरः ।
३ । ५ । ३१ ॥ कविकृतभिन्ने त्रि ।
यथा गद्यो
व्यवहारः गद्या वाक् गद्यं वचः । इति
तट्टी-
काया भरतः ॥ (यथा, महाभारते । ३ ।
२६ । ३ ।
"यजषामृचा साम्नाञ्च गद्यानाञ्चैव
सर्व्वशः ।

गमनकर्त्ता । इति व्याकरणम् । (यथा,
नलोपा-
ख्याने । २४ । ३३ ।
"न ह्येकाह्ना शतं गन्तात्वामृतेऽन्यः पुमानिह
॥"
गच्छति प्राप्नोतीति शीलार्थे भाविकाले तृन् ।
यथा, भगवद्गीतायाम् । २ । ५२ ।
"यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्ताऽसि निर्व्वेदं श्रोतव्यस्य श्रुतस्य च
॥"
अत्र शीलार्थ तृनन्तत्वात् न कर्म्मणि षष्ठीति
बोध्यम् ॥)

**गन्तुः**, पुं, (गच्छतीति । गम् + "सितनिगमीति ।"

उणां १ । ७० । इति तुन् ।) पथिकः । इत्यु-
णादिकोषः ॥ (यथा, ऋग्वेदे । ३ । ५४ । १८
।
"युयोत नो अनपत्यानि गन्तोः प्रजावान्नः
पशुमाँ अस्तुगातुः ॥")

**गन्त्री**, स्त्री, (गम्यतेऽनया इति । गम् + "सर्व्वधा-

स्तुभ्यः ष्ट्रन् ।" उणां ४ । १५८ । इति करणे
ष्ट्रन् । ततो ङीष् ।) वृषवहनीयशकटम् । गरुर
गाडि इति भाषा । इत्यमरः । २ । ८ । ५२ ॥

मधुरः ३ मधुपुष्पादौ । अम्लः ४ आम्रा-
तकादौ । कटुः ५ मरिचादौ । निर्हारी ६
हिङ्ग्वादौ । संहतः ७ चित्रगन्धः अनेककल्क-
गतः । स्निग्धः ८ सद्यस्तप्तघृतादौ । रूक्षः ९
सार्षपतैलादौ । विशदः १० शाल्यन्नादौ ॥ * ॥
सौरभम् । तत्तु पञ्चविधम् । यथा, --
"गन्धञ्च सम्यक् शृणुतं पुत्त्र वेतालभैरव ! ।
चूर्णीकृतो वा घृष्टो वा दाहाकर्षित एव वा ॥
रसः सम्मर्द्दजो वापि प्राण्यङ्गोद्भव एव वा ।
गन्धः पञ्चविधः प्रोक्तो देवानां प्रीतिदायकः ॥
गन्धचूर्णं गन्धपत्रं चूर्णं सुमनसां तथा ।
प्रशस्तगन्धयुक्तानां पत्रचूर्णानि यानि च ॥
तानि गन्धाह्वयानि स्युः स गन्धः प्रथमः स्मृतः
। १
घृष्टो मलयजो गन्धः शरलश्च नमेरुणा ॥
अगुरुप्रभृतिश्चापि यस्य पङ्कः प्रदीयते ।
घृष्ट्वा स घृष्टो गन्धोऽयं द्वितीयः परिकीर्त्तितः ॥
२ ॥
देवदार्व्वगुरुब्रह्मशालसारान्तचन्दनाः।
प्रियादीनाञ्च यो दग्ध्वा गृह्यते दाहजो रसः ॥
स दाहाकर्षितो गन्धस्तृतीयः परिकीर्त्तितः । ३
।
सगन्धकरवीविल्वगन्धिनीतिलकंतथा ॥

| | | |
|---|---|---|
| आसीदुच्चाय्यमाणानां निस्वनो हृदयङ्गमः ॥”)<br>“अपादः पदसन्तानो गद्यमाख्यायिका कथा ॥<br>इति दण्डी ॥<br>आस्यायिका तु आचष्टे प्रातपादयति अत्यर्थं | | |

प्रभृतीनां रसो योऽसौ निष्पीड्य परिगृह्यते ।
स संमर्द्दोद्गतो गन्धः संमर्द्दज इतीष्यते ॥ ४ ॥
मृगनाभिसमुद्भूतस्तत्कोषोद्भव एव वा ।
गन्धः प्राण्यङ्गजः प्रोक्तो मोददः स्वर्गवासि-
नाम् ॥ ५ ॥
कर्पूरगन्धसाराद्याः क्षोदे घृष्टे च संस्थिताः ।
चन्द्रभागादयश्चापि रसे पङ्के च सङ्गताः ॥
गन्धसारस्तु सर्व्वत्र संसर्गादौ प्रयुज्यते ।
मृगनाभिर्भवेद्धृष्टश्चूर्णोऽप्यन्यस्य योगतः ॥
एवं सर्व्वस्तु सर्व्वत्र गन्धो भवति पञ्चधा ।
घृष्टादिभावादन्योन्यं गन्धः प्रीतिकरः परः ॥
गन्धस्य विस्तरो भेदः प्रोक्तः कालीयकादयः ।
सर्व्वः पञ्चविधेष्वेव प्रविष्टो भवति क्षणात् ॥" * ॥
"गन्धो मलयजो यस्तु दैवे पैत्र्ये च सम्मतः ।
तत्पङ्को वा रसो वापि चूर्णो वा विष्णुतुष्टिदः ॥
सर्व्वेषु गन्धजातेषु प्रशस्तो मलयोद्भवः ।
तस्मात् सर्व्वप्रयत्नेन दद्यान्मलयजं सदा ॥
कृष्णागुरुः सकर्पूरः सहितो मलयोद्भवैः ।
वैष्णवीप्रीतिदो गन्धः कामाख्यायाश्च भैरव ! ॥
कुङ्कुमागुरुकस्तूरीचन्द्रभागैः समीकृतैः ।
त्रिपुराप्रीतिदो गन्धस्तथा चण्ड्याश्च शम्भुना ॥
दैवतोद्देशपूर्ब्बेण गन्धान् सम्पूज्य साधकः ।
देवायेज्याय वितरेत् सर्व्वसाध्येषु पूजकः ॥
गन्धेन लभते कामं गन्धो धर्म्मप्रदः सदा ।
अर्थानां साधको गन्धो गन्धे मोक्षः प्रतिष्ठितः ॥
अयं वां कथितो गन्धः पुत्रौ वेतालभैरवौ ! ॥
इति कालिकापुराणे ६८ अध्यायः ॥
प्रतिवेशी । लेशः । सम्बन्धः । गन्धकः । इति मेदिनी ॥ (यथा, प्रयोगामृते ।
"शोधितो यस्तु गन्धः स्यात्
जरामृत्युरुजापहः ।
अग्निसन्दीपनः श्रेष्ठो वीर्य्यवृद्धिकरोऽस्थिकृत् ॥")
गर्व्वः । इति हेमचन्द्रः ॥ शोभाञ्जनः । इति शब्दरत्नावली ॥ घृष्टचन्दनम् । यथा, "घृष्टो
श्वेतः कुष्ठापहारी स्याद्रक्तो लोहप्रयोगकृत् ।
पीतो रसे प्रयोगार्हो नीलो वर्णान्तरोचितः ॥"
इति राजनिर्घण्टः ॥ * ॥
अथ गन्धकस्योत्पत्तिनामलक्षणगुणाः।
"श्वेतद्वीपे पुरा देव्याः क्रीडन्त्या रजसाप्लुतम् ।
दुकूलं तेन वस्त्रेण स्नातायाः क्षीरनीरधौ ।
प्रसृतं यद्रजस्तस्माद्गन्धकः समजायत ॥
गन्धको गन्धिकश्चापि गन्धपाषाण इत्यपि ।
सौगन्धिकश्च कथितो वलिर्व्वलबसापि च ॥
चतुर्द्धा गन्धकः प्रोक्तो रक्तः पीतः
सितोऽसितः ।
रक्तो हेमक्रियासूक्तः पीतश्चैव रसायने ।
व्रणविलेपने श्वेतः कृष्णः श्रेष्ठः सुदुर्ल्लभः ॥"
श्रेष्ठो हेमक्रियादिषु सर्व्वत्र प्रशस्ततरः ॥ * ॥
"गन्धकः कटुकस्तिक्तो वीर्य्योष्णस्तुवरः सरः ।
पित्तलः कटुकः पाके कण्डू वीसर्पजन्तुजित् ॥
हन्ति कुष्ठक्षयप्लीहकफवातान् रसायनः ।
अशोधितो गन्धक एष कुष्ठं
करोति तापं विषमं शरीरे ।
सौख्यञ्च रूपञ्च बलं तथौजः
शुक्रं निहन्त्येव करोति चास्रम् ॥" * ॥
तस्य शोधनविधिर्यथा, --
"लोहपात्रे विनिःक्षिप्य घृतमग्नौ प्रतापयेत् ।
तप्ते घृते तत् समानं क्षिपेद्गन्धकजं रजः ॥
विद्रुतं गन्धकं दृष्ट्वा तनुवस्त्रे विनिःक्षिपेत् ।
यथा वस्त्राद्विनिःसृत्य दुग्धमध्येऽखिलं क्षिपेत् ॥
एवं स गन्धकः शुद्ध्येत् सर्व्वकर्म्मोचितो
भवेत् ॥"
इति भावप्रकाशः ॥
"शोधितो यस्तु गन्धः स्यात्
जरामृत्युरुजापहः ।
अग्निसन्दीपनः श्रेष्ठो वीर्य्यवृद्धिकरोऽस्थिकृत् ॥"
इति प्रयोगामृतम् ॥

**गन्धकन्दकः**, पुं, (गन्धमूलः गन्धप्रधानो वा कन्दो ऽस्य ततः कप् स्वार्थे कन् वा ।) कशेरु ।

च विश्रुताऽभवत् । परं तस्यामेव
कन्यायां तदा
पराशरौरसात् कानीनपुत्त्रो महर्षिर्व्यासः
सञ्जातः । ततो गच्छति काले महात्मनां
भीष्मेण राज्यं दारपरिग्रहञ्च न करिष्या-
मीति निदारुणं प्रतिश्रुत्य
दाशराजसकाशात्
समानीता भुवनविश्रुता सा
पद्मगन्धाढ्या गन्ध-
काली तत्कामुकाय पित्रे शान्तवे
समर्पिता ।
एतद्विवरणं महाभारते १ । सम्भवे । ९९-१०० ।
अध्याययोर्विशेषतो दर्शनीयम् ॥ अस्या हेतो-
रेव नरपतिरुग्रायुधः समरे भीष्मेणे
निहतः ।
यथा, हरिवंशे । २० । ४७-५० ।
"स चाप्युग्रायुधस्तात !
दुर्ब्बुद्धिरभवत्तदा ।
प्रदीप्तचक्रो बलवान्
नीपान्तकरणोऽभवत् ॥
स दर्पपूर्णो हत्वाजौ नीपानन्यांश्च
पार्थिवान् ।
पितर्य्युपरते मह्यं श्रावयामास किल्विषम् ॥
माममात्यैः परिवृतं शयानं धरणीतले ।
उग्रायुधस्य राजेन्द्र ! दूतोऽभ्येत्य
वचोऽब्रवीत् ॥
अद्यत्वं जननीं भीष्म ! गन्धकालीं
यशस्विनीम् ।
स्त्रीरत्नं मम भार्य्यार्थे प्रयच्छ
कुरुनन्दन ! ॥"
ईदृशं जुगुप्सितवाक्यं
दूतमुखादाकर्ण्यामित-
प्रतापो महात्मा भीष्मः अशौचान्ते तं
दुरा-
त्मानं समराङ्गणे समाहूय निपात्य च
राज्ञे
काम्पिल्याय तत् पैतृकं राज्यं समर्पयत्
। अस्मि-

मलयजो गन्धः ।” इति शुद्धितत्त्वम् ॥

**गन्धकः**, पुं, (उग्रो गन्धोऽस्यास्तीति । “अर्श आदि-
भ्योऽच् ।” ५ । २ । १२७ । इत्यच् ततः
स्वार्थे कन् ।)
शोभाञ्जनवृक्षः । इति शब्दरत्नावली ॥
उपधातु-
विशेषः । तत्पर्य्यायः । गन्धाश्मा २ सौग-
न्धिकः ३ । इत्यमरः । २ । ९ । १०२ ॥
गन्धिकः ४
सुगन्धिकः ५ । इति तट्टीका ॥ गन्धपाषाणः
६
पामाघ्नः ७ । इति रत्नमाला ॥ गन्धमोदनः
८
पूतिगन्धः ९ अतिगन्धः १० वरः ११
सुगन्धः १२
दिव्यगन्धः १३ गन्धः १४ रसगन्धकः १५
कुष्ठारिः १६ क्रूरगन्धः १७ कीटघ्नः १८
शर-
भूमिजः १९ गन्धी २० । इति शब्दरत्नावली
॥
अस्य गुणाः । कटुत्वम् । उष्णत्वम् । तीव्र-
गन्धत्वम् । अतिवह्निकारित्वम् ।
विषकुष्ठकण्डूति-
खजुत्वगदोषनाशित्वश्च । इति राजनिर्घण्टः
॥
कृमिप्लीहनेत्ररोगनाशित्वम् । इति राजवल्लभः
॥
तस्य भेदाः ।
“श्वेतो रक्तश्च पीतश्च नीलश्चति चतुर्व्विधः
।
गन्धको वर्णतो ज्ञेयो भिन्नभिन्नगुणाश्रयः ॥
इति वैद्यकम् ॥

**गन्धकारिका**, स्त्री, (गन्धं सुरभिप्रधानं मण्डनं
करोतीति । गन्ध + कृ + ण्वुल् ततष्टाप् कापि
अत इत्वञ्च ।) सैरिन्ध्री । सा तु परवेश्मस्था
स्ववशा शिल्पकारिका । इति हलायुधः ॥

**गन्धकालिका**, स्त्री, (गन्धं प्रशस्तगन्धं पराशर-
मुनेर्ब्बरप्रभावेन दूरवाहिगात्रसौरभं कलयति
धारयतीति । कल + णिच् + अच् ङीष्च ।
ततः
स्वार्थे कन् टाप् च पूर्ब्बह्रस्वः ।) व्यासमाता ।
इति हेमचन्द्रः ॥

**गन्धकाली**, स्त्री, (गन्धं प्रशस्तदूरवाहिगात्र-
सौरभं कलयतीति । कल् + णिच् अच् ङीष्च
।
यद्वा, गन्धवती काली । मध्यपदलोपि-
समासः ।) व्यासमाता । इति शब्दरत्नावली ॥
(इयं हि दाशराजकन्या पुरा बाल्यसमये
मत्स्य-
गन्धा कालीत्येतन्नाम्ना ख्यातासीत् । ततः
कदाचित् नदीपरपारं जिगमिषुणा मुनि-
प्रवरपराशरेण सङ्गता तस्यैव ऋषेर्वरप्रभा-
वेन निजगात्रे पद्मपुष्पवत् सौरभमवाप्य
ततः प्रभृति पद्मगन्धा गन्धकालीति नाम्ना
न्नेवाध्याये एतत् सर्व्वं वृत्तं सविशेषं
द्रष्टव्यम् ॥)

**गन्धकाष्ठं**, क्ली, (गन्धप्रधानं सुगन्धसमन्बितं
काष्ठमस्य । कर्म्मधारयो वा ।)
अगुरुकाष्ठम् ।
इति त्रिकाण्डशेषः ॥ शम्बरचन्दनम् ।
इति राज-
निर्घण्टः ॥

**गन्धकुटी**, स्त्री, (गन्धस्य सुगन्धस्य कुटी आलय
इव गन्धबाहुल्यात् तथात्वम् ।)
मुरानाम-
गन्धद्रव्यम् । इत्यमरः । २ । ४ । १२३
॥

**गन्धकुसुमा**, स्त्री, (गन्धं सुरभियुक्तं कुसुमं
यस्याः ।) गणिकारीवृक्षः । इति
राजनिर्घण्टः ॥

**गन्धकेलिका**, स्त्री, (गन्धं केलयति गमयति
प्रापयति सन्निकर्षस्थानिति । गन्ध +
केल + णिच्
+ अच् ततः स्वार्थे कन् अत इत्वञ्च ।
गन्धं केल-
तीति ण्वुल् वा ।) कस्तूरी । इति
राजनिर्घण्टः ॥

**गन्धकोकिला**, स्त्री, (गन्धमूलिका गन्धप्रधाना
वा कोकिला ।) गन्धद्रव्यविशेषः ।
अस्या
गुणाः । स्निग्धत्वम् । उष्णत्वम् ।
कफनाशित्वम् ।
तिक्तत्वम् । सुगन्धित्वम् । इति
भावप्रकाशः ।

**गन्धखेडं**, क्ली, (गन्धस्य खेडः खेलोऽत्र ।
डलयो-
रैक्यात्तथात्वम् ।) गन्धवीरणम् ।
गन्धबेणा इति
भाषा । तत्पर्य्यायः । भूतृणम् २ रौहिषम
३
गोमयप्रियम् ४ । इति रत्नमाला ॥

**गन्धखेडकं**, क्ली, (गन्धेन खेडति खेलतीति ।

| | | खेल् + ण्वुल् । गन्धस्य खेडः खेलोऽत्र इति<br>कप् वा ।) गन्धतृणम् । इति<br>शब्दरत्नावली ॥<br><br>**गन्धचेलिका**, स्त्री, (गन्धं चेलति गच्छतीत । चेल<br>+ ण्वुल् + टाप् अत इत्वञ्च ।) कस्तूरी । इति<br>त्रिकाण्डशेषः ॥ (कस्तूरीशब्दऽस्या विवृति-<br>र्वर्णिता ॥) |
|---|---|---|

**गन्धजातं**, क्ली, (गन्धेन सह जातं उत्पन्नम् ।)

तेजपत्रम् । इति शब्दरत्नावली ॥

**गन्धज्ञा**, स्त्री, (गन्धः इष्टानिष्ठगन्धः ज्ञायते

ऽनया इति । ज्ञा + करणे कः ततष्टाप् ।)
नासिका । इति हेमचन्द्रः । ३ । २४४ ॥

**गन्धतूर्य्यं**, क्ली, (गन्धे विनष्टयोद्धॄणां शोणितवसादि-

गन्धयुक्तहिंसाप्रधानस्थाने रणक्षेत्रे इत्यर्थः ।
आहन्यमानं स्थितं वा यत् तूर्य्यम् ।) वाद्य-
विशेषः । तत्पर्य्यायः । रणतूर्य्यम् २ महास्वनः
३ ।
इति शब्दरत्नावली ॥

**गन्धतृणं**, क्ली, (गन्धं सुगन्धान्वितं तृणम् ।)

सुगन्धतृणम् । तत्पर्य्यायः । सुगन्धभूतृणम् २
सुरसः सुरभिः सुगन्धिः ५ मुखवासः ६ ।
अस्य
गुणाः । सुगन्धित्वम् । ईषत्तिक्तत्वम् । रसा-
यनत्वम् । स्निग्धत्वम् । मधुरत्वम् ।
शीतलत्वम् ।
कफपित्तश्रमनाशित्वञ्च । इति राजनिर्घण्टः ॥

**गन्धत्वक्**, क्ली, (गन्धयुक्ता गन्धप्रधाना वा त्वगस्य ।)

एलवालुकम् । इति राजनिर्घण्टः ॥

**गन्धदला**, स्त्री, (गन्धयुक्तं दलं पत्रमस्याः ।)

अजमोदा । इति राजनिर्घण्टः ॥

**गन्धधूमजः**, पुं, (गन्धाढ्यात् धूमात् जायते उत्-

पद्यते इति । जन् + डः ।) स्वादुनामगन्धद्रव्यम्
।
इति राजनिर्घण्टः ॥

**गन्धधूलिः**, स्त्री, (गन्धप्रकाशकः धूलिः अणु-

श्चूण वा अस्याः ।) कस्तूरी । इति हेमचन्द्रः ।

**गन्धनं**, क्ली, (गन्ध गतिहिंसायाचनेषु + भावे

ल्युट् ।) उत्साहः । प्रकाशनम् । सूचनम् ।
हिंसा । इति मेदिनी ॥ ने । ५७ ॥

**गन्धनकुलः**, पुं, (गन्धः दुर्गन्धप्रधानो नकुल इव ।)

तल्लक्षणम् । यथा, --
“बाहुकक्षांसपार्श्वेषु कृष्णस्फोटां सवेदनाम् ।
पित्तप्रकोपसम्भूतां कक्षामिति विनिर्द्दिशेत् ॥
एकान्तु तादृशीं दृष्ट्वा पिडकां
स्फोटसन्निभाम् ।
त्वग्जातां पित्तकोपेन गन्धनाम्नीं प्रचक्षते ॥”
तादृशीं बाह्वादिषु कृष्णां सवेदनाञ्च ॥ * ॥
तच्चिकित्सा यथा, --
“कक्षाञ्च गन्धनाम्नीञ्च चिकित्सति
चिकित्सकः ।
पैत्तिकस्य विसर्पस्य क्रियया पूर्ब्बमुक्तया ॥”
इति भावप्रकाशः ॥

**गन्धनाली**, स्त्री, (गन्धाय गन्धज्ञानार्थं नाली प्रणा-

लींव । गन्धग्रहणार्थं नालीव वा ।) नासिका ।
इति त्रिकाण्डशेषः ॥

**गन्धनिलया**, स्त्री, (गन्धस्य इष्टानिष्टघ्राणस्य

निलया आश्रयीभूता । गन्धस्य निलयोऽत्र
वा
स्त्रियां टाप् ।) नवमल्लिका । इति शब्द-
चन्द्रिका ॥

**गन्धनिशा**, स्त्री, (गन्धात् गन्धहेतोर्गन्धेन वा

निशा हरिद्रेव ।) गन्धपत्रा । इति
राजनिर्घण्टः ॥

**गन्धपत्रः**, पुं, (गन्धवत् पत्रमस्य ।) श्वेततुलसी ।

इति रत्नमाला ॥ मरुवः । वर्व्वरः । नारङ्गः ।
बिल्वः । इति राजनिर्घण्टः ॥

**गन्धपत्रा**, स्त्री, (गन्धाढ्यं पत्रमस्याः ।) शटीभेदः ।

पलाश इति मालवे प्रसिद्धा । तत्पर्य्यायः ।
स्थूला २ तिक्तकन्दिका ३ वनजा ४ शटिका
५
वन्या ६ तवक्षीरी ७ एकपत्रिका ८ गन्धपीता
९
पलाशान्ता १० गन्धाढ्या ११ गन्धपत्रिका
१२
दीर्घपत्रा १३ गन्धनिशा १४ वेदमुख्या १५
सुपाकिनी १६ । अस्या गुणाः । कटुत्वम् ।

“गन्धको गन्धिकश्चापि
गन्धपाषाण इत्यपि ।
सौगन्धिकश्च कथितो
बलिर्बलरसापि च ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ॥
यत्रास्य व्यवहारस्तद्यथा, --
“गन्धपाषाणचूर्णेन यवक्षारेण
लेपितम् ।
सिष्मनाशं व्रजत्याशु कटुतैलयुतेन
तु ॥”
इति वैद्यकचक्रपाणिसंग्रहे
कुष्ठरोगाधिकारे ॥)

**गन्धपिशाचिका**, स्त्री, (गन्धेन पिशाचिका इव
।

पिशाचिका
तामसप्रकृतिरूपदेवभेदः तस्या
इव गन्धत्वात् तथात्वम् । नैवास्या
सर्व्वाङ्गीनत्वोप-
मानम् । किन्तु
गन्धमात्रग्रहणाद्बेकदेशेनैव
सादृश्यमिति बोध्यम् ।) धूपः । इति
हेम-
चन्द्रः । ३ । ३१३ ॥

**गन्धपीता**, स्त्री, (गन्धाढ्यं पीतं पीतवर्णञ्च
पत्र-

मस्याः ।) गन्धपत्रा । इति
राजनिर्घण्टः ॥

**गन्धपुष्पः**, पुं, (गन्धसमन्वितं पुष्पमस्य ।)
वेतस-

वृक्षः । इति शब्दरत्नावली ॥
अङ्कोठवृक्षः ।
इति जटाधरः ॥ बहुवारवृक्षः । इति
राज-
निर्घण्टः ॥

**गन्धपुष्पा**, स्त्री, (गन्धाढ्यं पुष्पमस्याः ।)
नीली ।

छच्छुन्दरी । इति हारावली ॥ ८३ ॥ छुँछा इति भाषा ॥

**गन्धनाकुली**, स्त्री, (गन्धयुक्ता नाकुली रास्ना ।)

रास्ना । इत्यमरः । २ । ४ । ११४ ॥
कन्दविशेषः । तत्-
पर्य्यायः । महासुगन्धा २ सुवहा ३ सर्पाक्षी ४ फणिहन्त्री ५ नकुलाढ्या ६ अहिभुक् ७ विष-मर्द्दनिका ८ अहिमर्द्दनी ९ विषमर्द्दनी १० महाहिगन्धा ११ अहिलता १२ । अस्या गुणाः । तिक्तत्वम् । कटुत्वम् । उष्णत्वम् । त्रि-दोषानेकविषनाशित्वम् । नाकुल्याः किञ्चित् श्रेष्ठ-
इति राजनिर्घण्टः ॥ तत्पर्य्यायगुणाः ।
"नाकुली सुरसा रास्ना सुगन्धा गब्धनाकुली ।
नकुलेष्टा भुजङ्गाक्षी सर्पाङ्गी विषनाशिनी ॥
माकुली तुवरा तिक्ता कटुकोष्णा विनाशयेत् ।
भोगिलूतावृश्चिकाखुविषज्वरक्रिमिव्रणान् ॥"
इति भावप्रकाशः ॥
("रास्ना मुक्तरसा मुक्ता श्रेयसी सुवहा सहा ।
सुगन्धा सर्व्वगन्धान्या नाकुली गन्धनाकुली ॥"
इति वैद्यकरत्नमालायाम् ॥)

**गन्धनामा**, [न्] पुं, (गन्धेति पदपूर्ब्बं नामास्य ।)

रक्ततुलसी । इति रत्नमाला ॥

**गन्धनाम्नी**, स्त्री, (गन्धनामन् + संज्ञायां ङीष् जातौ

नान्तत्वाद् ङीप् वा ।) क्षुद्ररोगविशेषः ।
स्वादुत्वम् । तीक्ष्णत्वम् । उष्णत्वम् ।
कफवात-
कासच्छर्द्दिज्वरनाशित्वम् ।
पित्तकोपकारित्वञ्च ।
इति राजनिर्घण्टः ॥

**गन्धपत्रिका**, स्त्री, (गन्धपत्रा + संज्ञायां कन् अत

इत्वञ्च ।) गन्धपत्रा । अजमोदा । इति राज-निर्घण्टः ॥ (विवरणमस्या गन्धपत्राशब्दे ज्ञात-
व्यम् ॥)

**गन्धपत्री**, स्त्री, (गन्धपत्र + गौरादित्वात् ङीष् ।)

अम्बष्ठा । अश्वगन्धा । अजमोदा । इति राज-
निर्घण्टः ॥

**गन्धपलाशिका**, स्त्री, (गन्धाढ्यं पलाशं पत्रमस्याः

ङीष् । संज्ञायां कन् टाप् पूर्ब्बह्रस्वश्च । कप् टाप् अत इत्वञ्च इत्येके ।) हरिद्रा । इति हारावली । ९३ ॥

**गन्धपलाशी**, स्त्री, (गन्धाढ्यां पलाशं पत्रमस्याः ।

गौरादित्वात् ङीष् ।) शटी । इति भाव-प्रकाशः ॥ (यथाह शब्दार्थचिन्तामणिः ।
"भवेद् गन्धपलाशी तु कषाया ग्राहिणी लघुः ।
तिक्ता तीक्ष्णा च
कटुकाऽनुष्णास्यमलनाशिनी ।
दोषकासव्रणश्वासशूलहिक्काग्रहापहा ॥")

**गन्धपाषाणः**, पुं, (गन्धयुक्तः पाषाणः । पाषाण-

स्येव काठिन्यात् तथात्वम् ।) गन्धकः । इति जटाधरः ॥ (यथास्य पर्य्यायाः ।
केतकी । गणिकारी । इति
राजनिर्घण्टः ॥

**गन्धफणिज्झकः**, पुं, (गन्धसारः गन्धप्रधानो वा

फणिज्झकः ।) रक्ततुलसी । इति
रत्नमाला ॥

**गन्धफलः**, पुं, (गन्धाढ्यं फलमस्य ।) कपित्थः ।

विल्वः । तेजःफलवृक्षः । इति
राजनिर्घण्टः ॥

**गन्धफला**, स्त्री, (गन्धेन युक्तं फलमस्याः ।) प्रियङ्गु-

वृक्षः । इति शब्दरत्नावली ॥
मेथिका ।
विदारी । शल्लकी । इति
राजनिर्घण्टः ॥

**गन्धफली**, स्त्री, (गन्धेन फलते विदीर्य्यते आत्म-

नेति शेषः । गन्ध + फल विदारे + कर्म्मण्यप् ततो
गौरादित्वात् ङीष् ।)
चम्पककलिका । (यथा,
भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ।
"चाम्पेयश्चम्पकः प्रोक्तो
हेमपुष्पश्च स स्मृतः ।
एतस्य कलिका गन्धफलीति
कथिता बुधैः ॥")
प्रियङ्गुवृक्षः । इत्यमरः । २ । ४ । ५६ ॥

**गन्धबधूः**, स्त्री, (गन्धेन बध्नाति सन्निकृष्टजनानाञ्चित्त-

मिति । बन्ध + उः न लोपे वा ङूप् । गन्धस्य
बधरिव वा ।) शटी ।
चीडानामगन्धद्रव्यम् ।
इति राजनिर्घण्टः ॥

**गन्धबन्धुः**, पु, (गन्धेन बध्यते इति गन्धं बध्नाति

इति वा । बन्ध + उन् । यद्वा,

गन्धस्य वन्धुरिव ।

बन्धोरिव चिरसहचरत्वादस्य

तथात्वम् ।)

आम्रवृक्षः । इति शब्दरत्नावली ॥

**गन्धबहलः**, पुं, (गन्धः बहलः बहुलोऽस्य ।)

सितार्जकः । इति राजनिर्घण्टः ॥

**गन्धबहुला**, स्त्री, (गन्धबहुल + टाप् ।) गोरक्षी-

वृक्षः । इति राजनिर्घण्टः ॥

**गन्धबीजा**, स्त्री, (गन्धः बीजेऽस्याः ।) मेथिका ।

इति राजनिर्घण्टः ॥

(मेथिकाशब्देऽस्या गुणा

ज्ञेयाः ॥)

**गन्धभद्रा**, स्त्री, (गन्धः भद्रोऽस्याः गन्धेन भद्रा

वा । एतया युक्तस्य व्यञ्जनयूषस्य

गन्धमात्रग्रहणे-

नैव रुग्नस्य मङ्गलं भवतीति भावः ।) लता-
विशेषः । गन्धभादालिया इति भाषा ॥
इति
शब्दचन्द्रिका ॥ (गुण-पर्य्यायावस्याः
प्रसारणी-
शब्दे ज्ञातव्यौ ॥)

**गन्धभाण्डः**, पुं, (गन्धस्य भाण्डमिव ।) गर्द्दभाण्ड-

वृक्षः । इति शब्दरत्नावली ॥
(पर्य्यायोऽस्य यथा,
"नन्दिवृक्षस्तांम्रपाकी फलपाकी च
पीतकः ।
गन्धभाण्डो गन्धमुण्डो द्बितीयः
क्षिप्रपाक्यसौ ॥"
इति वैद्यकरत्नमाला ॥)

**गन्धमांसी**, स्त्री (गन्धसारा मांसी ।) जटामांसी-

भेदः । तत्पर्य्यायः । केशी २ भूतजटा ३
पिशाची ४ पूतना ५ भूतकेशी ६ लोमशा
७
जटाला ८ लघुमांसी ९ । अस्या गुणाः ।
तिक्त-
त्वम् । शीतत्वम् ।
कफकण्ठामयरक्तपित्तविष-
भूतज्वरनाशित्वम् । वर्ण्यत्वञ्च । इति
राज-
निर्घण्टः ॥ (जटामांसीशब्देऽस्या विवृति-
र्बोद्धव्या ॥)

**गन्धमाता**, स्त्री, (गन्धस्य मातेव । गन्धगुणप्राधान्यात्

तथात्वम् । यथा, मनौ । १ । ७८ ।
"ज्योतिषश्च विकुर्व्वाणादापो रसगुणाः
स्मृताः ।
अद्भ्यो गन्धगुणा भूमिरित्येषा
सृष्टिरादितः ॥")
पृथिवी । इति हेमचन्द्रः । ४ । २ ॥

**गन्धमादनं**, क्ली पुं, (गन्धैः आत्मोपरिसञ्जातौषधी-

विशेषसौरभैः मादयति सन्निहितस्थानिति
।
णिच् + णिनिः ।) लाक्षा ।
पुरानामगन्धद्रव्यम् ।
इति राजनिर्घण्टः ॥

**गन्धमार्ज्जारः**, पुं, (गन्धेन गात्रगन्धेन युक्तः गन्ध-

प्रधानो वा मार्ज्जारः ।) खट्टासः । इति
जटा-
धरः ॥

**गन्धमालती**, स्त्री, (गन्धेन मालती इव ।) गन्ध-

द्रव्यविशेषः । सा तु
गुणैर्गन्धकोकिलातुल्या ।
(यथा, भावप्रकाशे ।
"गन्धकोकिलया तुल्या विज्ञेया
गन्धमालती ॥")

**गन्धमालिनी**, स्त्री, (गन्धानां गन्धस्य वा माला समूहः

अस्त्यस्यामस्या वा इति । अस्त्यर्थे
इनिः ततो
ङीप् ।) मुरानामगन्धद्रव्यम् । इति
जटाधरः ॥

**गन्धमुण्डः**, पुं, (गन्धं अपरगन्धं मुण्डयति मर्द्दयति

स्वगन्धेनेति शेषः । मुडि मर्द्दने + णिच्
+ अण् ।
यद्बा गन्धेन स्वगन्धेन अन्यं दुष्टगन्धं
मार्ष्टि
शोधयतीति । मुडि शोधने + णिच् +
अच् ।)
लताविशेषः । गन्धभादालिया इति
भाषा ।
तत्पर्य्यायः । नन्दीवृक्षः १ ताम्रपाकी ३
फल-
पाकी ४ पीतकः ५ गर्द्दभाण्डः ६
क्षिप्रपाकी ७ ।
इति वैद्यकम् ॥

**गन्धमूलः**, पुं, (गन्धसारं मूलमस्य ।) कुलञ्जन-

वृक्षः । इति राजनिर्घण्टः ॥

रसः ६ । इत्यमरः । २ । ९ । १०४ ॥ रस-
गन्धः ७ गोसः ८ पिण्डगोसः ९ शशः १०
गोस-
शशः ११ । इति तट्टीका ॥ गान्धारम् १२
मसि-
वर्द्धनम् १३ । इति त्रिकाण्डशेषः ॥ गोपरसः
१४
वोलजः १५ गोपकः १६ । इति
शब्दरत्नावली ॥
(यथा, महाभारते । ५ । २७ । ११ ।
"न्यायोपेतं ब्राह्मणेभ्यो यदन्नं
श्रद्धापूतं गन्धरसोपपन्नम् ॥")

**गन्धरसाङ्गकः**, पुं (गन्धरसो अङ्गेयस्य इति कप् ।)

श्रीवेष्टनामसुगन्धिद्रव्यम् । इति राजनिर्घण्टः
॥

**गन्धराजं**, क्ली, (गन्धेन राजते इति । राज् +

अच् ।) चन्दनम् । जवादिनामगन्धद्रव्यम् ।
इति
राजनिर्घण्टः ॥
स्वनामख्यातशुक्लवर्णपुष्पञ्च ॥

**गन्धराजः**, पुं, (गन्धानां गन्धसाराणां राजा ।

"राजाहसखिभ्यष्टच् ।" ५ । ४ । ९१ । इति
टच ।) मुद्गरवृक्षः । कणगुग्गुलुः । इति राज-
निर्घण्टः ॥ स्वनामख्यातपुष्पवृक्षः । तस्य
पत्रं
पनसवृक्षस्य क्षुद्रदलवत् । पुष्पञ्च
सुगन्धिश्वेतवर्णं
उपर्य्यधोद्वादशदलं षट्केशरमध्यं भवति
वसन्त-
वर्षाकाले प्रस्फुटति च । तस्य शाखारोपणे
वृक्षो
जायते । इति लोकप्रसिद्धम् ॥ गन्धश्रेष्ठश्च ॥

**गन्धराजी**, स्त्री, (गन्धराज + स्त्रियां ङीप् ।) नखी-

नामगन्धद्रव्यम् । इति शब्दचन्द्रिका ॥

**गन्धर्व्वः**, पुं, (गन्धं सङ्गीतवाद्यादिजनितप्रमोदं

अर्व्वति प्राप्नोतीति । अर्व्व गतौ + अण् ।

मद् + णिच् + कर्त्तरि ल्युः । माद्यतेऽनेन इति
णिच् ल्युट् वा ।) पर्व्वतविशेषः । इत्यमरः ।
२ । ३ । ३ ॥ अयं इलावृतभद्राश्ववर्षयोः सीमा-
पर्व्वतः । अस्य विस्तारः नीलनिषधपर्व्वत-
पर्य्यन्तः । इति श्रीभागवतम् ॥ (तथा च महा-
भारते । २ । १० । ३० ।
"मलयो दर्द्द रश्चैव महेन्द्रो गन्धमादनः ।
इन्द्रकीलः सुनाभश्च तथा दिव्यौ च पर्व्वतौ ॥"
अस्य गिरेरधिष्टातृदेवोऽपि एतन्नाम्ना विश्रुतः ।
यथा, तत्रैवाध्याये । २८ श्लोके ।
"द्रुमः किम्पुरषेशश्च उपास्ते धनदेश्वरम् ।
राक्षसाधिपतिश्चैव महेन्द्रो गन्धमादनः ॥"
अयमेव पर्व्वतो भगवत्याः पीठस्थानविशेषः ।
यथा, देवीभागवते । ७ । ३० । ५६ ।
"प्रयागे ललिता प्रोंक्ता कामुकी गन्धमादने ॥")

**गन्धमादनः**, पुं, (गन्धेन पुष्पसौरभेण मादयत्या-

त्मानमिति । गन्ध + मद् + णिच् + ल्युः । यद्वा
गन्धेन माद्यति इति । मद् + स्वार्थे णिच् + ल्युः ।)
भ्रमरः । वानरविशेषः । (यथा, रामायणे ४ ।
२५ । ३३ ।
"गयो गवाक्षो गवयः शरभो गन्धमादनः ।
मैन्दश्च द्विविदश्चैव हनूमान् जाम्बवांस्तथा ॥")
गन्धकः । इति मेदिनी ॥ ने । २३४ ॥

**गन्धमादनी**, स्त्री, (गन्धेन माद्यतेऽनया । मद् +

णिच् + करणे ल्युट् ततो ङीप् ।) मदिरा । इति

**गन्धमूलकः**, पुं, (गन्धमूल + संज्ञायां कन् ।) शटी ।

इति शब्दरत्नावली ॥

**गन्धमूला**, स्त्री, (गन्धसारं गन्धप्रधानं वा मूल-

मस्याः ।) शल्लकी । शटी । इति राजनिर्घण्टः ॥

**गन्धमूलिका**, स्त्री, (गन्धमूली + संज्ञायां कन् ।

पूर्ब्बह्रखः । यद्वा गन्धप्रधानं मूलमस्य इति कप्
ततष्टाप् कापि अत इत्वम् ।) माकन्दी । शटी ।
इति राजनिर्घण्टः ॥

**गन्धमूली**, स्त्री, (गन्धमूल + स्त्रियां ङीष् ।) शटी ।

इत्यमरः । २ । ४ । १४५ ॥

**गन्धमूषिकः**, पुं स्त्री, (गन्धप्रधानो मूषिकः ।)

छुछुन्दरी । इति त्रिकाण्डशेषः ॥

**गन्धमूषी**, स्त्री, (गन्धा दुर्गन्धप्रधाना मूषी ।)

छुछुन्दरी । इति हेमचन्द्रः । ४ । ३६८ ॥

**गन्धमृगः**, पुं, (गन्धाढ्यः गन्धेन युक्तो वा मृगः ।)

खट्टासः । इति शब्दमाला ॥
(खट्टाशशब्देऽस्य गुणादयो व्याख्याताः ॥)

**गन्धमैथुनः**, पुं, (गन्धेन वासिताया ऋतुमत्या

गोर्योनिघ्राणेन मैथुनोद्योगः स्पृ हा वा यस्य ।)
वृषः । इति जटाधरः ॥

**गन्धमोदनः**, पुं, (गन्धेन आत्मोद्भवगन्धेन मोद-

यतीति । मुद् + णिच् + ल्युः ।) गन्धकः । इति
राजनिर्घण्टः ॥

**गन्धमोहिनी**, स्त्री, (गन्धेन स्वावयवस्थगन्धेनेत्यर्थः

मोहयति सन्निकर्षस्थानिति । मुह् + णिच् +
शकन्ध्वादित्वात् अलोपे साधुः ।)
स्वर्गगायकः ।
स तु देवयोनिः । तत्पर्य्यायः । गातुः २ दिव्य-
गायनः ३ । तद्भेदा यथा, --
"हाहा हूहूश्चित्ररथो हंसो विश्वावसुस्तथा ।
गोमायुस्तुम्वुरुर्नन्दिरेवमाद्याश्च ते स्मृताः ॥"
इति जटाधरः ॥ * ॥
तस्य एकादश गणा यथा, --
"अभ्राजोऽङ्गारिवम्भारी सूर्य्यवर्च्चास्तथा कृधुः ।
हस्तः सुहस्तः स्वाञ्चेव मूर्द्धन्वांश्च महामनाः ।
विश्वावसुः कृशानुश्च गन्धर्व्वैकादशा गणाः ॥"
इति वह्निपुराणे गणभेदनामाध्यायः ॥
(असौ देवमर्त्यभेदेन गानधर्म्मिगन्धर्व्वोऽपि
द्विविधः । यथाह शब्दार्थचिन्तामणिः ।
"अस्मिन् कल्पे मनुष्यः सन् पुण्यपाकविशेषतः ।
गन्धर्व्वत्वं समापन्नो मर्त्यगन्धर्व्व उच्यते ॥
पूर्ब्बकल्पकृतात् पुण्यात् कल्पादावेव चेद् भवेत् ।
गन्धर्व्वत्वं तादृशोऽत्र देवगन्धर्व्व उच्यते ॥"
तत्र दिव्यगन्धर्व्वो यथा, ऋग्वेदे । १० । १३९ । ५ ।
"विश्वावसुरभि तन्नो गृणातु
दिव्यो गन्धर्व्वो रजसो विमानः ॥"
तथाच महाभारते । ३ । १६१ । २६ ।
"स तमास्थाय भगवान् राजराजो महारथम् ।
प्रययौ देवगन्धर्व्वैः स्तूयमानो महाद्युतिः ॥"
मर्त्यगन्धर्व्वः । यथा, रामायणे । १ । ४ । ११ ।
"भ्रातरौ स्वरसम्पन्नौ गन्धर्व्वाविव रूपिणौ ॥")
गुह्यकलोकोपरि विद्याधरलोकस्याधो गन्धर्व्व-
लोकः । यथा, --

त्रिकाण्डशेषः ॥ बन्दाकः ।

चीडानामगन्धद्रव्यम् ।

इति राजनिर्घण्टः ॥

**गन्धमादनी**, स्त्री, (गन्धेन मादयतीति । मद् +

णिनिः ङीप् च ।) चम्पककली । इति

राज-

निर्धण्टः ॥

**गन्धरसः**, पुं, (गन्धाढ्यः गन्धान्वितो वा रसोऽस्य ।)

उपधातुविशेषः । फुलसत्व इति ख्यातः

। तत्-

पर्य्यायः । वोलः २ प्राणः ३ पिण्डः ४

गोपः ५

"ततो विलोकयामास लोकं
लोचनशर्म्मदम् ।
शिवशर्म्मा ततः प्राह तुष्टस्तौ
विष्णुपार्षदौ ॥
केऽमी जनास्त्वसौ लोकः किन्नाम
वदताङ्गणौ ॥
गणावूचतुः ।
गान्धर्व्वस्त्वेष लोकोऽमी
गन्धर्व्वाश्च शुभव्रताः ।
देवानां गायना ह्येते चारणाः
स्तुतिपाठकाः ॥
गीतज्ञा अतिगीतेन तोषयन्ति
नराधिपान् ।
स्तुवन्ति च धनाढ्यांश्च
धनलोभेन मोहिताः ॥
राज्ञां प्रसादलब्धानि सुवासांसि
धनानि च ।
द्रव्याण्यपि सुगन्धीनि
कर्पूरादीन्यनेकशः ॥
ब्राह्मणेभ्यः प्रयच्छन्ति गीतं
गायन्त्य हर्निशम् ।
स्तुतावेव मनस्तेषां
नाट्यशास्त्रकृतश्रमाः ॥
तेन पुण्ये न गान्धर्व्वो लोकस्त्वेषां
विधीयते ।
ब्राह्मणास्तोषिता यद्वै
गीतविद्यार्जितैर्धनैः ॥
गीतविद्याप्रभावेण देवर्षिर्नारदो
महान् ।
मान्यो वैष्णवलोके वै
श्रीशम्भोश्चातिवल्लभः ॥
तुम्वुरुर्नारदश्चोभौ देवानामपि
दुर्ल्लभौ ।
नादरूपी शिवः साक्षात्
नादतत्त्वविदौ हि तौ ॥
यदि गीतं क्वचिद्गीतं
श्रीमद्धरिहरात्मकम् ।
मोक्षन्तु तत्फलं प्राहुः
सान्निध्यमथवा तयोः ॥
नृत्यन् वा प्रहसति चारुचाल्पशब्दं
गन्धर्व्वग्रहपरिपीडितो मनुष्यः ॥"
अस्योदाहरणं श्रुतावपि यथा, बृहदारण्यके
७ म ब्राह्मणे जनकगोदानप्रकरणे ।
"मद्रेषु चरकाः पर्य्यव्रजाम ते पतञ्चलस्य
काप्यस्य
गृहानैम तस्यासीद्दुहिता गन्धर्व्वगृहीता ॥"
"मद्रेषु मद्रानाम जनपदास्तेषु चरकाः
अध्यय-
नार्थे व्रतचरणात् चरका अध्यर्य्यवो वा पर्य्य-
व्रजाम पर्य्यटितवन्तः । ते वयं पर्य्यटन्तः
पत-
ञ्चलस्य नामतः काप्यस्य कपिगोत्रस्य
गृहानैम
गतवन्तः । तस्यासीद्दुहिता गन्धर्व्वगृहीता ।
गन्धर्व्वेण अमानुषेण सत्वेन केनचिदाविष्टा
॥" * ॥
गाः रश्मीन् वृषणोपयोगीनि वारीणि वा धार-
यति इति । गो + धृ + वः गोर्गमादेशश्च
भाष्यं-
कृद्भिर्भगवन्माधवाचार्य्यपादैरित्येवं
व्युत्पत्तिकृते
सोमः । रश्मिमात्रधारकः ।
उदकधारकसूर्य्यां-
शादित्यविशेषः सूर्य्यश्च एते सर्व्वे एव
बोधिता
इत्यर्थः । एतेषां क्रमात्वयेनोदाहरणम् । यथा,
ऋग्वेदे । १ । १६३ । २ ।
"गन्धर्व्वो अस्य रशना मगृभ्नात् सूरादश्वं
वसवो नितरष्ट ॥" "गन्धर्व्वः सोमः ।" इति
भाष्यम् । तत्रैव । ९ । ५८६ । १२ ।
"ऊद्ध्र्वो
गन्धर्व्वो अधिनाके अस्थात् विश्वारूपा प्रति-
चक्षाणो अस्य ॥" "गन्धर्व्वो रश्मीनां धारकः
।"
इति भाष्यम् । तत्रैव वेदे । ९ । ८३ । ४ ।
"गन्धर्व्व
इत्था पदमस्य रक्षति पाति देवानां जनि-

"गन्धर्व्वतैलसिद्धां हरीतकीं गोऽम्बुना पिबेत् ।
श्लीपदविबन्धमुक्तो भवत्यसौ सप्तरात्रेण ॥
गन्धर्व्वतैलं एरण्डतैलम् । गोऽम्वुना गोमूत्रेण ॥"
इति भावप्रकाशः ॥

**गन्धर्व्ववेदः**, पुं, (वेत्त्यस्मादनेन वा । विद् +
अपादाने करणे वा वञ् वेदः । गन्धर्व्वाणां
सङ्गीतविद्योपजीविनांयो वेदः सामवेदस्योप-
वेदविशेषः । यद्वा गन्धर्व्वः गन्धर्व्वसम्बद्धिनी
गन्धर्व्वकलेत्यर्थः सङ्गीतरूपा विद्या
विद्यतेऽनेना-
स्माद् वा । विद् ज्ञाने + करणे अपादने वा घञ्
।)
संगीतविद्या । यथा, "ऋग्वेदस्यायुर्व्वेदोपवेदो
यजुर्व्वेदस्य धनुर्व्वेदोपवेदः । सामवेदस्य
गन्धर्व्व-
वेदोपवेदोऽथर्व्ववेदस्य शस्त्रशास्त्राणीति ।" इति
शौनकोक्तचरणव्यूहः ॥

**गन्धर्व्वहस्तः**, पुं, (गन्धर्व्वस्य मृगविशेषस्य हस्तः
अग्रपाद इव शाखादलञ्चास्य ।) एरण्डवृक्षः ।
इति हारावली । १०८ ॥ एतस्य पत्राल्लवणोत्-
पत्तिमाश्रित्य कप् प्रत्ययेन सह यथाह सुश्रुतः ।
"गन्धर्व्वहस्तकमुष्ककनक्तमालाटरूषकपूतिकआ
रग्वधचित्रपदीनां पत्राण्यार्द्राणि लवणेन सहो-
दूखलेऽनुवद्य स्नेहघटे प्रक्षिप्यावलिप्य
गोशकृद्भि-
र्दाहयेत् एतत् पत्रलवणमुपदिशन्ति वात-
रोगेषु ॥")

**गन्धर्व्वहस्तकः**, पुं, (गन्धर्व्वहस्त + स्वार्थे कन् ।)
एरण्डवृक्षः । इत्यमरः । २ । ४ । ५० ॥
(यथास्य
पर्य्यायाः । वैद्यकरत्नमालायाम् ।
"आमण्डो वर्द्धमानः स्यादेरण्डो रुवुको वुकः ।
गन्धर्व्वहस्तकश्चित्रो वातारिस्तरुणो रुवुः ॥")

**गन्धलोलुपा**, स्त्री, (गन्धे गन्धात्मकद्रव्ये लोलुपा
लोभनप्रकृतिः ।) मक्षिका । इति शब्दरत्ना-
वली ॥

**गन्ध(ब)वणिक्**, [ज्] पुं, (गन्धस्य अगरुचन्दनादि-

गीतज्ञो यदि गीतेन नाप्नोति परमं पदम् ।
रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते ॥
अस्मिँल्लोके सदा कालं स्मृतिरेषा प्रगीयते ।
तद्गीतमालया पूज्यौ देवौ हरिहरौ सदा ॥
इति शृण्वन् क्षणात् प्राप पुनरन्यं मनोहरम् ।
शिवशर्म्माथ पप्रच्छ किंसंज्ञं नगरन्त्विदम् ॥"
इति काशीखण्डम् ॥ * ॥
घोटकः । (यथा, महाभारते । ३ । १६१ । २३ ।
"रथं संयोजयामासुर्गन्धर्व्वैर्हेममालिभिः ॥")
पशुजातिविशेषः । स तु कस्तूरीमृगः । अन्तरा-भवसत्वः । इत्यमरः । ३ । ३ । १३२ ॥ "अन्तरा-भवसत्वस्तु जन्ममरणयोर्मध्यभवः प्राणी यो मृतो नैव कायान्तरं प्राप्तः नापि जन्म स मरण-जन्मनोरन्तरा भवत्वादन्तराभवसत्वःस च यातनाशरीरः इत्येके इति मुकुटः । गुप्त-प्राणीति केचित् गन्धर्व्वाः पतयो मम इति विराटे इति रमानाथः ।" इत्यमरटीकायां भरतः ॥ (यथा, महाभारते । ४ । ८ । ३४ ।
"न चाप्यहं चालयितुं शक्या केनचिदङ्गने ! ।
दुःखशीला हि गन्धर्व्वास्ते च मे बलवत् प्रियाः ।
मान्यद्भुतः ।" "गन्धर्व्वः उदकानां स्तुतीनां वा धारक आदित्यः ।" इति भाष्यम् । तत्रैव । ८ । १ । ११ । "वहत् कुत्समार्ज्जुनेयं शतक्रतुः त्स-रद्गन्धर्व्वमस्तृतम् ।" "गन्धर्व्वः गवां रश्मीनां धर्त्तारं सूर्य्यम् । इति भाष्यम् ॥" अहः दिवस-समूह इत्यर्थः । यथा, भागवते । ४ । २९ । २१ ।
"तस्याहानीह गन्धर्व्वा गन्धर्व्यो रात्रयः स्मृताः ।"
राज्ञां स्तुतिपाठकः । यथा, भागवते । १ । ११ । २० ।
"नटनर्त्तकगन्धर्व्वाः सूतमागधवन्दिनः ।
गायन्ति चोत्तमश्लोकचरितान्यद्भुतानि च ॥"
अनूढानां बालास्त्रीणां भर्त्तृभोगात् प्रागेव प्रथमव्यञ्जद्यौवनोपभोक्तृरूपशरीराधिष्ठातृव्वे-विशेषः । यथा, ऋग्वेदे । १० । ८५ । ४० ।
"सोमः प्रथमो विविदे गन्धर्व्वो विविद उत्तरः ।
तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥"
तथाच पञ्चतन्त्रे । ३ । २१०-२१३ ।
"स्त्रियः पूर्ब्बं सुरैर्भुक्ताः सोमगन्धर्व्ववह्निभिः ।
भुञ्जते मानुषाः पश्चात् तस्माद्दोषो न विद्यते ॥
सोमस्तासां ददौ शौचं गन्धर्व्वाः शिक्षितं गिरम् ।
पावकः सर्व्वमेध्यत्वं तस्मानिष्कल्मषाः स्त्रियः ॥
असम्प्राप्तरजा गौरी प्राप्ते रजसि रोहिणी ।
अव्यञ्जना भवेत् कन्या कुचहीना च नग्निका ॥
व्यञ्जनैस्तु समुत्पन्नैः सोमो भुङ्क्ते हि कन्यकाम् ।
पयोधराभ्यां गन्धर्व्वा रजस्यग्निः प्रतिष्ठितः ॥")

**गन्धर्व्वतैलं**, क्ली, (गन्धर्व्वनामकं तैलम् । शाकपार्थिव-वत् मध्यपदलोपिकर्म्मधारयः ।) एरण्डतैलम् ।
गन्धद्रव्यजातस्य वणिक् आजीवः । यद्वा गन्ध गन्धद्रव्यजातं पणायते व्यवहरति गन्धद्रव्यस्य क्रयविक्रयादिना आजीवति इत्यर्थः । पण् + इजि कृते पस्य (ब)वत्वे च पृषोदरात् साधुः ।) गान्धिकः । स च वर्णसङ्करजातिविशेषः । गन्ध-वेणिया इति भाषा । स तु अम्बष्ठात् राज-पुत्र्यां जातः । तस्य कर्म्म लिखनं गन्धदानञ्च । इति पराशरभाष्यम् ॥

**गन्धवती**, स्त्री, (गन्धो विद्यतेऽस्याः । गन्ध + मतुप् । मस्य वत्वे स्त्रियां ङीप् ।) पृथिवी । ("गन्धवती पृथ्वीरूपा ।" इति काशीखण्डे । २९ । ४९ श्लोकस्य टीकायाम् ॥) वायुपुरी । (यथा, काशीखण्डे । १३ । १ ।
"इमां गन्धवतीं पुण्यां पुरीं वायोर्व्विलोकय ।
वारुण्या उत्तरे भागे महाभाग्यनिधे द्विज ! ॥")
व्यासमाता । (इयं हि पूर्ब्बं मत्स्यगन्धा आसीत् पश्चात् प्रसन्नात् पराशरात् लब्धवरा सदगन्ध् विशिष्टा गन्धवतीति प्रसिद्धा जाता । यथा, महाभारते । १ । ६३ । ७९--८० ।
"एवमुक्ता वरं वव्रे गात्रसौगन्धमुत्तमम् ।

| | | |
|---|---|---|
| प्रच्छन्नाश्चापि रक्षन्ति ते मां नित्यं शुचिस्मिते ! ॥”) पुंस्कोकिलः । गायनमात्रम् । इति मेदिनी । वे । ११ ॥ (शिवः । यथा, महाभारते । १३ । १७ । ९७ । “गन्धर्व्वो ह्यदितिस्तार्क्ष्यः सुविज्ञेयः सुशारदः ॥” ग्रहविशेषः । यथा, सुश्रुते । “देवास्तथा शत्रुगणाश्च तेषां गन्धर्व्वयक्षाः पितरो भुजङ्गाः । रक्षांसि या चापि पिशाचजाति-रेषोऽष्टधा देवगणो ग्रहाख्यः ॥” एतैर्ग्रहैर्ग्रस्तस्य मनुष्यस्य लक्षणं यथा तत्रैव । “हृष्टात्मा पुलिनवनान्तरोपसेवी स्वाचारः प्रियपरिगीतगन्धमाल्यः । | | |

स चास्यै भगवान् प्रादान्मनसः
काङ्क्षितं प्रभुः ।
ततो लब्धवरा प्रीता
स्त्रीभावगुणभूषिता ॥
जगाम सह संसर्गमृषिणाद्भुतकर्म्मणा
।
तेन गन्धवतीत्येवं नामास्याः प्रथितं
भुवि ॥”)
सुरा । इति मेदिनी । ते । १९४ ॥
वनमल्लिका ।
इति रत्नमाला ॥
मुरानामगन्धद्रव्यम् । इति
जटाधरः ॥ (गङ्गा । यथा,
काशीखण्डे । २९ । ४९ ।
“गङ्गा गन्धवती गौरी
गन्धर्व्वनगरप्रिया ॥”)

**गन्धवल्कलं**, क्ली, (गन्धाढ्यं वल्कलं अस्य ।)

त्वचम् । इति राजनिर्घण्टः ॥
दारचिनी इति
भाषा ॥

**गन्धवल्लरी**, स्त्री, (गन्घाढ्या वल्लरी लताविशेषः ।)

सहदेवी । इति राजनिर्घण्टः ॥

**गन्धवल्ली**, स्त्री, (गन्धान्विता वल्ली लता ।) पीत-

पुष्पदण्डोत्पलः । डानिपोला इति
भाषा । तत्-
पर्य्यायः । गोवन्दनी २ सहदेवी ३
सहा ४ ।
इति रत्नमाला ॥

**गन्धवहः**, पुं, (गन्धं वहतीति । वह् + अच् । गन्धस्य

वहो वा ।) वायुः । इत्यमरः । १ ।
१ । ६५ ॥
(यथा, महाभारते । २ । १० । ७ ।
“मन्दाराणामुदाराणां वनानि
परिलोडयन् ।

श्रमस्नायुविदाहशान्तिकारित्वम् । स्तन्यगर्भ-
स्थिरताल्पवायुपुष्ट्यल्पकफबलप्रदत्वञ्च । इति
राजनिर्घण्टः ॥

**गन्धशुण्डिनी**, स्त्री, (गन्धाढ्याः शुण्डः मुखमस्त्यस्याः ।

इति इनिः ।) छुच्छुन्दरी । इति राजनिर्घण्टः ॥
क्वचित् पुस्तके गन्धा शुण्डिनी इति नामद्वयम्
॥

**गन्धशेखरः**, पुं, (गन्धः शेखरे शिरोदेशेऽस्य ।)

कस्तूरी । इति हारावली । १०३ ॥

**गन्धसारः**, पुं, (गन्धाढ्यः सारः स्थिरांशो यस्य ।)

चन्दनवृक्षः । इत्यमरः । २ । ६ । १३१ ॥
(अस्य पर्य्यायाः यथा, --
“श्रीखण्डं चन्दनं न स्त्री भद्रः श्रीस्तलपर्णिकः ।
गन्धसारो मलयजस्तथा चन्द्रद्युतिश्च सः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
मुद्गरवृक्षः । इति राजनिर्घण्टः ॥

**गन्धसारणः**, पुं, (गन्धं सारयतीति । सृ + णिच् +

ल्युः ।) बृहन्नखी । इति रत्नमाला ॥

**गन्धसोमं**, क्ली, (गन्धाय गन्धार्थं प्रभोदायेत्यर्थः

सोमश्चन्द्रो यस्य ।) कुमुदम् । इति
त्रिकाण्डशेषः ॥

**गन्धहारिका**, स्त्री, (गन्धं हरतीति । हृ + ण्वुल्

ततष्टाप् कापि अत इत्वञ्च ।) परगृहं गत्वा
कर्म्मकारिणी शिल्पिनी । इति शब्दमाला ॥
गन्धहरणकर्त्री च ॥

**गन्धा**, स्त्री, (गन्धयति गन्धं वितरतीति । गन्ध + णिच्

+ अच् + टाप् च ।) चम्पककलिका । इति
शब्द-
रत्नावली ॥ शटी । इति राजनिर्घण्टः ॥ शाल-
पर्णी । इत्यमरटीकायां भरतः ॥

**गन्धाखुः**, पुं, (गन्धप्रधानः गन्धाढ्यो वा आखुः ।)

छच्छन्दरी । इति हारावली ॥ ८३ ॥

**गन्धाजीवः**, पुं, (गन्धेन गन्धात्मकद्रव्येण आजी-

जातौ ङीष् ।) लताविशेषः । गाँधाली
गन्धभादाली
इति च भाषा । तत्पर्य्यायः । प्रसारणी २
भद्रपर्णी ३ कटम्भरा ४ । इति रत्नमाला ॥
गन्धाढ्या ५ । इति शब्दचन्द्रिका ॥ सरणा
६
राजवला ७ भद्रवला ८ । इत्यमरः । २ । ५
। २७ ॥
गन्धोली ९ सारणी १० । इति जटाधरः ॥
अपि च ।
“प्रसारणी राजबला भद्रपर्णी प्रतानिनी ।
सरणिः सारणी भद्रबला चापि कटम्भरा ॥
प्रसारणी गुरुर्वृष्या बलसन्धानकृत्सरा ।
वीर्य्योष्णा वातकृत्तिक्ता वातरक्तकफापहा
॥”
इति भावप्रकाशः ॥
राजनिर्घण्टोक्तगुणपर्य्यायौ प्रसारिणीशब्दे
द्रष्टव्यौ ॥

**गन्धालीगर्भः**, पुं, (गन्धाली गन्धश्रेणी गभ यस्य ।)

सूक्ष्मैला । इति राजनिर्घण्टः ॥

**गन्धाश्मा** [न्] पुं, (गन्धयुक्तः अश्मा प्रस्तर इव ।)

गन्धकः । इत्यमरः । २ । ९ । १०२ ॥

**गन्धाष्टकं**, क्ली, (गन्धानां गन्धात्मकागुरुचन्दना-

दीनां अष्टकम् ।)
पञ्चदेवतादेयाष्टप्रकारगन्ध-
द्रव्यम् । यथा, --
“चन्दनागुरुकर्पूरचोरकुङ्कमरोचनाः ।
जटामांसी कपियुता शक्तेर्गन्धाष्टकं विदुः ॥
* ॥
चन्दनागुरुह्रीवेरकुष्ठकुङ्कुमसेव्यकाः ।
जटामांसी मुरमिति विष्णोर्गन्धाष्टकं विदुः ॥
* ॥
चन्दनागुरुकर्पूरतमालजलकुङ्कुमम् ।
कुशीदं कुष्ठसंयुक्तं शैवं गन्धाष्टकं शुभम् ॥ *
॥
स्वरूपं चन्दनं चोरं रोचनागुरुमेव च ।
मदं मृगद्वयोद्भूतं कस्तूरीचन्द्रसंयुतम् ।

सौगन्धिकवनानाञ्च गन्धं गन्धवहो वहन् ॥”)
गन्धयुक्ते त्रि ॥

**गन्धवहा**, स्त्री, (गन्धमिष्टानिष्टघ्राणंवहतीति । गन्ध + वह् + अच् + टाप् । यद्वा, गन्धस्य वहा ।) नासिका । इत्यमरः । २ । ६ । ८९ ॥

**गन्धवाहः**, पुं, (गन्धं वहतीति । वह् + “कर्म्मण्यण् ।” ३ । २ । १ । इति अण् ।) वायुः । इत्यमरः । १ । १ । ६५ ॥ (यथा, गीतगोविन्दे । १ । ३६ ।
“इह हि दहति चेतः केतकीगन्धबन्धुः प्रसरदसमबाणप्राणवद्गन्धवाहः ॥”)
मृगविशेषः । स तु कस्तूरीमृगः । इति हेमचन्द्रः ॥

**गन्धवाहा**, स्त्री, (गन्ध + वह् + घञ् + टाप् ।) नासिका । इति हेमचन्द्रः ॥

**गन्धविह्वलः**, पुं, (गन्धेन आत्मोत्थसुरभिणा विह्वलयतीति । वि + ह्वल् + णिच् + अच् ।) गोधूमः । इति शब्दचन्द्रिका ॥

**गन्धवृक्षकः**, पुं, (गन्धः स्वनिर्यासजन्यसुरभियुक्तः गन्धप्रधानो वा वृक्षः । ततः स्वार्थे संज्ञायां वा कन् ।) सालवृक्षः । इति राजनिर्घण्टः ॥

**गन्धव्याकुलं**, क्ली, (गन्धेन व्याकुलयतीति । वि + आ + कुल + णिच् + अच् ।) कक्कोलम् । इति शब्दचन्द्रिका ॥

वतीति । गन्ध + आ + जीव् + अच् ।) गन्धबणिक् । इति जटाधरः ॥

**गन्धाढ्यं**, क्ली, (गन्धेन आढ्यम् ।) जवादिनामगन्धद्रव्यम् । चन्दनम् । इति राजनिर्घण्टः ॥ गन्धयुक्ते त्रि ॥

**गन्धाढ्यः**, पुं, (गन्धेनाढ्यः ।) नारङ्गवृक्षः । इति राजनिर्घण्टः ॥

**गन्धाढ्या**, स्त्री, (गन्धेनाढ्या ।) गन्धपत्रा । स्वर्णयूथी । तरुणी । आरामशीतला । इति राजनिर्घण्टः ॥ गान्धाली । इति शब्दचन्द्रिका ॥ (गन्धान्वितद्रव्ये त्रि । यथा, भ्रमराष्टके । १ ।
“गन्धाढ्याऽसौ भुवनविदिता केतकी स्वर्णवर्णा ॥”)

**गन्धाधिकं**, क्ली, (गन्धः अधिकः अस्मिन् । गन्धस्य अधिकोऽत्रेति वा ।) तृणकुङ्कमम् । इति राजनिर्घण्टः ॥

**गन्धाम्ला**, स्त्री, (गन्धयुक्तो अम्लः अम्लरसोऽत्रास्या वा ।) वनबीजपूरकः । इति राजनिर्घण्टः ॥

**गन्धाला**, स्त्री, (गन्धेन अलति पर्य्याप्नोतीति । अल् + अच् टाप् च ।) वृक्षविशेषः । इति शब्दचन्द्रिका ॥ जियतीति ख्याता ॥

**गन्धाली**, स्त्री, (गन्धस्य आली श्रेणी अस्याम् । यद्वा गन्धेन अलति पर्य्याप्नोतीति । अल् + अच्

गन्धाष्टकं विनिर्द्दिष्टं गणेशस्य महेशितुः ॥”
इति शारदातिलकम् ॥ * ॥
अपि च ।
“चन्दनागुरुकर्पूररोचनाकुङ्कुमं मदम् ।
रक्तचन्दनह्रीवेरं गाणपत्यमुदाहृतम् ॥ * ॥
जलकाश्मीरकुष्ठैस्तु रक्तचन्दनचन्दनैः ।
उशीरागुरुकर्पूरैः सौरं गन्धाष्टकं विदुः ॥”
इति मेरुतन्त्रम् ॥

**गन्धि**, क्ली, (गन्ध + “सर्व्वधातुभ्य इन् ।” ४ । ११७ । इति इन् ।) तृणकुङ्कमम् । इति राजनिर्घण्टः ॥

**गन्धिकः**, पुं, (गन्धो विद्यतेऽस्मिन् । गन्ध + “अत इनिठनौ ।” ५ । २ । ११५ । इति ठन् ।) गन्धकः । इति हेमचन्द्रः । ३ । १२३ ॥

**गन्धिनी**, स्त्री, (गन्धोऽस्त्यस्या इति । “अत इनिठनौ ।” ५ । २ । ११५ । इति इनिः । स्त्रियां ङीप् ।) मुरा । इत्यमरः । २ । ४ । १२३ ॥

**गन्धिपर्णः**, पुं, (गन्धि गन्धप्रधानं पर्णं पत्त्रमस्य ।) सप्तच्छदवृक्षः । इति राजनिर्घण्टः ॥

**गन्धोतुः**, पुं, (गन्धः गन्धयुक्तः ओतुः । “ओत्वोष्ठयोः समासे वा ।” इति वार्त्तिं इति अकारलोपः ।) खट्टाशः । इति त्रिकाण्डशेषः ॥ गन्धौतुश्च ॥

**गन्धोत्कटा**, स्त्री, (गन्धेन उत्कटा उद्रिक्ता उग्रा वा ।) दमनकवृक्षः । इति राजनिर्घण्टः ॥

**गन्धशटी**, स्त्री, (गन्धान्विता शटी ।) शटी ।

इति शब्दरत्नावली ॥

**गन्धशाकं**, क्ली, (गन्धाढ्यं शाकम् ।) गौरसुवर्ण-

शाकम् । इति राजनिर्घण्टः ॥

**गन्धशालिः**, पुं, (गन्धाढ्यः शालिः ।) शालि-

घान्यविशेषः । तत्पर्य्यायः ।
कल्माषः २ गन्धालुः
३ कलमोत्तमः ४ सुगन्धिः ५
गन्धबहुलः ६
सुरभिः ७ गन्धतण्डुलः ८
सुगन्धिशालिः ९ ।
अस्य गुणाः । मधुरत्वम् ।
अतिवृष्यत्वम् । पित्त-

**गन्धोत्तमा**, स्त्री, (गन्धेन उत्तमा गन्धप्रधानेत्यर्थः ।)
मदिरा । इत्यमरः । २ । १० । ४० ॥

**गन्धोलिः**, स्त्री, (गन्धयति गन्धयुक्तं करोति संमि-
लितद्रव्यान्तराणीत्यर्थः । गन्ध + ओलच् ततो
जातौ ङीष् निपातनात् ह्रस्वः ।) शटी । इति
शब्दरत्नावली ॥

**गन्धोली**, स्त्री, (गन्धयति अर्द्दयतीति । गन्ध
अर्द्दने + बाहुलकात् ओलच् ततो जातौ संज्ञायां
वा ङीष् ।) वरटा । इत्यमरः । २ । ५ । २७ ॥
भद्रा । शटी । इति मेदिनी ॥ ले । ८५ ॥

**गभस्तिः**, पुं, (गम्यते ज्ञायते इति गः विषयः ।
गम् + डः । तं बभस्ति दीपयति प्रकाशयतीति ।
भस् + "क्तिचक्तौचेति ।" ३ । ३ । १७४ । इति
क्तिच् ।) किरणः । (यथा, भागवते । ५ । ८ । २२ ।
"मामुपसृतमृगतनयं शिशिरशान्तानुराग-
गुणितनिजवदनसलिलामृतमयगभस्तिभिः स्वध-
यतीति च ॥" गम्यते ज्ञायते इति । गम् + डः ।
गं इदं सर्व्वं जगत् बभस्ति भासयति निजकिरण-
जालैरिति शेषः । भस् + क्तिच् ।) सूर्य्यः । इति
मेदिनी ॥ ते । १०७ ॥ (यथा, सूर्य्यस्तोत्रे ।
"गभस्तिमान् गभस्तिश्च विश्वात्मा भासकस्तथा ।
त्वं योनिर्वेदविद्यानां वेदवेद्यस्तथैव च ॥"
शिवः । यथा, महाभारते । १३ । १७ । १३३ ।
"गभस्तिर्ब्रह्मकृद् ब्रह्मा ब्रह्मवित् ब्राह्मणो-
गतिः ॥")

**गभीरिका**, स्त्री, (गभीरो ध्वनिर्विद्यतेऽस्याः ।
"अत इनिठनौ ।" इति ठन् । स्त्रियां टाप् ।)
बृहड्ढक्का । इति शब्दरत्नावली ॥

**गभोलिकः**, पुं, मसूरः । इति हारावली । १३४ ॥

**गम**, औ ऌ गत्याम् । इति कविकल्पद्रुमः ॥
(भ्वां-परं-सकं-अनिट् ।) औ, गन्ता । ऌ, अग-
मत् । गतिरुत्तरदेशसंयोगफलकव्यापारः । इति
दुर्गादासः ।

**गमः**, पुं, (गम्यते इति यथायथं भावकर्म्मादौ
अप ।) जिगीषोर्गमनम् । इत्यमरः । २ । ८ । ९५ ॥
अक्षविवर्त्तः । स तु द्यूतप्रभेदः । अपर्य्या-
लोचितम् । अध्वा । इति मेदिनी । मे १० ॥
सदृक्पाठः । इति हेमचन्द्रः ॥ गमनञ्च ॥
(उपभोगः । मैथुनम् । यथा, मनौ । ११ । ५४ ।
"ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः ॥")

**गमकः** पुं, (गमयति प्रापयति बोधयति वा मूर्च्छनादि-
लक्षणैर्य आत्मानमिति । गम् + णिच् + ण्वुल् ।)
स्वरविशेषः । यथा, सङ्गीतदामोदरे ।
"गमकः स्वश्रुतिस्थानच्छायां श्रुत्यन्तराश्रयाम् ।
स्वरो यो मूर्च्छ नामेति गमकः स इहोच्यते ॥
कम्पितः स्फुरितो नीलो भिन्नः स्थविर एव च ।
"अगम्यागमनाच्चैव अभक्षस्य च भक्षणात् ।
मुच्यते सर्व्वपापेभ्यः पञ्चवक्त्रस्य धारणात् ॥")

**गमी**, [न्] त्रि, (गमिष्यतीति । गम् + "भविष्यति
गम्यादयः ।" ३ । ३ । ३ । "गमेरिनिः ।" उणां । ४ । ६ ।
इति भविष्यति इनिः ।) गमनकर्त्ता । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**गम्ब**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-
सेट् ।) गम्बति । इति दुर्गादासः ॥

**गम्भारिका**, स्त्री, (गच्छति दार्ढ्यं सौन्दर्य्यं-
भारञ्च इति । निम्नगतिमित्येके । गम् + विच् ।
गमं बिभर्त्ति इति । भृ + ण्वुल् ततष्टाप् कापि
अत इत्वञ्च ।) गम्भारीवृक्षः । इति राज-
वल्लभः ॥

**गम्भारी**, स्त्री, (कं जलं बिभर्त्ति इति । भृ +
"कर्म्मण्यण् ।" ३ । २ । १ । इति अण् पृषो-
दरात् कस्य गत्वे साधुः । यद्वा गच्छति
प्राप्नोति सौन्दर्य्यमिति । गम् + विच् । गमं बिभ-
र्त्तीति ।) वृक्षविशेषः । गामारी इति भाषा ॥
तत्पर्य्यायः । सर्व्वतोभद्रा २ काश्मरी ३ मधु-
पर्णिका ४ श्रीपर्णी ५ भद्रपर्णी ६ काश्मर्य्यः ७ ।
इत्यमरः । २ । ४ । ३५ ॥ कार्श्मरी ८ । इति
तट्टीका ॥ भद्रा ९ गोपभद्रिका १० कुमुदा ११
सदाभद्रा १२ कट्फला १३ कृष्णवृन्तिका १४ ।
इति रत्नमाला ॥ कृष्णवृन्ता १५ हीरा १६
सर्व्वतोभद्रिका १७ स्निग्धपर्णी १८ सुभद्रा १९
कम्भारी २० गोपभद्रा २१ विदारिणी २२
क्षीरिणी २३ महाभद्रा २४ मधुपर्णी २५
स्वरुभद्रा २६ कृष्णा २७ अश्वेता २८
रोहिणी २९ गृष्टिः ३० स्थूलत्वचा ३१ मधु-
मती ३२ सुफला ३३ मेदिनी ३४ महा-
कुमुदा ३५ सुदृढत्वचा ३६ । अस्या गुणाः ।

**गभस्तिः**, स्त्री, (गच्छति प्राप्नोति हव्यादिकमिति

गः अग्निस्तं बभस्त्यनया इति । भस् + करणे

क्तिच् ।) स्वाहा । इति मेदिनी ॥ ते । १०७ ॥

**गभस्तिमत्**, क्ली, (गभस्तयो रश्मयः नित्यं वर्त्तन्ते-

ऽस्मिन् लोके मण्यादिज्योतिःप्रभावात्। इति

नित्ययोगे मतुप् ।) सप्तपातालान्तर्गतपातांल-

विशेषः । तत्तु तलातलम् । इति शब्दरत्नावली ॥

**गभस्तिमान्**, [त्] पुं, (गभस्तयः रश्मयः

विद्यन्ते भूम्नास्मिन् । इति भूमार्थे मतुप् ।)

सूर्य्यः । इति शब्दरत्नावली ॥ (यथा, महा-

भारते । ३ । ३ । १६ ।

"ओं सूर्य्योऽर्य्यमाभगस्त्वष्टा पूषार्कः सविता रविः ।

गभस्तिमानजः कालो मृत्युर्धाता प्रभाकरः ॥")

**गभस्तिहस्तः**, पुं, (गभस्तयो रश्मयो हस्ता इव

जलाद्याकर्षणविसर्ज्जनाय यस्य ।) सूर्य्यः । इति

त्रिकाण्डशेषः ॥

**गभीरं**, त्रि, (गच्छति जलमत्र । गम् + "गभीर-

गम्भीरौ" । उणां । ४ । ३५ । इति ईरन् भश्चान्ता-

देशः ।) नीचस्थानम् । तत्पर्य्यायः । निम्नम् २

गम्भीरम् ३ । इत्यमरः । १ । १० । १५ ॥ गभीरकम् ४ ।

इति शब्दरत्नावली ॥ अगाधम् । (यथा, प्रबोध-

चन्द्रोदये । ४ । १५ ।

"निष्कम्पनिर्म्मलपयोधिगभीरवीरा

धीराः परस्य परिवादगिरः सहन्ते ॥")

गहनम् । इत्युणादिकोषः ॥ (प्रचण्डम् । यथा,

भागवते । १ । ५ । १८ ।

आहतान्दोलितो चेति गमकाः सप्त कीर्त्तिताः ॥

माघपौषनिशायान्तु शेषप्रहरमात्रके ।

साधकः सलिले स्थित्वा गमकान् सप्त साधयेत् ॥

दाक्षिणात्याहरिप्रीत्यै गायन्ति गमकानिमान् ॥"

(गमयति बोघयतीति । गम् + णिच् + ण्वुल् ।

बोधकमात्रे त्रि । यथा, मालतीमाधवे । ३ ।

"यत् प्रौढत्वमुदारता च वचसां यच्चार्थतो गौरवं

तच्चेदस्ति ततस्तदेव गमकं पाण्डित्य वैदग्ध्ययोः ॥")

**गमकारित्वं**, क्ली, (गम्यते इति । गम् + भावे

अप् । गमं करोतीति । कृ + णिनि । तस्य

भावः इति ।) रभसः । इति त्रिकाण्डशेषः ॥

**गमथः**, पुं, (गच्छत्यस्मिन् इति । गम् + "शीङ्-

शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः।" उणां ३ ।

११३ । इति अधिकरणे अथः ।) पन्थाः । (गम्

+ कर्त्तरि अथः ।) पथिके त्रि ।

इत्युणादिकोषः ॥

**गमनं**, क्ली, (गम्यते जिगीषुणा इति । गम् + भावे

ल्युट् ।) जिगीषोः प्रयाणम् । कुच् इति

पारस्य भाषा । तत्पर्य्यायः । यात्रा २ व्रज्या ३

अभिनिर्य्याणम् ४ प्रस्थानम् ५ । गमः ६ । इत्य-

मरः । २ । ८ । १५ ॥ प्रयाणम् ७ प्रस्थितिः ८

यानम् ९ प्राणनम् १० । इति शब्दरत्नावली ॥

कटुत्वम् । तिक्तत्वम् । गुरुत्वम् । उष्णत्वम् ।

भ्रमशोथत्रिदोषविषदाहार्त्तिज्वरतृष्णास्रदोष

नाशित्वञ्च । इति राजनिर्घण्टः ॥ एतत्फल-

गुणाः । तिक्तत्वम् । गुरुत्वम् । ग्राहित्वम् । मधु-

रत्वम् । केशहितत्वम् । रसायनत्वम् । मेध्य-

त्वम् । शीतलत्वम् । दाहपित्तनाशित्वञ्च ।

एतन्मूलगुणौ । अत्युष्णत्वम् । मानसव्याधौ

अहितकारित्वञ्च । इति राजवल्लभः ॥ तत्-

पर्य्यायगुणाः ।

"गम्भारी भद्रपर्णी च श्रीपर्णी मधुपर्णिका ।

काश्मीरी काश्मरी हीरा काश्मर्य्यः पीत-रोहिणी ॥

कृष्णवृन्ता मधुरसा महाकुमुदिकापि च ।

काश्मरी तुवरा तिक्ता वीर्य्योष्णा मधुरा गुरुः ॥

दीपनी पाचनी मेध्या भेदिनी भ्रमशोषजित् ।

दोषतृष्णामशूलार्शोविषदाहज्वरापहा॥

तत्फलं बृंहणं वृष्यं गुरु केश्यं रसायनम् ।

वातपित्ततृषारक्तक्षयमूत्रविबन्धहृत्॥

स्वादु पाके हिमं स्निग्धं तुवराम्लं विबुद्धिकृत् ।

हन्याद्दाहतृषावातरक्तपित्तक्षतक्षयान्॥"

इति भावप्रकाशः ॥

| | | |
|---|---|---|
| “कांलेन सर्व्वत्र गभीररंहमा ॥”) | पादविहरणम् । (यथा, रामायणे । ३ । १३ । ११ ।<br>“न च मे रोचते वीर ! गमनं दण्डकं प्रति ॥”)<br>तत्तु पञ्चविधकर्म्मान्तर्गतकर्म्मविशेषः । (यथा,<br>भाषापरिच्छेदे । ६ ।<br>“उत्क्षेपणं ततोऽवक्षेपणमाकुञ्चनं तथा ।<br>प्रसारणञ्च गमनं कर्म्माण्येतानि पञ्च च ॥”)<br>तस्य भेदाः । यथा, भ्रमणम् १<br>रेचनम् २<br>स्यन्दनम् ३ ऊर्द्ध्वज्वलनम् ४<br>तिर्य्यग्गमनम् ५ ।<br>इति च भाषापरिच्छेदे ७ । (उपभोगः । यदुक्तं<br>तिथितत्वे । | |

**गम्भीरं**, त्रि, (गच्छति जलमत्र । “गभीर-
गम्भीरौ ।” उणां । ४ । ३५ । इति गच्छते-
रीरन् भश्चान्तादेशः नुमागमश्च ।) गभीरम् ।
इत्यमरः । १ । १० । १५ ॥ (यथा, गोः
रामायणे ।
५ । १ । ५० ।
“ततः सागरगम्भीरो वानरः पवनो जवे ॥”)

**गम्भीरः**, पुं, (गम् + “गभीरगम्भीरौ” उणां ।
४ । ३५ । इति ईरन् भश्चान्तादेशः
नुमागमश्च ।)
जम्बीरः । षड्जम् । ऋङ्गन्त्रः ।
इत्युणादिकोषः ॥
(शिवः । यथा, महाभारते । १३ । १७ । ५२
।
“गम्भीरघोषो गम्भीरो गम्भीरबलवाहनः ॥”
स्त्रियां, हिक्कारोगभेदः । यथा, सुश्रुते उत्तर-
तन्त्रे ५० अध्याये ।
“नाभिप्रवृत्ता या हिक्का घोरा गम्भीरनादिनी
।
शुष्कोष्ठकण्ठजिह्वास्यश्वासपार्श्वरुजाकरी ।
अनेकोपद्रवयुता गम्भीरा नाम सा स्मृता ॥”)

**गम्भीरवेदी**, [न्] पुं, (गम्भीरं मन्दं यथा स्यात्
तथा चिरकालात् इत्यर्थः यद्वा गम्भीरं
अङ्कुश-
बेधनं निषादिदत्तशिक्षामाद्देशं वा वेत्तीति विद्
+ णिनि ।) दुर्द्धरहस्ती । तत्पर्य्यायः ।
अङ्कश-
दुर्द्धरः २ चालकः ३ व्यालकः ४ । इति
त्रिकाण्ड-
शेषः ॥ अवमताङ्कुशः ५ । इति हेमचन्द्रः ॥
(यथा, रघौ । ४ । ३९ ।
“स प्रतापं महेन्द्रस्य मूद्र्ध्नि तीक्ष्णं
न्यवेशयत् ।
अङ्कुशं द्विरदस्येव यन्ता गम्भीरवेदिनः ॥”
अस्य लक्षणम् ।
“चिरकालेन यो वेत्ति शिक्षां परिचितामपि ।
गम्भीरवेदी विज्ञेयः स गजो गजवेदिभिः ॥”
“गयं नृपः कः प्रति याति कर्म्मभिः
॥”)
असुरभेदः । इति वायुपुराणम् ॥
गयाप्रदेशः ।
यथा, हेः रामायणे । २ । १०७ ।
११ ।
“गयेन यजमानेन गयेष्वेव पितन्
प्रति ।”
“गयेषु गयाप्रदेशेषु ।” इति
तट्टीकायाम् ॥)

**गया**, स्त्री, (गयेन गयनाम्ना लोकप्रिसिद्धेना-
सुरेण पुराणान्तरमतभेदेन तन्नाम्ना
राजर्षिणा
वा निर्म्मिता ।) गयराजर्षिपुरी ।
इति हेम-
चन्द्रः । ४ । ३९ ॥ सा तु तीर्थभेदः
। तस्य
नामकरणं यथा, --
“यज्ञं चक्रे गयो राजा बह्वन्नं
बहुदक्षिणम् ।
यत्र द्रव्यसमूहानां संख्या कर्त्तुं न
शक्यते ॥
गयं विष्ण्वादयस्तृप्ता वरं ब्रूहीति
चाब्रुवन् ।
गयस्तान् प्रार्थयामास
अभिशस्तास्तु ये पुरा ॥
ब्रह्मणा ते द्विजाः पूता भवन्तु
क्रतुपूजिताः ।
गयापुरी तु मन्नाम्ना ख्यातु ब्रह्मपुरी
तथा ॥
एवमस्तु वरं दत्त्वा ततश्चान्तर्दधुः
सुराः ॥” * ॥
तस्योत्पत्तिकारणं यथा, --
“गयासुरोऽसुराणाञ्च
महाबलपराक्रमः ।
योजनानां सपादञ्च शतं
तस्योच्चयः स्मृतः ॥
स्थूलः षष्टिर्योजनानां श्रेष्ठोऽसौ
वैष्णवः स्मृतः ।
ब्रह्मोवाच ।
पृथिव्यां यानि तीर्थानि दृष्टानि भ्रमता मया ।
यज्ञार्थं न तु ते तानि पवित्राणि शरीरतः ॥
अतः पवित्रं देहं स्वं यज्ञार्थं देहि मेऽसुर ! ॥
गयासुर उवाच ।
धन्योऽहं देवदेवेश ! यद्देहः प्राथ्यर्यते त्वया ।
त्वयैवोत्पादितो देहः पवित्रश्च त्वया कृतः ।
सर्व्वेषामुपकाराय यागोऽवश्यं भवत्विति ॥
इत्युक्त्वा सोऽपतद्भूमौ श्वेतकल्पे गयासुरः ।
नैरृ र्तीं दिशमाश्रित्य तदा कोलाहले गिरौ ॥
शिरः कृत्वोत्तरे दैत्यः पादौ कृत्वा तु दक्षिणे ।
ब्रह्मा सम्भृतसम्भारो मानसानृत्विजोऽसृजत् ॥
चलितश्चकितो ब्रह्मा धर्म्मराजमभाषत ।
यास्ते गृहे तव शिला तामानीयात्र धारय ॥
दैत्यस्य शीघ्रं शिरसि तां धारय ममाज्ञया ।
निश्चलार्थं यमः श्रुत्वा धारयन्मस्तके शिलाम्
॥
शिलायां धारितायान्तु सशिलश्चासुरोऽचलत्
।
देवानूचेऽथ रुद्रादीन् शिलायां निश्चलाः किल
॥
तिष्ठन्तु देवाः सकलास्तथेत्युक्त्वा च ते
स्थिताः ।
देवाः पादैर्लक्षयित्वा तथापि चलितोऽसुरः ॥
ब्रह्माथ व्याकुलो विष्णुं गतः क्षीराब्धिशायिनम्
।
अजमूचे हरिः कस्मादागतोऽसि वदस्व तत् ॥
ब्रह्मोवाच ।
देवदेव ! कृते यागे प्रचचाल गयासुरः ।
इदानीं निश्चलार्थं हि प्रसादं कुरु माधव ॥
ब्रह्मणो वचनं श्रुत्वा ह्याकृष्य स्वशरीरतः ।
मूर्त्तिं ददौ निश्चलार्थं ब्रह्मणे भगवान् हरिः ॥
आनीय मूर्त्तिं ब्रह्मापि शिलायां समधारयत् ।
तथापि चलितं वीक्ष्य पुनर्देवमिहाह्वयत् ॥
आगत्य विष्णुः क्षीराब्धेः शिलायां संस्थितो-
ऽभवत् ।
आद्यया गदया चासौ यस्माद्दैत्यः स्थिरीकृतः
॥

इति शब्दार्थचिन्तामणिधृतराजपुत्त्रीयवचनम् ॥

मतभेदेन लक्षणान्तरमपि दृश्यते ।

"त्वग्भेदाच्छोणितस्रावात् मांसस्य क्रथनादपि ।

आत्मानं यो न जानाति स स्याद् गम्भीर-वेदिता ॥"

इति रघुटीकायां मल्लिनाथः ॥)

**गम्यं**, त्रि, (गम्यते इति । गम् + कर्म्मादौ यत् ।)

प्राप्यम् । इत्यमरः । ३ । २ । ४२ ॥ (यथा, भगवद्गीतायाम् । १३ । १७ ।

"ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्व्वस्य विष्ठितम् ॥")

गमनयोग्यञ्च ॥ (यथा, महामारते । ३ । ८५ । १०२ ।

"गम्यान्यपि च तीर्थानि कीर्त्तितान्यगमानि च ॥"

स्त्रियां, सम्भोगार्हा स्त्री । यथा, महाभारते । १ । ८३ । ३५ ।

"अभिकामां स्त्रियं यश्च गम्यां रहसि याचितः ॥")

**गम्यमानः**, त्रि, (गम्यते इति । गम् + कर्म्मणि शानच् ।) वर्त्तमानगमनाश्रयग्रामादिः ॥

**गयः**, पुं, (गीयते वीर्य्यादिप्रभावेनासौ । गै + घञ् । पृषोदरात् ह्रस्वत्वे साधुः ।) वानर-भेदः । (यथा, गोः रामायणे । ४ । २५ । ३३ ।

"गयो गवाक्षो गवयः शरभो गन्धमादनः ॥")

स तु वैवस्वतपुत्त्रः । इति रामायणम् ॥ राजर्षि-भेदः । स च अमूर्त्तरयःपुत्त्रः । (यथा, श्रीभाग-वते । ५ । १५ । ७ ।

कोलाहले गिरिवरे तपस्तेपे सुदारुणम् ॥

बहुवर्षसहस्राणि निरुच्छ्वासः स्थिरोऽभवत् ।

तत्तपस्तापिता देवाः संक्षोभं परमं गताः ॥

ब्रह्मलोकं गता देवाः प्रोचुस्तेऽथ पितामहम् ।

गयासुराद्रक्ष देव ! ब्रह्मा देवांस्तथाब्रवीत् ॥

व्रजामः शङ्करं देवा ब्रह्माद्याश्च गताः शिवम् ।

कैलासे चाब्रुवन्नत्वा रक्ष रक्ष महाऽसुरात् ॥

ब्रह्माद्यांश्चाब्रवीच्छम्भुर्व्रजामः शरणं हरिम् ।

क्षीराब्धौ देवदेवेशः स नः श्रेयो विधास्यति ॥

ब्रह्मा महेश्वरो देवा विष्णुं नत्वा प्रतुष्टुवुः ।

किमर्थमागता देवा विष्णुनोक्तास्तमब्रुवन् ॥

गयासुरभयाद्देव ! रक्षास्मानब्रवीद्धरिः ।

ब्रह्माद्या यान्तु तं दैत्यञ्चागमिष्याम्यहं ततः ॥" *

"ऊचुस्तं वासुदेवाद्याः किमर्थं तप्यते त्वया ।

सन्तुष्टाश्चागताः सर्व्वे वरं ब्रूहि गयासुर ! ॥"

"यदि तुष्टाः स्थ मे देवा ब्रह्मविष्णुमहेश्वराः ।

सर्व्वदेवद्विजातिभ्यो यज्ञतीर्थशिलोच्चयात् ॥

मन्त्रेभ्यो देवदेवीभ्यो योगिभ्यश्चापि सर्व्वशः ।

ज्ञातिभ्योऽतिपवित्रोऽहंपवित्रः स्यां सदा सुराः ॥

परित्रो भव तं देवा दैत्यमुक्त्वा ययुर्दिवम् ।

दृष्ट्वा दैत्यं ततः स्पृष्ट्वा सर्व्वे हरिपुरं ययुः ॥

स्थित इत्येव हरिणा तस्मादादिगदाधरः ॥" * ॥

"ऊचे गयासुरो देवान् किमर्थं वञ्चितो ह्यहम् ।

यज्ञार्थं ब्रह्मणे दत्तं शरीरममलं मया ।

पीड्यश्च यद्यहं देवाः प्रसन्नाः सन्तु सर्व्वदा ॥"

"वरं ब्रूहि प्रसन्नाः स्मो देवैरूचे गयासुरः ॥"

"यावत् पृथ्वी पर्व्वताश्च यावच्चन्द्रार्कतारकाः ।

तावच्छिलायां तिष्ठन्तु ब्रह्मविष्णुमहेश्वराः ॥

गदाधरः स्वयं लोकान् पूयात् सर्व्वाघनाशनः ।

श्राद्धं सपिण्डकं येषां ब्रह्मलोकं प्रयान्तु ते ॥"

"किं बहूक्त्या सुरेशानां युष्माकमपि देवताः ।

चेन्न, तिष्ठाम्यहं बापि समयः प्रतिपाल्यताम् ॥"

"त्वया यत् प्रार्थितं वीर ! तद्भविष्यत्यसंशयम् ।

अस्मत्पादानर्च्चयित्वा यास्यन्ति परमां गतिम् ।

देवैर्दत्तवरो दैत्यो हर्षितो निश्चलोऽभवत् ॥"

अथ गयाशिरआदिपरिमाणम् ।

"नागाज्जनार्द्दनाद्ब्रह्मयूपाच्चोत्तरमानसात् ।

एतद्गयाशिरः प्रोक्तं फल्गुतीर्थं तदुच्यते ॥

पितामहं समासाद्य यावदुत्तरमानसम् ।

फलगुतीर्थन्तु विज्ञेयं देवानामपि दुर्लभम् ॥

क्रौञ्चपादात् फल्गुतीर्थं यावत् साक्षाद्गयाशिरः ।

| | | |
|---|---|---|
| | शून्ये लोकत्रये जाते शून्या यमपुरी ह्यभूत् ।<br>यम इन्द्रादिभिः सार्द्धं ब्रह्मलोकं ततोऽगमत् ॥<br>ब्रह्माणमूचिरे देवा गयासुरविलोपिताः ।<br>त्वया दत्तो योऽधिकारस्तं गृहाण पितामह ! ॥<br>ब्रह्माब्रवीत्ततो देवा व्रजामो विष्णुमव्ययम् ।<br>ब्रह्मादयोऽब्रुवन् विष्णुं त्वया दत्तवरेऽसुरे ॥<br>तद्दर्शनाद्ययुः स्वर्गं शून्यं लोकत्रयं ह्यभूत् ।<br>देवैरुक्तो वासुदेवो ब्रह्माणं स वचोऽब्रवीत् ॥<br>गत्वासुरं प्रार्थयस्व यज्ञार्थं देहि देहकम् ।<br>विष्णूक्तः ससुरो ब्रह्मा गत्वाऽपश्यन्महासुरम् ॥ | |

मुखं गयासुरस्यैतत्तस्मात्
श्राद्धमथाक्षयम् ॥
मुण्डपृष्ठाच्च पूर्ब्बस्मिन् पश्चिमे
दक्षिणोत्तरे ।
श्राद्धे क्रोशद्वयं मानं गयायां
ब्रह्मणेरितम् ॥
पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं
गयाशिरः ।
तन्मध्ये सर्व्वतीर्थानि त्रैलोक्ये यानि
सन्ति वै ॥”
अथ गयामाहात्म्यादि ।
“गयायां न हि तत् स्थानं यत्र तीर्थं
न विद्यते ।
सान्निध्यं सर्व्वतीर्थानां गयातीर्थं
ततो वरम् ॥
ब्रह्मज्ञानेन किं साध्यं गोग्रहे मरणेन
किम् ।
वासेन किं कुरुक्षेत्रे यदि पुत्त्रो गयां
व्रजेत् ॥
श्राद्धकृद्यो गयाक्षेत्रे
पितृणामनृणोऽपि सः ।
शिरसि श्राद्धकृद्यस्तु कुलानां
शतमुद्धरेत् ॥
गयाशिरसि यः पिण्डान् येषां नाम्ना
तु निर्व्वपेत् ।
नरकस्था दिवं यान्ति स्वर्गस्था
मोक्षमाप्नुयुः ॥
गत्वा बणिग्गयाशीर्षे प्रेतराजस्य
पिण्डकम् ।
प्रददौ मनुजैः सार्द्धं स्वपितृभ्यस्ततो
ददौ ॥
प्रेताः प्रेतत्वनिर्म्मुक्ता बणिक् च
गृहमागतः ।
प्रेतराजः सह प्रेतैर्गयाश्राद्धाद्दिवं
गतः ॥” * ॥
“गयायां सर्व्वकालेषु पिण्डं
दद्याद्विचक्षणः ।
अधिमासे जन्मदिने चास्तेऽपि
गुरुशुक्रयोः ॥

कनखलतीर्थे स्नानम् ५ तस्य दक्षिणे दक्षिण-
मानसे तीर्थत्रये स्नानं श्राद्धं सूर्य्यार्च्चनञ्च ६
फल्गुतीर्थे स्नानं तर्पणं सपिण्डकं श्राद्धं ततो
गदाधरस्य दर्शनं पूजनञ्च ७ ॥ द्वितीयदिने
धर्म्मारण्ये गमनं धर्म्मेश्वरनमनं बोधितरु-
नमनञ्च ८ मतङ्गवाप्यां स्नानं तर्पणं श्राद्धं
मत-
ङ्गेशनमनं यूपकूपयोर्मध्ये श्राद्धञ्च ९ ॥ तृतीय-
दिने ब्रह्मसरसि स्नानं सपिण्डकं श्राद्धं यूप-
प्रदक्षिणं ब्रह्मनमनञ्च १० गोप्रचारसमीपे
आम्रवृक्षसेचनम् ११ ततो
यमकुक्कुरकाकबलि-
दानं पुनः स्नानञ्च १२ ॥ चतुर्थदिने
फल्गुतीर्थे
स्नानादिकं ततो गयाशिरसि विष्णुपदस्य
दर्शनं
स्पर्शनं पूजनं तत्र सपिण्डकं श्राद्धञ्च १३ रुद्रः
१४
ब्रह्मा १५ दक्षिणाग्निः १६ गार्हपत्यः १७
आहवनीयः १८ सत्यः १९ आवसव्यः २०
शक्रः २१ अगस्त्यः २२ क्रौञ्चः २३ मातङ्गः
२४
कार्त्तिकेयः २५ गणेशः २६ कश्यपः एषां
पदेषु
श्राद्धम् २७ गजकर्णिकायां तर्पणम् २८
कनकेशकेदारनरसिंहवामनरथमार्गाणां पूज-
नम् २९ ॥ पञ्चमदिने गदालोले स्नानं सपि-
ण्डकं श्राद्धञ्च ३३ अक्षयवटे श्राद्धं
ब्रह्मकल्पित-
विप्राणां पूजनं पुरोधसे षोडशदानञ्च ३४
गायत्र्यग्रे प्रातःसन्ध्याचरणं सपिण्डकं
श्राद्धञ्च ३५
समुद्यततीर्थे स्नात्वा सावित्र्यग्रे
मध्याह्नसन्ध्या-
चरणं पिण्डदानञ्च ३६ प्राचीसरस्वत्यां
स्नात्वा
सायाह्नसन्ध्याचरणं ३७ विशाला ३८ लेलि-
हानम् ३९ भरताश्रमनामकरामतीर्थम् ४०
पदा-

तत्रस्थजनार्द्दनहस्ते जीवितस्य
पिण्डदानविधि-
र्यथा, --
“जनार्द्दनो भस्मकूटे तस्य हस्ते तु पिण्डदः ।
आत्मनोऽप्यथवान्येषां सव्येनैव तिलैर्व्विना ॥
जीवतां दधिसंमिश्रं सर्व्वे ते विष्णुलोकगाः ।
यस्तु पिण्डो मया दत्तस्तव हस्ते जनार्द्दन ! ॥
यमुद्दिश्य त्वया देयस्तस्मिन् पिण्डो मृते
प्रभो ! ।
एष पिण्डो मया दत्तस्तव हस्ते जनार्द्दन ! ॥
अन्तकाले गते मह्यं त्वया देयो गया शिरे ।”
इति च वायुपुदाणे गयामाहात्म्ये ४ अध्यायः
॥

**गरं**, क्ली, (गिरति दोषबहुलं नाशयति स्वस्मिन्
जातस्य बालकस्येति भावः । ग + पचाद्यच्
।)
ववाद्येकादशकरणान्तर्गतपञ्चमकरणम् । इति
मेदिनी । रे । २२ ॥ (यथा, बृहत्संहिता-
याम् । ९९ । ४ ।
“ववबालवकौलवतैतिलाख्य
गरवणिजविष्टिसंज्ञानाम् ।”
एतेषामधीशाः । यथा, तत्रैव । ९९ । ४-५ ।
“पतयः स्युरिन्द्रकमलज-
मित्रार्य्यमभूश्रियः सयमाः ॥
कृष्णचतुर्द्दश्यर्धाद् ध्रुवाणि
शकुनिश्चतुष्पदं नागम् ।
किन्तुघ्नमिति च तेषां
कलिवृषफणिमारुताः पतयः ॥”)
तत्र जातस्य फलम् ।
“विचारदक्षो विजितारिपक्षः
शूरोऽतिधीरो मृदुहास्ययुक्तः ।
दाता दयालुर्गु णवान्नरः स्याद्
गरे परेषामुपकारकर्त्ता ॥”
इति कोष्ठीप्रदीपः ॥
(गरादेः फलं यथा, बृहत्संहितायाम् । ९९ ।
७ ।
“कृषिबीजगृहाश्रयजानि गरे
वणिजि ध्रुवकार्य्यवणिग्युतयः ॥”
गीर्य्यते भक्ष्यते इति । ग + कर्म्मण्यप् ।)

न त्यक्तव्यं गयाश्राद्धं सिंहस्थेऽपि
बृहस्पतौ ।
तथा दैवप्रमादेन प्रवहत्सु व्रणेषु च ॥
पूतः कर्म्माधिकारी च
श्राद्धकृद्ब्रह्मलोकभाक् ॥
मीने मेषे स्थिते सूर्य्ये कन्यायां
कार्म्मुके घटे ।
नारद ! त्रिषु लोकेषु गयाश्राद्धं
सुदुर्लभम् ॥” * ॥
“मुण्डनञ्चोपवासश्च सर्व्वतीर्थेष्वयं
विधिः ।
वर्ज्जयित्वा कुरुक्षेत्रं विशालां
विरजां गयाम् ॥
दण्डं प्रदर्शयेद्भिक्षुर्गयां गत्वा न
पिण्डदः ।
दण्डं न्यस्य विष्णुपदे पितृभिः सह
मुच्यते ॥
गयागजो गयादित्यो गायत्री च
गदाधरः ।
गया गयासुरश्चैव षड्गया
मुक्तिदायिकाः ॥”
अथ पिण्डदानद्रव्याणि ।
“पायसेनाथ चरुणा सक्तुना पिष्टकेन
वा ।
तण्डुलैः फलमूलाद्यैर्गयायां
पिण्डपातनम् ॥
तिलकल्केन खण्डेन गुडेन सघृतेन
वा ।
केवलेनैव दध्ना वा अन्नेन
मधुनाथवा ॥
पिन्याकं सघृतं खण्डं
पितृभ्योऽक्षयमित्युत ॥”
अथ गयास्थब्राह्मणपूजाविधिः ।
तत्रस्था ब्राह्मणा ब्रह्माणमूचुः ।
“त्वया यद्दत्तमखिलं तत् सर्व्वं
शापतो गतम् ।
जीवनार्थं प्रसादं नो भगवन् !
कर्त्तुमर्हसि ॥
तन् श्रुत्वा ब्राह्मणान् ब्रह्मा प्रोवाचेदं
दयान्वितः ।
तीर्थोपजीविका यूयमाचन्द्रार्कं
भविष्यथ ॥

ङ्कितम् ४१ मुण्डपृष्ठस्थगदाधरसमीपम् ४२
आकाशगङ्गा ४३ गिरिकर्णमुखं एषु स्नानं
पिण्डदानञ्च ४४ वैतरण्यां स्नानं पिण्डदानं
श्राद्धं गोदानञ्च ४५ घृतकुल्या ४६ मधुकुल्या
४७
देविकानदी ४८ शिलासङ्गम ४९ मधुस्रवासु
स्नानं
सपिण्डकं श्राद्धं पिण्डदानञ्च ५०
दशाश्वमेधिकम् ५१
हंसतीर्थम् ५२ अमरकण्टकम् ५३
कोटितीर्थम् ५४
रुक्मिणीकुण्डं एषु पिण्डदानम् ५५
मार्कण्डेये-
श्वर-५६ कोटीश्वरयोर्दर्शनं नमनञ्च ५७
दिवौ-
कसां पुष्करिण्यां पितृभ्यो दानम् ५८
पङ्कजवने
पाण्डुशिलायां श्राद्धम् ५९ मुख्यतीर्थे स्नानं
तर्पणं पिण्डदानञ्च ६० गयाकूपे पिण्डदानं
६१ भस्मकूटे भस्मना स्नानम् ६२
सङ्गमतीर्थे
स्नानम् ६३ धेनुकारण्ये पिण्ड दानम् ६४
काम-
धेनुपदे स्नात्वा कामदुघानमनम् ६५ ॥ * ॥
“कर्द्दमाले गयानाभौ मुण्डपृष्ठसमीपतः ।
स्नात्वा श्राद्धादिकं कृत्वा पितृणामनृणो भवेत्
॥
फल्गुचण्डीश्मशानाक्षीमङ्गलाद्याःसमर्च्चयेत्
।
गयायाञ्च वृषोत्सर्गस्त्रिसप्तकुलमुद्धरेत् ॥”
इति वायुपुराणे गयामाहात्म्यम् ॥ * ॥
तत्र मरणे मुक्तिर्यथा, तत्रैव ३ अध्याये ।
“गदाधरोद्देश्यतीर्थं सर्व्वतीर्थोत्तमोत्तमम् ।
मुक्तिर्भवेत् पितृणाञ्च कर्त्तृणां श्राद्धतः सदा ॥
जरायुजा अण्डजा वा स्वेदजा वापि चोद्भिदः ।
त्यक्त्वादेहं शिलायां ते यान्ति
विष्णस्वरूपताम् ॥”

विषम् । (यथा, भागवते । ८ । ७ । ४१ ।
“तस्मादिदं गरं भुञ्जे प्रजानां स्वस्तिरस्तु मे
॥”)
वत्सनाभाख्यविषम् । इति राजनिर्घण्टः ॥
(सम्मोहजं विषम् । इति माधवकरकृतरुग्वि-
निश्चयटीकाकृता
श्रीकण्ठदत्तेनोदररोगव्याख्याने
उक्तम् ॥)

**गरः**, पुं, (गीर्य्यते इति । गॄ + कर्म्मणि अप् ।)

विषम् । (यथा, भागवते । ६ । १४ । ४३ ।
“विद्वेषनष्टमतयः स्त्रियो दारुणचेतसः ।
गरं ददुः कुमाराय दुर्मर्षा नृपतिं प्रति ॥”)
उपविषम् । रोगः । इति हेमचन्द्रः । ४ ।
३८० ॥

**गरघ्नः**, पुं, (गरं विषं हन्तीति । हन् + टक् ।)

कृष्णार्जकः । वर्व्वरः । इति राजनिर्घण्टः ॥

**गरघ्नी**, स्त्री, (गरघ्न + टित्वात् ङीप् ।) मत्स्य-

विशेषः । गरै इति भाषा । अस्या गुणाः ।
मधुरत्वम् । कषायत्वम् ।
वातपित्तकफनाशित्वम् ।
रुचिबलवीर्य्यकारित्वम् । दीपनत्वम् ।
लघुत्वञ्च ।
इति भावप्रकाशः

| | | |
|---|---|---|
| लोकाः पुण्यगयायां ये श्राद्धिनो ब्रह्मलोकगाः ।<br>युष्मान् ये पूजयिष्यन्ति तैरहं पूजितः सदा ॥"<br>अथ गयायां श्राद्धादिकरणार्थं तीर्थानि ।<br>प्रथमदिने गयाप्रवेपो फल्गुतीर्थे स्नानतर्पण-<br>श्राद्धानि १ प्रेतशिलायां ब्रह्मकुण्डे स्नानं श्राद्धं<br>षोडशपिण्डदानं प्रेतपर्व्वते तिलमिश्रितसक्तु-<br>निक्षेपश्च २ पञ्चतीर्थमध्ये उत्तरमानसे स्नानं<br>सपिण्डकं श्राद्धं सूर्य्यार्च्चनञ्च ३ दक्षिणमानसे<br>उदीच्यां उदीचीतीर्थे स्नानम् ४ तस्य मध्ये | | |

("गरघ्नी मधुरा तिक्ता तुवरा वातपित्तहृत्
।
कफघ्नी रुचिकृल्लघ्वी दीपनी
बलवीर्य्यकृत् ॥"
इति शब्दार्थचिन्तामणिधृतवचनम्॥
गरं संसारयातनारूपं विषं हन्तीति । हन्
+
टक् ङीप् च । गङ्गा । यथा, काशीखण्डे ।
२९ । ५४ ।
"ग्रहपीडाहरा गुन्द्रा गरघ्नी गानवत्सला
॥")

**गरणं**, क्ली, (गॄ सेचने गॄ निगरणे + भावे ल्युट् ।)

सेचनम् । निगरणम् । इति व्याकरणम् ॥

**गरदं**, क्ली, (गॄ + भावे अप् । गरो भक्षणम् । गरेण

भक्षणेन दीयते खण्ड्यते
म्रियतेऽस्मादनेन वा ।
दो + अपादाने करणे वा घञर्थे कः ।)
विषम् ।
इति राजनिर्घण्टः ॥

**गरदः**, त्रि, (गरं विषं ददातीति । दा + कः ।)

विषदानकर्त्ता । (अयं हि
आततायिनामन्यतमः ।
अस्य हनने दण्डादिकं नास्ति ।) यथा,
स्मृतिः ।
"अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।"
(अयं हि श्राद्धभोजने परिहर्त्तव्यः । तथा
च
मनौ । ३ । १५८ ।
"आगारदाही गरदः कुण्डाशी सोमविक्रयी
।
समुद्रयायी वन्दी च तैलिकः कूटकारकः
॥")

**गरव्रतः**, पुं, (गरो गरणं सर्पादिग्रसनरूपं व्रतं

नैसर्गिको नियमो यस्य ।) मयूरः । इति
शब्दरत्नावली ॥

**गरभः**, पुं, (गॄ + बाहुलकात् अभच् ।) गर्भः ।

गराधिका, स्त्री, (गरेषु गरप्रतीकारादिषु
अधिका प्रधाना ।) लाक्षा । इति रत्नमाला
।
गराषिका गवाषिकापि पाठः ॥
(गरादधिका ।
विषप्रधाना ॥)

**गरिमा**, [न्] त्रि, ("प्रियस्थिरस्फिरोरुबहुल-

गुरुवृद्धेति ।" ६ । ४ । १५७ । इति
गरादेशः ।
पृथ्वादिभ्य इमनिज्वा ।" ५ । १ । १२२
। इति
इमनिच् ।) गुरुता । इति व्याकरणम् ॥
(यथा,
भागवते । ८ । २ । २२ ।
"गिरिं गरिम्ना परितः प्रकम्पयन् ॥
निषेव्यमाणोऽलिकुलैर्मदाशनैः ॥")

**गरिष्ठः**, त्रि, (अतिशयेन गुरुः । "प्रियस्थिरेति ।"

६ । ४ । १५७ । इति इष्ठन् गरादेशश्च ।)
अति
गुरुः । इति जटाधरः ॥ (पुं, दानवविशेषः
।
यथा, महाभारते । १ । ६५ । ३० ।
"गरिष्ठश्च वनायुश्च दीर्घजिह्वश्च दानवः
॥"
नृपविशेषः । यथा, तत्रैव । २ । ७ । १२ ।
"हविष्मांश्च गरिष्ठश्च हरिश्च न्द्रश्च
पार्थिवः ॥")

**गरी**, स्त्री, (गर + जातौ संज्ञायां वा ङीष् ।)

देवताडवृक्षः । इत्यमरः । २ । ४ । ६९ ॥
खरा ।
इति मेदिनी । रे । २२ ॥
(देवताडशब्देऽस्या
विवरणं बोद्धव्यम् ॥)

**गरीयान्,** [स्] त्रि, (अतिशयेन गुरुः ।

गुरु + इयसुन् गरादेशश्च ।) अतिगुरुः ।
इति
व्याकरणम् ॥

तद्बुद्ध्वा भृशसन्तप्तो देवराजः शतक्रतुः ।
जगाम शरणं तत्र कश्यपं शंसितव्रतम् ॥
तच्छ्रुत्वा देवराजस्य कश्यपोऽथ प्रजापतिः
।
बालिखिल्यानुपागम्य कर्म्मसिद्धिमपृच्छत ॥
अथ ते तं महात्मानं प्रत्यूचुः सत्यवादिनः ।
तान् कश्यप उवाचेदं सान्त्वपूर्ब्बं प्रजापतिः
॥"
तस्य पक्षीन्द्रत्वकारणं यथा, --
"अयमिन्द्रस्त्रिभुवने नियोगात् ब्रह्मणः कृतः
इन्द्रार्थञ्च भवन्तोऽपि यत्नवन्तस्तपोधनाः
॥
न मिथ्या ब्रह्मणो वाक्यं कर्त्तुमर्हथ सत्तमाः ।
भवतां हि न मिथ्यायं संकल्पो वै चिकीर्षितः
॥
भवत्वेष पतत्त्रीणामिन्द्रोऽतिबलसत्ववान्।
प्रसादः क्रियतामस्य देवराजस्य याचतः ॥
बालिखिल्या ऊचुः ।
अपत्यार्थं समारम्भो भवतश्चायमीप्सितः।
तथा चैवं विधत्स्वात्र यथाश्रेयोऽनुपश्यसि ॥
एतस्मिन्नेव काले तु देवी दाक्षायणी शुभा ।
विनता नाम कल्याणी पुत्त्रकामा यशस्विनी
॥
तपस्तप्ता व्रतपरा स्नाता पुंसवने शुचिः ।
उपचक्राम भर्त्तारं तामुवाचाथ कश्यपः ॥
आरम्भः सफलो देवि ! भवितायं तवेप्सितः
।
जनयिष्यसि पुत्त्रौ द्वौ वीरौ त्रिभुवनेश्वरौ ॥
तपसा बालिखिल्यानां मम सङ्कल्पजौ तथा
।
एतौ सर्व्वपतत्त्रीणामिन्द्रत्वं कारयिष्यतः ॥
विनता चापि सिद्धार्था बभूव मुदिता तथा ।
जनयामास पुत्त्रौ द्वावरुणं गरुडं तथा ॥
विकलाङ्गोऽरुणस्तत्र भास्करस्य पुरःसरः ।
पतत्त्रीणान्तु गरुड इन्द्रत्वेनाभ्यषिच्यत ॥"
* ॥
तस्य जन्मकालीनरूपं यथा, --
"एतस्मिन्नन्तरे चापि गरुडः काल आगते ।
विना मात्रा महातेजा विदार्य्याण्डमजायत ॥

इति हेमचन्द्रः । ३ । २०४ ॥

**गरलं**, क्ली, (गिरति ग्रसति नाशयतीत्यर्थः ।
गॄ + अलच् । गरात् भक्षणात् लाति आदत्ते
जीवनं वा । ला + कः ।) विषम् । इत्यमरः ।
१ । ८ । ९ ॥ (यथा, गीतगोविन्दे ४ । २ ।
"व्यालनिलयमिलनेन गरलमिव कलयति मलयसमीरम् ॥")
पन्नगविषम् । परिमाणम् । तृणपूलकम् । इति
हेमचन्द्रः ॥ घासेर गल्ला पुला आटि इत्यादि
भाषा ॥

**गरलारिः**, पुं, (गंरलस्य विषस्य अरिः तन्नाशक-
त्वात्तथात्वम् ।) मरकतमणिः । इति राज-
निर्घण्टः ॥

**गरा**, स्त्री, (गीर्य्यते भक्ष्यते औषधार्थं रोगि-
भिरिति शेषः । गॄ + कर्म्मण्यप् । ततोऽजादि-
त्वात् टाप् ।) देवदालीलता । इति राज-
निर्घण्टः ॥ निगरणम् । इति धरणी ॥

**गरागरी**, स्त्री, (गरं विषं आगिरति नाश-
यतीति । गरं मूषिकविषमित्येके । आ + गॄ
अच् । संज्ञायां जातौ वा ङीष् ।) देवताड-
वृक्षः । इत्यमरटीकायां स्वामी ॥ (यथास्याः
पर्य्यायाः ।
"गरागरी च वेणी च तथा स्याद्देवताडकः ।"
इति कल्पस्थाने द्वितीयेऽध्याये चरकेणोक्तम् ॥
गुणाश्चास्या जीमूतकशब्दे ज्ञातव्याः ॥)

**गरात्मकं**, क्ली, (गरः विषं आत्मा बीजभूतं
यस्य इति कप् ।) शोभाञ्जनबीजम् । इति
शब्दचन्द्रिका ॥

**गरुडः**, पुं, (गरुद्भ्यां पक्षाभ्यां डयते उड्डयते । इति
गरुत् + डी + डः । पृषोदरात् तलोपे साधुः ।
यद्वा, "गिर उडच् ।" उणां ४ । १५५ ।
इति उडच् ।) स्वनामख्यातपक्षी । तत्-
पर्य्यायः । गरुत्मान् २ तार्क्ष्यः ३ वैनतेयः ४
खगेश्वरः ५ नागान्तकः ६ विष्णु रथः ७ सुपर्णः ८
पन्नगाशनः ९ । इत्यमरः । २ । २ । ३२ ॥ महा-
वीरः १० पक्षिसिंहः ११ उरगाशनः १२ । इति
जटाधरः ॥ शाल्मली १३ हरिवाहनः १४
अमृताहरणः १५ नागाशनः १६ । इति हारा-
वली ॥ शाल्मलिस्थः १७ खगेन्द्रः १८ भुजगा-
न्तकः १९ तरस्वी २० तार्क्ष्यनायकः २१ । इति
राजनिर्घण्टः ॥ * ॥ तस्योत्पत्तिकारणं यथा, --
"यजतः पुत्त्रकामस्य कश्यपस्य प्रजापतेः ।
साहाय्यमृषयो देवा गन्धर्व्वाश्च ददुः किल ॥
तत्रेध्मानयने शक्रो नियुक्तः कश्यपेन ह ।
मुनयो वालिखिल्याश्च ये चान्ये देवतागणाः ॥
शक्रस्तु वीर्य्यसदृशमिष्मभारं गिरिप्रभम् ।
समुत्क्षिप्यानयामास नातिकृच्छ्रादिव प्रभुः ॥
अथापश्यदृषीन् ह्रस्वानङ्गुष्ठोदरवर्ष्मणः ।
पलाशवृन्तिकाम्कां सहितान् वहतः पथि ॥
तान् सर्व्वान् विस्मयाविष्टो वीर्य्योन्मत्तः पुरन्दरः ।
अवहस्याभ्ययाच्छीघ्रं लङ्घयित्वावमन्य च ॥
तेऽथ रोषसमाविष्टाः सुभृशं जातमन्यवः ।
आरेभिरे महत् कर्म्म तदा शत्रुभयङ्करम् ॥
महासत्वबलोपेतः सर्व्वा विद्योतयन्दिशः ।
कामरूपी कामगमः कामबीर्य्यो विहङ्गमः ॥
अग्निराशिरिवोद्भासन् समिद्धोऽतिभयङ्करः ।
विद्युद्विस्पष्टपिङ्गाक्षो युगान्ताग्निसमप्रभः ॥
प्रवृद्धः सहसा पक्षी महाकायो नभो गतः ।
घोरो घोरस्वनो रौद्रो वह्निरौर्व्व इवापरः ॥"
* ॥
तस्य विष्णुवाहनत्वे कारणं यथा, --
"अपीत्वा चामृतं पक्षी परिगृह्याशु निःसृतः ।
अगच्छदपरिश्रान्त आवार्य्यार्कप्रभां खगः ॥
विष्णुना तु तदाकाशे वैनतेयः समेयिवान् ।
तस्य नारायणस्तुष्टस्तेनालौल्येन कर्म्मणा ॥
तमुवाचाव्ययो देवो वरदोऽस्मीति खेचरम् ।
स वव्रे तव तिष्ठेयमुपरीत्यन्तरीक्षगः ॥
उवाच चैनं भूयोऽपि नारायणमिदं वचः ।
अजरश्चामरश्चास्याममृतेन विनाप्यहम् ।
एवमस्त्विति तं विष्णुरुवाच विनतासुतम् ॥
प्रतिगृह्य वरौ तौ तु गरुडो विष्णुमब्रवीत् ।
भवतेऽपि वरं दद्मि वृणोतु भगवानपि ॥
तं वव्रे वाहनं कृष्णो गरुत्मन्तं महाबलम् ।
ध्वजञ्च चक्रे भगवानुपरि स्थास्यतीति तम् ॥"
इति महाभारते । १ । ३१-३३ । अध्यायेषु ॥

| | कामवीर्य्यः कामगमो देवराजभयप्रदः।<br>इन्द्रोऽन्यो सर्व्वदेवानां भवेदिति यतव्रताः ॥ | |
|---|---|---|

(व्यूहविशेषः । यथा, मनुः । ७ । १८७ ।
"वराहमकराभ्यां वा सूच्या वा गरुडेन वा ॥"
"सूक्ष्ममुखपश्चाद्भागः पृथुमध्यो वराहव्यूहः । एष एवपृथुतरमध्यो गरुडव्यूहः ।" इति कुल्लूकभट्टः ॥)

**गरुडध्वजः**, पुं, (गरुडः ध्वजश्चिह्नं यस्य । यद्वा,
गरुडो ध्वजे रथध्वजे यस्य ।) विष्णुः । इत्य-
मरः । १ । १ । १९ ॥ (यथा, विष्णु पुराणे । ५ । १ । ३३ ।
"इत्युक्त्वा प्रययौ विप्र ! सहदेवैः पितामहः ।
समाहितमतिश्चैवं तुष्टाव गरुडध्वजम् ॥"
अस्य एतन्नामकारणकथा यथा, महाभारते ।
१ । ३३ । १२-१७ ।
"विष्णुना तु तदाकाशे वैनतेयः समेयिवान् ।
तस्य नारायणस्तुष्टस्तेनालौल्येन कर्म्मणा ॥
तमुवाचाव्ययो देवो वरदोऽस्मीति खेचरम् ।
स वव्रे तव तिष्ठेयमुपरीत्यन्तरीक्षगः ॥
उवाच चैनं भूयोऽपि नारायणमिदं वचः ।
अजरश्चामरश्च स्याममृतेन विनाप्यहम् ।
एवमस्त्विति तं विष्णु रुवाच विनतासुतम् ॥"
"ध्वजञ्च चक्रे भगवानुपरि स्थास्यतीति तम् ॥")

**गरुडाग्रजः**, पुं, (गरुडस्य अग्रजो ज्येष्ठः ।)
ऽसि गरुत्मान गरुत् गरणं गिलनं भक्ष अस्यास्तीति गरुत्मान् अशनायत्वानित्यर्थः ।"
इति वेददीधितिः ॥)

**गरुत्मान्**, [त्] पुं, (गरुतः पक्षाः सन्त्यस्य ।
गरुत् + मतुप् ।) गरुडः । इत्यमरः । १ । १ । ३१ ।
(यथा, भागवते । ३ । १९ । ११ ।
"जग्राह लीलया प्राप्तां गरुत्मानिव पन्नगीम् ॥")
पक्षिमात्रम् । इति मेदिनी । ते । १९६ ॥

**गरुद्योधी**, [न्] पुं, (गरुता पक्षेण युध्यतीति ।
युध् + णिनिः ।) भारतीपक्षी । इति त्रिकाण्ड-
शेषः ॥ भारै इति भाषा ॥

**गर्गः**, पुं, (गृणाति वेदध्वनिना शब्दायते स्तौति
इत्यर्थः । गॄ गि शब्दे + "मुदिग्रोर्गग्गौ ।" उणां ।
१ । १२७ । इति गः ।) मुनिविशेषः । स तु गया-
क्षेत्रे यज्ञार्थं सृष्टो ब्रह्मणः पुत्त्रः । इति वायु-
पुराणे गयामाहात्म्ये २ अध्यायः ॥ (बृहस्पति-
वंशसमुद्भवोऽन्यो मुनिभेदः । स तु वितथस्य
पुत्त्रः । यथा, हरिवंशे । ३२ । १५--२० ।
"बृहस्पतेरङ्गिरसः पुत्त्रो राजन्महामुनिः ।
संक्रामितो भरद्वाजो मरुद्भिः क्रतुभिर्व्विभुः ॥
अत्रैवोदाहरन्तीमं भरद्वाजस्य धीमतः ।
धर्म्मसंक्रमणञ्चापि मरुद्भिर्भरताय वै ॥
पात्रम् । इत्यमरः । २ । ९ । ७४ ॥ कलसी ।
गागरी इति भाषा ॥ यथा, तिथ्यादितत्त्वे ।
"मेषादौ सक्तवो देया वारिपूर्णा च गर्गरी ॥"

**गर्गाटः**, पुं, (गर्गेति शब्दं कृत्वा अटतीति । गर्ग +
अट् + पचाद्यच् । शकन्ध्वादिवदकारलोपः ।)
मत्स्यविशेषः । तत्पर्य्यायः । योगनाविकः २ ।
इति हारावली । १८६ ॥

**गर्ज्ज**, ऊर्ज्जाशब्दे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
अकं-सेट् ।) ऊर्ज्जा बलम् । सेमक्तात् सरोरिति
अः तत्करणकशब्दः । गर्ज्जति सिंहः । इति
दुर्गादासः ॥

**गर्ज्ज**, क स्वने । इति कविकल्पद्रुमः ॥ (चुरां-परं-
अकं-सेट् ।) क, गर्ज्जयति । इति दुर्गादासः ॥

**गर्ज्जं**, क्ली, (गर्ज्जनमिति । गर्ज्ज + भावे घञ् ।)
हस्तिशब्दः । इति देमचन्द्रः । ६ । ४१ ॥
मेघादिशब्दश्च ॥

**गर्ज्जकः**, पुं, (गर्ज्जतीति । गर्ज्ज + ण्वुल् ।) मत्स्य-
विशेषः । गजाड इति भाषा ॥ तत्पर्य्यायः ।
शालः । शालजः ३ । इति शब्दरत्नावली ॥
(शालशब्देऽस्य विवृतिर्ज्ञातव्या ॥)

**गर्ज्जनं**, क्ली, (गर्ज्ज + भावे ल्युट् ।) शब्दः ।
(गर्ज्यतेऽनेनेति । गर्ज्ज + करणे ल्युट् ।)
कोपः । इति मेदिनी । ने । ५६ ॥

**गर्ज्जरं**, क्ली, मूलविशेषः । गाजर इति भाषा ॥
तत्पर्य्यायः । पिण्डमूलम् २ पीतकन्दम् ३
सुमूलकम् ४ स्वादुमूलम् ५ सुपीतम् ६ नार-
ङ्गम् ७ पीतमूलकम् ८ । अस्य गुणाः । मधुर-
त्वम् । रुचिकारित्वम् । किञ्चित् कटुत्वम् ।
कफाध्मानक्रिमिशूलदाहपित्ततृष्णानाशित्वञ्च।
इति राजनिर्घण्टः ॥ तत्पर्य्यायगुणाः ।
"गाजरं गृञ्जनं प्रोक्तं तथा नारङ्गवर्णकम् ।
गाजरं मधुरं तीक्ष्णं तिक्तोष्णं दीपनं लघु ॥
संग्राहि रक्तपित्तार्शोग्रहणीकफवातजित्॥"
इति भावप्रकाशः ॥

**गर्ज्जाफलः**, पुं, (गर्ज्जा मर्म्मरध्वनिः फले यस्य ।

अरुणः । इत्यमरः । १ । ३ । ३२ ॥ (अस्य गरुडा-
ग्रजत्वकथा यथा, महाभारते । १ । ३१ । २४-३४ ।
"विनता नाम कल्याणी पुत्त्रकामा यशस्विनी ।
तपस्तप्ता व्रतपरा स्नाता पुंसवने शुचिः ॥
उपचक्राम भर्त्तारं तामुवाचाथ कश्यपः ।
आरम्भः सफलो देवि ! भवितायं तवेप्सितः ॥
जनयिष्यसि पुत्त्रौ द्वौ वीरौ त्रिभुवनेश्वरौ ।
तपसा बालिखिल्यानां मम सङ्कल्पजौ तथा ॥
भविष्यतो महाभागौ पुत्त्रौ त्रैलोक्यपूजितौ ।
उवाच चैनं भगवान् कश्यपः पुनरेव ह ॥
धार्य्यतामप्रमादेन गर्भोऽयं सुमहोदयः ।
एतौ सर्व्वपतत्त्रीणामिन्द्रत्वं कारयिष्यतः ॥"
"विनता चापि सिद्धार्था बभूव मुदिता तथा ।
जनयामास पुत्त्रौ द्वावरुणं गरुडं तथा ॥
विकलाङ्गोऽरुणस्तत्र भास्करस्य पुरःसरः ।
पतत्त्रीणाञ्च गरुड इन्द्रत्वेनाभ्यषिच्यत ॥")

**गरुडाङ्कितं**, क्ली, (गरुड इव अङ्कितम् । गरुड-
सादृश्यादस्य तथात्वम् ।) मरकतमणिः । इति शब्दरत्नावली ॥

**गरुडाश्मा**, [न्] पुं, (गरुडवर्णवत् अश्मा
प्रस्तरः । गरुडवर्णसादृश्यात् तथात्वम् ।) मर-
कतमणिः । इति जटाधरः ॥

अयाजयद्भरद्वाजो महद्भिः क्रतुभिर्हितम् ।
पूर्ब्बन्तु वितथे तस्य कृते वै पुत्त्रजन्मनि ॥
ततोऽथ वितथो नाम भरद्वाजात् सुतोऽभवत् ।
पौत्रेऽथ वितथे जाते भरतस्तु दिवं ययौ ॥
वितथञ्चाभिषिच्याथ भरद्वाजो वनं ययौ ।
स चापि वितथः पुत्त्रान् जनयामास पञ्च वै ॥
सुहोत्रञ्च सुहोतारं गयं गर्गन्तथैव च ॥"
अयं हि शिवमाराध्य चतुःषष्ट्यङ्गज्योतिषादि-
ज्ञानमलभत । यथा, महाभारते । १३ । १८ । ३८ ।
गर्ग उवाच ।
"चतुःचष्ट्यङ्गमददत् कलाज्ञानं ममाद्भुतम् ।
सरस्वत्यास्तटे तुष्टो (शिवः) मनोयज्ञेन पाण्डव ! ॥"
तथा, बृहत्संहितायाम् । २१ । ५ ।
"न तु तन्मतं बहूनां गर्गादीनांमतं वक्ष्ये ॥" * ॥)
तालविशेषः । यथा, सङ्गीतदामोदरे ।
"चतुर्द्रुतं विरामान्तं तालोऽयं गर्गसंज्ञितः ॥"

**गर्गरः**, पुं, (गृ गि शब्दे + भावे गः । गर्गं शब्दं
रातीति । रा + "आतोऽनुपसर्गे कः ।" ३ । २ । ३ ।
इति कः ।) मत्स्यभेदः । इति जटाधरः ॥
गागरा इति भाषा ॥ अस्य गुणाः । मधुरत्वम् ।
स्निग्धत्वम् । वातपित्तनाशित्वञ्च । इति राज-
वल्लभः ॥ अस्याकारगुणौ यथा, राजनिर्घण्टे ।
"यः पीतवर्णोऽपि च पिच्छिलाङ्गः

शुष्कपक्वफले शब्दबाहुल्यादस्य तथात्वम् ।)
विकण्टकवृक्षः । इति राजनिर्घण्टः ॥ (गर्ज्जा
गर्ज्जनमेव फलं यस्य ।) युद्धम् । इति हेम-
चन्द्रः ॥ भर्त्सनम् । उत्तेजनम् । इति शब्द-
रत्नावली ॥

**गर्ज्जिः**, पुं, (गर्ज्ज ऊर्ज्जाशब्दे + "सर्व्वधातुभ्य
इन् ।" उणां । ४ । ११७ । इति इन् ।) मेघ-
शब्दः । इति हेमचन्द्रः । ६ । ४२ ॥

**गर्ज्जितं**, क्ली, (गर्ज्ज + भावे क्तः ।) मेघशब्दः ।
इत्यमरः । १ । ३ । ८ ॥ (रणादौ आस्फा-
लनम् । यथा, हरिवंशे । १८२ । ४९ ।
"बाण ! किं गर्ज्जसे मोहात् शूराणां नास्ति गर्ज्जितम् ।
एह्येहि युध्यस्व रणे किं वृथा गर्ज्जितेन ते ॥")
कृतशब्दे त्रि ॥ (यदुक्तं स्मृतौ ।
"सन्ध्यायां गर्ज्जिते मेधे शास्त्रचिन्तां करोति यः ।
चत्वारि तस्य नश्यन्ति आयुर्विद्या यशो बलम् ॥")

**गरुडोत्तीर्णं**, क्ली, (गरुडादुत्तीर्णं वर्णेनेति शेषः ।

यद्वा, गरुड उत्तीर्णो वर्णेनातिक्रान्तो येन ।)

मरकतमणिः । इति राजनिर्घण्टः ॥

**गरुत्**, पुं, (गृणाति शब्दायते वायुवेगवशादिति ।

गॄ गि शब्दे + "मृग्रोरुतिः ।" उणां । १ । ९६ ।

इति उतिः ।) पक्षः । इत्यमरः । २ । ५ । ३६ ॥

पाखा इति भाषा ॥ (गिरतीति । गॄ निगरणे + उतिः । निगरणम् । भक्षणम् । यथा,

यजुर्व्वेदे । १७ । ७२ । "सुपर्णोऽसि गरुत्मान् पृष्ठे ।"

"अग्ने ! त्वं सुपर्णोऽसि

सुपर्णपक्ष्याकारो गरुडो-

पृष्ठेषु रेखा बहुलः सशल्कः ।

स गर्गरो वर्व्वरनादवश्यो

जडश्च शीतः कफवातकारी ॥"

"गर्गरः पित्तलः किञ्चित् वातजित् कफकोपनः ।"

इति भावप्रकाशः ॥

**गर्गरी**, स्त्री, (गर्गं शब्दं रातीति । रा + कः ।

गौरादित्वात् ङीष् ।) मन्थनी ।

दधिमन्थन-

**गजितः**, पुं, (गर्ज्जो गर्ज्जनं जातोऽस्य । जातार्थे
इतच् ।) मत्तहस्ती । इत्यमरः । २ । ८ । ३६ ॥

**गर्त्तः**, पुं, (गिरति ग्रसति स्वस्मिन् पतितं जीव-
जातादिकमित्यर्थः । गॄ निगरणे + "हसि-
मृग्रिण्वामिदमीति ।" उणां । ३ । ८६ ।
इति तन् ।) भुवि श्वभ्रम् । गाडा इति
भाषा ॥ तत्पर्य्यायः । अवटः २ । इत्यमरः ।
१ । ८ । २ ॥ भूरन्ध्रम् ३ दरः ४ श्वभ्रम् ५ ।
इति जटाधरः ॥ आवटिः ६ आवटुः ७ पृथिवी-
रन्ध्रम् ८ । इति शब्दरत्नावली ॥ (यथा, मार्क-
ण्डेये । २१ । ९ ।
"धरण्यां विवृते गर्त्ते निपपात लघुक्रमः ॥")
त्रिगर्त्तदेशः । कुकुन्दरः । इति मेदिनी । ते । १३ ॥
रोगभेदः । इति शब्दरत्नावली ॥ (मातृगर्भ-
रूपगह्वरम् । यथा, भागवते । ३ । ३१ । ५ ।
"शेते विण्मूर्त्तयोर्गर्त्ते स जन्तुर्जन्तुसम्भवे ॥"
कूषः । यथा, तत्रैव । ३ । १३ । ३४ ।
"यद्रोमगर्त्तेषु निलिल्युरध्वरा-
स्तस्मै नमः कारणशूकराय ते ॥"
नरकविशेषः । यथा, मार्कण्डेये । २१ । १० ।
"निपपात महागर्त्ते तिमिरौघसमावृते ॥"
अष्टधनुःसहस्रेभ्यो न्यूनगतिदेवखातभेदः ।
तत्पर्य्यायः । चक्रीवान् २ बालेयः ३ रासभः ४
खरः ५ । इत्यमरः । २ । ९ । ७७ ॥ राशभः ६ ।
इति तट्टीका ॥ शङ्कुकर्णः ७ भारगः ८ भूरि-
गमः ९ धूसराह्वयः १० वेशवः ११ धूसरः १२ ।
इति जटाधरः ॥ स्मरसूर्य्यः १३ चिरमेही १४
पशुचरिः १५ चारपुङ्खः १६ चारटः १७
ग्राम्याश्वः १८ । इति शब्दरत्नावली ॥ * ॥ अस्य
मांसस्य गुणः । किञ्चित् गुरुत्वं बलप्रदत्वञ्च ।
मूत्रस्य गुणाः । कटुत्वम् । उष्णत्वम् । तिक्त-
त्वम् । क्षारत्वम् । कफमहावातभूतकम्पोन्माद
हरत्वञ्च । इति राजनिर्घण्टः ॥ (तथा च ।
"गार्द्दभं वा घनं मूत्रं तैलयोग्यं क्वचिद्भवेत् ।
सक्षारं तिक्तकटुकमुन्मादकुष्ठरोगजित् ॥"
इति हारीते प्रथमे स्थाने नवमेऽध्याये ॥
"गरचेतोविकारघ्नं तीक्ष्णं ग्रहणिरोगनुत् ।
दीपनं गार्द्दभं मूत्रं कृमिवातकफापहम् ॥"
इति सुश्रुते सूत्रस्थाने ५४ अध्याये ॥)
तस्मात् गुणशिक्षा यथा, --
"अविश्रामं वहेद्भारं शीतोष्णञ्च न विन्दति ।
ससन्तोषस्तथा नित्यं त्रीणि शिक्षेत गर्द्दभात् ॥"
इति चाणक्यम् । ७० ॥

**गर्द्दभगदः**, पुं, (गद्यते पीड्यतेऽनेनागद + करणे अच् ।
गदो रोगः । गर्द्दभनामको गदः शाकपार्थिववत्
समासः ।) ज्वालागर्द्दभकरोगः । इति राज-
निर्घण्टः ॥ अस्य लक्षणं जालगर्द्दभशब्दे द्रष्टव्यम् ॥

**गर्द्दभशाकः**, पुं, (गर्द्दभाख्यः शाकः । यद्वा, गर्द्दभ-

**गर्द्दभिका**, स्त्री, (गर्द्दभः दुर्गन्धमयपिडकाभेदो
विद्यतेऽस्यामिति ठन् टाप् च ।) क्षुद्ररोग-
विशेषः । तल्लक्षणं यथा, --
"मण्डलं वृत्तमुत्सन्नं सरक्तं पिडकाचितम् ।
रुजाकरीं गर्द्दभिकां तां विद्यात् वातपित्तजाम् ॥"
तच्चिकित्सा यथा, --
"विवृत्तामिन्द्रवृद्धाञ्च गर्द्दभीं जालगर्द्दभम् ।
पैत्तिकस्य विसर्पस्य क्रियया साधयेद्भिषक् ॥
पाके तु शोषयेदाज्यैः पक्वैर्म्मधुरभेषजैः ॥"
इति भावप्रकाशः ॥

**गर्द्दभी**, स्त्री, (गर्द्दभस्य पत्नीति स्त्रियां जातौ
गौरादित्वाद्वा ङीष् ।) गर्द्दभपत्नी ।
("सहैव दशभिः पुत्रैर्भारं वहति गर्द्दभी ॥")
तस्याः क्षीरस्य गुणाः । बलकारित्वम् । वात-
श्वासहरत्वम् । मधुराम्लरसत्वम् । रूक्षत्वम् ।
दीपनत्वम् । पथ्यत्वञ्च । तद्दधिगुणाः । रूक्ष-
त्वम् । उष्णत्वम् । लघुत्वम् । दीपनत्वम् । पाच-
नत्वम् । मधुराम्लरसत्वम् । रुच्यत्वम् । वातदोष-
नाशित्वञ्च । तन्नवनीतगुणाः । कषायत्वम् । कफ-
वातनाशित्वम् । बल्यत्वम् । दीपनत्वम् । पाके
लघुत्वम् । उष्णत्वम् । मूत्रदोषकारित्वञ्च । इति
राजनिर्घण्टः ॥ क्षुद्रजन्तुविशेषः । गर्द्दभिका-
रोगः । इति मेदिनी । ने । १६ ॥ (अस्य लक्षणं
यथा, --
"सा विद्धा वातपित्ताभ्यां ताभ्यामेव च गर्द्दभी ।
मण्डला विपुलोत्सन्ना सरागपिटिकाचिता ॥"
इति वाभटे उत्तरस्थाने एकत्रिंशेऽध्याये ॥)
अपराजिता । श्वेतकण्टकारी । कटभी । इति
राजनिर्घण्टः ॥ (क्षुद्रकीटभेदः । यथाह सुशुतः ।
"पञ्चकीटो दुन्दुभिको मकरः शतपादकः ।
पञ्चालकः पाकमत्स्यः कृष्णतुण्डोऽथ गर्द्दभी ॥")

एतल्लक्षणं यथा, छन्दोगपरिशिष्टे ।
“धनुः सहस्राण्यष्टौ च गतिर्यासां न विद्यते ।
न ता नदीशब्दवहा गर्त्तास्ताः परिकीर्त्तिताः ॥”
अस्योदाहरणं यथा, मनौ । ४ । २०३ ।
“नदीषु देवखातेषु तडागेषु सरःसु च ।
स्नानं समाचरेन्नित्यं गर्त्तप्रस्रवणेषु च ॥”
गीर्य्यते स्तूयते वेदस्तुतिं कुर्व्वता जनेनेति । ग +
तन् गुणश्च । देवरथः । यथा, ऋग्वेदे । ५ । ६२ । ८ ।
“आरोहथो वरुण ! मित्र ! गर्त्तमतश्चाक्षाथे
अदितिं दितिं च ॥” “गर्त्तं रथम ॥” इति
भाष्यम् ॥)

**गर्त्तिका**, स्त्री, (गर्त्तोऽस्त्यस्याः इति ठन् ।)
तन्तुशाला । इति हेमचन्द्रः । ३ । ६५ ॥ ताँत्-
घर इति भाषा ॥

**गर्द्द**, कि रवे । इति कविकल्पद्रुमः ॥ (चुरां-
पक्षे-भ्वां-परं-अकं-सेट् ।) कि, गर्द्दयति गर्द्दति ।
रवः शब्दः । इति दुर्गादासः ॥

**गर्द्दभं**, क्ली, (गर्द्द्यते शब्द्यते विश्रूयते गन्धादिभि-
रिति यावत् । गर्द्द रवे । “कृशृशलिकलि-
गर्द्दिभ्योऽभच् ।” उणां । ३ । १२२ । इति अभच् ।)
श्वेतकुमुदम् । इति हेमचन्द्रः ॥ (यथा, वैद्यक-
रत्नमालायाम् ।
“कैरवं चन्द्रकान्तञ्च गर्द्दभं कुमुदं कुमुत् ॥”)
विडङ्गम् । इति रत्नमाला ॥

**गर्द्दभः**, पुं, (गर्द्दति गर्द्दयति वा कर्कशशब्दं करो-
प्रियः शाको यस्य ।) ब्रह्मयष्टिवृक्षः । इति
जटाधरः ॥

**गर्द्दभशाका**, स्त्री, (गर्द्दभशाक + टाप् ।) ब्रह्म-
यष्टिः । वामनहाटी इति भाषा ॥ इति रत्न-
माला ॥

**गर्द्दभशाखी**, स्त्री, (गर्द्दभाख्या शाखा यस्याः ।
यद्वा गर्द्दभप्रिया शाखा अस्याः जातौ संज्ञायां
वा ङीष् ।) भार्गी । इति राजनिर्घण्टः ॥

**गर्द्दभाण्डः**, पुं, (गर्द्दभं गन्धविशेषं अमति गच्छति
प्राप्नोतीत्यर्थः । अम गत्याम् + “ञमन्ताड्डः ।”
उणां । १ । ११३ । इति डप्रत्ययः ।) वृक्षविशेषः ।
गान्धिभाट इति ख्यातः । अयं पत्रकाण्ड-
फलादिभिरश्वत्थाकारः । गन्धपिप्पलः । इति
केचित् । इति भरतः ॥ गर्द्दपिप्पली । इति
ख्यातः । इति सारसुन्दरी ॥ तत्पर्य्यायः । कन्द-
रालः २ कपीतनः ३ सुपार्श्वकः ४ प्लक्षः ५ ।
इत्यमरः । ३ । ४ । ४२ ॥ शुङ्गी ६ प्लवः ७
कमण्डलुः ८ । इति जटाधरः ॥ गर्द्दभाण्डः ९
प्लक्षेशः १० कन्दरालकः ११ । इति शब्दरत्ना-
वली ॥ प्लक्षवृक्षः । इति राजनिर्घण्टः ॥ पाकुड
इति भाषा ॥ (कपीतनाश्वत्थशब्दयोरस्य विवृति-
र्ज्ञेया ॥)

**गर्द्दभाह्वयः**, पुं, (गर्द्दभेन गन्धेन आह्वयति स्पर्द्धते
इति । आ + ह्वे + अच् । यद्वा गर्द्दभः आह्वयः
आख्या अस्य ।) कुमुदम् । इति हेम-
चन्द्रः । ४ । २३० ॥

**गर्द्ध**, क लिप्से । इति कविकल्पद्रुमः ॥ (चुरां-परं-
सकं-सेट् ।) क, गर्द्धयति । इति दुर्गादासः ॥

**गर्द्धः**, पुं, (गद्ध्यर्ते इति । गर्द्ध + भावे घञ् ।) स्पृहा ।
इति हेमचन्द्रः । ३ । ९४ ॥ गर्द्दभाण्डवृक्षः ।
इति शब्दचन्द्रिका ॥

**गर्द्धनः**, त्रि, (गृध्यति स्पृहयतीति । गृध् + “जु-
चङ्क्रम्यदन्द्रम्यसृगृधीति ।” ३ । २ । १५० ।
इति युच् ।) लुब्धः । इत्यमरः । ३ । ९ । २२ ॥

**ग(र्व्व)र्ब्ब**, त् क ङ दर्पे । इति कविकल्पद्रुमः ॥
(अदन्त चुरां-आत्मं-अकं-सेट् ।) दर्पोऽहङ्कारः ।
ङ, गर्व्वयते गर्व्वापयते धनैर्नीचः । इति दुर्गा-
दासः ॥

**ग(र्व्व)र्ब्ब**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) गर्व्वति । इति दुर्गादासः ॥

**ग(र्व्व)र्ब्बः**, पुं, (गर्व्व + भावे अप् । यद्वा, गिरति
मदमिति । गॄ निगरणे + “कृगृशृदृभ्यो वः ।”
उणां । १ । १५५ । इति वः ।) अहङ्कारः ।
दर्पार्थादन्तगर्व्वधातोभर्विऽल्प्रत्ययः ॥ इति मुग्ध-
बोधम् ॥ (यथा, रामायणे । २ । ३१ । २० ।
“यदि दुःस्थो न रक्षेत भरतो राज्यमुत्तमम् ।
प्राप्य दुर्मनसा वीर ! गर्ब्बे(र्व्व)ण च विशेषतः ॥”)

| | | |
|---|---|---|
| तीत्यर्थः । गर्द्द कि रवे + “कशृशलिकलीति ।” उणां । ३ । १२२ । इति अभच् ।) पशुविशेषः । गाधा इति भाषा । (यथा, मनौ । ८ । २९८ । “गर्द्दभाजाविकानान्तु दण्डः स्यात् पञ्च माषिकः ॥”) | | |

**गर्भः**, पुं, (गीर्य्यते जीवसञ्चितकर्म्मफलदात्रा ईश्व-
रेण प्रकृतिबलात् जठरगह्वरे स्थाप्यते पुरुष-
शुक्रयोगेणासौ । गॄ + "अर्त्तिगृभ्यां भन् ।" उणां । ३ । १५२ । इति कर्म्मणि भन् ।) भ्रूणः । तद्विवरणं यथा, --
"स्वर्गाच्च नरकान्मुक्तः स्त्रीणां गर्भो भवत्यपि ।
नाभिभूतञ्च तस्यैव याति बीजद्वयं हि तत् ॥
कलनं बुद्बुदत्वञ्च ततः पेशीत्वमेव च ।
पेश्यापलसमोऽण्डः स्यादङ्कुरस्तत उच्यते ॥
अङ्गानामथ चोत्पत्तिः पञ्चानामतुलांशकात् ।
उपाङ्गान्यङ्गुलीनेत्रनासास्यश्रवणानि च ॥
प्ररोहं यान्ति चाङ्गेभ्यस्तद्वत्तेभ्यो नखादिकम् ।
त्वचो रोमाणि जायन्ते केशाश्चैव ततः परम् ॥
नरश्चाधोमुखः स्थित्वा दशमे च स जायते ।
ततस्तु वैष्णवी माया समाश्रयति मोहिनी ॥
बालत्वन्तु कुमारत्वं यौवनं वृद्धतामपि ।
ततश्च मरणं तत्तद्धर्म्ममाप्नोति मानवः ॥
एवं संसारचक्रेऽस्मिन् भ्राम्यते घटियन्त्रवत् ।"
इति गारुडे २२९ अध्यायः ॥
तस्य लक्षणं यथा, --
"गर्भाशयगतं शुक्रमार्त्तवं जीवसंज्ञकम् ।
प्रकृतिः सविकारा च तत् सर्व्वं गर्भसंज्ञकम् ॥
कालेन वर्द्धितो गर्भो यद्यङ्गोपाङ्गसंयुतः ।
भवेत्तदा स मुनिभिः शरीरीति निगद्यते ॥" * ॥
तदन्यप्रकृतिर्यथा, --
"यदा नार्य्यावुपेतायां वृषस्यन्तौ कथञ्चन ।
मुञ्चन्त्यौ शुक्रमन्योऽन्यमनस्थिस्तत्र जायते ॥
अन्तर्मृतगर्भलक्षणं यथा, --
"गर्भास्पन्दनमाधीनां प्रणाशः श्यावववर्णता ।
भवेदुच्छ्वासपूतित्वं शोथश्चान्तर्मृते शिशौ ॥"
इति माधवकरः ॥ * ॥
("कामान्मिथुनसंयोगे शुद्धशोणितशुक्रजः ।
गर्भः सञ्जायते नार्य्याः सञ्जातो बाल उच्यते ॥
आधिक्ये रजसः कन्या पुत्त्रः शुक्राधिके भवेत् ।
नपुंसकं समत्वेन यथेच्छा पारमेश्वरी ॥"
इति पूर्ब्बखण्डे चतुर्थेऽध्याये शार्ङ्गधरेणोक्तम् ॥
"शुद्धे शुक्रार्त्तवे सत्वः स्वकर्म्मक्लेशचोदितः ।
गर्भः सम्पद्यते युक्तिवशादग्निरिवारणौ ॥
बीजात्मकैर्म्महाभूतैः सूक्ष्मैः सत्त्वानुगैश्च सः ।
मातुश्चाहाररसजैः क्रमात् कुक्षौ विवर्द्धते ॥
तेजो यथार्करश्मीनां स्फटिकेन तिरस्कृतम् ।
नेन्धनं दृश्यते गच्छत् सत्वो गर्भाशयं तथा ॥
कारणानुविधायित्वात् कार्य्याणां तत्स्वभावता ।
नानायोन्याकृतीः सत्वो धत्तेऽतो द्रुतलोहवत् ॥
अतएव च शुक्रस्य बाहुल्याज्जायते पुमान् ।
रक्तस्य स्त्री तयोः साम्ये क्लीवः शुक्रार्त्तवे पुनः ॥
वायुना बहुशो भिन्ने यथास्वं बह्वपत्यता ।
भगोऽथ मित्रावरुणौ वीरं ददतु मे सुतम् ॥
सान्त्वयित्वा ततोऽन्योन्यं संविशेतां मुदा-न्वितौ ।
उत्ताना तन्मना योषित् तिष्ठेदङ्गैः सुसंस्थितैः ॥
तथाहि बीजं गृह्णाति दोषैः स्वस्थानमास्थितैः ।
लिङ्गन्तु सद्यो गर्भाया योन्यां बीजस्य संग्रहः ॥
तृप्तिर्गुरुत्वं स्फुरणं शुक्रास्रानानुबन्धनम् ।
हृदयस्पन्दनं तन्त्रा तृड्ग्लानिर्लोमहर्षणम् ॥
अव्यक्तः प्रथमे मासि सप्ताहात् कलली भवेत् ।
गर्भः पुंसवनान्यत्र पूर्ब्बं व्यक्तेः प्रयोजयेत् ॥
बली पुरुषकारो हि दैवमप्यतिवर्त्तते ।
पुष्ये पुरुषकं हैमं राजतं वाथ वायसम् ॥
कृत्वाग्निवर्णं निर्व्वाप्य क्षीरे तस्याञ्जलिं पिबेत् ।
गोरदण्डमपामार्गं जीवकर्षभसैर्य्यकान् ॥
पिबेत् पुष्ये जले पिष्टान् एकद्वित्रिसमस्तशः ।
क्षीरेण श्वेतबृहतीमूलं नासापुटे स्वयम् ॥
पुत्रार्थं दक्षिणे सिञ्चेत् वामे दुहितृवाञ्छया ।
पयसा लक्ष्मणमूलं पुत्त्रोत्पादस्थितिप्रदम् ॥
नासयास्येन वा पीतं वटशृङ्गाष्टकन्तथा ।
ओषधीर्जीवनीयाश्च बाह्यान्तरुपयोजयेत् ॥
उपचारः प्रियहितैर्भर्त्रा भृत्यैश्च गर्भधृक् ।
नवनीतघृतक्षीरैः सदा चैनामुपाचरेत् ॥
अतिव्यवायमायासं भारं प्रावरणं गुरु ।
अकालजागरस्वप्नकठिनोत्कटकासनम् ॥
शोकक्रोधभयोद्वेगवेगाश्रद्धाविधारणम् ।
उपवासाध्वतीक्ष्णोष्णगुरुविष्टम्भिभोजनम् ॥
रक्तं निरसनं श्वभ्रकूपेक्षां मद्यमामिषम् ।
उत्तानशयनं यच्च स्त्रियो नेच्छन्ति तत् त्यजेत् ॥
तथा रक्तस्रुतिं शुद्धिं वस्तिमामासतोऽष्टमात् ।
एभिर्गर्भः स्रवेदामः कुक्षौ शुष्येत् म्रियेत वा ॥
वातलैश्च भवेद्गर्भः कुब्जान्धजडवामनः ।
पित्तलैः खलतिः पिङ्गः श्वित्री पाण्डुः कफा-त्मभिः ॥
व्याधींश्चास्या मृदुसुखैरतीक्ष्णैरौषधैर्जयेत् ।
द्वितीये मासि कललाद्घनः पेश्यथवार्व्वुदम् ॥
पुंस्त्रीक्लीवाः क्रमात्तेभ्यस्तत्र व्यक्तस्य लक्षणम् ।
व्यक्तीभवति मासेऽस्य तृतीये गात्रपञ्चकम् ॥

ऋतुस्नाता तु या नारी स्वप्ने मैथुनमाचरेत्
।
आर्त्तवं वायुरादाय कुक्षौ गर्भं करोति हि ॥
मासि मासि प्रवर्द्धेत स गर्भो गर्मलक्षणः ।
करणं जायते तस्या वर्जितं पैतृकैर्गुणैः ॥”
इति भावप्रकाशः ॥ * ॥
अस्य द्वादशधा गतिर्यथा, --
“भुग्नोऽनिलेन विगुणेन ततः स गर्भः
संख्यामतीत्य बहुधा समुपैति योनिम् ।
द्वारं निरुध्य शिरसा जठरेण कश्चित्
कश्चिच्छरीरपरिवर्त्तितकुब्जदेहः ॥
एकेनं कश्चिदपरन्तु भुजद्वयेन
तिर्य्यग्गतो भवति कश्चिदवाङ्मुखोऽन्यः ।
“पार्श्वापवृत्तगतिरेति तथैव कश्चि-
दित्यष्टधा गतिरियं ह्यपरा चतुर्द्धा ॥
सङ्कीलकः प्रतिखुरः परिघोऽथ बीज-
स्तेषूद्ध्र्वबाहुचरणैः शिरसा च योनौ ।
सङ्गी च यो भवति कीलकवत् सकीलो
दृश्यैः खुरैः प्रतिखुरः स हि कायसङ्गी ॥
ग च्छेद्भुजद्वयशिराः स च बीजकाख्यो
योनौ स्थितः सपरिघः परिघेण तुल्यः ॥”
* ॥
गर्भनाशलक्षणादि ।
“अपविद्धशिरा या तु शीताङ्गां निरपत्रपा ।
नीलोद्गतशिरा हन्ति सा गर्भं स च तां
तथा ॥
मानसागन्तुभिर्मातुरुपतापैः प्रपीडितः ।
गर्भो व्यापद्यते कुक्षौ व्याधिभिश्च प्रपीडितः
॥” * ॥

वियोनिविकृताकारा जायन्ते
विकृतैर्मलैः ॥”
“पूर्णषोडशवर्षा स्त्री पूर्णविंशेन
सङ्गता ।
शुद्धे गर्भाशये मार्गे रक्ते शुक्रेऽनिले
हृदि ॥
बीर्य्यवन्तं सुतं सूते ततो न्यूनाब्दयोः
पुनः ।
रोग्यल्पायुरधन्यो वा गर्भो भवति नैव
वा ॥”
“शुद्धशुक्रार्त्तवं स्वच्छं सरक्तं मिथुनं
मिथः ।
स्नेहैः पुंसवनैः स्निग्धं
शुद्धशीलितवस्तिकम्॥
नरं विशेषात्
क्षीराज्यैर्मधुरौषधसंस्कृतः ।
नारीं तैलेन माषैश्च पित्तलैः
समुपाचरेत् ॥”
“मासेनोपचितं रक्तं धमनीभ्यामृतौ
पुनः ।
ईषत् कृष्णं विगन्धञ्च
वायुयोनिमुखान्नुदेत् ॥
ततः पुष्पे क्षणादेव
कल्याणध्यायिनीत्र्यहम्।
मृजालङ्काररहिता दर्भसंस्तरशायिनी
॥
क्षैरेययावकं स्तोकं
कोष्ठशोधनकर्षणम् ।
पर्णे शरावे हस्ते वा
भुञ्जीतब्रह्मचारिणी ।
चतुर्थेऽह्नि ततः स्नात्वा
शुक्लमाल्याम्बरा शुचिः ॥
इच्छन्ती भर्त्तृसदृशं पुत्त्रं पश्येत् पुरः
पतिम् ।
ऋतुस्तु द्वादशनिशाः पूर्ब्बास्तिस्रश्च
निन्दिताः ॥
एकादशी च युग्मासु स्यात्
पुत्त्रोऽन्यासु कन्यका ।
उपाध्यायोऽथ पुत्त्रीयं कुर्व्वीत
विधिवद्विधिम् ॥
नमस्कारपरायास्तु शूद्राया
मन्त्रवर्ज्जितम् ।

मूर्द्धा द्वे सक्थिनी बाहू सर्व्वसूक्ष्माङ्गजन्म च ।
सममेव हि मूर्द्धाद्यैर्ज्ञानञ्च सुखदुःखयोः ॥
गर्भस्य नाभौ मातुश्च हृदि नाडी निबध्यते ।
यया स पुष्टिमाप्नोति केदार इव कुल्यया ॥
चतुर्थे व्यक्तताङ्गानाञ्चेतनायाश्चपञ्चमे ।
षष्ठे स्नायुशिरारोम-बल-वर्ण-नख-त्वचाम् ॥
सर्व्वैः सर्व्वाङ्गसम्पूर्णो भावैः पुष्यति सप्तमे ।
गर्भेणोत्पीडिता दोषास्तस्मिन् हृदयमाश्रिताः ॥
कण्डूं विदाहं कुर्व्वन्ति गर्भिण्याः किक्किसानि
च ।
नवनीतं हितन्तत्र कोलाम्बुमधुरौषधः ॥
सिद्धमल्पपटुस्नेहं लघुखादु च भोजनम् ॥
चन्दनोशीरकल्केन लिम्पेदूरुस्तनोदरम् ।
ओजोऽष्टमे सञ्चरति माता पुत्त्रौ मुहुः क्रमात् ॥
तेन तौ म्लानमुदितौ तत्र जातो न जीवति ।
शिशुरोजोऽनवस्थानात्नारीसशयिता भवेत् ॥

| | | |
|---|---|---|
| | अबन्ध्य एवं संयोगः स्यादपत्यञ्च कामतः ॥<br>सन्तोऽप्याहुरपत्यार्थं दम्पत्योः सङ्गतं रहः ।<br>दुरपत्यं कुलाङ्गारो गोत्रे जातं महत्यपि ॥<br>इच्छेतां यादृशं पुत्त्रं तद्रूपचरितांश्च तौ ।<br>त्तिन्तयेतां<br>जनपदांस्तदाचारपरिच्छदौ॥<br>कर्म्मान्ते च पुमान् सर्पिः क्षीरशाल्योदनाशितः।<br>तैलमाषोत्तराहारा तत्र मन्त्रं प्रयोजयेत् ॥<br>अहिरसि आयुरसि सर्व्वतः प्रतिष्ठासि धाता<br>त्वाम् ।<br>दधातु विधाता त्वां दधातु ब्रह्मवर्च्चसा भवेति ॥<br>ब्रह्मा बृहस्पतिर्विष्णुः सोमः सूर्य्यस्तथाश्विनौ । | |

क्षीरपेया च पेयात्र सघृतान्वासनं घृतम् ।
मधुरैः साधितं शुद्ध्यै पुराणशकृतस्तथा ॥
शुष्कमूलककोलाम्लकषायेण प्रशस्यते ।
शताह्वकल्कितो वस्तिः स तैलघृतसैन्धवः ॥
तस्मिंस्त्वेकाहयातेऽपि कालः सूतेरतः परम्
।
वर्षाद्विकारकारी स्यात् कुक्षौ वातेन धारितः
॥
शस्तश्च नवमे मासि स्निग्धो मांसरसौदनः ।
बहुस्नेहा यवार्गूवा पूर्ब्बोक्तञ्चानुवासनम् ॥
तत एव पिचुञ्चास्या योनौ नित्यं निधापयेत् ।
वातघ्नपत्रभङ्गाम्भः शीतं स्नानेऽन्वहं हितम्
॥
निःस्नेहाङ्गी न नवम्रान्मासात् प्रभृति वासयेत्
।
प्राग्दक्षिणस्तनस्तन्या पूर्ब्बं तत् पार्श्वचेष्टिनी
॥
पुन्नामदोहदप्रश्नरता पुंस्वप्रदर्शिनी ।
उन्नते दक्षिणे कुक्षौ गर्भे च परिमण्डले ॥
पुत्रं सूतेऽन्यथा कन्यां या चेच्छति
नृसङ्गतिम् ।
नृत्यवादित्रगान्धर्व्व-गन्धमाल्यप्रिया च या ॥
क्लीवं तत् सङ्करे तत्र मध्यं कुक्षेः समुन्नतम् ।
यमौ पार्श्वद्वयोन्नामात् कुक्षौ द्रोण्यामिव स्थिते
॥
प्राक् चैव नवमान्मासात् सूतिका गृहमाश्रयेत्
।
देशे प्रशस्ते सम्भारैः सम्पन्नं साधकेऽहनि ॥
तत्रोदीक्षेत सा सूतिं सूतिका परिवारिता ।
अद्य श्वः प्रसवे ग्लानिः
कुक्ष्यक्षिश्लथताक्लमः ॥
अधो गुरुत्वमरुचिः प्रसेको बहुमूत्रता ।
वेदनोरूदरकटीपृष्ठहृद्वस्तिवंक्षणे ॥
योनिभेदरुजातोदस्फुरणस्रवणानि च ।
आवीनामनुजन्मातस्ततोगर्भोदकस्रुतिः ॥
अथोपस्थितगर्भां तां कृतकौतुकमङ्गलाम् ।
हस्तस्थपुन्नामफलां
स्वभ्यक्तोष्णाम्बुसेचिताम् ॥
पाययेत् सघृतां पेयां तनौ भूशयने स्थिताम् ।

शतपुष्पा वचाकुष्ठकणासर्षपकल्कितः ॥
निरूहः पातयत्याशु सस्नेहलवणोऽपराम् ।
तत्सङ्गे ह्यनिलो हेतुः सा निर्य्यात्याशु
तज्जयात् ।
कुशला पाणिनाक्तेन हरेत्कृप्तनखेन वा ।
मुक्तगर्भा परां योनिं तैलेनाङ्गञ्च मर्द्दयेत् ॥
मकल्लाख्ये शिरोवस्ति कोष्ठशूले तु पाययेत् ।
सचूर्णितं यवक्षारं घृतेनोष्णजलेन वा ॥
धान्याम्बु वा गुडव्योषत्रिजातकरजोऽन्वितम्
॥”
इति वाभटे शरीरस्थाने प्रथमोऽध्यायः ॥ * ॥
अथ गर्भोपचारः ।
आत्रेय उवाच ।
“प्रथमे मासि मधुकं मधुपुष्पाणि चैवहि ।
नवनीतेन पयसा मधुरं पाययेच्च सा ॥
द्वितीये मासि काकोली मधुरं पाययेत्तथा ।
तृतीये कृशरं श्रेष्ठं चतुर्थे च कृतौदनम् ॥
पञ्चमे पायसं दद्यात् षष्ठे च मधुरं दधि ।
सप्तमे घृतखण्डेन चाष्टमे घृतपूरकम् ॥
नवमे विविधान्नानि दशमे दोहदन्तथा ।
मासे तृतीये सम्प्राप्ते दोहदं भवति स्त्रियाः ॥
यद्यत् कामयते सा च तत्तद्दद्याद्भिषग्वरः ।
वर्ज्जयेद्द्विदलान्नानि विदाहीनि गुरूणि च ॥
अम्लानि सोष्णक्षीराणि गुर्व्विणीनां विवर्ज्जयेत्
।
मृत्तिका भक्षणीया न न च शूरणकन्दकाः ॥
रसोनश्च पलाण्डुश्च सन्त्यक्तो गुर्व्विणीस्त्रिया
।
शूरणानि प्रदेयानि गौल्यानि सरसानि च ॥
पथ्ये हितानि चैतानि गुर्व्विणीनां सदा भिषक् ।
व्यायामं मैथुनं रोषं शौर्य्यञ्चक्रमणन्तथा ॥
वर्ज्जयेद्गुर्व्विणीनाञ्च जायन्ते सुखसम्पदः ॥
अथोपपन्नं विहितमपि स्वकीयाचारेण पञ्च-
मासिकमष्टमासिकं वा । ब्राह्मणमङ्गलादिभि-
र्गोत्रभोजनमपि कर्त्तव्यम् । दोहदादिषु परि-
पूर्णेषु रूपवान् शूरः पण्डितः शीलवान् पुत्त्रो
जायते ॥” इति महर्ष्यात्रियभाषिते हारीतोत्तरे
तृतीयस्थाने गर्भोपचारो नाम अष्टचत्त्वारिंशो
ऽध्यायः ॥ * ॥

सह दुग्धेन पीतवतीनाञ्चलिते गर्भे
स्त्रीणां
सुखं सम्पद्यते ।” इति
महर्ष्यात्रियभाषिते
हारीतोत्तरे तृतीये स्थाने
चलितगर्भचिकित्सा
नामोनपञ्चाशत्तमोऽध्यायः ॥ * ॥
“नरो धातुबलेनापि जीवितश्चात्र
दृश्यते ।
तस्माच्च मैथुनात् सम्यग्जायते
गर्भसम्भवः ॥
हारीत उवाच ।
संयोगेन विना प्राज्ञ ! कथं गर्भो न
जायते ।
संयोगेन विना पुष्पं फलं वा न कथं
भवेत् ॥
वृक्षवन्न कथं स्त्रीणां फलोत्पत्तिः
प्रदृश्यते ।
एतत् पृष्टो महाचार्य्यः प्रोवाच
ऋषिपुङ्गवः ॥
आत्रेय उवाच ।
विरुद्धानाञ्च वल्लीनां स्थावराणाञ्च
पुत्त्रक ! ।
तत्र धातुसमं बीजं सह योगेन वर्त्तते
॥
न भिन्नदृष्टिस्तस्येव दृश्यते शृणु
पुत्त्रक ! ।
स्थावराणाञ्च सर्व्वेषां शिवशक्तिमयं
विदुः ॥
निश्चलोऽपि शिवो ज्ञेयो
वाप्तिशक्तिर्म्महामते ! ।
तत्र स्त्रीपूरुषगुणा वर्त्तन्ते
समयोगतः ॥
आम्रपुष्पं फलं तद्वत् बीजं शुक्रमयं
विदुः ।
स्त्रीणां रजोमयं रेतो
बीजाढ्यमिन्द्रियं नरे ॥
तस्मात् संयोगतः पुत्त्रो जायते
गर्भसम्भवः ।

आभुग्नसक्थिमु त्तानामभ्यक्ताङ्गीं पुनः पुनः ॥
अधोनाभेर्विमृद्नीयात् कारयेज्जृम्भचंक्रमम् ।
गर्भः प्रयात्यवागेवन्तल्लिङ्गं हृद्विमोक्षतः ॥
आविश्य जठरं गर्भो वस्तेरुपरि तिष्ठति ।
आव्यो हि त्वरयन्त्येनां खट्वामारोपयेत्ततः ॥
अथ सम्पीडिते गर्भे योनिमस्याः प्रसाधयेत् ।
मृदुपूर्ब्बं प्रवाहेत वाढमाप्रसवाच्च सा ॥
हर्षयेत्तां मुहुः पुत्त्रजन्मशब्दजलानिलैः ।
प्रत्यायान्ति तथाप्राणाः
सूतिक्लेशावसादिताः ॥
घूपयेद्गर्भसङ्गे तु योनिं कृष्णाहिकञ्चुकैः ।
हिरण्यपुष्पीमूलञ्च पाणिपादेन धारयेत् ॥
सुवर्च्चलां विशल्य वा जराय्वपतनेऽपि च ।
कर्य्यिमेतत् तथोत्क्षिप्य बाह्वोरेनां विकम्पयेत्
॥
कटीमाकोटयेत् पार्ष्ण्या स्फिचौ गाढं निपी-
डयेत् ।
तालुकण्ठं स्पृशेद्वेण्या मूद्ध्र्नि दद्यात्
स्नुहीपयः ॥
भूर्ज्जलाङ्गलिकीतुम्बी सर्पत्वक्कुष्ठसर्षपैः ।
पृथग् द्वाभ्यां समस्तैर्वा योनिलेपनधूपनम् ॥
कुष्ठतालीशकल्कं वा सुरामण्डेन पाययेत् ।
यूषेण वा कुलत्थानां विल्वजेनासवेन वा ॥
शताह्वासर्षपाजाजीशिग्रुतीक्ष्णकचित्रकैः ।
सहिङ्गुकुष्ठमदनैर्मूत्रे क्षीरे च सार्षपम् ॥
तैलं सिद्धं हितं पायौ योन्यां वाप्यनुवासनम् ।

अथ चलितगर्भत्तिकित्सा ।
आत्रेय उवाच ।
“प्रथमे मासि गर्भस्य चलनं दृश्यते यदि ।
तदा मधुकमृद्वीका चन्दनं रक्तचन्दनम् ॥
पयसा लोडितं पीतं तेन गर्भः स्थिरो भवेत् ।
द्वितीये मासि चलिते मृणाले नागकेशरम् ॥
तृतीये मासि गर्भस्य चलनं दृश्यते यदा ।
तदा मूषककीट्टन्तु शर्करां पयसा पिबेत् ॥
चतुर्थे मासि दाहश्च पिपासा शूलमेव च ॥
ज्वरेण स्त्रीणां यदि गर्भश्चलते तदोशीरचन्दन-
नागकेशरधातकीकुसुमशर्कराघृतमधुदधि
पाय-
येत् । पञ्चमे मासे चलिते गर्भे दाडिमी-
पत्राणि चन्दनं दधि मधु च पाययेत् । षष्ठे-
मासि गैरिकं कृष्णमृत्तिकां गोमयभस्म उदकं
परिस्रुतं शीतलं चन्दनं शर्करया सह पिबेत् ।
सप्तमे मासि गोक्षुरसमङ्गापद्मकघनमुशीरंमधुरं
पाययेत् । अष्टमे मासि रोध्रं मधुमागधिकाञ्च

प्रथमेऽहनि रेतश्च संयोगात्
कललञ्च यत् ॥
जायते बुद्बुदाकारं शोणितञ्च
दशाहनि ।
घनं पञ्चदशाहे स्यात् विंशाहे
मांसपिण्डकम् ॥
मासैकेन च पिण्डस्य पञ्च तत्त्वं
प्रजायते ।
पञ्चाशद्दिवसे प्राप्ते अङ्कुराणाञ्च
सम्भवः ॥
मासत्रये तु सम्प्राप्ते हस्तपादौ
प्रवर्त्तितौ ।
सार्द्ध मासत्रये प्राप्ते शिरश्च
सारवद्भवेत् ॥
चतुर्थके च लोमानां सम्भवश्चात्र
दृश्यते ।
पञ्चमे च सुजीवः स्यात् षष्ठे
प्रस्फुरणं भवेत् ॥
अष्टमे मासि याते च अग्नियोगः
प्रवर्त्तते ।
मासे तु नवमे प्राप्ते जायते तस्य
चेष्टितम् ॥
जायते तस्य वैराग्यं गर्भवासस्य
कारणात् ।
दशमे च प्रसूयेत तथैकादशमासि
वा ॥
अथ दोषबलेनापि गर्भो वापि
प्रसूयते ।
वातसंप्रेरिते गर्भे अपूर्णे दिवसे यदि
॥
प्रसूतये वाप्यथ तद्गर्भे बालः
प्रदृश्यते ॥”
इति हारीते शारीरस्थाने
प्रथमोऽध्यायः ॥ * ॥)
शिशुः । (गीर्य्यते निगीर्य्यते
निःक्षिप्यते वीर्य्य योनि-
रन्ध्रेणास्मिन् । गिरति सिञ्चति
निषेकं करोति
रेतोऽत्र वा । गॄ गॄ वा + भन् ।)
कुक्षिः । (यथा,
महाभारते । १४ । १८ । ९ ।

| | | |
|---|---|---|
| | | "यथा लोहस्य निस्यन्दो निषिक्तो विम्बविग्रहम् ।<br>उपैति तद्विजानीहि गर्भे जीवप्रवेशनम् ॥")<br>सन्धिः । पनसकण्टकम् । इति मेदिनी ॥ भे । ३ ॥<br>मध्यम् । (यथा, आर्य्यासप्तशत्याम् । १७६ ।<br>"केतकगर्भे गन्धादरेण दूरादमी द्रुतमुपेताः ॥")<br>अपवरकः । इति हेमचन्द्रः ॥<br>गङ्गादिसन्निहित-देशः । यथा, --<br>"भाद्रकृष्णचतुर्द्दश्यां यावदाक्रमते जलम् ।<br>तावद्गर्भं विजानीयात् तदूर्द्ध्वं तीरमुच्यते ॥"<br>इति प्रायश्चित्ततत्त्वम् ॥ |

(आभ्यन्तरिकवस्तुमात्रम्। यथा, गोः
रामा-
यणे । ४ । २७ । ३ ।
"अष्टमासधृतं गर्भं भास्करस्य
गभस्तिभिः ।
रसं सर्व्वसमुद्राणां द्यौः प्रसूते
रसायनम् ॥")

**गर्भकं**, क्ली, (गर्भ + संज्ञायां कन् । यद्वा चन्द्रस्य
गर्भद्वयमिव कायतीति । कै + कः ।)
रजनीद्वन्द्वम्।
इति हेमचन्द्रः । २ । ५८ ॥ दुइ रात्रि
इति भाषा ॥

**गर्भकः**, पुं, (गर्भे केशगर्भे केशमध्ये इति यावत्
कायते प्रकाशते शोभते इत्यर्थः ।
यद्वा गर्भ इव
प्रतिकृतिः । "इवे प्रतिकृतौ ।" ५ ।
३ । ९६ ।
इति कन् ।) केशमध्यस्थितमाल्यम्।
इत्यमरः ।
२ । ७ । १३५ । खोपार माला इति
भाषा ॥

**गर्भकरः**, पुं, (गर्भं करोति गर्भदोषं निवारयति
व्यवहारयोगेन इति । कृ + टः ।)
पुत्त्रजीव-
वृक्षः । इति भावप्रकाशः ॥

**गर्भघातिनी**, स्त्री, (गर्भं घातयति स्रावयतीति ।
हन् + णिच् + णिनिः ङीप् च ।)
लाङ्गलिका-
वृक्षः । इति रत्नमाला ॥

**गर्भण्डः**, पुं, (गर्भस्य अण्ड इव । शकन्धादि-
त्वात् अकारलोपे साधुः ।)
नाभिगुडकः । इति
त्रिकाण्डशेषः ॥ नाभिर गाँड इति
भाषा ॥

**गर्भदः**, पुं, (गर्भं ददाति उत्पादयति व्यव-

**गर्भपातनी**, स्त्री, (गर्भपातन + संज्ञायां ङीष् ।
गौरादित्वादित्येके ।) कलिकारीवृक्षः ।
इति
राजनिर्घण्टः ॥

**गर्भपातिनी**, स्त्री, (गर्भं पातयतीति । पत् + णिच्
+ णिनिः । स्त्रियां ङीप् ।) विशल्यावृक्षः ।
इति
जटाधरः ॥

**गर्भरूपः**, त्रि, (गर्भे देहकोषे रूपं लावण्या-
दिकं यस्य । यद्वा गीर्य्यते निगीर्य्यते
प्रका-
श्यते रूपं यस्मात् । तारुण्यप्रभावादिति
यावत् ।) तरुणः । इति भूरिप्रयोगः ॥

**गर्भवती**, स्त्री, (गर्भो विद्यतेऽस्याः अस्यां वा ।
अस्त्यर्थे मतुप् । मस्य वत्वम् ।)
अन्तरापत्या ।
(यथा, भहाभारते । ३ । १३४ । १७ ।
"दशैव मासान् बिभ्रति गर्भवत्यः ।
दशैरका दशदाशा दशार्हाः ॥")
तत्पर्य्यायः । अन्तर्व्वत्नी २ गुर्व्विणी ३
गर्भिणी ४
ससत्त्वा ५ आपन्नसत्त्वा ६ दोहदवती ७ ।
इति शब्दरत्नावली ॥ उदरिणी ८ गुर्व्वी
९ ।
इति हेमचन्द्रः । ३ । २०२ ॥ अथ
सद्योगृहीत-
गर्भाया लक्षणम् । यथा, --
"शुक्रशोणितयोर्य्योन्निरस्रावोऽथ श्रमोद्भवः
॥
सावसादः पिपासा च ग्लानिः स्फुर्त्तिर्भगे
भवेत् ॥"
तस्या उत्तरोत्तरकालीनलक्षणम्। यथा,
--
"स्तनयोर्मुखकार्ष्ण्यं स्यात्
रोमराज्युद्गमस्तथा ।
अक्षिपक्ष्माणि चाप्यस्याः संमील्यन्ते
विशेषतः ॥

यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां
गतो वा ॥")

**गर्भस्रावः**, पुं, (गर्भस्य स्रावश्च्युतिः पात इत्यर्थः ।)
गर्भपातः । त्तुर्थमासपर्य्यन्तं शोणितरूप-
गर्भस्य स्रवणम् । पेटखसा इति भाषा ॥ तस्या-
शौचं यथा, --
"यदि गर्भो विपद्येत स्रवते वापि योषितः ।
यावन्मासान् स्थितो गर्भस्तावद्दिनानि सूतकम्
॥"
इति गारुडे १०७ अध्यायः ॥
"रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यति ।"
इति मनुः । ५ । ६६ ॥ * ॥
"अर्व्वाक् षण्मासतः स्त्रीणां यदि स्यात् गर्भ-
संस्रवः ।
तदा माससमैस्तासामशौचं दिवसैः स्मृतम् ॥
अत ऊर्द्ध्वन्तु पतने स्त्रीणां स्याद्दशरात्रकम्।
सद्यःशौचं सपिण्डानां गर्भस्रावाच्च वा ततः ॥"
इति कूर्म्मपूराणम् ॥ * ॥
("अन्तराजन्ममरणे शेषाहोभिर्विशुध्यति ।
गर्भस्रावे मासतुल्या निशाः शुद्धेस्तु कारणम् ॥"
इति याज्ञकल्क्यः । ३ । २० ॥)
अन्यत् अशौचशब्दे द्रष्टव्यम् ॥ * ॥ * ॥
अथ गर्भस्रावनिदानलक्षणे।
"भयाभिघाततीक्ष्णोष्णपानाशननिषेवणात् ।
गर्भे पतति रक्तस्य सशूलं दर्शनं भवेत् ॥
आ चतुर्थात् ततो मासात् प्रस्रवेद्गर्भविद्रवः ।
ततः स्थिरशरीरस्य पातः पञ्चमषष्ठयोः ॥
गर्भोऽभि वातविषमाशनपीडनाद्यैः
पक्वं द्रुमादिव फलं पतति क्षणेन ।
मूढः करोति पवनः खलु मूढगर्भं
शूलञ्च योनिजठरादिषु मूत्रसङ्गम् ॥"
इति माधवकरः ॥
अथ गर्भस्रावपातयोर्न्निदानमाह।
"ग्राम्यधर्म्माध्वगमनयानस्खलनपीडनैः ।
ज्वरोपवासोत्पतनप्रहाराजीर्णधावनैः ॥
वमनाच्च विरेकाच्च कुन्थनाद्गर्भपातनात् ।
तीक्ष्णधारोष्णकटुकतिक्तरूक्षनिषेवणात् ॥
वेगाभिघाताद्विषमादासनाच्छयनाद्भयात्।
गर्भे पतति रक्तस्य सशूलं दर्शनं भवेत् ॥"

हारेणेति । दा + कः ।) पुत्त्रजीववृक्षः । इति
राजनिर्घण्टः ॥

**गर्भदात्री**, स्त्री, (गर्भं ददातीति । दा + तृच् ङीप् ।)

क्षुपविशेषः । गर्भदा इति ख्याता ।
तत्पर्य्यायः ।
पुत्त्रदा २ प्रजादा ३ अपत्यदा ४
सृष्टिप्रदा ५
प्राणिमाता ६ तापसद्रुमसन्निभा ७ ।
अस्य गुणाः ।
मधुरत्वम् । शीतत्वम् ।
नारीपुष्पादिदोषपित्त-
दाहश्रमनाशित्वम् ।
गर्भसम्भूतिदातृत्वञ्च । इति
राजनिर्घण्टः ॥

**गर्भनुत्**, [द] पुं, (गर्भं नुदति प्रेरयति नाशयती-

त्यर्थः । नुद् + क्विप् ।)
कलिकारीवृक्षः । इति
भावप्रकाशः ॥ विषलाङ्गलिया इति
भाषा ॥

**गर्भपाकी**, [न्] पुं, (गर्भस्य पाकः परिपाकः

परिणतिरित्यर्थः साध्यतयास्त्यस्य
इति इनिः ।)
षष्टिकब्रीहिः । इति हेमचन्द्रः । ४ ।
२३४ ॥
षेटे धान इति भाषा ॥

**गर्भपातः**, पुं, (गर्भस्य पातः पतनं विच्युति-

रित्यर्थः ।) पञ्चमषष्ठमासीयस्य
कठिनशरीरस्य
गर्भस्य पतनम् । (यथा,
माधवकरोक्तवैद्यके ।
“आ चतुर्थात् ततो मासात्
प्रस्रवेद्गर्भविच्युतिः ।
ततः स्थिरशरीरस्य पातः
पञ्चमषष्ठयोः ॥”
तथाच सुश्रुते निदानस्थाने १
अध्याये ।
गर्भपातनात् नियमेन गर्भपातनशीलं द्रव्यं
तस्मात् ॥ गर्भस्य स्रावपातयोः पूर्ब्बरूपमाह ।
गर्भेपततीत्यादि । पतति स्रावेण पातेन वा
पतिष्यति ॥ * ॥
स्रावपातयोरवधिमाह ।
आ चतुर्थात्ततो मासात् प्रस्रवेद्गर्भविद्रवः ।
ततः स्थिरशरीरस्य पातः पञ्चमषष्ठयोः ॥
आ चतुर्थात् मासात् चतुर्थमासपर्य्यन्तम् ।
गर्भस्य विद्रवः शोणितरूपः । गर्भः स्रवति
शोणितमिति भोजवचनात् । स्थिरशरीरस्य
कठिनशरीरस्य गर्भस्य । गर्भपातस्य दृष्टान्तं
दर्शयति ।
गर्भोऽभिघातविषमासनपीडनाद्यैः
पक्वं द्रुमादिव फलं पतति क्षणेन ।
छर्दयेत् पक्षभुक्तापि गन्धादुद्विजतेऽशुभात्
।
असेकः सदनञ्चैव गर्भिण्या लिङ्गमुच्यते
॥” * ॥
पुत्त्रगर्भवत्या लक्षणम् । यथा, --
“पुत्त्रगर्भयुतायास्तु नार्य्यां मासि
द्वितीयके ।
गर्भो गर्भाशये लक्ष्यः पिण्डाकारोऽपरं
शृणु ॥
दक्षिणाक्षिमहत्त्वं स्यात् प्राक्क्षीरं
दक्षिणस्तने ।
दक्षिणोरुः सुपुष्टः स्यात् प्रसन्नमुखवर्णता
॥
पुन्नामधेयद्रव्येषु स्वप्नेष्वपि मनोरथः ।
आम्रादि फलमाप्नोति स्वप्नेषु कमलादि
च ॥” * ॥
कन्यागर्भवतीलक्षणम् । यथा, --
“कन्यागर्भवतीगर्भे पेशीं मासि द्वितीयके
।
पुत्त्रगर्भस्य लिङ्गानि विपरीतमवेक्षते ॥”
* ॥
नपुंसकगर्भवतीलक्षणम् । यथा, --
“नपुंसकं यदा गर्भो भवेद्गर्भोऽर्व्वुदाकृतिः
।
उन्नते भवतः पार्श्वे पुरस्तादुदरं महत् ॥”
इति भावप्रकाशः ॥

**गर्भशय्या**, स्त्री, (गर्भे गर्भगता वा शय्येव । गर्भ-

गतस्यापत्यस्य वासस्थानमित्यर्थः ।)
गर्भोत्-
पत्तिस्थानम् । तत्तु
पित्ताशयपक्वाशययोर्म्मध्यवर्त्ति ।
तस्या रूपं यथा, भावप्रकाशे ।
“शङ्खनाभ्याकृतिर्योनिरावर्त्ता सा च
कीर्त्तिता ।
तस्यास्तृतीये त्वावर्त्ते गर्भशय्या
प्रकीर्त्तिता ॥
यथा रोहितमत्स्यस्य मुखं भवति रूपतः
।
तत् संस्थाञ्च तथारूपां गर्भशय्यां
विदुर्बुधाः ॥”
(यथा, वेणीसंहारे । ३ ये अङ्के ।

“गर्भपातनिमित्तश्च
शोणितातिस्रवाच्च यः ।
अभिघातनिमित्तश्च न
सिध्यत्यपतानकः ॥”)
अस्य प्रमाणादि विशेषतो
गर्भस्रावशब्दे द्रष्टव्यम् ॥

**गर्भपातकः**, पुं, (गर्भं पातयति नाशयतीति ।

पत् + णिच + ण्वुल् ।)
रक्तशोभाञ्जनवृक्षः ।
इति जटाधरः ॥

**गर्भपातनः**, पुं, (गर्भं पातयतीति । पत् + णिच् +

कर्त्तरि ल्युः ।) रीठाकरञ्जः । इति
भावप्रकाशः ॥

“यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदात्
पाण्ड-
वीनां चमूनां

यंथा वृन्तलग्नं पक्वं फलं
अभिघातेनाकाल
एव पतति तथा
गर्भोऽप्यभिघातादिनाऽकालेऽपि
पतति ॥ * ॥
अथ गर्भस्रावस्य चिकित्सा ।
गुर्व्विण्या गर्भतो रक्तं स्रवेद्यदि
मुहुर्मुहुः ।
तन्निरोधाय सुस्निग्धमुत्पलादि शृतं
पिबेत् ॥
उत्पलादिगणमाह ।
उत्पलं नीलमारक्तं कह्लारं कुमुदं
तथा ।
श्वेताम्भोजञ्च मधुकमुत्पलादिरयं
गणः ॥
संशीलितो हरत्येव दाहं तृष्णां
हृदामयम् ।
रक्तपित्तञ्च मूर्च्छाञ्च तथा
छर्दिमरोचकम् ॥ * ॥
अथ गर्भपातस्योपद्रवानाह ।
प्रस्रंसमाने गर्भे स्याद्दाहं शूलञ्च
पार्श्वयोः ।
पृष्ठरुक् प्रदरानाहौ मूत्रसङ्गश्च
जायते ॥
प्रस्रंसमाने पतति ॥ * ॥ अथ
गर्भस्य स्थाना-
न्तरगमने चोपद्रवानाह ।
स्थानात् स्थानान्तरं तस्मिन्
प्रयात्यपि च जायते ।
आमपक्वाशयादौ तु क्षोभः
पूर्ब्बेऽप्युपद्रवाः ॥
पूर्ब्बेऽप्युपद्रवाः पार्श्वे शूलादयः ॥
* ॥
तच्चिकित्सामाह ।
स्निग्धाः शीताः क्रियास्तेषु
दाहादिषु समाचरेत् ।
कुशकाशोरुवूकाणां मूलैर्गोक्षुरकस्य
च ॥

स्पृशन् मन्त्रं जपेत् ततः पुनरपि उपस्थं
स्पृशन्
मन्त्रं जपेत् । ततो भार्य्यामुपेयात् ।” इति
भव-
देवभट्टः ॥ तद्विहितनिषिद्धनक्षत्रादियथा, -
-
“ज्येष्ठा मूला मघाश्लेषा रेवती
कृत्तिकाश्विनी ।
उत्तरात्रितयं त्यक्त्वा पर्व्ववर्ज्जं व्रजेदृतौ
॥”
पर्व्वाण्याह विष्णुपुराणम् ।
“चतुर्द्दश्यष्टमी चैव अमावास्याथ पूर्णिमा ।
पर्व्वाण्येतानि राजेन्द्र ! रविसंक्रान्तिरेव च
॥”
शौनकः ।
“पुंनक्षत्राणि चैतानि तिष्यो हस्तः
पुनर्व्वसुः ।
अभिजित्
प्रौष्ठपच्चैवानुराघाषाढश्चाश्वयुक् ॥”
अन्यश्च ।
“हस्तो मूलं श्रवणः पुनर्व्वसुर्मृगशिरस्तथा
पुष्यश्च ।
गर्भाघानादिकार्य्येषु पुंनामायं गणः शुभदः
॥
रोहिण्यन्तकचित्राहिविशाखशतवर्ज्जिते ।
भे पुंग्रहाहे स्त्रीशुद्‌ध्या फलबन्धनमिष्यते ॥
पुष्यार्कचन्द्रशिवमूलपुनर्व्वसुः स्या-
दाषाढयुग्महरिभाद्रपदद्वयञ्च ।
एतानि पुंसि कथितानि शुभानि भानि
चान्येषु गर्भपतनादिभयञ्च भेषु ॥
नन्दा भद्रा भवेत् पुंसि स्त्रीषु पूर्णा जया
स्मृता ।
रिक्ता नपुंसके त्वाहुस्तस्मात्तां
परिवर्ज्जयेत् ॥
स्त्रीणामृतुर्भवति षोडशवासराणि
तत्रादितः परिहरेच्च निशाश्चतस्रः ।
युग्मासु रात्रिषु नरा विषमासु नार्य्यः
कुर्य्यान्निषेकमथ तास्वपि पर्व्ववर्ज्जम् ॥
मूलर्क्षं स्मृतिदुष्टत्वाद्‌गर्भाधानेषु नेष्यते ।
तस्य पुंसवनादौ तु पुंसंज्ञत्वे प्रयोजनम् ॥

त्र्यंशे शान्तं यच्च रक्तं जवाभं
तद्‌गर्भार्थं वेदनागन्धहीनम् ॥”
गर्भयोग्यर्त्तुनिरूपणम् ॥
“पापासंयुतमध्यगेषु दिनकृत्लग्नक्षपास्वामिषु
तद्द्यूनेषु शुभोज्झितेषु विकुजे छिद्रे विपापे सुखे
।
सद्युक्तेषु त्रिकोणकण्टकविधुष्वायत्रिषष्ठान्विते
पापे युग्मनिशास्वगण्डसमये पुंशुद्धितः सङ्गमः ॥
मूलमघाश्विनीनामाद्यं ज्येष्ठान्त्यसर्पाणामन्त्यम् ।
चतुर्थांशं गण्डपदं त्यक्त्वा षोडशाहे ऋतौ व्रजेत्
॥”
अशक्तौ तु भुजबलभीमे ।
“अन्त्यं पौष्णेन्द्रसर्पाणामाद्यं पित्रश्विमूलगम् ।
गण्डं दण्डत्रयं ख्यातं सर्व्वकार्य्येषु कल्पितम् ॥
पुमान् विंशतिवर्षश्चेत् पूर्णषोडशवर्षया ।
स्त्रिया सङ्गच्छते गर्भाशये शुद्धे रजस्यपि ॥
अपत्यं जायते भद्रं तयोर्न्यूनेऽधमं स्मृतम् ।
मासेशैःसितकुजगुरुरविशनिसौम्यलग्नपशशीनैः ।
कलुषैः पीडा गर्भस्य पीडितैः पंतनमन्यथा पुष्टिः
॥
कालुष्यं मासेशेन पापग्रहयोगशत्रुगृहस्थिति-
नीचगृहयोगोपग्रहयोगादि । मासेशजन्मनक्षत्रे
पापग्रहयोगः पीडा येषां जन्मर्क्षाणि । १६ ।
३ । २० । २२ । ११ । ८ । २७ । २ । ९ ।
मासेशशान्त्यादौ कृते न गर्भपीडा ॥
अथ प्रश्नात् पुत्रादिज्ञानम् ।
“विवाहलग्नं विषमर्क्षसंस्थः
सौरोऽपि पुंजन्मकरो विलग्नात् ।
स्त्र्यादिग्रहाणामवलोक्यवीर्य्यं
वाच्यः प्रसूतौ पुरुषोऽङ्गना वा ॥”
इति ज्योतिस्तत्त्वम् ॥ * ॥
अपि च । गोभिलः ।
“यदा ऋतुमती भवति उपरतशोणिता तदा
सम्भवकालः । ऋतुः प्रजाजननयोग्यकालः ।
तन्निमित्तेन नैमित्तिकं गमनं कार्य्यं अकुर्व्वतः
प्रत्यवायान्नियमः । यदुक्तं स्मृतेः ॥
“ऋतुमतीन्तु यो भार्य्यां सन्निधौ नोपसर्पति ।
अवाप्नोति स मन्दात्मा भ्रूणहत्यामृतावृतौ ॥”
ज्योतिषे ।

शृतं दुग्धं सितायुक्तं गर्भिण्याः
शूलहृत् परम् ।
श्वदंष्ट्रामधुकक्षुद्राम्लानैः सिद्धं पयः
पिबेत् ॥
शर्करामधुसंयुक्तं गुर्व्विणीवेदनापहम्
।
अम्लानः पुष्पजातिः । अयं
वाणपुष्पं इति
गौडादौ प्रसिद्धः ।” इति
भावप्रकाशः ॥

**गर्भस्रावी**, [न्] पुं, (गर्भं उदरस्थशिशुं स्राव-
यति विच्योतयति सेवनेनेति । गर्भ
+ स्रु + णिच्
+ “नन्दिग्रहीति ।” ३ । १ । १३४
। इति
णिनिः ।) हिन्तालवृक्षः । इति
राजनिर्घण्टः ॥

**गर्भागारं**, क्ली, (गर्भ इव आगारं गृहम् । गृहाभ्य-
न्तरवर्त्तित्वात् तथात्वम् ।)
गृहमध्यभागः ।
शयनगृहम् । गृहान्तर्गृहं इत्येके ।
इति भरतः ॥
तत्पर्य्यायः । वासगृहम् २ ।
इत्यमरः । २ ।
२ । २८ ॥ (यथा, कथासरित्सागरे
। ७ । ७१ ।
“साप्यष्टमीं समुद्दिश्य तत्र राजसुता
ययौ ।
एकैव देवं द्रष्टुञ्च गर्भागारादथाविशत्
॥” * ॥
गर्भः कुक्षिः आगारं गृहमिव ।
शिशोराश्रय-
भूमेस्तथात्वम् । यद्वा, गर्भस्य
उदरस्थ-
शिशोरागारम् ।) गर्भाशयः । इति
राज-
निर्घण्टः ॥

**गर्भाधानं**, क्ली, (गर्भ आधीयतेऽनेनेति । आ +
(मतान्तरे तु चतुर्थेऽहनि स्नानानन्तरं
नार्य्यः
शुध्यन्ति । यथाह भरद्वाजः ।
“प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी
।
तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति
॥”
एवं धर्म्मशास्त्रेऽपि । यथा, --
“भर्त्तुः स्पृस्या चतुर्थेऽह्नि स्नानेन स्त्री
रजस्वला ।
पञ्चमेऽहनि योग्या स्याद्दैवे पित्र्ये च कर्म्मणि
॥”)
यथा, याज्ञवल्क्यः ।
“एवं गच्छन् स्त्रियं क्षामां मघां मूलाञ्च
वर्ज्ज-
येत् ।
शस्त इन्दौ सकृत् पुत्त्रं लक्षण्यं जनयेत्
पुमान् ॥”
क्षामां आहारलाचवादिना क्षीणाम् । फलञ्च
।
“युग्मासु पुत्त्रा जायन्ते स्त्रियोऽयुग्मासु
रात्रिषु ।
तस्माद्युग्मासु पुत्त्रार्थी संविशेदार्त्तवे
स्त्रियम् ॥
पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके
स्त्रियाः ।
(समेऽपुमान् पुंस्त्रियौ वा क्षीणेऽल्पे च
विपर्य्ययः ॥”
इति मनुः । ३ । ४८--४९ ॥)
एवञ्च ।
“युग्मायामपि रात्रौ चेत् शोणितं प्रचुरं यदा
।
कन्या च पुंवद्भवति शुक्राधिक्ये पुमान्
भवेत् ॥
कन्यैवायुग्मरात्रौ च प्राधान्यं समवायिनोः ।
निमित्तकारणात् कालात्
शुक्रशोणितयोर्य्यतः ॥
पीडा राशौ भौमदृष्टे शशाङ्के
मासं मासं योषितामार्त्तवं स्यात् ।
“ज्येष्ठा मूला मघाश्लेषा रेवती कृत्तिकाश्विनी ।
उत्तरात्रितयं त्यक्त्वा पर्व्ववर्ज्जं व्रजेदृतौ ॥”
विष्णुपुराणम् ।
“चतुर्द्दश्यष्टमी चैव अमावस्याथ पूर्णिमा ।
पर्व्वाण्येतानि राजेन्द्र ! रविसंक्रान्तिरेव च ॥”
याज्ञवल्क्यः ।
“षोडशर्त्तुनिशा स्त्रीणां तासु युग्मासु संविशेत् ।
अत्र षोडशाहो रात्रात्मककालस्य सावनत्वात्
पुंसवननामकरणयोरपि सावनगणनाया युक्त-
त्वाच्च संस्कारमात्रे सावनगणनया व्यवहारः ॥
तथा च याज्ञवल्क्यः ।
“गर्भाधानमृतौ पुंसः सवनं स्पन्दनात् पुरा ।
षष्ठेऽष्टमे वा सीमन्तः प्रसवे जातकर्म्म च ॥
अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः ।
षष्ठेऽन्नप्राशनं मासि चूडा कार्य्या यथाकुलम् ॥
एवमेनः शमं याति बीजगर्भसमुद्भवम् ॥”

| | | |
|---|---|---|
| धा + करणे ल्युट् ।)<br>दशसंस्कारान्तर्गतप्रथम-<br>संस्कारः । यथा, --<br>“गर्भाधानमृतौ पुंसः सवनं<br>स्पन्दनात् पुरा ।<br>ऋतौ ऋतुकाले । स च कालो<br>याज्ञवल्क्येनोक्तः ।<br>षोडशर्त्तनिशाः स्त्रीणां तासु युग्मासु<br>संविशेत् ।”<br>इति मलमासतत्त्वम् ॥ तत्र क्रमः ।<br>“ऋतुस्नानादूर्द्धं<br>निषेकदिवसे सायं<br>सन्ध्यायामतीतायां पतिः शुचिः<br>सुगन्धिः सुवेशः मन्त्रेण सूर्य्यार्घ्यं<br>दत्त्वा पूर्ब्बाभि-<br>मुखोपविष्टायाश्च बध्वा<br>दक्षिणहस्तेनोपस्थं | | |

चतुर्थे स्पन्दते ततः इति वचनात्
स्पन्दनात् पूर्ब्बं
तृतीयमासः पुंसवनकालः । अत्र
चतुर्थमासस्य
सौरत्वे चान्द्रत्वे वा
निषेकमासस्यापि तथात्वे
तदाद्यन्तदिननिषेके सति
अधिकन्यूनकालयोर्गर्भ-
स्पन्दनमनियतमापद्येत सावने तु
नियतम् ।
तेनात्र सावनगणना युक्ता
योषिद्व्यवहारसिद्धा
च । अहन्येकादशे नाम इत्यत्रापि
अशौच-
व्यपगमे नामधेयमिति विष्णुसूत्रात्
सूतकोत्तर-
दिनपरमेकादशपदम् ।
"सूतकादिपरिच्छेद्दो
दिनमासाब्दपास्तथा ।
मध्यमग्रहभुक्तिश्च सावनेन
प्रकीर्त्तिताः ॥"
इति सूर्य्यसिद्धान्तवचनेन
सूतकस्य सावनदिन-
घटितत्वात् तदुत्तरदिनस्यापि
तथात्वम् । अतो
दिनमासवर्षगणना सावनेनेति ।
शुभाशुभविवे-
चनन्तु सौरेण ज्योतिःशास्त्रात् ।
अतएव पिता-
महः ।
"विवाहादौ स्मृतः सौरो यज्ञादौ
सावनो मतः ।"
अत्र द्वितीयादिशब्दात्
संस्कारपरिग्रहः ।
"गर्भाधाने सदा ग्राह्या वारा
भौमरवीज्यकाः ।"
गोभिलः । दक्षिणेन पाणिना
उपस्थमभिस्पृशेत्

"कलनं कठिनं हस्ताद्यस्थित्वग्रोमचेतनाः ।
अशनोद्वेगसूतिश्च मासेष्वीशाः क्रमादमी ॥
भृग्वारेज्यार्कचन्द्रार्किज्ञाङ्गेशाब्जदिवाकराः ।
मासेशे पीडिते गर्भरोगः पुष्टिश्च सद्बले ॥"
अस्यार्थः । प्रथमे मासि कलनं शुक्रशोणित-
मिश्रणरूपं तत्र अधिपः शुक्रः । द्वितीये
कठिनं
मिश्रितशुक्रशोणितयोः काठिन्यं तत्राधिपतिः
कुजः । तृतीये हस्ताद्युत्पत्तिस्तत्राधिपोगुरुः
।
चतुर्थे अस्थ्युत्पत्तिस्तत्राधिपः सूर्य्यः ।
पञ्चमे
त्वच उत्पत्तिस्तत्रेशश्चन्द्रः । षष्ठे
रोमोत्पत्ति-
स्तत्राधिपः शनिः । सप्तमे चैतन्यं तत्राधिपो
बुधः । अष्टमे भोजनशक्तिस्तत्र गर्भाधानलग्न-
पतिः स्वामी । नवमे उद्वेगस्तत्राधीशश्चन्द्रः
।
दशमे प्रसवस्तत्राधीशो दिवाकरः । आधान-
काले उक्तग्रहे पीडिते तत्तुल्यमासे गर्भ-
पातादि । बलवति च तत्तन्मासे गर्भपुष्टिः ॥
"ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम् ।
यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते ॥
जातो वा न चिरं जीवेज्जीवेद्वा दुर्ब्बलेन्द्रियः
।
तस्मादत्यन्तबालायां गर्भाधानं न कारयेत् ॥
अतिवृद्धायां दीर्घरोगिण्यां अन्येन वा विका-
रेणोपसृष्टायां गर्भाधानं नैव कुर्व्वीत । पुरु-
षस्याप्येवंविधस्य त एव दोषाः सम्भवन्ति
॥"
इति सुश्रुते शारीरस्थाने दशमेऽध्याये ॥)

**गर्भाशयः**, पुं, (आशेतेऽस्मिन्निति । आ + शी +
अधिकरणे अप् । गर्भस्य भ्रूणस्य आशयः
शय्यावदाश्रयस्थानम् ।) जरायुः । येन
वेष्टितो
गर्भः कुक्षौ तिष्ठति सः । इत्यमरः । २ । ६ ।
३८ ॥
गर्भशय्या । इति भावप्रकाशः ॥ (यथा, महा-
भारते । १४ । १८ । ५ ।

शोकं रक्तविमोक्षञ्च साध्वसं कुक्कुटाशनम् ।
व्यवायञ्च दिवास्वप्नं रात्रौ जागरणं त्यजेत् ॥"
तथा, मदनरत्ने स्कान्दे ।
"हरिद्रां कुङ्कुमञ्चैव सिन्दूरं कज्जलं तथा ।
कूर्पासकञ्च ताम्बूलं माङ्गल्याभरणं शुभम् ॥
केशसंस्कारकवरीकरकर्णविभूषणम् ।
भर्त्तुरायुष्यमिच्छन्ती वर्जयेद्गर्भिणी न हि ॥"
बृहस्पतिरप्याह ।
"चतुर्थे मासि षष्ठे वाप्यष्टमे गर्भिणी यदा ।
यात्रा तया विर्वज्या स्यादाषाढे तु विशेषतः ॥"
गर्भिणीपतिकरणीयतामाह याज्ञवल्क्यः ।
"दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ।
वैरूप्यं मरणं वापि तस्मादकार्य्यं प्रियं स्त्रियाः
॥"
आश्वलायनः ।
"वपनं मैथुनं तीर्थं वर्ज्जयेद्गर्भिणीपतिः ।
श्राद्धञ्च सप्तमान्मासादूर्द्धं चान्यत्र वेदवित् ॥"
कालविधाने मुहूर्त्तदीपिकायाम् ।
"क्षौरं शवानुगमनं नखकृन्तनञ्च
युद्धादिवास्तुकरणं त्वतिदूरयानम् ।
उद्वाहमौपनयनं जलधेश्च गाह-
मायुः क्षयार्थमिति गर्भिणिकापतीनाम् ॥"
रत्नसंग्रहे गालवोऽपि ।
"दहनं वपनञ्चैव चौलं वै गिरिरोहणम् ।
नाव आरोहणञ्चैव वर्ज्जयेद्गर्भिणीपतिः ॥"
गर्भिण्या यदयत् लक्षणं जायते तदाह, --
"क्षामता गरिमा कुक्षौ मूर्च्छा च्छर्द्दिररोचकः ।
जृम्भा प्रसेकः सदनं रोमराज्याः प्रकाशनम् ॥
अम्लेष्टता स्तनौ पीनौ सस्तन्यौ कृष्णचूचुकौ ।
पादशोफो विदाहोऽन्ये श्रद्धाश्च विविधात्मिकाः
॥
मातृजं ह्यस्य हृदयं मातुश्च हृदयेन तत् ।
सम्बद्धं तेन गर्भिण्या नेष्टं श्रद्धाविधारणम् ॥"
इति वाभटे शारीरस्थाने प्रथमेऽध्याये ॥
"समानयोगक्षेमा हि माता तदा गर्भेण केषु-
चिदर्थेषु तस्मात् प्रियहिताभ्यां गर्भिणीं विशे-
षेणोपचरन्ति कुशलाः ।
तस्यागर्भापत्तेर्द्वैहृदय्यस्य च विज्ञानार्थं लिङ्गानि
समासेनोपदेक्ष्यामः । उपचारासम्बाधनं ह्यस्या

विष्णुर्योनिं कल्पयत्वेतया ऋचा । गर्भं धेहि सिनी
च समाप्य ऋचौ सम्भवतः ॥ कुत्सितदेशस्य
सव्येन पाणिना शौचदर्शनात् तद्वारणाय
दक्षिणेनेति । उपस्थं योनिं स्पृशेत् विष्णुरिति
मन्त्रेण प्रथमं ततो गर्भं धेहि सिनीवालीत्यादि-
मन्त्रेण च । मन्त्रान्ते कर्म्मादिसन्निपात इति
न्यायात् पाठानन्तरं स्पर्शः । न तु भवदेव-
भट्टोक्तं स्पृशन् जपतीति । ऋचौ समाप्यैव
संयोगं कुरुतः न मध्ये वामदेव्यजपः । देवलः ।
'सकृच्च संस्कृता नारी सर्व्वगर्भेषु संस्कृता ।' तेन
गर्भाधानपुंसवनसीमन्तोन्नयनानि सकृदेव
कर्त्तव्यानि । छन्दोगपरिशिष्टम् ।
"विवाहादिः कर्म्मगणो य उक्तो
गर्भाधानं शुश्रुम यस्य चान्ते ।
विवाहादावेकमेवात्र कुर्य्यात्
श्राद्धं नादौ कर्म्मणः कर्म्मणः स्यात् ॥"
विवाहादिगर्भाधानान्तकर्म्मसु एकमेव श्राद्धं
न तु प्रतिकर्म्मादौ एकेनैव श्राद्धेन कृतेन सर्व्वाणि
श्राद्धवन्तीति । अन्तशब्दोऽत्रावयवार्थः दशान्तः
पट इतिवत् । समीपार्थत्वे उपलक्षणं स्यात् ।
ततश्च विशेषणोपलक्षणसन्देहे विशेषणत्वेन
ग्रहणं कार्य्यान्वितत्वात् । यत्तु ।
"निषेककाले सोमे च सीमन्तोन्नयने तथा ।

"शुक्रं शोणितसंसृष्टं स्त्रिया गर्भाशयं गतम् ।
क्षेत्रं कर्म्मजमाप्नोति शुभं वा यदि वाऽशुभम् ॥"
"पूर्णषोडशवर्षा स्त्री पूर्णत्रिंशेन सङ्गता ।
शुद्धे गर्भाशये मार्गे रक्ते शुक्रेऽनिले हृदि ॥
वीर्य्यवन्तं सुतं सूते ततो न्यूनाब्दयोः पुनः ।
रोग्यल्पायुरधन्यो वा गर्भो भवति नैव वा ॥"
इति वाभटे शारीरस्थाने प्रथमेऽध्याये ॥)

**गर्भाष्टमः**, पुं, (गर्भात् गर्भकालात् अष्टमः ।)
गर्भजननमासादष्टममासः । तत्पर्य्यायः । देव-
मासः २ । इति त्रिकाण्डशेषः ॥ (यथा, मनुः ।
२ । ३६ ।
"गर्भाष्टमेऽब्दे कुर्व्वीत ब्राह्मणस्यापनायनम् ।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥")

**गर्भिणी**, स्त्री, (गर्भोऽस्त्यस्याम् । गर्भ + "अत
इनिठनौ ।" ५ । २ । ११५ । इति इनि ततो
ङीप् ।) गर्भवती । इत्यमरः । २ । ६ । २२ ॥
पोयाति इति भाषा ॥ (यथा, मनुः । ३ । ११४ ।
"सुवासिनीः कुमारांश्च रोगिणो गर्भिणीस्तथा ।
अतिथिभ्योऽग्र एवैतान् भोजयेदविचारयन् ॥"
अस्याः कर्त्तव्यतामाह कश्यपः । यथा, --
"गर्भिणी कुञ्जराश्वादिशैलहर्म्म्यादिरोहणम् ।
व्यायामं शीघ्रगमनं शकटारोहणं त्यजेत् ॥

ज्ञाने दोषज्ञानञ्च लिङ्गतस्तस्मादिष्टो लिङ्गोप-
देशस्तद्यथार्त्तवादर्शनमास्यसंस्रवणमनन्नाभि-
लाषः छर्द्दिररोचकोऽम्लकामताविशेषेण ।
श्रद्धाप्रणयनञ्चोच्चावचेषु भावेषु गुरुगात्रत्वं
चक्षुषोर्ग्लानिः स्तनयोः स्तन्यमोष्ठयोः स्तन-
मण्डलयोश्च कार्ष्ण्यमत्यर्थं श्वयथुः पादयोरीष-
ल्लोमराज्या योन्याश्च जालत्वमिति गर्भे पर्य्या-
गते रूपाणि भवन्ति । सा यद्यदिच्छेत्तत्तस्यै
दद्यादन्यत्र गर्भोपघातकरेभ्यो भावेभ्यः । गर्भोप-
घातकरास्त्विमे भावास्तद्यथा, -- सर्व्वमति
गुरूष्णतीक्ष्णदारुणाश्चचेष्टा इमांश्चान्यानुप-
दिशन्ति वृद्धाः । देवतारक्षोऽनुचरपरिरक्षणार्थं
न रक्तानि वासांसि विभृयान्न मदकराणि चाद्या-
न्यभ्यवहरेन्न यानमधिरोहेन्न मांसमश्नीयात् सर्व्वे-
न्द्रियप्रतिकूलांश्च भावान् दूरतः परिवर्ज्जयेत् ।"

| ज्ञेयं पुंसवने चैव श्राद्धं कर्म्माङ्गमेव च ॥"<br>इत्यनेन भविष्यपुराणेन श्राद्धं कर्म्माङ्गत्वन<br>विहितं तच्छन्दोगेतरपरं अतएव भवदेवभट्टे-<br>नापि न लिखितम् । अत्र श्राद्धोत्तरगमनेऽपि<br>न दोषः । उक्तभविष्यपुराणात् । नित्ये नान्दी-<br>मुखश्राद्धे कृते दाराद्यवर्ज्जनम् । इति वचनान्त-<br>राच्च ।" इति संस्कारतत्त्वम् ॥ * ॥ (निषेकादनन्तरं<br>यदयन्मासि मिश्रितशुक्रशोणितस्य यद्यद्रूपं<br>भवति तदुक्तं यथा, बृहज्जातके निषेकाध्याये । | | |
|---|---|---|

चतुर्थे मासि स्थिरत्वमापद्यते गर्भस्तस्मात्तदा
गर्भिणी गुरुगात्रत्वमधिकमापद्यते विशेषेण ।
पञ्चमे मासि गर्भस्य मांसशोणितोपचयो
भवत्यधिकमन्येभ्यो मासेभ्यस्तस्मात्तदा गर्भिणी
कार्श्यमापद्यते विशेषेण ।
षष्ठे मासि गर्भस्य बलवर्णोपचयो भवत्यधिक-
मन्येभ्यो मासेभ्यस्तस्मात्तदा गर्भिणी बलवर्ण-
हानिमापद्यते विशेषेण ।
सप्तमे मासि गर्भः सर्व्वभावैराप्यायते सहसा
तस्मात्तदा गर्भिणी सर्व्वाकारैः क्लान्ततमा भवति ।
अष्टमे मासि गर्भश्च मातृतो गर्भतश्च माता
रसग्रहणीभिः संवाहिनीभिर्मुहुर्मुहुरोजः पर-
स्परत आददाते गर्भस्य सम्पूर्णत्वात् तस्मात्तदा
गर्भिणी मुहुर्मुदा युक्ता भवति मुहुर्मुहुश्च
ग्लाना तस्मात्तदा गर्भस्य जन्मव्यापद्भवत्योजसो-
ऽनवस्थिततत्वात् तञ्चैवमभिसमीक्ष्याष्टमं मासम-
गर्भिण्यमित्याचक्षते कुशलाः ।” इति चरके
शारीरस्थाने चतुर्थेऽध्याये ॥
“स्तनयोः कृष्णमुखता रोमराज्युद्गमस्तथा ।
अक्षिपक्ष्माणि चाप्यस्याः संमील्यन्ते विशेषतः ॥
अकामतश्छर्द्दयति गन्धादुद्विजतेऽशुभात् ।
प्रसेकः सदनञ्चापि गर्भिण्या लिङ्गमुच्यते ॥
कर्म्मणा चोदितं जन्तोर्भवितव्यं पुनर्भवेत् ।
यथा यथा दैवयोगाद्दौहृदं जनयेद्धृदि ॥”
इति सुश्रुते शारीरस्थाने तृतीयेऽध्याये ॥)
क्षीरावीवृक्षः । इति शब्दचन्द्रिका ॥ क्षीराइ
इति भाषा ॥

**गर्भिण्यवेक्षणं**, क्ली, (गर्भिण्या गर्भवत्या अवे-
क्षणं यत्नेन परिचर्य्या ।) कुमारभृत्या । गर्भिणी-
परिचर्य्या । इति त्रिकाण्डशेषः ॥

**गर्भोपघातिनी**, स्त्री, (गर्भं उपहन्तीति । उप +
हन् + “सुप्यजातौ णिनिस्ताच्छील्ये ।” ३ । २ । ७८ ।
इति णिनिः । गर्भं उपघातयतीति । हन्
+ णिच् णिनिः । इति केचित् ।) अनृतौ
वृषोपगमनादिवशात् यस्या गर्भपातो भवति
सा गौः । गावडाफेला गाइ इति भाषा ॥ तत्-
पर्य्यायः । वेहत् २ । इत्यमरः । २ । ९ । ६९
॥

**गर्म्मुत्**, स्त्री, (गीर्य्यते भक्ष्यते प्राकृतैरिति । गॄ
निगरणे + “ग्रो सुट् च ।” उणां । १ । ९७ ।
इति उति मुडागमश्च ।) तृणधान्यविशेषः ।
इत्यमरो भरतश्च ॥ मयना इति ख्यातः । गड
गड इति केचित् ॥ (गीर्य्यते भक्ष्यते यद्वा
गीर्य्यते विज्ञाप्यते विख्याप्यतेऽनेनेति । गॄ + उति
सुट् च ।) स्वर्णम् । नडः । इति मेदिनी ।
ते । १०७ ॥

**गर्म्मूटिका**, स्त्री, (गर्म्भुत इव उटं पत्रमस्याः ।
कप् + टाप् + अत इत्वञ्च । पृषोदरात् तकार-
लोपः ।) ब्रीहिभेदः । माड़ुया इति भाषा ॥
तत्पर्य्यायः । गर्म्मूच्छदः २ । इति रत्नमाला
॥

**गर्म्मोटिका**, स्त्री, (गर्म्मूटिका + निपातनात् ऊका-
रस्योकारः ।) जरडीतृणम् । इति राज-
निर्घण्टः ॥

**गर्व्व**, मदे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-
इति इतच् । यद्वा, गर्व्व + कर्त्तरि क्तः ।) गर्व्व-
युक्तः । अहङ्कृतः । इति जटाधरः ॥ (यथा,
रघुः । ९ । ५५ ।
“आविर्बभूव कुशगर्भमुखं मृगाणां
यूथं तदग्रसरगर्व्वितकृष्णसारम् ॥”)

**गर्ह**, ङ कुत्सने । इति कविकल्पद्रुमः । (भ्वां-आत्मं-
सकं-सेट् ।) रेफोपधः । ङ, गर्हते । कुत्सनं
निन्दा । इति दुर्गादासः ॥ (यथा, रामयणे ।
२ । ८२ । १० ।
“स वाष्पकलया वाचा कलहंसस्वरो युवा ।
विललाप सभामध्ये जगर्हे च पुरोहितम् ॥”)

**गर्ह**, कि कुत्सने । इति कविकल्पद्रुमः ॥ (चुरां
पक्षे भ्वां-परं-सकं-सेट् ।) कि, गर्हयति गर्हति ।
इति दुर्गादासः ॥ (यथा, भागवते । ६ । ७ । १० ।
“गर्हयामास सदसि स्वयमात्मानमात्मना ॥”
तथा, तत्रैव । ४ । ४ । १० ।
“जगर्ह साऽमर्षविपन्नया गिरा
शिवद्विषं धूमपथश्रमस्मयम् ॥”)

**गर्हणं**, क्ली, (गर्ह कुत्सने + भावे ल्युट् ।) निन्दा ।
इत्यमरः । १ । ६ । १३ ॥

**गर्हा**, स्त्री, (गर्ह्यते निन्द्यते इति । गर्ह कुत्सने +
“गुरोश्च हलः ।” ३ । ३ । १०३ । इति स्त्रियां
अः ततष्टाप् ।) निन्दा । इति शब्दरत्नावली ॥
(यथा, पञ्चतन्त्रे । १ । १८७ ।

तदा प्रभृत्येव व्यायामं व्यवायमपतर्पणमति-
कर्षणं दिवास्वप्नं रात्रिजागरणं शोकं यानाव-
रोहणं भयसुत्कटकासनं चैकान्ततः
स्नेहादि-
क्रियां शोणितमोक्षणञ्चाकाले वेगविधारणञ्च
न सेवेत ।
दोषाभिघातैर्गर्भिण्यांयो यो भागः प्रपीड्यते ।
स स भागः शिशोस्तस्य गर्भस्थस्य
प्रपीड्यते ॥”
“इन्द्रियार्थांस्तु यान् यान् सा भोक्तुमिच्छति
गर्भिणी ।
गर्भाबाधभयात्तांस्तान् भिषगाहृत्य दापयेत्
॥
सा प्राप्तदौहृदा पुत्त्रं जनयेत् गुणान्वितम् ।
अलब्धदौहृदा गर्भे लभेतात्मनि वा भयम् ॥
येषु येष्विन्द्रियार्थेषु दौहृदे वै विमानना ।
प्रजायेत
सुतस्यार्त्तिस्तस्मिंस्तस्मिंस्तथेन्द्रिये ॥
राजसन्दर्शने यस्या दौहृदं जायते स्त्रियाः ।
अर्थवन्तं महाभागं कुमारं सा प्रसूयत ॥
दुकूलपट्टकौशेयभूषणादिषु दौहृदात् ।
अलङ्कारषणं पुत्त्रं ललितं सा प्रसूयते ॥
आश्रमे संयतात्मानं धर्म्मशीलं प्रसूयते ॥
देवताप्रतिमायान्तु प्रसूते पार्षदोपमम् ।
दर्शने व्यालजातीनां हिंसाशीलं प्रसूयते ॥
गोधामांसाशने पुत्त्रं सुषुप्सुं धारणात्मकम् ।
गवां मांसे च बलिनं सर्व्वक्लेशसहन्तथा ॥
माहिषे दौहृदाच्छूरं रक्ताक्षं लोमसंयुतम् ।
वराहमांसात् स्वप्नालुं शूरं सञ्जनयेत् सुतम्
॥
मार्गाद्विक्रान्तजङ्घालं सदा वनचरं सुतम् ।
सृमराद्विग्नमनसं नित्यभीतञ्च तैत्तिरात् ॥
अतोऽनुक्तेषु या नारी समभिध्याति दौहृदम् ।
शरीराचारशीलैः सा समानं जनयिष्यति ॥

सेट् ।) मद इह अहङ्कारः । नीचो गर्व्वति
सम्पदा । इति दुर्गादासः ॥

**गर्व्वः**, पुं, (गर्व्व मदे + भावे घञ् । यद्वा, गिरति
मदमत्तस्यात्मानमुद्गिरतीवइति । गॄ निग-
रणे + “कॄगॄशॄदॄभ्यो वः ।” उणां । १ । १५५
।
इति वः ।) अहङ्कारः । इत्यमरः । १ । ७ ।
२२ ॥
(यथा, रामायणे । २ । ३१ । २० ।
“यदि दुःस्थो न रक्षेत भरतो राज्यमुत्तमम् ।
प्राप्य दुर्म्मनसा वीर ! गर्व्वेण च विशेषतः ॥”)
अहङ्कारस्तथाध्यात्मं सर्व्वसंसारकारणम् ।
अभिमानोऽधिभूतञ्च रुद्रस्तत्राधिदैवतम् ॥”
इति महाभारते आश्वमेधिकपर्व्व ॥
(अयं हि व्यभिचारिभावविशेषः । तल्लक्षणं
यथा, साहित्यदर्पणे । ३ । १५० ।
“गर्व्वो मदः प्रभावश्रीविद्यासत्कुलतादिजः ।
अवज्ञासविलासाङ्गदर्शनाविनयादिकृत् ॥”)

**गर्व्वाटः**, पुं, (गर्व्वेण मदेन अटतीति । अट् +
अच् । शकन्ध्वादित्वात् अलोपः ।)
द्वाःस्थितः ।
द्वारपालः । इति त्रिकाण्डशेषः ॥

**गर्व्वितः**, त्रि, (गर्व्वः सञ्जातोऽस्य । गर्व्व + “तदस्य
सञ्जातं तारकादिभ्य इतच् ।” ५ । २ । ३६ ।

“कुलपतनं जनगर्हां
बन्धनमपि जीवितव्यसन्देहम् ।
अङ्गीकरोति कुलटा
सततं परपुरुषसंसक्ता ॥”)

**गर्हितं**, त्रि, (गर्ह्यते स्म इति । गर्ह + क्त । यद्वा,
गर्हा सञ्जाताऽस्य । गर्हा + इतच् ।)
निन्दि-
तम् । यथा, चाणक्ये । ५० ।
“अतिदर्पे हता लङ्का अतिमाने च
कौरवाः ।
अतिदाने बलिर्व्वद्धः
सर्व्वमत्यन्तगर्हितम् ॥”

**गर्ह्यः**, त्रि, (गर्ह्यते निन्द्यते इति । गर्ह ङ
निन्दायाम् + “ऋहलोर्ण्यत् ।” ३ ।
१ । १२४ ।
इति ण्यत् ।) अधमः । निन्द्यः ।
इत्यमरः ।
३ । १ । ५४ ॥ (यथा, मनुः । ५ ।
१४९ ।
“पित्रा भर्त्रा सुतैर्व्वापि
नेच्छेद्विरहमात्मनः ।
एषां हि विरहेण स्त्री गर्ह्ये कुर्य्यादुभे
कुले ॥”)

**गर्ह्यवादी**, [न्] त्रि, (गर्ह्यं वदतीति । गर्ह्य +
वद् + “सुप्यजातौ णिनिस्ताच्छील्ये
।” ३ । २ ।
७८ । इति णिनिः ।) कद्वदः ।
इत्यमरः । ३ ।
१ । ३७ ॥

**गल**, भक्षे । स्रावे । इति कविकल्पद्रुमः ॥
(भ्वां-
परं-सकं-स्रावे अकं-सेट् ।) गलति ।
इति दुर्गा-
दासः ॥ (स्रावार्थे यथा,
कथासरित्सागरे ।
११ । ५७ ।
“इति मे तव कल्याणमपश्यन्त्या
गलन्त्यमी ।

| | | सन्तापक्वथिताः प्राणा इव वाष्पाम्बुबिन्दवः ॥”) |
| --- | --- | --- |
| | | **गल**, क ङ स्रावे । इति कविकल्पद्रुमः ॥ (चुरां आत्मं-अकं-सेट् ।) स्रावः । क्षरणम् । क ङ, गालयते रक्तं क्षतस्य । इति दुर्गादासः ॥ |

**गलः**, पुं, (गलति भक्षयत्यनेन । गल् + करणे अप् । यद्वा गीर्य्यतेऽनेन । गॄ + करणे अप् ।) कण्ठः । इत्यमरः । २ । ३ । ८८ ॥ गला इति भाषा ॥ (यथा, पञ्चतन्त्रे । ३ । १६४ ।
“प्रजा न रञ्जयेद्यस्तु राजा रक्षादिभिर्गुणैः ।
अजागलस्तनस्येव तस्य राज्यं निरर्थकम् ॥” * ॥
गलति क्षरति शालवृक्षादेरिति । गल् + पचाद्यच् ।) सर्ज्जरसः । इति मेदिनी । ले । १३ ॥
धुना इति भाषा ॥ वाद्यभेदः । (गलति निःसरति जालादेरिति ।) गडकमत्स्यः । इति शब्दरत्नावली ॥

**गलकः**, पुं, (गलति निःसरति जालादिभ्य इति । गल क्षरणे + ण्वुल् ।) गडकमत्स्यः ॥ इति शब्दरत्नावली ॥

**गलकम्वलः**, पुं, (गले कम्बल इव ।) गवां गलस्थित-कम्बलाकृतिमांसम । तत्पर्य्यायः । सास्ना २ । इत्यमरः । २ । ९ । ६३ ॥ (“सास्ना गोगलकम्बलः ।” इत्युज्ज्वलदत्तः ॥)

**गलगण्डः**, पुं, (गले गण्डः स्फोटक इव ।) गल-रोगविशेषः । गरगण्ड इति भाषा ॥ अथ गल-गण्डाधिकारः । तत्र गलगण्डस्य सामान्यं लिङ्गमाह ।
“निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले ।
महान् वा यदि वा ह्रस्वो गलगण्डं तमादिशेत् ॥”
मेदोजमाह ।
“स्निग्धो मृदुः पाण्डुरनिष्टगन्धो
मेदोऽन्वितः कण्डुयुतो रुजश्च ।
प्रलम्बतेऽलावुवदल्पमूलो
देहानुरूपक्षयवृद्धियुक्तः ॥
स्निग्धास्यता तस्य भवेच्च जन्तो-
र्गलेन शब्दं कुरुते च नित्यम् ।”
देहक्षये कार्श्ये क्षयं देहवृद्धौ वृद्धिं यातीत्यर्थः ॥ * ॥
असाध्यमाह ।
“कृच्छ्राच्छ्सन्तं मृदुसर्व्वगात्रं
संवतसरातीतमरोचकार्त्तम्।
क्षीणञ्च वैद्यो गलगण्डयुक्तं
भिन्नस्वरं नैव नरं चिकित्सेत् ॥” * ॥
अथ गलगण्डचिकित्सा ।
“सर्षपान् शिग्रुबीजानि शणबीजातसीयवान्।
मूलकस्य च बीजानि तक्रेणाम्लेन पेषयेत् ॥
गलगण्डो गण्डमाला ग्रन्थयश्चैव दारुणाः ।
प्रलेपादस्य नश्यन्ति विलयं यान्ति सत्वरम् ॥ १ ॥
रक्षोघ्नतैलयुक्तेन जलकुम्भीकभस्मना ।
लेपनं गलगण्डस्य चिरोत्थस्यापि नाशनम् ॥
रक्षोघ्नः सर्षपः ॥ २ ॥
श्वेतापराजितामूलं प्रातः पिष्ट्वा पिबेन्नरः ।
सर्पिषा नियताहारो गलगण्डप्रशान्तये ॥ ३ ॥
तिक्तालावुफले पक्वे सप्ताहमुषितं जलम् ।
सद्यः स्याद्गलगण्डघ्नं पानात् पथ्यानुसेविनाम् ॥ ४ ॥
तैलं पिबेच्चामृतवल्लिविम्बा
हिंस्राह्वयावृक्षकपिप्पलीभिः।
सिद्धं बलाभ्यां सह देवदारु
हिताय नित्यं गलगण्डरोगी ॥
वृक्षकोऽत्र तुणिः । उक्तञ्च निघण्टौ धन्वन्तरिणा ।
‘तुणिस्तुणी कपीतस्तु नन्दिवृक्षोऽथ वृत्त्रकः ।’
बलाभ्यां बलातिबलाभ्यांम्। अमृतादितैलम् ॥ ५ ॥
यवमुद्गपटोलादिकट्‌रूक्षान्नभोजनम्।
वमनं रक्तमोक्षञ्च गलगण्डे प्रयोजयेत् ॥ ६ ॥
अपि च ।
“आरम्भानन्तरं यत्र प्रत्यारम्भो न विद्यते ।
गर्गादिमुनयः सर्व्वे तमेवाहुर्गलग्रहम् ॥”
इति राजमार्त्तण्डः ॥
(रोगविशेषः । यथा, सुश्रुते सूत्रस्थाने ४५ अध्याये ।
“पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे ॥”
“यस्य श्लेष्मा प्रकुपितस्तिष्ठत्यन्तर्गले स्थिरः ।
आशु सञ्जनयेच्छोथं जायतेऽस्य गलग्रहः ॥”
इति चरके सूत्रस्थानेऽष्टादशेऽध्याये ॥
गलग्रहरोगवत् परित्यागाशक्यत्वात् पीडा-दायकत्वाच्च लक्षणाशक्त्या पोष्यात्मीयजनोऽपि बोध्यते । यथा, स एव मे गलग्रहः । इति लोकप्रसिद्धिः ॥)

**गलन्तिका**, स्त्री, (गलतीति । गल् + शतृ । उगित्वात् ङीप् । “शप्श्यनोर्नित्यम् ।” ७ । १ । ८१ । इति नुम् स्वार्थे कन् ह्रस्वश्च ।) कर्करी । स्वल्पवारिधानिका । इत्यमरः । २ । ९ । ३१ ॥
(यथा, काशीखण्डे ।
“एषा कार्य्या च वैशाखे देवे देया गलन्तिका ॥”)

**गलमेखला**, स्त्री, (गलस्य कण्ठस्य मेखलेव ।) गलसूत्रम् । कण्ठाभरणविशेषः । तत्पर्य्यायः । सूत्राली २ । इति हारावली । १७४ ॥

**गलव्रतः**, पुं, (गलो गिलनमेव व्रतं नियमो

निबद्धो दृढः अचलो वा । मुष्कवत्
अण्डवत् । गल
इति हनुमन्ययोरुपलक्षणम् । तथा च
भोजः ।
"महान्तं शोथमल्पं वा हनुमन्या
गलाश्रयम् ।
मुष्कवल्लम्बमानं तु गलगण्डं विनिर्द्दिशेत्
॥" * ॥
संप्राप्तिमाह ।
"वातः कफश्चापि गले प्रदुष्टो
मध्ये तु संसृत्य तथैव मेदः ।
कुर्व्वन्ति गण्डं क्रमशः स्वलिङ्गैः
समन्वितं तं गलगण्डमाहुः ॥"
क्रमशः शनैः शनैः ॥ स्वलिङ्गैः
वातकफमेदो-
लक्षणैः ॥ * ॥
वातिकमाह ।
"तोदान्वितः कृष्णशिरावनद्धः
श्यावारुणो वा पवनात्मकस्तु ।
पारुष्ययुक्तश्चिरवृद्ध्यपाको
यदृच्छया पाकमियात् कदाचित् ॥
वैरस्यमास्यस्य च तस्य जन्तो-
र्भवेत्तथा तालुगलप्रशोषः ।"
चिरवृद्ध्यपाकः चिरेण वृद्धिरपाकश्च
यस्य सः ॥
श्लैष्मिकमाह ।
"स्थिरः सवर्णो गुरुरुग्रकण्डुः
शीतो महांश्चापि कफात्मकस्तु ।
चिराच्च वृद्धिं भजतेऽचिराद्वा
प्रपच्यते मन्दरुजः कदाचित् ॥
माधुर्य्यमास्यस्य च तस्य जन्तो-
र्भवेत्तथा तालुगलप्रलेपः ।"
कदाचित् प्रपच्यते वा पाकोऽपि
चिराद्गवति ॥
प्रलेपः श्लेष्मणा ॥ * ॥

दापयेद्गलगण्डे तु प्रच्छन्नानि बहूनि च ।
गण्डगोपालिकां पिष्ट्वा तत्र लेपं प्रकल्पयेत् ॥
अवश्यं नश्यति क्षिप्रं गलगण्डो गदोऽमुना ।
प्रलेपस्त्वनुभूतोऽयं बहुधा बहुभिर्ज्जनैः ॥
प्रच्छन्नानि पछना इति लोके । गण्डगोपालिका
गण्डगुया इति लोके प्रसिद्ध आम्रवाटिकायां
सुलभः कीटविशेषः ॥ ७ ॥
लवणं जलकुम्भ्यास्तु कणाचूर्णेन संयुतम् ।
प्रभाते नित्यमश्नीयात् गलगण्डप्रशान्तये ॥"
८ ॥
इति भावप्रकाशः ॥

**गलग्रहः**, पुं, (गलं कण्ठं गृह्णाति मत्स्यास्थ्ना
इति । ग्रह् + अच् । यद्वा गलः मत्स्य-
कण्ठो गृह्यतेऽस्मिन् । ग्रह् + अधिकरणे अप् ।)
व्यञ्जनविशेषः । तत्पर्य्यायः । मत्स्यघण्टः २ ।
इति शब्दचन्द्रिका ॥ तिथिविशेषः । यथा, --
"कृष्णपक्षे चतुर्थी च सप्तम्यादिदिनत्रयम् ।
त्रयोदशीचतुष्कञ्च अष्टावेते गलग्रहाः ॥"
इति मदनरत्ने नारदः ॥

यस्य ।) मयूरः । इति त्रिकाण्डशेषः ॥

**गलशुण्डिका**, स्त्री, (अल्पा शुण्डा शुण्डिका ।
गलस्य शुण्डिकेव ।)
तालूद्र्ध्वसूक्ष्मजिह्वा । आल्
जिव् इति भाषा ॥ (यथा, याज्ञवल्क्यः
। ३ । ९८ ।
"तालूदरं वस्ति शीर्षं चिवुके
गलशुण्डिके ॥")
तत्पर्य्यायः । सुधास्रवा २ घण्टिका ३
लम्बिका
४ । इति हेमचन्द्रः । ३ । २४९ ॥
रसाङ्का ५
प्रतिजिह्विका ६ माध्वी ७
अलिजिह्विका ८ ।
इति शब्दरत्नावली ॥
(तालुगतरोगविशेषः ।
यथा, सुश्रुते सूत्रस्थाने २५ अध्याये ।
"शल्यं जतुमणिर्म्मांससङ्घातो
गलशुण्डिका ॥"
"यस्य श्लेष्मा प्रकुपितः काकले
व्यवतिष्ठते ।
आशु सञ्जनयेच्छोथं करोति
गलशुण्डिकाम् ॥"
इति चरके सूत्रस्थानेऽष्टादशेऽध्याये ॥
तच्चिकित्सादिकं यथा, --
"गले च घण्टिकामार्गे
रक्तश्लेष्मविकारजा ।
लम्बिका वर्द्धते नृणां विज्ञेया
गलशुण्डिका ॥
रुणद्धि चास्य मार्गञ्च नेत्रस्रावः
प्रदृश्यते ।
शिरोऽर्त्तिः श्वासकासश्च ज्वरेणैव
प्रपच्यते ॥
आशुकारी महाप्राज्ञः शीघ्रं कुर्य्यात्
प्रति-
क्रियाम् ।
शस्त्रेण शुण्डिकां छित्त्वा
कुर्य्याद्विम्लापनं हितम् ॥
मागधी मरिचं पथ्या वचा
धान्ययवानिका ।

|  |  |  |
| --- | --- | --- |
|  |  | क्वाथः सोष्णः स्वेदनञ्च गलशुण्डोपशान्तये ॥<br>दिवारात्रौ यवान्याश्च मुखे सन्धारणं हितम् ।<br>मर्द्दनं कण्ठदेशे तु तेन सम्पद्यते सुखम् ॥<br>सिद्धार्थकं वचा कुष्ठं रजनी पारिभद्रकम् ।<br>गृहधूमं स लवणं कण्ठे वा लेपनं हितम् ॥ |

ज्वरे प्रोक्तानि पथ्यानि यानि तानि महामते ॥
न गौल्यं पिच्छिलं सेव्यं तैलं नैव गलामब
इति हारीते चिकित्सितस्थाने पञ्चचत्वारिंशे-
ऽध्याये ॥)

**गलस्तनी**, स्त्री, (गले स्तनाविव मांसपिण्डौ यस्याः ।)
छागी । इति हेमचन्द्रः । ४ । ३४१ ॥

**गला**, स्त्री, (गलतीति । गल् + अच् । स्त्रियां
टाप् ।) अलम्बुषा । इति भावप्रकाशः ॥

**गलाङ्कुरः**, पुं, (गलरोधकोऽङ्कुरो यत्र ।) गल-
रोगविशेषः । तत्पर्य्यायः । रोहिणी २ । इति
हेमचन्द्रः । ३ । १३१ ॥ तस्य सम्प्राप्तिपूर्ब्बक-
लक्षणमाह माधवकरः ।
"गलेऽनिलः पित्तकफौ च मूर्च्छितौ
प्रदूष्य मांसञ्च तथैव शोणितम् ।
गलोपसंरोधकरैस्तथाङ्कुरै-
र्निहन्त्यसून् व्याधिरयञ्च रोहिणी ॥"

**गलानिलः**, पुं, (गले कण्ठदेशे अनिलः प्राणवायु-
र्यस्य ।) मत्स्यविशेषः । तत्पर्य्यायः । गङ्गा-
टेयः २ । इति त्रिकाण्डशेषः ॥ गलानिकः
गलाविल इति च क्वचित् पाठः ॥

**गलिः**, पुं, (गिरति श्रमेण विना केवलं भक्षय-
तीति । गॄ + "सर्व्वधातुभ्य इन् ।" उणां । ४ ।
११७ । इति इन् । गुणः रस्यलत्वञ्च ।) शक्तो-
ऽप्यधूर्व्वहो वृषः । गडिया गरु इति भाषा ।
तत्पर्य्यायः । दुष्टवृषः २ । इति हेमचन्द्रः ।
४ । ३२९ ॥

**गलितः**, त्रि, (गल् + क्त ।) पतितः । तत्पर्य्यायः ।

**गल्वर्कः**, पुं, (गलुर्मणिविशेषः स इव अर्को दीप्ति-
र्यस्य ।) चषकः । मद्यपानपात्रम् । इति हेम-
चन्द्रः । ३ । ५७० ॥ मसारवन्मणिः । इति
त्रिकाण्डशेषः ॥ (यथा, महाभारते । ७ ।
१५ । ५३ ।
"मसारगल्वर्कसुवर्णरूप्यै-
र्वज्रप्रवालस्फटिकैश्च मुख्यैः ॥")

**गल्ह**, ङ कुत्सने । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-सकं-सेट् ।) अन्तःस्थतृतीयोपधः । ङ,
गल्हते । इति दुर्गादासः ॥

**गवयः**, पुं, (गु ङ शब्दे + भावे अप् । गवं शब्दं
याति प्रप्नोति गव इति शब्दं यातीति वा ।
गव + या + कः ।) गलकम्बलशून्यगोसदृशपशुः ।
(यथा, रामायणे । २ । १०३ । ४२ ।
"व्याघ्रगोकर्णगवया वित्रेसुः पृषतैः सह ॥")
तत्पर्य्यायः । गवालूकः २ । इति त्रिकाण्ड-
शेषः ॥ वनगौः ३ बलभद्रः ४ महागन्धः ५ ।
तन्मांसगुणौ । परुषत्वम् । बृंहणत्वञ्च । इति
राजनिर्घण्टः ॥ वांनरविशेषः । स तु वैवस्वत-
पुत्त्रः । यथा, --
"पुत्त्रा वैवस्वतस्यात्र पञ्च कालान्तकोपमाः ।
गयो गवाक्षो गवयः शरभो गन्धमादनः ॥"
इति रामायणम् ॥

**गवयी**, स्त्री, (गवय + जातौ गौरादित्वात् वा
ङीष् ।) गवयस्त्री । तत्पर्य्यायः । वनधेनुः २
भिल्लगवी ३ । इति राजनिर्घण्टः ॥

**गवराजः**, पुं, (गवेन शब्देन राजते इति । राज् +
अच् ।) वृषः । इति शब्दचन्द्रिका ॥

**गवलं**, क्ली, महिषशृङ्गम् । इत्यमरः । २ । ९ । १०० ॥

**गवलः**, पुं, (गवं शब्दं लातीति । ला + कः ।)
(अस्याः पर्य्याया यथा, --
"ऐन्द्रीन्द्रवारुणी चित्रा गवाक्षी गजचिर्भटा ।
मृगेर्व्वारुः पिटङ्कोटी विशाला च मृगादनी ॥"
इति वैद्यकरत्नमालायाम् ॥
व्यवहारोऽस्य यथा, --
"चित्रकं शृङ्गवेरञ्च तथादन्ती गवाक्ष्यपि ॥"
इति वैद्यकचक्रपाणिसंग्रहे बालरोगाधिकारे ॥
मामालाड़ु इति क्वचित् भाषा ॥)
शाखोटः ।
शेओडा इति भाषा ॥ इति राजनिर्घण्टः ॥
अपराजिता । (यथा, वैद्यकरत्नमालायाम् ।
"गवाक्ष्यश्वखुरीश्वेता श्वेतभण्डापराजिता ।
द्विविधा सा मिता नीला गिरिकर्णी गवादनी ॥")

**गवाची**, स्त्री, (गवि भूमौ अञ्चति गच्छतीति ।
अञ्च + क्विप् । ङीष् । "अवङ् स्फोटायनस्य ।"
६ । १ । १२३ । इत्यवङ् ।) मत्स्यविशेषः ।
पाँकाल माछ इति भाषा ॥ अस्य गुणाः ।
अजीर्णकारित्वम् । गुरुत्वम् । श्लेष्मप्रकोपन-
त्वञ्च । इति राजवल्लभः ॥

**गवादनं**, क्ली, (अद्यते भक्ष्यते इति । अद् +
कर्म्मणि ल्युट् । ततः षष्ठीतत्पुरुषः ।) घासः ।
इति शब्दचन्द्रिका ॥

**गवादनी**, स्त्री, (गवादन + गौरादित्वात् ङीष् ।)
इन्द्रवारुणी । (अद्यतेऽस्यामिति । अद् +

स्रस्तः २ ध्वस्तः ३ भ्रष्टः ४ स्कन्नः ५
पन्नः ६
च्युतः ७ । इत्यमरः । ३ । १ । १०४ ॥
(यथा,
भागवते । १ । १ । ३ ।
"निगमकल्पतरोर्गलितं फलं
शुकमुखादमृतद्रवसंयुतम् ॥")

**गलुः**, पुं, (गलतीति । गल् + उन् ।) मणि-

विशेषः । इति महाभारतम् ॥

**गलेगण्डः**, पुं, (गले गंण्ड इव यस्य । अलुक् समासः ।)

पक्षिविशेषः । तत्पर्य्यायः । मर्कटः २ ।
इति
त्रिकाण्डशेषः ॥ (हाडगिला इति भाषा ॥)

**गलेस्तनी**, स्त्री, (गले स्तनाविव मांसपिण्डौ यस्याः ।

अलुक् समासः ।) छागी । इति
राजनिर्घण्टः ॥

**गल्भ**, ङ धृष्टत्वे । इति कविकल्पद्रुमः ॥ (भ्वां-

आत्मं-अकं-सेट् ।) अन्तःस्थतृतीयोपधः । ङ,
गल्भते लोकः प्रगल्भः स्यादित्यर्थः । इति
दुर्गादासः ॥

**गल्या**, स्त्री, (गलानां कण्ठानां समूहः । "पाशा-

दिभ्यो यः ।" ४ । २ । ४९ । इति यः ।) गल-
समूहः । कण्ठानां समूहः । इत्यमरः । ३ ।
३ । ४३ ॥

**गल्लः**, पुं, गण्डः । इति हेमचन्द्रः ॥ गाल इति

भाषा ॥

**गल्लचातुरी**, स्त्री, (गल्ले गण्डे गण्डमधिकृत्य चातुरी

यस्याः यस्यां वा । संज्ञात्वान्न कप् ।) उपधान-
विशेषः । इति जटाधरः ॥ गालवालिश
इति
भाषा ॥

वनमहिषः । इति हेमचन्द्रः । ४ । ३४९ ॥
(यथा,
बृहत्संहितायाम् । ३२ । १७ ।
"गवलालिकुलाहिनिभां विसृजन्ति पयः
पयो-
वाहाः ॥")

**गवाक्षः**, पुं, (गवामक्षीव । "अक्ष्णोऽदर्शनात् ।"

५ । ४ । ७६ । इत्यच् । यद्वा, गावः रश्मयः
अक्ष्णुवन्ति व्याप्नुवन्ति अनेन इति । अक्षू
व्याप्तौ
+ अकर्त्तर्य्यर्थे घञ् ।) गवामक्षीव यः ।
जाना-
लार जाली इति भाषा ॥ (यथा, रघुः । ७ ।
७ ।
"उत्सृष्टलीलागतिरागवाक्षा-
दलक्तकाङ्कां पदवीं ततान ॥")
तत्पर्य्यायः । वातायनम् २ । इत्यमरः । २ ।
२ । ९ ॥
बधूद्गयनम् ३ जालम् ४ जालकम् ५ । इति
कोषान्तरम् । इति भरतः ॥ वानरविशेषः ।
इति मेदिनी । क्षे । ३५ ॥ स तु
वैवस्वतपुत्त्रः ।
यथा, रामायणे ।
"पुत्त्रा वैवस्वतस्यात्र पञ्च कालान्तकोपमाः
।
गयो गवाक्षो गवयः शरभो गन्धमादनः ॥"

**गवाक्षी**, स्त्री, (गां भूमिमक्ष्णोति व्याप्नोतीति ।

अक्षू व्याप्तौ + "कर्म्मण्यण् ।" ३ । २ । १ ।
इत्यण् । स्त्रियां ङीप् ।) गोडुम्बा । इत्यमरः
।
२ । ४ । १५६ ॥ गोमुक् इति भाषा ॥ इन्द्र-
वारुणी । राखाल शसा इति भाषा ॥

अधिकरणे ल्युट् । ततः
षष्ठीतत्पुरुषस्ततः
स्त्रियां ङीष् ।) गवां घासभक्षणाधारः ।
इति
मेदिनी । ने । १७९ ॥ गरुर घास
खाइवार गडा
इति भाषा ॥ नीलापराजिता । इति राज-
निर्घण्टः ॥ (यथास्याः पर्य्यायाः, --
"गवाक्ष्यश्वखुरी श्वेता
श्वेतभण्डापराजिता ।
द्विविधा सा सिता नीला गिरिकर्णी
गवादनी ॥"
इति वैद्यकरत्नमालायाम् ॥)

**गवालूकः**, पुं, (गवेन शब्देन अलति पर्य्याप्नो-

तीति । अल् + बाहुलकात् ऊकञ् ।)
गवयः ।
इति त्रिकाण्डशेषः ॥

**गवाशनः**, पुं, (गामश्नातीति । अश ग भोजने + ल्युः ।)

गोभक्षकः । मुचि इति भाषा ॥ यथाह
कश्चित् ।
"माताप्येका पिताप्येको मम तस्य च
पक्षिणः ।
अहं मुनिभिरानीतः स चानीतो गवाशनैः
॥"

**गवाषिका**, स्त्री, लाक्षा । इति रत्नमाला ॥ गरा-

धिकापि पाठः ॥ (गवायिका इति
क्वचित् पाठः ॥)

**गवीश्वरः**, पुं, (गवामीश्वरः । पक्षे अवङादेशा-

मावः ।) गवां स्वामी । तत्पर्य्यायः ।
गोमान् २
गोमी ३ । इत्यमरः । २ । ९ । ५८ ॥
गवेश्वरोऽपि ॥

**गवेडुः**, स्त्री, (गवे गवार्थं दीयते इति । दा +

मृगय्वादित्वात् कुः । पृषोदरात् दकारस्य
डत्वम् ।
तत्पुरुषे कृतीत्यलुक् ।) धान्यविशेषः ।
इत्य-

| | | |
|---|---|---|
| | | मरः । २ । ९ । २५ ॥ मङ्गड् इति भाषा ॥<br>**गवेधुः**, पुं, (गवे गवार्थ धीयते इति । धा + कुः । तत्पुरु कृतीत्यलुक् । यद्वा, गवि भूमौ एधते इति । गो + एघ वृद्धौ + कुः ।)<br>गवेडुः । इति भरतः ॥ (क्वचित् स्त्रीलिङ्गेऽपि<br>दृश्यते । यथा, -- |

"गवेधुका तु विद्वद्भिर्गवेधुः कथिता
स्त्रियाम् ।
गवेधुः कटुका स्वाद्वी कार्शकृत्
कफनाशिनी ॥"
इति भावप्रकाशः ॥)

**गवेधुकं**, क्ली, (गवेधुरिव कायतीति । कै + कः ।
गैरिकम् । इति राजनिर्घण्टः ॥
(तृणधान्य-
विशेषः । गड्गडि इति भाषा ॥ यथा, --
"चिल्लीलड्वाकलोणीका
कुरुण्टकगवेधुकम् ।"
इति वाभटे सूत्रस्थाने षष्ठेऽध्याये ॥
सर्पविशेषे पुं । यथा, सुश्रुते
कल्पस्थाने ४ अध्याये ।
"महासर्पः शङ्खपाली लोहिताक्षो
गवेधुकः
परिसर्पः" इत्यादयः ॥)

**गवेधुका**, स्त्री, (गवेधु + स्वार्थे संज्ञायां वा कन् ।)
तृणधान्यविशेषः । गड्गड् देधान इति
च
भाषा । (यथा, विष्णुपुराणे । १ । ६ ।
२५ ।
"श्यामाकास्त्वथ नीवारा जर्त्तिलाः
सगवेधुकाः ।")
तत्पर्य्यायः । गवेडुः २ । इत्यमरः । २
। ९ । ५२ ॥
गवेधुः ३ गवेडका ४ । इति तट्टीका ॥
क्षुद्रा ५
गोजिह्वा ६ गुन्द्रा ७ गुत्थः ८ । इति
रत्नमाला ॥
नागबला । इति राजनिर्घण्टः ॥
(अस्याः
पर्य्याया यथा, --
"गाङ्गेरुकी नागबला झषा ह्रस्वगवेधुका
।
६ । १ । ७९ । इति अव् ।) गोसमूहः ।
तत्-
पर्य्यायः । गोत्रा २ । इत्यमरः । २ । ९ ।
६० ॥
गव्यूतिः । (गवि इषौ साधुः । गो + यत् ।
तत-
ष्टाप् ।) ज्या । इति हेमचन्द्रः ॥ गोरोचना
।
इति राजनिर्घण्टः ॥

**गव्यूतं**, क्ली, (गोर्य्यूतिः । "गोर्य्यूतौ छन्दस्युपसंख्या-
नम् ।" "अध्वपरिमाणे च ।" ६ । १ ।
७९ ।
इत्यस्य वार्त्तिं इति अव् । पृषोदरात्
इकार-
लोपे साधुः ।) क्रोशः । गव्यूतिः । इति
हेम-
चन्द्रः । ३ । ५५१ ॥

**गव्यूतिः**, स्त्री, पुं, (गोर्यूतिः । "गोर्यूतौ छन्दस्युप-
संख्यानम् ।" "अध्वपरिमाणे च ।" ६ ।
१ ।
७९ । इत्यस्य वार्त्तिं इति अव् ।)
द्विसहस्र-
धनुः । इति शब्दार्णवः ॥ क्रोशद्वयम् ।
(यथा,
राजतरङ्गिण्याम् । ३ । ४०९ ।
"गव्यूतिमात्रमासन्ने देवीधामनि धैर्य्यवान्
।
धुन्वन् कराभ्यां मधुपान् धावति स्म स
धीरधीः ॥")
तत् पर्य्यायः । क्रोशयुगम् २ । इत्यमरः ।
२ । १ ।
१८ ॥ गव्यूतम् ३ गोरुतम् ४ गोतमम् ५
। इति
भरतधृतवाचस्पतिः ॥ गव्या ६ । इति
हेम-
चन्द्रः । ३ । ५५२ ॥

**गह**, त् क गहने । इति कविकल्पद्रुमः ॥ (अदन्त-
इत्यमरः । २ । ३ । ६ ॥ वनम् । इति मेदिनी ।
रे । १४९ ॥ रोदनम् । इति हेमचन्द्रः । ६ ।
३८ ॥
(गहने त्रि । यथा, भागवते । १ । ६ । १३ ।
"नलवेणुशरस्तम्बकुशकीचकगह्वरम् ।
एक एवातियातोऽहमद्राक्षं विपिनं महत् ॥")

**गह्वरः**, पुं, (गाह्यते विलुड्यते इति । गाह् विलो-
डने + "छित्वरच्छत्वरेति ।" उणां । ३ । १ ।
इति वरच्प्रत्ययेन निपातनात् साधुः ।)
निकुञ्जः । इति मेदिनी । रे । १४९ ॥

**गह्वरी**, स्त्री, (गह्वर + स्त्रियां ङीप् ।) गुहा ।
इति शब्दरत्नावली ॥

**गा**, ङ गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-
सकं-सेट् ।) ङ, गाते । इति दुर्गादासः ॥

**गा**, र लि स्तुतौ । जन्मनि । इति कविकल्पद्रुमः ॥
(ह्वां-परं-सकं-सेट् ।) र, वैदिकः । लि,
जगाति । इति दुर्गादासः ॥

**गा**, स्त्री, (जगाति स्तौति अनया । गा स्तुतौ +
क्विप् ।) गाथा । इति पुरुषोत्तमः ॥

**गाङ्गं**, त्रि, (गङ्गाया इदमिति अण् ।) गङ्गा-
सम्भूतम् । इति मेदिनी ॥ गे । ५ । (यथा,
कुमारे । ५ । ३७ ।
"विकीर्णसप्तर्षिबलिप्रहासिभि-
स्तथा न गाङ्गैः सलिलैर्दिवच्च्युतैः ॥"
मेघधाराविनिःसृते जलविशेषे, क्ली ।
तल्लक्षणा-
दिकं यथा, सुश्रुते सूत्रस्थाने ४५ अध्याये ।
"तत्रान्तरीक्षं चतुर्व्विधम् । तद्यथा, धारं
कारं तौषारं हैममिति । तेषां धारं प्रधानं
लधुत्वात् । तत्पुनर्द्विविधं गाङ्गं सामुद्रञ्चेति ।
तत्र गाङ्गमाश्वयुजे मासि प्रायशो वर्षति
तयोर्द्वयोरपि परीक्षणं कुर्व्वीत शाल्योदन-
पिण्डमकुथितमविदग्धं रजतभाजनोपहितं
वर्षति
देवे वहिष्कुर्व्वीत स यदि मुहूर्त्तं स्थितस्तादृश

खरवल्लरिका विश्ववेदा गोरक्षतण्डुली ॥”
इति च वैद्यकरत्नमालायाम् ॥)

**गवेरुकं**, क्ली, (गां भूमिमीर्त्ते उत्पत्तिकारणत्वेन प्राप्नोतीति । गो + ईर् + बाहुलकादुक । ततो-ऽवङादेशः ।) गैरिकम् । इति त्रिकाण्डशेषः ॥

**गवेशका**, स्त्री, (ईष्टे इति । ईश् + अच् । ततो गवामीशः । स इव कायतीति । कै + कः ।) वृक्ष-विशेषः । इति शब्दचन्द्रिका ॥ गोरक्ष चाउ-लिया । इति माषा ॥ (गुणादयोऽस्या गोरक्ष-तण्डुलाशब्दे ज्ञातव्याः ॥)

**गवेष**, त् क मार्गणे । इति कविकल्पद्रुमः ॥ (अदन्तचुरां-परं-सकं-सेट् ।) मूर्द्धन्योपधः । अजगवेषत् गुणं गुणी । इति दुर्गादासः ॥

**गवेषणा**, स्त्री, क्ली, (गवेष + भावे युच् ।) अन्वे-षणा । इत्यमरः । २ । ७ । ३२ ॥

**गवेषितं**, त्रि, (गवेष्यते स्म इति । गवेष + क्त ।) अन्वेषितम् । इत्यमरः । ३ । १ । १०५ ॥

**गवोद्धः**, पुं, उत्तमगवः । गोषूद्धः प्रशस्तः । इति व्युत्पत्तिः ॥

**गव्यं**, त्रि, (गोरिदं गोर्विकारो वा । “गोपयसो-र्यत् ।” ४ । ३ । १६० । इति यत् । “वान्तो यि प्रत्यये ।” ६ । १ । ७९ । इति अव् ।) गवां सर्व्वम् । गोसम्बन्धि । तत्तु दुग्धगोमयादि । इत्यमरः । २ । ९ । ५० ॥ (यथा, मनुः । ३ । ७१ ।

चुरां-परं-सकं-सेट् ।) गहनं दुर्ब्बोधः । गह-यति शास्त्रं जडधीः । दुःखेन जानातीत्यर्थः । इति दुर्गादासः ॥

**गहनं**, क्ली, (गाह्यते दुर्गम्यतेऽस्मिन्निति । गाह् + बहुलमन्यत्रापि इति युच् कृच्छ्रगहनयोरिति निर्द्देशात् वा ह्रस्वः । यद्वा, गह त् क गहने + ल्युट् ।) वनम् । इत्यमरः । २ । ४ । १ ॥ (यथा, गोः रामायणे । ६ । ९ । ६ ।
“सखीस्नेहेन तद्भीरु मया सर्व्वं प्रतिश्रुतम् ।
निलीय गहने शून्ये मयमुत्सृज्य रावणात् ॥”)
गह्वरम् । दुःखम् । इति मेदिनी । ने । ५७ ॥
(पुं, विष्णुः । दुर्ज्ञेयत्वादस्य तथात्वम् । यथा, महाभारते । १३ । १४९ । ५४ ।
“करणं कारणं कर्त्ता विकर्त्ता गहनो गुहः ।”
“सर्व्वरूपं सामर्थ्यं चेष्टितं तस्य ज्ञातुं न शक्यते इति गहनः ।” इति भाष्यम् ॥)

**गहनः**, त्रि, (गाह्यते दुःखेन गम्यते इति । गाह् + युच् । कृच्छ्रगहनयोरिति निर्द्देशात् वा ह्रस्वः ।) दुर्गमः । दुष्प्रवेशः । तत्पर्य्यायः । कलिलः २ । इत्यमरः । २ । ४ । १ ॥ (यथा, रामायणे । ३ । १ । २३ ।
“गहनेष्वाश्रमान्तेषु लीलाविकृतदर्शनाः ।
रमन्ते तापसांस्तत्र त्रासयन्तः सुदारुणाः ॥”)

**गहना**, स्त्री, अलङ्कारः । इति देवीपुराणम् ॥

**गह्वरं**, क्ली, (गाह्यते इति । गाह् + “छित्वरच्छत्व-

एव भवति तदा गाङ्गं पततीत्यवगन्तव्यं वर्णा-न्यत्वे सिक्थक्लेदे च सामुद्रमिति विद्यात्तन्नो-पादेयम् । सामद्रमप्याश्वयुजे मासि गृहीतं गाङ्गवद् भवतीति ॥”
अस्य परीक्षा यथा, --
“गाङ्ग-सामुद्रविज्ञानं कथयिष्यामि साम्प्रतम् ।
धारितं येन पात्रेण लक्ष्यते येन तद्विधम् ॥
धौतं शुद्धं सितं वस्त्रं चतुर्हस्तप्रमाणकम् ।
दण्डांस्त्रिहस्तांश्च चतुश्चतुष्कोणेषु बन्धयेत् ।
तस्मात् परीक्षते तोयं शुद्धे रौप्यमयेऽथवा ॥
कांस्यपात्रे समुद्धृत्य परीक्षेत भिषग्वरः ।
शुद्धकर्म्मा स तल्लब्ध्वा श्वेतशाल्योदनस्य वा ॥
पिण्डिका तत्र संक्षिप्ता नान्यथा भाति सा पुनः ।
श्वेता च निर्म्मला पिण्डी शुद्धञ्च विमलं पयः ॥
तद्‌गाङ्गं सर्व्वदोषघ्नं गृहीत्वा हि सुभाजने ।
तद्धारयेच्च मतिमान् बल्यं मेध्यं रसायनम् ॥
श्रमक्लमपिपासाघ्नं कण्डूदोषनिवारणम् ।
लघु मूर्च्छातृषा-च्छर्द्दि-मूत्र-स्तम्भ-विनाशनम् ॥
गाङ्गोदकस्य वृष्टिः स्याद्दिवसे वा प्रदोषतः ॥”
इति हारीते प्रथमे स्थाने सप्तमेऽध्याये ॥)
गङ्गागभजातत्वात् सुवर्णमपि । इति महा-भारतम् ॥)

“संवत्सरन्तु गव्येन पयसा पायसेन च ॥”)
गोहितम् । इति मेदिनी । ये । १७ ॥

**गव्यं**, क्ली, (गवि बाणे साधु । गो + यत ।
ततोऽव् ।) ज्या । (गवि नेत्रे साधु इति ।)
रागद्रव्यम् । इति मेदिनी । ये । १७ ॥

**गव्या**, स्त्री, (गवां समूहः । “खलगोरथात् ।”
४ । २ । ५० । इति यत् । “वान्तो यि प्रत्यये ।”
रेति ।” उणां । ३ । १ । इति वरच्प्रत्ययेन निपातनात् साधुः ।) गुहा । (यथा, रघुः । २ । २६ ।
“गङ्गाप्रपातान्तविरूढशष्पं
गौरीगुरोर्गह्वरमाबिवेश ॥” * ॥
गाह्यते विलुड्यते आत्माऽनेन इति ।)
दम्भः ।

**गाङ्गः**, पुं, (गङ्गाया अपत्यं पुमानिति । “शिवा-
दिभ्योऽण् ।” ४ । १ । ११२ ।
इत्यण् ।) भीष्मः ।
(यथा, हरिवंशे । ३२ । १११ ।
“गाङ्गं देवव्रतं नाम पुत्त्रं
सोऽजनयत् प्रभुः ।
स तु भीष्म इति ख्यातः
कौरवाणां पितामहः ॥”
अस्य जभवृत्तान्तादिकं
भीष्मशब्दे द्रष्टव्यम् ॥)
कार्त्तिकेयः । इति मेदिनी । गे । ५
॥

**गाङ्गटः**, पुं, (गाङ्गे गङ्गातीरादौ अटति भ्रम-
तीति । अट् + अच् ।
शकन्ध्वादित्वात् साधुः ।)
मत्स्यभेदः । इति शब्दरत्नावली
॥ चिङ्गिडि
माछ इति भाषा ॥ (चिङ्गिटशब्दे
विवरण-
मस्य ज्ञेयम् ॥)

**गाङ्गटकः**, पुं, (गाङ्गे गङ्गातीरादौ अटतीति ।
अट् + ण्वुल् ।) गाङ्गटमत्स्यः ।
इति शब्दरत्ना-
वली ॥

**गाङ्गटेयः**, पुं, (गाङ्गे अटतीति । अट गतौ +
बाहुलकात् एयः ।) गाङ्गटमत्स्यः
। इति
शब्दरत्नावली ॥

**गाङ्गायनिः**, पुं, (गङ्गाया अपत्यं पुमान् । “तिका-
दिभ्यः फिञ् ।” । ४ । १ । १५४
। इति फिञ् ।)
भीष्मः । इति त्रिकाण्डशेषः ॥
कार्त्तिकेयश्च ॥

**गाङ्गेयं**, क्ली, (गङ्गाया अपत्यम् । “शुभ्रा-
त्वात् ङीष् ।) गोरक्षतण्डुला । इत्यमरः । २ ।
४ । ११७ ॥ (यथा, सुश्रुते सूत्रस्थाने ४६
अध्याये । “क्षीरवृक्षफलजाम्बवराजादनतोदन
तिन्दुकवकुलधन्वनाश्मन्तकाश्वकर्णफल्गुपरूषक-
गाङ्गेरुकीपुष्करवर्त्तिविल्वबिल्वीप्रभृतीनि॥”
यथास्याः पर्य्यायाः ।
“गाङ्गेरुकी नागबला झषा ह्रस्वगवेधुका ।
खरवल्लरिका विश्व-वेदा गोरक्षतण्डुली ॥”
इति वैद्यकरत्नमालायाम् ॥
यथास्या गुणाः ।
“गाङ्गेरुकी करीरञ्च विम्बीतोदनधन्वनम् ।
मधुरं सकषायञ्च शीतं पित्तकफापहम् ॥”
इति चरके सूत्रस्थाने सप्तविंशेऽध्याये ॥)

**गाङ्गेष्ठी**, स्त्री, (गाङ्गे गङ्गादिनदीतटे तिष्ठतीति ।
स्था + कः अलुक् । गौरादित्वात् ङीष् ।) कठ-
शर्क्करालता । इति हारावली । २१० ॥ नटा
इति भाषा ॥

**गाञ्जिकायः**, पुं, वर्त्तिकपक्षी । इति राजनिर्घण्टः ॥

**गाढं**, क्ली, (गाहते स्म इति । गाह विलोडने +
क्तः ।) अतिशयः । दृढम् । (यथा, आर्य्या-
सप्तशत्याम् । ६१० ।
“आलिङ्गति सा गाढं पुनः पुनर्यामिनीप्रथमे ॥”)
तद्युक्ते त्रि । इत्यमरः । १ । १ । ७० ॥ (यथा,
रघुः । ९ । ७२ ।
“श्रमफेनमुचा तपस्विगाढां
तमसां प्राप नदीं तुरङ्गमेण ॥”)

**गाढमुष्टिः**, पुं, (गाढा दृढा मुष्टिर्यत्र । दृढमुष्ट्या
धारणादस्य तथात्वम् ।) खड्गः । कृपणे त्रि ।
इति मेदिनी । टे । ६१ ॥ (दातृत्वाभावाद्वास्य
तथात्वम् ॥)

**गाढावटी**, स्त्री, (गाढा दृढा वटी वटिका यत्र ।
निपातनात् पुंवद्भावाभावः ।) चतुरङ्गक्रीडा-
मध्ये क्रीडाविशेषः । यथा, तिथ्यादितत्त्वे ।
“नौकैका वटिका यस्य विद्यते खेलने यदि ।
गाढावटीति विख्याता पदं तस्य न दुष्यति ॥”

**गाणपत्यः**, त्रि, (गणपतिर्गणेश उपास्यदेवो

“धनुर्ग्राहश्चार्जुनः सव्यसाची
धनुश्च तद्गाण्डिवं भीमवेगम् ॥”)
घनुर्मात्रम् । इति मेदिनी ॥ वे । ३६ ॥

**गाण्डीवः**, पुं, क्ली, (गाण्डिर्ग्रन्थिः । “कृदिकारान्ता-
दिति ।” ङीषि कृते गाण्डी । सा
विद्यते
अस्य । “गाण्ड्यजगात् संज्ञायाम् ।”
५ । २ ।
११० । इति वः ।) अर्ज्जुनधनुः ।
इत्यमरः । २ ।
८ । ८४ ॥ (यथा, महाभारते । ४ ।
४१ । १ ।
“यन्मां पूर्ब्बमिहापृच्छः
शत्रुसेनानिवर्हणम् ।
गाण्डीवमेतत् पार्थस्य लोकेषु विदितं
धनुः ॥”
एतद्धनुर्हि ब्रह्मादयोऽपि आदौ
धृतवन्तः ।
यदुक्तं तत्रैव । ४ । ४१ । ५--८ ।
“एतद्वर्षसहस्रन्तु ब्रह्मा पूर्ब्बमधारयत्
।
ततोऽनन्तरमेवाथ प्रजापतिरधारयत्
॥
त्रीणि पञ्चशतञ्चैव शक्रोऽशीतिञ्च पञ्च
वै ।
सोमः पञ्चशतं राजा तथैव वरुणः
शतम् ॥
पार्थः पञ्च च षष्टिञ्च वर्षाणि
श्वतवाहनः ।
महावीर्य्यं महद्दीव्यमेतद्धनुरनुत्तमम् ॥
एतच्च मानुषं प्राप्तं
वरुणाच्चारुदर्शनम् ।
पूजितं सुरमर्त्येषु बिभर्त्ति परमं वपुः
॥”
स्वाण्डवदाहनार्थं हि वह्निना
वरुणशकासादा-
नीयधनुरेतदर्ज्जुनाय प्रदत्तम् ।
तत्कथा यथा,

दिभ्यश्च ।” ४ । १ । १२३ ।
इति ढक् । गङ्गा-
जातत्वादस्य तथात्वम् ।) स्वर्णम्
। (यदुक्तं
महाभारते वनपर्व्वणि ।
“यं गर्भं सुषुवे गङ्गा
पावकाद्दीप्ततेजसम् ।
तदुल्वं पर्व्वते न्यस्तं हिरण्यं
समपद्यत ॥”)
धुस्तूरः । कशेरु । इत्यमरः । २ ।
९ । ९४ ॥
मुस्तम् । इति हेमचन्द्रः ॥ (अस्य
पर्य्यायाः
यथा, वैद्यकरत्नमालायाम् ।
“मेघाख्यं मुस्तकं मुस्ता गाङ्गेयं
भद्रन्मुस्तकम् ॥”
गङ्गाजातजलादौ त्रि । यथा,
महाभारते ।
३ । ३ । ३४ ।
“योगमास्थाय धर्म्मात्मा
वायुंभक्ष्यो जितेन्द्रियः ।
गाङ्गेयं वार्य्युपस्पृश्य प्राणायामेन
तस्थिवान् ॥”)

**गाङ्गेयः**, पुं, (गङ्गाया अपत्यं पुमान् । “शुभ्रा-
दिभ्यश्च ।” ४ । १ । १२३ ।
इति ढक् ।)
भीष्मः । (यथा, देवीभागवते । २
। ४ । ३७ ।
“वसुदेवं विदित्वैनं सुखं भुङ्क्ष्व
सुतोद्भवम् ।
गाङ्गेयोऽयं महाभाग ! भविष्यति
बलाधिकः ॥”
अस्य जन्मविवरणं तत्रैव २
अध्याये तथा
भीष्मशब्दे विस्तरशो द्रष्टव्यम् ॥)
कार्त्तिकेयः ।
इति हेमचन्द्रः ॥ (यथा,
महाभारते । १ । १३८ । १३ ।
“आग्नेयः कृत्तिकापुत्त्रो रौद्रो
गाङ्गेय इत्यपि ।
यस्य । गणपति + ण्यः । केषाञ्चिन्मते अश्वपत्या-
दिभ्यश्चेति ण्यापवादोऽण् । तत्र गाणपत इति
साधुः ।) गणेशोपासकः । इत्यागमः ॥ (गण-
पतेर्भावः कर्म्म वा “गुणवचनब्राह्मणादिभ्यः
कर्म्मणि च ।” ५ । १ । १२४ । इति ष्यञ् ।)
गणपतिसम्बन्धी । गणपतिभावे क्ली ॥ (यथा,
महाभारते । ३ । ८५ । ६७ ।
“प्रदक्षिणमुपावृत्य गाणपत्यमवाप्नुयात् ॥”)

**गाणिक्यं**, क्ली, (गणिकानां वेश्यानां समूहः ।
“गणिकाया यञिति वक्तव्यम् ।” ४ । २ । ४० ।
इत्यस्य वार्त्तिं इति यञ् ।) गणिकासमूहः ।
बहुवेश्याः । इत्यमरः । २ । ६ । २२ ॥

**गाण्डिवः**, पुं, क्ली, (गाण्डिर्ग्रन्थिरस्यास्तीति । गाण्डि
+ “गाण्ड्यजगात् संज्ञायाम् ।” ५ । २ । ११० ।
इति वः ।) अर्ज्जुनधनुः । (यथा, महाभारते ।
३ । २३५ । ३० ।
महाभारते । १ । २२६ । १--९ ।
“एवमुक्तः स भगवान् धूमकेतुर्हु
ताशनः ।
चिन्तयामास वरुणं लोकपालं
दिदृक्षया ॥
आदित्यमुदके देवं निवसन्तं
जलेश्वरम् ।
स च तच्चिन्तितं ज्ञात्वा दर्शयामास
पावकम् ॥
तमब्रवीद्धूमकेतुः प्रतिगृह्य जलेश्वरम्
।
चतुर्थं लोकपालानां देवदेवं सनातनम्
॥
सोमेन राज्ञा यद्दत्तं धनुश्चैवेषुधी च ते
।
तत् प्रयच्छोभयं शीघ्रं रथञ्च
कपिलक्षणम् ॥
कार्य्यञ्च सुमहत् पार्थो गाण्डीवेन
करिष्यति ।
चक्रेण वासुदेवश्च तन्ममाद्य
प्रदीयताम् ॥
ददानीत्येव वरुणः पावकं प्रत्यभाषत
।
तदद्भुतं महावीर्य्यं
यशःकीर्त्तिविवर्द्धनम् ॥
सर्व्वशस्त्रैरनाधृष्यं सर्व्वशस्त्रप्रमाथि
च ।
सर्व्वायुधमहामात्रं परसैन्यप्रधर्षणम् ॥
एकं शतसहस्रेण सम्मितं राष्ट्रवर्द्धनम्
।
चित्रमुच्चावचैर्व्वर्णैः शोमितं
श्लक्ष्णमव्रणम् ॥
देवदानवगन्धर्व्वैः पूजितं शाश्वतीः
समाः ।
प्रादाच्चैव धनूरत्नमक्षय्ये च महेषुधी
॥”
“तच्च दिव्यं धनुःश्रेष्ठं ब्रह्मणा
निर्म्मितं पुरा ।
गाण्डीवमुपसंगृह्य बभूव
मुदितोऽर्ज्जुनः ॥”)
कार्म्मुकम् । इति मेदिनी । वे । ३६ ॥

श्रूयते भगवान् देवः सर्व्वदेवमयो गुहः ॥”)
इल्लीशमत्स्यः । इति त्रिकाण्डशेषः ॥ भद्र-
मुस्ता । इति राजनिर्घण्टः ॥

**गाङ्गेरुकी**, स्त्री, (गाङ्गं जलविशेषमीरयतीति ।

ईर गतौ क्षेपणे च + “मृगय्वादयश्च ।” उणां ।
१ । ३८ । इति कुः । ततः स्वार्थे कन् गौरादि-

**गाण्डीवी**, [न्] पुं, (गाण्डीवोऽख्यस्य । गाण्डीव

+ “अत इनिठनौ ।” ५ । २ । ११५ । इति
इनिः ।) अर्ज्जुनः । इति त्रिकाण्डशेषः ॥ अर्ज्जुन-
वृक्षः । इति राजनिर्घण्टः ॥

**गाता**, [ऋ] त्रि, (गायतीति । गै गाने + तृच् ।)

गायकः । इति सङ्गीतदामोदरः ॥ (यथा, हरि-
वंशे । ५४ । ११ ।
“गाता चतुर्णां वेदानामुद्गाता प्रथमर्त्विजाम् ॥”

**गातुः**, पुं, (गायतीति । गै गाने + "कमिमनि-
जनिगाभायाहिभ्यश्च ।" उणां । १ । ७३ । इति
तुः ।) कोकिलः । भ्रमरः । गन्धर्व्वः । इति मेदिनी । ते । १५ ॥ (गाते गच्छतीति । गा ङ गतौ + कमिमनीतिसूत्रे गानिर्द्देशात् तुः । पथिकः । इति उज्ज्वलदत्तः ॥ गै गाने + भावे तु । गानम् । यथा, ऋग्वेदे । ४ । ५१ । १ । "गातुं कृण्वन्नुषसो जनाय ।" "गातुं गानम् ।" इति भाष्यम् ॥ गाते गच्छत्यत्र इति । गा ङ गतौ + अधिकरणे तु । गमनीयः पन्थाः । यथा,
ऋग्वेदे । ९ । ८५ । ४ । "उरुं नो गातुं कृणु सोममीढ्वः ।" "गातुं गन्तव्यमार्ग्गम् ।" इति भाष्यम् ॥ पृथिवी । यथा, तत्रैव । ३ । ३१ । १५ ।
"इन्द्रो नृभिरजनद्दीद्यानः साकं सूर्य्यमुषसं गातुमग्निम् ।" "गातुं पृथिवीम् ।" इति भाष्यम् ॥ गा र लि स्तुतौ + भावे तुः । स्तवः ।
यथा, तत्रैव । ४ । ४ । ६ । "स ते जानाति सुमतिं यविष्ठ य ईवते ब्रह्मणे गातुमैरत् ।" "गातुं स्तवम् ।" इति भाष्यम् ॥ उपायः । यथा, तत्रैव । ५ । ६५ । ४ । "मित्रो अंहोश्चि-
दादुरुक्षयाय गातुं वनते ।" "गातुमुपायम् ।" इति भाष्यम् ॥)

**गातुः**, त्रि, (गाते कोपं गच्छतीति । गा ङ गतौ
+ "कमिमनीति ।" उणां । १ । ७३ । इति गानिर्द्देशात् तुः ।) रोषणः । इति मेदिनी । ते । १५ ॥ (गायतीति । गै गाने + तुः ।) गायनः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**गात्र**, त् क ङ शैथिल्ये । इति कविकल्पद्रुमः ॥
(अदन्तचुरां-आत्मं-अकं-सेट् ।) दन्त्यवर्गमध्यः ।
ङ, गात्रयते गात्रापयते । इति दुर्गादासः ॥

**गात्रं**, क्ली, (गच्छत्यनेन । गम् + "गमेरा च ।"
भूतात्मा २५ स्वर्गलोकेशः २६ स्कन्धः २७
पञ्जरः २८ कुलम् २९ बलम् ३० । इति जटाधरः ॥
(गात्रवादनादि निषेधो यथा, --
"गात्रवक्त्वनखैर्वाद्यं हस्तकेशावधूननम् ।
तोयाग्निपूज्यमध्येन यानं धूमं शवाश्रयम् ॥
मद्यातिसक्तिं विश्रम्भस्वातन्त्र्ये स्त्रीषु च त्यजेत् ॥"
इति वाभटे सूत्रस्थाने तृतीयेऽध्याये ॥)

**गात्रभङ्गा**, स्त्री, (गात्रस्य भङ्गोऽवसादो यस्याः ।)
शूकशिम्बी । इति शब्दचन्द्रिका ॥

**गात्रमार्ज्जनी**, स्त्री, (गात्रं मृज्यतेऽनयेति । मृज्
+ ल्युट् + स्त्रियां ङीप् ।) शरीरमार्ज्जनार्थं
वस्त्रम् । इति लोकप्रसिद्धिः ॥ गामोचा इति
भाषा ॥

**गात्रसङ्कोची**, [न्] पुं, (गात्रं सङ्कोचयतीति ।
सम् + कुच् + णिच् + णिनिः । यद्वा, गात्रस्य
सङ्कोची ।) जाहकजन्तुः । इति राजनिर्घण्टः ॥

**गात्रसंप्लवः**, पुं, (गात्रेण संप्लवते भासते सन्तरति
जले इत्यर्थः । सम् + प्लु + अच् ।) प्लवपक्षी ।
इति हेमचन्द्रः । ४ । ४०६ ॥

**गात्रसम्मितः**, पुं, (गात्रं सम्मितं उत्पन्नावयवमात्रं
यत्र ।) गात्रावयवोत्पत्तिः । यथा, --
"पाद उत्पन्नमात्रे तु द्वौ पादौ गात्रसम्मिते ।
पादोनं व्रतमाचष्टे हत्वा गर्भमचेतनम् ॥
अङ्गप्रत्यङ्गसम्पन्ने गर्भे चेतःसमन्विते ।
द्विगुणं गोव्रतं कुर्य्यात् प्रायश्चित्तं विशुद्धये ॥
मध्यमवचनं भवदेवेन व्याख्यातम् । यदा

**गाध**, ऋ ङ प्रतिष्ठायाम् । ग्रन्थे । लिप्सायाम्
इति कविकल्पद्रुमः । (भ्वां-आत्मं-प्रतिष्ठायां
सकं-अन्यत्र अकं-सेट् ।) ऋ, अजगाधत् ।
ङ, गाधितासे नभो भूय इति भट्टिः । गाधते
मालिकः स्रजः । इति दुर्गादासः ॥

**गाधः**, पुं, (गाध प्रतिष्ठायां लिप्सायाञ्च + भावे
घञ् ।) स्थानम् । (यथा, महाभारते । १ २१ । १३ ।
"अनासादितगाधञ्च पातालतलमव्ययम् ॥")
लिप्सा । इति हेमचन्द्रः ॥ (कूलम् । परपारम् ।
यथा, महाभारते । ७ । ११३ । २ ।
"द्वीपो य आसीत् पाण्डूनामगाधे
गाधमिच्छताम् ॥"
सुखोत्तरणीये, त्रि । यथा, रघुः । ४ । २४ ।
"सरितः कुर्व्वती गाधाः
पथश्चाश्यानकर्द्दमान् ।
यात्रायै चोदयामास तं शक्तेः प्रथमं शरत् ॥"
स्त्रियां टाप् । गायत्रीरूपिणी महादेवी ।
यथा, देवीभागवते । १२ । ६ । ४० ।
"गौतमी गामिनी गाधा
गन्धर्व्वाप्सरसेविता ॥"
"गाधा प्रतिष्ठारूपिणी ।" इति तट्टीका ॥)

**गाधिः**, पुं, (गाधते उच्चपदं लिप्सतीति । गाध ङ
लिप्सायाम् + "सर्व्वधातुभ्य इन् ।" उणां । ४ ।
११७ । इति इन् ।) चन्द्रवंशीयकुशिकराज-
पुत्रः । स तु विश्वामित्रमुनिपिता कान्यकुब्ज-

उणां । ४ । १६८ । इति त्रन् आकारादेशश्च ।)
हस्तिपूर्ब्बजङ्घादिदेशः ।
हस्त्यग्रपदादिसम्मुख-
भागः । (यथा, माघे । १८ । ४६ ।
"आपस्काराल्लूनगात्रस्य भूमिं
निःसाधारङ्गच्छतोऽवाङ्मुखस्य ॥"
"लूनगात्रस्य छिन्नजङ्घस्य ॥" इति
तट्टीकायां
मल्लिनाथः ॥ * ॥ गच्छति मरणात् परं
स्वकारण-
भूतपञ्चत्वं प्राप्नोति यद्वा गम्यते स्थानात्
स्थाना-
न्तरं प्राप्यते सञ्चाल्यते वाऽनेन इति ।)
अङ्गम् ।
इति मेदिनी । रे । २३ ।
हस्तपादाद्यवयवसमु-
दयः । गा इति भाषा ॥ (यथा, महाभारते ।
१ ।
१५४ । ३० ।
"अद्य गात्राणि ते कङ्काः श्येना
गोमायवस्तथा ।
कर्षन्तु भुवि संहृष्टा निहतस्य मया मृधे ॥")
तत्पर्य्यायः । कलेवरम् २ वपुः ३ संहनम् ४
शरीरम् ५ वर्ष्म ६ विग्रहः ७ कायः ८ देहा
९
भूर्त्तिः १० तनुः ११ तनूः १२ । इत्यमरः ।
२ ।
६ । ७० ॥ इन्द्रियायतनम् १३ अङ्गम् १४
क्षेत्रम् १५ भूषणः १६ मत्करणम् १७ वेरम्
१८
सश्वरः १९ घणः २० बन्धः २१ पुरम् २२
पिण्डः २३ पुद्गलम् २४ । इति हेमचन्द्रः ॥

लगुडाद्यभिघातेन गौर्जीवति गर्भमात्रपातो
भवति तदोत्पन्नगर्भमात्रपाते
यथोक्तप्रायश्चित्त-
पादाचरणम् । गात्रावयवोत्पत्तौ
प्रायश्चित्त-
पादद्वयम् । सकलगात्रसम्पत्तौ
प्रायश्चित्तपाद-
त्रयम् । अर्थाच्चैतन्ययुक्तगर्भघाते
कृत्स्नमेव प्राय-
श्चित्तमूहनीयम् ।" इति प्रायश्चित्ततत्त्वम्
॥

**गात्रानुलेपनी**, स्त्री, (गात्रमनुलिप्यतेऽनया इति ।
अनु + लिप् + ल्युट् + स्त्रियां ङीप् ।)
गात्रानु-
लेपनयोग्यं घृष्टं पिष्टं वा सुगन्धिद्रव्यम् ।
तत्-
पर्य्यायः । वर्त्तिः २ वर्णकम् ३ विलेपनम्
४ ।
इत्यमरः । २ । ७ । १३३ ॥

**गाथकः**, त्रि, (गायतीति । गै गाने + "गस्थकन् ।"
३ । १ । १४६ । इति थकन् ।) गायकः ।
इति
त्रिकाण्डशेषः ॥

**गाथा**, स्त्री, (गीयते इति । गै गाने + "उषि-
कुषिगर्त्तिभ्यस्थन् ।" उणां । २ । ४ । इति
थन्
स्त्रियां टाप् ।) श्लोकः । (यथा, महाभारते
।
३ । ८५ । ३० ।
"गाथा च गीतिका चापि तस्य सम्पद्यते
नृप ! ॥")
संस्कृतान्यभाषा । सा तु प्राकृतभाषा ।
गेयम् ।
तच्च गीतम् । (यथा, मनुः । ९ । ४२ ।
"अत्र गाथा वायुगीताः कीर्त्तयन्ति
पुराविदः ।
यथा बीजं न वप्तव्यं पुंसा परपरिग्रहे ॥")
वृत्तम् । तत्तु अक्षरसंख्यातं पद्यम् । इति
मेदिनी । थे । ६ ॥

देशस्य राजा च । (यथा, महाभारते । ३
।
११५ । १९ ।
"कान्यकुब्जे महानासीत् पार्थिवः
सुमहाबलः ।
गाधीति विश्रुतो लोके वनवासं जगाम ह
॥"
अस्य उत्पत्तिकथा यथा, हरिवंशे । २७
।
१३--१६ ।
"कुशिकस्तु तपस्तेपे पुत्त्रमिन्द्रसमं
विभुः ।
लभेयमिति तं शक्रस्त्रासादभ्येत्य
जज्ञिवान् ॥
पूर्णे वर्षसहस्रे वै तन्तु शक्रो ह्यपश्मत ।
अत्युग्रतपसं दृष्ट्वा सहस्राक्षः पुरन्दरः ॥
समर्थं पुत्त्रजनने स्वमेवांशमवासयत् ।
पुत्त्रत्वे कल्पयामास स देवेन्द्रः सुरोत्तमः
॥
स गाधिरभवद्रांजा मधवान् कौशिकः
स्वयम् ।
पौरकुत्स्यभवद्भार्य्या
गाधिस्तस्यामजायत ॥"
अस्य कन्या सत्यवती भृगुवंशीय-
ऋचीकपत्नी ।
सा च जमदग्निं प्रसूतवती । यथा, हरिवंशे
।
२७ । १८ ।
"गाधेः कन्या महाभागा नाम्ना सत्यवती
शुभा ।
तां गाधिः काव्यपुत्त्राय ऋचीकाय ददौ
प्रभुः ॥"
ऋग्वेदमते तु अयमेव गाथीत्याख्यया
प्रसिद्धः
इति तु तत्रैव ३ मण्डले द्रष्टव्यः ॥
एतदनुसारे-
णैव रामायणे 'गाधिन्' इति नान्तप्रयोगो
भगवता वाल्मीकिना विहितः । यथा,
तत्रैव
१ । १८ । ४० ।

| | | “शीघ्रमाख्यात मां प्राप्तं कौशिकं गाधिनः सुतम् ॥”)<br>**गाधिजः**, पुं, (गाधेः राज्ञः कौशिकात् जायते इति ।<br>जन् + डः ।) विश्वामित्रमुनिः । इति त्रिकाण्ड-<br>शेषः ॥ (यथा, मनुः । ७ । ४२ ।<br>“पृथुस्तु विनयाद्राज्यं प्राप्तवान् मनुरेव च । |
|---|---|---|

कुवेरश्च धनैश्वर्य्यं ब्राह्मण्यञ्चैव गाधिजः ॥”
एतद्जन्मकथा विश्वामित्रशब्दे द्रष्टव्या ॥)

**गाधिपुरं**, क्ली, (गाधेः कौशिकस्य राज्ञः पुरम् ।)
कान्यकुब्जदेशः । इति हेमचन्द्रः । ३ । ४० ॥
(यथा राजतरङ्गिण्याम् । ४ । १३४ ।
“कन्यानां यत्र कुब्जत्वं व्यधात् गाधिपुरे मरुत् ।
तत्रैव शंसनीयः स पुमांश्चक्रे भयस्पृशाम् ॥”)

**गाधिभूः**, पुं, (गाधेर्भूरुत्पत्तिर्यस्य गाधिर्भरुत्-
पत्तिस्थानं यस्येति वा । यद्वा गाधेर्भवति उत्
पद्यते स्म । भू + भूतवर्त्तमानयोरिति क्विप् ।)
विश्वामित्रमुनिः । इति शब्दरत्नावली ॥

**गाधेयः**, पुं, (गाधेरपत्यं पुमान् । गाधि + “इत-
श्चानिञः ।” ४ । १ । १२२ । इति ढक् ।) विश्वा-
मित्रमुनिः । इति हेमचन्द्रः । ३ । ५१४ ॥ (यथा,
हरिवंशे । २७ । १७ ।
“विश्वामित्रस्तु गाधेयो राजा विश्वरथश्च ह ॥”)

**गानं**, क्ली, (गीयते इति । गै + भावे ल्युट् ।)
गीतम् । इत्यमरः । १ । ७ । २५ ॥
(यदुक्तम्, --
“जपकोटिगुणं ध्यानं ध्यानकोटिगुणो लयः ।
लयकोटिगुणं गानं गानात् परतरं न हि ॥”)
तत्पर्य्यायः । गेयम् २ गीतिः ३ गान्धर्व्वम् ४ ।
इति हेमचन्द्रः । २ । १९४ ॥ (गानं हि वैदिक-
लौकिकभेदात् द्विविधम् । तत्र वैदिकगानन्तु
मुक्तिप्रदं अन्यत् लोकरञ्जनकरम् । वैदिक-
लौकिकयोर्मार्गदेशीति नामान्तरमपि श्रूयते ।
गानन्तु सामवेदादेव उत्पन्नं यदुक्तं सङ्गीतं-
नामानि कथ्यन्ते । यथा,
सङ्गीतदर्पणे स्वरा-
ध्याये । १२--१९ ।
पार्व्वत्युवाच ।
“के रागाः काश्च रागिण्यः का वेला ऋतवश्च के ।
किं रूपं कथमुद्धारो वद देव ! प्रसादतः ॥”
ईश्वर उवाच ।
“श्रीरागोऽथ वसन्तश्च भैरवः पञ्चमस्तथा ।
मेघरागो बृहन्नाटः षडेते पुरुषाह्वयाः ॥”
इति षट् रागाः ॥
अथ रागिण्यः ।
“मालश्री त्रिवणी गौरी केदारी मधुमाधवी ।
ततः पाहाडिका ज्ञेया श्रीरागस्य वराङ्गनाः ॥
देशी देवगिरी चैव वराटी तोडिका तथा ।
ललिता चाथ हिन्दोली वसन्तस्य वराङ्गनाः ॥
भैरवी गुर्ज्जरी रामकिरी गुणकिरी तथा ।
वाङ्गाली सैन्धवी चैव भैरवस्य वराङ्गनाः ॥
विभाषा चाथ भूपाली कर्णाटी वडहंसिका ।
मालवी पटमञ्जर्य्या सहैताः पञ्चमाङ्गनाः ॥
मल्लारी सौरटी चैव सावेरी कौशिकी तथा ।
गान्धारी हरशृङ्गारा मेघरागस्य योषितः ॥
कामोदी चैव कल्याणी आभिरी नाटिका तथा ।
सारङ्गी नट्टहम्बीरा नट्टनारायणाङ्गनाः ॥”
जायस्व शीघ्रं भद्रन्ते किमर्थञ्चेह तिष्ठसि ।
प्रोवाचैनन्तु गर्भस्था सा कन्या गान्दिने दिने ॥
यदि दद्यां ततो जाये पितरं प्रत्युवाच ह ।
तथेत्युक्त्वा च तां चास्याः पिता काममपूरयत् ॥
दाता यज्वा च वीरश्च श्रुतवानतिथिप्रियः ।
अक्रूरः सुषुवे तस्यां श्वफल्काद्भूरिदक्षिणः ॥” * ॥
गान्धिनीति पाठोऽपि क्वचित् दृश्यते ॥)

**गान्दिनीसुतः**, पुं, (गान्दिन्या गङ्गायाः सुतः ।)
भीष्मः । इति त्रिकाण्डशेषः ॥ (कार्त्तिकेयः ।
इति व्युत्पत्तिलब्धोऽर्थः ॥ गान्दिन्यास्तदाख्यया
प्रसिद्धाया श्वफल्कभार्य्यायाः सुतः ।) अक्रूरः ।
इति श्रीभागवतम् ॥ (यथा, माघे । १७ । १२ ।
“विलङ्घितस्थितिमभिवीक्ष्यरूक्षया
रिपोर्गिरा गुरुमपि गान्दिनीसुतम् ॥”)

**गान्धर्व्वं**, क्ली, (गन्धर्व्वस्य इदं गन्धर्व्वेण गीतं वा ।
गन्धर्व्व + अण् । यद्वा, गन्धर्व्वो अधिष्ठात्री देवता
अस्येति अण् ।) गानम् । इति हेमचन्द्रः ॥
(यथाह दन्तिलः ।
“पदस्थस्वरसङ्घातस्तालेन सङ्गतस्तथा ।
प्रयुक्तश्चावधानेन गान्धर्व्वमभिधीयते ॥”
यथा च महाभारते । १३ । १९ । ४६ ।
“अवादयंश्च गन्धर्व्वा वाद्यानि विधिवानि च ।
अथ प्रवृत्ते गान्धर्व्वे दिव्ये ऋषिरुपाविशत् ॥”
गन्धर्व्वो अधिष्ठात्री देवता अस्येति अण् ।
गन्धर्व्वदेवताकमन्त्रम् । यथा, रघुः । ५ । ५७ ।
“गान्धर्व्वमादत्स्व यतः प्रयोक्तु-
र्न चारिहिंसा विजयश्च हस्ते ॥”)

**गान्धर्व्वः**, पुं, (गन्धर्व्व एव । “प्रज्ञादिभ्यश्च ।” ५ ।
४ । ३८ । इत्यण् ।) गन्धर्व्वः । इति हेमचन्द्रः ।

दर्पणटीकायाम् ।
"ऋग्भिः पाठ्यममूद्गीतं सामभ्यः समपद्यत
।
यजुर्भ्योऽभिनया जाता रसाश्चाथर्व्वणः
स्मृताः ॥"
द्विविधसङ्गीतयोर्लक्षणमाह सङ्गीतदर्पणे ।
३-६ ।
"मार्गदेशीविभागेन सङ्गीतं द्विविधं मतम् ।
द्रुहिणेन यदन्विष्टं प्रयुक्तं भरतेन च ।
महादेवस्य पुरतस्तन्मार्गाख्यं विमुक्तिदम् ॥
तत्तद्देशस्थया रीत्या यत् स्याल्लोकानुरञ्जनम्
।
देशे देशे तु सङ्गीतं तद्देशीत्यभिधीयते ॥
गीतवादित्रनृत्यानां रक्तिः साधारणो गुणः ।
अतो रक्तिविहीनं यत् न तत् सङ्गीतमुच्यते
॥"
गानन्तु नादात्मकमेव नादस्तु यदा स्वयं
राजते
तदा स्वर इति प्रसिद्धः स्यात् । स्वरस्तु
षड्ज-
ऋषभ-गान्धार-मध्यम-पञ्चम-धैवत-
निषादभेदात्
सप्तविधः । एतेषां विज्ञापनार्थं
एतदाश्रयीभूत-
द्वाविंशतिश्रुतीनां नामानि स्वरस्थितिश्च
कथ्यन्ते ।
यथा, सङ्गीतदर्पणे । ५३--५६ ।
"तीव्राकुमुद्वतीमन्दाछन्दोवत्यस्तुषड्जगाः
।
दयावती रञ्जनी च रतिका चर्षभे स्थिता ॥
रौद्री क्रोधा च गान्धारे वज्रिकाथ प्रसारिणी ।
प्रीतिश्च मार्ज्जनीत्येताः श्रुतयो
मध्यमाश्रिताः ॥
क्षिती रक्ता च सन्दीपन्यालापिन्यपि पञ्चमे ।
मदन्ती रोहिणी रम्येत्येता धैवतसंश्रयाः ॥
उग्रा च क्षोभिणीति द्वे निषादे वसतः श्रुती
॥"
अन्यत् विशेषविवरणन्तु तत्तच्छब्दे द्रष्टव्यम्
॥ * ॥
गाने तु रागा रागिण्यश्च प्रयोक्तव्याः
अतस्तेषां
इति षट्त्रिंशत् रागिण्यः ॥
रागरागिणीनां विशेषविवरणन्तु
तत्तच्छब्दे
गानस्य अन्यद्विवरणं गीतशब्दे च
दर्शनीयम् ॥)
ध्वनिः । इति धरणी ॥

**गानिनी**, स्त्री, (गानं रोगादिनाशकतया प्रशस्त-
गीतिर्विद्यतेऽस्याः । गान + इनिः ।)
वचा ।
इति शब्दचन्द्रिका ॥ (गानं
सङ्गीतविद्या
गतिः स्तुतिश्चास्त्यस्या इति
व्युत्पत्या यथाक्रमं
गानज्ञा गतिमती स्तवयुक्ता च स्त्री
। इति
व्युत्पत्तिलब्धोऽर्थः ॥)

**गान्तुः**, त्रि, (गच्छतीति । गम गतौ + "क्रमि-
गमिक्षमीति ।" उणां । ५ । ४३ ।
इति तुन्
वृद्धिश्च ।) गन्ता । इत्युणादिकोषः
॥ गाथकः ।
इति संक्षिप्तसारे उणादिवृत्तिः ॥

**गान्त्री**, स्त्री, (गन्त्री एव । स्वार्थे अण् । ततो
ङीष् ।) गन्त्री । वृषवाह्यशकटः ।
गरुर गाडि
इति भाषा । इत्यमरटीकायां
रायमुकुटः ॥
(क्वचित् क्लीवलिङ्गत्वमपि दृश्यते
॥)

**गान्दिनी**, स्त्री, (गां पशुं जीवजातमित्यर्थः दायति
शोधयतीति । दै प शोधने + णिनिः
+ ङीप् ।
पृषोदरात् साधुः ।) गङ्गा । इति
त्रिकाण्ड-
शेषः शब्दरत्नावली च ॥ (गां धेनुं
ददाति
२ । १९४ ॥ (भारतवर्षीयोपद्वीपविशेषः ।
यथा,
विष्णुपुराणे ।
"भारतस्यास्य वर्षस्य नवभेदान्निशामय ।
इन्द्रद्वीपः कशेरुमांस्ताम्रवर्णो गभस्तिमान् ॥
नागद्वीपस्तथा सौम्यो गान्धर्व्वस्त्वथ वारुणः ।
अयन्तु नवमस्तेषां द्वीपः सागरसंवृतः ॥")
अष्टप्रकारविवाहान्तर्गतविवाहविशेषः । यत्र
कन्यावरयोरन्योन्यानुरागात्त्वं मे भार्य्या त्वं
मे पतिरिति निश्चयः सः । (तल्लक्षणं यथा,
मनौ । ३ । ३२ ।
"इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च
।
गान्धर्व्वः स तु विज्ञेयो मैथुन्यः कामसम्भवः
॥"
स च क्षत्त्रियाणामेव धर्म्म्यः । यथा, तत्रैव । ३
। २६ ।
"गान्धर्व्वोराक्षसश्चैव धर्म्म्यौ क्षत्त्रस्य तौ
स्मृतौ ॥")
तत्सम्बन्धिनि त्रि ॥ (यथा, काशीखण्डे ।
"गान्धर्व्वस्त्वेष लोकोऽमी गन्धर्व्वाश्च
शुभव्रताः ॥"
गन्धर्व्वदेशोद्भवे च । यथा, महाभारते १ ।
२२६ । १० ।
"उपेतं राजतैरश्वैर्गान्धर्व्वैर्हेममालिभिः ।
पाण्डराभ्रप्रतीकाशैर्म्मनोवायुसमैर्जवे ॥")

**गान्धारं**, क्ली, (गन्ध एव गान्धं सुगन्धं ऋच्छ-
तीति । ऋ गतौ + "कर्म्मण्यण् ।" ३ । २ । १ ।
इत्यण् । यद्वा, गान्धाराणान्तद्देशवासिनां
प्रियम् । अण् ।) गन्धरसः । इति त्रिकाण्डशेषः
॥

|  | प्रतिदिनमित्यर्थः । दा दाने + णिनि + ङीप् ।<br>पृषोदरात् साधुः ।) अक्रूरमाता । इति श्रीभाग-<br>वतम् ॥ (अस्या नामनिरुक्तिर्यथा, हरिवंशे ।<br>३४ । ७--११ ।<br>“श्वफल्कः काशिराजस्य सुतां भार्य्यामविन्दत ।<br>गान्दिनीं नाम सा गास्तु ददौ विप्रेषु नित्यशः ॥<br>सा मातुरुदरस्था वै बहून् वर्षगणान् किल ।<br>निवसन्ती न वै जज्ञे गर्भस्थां तां पिताब्रवीत् ॥ |  |
|---|---|---|

**गान्धारः**, पुं, (गन्ध एव गान्धो गन्धकस्तं ऋच्छति
उत्पत्तिकारणत्वेन गच्छतीति । ऋ गतौ + अण् ।) सिन्दूरम् । जम्बुद्वीपस्थोत्तरदेशः । कान्धार इति भाषा । इति मेदिनी । रे । १४९ ॥ (देशोऽयं बृहत्संहितायां कूर्म्मविभागे उत्त-रस्यामुक्तः । यथा, तत्रैव । १४ । २८ ।
“उत्तरतः कैलासः ।” इत्युपक्रम्य, --
“गान्धारयशोवतिहेमतालराजन्यखचरगव्याश्च ॥”
इत्युक्तवाः । दुर्य्योधनमातुलः शकुनिस्तु एत-द्देशस्य राजासीत् । यथा, महाभारते । ३ । २३७ । २१ ।
“गान्धारराजः शकुनिः प्रत्युवाच हसन्निव ॥” * ॥
गन्ध एव गान्धः । स्वार्थे अण् । तं ऋच्छ-तीति । “कर्म्मण्यण् ।” ३ । २ । १ । इत्यण् ।) सप्तस्वरान्तर्गततृतीयस्वरः । स तु छागस्वर-तुल्यः । (यदुक्तं सङ्गीतशास्त्रे ।
“षड्जं रौति मयूरस्तु गावो नर्द्दन्ति चर्षभम् ।
गान्धारन्तु अजो रौति कौञ्चः क्वणति मध्यमम् ॥”)
तस्योत्पत्त्यादिः ।
“वायुः समुद्गतो नाभेः कण्ठशीर्षसमाहतः ।
नानागन्धर्वहः पुण्यो गान्धारस्तेन हेतुना ॥”
इति भरतः ॥
अपि च ।
“नाभेः समुद्गतो वायुर्गन्धं श्रोत्रे च चालयन् ।
स शब्दस्तेन निर्याति गान्धारस्तेन कथ्यते ॥
चतस्रः पञ्चमे षड्जे मध्यमे श्रुतयो मताः ।
ऋषभे धैवते तिस्री द्वे गान्धारनिषादके ॥”
(अयन्तु देवकुलसम्भूतो वैश्यजातिः स्वर्णवदु-ज्ज्वलपीतवर्णः । अस्य जन्म कुशद्वीपे, ऋषिः शशाङ्कः, सरस्वती देवता, त्रिष्टुप् छन्दः । करुणरसे एवास्य उपयोगित्वम् ॥ इति सङ्गीत-दर्पणे । ८३--९१ ॥ * ॥ स्वरग्रामविशेषः । तल्लक्षणम् । यथा, तत्रैव ७९--८० ।
“रि-मयोः श्रुतिमेकैकां गान्धारश्चेत् समाश्रयेत् ।
प-श्रुतिं धो निषादस्तु घ-श्रुतिं स-श्रुतिं श्रितः ॥
गान्धारग्राममाचष्ट तदा तं नारदो मुनिः ।
पत्नी । सा तु दुर्य्योधनमाता । इति महाभार-
तम् ॥ (इयं हि हरमाराध्य शतपुत्त्रवरं लब्ध-
वती । यथा, महाभारते । १ । ११० । ९ ।
“अथ शुश्राव विप्रेभ्यो गान्धारीं सुबलात्मजाम् ।
आराध्य वरदं देवं भगनेत्रहरं हरम् ॥
गान्धारी किल पुत्त्राणां शतं लेभे वरं शुभा ॥”
पार्व्वतीसहचरीभेदः । यथा, तत्रैव । ३ । २३० । ४८ ।
“गौरी विद्याथ गान्धारीकेशिनी मित्रसाह्वया ॥”
गायत्रीस्वरूपा महादेवी । यथा, देवीभाग-
वते । १२ । ६ । ४० ।
“गायत्री गोमती गीता गान्धारी गानलोलुपा ॥”
गङ्गा । यथा, काशीखण्डे । २९ । ५१ ।
“गान्धारी गर्भशमनी गतिभ्रष्टगतिप्रदा ॥”
“गां धारयतीति गान्धारी ।” इति तट्टीका ॥
नाडीविशेषः । यथा, सङ्गीतदर्पणे । २६ ।
“सुषुम्नेडा पिङ्गला च कुहूरथ पयस्विनी ।
गान्धारी हस्तिजिह्वा च वारणाथ यशस्विनी ॥”)
जिनानां शासनदेवताविशेषः । इति हेम-
चन्द्रः ॥ यवासः । इति राजनिर्घण्टः ॥ दुरा-
लभा । इति भावप्रकाशः ॥
मादकद्रव्यविशेषः ।
(इदं हि नायकस्य सात्त्विकगुणविशेषः । यथा,
साहित्यदर्पणे । ३ । ५८ ।
“शोभा विलासो माधुर्य्यङ्गाम्भीर्य्यं धैर्य्यतेजसी ।
ललितौदार्य्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः ॥”
तस्य लक्षणम् । यथा, तत्रैव । ३ । ६२ ।
“भीशोकक्रोधहर्षाद्यैर्गाम्भीर्य्यं निर्व्विकारता ॥”
उदाहरणम् । यथा, --
“आहूतस्याभिषेकाय विसृष्टस्य वनाय च ।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः ॥”)

**गायकः**, त्रि, (गायतीति । गै गाने + ण्वुल् ।)
गानकर्त्ता । इति शब्दरत्नावली ॥ (यथा,
माघे । ११ । १० ।
“कलमविकलतालं गायकैर्बोधहेतोः ॥”)
तत्पर्य्यायः । गायनः २ गाथकः ३ । इति
त्रिकाण्डशेषः ॥ गाता ४ । तस्य दोषा यथा, --
“लज्जितं भीतमुत्तेषु अव्यक्तमनुनासिकम् ।
काकस्वरः शिरःकम्पो लयस्थानविवर्ज्जितम् ॥
विस्वरं विरमञ्चैव विश्लिष्टं विषमाहतम् ।
व्याकुलं तालहीनञ्च गातुर्दोषाश्चतुर्द्दश ॥”
इति सङ्गीतदामोदरः ॥

**गायत्त्री**, [न्] पुं, (गायन्तं त्रायते इति । गायत्
+ त्रै + णिनिः । आलोपात् साधुः ।) खद्रिर-

प्रवर्त्तते स्वर्गलोके ग्रामोऽसौ न महीतले ॥" * ॥)
रागविशेषः । तस्य रूपं यथा, सङ्गीतदामोदरे ।
"जटां दधानः कृतभूतिभूषणः
काषायवासास्तनुदेह्वयष्टिः ।
सयोगपट्टः कृतनेत्रमुद्रो
गान्धाररागः कथितस्तपस्वी ॥"
स तु भैरवरागपुत्त्रः । प्रभाते तस्य गानसमयः ॥

**गान्धारराजः**, पुं, (गान्धारस्य देशविशेषस्य-
राजा । "राजाहसखिभ्यष्टच् ।" ५ । ४ । ९१ ।
इति टच् ।) शकुनिः । (यथा, महाभारते ।
३ । २३७ । २१ ।
"गान्धारराजः शकुनिः प्रत्युवाच हसन्निव ॥"
अस्य पित्रादयोपि । यथा, तत्रैव । १ । ११० ।
१४ ।
"ततो गान्धारराजस्य पुत्त्रः शकुनिरभ्ययात् ॥")

**गान्धारी**, स्त्री, (गान्धारस्य गान्धारराजस्य
अपत्यं स्त्री । इञ् ततो ङीप् ।) धृतराष्ट्रराज-
गाँजा इति भाषा ॥ इति
विष्णुसिद्धान्तसारा-
बलीवैद्यकग्रन्थः ॥

**गान्धारेयः**, पुं, (गान्धार्य्या अपत्यं पुमान् । "स्त्रीभ्यो
ढक् ।" ४ । १ । १२० । इति ढक् ।)
दुर्य्योधनराजः ।
इति त्रिकाण्डशेषः ॥
(दुःशासनादयोऽपि ॥)

**गान्धिकः**, पुं, (गन्धयते परप्रार्थनां गच्छतीति ।
गन्ध क ङ गतौ + णिनिः । ततः
स्वार्थे कन् ।
यद्वा, गन्धो गर्व्वोऽस्यास्तीति । गन्ध
+ "अत
इनिठनौ ।" ५ । २ । ११५ । इति
ठन् ।)
लेखकः । सुगन्धिव्यवहारी ।
गन्धबणिक् इति
ख्यातः । इति मेदिनी । के । ८३ ॥
स तु अम्ब-
ष्ठात् राजपुत्त्र्यां जातः । इति
पराशरपद्धतिः ॥
(अयं हि नायकस्य शृङ्गारसहायेषु
अन्यतमः ।
यथा, साहित्यदर्पणे । ३ । ४६ ।
"शृङ्गारस्य सहाया
विटचेटविदूषकाद्याः स्युः ।
भक्ता नर्म्मसु निपुणाः
कुपितबधूमानभञ्जनाः
शुद्धाः ॥
आदिशब्दात्
मालाकाररजकताम्बूलिकगान्धि
कादयः ॥") कीटविशेषः । इति
शब्दरत्ना-
वली ॥ गाँधिपोका इति भाषा ॥
(गान्धं गन्ध-
प्रधानं द्रव्यमस्यास्ति । ठन् ।
गन्धप्रधानद्रव्यविशिष्टे
त्रि । यथा, पञ्चतन्त्रे । १ । १३ ।
वृक्षः । इति भरतः ॥ (खदिरशब्दे
गुणादिकं
ज्ञेयम् ॥ गायत्त्रं स्तोत्रमस्यास्तीति
गायत्त्र +
"अत इनिठनौ ।" ५ । २ । ११५ । इति
इनिः । उद्गातरि सामगायके त्रि । यथा,
ऋग्वेदे । १ । १० । १ ।
"गायन्ति त्वा
गायत्त्रिणोर्च्चन्त्यर्कमर्किणः ॥")

**गायत्त्री**, स्त्री, (गायन्तं त्रायते इति । त्रै ङ पालने
+ "आतोऽनुपसर्गे कः ।" ३ । २ । ३
इति कः ।
ततो गौरादित्वात् ङीष् ।) स्वदिरवृक्षः ।
इत्य-
मरः । २ । ४ । ४९ ॥ (यथा, वैद्यके
बृहन्मञ्जि-
ष्ठादिक्वाथे ।
"मूर्व्वादारुकनिङ्गभृङ्गमगधात्रायन्ति
पाठावरी
गायत्त्री
त्रिफलाकिरातकमहानिम्बासनारग्ब
धम् ॥")
षडक्षरच्छन्दोविशेषः ।
तस्यावृत्तिस्त्रिविधा
यथा । तनुमध्या १ शशिवदना २
सोमराजी ३ ।
आद्यायाः आद्यन्तयोर्गुरुद्वये मध्ये
लघुद्वयम् ॥
द्वितीयायाः आदिमध्ययोर्लघुद्वये अन्ते
गुरु-
द्वयम् ॥ तृतीयायाः
आदिमध्ययोर्लघुगुरू मुरु-
लघू अन्ते गुरुद्वयम् ॥ क्रमेणोदाहरणानि
यथा ।
आस्तां मम चित्ते नित्यं तनुमध्या ॥ १
॥ शशि-
वदनानां व्रजतरुणीनाम् ॥ २ ॥ हरे
सोमराजी
समा ते यशःश्रीः ॥ ३ ॥ इति
छन्दोमञ्जरी ॥ * ॥
दुर्गा । यथा, --

“पण्यानां गान्धिकं पण्यं किमन्यैः काञ्चना- दिभिः ।
यत्रैकेन च यत् क्रीतं तच्छतेन प्रदीयते ॥”)

**गामुकः**, त्रि, (गच्छतीति । गम गतौ + “लषपत-

पदेति ।” ३ । ३ । १५४ । इति उकञ् ।)
गन्ता । इति व्याकरणम् ॥

**गाम्भीर्य्यं**, क्ली, (गम्भीरस्य भावो गम्भीरे भवं

वा । “गम्भीराञ्ज्यः ।” ४ । ३ । ५८ । इति
ञ्यः ।) गम्भीरता । यथा, --
“मेघनिर्घोषगाम्भीर्य्यं
प्रतिनादविधायिता ।”
इति जिनयाल्गुणे हेमचन्द्रः ।

“गायनाद्गमनाद्वापि गायत्री त्रिदशार्च्चिता ।
साधनात् सिद्धिरित्युक्ता साधका वाथ ईश्वरी ॥”
इति देवीपुराणे देवीनिरुक्तनाम ४५ आध्यायः ॥
(सा च गायत्रीरूपेण ब्रह्मण्येव वर्त्तते । यथा,
देवीभागते । ७ । ३० । ८१ ।
“गायत्री वेदवदने पार्व्वती शिवसन्निधौ ॥” * ॥

गङ्गा । यथा, काशीखण्डे । २९ । ५३ ।
"गुणनीयचरित्रा च गायत्री गिरिशप्रिया ॥")
त्रिपदा देवी । इति मेदिनी । रे । १५० ॥ सा
तु त्रिपादष्टाक्षरच्छन्दोयुक्तमन्त्रात्मिका वेद-
माता द्विजैरुपास्या । (यथाह मनुः । २ ।
७७--७८ ।
"त्रिभ्य एव तु बेदेभ्यः पादं पादमदूदुहत् ।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः
॥
एतदक्षरमेकाञ्च जपन् व्याहृतिपूर्ब्बिकाम् ।
सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते ॥"
इयमेव सव्याहृतिका ब्रह्मपदप्राप्तेर्द्वाररूपं
तस्मात्
प्रत्यहं ब्राह्मणैर्व्याहृतिपूर्ब्बिकेयं अध्ययनीया ।
यदुक्तं तत्रैव । २ । ८१--८३ ।
"ओङ्कारपूर्ब्बिकास्तिस्रो
महाव्याहृतयोऽव्ययाः ।
त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखम् ॥
योऽधीतेऽहन्यहन्येतान्त्रीणि वर्षाण्यतन्द्रितः ।
स ब्रह्म परमभ्येति वायुभूतः खमूर्त्तिमान् ॥
एकाक्षरं परं ब्रह्म प्राणायामाः परन्तपः ।
सावित्र्यास्तु परं नास्ति मौनात् सत्यं विशि-
ष्यते ॥")
तस्या नामव्युत्पत्तिर्यथा, स्मृतौ ।
"गायन्तं त्रायते यस्मात् गायत्री त्वं ततः
स्मृता ॥"
सापि ब्रह्मणः पत्नी । यथा, --
"अध्वर्य्युणा समाहूता एहि देवि ! त्वरान्विता
।
उद्धृताश्चाग्नयः सर्व्वे दीक्षाकालमुपागताः ॥
सावित्र्युवाच ।
लक्ष्मीर्नाद्यापि चायाति सती नैवेह दृश्यते ।
बृहदाग्रायणे हूता शक्राणी गच्छती त्विह ।
नाहमेकाकिनी यास्ये यावन्नायान्ति ताः
स्त्रियः ॥
ब्रूहि गत्वा विरिञ्चिन्तं तिष्ठत्विह मुहूर्त्तकम् ॥
वदमानां तथाध्वर्य्युस्त्यक्त्वा देवमुपागमत् ।
सावित्री व्याकुला देवी प्रसक्ता गृहकर्म्मणि ॥
सख्यो नाभ्यागता यावत् तावन्नागमनं मम ।
प्रभुत्वमात्मनो दाने गोपकन्नाप्यमन्यत ।
यदेवं मां सुरूपत्वादिच्छत्यादातुमाग्रहात् ॥
नास्ति सीमन्तिनी काचिन्मत्तो धन्यतरा
यतः ।
अनेनाहं समानीता यस्य दृग्गोचरं गता ॥
एवं चिन्तापरा दीना यावत् सा गोपकन्यका
।
भवत्येषा महाभागा गायत्री नामतः प्रभो !
॥
तावदेव महाविष्णुः प्रोक्तवानिदमुत्तमम् ।
अनुग्रहेण देवेश ! अस्याः पाणिग्रहं कुरु ॥
गन्धर्व्वेण विवाहेन उपयेमे षितामहः ॥" *
॥
अस्या ध्यानं यथा, --
"श्वेता त्वं श्वेतरूपासि शशाङ्केन समा मता
।
बिभ्रती विपुलावूरू कदलीगर्भकोमलौ ॥
एणशृङ्गं करे गृह्य पङ्कजञ्च सुनिर्म्मलम् ।
वसाना-सने क्षौमे रक्ते चाद्भुतदर्शने ॥
शशिरश्मिप्रकाशेन हारेणोरसि राजसे ।
दिव्यकुण्डलपूर्णाभ्यां श्रवणाभ्यां विभूषिता
॥
चन्द्रमोगणयुक्तेन मुकुटेन विराजसे ।
मुकुटेन त्रिग्रन्थेन केशबन्धेन शोभिना ॥
भुजगाभोगसदृशौ भुजौ भ्राजयतो दिशः ।
स्तनौ ते कठिनौ देवि ! वर्त्तुलौ समचूचुकौ
॥
जघनेनातिशुभ्रेण त्रिवलीभिश्च संयुता ।
विस्तीर्णस्पष्टजघना सुश्रोणी च वरानना ॥
चारुरूपोरुयुगला अम्बुजाभरणा तथा ।
त्रैलोक्यचारिणी सा त्वं जगतामेव पावनी
॥"
अस्या वैदिकतान्त्रिकध्यानद्वयं गुह्यत्वादत्र
न
लिखितम् ॥ * ॥ तस्या जपफलं तत्र
ब्राह्मणान्
प्रति गायत्रीवाक्यम् ।
"विशेषात् पुष्करे स्नात्वा मां जप्त्वा
वेदमातरम् ।
अथ गायत्रीकल्पः ।
"जपन् हि पावनीं देवीं गायत्रीं
वेदमातरम् ।
तपसा भावितो देव्या ब्राह्मणः
पूतकिल्विषः ॥
न सीदेत् प्रतिगृह्णन् स त्वपि पृथ्वीं
ससागराम् ।
द्वे सन्ध्ये ह्युपतिष्ठेत गायत्रीं प्रयतः
शुचिः ॥
यस्तस्य दुष्कृतं नास्ति पूर्ब्बतः
परतोऽपि वा ।
यज्ञदानरतो विद्वान् साङ्गवेदस्य
पाठकः ॥
गायत्रीध्यानपूतस्य कलां नार्हति
षोडशीम् ।
एवं किल्विषयुक्तस्तु विनिर्द्दहति
पातकम् ॥
उभे सन्ध्ये ह्युपासीत तस्मान्नित्यं
द्विजोत्तमः ।
छन्दस्तस्यास्तु गायत्रं
गायत्रीत्युच्यते ततः ॥
गायन्तं त्रायते यस्मात् गायत्री तु
ततः स्मृता ।
मरीचे ! कारणात्तस्मात् गायत्री
कीर्त्तिता मया ॥
तव बुद्धिमतां श्रेष्ठ ! नित्यं सर्व्वेषु
कर्म्मसु ।
सव्याहृतिं सप्रणवां गायत्रीं शिरसा
सह ॥
जपन्ति ये सदा तेषां न भयं विद्यते
क्वचित् ।
दशकृत्वः प्रजप्ता सा रात्र्यह्नोर्यत् कृतं
लघु ॥
तत् पापं प्रणुदत्याशु नात्र कार्य्या
विचारणा ।
शतं जप्ता तु सा देवी पापौघशमनी
स्मृता ॥
सहस्रं जप्ता सा देवी
महापातकनाशिनी ।

एवमुक्तोऽस्मि वै देव ! कालश्चाप्यतिवर्त्तति ॥
यश्च योम्यं भवेदत्र तत् कुरुष्व पितामह ! ।
एवमुक्ते तदा वाक्यं किञ्चित्कोपसमन्वितः ॥
पत्नीञ्चान्यां मदर्थन्तु शीघ्रं त्वञ्च समानय ।
प्रवर्त्तते यथा यज्ञः कालहीनो न जायते ॥
तथा शीघ्रं विधेहि त्वं नारीं काञ्चिदुपानय ।
एवमुक्तस्तथा शक्रो गत्वा सर्व्वं धरातलम् ॥
स्त्रियो दृष्टास्तु यास्तेन सर्व्वास्तास्तु
परिग्रहाः ।
आभीरकन्या सुरूपा सुभाषा चारुलोचना ॥
ददर्श तां सुचार्व्वङ्गीं कमलायतलोचनाम् ।
कासि कस्य कुतश्च त्वमागता सुभ्रु !
कथ्यताम् ॥
एकाकिनी किमर्थञ्च वीथिमध्येऽवतिष्ठसे ।
रूपान्विता च सा कन्या शक्रं प्रोवाच वेपती ॥
गोपकन्या अहं वीर ! विक्रेतुमिह गोरसम् ।
समागता घृतादीनां प्रगृह्णीष्व यथेप्सितम् ॥
एवमुक्तस्तदा शक्रो गृहीत्वा तां करे दृढम् ।
आनीय तां विशालाक्षीं यत्र ब्रह्मा व्यवस्थितः
॥
कमलाक्षीं स्फुरद्वाणीं पुण्डरीकनिभेक्षणाम् ।
गान्धर्व्वेण तदा ब्रह्मा ग्रहीतुं मन आदधे ॥

प्रतिग्रहकृतान् दोषान्न प्राप्स्यथ
द्विजोत्तमाः ! ॥
मदीयैः किलजप्यैस्तु तारणाय त्रिभिः कृतैः
।
ब्रह्महत्यासमं पापं तत्क्षणादेव नश्यति ॥
दशभिर्जन्मजनितं शतेन तु पुरा कृतम् ।
त्रियुगन्तु सहस्रेण नात्र कार्य्या विचारणा ॥
अष्टाक्षरा स्थिता चाहं जगद्व्याप्तं मया
त्विदम् ।
माताहं सर्व्ववेदानां पदैः सर्व्वैरलङ्कृता ॥
जप्त्वा मां परमां सिद्धिं यास्यन्ति
द्विजसत्तमाः ! ।
प्राधान्यं मम जाप्येन सर्व्वेषां वो भविस्यति
॥" * ॥
तस्या माहात्म्यादि यथा, --
"उपलभ्य च सावित्रीं नोपतिष्ठेत यो द्विजः
।
काले त्रिकालं सप्ताहात् स पतेन्नात्र संशयः
॥
गायत्रीमन्त्रतोयाढ्यं दत्तं येनाञ्जलित्रयम् ।
काले सावित्रिकेण स्यात्तेन दत्तं जगत्त्रयम्
॥
अष्टादशसु विद्यासु मीमांसाऽतिगरीयसी ।
ततोऽपि तर्कशास्त्राणि पुराणं तेभ्य एव च ॥
ततोऽपि धर्म्मशास्त्राणि तेभ्यो गुर्व्वी
श्रुतिर्नृप ! ।
ततो ह्युपनिषत् श्रेष्ठा गायत्री च
ततोऽधिका ॥
वाच्यवाचकसम्बन्धो गायत्र्याः
सवितुर्द्वयोः ।
वाच्योऽसौ सविता साक्षात् गायत्री
वाचिका
परा ॥
तां देवीमुपतिष्ठन्ते ब्राह्मणा ये जितेन्द्रियाः ।
सूर्य्यलोकं ते प्रयान्ति क्रमान्मुक्तिञ्च
पार्थिव ! ॥"
इति पद्मपुराणम् ॥ * ॥

लक्षजाप्येन साप्येवं सप्त जन्मानि
पातकम् ॥
कोटिजाप्येन विप्रर्षे ! यदिच्छति
तदाप्नुयात् ।
यक्षविद्याधरत्वे वा गान्धर्व्वे दैवतेऽपि
बा ॥
यत्र यत्र भवेद्वाञ्छा
तत्तदाप्नोत्यसंशयम् ।
दशसाहस्रजाप्येन निष्कामः पुरुषो
यदि ॥
विधिना नियतं ध्यायेत् प्राप्नोति परमं
पदम् ।
यथाकथञ्चिज्जपिता गायत्री
पापहारिणी ॥
सर्व्वकामप्रदा प्रोक्ता पृथक्कर्म्मसु
निष्ठिता ॥" * ॥
मरीचिरुवाच ।
"विधिना केन कर्त्तव्या गायत्री
पापनाशिनी ।
पवित्रा परमा ह्येषा
सर्व्वकल्याणसाधिनी ॥
वह्निरुवाच ।
सव्याहृतिं सप्रणवां जप्त्वा मासांश्च
षोढश ।
अपि भ्रूणहनः पापात्
मुच्यन्तेऽहरहःकृतात् ॥
सव्याहृतिं सप्रणवां गायत्रीं शिरसा
सह ।
त्रिः पठेदायतप्राणः प्राणायामः स
उच्यते ॥
प्राणायामत्रयं कृत्वा
प्राणायामैस्त्रिभिस्त्रिभिः ।
अहोरात्रकृतात् पापात् मुच्यते नात्र
संशयः ॥
अन्तर्जले त्रिरावर्त्त्य गायत्रीं
प्रयतस्तथा ।
मुच्यते पातकैः सर्व्वैर्यदि ब ब्रह्महा
भवेत् ॥
नास्ति सत्यात् परो धर्म्मो नास्ति
कृष्णात् समा
गतिः ।

| | | |
|---|---|---|
| | | गायत्र्याश्च समं नास्ति दिवि चेह च पावनम् ॥<br>हुता च वरदा देवी सर्व्वकामफलप्रदा ।<br>गायत्र्याश्च तिलैर्होमः सर्व्वपातकनाशनः ॥<br>शान्तिकामो यवैः कुर्य्यादायुष्कामो घृतेन तु ।<br>कर्म्मान्तसिद्धिकामस्तुकुर्य्यात् सिद्धार्थकैर्नरः ॥<br>ब्रह्मवर्च्चसकामस्तु पयसा च समाचरेत् ।<br>पुत्त्रकामः सदा दध्ना धान्यकामस्तु शालिभिः ॥<br>क्षीरवृक्षसमिद्भिस्तु ग्रहपीडोपशांन्तये ।<br>धनकामस्तथा विल्वैः श्रीकामः कमलैस्तथा ॥<br>आरोग्यकामः क्षीराक्तैः कुर्य्यात् दूर्व्वाङ्कुरैस्तथा । |

देशोपसर्गे संप्राप्ते तदेव च विधीयते ॥
गुग्गुलैर्गुटिकाभिस्तु कृत्वा होममतन्द्रितः ।
सौभाग्यं महदाप्नोति नात्र कार्य्या विचारणा ॥
पायसेन तथा हुत्वा विद्यां समधिगच्छति ॥”
* ॥
“येन येन तु कामेन लक्षहोमं समाचरेत् ॥
तं तं काममवाप्नोति नात्र कार्य्या विचारणा ।
कृच्छ्रेण शुद्धिमुत्पाद्य प्राणायामशतेन च ॥
अन्तर्जले च तां जप्त्वा स्नातो
नित्यमतन्द्रितः ।
प्राणायामांस्ततः कृत्वा विधानेनैव षोडश ॥
पूर्ब्बाह्णे जुहुयादग्नौ सुसमिद्धे यथाविधि ।
भैक्षया च कणाशी वा फलमूलाशनोऽपि वा ॥
क्षीरशक्तुघृताहारो भवेत्तत्र विचक्षणः ।
आहाराणां यथोक्तानामेकाहारं समाश्रयेत् ॥
समाप्तिर्लक्षहोमस्य यावद्भवति नित्यशः ।
लक्षहोमावसाने तु ब्राह्मणेभ्वस्तु दक्षिणा ॥
देया भवति शक्त्या तु गावो वरन्नाणि
काञ्चनम् ।
सर्व्वोत्पातसमुत्पत्तौ सर्व्वं भवति शोभनम् ॥
पञ्चभिर्दशभिर्व्वाथ लक्षहोमं समाचरेत् ।
असङ्कीर्णे तथा दोषे नृपतिस्तत्प्रशान्तये ॥
नास्ति लोके स उत्पातो यो ह्यतो
नोपणाम्यति ।
मङ्गलञ्च परं नास्ति यदस्मादतिरिच्यते ॥
ग्रहशान्तिं पुरा कृत्वा मन्त्रैः स्वैः स्वैः शृणुष्व
तान् ।
इन्द्रायाग्रये सोमाय नमः प्रजापतेस्तथा ॥
व्याहृतिभ्यस्ततः पश्चात् पूर्णाहुतिमथाददेत्
।
गणानान्त्वेति वा कृष्ण इमं देवेति चेन्दवे ॥
अग्निर्मूर्द्धेत्युद्बुध्यस्व बृहस्पतेति प्रयोजयेत् ।
अन्नात् परिश्रुतेनैव सन्नो देवीस्ततः पुनः ॥
कया न इति राहोर्व्वै केतुं कृण्वेति केतवे ।
त्र्यम्बकेन तु रौद्रन्तु होमयेज्जातवेदसि ॥
सर्व्वं गायत्रीहोमन्तु लक्षहोमे प्रकल्पयेत् ।
दिक्पालेभ्यश्च होतव्यं भूतेभ्यश्च ततः
क्रमात् ॥
मरुत्वमग्निं दूतं वै यस्मिन् वृक्षे नमामि तम् ।

अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः शुकाः
॥
राक्षसाद्या विनश्यन्ति सर्व्वास्तत्र
तथेतयः ।
रसवन्ति च तोयानि शस्यञ्च निरुपद्रवम्
॥
जायते यस्य या चेष्टा धर्म्मिष्ठा सा न किं
भवेत् ॥ * ॥
कोटिहोमन्तु यो राजा
कारयेद्विधिपूर्ब्बकम् ॥
न तस्य मानसो दाह इह लोके परत्र च ।
कोटिहोमे तु वरयेत् ब्राह्मणान् विंशतिं
नृप ! ॥
शतं वाथ सहस्रं वा य
इच्छेद्गतिमात्मनः ।
कोटिहोमं स्वयं यस्तु कुरुते श्रद्धया
द्विजः ॥
क्षत्त्रियो वाथ वैश्यो वा तस्य पुण्यफलं
महत् ।
यद्यदिच्छति कामानां
तत्तदाप्नोत्यसंशयम् ॥
सशरीरोऽपि चेद्गन्तुं
दिवमिच्छेत्तदाप्नुयात् ।
सावित्री परमा देवी सावित्री पावनं परम्
॥
सर्व्वकामप्रदा चैव सावित्री कथिता तव
।
अभिचारेषु तां देवीं विपरीतां विचिन्तयेत्
॥
कार्य्या व्याहृतयश्चात्र
विपरीताक्षरास्तथा ।
विपरीताक्षरं कार्य्यं शिरश्च ऋषिसत्तम् !
॥
आदौ शिरः प्रयोक्तव्यं प्रणवोऽन्तेन वै
ऋषे ! ।
मतिस्थेनैव फट्कारं मध्ये नाम
प्रकीर्त्तितम् ॥
गायत्रीं चिन्तयेत्तत्र दीप्तानलसमप्रभाम्
।

सप्तलोकाश्च ये चेह महाव्याहृतयस्तथा
॥
शिरश्च तत्तथा वाच्यः पुरुषः परमेश्वरः
।
एवंविधा च गायत्री जप्तव्या राजसत्तम !
॥
होतव्या च यथाशक्त्या
सर्व्वकामसमृद्धिदा ।
सावित्रीसारमात्रोऽपि वरं विप्रः सुयन्त्रितः
॥
नायन्त्रितश्चतुर्व्वेदी सर्व्वाशी
सर्व्वविक्रयी ।
गायत्रीं जपते यस्तु त्रिकालं ब्राह्मणः
सदा ॥
अर्थी प्रतिग्रही वापि स गच्छेत् परमां
गतिम् ।
गायत्रीं जपते यस्तु कल्यमुत्थाय यो
द्विजः ॥
स लिम्पति न पापेन पद्मपत्रमिवाम्भसा ।
कामकामी लभेत् कामान् गतिकामश्च
सद्गतिम् ॥
अकामः समवाप्नोति तद्विष्णोः परमं
पदम् ॥”
इत्याद्ये वह्निपुराणे
गायत्रीकल्पनामाध्यायः ॥

**गायनः**, त्रि, (गायति सङ्गीतविद्यया उपजीव-
तीति । गै + “ण्युट् च ।” ३ । १ । १४७
। इति
ण्युट् ।) गायकः । (यथा, काशीखण्डे ।
“देवानां गायना ह्येते चारणाः
स्तुतिपाठकाः ॥”)
गानोपजीवी । इति त्रिकाण्डशेषः ॥
(एतेषा-
मन्नं विशुद्धब्राह्मणादिभिरग्राह्यं
पतितत्वात् ।
यथाह मनुः । ४ । २१० ।
“स्तेनगायनयोश्चान्नं तक्ष्णोर्वार्द्धुषिकस्य
च ॥”)

वरुणं वो रिशा दश वयमुत्त्वा पथस्य ते ॥
सोमं राजानमवसे ब्रह्मरुद्राय वै तथा ।
क्षेत्रस्य पतिना चैव भूतानां पतये तथा ॥
रक्षोघ्नेनैव मन्त्रेण होतव्यं विधिपूर्ब्बकम् ।
घृताक्ताभिः समिद्भिश्च तिलहोमं ततः परम् ॥
दशैकं प्रति वा कुर्य्यादष्टाविंशतिमेव च ।
एकैकं प्रति पूर्णा स्यात्तदत्र ऋषिसत्तमाः ॥
ब्रह्मवृक्षोद्भवाश्चेध्मास्तथा दूर्व्वाङ्कुरोद्भवाः ।
होतव्या लक्षहोमे तु गायत्र्याः कामिकं परम्
॥
श्रीसूक्तं पावमानञ्च पौरुषं शाम्भवं तथा ।
रौद्रमैन्द्रञ्च रामञ्च ज्येष्ठसाम बृहद्रथम् ॥
महाजपन्तु होमान्ते कुर्य्यात् वै सर्व्वसिद्धिदम्
।
सम्यक् पूर्णां ततो दद्यात् सप्तते अभिमन्त्रितम्
॥
नमो ब्रह्मणेति चामन्त्र्य स्रग्विणञ्च नवं घटम् ।
रत्नैर्बीजैः शुभैर्व्वस्त्रैर्हेम्ना चैव तु संयुतम् ॥
तज्जलेनाभिषिञ्चेत देवस्य त्वेति वै तदा ।
धन्वनागादिभिर्मन्त्रैरभिषिञ्चेत्ततः क्रमात् ॥
एवं यः कुरुते राजा लक्षहोमं यतव्रतः ।
न तस्य शत्रवः सङ्ख्ये अग्रे तिष्ठन्ति
कर्हिचित् ॥
न चैव मरको देशे व्याधिर्व्वा जायते तथा ।

घातयन्तीं त्रिशूलेन केशेष्वाक्षिप्य
वैरिणम् ॥
निर्द्दहन्तीं त्रिशूलेन भृकुटीभूषिताननाम्
।
उच्चाटने तु तां देवीं वायुभूतां
विचिन्तयेत् ॥
धावमानं तथा साध्यं तस्माद्देशात्तु दूरतः
।
अभिचारेषु होतव्या राजिका
विषमिश्रिताः ॥
स्वरक्तमिश्रं होतव्यं कटुतैलमथापि वा ।
तत्रापि च विषं देयं होमकाले प्रयत्नतः ॥
क्रोधेन महताविष्टः परान्नाभिचरेद्बुधः ।
न जह्यात् यदि क्रोधेन ध्रुवं नश्येत् स एव
तु ॥
अनागसि न कर्त्तव्यमभिचारमतो बुधैः ।
स्वल्पागसि न कर्त्तव्यो ह्यभिचारो
महामुने ! ॥
महापराघं बलिनं देवब्राह्मणकण्टकम् ।
अभिचारेण यो हन्यान्न स दोषेण लिप्यते
॥
धर्म्मप्रदाने तु तथा स्वल्पागसि तथैव च
।
अभिचारं न कुर्व्वीत बहुपापं विचक्षणः ॥
बहूनां कण्टकं यस्तु पापात्मानं
सुदुर्म्मतिम् ।
हत्यात् प्राप्तापराधन्तु तस्य पुण्यफलं
महत् ॥
ये भक्ताः पुण्डरीकाक्षे वेदयज्ञे द्विजे जने
।
न तानभिचरेत् जातु तत्र तद्विफलं भवेत्
॥
न हि केशवभक्तानामभिचारेण कर्हिचित्
।
विनाशमभिपद्येत तस्मात्तन्न समाचरेत् ॥
सेयं थात्री विधात्री च
सावित्र्यघविनाशिनी।
प्राणायामेन जप्येन तथा चान्तर्ज्जलेन
च ॥
सव्याहृतीकप्रणवा जप्तव्या शिरसा सह ।

जल्पाकः । इति धरणी ॥ (स्तुतिपाठकः
।
यथा, महाभारते । १ । ७८ । ३२ ।
"सत्यं किलैतत् सा प्राह दैत्यानामसि
गायनः ॥")

**गारित्रं**, क्ली, (गीर्य्यते भक्ष्यते इति । गॄ निगरणे
+ "भूवादिगृभ्यो णित्रन् ।" उणां ४ ।
१७० । इति
कर्म्मणि णित्रन् ।) ओदनम् ।
इत्युणादिकोषः ॥

**गारुडं**, क्ली, (गरुडस्य इदमिति । गरुड + अण्
वृद्धिश्च । यद्वा, गरुडं श्रोतारमालम्ब्य
भगवता
यदुपदिष्टम् । यद्वा, गरुडेन प्रोक्तमिति ।
तन्नि-
रुक्तिरुक्ता शिवपुराणे यथा, --
"गरुडस्तु स्वयं वक्ता यत्तद्
गारुडसंज्ञकम् ।")
गरुडपुराणम् । इति पुराणम् ॥ यथा, --
गरुड उवाच ।
"मम माता च विनता नागैर्दासीकृता हरे !
।
यथाहं दैवतान् जित्वा चामृतं ह्यानयामि
तत् ॥
दास्याद्धि मोक्षयिष्यामि यथाहं वाहनं तव
।
महाबलो महावीर्य्यः सर्व्वज्ञो नागदारणः
।
पुराणसंहिताकर्त्ता यथाहं स्यां तथा कुरु
॥
विष्णुरुवाच ।
यथा त्वयोक्तं गरुड ! तथा
सर्व्वम्भविष्यति ।
देवादीन् सकलान् जित्वा चामृतं
ह्यानयिष्यसि ॥
नागदास्यान्मातरं स्वां विनतां
मोक्षयिष्यसि ।
महाबलो वाहनन्त्वं भविष्यसि विषार्द्दनः
॥

| | | |
|---|---|---|
| | प्रणवेन तथा न्यस्ता वाच्या व्याहृतयः पृथक् ॥<br>दैवतं सविताप्यस्या गायत्रं छन्द एव च ।<br>विश्वामित्र ऋषिश्चैव प्रोच्यते ऋषिसत्तम ! ॥<br>कर्म्मेन्द्रियाणि पञ्चैव पञ्च बुद्धीन्द्रियाणि च ।<br>पञ्चेन्द्रियार्थाः सुमहत् भूतानां पञ्चपञ्चकम् ॥<br>मनो बुद्धिस्तथैवात्मा अव्यक्तमृषिसत्तम ! ।<br>चतुर्व्विंशत्यथैतानि गायत्र्यास्त्वक्षराणि तु ॥<br>प्रागेवं पुरुषं विद्धि सङ्गतं पञ्चविंशकम् । | पुराणं मत्प्रसादाच्च मम माहात्म्यवाचकम् ।<br>यदुक्तं मत्स्वरूपञ्च तव चाविर्भविष्यति ॥<br>गारुडं तव नाम्ना तल्लोके ख्यातिं गमिष्यति ।<br>यथाहं देवदेवानां श्रीः ख्याता विनतासुत ! ॥<br>तथा ख्यातिं पुराणेषु गारुडं गरुडैष्यति ।<br>यथाहं कीर्त्तनीयोऽथ तथा त्वं गरुडात्मना ॥<br>मां ध्यात्वा पक्षिमुख्येदं पुराणं गद गारुडम् ।<br>इत्युक्तो गरुडो रुद्र ! कश्यपायाह पृच्छते ॥ |

कश्यपो गरुडं स्तुत्वा वृक्षं
दग्धमजीवयत् ।
स्वयञ्चाप्यमलो भूत्वा
विद्ययान्यानजीवयत् ॥
पक्षी ओम् तं स्वाहा जापी विद्येयं
गारुडी
परा ।
गरुडोऽहं गारुडं हि शृणु रुद्र !
महात्मकम् ॥”
इत्याद्ये महापुराणे गारुडे
प्रश्नाध्यायो नाम
द्बितीयः ॥ * ॥ (अस्मिन् पुराणे
एकोनविंशत्-
सहस्रसंख्यकश्लोका वर्त्तन्ते ।
यथा, देवीभाग-
वते । १ । ३ । ११ ।
“एकोनविंशत् साहस्रं गारुडं
हरिभाषितम् ॥”
अस्य विणेषविवरणन्तु पुराणशब्दे
द्रष्टव्यम् ॥ * ॥)
गारुडी विद्या गरुडपुराणे २०२
अध्यायादौ
द्रष्टव्या ॥ स्वर्णम् । इति हेमचन्द्रः ॥
विषमन्त्रः ।
इति जटाधरः ॥ (गरुडः
गरुडवर्णस्तस्येदम् ।
नरुड + अण् । गरुडवर्ण इव
वर्णोऽस्येति भावः ।)
मरकतमणिः । इति राजनिर्घण्टः ॥
(यथा-
रघौ । १३ । ५३ ।
“त्वया पुरस्तादुपयाचितो यः
सोऽयं वटः श्याम इति प्रतीतः ।
राशिर्मणीनामिव गारुडानां
सपद्मरागः फलितो विभाति ॥”
गरुडाकारेण
सेनारचनयाधिष्ठितत्वात् महा-
व्यूहभेदः । यथा, महाभारते । ६ ।
५३ । २ ।

**गारुडी**, स्त्री, (गरुडनाम्नाख्यायते इति । अण्

ङीप् च ।) पातालगरुडीलता । इति
राज-
निर्घण्टः ॥ (गरुडः अधिष्ठात्री देवता
अस्या इति
अण् ङीप् च । गरुडविद्या । सा च
गरुडपुराणे
२०२ अध्यायादौ द्रष्टव्या ॥)

**गारुत्मतं**, क्ली, (गरुत्मान् गरुडस्तस्य
वर्णोऽस्त्यस्य

गरुत्मान् अधिष्टातृदेवताऽस्य वा
इति अण् ।)
मरकतमणिः । इत्यमरः । २ । ९ ।
९२ ॥
(यथा, माघे । ३ । ५ ।
“तस्योल्लसत्काञ्चनकुण्डलाग्र-
प्रत्युप्तगारुत्मतरत्नभासा ।”
पन्ना इति लोके । तस्य नामानि ।
“गारुत्मतं मरकतमश्मगर्भो
हरिन्मणिः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**गारुत्मतपत्त्रिका**, स्त्री, (गारुत्मतं
मरकतमणि-

स्तद्वर्णसदृशं पत्त्रमस्याः इति कप्
कापि अत
इत्वञ्च ।) पाचीलता । इति
राजनिर्घण्टः ॥

**गार्गकः**, पुं, (गर्गस्य अपत्यं पुमान् इति ।
“गर्गा-

दिभ्यो यञ् ।” ४ । १ । १०५ ।
इति गार्ग्यः
ततः कन् । “आपत्यस्य च
तद्धितेऽनाति ।” ६ ।
४ । १५१ । इति यकारलोपः ।)
गर्गस्यापत्यम् ।
इत्यमरटीकायां रायमुकुटः ॥

**गार्गी**, स्त्री, (गर्गस्यापत्यं स्त्री । “गर्गादिभ्यो

**गार्द्ध्रपत्त्रः**, पुं, (गार्द्ध्रं गृध्रसम्बन्धिनं पत्त्रं पक्षः यस्य

यत्र वा ।) गृध्रपक्षयुक्तवाणः । (यथा, महा-
भारते । ४ । ४८ । २५ ।
“न हि गाण्डीवनिर्म्मुक्ता गार्द्ध्र पत्त्राः सुतेजनाः ।
अन्तरेष्वेव तिष्ठन्ते गिरीणामपि दारणाः ॥”)

**गार्भिणं**, क्ली, (गर्भिणीनां समूहः इति । “भिक्षा-

दिभ्योऽण् ।” ४ । २ । ३८ । इति अण् ।)
गर्भिणीसमूहः । इत्यमरः । २ । ६ । २२ ॥

**गार्हपत्यः**, पुं, (गृहपतिर्यजमानस्तेनं संयुक्तः इति ।

“गृहपतिना संयुक्ते ञ्यः ।” ४ । ४ । ९० । इति
ञ्यः ।) गृहपतिर्गृहस्वामी तेन नित्यसम्बद्धः ।
इत्यमरभरतौ ॥ यज्ञीयाग्निविशेषः । (यथा,
ऋग्वेदे । १० । ८५ । २७ ।
“इह प्रियं प्रजया ते समृध्यता-
मस्मिन् गृहे गार्हपत्याय जागृहि ॥”
भक्तिवर्द्धनाय पितापि गार्हपत्याग्नित्वेन पुत्त्रा-
दिना वेदितव्यः इत्युपदिदेश भगवान् मनुः ।
यथा । २ । २३१ ।
“पिता वै गाहपत्योऽग्निर्माताग्निर्द्दक्षिणः
स्मृतः ॥”)

**गालनं**, क्ली, (गाल्यते इति । गल् + णिच् + भावे

ल्युट् ।) क्षारणम् । छाँकन गडान इत्यादि
भाषा ॥ यथा । “तथा पचेत् यथा दाहकाठि-
न्यातिशैथिल्यमण्डगालनरहितोऽन्तरुष्मपक्वश्चरु
र्भवति ।” इति भवदेवभट्टः ॥

**गालवः**, पुं, (गाल्यते नाश्यतेऽज्ञानमनेन इति ।

गल् + णिच् + घञ् । गालः वेदान्तादिज्ञानप्रति-
पादकशास्त्रं तं वाति गच्छति जानाति वा ।
वा + कः ।) मुनिविशेषः । (यथा, भागवते ।
८ । १३ । १५ ।
“गालवो दीप्तिमान् रामो द्रोणपुत्त्रः कृपस्तथा ॥”)
लोध्रवृक्षः । इति मेदिनी । वे । ३७ ॥ श्वेतलोध्रः ।
इत्यमरटीकायां स्वाभी ॥ केन्दुकवृक्षः । इति
शब्दचन्द्रिका ॥

**गालिः**, पुं, (गाल्यते विक्रियते श्रवणमात्रेण

मनो यस्मात् येन वा । गल् + इञ् ।) शापः ।

"गारुडञ्च महाव्यूहं चक्रे
शान्तनवस्तदा ॥"
एतस्य रचनायां
गरुडाकृतित्वविवृतिर्य्यथा,
तत्रैवाध्याये । ३--८ ।
"गरुडस्य स्वयं तुण्डे पिता
देवव्रतस्तव ।
चक्षुषी च भरद्वाजः कृतवर्म्मा च
सात्त्वतः ॥
अश्वत्थामा कृपश्चैव शिर आस्तां
यशस्विनौ ।
त्रिगर्त्तैर्मत्स्यकैकेयैर्वाटधानैश्च
संयुतैः ॥
भूरिश्रवाः शलः शल्यो भगदत्तश्च
मारिष ! ।
मद्रकाः सिन्धुसौवीरास्तथा
पञ्चनदाश्च ये ॥
जयद्रथेन सहिता ग्रीवायां
सन्निवेशिताः ।
पृष्ठे दुर्य्योधनो राजा सोदर्य्यैः
सानुगैर्वृतः ॥
विन्दानुविन्दावावन्त्यौ काम्बोजाश्च
शकैः सह ।
पुच्छमासन् महाराज ! शूरसेनाश्च
मारिष ! ॥
दक्षिणं पक्षमासाद्य स्थिता व्यूहस्य
दंशिताः ।
कारूषाश्च विकुञ्जाश्च मुण्डाः
कुण्डीवृषास्तथा ॥
बृहद्बलेन सहिता वामपार्श्वे
समास्थिताः ॥"
कदा वास्य व्यूहस्य प्रयोजनं तदाह
मनुः ।
७ । १८६--१८७ ।
"शत्रुसेविनि मित्रे च गूढे युक्ततरो
भवेत् ।
गतप्रत्यागते चैव स हि कष्टतरो
रिपुः ॥
दण्डव्यूहेन तन्मार्गं यायात्तु शकटेन
वा ।

यञ् ।" ४ । १ । १०५ । इति यञ् ।
"यञश्च ।"
४ । १ । १६ । इति ङीप् "ततो
हलस्तद्धितस्य ।"
६ । ४ । १५० । इति यलोपः ।)
गर्गस्य स्त्र्यप-
त्यम् । इति मुग्धबोधम् ॥ (यथा,
बृहदारण्यके
पञ्चमप्रपाठके ६ ब्राह्मणे ।
"अथ हैनं गार्गी वाचक्नवी पप्रच्छ
याज्ञवल्केति
होवाच यदिदं सर्व्वमप्स्वोतञ्च प्रोतञ्च
कस्मिन्नु
खल्वाप ओताश्च प्रोताश्चेति ॥"
दुर्गा । यथा,
हरिवंशे । १७६ । १४ ।
"ह्रीं श्रीं गार्गीञ्च गान्धारीं योगिनीं
योगदां
सदा ॥")

**गार्गीपुत्त्रकायणिः**, पुं, (गार्ग्याः पुत्त्रस्तस्मादागतो
वंशः इति । "पुत्त्रान्तादन्यतरस्याम्
।" ४ । १ ।
१५९ । इति वा फिञ् वा कुक् च ।)
गार्गी-
पुत्त्रवंशः । अस्य रूपान्तरम् ।
गार्गीपुत्त्रायणिः ।
गार्गीपुत्त्रिः । इति पाणिनिव्याकरणम्
॥

**गार्ग्यः**, पुं, (गर्गस्यापत्यं पुमान् । "गर्गादिभ्यो यञ् ।"
४ । १ । १०५ । इति यञ् ।) गर्गस्य
पुमपत्यम् ।
इति मुग्धबोधव्याकरणम् ॥ (यथा,
बृहदा-
रण्यके । ४ । १ ।
"दृप्तबालाकिर्हानूचानो
गार्ग्य आस सहोवाचाजातशत्रुं काश्यं
ब्रह्म ते
ब्रुवाणीति ॥")

इति त्रिकाण्डशेषः ॥ (यदुक्तं चिन्तामणौ ।
"ददति ददतु गालीर्गालिमन्तो भवन्तो
वयमपि तदभावाद्गालिदानेऽसमर्थाः ॥")

**गालितः**, त्रि, (गल् + णिच् + कर्म्मणि क्तः ।) द्रवी-
कृतः । गलान इति भाषा ॥ यथा, --
"गालितस्य सुवर्णस्य षोडशांशेन सीसकम् ॥"
इति रत्नावली ॥
कृतगालनः । यथा । "तथा पचेत् यथा अगा-
लितमण्डश्चरुर्भवति ।" इति कालेशिः ॥

**गालिनी**, स्त्री, (गालयति द्रवीकरोत्यविद्यामिति ।)
गल् + णिच् + णिनि + ङीष् ।) मुद्राविशेषः ।
थथा, --
"कनिष्ठाङ्गुष्ठकौ सक्तौ करयोरितरेतरम् ।
तर्ज्जनी मध्यमानामा संहता भुग्नवर्ज्जिता ॥
मुद्रैषा गालिनी प्रोक्ता शङ्खस्योपरिचालिता ॥"
इति तन्त्रसारः ॥

वराहमकराभ्यां वा सूच्या वा गरुडेन वा ॥”

“सूक्ष्ममुखपश्चाद्भागः पृथुमध्यो वराहव्यूहः ।

एष एव पृथुतरमध्यो गरुडव्यूहः ॥”

इति तट्टीका-

कृत् कुल्लूकभट्टः ॥)

**गारुडिकः**, पुं, (गरुडः अधिष्टाताऽस्य इति

गारुडः विषनिवारणमन्त्रविशेषः ।

तेन चिकित्-

सति स एव आजीवो यस्येति वा ।

इति ठक् ।)

विषवैद्यः । इति शब्दरत्नावली ॥

**गार्द्धपक्षः**, पुं, (गृद्धस्य गृध्रस्य वायमिति अण् गार्द्धो

गाद्‌र्ध्रो वा पक्षः पत्त्रं यत्र यस्य वा ।)

गाद्‌र्ध्र-

पत्त्रवाणः । इति हेमचन्द्रः । ३ ।

४४२ ॥ गाद्‌र्ध्र-

पक्षोऽपि ॥

**गाद्‌र्ध्यं**, क्ली, (गर्द्ध एव इति । चतुर्वर्णादित्वात्

स्वार्थे ष्यञ् ।) लिप्सा । यथा, माघे

। ३ । ७३ ।

“पीत्वा जलानां निधिनातिगाद्‌र्ध्यात्

॥”

**गालोडनं**, क्ली, (गाः इन्द्रियाणि आलाड्यन्ते प्रमा-
द्यन्तेऽनेन् । गो + आ + लोडि + करणे ल्युट् ।
निपातनात् साधुः ।) उन्मादः । रोगः । मूर्ख-
त्वम् । इति वक्ष्यमाणशब्ददर्शनात् ॥

**गालोडितः**, त्रि, (गालोडः उन्मादरोगः सञ्जातो-
ऽस्य । इतच् ।) उन्मत्तः । रुग्नः । मूर्खः । यथा,
"उन्मादशीले रोगार्त्ते मूर्खे गालोडितः स्मृतः ॥"
इति दुर्गसिंहकृतकलापवृत्तिटीकायां त्रिलो
चनदासः ॥ गोलोहितोऽपि पाठः ॥

**गालोड्यं**, क्ली, (गोभिः पशुविशेषैरालोड्यते भक्ष-
णाय इति । गो + आ + लोडि + कर्म्मणि यत्-
प्रत्ययेन निपातनात् साधुः ।) पद्मबीजम् ।
इति राजनिर्घण्टः ॥

**गावौ**, पुं, (गोशब्दस्य द्विवचनेन निष्पत्तिरिति
वोध्यम् ।) ग्रामः । यथा--
"एकैकेन तथा द्वाभ्यां वचनैस्त्रिभिरेव च ।
साकाङ्क्षत्वप्रयुक्तन्तु नाम पञ्चविधं स्मृतम् ॥
एकवचनसाकाङ्क्षत्वमुक्त
एकविंशत्यादिशब्दे ।
उभपदं द्विपदं पुष्पवन्तपदं स्वर्व्वैद्ये अश्विनादि-
पदं भूस्वर्गयो रोदस्यादिपदं ग्रामे गोपदञ्च
द्विवचनमात्रेणाकाङ्क्षम् । इति । तदा गावौ ग्राम
इत्यादाविव साधुत्वार्थकमेव तत्र द्विवचनमिति
वदन्ति ।" इति च शब्दशक्तिप्रकाशिका ॥

**गाह**, ऊ ङ विलोडने । इति कविकल्पद्रुमः ॥

"तीर्थाश्रमवनारण्यगिरिपर्व्वतसागराः ।
पुरिः सरस्वती चैव भारती च तथा दश ॥"
तत्र गिरेर्लक्षणम् । यथा, प्राणतोषिण्यां अव-
धूतप्रकरणे ।
"वासो गिरिवरे नित्यं गीताभ्यासे हि तत्परः ।
गम्भीराचलबुद्धिश्च गिरिनामा स उच्यते ॥"
यदुवंशीयश्वफल्कस्य द्वादशपुत्त्राणामन्यतमः।
यथा, भागवते । ९ । २४ । १५--१६ ।
"अक्रूरप्रमुखा आसन् पुत्त्रा द्वादशविशुताः ।
आसङ्गः सारमेयश्च मृदुरो मृदुविद्गिरिः ॥")

**गिरिः**, स्त्री, (गॄ + भावे इः किच्च ।) निगरणम् ।
इत्यमरः । ३ । २ । ११ ॥ गेला इति भाषा ॥
बालमूषिका । इत्यमरटीकायां रमानाथः ॥
पूज्ये त्रि । इति मेदिनी । रे । २४ ॥

**गिरिकण्टकः**, पुं, (गिरेः पर्व्वतस्य कण्टक इव तन्ना-
शकत्वात्तथात्वम् ।) वज्रः । इति त्रिकाण्डशेषः ॥

**गिरिकदम्बः**, पुं, (गिरिसमुत्पन्नः कदम्बः ।) नीपः ।
धाराकदम्बः । इति राजनिर्घण्टः ॥

**गिरिकदली**, स्त्री, (गिरिसञ्जाता कदली ।)
पर्व्वतीयकदली । तत्पर्य्यायः । गिरिरम्भा २
पर्व्वतमोचा ३ अरण्यकदली ४ बहुबीजा ५
वनरम्भा ६ गिरिजा ७ गजवल्लभा ८ । अस्या

"राजोपरिचरेत्येवं नाम तस्याथ विश्रुतम् ।
पुरोपवाहिनीं तस्य नदीं शक्तिमतीं गिरिः ॥
अरौत्सीत् चेतनायुक्तः कामात् कोलाहलः किल ।
गिरिं कोलाहलं तन्तु पदा वसुरताडयत् ॥
निश्चक्राम ततस्तेन प्रहारविवरेण सा ।
तस्यां नद्यामजनयन्मिथुनं पर्व्वतः स्वयम् ॥
तस्माद्विमोक्षणात् प्रीता नदी राज्ञे न्यवेदयत् ।
यः पुमानभवत्तत्र तं स राजर्षिसत्तमः ॥
वसुर्वसुप्रदश्चक्रे सेनापतिमरिन्दमः ।
चकार पत्नीं कन्यान्तु तथा तां गिरिकां नृपः ॥
वसोः पत्नी तु गिरिका कामकालं न्यवेदयत् ।
ऋतुकालमनुप्राप्ता स्नाता पुंसवने शुचिः ॥")

**गिरिकाणः**, पुं, (गिरिणा अक्षिरोगविशेषेण काणः
एकचक्षुर्हीणः ।) गिरिरोगेणैकचक्षुर्हीणः ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

**गिरिगुडः**, पुं, (गिरेः गिरौ वा जातः गुडः गुण्डित-
वर्त्तुल इव ।) गेण्डुकः । इति हेमचन्द्रः । ३ ।
३५३ ॥

**गिरिजं**, क्ली, (गिरौ जायते इति । जन् + डः ।)
अभ्रकम् । शिलाजतु । शैलजम् । लोहम् ।
इति मेदिनी । जे २३ ॥ गैरिकम् । इति राज-
निर्घण्टः ॥

**गिरिजः**, पुं, (गिरौ जायते इति । जन् + डः ।)
मधूकवृक्षविशेषः । तत्पर्य्यायः । गौरशाकः २
मधूलः ३ स्वल्पपत्रकः ४ । इति रत्नमाला ॥

**गिरिजा**, स्त्री, (गिरेर्हिमालयपर्व्वतात् हिमगिरे-
रधिष्ठातृदेवादिति तात्पर्य्यार्थः जायते । जन् +
डः स्त्रियां टाप् च । हिमालयस्य अधिष्टातृत्वे
प्रमाणं यथा, कुमारे । १ । १ ।
"अस्त्युत्तरस्यां दिशि देवतात्मा

(भ्वां-आत्मं-सकं-सेट् ।) ङ, गाहन्तां महिषा
निपानसलिलमिति शाकुन्तले । ऊ, अगाहिष्ट
अगाढ । इति दुर्गादासः ॥

**गिरा**, स्त्री, (ग + भावे क्विप् स्त्रियां टाप् ।) वच-
नम् । इति त्रिकाण्डशेषः ॥ ("तां गिरां करुणां
श्रुत्वा ।" इति दशरथविलापनाटकम् ॥)

**गिरिः**, पुं (गिरति धारयति पृथ्वीं ग्रियते स्तूयते
गुरुत्वाद्वा ।
"कॄगॄशॄपॄकुटिभिदिछिदिभ्यश्च ।"
उणां । ४ । १४२ । इति इः किच्च ।) पर्व्वतः ।
इत्यमरः । २ । ३ । १ ॥ (पर्व्वतानां अष्टावेव
पूजनीयाः कुलाचलत्वात् । यदुक्तम्, --
"मेरुमन्दरकैलासमलया गन्धमादनः ।
महेन्द्रः श्रीपर्व्वतश्च हेमकूटस्तथैव च ।
अष्टावेते तु सम्पूज्या गिरयः पूर्ब्बदिक् क्रमात् ॥"
इति शब्दार्थचिन्तामणिः ॥)
गेण्डुकः । इति हेमचन्द्रः । ३ । ३५२ ॥ चक्षू-
रोगविशेषः । इति मेदिनी । रे । २३ ॥ पार-
दस्य दोषविशेषः । यथा, रत्नावल्याम् ।
"नागो वङ्गो मलो वह्निश्चाञ्चल्यञ्च विषं गिरिः ।
असह्याग्निर्महादोषा निसर्गात् पारदे स्थिताः ॥"
सन्न्यासिनां पद्धतिविशेषश्च ॥ (तत्र प्रथमत-
स्तान्त्रिकगिरिसन्न्यासिलक्षणंयथा, --
"सदोर्द्ध्वबाहुर्यो वीरो मुक्तकेशो दिगम्बरः ।
सर्व्वत्र समभावेग भावयेद्यो नरोत्तमः ।
इष्टदेवीधिया नारीं स गिरिः परिकीर्त्तितः ॥"
इति तन्त्रशास्त्रम् ॥
गुणाः । मधुरत्वम् । हिमत्वम् । बलवीर्य्यवृद्धि-
कारित्वम् । त्वच्यत्वम् । तृष्णापित्तदाहशोष-
प्रशमनत्वम् । दुर्ज्जरत्वम् । गुरुत्वञ्च । इति
राजनिर्घण्टः ॥

**गिरिकर्णिका**, स्त्री, (गिरौ गिरिमधिकृत्य कर्णि-
केव प्रतिभातीत्यर्थः । यद्वा, गिरिः सुमेरुपर्व्वतः
कर्ण इव यस्याः इति कप् टाप् च कापि अत
इत्वम् ।) पृथिवी । इति त्रिकाण्डशेषः ॥ श्वेत-
किणिहीवृक्षः । अपराजिता । इति राज-
निर्घण्टः ॥ (अस्या व्यवहारो यथा, --
"गुडपुष्पसारशिखरितण्डुलगिरिकर्णिका हरिद्राभिः ।
अञ्जनगुडिका शमयति विसूचिकां त्रिकटु-
सनाथा ॥"
इति वैद्यकचक्रपाणिसंग्रहेऽग्निमान्द्याधिकारे ॥)

**गिरिकर्णी**, स्त्री, (गिरेर्बालमूषिकायाः कर्ण इव
पत्त्रमस्याः ।) अपराजिता । इत्यमरः । २ । ४ ।
१०४ ॥ (अस्याः पर्य्याया यथा, --
"गवाक्ष्यश्वखुरी श्वेता श्वेतभण्डापराजिता ।
द्विविधा सा सिता नीला गिरिकर्णी गवादनी ॥"
इति वैद्यकरत्नमालायाम् ॥
पार्व्वतीयापराजितार्थे पर्य्याया यथा तत्रैव, --
"गिरिकर्णी महाश्वेता स्थूलपुष्पा सिता क्वचित् ॥")
यवासः । इति शब्दचन्द्रिका ॥

**गिरिका**, स्त्री, (गिरिरेव स्वार्थे कन् टाप् च ।)
हिमालयो नाम नगाधिराजः ।"
"देवता आत्मा यस्य सः । एतेनास्य वक्ष्यमाण-
मेनकापरिणयपार्व्वतीजननादिचेतनव्यवहार-
योग्यत्वसिद्धिः ।" इति टीकाकृन्मल्लिनाथः ।)
पार्व्वती । (यथा अनर्घ्यराघवे । ४ र्थ अङ्के ३३ ।
"स्त्रीषु प्रवीरजननी जननी तवैव
देवी स्वयं भगवती गिरिजाऽपि यस्यै ॥"
गायत्त्रीरुपा देवी । यथा, देवीभागवते । १२ । ६ । ४३ ।
"गिरिजा गुह्यमातङ्गी गरुडध्वजवल्लभा ॥"
गङ्गा । इति व्युत्पत्तिलब्धोऽर्थः ॥ गिरौ पर्व्वते
जायते इति । जन् + डः ।) मातुलुङ्गी । इति
मेदिनी । जे । २४ ॥ (अस्याः पर्य्याया यथा, --
"मातुलुङ्गी सुगन्धान्या गिरिजा पूतिपुष्पिका ।
अत्यम्ला देवदूती च सा क्वचिन्मधुकुक्कुटी ॥"
इति वैद्यकरत्नमालायाम् ॥)
श्वेतवुह्ना । इति रत्नमाला ॥ क्षुद्रपाषाणभेदा ।
त्रायमाणा लता । कारीवृक्षः । मल्लिका । गिरि-
कदली । इति राजनिर्घण्टः ॥

**गिरिजामलं**, क्ली, (गिरौ पर्व्वते अभ्रे अभ्रवादि-
त्यर्थः जायते इति । जन् + डः । गिरिजम् । तद-
मति गच्छति । अम् + कलच् । यद्वा, गिरिजेषु

| | | |
|---|---|---|
| शङ्कराचार्य्यकृतदशनामब्रह्मचारिपरिव्राज-कानामन्यतमः। तेषां दशनामानि यथा, -- | बालमूषिका। इत्यमरः। २। ५। १२ ॥ (स्वनाम-ख्याता उपरिचरवसुराजपत्नी। सा हि गिरेः कोलाहलाख्यपर्व्वतात् शक्तिमत्यां नद्यां जात-त्त्वात् गिरिकेति नाम्ना विश्रुता। यथा, महा-भारते। १। ६३। ३३--३९। | |

अमलं ।) अभ्रकम् । इत्यमरटीकायां
रायसुकुटः ॥
(अभ्रवजातत्वे प्रमाणं यथा, भावप्रकाशे ।
"पुरा वधाय विप्रस्य वज्रिणा वज्रमुद्धृतम् ।
विस्फुलिङ्गास्ततस्तस्य गगने परिसर्पिताः ॥
ते निपेतुर्घनध्वानाच्छिखरेषु महीभृताम् ।
तेभ्य एव समुत्पन्नं तत्तद्गिरिषु चाभ्रकम् ॥
तद्वज्रं वज्रजातत्वादभ्रमभ्रवोद्भवात् ॥"
अभ्रकशब्देऽस्य विवरणं ज्ञातव्यम् ॥)

**गिरिज्वरः**, पुं, (गिरेः पर्व्वतस्य ज्वर इव तद्भेदक-
त्वात् । गिरिं ज्वरयतीति वा । ज्वर + णिच् +
अच् ।) वज्रः । इति शब्दरत्नावली ॥

**गिरितः**, त्रि, (गिल् + कर्म्मणि क्तः लस्य रत्वञ्च ।)
गिलितः । भक्षितः । इत्यमरटीकायां राय-
मुकुटः ॥

**गिरिधातुः**, पुं, (गिरौ जात धातुः । शाकपार्थिव-
वन्मध्यपदलोपिसमासः ।) गैरिकम् । इति
राजनिर्घण्टः ॥

**गिरिनिम्बः**, पुं, (गिरिसम्भूतोनिम्ब इव ।) महा-
रिष्टवृक्षः । इति राजनिर्घण्टः ॥

**गिरिपीलुः**, पुं, (गिरिसम्भूतः पिलुर्वृक्षविशेषः ।)
परूषकवृक्षः । इति राजनिर्घण्टः ॥

**गिरिपुष्पकं**, क्ली, (गिरिजातं पुष्पकम् ।) शैले-
यम् । इति राजनिर्घण्टः ॥

**गिरिप्रिया**, स्त्री, (गिरिः पर्व्वतः प्रियो यस्याः
अव्याहतविचरणायेति भावः ।) चमरीगवी ।
इति राजनिर्घण्टः ॥

**गिरिभित्**, [द्] पुं, (गिरिं भिनत्ति भित्वा उत्-
पद्यते इति । भिद् + क्विप् ।) पाषाणभेदक-
वृक्षः । इति भावप्रकाशः ॥

**गिरिभूः**, स्त्री, (गिरौ भवति उत्पद्यते इति । भू +
क्विप् ।) क्षुद्रपाषाणभेदाः । इति राजनिर्घण्टः
॥

कुरुते वचया मिश्रो लोचनमगदं न सन्देहः
॥"
इति वैद्यकचक्रपाणिसंग्रहे नेत्ररोगाधिकारे
॥)

**गिरिमृद्भवं**, क्ली, (गिरेर्मृदो मृत्तिकाया भवतीति ।
भू + अच् ।) गैरिकम् । इति राजनिर्घण्टः ॥

**गिरिमेदः**, पुं, (गिरेर्मेद इव ।) विट्खदिरः ।
इति रत्नमाला ॥ इरिमेद इति वा पाठः ॥

**गिरियकः**, पुं, (गिरिं पर्व्वतमाश्रित्य आत्मनिर्म्माणतां
याति प्राप्नोतीति । या + कः ततः संज्ञायां
कन् ।) गेण्डुकः । इति हेमचन्द्रः । ३ ।
३५३ ॥

**गिरियाकः**, पुं, (गिरिं गिरिमधिकृत्यात्मसत्तां
यातीति । या + क्विप् । ततः संज्ञायां कन्
।)
गेण्डुकः । इति शब्दरत्नावली ॥

**गिरिवासी**, [न्] पुं, (गिरौ गिरिमाश्रित्य वस-
तीति । वस् + णिनिः । गिरिं वासयति
सुरभी-
करोतीत्येके । वस् + करोतेरर्थे णिच् णिनिः
।)
हस्तिकन्दः । इति राजनिर्घण्टः ॥

**गिरिशः**, पुं, (गिरिराश्रयत्वेन वसतित्वेनास्त्यस्य
इति । "लोमादिपामादिपिच्छादिभ्यःशने-
लचः ।" ५ । २ । १०० । इति शः । यद्वा,
गिरौ
कैलासाख्यपर्व्वते आध्यात्मिकार्थे तु
नित्यशुद्ध-
मनसीत्यर्थः शेते विराजते इति । यद्वा, गिरिं
त्रिगुणवृत्तात्मकं मनः श्यति तनूकरोति
विशुद्धं
करोति शरणागतभक्तसाधकानाम् । शी
ङल
शयने शी य्च्छेदे वा गिरौ छन्दसि डः ।
लोके

वसतु मे हृदि सदा भगवतः पदयुगम्
॥"
इति छन्दोमञ्जरी ॥
(तथाच पञ्चतन्त्रे । १ । १७५ ।
"अत्तुं वाञ्छति शाम्भवो गणपतेराखुं
क्षुधार्त्तः
फणी
तञ्च क्रौञ्चरिपोः शिखी
गिरिसुतासिंहोऽपि
नागाशनम् ॥"
गङ्गा । यथा, काशीखण्डे । २९ ।
५२ ।
"गुहाम्बिका गिरिसुता
गोविन्दाङ्घ्रिसमुद्भवा ॥")

**गिरीशः**, पुं, (गिरेः कैलासस्य ईशः ।) शिवः ।
(यथा, वक्रोक्तिपञ्चाशिकायाम् । ३३
।
"चिन्तामेऽत्र न वेश्मनि प्रियतमे किं
चिन्तय
स्यान्नव-
ग्रावणीत्यद्रिसुतां जयन्नवतु वः
सूक्त्या गिरीशो-
ऽनिशम् ॥"
गिरीणां पर्व्वतानामीशः श्रेष्ठः ।)
हिमालय-
पर्व्वतः । (गिरां वाचां शास्त्राणां वा
ईशः ।)
बृहस्पतिः । इति मेदिनी । शे । १९
॥

**गिलः**, पुं, (गिल् + "इगुपधेति ।" ३ । १ ।
१३५ ।
इति कः ।) जम्बीरः । इति
शब्दचन्द्रिका ॥

**गिलग्राहः**, पुं, (गिलं गृह्णाति गिलं यथा स्यात्
तथा गिलेन गिलनेन वा गृह्णाति
धारयति
इति तात्पर्य्यार्थः । ग्रह् + अण् ।)
नक्रः । इति

गिरेर्भूः । पर्व्वतभूमिः । (यथा, आर्य्यासप्त-
शत्याम् । ६१५ ।
“सकलकटकैकमण्डिनि !
कठिनीभूताशये शिखरदन्ति ।
गिरिभुव इव तव मन्ये
मनः शिला समभवच्चण्डि ! ॥” * ॥
गिरेर्हिमालयात् हिमालयाधिष्ठातृदेवादित्यर्थः
भवतीति । भू + क्विप् ।) पार्व्वती ॥

**गिरिमल्लिका**, स्त्री, (गिरौ जाता मल्लिकेव मध्य-

पदलोपिसमासः ।) कुटजवृक्षः । इत्यमरः ।
२ । ४ । ६६ ॥ (यथास्याः पर्य्यायाः ।
“वृक्षकः शक्रपर्य्यायो वत्सको गिरिमल्लिका ।
कुटजस्तत्फलञ्चेन्द्रयवश्चापिकलिङ्गकः ॥”
इति वैद्यकरत्नमालायाम् ॥)

**गिरिमाणः**, पुं, (गिरिरिव मानं परिमाणमस्य

उच्छ्रयत्वेनेति शेषः ।) हस्ती । इति शब्द-
रत्नावली ॥

**गिरिमृत्**, [द्] स्त्री, (गिरेः पर्व्वतस्य मृत् मृत्तिका ।)

गैरिकम् । इति त्रिकाण्डशेषः ।
(व्यवहारोऽस्याः
यथा, --
“गिरिमृच्चन्दननागरखटिकांशयोजितो
वहिर्लेपः ।
तु छान्दसानां क्वचिद्भाषायामपि प्रयोग इति
आशुशुक्षणिवदित्याहस्वामी ।) शिवः ।
इत्य-
मरः । १ । १ । ३३ ॥ (यथा, रघुः । २ ।
४१ ।
“इति प्रगल्भं पुरुषाधिराजो
मृगाधिराजस्य वचो निशम्य ।
प्रत्याहतास्त्रो गिरिशप्रभावात्
आत्मन्यवज्ञां शिथिलीचकार ॥”)

**गिरिशालिनी**, स्त्री, (गिरिं पर्व्वतस्थभुवं शाल-

यते शोभयते इति । शल् + णिच् + णिनिः
नान्त-
त्वात् ङीप् च । गिरिं बालमूषिकाकर्णं शलते
श्लाघते निजपत्त्रावयवेनेत्येके । शल्
श्लाघायां +
णिनिः ङीप् च ।) अपराजिता । यथा, --
“पारिभद्रं पाटला च वकुलं गिरिशालिनी ।”
इति वामनपुराणम् ॥

**गिरिशृङ्गः**, पुं, (गिरेः शृङ्गमिवाकृत्यास्त्यस्येति

अच् । शुण्डादण्डोत्तलनसमये
शृङ्गसादृश्या-
दस्य तथात्वम् ।) गणेशः । इति शब्दरत्ना-
वली ॥ (गिरेः शृङ्गमिति विग्रहे क्ली ।
पर्व्वत-
शेखरम् । यथा, महाभारते । ६ । ५६ । १५
।
“गजैर्निपतितैर्नीलैर्गिरिशृङ्गैरिवावृतः ॥”)

**गिरिसारः**, पुं, (गिरेः सार इव ।) लौहम् ।

(यथा, गोः रामायणे । ६ । ७८ । १९ ।
“तत्तैलधौतं विमलं गिरिसारमयं महत् ।
शस्त्रं परमसंक्रुद्धो बालिपुत्त्रे न्यपातयत्
॥”)
वङ्गम् । मलयपर्व्वतः । मेदिनी । रे । २६१
॥

**गिरिसुता**, स्त्री, (गिरेर्हिमालयपर्व्वताधिष्ठातुः

सुता पुत्त्री ।) पार्व्वती । यथा, --
“अवतु वो गिरिसुता शशिभृतः प्रियतमा
राजनिर्घण्टः ॥

**गिलनं**, क्ली, (गिल् + भावे ल्युट् ।) गिरणम् ।

भक्षणम् । इत्यमरटीका ॥ (यथा,
हारीते प्रथमे
स्थाने प्रथमेऽध्याये ।
“चर्व्वणं गिलनञ्चापि कासितं
श्वासितन्तथा ।
नीचोच्चञ्चैव गम्भीरं वर्ज्जयेत् पाठकं
सुधीः ॥”)

**गिलिः**, स्त्री, (गिल् + भावे इन् ।) गिलनम् ।

इत्यमरटीका ॥

**गिलितं**, त्रि, (गिल् + कर्म्मणि क्तः ।
गिलिर्जाता-

ऽस्येति तारकादित्वादितजित्येके ।)
भक्षितम् ।
इत्यमरः । ३ । २ । ११० ॥

**गिष्णः**, पुं, (गायति सामवेदं गायतीति वा ।

गै गाने + “इष्णो गादाभ्यां किद्वा ।”
इति
उणादिकोषटीकाधृतसूत्रेणइष्णः ।
किदभाव-
पक्षे तु “गादाभ्यां इष्णुच् ।” उणां । ३
। १६ ।
इति इष्णुच् प्रत्ययनिष्पन्नत्वात्
गेष्णुंरित्येवपदं
स्यात् ।) सामवेदवेत्ता । गायकः ।
इत्युणादिकोषः ॥

**गीः**, [र्] स्त्री, (गॄ + सम्पदादित्वात् क्विप् ।)

वाक्यम् । सरस्वती । इत्यमरः । १
६ । १ ॥

**गीतं**, क्ली, (गीयते इति । गै गाने + भावे क्तः
।)

गानम् । इत्यमरः । १ । ६ । २५ ॥
तस्य लक्षणं
यथा,
“धातुमातुसमायुक्तं गीतमित्युच्यते
बुधैः ।

| | | |
|---|---|---|
| | | तत्र नादात्मको धातुर्मातुरक्षरसञ्चयः ॥" * ॥<br>तद्द्विविधं यथा, --<br>"गीतञ्च द्विविधं प्रोक्तं यन्त्रगात्रविभागतः ।<br>यन्त्रं स्याद्वेणुवीणादि गात्रन्तु मुखजं मतम् ॥"<br>अपि च ।<br>"निबद्धमनिबद्धञ्च गीतं द्विविधमुच्यते । |

अनिबद्धं भवेद्गीतं वर्णादिनियमं विना ॥
यद्वा गमकधातुज्ञैरनिबद्धं विना कृतम् ।
निबद्धञ्च भवेद्गीतं तालमानरसाञ्चितम् ॥
छन्दो गमकधातुज्ञैर्वर्णादिनियमैः कृतम् ॥
ऋग्भिः पाठ्यमभूद्गीतं सामभ्यः
समपद्यत ।
यजुर्भ्योऽभिनया जाता रसाश्चाथर्व्वणः
स्मृताः ॥”
अथ संगीतलक्षणम् ।
“तालवाद्यानुगं गीतं नटीभिर्यत्र गीयते ।
नृत्यस्यानुगतं रङ्गे तत् सङ्गीतकमुच्यते
॥” * ॥
अथ गीतप्रशंसा ।
“सङ्गीतकेन रम्येण सुखं यस्य न चेतसि
।
मनुष्यवृषभो लोके विधिनैव स वञ्चितः ॥
संसारदुःखदग्धानामुत्तमानामनुग्रहात् ।
प्रभुणा शङ्करेणात्र गीतवाद्यं प्रकाशितम् ॥
गीतं वाद्यं तथा नृत्यं तौर्य्यत्रिकमिदं मतम्
।
तूर्य्यशब्दो मृदङ्गे स्यात् मुरजेऽपि च
दृश्यते ॥
गीतज्ञो यदि गीतेन नाप्नोति परमं पदम् ।
रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते ॥
गीतेन हरिणा रङ्गं प्राप्नुवन्त्यपि पक्षिणः ।
वनादायान्ति फणिनः शिशवो न रुदन्ति
च ॥
कृतिचमत्कृतये किमतः परं
फणिवरोऽश्वतरो वत पञ्चमः ।
अपि मृतां यदवाप मदालसां
मधुरगीतवशीकृतशङ्करः ॥
परमानन्दविवर्द्धनमभिमतफलं
वशीकरणम् ।
सकलजनचित्तहरणं विमुक्तिबीजं परं
गीतम् ॥
गीतं पीनपयोधरा समदना नारी विचित्रा
कथा
रम्यं हर्म्म्यतलं सुधांशुकिरणप्रोद्दीपिता
यामिनी ।
दोहा स्याद्बहुलस्तथा गुरुबलो गीता च
गोविस्तथा ।
हेम्नोकोऽप्यथ कारिका त्रिपदिकेत्येतानि
काम-
द्विषा
संक्षेपेण चतुर्द्दशः प्रकटितान्यत्राधमानि
क्रमात् ॥
इति सङ्गीतदामोदरः ॥
(सङ्गीतस्यान्यद्विवरणं गानशब्दे द्रष्टव्यम् ॥ *
॥
गीयते स्म इति । गै शब्दे + कर्म्मणि क्तः ।)
शब्दिते त्रि । इति मेदिनी । ते । १६ ॥

**गीतमोदी**, [न्] पुं, (गीतेन सङ्गीतेन मोदते
इति । मुद् + “नन्दिग्रहीति ।” ३ । १ ।
१३४ ।
इति णिनिः ।) किन्नरः । इति शब्दरत्नावली
॥
(सङ्गीतानुरागिणि त्रि ॥)

**गीता**, स्त्री, (गीयते स्म आत्मविद्योपदेशात्मिका
ब्रह्मतत्त्वोपदेशमयी कथा यत्र । गै + क्त ।)
ग्रन्थविशेषः । भगवद्गीतेति ख्याता । सा तु
अर्ज्जुनस्य मोहनिवृत्त्यर्थं महाभारतीयभीष्म-
पर्व्वान्तर्गता
कर्म्मोपासनाज्ञानकाण्डत्रयात्मिका-
ष्टादशाध्यायी श्रीकृष्णोक्ता । यथा, --
“भारते सर्व्ववेदार्थो भारतार्थश्च कृत्स्नशः ।
गीतायामस्ति तेनेयं सर्व्वशास्त्रमयी मता ॥
इयमष्टादशाध्यायी क्रमात् षट्कत्रयेण हि ।
कर्म्मोपास्तिज्ञानकाण्डत्रितयात्मानिगद्यते
॥”
इति नीलकण्ठः ॥
“गीता सुगीता कर्त्तव्या किमन्यैः
शास्त्रविस्तरैः ।
या स्वयं पद्मनाभस्य मुखपद्मात् विनिःसृता
॥”
इति स्वामी ॥
(अस्याः प्रयोजनादिकं
श्रीमद्भिर्मधुसूदनसरस्वती-
क्षीणपापस्य चित्तस्य विवेके योग्यता
यदा ।
नित्यानित्यविवेकस्तु जायते सुदृढस्तदा
॥
इहामुत्रार्थवैराग्यं वशीकाराभिधं क्रमात् ।
ततः शमादिसम्पत्त्या सन्न्यासो निष्ठितो
भवेत् ॥
एवं सर्व्वपरित्यागान्मुमुक्षा जायते दृढा ।
ततो गुरूपसदनमुपदेशग्रहस्ततः ॥
ततः सन्देहहानाय वेदान्तश्रवणादिकम् ।
सर्व्वमुत्तरमीमांसाशास्त्रमत्रोपयुज्यते ॥
ततस्तत्परिपाकेन निदिध्यासननिष्ठता ।
योगशास्त्रन्तु सम्पूर्णमुपक्षीणं भवेदिह ॥
क्षीणदोषे ततश्चित्ते वाक्यात्तत्त्वमतिर्भवेत्
।
साक्षात्कारो निर्व्विकल्पः
शब्दादेवोपजायते ॥
अविद्याविनिवृत्तिस्तु तत्त्वमभ्यसतो
भवेत् ।
तत आवरणे क्षीणे क्षीयेते भ्रमसंशयौ ॥
अनारब्धानि कर्म्माणि नश्यन्त्येव
समन्ततः ।
न चागामीनि जायन्ते तत्त्वज्ञानप्रभावतः
॥
प्रारब्धकर्म्मविक्षेपाद्वासना तु न नश्यति ।
सा सर्व्वतो बलवता संयमेनोपशाम्यति
॥
संयमो धारणा ध्यानं समाधिस्त्विति
यत्त्रिकम् ।
यमादिपञ्चकं पूर्ब्बं तदर्थमुपयुज्यते ॥
ईश्वरप्रनिधानात्तु समाधिः सिध्यति
द्रुतम् ।
ततो भवेन्मनोनाशो वासनाक्षय एव च ॥
तत्त्वज्ञानं मनोनाशोवासनाक्षयइत्यपि ।
युगपत्त्रितयाभ्यासाज्जीवन्मुक्तिर्दृढा
भवेत् ॥
विद्वत्सन्न्यासकथनमेतदर्थं श्रुतौ श्रुतम्
।

चित्तज्ञाः सुहृदः सुताः सुमनसो भक्ताः
पुनः
सेवकाः
शुद्धं गीतफलं कवित्वमतुलं संसारसारा
मताः ॥"
"शुद्धशालगसङ्कीर्णभेदाद्गीतं त्रिधा मतम्
।"
शुद्धसूत्रं विंशतिर्यथा, --
"एला सोऽद्यभवा सपाढकरणं
तत्पञ्चतालेश्वरः
कैरातस्मरचक्रपालविजयागद्यं
त्रिभङ्गिस्तथा ।
ढेङ्कीवर्णसरः पुटौ द्विपदिका मुक्तावली
माहका
लम्बो दण्डकवर्त्तनीति कथिताः शुद्धास्तु
ते
विंशतिः ॥"
एलादीनामेतेषां विंशतिसंख्यकानां
प्रबन्धगीता ।
नामङ्गानि षट् भवन्ति । तथा च ।
"पदं तानो विरूदश्च तालः पाढः
स्वरस्तथा ।
एलादीनां षडङ्गानि कथितानि विरिञ्चिना
॥
पौनरुक्त्यं न देशीये गीते दोषोऽभिजायते
।
शीघ्रोच्चारेण वर्णानां तथा चैव प्रसारणे ॥
लिङ्गान्यत्वे विसन्धौ च संयुक्ताक्षरमोक्षणे
।
परिवर्त्तेऽक्षराणाञ्च ह्रस्वदीर्घव्यतिक्रमे ॥"
* ॥
अथ शालगसूत्रम् ।
"ध्रुवको मण्डकश्चैव प्रतिमण्डो
निसारुकः ।
वासकः प्रतिलाभश्च तथान्या
चैकतालिका ॥
यतिश्च झुमरिश्चेति शालगं सूत्रमीरितम्
॥" * ॥
अथ सङ्कीर्णसूत्रम् ।
चैत्रोमङ्गत्मकस्तथा न गणिका
चर्च्चातिनाटोन्नवी

पादैर्विस्तरशो गीतागूढार्थदीपिकायां दर्शितम्
।
तद्यथा, --
"सहेतुकस्य संसारस्यात्यन्तोपरमात्मकम् ।
परं निःश्रेयसं गीताशास्त्रस्योक्तं प्रयोजनम् ॥
सच्चिदानन्दरूपं तत् पूर्णं विष्णोः परं पदम् ।
यत्प्राप्तये समारब्धा वेदाः काण्डत्रयात्मकाः
॥
कर्म्मोपास्तिस्तथाज्ञानमितिकाण्डत्रयं
क्रमात् ।
तद्रूपाष्टादशाध्यायीगीताकाण्डत्रयात्मिका॥
एकमेकेन षट्केन काण्डमत्रोपलक्षयेत् ।
कर्म्मनिष्ठाज्ञाननिष्ठे कथिते प्रथमान्त्ययोः ॥
यतः समुच्चयो नास्ति तयोरतिविरोधतः ।
भगवद्भक्तिनिष्ठा तु मध्यमे परिकीर्त्तिता ॥
उभयानुगता सा हि सर्व्वविघ्नापनोदिनी ।
कर्म्ममिश्रा च शुद्धा च ज्ञानमिश्रा च सा त्रिधा
॥
तत्र तु प्रथमे काण्डे कर्म्म तत्त्यागवर्त्मना ।
त्वंपदार्थो विशुद्धात्मा सोपपत्तिर्निरूप्यते ॥
द्वितीये भगवद्भक्तिनिष्ठावर्णनवर्त्मना ।
भगवान् परमानन्दस्तत्पदार्थोऽवधार्य्यते ॥
तृतीये तु तयोरैक्यं वाक्यार्थो वर्ण्यते स्फुटम्
।
एवमप्यत्र काण्डानां सम्बन्धोऽस्ति परस्परम्
॥
प्रत्यध्यायं विशेषस्तु तत्र तत्रैव वक्ष्यते ।
मुक्तिसाधनपर्व्वेदं शास्त्रार्थत्वेन कथ्यते ॥
निष्कामकर्म्मनिष्ठालं त्यागात्
काम्यनिषिद्धयोः ।
तत्रापि परमो धर्म्मो जपस्तुत्यादिकं हरेः ॥

प्रागसिद्धो य एवांशो यत्तः स्यात्तस्य
साधने ॥
निरुद्धे चेतसि पुरा सविकल्पसमाधिना ।
निर्व्विकल्पसमाधिस्तु भवेदत्र त्रिभूमिकः
॥
व्युत्तिष्ठते स्वतस्त्वाद्ये द्वितीये
परबोधितः ।
अन्ते व्युत्तिष्ठते नैव सदा भवति तन्मयः
॥
एवम्भूतो ब्राह्मणः स्याद्वरिष्ठो ब्रह्मवादि
नाम्
गुणातीतः स्थितप्रज्ञो विष्णुभक्तश्च
कथ्यते ॥
अतिवर्णाश्रमी जीवन्मुक्त
आत्मरतिस्तथा ।
एतस्य कृतकृत्यत्वात्
शास्त्रमस्मान्निवर्त्तते ॥
यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते
महात्मनः ॥
इत्यादिश्रुतिमान्येन कायेन मनसा गिरा ।
सर्व्वावस्थासु भगवद्भक्तिरत्रोपयुज्यते ॥
पूर्ब्बभूमौ कृता भक्तिरुत्तरां भूमिमानयेत्
।
अन्यथा विघ्नबाहुल्यात् फलसिद्धिः
सुदुर्लभा ॥
पूर्ब्बाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः
।
अनेकजन्मसंसिद्ध इत्यादि च वचो हरेः
॥
यदि प्राग्भवसंस्कारस्याचिन्त्यत्वात्तु
कश्चन ।
प्रागेव कृतकृत्यः स्यादाकाशफलपातवत्
॥
न तं प्रति
कृतार्थत्वाच्छास्त्रमारब्धुमिष्यते ।
प्राक्सिद्धसाधनाभ्यासाद्धुर्ज्ञेया
भगवत्कृपा ॥
एवं प्राग्भूमिसिद्धावप्युत्तरोत्तरभूमये ।
विधेया भगवद्भक्तिस्तां विना सा न
सिध्यति ॥

| | | |
|---|---|---|
| | | जीवन्मुक्तिदशायान्तु न भक्तेः फलकल्पना ।<br>अद्वेष्टृत्वादिवत्तेषां स्वभावो भजनं हरेः ॥<br>आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।<br>कुर्व्वन्त्य हैतुकीं भक्तिमित्थंभूतगुणो हरिः ॥ |

तेषां ज्ञानी नित्ययुक्त
एकभक्तिर्व्विशिष्यते ।
इत्यादिवचनात् प्रेमभक्तोऽयं मुख्य
उच्यते ॥
एतत् सर्व्वं भगवता गीताशास्त्रे
प्रकाशितम् ।
अतो व्याख्यातुमेतन्मे मन उत्सहते
भृशम् ॥
निष्कामकर्म्मानुष्ठानं मूलं मोक्षस्य
कीर्त्तितम् ।
शोकादिरासुरः पाप्मा तस्य च
प्रतिबन्धकः ॥
यतः स्वधर्म्मविभ्रंशः प्रतिसिद्धस्य
सेवनम् ।
फलाभिसन्धिपूर्ब्बा वा साहङ्कारा क्रिया
भवेत् ॥
आविष्टः पुरुषो नित्यमेवमासुरपाप्मभिः ।
पुमर्थलाभायोग्यः सन् लभते
दुःखसन्ततिम् ॥
दुःखं स्वभावतो द्वेष्यं सर्व्वेषां
प्राणिनामिह ।
अतस्तत्साधनं त्याज्यं शोकमोहादिकं
सदा ॥
अनादिभवसन्तानन्(गू)रूढं
दुःखकारणम् ।
दुस्त्यजं शोकमोहादि केनोपायेन
हीयताम् ॥
एवमाकाङ्क्षयाविष्टं पुरुषार्थोन्मुखं नरम् ।
बुबोधयिषुराह्येदं भगवान् शास्त्रमुत्तमम्
॥”)
एतदन्याः
श्रीभागवतोक्तगोपीगीताध्यात्मरामा-
यणोक्तरामगीताश्वमेधिकपर्व्वोक्ति
ब्राह्मणगीता-
नुगीते देवीभागवतोक्तभगवतीगीता
शिवगीता
इत्याद्याः सन्ति ॥

**गीतासारः**, पुं, (गीतासु सारः गीतानां वेदान्तादि-

क्षेत्रज्ञाधिष्ठितं विद्वान् यो वेद स वरः कविः
॥
ज्ञानयज्ञस्य सर्व्वाणि कलां नार्हन्ति
षोडशीम् ॥”
अश्वमेधसहस्राणि वाजपेयशतानि च ।
इति गारुडे २३३ अध्यायः ॥ * ॥
श्रीभगवानुवाच ।
“यमाश्च नियमाः पार्थ ! आसनं
प्राणसंयमः ।
प्रत्याहारस्तथा ध्यानं धारणार्ज्जुन !
सप्तमी ॥
समाधिरयमष्टाङ्गो योग उक्तो विमुक्तये ।
कर्म्मणा मनसा वाचा सर्व्वभूतेषु सर्व्वदा ॥
अक्लेशजननं प्रोक्तं भूतानां यदहिंसनम् ।
अहिंसा परमो धर्म्मो ह्यहिंसा परमं सुखम्
॥
विधिना या भवेद्धिंसा त्वहिंसा सा
प्रकीर्त्तिता ।
यथा नागपदेऽन्यानि पदानि पदगामिनाम् ॥
सर्व्वाण्येवापिधीयन्ते पदजातानि कौञ्जरे ।
एवं सर्व्वं हि हिंसायां धर्म्मार्थमपिधीयते ॥
यद्भूतहितमत्यन्तं वचः सत्यस्य लक्षणम् ।
सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात्
सत्यमप्रियम् ॥
प्रियञ्च नानृतं ब्रूयात एष धर्म्मः सनातनः ।
यत्र द्रव्यापहरणं चौर्य्याद्वाथ बलेन वा ॥
स्तेयं तस्यानाचरणमस्तेयं धर्म्मसाधनम् ।
कर्म्मणा मनसा वाचा सर्व्वावस्थासु
सर्व्वदा ॥
सर्व्वत्र मैथुनत्यागं ब्रह्मचर्य्यं प्रचक्षते ।
द्रव्याणामप्यनादानमापत्स्वपियथेच्छया
॥
अपरिग्रहमित्याहुस्तं प्रयत्नेन वर्ज्जयेत् ।
द्विधा शौचं मृज्जलाभ्यां बाह्यं
भावादथान्तरम् ॥
यदृच्छालाभतस्तुष्टिः सन्तोषः
सुखलक्षणम् ।
मनसश्चेन्द्रियाणाञ्च ऐकाग्रं परमं तपः ॥
शरीरशोषणं वापि कृच्छ्रचान्द्रायणादिभिः ।

श्रीभगवानुवाच ।
“ब्रह्मगीतां प्रवक्ष्यामि यां ज्ञात्वा मुच्यते
भवान् ।
अहं ब्रह्मास्मीति वाक्याज्ज्ञानान्मोक्षो भवे-
न्नृणाम् ॥
वाक्यज्ञानं भवेज्ज्ञानादहंब्रह्मपदार्थयोः ।
पदद्वयार्थौ द्विविधौ वाच्यौ लक्ष्यौ स्मृतौ
बुधैः ॥
वाच्यौ दशबलौ ज्ञेयौ लक्ष्यौ शुद्धौ
प्रकीर्त्तितौ ।
प्राणपिण्डात्मकार्य्येण चेतनं शरणन्तु यत्
॥
तथा वै देवपर्य्यन्तमहं शब्देन नोच्यते ।
प्रत्यग्रूपमद्वितीयमहं शब्देन भण्यते ।
अद्वयानन्दचैतन्यं परोक्षसहितं परम् ।
प्राणपिण्डात्मकापार्थसद्वितीयविभागकम् ॥
त्यागेन प्रत्यक्चैतन्यभागो लक्ष्येत चाहमा ।
तथा ब्रह्मपदेनैव प्राणपिण्डात्मकारणा ॥
विद्यापरोक्षभागे च परित्यागे च लक्ष्यते ।
अद्वयानन्दचैतन्यभाग एवं विचिन्तयेत् ॥
अहंपदेन चैतन्यप्रत्यग्ब्रह्मपदेन तु ।
अद्वयानन्दचैतन्यं लक्षयित्वा स्थितस्य च
॥
ब्रह्माहमस्म्यहं ब्रह्म अहंब्रह्मपदार्थयोः ।
अहं ब्रह्मास्मि वाक्याच्च
आत्मभूतिफलात्मकम् ॥
एकत्वज्ञानञ्च भवेद्वेदान्ताद्गुरुतो ध्रुवम् ।
ज्ञानादज्ञानताकार्य्यनिवृत्तेर्भुक्त एकतः ॥”
इति गारुडे २३५ अध्यायः ॥ * ॥
श्रीभगवानुवाच ।
“सम्मायिब्रह्मतः खं स्यात्
खान्मरुत्वांस्ततोऽनलः
अग्नेरापस्ततः पृथ्वी प्रपञ्चीकृतभूतकम् ॥
ततः सप्तदशं लिङ्गं पञ्च कर्म्मेन्द्रियाणि च ।
वाक्पाणिपादं पायुश्च उपस्थमथ
धीन्द्रियम् ॥
श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं स्यात् पञ्च
वायवः ।

शास्त्राणां वा सारो यत्र इति वा । मुक्त्यर्थं संक्षे-
पेण
समस्तयोगज्ञानादिप्रतिपादकशास्त्राणां
सारार्थो गीतो यत्र इति तात्पर्य्यार्थः ।)
अर्ज्जुनं
प्रति श्रीकृष्णोक्तमुक्त्यर्थाष्टाङ्गादियोगः।
यथा, --
श्रीभगवानुवाच ।
"गीतासारं प्रवक्ष्यामि अर्ज्जुनायोदितं
पुरा ।
अष्टाङ्गयोगं सुक्त्यर्थं सर्व्ववेदान्तसारगम्
॥
आत्मलाभः परो नान्य आत्मा
देहादिवर्ज्जितः ।
रूपादिमान् हि देहोऽतः करणत्वादि
लोचनम् ॥
करणत्वान्मनोऽधीनो न प्राणोऽचेतनो
यतः ।
विज्ञानरहितः प्राणः सुषुप्ते हि प्रतीयते ॥
नाहमात्मा च
दुःखादिसंसाराभिसमन्वयात् ।
विधूम इव दीप्तार्च्चिरादित्य इव दीप्तिमान्
॥
वैद्युतोऽग्निरिवाकाशे हृत्स्थो
ज्ञेयात्मनात्मनि ।
श्रोत्रादीनि न पश्यन्ति स्वं
स्वमात्मानमात्मना ॥
सर्व्वज्ञः सव्वदर्शी च क्षेत्रज्ञस्तानि
पश्यति ।
स्वानान्तु मनसा रश्मीन् यदा
सम्यङ्नियच्छति ॥
तदा प्रकाशते ह्यात्मा घटे दीपो
ज्वलन्निव ।
ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य
कर्म्मणः ॥
यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि
।
इन्द्रियाणीन्द्रियार्थांश्च महाभूतानि पञ्च
च ॥
मनो बुद्धिमहङ्कारमव्यक्तं पुरुषं तथा ।
वेदान्तशतरुद्रीयप्रणवादिजपंबुधाः ॥
सत्त्वशुद्धिकरं पुंसां स्वाध्यायं परिचक्षते ।
स्तुतिस्मरणपूजादिवाङ्मनःकायकर्म्मभिः ॥
सुनिश्चला हरौ भक्तिरेतदीश्वरचिन्तनम् ।
आसनं स्वस्तिकं प्रोक्तं पद्ममर्द्धासनं तथा
॥
प्राणः स्वदेहजो वायुरायामस्तन्निरोधनम् ।
प्राणापाननिरोधस्तु प्राणायाम उपस्थितः
॥
इन्द्रियाणां विचरतां विषयेषु स्वभावतः ।
नियमः प्रोच्यते सद्भिः प्रत्याहारस्तु
पाण्डव ! ॥
मूर्त्तामूर्त्तब्रह्मरूपचिन्तनं ध्यानमुच्यते ।
योगारम्भे मूर्त्तहरिममूर्त्तमथ चिन्तयेत् ॥
नाभिकन्दे स्थितं नालं दशाङ्गुलसमायुतम्
।
नाले चाष्टदलं पद्मं द्वादशाङ्गुलविस्तृतम् ॥
सकर्णिके केशराले सूर्य्यसोमाग्निमण्डलम् ।
अग्निमण्डलमध्यस्थो वासुदेवश्चतुर्भुजः ॥
शङ्खचक्रगदापद्मयुक्तः कौस्तुभसंयुतः ।
वनमाली कौस्तुभेन युतोऽहं ब्रह्ममुक्त ओम्
॥
धारणेत्युच्यते चेयं धार्य्यते यन्मनोमये ।
प्राङ्नाभ्यां हृदये चानु तृतीया च तथोरसि
॥
कण्ठे मुखे नासिकाग्रे नेत्रभ्रूमध्यमूर्द्धसु ।
किञ्चित्तस्मात् परस्मिंश्च
धारणादेशकीर्त्तिताः ॥
अहं ब्रह्मेत्यवस्थानं समाधिरभिधीयते ।
एकाकारः समाधिः स्याद्देशलक्षणवर्ज्जितः
॥"
इति गारुडे २३४ अध्यायः ॥ * ॥
प्राणोऽपानः समानश्च व्यानस्तूदान एव च
॥
मनो धीरन्तःकरणं स्यान्मनः संशयात्मकम्
।
बुद्धिर्निश्चयरूपा तु एतत्सूक्ष्मशरीरकम् ॥
हिरण्यगर्भमात्मीयं भूततत्कार्य्यलिङ्गकम् ।
पञ्चीकृतानि भूतानि अपञ्चीकृतभूततः ॥
पञ्चीकृतेभ्यो भूतेभ्यो ब्रह्माण्डं समजायत ।
लोकप्रसिद्धं स्थूलाक्षं शरीरचरणादिमत् ॥
पञ्चीकृतानि भूतानि तत्कार्य्यञ्चाहमेव च ।
सर्व्वं शरीरजातञ्च प्राणिनां स्थूलमीरितम्
॥
तीरादुपरतात्मानः शरीरं प्रोच्यते बुधैः ।
देहद्वयाभिमानी च त्वमथो जीव एकतः ॥
सच्छब्दवाच्यं ब्रह्मैव प्रविष्टं देहयोर्द्वयोः ।
जलार्क्कवद्घटखवज्जीवः प्राणादिधारणात्
॥
जाग्रत्स्वप्नसुषुप्तीनां साक्षी जीवः स च
स्मृतः ।
जाग्रत्स्वप्नसुषुप्ताख्यैर्व्यतिरिक्तश्च निर्गुणः
निर्गतावयवोत्सर्गो नित्यशुद्धस्वभावकः ।
परमात्मैव सज्जाग्रत्खप्नादौ सन्निधानतः
अन्तःकरणरागैश्च अन्तःकरणसंस्थितः ।
जाग्रत्स्वप्नसुषुप्तीश्च पश्यतोऽविकृतः सदा
॥
फलं क्रियाकारकयोर्ज्जाग्रदादीन्
वदाम्यहम् ।
इन्द्रियैरनुविज्ञानं जाग्रत्स्थानमुदीरितम् ॥
जाग्रत्संस्कारसम्भूतः प्रत्ययो विषयान्वितः
।
स्वप्नं प्रसुप्तिशरणोपसंहारोऽधिपः स्थितः
॥

| प्रसंख्याय परावाप्तौ विमुक्तो बन्धनैर्भवेत् ॥<br>इन्द्रियग्राममखिलं मनस्यभिनिवेश्य च ।<br>मनश्चैवाप्यहङ्कारे प्रतिष्ठाप्य च पाण्डव ! ॥<br>अहङ्कारं तथा बुद्धौ बुद्धिञ्च प्रकृतावपि ।<br>प्रकृतिं पुरुषे स्थाप्य पुरुषं ब्रह्मणि न्यसेत् ॥<br>अहं ब्रह्मपरं ज्योतिः प्रसंख्याय विमुच्यते ।<br>द्विद्वादशेभ्यः ख्यातो यः पुरुषः पञ्चविंशकः ॥<br>विवेकात् केवलीभूतः षड्विंशमनुपश्यति ।<br>नवद्वारमिदं गेहं त्रिस्थूणं पञ्चसाक्षिकम् ॥ | | |
|---|---|---|

ब्रह्मकारणरूपेण वटस्य कणिकात्मना
।
क्रमते क्रमतो जीवो जाग्रदादीन् स
पश्यति ॥
समाध्यारम्भकाले तु
पूर्ब्बमेवावधारयेत् ।
मुमुक्षुः पश्चात् संजाते
अन्तःकरणनिश्चले ॥
विलापयेत् क्षेत्रजातं क्षेत्रज्ञं परिशेषयेत्
।
पञ्चीकृतेभ्यो भूतेभ्यः
अण्डादिव्यतिरिक्तकम् ॥
यथा मृदो घटो भिन्नो नास्ति
तत्कार्य्यतस्तथा ।
पञ्चीकृतानि भूतानि
अपञ्चीकृतभूततः ॥
समष्टिव्यतिरेकेण शिष्टं
सूक्ष्मशरीरकम् ।
अपञ्चीकृतभूतेभ्यो न लिङ्गं
व्यतिरिक्तकम् ॥
पृथ्वीवारि विना नास्ति वारि नास्ति
च तेजसा ।
तेजश्च वायुना नास्ति वायुः खेन
विना न हि ॥
सटब्रह्मणा च खं नास्ति शुद्धब्रह्म
विना च सत् ।
शुद्धभावात्तथा
जाग्रत्स्वप्नादीनामसम्भवे ॥
जीवत्ववर्ज्जितः प्रत्यगात्मा वै
तनुरूपकः ।
नित्यशुद्धबुद्धमुक्तं सत्यं
ब्रह्माद्वितीयकम् ॥
तत्त्वंपदार्थौ शिष्टौ तत्राकारो
ब्रह्मकारकः ।
उकारश्च अकारश्च मकारोऽहं
दृगद्वयः ॥
ब्रह्माहमस्म्यहं ब्रह्म ज्ञानमज्ञानमर्द्दनम्
।

संज्ञायामगः ।” ८ । ४ । ३ । इति णत्वम् ।)
देवता । इत्यमरः । १ । १ । ९ ॥ (यथा, भाग-
वते । ८ । १५ । ३२ ।
“एवं सुमन्त्रितार्थास्ते गुरुणार्थानुदर्शिना ।
हित्वा त्रिविष्टपं जग्मुर्गी(र्ब्बा)र्व्वाणाः काम-
रूपिणः ॥”)

**गी(र्ब्बा)र्व्वाणकुसुमं**, क्ली, (गी(र्ब्बा)र्व्वाणप्रियं कुसुमं
पुष्पं यस्य ।) लवङ्गम् । इति राजनिर्घण्टः ॥

**गीष्पतिः**, पुं, (गिरां पतिः । अहरादीनामिति
रेफाभावपक्षे “इदुदुपधस्येति ।” ८ । ३ । ४१ । इति
षः । मुग्धबोधमते “खपि वा ।” इति सूत्रस्य
पाक्षिको विधिः ।) बृहस्पतिः । इत्यमरः ।
१ । १ । २४ ॥ पण्डितः । इति शब्दरत्नावली ॥
अस्य रूपान्तरे गीर्पतिः गीःपतिः । इति मुग्ध-
बोधम् ॥

**गु**, ङ ध्वनौ । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-
अकं-अनिट् ।) ङ, गवते । इति दुर्गादासः ॥

**गु**, शि ओ विष्ठोत्सर्गे । इति कविकल्पद्रुमः ॥
(तुदां-(कुटां)-परं-अकं-अनिट् ।) शि, गुवति
अगुवीत् । ओ, गुणः । इति दुर्गादासः ॥

**गुग्गुलः**, पुं, (गोजति शब्दायतेऽनेनेति । गुज् +
क्विप् । गुक् रोगस्तस्मात् गुडति रक्षतीति ।
गुड + “इगुपधज्ञेति ।” ३ । १ । १३५ । इति
कः । डलयोरैक्यात् डस्य लत्वम् ।) गुग्गुलुः ।
इत्यमरटीकायां भरतः ॥

**गुग्गुलुः**, पुं, (गुज्यतेऽनेनेति । गुज शब्दे + क्विप् ।
गुक् रोगस्तस्मात् गुडतीति । गुड रक्षणे +
बाहुलकात् कुः । डलयोरैक्यात् डस्य लत्वम् ।)
रक्तशोभाञ्जनवृक्षः । इति शब्दचन्द्रिका ॥
स्वनामख्यातवृक्षः । स तु गोमूत्रोद्भवः । यथा, --
“गोरोचनाया मङ्गल्याः संजाताः सर्व्वकामिकाः ।
गुग्गुलुस्तु ततो जातो गोमूत्राच्छुभदर्शनः ॥”
इति वह्निपुराणे वैष्णवधर्म्मे शुद्धिव्रतनामाध्यायः ॥
अस्य निर्यासः सुगन्धिद्रव्यम् । तत्पर्य्यायः ।
कुम्भम् २ उलूखलकम् ३ कौशिकः ४ पुरः ५ ॥

बलकारित्वम् ।
व्रणमेहाश्मवातामवातपिडका-
ग्रन्थिगण्डमालानाशित्वञ्च ॥ * ॥
“माधुर्य्याच्छमयेद्वातं कषायत्वाच्च
पित्तहा ।
तिक्तत्वात् कफजित्तेन गुग्गुलुः
सर्व्वदोषहा ॥”
स तु पञ्चधा यथा, --
“महिषाक्षो महानीलः कुमुदः पद्म
इत्यपि ।
हिरण्यः पञ्चमो ज्ञेयो गुग्गुलोः
पञ्चजातयः ॥”
तेषां रूपाणि यथा, --
“भृङ्गाञ्जनसवर्णस्तु महिषाक्ष इति
स्मृतः ।
महानीलस्तु विज्ञेयः
स्वनामसमलक्षणः ॥
कुमुदः कुमुदाभः स्यात् पद्मो
माणिक्यसन्निभः ।
हिरण्याख्यस्तु हेमाभः पञ्चानां
लिङ्गमीरितम् ॥”
एषां प्राणिविशेषे प्रयोगो यथा, --
“महिषाक्षमहानीलौ गजेन्द्राणां
हितावुभौ ।
हयानां कुमुदः पद्मः
स्वस्त्यारोग्यकरौ परौ ॥
विशेषेण मनुष्याणां कनकः
परिकीर्त्तितः ।
कदाचिन्महिषाक्षस्तु मतः
कैश्चिन्नृणामपि ॥”
नूतनगुग्गुलो रूपं यथा, --
“स्निग्धकाञ्चनसङ्काशः
पक्वजम्बूफलोपमः ।
नूतनो गुग्गुलुः प्रोक्तः सुगन्धिर्यस्तु
पिच्छिलः ॥”
पुरातनस्य रूपं यथा ।
“शुष्को दुर्गन्धिकश्चैव
त्यक्तप्रकृतवर्णकः ।

अयमात्मा
ब्रह्मज्योतिर्व्विज्ञानानन्दरूपकम् ॥
सत्यज्ञानमनन्तः स तत्त्वमसि
श्रुतीरितम् ।
अहं ब्रह्मास्मि ब्रह्माहं सर्व्वप्राणिषु
सर्व्वगम् ॥
योऽसावादित्यपुरुषः
सोऽसावहमनादिमत् ।
गीतासारोऽर्ज्जुनायोक्तो येन ब्रह्मणि वै
लयः ॥”
इत्यादिमहापुराणे गारुडे गीतासारे
२३६
अध्यायः ॥

**गीतिः**, स्त्री, (गै गाने + क्तिन् ।) गानम् । (यथा,

कुमारे । ३ । ४० ।
“श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्
हरः प्रसंख्यानपरो बभूव ॥”)
आर्य्याच्छन्दोविशेषः । इति मेदिनी ।
ते १६ ॥
(अस्या लक्षणं यथा छन्दोमञ्जर्य्यां
मात्रा-
वृत्ते । ७ ।
“आर्य्याप्रथमार्द्ध समं यस्याः
परार्द्धमीरिता गीतिः ॥”)

**गीरथः**, पुं, (गीर्वाणी वाङ्मयं शास्त्रमित्यर्थः रथ

इव यस्य ।) बृहस्पतिः । इति
त्रिकाण्डशेषः ॥

**गीर्णः**, त्रि, (गीर्य्यते स्म इति । गॄ गि स्तुतौ +

क्त ।) स्तुतः । इत्यमरटीकायां भरतः
॥

**गीर्णिः**, स्त्री, (गॄ + क्तिन् । ऋल्वादिभ्यः क्तिन्निष्ठा-

वत् तेन नत्वम् ततो रेफात् णत्वञ्च ।)
गिलनम् ।
इत्यमरः । ३ । ३११ ॥ स्तुतिश्च ।
गीर्णशब्द-
दर्शनात् ॥

**गीर्देवी**, स्त्री, (गीर्वाणी तस्या देवी । वागधिष्ठा-

इत्यमरः । २ । ४ । ३४ ॥ कुम्भोलुः ६ खलकम् ७
कुम्भोलूखलकम् ८ गुग्गुलः ९ । इति भरतः ॥
जटायुः १० कालनिर्यासः ११ देवधूपः १२
सर्व्वसहः १३ महिषाक्षः १४ पलङ्कषा १५ ।
इति रत्नमाला ॥ यवनद्विष्टः १६ भवाभीष्टः १७
निशाटकः १८ जटालः १९ पुटः २० भूतहरः
२१ शिवः २२ शाम्भवः २३ दुर्गः २४ यातुघ्नः
२५ महिषाक्षकः २६ देवेष्टः २७ मरुदिष्टः २८
रक्षोहा २९ रूक्षगन्धकः ३० दिव्यम् ३१ ।
अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् ।
कफमारुतकासकृमिवातोदरक्लेदशोफार्शोनाशि-
त्वम् । रसायनत्वञ्च । इति राजनिर्घण्टः ॥ दीप-
नत्वम् । तीक्ष्णत्वम् । कषायत्वम् । मेदःकुष्ठ-
नाशित्वम् । पित्तदाहित्वम् । लघुत्वञ्च । इति
राजवल्लभः ॥ विशदत्वम् । सारकत्वम् । रूक्ष-
त्वम् । पाके कटुत्वम् । भग्नसन्धानकारित्वम् ।
वृष्यत्वम् । सूक्ष्मत्वम् । स्वर्य्यत्वम् । पिच्छिलत्वम्
।

पुराणः स तु विज्ञेयो
गुग्गुलुर्व्वीर्य्यवर्जितः ॥”
इति भावप्रकाशः ॥ * ॥
अस्य स्थानविशेषे जन्मादिकथनम् ।
यथा, --
“जायन्ते पुरपादपा मरुभुवि
ग्रीष्मेऽर्कसन्तापिताः
शीतार्त्ताः शिशिरेऽपि गुग्गुलुरसं
मुञ्चन्ति ते
पञ्चधा ।
हेमाभं महिषाक्षतुल्यमपरं
सत्पद्मरागोपमं
भृङ्गाभं कुमुदद्युतिञ्च विधिना ग्राह्या
परीक्षा
ततः ॥
वह्नौ ज्वलन्ति तपने विलयं प्रयान्ति
क्लिद्यन्ति कोष्णसलिले पयसः
समानाः ।
ग्राह्याः शुभाः
परिहरेच्चिरकालजाता-
नङ्गारवर्णसमपूयविगन्धवर्णान् ॥”
इति प्रयोगामृतम् ॥
पक्वस्यास्य पूर्णवीर्य्यत्वं
मासत्रयपर्य्यन्तं तिष्ठति ।
इति परिभाषा ॥

**गुच्छः**, पुं, (गुध्यति परिवेष्टते इति । गुध् +

“शस्यादिम्यश्छण् ।” इति छण् इति
भोज-
राजः । यद्वा, गुङ शब्दे + क्विप् ।
गुतं शब्दं
छ्यति नाशयतीति । गुत् + छो +
“आतोनुपसर्गे
कः ।” ३ । २ । ३ । इति कः ।)
स्तवकः ।
पुष्पादिर थलुया इति भाषा । (यथा,
गीत-
गोविन्दे । ११ । ११ ।
“अक्ष्णोर्निक्षिपदञ्जनं
श्रवणयोस्तापिञ्छगुच्छावलीम् ॥”)
स्तम्बः । तृणादिर गोछा इति भाषा ॥
(उद्भिद्-

तृतयास्यास्तथात्वम् ।) सरस्वती । इति शब्द-
रत्नावली ॥

**गीर्लता**, स्त्री, (गीरिव तमोनाशिनी विस्तृता च

लता ।) महाज्योतिष्मती । इति राजनिर्घण्टः ॥

**गी(र्ब्बा)र्व्वाणः**, पुं, (गीर्वगिव बाणोऽस्त्रं यस्य

अव्यर्थवाक्यतयास्य तथात्वम् । अन्तःस्थवकां
मध्यपाठे तु गिरं वनुते याचते काङ्क्षतीत्य
स्तुतिप्रियत्वादिति । वन याच्ञायाम् + "कर्म
ण्यण् ।" ३ । २ । १ । इत्यण् । "पूर्ब्बपदा

विशेषः । स तु मल्लिकादिः । यथा, मनुः । १ । ४८ ।
"गुच्छगुल्मन्तु विविधं तथैव तृणजातयः ।"
"मूलत एव यत्र लतासमूहो भवति न च प्रका-
ण्डानि ते गुच्छा मल्लिकादयः ।" इति तट्टीकाय-
कुल्लूकभट्टः ॥) द्वात्रिंशद्यष्टिकहारः । वत्रिश-

नर हार इति भाषा ॥ कलापः । इति मेदिनी ।
छे । ३ ॥ मयूरेर पाखा इति भाषा । मुक्ता-हारः । इति रन्तिदेवः ॥

**गुच्छकं**, क्ली, (गुच्छ + संज्ञायां कन् ।) ग्रन्थि-पर्णम् । इति भावप्रकाशः ॥

**गुच्छकः**, पुं, (गुच्छ + स्वार्थे कन् ।) स्तवकः । इत्य-मरः । २ । ४ । ३४ ॥ तत्पर्य्यायः । गुलञ्चः २
स्तम्बः ३ कुसुमोच्चयः ४ गुच्छः ५ । इति राज-निर्घण्टः ॥ गुत्सः ६ गुत्सकः ७ । इत्यमर-टीकायां भरतः ॥ रीठाकरञ्जः । इति राज-निर्घण्टः ॥ स्वार्थे कप्रत्ययात् गुच्छशब्दार्थोऽप्यत्र ॥

**गुच्छकणिशः**, पुं, (गुच्छवत् कणिशानि मञ्जर्य्यो यस्य ।) रागीधान्यम् । इति राजनिर्घण्टः ॥

**गुच्छकरञ्जः**, पुं, (गुच्छः स्तवकः करञ्जफले यस्य ।) करञ्जविशेषः । तत्पर्य्यायः । स्निग्धदलः २ गुच्छपुष्पकः ३ नन्दी ४ गुच्छी ५ सानन्दः ६
दन्तधावनः ७ । अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । विषवातार्त्तिकण्डूविच-र्च्चिकाकुष्ठस्पर्शत्वग्दोशनाशित्वञ्च ॥” इति राज-निर्घण्टः ॥

**गुच्छदन्तिका**, स्त्री, (गुच्छाः स्तवकीभूता दन्ता इव फलानि यस्याः । कप् टाप् अत इत्घञ्च ।)
कदली । इति राजनिर्घण्टः ॥

**गुच्छपत्रः**, पुं, (गुच्छीभूतानि पत्राणि यस्य ।) तालवृक्षः । इति राजनिर्घण्टः ॥

**गुच्छपुष्पः**, पुं, (गुच्छीभूतानि पुष्पाणि यस्य ।) (पुंलिङ्गनिर्द्देशाद्वेवास्य तथात्वम् । क्लीवलिङ्गे तु “पुंस्यर्द्धोऽर्द्धं समेऽशके ।” इत्यमरोक्तेः षोडश-यष्टिकहारो बोद्धव्य इति तु सुधीभिर्विभाव्यम् ॥)

**गुच्छालः**, पुं, (गुच्छेन अलति पर्य्याप्नोतीति । अल पर्य्याप्तौ + अच् ।) भूतृणम् । इति राज-निर्घण्टः ॥

**गुच्छाह्वकन्दः**, पुं, (गुच्छाह्वो गुच्छसंज्ञकः कन्दः ।)
गुलञ्चकन्दः । इति राजनिर्घण्टः ॥

**गुच्छी**, स्त्री, (गुच्छ + जातौ ङीष् ।) गुच्छकरञ्जः ।
इति राजनिर्घण्टः ॥

**गुज**, कूजने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) पञ्चमस्वरी । गोजति । कूजन-मव्यक्तशब्दः । इति दुर्गादासः ॥

**गुज,** इ कूजने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) पञ्चमस्वरी । इ, कर्म्मणि गुञ्ज्यते । कूजनमव्यक्तशब्दः । गुञ्जति भ्रमरः कुञ्जे । इति दुर्गादासः ॥

**गुज**, शि ध्वनौ । इति कविकल्पद्रुमः ॥ (तुदां-(कुटां)-परं-अकं-सेट् ।) शि, गुजति अगु-जीत् जुगोज । इति दुर्गादासः ॥

**गुज्जरी**, स्त्री, (गुर्ज्जरदेशवासिनां प्रिया । गुर्ज्जर + अण् + स्त्रियां ङीप् । पृषोदरात् रलोपे वृद्ध्यभावे च साधुः ।) रागिणीविशेषः ।

**गुञ्जा**, स्त्री, (गुञ्जतीति । गुजि + अच् । अस्याः पक्वफलगुच्छे शब्दबाहुल्यात्तथात्वम् ।) लता-विशेषः ॥ कुँच इति भाषा ॥ तत्पर्य्यायः । काकचिञ्ची २ कृष्णला ३ । इत्यमरः । २ । ४ । ९८ ॥
साङ्गुष्ठा ४ रक्तिका ५ काकणन्तिका ६ काका-दनी ७ काकतिक्ता ८ काकजङ्घा ९ शिख-ण्डिनी १० । इति रत्नमाला ॥ चूडामणिः ११
सौम्या १२ शिखण्डी १३ अरुणा १४ ताम्रिका १५
शीतपाकी १६ उच्चटा १७ कृष्णचूडिका १८
रक्ता १९ काम्बोजी २० भिल्लभूषणा २१ वन्या २२
श्यामलचूडा २३ काकचिञ्चिका २४ । अस्या वीजगुणाः । तीक्ष्णत्वम् । उष्णत्वम् । इति राज-निर्घण्टः ॥ कुष्ठव्रणनाशित्वम् । इति राज-वल्लभः ॥ अस्याः शिफागुणः । वान्तिकारि-त्वम् । शूलविषनाशित्वञ्च । वश्यकर्म्मणि श्वेता प्रशस्ता । इति राजनिर्घण्टः ॥ * ॥ (इयन्तु श्वेतरक्तभेदेन द्विविधम् । यदुक्तं भावप्रकाशे ।
“श्वेतरक्तप्रभेदेन ज्ञेयं गुञ्जाद्वयं बुधैः ।
गुञ्जाद्वयन्तु केश्यं स्यात् वातपित्तज्वरापहम् ॥
मुखशोषश्रमश्वासतृष्णामदविनाशनम्।
नेत्रामयहरं वृष्यं बल्यं कण्डूव्रणं हरेत् ॥
कृमीन्द्रलुप्तकुष्ठानि रक्ता च धवलापि च ॥”
श्वेतगुञ्जा तु अभिचारकर्म्मणि प्रशस्ता । यथा, नवदुर्गामन्त्राभिचारे ।
“जपित्वा सितगुञ्जानां कुडवं कुलिकोदये ॥”
इत्यादि ॥
गुञ्जाफलन्तु विषप्रायत्वात् कदापि स्वस्थैर्न भोक्त-

सप्तच्छदवृक्षः । इति राजनिर्घण्टः ॥
(अशोक-
वृक्षः । अस्य पर्य्याया यथा, --
"हेमपुष्पस्त्वशोकश्च
गुच्छपुष्पोऽङ्गनाप्रियः ॥"
इति वैद्यकरत्नमालायाम् ॥)

**गुच्छपुष्पकः**, पुं, (गुच्छपुष्प + संज्ञायां कन् ।)
रीठाकरञ्जः । गुच्छक । रञ्जः । इति राज-
निर्घण्टः ॥

**गुच्छपुष्पी**, स्त्री, (गुच्छपुष्प + जातौ ङीष् ।) धातकी ।
शिमृडीवृक्षः । इति राजनिर्घण्टः ॥

**गुच्छफलः**, पुं, (गुच्छीभूतानि फलानि यस्य ।)
रीठाकरञ्जः । राजादनी । कतकः । इति
राजनिर्घण्टः ॥ (राजादनशब्देऽस्य
गुणादयो
ज्ञातव्याः ॥

**गुच्छफला**, स्त्री, (गुच्छीभूतानि फलानि यस्याः ।
स्त्रियां टाप् ।) अग्निदमनी । काकमाची ।
निष्पावी । द्राक्ष । कदली । इति राज-
निर्घण्टः ॥

**गुच्छबध्ना**, स्त्री, (गुच्छेन बध्यते इति । बन्ध +
बाहुलकात् रक् । ततष्टाप् ।) गुण्डालावृक्षः
।
इति राजनिर्घण्टः ॥

**गुच्छमूलिका**, स्त्री, (गुच्छाकृति मूलमस्याः ।
कप् स्त्रियां टाप् अत इत्वञ्च ।) गुण्डासिनी-
तृणम् । इति राजनिर्घण्टः ॥

**गुच्छार्द्धः**, पुं, (गुच्छस्य द्वात्रिंशद्यष्टिकहारस्य
अर्द्धः । ग्रामार्द्धवत् समासः ।)
चतुर्व्विंशति-
यष्टिको हारः । इत्यमरः । २ । ६ । १०५
॥

अस्य ध्यानं यथा, सङ्गीतदर्पणे ।
"श्यामा सुकेशी मलयद्रुमाणां
मृदूल्लसत्पल्लवतल्पयाता ।
श्रुतेः स्वराणां दधती विभागं
तन्त्रीमुखाद्दक्षिणगुज्जरीयम् ॥"
अस्याः कालनियमो यथा, --
"नाटो गौडो वडारी च गुज्जरी देशिरेव
च ।
पूर्ब्बाह्णे गानमेतेषां निषिद्धमिति तद्बिदः
॥"
इति सङ्गीतदामोदरः ॥
मतभेदेन पूर्ब्बाह्णेऽपि गीयते ॥
(इयंपुनर्भैरव-
रागस्य वराङ्गना । हनूमन्मते तु
मेघरागस्य ।
अस्याः स्वरूपं यथा, सङ्गीतदर्पणे ।
"ग्रहांशन्यास-ऋषभा सम्पूर्णा गुर्ज्जरी
मता ।
पौरवी मूर्च्छना यस्यां वङ्गाल्या सह
मिश्रिता ॥"
"पौरवीमूर्च्छना यस्याम् ।" इत्यत्र
"सप्तमी
मूर्च्छनैतस्याम् ।" इति क्वचित् पाठः
। सोमे-
श्वरमते इयं पञ्चमहीना षाडवा । इयञ्च
केनापि कारणेन रागविकारे जाते
तत्पाप-
प्रायश्चित्तार्थं प्रायेण गीयते
तथाचोक्तम्, --
"लोभान्मोहाच्च ये केचिद् गायन्ति च
विरागतः ।
सुरसा गुर्ज्जरी तस्य दोषं हन्तीति
कथ्यते ॥")

**गुञ्जः**, पुं, गुञ्जन्ति भ्रमरादयो यत्र गुञ्ज + अधि-
करणे घञ् ।) गुच्छः । पुष्पस्तवकः ।
इति शब्द-
रत्नावली ॥

**गुञ्जकृत्**, पुं, (गुञ्जं गुञ्जनं करोतीति । कृ + क्विप्
तुक् च ।) भ्रमरः । इति शब्दचन्द्रिका
॥

व्यम् । अस्या विषमयत्वमुक्तं यथा, पञ्चतन्त्रे
।
४ । ५८ ।
"अन्तर्विषमया ह्येता वहिश्चैव मनोरमाः ।
गुञ्जाफलसमाकाराः स्वभावादेव योषितः ॥")
चतुर्यवपरिमाणम् । रति इति भाषा । (यथा, -
-
"यवोऽष्टसर्षपैः प्रोक्तो गुञ्जा स्यात्तच्चतुष्टयम्
॥"
इति शार्ङ्गधरेपूर्ब्बखण्डे प्रथमेऽध्याये ॥)
चतुर्धान्यपरिमाणम् । इति शुभङ्करः ॥ गोधूम-
द्वयमानम् । इति राजनिर्घण्टः ॥ (गुञ्जति
शब्दायते इति । कर्त्तरि अच् ।) पटहः ।
(गुञ्जनमिति । गुजि + भावे अप् ।) कल-
ध्वनिः । इति मेदिनी ॥ (गुञ्ज्यते
भ्रमरादिभि-
र्मद्यपायिभिर्वा यत्र + अधिकरणे अप् घञ् वा
।)
मदिरागृहम् । इति शब्दरत्नावली ॥ चर्च्चा ।
इति त्रिकाण्डशेषः ॥

**गुञ्जिका**, स्त्री, (गुञ्जा एव । स्वार्थे कन् । अत
इत्वम् ।) गुञ्जा । त्रियवपरिमाणम् । इति शब्द-
चन्द्रिका ॥ (गुञ्जाशब्देविवरणमस्या ज्ञातव्यम्
॥)

**गुञ्जितं**, क्ली, (गुञ्ज + भावे क्तः ।) गुञ्जनम् । यथा,
"न गुञ्जितं तन्न जहार यन्मनः ॥"
इति भट्टिः । २ । १९ ॥

**गुटिका**, स्त्री, (गुटिरेव । गटि + स्वार्थे कन् ।)
वटिका । गुलि इति धाड इति च भाषा ॥
यथा, "प्युटिकापातादिना व्यञ्जनम् ।" इति
दायभागः ॥

| | | |
|---|---|---|
| | **गुञ्जनं**, क्ली, (गुजि कूजने + भावे ल्युट् ।) गुन्-<br>गुन्ध्वनिः । भ्रमरादिशब्दः ।<br>(किमिदं गुञ्जनं सख्यः षट्पदानां<br>मनोहरम् ।) | |

**गुठ**, इ क वेष्टे । इति कविकल्पद्रुमः ॥ (चुरां-

परं-सकं-सेट् ।) ह्रस्वी । इ क,
गुण्ठयति अजु
गुठत् । इति दुर्गादासः ॥

**गुड**, इ क वेष्टे । रक्षे । इति कविकल्पद्रुमः ॥

(चुरां-परं-सकं-सेट् ।) पञ्चमस्वरी । इ क,
गुण्डयति ।
अनेकार्थत्वाच्चूर्णीकरणेऽपि । गुण्ड-
यति हिङ्गुलं लोकः । इति दुर्गादासः ॥

**गुड**, शि रक्षे । व्याघाते । इति कविकल्पद्रुमः ॥

(तुदां-(कुटां)-परं-सकं-सेट् ।) शि, गुडति
अगुडीत् । इति दुर्गादासः ॥

**गुडः**, पुं, (गवते अव्यक्तशब्दं करोतीति । गु ङ

शब्दे + "क्वादिभ्यः कित् ।" उणां । १ । ११४ ।
इति डः स च कित् ।) गोलः ।
हस्तिसन्नाहः ।
इति मेदिनी । डे । १० ॥ ग्रासः । इति हेम-
चन्द्रः ॥ कार्पासी । इति राजनिर्घण्टः ॥ इक्षु-
पाकः । इत्यमरः । ३ । ३ । ४१ ।
तस्य पर्य्यायः ।
इक्षुसारः २ मधुरः ३ रसपाकजः ४
खण्डजः ५
द्रवजः ६ सिद्धः ७ मोदकः ८
अमृतसारजः ९
शिशुप्रियः १० सितादिः ११ अरुणः
१२ रसजः १३ ।
इति राजनिर्घण्टः ॥ इक्षुरसक्वाथः १४
गण्डोलः १५
मधुवीजकः १६ । इति वैद्यकम् ॥
गण्डोलम् १७
गुलः १८ स्वादुखण्डः १९ । इति
शब्दरत्नावली ॥

क्षये कासे क्षतक्षीणे पाण्डुरोगेऽसृजि क्षये ।
हितो योगेन संयुक्तो गुडः पथ्यतमो मतः ॥
गुदामये कामलशोषमेहे
गुल्मामये पाण्डुहलीमके च ।
वाते सपित्तासृजि राजरोगे
रुचिप्रदो रोगहरो गुडः स्यात् ॥
कासे शोफे गुडो नेष्टः अन्यत्रापि हितो मतः ।
योगयुक्तोऽपि सर्व्वत्र हितो गुणगणो नयः ॥
क्षामक्षीणे पवनकुपिते श्वासमूर्च्छातुराणां
अध्वश्रान्तश्रममदविषमूत्रकृच्छ्राश्मरीणाम् ।
जीर्णः क्षामज्वरविषमगे रक्तपित्तप्रकोपे
तृष्णादाहक्षयरुधिरगे सर्व्वरोगान्निहन्ति ॥"
इति गुडगुणाः ॥
इति हारीते प्रथमस्थानेऽष्टमेऽध्याये ॥ * ॥

**गुडकः**, पुं, (गुडेन पक्वः । गुड + बाहुलकात् कः ।

यद्वा, गुडेन कायतीति । कै + कः ।) गुडद्वारा
पक्वौषधविशेषः । अस्य पूर्णतेजः षण्मास-
पर्य्यन्तं तिष्ठति । इति परिभाषा ॥ (गुड एव ।
स्वार्थे कन् । गोलाकृतिः । यथा, महाभारते ।
३ । १५ । ८ ।
"सभुशुण्ड्यश्मगुडका सायुधा सपरश्वधा ॥"
"अश्मगुडका वर्त्तुलीकृताः पाषाणाः ।" इति
तट्टीकायां नीलकण्ठः ॥)

**गुडकरी**, स्त्री, (गुडं गुडवत्सुमिष्टं श्रुतिसुखकर-

मित्यर्थः करोतीति । गुड + कृ + "कृञो हेतु-
ताच्छील्यानुलोम्येषु ।" ३ । २ । २० । इति टः
स्त्रियां ङीप् ।) रागिणीविशेषः । इति हलायुधः ॥

**गुडची**, स्त्री, (चि + क्विप् निपातनाद्दीर्घत्वे साधुः ।

गुडवत् ची चयनं क्षरितोरसो यस्या इत्यर्थः ।
अमृतोद्भवत्वाद्वास्यास्तथात्वम् ।) गुडूची ।
इत्यमरटीकायां भरतः ॥ (अस्या उत्पत्तिकथा
अन्यद्विवरणञ्च गुडूचीशब्दे द्रष्टव्यम् ॥)

**गुडतृणं**, क्ली, (गुडप्रधानं गुडकारणं वा तृणम् ।)

इक्षुः । इति राजनिर्घण्टः ॥

**गुडदारु**, क्ली, गुडप्रधानं गुडकारणं वा दारु-

तृणवृक्षः ।) इक्षुः । इति त्रिकाण्डशेषः ॥

**गुडधेनुः**, स्त्री, (गुडनिर्म्मिता गुडभारादिभिः कृता

धेनुः ।) गुडादिनिर्म्मिता धेनुः । यथा, --
"गुडधेनुविधानस्य यद्रूपमिह यत् फलम् ।
तदिदानीं प्रवक्ष्यामि सर्व्वपापविनाशनम् ॥
कृष्णाजिनं चतुर्हस्तं प्राग्ग्रीवं विन्यसेद्भुवि ।
गोमयेनानुलिप्तायां दर्भमास्तीर्य्य सर्व्वतः ॥
लवणेनाजिनं तद्वत् वत्सस्य परिकल्पयेत् ।
उदङ्मखीं कल्पयेद्धेनुमुदीच्याञ्च सवत्सकाम् ॥
उत्तमा गुडधेनुः स्यात् सदा भारचतुष्टयैः ।
बहुभारेण वा कार्य्या भाराभ्यां मध्यमा स्मृता ॥
अर्द्धभारेण वत्सः स्यात् कनिष्ठा भारकेण तु ।
चतुर्थांशेन वत्सः स्यात् गृहवित्तानुसारतः ॥
धेनुवत्सौ तदां तौ तु सितसूक्ष्माम्बरावृतौ ।
शुक्तिकर्णाविक्षुपादौ शुद्धमुक्ताफलेक्षणौ ॥
सितसूत्रशिरालौ तु सितकम्बलकम्बलौ ।
ताम्रगुडकपृष्ठौ तु सितचामररोमकौ ।
विद्रुमभ्रूयुगकृतौ नवनीतस्तनान्वितौ ॥
क्षौमपुच्छौ कांस्यदोहाविन्द्रनीलकतारकौ ।
इत्येवं रचयित्वा तु धूपदीपैः समर्च्चयेत् ॥
सर्व्वासां धेनूनामेवं विधानं ज्ञेयम् । इति
पाद्मे

स्वादुः २० । इति त्रिकाण्डशेषः ॥
अस्य गुणाः ।
वृष्यत्वम् । स्निग्धत्वम् । गुरुत्वम् ।
वातनाशित्वम् ।
मूत्रशोधनत्वम् । नातिपित्तहरत्वम् ।
मेदःकफ-
कृमिवलप्रदत्वञ्च । इति राजवल्लभः ॥
मधुरत्वम् ।
क्षारत्वम् । उष्णत्वम् । कफनाशित्वम् ।
पित्त-
रक्ते अहितत्वम् । जीर्णश्चैव रसायनः
॥ पुरा-
तनस्य तस्य गुणाः ।
पित्तपवनार्त्तित्रिदोषपाण्डु-
प्रमेहश्रमनाशित्वम् । द्रव्यान्तरसंयोगेन
विशे-
षतो ज्वरनाशित्वम् । रुचिकारित्वम् ।
हृद्य-
त्वम् । सन्तापशान्तिप्रदत्वम् ।
विण्मूत्रामय-
शोधनत्वम् । अग्निजननत्वम् ।
स्निग्धत्वम् । स्वादु-
तरत्वम् । लघुत्वम् । पथ्यत्वञ्च । इति
राज-
निर्घण्टः ॥ अधिकगुणत्वम् ।
रक्तप्रसन्नबल-
कारित्वम् । मधुरत्वञ्च । इति
राजवल्लभः ॥
यावनालरसपाकभवगुडगुणाः ।
क्षारत्वम् । कटु-
त्वम् । मधुरत्वम् । कफवातनाशित्वम् ।
पित्त-
प्रदत्वम् । सततनिषेवणेन
कण्डूतिकुष्ठजनन-
त्वम् । जनन इत्यत्र शमन इति क्वचित्
पाठः ।
अस्रविदाहदायित्वञ्च । इति
राजनिर्घण्टः ॥ * ॥
"इक्षो रसो यः संपक्वो जायते
लोष्टवद्दृढः ।

**गुडत्रिणं**, क्ली, (गडप्रधानं तृणम् । निपातनात्
साधु ।) गुडतृणम् । इक्षुः । इति शब्दरत्नावली
॥

**गुडत्वक्**, [च्] क्ली, (गुडैव मधुरा त्वगस्य ।)
स्वनामख्यातगन्धद्रव्यम् । तत्पर्य्यायः । सूत्क-
टम् २ भृङ्गम् ३ त्वक्पत्रम् ४ वराङ्गकम् ५
त्वचम् ६ चोलम् ७ त्बचापत्रम् ८ हृद्यम् ९
सुरभिवल्कलम् १० । इति शब्दरत्नावली ॥
उत्कटम् ११ चोचम् १२ । इत्यमरः ।
२ । ४ । १३४ ॥ त्वक् १३ पत्रम् १४ इति
तट्टीका ॥ अस्य गुणाः । कफशुक्रामवातनाशि-
त्वम् । मधुरत्वम् । कटुत्वञ्च । इति राजवल्लभः
॥
लघुत्वम् । उष्णत्वम् । स्वादुत्वम् । तिक्तत्वम् ।
रूक्षत्वम् । पित्तवृद्धिकारित्वम् । अरुचिकण्डु-
हृद्बस्तिवातार्शःकृमिपीनसरोगनाशित्वञ्च । इति
भावप्रकाशः ॥

**गुडत्वचं**, क्ली, (गुडवत् मधुरं त्वचम् ।) गुड-
त्वक् । राजभोग्यम् । इति शब्दचन्द्रिका ॥
जयित्री इति भाषा ॥

सृष्टिखण्डम् ॥

**गुडपुष्पः**, पुं, (गुड इव मधुरं पुष्पमस्य ।) मधूक-
वृक्षः । इत्यमरः । २ । ४ । २७ ॥

**गुडफलः**, पुं, (गुड इव मधुरं फलमस्य ।) पीलु-
वृक्षः । इत्यमरः । २ । ४ । २८ ॥

**गुडबीजः**, पुं, (गुडवत् मधुरं यद्वा, गुडं वर्त्तुला-
कृति वीजं यस्य ।) मसूरः । इति राज-
निर्घण्टः ॥

**गुडभा**, स्त्री, (गुडवत् भाति शोभते इति । भा +
कः । स्त्रियां टाप् ।) यावनालशर्करा ।
इति
राजनिर्घण्टः ॥

**गुडमूलः**, पुं, (गुडवत् सुमिष्टं मूलं यस्य ।)
अंल्पमारिषशाकम् । इति शब्दचन्द्रिका
॥

**गुडलं**, क्ली, (गुडं उत्पत्तिकारणत्वेन लातीति ।
ला + कः ।) गौडी मदिरा । इति शब्द-
चन्द्रिका ॥

**गुडशर्करा**, स्त्री, (गुडजाता शर्करा ।) शर्करा ।
तत्पर्य्यायः । पिप्यटा २ । इति
त्रिकाण्डशेषः ॥
(यथा, सुश्रुते उत्तरतन्त्रे ४२ अध्याये ।
"विदारीत्रिफला भीरु शृङ्गाटी गुडशर्करा
॥")

**गुडशिग्रुः**, पुं, (गुड इव रक्तवर्णः शिग्रुर्वृक्षविशेषः ।)
रक्तशोभाञ्जनः । इति शब्दचन्द्रिका ॥

**गुडा**, स्त्री, (गुड + स्त्रियां टाप् ।) स्नुहीवृक्षः ।
गुडिका । इति मेदिनी ॥ उशीरी । इति
राज-
निर्घण्टः ॥

**गुडाका**, स्त्री, (गुडयति सङ्कोचयति जडीकरोति
देहेन्द्रियादीनि योऽवस्थाविशेषः स गुडः
तं
आकायति प्रकाशयतीति । गुडां
आलस्यं जाड्या-

| | | |
|---|---|---|
| स गुडो गौडदेशे तु मत्स्यण्ड्येव गुडो मतः ॥<br>श्लेष्माणमाशु विनिहन्ति सदार्द्रकेण<br>पित्तं निहन्ति च तदेव हरीतकीभिः ।<br>शुण्ठ्या समं हरति वातमशेषमित्थं<br>दोषत्रयक्षयकराय नमो गुडाय ॥<br>इति भावप्रकाशः ॥<br>("बल्यो वृष्यो गुरुः स्निग्धो वातघ्नो मूत्रशोधनः ।<br>नातिपित्तहरो मेध्यः कफक्रिमिकरो गुडः ॥<br>पित्तघ्नो मधुरः शुद्धो वातहा मूत्रशोधनः ।<br>स पुराणोऽधिकगुणो गुल्मार्शोऽरोचकापहः ॥ | | वस्थां कायति वा । गुड + आ + कै + कः स्त्रियां<br>टाप् ।) निद्रा । इति<br>गुडाकेशशब्दव्युत्पत्तौ श्रीधर- |

स्वामी ॥ (आलस्यम् । इति मधुसूदनसर-
स्वतिः ॥)

**गुडाकेशः**, पुं, (गुडाका निद्रा माया इत्यर्थस्तस्या
ईशः ।) शिवः । (गुडा निद्रा आलस्यं इन्द्रि-
याणि वा तस्या ईशः शास्ता जितनिद्रो जिते-
न्द्रियो वा ।) अर्ज्जुनः । इति जटाधरः ॥
(यथा,
गीतायाम् । १ । २४ ।
"एवमुक्तो हृषीकेशो गुडाकेशेन भारत ! ॥")

**गुडाशयः**, पुं, (आशेतेऽस्मिन्निति । आशयो वास-
स्थानम् । ततो गुडस्येव मधुररसस्य आशयः
।)
आखोटवृक्षः । इति राजनिर्घण्टः ॥

**गुडिका**, स्त्री, (गुडा वर्त्तुलाकृतिः । स्वार्थे कन्
टापि अत इत्वम् ।) गुटिका । वृहद्वटिका ।
यथा, वैद्यकपरिभाषा ॥
"वटिका गुटिका चेति संज्ञावान्तरभेदतः ।"
("चूर्णावलेहगुडिका कल्कानामनुपानकम् ।
वातपित्तकफोद्रेके त्रिद्व्येकपलमाहरेत् ॥
इति शार्ङ्गधरे मध्यखण्डे षष्ठेऽध्याये ॥)

**गुड्डुची**, स्त्री, (गुडची + निपातनादुत्वागमः ।)
गुडूची । इति द्विरूपकोषः ॥

**गुडूची**, स्त्री, लताविशेषः । गुलञ्च इति भाषा ॥
तत्पर्य्यायः । वत्सादनी २ छिन्नरुहा ३
तन्त्रिका ४ अमृता ५ जीवन्तिका ६ सोम-
वल्ली ७ विशल्या ८ मधुपर्णी ९ । इत्यमरः ॥
गुडची १० । इति भरतः ॥ कुण्डली ११ चक्र-
लक्षणा १२ । इति रत्नमाला ॥ अमृतवल्ली
१३
ज्वरारिः १४ श्यामा १५ वरा १६ सुरकृता
१७
मधुपर्णिका १८ छिन्नोद्भवा १९ अमृतलता
२०
रसायनी २१ छिन्ना २२ सोमलतिका २३
भिषक्प्रिया २४ कुण्डलिनी २५ वयःस्था २६

अस्या उत्पत्तिर्यथा, --
"अथ लङ्केश्वरो नाम्ना रावणो
राक्षसाधिपः ।
रामपत्नीं बलात् सीतां जहार
मदनातुरः ॥
ततस्तं बलवान् रामो रिपुं
जायापहारिणम् ।
बलं वानरसैन्येन जघान
रणमूर्द्धनि ॥
हते तस्मिन् सुराराती रावणे
बलगर्व्विते ।
देवराजः सहस्राक्षः परितुष्टोऽपि
राघवे ॥
तत्र ये वानराः केचिद्राक्षसैर्न्निहता
रणे ।
तानिन्द्रो जीवयामास
संसिच्यामृतवृष्टिभिः ॥
ततो येषु च देशेषु कपिगात्रात्
परिच्युताः ।
पीयूषबिन्दवः पेतुस्तेभ्यो जाता
गुडूचिका ॥"
इति भावप्रकाशः ॥
(गुडूचीघृतम् । यथा, --
"गुडूचीक्वाथकल्काभ्यां
सपयस्कं घृतं शृतम् ।
हन्ति वातं तथारक्तकुष्ठं जयति
दुस्तरम् ॥"
इति वैद्यकचक्रपाणिसंग्रहे
वातरक्ताधिकारे ॥)

**गुडेरः**, पुं, (गुडति रक्षतीति गुड रक्षायाम् +
"पतिकठिकुठिगडि गुडिदंशिभ्य
एरक् ।" उणां ।
१ । ५८ । इति एरक् । रक्षकः ।
इति व्युत्पत्ति-
लब्धोऽर्थः ।) ग्रासः ।
इत्युणादिकोषः ॥ गुडकः ।
इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

"काञ्चीगुण इव पतितः स्थितैकरत्नः फणी
स्फुरति ॥")
सत्वरजस्तमांसि । (यथा, भागवते । १ । २ ।
२३ ।
"सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तै-
र्युक्तः परः पुरुष एक इहास्य धत्ते ।
स्थित्यादये हरिविरिञ्चिहरेति संज्ञाः
श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः ॥")
शुक्लकृष्णरक्तपीतादिः । द्रव्याश्रितः । स तु
शौर्य्यादिःरसगन्धादिश्च । इत्यमरः । ३ । ३ ।
४६ ॥
तस्य लक्षणं यथा, --
"सत्त्वे निविशतेऽपैति पृथग् जातिषु दृश्यते ।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥"
इति मुग्धबोधम् ॥
(अस्यार्थमाह दुर्गादासः ।
"यः सत्त्वे द्रव्ये निविशते तदेवाश्रयतीत्यर्थः ।
अपैति तस्मात् सत्त्वादपगच्छतीत्यर्थः ॥ यथा
श्यामता पूर्ब्बमाम्रादिफलमुपगच्छति पश्चात्
पक्वदशायां ततोऽपैति । पृथक् जातिषु दृश्यते
भिन्नेषु पदार्थेषु दृश्यते । यथा आम्रादिफले या
श्यामता दृष्टा सा कदलीफलादिषु च दृश्यते
स गुणः स्यादित्यर्थः । ननु तर्हि उत्क्षेपणाव-
क्षेपणाकुञ्चनप्रसारणगमनानि पञ्चैव कर्म्मा-
णीति उक्तकर्म्मस्वपि गुणत्वापत्तिः यदा द्रव्यं
सक्रियं भवति तदा कर्म्म सत्त्वे निविशते यदा
द्रव्यं निष्क्रियं भवति तदा कर्म्म सत्त्वादपैति
पृथग्जातिषु च दृश्यते यथा मनुष्येषु गमनादि-
क्रिया दृश्यते तथा पश्वादिषु च दृश्यते अतः
कर्म्मणो गुणत्वमपाकर्त्तुमाह
आधेयश्चाक्रियाज-
श्चेति । आधेय उत्पाद्यः यथा पक्वमृण्मय-
पात्रेषु रक्ततागुणः सहि वह्निसंयोगादिना
निष्पाद्यते । अक्रियाज इति । क्रियाया जायते
।
इति क्रियाजः । न क्रियाजोऽक्रियाजः नित्य
इत्यर्थः । आकाशादिषु महत्त्वादिर्गुणः । ततश्च
गुणस्य उत्पाद्यत्वमनुत्पाद्यत्वञ्चइति प्रकार-

नागकुमारिका २७ छद्मिका २८ चन्द्रहासा २९ ।
इति राजनिर्घण्टः ॥ अमृतवल्लरी ३० सुधा ३१
जीवन्ती ३२ सोमा ३३ चक्रलक्षणिका ३४
वयस्या ३५ मण्डली ३६ देवनिर्म्मिता ३७ ।
अस्या गुणाः । कटुत्वम् । स्वादुपाकित्वम् ।
रसायनत्वम् । संग्राहित्वम् । कषायत्वम् । उष्ण-
त्वम् । लघुत्वम् । बल्यत्वम् । अग्निदीपनत्वम् ।
दोषत्रयामतृड्दाहमेहकासपाण्डुकामलाकुष्ठ-
वातास्रज्वरकृमिवमिनाशित्वञ्च । इति भाव-
प्रकाशः ॥ गुरुत्वम् । वीर्य्यदातृत्वम् । भ्रम-
नाशित्वञ्च । इति राजनिर्घण्टः ॥ रक्तपित्त-
नाशित्वम् । इति राजवल्लभः ॥ अस्याः पत्रस्य
गुणाः । आग्नेयत्वम् । सर्व्वज्वरहरत्वम् । लघु-
त्वम् । कषायत्वम् । कटुत्वम् । स्वादुपाकित्वम् ।
रसायनत्वम् । बलकारित्वम् । उष्णत्वम् ।
संग्राहित्वम् । त्रिदोषतृष्णादाहप्रमेहवाता-
सृक्कामलाकुष्ठपाण्डुतानाशित्वञ्च । इति भाव-
प्रकाशः ॥ घृतयुक्ताया वातनाशित्वम् । गुड-
युक्तायाः पित्तनाशित्वम् । मधुयुक्तायाः कफ-
नाशित्वम् । एरण्डतैलयुक्ताया उग्रवातास्र-
नाशित्वम् । शुण्ठीयुक्ताया आमवातनाशि-
त्वम् । इति राजवल्लभः ॥ * ॥

**गुडेरकः**, पुं, (गुडेर + स्वार्थे कन् ।) ग्रासः ।
इति हेमचन्द्रः । ३ । ८९ ॥

**गुडोद्भवा**, स्त्री, (गुडादुद्भवो यस्याः । यद्वा, उद्भव-
त्यस्मादिति उद्भवः । गुड उद्भवो उत्पत्त्याश्रयो
यस्याः ।) शर्करा । इति राजनिर्घण्टः ॥

**गुण**, त् क मन्त्रणे । इति कविकल्पद्रुमः ॥ (अदन्त
चुरां-परं-सकं-सेट् ।) ह्रस्वी । मूर्द्धन्योपधः ।
गुणयति । इति दुर्गादासः ॥

**गुणः**, पुं, (गुण्यते मन्त्र्यते मन्त्रणादिभिर्निश्चीयते
राजभिरितिशेषः । गुण मन्त्रणे + घञ् ।) षट्-
प्रकारराजनीतिविशेषः । तद्यथा । सन्धिः १
विग्रहः २ यानम् ३ आसनम् ४ द्वैधम् ५
आश्रयः ६ ॥ (यथा, मनुः । ७ । १६० ।
"सन्धिञ्च विग्रहञ्चैव यानमासनमेव च ।
द्वैधीभावं संश्रयञ्च षड्गुणांश्चिन्तयेत् सदा ॥"
एते षड्गुणास्तु नीतिविदा राज्ञा कदा केनो-
पायेन च प्रयोक्तव्यास्तद्विवरणादिकन्तु तत्रैव ।
७ । १६१ । श्लोकमारभ्य द्रष्टव्यम् ॥) धनुरा-
कर्षणरज्जुः । छिला इति भाषा । (यथा,
रघुवंशे । ९ । ५४ ।
"अथ नभस्य इव त्रिदशायुधं
कनकपिङ्गतडिद्गुणसंयुतम् ।
धनुरधिज्यमनाधिरुपाददे

द्रव्यदर्शनतया कर्म्मणो गुणत्वं न स्यादिति ज्ञापि-
तम् कर्म्मत्वं सर्व्वमेव उत्पाद्यमिति । एवञ्चेत्तर्हि
द्रव्यमपि गुणोऽस्तु तत्रापि ह्येते धर्म्मा वर्त्तन्ते ।
यथा तदपि द्रव्यमारम्भके अवयवद्रव्ये निविशते
ततोऽपैति च यथा शरीरमवयवि तद्धि मस्तका-
दिष्ववयवेषु समवेतं भवतीति तद्विनाशात् ततो-
ऽपैति । पृथग्जातिषु पश्वादिषु च दृश्यते एवं
द्रव्यस्य उत्पाद्यत्वमनुत्पाद्यत्वञ्चास्तिअवयवि
द्रव्यस्य उत्पाद्यत्वात् आकाशादेस्तु अनुत्-
पाद्यत्वादिति । अत आह असत्त्वप्रकृतिरिति ।
सत्त्वं द्रव्यं प्रकृतिःस्वभावः । सत्त्वं प्रकृतिर्यस्य स
सत्त्वप्रकृतिः । न सत्त्वप्रकृतिरसत्त्वप्रकृतिः ॥")
विशेषाधानहेतुः सिद्धो वस्तुधर्म्मः । शुक्लादयो
हि गवादिकं स्वजातीयेभ्यः कृष्णगवादिभ्यो
व्यावर्त्तयन्तीति साहित्यदर्पणम् ॥ अपि च ।
द्रव्यत्वव्यापकतावच्छेदकसत्त्वान्यजातिमत्त्वं तदर्थः
तद्यथा । रूपम् १ रसः २ गन्धः ३ स्पर्शः ४

| | | |
|---|---|---|
| | नरवरो रवरोषितकेशरी ॥”) तत्पर्य्यायः । मौर्व्वी २ ज्या ३ शिञ्जिनी ४ शिञ्ज्या ५ ज्यावा ६ पतञ्चिका ७ । इति शब्द- रत्नावली ॥ जीवा ८ । इति जटाधरः ॥ रज्जुः । (यथाह कश्चित् । “गुणवन्तोऽपि सीदन्ति न गुणग्राहको यदि । सगुणोऽपि पूर्णकुम्भो यथा कूपे निमज्जति ॥” सूत्रम् । यथा, आर्य्यासप्तशत्याम् । ३६९ । | |

संख्या ५ परिमाणम् ६ पृथक्त्वम् ७ संयोगः ८ विभागः ९ परत्वम् १० अपरत्वम् ११ बुद्धिः १२ सुखम् १३ दुःखम् १४ इच्छा १५ द्वेषः १६ यत्नः १७ गुरुत्वम् १८ द्रवत्वम् १९ स्नेहः २० संस्कारः २१ धर्म्मः २२ अधर्म्मः २३ शब्दः २४ ।

इति भाषापरिच्छेदः ॥ (सात्त्विकनायकगुणा यथा, साहित्यदर्पणे । ३ । ५८ ।

"शोभाविलासोमाधुर्य्यङ्गाम्भीर्य्यं ध्यैर्य्यतेजसी ।

ललितौदार्य्यमित्यष्टौ सत्त्वजाः पौरुषागुणाः ॥

एतेषां विशेषविवरणन्तु तत्तच्छब्दे द्रष्टव्यम् ॥)

अप्रधानम् । सूदः । इन्द्रियम् । त्यागः । वटी । इति मेदिनी ॥ णे । १० ॥ भीमसेनः । तन्तुः । दोषान्यविशेषणम् । इति हेमचन्द्रः ॥ विद्यादि । इति विश्वः ॥ (व्यञ्जनम् । यथा, मनुः । ३ । २२६ ।

"गुणांश्च सूपशाकाद्यान् पयोदधिघृतं मधु ।

विन्यसेत् प्रयतःसम्यक् भूमावेव समाहितः ॥"

"गुणान् व्यञ्जनानि अन्नापेक्षयाऽप्राधान्यात् गुणयुक्तान् वा ।" इति तट्टीकायां कुल्लूकभट्टः ॥

आवृत्तिः । यथा, महाभारते ।

"आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणाः ।

षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥")

व्याकरणोक्तसंज्ञाविशेषः । यथा । इङोऽरले-ङ्णुः । अस्यार्थः । इ उ ऋ ऌ एषां स्थाने ए ओ अर् अल् एते गुणसंज्ञा भवन्ति । इति मुग्धबोधम् । काव्यगुणस्य लक्षणं यथा, --

ये रसस्याङ्गिनो धर्म्माः शौर्य्यादय इवात्मनः ।

उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥

इति काव्यप्रकाशः ॥

तस्य भेदाः ।

श्लेषः प्रसादः समता माधुर्य्यं सुकुमारता ।

अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः॥

इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः ॥

इति दण्डी ॥

माधुर्य्यौजःप्रसादाख्यास्त्रयस्तेन पुनर्दश ॥

तस्य दशसंख्याभावे हेतुर्यथा, --

केचिदन्तर्भवन्त्येषु दोषत्यागात् परे श्रिताः ।

अन्ये भजन्ति दोषत्वं कुत्रचिन्न ततो दश ॥

कृतप्रर्व्वाणि यैरस्य व्यञ्जनानि सुशिक्षितैः ॥

तानप्यभिभविष्यामि प्रीतिं सञ्जनयन्नहम् ।

आहरिष्यामि दारूणां निचयान्महतोऽपि च ॥

तत्प्रेक्ष्य विपुलं कर्म्म राजा प्रीतो भविष्यति ।

अमानुषाणि कुर्व्वाणं तानि कर्म्माणि भारत ! ॥

राज्ञस्तस्य परिप्रेष्या मंस्यन्ते मां यथा नृपम् ।

भक्ष्यान्नरसपानानां भविष्यामि तथेश्वरः ॥")

पाचके गुणकारके च त्रि ।

**गुणज्ञः**, त्रि, (गुणं जानातीति । गुण + ज्ञा + कः ।)

गुणवेत्ता । यथा, --

गुणिनि गुणज्ञो रमते नागुण-

शीलस्य गुणिनि परितोषः ।

अलिरेति वनात् कमलं

न हि भेकस्त्वेकवासोऽपि ॥

इत्युद्भटः ॥

**गुणनिका**, स्त्री, (गुणयति पुनःपुनराम्रे डयतीति ।

गुणत् क आम्रेडने + "ण्यासश्रन्थो युच् ।"

३ । ३ । १०७ । इति युच् । संज्ञायां कन् कापि अत इत्वञ्च ।) नृत्यम् । शून्याङ्कम् । पाठनिश्चयः ।

इति मेदिनी ॥ के १८५ ।

(शास्त्रादीनां पुनः पुनरनुशीलनम् । यथा, माघे । २ । ७५ ।

"हेतुःपरिचयस्थैर्य्ये वक्तुर्गुणनिकैव सा ॥"

माला । इत्यानन्दलहरीटीका॥

(यथा, आनन्द-

स्त्रियां ङीप् । तस्य सुनाभस्य दुहिता । यथा,

तत्रैव । १५३ ।

"वज्रनाभस्य तनयः सुनाभो नाम विश्रुतः ।

दुहितृद्वयञ्च नृपते ! तस्य रूपगुणान्वितम् ।

एकचन्द्रवती नाम्ना गुणवत्यथ चापरा ॥"

गायत्रीरूपा महादेवी । यथा, देवीभागवते ।

१२ । ६ । १२ ।

"गुहावासा गुणवती गुरुपापप्रणाशिनी ॥"

गङ्गा । यथा, काशीखण्डे । २९ । ५३ ।

"गूढरूपा गुणवती गुर्व्वी गौरववर्द्धिनी ॥"

अप्सरोविशेषः । यथा, तत्रैव ९ अध्याये ।

"अलम्बुषा गुणवती स्थूलकेशी कलावती ॥"

**गुणवृक्षकः**, पुं, (गुणानां तरणीस्थरज्जूनां वृक्ष

इव । ततः स्वार्थे कन् ।)

नौकागुणबन्धनस्तम्भः ।

मास्तुल इति भाषा । तत्पर्य्यायः ।

कूपकः २ ।

इत्यमरः । १ । १० । १२ ।

**गुणसागरः**, पुं, (गुणानां सागर इव आधार-

स्थानम् ।) ब्रह्मा । इति शब्दरत्नावली ॥ बुद्धि-

विशेषः । इति त्रिकाण्डशेषः ॥

सकलगुणा-

धारश्च ॥

**गुणा**, स्त्री, (गुणाः सूक्ष्मतन्तवः सन्त्यस्याः । "अर्श

आदिभ्योऽच् ।" ५ । २ । १२७ ।

इत्यच् ।

इति भरतमुनिः । स्मृत्युक्तगुणविशेषा उपवास-शब्दे द्रष्टव्याः ॥

**गुणकः**, पुं, (गुणयति आवर्त्तयतीति । गुण + ण्वुल् ।)

पूरकाङ्कविशेषः । यथा, गुण्यान्त्यमङ्कं गुणकेन हन्यात् । इति लीलावती ॥

**गुणकारः**, पुं, (गुणं व्यञ्जनादिकं पाकजनितगुणं

वा करोतीति । कृ + अण् । विराटनगरे छद्म-वेशेन सूपकारित्वग्रहणात् पाकशास्त्रकर्त्तृ-त्वाच्च भीमस्य तथात्वम् ।) भीमसेनः । इति त्रिकाण्डशेषः ॥ (विराटनगरेऽस्य सूपकारित्व-स्वीकारकथा यथा, महाभारते । ४ । २ । १--४ । भीम उवाच ।
"पौरोगवो ब्रुवाणोऽहं वल्लवो नाम नामतः ।
उपस्थास्यामि राजानं विराटमिति मे मतिः ॥
सूपानस्य कारिष्यामि कुशलोऽस्मि महानसे ।

लहर्य्यां । ३ ।
"दरिद्राणां चिन्तामणिगुणनिका
जन्मजलधौ
निमग्नानां द्रंष्ट्रा मुररिपुवराहस्य भवती
॥")

**गुणनी**, स्त्री, (गण्यते पुनःपुनरनुशील्यतेऽनया ।

गुण + ल्युट् + ङीप् ।) पाठनिश्चयः । तत्-
पर्य्यायः । भविनी २ शीलनम् ३ ।
इति त्रिकाण्ड-
शेषः ॥

**गुणनीयः**, पुं, (गुण्यते पुनःपुनरनुशील्यतेऽनेन

इति । गुण आम्रेडने + करणे अनीयर् ।)
शास्त्राद्यभ्यासः । इति हारावली ।
१५० ।
(कर्म्मणि अनीयर् । गुणितव्ये त्रि ॥)

**गुणभ्रंशः**, पुं, (गुणस्य भ्रं शोविनाशः ।) गुणनाशः ।

तत्पर्य्यायः पर्य्यन्तिका २ । इति
हारावली ॥
२१० ॥

**गुणलयनिका**, स्त्री, (गुणा गुणनिर्म्मिताः पटाः

लीयन्तेऽस्याम् । गुण + ली +
अधिकरणे +
ल्युट् । स्त्रियां ङीप् कन् टापि
पूर्ब्बह्रस्वश्च ।)
वस्त्रनिर्म्मितगृहम् । तत्पर्य्यायः
केणिका २ पट-
कुटी ३ । इति हेमचन्द्रः । ३ । ३४६
॥

**गुणलयनी**, स्त्री, (गुणा गुणमयपटाः लीयन्ते यत्र ।

ली + ल्युट् + ङीप् ।) गुणलयनिका ।
इति
हलायुधः ॥

**गुणवान्**, [त्] पुं, त्रि, (गुणोविद्यतेऽस्य । गुण +

स्त्रियां टाप् ।) दूर्व्वा । मांसरोहिणी ।
इति
राजनिर्घण्टः ॥

**गुणाकरः**, पुं, (गुणानामाकर इव । गुणबाहुल्या-

त्तथात्वम् ।) बुद्धः । इति शब्दरत्नावली
॥
(महादेवः । यथा, महाभारते । १३ ।
१७ । ४७ ।
"गजहा दैत्यहा कालो लोकधाता
गुणाकरः ॥")
गुणयुक्ते त्रि । यथा, --
"तपस्यभिरतस्याथ तस्य पुत्त्रो
गुणाकरः ।
सत्यवान् नाम देवर्षे ! मनसा सम्बृतो
मया ॥"
इति वनपर्व्वणि सावित्रीव्रतकथा ॥

**गुणितः**, त्रि, (गुण्यते स्म । गुण आम्रेडने + क्त ।)

पूरितः । तत्पर्य्यायः । आहतः २ ।
इत्यमरः ।
३ । १ । ८८ ॥ यथा । पञ्चधा गुणिता
द्वादश-
संख्या षष्टिर्भवतीत्यादि इति भरतः ॥
(गुणो-
ऽस्य जातः । तारकादिभ्य इतच् ।)
पिण्डितः ।
इति शब्दरत्नावली ॥

**गुणी**, [न्] पुं, (गुणो ज्या विद्यतेऽस्य । गुण +

इनिः ।) धनुः । इति त्रिकाण्डशेषः ॥
(गुणास्ते
तु दाक्षिण्यादयो विद्यन्तेऽस्येति ।)
गुणविशिष्टे
त्रि । यथा । गुणिगणगणनारम्भे न
पतति
कठिनी ससम्भ्रमाद्यस्य । तेनाम्बा यदि
सुतिनी
वद बन्ध्या कीदृशी नाम ॥ इति
हितोपदेशः ॥

**गुणीभूतः**, त्रि, (अगुणो गुणोभूतः । गुण + भू +

| | | |
|---|---|---|
| | मतुप् मस्य वत्वम् ।) सम्बन्धी । इति त्रिकाण्ड-<br>शेषः ॥ गुणविशिष्टः । यथा, "दाता दयालु-<br>र्गुणवान्नरः स्यात् गरे परेषामुपकारकर्त्ता ।<br>इति कोष्ठीप्रदीपः ॥ (पुं, यदुवंशीय सुनाभस्य<br>दौहित्रः । यथा, हरिवंशे । १५५ ।<br>"गुणवत्यपि पुत्रञ्च गुणवन्तमजीजनत् ॥" | क्तः । अभूत तद्भावे च्वि ।)<br>अप्रघानीभूतः ।<br>यथा । कृतपूर्व्वीकटमित्यत्र समासनिविष्टत्वाद्-<br>गुणीभूताद्विशेषबोधिका द्वितीया नोक्ता । इति<br>सुसेनकविराजः ॥ (तथाच महाभारते । २ ।<br>१५ । ११ ।<br>"सर्व्वैरपि गुणैर्युक्तो निर्व्वीर्य्यः किं करिष्यति ।<br>गुणीभूता गुणाः सर्व्वे तिष्ठन्ति हि पराक्रमे ॥") |

**गुणीभूतव्यङ्ग्यः**, पुं, (गुणीभूतमप्रधानीभूतं व्यङ्ग्य
व्यञ्जना शक्तिर्यत्र ।) काव्यविशेषः ।
यथा, --
“अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु
मध्यमम् ॥ *
तस्याष्टौ भेदाः यथा ।
“अगूढमपरस्याङ्गं
वाच्यसिद्ध्यङ्गमस्फुटम् ।
सन्दिग्धतुल्यप्राधान्ये
काक्वाक्षिप्तमसुन्दरम्।
व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदा
मताः ॥ * ॥
अगूढं यथा ।
स्फुटतया वाच्यायमानमिति अपराङ्गम् ।
यथा
अपरस्य रसादेर्वाच्यस्य वा
वाक्यार्थीभूतस्य
अङ्गं रसादि अनुरणनरूपं वा ॥ * ॥
वाच्यसिद्ध्यङ्गं यथा ।
आपाततः प्रतीतस्य वाच्यार्थस्य
प्रतिसन्धीय-
मानानुपपत्तिनिरासकंव्यङ्ग्यम् ॥ * ॥
अस्फुटं यथा ।
विदग्धैरपि क्लेशगम्यं सन्दिग्धप्राधान्यं
यथा
प्राधान्यमत्र रसादिव्यञ्जकत्वेन तथा च
प्रती-
तस्य रसादेर्व्यञ्जकं किं वाच्यं किंवा
व्यङ्ग्यमितौ-
त्तरकालिकसन्देहविषयत्वं तत्त्वम् ॥ * ॥
तुल्यप्राधान्यं यथा ।
अत्रापि रसादिव्यञ्जकत्वेनैव प्राधान्यं
व्यङ्ग्यस्य
निश्चितत्वेन तेन तेन वाच्येन तुल्यार्थो
बोध्यः ॥ *
काक्राक्षिप्तं यथा ।
आक्षिप्तमत्र प्रागेव पदार्थविधया
उपस्थानम् ॥ *
रामत्वमवगम्यते । वचनेन तु
सादृश्यहेतुक-
तादात्म्यारोपणमाविष्कुर्व्वता
तद्गोपनमपा-
कृतम् । तेन वाच्यं सादृश्यं
वाक्यार्थान्वियोप-
पादकतयाऽङ्गतां नीतम् । काक्वाक्षिप्तं
यथा, --
मथ्नामि कौरवशतं समरे न कोपात्
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
सञ्चूर्णयामि गदया न सुयोधनोरू
सन्धिं करोतु भवतां नृपतिः पणेन ॥
अत्र ‘मथ्नाम्येवेत्यादि’ व्यङ्ग्यं
वाच्यस्य निषेधस्य
सह भावेनैव स्थितम् ।
दीपयन् रोदसीरन्ध्रमेष ज्वलति सर्व्वतः
।
प्रतापस्तव राजेन्द्र ! वैरिवंशदवानलः ॥
अत्रान्वयस्य वेणुत्वारोपणरूपो व्यङ्ग्यः
। प्रता-
पस्य दवानलत्वारोपसिद्ध्यङ्गम्।
‘हरस्तु किञ्चित्
परिवृत्त्येत्यादौ’
विलोचनव्यापारचुम्बनाभि-
लाषयोः प्राधान्ये सन्देहः ।
ब्राह्मणातिक्रमत्यागो भवतामेव भूतये ।
जामदग्न्यश्च वो मित्रमन्यथा
दुर्म्मनायते ॥
अत्र परशुरामो रक्षःकुलक्षयं
करिष्यतीति
व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम्
।
सन्धौ सर्व्वस्वहरणं विग्रहे प्राणनिग्रहः ।
अल्लापदीननृपतौ न सन्धिर्न च विग्रहः
॥
अत्र अल्लापदीनाख्ये नृपतौ
दानसामादिमन्तरेण
नान्यः प्रशमोपायः व्यङ्ग्यं
व्युत्पन्नानामपिझटित्य-
किञ्च यत्र वस्त्वलङ्कारसादिरूपव्यङ्ग्यानां
रसा-
भ्यन्तरे गुणीभावः तत्र प्रधानकृत एव काव्य-
व्यवहारः । तदुक्तं तेनैव ।
प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम्
।
धत्ते रसादितात्पर्य्यालोचनयापुनरिति ॥
यत्र च ।
यत्रोन्मादानां प्रमदाजनाना-
मभ्रंलिहः शोणमणीमयूखैः ।
सन्ध्याभ्रमं प्राप्नुवता मकाण्डे-
ऽप्यनङ्गनेपथ्यविधिं व्यधत्त ॥
इत्यादौ रसादीनां नगरीवृत्तादि वस्तुमात्रे-
ऽङ्गत्वम् । तत्र तेषामतात्पर्य्यविषयत्वेऽपि तैरे
गुणीभूतैः काव्यव्यहारः । तदुक्तमस्मत्सगोत्र-
कविपण्डितमुख्यश्रीचण्डिदासपादै ।
काव्यार्थ-
स्याखण्डबुद्धिवेद्यस्य
तन्मयीभावेनास्वाददशायां
गुणप्रधानभावावभासस्तावन्नानुभूयतेकाला-
न्तरे तु प्रकरणादिपर्य्यालोच्नयाभवन्नप्यस्रौ
न
काव्यव्यपदेशं व्याहन्तुमीशस्तस्यास्वादमात्रा
यत्तत्वादिति ॥”)

**गुणेश्वरः**, पुं (गुणैर्हेतुभिरीश्वरःश्रेष्ठः पूज्य इत्यथः ।
विविधगुणशालिद्रव्यजातोत्पादकतयास्य
तथा-
त्वम् ।) चित्रकूटपर्व्वतः । इति शब्दरत्नावली
॥
गुणपतौ त्रि ॥ (गुणानां नानाविधपुरुषोपयोगि-
गुणानां ईश्वरः प्रभुः स्वामी वा शान्तदान्तादि
गुणशाली पुरुष इत्यर्थः । गुणानां
सत्त्वरजस्तमसां
त्रयाणां मायागुणानामिति यावत् ईश्वरः
नियन्ता । परमेश्वरः ॥)

**गुणोत्कर्षः**, पुं, (गुणानां उत्कषः उत्कर्षणं
प्राधान्यमित्यर्थः ।) गुणप्राधान्यम् । (यथा,
गोः

असुन्दरं यथा ।
“रसादिव्यञ्जने वाच्यमुखनिरीक्षकं
व्यङ्ग्यम् ।”
इति काव्यप्रकाशः ॥
(इत्यत्र साहित्यदर्पणकारेण
काव्यभेदमाश्रित्य
यदुक्तं तद्यथा । ४ । १ ।
“काव्यं ध्वनिर्गुणीभूतव्यङ्ग्यञ्चेति द्विधा
मतम् ।
वाच्यातिशयिनि व्यङ्गे ध्वनिस्तत्
काव्यमुत्तमम् ॥”
तत्रैव च । ४ । १६ ।
“अपरन्तु गुणीभूतव्यङ्ग्यं वाच्यादनुत्तमे
व्यङ्ग्ये ।
“अपरं काव्यम् । अनुत्तमत्वं न्यूनतया
साम्येन च
सम्भवति ॥” ततस्तत्र स्यादितराङ्गं
काक्वाक्षिप्त-
ञ्चेत्याद्यष्टौ भेदानुक्त्वा इतरस्य
रसादेरङ्गं रसादि-
व्यङ्ग्यं यथेत्यभिधाय क्रमश
इतराङ्गादेरुदाहर-
णानि प्रदर्शितानि । यथा, --
“अयं स रसनोत्कर्षी पीनस्तनविमर्द्दनः
।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः
॥
अत्र शृङ्गारः करुणस्याङ्गम् ।
“मानोन्नतां प्रणयिनीमनुनेतुकाम-
स्त्वत्सैन्यसागररवोद्गतकर्णतापः ।
हा ! हा ! कथं नु भवतो रिपुराजधानी-
प्रासादसन्ततिषु तिष्ठति कामिलोकः ॥
अत्रौत्सुक्यत्राससन्धिसंस्कृतस्य
करुणस्य राज-
विषयरतावङ्गभावः ।
जनस्थाने भ्रान्तं
कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृता लङ्काभर्त्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता
॥”
स्फुटम् ।
अनेन लोकगुरुणा सतां धर्म्मोपदेशिना
।
अहं व्रतवती स्वैरमुक्तेन किमतः परम् ॥
अत्र प्रतीयमानोऽपि शाक्यमुनेस्तिर्य्यक्
योषिति
बलात्कारोपभोगः स्फुटतया
वाच्यायमान इत्य-
गूढम् ।
वाणीरकुडुङ्गुड्डीणसौणिकोलाहलं
सुणन्तीए ।
घरकम्मबाब्बाडाए बहूए सीअन्ति
अङ्गाइं ॥”
अत्र दत्तसङ्केतः कश्चिल्लतागृहं प्रविष्टः
इति
व्यङ्ग्यात् ‘सीदन्त्यङ्गानि’ इति
वाच्यस्य चमत्-
कारः सहृदयसंवेद्य इत्यसुन्दरं किञ्च यो
दीपकतुल्ययोगितादिषु उपमाद्यलङ्कारो
व्यङ्ग्यः
स गुणीभूतव्यङ्ग्य एव । काव्यस्य
दीपकादि-
मुखेनैव चमत्कारविधायित्वात् । तदुक्तं
ध्वनि-
कृता ।
अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते
।
तत्परत्वं न काव्यस्य नासौ मार्गो
ध्वनेर्मतः ॥
यत्र च शब्दान्तरादिना
गोपनकृतचारुत्वस्य
विपर्य्यासः । यथा, --
दृष्ट्या केशवगोपरागहृतया किञ्चिन्न दृष्टं
मया
तेनात्र स्खलितास्मि नाथ ! पतितां किं
नाम
नालम्बसे ?
एकस्त्वं विषमेषु खिन्नमनसां
सर्व्वाबलानां गति-
र्गोप्यैवं गदितःसलेशमवताद्गोष्ठे
हरिर्व्वश्चिरम् ॥”
रामायणे । १ । २५ । १९ ।
“स्वभावजैर्गुणैर्दिव्यैः कामजैर्बहुलैर्वृतः ।
भूयस्तव गुणोत्कर्षमेते विद्ये करिष्यतः ॥”)
अतिशयः । तत्पर्य्यायः । परभागः २ । इति
हेमचन्द्रः । ६ । ११ ॥

**गुणोत्कीर्त्तनं**, क्ली, (गुणानां उत्कीर्त्तनं कथ-
नम् ।) यद्वा गुणैर्गणसूचकवाक्यैरुत्कीर्त्तनम् ।
गुणकथनम् । विरहकालीनकान्ताविषयक-
प्रशंसाप्रतिपादनम् । इति रसमञ्जरी ॥ कान्ता-
पदमत्रोपलक्षणम् ॥

**गुण्ठितः**, त्रि, (गुठि वेष्टने + कर्म्मणिक्तः ।) गुण्डितः ।
इत्यमरटीकायां रमानाथः ॥ आवृतः ।
रूषितः । धूल्यादिभिर्धूसरित इत्यर्थः ।
यथा, गोः रामायणे । ६ । ८२ । ८ ।
“तन्न युद्धेन मे कार्य्यं न प्राणैर्नापि सीतया ।
लक्षणं निहतं दृष्ट्वा भ्रातरं पांशुगुण्ठितम् ॥”)

**गुण्डः**, पुं, (गुडि वेष्टने + अच् ।) तृणभेदः । यस्य
कन्दः कशेरु । तत्पर्य्यायः । काण्डगुण्डः २
दीर्घकाण्डः ३ त्रिकोणकः ४ छत्रगुच्छः ५
असि-
पत्रः ६ नीलपत्रः ७ त्रिधारकः ८ । अस्य
गुणाः ।
मधुरत्वम् । शीतत्वम् । कफपित्तातिसारदाह-
रक्तनाशित्वम् । अस्य मध्ये
स्थलतरोऽधिकगणः ।
इति राजनिर्घण्टः ॥

| अत्र रामत्वं प्राप्तमित्यवचनेऽपि शब्दशक्तेरेव | अत्र गोपरागादिशब्दानां गोपे राग इत्यादि-<br>व्यङ्ग्यार्थानां ‘सलेशमिति’ पदेन स्फुटतयाव-<br>भासः । सलेशमिति पदस्य परित्यागे ध्वनिरेव । | |
|---|---|---|

**गुण्डकः**, पुं, (गुण्ड + संज्ञायां कन् । गुडि + ण्वुल् वा ।) मलिनः । धूली । कलोक्तिः । स्नेहपात्रम् । इति मेदिनी । के । ८३ ॥

**गुण्डकन्दः**, पुं, (गुण्ड इत्याख्यया प्रसिद्धः कन्दः । गुण्डानां कन्द इति केचित् ।) कशेरु । इति राजनिर्घण्टः ॥

**गुण्डारोचनिका**, स्त्री, (गुण्डाऽपि रोचना हरिद्रा इव । तत इवार्थे कन् टाप् कापि अत इत्वञ्च ।) वृक्षविशेषः । कमलागुँडि इति भाषा । तत्-पर्य्यायः । काम्पिल्लकः २ रक्ताङ्गा ३ । इति रत्नामाला ॥

**गुण्डाला**, स्त्री, (गुण्डाल + टाप् । यद्वा गुण्डां चूर्णं आलाति आदत्ते इति । आ + ला + कः । स्त्रियां टाप् ।) क्षुद्रक्षुपविशेषः । तत्पर्य्यायः । जलोद्भूता २ गुच्छवध्रा ३ जलाशया ४ । अस्या गुणाः । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । शोथव्रणनाशित्वञ्च । इति राजनिर्घण्टः ॥

**गुण्डासिनी**, स्त्री, (गुण्ड इत्याख्यया आस्ते वर्त्तते इति । आस् + णिनिः । गुण्डा सती आस्ते इत्येके ।) तृणभेदः । तत्पर्य्यायः । गुण्डाला २ गुडाला ३ गुच्छमूलिका ४ चिपिटा ५ तृण-पत्री ६ यवासां ७ पृथुला ८ विष्टरा ९ । अस्या गुणाः । कटुत्वम् । पित्तदाहश्रमश्वयथुवणदोष-नाशित्वम् । तिक्तत्वम् । उष्णत्वञ्च । इति राज-निर्घण्टः ॥

**गुण्डिकः**, पुं, स्त्री, (गुण्डोऽस्त्यस्येति । "अत इनिठनौ ।" ५ । २ । ११५ । इति ठन् ।) गुण्डकः । तण्डुलादिचूर्णम् । गुँडा इति भाषा । यदुक्तं अनन्तव्रतकथायाम् ।
सप्ताहं ये प्रपश्यन्ति गुण्डिचामण्डपे स्थितम् ॥
माञ्च रामं सुभद्राञ्च मम सायुज्यमाप्नुयुः ॥" * ॥
तस्या नामकरणं यथा, उत्कलखण्डम् ।
"अत ऊर्द्ध्वं प्रवक्ष्यामि महावेदीमहोत्सवम् ।
अज्ञानतिमिरान्धोऽपियेन भास्वत्पदं भजेत् ॥
सर्व्वपापरजःशान्त्या पूज्यत्वात् सर्व्वदैवतैः ।
गुण्डिचाख्यापि सा यात्रा ब्रह्मतेजोऽवगुण्ठ-नात् ॥"

**गुण्डितः**, त्रि, (गुडि वेष्टने + कर्म्मणि क्तः ।) धूलि-गुण्डकेनैव म्रक्षितः । तत्पर्य्यायः । रूषितः २ । इत्यमरः । ३ । १ । ८९ ॥ चूर्णीकृतश्च ॥

**गुत्थः**, पुं, (गुत्स + पृषोदरादित्वात साधुः ।) गवेधुका । इति रत्नमाला ॥

**गुत्थकं**, क्ली, (गुत्थ + संज्ञायां कन् । यद्वा गुच्छ इव गुच्छेन वा कायतीति । कै + कः । पृषोदरात् साधुः ।) ग्रन्थिपर्णम् । इति रत्नमाला ॥

**गुत्सः**, पुं, (गुध्यते तृणपत्रपुष्पादिभिः परिवेष्ट्यते-ऽसौ इति । गुध् परिवेष्टने + "उन्दिगुधि-कुषिभ्यश्च ।" उणां । ३ । ६८ । इति कर्म्मणि सः किच्च ।) स्तवकः । स्तम्बः । (हारादौ तु गुध्यते परिवेष्ट्यते कण्ठवक्षःस्थलादिकमनेन ।) द्वात्रिं-शद्यंष्टिकहारः । ग्रन्थिपर्णवृक्षः । इति मेदिनी । से । २ ॥

**गुत्सकः**, पुं, (गुत्स + स्वार्थे कन् ।) स्तवकः ।

**गुदग्रहः**, पुं, (गुदस्य ग्रह इव गुदमाश्रित्य ग्रह-वत् प्रवर्त्तते इत्यर्थः । यद्वा गुदं मलद्वारमधि-कृत्य आभ्यन्तरिकस्थानं गृह्णाति धारयतीति ग्रह + अच् ।) उदावर्त्तरोगः । इति हेम-चन्द्रः । ३ । १३३ ॥

**गुदभ्रंशः**, पुं, (गुदस्य भ्रंशोऽस्मात् । गुदं भगं भ्रश्यतेऽस्मादिति वा ।) मलद्वारनिर्गमरोगः । तस्य लक्षणम् ।
"प्रवाहनातिसाराभ्यां निर्गच्छति गुदं वहिः ।
रूक्षदुर्ब्बलदेहस्य गुदभ्रंशं तमादिशेत् ॥"
इति माधवकरः ॥
तच्चिकित्सा यथा, --
"गुदभ्रंशे गुदं स्विन्नं स्नेहेनाक्तं प्रवेशयेत् ।
प्रविष्टं रोधयेद्यत्नाद्गव्यसच्छिद्रचर्म्मणा ॥
पद्मिन्याः कोमलं पत्रं यः खादेच्छर्करान्वितम् ।
एतन्निश्चित्य निर्द्दिष्टं न तस्य गुदनिर्गमः ॥
मूषकाणां वसाभिर्व्वा गुदभ्रंशे प्रलेपनम् ।
सुस्विन्नमूषिकामांसेनाथवा स्वेदयेद्गुदम् ॥
वृक्षाम्लानलचाङ्गेरीविल्वपाठायवाग्रजम् ।
तक्रेण शीलयेत् पायुं भ्रंशार्त्तोऽनलदीपनम् ॥
मूषकान् दशमूलानि गृह्णीयादुभयं समम् ।
तयोः क्वाथेन कल्केन पचेत्तैलं यथोदितम् ॥
अभ्यङ्गात्तस्य तैलस्य गुदभ्रंशो विनश्यति ।
विनश्यति तथा तेन गुदमूलं भगन्दरः ॥"
इति मूषकतैलम् । इति भावप्रकाशः ॥
(यदा गुह्यं निरस्येत तदा कुर्य्यात् क्रियामिमाम् ।
सहचर्य्याबलानाञ्च रसो ग्राह्यो घृतं पयः ॥
पक्त्रा घृतेन लेपः स्यात् तस्य चेदं प्रशस्यते ।
अरणीपल्लवक्वाथो वाप्यं लोष्ट्रं सचन्दनम् ॥
प्रोत्तप्य वह्निसदृशं सहसा नरस्य
निर्व्वाप्य काञ्जिकमथो विदधीत तद्वत् ।
सौख्यञ्च साम्यगुदसेचनकं प्रशस्तं
संवेश्यमध्यगुदतो दृढबन्धनं स्यात् ॥"
इति गुदभ्रंशः ॥
इति हारीते चिकित्सितस्थाने तृतोयेऽध्याये ॥ * ॥
अथास्य चिकित्सा ।
"गुदनिःसरणे शूले पानमम्लस्य सर्पिषः ।
प्रशस्यते निरामाणा मथवाप्यनुवासनम् ॥
चाङ्गेरी कोलदध्यम्लनागरक्षारसंयुतम् ।
घृतमुत्क्वथितं पेयं गुदभ्रंशरुजापहम् ॥"

"गुण्डिकैः सितपीतैश्च मण्डयन्ती गृहाङ्गनम् ॥"

**गुण्डिचा**, स्त्री, (गुण्डिभिर्गुण्डिकैः सितपीतादि-
रङ्गैः प्रस्तरेष्टकादिचूर्णैर्वा चीयते उपचीयते
इति । चि + घञर्थे कः ततष्टाप् । गुण्डिचाइत्या-
ख्यया प्रसिद्धा वा । यद्वा गुण्ड्यते अवगुण्ठ्यते
ब्रह्मतेजोभिरस्या दर्शक इति शेषः । गुडि वेष्टने
इति धातोर्निपातनात् चकारागमे साधुः । इयं व्युत्पत्तिस्तु
गुण्डिचाविवरणदर्शनैरेवबोध्यव्या ।)
श्रीपुरुषोत्तमदेवस्य रथारोहणानन्तरवासार्थ-
मण्डपविशेषः । यथा, --
"मण्डपे वासयेद्देवान् गुण्डिचाख्ये मनोहरे ।
चारुचन्द्रातपे चारुमाल्यचामरभूषिते ॥
रत्नस्तम्भमये स्वर्णवेदिकोपस्तृतान्तरे ।
याचीरवलयावीते सुधालेपसमुज्ज्वले ॥
साधुसोपानघटिते चतुर्द्वारोपशोभिते ।
त्रैलोक्याडम्बरयुते महावेद्यां महाक्रतोः ॥
प्रादुर्भावो महेशस्य यात्राभूद्वारुवर्ष्मणः ॥ * ॥
तस्यां श्रीजगन्नाथदेवस्य दर्शनफलं यथा, --
"बिन्दुतीर्थतटे तस्मिन् सप्ताहानि जनार्द्दनः ।
तिष्ठेत् पुरा स्वयं राज्ञे वरमेतत् समादिशत् ॥
तत्तीर्थतीरे राजेन्द्र ! स्थास्वामि प्रतिवासरम् ।
सर्व्वतीर्थानि तस्मिंश्च स्थास्यन्ति मयि तिष्ठति ॥
तत्र स्नात्वा विधानेन तीर्थे तीर्थोपपावने ।
इति शब्दरत्नावली ॥ ग्रन्थपरिच्छेदः । इति
त्रिकाण्डशेषः ॥

**गुत्सकपुष्पः**, पुं, (गुत्सकानि स्तवकीभूतानि
पुष्पाणि यस्य यत्र वा ।) सप्तच्छदवृक्षः । इति
जटाधरः ॥

**गुत्सार्द्धः**, पुं, (गुत्सं गुच्छं प्राप्य आश्रित्य वा
ऋध्नोतीति । ऋध् + अच् । गुत्सं आर्द्धयति
वर्द्धयति इति । ऋध् + णिच् अच् वा । यद्वा
गुत्सस्य अर्द्धः असमांशकः ।) गुच्छार्द्धः । चतु-
र्व्विंशतियष्टिकहारः । इत्यमरटीकायां
भरतः ॥

**गुद**, ङ खेलने । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-
अकं-सेट् ।) ङ, गोदते । इति दुर्गादासः ॥

**गुदं**, क्ली, (गोदते खेलति चलतीत्यर्थः अपान-
संज्ञकवायुः अनेन । गुद् + "इगुपधेति ।" ३ । १ ।
१३५ । इति कः ।) मलत्यागद्वारम् । तत्-
पर्य्यायः । अपानम् २ पायुः ३ । इत्यमरः । २ ।
६ । ७३ ॥ गुह्यम् ४ गुदवर्त्म ५ । इति जटाधरः ॥
(यथा, मनौ । ८ । २८२ ।
"अवनिष्ठीवतो दर्पाद्द्वावोष्ठौ छेदयेन्नृपः ।
अवमूत्रयतो मेढ्रमवशब्दयतो गुदम् ॥")

**गुदकीलः**, पुं, (गुदस्य अपानस्य मलद्वारस्येत्यर्थः
यद्वा गुदे कील इव ।) अर्शोरोगः । इति
राजनिर्घण्टः ॥ (यथा, सुश्रुते सूत्रस्थाने ४६
अध्याये ।
"आनाहभेदो गुदकीलहिक्का-
श्वासापहः शोणितपित्तकृच्च ॥")

**गुदकीलकः**, पुं, (गुदकील + स्वार्थे कन् ।) गुद-
इति चाङ्गेरीघृतम् ॥ * ॥
"सत्तव्यपिप्पलीमूलं सव्योषविडदाडिमम् ।
पेयमम्लं घृतं युक्त्या सधान्याजाजिचित्रकम् ॥
दशमूलोपसिद्धं वा सविल्वमनुवासनम् ।
शताह्वा शटी विल्वैर्व्वा वचया चित्रकेण वा ॥
स्तब्धभ्रष्टगुदे पूर्ब्बं स्नेहस्वेदौ प्रयोजयेत् ॥"
इति चरके चिकित्सास्थाने दशमेऽध्याये ॥)

**गुदाङ्कुरः**, पुं, (गुदे अङ्कुरः प्ररोह इव गुदमधि-
कृत्य प्ररोहवदुत्पद्यते वलिरित्यर्थः ।) अर्शो-
रोगः । इति हेमचन्द्रः ॥ ३ । १३२ ।
("गुदाङ्कुरा बह्वनिलाः ।" इति वाभटे निदान-
स्थाने सप्तमेऽध्याये ॥)

**गुद्र**, इ क कुन्द्रे । इति कविकल्पद्रुमः ॥ (चुरां-परं-सकं-सेट्-इदित् ।) पञ्चमस्वरी । दन्त्यवर्ग तृतीयोपधः । कुन्द्रो मिथ्योक्तिः । इ क, गुन्द्रयति नीचः मिथ्या वदतीत्यर्थः । गुन्द्र इत्यनेनैवेष्टसिद्धे इदनुवन्धो वेदेषूच्चारणभेदार्थः । इति दुर्गादासः ॥

**गुध**, ग रुषि । इति कविकल्पद्रुमः ॥ (क्र्यां-परं-अकं-सेट् ।) ग, गुध्नाति । जुगोध । इति दुर्गादासः ॥

**गुध**, ङ क्रीडे । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-अकं-सेट् ।) ङ, गोधते । इति दुर्गादासः ॥

**गुध**, य वेष्टे । इति कविकल्पद्रुमः ॥ (दिवां-परं-सकं-सेट् ।) य, गुध्यति । जुगोध । इति दुर्गादासः ॥

**गुधेरः**, त्रि, (गुध्यति सर्व्वतो वेष्टयति वेष्टनेन रक्षतीत्यर्थः इति । गुधय वेष्टने "मूलेरादयः ।" उणां । १ । ६१ । इति एरक् ।) रक्षकः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

**गुन्दलः**, पुं, (गुमिति मधुरमस्फुटशब्दं कारयन् दल्यते मर्द्द्यतेऽसौ । दल् + णिच् + कर्म्मणि अच् ।) मर्द्दलशब्दः । इति हेमचन्द्रः । ६ । ४४ ॥

**गुन्द्रः**, पुं, (गुद्रि + अच् ।) शरतृणम् । इत्यमरः । २ । ४ । १६२ ॥ वृक्षविशेषः । गोदपठेर इति देशान्तरीयभाषा । तत्पर्य्यायः । पटरकः २ अच्छः ३ शृङ्गवेराह्वमूलकः ४ । अस्य गुणाः । कषायत्वम् । मधुरत्वम् । हिमत्वम् । पित्तरक्तमूत्रकृच्छ्रनाशित्वम् । स्तन्यशुक्ररजोमूत्रशोधनत्वञ्च । इति भावप्रकाशः ॥ ("गुन्द्रान् दग्ध्वा कृतं भस्म हरितालं मनःशिला । उपदंशविसर्पाणामेतच्छान्तिकरं परम् ॥" इति सुश्रुते चिकित्सितस्थाने १९ अध्याये ॥)

**गुन्द्रमूला**, स्त्री, (गुन्द्रस्य मूलमिव मूलमस्य ।) एरकातृणम् । इति भावप्रकाशः ॥

**गुन्द्रा**, स्त्री, (गुन्द्र + टाप् ।) भद्रमुस्तकः । प्रियङ्गुवृक्षः । इत्यमरः । २ । ४ । १६० ॥ गवेधुका । इति रत्नमाला ॥ एरका । इति भावप्रकाशः ॥ जीवञ्जीवपक्षी । इतिं हेमचन्द्रः । ४ । ४०६ ॥ गुन्दालोऽपि पाठः ॥

**गुन्फ**, श ग्रन्थे । इति कविकल्पद्रुमः ॥ (तुदां परं-सकं -सेट् ।) पञ्चमस्वरी । श, गुम्फति मालां मालिकः । जुगुम्फ । इति दुर्गादासः ॥

**गुप**, ऊ रक्षे । इति कविकल्पद्रुमः । (भ्वां-परं-सकं-वेट् ।) आयन्तत्वादुभयपदमिति वोपदेवः । गोपायति गोपायते । अरे तु आयस्याप्राप्तिपक्षे परस्मैपदमेव । अगोपीत् । जुगोप गोरूपधरामिवोर्व्वीमिति रघुः ॥ ऊ, गोपिष्यति गोप्स्यति । इति दुर्गादासः ॥

**गुप**, क भासि । इति कविकल्पद्रुमः ॥ (चुरां-परं-अकं-सेट् ।) क, गोपयति । भासि दीप्तौ । इति दुर्गादासः ॥

**गुप**, ङ गोपनकुत्सयोः । इति कविकल्पद्रुमः ॥ (भ्वां आत्मं-सकं-सेट् ।) गोपनमपह्नवः । ङ, कङ्कणझनत्कारञ्च किं गोपसे । अत्र त्यादयो न स्युरिति रमानाथः । कुत्सा । निन्दा । सा जुगुप्सां प्रचक्रेऽसून् । इति भट्टिः । इति दुर्गादासः ॥

**गुप**, य इर् व्याकुलत्वे । इति कविकल्पद्रुमः ॥ (दिवां-परं-अकं सकञ्च-सेट् ।) व्याकुलत्वं व्याकुलीभावस्तत्करणञ्च । य, धीरो न गुप्यति

**गुप्तचरः**, पुं, (गुप्तः योगेनात्मसंवृतः सन् स्वयंविष्णुरपि सर्व्वैश्वर्य्यमाच्छाद्य नररूपेण चरतीत्यर्थः ।) वलदेवः । इति त्रिकाण्डशेषः ॥ (कर्म्मधारयसमासे तु राज्ञां गूढचरः । गुप्तश्चरो यस्य इति विग्रहे राजानमेव बोधयति ॥)

**गुप्तस्नेहः**, पुं, (गुप्तः गूढभावेन स्थितः स्नेहः तैलादिरसो यत्र ।) अङ्कोठवृक्षः । इति राजनिर्घण्टः ॥

**गुप्ता**, स्त्री, (गुप्त + टाप् ।) कपिकच्छुः । इति राजनिर्घण्टः ॥ परकीयान्तर्गतनायिकाभेदः । तस्या लक्षणम् । मैथुनगोपनम् । सा च त्रिधा । वृत्तसुरतगोपना १ वर्त्तिष्यमाणसुरतगोपना २ वृत्तवर्त्तिष्यमाणसुरतगोपना ३ । इति रसमञ्जरी ॥

**गुप्तिः**, स्त्री, (गुप् + अधिकरणभावकरणादिषु यथायथं क्तिन् ।) अवकरस्थानम् । कारागारम् । (यथा, माघे । ११ । ६० ।
"चिरमतिरसलौल्याद्बन्धनं लम्भितानां
पुनरयसुदयाय प्राप्य धाम स्वमेव ।
दलितदलकपाटः षट्पदानां सरोजे
सरभस इव गुप्तिस्फोटमर्कः करोति ॥")
रक्षणम् । इति मेदिनी । ते । १६ ॥ (यथा, मनुः । १ । ९४ ।
"तं हि स्वयम्भुः स्वादास्यात्तपस्तप्त्वादितोऽसृजत्।
हव्यकव्यादिवाह्याय सर्व्वस्यास्य च गुप्तये ॥")
भूगर्त्तः । यमः । इति हेमचन्द्रः ॥ गर्त्तार्थे क्षितेरुत्खननम् । नौकाच्छिद्रम् । इत्यमरटीकायां भरतः । गोपनम् । इति तट्टीकासारसुन्दरी ॥ (यथा, साहित्यदर्पणे । ३ । १५५ ।
"भयगौरवलज्जादेर्हर्षाद्याकारगुप्तिरवहित्था ॥"
सम्बरणम् । यथा, कुमारे । ६ । ३८ ।
"बृहन्मणिशिलासालं गुप्तावपि मनोहरम् ॥"
ग्रहणीयमन्त्रसंस्कारविशेषः । यथा, तन्त्रसारधृतगौतमीये ।
"यजनं जीवनं पश्चात् ताडनं बोधनं तथा ।
तथाभिषेको विमलीकरणाप्यायनेपुनः ।
तर्पणं दीपनं गुप्तिर्दशैता मन्त्रसंस्क्रियाः ॥")

**गुफ**, प श ग्रन्थे । इति कविकल्पद्रुमः ॥ (तुदां-

("वेल्लन्तरारणिकवूकवृषाश्मभेद्द-
गोकण्ठकेत्कटसहाचरवाणकाशाः ।
वृक्षादनीनलकुशद्वयगुण्ठगुन्द्रा
भल्लूकमोरटकुरण्टकरम्भपार्थाः ॥"
इति वाभटे सूत्रस्थाने १५ अध्याये ॥
पित्तसंशमनीयवर्गान्तिगतौषधिविशेषः । यथा ।
"चन्दनकुचन्दनह्रीवेरोशीरमञ्जिष्ठा पयस्या-
विदारीशतावरीगुन्द्राशैवालकह्लारकुमुदोत्पल-
कदलीकन्दलीकूर्व्वामूर्व्वाप्रभृतीनि काकोल्यादि-
र्न्यग्रोधादिस्तृणपञ्चमूलमितिसमासेन पित्त-
संशमनो वर्गः ॥" इति सुश्रुते सूत्रस्थाने
३९ अध्याये ॥)
(गङ्गा । यथा काशीखण्डे । २९ । ५४ ।
"ग्रहपीडाहरा गुन्द्रा गरघ्नी गानवत्सला ॥")

**गुन्द्रालः**, पुं, (गुन्द्रं नीडनिर्म्माणार्थं तृणादिकं

आलाति आदत्ते इति । आ + ला + कः ।)

महत्यपि कार्य्यजाते । इति हलायुधः
। गुप्यति
गा वृष्टिः । आकुलीकरोतीत्यर्थः ।
इति चतु-
र्भुजः । इर्, अगुपत् अगोपीत् ।
अस्मात्
पुषादित्वात् नित्यं ङ इत्यन्ये । इति
दुर्गादासः ॥

**गुपिलः**, पुं, (गोपायति प्रजाजनानिति । गुप् रक्षणे

+ "गुपादिभ्यः कित् ।" उणां । १ ।
५६ । इति
इलच् किच्च ।) राजा ।
इत्युणादिकोषः ॥

**गुप्तं**, त्रि, (गुप्यते स्म । गुप् + कर्म्मणि क्तः ।)

कृतरक्षणम् । तत्पर्य्यायः । त्रातम् २
त्राणम् ३
रक्षितम् ४ अवितम् ५ गोपायितम् ६
। (यथा,
महाभारते । १ । १ । १८८ ।
"यदाश्रौषं व्यूहमभेद्यमन्यै-
र्भारद्वाजेनात्तशस्त्रेण गुप्तम् ॥")
कृतगोपनम् । तत्पर्य्यायः । गूढम् २
। इत्यमरः ।
३ । १ । १०६ । (यथाह वशिष्ठः ।
"आहारनिर्हारविहारयोगाः
सुसंवृता धर्म्मविदा तु कार्य्याः ।
वाग्गुप्तिकार्य्याणि तपस्तथैव
धनायुषी गुप्ततमे तु कार्य्ये ॥"
"हेम्नो भस्मकमभ्रकं द्विगुणितं
लौहास्त्रयः पारदा-
श्चत्वारो नियतन्तु
वङ्गयुगलञ्चैकीकृतं मर्द्दयेत् ।
मुक्ता विद्रुमयो रसेन समता
गोक्षुरवासेक्षुणा
सर्व्वं वन्यकरीषकेण सुदृढं गुप्तं पचेत्
सप्तधा ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे
रसायनाधिकारे ॥)
सङ्गतम् । इति शब्दरत्नावली ॥
वैश्यशूद्राणां
पद्धतिविशेषे पुं । यथा,
इत्युद्वाहतत्त्वम् ॥

परं-सकं-सेट् ।) पञ्चमस्वरी । प श, गुम्फति
मालां मालिकः । जुगोफ । इति दुर्गादासः ॥

**गुफितः**, त्रि, (गुफ् + कर्म्मणि क्तः ।) गुम्फितः ।

ग्रथितः । इत्यमरटीका ॥

**गुम्फः**, पुं, (गुम्फ + घञ् ।) ग्रन्थनम् । (यथा,

रावणकृतशिवताण्डवे । १३ ।
"निगुम्फनिर्भरक्षरन्मधूष्ठिकामनोहरम् ॥"
तथाच आर्य्यासप्तशत्याम् । ६०६ ।
"सततमरुणितमुखे सखि ! निगिरन्ती गिरां
गुम्फम् ॥")
बाहोरलङ्कारः । इति मेदिनी । फे । २ ।
श्मश्रु । इति शब्दरत्नावली ॥ गाँप इति भाषा ॥

**गुम्फितः**, त्रि, (गुम्फ + कर्म्मणि क्तः ।) ग्रन्थितः ।

इत्यमरटीकायां रायमुकुटः ॥ (यदुक्तम् ।
"प्रयत्नगुम्फितामालायतस्तेन निराकृता ॥")

| | | |
|---|---|---|
| | “गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ।”<br>**गुप्तगतिः**, पुं, (गुप्ता संवृता अन्यैरलक्षिता गति-र्गमनं चेष्टादिर्वा यस्य ।) चरः । इति शब्द-<br>रत्नावली ॥ | |

**गुर**, ई य ङ वधे । गत्याम् । इति कविकल्पद्रुमः ॥

(दिवां-आत्मं-सकं-सेट् ॥)

**गुर**, ङ ई शि उद्यमे । इति कविकल्पद्रुमः ॥ (तुदां-

आत्मं-अकं-सेट् ।) ह्रस्वी । ङ शि, गुरते

अगुरिष्ट । ई, गूर्णः । इति दुर्गादासः ॥

**गुरणं**, क्ली, (गुर् + भावे ल्युट् ।) उद्यमः ।

इत्यमरः । ३ । २ । ११ ॥ अस्य

रूपान्तरे गूरणं

गोरणं इति भरतः ॥

**गुरुः**, पुं, (गृणाति उपदिशति वेदादिशास्त्राणि

इन्द्रादिदेवेभ्यः इति । यद्वा गीर्य्यते

स्तूयते देव-

गन्धर्व्वमनुष्यादिभिः । गॄ + “कृग्रोरुच्च

।” उणां ।

१ । २४ । इति उत् ।) बृहस्पतिः ।

(यथा,

देवीभागवते । १ । ११ । ४४ ।

“इत्याश्वास्य गुरुं शक्रो दूतं वक्तुं

विचक्षणः ॥”)

निषेकादिकृत् । इत्यमरः । ३ । ३ ।

१६१ ॥

(यथा, मनुः । २ । १४२ ।

“निषेकादीनि कर्म्माणि यः करोति

यथाविधि ।

सम्भावयति चान्नेन स विप्रो गुरुरुच्यते

॥”)

निषेको गर्भाधानं आदिना

सीमन्तोन्नयनादे-

र्मन्त्रविद्यादानादेश्चग्रहणम् ।

तत्कर्त्तापित्रादि-

र्गुरुः स्यात् । इति भरतः ॥ मन्त्रदाता ।

तस्य

वर्ज्जनीयत्वं यथा, कालिकापुराणे ५४

अध्याये ।

“अभिशप्तमपुत्त्रञ्च सन्नद्धं कितवन्तथा ।

क्रियाहीनमकल्पाङ्गं वामनं गुरुनिन्दकम्

॥

सदा मत्सरसंयुक्तं गुरुं मन्त्रेषु वर्ज्जयेत्

।

पिता माता च संप्रीतौ स्यातां पुत्त्रगुणैर्यदि ॥

स पुत्त्रः सकलं धर्म्मं प्राप्नुयात्तेन कर्म्मणा ।

नास्ति पितृसमो देवो नास्ति मातृसमो गुरुः ॥

तयोः प्रत्युपकारोऽपि न कथञ्चन विद्यते ।

तयोर्न्नित्यं प्रियं कुर्य्यात् कर्म्मणा मनसा गिरा ॥

न ताभ्यामननुज्ञातो धर्म्ममन्यं समाश्रयेत् ।

वर्ज्जयित्वा मुक्तिफलं नित्यं नैमित्तिकं तथा ॥

धर्म्मसारः समुद्दिष्टः प्रेत्यानन्दफलप्रदः ।

सम्यगाराध्य वक्तारं विसृष्टस्तदनुज्ञया ।

शिष्यो विद्याफलं भुङ्क्ते प्रेत्य चाप्याप्स्यते

दिवि ॥

यो भ्रातरं पितृसमं ज्येष्ठं मूढोऽवमन्यते ।

तेन दोषेण स प्रेत्य निरयं घोरमृच्छति ॥

पुंसा वर्त्मनिविष्टेन पूज्यो भक्त्या तु सर्व्वदा ।

अपि मातरि लोकेऽस्मिन्नुपकाराद्धि गौरवम् ॥

ये नरा भर्त्तृपिण्डार्थं स्वान् प्राणान् संत्यजन्ति

हि ।

तेषामथाक्षयाँल्लोकान् प्रोवाच भगवान् मनुः ॥

मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजो गुरून् ।

असावहमिति ब्रूयुः प्रत्युत्थाय यवीयसः ॥”

इति कूर्म्मपुराणे उपविभागे ११ अध्यायः ॥ *

॥

तस्य परीक्षा यथा ।

“सदाचारः कुशलधीः सर्व्वशास्त्रार्थपारगः ।

नित्यनैमित्तिकानाञ्च कार्य्याणां कारकः शुचिः

॥

अपर्व्वमैथुनपरः पितृदेवार्च्चने रतः ।

गुरुभक्तो जितक्रोधो विप्राणां हितकृत् सदा ॥

दयावान् शीलसम्पन्नः सत्कुलीनो महामतिः ।

परदारेषु विमुखो दृढसङ्कल्पको द्विजः ॥

अन्यैश्च वैदिकगुणैर्युक्तः कार्य्यो गुरुर्नृपैः ।

एतैरेव गुणैर्युक्तः पुरोधाः स्यान्महीभुजाम् ॥”

इति युक्तिकल्पतरुः ॥ * ॥

शिष्यकृतपापं गुरुं स्पृशति यथा ।

“मन्त्रिपापञ्च राजानं पतिं जायाकृतं तथा ।

तथा शिष्यकृतं पापं प्रायो गुरुमपि स्पृशेत् ॥

प्राय इति गुरुणा शिष्यः सम्यग्बोधितोऽपि

तद्वाक्यमनादृत्य पापञ्चेदाचरति तदा तत् पापं

गुरौ न व्याप्नोतीत्यर्थः ॥

वर्णाश्रमाणां सर्व्वेषामाचारः सद्गतिप्रदः ।

गुरुस्त्रिवारमाचारं बोधयेत् कुलनायिके ! ॥

कोशलाश्च दशार्णाश्च गुरषः सप्त मध्यमाः ॥

कर्णाटनर्म्मदारेवाकच्छातीरोद्भवास्तथा ।

कालिङ्गाश्च कलम्बाश्च काम्बोजाश्चाधमा

मताः ॥

वैष्णवे वैष्णवो ग्राह्यः शैवे शैवश्च शाक्तिके ।

शैवः शाक्तोऽपि सर्व्वत्र दीक्षास्वामी न संशयः ॥”

इति तन्त्रसारः ॥ * ॥

“गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ।

पतिरेको गुरुः स्त्रीणां सर्व्वत्राभ्यागतो गुरुः ॥”

इति चाणक्यम् ॥

कपिकच्छः । इति राजनिर्घण्टः ॥ द्विमात्रः ।

दीर्घः । इति शब्दरत्नवली ॥ (गृणाति उपदि-

शति वेदान् । गॄ + “कृग्रोरुच्च ।” उणां । १ ।

२४ ।

इति उत् । वेदाध्यापयिताचार्य्यः । यथा,

मनुः । ३ । १ ।

“षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैवेदिकं व्रतम् ।

तदर्द्धिकं पादिकं वा ग्रहणान्तिकमेव वा ॥”

गृणाति उपदिशति किञ्चिदपि यः । उपाध्याय-

इत्यर्थः । यथा, मनुः । २ । १४९ ।

“अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः ।

तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तया ॥”

गीर्य्यते स्तूयतेऽसौ ज्ञानतपोवृद्धत्वात् । ज्ञान-

प्रभावान्वितत्वात् तपोबलप्राधान्याद् वा पूज्य-

तमोमहात्मा । यथा, मनुः । २ । १३० ।

“मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजो गुरून्

।”

“भूयिष्ठाः खलु गुरव इत्युपक्रम्य ज्ञानवृद्धतपो-

वृद्धयोरपि हारीतेन गुरुत्वकीर्त्तनात् तयोश्च

कनिष्ठयोरपि सम्भवात् तद्विषयोऽयं गुरुशब्दः ।”

इति टीकाकृत् कुल्लूकभट्टः । गृणाति उपनीय-

सन्ध्योपासनाचारादीनि कर्म्माणि उपदिशति ।

उपनेता सन्ध्योपासनाद्युपदेष्टा च । यथा,

मनुः । २ । ६९ ।

“उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः ।

आचारमग्निकार्य्यञ्च सन्ध्योपासनमेव च ॥”

पिता । यथा, रामायणे । २ । ७९ । २ ।

“गतो दशरथः स्वर्गं यो नो गुरुतरोगुरुः ।”

राजचक्रवर्त्ती सम्राट् । यथा, रघुः २ । ६८ ।

“गुरुर्नृपाणां गुरवे निवेद्य ।”

गिरति अज्ञानमन्तर्यामिरूपेणाविद्यां नाश-

गुरुर्म्मन्त्रस्य मूलं स्यान्मूलशुद्धौ सदा शुभम् ॥”
अपि च । क्रियासारसमुच्चये ।
“श्वित्री चैव गलत्कुष्ठी नेत्ररोगी च वामनः ।
कुनखी श्यावदन्तश्च स्त्रीजितश्चाधिकाङ्गकः ॥
हीनाङ्गः कपटी रोगी बह्वाशी बहुजल्पकः ।
एतैर्दोषैर्व्विहीनो यः स गुरुः शिष्य सम्मतः ॥”
इति तन्त्रसारः ॥ * ॥
गुरुवर्गो यथा, --
“उपाध्यायः पिता ज्येष्ठभ्राता चैव महीपतिः ।
मातुलः श्वशुरस्त्राता मातामहपितामहौ ॥
बन्धुर्ज्येष्ठः पितृव्यश्च पुंस्येते गुरवः स्मृताः ।
मातामही मातुलानी तथा मातुश्च सोदराः ॥
श्वश्रूः पितामही ज्येष्ठा धात्री च गुरवः स्त्रीषु ।
इत्युक्तो गुरुवर्गोऽयं मातृतः पितृतो द्विजाः ॥
अनुवर्त्तनमेतेषां मनोवाक्कायकर्म्मभिः ।
गुरुं दृष्ट्वा समुत्तिष्ठेदभिवाद्य कृताञ्जलिः ॥
नैतैरुर्पविशेत् सार्द्धं विवदेन्नात्मकारणात् ।
जीवितार्थमपि द्वेषाद्गुरुभिन्नैव भाषणम् ॥
उदितोऽपि गुणैरन्यैर्गुरुद्वेषी पतत्यधः ।
गुरूणाञ्चैव सर्व्वेषां पूज्याः पञ्च विशेषतः ॥
तेयामाद्यास्त्रयः श्रेष्ठास्तेषां माता सुपूजिता ।
यो भापयति या सूते येन विद्योपदिश्यते ॥
ज्येष्टभ्राता च भर्त्ता च पञ्चैते गुरवः स्मृताः ।
आत्मनः सर्व्वयत्नेन प्राणत्यागेन वा पुनः ॥
पूजनीया विशेषेण पञ्चैते भूतिमिच्छता ।
न गृह्णाति हि शिष्यश्चेत्तदा पापं गुरोर्न हि ।
इति कुलार्णववचनात् । इति शिवार्च्चनचन्द्रिका ॥
मन्त्रदगुरोर्लक्षणं यथा ।
“गकारः सिद्धिदः प्रोक्तो रेफः पापस्य हारकः ।
उकारो विष्णुरव्यक्तस्त्रितयात्मा गुरुः परः ॥
शान्तो दान्तः कुलीनश्च विनीतः शुद्धवेशवान् ।
शुद्धाचारः सुप्रतिष्ठः शुचिर्दक्षः सुबुद्धिमान् ॥
आश्रमी ध्याननिष्ठश्च मन्त्रतन्त्रविशारदः ।
निग्रहानुग्रहे शक्तो गुरुरित्यभिधीयते ॥
उद्धर्त्तुं चैव संहर्त्तुं समर्थो ब्राह्मणोत्तमः ।
तषस्वी सत्यवादी च गृहस्थो गुरुरुच्यते ॥” * ॥
देशभेदेन तस्य विशेषो यथा ।
“मध्यदेशकुरुक्षेत्रनाटकोङ्कणसम्भवाः ।
दूयन्तर्व्वेदिप्रतिष्ठाना आवन्त्याश्च गुरूत्तमाः ॥
गौडाः शाल्वोद्भवाः सौरा मगधाः केरलास्तथा ।
यतीत्यर्थः । गीर्य्यते स्तूयते जीवनिकरैरिति वा ।
गृगॄ वा उत् । विष्णुः । यथा, महाभारते । १३ । १४९ । ६५ ।
“आदिदेवो महादेवो देवेशो देवभृद्गुरुः ॥”
शिवः । तत्रैव । १७ । १३० ।
“सहस्रमूर्द्धा देवेन्द्रः सर्व्वदेवमयो गुरुः ।”
ब्रह्मा । माननीयः । एकेनैव श्लोकेनेतयोरुदा-
हरणं यथा, काशीखण्डे । ६६ । ७१ ।
“विभ्रत् सहजकाठिन्यं जातो गौरीगुरुर्गुरुः ।
शम्भुं प्रपूज्य सुतया स्रजा विश्वगुरोरपि ॥”
विश्वगुरोर्ब्रह्मणोऽपिगुरुर्माननीयःपूज्यो वा इति तट्टीका ।
उपदेष्टृ अर्थे यथा सुश्रुतसूत्रस्थाने तृतीयाध्याये
“अथ वत्स ! तदेतदध्येयं यथा तथोपधारय

| | | |
|---|---|---|
| यावत् पिता च माता च द्वावेतौ निर्व्विकारिणौ ॥<br>तावत सर्व्वं परित्यज्य पुत्रः स्यात्तत्परायणः । | | |

मया प्रोच्यमानम् । अथ शुचये
कृतोत्तरासङ्गाया-
व्याकुलायोपस्थितायाध्ययनकाले
शिष्याय यथा-
शक्ति गुरुरुपदिशेत् पदं पादं श्लोकं वा ते
च
पद-पाद-श्लोका भूयः क्रमेणानुसन्धेया
एव-
मेकैकशो घटयेदात्मनाचानुपठेत् ।” तत्रैव
चतुर्थे
“शास्त्रं गुरुमुखोद्गीर्णमादायोपास्य
चासकृत् ।
यः कर्म्म कुरुते वैद्यः स वैद्योऽन्ये तु
तस्कराः ॥”)

**गुरुः**, त्रि, (गीर्य्यते स्तूयते महत्त्वात् । गॄ + कृग्रो-
रुच्च” उणां । १ । २४ । इति उत्) महान्
। (यथा,
ऋग्वेदे । ४ । ५ । ६ । “इदं मे अग्ने !
कियते पावका-
मिनते गुरुं भारं न मन्म ।”) दुर्जरः ।
अलघुः ।
इति मेदिनी ॥ रे । २५ ॥ (यथा, पञ्चतन्त्रे
। २ । १९९
“प्राप्तो बन्धनमप्ययं गुरुमृगस्तावत् त्वया
मे
हृतः ।” पराक्रान्तः । यथा, पञ्चतन्त्रे । ३ ।
२८ ।
“सोत्साहशक्तिसम्पन्नो हन्याच्छत्रुं
लघुर्गुरुम् ।”
भारायमाणः । यथा, रघुः । १२ । १०२ ।
“अथ मदगुरुपक्षैर्लोकपालद्विपानाम् ।”
अथ मदेन गजगण्डसञ्चारसंक्रान्तेन
गुरुपक्षैः
भारायमाणपक्षैः अलिबृन्दैः ।” इति टीका-
कृन्मल्लिनाथः । अतिशयः । यथा, मेघदूते
। १ । १ ।
“कश्चित् कान्ताविरहगुरुणा
स्वाधिकारप्रमत्तः
शापेनास्तं गमितमहिमा वर्षभोग्येन भर्त्तुः
॥”)

**गुरुक्रमः**, पुं, (गुरुरेव क्रमः पारम्पर्य्यं यत्र ।)
“स्पर्शादयोऽष्टौ वेगश्च गुरुत्वञ्च द्रवत्वकम्
।”)
अलघुता । यथा, --
“अतीन्द्रियं गुरुत्वं स्यात् पृथिव्यादिद्वये तु
तत् ।
अनित्ये तदनित्यं स्यात् नित्ये
नित्यमुदाहृतम् ॥
तदेवासमवायि स्यात् पतनाख्ये तु कर्म्मणि
।”
इति भाषापरिच्छेदः ॥
(आधिक्यम् । यथा, रघुः । २ । १८ ।
“गृष्टिर्गुरुत्वाद्वपुषो नरेन्द्रः ।” वपुषो गुरु-
त्वात् आधिक्यात् इति
मल्लिनाथस्तट्टीकायाम् ।
पूज्यत्वम् । यथा, तत्रैव । १० । ६४ ।
“मेने परार्द्ध्यमात्मानं गुरुत्वेन जगद्गुरोः
।”)

**गुरुदैवतः**, पुं, (गुरुर्बृहस्पतिर्द्दैवतमस्येति ।) पुष्य-
नक्षत्रम् । इति हेमचन्द्रः । २ । २५ ॥

**गुरुपत्रं**, क्ली, (गुरुपाके दुर्ज्जरं पत्त्रं पत्राकार-
फलकमस्य ।) वङ्गम् । इति हेमचन्द्रः ॥
४ । १०८ ॥

**गुरुपत्रा**, स्त्री, (गुरु सेवने दुर्ज्जरं पत्त्रं पर्ण-
मस्याः ।) तिन्तिडीवृक्षः । इति शब्दरत्ना-
वली ॥

**गरुमर्द्दलः**, पुं, (गरुः मर्द्दल इति नित्यकर्म्म-
धारयः ।) डिण्डिमवाद्यम् । इति शब्दरत्ना-
वली ॥

**गुरुरत्नं**, क्ली, (गुरु गौरवान्वितं मूल्यवदित्यर्थः
गुरत्वाद्गुरु वा रत्नम् गुराः प्रियं रत्नमित्येके
।)
पुष्परागमणिः । इति राजनिर्घण्टः ॥ (पर-
मित्यत्र नवग्रहदोषशान्त्यै गुरौ मुक्तैवेत्युक्ता)
यथा, अस्मिन्नेव शब्दकल्पद्रुमे नवरत्नशब्दे ।
“नवग्रहदोषशान्त्यै धार्य्याणि नवरत्नानि ।
वदूर्य्यं धारयेत् सूर्य्ये नीलञ्च मृगलाञ्छने ॥
आवनेयेऽपि माणिक्यं पद्मरागं शशाङ्कजे ।
गुरौ मुक्ता भृगौ वज्रं शनौ नीलं विदुर्बुधाः ॥”
रागिणीविशेषः । इति हलायुधः ॥ इयन्तु भैरव-
रागस्य रागिणीति बोध्यम् । यथा, सङ्गीतदर्पणे
रागविवेकाध्याये । १६ ।
“भैरवी गुर्ज्जरी रामकिरी गुणकिरी तथा ।
वाङ्गाली सैन्धवी चैव भैरवस्य वराङ्गनाः ॥”
अस्या गानवेलानिर्णयो यथा, तत्रैव । २० ।
“वेलावली च मल्लारी वल्लारी सोमगुर्ज्जरी ।”
इयं हि ग्रीष्मऋतौ स्वस्वामिना भैरवरागेण सह
गीयते । यथा, तत्रैव । २७ ।
“भैरवः ससहायस्तु ऋतौ ग्रीष्मे प्रगीयते ।”
इति सोमेश्वरमतम् । हनूमन्मते तु । इयमेव
मेघरागस्य स्त्री । यथा, तत्रैव । ३७ ।
“मल्लारी देशकारी च भूपाली गुर्ज्जरी तथा ।
टङ्का च पञ्चमी भार्य्या मेघरागस्य योषितः ॥”
इयं पुना रागार्णवमते पञ्चमरागाश्रया रागिणी-
त्यवधेयम् । यथा, तत्रैव । ४० ।
“ललिता गुर्ज्जरी देशी वराडी रामकृत्तथा ।
मता रागार्णवे रागाः पञ्चैते पञ्चमाश्रयाः ॥”)

**गुर्द्द** क निकेतने । कूर्द्द । इति कविकल्पद्रुमः ॥
(चुरां-परं-अकं-सेट् ।) दीर्घणो वक्ष्यमाणत्वा-
दस्य न दीर्घः । क गुर्दयति । निकेतनं निवासः ।
इति दुर्गादासः ॥

**गुर्द्द** ङ कूर्द्द । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-
अकं-सेट् ।) दीर्घिणो वक्ष्यमाणत्वादस्यापि न
दीर्घः । ङ गुर्दते । कूर्द्दः क्रीडा । इति दुर्गादासः
॥

**गुर्व्व** ई उद्यमे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ईरित् । अकमित्येके । खड्गादेरुत्तो-
लनार्थकस्य गुर्व्वधातोः
सकर्म्मकत्वमकर्म्मकत्वम्
वैतत् प्रज्ञावद्भिरेव चिन्तनीयम् ।) ह्रस्वी । गूः
गुरौ गुरः । ई गूर्णः । गुर्व्वति पत्तिः खड्गम् ।
इति दुर्गादासः ॥

**गुर्व्विणी**, स्त्री, (गर्व्वति कुक्षौ सन्तानमपत्यमित्यर्थः
प्राप्नोति धारयतीति यावत् । गर्व्वगतौ “गर्व्वे-
रत उच्च ।” उणां । २ । ५४ । इति उत् इनन्
च गौरादित्वात् ङीष् । गर्व्वयति मुञ्चतीत्येके ।
यद्वा गुरुर्गुरुभारयुक्तो गर्भोऽस्त्यस्याः अपत्य-

इतिह । पारम्पर्य्योपदेशः । इति हलायुधः ॥

**गुरुघ्नः**, पुं, (गुरून् पराक्रान्तानपि यज्ञघ्नान् राक्षसादीन् हन्ति निराकरोतीत्यर्थः । हन् + टक् ।) गौरसर्षपः । इति राजनिर्घण्टः । गुरुहन्तरि त्रि ॥

**गुरुण्टकः**, पुं, (गुरुं दुर्जरवस्त्वादिकं रुण्टति चोरयति हरतीति यावत् । गुरुं गुरुतां दुर्ज्जरतां रुण्टतीत्येके रुटैस्तेये + ण्वुल् ततः पृषोदरात् रुलोपे साधुः ।) तिलमयूरः । इति त्रिकाण्ड-शेषः ॥

**गुरुतल्पगः**, पुं, (गुरोः पितुराचार्य्योपाध्याया-देर्वा तल्पं शय्यां पत्नीमितियावत्ः गच्छति इति गम् + डः ।) विमातृगन्ता । यथा, --
"गरुतल्पगः सुरापश्च रुक्मस्तेय्यथ विप्रहा ।
महापातकिनस्त्वेते संसर्गी चैव पञ्चमः ॥
इति प्रायश्चित्तविवेकः ॥
(यथा, मनुः । ९ । २३५ ।
"ब्रह्महा च सुरापश्च स्तेयी च गुरुतल्पगः ।
एते सर्व्वे पृथग्ज्ञेया महापातकिनो नराः ॥"
एतस्य नरकभोगावसाने पुनर्गृहीतमनुष्यदेहस्य फलं यथा, तत्रैव । ११ । ४९ ।
"ब्रह्महा क्षयरोगित्वं दौश्चर्म्म्यं गरुतल्पगः ।")

**गुरुतालः**, पुं, (गुरुः अपेक्षाकृतदीर्घकालव्यापी-तालः ।) तालविशेषः । यथा, --
"एक एव गरुर्यत्र गुरुतालः स कथ्यते ।
अपरं नियमं विना ॥" इति सङ्गीत दामोदरः

**गुरुत्वं**, क्ली, (गुरोर्भावः । "त्वतलौ" इति त्वप्रत्ययस्ततः त्वान्तं क्लीवमिति क्लीवत्वम् । । महत्त्वमा गुरुता । (यथा, भाषापरिच्छेदे । ३१)
इति ॥
मणेस्त्वस्यप्रयीगोऽत्रैव रत्नशब्दे दृश्यते यथा, --
"वज्रमुक्ताश्ममणयः सपद्मरागाः समरकताः प्रोक्ताः ।
अपिचेन्द्रनीलवरवैदूर्य्याश्च पुष्परागाश्च ॥")

**गुरुवर्च्चोघ्नः**, पुं, (गुरुवर्च्चः वातपित्तादिप्रकोप-जनिताग्निमान्द्यकोष्ठरोधनादिदोषस्तंहन्ति इति हन् + टक् ।) लिम्पाकः । इति शब्दचन्द्रिका ॥
पातिलेवु । इति भाषा ॥

**गुरुहा**, [न्] पुं, (गुरुं हन्ति इति । हन् + क्विप् ।) गुरुघ्नः । तत्पर्य्यायः । नरकीलकः २ । इति हेमचन्द्रः । ३ । ५२२ ॥ गुरुहन्तरि त्रि ।

**गुर्ज्जरः**, पुं, (गुर् शत्रुकृतताडनं बधोद्यमादिकं वा उज्जरयति यो देशः । कलिङ्गाः साह-सिका इतिवद्देशस्थजने लक्षणेति ज्ञेयम् ।) गुज्जराटदेशः । इति शब्दरत्नावली ॥

**गुर्ज्जरी**, स्त्री, (जॄ + णिच् + अच् । गुरिति शत्रु-कृतताडनादिकं तज्जीर्य्यत्यत्र इति अधिकरणे अप् । गुर्ज्जरः देशः तस्य प्रियेति ङीष् । यद्वा गुर्ज्जरदेशःप्रियोऽस्या इति अण् ङीप् च । गुर्ज्जरदेशवासिनी अतो गुर्ज्जरीतिकेचित् ।)
धारणात्तथात्वम् । गुरु + "व्रीह्यादिभ्यश्च ।" ५ । २ । ११६ । इति इनिः ।) गर्भिणी । इत्यमरः । २ । ६ । २२ ॥ (यथा, मार्कण्डेये । २७ । २० ।
"बन्धकीपद्मशरभशूलिकागुर्व्विणीस्तनात् ।
प्रज्ञा नृपेण चादेया तथा गोपालयोषितः ॥"
यथाऽस्याः पथ्यापथ्यनियमः ।
यद्यत् कामयते सा च तत्तद्दद्याद्भिषग्वरः ।
वर्ज्जयेद्द्विदलान्नानि विदाहीनि गुरूणि च ॥
अम्लानि सोष्णक्षीराणि गुर्व्विणीनां विवर्ज्जयेत् ।
मृत्तिका भक्षणीया न न च शूरणकन्दकाः ॥
रसोनश्च पलाण्डुश्च सन्त्यज्यो गुर्व्विणीस्त्रिया ।
शूरणानि प्रदेयानि गौल्यानि सरसानि च ॥
पथ्ये हितानि त्तैतानि गुर्व्विणीनां सदा भिषक् ।
व्यायामं मैथुनं रोषं शौर्य्यञ्चंक्रमणन्तथा ॥
वर्ज्जयेद्गुर्व्विणीनाञ्च जायन्ते मुखसम्पदः ॥"
इति हारीते तृतीयस्थानेऽष्टचत्वारिंशेऽध्याये ॥)

**गुर्व्वी**, स्त्री, (गुरुर्भारयुक्तो गर्भोऽस्याः । गुरु +

ङीष् ।) गर्भवती । इति हेमचन्द्रः । ३

। २०३ ॥

("नहि बन्ध्या विजानाति

गुर्व्वीप्रसववेदनाम् ॥"

इति हितोपदेशः ॥)

गुरुपत्नी । (गुरोः पत्नीति गुरु + ङीष्

।)

गौरवयुक्ता । (गुरु + वोतोगुणवचनात्

।"

४ । १ । ४४ । इति विभाषायां ङीष्

।) यथा ।

अनन्यगुर्व्व्यास्तवकेन केवलः

पुराणमूर्त्तेर्महिमा-

वगम्यते । इति माघः ॥

(गुरुभारविशिष्टा ।

यथा, महाभारते । ३ । २२ । ३७ ।

"ततः शाल्वं गदां गुर्व्वीमाविध्यन्तं

महाहवे ।

द्विधाचकार सहसा प्रजज्वाल च

तेजसा ॥"

गायत्त्री । यथा, --

देवीभागवते । १२ । ६ । ४२ ।

"गुहावासा गुणवती गुरुपापप्रणाशिनी

।

गुर्व्वी गुणवती गुह्या गोप्तव्या

गुणरूपिणी ॥")

**गुलः**, पुं, (गुड + डलयोरैक्याड्डकारस्य लत्वम्
।)

ऐक्षवः । गुडः । इति मेदिनी । ले ।

१३ ॥

**गुलञ्चकन्दः**, पुं, (गुलञ्चस्य लताविशेषस्य कन्द

इव कन्दोऽस्य गुलं गुडवद्रसं अञ्चति

अञ्च +

अण् । ततः शकन्ध्वादित्वादलोपे

गुलञ्चः तादृशः

कन्दः । इति केचित् ।) कन्दविशेषः ।

कुली

इति भाषा । तत्पर्य्यायः ।

गुच्छाह्वकन्दः २

"दुष्टा वातादयोऽत्यर्थं मिथ्याहारविहारतः ।

कुर्व्वन्ति पञ्चधा गुल्मं कोष्ठान्तर्ग्रन्थिरूपिणम्

॥ *

तस्य पञ्चविधं स्थानं पार्श्वे हृ न्नाभिवस्तयः

।

हृन्नाभ्योरन्तरे ग्रन्थिः सञ्चारी यदि वाचलः ॥

वृत्तश्चयापचयवान् स गुल्म इति कीर्त्तितः ।

स व्यस्तैर्जायते दोषैः समस्तैरपि चीच्छ्रितैः

॥

पुरुषाणां तथा स्त्रीणां ज्ञेयो रक्तेन चापरः ॥ *

तस्य पूर्व्वरूपं यथा, --

"उद्गारबाहुल्यपुरीषबन्ध-

तृप्त्यक्षमत्वान्त्रविकूजनानि ।

आटोपआध्मानमपक्तिशक्ति-

रासन्नगुल्मस्य वदन्ति लिङ्गम् ॥" * ॥

तस्य सामान्यरूपम् ।

"अरुचिः कृच्छ्रविण्मूत्रवाततान्त्रविकूजनम् ।

आनाहश्चोर्द्ध्ववातश्च सर्व्वगुल्मेषु लक्षयेत्

॥ * ॥

वातिकस्य निदानं यथा, --

"रूक्षान्नपानं विषमातिमात्रं

विचेष्टनं वेगविनिग्रहश्च ।

शोकोऽभिघातोऽतिमलक्षयश्च

निरन्नता चानिलगुल्महेतुः ॥" * ॥

वातिकस्य रूपम् । यथा, --

"यः स्थानसंस्थानरुजा विकल्पं

विड्वातसङ्गं गलवक्त्रशोषम् ।

श्यावारुणत्वं शिशिरज्वरञ्च

हृत्कुक्षिपार्श्वांसशिरोरुजञ्च ॥

करोति जीर्णेऽभ्यधिकं प्रकोपं

भुक्ते मृदुत्वं समुपैति यश्च ।

वातात् स गुल्मो न च तत्र रूक्षं

कषायतिक्तं कटु चोपशेते ॥" * ॥

पैत्तिकस्य निदानं यथा, --

"कट्वम्लतीक्ष्णोष्णविदाहिरूक्ष-

क्रोधातिमद्यार्कहुताशसेवा ।

आमाभिघातो रुधिरञ्च दुष्टं

पैत्तस्य गुल्मस्य निमित्तमुक्तम् ॥" * ॥

पैत्तिकस्य रूपं यथा, --

"ज्वरः पिपासा वदनाङ्गरागः

शूलं महज्जीर्य्यति भोजने च ।

व्यामिश्रलिङ्गानपरांश्च गुल्मां-

स्त्रीनादिशेदौषधकल्पनार्थम् ॥" * ॥

त्रिदोषजस्य रूपं यथा, --

"महारुजं दाहपरीतमश्मवद्

घनोन्नतं शीघ्रविदाहिदारुणम् ।

मनःशरीराग्निबलापहारिणं

त्रिदोषजं गुल्ममसाध्यमादिशेत् ॥" * ॥

अथ स्त्रीणां रक्तजगुल्मनिदानं यथा, --

"नवप्रसूताहितभोजना या

या चामगर्भं विसृजेदृतौ वा ।

वायुर्हि तस्याः परिगृह्य रक्तं

करोति गुल्मं सरुजं सदाहम् ॥" * ॥

स्त्रीणां रक्तजगुल्भलक्षणं यथा, --

"पैत्तस्य लिङ्गेन समानलिङ्गं

विशेषणञ्चाप्यपरं निबोध ।

यः स्पन्दते पिण्डित एव नाङ्गैः-

श्चिरात् सशूलः समगर्भलिङ्गः ॥

सरौधिरः स्त्रीभव एव गुल्मो

मासे व्यतीते दशमे चिकित्स्यः ।

स्त्रीणामार्त्तवजो गुल्मो न पुंसामुपजायते ।

अन्यस्त्वसृग्भवो गुल्मः स्त्रीणां पुंसाञ्च जायते ॥

अथासाध्यलक्षणं यथा, --

सञ्चितः क्रमशो गुल्मो महावास्तुपरिग्रहः ।

कृतमूलः शिरानद्धो यदा कूर्म्म इवोन्नतः ॥

दौर्व्वल्यारुचिहृल्लासकासच्छर्द्दरतिज्वरैः ।

तृष्णातन्द्राप्रतिश्यायैर्युज्यते न स सिध्यति ॥

गृहीत्वा सज्वरं श्वासच्छर्द्यतीसारपीडितम् ।

हृन्नाभिहस्तपादेषु शोथः कर्षति गुल्मिनम् ॥

श्वासः शूलं पिपासान्नविद्वेषो ग्रन्थिमूढता ।

जायते दुर्ब्बलत्वञ्च गुल्मिनो मरणाय वै ॥"

इति माधवकरः ॥ * ॥

तच्चिकित्सा यथा, --

"वातारितैलेन पयोयुतेन

पथ्यासमेतेन विरेचनं हि ।

संस्वेदनं स्निग्धमतिप्रशस्तं

प्रभञ्जनक्रोधकृते तु गुल्मे ॥

स्वर्ज्जिकाकुष्ठसहितः क्षारः केतकसम्भवः ।

पीतस्तैलेन शमयेद्गुल्मं पवनसम्भवम् ॥

तित्तिरांश्च मयूरांश्च कुक्कुटान् क्रौञ्चवर्त्तकान् ।

सर्पिः शालिं प्रसन्नाञ्च वातगुल्मे प्रयोजयेत् ॥ * ॥

पित्तगुल्मे त्रिवृच्चूर्णं पातव्यं त्रिफलाम्बुना ।

वलाह्वकन्दः ३ निघण्टिका ४ ।
अस्य गुणाः ।
मधुरत्वम् । सुशीतलत्वम् ।
वृष्यप्रदत्वम् । तर्प-
णत्वम् । दाहनाशित्घञ्च । इति
राजनिर्घण्टः ॥

**गुला**, स्त्री, (गुलः गुडैव रसोस्त्यस्या इति अर्श

आदिभ्योऽच् ततष्टाप् ।) स्नुहीवृक्षः ।
इति
मेदिनी । ले । १३ ॥

**गुली**, स्त्री, (गुडः क्षुद्रवर्त्तुलाकृतिर्विषमयस्फोटा-

कृतिरित्यर्थः विद्यतेऽस्याः इति अर्श
आदिभ्यो-
ऽच् ततो ङीष् ।) गुटिका । रोगभेदः ।
वसन्त
इति ख्यातः । इति मेदिनी । ले । १४
॥

**गुलुच्छः**, पुं, (गुच्छ + पृषोदरात् साधुः ।) गुच्छः ।

स्तवकः । इति त्रिकाण्डशेषः ॥

**गुलुञ्छः**, पुं, (गुण्डति गोलाकारेण वेष्टयतीति

गुड + क्विप् गुड् तं तदाकारं उञ्छति
आदत्ते
उपार्ज्जयति वा । उछि "कर्म्मण्यण्
।" ३ । २ । १ ।
इति अण् । ततो डस्यलत्वे साघुः ।)
गुच्छः ।
इति हेमचन्द्रः । ४ । १९२ ॥

**गुलुञ्छकः**, पुं, (गुलुञ्छ + स्वार्थे कन् ।) गुच्छः ।

इति शब्दरत्नावली ॥

**गुल्फः**, पुं, (गल + "कलिगलिभ्यां फगस्योच्च ।"

उणां । ५ । २६ । इति फक्
अकारस्योत्वं च ।)
पादग्रन्थिः । तत्पर्य्यायः । घुठिका २
। इत्य-
मरः । २ । ६ । ७२ ॥ चरणग्रन्थिः ३
घुटिकः

स्वेदो विदाहो व्रणवच्च गुल्मः
स्पर्शासहः पैत्तिकगुल्मरूपम् ॥" * ॥
श्लैष्मिकस्य निदानम् ।
"शीतं गुरु स्निग्धमचेष्टनञ्च
संपूरणं प्रस्वपनं दिवा च ।
गुल्मस्य हेतुः कफसम्भवस्य
सर्व्वस्तु दुष्टो निचयात्मकस्य ॥" * ॥
श्लैष्मिकस्य रूपम् ।
"स्तैमित्यशीतज्वरगात्रसाद-
हृल्लासकासारुचिगौरवाणि।
शैत्यं रुगल्पा कठिनोन्नतत्वं
गुल्मस्य रूपाणि कफात्मकस्य ॥" * ॥
द्वन्द्वजस्य रूपं यथा, --
"निमित्तलिङ्गान्युपलभ्य गुल्मे
द्विदोषजे दोषबलाबलञ्च ।

विरेकाय सितायुक्तं कम्पिल्लं वा समाक्षिकम् ॥"
त्रिफलाम्बुना त्रिफलाक्वाथेन । कम्पिल्लं कम्बिला
इति लोके ।
"अभयां द्राक्षया खादेत् पित्तगुल्मी गुडेन वा । *
योगैश्च वातगुल्मोक्तैः श्लेष्मगुल्ममुपाचरेत् ॥
अपरैश्च वलासघ्नैर्युक्तियुक्तैः शमं नयेत् ॥" * ॥
हिङ्गुग्रन्थिकधान्यजीरकवचाचव्याग्निपाठाशटी-
वृक्षाम्लं लवणत्रयं त्रिकटुकं क्षारद्वयं दाडिमम् ।
पथ्यापौष्करवेतसाम्लहवुषाजाज्यस्तवेभिः कृतं
चूर्णं भावितमेतदार्द्रकरसैः स्याद्बीजपूरद्रवैः ॥
गुल्माध्मानगुदाङ्कुरान् ग्रहणिकोदावर्त्तसंज्ञौ गद्

| | | |
|---|---|---|
| ४ घुण्टकः ५ घुण्टः ६ । इति हेमचन्द्रः । ३ । २७९ ॥<br>(यथा, गोः रामायणे । ६ । २३ । १२ ।<br>“समावेतौ करौ पादौ गुल्फौ चावनतौ मम ॥”)<br>**गुल्मः**, पुं, (गुडति वेष्टयति गुड्यते वेष्ट्यते वा, गुड +<br>करणे बाहुलकात् मक् डलयोरैक्यात् डस्यलत्वे<br>साधुः ।) उदरजरोगविशेषः । तस्य निदानादि । | | |

प्रत्याध्मानगरोदराश्मरियुतांस्तूनीद्वयारोच-
कान् ।
ऊरुस्तम्भमतिभ्रमञ्च मनसा बाधिर्य्यमष्ठीलिकां
प्रत्यष्ठीलिकया सहापहरते प्राक्पीतमुष्णा-
म्बुना ॥
हृत्कुक्षिवंक्षणकटीजठरान्तरेषु
वस्तिस्तनांशफलकेषु च पार्श्वयोश्च ।
शूलानि नाशयति वातवलासजानि
हिङ्ग्वाद्यमाद्यमिदमाश्विनसंहितोक्तम् ॥”
हिङ्ग्वादिचूर्णम् ॥ * ॥
“धीमानुपचरेद्गुल्मं प्रत्येकञ्च त्रिदोषजम् ।
सन्निपातोत्थिते गुल्मे त्रिदोषघ्नो विधिर्हितः ॥
शरपुङ्खस्य लवणं पथ्याचूर्णं समं द्वयम् ।
शाणप्रमाणमश्नीयाच्चूर्णंगुल्मगदापहम् ॥
स्वर्ज्जिका शाणमाना स्यात्तावदेव गुडं भवेत् ।
उभयोर्व्वटिकां खादेद्गुल्मामयविनाशिनीम् ॥ *
पलाशवज्रीशिखरिचिञ्चार्कतिलनालजाः ।
यवजः स्वर्ज्जिका चेति क्षारा अष्टौ प्रकीर्त्तिताः ॥
गुल्मशूलहराः क्षारा अजीर्णस्य च पाचनाः ।”
क्षारावृकम् ॥ * ॥
“सामुद्रं सैन्धवं काचं यवक्षारः सुवर्च्चलम् ।
टङ्कणं स्वर्ज्जिकाक्षारं तुल्यं चूर्णं प्रकल्पयेत् ॥
वज्रीक्षीरैरविक्षीरैरातपे भावयेत् त्र्यहम् ।
वेष्टयेदर्कपत्रेण रुद्ध्वा भाण्डपुटे पचेत् ॥
तत्क्षारं चूर्णयेत् पश्चात् त्र्युषणं त्रिफलां
तथा ।
यवानी जीरको वह्निश्चूर्णमेषाञ्च कारयेत् ॥
सर्व्वचूर्णसमं क्षारं सर्व्वमेकत्र कारयेत् ।
तच्चूर्णं टङ्कयुगलं सलिलेन प्रयोजयेत् ॥
गुल्मे शूले तथाजीर्णे शोथे सर्व्वोदरेषु च ।
मन्दे वह्नावुदावर्त्ते प्लीह्नि चापि परं हितम् ॥
वातेऽधिके जलैः कोष्णैर्हितं पित्तेऽधिके घृतैः ।
गोमूत्रेण कफाधिक्ये काञ्जिकेन त्रिदोषजे ॥
वज्रक्षार इति ख्यातः प्रोक्तः पूर्ब्बं स्वयम्भुवा ।
सेवितो हरतेऽजीर्णं तथाजीर्णभवान् गदान् ॥”
वज्रक्षारः ॥ * ॥
“सुवर्च्चिका टङ्कमिता शाणमानार्द्रिकापि च ।
उभे भुञ्जीत युगपद्गुल्मामयनिवृत्तये ॥”
सुवार्च्चका सोरा इति लोके ।
“शुक्तिकाचूर्णगुटिकां टङ्कमात्रां सुवेष्टयेत् ।
गुडेन शाणमानेन ताङ्गिलेत् गुल्मरोगवान् ॥

मन्दाग्निना हि जठरे जायते गुल्मरुङ्
नृणाम् ॥
उदरं गर्ज्जते यस्य विषमाग्निश्च दृश्यते
।
तोदो वपुषि शूलञ्च वातगुल्मं
विनिर्द्दिशेत् ॥
शोषोऽरतिः सपीतत्वं
मन्दज्वरनिपीडितम् ।
तमोभ्रमपिपासार्त्तं गुल्मं तत्
पित्तसम्भवम् ॥
शोफो जाड्यञ्च हृल्लासं तन्द्रालस्यं
सशीतकम् ।
मन्दाग्निर्विड्विबन्धश्च गुल्मं तत्
श्लेष्मसम्भवम् ॥
मोहो विभ्रमता
जाड्यमरतिक्षुत्पिपासकम् ।
आलस्यं निद्रया चैवं गुल्मं तत्
कफपैत्तिकम् ॥
निद्रालस्यञ्च दाहश्च शोथात् शूलञ्च
सज्वरम् ।
वैवश्यमरतिर्जाड्यं विड्बन्धो
विकलाङ्गता ॥
तथातीसारमूर्च्छा च तृषाहृल्लासवेपथु ।
श्वासोऽरुचिरजीर्णत्वं गुल्मं
तत्सान्निपातिकम् ॥
साध्यं केवलदोषोत्थं द्वन्द्वं कष्टेन
सिध्यति ।
असाध्यं सन्निपातोत्थं
वक्ष्यामस्तत्प्रतिक्रियाम् ॥
यकृत्त्विकित्सितञ्चैव
कथितञ्चोपचारणम् ।
तद्वत्प्लीहा समाख्यातो न चात्र कथितं
पुनः ॥
चिकित्सोदरगुल्मस्य वक्ष्यते शृणु
साम्प्रतम् ।
स्नेहनं रुक्षणञ्चैव पाचनं शोधनानि च
॥
संशमनं विरेकञ्च वस्ति-स्नेह-
निरूहणम् ।
क्षये पानञ्च चूर्णानि गुल्मोपचरणक्रिया
॥

त्रिवृतायास्त्रिभागः स्यात् शुण्ठ्याश्चत्वार एव च
॥
प्रक्षिप्य सर्व्वमेकत्र सर्व्वतुल्यगुडेन तु ।
वटकं भक्षयेत् प्रातस्तस्योपरिजलं पिवेत् ॥
कथितश्च विरेकश्च वातगुल्मोपशान्तये ।”
इति वातगुल्मविरेचनम् ॥ * ॥
“पिबेदेरण्डतैलञ्च सर्कराक्षीरसंयुतम् ।
पित्तगुल्मविरेकाय श्रेष्ठमेतत् सुखावहम् ॥
आरग्बधं प्रबालानि तथैवारग्बधानि च ।
विभाव्यैरण्डतैलेन तत्पत्रैश्चैव वेष्टयेत् ॥
कर्द्दमेन प्रलिप्याथ अङ्गारेषु निधापयेत् ।
सुस्विन्नभर्ज्जितां ताञ्च भक्षयेत् शर्करान्विताम्
॥
विरेकं पैत्तिके गुल्मे हितं शुद्धविरेचनम् ।”
इति पित्तगुल्मविरेचनम् ॥ * ॥
“त्रिफला सुरसा शुण्ठी चूर्णं कृत्वा विभावयेत् ।
स्नुहीक्षीरेण वारैकं गुडेन सह मिश्रितम् ॥
विरेकः श्लेष्मगुल्मे च सर्व्वोदरविनाशनम् ।
शुण्ठी सौवर्च्चलं पथ्या विडङ्गञ्च पुनर्नवा ॥
चूर्णोऽपामार्गवीजानां स्नुहीक्षीरेण भावितः ।
गुडेन संयुतं खादेत् पश्चात् सोष्णं जलं पिबेत्
॥
विरेकः सर्व्वगुल्मेषु प्रशस्तो हितकारकः ॥
इति विरेचनम् ।
शुक्तिक्षारनिशाविशालकदलीस्यात् शूरणं
कोकिला
पालाशं दहनार्ज्जुनं शठिजयाऽपामार्गकुष्मा-
ण्डकम् ।
दग्ध्वाक्षारविपाचितं परिशृतं हिङ्गुत्रिकट्वन्वितं
गुल्मानाहविबन्धशूलहरणंसर्व्वोदराणां हितम्
॥
इति क्षारपानम् ॥ * ॥
“अजमोदा शठी दन्ती विडङ्गं शुण्ठितुम्बुरु ।
त्रिफला चित्रकञ्चैव शुण्ठी कर्कटशृङ्गिका ॥
त्रिवृता च सुराह्वा च पुष्करं वृद्धदारकम् ।
तथाम्लवेतसञ्चैव तिन्तिडीकञ्च चिञ्चिलिः ॥
समन्तु मातुलुङ्गेन विभाव्यमेकतः कृतम् ।
त्रिभागहिङ्गुसंयुक्तं घृतेन चूर्णितं हितम् ॥
निहन्ति वातगुल्मञ्च सशूलमुदरन्तथा ।”
इत्यजमोजादि ॥ * ॥
हिङ्गुफलत्रिकजीरकयुग्मं

गुल्मी कुमारिकामांसं कर्षार्द्धं गोघृतान्वितम् ।
गिलेत् घोषाभयासिन्धुसूक्ष्मचूर्णावधूलितम्॥
कुमारिका घिउकुँयारी इति लोके ॥ * ॥
“वल्लूरं मूलकं मत्स्यं शुष्कशाकानि वैदलम् ।
न खादेदालुकं गुल्मी मधुराणि फलानि च ॥
वैदलानां निषेधेऽपि माषकुलत्थयोर्न्नात्रनिषेधः ।
इति सुश्रुतटीका । इति गुल्माधिकारः ॥ इति भावप्रकाशः ॥
अथ गुल्मचिकित्सा ।
आत्रेय उवाच ।
“श्वयथूत्थोपचारैश्च दोषैः संकुप्यतेऽनिलः ।
शुण्ठीमूर्व्वा पञ्चमूलं लघुरास्ना च दारु च ।
क्वाथोऽस्य चावशेषः स्यात् तत्समं क्षीरमेव च ॥
दधितत्सममेवन्तु पाचयेत्तत्समाग्निना ।
घृतं यावत् प्रपश्येच्च सिद्धमुत्तार्य्यते ततः ॥
तत्कृतं पानकेऽभ्यङ्गे भोजने च प्रदापयेत् ।
स्नेहं सप्तदिनं यावत् तस्माच्च रूक्षणं हितम् ॥
दिनत्रयञ्च कर्त्तव्यं कथयाम्यत्र कोविद ! ।
शुण्ठी सौवर्च्चलं जीरे द्वे वा हिङ्गुसमन्वितम् ॥
काञ्जिकं पानमेतेषां रूक्षणं गुल्मशान्तये ।
गुल्मचिकित्सिते क्षारपाकोऽत्र प्रतियुज्यते ॥
क्षारं पलाशार्ज्जुनशूरणस्य क्षारं तथा वै सहयावशूकम् ।
सौवर्च्चलं सिन्धुभवोद्भिदञ्च सामुद्रजं वापि विमिश्रयेच्च ॥
तोयं परिस्राव्य विधानतोऽपि युक्तं तथैतानि सदौषधानि ।
पथ्याग्निशुण्ठी रजनीसुराह्वं कुष्ठं विशाला च यवानिका च ॥
तथाजमोदा सहजीरके द्वे षड्ग्रन्थिका हिङ्गुयुतञ्च चूर्णम् ।
क्षारोदकौ पानविमिश्रपानं निहन्ति सर्व्वाण्यपि कोष्ठजानि ॥
गुल्मानि सर्व्वाणि विसूचिकानां मन्दाग्निशूलानि भगन्दराणाम् ।
प्लीहोदरानाहमथो विबन्धं विनाशनो रोगचयं नराणाम् ॥”
इति विरुक्षणम् ॥ * ॥
अथ विरेचनानि वक्ष्यामः ॥ * ॥
“नागरं क्रिमिजित् पथ्या त्रिवृता त्रिगुणायुतम् ।
चूर्णं गुंडान्वितं देयं वातगुल्मविरेचनम् ॥
दन्ती च भागमेकञ्च द्वौ भागौ च हरीतकी ।
चित्रकभागिककुष्ठविडङ्गम् ।
तुम्बुरुपुष्कर-विश्वसुराह्वं क्षारयुतं लवणानि च पञ्च ॥
वातिकगुल्मविनाशनहेतुः शूलरुजश्च नरस्य निहन्ति ॥”
इति वातगुल्मचिकित्सा ॥ * ॥
“विदारी क्षीरशुक्ला च पथ्या विश्वौषधं मधु ।
लेहः पित्तात्मके गुल्मे हितः शोफनिवारणः ॥
व्यष्टिकं निम्बपत्राणि तथा धात्रीफलं सिता ।
चूर्णं मध्वावलीढञ्च पित्तगुल्मनिवारणम् ॥”
इति पित्तगुल्मचिकित्सा ॥ * ॥
“त्रिकटुत्रिफलाचित्रवटकट्फलसंयुतम् ।
चूर्णं मद्येन वा पीतं फलक्वाथेन वा पीतम् ॥
श्लेष्मगुल्मविनाशाय हितञ्चैतत् सुखावहम् ।
लोध्रञ्च कट्फलं विश्वा कुष्ठं चित्रकमेव च ॥
नागरं हिङ्गुसंयुक्तं चूर्णं मूत्रेण संयुतम् ।

श्लेष्मगुल्मविनाशाय शूलोदरविनाशनम्
॥
उग्रगन्धा च मरिचं क्षारचूर्णसमन्वितम् ।
पिवेन्मूत्रेण संयुक्तं श्लेष्मगुल्मविनाशनम्
॥”
इति श्लेष्मगुल्मचिकित्सा ॥ * ॥
“शुण्ठी सौवर्च्चलं भार्गी वत्सकं
यावशूकजम् ।
जीरे द्वे चाटरूषञ्च यवानी हिङ्गुसैन्धवम् ॥
आरग्वधेन संयुक्तं चूर्णं सघृतमेव च ।
वातश्लेष्मोद्भवे गुल्मे सुखमाशुप्रपद्यते ।
उग्रगन्धा फलत्रिकं देवदारुपुनर्नवा ॥
त्रिवृत्सौवर्च्चलोपेतं क्षारोदकसमन्वितम् ।
पीतं वातकफे गुल्मे शुभकारि परं मतम्
॥”
इति वातश्लेष्मगुल्मचिकित्सा ॥ * ॥
इति हारीते चिकित्सितस्थाने
चतुर्थेऽध्याये ॥
“रूक्षकृष्णारुणशिरा तन्तुजालगवाक्षितः
।
गुल्मोऽष्टधा पृथक् दोषैः संसृष्टैर्निश्चयं
गतः ॥
आर्त्तवस्य च दोषेण नारीणां जायतेऽष्टमः
।
ज्वरच्छर्द्यतिसाराद्यैर्वमनाद्यैश्च
कर्म्मभिः ॥
कर्शितो वातलान्यत्ति शीतं वाम्वुबुभुक्षितः
।
यः पिवत्यनुचान्नानि लङ्घनं प्लवनादिकम्
॥
सेवते देहसंक्षोभिच्छर्द्दिं वा समुदीरयेत् ।
अनुदीर्णानुदीर्णान् वा वातादीन्न विमुञ्चति
॥
स्नेहस्वेदावनभ्यस्य शोधनं वा निषेवते ।
शुद्धो वाशु विदाहीनि भजते स्यन्दनानि
वा ॥
वातोल्वणास्तस्यमलाः पृथक्
क्रुद्धाद्विशोऽथवा ।
सर्व्वे वा रक्तयुक्ता वा
महास्रोतोऽनुशायिनः ॥

निरुणद्ध्यार्त्तवं योन्यां प्रतिमासमवस्थितम् ।
कुक्षिं करोति तद्गर्भ-लिङ्गमाविष्करोति च ॥
हृल्लास-दौहृदस्तन्य-दर्शनं क्षामतादिकम् ।
क्रमेण वायुसंसर्गात् पित्तयोनितया च तत् ॥
शोणितं कुरुते तस्या वातपित्तोत्थगुल्मजान् ।
रुक्स्तम्भदाहातिसारतृड्ज्वरादीनुपद्रवान् ॥
गर्भाशये च सुतरां शूलंदुष्टासृगाश्रये ।
जन्याश्च स्रावदौर्गन्ध्यतोदस्यन्दनवेदनाः ॥
न चाङ्गैर्गर्भवद् गुल्मः स्फुरत्यपि तु शूलवान् ।
पिण्डीभूतः स एवास्याः कदाचित् स्पन्दते
चिरात् ॥
न चास्या बर्द्धते कुक्षिर्गुल्म एव तु बर्द्धते ।
स दोषसंश्रयो गुल्मः सर्व्वो भवति तेन सः ॥”
इति वाभटे निदानस्थाने पञ्चमेऽध्याये ॥
“रूक्षान्नपानैरतिसेवनैर्वा
शोकेन मिथ्या प्रतिकर्म्मणा वा ।
विचेष्टितैर्वा विषमातिमात्रैः
कोष्ठे प्रकोपं समुपैति वायुः ॥
कफञ्च पित्तञ्च स दूषयित्वा
प्रोद्धूय मार्गान् विनिबध्य ताभ्याम् ।
हृत्प्लीहपार्श्वोदरवस्तिशूलं
करोत्यधो याति न बद्धमार्गः ॥
पक्वाशये पित्तकफाशये वा
स्थितः स्वतन्त्रः परसंश्रयो वा ।
स्पर्शोपलभ्यः परिपिण्डितत्वात्
गुल्मो यथा दोषमुपैति नाम ॥
वस्तौ हि नाभ्यां हृदिपार्श्वयोर्वा
स्थानानि गुल्मस्य भवन्ति पञ्च ।
पञ्चात्मकस्य प्रभवन्तु तस्य
वक्ष्यामि लिङ्गानि चिकित्सितञ्च ॥
क्रियाक्रममतः सिद्धं गुल्मिनां गुल्मनाशनम् ।
प्रवक्ष्याम्यत ऊर्द्ध्वञ्च योगान् गुल्मनिवर्हणान् ॥
रूक्षव्यायामजं गुल्मं वातिकं तीव्रवेदनम् ।
बद्धविट्-मारुतं स्नेहैरादितः समुपाचरेत् ॥
भोजनाभ्यञ्जनैः पानैर्निरूहैः सानुवासनैः ।
स्निग्धस्य भिषजा स्वेदः कर्त्तव्यो गुल्मशान्तये ॥
स्रोतसां मार्द्दवं कृत्वा जित्वा मारुतमुल्वणम् ।
भित्त्वा विवन्धं स्निग्धस्य स्वेदो गुल्ममपोहति ॥
स्नेहपानं मतं गुल्मे विशेषेणोर्द्ध्वनाभिजे ॥
हबुषाद्यं घृतम् ।
हबुषा व्योष पृथ्वीका चव्यचित्रकसैन्धवः ।

कुपितानिलमूलत्वाद्गूढमूलोदयादपि ॥
गुल्मवद्वा विशालत्वाद् गुल्म इत्यभिधीयते ।
स यस्मादात्मनिचयं गच्छत्यप्स्विव बुद्बुदः ॥
अन्तः सरति यस्माच्च न पाकमुपयात्यतः ।
सदनं मन्दता वह्ने राटोपोऽन्त्रविकूजनम् ॥
विण्मूत्रानिलसङ्गश्च सौहित्यासहता तथा ।
द्वेषोऽन्ने वायुरूर्द्ध्वञ्च पूर्ब्बरूपेषु गुल्मिनाम् ॥
हृत्कुक्षिशूलं मुखकण्ठशोषो
वायोर्निरोधो विषमाग्निता च ।
ते ते विकाराः पवनात्मकाश्च
भवन्ति गुल्मेऽनिलसम्भवे तु ॥
स्वेदज्वराहारविदाहदाहा-
स्तृष्णाङ्गरागः कटुवक्त्रता च ।
पित्तस्य लिङ्गान्यखिलानि यानि
पित्तात्मके तानि भवन्ति गुल्मे ॥
स्तैमित्यमन्नेऽरुचिरङ्गसाद
श्छर्द्दिः प्रसेको मधुरास्यता च ।
कफस्य लिङ्गानि च यानि तानि
भवन्ति गुल्मे कफसम्भवे तु ॥
सर्व्वात्मकः सर्व्वविकारयुक्तः
सोऽसाध्य उक्तः क्षतजश्च वक्ष्ये ।
“न स्पन्दते नोदरमेति वृद्धिं
भवन्ति लिङ्गानि च गर्भिणीनाम् ॥
तं गर्भकालातिगमे चिकित्स्य
मसृग्भवं गुल्ममुशन्ति तज्ज्ञाः ॥”
चिकित्सा यथा ॥
“वातगुल्मार्द्दितं स्निग्धं युक्तं स्नेहविरेचनैः ।
उपाचरेत् यथाकालं निरूहैः सानुवासनैः ॥
पित्तगुल्मार्द्दितं स्निग्धं काकोल्यादिघृतेन तु ।
विरिक्तं मधुरैर्योगैर्निरूहैः समुपाचरेत् ॥
श्लेष्मगुल्मार्द्दितं स्निग्धं पिप्पल्यादिघृतेन तु
।
तीक्ष्णैर्विरिक्तं तद्रूपैर्निरूहैः समुपाचरेत् ॥
सन्निपातोत्थिते गुल्मे त्रिदोषघ्नो विधिर्हितः ।
पित्तवद्रक्तगुल्मिन्या नार्य्याः कार्य्यः
क्रियाविधिः ॥
विशेषमपरञ्चास्याः शृणु रक्तविभेदनम् ।
पलाश-भस्मतोयेन सिद्धं सर्पिः प्रयोजयेत् ॥
दद्यादुत्तरवस्तिञ्च पिप्पल्यादिघृतेन तु ।
उष्णैर्वा भेदयेद्भिन्ने विधिरासृग्दरोहितः ॥
आनूपौदकमज्जानो वसातैलं घृतं दधि ।

ऊद्ध्वाधोमार्गमावृत्य कुर्व्वते
शूलपूर्ब्बकम् ।
स्पर्शोपलभ्यं गुल्माख्यमुत्प्लुतं
ग्रन्थिरूपिणम् ॥
कर्शनात् कफविट्पित्तैर्मार्गस्यावरणेन वा
।
वायुः कृताशयः कोष्ठे रौक्ष्यात्
काठिन्यमागतः ।
स्वतन्त्रः स्वाश्रये दुष्टः परतन्त्रः पराश्रये
॥
पिण्डितत्वादमूर्त्तोऽपि मूर्त्तत्वमिवसंश्रितः
।
गुल्म इत्युच्यते वस्तिनाभिहृत्पार्श्व-
संश्रयः ॥
वातान्मन्याशिरःशूलं
ज्वरप्लीहान्त्रकूजनम् ।
व्यथा सूच्येव विट्सङ्गः कृच्छ्रादुच्छ्वसनं
मुहुः ॥
स्तम्भो गात्रे मुखे शोषः कार्श्यं
विषमवह्निता ।
रुक्षकृष्णत्वगादित्वं चलत्वादनिलस्य च
॥
अनिरूपित-संस्थान-स्थानवृद्धिक्षयव्यथः
।
पिपीलिकाव्याप्त इव गुल्मः स्फुरति तुद्यते
॥
पित्ताद्दाहोऽम्लको मूर्च्छा
विड्भेदस्वेदतृड्-
ज्वराः ।
हारिद्रत्वं त्वगाद्येषु गुल्मश्च स्पर्शनासहः
॥
दूयते दीप्यते सोष्मा स्वस्थानं दहतीव च
।
कफात् स्तैमित्यमरुचिः सदनं
शिशिरज्वरः ॥
पीनसालस्य-हृल्लास-
कासशुक्लत्वगादिताः ।
गुल्मोऽवगाढः कठिनो गुरुः सुप्तः
स्थिरोऽल्प-
रुक् ॥
स्वदोषस्थानधामानः स्वे स्वे काले च
रुक्कराः ।
प्रायस्त्रयस्तु द्वन्द्वोत्था गुल्माः
संसृष्टलक्षणाः ॥

साजाजीपिप्पलीमूलैर्दीप्यकैर्विपचेद्घृतम् ॥
मातुलुङ्गदधिक्षीर-कोलमूलकदाडिमैः ।
रसैस्तद्वातगुल्मघ्नं शूलानाहविमोक्षणम् ॥
योन्यर्शोग्रहणीदोषश्वासकासारुचिज्वरान् ।
वस्तिहृत्पार्श्वशूलञ्च घृतमेतद्व्यपोहति ॥”
इति हबुषाद्यं घृतम् ॥ * ॥
“तैलं प्रसन्ना गोमूत्रमारनालं यवाग्रजः ।
गुल्मजठरमानाहं पीतमेकत्र साधयेत् ॥”
इति तैलपञ्चकम् ॥ * ॥
“यथोक्तैः कोपनैर्दोषाः कुपिताः कोष्ठमागताः ।
जनयन्ति नृणां गुल्मं स पञ्चविध उच्यते ॥
पञ्च गुल्माश्रया नृणां पार्श्वहृन्नाभिवस्तयः ।

विपक्वमेकतः शस्तं वातगुल्मेऽनुवासनम् ॥
जाङ्गलैकशफानंन्तु वसा सर्पिश्च पैत्तिके ।
तैलं जाङ्गलमाज्जान एवं गुल्मे कफोत्थिते ॥
धात्रीफलानां स्वरसे षडङ्गं विपचेद्घृतम् ।
शर्करा सैन्धवोपेतं तद्धितं वातगुल्मिने ॥
चित्रकव्योषसिन्धूत्थपृथ्वीका चव्यदाडिमौ ।
दीप्यकग्रन्थिकाजाजी हवुषा धान्यकैः समैः
॥
दध्यारनालवदर-मूलकस्वरसैर्घृतम् ।
तत् पिबेद्वातगुल्माग्निदौर्ब्बल्याटोपशूलनुत् ॥
विडदाडिमसिन्धूत्थ-हुतभुग्व्योषजीरकैः ।
हिङ्गुसौवर्च्चलक्षार-रुग्वृक्षाम्लाम्लवेतसैः ॥
बीजपूररसोपेतं सर्पिर्दधिचतुर्गणम् ।
साधितं दाधिकं नाम गुल्महृत् प्लीहशूलजित्
॥

| सर्व्वजस्तीव्ररुग्दाहः शीघ्रपाकी धनोन्नतः ।<br>सोऽसाध्यो रक्तगुल्मस्तु स्त्रिया एव प्रजायते ॥<br>ऋतौ वा नवसूता वा यदि वा योनिरोगिणी ।<br>सेवते वातलानि स्त्री क्रुद्धस्तस्याः समीरणः ॥ | | |
| --- | --- | --- |

रसोनस्वरसे सर्पिः पञ्चमूलरसान्वितम् ।
सुरारनालदध्यम्ल-मूलकस्वरसैः सह ॥
व्योष-दाडिमवृक्षाम्लयवानीचव्यसैन्धवैः ।
हिङ्ग्वम्लवेतसाजाजीदीप्यकैश्च समांशिकैः ॥
सिद्धङ्गुल्मग्रहण्यर्शःश्वासोन्मादक्षयज्वरान् ।
कासापस्मारमन्दाग्नि-प्लीहशूलानिलान् जयेत् ॥
तृणमूलकषाये तु जीवनीयैः पचेद्धृतम् ।
न्यग्रोधादिगणे वापि गणे वाप्युत्पलादिके ॥
रक्तपित्तोत्थितं घ्नन्ति घृतान्येतान्यसंशयम् ।
आरग्वधादौ विपचेद्दीपनीययुतं घृतम् ॥
क्षारवर्गे पचेच्चान्यत् पचेन्मूत्रगणेऽपरम् ।
घ्नन्ति गुल्मं कफोद्भूतं घृतान्येतान्यसंशयम् ॥
यथा दोषोच्छ्र्यञ्चापि चिकित्सेत् सान्निपाति-
कम् ।
चूर्णं हिङ्ग्वादिकं वापि घृतं वा प्लीहनाशनम् ॥
पिबेद्गुल्मापहं काले सर्पिस्तैल्वकमेव वा ।
तिलेक्षुरकपालाशसार्षपं यवनालजम् ॥
भस्म मूलकजञ्चापि गोजाविखरहस्तिनाम् ।
मूत्रेण महिषीणाञ्च पालिकैश्चावचूर्णितैः ॥
कुष्ठ-सैन्धवयष्ट्याह्व-नागरक्रिमिघातिभिः ।
साजमोदैश्च दशभिः सामुद्राच्च पलैर्युतम् ॥
अयःपात्रेऽग्निनाल्पेन पक्त्वा लेह्यमथोद्धरेत् ।
तस्य मात्रां पिबेद्दध्ना सुरया सर्पिषापि वा ॥
धान्याम्लेनोष्णतोयेन कौलत्थेन रसेन वा ।
गुल्मं वातविकारांश्च क्षारोऽयं हन्त्यसंशयम् ॥”
“पीतं सुखाम्बुना वापि स्वर्ज्जिका कुष्ठसैन्धवम्
।
वृश्चीकमुरुवूकञ्च वर्षाभूबृहतीद्वयम् ।
चित्रकञ्च जलद्रोणे पक्त्रा पादावशेषितम् ॥
मागधी चित्रकक्षौद्रलिप्ते कुम्भे निधापयेत् ।
मधुनः प्रस्थमावाप्य पथ्याचूर्णार्द्धसंयुतम् ॥
तुषोषितं दशाहन्तु जीर्णभक्तः पिबन्नरः ।
अरिष्टोऽयं जयेद्गुल्ममविपाकमरोचकम् ॥
सशूले सोन्नतस्यन्दे दाहपाकरुगन्विते ।
गुल्मे रक्तं जलौकोभिः शिरामोक्षेण वा हरेत् ॥
सुखोष्णा जाङ्गलरसाः सुस्निग्धा व्यक्तसैन्धवाः
।
कटुत्रिकसमायुक्ता हिताः पाने च गुल्मिनाम् ॥
पेया वातहरैः सिद्धाः कौलत्थाः संस्कृता रसाः
।
खलाः सपञ्चमूलाश्च गुल्मिनां भोजने हिताः ॥

पिबेत्त्रिवृन्नागरं वा सगुडां वा हरीतकीम् ॥
गुग्गुलुं त्रिवृतां दन्तीं द्रवन्तीं सैन्धवं वचाम् ।
मूत्रमद्य-पयोद्राक्षा-रसैर्वीक्ष्य बलाबलम् ॥
एवं पीलूनि पिष्टानि पिबेत् सलवणानि तु ।
पिप्पलीपिप्पलीमूलचव्यचित्रकसैन्धवैः ॥
युक्ता हन्ति सुरागुल्मं शीघ्रं काले प्रयोजिता ।
बद्धविण्मारुतो गुल्मी भुञ्जीत पयसा यवान् ॥
कुल्माषान् वा बहुस्ने हान् भक्षयेल्लवणोत्तरान्
॥”
इत्युत्तरतन्त्रे द्वाचत्वारिंशत्तमेऽध्याये
सुश्रुतेनो-
क्तम् ॥) सेनासंख्याविशेषः । (यथा,
महाभारते ।
१ । २ । १९-२० ।
“एको रथो गजश्चैको नराः पञ्च पदातयः ।
त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥
पत्तिन्तु त्रिगुणामेतामाहुः सेनामुखं बुधाः ।
त्रीणिसेनामुखान्येको गुल्म इत्यभिधीयते ॥”)
अस्यार्थविवृतिर्यथा, --
अत्र गजा नव, रथा नव, अश्वाः सप्तविंशतिः
पदातयः पञ्चचत्वारिंशत्, समुदायेन नवतिः ॥
प्लीहा । अप्रकाण्डवृक्षः । तत्पर्य्यायः ।
स्तम्बः २ ।
इत्यमरः । २ । ४ । ९ ॥
“अविद्यमानप्रकाण्ड-
स्तनुप्रकाण्डो वा बहुपत्रवान् मल्लीझिण्टीनल-
कमलवंशवीरणादिः मूलादारभ्य पूर्ब्बभागः
प्रकाण्डः ।” इति भरतः ॥ (यथा, मनुः । १ ।
४८ ।
“गुच्छगुल्मन्तु विविधं तथैव तृणजातयः ।”
“यत्र लतासमूहा भवन्ति न च प्रकाण्डानि ते
गुच्छा मल्लिकादयः, गुल्मा एकमूलाः सङ्घात-
जाताः ।” इति टीकाकृत् कुल्लूकभट्टः ॥) घट्ट-
भेदः । सैन्यरक्षणम् । इति मेदिनी । मे । ११
॥
(रक्षितृपुरुषसमूहः । यथा, मनुः । ७ । ११४
।
“द्वयोस्त्रयाणां पञ्चानां मध्ये गुल्ममधिष्ठितम्
।”
गुल्मं रक्षितृपुरुषसमूहमित्यस्यटीकायां
कुल्लूक-

**गुल्मी**, स्त्री, (गुल्माकारो विद्यतेऽस्या इति । “अर्श
आदिभ्योऽच् ।” ५ । २ । १२७ । इत्यच्
ततो
ङीष् ।) आमलकी । एला । वनी ।
वस्त्रवेश्म ।
इति मेदिनीशब्दरत्नावल्यौ हेमचन्द्रश्च ॥
गृध्र-
नखीवृक्षः । इति शब्दचन्द्रिका ॥
गुडकाँओली
इति भाषा ॥ (गुल्मः गुल्मनामको
रोगोऽस्त्यस्य
इति । गुल्म + इंनिः ।) गुल्मरोगयुक्ते त्रि ॥
(यथा, अत्रैव धृतपनसशब्दगुणव्याख्याने
भाव-
प्रकाशः ।
“विशेषात् पनसं वर्ज्यं
गुल्मिभिर्मन्दवह्निभिः ॥)

**गुल्यः**, पुं, (गुडमिव माधुर्य्यमर्हतीति । गुड +
यत् । ततो डस्य लत्वम् ।) मधुरः ।
स्वादुः ।
इति हेमचन्द्रः । ६ । २४ ॥

**गुवाकः**, पुं, (गुवति मलवत् क्वाथमुत्सृजतीति ।
गु + “पिणाकादयश्च ।” उणां । ४ । १५
। इति
आकः तुदादित्वाद्गुणाभावः । निपातनात्
दीर्घोऽपि दृश्यते ।) वृक्षविशेषः । गुया
सुपारि
इति च भाषा ॥ तत्पर्य्यायः । घोण्टा २
पूगः ३
क्रमुकः ४ खपुरः ५ । इत्यमरः । २ । ५ ।
१३९ ॥
गूवाकः ६ । इति तट्टीका ॥ पूगवृक्षः ७
दीर्घपादपः ८ वल्कतरुः ९ दृढवल्क १०
चिक्कणः ११ । इति राजनिर्घण्टः ॥ पूगी
१२ ।
इति भावप्रकाशः ॥ सुरञ्जनः १३
गोपदलः १४
राजतालः १५ छटाफलः १६ । इति
त्रिकाण्ड-

बद्धवर्च्चोऽनिलानान्तु सार्द्रकं क्षीरमिष्यते ।
कुम्भीपिण्डेष्टकास्वेदान् कारयेत् कुशलो भिषक् ॥
गुल्मिनः सर्व्व एवोक्ता दुर्व्विरेच्यतमा भृशम् ।
अतश्चैतांस्तु सुस्विन्नान् स्रंसनेनोपपादयेत् ॥
विलेपनाभ्यञ्जनानि तथा सन्दहनानि च ।
उपनाहाश्च कर्त्तव्याः सुखोष्णाः साल्वणादयः ।
उदरोक्तानि सर्पींषि चूर्णवर्त्तिक्रियास्तथा ॥
लवणानि च योज्यानि यान्युक्तान्युदरामये ।
वातवर्च्चोनिरोधे तु सामुद्रार्द्रकसर्षपैः ॥
कृत्वा पायौ विधातव्या वर्त्तयो मरिचोत्तराः ।
दंन्ती चित्रकमूलेषु तथा वातहरेषु च ॥
कुर्य्यादरिष्टान् सर्व्वांश्च सूत्रस्थाने यथेरितान् ।
खादेद्वाप्यङ्कुरान् भृष्टान् पूतिकनृपवृक्षजान् ॥
ऊर्द्ध्ववातमनुष्यञ्च गुल्मिनं न निरूहयेत् ।
भट्टः ॥ सैन्यैकदेशः । यथा, तत्रैव । ७ । १९० ।
"गुल्मांश्च स्थापयेदाप्तान् कृतसंज्ञान् समन्ततः ।"
गुल्मान् सैन्यैकदेशानिति टीकाकृत् कुल्लूकभट्टः ॥)

**गुल्मकेतुः**, पुं, (गुल्मानां केतुर्ध्वज इव । गुल्मः केतुर्यस्येति वा । अत्र तु केतुर्लिङ्गं ज्ञापन-मित्यर्थः ।) अम्लवेतसः । इति राजनिर्घण्टः ॥

**गुल्ममूलं**, क्ली, (गुल्मवन्मूलमस्य ।) आर्द्रकम् । इति राजनिर्घण्टः ॥

**गुल्मवल्ली**, स्त्री, (गुल्माढ्या वल्ली यस्याः ।) सोम-लता । इति राजनिर्घण्टः ॥ (सोमलताशब्दे-ऽस्या गुणादयो ज्ञातव्याः ॥)

**गुल्मशूलः**, पुं, (गुल्मात्मकं गुल्ममूलकं वा शूल-मत्र ।) रोगविशेषः । तस्यौषधं यथा, --
"नारी पुष्पदिने पीत्वा गोक्षीरेणोपवासतः ।
श्वेतार्कस्य तु वै मूलं तस्यास्तद्गुल्मशूलनुत् ॥"
इति गारुडे १९३ अध्यायः ॥

**गुल्मिनी**, स्त्री, (गुल्मोऽस्त्यस्या इति । "अत इनि-ठनौ ।" ५ । २ । ११५ । इति इनिः । ततः ङीप् ।) विस्तृता लता । तत्पर्य्यायः । वीरुत् २ उलुपः ३ । इत्यमरः । २ । ४ । ९ ॥ वीरुधा ४ अवरुत् ५ । इति शब्दरत्नावली ॥

शेषः ॥ * ॥ अस्य फलस्य पर्य्यायः । क्रमुकफलम् १ पूगम् २ चिक्कणी ३ चिक्का ४ चिक्कणम् ५ श्लक्ष्णकम् ६ उद्वेगम् ७ पूगफलम् ८ । इति राज-निर्घण्टः ॥ पूगीफलम् ९ । इति भावप्रकाशः ॥ * ॥
अस्य मस्तिष्कस्य गुणाः । स्वादुत्वम् । तिक्तत्वम् । कषायत्वम् । बलप्राणशुक्रवृद्धिभेद्मदकारित्वम् । मूत्ररोगनाशित्वञ्च । इति राजवल्लभः ॥ * ॥
अस्य निर्यासस्य गुणाः । हिमत्वम् । मोहनत्वम् । गुरुत्वम् । विपाके उष्णत्वम् । क्षारत्वम् । साम्ल-त्वम् । वातघ्नत्वम् । पित्तलत्वञ्च ॥ * ॥ अस्य फल-गुणाः सम्मोहकारित्वम् । कषायत्वम् । स्वादु-त्वम् । रेचनत्वम् । त्रिदोषशमनत्वम् । रुच्यत्वम् । वक्त्रक्लेदमलापहत्वञ्च । इति राजनिघण्टः ॥
गुरुत्वम् । रूक्षत्वम् । कफपित्तघ्नारित्वम् । दीप-नत्वञ्च ॥ * ॥ आर्द्रस्य तस्य गुणाः । गुरुत्वम् । अभिष्यन्दित्वम् । अग्निदृष्टिहरत्वञ्च ॥ * ॥ स्विन्नस्य तस्य गुणः । दोषत्रयच्छेदित्वम् । दृढ-मध्यं तदुत्तमम् । इति भावप्रकाशः ॥ * ॥ आम-पूगस्य गुणाः । कषायत्वम् । मुखमलरक्तामश्लेष्म-पित्तादराघ्माननाशित्वम् । कण्ठशुद्धिकारित्वम् । सारकत्वञ्च ॥ * ॥ शुष्कस्य तस्य गुणाः । कण्ठा-मयघ्नत्वम् । रुचिकरत्वम् । पाचनत्वम् । रेचन-

| | | |
|---|---|---|
| | | त्वञ्च ॥ * ॥ तत् ताम्बूलेनोनमयुतञ्च चेत् झटिति पाण्डुवातशोथकारित्वञ्च । इति राजनिर्घण्टः ॥ * ॥ तत्पीगगुणाः । तस्यादिपीगं विषतुल्यम् । द्वितीयपीगं भेदकं दुर्जरञ्च । तृतीयपीगं पानोप- युक्तं सुधातुल्यं रसायनञ्च । इति राजवल्लभः ॥ (ताम्बूलेन विना केवलं गुवाकभक्षणाच्चाण्डा- |

लत्वावाप्तिस्तन्मोचनार्थं गङ्गादर्शनरूपप्राय-
श्चित्तमप्युक्तम् । यथा, --
"ताम्बूलं न मुखे दत्त्वा गुवाकं भक्षयेद् यदि
।
तावच्चाण्डालतां याति यावद् गङ्गानदर्शनम्
॥)

**गुह**, ऊ ञ संवृतौ । इति कविकल्पद्रुमः ॥ (भ्वां-
उभं-सकं-वेट् ।) ह्रस्वी । ऊ, अगूहीत् अघु-
क्षत् । ञ, गूहति गूहते । गुहो णोरूरिति
दीर्घः । इति दुर्गादासः ॥

**गुहः**, पुं, (गूहति रक्षति पालयतीत्यर्थः देव-
सेनाम् । गुह + "इगुपधज्ञाप्रीकिरः कः ।"
३ । १ । १३५ । इति कः । नामनिरुक्तौ तु
गुहा
आवासत्वेनास्त्यस्येति अच् ।
एतयोर्व्युत्पत्ति-
द्वययोरेव क्रमान्वयेनोदाहरणे द्रष्टव्ये । यथा,
महाभारते । ३ । २२८ अध्याये ।
"रुद्रसूनुं ततः प्राहुर्गुहं गुणवताम्बरम् ।"
इत्युपक्रम्य ।
"अथैनमभ्ययुः सर्वा देवसेनासहस्रशः ।
अस्माकं त्वं पतिरिति ब्रुवाणाः सर्व्वतो
दिशः ॥"
इत्यन्तेन महात्मा कार्त्तिकेयः सैनापत्यार्थं
देवैः
प्रार्थितः । ततो नामनिरुक्तिः । यथा, महा-
भारते । १३ । ८५ । ८०--८३ ।
"दिव्यं शरवणं प्राप्य ववृधेऽद्भुतदर्शनः ।
ददृशुः कृत्तिकास्तन्तु बालार्कसदृशद्युतिम्
॥
स्कन्नत्वात् स्कन्दताञ्चापि
गुहावासाद्गुहोऽभवत् ॥")
कार्त्तिकेयः । इत्यमरः । १ । १ । ४२ ॥
घोटकः ।
इति शब्दरत्नावली ॥ श्रीरामसखः । स तु
शृङ्गवेरपुरवासी निषादाधिपतिः । (यथा,
रामा-
यणे । २ । ५० । ३३ ।
"तत्र राजा गुहो नाम रामस्यात्मसमः सखा
।
खातम् ४ गह्वरम् ५ । शालपर्णीवृक्षः ६ । इति
राजनिर्घण्टः ॥ (हृदयम् । यथा, शतपथ-
ब्राह्मणे । ११ । २ । ६ । ५ ।
"तस्मादिदं गुहाहृदयम् ॥" गूढा ज्ञातृज्ञान-
ज्ञेयपदार्थाः अस्यां गूहतेऽस्यामात्मा इति वा ।
गुह + भिदादित्वादधिकरणे अङ् टाप् च ।
बुद्धिः । यथा, श्वेताश्वतरोपनिषदि ।
"अणोरणीयान् महतो महीयान्
आत्मा गुहायां निहितोऽस्य जन्तोः ॥")

**गुहाशयः**, पुं, (गुहासु गिरिगह्वरादिषु शेते
अवतिष्ठते इति । शीङ् ल शयने +
"अधिकरणे
शेतेः ।" ३ । २ । १५ । इति अच् ।) व्याघ्रः ।
इति राजनिर्घण्टः ॥ (गुहाशायित्वाद्वोस्य
तथात्वम् । यथा, भावप्रकाशे ।
"सिंहव्याघ्रवृका ऋक्षतरक्षुद्विपिनस्तथा ।
बभ्रुजम्वुकमार्ज्जारा इत्याद्याः स्युर्गुहाशयाः
॥"
गुहायां हृदये बुद्धौ वा शेते विराजते इत्यर्थः ।)
विष्णुः । (यथा, श्वेताश्वतरोपनिषदि ।
"सर्व्व-
भूतगुहाशयः ।" यथा च ।
"तावत् स भगवान् साक्षात् योगाधीशो
गुहाशयः ।
अन्तर्दधे ऋषेः सद्यो यथेहानीशनिर्म्मिता ॥"
इति श्रीभागवतम् ॥
(प्राणाः । यथा, मुण्डकोपनिषदि । २ । १ । ८
।
"सप्त इमे लोका येषु चरन्ति प्राणा
गुहाशया निहिताः सप्त सप्त ।"
गुहाशायिनि त्रि ॥)

**गुहिनं**, क्ली, (गूहते वृक्षादिभिराच्छन्नं भवतीति ।
गूहतेऽस्मिन्निति वा । गुह + बाहुलकात् इनन्
।)
वनम् । इति शब्दरत्नावली ॥

**गुहिलं**, क्ली, (गूहते पादपादिभिराच्छन्नं भव-
तीति । गुह + "गुपादिभ्यः कित् ।" उणां ।
१ । ५६ । इति इलच् । गुणनिषेधार्थं किच्च
।)
तथा च, देवीभागते । १ । ३ । ३७ ।
"पुराणगुह्यं सकलं समेतं
गुरोः प्रसादात् करुणानिधेश्च ॥")

**गुह्यः**, पुं, (गुहां सरस्यादेर्गर्त्तमर्हतीति । गुहा +
"दन्तादिभ्यो यत् ।" ५ । १ । ६६ । इति यत्
।)
कमठः । दम्भः । इति मेदिनी ॥ ये । १९ ॥
(गूहितुमर्हति योग्यो भवति उपनिषद् वेद्य-
त्वात् यद्वा गुहायां बुद्धौ हृदयाकाशे वस्तु-
मर्हति ध्यानायार्हतीति यावत् ।) विष्णुः ।
इति तस्य सहस्रनाममध्ये पठितः ॥ (यथा,
महाभारते । १३ । १४९ । ७१ ।
"गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥"
महादेवः । यथा, महाभारते । १३ । १७ । ९१
।
"यजुः पादभुजा गुह्यः प्रकाशो जङ्गमस्तथा ॥"
गुह्यानि गूहति गुणान् प्रकटीकरोतीति । गुण-
शालिप्रभावान्वितजीवविशेषः । यथा, ऋग्वेदे ।
७ । १०३ । ८ ।
"अध्वर्य्यवो घर्म्मिणः सिष्विदाना
आविर्भवन्ति गुह्या न केचित् ॥"
उपदेवताविशेषः । यथा, महाभारते । ३ ।
३ । ४३ ।
"गुह्याः पितृगणाः सप्त ये दिव्या ये च मानुषाः
॥"
स्त्रियां टाप् । गायत्रीस्वरूपा देवी । यथा,
देवीभागते । १२ । ६ । ४२ ।
"गुर्व्वी गुणवती गुह्या गोप्तव्या गुणदायिनी ॥"
गोपनीये त्रि । यथा, मनुः । ११ । २६५ ।
"सगुह्योऽन्यस्त्रिवृद्वेदो यस्तं वेद स वेदवित् ॥"
"प्रणवाख्यो गुह्यो गोपनीयः ।" इति कुल्लूक-
भट्टः ॥)

**गुह्यकः**, पुं, (गूहति निधिं धनविशेषं रक्षतीति ।
गुह् + ण्वुल् । पृषोदरादित्वाद्यगागमे साधुः ।)
देवयोनिविशेषः । स तु कुवेरानुचरः निधि-
रक्षको माणिभद्रादियक्षभेदः । इत्यमरभरतौ ॥
(कार्य्योत्पत्त्यादिभेदेनैष तु बहुधोदाहियते
तथाच व्याडिनोक्तम् ।
"निधिं रक्षन्ति ये यक्षास्ते स्युर्गुह्यकसंज्ञकाः
॥"

निषादजात्यो बलवान् स्थपतिश्चेति
विश्रुतः ॥”
गूहते संवृणोति स्वरूपादीनि मायया इति ।
गुह + कः ।) विष्णुः । (यथा, महाभारते ।
१३ ।
१४९ । ५४ ।
“करणं कारणं कर्त्ता विकर्त्ता गहनो गुहः ॥”
महादेवः । यथा, महाभारते । १३ । १७ ।
६० ।
“व्यालरूपो गुहावासी गुहो माली तरङ्गवित्
॥”)
कायस्थानां पद्धतिविशेषः ॥ (यथा,
कायस्थ-
कुलदीपिकायाम् ।
“अयं गुहकुलोद्भवो दशरथाभिधानो महान्
कुलाम्बुजमधुव्रतो विविधपुण्यपुञ्जान्वितः
॥”)

**गुहषष्ठी**, स्त्री, (गुहस्य कार्त्तिकेयस्य प्रिया या
षष्ठी तस्य जन्मतिथित्वात्तथात्वम् ।) मार्ग-
शीर्षमासीयशुक्लषष्ठी । यथा, भविष्ये ।
“येयं मार्गशिरे मासि षष्ठी भरतसत्तम् ! ।
पुण्या पापहरा धन्या शिवा शान्ता गुहप्रिया
॥”
शुष्केयं गुहषष्ठी । इति तिथ्यादितत्त्वम् ॥

**गुहा**, स्त्री (गुह् + कः टाप् च ।) सिंहपुच्छी-
लता । गर्त्तः । पर्व्वतादेर्गह्वरम् । इति मेदिनी
।
हे । ४ । (यथा, रामायणे । १ । १ । ७० ।
“किष्किन्ध्यां रामसुग्रीवौ जग्मतुस्तौ गुहां
तदा ॥”)
शेषस्य पर्य्यायः । विलम् २ शिलासन्धिः ३
देव-
वनम् । इत्युणादिकोषः ॥

**गुहेरः**, पुं, (गूहते लौहादेर्मलादिकं विलोपयन्
खड्गाद्यस्त्रत्वेनापादयतीति । धातूनामनेका-
र्थत्वात्तथात्वमित्यवधेयम् । गुह +
“मूलेरादयः ।”
उणां । १ । ६१ । इति निपातनादेरक्प्रत्ययः
।)
लौहकारः । इत्युणादिकोषः ॥ (गूहते रक्ष-
तीति ।) गोप्ता । इति संक्षिप्तसारे उणादि-
वृत्तिः ॥

**गुह्यं**, क्ली, (गुहां गोपनं अर्हति वस्त्राद्यभ्यन्तर-
स्थानं लब्धुमर्हतीति यावत् । गुहा + “तद-
र्हति ।” ५ । १ । ६३ । इति यत् । गुह +
कर्म्मणि
क्यवित्येके ।) उपस्थः । स तु भगं लिङ्गञ्च ।
(भगार्थे यदुक्तम् ।
“कामार्त्तः पुरुषो ह्यत्र चुम्बयेद् गुह्यमादृतः
॥”)
रहस्ये त्रि । इत्यमरः । ३ । ३ । १५३ ॥
गोप्यम् ।
तत्पर्य्यायः । विविक्तः २ विजनः ३ छन्नः ४
निःशलाकः ५ रहः ६ उपांशु ७ गूढम् ८
उपह्वरम् ९ । इति जटाधरः ॥ (यथा, भग-
वद्गीतायाम् । ९ । २ ।
“राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ॥”
गुह्यं कुत्सितं कायति शब्दायते प्रकाशयति
वा । कै + कः । यद्वा गुह्यं गोप्यं कं सुखं यस्य
।
“शंसिदुहिगुहिभ्योवेति” काशिकोक्तेः क्यप् वा
।
यद्वा गुह्यात् सृष्टिं चिकीर्षोः परब्रह्मणः कृष्णस्य
गुह्यदेशात् कायति आविर्भवतीति । यदुक्तं
ब्रह्मवैवर्त्ते ब्रह्मस्वण्डे । ५ । ६० ।
“आविर्ब्बभूव कृष्णस्य गुह्यदेशात्ततः परम् ।
पिङ्गलश्च पुमानेकः पिङ्गलैश्च गणैः सह ।
आविर्भूता यतो गुह्यात् तेन ते गुह्यकाः स्मृताः
॥”
यथा, महाभारते । ३ । ३ । १० ।
“तव दिव्यं रथं यान्तमनुयान्ति वरार्थिनः ।
सिद्धचारणगन्धर्व्वा यक्षगुह्यकपन्नगाः ॥”)
तस्य लोकः पिशाचलोकादूर्द्ध्वं
गन्धर्व्वलोकादधः ।
येन येन कर्म्मणा एतल्लोकप्राप्तिस्तदुच्यते ।
“ततो गच्छन्ददर्शाग्रे हृष्टपुष्टजनैर्वृतम् ।
पित्तिण्डिलैः स्थूलवक्त्रैर्मेघगम्भीरनिस्वनैः ॥

लोकैरध्युषितं लोकं श्यामलाङ्गैश्च लोमशैः ।
गणौ कथयतं केऽमी को लोकः पुण्यतः कृतः ॥
गणावूचतुः ।
गुह्यकानामयं लोकस्त्वेते वै गुह्यकाः स्मृताः ।
न्यायेनोपार्ज्य वित्तानि गूहयन्ति च ये भुवि ॥
स्वमार्गगा धनाढ्याश्च शूद्रप्रायाः कुटुम्बिनः ।
संविभज्य च भोक्तारः क्रोधासूयाविवर्ज्जिताः ॥
न तिथिं नैव वारञ्च संक्रान्त्यादि न पर्व्व च ।
नाधर्म्मञ्च न धर्म्मञ्च विदन्त्येते सदासुखाः ॥
एकमेव हि जानन्ति कुलपूज्यो हि यो द्विजः ।
तस्मै गाः संप्रयच्छन्ति मन्यन्ते तद्वचः स्फुटम् ॥
समृद्धिभाजो ह्यत्रापि तेन पुण्येन गुह्यकाः ।
भुञ्जते स्वर्गसौख्यानि देवत्वमकुतोभयाः ॥”
इति काशीखण्डे शिवशर्म्मणो वैकुण्ठलोकगमने विष्णुगणसंवादः ॥ (पक्वान्नविशेषः । तस्य पाकप्रकारो यथा, शब्दार्थचिन्तामणिधृतपाकशास्त्र ।
“समितां सर्पिषा भृष्टां सिताद्राक्षादिसम्भृताम् ।
एला लवङ्गकर्पूरमरीचपरिवासिताम् ॥
क्षिप्त्वान्यसमितालम्बपुटेवेष्ट्य घृते पचेत् ।
ततः खण्डे न्यसेत् पक्वे गुह्यकोऽयमुदाहृतः ॥”
अस्य गुणास्तत्रैव । यथा, --
“गुह्यको बृंहणो हृद्यो वृष्यः पित्तानिलापहः ।
मधुरोऽतिगुरुः पाके किञ्चित् सन्धानकृत् सरः ॥”)

**गुह्यकेश्वरः**, पुं, (गुह्यकानामीश्वरः प्रभुरधिपतिरित्यर्थः ।) कुवेरः । इत्यमरः । १ । १ । ७१ ॥ (यथा, ब्रह्मवैवर्त्ते ब्रह्मखण्डे । ५ । ६१ ।
“यः पुमान् स कुवेरश्च धनेशो गुह्यकेश्वरः ॥”)

**गुह्यगुरुः**, पुं, (गुह्यः गोप्यः हृदयाभ्यन्तर्व्वर्त्ती अन्तर्यामिस्वरूपो गुरुः ।) शिवः । इति त्रिकाण्डशेषः ॥

**गुह्यदीपकः**, पुं, (गुह्येन गुह्यस्थज्योतिषा दीपयति प्रकाशयतीति । स्वयं गुह्यः सन् दीपयतीत्येके । दीप् + ण्वुल् ।) खद्योतः । इति शब्द-

**गूढः**, त्रि, (गुह + कर्म्मणि क्तः ।) संवृतः । गुप्तः । इत्यमरमेदिनीकरौ ॥ (यथा, पञ्चदश्याम् । ३ । ३८ ।
“शक्तिरस्त्यैश्वरी काचित्
सर्व्ववस्तुनियामिका ।
आनन्दमयमारभ्य गूढा सर्व्वेषु वस्तुषु ॥”)

**गूढजः**, पुं, (गूढात् गुप्तभावादित्यर्थः गूढे गुप्तस्थाने वा जायते इति । गूढः सन् जायते इत्येके । गूढ + जन् + डः ।) गूढोत्पन्नपुत्त्रः । इति मिताक्षरा ॥ (यथा, याज्ञवल्क्यः । २ । १३२ ।
“गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतो मतः ।
कानीनः कन्यकाजातो मातामहसुतो मतः ॥”)

**गूढनीडः**, पुं, (गूढः गोपनस्थलस्थः गूढे गुप्तस्थाने वा नीडः कुलायोऽस्य ।) खञ्जनपक्षी । इति शब्दमाला ॥

**गूढपत्त्रः**, पुं, (गूढः समाच्छन्नः पत्त्रेण योऽसौ । गूढं पत्त्रमस्येति केचित् ।) करीरवृक्षः । अङ्कोठवृक्षः । इति राजनिर्घण्टः ॥

**गूढपथः**, पुं, (गूढः पन्था गतिर्यस्य समासनिष्पन्नत्वादच् ।) अन्तःकरणम् । इति हेमचन्द्रः । ६ । ५ ॥
गुप्तपथश्च ॥

**गूढपात्,** [द्] पुं, (गूढं पादयति । पद गतौ + णिजन्तात् क्विप् । यद्वा गूढाः पादा अस्य पृषोदरादित्वादलोपे साधुः ।) सर्पः । इत्यमरः । १ । ८ । ७ ॥

**गूढपादः**, पुं, (गूढाः संवृताः पादा अस्य ।) सर्पः । इति शब्दरत्नावली ॥
(“पादानामपि विज्ञेये द्वे शते द्वे च विंशती ।”
इत्यागमः ।
आच्छादितपादे त्रि । यथा, महाभारते ।
“सन्तोषामृततृप्तस्य विश्वैश्वर्य्यं करस्थितम् ।
तथा च नारदः ।
“अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम् ।
यः श्राव्यते तदा गूढो गूढसाक्षी स उच्यते ॥”
इति व्यवहारतत्त्वम् ॥

**गूढाङ्गः** पुं, (गूढानि अङ्गानि यस्य इच्छामात्रेणैवाङ्गानि अन्तःप्रवेशयति इति तात्पर्य्यार्थः ।) कच्छपः । इति राजनिर्घण्टः ॥

**गूढाङ्घ्रिः**, पुं, (गूढः संवृतः शल्केनावृतोऽङ्घ्रिश्चरणोऽस्य ।) सर्पः । इति राजनिर्घण्टः ॥

**गूढोत्पन्नः**, पुं, (गूढं अन्यैरविज्ञातं यथा स्यात् तथा उत्पन्नो जातः ।) द्वादशविधपुत्त्रमध्ये पुत्त्रविशेषः । यथा, मनुः । ९ । १७० ।
“उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः ।
स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः ॥”
अस्यार्थः । “यस्य गृहेऽवस्थितायां भार्य्यायां पुत्त्र उत्पद्यते सजातीयोऽयं भवतीति ज्ञानेऽपि कस्मात् पुरुषविशेषाज्जातोऽसाविति न ज्ञायते स गृहे अप्रकाशमुत्पन्नस्तस्य पुत्त्रः स्यात् यदीयायां भार्य्यायां जातः ।” इति कुल्लूकभट्टः ॥ (अयं हि बन्धुदायहारी । यथाह मनुः । ९ । १५९ ।
“औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ।
गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट् ॥”)

**गूथं**, क्ली पुं, (गवते शब्दायते गुवति पुरीषमुत्सृजतीति वा । गुङ शब्द गुशि विष्ठोत्सर्गे वा + “तिथपृष्ठ गूथ यूथ प्रीथाः ।” उणां । २ । १२ ।
इति थक् दीर्घश्च ।) विष्ठा । इत्यमरः । २ । ६ । ६८ ॥ गु इति भाषा । (शरीरादिमलेऽपि कर्णगूथादिशब्ददर्शनात् ॥)

**गूथलक्तः**, पुं, (गूथे विष्ठायां रक्तः अनुरक्त आसक्त इत्यर्थः । ततो रस्य लत्वम् ।) पक्षिविशेषः ।

चन्द्रिका ॥

**गुह्यनिष्यन्दः**, पुं, (गुह्यात् गुह्यदेशात् उपस्थ-

छिद्रादित्यर्थः निष्यन्द्यते निर्गम्यते इति ।)

मूत्रम् । इति राजनिर्घण्टः ॥

**गुह्यपुष्पः**, पुं, (गुह्यानि अदृश्यानि पुष्पाणि अस्य

इति ।) अश्वत्थवृक्षः । इति राजनिर्घण्टः ॥

**गुह्यबीजः**, पुं, (गुह्यमदृश्यं बीजमस्य ।) भू-

तृणम् । इति राजनिर्घण्टः ॥

**गुह्यभाषितं**, क्ली, (गुह्यं रहस्यं भाषितम् ।)

मन्त्रः । इति जटाधरः ॥ गुप्तवाक्यञ्च ॥

**गू**, ओ शि विट्सृजौ । इति कविकल्पद्रुमः ॥ (तुदां-

परं-सकं-अनिट् ।) ओ, गूनः । शि, गुवति

अगुवीत् । विट्सृजिर्हदनम् । इति दुर्गादासः ॥

**गूः**, पुं, गुः । विष्ठा । गूधातोः कर्म्मणि क्विप्प्रत्य-

येन निष्पन्नः ॥ (गच्छत्यपानेन देहात् । गम् +

कूः । मलोप इत्येके ॥)

**गूढं**, क्ली, (गुह + भावे क्तः ।) रहः । गुह्यम् ।

इति मदिनी । ढे । १ ॥

उपानद्गूढपादस्य सर्व्वा चर्मावृतेव भूः

॥")

**गूढपुरुषः**, पुं (गूढः गुप्तः पुरुषः छद्मवेशी राज-

प्रेरितो जनः इत्यर्थः ।) चरः । इत्यमरः ।

२ । ८ । १३ ॥

**गूढपुष्पकः**, पुं, (गूढः समावृत इव पुष्पैर्योऽसौ

इवार्थे कन् । गूढानि संवृतानि पुष्पाण्यस्य

इत्येके ।) वकुलवृक्षः । इति राजनिर्घण्टः

॥

**गूढफलः**, पुं, (गूढः संवृतप्रायः फलेनासौ । गूढं

यथा स्यात् तथा फलतीत्येके ।) वदरः ।

इति

राजनिर्घण्टः ॥

**गूढमार्गः**, पुं, (गूढः प्रच्छन्नः मार्गः ।) भुवो-

ऽन्तरमार्गः । सुडङ्ग इति भाषा ॥

तत्पर्य्यायः ।

सुरङ्गा २ सन्धिला ३ । इति हेमचन्द्रः । ४

। ५१ ॥

**गूढमैथुनः**, पुं, (गूढं अन्यैरदृश्यं मैथुनं यस्य ।)

काकः । इति त्रिकाण्डशेषः ॥

**गूढवर्च्चाः**, [स्] पुं, (गूढं वर्च्चोऽस्य ।) भेकः ।

इति त्रिकाण्डशेषः ॥

**गूढवल्लिका**, स्त्री, (गूढा वल्लिका वल्ली यस्य ।)

अङ्कोटवृक्षः । इति राजनिर्घण्टः ॥

**गूढसाक्षी**, [न्] त्रि, (गूढः प्रच्छन्नः सन् यः

अर्थिना प्रत्यर्थिवाक्यं श्रावितः तादृशः

साक्षी ।)

योऽर्थिना गूढतया प्रत्यर्थिवचनं श्रावितः

सः ।

फरियादी गोपने राखिया आसामीर कथा

याहाके शुनाइयाछे सेइ साक्षी इति भाषा ॥

गुये शालिक् इति भाषा । तत्पर्य्यायः । शर-

मल्लः २ क्षुद्रचूडः ३ साल्लिकः ४ । इति शब्द-

चन्द्रिका ॥

**गूनः**, त्रि, (गूयते पुरीषमुत्सृज्यते स्म इति ।

गु शि विष्ठोत्सर्गे + क्तः । "दुग्वोदीर्घश्चेति ।"

नत्वं दीर्घश्च ।) कृतपुरीषोत्सर्गः । तत्पर्य्यायः

।

हन्नः २ । इत्यमरः । ३ । १ । ९६ ॥

**गूर**, ङ क उद्यमे । इति कविकल्पद्रुमः ॥ (चुरां-

आत्मं-सकं सेट् ।) दीर्घी । ङ कं, भग्नेषु नो

गूरयते महोरगः । इति दुर्गादासः ॥ (तथा

च कविरहस्ये । ५१ ।

"भग्नेषु नोद्गूरयतेऽस्त्रमाहवे-

ऽयुक्तेऽपि यो नोद्गुरते स्वधर्म्मवित् ॥")

**गूर**, ई य ङ वधे । गत्याम् । इति कविकल्पद्रुमः ।

(दिवां-आत्मं-सकं-सेट् ।) दीर्घी । तथा च ।

"दीपिपूरिजनिगरिधूरयः

काशिवाशिपदिशूरितूरयः ।

घूरिजूरिखिदिविद्यतिः क्लिशि-

श्चूरिशुध्यतिमनो दिवादिषु ॥

इति रथोद्धतायां चण्डेश्वरः ।" इति दुर्गादासः

॥

**गूरणं**, क्ली, (गूर क ङ उद्यमे + भावे ल्युट् ।)

उद्यमः । इत्यमरटीकायां रायमुकुटः । ३ । २

। ११ ॥

**गूर्द्द**, क निकेतने । कूर्द्दे । इति कविकल्पद्रुमः ॥

(चुरां-परं-अकं-सेट् ।) क, गूर्द्दयति ।
इति
दुर्गादासः ॥

**गूर्द्द**, ङ कूर्द्दे । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-

अकं-सेट् ।) ङ, गूर्द्दते । इति दुर्गादासः ॥

**गूवाकः**, पुं, (गुवति पुरीषमुत्सृजत्यनेन यद्वा

गुवति बहुलभक्षणेन मुखविवरात्
पुरीषवट्टुत्-
सृजतीति । गुशि विष्ठोत्सर्गे +
"पिनाका-
दयश्च ।" उणां । ४ । १५ । इति
आकः । कुटा-
दित्वाद्गुणाभावः । निपातनात्
दीर्घत्वम् ।)
गुवाकः । इति शब्दरत्नावली ॥

**गूषणा**, स्त्री, (भूषयतीति । निपातनात् भकारस्य

गत्वम् ।) मयूरचन्द्रकः ।
मयूरपिच्छचक्रम् ।
इति शब्दचन्द्रिका ॥

**गृ**, सेके । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-

सेट् ।) गरति तरुं मेघः । इति दुर्गादासः ॥

**गृज**, ध्वनौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-

सेट् ।) सप्तमस्वरी गर्ज्जति । इति
दुर्गादासः ॥
(यथा, पूर्ब्बचातकाष्टके । ४ ।
"गर्ज्जसि मेघ ! न यच्छसि तोयं
चातकपक्षी व्याकुलितोऽहम् ।
दैवादिह यदि दक्षिणवातः
क्व त्वं क्वाहं क्व च जलपातः ॥")

**गृज**, इ ध्वनौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-

अकं-सेट् ।) सप्तमस्वरी । इ, गृञ्ज्यते ।
इति

३ । ६९ । इति सः स च कित् दकारान्तादेशश्च ।)
कन्दर्पः । इत्युणादिकोषः ॥ (त्रि, स्तुत्यः ।
यथा, ऋग्वेदे । ७ । ८७ । ५ ।
"गृत्सो राजा वरुणश्चक्र एतं दिविप्रेङ्खम् ।"
"गृत्सः स्तुत्यः ।" इति भाष्यम् ॥)

**गृध**, इर् य उ लिप्से । इति कविकल्पद्रुमः ॥ (दिवां-

परं-सकं-सेट्-क्त्वावेट् ।) इर्, अगृधत् अगर्धीत् ।
अस्मात् पुषादित्वात् नित्यं ङ इत्यन्ये । य, गृध्यति
धनं लुब्धः । उ, गर्द्धित्वा गृद्ध्वा । इति दुर्गादासः ॥

**गृधुः**, पुं, (गृध्यत्यनेनास्माद्वा इति । गृध्य इर

लिप्सायाम् + "पृभिदिव्यधिगृधिधृषिहृषिभ्यः ।"
उणां । १ । २३ । इति कुः ।) कामदेवः ।
इत्युणादिकोषः । (गृध्यति अभिलषतीति
विग्रहे वाच्यलिङ्गत्वात् ।) अभिलाषुकः । इति
संक्षिप्तसारे उणादिवृत्तिः ॥

**गृधूः**, पुं, (गृध् + बाहुलकात् कूः ।) बुद्धिः । अपा-

नम् । कुत्सितम् । इति संक्षिप्तसारे उणादि-
वृत्तिः ॥

**गृध्नुः**, त्रि, (गृध्यति कामयते लिप्सति वा धनमिति

शेषः । गृध् + त्रसिगृधिधृषिक्षिपेः क्नुः ।" ३ ।
२ । १४० ॥ इति क्नुः ।) लुब्धः । इत्यमरः ।
३ । १ । २१ ॥ (यथा, भागवते । ३ । १४ । २० ।
"न वयं प्रभवस्तां त्वामनुकर्त्तुं गृहेश्वरि ! ।
अप्यायुषा वा कार्त्स्नेन ये चान्ये गुणगृध्नवः ॥"
क्वचित् गृध्नोऽपि पाठः ॥)

**गृध्नुता**, स्त्री, (गृध्नोर्भावः इति तल् ।) लुब्धता ।

तत्पर्य्यायः । रागः २ सङ्गः ३ । इति त्रिकाण्ड-
शेषः ॥

**गृध्रः**, पुं, (गृध्यति अभिकाङ्क्षति मांसानीति ।

"सुसूधाञ् गृधिभ्यः क्रन् ।" उणां । २ । २४ ।
इति क्रन् ।) पक्षिविशेषः । गृधिनी शकुनी
इति च भाषा । तत्पर्य्यायः । दाक्षाय्यः २ वज्र-
तुण्डः ३ दूरदर्शनः ४ । इति राजनिर्घण्टः ॥
(यथा, महाभारते । ६ । ३ । ३१ ।
"गृध्रः संपतते शीर्षं जनयन् भयमुत्तमम् ॥"
इह लोके लोभवशात् यस्तु देवब्राह्मणस्वं हरति

गृध्रानां राजेति वा । "राजाहःसखिभ्यष्टच् ।"
५ । ४ । ९१ । इति टच् ।) जटायुपक्षी ।
यथा, --
"भूयः कनकपुङ्खाग्रै रक्षो वाणैरजिह्मगैः ।
निर्बिभेद सुतीक्ष्णाग्रैर्गृध्रराजं शिलाशितैः ॥"
इति रामायणम् ॥

**गृध्रसी**, स्त्री, (गृध्यति मांसमभिकाङ्क्षति सततं इति

गृध् + क्रन् । गृध्रो मांसलोलुपो मनुष्यः तं
स्यति
पीडयति नाशयति वा । सो + कः ङीष् ।)
वातरोगविशेषः । तल्लक्षणं यथा, --
"स्फिक्पूर्ब्बोरुकटीपृष्ठजानुजङ्घापदंक्रमात् ।
गृध्रसी स्तम्भरुक् तोदैर्गृह्णाति स्पन्दते मुहुः ॥
वाताद्वातकफाभ्यां सा विज्ञेया द्विविधा पुनः ।
वातजायां भवेत्तोदो देहस्यातीववक्रता ॥
जानुजङ्घोरुसन्धीनां स्फुरणं स्तम्भता भृशम् ।
वातश्लेष्मोद्भवायान्तु गौरवं वह्निमार्द्दवम् ॥
तन्द्रा मुखप्रसेकश्च भक्तद्वेषस्तथैव च ॥"
गृध्रसीवातात् केवलात् स्फिगादिपर्य्यन्तं
स्तम्भरुक्
तोदैर्गृह्णाति । क्रमात् वृद्धिक्रमात् । तेन यथा
यथा वर्द्धते तथा तथा स्फिगादीन्याक्रामति
नात्र ग्रहणे निर्द्देशक्रमनियमः । तथा मुहुः
स्पन्दते स्फिगादिषु शिराकम्पं करोतीत्यर्थः
॥ * ॥
अथ तस्याश्चिकित्सा ।
"गृध्रस्यान्तु नरं सम्यक् रेकेण वमनेन वा ।
ज्ञात्वा निरामं दीप्ताग्निं वस्तिभिः समुपाचरेत् ॥
नादौ वस्तिविधिं कुर्य्याद्यावदूर्द्ध्वं न शुध्यति ।
स्नेहो निरर्थकः स स्याद्भस्मन्येव हुतो यथा ॥ * ॥
तैलमेरण्डजं प्रातर्गोमूत्रेण पिबेन्नरः ।
मासमेकं प्रयोगोऽयं गृध्रस्यान्तु ग्रहापहः ॥ १ ॥
तैलं घृतं सार्द्रकमातुलुङ्ग-
रसं सचुक्रं सगुडं पिबेद्वा ।
कट्यूरुपृष्ठत्रिकशूलगुल्म-
गृध्रस्युदावर्त्तहरः प्रयोगः ॥ २ ॥

दुर्गादासः ॥ (ध्वनिरिह कथनमिति मत्वा
केचित् सकर्म्मकमपि वदन्ति ॥)

**गृञ्जनं**, क्ली, (गृञ्ज्यते अभक्ष्यत्वेन कथ्यते प्राण-
नाशकत्वादिति । गृजि ध्वनौ + कर्म्मणि ल्युट् ।)
विषदिग्धपशोर्म्मांसम् । इति मेदिनी । ने । ५८ ॥
(गृञ्ज्यते रोगनाशकतया भक्ष्यत्वेन कथ्यते
इति ।) मूलविशेषः । सलगम इति ख्यातः ।
तत्पर्य्यायः । शिखिमूलम् २ यवनेष्टम् ३ वर्त्तु-
लम् ४ ग्रन्थिमूलम् ५ शिखाकन्दम् ६ कन्दम् ७
डिण्डीरमोदकम् ८ । अस्य गुणाः । कटुत्वम् ।
उष्णत्वम् । कफवातरोगगुल्मनाशित्वम् । रुच्य-
त्वम् । दीपनत्वम् । हृद्यत्वम् । दुर्गन्धत्वञ्च ।
इति राजनिर्घण्टः ॥

**गृञ्जनः**, पुं, (गृञ्ज्यते अभक्ष्यत्वेन कथ्यते इति ।
गृजि + ल्युट् ।) रसोनकः । रसुन् इति भाषा ।
इति मेदिनी । ने । ५८ ॥ रक्तलशुनः । इति
राजनिर्घण्टः ॥ (अस्य अभक्षणीयत्वमुक्तं यथा,
मनौ । ५ । १९--२० ।
"छत्राकं विड्वराहञ्च लशुनं ग्रामकुक्कुटम् ।
पलाण्डुं गृञ्जनञ्चैव मत्या जग्ध्वा पतेद्द्विजः ॥
अमत्यैतानि षड्जग्ध्वा कृच्छ्रं सान्तपनञ्चरेत् ।
यतिचान्द्रायणं वापि शेषेषूपवसेदहः ॥")

**गृण्डीवः**, पुं, पृथुशृगालः । वड शेयाल इति भाषा ।

स पापात्मा परत्र गृध्रोच्छिष्टेनोपजीवति । यथाह
मनुः । ११ । २६ ।
"देवस्वं ब्राह्मणस्वं वा लोभेनोपहिनस्ति यः ।
स पापात्मा परे लोके गृध्रोच्छिष्टेन जीवति ॥")

**गृध्रनखी**, स्त्री, (गृध्रस्य नख इवाकारोऽस्त्यस्याः
इति । "अर्श आदिभ्योऽच् ।" ५ । २ । १२७ ।
इत्यच् । ततो ङीष् ।) कुलिकवृक्षः । इति रत्न-
माला ॥ कालियाकडा इति भाषा । (यथा,
सुश्रुते सूत्रस्थाने । ३८ अध्याये ।
"करमर्द्दत्रिकण्टकसैरीयकशतावरीगृध्रनख्य इति
कण्टकसंज्ञः ॥") कोलिवृक्षः । इति त्रिकाण्ड-
शेषः ॥

**गृध्रपत्रा**, स्त्री, (गृध्रस्य पत्रमिव पक्षवदित्यर्थः
पत्रमस्याः । गृध्र इव धूम्रवर्णं पत्रमस्या इत्येके ।)
धूम्रपत्रावृक्षः । इति राजनिर्घण्टः ॥

**गृध्रराजः**, पुं, (गृध्रः राजा इवेत्युपमितसमासः ।

निष्कुष्यैरण्डबीजानि पिष्ट्वा क्षीरे विपाचयेत् ।
तत्पायसं कटीशूले गृध्रस्यां परमौषधम् ॥ ३ ॥
एरण्डमूलं विल्वञ्च बृहंती कण्टकारिका ।
कषायो रुचकोपेतः पीतो वृषणवस्तिजम् ॥
गृध्रसीजं हरेच्छूलं चिरकालानुबन्धि च ॥"
रुचकं सौवर्च्चलम् ॥ ४ ॥
"गोमूत्रैरण्डतैलाभ्यां कृष्णाचूर्णं पिबेन्नरः ।
दीर्घकालोत्थितां हन्ति गृध्रसीं कफवातजाम् ॥ ५ ॥
सिंहास्यदन्तीकृतमालकानां
पिबेत् कषायं रुवु-तैलमिश्रम् ।
यो गृध्रसीनष्टगतिः प्रसुप्तः
स शीघ्रगः स्याद्धि किमत्र चित्रम् ॥ ६ ॥
बृहन्निम्बतरोः सारो वारिणा परिपेषितः ।
स पीतो नाशयेत् क्षिप्रमसाध्यामपि गृध्रसीम् ॥ ७ ॥
शेफालिकादलैः क्वाथो मृद्वग्निपरिपाचितः ।
दुर्व्वारिंगृध्रसीरोगं पीतमात्रः प्रणाशयेत् ॥"
शेफालिकानिर्गुण्डी ॥ ८ ॥
"रास्नायास्तु पलञ्चैकं पञ्च कर्षाणि गुग्गुलोः ।
सर्पिषा वटिकां कृत्वा भक्षयेद् गृध्रसीहरीम् ॥"

| | | |
|---|---|---|
| तत्पर्य्यायः । लोपाकः २ । इति हेमचन्द्रः । ४ । ३५७ ॥ (गृण्डिवोऽपि पाठः ॥)<br>**गृतसः**, पुं, (गृध्यति लिप्सत्यनेनेति । गृध् अभि- काङ्क्षायाम् + “गृधिपण्योर्दकौ च ।” उणां । | | |

इति रास्नागुग्गुलुः ॥ ९ ॥
“रास्नामृतारग्वधदेवदारु-
त्रिकण्टकैरण्डपुनर्न्नवानाम् ।
क्वाथं पिबेन्नागरचूर्णमिश्रं
जङ्घोरुपृष्ठत्रिकपार्श्वशूली ॥”
इति रास्नासप्तकक्वाथः ॥ १० ॥
“पथ्याविभीतामलकीफलानां
शतं क्रमेण द्विगुणाभिवृद्धम् ।
प्रस्थेन युक्तञ्च पलङ्कषाणां
द्रोणे जले संस्थितमेकरात्रम् ॥
अर्द्धावशेषं क्वथितं कषायं
भाण्डे पचेत्तत् पुनरेव लौहे ।
अमूनि वह्नेरवतार्य्य दद्यात्
द्रव्याणि संचूर्ण्य पलार्द्धकानि ॥
विडङ्गदन्तीत्रिफलागुडूची-
कृष्णात्रिवृन्नागरकोषणानि ।
यथेष्टचेष्टस्य नरस्य शीघ्रं
हिमाम्बुपानानि च भोजनानि ॥
निषेव्यमाणो विनिहन्ति रोगान्
स गृध्रसीं नूतनखञ्जताञ्च ।
प्लीहानमुग्रं जठराणि गुल्मं
पाण्डुत्वकण्डूवमिवातरक्तम् ॥
पथ्यादिको गुग्गुलुरेष नाम्ना
ख्यातः क्षितावप्रमितप्रभावः ।
बलेन नागेन समं मनुष्यं
जवेन कुर्य्यात्तुरगेण तुल्यम् ॥
आयुःप्रकर्षं विदधाति चक्षु-
र्ब्बलं तथा पुष्टिकरो विषघ्नः ।
क्षतस्य सन्धानकरो विशेषा-
द्रोगेषु शस्तः सकलेषु तज्ज्ञैः ॥”
इति पथ्यादिगुग्गुलुः ॥ ११ ॥
इति भावप्रकाशः ॥
(तथा च ।
“रक्तवातसमुद्भूतान् दोषान् शृणु महामते ! ।
कट्यूरुजानुमध्ये तु जायते बहुवेदना ।
गृध्रसीति विजानीयात् तेन नोक्तञ्च लक्षणम् ॥”
“शतावरी बले द्वे च पिप्पली पुष्कराह्वयम् ।
चूर्णमेरण्डतैलेन गृध्रसीमपकर्षति ॥
अजमोदादिकं चूर्णमामवाते प्रकीर्त्तितम् ।
तदत्र योजनीयञ्च गृध्रसीनां निवारणम् ॥”
इति हारीते चिकित्सितस्थाने त्रयोविंशेऽध्याये ॥
दन्यत्रावबाहुकाद्वातव्याधिचिकित्सितञ्चावे
क्षेत ॥” इति च सुश्रुते चिकित्सितस्थाने ५
मे
अध्याये ॥)

**गृध्राणी**, स्त्री, (गृध्र इव धूम्रवर्णेन अनिति प्राणि-
तीति । अन् + पचाद्यच् । गौरादित्वात्
ङीष् ।
संज्ञायां णत्वम् ।) धूम्रपत्रावृक्षः । इति
राज-
निर्घण्टः ॥

**गृष्टिः**, स्त्री, (गृह्णाति सकृद्गर्भमिति । ग्रह ञ उपा-
दाने + कर्त्तरि क्तिच् पृषोदरादित्वात् साधुः
।)
एकवारप्रसूता गौः । तत्पर्य्यायः ।
सकृत्प्रसू-
तिका २ । इति हेमचन्द्रः ॥ (यथा, महा-
भारते । १३ । ९३ । ३३ ।
“प्रष्ठौहीनां पीवराणाञ्च तावदग्र्या गृष्ट्यो
धेनवः
सुव्रताश्च ॥”
यथा च ।
“एभ्य एव स्थिरादीनि जले
पक्त्वैकविंशतिम् ।
रसे तस्मिन् पचेत् सर्पिर्गृष्टिक्षीरं चतुर्गुणम् ॥
वीराद्विमाषकाकोली स्वयं गुप्तर्षभर्द्धिभिः ॥
मेदया च समैः कल्कैस्तत् स्यात्
कल्याणकं महत् ।
बृंहणीयं विशेषेण सन्निपातहरं परम् ॥”
इति वैद्यकचक्रपाणिसंग्रहे उन्मादाधिकारे
॥
सकृत्प्रसूतस्त्रीमात्रम् । इति शब्दार्थचिन्ता-
मणिः ॥) वराहक्रान्ता । इत्यमरः । २ । ४
। १३५ ॥
वदरवृक्षः । इति मेदिनी । टे । १२ ॥
काश्मरी ।
इति राजनिर्घण्टः ॥

**गृह**, त् क ङ ग्रहे । इति कविकल्पद्रुमः ॥ (अदन्त-
चुरां-आत्मं-सकं-सेट् ।) सप्तमस्वरी । क
ङ,
स्वसराणि ४६ अमा ४७ दमे ४८ कृत्तिः
४९
योनिः ५० शरणम् ५१ वरूथम् ५२
छर्द्दिः ५३
छदिः ५४ छाया ५५ शर्म्म ५६ अज्म्
५७ ।
इति वेदनिघण्टौ ३ अध्यायः ॥ * ॥
अथ गृहारम्भकालः ।
“वैशाखश्रावणाषाढमार्गफाल्गुनकार्त्तिकाः
।
सुप्रशस्ता गृहारम्भे पत्नीपुत्त्रसमृद्धिदाः
॥
शुक्लपक्षे भवेत् सौख्यं कृष्णपक्षे
भवेद्भयम् ।
आदित्यभौमवर्जन्तु सर्व्वे वाराः शुभावहाः
॥
पूर्णिमाद्यष्टमीं यावत् पूर्ब्बास्यं वर्जयेद्
गृहम् ।
उत्तरास्यं न कुर्व्वीत नवम्यादिचतुर्द्दशीम्
॥
अमावस्याष्टमीं यावत् पश्चिमास्यं
विवर्जयेत् ।
नवम्यादि तथा याम्यां
यावच्छुक्लचतुर्द्दशीम् ॥
वज्रव्याघातशून्ये च व्यतीपातातिगण्डयोः
।
विष्कुम्भगण्डयोश्चैव गृहारम्भं न कारयेत्
॥
आदित्यद्वयरोहिणी मृगशिरो ज्येष्ठा
धनिष्ठो-
त्तरा
रेवत्याथ मघानुराधहरिभिः शुद्धैः
स्वभावा-
दिभिः ।
सौम्यानां दिवसेऽथ गण्डरहिते योगे
विरिक्ते
तिथौ
विष्टित्यक्तदिने वदन्ति मुनयो
वेश्मादिकार्य्यं
शुभम् ॥
त्रिभिस्त्रिभिर्वेश्मनि कृत्तिकाद्यै-

"पार्ष्णिं प्रत्यङ्गुलीनां या कण्डरा मारुतार्द्दिता ।
सक्थ्युत्क्षेपं निगृह्णाति गृध्रसीं तां प्रचक्षते ॥"
इति वाभटे निदानस्थाने पञ्चदशेऽध्याये ॥
"पार्ष्णी प्रत्यङ्गुलीनान्तु कण्डरा यानिलार्द्दिता ।
सक्थ्नोः क्षेपं निगृह्णीयाद् गृध्रसीति हि सा
स्मृता ॥"
इति सुश्रुते निदानस्थाने प्रथमेऽध्याये ॥
चिकित्सास्या यथा, --
"गृध्रसीविश्वाचीक्रोष्टुकशिरःखञ्जपङ्गुलवातकण्टक-
पाददाहपादहर्षावबाहुकवाधिर्य्यधमनीगतवात-
रोगेषु यथोक्तं यथोद्देशञ्च शिराव्यधं कुर्य्या-

गृहयते । ग्रहो ग्रहणम् । इति दुर्गादासः ॥

**गृहं**, क्ली, (गृह्णाति धान्यादिकं जीवनार्थं यस्मि-
न्निति । ग्रह + "गेहे कः ।" ३ । १ । १४४
। इति
कः ।) इष्टकादिरचितवासस्थानम् । घर
इति
भाषा ॥ (यथा, मनुः । २ । ३४ ।
"चतुर्थे मासि कर्त्तव्यं शिशोर्निष्क्रमणं
गृहात् ॥"
अर्द्धर्चर्चादित्वादेवायं शब्दो विभाषया
पुंसि च
वर्त्तते । तत्र बहुवचनान्त एव । यथा, --
"गृहाः पुंसि च भूम्न्येव ।" इत्यमरः ॥
अत-
एव मनौ । ४ । २५० ।
"शय्यां गृहान् कुशान् गन्धानपः पुष्पं
मणीन्
दधि ॥")
तत्पर्य्यायः । गेहम् २ उदवसितम् ३ वेश्म
४
सद्म ५ निकेतनम् ६ निशान्तम् ७ वस्त्यम्
८
सदनम् ९ भवनम् १० अगारम् ११
मन्दिरम् १२
गृहाः १३ निकाय्यः १४ निलयः १५
आलयः १६
वासः १७ कुटः १८ शाला १९ सभा २०
। इत्य-
मरः । २ । २ । ४-५ ॥ पस्त्यम् २१
सादनम् २२
आगारम् २३ कुटिः २४ कुटी २५ गेहः
२६
निकेतः २७ साला २८ मन्दिरा २९
ओकः ३० ।
इति भरतः ॥ निवासः ३१ संवासः ३२
आवासः ३३ अधिवासः ३४ निवसतिः
३५
वसतिः ३६ केतनम् ३७ । इति
शब्दरत्नावली ॥
गयः ३८ कृदरः ३९ गर्त्तः ४० हर्म्म्यम्
४१
अस्तम् ४२ दुरोणे ४३ नीलम् ४४ दुर्य्याः
४५

रुच्छेषपुत्राप्तिधनानि शोकाः ।
शत्रोर्भयं राजभयञ्च मृत्युः
सुखं प्रवासश्च नव प्रभेदाः ॥
नाशं दिशन्ति मकरालिकुलीरलग्ने
मेषे घटे धनुषि कार्म्मसुदीर्घसूत्रम् ।
कन्याझसे मिथुनके ध्रुवमर्थलाभो
ज्योतिर्व्विदः कलससिंहवृषेषु वृद्धिम् ॥"
इति युक्तिकल्पतरुः ॥ * ॥
तत्र प्रवेशकालः ।
"ज्येष्ठापुनर्व्वसूवर्जं गृहारम्भोदितञ्च यत् ।
तत् सर्व्वं चिन्तयेद्वेश्मप्रवेशे दैवचिन्तकः
॥
हस्तापुष्यपुनर्व्वसूशतभिषाज्येष्ठास्वथो
रोहिणी-
रेवत्युत्तरविष्णुवातशशभृन्मूलाधनिष्ठासु
च ।
कन्याकुम्भवृषालिसिंहमिथुनस्वर्क्षोदयेऽर्के
शुभे-
शुक्रेज्येन्दुजशीतरश्मिदिवसे वेश्मप्रवेशः
शुभः ॥
कृत्वाग्रतो द्विजवरानथ पूर्णकुम्भं
दध्यक्षताम्रदलपुष्पफलोपशोभम् ।
दत्त्वा हिरण्यवसनञ्च तथा द्विजेभ्यो
माङ्गल्यशान्तिनिलयं निलयं विशेत्तु ॥"
इति समयप्रदीपः ॥ * ॥
(गृहकरणे समयशुद्धिरुक्ता
विश्वकर्म्मप्रकाशे
द्वितीयाध्याये यथा, --
"चैत्रे व्याधिमवाप्नोति यो नवं
कारयेद्गृहम् ।
वैशाखे धनरत्नानि ज्यैष्ठे मृत्युं तथैव च ॥
आषाढे भृत्यरत्नानि पशुवर्य्यमवाप्नुयात्
।
श्रावणे मित्रलाभन्तु हानिं भाद्रपदे तथा ॥
युद्धञ्चैवाश्विने मासि कार्त्तिके
धनधान्यकम् ।
धनवृद्धिं मार्गशीर्ये पौषे तस्करतो भयम् ॥

माधे चाग्निभयं विद्याल्लक्ष्मीवृद्धिञ्च
फाल्गुने ॥”
गृहसंस्थापने
मेषादिराशिगतशुभाशुभं यथा
तत्रैव, द्वितीयाध्याये ।
“गृहसंस्थापनं सूर्य्ये मेषस्थे शुभदं
भवेत् ।
वृषस्थे धनवृद्धिः स्यान्मिथुने मरणं
भवेत् ॥
कर्कटे शुभदं प्रोक्तं सिंहे
भृत्यविवर्द्धनम् ।
कन्या रोगं तुला सौख्यं वृश्चिके
धनधान्यकम् ॥
कार्म्मुके च महाहानिर्मकरे
स्याद्धनागमः ।
कुम्भे तु रत्नलाभः स्यात् मीने
स्वप्नभयावहम् ॥
चापमीननृयुक्कन्यामासा दोषवहाः
स्मृताः ।
ज्यैष्ठोर्ज्जमाघसिंहाख्याः सौरमाने
तु शोभनाः ॥
मासे तपस्ये तपसि माधवे नभसि
त्विषे ।
ऊर्ज्जे च गृहनिर्म्माणं
पुत्त्रपौत्त्रधनप्रदम् ॥
निषिद्धेष्वपि कालेषु स्वानुकूले
शुभे दिने ।
तृणदारुगृहारम्भे मासदोषो न
विद्यते ॥
पाषाणेष्टादिगेहानि निन्द्यमासे न
कारयेत् ।
निन्द्यमासेऽपि चन्द्रस्य मासेन
शुभदं गृहम् ॥
गोचराष्टकवर्गाभ्यां वामवेधं
विचिन्तयेत् ।
दशा चान्तर्दशादीनां विचारश्चात्र
कर्म्मणि ॥
गुरुशुक्रबले विप्रान्
सूर्य्यभूमिजयोस्तथा ।
राशिसौम्यबले सौर-
वर्णानुक्रमपूर्ब्बशः ॥
सुतार्थदा तथाप्युदक् सुरेशदिक्प्लवा मही ॥”
अन्यद्विवरणन्तु तत्रैव विस्तरशो द्रष्टव्यम् ॥ * ॥
गृहकर्म्मणि वर्ज्यकाष्ठान्याह यथा, ज्योतिषतत्त्वे ।
“क्षीरिवृक्षोद्भवं दारु गृहेषु न निवेशयेत् ।
कृताधिवासं विहगैरनिलानलपीडितम् ॥
गजैर्विभग्नञ्च तथा विद्युन्निर्घातपीडितम् ।
चैत्यदेवालयोत्पन्नं वज्रभग्नं श्मशानजम् ॥
देवाद्यधिष्ठितं दारुनीपनिम्बविभीतकान् ।
कण्टकिनोऽसारतरून् वर्जयेद् गृहकर्म्मणि ॥
वटाश्वत्थौ च निर्गुण्डीं कोविदारांस्तथैव च ।
प्लक्षकं शाल्मलीञ्चैव पलाशञ्च विवर्जयेत् ॥” * ॥
गृह्यते निर्द्दिश्यतेऽनेन इति ।) नाम । (गृह्यते
स्वीक्रियते धर्म्माचरणायासौ इति ।) कलत्रम् ।
इति शब्दरत्नावली ॥ तथा च स्मृतिः ।
“न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।
तया हि सहितः सर्व्वान् पुरुषार्थान् समश्नुते ॥”

**गृहकच्छपः**, पुं, (गृहस्थितः कच्छप इव । हस्त-
पादादिरहितत्वादेवान्तर्निहितकरचरणकच्छप-
वत् प्रतीयमानत्वादस्य तथात्वम् ।) पेषणशिला ।
तत्पर्य्यायः । पेषणिः २ पेषणीपट्टः ३ गृहाश्मा ४ ।
इति शब्दरत्नावली ॥

**गृहकन्या**, स्त्री, (गृहस्थिता कन्येव । गृहपालित-
तया कन्याया इव रोगादिषु हितकारितया
चास्यास्तथात्वम् ।) घृतकुमारी । इति राज-
निर्घण्टः ॥ (अस्याः पर्य्याया यथा, --
“कुमारी गृहकन्या च कन्या घृतकुमारिका ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**गृहकपोतकः**, पुं, (गृहस्थितः गृहपालितो वा
कपोतः । ततः स्वार्थे संज्ञायां वा कन् ।) पक्षि-
विशेषः । पायरा इति भाषा ॥ तत्पर्य्यायः ।
प्रासादकुक्कुटः २ झिल्लीकण्टः ३ पारावतः ४ ।
इति त्रिकाण्डशेषः ॥ (पारावतशब्दे विवृति-
रस्य ज्ञातव्या ॥)

**गृहकर्त्ता**, पुं, (गृहं वासार्थं तृणादिरचितवेश्म
करोतीति । गृह + कृ + तृच् ।) धूसरोऽति-
सूक्ष्मश्चटकः । तत्पर्य्यायः । धान्यभक्षणः २
क्षमः ३ भीरुः ४ कृषिद्विष्टः ५ कणप्रियः ६ ।
इति राजनिर्घण्टः ॥ (गृहकारके, त्रि ॥)

**गृहकारकः**, पुं, (गृहं करोतीति । गृह + कृ +
भित्तिका ११ गृहालिका १२ । इति हेम-
चन्द्रः । ४ । ३६३ ॥

**गृहगोधिका**, स्त्री, (क्षुद्रा गोधा अल्पार्थे कः । कापि
अत इत्वं टाप् च । गृहस्य गोधिका गोधिरेव ।)
ज्येष्ठी । इत्यमरः । २ । ५ । १२ ॥ (यथा,
बृहत्संहितायाम् । ८६ । ३७ ।
“शिवा श्यामा रला छुच्छुः पिङ्गला गृहगोधिका ।
शूकरी परपुष्टा च पुन्नामानश्च वामतः ॥”
यथा च सुश्रुते कल्पस्थाने तृतीयेऽध्याये ।
“मार्ज्जारश्ववानरमकरमण्डूकपाकमत्स्यगोधा-
शम्बूकप्रचलाकगृहगोधिकाचतुष्पादकीटा-
स्तथान्ये दंष्ट्रा नखविषाः ॥”)

**गृहगोलिका**, स्त्री, (गृहे गृहस्था वा गोधिकेव ।
निपातनात् साधुः ।) ज्येष्ठी । इति हेमचन्द्रः ।
४ । ३५३ ॥

**गृहणी**, स्त्री, (गृहे नीयते क्रियते इति । नी + क्विप् ।
संज्ञायां णत्वम् ।) काञ्जिकम् । इति त्रिकाण्ड-
शेषः ॥ (विवरणमस्याः काञ्जिकशब्दे ज्ञेयम् ॥)

**गृहतटी**, स्त्री, (गृहस्य गृहे वा गृहमाश्रित्येत्यर्थः
तटीव ।) वीथी । इति हारावली । १५२ ॥
पिँडा दाओया इति च भाषा ॥

**गृहद्रुमः**, पुं, (गृहमिव द्रुमः ।) मेढशृङ्गीवृक्षः ।
इति रत्नमाला ॥

**गृहनाशनः**, पुं, (गृहं नाशयति प्रवेशेन इति ।
नश् + णिच् + ल्यु ।) कपोतः । इति राज-
निर्घण्टः ॥ (कपोतोऽत्र वनकपोतः वनकपोतस्य
प्रवेशेनैव गृहनाशित्वात् । घुघु इति यस्य भाषा ॥)

**गृहनीडः**, पुं, (गृहे नीडं कुलायोऽस्य ।) चटकः ।
इति हारावली । ८९ ॥

**गृहपतिः**, पुं, (गृहस्य पतिः ।) गृहस्थः । (यथा,
अथर्व्ववेदे । १४ । १ । ५१ ।
“भर्गस्त हस्तमग्रहीत् सविता हस्तमग्रहीत् ।
पत्नीत्वमसि धर्म्मणाहं गृहपतिस्तव ॥”)
सत्री । इति मेदिनी । ते । १९५ ॥ धर्म्मः । इति
शब्दरत्नावली ॥ (अग्निः । यथा, ऋग्वेदे । १ ।
१२ । ६ ।

गृहारम्भं प्रकुर्व्वीत वर्णनाथबले सति ।
सर्व्वेषामपि वर्णानां सूर्य्यचन्द्रबलं स्मृतम् ॥”
गृहयोग्यभूमिपरीक्षा यथा तत्रैव, १ मे अध्याये ।
“अथातः संप्रवक्ष्यामि लोकानां हितकाम्यया ।
श्वेता रक्ता तथा पीता कृष्णा वर्णानुपूर्ब्बशः ॥
सुगन्धा ब्राह्मणी भूमी रक्तगन्धा तु क्षत्त्रिणी ।
मधुगन्धा भवेद्वैश्या मद्यगन्धा च शूद्रिणी ॥
मधुरा ब्राह्मणी भूमिः कषाया क्षत्त्रिया मता ।
अम्ला वैश्या भवेद्भूमिस्तिक्ता शूद्रा प्रकीर्त्तिता ॥”
अथ भूमिभेदे फलानि यथा तत्रैव ।
“सुवर्णगन्धा सुरसा धनधान्यसुखावहा ।
व्यत्यये व्यत्ययफला ह्यतः कार्य्यं परीक्षणम् ॥
चतुरस्रा महाधन्या द्विपाभा धनदायिनी ।
सिंहाभा सद्गुणान् पुत्त्रान् वृषाभा पशुवृद्धिदा ॥
वृत्ता सद्वृत्तदा भूमिर्भद्रपीठनिभा तथा ।
त्रिशूलरूपा वीराणामुत्पत्तिधनसौख्यदा ॥
लिङ्गाभा लिङ्गिनां श्रेष्ठा प्रासादध्वजसन्निभा ।
पदोन्नतिं प्रकुरुते कुम्भाभा धनवर्द्धिनी ॥
त्रिकोणशकटाकारा सूर्पव्यजनसन्निभा ।
क्रमेण सुखसौख्यार्थधर्म्महानिकरी स्मृता ॥
मुरजा वंशहा सर्पमण्डूकाभा भयावहा ।
नैःस्वा खरानुकारा च मृत्युदाऽजगरान्विता ॥

ण्वुल् ।) वर्णसङ्करजातिविशेषः । घरामी इति भाषा ॥ यथा, पराशरपद्धतौ ।
“प्रतिमाघटकाद्वै कन्यायां नापितस्य च ।
सूत्रकारस्य सम्भूतिः सोपानगृहकारकः ॥”

**गृहकारी**, [न्] (गृहं करोतीति । गृह + कृ + णिनिः ।) कीटविशेषः । कुमिरपोका इति भाषा ॥ इति केचित् ॥ (यथा, मनुः । १२ । ६६ ।
“वको भवति हृत्वाग्निं गृहकारी ह्युपस्करम् ॥”)

**गृहगोधा**, स्त्री, (गृहे गृहस्थिता गोधेव ।) ज्येष्ठी । जेठी टिक्टिकी इति च भाषा ॥ तत्पर्य्यायः । पल्ली २ मुषली ३ विशम्बरा ४ ज्येष्ठा ५ कुड्य-मत्स्यः ६ पल्लिका ७ गृहगोधिका ८ । इति राजनिर्घण्ठः ॥ गृहगोलिका ९ माणिक्या १०

“अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा ॥”) स्त्री, गृहस्य पतिः “विभाषा सपूर्ब्बस्य ।” ४ । १ ३४ । इति वा नान्तादेशे गृहपत्नी गृहपतिरिति रूपद्वयम् । गृहस्वामिनी ॥)

**गृहपोतकः**, पुं, (गृहं पोतः शिशुरिव यस्य इति कप् ।) वास्तुः । वाटी । इति शब्दरत्नावली ॥

**गृहबलिप्रियः**, पुं, (गृहबलिः प्रियोऽस्य । गृह-बलीनां प्रिय इत्येके ।) वकपक्षी । इति शब्द-रत्नावली ॥ (काकादयोऽपि ॥)

**गृहबलिभुक्**, [ज्] पुं, (गृहे दत्तं बलिं अन्नादि-भक्ष्यद्रव्यं भुङ्क्ते इति । भुज् + क्विप् ।) चटकः । इति हेमचन्द्रः । ४ । ३९३ ॥ वकः । काकः । इति केचित् ॥

**गृहभूमिः**, स्त्री, (गृहयोग्या भूमिः ।) वास्तुः । वेश्मभूः । इति हलायुधः ॥ (अस्याः लक्षणा-दिकं गृहशब्दे द्रष्टव्यम् ॥)

| | | |
|---|---|---|
| चिपिटा पौरुषैर्हीना मुरजाभा तथैव च ।<br>काकोलूकनिभास्तद्वत् दुःखशोकभयप्रदा ॥<br>सर्पाभा पुत्रपौत्रघ्नी वंशाभा वंशहानिदा ।<br>शूकरोष्ट्राजसदृशी धनुःपरशुरूपिणी ।<br>कुचित्तान् मलिनान् मूर्खान् ब्रह्मघ्नान् जनयेत् सुतान् ॥<br>कृकलासशवाकारां मृतपुत्रधनार्त्तिदाम् ।<br>दुर्गभ्यां पापिनीं दुष्टप्रजां भूमिं परित्यजेत् ॥<br>मनोरमा सुतप्रदा दृढा धनप्रदा मता । | | |

**गृहमणिः**, पुं, (गृहे मणिरिव ।) प्रदीपः । इति हेमचन्द्रः । ३ । ३५१ ॥

**गृहमाचिका**, स्त्री, (गृहे मचते शठति गुप्तभावेन तिष्ठतीति । मच् + "ण्वुल् तृचौ" । ३ । १ । १३३ ।
इति ण्वुल् । ततष्टाप् । कापि अत इत्वञ्च ।) चर्म्मचटी । इति त्रिकाण्डशेषः ॥ चामचिका इति भाषा ॥

**गृहमृगः**, पुं, (गृहे मृग इव । यद्वा, गृहस्थितो मृगः पशुः ।) कुक्कुरः । इति हेमचन्द्रः । ४ । ३४५ ॥

**गृहमेधी**, [न्] पुं, (गृहैदरैर्मेधते सङ्गच्छते इति । गृह + मेधृ सङ्गमे + "सुप्यजाताविति ।" ३ । २ । ७८ । इति णिनिः ।) गृहस्थः । इति हेमचन्द्रः । ३ । ४७२ ॥ (यथा, मनुः । ४ । ३१ ।
"वेदविद्याव्रतस्नातान् श्रोत्रियान् गृहमेधिनः ।
पूजयेद्धव्यकव्येन विपरीतांश्च वर्ज्जयेत् ॥")

**गृहमेधिनी**, स्त्री (गृहं मेधते पुनाति शास्त्रोक्तदान-दयादाक्षिण्यादिना सङ्गच्छते इत्यर्थः । गृह + मेध
+ णिनिः । ततो ङीप् ।) सात्विकी बुद्धिः । इति महाभारतम् ॥ (गृहमेधिन् + स्त्रियां ङीप् ।) गृहस्थपत्नीच ॥

**गृहयाय्यः**, पुं, (गृह ग्रहणे । गृहयते इति । गृह + "श्रुदक्षिस्पृहिगृहिभ्य आय्यः ।" उणां । ३ । ९६ । इति आय्यः । ततः "अयामन्तेति ।" ६ । ४ ।
५५ । इति णेरयादेशः ।) गृहस्थः । इत्युणादि-कोषः ॥

**गृहयालुः**, पुं, (गृहयते गृह्णातीति । गृह + "स्पृहि-गृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्यआलुच् ।" ३ । २ । १५८ । इति आलुच् । "अयामन्तेति ।" ६ । ४ । ५५ । इति णेरयादेशः ।) गृहीता । ग्रहणशीलः । इत्यमरः । ३ । १ । २७ ॥

**गृहवाटिका**, स्त्री, (गृहसमीपस्था वाटिका आरामः ।) गृहसमीपवनम् । इति हारा-

पञ्चभिश्च महायज्ञैः श्रद्दधानो यजेदिह ॥
देवतातिथिशिष्टाशी निरतो वेदकर्म्मसु ।
इज्याप्रदानयुक्तश्च यथाशक्ति यथाविधि ॥
न पाणिपादचपलो न नेत्रचपलो मुनिः ।
न च वागङ्गचपल इति शिष्टस्य गोचरः ॥
नित्यं यज्ञोपवीती स्यात् शुक्लवासाः शुचिव्रतः ।
नियतो दमदानाभ्यां सदा शिष्टैश्च संविशेत् ॥
जितशिश्नोदरो मैत्रः शिष्टाचारसमन्वितः ।
वैणवीं धारयेद्यष्टिं सोदकञ्च कमण्डलुम् ॥
अधीत्याध्यापनं कुर्य्यात् तथा यजनयाजने ।
दानं प्रतिग्रहञ्चापि षड्गुणां वृत्तिमाचरेत् ॥
त्रीणि कर्म्माणि यानीह ब्राह्मणानान्तु जीविका ।
याजनाध्यापने चोभे शुद्धाच्चापि प्रतिग्रहः ॥
अथ शेषाणि चान्यानि त्रीणि कर्म्माणि यानि तु ।
दानमध्ययनं यज्ञो धर्म्मयुक्तानि तानि तु ॥
तेध्वप्रमादं कुर्व्वीत त्रिषु कर्म्मसु धर्म्मवित् ।
दान्तो मैत्रः क्षमायुक्तः सर्व्वभूतसमो मुनिः ॥
सर्व्वमेतद् यथाशक्ति विप्रो निर्व्वर्त्तयन् शुचिः ।
एवं युक्तो जयेत् स्वर्गं गृहस्थः संशितव्रतः ॥"
इत्थाश्वमेधिकपर्व्व ॥
"सर्व्वेषामाश्रमाणान्तु द्वैविध्यन्तु चतुर्व्विधम् ।
ब्रह्मचार्य्युपकुर्व्वाणो नैष्ठिको ब्रह्मतत्परः ॥
योऽधीत्य विधिवद्वेदान् गृहस्थाश्रममाव्रजेत् ।
उपकुर्व्वाणको ज्ञेयो नैष्ठिको मरणान्तिकः ॥
अग्नयोऽतिथिश्रुश्रूषा यज्ञो दानं सुरार्च्चनम् ।
गृहस्थस्य समासेन धर्म्मोऽयं द्विजसत्तमाः ॥

"शय्यां गृहान् कुशान् गन्धानपः पुष्पं मणीन् दधि ।
धाना मत्स्यान् पयो मांसं शाकञ्चैव न निर्णुदेत् ॥"
गृह्यन्ते धर्म्माचरणाय इति । ग्रह + कः ।) दाराः । इत्यमरः । २ । २ । ५ ॥
नित्यबहुवच-नान्तोऽयं शब्दः ॥

**गृहागतः**, पुं, (गृहमागतः । आ + गम् + कर्त्तरि क्तः ।) अतिथिः । इत्यमरः । २ । ७ । ३४ ॥ (गृहमागते, त्रि । यथा, हितोपदेशे ।
"नाहं गृहागतं हन्मि ॥")

**गृहाधिपः**, पुं, (गृहस्य अधिपः ।) गृहस्थः । इति हलायुधः ॥

**गृहाम्लं**, क्ली, (गृहे पर्य्युषितान्नादिना प्रस्तुतीकृत-मम्लम् ।) काञ्जिकम् । इति त्रिकाण्डशेषः ॥

**गृहायनिकः**, पुं, (गृहरूपमयनं विद्यतेऽस्य इति ठन् ।) गृहस्थः । इति शब्दरत्नावली ॥

**गृहारामः**, पुं, (गृहस्य गृहे गृहसमीपस्थो वा आरामः ।) गृहसमीपे कृत्रिमवनम् । तत्-पर्य्यायः । निष्कुटः २ । इत्यमरः । २ । ४ । १ ॥

**गृहालिका**, स्त्री, (गृहे आलिरिव कायते प्रका-शते इति । गृहालि + कै + कः । ततष्टाप् ।) ज्येष्ठी । इति हारावली । १८४ ॥

**गृहावग्रहणी**, स्त्री, (गृहमवगृह्यतेऽनया इति । अव + ग्रह् + करणे ल्युट् । ततो ङीप् ।) देहली ।
इत्यमरः । २ । २ । १३ । हातिना दाओया इति च भाषा ॥

**गृहाशया**, स्त्री, (गृहे इव छायायुक्तस्थाने आशेते इति । आ + शी + अच् । ततः स्त्रियां टाप् ।) ताम्बूली । इति शब्दचन्द्रिका ॥ पानेर गाछ इति भाषा ॥

**गृहाश्मा**, [न्] पुं, (गृहरक्षितोऽश्मा अश्म-

वली । १६८ ॥

**गृहस्थः**, पुं, ("न गृहं गृहमित्याहुर्गृहिणी गृह-
मुच्यते ।" अतएव गृहेषु दारेषु तिष्ठति अभि-
रमते इति । गृह + स्था + "सुपि स्थः ।" ३ । २ । ४ ।
इति कः ।) गृही । द्बितीयाश्रमी । तत्पर्य्यायः ।
ज्येष्ठाश्रमी २ गृहमेधी ३ स्नातकः ४ गृही ५ ।
इति हेमचन्द्रः । ३ । ४७१ ॥ गृहपतिः ६
सत्री ७ । इत्यमरः । २ । ८ । १५ ॥ गृहयाय्यः ८ ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ गृहा-
धिपः ९ । इति हलायुधः ॥ कुटुम्बी १० । इति
जटाधरः ॥ गृहायनिकः ११ । इति शब्दरत्ना-
वली ॥ * ॥ तस्य धर्म्मो यथा, --
"गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः ।
चत्वार आश्रमाः प्रोक्ताः सर्व्वे गार्हस्थ्यमूलकाः ॥
यः कश्चिदिह लोकेऽस्मिन्नागमः संप्रकीर्त्तितः ।
तस्यात्र गमनं श्रेयः कीर्त्तिरिषा सनातनी ॥
संस्कारैः संस्कृतः पूर्ब्बं यथावच्चरितव्रतः ।
जातौ गुणविशिष्टायां समावर्त्तेत वेदवित् ॥
स्वदारनिरतो नित्यं शिष्टाचारो जितेन्द्रियः ।
उदासीनः साधकश्च गृहस्थो द्बिविधो भवेत् ।
कुटुम्बभरणे युक्तः साधकोऽसौ गृही भवेत् ॥
ऋणानि त्रीण्युपाकृत्य त्यक्त्वा भार्य्याधनादिकम् ।
एकाकी विचरेद् यस्तु उदासीनः स मौक्षिकः ॥"
इति गारुडे ४९ अध्यायः ॥
बाहुल्यन्तु तत्रैव । ५० । ५१ ।
अध्याययोर्द्रष्टव्यम् ॥ * ॥
गृहस्थब्राह्मणधर्म्मो यथा, --
"चतुर्थमायुषो भागमुषित्वाद्यं गुरौ द्बिजः ।
द्बितीयमायुषो भागं कृतदारो गृहे वसेत् ॥
अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः ।
या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि ॥
यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्म्मभिरगर्हितैः ।
अक्लेशेन शरीरस्य कुर्व्वीत धनसञ्चयम् ॥
ऋतामृताभ्याञ्जीवेत्तु मृतेन प्रमृतेन वा ।
सत्यानृताभ्यामपि वा न श्ववृत्त्या कदाचन ॥
ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् ।
मृतन्तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम् ॥
सत्यानृतन्तु वाणिज्यं तेन चैवापि जीव्यते ।
सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्ज्जयेत् ॥"
इत्यादि मानवे ४ अध्यायः ॥

**गृहस्थूणं**, क्ली, (गृहस्य गृहावलम्बनार्था स्थूणा ।
अभिधानात् क्लीवत्वम् ।) गृहस्तम्भः । इत्य-
मरः । ३ । ५ । ३० ॥

**गृहाः**, पुं, (गृह्णन्ति ध्यानादिकं इति । ग्रह् + "गेहे
कः ।" ३ । १ । १४४ । इति कः ।) गृहम् । (यथा,
मनुः । ४ । २५० ।
निर्म्मितपेषणशिलाविशेषः ।) पेषणशिला । इति
शब्दरत्नावली । शिल इति भाषा ॥

**गृहिणी**, स्त्री, (गृहस्वामित्वमस्त्यस्याः । इति
इनिः ङीप् च ।) भार्य्या । इति हेमचन्द्रः ।
३ । १७६ । (यथा, रघौ । ८ । ६७ ।
"गृहिणी सचिवः सखी मिथः
प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना-
हरता त्वां वद किं न मे हृतम् ॥"
गृहं गृहकार्य्यं साध्यतयाऽस्त्यस्या इति इनिः
ङीप् च । गृहकर्म्मकुशला स्त्री । यथा, शकु-
न्तलायां चतुर्थाङ्के ।
"शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्त्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥)

**गृही**, [न्] पुं, (गृहा दारा विद्यन्तेऽस्य इति इनिः ।)
गृहस्थः । इत्यमरः । २ । ७ । ३ ॥ भर्त्ता । इति
राजनिर्घण्टः ॥ (यथा भागवते । ३ । ३० । ९ ।
"गृहेषु कूटधर्म्मेषु दुःखतन्त्रेष्वतन्द्रितः ।
कुर्व्वन् दुःखप्रतीकारं सुखवन्मन्यते गृही ॥")

**गृहीतं**, त्रि, (ग्रह + कर्म्मणि क्तः ।) स्वीकृतम् ।
प्राप्तम् । ज्ञातम् । धृतम् । यथा, हितोपदेशे । १ । ३ ।
"अजरामरवत् प्राज्ञो विद्यामर्थञ्च चिन्तयेत् ।
गृहीत इव केषेषु मृत्युना धर्म्ममाचरेत् ॥"

**गृहीतदिक्**, [श्] त्रि, (गृहीता आश्रिता दिक्
हन्तुः प्रहर्त्तुर्वा भयाद्येन ।) पलायितः । तिरो-
हितः । इति हेमचन्द्रः । ३ । ४६९ ॥

**गृहोलिका**, स्त्री, (गृहे वलते चलतीति । गृह + वल
+ कुन् । बाहुलकात् सम्प्रसारणम् । तेन वस्य
उत्वम् ।) ज्येष्ठी । इति हेमचन्द्रः । ४ । ६८ ॥

**गृह्यं**, क्ली, (गृह्यते आक्रम्यते अर्श-आदिभी रोगै-
रिति । ग्रह + "पदास्वैरिवाह्यापक्षेषु च ।"
३ । १ । ११९ । इति क्यप् ।) गुदम् । (गृह्यन्ते
संगृह्यन्ते सामवेदाद्युक्तानि कर्म्मविधानान्यत्र
इति । ग्रह + क्यप् ।) कात्यायनग भिलादिकृत-
सूत्रग्रन्थभेदः । इति मेदिनी । रे । १९ ॥ तत्र तु
गोभिलादिकृत्तसामवेदाद्यक्तकर्म्मकाण्डनिर्णयः ॥

**गृह्यः**, पुं, (गृह्यते मानवेनेति । ग्रह + "पदास्वैरि-
वाह्यापक्ष्येषु च" । ३ । १ । ११९ । इति क्यप् ।
पञ्जरादिबन्धनेन परस्वीकृतत्वादस्य तथात्वम् ।)
गृहासक्तमृगादिः । इति मेदिनी । वे । १८ ॥
(अग्निः । यथा, मनौ । ३ । ८४ ।
"वैश्वदेवस्य सिद्धस्य गृह्येऽग्नौ विधिपूर्ब्बकम् ।
आभ्यः कुर्य्याद्देवताभ्यो ब्राह्मणो होममन्व-
हम् ॥")

**गृह्यः**, त्रि, (गृह्यते स्वाम्यादिभिरिति । ग्रह + क्यप् ।)
अस्वैरी । अस्वतन्त्रः । पक्षः । इति विश्व-
मेदिन्यौ ॥ (यथा, भारविः । २ । ५ ।
"ननु वक्तृविशेषनिस्पृहा
गुणगृह्या वचने विपश्चितः ॥"
गृहे भव इति यत् । गृहोत्पन्नवस्तु ॥)

**गृह्यकः**, त्रि, (गृह्य + स्वार्थे अनुकम्पायां वा कन् ।)
अस्वतन्त्रः । पराधीनः । इत्यमरः । ३ । १ । १६ ॥

**गृह्यकः**, पुं, (गृह्य + स्वार्थे अनुकम्पायां वा कन् ।)
गृहासक्तपक्षिमृगादिः । तत्पर्य्यायः । छेकः २ ।
इत्यमरः । २ । ६ । ४३ ॥

**गेण्डुः**, पुं, (गच्छतीति । गम् + डः । गो गन्ता । ग
इन्दुरिवेति गेन्दुः पृषोदरादित्वात् दस्य
डत्वे
साधुः ।) गेण्डुकः । इति भरतो
द्विरूपकोषश्च ॥
(गेन्दुरपि च दृश्यते ॥)

**गेण्डुकः**, पुं, (ग इन्दुरिवेत्यतः इवे प्रतिकृताविति-
कन् । अत्र गेन्दुकोऽपि पाठः ।) कन्दुकः
।
इत्यमरः । २ । ७ । १३८ ॥ गैंडु इति
गैंद ।
इति च भाषा ॥

**गेण्डूकः**, पुं, (गेण्डुकः ततः पृषोदरादित्वात् दीर्घः
।
अत्र गेन्दूकोपि पाठः ।) गेण्डुकः । इति
जटा
धरः ॥

**गेद**, ऋ ङ उ गतौ । चाले । इति कविकल्प-
द्रुमः ॥ (भ्वां-आत्मं-सकं-सेट् ॥)

**गेप**, ङ ऋ गतिचालयोः । (भ्वां-आत्मं-सकं-सेट् ।)
ङ, गेपते । ऋ, अजिगेपत् । इति
दुर्गादासः ॥

**गेयं**, क्ली, (गै + "अचो यत् ।" ३ । १ । ९७ ।
इति
यत् । "ईद्यति ।" ६ । ४ । ६५ । इति
आत
ईत्वम् । ततो गुणश्च । गीतम् । इति
मेदिनी ।
गे । २० ॥ (यथा, माघे । २ । ७२ ।
"वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव ।
अनन्ता वाङ्मयस्याहो गेयस्येव विचित्रता
॥")

**गेयः**, त्रि, (गै + यत् । तत आत ईत्वम् ।) गातव्यः
।
गायनः । इति मेदिनी । गे । २० ॥ (यथा
हरि-
वंशे हरिवंशपर्व्वणि । ५० । ४१ ।
"इमे त्वां मुनयः सप्त सहिता मुनिमण्डलैः
।
एव गर्ज्जनं नान्यत्र अतस्तथात्वम् ।)
कापुरुषः ।
तत्पर्य्यायः । गेहेशूरः २ पिण्डीशूरः ३ ।
इति हेमचन्द्रः । ३ । १४१ ॥

**गेहेशूरः**, पुं, (गेहे एव शूरः । अलुक् समासः ।
अन्यत्र शूरत्वाभावादस्य तथात्वम् ।)
गृहेनर्द्दी ।
इति हेमचन्द्रः । ३ । १४१ ॥

**गै**, गाने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-
अनिट् ।) गीतं गायति गायनः । इति दुर्गा-
दासः ॥

**गैरिकं**, क्ली, (गिरौ भवमिति अध्यात्मादित्वात्
ढञ् ।) स्वर्णम् । रक्तवर्णधातुविशेषः ।
गिरि-
माटी इति भाषा ॥ तत्पर्य्यायः । रक्तधातुः
२
गिरिधातुः ३ गवेधुकम् ४ धातुः ५ सुरङ्ग-
धातुः ६ गिरिमृद्भवम् ७ । इति राजनिर्घण्टः
॥
वनालक्तम् ८ गवेरुकम् ९ प्रत्यश्मा १०
गिरि-
मृत् ११ । इति त्रिकाण्डशेषः ॥ लोहित-
मृत्तिका १२ गिरिजम् १३ ॥ पीतगैरिकस्य
पर्य्यायः । सुवर्णगैरिकम् १ सुवर्णम् २
स्वर्ण-
गैरिकम् ३ । इति रत्नमाला ॥ स्वर्णधातुः
४ सुर-
क्तकः ५ सन्ध्याभ्रम् ६ वभ्रुधातुः ७ शिला-
धातुः ८ । अनयोर्गुणाः । मधुरत्वम् । शीत-
त्वम् । कषायत्वम् । व्रणरोपणत्वम् ।
विस्फोटा-
र्शोऽग्निदाहनाशित्वम् । स्वर्णवर्णादिकं
शुभम् ।
इति राजनिर्घण्टः ॥ निर्म्मलत्वम् ।
स्निग्धत्वम् ।
सुवर्णगैरिकं तद्वत्
विशेषतश्चक्षुस्तेजस्कारित्वम् ।
इति राजवल्लभः ॥
"गैरिकं रक्तधातुश्च गैरेयं गिरिजन्तथा ।

**गृह्या**, स्त्री, (गृह्यते नृपेणेति । ग्रह् + क्यप् + टाप् ।)

शाखापुरम् । नगरनिकटस्थग्रामः । इत्यमरः ॥

**गॄ**, क ङ विज्ञापे । विज्ञाने । इति कविकल्पद्रुमः ॥

(चुरां-आत्मं-सकं-सेट् ।) विज्ञापो विज्ञापनम् ।
क ङ, गारयते सूक्ष्ममर्थं सुधीः । इति दुर्गा-
दासः ॥

**गॄ**, गि शब्दे । इति कविकल्पद्रुमः ॥ (क्र्यां-परं-

सकं-सेट् ।) शब्द इह व्यक्तवाक्यम् । गि, गृणाति
वाक्यं लोकः । गीर्णः गीर्णिः । इति दुर्गादासः ॥

**गॄ**, श निगरणे । इति कविकल्पद्रुमः ॥ (तुदां-परं-

सकं-सेट् ।) निगरणं भक्षणम् । श, गिरत्यन्नं
लोकः । दैवात्ततो विगलितो गिलितो वकेन
इति तु अस्मात् कृद्धोः कभावे इति भावे
कप्रत्यये ऋदिरणाविति इरि वक्तव्याद्रेफस्य
लकारे गिल इति स्थिते लेः कृत्याख्याने इति ञौ
कर्म्मणि क्ते, सिद्धम् । इति दुर्गादासः ॥

स्तुवन्ति देवदिव्याभिर्गेयाभिर्गीर्भिरञ्जसा
॥”)

**गेव**, ऋ ङ सेवने । इति कविकल्पद्रुमः ॥ (भ्वां-

आत्मं-सकं-सेट् ।) ऋ, अजिगेवत् । ङ,
गेवते ।
इति दुर्गादासः ॥

**गेष**, ऋ ङ अन्वेषे । इति कविकल्पद्रुमः ॥ (भ्वां-

आत्मं-सकं-सेट् ।) ऋ, अजिगेषत् । ङ,
गेषते ।
जिगेषे । अन्वेषोऽनुसन्धानम् । इति
दुर्गादासः ॥

**गेष्णः**, पुं, (गायतीति । गै + “इष्णो गादाभ्यां

किद्वा ।” इत्युणादिकोषटीकाकारसूत्रात्
इष्णः ।)
रङ्गोपजीवी । सामगानकर्त्ता ।
इत्युणादिकोषः ॥

**गेष्णुः**, पुं, (गायतीति । गै गाने + “गादाभ्या-

मिष्णुच् ।” उणां । ३ । १६ । इति इष्णुच्
।)
गायनः । नटः । इति मेदिनी । णे । ११
॥
सामगानकर्त्ता च ॥

**गेहं**, क्ली, (गो गन्धर्व्वो गणेशश्च । गेन गन्धर्व्वेण

गणेशेन वा ईह्यते काम्यते इति । ग + ईह
+
कर्म्मणि घञ् । यद्वा, गो गन्धर्व्वो गणेशो
वा
ईहः ईप्सितो यस्मिन् ।) गृहम् । इत्यमरः
।
२ । २ । ४ ॥ (यथा, हितोपदेशे ।
“तृणानि भूमिरुदकं वाक् चतुर्थी च
सूनृता ।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन
॥”)

**गेही**, [न्] त्रि, (गेहमस्त्यस्येति । गेह + इनिः ।)

गृही ॥ (स्त्रियां ङीप् । गृहिणी । यथा,
आर्य्या-
सप्तसती । १९९ ।
“गेहिण्याः शृण्वन्ती
गोत्रस्खलितापराधतोमानम्॥”)

सुवर्णगैरिकन्त्वन्यत्ततो रक्ततरं हि तत् ॥
गैरिकद्वितयं स्निग्धं मधुरन्तुवरं हिमम् ।
चक्षुष्यं दाहपित्तास्रकफहिक्काविषापहम्
॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**गैरिकाक्षः**, पुं, (गैरिकमिव रक्तवर्णमक्षि पुष्प-

रूपनयनं यस्य ।) जलमधूकवृक्षः । इति
राज-
निर्घण्टः ॥

**गैरी**, स्त्री, (गिरौ भवः । गिरि + अण् । गौरादि-

त्वाद् ङीष् ।) लाङ्गलिकीवृक्षः । इति
रत्नमाला ॥
(लाङ्गलिकीशब्देऽस्या गुणादयो ज्ञातव्याः
॥)
विषलाङ्गला इति भाषा ॥

**गैरेयं**, क्ली, (गिरौ भवमिति । गिरि + ढक् ।)

शिलाजतु । इत्यमरः । २ । ९ । १०४ ॥
(यथास्य
पर्य्यायाः ।
“शिलाजत्वद्रिजतु च शैलनिर्य्यास इत्यपि
।
गैरयमश्मजञ्चापि गिरिजं शैलधातुजम् ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥
गुणास्तु शिलाजतुशब्दे ज्ञेयाः ॥) गिरिजाते
त्रि ॥

**गोकण्टकः**, पुं, (गोः पृथिआः कण्टक इव ।)

गोक्षुरकवृक्षः । (अस्य पर्य्याया यथा, --
“गोक्षुरः क्षुरकोऽपि स्यात् त्रिकण्टः स्वादु-
कण्टकः ।
गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि ॥
पलङ्कषा श्वदंष्ट्रा च तथा स्यादिक्षुगन्धिका
॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

स्थपुटः । गवां खुरम् । इति विश्वमेदिन्यौ ॥
गोखुरैः स्थपुटीकृतः । इति हेमचन्द्रः ॥ विक-
ण्टकवृक्षः । इति राजनिर्घण्टः ॥

**गोकर्णः**, पुं, (गोः कर्ण इव । तत्तुल्यपरिमाण-
वत्त्वादस्य तथात्वम् ।) परिमाणविशेषः स तु
अनामिकायुक्तविस्तृताङ्गुष्ठम् । (गोः कर्णाविव
कर्णौ यस्य ।) मृगभेदः । इत्यमरः । २ । ५ ।
१० ॥
(यथा च अनर्घराघवे । २ । २३ ।
"मुनिविनियोगविलूनप्ररूढमूञ्ज्ञाद्वलानि
बर्हींषि ।
गोकर्णतर्णकोऽयं तर्णोत्युपकण्टकच्छेषु ॥"
अस्य मांसगुणा यथा, --
"गोकर्णमांसं मधुरं स्निग्धं मृदु कफापहम् ।
विपाके मधुरञ्चापि रक्तपित्तविनाशनम् ॥"
इति सुश्रुते सूत्रस्थाने ६४ अध्यायः ॥)
अश्वतरः । (गौश्चक्षुरेव कर्णो यस्य ।) सर्पभेदः
।
(गोरिव कर्णौ यस्य ।) गणदेवताविशेषः ।
इति मेदिनी । णे । ४६ ॥ तीर्थविशेषः । यथा,
भागवते ।
"ततोऽभिव्रज्य भगवान् केरलांस्तु त्रिगर्त्तकान्
।
गोकर्णाख्यं शिवक्षेत्रं सान्निध्यं यत्र धूर्जटेः ॥"
(पीठस्थानम् । यथा, देवीभागवते । ७ । ३० ।
६० ।
"केदारपीठे सम्प्रोक्ता देवीसन्मार्गदायिनी ।
मन्दा हिमवतः पृष्ठे गोकर्णे भद्रकर्णिका ॥")

**गोकर्णी**, स्त्री, (गोः कर्ण इव पत्रमस्याः । "पाक-
कर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च ।" ४ ।
१ ।
६४ । इति ङीष् ।) मूर्व्वालता । इत्यमरः ।
२ । ४ । ८४ ॥ (विवृतिरस्या मूर्व्वाशब्दे
ज्ञातव्या ॥)

**गोकिराटिका**, स्त्री, (गांवाचं किरति रटतीत्यर्थः ।
कृ + "इगुपधज्ञाप्रीकिरः कः ।" ३ । १ ।
१३५ ।
इति कः । ततष्टाप् गोकिरा । तथा सती
जानुभ्यां सह पाणिभ्यां रिङ्गमाणौ विजहतुः ॥"
इति श्रीभागवतम् ॥
(अत्र प्रदेशे महादेवो गोपीश्वर इत्याख्यया
प्रसिद्धो विराजते । यदुक्तं महालिङ्गेश्वरतन्त्रे
शिवशतनामस्तोत्रे, --
"गोकुले गीपिनीपूज्यो गोपीश्वर इतीरितः ॥"
पुं, स्वनामख्यातः पण्डितविशेषः । अयन्तु
सप्त-
दशशतपरिमितशकाब्दसम्बत्सरप्रारम्भएव
मिथिलादेशान्तर्वर्त्तिनि 'मगरौणी' संज्ञकग्रामे
विद्यानिधिपीताम्बरपण्डितात्जातः इति
मैथिलाः । अद्यावधि ज्ञाता अनेन विरचिता
ग्रन्थास्त्वेते । १ दीधितिविद्योतः (शिरोमणि-
टीका ।) २ न्यायसिद्धान्ततत्त्वम् । ३
पदवाक्य-
रत्नाकरः । ४ मासमीमांसा । ५ मिथ्यात्व-
निरुक्तिः । ६ रश्मिचक्रम् (चिन्तामणिटीका ।
७ रसमहार्णवः । ८ लाघवगौरवरहस्यम् ।
९ शिवशतकम् ॥)

**गोकुलिकः**, त्रि, (गोर्नेत्रस्य कुलं चञ्चलभावः
प्रखरदृष्टिचातुर्य्यमित्यर्थः । तदस्यास्तीति ।
"अत इनिठनौ ।" ५ । २ । ११६ । इति ठन्
।)
केकरः । (पङ्कपतिते गवि कुलिकः उपेक्षक-
त्वात् जड इव ।) पङ्कस्थगव्युपेक्षकः । इति
मेदिनी । के । १८६ ॥

**गोकृतं**, क्ली, (गोभिः कृतम् उच्चरितम् । कृ +
भावे क्तः । कृद्विहितो भावो द्रव्यवत् प्रका-
शते इति न्यायात् गोपुरीषमित्यर्थः ।) गोमयम्
।
इति शब्दचन्द्रिका ॥

**गोक्षुरः**, पुं, (क्षुरति विलिखतीति । क्षुर विले-
खने + "इगुपधज्ञेति ।" ३ । १ । १३५ । इति
कः । ततो गोः पृथिव्याः क्षुरः अस्त्रविशेष
इव । बहुकण्टकाकीर्णत्वात् तथात्वम् ।) क्षुद्र-
क्षुपविशेषः । स तु क्षुद्रबृहद्भेदेन द्विविधः ।
गोखुरि इति गोखुरु इति च भाषा ॥ तत्-
पर्य्यायः । त्रिकण्टः २ स्थलशृङ्गाटः ३
गोकण्टः ४

**गोक्षुरकः**, पुं, (गोक्षुर + स्वार्थे कन् ।) गोक्षुरः ।
इत्यमरः । २ । ४ । ९८ ॥ (अस्य पर्य्याया
यथा, --
"गोक्षुरः क्षुरकोऽपि स्यात् त्रिकण्टः स्वादु-
कण्टकः ।
गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि ।
पलङ्कषा श्वदंष्ट्रा च तथा स्यादिक्षुगन्धिका
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥
यथा, च सुश्रुते चिकित्सितस्थाने षड्विंशे-
ऽध्याये ॥
"गुप्ताफलं गोक्षुरकाच्च बीजं
तथोच्चटां गोपयसा विपाच्य ।
खजाहतं शर्करया च युक्तं
पीत्वा नरो हृष्यति सर्व्वरात्रम् ॥")

**गोखुरः**, पुं, (खुरति विलिखतीति । खुरः अस्त्र-
विशेषः । गोः पृथिव्याः खुर इव ।) गोक्षुर-
वृक्षः । इति शब्दरत्नावली ॥ (गवां खुरम्
।)
गवां शफे क्ली ॥

**गोखुरिः**, पुं, (गवां खुरिरिव ।) गोक्षुरः । इति
शब्दचन्द्रिका ॥

**गोगृष्टिः**, स्त्री, (गौर्गृष्टिः गौरेव गृष्टिरित्यर्थः ।
जात्या समासे परनिपातः ।) सकृत्प्रसूता
गौः । इति केचित् ॥

**गोगोयुगं**, क्ली, (गोर्द्वित्वम् । गो + द्वित्वे गोयुगच् ।)
गोद्वयम् । ("पशुभ्यः स्थानद्विषट्के
गोष्ठगोयुग-
षड्गवम् ।" इति मुग्धबोधसूत्रम् ॥)

**गोगोष्ठं**, क्ली, (गोः स्थानम् । गो + स्थाने गोष्ठच् ।)
गोस्थानम् । इति मुग्धबोधव्याकरणम् ॥

**गोग्रन्थिः**, पुं, (गोनिःसृतो ग्रन्थिरिव ।) करीषः ।
(गोर्ग्रन्थिर्बाहुल्यात् एकत्र ग्रन्थनं यत्र ।)
गोष्ठम् । (गोर्ग्रन्थिरिव ।) गोजिह्विकौषधिः ।
इति मेदिनी । थे । १९ ॥

**गोघ्नः**, पुं, (गौर्हन्यतेऽस्मै । गो + हन् + सम्प्रदाने

अटतीति । अट् + ण्वुल् । ततष्टाप् अत इत्वञ्च ।)
सारिकापक्षी । इति हेमचन्द्रः ॥

**गोकिराटी**, स्त्री, (गोकिरा वाचं रटन्ती सती
अटतीति । अट गतौ + "कर्म्मण्यण् ।" ३ । २ । १ ।
इत्यण् । गौरादित्वात् ङीष् ।) सारिकापक्षी ।
इति राजनिर्घण्टः ॥

**गोकिलः**, पुं, (गोः पृथिव्याः कील इव । निपा-
तनात् ह्रस्वः ।) मुषलम् । हलम् । इति
हेमचन्द्रः ॥

**गोकीलः**, पुं, (गोः पृथिव्याः कील इव ।) मुषलम् ।
हलम् । इति हारावली ॥ २५५ ॥

**गोकुलं**, क्ली, (गोः कुलम् ।) गोसमूहः । तत्-
पर्य्यायः । गोधनम् २ गवांव्रजः ३ । इत्यमरः ।
२ । ९ । ५८ ॥ (यथा, रामायणे । २ । ६ । १७ ।
"गोकुलाकुलतीरायाः तमसाया विदूरतः ।
अवसत् तत्र तां रात्रिं रामः प्रकृतिभिः सह ॥")
गोस्थानम् । यथा, तिथ्यादितत्त्वे ।
"गोकुले कन्दुशालायां तैलयन्त्रेक्षुयन्त्रयोः ।
अमीमांस्यानि शौचानि स्त्रीषु बालातुरेषु च ॥"
मथुरैकदेशे श्रीनन्दस्य वासस्थानम् । यथा, --
"कालेन व्रजता तात ! गोकुले रामकेशवौ ।

त्रिकण्टकः ५ त्रिपुटः ६ कण्टकफलः ७ क्षुरः ८ ।
इति रत्नमाला ॥ गोक्षुरकः ९ पलङ्कषा १०
इक्षुगन्धा ११ श्वदंष्ट्रा १२ स्वादुकण्टकः १३
गोकण्टकः १४ वनशृङ्गाटः १५ । इत्यमरः ।
२ । ४ । ९८--९९ ॥ क्षुरकः १६ भक्ष्यकण्टः १७
इक्षुगन्धिका १८ । इति भावप्रकाशः ॥ क्षुरङ्गः १९
श्वदंष्ट्रकः २० कण्टकी २१ भद्रकण्टः २२ व्याल-
दंष्ट्रः २३ षडङ्गः २४ गोखुरः २५ त्रिकटः २६
त्रिकः २७ इक्षुरः २८ । इति शब्दरत्नावली ॥
अस्य गुणाः । सुशीतलत्वम् । बलप्रदत्वम् ।
मधुरत्वम् । बृंहणत्वम् । कृच्छ्राश्मरीमेहविदाह-
नाशित्वम् । रसायनत्वम् । तत्र बृहतो गुणो-
त्तरत्वञ्च । इति राजनिर्घण्टः ॥ स्वादुत्वम् ।
वस्तिशोधनत्वम् । दीपनत्वम् । पुष्टिदत्वम् ।
श्वासकासार्शोव्रणनाशित्वञ्च । इति भाव-
प्रकाशः ॥ वायुनाशित्वम् । वृष्यत्वञ्च ॥ तच्छाक-
गुणाः । तिक्तत्वम् । वृष्यत्वम् । स्रोतोविशोधन-
त्वञ्च । इति राजवल्लभः ॥

मूलविभूजादित्वात् कः ।) अतिथिः । इति
पाणिनिः ॥ (गां हन्ति । हन् + कः ।) गोघा-
तके त्रि । यथा, प्रायश्चित्ततत्त्वे ।
"गोघ्नवद्विहितः कल्पश्चान्द्रायणमथापि वा ॥"

**गोघृतं**, क्ली, (गोः पृथिव्या घृतमिव शस्यादिपोषक-
त्वात् ।) वृष्टिः । इति त्रिकाण्डशेषः ॥ (गोर्जातं
घृतम् ।) गव्यघृतञ्च ॥

**गोचरः**, पुं, (गाव इन्द्रियाणि चरन्त्यस्मिन् ।
गो + चर + "गोचरसञ्चरवहव्रजव्यजापणनिग-
माश्च ।" ३ । ३ । ११९ । इति निपातनात्
साधुः ।) इन्द्रियार्थः । स तु रूपशब्दगन्धरस-
स्पर्शस्वरूपः । इत्यमरः । १ । ५ । ८ ॥ (यथा
भाषापरिच्छेदे "घ्राणस्य गोचरो गन्धः ॥" * ॥
गावश्चरन्त्यस्मिन्निति । गोचरणस्थानम् । इति
सिद्धान्तकौमुदी । यथा च भारविः । ४ । १० ।
"उपारताः पश्चिमरात्रिगोचरा-
दपारयन्तः पतितुञ्जवेन गाम् ॥"
गोषु इन्द्रियेषु चरतीति । गो + चर् + पचाद्यच् ।
इन्द्रियप्रत्यक्षीभूतविषयः । यथा, वेदान्तसारे ।
"अखण्डं सच्चिदानन्दमवाङ्मनसगोचरम् ॥"

देशः । यथा, हेः रामायणे । २ । ८५ । ५ ।
"अब्रवीत् प्राञ्जलिर्भूत्वा गुहो गहनगोचरः ॥"
"गहनं वनं गोचरो देशो यस्य सः ।" इति तट्टीकाकृद्रामानुजः ॥) जन्मराश्यवधिग्रहाक्रान्तराशीनां संज्ञा । यथा, --
"गोचरे वा विलग्ने वा ये ग्रहारिष्टसूचकाः ।
पूजयेत्तान् प्रयत्नेन पूजिताः स्युः शुभावहाः ॥"
अपि च ।
"अष्टवर्गशुभैः श्रीमान् कर्म्म कुर्य्यान्निभश्चरैः ।
गोचरस्थैस्तदप्राप्तौ तदप्राप्तौ तु वेधगैः ॥"
गोचरशुद्धिर्यथा, --
"केतूपप्लवभौममन्दगतयः षष्ठत्रिसंस्थाः शुभा-
श्चन्द्रार्कावपि ते च तौ च दशमौ चन्द्रः पुनः सप्तमः ।
जीवः सप्तनवद्विपञ्चमगतो युग्मेषु सोमात्मजः
शुक्रः षड्दशसप्तवर्जमितरे सर्व्वेऽप्युपान्ते शुभाः ॥"
इति दीपिका ॥
(अथ ग्रहाणां गोचरगतफलम् । यथा, --
बुधस्य गोचरफलम् ।
"स्थानं जन्मनि नाशयेद्दिनकरः कुर्य्याद्द्वितीये भयम् ।
दुश्चिक्ये श्रियमातनोति हिवुके मानक्षयं यच्छति ॥
दैन्यं पञ्चमगः करोति रिपुहा षष्ठेऽर्थहा सप्तमे ।
पीडामष्टमगः करोति नितरां कान्तिक्षयं धर्म्मगः ॥
कर्म्मवृद्धिजनकस्तु कर्म्मगो
वित्तवृद्धिकृदथायसंस्थितः ।
द्रव्यनाशजनितां महापदं
यच्छति व्ययगतो दिवाकरः ॥"
चन्द्रस्य गोचरफलम् ।
"जन्मन्यर्थं दिशति हिमगुर्व्वित्तनाशं द्वितीये
दद्द्याद्द्रव्यं सहजभवने नेत्ररोगं चतुर्थे ।
अष्टमे शशिसुते धनलब्धि-
र्धर्म्मगोऽतिमहतीं तनुपीडाम् ।
कर्म्मगः शुभमथायगतोऽर्थं
द्वादशे भवति वित्तविनाशः ॥"
गुरोर्गोचरफलम् ।
"भयं जन्मन्यार्य्यो जनयति धनस्थोऽर्थमतुलं
तृतीयेऽङ्गक्लेशं दिशति च चतुर्थेऽर्थविलयम् ।
शुभं पुत्त्रस्थानेऽशुभमपि च कुर्य्यादरिगृहे
गुरुर्द्यूने पूजां धननिचयनाशञ्च निधने ॥
धर्म्मगतो धनवृद्धिकरः स्यात्
प्रीतिहरो दशमेऽमरपूज्यः ।
स्थानधनानि ददाति स चाये
द्वादशगस्तनुमानसपीडाम् ॥"
शुक्रस्य गोचरफलम् ।
"जन्मन्यतिक्षयकरो भृगुजोऽर्थदोऽर्थे
दुश्चिक्यगः शुभकरो धनदश्चतुर्थे ।
स्यात् पुत्त्रदस्तनयगोऽरिगतोऽरिवृद्धिं
शोकप्रदो मदनगो निधनेऽर्थदाता ॥
जनयति विविधाम्बराणि धर्म्मे
न शुभकरो दशमस्थितस्तु शुक्रः ।
धननिचयकरस्तु लाभसंस्थो
व्यंयभवनेऽपि धनागमं करोति ॥"
शनेर्गोचरफलम् ।
"वित्तभ्रंशं सदाहं दिनकरतनयो जन्मराशिं प्रपन्न-
श्चित्तक्लेशं द्वितीये रिपुहननकृतं वित्तलाभं तृतीये ।
पाताले शत्रुवृद्धिं सुतभवनगतः पुत्त्रभृत्यादिनाशं
षष्ठस्थानेऽर्थलाभं जनयति मदने दोषसङ्घातमार्किः ॥
शरीरपीडां निधनेऽथ धर्म्मे
धनक्षयं कर्म्मणि दौर्म्मनस्यम् ।
उपान्त्यगो वित्तमनर्थमन्ते
शनिर्द्ददातीत्यवदत् सुवृत्तः ॥"
राहोर्गोचरफलम् ।
"जन्मान्त्या ञ्चवसुरन्ध्रनवद्विसप्त-
राशौ स्थिते यदि भवेदसुरः कदापि ।
अर्थक्षयं रिपुभयं बहुकार्य्यहानिं
रोगप्रवासमरणाग्निभयकरोति ॥"
केतोर्गोचरफलम् ।
"यत् किञ्चित् कुरुते पापं ज्ञानतोऽज्ञानतोऽपि वा ।
अपि गोचर्म्ममात्रेण भूमिदानेन शुध्यति ॥"
गोचर्म्मलक्षणञ्च वृहस्पतिना दर्शितम् । यथा, --
"सप्तहस्तेन दण्डेन त्रिंशद्दण्डैर्निवर्त्तनम् ।
दश तान्येव गोचर्म्म दत्त्वा स्वर्गे महीयते ॥"
इति मिताक्षरायां आचाराध्यायः ॥

**गोच्छालः**, पुं, (गां भूमिं छादयतीति । छद + णिच् + अण् । पृषोदरादित्वात् साधुः ।) कुलाहलवृक्षः । इति रत्नमाला ॥ कोकशिमा इति भाषा ॥

**गोजलं**, क्ली, (गवि जातं जलम् ।) गोमूत्रम् । इति राजनिर्घण्टः ॥ (यथा, गारुडे १८० अध्याये ।
"गोजलेनैव पूरेण कर्णसावो विनश्यति ॥")

**गोजा**, स्त्री, (गवि पृथिव्यां जायते इति । गो + जन् + "जनसनखनक्रमगमो विट् ।" ३ । २ । ६७ ।
इति विट् । "विड्नोरिति ।" ६ । ४ । ४१ । इति आत्वञ्च ।) गोलोमिकावृक्षः । इति राजनिर्घण्टः ॥

**गोजागरिकं**, क्ली, (गोषु इन्द्रियेषु जागरः अप्रमादोऽस्त्यस्य ठन् ।) मङ्गलम् । इति गेदिनी । के । २२७ ॥

**गोजागरिकः**, पुं, (गवि पृथिव्यां जागरिकः प्रहरीव । अस्त्रवत्कण्टकान्वितत्वादस्यत्रथात्वम् ।)
कण्टकारिका । इति मेदिनी । के । २२७ ॥

**गोजापर्णी**, स्त्री, (गोजं दुग्धं तद्वत् आपर्णयति शुक्लवर्णो भवतीति । आ + पर्णि + अच् ।) गौरादित्वाद् ङीष् ।) दुग्धफेनीवृक्षः । इति राजनिर्घण्टः ॥

**गोजिह्वा**, स्त्री, (गोर्जिह्वेव ।) क्षुपविशेषः ।
गोजियालता इति दारियाशाक इति च भाषा । तत्पर्य्यायः । दार्व्विका २ । इत्यमरः । २ । ४ ।
११९ ॥ दर्व्विका ३ । इति भरतः ॥ दार्व्वि-

कार्य्यभ्रंशं तनयगृहगो वित्तलाभञ्च षष्ठे
द्यूने द्रव्यं युवतिसहितं मृत्युसंस्थोऽथ
मृत्युम् ॥
नृपभयं कुरुते नवमः शशी
दशमधामगतस्तु महत् सुखम् ।
विविधमायगतः कुरुते धनं
व्ययगतस्तु रुजं सधनक्षयम् ॥"
मङ्गलस्य गोचरफलम् ।
"प्रथमगृहगः क्षौणीसूनुः करोत्यरिजं भयं
क्षपयति धनं वित्तस्थाने तृतीयगतोऽर्थदः ।
अरिभयकरः पातालेऽसून् क्षिणोति च
पञ्चमः
रिपुगृहगतो धत्ते वित्तं शुचं मदनस्थितः ॥
जनयति मरणस्थः शत्रुवाधां धराजो
दिशति च नवमस्थो कार्य्यपीडामतीव ।
शुभमपि दशमस्थो लाभगो भूरिलाभं
अयभवनगतोऽसौ व्याध्यनर्थार्थनाशान् ॥"
बधस्य गोचरफलम् ।
"बुधः प्रथमधामगो दिशति बन्धमर्थे धनं
वधं रिपुभयान्वितं सहजगश्चतुर्थेऽर्थदः ।
अनिवृं तिकरो भवेत्तनयगोऽरिगः स्थानदः
कराति मद्नस्थितो बहुविधां शरीरापदम् ॥
"एकादशत्रिदशषष्ठगते नराणां
सम्मानभोगनृपमानसुखार्थद्गाता ।
आज्ञाकराश्च पुरुषाः प्रमदाश्च नित्यं
सौख्योदयं दिशति पुण्यचयञ्च केतुः ॥"
अन्यत्सर्व्वं ग्रहशब्दे द्रष्टव्यम् ॥)

**गोचर्म्म**, [न्] क्ली, (गोश्चर्म्म ।) गवां त्वक् ।

कर्म्मविशेषे तदासनविधिर्य्यथा, --
"मेषासनन्तु वश्यार्थमाकृष्टौ व्याघ्रचर्म्म च ।
शान्तौ मृगाजिनं शस्तं मोक्षार्थं व्याघ्रचर्म्म च
॥"
गोचर्म्मस्तम्भने देवि । सम्भवे वाजिचर्म्म च
॥"
इति समयाचारतन्त्रे २ पटलः ॥ * ॥
परिमाणविशेषः । यथा, --
पत्रिका ४ । इति रत्नमाला ॥ खरपत्री ५
वातोना ६ अधोमुखा ७ अनडुज्जिह्वा ८
अधःपुष्पी ९ दर्व्वी १० गोजिह्विका ११ । इति
शब्दरत्नावली ॥ अपि च भावप्रकाशे ।
"गोजिह्वा गोजिका गोभी दार्व्विकाखरपर्णिनी ।
गोजिह्वा वातला शीता ग्राहिणी कफपित्तनुत् ॥
हृद्या प्रमेहकासास्रव्रणज्वरहरी लघुः ।
कोमला तुवरी तिक्ता स्वादुपाकरसा स्मृता ॥"
अस्या गुणाः । कटुत्वम् । तीक्ष्णत्वम् । शीत-
लत्वम् । पित्तसर्व्वदन्तिविषार्त्तिनाशित्वम् ।
व्रण-
संरोपणत्वञ्च । इति राजनिर्घण्टः ॥ (अस्या
व्यवहारो यत्र तद्यथा, --
"सोमवल्कोऽश्वकर्णश्च गोजिह्वा हंसपद्यपि ।
रजन्यौ गैरिकं लेपो नखदन्तविषापहः ॥"
इति वैद्यकचक्रपाणिसंग्रहें विषाधिकारे ॥)
गवेधुका । इति रत्नमाला ॥ गडगड इति
भाषा ॥

**गोजिह्विका**, स्त्री, (गोजिह्वेव गोजिह्वा स्वार्थे

कन् । अत इत्वञ्च ।) गोजिह्वा लता । इति
शब्दरत्नावली ॥

**गोडः**, पुं, (गोरण्ड इव । पृषोदरादित्वात् साधुः ।)
गोण्डः । स तु नाभौ प्रवृद्धमांसगुडकः । इति
लिङ्गादिसंग्रहटीकायां भरतः ॥

**गोडुम्बः**, पुं, (गां भुवं तुम्बति अर्द्दतीति । गो +
तुम्ब + कः । पृषोदरादित्वात् साधुः ।) शीर्ण-
वृन्तः । इति मेदिनी । बे । १२ ॥ तरमूज् इति
ख्यातः ॥

**गोडुम्बा**, स्त्री, (गोडुम्ब + स्त्रियां टाप् ।) गवा-
दनी । इति मेदिनी । वे । १२ ॥ गोमुक इति
ख्याता गोमा इति राजगोमुक् इति च ख्याता
इत्येके । इति भरतः ॥ तत्पर्य्यायः । चित्रा २
गवाक्षी ३ । इत्यमरः । २ । ४ । १५६ ॥ गोडु-
म्बिका ४ । इति रत्नमाला ॥

**गोडुम्बिका**, स्त्री, (गोडुम्ब + स्वार्थे कन् + स्त्रियां
टाप् अत इत्वञ्च ।) गोडुम्बा । इति
रत्नमाला ॥

**गोणी**, स्त्री, (शणादिगुणाद् जातः गोणः निपा-
तनादुकारस्य गुणः । गोणशब्दात् आवपने-
ऽर्थे "जानपदकुण्डगोणेति ।" ४ । १ । ४२ ।
इति ङीष् ।)
धान्यादिवहनार्थाधारविशेषः ।
इति मुग्धबोधम् । गुण् इति भाषा ॥ द्रोणी-
परिमाणम् । इति वैद्यकपरिभाषा ॥ (यथा,
सुश्रुते चिकित्सितस्थाने चतुर्थाध्याये ।

**गोत्रं**, क्ली, गवते शब्दयति पूर्ब्बपुरुषान् यत् ।
इति भरतः ॥ (गु + "गुधृवीपतीति ।" उणां ।
४ । १६६ । इति त्रः ।) तत्पर्य्यायः । सन्ततिः
२ जननम् ३ कुलम् ४ अभिजनः ५ अन्वयः ६
वंशः ७ अन्ववायः ८ सन्तानः ९ । इत्यमरः ।
२ । ७ । १ ॥ आख्या । (यथा, कुमारे । ४ । ८ ।
"स्मरसि स्मरमेखलागुणै-
रुत गोत्रस्खलितेषु बन्धनम् ॥")
सम्भावनीयबोधः । काननम् । क्षेत्रम् । वर्त्म ।
इति मेदिनी । रे । २६ ॥ छत्रम् । इति हेम-
चन्द्रः ॥ संघः । वृद्धिः । इति शब्दचन्द्रिका ॥
वित्तम् । इति विश्वः ॥ * ॥
"वंशपरम्पराप्रसिद्धं
आदिपुरुषं ब्राह्मणरूपम् ।
क्षत्त्रियवैश्ययोरुपदिष्टातिदिष्टगोत्रंशूद्रस्याति-
दिष्टातिदिष्टगोत्रम् ।" इत्युद्वाहतत्त्वम् ॥ क्षत्त्रिय-
वैश्य शूद्राणामतिदिष्टातिदिष्टगोत्रप्रवरमतएैव
तेषां पुरोहितगोत्रप्रवरमित्यर्थः । तथा चाग्नि-
पुराणे वर्णसङ्करोपाख्याने ।
"क्षत्त्रियवैश्यशूद्राणां गोत्रञ्च प्रवरादिकम् ।
तथान्यवर्णसङ्कराणां येषां विप्राश्च याजकाः ॥"
गोत्राणि तु चतुर्व्विंशतिः तथा च मनुः ।
"शाण्डिल्यः काश्यपश्चैव वात्स्यः सावर्णकस्तथा ।
भरद्वाजो गौतमश्च सौकालीनस्तथापरः ॥
कल्किषश्चाग्निवेश्यश्च कृष्णात्रेयवशिष्ठकौ ।
विश्वामित्रः कुशिकश्च कौशिकश्च तथापरः ॥
घृतकौशिकमौद्गल्यौ आलम्यानः पराशरः ।
सौपायनस्तथात्रिश्च वासुकी रोहितस्तथा ॥
घैयाघ्रपद्यकश्चैव जामदग्न्यस्तथापरः ।
चतुर्व्विंशतिर्वै गोत्रा कथिताः पूर्ब्बपण्डितैः ॥"
तथा च मनुः ।
"जमदग्निर्भरद्वाजो विश्वामित्रात्रिगौतमाः ।
वशिष्ठकाश्यपागस्त्या मुनयो गोत्रकारिणः ॥

पर्व्वतः । इत्यमरः । २ । ३ । १३ ॥ (यथा, भागवते ।
२ । ६ । ९ ।
"नाड्यो नदनदीनान्तु गोत्राणामस्थिसंहतिः ॥")

**गोत्रजः**, त्रि, (गोत्रे जायते इति । गोत्र + जन् +
डः ।) गोत्रोत्पन्नः । स तु जन्मनामस्मृतिपर्य्यन्त-
समानोदकभावात् पश्चाद्भवति । इति शुद्धि-
तत्त्वम् ॥ (यथा, याज्ञवल्क्ये । २ । १३८ ।
"पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ।
तत्सुतो गोत्रजो बन्धुः शिष्यः सब्रह्मचारिणः ॥")

**गोत्रभित्**, [द्] पुं, (गोत्रं पर्व्वतं भिनत्तीति ।
"सत्सुद्विषेत्यादि ।" ३ । २ । ६१ । इति क्विप् ।
ततस्तुगागमः ।) इन्द्रः । इत्यमरः । १ । १ । ४५ ॥
(यथा, ऋग्वेदे । ६ । १७ । २ ।
"यो गोत्रभिद्वज्रभृद्यो हरिष्ठाः
स इन्द्र चित्राँ अभितृंधि वाजान् ॥"
यथा च भट्टौ । १ । ३ ।
"सहासनं गोत्रभिदाध्यवात्सीत् ॥")

**गोत्रवृक्षः**, पुं, (गोत्रजातः पर्व्वतजातो वृक्षः ।)
धन्वनवृक्षः । इति भावप्रकाशः ॥
"धन्वङ्गस्तु धनुर्वृक्षो गोत्रवृक्षः सुतेजनः ।"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**गोत्रा**, स्त्री, (गाः पशून् सर्व्वान् जीवानित्यर्थः
त्रायते इति । त्रै + कः । स्त्रियां टाप च ।)
पृथिवी । (गवां समूहः । "इनित्रकड्यचश्च ।"
४ । २ । ५१ । इति त्रः । टाप् च ।) गोसमूहः ।
इति मेदिनी । रे । २६ ॥ (गायत्रीस्वरूपा
महादेवी । यथा, देवीभागवते । १२ । ६ । ४१ ।
"गन्धर्व्वी गह्वरी गोत्रा गिरिशा गहना गमी ॥")

**गोदः**, पुं, (गा इन्द्रियाणि दायति शोधयतीति ।
गो + दै + कः ।) मस्तकस्नेहः । मस्तिष्कम् ।
इति हेमचन्द्रः ॥ (गाः ददातीति । + दा + कः ।)
गोदातरि त्रि । इति मुग्धबोधम् ॥ (यथा,
मनुः । ४ । २३१ ।
"वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः।
अनड्वद्दः श्रियं पुष्टां गोदो ब्रध्नस्य पिष्टपम् ॥")

“विडालनकुलोष्ट्राणां चर्म्मगोण्यां मृगस्य वा ।
प्रबेशवेद्धा स्वभ्यक्तं श्वाल्वणेनोपनाहितम् ॥”
“शूर्पाभ्याञ्च भवेद्‌द्रोणी वाहो गोणी च सा
स्मृता ।
माषटङ्काक्षविल्वानि कुडवः प्रस्थमाढकम् ।
राशिर्गोणी खारिकेति यथोत्तरचतुर्गुणाः ॥”
इति शार्ङ्गधरेण पूर्ब्बखण्डे प्रथमेऽध्याय उक्तम् ॥
“गोणी शूर्पद्वयं विद्यात् खारीं भारीन्तथैव च ।
द्वात्रिंशतं विजानीयात् वाहं शूर्पाणि बुद्धिमान् ॥”
इति कल्पस्थाने द्वादशेऽध्याये चरकेणोक्तम् ॥)
छिद्रवस्त्रम् । तत्पर्य्यायः । शानी २ । इति हेम-
चन्द्रः । ३ । ३४३ ॥

**गोण्डः**, पुं, (गोः अण्ड इव ।) नाभौ वृद्धमांस-
गुडकः । इति लिङ्गादिसंग्रहे अमरः । ३ । ५ ।
१८ ॥ गँड् इति भाषा । पामरजातिः ।
वृद्धनाभियुक्ते त्रि । इति मेदिनी । डे । ११ ॥
अस्य रूपान्तरं गोडः गौडः । इत्यमरटीका ॥

**गोतमः**, पुं, (गोभिर्ध्वस्तं तमो यस्य । पृषोदरादि-
त्वात् साधुः । एतन्निरुक्तिर्यथा, महाभारते ।
१३ । ९३ । ९५ ।
“गोदमोऽहमतोऽधूमोऽदमस्ते समदर्शनात् ।
गोभिस्तमो मम ध्वस्तं जातमात्रस्य देहतः ।
विद्धि मां गोतमं कृत्ये यातुधानि ! निबोध माम् ॥”)

एतेषां यान्यपत्यानि तानि गोत्राणि मन्यते ॥”
एतदुपलक्षणमन्येषामपि दर्शनात् । तथा च ।
“सौकालीनकभौद्‌गल्यौ पराशरबृहस्पती ।
काञ्चनो विष्णुकौशिक्यौ कात्यायनात्रेय-
काण्वकाः ॥
कृष्णात्रेयः साङ्कृतिश्च कौण्डिल्यो गर्गसंज्ञकः ।
आङ्गिरस इति ख्यातः अनावृकाख्यसङ्गितः ॥
अव्यजैमिनिवृद्धाख्याः शाण्डिल्यो वात्स्य एव च ।
सावर्ण्यालम्यानवैयाघ्रपद्यश्च घृतकौशिकः ॥
शक्त्रिः काण्वायनश्चैव वासुकी गौतमस्तथा ।
शुनकः सौपायनश्चैव मुनयो गोत्रकारिणः ॥
एतेषां यान्यपत्यानि तानि गोत्राणि मन्यते ॥”
सर्व्वे चत्वारिंशद्‌गोत्राः । इति कुलदीपिका-
धृतधनञ्जयकृतधर्म्मप्रदीपः ॥ (मेघः । इति
निघण्टुः । १ । १० । यथा, ऋग्वेदे । १ ।
५१ । ३ ।
“त्वं गोत्रमङ्गिरोभ्योऽवृणोरपोतात्रयेशत-
दुरेषु गातुवित् ॥”)

**गोत्रः**, पुं, (गां पृथिवीं त्रायते रक्षतीति । गो + त्रै
+ “आतोऽनुपसर्गे कः ।” ३ । २ । ३ । इति
कः ।)

**गोदन्तं**, क्ली, (गोदन्त इव अवयवो विद्यते यस्य ।)
हरितालम् । इति राजनिर्घण्टः ॥ (हरिताल-
शब्देऽस्य गुणादयो बोध्यव्याः ॥)

**गोदा**, स्त्री, (गां जलं स्वर्गं वा ददातिं स्नानेनेति ।
गो + दा + कः । स्त्रियां टाप् ।) गोदावरी
नदी । इति हेमचन्द्रः । ४ । १५० ॥ (गायत्री-
स्वरूपा महादेवी । यथा, देवीभागवते । १२ ।
६ । ४३ ।
“गर्व्वापहारिणी गोदा गोकुलस्था गदाधरा ॥”
गाः ददातीति । दा + क्विप् । गोदातरि त्रि ।
यथा, ऋग्वेदे । १ । ४ । २ ।
“गोदा इन्द्रेवतो मदः ।”
“गोदाश्चक्षुरिन्द्रियव्यवहारप्रदः ।” इति दया-
नन्दभाष्यम् ॥)

**गोदारणं**, क्ली, (गौर्भूमिर्दार्य्यतेऽनेनेति । गो + दॄ
+ णिच् + करणे ल्युट् ।) लाङ्गलम् । इत्यमरः ।
२ । ९ । १४ ॥ कुद्दालः । इति हेमचन्द्रः । ४ ।
५५६ ॥

गौतममुनिः । स तु ब्रह्मपुत्त्रः । इति गया-

माहात्म्ये वायुपुराणम् ॥

**गोतमान्वयः**, पुं, (गोतमोऽन्वयो वंशप्रवर्त्तको यस्य ।)

शाक्यमुनिः । इति हेमचन्द्रः ॥

**गोतल्लजः**, पुं, (प्रशस्तो गौः “प्रशंसावचनैश्च ।”

२ । १ । ६६ । इति कर्म्मधारयः ।)

उत्तमगौः ।

गोषु मध्ये तल्लजः प्रशस्तः इति वा

व्युत्पत्तिः ॥

**गोदावरी**, स्त्री, (गां जलं स्वर्गं वा ददातीति
गोदा । तासु वरी श्रेष्ठा । वर + ङीष् संज्ञा-
याम् । यद्वा गां स्वर्गं ददाति । गो + दा +
वणिप् + ङीप् रान्तादेशश्च ।) नदीविशेषः ।
(अस्या उत्पत्तिकथा यथा, ब्रह्मवैवर्त्ते । १० ।
१२६--१३० ।
"गच्छन्तीं तीर्थयात्रायां ब्राह्मणीं रविनन्दनः ।
ददर्श कामुकः शान्तः पुष्पोद्याने च निर्ज्जने
॥
तया निवारितो यत्नात् कालेन बलवान् सुरः
।
अतीवसुन्दरीं दृष्ट्वा वीर्य्याधानं चकार सः ॥
द्रुतं तत्याज गर्भं सा पुष्पोद्याने मनोहरे ।
सद्यो बभूव पुत्त्रश्च तप्तकाञ्चनसन्निभः ॥
सपुत्त्रा स्वामिनो गेहं जगाम व्रीडिता तदा ।
स्वामिनं कथयामास यन्मार्गे देवसङ्कटम् ॥
विप्रो रोषेण तत्याज तञ्च पुत्त्रं स्वकामिनीम् ।
सरिद् बभूव योगेन सा च गोदावरी स्मृता ॥")
तत्पर्य्यायः । गोदा २ । इति हेमचन्द्रः ॥
गौतमसम्भवा ३ ब्रह्माद्रिजाता ४ गौतमी ५ ।
(यथा, हितोपदेशे ।
"अस्ति गोदावरीतीरे विशालः शाल्मलीतरुः
॥")
इयमेब पीठस्थानविशेषः । अत्र देवी
त्रिसन्ध्या-
मूर्त्याविराजते । यथा, देवीभागवते । ७ । ३०
। ६८ ।
"गोदावर्य्यां त्रिसन्ध्या तु गङ्गाद्वारे रतिप्रिया
॥")
अस्या जलस्य गुणाः । पित्तार्त्तिरक्तार्त्तिवायु-
पापकुष्ठादिदुष्टामयदोषतृष्णानाशित्वम् ।
परम-
पथ्यत्वम् । दीपनत्वञ्च । इति राजनिर्घण्टः ॥

**गोदुग्धदा**, स्त्री, (गवां दुग्धं ददाति आधिक्येन
सम्पादयतीति । गो + दा + कः । तद्भक्षणेन
गवां
दुग्धवर्द्धनादस्यास्तथात्वम् ।) चणिकातृणम् ।
इति राजनिर्घण्टः ॥

**गोदोहनी**, स्त्री, (गावो दुह्यन्त्येऽस्यामिति । गो +
स्थलजजलजभेदात् द्विविधा । तत्पर्य्यायः
।
निहाका २ गोधिका ३ । इत्यमरः । १ ।
१० । २२ ॥
दारुमुख्याह्वा ४ । (यथा, बृहत्संहितायाम् ।
५४ । १३ ।
"श्वेता गोधार्द्धनरे पुरुषे मृद्धूसरा ततः
कृष्णा ।
पीता सिता ससिकता ततो जलं
विनिर्द्दिशेद-
मितम् ॥"
पञ्चनखतया गोधाया मांसं भक्ष्यत्वेन ग्राह्य-
मित्यभिहितं
मन्वादिभिर्धर्म्मशास्त्रप्रयोक्तृभिः ।
यथा, मनुः । ५ । १८ ।
"श्वाविधं शल्लकं गोधां
खड्गकूर्म्मशशांस्तथा ।
भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्राञ्चैकतोदतः ॥")
अस्या मांसगुणाः ।
वातश्वासकासनाशित्वम् ।
इति राजनिर्घण्टः ॥ पाके मधुरत्वम् ।
कषाय-
त्वम् । कटुरसत्वम् । पित्तनाशित्वम् ।
रक्तशुक्र-
बलकारित्वम् । इति राजवल्लभः ॥
("गोधा विपाके मधुरा कषायकटुका रसे ।
वातपित्तप्रशमनी बृंहणी बलवर्द्धनी ॥"
इति चरके सूत्रस्थाने २७ अध्याये ॥)

**गोधापदिका**, स्त्री, (गोधाया इव पादो मूल-
मस्याः । स्वाङ्गत्वात् ङीष् । ततः
"कुम्भपदीषु
च ।" ५ । ४ । १३९ । इति पद्भावः ।
गोधापदी । ततः स्वार्थे कन् टाप्
पूर्ब्बह्रस्वश्च ।)
गोधापदीलता । इति शब्दरत्नावली ॥

**गोधापदी**, स्त्री, (गोधाया इव पादो मूलं यस्याः ।
स्वाङ्गत्वात् ङीष् । "कुम्भपदीषु च" ५ । ४
।

**गोधिका**, स्त्री, (गुध्नातीति । गुध् + ण्वुल् । टाप्
अत इत्वञ्च ।) गोधा । इत्यमरः । १ । १० ।
२२ ॥
गोसाप इति भाषा ॥

**गोधिकात्मजः**, पुं, (गोधिकाया आत्मजः ।) स्थूल-
गोधिका ।
गोधाशिशुतुल्याकारकोटरस्थजन्तु
विशेषः तोक्के इति ख्यात इति भगी । इति
सारसुन्दरी ॥ तत्पर्य्यायः । गौधेरः २ ।
गौधारः ३ गौधेयः ४ । इत्यमरः । २ । ५ ।
६ ॥
(सर्पाद्गोधायामुत्पन्ने जन्तुविशेषे इति
गोधिकापुत्त्रशब्दार्थे शब्दार्थचिन्तामणिः ॥)

**गोधिनी**, स्त्री, (गोधः क्रीडाभेदः सोऽस्त्यस्याः
इति इनिः ङीप् च ।) क्षविका । सा तु
बृहतीभेदः । इति राजनिर्घण्टः ॥

**गोधुक्**, [ह्] त्रि, (गां दोग्धीति । गो + दुह + "सत्सु
द्विषद्रुहदुहयुजैत्यादि ।" ३ । २ । ६१ । इति
क्विप् ।) गोदोग्धा । इति व्याकरणम् ॥
(यथा,
ऋग्वेदे । १ । १६४ । २६ ।
"उप ह्वये सुदुघां धेनुमेतां
सुहस्तो गोधुगुत दोहदेनाम् ॥")

**गोधुमः**, पुं, (गुध + "गुधेरूमः ।" उणां । ५ । २ ।
इति ऊमः । निपातनात् ह्रस्वः ।) गोधूमः ।
इति शब्दचन्द्रिका ॥

**गोधूमः**, पुं, (गुध्यते वेष्ट्यते त्वगादिभिः । गुध +
"गुधेरूमः ।" उणां । ५ । २ । इति ऊमः ।)
नागरङ्गः । ओषधीविशेषः । ब्रीहिभेदः । इति
मेदिनी ॥ मे । ४३ । गम गोम् इति च भाषा
॥
शेषस्य पर्य्यायः । बहुदुग्धः २ अपूपः ३
स्नेच्छ-
भोजनः ४ यवनः ५ निस्तुषक्षीरः ६ रसालः
७
सुमनाः ८ । (यथा, मनुः । ५ । २५ ।
"यवगोधूमजं सर्व्वं पयसश्चैव विक्रियाः ॥")

दुह् + अधिकरणे ल्युट् ।) गोदोहनपात्रम् । तत्पर्य्यायः । पारी २ । इति जटाधरः ॥

**गोद्रुवः**, पुं, (द्रवति स्रवतीति । द्रु + अच् द्रवः । गवां द्रवः ।) गोमूत्रम् । इति राजनिर्घण्टः ॥

**गोधनं**, क्ली, (गवां धनं समूहः ।) गोसमूहः । इत्यमरः । २ । ९ । ५८ ॥ (यथा, गोः रामायणे । २ । ३२ । ४२ ।
"स आत्मनो दृढां कक्षां बद्ध्वा सम्भ्रान्तमानसः ।
दण्डमुद्यम्य सहसा प्रतस्थे गोधनं प्रति ॥")

**गोधनः** पुं, (धन शब्दे भावे अप् धनं शब्दः । गोर्वज्रस्येव धनं शब्दो यस्य ।) स्थूलाग्रवाणः । इति हरिवंशः ॥ तुक्का इति भाषा ॥

**गोधा**, स्त्री, (गुध्यते परिवेष्ट्यते बाहुर्यया । गुध् + "हलश्चेति ।" करणे घञ् ।) धनुर्गुणाघात-वारणाय प्रकोष्ठबद्धा चर्म्मकृतपट्टिका । तत्-पर्य्यायः । तला २ ज्याघातवारणा ३ । इत्य-मरः । २ । ८ । ८४ ॥ तलम् ४ । इति तट्टीका ॥ (यथा, महाभारते । ३ । १७ । ३ ।
"विक्षिपन्नादयंश्चापि धनुः श्रेष्टं महाबलैः ।
तूणखड्गधरः शूरो बद्धगोधाङ्गलित्रवान् ॥")
जस्तुबिशेषः । गोसाप् इति भाया ॥ सा तु १३९ । इति पद्भावः ।) लताविशेषः । गोया-लिया इति भाषा ॥ तत्पर्य्यायः । सुवहा २ । इत्यमरः । २ । ४ । ११९ ॥ हंसपदी ३ गोधाङ्घ्री ४ त्रिफला ५ । इति भरतः ॥ त्रिपदी ६ मधु-स्रवा ७ हंसपादी ८ । इति रत्नमाला ॥ हंस-पादिका ९ हंसाङ्घ्रिः १० रक्तपादी ११ त्रिपदा १२ घृतमण्डलिका १३ विश्वग्रन्थिः १४ त्रिपादिका १५ त्रिपादी १६ कीटमारी १७ कर्णाटी १८ ताम्रपादी १९ विक्रान्ता २० ब्रह्मादनी २१ पदाङ्गी २२ शीताङ्गी २३ सुतपादिका २४ सञ्चारिणी २५ पदिका २६ प्रह्लादी २७ कीटपादिका २८ धार्त्तराष्ट्र-पदी २९ गोधापदिका ३० । इति शब्दरत्ना-वली ॥ द्विदला ३१ हंसवती ३२ । इति जटा-धरः ॥ अस्या गुणाः । कटुत्वम् । उष्णत्वम् । विषभूतभ्रान्त्यपस्मारदोषनाशित्वम्। रसायन-त्वञ्च । मुषली । तालमूली इति ख्याता । इति राजनिर्घण्टः ॥

**गोधास्कन्धः** पुं, (गोधेव स्कन्धोऽस्य ।) विट्-खदिरः । इति राजनिर्घण्टः ॥

**गोधिः**, पुं, (गावौ नेत्रे धीयेते अस्मिन् । "कर्म्म-ण्यधिकरणे च ।" ३ । ३ । ९३ । इति किः ।) ललाटम् । इत्यमरः । २ । ६ । ९२ ॥ (गुध्नाति कुप्यतीति । गुध् + "सर्व्वधातुभ्य इन् ।" उणां । ४ । ११८ । इति इन् ।) गोधिका । इति शब्द-रत्नावली ॥

अस्य गुणाः । स्निग्धत्वम् । मधुरत्वम् । वात-पित्तदाहनाशित्वम् । गुरुत्वम् । श्लेष्ममदबल-रुचिवीर्य्यकारित्वञ्च । इति राजनिर्घण्टः ॥ बृंहणत्वम् । जीवनहितत्वम् । शीतत्वम् । भग्न-सन्धानस्थैर्य्यकारित्वम् । सारकत्वञ्च । इति राजवल्लभः ॥ (अथ गोधूमस्य नामानि लक्षणं गुणाश्च ।
"गोधूमः सुमनोऽपि स्यात् त्रिविधः स च कीर्त्तितः ।
महागोधूम इत्याख्यः पश्चाद्देशात् समागतः ॥
महागोधूमः वड गोधूमा इति लोके ।
मधुली तु ततः किञ्चिदल्पा सा मध्यदेशजा ।
निःशूको दीर्घगोधूमः क्वचिन्नन्दीमुखाभिधः ॥
गोधूमो मधुरः शीतो वातपित्तहरो गुरुः ।
कफशुक्रप्रदो बल्यः स्निग्धः सन्धानकृत् सरः ॥
जीवनो बृंहणो वर्ण्यो व्रर्ण्यो रुच्यः स्थिरत्वकृत् ।
कफप्रदो नवीनो न तु पुराणः ।
पुराणयवगोधूमः क्षौद्रजाङ्गलशूलभागिति।
वाग्भटेन वसन्ते गृहीतत्वात् ।
मधुली शीतला स्निग्धा पित्तघ्नी मधुरा लघुः ।
शुक्रला बृंहणी पथ्या तद्वन्नन्दीमुखः स्मृतः ॥")
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥

**गोधूमचूर्णं**, क्ली, (गोधूमस्य चूर्णम् ।) चूर्णीकृत-

गोधूमः । मयदा इति भाषा ॥ यथा, --
"शुष्कगोधूमचूर्णेन किञ्चित्पुष्टाञ्च रोटिकाम् ॥"
इति भावप्रकाशः ॥

**गोधूमसम्भवं**, क्ली, (सम्भवत्यस्मादिति सम्भव उत्-

पत्तिस्थानम् । गोधूमः सम्भवोऽस्य ।)
सौवीरम् ।
काञ्जिकभेदः । इति राजनिर्घण्टः ॥

**गोधूमसारः**, पुं, गोधूमस्य सारभागः । पालो

इति भाषा ॥ तत्करणविधिर्य्यथा । "निस्तुष-
गोधूमं उद्रूखले कण्डयित्वा सन्ध्याकाले
मृत्तिका-
दिपात्रे जले मग्नं कारयित्वा परदिने प्रभाते
उपरिस्थजलं क्रमेण दूरीकृत्य नीचस्थसारं
रौद्रे
शुष्कं कृत्वा पात्रान्तरे स्थापयेत् ।" इति
पाक-
राजेश्वरः ॥

**गोधूमी**, स्त्री, (गां धूमयतीति । धूमि + अण् ।

गौरादित्वाद् ङीष् ।) गोलोमिका । इति
राजनिर्घण्टः ॥ (गोलोमिकाशब्देऽस्या विवरणं
ज्ञेयम् ॥)

**गोधूलिः**, स्त्री, (गवां क्षुरोत्थिता धूलिर्यत्र-

काले ।) कालविशेषः । गोधूलिकालस्तु
त्रिविधः ।
यथा, ग्रीष्मे अर्द्धास्तरविकालः । हेमन्तशिशि-
रयोर्मृदुताप्राप्तपिण्डीकृतरविकालः ।
वर्षाशरद्-
वसन्तेष्वस्तगतरविकालः । यथा, --
"गोधूलिं त्रिविधां वदन्ति मुनयो
नारीविवाहादिके
हेमन्ते शिशिरे प्रयाति मृदुतां पिण्डीकृते
भास्करे ।
ग्रीष्मेऽर्द्धास्तमिते वसन्तसमये भानौ
गतेऽदृश्यतां
सूर्य्ये चास्तमुपागते च नियतं वर्षाशरत्-
कालयोः ॥"
इति दीपिका ॥

गोनर्द्दस्य देशस्य राजा । "तद्राजेऽपि ।" २
।
४ । ६२ । इत्यण् । गोनर्द्दराजः । यथा,
राज-
तरङ्गिण्याम् । १ । ५७ ।
"काश्मीरेन्द्रः स गोनर्द्दो वेल्लद्गङ्गादुकूलया
।
दिशा कैलासहासिन्या प्रतापी पर्य्युपास्यत
॥")

**गोनर्द्दीयः**, पुं, (गोनर्द्दे देशे भवः । गोनर्द्द + "एङ्

प्राचां देशे ।" १ । १ । ७५ । इति वृद्धसंज्ञ-
त्वात् छः ।) पतञ्जलिमुनिः । इति हेमचन्द्रः
।
३ । ५१५ ॥ (अस्य गोनर्द्ददेशोद्भूतत्वात्
तथा-
त्वम् । तद्देशभवे, त्रि ॥)

**गोनसः**, पुं, (गोरिव नासिका यस्य । "अञ् नासि-

कायाः संज्ञायां नसं चास्थूलात् ।" ५ । ४
।
११८ । इति अच् नसादेशश्च ।)
सर्पविशेषः ।
वोडा इति ख्यात इत्यन्ये । इति भरतः ॥
तत्-
पर्य्यायः । तिलित्सः २ । इत्यमरः । १ ।
८ । ४ ॥
गोनासः ३ घोनसः ४ । इति हेमचन्द्रः ॥
मण्डली-
वोड्रः ५ । इति विक्रमादित्यः ॥ वोड्रः ६ ।
इति
शब्दरत्नावली ॥ (यथा, सुश्रुते कल्पस्थाने
चतुर्थाध्याये ।
"मिलिन्दको गोनसो वृद्धगोनसः पनसी
॥")
वैक्रान्तमणिः । इति राजनिर्घण्टः ॥

**गोनाथः**, पुं, (गवां नाथः ।) अनड्वान् । इति

राजनिर्घण्टः ॥

**गोनासं**, क्ली, (गोर्नासा इव आकृतियस्य ।

गन्धर्व्वविशेषः । यथा, रामायणे । ६ । ९१
। ४६ ।
"नारदस्तुम्बुरुर्गोपः प्रभया सूर्य्यवर्च्चसः ।
एते गन्धर्व्वराजानो भरतस्याग्रतो जगुः ॥")

**गोपः**, त्रि, (गोपायति रक्षतीति । गुपू ञ् रक्षणे

गुप + आय + "आयादय आर्द्धधातुके वा ।"
३ । १ । ३१ । इति अच् ।) रक्षकः । उप-
कारकः । इति शब्दरत्नावली ॥ (यथा,
ऋग्-
वेदे । १० । ६१ । १० । "द्विबर्हसो य उप
गोप-
मागुरदक्षिणासो अच्युता दुदुक्षन् ॥")

**गोपकः**, पुं, (गोप + स्वार्थे कन् ।) बोलः । बहु-

ग्रामाधिपतिः । इति शब्दरत्नावली ॥

**गोपकन्या**, स्त्री, (इन्द्रियाद्युपलक्षितशरीररक्षकस्य

गोपस्य वैद्यस्य कन्येव हितकारित्वात् ।)
शारिवौ
षधिः । इति राजनिर्घण्टः ॥ (गोपस्य कन्या
।)
आभीरसुता ॥ (यथा, --
"युवतीर्गोपकन्याश्च रात्रौ संकाल्य
कालवित् ।
कैशोरकं मानयन् वै सह ताभिर्मुमोद ह ॥"
इति हरिवंशे । ७६ । १८ ॥)

**गोपघोण्टा**, स्त्री, (गोपप्रिया घोण्टावदरीविशेषः ।)

हस्तिकोलिः । इति रत्नमाला ॥
वदरीसदृश-
सूक्ष्मफलवृक्षः । शेयाकुल इति भाषा ॥
यथा,
शब्दरत्नावल्याम् ।
("वदरीसदृशाकारो वृक्षः सूक्ष्मफलो भवेत् ।
अटव्यामेव सा घोण्टा गोपघोण्टेति चोच्यते
॥")
विकङ्कतवृक्षः । इति राजनिर्घण्टः ॥

**गोपतिः**, पुं, (गोर्वृषभस्य पतिः । यद्वा गवां पशूनां

जीवानां पतिः ।) शिवः । (यथा, महा-
भारते । १३ । १७ । १३ ।

**गोधेनुः**, स्त्री, (गौरेवं धेनुः ।) दुग्धवती गवी ।

इति संक्षिप्तसारव्याकरणम् ॥

**गोधेरः**, पुं, (गोधति धातूनामनेकार्थत्वात् रक्ष-

तीति । गुध् + बाहुलकादेरक् ।) गोप्ता । इति संक्षिप्तसारे उणादिवृत्तिः ॥

**गोनन्दी**, स्त्री, (गवि जले नन्दतीति । नन्द + अच् ।

गौरादित्वात् ङीष् ।) सारसपक्षिणी । इति हारावली ॥

**गोनर्द्दं**, क्ली, (गवि पृथिव्यां नर्द्द्यते स्वनाम्ना आख्या-

यते इत्यर्थः । नर्द्द + अप् ।) मुस्तकम् । इति मेदिनी । दे । २८ ॥

**गोनर्द्दः**, पुं, (गवि जले नर्द्दति कूजतीति । गो +

नर्द्द + “नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ।” ३ ।
१ । १३४ । इति पचादित्वादच् ।) सारस-
पक्षी । इति मेदिनी । दे । २८ ॥ (गोभिर्वाग्भि-
र्नर्द्दतीति । अच् ।) देशविशेषः । यथा, बृहत्-
संहितायाम् । १४ । १२ ।
“कङ्कटटङ्कणवनवासि-
शिविकफणिकारकोङ्कणाभीराः ।
आकरवेणावन्तक-
दशपुरगोनर्द्दकेरलकाः ॥”

गोनसाकारत्वादस्य तथात्वम् ।)
वैक्रान्तमणिः ।
इति राजनिर्घण्टः ॥

**गोनासः**, पुं, (गोर्नासा इव नासा यस्य ।) गोनस-

सर्पः । इति हेमचन्द्रः । ४ । ३७२ ॥

**गोनिष्यन्दः**, पुं, (गोर्निष्यन्दते क्षरतीति । नि +

स्यन्द + पचाद्यच् । यद्वा गवां निष्यन्दः ।
“कृद्-
विहितो भावो द्रव्यवत् प्रकाशते ।” इति
न्यायात् ।) गोमूत्रम् । इति राजनिर्घण्टः ॥

**गोपः**, पुं, (गोर्जलात् कफपित्तादिदूषितरसात

पाति रक्षतीति । गो + पा +
“आतोऽनुपसर्गे
कः ।” ३ । २ । ३ । इति कः ।) बोलः ।
(गां
गोजातिं पाति रक्षतीति । गो + पा + कः ।)
जातिविशेषः । गोयाला इति भाषा ॥ तत्-
पर्य्यायः । गोसंख्यः २ गोधुक् ३ आभीरः
४
वल्लवः ५ गोपालः ६ । इत्यमरः । २ । ९ ।
५७ ॥
तस्योत्पत्तिर्यथा, --
“मणिबन्ध्यां तन्त्रवायात् गोपजातेश्च
सम्भवः ।”
इति पराशरपद्धतिः ॥
(यथा, मनुः । ८ । २६० ।
“व्याधाञ्छाकुनिकान् गोपान् कैवर्त्तान्
मूल-
खानकान् ।
व्यालग्राहानुञ्छवृत्तीनन्यांश्चवनचारिणः
॥”)
गोष्ठाध्यक्षः । (गां पृथिवीं पाति रक्षतीति ।
पा + कः ।) पृथ्वीपतिः ।
बहुग्रामस्याधिकृतः ।
इति मेदिनी । पे । ५ ॥ (गाः पाति रक्षतीति
।
पा + कः । गोरक्षकः । यथा, मनुः । ८ ।
२३१ ।
“गोपः क्षीरभृतो यस्तु स दुह्याद्दशतो वराम्
।
“गोपालिर्गोपतिर्ग्रामो गोचर्म्मवसनो हरिः ॥”
गां पृथ्वीं जगदित्यर्थः पाति पालयतीति ।
गो + पा + डतिः । विष्णुः । यथा,
महाभारते ।
१३ । १४९ । ६६ ।
“उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ॥”
गोपेन्द्रनन्दनकृष्णः । यथा, हरिवंशे । ७६ ।
४ ।
“अमानुषाणि कर्म्माणि पश्यामस्तव गोपते !
॥”
असुरभेदः । यथा, महाभारते । ३ । १२ ।
३५
“गोपतिस्तालकेतुश्च त्वया विनिहतावुभौ
॥”
गवां रश्मीनां पतिः ।) सूर्य्यः । (यथ
भागवते । १ । १२ । १० ।
“परिभ्रमन्तमुल्काभां भ्रामयन्तं गदां मुहुः ।
अस्त्रतेजः स्वगदया नीहारमिव गोपतिः ॥”
गोः पृथिव्याः पतिः ।) राजा । (गवां सौर-
भेयाणां पतिः ।) वृषः । इति मेदिनी ॥ ते ।
१०७ ॥ (यथा, बृहत्संहितायाम् । ६८ ।
११५ ।
“शार्द्दूलहंससमदद्विपगोपतीनां
तुल्या भवन्ति गतिभिः शिखिनां च भूपाः ।
येषाञ्च शब्दरहितं स्तिमितं च यातं
तेऽपीश्वरा द्रुतपरिप्लुतगा दरिद्राः ॥”)
ऋषभनामौषधिः । इति राजनिर्घण्टः ॥

**गोपदलः**, पुं, (गोपदं गोचरणन्यासयोग्यं स्थानं

लाति गृह्णातीति । गोपद + ला + कः ।)
गुबाकः ।
इति त्रिकाण्डशेषः ॥

**गोपनं**, क्ली, (गुप् + भावे ल्युट् ।) अपह्नवः ।

(यथा, महानिर्व्वाणतन्त्रे । ४ । ७९ ।
"गोपनाद्धीयते सत्यं न गुप्तिरनृतं विना ।
तस्मात् प्रकाशतः कुर्य्यात् कौलिकः कुलसाध-
नम् ॥")
कुत्सनम् । रक्षा । (यथा, राजेन्द्रकर्णपूरे । ३४ ।
"अधिकं समाप्तसमरः प्रथितो भुवनेषु गोपन-
रसोत्कः ॥")
व्याकुलत्वम् । दीप्तिः । इति कविकल्पद्रुमे गुप-
धात्वर्थदर्शनात् ॥ तमालपत्रम् । इति राज-
निर्घण्टः ॥ तेजपात इति भाषा ॥

**गोपनीयं**, क्ली, (गुप् + अनीयर् ।) गोप्यम् ।

गोपितव्यम् । यथा, --
"स्वर्गेऽपि दुर्लभा विद्या गोपनीया प्रयत्नतः ।"
इति नाडीप्रकाशः ॥

**गोपबधूः**, स्त्री, (गोपस्य बधूरिव प्रियत्वात् ।

गोपान् बध्नाति स्वगुणेन इति वा । बन्ध + बाहु-
लकात् ऊन् ।) शारिवा । इति भावप्रकाशः ॥
गोपस्य पत्नी च ॥ (यथा, गीतगोविन्दे । १ । ४१ ।
"पीनपयोधरभारभरेण हरिं परिरभ्य सरागम् ।
गोपबधूरनुगायति काचिदुदञ्चितपञ्चम-
रागम् ॥")

**गोपभद्रं**, क्ली, (गोपे भद्रमिव ।) शालूकम् । इति

शब्दचन्द्रिका ॥

**गोपभद्रा**, स्त्री, (गोपानां भद्रं मङ्गलं यस्याः

**गोपानसी**, स्त्री, (गोपायति रक्षति गृहमिति । गुपू

ञ रक्षणे + बाहुलकात् नसट् यलोपस्ततो ङीप्
च ।) वडभी । गृहाणामग्रभागे दत्तवक्रकाष्ठम् ।
मुदनी इति भाषा ॥ इत्यमरटीकासारसुन्दरी ॥
गृहचूडा वडभी तच्छादनार्थं वक्रीकृत्य यत्
काष्ठं दीयते सा वडभी चतुष्किकादिचूडा
तच्छादनाय वक्रीकृत्य यत् काष्ठं दीयते सा ।
इति मधुः ॥ पटलाधोवंशपञ्जरम् । इति भट्टः ॥
कर्णिकाविष्कम्भिदारु इत्यन्ये । वक्रीभूतं धरण-
काष्ठम् । इत्येके । इत्यमरटीकायां भरतः ॥
(यथा, माघे । ३ । ४९ ।
"गोपानसीषु क्षणमास्थितानामालम्बिभिश्चन्द्रकिणां कलापैः ।
हरिण्मणिश्यामतृणाभिरामै-
र्गृहाणि नीध्रैरिव यत्र रेजुः ॥")

**गोपायितं**, त्रि, (गुपू ञ् रक्षणे । गोपाय्यते स्म

इति । गोपाय + कर्म्मणि क्तः । "आयादय आर्द्ध-
धातुके वा ।" ३ । १ । ३१ । इति आयागमश्च ।)
रक्षितम् । इत्यमरः । ३ । १ । १०६ ॥ (भावे क्तः
रक्षणम् ॥)

**गोपालः**, पुं, (गाः पालयतीति । गा + पाल +

"कर्म्मण्यण् ।" ३ । २ । १ । इत्यण् ।) गवां
पालकः । वृन्दावनस्थगोपालानांस्वरूपं यथा,
"गोपाला मुनयः सर्व्वे वैकुण्ठानन्दमूर्त्तयः ॥"
इति पद्मपुराणे पातालखण्डे व्यासं प्रति श्रीकृष्ण-
वाक्यम् ॥ * ॥ (गां पृथिवीं पालयतीति । गो
+ पाल + अण् ।) राजा । (गां पृथिवीं वेदं
वा पालयतीति ।) नन्दनन्दनः कृष्णः । इति
मेदिनी । ले । ८६ ॥ * ॥ श्रीगोपालस्य ध्यानं यथा,
"अव्याद्व्याकोषनीलाम्बुजरुचिररुणाम्भोज नेत्रोऽम्बुजस्थो
बालो जङ्घाकटीरस्थलकलितरणत्किङ्किणीको मुकुन्दः ।
दोर्भ्यां हैयङ्गवीनं दधदतिविमलं पायसं विश्व-
वन्द्यो
गोगोपीगोपवीतो रुरुनखविलसत्कण्ठभूष-
श्चिरं वः ॥"
इति तन्त्रसारः ॥ * ॥
तस्य स्वरूपं यथा, --

अपरे वेदशिरसि स्थितमेकं सनातनम् ॥
सद्भावं विक्रियाहीनं सच्चिदानन्दविग्रहम् ।
मन्मायामोहितधियः सर्व्वकालेषु वञ्चिताः ॥
कोऽपि वेद पुमान् लोके मदनुग्रहभाजनः ।
पश्याद्य दर्शयिष्यामि स्वं रूपं वेदगोपितम् ॥
ततोऽपश्यमहं भूप ! बालं बालाम्बुदप्रभम् ।
गोपकन्यावृतं गोपं हसन्तं गोपबालकैः ॥
कदम्बमूलमासीनं पीतवाससमद्भुतम् ।
वनं वृन्दावनं नाम नवपल्लवमण्डितम् ॥
कोकिलभ्रमरारावमनोभवमनोहरम् ।
नदीमपश्यं कालिन्दीमिन्दीवरदलप्रभाम् ॥
गोवर्द्धनं तथापश्यं कृष्णवामकरोद्धृतम् ।
महेन्द्रदर्पनाशाय गोगोपालसुखावहम् ॥
दृष्ट्वा विहृष्टो ह्यभवं सर्व्वभूषणभूषणम् ।
गोपालमबलासङ्गमुदितं वेणुनादितम् ॥
ततो मामाह भगवान् वृन्दावनवचः स्वयम् ।
यदिदं मे त्वया दृष्टं रूपं दिव्यं सनातनम् ॥
निष्कलं निष्क्रमं शान्तं सच्चिदानन्दविग्रहम् ।
पूर्णं पद्मपलाशाक्षं नातः परंतरं मम ॥
इदमेव वदन्त्येते वेदाः कारणकारणम् ।
सत्यं व्यापि परानन्दचिद्घनं शाश्वतं शिवम् ॥
नित्यां मे मथुरां विद्धि वनं वृन्दावनं तथा ।
यमुनां गोपकन्याश्च तथा गोपालबालकान् ॥
ममावतारो नित्योऽयमत्र मा संशयं कृथाः ।
ममेष्टा हि सदा राधा सर्व्वज्ञोऽहं परात्परः ॥
मयि सर्व्वमिदं विश्वं भाति मायाविजृम्भितम् ॥"
इति पद्मपुराणे पातालखण्डम् ॥ * ॥
द्वादशगोपालाश्चैतन्यशब्दे द्रष्टव्याः ॥

**गोपालकः**, पु, (गां पशुं जीवजातमित्यर्थः पाल-

यति रक्षतीति । गो + पालि + ण्वुल् ।) शिवः ।
इति त्रिकाण्डशेशः ॥ श्रीकृष्णः । यथा, --
"दाता फलानामभिवाञ्छितानां
प्रागेव गोपालकमन्त्र एषः ।
क्रमदीपिका ॥
गोपालशब्दात् स्वार्थे के गोरक्षकश्च ॥ (यद्वा
गवां पालकः रक्षकः । पालि + ण्वुल् । यथा,

यस्यां वा गोपाद्यारण्यकजातिभिः पूज्यत्वा-
दस्यास्तथात्वम् ।) काश्मरीवृक्षः । इति राज-
निर्घण्टः ॥

**गोपभद्रिका**, स्त्री, (गोपभद्रा संज्ञायां कन् । टापि
अत इत्वञ्च ।) गम्भारीवृक्षः । इति
रत्नमाला ॥

**गोपरसः**, पुं, (गोपः गन्धद्रव्यविशेषः । गोपः रसो-
ऽस्य । गोपः अभ्यन्तरगुप्तो रसो यस्मिन् वा ।)
बोलः । इति शब्दरत्नावली ॥

**गोपवल्ली**, स्त्री, (गां पाति रक्षतीति । पा + कः ।
टाप् । गोपा चासौ वल्ली चेति कर्म्मधारयः ।)
मूर्व्वा । शारिबा । इति राजनिर्घण्टः ॥ (अस्याः
पर्य्याया यथा, --
"गोपवल्ली कराला च सुगन्धा भद्रवल्लिका ।
गोपीभद्रा तथानन्ता नागजिह्वातिशारिवा ॥"
इति वैद्यकरत्नमालायाम् ॥
यथा च सुश्रुते उत्तरतन्त्रे ५१ अध्याये ।
"गोपवल्ल्युदके सिद्धं स्यादन्यद्द्विगुणे घृतम् ॥")
श्यामालता । इति शब्दरत्नावली ॥

**गोपा**, स्त्री, (गां पाति रक्षतीति । पा + "आतो-
ऽनुपसर्गे कः ।" ३ । २ । ३ । इति कः । स्त्रियां टाप् ।)
श्यामालता । इत्यमरटीका शब्दरत्नावली च ॥
(गाः पाति रक्षतीति । पा रक्षणे + कप्राप्ति-
विषये वासरूपन्यायेन "आतो मनिन्क्वनिप्-

श्रीव्यास उवाच ।
"ततोऽहमब्रुवं हृष्टः पुलकोत्फुल्लविग्रहः ।
त्वामहं द्रष्टुमिच्छामि चक्षुर्भ्यां मधुसूदन ! ॥
यत्तत् सत्यं परं ब्रह्म जगद्योनिर्जगत्पतिः ।
वसन्तं वेद शिरसि चाक्षुषं नाथ ! मेऽस्तु तत् ॥
श्रीभगवानुवाच ।
ब्रह्मणैवं पुरा पृष्टः प्रार्थितश्च यथा पुरा ।
यदवोचमहं तस्मै तत्तुभ्यमपि कथ्यते ॥
मामेके प्रकृतिं प्राहुः पुरुषञ्च तथेश्वरम् ।
धर्म्ममेके धनञ्चैके मोक्षमेकेऽकुतोभयम् ॥
शून्यमेके भावमेके परमार्थमथापरे ।
दैवमेके देवमेके ग्रहमेके मनः परे ॥
बुद्धिमेके कालमेके शिवमेके सदाशिवम् ।

महाभारते । ३ । २३९ । ६ ।
"अथ संस्मारणां कृत्वा लक्षयित्वा त्रिहायणान् ।
वृतो गोपालकैः प्रीतो व्यहरत् कुरुनन्दनः ॥"
चण्डमहासेननपतेः पुत्त्रयोरन्यतरः । यथा,
कथासरित्सागरे । ११ । ७४ ।
"जातौ द्वौ तनयौ चण्डमहासेनस्य भूपतेः ।
एको गोपालको नाम द्वितीयः पालकस्तथा ॥")

**गोपालकर्क्कटी**, स्त्री, (गोपालप्रिया कर्कटी फल-
विशेषः ।) कर्कटीभेदः । गोयालकाँकरी गुरुभा
इति च हिन्दी भाषा ॥ तत्पर्य्यायः । वन्या २
गोपकर्कटिका ३ क्षुद्रेर्व्वारुः ४ क्षुद्रफला ५
गोपाली ६ क्षुद्रचिर्भिटा ७ । अस्या गुणाः ।
शीतत्वम् । मधुरत्वम् । पित्तमूत्रकृच्छ्राश्मरी-
मेहदाहशोषनाशित्वञ्च । इति राजनिर्घण्टः ॥

**गोपालिका**, स्त्री, (गोपालकस्य गोरक्षकस्य पत्नी ।
"पालकान्तात् न ।" ४ । १ । ४८ । इत्यस्य

| | | |
|---|---|---|
| बनिपश्च ।” ३ । २ । ७४ । इति चेन विचि अदन्तत्वाभावादाप् विधेरभावे गोपा गोरक्षा- कर्त्री । गोपा विश्वपावदिति मुग्धबोध- व्याकरणम् ॥) | | |

वार्त्ति इति न ङीष् अतष्टापि अत इत्वम् ।)
गोपालपत्नी । इति मुग्धबोधम् ॥
कीटविशेषः ।
ततपर्य्यायः । महाभीरुः २ । इति हेम-
चन्द्रः । ४ । २७४ ॥

**गोपाली**, स्त्री, (गोपालानां प्रिया । गोपाल +
जातौ ङीष् ।) गोपालकर्क्कटी । गोरक्षी । इति
राजनिर्घण्टः ॥ (गोपालस्य पत्नी । गोपाल +
स्त्रियां ङीष् । गोपपत्नी ॥
स्कन्दानुचरमातृ-
विशेषः । यथा, महाभारते । ९ । ४६ । ४ ।
"अप्सु जाता च गोपाली बृहदम्बालिका
तथा ॥")

**गोपाष्टमी**, स्त्री, (गोपप्रिया अष्टमी । शाक-
पार्थिवादिवत् समासः ।)
कार्त्तिकशुक्लाष्टमी ।
यथा, --
"शुक्लाष्टमी कार्त्तिके तु स्मृता गोपाष्टमी बुधैः ।
तद्दिने वासुदेवोऽभूद्गोपः पूर्ब्बन्तु वत्सपः ॥
तत्र कुर्य्यात् गवां पूजां गोग्रासं गोप्रदक्षिणम् ।
गवानुगमनं कार्य्यं सर्व्वान् कामानभीस्पता ॥"
इति कूर्म्मपुराणम् ॥

**गोपिका**, स्त्री, (गोप्येव स्वार्थे कन् ह्रस्वश्च ।)
गोपी । यथा, --
"न खलु गोपिकानन्दनो भवा-
नखिलदेहिनामन्तरात्मदृक् ।"
इति श्रीभागवते । १० । ३१ ४ ॥
(गोपायति रक्षति या । गुपू ञ रक्षणे +
ण्वुल् ।
स्त्रियां टापि अत इत्वम् ।) रक्षित्री ॥

**गोपिनी**, स्त्री, (गोपायति रक्षतीति । गुप् +

शुतिगणा यथा, --

उद्गीता रसगीता कलगीता
कलस्वरा कल-

कण्ठिता विपञ्ची कलपदा बहुमता
बहुकर्म्म-
सुनिष्ठा बहुहरिः बहुशाखा विशाखा
सुप्र-
योगतमा विप्रयोगा बहुप्रयोगा बहुकला
कला-
वती क्रियावती इत्याद्याः ॥ * ॥
मुनिगणा यथा, --
उग्रतपाः सुतपाः प्रियव्रता सुरता सुरेखा
सुपर्व्वा बहुप्रदा रत्नरेखा मणिग्रीवा
अपर्णा
सुपर्णा मत्ता सुलक्षणा सुदती गुणवती
सौका-
लिनी सुलोचना सुमनाः सुभद्रा सुशीला
सुरभिः सुखदायिका इत्याद्याः ॥ * ॥
गोपबाला यथा--

चन्द्रावली चन्द्रिका
काञ्चनमाला रुक्ममाला-

वती चन्द्रानना चन्द्ररेखा चान्द्रवापी
चन्द्रमाला-
चन्द्रप्रभा चन्द्रकला सौवर्णमाला
मणिमालिका
वर्णप्रभा शुद्धकाञ्चनसन्निभा मालती
यूथी
वासन्ती नवमल्लिका मल्ली नवमल्ली
शेफालिका
सौगन्धिका कस्तूरी पद्मिनी कुमुद्वती
रसाला
सुरसा मधुमञ्जरी रम्भा उर्व्वशी सुरेखा
स्वर्ण-
रेखिका वसन्ततिलका इत्याद्याः । इति
पाद्मे
पातालखण्डम् ॥ अस्या विवरणं
कृष्णशब्दे
द्रष्टव्यम् ॥ * ॥ (गोपायति रक्षतीति ।
गुप् +

"शार्दूलमृगसंघुष्टं सिंहैर्भीमबलैर्वृतम्
ऋक्षवानरगोपुच्छैर्मार्ज्जारैश्च निषेवितम् ॥
इति रामायणे किष्किन्ध्याकाण्डम् ॥
गवां लाङ्गूलञ्च ॥ (यथा, बृहत्संहितायाम् ।
९५ । ३५ ।
"गोपुच्छस्थे वल्मीकगेऽथवा दर्शनं भुजङ्गस्य ॥")

**गोपुटा**, स्त्री, (गौर्वज्रं तद्वदतिकठिनमिति भावः
पुटं आच्छादनं यस्याः ।) स्थूलैला । इति
राजनिर्घण्टः ॥

**गोपुटिकं**, क्ली, (गोः शिववृषभस्य पुटिकं आच्छा-
दनयुक्तं गृहम् ।) शिववृषस्य मण्डपः । इति
त्रिकाण्डशेषः ॥

**गोपुरं**, क्ली, (गोपायति नगरं रक्षतीति । गुप् +
बाहुलकात् उरच् । यद्वा गाः पिपर्त्तीति । पॄ
पालनपूरणयोः + "मूलविभुजादिभ्य उपसंख्या-
नम् ।" इति कः ।) नगरद्वारम् । सहरेर फटक्
इति भाषा ॥ तत्पर्य्यायः । पुरद्वारम् २ । इत्य-
मरः । २ । ३ । १६ ॥ दुर्गपुरद्वारम् । इत्यन्ये ॥
द्वारमात्रम् । इति भरतः ॥ (यथा, महा-
भारते । १ । २०८ । ३१ ।
"द्विपक्षगरुडप्रख्यैर्द्वारैः सौधैश्च शोभितम् ।
गुप्तमभ्रचयप्रख्यैर्गोपुरैर्म्मन्दरोपमैः ॥" * ॥
गौर्जलं पुरमस्य यद्वा गवा जलेनं पिपर्त्ति
पूरयति आत्मानमिति । पॄ + कः ।) कैवर्त्ती-
मुस्तकम् । इति मेदिनी । रे । १५० ॥ (वैद्यक-
शास्त्रप्रणेता ऋषिभेदः । यथा, सुश्रुते सूत्रस्थाने
१ अध्याये । "अथ खलु भगवन्तममरवरमृषि-
गणपरिवृतं आश्रमस्थं काशिराजं दिवोदासं
धन्वन्तरिमौपधेनववैतरणौरभ्रपौष्कलावतकर-
वीर्य्यगोपुररक्षितसुश्रुतप्रभृतयऊचुः ॥")

**गोपुरकः**, पुं, (गां भूमिं पिपर्त्तीति । प पूर्त्तौ +
"मूलविभुजादिभ्य उपसंख्यानम् ।" इति कः ॥
ततः संज्ञायां कन् ।) कुन्दुरुकः । इति राज-
निर्घण्टः ॥

**गोपुरीषं**, क्ली, (गोः पुरीषम् विष्ठा ।) गोमयम् ।
इति राजनिर्घण्टः ॥

**गोपेन्द्रः**, पुं, (गोपेषु गोकुलस्थगोपालेषु मध्ये इन्द्रः

णिनिः ङीप् च ।) श्यामालता । इति
शब्द-
चन्द्रिका ॥ (वीराचारि-पश्वाचारिणां पूज-
नीयनायिकाविशेषः । यदुक्तं
गुप्तसाधनतन्त्रे
१ म पटले ।
"नटी कापालिकी वेश्या रजकी
नापिताङ्गना ।
ब्राह्मणी शूद्रकन्या च तथा गोपालकन्यका
॥"
अस्याः निरुक्तिर्यथा, कुलार्णवतन्त्रे ।
"आत्मानं गोपयेत् या च सर्व्वदा
पशुसङ्कटे ।
सर्व्ववर्णोद्भवा रम्या गोपिनी सा
प्रकीर्त्तिता ॥")

**गोपिलः**, त्रि, (गोपायति रक्षतीति । गुपू रक्षणे
+ "मिथिलादयश्च ।" उणां । १ । ५८ ।
इति
इलच् निपातनात् किदभावः ।) गोप्ता ।
इति
संक्षिप्तसारे उणादिवृत्तिः ॥

**गोपी**, स्त्री, (गोपस्य स्त्री । "पुंयोगादाख्या-
याम् ।" ४ । १ । ४८ । इति ङीष्)
गोपपत्नी ।
वृन्दावनस्थगोपीनांस्वरूपं यथा, --
"गोप्यस्तु श्रुतयो ज्ञेयाः स्वाधिजा
गोपकन्यकाः ।
देवकन्याश्च राजेन्द्र ! न मानुष्यः
कथञ्चन ॥" * ॥
तत्र व्रजबाला यथा, --
पूर्णरसा रसमन्थरा रसालया रससुन्दरी
रसपीयूषधामा रसतरङ्गिणी
रसकल्लोलिनी
रसवापिका अनङ्गमञ्जरी अनङ्गमानिनी
मद-
यन्ती रङ्गविह्वला ललिता ललितयौवना
अनङ्ग-
कुसुमा मदनमञ्जरी कलावती रतिकला
कल-
कण्ठी अब्जास्या रतोत्सुका रतिसर्व्वस्वा
रति-
चिन्तामणिः इत्याद्याः ॥ * ॥
अच् + गौरादित्वात् ङीष् ।) शारिवा ।
रक्षिका । इति विश्वः ॥ (रक्षित्री यथा,
रघुः । ४ । २० ।
"इक्षुच्छाया निषादिन्यस्तस्य
गोप्तुर्गुणोदयम् ।
आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः
॥")
प्रकृतिः । यथा, गोपायति सकलमिदं
गोपायति
परं पुमांसं गोपीप्रकृतिरिति क्रमदीपिका
॥

**गोपीथं**, क्ली, (गोपायति रक्षति भवबन्धना-
दिति । यद्वा गाः पशून् पाति रक्षतीति ।
गुप्
अथवा गो + पा +
"निशीथगोपीथावगाथाः ।"
उणां । २ । ९ । इति थक्प्रत्ययेन
निपातनात्
साधुः ।) तीर्थस्थानम् । इति
सिद्धान्तकौमुद्या-
मुणादिवृत्तिः ॥ (गावः पिबन्त्यस्यामिति
व्युत्-
पत्त्या जलाशयादि । इति चिन्तामणिः
॥)

**गोपीथः**, पुं, (गुप्यते रक्ष्यते इति । गुप् +
"निशिथगोपीथावगाथाः ।" उणां । २ ।
९ ।
इति भावे थक्प्रत्ययेन निपातनात् साधुः
।)
रक्षणम् । इति संक्षिप्तसारे उणादिवृत्तिः
॥
(यथा, ऋग्वेदे । १ । १९ । १ ।
"प्रति त्यं चारुमध्वरं गोपीथाय प्रहूयसे
।
मरुद्भिरग्न आ गहि ॥"
"गोपीथाय पृथिवीन्द्रियादीनां रक्षणाय
॥"
इति दयानन्दभाष्यम् ॥ गां वाणीं पृथिवीं
वा
पातीति व्युत्पत्या । गो + पा + थक् ।
निपा-
श्रेष्ठः । गोप इन्द्र इव वा । यद्वा गां वाचं
पाति रक्षतीति गोपो वेदस्तत्र इन्दति सर्व्वै-
श्वर्य्यवत्तया विराजते । इदि परमैश्वर्य्ये +
"ऋजेन्द्रेति ।" उणां । २ । २९ । इति रन्प्रत्य-
येन निपातनात् साधुः ।) विष्णुः । इति हेम-
चन्द्रः । २ । १३२ ॥ (श्रीकृष्णः । इति भागवतम् ।
गोपानामिन्द्र ईश्वरः । गोपपतिः । स तु नन्दः ।
यथा, महाभारते । ६ । २२ । २३ ।
"गोपेन्द्रस्यात्मजे ज्येष्ठे नन्दगोपकुलोद्भवे ॥")

**गोपेशः**, पुं, (गां पृथिवीं पान्ति रक्षन्तीति गोपा
राजानस्तेषामीशः सर्व्वहिंसानिवारणादिति
भावः । प्राप्तराज्योऽप्ययं विषयभोगं तुच्छीकृत्य
सन्न्यासेन निर्व्वाणमलभताऽतोऽस्यराजसु श्रेष्ठ-
त्वमायातमिति तात्पर्य्यार्थः ।) शाक्यमुनिः ।
इति त्रिकाण्डशेषः ॥ (गोपानां गोकुलस्थ

| | तनात् ईत्वम् । पण्डितः । राजा । इति कश्चित् ॥)<br>**गोपुच्छः**, पुं, (गोः पुच्छ इव आकृतिर्यस्य गोपुच्छाकारत्वादस्य तथात्वम् ।) हारभेदः ।<br>इति हेमचन्द्रः । ३ । ३२५ ॥<br>(वाद्यविशेषः ।<br>इति तट्टीका ॥) गोलाङ्गूलवानरः । यथा, -- | |
|---|---|---|

गोपालानामीशः ।) नन्दघोषः । यथा, --
"रामकृष्णावुभयतो गोपेशं परितः परे ॥"
इति मुग्धबोधम् ॥
श्रीकृष्णश्च ॥

**गोप्ता**, [ऋ] त्रि, (गोपायति रक्षतीति । गुपू ञ
रक्षणे + "ण्वुल्तृचौ ।" ३ । १ । १३३ । इति
तृच् ।) रक्षकः । यथा, --
"विप्राणामभयार्थमध्वरविधेर्गोप्ता गुरो-
राज्ञया ।"
इति राघवपाण्डवीये कविराजः ॥
(तथा च मनुः । ११ । ७९ ।
"ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान् परित्यजन् ।
मुच्यते ब्रह्महत्याया गोप्ता गोब्राह्मणस्य च ॥"
गोपायति सर्व्वाणि यद्वा आत्मानं गोपायति
स्वमायया संवृणोतीति व्युत्पत्या विष्णौ पुं ।
यथा, महाभारते । १३ । १४९ । ७६ ।
"गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ॥"
स्त्री, गङ्गा । यथा, काशीखण्डे । २९ । ५१ ।
"गोमती गुह्यविद्या गौर्गोप्त्री गगनगामिनी ॥")

**गोप्यः**, पुं, (गोप्यते रक्ष्यतेऽसौ इति । गुपू रक्षणे +
"ऋहलोर्ण्यत् ।" ३ । १ । १२४ । इति ण्यत् ।)
दासः । इत्यमरटीकायां भरतः ॥
दासीपुत्त्रः ।
रक्षणीये त्रि । इति भेदिनी । ये । २० ॥ (यथा,
महाभारते । १२ । ४१ । १५ ।
"महदेवं समीपस्थं नित्यमेव समादिशत् ।
तेन गोप्यो हि नृपतिः सर्व्वावस्थो विशाम्पते ! ॥"

**गोमक्षिका**, स्त्री, (गीसन्निकटस्था गोप्रिया वा
मक्षिका ।) दंशः । इति शब्दरत्नावली ॥ डाँश
इति भाषा ॥

**गोमतल्लिका**, स्त्री, (प्रशस्ता गौर्गोजातिः ।
"प्रशंसावचनैश्च ।" २ । १ । ६६ । इति नित्य-
समासेन परनिपातः ।) सुशीला गौः । इति
हलायुधः ॥

**गोमती**, स्त्री, (बहवो गावो जलानि सन्त्यस्या-
मिति । भूम्नि "तदस्यास्तीति ।" ५ । २ । ९४ ।
मतुप् । "उगितश्च ।" ४ । १ । ६ । इति ङीप् ।)
स्वनामख्याता नदी । तत्पर्य्यायः । वाशिष्ठी २ ।
इति हेमचन्द्रः ॥ (यथा, महाभारते । ६ । ९ । १७ ।
"गोमतीं धूतपापाञ्च चन्दनाञ्च महानदीम् ॥"
अस्यास्तीरे महादेवस्त्र्यम्बकमूर्त्या विराजते ।
यदुक्तं महालिङ्गेश्वरतन्त्रे शिवशतनामस्तोत्रे ।
"त्र्यम्बको गोमतीतीरे गोकर्णे च त्रिलोचनः ॥"
गङ्गा । यथा, काशीखण्डे । २९ । ५१ ।
"गोमती गु ह्यविद्या गौर्गोप्त्री गगनगामिनी ॥"
पीठस्थानस्था भगवती । सा तु गोमन्तपर्व्वते
वर्त्तते । यथा, देवीभागवते । ७ । ३० । ५७ ।
"गोमन्ते गोमती देवी मन्दरे कामचारिणी ॥"
वैदिकमन्त्रभेदः । यथा, --
"पञ्चगव्येन गोघाती मासैकेन विशुध्यति ।
गोमतीञ्च जपेद् विद्यां गवां गोष्ठे च संवसेत् ॥"
इति प्रायश्चित्ततत्त्वे शातातपः ॥
(गोविशिष्टायाम् ॥)

**गोमन्तः**, पुं, पर्व्वतविशेषः । इति जटाधरः ॥
(अयं हि सह्यपर्व्वतविवरस्थितो गिरिः यदुक्तं
हरिवंशे । ९५ । ६३ ।
"ततश्च्युता गमिष्यामः सह्यस्य विवरे गिरिम् ।
गोमन्त इति विख्यातं नैकशृङ्गविभूषितम् ॥"
अत्र पर्व्वते भगवती गोमतीरूपेण विराजते ।
यदुक्तं देवीभागवते । ७ । ३० । ५७ ।
तमालैलावनयुतं मरिचक्षुपसङ्कुलम् ।
पिप्पलीवल्लिकलिलं चित्रमिङ्गुदपादपैः ॥
द्रुमैः सर्ज्जरसानाञ्च सर्व्वतः प्रतिशोभितम् ।
प्रांशुशालवनैर्गुप्तं बहुचित्रवनैर्युतम् ॥
सर्ज्जनिम्बार्ज्जुनवनं पाटलीकुलसङ्कुलम् ।
हिन्तालैश्च तमालैश्च पुन्नागैश्चोपशोभितम् ॥
जलेषु जलजैश्छन्नं स्थलेषु स्थलजैरपि ।
पङ्कजैर्द्रुमषण्डैश्च सर्व्वतः प्रतिभूषितम् ॥
जम्बूजम्बूलवृक्षाढ्यं कन्दकन्दलभूषितम् ।
चम्पकाशोकबहुलं विल्वतिन्दुकशोभितम् ॥
कुटजैर्नागपुष्पैश्च समन्तादुपशोभितम् ।
नागयूथसमाकीर्णं मृगसङ्घातशोभितम् ॥
सिद्धचारणरक्षोभिः सेवितप्रस्तरान्तरम् ।
विद्याधरगणैर्नित्यमनुकीर्णशिलातलम् ।
सिंहशार्द्दूलसन्नादैः सततं प्रतिनादितम् ।
सेवितं वारिधाराभिश्चन्द्रपादैश्च शोभितम् ॥
स्तुतं त्रिदशगन्धर्व्वैरप्सरोभिरलङ्कृतम् ।
वनस्पतीनां दिव्यानां पुष्पैरुच्चावचैश्चितम् ॥
शक्रवज्रप्रहाराणामनभिज्ञं कदाचन ।
दावाग्निभयनिर्मुक्तं महावातभयोज्झितम् ॥
प्रपातप्रभवाभिश्च सरिद्भिरुपशोभितम् ।
जलशैवलशृङ्गाग्रैरुन्मिषन्तमिव श्रिया ॥
स्थलीभिर्मृगजुष्टाभिः कान्ताभिरुपशोभितम् ।
पार्श्वैरुपलकन्मार्षैर्मेघैरिव विभूषितम् ॥
पादपोच्छ्रितसौम्याभिः सपुष्पाभिः समन्ततः ।
मण्डितं वनराजीभिः प्रमदाभिः पतिं यथा ॥
सुन्दरीभिर्द्दरीभिश्च कन्दरीभिस्तथैव च ।
तेषु तेष्ववकाशेषु सदारमिव शोभितम् ॥
ओषधीदीप्तशिखरं वानप्रस्थनिषेवितम् ।
जातरूपैर्व्वनोद्देशैः कृत्रिमैरिव भूषितम् ॥
मूलेन सुविशालेन शिरसात्युच्छ्रितेन च ।
पृथिवीमन्तरीक्षञ्च गाहयन्तमिव स्थितम् ॥"
श्रीकृष्णो बलरामेण सह जरासन्धभयात् अत्र
पर्व्वते पलायमानः स्थितः । ततो मदमत्तैर्बहु-
संख्यकराजभिरतिगर्व्वितो जरासन्धः कृष्णेण
सार्द्धं युयुत्सुरत्रागत्येमं गोमन्तपर्व्वतं दग्धुं
प्रवृत्तः एतत्कथा हरिवंशे ९८ अध्याये विस्त-
रशो द्रष्टव्या ॥ * ॥) गवां स्वामिसमूहश्च ॥ (तत्र
गोमच्छब्दे प्रथमाविभक्तेर्बहुवनप्रयोगः ॥)

गोप्यतेऽसाविति । गुपू ञ गोपने + कर्म्मणि
गयत् ।) गोपनीयः । यथा, --
"आयुर्वित्तं गृहच्छिद्रं मन्त्रमैथुनभेषजम् ।
अपमानन्तपो दानं नव गोप्यानि यत्नतः ॥"
इति पुराणम् ॥
गीपीसमूहश्च ॥ (तत्र गोपीशब्दात् प्रथमावि-
भक्तेर्बहुवचनप्रयोगः ॥)

**गोप्यकः**, पुं, (गोप्य एव । स्वार्थे कन् ।) दासः ।
इत्यमरः । २ । १० । १७ ॥

**गोप्याधिः**, पुं, (गोप्यो रक्षणीय आधिर्बन्धकः ।)
बन्धकविशेषः । (यथा, याज्ञवल्क्ये । २ । ६० ।
"गोप्याधिभोगे नो वृद्धिः सोपकारेऽथ तापिते ॥")
"तया च नारदः ।
अधिक्रियत इत्याधिः स विज्ञेयो द्विलक्षणः ।
कृतकालोपनेयश्च यावद्देयोद्यतस्तथा ॥
स पुनर्द्विविधः प्रोक्तो गोप्यो भोग्यस्तथैव च ।
गोप्यो रक्षणीयः ।" इति मिताक्षरा ॥

**गोप्रकाण्डं**, क्ली, (प्रशस्ता गौर्गोजातिः । "प्रशंसा-
वचनैश्च ।" २ । १ । ६६ । इति परनिपातः ।
प्रकाण्डशब्दस्य नियतलिङ्गतया क्लीवत्वम् ।)
श्रेष्ठगौः ॥ इति सिद्धान्तकौमुदी ॥

**गोभण्डीरः**, पुं, (गवि जले भण्डीरः अतिवाचालः ।)
जलकुक्कुभपक्षी । इति त्रिकाण्डशेषः ॥

**गोम**, त् क लेपने । इति कविकल्पद्रुमः ॥ (अदन्त-
चुरां-परं-सकं-सेट् ।) अजुगोमद्गोमयेन स्थानं
चेटी । इति दुर्गादासः ॥

**गोमतः**, पुं, (गो + मतुप् ।) गोमतः ।

"गोमन्ते गोमती देवी मन्दरे कामचारिणी ॥"
अयं हि द्वितीयमेरुरिव महान् पर्व्वतः । अस्य
वर्णनं यथा, हरिवंशे । ९६ । ४--२७ ।
"ते चाध्वविधिना सर्व्वे ततो वै दिवसक्रमात् ।
गोमन्तमचलं प्राप्ता मन्दरं त्रिदशा इव ॥
लताचारुविचित्रञ्च नानाद्रुमविभूषितम् ।
गन्धागुरुपिनद्धाङ्गं चित्रं चित्रैर्मनोरमैः ॥
द्विरेफगणसङ्कीर्णं शिलासङ्कटपादपम् ।
मत्तवर्हिणनिर्घोषैर्नादितं मेघनादिभिः ॥
गगनालग्नशिखरं जलदासक्तपादपम् ।
मत्तद्विपविषाणाग्रपरिधृष्टोपलाङ्कितम्॥
कूजद्भिश्चाण्डजगणैः समन्तात् प्रतिनादितम् ।
दरीप्रपाताम्बुरवैश्छन्नं शाद्वलपल्लवैः ॥
नीलाश्मचयङ्गातैर्बहुवर्णं यथा घनम् ।
धातुविस्रावदिग्धाङ्गं सानुप्रस्रवभूषितम् ॥
कीण सुरगणैः कान्तैर्मैनाकमिव कामगम् ।
उच्छ्रितं सुविशालाग्रं समूलाम्बुपरिस्रवम् ॥
सकाननदरीप्रस्थं श्वेताभ्रगणभूषितम् ।
पनसाम्रातकाम्रौघैर्व्वेत्रस्यन्दनचन्दनैः ॥

**गोमयं**, क्ली, पुं, (गोः पुरीषम् । "गोश्च पुरीषे ।"
४ । ३ । १४५ । इति मयट् ।) गवां गूथम् ।
गोवर इति भाषा ॥ तत्पर्य्यायः । गोविट् २
इत्यमरः । २ । ९ । ५० ॥ जगलम् ३ गोहन्नम् ४
गोशकृत् ५ । इति रत्नमाला ॥ गोपुरीषम् ६
गोविष्ठा ७ गोमलम् ८ । इति राजनिर्घण्टः ॥
तस्य माहात्म्यं यथा, --
"शतं वर्षसहस्राणां तपस्तप्तं सुदुष्करम् ।
गोभिः पूर्ब्बविसृष्टाभिर्गच्छेम श्रेष्ठतामिति ॥
अस्मत्पुरीषस्नानेन जनः पूयेत सर्व्वदा ।
शकृता च पवित्रार्थं कुर्व्वीरन् देवमानुषाः ॥
ताभ्यो वरं ददौ ब्रह्मा तपसोऽन्ते स्वयं प्रभुः ।
एवं भवत्विति विभुर्लोकांस्तारयतेति च ॥" * ॥

तत्र लक्ष्म्या वासो यथा, लक्ष्मीं प्रति गवां वाक्यम् ।
“अवश्यं मानना कार्य्या
तवास्माभिर्यशस्विनि ! ।
शकृन्मूत्रे निवस त्वं पुण्यमेतद्धि नः शुभे ! ॥”
श्रीरुवाच ।
“दिष्ट्या प्रसादो युष्माभिः कृतो
मेऽनुग्रहात्मकः ।
एवं भवतु भद्रं वः पूजितास्मि सुखप्रदाः ॥”
इति महाभारते दानधर्म्मः ॥
(कृच्छ्रसान्तपने अस्य भक्षणविधिर्यथा, मनुः ।
११ । २१२ ।
“गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
एकरात्रोपवासश्च कृच्छ्रं सान्तपनं
स्मृतम् ॥”
“अत्यन्तजीर्णदेहाया बन्ध्यायाश्च
विशेषतः ।
रोगार्त्तायाः प्रसूताया न गोर्गोमयमाहरेत् ॥”
इति चिन्तामणिधृतस्मृतिवचनम्॥
गां सर्व्वतीर्थमयीं परिकल्प्य एतस्या गोमयं
यमुनानदीतया परिकल्पयन्ति वृद्धाः । यदु-
क्तम्, --
“गोमयं यमुना साक्षात् गोमूत्रं नर्म्मदा शुभा ।
गङ्गा क्षीरन्तुयासां वै किं पवित्रमतःपरम् ॥” * ॥)
गवात्मके क्ली ॥

**गोमयच्छत्रं**, क्ली, (गोमयात् जातं छत्रं छत्रा-
कारं शिलीन्ध्रमित्यर्थः ।) करकम् । इति त्रिकाण्डशेषः ॥ काँडकछाता इति भाषा ॥

**गोमयच्छत्रिका**, स्त्री, (गोमये गोमयप्रचुरे स्थाने
क्रव्यादं कुक्कुटं ग्राम्यं कुर्य्यात् संवत्सरं व्रतम् ॥
एतच्चिरकालाभ्यासे। संवत्सरकृच्छ्रव्रते पञ्च-
दशधेनवः । पुनरुपनयनञ्च । यथा, विष्णुः । विड्-
वराहग्रामकुक्कुटनरगोमांसभक्षणे सर्व्वेष्वेव
द्विजातीनां प्रायश्चित्तान्ते भूयः संस्कारं
कुर्य्यात् ।” इति प्रायश्चित्तविवेकः ॥ (अस्य
गुणा यथा, --
“गव्यं केवलवातेषु पीनसे विषमज्वरे ।
शुष्ककासश्रमात्यग्निमांसक्षयहितञ्चयत् ॥”
इति चरके सूत्रस्थाने २७ अध्याये ॥
“श्वासकासप्रतिश्यायविषमज्वरनाशनम्।
श्रमात्यग्निहितं गव्यं पवित्रमनिलापहम् ॥”
इति सुश्रुते सूत्रस्थाने ४६ अध्याये ॥
अन्यत् गोशब्दे ‘गौः इत्यत्र’ द्रष्टव्यम् ॥ * ॥
हठयोगमतेनास्य पारिभाषिकोऽर्थो यथा,
हठयोगप्रदीपिकायाम् । ३ । ४७ -- ४८ ।
“गोमांसं भक्षयेन्नित्यं पिबेदमरवारुणीम् ।
कुलीनं तमहं मन्ये इतरे कुलघातकाः ॥
गोशब्देनोच्यते जिह्वा तत्प्रवेशो हि तालुनि ।
गोमांसभक्षणं तत्तु महापातकनाशनम् ॥”)

**गोमान्**, [त्] त्रि, (बहवो गावोऽस्यास्मिन् वा
सन्तीति । “तदस्यास्तीति ।” ५ । २ । ९४ । मतुप् ।)
बहूनां गवां स्वामी । तत्पर्य्यायः । गवीश्वरः २
गोमी ३ । इत्यमरः । २ । ९ । ५८ ॥ (यथा,
अथर्व्ववेदे । ६ । ६८ । ३ ।
“येनावपत् सविता क्षुरेण
सोमस्य राज्ञो वरुणस्य विद्वान् ।
तेन ब्रह्मणो वपते दमस्य
गोमानश्ववानयमस्तु प्रजावान् ॥”)

**गोमायुः**, पुं, (गां विकृतां वाचं मिनोतीति ।
डुमि ञ + कृवापेत्युण् ।) शृगालः । इत्य-
मरः । २ । ५ । ५ ॥ (यथा, महाभारते । २ ।
९७ । २३ ।
“ततो राज्ञो धृतराष्ट्रस्य गेहे
गोमायुरुच्चैर्व्याहरदग्निहोत्रे ॥”
अस्य ध्वनौ शुभाशुभफलं शृगालशब्दे द्रष्ट-
व्यम् ॥) गन्धर्व्वविशेषः । इति जटाधरः ॥
गोपित्ते सान्तक्लीवोऽयम् ॥

“शृणु देवि ! प्रवक्ष्यामि मांसभेदान् निबोध मे
न दद्यात् तिक्तकमठं पशुशृङ्गिणमेव च ॥
गोमीनं चक्रशकुलं वडालं राघवन्तथा ॥”

**गोमुखं**, क्ली, (गोर्मुखमिव मुस्वं प्रवेशद्वारमस्य ।)
कुटिलागारम् । (गोर्मुखमिव आकृतिरस्य ।)
वाद्यभाण्डम् । (एतदर्थे पुंलिङ्गोऽपि दृश्यते ।
यथा, गीतायाम् । १ । १३ ।
“ततः शङ्खाश्च भेर्य्यश्च
पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त सशब्दस्तुमुलोऽभवत् ॥”
तथा च महाभारते । ९ । ४६ । ५७ ।
“आडम्बरान् गोमुखांश्च डिण्डिमांश्च महा-
स्वनान् ॥”)
लेपनम् । इति मेदिनी । खे । ८ ॥ (यथा,
माषे । ३ । ४८ ।
“शुकाङ्गनीलोपलनिर्म्मितानां
लिप्तेषु भासा ग्रहदेहलीनाम् ।
यस्यामलिन्देषु न चक्रुरेव
मुग्धाङ्गना गोमयगोमुखानि ॥”)
चौरक्रियमाणसुरङ्गाभेदः । सिँधविशेष इति भाषा ॥ इति त्रिकाण्डशेषः ॥
(आसनविशेषः ।
तल्लक्षणं यथा, हठयोगप्रदीपिकायाम् । १ । २० ।
“सव्ये दक्षिणगुल्फं तु पृष्ठपार्श्वे नियोजयेत् ।
दक्षिणेऽपि तथा सव्यं गोमुखं गोमुखाकृति ॥”)
जपमालागोपनार्थं वस्त्रनिर्म्मितयन्त्रं यथा, --
“चतुर्व्विंशाङ्गुलमितं पट्टवस्त्रादिसम्भवम् ।
निर्म्मायाष्टाङ्गुलिमुखं ग्रीवां तत्
षड्दशाङ्गुलम् ॥
ज्ञेयं गोमुखयन्त्रञ्च सर्व्वतन्त्रेषु गोपितम् ।

जाता छत्रिका शिलीन्ध्रमित्यर्थः ।)
गोमय-
च्छत्रम् । तत्पर्य्यायः । दिलीरम् २
शिलीन्ध्र
कम् ३ । इति हारावली ॥ उच्छिलीन्ध्रम्
४ ।
यथा, "उच्छिलीन्धमिवार्भकाः ॥" इति
श्रीभाग-
वतम् ॥

**गोमयप्रियं**, क्ली, (गोमयं प्रियं उत्पत्तिकारण-

त्वेन यस्य ।) भूतृणम् । इति रत्नमाला ॥
गन्ध-
स्वड इति भाषा ॥

**गोमयोत्था**, स्त्री, (गोमयादुत्तिष्ठतीति । उत् +

स्था + "आतोऽनुपसर्गे कः ।" ३ । १ ।
३ ।
इति कः । ततः स्त्रियां टाप् ।)
गोमयजात-
कीटविशेषः । तत्पर्य्यायः । गर्द्दभी २ ।
इति
हेमचन्द्रः । ४ । २७४ ॥

**गोमयोद्भवः**, पुं, (उद्भवत्यस्मादिति उद्भवः गोमय

उद्भवः कारणं यस्य । यद्वा गोमयादुद्भव
उत्-
पत्तिर्यस्य ।) आरग्बधः । इति
शब्दचन्द्रिका ॥
शोनालु इति भाषा ॥

**गोमांसं**, क्ली, (गवां मांसम् ।) गवां पिशितम् ।

तद्भक्षणप्रायश्चित्तं यथा । "सुमन्तुः ।
गोमांस-
भक्षणे प्राजापत्यञ्चरेत् । इदमज्ञानतः
सकृद्-
भक्षणविषयम् । यथाह पराशरः ।
अमम्यागमने चैव मद्यगोमांसभक्षणे ।
शुद्ध्यै चान्द्रायणं कुर्य्यान्नदीं गत्वा
समुद्रगाम् ॥
चान्द्रायणे ततश्चीर्णे
कुर्य्याद्ब्राह्मणभोजनम् ।
अनडुत्सहितां गाञ्च दद्याद्विप्राय दक्षिणाम्
॥

**गोमी**, [न्] त्रि, (गौरस्त्यस्य । "ज्योत्स्ना-

तमिस्राशृङ्गिणोर्जस्विन्निति ।" ५ । २ । ११४ ।
इति मिनिः ।) गोमान् । इत्यमरः । २ । ९ । ५८
॥
(यथा, मनुः । ९ । ५० ।
"यद्यन्यगोषु वृषभो वत्सानां जनयेच्छतम् ।
गोमिनामेव ते वत्सा नोद्यं स्कन्दितमार्षभम् ॥"
गौर्बीजमन्त्रवाक्यं अस्यास्तीति ।) उपासकः ।
इति मेदिनी । ने । ६० ॥

**गोमी**, [न्] पुं, (गौः कठोरध्वनिरस्त्यस्येति ।

"ज्योत्स्नातमिस्रेति ।" ५ । २ । ११४ । इति
मिनिः ।) शृगालः । इति मेदिनी । ने । ६० ॥
बुद्धभिक्षुशिष्यः । इति त्रिकाण्डशेषः ॥

**गोमीनः**, पुं, (गौरिव स्थूलो मीनः ।) मत्स्य-

विशेषः । यथा, मत्स्यसूक्ते ।

तन्मुखे स्थापयेन्मालां ग्रीवामध्यगतः करः
॥
प्रजपेद्विधिना गुह्यं वर्णमालाधिकं प्रिये ॥"
इति मुण्डमालातन्त्रम् ॥
अपि च मायातन्त्रे ।
"गोमुखादौ ततो मालां गोपयेन्मातृजारवत्
॥"

**गोमुखः**, पुं, (गोर्मुखमिव मुखं यस्य ।) नक्रः ।

यक्षविशेषः । इति हेमचन्द्रः । ४ । ४१५
॥
(मातलिपुत्त्रः । यथा, महाभारते । ५ ।
१०० । ८ ।
"बहुशो मातले ! त्वञ्च तव पुत्त्रश्च
गोमुखः ॥"
वत्सराजमन्त्रिपुत्त्रविशेषः । स पुनः
वत्सराज-
सुतस्य मन्त्रिणामन्यतमः । यथा,
कथासरित्-
सागरे । २३ । ५७ ।
"ततो नित्योदिताख्यस्य
प्रतीहाराधिकारिणः ।
इत्यकापरसंज्ञस्य पुत्त्रोऽजायत गोमुखः
॥")

**गोमुखी**, स्त्री, (गोर्मुखमिव आकृतिरस्याः ।

स्त्रियां ङीष् ।) हिमालयाद्गङ्गापतने
गोमुखा-
कारगुहा । इति लोकप्रसिद्धिः ॥
राढदेशस्थ-
नदीविशेषः । गोमुड इति ख्याता ॥

**गोमूत्रं**, क्ली, (गोर्मूत्रम् ।) गोप्रस्रावः । चोना

इति भाषा ॥ तत्पर्य्यायः । गोजलम् २
गोऽम्भः ३
गोनिष्यन्दः ४ गोद्रवः ५ ।
(कृच्छ्रसान्तपने
गोमूत्रभक्षणविधिर्य्यथा, मनुः । ११ । २१२
।
"गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्
।
एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतम्
॥")

| | | |
|---|---|---|
| इदं ज्ञानतोऽभ्यासे। शङ्खः। गामश्वं कुञ्जरोष्टौ च सर्व्वं पञ्चनखं तथा। | | अस्य गुणाः। कटुत्वम्। तिक्तत्वम्। उष्णत्वम्। |

लघुत्वम् । कफवातत्वग्दोषनाशित्वम् । पित्त-
कारित्वम् । दीपनत्वम् । मेध्यत्वम् । मतिप्रद-
त्वञ्च । इति राजनिर्घण्टः ॥ तीक्ष्णत्वम् । क्षार-
त्वम् । कषायत्वम् ।
शूलगुल्मोदरानाहकण्ड्वक्षि-
मुखरोगकिलासवातामवस्तिरुक्कुष्ठकासश्वास-
शोथकामलापाण्ड्वतिसारमूत्ररोधकृमिशीत-
प्लीहवर्च्चोग्रहनाशित्वम् । पूरणात् कर्णशूल-
नाशित्वम् । सर्व्वमूत्रेषु गुणाधिकत्वञ्च । इति
भावप्रकाशः ॥
("तीक्ष्णञ्चोष्णं क्षारमेवं कषायं)
मेध्यं तृष्णाश्लेष्महाप्यस्थिभृच्च ।
तन्माङ्गल्यं रक्तपित्तप्रभेदि
भ्रूशङ्खकण्ठाहनुरोगहृच्च ॥
कण्डूकिलासगदशूलमुखाक्षिरोगान्
गुल्मातिसार-मरुदामय-मूत्ररोधान् ।
काशं सकुष्ठजठरक्रिमिरोगजालं
गोमूत्रमेकमपि पीतमहो निहन्ति ॥"
इति प्रथमस्थाने नवमेऽध्याये हारीतेनोक्तम् ॥
"गोमूत्रं कटुतीक्ष्णोष्णं सक्षारत्वान्नवातलम् ।
लघ्वग्निदीपनं मेध्यं पित्तलं कफवातजित् ॥
शूलगुल्मोदरानाह विरेकास्थापनादिषु ।
मूत्रप्रयोगसाध्येषु गव्यं मूत्रं प्रयोजयेत् ॥"
इति सुश्रुते सूत्रस्थाने पञ्चचत्वारिंशत्तमेऽध्याये
॥
गां सर्व्वतीर्थमयीं कल्पयित्वा एतस्या मूत्रं
नर्म्मदानदीत्वेन परिकल्पयन्ति वृद्धाः । यदुक्तम्
।
"गोमयं यमुना साक्षात् गोमूत्रं नर्म्मदा शुभा ।
गङ्गा क्षीरन्तु यासां वै किं पवित्रमतः परम् ॥")

**गोमूत्रिका**, स्त्री, (गोमूत्रवत् वक्रसरलाकृतिरस्या

अस्तीति । गोमूत्र + "अत इनिठनौ ।" ५ । २ ।
११५ । इति ठन् टाप् च ।) तृणविशेषः ।
ताम्बुड़
इति भाषा ॥ तत्पर्य्यायः । रक्ततृणा २ क्षेत्रजा ३
कृष्णभूमिजा ४ । अस्या गुणाः । मधुरत्वम् ।
वृष्य-
त्वम् । गोदुग्ध दायित्वञ्च । इति राजनिर्घण्टः ॥
(गोमूत्रस्येव उच्चावचा गतिरस्या अस्तीति
ठन् ।) चित्रकाव्यविशेषः । यथा, --
"रत्नं गारुत्मतं पुष्पं रागो
माणिक्यमेव च ।
इन्द्रनीलश्च गोमेदस्तथा
वैदूर्य्यमित्यपि ॥
मौक्तिकं विद्रुमश्चेति
रत्नान्युक्तानि वै नव ।"

इति भावप्रकाशस्य
पूर्ब्बखण्डे प्रथमे भागे ॥

अस्य परीक्षागुणादिकञ्च
गोमेदकशब्दे द्रष्ट-
व्यम् ॥ कक्वोलः । इति हारावली
। २६१ ॥ द्वीप-
विशेषः । तन्नामनिरुक्तिर्यथा, --
"गोमेदे गोपतिर्नाम
राजाभूद्गोसवोद्यतः ।
याज्योऽभूद्वह्निकल्पानामौतथ्यानां
मनोः कुले ॥
स तेषु हरियज्ञाय प्रवृत्तेषु भृगून्
गुरून् ।
वव्रे तं गौतमः कोपादशपत्
सोऽगमत् क्षयम् ॥
यज्ञवाटेऽस्य ता गावो दग्धाः
कोपाग्निना मुनेः ।
तन्मेदसा मही छन्ना गोमेदः स
ततोऽभवत् ॥"
इति चिन्तामणिधृतवचनानि ॥
प्लक्षद्वीपस्थवर्षाचलभेदः । यथा,
विष्णुपुराणे ।
२ । ४ । ६--७ ।
"मर्य्यादाकारकास्तेषां तथान्ये
वर्षपर्व्वताः ।
सप्तैव तेषां नामानि शृणुष्व
मुनिसत्तमाः ॥
गोमेदश्चैव चन्द्रश्च नारदो
दुन्दुभिस्तथा ।
सोमकः सुमनाश्चैव वैभ्राजश्चैव
सप्तमः ॥")

**गोमेदकं**, क्ली, (गोमेद + स्वार्थे कन् ।)
पीतमणिः ।
चतुर्व्विधानामेषान्तु धारणं परिसम्मतम् ॥"
इति भोजराजकृतयुक्तिकल्पतरुः ॥
(कतक-गोमेदक-विषपन्थि-शैबालमूल-वस्त्राणि
मुक्तामणिश्चेति ।" इति सुश्रुते सूत्रस्थाने ४५
अध्याये ॥)

**गोमेदसन्निभः**, पुं, (गोमेदस्य संन्निभस्तुल्यः ।)

दुग्धपाषाणः । इति राजनिर्घण्टः ॥

**गोमेधः**, पुं, (मेधहिंसायम् + भावे घञ् । गवां मेधो

हिंसा यत्र ।) यज्ञविशेषः । तत्र स्त्रीगोपशुः
मन्त्रेषु स्त्रीलिङ्गपाठात् । तस्य लक्षणं सप्त-
शफत्वनवशफत्वभग्नशृङ्गत्वकाणत्वछिन्नकर्णत्वादि-
दोषराहित्यम् । तस्य प्रयोगः सर्व्वोऽपि छाग-
पशुवत् । यजमानस्य स्वर्गः फलं गोश्च गोलोक-
प्राप्तिः । तस्य च कलौ निषेधो यथा, --
"अश्वालम्भो गवालम्भः सन्न्यासः पलपैतृकम् ।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ॥"
इत्यापस्तम्बादिकल्पसूत्रपुराणम् ॥

**गोरक्षः**, पुं, (गां रक्षतीति । रक्ष + "कर्म्मण्यण् ।"

३ । २ । १ । इत्यण् ।) ऋषभनामौषधम् । इति
हेमचन्द्रः ॥ नागरङ्गः । गोरक्षके त्रि । इति
मेदिनी । षे । ३६ ॥ (यथा, मनुः । ८ । १०२ ।
(गोरक्षकान् बाणिजिकांस्तथा कारुकुशी-
लवान् ॥" स्वनामख्यातो योगिविशेषः । अयं
हठविद्यया प्राप्तैश्वर्य्यः सिद्धपुरुषः । यथा हठ-
योगप्रदीपिकायाम् । १ । ५ ।
"श्री-आदिनाथमत्स्येन्द्रशावरानन्दभैरवाः ।
चौरङ्गीमीनगोरक्षविरूपाक्षविलेशयाः ॥"
एतद्पदिष्टयोगप्रकरणानिगोरक्षसंहितायां
वर्त्तन्ते । तत्र आसनप्राणसंरोधप्रत्याहारधारणा-
ध्यानसमाधयः षट् योगाङ्गानि उक्तान्येवेति ॥
शिवोपासकानां 'कण् फट्' इत्याख्ययोगिनां
गुरुर्गोरक्षनाथ एव धर्म्मप्रयोजकः । अमीशैव-
योगिनः एनं शिवावतारं गुरुं मन्यमानास्तत्-
प्रवर्त्तितहठयोगमभ्यस्यन्ति । गोरक्षश्चासौ
आदिनाथस्य पौत्रो महेन्द्रनाथस्य पुत्त्र आसी-
दिति तद्देशीयैर्गाथायां भ्रण्यते ॥)

**गोरक्षकर्कटी**, स्त्री, (गोरक्षा गोरक्षाकर्त्त्री

कर्कटी ।) चिर्भिटा । इति भावप्रकाशः ॥

"गतिरुच्चावचा यत्र मार्गे मूत्रस्य गोरिव ।
गोमूत्रिकेति तत् प्राहुर्दुष्करञ्चित्रवेदिनः ॥"
तस्या भेदाः । पादगोमूत्रिका । अर्द्धगोमूत्रिका । श्लोकगोमूत्रिका । विपरीतगोमूत्रिका । इति सरस्वतीकण्ठाभरणम् ॥ (उदाहरणं यथा, किरातार्ज्जुनीये । १५ । १२ ।
"नासुरोयं नवानागो धरसंस्थो हि राक्षसः ।
नासुखोयं नवाभोगो धरणिस्थो हि राजसः ॥"
"वर्णानामेकरूपत्वं यद्येकान्तरमर्द्धयोः ।
गोमूत्रिकेति तत् प्राहुर्दुष्करं तद्विदो विदुः ॥
इति लक्षणात् ।
पोडशकोष्ठद्वये अर्द्धद्वयं क्रमेण विलिख्यैकान्तर-
विनियमेन वाचने श्लोकनिष्पत्तिरित्युद्धारः ॥"
इति तट्टीकायां मल्लिनाथः ॥)

**गोमेदः**, पुं, (गौर्जलमिव मेदयति स्नेहयतीति । मिद् + पचाद्यच् ।) गोमेदकमणिः । इति राजनिर्घण्टः ॥ (ध तु नवरत्नान्तर्गतरत्न-विशेषः । यथा, -- काकोलम् । पत्रकम् इति मेदिनी । के । १८६ ॥

**गोमेदकः**, पुं, (गोमेद + स्वार्थे कन् ।) स्वनाम-ख्यातमणिः । तत्पर्य्यायः । गोमेदः २ राहु-रत्नम् ३ तमोमणिः ४ स्वर्भानवः ५ पिङ्ग-स्फटिकः ६ । अस्य गुणाः । अम्लत्वम् । उष्ण-त्वम् । वातकोपविकारनाशित्वम् । दीपनत्वम् । पाचनत्वम् । धारणे पापनाशित्वञ्च । इति राजनिर्घण्टः ॥ तस्य परीक्षा यथा, --
"हिमालये वा सिन्धौ वा गोमेदमणिसम्भवः ।
स्वच्छकान्तिर्गुरुः स्निग्धो वर्णाढ्यो दीप्तिमानपि ॥
बलक्षः पिञ्जरो धन्यो गोमेद इति कीर्त्तितः ।
चतुर्द्धा जातिभेदस्तु गोमेदेऽपि प्रकाश्यते ॥
ब्राह्मणः शुक्लवर्णः स्यात् क्षत्त्रियो रक्त उच्यते ।
आपीतो वैश्यजातिस्तु शूद्रास्तु नील उच्यते ॥
छाया चतुर्विधा श्वेता रक्ता पीतासिता तथा ॥
गुरुप्रभाढ्यः सितवर्णरूपः स्नग्धो मृदुर्व्वातिमहापुराणः ।
स्वच्छस्तु गोमेदमणिर्धृतोऽयं करोति लक्ष्मीं धनधान्यवृद्धिम् ॥
लधुर्व्विरूपोऽतिखरोऽन्यमानः स्नेहोपलिप्तो मलिनः खरोऽपि ।
करोति गोमेदमणिर्व्विनाशं सम्पत्तिभोगाबलबीर्य्यराशेः ॥
ये दोषा हीरके ज्ञेयास्ते गोमेदमणावपि ।
परीक्षा वह्नितः कार्य्या शाने वा रत्नकोविदैः ॥

**गोरक्षजम्बूः**, स्त्री, (गोरक्षा जम्बूः ।) गोधूमः । गोरक्षतण्डुला । इति विश्वः ॥ घोण्टाफलः । इति जटाधरः ॥

**गोरक्षतण्डुला**, स्त्री, (गोरक्षा तण्डुला ।) क्षुद्र-लताविशेषः । गोरक्षचाउलिया इति भाषा । तत्पर्य्यायः । गाङ्गेरुकी २ नागबला ३ झसा ४ ह्रस्वगवेधुका ५ खरवल्लरिका ६ विश्वदेवा ७ । इति रत्नमाला ॥

**गोरक्षतुम्बी**, स्त्री, (गां जलं रक्षत्यस्मिन्निति अप् । गोरक्षः कुम्भः । तद्वत् कुम्भाकारा तुम्बी । गोरक्षेति नामिका तुम्बी वा ।) कुम्भतुम्बी । इति राजनिर्घण्टः ॥

**गोरक्षदुग्धा**, स्त्री, (गोरक्षं गोपालकं दुग्धं रसो यस्याः ।) क्षुद्रक्षुपविशेषः । तत्पर्य्यायः ।

| | | |
|---|---|---|
| | स्फटिकेनैव कुर्व्वन्ति<br>गोमेदप्रतिरूपिणम् ॥<br>शुद्धस्य गोमेदमणेस्तु मूल्यं<br>सुवर्णतो द्वैगुणमाहुरेके ।<br>अन्ये तथा विद्रुमतुल्यमूल्यं<br>तथापरे चामरतुल्यमाहुः ॥ | |

गोरक्षी २ ताम्रदुग्धा ३ रसायनी ४
बहुपत्री ५
अमृता ६ जीव्या ७ अमृतसञ्जीवनी ८
।
अस्या गुणाः । मधुरत्वम् । वृष्यत्वम् ।
संग्राहि-
त्वम् । हिमत्वम् । सर्व्ववश्यकारित्वम्
। रस-
सिद्धिगुणप्रदत्वञ्च । इति राजनिर्घण्टः
॥

**गोरक्षी**, स्त्री, (गां रक्षति पालयति इति । “कर्म्म-
ण्यण् ।” ३ । २ । १ । इति अण् ।
ततो ङीप् ।)
क्षुद्रक्षुपविशेषः । सा तु मालवे प्रसिद्धा
। तत्-
पर्य्यायः । सर्पदण्डी २ दीर्घदण्डी ३
सुदण्डिका ४
चित्रला ५ गन्धबहुला ६ गोपाली ७
पञ्च-
पर्णिका ८ । अस्या गुणाः । मधुरत्वम्
। तिक्त-
त्वम् । शिशिरत्वम् ।
दाहपित्तविस्फोटवान्त्यती-
सारज्वरदोषनाशित्वञ्च । गोरक्षदुग्धा ।
कुम्भ-
तुम्बी । इति राजनिर्घण्टः ॥

**गोरङ्कुः**, पुं, (गवा वाचा रङ्कुर्मृगविशेष इव ।)
पक्षिभेदः । लग्नकः । वन्दी । इति
मेदिनी ।
के । ८५ ॥ क्वचित् पुस्तके
लग्नकस्थाने नग्नकोऽपि
पाठः ॥

**गोरटः**, पुं, (गवि इन्द्रिये रटतीति । रट् + अच्
।)
दुरखदिरः । इति राजनिर्घण्टः ॥

**गोरणं**, क्ली, (गुर् + भावे ल्युट् ।) गुरणम् ।
(गुर्य्यते गम्यते फलमनेनेति । गुर +
करणेल्युट् ।)
“गावो दीनाः पार्थिवस्याशिवाय
पादैर्भूमिं कुट्टयन्त्यश्च रोगान् ।
मृत्युं कुर्व्वन्त्यश्रुपूर्णायताक्ष्यः
पत्युर्भीतास्तस्करानारुवन्त्यः ॥
अकारणे क्रोशति चेदनर्थो
भयाय रात्रौ वृषभः शिवाय ।
भृशं निरुद्धा यदि मक्षिकाभि-
स्तदाशु वृष्टिं सरमात्मजैर्वा ॥
आगच्छन्त्यो वेश्म बम्भारवेण
संसेवन्त्यो गोष्ठवृद्धै गवां गाः ।
आर्द्राङ्ग्यो वा हृष्टरोम्ण्यः प्रहृष्टा
धन्या गावः स्युर्महिष्योऽपि चैवम् ॥”)

**गोरोचं**, क्ली, (गोभिः तेजोभिरुच्यते दीप्यते इति ।
रुच् + अप् । गा इन्द्रियाणि इन्द्रियोपलक्षि-
तानि शरीरादीनि रोचयति दीपयति औष-
धादियोगेनेत्यर्थः । रुच् + णिच् + अच् ।) हरि-
तालम् । इति राजनिर्घण्टः ॥

**गोरोचना**, स्त्री, (गोर्जाता रोचना हरिद्रा इव ।)
स्वनामख्यातपीतवर्णद्रव्यम् । तत्तु
गोमस्तकस्थ-
शुष्कपित्तम् । यथा, माधवकरे ।
विशोषयेद्वस्तिगतं सशुक्रं
मूत्रं सपित्तं पवनः कफं वा ।
यदा तदाश्मर्य्युपजायते च
क्रमेण पित्तेष्विव रोचना गोः ॥”
तत्पर्य्यायः । रुचिः २ शोभा ३ रुचिरा ४
शोभना ५ शुभा ६ गौरी ७ रोचनी ८ पिङ्गा ९
मङ्गल्या १० मङ्गला ११ शिवा १२ पीता १३
गौतमी १४ गव्या १५ चन्दनीया १६ काञ्चनी
१७
मेध्या १८ मनोरमा १९ श्यामा २० रामा २१
।
इति राजनिर्घण्टः ॥ बन्द्या २२ रोचना २३ ।
अस्या गुणाः । हिमत्वम् । तिक्तत्वम् । वश्य-
मङ्गलकान्तिकारित्वम् । विषालक्ष्मीग्रहोन्माद-
गर्भस्रावक्षतास्रनाशित्वञ्च । इति भावप्रकाशः
॥
रुच्यत्वम् । पवित्रताशृङ्गारहितकारित्वम् ।
कृमिकुष्ठनाशित्वम् । भूतोपशमनत्वम् । जन-
सुतः । इति धरणी ॥ (यथा, याज्ञवल्क्यः ।
१ । २२२ ।
“अवकीर्णी कुण्डगोलौ कुनखी श्यावदन्तकः
॥”)
बोलः । इति जटाधरः ॥ भूगोलः खगोलश्च ।
(यथा, भागवते । ५ । २० । ४३ ।
“सूर्य्यास्तगोलयोर्म्मध्ये कोट्यः स्युः पञ्च
विंशतिः ॥”)
यथा, शिद्धान्तशिरोमणौ ।
“गोलं श्रोतुं यदि तव मतिर्भास्करीयं शृणु त्वम्
॥”
एकराशौ षड्ग्रहयोगः । यथा, प्रश्नकौमुद्याम् ।
“ग्रहाणामेकस्मिन् यदि भवति षण्णां निवसति-
स्तदा गोलो योगः प्रलयपदमिन्द्रोऽपि लभते ।
भवेल्लोको रक्षः परिहरति पुत्त्रञ्च जननी नृपाणां
नाशः स्यात् ज्वलति वसुधा शुष्यति नदी ॥”
एकराशौ सप्तग्रहयोगश्च । यथा, मयूरचित्रके ।
“सप्तग्रहा यदैकस्था गोलयोगस्तदा भवेत् ।
दुर्भिक्ष्यं राष्ट्रपीडा च तस्मिन् काले नृपक्षयः ॥”
अपि च ।
“एकादिगृहोपेतैरुक्तान् योगान् विहाय
संख्याख्याः ।
गोलयुक्शूलकेदारपाशदामाख्यवीनाःस्युः ॥
दुःखितदरिद्रघातुकक्रृषिकरदुःशीलपशुप-
निपुणानाम् ॥
जन्मक्रमेण दुःखिनः परभाग्यैः सर्व्व एवैते ॥”
इति दीपिका ॥

**गोलकं**, क्ली, (गुड + घञ् । स्वार्थे कन् च । ण्वुल्
इत्येके ।) गोलोकम् । यथा, तन्त्रे ।
“यद्रूपं गोलकं धाम तद्रूपं नास्ति मामके ॥”

**गोलकः**, पुं, (गुड + घञ् । ततः स्वार्थे कन् । डस्य
लत्वं च । ण्वुल् इत्येके ।) मृते भर्त्तरि जारजः ।
इत्यमरः ॥ राँडेर छेले इति भाषा ॥ (यथा,
मनुः । ३ । १५६ ।
“शूद्रशिष्यो गुरुश्चैव वाग्दुष्टः कुण्डगोलकौ ॥”)
अलिञ्जरः । गुडः । पिण्डः । इति हेमचन्द्रः ॥
गन्धरसः । इति रत्नमाला ॥ कलायः । इति
शब्दचन्द्रिका ॥ मटर इति ख्यातः ॥

**गोला**, स्त्री, (गां पृथ्वीं सर्व्वं जगदित्यर्थः स्वशक्ति-

उद्यमः । इत्यमरटीका ॥

**गोरसः**, पुं, (गवां रसः ।) दुग्धम् । दधि । तक्रम् ।

इति हेमचन्द्रः । ३ । ७२ ॥ (यथा, गोः रामा-
यणे । ३ । २२ । ७ ।
"प्राप्तकामा जनपदाः सम्पन्नयवगोरसाः ।
विचरन्ति महीपाला यात्रार्थं विजिगीषवः ॥"
"विषदा गुरवो रूक्षा ग्राहिणस्तक्रपिण्डकाः ।
गोरसानामयं वर्गो नवमः परिकीर्त्तितः ॥"
इति चरके सूत्रस्थाने २७ अध्याये ॥)

**गोरसजं**, क्ली, (गोरसात् जायते इति । गोरस + जन्

+ "अन्येष्वपि दृश्यते ।" ३ । २ । १०१ । इति
डः ।) तक्रम् । इति राजनिर्घण्टः ॥

**गोराटी**, स्त्री, (गां मनुष्यवद्वाचं रटतीति ।

रट् + "कर्म्मण्यण् ।" ३ । २ । १ । इत्यण् ।
ततो ङीप् ।) शारिकापक्षी । इति हेम-
चन्द्रः । ४ । ४०२ ॥

**गोराण्टिका**, स्त्री, (गोराटी + स्वार्थे कन् । टाप्

पूर्ब्बह्रस्वश्च । ततो निपातनात् साधुः । गोरा-
टिका इत्यपि दृश्यते ।) शारिकापक्षी । इति
राजनिर्घण्टः ॥

**गोरिका**, स्त्री, (गोराटिका + पृषोदरात् साधुः ।)

शारिकापक्षी । इति राजनिर्घण्टः ॥

**गोरुतं**, क्ली, (गो रुतं रवः श्रूयते यावता पथेति

शेषः । गोशब्दः श्रुतिगोचरत्वेन अस्त्यस्य इत्यच्
इत्येके वस्तुतस्तु पारिभाषिकोऽयं शब्दः ।)
क्रोशद्वयम् । इति हेमचन्द्रः । ३ । ५५१ ॥

मोहनत्वञ्च । इति राजनिर्घण्टः ॥ (यथा
कुमारे । ७ । १५ ।
"विन्यस्तशुक्लागुरुचक्रुरङ्गं
गोरोचनापत्त्रविभक्तमस्याः ।"
"क्रमेण पित्तेष्विव रोचना गोः ।"
इति माधवकृतरुग्विनिश्चयस्याश्मर्य्यधिकारे ॥)

**गोर्द्दं**, क्ली, (गुर् + "अब्दादयश्च ।" उणां । ४ । ९८ ।

इति ददन्प्रत्ययेन निपातनात् साधुः ।) मस्ति-
ष्कम् । मस्तकस्थघृतम् । इत्यमरः । २ । ६ । ६५ ॥
(मस्तिष्कशब्देऽस्य विवरणं ज्ञातव्यम् ॥)

**गोलं**, क्ली, (गुड + भावे घञ् डस्य लत्वं च ।)

मण्डलम् । इति मेदिनी । ले । २५ ॥ (यथा,
भागवते । ३ । २३ । ४३ ।
"प्रेक्षयित्वा भुवो गोलं पत्न्यै यावान्
स्वसंस्थया ॥")

**गोलः**, पुं, (गुड + भावे घञ् अजित्येके । डस्य

लत्वम् ।) सर्व्ववर्त्तुलः । इति हेमचन्द्रः ॥ मदन-
वृक्षः । इति रत्नमाला ॥ जारात् विधवायाः

व्यापकतया लाति प्रलयकाले स्वस्मिन् लाति
गृह्लाति इति वा ।) दुर्गा । (गां बहुयोजनपथं
जलरूपशरीरव्यापकतयालाति ।) गोदावरी ।
(गां वाचं लाति । ला + क्विप् ।) सखी ।
कुनटी । पत्राञ्जनम् । मण्डलम् । अलिञ्जरः ।
बालक्रीडनकाष्ठम् । इति मेदिनी । ले । २५ ॥

**गोलाङ्गूलः**, पुं, (गोर्लाङ्गूलवल्लाङ्गूलमस्य ।)

वानरः । (यथा, रामायणे । ६ । १०५ । ८ ।
"निरुजो निर्व्रणांश्चैव सम्पन्नबलपौरुषान् ।
गोलाङ्गूलां स्तथैवर्क्षान् द्रष्टुमिच्छामि मानद ! ॥"
तत्पर्य्यायः । कपित्थास्यः २ दधिशोणः ३
नगाटनः ४ । इति त्रिकाण्डशेषः ॥ कृष्णवानरः ।
इति राजनिर्घण्टः ॥

**गोलासः**, पुं, (गां पृथ्वीं भूमिमित्यर्थः लासयति

उल्लासयति विभूषयति इति यावत् ।) गोमय-
च्छत्रिका । शिलीन्ध्रम् । इति हारावली । २५ ॥

| | | |
|---|---|---|
| (गवां रुतं रवः इति तत्पुरुषसमासे तु गवां<br>शब्दमात्रे । तत्तु कालादिभेदेन स्वामिनर-<br>पतिप्रभृतीनां शुभाशुभकरं स्यात् । यथा,<br>बृंहत्संहितायाम् । ९२ । १--३ । | | |

**गोलिहः**, पुं, (गाः लेढीव इति । लिह + कः । गोभि-
र्लिह्यते इति घञर्थे क इति केचित् ।) घण्टा
पाटलिः । इति जटाधरः ॥

**गोलीढः**, पुं, (गोभिर्लिह्यते स्म इति क्तः ।)
घण्टापाटलिः । इत्यमरः । २ । ४ । ३९ ॥

**गोलोकं**, क्ली, (गौर्ज्योतीरूपं ज्योतिर्म्मयः पुरुष
इत्यर्थस्तस्य लोकः स्थानम् । अभिधानात् क्लीव-
त्वम् । यद्वा गोभिः किरणैः ब्राह्मज्ञान-
तेजोभिरित्यर्थः लोक्यते इति । लुक् + घञ् ।)
श्रीकृष्णस्य स्थानम् । यथा, तन्त्रे ।
"वैकुण्ठस्य दक्षभागे गोलोकं सर्व्वमोहनम् ।
तत्रैव राधिका देवी द्विभुजो मुरलीधरः ॥
यद्रूपं गोलकं धाम तद्रूपं नास्ति मामके ।
ज्ञाने वा चक्षुषोः किं वा ध्यानयोगे न विद्यते ॥
शुद्धतत्त्वमयं देवि ! नानादेवेन शोभितम् ।
मध्यदेशे गोलोकाख्यं श्रीविष्णोर्लोभमन्दिरम् ॥
श्रीविष्णोः सत्त्वरूपस्य यत् स्थलं चित्तमोहनम् ।
तस्य स्थानस्य माहात्म्यं किं मया कथ्यतेऽधुना ॥
तत्रैष सततं भाति द्विभुजो मुरलीधरः ।
तदा सत्त्वमयो विष्णुर्भुवनं पाति निश्चितम् ॥
दैष्णवस्य महामोक्षो यत्रैव परमेश्वरि ! ।
इति स्थानस्य माहात्म्यं संक्षेपेण मयोदितम् ॥
(एतस्य धाम्नो नित्यादिकमाहात्म्यं लक्षणादि-
कञ्च ब्रह्मवैवर्त्तपुराणे ब्रह्मखण्डे २८ अध्याये
विस्तरशो विवृतं यथा, --
"नित्यं स्थूलञ्च प्रच्छन्नं गोलोकाभिधमेव च ।
लक्षकोटियोजनञ्च चतुरस्रं मनोहरम् ॥
रत्नेन्द्रसारनिर्म्माणैर्गोपीनामावृतं सदा ।
सुदृश्यं वर्त्तुलाकारं यथैव चन्द्रमण्डलम् ॥
रत्नेन्द्रसारनिर्म्माणं निराधारञ्च स्वेच्छया ।
ऊद्र्ध्वञ्च नित्यं वैकुण्ठात् पञ्चाशत्कोटियोजनम् ॥
गोगोपगोपीसंयुक्तं कल्पवृक्षसमन्वितम् ।
कामधेनुभिराकीर्णं रासमण्डलमण्डितम् ॥
वृन्दावनवनाच्छन्नं विरजावेष्टितं मुने ! ।
शतशृङ्गं शतशृङ्गैः सुदीप्तं दीप्तमीप्सितम् ॥
लक्षकोटिपरिमितै राश्रमैः सुमनोहरैः ।
शतमन्दिरसंयुक्तमाश्रमं सुमनोहरम् ॥
प्राकारपरिखायुक्तं पारिजातवनान्वितम् ।
कौस्तुभेन्द्रेण मणिना निर्म्माणकलसोज्ज्वलैः ॥
हीरासारविनिर्म्माणसोपानसंघसुन्दरैः ।
मणीन्द्रसारनिर्म्माणैः कपाटदर्पणान्वितैः ॥
नानाचित्रविचित्राढ्यैराश्रमञ्चसुसंस्कृतम् ।
षोडशद्वारसंयुक्तं सुदीप्तं रत्नदीपकैः ॥
रत्नसिंहासने रम्ये चामूल्यरत्ननिर्म्मिते ।
नानाचित्रविचित्राढ्ये वसन्तमीश्वरं वरम् ॥")

**गोलोकः**, पुं, (लोक्यतेऽसौ इति लोकः गोभि-
स्तेजोभिरुपलक्षितो लोकः । ब्रह्मस्वरूपज्योति-
र्म्मयलोक इत्यर्थः ।) श्रीकृष्णस्य नित्यधाम ।
यथा, ब्रह्मवैवर्त्तपुराणे ॥
"निराधारश्च वैकुण्ठो ब्रह्माण्डानां परो वरः ।
तत्परश्चापि गोलोकः पञ्चाशत्कोटियोजनात् ॥
ऊद्र्ध्वे निराश्रयश्चापि रत्नसारविनिर्म्मितः ।
सप्तद्वारः सप्तसारः परिखासप्तसंयुतः ॥
लक्षप्राकारयुक्तश्च नद्या विरजया युतः ।
वेष्टितो रत्नशैलेन शतशृङ्गेण चारुणा ॥
प्रस्तरिणी ६ । अस्या गुणाः । कटुत्वम् । तिक्त-
त्वम् । त्रिदोषशमनत्वम् । हिमत्वम् । शूल-
रोगास्रदोषनाशित्वम् । ग्राहित्वम् । दीपनत्वञ्च ।
इति राजनिर्घण्टः ॥

**गोलोमी**, स्त्री, (गोर्लोमवत् लोमाकारं पत्त्र-
मस्याः ।) श्वेतदूर्व्वा । (व्यवहारो यथा, --
"पुराणसर्पिर्लशुनं हिङ्गु-सिद्धार्थकं वचा ।
गोलोमी चाजलोमी च भूतकेशी जटा तथा ॥"
इत्यादिषु इति सुश्रुते उत्तरतन्त्रे षष्टितमेऽध्याये ॥)
वचा । भूतकेशः । इति मेदिनी ॥ (व्यवहारोऽस्य
यथा, संज्ञास्थापनगणे ।
"हिङ्गुकैटर्य्यारिमेदा-वचा-चोरक-वयःस्था गो-
लोमी-जटिला-पलङ्कषाशोकरोहिण्य इति दशे-
मानि संज्ञास्थापनानि भवन्ति ॥" इति चरके
सूत्रस्थाने चतुर्थेऽध्याये ॥) वेश्या । इति हेम-
चन्द्रः ॥ गोलोमिका । इति राजनिर्घण्टः ॥

**गोवत्सादी**, [न्] पुं, (गोवत्सं अत्ति भक्षयति ।
अद् + णिनिः ।) वृकः । इति राजनिर्घण्टः ॥

**गोवधः**, पुं, (गोर्वधो हननम् ।) गोहत्या । स च
उपपातकविशेषः । यथा, मनुः ११ अः ।
"गोवधोऽयाज्यसंयाज्यपारदार्य्यात्मविक्रयाः ॥"
तत्प्रायश्चित्तं प्रायश्चित्तशब्दे द्रष्टव्यम् ॥

**गोवन्दनी**, स्त्री, (गवि पृथिव्यां वन्द्यते प्रशस्यते
इति कर्म्मणि ल्युट् ततो ङीप् ।) प्रियङ्गुवृक्षः ।
इत्यमरः ॥ पीतदण्डोत्पलः । इति रत्नमाला ॥
(प्रियङ्ग पीतदण्डोत्पलयोरस्या विशेषो ज्ञातव्यः ॥)

**गोवरं**, क्ली, (गोभ्यो निःसृतत्वाद् वरं श्रेष्ठं
माननीयमित्यर्थः । गोषु व्रियते । वृ + बाहु-
लकात् अः इत्येके ।) गोखुरक्षुण्णगोष्ठस्थशुष्क-
गोमयचूर्णम् । यथा, --
"गोष्ठान्तर्गोखुरक्षुण्णं शुष्कं गोमयचूर्णितम् ।
गोवरं तत् समाख्यातं वरिष्ठं रससाधने ॥"
इति भावप्रकाशः ॥

**गोवर्द्धनः**, पुं, (गाः वर्द्धयति कोमलतृणपत्त्रादि-
दानेन इति । वृध् + णिच् + ल्युः । यद्वा गावो
बद्र्ध्यन्तेऽत्र इति । णिच् + ल्युट् अधिकरणे ।

विस्तारेण न शक्नोमि
जन्मान्तरशतेन च ।
बीजकोषस्य वाह्ये तु वेष्टितं
तोयमण्डलम् ॥
प्रमाणं सुन्दरं तोयं यथा
क्षीरोदसागरम् ।
धूम्रस्य ज्योतिषाकारं
कोटिचन्द्रसमप्रभम् ॥
बलयाकाररूपेण सुशुभ्रं तोयमण्डलम्
।
गङ्गादिसरितः सर्व्वास्तथैव भान्ति
सुन्दरि ! ॥
इन्द्रादिदेवताः सर्व्वा स्तूयमाना
निरन्तरम् ।
गन्धर्व्वयक्षनागादिकुष्माण्डा
भैरवास्तथा ॥
नानासुखविलासेन सदा चैकाग्रचेतसः
।
विष्णुगानं प्रकुर्व्वन्ति
स्तुतिभक्तिपरायणाः ॥
देवा गानं प्रकुर्व्वन्ति चतुर्ब्बक्त्रेण
वेधसा ।
मालवाद्याश्च षड्रागा षट्त्रिंशद्रागिणी
तथा ॥
वेदगानेन भासन्तो मूर्त्तिमन्तः सदैव
हि ।
मालवेनैव रागेण सामगानं सदा प्रिये
॥
मल्लारेण सदाथर्व्वं वसन्तेन तथा पुनः
॥
हिन्दोलेन यजुःपाठं सदा कुर्व्वन्ति
चेतसा ॥
कर्णाटेनैव ऋग्वेदं श्रीरागेण तथा शिवे
।
निर्द्दिष्टपाठमेतत्तु ह्यनिर्द्दिष्टमतः परम्
॥
तत्रैव सन्ति ते रागाः सहस्राणि च
षोडश ।
सरारेर्मुररीगानात् सर्व्वस्तालः
प्रजायते ॥
तैन तालेन रागेण सदा गायन्ति
वेधसः ।

योजनायुतमानञ्च यस्यैकं शृङ्गमुज्ज्वलम् ।
शतकोटीयोजनश्च शैल उच्छ्रित एव च ॥
दैर्घ्यं तस्य शतगुणं प्रस्थे च लक्षयोजनम् ।
योजनायुतविस्तीर्णस्तत्रैव रासमण्डलः ॥
अमूल्यरत्ननिर्म्माणो वर्त्तुलश्चन्द्रविम्बवत् ।
पारिजातवनेनैव पुष्पितेन च वेष्टितः ॥
कल्पवृक्षसहस्रेण पुष्पोद्यानशतेन च ।
नानाविधैः पुष्पवृक्षैः पुष्पितेन च चारुणा ॥
त्रिकोटिरत्नाभरणैर्गोपीलक्षैश्च रक्षितः ।
रत्नप्रदीपयुक्तश्च रत्नतल्पसमान्वितः ॥
नानाभोगसमायुक्तो मधुवापीशतैर्वृतः ।
पीयूषवापीयुक्तश्च कामभोगसमन्वितः ॥
गोलोकगृहसंख्यानं वर्णनं वा विशारदः ।
न कोऽपि वेद विद्वान् वा वेद विद्वान् व्रजेश्वरः
॥”

**गोलोमिका**, स्त्री, (गवां लोमेव लोमानः सन्त्यस्याः
इति ठन् टाप् च । यद्वा गोलोमी स्वार्थे के
पूर्ब्बह्रस्वः । इत्येके ।) क्षुद्रक्षुपविशेषः ।
गोधूमा
इति पाथरी इति च भाषा । तत्पर्य्यायः ।
गोधूमी २ गोजा ३ क्रोष्टुकपुच्छिका ४
गोसम्भवा ५

पर्व्वतबोधकत्वात् पुंस्त्वम् । यद्वा गां पृथ्वीं
भूमिं वा वर्द्धयति । वृध् + णिच् कर्त्तरि ल्युः ।
स्वनामख्यातश्रीवृन्दावनस्थपर्व्वतः । इति जटा-
धरः ॥ तस्य स्वरूपं यथा, --
“अनादिर्हरिदासोऽयं भूधरो नात्र संशयः ।”
इति पाद्मे पातालखण्डे व्यासं प्रति श्रीकृष्ण-
वाक्यम् ॥ तस्य पूजाकालादिर्यथा, --
“प्रातर्गोबर्द्धनं पूज्य द्यूतञ्चैव समाचरेत् ।
भूषणीयास्तथा गावः पूज्याश्च दोहवाहनाः ॥
श्रीकृष्णदासवर्य्योऽयं श्रीगोवर्द्धनभूधरः ।
शुक्लप्रतिपदि प्रातः कार्त्तिकेऽच्चर्य्योऽत्र वैष्णवैः
॥”
“प्रातर्गोवर्द्धनं पूज्य रात्रौ जागरणं चरेत् ।”
इति क्वचित् पाठः ।
तस्मात्तदिदं कर्म्म गोवर्द्धनप्राधान्येन गोप्रा-
धान्येन च ख्यातमप्येकमेव ज्ञेयम् । तत्र दिन-
निर्णयः । तदाह देबलः ।

| | | |
|---|---|---|
| तद्भागस्य विभागं हि कुर्व्वन्ति मुनयो जनाः ॥<br>वसन्ताद्याश्च ऋग्रपस्तिष्ठन्ति तत्र सन्ततम् ।<br>नानाऋतुप्रसूतेन भूषितं मुररीधरम् ॥<br>तत्रैव राधिका देवी नानामुखविलासिनी ।<br>वदन्ती मुररीगानं कुरु कान्त ! प्रमोहनम् ॥<br>यन शब्देन कामस्य उत्पत्तिर्जायते सदा ।<br>तद्भगश्चैव तचालं कुरु गानं प्रयत्नतः ॥<br>एवमानन्दसंयुक्ता महावेशविलासिनी ।<br>वामभागे सदा भाति राधिका भक्तवत्सला ॥” | | |

"प्रतिपद्दर्शसंयोगे क्रीडनन्तु गवां मतम् ।
परविद्धान्तु यः कुर्य्यात् पुत्त्रदारधनक्षयः
॥"
निर्णयामृतधृतं पुराणान्तरवचनम् ।
"या कुहूः प्रतिपन्मिश्रा तत्र गाः पूजयेन्नृप !
।
पूजामात्रेण वर्द्धन्ते प्रजा गावो महीपतेः ॥"
ततः प्रातर्गोवर्द्धनं पूज्येति
पूर्ब्बाह्णतात्पर्य्यकम् ।
द्वितीयासमये तु सर्व्वथा निषिद्धम् । तद्-
यथा, --
"नन्दायां दर्शने रक्षा बलिदानदशासु च ।
भद्रायां गोकुलक्रीडा देशनाशाय जायते ॥"
पुराणसमुच्चये तु
सन्भावितचन्द्रोदयद्वितीया-
संयोग एव निषिध्यते ।
"गवां क्रीडादिने यत्र रात्रौ दृश्यते चन्द्रमाः ।
सोमो राजा पशून् हन्ति सुरभी
पूजकांस्तथा ॥"
तदुदयसम्भावनञ्च निर्णयामृते निर्णीतम् ।
प्रति-
पद्यापराह्णिकत्रिमुहूर्त्तव्यापिन्यां द्वितीयायां
चन्द्रदर्शनं सम्भाव्यते ।
तदुक्तमग्न्याधानविषये
वृद्धशातातपेन ।
"द्वितीया त्रिमुहूर्त्ता चेत् प्रतिपद्यापराह्णिकी ।
अग्न्याध्यानञ्चतुर्द्दश्यां परतः
सोमदर्शनादिति ॥"
अपराह्णश्च पञ्चधा
विभक्तस्याह्नश्चतुर्थोभागः ।
ततश्च यत्र प्रतिपदि यन्मुहूर्त्तव्यापिनी
द्वितीया
तत्र चन्द्रदर्शनसम्भावनमिति । अन्यदा
तूत्त-
रैव प्रतिपत्तत्र गृहीता । तथैव पुराण-
समुच्चवे ।
"वर्द्धमानतिथौ नन्दा यदा सार्द्धत्रियामिका ।
द्वितीयावृद्धिगामित्वादुत्तरा तत्र चोच्यते ॥"
किञ्च । यदा पूर्णप्रतिपत् परत्र निष्क्रामति
तदाप्युत्तरैव कार्य्या । यथोक्तं भविष्योत्तरे ।

पाद्मे च तत्रैव ।
"महिष्यादेस्तथा भूषा क्रीडनं वारणन्तथा
॥"
तन्माहात्म्यञ्च तत्रैव ।
"एवं गोवर्द्धनं गाश्च पूजनीया विधानतः ।
गोवर्द्धनमखो रम्यः कृष्णसन्तोषकारकः ॥"
इति श्रीहरिभक्तिविलासे कार्त्तिककृत्ये १६
विलासः ॥ (पुरुषोत्तमक्षेत्रे भगवता शङ्करा-
चार्य्येण प्रतिष्ठापितो मठविशेषः । इति शङ्कर-
विजयः ॥ आर्य्यासप्तशतीप्रभृतिग्रन्थकार
आ-
चार्य्यविशेषः । अयमेव कविवरः वङ्गाधिपस्य
लक्ष्मणसेनस्य सभापण्डित आसीत् ।
एतन्मत-
समर्थनोदाहरणानि क्रमान्वयेन वेदितव्यानि
यथा, आर्य्यासप्तशत्याम् । ७०२ ।
"हरिचरणाञ्जलिममलं कविवरहर्षाय बुद्धिमान्
सततम् ।
अकृतार्य्यासप्तशतीमेतां गोवर्द्धनाचार्य्यः ॥"
तत्रैव टीकामुखबन्धाम्यन्तरे । यथा, --
"गोवर्द्धनोक्तिसुखदाननिदानमेतद्-
व्यङ्ग्यार्थदीपनमनल्पचमत्कृतीनाम् ।"
"गोवर्द्धनाचार्य्यसमयस्त्वद्यापि सम्यङ् न
ज्ञायते
परन्त्वयं गीतगोविन्दकर्त्तुर्जयदेवात्
प्राचीनस्तत्-
समकालीनो वेति वक्तुं शक्यते । यतो जय-
देवेन गीतगोविन्दप्रारम्भे 'शृङ्गारोत्तरसत्-
प्रमेयरचनैराचार्य्यगोवर्द्धनस्पर्द्धी कोऽपि न
विश्रुतः' इत्युक्तमस्ति । जयदेवकविश्च वङ्ग-
देशाधिपस्य वल्लालसेनसूनोर्लक्ष्मणसेनस्य
स-
भायामासीदिति श्रीसनातनगोस्वामिनां मतम्
।
'गोवर्द्धनश्च शरणो जयदेव उमापतिः ।
कविराजश्च रत्नानि समितौ लस्मणस्य च
॥'
इत्ययं श्लोको लक्ष्मणसेनसभागृहद्वारोपरि
शिलायामुत्कीर्ण आसीत् । तस्माद् गोवर्द्धन-
जयदेवादयः सर्व्वेऽपि
लक्ष्मणसेनसभायामास-

"अद्य प्रभृति नो राजा त्वमिन्द्रो वै भव
प्रभो ! ।
तस्मात्त्वं काञ्चनैः पूर्णैर्दिव्यस्य पयसो घटैः
॥
एभिरद्याभिषिच्यस्व मया हस्तावनामितैः ।
अहं किलेन्द्रो देवानां त्वं गवामिन्द्रतां गतः ॥
गोविन्द इति लोकास्त्वां स्तोष्यन्ति भुवि
शाश्व-
तम् ॥"
गोभिर्वाणीभिर्व्वेदान्तवाक्यैर्विद्यते योऽसौ
पुरुष-
विदन्ति यं पुरुषं तत्त्वज्ञा इति वा । यथा,
विष्णुतिलके ।
"गोभिरेव यतो वेद्यो गोविन्दः समुदाहृतः ॥"
गां वेदलक्षणां वार्णी गोभूम्यादिकं वा वेत्तीति
।
यथा, गोपालतापन्यां पूर्ब्बविभागे ध्यानप्रक-
रणे । ७--८ ।
"तदु होचुः कः कृष्णो गोविन्दश्च
कोऽसाविति
गोपीजनवल्लभः कः का स्वाहेति ॥ तानुवाच
ब्राह्मणः पापकर्षणो गोभूमिवेदविदितो
विदिता
गोपीजनाविद्याकलाप्रेरकस्तन्मायाचेति ।"
रतन्नाम्नो भारतादिमतेन व्युत्पत्तिर्यथा, महा
भारते । १ । २१ । १२ ।
"गां विन्दता भगवता गोविन्देनामितौजसा ।
वराहरूपिणा चान्तर्विक्षोभितजलाविलम् ॥"
तत्रैव । ५ । ७० । १३ ।
"विष्णुर्विक्रमणाद्देवो जयनाज्जिष्णुरुच्यते ।
शाश्वतत्वादनन्तश्च गोविन्दो वेदनाद्गवाम्
॥"
यथा, ब्रह्मवैवर्त्ते प्रकृतिखण्डे २४ अध्याये ।
"युगेयुगे प्रणष्टां गां विष्णो ! विन्दसि तत्त्वतः
।
गोविन्देति ततो नाम्ना प्रोच्यसे
ऋषिभिस्तथा ॥"
विन्दतीति विन्दः पालकः स्वामी वा । विन्द
+
शः । गवां गोसमूहानां विन्दः ।) गवाध्यक्षः ।
(गवां शास्त्रमयीनां वाणीनां विन्दः पतिः ।)

"यथा द्वादशभिर्म्मासैर्म्मासो वृद्धो मलिम्लुचः ।
तथैवाहोरात्रिवृद्ध्या तिथिः प्रोक्तो मलिम्लुचः ॥
यथा मलिम्लुचः पूर्ब्बो मासो दैवस्तथा परः ।
त्याज्या तिथिस्तथा पूर्ब्बा ग्राह्या चैव तथो-
त्तरेति निर्णयामृतमतम् ॥ किन्तु । व्यञ्जलीन्यायेन
पूर्ब्बैव मन्तुं शक्यते । तद्वदत्रापि देवलादि-
वचनप्रामाण्यमस्तीति ॥ * ॥
अथ गोवर्द्धनपूजाविधिः । पाद्म तत्रेव ।
"मथुरायास्तथान्यत्र कृत्वा गोवर्द्धनं गिरिम् ।
गोमयेन महास्थूलं तत्र पूज्यो गिरिर्यथा ॥
मथुरायां तथा साक्षात् कृत्वा चैव प्रदक्षिणम् ।
वैष्णवं धाम स प्राप्य मोदते हरिसन्निधौ ॥"
पूजामन्त्रः ।
"गोवद्धन ! धराधार ! गोकुलत्राणकारकः ।
विष्णुबाहुकृतोच्छ्रायो गवां कोटिप्रदो भव ॥"
गोपूजामन्त्रः । स्कान्दे तत्रैव ।
"लक्ष्मीर्या लोकपालानां धेनुरूपेण संस्थिता ।
घृतं वहति यज्ञार्थे यमपाशं व्यपोहतु ॥
अग्रतः सन्तु मे गावो गावो मे सन्तु पृष्ठतः ।
गावो मे पार्श्वतः सन्तु गवां मध्ये वसाम्यहम् ॥"
अथ गोक्रीडा । तत्रैव ।
"क्रोधापयेद्धावयेच्च गोमहिष्यादिकं ततः ।
वृषान् कर्षापयेद्गोपैरुक्तिप्रत्युक्तिबादनात् ॥"
न्निति केचित् ॥")

**गोवर्द्धनधरः**, पुं, (धरति धारयति वा । धृ + अच् ।
गोवर्द्धनस्य धरः ।) श्रीकृष्णः । इति शब्द-
चन्द्रिका ॥ (यथा, हरिवंशे । ७६ । १ ।
"गते शक्रे ततः कृष्णः पूज्यमानो व्रजालयैः ।
गोवर्द्धनधरः श्रीमान् विवेश व्रजमेव ह ॥")

**गोवशा**, स्त्री (वशा बन्ध्या गौरिति परनिपा-
तनात् तथात्वम् ।) बन्ध्या गौः । इति कलाप-
व्याकरणम् ॥

**गोविट्**, [श्] पुं, (गवां विट् विष्ठा ।) गोम-
यम् । इत्यमरः । २ । ९ । ५० ॥

**गोविन्दः**, पुं, (गां पृथ्वीं धेनुं वा विन्दतीति ।
विन्द + "अनुपसर्गाल्लिम्पेति ।" ३ । १ । १३८ ।
इत्यस्य "गवादिषु विन्देः संज्ञायाम् ।" इति
वार्त्तिकोक्त्या शः ।) श्रीकृष्णः । (यथा, भग-
वद्गीतायाम् । १ । ३२ ।
"किं नो राज्येन गोविन्द ! किं भोगैर्जीवि-
तेन वा ॥")
एतस्य शास्त्रान्तरीयव्युत्पत्तिर्यथा, हरिवंशे--
विष्णुपर्व्वणि । ७५ । ४३--४५ ।
बृहस्पतिः । इति मेदिनी ॥ (गौडपादाचार्य्य-
शिष्यः योणिविशेषः । अयं हि परमहंस-
परिव्राजकाचार्य्यस्य भगवतः शङ्करस्य गुरुः ।
यथा, माधवीये सङ्क्षिप्तशङ्करजये । ५ । १०१ ।
"तस्योपदर्शितवतश्चरणौ गुहायां
द्वारे न्यपूजयदुपेत्य स शङ्करार्य्यः ।
आचार इत्युपदिदेश स तत्र तस्मै
गोविन्दपादगुरवे स गुरुर्यतीनाम् ॥"
अनेन च योगिप्रवरेण गोविन्देन बौधायनधर्म्म-
विवरणं बौधायनधर्म्मसूत्रभाष्यञ्च प्रणीतमिति
श्रूयते ततो बौद्धमतमालोक्य रससाराख्यग्रन्थो-
ऽपि विरचित इति दृश्यते । यथा, रससारे
५ म पटले ।
"बौद्धानाञ्च मतं ज्ञात्वा रससारः कृतो मया ॥"
पञ्चावस्थशिखजातीनांगुरुभेदः । योऽसौ गुरु-
गोविन्द इति नाम्नोदाहृतः ॥ गाः मनः-
प्रधानानीन्द्रियाणि तेषां विन्दः प्रवर्त्तयिता
चेतयिता वा । अन्तर्यामी आत्मेत्यर्थः ।)
परमब्रह्म । यथा, --
"तत्र यद्यसमर्थस्त्वं ज्ञानयोगे महामते ! ।
क्रियायोगे दिवा रात्रौ तत्परः सततं भव ॥
करोषि यानि कर्म्माणि तानि देवे जगत्पतौ ।

समर्पयस्व भद्रं ते ततः कर्म्म प्रहास्यसि ॥
शुभाशुभपरित्यागी क्षीणे निःशेषकर्म्मणि
लयमाप्स्यसि गोविन्दं तद्ब्रह्म परमं महत्
॥”
तन्नाममाहात्म्यं यथा, --
“ये तिष्ठन्तः स्वपन्तश्च गच्छन्तश्चलिते
क्षुते ।
संकीर्त्तयन्ति गोविन्दं ते वस्त्याज्याः
सुदूरतः ॥”
इति च वह्निपुराणे यमानुशासननामाध्यायः
॥
(अस्य ध्यानं यथा, --
“फुल्लेन्दीवरकान्तिमिन्दुवदनं बर्हावतंसप्रियं
श्रीवत्साङ्कमुदारकौस्तुभधरंपीताम्बरं
सुन्दरम् ।
गोपीन्पं नयनोत्पलार्च्चिततनुं
गोगोपसङ्घावृतं
गोविन्दं कलवेणुवादनपरं दिव्याङ्गभूषं भजे
॥”)

**गोविन्दद्वादशी**, स्त्री, (गोविन्दप्रीतये या द्वादशी
गोविन्दाख्या द्वादशी वा । गोविन्दप्रिया
द्वादशीत्येके ।) फाल्गुनशुक्लद्वादशी ।
यथा, --
“फाल्गुने द्वादशी शुक्ला या पुष्यर्क्षेण
संयुता ।
गोविन्दद्वादशी नाम सा स्याद्
गोविन्दभक्तिदा ॥
तस्यामुपोष्य विधिना भगवन्तं प्रपूजयेत् ।
लिखितः पापनाशिन्यां विधिर्योऽत्रापि स
स्मृतः ॥”
तन्माहात्म्यञ्च ब्रह्मपुराणे श्रीवशिष्ठमान्धातृ-
संवादे ।
“फाल्गुनाऽमलपक्षे तु पुष्यर्क्षे द्वादशी यदि ।
गोविन्दद्वादशी नाम महापातकनाशिनी ॥
तस्यामुपोष्य विधिवन्नरः संक्षीणकल्मषः ।
प्राप्नोत्यनुत्तमां सिद्धिं
पुनरावृत्तिदुर्लभामिति ॥
आमर्द्दकी द्वादशीति लोके ख्यातेयमेव हि ।
यत्र आमर्द्दकीपूजा व्रतमस्यां विशेषतः ॥”
तदुक्तं व्राह्मे तत्रैव पापनाशिनीमाहात्म्य-

**गोवृन्दारकः**, पुं, (गौर्विन्दारक इव पूज्य इति शेषः ।
“वृन्दारकनागकुञ्जरैः पूज्यमानम् ।” २ । १ ।
६२ ।
इत्यनेन सूत्रेणोपमितसमासे व्याघ्रादेराकृति-
गणत्वादेव सिद्धे सामान्यप्रयोगार्थं वचनमिति
वार्त्तिकम् ।) श्रेष्ठगौः । इति कलापव्याकरणम्
।

**गोवृषः**, पुं, (गोषु स्त्रीगोष्वित्यर्थः वर्षति सिञ्चति
रेतः । वृष् + “इगुपधेति ।” ३ । १ । १३५ ।
इति कः ।) वृषः । इति शब्दरत्नावली ॥
(यथा, मनुः । ९ । १५० ।
“कीनाशो गोवृषो यानमलङ्कारश्च वेश्म च ।”
“कीनाशः कर्षकः गवां सेक्ता वृषोयानमश्वादि
।”
इति कुल्लूकभट्टः ॥)

**गोशकृत्**, क्ली, (गवां शकृत् विष्ठा ।) गोमयम् ।
इति जटाधरः ॥ (यथा, मनुः । २ । १८२ ।
“उदकुम्भं सुमनसो गोशकृत् मृत्तिका कुशान्
॥”
पर्य्यायोऽस्य यथा, वैद्यकरत्नमालायाम् ।
“गोमयं जगलं गोविट् गोहन्नं तच्च गोशकृत्
॥”)

**गोशालं**, क्ली, स्त्री, (गवांशाला “विभाषा सेनेति ।”
२ । ४ । २५ । इति विभाषया क्लीवत्वम् ।)
गोगृहम् । इति लिङ्गादिसंग्रहे अमरः ॥
गोयालि इति भाषा ॥ (गोशालायां जातः ।
“स्थानान्तगोशालखरशालाच्च ।” ४ । ३ ।
३५ ।
जातार्थप्रत्ययस्य लुक् । ततो विभाषासेनेति
नपुंसकत्वे ह्रस्वत्वम् । गोगृहजाते त्रि ॥)

**गोशीर्षं**, क्ली, (गोः शीर्षं शीर्षदेशाकारो विद्यते
ऽस्य ऋषभपर्व्वतैकदेशजातानां चन्दनभेदानां
शीषभागस्य तद्वत्तया तथात्वम् ।) चन्दनम् ।
इति राजनिर्घण्टः ॥ हरिचन्दनम् । इत्यमरः ॥
“गोः शीर्षं गोशीर्षं तदाकारे मलयैकदेशे जातं
कालताम्रव्यामिश्रवर्णमुत्पलगन्धि अतिसुरभि
शीतलतया सदैव सर्पै र्वेष्टितम् ।” इति भरतः
॥

अरत्निमात्रा लक्ष्यन्ते नानारूपा भयावहाः
।
ते पतन्ति जले घोराः सूर्य्यस्योदयनं प्रति
॥
अभिशप्ता महेन्द्रेण निशायामुत्पतन्ति च
॥”)
वर्व्वूरवृक्षः । इति राजनिर्घण्टः ॥ गोवि-
षाणे क्ली ॥

**गोषड्गवं**, क्ली, (गवां षट्कम् । “पशुभ्यः स्थान-
द्विषट्के गोष्ठगोयुगषड्वम् ।” इति
मुग्धबोध-
सूत्रात् ।) गोषट्कम् । इति मुग्धबोधव्याक-
रणम् ॥

**गोष्ट**, ङ संघाते । इति कविकल्पद्रुमः (भ्वां-
आत्मं-सकं-सेट् ।) सङ्घातो राशीकरणम् ।
ङ, गोष्टते धान्यं लोकः । इति दुर्गादासः ॥

**गोष्ठं**, क्ली, (गावस्तिष्ठन्त्यत्र इति । स्था + “सुपि
स्थः ।” ३ । २ । ४ । इति कः । घञर्थे
कः ।
इत्येके ।) गोस्थानम् । गोठ । इति भाषा ॥
इत्यमरः ॥ (यथा, रामायणे । ४ । २२ ।
३१ ।
“सिंहेन निहतं गोष्ठे गौः सवत्स्येव गोपतिम्
।
इष्ट्वा संग्रामयज्ञेन रामबाणमहाम्भसा ॥”)
प्रत्ययविशेषः । स तु स्थानार्थे पशुवाचक-
शब्देभ्यो भवति । यथा । गोगोष्ठं महिषगोष्ठं
इत्यादि । इति भरतः ॥ (गोष्ठीश्राद्धे ।
यथा,
मनुः । ३ । २५४ ।
“पित्र्ये स्वदितमित्येव वाच्यं गोष्ठे तु
सुश्रुतम् ।
सम्पन्नमित्यभ्युदये दैवे रुचितमित्यपि ॥”
“गोष्ठे गोष्ठीश्राद्धे ।” इति कुल्लूकभट्टः ॥)

**गोष्ठश्वः**, त्रि, (गोष्ठे श्वा । “अचतुरविचतुरेति ।”
५ । ४ । ३७ । समासे अच् ।
षष्ठीतत्पुरुष-

प्रसङ्गे ।
"फाल्गुने तु विशेषेण विशेषः कथितो नृप ! ।
आमर्द्दक्या व्रतं पुण्यं विष्णुलोकप्रदं नृणाम् ॥"
प्रभासखण्डे च । श्रीदेवीमहेशसंवादे ।
"फाल्गुनस्य सिते पक्षे एकादश्यामुपोषितः ।
स्नात्वा नद्यां तडागे वा वाप्यां कूपे गृहेऽपि वा ॥
गत्वा गिरौ वने वापि यत्र सा प्राप्यते शिवा ।
क्षीरोदे मथ्यमाने तु यदा वृक्षः समुत्थितः ॥
आमर्द्दाद्देवदैत्यानां तेन सामर्द्दकी स्मृता ।
शिवा लक्ष्मीः स्मृतो वृक्षः सेव्यते सुरसत्तमैः ॥
देवैर्ब्रह्मादिभिः सर्व्वैर्वृक्षोऽसौ वैष्णवः स्मृतः ।
तत्र गत्वा हरिः पूज्यो वृक्षमूलेऽथवा शिवा ॥
पूज्या पुष्पैः शुभै रात्रौ कार्य्यं जागरणं हरेः ।
करकं जलपूर्णन्तु कर्त्तव्यं पात्रसंयुतम् ॥
हविष्यान्नन्तु कर्त्तव्यं दीपः कार्य्यो विधानतः ।
एवं जागरणं कार्य्यं कथाश्रवणतत्परैः ॥
मुच्यन्ते देहिनः पापैः कलिजैः कायसम्भवैः ।
देहान्ते च नराः सर्व्वे पूज्यन्ते हरिमन्दिरे ॥"
इति श्रीहरिभक्तिविलासे १४ विलासः ॥

**गोविष्ठा**, स्त्री, (गवां विष्ठा शकृत् ।) गोमयम् ।
इति राजनिर्घण्टः ॥

**गोवृन्दं**, क्ली, (गवां वृन्दं सङ्घः ।) गोसमूहः ।
इति हलायुधः ॥

(यथा, गोः रामायणे । ४ । ४१ । ५९ ।
"गोशीर्षचन्दनं यत्र पद्मकञ्चाग्निसन्निभम् ॥"
व्यवह्रियते यस्मिंस्तद्यथा, --
"सोत्सर्गे वदनाद्यस्य स्वेदः प्रच्यवते भृशम् ।
लेपज्वरोपतप्तस्य दुर्ल्लभं तस्य जीवितम् ॥"
इति चरके इन्द्रियस्थानेऽष्टमेऽध्याये ॥)
गवां मस्तकञ्च ॥

**गोशीर्षकः**, पुं, (गोशीर्षमिव कायति प्रकाशते
इति । कै + कः ।) द्रोणपुष्पीवृक्षः । इति रत्न-
माला ॥ (स्वार्थे कन् । चन्दनविशेषः ॥)

**गोशृङ्गः**, पुं, (गोः शृङ्गमिव शृङ्गं शीर्षभागो-
ऽस्य । स्वनामप्रसिद्धः पर्व्वतविशेषः । यथा,
महाभारते । २ ३१ । ५ ।
"निषादभूमिं गोशृङ्गं पर्व्वतप्रवरन्तथा ।"
अत्रैव पर्व्वते अरत्निमात्रा मन्देहा नाम राक्षसा
निवसन्ति । ते हि देवराजमहेन्द्रेणाभिशप्ताः
सन्तः सूर्य्योदये जले पतन्ति रजन्यां पुनरुत्-
पतन्ति । एतद्विवरणं यथा, रामयणे । ४ ।
४० । ४२--४४ ।
"द्रक्ष्यथाम्बुरुहं दिव्यं गोशृङ्गं नाम पर्व्वतम् ।
तस्य शृङ्गसहस्रेषु मन्देहा नाम राक्षसाः ॥

समासे तु गोष्ठश्वा इत्येव स्यात् ।)
स्वगृहाङ्गने
स्थितो यः परान् द्वेष्टि सः । इति जटाधरः ॥

**गोष्ठाष्टमी**, स्त्री, (गोष्ठोपपदान्विता अष्टमी ।
गोष्ठे विहिता अष्टमी वा । एतस्यां तिथौ
भगवतो बालरूपिणो नन्दनन्दनस्य
गोष्ठगमन-
पुरःसरं वत्सपत्वं विहाय
गोपत्वस्वीकरणात्
तथात्वम् ।) गोपाष्टमी । सा च
कार्त्तिकशुक्ला-
ष्टमी । यथा, पाद्मे कूर्म्मपुराणे च ।
"शुक्लाष्टमी कार्त्तिके तु स्मृता गोपाष्टमी बुधैः ।
तद्दिने वासुदेवोऽभूद्गोपः पूर्ब्बन्तु वत्सपः ॥
तत्र कुर्य्याद्गवां पूजां गोग्रासं गोः प्रदक्षिणम् ।
गवानुगमनं कुर्य्यात् सर्व्वान् कामानभीप्सता ॥"
इति श्रीहरिभक्तिविलासे १६ विलासः ॥
"भीमपराक्रमे कार्त्तिकशुक्लपक्षमधिकृत्य ।
गोष्ठाष्टम्यां गवां पूजां गोग्रासं गोः प्रदक्षि-
णम् ।
गवानुममनं कुर्य्यात् सर्व्वपापविमुक्तये ॥"
इति तिथ्यादितत्त्वम् ॥

**गोष्ठी**, स्त्री (गावः बहुविधा वाचस्तिष्ठन्त्यत्र ।
गो + स्था + कः । स्त्रियां ङीष् ।) सभा ।
तस्या
लक्षणविशेषः ।
"एकाङ्का कथिता गोष्ठी कैशिकीवृत्तिसंयुता ।
सम्भोगरसषट् पञ्च सप्त वा योषिदन्विता ॥
प्राकृतैर्नवभिः पुंभिर्दशभिर्व्वाप्यलङ्कृता ।
गर्व्वाविमर्षसन्धिभ्यां हीना प्राकृतसम्मता ॥

वाद्याद्यैरन्विता नैव कर्त्तव्येयं विचक्षणैः ॥”
इति सङ्गीतदामोदरः ॥
(गावोऽनेका वाचस्तिष्ठन्ति यत्र । गो + स्था + घञर्थे कः । ततः “अम्बाम्बगोभूमीति ।” ८ । ३ । ९७ । इति षत्वम् ।) संलापः । इति मेदिनी । ठे । ४ ॥ (यथा, पञ्चतन्त्रे । १ । ४०० ।
“एवमनुष्ठिते चत्वारोऽपि ते एकस्थाने विहारिणः परस्परमनेकप्रकारगोष्ठीसुखमनुभवन्तस्तिष्ठन्ति ॥”) पोष्यवर्गः । यथा, चाणक्ये ।
“विषं गोष्ठी दरिद्रस्य वृद्धस्य तरुणी विषम् ॥”
(यथा च राजेन्द्रकर्णपूरे । ४७ ।
“कृत्वा बेलापुलिनलवलीपल्लवग्रासगोष्ठीं
दिङ्गातङ्गाः सममथ सरिन्नाथपाथः पिबन्ति ॥”)

**गोष्ठीपतिः**, पुं, (पातीति पतिः । गोष्ठ्याः पोष्यवर्गस्य सभाया वा पतिः ।) पोष्यवर्गपालकः । सभापतिः ।
अथ ब्राह्मणगोष्ठीपतिलक्षणंयथा--
“नानाशास्त्रविशारदै रसिकता
सत्काव्यसम्मोदिता
निर्द्दोषैः कुलभूषणैः परिमिता पूर्णा कुलज्ञैरपि ।
श्रीमद्भागवतादिकारणकथाशुश्रूषयानन्दिता
गत्वाभीष्टमुपैति यद्गुणिजनो गोष्ठी हि सा चोच्यते ॥”
एवम्भूता गोष्ठी तस्याः पतिः । अपि च ।
“कुलीनाः श्रोत्रियाः सर्व्वे यस्यान्नं भुञ्जते मुहुः ।
कुलीनाय सुतां दत्त्वा स गोष्ठीपतिरुच्यते ॥”
तद्यथा । गाङ्गवंशे लक्ष्मीकान्तमजमुयादारः १ मुखवंशे मदनभट्टाचार्य्यः २ तद्वंशे गन्धर्व्वरायः ३ बन्द्यवंशे शुभराजखानवंशः ४ चट्टवंशे अनन्तभट्टाचार्य्यः ५ एते प्राचीनाः आधुनिका बहवः सन्ति ॥ * ॥
कायस्थगोष्ठीपतिलक्षणंयथा, --
“नीतिज्ञः कुलकर्म्मठः स्थितिमतां मान्योऽपि धर्म्मान्वितः
कार्य्याकार्य्यविलोकनैः कुलभृतां सम्मानदानोद्यतः ।
पोष्टा यः कुलसंविदां कुलसुधीः सन्मौलिकानां तथा
सद्वंशप्रभवः क्षितौ सुविदितो दाता स गोष्ठीततः षोडशे पर्य्यये दानजालः
कुलीनालिमालो दयारामपालः ॥ ५ ॥
ततस्तत्सुतः पर्य्यये सूर्य्यवाजिक्षपानाथगण्येऽभवत् पुण्यराजिः ॥ ६ ॥
ततः पर्य्ययेऽष्टादशे तत्तनूजः
समाहूय भूयोर्च्चितार्य्यव्रजो यः ।
सदा सत्कथालापसंलापतोषः
कुलीनौघपूजापरोऽयं सुभाषः ॥ ७ ॥
आसीत् किङ्करसेननामसुकृती यो मौलिकैकाग्रणीः
पर्य्यायि परिपूजितार्य्यनिचये चैकोनविंशे हि सः ।
सद्गोष्ठीपतिपालवंशतनयापाणिग्रहेणात्मनो
दानेनापि च मेलिकाटिरपरो गोष्ठीपतिः प्राथमः ॥ ८ ॥
दानेनातिवदान्यतादिगुणतो निःसीमपुण्यैश्च यो
गोपीसिंहचतुर्धुरीणसुकृती विंशे हि पर्य्यायके ।
यत्नात् किङ्करसेनवंशतनयापाणिग्रहाद्रागतः
सोऽप्यासीद् भुवि मेलिकाटिरपरो गोष्ठीपतिः सस्तुतिः ॥ ९ ॥
पर्य्यायि पुनरेकविंशक इह ख्यातः क्षमामण्डले
गोपीसिंहचतुर्धुरीणकुलजो यो रामकान्तः कृती ।
धन्यो गण्यसुपुण्यजन्ययशसा गोष्ठीपतेरग्रणीदर्नैः कर्ण इवातिधैर्य्यपयसां रत्नाकरश्चापरः ॥ १० ॥
द्वाविंशे किल पर्य्ययेऽतिनियतेस्तस्यात्मजासंग्रहात्
स्वस्यैवास्यसुपुण्यदत्तकतनूद्भूतस्य च श्रीमतः ।
गोपीमोहनसंज्ञकस्य तनयद्वारा च गोष्ठीपतिः
सम्भूतो नवकृष्णभूपतिवरः सन्मेलिकाटिः क्षितौ ॥ ११ ॥
तावन्मुख्यकनिष्ठमध्यमकुलोद्भूतां स्तृतीयोद्भवान्
षड्भ्रातृनपि तावतोऽत्र गणना बद्धक्रमानादरात् ।
सद्गोष्ठीपतिकारकानतिनताधीनान्कुलीनान् समाहूयात्र प्रकृतांस्तथात्र सहजान् पूज्यांस्तथा कोमलान् ॥
वित्तैर्वागमृतैर्नुतिप्रणतिभिश्चान्यैस्त्रयोविंशके
गौडक्ष्मापतिना य एव भिषजां श्रेष्ठ्येऽभिषिक्तः कृती
नानाशास्त्रविशारदः शुभमतिर्वाग्मी चिकित्सा पटुः ।
तस्मात् प्राप गजं तुरङ्गकनकच्छत्रञ्च रत्नं धनं
सोऽभूत् सेनविनायको वहुगुणैरम्बष्ठगोष्ठीपतिः ॥
वैनायकेषु सर्व्वेषु भास्करः श्रेष्ठ ईरितः ।
गोष्ठीपतितया ख्यातः स वैद्यैः पूजितोऽग्रतः ॥”
इति भरतमल्लिककृतकुलपञ्जिका ॥

**गोष्पदं**, क्ली, (गोः पदम् । यद्वा गावः पद्यन्ते गच्छन्ति यस्मिन् देशे । “गोष्पदं सेवितासेवितप्रमाणेषु ।” ६ । १ । १४५ । इति सुट् सस्य षत्वञ्च ।) गोसेवितस्थानम् । गोखुरप्रमाणम् । इत्यमरः । ३ । ३ । ९३ ॥ (यथा, महाभारते । ९ । ७ । ३७ ।
“भीष्मद्रोणार्णवं तीर्त्त्वा
कर्णपातालसम्भवम् ।
मा निमज्जस्व सगणः शल्यमासाद्य गोष्पदम् ॥”)
तथा विश्वो मेदिनी च ।
“गोष्पदं गोपदश्वभ्रे गवाञ्च गतिगोचरे ॥”
(गवासेवितारण्यादि । इति सिद्धान्तकौमुदी ॥)

**गोसः**, पुं, (गां जलं स्यति नाशयतीति । सो य नाशने + “आतोऽनुपसर्गे कः ।” ३ । २ । ३ । इति कः ।) वोलः । उषःकालः । इति मेदिनी ।

पतिः ॥”
अथ कायस्थगोष्ठीपतिगणना।
“आदौ द्वादशपर्य्यये समभवद्वानेन गोष्ठीपतिः
सत्कीर्त्तिश्च सुबुद्धिखानतनयः श्रीमन्तरायः
कृती । १ ।
संजातस्तदनन्तरं गुणधरा गण्ये च पर्य्यायके
स्वेच्छातो हि पुरन्दरः कुलभवः खानः सदा
दानतः ॥ २ ॥
पर्य्यायि च चतुर्द्दशे समभवत् पौरन्दरः केशवः
स्वानः सन्ततदानतो हि विलसत्कीर्त्तिर्धरा-
मण्डले ॥ ३ ॥
नानावित्तविसर्ज्जनेन जनितप्रोत्फुल्लकीर्त्तिः
क्षिता-
वासीत् पञ्चदशे तदात्मजकृती
श्रीकृष्णविश्वास-
खास् ॥ ४ ॥

पर्य्ययिऽतितरां प्रपूज्य परमाह्लादान्वितः श्रीयुतः
।
गोपीमोहनदेववंशतिलको गोष्ठीपतिः क्ष्मापति-
र्जातः संप्रति भूमिदेवघटकानाञ्चाञ्चना-
दच्युतिः ॥” १२ ॥
इति दक्षिणराढीयकायस्थकुलाचार्य्यकारिका ॥
अथ वैद्यानां गोष्ठीपतिर्यथा, --
“विप्रेभ्य प्रियभोज्यवस्तुवसनं छत्रासनं भूषणं
ग्रामा भूमितुरङ्गमा गजगणाः स्वर्णानि रत्नानि
च ।
गावो नाव उदारमन्दिररुचो वाट्यश्च दत्ताः
सदा
साधुज्ञातिकुटुम्बसद्गुणगणाः संप्रीणिता येन च
॥

से । ३ ॥

**गोसङ्ख्यः**, पुं, (गाः सञ्चष्टे इति । चक्षि ङल उक्तौ
+ “चक्षिङः ख्याञ् ।” २ । ४ । ५४
। इति
ख्याञ् ततः “समिख्यः ।” ३ । २ ।
७ । इति
कः । यद्वा, गवां संख्या बहवो गाव
इत्यर्थः
विद्यते यस्य । समासे पुंवद्भावः ।)
गोपः ।
इत्यमरः । २ । ९ । ५७ ॥

**गोसङ्गः**, पुं, (गोभिः सङ्गो मिलनं यस्मिन् काले ।
प्रत्यूषकाले हि गावो गोष्ठगमनाय
निर्गच्छ-
न्तीति प्रसिद्धिः । यद्वा गौः
सूर्य्यकिरणं तेन
सङ्गो यस्मिन् ।) प्रत्यूषः । इति
भूरिप्रयोगः ॥

**गोसदृक्षः**, पुं, (गोः सदृक्षस्तुल्यः । गोसदृशा-
कारत्वादस्य तथात्वम् ।) गवयः ।
इति हेम-
चन्द्रः ॥

**गोसन्दायः** पुं, (गां सन्ददातीति । सम् + दा +
अण् ।) गोदानकर्त्ता । इति
व्याकरणम् ॥

**गोसम्भवा**, स्त्री, (गोरिव सम्भवो लोमादिरूपा
कृतिर्यस्याः ।) श्वेतदूर्व्वा । इति
राजनिर्घण्टः ॥
(सम्भवत्यस्याः इति सम्भवा
उत्पतिकारणम् ।
गौः सम्भवा यस्याः ।) गोजाते त्रि ॥

**गोसर्गः**, पुं, (गवां सर्गो वनगमनाय मोचनं
यद्वा गवां सूर्य्यकिरणानां सर्गो
विसृष्टिः
यस्मिन् ।) प्रभातम् । इति हारावली
। १६१ ॥
(यथा, सुश्रुते चिकित्सितस्थाने २४
अध्याये ।

| | | “गोसर्गे चार्द्धरात्रे च तथा मध्यन्दिनेषु च ॥”)<br>**गोसवः**, पुं, (गौः सूयते पीड्यते हिंस्यते यत्र । सु ञ्न पीडायाम् + “ऋदोरप् ।” ३ । ३ । ५७ ।) इति अप् ।) गोमेधयज्ञः । इति जटाधरः ॥<br>(यथा, मनुः । ११ । ७४ । |
|---|---|---|

"यजेत वाश्वमेधेन स्वर्जिता गोसवेन वा ।
अभिजिद्विश्वजिद्भ्यां वा त्रिवृताग्निष्टुतापि वा ॥")

**गोसशशः**, पुं, (गोस एव शशः शशतुल्यः इति गोवलीवर्द्दन्यायेन सिद्धः ।) वोलः । इत्यमर-टीकायां रायमुकुटः ॥

**गोसहस्री**, स्त्री, (गवां सहस्रं तद्दानफलं विद्यते यत्र । अर्श आदित्वादच् गौरादित्वात् ङीष् ।) मङ्गलवारयुक्तामावास्या । तत्र गङ्गास्नाने सहस्रगोदानफलम् । यथा, व्यासः ।
"अमावास्यां भवेद्वारो यदि भूमिसुतस्य च ।
गोसहस्रफलं दद्यात् स्नानमात्रेण जाह्नवी ॥"
इति तिथ्यादितत्त्वम् ॥ * ॥
सोमवारयुक्तामावास्या । तत्र अरुणोदयकाल-मारभ्य स्नानकालपर्य्यन्तं मौनीभूत्वा स्नानात्
गोसहस्रदानफलम् । यथा व्यासः ।
"सिनीबाली कुहूर्व्वापि यदि सोमदिने भवेत् ।
गोसहसफलं दद्यात् स्नानं यन्मौनिना कृतम् ॥"
इति च तिथ्यादितत्त्वम् ॥

**गोस्तनः**, पुं, (गोः स्तन इव गुच्छो यस्य ।) हार-भेदः । इत्यमरः । २ । ६ । १०५ ॥ स तु चतु-र्यष्टिकः । चतुस्त्रिंशद्यष्टिक इति केचित् । इति भरतः ॥ (गवां स्तनः ।) गवां कुचश्च ॥ (यथा, सुश्रुते उत्तरतन्त्रे १ मे अध्याये ।
"सुवृत्तं गोस्तनाकारं सर्व्वभूतगुणोद्भवम् ॥")

**गोस्तना**, स्त्री, (गोः स्तन इव फलमस्याः । ङीष-भावपक्षे टाप् ।) गोस्तनी । इत्यमरटीका ॥

**गोस्तनी**, स्त्री, (गोः स्तन इव फलमस्याः ।
"स्वाङ्गाच्चोपसर्ज्जनादसंयोगोपधात् ।" ४ । १ ।
५४ । इति ङीष् ।) द्राक्षा । इत्यमरः । २ । ४ । १०७ ॥ कपिलद्राक्षा । इति राजनिर्घण्टः ॥
(यथास्याः पर्य्यायाः ।
"द्राक्षा स्वादुफला प्रोक्ता तथा मधुरसापि च ।
याणां स्वामी । जितेन्द्रियतया एव तथात्वम् ।)
यथा । "श्रीसनातनगोस्वामी प्रिया श्रीरति-
मञ्जरी ।" इत्यनन्तसंहिता ॥

**गोहत्या**, स्त्री, (गवां हत्या हननम् ।) गोवधः । तत्प्रायश्चित्तादि प्रायश्चित्तशब्दे द्रष्टव्यम् ॥ * ॥
पारिभाषिकगोहत्या यथा, --
सावित्र्युवाच ।
"विप्रहत्याञ्च गोहत्यां किंविधामातिदेशिकीम् ।
का वा नृणामगम्या वा को वा सन्ध्याविहीनकः ॥
एतेषां लक्षणं सर्व्वं वद वेदविदां वर ! ॥
यम उवाच ।
गामाहारं प्रकुर्व्वन्तं पिबन्तं यो निवारयेत् ।
याति गोविप्रयोर्म्मध्ये गोहत्याञ्च लभेत्तु सः ॥
दण्डैर्गान्ताडयन् मूढो यो विप्रो वृषवाहकः ।
दिने दिने गवां हत्यां लभते नात्र संशयः ॥
ददाति गोभ्य उच्छिष्टं भोजयेद्वृषवाहकम् ।
भोजयेद्वृषवाहान्नं स गोहत्यां लभेद् ध्रुवम् ॥
वृषलीपतिं याजयेद् यो भुङ्क्तेऽन्नं तस्य यो नरः ।
गोहत्याशतकं सोऽपि लभते नात्र संशयः ॥
पादं ददाति वह्नौ यो गाञ्च पादेन ताडयेत् ।
गृहं विशेदधौताङ्घ्रिः स्नात्वा गोवधमालभेत् ॥
यो भुङ्क्तेऽस्निग्धपादेन शेते स्निग्धाङ्घ्रिरेव च ।

**गोहितः**, पुं, (गोषु हितः ।) धोषलता । विल्वः । इति शब्दचन्द्रिका ॥ गवां हितकारके त्रि ॥ (गोर्भूमेर्भारावतरणे स्वेच्छया शरीरग्रहणं कुर्व्वन् गोहितः, यद्वा गवां रक्षार्थं गोवर्द्धनं धृतवानिति गोहितः । विष्णुः । यथा, महा-भारते । १३ । १४९ । ७६ ।
"गोहितो गोपतिर्गोप्ता वृषभाख्यो वृषप्रियः ॥")

**गोहिरं**, क्ली, (गुह + बाहुलकादिरच् ।) पाद-मूलम् । इति हेमचन्द्रः । ३ । २८० ॥

**गोह्यं**, त्रि, (गुहू ञ् संवरणे + "शंसिदुंहिगुहिभ्यो वा ।" इति काशिकोक्तेः क्यबभावपक्षे ण्यत् ।) गुह्यम् । गोपनीयम् । इति पाणिनिव्याकर-णम् ॥

**गौः**, [गो] पुं स्त्री, (गच्छतीति । गम् +
"गमेर्डोः ।" उणां । २ । ६७ । इति डोः । यद्वा, गच्छत्यनेनेति करणे डोः । वृषस्य यानसाधन-त्वात् स्त्रीगव्या दानेन स्वर्गगमनसाधनत्वाच्च उभयोरपि दानेन स्वर्गगमनत्वाद्वा तथात्वम् । वस्तुतस्त्वयं रूढ एब शब्दः । यदुक्तम् ।
"रूढा गवादयः प्रोक्ता यौगिकाः पाचकादयः ।
योगरूढाश्च विज्ञेयाः पङ्कजाद्या मनीषिभिः ॥")
स्वनामख्यातपशुः । गरु इति माषा ॥ पुंगोः पर्य्यायः अनड्वान् इति पदे द्रष्टव्यः ॥ स्त्रीगोः पर्य्यायः । माहेषी २ सौरभेयी ३ उस्रा ४ माता ५ शृङ्गिणी ६ अर्ज्जुनी ७ अघ्न्या ८ रोहिणी ९ । इत्यमरः ॥ माहेन्द्री १० इज्या ११ धेनुः १२ अघ्ना १३ दोग्ध्री १४ भद्रा १५ भूरि-मही १६ अनडुही १७ कल्याणी १८ पावनी १९ गौरी २० सुरभिः २१ महा २२ निलि-नाचिः २३ सुरभी २४ अनड्वाही २५ द्विडा २६ अधमा २७ । इति शब्दरत्नावली ॥ बहुला २८ मही २९ सरस्वती ३० । इति जटाधरः ॥ उस्त्रिया ३१ अही ३२ अदितिः ३३ इला ३४ जगती ३५ शर्करी ३६ । इति वेदनिघण्टौ २ अध्यायः ॥ * ॥ (गवां लक्षणादिकं यथा, बृहत्संहितायां ६१ अध्याये ।
"पराशरः प्राह बृहद्रथाय
गोलक्षणं यत् क्रियते ततोऽयम् ।
मया समासः शुभलक्षणास्ताः

मृद्वीका हारहूरा च गोस्तनी चापि कीर्त्तिता ॥”
वृष्या स्याद् गोस्तनी द्राक्षा गुर्व्वी च कफपि-
त्तनुत् ॥
गोस्तनी मुनक्का इति ।” इति भावप्रकाशस्य
पूर्ब्बखण्डे प्रथमे भागे ॥ गोः स्तना इव स्तना
यस्याः । कुमारानुचारिणी मातृगणानामन्य-
तमा । यथा, महाभारते । ९ । ४६ । ३ ।
“प्रभावती विशालाक्षी पलिता गोस्तनी तथा
॥”
गोनसीति पाठोऽपि वर्त्तते ॥)

**गोस्थानं**, क्ली, (गवां स्थानम् ।) गोष्ठम् । इति
शब्दरत्नावली ॥ (यथा, हरिवंशे । ६० । २७
।
“सार्गजद्वारगोवाटं मध्ये गोस्थानसङ्कुलम् ॥”)

**गोस्थानकं**, क्ली, (गोस्थान + स्वार्थे कन् ।)
गोष्ठम् । इत्यमरः । २ । १ । १३ ॥

**गोस्वामी**, [न्] त्रि, (गवां स्वामी ।) गोपतिः ।
इति हलायुधः ॥ (यथा, मनुः । ८ । २३१ ।
“गोपः क्षीरभृतो यस्तु स दुह्याद्दशतो वराम् ।
गोस्वाम्यनुमते भृत्यः सा स्यात् पालेऽभृते
भृतिः ॥”)
स्वर्गेस्य भुवो वा प्रभुः । (यद्वा, गवां इन्द्रि-

सूर्य्योदये च द्विर्भोजी स गोहत्यां
लभेद् ध्रुवम् ॥
अवीरान्नञ्च यो भुङ्क्ते योनिजीवी च
ब्राह्मणः ।
यस्त्रिसन्ध्याविहीनश्च स गोहत्यां
लभेद् ध्रुवम् ॥
पितॄं श्च पर्व्वकाले च तिथिकाले च
देवताः ।
न सेवतेऽतिथिं यो हि स गोहत्यां
लभेद् ध्रुवम् ॥
स्वभर्त्तरि च कृष्णे वा भेदबुद्धिं
करोति या ।
कटूक्त्या ताडयेत् कान्तं सा गोहत्यां
लभेद् ध्रुवम् ॥
गोमार्गं खननं कृत्वा ददाति शस्यमेव
च ।
तडागे च तदूद्र्ध्वे वा स गोहत्यां
लभेद् ध्रुवम् ॥
प्रायश्चित्तं गोवधस्य यः करोति
व्यतिक्रमम् ।
अर्थलोभादथाज्ञानात् स गोहत्यां
लभेद् ध्रुवम् ॥
राजके दैवके यत्नात् गोस्वामी गां न
पालयेत् ।
दुःखं ददाति यो मूढो गोहत्यां लभते
ध्रुवम् ॥
प्राणिनं लङ्वयेद्यो हि देवार्च्चामनलं
जलम् ।
नैवेद्यं पुष्पमन्नञ्च स गोहत्यां लभेद्
ध्रुवम् ॥
शश्वन्नास्तीति वादी यो मिथ्यावादी
प्रतारकः ।
देवद्वेषी गुरुद्वेषी स गोहत्यां लभेद्
ध्रुवम् ॥
देवताप्रतिमां दृष्ट्वा गुरुं वा ब्राह्मणं
प्रति ।
न सम्भ्रमान्नमेत् यो हि स गोहत्यां
लभेद् ध्रुवम् ॥
न ददात्याशिषं कोपात् प्रणताय च
यो द्विजः ।
विद्यार्थिने च विद्याञ्च स गोहत्यां
लभेद् ध्रुवम् ॥”

सर्व्वास्तथाप्यागमतोऽभिधास्ये॥
सास्राविलरूक्षाक्ष्यी मूषकनयनाश्च न शुभदा
गावः ।
प्रचलच्चिपिटविषाणाः करटाः खरसदृशवर्णाः ॥
दशसप्तचतुर्दन्त्यः प्रलम्बमुण्डानना विनतपृष्ठाः ।
ह्रस्वस्थूलग्रीवा यवमध्या दारितखुराश्च ॥
श्यावातिदीर्घजिह्वागुल्फैरतितनुभिरतिबृह-
द्भिर्वा ।
अतिककुदाः कृशदेहा नेष्टा हीनाधिकाङ्ग्यश्च ॥
वृषभोऽप्येवं स्थूलातिलम्बवृषणः शिराततक्रोडः ।
स्थूलशिराचितगण्डस्त्रिस्थानंमेहते यश्च ॥
मार्ज्जाराक्षः कपिलः करटो वा न शुभदो
द्विजस्येष्टः ।

इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २७ अध्यायः ॥

**गोहन्नं**, क्ली, (हद विष्ठात्यागे + क्तः । हन्नम् ।

गोर्हन्नं विष्ठा ।) गोमयम् । इति रत्नमाला ॥

**गोहरीतकी**, स्त्री, (गवां हरीतकीव हितकारि-

त्वात् ।) विल्ववृक्षः । इति शब्दरत्नावली ॥

**गोहालिया**, स्त्री, लताविशेषः । गोयालिया इति

भाषा ॥ यथा, गारुडे १९० अध्याये ।

"पोतं गोहालियामूलं तिलदध्याज्यसंयुतम् ।
निवद्धमूत्रं क्वथितं प्रवर्त्तयति शङ्कर ! ॥"

कृष्णोष्ठतालुजिह्वः श्वसनो यूथस्य धातकरः ॥
स्थूलशकृन्मणिशृङ्गः सितोदरः कृष्णसारवर्णश्च
।
गृहजातोऽपि त्याज्यो यूथविनाशावहो वृषभः ॥
श्यामकपुष्पचिताङ्गो भस्मारुणसन्निभो विडा-
लाक्षः ।
विप्राणामपि न शुभं करोति वृषभः परिगृहीतः ।
ये चोद्धरन्ति पादान् पङ्कादिव योजिताः कृश-
ग्रीवाः ।
कातरनयना हीनाः पृष्ठतश्च ते न भारसहाः ॥
मृदुसंहतताम्रोष्ठास्तनुस्फिजस्ताम्रतालुजिह्वाश्च
।
तनुह्रस्वोच्चश्रवणाः सुकुक्षयः स्पष्टजङ्घाश्च ॥
आताम्रसं हतखुरा व्यूढोरस्का बृहत्ककुद-
युक्ताः ।
स्निग्धश्लक्ष्णतनुत्वग्रोमाणस्ताम्रतनुशृङ्गाः॥
तनुभूस्पृग्बालधयो रक्तान्तविलोचना महो-
च्छासाः ।
सिंहस्कन्धास्तन्वल्पकम्बलाःपूजिताः सुगताः
॥
वामावर्त्तैर्वामि दक्षिणपार्श्वे च दक्षिणावर्त्तैः ।
शुभदा भवन्त्यनडुहो जङ्घाभिश्चैणकनिभाभिः
॥
वैदूर्य्यमल्लिका बुद्बुदेक्षणाः स्थूलनेत्रचर्म्माणः ।
पार्ष्णिभिरस्फुटिताभिः शस्ताः सर्व्वेऽपि भार-
वहाः ॥
घ्राणोद्देशे सवलिर्मार्ज्जारमुखः सितश्च दक्षि-
णतः ।
कमलोत्पललाक्षाभः सुवालधिर्वाजितुल्यजवः
॥
लम्बैर्वृषणैर्मेषोदरश्च सङ्क्षिप्तवङ्क्षणाक्रोडः ।
ज्ञेयो भाराध्वसहो जवेऽश्वतुल्यश्च शस्तफलः
॥
सितवर्णः पिङ्गाक्षस्ताम्रविषाणेक्षणो महा-
वक्त्रः ।
हंसो नाम शुभफलो यूथस्य विवर्द्धनः प्रोक्तः ॥
भूस्पृग्वालधिराताम्रवङ्क्षणोरक्तदृक् ककुद्मी च ।
कल्माषश्च स्वामिनमचिरात्कुरुते पतिं लक्ष्म्याः
॥
यो वासितैकचरणो यथेष्टवर्णश्च सोऽपि शस्त-
फलः ।

हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः ॥
एतानि सततं पश्येन्नमस्येदर्च्चयेच्च यः ।
प्रदक्षिणञ्च कुर्व्वीत तथा चायुर्न हीयते ॥”
अभिप्रेतार्थसिद्धिर्म्मङ्गलं तद्धेतुतया
ब्राह्मणा-
द्यपि ॥ * ॥ गोप्रणामे ब्रह्मपुराणम् ।
“सदा गावः प्रणम्यास्तु मन्त्रेणानेन पार्थिव !
।
नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च
॥
नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ।
मन्त्रस्य स्मरणादेव गोदानफलमाप्नुयात्
॥”
भविष्ये ।
“गामालभ्य नमस्कृत्य कृत्वा चैव प्रदक्षिणम्
।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ॥
गवामस्थि न लङ्घेत मृते गन्धेन वर्ज्जयेत् ।
यावदाध्राति तद्गन्धं तावद्गन्धेन युज्यते
॥”
विष्णुः ।
“गोमूत्रं गोमयं क्षीरं सर्पिर्दधि च रोचना ।
षडङ्गमेतन्मङ्गल्यं पवित्रं सर्व्वदा गवाम् ॥”
षडङ्गं षट्प्रकारम् । इति शुद्धितत्त्वम् ॥ * ॥
तन्मांसगुणाः । सुस्निग्धत्वम् ।
पित्तश्लेष्मविवर्द्धन-
त्वम् । बृंहणत्वम् । बलकारित्वम् ।
पीनसप्रदर-
नाशित्वञ्च । इति भावप्रकाशः ॥ अपूतत्वम्
।
गुरुत्वम् । वातकफापहत्वञ्च ॥ * ॥
तद्दुग्धगुणाः ।
पथ्यत्वम् । अत्यन्तरुच्यत्वम् । स्वादुत्वम् ।
स्निग्ध-
त्वम् । पित्तवातामयनाशित्वम् । मेध्यत्वम् ।
कान्तिप्रज्ञाङ्गपुष्टिवीर्य्यवृद्धिकारित्वञ्च ॥
(यथा
च हारीते प्रथमस्थानेऽष्टमाध्याये ।
“गव्यं पवित्रञ्च रसायनञ्च
पथ्यञ्च हृद्यं बलपुष्टिदं स्यात् ।
आयुःप्रदं रक्तविकारपित्त-

“गवां प्रत्यूषसि क्षीरं गुरु विष्टम्भि
दुर्ज्जरम् ।
तस्मादभ्युदिते सूर्य्ये यामं यामार्द्धमेव वा
॥
समुत्तार्य्य पयो ग्राह्यं तत् पथ्यं दीपनं लघु
।
विवत्साबालवत्सानां पयो दोषसमीरितम्
॥
शस्तं वत्सैकवर्णाया धवलीकृष्णयोरपि ।
इक्ष्वादा मासपर्णादा ऊर्द्ध्वशृङ्गी च या
भवेत् ॥
तासां गवां हितं क्षीरं शृतं वाशृतसेव वा ।
गवां सितानां वातघ्नं कृष्णानां
पित्तनाशनम् ।
श्लेष्मघ्नं रक्तवर्णानां त्रीन् हन्ति
कपिलापयः ॥”
इति राजनिर्घण्टः ॥

**गौः**, [गो] पुं, (गम्यते कर्म्मिभिः यज्ञदान-
परोपकारादिधर्म्ममूलककर्म्मफलैर्यस्मिन्
। गम्
+ “गमेर्डोः ।” उणां । २ । ६३ । इति
अधि-
करणे डोः ।) स्वर्गः । (गम्यन्ते ज्ञायन्ते
विषया येन यद्वा गच्छति शीघ्रमिति करणे
कर्त्तरि वा डोः । किरणसम्पर्केण विना
चाक्षुष-
ज्ञानाभावात् किरणस्य
ज्ञानप्रकाशधर्म्मवत्त्वात्
शीघ्रगामित्वाच्च तथात्वम् ।) रश्मिः ।
(यथा,
महाभारते । ३ । ३ । ५२ ।
“त्रयोदशद्वीपवतीं गोभिर्भासयसे महीम् ।
त्रयाणामपि लोकानां हितायैकः प्रवर्त्तसे
॥” * ॥)
वज्रः । इति मेदिनी । गे । १ ॥ (गम्वते
पुण्यवद्भि-
र्यस्मिन् । अधिकरणे डोः ।
इष्ट्यापूर्त्तादिसकाम-
कर्म्मभिः पुण्यवताञ्चन्द्रलोकगमनात्
तथा-

मिश्रफलोऽपि ग्राह्यो यदि नैकान्तप्रशस्ती-
ऽस्ति ॥” * ॥
गोरीङ्गितभेदेन शुभाशुभमुक्तं यथा, तत्रैव
९२ अध्याये, --
“गावो दीनाः पार्थिवस्याशिवाय
पादैर्भूमिं कुट्टयन्त्यश्च रोगान् ।
मृत्युं कुर्व्वन्त्यश्रुपूर्णायताक्ष्यः
पत्युर्भीतास्तस्करानारुवन्त्यः ॥
अकारणे क्रोशति चेदनर्थो
भयाय रात्रौ वृषभः शिवाय ।
भृशं निरुद्धा यदि मक्षिकाभि-
स्तदाशु वृष्टिं सरमात्मजैर्व्वा ॥
आगच्छन्त्यो वेश्म बम्भारवेण
संसेवन्त्यो गोष्ठवृद्ध्यै गवां गाः ।
आर्द्राङ्ग्यो वा हृष्टरोम्ण्यः प्रहृष्टा
धन्या गावः स्युर्महिष्योपि चैवम् ॥” * ॥)
गोर्मङ्गलत्वादि यथा, देवलः ।
“लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हताशनः
।
त्रिदोषहृद्रोगविषापहं स्यात् ॥” * ॥)
तद्दधिगुणाः । अतिपवित्रत्वम् । शीतत्वम् ।
स्निग्धत्वम् । दीपनत्वम् । बलकारित्वम् ।
मधुर-
त्वम् । अरोचकवातामयनाशित्वम् ।
ग्राहित्वञ्च ॥
(यथा च हारीते प्रथमस्थानेऽष्टमेऽध्याये ।
“अम्लस्वादुरसं ग्राहि गुरूष्णं वातरोगजित्
।
मेदः-शुक्र-बल-श्लेष्म-रक्तपित्ताग्नि-
शोफकृत् ॥
स्निग्धं विपाके मधुरं दीपनं बलवर्द्धनम् ।
वातापहं पवित्रञ्च दधि गव्यं गुणप्रदम् ॥” *
॥
तद्दग्धफेनगुणाः ।
“गवान्तु क्षीरफेनं वा तक्रेण सहितन्तथा ।
पक्वाम्रं भक्षयेद्वापि ग्रहणी तस्य नश्यति
॥”)
तन्नवनीतगुणाः । शीतत्वम् ।
वर्णबलशुक्रकफ-
रुचिसुखकान्तिपुष्टिकारित्वम् । सुमधुरत्वम्
।
संग्राहकत्वम् । चक्षुर्हितत्वम् ।
वातसर्व्वाङ्गशूल-
कासश्रमसर्व्वदोषनाशित्वञ्च ॥ * ॥
तद्घृतगुणाः । हृद्यत्वम् ।
धीकान्तिस्मृतिबल-
मेधापुष्ट्यग्निवृद्धिशुक्रवपुःस्थौल्यकारित्वम्
। वात-
श्लेष्मश्रमपित्तनाशित्वम् । विपाके
मधुरत्वम् ।
हव्यतमत्वम् । बहुगुणत्वञ्च ॥ (तथा च ।
“विपाके मधुरं वृष्यं वातपित्तकफापहम् ।
चक्षुष्यं बलकृन्मेध्यं गव्यं सर्पिर्गुणोत्तमम् ॥”
इति हारीते प्रथमस्थाने अष्टमेऽध्याये ॥ *
॥)
त्वम् ।) चन्द्रः । इति विश्वः ॥ (गच्छति
प्राप्नोति
विश्वं प्रकाशकात्मकेन स्वतेजसेति
जानाति
सर्व्वमिति वा । कर्त्तरि डोः ।) सूर्य्यः ।
गोमेध-
यज्ञः । इत्यमरटीकायां भानुदीक्षितः ॥
ऋषभ-
नामौषधम् । इति राजनिर्घण्टः ॥

**गौः**, [गो] स्त्री, (गम्यते विषयज्ञानं यया । गम्
+ “गमेर्डोः ।” उणां । २ । ६३ । इति
करणे
डोः ।) चक्षुः । (गच्छति शीघ्रमिति कर्त्तरि
डोः ।) बाणः । दिक् । (गम्यते ज्ञायते
चित्ताभि-
प्रायो यया । करणे डोः ।) वाक । (यथा,
रघुः । ५ । १२ ।
“इत्यध्यपात्रानुमितव्ययस्य
रघोरुदारामपि गां निशम्य ॥” * ॥
गम्यते व्रज्यतेऽस्यामिति । अधिकरणे
डोः ।)
भूः । (यथा, रघुः । १ । २६ ।
“दुदोह गां स यज्ञाय शस्याय मघवा
दिवम् ।
सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥” *
॥
जले बहुवचनान्तोऽयम् । इति मेदिनी । गे
। १ ॥
जले एकवचनान्तोऽपि इति केचित् । इति
भरतः ॥ (यथा, वृन्दावनयमके । २ ।
“स्वमिव भुजं गवि शेषं
व्युपधाय स्वपिति यो भुजङ्गविशेषम् ।
नव पुष्करसमकरया
श्रीयोर्म्मिपंक्त्या च सेवितः समकरया
॥”)
माता । इत्येकाक्षरकोषः ॥
(स्वनामख्याता
शुकदौहित्रस्य ब्रह्मदत्तस्य भार्य्या । यथा,
भाग-
वते । ९ । २१ । २५ ।
“स कीर्त्त्यां शुककन्यायां
ब्रह्मदत्तमजीजनत् ।

**गौः**, [गो] पुं, क्ली, (गम्यते ज्ञायते स्पर्शसुख-
मनेन । गम् + “गमेर्डोः ।” उणां । २ । ६३ ।
इति करणे डोः । त्वचि जातत्वादेवास्य तथा-
त्वम् ।) लोम । (गच्छति निम्नदेशमिति ।
कर्त्तरि डोः । निम्नप्रवणाद्वेवास्य तथात्वम् ।)
जलम् । इत्यमरटीकायां भानुदीक्षितः ॥

**गौञ्जिकः**, पुं, (गुञ्जा परिमाणविशेषस्तद्ग्रहीतुं
शीलमस्य । यद्वा, गुञ्जा गुञ्जाफलं तस्य परि-
माणार्थं ग्रहणं विद्यते अस्य । गुञ्जा + ठक् ।)
स्वर्णकारः । इति त्रिकाण्डशेषः ॥

**गौडः**, पुं, स्वनामख्यातदेशः । (यथा, प्रबोध-
चन्द्रोदये । २ । ७ ।
“गौडं राष्ट्रमनुत्तमं निरुपमा तत्रापि राढा
पुरी ।
भूरिश्रेष्ठिकनाम धाम परमं तत्रोत्तमो नः
पिता ॥”)
तद्देशस्थे पुं भूम्नि । इति जटाधरः ॥ तद्देश-
सीमा यथा, शक्तिसङ्गमतन्त्रे सप्तमपटले ।
“वङ्गदेशं समारभ्य भुवनेशान्तगं शिवे ! ।
गौडदेशः समाख्यातः सर्व्वविद्याविशारदः ॥”
(देशोऽयं बृहत्संहितायां कूर्म्मविभागे पूर्ब्बस्या-
ङीप् ।) गुडादिकृता सुरा । गुडेर मद इति
भाषा ॥ (यथा, मनुः । ११ । ९४ ।
“गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा
सुरा ॥”)
तत्पर्य्यायः । वाल्कली २ । इति त्रिकाण्डशेषः ॥
अस्या गुणाः । तीक्ष्णत्वम् । उष्णत्वम् । मधु-
रत्वम् । वातनाशित्वम् । पित्तबलकान्तितृप्ति-
कारित्वम् । दीपनत्वम् । पथ्यत्वञ्च । इति राज-
निर्घण्टः ॥ (यथा च हारीते प्रथमे स्थाने
११ अध्याये ।
“गौडी कषाया मधुराम्लशीता
सन्दीपनी शूलरुजापहन्त्री ।
हृद्या त्रिदोषं शमयत्यजीर्णं
पाण्डामयार्शःश्वसनं निहन्ति ॥”)
रागिणीविशेषः । सा तु मेघरागस्य पत्नी । इति
सङ्गीतदामोदरः ॥ (गौडानां गौडदेशवासिनां
प्रिया ।) काव्यरीतिविशेषः । यथा, --
“ओजःप्रसादमाधुर्य्यं गुणत्रितयभेदतः ।
गौडवैदर्भपाञ्चाला रीतयः परिकीर्त्तिताः ॥”
इति काव्यचन्द्रिका ॥
(यथा च साहित्यदर्पणे । ९ । ४ ।
“ओजंःप्रकाशकैर्व्वर्णैर्बन्ध आडम्बरः पुनः ।
समासबहुला गौडी-- ॥”
उदाहरणं यथा, तत्रैव धृतो वेणीसंहारश्लोकः ।
“चञ्चद्भुजभ्रमितचण्डगदाभिघात-
सञ्चूर्णितोरुयुगलस्य सुयोधनस्य ।
पुरुषोत्तमस्त्वाह ।
बहुतरसमासयुक्ता सुमहाप्राणाक्षरा च गौडीया ।
रीतिरनुप्रासमहिमपरतन्त्रास्तोभवाक्याच ॥”)

**गौणः**, पुं, (गुणादागता गौणी । तस्या आगतः
प्रतिबोधितः । गौणी + अण् ।) गौणीवृत्ति-
बोधितः । यथा, “शक्यस्य सादृश्यात्मकः सम्बन्धो
“गौणचान्द्रण भाद्रता मुख्यचान्द्रेण श्रावणता ॥”
अपि च शब्दरत्नावल्याम् ।
“चान्द्रोऽपि द्विविधः प्रोक्तो मुख्यगौणविभेदतः ।
गौणः कृष्णप्रतिपदादिपौर्णमास्यन्त ईरितः ॥”

**गौणी**, स्त्री, (गुणं सादृश्यमधिकृत्य प्रवृत्ता ।
गुण + अण + स्त्रियां ङीप् ।) अशीतिप्रकार-
लक्षणान्तर्गतलक्षणाविशेषः । यथा, --
“सादृश्येतरसम्बन्धाः शुद्धास्ताः सकला अपि ।
सादृश्यात्तु मता गौण्यस्तेन षोडश भेदिताः ॥”
(“ताः पूर्ब्बोक्ता अष्टादशभेदा लक्षणाः । सादृ-
श्येतरसम्बन्धाः कार्य्यकारणभावादयः । अत्र
शुद्धानां ‘श्वेतो धावति’ इत्यादीन्युदाहरणानि
ज्ञेयानि । रूढावुपादानलक्षणा सारोपा गौणी
यथा ‘एतानि तैलानि हेमन्ते सुखानि’ अत्र
तैलशब्दस्तिलभवस्नेहरूपं मुख्यार्थमुपादायैव
सार्षपादिस्नेहेषु वर्त्तते । प्रयोजने यथा, राज-
कुमारेषु तत्सदृशेषु गच्छत्सु ‘एते राजकुमारा
गच्छन्ति ।’ रूढावुपादानलक्षणा साध्यवसाना
गौणी यथा, ‘तैलानि हेमन्ते सुखानि ।’ प्रयो-
जने यथा, ‘राजकुमारा गच्छन्ति ।’ रूढौ
लक्षणलक्षणा सारोपा गौणी यथा, ‘राजा
गौडेन्द्रः कण्टकं शोधयति ।’ प्रयोजने यथा,
‘गौर्वाहीकः ।’ रूढौ लक्षणा साध्यवसाना
गौणी यथा, ‘राजा कण्टकं शोधयति ।’ प्रयो-
जने यथा, ‘गौर्जल्पति ।’

अत्र केचिदाहुः गोसहचारिणो गुणा जाड्य-
मान्द्यादयो लक्ष्यन्ते । ते च गोशब्दस्य वाही-
कार्थाभिधाने निमित्तीभवन्ति । यदुक्तं, गो-
शब्दस्यागृहीतसङ्केतं वाहीकार्थमभिधातुम-
सामर्थ्यात् गोशब्दार्थमात्रबोधनाच्च । अभि-
धाया विरतत्वात् विरतायाश्च पुनरुत्थाना-
भावात् । अन्ये पुनर्गोशब्देन वाहीकार्थो
नाभिधीयते किन्तु स्वार्थसहचारिगुणसाजात्येन
वाहीकार्थगता गुणा एव लक्ष्यन्ते । तदप्यन्ये न
मन्यन्ते । तथाह्यत्र मोशब्दाद्वाहीकार्थः प्रती-
यते न बा । आद्येऽपि गोशब्दादेव बा लक्षि-

मुक्तः । यथा, तत्रैव । १४ । ५, ७ ।
"अथ पूर्ब्बस्याम् ।" इत्युक्त्वा
"उदयगिरि भद्रगौडक-
पौण्ड्रोत्कलकाशिमेकलाम्बष्ठाः ॥"
इत्युक्तवान् ॥)
पञ्च गौडा यथा, स्कन्दपुराणे ।
"सारस्वताः कान्यकुब्जा
गौडमैथिलिकौत्कलाः ।
पञ्च गौडा इति ख्याता
विन्ध्यस्योत्तरवासिनः ॥"
(गुडस्य विकारः । गुड + अण् । गुडजाते
आसवे क्ली च । अस्य गुणा यथा, --
"सृष्टमूत्रशकृद्वातो गौडस्तर्पण-
दीपनः ॥"
इति सूत्रस्थाने पञ्चमेऽध्याये
वाभटेनोक्तम् ॥
"श्यामादन्तीरसे गौडः
पिप्पलीफलचित्रकैः ।
लिप्तेऽविष्टोऽनिल-कफ-
प्लीहपाण्डूदरापहः ॥"
इति च चरके कल्पस्थाने
द्वादशेऽध्याये ॥)

**गौडवास्तूकः**, पुं, (गौडे गौडदेशे जातः गौडदेश-
वासिप्रियो वा वास्तूकः
शाकविशेषः ।) चिल्ली-
शाकम् । इति राजनिर्घण्टः ॥
(चिल्लीशब्दे-
ऽस्य विषया ज्ञेयाः ॥)

**गौडिकं**, क्ली, (गौडं गुडविकारस्तत् कारणत्वेना-
स्त्यस्य । "अत इनिठनौ ।" ५ । २ । ११५ ।
इति ठन् ।) मद्यविशेषः । यथा,
"पैष्टिकगौडिक-
माध्वीकानां पानं सुरापाने
कष्टतमम् ॥" इति

गुणः तदधीना या लक्षणा सा गौणी तद्योगात्
गौणः ।" इति दायभागटीकायां
श्रीकृष्णतर्क्का-
लङ्कारः ॥ (अमुख्ये त्रि । यथा, महाभारते ।
१२ । ३४१ । ९ ।
"बहूनि मम नामानि कीर्त्तितानि महर्षिभिः ।
गौणानि तत्र नामानि कर्म्मजानि च कानि-
चित् ॥")

**गौणकालः**, पुं, (गौणोऽमुख्यः कालः ।) मुख्य-
कालकर्त्तव्यकर्म्मकरणयोग्यकालान्तरः ।
यथा, --
"यद्वागामिक्रियामुख्यकालस्याप्यन्तरालवत् ।
गौणकालत्वमिच्छन्ति केचित् प्राक्तनकर्म्मणि ॥
यद्वेति पक्षान्तरं प्राक्तनकार्य्ये मध्यकालवत्
आगामिक्रियाया मुख्यकालस्यापि गौणकाल-
त्वम् । तेन सायं सन्ध्याया रात्रिः प्रातः
सन्ध्या-
कालश्च गौणकाल इत्यर्थः ।" इति मलमास-
तत्त्वम् ॥

**गौणचान्द्रः**, पुं, (गौणोऽप्रधानश्चान्द्रश्चन्द्रसम्बन्धि
मासः ।) कृष्णप्रतिपदादिपौर्णमास्यन्तमासः ।
यथा, जन्माष्टमीप्रकरणे तिथ्यादितत्त्वे ।

ताद्वा गुणात् । अविनाभावद्वारा तत्र न
प्रथमः । वाहीकार्थेऽस्यासङ्केतितत्वात् । न
द्वितीयः । अविनाभावलभ्यस्यार्थस्य शाब्दे-
ऽन्वये प्रवेशासम्भवात् । शाब्दी ह्याकाङ्क्षा शब्दे-
नैव प्रपूर्य्यते । न द्वितीयः । यदि हि गोशब्दा-
द्वाहीकार्थो न प्रतीयते तदास्य वाहीकस्य
सामानाधिकरण्यमसमञ्जसंस्यात् । तस्मादत्र
गोशब्दा मुख्यया वृत्त्या वाहीकशब्देन सहान्वय-
मलभमानीऽज्ञत्वादिसाधर्म्म्यसम्बन्धाद्वाहीकार्थं
लक्षयति । वाहीकस्याज्ञत्वाद्यतिशयबोधनंप्रयो-
जनम् । इयञ्च गुणयोगात् गौणी इत्युच्यते ।
पूर्ब्बा तु उपचारामिश्रणात् शुद्धा । उपचारो
हि नामात्यन्तं विसकलितयोः सादृश्यातिशय-
महिम्ना भेदप्रतीतिस्थगणमात्रम् । यथा
अग्निमानवकयोः शुक्लपटयोस्तु नात्यन्तं भेद-
प्रतीतिः । तस्मादेवमादिषु शुद्धैव लक्षणा ॥"

| | | |
|---|---|---|
| प्रायश्चित्तविवेके देवलः ॥<br>गुडनिष्पन्नद्रव्ये त्रि ॥<br>(पुं, गुडे साधुः । "गुडादिभ्यष्ठञ् ।" ४ । ४ । १०३ ।<br>इति ठञ् । इक्षुः । इति सिद्धान्तकौमुदी ॥)<br>**गौडी**, स्त्री, (गुडस्य विकारः गुडविकारेण सम्पाद्विता इत्यर्थः । गुड + अण् । स्त्रियां | | |

इति साहित्यदर्पणे । २ । १३ ॥) अन्यत् सर्व्वं
लक्षणाशब्दे द्रष्टव्यम् ॥

**गौतमः**, पुं, (गोतमस्य ऋषेर्गोत्रापत्यमिति ।
"ऋष्यन्धकेति ।" ४ । १ । ११४ । इत्यण् ।)
मुनिविशेषः । स तु शतानन्दः । इति हेमचन्द्रः ॥
शाक्यवंशावतीर्णबुद्धमुनिविशेषः । तत्पर्य्यायः ।
शाक्यमुनिः २ शाक्यसिंहः ३ सर्व्वार्थसिद्धः ४
शौद्धोदनिः ५ अर्कबन्धुः ६ मायादेवीसुतः ७ ।
इत्यमरः । १ । १ । १५ ॥ खजित् ८ श्वेतकेतुः
९
धर्म्मकेतुः १० महामुनिः ११ पञ्चज्ञानः १२
सर्व्वदर्शी १३ महाबोधिः १४ महाबलः १५
बहु-
क्षमः १६ त्रिमूर्त्तिः १७ सिद्धार्थः १८ शकः १९
।
इति शब्दरत्नावली ॥ (अस्य हि गौतमीपुत्त्रत्वे
प्रमाणं यथा, ललितविस्तरे १५ अध्याये ।
"ते सान्तर्वहिर्मृगयन्ते । सान्तर्वहिर्मृगयमाणा
न पश्यन्ति स्म । महाप्रजावत्यपि गौतमी परि-
देवमाना महीतले परिवर्त्तति स्म राजानं
शुद्धोदनमेवाह । क्षिप्रं मां महाराज ! पुत्रेण
सङ्गिनीं कुरुष्वेति ॥" वैवस्वतमन्वन्तरे सप्त-
र्षीणामन्यतमः । यदुक्तं हरिवंशे ७ । ३४--३५ ।
"अत्रिर्वशिष्ठो भगवान् कश्यपश्च महानृषिः ।
गौतमश्च भरद्वाजो विश्वामित्रस्तथैव च ॥
तथैव पुत्त्रो भगवान् ऋचीकस्य महात्मनः ।
सप्तमो जमदग्निश्च ऋषयः साम्प्रतं दिवि ॥"
अयमेव तु विंशतिमे द्वापरयुगे वेदव्यासो-
बभूव । यथा, देवीभागवते । १ । ३ । ३१
"अत्रिरेकोनविंशेऽथ गौतमस्तु ततः परम् ॥"
कुरुकुलजधृतराष्ट्रपाण्डुसुतानामाचार्य्यः कृपः ।
गोतमवंशोत्पन्नत्वादेवास्य तथात्वम् । यथा,
हरिवंशे ३२ । ७५--७६ ।
"अवस्कन्नं शरस्तम्बे मिथुनं समपद्यत ।
कृपया तच्च जग्राह शान्तनुर्मृगयाङ्गतः ॥
कृपः स्मृतः स वै तस्मात् गौतमी च कृपी
तथा ।
एते शारद्वताः प्रोक्ता एते ते गौतमाः स्मृताः ॥"
मुनिभेदः । स तु एकतद्वितादिमुनीनां पिता ।
वरी नदी । (यथा, गोः रामायणे । ६ ।
२ । २७ ।
"यो नदीं गौतमीं रम्यां गिरिं पर्य्येति
चार्व्वुदम् ॥"
तथा च हारीते प्रथमस्थाने
सप्तमेऽध्याये ।
"पश्चिमाद्रिसमुद्भूता गौतमी
पुण्यभावना ।
अस्याः शीतं जलं वापि
कफवातविकारहृत् ॥
पित्तप्रशमनं बल्यं मूत्रदोषविकारकृत् ।
पुण्या पयस्विनी वैषा प्रणीता च
वरानना ॥
द्रोणा गोवर्द्धनी चान्या गौतम्यानुगता
इमाः ।
आसां जलं घनं
नातिवातश्लेष्मविकारकृत् ॥")
गोरोचना । इति राजनिर्घण्टः ॥ (गोत-
मस्यापत्यं स्त्री । गोतमवंशीयशरद्वतः
कन्या-
त्वादस्यास्तथात्वम् । कृपी । सा तु
द्रोणस्य
भार्य्या अश्वत्थाम्नो माता च । यथा,
महा-
भारते । १ । १३१ । २३ ।
"अलभत् गौतमी पुत्त्रमश्वत्थामानमेव
च ॥"
गायत्त्रीरूपा महादेवी । यथा, देवीभाग-
वते । १२ । ६ । ४० ।
"गौतमी गामिनी गाधा गन्धर्व्वाप्सर
सेविता ॥")

**गौधारः**, पुं, (गोधाया अपत्यम् । "आरगुदी-
चाम् ।" ४ । १ । १३० । इति आरक्
।)
गोधिकात्मजः । इत्यमरः । २ । ५ । ६
॥ गोधा
इति ख्यातः ॥

**गौधेयः**, पुं, (गोधाया अपत्यम् । "शुभ्रादिभ्यश्च
।"
श्वेतवर्णः । अरुणवर्णः । तद्वति त्रि ।
इत्यमरः ॥
(यथा, रामायणे । ४ । ३९ । १४ ।
"तरुणादित्यगौरैश्च शरगौरैश्च वानरैः
॥"
यथा च रघुः । २ । ३५ ।
"कैलासगौरं वृषमारुरुक्षोः
पादार्पणानुग्रहपूतपृष्ठम् ।
अवेहि मां किङ्करमष्टमूर्त्तेः
कुम्भोदरं नाम निकुम्भमित्रम् ॥")
श्रीचैतन्यदेवः । इत्यनन्तसंहिता ॥
(मृग-
विशेषः । यथा, भागवते । ३ । १० ।
२२ ।
"खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी
तथा ।
एते चैकशफाः क्षत्तः ! शृणु पञ्चनखान्
पशून् ॥")

**गौरः**, त्रि, विशुद्धः । इति मेदिनी । रे । २७ ॥

**गौरचन्द्रः**, पुं, (गौरेण तप्तहेमवर्णेन चन्दयति
आह्लादयतीति । चदि आह्लादे + णिच्
+ रन् ।)
श्रीचैतन्यदेवः । यथा, --
"कृष्णश्चैतन्यगौराङ्गौ गौरचन्द्रः
शचीसुतः ।
प्रभुर्गौरो गौरहरिर्नामानि भक्तिदानि मे
॥"
इत्यनन्तसंहिता ॥

**गौरजीरकः**, पुं, (गौरः शुक्लवर्णो जीरकः ।)
शुक्लजीरकः । शादा जीरा इति भाषा
॥ तत्-
पर्य्यायः । अजाजी २ श्वेतजीरकः ३
कणाह्वा ४
कणजीरः ५ कणा ६ सितदीप्यः ७
दीर्घकणा ८
सिताजाजी ९ गौराजाजी १० । अस्य
गुणाः ।

यथा, महाभारते । ९ । ३६ । ७--९ ।
"आसन् पूर्ब्बयुगे राजन् ! मुनयो भ्रातरस्त्रयः ।
एकतश्च द्वितश्चैव त्रितश्चादित्यसन्निभाः ।
सर्व्वे प्रजापतिसमाः प्रजावन्तस्तथैव च ॥
ब्रह्मलोकजितः सर्व्वे तपसा ब्रह्मवादिनः ।
तेषान्तु तपसा प्रीतो नियमेन दमेन च ॥
अभवद्गौतमो नित्यं पिता धर्म्मरतः सदा ॥"
स्थावरविषभेदः । इति हेमचन्द्रः । ४ । २६५ ॥)

**गौतमसम्भ्रवा**, स्त्री, (गौतमः सम्भवो यस्याः ।
यद्वा, गौतमात् सम्भवतीति । सभ् + भू + अच् ।) गोदावरी नदी । इति राजनिर्घण्टः ॥

**गौतमी**, स्त्री, (गोतमस्य इयम् । तस्येदमित्यण्
ततः स्त्रियां ङीप् ।) दुर्गा । इति मेदिनी ॥ मे । ४३ ॥ (यथा, हरिवंशे । १७६ । ७ ।
"गौतमीं कंसघाताञ्च यशोदानन्दवर्द्धिनीम् ॥")
राक्षसीविशेषः । इति शब्दरत्नावली ॥ गोदा-
४ । १ । १२३ । इति ढक् ।)
गोधिकात्मजः ।
इत्यमरः । २ । ५ । ६ ॥

**गौधेरः**, पुं, (गोधाया अपत्यम् । "गोधाया
ढ्रक् ।" ४ । १ । १२९ । इति ढ्रक् ।)
गोधि-
कात्मजः । इत्यमरः । २ । ५ । ६ ॥

**गौरं**, क्ली, (गुरते चित्तं यत्र । गुर श ङ उद्य-
ममे + हलश्चेति घञ् । ततः स्वार्थे अण् । यद्वा,
गवते इति । गुङ शब्दे + "ऋज्रेन्द्रेति ।" उणां ।
२ । २८ । इति रन्प्रत्ययेन निपातनात् साधुः ।)
पद्मकेशरः । इति मेदिनी । रे २८ ॥ (पद्म-
केशरशब्देऽस्य विवृतिर्व्याख्येया ॥)
कुङ्कुमम् ।
स्वर्णम् । इति राजनिर्घण्टः ॥

**गौरः**, पुं, (गवते अव्यक्तं शब्दयतीति । गुङ शब्दे
+ "ऋज्रेन्द्रेति ।" उणां । २ । २८ । रन्प्रत्ययेन
निपातनात् सिद्धम् ।) श्वेतसर्षपः ।
("गौरस्तु सर्षपः प्राज्ञैः सिद्धार्थ इति कथ्यते ।
सर्षपस्तु रसे पाके कटुस्निग्धः सतिक्तकः ॥
तीक्ष्णोष्णः कफवातघ्नो
रक्तपित्ताग्निवर्द्धनः ।
रक्षोहरो जयेत् कण्डूं कुष्ठ-
कोष्ठकृमिग्रहान् ॥
यथा रक्तस्तथा गौरः किन्तु गौरो वरो मतः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
चन्द्रः । इति मेदिनी । रे । २८ ॥
धववृक्षः । इति
राजनिर्घण्टः ॥ पीतवर्णः । गोरो इति भषा ।
हिमत्वम् । रुचिकारित्वम् । कटुत्वम् । मधु-
रत्वम् । दीपनत्वम् ।
कृमिविषाध्माननाशित्वम् ।
चक्षुर्हितत्वञ्च । इति राजनिर्घण्टः ॥

**गौरत्वक्**, पुं (गौरी शुक्लवर्णा त्वग् यस्य ।)
इङ्गुदीवृक्षः । इति राजनिर्घण्टः ॥

**गौरवं**, क्ली, (गौरवं साधनत्वेनास्त्यस्य । "अर्श
आदिभ्योऽच् ।" ५ । २ । १२७ ।
इत्यच् ।) अभ्यु-
त्थानम् । इति हेमचन्द्रः । ३ । १६४ ॥ (गुरोर्भावः ।
गुरु + "इगन्ताच्च लघुपूर्ब्बात् ।" ५ । १ । १३१ ।
इत्यण् ।) गुरुत्वम् । इति मुग्धबोधम् ॥ (यथा,
महाभारते । १ । १६३ । १८ ।
"शरीरगौरवादस्य शिला गात्रैर्विचूर्णिता ॥"
उत्कर्षः । यथा, रघुः । १४ । १८ ।
"शुश्राव तेभ्यः प्रभवादिवृत्तं
स्वविक्रमे गौरवमादधानम् ॥"
आदरः । यथा, कुमारे । ३ । १ ।
"प्रयोजनापेक्षितया प्रभूणां
प्रायश्चलं गौरवमाश्रितेषु ॥")

**गौरवितः**, त्रि, (गौरवं सञ्जातमस्येति तार-
कादित्वादितच् ।) अर्य्यः । तत्पर्य्यायः । आर्य्य-
मिश्रः २ । इति त्रिकाण्डशेषः ॥

**गौरशाकः**, पुं, (गौरः गौरवर्णः शाकोऽस्येति ।)
मधूकवृक्षविशेषः । इति जटाधरः ॥

**गौरसर्षपः** पुं, (गौरश्चासौ सर्षपश्चेति कर्म्म-
धारयः ।) श्वेतसर्षपः । (यथा, --
"रक्षोघ्नः सर्षपः श्वेतः सिद्धार्थो गौरसर्षपः ॥"
इति वैद्यकरत्नमालायाम् ॥)
तत्पर्य्यायः । अनद्यः २ सिद्धार्थः ३
भूतनाशनः ४

| | | |
|---|---|---|
| | तद्वर्णकरणौषधं यथा, --<br>“कुष्माण्डनालक्षारस्तु सगोमूत्रश्च तत्त्वचः ।<br>जलपिष्टा हरिद्रा च सिद्वा मन्दानलेन हि ॥<br>माहिषेण पुरीषेण वेष्टिता वृषभध्वज ! ।<br>अस्या उद्वर्त्तनं<br>कुर्य्यादङ्गगौरत्वमीश्वर ! ॥”<br>इति गारुडे १९४ अध्यायः ॥ | |

कटुस्नेहः ५ ग्रहघ्नः ६ कण्डूघ्नः ७
राजिका-
फलः ८ तीक्ष्णकः ९ दुराधर्षः १० रक्षोघ्नः
११
कुष्ठनाशनः १२ सिद्धप्रयोजनः १३ सिद्ध-
साधनः १४ सितसर्षपः १५ । अस्य गुणाः
।
कटुत्वम् । तिक्तत्वम् । उष्णत्वम् ।
वातरक्तग्रह-
त्वग्दोषविषभूतव्रणनाशित्वम्। रुच्यत्वञ्च ।
इति राजनिर्घण्टः ॥ हृद्यत्वम् । तीक्ष्ण त्वम्
।
कफरक्षःकण्डूकुष्ठकोठकृमिनाशित्वम् ।
रक्त-
पित्ताग्निवर्द्धनत्वञ्च । इति भावप्रकाशः ॥
(परि-
माणविशेषः । यथा, मनुः । ८ । १३३ ।
"त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः ।
ता राजसषपस्तिस्रस्ते त्रयो गौरसषपाः ॥")

**गौरसुवर्णं**, क्ली, (गौरः शुभ्रः अतएव सु शोभनो
वर्णो यस्य ।) पत्रशाकविशेषः । तत्तु चित्र-
कूटदेशे प्रसिद्धम् । तत्पर्य्यायः । स्वर्णम् २
सुगन्धिकम् ३ भूमिजम् ४ वारिजम् ५
ह्रस्वम् ६
गन्धशाकम् ७ कटुशृङ्गालम् ८ चूर्णशाकाङ्कः
९ ।
अस्य गुणाः । शिशिरत्वम् । कफपित्तज्वर-
दाहरुचिभ्रान्तिरक्तश्रमनाशित्वम्।
पथ्यत्वञ्च ।
इति राजनिघण्टः ॥

**गौरा**, स्त्री, (गौरादिगणे वर्णवाचिन एव गौर-
शब्दस्य ग्रहणात् अत्र विशुद्धार्थपरत्वे टाप् ।)
गौरी । इति द्विरूपकोषः ॥

**गौराङ्गः**, पुं, (गौरं तप्तकाञ्चनवर्णं अङ्गं कलेवरं
यस्य ।) श्रीचैतन्यदेवः । यथा, --
"गौराङ्गं गौरदीप्ताङ्गं पठेत् स्तोत्रं कृताञ्जलिः
।
हरिद्रा । दारुहरिद्रा । गोरोचना ।
प्रियङ्गु-
वृक्षः । वसुधा । नदीविशेषः । (यथा,
महा-
भारते । ६ । ९ । २५ ।
"वस्तुं सुवर्णां गौरीञ्च किम्पुनां
सहिरण्व-
तीम् ॥"
गङ्गा । यथा, काशीखण्डे । २९ । ४९ ।
"गङ्गा गन्धवती गौरी गन्धर्व्वनगरप्रिया
॥")
वरुणभार्य्या । इति मेदिनी । रे । २८-
-२९ ॥
सूर्य्यवंशीयप्रसेनजिद्राजभार्य्या । यथा,
--
"लेभे प्रसेनजिद्भार्य्यां गौरीं नाम
पतिव्रताम् ।
अभिशस्ता तु सा भर्त्रा नदी वै
बाहुदाऽभवत् ॥"
इति हरिवंशः ॥
बुद्धशक्तिविशेषः । इति हेमचन्द्रः ॥
मञ्जिष्ठा ।
श्वेतदूर्व्वा । मल्लिका । तुलसी ।
सुवर्णकदली ।
आकाशमांसी । इति राजनिर्घण्टः ॥
रागिणी-
विशेषः । सा तु मालवरागपत्नी । तस्या
रूपं
यथा, सङ्गीतदामोदरे ।
"आराममध्यगता कुमारिका
शारदेन्दुमुख-
लक्ष्मीः ।
राडी दाडिमबीजं दधती कीरानने गौरी
॥"
(केषाञ्चित् मते तु इयं कौशिकरागस्य
पत्नी ।
यदुक्तं सङ्गीतदर्पणे रागाध्याये । ३३ ।
"तोडी स्वाम्बावती गौरी गुणक्री ककुभा
तथा ।

**गौष्ठीनं**, क्ली, (पूर्ब्बं भूतं गोष्ठम् । गोष्ठ +
"गोष्ठात् खञ् भूतपूर्ब्बे ।" ५ । २ । १८ ।
इति
खञ् ।) भूतपूर्ब्बकगोस्थानम् । इत्यमरः ।
३ ।
१ । १३ ॥ पूर्ब्बेर गोठ इति भाषा ॥ (यथा,
भट्टिः । ४ । २१ ।
"तामुवाच स गोष्ठीने वने स्त्रीपुंसभीषणे
॥")

**ग्रथ**, इ ङ जैह्म्ये । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-अकं-सकं च-सेट् ।) रेफयुक्तः ।
जैह्म्य-
मिह कुटिलीभावः कुटिलीकरणञ्च । इ,
कर्म्मणि
ग्रन्थ्यते । ङ, ग्रन्थते काष्ठं कुठिलं
स्यादित्यथः ।
ग्रन्थते लतां वायुः कुटिलां करोतीत्यर्थः ।
इति
दुर्गादासः ॥

**ग्रथितं**, त्रि, (ग्रथ्यते स्म इति । ग्रन्थ ग दर्भे + क्तः ।
ततो न लोपः ।) कृतग्रन्थनम् । गाँथा इति
भाषा । तत्पर्य्यायः । ग्रन्थितम् २ दृब्धम्
३ ।
इत्यमरः । ३ । १ । ८६ ॥ गुम्फितम् ४ ।
(यथा,
रघुः । ८ । ३४ ।
"कुसुमैर्ग्रथितामपार्थिवैः
स्रजमातोद्य शिरोनिवेशिताम् ॥")
आक्रान्तम् । हिंसितम् । इति मेदिनी । ते ।
१०६ ॥

**ग्रन्थ**, कि ग दर्भे । इति कविकल्पद्रुमः ॥ (चुरां-
पक्षे भ्वां-क्र्यां च-परं-सकं-सेट् ।) रेफयुक्तः
।
दर्भो ग्रन्थनम् । कि, ग्रन्थयति ग्रन्थति । ग,
ग्रथ्नाति मालां मालिकः ।
ग्रन्थिमुद्ग्रथयितुं हृद-

नन्दगोपसुतञ्चैव नमस्यामि गदाग्रजम् ॥”
इति ब्रह्मजामले चैतन्यकल्पे चैतन्यस्तवः ॥
अपि च कृष्णजामले ।
“गौराङ्गो नादगम्भीरः स्वनामामृतलालसः ॥”

**गौरार्द्रकः**, पुं, (गौरवर्ण आर्द्रक इव ।) स्थावर-
विषभेदः । इति हेमचन्द्रः । ४ । २६४ ॥

**गौरास्यः**, पुं, (गौरं शुक्लवर्णं आस्यं मुखं यस्य ।)
कृष्णवानरः । इति राजनिर्घण्टः ॥

**गौरिका**, स्त्री, (गौर्य्येव । गौरी + स्वार्थे कन् ।
ह्रस्वश्च ।) अष्टवर्षीया कन्या । इति शब्दरत्ना-
वली ॥

**गौरिलः**, पुं, (गौरवर्णोऽस्यास्तीति । गौर +
बाहुलकादिलच् ।) श्वे तसर्षपः । लौहचूर्णम् ।
इति मेदिनी । ८७ ॥

**गौरी**, स्त्री, (गौर + “षिद्गौरादिभ्यश्च ।” ४ । १ ।
४१ । इति ङीष् ।) पार्व्वती । (यथा, रघुः ।
२ । २६ ।
“गौरीगुरोगह्वरमाविवेश ॥”
पार्व्वती किल गौरीमूर्त्या पीठस्थाने कान्यकुब्ज
विराजते । यथा, देवीभागवते । ७ । ३० ।
५८ ।
“गौरी प्रोक्ता कान्यकुब्जे रम्भा तु मलयाचले ॥”)
असञ्जातरजःकन्या । (सा तु अष्टवर्षवयस्क-
कन्यका । यदुक्तं स्मृतौ ।
“अष्टवर्षा भवेद् गौरी नववर्षा तु रोहिणी ॥”
तथा च महाभारते । १ । २२२ । ४७ ।
स्त्रीणसिहसं गौरीणां सुवेशानां मुवर्च्चसाम् ॥”)
रागिण्यो रागराजस्य कौशिकस्य वराङ्गनाः ॥”
केषाञ्चित् मते इयं श्रीरागस्य पत्नी । यदुक्तं
तत्रैव रागाध्याये । १४ ।
“मालश्री त्रिवणी गौरी केदारी मधुमाधवी ।
ततः पाहाडिका ज्ञेया श्रीरागस्य वराङ्गनाः ॥”
अस्या रागवेला तृतीयप्रहरात् परं अर्द्धरात्रा-
बधिः ॥)

**गौरीजं**, क्ली, (गौर्य्या जायते इति । जन् + डः ।)
अभ्रकम् । इति राजनिर्घण्टः ॥

**गौरीपुत्त्रः**, पुं, (गौर्य्याः पुत्त्रः ।) कार्त्तिकेयः ।
इति हलायुधः ॥

**गौरीपुष्पः**, पुं, (गौरीप्रियं पुष्पमस्य ।) प्रियङ्गु-
बृक्षः । इति राजनिर्घण्टः ॥

**गौरीललितं**, क्ली, (गौरीव हरिद्रेव ललितम् ।
पीतबर्णत्वादस्य तथात्वम् ।) हरितालम् । इति
राजनिर्घण्टः ॥

**गौरुतल्पिकः**, पुं, (गुरुतल्पं गुरुशय्यां गुरुपत्नी-
मित्यर्थः गच्छतीति । “गच्छतौ परदारा-
दिभ्यः ।” ४ । ४ । १ । इत्यस्य बार्त्ति इति
ठक् ।) गुरुपत्नीगामी । इति प्राबश्वित्तप्रक-
रणे धर्म्मशास्त्रम् ॥

**गौलिकः**, पुं, (गुडे साधुः । गुड + ठक् । डस्य
लत्वम् ।) मुष्ककवृक्षः । इति राजनिर्घण्टः ॥

**गौल्यं**, क्ली, (गुडस्य भावः । गुड + ष्यञ् । डस्य
लत्वम् ।) मधुरम् । इति राजनिर्घण्टः ॥

**गौशतिकः**, त्रि, (गोशतमस्यास्तीति । गोशत +
येशः । इति माघे चिन्त्यम् । इति दुर्गादासः ॥

**ग्रन्थः**, पुं, (ग्रन्थ ग दर्भे + भावे घञ् ।) गुम्फः ।
ग्रन्थना । धनम् । (ग्रथ्यते विरच्यते इति । ग्रन्थ
+ कर्म्मणि घञ् ।) शास्त्रम् । (यथा, महा-
भारते । १ । १ । ८० ।
“ग्रन्थग्रन्थिं तदा चक्रे मुनिर्गूढं कुतूहलात् ॥”)
द्वात्रिंशद्वर्णनिर्म्मितिः ।
अनुष्टुप्छन्दःश्लोकः ।
इति हेमचन्द्रः ॥

**ग्रन्थकर्त्ता**, [ऋ] त्रि, ग्रन्थं करोतीति । कृ + तृच्-
प्रत्ययः । ग्रन्थकारः । पुस्तककारकः ।
शास्त्रकृत् ॥

**ग्रन्थकुटी**, स्त्री, (ग्रन्थस्य कुटी गृहादिस्थानम् ।)
लेख्यस्थानम् । इति त्रिकाण्डशेषः ॥

**ग्रन्थनं**, क्ली, (ग्रन्थ + भावे ल्युट् ।) गुम्फनम् ।
ग्रन्थना । तत्पर्य्यायः । सन्दर्भः २ रचना ३
गुम्फः ४ श्रन्थनम् ५ । इति हेमचन्द्रः । ३
। ३१७ ॥

**ग्रन्थना**, स्त्री, (ग्रन्थ + भावे युच् । स्त्रियां टाप् ।)
ग्रन्थनम् । इति मुग्धबोधम् ॥

**ग्रन्थिः**, पुं, (ग्रन्थ ग सन्दर्भे + “स्वनिकष्यञ्ज्यसि-
वसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च।” उणां । ४ ।
१३९ । इति भावकरणादौ यथायथं इः ।)
वंशादिसन्धिः । गाँटि इति भाषा । तत्पर्य्यायः ।
पर्व्व २ परुः ३ । इत्यमरः । २ । ४ । १६२ ॥
काण्डसन्धिः ४ । (यथा, आर्य्यासप्तशत्याम् । १६८ ।
“इक्षोरिव सुन्दरि ! मानस्य ग्रन्थिरपि काम्यः ॥”)

|  |  |  |
| --- | --- | --- |
|  | “एकगोपूर्ब्बात् ठञ् नित्यम् ।” ५ । २ । ११८ ।<br>इति ठञ् ।) गोशतस्वामी । इति व्याकरणम् ॥<br>याहार एक शतगरु आछे इति भाषा ॥ | भद्रमुस्ता । हितावली । पिण्डालुः । इति राज-<br>निर्घण्टः ॥ (अन्योन्याध्यासः । मायापाशः ।<br>यथा, भागवते । १ । २ । २१ । |

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः ॥")
कौटिल्यम् । ग्रन्थिपर्णवृक्षः । (यथा, चरके सूत्रस्थाने तृतीयेऽध्याये ।
"मनःशिला त्वक्कुटजात् सकुष्ठः
सलोमशः सैडगजः करञ्जः ।
ग्रन्थिश्च भौर्ज्जः करवीरमूलं
चूर्णानि साध्यानि तुषोदकेन ॥")
बन्धनम् । रुग्भेदः । इति मेदिनी । थे । ६ ॥
तस्य निदानसंप्राप्ती यथाह माधवकरः ।
"वातादयो मांसमसृक्प्रदुष्टाः
सन्दूष्य मेदाश्च तथा शिराश्च ।
वृत्तोन्नतं विग्रथितन्तु शोथं
कुर्व्वन्त्यतो ग्रन्थिरिति प्रदिष्टः ॥"
तस्य वातिकरूपं यथा, --
"आयम्यते वृश्च्यति तुद्यते च
प्रभ्रंश्यते मथ्यति भिद्यते च ।
कृष्णो मृदुर्व्वस्तिरिवाततश्च
भिन्नः स्रवेच्चानिलजेऽस्रमच्छम् ॥"
पैत्तिकरूपं यथा, --
"दंदह्यते धूप्यति चुष्यते च
पापच्यते प्रज्वलतीव चापि ।
रक्तः सपीतोऽप्यथवापि पित्तात्
भिन्नः स्रवेदुष्णमतीव चास्रम् ॥"
श्लैष्मिकरूपं यथा, --
"शीतो विवर्णोऽल्परुजोऽतिकण्डू
पाषाणवत्संहननोपपन्नः ।
चिराभिवृद्धिश्च कफप्रकोपा-
द्भिन्नः स्रवेच्छुक्लघनञ्च पूयम् ॥"
(अथास्य ससम्प्राप्तिकलक्षणं यथा, --
"कफप्रधानाः कुर्व्वन्ति मेदोमांसास्रगामलाः ।
वृत्तोन्नतं यं श्वयथुं सग्रन्थिर्ग्रथनात् स्मृतः ॥
दोषास्रमांसमेदोऽस्थि शिरावणभवा नव ।
ते तत्र वातादायामतोदभेदान्वितोऽसितः ॥
स्थानात्
स्थानान्तरगतिरकस्माद्धानिष्टद्धिमान्।
सार्द्रे वा बन्धरहिते गात्रेऽश्माभिहतेऽथवा ॥
वातास्रमस्रुतं दुष्टं संशोष्य ग्रथितं व्रणम् ।
कुर्य्यात् सदाहः कण्डूमान् व्रणग्रन्थिरयं स्मृतः ॥
साध्या दोषास्रमेदोजा न तु
स्थूलखराश्चलाः ।
मर्म्मकण्ठोदरस्थाश्च- ॥"
इति वाभटेनोत्तरस्थाने २९ अध्याये उक्तम् ॥)
तस्य चिकितसा यथा, --
"स्वर्ज्जिकामूलकक्षारः शङ्खचूर्णसमन्वितः ।
एतेन विहितो लेपो हन्ति ग्रन्थिं तथार्व्वुदम् ॥
ग्रन्थिर्न यो नश्यति भेषजेन
निष्कास्य तं शस्त्रचिकितसकेन ।
जात्यादिपक्वेन घृतेन वैद्यो
व्रण्येन त्तान्येन च सञ्चिकित्सेत् ॥"
ग्रन्थीनुद्धृत्य पश्चात्तु व्रणोक्तं क्रममाचरेत् ।
शिराग्रन्थिं विहायान्ये शेषे शस्त्रं प्रयुञ्जते ॥
अन्ये आचार्य्याः ।" इति भावप्रकाशः ॥
("ग्रन्थिष्वामेषु कर्त्तव्या यथास्वं शोफवत् क्रिया ।
बृहतीचित्रकव्याघ्रीकणासिद्धेनसर्पिषा ॥
स्नेहयेच्छुद्धिकामञ्च तीक्ष्णैः शुद्धस्य लेपनम् ।
संस्वेद्य बहुशो ग्रन्थिं विमृद्नीयात् पुनः पुनः ॥
एष वाते विशेषेण क्रमः पित्तास्रजे पुनः ।
जलौकसो हिमं सर्व्वं कफजे वातिको विधिः ॥
तथाप्यपक्वं छित्त्वैनं स्थिते रक्तेऽग्निना दहेत् ।
साध्यशेषं सशेषो हि पुनराप्यायते ध्रुवम् ॥
मांसव्रणोद्भवौ ग्रन्थी पाटयेदेवमेव च ।
कार्य्यं मेदोभवेऽप्येतत्तप्तैः फालादिभिश्च तम् ॥
प्रमृद्यात्तिलदिग्धेन च्छन्नं द्विगुणवाससा ।
शस्त्रेण पाटयित्वा वा दहेन्मेदसि सूद्धृते ॥
शिराग्रन्थौ नवे पेयं तैलं साहचरन्तथा ।
उपनाहोऽनिलहरैर्व्वस्तिकर्म्मशिराव्यधः ॥
रक्षेद्बलञ्चापि नरस्य नित्यं
तद्रक्षितं व्याधिबलं निहन्ति ॥
तैलं पिबेत् सर्पिरथो द्वयं वा
दत्त्वा वसां वा त्रिवृतं विदध्यात् ।
अपेहि वातादशमूलसिद्धं
वैद्यश्चतुःस्नेहमथो द्वयं वा ॥
हिंस्राथ रोहिण्यमृताथ भार्गी
श्योनाकविल्वागुरुकृष्णगन्धाः ।
गोजी च पिष्टा सह तालपत्र्या
ग्रन्थौ विधेयोऽनिलजे प्रलेपः ॥
स्वेदोपनाहान् विविधांश्च कुर्य्या-
त्तथा प्रसिद्धानपरांश्च लेपान् ।
विदार्य्य वा पक्वमपोह्य पूयं
प्रक्षाल्य विल्वार्कनरेन्द्रतोयैः ॥
तिलैः सपञ्चाङ्गुलपत्रमिश्रैः
संशोधयेत् सैन्धवसंप्रयुक्तैः ।
शुद्धं व्रणं वाप्युपरोपयेयु-
स्तैलेन रास्ना सवलान्वितेन ॥
विडङ्गयष्टीमधुकामृताभिः
सिद्धेन वाक्षीरसमन्वितेन ।
जलौकसः पित्तकृते हितास्तु
क्षीरोदकाभ्यां परिषेचनञ्च ॥
काकोलिवर्गस्य च शीतलानि
पिबेत् कषायाणि सशर्कराणि ।
द्राक्षारसेनेक्षुरसेन वापि
चूर्णं पिबेच्चापि हरीतकीनाम् ॥
मधूकजम्ब्वर्ज्जुनवेतसानां
त्वग्भिःप्रदाहानवचारयेत्त ।
सशर्करैर्वा तृणशून्यकन्दै-
र्दिह्यादभीक्ष्णं मुचुकुन्दजैर्व्वा ॥
विदार्य्य वा पक्वमपोह्य पूयं
धावेत् कषायेण वनस्पतीनाम् ।
तिलैः सयष्टीमधुकैर्विशोध्य
सर्पिः प्रयोज्यं मधुरैर्विपक्वम् ॥
हृतेषु दोषेषु यथानुपूर्व्व्या
ग्रन्थौ भिषक् श्लेष्मसमुत्थिते तु ।
स्विन्नस्य विम्लापनमेव कुर्य्या-
दङ्गुष्ठलोहोपलवेणुदण्डैः ॥
विकङ्कतारग्बधकाकणन्ती

मृदुर्वस्तिरिवानद्धो विभिन्नोऽच्छस्रवत्यसृक् ॥
पित्तात् सदाहः पीताभो रक्तो वा पच्यते द्रुतम् ।
भिन्नोऽस्रमुष्णं स्रवति श्लेष्मणा नीरुजो घनः ॥
शीतः सवर्णः कण्डूमान् पक्वः पूयं स्रवेद्घनम् ।
दोषैर्दुष्टेऽसृजि ग्रन्थिर्भवेन्मूर्च्छत्सु जन्तुषु ॥
शिरामांसञ्च संश्रित्य सस्वापः पित्तलक्षणः ।
मांसलैर्दूषितं मांसाहारैश्च ग्रन्थिमावहेत् ॥
स्निग्धं महान्तं कठिनं शिरानद्धं कफाकृतिम् ।
प्रवृद्धं मेदुरैर्मेदोनीतं मांसेऽथवा त्वचि ॥
वायुना कुरुते ग्रन्थिं भृशं स्निग्धं मृदुं चलम् ।
श्लेष्मतुल्याकृतिं देहक्षयवृद्धिक्षयोदयम् ॥
स विभिन्नो घनं मेदस्ताम्रासितसितं स्रवेत् ।
अस्थिभङ्गाभिघाताभ्यामुन्नतावनतन्तुयत् ॥
सोऽस्थियन्थिः पदान्ते च सहसाम्भोऽवगाहनात् ।
व्यायामाद्वा प्रतान्तस्य शिराजालं सशोणितम् ॥
वायुः सम्पीड्य सङ्कोच्य वक्रीकृत्य विशोष्य च ।
निष्फुरं नीरुजं ग्रन्थिं कुरुते स शिराह्वयः ॥
अरूढे रूढमात्रे वा व्रणे सर्व्वरसाशिनः ।
अङ्गैकदेशेष्वनिलादिभिः स्यात्
स्वरूपधारी स्फुरणः शिराभिः ।
ग्रन्थिर्महान्मांसभवस्त्वनर्त्ति-
र्मेदोभवः स्निग्धतमश्चलश्च ॥
तं शोधितं स्वेदितमश्मकाष्ठैः
साङ्गुष्ठदण्डैर्विनयेदपक्वम् ।
विपाट्य चोद्धृत्य भिषक् सकोषं
शस्त्रेण दग्ध्वा व्रणवच्चिकित्सेत् ॥
अदग्ध ईषत् परिशोधितश्च
प्रयाति भूयोऽपि शनैर्विवृद्धिम् ।
तस्मादशेषः कुशलैः समन्ता-
च्छेद्यो भवेद्वीक्ष्य शरीरदेशान् ॥
शोषे कृते पाकवशेन शीर्य्येत्
ततः क्षतोत्थः प्रसरेद्विसर्पः ।
उपद्रबं तं प्रतिवारयेज्ज्ञः
स्वैर्भेषजैः पूर्ब्बतरैर्यथोक्तैः ॥
ततः क्रमेणास्य यथाविधानं
व्रणं व्रणज्ञस्त्वरया चिकित्सेत् ॥"
इति चरके चिकित्सास्थाने १७ अध्यायः ॥
अपरा चिकित्सा च यथा, --
"ग्रन्थिष्वथामेषु भिषग्विदध्या-
च्छोफक्रियायां विहितं विधिज्ञः ।
काकादनी तापसवृक्षमूलैः ।
आलेपयेत् पिण्डफलार्कभार्गी
करञ्जकालामदनैश्च विद्वान् ॥
अमर्म्मजातं शममप्रयात-
मपक्वमेवापहरेद्विदार्य्य ।
दहेत् स्थिते वासृजि सिद्धकर्म्मा
सद्यः क्षतोक्तञ्च विधिं विदध्यात् ॥
या मांसकन्द्यः कठिना बृहत्य-
स्ताष्वेष योज्यश्च विधिर्विधिज्ञैः ।
शस्त्रेण व्यापाद्य सुपकमाशु
प्रक्षालयेत् पथ्यतमैः कषायैः ॥
संशोधनैस्तञ्च विशोधयेयुः
क्षारोत्तरैः क्षौद्रघृतप्रगाढैः ।

शुद्धे च तैलं त्ववचारणीयं
विडङ्गपाठारजनीविपक्वम्॥
मेदः समुत्थे तिलकल्कदिग्धं
दत्त्वोपरिष्ठाद्द्विगुणं पटान्तम्।
हुताशतप्तेन मुहुः प्रमृज्या-
ल्लोहेन धीमान् दहनं हिताय॥
प्रलिप्य दार्व्वीमथ लाक्षया वा
प्रतप्तया स्वेदनमस्य कार्य्यम्।
निपात्य वा शस्त्रमपोह्य मेदो-
दहेत् सुपक्वन्त्वथवा विदार्य्यम्॥
प्रक्षाल्य मूत्रेण तिलैः सुपिष्टैः
सुवर्च्चिकाद्यैर्हरितालमिश्रैः।
ससैन्धवैः क्षौद्रघृतप्रगाढैः
क्षारोत्तरैरेनमभिप्रशोध्य॥"
इति सुश्रुते
चिकित्सितस्थानेऽष्टादशेऽध्याये॥)

**ग्रन्थिकं**, क्ली, (ग्रन्थिभिः कायति प्रकाशते इति। कै + कः।) पिप्पलीमूलम्। (अस्य पर्य्याया यथा,
"ग्रन्थिकं पिप्पलीमूलमुषणं चटकाशिरः॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमं भागे॥)
ग्रन्थिपर्णम्। गुग्गुलुः। इति मेदिनी। रे। ६॥

**ग्रन्थिकः**, पुं, (ग्रन्थिभिः पर्व्वभिः कायतीति। ग्रन्थि + कै + कः।) करीरः। (ग्रन्थिना कौटि-
ल्येन कायतीति। कै + कः। यद्वा ग्रन्थः पञ्जिकास्यास्तीति ठन्।) दैवज्ञः। (यथा, महा
भारते। १४। ७०। ७।
"तत्र मल्ला नटाश्चैव ग्रन्थिकाः सौख्यशायिकाः।
सूतमागधसङ्घाश्चाप्यस्तुवंस्तं जनार्द्दनम्॥")
सहदेवाख्यपाण्डवः। इति मेदिनी। के। ८१॥

काकपुष्पम् २० नीलपुष्पम् २१ सुगन्धम् २२
तैलपर्णकम् २३। अस्य गुणाः। तिक्तत्वम्। तीक्ष्णत्वम्। कटुत्वम्। उष्णत्वम्। दीपनत्वम्।
लघुत्वम्।
कफवातविषश्वासकण्डूदौर्गन्ध्यनाशि-
त्वञ्च। इति भावप्रकाशः॥ अस्य लेपनगुणः।
रूक्षतालक्ष्मीराक्षसज्वरनाशित्वम्। इति राज-
वल्लभः॥

**ग्रन्थिपर्णः**, पुं, (ग्रन्थिः पर्व्व तत्प्रचुराणि पर्णा-
न्यस्य।) चोरकनामगन्धद्रव्यम्। इति राज-
निर्घण्टः॥ (चोरकशब्देऽस्य गुणादयो ज्ञेयाः॥)

**ग्रन्थिपर्णा**, स्त्री, (ग्रन्थिपर्ण + टाप्।) जतुकालता। इति राजनिर्घण्टः॥

**ग्रन्थिपर्णी**, स्त्री, (ग्रन्थिपर्ण + गौरादित्वात् ङीष्।) गण्डदूर्व्वा। इति राजनिर्घण्टः॥

**ग्रन्थिफलः**, पुं, (ग्रन्थियुक्तं फलमस्य।) शाकुरुण्ड-
वृक्षः। कपित्थवृक्षः। मदनवृक्षः। इति राज-
निर्घण्टः॥

**ग्रन्थिमत्फलः**, पुं, (ग्रन्थिरस्यास्तीति मतुप्। ग्रन्थि-
मत् पर्व्वविशिष्टं फलं यस्य।) लकुचः। इति राजनिर्घण्टः॥

**ग्रन्थिमान्**, [त्] पुं, (ग्रन्थिरस्त्यस्यास्मिन्वा।
ग्रन्थि + मतुप्।) अस्थिसंहारकवृक्षः। हाड-
भाङ्गा इति हाडजोडा इति च भाषा। तत्-
पर्य्यायः। अस्थिसंहारी २ वज्राङ्गी ३ अस्थि-
शृङ्खला ४। अस्य गुणाः। वातश्लेष्मकृमिदुर्नाम-
नाशित्वम्। अस्थियोकृत्वम्। उष्णत्वम्। सारक-

(यथा, आर्य्यासप्तशत्याम्। ५००।
"रोषेणैव मया सखि! वक्रोऽपि ग्रन्थिलोऽपि
कठिनोऽपि।
ऋजुतामनीयतायं सद्यः स्वेदेन वंश इव॥")

**ग्रन्थिला**, स्त्री, (ग्रन्थिल + टाप्।) भद्रमुस्ता।
(भद्रमुस्ता शब्देऽस्या गुणादिकं ज्ञातव्यम्॥)
मालादूर्व्वा। गण्डदूर्व्वा। इति राजनिर्घण्टः॥

**ग्रन्थिवर्हीं**, [न्] पुं, (ग्रन्थिभिर्वर्हति वर्द्धते इति।
वृह वृद्धौ + णिनिः।) ग्रन्थिपर्णवृक्षः। इति
शब्दचन्द्रिका॥

**ग्रन्थिहरः**, पुं, (ग्रन्थिं कौटिल्यं हरति परकृत-
कुटिलतां कार्य्यजटिलतां वा विभेदयतीत्यर्थः।
ग्रन्थि + हृ + अच्।) अमात्यः। मन्त्री। इति
त्रिकाण्डशेषः॥

**ग्रन्थीकं**, क्ली, (ग्रन्थिभिः कायतीति। ग्रन्थि +
कै + कः। निपातनात् दीर्घत्वम्।) ग्रन्थिकम्।
पिप्पलीमूलम्। इति द्विरूपकोषः॥

**ग्रस**, उ ङ भक्षणे। इति कविकल्पद्रुमः॥ (भ्वां-
आत्मं-सकं-सेट्।) रेफयुक्तः। उ, ग्रसित्वा
ग्रस्त्वा। ङ, ग्रसते। हिमांशुमाशु ग्रसते। इति माघः। इति दुर्गादासः॥

**ग्रस**, कि ग्रासे। इति कविकल्पद्रुमः॥ (चुरां--
पक्षे भ्वां-परं-सकं सेट्।) रेफयुक्तः। कि,
ग्रासयति फलं लोकः। ग्रसति तव मुखेन्दुं पूर्ण-

(नकुलश्च । इयमाख्या तु यदानेन छद्मरूपिणा
विराटगृहे वासः कृतस्तदैव जाता । यथा,
महाभारते । ४ । ३ । २ ।
नकुल उवाच ।
"अश्वबन्धो भविष्यामि विराटनृपतेरहम् ।
सर्व्वथा ज्ञानसम्पन्नः कुशलः परिरक्षणे ।
ग्रन्थिको नाम नाम्नाहं कर्म्मैतत् सुप्रियं मम ॥")

**ग्रन्थितं**, त्रि, (ग्रन्थ्यते स्म इति । ग्रथि + क्तः ।)
ग्रथितम् । इत्यमरः । ३ । १ । ८६ ॥

**ग्रन्थिदला**, स्त्री, (ग्रन्थिर्दलेषु पत्रेषु यस्याः ।)
मालाकन्दः । इति राजनिर्घण्टः ॥

**ग्रन्थिदूर्व्वा**, स्त्री, (ग्रन्थिबहुला दूर्व्वा । शाक-
पार्थिवादिवत् समासः ।) मालादूर्व्वा । इति
राजनिर्घण्टः ॥

**ग्रन्थिपर्णं**, क्ली, (ग्रन्थिषु पर्णानि यस्य । ग्रन्थि-
प्रचुराणि पर्णानि यस्येति वा ।) वृक्षविशेषः ।
गाँठियाला इति भाषा ॥ तत्पर्य्यायः । शुकम् २
वर्हिपुष्पम् ३ स्थौणेयम् ४ कुक्कुरम् ५ । इत्य-
मरः । २ । ४ । १३२ ॥ वर्हिःपुष्पम् ६ वर्ही ७
पुष्पम् ८ वर्हम् ९ शुकवर्हम् १० । इति तट्टीका ॥
स्थौणेयकम् ११ कुशपुष्पम् १२ गुत्थकम् १३ ।
इति रत्नमाला ॥ विशीर्णाख्यम् १४ स्वाराम-
गुच्छकम् १५ वर्हिः १६ शुकपुच्छम् १७ शुक-
च्छदम् १८ । इति ग्रन्थान्तरम् ॥ ग्रन्थिकम् १९
त्वम् । अम्लरोगपित्तकारित्वम् । रूक्षत्वम् ।
स्वादुत्वम् । लघुत्वम् । वृष्यत्वम् । पाचनत्वञ्च ।
इति भावप्रकाशः ॥ रत्नमालोक्तपर्य्याया राज-
वल्लभोक्तगुणाश्चास्थिसंहारशब्दे द्रष्टव्याः ॥
(ग्रन्थियुक्ते, त्रि । यथा, कुमारे । ३ । ४६ ।
"कण्ठप्रभासङ्गविशेषनीलां
कृष्णत्वचं ग्रन्थिमतीं दधानम् ॥")

**ग्रन्थिमूलं**, क्ली, (ग्रन्थिर्मूले यस्य ।) गृञ्जनम् ।
इति राजनिर्घण्टः ॥

**ग्रन्थिमूला**, स्त्री, (ग्रन्थिबहुलं मूलं यस्याः । शाक-
पार्थिवादित्वात् समासः ।) मालादूर्व्वा । इति
राजनिर्घण्टः ॥

**ग्रन्थिलं**, क्ली, (ग्रन्थिर्विद्यतेऽस्य । ग्रन्थि + "सिध्मा-
दिभ्यश्च ।" ५ । २ । ९७ । इति लच् ।) पिप्पली-
मूलम् । इति राजनिर्घण्टः ॥ आर्द्रकम् । इति
शब्दचन्द्रिका ॥

**ग्रन्थिलः**, पुं, (ग्रन्थिरस्यास्तीति । "सिध्मादिभ्यश्च ।"
५ । २ । ९७ । इति लच् ।) विकङ्कतवृक्षः ।
वँइचि इति भाषा ॥ (पर्य्यायोऽस्य यथा, --
"विकङ्कतः स्रुवावृक्षो ग्रन्थिलः स्वादुकण्टकः ।
स एव यज्ञवृक्षश्च कण्टकी व्याघपादपि ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
करीरवृक्षः । इत्यमरः । २ । ४ । ३७, ७७ ॥ तण्डु-
लीयशाकम् । हितावली । पिण्डालुः । चोरक
नामगन्धद्रव्यम् । विकण्टकवृक्षः । इति राज-
निर्घण्टः ॥ ग्रन्थियुक्ते त्रि । इति मेदिनी । ले ।
८५ ॥
चन्द्रं विहाय । इमं ग्रहणे पठन्ति केचित् ।
इति दुर्गादासः ॥

**ग्रस्तं**, त्रि, (ग्रस्यते स्म इति । ग्रस + क्तः । "यस्य
विभाषा ।" ७ । २ । १५ । इति इडभावः ।)
लुप्तवर्णपदम् । असम्पूर्णवाक्यम् । भुक्तम् ।
(यथा, रामायणे । २ । ४२ । १२ ।
"राज्ञो नातिबभौ रूपं ग्रस्तस्यांशुमतो यथा ॥")
खादितम् । इत्यमरः । १ । ६ । २० ॥ (आक्रा-
न्तम् । यथा, याज्ञवल्क्ये । ३ । २४४ ।
"दीर्घतीव्रामयग्रस्तं ब्राह्मणं गामथापि वा ॥")

**ग्रह**, ग ञ ग्रहणे । इति कविकल्पद्रुमः ॥ (क्र्यां-
उभं-सकं-सेट् ।) ग ञ, गृह्णाति गृह्णीते । इति
दुर्गादासः ॥

**ग्रह**, ऊ कि आदाने । इति कविकल्पद्रुमः ॥
(चुरां-पक्षे भ्वां-परं-सकं-सेट् ।) ऊ, अग्रहीत्
अग्राक्षीत् । कि, ग्राहयति ग्रहति । एष ह्लादि-
रेव मन्यते तत्राप्यात्मनेपदी एव । इति दुर्गा-
दासः ॥

**ग्रहः**, पुं, (गृह्णाति गतिविशेषानिति । यद्वा,
गृह्णाति फलदातृत्वेन जीवानिति । ग्रह् +
"विभाषा ग्रहः ।" ३ । १ । १४३ । इति पक्षे
अच् ।) सूर्य्यादिनव । यथा । रविसोममङ्गल-
बुधबृहस्पतिशुक्रशनिराहुकेतवः । (यदुक्तम्, --
"सूर्य्यश्चन्द्रो मङ्गलश्च बुधश्चापि बृहस्पतिः ।

|  |  | शुक्रः शनैश्चरो राहुः केतुश्चेति नव ग्रहाः ॥"<br>"लोकानद्रीन् स्वरान् धातून् मुनीन् द्वीपान्<br>ग्रहानपि ।<br>समिधः सप्त सङ्ख्याताः सप्तजिह्वा हविर्भुजः ॥" |
|---|---|---|

इत्यनेन ग्रहाणां यत् सप्तत्वमुक्तं तत् वराह-
मतानुसारेणेत्यवधेयम् । एतेन राहुकेत्वोर्ग्रहत्वं
सर्व्वे नाद्रियन्ते इति सूचितम् ॥) तेषामष्टधा
गतिर्यथा । वक्रा १ अतिवक्रा २ कुटिला ३
मन्दा ४ मन्दतरा ५ समा ६ शीघ्रा ७ शीघ्र-
तरा ८ । इति ज्योतिषम् ॥ तेषां ध्यानानि
यथा ।
तत्र सूर्य्यस्य ध्यानम् ।
"क्षत्त्रियं काश्यपं रक्तं कालिङ्गं द्वादशाङ्गुलम् ।
पद्महस्तद्वयं पूर्ब्बाननं सप्ताश्ववाहनम् ॥
शिवाधिदैवतं सूर्य्यं वह्निप्रत्यधिदैवतम् ॥" *
॥
सोमस्य ध्यानम् ।
"सामुद्रं वैश्यमात्रेयं हस्तमात्रं सिताम्बरम् ।
श्वेतं द्विबाहुं वरदं दक्षिणं सगदेतरम् ॥
दशाश्वं श्वेतपद्मस्थं विचिन्त्योमाधिदैवतम् ।
जलप्रत्यधिदैवञ्च सूर्य्यास्यमाह्वयेत्तथा ॥" *
॥
मङ्गलस्य ध्यानम् ।
"आवन्त्यं क्षत्त्रियं रक्तं मेषस्थं चतुरङ्गुलम् ।
आरक्तमाल्यवसनं भारद्वाजं चतुर्भुजम् ॥
दक्षिणोर्द्ध्वक्रमाच्छक्तिवराभयगदाकरम्।
आदित्याभिमुखं देवं तद्वदेव समाह्वयेत् ॥
स्कन्दाधिदैवतं भौमं क्षितिप्रत्यधिदैवतम् ॥"
* ॥
बुधस्य ध्यानम् ।
"मागधं द्व्यङ्गुलात्रेयं वैश्यं पीतं चतुर्भुजम् ।
वामोर्द्ध्वक्रमतश्चर्म्मगदावरदखड्गिनम् ॥
सूर्य्यास्यं सिंहगं सौम्यं पीतवस्त्रं तथाह्वयेत् ।
नारायणाधिदैवञ्च विष्णुप्रत्यधिदैवतमे ॥" *
॥
बृहस्पतेः ध्यानम् ।
"द्विजमाङ्गिरसं पीतं सैन्धवञ्च षडङ्गुलम् ।
ध्यात्वा पीताम्बरं जीवं सरोजस्थं चतुर्भुजम्
॥
दक्षोर्द्ध्वादक्षवरदकरकादण्डमाह्वयेम् ।
ब्रह्माधिदैवं सूर्य्यास्यमिन्द्रप्रत्यधिदैवतम् ॥" *
॥
शुक्रस्य ध्यानम् ।

तेषां कामरूपे स्थानानि ध्यानमन्त्रादिश्च
यथा,
"पूर्ब्बे सुमदनायास्तु ब्रह्मक्षेत्रस्य पश्चिमे ।
महाक्षेत्रं यत्र देव आदित्यः सततं स्थितः
॥
भैरवस्य हितार्थाय यदा सर्व्वे सुराः
स्थिताः ।
कामरूपे महापीठे ब्रह्मेन्द्रवरुणादयः ॥
तदा तत्त्वाह्वये शैले श्रीसूर्य्योऽपि
व्यवस्थितः ।
त्रिस्रोता नाम तस्यास्ति नदी पूर्ब्बदिशि
स्थिता ॥
कापोतं करणं पश्चाद्यस्य कुण्डद्वयं
स्थितम् ।
कापोतकुण्डे विधिवत् स्नात्वा
करणकुण्डके ॥
तत्त्वाचलं समारुह्य संपूज्य च दिवाकरम् ।
सकृदेव नरो याति भास्करस्य गृहं प्रति ॥
सूर्य्यरश्मिसमुद्भूत ! कापोत ! करणामृत !
।
पुण्यतोय ! महाघोरं पापं कापोत ! मे हर !
॥
इत्यनेन तु मन्त्रेण स्नात्वा कापोतपुष्करे ।
करणं समुपस्पृश्य तत्त्वशैले रविं यजेत् ॥
त्रिविधं ब्रह्मबीजन्तु सहस्रपदमन्ततः ।
रश्मयेति चतुर्थ्यन्तं देवतायाः शुचेस्ततः
॥
अङ्गबीजमिदं प्रोक्तमादित्यस्यातिकामदम्
॥"
ध्यानं यथा, --
"पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः ।
सप्ताश्वः सप्तरज्जुश्च द्विभुजो भास्करः
सदा ॥
वर्त्तुलं मण्डलं चास्य अष्टपत्रसमन्वितम्।
अङ्गुष्ठाद्यङ्गुलीनान्तु हृदादीनां तथा च षट्
॥
अङ्गमन्त्रेण संयुक्त उपान्त्यो वह्निसंयुतः ।
सर्व्वन्यासे समुद्दिष्टो मन्त्रः सर्व्वफलप्रदः
॥

अविच्छिन्ना सन्ततिस्तु सुकान्ता
तस्य जायते ।
परत्र चन्द्रभवनं भित्त्वा याति परं पदम्
॥"
ध्यानं यथा, --
"श्वेतः श्वेताम्बरधरो दशाश्वो
हेमभूषितः ।
गदापाणिर्द्विबाहुश्च स्मर्त्तव्यो वरदः
शशी ॥ २ ॥
पूर्ब्बस्यां कर्पटाख्यात्तु शैलाच्चित्र इति
स्मृतः ।
यः पूर्ब्बभागप्रान्तोऽभूद्दिश्याग्नेय्यां
व्यवस्थितः ॥
पीठस्य ब्राह्मग्रावस्तु अर्ब्बाक् पर्व्वत
उच्यते ।
तस्मिन् वसन्ति सततं ग्रहा राजन् !
यथेच्छया ॥
तत्र तान् पूजयेद्यस्तु स नाप्नोत्यापदं
क्वचित् ।
रूपं मन्त्रञ्च सूर्य्यस्य चन्द्रस्य
प्रतिपादितम् ।
सप्तानामितरेषान्तु मन्त्रं रूषं शृणुष्व मे
॥
रक्ताम्बरधरः शूली शक्तिमांश्च
गदाधरः ।
चतुर्भुजो मेषरथो वरदो मङ्गलो मतः ॥
३ ॥
पीताम्बवधरः शूली
पीतमाल्यानुलेपनः ।
खड्गचर्म्मगदापाणिः सिं हस्थो वरदो
बुधः ॥ ४ ॥
स्वर्णगौरः पीतवासाः
स्वर्णपङ्कजसंस्थितः ।
मालां कमण्डलुं दण्डं वामेन
वरदायकम् ॥
चतुर्भुजं सुसम्बद्धं चिन्तयेद्देवतीर्थकम्
।
सर्व्वैर्देवगणैर्नित्यं नम्यमानं मनोहरम् ॥
५ ॥

"शुक्रं भोजकटं विप्रं भार्गवञ्च नवाङ्गुलम् ।
पद्मस्थमाह्वयेत् सूर्य्यमुखं श्वेतं चतुर्भुजम् ॥
सदाक्षवरकरकादण्डहस्तंसिताम्बरम् ।
शक्राधिदैवतं ध्यायेत् शचीप्रत्यधिदैवतम् ॥"
* ॥
शनेर्ध्यानम् ।
"सौराष्ट्रं काश्यपं शूद्रं सूर्य्यास्यं चतुरङ्गुलम् ।
कृष्णं कृष्णाम्बरं गृध्रगतं सौरिं चतुर्भुजम् ॥
तद्वद्वाणवरं शूलंधनुर्हस्तं समाह्वयेत् ।
यमाधिदैवतं प्राजापतिप्रत्यधिदैवतम् ॥" * ॥
राहोर्ध्यानम् ।
"राहुं मलयजं शूद्रं पैठीनं द्वादशाङ्गुलम् ।
कृष्णं कृष्णाम्बरं सिंहासनं ध्यात्वा तथाह्वयेत्
।
चतुर्बाहुं खड्गवरशूलचर्म्मकरन्तथा ।
कालाधिदैव सूर्य्यास्यं सर्पप्रत्यधिदैवतम् ॥"
* ॥
केतूनां ध्यानम् ।
"कौशद्वीपं केतुगणं जैमिनीयं षडङ्गुलम् ।
धूम्रं गृध्रगतं शूद्रमाह्वयेद्विकृताननम् ॥
सूर्य्यास्यं धूम्रवसनं वरदं गदिनं तथा ।
चित्रगुप्ताधिदैवञ्च ब्रह्मप्रत्यधिदैवतम् ॥"
इति ग्रहयागतत्त्वम् ॥

हृच्छिरस्तु शिखावर्ष्मनेत्रास्योदरपृष्ठतः ।
वाह्वोः पाण्योर्ज्जङ्घयोस्तु पादयोश्चापि
विन्यसेत् ॥
जघने तु समस्तानि क्रमान्मन्त्राक्षराणि तु
।
क्रमश्चोत्तरतन्त्रोक्तः पूजनेऽस्य प्रकीर्त्तितः
॥
विसर्ज्जनं तथैशान्यां विद्याद्या दलशक्तयः
।
निर्म्माल्यधृगुग्रचण्डो माठराद्यास्तु
पार्ष्णयः ॥
बीजमुत्तरतन्त्रस्य पूर्ब्बतः प्रतिपादितम् ।
अनेन विधिना तत्र पूजयित्वा सुरोत्तमम् ॥
स कामानखिलान् प्राप्य इह लोके स
उत्तमः ।
सुखी शेषे ततो गच्छेद्भास्करस्यालयं प्रति
॥ १ ॥"
इति कालिकापुराणे ८० अध्यायः ॥
"पूर्ब्बं वायुगिरेः शैलश्चन्द्रकूट इति स्मृतः
।
त्रिकोणस्ताम्रसंकाशस्तदूर्द्ध्वे
चन्द्रमण्डलम् ॥
द्वितीयवर्गस्याद्यन्तु विन्द्विन्दुभ्यामलङ्कृतम्
।
चन्द्रबीजमिति प्रोक्तं तेन चन्द्रं प्रपूजयेत् ॥
अद्यापि प्रतिदर्शे तु पर्व्वतं तं निशापतिः ।
प्रदक्षिणीकरोत्येव दशभिश्चाश्वभिर्युतः ॥
तस्यैव पूर्ब्बभागे तु सोमकुण्डाह्वयं सरः ।
तत्र स्नात्वा च पीत्वा च नरः
कैवल्यमश्नुते ॥
स्वर्गादवभृतश्चन्द्रः कामाख्यासेवने यदा ।
तदा तद्रश्मिसङ्घातनिःसृतास्तोयराशयः॥
तैस्तोयैर्व्वासवः कुण्डमकरोदिन्द्रचन्द्रयोः
।
मध्ये पुण्यतमस्थाने स्वयं ब्रह्मशिलोपरि ॥
चन्द्ररश्मिसमुद्भूतचन्द्रकुण्ड महोदधे ।
सुधास्रवण साह्लाद त्वं चन्द्र कलुषं हर ॥
इत्यनेन तु मन्त्रेण यः स्नात्वा चन्द्रपाथसि
।
चन्द्रकूटं समारुह्य पूजयेद्यस्तु तं नरः ॥

शुक्लवस्त्रं शुक्लवर्णं
शङ्खनागोपरिस्थितम् ।
चतुर्भुजं चाक्षमालां पुस्तकञ्च वराभये
॥
क्रमाद्दक्षिणवामाभ्यां धत्ते दैत्यगुरुः
सदा ॥ ६ ॥
इन्द्रनीलनिभः शूली वरदो गृध्रवाहनः
।
पाशबाणासनधरो ध्यातव्योऽर्कसुतः
सदा ॥ ७ ॥
कामदेवस्य बीजन्तु मन्त्रं भौमस्य
कीर्त्तितम् । मं ।
दुर्गाया नेत्रबीजस्य यत्तु मध्याक्षरं
शुभम् ।
तन्मन्त्रं शशिपुत्रस्य
सर्व्वकामफलप्रदम् ॥ बु ॥
भकारपञ्चमो यस्तु चतुर्थस्वरसंयुतः ।
गणेशबीजं तदिदं गुरोर्म्मन्त्रं प्रकीर्त्तितम्
॥ बृ ॥
बिन्द्विन्दुसंयुतञ्चापि पूर्ब्बवर्णद्वयं पुनः ।
सप्तमस्वरसंयुक्तो भकारस्वादिरन्तरम्
॥
प्रान्तवर्गाद्यक्षरन्तु बिन्द्विन्दुभ्यां
समन्वितम् ।
भवेच्छुक्रस्य बीजन्तु
सर्व्वकामसमृद्धिदम् ॥ शु ॥
प्रान्तवर्गाद्यक्षरन्तु
चन्द्रबिन्दुसमन्वितम् ।
आद्यमन्त्यस्वरोपेतं
तदेवेन्द्वादिसंयुतम् ।
शनैश्चरस्य मन्त्रोऽयं
सर्व्वदोषविनाशनः ॥ श ॥
बिन्दुचन्द्रसमायुक्तं नामाद्यक्षर एव वा ।
तेषां सर्व्वग्रहाणां वै मन्त्रसङ्घः
प्रकीर्त्तितः ॥
शान्तिके पौष्टिके कृत्ये
एभिर्मन्त्रैर्ग्रहानिमान् ।
पूजयेत् सर्ब्बदा धीरो भूतिकामो
महामतिः ॥
वरदाभयहस्तश्च खड्गचर्म्मधरस्तथा
।

| | | |
|---|---|---|
| | | सिंहासनगतः कृष्णो राहुधीरैः प्रचक्ष्यते ॥ ८ ॥<br>धूम्रवर्णो विशालाक्षः पुच्छरूपी चतुर्भुजः ।<br>खड्गचर्म्मगदाबाणपाणिः केतुः शवासनः ॥ ९ ॥<br>उपान्तादिद्वादशेन स्वरेण सहितः पुनः ।<br>उपान्तपञ्चमेनेन्दुबिन्दुभ्यां सहितावुभौ ॥<br>मन्त्रोऽयमनुलोम्ने राहोः केतोर्विलोमतः ।<br>आद्याक्षरं बिन्दुमद्वा मन्त्रमुक्तं तथैतयोः ॥ रा । के<br>एवं चित्रे शैलवरे पूजयित्वा नवग्रहान् ।<br>अभीष्टान् लभते कामान्नरः शान्तिं तथोत्तमाम् ॥"<br>इति कालिकापुराणे ८१ अध्यायः ॥ * ॥ |

(अथ ग्रहयुत्यधिकारो यथा, --
“ताराग्रहाणामन्योन्यं स्यातां युद्धसमागमौ ।
समागमः शशाङ्केन सूर्य्येणास्तमनं सह ॥
शीघ्रे मन्दाधिकेऽतीतः संयोगो भवितान्यथा ।
द्वयोः प्राग्यायिनोरेखं वक्रिणोस्तु विपर्य्ययात् ॥
प्राग्यायिन्यधिकेऽतीतो वक्रिण्येष्यः समागमः ॥
ग्रहान्तरकलाः स्वस्वभुक्तिलिप्तासमाहताः ।
भुक्यन्तरेण विभजेदनुलोमविलोमयोः ॥
द्वयोर्वक्रिण्यथैकस्मिन् भुक्तियोगेन भाजयेत् ॥
लब्धं लिप्तादिकं शोध्यं गते देयं भविष्यति ।
विपर्य्ययाद्वक्रगत्योरेकस्मिंस्तु धनव्ययौ ॥
समलिप्तौ भवेतां तौ ग्रहौ भगणसंस्थितौ ।
विवरं तद्वदुद्धृत्य दिनादि फलमिष्यते ॥
कृत्वा दिनक्षपामानं तथा विक्षेपलिप्तिकाः ।
नतोन्नतं साधयित्वा स्वकाल्लग्नवशात्तयोः ॥
विषुवच्छाययाभ्यस्ताद्विक्षेपाद् द्वादशोद्धृतात् ।
फलं स्वनतनाडीघ्नं स्वदिनार्द्धविभाजितम् ॥
लब्धं प्राच्यामृणं सौम्याद्विक्षेपात् पश्चिमे धनम् ।
दक्षिणे पाक्कपाले स्वं पश्चिमे तु तथा क्षयः ॥
सत्रिभग्रहजक्रान्तिभागघ्नाःक्षेपलिप्तिकाः ।
विकलाः स्वमृणं क्रान्तिक्षेपयोर्भिन्नतुल्ययोः ॥
नक्षत्रग्रहयोगेषु ग्रहास्तोदयसाधने ।
शृङ्गोन्नतौ तु चन्द्रस्य दृक्कर्म्मादाविदं स्मृतम् ॥
तात्कालिकौ पुनः कार्य्यौ विक्षेपौ च तयोस्ततः ।
यथा, --
“मेषवृश्चिकयोर्भौमः शुक्रो वृषतुलाभृतोः ।
बुधः कन्यामिथुनयोः प्रोक्तः कर्कस्य चन्द्रमाः ॥
स्यान्मीनधन्विनोर्जीवः शनिर्मकरकुम्भयोः ।
सिंहस्याधिपतिः सूर्य्यः कथितो गणकोत्तमैः ॥”
अथ ग्रहाणामुच्चनीचत्वकथनं तत्रैव यथा, --
“रवेर्मेषतुले प्रोक्ते चन्द्रस्य वृषवृश्चिकौ ।
भौमस्य मृगकर्कौ च कन्यामीनौ बुधस्य तु ॥
जीवस्य कर्कमकरौ मीनकन्ये सितस्य च ।
तुलामेषौ च मन्दस्य उच्चनीचाबुदाहृतौ ॥”
अथ ग्रहाणामन्योन्यं मित्रशात्रवमाह तत्रैव ।
“रवीन्दुभौमगुरवो ज्ञशुक्रशनिराहवः ।
स्वस्मिन् मित्राणि चत्वारि परस्मिन् शत्रवः स्मृताः ॥
राहुरव्योः परं वैरं गुरुभार्गरयोरपि ।
हिमांशुबुधयोर्व्वैरं विवस्वन्मन्दयोरपि ॥”
अथ ग्रहाणां प्रभातादिकालज्ञानमाह तत्रैव,
“प्रभातमिन्दुजगुरू मध्याह्ने रविभूमिजौ ।
अपराह्णे भार्गवेन्दू सन्ध्या मन्दभुजङ्गमौ ॥”
अथ ग्रहाणां दृष्टिकथनं तत्रैव यथा, --
“तिर्य्यग्दृशौ बुधसितौ भौमार्को व्योमदर्शिनौ ।
जीवेन्दू समदृष्टी च शनिराहू अधोदृशौ ॥”
अथ ग्रहाणां विचरणस्थानानि तत्रैव यथा, --
“भार्गवेन्दू जलचरौ ज्ञजीवौ ग्रामचारिणौ ।
राहुक्षितिजमन्दार्कान् ब्रुवतेऽरण्यचारिणः ॥”
घातोर्व्विनिश्चये ज्ञाते विशेषः स्यादुदाहृतः ॥
शुक्रे चन्द्रे जलाधारो देवतावसतिर्गुरौ ।
रवौ चतुष्पदाश्मानमिष्टकानिचयोबुधे ॥
भृगौ स्थानं कुजे प्रोक्तं शनिराहू च वाह्यभूः ।
अमीभिर्हि बुकस्थाने नष्टभूमिं विलोकयेत् ॥”
अथ ग्रहाणां लिङ्गज्ञानमाह तत्रैव ।
“जीवमङ्गलमार्त्तण्डानुशन्तिपुरुषान् बुधाः ।
सोमसोमजमन्दा हि भृगुपुत्रास्तु योषितः ॥”
अथ ग्रहाणां वयोज्ञानमाह तत्रैव ।
“युवा कुजः शिशुः सौम्यः शशिशुक्रौ च मध्यमौ ।
मन्दमार्त्तण्डद्वेज्यफणिनः स्थविरा ग्रहाः ॥”
अथ ग्रहाणां प्रकृतिस्वरूपमाह तत्रैव ।
“भौममन्दार्कभोगीन्द्राः प्रकृत्या दुःखदायकाः ।
ज्ञगुरुश्वेतकिरणशुक्राः सुखकराः सदा ॥”
अथ ग्रहाणां राशिभोगकालनिरूपणंयदुक्तं ज्योतिषे ।
“रविर्मासं निशानाथः सपाददिवसद्वयम् ।
पक्षत्रयं भूमिपुत्रो बुधोऽष्टादशवासरान् ॥
वर्षमेकं सुराचार्य्यश्चाष्टाविंशदिनं भृगुः ।
शनिः सार्द्धद्वयं वर्षं स्वर्भानुः सार्द्धवत्सरम् ॥”
ग्रहाणां स्तुत्यादिकन्तु नवग्रहशब्दे द्रष्टव्यम् ॥)
तेषां दशा तत्फलादि च दशाशब्दे गरुड-पुराणे ६० अध्याये च द्रष्टव्यम् ॥ * ॥
अथ नवग्रहयागविधानादियथा, --
याज्ञवल्क्य उवाच ।
“श्रीकामः शान्तिकामो वा वृद्ध्यायुरभिचारवान् ।
ग्रहयज्ञं समं कुर्य्यात् ग्रहाश्चैते बुधैः स्मृताः ॥

दिक् तुल्ये त्वन्तरं भेदे योगः शिष्टं ग्रहान्तरम् ॥
कुजार्किज्ञामरेज्यानां त्रिंशदर्द्धार्द्धवर्द्धिताः ।
विष्कम्भाश्चन्द्रकक्षायां भृगोः षष्टिरुदाहृता ॥
त्रिचतुःकर्णयुक्त्याप्तास्ते द्विघ्नास्त्रिज्यया हताः ।
स्फुटाः स्वकर्णास्तिथ्याप्ता भवेयुर्मानलिप्तिकाः ॥
छायाभूमौ विपर्य्यस्ते स्वच्छायाग्रे तु दर्शयेत् ।
ग्रहः स्वदर्पणान्तस्थः शङ्ङ्क्वग्रे सम्प्रदृश्यते ॥
पञ्च हस्तोच्छ्रितौ शङ्कू यथादिग्भ्रमसंस्थितौ ।
ग्रहान्तरेण विक्षिप्तावधो हस्तनिखातगौ ॥
छायाकर्णौ ततो दद्याच्छायाग्राच्छङ्कुमूर्द्धगौ ।
छायाकर्णाग्रसंयोगे संस्थितस्य प्रदर्शयेत् ॥
स्वशङ्कुमूर्द्धगौ व्याम्नि ग्रहौ दृक्तुल्यतामितौ ।
उल्लेखं तारकास्पर्शाद्भेदे भेदः प्रकीर्त्त्यते ॥
युद्धशंमुविमर्द्दाख्यमंशुयोगे परस्परम् ।
अंशादूनेऽपसव्याख्यं युद्धमेकोऽत्र चेदणुः ॥
समागमोऽशादधिके भवतश्चेद्बलान्वितौ ।
अपसव्ये जितो युद्धे पिहितोऽणुरदीप्तिमान् ॥
रूक्षो विवर्णो विध्वस्तो विजितो दक्षिणाश्रितः ।
उदकस्थो दीप्तिमान् स्थूलो जयी याम्येपि यो
बली ॥
आसन्नावप्युभौ दीप्तौ भवतश्चेत् समागमः ।
स्वल्पौ द्वावपि विध्वस्तौ भवेतां कूटविग्रहौ ॥
उदक्स्थो दक्षिणस्थो वा भार्गवः प्रायशो जयी ।
शशाङ्केनैवमेतेषां कुर्य्यात् संयोगसाधनम् ॥
भावाभावायलोकानां कल्पनेयं प्रदर्शिता ।

अथ ग्रहाणां पित्तादिधातुज्ञानमाह तत्रैव,
"पित्तं प्रभाकरक्ष्माजौ श्लेष्मा भार्गवशीतगू ।
ज्ञगुरू समधातू च पवनौ राहुमन्दगौ ॥"
अथ ग्रहाणां रसज्ञानमाह तत्रैव ।
"कुजार्कौ कटुकौ जीवो मधुरस्तुवरो बुधः ।
क्षाराम्लौ चन्द्रभृगुजौ तीक्ष्णौ सर्पार्किनन्दनौ ॥"
अथ ग्रहाणां धातुमूलादिचिन्ताज्ञानमाह।
"मन्देन्दूरगभौमाः स्युर्धातुः सवितृभार्गवौ ।
मूलं जीवश्च सौम्यश्च जीवं प्राहुर्महाधियः ॥"
अथ ग्रहाणां पदज्ञानमाह तत्रैव ।
"द्विपदौ भार्गवगुरू भूपुत्त्रार्कौ चतुष्पदौ ।
पक्षिणौ बुधशौरी च चन्द्रराहू सरीसृपौ ॥"
अथ ग्रहाणां जातिविशेषमाह ।
"विप्रौ शुक्रगुरू क्षत्त्रौ कुजार्कौ शूद्र इन्दुजः ।
इन्दर्वैश्यः स्मृतौ म्लेच्छौ सैहिकेयशनैश्चरौ ॥"
अथ ग्रहाणां देहादीनां स्वरूपमाह ।
"स्थूल इन्दुः सितः षण्डः चतुरस्रौ कुजो भृगुः ।
वर्त्तुलौ सोमधिषणौ दीर्घौ शनिभुजङ्गमौ ॥"
अथ ग्रहाणां वणस्वरूपमाह तत्रैव ।
"रक्तवर्णः कुजः प्रोक्तो धिषणः कनकद्युतिः ।
शुकपिच्छसमः सौम्यो गौरकान्तिरथोष्णगुः ॥
मन्दारस्यार्कपुष्पस्य समद्युतिरनुष्णगुः ।
कविरत्यन्तधवलः फणी कृष्णः शनिस्तथा ॥"
ग्रहाणां धातुचिन्तामाह तत्रैव ।
"शुक्रे चन्द्रे भवद्राप्यं बुधे स्वर्णमुदाहृतम् ।
गुरौ रत्नयुतं हेम सूर्य्ये मौक्तिकमुच्यते ॥
भोमे त्रपुः शनौ लौहं राहावश्मानि कीर्त्तयेत् ।

सूर्य्यः सोमो मङ्गलश्च बुधश्चैव बृहस्पतिः ।
शुक्रः शनैश्चरो राहुः केतुः कुर्य्यात् ग्रहांस्तथा ॥
ताम्रकात् स्फटिकाद्रक्तचन्दनात् स्वर्णकादुभौ ।
रजतादयसः सीसात् कांस्यात् वर्णान् निबोधत ॥
रक्तः शुक्लस्तथा रक्तः पीतः पीतः सितोऽसितः ।
कृष्णः कृष्णः क्रमाद्वर्णा द्रव्याणि मुनयस्ततः ॥
स्थापयेद्ग्रहवर्णानि होमार्थं प्रलिखेत् पटे ।
सवर्णानि प्रदेयानि वासांसि कुसुमानि च ॥
गन्धाश्च वलयश्चैव धूपो देयश्च गुग्गुलुः ।
कर्त्तव्यास्तत्र मन्त्रैश्च चरवः प्रतिदैवतम् ॥
आकृष्णेन इमं देवा अग्निर्मूद्धर्वा दिवः ककुत् ।
उद्बुध्यस्वेति जुहुयादृग्भिरेव यथाक्रमम् ॥
बृहस्पतेऽतियदर्य्यति सर्व्वेऽन्नात् परिस्रुतः ।
शन्नो देवीस्ततः काण्डात् केतुं कृन्वन्निति क्रमात् ॥
अर्कः पलाशः स्वदिरश्चापामार्गोऽथ पिप्पलः ।
औडम्बरः शमी दूर्व्वा कुशश्च समिधः क्रमात् ॥
होतव्या मधुसर्पिर्भ्यां दध्ना चैव समन्विताः ।
गुडौदनं पायसञ्च हविष्यं क्षीरयष्टिकम् ॥
दध्योदनं हविः पूपान्मांसं चित्रान्नमेव च ।
दद्याद्ग्रहक्रमादेतान् ग्रहेभ्यो भोजनं ततः ॥
घेनुः शङ्कस्तथानड्वान् हेम वासो हयस्तथा ।
कृष्णा गौरायसश्छाग एता वै दक्षिणाः क्रमात् ॥
ग्रहाः पूज्याः सदा यस्माद्राज्यादि प्राप्यतेफलम् ॥"
इति गारुडे १०१ अध्यायः ॥

| स्वमार्गगाः प्रवान्त्येते दूरमन्योन्यमाश्रिताः ॥”<br>इति सूर्य्यसिद्धान्ते ग्रहयुत्यधिकारः ॥<br>अथ ग्रहाणां राश्यधिपत्वकथनं<br>ग्रहभावप्रकाशे | | |
|---|---|---|

**अथ वेदभेदे ग्रहादोनां मन्त्रभेदाः क्रमशः प्रदर्श्यन्ते ।**

| ऋग्वेदिनाम् | यजुर्व्वेदिनाम् | सामवेदिनाम् | अथर्व्ववेदिनाम् |
|---|---|---|---|
| सूर्य्यस्य आकृष्णेण रजसा । १ । ३५ । २ | आ कृष्णेण रजसा । वाः ३३ । ४३ | उदु त्यं जातवेदसम् १ । १ । १ । ३ । ११<br>(टिप्पणी-*बण्महांअसि १ । ३ । २ । ४ । ४*) | विषासहिं सहमानम् १७ । १ । १ |
| सोमस्य आप्यायस्व समेतु ते १ । ९१ । १६ | इमं देवा असपत्नम् । वाः ९ । ४० | सन्ते पयांसि । वाः १२ । ११३<br>(टिप्पणी-*सोमं राजानम् १ । १ । २ । ५ । १*) | शक्रधूमं नक्षत्राणि ६ । १२८ । १ |
| मङ्गलस्य अग्निर्मूर्द्धा दिवः ८ । ४४ । १६ | अग्निर्मूर्द्धा दिवः । वाः १५ । २० | अग्निर्मूर्द्धा दिवः १ । १ । १ । ३ । ७ | त्वया मन्यो सरथम् ४ । ३२ । १ |
| बुधस्य अग्ने विवस्वत् १ । ४४ । १ | उद्बुध्यस्वाग्ने । वाः १५ । ५४ | अग्ने विवस्वत् १ । १ । १ । ४ । ६ | यद्राजानो विभजन्तः ३ । २९ । १ |
| बृहस्पतेः बृहस्पते परि दीया १० । १०३ । ४ | बृहस्पते अतियदर्य्यः । वाः २६ । ३ | बृहस्पते परि दीया २ । ९ । ३ । २ । १<br>(टिप्पणी-*बृहद्वयो हि । १ । १ । २ । ४ । ८*) | बृहस्पतिर्नः परिपातु ७ । ५१ । १ |
| शुक्रस्य शुक्रं ते अन्यत् ६ । ५८ । १ | अन्नात् परिस्रुतः । वाः १९ । ७५ | शुक्रं ते अन्यत् १ । १ । २ । ३ । ३ | हिरण्यवर्णाः शुचयः १ । ३३ । १ |
| शनैश्चरस्य शन्नोदेवीरभीष्टये १० । ९ । ४ | शन्नो देवीरभीष्टये । वाः ३६ । १२ | शन्नो देवीरभीष्टये १ । १ । १ । ३ । १३ | सहस्रबाहुः पुरुषः १९ । ६ । १ |
| राहोः कया नश्चित्रः ४ । ३१ । १ | काण्डात् काण्डात् । वाः १३ । २० | कया नश्चित्रः १ । २ । २ । ३ । ५ | दिव्यं चित्रमृतुघाः |
| केतोः केतुं कृण्वन्नकेतवे १ । ६ । ३ | केतुं कृण्वन्नकेतवे । वाः २९ । ३७ | केतुं कृण्वन्नकेतवे २ । ६ । ३ । १२ । ३ | यस्ते पृथुः स्तनयित्नुः ७ । ११ । १ |
| सूर्य्यादिदेवेश्वरस्य आ वो राजानम् ४ । ३ । १ | त्र्यम्बकं यजामहे । वाः ३ । ६० | आ वो राजानम् १ । १ । २ । २ । ७ | मानो विदन् विव्याधिनः १ । १९ । १ |
| सोमाधिदेवोमायाः गौरीर्म्मिमाय १ । १६४ । ४१ | श्रीश्चते लक्ष्मीश्च । वाः ३१ । २२ | आपो हि ष्ठा २ । ९ । २ । १० । १ | आपो हि ष्ठा १ । ५ । १ |
| कुजाधिदेवस्कन्दस्य कुमारं माता ५ । २ । १ | यदक्रन्दः प्रथमम् । वाः २९ । २२ | स्योना पृथिवि । वाः ३५ । २१ | अग्निरिव मन्यो त्विषितः ४ । ३१ । २ |
| बुधाधिदेवहरेः इदं विष्णुर्विचक्रमे १ । २२ । १७ | विष्णोरराटमसि । वाः ५ । २१ | इदं विष्णुर्विचक्रमे १ । ३ । १ । ३ । ९ | प्र तद्विष्णुः स्तवते ७ । २६ । २ |
| जीवाधिदेवब्रह्मणः त्वमित् सप्रथाः ८ । ६० । ५ | आ ब्रह्मन् ब्राह्मणः । वाः २२ । २२ | त्वमित् सप्रथाः १ । १ । १ । ४ । ८ | ब्रह्म जज्ञानम् ४ । १ । १ |
| शुक्राधिदेवेन्द्रस्य इन्द्रं वो विश्वतः १ । ७ । १० | सजोषा इन्द्रः । वाः ७ । ३७ | इन्द्रमित् देवतातये १ । ३ । २ । १ । | इन्द्रेमं प्रतरम् ६ । ५ । २ |

| | | | |
|---|---|---|---|
| | | ७ | |
| शन्यधिदेवयमस्य यमाय सोमं सुनुत १० । १४ । १३ | यमाय त्वाङ्गिरस्वते । वाः ३८ । ९ | आयं गौः पृश्निः २ । ६ । १ । ११ । १ | यः प्रथमं प्रवतमाससाद ६ । २८ । ३ |
| राह्वधिदेवकालस्य ब्रह्म जज्ञानम् । वाः । १३ । ३ | कार्षिरसि समुद्रस्य । वाः ६ । २८ | ब्रह्म जज्ञानम् । १ । ४ । १ । ३ । ९ | रोहितः कालः १३ । २ । ३९ |
| केत्वधिदेवचित्रगुप्तस्य उषो वाजं हि १ । ४८ । ११ | चित्रावसो स्वस्ति । वाः ३ । १८ | चित्र इच्छिशोः १ । १ । २ । २ । २ । | आज्ञातं यदनाज्ञातम् |
| सूर्य्यप्रत्यधि देवाग्नेः अग्निं दूतं वृणीमहे १ । १२ । १ | अग्निं दूतं पुरोदधे । वाः २२ । १७ | अग्निं दूतं वृणीमहे १ । १ । १ । १ । ३ | समास्त्वाग्ने ऋतवः २ । ६ । १ |
| सोमप्रत्यधिदेवजलस्य अप्सु मे सोमः १ । २३ । २० | आपो हि ष्ठा । वाः ११ । ५० | उदुत्तमं वरुण पाशम् । वाः १२ । १२ | शन्नो देवीरभीष्टये । वाः ३६ । १२ |
| कुजप्रत्यधिदेवक्षितेः स्योना पृथिवि १ । २२ । १५ | स्योना पृथिवि । वाः ३५ । २१ | पृथिव्यन्तरीक्षम् । तैः आः ७ । ७ । ३ | भूमे मातर्निधेहि १२ । १ । ६३ |
| बुधप्रत्यधिदेवविष्णोः सहस्रशीर्षा पुरुषः १० । ९० । १ | इदं विष्णुर्विचक्रमे । वाः ५ । १५ | सहस्रशीर्षा पुरुषः । वाः ३१ । १ | इदं विष्णुंर्विचक्रमे ७ । २६ । ४ |
| जीवप्रत्यधिदेवेन्द्रस्य इन्द्रायेदो मरुत्वते ९ । ६४ । २२ | इन्द्र आसां नेता । वाः १७ । ४० | इन्द्रायेन्दो १ । ५ । २ । ४ । ६ | इन्द्र जुषस्व प्र वहा २ । ५ । १ |
| शुक्रप्रत्यधिदेवशच्याः उत्तापर्णे सुभगे १० । १४५ । २ | अदित्यै रास्नासि । वाः १ । ३० | एकाष्टका तपसे । अः ३ । १० । १२ | प्रेतं पादौ १ । २७ । ४ |
| शनिप्रत्यधिदेवप्रजापतेः प्रजापते न त्वद् १० । १२१ । १० | प्रजापते न त्वद् । वाः १० । २० | प्रजापते न त्वद् । वाः १० । २० | नक्तं जातास्योषधे १ । २३ । १ |
| राहुप्रत्यधि देवसर्पाणाम् आयं गौः पृश्निः १० । १८९ । १ | नमोऽस्तु सर्पेभ्यः । वाः १३ । ६ | तवेन्द्रिद्रावमम् १ । ३ । २ । ३ । ८ | शेरभक शेरभ २ । २४ । १ |
| केतुप्रत्यधिदेवब्रह्मणः ब्रह्म जज्ञानम् । वाः १३ । ३ | ब्रह्म जज्ञानम् । वाः १३ । ३ | एष ब्रह्मा य ऋत्विजः १ । ५ । २ । १ । २ | ये दिशामन्तर्देशेभ्यः ४ । ४० । ८ |

पाटान्तराणि प्रदर्श्यन्ते, --
(गृह्यते अनुगृह्यते अभ्युपपद्यते इति । ग्रह + "ग्रहवृदृनिश्चिगमश्च ।" ३ । ३ । ५८ । इति अप् ।) अनुग्रहः । निर्ब्बन्धः । (यथा, आर्य्यासप्तशत्याम् । ४४५ ।
"महति स्नेहे निहितः कुसुमं बहु दत्तमर्च्चितो बहुशः ।
वक्रस्तदपि शनैश्चर इव सखि ! दुष्टग्रहो दयितः ॥"
"दुष्टो ग्रह आग्रहो यस्य पक्षे दुष्टश्चासौ ग्रहश्चेति विग्रहः ।" इति तट्टीका ॥) ग्रहणम् । (यथा, भागवते । ३ । १५ । ३५ ।
"सद्योहरेरनुचरावुरु विभ्यतुस्तत्-
पादग्रहावपततामतिकातरेण ॥")
रणोद्यमः । पूतनादयः । ते तु बालग्रहाः । (एतेषां नामानि विवरणञ्च बालग्रहशब्दे द्रष्टव्याणि ॥ * ॥) सैंहिकेयः । (यथा, रघुः । १२ । २८ ।
"सन्ध्याभ्रकपिशस्तस्य विराधो नाम राक्षसः ।
अतिष्ठम्मार्गमावृत्य रामस्येन्दोरिव ग्रहः ॥")
उपरागः । स तु चन्द्रसूर्य्ययोर्ग्रहणम् । इति मेदिनी । हे । ३ ॥ (यदुक्तं तिथितत्त्वे ।
"भत्रिपादान्तरे राहोः केतोर्व्वा संस्थितो रविः ।
चतुष्पादान्तरे चन्द्रस्तदा सम्भाव्यते ग्रहः ॥"
ग्रहाणां नवसंख्यात्वेन ग्रहशब्देनापि नवमसंख्या उच्यते । यथा, देवीभागवते । १ । ३ । ३ ।
"चतुर्द्दशसहस्रञ्च मात्स्यमाद्यं प्रकीर्त्तितम् ।
तथा ग्रहसहस्रन्तु मार्कण्डेयं महाद्भुतम् ॥"
महादेवः । यथा, महाभारते । १३ । १७ । ३७ ।
"चन्द्रः सूर्य्यः शनिः केतुर्ग्रहो ग्रहपतिर्व्वरः ॥")

**ग्रहकल्लोलः**, पुं, (ग्रहस्य चन्द्रसूर्य्यदेः कल्लोलः विमर्द्दक इव ।) राहुः । इति त्रिकाण्डशेषः ॥

**ग्रहणं**, क्ली, (गृह्यते इति । ग्रह् + भावे ल्युट् ।)
स्वीकारः । (यथा, हे रामायणे । १ । ६६ । १९ ।
"नशेकुर्ग्रहणे तस्य धनुषस्तोलनेऽपि वा ॥"
आदरः । करः । उपलब्धिः । (यथा, रघुः । ३ । २८ ।
"स वृत्तचूलश्चलकाकपक्षकै-
बुधसौरिनवांशे तु मलिनं क्षुद्रवर्षणम् ॥
गुरोरंशकमासाद्य दृश्यते सवलाहकः ।
शशिशुक्रनवांशे तु प्रावृट्काले महज्जलम् ।
अन्यत्राव्यक्तभूतौ तौ दृश्येते छादिताम्बरौ ॥" * ॥
राहोर्वर्णविशेषे शुभाशुभं यथा, (बृहत् संहितायाम् । ५ । ५३-५८ ।)
"श्वेते क्षेमसुभिक्षं ब्राह्मणपीडाञ्च निर्द्दिशेद्राहौ ।
अग्निभयमनलवर्णे पीडा च हुताशवृत्तीनाम् ॥
हारिते रोगोल्वणता शस्यानामीतितश्च विध्वंसः ।
कपिले शीघ्रगसत्वस्नेहविध्वंसोऽथ दुर्भिक्षम् ॥
अरुणकिरणानुरूपे दुर्भिक्षं वृष्टयो विहगपीडा ।
धूम्राभे क्षेमसुभिक्षमादिशेन्मन्दवृष्टिञ्च ॥
कापोतारुणकपिले श्यामाभे क्षुद्भयं विनिर्द्दिशेत् ।
कापोतः शूद्राणां व्याधिकरः कृष्णवर्णश्च ॥
विमलकमलपीताभो वैश्यध्वंसी भवेत् सुभिक्षाय ।
सार्च्चिष्मत्यग्निभयं गैरिकरूपे च युद्धानि ॥
दूर्व्वाकाण्डश्यामे हारिद्रे वापि निर्द्दिशेन्मरकम् ।
अशनिभयसम्प्रदायी पाटलकुसुमोपमो राहुः ॥"
तद्दर्शननिषेधो यथा, --
यद्वा पुण्योदके स्नात्वा शुचिः पूर्ब्बमुपोषितः ॥
ग्रहणादिविमोक्षान्तं जपेन्मन्त्रं समाहितः ।
अनन्तरं दशांशेन क्रमाद्धोमादिकं चरेत् ॥
तदन्ते महतीं पूजां कुर्य्याद्‌ब्राह्मणतर्पणम् ।
ततो मन्त्रप्रसिद्‌ध्यर्थं गुरुं संपूज्य तोषयेत् ॥
एवञ्च मन्त्रसिद्धिः स्याद्देवता च प्रसीदति ।
सूतके मृतके चैव न दोषो राहुदर्शने ।
स्नानमात्रन्तु कर्त्तव्यं दानश्राद्धविवर्जितम् ॥" * ॥
नक्षत्रविशेषे ग्रहणे नराणां दोषस्तत्शान्तिश्च यथा, --
"यस्मिंस्त्रिजन्मनक्षत्रे ग्रस्येते शशिभास्करौ ।
तज्जातानां भवेत् पीडा ये नराः शान्तिवर्ज्जिताः ॥
ग्रहणग्रहपरिपीडितनाडीनक्षत्रदोषशमनाय ।
सह शतपुष्पैः स्नायात् फलिनीफलचन्दनोशीरैः ॥"
नाडीनक्षत्राणि च । आद्यदशषोडशाष्टादशत्रयोविंशपञ्चविंशतयः ॥
"ताम्रपात्रं तिलैः पूर्णं पूर्णं वा गव्यसर्पिषा ।
भास्करग्रहणे दद्यान्नाडीदोषोपपीडितः ॥
घृतकुम्भोपरि निहितं शङ्खं नवनीतपूरितं दद्यात् ।
नाड्यादिदोषशान्त्यै द्विजाय दोषाकरग्रहणे ॥"
तत्र भोजनादिनिषेधो यथा, --
"चन्द्रस्य यदि वा भानोर्यस्मिन्नहनि भार्गव ! ।
ग्रहणन्तु भवेत्तत्र तत्पूर्ब्बां भोजनक्रियाम् ॥
नाचरेत् सग्रहे चैव तथैवास्तमुपागते ।
यावत् स्यान्नोदयस्तस्य नाश्नीयात्तावदेव तु ॥

अमात्यपुत्त्रैः सवयोभिरन्वितः ।
लिपेर्यथावद्ग्रहणेन वाङ्मयं
नदीमुखेनेव समुद्रमाविशत् ॥”)
बन्दी । उपरागः । इति मेदिनी । णे ४५ ॥
(गृह्यन्ते विषयाः येन । ग्रह + करणे ल्युट् ।)
इन्द्रियम् । इति राजनिर्घण्टः ॥ शब्दः । इति
जटाधरः ॥ अथ सूर्य्यचन्द्रग्रहणकारणं यथा, --
“भत्रिपादान्तरे राहोः केतोर्व्वा संस्थितो रविः ।
चतुष्पादान्तरे चन्द्रस्तदा सम्भाव्यते ग्रहः ॥
यस्मिन्नृक्षे रविस्तस्माच्चतुर्द्दशगतः शशी ।
पूर्णिमापतिपत्सन्धौ राहुणा ग्रस्यते शशी ॥
कृष्णपक्षे तृतीयायां मामर्क्षं यदि जायते ।
ततस्त्रयोदशे सूर्य्यो राहुणा ग्रस्यते रविः ॥” * ॥
ग्रहणकालीनरविचन्द्रयोर्म्मेघेनाच्छादनाच्छादन-
कारणं यथा, --
“रविभौमनवांशे तु निरभ्रं ग्रासमादिशेत् ।
“सप्ताष्टजन्मशेषेषु चतुर्थे दशमे
तथा ।
नवमे च तथा चन्द्रे न
कुर्य्याद्राहुदर्शनम् ॥
जन्मभे जन्मराशौ च षष्ठाष्टमगते
तयोः ।
चतुर्थे द्वादशे चन्द्रे न
कुर्य्याद्राहुदर्शनम् ॥
ग्रासदर्शनमात्रेण
चार्थहानिर्म्महद्भयम् ।
जायते नात्र
सन्देहस्तस्मात्तत्परिवर्जयेत् ॥
विपत्करप्रत्यरिसंज्ञितेषु
वैनाशिकर्क्षेषु कृतं हि कर्म्म ।
सर्व्वं नृणां निष्फलमेव यस्मात्
कृतेऽपि तत्रास्ति शुभं न किञ्चित्
॥”
तत्र कर्त्तव्यं कर्म्म यथा, --
“एकरात्रमुपोष्यैव राहुं दृष्ट्वा क्षयं
नरः ।
पुण्यमाप्नोति कृत्वा च स्नानं
श्राद्धं विधानतः ॥
आदित्यकिरणैः पूतं पुनः पूतञ्च
वह्निना ।
जलं व्याध्यातुरः स्नायात्
ग्रहणेऽप्युष्णवारिणा ॥
सर्व्वं भूमिसमं दानं सर्व्वे
व्याससमा द्विजाः ।
सर्व्वं गङ्गासमं तोयं ग्रहणे नात्र
संशयः ॥
सर्व्वस्वेनापि कर्त्तव्यं श्राद्धं वै
राहुदर्शने ।
अकुर्व्वाणस्तु तत् श्राद्धं पङ्के गौरिव
सीदति ॥
आपद्यनग्नौ तीर्थे च चन्द्रसूर्य्यग्रहे
तथा ।
आमश्राद्धं द्विजैः कार्य्यं शूद्रेण तु
सदैव हि ॥
चन्द्रसूर्य्यग्रहे स्नानं
श्राद्धदानजपादिकम् ।
मुक्तिं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा
परेऽहनि ॥
सूर्य्यग्रहे तु नाश्नीयात् पूर्ब्बं यामचतुष्टयम्
।
चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्व्विना
॥
त्र्यहं न कीर्त्तयेद्ब्रह्म राज्ञो राहोश्च सूतके
॥”
तत्राशौचं यथा, --
“सर्व्वेषामेव वर्णानां सूतकं राहुदर्शने ।
स्नात्वा कर्म्माणि कुर्व्वीत शृतमन्नं
विवर्ज्जयेत् ॥
ग्रहणे शावमाशौचं विमुक्तौ सौतिकं स्मृतम्
।
तयोः सम्पत्तिमात्रेण उपस्पृश्य क्रियाक्रमः
॥”
इति तिथ्यादितत्त्वम् ॥ * ॥
अथ ज्योतिर्म्मते ग्रहणस्वरूपं यथा । राहुः
पृथिवीच्छायां समाश्रित्य चन्द्रं
चन्द्रमाश्रित्य
रविं यदाच्छादयति तत् ग्रासाख्यम् ।
किन्तु
रविचन्द्रयोर्न गतिरोधकस्वरूपो ग्रासः ॥
* ॥
अथ ग्रहणसम्भावना । अमावस्यावसान-
समये यदि रविस्फुटराश्यादिः राहुकेत्वोः
स्फुटराश्यादिभिस्तुल्यः किंवा
दशभागान्तरितो
भवति तदा सूर्य्यग्रहणम् ।
पूर्णिमावसानकाले
यदि चन्द्रस्फुटराश्यादिः राहुकेत्वोः
स्फुटराश्या-
दिभिस्तुल्यः किंवा त्रयोदशभागान्तरितो
भवति
तदा चन्द्रग्रहणं स्यात् ॥ * ॥ तस्य गणना-
प्रकारो यथा । अमावस्या शेषक्षणे पूर्णिमा-
वसाने च सूर्य्यसिद्धान्तोक्तगणितागतौ
यथा-

| | | |
|---|---|---|
| | काय्र्याणि मलमासेऽपि नित्यं नैमित्तिकं तथा ॥ सत्तीर्थेऽर्कविधुग्रासे तन्तुदामनपर्व्वणोः । मन्त्रदीक्षां प्रकुर्व्वाणो मासर्क्षादीन् न शोधयेत् ॥ चन्द्रग्रहश्चन्द्रवारे सूर्य्ये सूर्य्यग्रहस्तथा । चूडामणिरयं योगस्तत्रानन्तफलं स्मृतम् ॥ अन्यस्माद्ग्रहणात् कोटिगुणमत्र फलं लभेत् । अथवान्यप्रकारेण पुरश्चरणमिष्यते ॥ ग्रहणेऽर्कस्य चेन्दोर्व्वा शुचिः पूर्ब्बमुपोषितः ॥ नद्यां समुद्रगामिन्यां नाभिमात्रोदके स्थितः । | |

सम्भवराश्यादिस्थौ रविचन्द्रौ कर्त्तव्यौ ।
मध्य-
राहुराश्यादिभिर्युक्तः स्फुटराश्यादिस्थो
रविश्च
कार्य्यः । अस्मिन् राहुयुक्तरवौ
षड्राश्यधिके सति
षड्राशीन् त्यक्त्वा त्रिंशता पूरितः सन् यदि
नवतिभागाधिको भवति तदाशीतृउच
शतां-
शेभ्यो हीनः कार्य्यः । अवशिष्टाङ्को
द्विःस्थाप्य
एकस्मात् द्ब्याभ्यां हृताङ्केनापरो युक्तः
सन्
शरो भवति । राहुरव्योर्योगे कृते
मेषादिराशि-
षट्के सति स शरः सौम्यसंज्ञकः
तुलादिषट्के
सति याम्यसंज्ञकः स्यात् ॥ * ॥
चन्द्रराहुमान-
ज्ञानम् ।
पञ्चत्रिंशद्विकलाधिकनवत्युत्तरसप्तशत-
कलामितमध्यचन्द्रभुक्तिः ७९० । ३५ ।
सा च
स्फुटकर्म्मणा किञ्चित्
कलादिभिर्न्यूनाधिका वा
भवति । तस्याः स्फुटेन्दुभुक्त्याः
सकाशात् द्वा-
चत्वारिंशदधिकशतेन १४२ हरणाल्लब्धं
चन्द्रस्य
मानं स्यात् । पञ्चगुणितचन्द्रमानात् द्वाभ्यां
हरणाल्लब्धं राहुमानं भवति ॥ * ॥
अथ चन्द्रग्रहणम् ।
राहुचन्द्रयोर्म्मानं मिलितं शरण
हीनकरणात्
यदवशिष्टं तत् ग्रासो भवेत् शरे शून्ये सति
राहुचन्द्रयोर्म्मिलितं मानद्वयं ग्रासो भवेत् ।
शरेऽधिके ग्रासो न स्यात् ॥ * ॥
चन्द्रग्रहणारम्भादिकालज्ञानंयथा । षड्-

राहुसहितः
स्फुटरविर्द्विगुणितलम्बनखण्डात्
नवहृतांशादिभिर्द्दिनपूर्ब्बार्द्धेरहितः
दिनपरार्द्धे
सहितः कार्य्यः एतादृशसंस्कृतरवौ
षड्राश्यधिके
षड्राशीन् त्यक्त्रा इत्यादि चन्द्रग्रहणोक्तवत्
शरः कार्य्यः । एष स्फटशरः उभयोः
शरनत्योर्द्दिकुल्यतायां नत्या सह युक्तो
दिग्वि-
भेदे रहितः कार्य्यः अन्तरे कार्य्ये सति
यदधिकं
तस्य दिशा शरस्य दिक् वक्तव्या ॥ * ॥
सूर्य्य-
मानं यथा ।
दशानुपलाष्टविपलाधिकोनषष्टि
कलामितरविमध्यभुक्तिः । ५९ । ८ । १०
सा च
स्फुटकर्म्मणि किञ्चित्
कलादिभिर्न्यूनाधिका वा
भवति ।
तस्यास्त्रिगुणितस्फुटरविभुक्तेर्द्वात्रिंशता
लब्धं रविमानं स्यात् ॥ * ॥
अथ सूर्य्यग्रहणम् ।
पूर्ब्बोक्तचन्द्रमानं रविमानं मिलितं शरेण
हीनं सत् ग्रासो भवेत् ॥ * ॥
सूर्य्यग्रहणस्या-
रम्भादिकालज्ञानम् । चतुर्गुणितग्रासाङ्कात्
द्वियुतग्रासाङ्केन लब्धं दण्डादिकं
स्थितिनाडि-
कार्द्धं भवति । तदमावस्याया दण्डादिषु
हीनं
स्पर्शकालः युक्तं मुक्तिकालः स्यात् ॥ * ॥
स्पर्शादिदिग्ज्ञानम् । शरे याम्ये सति अर्क-
मण्डलस्य नैरृतकोणे स्पर्शोऽग्निकोणे मोक्षः
स्यात् । सौम्ये शरे सति वायुकोणे स्पर्श
ईशानकोणे मुक्तिर्भवेत् द्विगुणितं तत्
स्थिति-

मध्येन्दव्यासगुणितं
मध्यार्कव्यासभाजितम् ।
विशोध्य लब्धं सूच्या तु तमो लिप्तास्तु
पूर्ब्बवत् ॥
भानोर्भार्द्धे महीच्छाया तत्तुल्येऽर्कसमेऽपि
वा ।
शशाङ्कपाते ग्रहणं कियद्भागाधिकोनके ॥
तुल्यौ राश्यादिभिः
स्यातामभावास्यान्तकालकौ ।
सूर्य्येन्दुपौर्णमास्यन्ते भार्द्धे भागादिकौ
समौ ॥
गतस्य पर्वनाडीनां स्वफलेनोनसंयुतौ ।
समलिप्तौ भवेतां तौ
पातस्तात्कालिकोऽन्यथा ॥
छादको भास्करस्येन्दुरधःस्थो घनवद्भवेत्
।
भूच्छायां प्राङ्मुखश्चन्द्रो विशत्यस्य
भवेदसौ ॥
तात्कालिकेन्दुविक्षेपं
छाद्यच्छादकमानयोः ।
योगार्द्धात् प्रोज्झ्य यच्छेषं तावच्छन्नं
तदुच्यते ॥
यद्ग्राह्यमधिके तस्मिन् सकलं
न्यूनमन्यथा ।
योगार्द्धादधिके न स्याद्विक्षेपे ग्राससम्भवः
॥
ग्राह्यग्राहकसंयोगवियोगौ दलितौ पृथक् ।
विक्षेपवर्गहीनाभ्यां तद्वर्गाभ्यामुभे पदे ॥
षष्ट्या संगुण्य
सूर्य्येन्डोर्भुक्त्यन्तरविभाजिते ।
स्यातां स्थितिविमर्दार्द्धे नाडिकादिफले
तयोः ॥
स्थित्यर्द्ध नाडिकाभ्यस्ता गतयः षष्टि
भाजिताः ।
लिप्तादि प्रग्रहे शोध्यं मोक्षे देयं पुनः पुनः
॥
तद्विक्षेपैः स्थितिदलं विमर्दार्द्धं तथासकृत्
।

गुणितग्रासाङ्कात् चतुर्म्मिश्रितग्रासाङ्केन लब्धं
दण्डादिकं स्थितिदण्डादेरर्द्धं भवति । तत् पौर्ण-
मासीयदण्डादिषु हीनं सत् स्पर्शकालः । युक्तं
सत् मुक्तिकालः द्विगुणितं तत् स्थितिदण्डादि-
कालः स्यात् ॥ * ॥
चन्द्रमण्डलस्य स्पर्शादिदिग्ज्ञानम् ।
पूर्ब्बोक्तशरे याम्ये सति आकाशे चन्द्रमण्डलस्य
अग्निकोणे स्पर्शो नैरृ तकोणे मुक्तिश्च स्यात् ।
शरे सौम्ये सति ईशानकोणे स्पर्शः वायुकोणे
मोक्षः । इति चन्द्रग्रहणम् ॥ * ॥
सूर्य्यग्रहणे अक्षो यथा ।
स्वदेशविषुवच्छाया
द्विः स्थाप्या । एकस्याः षड्गुतेनान्या युक्ता
सती भागादिर्याम्याक्षः स्यात् ॥ * ॥ सूर्य्य-
ग्रहणोपयोगिनतमाह । दिनार्द्धामावस्ययो-
र्दण्डादीनां यदन्तरं तत् अंशादिकं नतनामकं
स्यात् ॥ * ॥ सूर्य्यग्रहणोपयोगि लम्बनं यथा ।
द्विगुणनतसमसङ्ख्यकखण्डोग्राह्यः खण्डान्तर-
गुणितशेषात् षष्टिलब्धयुक्तः सन् स्फुटलम्बनं
अंशादिकं भवति ॥ * ॥ सूर्य्यग्रहणे फलं यथा ।
दिनपूर्ब्बपरार्द्धक्रमेण
षड्गुणितनतयुक्तलम्बन-
सहितस्फुटरवौ षड्राश्यधिके षड्राशीन् त्यक्त्वा
त्रिंशता गुणितो यदि नवत्या अधिको भवति
तदा अशीत्युत्तरशतात् हीनः कार्य्यः । त्रिगु-
दण्डादि स्यात् ॥ * ॥ दिवारात्र्योः परार्द्धे यदि
ग्रहणं भवति तदा अमावस्यापौर्णमास्यो-
र्दण्डादिः स्फुटलम्बनयुक्तः कार्य्यः ॥ गणिताप्त-
कालात् हीनातिरिक्ते काले यदि ग्रहणं स्यात्
तत् औत्पातिकं भवेत् ॥ * ॥ ग्रहणे मण्डलस्य
सामान्यवर्णो यथा । विम्बस्य वैवर्ण्यं अंशुहानि-
स्तमोवृतिः खण्डनमल्पता वा शुक्लारुणश्यामल-
पीतचित्रैः पटाद्यैः रोध इव वेष्टनं वा भवति
॥ * ॥
अपर्व्वजं ग्रहणं ईतिव्यसनार्त्तिकारि स्यात्
तदा दिशश्च विरूपाः स्युः ॥ * ॥ ग्रासाङ्गुलि-
मानज्ञानम् । दशगुणितग्रासाङ्कात् मानद्वया-
र्द्धेन लब्धं चन्द्रसूर्य्ययोर्ग्रासस्य गताङ्गुलाद्यं
भवति । सूर्य्यस्य त्र्यङ्गुलमपि ग्रासोऽदृश्यो
भवति । चन्द्रस्य सार्द्धाङ्गुलः सुदर्शः यदि षोड-
शाङ्गुलाधिको भवति तदा सर्व्वग्रासः ॥ *
॥
ग्रहणे मण्डलवर्णो यथा । अल्पे ग्रहणे धूम्राभं
समग्रे कपिलं अर्द्धे कृष्णाभम् । इति सूर्य्य-
ग्रहणम् ॥ इति सिद्धान्तमञ्जरीसम्मतम्॥
(अधुना सूर्य्यसिद्धान्तमतमुच्यते तत्र चन्द्र-
ग्रहणाधिकारो यथा, --
“सार्द्धानि षट्सहस्राणि योजनानि विवस्वतः ।
विष्कम्भो मण्डलस्येन्दोः सहाशीत्या चतुःशतम् ॥
स्फुटस्वभुक्त्या गुणितौ मध्यभुक्त्योद्धृतौ स्फुटौ ।
रवेः स्वभगणाभ्यस्तः शशाङ्कभगणोद्धृतः ॥
संसाध्यमन्यथा पाते तल्लिप्तादिफलं स्वकम् ॥
स्फुटतिथ्यवसाने तु मध्यग्रहणमादिशेत् ।
स्थित्यर्द्धनाडिकाहीनेग्रासो मोक्षस्तु संयुते ॥
तद्वदेव विमर्दार्द्धनाडिकाहीनसंयुते ।
निमीलनोन्मीलनाख्ये भवेतां सकलग्रहणे ॥
इष्टनाडीविहीनेन स्थित्यर्द्धेनार्कचन्द्रयोः ।
भुक्त्यन्तरं समाहन्यात् षष्ट्याप्ताः कोटिलिप्तिकाः ॥
भानोर्ग्रहे कोटिलिप्ता मध्यस्थित्यर्द्धसङ्गुणाः ।
स्फुटस्थित्यर्द्धसम्भक्ताः स्फुटाः कोटिकलाः स्मृताः ॥
क्षेपो भुजस्तयोर्वर्गयुतेर्मूलं श्रवस्तु तत् ।
मानयोगार्द्धतः प्रोज्झ्य ग्रासस्तात्कालिको भवेत् ॥
मध्यग्रहणतश्चोर्द्धमिष्टनाडीर्विशोधयेत् ।
स्थित्यर्द्धान्मौक्षिकाच्छेषं प्राग्वच्छेषं तु मौक्षिके ॥
ग्राह्यग्राहकयोगार्द्धाच्छोध्याः स्वच्छन्नलिप्तिकाः ।
तद्वर्गात् प्रोज्झ्य तत्कालविक्षेपस्य कृतिम्पदम् ॥
कोटिलिप्ता रवेः स्पष्टस्थित्यर्द्धेनाहता हृताः ।
मध्येन लिप्तास्तन्नाड्यः स्थितिवद् ग्रांसनाडिकाः ॥
नतज्याक्षज्ययाभ्यस्ता त्रिज्याप्ता तस्य कार्मुकम् ।
वलनांशाः सौम्ययाम्याः पूर्ब्बापरकपालयोः ॥
राशित्रययुताद्ग्राह्यात् क्रान्त्यंशैर्दिक्समैर्युताः ।
भेदेऽन्तराज्ज्या वलना सप्तत्यङ्गुलभाजिता ॥
सोन्नतं दिनमध्यर्द्धं दिनार्द्धाप्तं फलेन तु ।
छिन्द्याद्विक्षेपमानानि तान्येषामङ्गुलानि तु ॥
इति सूर्य्यसिद्धान्ते चन्द्रग्रहणाधिकारः ॥

| | | |
|---|---|---|
| णितदशलब्धैः खण्डो ग्राह्यः<br>खण्डान्तरगुणित-<br>शेषात् दशलब्धयुक्तः सन् फलं भवति ॥ *<br>॥<br>सूर्य्यग्रहणे नतिर्यथा । अक्षफलयोर्योगो<br>नतिः<br>स्यात् षड्राशिन्यूने अक्षफलान्तरनतिः सा<br>फले<br>अधिके सति सौम्या अक्षे अधिके सति<br>याम्या<br>भवति ॥ * ॥ सूर्य्यग्रहणे शरो यथा ।<br>मध्य- | शशाङ्ककक्षागुणितो भाजितो वार्ककक्षया ।<br>विष्कम्भश्चन्द्रकक्षायां तिथ्याप्ता<br>मानुलिप्तिका ॥<br>स्फुटेन्दभुक्तिभूव्यासगुणिता मध्ययोद्धृता<br>।<br>लब्धं सूची महीव्यासस्फुटार्कश्रवणान्तरम्<br>॥ | अथ सूर्य्यग्रहणाधिकारः ।<br>“मध्यलग्नसमे भानौ हरिजस्य न सम्भवः<br>।<br>अक्षोदङ्मध्यभक्रान्तिसाम्येनावनतेरपि ॥<br>देशकालविशेषेण यथावनतिसम्भवः ।<br>लम्बनस्यापि पूर्ब्बान्यदिग्वशाच्च<br>तथोच्यते ॥<br>लग्नं पर्व्वान्तनाडीनां कुर्य्यात्<br>स्वैरुदयासुभिः ।<br>तज्ज्यान्त्यापक्रमज्याघ्नी<br>लम्बज्याप्तोदयाभिधा ॥ |

तदा लङ्कोदयैर्लग्नं मध्यसंज्ञं यथोदितम् ।
तत्क्रान्त्यक्षांशसंयोगो
दिक्साम्येऽन्तरमन्यथा ॥
शेषं नतांशास्तन्मौर्व्वी मध्यज्या
साभिधीयते ।
मध्योदयज्यययाभ्यस्ता त्रिज्याप्ता वर्गितं
फलम् ॥
मध्यज्यावर्गविश्लिष्टं दृक्क्षेपः शेषतः पदम्
।
तत्त्रिज्यावर्गविश्लेषान्मूलं शङ्कुः स
दृग्गतिः ॥
नतांशबाहुकोटिज्ये स्फुटे दृक्क्षेपदृग्गती ।
एकज्यावर्गतश्छेदो लब्धं दृग्गतिजीवया ॥
मध्यलग्नार्कविश्लेषज्या छेदेन विभाजिता
।
रवीन्द्वोर्लम्बनं ज्ञेयं प्राक्
पश्चाद्घटिकादिकम् ॥
मध्यलग्नाधिके भानौ तिथ्यन्तात्
प्रविशोधयेत् ।
धनमूनेऽसकृत् कर्म्म यावत् सर्व्वं
स्थिरीभवेत् ॥
दृक्क्षेपः
शीततिग्मांशोर्मध्यभुक्त्यन्तराहतः ।
तिथिघ्नत्रिज्यया भक्तो लब्धं
सावनतिभवेत् ॥
दृक्क्षेपात् सप्ततिहृताद्भवेद्वावनतिः फलम्
।
अथवा त्रिज्यया भक्तात्
सप्तसप्तकसङ्गुणात् ॥
मध्यज्या दिग्वशात् सा च विज्ञेया
दक्षिणोत्तरा ।
सेन्दुविक्षेपदिक्साम्ये युक्ता
विश्लेषितान्यथा ॥
तथा स्थितिविमर्द्दार्द्धग्रासाद्यंतु यथोदितम्
।
प्रमाणं वलनाभीष्टग्रासादि हिमरश्मिवत् ॥
स्थित्यर्द्धोनाधिकात्प्राग्वत्
तिथ्यन्ताल्लम्बनं पुनः ।

पार्श्वोरुवङ्क्षणग्रीवारुगभीक्ष्णंविसूचिका ॥
हृत्पीडाकार्श्यदौर्ब्बल्यं वैरस्यं परिकर्त्तिका ।
गृद्धिः सर्व्वरसानाञ्च मनसः सदनं तथा ॥
जीर्णे जीर्य्यति चाध्मानं भुक्ते स्वास्थ्यमुपैति च
।
स वातगुल्महृद्रोगप्लीहाशङ्कीच मानवः ॥
चिराद्दुःखं द्रवं शुष्कं तन्वामं शब्दफेनवत् ।
पुनः पुनः सृजेद्वर्च्चः श्वासकासार्द्दितोऽनिलात्
॥”
पैत्तिकस्य तस्य निदानरूपे ।
“कट्वजीर्णविदाह्याम्लक्षाराद्यैः पित्तमुल्वणम् ।
आप्लावयद्धन्त्यनलं जलं तप्तमिवानलम् ॥
सोऽजीर्णं नीलपीताभं पीताभः सार्य्यते द्रवम् ।
पूत्यम्लोद्गारहृत्कण्ठदाहारुचितृडर्द्दितः॥”
श्लैष्मिकस्य तस्य निदानरूपे ।
“गुर्व्वतिस्निग्धशीतादिभोजनादतिभोजनात्।
भुक्तमात्रस्य च स्वप्नाद्धन्त्यग्निं कुपितः कफः
॥
तस्यान्नं पच्यते दुःखं हृल्लासच्छर्द्यरोचकाः ।
आस्योपदेहमाधुर्य्यकासष्ठीवनपीनसाः ॥
हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरु ।
दुष्टो मधुर उद्गारः सदनं स्त्रीष्वहर्षणम् ॥
भिन्नामश्लेष्मसं सृष्टगुरुवर्च्चःप्रवर्त्तनम् ।
अकृशस्यापि दौर्ब्बल्यमालस्यञ्च कफात्मके ॥
पृथग्वांतादिनिर्द्दिष्टं हेतुलिङ्गसमागमे ।
त्रिदोषं निर्दिशेदेवं तेषां वक्ष्यामि भेषजम् ॥”
तस्यासाध्यस्य लक्षणं यथा, --
“लिङ्गैरसाध्यग्रहणीविकारो
यैस्तैरतीसारगदो न सिध्येत् ।
वृद्धस्य नूनं ग्रहणीविकारो
हत्वा तनुं नो विनिवर्त्तते च ॥”
इति माधवकरः ॥
तस्य चिकित्सा यथा, गारुडे १७४ अध्याये ।
“चिकित्साथ ग्रहण्यास्तु ग्रहणी चाग्निनाशिनी ।
चित्रककक्वाथकल्काभ्यांग्रहणीघ्नं शृतं हविः
॥” * ॥
हरिरुवाच ।
“मरीचं शृंङ्गवेरञ्च कुटजत्वचमेव च ।
पानाच्च ग्रहणी नश्येत् शशाङ्ककृतशेखर ! ॥”

“गव्यं दध्युत्तमं बल्यं पाके स्वादु
रुचिप्रदम् ।
पवित्रं दीपनं स्निग्धं पुष्टिकृत्
पवनापहम् ॥
उक्तं दध्नामशेषाणां मध्ये गव्यं
गुणाधिकम् ॥”
अथ महिषीदधिगुणाः ।
“माहिषं दधि सुस्निग्धं श्लेष्मलं
वातपित्तनुत् ।
स्वादुपाकमभिष्यन्दि वृष्यं गुर्व्वस्र
दूषणम् ॥”
अथ छागीदधिगुणाः ।
“आजं दध्युत्तमं ग्राहि लघु
दोषत्रयापहम् ।
शस्यते श्वासकासार्शः-क्षयकार्श्येषु
दीपनम् ॥”
उत्तमं ग्राहिणां मध्ये श्रेष्ठं इत्यर्थः ॥
अथ तक्रस्य भेदाः ।
“तक्रन्तु
घोलमथितोदश्वित्तक्रप्रभेद्दतः ।
सुश्रुताद्यैर्मुनिश्रेष्ठैश्चतुर्द्धा
परिकीर्त्तितम् ॥
ससरं निर्ज्जलं घोलं
मथितन्त्वसरोदकम् ।
तक्रं पादजलं
प्रोक्तमुदश्विच्चार्द्धवारिकम्॥
वातपित्तहरं घोलं मथितं कफपित्तनुत्
।
उदश्वित् कफदं बल्यं श्रमघ्नं परमं
मतम् ॥”
अथ तक्रस्य गुणाः ।
“तक्रं ग्राहि कषायाम्लं मधुरं दीपनं
लघु ।
वीर्य्योष्णं बलदं वृष्यं प्रीणनं
वातनाशनम् ॥
यान्युक्तानि दधीन्यष्टौ तद्गुणं
तक्रमादिशेत् ।
ग्रहण्यादिमतं तक्रं पथ्यं संग्राहि
लाघवात् ॥

ग्रासमोक्षोद्भवं साध्यं तन्मध्यहरिजान्तरम्
॥
प्राक्कपालेऽधिकन्मध्याद्भवेत् प्राग् ग्रहणं यदि ।
मौक्षिकं लम्बनं हीनं पश्चार्द्धे तु विपर्य्ययः
॥
तदा मोक्षस्थितिदले देयं प्रग्रहणे तथा ।
हरिजान्तरकं शोध्यं यत्रैतत् स्याद्विपर्य्ययः
॥
एतदुक्तं कपालैक्ये तद्भेदे लम्बनैकता ।
स्वे स्वे स्थितिदले योज्या विमर्दार्द्धेऽपि चोक्तवत् ॥”
इति सूर्य्यसिद्धान्ते सूर्य्यग्रहणाधिकारः ॥)

**ग्रहणिः**, स्त्री, (गृह्णाति आक्रमते उदरभङ्गादि-
रूपेण नाडीविशेषावच्छिन्नं शरीरमिति । ग्रह
ञ उपादाने + “ग्रहेरनिः ।” उणां । ५ ।
६७ ।
इति अनिः णत्वं च ।) ग्रहणीरोगः ।
इत्यमर-
टीकायां रायमुकुटः ॥

**ग्रहणी**, स्त्री, (ग्रहणि + “कृदिकारान्तादक्तिनः ।”
इति ङीष् ।) अग्न्यधिष्ठाननाडी । स्वनाम-
ख्यातरोगः । तस्य निदानसम्प्राप्ती यथा, --
“अतीसारे निवृत्तेऽपि मन्दाग्नेरहिताशिनः
।
भूयः सन्दूषितो वह्निर्ग्रहणीमपि दूषयेत् ॥
एकैकशः सर्व्वशश्च दोषैरत्यर्थमूर्च्छितैः ।
सा दुष्टा बहुशो भुक्तमाममेव विमुञ्चति ॥
पक्वं वा सरुजं पूति मुहुर्ब्बद्धं मुहुर्द्रवम् ।
ग्रहलीरोगमाहुस्तमायुर्व्वेदविदो जनाः ॥”
* ॥
तस्य पूर्ब्बरूपं यथा, --
“पूर्ब्बरूपन्तु तस्येदं तृष्णालस्यं बलक्षयः
।
विदाहोऽन्नस्य पाकश्च चिरात् कायस्य गौरवम् ॥”
तस्य वातिकस्य निदानरूपे ।
“कटुतिक्तकषायातिरूक्षसन्दुष्टभोजनैः ।
इति तत्रैव १८७ अध्यायः ॥
“अङ्कोठमूलकर्षार्द्धं पिष्टं तण्डुलवारिणा ।
सर्व्वातीसारग्रहणीं पीतं हरति भूतप ! ॥
मरीचशुण्ठीकुटजत्वक्चूर्णन्तु गुडान्वितम् ।
क्रमात्तत् द्विगुणं पीतं ग्रहणीव्याधिनाशनम् ॥”
इति तत्रैव १८९ अध्यायः ॥ * ॥
अथ सामान्यग्रहणीरोगस्य चिकित्सा ।
“ग्रहणीमाश्रितं रोगमजीर्णवदुपाचरेत् ।
लङ्घनैर्द्दीपनीयैश्च सदातीसारभेषजैः ॥
दोषं सामं निरामञ्च विद्यादत्रातिसारवत् ।
अतीसारोक्तविधिना तस्यामञ्च विपाचयेत् ॥
पेयादिपटुलघ्वन्नं पञ्चकोलादिभिर्युतम् ।
दीपनानि च तक्रञ्च ग्रहण्यां योजयेद्भिषक् ॥
कपित्थविल्वचाङ्गेरीतक्रदाडिमसाधिता ।
यवागूः पाचयत्यामं शकृत् संवर्त्तयत्यपि ॥”
सं वर्त्तयति घनीकरोति ॥ * ॥
अथ तक्रम् । तत्र गोदधिगुणाः ।
वातघ्नमम्लसान्द्रत्वात् सद्यस्कं त्वविदाहि च ।
किञ्च स्वादु विपाकित्वान्न च पित्तप्रकोपणम् ॥
कषायोष्णविकारित्वाद्रौक्ष्याच्चैव्म कफे हितम् ॥”
अथोद्धृतस्तोकोद्धृतानुद्धृतघृतस्य तक्रस्य गुणाः
“समुद्धृतघृत तक्रं पथ्यं लघु विशेषतः
।
स्तोकोद्धृतघृतं तस्माद्गुरु वृष्यं कफापहम् ॥
अनुद्धृतघृतं सान्द्रं गुरु पुष्टिकफप्रदम्
॥”
अथ दोषविशेषे तक्रविशेषाः ।
“वातेऽम्लसैन्धवोपेतं पित्ते स्वादु सशर्करम् ।
पिबेत्तक्रं कफे चापि क्षारत्रिकटुसंयुतम्
॥
हिङ्गुजीरयुतं घोलं सैन्धवेनावधूलितम्
।
ग्रहण्यर्शोऽतिसारघ्नं भवेद्वातहरं परम्
॥
रोचनं पुष्टिदं बल्यं वस्तिशूलविनाशनम् ॥”
अथामपक्वतक्रगुणाः ।
“तक्रमामं कफं कोष्ठे हन्ति कण्ठे करोति च ।
पीनसश्वासकासादौ पक्वमेव विशिष्यते ॥” * ॥
अथ तक्रस्य निषेधः ।
“नैव तक्रं क्षते दद्यान्नोष्णकाले न दुर्ब्बले ।
न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके
॥” * ॥
अथ तक्रस्य गुणोत्कर्षः ।
“न तक्रसेवी व्यथते कदाचि-
न्न तक्रदग्धाः प्रभवन्ति रोगाः ।
यथा सुराणाममृतं सुखाय
तथा नराणां भुवि तक्रमाहुः ॥” * ॥

| | | |
|---|---|---|
| पसितानशनात्यध्ववेगनिग्रहमैथुनैः ॥<br>मारुतः कुपितो वह्निं संछाद्य कुरुते गदान्-<br>।<br>तम्यान्नं पच्यते दुःखं शुक्तपाकं खराङ्गता<br>॥<br>कण्ठास्यशोषः क्षुत् तृष्णा तिमिरं कर्णयोः<br>स्वनः । | | “मुद्गयूषं रसं तक्रं<br>धान्यजीरकसंयुतम् ।<br>सैन्धवेनान्वितं दद्यात् षड्यूषमिति<br>कीर्त्तितम् ॥”<br>रसं लघु ग्राहि मांसभवरसम् । इति<br>षड्यूषम् ॥<br>“कर्षं गन्धमर्द्धपारदमुमे कुर्य्याच्छुभां<br>कज्जलीं<br>त्र्यक्षं त्र्यूषणतश्च पञ्चलवणं सार्द्धञ्च<br>कर्षं पृथक् ।<br>भृष्टं हिङ्गु च जीरकद्वययुतं<br>सर्व्वार्द्धभङ्गान्बितं |

खादेट्टङ्कमितं प्रवृत्तिगदवांस्तक्रस्य विल्वेन च ॥”
इति लघुलाईचूर्णम् ॥ * ॥
“त्रिकटु त्रिफला चैव विडङ्गं जीरकद्वयम् ।
भल्लातकं यमानी च हिङ्गु लवणपञ्चकम् ॥
गृहधूमवचाकुष्ठं रसगन्धकमभ्रकम् ।
क्षारत्रयाजमोदा त्त चित्रकं गजपिप्पली ॥
मुस्ता मोचरसं पाठा लवङ्गं जातिपत्रकम् ।
समभागकृतञ्चैषां चूर्णं श्लक्ष्णं विनिर्म्मितम् ॥
शक्राशनस्य चूर्णन्तु चूर्णतुल्यं प्रदापयेत् ॥
मन्दाग्निकासदुर्न्नामप्लीहपाण्डरुचिज्वरान् ।
विष्टम्भं संग्रहं शूलं हन्यान्नानातिसारजित् ॥
आमवातापहं बल्यं सूतिकादोषनांशनम् ।
वर्ज्जनीयं माषमम्लं स्नानं पिशितभोजनम् ॥
पथ्यं काञ्जिकमत्रापि दधि तक्रमथापि वा ।
बृहल्लाईचूर्णमिदं लाईभाषितमुत्तमम् ॥”
इति बृहल्लाईचूर्णम् ॥ * ॥
“जातीफललवङ्गैलापत्रत्वङ्नागकेशरैः ।
कर्पूरचन्दनतिलत्वक्क्षीरीतगरामलैः ॥
तालीसपिप्पलीपथ्यास्थूलजीरकचित्रकैः ।
शुण्ठीविडङ्गमरिचैः समभागविचूर्णितैः ॥
यावन्त्येतानि सर्व्वाणि दद्याद्भङ्गां च तावतीम् ।
सर्व्वचूर्णसमानांशा प्रदेया शुभ्रशर्करा ॥
कर्षमात्रमिदं खादेन्मधुनाप्लावितं जनः ।
नाशयेत् ग्रहणीं कासं क्षयं श्वासमरोचकम् ॥”
इति जातीफलादिचूर्णम् ॥ * ॥
“चित्रकं पिप्पलीमूलं क्षारौलवणपञ्चकम् ।
ओषं हिङ्ग्वजमोदाञ्च चव्यं चैकत्र चूर्णयेत् ॥
वटिका मातुलुङ्गस्य रसैर्व्वा दाडिमस्य वा ।
कृता विपाचयत्यामं प्रदीपयति चानलम् ॥”
क्षारौ स्वर्ज्जिका यवक्षारश्च ।
लवणपञ्चकमिति
सैन्धवं रुचकं चैव विडं सामुद्रिकं गडमिति ।
व्योषं शुण्ठीपिप्पलीमरिचानि । अजमोदात्र यवानिका । मातुलुङ्गं बीजपूरकम् । इति चित्रकादिवटिका ॥ * ॥
“श्रीफलशलाटुः कल्को नागरचूर्णेन मिश्रितः सगुडः ।
सोऽतिप्रवृद्धचिरजग्रहणीविकारं सामं सशोणितमसाध्यमपि क्षिणोति ॥”
मोचो मीचरसः । क्षिणोति हन्ति ।
“प्रस्थत्रये त्वामलकीरसस्य
शुद्धस्य दत्त्वार्द्धतुलां गुडस्य ।
चूर्णीकृतैर्ग्रन्थिकजीरचव्य-
व्योषेभकृष्णाहवुषाजमोदैः ॥
विडङ्गसिन्धूत्रिफलायवानी-
पाठाग्निधान्यैश्च पलप्रमाणैः ।
दत्त्वा त्रिवृच्चूर्णपलानि चाष्टा-
वष्टौ च तैलस्य पचेद्यथावत् ॥
तं भक्षयेदक्षफलप्रमाणं
यथेष्टचेष्टस्त्रिसुगन्धियुक्तम् ।
अनेन सर्व्वे ग्रहणीविकाराः
सश्वासकासस्वरभेदशोथाः ॥
शाम्यन्ति चायं चिरमन्तरग्ने-
र्हतस्य पुंस्त्वस्य च वृद्धिहेतुः ।
स्त्रीणान्तु बन्ध्यामयनाशनः स्यात्
कल्याणको नाम गुडः प्रसिद्धः ॥
त्नैले मनाक् त्रिवृद्भृष्टा त्रिसुगन्धि पलं पलम् ।
सिद्धे निधेयमत्रैव गुडे कल्याणपूर्ब्बके ॥”
इति कल्याणगुडः ॥ * ॥
“पिप्पली पिप्पलीमूलं चित्रकं गजपिप्पली ।
त्रिफला चाजमोदा च नलिनी जीरकस्तथा ।
सैन्धवं रौमकञ्चापि सामुद्रं रुचकं विडम् ॥
आरग्बधश्च त्वक्पत्रं सूक्ष्मैला चोपकुञ्चिका ।
शुण्ठीशक्रयवाश्चैव प्रत्येकं कर्षसम्मिताः ॥
मृद्वीकायाः पलान्यत्र चत्वारि कथितानि हि ।
त्रिवृतायाः पलान्यष्टौ गुडस्यार्द्धतुला तथा ॥
औडुम्बरं चामलकं वादरं वा यथाफलम् ।
तावन्मात्रमिदं खादेद्भक्षयेद्वा यथानलम् ॥
अनेनैव विधानेन प्रयुक्तश्च दिने दिने ।
निहन्ति ग्रहणीरोगान् कुष्ठान्यर्शोभगन्दरान् ॥
ज्वरमानाहहृद्रोगगुल्मोदरविसूचिकाः ।
कामलां पाण्डुरोगञ्च प्रमेहांश्चैव विंशतिम् ॥
वातशोणितवीसर्प्दद्रुपक्ष्महलीमकान् ।
वातपित्तकफान् सर्व्वान् दुष्टान् शुद्धान् समाचरेत् ॥
व्याधिक्षीणा वक्षःक्षीणाः स्त्रीषु क्षीणाश्च ये नराः ।
तेभ्यो हितो गुडोऽयं स्यात् बन्ध्यानामपि पुत्त्रदः ॥
वृष्यो बल्यो बृंहणश्च वयसः स्थापनः परः ॥”
इति कुष्माण्डकल्याणकगुडः ॥ * ॥
अतीसाराधिकारलिखितंविल्वतैलं चात्र हितम् । इति ग्रहणीरोगाधिकारः । इति भावप्रकाशः ॥ (सनिदानलक्षणादिकं चिकित्-
सितञ्चास्य यथा, --
“सामं सान्नमजीर्णेऽन्ने जीर्णे पक्वन्तु नैव वा ।
अकस्माद्वा मुहुर्बद्धमकस्माच्छिथिलं मुहुः ॥
चिरकृद्ग्रहणीदोषः सञ्चयाच्चोपवेशयेत् ।
स चतुर्धा पृथग् दोषैः सन्निपाताच्च जायते ॥
प्राग्रूपं तस्य सदनं चिरात् पचनमम्लकः ।
प्रसेको वक्त्रवैरस्य मरुचिस्तृट्क्लमो भ्रमः ॥
आनद्धोदरता च्छर्द्दिः कर्णक्ष्वेडोऽन्त्रकूजनम् ।
सामान्यं लक्षणं कार्श्यं धूमकस्तमको ज्वरः ॥
मूर्च्छा शिरोरुग्विष्टम्भः श्वयथुः करपादयोः ।
तत्रानिलात्तालुशोषस्तिमिरंकर्णयोः स्वनः ॥
पार्श्वोरुवङ्क्षणग्रीवारुजाभीक्ष्णंविसूचिका ।
रसेषु गृद्धिः सर्व्वेषु क्षुत्तृष्णा परिकर्त्तिका ॥

ग्रहणीगदमत्युग्रं तक्रभुजा शीलितो जयति ॥"
श्रीफलशलाटुः विल्वस्यामं फलम् ।
गुडस्यात्र
भागद्वयम् । इति विल्वकल्कः ॥ * ॥
"चतुष्पलं सुधाकाण्डं त्रिपलं लवणत्रयम् ।
वार्त्ताकोः कुडवञ्चार्कमूलाद्विल्वे तथानलात् ॥
दग्ध्वा द्रवेण वार्त्ताकोर्गुटिका भोजनोत्तरम् ।
भुक्ता भुक्तं पचत्याशु नाशयेद्ग्रहणीगदम् ॥
कासं श्वासं तथार्शांसि विसूचीञ्च हृदामयम्
॥"
इति वार्त्ताकुगुटिका ॥ * ॥
"मुस्तकातिविषाविल्वकौटजंसूक्ष्मचूर्णितम् ।
मधुना च समालौढं ग्रहणीं सर्व्वजां जयेत् ॥"
कोटजं इन्द्रयवः । इति मुस्तकादिचूर्णम् ॥ *
॥
"श्वेतो वा यदि वा रक्तः सुपक्वो ग्रहणीगदः ।
गुडेनाधिकसर्ज्जेन भक्षितेनाशु नश्यति ॥"
सर्ज्जः राल इति लोके । इति सर्ज्जरसचूर्णम्
॥ * ॥
"विल्वाब्दशक्रयवबालकमोचसिद्ध
माजं पयः पिबति यो दिवसत्रयेण ।
तिलतैलपलान्यष्टावामलक्या रसस्य
तु ।
प्रस्थत्रयमिदं सर्व्वं शनैर्मृद्वग्निना
पचेत् ॥
औडम्बरं चामलकं वादरं वा
यथाफलम् ।
तावन्मात्रमिदं खादेद्भक्षयेद् वा
यथानलम् ॥
निखिलान् ग्रहणीरोगान् प्रमेहांश्चैव
विंशतिम् ।
उरोघातं प्रतिश्यायं दौर्ब्बल्यं
वह्निसंक्षयम् ॥
ज्वरानपि हरेत् सर्व्वान् कुर्य्यात्
कान्तिं मतिं
स्वरम् ।
पिचुपाठान्वयाद्धन्ति रक्तपित्तञ्च
विग्रहम् ॥
धातुक्षीणो वयःक्षीणः स्त्रीषु क्षीणः
क्षयी च यः ।
तेभ्यो हितश्च बन्ध्यायै
महाकल्याणको गुडः ॥"
इति महाकल्याणकगुडः ॥ * ॥
"कुष्माण्डानां सुपक्वानां स्विन्नानां
निष्कुल-
त्वचाम् ।
सर्पिः प्रस्थे पलशतं ताम्रपात्रे शनैः
पचेत् ॥
पिप्पली पिप्पलीमूलं चित्रकं
गजपिप्पली ।
धान्यकानि विडङ्गानि नागरं
मरिचानि च ॥
त्रिफला चाजमोदा च
कलिङ्गाजाजिसैन्धवम् ।
एकैकस्य पलं चैकं त्रिवृतोऽष्टौ
पलानि च ॥
तैलस्य च पलान्यष्टौ गुडात्
पञ्चाशदेव तु ।
आमलक्या रसस्यात्र
प्रस्थत्रयमुदीरितम् ॥
तावत् पाकं प्रकुर्व्वीत मृदुना वह्निना
भिषक् ।
जीण जीर्य्यति चाध्मानं भुक्ते स्वास्थ्यं
समश्नुते ।
वातहृद्रोगगुल्मार्शः प्लीहपाण्डुत्वशङ्कितः ॥
चिराद्दुःखं द्रवं शुष्कं तन्वामं शब्दफेनवत् ।
पुनः पुनः सृजेद्वर्च्चः पायुरुक्
श्वासकासवान् ॥
पित्तेन नीलं पीताभं पीताभः सृजति द्रवम् ।
पूत्यम्लोद्गारहृत्कण्ठदाहारुचितृडर्द्दितः॥
श्लेष्मणा पच्यते दुःखमन्नं छर्द्दिररोचकः ।
आस्योपदेहनिष्ठीवकासहृल्लासपीनसाः॥
हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरु ।
उद्गारा दुष्टमधुरः सदनं स्त्रीष्वहषणम् ॥
भिन्नामश्लष्मसंसृष्टगुरुवर्च्चःप्रवर्त्तनम् ।
अकृशस्यापि दौर्ब्बल्यं सर्व्वजे सर्व्वसङ्करः ॥
विभागेऽङ्गस्य ये चोक्ता विषमाद्यास्त्रयोऽग्नयः
।
तेऽपि स्युर्ग्रहणीदोषाः समस्तु
स्वास्थ्यकारणम् ॥
वातव्याध्यश्मरीकुष्ठमेहोदरभगन्दराः ।
अर्शांसि ग्रहणीत्यष्टौ महारोगाः सुदुस्तराः
॥"
इति वाभटे निदानस्थानेऽष्टमेऽध्याये ॥
चिकित्सास्या यथा, --
"ग्रहणीमाश्रितं दोषमजीर्णवदुपाचरेत् ।
अतीसारोक्तविधिना तस्यामञ्च विपाचयेत् ॥
अन्नकाले यवाग्वादिपञ्चकोलादिभिर्युतम् ।
वितरेत् पटुलघ्नन्नं पुनर्योगांश्च दीपनान् ॥

| | | |
|---|---|---|
| | यावत् दर्व्वीप्रलेपः<br>स्यात्तदैनमवतारयेत् ॥ | |

दद्यात् सातिविषां पेयामामे साम्लां सनागराम् ।
पानेऽतिसारविहितं वारितक्रं सुरादि च ॥
ग्रहणीदोषिणां तक्रं दीपनग्राहि लाघवात् ।
पथ्यं मधुरपाकित्वान्न च पित्तप्रदूषणम् ॥
कषायोष्णविकाशित्वाद्रूक्षत्वांच्चकफे हितम् ।
वातेस्वाद्वम्लसान्द्रत्वात् सद्यस्कमविदाहि तत् ॥”
“क्षीणक्षामशरीरस्य दीपनं स्नेहसंयुतम् ।
दीपनं बहुपित्तस्य तिक्तैर्मधुरकैर्युतम् ॥
स्नेहोऽम्ललवणैर्युक्तो बहुवातस्य शस्यते ।
स्नेहमेव परं विद्याद्दुर्ब्बलानलदीपनम् ॥
नालं स्नेहसमिद्धस्य शमायान्नं सुगुर्व्वपि ।
योऽल्पाग्नित्वात् कफे क्षीणे वर्च्चः पक्वमपि श्लथम् ॥
मुञ्चेद्यद्यौषधयुतं स पिवेदल्पशो घृतम् ।
तेन स्वमार्गमानीतः स्वकर्म्मणि नियोजितः ॥
समानो दीपयत्यग्निमग्नेः सन्धुक्षको हि सः ।
पुरीषं यश्च कृच्छ्रेण कठिनत्वाद्विमुञ्चति ॥
स घृतं लवणैर्युक्तं नरोऽन्नावग्रहं पिबेत् ।
रौक्ष्यान्मन्देऽनले सर्पिस्तैलं वा दीपनैः पिबेत् ॥
क्षारचूर्णासवारिष्टान् मन्दे स्नेहातिपानतः ।
उदावर्त्तात् प्रयोक्तव्या निरूहस्नेहवस्तयः ॥
दोषातिवृद्ध्या मन्देऽग्नौ संशुद्धोऽन्नविधिञ्चरेत् ।
व्याधिमुक्तस्य मन्देऽग्नौ सर्पिरेव तु दीपनम् ॥
अध्वोपवासक्षामत्वे यवाग्वा पाययेद्धृतम् ।
अन्नावपीडितं बल्यं दीपनं बृंहणञ्च तत् ॥
दीर्घकालप्रसङ्गात्तु क्षामक्षीणकृशान्नरान् ।
प्रसहानां रसैः साम्लैर्भोजयेत् पिशिताशिनाम् ॥
लघूष्णकटुशीधित्वाद्दीपयन्त्याशु तेऽनलम् ।
मांसोपचितमांसत्वात् परञ्च बलवर्द्धनम् ॥
प्रसेकमुखवैरस्य तमकारुचिपीडितः ।
वाताच्छूलाधिकैः पायुहृत्पार्श्वोदरमस्तकैः ॥
पित्तात् सदाहैर्गुरुभिः कफात्त्रिभिस्त्रिलक्षणैः ।
दोषवर्णनखैस्तद्वद्विण्मूत्रनयनाननैः ॥
हृत्पाण्डूदरगुल्मार्शःप्लीहाशङ्की च मानवः ।
यथा दोषोच्छ्रयन्तस्य विशुद्धस्य यथाक्रमम् ॥
पेयादिं वितरेत् सम्यग् दीपनीयोपसम्भृतम् ।
ततः पाचनसंग्राहि दीपनीयगणत्रयम् ॥
पिबेत् प्रातः सुरारिष्टस्नेहमूत्रसुखाम्बुभिः ।
तक्रेण वाथ तक्रं वा केवलं हितमुच्यते ॥
कृमिगुल्मोदरार्शोघ्नीः क्रियाश्चात्रावचारयेत् ।
चूर्णं हिङ्ग्वादिकञ्चात्र घृतं वा प्लीहनाशनम् ॥
कल्केन मगधादेश्च चाङ्गेरीस्वरसेन वा ।
चतुर्गुणेन दध्ना च घृतं सिद्धं हितं भवेत् ॥
सर्व्वथा दीपनं सर्व्वं ग्रहणीरोगिणां हितम् ॥
ज्वरादीनविरोधाच्च साधयेत्स्वैश्चिकित्सितैः ॥”
इति सुश्रुते उत्तरतन्त्रे चत्वारिंशत्तमेऽध्याये ॥)

**ग्रहणीरुक्**, [ज्] स्त्री, (ग्रहण्येव रुक् ।) ग्रहणी-रोगः । तत्पर्य्यायः । प्रवाहिका २ । इत्य-मरः । २ । ६ । ५५ ॥ ग्रहिणी ३ । इति तट्टीका ॥

**ग्रहयागः**, पुं, (ग्रहाणां ग्रहानुद्दिश्य वा यो यागः ।)

ग्रहाणां यज्ञः । तस्य शान्तिकत्वे मलमासादा-वपि कर्त्तव्यत्वं पौष्टिकत्वे तु शुद्धकाले । तस्य प्रयोगो यथा । यजमानः कृतस्नानादिः गोमयो-पलिप्ते देशे कुशासने उपविष्ट उदङ्मुखो ब्राह्मणान् स्वस्तिवाच्य संकल्प्य मन्त्रमुच्चार्य्य श्वेतसर्षपेण विघ्नकरानुत्सार्य्य सगणा-धिपषोडशमातृकापूजावसोर्द्धारावृद्धिश्राद्धानि कृत्वा स्वयं करणासामर्थ्ये ब्राह्मणान् वृणुयात् । ततो मण्डपोत्तरपूर्ब्बभागे वितस्तिद्वयविस्तृतायां वितस्त्युच्छ्रितायां उदक्प्लवायां वेद्यां रक्त-चन्दनादिना मध्ये वर्त्तुलं सूर्य्यं आग्नेय्यां श्वेत-मर्द्धचन्द्राकारं सोमं दक्षिणस्यां त्रिकोणं रक्तं मङ्गलं ऐशान्यां पीतं धनुराकारं बुधं उत्तरस्यां पीतं पद्माकारं गुरुं प्राच्यां श्वेतं चतुष्कोणं शुक्रं प्रतीच्यां श्यामं सर्पाकारं शनिं नैरृत्यां श्यामं मकराकारं राहुं वायव्यां धूम्रवर्णान् खड्गाकारान् केतून् विलिख्य स्वगृह्योक्तविधिना-ऽग्निस्थापनादिब्रह्मस्थापनपर्य्यन्तं कर्म्म कृत्वा ग्रहशब्दे लिखिततत्तद्ध्यानेन मण्डले ग्रहाना-वाह्य तेषां स्वस्ववर्णवस्त्रगन्धपुष्पादिना पूजयेत् ।
गन्धे विशेषः सूर्य्याय रक्तचन्दनं सोमाय श्वेत-चन्दनं मङ्गलाय कुङ्कुमं बुधाय सरलं गुरवे समभागेन मिश्रितानि रक्तचन्दनश्वेतचन्दन-कुङ्कुमसरलानि शुक्राय श्वेतचन्दनं शनैश्चराय कस्तूरीं राहवे पद्मकाष्ठं केतुभ्यश्च पद्मकाष्ठं दद्यात् । धूपे विशेषः । रवये गुग्गुलुं सोमाय सरलं मङ्गलाय देवदारु बुधाय घृतमिश्रित-देवदारु बृहस्पतये दशाङ्गं शुक्रायागुरुं शनै-श्चराय कालागुरुं राहवे गुडत्वचं केतुभ्यो मधुमिश्रितगुडत्वचं दद्यात् । ततोऽधिदेवता-प्रत्यधिदेवताः पूजयेत् । ततो बलिं दद्यात् । सूर्य्याय गुडौदनं सोमाय घृतपायसं मङ्गलाय पक्वयवचूर्णात्मकं यावकं बुधाय क्षीरान्नं गुरवे दध्योदनं शुक्राय घृतौदनं शनैश्चराय यवतिल-तण्डुलात्मकं कृषरं राहवे छागमांसं केतुभ्यः

स्नेहासवसुरारिष्टचूर्णक्वाथहिताशनैः ।
सम्यक्प्रयुक्तैर्देहस्य बलमग्नेश्च वर्द्धते ॥
दीप्तो यथैव स्थाणुश्च वाह्योऽग्निः
सारदारुभिः ।
सस्नेहैर्जायते तद्वदाहारैः कोष्ठकोऽनलः ॥
न भोजनेन कायाग्निर्दीप्यते नातिभोजनात्
।
यथा निरिन्धनो वह्निरल्पो
वातीन्धनान्वितः ॥
यदा क्षीणे कफे पित्तं स्वस्थाने पवनानुगम्
।
प्रवृद्धं वर्द्धयत्यग्निं तदासौ सानिलोऽनलः
॥"

इति वाभटे चिकित्सास्थाने
दशमेऽध्याये ॥

अपरं सकारणलक्षणचिकित्सितंयथा, --
"दुष्यति ग्रहणी जन्तोरग्निसादनहेतुभिः ।
अतिसारे निवृत्तेऽपि मन्दाग्नेरहिताशिनः ॥
भूयः सन्दूषितो वह्निर्ग्रहणीमभिदूषयेत् ।
तस्मात् कार्य्यः परीहारस्त्वतीसारे
विरक्तिवत् ॥
यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा
।
षष्ठी पित्तधरा नाम या कला परिकीर्त्तिता ॥
पक्वामाशयमध्यस्था ग्रहणी सा प्रकीर्त्तिता
।
ग्रहण्या बलमग्निर्हि स चापि ग्रहणीश्रितः ॥
तस्मात् सन्दूषिते वह्नौ ग्रहणी सम्प्रदुष्यति
।
तस्योत्पत्तौ विदाहान्ने
सदनालस्यतृट्क्लमाः ॥
बलक्षयोऽरुचिः कासः
कर्णक्ष्वेडान्त्रकूजनम् ।
अथ जाते भवेज्जन्तुः शूलपादकरः कृशः
॥
पर्व्वरुग्लौल्यतृट्छर्द्दिज्वरारोचकदाहवान्।
उद्गिरेच्छुक्ततिक्ताम्ललोहधूममगन्धिकम्
॥

**ग्रहणीहरं**, क्ली, (ग्रहणीं हरतीति । हृ + अच्
।)

लवङ्गम् । इति शब्दचन्द्रिका ॥
(ग्रहणी-
हारके त्रि ॥)

**ग्रहद्रुमः**, पुं, (ग्रहाख्यो द्रुमः वृक्षविशेषः ।)
शाक-

वृक्षः । इति राजनिर्घण्टः ॥

**ग्रहनायकः**, पुं, (नयतीति । नी + ण्वुल् । ततो

ग्रहाणां नायकः ।) शनिः । इति
शब्दरत्ना-
वली ॥ सूर्य्यश्च ॥

**ग्रहनाशः**, पुं, (गृह्णाति रुणद्धि मलमिति शेषः ।

कोष्ठरोधकवायुविशेषः रोगविशेषो वा
तं नाश-
यति । नश् + णिच् + अण् ।)
वृक्षविशेषः ।
इति शब्दरत्नावली ॥ छातियान इति
भाषा ॥

**ग्रहनाशनः**, पुं, (ग्रहं रोगविशेषं नाशयतीति ।

नश् + णिच् + ल्युः ।) ग्रहनाशवृक्षः
। इति
शब्दरत्नावली रत्नमाला च ॥

**ग्रहनेमिः**, पुं, (ग्रहाणां ग्रहकक्षाणां ग्रहेषु वा
नेमि-

रिव । ग्रहकक्षाधःस्थिततयाऽस्य
नेमिसादृश्य-
मिति बोध्यम् ।) चन्द्रः । इति
शब्दरत्नावली ॥

**ग्रहपतिः**, पुं, (ग्रहाणां पतिः ।) सूर्य्यः । (यथा,

महाभारते । १२ । १६८ । २५ ।
"तस्य विस्तीर्य्यते राज्यं ज्योत्स्ना
ग्रहपतेरिव ॥")
अर्कवृक्षः । इत्यमरः । १ । ३ । ३०
॥ (शिवः ।
यथा, महाभारते । १३ । १७ । ३७
।

अजाक्षीरसाधिताजकर्णरक्तमिश्रितयवतिल-
तण्डुलरूपं चित्रौदनम् । ततश्चरुं श्रपयेत् ।
ततः कुशण्डिकां समाप्य रव्यादीनां चरुहोमं
कुर्य्यात् । ततो यथाशक्ति एकैकस्याष्टाविंशति-
मष्टोत्तरशतमष्टोत्तरसहस्रंवा मधुसर्पिर्म्मिश्रि-
ताभिः सूर्य्यादीनां तत्तत्समिद्भिर्होमं कुर्य्यात् ।
समिधस्तु ।
"अर्कः पलाशः खदिरस्त्वपामार्गोऽथ पिप्पलः
।
उडुम्बरः शमी दूर्व्वा कुशाश्च समिधः क्रमात्
॥"
तत उदीच्यं कर्म्म समाप्य दक्षिणां दद्यात् ।
दक्षिणास्तु ।
"धेनुः शङ्खस्तथानड्वान् हेम वासो हयस्तथा
।
कृष्णागौरायसश्छाग एतावै दक्षिणाः स्मृताः ॥"
(अस्य यागस्य प्रयोजनं यथा,
महानिर्व्वाणतन्त्रे ।
"शान्तौ पुष्टौ महेशानि ! तथा क्रूरेऽपि कर्म्मणि
।
ग्रहयागं प्रकुर्व्वाणो वाञ्छितार्थमवाप्नुयात् ॥"

| | | |
|---|---|---|
| | "चन्द्रः सूर्य्यः शनिः केतुर्ग्रहो ग्रहपतिर्व्वरः ॥"<br>गृहस्वामी । यथा, महाभारते । १३ । ८५ । ११७ ।<br>"मम सत्रमिदं दिव्यं अहं ग्रहपतिस्त्विह ।<br>त्रीणि पूर्ब्बाण्यपत्यानि मम तानि न संशयः ॥")<br>**ग्रहपुषः**, पुं, (ग्रहान् अन्यान् सर्व्वान् पुष्णाति स्वतेजसेत्यर्थः ।) सूर्य्यः । इति हेमचन्द्रः ॥<br>**ग्रहभीतिजित्,** [द्] पुं, (ग्रहभीतिं जयतीति । जि + क्विप् ।) चीडानामगन्धद्रव्यम् । इति राजनिर्घण्टः ॥ | |

दीपिकायाञ्च । यथा, --
“शुभग्रहार्क्ववारेषु मृदुक्षिप्रध्रुवेषु च ।
शुभराशिविलग्नेषु शुभं शान्तिकपौष्टिकम् ॥
मृदगणः चित्रानुराधामृगशिरोरवत्यः । क्षिप्र-
गणो लघुगणः पुष्याश्विहस्ताः । ध्रुवगणः
रोहिण्युत्तरात्रयम् ॥)
“गोचरे वा विलग्ने वा ये ग्रहारिष्टसूचकाः ।
पूजयेत्तान् प्रयत्नेन पूजिताः स्युः शुभावहाः
॥”
इति ग्रहयागतत्त्वम् ॥
(मात्स्योक्तम् । यथा, --
“श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत्
।
वृद्ध्यायुः पुष्टिकामो वा तथैवाभिचरन् पुनः
॥
येन ब्रह्मन् ! विधानेन तन्मे निगदतः शृणु ।
सर्व्वशास्त्राण्यनुक्रम्य सङ्क्षिप्य ग्रन्थविस्तरम्
॥
ग्रहशान्तिं प्रवक्ष्यामि पुराणश्रुतिनोदिताम् ।
पुण्येऽह्नि विप्रकथिते कृत्वा ब्राह्मणवाचनम् ॥
ग्रहान् ग्रहादिदेवांश्च स्थाप्य होमं समारभेत् ।
ग्रहयज्ञस्त्रिधा प्रोक्तः पुराणश्रुतिकोविदैः ।
प्रथमोऽयुतहोमः स्याल्लक्षहोमस्ततः परम् ।
तृतीयः कोटिहोमस्तु सर्व्वकामफलप्रदः ॥
अयुतेनाहुतीनाञ्च नवग्रहमखः स्मृतः ।
तस्य तावद्विधिं वक्ष्ये पुराणश्रुतिभाषितम् ॥”
ग्रहवेदिनियमः । यथा, --
“गर्त्तस्योत्तरपूर्ब्बेण वितस्तिद्वयविस्तृताम् ।
वप्रद्वयावृतां वदिं वितस्त्युच्छ्रयसम्मिताम् ॥
संस्थापनाय दंवानां चतुरस्रामुदङ्मुखाम् ।
अग्निप्रणयनं कृत्वा तस्यामावाहयत् सुरान् ॥
देवतानां ततः स्थाप्या विंशतिर्द्वादशाधिका ।
सूर्य्यः सोमस्तथा भौमो बुधजीवसितार्कजाः
॥
राहुः केतुरिति प्रोक्ता ग्रहा लोकहितावहाः ॥”
मण्डले स्थानम् । यथा, --
“मध्ये तु भास्करं विद्याल्लोहितं दक्षिणेन तु ।
उत्तरण गुरुं विद्याद् बुधं पूब्बात्तरण न तु ॥
पूर्ब्बेण भागवं विद्यात् सोमं दक्षिणपूर्ब्बके ।
“ग्रहवर्णानि देयानि वासांसि
कुसुमानि च ।
धूपामोदोऽत्र
सुरभिरुपरिष्टादवितानकम् ॥
शोभनं स्थापयेत् प्राज्ञः
फलपुष्पसमन्वितम् ॥”
अन्यद्विववरणन्तु ग्रहयागतत्त्वे
दर्शनीयम् ॥)

**ग्रहराजः**, पुं, (ग्रहाणां राजा इति । “राजाहः
सखिभ्यष्टच् ।” ५ । ४ । ९१ ।
इति टच् ।)
सूर्य्यः । चन्द्रः । इति मेदिबी । जे
। ३२ ॥ बृह-
स्पतिः । इति शब्दरत्नावली ॥

**ग्रहाधारः**, पुं, (ग्रहाणां आधारः आश्रयः । मेधीव-
देतन्नक्षत्रमाश्रित्य
स्वस्वगत्यनुसारेण ग्रहाणां
परिभ्रमणात्तथात्वम् ।)
ध्रुवनक्षत्रम् । इति
शब्दरत्नावली ॥

**ग्रहामयः**, पुं, (ग्रहः उपदेवविशेषस्तज्जन्य आमयः
रोगभेदः ।) आवेशः । स तु
भूतादिना जात-
रोगः । इति राजनिर्घण्टः ॥

**ग्रहाशी**, [न्] पुं, (ग्रहं ग्रहजन्यदोषं अश्नाति
दूरीकरोतीति । अश् + णिनिः ।
स्कन्दग्रह-
दोषमश्नातीत्येके ।) ग्रहनाशवृक्षः
। इति शब्द-
रत्नावली ॥

**ग्रहाह्वयः**, पुं, (ग्रहाणामुपदेवानामाह्वयः आह्वा
संज्ञा यस्य । ग्रहान् आह्वयति
आकारयति
इदानीं षड्जग्रामस्य मूर्च्छनाः क्रियन्ते ।
मूर्च्छना प्रस्तार इत्यर्थः । ष ऋ ग म प ध
निश्च । इति षड्जस्य । म-पौ ध-नी ष ऋ च
गः । इति मध्यमस्य । ऋ-गौ म-पौ ध नी षोऽन्ते
।
इति गान्धारस्य मूर्च्छनाः । ष ऋ ग म प ध
निश्च । नि-षौ ऋ-ग-म-पाश्च धः । ध नि ष ऋ
ग म पोऽन्ते । प-धौ नि-षौ ऋ-गौ त्त मः ।
म-पौ ध-नी च ष ऋ ग । ग म प ध नि षश्च
ऋः । ऋ-गौ म-पौ ध-नी गोऽन्ते । मूर्च्छनाः
सप्त षड्जाः ॥
“आदि द्वित्रिचतुःपञ्चषट्सप्तस्वपिसमे मता ।
मध्यमो मो यदा तेषु मध्यमग्राममूर्च्छना ॥
आदौ गकारो यत्रास्ति गान्धारग्राममूर्च्छना ॥”
तत्र षड्जग्रामप्रस्तारस्यायं क्रमः ।
“षड्जान्निषधान्तं नेर्धान्तं धात् पान्तमिष्यत ।
पान्मान्तं मध्यमाद्गान्तं गादृषभान्तमिष्यते ॥
ऋषभात् षान्तमित्याहुः षड्जग्रामस्य मूर्च्छनाः ।
मध्यमग्रामजास्त्वेवं मूर्च्छनाः परिकीर्त्तिताः ॥
मकारादिक्रमेणैव गकारान्तास्तु ता मताः ।
तारो मन्द्रश्च आवश्च इति ग्रामनिरूपणाः ॥
षड्जग्राममूर्च्छनायाः सप्त कोष्ठानि ।
ब्रह्मविष्णुशिवैरुक्तास्त्रयो ग्रामा मनोहराः ॥”
इति सङ्गीतदामोदरः ॥

**ग्रामकूटः**, पुं, (ग्रामे ग्रासस्थो ग्रामस्य वा कूट इव
तमःप्राधान्यात्तथात्वम् ।) शूद्रः । इति त्रिकाण्ड-
शेषः ॥

**ग्रामजनिष्पावी**, स्त्री, (ग्रामे ग्रामसन्निकर्षे वा
जायते इति । जन + डः । ग्रामजा निष्पावीति
कर्म्मधारयः ।) नखनिष्पावी । इति राज-
निर्घण्टः ॥

**ग्रामणीः**, पुं, (ग्रामाः जीवसमूहाः नीयते चतन्य-
दानेन परिचाल्यतेऽनेन । यद्वा ग्रामान् जीव-
समूहान् नयति प्रापयति चेतयतीत्यर्थः । नी +
क्विप् ततो णत्वम् ।) विष्णुः । यथा, महा-
भारते । १३ । १४९ । ३७ ।

पश्चिमेन शनिं विद्याद्राहुं पश्चिमदक्षिणे ॥
पश्चिमोत्तरतः केतुं स्थापयेच्छक्लतण्डुलैः ॥"
अधिदेवताः । यथा, --
"भास्करस्येश्वरं विद्यात् उमाञ्च शशिनस्तथा ।
स्कन्दमङ्गारकस्यापि बुधस्य च तथा हरिम् ॥
ब्रह्माणञ्च गुरोर्व्विद्याच्छुक्रस्यापि शचीपतिम् ।
शनैश्चरस्य तु यमं राहीः कालन्तथव च ।
केतोर्व्वै चित्रगुप्तञ्च सर्व्वेषामधिदवताः ॥"
प्रत्यधिदेवताः । यथा, --
"अग्निरापः क्षितिर्विष्णुरिन्द्र ऐन्द्री च देवताः ।
प्रजापतिश्च सर्पाश्च ब्रह्मा प्रत्यधिदेवताः ॥"
पञ्च लोकपालाः । यथा, --
"विनायकं तथा दुर्गां वायुमाकाशमेव च ।
आवाहयद्व्याहृतिभिस्तथैवाश्विकुमारका ॥"
ग्रहवर्णः । यथा, --
"संस्मरेद्रक्तमादित्यमङ्गारकसमन्वितम्।
सोमशुक्रौ तथा श्वेतौ बुधजीवौ च पिङ्गलौ ।
मन्दराहू तथा कृष्णो धूम्रं केतुगणं विदुः ॥"

तज्जनितदोषनाशायेति भावः ।
आ + ह्वे + शः ।
इत्येके ।) भूताङ्कुशवृक्षः । इति राजनिर्घण्टः ॥

**ग्रहीता**, [ऋ] त्रि, (गृह्णातीति । ग्रह + तृच् ।)

ग्रहणकर्त्ता । तत्पर्य्यायः ।
गृहयालुः २ । इत्यमरः । ३ । १ । २७ ॥ (यथा, श्वेताश्वतरोपनिषदि ।
"अपाणिपादो यवनो ग्रहीता
पश्यत्यचक्षुः स शृणोत्यकर्णः ।"
तथा च मनुः । ८ । १६६ ।
"ग्रहीता यदि नष्टः स्यात्
कुटुम्बार्थे कृतो व्ययः ॥")

**ग्रामः**, पुं, (ग्रस् + "ग्रसेरात् ।" उणां । १ । १४२ ।

इति मन् धातोराकारान्तादेशश्च ।) विप्रादिवर्णप्राया प्राकारपरिखादिरहिता बहुजनवसतिः । इति भरतः ॥
तत्पर्य्यायः । संवसथः २ ।
इत्यमरः । २ । ३ । १९ ॥
हट्टादिशून्यवसतिः ।
इति श्रीधरस्वामी ॥ यथा, मार्कण्डेयपुराणे ।
"तथा शूद्रजनप्राया
सुसमृद्धकृषीबला ।
क्षेत्रोपयोगभूमध्ये
वसतिर्ग्रामसंज्ञिका ॥"
(तथा च मनुः । १० । ५४ ।
"अन्नमेषां पराधीनं देयं स्याद्भिन्नभाजने ।
रात्रौ न विचरेयुस्ते ग्रामेषु नगरेषु च ॥")
शब्दादिपूर्ब्बकश्चेत् समूहार्थः ।
इति विश्वः ॥
यथा शब्दग्रामः भूतग्रामः गुणग्रामः ।

"अग्रणीर्ग्रामणीः श्रीमा॓न् न्यायो नेता समीरणः ॥"
यक्षः । यथा, विष्णुपुराणे २ । १० । २ ।
"स रथाथिष्ठितो देवैरादित्यैरृ षिभिस्तथा ।
गन्धर्व्वैरप्सरोभिश्च ग्रामणीसर्पराक्षसैः ॥"
"देवैरादित्यैः आदित्या एव देवास्तैः । ग्रामणोर्यक्षः ।" इति तट्टीका ॥ नापितः । इत्यमरः । ३ । ३ । ४९ ॥

**ग्रामणीः**, त्रि, (गामं संवसथं तत्रत्यान् जनान्

नयति दोषगुणविचारादिभिः परिचालयति प्रेरयति वा क्विप् ।) प्रधानः । अधिपतिः । इति मेदिनी । ने । ४५ ॥ (यथा, ऋग्वेदे । १० । १०७ । ५ ।
"दक्षिणावान् प्रथमो हूत एति
दक्षिणावान् ग्रामणीरग्रमेति ॥"
तथा च महागणपतिस्तोत्रे । ८ ।
"दानामोदविनोदलुब्धमधुपप्रोत्सारणाविर्भ्रमत् ।
कर्णान्दोलनखेलनो विजयते देवो गणग्रामणीः ॥"

| | इत्यादि ॥ (यथा, मनुः । २ । २१५ ।<br>“बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥”<br>शिवः । यथा, महाभारते । १३ । १७ । ११३ ।<br>“गोपालिर्गोपतिर्ग्रामो गोचर्म्मवसनो हरिः ॥”)<br>स्वरभेदः । यथा, --<br>“षड्जमध्यमगान्धारास्त्रयोग्रामा मता इह ।<br>षडजग्रामो भवेदत्र मध्यमग्राम एव च ।<br>सुरलोके च गान्धारो ग्रामः प्रचरति स्वयम् ॥” | |
|---|---|---|

ग्रामेण गाम्येण भोग्यद्रव्येण आयुर्नयति क्षपयतीति । ग्रामान् भोग्यवस्तूनि नयति आत्मानं प्रापयतीति वा ।) भोगिकः । इति हेमचन्द्रः ॥

**ग्रामणीः**, स्त्री, (ग्रामेण जनसमूहेनेत्यर्थः नीयते गृह्यते यद्वा ग्रामेण ग्राम्यधर्म्मेण केवलं मैथुनादिना नयति कालं यापयतीति । नी + क्विप् ।) वेश्या । ग्रामेया । नीलिका । इति हेमचन्द्रः ॥

**ग्रामतक्षः**, पुं, (ग्रामस्थः ग्रामपरतन्त्रो वा तक्षा । "ग्रामकै टाभ्यां च तक्ष्णः ।" ५ । ४ । ९५ । इति टच् ।) ग्रामाधीनः काष्ठतट् । ग्रामायत्तस्तक्षा । इत्यमरः । २ । १० । ९ ॥ गैंये छुतार इति भाषा ॥

**ग्रामता**, स्त्री, (ग्रामाणां समूहः । "ग्रामजनबन्धुभ्यस्तल् ।" ४ । २ । ४३ । इति तल् ।) ग्रामसमूहः । इत्यमरः । ३ । २ । ४३ ॥ (ग्रामस्य भावः । "तस्य भावस्त्वतलौ ।" ५ । १ । ११९ । इति तल् ।) ग्रामत्वञ्च ॥

**ग्रामभृतः**, पुं, (ग्रामे ग्रामस्य वा भृतः भरणीयः ग्रामावस्थितजनैरिति शेषः ।) ग्रामप्रेव्यः । स तु ब्राह्मणश्चेत् पञ्चमोऽब्राह्मणः । इत्याह्निकतत्त्वम् ॥ (यथाह शातातपः ।

**ग्रामहासकः**, पुं, (ग्रामान् ग्रामवासिनः श्वशुरालयस्थसमूहान् वा हासयतीति । हस् + णिच् + ण्वुल् ।) भगिनीपतिः । इति शब्दरत्नावली ॥

**ग्रामाधानं**, क्ली, (आधीयते उपजीविका यत्र तत् । आ + धा + ल्युट् । ततो ग्रामस्य मृगयुसमूहस्य-आधानं पोषणकम् ।) मृगया । इति हलायुधः ॥

**ग्रामान्तं**, क्ली, (ग्रामस्य अन्तं समीपम् ।) ग्रारसमीपम् । तत्पर्य्यायः । उपशल्यम् २ । इत्यमरः । २ । ३ । २० ॥ ग्रामान्तिकम् ३ । इति वोपालितः ॥

**ग्रामिणी**, स्ती, (ग्राम उत्पत्तिस्थानत्वेन अस्ति अस्याः । अत इनिः स्त्रियां ङीप् ।) नीलीवृक्षः । इति जटाधरः ॥

**ग्रामी**, [न्] त्रि, (ग्रामः अधिकारित्वेनास्त्यस्य । अत इनिः ।) ग्रामविशिष्टः । गाँइ इति भाषा ॥ यथा, ब्राह्मणकुलाचार्य्यकारिकायाम् । "रामो गडगडग्रामी निपः केशरकोणितः । केशरकोणीति ख्यातो ग्रामी ग्रामवताम्बरः ॥" (ग्रामो ग्राम्यधर्म्मो मैथुनं अस्त्यस्येति । ग्राम्यधर्म्मविशिष्टः । यथा, भागवते । ४ । २९ । १४ । "आसुरी मेढ्रमर्वाग्द्वार्य्यवायो ग्रामिणां रतिः । उपस्थो दुर्मदः प्रोक्तो निरृतिर्गद उच्यते ॥")

तथा, माघे । १२ । ३८ । "ग्राम्यानपश्यत् कपिशं पिपासतः ॥" मूढः । प्राकृतः । यथा, तत्रैव । १४ । ६४ । "ग्राम्यभावमपहातुमिच्छबा योगमार्गपतितेन चेतसा ॥") भण्डादिवचनम् । "हालिकशाकटिकप्रधानत्वात् ग्रामे भवं ग्राम्यम् ।" इति भरतः ॥ तत्पर्य्यायः । अश्लीलम् २ । इत्यमरः । १ । ६ । १९ ॥ (काव्यस्य दोषविशेषः । स च शंब्दगतः अर्थगतश्च । तत्र शब्दगतो यथा, साहित्यदर्पणे । ७ । ३ । "दुःश्रवत्रिविधाश्लीलानुचितार्थाप्रयुक्तताः । ग्राम्योऽप्रतीतसन्दिग्धनेयार्थनिहतार्थताः ॥" अस्य उदाहरणं यथा तत्रैव । "कटिस्ते हरते मनः । अत्र कटिशब्दो ग्राम्यः ॥" अर्थगतो यथा, तत्रव । ७ । ५ । "अपुष्टदुष्क्रमग्राम्य व्याहताश्लीलकष्टताः ॥" उदाहरणं यथा तत्रैव । "स्वपिहि त्वं समीपे मे स्वपिम्येवाधुना प्रिय ! ॥ अत्रार्थो ग्राम्यः ॥")

**ग्राम्यकन्दः**, पुं, (ग्राम्यो ग्रामभवः कन्दः ।) ग्राम्यौल्लः । वनओल इति भाषा । तत्पर्य्यायः । स्थलकन्दः २ । इति रत्नमाला ॥ स तु दोषलः । इति राजवल्लभः ॥

**ग्राम्यकर्कटी**, स्त्री, (ग्राम्या ग्रामजाता कर्कटी ।) कुष्माण्डः । इति त्रिकाण्डशेषः ॥

**ग्राम्यकुङ्कुमं**, क्ली, (ग्राम्य ग्रामसम्भूतं कुङ्कुमम् ।) कुसुम्भम् । इति त्रिकाण्डशेषः ॥

**ग्राम्यधर्म्मः**, पुं, (ग्राम्यस्य इतरादेर्धर्म्मः ।) मैथुनम् । इत्यमरः । २ । ७ । ५७ ॥ (यथा, महाभारते । ३ । ४८ । ४ । "प्रमत्तो ग्राम्यधर्म्मेषु मन्दात्मा पापनिश्चयः । मम पुत्त्रः सुदुर्बुद्धिः पृथिवीं घातयिष्यति ॥")

**ग्राम्यपशुः**, पुं, (ग्राम्यो ग्रामजातः पशुः ।) ग्रामजातजन्तुः । (यथा, भागवते । ६ । १५ । १६ । "तस्माद् युवां ग्राम्यपशोर्मम मूढधियः प्रभू । अन्ध तमसि मग्नस्य ज्ञानदीप उदीर्य्यताम् ॥")

"अब्राह्मणास्तु षट् प्रोक्ता ऋषिणा तत्त्ववेदिना ।
आद्यो राजभृतस्तेषां द्वितीयः क्रयविक्रयी ॥
तृतीयो बहुयाज्यः स्यात् चतुर्थी ग्रामयाजकः ।
पञ्चमस्तु भृतस्तेषां ग्रामस्य नगरस्य च ॥
अनादित्यान्तु यः पूर्ब्बां सादित्याञ्चैव पश्चिमाम् ।
नोपासीत द्विजः सन्ध्यां स षष्ठोऽब्राह्मणः स्मृतः ॥")

**ग्राममद्गुरिका**, स्त्री, (ग्रामस्य मत्स्यग्र मेषु वा मद्गुरिकेव । क्षुद्रमद्गुर इवेत्यर्थः ।) शृङ्गी-मत्स्यः । ग्रामयुद्धम् । इति मेदिनी । के । २३४ ॥

**ग्राममुखः**, पुं, (ग्रामस्य मुखमिव यो स्थितः । यद्वा, ग्रामो ग्रामवासिजनो मुखत्वेन प्रधानकारणत्वेन यस्य । ग्रामस्थजनसाध्यत्वाच्चास्य तथात्वम् ।) हट्टः । इति शब्दरत्नावली ॥

**ग्राममृगः**, पुं, (ग्रामस्य मृग इव । यद्वा, ग्रामे-स्थितो मृगः पशुः ।) कुक्कुरः । इति शब्दरत्ना-वली ॥

**ग्रामयाजकः**, पुं, (ग्रामस्य याजको यागकर्त्ता ।) ग्रामस्थनानावर्णानांपुरोहितः । स तु चतुर्थो-ऽब्राह्मणः । यथाह, शातातपः ।
"अब्राह्मणास्तु षट् प्रोक्ता ऋषिणा तत्त्ववेदिना ।
आद्यो राजभृतस्तेषां द्वितीयः क्रयविक्रयी ॥
तृतीयो बहुयाज्यः स्यात् चतुर्थो ग्रामयाजकः ।

**ग्रामीणः**, पुं, (ग्रामे भवः । ग्राम + "ग्रामाद्य-खञौ ।" ४ । २ । ९४ । इति खञ् ।) ग्राम्य-शूकरः । इति राजनिर्घण्टः ॥ कुक्कुरः । काकः । ग्रामोत्पन्ने त्रि । इति मेदिनी । णे । ४६ ॥
(यथा, भाषापरिच्छेदे । ७९ ।
"ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् ।
सादृश्यधीर्गवादीनां या स्यात् सा करणं मतम् ॥")

**ग्रामीणा**, स्त्री, (ग्रामीण + स्त्रियां टाप् ।) नीलीवृक्षः । इति मेदिनी ॥ (अस्याः पर्य्याया यथा,
"नीली तु नीलिनी तूली कालदोला च नीलिका ।
रञ्जनी श्रीफली तुच्छा ग्रामीणा मधुपर्णिका ॥
क्लीतका कालकेशी च नीलपुष्पा च सा स्मृता ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
गुणाश्चास्या नीलिनीशब्दे ज्ञातव्याः ॥) पालङ्क्य-शाकम् । इति राजनिर्घण्टः ॥

**ग्रामेयकः**, त्रि, (ग्रामे भवः । ग्राम + "कत्र्यादिभ्यो-ढकञ् ।" ४ । २ । ९५ । इति ढकञ् ।) ग्राम्यः । इति हेमचन्द्रः । ३ । १६५ ॥

**ग्रामेया**, स्त्री, (ग्रामे भवा । ग्राम + ढक् ।) ग्राम्य-नारी । इति ग्रामणीशब्दार्थे हेमचन्द्रः ॥

**ग्रामेशः**, त्रि, (ग्रामस्य ईशः ।) ग्रामेश्वरः । ग्रामाधिपतिः । यथा, शान्तिशतके । ११ ।
"यं कञ्चित् पुरुषाधमं कतिपयग्रामेशमल्पार्थदं ।

स तु सप्तविधो यथा । गौः १ अजः २ मेषः ३ मनुष्यः ४ अश्वः ५ अश्वतरः ६ गर्द्दभः ७ । इति तिथ्यादितत्त्वम् ॥ (यथाह पैठीनसिः । "ग्राम्यारण्याश्चतुर्द्दश । गौरविरजोऽश्वोऽश्वतरो गर्द्दभो मनुष्यश्चेति ग्राम्याः पशवः । महिष-वान । ऋक्षसरीसृपरुरुपुष्यमृगाश्चेति सप्ता-रण्याः ॥" सुश्रुतमते उष्ट्रादयोऽपिग्राम्याः । यदुक्तं तत्रव सूत्रस्थाने ४६ अध्याये ।
"अश्वाश्वतरगोखरोष्ट्रघस्तोरभ्रमेदःपुच्छकप्रभृ-तयो ग्राम्याः ॥")

**ग्राम्यमद्गुरिका**, स्त्री, (ग्राम्या ग्रामाद्भवा मद्गुरिका) शृङ्गीमत्स्यः । इति हारावली ॥

**ग्राम्यमृगः**, पुं, (ग्राम्यो ग्रामभवो मृगो हरिणैव । मृगःपशुर्वा इत्येके ।) कुक्कुरः । इति जटाधरः ॥

**ग्राम्यराशिः**, पुं, (ग्राम्यो राशिः ।) मिथुनम् । कन्या । तुला । वृश्चिकः । धनुः । कुम्भः । रात्रा मेषः वृषश्च । इति ज्योतिषम् ॥

पञ्चमस्तु भृतस्तेषां ग्रामस्य नगरस्य च ॥
अनादित्यान्तु यः पूर्ब्बां सादित्याञ्चैव पश्चिमाम् ।
नोपासीत द्विजः सन्ध्यां स षष्ठोऽब्राह्मणः स्मृतः ॥”
(एतस्मै प्रदत्तं दानादिकं निष्फलं भवति ।
यथोक्तं महाभारते । ३ । १९९ । ७ ।
“व्यर्थन्तु पतिते दानं ब्राह्मणे तस्करे तथा ।
गुरौ चानृतिके पापे कृतघ्ने ग्रामयाजके ॥”)

**ग्रामस्थः**, त्रि, ग्रामवासी । ग्रामे तिष्ठति य इत्यर्थे

डप्रत्ययः ॥

सेवाये मृगयामहे नरमहो मूढा वराका वयम् ॥”

**ग्राम्यः**, त्रि, (ग्रामे भवः । ग्राम + “ग्रामात्

यखञौ ।” ४ । २ । ९४ । इति यः ।) ग्रामोत्-
पन्नः । तत्पर्य्यायः । ग्रामेयकः २ ग्रामीणः ३ ।
इति हेमचन्द्रः । ३ । १६५ ॥ (यथा, मनुः ।
११ । १९९ ।
“श्वशृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव च ॥”

**ग्राम्यवल्लभा**, स्त्री, (ग्राम्याणां ग्रामस्थजनानां
वल्लभा प्रिया ।
पल्लीग्रामस्थजनप्रियत्वात्तस्या-
स्तथात्वम् ।) पालङ्क्यशाकम् । इति राज-
निर्घण्टः ॥ (ग्राम्यं अश्लीलं वल्लभं प्रियं यस्याः
इति विग्रहे वेश्या । इति
व्युत्पत्तिलब्धोऽर्थः ॥)

**ग्राम्यशूकरः**, पुं, स्त्री, (ग्राम्यः शूकरः ।) ग्रामोत्-
पन्नवराहः । तत्पर्य्यायः । विड्वराहः २
ग्रामीणः ३ ग्रामक्रोडः ४ ग्रामकोलः ५ विष्कलः
६ दारकः ७ । तस्य मांसस्य गुणाः । वनवराह-
मांसाद्गुरुत्वम् ।
मेदोबलवीर्य्यवृद्धिकारित्वञ्च ।
इति राजनिर्घण्टः ॥

**ग्राम्या**, स्त्री, (ग्रामे भवा । ग्राम + "ग्रामात्
यखञौ ।" ४ । २ । ९४ । इति यः । स्त्रियां
टाप् ।) नीली । निष्पावी । इति राज-
निर्घण्टः ॥ (तुलसी । इति चिन्तामणिः ॥)

**ग्राम्याश्वः**, पुं, (ग्राम्यः ग्रामजातोऽश्वः ।) गर्द्दभः ।
इति त्रिकाण्डशेषः ॥

**ग्रावा**, [न्] पुं, (ग्रसते इति ग्रः । ग्रस् + अन्ये-
भ्योऽपीति डः । आवनति शब्दायते इति ।
आ + वन शब्दे + विच् । ततो ग्रश्चासौ आवा
चेति ।) प्रस्तरः । (यथा, भागवते । ४ । ५
। १८ ।
"सर्व्व एवर्त्विजो दृष्ट्वा सदस्याः सदिवौकसः ।
तैरर्द्द्यमानाः सुभृशं ग्रावभिर्नैकधाऽद्रवन् ॥")
पर्व्वतः । इत्यमरः । २ । ३ । १ ॥ (यथा, --
शिशुकः । इति राजनिर्घण्टः ॥
(आग्रहः ।
यथा, गीतायाम् । १७ । १९ ।
"मूढग्राहेणात्मनो यत् पीडया क्रियते तपः ॥"
"मूढग्राहेणाविवेककृतेन दुराग्रहेण ।" इति
श्रीधरस्वामी ॥)

**ग्राहकः**, पुं, (गृह्णातीति । ग्रह + ण्वुल् ।) सिता-
वरशाकम् । इति राजनिर्घण्टः ॥
हिंस्रपक्षी ।
व्यालग्राही । ग्रहीतरि त्रि । इति शब्दरत्ना-
वली ॥ (ग्रह + णिच् + ण्वुल् ।
ज्ञापकः । यथा,
महाभारते । ३ । २१० । १३ ।
"यथास्वं ग्राहकाण्येषां
शब्दादीनामिमानि तु ॥")

**ग्राहिणी**, स्त्री, (गृह्णाति अशेषगुणानिति । ग्रह
उपादाने + "नन्दिग्रहीति ।" ३ । १
। १३४ ।
इति णिनिः ङीप् ।) क्षुद्रदुरालभा । इति
राजनिर्घण्टः ॥ ताम्रमूलावृक्षः । इति रत्न-
माला ॥ क्षिरै इति भाषा ॥

**ग्राहिफलः**, पुं, (ग्राहि धारकं मलबन्धकमित्यर्थः
फलं यस्य ।) कपित्थवृक्षः । इति
राजनिर्घण्टः ॥

**ग्राही**, [न्] पुं, (गृह्णातीति । ग्रह + णिनिः ।)
कपित्थः । इति शब्दचन्द्रिका ॥

**ग्राही**, [न्] त्रि, (गृह्णातीति । ग्रह + णिनिः ।)
मलबन्धकः । धारकः । इति वैद्यकम् ॥ (यथा,
भावप्रकाशे ।
स तु ज्यैष्ठाषाढौ । तत्पर्य्यायः । उष्णकः २
निदाघः ३ उष्णोपगमः ४ उष्णः ५ उष्मागमः ६
तपः ७ । इत्यमरः । १ । ४ । १९ ॥ घर्म्मः ८
तापनः ९ उष्णागमः १० उष्णकालः ११ ।
"ग्रैष्मिकन्त्वनभिस्यन्दि जलमित्येष निश्चयः ॥"
इति राजनिर्घण्टः ॥
("दीर्घवासरकं तीक्ष्णं ज्वालामालाकुलं जगत् ।
दिशि ग्रीष्मे मृगतृष्णाः स्विन्नाः स्युर्मृगवाजिनः ॥
नैरृतो मारुतो रूक्षः शीर्णपर्णा महीरुहाः ।
दग्धं तृणाकुलारण्यं दावाग्निश्च दिशो दश ॥
एवं लक्षणके ग्रीष्मे पित्तरक्तमुदीर्य्यते ।
तस्मात् क्रिया प्रतीकारं कुर्य्यात् संशमनं भिषक् ॥
जलक्रीडा दिवानिद्रा सेवनं सुखसाधनम् ।
श्यामारामारतं शस्तं कुञ्जकिञ्जल्कशीतलम् ॥
नीलनालदलोपेतः श्रमघ्नो व्यजनानिलः ।
केतक्या मोदकुसुमचन्दनोशीरशीतलैः ॥
लेपनं शीतलं सम्यक् धारागाराश्रयः पुनः ।
एवं क्रिया समापन्ने ग्रीष्मे च सुखसङ्गमः ॥"
इति ग्रीष्मोपचारः ॥
इति हारीते प्रथमे स्थाने पञ्चभेऽध्याये ॥
"तीक्ष्णांशुरतितीक्ष्णांशुर्ग्रीष्मे संक्षिपतीव यत् ।
प्रत्यहं क्षीयते श्लेष्मा तेन वायुश्च वर्द्धते ॥
अतोऽस्मिन् पटुकट्वम्लव्यायामार्क्ककरांस्त्यजेत् ।
भजेन्मधुरमेवान्नं लघुस्निग्धं हिमं द्रवम् ॥
सुशीततोयसिक्ताङ्गो लिह्यात् शक्तून् सशर्करान् ॥
मद्यं न पेयं पेयं वा स्वल्पं सुबहु वारि वा ॥
अन्यथा शोफशौथिल्यदाहमोहान्करोति तत् ।
कुन्देन्दुधवलं शालिमश्नीयाज्जाङ्गलैः पलैः ॥
पिबेद्रसं नातिघनं रसालां रागखाण्डवौ ।
पानकं पञ्चसारं वा नवमृद्भाजनस्थितम् ॥
मोचचोचदलैर्युक्तं साम्लं मृण्मयशुक्तिभिः ।
पटलावासितञ्चाम्भः सकर्पूरं सुशीतलम् ॥
शशाङ्ककिरणान् भक्ष्यान् रजन्यां भक्षयन् पिबेत्

"पृथ्वी तावत् त्रिकोणा
विपिननदनदीग्रावरुद्धं
तदद्धम् ॥"
इत्युद्भटः ॥)
मेघः । इति विश्वः ॥ दृढे त्रि । इति
शब्दरत्ना-
वली ॥

**ग्रासः**, पुं, (ग्रस्यते अद्यते इति । ग्रस् + कर्म्मणि

घञ् ।) मुखपूरणान्नादि । यथा, --
"कुक्कुटाण्डप्रमाणन्तु यावद्वा
प्रविशेन्मुखम् ।
एतं ग्रासं विजानीयात् शुद्ध्यर्थं
कायशोधनम् ॥"
इति प्रायश्चित्तप्रकरणे पराशरः ॥
(तथा च मनुः । ११ । २१३ ।
"एकैकं ग्रासमश्नीयात् त्र्यहाणि त्रीणि
पूर्ब्बवत् ॥")
तत्पर्य्यायः । कबलः २ । इत्यमरः । २ ।
९ । ५४ ॥
गुडेरकः ३ पिण्डः ४ गण्डोलः ५ कवकः
६
गुरुः ७ । इति हेमचन्द्रः । ३ । ८९ ॥
(दशौषध-
कालान्तर्गतकालविशेषः । "तत्र निर्भक्तं
प्राग्-
भक्तमधोभक्तं मध्येभक्तमन्तराभक्तं सभक्तं
सामुद्गं
मुहुर्मुहुः ग्रासं ग्रासान्तरञ्चेति
दशौषधकालाः ॥"
इत्युत्तरतन्त्रे चतुःषष्टितमेऽध्याये
सुश्रुतेनोक्तम् ॥)

**ग्राहः**, पुं, (गृह्यते इति । ग्रह ञ उपादाने +

भावे घञ् ।) ग्रहणम् । (गृह्णातीति । ग्रह +
"विभाषा ग्रहः ।" ३ । १ । १४३ । इति
व्यव-
स्थापितविभाषया णः ।) जलजन्तुविशेषः
। हाङ्गर
इति भाषा ॥ जलहस्ती इति केचित् ॥
तत्-

"काञ्चनारो हिमा ग्राही तुवरः
श्लेष्मपित्तनुत् ॥")
ग्रहणकर्त्ता । इति व्याकरणम् ॥
(यथा, कथा-
सरित्सागरे । २५ । ४९ ।
"तत्र तस्यैव कैवर्त्तपतेः सत्यव्रतस्य
सः ।
शफरग्राहिभिर्भृत्यैः प्राप्य
दैवादगृह्यत ॥
प्रतिकूलः । यथा, भट्टिः । ५ । ९३ ।
"मास्म भूर्ग्राहिणी भीरु !
गन्तुमुत्साहिनी भव ॥"
"हे भीरु ! मास्म भूर्ग्राहिणी
प्रतिकूला मा भूः ।"
इति जयमङ्गलः ॥)

**ग्रीवा**, स्त्री, (गीर्य्यतेऽनया । गॄ निगरणे + "शेवा-

यह्वजिह्वाग्रीवाप्वामीवाः ।" उणां । १
। १५४ ।
इति वन्प्रत्ययेन निपातनात् साधुः
।) गल-
घाटादिसमुदिता । इति भरतः ॥
(यथा,
शकुन्तलायां १ मे अङ्के ।
"ग्रीवाभङ्गाभिरामं मुहुरनुपतति
स्यन्दने दत्तदृष्टिः ॥")
सा तु गर्भे मासमात्रेण भवति । इति
सुख-
बोधः ॥ तत्पर्य्यायः । शिरोधिः २
कन्धरा ३ ।
इत्यमरः । २ । ६ । ८८ ॥ कन्धिः
४ शिरो-
धरा ५ । इति राजनिर्घण्टः ॥
कन्घराशिरा ।
इति मेदिनी । वे । ६ ॥

**ग्रीवी**, [न्] पुं स्त्री, (ग्रीवा विद्यते यस्य । ग्रीवा

+ इनिः । दीर्घग्रीवावत्त्वया एव अस्य
तथा-
त्वम् ।) उष्ट्रः । इति जटाधरः ॥
प्रशस्तग्रीवा-

ससितं माहिषं क्षीरं चन्द्रनक्षत्रशीतलम् ॥
अभ्रङ्कषमहाशालतालरुद्धोष्णरश्मिषु ।
वनेषु माधवीश्लिष्टद्राक्षास्तवकशालिषु ॥
सुगन्धिहिमपानीयसिच्यमानपटालिके ।
कायमाने चिते चूतप्रवालफललम्बिभिः ॥
कदलीदलकह्लार-मृणालकमलोत्पलैः ।
कल्पिते कोमलैस्तल्पे हसत्कुसुमपल्लवे ॥
मध्यदिनेऽर्कतापार्त्तः स्वप्याद्धारागृहेऽथवा ।
पुस्तस्त्रीस्तनहस्तास्यप्रवृत्तोशीरवारिणि ॥
निशाकरकराकीर्णे सौधपृष्ठे निशासु च ।
आसनास्वस्थचित्तस्य चन्दनार्द्रस्य मालिनः ॥
निवृत्तकामतन्त्रस्य सुसूक्ष्मतनुवाससः ।
जलार्द्रास्तालवृन्तानि विस्तृताः पद्मिनीपुटाः ॥
उत्क्षेपाश्च मृदूत्क्षेपा जलवर्षिहिमानिलाः ।
कर्पूरमल्लिकामाला हाराः सहरिचन्दनाः ॥
मनोहरकलालापाः शिशवः शारिकाः शुकाः ।
मृणालवलयाः कान्ताः प्रोत्फुल्लकमलोज्ज्वलाः ॥
जङ्गमा इव पद्मिन्यो हरन्ति दयिताः क्लमम् ॥"
इति वाभटे सूत्रस्थाने तृतीयेऽध्याये ॥

| | | |
|---|---|---|
| पर्य्यायः । अवहारः २ । इत्यमरभरतौ ॥ (यथा, महाभारते । १ । २१ । ५ । "भीषणैर्विकृतैरन्यैर्घोरै र्ज्जलचरैस्तथा । उग्रैर्नित्यमनाधृष्यं कूर्म्मग्राहसमाकुलम् ॥") | युक्ते त्रि ॥<br>**ग्रीष्मः**, पुं, (ग्रसते रसान् इति । ग्रसु अदने + "ग्रीष्मः ।" उणां । १ । १४९ । इति मक् ग्रीभावश्च घातोः षुगागमश्च निपात्यते ।) ऋतु-विशेषः । (यथा, मनुः । ६ । २३ । "ग्रीष्मे पञ्चतपास्तु स्याद्वर्षास्वभ्रावकाशिकः ॥") | |

"ग्रीष्मे पुनर्भृशौष्ण्योपहतत्वात् शरीरमसुखोप-
पन्नं भवति । उष्णवातावध्मातमतिशिथिल-
मत्यन्तप्रविलीनदोषं भेषजं पुनः संशोधनार्थ-
मुष्णस्वभावमुष्णानुगमनात्तीक्ष्णतरत्वमापद्येत।
तस्मात्तयोः संयोगे संशोधनमतियोगायोप-
पद्यते शरीरं पिपासोपद्रवाय ।" इति चरके
विमानस्थानेऽष्टमेऽध्याये ॥
"मयूखैर्जगतः सारं ग्रीष्मे पेपीयते रविः ।
स्वादुशीतं द्रवं स्निग्धमन्नपानं तदा हितम् ॥
शीतं सशर्करं मन्थं जाङ्गलान्मृगपक्षिणः ।
घृतं पयः स शाल्यन्नं भजन् ग्रीष्मे न सीदति ॥
मद्यमल्पं न वा पेयमथवा सुबहूदकम् ।
लवणाम्लकटूष्णानि व्यायामञ्चात्र वर्ज्जयेत् ॥
दिवा शीतगृहे निद्रां निशि चन्द्रांशुशीतलम् ।
भजेच्चन्दनदिग्धाङ्गः प्रवाते हर्म्म्यमस्तके ॥
व्यजनैः पाणिसंस्पर्शैश्चन्दनोदकशीतलैः ।
सेव्यमानो भजेदास्यां मुक्तामणिविभूषितः ॥
काननानि च शीतानि जलानि कुसुमानि च ।
ग्रीष्मकाले निषेवेत मैथुनाद्विरतो नरः ॥"
इति च सूत्रस्थाने षष्ठेऽध्याये चरकेणोक्तम् ॥)
तत्र जातफलं यथा, कोष्ठीप्रदीपे ।
"ग्रीष्मोद्भवो भोगभवानुरक्तो
वक्ता सुशीलो जलकेलिशीलः ।
विद्याधनैश्वर्य्ययशोमनोज्ञो
धन्वी सुवेशः परदारचित्तः ॥"
उष्णः । इति मेदिनी । मे । १० ॥ गर्मि इति
तात् इति च भाषा ॥ तद्वति त्रि ॥

**ग्रीष्मजा**, स्त्री, (ग्रीष्मात् ग्रीष्मप्रभावात् ग्रीष्मे ग्रीष्म-
काले वा जायते या इति । जन् + डः । तत-
ष्टाप् च ।) लवणी । इति शब्दचन्द्रिका ॥ लोणा
इति भाषा ॥ (ग्रीष्मजातमात्रे, त्रि ॥)

**ग्रीष्मपुष्पी**, स्त्री, (ग्रीष्मे ग्रीष्मकाले पुष्पं यस्याः ।
जातौ संज्ञायां वा ङीप् ।) करुणीपुष्पवृक्षः ।
इति राजनिर्घण्टः ॥

**ग्रीष्मभवा**, स्त्री, (ग्रीष्मे ग्रीष्मसमये ग्रीष्मागमे
इत्यर्थः भवति उत्पद्यते या । भू + अच् ।
टाप् ।) नवमल्लिका । इति रत्नमाला ॥

**ग्रीष्मोद्भवा**, स्त्री, (उद्भवतीति । उद् + भू + अच् ।
ग्रीष्मे उद्भवो यस्याः ग्रीष्मे उद्भवतीति
वा ।)
नवमल्लिका । इति राजनिर्घण्टः ॥

**ग्रुच**, इर् उ चौर्य्ये । गतौ । इति कविकल्पद्रुमः ॥
(भ्वां-परं-सकं-सेट्-उदित्वात् क्त्वा
वेट् ।) रेफ-
युक्तः । पञ्चमस्वरी । इर्, अग्रुचत्
अग्रो-
चीत् । उ, ग्रोचित्वा ग्रुक्त्रा । इति दुर्गा-
दासः ॥

**ग्रैवं**, क्ली, (ग्रीवायां भवम् । "ग्रीवाभ्योऽण् च ।"
४ । ३ । ५७ । इति अण् ।)
ग्रीवाभूषणम् ।
इति शब्दरत्नावली ॥ (यथा, रघुः ।
४ । ४८ ॥
"भोगिवेष्टनमार्गेषु चन्दनानां समर्पितम्
।
नास्रसत् करिणां ग्रैवं
त्रिपदीच्छेदिनामपि ॥")

**ग्रैवेयं**, क्ली, (ग्रीवायां भवम् । "चात् ढञ् ।"
"ग्रीवाभ्योऽण् च ।" ४ । ३ । ५७ ।
इत्यस्य
सूत्रस्य वार्त्तिकोक्त्या चकारात् ढञ्
।) कण्ठ-
भूषणम् । इति शब्दरत्नावली ॥
(यथा, महा-
भारते । ७ । ३५ । ३४ ।
"पुनर्द्विपान् द्विपारोहान्
वैजयन्त्यङ्कुशध्वजान् ।
तूणवर्म्माण्यथो कक्षान् ग्रैवेयाण्यथ
कम्बलान् ॥")

**ग्रैवेयकं**, क्ली, (ग्रीवायां भवमिति । "कुल
कुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु ।" ४ ।
२ । ९६ ।

**ग्लाता**, [ऋ] त्रि, (ग्लायति ग्लानियुक्तो भव-
तीति । ग्लै + तृच् ।) ग्लानियुक्तः ।
इति व्याकर-
णम् ।

**ग्लानः**, त्रि, (ग्लै + कर्त्तरि क्तः ।) रोगात् क्षीण-
देहः । तत्पर्य्यायः । ग्लास्नुः २ ।
इत्यमरः ।
२ । ६ । ५८ ॥ रोगी । इति
राजनिर्घण्टः ॥

**ग्लानिः**, स्त्री, (ग्लायति अनेनास्मिन् वा । ग्लै +
"वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् ।"
उणां ।
४ । ५१ । इति निः ।) बलदीनता ।
इति हेम-
चन्द्रः । २ । २३३ ॥ (यथा, गीतायाम्
। ४ । ७ ।
"यदा यदा हि धर्म्मस्य ग्लानिर्भवति
भारत ! ॥")
रोगः । इति राजनिर्घण्टः ॥ (यथा,
भाग-
वते । ५ । २४ । १३ ।
"देहवैवर्ण्यदौर्गन्ध्यस्वेद-
क्लमग्लानिरिति वयोऽवस्थाश्च
भवन्ति ॥")

**ग्लास्नुः**, त्रि, (ग्लायतीति । ग्लै +
"ग्लाजिस्थश्च
गस्नुः ।" ३ । २ । १३९ । इति स्नुः
।) ग्लानः ॥
इत्यमरः । २ । ६ । ५८ ॥ (यथा,
भट्टिः । ७ । ४ ।
"वसन् माल्यवति ग्लास्नू रामो
जिष्णुरधृष्णुवत् ॥")

**ग्लुच**, इर् उ चौर्य्ये गतौ । इति कविकल्पद्रुमः ॥
(भ्वां-परं-सकं-सेट् । उदित्वात्
क्त्वावेट् ।)
अन्तःस्थतृतीययुक्तः । पञ्चमस्वरी ।
इर्, अग्लु-

("कुमारिका ग्रीष्मभवा सुगन्धा ।"
इति वैद्यकरत्नमालायाम् ।)

**ग्रीष्मसुन्दरकः**, पुं, (ग्रीष्मे सुन्दर इव कायते
शोभते इति । कै + कः । ग्रीष्मसुन्दर + स्वार्थे
कन् वा ।) शाकविशेषः । गिमा इति भाषा ॥
तस्य गुणाः । तिक्तत्वम् । लघुत्वम् । कफपित्त-
दोषनाशित्वम् । रुचिकारित्वञ्च । इति राज-
वल्लभः ॥

**ग्रीष्महासं**, क्ली, (ग्रीष्मे ग्रीष्मसमये हासः प्रकाशः
उत्पत्तिजन्यशोभेत्यर्थः यस्य ।) इन्द्रतूलकम् ।
इति त्रिकाण्डशषः ॥ बुडीर सूता । इति भाषा ॥

**ग्रीष्मी**, स्त्री, (ग्रीष्मः ग्रीष्मसमयः उत्पत्तिकारण-
त्वेनास्त्यस्याः । "अर्श आदिभ्योऽच् ।" ५ । २ ।
१२७ ।
इत्यच् ततो ङीष् ।) नवमल्लिका । इति राज-
निर्घण्टः ॥

इति ढकञ् ।) कण्ठभूषा । इत्यमरः ।
२ । ६ । १०४ ॥
(यथा, मार्कण्डेयपुराणे । ८२ । २५ ।
"नूपुरौ विमलौ तद्वद् ग्रैवेयकमनुत्तमम्
॥")

**ग्रैष्मी**, स्त्री, (ग्रीष्मे भवेति । "सन्धिवेलाद्यृतु-
नक्षत्रेभ्योऽण् ।" ४ । ३ । १६ । इति
अण् ततो ङीप् ।
"पक्षे ऋत्वण् ङीप् ।" इति अणित्येके
।) नव-
मल्लिका । इति त्रिकाण्डशेषः ॥
ग्रीष्मसम्बन्धिनि
त्रि नान्तश्च ॥

**ग्लस**, उ ङ भक्षणे । इति कविकल्पद्रुमः ॥
(भ्वां-
आत्मं-सकं-सेट्-उदित्वात् क्त्वा वेट्
।) अन्तः स्थ-
तृतीययुक्तः । उ, ग्लसित्वा ग्लस्त्वा ।
ङ, ग्लसते ।
इति दुर्गादासः ॥

**ग्लस्तः**, त्रि, (ग्लस् + कर्म्मणि क्तः ।) भक्षितः ।
इत्यमरः । ३ । २ । ११२ ॥

**ग्लह**, ऊ कि आदाने । इति कविकल्पद्रुमः ॥
(चुरां-पक्षे भ्वां-परं-सकं-वेट् ।)
अन्तःस्थतृत्नीय-
युक्तः । ऊ, अग्लहीत् अघ्लाक्षीत् ।
कि, ग्लाह-
यति ग्लहति । एषः कैश्चिन्न मन्यते
इति
दुर्गादासः ॥ (यथा, महाभारते । २ ।
६७ । १९ ।
"इमां चेत् पूर्ब्बं कितवोऽग्लहीष्य-
दीशोऽभविष्यदपराजितात्मा॥")

**ग्लहः**, पुं, (ग्लह + "अक्षेषु ग्लहः ।" ३ । ३ ।
७० ।
अक्षशब्देन देवनं लक्ष्यते तत्र यत्
पणरूपेण
ग्राह्यं तत्र ग्लह इति निपात्यते । इति
वार्त्ति-

चत् अग्लोचीत् । उ, ग्लोचित्वा
ग्लुक्त्रा । इति
दुर्गादासः ॥

**ग्लुञ्च**, उ इर् गतौ । इति कविकल्पद्रुमः ॥
(भ्वां-
परं-सकं-सेट् ।) उदित्त्वात् क्त्रावेट् ।
अन्तः स्थ-
तृतीययुक्तादिः । पञ्चमस्वरी । उ,
ग्लुञ्चित्वा
ग्लुक्त्रा । इर्, अग्लुचत् अग्लोञ्चीत् ।
इति
दुर्गादासः ॥

**ग्लेप**, ऋ ङ दैन्ये । गतौ । चाले । इति
कविकल्प-
द्रुमः । (भ्वां-आत्मं-अकं-सकं-च-सेट्
।) अन्तःस्थ-
तृतीययुक्तः । ङ, ग्लेपते निर्धनः सदा
। ऋ,
अजिग्लेपत् । इति दुर्गादासः ॥

**ग्लेयः**, त्रि, (ग्लानिमर्हतीति । ग्लै + यः ।)
ग्लानि-
योग्यः । इति व्याकरणम् ॥

**ग्लेव**, ऋ ङ सेवे । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-सकं-सेट् ।)
अन्तःस्थतृतीययुक्तः । ऋ,
अजिग्लेवत् । ङ, ग्लेवते । इति
दुर्गादासः ॥

**ग्लेष**, ऋ ङ अन्वेषे । इति कविकल्पद्रुमः ॥
(भ्वां-
आत्मं-सकं-सेट् ।)
अन्तःस्थतृतीययुक्तः । ऋ,
अजिग्लेषत् । ङ, ग्लेषते जिग्लेषे ।
अन्वेषोऽनु-
सन्धानम् । ग्लेषते यः सतां मार्गमिति
हला-
युधः । इति दुर्गादासः ॥

**ग्लै**, क्लमे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
अकं-

| | | |
|---|---|---|
| | कोक्त्या च निपातनात् तथात्वम् ।)<br>अक्ष-<br>क्रीडासु पणः । इत्यमरः । २ । १० ।<br>४५ ॥<br>आड इति वाजि इति च भाषा ॥<br>(यथा, महा-<br>भारते । २ । ६७ । ६ ।<br>“पाञ्चालस्य द्रुपदस्यात्मजामिमां<br>सभामध्ये यो व्यदेवीद् ग्लहेषु ॥”) | अनिट् ।) अन्तःस्थतृतीययुक्तः ।<br>क्लमो हर्ष-<br>क्षयः । ग्लायति लोकः शोकात् ।<br>अनुपसर्गस्य<br>ञौ ज्वल ह्वल ह्मल इत्यादिना वा<br>ह्रस्वः ।<br>ग्लपयति ग्लापयति । सोपसर्गस्य तु<br>प्रग्लाप-<br>यति । इति दुर्गादासः ॥ (यथा, मनुः ।<br>२ । ९८ ।<br>“श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा<br>घ्रात्वा च यो नरः ।<br>न हृष्यति ग्लायति वा स विज्ञेयो<br>जितेन्द्रियः ॥”)<br>**ग्लौः**, पुं, (ग्लायति ग्लानिं प्राप्नोति कृष्णपक्षे<br>इति भावः । ग्लै + “ग्लानुदिभ्यां डौः<br>।” उणां । २ । ६४ ।<br>इति डौः ।) चन्द्रः । (यथा,<br>अथर्व्ववेदसंहितायाम् । ६ । ८३ । ३ ।<br>“ग्लौरितः प्र पतिष्यति स गलुन्तो<br>नशिष्यति ॥”)<br>कर्पूरः । इत्यमरः । १ । ३ । १४ ॥ |

घ

**घ**, घकारः । स तु व्यञ्जनचतुर्थवर्णः । अस्यो-
च्चारणस्थानं कण्ठः । इति व्याकरणम् ॥
(एतत्तु
मुग्धबोधमतम् । यथा, "अ आ ह क ख ग
घ ङाः कण्ठ्याः ।" पाणिनीये तु एष कण्ठ्यो
जिह्वामूलीयश्च । यथा,
"अकुहविसर्ज्जनीयानां
कण्ठः ॥" इत्युक्त्वा पुनः शिक्षायाम् ।
"जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो वः
स्मृतो
बुधैः ॥")
अस्य स्वरूपं यथा, कामधेनुतन्त्रे ।
"घकारं चञ्चलापाङ्गि ! चतुष्कोणात्मकं सदा ।
पञ्चदेवमयं वर्णमरुणादित्यसन्निभम् ॥
निर्गुणं त्रिगुणोपेतं सदा त्रिगुणसंयुतम् ।
सर्व्वगं सर्व्वदं शान्तं घकारं प्रणमाम्यहम् ॥"
अस्योत्पत्तिर्ग्वर्णे द्रष्टव्या ॥ वङ्गाक्षरैस्तस्य
लेखनप्रकारादिर्यथा, --
"सृष्टिरूपा वामरेखा किञ्चिदाकुञ्चिता ततः ।
कुण्डलीरूपमास्थाय ततोऽधोगत्य दक्षतः ॥
अत ऊद्‌र्ध्वं गता रेखा शम्भुर्नारायणस्तयोः ।
ब्रह्मस्वरूपिणी देवि ! मात्राशक्तिः प्रकीर्त्तिता
॥"
अस्य ध्यानं यथा, --
"मालतीपुष्पवर्णाभां षड्‌भुजां रक्तलोचनाम् ।
शुक्लाम्बरपरीधानां शुक्लमाल्यविभूषिताम् ॥
सदा स्मेरमुखीं रम्यां लोचनत्रयराजिताम् ।
एवं ध्यात्वा घकारन्तु तन्मन्त्रं दशधा जपेत्
॥"
तत्प्रणाममन्त्रो यथा, वर्णोद्धारतन्त्रे ।
"निर्गुणं त्रिगुणोपेतं सदा त्रिगोलसंयुतम् ।
सर्व्वगं सर्व्वदा शान्तं घकारं प्रणमाम्यहम् ॥"
तस्य नामानि यथा, नानातन्त्रेषु ।
"षः खड्‌गी घुर्घुरो घण्टी
घण्टीशस्त्रिपुरान्तकः ।
वायुः शिवोत्तमः सत्या किङ्किणी घोरनायकः
॥
मरीचिर्व्वरुणो मेधा कालरूपी च दाम्भिकः ।
लम्बोदरा ज्वालमूलं नन्देशो हननं ध्वनिः ॥
त्रैलोक्यविद्या संहर्त्ता कामाख्यमनघामयः ॥"

**घट**, इ कि द्युतौ । इति कविकल्पद्रुमः ॥ (चुरां-
पक्षे भ्वां-परं-अकं-सेट् ।) इ, भावे घण्ट्यते ।
कि, घण्टयति घण्टति । द्युतिर्दीप्तिः ।
द्युत्यर्थत्वेन
पाक्षिकचुरादित्वे सिद्धे कि करणमर्थान्तरेऽपि
पाक्षिकचुरादित्वार्थम् । तथाच, --
"क्रियावाचित्वमाख्यातुंप्रसिद्धोऽर्थः प्रदर्शितः
।
प्रयोगतोऽन्ये मन्तव्या अनेकार्था हि धातवः
॥"
इति वोपदेवः ॥
प्रसिद्धाथ कथयितुं धातूनां प्रसिद्धोऽर्थः प्रद-
र्शितः । किन्तु महाकविप्रयोगं दृष्ट्वान्येऽप्यर्था
मन्तव्याः हि यस्मात् धातवोऽनेकार्था भवन्ती-
त्यर्थः । तेन हिंसास्तुत्योः पठितस्यापि
शंसतेः
कथनार्थत्वे न मे ह्रिया शंसति किञ्चिदीप्सित-
मिति रघौ कथयतीत्येवार्थः । एवं दीप्तिपठित-
स्यापि तर्कधातोर्वितर्कणार्थत्वे तर्कयत्यन्यगुणं
सुधीरित्यादिः । इति दुर्गादासः ॥

**घट**, ष ङ म चेष्टे । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-अकं-सेट् ।) ष, घटा । ङ, घटते
पठितुं शिष्यः । म, घटयति । घटतीति घटो
ज्ञेयो नाघटन् घटतामियादिति तु घटते घटः
पचादित्वादन् । ततो घट इवाचरतीति क्वौ
साध्यम् । इति दुर्गादासः ॥ (यथा, भट्टिः ।
१२ । २६ ।
"घटेत सन्ध्यादिषु यो गुणेषु
लक्ष्मीर्न तं मुञ्चति चञ्चलापि ॥")

**घटः**, पुं, (घटते मृदादिसङ्घातैः जलादिग्रहणाय
इत्यर्थः । घट् + पचाद्यच् ।) कलसः ।
इत्यमरः ।
२ । ९ । ३२ ॥ (यथा, मनुः । ८ । ३१९ ।
"यस्तु रज्जुं घटं कूपाद्धरेद्भिन्द्याच्च यः प्रपाम्
।
स दण्डं प्राप्नुयान्माषं तच्च तस्मिन् समाहरेत्
॥")
तस्य परिमाणं कलशशब्दे द्रष्टव्यम् ॥ समाधि-
भेदः । (घटस्थवारिवत् निश्चलत्वात्तथात्वम्
।)
"द्वितीयायां घटीकृत्य वायुर्भवति मध्यगः ।
दृढासनो भवेद्योगी ज्ञानी देवसमस्तदा ॥
विष्णुग्रन्थेस्ततो भेदात् परमानन्दसूचकः ।
अतिशून्ये विमर्द्दश्च भेरीशब्दस्तथा भवेत् ॥")

**घटकः**, पुं, (घटयति परस्परसम्बन्धादिकमिति।
घट् + णिच् + ण्वुल् ।) कुलाचार्य्यः । तस्या-
स्पृश्यत्वम् । यथा, --
"वरं चाण्डालसंस्पर्शं कुर्य्याच्च साधकोत्तमः ।
तथाप्यस्पृश्यगणकं सर्व्वदा तं परित्यजेत् ॥
दूषिताः कलिकालेषु भारते विविधाः प्रजाः ।
अतएव महेशानि ! सर्व्वे संसर्गदूषिताः ॥
घटकं ब्राह्मणं देवि ! संस्पर्शे यत्नतस्त्यजेत्
॥"
इति शाक्तानन्दतरङ्गिण्यां षोडशोल्लासे महिष
मर्द्दिनीतन्त्रवचनम् ॥ * ॥ योजकः ।
तत्पर्य्यायः ।
त्र्यक्षरः २ । इति त्रिकाण्डशेषः ॥ तस्य लक्षणं
यथा, कुलदीपिकायाम् ।
"धावको भावकश्चैव योजकश्चांशकस्तथा।
दूषकस्तावकश्चैव षडेते घटकाः स्मृताः ॥"
अन्यच्च ।
"के नो विदन्ति पुरुषा पुरुषानुपूर्ब्बी-
मुर्व्वीतले कुलभृतां परिवर्त्तनं वा ।
अत्यन्तसूक्ष्ममपि ये कुलतारतम्यं
जानन्ति ते हि घटका न तु योजकाद्याः ॥"
वनस्पतिः । पुष्पेण विना यः फलति सः ।
इति
भूरिप्रयोगः ॥ (घटयति योजयति परार्थहिता-
दिकं साधयतीत्यर्थः । योजके, त्रि । यथाह
भर्त्तृहरिः । २ । ६६ ।
"ते ते सत्पुरुषाः परार्थघटकाः स्वार्थस्य
वाधेन ये
मध्यस्थाः परकीयकार्य्यकुशलाः
स्वार्थाविरोधेन
ये ।
ते वै मानुषराक्षसाः परहितं यैः स्वार्थतो
हन्यते
ये च घ्नन्ति निरर्थकं परहितं ते के न जानी-
महे ॥")

**घटदासी**, स्त्री, (घटार्थं धटनार्थं नियोजिता
दासीत या । घटयति योजयति नायकनायिके

**घः**, पुं, (घण्टयति शब्देन शोभते घटयति घर्घ-
रादिशब्दं वा । घटि द्युतौ घट चेष्टायां च
+ बाहुलकात् डः ।) घण्टा । घर्घरशब्दः । इति
मेदिनी । घे । १ ॥

**घग्घ**, हसने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
अकं-सेट् ।) कण्ठ्यवर्गतृतीयोपधः । घग्घति ।
इति दुर्गादासः ॥

**घट**, क हिंसे । संघाते । द्युतौ । इति कविकल्प-
द्रुमः ॥ (चुरां-परं-सकं-अकंच-सेट् ।) क, घाट-
यति कवाटं द्वारि जनः संयोजयतीत्यर्थः ।
इति दुर्गादासः ॥

स तु कुम्भकम् । इभशिरः । (आकृतिसादृश्या-
त्तथात्वम् ।) कूटकुटः । इति मेदिनी । टे । ७ ॥
कुम्भराशिः । यथा, --
"सिंहे वा यदि गोघटे गतनरः सर्व्वार्थसिद्धिं लभेत् ।"
इति समयप्रदीपः ॥ द्रोणपरिमाणम् । इति
वैद्यकपरिभाषा ॥ (अस्य पर्य्याया यथा, --
"चतुर्भिराढकैर्द्रोणः कलशोनल्वणोर्म्मलः ।
उन्मानश्च घटो राशिर्द्रोणपर्य्यायसंज्ञितः ॥"
इति शार्ङ्गधरे पूर्ब्बखण्डे प्रथमेऽध्याये ॥
"कंसश्चतुर्गुणो द्रोणः अर्म्मणोनल्वणञ्च तत् ।
स एव कलशः ख्यातो घट उन्मान मेवच ॥"
इति चरके कल्पस्थाने द्वादशेऽध्याये ॥)
कुम्भपरिमाणम् । यथा, --
"दशद्रोणो भवेत् खारी कुम्भस्तु द्रोणविंशतिः ।"
इति प्रायश्चित्ततत्त्वे कात्यायनः ॥
(योगावस्थाभेदः । यथा, हटयोगप्रदीपिकायाम् ।
४ । ६९ ।
"आरम्भश्च घटश्चैव यथा परिचयोऽपि च ।
निष्पत्तिः सर्व्वयोगेषु स्यादवस्थाचतुष्टयम् ॥"
एतदवस्थायां किं स्यात्तदाह तत्रैव । ४ ।
७२-७३ ।

इति घटा योजिका सा दासीव इति वा ।)
कुट्टनी । तत्पर्य्यायः । कुट्टिनी २ इज्या ३ रत-
ताली ४ गणेरुका ५ । इति त्रिकाण्डशेषः ॥

**घटना**, स्त्री, (घट + णिच् + युच् टाप् च ।) संघार्ता-
करणम् । समूहीकरणम् । यथा, "करिणां घठना
घटा ।" इत्यमरः । २ । ८ । १०७ ॥ योजना ।
मेलनम् । यथा, "अघटनघटनापटीयसी
माया ।" इति मायालक्षणम् ॥ (यथा, राज-
तरङ्गिण्याम् । ४ । ३६५ ।
"शक्तिः काऽप्यपरीक्षितास्ति महतां स्वैरं दविषान्यहो
यन्माहात्म्यवशेन यान्ति घटनां कार्य्याणि
निर्यन्त्रणम् ॥")

**घटयोनिः**, पुं, (घटः कुम्भः योनिः कारणं उत्-
पत्तिस्थानम् यस्य ।) अगस्त्यमुनिः । इति
हलायुधः ॥

**घटराजः**, पुं, (घटेषु राजते इति । यद्वा घटेन
मृदादिसङ्घटनेन राजते शोभते इत्यर्थः ।)
कुम्भः । इति हारावली ॥

**घटा**, स्त्री, (घट + भावे षित्वादङ् ततष्टाप् च ।)
करिणां घटना । हस्तिनां युद्धादावेकत्र संघाती-
करणम् । इत्यमरः । २ । ८ । १०७ ॥ (यथा,
कथासरित्सागरे । १९ । १०९ ।
"तुरुष्कतुरगव्राताः क्षुब्धस्याब्धेरिवोर्म्मयः ।
तद्गजेन्द्रघटा वेलावनेषु दलशो ययुः ॥")
घटनम् । गोष्ठी । सभा । इति मेदिनी । टे । १३
॥
समूहः । यथाह श्रीहर्षः ।
"यदगारघटाट्टकुट्टिमस्रवदिन्दूपलतुन्दिलापया
॥"

**घटालावुः**, स्त्री, (घटाकारा अलावुः ।) कुम्भ-
तुम्बी । इति राजनिर्घण्टः ॥

**घटिकं**, क्ली, (घटेन सादृश्यं विद्यतेऽस्य इति ठन् ।)
नितम्बः । इति शब्दचन्द्रिका ॥ (घटेन तर-
तीति । "नौद्व्यचष्ठन् ।" ४ । ४ । ७ । इति ठन्
।
घटेन तरणशीले त्रि । पुंसि तु । घटिं कायति
वादयति घटीवादनेन समयं ज्ञापयतीति । कै +
कः पूर्ब्बह्रस्वश्च । घटीवादकः ॥)

**घटिका**, स्त्री, (पादस्यास्थ्नां ग्रन्थिघटः घटना
विद्यतेऽत्र इति । घट + ठन् ।) पादग्रन्थिः ।
इति शब्दरत्नावली ॥ (घटयति निर्द्दिशति
निरूपयति वा कालांशविशेषं लोकयात्रासम्पा-
दनाय । घट + णिच् + ण्वुल् + टापि अत
इत्वञ्च ।) मुहूर्त्तः । इति जटाधरः ॥ यथा,
ज्योतिर्विदाभरणे ।
"गुर्व्वक्षराणामुदितं च षष्ट्या
पलं पलानां षटिका किलैका ॥"
यथा, तिथितत्त्वे रघुनन्दनः । "अत्र घटिका
मुहूर्त्तं श्राद्धयोग्यकालानुरोधात् ॥") दण्डः ।
घडी इति भाषा । यथा, --
"चतस्रो घटिकाः प्रातररुणोदय उच्यते ॥"
इति तिथ्यादितत्त्वम् ॥
(घट + स्वल्पार्थे कन् टापि अत इत्वञ्च । क्षुद्र-
घटः । यथा, पञ्चतन्त्रे । १ । २०३ ।

**घटीकारः**, पुं, (घटीं करोतीति । कृ + "कर्म्म-
ण्यण् ।" ३ । २ । १ । इत्यण् ।) यद्वा, अघटं
घटं करोति यः । कुलालः । इति मुग्धबोधम्
॥

**घटीयन्त्रं**, क्ली, (घट्याः यन्त्रम् ।) कूपाज्जलो-
त्तोलनार्थरज्जुसहितघटः । जलतोला कल
इति
भाषा । तत्पर्य्यायः । उद्घाटनम् २ ।
इत्यमरः ।
२ । १० । २७ ॥ (यथा, मार्कण्डेयपुराणे ।
१२ । २० ।
"तान्येव तत्र चक्राणि घटीयन्त्राणि चान्यतः
॥"
घटी क्षुद्रघटस्तदधस्तनार्द्धाकारंयन्त्रम् ।
यद्वा
घट्याः दण्डरूपकालस्य ज्ञापकं यन्त्रम् ।
काल-
परिमाणज्ञापको यन्त्रविशेषः । घडी इति
ख्यातः ॥ सूर्य्यसिद्धान्ते
कालमानज्ञापकयन्त्राणि
बहुविधान्युक्तानि । तत्र शङ्कुयष्ट्यादिकं
दिवा-
कालमानज्ञापकमुक्तवान् । घटीयन्त्रादिकन्तु
अहर्निशं कालज्ञानसाधनमिति
घटीयन्त्रादिकं
सूर्य्यसिद्धान्ते रङ्गनाथेन विस्तीर्य्य प्रदर्शितम्
।
यथा, --
"अथ घटीयन्त्रादिभिश्चमत्कारियन्त्रैर्वा
सर्व्वोप-
जीव्यं कालं सूक्ष्मं साधयेदिति कालसाधन-
मुपसंहरति ॥"
"तोययन्त्रकपालाद्यैर्म्मयूरनरवानरैः ।
ससूत्ररेणुगर्भैश्च सम्यक् कालं प्रसाधयेत् ॥"
इति सूर्य्यसिद्धान्तः ॥
अत्र रङ्गनाथकृतटीका यथा, --
"जलयन्त्रञ्च तत् कपालञ्च कपालाख्यं
जलयन्त्रं
वक्ष्यमाणं तदाद्यं प्रथमं तेषां तैर्यन्त्रैर्वालुका-
यन्त्रप्रभृतिभिः सापेक्षघटीयन्त्रैर्म्मयूरनरवानरैः
।
किञ्चिद्वक्रा योज्याः सुषिरस्यार्द्धे पृथक्
तासाम् ॥
रसपूर्णे तच्चक्रं द्व्याधाराक्षस्थितं स्वयं
भ्रमति ॥
अम्बु जलस्य प्रयोगः । सूत्राणि सूत्रसाधन-
प्रयोगः । शुल्वं शिल्पनैपुण्यम् । तैलजलानि
तैलयुक्तजलस्य प्रयोगः । चकारात् तयोः
पृथक्
प्रयोगोऽपि । यथा च सिद्धान्तशिरोमणौ ।
उत्कीर्य्यनेमिमथवा परितो मदनेन संलग्नम् ।
तदुपरि तालदलाद्यं कृत्वा सुषिरे रसं क्षिपेत्
तावत् ॥
यावद्रसैकपार्श्वे क्षिप्तजलं नान्यतो याति ।
पिहितच्छिद्रं तदतश्चक्रं भ्रमतिस्वयं
जलाकृष्टम् ॥
ताम्रादिमयस्याङ्कुशरूपनलस्याम्बुपूर्णस्य ।
एकं कुण्डजलान्तर्द्वितीयमग्रं त्वधोमुखं च
वहिः ॥
युगपन्मुक्तं चेत् कं नलेन कुण्डाद्बहिः पतति ।
नेम्यां वद्धा घटिकाश्चक्रं जलयन्त्रवत् तथा
धार्य्यम् ॥
नलकप्रच्युतसलिलं पतति यथा तद्घटीमध्ये
।
भ्रमति ततस्तत् सततं पूर्णघटीभिः
समाकृष्टम् ॥
चक्रच्युतं तदुदकं कुण्डे याति प्रणालिकया ॥
बीजानि केवलं तुङ्गबीजप्रयोगः । पांसवो
धूलि-
प्रयोगास्तैर्युक्ताः प्रयोगाः । अपिशब्दात् प्रयो-
गेषु सुगमतरा इत्यर्थः । दुर्लभा
असाधारणत्वेन
मनुष्यैः कर्त्तुमशक्या इत्यर्थः । अन्यथा
प्रतिगृहं
स्वयंवहानां प्राचुर्य्यापत्तेः । इयं
स्वयंवहविद्या
समुद्रान्तर्निवासिजनैः फिरङ्गाख्यैः सम्यग-
भ्यस्तेति । कुहकविद्यात्वादत्र
विस्तारानुद्योग
इति संक्षेपः ॥ * ॥ अथ
कपालाख्यजलयन्त्रमाह ।
"ताम्रपात्रमधश्छिद्रं न्यस्तं कुण्डेऽमलाम्भसि
।

"एता हसन्ति च रुदन्ति च कार्य्यहेतो-
र्विश्वासयन्ति च परं न च विश्वसन्ति ।
तम्मान्नरेण कुलशीलवता सदैव
नार्य्यः श्मशानघटिका इव वर्ज्जनीयाः ॥")

**घटी**, स्त्री, (घटते इति घटः । घट + अच् । ततः
संज्ञायां जातौ वा ङीष । यद्वा, घटः काल-
मानज्ञापकः सच्छिद्रः कुम्भः
ज्ञापकतयाऽस्त्यस्या-
मित्यच ततो गौरादित्वात् ङीष् ।) दण्डः । इति
भूरिप्रयोगः ॥ घडी इति भाषा ॥ (यथा,
मिद्धान्तशिरौमणौ ।
"गुर्व्वक्षरैः खेन्दुमितैरमुस्तैः
षड्भिः पलं तैर्घटिका खषड्भिः
स्याद् वा घटो पष्टिरहः खरामैः ॥"
स्वल्पार्थे ङीष् ।) क्षुद्रघटः । इति मुग्ध-
बोधम् ॥ (यथा, मार्कण्डेये । १२ । २२ ।
षटीयन्त्रेयु चैयान्यो बद्धस्तोये यथा घटी ॥")

मयूराख्यं स्वयंवहयन्त्रं निरपेक्षं नरयन्त्रं शङ्-
क्वाख्यं छायायन्त्रं पूर्ब्बोद्दिष्टं वानरयन्त्रं
स्वयं-
वहं निरपेक्षमेतैः ससूत्ररेणुगर्भैः सूत्रसहिता
रेणवो धूलयो गर्भे मध्ये येषां तैः सूत्रप्रोताः
षष्टिसंख्यका मृद्घटिका मयूरोदरस्था मुखात्
घटिकान्तरेण स्वत एव निःसरन्तीति लोक-
प्रसिद्ध्या तादृशैर्यन्त्रैरित्यर्थः । यद्वा सूत्रा-
कारेण रेणवः सिकतांशा गर्भे उदरे यस्यै-
तादृशं यन्त्रं बालुकायन्त्रं प्रसिद्धम् । तेन
सहितै-
र्मयूरादियन्त्रमयूराद्युक्तयन्त्रैर्बालुकायन्त्रेण
चेति
सिद्धोऽर्थः ।
चकारस्तोययन्त्रकपालाद्यैरित्येन्म
समुच्चयार्थकः । कालं दिनगतादिरूपं
सम्यक्
सूक्ष्मं प्रसाधयेत् । प्रकर्षेण
सूक्ष्मत्वेनातिसूक्ष्मत्वेने-
त्यर्थः । जानीयादित्यर्थः ॥ * ॥ ननु
मयूरादि-
स्वयंवहयन्त्राणि कथं
साध्यानीत्यतस्तत्साधन-
प्रकारा बहवो दुर्गमाश्च सन्तीत्याह ॥"
"पारदाराम्बुसूत्राणि शुल्वतैलजलानि च ।
बीजानि पांशवस्तेषु प्रयोगास्तेऽपि दुर्लभाः
॥"
अत्र रङ्गनाथकृतटीका यथा, --
"तेषु मयूरादियन्त्रेषु म्वयंवहार्थमेते प्रयोगाः
प्रकर्षेण योज्याः । प्रकर्षस्तु
यावदभिमतसिद्धेः ।
एते क इत्यत आह । पारदाराम्बुसूत्राणोति
पारदयुक्ता आराः । यथा सिद्धान्तशिरोमणौ
।
लघु काष्ठजसमचक्रे समसुषिराराः समान्तरा
नेभ्याम् ।

षष्टिर्मज्जत्यहोरात्रे स्फुटं यन्त्रं कपालकम्
॥"
अत्र रङ्गनाथकृतटीका यथा, --
"यत् ताम्रघटितं पात्रमधश्छिद्रं अधोभागे
छिद्रं
यस्य तत् । अमलाम्भसि निर्म्मलं जलं
विद्यते
यस्मिन् तादृशे कुण्डे बृहद्भाण्डे न्यस्तं
धारितं
सत् अहोरात्रे नाक्षत्राहोरात्रे षष्टिः षष्टिवार-
मेव न न्यूनाधिकं मज्जति । अधश्छिद्रमार्गण
जलागमनेन जलपूर्णतया निमग्नं भवति तत्-
कपालकं कपालमेव कपालकं घटखण्डानां
कपालपदवाच्यत्वात् घटाधस्तनार्द्धाकारं
यन्त्र
घटीयन्त्रं स्फुटं सूक्ष्मम् । तद्घटनन्तु ।
शुल्वस्य दिग्भिर्विहितं पलैर्यत्
षडङ्गुलोच्चं द्विगुणायतास्यम् ।
तदम्भसा षष्टिपलैः प्रपूर्य्यं
यात्र घटार्द्धप्रतिमं घटी स्यात् ॥
सत्र्यंशमाषत्रयनिर्म्मिता या
हेम्नः शलाका चतुरङ्गुला स्यात् ।
विद्धं तया प्राक्तनमत्रपात्रं
प्रपूर्य्यते नाडिकयाम्बुभिस्तत् ॥
तथाच सिद्धान्तशिरोमणौ, --
"घटदलरूपा घटिता घटिका ताम्री तले
पृथुच्छिद्रा ।
द्युनिशनिमज्जनमित्याभक्तंद्युनिशं
घटीमानम् ॥"
"अत्र दशभिः शुल्बस्य पलैरित्यादि यद्घटी-

लक्षणं कैश्चित् कृतं तद्युक्तिशून्यं दुर्घटं चेत्येतदु-
पेक्षितम् । इष्टप्रमाणाकारसुषिरं पात्रं घटी-
संज्ञमङ्गीकृतम् । द्युनिशनिमज्जनसङ्ख्यया यदि
षट्त्रिंशच्छतानि पानीयपलानि लभ्यन्ते तदै-
केन निमज्जनेन किमिति त्रैराशिकम् ।” इति
घटीयन्त्रम् ॥ अन्यानि कालमानयन्त्राणि तु
यन्त्रशब्दे द्रष्टव्यानि ॥)

**घटोत्कचः**, पुं, (घट इव उद्गतःकचोऽस्य ।)
राक्षसविशेषः । स तु हिडिम्बाराक्षसीगर्भे
भीमसेनाज्जातः ॥ इति महाभारतम् ॥ (अस्य
नामनिरुक्त्या सह जन्मादिविवरणं यथा, महा-
भारते । १ । १५६ । २१--६३ ।
“तथेति तत् प्रतिश्रुत्य हिडिम्बा राक्षसी तदा ।
भीमसेनमुपादाय सोद्र्ध्वमाचक्रमे ततः ॥
शैलशृङ्गेषु रम्येषु देवतायतनेषु च ।
मृगपक्षिविघुष्टेषु रमणीयेषु सर्व्वदा ॥
कृत्वा च रूपं परमं सर्व्वाभरणभूषिता ।
सञ्जल्पन्ती सुमधुरं रमयामास पाण्डवम् ॥
तथैव वनदुर्गेषु पुष्पितद्रुमसानुषु ।
सरःसु रमणीयेषु पद्मोत्पलयुतेषु च ॥
नदीद्वीपप्रदेशेषु वैदूर्य्यसिकतासु च ।
सुतीर्थवनतोयासु तथा गिरिनदीषु च ॥
काननेषु विचित्रेषु पुष्पितद्रुमवल्लिषु ।
हिमवद्गिरिकुञ्जेषु गुहासु विविधासु च ॥
प्रफुल्लशतपत्रेषु सरःस्वमलवारिषु ।
सागरस्य प्रदेशेषु मणिहेमचितेषु च ॥
पत्तनेषु च रम्येषु तथैवोपवनेषु च ।
देवारण्येषु पुण्येषु तथा पर्व्वतसानुषु ॥
गुह्यकानां निवासेषु तापसायतनेषु च ।
सर्व्वर्त्तुफलपुष्पेषु मानसेषु सरःसु च ॥
विभ्रती परमं रूपं रमयामास पाण्डवम् ।
रमयन्ती तथा भीमं तत्र तत्र मनोजवा ॥
प्रजज्ञे राक्षसीपुत्त्रं भीमसेनात् महाबलम् ।
विरूपाक्षं महावक्त्रं शङ्कुकर्णं विभीषणम् ॥
भीमनादं सुताम्रौष्ठं तीक्ष्णदंष्ट्रं महारवम् ।
महेष्वासं महावीर्य्यं महासत्त्वं महाभुजम् ॥
महाजवं महाकायं महामायमरिन्दमम् ।
दीर्घघोणं महोरस्कं विकटोद्बद्धपिण्डिकम् ॥
“ततोऽब्रुवन् कुरवः सर्व्व एव
कर्णं दृष्ट्वा घोररूपाञ्च मायाम् ।
शक्त्या रक्षो जहि कर्णाद्य तूर्णं
नश्यन्त्येते कुरवो धार्त्तराष्ट्राः ॥
करिष्यतः किञ्च नो भीमपार्थौ
तपन्तमेनं जहि पापं निशीथे ।
यो नः संग्रामाद्घोररूपाद्विमुच्येत्
स नः पार्थान् सबलान् योधयेत ॥
तस्मादेनं राक्षसं घोररूपं
जहि शक्त्या वै दत्तया वासवेन ।
मा कौरवाः सर्व्व एवेन्द्रकल्पा
रात्रियुद्धे कर्ण ! नेशुः सयोधाः ॥
स वध्यमानो रक्षसा वै निशीथे
दृष्ट्वा रालंस्त्रास्यमानं बलञ्च ।
महच्च श्रुत्वा निनदं कौरवाणां
मतिं दध्रे शक्तिमोक्षाय कर्णः ॥
स वै क्रुद्धः सिंह इवात्यमर्षी
नामर्षयत् प्रतिघातं रणे तम् ।
शक्तिं श्रेष्ठां वैजयन्तीमसह्यां
समाददे तस्य वधं चिकीर्षन् ॥
याऽसौ राजन् ! निहिता वर्षपूगान्
वधायाजौ सत्कृता फाल्गुनस्य ।
यां वै प्रादात् सूतपुत्राय शक्रः
शक्तिं श्रेष्ठां कुण्डलाभ्यां निनाय ॥
तां वै शक्तिं लेलिहानां प्रदीप्तां
पाशैर्युक्तामन्तकस्येव रात्रिम् ।
मृत्योः स्वसारं ज्वलितामिवोल्कां
वैकर्त्तनः प्राहिणोद्राक्षसाय ॥
तामुत्तमां परकायावहन्त्रीं
दृष्ट्वा सौतेर्ब्बाहुसंस्थां ज्वलन्तीम् ।
भीतं रक्षो विप्रदुद्राव राजन् !
कृत्वात्मानं विन्ध्यतुल्यप्रमाणम् ॥
दृष्ट्वा शक्तिं कर्णबाह्वन्तरस्थां
नेदुर्भू तान्यन्तरीक्षे नरेन्द्र ! ।
ववुर्वातास्तुमुलाश्चापि राजन् !
सनिर्घाता चाशनिर्गां जगाम ॥
सा तां मायां भस्म कृत्वा ज्वलन्ती
भित्वा गाढं हृदयं राक्षसस्य ।
ऊद्र्ध्वं ययौ दीप्यमाना निशायां
नक्षत्राणामन्तराण्याविशन्ती ॥
युद्ध्वा चित्रैर्विविधैः शस्त्रपूगै-
र्दिव्यैर्वीरो मानुषै राक्षसैश्च ।
स तद्रूपं भैरवं भीमकर्म्मा
भीमं कृत्वा भैमसेनिः पपात ।
हतोऽप्येवं तव सैन्यैकदेश-
मपोथयत् स्वेन देहेन राजन् ! ॥
ततो मिश्राः प्राणदन् सिंहनादै-
र्भेर्य्यश्च शङ्खा मुरजाश्चानकाश्च ।
दग्धां मायां निहतं राक्षसञ्च
दृष्ट्वा हृष्टाः प्राणदन् कौरवेयाः ॥
ततः कर्णः कुरुभिः पूज्यमानो
यथा शक्रो वृत्रवधे मरुद्भिः ।
अन्वारूढस्तव पुत्त्रं रथस्थं
हृष्टश्चापि प्राविशत् स्वं स्वसैन्यम् ॥”)

**घटोत्कचान्तकः**, पुं, (घटोत्कचस्य अन्तकः संहारकः ।) कर्णराजः । इति त्रिकाण्डशेषः ॥

**घटोद्भवः**, पुं, (उद्भवतीति उद्भवः घटः कलसः उद्भवः उत्पत्तिस्थानं यस्य । यद्वा घटात् उद्भवतीति । उत् + भू + अच् ।) अमस्त्यमुनिः । इति हेमचन्द्रः । २ । ३६ ॥

**घट्ट**, क चाले । इति कविकल्पद्रुमः ॥ (चुरां-परं-अकं क्रचित् सकञ्च-सेट् ।) टद्वयान्तः । चालश्चलनम् । क, घट्टयति मेघो वायुना । इति दुर्गादासः ॥

**घट्ट**, ङ चाले । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-अकं क्वचित् सकञ्च-सेट् ।) टद्वयान्तः । ङ, घट्टते । इति दुर्गादासः ॥

**घट्टः**, पुं, (घट्टतेऽस्मिन् इति । घट्ट + “हलश्च ।” ३ । ३ । १२१ । इति घञ् ।) नद्यादौ स्नाना-द्यर्थं प्रवेशस्थानम् । इति लिङ्गादिसंग्रहे अमर-भरतौ ॥ घाट् इति यस्य प्रसिद्धिः । जगात इति ख्यातो वा । तत्पर्य्यायः । तीर्थः २ । अव-तारः ३ । इति हेमचन्द्रः । ४ । १५३ ॥

**घट्टगा**, स्त्री, (घट्टेति नाम्ना गीयते उदाह्रियते इति । घट्टा + गै + कः टाप् च ।) नदीभेदः ।

अमानुषं मानुषजं भीमवेगं महाबलम् ।
यः पिशाचानतीवान्यान् बभूवातीव राक्षसान् ॥
बालोऽपि यौवनं प्राप्तो मानुषेषु विशाम्पते ! ।
सर्व्वास्त्रेषु परं वीरः प्रकर्षमगमद् बली ॥
सद्यो हि गर्भान् राक्षस्यो लभन्ते प्रसवन्ति च ।
कामरूपधराश्चैव भवन्ति बहुरूपिकाः ॥
प्रणम्य विकचः पादावगृह्णात् स पितुस्तदा ।
मातुश्च परमेष्वासस्तौ च नामास्य चक्रतुः ॥
घटो हास्योत्कच इति माता तं प्रत्यभाषत ।
अब्रवीत्तेन नामास्य घटोत्कच इति स्म ह ॥”
असौ हि कुरुक्षेत्रयुद्धे कर्णनिक्षिप्तैकपुरुष-
घातिन्या वासवदत्तया शक्त्या आहतो
मृतश्च । यथा, महाभारते । ७ । १७७ ।
४८--६३ ।

बदन्नादान् विविधान् भैरवांश्च
प्राणानिष्टांस्त्याजितः शक्रशक्त्या ॥
इदञ्चान्यच्चित्रमाश्चर्य्यरूपं
चकारासौ कर्म्म शत्रुक्षयाय ।
तस्मिन् काले शक्तिनिर्भिन्नमर्म्मा
बभौ राजन् ! शैलमेघप्रकाशः ॥
ततोऽन्तरीक्षादपतद्गतासुः
स राक्षसेन्द्रो भुषि भिन्नदेहः ।
अवाक् शिरास्तब्धगात्रो विजिह्वो
घटोत्कचो महदास्थाय रूपम् ॥

यथा, --
“मलापहा भीमरथी च घट्टगा
यथा च कृष्णा जलसाम्यतागुणैः ।
मलापहा वट्टपयस्तथापि
पथ्यं लघु स्वादुतरं सुकान्तिदम् ॥”
इति राजनिर्घण्टः ॥

**घट्टजीवा**, [न्] पुं, (घट्टेन घट्टे देयतरपण्येन
शुल्कादिनेत्यर्थः जीवतीति । जीव + णिनिः ।)
वर्णसङ्करजातिविशेषः । पाटुनि इति भाषा । स
तु वैश्यायां रजकाज्जातः । इति विवादार्णव-
सेतुः ॥

**घट्टना**, स्त्री, (घट्ट + “न्यासश्रन्थोयुच् ।” ३ । ३ ।
१०७ । इत्यस्य सूत्रस्य
“घट्टिवन्दिविदिभ्यश्चेति
वाच्यम् ।” इति वार्त्तिकोक्त्या युच् टाप् च ।)
चलना । (आङ् पूर्ब्बकघट्टनाशब्दस्य प्रयोगो
यथा, माघे । १ । १० ।
“रणद्भिराघट्टनया नभस्वतः
पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः ॥”)
वृत्तिः । इति हेमत्वन्द्रः ॥

**घण**, द ञ उ दीप्तौ । इति कविकल्पद्रुमः ॥ (तनां-
उभं-अकं-सेट् । उदित्वात् क्त्वावेट् ।) द ञ,
घणोति घणुते । उ, घणित्वा घत्वा । इति
दुर्गादासः ॥

**घण्टः**, पुं, (घण् + क्तः ।) स्वनामख्यातव्यञ्जन-
विशेषः । मत्स्यघण्टगुणः । बलरुचिकारित्वम्
।
वातनाशित्वञ्च । इति राजवल्लभः ॥

**घण्टकः**, पुं, (घण्ट + संज्ञायां कन् ।) क्षुपविशेषः ।
घेँट्कोण इति भाषा । अस्य मूलगुणाः । कफ-
नाशित्वम् । कटुपाकित्वम् । पित्तकारित्वञ्च ।
इति राजवल्लभः ॥ घण्टकर्णोऽपि पाठः ॥
द्यराटा, स्त्री (द्यण्टयति दीप्यते पूजादिकाले
वाद्येन शाभत, घण्टयति शब्दायते वा । घटि
दीप्तौ + अच् ततष्टाप् ।) कांस्यनिर्म्मितवाद्य-
विशेषः । यथा, स्मृतिः ।
"सर्व्ववाद्यमयी घण्टा वाद्याभावे नियोजयेत्
॥"
"शङ्खो यस्य गृहे नास्ति घण्टा वा गरुडान्विता
।
पुरतो वासुदेवस्य न स भागवतः कलौ ॥"
इति पद्मपुराणे पातालखण्डम् ॥
अथ घण्टामाहात्म्यमुक्तञ्च स्कान्दे श्रीब्रह्म-
नारदसंवादे यथा, --
"स्नानार्च्चनक्रियाकाले घण्टानादं करोति यः
।
पुरतो वासुदेवस्य तस्य पुण्यफलं शृणु ॥
वर्मकोटिसहस्राणि वर्षकोटिशतानि च ।
वसते देवलोके तु अप्सरोगणसेवितः ॥
सर्व्ववाद्यमयी वण्टा केशवस्य सदा प्रिया ।
वादनाल्लभते पुण्यं यज्ञकोटिसमुद्भवम् ॥
वादित्रनिनदैस्तूर्य्यगीतमङ्गलनिःखनैः ।
यः स्नापयति गोविन्दं जीवन्मुक्तो भवेद्धि सः
॥
वादित्राणामभावे तु पूजाकाले हि सर्व्वदा ।
घण्टाशब्दो नरैः कार्य्यः सर्व्ववाद्यमयी यतः ॥
सर्व्ववाद्यमयी घण्टा देवदेवस्य वल्लभा ।
तस्मात् सर्व्वप्रयत्नेन घंण्टानादन्तु कारयेत् ॥
मन्वन्तरसहस्राणि मन्वन्तरशतानि च ।
घण्टानादेन देवेशः प्रीतो भवति केशवः ॥" *
॥
दृष्ड्वानृतं यथा देवाः प्रीतिं कुर्व्वन्त्यहर्निशम्
।
सुपर्णे च तथा प्रीतिं घण्टाशिखरमास्थिते
॥
स्वकरेण प्रकुर्व्वन्ति घण्टानादं सुभक्तितः ।
मदीयार्च्चनकाले तु फलं कोटचैन्दवं कलौ
॥"
अन्यत्र च ।
"घण्टादण्डस्य शिखरे सचक्रं स्थापयेत्तु
यः ।
गरुडं वै प्रियं विष्णोः स्थापितं भुवनत्रयम् ॥
सचक्रघण्टानादन्तु मृत्युकाले शृणोति यः ।
पापकोटियुतस्यापि नश्यन्ति यमकिङ्कराः
॥
सर्व्वे दोषाः प्रलीयन्ते घण्टानादे कृते हरौ ।
देवतानां मुनीन्द्राणां पितृणामुत्सवो भवेत् ॥
अभावे वैनतेयस्य चक्रस्यापि न संशयः ।
घण्टानादेन भक्तानां प्रसादं कुरुते हरिः ॥
गृहे यस्य भवेन्नित्यं घण्टा नागारिसंयुता ।
न सर्पाणां तत्र भयं नाग्निविद्युत्समुद्भवम् ॥
यस्य घण्टा गृहे नास्ति शङ्खश्च पुरतो हरेः ।
कथं भागवतं नाम गीयते तस्य देहिनः ॥"
"अतो भगवतः प्रीत्यै घण्टा श्रीगरुडान्विता
।
संग्राह्या वैष्णवैर्यत्नाच्चक्रेणोपरि मण्डिता ॥
गीतं नृत्यं पुराणादिपठनञ्च प्रशस्यते ॥"
इति श्रीहरिभक्तिविलासे ६ विलासः ॥
(घण्टयति दीप्यते कुसुमादिभिरिति । घटि
+
अच् । स्त्रियां टाप् ।) घण्टापाटलिवृक्षः ।
इति
शब्दरत्नावली ॥ अतिबला । नागबला ।
इति
राजनिर्घण्टः ॥
(अतिबलानागबलाघण्टापाटलि-
शब्देष्वासां विवृति र्यथायथं ज्ञातव्या ॥)

**घण्टाकः**, पुं, (घण्टयति दीप्यते स्वकुसुमैरिति ।
घटिं + अच् टाप् । घण्टा तया घण्टेति
आख्ययेत्यर्थः कायतीति । घण्टा + कै +
कः ।)
घण्टापाटलिवृक्षः । इति शब्दरत्नावली ॥

**घण्टाकर्णः**, पुं, (घण्टावत् कर्णो यस्य ।) शिव-
यदि पुरसम्बन्धि स्यात्तदा उपनिष्करमिति
ख्यातम् । इत्यमरः । २ । १ । १८ ॥

**घण्टापाटलिः**, पुं, (घण्टा चासौ पाटलिश्चेति
कर्म्मधारयः ।) वृक्षविशेषः । घण्टापारुल इति
भाषा ॥ तत्पर्य्यायः । गोलीडः २ झाटलः ३
मोक्षः ४ मुष्ककः ५ । इत्यमरः । २ । ४ । ३९
॥
गोलिहः ६ घण्टा ७ पाटलिः ८ इति तट्टीका ॥
क्षारद्रुः ९ कालमुष्ककः १० । इति रत्नमाला ॥
पाटली ११ घण्टाकः १२ झाटः १३ । इति
शब्दरत्नावली ॥ तीक्ष्णः १४ घण्टकः १५ ।
इति रत्नकोषः ॥ मोक्षकः १६ काष्ठपाटली १७
कालास्थाली १८ काचस्थली १८ । इति भाव-
प्रकाशः ॥ राजनिर्घण्टोक्तगुणपर्य्यायौ मुष्कक-
शब्दे द्रष्टव्यौ ॥

**घण्टाबीजं**, क्ली, (घण्टेव बीजमस्य ।) जय-
पालः । इति राजनिर्घण्टः ॥

**घण्टारवा**, स्त्री, (घण्टारववत् रवः पक्वफलेषु
यस्याः । यद्वा, पक्वेषु फलेषु घण्टेव रौतीति ।
रु ल ध्वनौ + अच् ।) वृक्षविशेषः । झन्झनिया
इति वनशण इति च भाषा ॥ तत्पर्य्यायः ।
शणपुष्पिका २ । इत्यमरः । २ । ४ । १०७ ॥
शणपुष्पी ३ । इति भरतः ॥

**घण्टाली**, स्त्री, (घण्टां अलति पर्य्याप्नोति
शब्देनेत्यर्थः । अल पर्य्याप्तौ + "कर्म्मण्यण् ।"
३ । २ । १ । इत्यण् स्त्रियां ङीप् च । यद्वा
घण्टा आली सहचरी यस्याः शन्दसादृ-
श्यात् तथात्वम् ।) कोशातकी । इति राज-
निर्घण्टः ॥ झिङा इति भाषा ॥ (घण्टानां
आली श्रेणी ।) घण्टाश्रेणी च ॥

**घण्टाशब्दं**, क्ली, (घण्टायाः शब्द इव शब्दो
यस्य ।) कांस्यम् । इति हेमचन्द्रः । ४ । ११५ ॥

**घण्टिका**, स्त्री, (घण्टा + अल्पार्थे कन् ततष्टापि
अत इञ्च । घण्टिका क्षुद्रघण्टा तद्वत् आकृति-
रस्त्यस्याः । अर्श आदित्वादच् ।) लम्बिका ।
तालूद्र्ध्वसूक्ष्मजिह्वा । इति राजनिर्घण्टो हेम-
चन्द्रश्च ॥ (गलरोगविशेषः । अस्य स लक्षण-
चिकित्सितं यथा, --

तथा, विष्णुधर्म्मोत्तरे श्रीभगवत्प्रह्लादसंवादे ।
“शृणु दैत्येन्द्र ! वक्ष्यामि
घण्टामाहात्म्यमुत्तमम् ।
प्रह्लाद ! त्वत्समो नास्ति मद्भक्तो भुवनत्रये ॥
मम नामाङ्किता घण्टा पुरतो मम तिष्ठति ।
अर्च्चिता वैष्णवगृहे तत्र मां विद्धि दैत्यज ! ॥
वैनतेयाङ्कितां घण्टां सुदर्शनयुतां यदि ।
ममाग्रे स्थापयेद्यस्तु देहे तस्य वसाम्यहम् ॥
यस्तु वादयते घण्टां वैनतेयेन चिह्निताम् ।
धूपे नीराजने स्नाने पूजाकाले विलेपने ॥
मामाग्रे प्रत्यहं वत्स ! प्रत्येकं लभते फलम् ।
मखायुतं गोयुतञ्च चान्द्रायणशतोद्भवम् ॥
विधिवाह्यकृता पूजा सफला जायते नृणाम् ।
घण्टानादेन तुष्टोऽहं प्रयच्छामि स्वकं पदम् ॥
नागारिचिह्निता घण्टा रथाङ्गेन समन्विता ।
वादनात् कुरुते नाशं जन्ममृत्युभयस्य च ॥
गरुडेनाङ्कितां घण्टां दृष्ट्वाहं प्रत्यहं सदा ।
प्रीतिं करोमि दैत्येन्द्र ! लक्ष्मीं प्राप्य यथाधनः
॥

गणविशेषः । घैँटु इति ख्यातः । यथा, --
“घण्टाकर्णो गणः श्रीमान्
शिवस्यातीवल्लभः ॥”
इति शिवपुराणम् ॥
तस्य पूजाविधिर्य्यथा, --
“चैत्रे मासि च संपूज्यो घण्टाकर्णो
घटात्सकः ।
आरोग्याय स्नुहीमूलं संक्रान्त्यां तत्र
कारयेत् ॥”
पूजामन्त्रो यथा, --
“घण्टाकर्ण ! महावीर !
सर्व्वव्याधिविनाशन ! ।
विस्फोटकभये प्राप्ते रक्ष रक्ष महाबल ! ॥”
इति तिथ्यादितत्त्वे रविसंक्रान्तिप्रकरणम् ॥
(काशीस्थह्रदविशेषः । यथा, काशीखण्डे ।
३३ । १७५ ।
“इयं हि चित्रघण्टे शी घण्टाकर्णस्त्वयं ह्रदः
॥”)

**घण्टापथः**, पुं, (घण्टानां उपलक्षणात् घण्टादि-
वादित्राणां पन्थाः । “ऋक्पूरब्धूःपथामानक्षे
।”
५ । ४ । ७४ । इति अः ।)
घण्टोपलक्षितानां
हस्त्यादीनां पन्थाः । इति भरतः ॥ ग्रामादौ
प्रधानमार्गः । यथा, --
“दशधन्वन्तरो राजमार्गो घण्टापथः स्मृतः
॥”
इति चाणक्यम् ।
तत्पर्य्यायः । संसरणम् २ । तत् संसरणं

“तिलपिच्छिलगौल्यादिसेवनातिद्रवादपि ।
नवोदकेन कफजो जायते घण्टिकागदः ॥
जिह्वामूले कण्ठसन्धौ श्लेष्मरक्तसमुद्भवा ।
तेनास्यशोषो जडता ज्वरो मन्दश्च जायते ॥
शिरोव्यथा रुचिस्तन्द्रा तथास्यजडता भवेत् ।
तर्ज्जन्या कण्ठमध्ये तु संपीड्य रक्तग्रन्थिका ॥
परिस्रुतं तथा रक्तं तदा विम्लापनं हितम् ।
वचाञ्च मरिचं कृष्णाचूर्णं तत्र निधापयेत् ॥
मर्द्दनं स्यात् कण्ठदेशे तेन ग्रन्थिर्विलीयते ।
धान्यनागरजीमूतवचान्यग्रोधशुङ्गकाः॥
क्वाथः स्वेदो घण्टिकाया मुखे गण्डूषधारणम् ।
गले च घण्ठिकामार्गे रक्तश्लेष्मविकारजा ॥”
इति घण्ठिकारोगः ॥
इति हारीते चिकित्सितस्थाने पञ्चचत्वारिंश-
त्तमेऽध्याये ॥)

**घण्टिनीबीजं**, क्ली, (घण्टिनीव बीजं यस्य ।)

जयपालः । इति राजनिर्घण्टः ॥

**घण्टुः**, पुं, (घण्टयति दीप्यते इति । घटि दीप्तौ

+ "तन्वादेरुः ।" इति

उणादिकोषटीकाधृत-

सूत्रेण उः ।) गजघण्टा । प्रतापः ।

इत्युणादि-

कोषः ॥

**घण्टेश्वरः**, पुं, (घण्टानां घण्टाकर्णादिगणविशेषाणां

ईश्वरः प्रभुः ।) देवताविशेषः । स तु

मङ्गल-

पुत्त्रः । व्रणदाता च । घेँटु इति भाषा ॥

यथा,

"मङ्गलस्य प्रिया मेधा तस्यां घण्टेश्वरो

महान् ।

व्रणदाता च तेजस्वी विष्णुतुल्यो बभूव

ह ॥"

इति ब्रह्मवैवर्त्तपुराणम् ॥

**घण्डः**, पुं, (घणिति शब्दं कुर्व्वन् डयते उड्डीयते

इति । डी नभोगतौ + बाहुलकात् डः ।)

भ्रमरः ।

इति संक्षिप्तसारे उणादिवृत्तिः ॥

**घनं**, क्ली, (हन्यते ताड्यते यत् इति । हन् +

"मूर्त्तौ घनः ।" ३ । ३ । ७७ । इति अप्

घना-

देशश्च ।) कांस्यतालादिकं वाद्यम् ।

इत्य-

मरः । १ । ७ । ४ ॥ कांस्यतालः

करताल इति

ख्यातः आदिना काहलादयः । इति

सार-

सुन्दरी ॥ मध्यमनृत्यम् । इति मेदिनी ।

ने । ३ ॥

लोहः । इति हेमचन्द्रः ॥ त्वचम् । इति

राज-

निर्घण्टः ॥

**घनः**, पुं, (घनति दीप्यते इति । घन दीप्तौ + अच्

।)

"यच्चकार विवरं शिलाघने

ताडकोरसि स रामसायकः ॥")

पूर्णः । (यथा, महाभारते । १ । १३६ । २८ ।

"किंस्विदापूर्य्यते व्योम जलधारावनैर्घनैः ॥")

सम्पुटः । इति शब्दरत्नावली ॥ (निरवकाशः ।

यथा, पञ्चतन्त्रे । ३ । २३६ ।

"किं गाण्डीवस्फुरगुरुघनास्फालनक्रूरपाणि-

र्नासील्लीलानटनविलसन्मेखली सव्यसाची

॥")

**घनकफः**, पुं, (घनस्य मेघस्य कफ इव ।) करका ।

इति त्रिकाण्डंशेषः ॥

**घनकालः**, पुं, (घनस्य मेघस्य घनप्रधानो वा

कालः ।) वर्षा ऋतुः । इति शब्दरत्नावली ॥

**घनगोलकः**, पुं, (घनस्य नानावर्णमेघस्य गोलः ।

स इव कायति प्रकाशते इति । घन + कै +

"आतोऽनुपसर्गे कः ।" ३ । २ । ३ । इति कः ।

शुक्लरक्तमेघसादृश्यादस्य तथात्वम् ।)

संश्लिष्ट-

रजतसुवर्णम् । इति हेमचन्द्रः । ४ । ११३ ॥

मिशान सोणा रूपा इति भाषा ॥

**घनजम्बालः**, पुं, (घनः सान्द्रो जम्बालः इति

कर्म्मधारयः ।) चुलुकः । इति त्रिकाण्डशेषः ॥

**घनज्वाला**, स्त्री, (घनस्य मेघस्य ज्वाला दीप्तिः

प्रस्फुरणमित्यर्थः ।) मेघदीप्तिः । वज्राग्निः ।

इति शब्दरत्नावली ॥

**घनतालः**, पुं, (घनतायां निविडतायां अलति

पर्य्याप्नोतीति । अल पर्य्याप्तौ + अच् ।) सारङ्ग-

पक्षी । इति जटाधरः ॥

**घनतोलः**, पुं, (घनं मेघं अभिलक्षीकृत्य स्वमुखं

तोलयति ऊर्द्ध्वमुखीभवतीत्यर्थः । तुल

उन्माने +

अच् ।) चातकपक्षी । इति त्रिकाण्डशेषः ॥

**घनद्रुमः**, पुं, (घनः कण्टकाकीर्णत्वान्निविडो द्रुमो

वृक्षः ।) विकण्टकवृक्षः । इति राजनिर्घण्टः ॥

**घननाभिः**, पुं, (घनस्य मेघस्य नाभिर्गर्भाशयस्थान-

मिव । मेघस्य धूमयोनित्वाद्वे तथात्वम् ।)

घनं तदाद्यात् घनमूलमेवं

पंक्त्या भवेदेवमतः पुनश्च ॥"

इति लीलावती ॥

**घनमूलः**, पुं, (घनं दृढं मूलमस्य ।) मोरटः ।

इति राजनिर्घण्टः ॥

**घनरसः**, पुं, (घनः सान्द्रो रसः ।) सान्द्रनिर्यासः ।

(घनो रसो यस्य ।) मोरटः । (घनस्य मेघस्य

रसः ।) जलम् । कर्पूरम् । पीलुपर्णी । सम्यक्-

सिद्धरसः । इति मेदिनी । से । ५१ ॥ जले

क्लीव-

लिङ्गोऽपि । यथा, रत्नकोषे ।

"घनरसमन्घं क्षीरं घृतममृतं जीवनं भुवनम् ॥"

**घनवल्लिका**, स्त्री, (घनस्य मेघस्य वल्लिका लता

इव ।) विद्युत् । इति हारावली । ५८ ॥

**घनवल्ली**, स्त्री, (घना घनरसा वल्ली लता ।)

अमृतस्रवा लता । इति राजनिर्घण्टः ॥ (घनस्य

मेघस्य वल्लीव इति विग्रहे विद्युत् ॥)

**घनवातः**, पुं, (घनो निविडो वातो वायुर्यत्र ।)

नरकभेदः । इति हेमचन्द्रः । ५ । २ ॥

**घनवासः**, पुं, (घनस्तीक्ष्णः वासो गन्धो यस्य ।)

कुष्माण्डः । इति हारावली । ९७ ॥

**घनवाहनः**, पुं, (घन इव शुभ्रं वाहनं यस्य । शुभ्र-

वृषवाहनत्वाद्वास्य तथात्वम् ।) शिवः । इति

हेमचन्द्रः । २ । ११९ ॥ (घनो मेघः वाहनं यस्य

।)

इन्द्रः । मेघवाहन इत्यमरदर्शनात् ॥

**घनश्यामः**, त्रि, (घनो मेघस्तद्वत् श्यामः श्याम-

वर्णः ।) निविडकृष्णवर्णः । मेघतुल्यश्यामवर्णः ।

योगरूढिरयं शब्दः श्रीरामकृष्णयोर्बोधकः ।

इति केचित् तत्र पुं । यथा, महानाटके ।

"अये राम ! घनश्याम ! चुम्बामि मुखपङ्कजम् ।

यदि जीवामि शोकेन पुनर्द्रक्ष्यामि ते मुखम् ॥"

"समानकर्णविन्यस्तस्फुरन्मकरकुण्डलम् ।

हेमाम्बरं घनश्यामं श्रीवत्सश्रीनिकेतनम् ॥"

इति श्रीभागवतम् ॥

**घनसारः**, पुं, (घनः शुक्लमेवस्तद्वत् शुभ्रः सारो

मेघः । (यथा, महाभारते । १ । १३७ ।
२४ ।
"ततः स्नेहाद्धरिहयं दृष्ट्वा
रङ्गावलोकिनम् ।
भास्करोऽप्यनयन्नाश समीपोपगतान्
घनान् ॥")
मुस्ता । ओघः । दार्ढ्यं । विस्तारः ।
(हन्यते
वध्यतेऽनेन । हन् + "मूर्त्तौ घनः ।" ३ ।
३ ।
७७ । इति अप् घनादेशश्च ।)
लौहमुद्गरः ।
इति मेदिनी । ने । ३ ॥ (यथा, भारविः ।
१८ । १ ।
"धनुरपास्य सबाणधिशङ्करः
प्रतिजघान घनैरिव मुष्टिभिः ॥")
शरीरम् । कफः । अभ्रकम् । इति राज-
निर्घण्टः ॥ सजातीयाङ्कत्रयस्य पूरणम् ।
यथा,
"समस्त्रिघातश्च घनः प्रदिष्टः
स्थाप्यो घनोऽन्त्यस्य ततोऽन्त्यवर्गः ।
आदित्रिनिघ्नस्तत आदिवर्ग-
स्त्र्यन्त्याहतोऽथादिघनश्चसर्व्वे ॥"
इति लीलावती ॥
(वेदपाठविशेषः । यथा, --
"जटामुक्तां विपर्य्यस्य घनमाहुर्मनीषिणः
॥")

**घनः**, त्रि, (हन्यते इति । हन् + अप् घना-
देशश्च ।) निविडः । तत्पर्य्यायः ।
निरन्तरः २
सान्द्रः ३ । इत्यमरः । ३ । १ । ६६ ॥
(यथा,
रघुः । ८ । ९१ ।
"स तथेति विनेतुरुदारमतेः
प्रतिगृह्य वचो विससर्ज्ज मुनिम् ।
तदलब्धपदं हृदिं शोकघने
प्रतियातमिवान्तिकमस्यगुरोः ॥")
दृढः । इति मेदिनी । ने । ४ ॥ (यथा,
रघुः ।
११ । ११८ ।
धूमः । इति शब्दरत्नावली ॥

**घनपत्रः**, पुं, (घनानि निविडानि पत्राणि यस्य ।)
पुनर्नवा । इति राजनिर्घण्टः ॥

**घनपाषण्डः**, पुं, (घनेन मेघेन मेघध्वनिनेत्यर्थः ।
पाषण्ड इव । मेघध्वनिश्रवणेन उन्मत्ततयास्य
तथात्वम् ।) मयूरः । इति शब्दमाला ॥

**घनफलः**, पुं, (घनानि बहूत्पन्नत्वात् निविडानि
फलानि यस्य ।) विकण्टकवृक्षः । इति राज-
निर्घण्टः ॥

**घनमूलं**, क्ली, (घनस्य सजातीयाङ्कत्रयपूरणस्य
मूलम् आद्यम् ।) पूरितसजातीयाङ्कत्रयस्या-
द्याङ्कः । यथा । नवघनस्य मूलं त्रयं इत्यादि ॥
करणसूत्रं यथा, --
"आद्यं घनस्थानमथाघने द्वे
पुनस्तथान्त्यात् घनतो विशोध्य ।
घनं पृथक्स्थं पदमस्य कृत्या
त्रिघ्न्या तदाद्यं विभजेत् फलन्तु ॥
पंक्त्यां न्घसेत्तत्कृतिमन्त्यनिघ्नीं
त्रिध्नीं त्यजंत्तत्प्रथमात् फलस्य ।
यस्य ।) कर्पूरम् । (यथा, सुश्रुते उत्तरतन्त्रे
४७ अध्याये ।
"पीनस्तनोरुजघना घनसारदिग्धा-
स्ता एवमार्द्रवसनाः सह संविशेयुः ॥"
यथाच महागणपतिस्तोत्रे । ६ ।
"दिक्कान्ताघनसारचन्दनरसासाराःश्रयन्तां
मनः ॥"
घनो निविडः सारो यस्य ।) दक्षिणावर्त्त
पारदः । इति मेदिनी रे । २६० ॥ वृक्षभेदः ।
(घनस्य मेघस्य सारः ।) जलम् । इति धरणी ॥

**घनस्कन्धः**, पुं, (घनो दृढः स्कन्धो यस्य ।) कोशाम्र
वृक्षः । इति राजनिर्घण्टः ॥

**घनस्वनः**, पुं, (घनो मुस्ता तद्वत् सुष्टु अनिति
प्राणितीति । अन घ्लु प्राणने + अच् ।) तण्डु-
लीयशाकः । इति राजनिर्घण्टः ॥ (घनस्य
मेघस्य स्वनः ।) मेघशब्दश्च ॥

**घना**, स्त्री, (घन + टाप् ।) माषपर्णी । रुद्र-
जटा । इति राजनिर्षण्टः ॥

**घनाकरः**, पुं, (वनानां मेघानामाकरः ।) वर्षाकालः ।
इति शब्दरत्नावली ॥

**घनाघनः**, पुं, (हन्तीति । हन वधे + पचाद्यच् ।
ततः “हन्तेर्घत्वञ्च ।” ३ । १ । १३४ । इत्यस्य
वार्त्ति इति द्वित्वं आक् चाभ्यासस्य ।) इन्द्रः ।
घातुकमत्तहस्ती । वर्षुकमेघः । इत्यमरः । ३ । ३ ।
१०९ ॥ (यथा, राजतरङ्गिण्याम् । ४ । ३६५ ।
“आम्भोजानि
घनाघनव्यवहितोऽप्युल्लाघयत्यंशुमान्
दूरस्थोपि पयोधरोऽतिशिशिरस्पर्शंकरोत्यात-
पम् ॥”)
अन्योन्यघट्टनं इति धरणी ॥

**घनाघनः**, त्रि, निरन्तरः । (हन्तीति । हन् +
अच् । “हन्तेर्घत्वञ्च ।” इति दित्वं आक्
चाभ्यासस्य ।) घातुकः । इति हेमचन्द्रः ॥
(यथा,
ऋग्वेदे । १० । १०३ । १ ।
“आशुः शिशानो वृषभो न भीमो
घनाघनः क्षोभणश्चर्षणीनाम् ॥”)

**घनाघना**, स्त्री, (घनाघन + टाप् ।) काकमाची ।
इति शब्दचन्द्रिका ॥

**घनात्ययः**, पुं, (घनानां मेघानामत्ययो नाशो
यस्मिन् ।) शरत्कालः । इति हेमचन्द्रः । २ ।
७२ ॥
(यथा, सुश्रुते सूत्रस्थाने ६ अध्याये ।
“पैत्तिकानां व्याधीनामुपशमो हेमन्ते
श्लैष्मिकानां
निदाघे वातिकानां घनात्यये स्वभावत एव ॥”
“हैमन्तिकं दोषचयं वसन्ते
प्रवाहयन् ग्रैष्मिकमभ्रकाले ।
घनात्यये वार्षिकमाशु सम्यक्
प्राप्नोति रोगानृतुजान्न जातु ॥”
इति चरके शरीरस्थाने द्वितीयेऽध्याये ॥)

**घनामयः**, पुं, (घनो दृढः आमयो यस्मात् ।)
खर्जूरवृक्षः । इति त्रिकाण्डशेषः ॥

**घनामलः**, पुं, (घनो निविडः अमलश्च ।) वास्तूक-
शाकः । इति त्रिकाण्डशेषः ॥

**घर्घटः**, पुं, (घर्घं इत्यस्फुटशब्दं अटति गच्छ-
तीति । अट + अच् । शकन्ध्वादित्वात् साधुः ।)
मत्स्यविशेषः । इति शब्दरत्नावली ॥ ट्याङ्गरा
इति भाषा ॥

**घर्घरः**, पुं, (घर्घेति अव्यक्तं ध्वनिविशेषं रातीति ।
रा + “आतोऽनुपसर्गे कः ।” ३ । २ । ३ । इति
कः ।) पर्व्वतद्वारम् । द्वारम् । उलूकः । नद-
विशेषः । स्वरभेदे त्रि । इति मेदिनी । रे । १५१
॥
ध्वनिः । (यथा, राजतरङ्गिण्याम् । २ । १०३ ।
“चण्डैर्डमरुनिर्घोषैर्घर्घरं श्रुतवान् ध्वनिम् ॥”)
हास्यम् । इति हेमचन्द्रः । २ । २१० ॥ तुषा-
नलः । इति भूरिप्रयोगः ॥

**घर्घरकः**, पुं, (घर्घर एव । स्वार्थे कन् ।) घर्घर-
नदः । यथा, राजनिर्घण्टे ।
“शोणे घर्घरके जलन्तु रुचिदं सन्तापशोषापहं
पथ्यं वह्निकरं तथाच बलदं क्षीणाङ्गवृद्धिप्रदं ॥”

**घर्घरा**, स्त्री, (घर्घ इत्यव्यक्तशब्दं रातीति । रा
+ कः स्त्रियां टाप् ।) क्षुद्रघण्टिका । वीणा-
भेदः । इति मेदिनी । रे । १५१ ॥ (गङ्गा ।
यथा, काशीखण्डे । २९ । ५७ ।
“घुसृणा पिञ्जरतनुर्घर्घरा घर्घरस्वना ॥”)

**घर्घरिका**, स्त्री, (घर्घरैव । स्वार्थे कन् । अत
इत्वञ्च ।) क्षुद्रघण्टिका । भृष्टधान्यम् । नदी-
विशेषः । वादित्रदण्डः । इति हेमचन्द्रः ॥ वाद्य-
प्रभेदः । इति विश्वः ॥

**घर्घुर्घा**, स्त्री, (घुर ध्वनौ + क्विप् । घुर्घुरा ध्वनि-
विशेवेण गायतीति । गै + डः । निपातनात् गस्य
घ्नत्वम् ।) यमकीटः । इति रत्नमाला ॥ घुर-
घुरिया इति भाषा ॥

**घर्व्व**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) रेफोपधः । धर्व्वति । इति दुर्गा-
दासः ॥

**घर्म्मः**, पुं, (घरति क्षरति अङ्गादिति । घृ क्षरणे
+ “घर्म्मः ।” उणां । १ । १४८ । इति मन्प्रत्य-
येन निपातनात् साधुः ।) श्रमवारि । अङ्ग-
जलम् । घाम् इति भाषा ॥ (यथा, आर्य्या-
“मन्दोष्णलोघ्रनीवारचूर्णन्तु कनकस्य च
।
तेनोद्वर्त्तितदेहस्य हरेद्ग्रीष्मप्रसारिकाम् ॥
त्वम्दोषश्चैव देवेन्द्र ! घर्म्मदोषश्च नश्यति
॥”
इति गारुडे १९४ अध्यायः ॥

**घर्म्मविचर्च्चिका**, स्त्री, (घर्म्मजनिता स्वेदोत्पन्ना
विचर्च्चिका । घर्म्मो
ग्रीष्मकालस्तज्जनिता विच-
र्च्चिका वा ।) घर्म्मविचर्च्ची ।
घर्म्मचर्च्चिका ।
घामाचि इति भाषा ॥ यथा, प्रयोगामृते ।
“स्वेदवाहीनि दुष्यन्ति
क्रोधशोकभयैस्तथा ।
ततः स्वेदः प्रवर्त्तेत दौर्गन्ध्यं
धर्म्मचर्च्चिका ॥
राजिकाकृतिरुष्णोत्था यतो
घर्म्मविचर्च्चिका ॥”
अस्याश्चिकित्सा स्वेदशब्दे द्रष्टव्या ॥

**घर्म्मान्तः**, पुं, (घर्म्मस्य निदाघकालस्य अन्तो-
ऽत्र ।) वर्षाकालः । इति राजनिर्घण्टः ॥
(यथा,
मेघदूते । १०६ ।
“घर्म्मान्ते मे विगणय कथं वासराणि
व्रजेयुः ॥”
वर्षाकालविवरणेऽस्य विशेषो बोध्यः ॥)

**घर्म्मान्तकामुकी**, स्त्री, (घर्म्मान्ते वर्षासु कामुकी
कामार्ना । वर्षाकाले हि अस्याः
मैथुनस्पृहा
भवतीति प्रसिद्धिः । यद्वा, घर्म्मान्तं
वर्षाकालं
कामयते इति । कम् + उकञ् स्त्रियां ङीप्
।)
बलाका । इति राजनिर्घण्टः ॥

**घर्षणं**, क्ली, (घृष् + भावे ल्युट् ।) घर्षः । घषा
इति भाषा ॥ यथाह, माघवकरः ।
“घर्षणादभिघाताद्वा यदङ्गं विगतत्वचम् ।
उषास्रावान्वितं तद्धि घृष्टमित्यभिधीयते
॥”

**घनाश्रयः**, पुं, (घनानां मेघानामाश्रयः ।) आकाशम् । इति हेमचन्द्रः । २ । ७७ ॥

**घनोदधिः**, पुं, (घनानां लौहमुद्गराणामुदधिः समुद्र इव । लौहमुद्गरप्रचुरतया एवास्य तथात्वम् ।) नरकभेदः । इति हेमचन्द्रः । ५ । २ ॥

**घनोपलः**, पुं, (घनस्य मेधस्य उपलः ।) करका ॥ इति हेमचन्द्रः । २ । ८० ॥ (करकाशब्देऽस्य विवरणं ज्ञातव्यम् ॥)

**घम्ब**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-पर-सकं-सेट् ।) ओष्ठ्यवर्गशेषोपधः । घम्बति । इति दुर्गादासः ॥

**घरट्टः**, पुं, (घरं घर्घर इति शब्देन अटति भ्राम्यतीति । अट् + निपातनात् द्वित्वे साधुः) पेषणी । इति पुराणम् ॥ जाँता इति भाषा ॥ (यथा, श्रीकण्ठचरिते । ६ । ६३ ।
पृष्ठभ्रमत्सजवषट्पदचक्रचिह्नं
यत्प्रोच्छ्वसत्कुसुममाविरभूल्लतानाम् ।
मानस्य पक्ष्मलदृशां सहसैव पेष्टुं
तत् स्पष्टमान्मथघरट्टविलासमासीत् ॥")

सप्तशत्याम् । २१२ ।
"दयितस्पर्शोन्मीलित-
घर्म्मजलस्खलितचरणनखलाक्षे ॥")
तत्पर्य्यायः । निदाघः २ स्वेदः ३ । इत्यमरः । १ । ७ । ३३ ॥ सिप्रः ४ । इति जटाधरः ॥
स्रवणम् ५ ।
इति शब्दरत्नावली ॥ अस्य निदानं स्वेदशब्दे द्रष्टव्यम् ॥ (घरति क्षरति स्वेदः शरीरादनेन इति । घृ + करणे मन् ।) आतपः । ग्रीष्मः । उष्मा । इति हेमचन्द्रः ॥ (यथा, सुश्रुते उत्तर-तन्त्रे ६४ अध्याये ।
"सरांसि सरितो वापि वनानि रुचिराणि च ।
चन्दनानि पराघ्यार्णि स्रजः सकमलोत्पलाः ॥
तालवृन्तानिलाहारांस्तथाशीतगृहाणिच ।
घर्म्मकाले निषेवेत वासांसि सुलघूनि च ॥"

**घर्म्मदोषः**, पुं, (घर्म्मस्य स्वेदस्य दोषः विकृतिः ।) स्वेदस्य विकारः । तस्यौषधं यथा, --

**घर्षणालः**, पुं, (घर्षणे घर्षणाय बा अलति षर्य्याप्नोति । अल् + अच् ।) शिलापुत्त्रः । इति त्रिकाण्डशेषः ॥ लोडा इति भाषा ॥

**घर्षणी**, स्त्री, (घृष्यते इति । घृष + कर्म्मणि ल्युट् । टित्त्वात् ङीप् च ।) हरिद्रा । इति त्रिकाण्ड-
शेषः ॥ (विवृतिरस्या हरिद्राशब्दे ज्ञातव्या ॥)

**घष**, इ ङ क्षरे । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-अकं-सेट् ।) आद्यस्वरी । इ,
घंष्यते । ङ,
घंषते । अयं कैश्चिन्न मन्यते । इति दुर्गादासः ॥

**घस**, इ ङ क्षरणे । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-अकं-सेट् ।) इ, घंस्यते । ङ, घंसते ।
अयं कैश्चिन्न मन्यते । इति दुर्गादासः ॥

**घस**, लृ औ भक्षणे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-अनिट् ।) लृ, अघसत् । औ, घस्ता ।
इति दुर्गादासः ॥

**घसिः**, पुं, (घस् भक्षणे + भावे इन् ।) आहारः । इति हेमचन्द्रः ॥ (तथाच, वैदिके ।
"घसिना मे मासं पृक्था ऊद्ध्वं मे नाभेः सीद ॥")

**घस्मरः**, त्रि, (घस + "सृघस्यदः क्मरच् ।" ३ । २ । १६० । इति क्मरच् ।) अद्मरः । भक्षकः ।
इत्यमरः । ३ । १ । २० ॥ (यथा, महाभारते ।
८ । ४० । ३९ ।
"गौर्य्यो बृहत्यो निर्ह्रीकाः मद्रिकाः कम्बलावृताः ।
घस्मरा नष्टशौचाश्च प्राय इत्यनुशुश्रुमः ॥")

**घस्रं**, क्ली, (घस् + रक् ।) कुङ्कुमम् । इति त्रिकाण्डशेषः ॥

**घस्रः**, पुं, (घसति भक्षयति अन्धकारम् । घस् + रक् ।) दिनम् । हिंस्रे त्रि । इति मेदिनी । रे । ३० ॥
(यथा, पञ्चदश्याम् । ६ । १८५ ।
"रात्रिघस्रौ सुप्तिबोधायुन्मीलननिमीलने ।
तूष्णीम्भावमनोराज्येइव सृष्टिलयाविमौ ॥")

**घा**, स्त्री (हन् + डः । हस्य घत्वम् । टाप् च ।) काञ्ची । घातः । इति मेदिनी । घे । १ ॥

**घाटः**, पुं, (घटते सङ्गच्छते शिरोऽनेन देहे इत्यर्थः । घट् + करणे घञ् ।) घाटा । इति शब्दरत्नावली ॥ (घाटा अस्यास्तीति । "अर्श आदिभ्यो-ऽच् ।" ५ । २ । २७ । इत्यच् । घाटाविशिष्टे, त्रि । इति व्यत्पत्तिलब्धोऽर्थः ॥)

**घाटा**, स्त्री, (घाटा विद्यतेऽस्मिन् इति घाटः ततः टाप् ।) ग्रीबापश्चाद्भागः । घाड इति भाषा ॥ तत्पर्य्यायः । अवटुः २ कृकाटिका ३ । इत्य-मरः ॥ शिरःपश्चात्सन्धिः । इति राजनिर्घण्टः ॥
घाटः ५ कृकाटी ६ । इति शब्दरत्नावली ॥
घाटिका ७ । इति शब्दचन्द्रिका ॥
("दोषास्तु दुष्टास्त्रय एवमन्यां
संपीड्य घाटां सुरुजां सुतीव्राम् ॥"
इत्युत्तरतन्त्रे पञ्चविंशेऽध्याये सुश्रुतेनोक्तम् ॥)

**घाटिका**, स्त्री, (घाटा + स्वार्थे कन् । टापि अत इत्वञ्च ।) घाटा । इति शब्दचन्द्रिका ॥ (यथा, पञ्चतन्त्रे गङ्गदत्तप्रकरणे । ४ । २५ । "अथ कूपमासाद्यारघट्टघाटिकामार्गेण सर्पस्तेनात्मना स्वालयं नीतः ॥")

**घाण्टिकः**, पुं, (घण्टया चरतीति । चरतीति ठक् ।) यो बहुभिर्मिलित्वा स्तुतिं पठति सः । यो देवताद्यग्रे घण्टाघातेन शंसति स श्रावणाख्यः ।
इति स्वामी । इति सारसुन्दरी ॥ (यदुक्तम् । लुण्ठनम् । यथा, मनुः । ९ । २७४ ।
"ग्रामघाते हिताभङ्गे पथि मोषाभिदर्शने ॥"
"ग्रामघाते ग्रामलुण्ठने तस्करादिभिः ।" इति
कुल्लूकभट्टः ॥ द्रव्याद्युत्खातः हानिर्वा । यथा,
याज्ञवल्क्ये । २ । १६२ ।
"माषानष्टौ तु महिषी शस्यघातस्य कारिणी ॥"
भङ्गः । उच्छेदादिर्वा । यथा, पञ्चतन्त्रे । १ ।
सञ्जीवककथायाम् । "प्रोवाच भो शेषभागे अयुक्तं मया पापेन कृतं सञ्जीवकं व्यापादयता
यस्माद् विश्वासघातादन्यन्नास्तिपापतरम् ॥")

**घातकः**, त्रि, (हन्तीति । हन् + ण्वुल् । णिति-तान्तादेशे कुत्वम् ।) हननकर्त्ता । यथा, --
"गौरीमाघवयोर्भर्त्ता राधिका शिवसन्निघौ ।
इन्दुः कुमुदहन्ता च सूर्य्यः कमलघातकः ॥"
इति विदग्धमुखमण्डनम् ॥
(तथा च मनुः । ५ । ५१ ।
"संस्कर्त्ता चोपहर्त्ता च
खादकश्चेतिघातकाः ॥")

**घातनं**, क्ली, (हन् + णिच् + भावे ल्युट् ।) हन-नम् । वधः । यज्ञार्थपशुवधः । इति शब्दरत्ना-वली ॥ (यथा, महाभारते । २ । ४४ । ४० ।
"पशुवद्घातनं वा मे दहनं वा कटाग्निना ॥")

**घातनः**, त्रि, (हन्ति मारयतीति । हन् + कर्त्तरि ल्युः स्वार्थे णिच् ।) वधकर्त्ता । इति सिद्धान्त-कौमुद्यामुणादिवृत्तिः ॥ (कैश्चित्तु एतस्य प्रामा-दिकत्वसुक्तम् ।
"हन्तेर्युन्नाद्यन्तयोर्घत्वतत्वे ।"
५ । ४२ । इत्युणादिसूत्रेण हन्तेर्युनिकृते आद्यन्त-

**घासिः**, पुं, (घसति भक्षयति हव्यमिति । घस + "जनिघसिभ्यामिण् ।" उणां ४ । १३० इति इण् ।) अग्निः । इति त्रिकाण्डशेषः ॥ (यथा, ऋग्वेदे । १ । १६२ । १४ ।
"यच्च पपौ यच्च घासिं जघास सर्व्वा ता ते अपि देवेष्वस्तु ॥")

**घिण**, इ ङ ग्रहणे । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-सकं-सेट् ।) इ, घिण्ण्यते । ङ, घिण्णते । जेघिण्ण्यते । इति दुर्गादासः ॥

**घु**, ङ ध्वनौ । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-अकं-अनिट् ।) ङ, घवते । इति दुर्गादासः ॥

**घुः**, पुं, (घुङ् ध्वनौ + भावे बाहुलकात् डुः ।) ध्वनिः । इति जटाधरः ॥

**घुट**, ङ ऌ परिवर्त्ते । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-अकं-सेट् ।) परिवर्त्तो गतवतः प्रत्या-गमनं विनिमयो वा । ङ, घोटते नदी । ऌ, अघु-टत् । इति दुर्गादासः ॥ (यथा, कविरहस्ये १४६ ।
"यस्य व्याघोटते दण्डो नाकृतार्थः कुतश्चन ॥")

**घुट**, शि प्रतिहतौ । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-सेट् ।) शि, घुटति अघुटीत् शत्रुं शूरः । जुघोट । इति दुर्गादासः ॥

**घुटः**, पुं, (घुट् प्रतिहतौ + संज्ञायां अच् ।) चरण-ग्रन्थिः । इति हेमचन्द्रः ॥

**घुटिः**, स्त्री, (घुट + इन् ।) गुल्फः । इति द्विरूपकोषः ॥

**घुटिकः**, पुं, (घुट् + ठन् ।) गुल्फः । इति हेम-चन्द्रः ॥

**घुटिका**, स्त्री, (घुठिक + टाप् ।) गुल्फः । इत्यमरः । २ । ६ । ७२ ॥

**घुटी**, स्त्री, (घुट् + इन् । "कृदिकारान्तादक्तिनः ।" इति ङीष् ।) गुल्फः । इति द्विरूपकोषः ॥

**घुड**, शि व्याघाते । इति कविकल्पद्रुमः ॥ (तुदा-परं-सकं-सेट् ।) शि, घुडति अघुडीत् । इति दुर्गादासः ॥

**घुण**, ङ भ्रमणे । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-सकं-सेट् ।) ङ, घोणते । इति दुर्गादासः ॥

"राज्ञः प्रबोधसमये घण्टाशिल्पास्तु घाण्टिकाः ।")
तत्पर्य्यायः । घाटिकः २ । इति भरतः ॥
चाक्रिकः ३ । इत्यमरः । २ । ८ । ९७ ॥
अन्यच्च ।
"मिलिता बहवो ये तु भवेयुः स्तुतिकारकाः ।
चाक्रिकास्ते निगदिताश्चक्रिका अपि कुत्रचित् ॥
घण्टावाद्यस्तावका ये घाण्टिका घण्टिकाश्च ते ।"
इति शब्दरत्नावली ॥
धुस्तूरवृक्षः । इति हारावली । १०७ ॥

**घातः**, पुं, (हन् + करणभावादौ घञ् । "हनस्तोऽचिण्णलोः ।" ७ । ३ । ३२ । इति हन्तेस्त-कारोऽन्तादेशः । "हो हन्तेर्ञ्णिन्नेषु ।" ७ । ३ । ५४ । इति कुत्वञ्च ।) काण्डः । प्रहारः । इति मेदिनी । ते । १७ ॥ (यथा, गोः रामा-यणे । ६ । ९८ । २४ ।
"मुष्टिभिः पार्ष्णिघातैश्च बाहुघातैश्च शोभने ।
घोरैर्जानुप्रहारैश्च नयनाञ्चनपीडनैः ॥")
अङ्कपूरणम् । यथा । "समत्रिघातश्च घनः प्रदिष्टः ।" इति लीलावती ॥ (वधः । यथा-पञ्चतन्त्रे । १ । ३१२ ।
"गृहे शत्रुमपि प्राप्तं विश्वस्तमकुतोभयम् ।
यो हन्यात् तस्य पापं स्याच्छतब्राह्मणघात-जम् ॥"
योर्घत्वतत्वे घतनः । इत्युक्तत्वात् । अतः सुधीभि-श्चिन्त्यम् ।)

**घातिः**, पुं, (हन् + इण् ।) पक्षिबन्धनम् । इत्यु-णादिकोषः ॥ प्रहरणम् । इति संक्षिप्तसारे उणादिवृत्तिः ॥

**घातिपक्षी**, [न्] पुं, (घातः घातकः पक्षीति कर्म्म-धारयः ।) श्येनपक्षी । इति हारावली । ८६ ॥

**घातुकः**, त्रि, (हन्तीति । हन् + "लषपतपदस्था-भूवृषहनकमगमशृभ्य उकञ् ।" ३ । २ । १५४ ।
इति उकञ् ।) हिंस्रः । क्रूरः । इत्यमरः । ३ । १ । ४७ ॥ (यथा, अथर्व्ववेद । १२ । ४ । ७ ।
"ततः किशोरा म्रियन्ते वत्सांश्च धातुको वृकः ॥")

**घात्यं**, त्रि, (हन्यतेऽसौ हन्तुमर्हो य इत्यर्थः ।
हन् + ण्यत् ।) हननयोग्यम् । इति व्याकर-णम् ॥ (यथा, पञ्चतन्त्रे । ३ । २२८ ।
"ततो
मम सुखघात्याः सञ्जाताः ॥")

**घारः**, पुं, (घृं सेचने + घञ् ।) सेचनम् । इति हेमचन्द्रः ॥

**घार्त्तिकः**, पुं, (घृतेन निर्वृत्तः । इति ठञ् ।)
घृतपूरः । इति हेमचन्द्रः ॥ (घृतसंयुक्ते त्रि ।
यथा, पञ्चतन्त्रे । ५ । ३५ ॥ "अन्यस्य घार्त्तिक-भोजनं दत्तम् ॥")

**घासः**, पुं, (घस्यतेऽसौ पशुभिरित्यर्थः । घस् + कर्म्मणि घञ् ।) गवाद्यदनीयतृणविशेषः ।
तत्पर्य्यायः । यवसम् २ । इत्यमरः । २ । ५ । १६७ ॥
यवसः ३ जवसः ४ । इति भरतः ॥
यवासम् ५ ।
इति शब्दरत्नावली ॥ (यथा, पञ्चतन्त्रे । ४ । ५३ ।

**घुण**, इ ङ ग्रहणे । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-सकं-सेट् ।) इ, घुण्ण्यते । ङ, घुण्णते जोघुण्ण्यते । इति दुर्गादासः ॥

**घुण**, श भ्रमणे । इति कविकल्पद्रुमः ॥ (तुदां-परं-अकं-सेट् ।) श, घुणति घोणिता । इति दुर्गादासः ॥

**घुणः**, पुं, (घुणति काष्ठं भक्षयन् काष्ठाभ्यन्तरे भ्राम्य-तीति । घुण भ्रमणे + "इगुपधज्ञाप्रीकिरः कः ।" ३ । १ । १३५ । इति कः ।) काष्ठक्रिमिः । (यथा, सुश्रुते सूत्रस्थाने । ९ अध्याये । "घुणोपहत-काष्ठवेणुनलनालीशुष्कालावुमुखेष्वेष्यस्य ॥")
तत्पर्य्यायः । काष्ठबेधकः २ । इति लिङ्गादि-संग्रहटीकायां भरतः ॥ काष्ठलेखकः ३ । इति भूरिप्रयोगः ॥

**घुणवल्लभा**, स्त्री, (घुणः वल्लभो यस्याः । घुणस्य वल्लभा वा ।) अतिविषा । इति भावप्रकाशः ॥
(व्यवहारोऽस्या यत्र तद्यथा, --
"कुटजत्वक्फलं तार्क्ष्यं माक्षिकं घुणवल्लभाम् ।
पिबेत्तण्डुलतोयेन--"
इति वाभटे चिकित्सास्थानेऽष्टमेऽध्याये ॥)

**घुण्टः**, पुं, (घुट्यते परिवृत्यतेऽनेन । घुट + घञर्थे कः निपातनात् मुम् च ।) गुल्फः । इति शब्दमाला ॥

**घुण्टकः**, पुं, (घुण्ट + स्वार्थे कन् ।) गुल्फः । इति हेमचन्द्रः ॥

**घुण्टिकं**, क्ली, (घुण्ट इव कायतीति । कै + कः ।) वनस्थकरीषम् । इति शब्दचन्द्रिका ॥ विलघुँटे इति भाषा ॥

**घुण्डः**, पुं, (घोणते भ्राम्यतीति ।) भ्रमरः । इत्युणादिकोषः ॥

**घुर**, श ध्वनौ । भीमार्थे । इति कविकल्पद्रुमः ॥ (तुदां-परं-अकं-सेट् ।) भीमो भयानकरस-स्तस्य अर्थो निमित्तं हेतुरिति यावत् भीमार्थः । श, घुरति व्याघ्रो मनुष्याणां भयहेतुर्भवतीत्यर्थः । घुर भीमार्थार्त्तशब्दयोरितिप्राञ्चः । आर्त्त इति शब्दविशेषणमिति रमानाथः । घुरत्यार्त्ते च कुरुते इति । शब्दानुवृत्तौ भट्टमल्लः । घोरिता । इति दुर्गादासः ॥

**घुर्घुरः**, पुं, (घुरति मनुष्याणां भयहेतुर्भवतीति । घुर् + क्विप् । ततः घुरो भयानकात् जन्तोरपि घुरः भयानकः । एतद्दंशनेन प्रायशो मृत्यु-सम्भवादेव तथात्वम् ।) कीटविशेषः । घुर-घुरिया इति भाषा ॥ तत्पर्य्यायः । यमकीटः २ । इति त्रिकाण्डशेषः ॥ घर्घुर्घा ३ । इति रत्न-माला ॥ (शूकरशब्दः । इति चिन्तामणिः ॥)

**घुर्घुरी**, स्त्री, (घुर्घुरः शूकरशब्दवदव्यक्तशब्दः कथनात् अत्र इट् ।) शब्दितम् । इति सुपद्म व्याकरणम् ॥

**घुष्टं**, त्रि, (घुष्यते स्म इति । घुष + “क्षुब्धवार-स्वान्तध्वान्तेति” मुग्धबोधसूत्रात् निपातनात् साधुः ।) शब्दितम् । इति मुग्धबोधम् ॥ (यथा, हरिवंशे । २० । ८६ ।
“हंससारसघुष्टेषु कारण्डवरुतेषु च ॥”
शब्दितान्यदर्थे तु “घुषिरविशब्दने ।” ७ । २ । २३ । इति नेट् । “घुष्टा रज्जुः ।” इति सिद्‌ध्वान्त-कौसुदी ॥)

**घुसृणं**, क्ली, (घुष्यते स्तूयते इति भावः । घुष + बाहुलकात् ऋणक् । पृषोदरादित्वात् साधुः । यद्वा घुंष्यते कान्तिविशिष्टं क्रियते शरीर-मनेन । घुषि घूशे + ऋणक् ।) कुङ्कुमम् । इति त्रिकाण्डशेषः ॥ (यथा, काशीखण्डे । २९ । ५७ ।
“घुसृणापिञ्जरतनुर्घर्घरा घर्घरस्वना ॥”
यथा च भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ।
“चन्दनं घुसृणोपेतं मृगनाभिसमायुतम् ।
न चोष्णं न च वा शीतं वर्षाकाले तदिष्यते ॥”
इति घुसृणकुङ्कुमम् ॥)

**घूकः**, पुं, (घू इत्यव्यक्तशब्देन कायति शब्दायते इति । घू + कै + कः ।) उलूकः । इति हेम-चन्द्रः । ४ । ३९ ॥

**घूकारिः**, पुं, (घूकस्य पेचकस्य अरिः शत्रुः ।) काकः । इति हेमचन्द्रः । ४ । ३८८ ॥

**घूकावासः**, पुं, (घूकानां पेचकानां आवासो वास-स्थानम् ।) शाखोटवृक्षः । इति राजनिर्घण्टः ॥

**घूर**, य ङ ई हिंसाज्यान्योः । इति कविकल्पद्रुमः ॥ (दिवां-आत्मं-सकं-अकं च-सेट् ।) दीर्घो । य ङ, घूर्य्यते । ई, घूर्णः । ज्यानिर्गतबहुवयो-भावः । इति दुर्गादासः ॥

**घूर्ण**, ञ श भ्रमणे । इति कविकल्पद्रुमः ॥ (तुदां-उभं-अकं-सेट् ।) ञ, घूर्णति घूर्णते । श, घूर्णती घूर्णन्ती । इति दुर्गादासः ॥ (यथा, गोः रामायणे । ४ । १५ । २५ ।
“स तु वाली रणगतः सालताडनविह्वलः ।

**घूर्णायमानः**, त्रि, (घूर्ण इवाचरतीति । घूर्ण + क्यङ् । ततो घूर्णायते इति । घूर्णाय + शानच् ।) भ्राम्यमाणः । यथा, कलापधातुव्याख्यासारे ।
“इन्द्राद्यैरखिलार्थसाधनपरैः संस्तूयमानं मुहुः
पीतोन्मत्तफलातुलालसतया घूर्णायमानेक्षणम् ॥”

**घूर्णिः**, स्त्री, (घूर्ण + “सर्व्वधातुभ्य इन् ।” उणां । ४ । ११७ । इति भावे इन् ।) घूर्णनम् । इति हेमचन्द्रः । ६ । १५५ ॥

**घूर्णितः**, त्रि, (घूर्णते स्म इति । घूर्ण + क्तः ।) भ्रमितः । तत्पर्य्यायः । प्रचलायितः २ । इत्य-मरः । ३ । १ । ३२ ॥ (यथा, कथासरित्-सागरे । २४ । १ ।
“मदघूर्णितवक्त्रोत्थैः सिन्दूरैश्छूरयन् महीम् ।
हेरम्बः पातु वो विघ्नान् स्वतेजोभिर्दहन्निव ॥”)

**घूर्ण्यमानः**, त्रि, (घूर्ण्यते इति । घूर्ण + णिच् + कर्म्मणि शानच् ।) भ्राम्वमाणः । यथा, महानाटके ।
“भो वृक्षाः पर्व्वतस्था बहुकुसुमयुता वायुना घूर्ण्यमानाः ॥”
अणिजन्ते तु घूर्णमाण इत्येव स्यात् । यथा, हरिवंशे ४८ । ३६ ।
“भ्रमन्तं घूर्णमानञ्च स्तुतिं देवाः प्रचक्रिरे ॥”)

**घृ**, सेके । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-अनिट् ।) घरति तरुं मेघः । इति दुर्गादासः ॥

**घृ**, क सेके । छादने । इति कविकल्पद्रुमः ॥ (चुरां-परं-सकं-अनिट् ।) क, घारयति । इति दुर्गा-दासः ॥

**घृ**, र लि भासि । सेके । इति कविकल्पद्रुमः ॥ (ह्वां-परं-अकं-अनिट् ।) र वैदिकः । लि,

सोऽस्या अस्तीति । घुर्घुर + “अर्श आदिभ्यो-
ऽच् ।” ५ । २ । १२७ । इत्यच् । ततो गौरा-
दित्वात् ङीष् ।) जलजन्तुविशेषः । तत्पर्य्यायः ।
मृत्किरा २ । इति त्रिकाण्डशेषः ॥

**घुलञ्चः**, पुं, गवेधुका । इति रत्नमाला ॥ गड-
गड इति भाषा ॥

**घुलघुलारवः**, पुं, (घुल् घुल् इत्यव्यक्तमारौतीति।
आ + रु + अच् ।) पारावतभेदः । इति राज-
निर्घण्टः ॥

**घुष**, इ ङ धूशे । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-सकं-सेट् ।) धूशः कान्तिकृतिः । इ,
घुष्यते । ङ, घुंषते चन्दनं गात्रम् । इति दुर्गा-
दासः ॥

**घुष**, इर् वधे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) इर्, अघुषत् अघोषीत् । इति
दुर्गादासः ॥

**घुष**, कि इर् नुतौ । स्तुतौ इति यावत् । विशब्दे ।
इति कविकल्पद्रुमः ॥ (चुरां पक्षे भ्वां-परं-सकं-
सेट् ।) विशब्द इह कथनं आविष्करणं नाना-
शब्दकरणं वा आङ्पूर्ब्बकः सततक्रन्दने । इति
तट्टीका ॥ कि, घोषयति घोषति गूढमर्थमभि-
युक्तः । नानाशब्दे वाद्यं घोषयति द्वारि यस्य
कश्चिदुपद्रुतः । इति हलायुधः । इर्, अघुषत्
अघोषीत् । घुष किरनुवर्त्तते । कि, आघोषयति
आघोषति शोकार्त्तः सततं क्रन्दतीत्यर्थः । इति
दुर्गादासः ॥

गुरुभारसमाक्रान्तश्चचालच जुघूर्ण च ॥”)

**घूर्णः**, पुं, (घूर्णति स्वोत्पत्तिभूमौ घूर्ण्याकारेण
सम्भवतीति । घूर्ण + अच् । घूर्ण्याकारेण जाय-
मानत्वात् तथात्वम् ।) ग्रीष्मसुन्दरकः । इति
शब्दचन्द्रिका ॥ गीमा इति भाषा ॥ (घूर्ण +
भावे अच् ।) भ्रमणञ्च ॥ (विघूर्णिते, त्रि ।
यथा, भागवते । ७ । २ । २ ।
“आह चेदं रुषा घूर्णः संदष्टदशनच्छदः ॥”)

**घूर्णनं**, क्ली, (घूर्ण + भावे ल्युट् ।) भ्रमणम् । तत्-
पर्य्यायः । चक्रावर्त्तः २ भ्रमः ३ भ्रान्तिः ४
भ्रमिः ५ घूर्णिः ६ । इति हेमचन्द्रः । ६ । १५५ ॥
(यथा, गीतगोविन्दे । ९ । ११ ।
“अन्तर्मोहनमौलिर्घूर्णनचलन्मन्दारविस्रंसन-
स्तब्धाकर्षणदृष्टिहर्षणमहामन्त्रः कुरङ्गी-
दृशाम् ॥”)

जघर्त्ति घृतं दीप्यते क्षरति वेत्यर्थः । इति दुर्गा-
दासः ॥

**घृण**, इ ङ ग्रहणे । कविकल्पद्रुमः ॥ (भ्वां आत्मं-
सकं-सेट् ।) इ, घृण्ण्यते । ङ, घृण्णते जरी-
घृण्ण्यते । इति दुर्गादासः ॥

**घृण**, द ञ उ दीप्तौ । इति कविकल्पद्रुमः ॥ (तनां-
उभं अकं-सेट् । उदित्वात् क्त्रावेट् ।) द ञ,
घृणोति घर्णोति । घृणुते घर्णते । उ, घर्णित्वा
घृत्वा । इति दुर्गादासः ॥

**घृणा**, स्त्री, (घ्रियते सिच्यते हृदयमनया । । घृ
सेके + बाहुलकात् नक् स्त्रियां टाप् । दयारसेन
हि हृदयं सिक्तमिवार्द्रं भवतीति तथात्वम् ।)
करुणा । (यथा, किराताज्र्जुनीये । १५ । १३ ।
“मन्दमस्यन्निषुलतां घृणया मुनिरेष वः ।
प्रणुदत्यागतावज्ञं जघनेषु पशूनिव ॥” * ॥
घ्रियते आच्छाद्यते गुणादिकमनयेति ।)
जुगुप्सा । तत्पर्य्यायः । अर्त्तनम् २ ऋतीया ३
हृणीया ४ । इत्यमरः । ३ । २ । ३२ ॥ रीज्या ५
हृणिया ६ ह्णिीया ७ ह्णीया ८ । इति
तट्टीका ॥ (यथा, रघुः । ११ । १७ ।
“तां विलोक्य वनितावधे घृणां
पत्रिणा सह मुमोच राघवः ॥”)

**घृणावासः**, पुं, (घृणायाः आवासः ।) कुष्माण्डः
इति त्रिकाण्डशेषः ॥ घृणायुक्ते त्रि ॥

| **घुषितं**, त्रि, (घुष्यते स्म इति । घुष विशब्दे + क्तः । “वुषिरविशब्दने ।” ७ । २ । २३ । इति | | |
| --- | --- | --- |

**घृणिः**, पुं, (जघर्त्ति दीप्यते इति । घृ + “घृणि-
पृश्निपार्ष्णिचूर्णिभूर्णि ।” उणां । ४ । ५२ । इति
निप्रत्ययेन निपातनात् साधुः ।) किरणः ।
इत्यमरः । १ । ३ । ३३ ॥ सूर्य्यः । (घरति सिञ्च-
तीति । घृ सेके + निः गुणाभावश्च ।) जलम् ।
इति मेदिनी ॥ (जघर्त्ति दीप्यते इति व्युत्पत्त्या
दीप्तिशालिनि, त्रि । यथा, भागवते । ७ । २ । ७ ।
“तस्य त्यक्तस्वभावस्य घृणेर्मायावनौकसः ॥”)

**घृतः**, पुं क्ली, (जघर्त्ति क्षरतीति । घृ + “अञ्जि-
घृसिभ्यः क्तः ।” उणां । ३ । ८९ । इति क्तः ।)
पक्वनवनीतम् । घि इति भाषा ॥ तत्पर्य्यायः ।
आज्यम् २ हविः ३ सर्पिः ४ । इत्यमरः । २ । ९ । ५२ ॥
पवित्रम् ५ नवनीतकम् ६ अमृतम् ७ अभि-
घारः ८ होम्यम् ९ आयुः १० तैजसम् ११ ।
इति राजनिर्घण्टः ॥ आजम् १२ । यथा, --
“घृतोऽस्त्री चाजमाज्यञ्च सर्पिः स्यादमृतं हविः ।”
इति जटाधरः ॥ तस्य गुणाः ।
बुद्ध्यग्निशुक्रौजोम्ेदःस्मृतिकफ-
कारित्वम् । वातपित्तविषोन्मादरोगशोथालक्ष्मी
ज्वरनाशित्वम् । मांसादष्टगुणगुरुत्वञ्च । इति
राजवल्लभः ॥ रसायनत्वम् । स्वादुत्वम् । चक्षु-
र्हितत्वम् । शीतवीर्य्यत्वम् । पापनाशित्वम् ।
अल्पाभिस्यन्दित्वम् । कान्तितेजोलावण्यस्वरायु-
त्वम् । बुद्धिपाटवहरत्वम् । बलकारित्वम् । नृणां
वपुषो विस्रगन्धकारित्वञ्च ॥ * ॥ हस्तिनीघृत-
गुणाः । कफपित्तविषक्रमिनाशित्वम् । कषाय-
त्वम् । लघुत्वम् । विष्टम्भित्वम् । तिक्तत्वम् ।
वह्निकरत्वञ्च ॥ * ॥ अश्वाघृतगुणाः । कटु-
त्वम् । मधुरत्वम् । कषायत्वम् । इषदग्निदीप-
नत्वम् । बाल्यप्रदत्वम् । मूर्च्छाहारित्वम् । गुरु-
त्वञ्च ॥ * ॥ गर्द्दभीघृतगुणाः । अग्निबलकारि-
त्वम् । मूत्रदोषकफनाशित्वम् । पाके लघुत्वम् ।
कषायत्वम् । उष्णवीर्य्यत्वञ्च ॥ * ॥ उष्ट्री-
घृतगुणाः । मधुरत्वम् । विपाके कटुत्वम् ।
शीतलत्वम् । कुष्ठकृमिविषवातकफगुल्मोदर-
नाशित्वञ्च । इति राजनिर्घण्टः ॥ शोथनाशि-
त्वम् । इति राजवल्लभः ॥ * ॥ नारीघृतगुणाः ।
चक्षुर्हितरुचिकारित्वम् । पथ्यत्वम् । मन्दाग्नि-
दीपनत्वम् । पाके लघुत्वम् । सर्व्वामयविष-
नाशित्वञ्च । इति राजनिर्घण्टः ॥ प्रमेहनाशि-
त्वम् । इति राजवल्लभः ॥ * ॥ दुग्धभवघृत-
गुणाः । ग्राहित्वम् । शीतलत्वम् । नेत्र-
रोगकारित्वम् । पित्तदाहास्रमदमूर्च्छाभ्रमा-
निलनाशित्वञ्च ॥ * ॥ ह्यस्तनदधिजघृतं तदेव
हैयङ्गवीनम् । तस्य गुणाः । चक्षुर्हितत्वम् ।
दीपनत्वम् । रुचिबलकारित्वम् । बृंहणत्वम् ।
वृष्यत्वम् । विशेषाज्ज्वरनाशित्वञ्च ॥ * ॥ वर्षा-
दूर्द्ध्वं पुराणस्य तस्य गुणाः । त्रिदोषमूर्च्छाकुष्ठ-
विषोन्मादापस्मारतिमिरनाशित्वम् । इति भाव-
प्रकाशः ॥ मदशिरःकर्णादिजरोगभ्रान्तिनाशि-
त्वम् । व्रणस्य शोधनत्वम् । रोपणत्वञ्च । आयु-
र्वृद्धिशरीरदृढतासौकुमार्य्यकान्तिस्मृतिबलकारि-
त्वम् । बाल्ये तरुणे वार्द्धके चातिबल्यत्वम् ।
पथ्यत्वञ्च । इति राजनिर्घण्टः ॥ प्रतिश्यायाम-
कासजीर्णज्वरसर्व्वरोगनाशित्वम् । श्रेष्ठत्वम् ।
धातुसाम्यकारित्वञ्च ॥ * ॥ तस्य लक्षणम् ।
“उग्रगन्धं पुराणं स्याद्दशवर्षस्थितम् घृतम् ।
लाक्षारसनिभं शीतं प्रपुराणमतः परम् ।
यथा यथा भवेज्जीर्णं गुणवत् स्यात्तथा तथा ॥”
कांस्यपात्रे दशदिनस्थितं घृतं त्याज्यम् । इति
राजवल्लभः ॥ औषधघटितपक्वघृतस्यपूर्णवीर्य्यं
षण्मासपर्य्यन्तं तिष्ठति । इति वैद्यकपरिभाषा ॥
(“शस्तं धीस्मृतिमेधाग्नि-बलायुःशुक्रचक्षुषाम् ।
बालवृद्धप्रजाकान्ति-सौकुमार्य्यस्वरार्थिनाम् ॥
क्षतक्षीणपरीसर्पशस्त्राग्निग्लपितात्मनाम् ।
“वातपित्तसमं सर्व्वं सुशीतं माहिषं घृतन् ।
मधुरं गुरु विष्टम्भि भवत्यल्पगुणात्मकम् ॥”
इति माहिषघृतम् ॥
“औष्ट्रं कटु घृतं पाके शोषक्रिमिविषापहम् ।
दीपनं कफवातघ्नं कुष्ठगुल्मोदरापहम् ॥”
इत्युष्ट्रीघृतम् ॥
“पाके लघ्वाविकं सर्पिः सर्व्वरोगविषापहम् ।
वृद्धिं करोति चास्थ्नाञ्च वाश्मरीशर्करापहम् ॥”
इत्याविकं घृतम् ॥
“वृद्धिं करोति देहाग्नेर्लघु पाके विषापहम् ।
चक्षुष्यं दीपनञ्चाग्नेर्वातदोषनिवारणम् ।
वृद्धिं करोति चास्थीनां तत्प्रोक्तञ्च विषापहम् ॥”
इत्यश्वीघृतम् ॥
“कफेऽनिले योनिदोषे शोषे पित्तेषु तद्धितम् ।
सात्म्यं स्त्रीणाञ्च चक्षुष्यं सर्पिः स्यादमृतोपमम् ॥”
इति नारीघृतगुणाः ॥
“तर्पणं नेत्ररोगघ्नं दाहहृत् पयसो घृतम् ॥”
इति क्षीरोद्भवघृतम् ॥
“दोषापहं वह्निसन्धुक्षणञ्च
मूर्च्छाहिक्कोन्मादकर्णाक्षिशूले ।
शोफार्शसोर्योनिदोषे व्रणेषु
शस्तं सर्पिर्जीर्णमेव नृणां स्यात् ॥
उग्रगन्धं पुराणं स्याद्दशवर्षोषितं घृतम् ।
यथा यथा जरां याति गुणवत् स्यात्तु तत्तथा ॥”
इति जीर्णघृतगुणाः ॥
इति हारीते प्रथमे स्थानेऽष्टमेऽध्याये ॥
“स्मृतिबुद्ध्यग्निशुक्रौजःकफमेदोविवर्द्धनम् ।
वातपित्तविषोन्मादशोषालक्ष्मीज्वरापहम् ॥
सर्व्वस्नेहोत्तमं शीतं मधुरं रसपाकयोः ।
सहस्रवीर्य्यं विधिभिर्घृतं कर्म्मसहस्रकृत् ॥
मदापस्मारमूर्च्छायशोफोन्मादगरज्वरान् ।
योनिकर्णशिरःशूलं घृतं जीर्णमपोहति ॥”
इति चरके सूत्रस्थाने सप्तविंशेऽध्याये ॥
“विशेषतः पुराणञ्च घृतं तत् पाययेद्भिषक् ।
त्रिदोषघ्नं पवित्रत्वात् विशेषाद्ग्रहमोक्षणम् ॥
गुणकर्म्माधिकं स्थानादास्वादात् कट्टुतिक्तकम् ।
उग्रगन्धं पुराणं स्याद्दशवर्षस्थितं घृतम् ॥
लाक्षारसनिभं शीतं तद्धि सर्व्वग्रहापहम् ।
मेध्यं विरेचनेष्वग्र्यं प्रपुराणमतः परम् ॥

र्हितबलकारित्वम् । पवित्रत्वम् । गुरुत्वम्
। उदा-
वर्त्तशूलानाहव्रणक्षयवीसर्परक्तनाशित्वम् ।
स्निग्ध-
त्वम् । रूक्षत्वञ्च । इति भावप्रकाशः ॥ *
॥ अथ
गव्यघृतस्य गुणाः । विशेषेण चक्षुर्हितत्वम्
।
शीतत्वम् ।
वातपित्तकफालक्ष्मीपापरक्षोनाशि
त्वम् ।
शुक्राग्निस्वादुपाकमेधालावण्यकान्त्योज-
स्तेजोवृद्धिवयःस्थितिबलायुर्हितकारित्वम्
। गुरु-
त्वम् । पवित्रत्वम् । सुमङ्गल्यत्वम् ।
रसायनत्वम् ।
सुगन्धित्वम् । रोचनत्वम् । चारुत्वम् ।
सर्व्वा-
ज्येषु गुणाधिकत्वञ्च । इति भावप्रकाशः ॥
बुद्धिस्मृतिपुष्टिवपुःस्थैर्य्यकारित्वम् ।
श्रमोपशमन-
त्वम् । हव्यतमत्वम् । बहुगुणत्वञ्च ॥ * ॥
माहिष-
घृतगुणाः । उत्तमत्वम् ।
धृतिसौख्यकान्तिबलवर्ण-
चक्षुर्हितकारित्वम् ।
वातश्लेष्मदुर्नामग्रहणी-
विकारनाशित्वम् । मन्दानलोद्दीपनत्वम् ।
नव-
गव्यतः परमहृद्यत्वम् । मनोहारित्वञ्च ।
इति
राजनिर्घण्टः ॥ स्वादुत्वम् ।
पित्तरक्तनाशित्वम् ।
शीतत्वम् । श्लेष्मशुक्रवृद्धिकारित्वम् ।
गुरुत्वम् ।
स्वादुपाकित्वञ्च ॥ * ॥ छागीघृतगुणाः ।
अग्निचक्षुर्हितबलकारित्वम् ।
कासश्वासक्षयेषु
हितत्वम् । कटुपाकित्वञ्च । इति भाव-
प्रकाशः ॥ कफनाशित्वम् । इति राज-
निर्घण्टः ॥ * ॥ मेषीघृतगुणाः ।
पित्तमेदस्कारि-
त्वम् । योनिदोषे शोषे कफे अनिले च
शस्त-

वातपित्तविषोन्मादशोषालक्ष्मीज्वरापहम्॥
स्नेहानामुत्तमं शीतं वयसः स्थापनं परम् ।
सहस्रवीर्य्यं विधिभिर्घृतं कर्म्मसहस्रकृत् ॥”
इति पूर्ब्बखण्डे पञ्चमेऽध्याये शार्ङ्गधरेणोक्तम् ॥
“विपाके मधुरं वृष्यं वातपित्तकफापहम् ।
चक्षुष्यं बलकृन्मेध्यं गव्यं सर्पिर्गुणोत्तरम् ॥”
इति गव्यघृतम् ॥
“आजं सन्दीपनीयञ्च चक्षुष्यं बलवर्द्धनम् ।
कासे श्वासे क्षयेऽर्शःसु लघुपाके कफापहम् ॥”
इत्याजघृतम् ॥

नासाध्यं नाम तस्यास्ति यत्
स्याद्वर्षशतस्थितम् ।
दृष्टं स्पृष्टमथाघ्रातं तद्धि सर्व्वग्रहापहम् ।
अपस्मारुग्रहोन्मादवतां शस्तं विशेषतः ॥”
इति चरके चिकित्सासास्थाने चतुर्द्दशेऽध्याये ॥
“घृतन्तु सौम्यं शीतवीर्य्यं
मृदुमधुरमल्पाभिष्यन्दि
स्नेहनमुदावर्त्तोन्मादापस्मारशूलज्वरानाहवात
पित्तप्रशसनमग्निदीपनं स्मृतिमतिमेधाकान्ति-
स्वरलावण्यसौकुमार्य्यौजस्तेजोबलकरं
आयुष्यं
वृष्यं मेध्यं वयःस्थापनं गुरु चक्षुष्यं श्लेष्माभि-
वर्द्धनं पापालक्ष्मीप्रशमनं विषहरं रक्षोघ्नञ्च ॥
विपाके मघुरं शीतं वातपित्तविषापहम् ।
चक्षुष्यमग्र्यं बल्यञ्च गव्यं सर्पिर्गुणोत्तरम् ॥
आजं घृतं दीपनीयं चक्षुष्यं बलवर्द्धनम् ।

| त्वम् । रूक्षत्वम् । दुर्नामोन्मादनाशित्वञ्च । इति राजवल्लभः ॥ पाके लघुत्वम् । पित्तकोपाकारित्वम् । शोफे कम्पे च हितत्वञ्च ॥ * ॥ भेडकघृतगुणाः । अतिगौरवात् सुकुमारदेहिवर्ज्य- | | |
|---|---|---|

कासे श्वासे क्षये चापि पथ्यं पाके च तल्लघु ॥
मधुरं रक्तपित्तघ्नं गुरुपाके कफावहम् ।
वातपित्तप्रशमनं सुशीतं माहिषं घृतम् ॥
औष्ट्रं कटुरसं पाके शोफक्रिमिविषापहम् ।
दीपनं कफवातघ्नं कुष्ठगुल्मोदरापहम् ॥
पाके लघ्वाविकं सर्पिर्न च पित्तप्रकोपणम् ।
कफेऽनिले योनिदोषे शोषे कम्पे च तद्धितम् ॥
पाके लघूष्णवीर्य्यञ्च कषायं कफनाशनम् ।
दीपनं वद्धमूत्रञ्च विद्यादैकशफं घृतम् ॥
चक्षुष्यमग्र्यं स्त्रीणान्तु सर्पिः स्यादमृतोपमम् ।
वृद्धिं करोति देहाग्न्योर्लघुपाकं विषापहम् ॥
कषायं बद्धविन्मूत्रं तिक्तमग्निकरं लघु ।
हन्ति कारेणवं सर्पिः कफकुष्ठविषक्रमीन् ॥"
क्षीरघृतं पुनः संग्राहि रक्तपित्तभ्रममूर्च्छा-
प्रशमनं नेत्ररोगहितञ्च । सर्पिर्मण्डस्तु मधुरः सरो
योनिश्रोत्राक्षिशिरसां शूलघ्नो वस्तिनस्याक्षि-
प्रपूरणेषूपदिश्यते । सर्पिः पुराणं सरं कटु-
विपाकं त्रिदोषापहं मूर्च्छामेदोन्माद उदर-
ज्वरगरशोफापस्मारयोनिश्रोत्राक्षिशिरःशूलघ्नं
दीपनं बस्तिनस्याक्षिपूरणेषूपदिश्यते । भवन्ति
चात्र ।
"पुराणं तिमिरश्वासपीनसज्वरकासनुत् ।
मूर्च्छाकुष्ठविषोन्मादग्रहापस्मारनाशनम् ॥
एकादशशतञ्चैव वत्सरानुषितं घृतम् ।
रक्षोघ्नं कुम्भसर्पिः स्यात् परतस्तु महाघृतम् ॥
पेयं महाघृतं भूतैः कफघ्नं पवनाधिकैः ।
बल्यं पवित्रं मेध्यञ्च विशेषात्तिमिरापहम् ॥
सर्व्वभूतहरञ्चैव घृतमेतत् प्रशस्यते ॥"
इति सुश्रुते सूत्रस्थाने ४५ अध्याये ॥ * ॥
क्ली, सलिलम् । इति मेदिनी । ते । १७ ॥)

**घृतः**, त्रि, (जघर्त्ति दीप्यते घरति सिञ्चतीति
वा । घृ + "अञ्जिघृसिभ्यः क्तः ।" उणां । ३ ।
८९ । क्तः ।) दीप्तः । सेचकः । इति शब्दरत्ना-
वली ॥

**घृतकरञ्जः**, पुं, (घृतमिव करञ्जः । घृतवद्रस-
बाहुल्यादस्य तथात्वम् ।) करञ्जभेदः । घिया-
करम्चा इति भाषा ॥ तत्पर्य्यायः । प्रकीर्य्यः २
घृतपर्णकः ३ स्निग्धपत्रः ४ तपस्वी ५ विषारिः
६
विरोचनः ७ । अस्य गुणाः । कटुत्वम् । उष्ण-
त्वम् । वातव्रणसर्व्वत्वग्दोषविषस्पर्शनाशित्वञ्च ।

**घृतकुमारी**, स्त्री, (घृतेन घृतवद्रसेन कुमारी
सुन्दरी । यद्वा कुमारी कन्येव । गृहे पालित-
तया तथात्वम् ।) स्वनामख्यातगुल्भः । घिकु-
मारी इति भाषा । तत्पर्य्यायः । कुमारी २
तरणिः ३ सहा ४ । इति शब्दरत्नावली ॥
कन्यका ५ दीर्घपत्रिका ६ स्थलेरुहा ७ मृदुः ८
कन्या ९ बहुपत्रा १० अमरा ११ अजरा १२
कण्टकप्रावृता १३ वीरा १४ भृङ्गेष्टा १५ विपु-
लास्रवा १६ ब्रह्मघ्नी १७ तरुणी १८ रामा
१९
कपिला २० अम्बुधिस्रवा २१ सुकण्टका २२
स्थूलदला २३ गृहकन्या २४ । अस्या गुणाः ।
हिमत्वम् । तिक्तत्वम् । मदगन्धित्वम् ।
कफपित्त-
कासविषश्वासकुष्ठनाशित्वम् । रसायनत्वञ्च ।
इति राजनिर्घण्टः ॥ भेदकत्वम् । नेत्रहित-
त्वम् । मधुरत्वम् । बृंहणत्वम् । शुक्रबलकारि-
त्वम् ।
वातगुल्मप्लीहयकृद्वृद्धिज्वरग्रन्थ्यग्निदग्ध-
विस्फोटपित्तरक्तत्वग्रोगनाशित्वञ्च । इति भाव-
प्रकाशः ॥ (कुमारीशब्दे विवरणमस्या ज्ञेयम् ॥)

**घृततैलादिकल्पः**, पुं, (घृततैलादीनां रोगविना-
शकपक्वघृततैलादीनां कल्पो बिधिः ।) रोग-
नाशकनानौषधिपक्वघृततैलादिवर्गः । यथा ।
धन्वन्तरिरुवाच ।
"घृततैलादि वक्ष्यामि शृणु सुश्रुत ! रागनुत् ।
शङ्खपुष्पी वच सोमा ब्राह्मी ब्रह्मसुवर्च्चला ॥
अभया गुडुची चैव अटरूषकवाकुची ।
एतैरक्षसमैर्भागैर्घृतप्रस्थं विपात्तयेत् ॥
कण्टकार्य्या रसप्रस्थक्षीरप्रस्थसमन्वितम् ।
एतद्ब्राह्मीघृतं नाम श्रुतिमेधाकरं परम् ॥ १ ॥
त्रिफलाचित्रकबलानिर्गुण्डीनिम्बवासकाः ।
पुनर्नवा गुडूची च बृहती च शतावरी ॥
एतैर्घृतं यथालाभं सर्व्वरोगविमर्द्दनम् ॥ २ ॥
बलाशतकषाये तु तैलस्यार्द्धाढकं पचेत् ॥
कल्कैर्म्मधुकमञ्जिष्ठाचन्दनोत्पलपद्मकैः ।
सूक्ष्मैलापिप्पलीकुष्ठत्वगेलागुरुकेशरैः ॥
गन्धाश्मजीवनीयैश्च क्षीराढकसमाश्रितम् ।
एतन्मृद्वग्निना पक्वं स्थापयेद्रजते शुभे ॥
सर्व्ववातविकारांस्तु सर्व्वधात्वन्तराश्रयान् ।
तैलमेतत् प्रशमयेद्बलाख्यं राजवल्लभम् ॥ ३ ॥
वर्य्या वानलया वापि वासकेन फलत्रिकैः
।
ब्राह्म्या चैरण्डकेनापि भृङ्गराजेन मुण्डिना
॥
मूषल्या दशमूलेन खदिरेण वटादिभिः ।
वटिका मोदको वापि चूर्णं स्यात्
सर्व्वरोगनुत् ॥
घृतेन मधुना वापि युक्तं खण्डगुडादिभिः ।
लवणैः कटुकैर्युक्तं यथालाभञ्च रोगनुत् ॥
५ ॥
चित्रकर्करुत्रिवृतामलघ्नहयमारकम् ।
सुधाञ्च बालागणिकासप्तपर्णसुवर्च्चिकाम्
॥
ज्योतिष्मतीञ्च संभृज्य तैलं धीरो
विपाचयेत् ।
एतन्निस्यन्दनं तैलं भृशं दद्याद्भगन्दरे ॥
शोधनं रोचनञ्चैव सर्व्ववर्णकरं परम् ।
चित्रकाद्यं महातैलं सर्व्वरोगप्रभञ्जनम् ॥ ६
॥
अजमोदा ससिन्दूरा हरितालं निशाद्वयम्
।
क्षारद्वयं फेनयुतमार्द्रकं सरलोद्भवम् ।
इन्द्रवारुण्यपामार्गकदलैः कन्दलैः समैः
॥
एभिः सर्षपजं तैलमजमूत्रैश्च योजितम् ।
मृद्वग्निना पचेदेतदर्कक्षीरेण संयुतम् ॥
अजमोदादिकं तैलं गण्डमालां व्यपोहति ।
विदग्धस्तु पचेत् पक्वं पक्वञ्चैव
विशोधयेत् ॥
रोपणं मृदुभावञ्च तैलेनानेन कारयेत् ।
अजमोदादिकं तैलं महावीर्य्यञ्च रोगनुत्
॥" ७ ॥
इत्यादिमहापुराणे गारुडे १७८ अध्याये
॥

**घृतदीधितिः**, पुं, (घृतेन प्रदीप्ता दीधितिः किरणं
यस्य । घृताहुत्या अग्निवर्द्धनाद्वेव
तथात्वम् ।)
अग्निः । इति त्रिकाण्डशेषः ॥

**घृतपर्णकः**, पुं, (घृतयुक्तमिव पर्णं पत्रं यस्य ।
कप् ।) घृतकरञ्जः । इति राजनिर्घण्टः ॥

**घृतपूरः**, पुं, (घृतेन पूर्य्यते इति । पुरी ङ य

इति राजनिर्घण्टः ॥

**घृतकुमारिका**, स्त्री, (घृतेन घृतसदृशरसेन

कुमारिका मुन्दरी बालिकेव वा । गृहपाल्य-
लात् तथात्वम् ।) घृतकुमारी । इति भाव-
प्रकाशः ॥ (यथास्थाः पर्य्यायाः ।
“कुमारी गृहकन्या च कन्या घृतकुमारिका ॥”
गुणाश्च यथा, --
“कुमारी भेदिनी शीता तिक्ता नेत्र्या रसायनी ।
मधुरा बृंहणी बल्या वृष्या वातविषप्रनुत् ॥
गुल्मप्लीहयकृद्वृद्धिकफज्वरहरी हरेत् ।
ग्रन्थ्यग्निदग्धविस्फोटपित्तरक्तत्वगामयान्॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

शतावरीरसप्रस्थं क्षीरप्रस्थं तथैव च ।
शतपुष्पा देवदारु मांसी शैलेयकं बला ॥
चन्दनं तगरं कुष्ठं माला चांशुमती तथा ।
एतैः कर्षसमैः कल्कैस्तैलप्रस्थं विपाचयेत् ॥
कुब्जवामनपङ्गूनां वधिरव्यङ्गकुष्ठिनाम् ।
वायुना भग्नगात्राणां ये च सीदन्ति मैथुने ॥
जराजर्ज्जरत्राणामाध्मानमुखशोषिणाम्।
त्वग्गताश्चापि ये वाताः शिरास्नायुगताश्च ये ॥
सवस्तिं नाशयत्याशु तैश्चैव स्याद्दशाङ्गकम्।
नारायणमिदं तैलं विष्णुनोक्तं रुगर्द्दनम् ॥ ४ ॥
पृथक् तैलं धृतं कुर्य्यात् समस्तैरौषधैः पृथक् ।
शतावर्य्या गुडूच्या वा चित्रकै रोचनायुतः ॥
निर्गुण्ड्या वा प्रसारण्याः कण्टकार्य्या रसा-
दिभिः ॥

पूर्त्तौ + कर्म्मणि अप् ।
प्रचुरघृतपाच्यत्वाद्वास्य
तथात्वम् ।) पिष्टकविशेषः । यथाह
राजवल्लभः ।
“मर्द्दितां समितां क्षीरनारिकेलघृतादिभिः
।
अवग्राह्य घृते पक्त्रा घृतपूरोऽयमुच्यते ॥
घृतपूरो गुरुर्वृष्यः कफकृद्रक्तमांसदः ।
रक्तपित्तहरो हृद्यः स्वादुः पित्तहरोऽग्निदः
॥”
तत्पर्य्यायः । पिष्टपूरः २ घृतवरः ३
घार्त्तिकः ४ ।
इति हेमचन्द्रः । ३ । ६४ ॥ (अस्य पाक-
प्रकारादि यदुक्तं चिन्तामणौ ।
“क्षीरेण मर्द्दितं चूर्णं गोघूमानां सुगालितम्
।
विस्तार्य्य सर्पिषा पाच्यं कटाहेऽथ
सितान्वितम् ॥
घृतपूरोऽयमुद्दिष्टः कर्पूरमरिचान्वितः ॥”
नारिकेलजो यथा, --
“समिता मर्द्दिता क्षीरे नारिकेलसितार्द्रकैः
।
अवगाह्य घृते पाच्या घृतपूरोऽपरः स्मृतः
॥”
दुग्धजो यथा, --
“पाकपिण्डीकृत्तं क्षीरं शर्कराचूर्णमिश्रितम्
।
घृतपूरविनिर्म्माणं कारयेत् स्वल्पसर्पिषि
॥”
शालिभवो यथा, --
“सुशालिपिष्टं दुग्धन्तु कथितं
वस्त्रगालितम् ।
खण्डयुक्तं घृते पक्वं घृतपूरो भवेदयम् ॥”
कशेरुभवो यथा, --
“कशेरुचूर्णं निःक्षिप्य पाकपिण्डीकृत्तं
पयः ।
निर्म्माणं घृतपूराणां शर्करासहितं भवेत
॥”

आम्रजो यथा, --
"पक्वाम्रस्य घृते तप्ते रसस्त्वनलपिण्डितः।
शुद्धशर्करया योज्यो घृतपूरो यदृच्छया ॥
क्षीरमाद्यं स्वरूपं हि खण्डं चूर्णं ततः स्मृतम्
।
योजिते यो विशेषोऽत्र तदाख्यास्वर्णसंज्ञितः
॥
घृतपूरो गुरुर्हृष्यो हृद्यः पित्तानिलापहः।
सद्यः प्राणप्रदो बल्यः सुरुच्योऽग्निप्रदीपनः॥
शृङ्गाटकसुखानामप्येवं स्यात् घृतपूरकः।
विचार्य्य वस्तुसंयोगं तद्गुणानपि चाहरेत्
॥")

**घृतपूर्णकः**, पुं, (घृतेन पूर्ण इव कायतीति। कै + कः।) करञ्जवृक्षः। इति त्रिकाण्डशेषः॥

**घृतमण्डलिका**, स्त्री, (घृतस्य मण्डलं समूहः। तदिव निर्य्यासः अस्या अस्यां वा अस्तीति
।
घृतमण्डल + "अत इनिठनौ।" ५। २। ११५। इति ठन्।) हंसपदीवृक्षः। इति राजनिर्घण्टः॥

**घृतमण्डा**, स्त्री, (घृतमण्डवत् निर्य्यासोऽस्त्यस्याः। "अर्श आदिभ्योऽच्।" ५। २। १२७। इत्यच्।)
वायसोलीवृक्षः। इति शब्दचन्द्रिका॥
माकड-
हाता इति भाषा॥

**घृतवरः**, पुं, (घृतमेव वरं बाहुल्यात् प्रधानं यत्र।) घृतपूरः। इति हेमचन्द्रः। ३। ६४॥

**घृता**, स्त्री, (घृतवत् निर्य्यासोऽस्त्यास्याः। "अर्श आदिभ्योऽच्।" ५। २। १२७। इत्यच्।) घृतमण्डा। इति शब्दचन्द्रिका॥

**घृताची**, स्त्री, (घृतेन अमृतेन अञ्चति तृप्तिं गच्छतीति। अन्च + क्विप्। नलोपे स्त्रियां ङीप्
।
सर्व्वथा मनुष्याहारवर्ज्जितानां देवजातीनां ह्यमृतमयघृतभोजनं
महाभारतपुराणादिप्रसि-

**घृष्टः**, त्रि, (घृष् + कर्म्मणि क्तः।) घर्षितः। घषा इति भाषा॥ यथा। घृष्टो मलयजो गन्धः। इति शुद्धितत्त्वम्॥ (यथात्त काशीखण्डे। १९
। ५६।
"घातुका घूर्णितजला घृष्टपातकसन्ततिः॥")

**घृष्टिः**, स्त्री, (घृष्यतेऽसौ। घृष् + कर्म्मणि क्तिच्।) वाराही। चामर आलु इति भाषा॥ इत्यमरः। २। ४। १५१॥ (घृष् + भावे क्तिन्।) घर्षणम्। स्पर्द्धा। अपराजिता। (घर्षतीति। घृष् + कर्त्तरि क्तिच्।) शूकरे पुं,। इति मेदिनी। टे। १३॥

**घृष्टिला**, स्त्री, (घृष्टिं घर्षणं लातीति। ला + कः।) चित्रपर्णिका। पृश्निपर्णी। इति रत्नमाला॥

**घृष्विः**, पुं स्त्री, (घर्षति इति। घृष संघर्षे + "कृविघृष्विच्छवीति।" उणां। ४। ५६। इति क्विन्प्रत्ययेन निपातनात् सिद्धः।) शूकरः। इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥ (भावे + क्विन्। घर्षणम्। यथा, ऋग्वेदे। १। ३७। ४
।
"प्रवः शर्द्धाय घृष्वये।" "घृष्वये शत्रुघर्षणयुक्ताय।" इति भाष्यम्॥)

**घेञ्चुलिका**, स्त्री, क्रौञ्चादनम्। इति रत्नमाला॥ घेँचु इति भाषा॥ (यथा, वैद्यकरत्नमालायाम्। "क्रौञ्चादनं घेञ्चुलिका॥")

**घोटः**, पुं, स्त्री, (घोटते परिवर्त्तते इति। घुट परिवर्त्तने + पचाद्यच्।) घोटकः। इति राजनिर्घण्टः॥

**घोटकः**, पुं, स्त्री, (घोटते गत्वा प्रत्यागच्छतीति। घुट परिवर्त्तने + ण्वुल्।) पशुविशेषः। घोडा इति भाषा॥ तत्पर्य्यायः। पीतिः २ तुरगः ३ तुरङ्गः ४ अश्वः ५ तुरङ्गमः ६ वाजी ७ वाहः ८ अर्व्वा ९ गन्धर्व्वः १० हयः ११ सैन्धवः १२ सप्तिः १३। इत्यमरः। २। ८। ४४॥ घोटः १४ पीती १५ पीथिः १६। इति भरतः॥ तार्क्ष्यः १७ हरिः १८ वीती १९। इति हेमचन्द्रः॥ मुद्गभोजी २० धाराटः २१ जवनः २२ जितवः २३ जवी २४ वाहनश्रेष्ठः २५
दिष्टोपयोजनानि। इति च वेदनिघण्टौ १ अध्यायः॥ अस्य मांसगुणाः। उष्णत्वम्। वात-
नाशित्वम्। लघुगुरुत्वम्। अतिसेवनात् पित्तदाहप्रदत्वञ्च। इति राजनिर्घण्टः॥ अग्निकफबलकारित्वम्। बृंहणत्वम्। चक्षुर्हितत्वम्। मधुरत्वञ्च। इति भावप्रकाशः॥ * ॥
अथाश्वपरीक्षा।
"सपक्षा वाजिनः पूर्ब्बं संजाता व्योमचारिणः।
गन्धर्व्वेभ्यो यथाकामं गच्छन्ति च समन्विताः
॥
इन्द्रादेशाच्छालिहोत्रस्तेषां पक्षमथाच्छिनत्।
ततः प्रभृति निष्पक्षास्तुरङ्गा धरणीं गताः॥
उत्तमा मध्यमा नीचाः कनीयांसस्तथापरे।
चतुर्द्धा वाजिनो भूमौ जायन्ते देशसंश्रयात्॥
ताजिताः खुरशालाश्च तुषाराश्चोत्तमा हयाः।
गोजिकाणाश्च केकाणाः प्रौढाहाराश्च मध्यमाः
॥
ताडजा उत्तमाशाश्च वाजशूलाश्च मध्यमाः।
गत्वराः साध्यवासाश्च सिन्धुदाराः कनीयसः
॥
अन्यदेशोद्भवा ये च ते वै नीचाः प्रकीर्त्तिताः।
वाजिनो जलजाः केचिद्वह्निजातास्तथापरे॥
समीरप्रभवाश्चान्ये तुरगा मृगजाः परे।
जलोद्भवा द्विजा ज्ञेयाः क्षत्त्रिया वह्निसम्भवाः॥
प्रभञ्जनभवा वैश्या मृगजाः शूद्रजातयः।
पुष्पगन्धिर्भवेद्विप्रः क्षत्त्रियोऽगुरुगन्धिकः॥
घृतगन्धो भवेद्वैश्यो मीनामोदी च शूद्रकः।
विवेकी सघृणो विप्रस्तेजस्वी क्षत्त्रियो बली॥
कोष्णभावो भवेद्वैश्यः शूद्रो निःसत्त्वको भवेत्।
विप्राद्या वाहनाः सर्व्वे त्रयो भूमिपतेः सदा॥
शूद्रजातिं तुरङ्गन्तु न स्पृशन्ति नरेश्वराः॥"
इत्युत्पत्तिः॥ * ॥
अथाङ्गुल्याङ्गविभागः।
"सप्तविंशत्यङ्गुलिभिर्मुखमानं विधीयते।
कर्णौ षडङ्गुलौ प्रोक्तौ भालकं चतुरङ्गुलम्॥
चत्वारिंशच्च सप्ताढ्या स्कन्धः संपरिकीर्त्तितः
।
पृष्ठवंशश्चतुर्व्विंशः सप्तविंशा तथा कटी॥
इति सूक्ष्मं तथा निम्नं प्रतिपुच्छं द्व्याधिकम्।
लिङ्गं हस्तप्रमाणन्तु तथाण्डौ चतुरङ्गुलौ॥
मध्यस्थानं चतुर्व्विंशं हृदयं षोडशात्मकम्।

द्धम् ।) अप्सरोविशेषः । इति हलायुधः ॥ (यथा,
विष्णुपुराणे । १ । ९ । १०१ ।
"घृताचीप्रमुखा ब्रह्मन् ननृतुश्चाप्सरोगणाः ॥"
गायत्त्रीस्वरूपा महादेवी । यथा, देवीभाग-वते । १२ । ६ । ४६ ।
"घनारिमण्डला घूर्णा घृताची घनवेगिनी ॥")

**घृताचीगर्भसम्भवा**, स्त्री, स्थूलैला । इति राज-निर्घण्टः ॥

**घृताह्वः**, पुं, (घृतस्य आह्वा आख्या यस्य । यद्वा, घृतेन आह्वयते स्पर्द्धते स्वगन्धेन इति । आ + ह्वे + कः ।) सरलद्रवः । इति त्रिकाण्डशेषः ॥

**घृतेली**, स्त्री, (घृते इलति तद्भक्षणाय तत्र स्वपि-तीति । इल स्वप्ने + अच् । गौरादित्वात् ङीष् ।)
कीटविशेषः । तैलपायिका इति केचित् ॥ तत्-
पर्य्यायः । पिङ्गकपिशा २ । इति हेमचन्द्रः । ४ । २७३ ॥

**घृतोदः**, पुं, (घृतमिव स्वादु आकृत्या शुभ्रं वा उदकं यस्य । उदकस्योदादेशः ।) घृतसमुद्रः । यथा,
"एवं सुरोदाद्बहिस्तद्द्विगुणः समानेन घृतोदेन यथा पूर्ब्बः कुशद्वीपः ।" इति श्रीभागवते । ५ । १३ ॥

**घृष**, उ संघर्षे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् । उदित्वात् क्त्वावेट् ।) उ, घर्षित्वा
घृष्ट्वा । घर्षति चन्दनं लोकः । इति दुर्गादासः ॥

श्रीभ्राता २६ अमृतसोदरः २७ । मुद्गभुक् २८
शालिहोत्रः २९ लक्ष्मीपुत्त्रः ३० प्रकीर्णकः ३१ ।
इति जटाधरः ॥ वातायनः ३२ श्रीपुत्त्रः ३३ चामरी ३४ हेषी ३५ शालिहोत्री ३६ मरु-द्रथः ३७ वाजस्कन्धः ३८ हरिद्राक्तः ३९ एक-
शफः ४० किन्धी ४१ ललामम् ४२ विमानकः ४३ ॥
इति शब्दरत्नावली ॥ अत्यः ४४ वह्निः ४५ दधिक्रा ४६ दधिक्रावा ४७ एतग्वः ४८ एतशः ४९
पैद्वः ५० दौर्गहः ५१ उच्चैःश्रवसः ५२ आशुः ५३
व्रध्नः ५४ अरुषः ५५ मांश्चत्वः ५६ अव्यथयः ५७
श्येनासः ५८ सुपर्णाः ५९ पतङ्गाः ६० नरः ६१
ह्वार्य्याणाम् ६२ हंसास्यः ६३ । इति वेद-निघण्टौ १ अध्यायः ॥ हरी इन्द्रस्य १ रोहितः अग्नेः २ हरितः आदित्यस्य ३ रासभौ अश्विनोः ४
अजाः पूष्णः ५ पृषत्यो मरुताम् ६ अरुण्यो गावः उषसाम् ७ श्यावाः सवितुः ८ विश्वरूपा बृहस्पतेः ९ नियुतो वायोः १० । इति दशा-

कटिकुक्ष्यन्तरं प्राक्तं चत्वारिंशत् प्रमाणतः ॥
मणिबन्धद्वयञ्चैव वुराश्च चतुरङ्गुलाः ।
अशीत्यङ्गुलिकाः पादा दीर्घा विंशाधिका मताः ॥"
इत्यङ्गुलिविभागः ॥ * ॥
अथ वयोविभागः ।
"दन्तेषु व्यञ्जनं यद्वत्तेन ज्ञेयो वयःक्रमः ॥"
तद्यथा, --
"कालिका हरिणी शुक्ला काचा मक्षिकया सह
शङ्खो मुषलकञ्चैव दन्तानां चलता तथा ।
इत्यष्टौ व्यञ्जनान्याहुरथैषां लक्षणं शृणु ॥
चतुर्भिर्वत्सरैर्द्दन्ताश्चत्वारः परिकीर्त्तिताः ।
पञ्चभिश्च षडित्येवं जायन्ते त्वथ कालिकाः ॥
षष्ठे संवत्सरे प्राप्ते कालिकान्या भवेत्तु हि ।
तथान्या सप्तमे वर्षे चतुर्थी कालिका भवेत् ॥
अष्टमे वतसरे प्राप्ते जायन्ते सर्व्वकालिकाः ।

नवमे त्वथ ताः सर्व्वा आपीताः
सम्भवन्ति च ॥
केचिदेकादशे वर्षे तावत्
पीतत्वमागताः ।
ततः श्वेताः प्रजायन्ते
चतुर्द्दशसमावधि ॥
ततः काचप्रभाः सम्यक् यावत्
संवत्सरास्त्रयः ।
ततः सप्तदशादूर्द्ध्वं यावद्वर्षाणि
विंशतिः ॥
मक्षिकाभां वदन्त्येषां यावद्वर्षत्रयं पुनः
।
शङ्खाभासाः सर्व्वदन्ता भवन्ति
वाजिनां ततः ॥
त्रयोविंशात् परे वर्षे दशना मुषला
मताः ।
षड्विंशात् परतो दन्ताः
स्थानाच्चलनमाप्नुयुः ॥
यावद्वर्षत्रयं पश्चान्निपतन्ति समात्रये ।
द्वात्रिंशद्वत्सरे वाजी नूनं
निर्व्वाणमाप्नुयात् ॥”
अथ शुभलक्षणानि ।
“दीर्घाः शुष्का विशालास्या ये भवन्ति
तुरङ्गमाः ।
ते शस्ताः पार्थिवेन्द्रस्य
यानवाहनकर्म्मणि ॥
आस्यं भुजौ चापि कृकाटिका च
दीर्घं चतुष्कं तुरगस्य शस्तम् ।
तथोन्नते घ्राणपुटे ललाटे
कफश्च वाजिप्रवरस्य बोध्यः ॥
श्रोत्रे च मणिबन्धश्च पुच्छं कोष्ठं
लघूत्तमम् ।
पीताङ्गः श्वेतपादो यो यश्च स्यात्
सितलाचनः ॥
चक्रवाकः स विज्ञेयो राजार्हः
प्रियसत्तमः ।
मुखे चन्द्रकसम्बीतः
पक्वजम्बूफलाकृतिः ॥
श्वेतपादः स विज्ञेयो मल्लिकाख्यः
सुपूजितः ।
सर्व्वश्वेतो हयो यस्तु श्यामैकश्रवणो
भवेत् ।

चत्वारो यस्य वै पादाः परस्परविवर्णकाः ।
स त्याज्यो मुषली नाम्ना मुनिभिः कुलनाशनः ॥
दुर्ल्लक्ष्मवाजिनं जह्या यदीच्छेः शाश्वतीं श्रियम् ।
यस्तु वर्णविभेदेन ज्ञायते रोमसम्भवात् ॥
पुष्पाख्यः स परित्याज्यः सर्व्ववाजिभयावहः ।
यस्यावशेषवर्णेन छाद्यते च प्रधानतः ॥
विवृद्धिं गच्छतः सोऽश्वः कुरुते हयसंक्षयम् ।
इति स्कन्धे गले चैव कटिदेशे तथैव च ॥
नाभौ कुक्षौ च पार्श्वांशे मध्यमः स प्रकीर्त्तितः ।
एको वामकपोलस्थो यस्यावर्त्तः प्रदृश्यते ॥
चर्व्वणी स हयस्त्याज्यः कुरुते स्वामिनाशनम् ।
वामगण्डाश्रयावर्त्तः प्रकरोति धनक्षयम् ॥
कक्षान्ते यस्य चावर्त्तः स मृत्युं कुरुते विभोः ।
क्लेशं जानुगतावर्त्तः प्रवासं कुरुतेऽथवा ॥
वाजी मेढ्रगतावर्त्तो वर्ज्जनीयो महीभुजा ।
त्रिबलिप्रभवावर्त्तस्त्रिवर्गस्य प्रणाशकः ॥
पृष्ठवंशे यदावर्त्त एकः संपरिलक्ष्यते ।
धूमकेतुरिति ख्यातः स त्याज्यो दूरतो नृपैः ॥
गुह्ये पुच्छे बलौ यस्य भवन्त्यावर्त्तकास्त्रयः ।
स कृतान्तस्तु रूपेण वर्ज्जनीयस्तुरङ्गमः ॥
अधोद्र्ध्वञ्च यदा वाजी सम्पुटं न स्पृशेत् क्वचित् ।
यमदूतः स विज्ञेयो वर्ज्जनीयस्तुरङ्गमः ।
हीनदन्तोऽधिकश्चैव कराली कृष्णतालुकः ।
मुषली च तथा शृङ्गी षडेते घातकाः स्मृताः ॥
तत्राद्यौ विदितार्थौ तु शेषाणां लक्षणं शृणु ।
त्रयः पादाः सिता यस्य कृष्णश्चैकोऽभिजायते ॥
त्रयो वाप्यसिता यस्य एकः शुक्लोऽभिजायते ।
मूषली नाम पापोऽयं दूरे त्याज्यो हयाघमः ॥
विकटो विषमो यस्य दशनः स करालकः ।
कराली कुरुते नाशं भर्त्तुरत्र न संशयः ॥
कृष्णतालुर्हयो नाशं कुरुते नात्र संशयः ।
विषदन्तो भवेद्यस्तु कृष्णतालुर्न दुष्यते ॥
कर्णान्ते चूलिकान्ते च शृङ्गवल्लक्ष्यते यदि ।
स शृङ्गी कुरुते नाशं राष्ट्रस्य च कुलस्य च ॥
एकाण्डोऽजातकाण्डश्चहीनाण्डोऽभ्यधिकाण्डकः।
घण्टी च कम्बली चैव षडेते पापकृत्तमाः ॥” * ॥
अथारिष्टम् ।
“सुस्थस्यापि च नेत्रान्ते स्यातां नीले च वाजिनः ।
तथैव तस्य जानीयाद्भवेन्मृत्युर्द्विवार्षिकी ॥
नीलपीते च नेत्रान्ते त्रिभिर्मासैर्वपुःक्षयः ।
यस्य नेत्रान्तरे रेखा बहुवर्णा प्रजायते ॥
विशेषाद्वाजिनो ज्ञेयं तस्यायुः पञ्चमासिकम् ।

मूत्रं करोति रक्ताम्बा मासषट्कं स जीवति ॥
कर्णयोः क्षतजं यस्य नेत्राभ्यां वा प्रवर्त्तते ।
वाजिनः पित्तग्रस्तस्य दशमासान् स जीवति
।
यस्य नेत्रे हरिद्राभे यस्य वातार्दितस्य च ।
तस्यायुः सप्तमासीयं बहुवर्णे तथा दिनैः ॥
यस्यैकं लोचनं हीनं द्वितीयं रक्तसन्निभम् ।
पुटान्ते च स विज्ञेयः पीताभे मासजीवकः ॥”
एतानि अरिष्टानि रक्तदोषजानि ।
“स्फुलिङ्गा यस्य दृश्यन्ते पुच्छतोऽश्वस्य
वह्निजाः ।
निर्गच्छन्तः प्रभोर्नाशं ते वदन्ति निशागमे ॥
अश्वशालां समासाद्य यदा च मधुमक्षिकाः ।
मधुजालं प्रबध्नन्ति तदाश्वान् घ्नन्ति
कृत्स्नशः ॥”
अथ हयक्रियाकालः ।
“स्ववरुणगुरुपार्श्वास्येषु भौमार्कवारे
स्वतिथिकरणताराचन्द्रयोगोदयेषु ।
शुभमिह हयकार्य्यं कार्य्यमार्य्येण बुद्ध्वा
न शनिरविकुजानां वासरे नोग्रतारे ॥”
इति कालः ॥ * ॥
अथ हयारोहणज्ञानम् ।
“चलकिशलयपादः कर्णमध्यैकदृष्टि-
र्नचलति कटिदेशः श्वासने संस्थितो यः ।
हयहृदयगतिज्ञः स्थानदण्डावपातः
स खलु तुरगयाता पूज्यते पार्थिवेन्द्रैः ॥
मेरुः स्थिरौ यस्य चलौ च पादौ
त्रिकोन्नतं संहतमासनञ्च ।
स वाजिवाहः प्रथितः पृथिव्यां
शेषा नरा भारकरा हयानाम् ॥ * ॥
तत्र ताडनविधिः ।
“रक्तकोष्ठे मुखे चौष्ठे गले पुच्छे च ताडयेत् ।
भीते वक्षःस्थलं हन्याद्वक्त्रं चोन्मार्गगामिनः
॥
कुपिते पुच्छसंस्थानं भ्रान्ते जानुद्वयं तथा ।
सर्व्वस्याप्राप्तदण्डस्य दण्डमेकं निपातयेत् ॥
अस्थानदण्डपाताच्च बहुदोषः प्रजायते ।
तस्मान्निरीक्ष्य कर्त्तव्यं हये दण्डनिपातनम्
॥” * ॥
अथ घावनविधिः ।
“हस्तैश्चतुर्व्विंशतिभिर्द्धनुर्द्दण्ड उदाहृतः ।
अक्ष्णोर्निमेषणान्यष्टौ मात्रा प्रोक्ता विचक्षणैः ॥

स वाजी वाजिमेधार्हः श्यामकर्णः सुदुर्लभः ॥
यस्य पादाः सिताः सर्व्वे पुच्छो मुष्को मुखं तथा ।
मूदूर्ध्वजास्तु सिता यस्य तम्बिद्यादष्टमङ्गलम् ॥
यस्य पादाः सिताः सर्व्वे चन्द्रकञ्च ललाटके ।
कल्याणपञ्चकः प्रक्तो भर्त्तुः कल्याणकारकः ॥
विमिश्रवर्णकाः सर्व्वे प्रशस्ता वाजिनो मताः ।
यस्योत्कृष्टतरा वर्णा वृद्धिं यान्ति शनैः शनैः ॥
नाशयन्ति तथा नीचान् करोति स बहून् हयान् ॥”
अथावर्त्तगुणाः ।
“रोम्णां भ्रमिवदावृत्तिरावर्त्त इति गद्यते ।
षड्विधो दक्षिणो वामो दक्षिणस्तु शुभावहः ॥
नासिकाग्रे ललाटाग्रे शङ्खे कण्ठे च मस्तके ।
आवर्त्तो जायते येषां ते घन्यास्तु तुरङ्गमाः ॥
ललाटे यस्य चावर्त्तो द्वितीयस्तु कुकुन्दरे ।
मस्तके च तृतीयस्तु स विज्ञेयो हयोत्तमः ॥
गण्डावर्त्तो भवेद् यस्य वाजिनो दक्षिणाश्रयः ॥
स करोति महासौख्यं स्वामिनः शिवसंज्ञितः ।
कर्णमूले यदावर्त्तः स्तनमध्ये तथापरः ।
विजयाख्यावुभौ तौ तु युद्धकाले जयप्रदौ ॥
स्कन्धपार्श्वे यदावर्त्तः स भवेत् सुखकारकः ।
नासामध्ये यदावर्त्त एको वा यदि वा त्रयः ॥
चक्रवर्त्ती स विज्ञेयो वाजी भूपालभूषितः ।

जिह्वायां जायते विन्दुरकस्माद्यदि वाजिनः ॥
मासैकं जीवितं तत्र पीते मासद्वयन्तथा ।
रक्ते मृत्युस्त्रिभिर्मासैश्चतुर्भिश्च विचित्रके ॥
पञ्चभिर्नीलवर्णे च षड्भिर्वभ्रुसमाकृतौ ।
सप्तभिः पाटलाकारे चणकाभे तथाष्टभिः ॥
नवभिश्च हरिद्राभे दशभिर्जतुकोपमे ।
एकादशे सुवर्णाभे वत्सरेण हिमद्युतौ ॥
यस्य श्वासो भवेदुष्णः शरीरं पुलकाङ्कितम् ।
जिह्वा हि मलिनाकारा मासषट्कं स जीवति ॥
जिह्वाग्रे पिडका यस्य पादान्ते च तथोदरे ।

मात्राषोडशकेनाश्वो यो धावति धनुःशतम् ।
तमुत्तमोत्तमं विद्याद्वायुवेगं महाजवम् ॥
विंशत्या मध्यम्ये ज्ञेयो ह्यतोऽन्ये चाधमा मताः ।
नभस्याश्वयुजे मासि नैवाश्वान् वाहयेन्नृपः ॥
वज्राग्निसदृशं पित्तं श्रमात् कुप्यति वाजिनाम् ।
कार्य्येण महता वापि योज्यो मासि तु कार्त्तिके ॥
हेमन्ते शिशिरे योगो वसन्ते च यदृच्छया ।
बालं वृद्धं कृशं रुग्नं दत्तस्नेहं वृहद्वलिम् ॥
पूर्णातिरिक्तकोष्ठञ्च गुर्व्विणीञ्च न वाहयेत् ॥ * ॥
अथ रक्तमोक्षणविधिः ।
“द्वासप्ततिसहस्राणि नाडीनां सम्भवन्ति हि ।
वाजिनामिह सर्व्वेषामाशु रक्तं व्यवस्थितम् ॥
तासां निर्मोक्षणार्थाय द्वाराण्यष्टौ वदाम्यहम् ।
यैर्याति कुत्सितं रक्तं सर्व्वदेहसमुद्भवम् ॥
कण्टे कक्षे लोचनयोस्संयोश्च मुखे तथा ।

| | | | |
|---|---|---|---|
| कण्ठे यस्य महावर्त्तः<br>प्रोक्तश्चिन्तामणिः शुभः ॥<br>रोम्णां वृश्चिकवत् स्थानं<br>शुक्तिरित्यभिधीयते।<br>यत्रावर्त्तः शुभस्तत्र शुक्तिस्तत्र<br>शुभावहा ॥” * ॥<br>अथ दोषाः ।<br>“चत्वारोऽप्यसिताः पादाः<br>सर्व्वश्वेतस्य वाजिनः ।<br>भवन्ति यस्य स त्याज्यो यमदूतः<br>सुदूरतः ॥ | | | |

अण्डयोरथ पादेषु पार्श्वयोरुभयोरपि ॥
एतद्वर्त्म सुविज्ञेयं वाजिनां भिषगुत्तमैः ।
अन्ये सप्तदशान्याहुः सिराद्वाराणि वाजिनः ॥
येषु रक्तं हृतं सद्यः प्रकरोति ततः सुखम् ।
गुल्फे गले तथा मेढ्रे कक्षान्ते चैव पत्रके ।
गुदे पुच्छेऽथ वस्तौ च जङ्घयोः सर्व्वसन्धिषु ।
जिह्वायां चाधरे चौष्ठे नेत्रयोरुभयोरपि ॥
कर्णमूले मणौ गण्डे रुधिरं स्रावयेद्भिषक् ।
सौश्रुतमानपलेन त्याज्यं रक्तं तुरङ्गप्रमाणम् ॥"
तद्यथा, --
"षलं शतं मुखे त्याज्यं कक्षयोश्चैकमेव च ।
शतार्द्धं नेत्रदेशाच्च मेढ्रदेशात्तथैव च ॥
गण्डयोरण्डयोश्चैव स्रावयेत् पञ्चविंशतिम् ।
द्वादशैव गुदे प्राहुरश्वशास्त्रविचक्षणाः ॥
पैत्तिकं कालिकं विद्याद्वाते विद्यात् सफेनिलम् ।
पिच्छिलं श्लेष्मलं पाण्डु कषायोदकवच्च यत्
॥" *
अथ ऋतुचर्य्या ।
"न प्राज्ञो वाहयेदश्वान् प्रावृट्काले कथञ्चन ।
यदीच्छेदमृतन्तस्य वाहनं दशमासिकम् ॥
कूपोदकं कटुकतैलनिवातगेहं
शस्तं पलार्द्धलवणं दिवसान्तरेण ।
तत्रान्यथा सति मुखामयवीर्य्यहानि-
र्मुख्यैबलैर्व्विरहितस्तु वयो विनश्येत् ॥
शरदि गुडघृतं पयः प्रशस्तं
शरदि सिताष्टपलप्रमाणमच्छम्।
मधुरमथ जलं सरोवरोत्थं
घृतयुतनीलमुकुष्टकाश्च भोज्याः ॥
हेमन्तकाले घृततैलमाषा
निर्व्वातसंस्था च पयो यथेच्छम् ।
शनैः शनै र्वाहनकर्म्म कुर्य्याद्-
यवांश्च पक्त्रा वितरेद् विधिज्ञः ॥
शिशिरे तैलपलाष्टकं कटिस्थं
दिनसप्तावधि पाययेत्तुरङ्गान् ।
तदनु प्रातर्भोजयेद्यवांश्च
यवयवसाश्च तथामृतस्वरूपाः ॥
यस्य दत्ता यवा भोज्ये शिशिरे समुपस्थिते ।
अकृत्वापि क्रियाः सर्व्वाः स हयः सुखभृच्छति
॥
वसन्ते संप्राप्ते निजसुखवशाद्वाहय हयान्
घृतं तैलं शस्तं सकलविधिरुक्तोऽपि च मतः ।
पयो दद्यादस्मै सलवणमथो वाहनविधि-
नाभेरारभ्य देहस्तु द्विधा पूर्ब्बापरक्रमात् ।
पूर्ब्बकायस्थिता रक्ताः शुभाय
हयसंस्थिताः ॥
अधःकाये स्थिता रक्ता अधमत्वप्रकाशकाः
।
शुक्तीनां वैपरीत्येन प्रशस्तफलमादिशेत् ॥"
* ॥
वात्स्यस्तु ।
"ब्रह्मादिजातिभेदेन हयजातिश्चतुर्व्विधा ।"
तद्यथा, --
"ये शुक्लाः सुविमलपुष्पगन्धा ये वा
शुद्धाङ्गाः सघृणसदुष्णभोजिनो वा ।
अक्रुद्धाः समरगता भृशञ्च पुष्टा-
स्ते विप्राः क्षितिपतिवाहनेऽतियोग्याः ॥
ये रक्ताः सदगुरुगन्धयोऽहता वा
संरुष्टाः बहुतरभोजिनो बलाढ्याः ।
अश्रान्ताः सकलगुणग्रहाः प्रवीणा
विज्ञेया विधिकरजातजातयस्ते ॥
ये पीताः खलु घृतगन्धयोऽपि ये वा
येऽक्रुद्धाः कथमपि रोषशालिनो ये ।
बद्धा वा बहुतरनादघोषणा वा
विज्ञेया नृपवर ! वैश्यजातयस्ते ॥
ये कृष्णाः सरुषामगन्धयोऽपि ये वा
अन्यथा बहुतरताडनैरपीमे ।
क्षीणाङ्गा लघुतनवोऽपि वेशहीना-
स्ते शूद्राः क्षितिपतिना भृशं विहेयाः ॥"
एतत्तु एकैकमेव लक्षणं न सामुदायिकम् ॥
"लक्षणद्वयसम्बन्धात् द्विजातिः
स्यात्तुरङ्गमः ।
चतुर्ल्लक्षणयुक्तस्तु दूरे त्याज्यो हयाधमः ॥"
* ॥
अन्यत्र तु ।
"सात्त्विका राजसाश्चेति तामसाश्चेति ते
हयाः ॥
ये शुद्धवर्णा भृशवेगयुक्ता
अश्रान्तिभाजो बहुभोगिनश्च ।
अक्रोधशीलाः समरेऽतिरुष्टा-
स्ते सात्त्विका भूप ! तुरङ्गमाः स्युः ॥
ये रक्तवर्णा गुरुवेगरोषाः
कषाभिघातं न हि ये सहन्ते ।
येऽमी बलाढ्याः खलु दीर्घदेहा-
स्ते राजसा भूप ! तुरङ्गमाः स्युः ॥
ये वातवेगप्रतिमोग्रवेगाः
शुष्का भृशं दीर्घकलेवराश्च ।
अश्रान्तिभाजो वहुदूरगाश्च
ते वायवा वाजिवराः प्रदिष्टाः ॥
ये क्रोधशीला भृशवेगयुक्ता
मुक्ता दिनात् क्रोशशतं व्रजन्ति ।
ते तैजसाः पुण्यवतां प्रदेशे
भवन्ति पुण्यैरपि ते मिलन्ति ॥
एको यदा तैजससंज्ञकोऽश्वः
किं कार्य्यमन्यैस्तुरगाधमैस्तु ।
शुद्धं यदा हीरकखण्डमेकं
किं कार्य्यमन्यैर्मणिभिर्विचित्रैः ॥
उत्प्लुत्य ये वाजिवरा व्रजन्ति
क्रुधा भृशं वेगसमन्विताश्च ।
ये लङ्घयन्तः परिखामपारां
ते गागना पुण्यतमाः प्रदिष्टाः ॥
द्वयोर्ल्लक्षणसम्बन्धात्तुरगः स्यात् द्विभौतिकः ।
स्वजातिगुणभूतानां हयानां वाहनं शुभम् ॥
शालिहोत्रादिविज्ञानात्तद्विज्ञेयं यथोत्तरम् ।
असम्भवे हि दुष्टाश्वं वाहयेदिति चेत्तदा ॥
तिलं सकाञ्चनं दद्याल्लवणं वा गुडान्वितम् ।
रेवन्तं पूजयेद्वापि निजं निर्मन्थयेत्तदा ॥
दद्यात्ताम्रपलं वापि अभावे सर्व्वकर्म्मणः ॥"
एवमन्यत्रापि ।
"काञ्चनं रजतं ताम्रं लौहमेतद्यथाक्रमम् ।
ब्रह्मादिजातिदोषाणां देयमेतत् प्रशान्तये ॥
अभावेऽपि च सर्व्वेषां ताम्रेण स्यात् प्रति-
क्रिया ।"
इति हयपरीक्षा ॥ * ॥
इति भोजराजकृतयुक्तिकल्पतरुः ॥
("येन ज्ञानवता हिमालयतरुच्छायासु
विक्रीडितम्
यः स्नातो हिमपुष्पवातशिशिरे गङ्गाजले पावने
।
रेमे यस्तु तुरङ्गयूथजनितैर्नानाविधैर्हेषितैः
पायाद्वः स तुरङ्गघोषतनयः श्रीशालिहोत्रो
मुनिः ॥
जयति च पाण्डवनाथो धर्म्मसनाथो युधिष्ठिरो
नृपतिः ।
भीमार्ज्जुनसहदेवास्तदनु च ये
वाजिशास्त्रतत्त्वज्ञाः ॥
दृष्ट्वा सम्यङ्नकुलः शास्त्रं कृत्स्नं च शालि-

| | | |
|---|---|---|
| भृशं योज्यस्तेनाब्दमपि सुखमिच्छेद्धयवरः ॥<br>वसन्तसमये योऽश्वः स्थाने तिष्ठति बन्धने ।<br>तस्योत्साहः प्रणश्येत सालस्यं जायते वपुः ॥<br>ग्रीष्मे घृतं क्षतजमोक्षणघर्म्मशान्ति-<br>सुच्छायबन्धनविमर्द्दनशीततोयम्।<br>दूर्व्वा तृणं लघु च कोमलमन्यदेव<br>यत्किञ्चिदेवमुपयुक्तमिदं वदन्ति ॥" * ॥<br>भोजे तु हयलक्षणमन्यथा, --<br>स्निग्धाङ्गो लघुतरलोमकस्तु पुच्छो<br>दीर्घास्यास्थिनयनकेशपृष्ठवंशः ।<br>रक्तोष्ठः पृथुलनितम्बभारवक्षा<br>राजार्हो भवति तुरङ्गमः प्रशस्यः ॥ | ये कृष्णवर्णास्तनुरोषवेगा<br>अल्पाशिनो लक्षणलक्षिताश्च ।<br>ये दुर्ब्बलाः सर्व्वगुणैर्विहीना-<br>स्ते तामसा भूप ! तुरङ्गमाधमाः ॥<br>द्वयोर्लक्षणसम्बन्धात् द्विगुणो वाजिमध्यमः<br>।<br>त्रयाणां गुणसम्बन्धात् त्रिगुणो<br>वाजिनिन्दितः ॥"<br>पराशरसंहितायान्तु ।<br>"पृथिव्यब्वायुतेजःखैः पञ्चभिस्तुरगाश्रितैः<br>।<br>उल्वणैः पञ्चधा भेदाः परशरमता यथा ॥<br>ये स्थूलाः श्रमसहदेहरूपभाज-<br>श्चाक्लान्ता बहुतरभोजनाश्च दीर्घाः ।<br>अक्रुद्धाः समरगतास्तु रोषभाजो<br>भौमास्ते घनगुरुघर्घरस्वरास्तु ॥<br>ये श्लथाङ्गास्तनुबलाः श्रमासहकलेवराः ।<br>अक्रोधवेगाः सस्वप्ना आप्यास्ते<br>तुरगाधमाः ॥ | होत्रीयम् ।<br>ब्रूते शास्त्रार्थमन्यच्छास्त्रं कृत्वा समासेन ॥<br>प्रश्नो जातिवर्णमावर्त्तदन्ता<br>लक्षं वेगा वाहनं धातुरस्रम् ।<br>कालो नस्यं पिण्डमाज्यं कषायं<br>शालां चेष्टां वाजिनामत्र वक्ष्ये ॥<br>सपक्षा वाजिनः सर्व्वे सञ्जाता व्योमचारिणः ।<br>गन्धर्व्वेभ्यो यथाकामं गच्छन्ति च समन्ततः ॥<br>तान् दृष्ट्वा जवसम्पन्नानसह्यान्वाहनोचितान्।<br>शक्रः प्रोवाच पार्श्वस्थं शालिहोत्रं मुनीश्वरम् ॥<br>नास्त्यसाध्यं मुने ! किञ्चिद्भवतो भुवनत्रये ।<br>तस्मादाशु कुरुष्व त्वं वाहनार्हान् हयोत्तमान् ॥ |

ये च मे युद्धकालेषु प्रवहन्ति रथं सदा ।
अशक्यं वारणेन्द्रैश्च दानवैर्बलवत्तरैः ॥
ईषिकास्त्रं समुत्सृज्य पक्षच्छेदं व्यधात्तदा ।
वाजिनां शक्रवाक्येन शालिहोत्रो महामुनिः ॥
च्छिन्नपक्षास्तु ते सर्व्वे गत्वा तमृषिमब्रुवन् ।
दीनाः सुदुःखसम्पन्ना रुधिरेण परिप्लुताः ॥
भगवन् ! किं निमित्तं नः पक्षच्छेदः कृतस्त्वया ।
अपराधविहीनानां नेदृगिच्छन्ति पण्डिताः ॥
तस्माद्गतिर्भव प्राज्ञ ! सर्व्वेषामिह वाजिनाम् ।
यथा स्यात् सर्व्वदा सौख्यं पुष्टिश्च मुनिपुङ्गव ! ॥
अथासौ कृपयाविष्टस्तानुवाच सुदुःखितान् ।
इन्द्रादेशात् कृतं सर्व्वं भवतां पक्षपातनम् ॥
तस्माद्वः प्रकरिष्यामि भविष्यति यथासुखम् ।
पुष्टीरम्या यथा देहे गौरवं च जगत्त्रये ॥
यूयं शक्रादिदेवानां वाहनत्वं करिष्यथ ।
तथा भूमिपीतनाञ्च गौरवेण समन्विताः ॥
यो राजा भवतां पुष्टिं स्वन्नपानादिभिः सदा ।
करिष्यति न सन्देहो भविष्यति स दुर्ज्जयः ॥
नं च त्यक्ष्यति तं लक्ष्मीः कदाचिज्जयलक्षणा ।
अपि सर्व्वैर्गुणैर्हीनं बहुशत्रुभिरावृतम् ॥
तथा चैव विधास्यामि परमञ्च चिकित्सितम् ।
पुष्ट्यै च रोगनाशार्थं नराणां विहितं यथा ॥
तस्माद्गच्छत भूलोकं पातालञ्च तथापरे ।
स्वर्गं चान्ये मदादेशाद्येन शान्तिर्भवेद् ध्रुवम् ॥
एवं विसृज्य तान् सर्व्वान् शालिहोत्रस्तुरङ्गमान् ।
चक्रे द्वादशसाहस्रीं तदर्थे संहितां सुधीः ॥
ततःप्रभृति लोकेऽस्मिन् वाह्या जातास्तुरङ्गमाः ।
ततश्चिकित्सितं तेषां शालिहोत्रप्रभाषितम् ॥”
इति श्रीनकुलकृतेऽश्वचिकित्सिते प्रश्नो नाम प्रथमोऽध्यायः ॥
अथ जातिः ।
“उत्तमा मध्यमा नीचाः कनीयांसस्तथापरे ।
चतुर्धा वाजिनो भूमौ जायन्ते देशसंश्रयात् ॥
ताजिकाः खुरशाणाश्च उत्तराश्चोत्तमा हयाः ।
गोजिकाणाश्चकेक्काणाः प्रौढाहाराश्च मध्यमाः ॥
ब्राह्मणाः क्षेमकृत्येषु सिद्धिं गच्छन्ति वाजिनः ॥
क्षत्रिया युद्धकार्य्येषु वैश्या वित्तार्ज्जने सदा ।
शूद्राश्चान्येषु कृत्येषु ज्ञात्वैवं वाजिनः सदा ॥
आरोहेत् सर्व्वकार्य्येषु यदीच्छेच्छाश्वतीं श्रियम् ।
सदा शुभा भवन्त्येते वाजिनो यस्य भूतले ॥
सदैव निद्रावशगा निद्राच्छेदस्य सम्भवः ।
जायते सङ्गरे प्राप्ते कर्करस्य च भक्षणे ॥
प्रबुद्धाः कथयन्त्यश्वाः शुभं वा यदि वाशुभम् ।
स्वस्वामिनो निजैश्चिह्नैस्तद्विज्ञेयं विचक्षणैः ॥
यः सन्नद्धो हयो रावमूर्ध्वमूर्ध्वं करोति च ।
खुराग्रेण लिखन् भूमिं स शंसति रणे जयम् ॥
यः करोत्यसकृन्मूत्रं पुरीषञ्चाश्रुमोक्षणम् ।
स शंसति पराभूतिं यश्चैवं वर्त्तते हयः ॥
निरामिषं निशीथे यो जागर्त्ति नृपतेर्हयः ।
स शंसति द्रुतन्तस्य स्थिरस्यापि प्रयाणकम् ॥
यदा व्याधिं विना वाजी ग्रासन्त्यजति दुर्मनाः ।
अश्रुपातञ्च कुरुते तदा भर्त्तुरशोभनम् ॥
पुलकांकितपुच्छा ये जायन्ते भूपतेहयाः ।
निरीक्षन्तः प्रभोर्नाशं ते वदन्ति निशागमे ॥
शरटं रक्षयेद्यत्नात् प्रविशन्तं हयालये ।
यदीच्छेच्छाश्वतीं वृद्धिं तेषाञ्चैव तथात्मनः ॥
स्फुलिङ्गा यस्य दृश्यन्ते पुच्छदेशे च वह्निजाः ।
परचक्रागमाशंसी विज्ञेयो हयपण्डितैः ॥
अश्वशालां समासाद्य यदान्तर्मधुमक्षिकाः ।
मधुजालं प्रकुर्व्वन्ति तदाश्वान् घ्नन्ति कृत्स्नशः ॥
तस्मात् सर्व्वप्रयत्नेन वाजिशालां प्ररक्षयेत् ।
उपायेभ्यश्च सर्व्वेभ्यो य इच्छेद्भूतिमात्मनः ॥
ब्राह्मणान्वाचयेत् स्वस्ति नित्यं वेदविचक्षणान् ।
तिलहोमस्तथा कार्य्यो जपश्च शतरुद्रियः ॥
मन्दुरान्ते सदा धार्य्यो रक्तवक्त्रो महाकपिः ।
सर्व्वपापविनाशाय वाजिनाञ्च विवृद्धये ॥
सरघां रक्षयेद् यत्नात् प्रविशन्तीं हयालये ।
यदीच्छेच्छाश्वतीमृद्धिं तेषाञ्चैव तथात्मनः ॥
चत्वारोऽप्यसिताः पादाः सर्व्वश्वेतस्य वाजिनः ।
भवन्ति यस्य स त्याज्यो यमदूतः सुदूरतः ॥
यस्य पादाः सिताः सर्व्वे पुच्छं वक्षो मुखं तथा ।
मूर्घजाश्च सिता यस्य तं विद्यादष्टमङ्गलम् ॥
भस्माभं वाजिनं जह्यात् सुदूरेण नराधिपः ।
यदि वाश्छति कल्याणं वाञ्छेच्च श्रीसमुद्भवम् ॥
यस्य रोमविभेदेन जायन्ते रोमविन्दवः ।
पुष्पाख्यः स परित्याज्यः सर्व्ववाजिभयावहः ॥
यस्य पादाः सिताः सर्व्वे तथा वक्त्रञ्च मध्यतः ।
कल्याणपञ्चकः प्रोक्तः सर्व्वकल्याणकृच्च सः ॥
विमिश्रवर्णकाः सर्व्वे प्रशस्ता वाजिनः स्मृताः ।
कृष्णनीलस्य मिश्रत्वमेकं मुक्त्वा सुदूरतः ॥
यस्योत्कृष्टतरो वर्णो वृद्धिं याति शनैः शनैः ।
नाशयति तथा नीचान् स करोति बहून् हयान् ॥
यस्याधमेन वर्णेन छाद्यते च प्रधानजः ।
विवृद्धिं गच्छता सोऽथ करोति हयसंक्षयम् ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते वर्णो नाम तृतीयोऽध्यायः ॥
अथ आवर्त्ताः ।
“आवर्त्ता विंशतिः प्रोक्ताः शालिहोत्रमहात्मना ।
गात्रस्थानविभागेन तेषां व्यक्तिर्मयोच्यते ॥
ललाटे मस्तके चैव ग्रीवायां हृदये तथा ।
पादे पृष्ठे मणीबन्धे नाभिदेशे विशेषतः ॥
स्कन्धे पार्श्वे गले वक्त्रे कुक्षौ रन्ध्रे त्रिके तथा ।
आद्यास्त्रयोदशावर्त्ता विज्ञेया वाजिपण्डितैः ॥
नासिकाग्रे ललाटाग्रे शङ्खे कण्टे च मस्तके ।
आवर्त्तो जायते येषां ते धन्यास्तुरगोत्तमाः ॥
हृदि स्कन्धे गले चैव कटिदेशे तथैव च ।
नाभौ कुक्षौ च पार्श्वङ्गे मध्यमास्ते प्रकीर्त्तिताः ॥
ललाटे यस्य चावर्त्तो द्वितीयस्य स लिङ्गकः ।
मस्तके च तृतीयश्च पूर्णकुक्षिः स उत्तमः ॥

भाण्डजाश्चोत्तमाशाश्च राजशूलाश्च मध्यमाः ।
गोर्ह्वराः शावराश्चैव सिन्धुपाराः कनीयसः ॥
अन्यदेशोद्भवा ये च नीचनीचाश्च ते स्मृताः ।
वाजिनो जलजाः केचिद्वह्निजातास्तथापरे ॥
समीरप्रभवाश्चान्ये उलूकमृगजास्तथा ।
जलोद्भवा द्विजातीयाः क्षत्रिया वह्निसम्भवाः ॥
समीरप्रभवा वैश्या एणोलूकाश्च शूद्रजाः ।
विवेकी सघृणो विप्रस्तेजस्वी क्षत्रियो बली ॥
दुष्टभावस्तथा वैश्यः शूद्रो निःसत्वकातरः ।
ब्राह्मणाः सामवाही च भेदवाही च क्षत्रियः ॥
उपादानेन वैश्यः स्याच्छूद्रो दण्डेन ताडितः ।
पुष्पगन्धः सदा विप्रः क्षत्रियोऽगुरुगन्धकः ॥
घृतगन्धः सदा वैश्यो मीनामोदी च शूद्रकः ।
विप्रार्हा वाजिनः सर्व्वे क्षत्रियो भूपतेः सदा ॥
द्वौ वैश्यस्याथ शूद्रस्य शूद्र एव सुखावहः ।
केचिदिच्छन्ति भूपानां सर्व्वेऽश्वा वाहनोचिताः ॥
तदर्थं भूतले यस्माच्छालिहोत्रेण निर्म्मिताः ।

इति श्रीनकुलकृतेऽश्वचिकित्सिते जात्यधिकारे
द्वितीयोऽध्यायः ॥

अथ वर्णवर्णनम् ।

“वर्णाः सप्त भवन्तीह सर्व्वेषां वाजिनां ध्रुवम् ।
तानहं कीर्त्तयिष्यामि भेदैर्जातानेकधा ॥
सितो रक्तस्तथा पीतः सारङ्गः पिङ्ग एव च ।
नीलः कृष्णोऽथ सर्व्वेषां श्वेतः श्रेष्ठतमः स्मृतः ॥
पट्टार्हो भूपतेर्वाजी सर्व्वश्वेतः प्रशस्यते ।
तदभावे यथा प्रोक्तास्तथा श्रेष्ठाः क्रमेण च ॥
श्वेतः प्रालेयसङ्काशो रक्तः कुङ्कुमसन्निभः ।
हरिद्रासदृशः पीतः सारङ्गः कर्वुरः स्मृतः ॥
पिङ्गः कपिलकाकारो नीलो दूर्व्वाग्रसन्निभः ।
कृष्णो जम्बूफलाकारः शास्त्रज्ञैः समुदाहृतः ॥
पीताभः श्वेतपादो यस्तथा स्यात् सितलोचनः ।
चक्रवाकः स विज्ञेयो राजार्हो वाजिसत्तमः ॥
सर्व्वश्वेतो हयो यस्तु भवेन्मेचककर्णकः ।
स वाजी वाजिमेधार्हः श्यामकर्णः प्रकीर्त्तितः ॥
मुखे चन्द्रकसंवीतो जम्बूफलसमाकृतिः ।
श्वेतपादः स विज्ञेयो मल्लिकाख्यः स पूजितः ॥
पृष्ठबंशे तथावर्त्तो यस्यैकः संप्रजायते ।
स करोत्यश्वसंघातान् स्वामिनः सूर्य्यसंज्ञकः ॥
कक्षायां जानुमेढ्रे च त्रिबलौ पुच्छसन्निधौ ।
पुच्छे गुह्ये बलावष्टावावर्त्ता अधमा हये ॥
त्रयो यस्य ललाटस्था आवर्त्ता अधरोत्तराः ।
त्रिकूटः स परिज्ञेयो वाजिवृद्धिकरः परः ॥
एवमेव प्रकारेण त्रयो ग्रीवां समाश्रिताः ।
त्रयावर्त्तः स वाजीशो जायते भूपमन्दिरे ॥
ललाटे युगलावर्त्तौ चन्द्रार्कौ संप्रकीर्त्तितौ ।
वाजिनो यदि तौ स्यातां राष्ट्रवृद्धिकरौ परौ ॥
उपर्य्युपरि यस्य स्युरावर्त्ता अलिके त्रयः ।
निःश्रेणिः सतु विज्ञेयो राष्ट्रवृद्धिकरः परः ॥
एकोऽथवा कपोलस्थो यस्यावर्त्तः प्रदृश्यते ।
वर्त्तमानः स विज्ञेयः स इच्छेत् स्वामिनाशनम् ॥
कपोलाभ्यान्तथावर्त्तौ विद्येते वाजिनो यदि ।
तावश्विनाविति प्रोक्तौ युद्धकाले जयप्रदौ ॥
गण्डावर्त्तो भवेद्यस्य वाजिनो दक्षिणाश्रयः ।
स करोति महासौख्यं स्वामिनः शिवसंज्ञकः ॥
तद्वद्वामाश्रयः क्रूरः प्रकरोति धनक्षयम् ।
इन्द्रकर्काख्यावुभौ शस्तौ नृपराज्यविवृद्धिदौ ॥
कर्णमूले यदावर्त्तस्तन्मध्ये च तथापरः ।

विजयाख्यावुभौ ज्ञेयौ युद्धकाले जयप्रदौ ॥
नासामध्ये यदावर्त्त एको वा यदि वा त्रयः ।
चक्रवर्त्ती, स विज्ञेयो वाजी भूपालपूजितः ॥
कण्ठे यस्य महावर्त्त एकोऽश्वस्य प्रजायते ।
चिन्तामणिः स विज्ञेयश्चिन्तितार्थविवृद्धिदः ॥
स्कन्धे पार्श्वे यदावर्त्तः स भवेत् पद्मलेक्षणः ।
करोति विधिवत् पद्मे स्वामिनः सततं सुखम् ॥
शुक्त्याख्यौ तालुकान्तस्थावावर्त्तौ कीर्त्तिवृद्धिदौ ।
हयस्य स्वामियुक्तस्य सदैव सुसुखावहौ ॥
एकावर्त्तो भवेद्यस्य कक्षान्ते वाजिनो यदा ।
स रणे मृत्युमाप्नोति द्वौ च स्वामिविनाशनौ ॥
जानुदेशे यदावर्त्तो वाजिनः संप्रदृश्यते ।
प्रवासं सततं ब्रूते स्वभर्त्तुः क्लेशसंयुतम् ॥
वाजी मेढ्रतलावर्त्तो वर्जनीयो महीभुजाम् ।
स करोति हरेर्नाशं परचारसमुद्भवम् ॥
त्रिवलिस्थो यदावर्त्तस्त्रिवर्गस्य प्रणाशकः ।
वाजिनस्ते परिज्ञेयाः स्त्रीपार्श्वस्था भयप्रदाः ॥
पुच्छदेशे यदावर्त्तो वाजिनः संप्रदृश्यते ।
धूमकेतुरिति ख्यातः स त्याज्यो दूरतो नृपैः ॥
गुह्ये पुच्छे वलौ यस्य भवन्त्यावर्त्तकास्त्रयः ।
स कृतान्तस्वरूपेण वर्जनीयस्तुरङ्गमः ॥
अध ऊर्द्ध्वं यदा वाजी सम्पुटं न स्पृशेत् क्वचित् ।
यमदूतः स विज्ञेयो वर्जनीयः प्रयत्नतः ॥
हीनदन्तोऽधिदन्तश्च कराली कृष्णतालुकः ।
मुशली च तथा शृङ्गी षडेते स्वामिघातकाः ॥
एकाण्डजातश्चैकाण्डो हीनाङ्गोऽप्यधिकाङ्गकः ।
परित्याज्यः स वाच्छद्भिरन्विष्य परमं यशः ॥
घण्टी वदनको वाली शृङ्गी चैव चतुर्थकः ।
वर्जनीयः प्रयत्नेन सर्व्वे ते पापकृतमाः ॥
घण्टी च स्वामिनं हन्ति वदनी धनसंक्षयम् ।
अन्तःपुरं तथा वाली शृङ्गी राष्ट्रविनाशनः ॥

भक्षिकाभारदास्तेषां यावद्वर्षत्रयं पुनः ॥
तस्मादुदूखलं प्राप्तास्तावद्वर्षत्रयं पुनः ।
प्रकम्पञ्च समागम्य पश्चात् पातः समात्रयम् ॥
द्वात्रिंशद्वत्सरैरेव वाजी निर्व्वाणमाप्नुयात् ।
दंष्ट्राचतुष्टयं श्वेतं वक्रेण परमायुषि ॥
अश्वानामेव सर्व्वेषां दन्ता द्वादश कीर्त्तिताः ।
कालिका हारिणी शुक्ला काचा वाप्यथ मक्षिका ॥
शङ्खोदूखलकञ्चैव दन्तानाञ्चलनं तथा ।
ततस्तु पतनं विद्यादेष व्यञ्जनसंग्रहः ॥
चतुर्विंशतयों दंष्ट्राः शालिहोत्रमतं तथा ।
एवं दन्तविशेषेण सर्व्वेषामिह वाजिनाम् ।
विज्ञेया चायुषःसंख्या वाजिपोषणतत्परैः ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते दन्तोद्भेदो नाम पञ्चमोऽध्यायः ॥
अथ अवयवप्रमाणम् ।
दीर्घसूक्ष्मविमांसास्या ये भवन्ति तुरङ्गमाः ।
ते शस्ताः पार्थिवेन्द्रस्य यानवाहनकर्म्मणि ॥
स्कन्धमभ्युन्नतं दीर्घं वक्रग्रीवं विशेयतः ।
चमरालङ्कृतं सम्यक् स्तोकबालसमन्वितम् ॥
येषां पृष्ठं सुवंशं स्याद्विपुलं व्रणवर्जितम् ।
किञ्चिन्मध्ये भवेन्निम्नं राजार्हास्ते तुरङ्गमाः ॥
स्निग्धरोमा सुवृत्ता च सुस्थूला विपुला कटी ।
ग्रथिताः सुदृढा रम्या भुजा मांसप्रपूरिताः ॥
पादा निर्मांसला वक्राश्चक्राकारखुरान्विताः ।
अप्रमाणं तथा वक्षः कर्णौ लघुतरौ स्मृतौ ॥
पार्श्वौ तनुतरौ शस्तौ सुरसस्निग्धतालुकम् ।
दन्ताश्च शिखराकारा विपुला चन्द्रवर्च्चसः ॥

लघूनि बन्धाश्चरणेषु कोष्ठं श्रोत्राणि सर्व्वाणि तथैव पुच्छम् ॥
कर्णान्तरं कर्णसमन्वितञ्च वंशं तथा ह्रस्वतरं प्रशस्तम् ।
वक्त्रं मुखं कन्धराजानुनी च पार्श्वञ्च सप्तेः शुभदं प्रदिष्टम् ॥
कक्षान्तरं चोदरमध्यमञ्च निम्ना कटी तानि सजानुकानि ।
वक्षःशफोरूजघनस्थलञ्च चतुष्कमेतत् पृथुलं प्रदिष्टम् ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते सर्व्वावयव-प्रमाणो नाम षष्ठोऽध्यायः ॥
अथ वेगः ।
गुणानामिह सर्व्वेषां गुणो वेगमयोऽधिकः ।
अश्वानां शस्यते तज्ज्ञैरश्वज्ञानविचक्षणैः ॥
संवाहनविधानेन प्रकाशं यान्त्यसंशयम् ।
तस्मात् सर्व्वप्रयत्नेज वेगो ज्ञेयश्च वाजिनाम् ॥
अवाहिता विनश्यन्ति विनश्यन्त्यतिवाहिताः ।
अश्वानां वाहनं पथ्यं सानुरागञ्च मोक्षणम् ॥
अधमा मध्यमास्ते स्युर्मध्यमाश्च तथोत्तमाः ।
उत्तमाश्चोत्तमा भूयो वाह्यमानास्तुरङ्गमाः ॥
रूढमश्वविदां श्रेष्ठं रूढे सर्व्वं प्रतिष्ठितभ् ।
रूढेन तु विहीनस्य लक्षणं चाप्यलक्षणम् ॥
रूपावर्त्तगतिच्छायासत्ववर्णवयोबलम् ।
जवहीनस्य वाहस्य सर्व्वमेव निरर्थकम् ॥
गतेर्धन्यतरो वर्णो वर्णाद्धन्यतरः स्वरः ।
स्वराद्धन्यतरं सत्वं सर्व्वं सत्वे प्रतिष्ठितम् ॥
लघुत्वं मातृदोषेण पितृदोषेण जाड्यता ।
दौर्ब्बल्यं स्वामिदोषेण स्वदोषो नास्ति वाजिनाम् ॥
जवो हि सप्तेः प्रथमं विभूषणं त्रपाङ्गनायाः कृशता तपस्विनः ।
द्विजस्य वेदोऽथ सुनेरपि क्षमा पराक्रमः शस्त्रबलोपजीविनः ॥
आकर्षन्निव गां वभन्निव खुरौ पश्चार्द्धमुद्यन्निव स्वीकुर्व्वन्निव खं पिबन्निव दिशो वायुं समश्नन्निव ।
साङ्गारप्रकरान् स्पृशन्निव महीं छायाममर्षन्निव चञ्चच्चामरवीज्यमानवदनःश्रीमान् हयो धावति ॥
अलक्षितगतागतैर्मृगदृशां कटाक्षैरिव क्षणानुनयशीतलैः प्रलयकेलिकोपैरिव ।
सुवृत्तमसृणोत्तरैर्मृगदृशामुरोजैरिव त्वदीयतुरगैरलं धरणिचक्रमाक्रम्यते ॥
येषां दीपशिखोपमानि नयनान्युद्धावितः सन्निव

षट्पदाभो भवेद्यश्च कृष्णतालुर्न दुष्यति ।
शङ्खपादमुखो यस्तु आवर्त्तैः कुत्सितैरपि ।
न दुष्यति सदावर्त्तः शालिहोत्रमतं यथा ॥
इति श्रीनकुलविरचितेऽश्वचिकित्सिते
आवर्त्ताध्यायश्चतुर्थः ॥
अथ दन्ताः ।
दन्तोद्भेदं प्रवक्ष्यामि वाजिनामायुलक्षणम् ।
येन विज्ञातमात्रेण आयुर्ज्ञानं प्रचक्षते ॥
अश्वस्तु तनुभिर्दन्तैः क्षीरदन्त इति स्मृतः ।
तथा षोडशभिः कोणो प्राज्ञैर्द्वादशमासिकः
॥
त्रिंशन्मासोद्भवाः सर्व्वे अखण्डाः
परिकीर्त्तिताः ।
द्वौ स्यातां द्वौ च न स्यातां मूर्द्धोपरि
यथाक्रमम् ॥
चतुर्भिर्वत्सरैर्दन्ताः कालिकान्ये भवन्ति च ।
तथान्यः सप्तमे वर्षे चतुर्थः कालिको भवेत्
॥
अष्टमे वत्सरे प्राप्ते प्राप्ताः स्युः
सार्व्वकालिकाः ।
नवमे त्वथवा रेखा पीतत्वं शंसयन्ति च ॥
तथाप्येकादशे वर्षे तावत् पीतत्वमागताः ।
तिष्ठन्ति दशनास्तेषां वाजिनामप्यसंशयम् ॥
ततः श्वेताः प्रदृश्यन्ते यावद्वर्षजयं पुनः ।
ततः काचप्रभाः सम्यक् यावत्
संवत्सरास्त्रयः ॥
ततः सप्तदशादूद्ध्वं यावद्वर्षाणि विंशतिः ।

सप्तविंशप्रमाणेन मुखमश्वस्य शस्यते ।
कर्णौ षडङ्गुलौ प्रोक्तौ तालुकं चतुरङ्गुलम्
॥
चत्वारिंशच्च सप्ताढ्याः स्कन्धाः सम्यक्
प्रकी-
र्त्तिताः ।
पृष्ठवंशश्चतुर्व्विंशः सप्तविंशा तथा कटी ॥
अतिसूक्ष्मं तथा निम्नं पुच्छं
हस्तद्वयायतम् ।
लिङ्गं हस्तप्रमाणञ्च तथान्तौ चतुरङ्गुलौ ॥
मार्गस्थानं चतुर्व्विं शं हृदयं षोडशाङ्गुलम् ।
कटिकक्षान्तरञ्चोक्तं चत्वारिंशत् प्रमाणतः
॥
मणिबन्धद्वयं चैव खुराश्च चतुरङ्गुलाः ।
अशीत्यङ्गुल उत्सेघो दैर्घ्येञ्च द्व्यधिकं
शतम् ।
एवं क्रमेण गात्रस्य प्रमाणं वाजिनां मतम् ॥
दीर्घाणि चत्वारि तथोन्नतानि
चत्वारि रक्तानि च सूक्ष्मकाणि ।
ह्रस्वानि चत्वार्य्यथ चायतानि
भूयश्च चत्वार्य्यथ नम्रकाणि ॥
द्वात्रिंशत् क्रमशोऽप्याहुर्ल्लक्षणानि
मुनीश्वराः ।
तान्यहं कीर्त्तयिष्यामि वाजिनाञ्च पृथक्
पृथक् ॥
आस्यं भुजौ केशकृकाटिकाश्च
दीर्घं चतुष्कं तुरगस्य शस्तम् ।
तथोन्नते घ्राणपुटे ललाटे
शफाश्च तज्ज्ञाश्चरणौ वदन्ति ॥
ओष्ठौ च जिह्वाप्यथ तालुकञ्च
मेढ्रं सुरक्तं शुभदं हयस्य ।

ग्रीवा क्रौञ्चनिभा विभाति च समा पादाश्च
मुद्गोपमाः ॥
वेगो वायुरिवाथ वानरसमः स्याद्वारणप्रेङ्खितं
शङ्खक्रौञ्चमृगेन्द्रदुन्दुभिघनव्याघ्रेभतुल्यस्वनः॥
वक्त्रे यो हरिणाधिपप्रतिनिभो व्याघ्रोपमो
बाहुभिः
आवर्त्तेऽश्वशुभैः प्रधानकुलजाः सुस्निग्धवर्ण-
प्रभाः ।
उष्ट्राक्षाः प्रियदर्शनाश्च सुभगाः श्वासैः
सुगन्धैश्च ये

धन्यास्ते जयराज्यवित्तसुखदाः संवाहका
भूपतेः ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते वेगवर्णनो-
नाम सप्तमोऽध्यायः ॥
अथ आरोहणम् ।
अथातः संप्रवक्ष्यामि हयारोहणमुत्तमम् ।
येन विज्ञानमात्रेण रेवन्तेनोपमीयते ॥
चलकिसलयपादः कर्णमध्यैकदृष्टिः
न चलति कटिदेशे आसने संस्थितश्च ।
हयहृदयगतिज्ञः स्थानदण्डावपाती
स खलु तुरगयोक्ता मान्यते पार्थिवेन्द्रैः ॥
यो नित्यं दृढमुष्टिहस्तलघुकः
क्रोधानलैर्वर्ज्जितः
सत्यैकस्थिरबुद्धिमध्यमतनुः
शास्त्रस्थतत्त्वज्ञकः ।
काले दण्डनिपातविश्रमयुक्तः
ताम्बूलवक्त्रान्वितः
त्वेवं लक्षणसंयुतो हयरुहो राज्याधिपैः पूज्यते
॥
ऊरू स्थिरौ यस्य चलौ च पादौ
त्रिकोन्नतं संहतमासनञ्च ।
स वाजिवाहः कथितः पृथिव्यां
शेषा नरा भारवहा हयानाम् ॥
प्राज्ञः सत्त्वबलोत्साही दृढः सर्व्वाङ्गसौष्ठवः ।
जितशीतातपालस्यो जितायासो जितासनः ॥
हयकालबलप्राणजवकामाध्वयोगवित्।
शान्तोपचारसारज्ञो रणक्रीडासु दीक्षितः ॥
वाजिनां हृदयज्ञश्च स्थाने दण्डनिपातवित् ।
दुष्टाश्वदमने दक्षः सर्व्वक्लेशसहः शुचिः ॥
ग्रासौषधान्नपानीये परव्यूहावलोकने ।
त्रिषु श्रेष्ठः प्रवेशे च निर्गमे कुशलोऽस्त्रवित् ॥
रोगं विकुरुते यश्च वृत्त्या वाधाविचारवित् ।
धनुःकुन्तासिशक्तिज्ञः सोऽश्ववाहः प्रकीर्त्तितः
॥
वक्त्रे स्कन्धे मुखे कोष्ठे गात्रे सक्थौ च
ताडयेत् ।
उन्मार्गो यदि भ्रष्टोऽश्वो मूढः स्खलति ह्रेषते ॥
कुपिते पुच्छसंस्थाने भ्रान्ते जानुद्वयं तथा ।
सर्व्वथा प्राप्तदण्डस्य दण्डमेकं निपातयेत् ॥
ह्रेषणे स्कन्धमुद्दिष्टं स्खलिते जघनान्तरम् ।
भीते वक्षःस्थलं हन्याद्वक्त्रञ्चोन्मार्गगामिनम् ॥

नित्यमुद्यतदण्डस्य तस्य वाजी न धावति ॥
धारा तु पञ्चमी प्रोक्ता न शृणोति न पश्यति ।
सर्व्वकर्म्माक्षमो वाजी तस्मात्तां परिवर्जयेत् ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते आरोहणं
नाम अष्टमोऽध्यायः ॥
अथ ऋतुचर्य्या ।
कर्म्मचर्य्यासु नित्यानां शुद्धान्नं सुनिवर्हितम् ।
धनुरष्टादशे योज्यं वाजिनां मण्डलं क्रमात् ॥
सङ्कोचयेज्जयं तावद् यावत् कार्म्मुकपञ्चकम् ।
तदूर्द्धं मण्डलैर्योज्यो गोमूत्रात्तदनन्तरम् ॥
ऋजुर्वृत्तानुवृत्ता च गोमूत्रा सर्व्वकर्म्मसु ।
युज्यमानानि दृश्यन्ते प्रायशो हि विचक्षणैः ॥
शालिहोत्रमुनिप्रोक्ता चर्य्या षोडश वाजिनाम् ।
तासामनुपयोगित्वान्न कृतः संग्रहो मया ॥
तीक्ष्णस्त्वेकेन मुदितो द्वाभ्यां भद्रस्तु धावति ।
त्रिभिर्दण्डैस्तदा मन्दः क्रमात् षष्ठाभिताडनैः
॥
तीक्ष्णाश्वभद्रमन्दानां प्रधानो जव उच्यते ।
सोऽप्यनेनैव मार्गेण संविभ्यज्यो विजानता ॥
अवाहिता विनश्यन्ति सर्व्वकर्म्माक्षमा हयाः ।
कृशा व्याधिपरीताङ्गा जायन्तेऽत्यन्तवाहनात्
॥
बलं कालो वयो भूमिः कालः सत्त्वमतः क्रमात्
।
कुर्य्यदिकान्तरे योगश्चातियोगो हि दोषवान् ॥
तच्च लोकप्रसिद्धं हि बोद्धव्यं यत्नतो बुधैः ।
हयवाहनवैज्ञानी नरेन्द्रैः पूज्यते सदा ॥
धाविते ये गुणाः सप्तेर्वक्ष्यमाणान्निबोध तान् ।
शालिहोत्रादिशास्त्राणां व्यायामफलसम्भवान्
॥
स्थिरमांसो भारसहो लघुगात्रः पराक्रमी ।
दीप्ताग्निश्च सुशीलश्च व्यायामेनोपजायते ॥
सत्यार्थो विनयी प्रीतो निर्द्दोषस्तापवर्जितः ।
वेदवित्सादिचित्तज्ञ उक्तो धावति तिष्ठति ॥
सुभावर्त्तगतिच्छायाबलशीलसमन्वितम्।
गन्धवर्णस्वरोत्कण्ठसारपुण्ड्रविभूषितम् ॥
एवं विधं समारुह्य देवतांशं हयं नृपः ।
जित्वा रिपुकुलं भुंक्ते निःशङ्कोऽथ वसुन्धराम्
॥
जवः श्रेष्ठस्तुरङ्गानामुत्तमाधममध्यमः।
त्रिविधोऽपि तथा भिन्नो जवभेदः स उच्यते ॥
यवोदरैरष्टसङ्ख्यैरङ्गुलं परिकीर्त्तितम् ।

एकान्ते विजने चैव रङ्गभूमिं हयं नयेत् ।
सान्द्राञ्चैव सुकठिनां पाषाणोदकगर्त्तिकाम् ॥
तृणकाष्ठसमायुक्तां रङ्गभूमिं विवर्ज्जयेत् ।
विण्मूत्रं कारयेदश्वं क्रोशक्रोशद्वयान्तरे ॥
वारि दद्याद् यथाकामं घासं मुष्टिञ्च चारयेत् ।
अन्यथा दोषजातानि वक्ष्याम्येतानि तावतः ॥
गुरुविस्रब्धगात्रश्च छिन्नश्वासी च कम्पते ।
दुर्म्मना रुद्धविण्मूत्रः सर्व्वकर्म्माक्षमो हयः ॥
गूढमेढ्रोन्नतग्रीवो रक्तमेही गुरुक्लमः ।
क्षुत्तृष्णावृतशुष्कास्यश्छायांप्राप्य वितिष्ठति
॥
तर्जनैर्हन्यमानोऽपि विधुनोति शिरः परम् ।
मुहुर्विनमते पृष्ठं पदमेकं न गच्छति ॥
भाराध्वानपरिश्रान्तं शनैः संक्रामयेत् पथि ।
नावतारितपर्य्याणं मार्गेऽध्वानसमागतम् ॥
मुक्तपुच्छाग्रबन्धस्य खलीनं नावतारयेत् ।
मर्द्दयित्वास्य गात्राणि पांशुमध्ये विवर्त्तयेत् ॥
स्नानपानावगाहञ्च प्रतिपानं सभोजनम् ।
सर्व्वं क्रमेण कर्त्तव्यमन्यथा दोषसम्भवः ॥
रक्तपित्तसमीरोत्थमन्यास्तम्भोदरादयः।
हृद्रोगा वातशूलानि शीतोष्णोदकपानतः ॥
रक्तपित्तहरं देयं प्रतिपानं गुडौदनम् ।
रक्तपित्तसमीरोत्थं दातव्यं शर्करोदकम् ॥
जीवनं वातपित्तघ्नं वृष्यं बल्यतमं ततः ।
सर्व्वरोगहरोऽश्वानां मधु जाङ्गलको रसः ॥
स्वच्छाक्तञ्च घृतं क्षीरं वारियुक्तं तुरङ्गमः ।
पीत्वा हि निर्हरेद्दोषान् श्रमभाराध्वसंश्रवान् ॥
धर्म्मार्थकामा विजयो यशःश्री-
शोभासुखं जातिजनैश्च पूज्या ।
रणे निमित्तानि शुभावहानि
नृपस्य चैवं विनिवेदयन्ति ॥
प्रत्यूषकाले च दिनं निरीक्ष्य
वह्निं द्विजं पूर्णघटं कुमारीम् ।
छत्रं ध्वजं चामरदर्पणञ्च
रुष्टञ्च दृष्ट्वा तुरगं जयाय ॥
श्रुत्वा तु शङ्खाम्बुदवेदवाक्यं
पुण्याहमाङ्गल्यशिवस्यगीतम् ।
ह्रेषं निमित्तं भवति स्वनेन
ध्रुवं जयं तत्र रणे नराणाम् ॥
सन्ध्याङ्घ्रिघातेन महीं निहन्ति
ह्रेषन्ति ये स्वामिमुखं निरीक्ष्य ।
प्रदक्षिणावर्त्तविकीर्णपुच्छा

अस्थाने ताडितो वाजी बहून् दोषान् प्रदर्शयेत् ।
तावद्भवन्ति ते दोषा यावज्जीवत्यसौ हयः ॥
दण्डेनाभिभवेद्वाहान्नारोहेद्दण्डवर्ज्जितान् ।
दण्डो हि साधनं तीव्रं पदं दण्डात् प्रजायते ॥
तुलावदुद्धृता वल्गा नात्युच्चा नातिलम्बिता ।
दोषं दृष्ट्वा तु कर्त्तव्या तिर्य्यगाकुञ्चिता श्लथा ॥
कटिं सप्तेश्च शैथिल्याद्वहमानस्य ताडयेत् ।
सद्यः प्रस्खलिते गात्रे तत्र दण्डं प्रदापयेत् ॥
अकालदण्डपाताच्च त्वकालग्रहमोक्षणात् ।
अकालहिंसाघाताच्च तेन वाजी न धावति ॥
आसनं शिथिलं यस्य स्वरो यस्य न भीषणः ।
लयुप्रहारदाता च वाजी तस्य न धावति ॥
सर्व्वलक्षणसम्पन्नः सर्व्वदोषविवर्जितः ।
कुलशीलबलोपेतः कथमश्वो न धावति ॥
गतिरेका प्लुता चान्या चतुराख्या तृतीयका ।
वेगसन्धिश्चतुर्थो च धारावेगगतिस्तथा ॥
श्लथरागार्थवेषस्य चञ्चलस्य त्रिकोणतः ।

हस्तश्च तैश्चतुर्विंशैः कार्म्मुकं तैश्चतुर्गुणैः ॥
अक्ष्णोर्निमेषणैः काष्ठा अष्टलघ्वक्षरं तथा ।
मात्रा ज्ञेया प्रमाणैश्च पूर्ब्बप्रोक्ता तपोधनैः ॥
मात्राषोडशकेनाश्वो यो धावति धनुःशतम् ।
तमश्वमुत्तमं विद्याद्वायुवेगं महाजवम् ॥
यथोत्तमजवा वाहास्तथाश्वा मध्यमाधमाः ।
चतुरस्त्र्यधिकां वृद्धिं मात्राणां लक्षणं बुधाः ॥
नभस्यश्वयुजे मासि भाराध्वानं जवं त्यजेत् ।
वज्राग्निसदृशं पित्तं श्रमात् कुप्यति वाजिनाम् ।
कार्य्येणैव महान् किञ्चिद् युज्यो नभसि कार्त्तिके ॥
हेमन्ते शिशिरे योगं वसन्ते च यथेच्छया ॥
श्लेष्मक्षयात् श्लथं गात्रं न ग्रीष्मे वाहयेद्धयम् ।
बालो वृद्धः कृशो रोगी दन्तस्नेहो महाबली ॥
पूर्णातिरिक्तकोष्ठञ्च गुर्व्विणीं न च वाहयेत् ।
समां च विपुलाञ्चैव किञ्चित्-पांशुसमन्विताम् ॥

जयावहास्ते समरे नृपाणाम् ॥
विच्छन्नदीनस्वरगद्गदाये
अश्रुप्लुता भिन्नपुरीषमूत्राः ।
अनरुपमाना दिनकृन्निरीक्ष्याः
पराजयं ते कथयन्ति युद्धे ॥
अन्यापदं याञ्च वदन्ति दीनाः
सव्येतरं चक्रविकीर्णपुच्छाः ।
युग्यासनादीन् परिवर्जयन्ते
पराजयं ते कथयन्ति भर्त्तुः ॥
विना निमित्तं रसयन्त्यभीक्ष्णं
आकुञ्चिता व्यापितमक्षिकाङ्गाः ।

ध्यायन्ति धातैश्च न चोद्विजन्ते
भयावहास्ते समरे नृपाणाम् ॥
शोकं शीलं भयं लज्जामालस्यं चैवमादिषु ।
सुकुलं तं विजानीयादलं पर्य्याणवारणे ॥
स्याणुकण्टकवृक्षैश्च सुधाखदिरकण्टकैः ।
स्वामिघाताय चादत्ते तेषां रूपमिदं शृणु ॥
वानरोलूकमार्जारतरक्षुगण्डलोचनाः।
गतिर्वा असुरैस्तुल्या स्थूलमेढ्रशिरान्विताः ॥
लम्बौष्ठकर्णनासाश्च कृत्स्नहीनाधिकद्विजाः ।
विच्छिन्नप्रोथगण्डा ये भ्रुकुटीचित्रमेहनाः ॥
एते दोषास्तथान्येऽपि सुकुलाश्वसमुद्भवाः ।
खलाजामिह राजेन्द्र ! वक्तुं शक्या न मादृशैः ॥
लक्ष्यं प्रधानमित्येके चान्ये लक्षणमाश्रिताः ।
लक्ष्यलक्षणमेतेषां तेनेदं दुष्करं विदुः ॥
अव्याप्तिरतिसंक्षेपादतिव्याप्तिश्च विस्तरात् ।
मुनीनामेकवाक्यत्वाद् ब्रूयामः स्थितिदुष्कराः ॥
सत्ववर्णगतिछायास्वरस्थानगतिःकुलम् ।
पुष्पं पुण्ड्रकनामानि दोषं वा जवलक्षणम् ॥
एवं लक्षणसंयुक्तं दृश्यते शूररक्षणे ।
लक्षणेन विहीना ये निर्द्दोषाःस्युः प्रधाविताः ॥
हयरोहस्य का चिन्ता लक्षणैः शुभनिन्दितैः ।
तेनात्र न कृतोऽस्माभिर्ह्यलक्षणविस्तरः ॥
हयवाहनविज्ञानं कौतुकाहितबुद्धयः ।
अनायासेन गृह्णन्ति परं हृष्टा इमे जनाः ॥
चलासनं कषा रागाः पाणिघातप्रतोदनम् ।
पदप्रघातसंज्ञानि दोषो यैरुपजायते ॥
कामात् कोपाद्भयान्मोहाद्दर्पाच्चैव मदाश्रयात् ।
पर्य्याणारोहदोषाच्च दुष्यन्तेऽश्वा निसर्गतः ॥
श्रीयुक्तसामन्तनरेन्द्रवन्दितं
रणे हयारोहवराभिनन्दितम् ।
धर्म्मार्थकामादियशःप्रधान-
मित्थं कृतं वाहनशास्त्रविस्तरम् ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते वाहना-
ध्यायो नवमः ॥
अथ धातुपरीक्षा ।
अथातः संप्रवक्ष्यामि धातूनां लक्षणं परम् ।
येन विज्ञानमात्रेण ज्ञायन्ते रोगसम्भवाः ॥
ततः शुद्धशरीरोत्थरक्तदोषानवाप्नुयात् ।
रक्तदोषात्तदा वाजी प्राप्नोत्येव महामयान् ।
तस्मात् सर्व्वप्रयत्नेन रक्तं ज्ञेयं विचक्षणैः ।
आषाढसमये प्राप्ते शिरामोक्षेण कृत्स्नशः ॥
तेन संशोध्यते रक्तं वाजिनां दोषसम्भवम् ।
पित्तरक्तप्रकोपेण यदा संपीड्यते हयः ॥
तदा कण्डूतिमासाद्य कषते सततं वपुः ।
छायां वाञ्छति यत्नेन विशेषेण जलाश्रयम्
॥
मुहुर्वाञ्छति पानीयमाहारञ्च विशेषतः ।
एवं वातोत्थरक्तेन ज्ञात्वाश्वम्पीडितं ततः ॥
शिरामोक्षं विधायैव दद्यात् सकटुकं गुडम् ।
ततः शुद्धिमवाप्नोति नीरोगः संप्रपद्यते ॥
पित्तासृग्दूषितो वाजी यदि चाश्रूणि मुञ्चति ।
नेत्रान्ते पाण्डुरत्वञ्च सद्यो मृत्युमवाप्नुयात्
॥
नेत्रयोर्ल्लक्षणं प्रोक्तं पित्तरक्तसमुद्भवम् ।
श्लेष्मरक्तप्रकोपेण यदा सम्पीड्यते हयः ॥
अधोवक्त्वो भवेन्नित्यं कासते च मुहुर्मुहुः ।
आहारं न च गृह्णाति नीत्साहं कुरुते
क्वचित् ॥
न विन्दति कशाघातं न च पार्ष्णिं न
चासनम् ।
नासाग्रेण क्षिपेत्तोयं वहिर्घर्म्मञ्च वाञ्छति ॥
तस्यापि शोधयित्वासृग् दद्याच्छुण्ठ्या युतं
गुडम् ।
सर्व्वं रक्तं ततः शुद्धा निःशेषं समवाप्नुयात्
॥
वाजिनः श्लेष्मरक्ताभ्यां दूषितस्य सदा
भवेत् ।
नेत्रान्ते बिन्दुकाकारकण्डूस्तस्य तथोदरे ॥
तदा मृत्युमवाप्नोति षण्मासाभ्यन्तरे ध्रुवम्
॥
शुण्ठ्यामृता गोक्षुरकं घनञ्च
श्यामावचाहिङ्गुयुता च यष्टिः ।
कफप्रणाशाय विनिर्मितोऽयं
पिण्डः प्रसिद्धश्च कफापहश्च ॥
नोचेदश्नाति शुण्ठ्याढ्यं सैन्धवं
नस्यमार्गतः ।
वायुरक्तप्रकोपेण पीडितस्तु तुरङ्गमः ॥
कुक्षिद्वये हयस्तीव्रं मुहुः श्वासं प्रमुञ्चति ॥
नैकत्र मन्यते स्थातुं ह्रेषते च निरर्गलम् ।
एवं वातोद्भवं ज्ञाप्यं रक्तन्देहे हयस्य च ॥
शोधयित्वाथ सन्दद्यान्महाघृतमनल्पकम् ।
ततः शुद्धिमवाप्नोति परां पुष्टिञ्च गच्छति ॥
उत्साहं कुरुते मार्गे सर्व्वदोषविवर्ज्जितः ।
वातरक्तप्रकोपेण लोचनान्ते हयस्य च ॥
स्वस्थस्यापि हिनेत्रान्ते स्यातां नीले च
वाजिनः ॥
गन्धश्च सदृशः क्षोण्या तदा मृत्युर्द्विमासिकः ।
नीले पीतेऽथ नेत्रान्ते स्यातां चेद्वाजिनः
क्वचित् ।
स निर्व्वाणमवाप्नोति त्रिभिर्मासैरसंशयम् ॥
यस्य नेत्रान्तरे रेखा बहुवर्णा प्रजायते ।
विशेषात् स्वरभेदः स्यात्तस्यायुः पाञ्चमासिकम्
॥
जिह्वायां जायते बिन्दुरकस्माद् यस्य वाजिनः ।
कृच्छ्रञ्च जीवते मासं स वाजी नात्र संशयः ॥
पीतो मासद्वयेनैव सप्तेर्मृत्यं प्रयच्छति ।
त्रिभिर्मासैस्तथारक्तश्चतुर्भिश्च विचित्रितः ॥
पञ्चभिर्नीलवर्णश्च षड्भिर्व्वज्रसमाकृतिः ।
सप्तभिः पाटलाकारश्चम्पकाभस्तथाष्टभिः॥
नवभिश्च हरिद्राभो दशभिर्जन्तुकोपमः ।
एकादशभिर्दूर्व्वाभो वत्सरेण हिमद्युतिः ॥
यस्य श्वासो भवेदुष्णः शरीरं पुलकाङ्कितम् ।
जिह्वा हिमकराकारा मासषट्कं स जीवति ॥
ग्रीवाग्रे पिण्डिका यस्य जायते च तथाधरे ।
मूत्रं करोति रक्ताढ्यं मासषट्कं स जीवति ॥
वर्णः श्वेतो यदां यस्य नेत्रयोश्च प्रजायते ॥
दशमासान् समासाद्य पित्तार्त्तो न स जीवति ।
यस्य नीलप्रभे स्यातां नेत्रे वातार्द्दितस्य तु ।
मासत्रयञ्च कृच्छ्रेण यः सप्तिः स न जीवति ॥
श्लेष्मयुक्तस्य वा रक्ते यदि स्यातां विलोचने ।
वक्त्रगन्धः सुरातुल्यो दश मासान् स जीवति ॥
यस्य नेत्रे हरिद्राभे स्यातां पित्तार्द्दितस्य च ।
तस्यायुः सप्तमासाख्यं मुनिभिः परिकीर्त्तितम्
॥
बहुवर्णे घने नेत्रे स्यातां धातुसमागमे ।
तस्य सप्तेर्भवेन्मृत्युः सप्तरात्रादसंशयम् ॥
यस्यैकं लोचनं नीलं द्वितीयं रक्तसन्निभम् ।
दृश्यते स च विज्ञेयः पित्ताढ्यो मासजीवकः ॥
यस्य पित्तप्रसक्तस्य काले नीरदवर्त्तिनि ।
हयस्य जीवितं तावद्दिनानि दश पञ्च च ॥
एवं रक्तविकाराणां ज्ञात्वा धातुं तुरङ्गमे ।
ततः प्रतिक्रिया कार्य्या उक्ता या कीर्त्तिता परा
॥
भयादपीतपानीयशीतविश्रीयुतस्य च ।
आर्त्तोऽपि ताडितोऽत्यर्थं तिर्य्यग्विद्धो यदापि
वा ॥

ततः शुद्धशरीरोऽथ पिण्डाद्यैश्च बलीकृतः ॥
स्रावणे शष्पमासाद्य वज्रवत् सुदृढो भवेत् ।
यदि रक्ताधिको वाजी शस्यमश्नाति कर्हिचित् ॥
रक्तात् सञ्जायते पित्तं ततो नाशमवाप्नुयात् ।
रक्ताधिकश्वासपुटः स्नेहाद्यैः शस्यमत्ति चेत् ॥
संप्राप्य श्लेष्मरिचाद्धयो नाशमवाप्नुयात् ।
हीनरक्तो यदा शस्यं रूक्षोऽश्नाति तुरङ्गमः ॥
तदा पायुं परं प्राप्य सद्यो नाशमवाप्नुयात् ।
तत्रेदं लक्षणं प्रोक्तं रक्तकोपसमुद्भवम् ॥
धातूनामवि सर्व्वेषां ज्ञेयञ्चिह्नं विचक्षणैः ।

यदा स्यातां सिते रक्ते काशः
कण्डूस्तथानने ।
तदा तस्य भवेन्मृत्युर्यदि नाश्नाति चामिषम्
॥
अश्मकञ्च युतन्दध्ना माहिषेण निशागमे ।
सन्निपातेऽथ रक्तेन यदा सम्पीड्यते हयः ॥
यदा वेपथुमाप्नोति काशते च निरर्गलम् ।
निद्रालस्याग्निमन्दत्वं वस्तौ मलनिबन्धनम्
॥
कर्णयोः पातनञ्चैव वक्त्राल्लालाविमोक्षणम् ।
तत्रापि शोधयेद्रक्तं ततो लङ्घनमर्हति ॥
यावद्दोषस्य निर्णाशं स्तोकोदककृताशनः ।
क्वचिदुष्णं क्वचिच्छीतं क्वचिद्भेषजसंयुतम्
॥
प्रदेयं युक्तितत्वज्ञैर्वारि वार्य्यं न कुत्रचित् ।
सपथ्या चामृता चैव कटुका च वचा तथा ॥
शामयेत्तत्क्षणादेव त्रिधातुकुपितं ज्वरम् ।
शिरीषं श्रीफलञ्चैव वेतसञ्चैव वृद्धिभाक् ॥
मन्दाग्नित्वं सदोषाणां कुरुते भस्मसाद्द्रुतम्
।
मधुकं मधुजालञ्च माधुर्य्यं कुलिकान्वितम्
॥
शिरीषं क्षुद्रकं लाक्षां क्वाथयित्वा त्रिभागतः
।
यस्यैतत् सन्निपाताय वाजिनः संप्रदीयते ॥
तस्य तन्नाशमायाति तमः सूर्य्योदये यथा ।

श्रमाद्भराच्च बन्धाद्वा गात्रे वा विषमस्थिते ।
क्षीणशोणितमांसस्य शिरावेधः प्रशस्यते ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते धातु-
परीक्षाध्यायो दशमः ॥
अथ ऋतुचर्य्या ।
द्वासप्ततिसहस्राणि नाडीनां हि भवन्ति च ।
वाजिनामिह सर्वेषां वायुरक्तं व्यवस्थितम् ॥
तासां निर्म्मोचनार्थाय द्वाराण्यष्टौ वदाभ्यहम् ।
यैर्यात्रि कुत्सितं रक्तं सर्व्वदेहसमुद्भवम् ॥
कण्ठे वक्षसि तालौ च नासयोश्च मुखे तथा ।
अण्डयोरथ पादेषु पादयोरुभयोरपि ॥
कालं बलञ्च विज्ञाय बाजिनां भिषगुत्तमः ।
शिरामोक्षं प्रकुर्वीत स्थानेष्वेतेषु पण्डितः ॥
अन्ये सप्तदश प्राहुः शिराद्वाराणि वाजिनः ।
विकारयुक्तं यद्रक्तं सुस्वल्पमपि वर्जयेत् ॥
एवं शरदि यः सम्यक् पुष्टिं नयति वाजिनाम् ।

तस्य यद्वाञ्छितं किञ्चिद्यानार्थं तच्च सिध्यति ॥
ततो हेमन्तमासाद्य निवाते निबधेद्धयम् ।
गासोत्थं यवसन्दद्यात् पानीयञ्च यथेच्छया ॥
घृतं वा यदि वा तैलं पाने दद्याद्विचक्षणः ।
वाहयेच्च शनैर्नित्यं सर्व्वदोषप्रशान्तये ॥
ततः शिशिरमासाद्य दद्यात्तैलं हि वाजिनाम् ।
पलाष्टकप्रमाणेन यावद्दिनत्रिसप्तकम ॥
यवोत्थं यवसन्दद्यादेकविंशत्यहानि च ।
यवाभावेऽथ चणकान् दद्यादार्द्रतरान् सदा ॥
तदभावे मसूरांश्च शुष्कार्द्रांस्तैलसंयुतान् ।
यवसं चापि तद्देयं नीरोगो जायते हयः ॥
औषधानाञ्च सर्वेषां क्वाथानां नस्यकर्म्मणाम् ।
तैलानाञ्च घृतानाञ्च यवस्य यवसं परम् ॥
पर्व्वतानां यथा मेरुरायुधानाञ्च वज्रकम् ।
तथा सर्व्वोपचाराणां सप्तेः श्रेष्ठतमा यवाः ॥
देवतानां यथा विष्णुर्ब्रह्मा वेदविदां वरः ।
नदीनाञ्च यथा गङ्गा तथा श्रेष्ठा यवा हये ॥
यथोदितः सहस्रांशुर्निःशेषं तिमिरं जयेत् ।
तथा शरीरजान् दोषान् यवाः सप्तेर्हरन्ति च ॥
उपचारक्रियाः सर्व्वाः पञ्चर्त्तुजनिता हये ।
कृताः स्युर्य्यवभोज्येन सप्तेस्तस्य कृता नरैः ॥
यस्य दत्ता यवा भोज्ये शिशिरे समुपस्थिते ।
अकृतापि कृता सर्व्वा पञ्चर्त्तुजनिता हये ॥
कृताः स्युर्य्यवभोज्येन सप्तेस्तस्य कृता नरैः ।
नीरोगास्तुरगाः सर्वे शालिहोत्रमतं यथा ॥
पञ्चर्त्तुजनिता वाथ क्रिया न्यस्ता तुरङ्गमे ।
अतीतास्ते विजानीयाद्यवभोज्यविवर्जिताः ॥
एवं रक्तविशुद्धानां कृत्वा यत्नेन वाजिनाम् ।
दद्याद्गोमूत्रसंयुक्तां सतैलां च हरीतकीम् ॥
दिनं त्रिसप्तकं यावत् पलपञ्चप्रमाणतः ।
ततः शुद्धिमवाप्नोति निःशेषाद्रुधिरोद्गमात् ॥
ततो नवतृणाहारं संप्राप्य सुमनोहरम् ।
परां पुष्टिमवाप्नोति नीरोगश्च प्रजायते ॥
न प्रायो वाहयेदश्वं प्रावृट्काले कथञ्चन ।
य इच्छेद्वाजिनस्तस्य वाहनं दशमासिकम् ॥
कूपोदकं सदा शस्तं पानाय जलदागमे ।
अभ्यङ्गः कटुतैलेन निर्वातस्थानबन्धनम् ॥
एकाहान्तरितं दद्याल्लवणञ्च विचक्षणः ।
पलद्वयप्रमाणेन मुखजापरिशुद्धये ॥
मुखरोगमवाप्नोति क्षारस्वादविवर्जितः ।
परीक्षाग्नौ यथा हेम्नः स्नेहस्य च प्रतिक्रिया ।
हयजीवस्य तद्वच्च परीक्षा यवभक्षणे ॥
यथा सांयात्रिकः पारं गत्वोच्चैः स्वस्थतांव्रजेत् ।
तद्वत् यवाशनोत्तीर्णाः शुद्धदेहा हयोत्तमाः ॥
अल्पेनापि हि छिद्रेण यथा नश्यति नौर्जले ।
स्वल्पेनापि हि दोषेण यवदोषांस्तथैव च ॥
एवं ज्ञात्वा विदग्धेन यवा देयाः प्रयत्नतः ।
प्राप्तक्षीरा विशेषेण शिशिरे समुपस्थिते ॥
शुष्का वापि यवा देयाः सर्व्वकालं च वाजिनाम् ।
प्राणदास्ते ततो ज्ञे याः सर्व्वव्याधिविनाशनाः ॥
यश्चाश्नाति यवानाशु शुष्कांश्च स्वेच्छया सदा ।
न तस्य जायते रोगः कदाचिच्च यवान्नभाक् ॥
न च शूलं न च श्वासो न च प्लीहा न च क्लमः ।
न च रक्तप्रकोपश्च न च वातादिधातवः ॥
योग्योऽशनार्थं वाहानां प्रधानो यव इष्यते ।
यवाभावेऽथ चणका धान्यमन्यतमं परम् ॥
यवाभावेऽथवा दद्यान्मुकुष्टांस्तैलसंयुतान् ।
भोजने तुरगेन्द्राणां परां पुष्टिमभीप्सताम् ॥
मुकुष्टभोजनाद्वाजी पुष्टिं गच्छत्यलौकिकीम् ।
उत्साहं परमं धत्ते स च रोगैर्विमुच्यते ॥
अप्राप्तौ च मुकुष्ठानां मुद्गा देया मनीषिभिः ।
सतैलास्तेऽपि कुर्व्वन्ति पुष्टिं सत्त्वविवर्द्धिनीम् ॥
एते पुष्टिगुणाः प्रोक्ताश्चणकाहारजा हये ।
नान्यस्तस्मादभावेन सर्वेषां तान् विनिर्द्दिशेत् ॥
नान्यद्धितं प्रशंसन्ति पञ्चमं वाजिनां बुधाः ।
भक्षणार्थं यतस्तस्य दानोल्लङ्घनमुत्तमम् ॥
अन्नाभावे प्रदातव्यं घृतं वा यदि वा पयः ।
शस्यं वा मांसमेवाथ पुष्ट्यर्थं वाजिनां सदा ॥
यस्याश्वः शस्यमश्नाति सदा लवणमिश्रितम् ।
किं तस्य शस्यदानेन यथाभूतेन भूपतेः ॥
नीरोगाः पुष्टिसंयुक्ताः प्रकृष्टोत्साहसंयुताः ।
तर्पिता भूमिपैरश्वा भूमिमार्गक्रियाक्षमाः ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते ऋतु-पर्य्यायाध्याय एकादशः ॥
अथ नस्यः ।
कासश्वाससमो नस्यो वातपित्तकफोद्भवः ।
नस्यः संनाशयेत्तस्मात्तं नस्यं योजयेद्धये ॥
पिप्पली सैन्धवं सारं नागरञ्च गुडान्वितम् ।
कृत्तिकासारमध्याग्रं वाजिनां श्लेष्मनाशनम् ॥
चूलिकालवणं नस्ये सदा रोगविनाशनम् ।
सिता चन्दनतोयानि सातुकाख्यानि वाजिनाम् ।
नस्यकर्म्माणि युक्तानि नाडीवातप्रशान्तये ।
मृदुकैरार्द्रकं सान्द्रं वचाक्षारविमिश्रितम् ॥
नस्ये दत्तं वातशान्त्यै हयरोगविनाशनम् ।
शर्करां माक्षिकं सैरं पटोलं पलसंयुतम् ॥
नस्ये शरदि सप्तीनां जायते रोगशान्तये ।
वचा चोष्माणकं कुष्ठं शुण्ठी च कासमर्दिका ॥
युक्तं शीतोदके स्तोके तेषां नस्येऽपसर्पयेत् ।
गुडूची कौमुदी ताली मिश्रिता कूपवारिणा ॥
नस्ये दत्ता वराश्वानां शिशिरे सुखदा स्मृता ।
अपामार्गं महानस्यं सर्व्वरोगविनाशनम् ॥
केवलं कटुतैलं वा गोमूत्रे पाचितञ्च यत् ।
मैथुनाद्रिक्तसन्धीनां स्रोतोबलकरं विदुः ॥
कण्ठरोगे तथा नस्यं गोमूत्रलवणान्वितम् ।
महद्गुणकरं प्रोक्तं सर्व्वदोषनिवारणम् ॥
अपामार्गस्य मूलेन नस्ये मूत्रञ्च छागलम् ।
मुखरोगविनाशाय नस्यं मत्स्यवसोद्भवम् ॥
लशुनं पिप्पलीमूलं गण्डकी नागकेशरम् ।
दत्तं नस्येन रोगघ्नं कटुतैलेन वाजिनाम् ॥
नस्यं पर्य्युषितैस्तोयैः प्रातर्दत्तं तु केवलैः ।
अश्वानाञ्च नराणाञ्च चाक्षुष्यं बलवर्द्धनम् ॥
पिप्पलीमिश्रतोयेन ससितासलिलेन च ।
नस्यं यच्छति सप्तीनां सर्पिषा यच्छते बलम् ॥
नस्यं स्निग्धं तथा रूक्षं तिक्तञ्च मधुरं तथा ।
चतुर्द्धा वाजिशास्त्रज्ञैर्यथावत्परिकीर्त्तितम् ॥
देयं वाताधिके स्निग्धं रूक्षं तिक्तं कफाधिके ।
मधुरं चैव पित्ताढ्ये तुरङ्गे समयोचितम् ॥
द्विपञ्चाशत्प्रमाणं वा श्रेष्ठं तन्नस्यमुष्यते ।
पादोनं मध्यमं तत्र षड्विंशत्यां तथाधमम् ॥
नस्यान्ते वाजिनो रक्तं सदा पुष्टं प्रजायते ।
नस्यदानात् हृतं तस्य विनाशमुपगच्छति ॥

वृष्ट्यम्भोभिस्तु सिक्ताङ्गस्तेजसा त्यज्यते हयः ॥
अशुद्धोदकजान् प्राप्तान् प्राप्नोति शतशः परान् ।
नवोदकप्रधानेन बलहीनश्च जायते ।
तस्मात् सर्व्वप्रयत्नेन प्रावृट्काल उपस्थिते ।
अनेन विधिना प्राज्ञो वाजिनः परिपोषयेत् ॥
ततः शरदमासाद्य बहुखण्डसमन्वितम् ।
शस्तं क्षारोदनं सप्तपलाष्टपरिसंख्यया ॥
दुग्धं वा केवलं रात्रौ क्वथितं संप्रशस्यते ।
तथान्यदपि यत्किञ्चिन्मधुरं संप्रजायते ॥
पानाय सारसं तोयं यवसं सुमनोहरम् ।
नीलवर्णमुकुष्टाश्च घृतं प्राशेन संयुतम् ॥
वाहनं च प्रयत्नेन सुस्वल्पमपि वर्जयेत् ॥

शस्याभावेऽथ यवसं शुष्कं वा यस्य वाजिनः ।
दिवानिशमरण्ये च स्वेच्छया संविभुक्तिकाः ॥
ते चापि वाजिनो ज्ञेया यथा शस्यचरास्तथा ।
तथा सर्व्वप्रयत्नेन मुक्तान् सञ्चारयेद् वने ॥
आरोग्यार्थं सुपुष्ट्यर्थमुत्साहार्थं विशेषतः ।
वित्तव्ययस्य रक्षार्थं हरेद्रोगं प्रयत्नतः ॥
वसन्तसमये प्राप्ते वाहयेत् सततं हयम् ।
सनिम्बं लवणं दद्यात्ताभ्यां तैलं विशेषतः ॥
सर्व्वत्र सम्भवं भोज्यं तैलं वा वदि वा घृतम् ।
न दोषकारणं प्रोक्तं सक्षारं लवमश्नतः ॥
वसन्तसमये योऽश्वः स्थाने तिष्ठति बन्धने ।
तस्योत्साहः प्रणश्येत सालस्यं जायते वपुः ॥
ततो मन्दाग्निनाविष्टो रोगाभावे प्रजायते ।
तस्मात् सर्व्वप्रयत्नेन वसन्ते वाहयेद्धयम् ॥
ग्रीष्मकाले च संप्राप्ते दूर्व्वाभोज्यं प्रशस्यते ।
वाजिनामिह सर्व्वेषां घर्म्मतापोपशान्तये ॥
घृतपानं विशेषेण सुच्छायासु निबन्धनम् ।
रक्तस्रावे च गात्रेषु ग्रासं वा घृतसंयुतम् ॥
दूर्व्वाभावे प्रदातव्यं तुरगाय घृतान्वितम् ।
कृत्तकाशस्यसध्याग्रं सर्व्वदोषोपशान्तये ॥
एवं स्वस्थमयं सम्यगुपचारं करोति यः ।
हयस्य तु ग्रहो नित्यं तस्य वर्द्धन्ति वाजिनः ॥

दाडिमं पुष्करं श्रीकं श्वेतदूर्व्वाङ्कुरास्तथा ।
शीतोदकेन संयुक्तं रक्तं दुष्टं न जायते ॥
धातकी गोक्षुरं रोध्रं कुसुम्भं सिन्धुवारकम् ।
शीतोदकेन संयुक्तं नस्यं रक्तविनाशनम् ॥
धातकी गण्डकी चैव गोमूत्रं लवणं तथा ।
नस्ये दत्तं कफं हन्ति तमः सूर्य्योदये यथा ॥
शुण्ठी घृतञ्च दुग्धञ्च रससारं तथैव च ।
वातदोषविनाशाय नस्यमेतत्प्रयोजयेत् ॥
माक्षिकं शर्करायुक्तं चन्दनं केशराणि च ।
नस्योऽयं वारिणा सद्यः पित्तनाशकरः परः ॥
गुडूची शुण्ठी मुस्ता च तगरं सितसर्षपाः ।

सन्निपाते सपित्तेऽयं नस्यः स्याज्जीषरक्षकः
॥
अभया पुत्रिणी धात्री एला लाक्षा शतावरी ।
सन्निपातेऽनिलाधिक्ये नस्योऽयं क्षेमकारकः ॥
मरिचं पिप्पलीमूलं वचा भारङ्गिकाभया ।
सन्निपाते कफाधिक्ये नस्यं सप्तेः सुखप्रदम्
॥”
इति श्रीनकुलकृतेऽश्वचिकित्सिते नस्याधि-
काराध्यायो द्वादशः ॥
अथ पिण्डः ।
“कटुका च जयन्ती च भ्रामरी सुरसा घनाः ।
पञ्चामृतमयः पिण्डो वाजिनामयमिष्टकृत् ॥
एला शतघ्नी सुरसा काकजङ्घा शतावरी ।
माक्षिकं ससितं पिण्डः पित्तयुक्ते हि वाजिनि ॥
माक्षिकं सैन्धवं मुस्ता गोमूत्रञ्च हरीतकी ।
समभागेन पिण्डोऽयमुक्तो वह्निप्रदीपकः ॥
कंकोलं केतकी द्राक्षा शर्करा मधुयष्टिका ।
दत्तो घृतयुतः पिण्डः गुष्टिं नयति वाजिनः ॥
मत्स्यमांसेन संयुक्तं ग्रावचूर्णं घृतप्लुतम् ।
बलहीनस्य वाहस्य पिण्डोऽयं बलवर्द्धनः ॥
बला मद्यं दधि क्षौद्रं भक्षयंस्तुरगो भवेत् ।
अतिवृद्धोऽपि सूक्ष्मोऽपि यथा षट्सप्तवार्षिकः
॥
मेथिका धातकी काली सारणी बीजपूरकः ।
पिण्डो दत्तो वराश्वानां तेजोवृद्धिकरः स्मृतः
॥
कटुका मद्यसंमिश्रा धात्री लोध्रगुडान्विता ।
दत्ता पिण्डविधानेन वाजिनां सुखवृद्धिदा ॥
त्रिफला कटुका मुस्ता विडङ्गानि च चित्रकम् ।
सदालस्य समेतानां वाजिनां पिण्ड आर्त्तिहृत्
॥
वचा विदलिताः स्निग्धाः सघृताः
क्षारभाविताः ।
पिण्डैर्दत्ताः प्रकुर्व्वन्ति वाजिनां व्याधिनाशनम्
॥
सैन्धवं नागरं श्यामा गुडूची सितसर्षपाः ।
अम्लवेतसमश्वानां पिण्डोऽयं शूलनाशनः ॥
पिप्पली पिप्पलीमूलं कटुका सहदेविका ।
दूर्व्वापल्लवसंमिश्रः पिण्डोऽयं प्लीहनाशकः ॥
केशरं श्रीफलं तालं माक्षिकं गिरिकर्णिका ।
पिण्डोऽयं श्लथने शस्तो वाजिनां सुगतिप्रदः
॥

सकृदिच्छन्ति पिण्डेन वाजिनां सुखकारकम्
॥
वृष्टिवातार्द्दितानाञ्च वाजिनां पुष्टिकृन्मतः ।
पिण्डः कृतः सतैलेन लशुनेन पलेन च ॥
महाघृतं सकर्पूरं शर्करा दुग्धमेव च ।
कफनाशकरः प्रोक्तः पिण्डोऽयं सुखदः स्मृतः
॥
रोचना च वरी धात्री तथा स्याद्बीजपूरकः ।
गुल्मं प्रशमयन्त्याशु वाजिनां हृदयोद्भवम् ॥
सहदेवी वचा कुष्ठं वरुणा चेन्द्रवारुणी ।
अतिश्वासं हरन्त्येते वाजिनां मधुना सह ॥
उदुम्बरफलं मांसं शौकरं माहिषं दधि ।
हयस्य चातिवृद्धस्य करोति परमं सुखम् ॥
विभीतकं प्रियङ्गुश्च सर्ज्जिका लवणं तथा ।
कासदोषोपशमनः पिण्डः सप्तेः सुखप्रदः ॥
तक्रं कर्पूरचूर्णञ्च शिवं सौवर्च्चलान्वितम् ।
पिण्डोऽयं वस्तिसंरोधे वाजिनः संप्रकीर्त्तितः
॥
सौवर्च्चलं हरिद्रा च पिप्पली चेन्द्रवारुणी ।
मूत्रकृच्छ्रे परीप्सन्ति पिण्डोऽयं तुरगस्य हि ॥
पिण्डीरसक्तवः क्षौद्रं भल्लातकफलं वुषम् ।
रक्तमूत्रे तु पिण्डोऽयं वाजिनां रक्तनाशनः ॥
अभया यष्टिका श्यामा देवदारु सगन्धकम् ।
पुरीषे रक्तसंमिश्रे सदा शंसति वाजिनः ॥
पटोलं धातकी सुस्ता यष्टिका गिरिकर्णिका ।
रक्ताधिके कृतः पिण्डः करोति रुधिरक्षयम् ॥
हरिद्राद्वयसंयुक्तं गन्धकं कटुतैलकम् ।
पिण्डकं श्रुतियुक्तानां सदाश्वानां प्रशस्यते ॥
अतसीपत्रकं निम्बं न्यग्रोधकलिकान्वितम् ।
अतीसारे सुशंसन्ति पिण्डोऽयं वाजिनः शुभः
॥
व्रणैः कृमिभिरत्यर्थं सदा वाजी प्रपीड्यते ।
तदा पिण्डः प्रदातव्यः स्थूलैरण्डदलैरलम् ॥
कर्पूरशर्करालोध्रं माक्षिकं त्रिफलान्वितम् ।
तुरङ्गिण्याः प्रशंसन्ति पिण्डोऽयं वाजिनः शुभः
॥
पत्रकं सिन्धुवारञ्च भ्रामरं चक्रकिंशुकम् ।
मांसवृद्धौ प्रशंसन्ति पिण्डोऽयं वाजिनः शुभः
॥
सैन्धवं चूलिकाक्षारं विडङ्गानि मधूनि च ।
शस्त्रपीडाभिभूतस्य पिण्डोऽश्वस्य प्रशस्यते
॥”

एतैः पक्वं घृतं सम्यक् पित्तव्याधिविनाशनम्
।
हरिद्राद्वयसंयुक्तं गन्धकं तु मनःशिला ॥
क्वाथयेन्नवनीतेन त्रिगुणेन घृतेन च ।
अभ्यङ्गेनाथ पानेन सप्तरात्रेण वाजिनः ॥
कण्डूतिर्निःक्षयं याति तथोदरभवा रुजः ।
माक्षिकं निम्बपत्राणि नखं गुग्गुल एव च ॥
भृङ्गराजो विशाला च पाठा चैव पुनर्नवा ।
विल्वमारुष्ककं लोध्रं सैन्धवं तगरं तथा ॥”
एतैः पक्त्वा घृतं वाजी संप्राप्यार्त्तेर्व्विमुच्यते ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते घृता-
ध्यायश्चतुर्द्दशः ॥
अथ क्वाथः ।
“पूर्ब्बाणि समभागानि क्वाथयेत् कूपवारिणा ।
ततोऽष्टांशं समादाय तोयस्य क्वथितस्य च ॥
एतत् सिद्धार्थकं नाम ह्युत्कृष्टं सर्व्ववाजिनाम् ।
कायाग्निं वर्द्धयत्याशु नीरोगत्वं प्रयच्छति ॥
मुस्ता मधुकपत्राणि केशरं लवणं रुहा ।
शताह्वा शाल्मली धात्री त्रपुषं फलिनी तथा ॥
क्वाथयित्वा जलं कौपं दत्तैस्तुल्यैर्विचक्षणः ।
त्रिभागमेवमादाय ततो दद्याद्धयस्य च ॥
प्रकरोति सदा नाशं पित्तस्यागन्तुकस्य च ।
एकविंशदिनं यावच्छालिहोत्रमतं यथा ॥
शुण्ठी हरीतकी पाठा ब्राह्मी मुस्ताशिफालिका
।
हरिद्राद्वयसंयुक्ता हरितालं मनःशिला ॥
सिद्धस्त्रिभागशेषोऽयं क्वाथो हन्यात्त्रिरात्रिकम्
।
सन्निपातमशेषेण पलिकः पलमात्रकः ॥
मधुकं केशरं पत्रं भल्लातकविभीतकम् ।
शङ्खपुष्पं रुहा सारं समभागेन मिश्रितम् ॥
कासार्त्तस्य समुद्दिष्टः क्वाथोऽयं
त्रिफलात्मकः ।
उत्साहवर्द्धकः सद्यस्तथा कायाग्निदीपकः ॥
कुमारी शाल्मली पाठा मञ्जिष्ठा चेन्द्रवारुणी ।
काकोली समभागेन क्वाथयेद् समभागतः ॥
पलद्वयप्रमाणेन ततः पीतेन वाजिना ।
मोहयेच्छूलजं दोषं मूत्रदोषं च तत्क्षणात् ॥
यवानी माक्षिकं कासं सौवर्च्चलयुताभया ।
क्वाथयेदष्टमांशेन तत्पानाज्जायते हयः ॥
प्रदीप्ताग्नेस्तु तेजस्वी सर्व्वरोगाद्विमुच्यते ।
स शीघ्रमार्गगामी च स्निग्धो रोगविवर्ज्जितः ॥

वचा लोध्रं सकर्पूरं गुहा श्यामा गुडं मधु ।
समांशकेन पिण्डोऽयं करोति लघुतां हये ॥
मद्यं मरिचसंयुक्तं लशुनं नागकेशरम् ।
द्विगुणं मेषमांसञ्च पिण्डो दत्तो जयेच्छ्रमम् ॥
जम्बीरं फलिनीपत्रं त्वचा किञ्जल्कमेव च ।
जातशोणितवाहानां पिण्डोऽयं रक्तनाशनः ॥
तमालं पुष्करं लोध्रमपामार्गं सतिन्दुकम् ।
पयसा पिण्डमेतद्धि वातकोपप्रणाशनम् ॥
आरनालं प्रविष्टा च पथ्या नेपालिकाफलम् ।
पिण्डे दत्ते हये दध्ना निहन्त्याशु विजृम्भितम् ॥
मुद्गदूर्णं वचामिश्रं तथा सर्ज्जरसान्वितम् ।
पिण्डे दत्ते निहन्त्याशु कृमिसंघं व्रणोद्भवम् ॥
स्नुहीक्षीरं सकर्पूरं कूपोदकविभावितम् ।
पिण्डोऽयं हन्ति मध्यस्थान् रोगान् सर्व्वान् कृमिव्रजान् ॥
सिता दुग्धं सकर्पूरमेलया पत्रसंयुतम् ।
अग्निदाहार्त्तियुक्तानां पिण्डोऽयं वाजिनां स्मृतः ॥
ग्रीष्मासह्यप्रतप्तानामारनालंपरिप्लुतम् ।

इति श्रीनकुलकृतेऽश्वचिकित्सिते पिण्डाध्यायस्त्रयोदशः ॥

अथ घृतविधानम् ।

“शिलाजतु विशाला च पद्मकं नागकेशरम् ।
लाक्षा पद्मकमृलञ्च निम्बद्वयसमन्वितम् ॥
घृतं माक्षिकसंयुक्तं सप्तविंशतिकं विदुः ।
अष्टांशं तु समादाय सुरामांसघृतस्य च ॥
पलमात्राणि सर्व्वाणि पूर्ब्बद्रव्याणि निःक्षिपेत् ।
तेषां दानेन तत्सर्पिर्जायते सर्व्ववाजिनाम ॥
बलपुष्टिकरं नित्यं सर्व्ववातविनाशनम् ।
सर्व्वरोगप्रशमनं कायाग्नेश्च प्रदीपनम् ॥
ओजस्करं व्यथानाशं प्लीहशोषप्रणाशनम् ।
धातकी केशरं कुष्ठं कुसुम्भं कुङ्कुमं नलम् ॥
दाडिमं सितलोध्रञ्च पलमात्राणि निःक्षिपेत् ।
घृतञ्च पाचयेत् पानादभिघातान्वितो हयः ॥
जावते सर्व्वशुद्धाङ्गो महाप्राणैर्न संशयः ।
आरनालं वचा कुष्ठं पिङ्गला सिक्थकं घृतम् ॥
सेफालिका रुहानीले वेणुका सिन्धुवारिका ।
एतैः क्वाथः कृतः सम्यक् क्रमिनाशकरः परः ॥
मातुलुङ्गस्य बीजानि चन्दनं सितसर्षपाः ।
उशीरं पुष्करं ब्राह्मी लक्ष्मणा च पुनर्नवा ॥
क्वाथोऽयं शुण्ठिचूर्णेन धावितक्लेशनाशनः ।
प्रकरोति तुरङ्गाणां सर्व्वदैव सुखं तथा ॥”

इति श्रीनकुलकृतेऽश्वचिकित्सिते क्वाथाध्यायः पञ्चदशः ॥

अथ विधम् ।

“वारुणी माक्षिकी गौरी श्रीतालीबीजपूरकम् ।
कृमिक्लेदविनाशाय क्वाथो नित्यं रुजाहरः ॥
अश्वगन्धा घृतं क्षौद्रं विषदग्धस्य वाजिनः ।
विषनाशं करोत्येव सर्व्वगात्रेषु तत्क्षणात् ॥
सामान्येन प्रदिष्टोऽयमगदो विषनाशनः ।

पृथक् पृथग्विभागेन कर्त्तव्यं साम्यतः परम् ॥
त्रिविधं कीर्त्तितं चैव कृत्रिमञ्च ततःपरम् ।
त्रिविधं कीर्त्तितं प्राज्ञैर्विषज्ञानविचक्षणैः ॥
स्थावरं कन्दजं प्रोक्तं जङ्गमं सत्त्वसंस्थितम् ।
कृत्रिमं योगजं प्रोक्तं त्रिविधं विषमुच्यते ॥
यदा स्थिरं समश्नन्ति कदाचित्तुरगोत्तमाः ।
तदा कार्य्यं विधानज्ञैरगदस्य प्रयोजनम् ॥
केशरं पद्मनालञ्च सौपर्णी वदरीफलम् ॥
तक्रमिश्रं हये दत्तं सर्व्वथा विषनाशनम् ॥
सौपर्णी सिन्धुवारञ्च नागवल्ली जटा तथा ।
विषार्त्तं प्राप्य संमिश्रं दुग्धे स्यादायुधी हयः ॥
अश्वगन्धा रुहा एला घृतमिश्रा प्रयोजिता ।
विषनाशं नयत्याशु जङ्गमं हयगात्रतः ॥
मूलं चन्दनवृक्षस्य माषचूर्णपरिप्लु तम् ।
जङ्गमस्य विषस्याशु प्रकरोति च संक्षयम् ॥
तक्रं केशरसंयुक्तं विषं सद्यो नवाभ्रकम् ।
हयस्य जङ्गभं नाशं विषन्नयति तत्क्षणात् ॥
सौपर्णी विषकङ्कोली पिष्ट्वा मद्येन भाविता ।
जङ्गमं गात्रतः कृत्स्नं विषं नयति तत्क्षणात् ॥
एला कङ्कोलिकामूलं सौपर्णीघृतमिश्रितम् ।
विषनाशं करोत्याशु नस्यदानेन वाजिनाम् ॥
कौसुम्भं केशरं लाक्षा माक्षिका नाकुली तथा ।
कृत्रिमस्य विषस्याशु प्रकरोति च संक्षयम् ॥
चम्पकं मालतीमूलमुन्मत्तकरसंतथा ।
अश्वानां नाशयत्याशु विषं जङ्गममाश्रितम् ॥”
इति श्रीनकुलकृतेऽश्वचिकित्सिते विषयोगा-
ध्यायः षोडशः ॥
सुपवित्रान् दोषघ्नैर्विभूषयेदलङ्कारैः ॥”
इति श्रीनकुलकृतेऽश्वचिकित्सितेऽश्वशाला-विधिरष्टादशोऽध्यायः ॥ सप्तदशाध्यायस्तु नाधि-गम्यते ॥
अथ ग्रहनामलक्षणानि ।
“दृश्यन्ते यानि लिङ्गानि ग्रहदोषेण वाजिनाम् ।
तानि सम्यक् प्रवक्ष्यामि ग्रहनामानि यानि तु ॥
लोहिताक्षो विरूपाक्षो हरिर्बलिस्तथैव च ।
सकाशी चैव विख्यातः सङ्काशी च परः स्मृतः ॥
सुसंस्थितश्च कौवेरो वैशाखश्च भृद्ग्रहः ।
ऊर्द्ध्वश्च दारुणश्चैव षड्विधो वरुणग्रहः ॥
बृहस्पतिश्च सोमश्च तथा सूर्य्यग्रहोऽपरः ।
एते प्रोक्ता ग्रहाः सर्व्वे दारुणा मुनिसत्तमैः ॥
एतैर्दृष्टाः स्फुटं वाहा नैव जीवन्ति सर्व्वदा ।
चिह्नं सर्व्वं प्रवक्ष्यामि यथा शास्त्रे व्यवस्थितम् ॥
कम्पते पूर्ब्बकायस्तु निश्चलो यस्य पश्चिमः ।
पश्चाल्लङ्गी सकम्पश्च खिद्यते हरिपीडितः ॥
भवन्ति विन्दवो रक्ता अकस्माद् यस्य चक्षुषः ।
हरिताक्षगृहीतोऽश्वो ग्रासद्वेषी च जायते ॥
प्रस्विन्नगुरुगात्रश्च लुब्धचङ्क्रमणक्रियः ।
मीलतोन्मीलता चाक्ष्णा स्वभावान्नित्यमेव च ॥
विरूपाक्षगृहीते तु कम्पः स्वेदश्च जायते ।
उत्थितः सहसा यस्तु मूर्न्धा पतति भूतले ॥
स्तब्धाक्षो मुच्यते केशैस्तथा बालैः खुरैरपि ।
बलिग्रहगृहीतोऽसौ स्तब्धकर्णशिरोधरः ॥
अकस्माद् यस्य लोमानि शीर्य्यन्ते यश्च लङ्गति ।
शूनपच्चिमपादस्य तस्य काशिग्रहं वदेत् ॥
सहसा कुपितो वाजी स्वानि गात्राणि खादति ।
प्रोथते सततञ्चैव सङ्काशिग्रहपीडितः ॥
खिन्नाङ्गो वेपमानश्च जानुभ्यां यश्च तिष्ठति ।
कौवेरग्रहसन्दुष्टं तं विद्यात् कष्टजीवितम् ॥
ह्रेषते सततं यस्तु पश्चादात्मानमीक्षते ।
सुसंस्थितग्रहाविष्टः स विज्ञेयो मनीषिभिः ॥
स्तब्धेन गुरुणा चैव वेपमानेन पण्डितः ।
गात्रेण विद्याद् वाहं तु वैशाखग्रहसेवितम् ॥
ग्रीवां चैव तथा जिह्वां परिवर्त्त्या मुहुर्मुहुः ।
जृम्भते पूर्ब्बकायेन शीतोच्छासी विशोचनः ॥
नोद्विजेत्त्वाहतः पृष्ठे कशया पाणिनापि वा ।
तं वै दीर्घस्वरग्रस्तं दृष्ट्वैव परिवर्जयेत् ॥
श्यामं जिह्वामुखं यस्य नष्टदृष्टिस्मृतिर्भ्भवेत् ।
ऊर्द्ध्वग्रहकृतं दोषं तस्य दीनस्य निर्द्दिशेत् ॥
कम्पमानश्च यो वाजी स रविग्रहपीडितः ॥
स्तब्धग्रीवो न जानाति कशाघातं सुदुर्म्मनाः ।
जलग्रहगृहीतोऽश्वो वामपार्श्वेन निश्चलः ॥
शूनाक्षिकूटो रक्ताक्षः कृशः स्खलति यो मुहुः ।
बृहस्पतिगृहीतोऽसौ नैव जीवति तादृशः ॥
कम्पते पूर्ब्बकायेन स्वल्पपानाशनश्च यः ।
शेते प्रसार्य्य गात्राणि शीताङ्गः सोमपीडितः ॥
रक्ताक्षः शूनकण्ठश्च कम्पमानश्च श्वासयुक् ।
फेनतीव्राङ्गखेदश्च ग्रस्तः सूर्य्यग्रहेण सः ॥
उदके तत्समीपे वा प्रायो गृह्णाति दारुणः ।
तुरङ्गं सत्त्वहीनन्तु षड्विधो वारुणग्रहः ॥
यज्ञभूमिचिताचैत्यशून्यवेश्मसुरालये ।
लोहिताक्षादयो रोषाद् ग्रहा गृह्णन्ति वाजिनः ॥
एवंविधैर्न्निदानैस्तु ग्रहदोषं विनिर्द्दिशेत् ।
वातपित्तकफानान्तु निदानैर्व्याधिमादिशेत् ॥
एकाकारेण रोगेण म्रियते वा हयो यदा ।
तुरङ्गाणां तदा ज्ञेया उपसर्गाः सुदारुणाः ॥
ग्रहदोषेषु सर्व्वेषु उपसर्गास्तथैव च ।
अथोक्ताञ्च महाशान्तिं गान्धर्व्वीञ्च प्रयोजयेत् ॥
अश्वरक्षाविधानाय ऋक्षं सम्मान्य पावकम् ।
जुहुयाद्घृतसंयुक्तं शुचिः स्नात्वा सुपूजितः ॥
शान्तिकं कारयेत् कर्म्म बलिञ्चापि प्रयोजयेत् ।
ग्रहदोषेषु सर्व्वेषु शान्तिकर्म्माणि कारयेत् ॥
देवद्विजप्रव्रजितगुरुवृद्धान्यतीनपि ।
तोषयेद्भोजनैर्दानैर्वस्त्रगोकाञ्चनादिभिः ॥
रात्रौ शालासमीपे तु बलिं दद्यात् चतुर्दिशम् ।
मत्स्यमांसैश्च पक्वान्नैः कृशरैः पायसादिभिः ॥
त्रिरात्रं पञ्चरात्रं वा सप्तरात्रमथापि वा ।
नीराजनविधिं कृत्वा नयेदश्वान् पृथक् पृथक् ॥”
इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे ग्रह-गृहीतचिकित्सिते सप्तपञ्चाशत्तमोऽध्यायः ॥)

**घोटिका**, स्त्री, (घोटते परिवर्त्तते कण्वादिगुणै-रिति । घुट् -ण्वुल् । ततष्टापि अत इत्वम् ।) वृक्षभेदः । तत्पर्य्यायः । कर्कटी २ तुरङ्गी ३ चतुरङ्गा ४ । अस्या गुणाः । कटुत्वम् । उष्ण-त्वम् । मधुरत्वम् । वातव्रणकण्डुकुष्ठास्रश्वयथु-नाशित्वञ्च । इति राजनिर्घण्टः ॥

**घोणा**, स्त्री, (घोणते गृह्णाति वस्तुगन्धम् । घुण् + अच् टाप् च । घोणतेऽनया इति करणे घञ् वा ।)

अथ अश्वशालाविधिः ।
“नृपवेश्मवामभागे शुभदिने तु
कारयेद्धयागारम् ।
पूज्यश्रियं प्रयत्नादुच्चैःश्रवसं प्रतिष्ठाप्य
॥
सुशुभे भूमिविभागे
पूर्ब्बोत्तरजलप्लवविधानात्।
तस्मिन् शालां क्षिण्णां दशहस्तसमुच्छ्रितां
दृढां
कुर्य्यात् ॥
खादनकोष्ठकमस्मिन् हस्तद्वितयं
समुच्छ्रितं
कुर्य्यात् ।
संस्थाप्य वृषभगावौ सप्ताहं
वाजिशालायाम् ॥
अत ऊर्द्धन्तु हुताग्निः प्रवेशयेद्वाजिनो
यथा-
योग्यम् ।
कुशलैस्तरुणैर्दक्षैरनुकूलैः स्थानपालैश्च
॥
कृतमङ्गलसंस्कारा बन्धव्यास्तेऽत्र
चोत्तराभि-
मुखाः ।
नात्यायता न शिथिलाः स्थाने वा
दक्षिणाभि-
मुखम् ॥
वैद्यानां तुरगाय समीपं गृहं कारयेत् पूर्ब्बम्
।
कार्य्यामिकेन मूत्रेण माक्षिकाणां निवारणम्
॥
गन्धैमाल्यैर्धूपैः स्थानानि
विभूषयेदलङ्कारैः ।
सविशेयं त्वद्यपीतौ हुत्वाग्निं पूरयेद्विद्वान् ॥
स्वच्छिद्रं नातियवमं यथा पश्यन्ति
वाजिनः ।
म्यानं चैव पृथक् प्रासं प्रयत्नं रोगिणां न वै
॥
कोष्ठी कुष्ठी ज्वरी यक्ष्मी परस्परं दूषयति
क्षारैः ।
तियिवारे कैशांश्च खुरांश्च प्रघ्नन्ति
दीर्घान् ॥
अश्वस्याङ्गे प्रलिपेद्धरिद्रया वरिष्ठया
मङ्गन्न्यात्र ।

तालुजिह्वे च नेत्रे च वृषणौ मेढ्रमेव च ।
श्यावं रूपञ्च यस्य स्याद् गात्रगौरवमेव च ॥
तस्य स्वेदपरीतस्य बुद्धिमान् वरुणग्रहैः ।
कृतं दोषं महाघोरं स्तब्धाङ्गस्य विनिर्द्दिशेत् ॥
ह्रेषते सततं यस्तु हृष्टरोमा तुरङ्गमः ।
स्तब्धाक्षो जृम्भतेऽत्यर्थं तस्यापि सलिलग्रहः ॥
सुविस्फुरितसर्व्वाङ्गः सलिले निश्चलस्थितः ।
ह्रेषते विस्तरं वाजी वरुणग्रहपीडितः ॥
मुहूर्त्तावस्थितस्तोये जानुभ्यां योऽवगच्छति ।
मुखपाकश्च यस्यान्ते तं विद्यादुदकग्रहम् ॥
उद्वर्त्तिताक्षः खिन्नश्च संगृहीतहनुश्च यः ।

नासा । (यथा, महाभारते । १ । १५६ । ३३ ।
“दीर्घघोणं महोरस्कं विकटोद्बद्धपिण्डिकम् ॥”
“घोणायां द्वे ॥” इति सुश्रुते शारीरस्थाने
पञ्चमाध्याये ॥) अश्वनासिका । तत्पर्य्यायः ।
प्रोथः २ । इत्यमरः । २ । ८ । ४९ ॥ (यथा,
अश्ववैद्यके । २ । ७ ।
“नासाच्छिद्राक्षिमध्ये तु घोणाख्यः समुदाहृतः
।
घोणापार्श्वगतौ गण्डौ क्षीरिके च ततः परम् ॥”)

**घोणी**, [न्] पुं, (प्रशस्ता घोणा अस्त्यस्य इति ।

“व्रीह्यादिभ्यश्च ।” ५ । २ । ११७ । इति इनिः
।)
शूकरः । इत्यमरः । २ । ५ । २ ॥

**घोण्टा**, स्त्री, (घुण्यते गृह्यते भक्षणायेति । घुण्
+ बाहुलकात् टः ।) वृक्षविशेषः । शेयाकुल

इति भाषा ॥ तत्पर्य्यायः । वदरः २ गोप-
घोण्टा ३ शृगालकोलिः ४ कपिकोलिः ५ ।
इति काचित् रत्नमाला ॥ हस्तिकोलिः ६
वदरी-
च्छदा ७ कर्कन्धुः । इति रत्नकोषः ॥
पूगवृक्षः ।
इति मेदिनी । टे । १४ ॥ (यथा, उत्तरस्थाने
त्रिंशेऽध्याये वाभटेनोक्तम् ।
"घोण्टाफलत्वग्लवणं सलाक्षं
वूकस्य पत्रं वनितापयश्च ।
स्नुगर्कदुग्धान्वित एष कल्को
वर्त्तीकृतो हन्त्यचिरेण नाडीम् ॥")

**घोनसः**, पुं, (गोनसः + पृषोदरादित्वात् साधुः ।)
गोनसः । तिलित्ससर्पः । इति हेमचन्द्रः । ४
।
३६२ ॥ (क्वचित् मूर्द्धन्यमध्योऽपि दृश्यते
॥)

**घोरं**, क्ली, (हन्यते वध्यतेऽनेनेति । हन् + "हन्ते
रच् घुर् च ।" उणां । ५ । ६४ । इति अच्
धातोर्घुरादेशश्च ।) विषम् । इति
राजनिर्घण्टः ॥

**घोरः**, पुं, (घोरयति भयानकरसनिमित्तीभव-
तीति । घुर + अच् । यद्वा, हन्ति विनाशयति
रुद्ररूपेण इति । हन वधे + "हन्तेरच् धुर्
च ।" उणां । ५ । ६४ । इति अच् धातोर्घुरा-
देशञ्च ।) शिवः । भयानके त्रि । इति हेम-
चन्द्रः ॥ (यथा, मनुः । १२ । ५४ ।
"बहून् वर्षगणान् घोरान्नरकान् प्राप्य
तत्क्षयात् ।
संसारान् प्रतिपद्यन्ते महापातकिनस्त्विमान्
॥")

**घोरदर्शनः**, पुं स्त्री, (घोरं भयानकं दर्शनं यस्य ।)
उलूकः । इति राजनिर्घण्टः ॥ भयानकरूपे
त्रि ॥ (यथा, रामायणे । १ । १ । ५५ ।
"मार्गमाणो वने सीतां राक्षसं सन्ददर्श ह ।
कबन्धं नाम रूपेण विकृतं घोरदर्शनम् ॥")

**घोरपुष्पं**, क्ली, कांस्यम् । इति राजनिर्घण्टः ॥
घोरघुष्यमपि पाठः ॥

**घोररासनः**, पुं, (घोरं भयानकं रासनं शब्दो

"यत्तु सस्नेहमजलं मथितं घोलमुच्यते ॥")
तत्पर्य्यायः । दण्डाहतम् २ कालसेयम् ३
अरि-
ष्टम् ४ गोरसः ५ घलम् ६ मलिनम् ७
केवलम् ८ भग्नसन्धिकम् ९ । तस्य भेदाः ।
"तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्द्धाम्बुनिर्जलम् ।
ससारं यद्भवेत्तक्रं कङ्वरं तत् प्रकीर्त्तितम् ॥"
इति शब्दचन्द्रिका ॥
अस्य विशेषाः तक्रशब्दे द्रष्टव्याः ॥

**घोली**, स्त्री, पत्रशाकविशेषः । तत्पर्य्यायः । घोलिका
२ घोलिः ३ कलन्धुः ४ कुवकालुका ५ । क्षेत्र-
जाताया अस्या गुणाः । लवणत्वम् ।
रुचिकारि-
त्वम् । अम्लत्वम् । वातकफनाशित्वञ्च ॥
आराम-
धोलिकागुणाः । अम्लत्वम् । रूक्षत्वम् ।
रुच्यत्वम् ।
वायुनाशित्वम् । पित्तश्लेष्मकारित्वञ्च ।
सूक्ष्माया
जीर्णज्वरनाशित्वम् । इति राजनिर्घण्टः ॥

**घोषं**, क्ली, (घोषति शब्दायते इति । घुष विशब्दने
+ अच् ।) कांस्यम् । इति राजनिर्घण्टः ॥

**घोषः**, पुं, (घोषन्ति शब्दायन्ते गावो यस्मिन् ।
घुषिर् विशब्दने + "हलश्च ।" ३ । ३ । १२१
।
इति घञ् ।) आभीरपल्ली । (यथा, रघुः । १ ।
४५ ।
"हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान् ।
नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम्
॥"
घोषति शब्दायते इति । घुष + कर्त्तरि अच् ।)
गोपालः । (घुष + भावे घञ् ।) ध्वनिः ।
(यथा, मनुः । ७ । २२५ ।
"तत्र भुक्त्वा पुनः किञ्चित् तूर्य्यघोषैः प्रहर्षितः
।
संविशेत्तु यथाकालमुत्तिष्ठेच्च गतक्लमः ॥")
घोषकलता । कांस्यम् । मेघशब्दः । इति
मेदिनी । षे । ११ ॥ मशकः । इति त्रिकाण्ड-
शेषः ॥ (वर्णोच्चारणवाह्यप्रयत्नविशेषः । यदुक्तं
शिक्षायाम् । २० ।

**घोषणा**, स्त्री, (घुषिर् विशब्दने + "ण्यासश्रन्थो
युच् ।" ३ । ३ । १०७ । इति युच् ।) उच्चैः-
शब्दः । लोकविज्ञापनायोच्चैःशब्दितम् ।
(यथा,
कथासरित्सागरे । २४ । ५० ।
"गच्छ भ्रमय कृत्स्नेऽत्र पुरे पटहघोषणाम् ॥")
तत्पर्य्यायः । उच्चैर्घुष्टम् २ । इत्यमरः । १ । ६
। १२ ॥
निघुष्टम् ३ घुष्टघोषणम् ४ । इति शब्दरत्ना-
वली ॥

**घोषयित्नुः**, पुं, (घोषयतीति । घुष् + णिच् + बाहु-
लकात् इत्नुच् ।) ब्राह्मणः । कोकिलः । वन्दी ।
इति शब्दरत्नावली ॥

**घोषवती**, स्त्री, (घोषो विद्यतेऽस्याः । घोष +
मतुप् मस्य वः । स्त्रियां ङीप् ।) वीणा । इति
हेमचन्द्रः ॥ (यथा, कथासरित्सागरे । ११ । ३
।
"स बभूव शनै राजा सुखेष्वेकान्ततत्परः ।
सदा सिषेवे मृगयां वीणां घोषवतीञ्च ताम् ।
दत्तां वासुकिना पूर्ब्बं नक्तं दिनमवादयत् ॥"
तथाच तत्रैव । १२ । ३२ ।
"अङ्के घोषवती तस्य कण्ठे गीतश्रुतिस्तथा
॥")
शब्दविशिष्टे त्रि ॥ (यथा, महाभारते । १ ।
२५ । ११ ।
"त्वं वज्रमतुलं घोरं घोषवांस्त्वं बलाहकः ॥")

**घोषा**, स्त्री, (घोष्यन्ते मधुकरी यया । घुष +
णिच् + घञ् ।) मधुरिकौषधिः । मौरी इति
भाषा । इति मेदिनी ॥ (यथा, गारुडे
१९ अध्याये ।
"घोषाफलं सैन्धवञ्च तल्लिप्तार्शः पतेत्तथा ॥")
कर्कटशृङ्गी । इति राजनिर्घण्टः ॥ (गङ्गा ।
यथा, काशीखण्डे । २९ । ५५ ।
"घ्राणतुष्टिकरी घोषा घनानन्दा घनप्रिया ॥"
गायत्रीरूपाभगवती । यथा देवीभागवते । १२
।
६ । ४४ ।
"घृणिमन्त्रमयी घोषा घनसम्पातदायिनी ॥")

**घोषातकी**, स्त्री, श्वेतघोषा । इति रत्नमाला ॥

यस्य ।) शृगालः । इति शब्दरत्नावली ॥

**घोररासी**, [न्] पुं, (घोरं यथा तथा रसति शब्दं

करोतीति । रस शब्दे + णिनिः ।) शृगालः ।
इति हेमचन्द्रः । ४ । ३५६ ॥

**घोरा**, स्त्री, (घोरति भयानकरसनिमित्तीभव-

तीति । घुर + अच् + टाप् च ।) रात्रिः । इति
त्रिकाण्डशेषः ॥ देवदाली लता । इति राज-
निर्घण्टः ॥ (गङ्गा । यथा, काशीखण्डे । २९
। ५५ ।
"घण्टारवप्रिया घोराऽघौघविध्वंसकारिणी
॥"
रविसंक्रान्तिविशेषः । इति ज्योतिषम् ॥
यथा,
तिथितत्त्वे रविसंक्रान्तिप्रकरणे ।
"मन्दा मन्दाकिनी ध्वांक्षी घोरा चैव महोदरी
।
राक्षसीमिश्रिता प्रोक्ता संक्रान्तिः सप्तधा
नृप ! ॥
मन्दा ध्रुवेषु विज्ञेया मृदौ मन्दाकिनी तथा ।
क्षिप्रे ध्वांक्षी विजानीयादुग्रे घोरा प्रकीर्त्तिता
॥")
भयानका ॥ (यथा, कालीध्याने ।
"करालवदनां घोरां मुक्तकेशीं चतुर्भुजाम्
॥")

**घोलं**, क्ली, (घुट्यते आलोड्यते यत् । घुट + अच् ।

पृषोदरादित्वात् साधुः ।) ससरं निर्जलं
मथितं
दधि । (यथा, सुश्रुते सूत्रस्थाने ४५ अध्याये
।
"संवृतं मात्रिकं ज्ञेयं विवृतं तु द्विमात्रिकम् ।
घोषा वा संवृताः सर्व्वे अघोषा विवृताः स्मृताः
॥")
कायस्थादीनां पद्धतिविशेषः । (यथा,
कुलदीपि-
कायाम् ।
"वसुवंशे च मुख्यौ द्वौ नाम्ना लक्षणपूषणौ ।
घोषेषु च समाख्यातश्चतुर्भुजमहाकृती ॥")

**घोषकः**, पुं, (घोष एव । घोष + संज्ञायां कन् ।)

घोषालता । तत्पर्य्यायः । धामार्गवः २ । इत्य-
मरः । २ । ४ । ११७ ॥ घोषकाकृतिः ३
आदानी
४ देवदानी ५ तुरङ्गकः ६ घोषः ७ घोषालता
८ । इति शब्दरत्नावली ॥ कोषकालः ९ । इति
जटाधरः ॥ महांश्चेत् हस्तिघोषातकी ॥ * ॥
पीतघोषायाः पर्य्यायः । घामार्गवः १ पीत-
घोषा २ राजघोषातकी ३ कर्कोटकी ४ महा-
जाली ५ क्ष्वेडः ६ कोषफला ७ कोषातकी ८ ।
इति च जटाधरः ॥ * ॥ श्वेतघोषायाः पर्य्यायः
।
घोषातकी १ मृदङ्गी २ जालिनी ३ कृतवेधकः
४ श्वेतपुष्पा ५ आकृतिच्छत्रा ६ ज्योत्स्ना ७
इति रत्नमाला ॥

**घोषकाकृतिः** पुं, (घोषकस्य घोषलताया आकृति-

रिवाकृतिर्यस्य ।) घोषकः । इति रत्नमाला ॥

(पर्य्यायोऽस्या यथा, वैद्यकरत्नमालायाम् ।
"घोषातकी मृदङ्गी स्याज्जालिनी कृतवेधनः ।
श्वेतपुष्पा कृतिच्छत्रा ज्योत्स्नाकोषातकी
क्वचित् ॥")

**घ्रा**, गन्धोपादाने । इति कविकल्पद्रुमः ॥ (भ्वां-

परं-सकं-अनिट् ।) जिघ्रति पुष्पं लोकः । इति
दुर्गादासः ॥

**घ्राणं**, क्ली, (जिघ्रत्यनेनेति । घ्रा + करणे ल्युट् ।

यद्वा, घ्रा + क्तः "नुदविदोन्दत्राघ्रेति ।" ८ । २
।
५६ । इति निष्ठातस्य नो वा ।) नासिका ।
इत्य-
मरः । २ । ६ । ८९ ॥ (यथा रघुः । १९ । ११
।
"घ्राणकान्तमधुगन्धकर्षिणीः
पानभूमिरचनाः प्रियासखः ॥")
न्यायमते घ्राणेन्द्रियग्राह्यगन्धत्वादि । (घ्रा +
भावे ल्युट् । आघ्राणम् । यथा, देवीभागवते ।
१ । १४ । २४ ।
"आलिलिङ्ग मुहुर्घ्राणं मूर्द्ध्नि तस्य चकार ह
॥")
घ्राते त्रि । इति मेदिनी । णे । ११ ॥

**घ्राणतर्पणः**, पुं, (घ्राणमिन्द्रियविशेषं तर्पयतीति ।

तृप् + ल्युः ।) सुगन्धिः । इत्यमरः । २ । ५ । ११ ॥

(यथा, रामायणे । २ । ९४ । १४ ।

घ्राणतर्पणमभ्येत्य कं नरं न प्रहर्षयेत् ॥”)

**घ्राणदुःखदा**, स्त्री, (घ्राणस्य दुःखं ददातीति ।

दा + कः । स्त्रियां टाप् ।) छिक्कनी । इति भावप्रकाशः ॥

**घ्रातः**, त्रि, (घ्रा + क्तः । “नुदविदेति ।” ८ । २ ।

५६ । इति पाक्षिको नत्वाभावः ।) गृहीत-गन्धपुष्पादिः । घ्राण लओया इति साँका इति च भाषा । तत्पर्य्यायः । घ्राणः २ । इत्यमरः । ३ । १ । ९० ॥ शिङ्घितः ३ । इति जटाधर-शब्दरत्नावल्यौ ॥ (यथा, मनुः । ५ । १२५ ।

“पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम्।

दूषितं केशकीटैश्च मृत्प्रक्षेपेण शुध्यति ॥”)

**घ्रातिः**, स्त्री, (जिघ्रत्यनया । घ्रा + करणे क्तिन् ।)

नासिका । इति शब्दचन्द्रिका ॥ (भावे क्तिन् । आघ्राणम् । यथा मनुः । ११ । ६७ ।

“ब्राह्मणस्य रुजः कृत्या घ्रातिरघ्रेयमद्ययोः ॥”)

**ङ**

**ङ**, ङकारः । स तु व्यञ्जनपञ्चमवर्णः । अस्योच्चारण-

स्थानं सनासिककण्ठः । इति व्याकरणम् ॥

(“जिह्वामूले तु कुः प्रोक्तः ।” इति ।

“अनुस्वारयमानाञ्च नासिकास्थानमुच्यते ॥”

इति च शिक्षोक्तेस्तथात्वम् ॥)

अस्य स्वरूपं यथा, कामधेनुतन्त्रे ।

“ङकारं परमेशानि ! स्वयं परमकुण्डली ।

सर्व्वदेवमयं वर्णं त्रिगुणं लोललोचने ! ॥

पञ्चप्राणमयं वर्णं ङकारं प्रणमाम्यहम् ॥”

अपि च ।

“ऊद्‌ध्वाधःक्रमतो रेखा किञ्चिदाकुञ्चिता ततः ।

अधोगता कुण्डली तु मात्रा शक्तिस्वरूपिणी ॥

रेखात्रयेषु ब्रह्मेशविष्णवः सन्ति देवताः ॥

ध्यानं यथा, वर्णोद्धारतन्त्रे ।

“धूम्रवर्णां महाघोरां ललज्जिह्वां चतुर्भुजाम् ।

पीताम्बरपरीधानां साधकाभीष्टसिद्धिदाम्॥

एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत् ॥”

तस्य नामानि यथा, --

“ङः शङ्खी भैरवश्चण्डो बिन्दूत्तंसः शिशुप्रियः ।

एकरुद्रो दक्षनखः खर्परो विषयस्पृहा ॥

कान्तिः श्वेताह्वयो धीरो द्विजात्मा ज्वालिनी वियत् ।

मन्त्रशक्तिश्च मदनो विघ्नेशी चात्मनायकः ॥

एकनेत्रो महानन्दो दुर्द्धरश्चन्द्रमा यतिः ।

शिवयोषा नीलकण्ठः कामेशी च मयांशुकौ ॥”

इति नानातन्त्राणि ॥

(मातृकान्यासे अस्य दक्षिणकराङ्गुलाग्रेषु न्यस्यता ॥)

**ङः**, पुं, (ङयते गृह्य इन्द्रियैरिति । ङु + बाहुलकात्

डः ।) विषयः । विषयस्पृहा । इति मेदिनी । ङे । १ ॥ भैरवः । इत्येकाक्षरकोषः ॥ (यथा, स्तुतिपञ्चाशत् ।

“ङवन्दिते ! ङलिप्सिते !

ङकारवर्णरूपिणि ! ॥”)

**ङु**, ङ ध्वनौ । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-

अकं-अनिट् ।) ङ, ङवते । इति दुर्गादासः ॥

च

**च**, चकारः । स तु व्यञ्जनषष्ठवर्णः । (द्वितीयवर्ग-
स्याद्यवर्णश्च ।) अस्योच्चारणस्थानं तालु । इति
व्याकरणम् ॥ (यदुक्तं सिद्धान्तकौमुद्याम् । "इचु-
यशानां तालु ।" इति । तथा च शिक्षायाम् ।
"कण्ठ्यावहाविचुयशास्तालव्याओष्ठजावुपू ॥")
वङ्गाक्षरैरस्य स्वरूपं यथा, कामधेनुतन्त्रे ।
"चवर्णं शृणु सुश्रोणि ! चतुर्व्वर्गप्रदायकम् ।
कुण्डलीसहितं देवि ! स्वयं परमकुण्डली ॥
सततं कुण्डलीयुक्तं पञ्चदेवमयं सदा ।
पञ्चप्राणमयं वर्णं पञ्चप्राणात्मकं सदा ॥
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं प्रिये ! ॥"
अपि च ।
"वार्त्ताकुवर्त्तुलाकार ऊद्ध्वाधः क्रमतो गतः ।
रेखात्रयेषु चन्द्राग्निसूर्य्यास्तिष्ठन्ति नित्यशः ।
शक्तिर्मात्रा तु विज्ञेया ध्यानमस्य प्रचक्ष्यते ॥"
तस्य ध्यानं यथा, वर्णोद्धारतन्त्रे
"तुषारकुन्दपुष्पाभां नानालङ्कारभूषिताम् ।
सदा षोडशवर्षीयां वराभयकरां पराम् ॥
शुक्लवस्त्रावृतकटिं शुक्लवस्त्रोत्तरीयिणीम् ।
वरदां शोभनां रम्यामष्टबाहुसमन्विताम् ॥
एवं ध्यात्वा चकारन्तु तन्मन्त्रं दशधा जपेत् ॥"
तस्य नामानि यथा, नानातन्त्रेषु ।
"चः पुष्करो हली वाणी चात्मशक्तिः सुदर्शनः ।
चर्म्मुण्डधरो भूत्वा महिषाचारसम्बिनी ॥
एकरूपो रुचिः कूर्म्मश्चासुण्डा दीर्घबालुकः ।
वामबाहुर्म्मूलमाया चतुर्मूर्त्तिस्वरूपिणी ॥
दयितश्च द्विनेत्रश्च लक्ष्मीस्त्रितयलोचनः ।
चन्दनं चन्द्रमा दैवश्चेतनो वृश्चिको बुधः ॥
देवी केटमुखेच्छात्मा कौमारी पूर्ब्बफाल्गुनी ।
अनङ्गमेखला वायुर्म्मेदिनी च मूलावती ॥"
(मातृकान्यासे वामबाहुमूले एवास्य न्यस्यता ॥)

**च**, व्य (चणति चिनोतीति वा । चण शब्दे चिञ्
चित्यां वा + "अन्येष्वपि दृश्यते ।" ३ । २ ।
१०१ । इति ड ।) अन्वाचयः । यत्र एकस्य
प्राधान्येनापरस्य गौण्येनाख्यानं सोऽन्वाचयः ।
यथा । भो वटो ! भिक्षामट गाञ्चानय । भिक्षा-
मटनमत्र प्रधानं तत् कुर्व्वाणो यदि गां पश्यसि
तदा तामप्यानयेति नो चेत् भिक्षामेवाटेति ।
पक्षान्तरम् । (यथा, हितोपदेशे ।
"मूर्खोऽपि शोभते तावत् सभायां वस्त्रवेष्टितः ।
तावच्च शोभते मूर्खो यावत् किञ्चिन् न भाषते ॥"
तथा च शकुन्तलायां १ मे अङ्के ।
"शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः
फलमिहास्य ।
अथवा भवितव्यानां द्वाराणि भवन्ति सर्व्वत्र ॥")
पादपूरणम् । (यथा, रामायणे । १ । २० । १९ ।
"तेन सञ्चोदितौ तौ तु राक्षसौ च महाबलौ ।
मारीचश्च सुबाहुश्च यज्ञविघ्नं करिष्यतः ॥")
अवधारणम् । इति मेदिनी । चे । १२ ॥
हेतुः ।
इति त्रिकाण्डशेषः ॥

**चः**, पुं, (चणति शब्दायते इति । चण शब्दे +
"अन्येष्वपि दृश्यते ।" ३ । २ । १०१ । इति
डः ।) चण्डेशः । (चिनोति स्वाङ्गानि सङ्कोचय-
तीति । चि + डः ।) कच्छपः । (चीयते उप-
चीयते क्रमशः कलाभिः प्रतिपदादिमारभ्ये-
त्यर्थः ।) चन्द्रः । (चिनोति सञ्चिनोति पर-
धनानि इति ।) चौरः । इति मेदिनी ॥ चे ।
१ ॥ निर्ब्बीजे दुर्जने च त्रि । इति शब्दरत्ना-
वली ॥

**चक**, इ भ्रान्तौ । सौत्रो धातुरयम् । इति कवि-
कल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) इ, चङ्कुरः
रथे । इति दुर्गादासः ॥

**चक**, ञ ङ म प्रतिघाते । तृप्तौ । इति कविकल्प-
द्रुमः ॥) भ्वां-उभं-आत्मञ्च-सकं-अकञ्च-सेट् ।)
ञ, चकति चकते खलः साधुम् । ङ, चकते
"चटकं शीतलं रुच्यं वृष्यं कापिञ्जलामिषम् ।
तद्वच्चकोरजं मांसं वृष्यञ्च बलपुष्टिदम् ॥"
("वातश्लेष्माधिको ज्ञेयः शीतलः शुक्रवर्द्धनः ।
अश्मरीं हन्ति विशदो बलकृन्मांसलक्षणः ॥
चकोरः शुकशारी च समदोषा गुणागुणैः ॥"
इति हारीते प्रथमस्थाने एकादशेऽध्याये ॥
अस्य डिम्बगुणा यथा, चरके सूत्रस्थाने २७ अः ।
"धार्त्तराष्ट्रचकोराणां दक्षाणां शिखिनामपि ।
चटकानाञ्च यानि स्युरण्डानि च हितानि च ॥
रेतःक्षीणेषु कासेषु हृद्रोगेषु क्षतेषु च ।
मधुराण्यविपाकीनि सद्यो बलकराणि च ॥")

**चकोरकः**, पुं स्त्री, (चकोर एव । चकोर +
स्वार्थे कन् ।) चकोरपक्षी । इत्यमरः । २ । ५
। ३५ ॥

**चक्क**, क अर्त्तौ । इति कविकल्पद्रुमः ॥ (चुरां-परं-
सकं-सेट् ।) कोपधः । आद्यस्वरमध्यः । अर्त्तिः
पीडनम् । क, चक्कयति शत्रुं शूरः । इति दुर्गा-
दासः ॥

**चक्रं**, क्ली, (क्रियतेऽनेनेति । कृ + घञर्थे कः ।
कृञादीनामिति द्वित्वञ्च ।) व्रजः । समूहः ।
सैन्यम् । रथाङ्गम् । चाका इति भाषा ॥ (यथा,
याज्ञवल्क्ये । १ । ३५१ ।
"यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् ।
तथा पुरुषकार्य्येण विना दैवं न सिध्यति ॥")
राष्ट्रम् । दम्भविशेषः । कुम्भकारोपकरणम्
कुमारेर चाक इति भाषा ॥ (यथा, याज्ञ
घल्क्ये । ३ । १४६ ।
"मृद्दण्डचक्रसंयोगात् कुम्भकारो यथा घटम् ।
करोति तृणमृत्काष्ठैर्गृहं वा गृहकारकः ॥")
अस्त्रविशेषः । (यथा, रघुः । ७ । ४६ ।
"आधोरणानां गजसन्निपाते
शिरांसि चक्रैर्निशितैः क्षुराग्रैः ॥")
जलावर्त्तः । इति मेदिनी ॥ भगवतः सुदर्शः
चक्रम् । (यथा, महाभारते । १ । १९ । ६ ।
"ततो भगवता तस्य शिरश्छिन्नमलङ्कृतम् ।
चक्रायुधेन चक्रेण पिवतोऽमृतमोजसा ॥")
तस्य भगवन्मन्दिरे स्थापनविधिर्य्यथा, श्रीभाग

समाहारस्तिरोहितावयवभेदः इतरेतर उद्रिक्ता-
वयवभेदः । अतएव चार्थे द्वन्द्व इति सूत्रं विधाय
चार्थोऽत्र समाहार इतरेतरश्चेति व्याख्याय
समाहारे अनभिव्यक्तावयवत्वात् एकवचनम् ।
इतरेतरयोगे संहन्यमानप्रधानत्वात् द्बिबहु-
वचनम् । यथा । "पाणिपादं अश्वबलीवर्द्दं ब्रह्म-
क्षत्त्रियविट्शूद्राः । प्लक्षन्यग्रोधाविति परैरुक्तम्
।
समुच्चितिः समुच्चयः प्राधान्येन क्वचित्
क्रिया-
विषयेऽनेकस्य चीयमानता । यथा । धवांश्च
{??} छिन्धि । इति भरतः ॥ समाहारः ।
अन्योन्यार्थः । समुच्चयः । (यथा, मनुः । १२ ।
८९ ।
"इह चामुत्र वा काम्यं प्रवृत्तं कर्म्म कीर्त्त्यते ॥")

जनस्तृप्यतीत्यर्थः । म, चकयति । इति
दुर्गा-
दासः ॥

**चकास**, ऋ क्ष लु दीप्तौ । इति कविकल्पद्रुमः ॥

(अदां-परं-अकं-सेट् ।) ऋ, अचीचकासत्
अच-
चकासत् । अनेकस्वरात्
सन्वद्भावविकल्पः । क्ष,
चकासति । लु, चकास्ति । इति दुर्गादासः
॥

**चकितं**, त्रि, (चक भ्रान्तौ + क्तः ।) भीतम् । इति

त्रिकाण्डशेषः ॥ (यथा, कलाविलासे । २ ।
८ ।
"दत्त्वा दिशि दिशि दृष्टिं याचकचकितोऽव-
गुण्ठनं कृत्वा ।
चौर इव कुटिलचारी पलायते
विकटरथ्याभिः ॥
क्ली, भावे क्तः । भयम् ।
नायिकालङ्कारविशेषः ।
तल्लक्षणं यदुक्तं साहित्यदर्पणे । ३ । १२१
।
"कुतोऽपि दयितस्याग्रे चकितं भयसम्भ्रमः
॥")
"प्रियाग्रे चकितं भीतेरस्थानेऽपि भयंमहत्
।"
इत्युज्ज्वलनीलमणिः ॥
(स्त्री, छन्दोविशेषः । यथा, छन्दोमञ्जर्य्याम्
।
"भात् समतनगैरष्टच्छेदे स्यादिह चकिता
॥")

**चकोरः**, पुं स्त्री, (चकते चन्द्रकिरणेन तृप्यतीति ।

चक तृप्तौ + "कठिचकिभ्यामोरन् ।" उणां
।
१ । ६४ । इति ओरन् ।) पक्षिविशेषः ।
(यथा,
भागवते । ३ । २१ । ४३ ।
"सारसैश्चक्रवाकैश्च चकोरैर्बल्गुकूजितम्
॥")
तत्पर्य्यायः । चन्द्रिकापायी २
कौमुदीजीवनः ३
अस्य मांसगुणाः । यथा, राजनिर्घण्टे ।

वते । ३ । १ । २३ ।
"अन्यानि चेह द्विजदेवदेवैः
कृतानि नानायतनानि विष्णोः ।
प्रत्यङ्गमुख्याङ्कितमन्दिराणि
यद्दर्शनात् कृष्णमनुस्मरन्ति ॥"
"द्विजदेवैः ऋषिभिर्देवैश्च कृतानि अङ्गमङ्गं
प्रति
वर्त्तन्ते इति प्रत्यङ्गान्यायुधानि तेषु मुख्यं चक्रं
तेनाङ्कितानि मूर्द्धन्यहेमकुम्भेषु चिह्नितानि
मन्दिराणि येषु तानि नानाविधानि विष्णो-
रायतनानि क्षेत्राणि तीर्थानि च आसिषेवे ।
येषां चक्राङ्कितमन्दिरवतां दर्शनात् श्रीकृष्ण-
स्मरणं भवति ।" इति तट्टीकायां श्रीधरस्वामी
॥ *
अथ चक्रलक्षणम् ।
"द्वादशारन्तु षट्कोण बलयत्रयसंयुतम् ।
चक्रं स्याद्दक्षिणावर्त्तः शङ्खश्च श्रीहरेः स्मृतः
॥"
इति श्रीहरिभक्तिविलासे ४ विलासः ॥

ग्रामजालम् । इति त्रिकाण्डशेषः ॥
तगरपुष्पम् ।
इति राजनिर्घण्टः ॥ व्यूहविशेषः । (एतस्य लक्षणं यथा, --
“अष्टारं वर्त्तुलाकारं व्यूहचक्रं त्रिनाडिकम् ।
दण्डचतुष्टयं वाह्ये कर्त्तव्यञ्च चतुर्द्दिशम् ॥
पूर्ब्बदण्डाग्रतोऽन्यस्य दिनभाद्यं भमण्डलम् ।
प्रवेशे निर्गमे चैव त्रीणि त्रीणि प्रदक्षिणे ॥
शशिसंज्ञाष्टकं मध्ये तद्वाह्ये भानुसंज्ञकम् ।
तृतीयं राहुसंज्ञञ्च केतुर्द्दण्डचतुष्टये ॥
चन्द्रर्क्षे विजयो लाभः सूर्य्यर्क्षे मध्यमं फलम् ।
राहुधिष्ण्याष्टके विघ्नं मृत्युः केतुचतुष्टये ॥
एवमुक्तं चतुःस्थाने यद्दिने यस्य नामभम् ।
तद्दिने तत् फलं तस्य सर्व्वकार्य्येषु सर्व्वदा ॥”
एतच्चक्रन्तु भगवता द्रोणाचार्य्येण अभिमन्यु-वधायैवाभिकल्पितम् । तत्र व्यूहमध्ये निर्म्माण-
प्रणाल्या कः कुत्र आसीदिति प्रदर्शयितुमाह ।
“चक्रव्यूहो महाराज !
आचार्य्येणाभिकल्पितः ।
तत्र शक्रोपमाः सर्व्वे राजानो विनिवेशिताः ॥
अवस्थानेषु वित्यस्ताः कुमाराः सूर्य्यवर्च्चसः ।
संघातो राजपुत्त्राणां सर्व्वे षामभवत्तदा ॥
कृतामिसमयाः सर्व्वे सुवर्णविकृतध्वजाः ।
रक्ताम्बरधराः सर्व्वे सर्व्वे रक्तविभूषणाः ॥
सर्व्वे रक्तपताकाश्च सर्व्वे वै हेममालिनः ।
चन्दनागुरुदिग्धाङ्गाः स्रग्विणः सूक्ष्मवाससः ॥
सहिताः पर्य्यधावन्त कार्ष्णिं प्रति युयुत्सवः ।
तेषां दशसहस्राणि बभूवुर्दृढधन्विनाम् ॥
पौत्त्रं तव पुरस्कृत्य लक्षणं प्रियदर्शनम् ।
अन्योन्यसमदुःखास्ते अन्योन्यसमसाहसाः ॥
अन्योन्यं स्पर्द्धमानाश्चाप्यन्योन्यस्यहिते रताः ॥
दुर्य्योधनस्तु राजेन्द्र ! सैन्यमध्ये व्यवस्थितः ।
कर्णदुःशासनकृपैर्वृतो राजा महारथैः ॥
देवराजोपमः श्रीमान् श्वेतच्छत्राभिसंवृतः ।

धातुमयं दारुमयं वा समं चक्रं कृत्वा तन्नेम्यां

शृङ्खलादिराधारः शिथिलः कार्य्यः । चक्रमध्ये सूक्ष्मं सुषिरमाधारात् सुषिरोपगामिनी लम्ब-वदूर्द्ध्वरेखा कार्य्या । तन्मध्यतोऽन्या तिर्य्यक्रेखा
चात्र कार्य्या । तच्चक्रं परिधौ भगणांशैरङ्क-यित्वाधारात् त्रिभ इति नवतिभागान्तरे तिर्य्य-ग्रेखा तत्परिधिसम्पाते धात्री क्षितिः कल्प्या । भार्द्धेऽन्तर ऊर्द्धरेखानेमिसम्पाते खार्द्धं कल्प्यम् ।
सुपिरे सूक्ष्मा शलाका प्रदातव्या । सा चाक्ष-संज्ञा । तच्चक्रमर्काभिमुखनेमिकञ्च यथा भवति
तथाधारे धार्य्यम् । तथा धृतेऽक्षस्य छाया परिधौ यत्र लगति तत्कुजचिह्नयोरन्तरे ये अंशास्ते रवेरुन्नतांशाः । ये छायाखार्द्धयो-रन्तरे ते नतांशा ज्ञेयाः । एवमत्र नतोन्नतांश-ज्ञानमेव भवति । अतोऽन्यैर्घटिका अप्या-नीताः । तद्यथा, तस्मिन्दिने गणितेन मध्यन्दि-
नोन्नतांशान् दिनार्द्धमानञ्च ज्ञात्वानुपातःकृतः ।
यदि मध्यन्दिनोन्नतांशैर्दिनार्द्धनाड्यो लभ्यन्ते तदैभिः किमित्येवं स्थूला घटिकाः स्युः ॥ अथ
वेधेन ग्रहज्ञानमाह ।
“पैत्रर्क्षपुष्यान्तिमवारुणाना-
मृक्षद्वयं नेमिगतं यथा स्यात् ।
दूरेऽन्तरेऽल्पेषु भखेचरौ वा
तथात्र यन्त्रं सुधिया प्रधार्य्यम् ॥
नेमिस्थदृष्ट्याक्षगतं प्रपश्येत्
खेटञ्च धिष्ण्यस्य च योगताराम् ।
नेम्यङ्कयोरक्षयुजोस्तु मध्ये
येऽंशाःस्थिता भध्रुवको युतस्तैः ॥
प्रत्यक्स्थिते भेऽथ पुरःस्थिते तै
र्हीनो ध्रुवः स्यात् खचरस्य भुक्तम् ॥”

तत्र यन्त्रस्याधो नेम्यां दृष्टिं कृत्वोर्द्धनेम्यामुक्त-

र्क्षाणां मध्ये भद्वितयं युगपन्नेमिगतं यथा स्यात्

द्रुतहेमसमप्रख्यं पद्मं तत्र विभावयेत् ॥
तदूर्द्धेऽग्निसमप्रख्यं षड्दलं हीरकप्रभम् ।
बादिलान्तषडर्णेन युक्ताधिष्ठानसंज्ञकम् ॥
मूलमाधारषट्कानां मूलाधारं ततो विदुः ।
स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदुः ॥
तदूर्द्धे नाभिदेशे तु मणिपूरं महाप्रभम् ।
मेघाभं विद्युदाभञ्च बहुतेजोमयं ततः ॥
मणिवद्भिन्नतत्पद्मं मणिपूरं तथोच्यते ।
दशभिश्च दलैर्युक्तं डादिफान्ताक्षरान्वितम् ॥
शिवेनाधिष्ठितं पद्मं विश्वालोकैककारणम् ।
तदूर्द्धेऽनाहतं पद्ममुद्यदादित्यसन्निभम् ॥
कादिठान्ताक्षरैर्कपत्रैश्च समधिष्ठितम् ।
तन्मध्ये बाणलिङ्गन्तु सूर्य्यायुतसमप्रभम् ॥
शब्दब्रह्ममयं शब्दोऽनाहतस्तत्र दृश्यते ।
तेनाहताख्यं पद्मं तन्मुनिभिः परिकीर्त्तितम् ॥
आनन्दसदनं तत्तु पुरुषाधिष्ठितं परम् ।
तदूर्द्ध्वन्तु विशुद्धाख्यं दलषोडशपङ्कजम् ॥
स्वरैः षोडशकैर्युक्तं धूम्रवर्णैर्महाप्रभम् ।
विशुद्धिं तनुते यस्मात् जीवस्य हंसलोकनात् ॥
विशुद्धं पद्ममाख्यातमाकाशाख्यंमहाद्भुतम् ।
आज्ञाचक्रं तदूर्द्धे तु आत्मनाधिष्ठितं परम् ॥
आज्ञासंक्रमणं तत्र गुरोराज्ञेति कीर्त्तितम् ।
कैलासाख्यं तदूर्द्ध्वे तु बोधनीन्तु तदूर्द्ध्वतः ॥
एवञ्च शिवचक्राणि प्रोक्तानि तव सुव्रत ! ॥” * ॥
मन्त्रोद्धारार्थषट्चक्राणि यथा । कुलाकुल-चक्रम् १ राशिचक्रम् २ नक्षत्रचक्रम् ३ अक-थहचक्रम् ४ अकडमचक्रम् ५ ऋणिधनि-चक्रम् ६ । तद्यथा, --
“कुलाकुलस्य भेदं हि वक्ष्यामि मन्त्रिणामिह ।
वाय्वग्निभूजलाकाशाः पञ्चाशल्लिपयः क्रमात् ॥
पञ्चह्रस्वाः पञ्चदीर्घा बिन्द्वन्ताः सन्धिसम्भवाः ।
कादयः पञ्चशः ष क्ष ल स हान्ताः प्रकीर्त्तिताः ॥
तथा च ।
अ आ ए क च ट त प य षाः मारुताः ।
इ ई ऐ ख छ ठ थ फ र क्षाः आग्नेयाः ।
उ ऊ ओ ग ज ड द ब लाः पार्थिवाः ।
ऋ ॠ औ घ झ ढ ध भ व सा वारुणाः ।
ऌ ॡ अं ङ ञ ण न म श हाः नाभसाः ॥

चामरव्यजनाक्षेपैरुदयन्निव भास्करः ॥
प्रमुखे तस्य सैन्यस्य द्रोणोऽवस्थितनायकः ।
सिन्धुराजस्तथाऽतिष्ठत्श्रीमान्
मेरुरिवाचलः ॥
सिन्धुराजस्य पार्श्वस्था अश्वत्थामपुरोगमाः
।
सुतास्त्वं महाराज ! त्रिंशत्त्रिदशसन्निभाः ॥
गान्धारराजः कितवः शल्यो भूरिश्रवास्तथा ।
पार्श्वतः सिन्धुराजस्य व्यराजन्त महारथाः
॥
ततः प्रववृते युद्धं तुमुलं लोमहर्षणम् ।
तावकानां परेषाञ्च मृत्युं कृत्वा निवर्त्तनम् ॥”
इति महाभारते । ७ । ३३ । १३ -- २४ ॥)
तैलयन्त्रम् । इत्यमरटीकायां स्वामी ॥ (यथा,
आर्य्यासप्तशत्याम् । ५९२ ।
“स्नेहमयान् पीडयतः किं चक्रेणापि
तैलकारस्य ॥”
कालज्ञापकयन्त्रविशेषः । यथा, गोलाध्याये ।
“चक्रं चक्रांशाङ्कं परिधौ
श्लथशृङ्खलादिकाधारम् ।
धात्री त्रिभ आधारात् कल्प्या भार्द्धेऽत्रखार्द्धञ्च
॥
तन्मध्ये सूक्ष्माक्षं क्षिप्त्वार्काभिमुखनेमिकं
धार्य्यम् ।
भूमेरुन्नतभागास्तत्राक्षच्छायया भुक्तः ॥
तत्खार्द्धान्तिश्च नता उन्नतनवसंगुणीकृतं
द्युदलम् ।
द्युदलोन्नतांशभक्तं नाड्यः स्थूलाः परैः
प्रोक्ताः ॥”
तथा यन्त्रं स्थिरं कृत्वा नेम्यां धिष्ण्ययोरेकतरं
स्थानमङ्कयेत् । ततोऽग्रे पृष्ठतो वा दृष्टिं चाल-
यित्वा ग्रहं विध्येत् । ग्रहः प्रायोऽक्षगतो
दृश्यते । अक्षमूलस्य ग्रहस्य चान्तरं शरो
ग्रहावधिः अक्षमूलं नेम्यां यत्र लग्नं दृश्यते
तत् स्थानमप्यङ्क्यम् । अथ भग्रहाङ्कयोर्मध्ये
येऽंशास्तैर्भध्रुवो युतः स्फुटग्रहो भवति यदा
ग्रहात् पश्चिमस्थं नक्षत्रम् । यदा पूर्ब्बस्थं
नक्षत्रं तदा भध्रुवो हीनः स्फुटग्रहो भवति ।
अथवाल्पशरं नक्षत्रं रोहिण्याद्यं ततो दूरे-
ऽन्तरे यदा ग्रहस्तदा तावेव विद्ध्वा प्रोक्तवद्-
ग्रहज्ञानम् । इति चक्रयन्त्रम् ॥ शरीरस्थ-
षट्चक्राणियथा । मूलाधारः १ स्वाधिष्ठानम्
२
मणिपूरम् ३ अनाहतम् ४ विशुद्धम् ५ आज्ञा-
ख्यम् ६ । तद्यथा, --
“मूलाधारे त्रिकोणाख्ये इच्छाज्ञानक्रियात्मके
।
मध्ये स्वयम्भुलिङ्गन्तु कोटिसूर्य्यसमप्रभम् ॥
तदूर्द्ध्वे कामबीजन्तु कलशान्तीन्दुनादकम् ।
तदूर्द्ध्वे तु शिखाकारा कुण्डली ब्रह्मविग्रहा ॥
तद्बाह्ये हेमवर्णाभं वसवर्णचतुर्दलम् ।
साधकस्याक्षरं पूर्ब्बं मन्त्रस्यापि तदक्षरम् ।
यद्येकभूतदैवत्यं जानीयात् सकुलं हि तत् ॥
भौमस्य वारुणं मित्रमाग्नेयस्यापि मारुतम् ।
मारुतं पार्थिवानाञ्च शत्रुराग्नेयमम्भसाम् ॥
नाभसं सर्व्वमित्रं स्याद्विरुद्धं नैव शीलयेत् ॥”
अथ राशिचक्रम् ।
“रेखाद्वयं पूर्ब्बपरागतं स्यात्
तन्मध्यतो याम्यकुवेरभेदात् ।
एकैकमीशाननिशाचरे तु
हुताशवाय्वोर्विलिखेत्ततोऽर्णान् ॥
वेदाग्निवह्नियुगलश्रवणाक्षिसंख्यान्
पञ्चेषुबाणशरपञ्चचतुष्टयार्णान् ।
मेषादितः प्रविलिखेत् सकलांस्तु वर्णान्
कन्यागतान् प्रविलिखेदथ शादिवर्णान् ॥

तेन अ आ इ ई मेषः । उ ऊ ऋ वृषः ।
ॠ ऌ ॡ मिथुनम् । ए ऐ कर्कटः । ओ औ
सिंहः । अं अः श ष स ह ल क्षाः कन्या ।
कवर्गस्तुला । चवर्गो वृश्चिकः । टवर्गो धनुः ।
तवर्गो मकरः । पवर्गः कुम्भः । यवर्गो मीनः ।
स्वराशीनामनुकूलं मन्त्रं भजेत् ।
राशीनां शुद्धता ज्ञेया त्यजेत् शत्रुं मृतिं व्ययम् ।
स्वराशेर्म्मन्त्रराश्यन्तं गणनीयं विचक्षणैः ॥
यदा तु स्वराशेरज्ञानं तदा साधकानामाद्यक्षर-
सम्बन्धिनं राशिं गृहीत्वा गणयेत् ॥ * ॥
अथ नक्षत्रचक्रम् ।
"अ आ अश्विनी देवगणः । इ भरणी मानुषः ।
ई उ ऊ कृत्तिका राक्षसः । ऋ ॠ ऌ ॡ
रोहिणी मानुषः । ए मृगशिरो देवः । ऐ
आर्द्रा मानुषः । ओ औ पुनर्व्वसुर्देवः । क
पुष्यो देवः । ख ग अश्लेषा राक्षसः । घ ङ
मघा राक्षसः । च पूर्ब्बफल्गुनी मानुषः ।
छ ज उत्तरफल्गुनी मानुषः । झ ञ हस्ता
देवः । ट ठ चित्रा राक्षसः । ड स्वाती देवः ।
ढ ण विशाखा राक्षसः । त थ द अनुराधा
देवः । ध ज्येष्ठा राक्षसः । न प फ मूला-
राक्षसः । व पूर्ब्बाषाढा मानुषः । भ उत्तरा-
षाढा मानुषः । म श्रवणा देवः । य र धनिष्ठा
राक्षसः । ल शतभिषा राक्षसः । व श पूर्ब्ब-
भाद्रपदा मानुषः । ष स ह उत्तरभाद्रपदा
मानुषः । अं अः ल क्ष रेवती देवः ॥ तथा च ।
"अश्विन्यादिक्रमेणैव विलिखेत्तारकाः पुनः ।
वक्ष्यमाणविधानेन तन्मध्ये वर्णकान् लिखेत् ॥
उत्तराद्दक्षिणाग्रान्तु रेखां कुर्य्याच्चतुष्टयीम् ।
दश रेखाः पश्चिमाग्राः कर्त्तव्या वीरवन्दिते ! ॥
अकारादिक्षकारान्तान् द्विचन्द्रवह्निवेदकान् ।
भूमीन्द्रनेत्रचन्द्रांश्च अश्लेषान्तं खगौ प्रिये ! ॥
द्विभूनेत्रनेत्रयुग्मांश्चेन्दुनेत्राग्निचन्द्रकान् ।
मघादिज्येष्ठपर्य्यन्तं द्वितीयं नवतारकम् ॥
वह्निभूमीन्दुचन्द्रांश्च युग्मेन्दुनेत्रवह्निकान् ।
वेदेन भेदिता वर्णा रेवत्यंशगताः क्रमात् ॥
पूर्ब्बोत्तरात्रयञ्चैव भरण्यार्द्रा च रोहिणी ।
इमानि मानुषाण्याहुर्नक्षत्राणि मनीषिणः ॥
ज्येष्ठाशतभिषामूलाधनिष्ठाश्लेषकृत्तिकाः ।
चित्रामघाविशाखाः स्युस्तारा राक्षसदेवताः ॥
अश्विनी रेवती पुष्यः स्वाती हस्तः पुनर्व्वसुः ।
अनुराधामृगशिरःश्रवणादेवतारकाः ॥

इन्द्वग्निरुद्रनवनेत्रयुगार्कदिक्षु
ऋत्वष्टषोडशचतुर्द्दशभौतिकेषु ।
पातालपञ्चदशवह्निहिमांशुकोष्ठे
वर्णान् लिखेत् लिपिभवान् क्रमशस्तु
धीमान् ॥
नामाद्यक्षरमारभ्य यावन्मन्त्रादिमाक्षरम् ।
चतुर्भिः कोष्ठैरेकैकमिति कोष्ठचतुष्टयम् ॥
पुनः कोष्ठगकोष्ठेषु सव्यतो नाम्न आदितः ।
सिद्धः साध्यः सुसिद्धोऽरिः क्रमाज्ज्ञेया
मनी-
षिभिः ॥
सिद्धः सिध्यति कालेन साध्यस्तु
जपहोमतः ।
सुसिद्धो ग्रहमात्रेण रिपुर्मूलं निकृन्तति ॥"
* ॥
अथाकडमचक्रम् ।
"रेखाद्वयं पूर्ब्बपरेण कुर्य्यात्
तन्मध्यतो याम्यकुवेरभेदात् ।
महेशरक्षोऽधिपतिक्रमेण
तिर्य्यक् तथा वायुहुताशनेन ॥
आकारादिहकारान्तान् क्लीवहीनान्
लिखे-
त्ततः ।
तथा ऋ ॠ वर्णद्वयं ऌ ॡ तद्धि क्लीवं
प्रचक्षते ॥
एकैकक्रमतो लेख्यान् मेषादिषु वृषान्तकान्
।
गणयेत् क्रमशो भद्रे नामादिवर्णकादिमान् ॥
मेषादितश्च मीनान्तं गणयेत् क्रमशः सुधीः
।
जप्तुः स्वनामतो मन्त्री यावन्मन्त्रादिमाक्षरम्
॥
सिद्धसाध्यसुसिद्धारीन् पुनः सिद्धादयः
पुनः ।
नवैकपञ्चमे सिद्धः साध्यः षड्दशयुग्मके ॥
सुसिद्धस्त्रिसप्तके रुद्रे वेदाष्टद्वादशे रिपुः ।
एतत्ते कथितं देवि ! अकडमादिकमुत्तमम्
॥
ताराशुद्धिर्वैष्णवानां कोष्ठशुद्धिः शिवस्य च
।
राशिशुद्धिस्त्रैपुरे च गोपालेऽकडमः स्मृतः
॥"

यस्मिन्नृक्षे तदृक्षं मरणभयकरं शूलमूलेऽपि
दद्यात् ।
तत पश्चादारशूले विविधभयकरं
शूलपार्श्वेर्थलाभः
सख्यं स्यात् शूलमध्य भवति च नियतं वित्त-
वामक्रमेण ॥"
केतुचक्रं यथा, --
"कण्ठे हृदि त्रिभयुगे क्रतुमानलाभौ
षट्पृष्ठभं क्षयकरं धनदं करे त्रिः ।
वामे चतुर्षु च रुजं पदयोस्तथाष्टौ
क्लेशो भयञ्च नितरामिह केतुचक्रम् ॥" * ॥
अहिचक्रं यथा, --
"अथाहिचक्रं वक्ष्यामि विभ्रान्तद्रव्यशल्ययोः ।
ऊर्द्ध्वं रेखाष्टकं लेख्यं तिर्य्यक् च
पञ्चरेखिकाः ॥
स्थानद्वारमुखं चक्रमष्टाविंशतिकोष्ठकम् ।
तत्र पौष्णाश्वियाम्यर्क्षकृत्तिकामघभाग्यभम् ॥
उत्तराफल्गुनी लेख्या पूर्ब्बपङ्क्त्यां भसप्तकम्
।
अहिब्रध्नोऽजपादर्क्षं शतभं ब्राह्मसर्पभम् ॥
पुष्यं हस्तं समालेख्यं द्वितीयां
पङ्क्तिमास्थितम् ।
अभिजिद्विष्णुवस्वृक्षं सौम्यं रौद्रं पुनर्व्वसुम् ॥
चित्रभञ्च तृतीयायां पङ्क्तौ धिष्ण्यस्य सप्तकम्
।
विश्वर्क्षं तोयभं मूलां ज्येष्ठामैत्रविशाखभम् ॥
स्वातीं पङ्क्तौ चतुर्थ्यान्तु कर्त्तव्यं पन्नगाकृति
।
द्वारशाखे मघा याम्ये द्वारस्था कृत्तिका ततः ॥
अश्वीशपूर्ब्बाषाढादित्रिकपञ्चचतुष्टयम् ।
रेवती पूर्ब्बभाद्रेन्दोर्भानि शेषाणि भास्वतः ॥
उदयादिगता नाड्यो भघ्नाः षष्ट्याप्तशेषके ।
दिनेन्दुभुक्तयुक्तोऽसौ भवेत्तत्कालचन्द्रमाः ॥
चन्द्रवत्साधयेत् सूर्य्यमृक्षस्थञ्चेष्टकालिकम् ।
चन्द्र ऋक्षे यदार्केन्दू तदास्ति निश्चितं निधिः
॥
भानु ऋक्षे स्थितौ तौ चेत्तदा शल्यं न संशयः ।
स्वस्वभे द्वितयं ज्ञेयं नास्ति किञ्चिद्विपर्य्यये ॥
स्थितं न लभ्यते द्रव्यं चन्द्रे क्रू रग्रहान्विते ।
पुष्टे चन्द्रे भवेन्मुद्रा क्षीणे चन्द्रेऽल्पको निधिः ॥
हेमतारञ्च ताम्रारं रत्नं कांस्यं तथा त्रपु ।
नागं चन्द्रे विजानीयाद्भास्करादिग्रहेक्षिते ॥

स्वजातौ परमा प्रीतिर्मध्यमा भिन्नजातिषु ।
रक्षोमानुषयोर्नाशो वैरं दानवदेवयोः ॥
जन्म सम्पद्विपत् क्षेमः प्रत्यरिः साधको वधः ।
मित्रं परममित्रञ्च जन्मादीनि पुनः पुनः ॥”
जन्मत्रिपञ्चसप्तानि वर्ज्जनीयानि नक्षत्राणि ।
स्वनक्षत्रादेव नक्षत्रं गणनीयम् । स्वनक्षत्राज्ञाने स्वनामाद्यक्षरसम्बन्धिनक्षत्राद्गणनीयम्॥ * ॥
अथाकथहचक्रम् ।
“चतुरसं लिखेत् कोष्ठं चतुष्कोष्ठसमन्वितम् ।
पुनश्चतुष्कं तत्रापि लिखेद्धीमान् क्रमेण तु ॥

अथ ऋणिधनिचक्रम् ।
“कोष्ठान्येकादशान्येव वेदेन पूरितानि च ।
अकारादिहकारान्तं लिखेत् कोष्ठेषु तत्त्ववित् ॥
प्रथमं पञ्चकोष्ठेषु ह्रस्वदीर्घक्रमेण तु ।
द्वयं द्वयं लिखेत्तत्र विचारे खलु साधकः ॥
शेषेष्वेकैकशो वर्णान् क्रमशस्तु लिखेत् सुधीः ॥
द्वौ द्वौ स्वरौ पञ्चसु कोष्ठकेषु
शेषान् स्वरान् षट्सु षडेकमेकम् ।
कादीन् हशेषान् विलिखेत्ततोऽर्णा-
नेकैकमेकादशसु त्रिकेषु ॥
षट्कालकालवियदग्निसमुद्रवेद-
खाकाशशून्यदहनाः खलु साध्यवर्णाः ॥
युग्मद्विपञ्चवियदम्बरयुक्शशाङ्क-
व्योमाब्धिवेदशशिनः खलु साधकार्णाः ॥
नामाज्झलादकठवाद्गजभुक्तशेषं
ज्ञात्वोभयोरधिकशेषमृणं धनं स्यात् ॥
मन्त्रो यद्यधिकाङ्कः स्यात् तदा मन्त्रं जपेत् सुधीः ।
समेऽपि च जपेन्मन्त्रं न जपेत्तु ऋणाधिके ॥
शून्ये मृत्युं विजानीयात्तस्माच्छून्यं विवर्जयेत् ॥”
इति तन्त्रसारः ॥ * ॥
अथोत्तरायणचक्रं यथा, --
“चक्रं सारं विलिख्य ग्रहपतिरयने संक्रमं यत्
करोति

मिश्रैर्मिश्रं भवेत्द्रव्यं शून्यं दृष्टिविवर्जिते ॥
हेमतारञ्च ताम्रारं पाषाणं मृण्मयायसम् ।
सूर्य्यादिगृहगे चन्द्रे द्रव्यभाण्डं प्रजायते ॥
भुक्तराश्यंशमानेन भूमानं परिकल्पयेत् ।
नीचे द्विघ्नं परे नीचे जलसंस्थो भवेन्निधिः ॥
स्वोच्चस्थे तूद्र्ध्वगं द्रव्यं नवांशकक्रमेण च ।
परमोच्चे भवेत्तुङ्गे भित्तिस्थमृक्षसंक्रमे ।
अधिष्ठितं भवेद्द्रव्यं यत्र चन्द्रो ग्रहान्वितः ॥”
* ॥
कुलाकुलचक्रं यथा, --
“द्वितीया दशमी षष्ठी कुलाकुलमुदाहृतम् ।
विषमाश्चाकुलाः सर्व्वाः शेषाश्च तिथयः कुलाः ॥
रविश्चन्द्रो गुरुः सौरिश्चत्वारोऽत्राकुला मताः ।
भौमशुक्रौ कुलाख्यौ च बुधवारः कुलाकुलः ॥
वरुणार्द्राभिजिन्मूलं कुलाकुलमुदाहृतम् ।
कुलानि समधिष्ण्यानि शेषभान्यकुलानि च ॥
तिथौ वारे च नक्षत्रे अकुले यायिनो जयः ।

कुलाख्ये स्थायिनो नूनं सन्धिश्चैव कुलाकुले ॥”
अथ कुम्भचक्रम ।
“कुम्भाकारं लिखेच्चक्रं तिर्य्यग्रेखाप्रभेदितम् ।
क्रमादूद्र्ध्वमधो लेख्यमेकैकान्तरभं क्रमात् ॥
भानुभानि लिखेत्तत्र रिक्तः पूर्ण इति क्रमात् ।
एवं राशिक्रमो लेख्यो रिक्तः पूर्ण इति द्विधा ॥
रिक्ते रिक्ता भवेद्यात्रा पूर्णे पूर्णा शुभावहा ॥”
अथ कोटचक्रम् ।
“अथातः सम्प्रवक्ष्यामि कोटचक्रमिहाष्टधा ।
स्तोकोऽरिः कुरुते यत्र भूरिसैन्यपराजयम् ॥
प्रथमो मृण्मयः कोटो द्वितीयो जलकोटकः ।
तृतीयो ग्रामकोटश्च चतुर्थस्तत्र गह्वरः ॥
पञ्चमो गिरिकोटश्च षष्ठः कोटश्च डामरः ।
सप्तमो वक्रभूमिष्ठो विषमाख्यस्तथाष्टमः ॥
मृमिये साधयेत् खण्डिं जलस्थे बन्धमोक्षणम् ॥
ग्रामदुर्गेऽग्निदाहञ्च प्रवेशं गह्वरे तथा ।
पर्व्वते स्थानभेदञ्च भूतलं डामरे रणे ॥
वक्रस्थे कवियोगञ्च विषमे स्थायियायिनौ ।
अतिदुर्गं कालकर्णं चक्रावर्त्तश्च टिङ्गनम् ॥
तुलावर्त्तश्च पद्माख्यो यक्षभेदश्च शार्व्वरम् ।
एतन्नामाष्टकं ज्ञेयं वर्गाष्टकक्रमेण च ॥
यस्य वर्गस्य ये भक्ष्या वर्ज्यास्तन्नामनागराः ।
योजयेत् तेन वर्गेण तद्वर्गास्तस्य भङ्गदाः ॥
अ गरुडः क मार्जारश्च सिंहष्ट शुनीसुतः ।
त सर्पश्च प आखुश्च य गजः श अजासुतः ॥
दुर्गवर्गस्य ये भक्ष्या वर्गनामस्थिता नराः ।
तद्वर्गे ते रणे त्याज्या न कर्त्तव्या गडाधिपाः ॥
अवर्गात् पञ्चमे स्थाने खण्डिभङ्गश्च जायते ।
अवर्गाद्यष्टकं ज्ञेयं पूर्ब्बाद्यष्टदिशां क्रमात् ॥
कोटचक्रं लिखेच्चादौ चतुरस्रं त्रिनाडिकम् ।
कृत्तिकादीनि धिष्ण्यानि साभिजिन्ति न्यसेद्बुधः ॥
वहिःकोटे तथा मध्ये कोटे मध्ये वहिर्वहिः ।
प्रवेशो निर्गमस्तत्र ज्ञातव्यः स्वरवेदिभिः ॥
वहिर्द्वादशभान्यत्र प्राकारे तारकाष्टकम् ।
दुर्गमध्ये तथा चाष्टौ मध्ये स्तम्भचतुष्टयम् ॥
कृत्तिकापुष्यसर्पैश्च मघास्वातिविशाखभे ।
अनुराधाभिजिद्विष्णुर्धनिष्ठाश्वियमा वहिः ॥
ब्रह्मा पुनर्व्वसूभाग्यं चित्रा ज्येष्ठा तथोत्तराः ।
शतभं रेवती चैव प्राकारे तारकाष्टकम् ॥
मृगरौद्रोत्तरा हस्तं मूलमाषाढपूर्ब्बकम् ।
वाह्यभे मध्यभे चैव यत्रस्थाः क्रूरखेचराः ॥
तत्र स्थाने कृते यत्ने हस्तिदुर्गं ससैनिकम् ।
ऊद्र्ध्वदृष्टी च भौमार्कौ केकरौ बुधभार्गवौ ॥
समदृष्टी च जीवेन्दु शनिराहू ह्यधोदृशौ ।
नाडीत्रये वहिर्मध्ये गर्भे नामादि लिख्यते ॥
कालपद्रौद्रशक्रेभ्यः पराक्रमविवक्षया ।
यातुर्भे कालनाडीस्थे मृत्युर्मध्यपदे स्थिते ॥
चौर्य्यक्षयोपतापाश्च रौद्रनाड्यां पुरग्रहः ।
क्रूरा गर्भे पुरं हन्ति प्राकारे खण्डिकारकाः ॥
वहिःस्था वेष्टके सैन्ये भङ्गदा नात्र संशयः ।
क्रूरा गर्भे शुभा वाह्ये गृह्यते निश्चितं पुरम् ॥
सौम्या मध्ये वहिः क्रूरा असाध्यं दुर्गमुच्यते ।
क्रूरचतुष्टयं मध्ये प्राकारे सौम्यखेचराः ॥
भेदाद्भङ्गो भवेद्दुर्गे विना युद्धेन गृह्यते ।
प्राकारे संस्थिताः क्रूरा मध्ये सौम्यग्रहा यदि ॥
दुर्गभङ्गे समुत्पन्ने भङ्गमायान्ति वेष्टकाः ।
मध्यनाडीस्थिताः सौम्याः क्रूरा वहिरवस्थिताः ॥
सैन्यावर्त्तो वहिः शत्रोर्विना युद्धेन जायते ।
प्राकारे पुरमध्ये च यदा क्रूरा व्यवस्थिताः ॥
सौम्या वाह्ये तदा दुर्गमयत्नेनापि सिध्यति ।
सौम्या मध्ये च कोटे च वाह्ये पापग्रहा यदि ॥
देवैर्ब्रह्मादिभिः कोटो गृह्यते न कदाचन ।
प्राकारवाह्यगाः क्रूराः सौम्या मध्यगता यदि ॥
युद्धं प्राकारखण्डिश्च पुरभेदो न जायते ।
प्रवेशवाह्यगे क्रूरे वक्रे स्वसैन्यविग्रहः ।
दुर्भिक्षं मृत्युभङ्गौ च वहिः सैन्यस्य जायते ॥
निर्गमर्क्षे वहिःस्थे च क्रूरो वक्रं करोति चेत् ।
प्राकारस्य भवेद्भङ्गः प्राकारस्थे पुरस्य च ॥
पुरभे निर्गमे वक्राः कथञ्चित् क्रूरखेचराः ।
दुर्गं त्यक्त्वा तदा काले दुर्गस्थः प्रपलायते ॥
यथा क्रूरैस्तथा सौम्यैः फलं ग्राह्यं विपर्य्ययात् ।
मिश्रैर्मिश्रं विजानीयात् कोटचक्रे न संशयः ॥
दुर्गसैन्यं तथैवोच्चं प्राकारे मध्यभागगम् ।
नीचस्थं वेष्टकं सैन्यं ज्ञातव्यं स्वरवेदिभिः ॥
कोटे कोटाधिपे नीचौ विघ्नदौ भौमभास्करौ ।
समस्थौ च पुरे सर्व्वे उच्चस्थौ निष्फलौ च तौ ॥
प्राकारं वेष्टकं हन्ति उच्चस्थौ राहुसूर्य्यजौ ।
प्राकारस्थौ वहिःसैन्यं नीचस्थौ तौ च निष्फलौ ॥
सितेऽर्कपुत्रे तु रवौ गुरावज्ञसितेऽपि च ।
वक्रिता नैव शक्ताः स्युर्विधातुं कोटभेदनम् ॥
समदृष्ट्या गुरुश्चन्द्रः पश्यतः सर्व्वतः सदा ।
तिर्य्यक्स्थितौ बुधशुक्रौ फलदौ नात्र संशयः ॥
ऊद्र्ध्वदृष्टिग्रहे कुर्य्यात् टिङ्गनीयन्त्रवाहनम् ।
समे च साधयेत् खण्डिं रन्ध्रपातमधोमुखे ॥
कोटभं मुखपुच्छस्थं राहोर्यदि गलादिके ।
कोटश्च भज्यते क्षिप्रं पूर्ब्बोक्तविधिना चिरात् ॥
दुर्गमध्यगते सूर्य्ये जलशोषः प्रजायते ।
चन्द्रे भङ्गः कुजे दाहो बुधे बुद्धिबला नराः ॥
वाक्पतौ दुर्गमध्यस्थे सुभिक्षं प्रचुरं जलम् ।
चलचित्ता नराः शुक्रे मृत्युरोगौ शनैश्चरे ॥
राहौ मध्यगते दुर्गे भङ्गो भेदो महद्भयम् ।
केतौ मध्यगते तत्र विषादः स्याद्गडाधिपे ॥
सौरिश्च वाक्पतिश्चैव भवेतां दिशि संस्थितौ ।
यस्यां तया स कोटस्तु भज्यते नात्र संशयः ॥
इत्येवोक्तं फलं मध्ये एवं वाह्यगते ग्रहे ।
उपग्रहसमायोगादत्यन्तंप्राणसंशयः ॥
अकारादिस्वराः पञ्च पूर्ब्बाशादिचतुष्टये ।
मध्यान्ताः सव्यमालेख्या अन्तस्थाः खण्डि-कारकाः ॥
दुर्गनाम्नः स्वरो यस्य बालो वास्तमितोऽपि वा ।
तद्दिने प्रारभेत् युद्धं दुर्गं सिध्यति नान्यथा ॥”
इति कोटचक्रम् ॥
इति समयामृतम् ॥ * ॥ चक्रान्तराणि तत्तच्छब्दे द्रष्टव्यानि ॥ (चित्रकाव्यविशेषः । शब्दालङ्कार-भेदः । अस्य च तथाविधलिपिसन्निवेशवशेन

पूर्ब्बोत्तरा तथा भद्रा मध्ये ऋक्षाष्टकं विदुः ॥
पूर्ब्बे रौद्रं यमे हस्तं पूर्ब्बाषाढा च वारुणे ।
उत्तरे चोत्तरं भाद्रमेतत् स्तम्भचतुष्टयम् ॥
कृत्तिकाद्यं मघाद्यञ्च मैत्राद्यं वासवादिकम् ।
त्रीणि त्रीणि प्रवेशे च भानि द्वादश निर्गमे ॥
कृत्तिकादिरयं न्यासः सुबोधोऽयं प्रदर्शितः ।
दुर्गभाद्गणनञ्चात्र ग्रहैर्व्वाच्यं ततः फलम् ॥
चतुरस्रं तथावृत्तं त्रिकोणं वृत्तदीर्घकम् ।
अर्द्धचन्द्रं वर्त्तुलञ्च गोस्तनं धनुराकृति ॥
चतुरस्रे यथा न्यासो भूमिभागक्रमेण च ।
प्रवेशे निर्गमे स्तम्भे तथा वृत्तादिसप्तके ॥
दुर्गे भित्तिविभागेन दातव्यं धिष्ण्यमण्डलम् ।

स्तम्भान्तरगता यस्य ग्रहाः सौम्याः शुभान्विताः ॥
भवेयुस्तस्य कोटस्य न नाशो विद्यते क्वचित् ।
स्तम्भान्तरगता यस्य रविराहुशनैश्चराः ॥
भूमिपुत्त्रश्च तस्याशु नाशः कोटस्य निश्चितम् ।
सौम्या वाह्ये तथा कोटेमध्ये क्रूरग्रहाः स्थिताः ॥
स्वयं दुर्गं प्रयच्छन्ति वेष्टकाय गडाधिपाः ।
वाह्याभ्यन्तरगाः क्रूराः प्राकारे शोभनग्रहाः ॥
रिपुद्वयं क्षयं याति विना युद्धेन निश्चितम् ।
प्रकारस्था ग्रहाः क्रूरा वहिर्मध्येशुभाः स्थिताः ॥
समयुद्धं भवेत्तत्र खण्डिपातो दिने दिने ।
सौम्याः क्रूरास्तथा चाष्टौ प्राकारमध्यवाह्यगाः ॥
एकस्था यत्र कुर्व्वन्ति संग्रामस्तत्र दारुणम् ।
गजाश्वरथभूपालाः सामन्ता मण्डलेश्वराः ॥
कुर्व्वन्ति च भटा युद्धमुभयोरपि सैन्ययोः ।
विचार्य्य कुरुते युद्धं कोटचक्रं स्वरोदयी ॥
प्रवेशधिष्ण्यगे चन्द्रे जीवपक्षर्क्षसंस्थिते ।
निशीथे कविरणं दुर्गे कर्त्तव्यं वेष्टकैर्नृपैः ॥
कर्त्तव्यं कवियुद्धञ्च रात्रौ सुप्ते वहिर्जने ।
प्रवेशनिर्गमावुक्तौ सेनयोरुभयोरपि ॥
कवौ कोटे जयो युद्धे विपरीते पराजयः ।
विहाय प्रकृतं चारं वक्रं गच्छति चेद्गुरुः ॥
तदा प्राग्दिशिभङ्गः स्यात् रुद्धयोः पूर्ब्बसैन्ययोः ।
भौमे च वक्रिते भङ्गो भवेत् दक्षिणतोऽत्र च ॥
भवेत् पश्चिमतो भङ्गो भार्गवे वक्रगामिनि ।
बुधे वक्रगतौ चैव भङ्गश्चोत्तरतो भवेत् ॥

चमत्कारिविधायिनामपिवर्णानां तथाविध-श्रोत्राकाशसमवायविशेषवशेन चमत्कारि-विधायिभिर्व्वर्णैरभेदेन उपचारत्वात् शब्दा-लङ्कारत्वम् । उदाहरणं यथा, काव्यालङ्कारे ।
५ । ६ -- १३ ।
“मारारिशक्ररामेभमुखैरासाररंहसा ।
साराख्धस्तवा नित्यं तदर्त्तिहरणक्षमा ॥
माता नतानां संघट्टः श्रियां बाधितसम्भ्रमा ।
मान्याथ सीमारामाणां शं मेदिश्यादुमादिजा ॥
मायाविनं महाहावा रसायातं लसद्भुजा ।
जातलीला यथा सारवाचं महिषमावधीः ॥

| | | |
|---|---|---|
| | यदि तत्र स्थितौ स्यातां न<br>जात्वर्कशनैश्चरौ ॥<br>क्रूरो वक्री प्रवेशर्क्षे पुरमध्ये स्थितो यदा<br>।<br>तदा कोटविनाशाय कोटस्थो वाह्यभूपतेः<br>॥ | |

मामभीदा शरण्यामुत्सदैवारुक्प्रदा च धीः ।
धीरा पवित्रा सन्त्रासात्त्रासीष्ठा मातरारम ॥
माननापरुषं लोकदेवों सद्रस सन्नम ।
मनसा सादरं गत्वा सर्वदा दास्यमङ्ग ताम् ॥
मा मुषो राजस स्वासूंल्लोककूटेशदेवताम् ।
तां शिवावाशितां सिद्ध्याध्यासितां हि स्तुतां स्तुहि ॥
माहिषाख्ये रणेऽन्या नु सा नु नानेयमत्र हि ।
हिमातङ्कादिवामुं च कं कम्पिनमुपप्लुतम् ॥
मातङ्गानङ्गविधिनामुना पादं तमुद्यतम् ।
तङ्गयित्वा शिरस्यस्य निपात्याहन्ति रंहसा ॥”
अथ चक्रे वर्णविन्यासक्रमः ।

**चक्रः**, पुं, (करोति अस्फुटशब्दम् । कृ + बाहुलकात् कः ततो निपातनात् द्वित्वे साधुः ।) चक्रवाक-पक्षी । इत्यमरः । २ । ५ । २२ ॥

**चक्रकः**, त्रि, (चक्र इव कायति प्रकाशते इति । कै + कः ।) तर्कविशेषः । तस्य लक्षणं यथा । स्वापेक्ष-णीयापेक्षितसापेक्षितत्वनिबन्धनप्रसङ्गत्वम् । अपेक्षा च ज्ञप्तौ उत्पत्तौ स्थितौ च ग्राह्या । तत्राद्या यथा । एतद्घटज्ञानं यद्येतद्घटज्ञान-जन्यज्ञानजन्यं स्यात् तदा एतद्घटज्ञानजन्य-ज्ञानभिन्नं स्यात् । द्वितीया यथा । घटोऽयं यद्येतद्घटजन्यजन्यजन्यःस्यात् तदा एतद्घटजन्य-जन्यभिन्नः स्यात् । तृतीया यथा । घटोऽयं यद्येतद्घटवृत्तिवृत्तिः स्यात् तथात्वेनोपलभ्येत इति । इति तर्कशास्त्रम् ॥ (वेदान्तदर्शनमते तु “स्वग्रहसापेक्षग्रहकत्वं आत्माश्रयः । स्वग्रहसापेक्ष-ग्रहसापेक्षग्रहकत्वं अन्योन्याश्रयः । स्वग्रहसापेक्ष-ग्रहसापेक्षग्रहसापेक्षग्रहकत्वम् चक्रकम् ॥”)

**चक्रकारकं**, क्ली, (चक्रं चक्रवदाकारं करोत्यात्मनः वक्रनखाकृत्या इति शेषः । यद्वा चक्रं चक्रा-कृतिरेखादिकं करोतीति । कृ + ण्बुल् ।) व्याघ्र-नखनामगन्धद्रव्यम् । इत्यमरः । २ । ४ । १२९ ॥

**चक्रकुल्या**, स्त्री, (चक्रस्य चक्राख्यौषधीलतावृक्ष-भेदस्य कुल्या इव ।) चित्रपर्णी । इति शब्द-चन्द्रिका ॥ चाकुलिया इति भाषा ॥ (चित्र-

**चक्रगजः**, पुं, (चक्रेण चक्राख्यया गज्यते शब्द्यते । यद्वा चक्रे चक्राकृतिदद्रुव्याधौ गज इव । गज इव दद्रुरोगमर्द्दक इत्यर्थः ।) चक्रमर्द्दवृक्षः । इति राजनिर्घण्टः ॥

**चक्रगण्डुः**, पुं, (चक्रमिव वर्त्तुलाकारो गण्डुः ।) वर्त्तुलाकारोपाधानम् । इति चतुरशब्दार्थे हेमचन्द्रः ॥ गोलबालिश इति गालबालिश इति च भाषा ॥

**चक्रगुच्छः**, पुं, (चक्रवद्गुच्छः पुष्पगुच्छोऽस्मिन् अस्य वा ।) अशोकवृक्षः । इति शब्दचन्द्रिका ॥

**चक्रजीवकः**, पुं, (चक्रेण कुम्भाद्युत्पादनयन्त्र-विशेषेण जीवतीति । जीव + ण्वुल् ।) कुम्भ-कारः । इति हेमचन्द्रः ॥

**चक्रदंष्ट्रः**, पुं, (चक्रं चक्राकृतिर्दंष्ट्रायां यस्य चक्रमिव दंष्ट्रा यस्येति वा ।) शूकरः । इति राजनिर्घण्टः ॥

**चक्रदन्ती**, स्त्री, (चक्रमिव दन्तरूपमिव च इत्येके ।) दन्तीवृक्षः । इति राजनिर्घण्टः ॥

**चक्रदन्तीबीजं**, क्ली, (चक्रदन्त्या बीजम् ।) जय-पालः । इति राजनिर्घण्टः ॥

**चक्रधरः**, पुं, (धरतीति । धृ + अच् । चक्रं सुदर्शनाख्यं द्वादशारादिलक्षणलक्षितमस्त्रम् । तस्य धरः । चक्रं धरति धारयतीति वा ।) विष्णुः । (यथा, रघुः । १६ । ५५ ।
“विगाहितुं श्रीमहिमानुरूपं
प्रचक्रमे चक्रधरप्रभावः ॥”
चक्रं फणा तस्य धरः ।) सर्पः । (यथा, महा-भारते । ३ । ८५ । ७० ।
“अङ्गिरःप्रमुखाश्चैव तथा ब्रह्मर्षयोऽपरे ।
तथा नागाः सुपर्णाश्च
सिद्धाश्चक्रधरास्तथा ॥”)
ग्रामजालिनि त्रि । इति मेदिनी ॥ (यथा, महाभारते । ३ । ८५ । ७६ ।

मरः । १ । १ । २० ॥ (यथा, विष्णोरष्टोत्तर-शतनामकीर्त्तने ।
“वैकुण्ठश्चाच्युतो रामश्चक्रपाणिरधोऽक्षजः ॥”)

**चक्रपादः**, पुं, (चक्रं पाद इवास्य ।) रथः । (चक्रवत् पादा यस्य ।) हस्ती । इत्यजयपालः ॥

**चक्रपुष्करिणी**, स्त्री, (चक्रेण विष्णुचक्रेण खनिता पुष्करिणी ।) मणिकर्णिका । इति काशीखण्डम् ॥

**चक्रफलं**, क्ली, (चक्राकारं फलं फलकमस्य ।) अस्त्रविशेषः । तत्पर्य्यायः । अट्टनम् २ । इति त्रिकाण्डशेषः ॥

**चक्रबान्धवः**, पुं, (चक्रस्य पद्मस्य बान्धवः बन्धुः ।) सूर्य्यः । इति हेमचन्द्रः ॥

**चक्रभृत्**, [द्] पुं, (चक्रं बिभर्त्तीति । भृ + क्विप् ।) विष्णुः । इति हेमचन्द्रः ॥ (यथा, राज-तरङ्गिण्याम् । १ । ३८ ।
“चक्रभृद्विजयेशादिकेशवे गानभूषिते ॥”)

**चक्रभेदिनी**, स्त्री, (चक्रं चक्रवाकमिथुनं भिनत्ति पृथक् करोतीति । भिद् + णिनिः । ततो ङीप् । निशायां हि चक्रवाकयोर्व्वियोजनं भवतीति लोकप्रसिद्धम् ।) रात्रिः । इति त्रिकाण्डशेषः ॥

**चक्रमण्डली**, [न्] पुं, (चक्राकारेण यन्मण्डलं तदस्त्यस्य इति इनिः ।) अजगरसर्पः । इति हेमचन्द्रः ॥

**चक्रमर्द्दः**, पुं, (चक्रं चक्राकारदद्रुरोगं मृद्नातीति । मृद् + “कर्म्मण्यण् ।” ३ । २ । १ । इत्यण् ।) क्षुपविशेषः । चाकुन्दिया इति भाषा ॥ तत्-पर्य्यायः । एडगजः २ अडगजः ३ गजाख्यः ४ मेषाह्वयः ५ एडहस्ती ६ व्यावर्त्तकः ७ चक्र-गजः ८ चक्री ९ पुन्नाटः १० पुन्नाडः ११ विम-

पर्णिकाशब्दे ज्ञेयमस्या विवरणम् ॥)

"यजन्ते क्रतुभिर्देवास्तथा चक्रधरा नृपाः ॥")

**चक्रनखः**, पुं, (चक्रमिव नखः नखाकृत्यंशविशेषो-

ऽस्त्यस्य इति । "अर्श आदिभ्योच्" इत्यच् ।)
व्याघ्रनखनामगन्धद्रव्यम् । इति
राजनिर्घण्टः ॥

**चक्रनामा**, [न्] पुं, (चक्रं सरघानिर्म्मितमधु-

चक्रं तन्नामैव नामास्य ।) माक्षिकधातुः । इति
हेमचन्द्रः ॥

**चक्रनायकः**, पुं, (चक्रं कर्षणजन्यचक्राकारेखा-

दिकं नयतीति । नी + ण्वुल् ।) व्याघ्रनखः । इति
राजनिर्घण्टः ॥ (चक्रस्य नायके त्रि ॥)

**चक्रपद्माटः**, पुं, (चक्रं चक्रवत् यत् पद्मं दद्रुरोगः

तत्र अटति तं मृद्नातीत्यर्थः ।) चक्रमर्द्दक-
वृक्षः । इति शब्दरत्नावली ॥

**चक्रपरिव्याधः**, पुं, (चक्रं दद्रुरोगं परिविध्यतीति ।

परि + अध + अण् ।) आरग्बधवृक्षः । इति
वैद्यकम् ॥

**चक्रपर्णी**, स्त्री, (चक्राकारं पर्णमस्या इति ।

जातौ संज्ञायां वा ङीष् ।) चक्रकुल्यालता ।
इति शब्दचन्द्रिका ॥

**चक्रपाणिः**, पुं, (चक्रं सुदर्शनास्त्रं षाणौ यस्य ।

व्यधिकरणबहुव्रीहिसमासः ।) विष्णुः । इत्य-

र्द्दकः १२ दद्रुघ्नः १३ तर्व्वटः १४ चक्राह्वः १५
शुकनाशनः १६ दृढबीजः १७ प्रपुन्नाडः १८
खर्ज्जुघ्नः १९ । इति राजनिर्घण्टः ॥ चक्र-
मर्द्दकः २० पद्माटः २१ उरणाख्यः २२ । इत्य-
मरः । २ । ४ । १४७ ॥ प्रपुन्नडः २३
प्रपुनाडः २४
उरणाक्षः २५ । इति तट्टीका ॥ अस्य गुणाः ।
कटुत्वम् । तीव्रत्वम् ।
मेदोवातकफकण्डूकुष्ठदद्रु-
पामादिदोषनाशित्वञ्च । इति राजनिर्घण्टः ॥
लघुत्वम् । स्वादुत्वम् । रूक्षत्वम् ।
पित्तश्वास-
कृमिनाशित्वम् । हृद्यत्वम् । हिमत्वञ्च । तत्
फलगुणाः ।
उष्णताकुष्ठकण्डुदद्रुविषानिलगुल्म-
कासकृमिश्वासनाशित्वम् । कटुत्वञ्च । इति भाव-
प्रकाशः ॥ (अस्य गुणाः पर्य्यायाश्च यथा, भाव-
प्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ।
"चक्रमर्द्दः प्रपुन्नाटो दद्रुघ्नो मेषलोचनः ।
पद्माटः स्यादेडगजश्चक्री पुन्नाट इत्यपि ॥
चक्रमर्द्दो लघुः स्वादू रूक्षः पित्तानिलापहः ।
हृद्यो हिमः कफश्वासकुष्ठदद्रुक्रिमीन् हरेत् ॥
हन्त्युष्णन्तत्फलं कुष्ठकण्डूदद्रुविषानिलान् ।
गुल्मकासक्रिमिश्वासनाशनंकटुकं स्मृतम् ॥")

**चक्रमर्द्दकः**, पुं, (चक्रं दद्रुरोगविशेषं मृद्नातीति ।

मृद् + ण्वुल् ।) चक्रमर्द्दः । इत्यमरः । २ । ४
१४७ ॥ (स्त्रियान्तु कापि अत इत्वञ्च ।

राजमातृविशेषः । यथा, राजतरङ्गिण्यां । ४ । २१३ ।
“ललितादित्यभूभर्त्तुर्वक्ष्नभा चक्रमर्द्दिका ॥”)

**चक्रयानं**, क्ली, (चक्रेण अन्वितं यानम् ।)

रथादि । चक्रयुक्तवाहनम् । इत्यमरटीकायां रायमुकुटादयः ॥

**चक्ररदः**, पुं, (चक्रवद्वृत्तो रदः दन्तोऽस्येति ।)

शूकरः । इति त्रिकाण्डशेषः ॥

**चक्रलक्षणा**, स्त्री, (चक्रे चक्राकारे दद्रौ मण्डला-

कारे कुष्ठादौ वा लक्षणं आरोग्याय चिह्नं आरोग्यसूचनमित्यर्थः यस्याः ।) गुडूची । इति रत्नमाला ॥ (चक्रं लक्षणं यस्य इति व्युत्पत्त्या ।
रथे विष्णौ च पुं ॥)

**चक्रलताम्रः**, पुं, (चक् + रक् । चक्रः तृप्तिजनकः

लताम्रः यत्र यस्य वा ।) बद्धरसालवृक्षः । इति राजनिर्घण्टः ॥

**चक्रला**, स्त्री, (चक्रं चक्राकारं लाति आदत्ते

चक्राकारेण वर्द्धत इति यावत् । ला + कः तत-
ष्टाप् ।) उच्चटा । इत्यमरः । २ । ४ । १६० ॥

**चक्रवर्त्तिनी**, स्त्री, (चक्राकारेण वर्त्तते इति ।

वृत् + णिनिः ।) जनीनामगन्धद्रव्यम् । इत्य-मरः । २ । ४ । १५३ ॥ अलक्तकः । जटामांसी ।
इति राजनिर्घण्टः ॥ (चक्रं पृथ्वीचक्रं वर्त्तते अस्यां यद्वा चक्रं सेनाचक्रं अशेषव्यूहरच-नयाधिष्ठितं सेनावृन्दं वर्त्तयितुं शीलमस्या इति । सर्व्वभूमेरधीश्वरी ॥ चक्रेषु समूहेषु वर्त्तते या । यूथेश्वरी । यथा, कथासरित्-सागरे । २० । ११४ ।
“एवं बाल्येऽपि जाताहं डाकिनीचक्रवर्त्तिनी ॥”)

**चक्रवर्त्ती**, [न्] पुं, (चक्रं पद्माकारशुभचिह्नं

करे वर्त्तते यस्य । वृत् + णिनिः । यद्वा चक्रं पृथ्वीचक्रं तेन वर्त्तते इति । वृत + णिनिः ।)

तत्पर्य्यायः । कोकः २ चक्रः ३ रथाङ्गाह्वय-नामकः ४ । इत्यमरः । २ । ५ । २२ ॥ भूरि-प्रेमा ५ द्वन्द्वचारी ६ सहायः ७ कान्तः ८ कामी ९ रात्रिविश्लेषगामी १० रामावक्षोजो-पमः ११ कामुकः १२ । अस्य मांसगुणाः । लघुत्वम् । स्निग्धत्वम् । बलप्रदत्वञ्च । इति राजनिर्घण्टः ॥ (यथा, चरके सूत्रस्थाने २७ अ ।
“चक्रवाकास्तथान्ये च खगाः सन्त्यम्बुचारिणः ।”)

**चक्रवाटः**, पुं, (चक्रेण चक्राकारेण वाटः वेष्टनं

यस्य ।) क्रियारोहः । पर्य्यन्तः । शिखातरुः । इति मेदिनी । टे । ६२ ॥

**चक्रवाडं**, क्ली, (चक्रवद् वाडते वेष्टयतीति । वाड

+ अच् ।) चक्रबालम् । इत्यमरटीकायां भरतः ॥ पर्व्वतविशेवे पुं । इति मेदिनी । डे । ३८ ॥

**चक्रवातः**, पुं, (चक्रवद्वातः । तृणपांश्वादीन्घा-

दाय चक्राकारेण भ्राम्यति यो वायुरिति यावत् ।) भ्रमिवातः । घूर्णवातास इति भाषा ॥ तत्-पर्य्यायः । वात्या २ । यथा, भागवते । १० । ७ । २० ।
“दैत्यो नाम्ना तृणावर्त्तः कंसभृत्यः प्रचोदितः ।
चक्रवातस्वरूपेण जहारासीनमर्भकम् ॥”

**चक्रवालं**, क्ली, (चक्रमिव वाडते वेष्टयतीति ।

वाड + अच् । डस्य लत्वम् ।) मण्डलाकारेण परिणतं समूहमात्रम् । मण्डलाकारो दिक्-समूहः इति माधवी । इति भरतः ॥ तत्-पर्य्यायः । मण्डलम् २ । इत्यमरः । १ । ३ । ६ ॥ (यथा, भागवते । ५ । १८ । १४ ।
“हित्वा गृहं संसृतिचक्रवालं
नृसिंहपादं भजताकुतोऽभयम् ॥”)

**चक्रवालः**, पुं, (चक्रेण चक्राकारेण वलते लोका-

लोकौ परिवेष्ट्य विराजते इत्यर्थः । वल + बाहु-लकात् णः । अस्य पर्व्वतस्य लोकालोकपरि-वेष्टनकारितयाविराजमानत्वात्तथात्वम् ।) लोका-लोकपर्व्वतः । इत्यमरः । २ । ३ । २ ॥
(मनुष्यादीनां
मण्डलाकारेणस्थितिः । यथा, हरिवंशे । ७६ । ३५ ।
“एवं स कृष्णो गोपीनां चक्रवालैरलङ्कृतः ।

व्यूहोऽयमभिमन्युवधेप्सुना भगवता
द्रोणाचार्य्ये-
णाभिकल्पितः । यथा, महाभारते । ७ । ३३ ।
१२ -- २३ ।
“चक्रव्यूहो महाराज !
आचार्य्येणाभिकल्पितः ।
तत्र शक्रोपमाः सर्व्वे राजानो विनिवेशिताः ॥
अवस्थानेषु विन्यस्ताः कुमाराः
सूर्य्यवर्च्चसः ।
सङ्घातो राजपुत्त्राणां सर्व्वेषामभवत्तदा ॥
कृताभिसमयाः सर्व्वे सुवर्णविकृतध्वजाः ।
रक्ताम्बरधराः सर्व्वे सर्व्वे रक्तविभूषणाः ॥
सर्व्वे रक्तपताकाश्च सर्व्वे वै हेममालिनः ।
चन्दनागुरुदिग्धाङ्गाः स्रग्विणः
सूक्ष्मवाससः ॥
सहिताः पर्य्यधावन्त कार्ष्णिं प्रति
युयुत्सवः ।
तेषां दशसहस्राणि बभूवुर्दृढधन्विनाम् ॥
पौत्त्रं तव पुरस्कृत्य लक्षणं प्रियदर्शनम् ।
अन्योन्यसमदुःखास्ते
अन्योन्यसमसाहसाः ॥
अन्योन्यं स्पर्द्धमानाश्चाप्यन्योन्यस्यहिते
रताः ।
दुर्य्योधनस्तु राजेन्द्र ! सैन्यमध्ये
व्यवस्थितः ॥
कर्णदुःशासनकृपैर्वृतो राजा महारथैः ।
देवराजोपमः श्रीमान् श्वेतच्छत्त्राभिसंवृतः ॥
चामरव्यजनाक्षेपैरुदयन्निव भास्करः ।
प्रमुखे तस्य सैन्यस्य
द्रोणोऽवस्थितनायकः ॥
सिन्धुराजस्तथाऽतिष्ठत्श्रीमान्
मेरुरिवाचलः ।
सिन्धुराजस्य पार्श्वस्था
अश्वत्थामपुरोगमाः ॥
सुतास्तव महाराज ! त्रिंशत्त्रिदशसन्निभाः ।
गान्धारराजः कितवः शल्यो
भूरिश्रवास्तथा ।

समुद्रपरिवृतायाः सर्व्वभूमेरीश्वरः ।
तत्पर्य्यायः ।
सार्व्वभौमः २ । इत्यमरः । २ । ८ । २ ॥
(यथा,
शकुन्तलायां १ म अङ्के ।
“जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव ।
पुत्त्रमेवं गुणोपेतं चक्रवर्त्तिनमाप्नुहि ॥”)
वास्तूकम् । इति राजनिर्घण्टः ॥ (श्रेष्ठः ।
यथा,
गीतगोविन्दे । १ । २ ।
“वाग्देवताचरितचित्रितचित्तसद्मा
पद्मावतीचरणचारणचक्रवर्त्ती॥”
“चारणचक्रवर्त्ती नर्त्तकश्रेष्ठः ।” इति तट्टी-
कायां चैतन्यदासः । यद्वा पद्मावती
महालक्ष्मीः
राधा तस्याश्चरणचार्णे परिचर्य्यायां यच्चक्रं
मण्डलं तत्र वर्त्तते इति व्युत्पत्त्या वैष्णवसम्प्र-
दायिविशेषः ॥)

**चक्रवाकः**, पुं स्त्री, (चक्र इत्याख्यया उच्यतेऽसौ ।
वच + कर्म्मणि घञ् । ततो “न्यङ्क्वादीनाञ्च ।”
७ । ३ । ५३ । इति कुत्वम् ।) पक्षिविशेषः ।
चकाचकि इति भाषा ॥ (यथा, महाभारते ।
१ । ६६ । ५९ ।
“धृतराष्ट्री तु हंसांश्च कलहसांश्च सर्व्वशः ।
चकवाकांश्च भद्रं ते जनयामास सैव तु ॥”)

शारदीषु सचन्द्रासु निशासु मुमुदे सुखी ॥”)

**चक्रवृद्धिः**, स्त्री, (चक्रमिव चक्रभ्रमणमिव वृद्धिः
उत्तरोत्तरं वृद्धेरपि वृद्धिरित्यर्थः ।) यत्र वृद्धि-
रूपं धनं दातुमशक्तोऽधमर्णः सवृद्धिकमिदं
दास्यामीतिस्वीकरोति तत्र यावृद्धिः सा । सुदेर
मुद इति भाषा । यथाह नारदः ।
“वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृता ॥”
(तथाच मनुः । ८ । १५३ ।
“चक्रवृद्धिः कालवृद्धिः कारिता कायिका च या ।”
“कायिका कायसंयुक्ता मासग्राह्या च कालिका ।
वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता ऋणिना कृता ॥”
इति तट्टीकायां कुल्लूकभट्टधृतबृहस्पतिवचनम् ॥)

**चक्रव्यूहः**, पुं, (चक्रवत् मण्डलाकारेण रचितो-
व्यूहः रचनयाधिष्ठापितः सेनासमूह इति
यावत् ।) युद्धार्थमण्डलाकारेण सैन्यरचना ।
(एतस्य रचनालक्षणादिश्चक्रशब्देद्रष्टव्यः ॥

पार्श्वतः सिन्धुराजस्य व्यराजन्त
महारथाः ॥”)

**चक्रशल्या**, स्त्री, (चक्रवत् चक्राकारेण वा शल्य
मत्र ।) काकतुण्डी । श्वेतगुञ्जा । इति राज-
निर्घण्टः ॥

**चक्रश्रेणी**, स्त्री, (चक्रमिव चक्राणां वा श्रेणी
यत्र ।) अजशृङ्गीवृक्षः । इति रत्नमाला ॥

**चक्रसंज्ञं**, क्ली, (चक्रेण वैद्यकयोगचक्रे ण संज्ञायते
इति । सं + ज्ञा + कः । चक्रस्य संज्ञा संज्ञा
यस्य इति वा ।) वङ्गम् । इति हेमचन्द्रः ॥

**चक्रसंवरः**, पुं, (चक्रं अविद्याकामकर्म्मादिजन्य-
विषयवासनासमूहं इन्द्रियाणां समूहं वा
संवृणोति संशमयतीति । सं + वृ + अच् ।)
बुद्धभेदः । तत्पर्य्यायः । हेरम्बः २ हेरुकः
३
देवः ४ वज्रकपाली ५ निशुम्भी ६
शशिशेखरः
७ वज्रटीकः ८ । इति त्रिकाण्डशेषः ॥

**चक्रा**, स्त्री, (चक् तृप्तौ + रक् । ततष्टाप् ।) नागर-
मुस्ता । कर्क्कटशृङ्गी । इति राजनिर्घण्टः
॥

**चक्राङ्की**, स्त्री, (चक्रेण चक्राकारेण अङ्कते गच्छती-
त्यर्थः । अकि गतौ + अच् ततो ङीष् ।)
हंसी ।
इति शब्दरत्नावली ॥ चक्राकी च पाठः ॥

**चक्राङ्गः**, पुं, स्त्री, (चक्रेण चक्राकारेण अङ्गति
गच्छतीति । अङ्ग + अच्) हंसः । इत्यमरः
।
२ । ५ । २३ ॥ (यथा, महाभारते । ८ ।
४१ । २१ ।
“इदमूचुःस्म चक्राङ्गावचः काकं विहङ्गमाः
॥”-
चक्रमङ्गमस्येति व्युत्पत्त्या रथोऽपि ॥
(चक्र)
वाकः । यथा, मनुः । ५ । १२ ।
“कलविङ्कं प्लवं हंसं चक्राङ्गं
ग्राम्यकुक्कुटम् ॥”)

**चक्राङ्गा**, स्त्री, (चक्रमिवाङ्गमस्त्यस्याः इति ।
"अर्श आदिभ्योऽच् ।" ५ । २ । १२७ । इत्यच्
ततष्टाप् ।) सुदर्शना लता । इति रत्नमाला ॥

**चक्राङ्गी**, स्त्री, (चक्राङ्ग + जातौ ङीष् ।) कटु-
रोहिणी । इति मेदिनी । गे । ३५ ॥ (अस्याः
पर्य्यायाः यथा, भावप्रकाशस्य पूर्ब्बखण्डे १
भागे ।
"कट्वी तु कटुका तिक्ता कृष्णभेदा कटुम्भरा ।
अशोका मत्स्यशकला चक्राङ्गी शकुलादनी ॥
मत्स्यपित्ता काण्डरुहारोहिणी कटुरोहिणी ॥")
हंसी । इति शब्दरत्नावली ॥ हिलमोचिका ।
इति त्रिकाण्डशेषः ॥ मञ्जिष्ठा । वृषपर्णी । इति
राजनिर्घण्टः ॥ कर्क्कटशृङ्गी । इति रत्नमाला
॥

**चक्राटः**, पुं, (चक्रं धूर्त्तताजालं शाठ्यसमूहं
आलम्ब्य अटतीति । अट् + अच् ।) विषवैद्यः ।
धूर्त्तः । दीनारः । इति मेदिनी । टे । ४२ ॥

**चक्राणः**, त्रि, (चक्रे कर्म्मादिकं इति । कृ + कान
प्रत्ययः । ततो धातौ अभ्यस्ते णत्वम् ।)
कृतवान् । कर्म्मवाच्ये कृतः । भाववाच्ये क्ली
कृतम् । इति मुग्धबोधव्याकरणं तट्टीका च ॥

**चक्राधिवासी**, [न्] पुं, (चक् तृप्तौ + रक् । चक्रं
तृप्तिजनकं अधिवासयतीति । अधि + वस् +
णिच् + णिनिः ।) नागरङ्गवृक्षः । इति
त्रिकाण्डशेषः ॥

**चक्रावर्त्तः** पुं, (चक्राकारः आवर्त्तः ।) घूर्णनम् ।
इति हेमचन्द्रः ॥

**चक्राह्वः**, पुं, (चक्र इत्याह्वा संज्ञा यस्य ।)
चक्रमर्द्दः । इति राजनिर्घण्टः ॥ (चक्रवाक-
पक्षिविशेषः । यथा, भागवते । ३ । १० । २४ ।
"हंससारसचक्राह्वकाकोलूकादयःखगाः ॥"
यथाच, हारीते प्रथमस्थाने ११ अध्याये ।
"चक्राह्वोऽतिकषायशुक्रजननोवृष्योऽतिरुच्यो-
मृदुः ॥")

**चक्रिः**, पुं, (करोतीति । कृ + "आदृगमहनजनः
किकिनौ लिट् च ।" ३ । २ । १७१ । इति
किन् ।
सोऽस्त्यस्य इति ।) कुलालः । (चक्रं फणा
अस्त्यस्य
इति ।) सर्पः । सूचकः । इति विश्वमेदिन्यौ ॥
अजः । तैलिकभेदः । इति शब्दरत्नावली ॥
चक्रवर्त्ती । इति हेमचन्द्रः ॥ चक्रमर्द्दः ।
तिनिशः । व्यालनखः । काकः । खरः । इति
राजनिर्घण्टः ॥ (कुलालतैलिकराजचक्रवर्त्त्या-
द्यर्थे प्रमाणं यथा आर्य्यासप्तशत्याम् । ५९२ ।
"स्नेहमयान् पीडयतः किं चक्रेणापि तैल-
कारस्य ।
चालयति पार्थिवानपि यः स कुलालः परं
चक्री ॥")
चक्रविशिष्टे त्रि ॥ (चक्रयुक्तरथादियानारूढः ।
यथाह मनुः । २ । १३८ ।
"चक्रिणो दशमीस्थस्य रोगिणो भारिणः
स्त्रियाः ॥"
"चक्रिणः चक्रयुक्तरथादियानारूढस्य ॥"
इति तट्टीकायां कुल्लूकभट्टः ॥")

**चक्रीवान्**, [त्] पुं, स्त्री, ("आसन्दीवदष्ठीव-
च्चक्रीवदिति ।" ८ । ३ । १२ । चक्रशब्दस्य
चक्री-
भावः ततो निपातनात् साधुरिति ।) गर्द्दभः ।
इत्यमरः ॥ राजविशेषः । इति
सिद्धान्तकौमुदी ॥

**चक्रुः**, पुं, (करोतीति । कृ + "कुर्भ्रश्च ।" उणां
१ । २२ । इति कुः ।) कर्त्ता । इति सिद्धान्त-
कौमुद्यामुणादिवृत्तिः ॥

**चक्रेश्वरी**, स्त्री, (चक्राणां जिनविशेषाणां ईश्वरी
अधिष्ठात्री ।) जिनानां विद्यादेवीविशेषः ।
इति हेमचन्द्रः ॥

**चक्ष**, ल ङ वदे । इति कविकल्पद्रुमः ॥ (अदां-
आत्मं-सकं-सेट् ।) वदः कथनम् । (दर्शने च
इति केचित् ।) ल ङ, आचष्टे धर्म्मं धीरः ।
तृतीयस्वरानुबन्ध इति प्राञ्चः । इकार उच्चा-
रणार्थ इति केचित् । छन्दसि नुणागमार्थ इति
केचित् । वेदेषूच्चारणार्थ इति केचित् । अत्र
बहवस्तु तृतीयस्वरो भ्रमकारितः किन्तु
चतुर्थ-
स्वरानुबन्धोऽयं निष्ठाया इम्निषेधार्थः तेन
दर्शनेन्द्रियम् । तस्य ग्राह्यं उद्भूतरूपम् १
तद्वद्-
द्रव्यम् २ पृथक्त्वम् ३ संख्या ४ विभागः ५
संयोगः ६ परत्वम् ७ अपरत्वम् ८ स्नेहः ९
द्रवत्वम् १० संख्यापरिमाणम् ११
योग्यवृत्ति-
क्रिया १२ योग्यवृत्तिजातिः १३
योग्यवृत्तिसम-
वायः १४ । अस्येन्द्रियसहकारिणः
आलोकः
उद्भूतरूपं महत्त्वम् । इति भाषापरिच्छेदः ॥
अस्याधिष्ठात्री देवता सूर्य्यः । इति श्रीभाग-
वतम् । तत्पर्य्यायः । लोचनम् २ नयनम् ३
नेत्रम् ४ ईक्षणम् ५ अक्षि ६ दृक ७ दृष्टिः ८ ।
इत्यमरः । २ । ६ । ९३ ॥ अम्बकम् ९
दर्शनम्
१० । इति हेमचन्द्रः ॥ तपनम् ११ । इति
राजनिर्घण्टः ॥ विलोचनम् १२ दृशा १३
वीक्षणम् १४ प्रेक्षणम् १५ दैवदीपः १६ देव-
दीपः १७ दृशिः १८ दृशी १९ । इति शब्द-
रत्नावली ॥ * ॥ यथा, कर्म्मलोचने ।
"पाणिभ्यां न स्पृशेच्चक्षुश्चक्षुषी नैकपाणिना
।
चक्षुः परहिताकाङ्क्षी न स्पृशेदेकपाणिना ॥"
मेषशृङ्गीवृक्षः । इति रत्नमाला ॥

**चक्षुर्व्वहनं**, क्ली, (चक्षुस्तज्ज्योतिर्व्वहत्यनेनेति ।
वह + ल्युट् । त्तक्षुर्ज्योतिवृद्धिकारित्वात्त
तथा-
त्वम् ।) मेषशृङ्गीवृक्षः । इति रत्नमाला ॥

**चक्षुःश्रवाः**, [स्] पुं, (चक्षुर्नयनमेव श्रवः श्रवणं
यस्य ।) सर्पः । इत्यमरः । १ । ८ । ७ ॥
(यथा, नैषधे । १ । २८ ।
"इति स्म चक्षुःश्रवसां प्रिया नले
स्तुवन्ति निन्दन्ति हृदा तदात्मनः ॥"
अस्य पर्य्याया यथा, वैद्यकरत्नमालायाम् ।
"व्याडश्चाशीविषः सर्पो द्विजिह्वोऽहिः
सरीसृपः ।
चक्षुःश्रवा दन्दशूको गूढपात् पन्नगोरगाः ॥")

**चक्षुष्यं**, क्ली, (चक्षुषे लोचनाय हितम् । चक्षुस्
+ "शरीरावयवात् यत् ।" ५ । १ । ६ । इति

स च लिङ्वत् ।) कर्त्ता । इति मुग्धबोधम् ॥
(यथा, ऋग्वेदे । १ । ९ । २ ।
"चक्रिं विश्वानि चक्रये ।"
"चक्रये पुरुषार्थकरणशीलाय ॥" इति दया-
नन्दकृतभाष्यम् ॥)

**चक्रिका**, स्त्री, (चक्रं चक्रवद्गोलाकारो विद्यते

अत्रास्या वा । चक्र + ठन् टाप् च ।) जानु ।
इति राजनिर्घण्टः ॥ (यथा, राजतरङ्गिण्याम् ।
४ । ३७६ ।
"अथोभयधनादायि भृत्यचक्रिकया समम् ॥")

**चक्री**, [न्] पुं, (चक्रं सुदर्शनास्त्रं मनस्तत्त्वा-

त्मकमिति यावत् अस्यास्तीति । चक्र + इनिः
।)
विष्णुः । (यथा, महाभारते । १३ । १४९ ।
११० ।
"अरौद्रः कुण्डली चक्री विक्रम्यूर्ज्जितशासनः
॥"
चक्रं ग्रामचक्रं ग्रामसमूह इत्यर्थः अधिकारि-
तयास्त्यस्य इति इनिः ।) ग्रामजालिकः ।
(चक्रं चक्राकारचिह्नविशेषोऽस्त्यस्य ।) चक्र-
वाकः । (चक्रं घटादिनिर्म्माणकरणयन्त्रविशेषः
।

वर्ज्जनार्थे ख्याञकसाञादेशयोरप्राप्तौ आचष्टं
वर्ज्जनमित्याहुः । इति दुर्गादासः ॥

**चक्षणं**, क्ली, (चक्ष्यते कथ्यते मद्यपानाय मद्य-

पानेन सह वा । चक्ष + ल्युट् । यद्वा, चष्यते
भक्ष्यते मद्यमनेनेति । चष + ल्युट् निपातनात्
कान्तागमश्च ।) मद्यपानरोचकभक्ष्यद्रव्यम् ।
इति
हेमचन्द्रः । ३ । ५ । ७१ ॥ (चक्ष + भावे
ल्युट् ।)
कथनम् । (दर्शनम् । यथा, ऋग्वेदे । १ । १३
। ५ ।
"स्तृणीत वर्हिरानुषग्घृतपृष्ठं मनीषिणः ।
यत्रामृतस्य चक्षणम् ॥")

**चक्षाः**, [स्] पुं, बृहस्पतिः । इति त्रिकाण्डशेषः ।

उपाध्यायः । इत्युणादिकोषः ॥ (क्ली, दर्श-
नम् । यथा, ऋग्वेदे । १ । ७ । ३ ।
"इन्द्रो दीर्घाय चक्षस आ सूर्य्यं रोहयद्दिवि ।
वि गोभिरद्रिमैरयत् ॥")

**चक्षुः**, [स्] क्ली, (चष्टे पश्यत्यनेनेति । चक्ष +

"चक्षेः शिच्च ।" उणां । २ । १२० । इति
उसिः स च शित् । शित्वात् ख्याञादेशाभावः
।)

यत् ।) प्रपौण्डरीकम् । अस्य पर्य्याया यथा,
वैद्यकरत्नमालायाम् ।
"प्रपौण्डरीकं चक्षुष्यं शीतं श्रीपुष्पपुण्डरी ॥"
सौवीराञ्जनम् । खर्परीतुत्थम् । इति राज-
निर्घण्टः ॥

**चक्षुष्यः**, पुं, (चक्षुषे हितः । "शरीरावयवात्

यत् ।" ५ । १ । ६ । इति यत् ।) केतकवृक्षः
।
पुण्डरीकवृक्षः । इति मेदिनी । ये । ८२ ॥
शोभाञ्जनवृक्षः । इति राजनिर्घण्टः ॥ रसा-
ञ्जनम् । इति हेमचन्द्रः ॥

**चक्षुष्यः**, त्रि, (चक्षुषे हितः । चक्षुष् + यत् ।)

प्रियदर्शनः । इति जटाधरः ॥ (यथा, राज-
तरङ्गिण्याम् । ३ । ४९५ ।
"धिया भाग्यानुगामिन्या चेष्टमानो न
याचितम् ।
अभूत् सर्व्वस्य चक्षुष्यः स तु दुर्ल्लभवर्द्धनः
॥"
चक्षुजः । इति विश्वः । यथा, माघे । ८ ।
५७ ।
"चक्षुष्यः खलु महताम्परैरलङ्घ्यः ॥"
"चक्षुषि भवश्चक्षुष्यः प्रियोऽक्षिजश्च ।" इति
तट्टी-
कायां मल्लिनाथः ॥) चक्षुर्हितः । इति मेदिनी
।
ये । ८२ ॥ (यथा, सुश्रुते सूत्रस्थाने २०
अध्याये ।

"दक्षिणो मारुतः श्रेष्ठश्चक्षुष्यो बलवर्द्धनः ॥")

**चक्षुष्या**, स्त्री, (चक्षुष्य + टाप् ।) कुलत्थिका ।

सुभगा । इति मेदिनी । ये । ८२ ॥
अजशृङ्गी ।
अरण्यकुलत्थिका । इति राजनिर्घण्टः ॥

**चघ**, न घातने । इति कविकल्पद्रुमः ॥ (स्वां-परं-

सकं-सेट् ।) न, चघ्नोति । इति दुर्गादासः ॥

**चङ्कुरं**, क्ली, (चकति तृप्नोत्यनेन । चक + उरच् ।

इदित्वान्नुम् ।) यानमात्रम् । तत्पर्य्यायः ।
धोरणम् २ । इति त्रिकाण्डशेषः ॥

**चङ्कुरः**, पुं, (चक्यते तृप्यतेऽनेन । चकि + उरच् ।)

इदित्वान्नुम् ।) रथः । वृक्षः । इति मेदिनी ।
रे । १५३ ॥

**चङ्क्रमणं**, क्ली, (पुनःपुनरतिशयेन वा क्राम्यतीति ।

चङ्क्रम + भावे ल्युट् ।) पुनःपुनर्भ्रमणम् ।
(यथा,
भागवते । ३ । २१ । ५० ।
"नूनं चङ्क्रमणं देव ! सतां संरक्षणाय ते ।
वधाय चासतां यत्त्वं हरेः शक्तिर्हि पालिनी ॥")
अतिशयभ्रमणम् । इति व्याकरणम् ॥
(यथा,
सुश्रुते सूत्रस्थाने १९ अध्याये ।
"स्थानासनं चङ्क्रमणं
यानयानातिभाषणम् ॥")
अनतिदेहपीडाकारकचङ्क्रमणस्यगुणाः ।
आयु-
र्बलमेधाग्नीन्द्रियशुद्धिकारित्वम् ।
सदोपानद्रहित-
पादचङ्क्रमणदोषाः । अनारोग्यत्वम् ।
अनायुष्य-
त्वम् । इन्द्रियदृष्टिनाशित्वञ्च । इति
राजवल्लभः ॥

**चङ्गः**, त्रि, शोभनः । दक्षः । इति मेदिनी । गे । ७ ॥

(पुं, राजमन्त्रिविशेषः । यथा,
राजतरङ्गिण्याम् ।
चञ्चूर्य्यन्तौ रमन्तौ स्म किशोराविव चञ्चलौ ॥")
तत्पर्य्यायः । चलनम् २ कम्पनम् ३ कम्प्रम् ४
चलम् ५ लोलम् ६ चलाचलम् ७ तरलम् ८
पारिप्लवम् ९ परिप्लवम् १० । इत्यमरः । ३ ।
१ । ७५ ॥ चपलम् ११ चटुलम् १२ । इति तट्टीका ॥
वायौ पुं । इति मेदिनी । ले । ९० ॥

**चञ्चला**, स्त्री, (चञ्चं लाति । ला + कः टाप् च ।

यद्वा चञ्चलं चाञ्चल्यं अस्त्यस्याः इति अच् ।)
लक्ष्मीः । विद्युत् । इति मेदिनी । ले । ९० ॥
पिप्पली । इति शब्दचन्द्रिका ॥ (वर्णवृत्त-
विशेषः । यथा, शब्दार्थचिन्तामणिः ।
"तूर्य्यतालपक्षिराजमेरुहारनायकेन ।
चामरध्वजेन चापि मण्डिता सुवर्णकेन ॥
वर्णितातिसुन्दरेण पन्नगेन्द्रपिङ्गलेन ।
चञ्चला चकोरचारुलोचने सुमङ्गलेन ॥")

**चञ्चा**, स्त्री, (चञ्च + अच् + टाप् ।) नलनिर्म्मिता ।

चाच इति भाषा । (चञ्चेव मनुष्यः । इति
इवार्थे कन् ततः "लुम्मनुष्ये ।" ५ । ३ । ९८ ।
इति कनो लुप् ।) तृणनिर्म्मितपूरुषः । इति
मेदिनी । चे । ५ ॥

**चञ्चुः**, पुं, (चन्च + बाहुलकात् उः ।) गोना-

डीचः । स तु नाडीचशाकः । एरण्डवृक्षः ।
इति मेदिनी । चे । ५ ॥ मृगः । इति शब्द-
रत्नावली ॥ रक्तैरण्डः । क्षुद्रचञ्चुवृक्षः । इति
राजनिर्घण्टः ॥

**चञ्चुः**, स्त्री, (चञ्चति प्राप्नोति गृह्णाति भक्ष्यमनया ।)

पक्षिणामोष्ठः । पाखिर ठोँट् इति भाषा । जानीमहे
(यथा, चातकाष्टके । ६ ।
"भ्रातश्चातक ! पातकं किमपि ते सम्यङ् न
यत्तेऽस्मिन्न पतन्ति चञ्चुपुटके द्वित्राः पयो-
बिन्दवः ॥")
तत्पर्य्यायः । त्रोटिः २ । इत्यमरः । २ । ५ । ३६ ॥
चञ्चूः ३ त्रोटी ४ चञ्चुका ५ । इति शब्दरत्ना-
वली ॥ सृपाटिका ६ । इति हेमचन्द्रः ॥ पत्र-
शाकविशेषः । तत्पर्य्यायः । विजला २ चञ्चूः ३
कलभी ४ चीरपत्रिका ५ चञ्चुरः ६ चञ्चुपत्रः ७
सुशाकः ८ क्षेत्रसम्भवः ९ । अस्या गुणाः । मधु-
रत्वम् । तीक्ष्णत्वम् । कषायत्वम् । मलशोधन-

**चञ्चुका**, स्त्री, (चञ्चु + स्वार्थे कन् टाप् च ।)

चञ्चुः । पक्षिणामोष्ठः । इति शब्दरत्नावली ॥

**चञ्चुपत्रः**, पुं, (चञ्चाकारं पत्रमस्य) चञ्चुशाकः ।

इति राजनिर्घण्टः ॥

**चञ्चुभृत्**, पुं, स्त्री, (चञ्चुं बिभर्त्तीति । भृ +

क्विप् ।) पक्षी । इति त्रिकाण्डशेषः ॥

**चञ्चुमान्**, [त्] पुं, स्त्री, (चञ्चुरस्त्यस्येति । नित्य-

योगे मतुप् ।) पक्षी । इति हारावली ॥

**चञ्चुरः**, पुं, (चञ्चति चञ्चुवदाकृतिं गच्छतीति ।

चञ्च गतौ + बाहुलकात् उरच् ।)
चञ्चुशाकः ।
इति राजनिर्घण्टः ॥ (दक्षः । यथा,
काशी-
खण्डे । १० । ४६ ।
"विज्ञाताखिलशास्त्रार्थो
लौकिकाचारचञ्चुरः ।
कदाचिच्चिन्तयामास हृदिध्यात्वा
महेश्वरम् ॥")

**चञ्चुसूचिः**, पुं, (चञ्चुः सूचिरिव यस्य ।) कार-

ण्डवपक्षी । तत्पर्य्यायः । सुगृहः २
पीततुण्डः ३ ।
इति त्रिकाण्डशेषः । मरुलः ४
चञ्चुसूचिकः ५ ।
इति हेमचन्द्रः । ४ । ४०७ ॥

**चञ्चुसूचिकः**, पुं स्त्री, (चञ्चुसूचि + स्वार्थेकन् यद्वा

चञ्चुः सूचिरिव यस्य इति कप् ।)
चञ्चुसूचि-
पक्षी । इति हेमचन्द्रः । ४ । ४०७ ॥

**चञ्चूः**, स्त्री, (चञ्चु + "ऊङुतः ।" ४ । १ । ६६ ।

इत्यस्य "अप्राणिजातेश्चारज्वादीनामुप-
संख्यानम् ।" इति वार्त्तिकोक्त्या ऊङ् ।)
चञ्चुः ।
इति हेमचन्द्रः ॥

**चट**, भेदे । इति कविकल्पद्रुमः । (भ्वां-परं-सकं-

सेट् ।) चटति । इति दुर्गादासः ॥

"अन्तरङ्गाश्च चङ्गाद्या येऽभूवंस्तत्र मन्त्रिणः ।
तैः स्त्रीवदासितन्तूर्ष्णीं त्रस्तैः शस्त्रान्वितैरपि ॥")

**चचेण्डा**, स्त्री, (चि + बाहुलकात् डः । चं उप-
चीयमानं अण्डवत् फलं अस्याः ततो निपा-
तनात् साधुः ।) फललताविशेषः । चिचिडा
इति भाषा । तत्पर्य्यायः । वेश्मकूलः २ श्वेत-
राजी ३ बृहत्फलः । अस्या गुणः । पटोल-
गुणात् किञ्चिन्न्यूनत्वम् । विशेषात् शोषिणो
हितत्वञ्च । इति मदनविनोदः ॥

**चच्चत्पुटः**, पुं, (चच्चत् गुरुलघूनां लयविशेषाणां
पुटं द्वन्द्वं यत्र ।) तालप्रभेदः । यथा, --
"ताले चच्चत्पुटे ज्ञेयं गुरुद्वन्द्वं लघु प्लुतम् ॥"
इति सङ्गीतदामोदरः ॥
चञ्चत्पुटोऽपि कुत्रचित् पाठः ॥

**चञ्चरी**, स्त्री, पुं, (चञ्चूर्य्यते पुनः पुनरतिशयेन
वा चरति भ्राम्यतीति । चर + यङ् लुक् ततो
टक् टित्वात् ङीप् च ।) भ्रमरी + यथा, --
"करी वरी भरीति चेद्दिशं सरी सरीति काम् ।
स्थिरी चरी करीति चेन्न चञ्चुरीति चञ्चरी ॥"
इत्यद्भटः ॥

**चञ्चरीकः**, पुं, (चरति पुनःपुनरिति "फर्फ-
रीकादयश्च ।" उणां । ४ । २० । इति यङ्
लुगन्तेन साधुः ।) भ्रमरः । इति त्रिकाण्डशेषः ॥

**चञ्चलं**, त्रि, (चञ्चं गतिं लातीति । ला + कः ।)
अस्थिरम् । (यथा, हरिवंशे । ६४ । ७ ।
"एव वत्सान् पालयन्तौ शोभमानौ महावनम् ।
त्वम् । गुल्मोदरविबन्धार्शोग्रहणीनाशित्वञ्च॥
"चिञ्चश्चञ्चुश्चिञ्चुकी च दीर्घपत्रा सतिक्तिका ।
चञ्चुः शीता सरा रुच्या स्वाद्वी दोषत्रयापहा ।
धातुपुष्टकरी बल्या मेध्या पिच्छिलिका स्मृता ॥"
इति भावप्रकाशः ॥
तस्या बीजस्य गुणाः । कटुत्वम् । उष्णत्वम् ।
गुल्मशूलोदररोगविषत्वग्दोषकण्डूखर्जूकुष्ठनाशि-
त्वञ्च । इति राजनिर्घण्टः ॥ (व्यवहारोऽस्य यथा,
"आमे परिणते यस्तु विबन्धमतिसार्य्यते ।
सशूलपिच्छमल्पाल्पं बहुशः संप्रवाहिकम् ॥
तं भूलकानां यूषेण वदराणामथापि वा ।
उपोदकायाः क्षीरिण्या यवान्या वास्तुकस्य वा ॥
सुवर्च्चलायाश्चञ्चोर्व्वा शाकेनावल्गुजस्य वा ॥"
इति चरके चिकित्सास्थाने दशमेऽध्याये ॥)

**चट**, क वधे । भेदे । इति कविकल्पद्रुमः ॥ (चुरां-
परं-सकं-सेट् ।) क, चाटयति । इति दुर्गा-
दासः ॥

**चटकः**, पुं, (चटति भिनत्ति धान्यादिकं चञ्चुपुटेनेति ।
चट भेदे + "नन्दिग्रहीति ।" ३ । १ । १३४ ।
इति पचादित्वादच् ततः स्वार्थे कन् ।) पक्षि-
विशेषः । चटा इति भाषा ॥ (यथा, देवी-
भागवते । १ । ४ । ८ ।
"वीक्ष्य प्रेमाद्भुतं तत्र बाले चटकयोस्तदा ।
व्यासश्चिन्तातुरः कामं मनसा समचिन्तयत् ॥")
तत्पर्य्यायः । कलविङ्कः २ । इत्यमरः । २ । ५ । १८ ॥
चित्रपृष्ठः ३ गृहनीडः ४ वृषायणः ५ । इति
हारावली ॥ काभुकः ६ नीलकण्ठकः ७ काल-
कण्ठकः ८ कामचारी ९ । इति जटाधरः ॥
कलाविकलः १० । इति शब्दरत्नावली ॥ तन्मांस-
गुणाः । शीतत्वम् । लघुत्वम् । शुक्रबलप्रदत्वञ्च ।
तद्वच्चारण्यचटकं तत् क्रव्यं लघु पथ्यदम् ॥
इति राजनिर्घण्टः ॥
("चटकाः श्लेष्मलाः स्निग्धा वातघ्नाः शुक्रलाः परम् ।
गुरूष्णस्निग्धमधुरा वर्गाश्चातो यथोत्तरम् ॥"
इति वाभटे सूत्रस्थाने षष्ठेऽध्याये ॥
"चटका मधुराः स्निग्धा बलशुक्रविवर्द्धनाः ।
सन्निपातप्रशमनाः शमभा मारुतस्य च ॥"
इति चरके सूत्रस्थाने २७ अध्याये ॥)

**चटकका**, स्त्री, (चटका + स्वार्थे कन् । "उदीचामातः स्थाने यकपूर्ब्बायाः ।" ७ । ३ । ४६ । इति पक्षे इदादेशाभावः ।) चटका । इति मुग्धबोधव्याकरणम् ॥

**चटका**, स्त्री, (चटक + टाप् ।) चटकपत्नी । (चटकस्य चटकाया वा स्त्र्यपत्यम् । चटका + ऐरक् । स्त्रियामपत्ये लुक् वक्तव्यः । तत्र टाबन्तात् तद्धिते लुप्ते "लुक् तद्धितलुकि ।" १ । २ । ४९ । इति टापो लुकि पुनः अजाद्यतष्टाप् । स च जातिलक्षणङीषो बाधकः ।) चटकस्त्र्यपत्यम् । चटी इति भाषा ॥ इत्यमरः । २ । ५ । १८ ॥ पिप्पलीमूलम् । इत्यमरटीकायां नारायणचक्रवर्त्ती ॥ श्यामापक्षी । इति राजनिर्घण्टः ॥

**चटकाशिरः** [स्] क्ली, (चटकायाः शिर इव ।) पिप्पलीमूलम् । इति हेमचन्द्रः ॥

**चटकिका**, स्त्री, (चटका + स्वार्थे कन् । "उदीचामातः स्थाने यकपूर्ब्बायाः ।" ७ । ३ । ४६ । इति इदादेशः ।) चटका । इति मुग्धबोधव्याकरणम् ।

**चटिका**, स्त्री, (चटति भिनत्ति रोगादिकं नाशयतीत्यर्थः । चट् + बाहुलकात् इकन् ।) पिप्पलीमूलम् । (चटति भिनत्ति ध्यान्यादिकं स्वचञ्चुपुटेनेति ।) चटका । इति हलायुधः ॥

**चटिकाशिरः**, [स्] क्ली, (चटिकायाः चटकपत्न्याः मस्तकमिव आकृतिरस्य ।) पिप्पलीमूलम् । इत्यमरः । २ । ९ । ११० ॥

**चटिकाशिरः**, पुं, ("सर्व्वे सान्ता अदन्ताः स्युः ।"

**चटुल्लोलः**, त्रि, (चटुलश्चञ्चलः लोलश्च । अतिचञ्चलत्वात्तथात्वम् । निपातनादलोपे साधुः ।) चाटुलोलः । सुचञ्चलः । इति हारावली । २१९ ॥

**चड**, इ क रोषे । इति कविकल्पद्रुमः ॥ (चुरां-परं-अकं-सेट् ।) इ क, चण्डयति । इति दुर्गादासः ॥

**चड**, इ ङ रोषे । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-अकं-सेट् ।) इ, कर्म्मणि चण्ड्यते । ङ, चण्डते । इति दुर्गादासः ॥

**चण**, शब्दे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) चणति । इति दुर्गादासः ॥

**चण**, म दाने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) म, चणयति । इति दुर्गादासः ॥

**चण**, मि गतौ । हिंसे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) मि, चणयति चाणयति । इति दुर्गादासः ॥

**चणकः**, पुं, (चणति वेदोच्चारणादिध्वनिना शब्दायते इति । चण शब्दे + क्वुन् ।) मुनिविशेषः । इति शब्दरत्नावली ॥ (चण्यते दीयते इति । चण दाने + क्वुन् ।) शस्यविशेषः । चणा युट छोला इति च भाषा ॥ तत्पर्य्यायः । हरिमन्थकः २ । इत्यमरः । २ । ९ । १८ ॥ हरिमन्थजः ३ । इति तट्टीका ॥ चणः ४ हरिमन्थः ५ सुगन्धः ६ कृष्णचञ्चुकः ७ बालभोज्यः ८ वाजिभक्ष्यः ९ कञ्चुकी १० । अस्य गुणाः । मधुरत्वम् । रूक्षत्वम् । मेहवान्त्यस्रपित्तनाशित्वम् । दीपनत्वम् । वर्णबलरुच्याध्मानकारित्वञ्च ॥ * ॥ आमस्य तस्य गुणाः । शीतलत्वम् । रुच्यत्वम् । सन्तर्पणत्वम् । दाहतृष्णाश्मरीशोषनाशित्वम् । गौल्यत्वम् । कषायत्वम् । इषत्कफवीर्य्यकारित्वञ्च ॥ * ॥ भृष्टस्य तस्य गुणाः । रुच्यत्वम् । वातनाशित्वम् । रक्तदोषकारित्वम् । उष्णवीर्य्यत्वम् । लघुत्वम् । स्वेदशैत्यहरत्वञ्च ॥ * ॥ तस्य यूषस्य गुणाः । मधुरत्वम् । कषायत्वम् । कफवातविकार-

**चणकाम्लवाः**, [र्] क्ली, (चणकाम्लस्य चणकलवणस्य वार् जलम् ।) क्षेत्रस्थफलवच्चणकपत्रशिशिरवारि । इति रत्नावली ॥

**चणद्रुमः**, पुं, (चणश्चणक इव द्रुमो वृक्षः ।) क्षुद्रगोक्षुर इति राजनिर्घण्टः ॥ चणीद्रुमोऽपि पाठः ॥

**चणपत्री**, स्त्री, (चणश्चणकस्तस्य पत्रमिव पत्रं यस्याः । स्त्रियां ङीप् ।) रुदन्तीवृक्षः । इति राजनिर्घण्टः ॥

**चणिका**, स्त्री, (चणति दुग्धवद्रसं ददातीति । चण दाने + क्वुण् । टाप् अत इत्वञ्च ।) तृणविशेषः । तत्पर्य्यायः । गोदुग्धा २ सुनीला ३ क्षेत्रजा ४ हिमा ५ । अस्या गुणाः । बीजैर्वृष्यत्वम् । बल्यत्वम् । अतिमधुरत्वञ्च । तृणैः पशुहितत्वम् । इति राजनिर्घण्टः ॥

**चण्डं**, क्ली, (चण्डते इति । चडि + पचाद्यच् ।) तीक्ष्णम् । इति शब्दरत्नावली ॥

**चण्डः**, पुं, (चणति चणयति वा अम्लरसं ददातीत्यर्थः । चण + "ञमन्तात् डः ।" उणां । १ । ११४ । इति डः ।) तिन्तिडीवृक्षः । चण्डते कुप्यतीति । चडि + अच् ।) यमकिङ्करः । दैत्यविशेषः । इति मेदिनी । डे । ११ ॥ (अयं हि शुम्भासुरसेनानीः । कदाचिदयं हिमाचलस्थां भगवतीं दृष्ट्वा शुम्भांय कथितवान् । ततः शुम्भार्थं भगवत्यानयनाय गतोऽसौ तल्ललाटफलकनिर्गतया चामुण्डया निहतः । एतद्विवरणं मार्कण्डेयपुराणे द्रष्टव्यम् । कार्त्तिकेयः यथा, महाभारते । ३ । २३१ । ४ ।

इत्युक्तेः पृषोदरादित्वात् सलोपः ।)
पिप्पली-
मूलम् । इत्यमरटीकायां भरतः ॥ (अस्य
पर्य्यायाः
यथा, वैद्यकरत्नमालायाम् ।
“ग्रन्थिकं पिप्पलीमूलं
षड्ग्रन्थिश्चटिकाशिरः ॥”)

**चटुः**, पुं, (चटति शोकसन्तापादिकं भिनत्तीति ।
चट भेदे + “मृगय्वादयश्च ।” उणां । १ ।
३७ ।
इति कुः ।) प्रियवाक्यम् । (यथा, माघे ।
४ । ६ ।
“छायां निजस्त्रीचटुलालसानां
मदेन किञ्चित् चटुलालसानाम् ॥”)
उदरम् । व्रतिनामासनभेदः । इति मेदिनी ।
टे । १४ ॥ प्रियभाषणे क्लीवलिङ्गोऽपि ।
इति
संक्षिप्तसारे उणादिवृत्तिः ॥

**चटुलः**, त्रि, (चटतीति । चट् + बाहुलकादुलच् ।
यद्वा, चटु + “सिध्मादिभ्यश्च ।” ५ । २ ।
९७ ।
इति मत्वर्थे लच् ।) चञ्चलः । इति हेमचन्द्रः
।
६ । ९१ ॥ (यथा, रघुः । ९ । ५८ ।
“त्रासातिमात्रचटुलैः स्मरतः सुनेत्रैः
प्रौढप्रियानयनविभ्रमचेष्टितानि ॥”)
सुन्दरः । इत्युणादिकोषः ॥

**चटुला**, स्त्री, (चटुल + “अजाद्यतष्टाप् ।” ४ ।
१ । ४ । इति टाप् ।) विद्युत् । इति जटाधरः
॥
(गायत्त्रीरूपा भगवती । यथा, देवीभागवते ।
१२ । ६ । ४७ ।
“चटुला चण्डिकाचित्रा चित्रमाल्यविभूषिता
॥”)

श्वासोर्द्ध्वकासक्लमपीनसनाशित्वम् ।
बलदीपन-
त्वञ्च ॥ * ॥ प्रातस्तज्जलपानगुणाः । चन्द्रमरी-
चिवत् शीतलत्वम् । पित्तरोगनाशित्वम् । पुष्टि-
प्रदत्वम् । पाके नैजगुणत्वम् । सन्तर्पणत्वम् ।
मञ्जुलत्वम् । मधुरत्वञ्च । इति राजनिर्घण्टः ॥ *
॥
तस्य आर्द्रभृष्टस्य गुणः । बलकारित्वम् । रोचन-
त्वञ्च ॥ * ॥ स्विन्नस्य तस्य गुणः । पित्तकफ-
नाशित्वम् ॥ * ॥ तत्सूपः क्षोभकरः ॥ * ॥
तस्य शाकस्य गुणाः । रुच्यत्वम् । दुर्ज्जरत्वम् ।
कफवातकारित्वम् । अम्लत्वम् । विष्टम्भजनक-
त्वम् । पित्तदन्तशोथनाशित्वञ्च । इति भाव-
प्रकाशः ॥

**चणकात्मजः**, पुं, (चणकस्य मुनिविशेषस्य आत्मजः ।)
वात्स्यायनमुनिः । इति हेमचन्द्रः । ३ । ५१७ ॥

**चणकाम्लकं**, क्ली, (चणकजातमम्लम् । ततः स्वार्थे
कन् ।) चणकलवणम् । तस्य गुणाः ।
अत्यम्लत्वम् ।
दीपनत्वम् । दन्तहर्षणत्वम् । लवणानुरसत्वम् ।
रुच्यत्वम् । शूलाजीर्णविबन्धनाशित्वञ्च । इति
भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥

“शिशुः शीघ्रः शुचिश्चण्डो दीप्तवर्णः
शुभाननः ॥”)

**चण्डः**, त्रि, (चण्डते रुष्टो भवतीति । चडि + पचा-
द्यच् ।) अत्यन्तकोपनः । इत्यमरः । ३ । १
। ३२ ॥
(यथा, महाभारते । ३ । २३३ । ११ ।
“चण्डाश्च शौण्डाश्च महाशनाश्च
चौराश्च दुष्टाश्चपलाश्च वर्ज्याः ॥”)
तीक्ष्णताविशिष्टः । इति शब्दरत्नावली ॥
(यथा, महाभारते । १ । ३२ । २३ ।
“दहन्तमिव तीक्ष्णांशुं चण्डवायुसमीरितम्
॥”)

**चण्डता**, स्त्री, (चण्डस्य भावः । चण्ड + तल् ।)
उग्रता । इति हेमचन्द्रः । २ । २३२ ॥

**चण्डनायिका**, स्त्री, (चण्डी कोपना नायिका ।)
दुर्गा । इति शब्दरत्नावली ॥
अष्टनायिकान्त-
र्गतनायिकाविशेषः । (यथा, दुर्गाध्याने ।
“उग्रचण्डा प्रचण्डा च चण्डोग्रा
चण्डनायिका ।
चण्डा चण्डवती चैव चामुण्डा चण्डिका
तथा ॥
आभिः शक्तिभिरष्टाभिः सततं परिवेष्टिताम्
।
चिन्तयेत् सततं दुर्गां धर्म्मकामार्थमोक्षदाम्
॥”)
तस्या ध्यानं यथा,
देवीपुराणोक्तदुर्गोत्सवपद्धतौ ।
“चण्डनायिकां नीलवर्णां षोडशभुजाम् ।
कपालं खेटकं घण्टां दर्पणञ्च धनुर्ध्वजम् ।
पाशञ्च शोभनां शक्तिं वामहस्तेन बिभ्रतीम् ॥
मुद्गरं शूलवज्रञ्च खडगञ्चैव तथाङ्कुशम् ।
शरं चकं शलाकाञ्च दक्षिणेन च बिभ्रतीम् ॥”

**चण्डरुद्रिका**, स्त्री, (चण्डः प्रचण्डः रुद्रः अधिष्ठातृ-
तयास्त्यस्याः । चण्डरुद्र + “अत इनिठनौ
।”

५ । २ । ११५ । इति ठन् । स्त्रियां टाप् । यद्वा प्रचण्डरुद्री रुद्रशक्तिविशेषः । ततः स्वार्थे कन् । टापि पूर्ब्बह्रस्वः ।) विद्याविशेषः । इति रत्नावली ॥

**चण्डवती**, स्त्री, (चण + “ञमन्ताड्डः ।” उणां । १ । ११४ । इति डः । चडि + अच् वा । चण्डश्चण्डता विद्यतेऽस्याम् । यद्वा, चण्डः रुद्रांशो भैरवविशेषो रक्षकतया विद्यतेऽस्याः । मतुप् ततो भस्य वत्वम् ।) दुर्गा । इति शब्दरत्नावली ॥ अष्टनायिकान्तर्गतनायिकाविशेषः । अस्या ध्यानं यथा । चण्डवतीं धूम्रवर्णां षोडशभुजामित्यादि शेषं चण्डनायिकाध्यानवत् । इति देवीपुराणोक्तदुर्गोत्सवपद्धतिः ॥

**चण्डा**, स्त्री, (चम् चण् वा + डः । चडि + अच् वा । ततष्टाप् ।) अष्टनायिकान्तर्गतनायिकाविशेषः । (यथा, देवीपुराणे ।
“चण्डा चण्डवती चण्डनायिकाप्यतिचण्डिका ॥”)
अस्या ध्यानं यथा । चण्डां शुक्लवर्णां षोडशभुजामित्यादि शेषं चण्डनायिकाध्यानवत् । इति देवीपुराणोक्तदुर्गोत्सवपद्धतिः ॥ जिनानां शासनदेवताविशेषः । इति हेमचन्द्रः ॥ चोरनामगन्धद्रव्यम् । इत्यमरः । २ । ४ । १२८ ॥ (यथा, चरके सूत्रस्थाने तृतीयेऽध्याये ।
“कुष्ठं हरिद्रे सुरसं पटोलं
निम्बाश्वगन्धे सुरदारुशिग्रु ।
ससर्षपं तुम्बुरुधान्यवन्यम्
चण्डाञ्च चूर्णानि समानि कुर्य्यात् ॥”)
शङ्खपुष्पी । इति मेदिनी । डे । १२ ॥ (यथा, सुश्रुते सूत्रस्थाने ३८ अध्याये ॥ “एलातगरकुष्ठमांसीध्यामकत्वक्पत्रनागपुष्पप्रियङ्गुहरेणुकाव्याघ्रनखशुक्तिचण्डास्थौणेयकश्रीवेष्टकचोचचोरकबालकगुग्गुलुसर्ज्जरसतुरुष्ककुन्दुरुकागुरुस्पृक्कोशीरभद्रदारुकुङ्कुमानि पुन्नागकेशरञ्चेति ॥” लिङ्गिनीलता । कपिकच्छुः । आखुकर्णी । श्वेतदूर्व्वा । इति राजनिर्घण्टः ॥ नदीविशेषः । इति शब्दरत्नावली ॥

**चण्डांशुः**, पुं, (चण्डाः प्रखरास्तीव्रा वा अंशवो रश्मयोऽस्य ।) सूर्य्यः । यथा, महानाटके ।
“चण्डांशोर्निशि का कथा रघुपते चन्द्रोऽयमुज्जृम्भते ।”
मरः । २ । ६ । ११९ ॥ पुंस्काण्डे वोपालित
धृतात् पुंलिङ्गोऽपि ॥

**चण्डालः**, पुं, (चण्डते कुप्यतीति । चडि कोपे + “पतिचण्डिभ्यामालञ् ।” उणां । १ । ११६ । इत्यालञ् । यद्वा, चण्डं विकटं अलं अलङ्कारो यस्य
इत्युज्ज्वलदत्तः ।) वर्णसङ्करजातिविशेषः । चाँडाल
इति भाषा । स तु ब्राह्मणीगर्भे शूद्रौरसाज्जातः ।
इति पराशरपद्धतिः ॥ तत्पर्य्यायः । प्लवः २
मातङ्गः ३ दिवाकीर्त्तिः ४ जनङ्गमः ५ निषादः ६
श्वपचः ७ अन्तेवासी ८ चाण्डालः ९ पुक्कसः १० ।
इत्यमरः । २ । १० । १९ ॥ जलङ्गमः ११
निशादः १२ श्वपक् १३ पुक्कशः १४ पुक्कषः १५ ।
इति तट्टीका ॥ निष्कः १६ । इति त्रिकाण्डशेषः ॥ तस्याकृतिर्यथा, रामायणे ।
“अथ रात्र्यां व्यतीतायां तस्यां राजा बभूव ह ।
चण्डालदर्शनो राम ! सद्य एव दुराकृतिः ॥
नीलपीताम्बरधरो रक्ताम्बरकृतोत्तरः ।
संरब्धताम्रधोराक्षः करालो हरिपिङ्गलः ॥
ऋक्षचर्म्मनिवासी च लौहाभरणभूषितः ॥”
श्मशानचण्डालस्य निवासकर्म्मादि यथा, --
“चण्डालश्वपचानान्तु वहिर्ग्रामात् प्रतिश्रयः ।
अपपात्राश्च कर्त्तव्या धनमेषां श्वगर्द्दभम् ॥
वासांसि मृतचेलानि भिन्नभाण्डेषु भोजनम् ।
कार्ष्णायसमलङ्कारः परिव्रज्या च नित्यशः ॥
न तैः समयमन्विच्छेत् पुरुषो धर्म्ममाचरन् ।

**चण्डिका**, स्त्री, (चण्डी + स्वार्थे कन् टापि पूर्ब्बह्रस्वः । चण्डि + कन् वा ।) दुर्गा ।
इत्यमरः ।
१ । १ । ३९ ॥ (यथा, मार्कण्डेये । ९२ । २९ ।
“इत्युक्त्वा सा भगवती चण्डिका चण्डविक्रमा ॥”
इयमेव अमरकण्टके पीठशक्तिरूपेण विराजते ।
यथा, देवीभागवते । ७ । ३० । ७३ ।
“छगलण्डे प्रचण्डा तु चण्डिकाऽमरकण्टके ॥”
गायत्रीरूपा देवी । यथा, देवीभागते । १२ ।
६ । ४७ ।
“चटुला चण्डिका चित्रा चित्रमाल्यविभूषिता ॥”)

**चण्डिलः**, पुं, (चण्डते कोपयुक्तो भवतीति । चडि कोपे + इलच् । चण्ड + अस्त्यर्थे इलच् वा ।)
रुद्रः । नापितः ॥ वास्तूकम् । इति हेमचन्द्रः ॥

**चण्डिला**, स्त्री, (चण्डिल + स्त्रियां टाप् ।) नदीभेदः । इत्युणादिकोषः ॥

**चण्डी**, स्त्री, (चण्डि + “बह्वादिभ्यश्चं ।” ४ । १ । ४५ ।
इति वा ङीष् ।) दुर्गा । (यथा, तिथितत्त्वे दुर्गोत्सवबोधनप्रकरणे ।
“चण्डीमामन्त्रयेद् विद्वान् नात्र षष्ठी पुरस्क्रिया ॥”)
हिंस्रा । कोपना । इति मेदिनी । ते । १२ ।
(यथा, रघुवंशे । १२ । ५ ।
“सा किलाश्वासिता चण्डी भर्त्रा तत् संश्रुतौ वरौ ॥”)
अस्या रूपान्तराणि । चण्डिः चण्डा चण्डिका
इत्यमरटीकायां भरतः ॥ * ॥
मार्कण्डेयपुरा-

(तथाच राजतरङ्गिण्याम् । ४ । ४०१ ।
"भ्रातरौ तौ समासाद्य राज्यं नैव व्यराजत ।
हेमन्तशिशिरौ प्राप्य चण्डांशोरिवमण्डलम् ॥")

**चण्डातः**, पुं, (चण्डं चण्डतां तीव्रत्वं अतति निरन्तरं

प्राप्नोतीति । अत + अण् ।) करवीरः । इत्य-
मरः । २ । ४ । ७६ ॥ (पर्य्यायोऽस्य यथा, --
"द्वितीयो रक्तपुष्पश्च चण्डातो लगुडस्तथा ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
गुणाश्चास्य करवीरशब्दे ज्ञातव्याः ॥)

**चण्डातकं**, क्ली, (चण्डां स्त्रियं अतति सततं

गच्छति प्राप्नोतीत्यर्थः । अत + ण्वुल् ।) अर्द्धो-
रुकम् । वरस्त्रीणामर्द्धोरुपर्य्यन्तं वासः । इत्य-

व्यवहारो मिथस्तेषां विवाहः सदृशैः सह ॥
अन्नमेषां पराधीनं देयं स्याद्भिन्नभाजने ।
रात्रौ न विचरेयुस्ते ग्रामेषु नगरेषु च ॥
दिवा चरेयुः कार्य्यार्थं चिह्निता राजशासनैः
।
अबान्धवं शवञ्चैव निर्हरेयुरिति स्थितिः ॥
वध्यांश्च हन्युः सततं यथाशास्त्रं नृपाज्ञया
।
वध्यवासांसि गृह्णीयुः शय्याश्चाभरणानि
च ॥"
(एतैर्हतस्य पशोर्मांसशुद्धिमाह मनुः । ५ ।
१३१ ।
"श्वभिर्हतस्य यन्मांसं शुचि तन्मनुरबवीत्
।
क्रव्याद्भिश्च हतस्यान्यैश्चाण्डालाद्यैश्च
दस्युभिः ॥")
क्रूरकर्म्मा । इति संक्षिप्तसारे उणादिवृत्तिः
॥
(स्त्रियां ङीष् । तन्त्रोक्तशक्तिविशेषः ॥)

**चण्डालकन्दः**, पुं, (चण्डालप्रियः कन्दः ।) कन्द-

विशेषः । तस्य गुणाः । मधुरत्वम् ।
कफपित्तास्र-
दोषविषभूतादिदोषनाशित्वम्।
रसायनत्वञ्च ।
तस्य भेदाः । एकपत्रः द्विपत्रः त्रिपत्रः
चतुष्पत्रः
पञ्चपत्रः । इति राजनिर्घण्टः ॥

**चण्डालवल्लकी**, स्त्री, (चण्डालवादनीया वल्लकी

वीणा ।) चण्डालबीणा । इत्यमरः । २ ।
१० । ३२ ॥
अस्याः पर्य्यायः । कण्डोलबीणाशब्दे
द्रष्टव्यः ॥

**चण्डालिका**, स्त्री, (चण्डालः वादकत्वेनास्त्यस्याः
।

चण्डाल + ठन् टाप् च ।) चण्डालवल्लकी ।
उमा । (चण्डं प्रचण्डभावं अलतीति । अल
+
ण्वुल् कापि अत इत्वञ्च ।) औषधीभेदः ।
इति
मेदिनीकरहेमचन्द्रौ ॥

**चण्डिः**, स्त्री, (चडि कोपे + इन् ।) चण्डी ।

इत्यमरटीकायां भरतः ॥

णोक्तदेवीमाहात्म्यम् । तस्य पाठक्रमो
यथा, --
"अर्गलं कीलकञ्चादौ पठित्वा कवचं
पठेत् ।
जपेत् सप्तशतीं पश्चात् क्रम एष
शिवोदितः ॥
अर्गलं दुरितं हन्ति कीलकं फलदं तथा
।
कवचं रक्षयेन्नित्यं चण्डिका त्रितयं तथा
॥"
इति तन्त्रम् ॥
अपि च ।
"नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत्
॥
आदौ च प्रणवं जप्त्वा स्तोत्रं वा संहितां
पठेत् ।
अन्ते च प्रणवं दद्यादित्युवाचादिपूरुषः
॥
सर्व्वत्र पाठे विज्ञेयो ह्यन्यथा विफलं
भवेत् ।
शुद्धेनानन्यचित्तेन पठितव्यं प्रयत्नतः ॥
न कार्य्यासक्तमनसा कार्य्यं स्तोत्रस्य
वाचनम् ।
आधारे स्थापयित्वा तु पुस्तकं वाचयेत्
सुधीः ॥
हस्तसंस्थापनादेव यस्मादल्पफलं
लभेत् ।
स्वयञ्च लिखितं यत्तु कृतिना लिखितं न
यत् ॥
अब्राह्मणेन लिखितं तच्चापि विफलं
भवेत् ।
ऋषिच्छन्दादिकं न्यस्य पठेत् स्तोत्रं
विचक्षणः ॥
स्तोत्रे न दृश्यते यत्र प्रणवन्यासमाचरेत्
।
सङ्कल्पिते स्तोत्रपाठे संख्यां कृत्वा
पठेत् सुधीः ॥
अध्यायं प्राप्य विरमेन्न तु मध्ये कदाचन
।
कृते विरामे मध्ये तु अध्यायादिं पठन्नरः
॥
ब्राह्मणं वाचकं विद्यान्नान्यवर्णजमादरात्
।

| | | |
|---|---|---|
| | | श्रुत्वान्यवर्णजाद्राजन् ! वाचकान्नरकं व्रजेत् ॥<br>देवार्च्चामग्रतः कृत्वा ब्राह्मणानां विशेषतः ।<br>ग्रन्थिञ्च शिथिलं कुर्य्याद्वाचकः कुरुनन्दन ! ॥<br>पुनर्ब्बध्नीत तत् सूत्रं न मुक्त्वा धारयेत् क्वचित् । |

विस्पष्टमद्रुतं शान्तं स्पष्टाक्षरपदन्तथा ॥
कलस्वरसमायुक्तं रसभावसमन्वितम् ।
बुध्यमानः सदर्थं वै ग्रन्थार्थं कृत्स्नशो नृप ! ॥
ब्राह्मणादिषु सर्व्वेषु ग्रन्थार्थञ्चार्पयेन्नृप ! ।
य एवं वाचयेद्ब्रह्मन् ! स विप्रो व्यास उच्यते ॥
सप्तस्वरसमायुक्तं काले काले विशाम्पते ।
प्रदर्शयन् रसान् सर्व्वान् वाचयेद्वाचको नृप ! ॥”
तस्य फलं यथा, --
“चण्डीपाठफलं देवि ! शृणुष्व गदतो मम ।
एकावृत्त्यादिपाठानां यथावत् कथयामि ते ॥
सङ्कल्प्य पूर्ब्बं सम्पूज्य न्यस्याङ्गेषु मनून् सकृत् ।
पाठाद्बलिप्रदानाद्धि सिद्धिमाप्नोति मानवः ॥
उपसर्गस्य शान्त्यर्थं त्रिरावृत्तं पठेन्नरः ।
ग्रहोपशान्त्यै कर्त्तव्यं पञ्चावृत्तं वरानने ! ॥
महाभये समुत्पन्ने सप्तावृत्तं समुन्नयेत् ।
नवावृत्त्या भवेच्छान्तिर्वाजपेयफलं लभेत् ॥
राजवश्याय भूत्यै च रुद्रावृत्तमुदीरयेत् ।
अर्कावृत्त्या काम्यसिद्धिर्वैरहानिश्च जायते ॥
मन्वावृत्त्या रिपुर्व्वश्यस्तथा स्त्रीवश्यतामियात् ।
सौख्यं पञ्चदशावृत्त्या श्रियमाप्नोति मानवः ॥
कलावृत्त्या पुत्त्रपौत्त्रधनधान्यागमं विदुः ।
राज्ञां भीतिविमोक्षाय वैरस्योच्चाटनाय च ॥
कुर्य्यात् सप्तदशावृत्तं तथाष्टादशकं प्रिये ! ।
महाव्रणविमोक्षाय त्रिंशावृत्तिं पठेत् सुधीः ॥
पञ्चविंशावर्त्तनात्तु भवेद्बन्धविमोक्षणम् ।
सङ्कटे समनुप्राप्ते दुश्चिकित्सामये तथा ॥
जातिध्वंसे कुलोच्छेदे आयुषो नाश आगते ।
वैरिवृद्धौ व्याधिवृद्धौ धननाशे तथा क्षये ।
तथैव त्रिविधोत्पाते तथा चैवातिपातके ।
कुर्य्याद्यत्नात् शतावृत्तिं ततः सम्पद्यते शुभम् ॥
श्रियोवृद्धिः शतावृत्ताद्राज्यवृद्धिस्तथापरे।
मनसा चिन्तितं देवि ! सिद्ध्येदष्टोत्तराच्छतात् ॥
शताश्वमेधयज्ञानां फलमाप्नोति सुव्रते ! ।
सहस्रावर्त्तनाल्लक्ष्मीरावृणोतिस्वयं स्थिरा ॥
भुक्त्वा मनोरथान् कामान् नरो मोक्षमवाप्नुयात् ।

सूर्य्यस्तत्वम् । तत्र महालक्ष्म्या ध्यानं यथा, --
“श्वेतानना नीलभुजा सुश्वेतस्तनमण्डला ।
रक्तमध्या रक्तदेहा स्थूलजङ्घोरुतालुका ॥
चित्रानुलेपना कान्ता सर्व्वसौभाग्यशालिनी ।
अष्टादशभुजा पूज्या सा सहस्रभुजा रणे ॥
आयुधान्यत्र रक्षन्ति दक्षिणाधःकरक्रमात् ।
अक्षमालाञ्च मुषलं बाणासिकुलिशं गदाम् ॥
चक्रं त्रिशूलं परशुं शङ्खघण्टे च पाशकम् ।
शक्तिदण्डं चर्म्म चापं पानपात्रं कमण्डलुम् ॥
अलङ्कृतभुजा एतैरायुधैः परमेश्वरी ।
स्मर्त्तव्या स्तुतिकालादौ महिषासुरमर्द्दिनी ॥
इत्येषा राजसी मूर्त्तिः सर्व्वदेवमयी मता ।
यां ध्यात्वा मानवो नित्यं लभेतेप्सितमात्सनः ॥”

उत्तरचरितस्य रुद्र ऋषिः सरस्वती देवता

उष्णिक् छन्दो भीमा शक्तिर्भ्रामरी बीजं वायुस्तत्वम् । तत्र सरस्वत्या ध्यानं यथा, --
“गौरीदेहसमुत्पन्ना या सत्वैकगुणाश्रया ।
साक्षात् सरस्वती प्रोक्ता शुम्भासुरनिसूदनी ॥
दधौ चाष्टभुजा बाणं मुषलं शूलचक्रकम् ।
शङ्खघण्टाहलञ्चैव कार्म्मुकञ्च तथा परम् ॥
ध्येया सास्तुतिकालादौ वधे शुम्भनिशुम्भयोः ॥”
इति कात्यायनीतन्त्रम् ॥
(छन्दोविशेषः । तल्लक्षणं यथा,
छन्दोमञ्जर्य्याम् ।
“नयुगलसयुगलगैरिति चण्डी ॥”)

**चण्डीकुसुमः**, पुं, (चण्डीप्रीतिजनकं कसुमं यस्य ।) रक्तकरवीरवृक्षः । इति राजनिर्घण्टः ॥
(विवृतिरस्य करवीरशब्दे बोद्धव्याः ॥)

**चण्डुः**, पुं, (चडि + बाहुलकात् उः ।) उन्दुरुः । इति शब्दचन्द्रिका ॥

**चत**, ए ञ याचे । इति कविकल्पद्रुमः ॥ (भ्वां-उभं-द्विकं-सेट् ।) ए, अचतीत् । ञ, चतति चतते । इति दुर्गादासः ॥

**चतुः**, [र्] व्य, चतुर्व्वारम् । इति व्याकरणम् ॥

“चतुःषष्टिकलानान्तु विद्यानां पारदृश्वनः ।
ऋते कृष्णाद्भगवतः कः क्षमो देहवान्नरः ॥”)
ऋग्वेदः । इति मेदिनी । टे । ६३ ॥

**चतुरः**, त्रि, (चत्यते याच्यते इति । चत + “मन्दिवाशिमथिचतिचङ्क्यङ्किभ्यउरच् ।” उणां । १ । ३८ । इत्युरच् ।) कार्य्यक्षमः । निरालस्यः । तत्पर्य्यायः । दक्षः २ पेसलः ३ पटुः ४ सूत्थानम् ५ उष्णः ६ । इत्यमरः । २ । १० । १९ । पेशलः ७ पेषलः ८ इति तट्टीका ॥ निपुणः । इति राजनिर्घण्टः ॥ (यथा, देवीभागवते । १ १७ । ४४ ।
“चतुरोनैव मुह्येत मूर्खः सर्व्वत्र मुह्यति ॥”)
तस्य लक्षणं यथा । वाक्चेष्टाव्यङ्ग्यसमागमः । तत्र वचनव्यङ्ग्यसमागमो यथा, रसमञ्जर्य्याम् ।
“तमोजटाले हरिदन्तराले
काले निशायास्तव निर्गतायाः ।
तटे नदीनां निकटे वनानां
घटेत शातोदरिकः सहायः ॥”
चेष्टाव्यङ्ग्यसमागमो यथा, --
“कान्ते कनकजम्बीरं करे कमपि कुर्व्वति !
अगारलिखिते भानौ बिन्दुमिन्दुमुखी ददौ ॥”
(उपभोगक्षमः । यथा, रघुः । ९ । ४७ ।
“त्यजत मानमलं वत विग्रहैः
न पुनरैति गतं चतुरं वयः ॥”
“चतुरं उपभोगक्षमम् ।” इति तट्टीकायांमल्लिनाथः ॥) नेत्रगोचरः । इति हेमचन्द्रः ॥

**चतुरः**, पुं, (चत + उरच् ।) चक्रगण्डुः । हस्तिशाला । इति हेमचन्द्रः ॥

**चतुरक्रमः**, पुं, (चतुरः चातुर्य्यान्वितः क्रमः प्रणाली यत्र ।) सप्तधारूपकान्तर्गतरूपकभेदः । यथा --
“द्रुतद्वन्द्वं प्लुतद्वन्द्वं तथा प्रान्ते गुरुभवेत् ।
द्वाविंशत्यक्षरैर्युक्तः शृङ्गारे चतुरक्रमः ॥”
इति सङ्गीतदामोदरः ॥

**चतुरङ्गं**, क्ली, (चत्वारि अङ्गानि यस्य ।) हस्त्यश्वरथपदातिरूपं सैन्यम् । यथा, रामायणे ।
“चतुरङ्गं ह्यपि बलं सुमहत् प्रसहेमहि ।”
अक्षक्रीडाविशेषः । चौरंखेला इति भाषा ॥
यथा, --

यथाश्वमेधः क्रतुराट् देवानाञ्च यथा हरिः ॥
स्तवानामपि सर्व्वेषां तथा सप्तशतीस्तवः ॥
अथवा बहुनोक्तेन किमेतेन वरानने ! ।
चण्ड्याः शतावृत्तपाठात् सर्व्वाः सिध्यन्ति सिद्धयः ॥”
इति तिथ्यादितत्त्वम् ॥ * ॥
अथ प्रथमचरितस्य ब्रह्मर्षिर्महाकाली देवता गायत्त्री छन्दो नन्दा शक्ती रक्तदन्तिका बीज-भग्निस्तत्वम् । तत्र महाकाल्या ध्यानं यथा, --
“दशवक्त्रा दशभुजा दशपादाञ्जनप्रभा ।
विशालया राजमाना त्रिंशल्लोचनमालया ॥
स्फुरद्दशनदंष्ट्राभा भीमरूपा भयङ्करी ।
स्वड्गशूलगदाबाणतोमरञ्चभुषुण्डिभृत् ॥
परिघं कार्म्मुकं शीर्षं निश्च्योतद्रुधिरं दधौ ।
मधुकैटभयोर्युद्धे ध्येया सा तामसी शिवा ॥”
मध्यमचरितस्य विष्णुरृ षिर्महालक्ष्मीर्द्देवता अनुष्टुप् छन्दः शाकम्भरी शक्तिर्दुर्गाबीजं

**चतुःपत्री**, स्त्री, (चत्वारि चत्वारि पत्राण्यस्याः ।) क्षुद्रपाषाणभेदी । इति राजनिर्घण्टः ॥

**चतुःपर्णी**, स्त्री, (चत्वारि चत्वारि पर्णानि यस्याः ।) क्षुद्राम्लिका । इति राजनिर्घण्टः ॥

**चतुःपला**, स्त्री, (चत्वारि पलानि यस्यां यस्या वा ।) नागबला । इति राजनिर्घण्टः ॥

**चतुःपुण्ड्रः**, पुं, (चत्वारि पुण्ड्राणीव यत्र ।) भिण्डा-वृक्षः । इति राजनिर्घण्टः ॥

**चतुःशालं**, क्ली स्त्री, (चतसृणां शालानां समा-हारः ।) परस्पराभिमुखगृहचतुष्टयम् । चक्-मिलनवाडी इति भाषा ॥ इत्यमरः । २ । २ । ६ ॥
(यथा, महाभारते । १ । १४५ । ८ ।
“तत्र गत्वा चतुःशालं गृहं परमसंवृतम् ॥”)

**चतुःशालकं**, क्ली, (चतुःशाल + स्वार्थे कन् ।) चतुःशालम् । इति शब्दरत्नावली ॥

**चतुःषष्टिः**, स्त्री, (चतुरधिका षष्टिः ।) चतुरधिक-षष्टिसंख्या । चौषट्टि इति भाषा ॥ कलानाम्नी उपविद्या । (यदुक्तं रूपगोस्वामिकृतभगवन्-माहात्म्ये ।

युधिष्ठिर उवाच ।
“अष्टकोष्ठ्याञ्च या क्रीडा तां मे ब्रूहि तपोधन ! ।
प्रकर्षेणैव मे नाथ चतूराजी यतो भवेत् ॥
व्यास उवाच ।
अष्टो कोष्ठान् समालिख्य प्रदक्षिणक्रमेण तु ।
अरुणं पूर्ब्बतः कृत्वा दक्षिणे हरितं बलम् ॥
पार्थ ! पश्चिमतः पीतमुत्तरे श्यामलं बलम् ।
राज्ञो वामे गजं कुर्य्यात् तस्मादश्वं ततस्तरिम् ॥
कुर्य्यात् कौन्तेय ! पुरतो युद्धे पत्तिचतुष्टयम् ।
कोणे नौका द्वितीयेऽश्वस्तृतीये तु गजो वसेत् ॥
तुरीये च वसेद्राजा वटिकाः पुरतः स्थिताः ॥
पञ्चकेन वटी राजा चतुष्केणैव कुञ्जरः ॥
त्रिकेण तु चलत्यश्वः पार्थ ! नौकाद्वयेन तु ॥
कोष्ठमेकं विलङ्घ्याथ सर्व्वतो याति भूपतिः ।

अग्र एव वटी याति बलं हन्त्यग्रकोणगम्
।
यथेष्टं कुञ्जरो याति चतुर्द्दक्षु महीपते ! ॥
तिर्य्यक् तुरङ्गमो याति लङ्घयित्वा
त्रिकोष्ठकम् ।
कोणकोष्ठद्वयं लङ्घ्य व्रजेन्नौका
युधिष्ठिर ! ॥
सिंहासनं चतूराजी नृपाकृष्टन्तु षट्पदम्
।
काककाष्ठं बृहन्नौका नौकाकृष्टप्रकारकम्
॥
घाताघाते वटी नौका बलं हन्ति
युधिष्ठिर ! ।
राजा गजो हयश्चापि त्यक्त्वा घातं
निहन्ति च ॥
अत्यन्तं स्वबलं रक्षेत् स्वराजा
बलमुत्तमम् ।
अल्पस्यारक्षया पार्थ ! हन्तव्यं बलमुत्तम्
॥
नौकायाश्चत्वारि पदानि अश्वस्याष्टौ
पदानि
इत्याधिक्यमश्वस्य ॥
मतङ्गजस्य गर्व्वेण राजा क्रीडति निर्भरम्
।
तस्मात् सर्व्वबलं दत्त्वारक्ष कौन्तेय !
कुञ्जरम् ॥
सिंहासनं चतूराजी यदवस्थानतो भवेत्
।
सर्व्वसैन्यैर्गजैर्वापि रक्षितव्यो महीपतिः
॥
अन्यद्राजपदं राजा यदाक्रान्तो
युधिष्ठिर ! ।
तदा सिंहासनं तस्य भण्यते नृपसत्तम् !
॥
राजा च नृपतिं हत्वा कुर्य्यात् सिंहासनं
यदा ।
द्विगुणं वाहयेत् पण्यमन्यथैकगुणं भवेत्
॥
द्विगुणं पण्यं दातव्यत्वेन प्रापयेत् ॥
मित्रसिंहासनं पार्थ यदारोहति भूपतिः ।
तदा सिंहासनं नाम सर्व्वं नयति तद्बलम्
॥

नौकैका वटिका यस्य विद्यते खेलने यदि ।
गाढावटीति विख्याता पदं तस्य न दुष्यति ॥
गाढाघात्यापदं राजपदं कोणपदञ्च तत् ।
हस्ते रङ्गे बलं नास्ति काककाष्ठं तदा भवेत् ॥
वदन्ति राक्षसाः सर्व्वे तस्य न स्तो जयाजयौ ।
प्रार्थिते पञ्चमे राज्ञि मृतवट्याञ्च षट्पदे ॥
अशौचं स्यात्तदा राजन् ! चलित्वा चालितं
पदम् ।
द्विरावृत्त्या गतौ तस्माद्धन्यात् परबलं जयी ॥
सिंहासनं भवत्येव काककाष्ठं न भण्यते ॥
उपविष्टञ्च यत् स्थानं तस्योपरिचतुष्टये ।
नौकाचतुष्टयं यत्र क्रियते यस्य नौकया ॥
नौकाचतुष्टयं तत्र बृहन्नौकेति भण्यते ।
न कुर्य्यदिकदा राजन् ! गजस्याभिमुखं गजम् ॥
यदि कुर्व्वीत धर्म्मज्ञ ! पापग्रस्तो भविष्यति ।
स्थानाभावे यदा पार्थ ! हस्तिनं हस्तिसम्मुखम्
॥
करिष्यति तदा राजन्निति गोतमभाषितम् ।
प्राप्ते गजद्वये राजन् ! हन्तव्यो वामतो गजः ॥"
इति तिथ्यादितत्त्वे चतुरङ्गक्रीडनम् ॥

**चतुरङ्गा**, स्त्री, (चत्वारि अङ्गानि यस्याः ।)
घोटिकावृक्षः । इति राजनिर्घण्टः ॥

**चतुरङ्गिणी**, स्त्री, (चत्वारि अङ्गानि हस्त्यश्वरथ-
पदातयः सन्त्यस्यामिति । चतुरङ्ग + इनिः ।)
चतुरङ्गसेना । इति रामायणम् ॥ (यथा, महा-
भारते । १ । ७३ । २० ।
"प्रेषयिष्ये तवार्थाय वाहिनीं चतुरङ्गिणीम् ॥")

**चतुरङ्गुलः**, पुं, (चतस्रः अङ्गुलयः परिमाणमस्य ।
समासे अच् ।) आरग्बधवृक्षः । इत्यमरः ।
२ । ४ । २३ ॥ (यथा, सुश्रुते सूत्रस्थाने
४४ अध्याये ।
"विरेचनानि सर्व्वाणि विशेषाच्चतुरङ्गुलात् ॥")
चतुरङ्गुलिपरिमिते त्रि ॥ (यथा, शतपथ-
ब्राह्मणे । १० । २ । २ । १ ।
"स चतुरङ्गुलमेवोभयतोऽन्तत उपगूहति ॥")

**चतुरम्लं**, क्ली, (चतुर्णां अम्लानां समाहारः ।)
चतुर्व्विधाम्लद्रव्यम् । यथा, भावप्रकाशे ।
"अम्लवेतसवृक्षाम्लबृहज्जम्बीरनिम्बुकैः ।
चतुरम्लं हि पञ्चाम्लं बीजपूरयुतैर्भवेत् ॥"

इति श्रीभागवते । ३ । ८ । १६ ॥ (यथा, --
"इतरतापशतानि यथेच्छया
वितर तानि सहे चतुरानन ! ।
अरसिके तु रहस्यनिवेदनं
शिरसि मा लिख मा लिख मा लिख ॥"
इत्युद्भटः ॥)

**चतुरूषणं**, क्ली, (चतुर्णां ऊषणानां समाहारः ।)
पिप्पलीमूलसहितं त्रिकटु । यथा, भावप्रकाशे ।
"त्र्युषणं सकणामूलं कथितं चतुरूषणम् ।
व्योषस्यैव गुणाः प्रोक्ता अधिकाश्चतुरूषणे ॥"

**चतुर्गतिः**, पुं, (चतुर्भिर्गतिरस्य ।) कच्छपः ।
इति हेमचन्द्रः । ४ । ४१९ ॥ (चतुर्णां आश्र-
माणां वर्णानां ब्राह्मणादीनां यथोक्तकारिणां
गतिराश्रयः । विष्णुः । यथा, महाभारते । १३ ।
१४९ । ९५ ।
"चतुर्मूर्त्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः ॥")

**चतुर्थः**, त्रि, चतुर्णां पूरणः । ("तस्य पूरणेडट् ।"
५ । २ । ४८ । इति डट् । ततः "षट्कतिपय-
चतुरां थुक् ।" ५ । २ । ५१ । इति थुक् ।)
चतुर्थसंख्यापूरणः । इति मुग्धबोधम् ॥ चौटा
इत्यादि भाषा ॥

**चतुर्थांशः**, पुं, (चतुर्थः अंशः ।) चतुभर्गैकभागः ।
तत्पर्य्यायः । तुरीयः २ पादः ३ । इति राज-
निर्घण्टः ॥ (चतुर्थः अंशो यस्य । चतुर्थांश-
स्वामिनि त्रि । यथा, मनुः । ८ । २१० ।
"तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्चपादिनः ॥")

**चतुर्थिका**, स्त्री, पलपरिमाणम् । इति वैद्यक-
परिभाषा ॥

**चतुर्थी**, स्त्री, (चतुर्णां पूरणी । "तस्य पूरणे
डट् ।" ५ । २ । ४८ । इति डट् । ततः "षट्
कतिपयचतुरां थुक् ।" ५ । २ । ४१ । इति
थुक् । ततष्टित्वात् ङीप् ।) तिथिविशेषः । सा
तु चन्द्रस्य चतुर्थकलाक्रियारूपा । इति स्मृतिः
॥
(चतुर्थी तु पञ्चमीयुता ग्राह्या । "युग्माग्नि-
कृतभूतानि ।" इति युग्मवचनात् तथा, --
"एकादश्यष्टमी षष्ठी अमावास्या चतुर्थिका ।
उपोष्याः परसंयुक्ताः पराः पूर्ब्बेण संयुताः ॥"

यदा सिंहासनं कर्त्तुं राजा षष्ठपदाश्रितः ।
तदा घातेऽपि हन्तव्यो बलेनापि सुरक्षितः ॥
विद्यमाने नृपे यत्र स्वकीये च नृपत्रयम् ।
प्राप्नोति च तदा तस्य चतूराजी यदा भवेत् ॥
नृपेणैव नृपं हत्वा चतूराजी यदा भवेत् ।
द्विगुणं वाहयेत् पण्यमन्यथैकगुणं भवेत् ॥
स्वपदस्थं यदा राजा राजानं हन्ति पार्थिव ।
चतुरङ्गे तदा भूप ! वाहयेच्च चतुर्गुणम् ॥
यदा सिंहासने काले चतूराजी समुत्थिता ।
चतूराजी भवत्येव न तु सिंहासनं नृप ! ॥
अत्रेदं बीजं उभयथा जयेऽपि परसिंहासनाधि-
कारात् परराजवधे शौर्य्याधिक्यनिष्कण्टकत्व-
दर्शनात् । क्रीडायामपि तथा कल्प्यते ॥ * ॥
राजद्वयं यदा हस्ते आत्मनो राज्ञि संस्थिते ।
परेण संहृतश्चैको बलेनाप्यपहार्य्यते ॥
राजद्वयं यदा हस्ते न स्यादन्यकरे परः ।
तदा राजा हि राजानं घातेऽपि तं हनिष्यति ॥
नृपाकृष्टे यदा राजा गमिष्यति युधिष्ठिर ! ।
घाताघातेऽपि हन्तव्यो राजा तत्र न रक्षकः ॥
कोणं राजपदं त्यक्त्वा वटिकान्तं यदा व्रजेत् ।
वटी नयेत् पदं नाम तदा कोष्टबलं च षट् ॥
यदि तस्य भवेत् पार्थ ! चतूराजी च षट्पदम् ।
तदापि च चतूराजी भवत्येव न संशयः ॥
पदातेः षट्पदे विद्धे राज्ञा वा हस्तिना तथा ।
षट्पदं न भवेत्तस्य अवश्यं शृणु पार्थिव ॥

**चतुरश्रः**, त्रि, (चतस्रोऽश्रयोऽस्य । "सुप्रातसुश्व-
सुदिवेति ।" ५ । ४ । १२० । इति अच्प्रत्ययेन
निपातितः ।) चतुष्कोणः । यथा, --
"चतुरश्रं त्रिकोणं वा वर्त्तुलं चार्द्धचन्द्रकम् ।
कर्त्तव्यमानुपूर्ब्बेण ब्राह्मणादिषु मण्डलम् ॥"
इत्याह्निकतत्त्वे बौधायनः ॥
लग्नाच्चतुर्थाष्टमलग्नम् । इति दीपिका ॥

**चतुराननः**, पुं, (चत्वारि आननानि मुखानि
यस्य ।) ब्रह्मा । इत्यमरः । १ । १ । १६ ॥ तस्य
चतुराननत्वे कारणं यथा, --
"तस्यां स चाम्भोरुहकर्णिकाया-
मवस्थितो लोकमपश्यमानः ।
परिक्रमन् व्योम्नि निवृत्तनेत्र-
अत्वारि लेभेऽनुदिशं मुखानि ॥"

इत्यग्निपुराणवचनाच्च ॥
भविष्ये, --
"अमा वै सोमवारेण रविवारेण सप्तमी ।
चतुर्थी भौमवारेण अक्षयादपि चाक्षया ॥'
यत्तु, --
'चतुर्थीसंयुता कार्य्या तृतीया च चतुर्थिका ।
तृतीयया युता नैव पञ्चम्या कारयेत् क्वचित् ॥'
इति ब्रह्मवैवर्त्तवचनं पञ्चमीयुतानिषेधकं तद्-
विनायकव्रतपरमिति गुरुचरणाः तृतीयायुता
निषेधकत्वे क्वचिदित्यनुपपत्तेः सर्व्वत्रैव पञ्चमी-
युताया ग्रहणात् । सारस्वत्यादिप्रदोषमाह ।
'त्रयोदश्याश्चतुर्थ्याश्च सप्तम्या द्वादशीतिथेः ।
प्रदोषेऽध्ययनं धीमान् न कुर्व्वीत यथाक्रमम् ।
सारस्वतो गाणपतः सौरश्च वैष्णवस्तथा ॥'
प्रदोषशब्दोऽत्र प्रथमप्रहर इति हेमाद्रिः ।

| मप्तमे कोष्ठके या स्याद्घटिका दशकेन वै<br>।<br>तदान्योन्यश्च हन्तव्यं सुखाय दुर्ब्बलं<br>बलम् ॥<br>त्रिवटीकस्य कौन्तेय ! पुरुषस्य कदाचन<br>।<br>षटपदं न भवत्येव इति गोतमभाषितम् ॥ | | |
|---|---|---|

रात्रिपर इति निर्णयामृतकृद् भोजदेवः ॥
'शुक्लपक्षे चतुर्थ्यान्तु सिंहे चन्द्रस्य दर्शनम्
।
मिथ्याभिशापं कुरुते न पश्येत्तत्र तं ततः ॥'
चतुर्थ्यां दर्शननिषेधात् तत्रोदितस्य चन्द्रस्य
पञ्चम्यां दर्शने तु न दोषः । अतः, --
'पञ्चाननगते भानौ पक्षयोरुभयोरपि ।
चतुर्थ्यामुदितश्चन्द्रो नेक्षितव्यः कदाचन ॥'
दैवात् प्रमादाद्वा दर्शने तु ।
"सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः
।
सुकुमारक ! मा रोदीस्तव ह्येष स्यमन्तकः
॥"
अनेन मन्त्रेणाभिमन्त्रितं जलं पेयं आचारात्
स्यमन्तकोपाख्यानञ्च श्रोतव्यम् ।
माघमासस्य
शुक्लचतुर्थ्यां गौरी पूजनीया । यथा,
भविष्यो-
त्तरे माघशुक्लपक्षमधिकृत्य, --
"चतुर्थी वरदा नाम तस्यां गौरी सुपूजिता ।
सौभाग्यमतलं कुर्य्यात्पञ्चम्यां श्रीरपि श्रियम्
॥"
इति तिथ्यादितत्त्वम् ॥)
तत्र जातस्य फलं यथा, कोष्ठीप्रदीपे ।
"स्वपुत्त्रमित्रप्रमदाप्रमोदी
घृताभिलाषी कृपया समेतः ।
विवादशीलो विजयी विवादे
भवेच्चतुर्थीप्रभवः कठोरः ॥"

**चतुर्द्दन्तः**, पु, (चत्वारो दन्ता यस्य ।) ऐरावत-
हस्ती । इति हेमचन्द्रः । २ । ९१ ॥
(स्वनाम-
ख्यातः पञ्चतन्त्रोक्तगजविशेषः । यथा, पञ्च-
तन्त्रे । ३ । ८० । "कस्मिंश्चिद्वनोद्देशे
चतुर्द्दन्तो
नाम महागजो यूथाधिपः प्रतिवसति स्म
॥")

**चतुर्द्दश**, [न्] त्रि, चतुरधिका दश । चौद्द इति
भाषा । इति ज्योतिषम् ॥ (यथा, नैषधे । १
। ४ ।
"अधीतिबोधाचरणप्रचारणै-
र्दशाश्चतस्रः प्रणयन्नुपाधिभिः ।
दर्शविद्धा न कर्त्तव्या राकाविद्धा तथा मुने ॥'
इति स्कन्दपुराणात् मम भक्तैरिति ईश्वरोक्तेः
शिवव्रतविषयम् । त्रयोदश्यां दिवातनमुहूर्त्त-
चतुर्द्दश्यलाभे तु पद्मपुराणम् ।
'एकादश्यष्टमी षष्ठी उभे पक्षे चतुर्द्दशी ।
अमावास्या तृतीया च उपोष्याः स्युः परा-
न्विताः ॥'
एतद्विषय एव ।
'शिवा घोरा तथा प्रेतासावित्री च चतुर्द्दशी ।
कुहूयुक्तैव कर्त्तव्या कुह्वामेव हि पारणम् ॥'
इति वचनम् ।" इति च तिथ्यादितत्त्वम् ॥)
तत्र जातस्य फलं यथा, कोष्ठीप्रदीपे ।
"विरुद्धशीलः पुरुषः सरोष-
श्चौरः कठोरः परवञ्चकश्च ।
परान्नभोक्ता परदारचित्त-
श्चतुर्द्दशी चेत् जननस्य काले ॥"
मासविशेषे तत्र कर्म्माणि यथा । ज्यैष्ठकृष्ण-
चतुर्द्दश्यां स्त्रीकर्त्तृकसावित्र्यादिदेवतापूजा
स्वामिपूजा च ॥ भाद्रशुक्लचतुर्द्दश्यां अनन्त-
पूजा चतुर्द्दशपिष्टकभक्षणं डोरकबन्धनञ्च ॥
कार्त्तिककृष्णचतुर्द्दश्यां चतुर्द्दशशाकभक्षणं
चतु-
र्द्दशदीपदानं यमतर्पणञ्च ॥ अग्रहायणशुक्ल-
चतुर्द्दश्यां गौरीपूजा पाषाणाकारपिष्टकभक्ष-
णञ्च ॥ माघकृष्णपक्षे रटन्त्याख्यचतुर्द्दश्यां
काली-
पूजारुणोदये स्नानञ्च ॥ फाल्गुनकृष्णपक्षे
शिव-
रात्र्याख्यचतुर्द्दश्यामुपवासःशिवपूजा च ॥
चैत्र-
शुक्लपक्षे मदनचतुर्द्दश्यां मदनवृक्षपल्लवेन
काम-
देवपूजा । इति स्मृतिः ॥

**चतुर्द्दोलं**, क्ली, पुं, (चतुर्भिर्वाहकैर्दोल्यते उत्क्षिप्य
नीयते उह्यते इति यावत् । दोलि + कर्म्मणि
घञ् । यद्वा, चतुर्भिर्दण्डैरुपलक्षितं दोलं
दोलायमानयानविशेषः ।) स्वनामख्यातयान-
विशेषः । यथा, --
"राज्ञो यद्द्विपदं यानं विशेषाख्यमलं विदुः ।
चतुर्भिरुह्यते यत्तु चतुर्द्दोलं तदुच्यते ॥
भोजस्तु ।
लोलजं सर्व्ववस्त्रेषु कनकं सर्व्वधातुषु ।
कुम्भश्च पद्मकोषश्च गिरिश्चेति यथाक्रमम् ॥
त्रैदेशानां महीन्द्राणां चतुर्द्दोलेषु विन्यसेत् ॥
दर्पणश्चार्द्धचन्द्रश्च हंसः केकी शुको गजः ।
अश्वः सिंहश्च तस्याग्रे आदित्यादिदशोत्तरान्
॥
मणिनियमस्तु दण्डवत् ॥
रक्तः शुक्लश्च पीतश्च कृष्णश्चित्रस्तथारुणः ।
नीलः कपिल इत्युक्तः पताकानान्तु संग्रहः ॥
चतुर्द्दोलः सपताकः शुभयानमिति स्मृतः ॥
मुक्तास्तवकैर्द्दशभिर्युक्तः स्याद्राजकेशानाम् ।
चामरदण्डैर्द्दशभिर्दिग्जयिनां चतुर्द्दोलः ॥
चासपक्षस्य पुच्छश्चेत् सर्व्वोपरि परिन्यसेत् ।
यात्रासिद्धिरियं नाम्ना चतुर्द्दोलो महीभुजाम् ॥
स्तम्भच्छादरहितो निश्छदिरुक्तश्चतर्द्दोलः मानं
पूर्ब्बवत् ॥
स पुनर्द्विविधः प्रोक्तः सध्वजश्चाथनिर्ध्वजः ।
ध्वजान् षडत्र न्यस्यन्ति षडर्गविजयैषिणः ॥
तेषां मानन्तु चत्वारः स्वामिहस्तैकसम्मिताः ।
कोणेषु पश्चादग्रे च हस्तद्वयमितौ ध्वजौ ॥
सुवर्णं रजतं युग्मं त्रिविधानां महीभुजाम् ।
मणिचामरकुम्भानां खड्गादीनां विनिश्चयः ॥
चतुर्द्दोलध्वजे राज्ञां विज्ञेयो नवदण्डवत् ।
निर्ध्वजे च चतुर्द्दोले मानमन्यतमं शृणु ॥
आयामपरिणाहाभ्यां चतुर्हस्तमितो हि यः ।
विजयो नाम विज्ञातश्चतुर्द्दोलो महीभुजाम् ॥
विजयो मङ्गलो भव्यो वितस्त्येकैकवृद्धितः ।
त्रिविधानां महीन्द्राणां यानत्रयमुदाहृतम् ॥
अष्टाभिरुह्यते यस्तु अष्टदोलमुशन्ति च ।
सोपानद्वितयञ्चात्र विज्ञेयं शिल्पिनिर्म्मितम् ॥
भोजस्तु ।
अष्टाभिर्व्वाहकैर्द्दण्डैः षड्भिस्तु दशभिर्घटैः ।
स्तम्भैस्तु दशभिर्ज्ञेयमष्टदोलं महीभुजाम् ॥
तद्भेदा जयकल्याणवीरसिंहा यथाक्रमम् ।
चतुर्व्विधानां भूपानामष्टदोलाः प्रकाशिताः ॥
षड्भिर्हस्तैर्म्मितायामः परिणाहश्चतुर्भुजः ।
चतुर्हस्तोन्नतो राज्ञामष्टदोलं जयं विदुः ॥
आयामपरिणाहाभ्यां पञ्चहस्तमितो हि यः ।
कल्याणाख्योऽष्टदोलोऽयंचतुर्हस्तमितोन्नतिः ॥
सप्तहस्तायतः कार्य्यः प्रवरे पञ्चहस्तकः ।
पञ्चहस्तोन्नतो वीरश्चाष्टदोलो महीभुजाम् ॥
आयामपरिणाहाभ्यामष्टहस्तमितोहि यः ।

चतुर्द्दशत्वं कृतवान् कुतः स्वयं
न वेद्मि विद्यासु चतुर्द्दशस्वयम् ॥”
चतुर्द्दशानां पूरणः । “तस्य पूरणे डट् ।” ५ ।
२ ।
४८ । इति डट् ।) पूरणार्थे अकारान्तोऽयं
शब्दः ॥ (यथा, हेः रामायणे । २ । ११२ ।
२५ ।
“चतुर्द्दशे हि सम्पूर्णे वर्षेऽहनि रघूत्तम ! ।
नद्रक्ष्यामि यदि त्वान्तु प्रवेक्ष्यामि हुताशनम्
॥”)
तद्वाचकानि । विद्या १ यमः २ मनुः ३
इन्द्रः ४
भुवनम् ५ ध्रुवतारकम् ६ । इति
कविकल्पलता ॥

**चतुर्द्दशी**, स्त्री, (चतुर्द्दश + टित्त्वात् ङीप् ।)

तिथिविशेषः । सा तु चन्द्रस्य चतुर्द्दशकला-
क्रियारूपा । तत्पर्य्यायः । भूता २ । इति
तिथ्यादितत्त्वम् ॥ (“सा च शुक्ला
पूर्णिमायुता
ग्राह्या युग्मात् कृष्णा पूर्ब्बयुता ।
“कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्द्दशी ।
पूर्ब्बविद्धैव कर्त्तव्या परविद्धा न कुत्रचित् ।
उपवासादिकार्य्येषु एष धर्म्मः सनातनः ॥”
इति निगमवचनात् अपराह्णव्यापित्वे तु
शुक्ल-
चतुर्द्दश्यपि पूर्ब्बविद्धा ग्राह्या
‘चतुर्द्दशी तु कर्त्तव्या त्रयोदश्या युता विभो !
।
मम भक्तैर्महाबाहो ! भवेद्या चापराह्णिकी ।

चतुर्भिर्वाहकैर्द्दण्डैः षड्भिः कुम्भैः सुसंस्थितैः
।
स्तम्भैरष्टाभिरुदितं चतुर्द्दोलमनुत्तमम् ॥
तद्भेदा जयकल्याणवीरसिंहा यथाक्रमम् ।
चतुर्व्विधानां भूपानां चतुर्द्दोलाः प्रकाशिताः ॥
त्रिहस्तसम्मितायामो द्विहस्तपरिणाहवान् ।
हस्तद्वयोन्नतः प्रोक्तश्चतुर्द्दोलो जयाख्यया ॥
चतुर्हस्तायतो यस्तु सार्द्धद्वन्द्वस्तदन्यथा ।
चतुर्द्दोलः समाख्यातः कल्याणस्तावदुन्नतः ॥
पञ्चहस्तायतो यस्तु त्रिहस्तपरिणाहवान् ।
तावदेवोन्नतो वीरश्चतुर्द्दोल उदाहृतः ॥
आयामपरिणाहाभ्यां चतुर्हस्तमितो हि यः ।
चतुर्द्दोलो ह्ययं सिंहस्तदर्द्धेनोन्नतः शुभः ॥
सर्व्वोऽथ द्विविधः प्रोक्तः सच्छदिश्चापि
निश्छदिः ।
आद्यः समरवर्षासु परः केलिघनात्यये ॥
सर्व्वेषामेव काष्ठानां दण्डः स्याद्वज्रवारणः ।
चन्दनेनैव घटना सर्व्वेषामुपयुज्यते ॥

सिंहनामाष्टदोलोऽयं विज्ञेयः षड्भुजोन्नतः ॥
सर्व्वोऽथ द्विविधः प्रोक्तः सच्छदिश्चापि
निश्छदिः ।
काष्ठवस्त्रघटादीनां मणीनां चामरस्य च ॥
चतुर्द्दोलवदुन्नेयो नियमोऽन्योऽपि सूरिभिः ।
पूर्ब्बवन्निश्छदेर्मानं ध्वजमानमिहोच्यते ॥
दशध्वजास्तेषु चाष्टौ स्वामिहस्तद्वयोन्नताः ।
पश्चादग्रे ध्वजौ राज्ञश्चतुर्हस्तमितौ मतौ ॥
मणिचामरपक्षाणां निर्णयो निष्पताकवत् ।
निर्ध्वजश्चाष्टदोलो यः शिविकेति स गद्यते ॥
मणिकुम्भमुखादीनां नियमो नवदण्डवत् ।
इत्यष्टदोलकथनम् ॥ * ॥

एवं द्वादशषोडशविंशतिदोलादिकाः कार्य्याः ।

मानं सार्द्धद्विगुणं सार्द्धत्रिगुणितं युक्तमेतेषाम् ॥
विंशतिदोलात् परतो भोजमते सम्भवेद्यानम् ।
यानं बह्वनुयोज्यं बहुगुणमेतज्जगाद वै व्यासः ॥
भविष्योत्तरेऽपि ।
यदुक्तं द्वैपदं यानं तेन मानेन यो नृपः ।
स्वयानं कुरुते दिव्यं स चिरं सुखमश्नुते ॥
स्वयोगयुक्तयानस्थो भोगमाप्नोति मानवः ।
परयौगिकयानस्थः क्लेशमाप्नोति पुष्कलम् ॥
यो दम्भादथवाज्ञानाद्यानं प्रकुरुतेऽन्यथा ।
तस्यैतानि विनश्यन्ति आयुर्व्विद्या यशो धनम् ॥
प्रधानं यानमाश्रित्य नियमोऽयं समाश्रितः ।
नाप्रधाने निर्णयोऽस्ति तल्लिङ्गन्तु मनोज्ञता ॥”
इति युक्तिकल्पतरुः ॥

**चतुर्धा**, व्य, (चतुःप्रकारमिति । “धाच्प्रकारे ।”

इति मुग्धबोधसूत्रेण धाच् ।) चतुःप्रकारम् ।
चारिप्रकार इति भाषा ॥ इति व्याकरणम् ॥
(यथा, भागवते । ३ । २६ । १४ ।
“मनोबुद्धिरहङ्कारश्चित्तमित्यन्तरात्मकम् ।
चतुर्धा लक्ष्यते भेदो वृत्त्या लक्षणरूपया ॥”)

**चतुर्ब्बीजं**, क्ली, (चतुर्णां बीजानां समाहारः ।)

मेथिका चन्द्रशूरं कालाजाजी यवानिका एत-
च्चतुष्टयं मिलितम् । तच्चूर्णनित्यभक्षणगुणः ।
पवनामयाजीर्णशूलाध्मानपार्श्वशूलकटिव्यथा-
नाशित्वम् । इति भावप्रकाशः ॥

**चतुर्भद्रं**, क्ली, (चत्वारि भद्राणि यत्र वृन्दे । यद्वा,

चतुर्णां धर्म्मार्थकाममोक्षसंज्ञकानां भद्राणां
श्रेयसां समाहारः ।) सबलधर्म्मार्थकाममोक्षम् ।
इत्यमरः । २ । ७ । ५८ ॥ अन्यूनाधिकशक्ति-
धर्म्मार्थकाममोक्षम् । इति तट्टीकासारसुन्दरी ॥
(तत्तन्मङ्गलमयगुणयुक्ते त्रि । यथा, महा-
भारते । ७ । ६२ । १७ ।
“स चेन्ममार सृञ्जय ! चतुर्भद्रतरस्त्वया ।
पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ॥”)

**चतुर्भुजः**, पुं, (चत्वारो भुजा यस्य ।) विष्णुः ।

इत्यमरः । १ । १ । २० ॥ (यथा, देवीभाग-
वते । १ । ७ । ५ ।
“विष्णुं प्रबोधयाम्यद्य शेषे सुप्तं जनार्द्दनम् ।

चतुर्भजो रसो नाम महेशेन प्रकाशितः ।
क्रमेण शीलितं हन्ति वृक्षमिन्द्राशनिर्यथा ॥”
इति चतुर्भुजो रसः ॥
इति वैद्यकरसेन्द्रसारसंग्रहे उन्मादाधिकारे ॥
स्त्रियां गायत्रीरूपा महाशक्तिः । यथा, देवी-
भागवते । १२ । ६ । ४७ ।
“चतुर्भुजा चारुदन्ता चातुरी चरितप्रदा ॥”
चतुर्भुजविशेष्टे, त्रि । यथा, देवीभागते । १ ।
१५ । ५६ ।
“तदा शान्ता भगवती प्रादुरास चतुर्भुजा ।
शङ्खचक्रगदापद्मवरायुधधरा शिवा ॥”)

**चतुर्म्मुखः**, पुं, (चत्वारि मुखानि अस्य । यद्वा

चत्वारो वेदाश्चत्वारि मुखानीवास्य ।) ब्रह्मा ।
इति शब्दरत्नावली ॥ (यथा, रघुः । १० । २२ ।
“चतुर्व्वर्गफलं ज्ञानं कालावस्थाश्चतुर्युगाः ।
चतुर्वर्णमयो लोकस्त्वत्तः सर्व्वं चतुर्म्मुखात् ॥”
“सर्व्वं चतुर्म्मुखात् चतुर्म्मुखरूपिणस्त्वत्तः जात-
मिति शेषः ।” इति तट्टीकायां मल्लिनाथः ॥
शिवः । यथा, महाभारते । १३ । १७ । ७६ ।
“चतुर्म्मुखो महालिङ्गश्चारुलिङ्गस्तथैव च ॥”)
औषधविशेषः । यथा, --
“रसगन्धकलौहाभ्रं समं सूताङ्घ्रि हेम च ।
सर्व्वं खल्लतले क्षिप्त्वा कन्यारसविमर्द्दितम् ॥
एरण्डपत्रैरावेष्ट्य धान्यराशौ दिनत्रयम् ।
संस्थाप्य तत उद्धृत्य सर्व्वरोगेषु योजयेत् ॥

**चतुर्व्वक्त्रः**, पुं, (चत्वारि वक्त्राणि अस्य वस्तुतस्तु

चत्वारो वेदा एव वक्त्राणि मुखानीवास्य ।)
ब्रह्मा । इति हलायुधः ॥

**चतुर्व्वर्गः**, पुं, (चतुर्णां धर्म्मार्थकाममोक्षाणां वर्गः

समूहः ।) धर्म्मार्थकाममोक्षम् । इत्यमरः ।
२ । ७ । ५८ ॥ (यथा, रघौ । १० । २२ ।
“चतुर्वर्गफलं ज्ञानं कालावस्थाश्चतुर्युगाः ॥”)

**चतुर्व्विद्यः**, पुं, (चतस्रो विद्या अस्मिन्निति ।

यद्वा । ७ । ३ । ३१ । इत्यस्य सूत्रस्य वार्त्ति-
कोक्तं यथा, “चतुर्वेदस्योभयपदवृद्धिश्च । चतुरो
वेदानधीते चतुर्वेदः स एव चातुर्वैद्यः । चतु-
र्विद्यस्येति पाठान्तरम् । चतुर्विद्य एव चातु-
र्व्वैद्यः ।”) चतुर्व्वेदवेत्ता । अस्य रूपान्तराणि ।
चतुर्व्वेदः । चातुर्व्वैद्यः । चातुर्व्वैदः । इति
व्याकरणम् ॥

**चतुलः**, त्रि, (चत + उलच् ।) स्थापयिता । इति

संक्षिप्तसारे उणादिवृत्तिः ॥

**चतुष्कं**, क्ली, (चत्वारोऽवयवा यस्य वा कन् ।

चतुष्कं चतुरवयवम् । यथा, मनुः । ७ । ५० ।
“पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् ।
एतत् कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥”
गृहविशेषः । यथा, कुमारे । ५६८ ।
“चतुष्कपुष्पप्रकरावकीर्णयोः
परोऽपि को नाम तवानुमन्यते ॥”)
यष्टिभेदः । इति शब्दरत्नावली ॥
(पुंसि तु राजविशेषः । यथा, राजतरङ्गिण्याम् ।
८ । २८४९ ।
“अथ पांक्तीहरिर्य्योऽभूच्चतुष्कः कोष्टकानुजः ॥”)

**चतुष्की**, स्त्री, (चतुष्क + स्त्रियां ङीप् ।) मशहरी ।

मशारि इति भाषा ॥ पुष्करिणीभेदः । इति

चतुर्भुजं महावीर्य्यं दुःखहा स भविष्यति ॥”
वटिकौषधविशेषः । यथा, --
“मृतसूतस्य भागौ द्वौ भागैकं हेमभस्मकम् ।
उगकस्तूरिका चैव हरितालञ्च तत्समम् ॥
सर्व्वं खल्लतले पिष्ट्वा कन्यास्वरसमर्द्दितम् ।
एरण्डपत्रैरावेष्ट्य धान्यगर्भे दिनत्रयम् ॥
मंस्थाप्य तत उद्धृत्य सर्व्वरोगेषु योजयेत् ।
एतहमायनवरं त्रिफलामधुमद्दितम् ॥
तद्यथाग्निबलं खादेद्वलीपलितनाशनम् ।
अपस्मारे जरे कासे शोषे मन्दानले क्षये ॥
हस्तकम्पे शिराःकम्पे गात्रकम्पे विशेषतः ।
वातपित्तसमुत्थांश्च कफजं नाशयेदुध्रुवम् ॥
सर्व्वौघधिप्रयोगैर्ये व्याधयो न निवर्त्तिताः ।
कर्म्मभिः पश्वभिश्चैव योजयेद्रसराजतः ॥
एतद्रसायनवरं त्रिफलामधुसंयुतम् ।
तद्यथाग्निबलं खादेत् बलीपलितनाशनम्
॥
क्षयमेकादशविधं कासं पञ्चविधन्तथा ।
कुष्ठमष्टादशविधं पाण्डुरोगान् प्रमेहकान् ॥
शूलं श्वासञ्च हिक्काञ्च मन्दाग्निं
चाम्लपित्तकम् ।
व्रणान् सर्व्वानाढ्यवातं विसर्पं
विद्रधिन्तथा ॥
अपस्मारग्रहोन्मादान् सर्व्वार्शांसि
त्वगामयान् ।
क्रमेण सेवितं हन्ति वृक्षमिन्द्राशनिर्य्यथा ॥
पौष्टिकं बल्यमायुष्यं पुत्त्रप्रसवकारणम् ।
चतुर्म्मुखेण देवेन कृष्णात्रेयेण सूचितम् ॥”
इति प्रयोगामृते चतुर्म्मुखरसः ॥
(औषधान्तरं यथा, --
“मृतं सूतं मृतं स्वर्णं द्वाभ्यां तुल्या मनः
शिला ।
विमर्द्दितञ्च तैलेन चातसीसम्भवेन च ॥
तद्गोल वस्त्रतो बद्ध्वा म्रक्षयेल्लेपयेत्ततः ।
अतसीफलकल्केन दोलायन्त्रे त्र्यहं पचेत्
॥
उद्धृत्य धारयेद्वक्त्रे जिह्वास्यदन्तरोगनुत्
॥”
इति चतुर्म्मुखो रसः ॥
इति वैद्यकरसेन्द्रसारसंग्रहे
मुखरोगाधिकारे ॥)

**चतुर्युगं**, क्ली, चतुर्णां युगानां समाहारः । इति
व्याकरणममरटीका च ॥ (चत्वारि युगानि
यत्र इति विग्रहे चतुर्युगविशेष्टे, त्रि । यथा,
रघौ । १० । २२ ।
“चतुर्वर्गफलं ज्ञानं कालावस्थाश्चतुर्युगाः
॥”
“चत्वारि युगानि कृतत्रेतादीनि यासु ताः
चतुर्युगाः कालावस्थाः कालपरिमाणम्
॥” इति
तट्टीकायां मल्लिनाथः ॥)

मेदिनी । फे । ८७ ॥

**चतुष्टयं**, क्ली, केन्द्रम् । इति नीलकण्ठीयजातकम्
॥
(चतःसंख्या । यथा, कुमारे । ७ । १३ ।
“तस्मात् प्रदेशाच्च वितानवन्तं
युक्तं मणिस्तम्भचतुष्टयेन ॥”
चत्वारोऽवयवा यस्य । “संख्याया अवयवे
तयप् ।” ५ । २ । ४२ । इति तयप् । ततो
रेफस्य विसर्गे सत्वे च कृते “ह्रस्वात्तादौ
तद्धिते ।” ८ । ३ । १०१ । इति षत्वम् ।)
चतु-
रवयवे त्रि । इति मुग्धबोधम् ॥ (यथा,
मनुः । ८ । १३० ।
“वधेनापि यदा त्वेतान्निग्रहीतुं न शक्नुयात्
।
तदैषु सर्व्वमप्येतत् प्रयुञ्जीत चतुष्टयम् ॥”
यथाच, कुमारे । २ । १७ ।
“प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी
॥”)

**चतुष्पथं**, क्ली, (चतुर्णां पथां समाहारः । “तद्धि-
तार्थेति ।” २ । १ । ५१ । इति समासः ।
“ऋक्पूरब्धूःपथामानक्षे ।” ५ । ४ । ७४ ।
इति
अः । “इद्रुपधस्येति ।” ८ । ३ । ४१ ।
इति
षत्वम् । यद्वा, चत्वारः पन्थानो यत्र इति ।)
एकत्र मिलितपथचतुष्टयम् । चौमाता पथ
इति
भाषा ॥ तत्पर्य्यायः । शृङ्गाटकम् २ ।
इत्य-

मरः । २ । १ । १७ ॥ (यथा, मनुः । ४ । ३९ ।
“मृदङ्गान् दैवतं विप्रं घृतं मधु चतुष्पथम् ।
प्रदक्षिणानि कुर्व्वीत प्रज्ञातांश्च वनस्पतीन् ॥”)

**चतुष्पथः**, पुं, (चत्वारः पन्थानो ब्रह्मचर्य्यादय आश्रमा यस्य । “ऋक्पूरिति ।” ५ । ४ । ७४ ।
इति अः ।) ब्राह्मणः । इति मेदिनी । थे २७ ॥

**चतुष्पदः**, पुं, (चत्वारि पदानि यस्य ।) पशुः । (यथा, बृहत्संहितायाम् । २१ । १७ ।
“तरवश्च निरुपसृष्टाङ्कुरा नरचतुष्पदा हृष्टाः ॥”)
करणविशेषः । इति मेदिनी । दे । ४८ ॥ तत्र
जातस्य फलं यथा, कोष्ठीप्रदीपे ।
“चतुष्पदभवो मर्त्यः सदाचारविवर्ज्जितः ।
स्वल्पवित्तः
क्षीणदेहश्चतुष्पादधनान्वितः ॥”
“मेषवृषसिंहराशयः
मकरपूर्ब्बार्द्धंधनुःपरार्द्धञ्च ।”
इति दीपिका ॥
(चतुष्पदविशिष्टे । त्रि । यथा, महाभारते ।
१ । ९० । ११ ।
“चतुष्पदं द्विपदञ्चापि सर्व्वमेवं भूता गर्भभूता
भवन्ति ॥”
व्याधिनिवारणोपायाः । यथा, --
“वैद्यो व्याध्युपसृष्टस्तु भेषजं परिचारकः ।
एते पादाश्चिकित्सायाः
कर्म्मसाधनहेतवः ॥
गुणवद्भिस्त्रिभिः पादैश्चतुर्थो गुणवान् भिषक् ।
व्याधिमल्पेन कालेन महान्तमपि साधयेत् ॥

**चतुष्पाठी**, स्त्री, चतुर्णां वेदानां पाठो यस्यां सा ।
छात्राध्ययनस्थानम् । चौपाठी इति भाषा ॥
इति लोके प्रसिद्धिः ॥

**चतुष्पाणिः**, पुं, (चत्वारः पाणयो हस्ता यस्य ।)
विष्णुः । इति हारावली । ९ ॥ (चतुर्हस्त-विशिष्टे, त्रि ॥)

**चतुस्समं**, क्ली, (चतुर्णां चन्दनागुरुकस्तूरी-कुङ्कुमानां समः समभागो यत्र । यद्वा, चतुर्भि-श्चन्दनादिभिः समं एकत्र सहावस्थानं यत्र ।)
मिलितचन्दनागुरुकस्तूरीकुङ्कुमरूपम् । इति हेमचन्द्रः । ३ । ३०३ ॥ औषधविशेषः ।
यथा,
सुखबोधे ।
“लवङ्गं सैन्धवं पथ्या यमानी च चतुस्समम् ।
आमशूलविबन्धघ्नं पाचनं भेदि शोषनुत् ॥”
अन्यच्च ।
“जातीफलं त्रिदशपुष्पसमन्वितञ्च
जीरञ्च टङ्गणयुतं चरकेण चोक्तम् ।
चूर्णानि माक्षिकसितासहितानि लीढ्वा
आमातिसारमखिलं गुरु हन्ति शूलम् ॥”

**चतुस्त्रिंशत्**, स्त्री, चतुरधिका त्रिंशत् । चौत्रिश्
इति भाषा ॥ इति ज्योतिषम् ॥ (यथा, ऋग्वेदे ।
१ । १६२ । १८ ।
“चतुस्त्रिंशद्वाजिनो देवबन्धो
र्वंक्त्रीरश्वस्य स्वधितिः समेति ॥”)

**चतुस्त्रिंशज्जातज्ञः**, पुं, (चतुस्त्रिंशज्जातं जानातीति ।
ज्ञा + “आतोऽनुपसर्ग कः ।” ३ । २ । ३ ।
इति कः ।)
बुद्धभेदः । इति हेमचन्द्रः । २ । १४७ ॥

**चतूराजी**, स्त्री, (चतुर्भिरङ्गैः राजते दीप्यते
इति । राज् + “कर्म्मण्यण् ।” ३ । २ । १ ।
इति अण् । स्त्रियां ङीप् ।) चतुरङ्गक्रीडा-विशेषः । इति तिथ्यादितत्त्वम् ॥

**चत्वरं**, क्ली, (चत्यते स्वीक्रियते इति । चत + “कृ
गॄ शृ वृ चतिभ्यः ष्वरच् ।” उणां । २ । १२१ ।
इति ष्वरच् ।) स्थण्डिलम् । होमार्थपरिष्कृता

**चत्वारिंशत्**, स्त्री, (चत्वारो दशतः परिमाण-मस्याः । “पङ्क्तिविंशतीति ।” ५ । १ । ५९ ।
इति निपातनात् साधुः ।) संख्याविशेषः ।
इति ज्योतिषम् ॥ चल्लिश इति भाषा ॥ (यथा,
भागवते । ४ । १ । ६० ।
“तेभ्योऽग्नयः समभवन् चत्वारिंशच्च पञ्च च ॥”)

**चत्वालः**, पुं, (चत्यते प्रार्थ्यते स्वीक्रियते होमायेति ।
चत + “स्थाचतिमृजेरिति ।” वालञ् न वृद्धिः ।)
होमकुण्डम् । दर्भः । इति भेदिनी । ले । ८९ ॥
गर्भः । इति विश्वहेमचन्द्रौ ॥

**चद**, ए ञ याचे । इति कविकल्पद्रुमः ॥ (भ्वां-उभं-द्विकं-सेट् ।) ए, अचदीत् । ञ, चदति
चदते । इति दुर्गादासः ॥

**चद**, इ ह्लादे । दीप्तौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) इ, कर्म्मणि चन्द्यते । ह्लादो
हर्षः । इति दुर्गादासः ॥

**चदिरः**, पुं, (चन्दति दीप्यते स्वशरीरादिना इति ।
चदि + बाहुलकात् किरच् निपातनात् नस्य
लोपः ।) हस्ती । चन्द्रः । कर्पूरम् । भुजगः ।
इति संक्षिप्तसारे उणादिवृत्तिः ॥

**चन**, शब्दे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) चनति । इति दुर्गादासः ॥

**चन**, म हिंसे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) म, चनयति । इति दुर्गादासः ॥

**चन**, व्य असाकल्यम् । अकार्त् स्न्यम् । यथा ।
किञ्चन । इत्यमरभरतौ ॥ (“किमः क्त्यन्तात्
चित्चनौ ।” इति सूत्रेण ।) प्रत्ययोऽयं विभ-क्त्यन्तकिम्शब्दादुत्तरे भवति । इति मुग्धबोधम् ॥

**चन्च**, उ इतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् । उदित्त्वात् क्त्रावेट् ।) उ, चञ्चित्वा
चक्त्वा । इतिर्गतिः । इति दुर्गादासः ॥

**चन्दः**, पुं, (चन्दयति आह्लादयति यद्वा चन्दात
दीप्यते इति । चन्दि वा चन्द + पचाद्यच् ।)
चन्द्रः । इति भरतधृतशब्दार्णवः ॥

**चन्दकः**, पुं, (चन्दयति आह्लादयति लोकानिति ।

वैद्यहीनास्त्रयः पादा
गुणवन्तोऽप्यपार्थकाः ।
उद्गातृहोतृब्रह्माणो यथाध्वर्य्युं
विनाध्वरे ॥
वैद्यस्तु गुणवानेकस्तारयेदातुरान् सदा
।
प्लवं प्रतितरैर्हीनं कर्णधार इवाम्भसि ॥
तत्त्वाधिगतशास्त्रार्थो दृष्टकर्म्मा स्वयं
कृती ।
लघुहस्तः शुचिः शूरः
सज्जोपस्करभेषजः ॥
प्रत्युत्पन्नमतिर्धीमान् व्यवसायी
विशारदः ।
सत्यधर्म्मपरो यश्च स भिषक् पाद
उच्यते ॥
आयुष्मान् सत्त्ववान् साध्यो
द्रव्यवानात्मवानपि ।
आस्तिको वैद्यवाक्यस्थो व्याधितः पाद
उच्यते ॥
प्रशस्तदेशसम्भूतं प्रशस्तेऽहनि
चोद्धृतम् ।
युक्तमात्रं मनस्कान्तं
गन्धवर्णरसान्वितम् ॥
दोषघ्नमम्लानिकरमविकारिविपर्य्यये ।
समीक्ष्य दत्तं काले च भेषजं पाद
उच्यते ॥
स्निग्धोऽजुगुप्सुर्ब्बलवान् युक्तो
व्याधितरक्षणे ।
वैद्यवाक्यकृदश्रान्तः पादः परिचरः
स्मृतः ॥"
इति सुश्रुते सूत्रस्थाने ३४ अध्याये ॥)

**चतुष्पदी**, स्त्री, (चत्वारः पादा यस्याः । "सख्यासु-

पूर्ब्बस्य ।" ५ । ४ । १४० । इति
अन्तलोपे ।
"पादोऽन्यतरस्याम् ।" ४ । १ । ८ ।
इति ङीपि ।
"पादः पत् ।" ६ । ४ । १३० । इति
पदादेशः ।)
पद्यम् । इति मेदिनी । दे । ४८ ॥
चौपदी इति
भाषा ॥ (यथा, छन्दोमञ्जर्य्याम् । १
स्तवके ।
भूमिः । अङ्गनम् । इत्यमरः । २ । ७ । ८ ॥
उठान चाताल इति च भाषा ॥ (चतसृणां
रथ्यानां सङ्गमः । इति शब्दार्थचिन्तामणिः ॥
यथा, महाभारते । ३ । १५ । २० ।
"अनुरथ्यासु सर्व्वासु चत्वरेषु च कौरव ! ।
बलं बभूव राजेन्त्र ! प्रभूतगजवाजिमत् ॥"
नानाजनपदेभ्यः समागतानां वासस्थानम् ।
मठ
इति भाषा ॥ यथा, कथासरित्सागरे । ६ ।
४१ ।
"कृत्वा तांश्चणकान् पिष्टान् गृहीत्वा
जलकुम्भि-
काम् ।
अतिष्ठं चत्वरे गत्वा छायायां नगराद्बहिः ॥")

**चत्वारः**, त्रि, (चतुर्शब्दस्य प्रथमाविभक्तेर्बहु-

वचनेन सिद्धेस्तथात्वम् ।) चतुःसंख्या । चारि
इति भाषा ॥ इति व्याकरणम् ॥ तद्वाचकानि ।
वेदः १ ब्रह्मास्यम् २ वर्णः ३ समुद्रः ४
हरिबाहुः ५
स्वर्दन्तिदन्तः ६ सेनाङ्गम् ७ उपायः ८ यामः
९
युगम् १० आश्रमम् ११ वृत्तपादः १२ । इति
कविकल्पलता ॥ चतुःसंख्याविशिष्टे त्रि ।
इत्यमरः ॥
चदि ह्लादे + णिच् + "ण्वुलतृचौ । ३ । १ । १३३ ।
इति ण्वुल् ।) मत्स्यविशेषः । चाँदा इति
भाषा ॥ तस्य गुणः । रुचिबलकारित्वम् । अन-
भिष्यन्दित्वञ्च । इति राजवल्लभः ॥ चन्द्रकोऽपि
पाठः ॥ (चन्द्रकशब्देऽस्य विवृतिर्व्याख्येया ॥)

**चन्दनः**, पुं, क्ली, (चन्दयति आह्लादयतीति । चदि

आह्लादे + णिच् + ल्युः ।) स्वनामख्यातवृक्षः ।
(यथा, गोः रामायणे । ५ । ७४ । ३ ।
"चन्दनांस्तिलकांश्चूतानशोकान्सिन्धुवारकान् ॥"
तथा च पञ्चतन्त्रे । १ । ४२ ।
"विना मलयमन्यत्र चन्दनं न प्ररोहति ॥")
तत्पर्य्यायः । गन्धसारः २ मलयजः ३ भद्रश्रीः ४ ।
इत्यमरः । २ । ६ । १३१ ॥ श्रीखण्डम् ५ महा-
र्हम् ६ श्वेतचन्दनम् ७ गोशीर्षम् ८ तिल-
पणम् ९ मङ्गल्यम् १० मलयोद्भवम् ११ गन्ध-
राजम् १२ सुगन्धम् १३ सर्पावासम् १४ शीत-
लम् १५ गन्धाढ्यम् १६ भोगिवल्लभम् १७ पाव-

| | | |
|---|---|---|
| "पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ॥")<br>**चतुष्पाटी**, स्त्री, (चतस्रः दिशः पाटयति भिन-त्तीति । पाटि + अण् + स्त्रियां ङीप् ।) नदी ।<br>इति शब्दमाला ॥ | | |

नम् १८ शीतगन्धः १९ । इति राजनिर्घण्टः ॥
तैलपर्णिकः २० चन्द्रद्युतिः २१ । इति भाव-
प्रकाशः ॥ भद्रश्रियम् २२ हितम् २३ हिमम्
२४ । इति रत्नमाला ॥ पटीरः २५ वर्णकः २६
भद्राश्रयः २७ सेव्यः २८ रौहिणः २९ । इति
शब्दरत्नावली ॥ याम्यः ३० पीतसारः ३१ ।
इति जटाधरः ॥ अस्य गुणाः । कटुत्वम् ।
तिक्तत्वम् । शीतलत्वम् । स्वादे कियतकषाय-
त्वम् ।
पित्तभ्रान्तिवमिज्वरक्रिमितृषासन्ताप
शान्तिकारित्वम् । वृष्यत्वम् ।
वक्त्ररोगनाशित्वम् ।
शरीरकान्तिवृद्धिकारित्वम् । लेपने कामवृद्धि-
कारित्वम् । अतिसौरभ्यदत्वञ्च । इति राज-
निर्घण्टः ॥ रूक्षत्वम् । तिक्तत्वम् । आह्लादन-
त्वम् । लघुत्वम् ।
श्रमशीर्षरोगविषश्लेष्मास्रदाह-
नाशित्वञ्च ॥ * ॥ श्रेष्ठचन्दनलक्षणं यथा, --
"स्वादे तिक्तं कषे पीतं छेदे रक्तं तनौ सितम् ।
ग्रन्थिकोटरसंयुक्तं चन्दनं श्रेष्ठमुच्यते ॥"
इति भावप्रकाशः ॥
वानरविशेषः । इति हेमचन्द्रः । ३ । ३०५ ॥

**चन्दनं**, क्ली, (चन्द्यते आह्लाद्यते अस्मादनेन वा
इति । चदि ह्लादे + णिच् + ल्युट् ।)
भद्रकाली ।
इति मेदिनी । ने । ६१ ॥

**चन्दनगोपी**, स्त्री, (चन्दनमपि गोपायति स्वगन्धा-
दिना रक्षतीति । गुप + अण् । ततो ङीप् ।
यद्वा, चन्दनवद् गुप्यति दीप्यते इति । अच् ।)
शारिवाविशेषः । इति राजनिर्घण्टः ॥

**चन्दनधेनुः**, स्त्री, (चन्दनेन अङ्किता धेनुः । मध्य-

अभावे वारुणेनापि यूपं कुर्य्याद्विधानतः ॥
वृषोत्सर्गे तु वृषमौलिकः ।
तरुणी रूपसम्पन्ना सुशीला च पयस्विनी ।
न्यायार्ज्जिता गृहे जाता देया सा श्रोत्रियाय गौः ॥
नदीतीरे वने गोष्ठे देवतायतनेषु च ।
व्रीहिक्षेत्रे कुशक्षेत्रे राजद्वारे चतुष्पथे ॥

एषु वचनेषु वृषोत्सर्गनिषेधचन्दनधेनूतसर्ग-
विध्योर्युगपदुपसंहारदर्शनात् वृषोत्सर्गस्थाने
प्रधानतया चन्दनधेनूत्सर्गः प्रतीयते । अतो-
ऽस्य वृषोत्सर्गकार्य्यकारित्वात् तत्फलहेतुत्वं
लभ्यते । एकोद्दिष्टं न कुर्व्वीत न्यासिनाञ्चैव
सर्व्वदा । अहन्येकादशे प्राप्ते पार्व्वणन्तु विधी-
यते ॥ इति श्राद्धविवेकधृतोशनोवचने त्रिदण्ड-
सन्न्यासिनां एकोद्दिष्टनिषेधपार्व्वणविध्योर्युग-
पदुपसंहारात् एकोद्दिष्टस्थाने पार्व्वणमिव ।
यद्वा पतिपुत्त्रवतीरूपप्रेतविशेषाधिकृतवृषं न
चोत्सृजेदिति निषेधचन्दनधेनूत्सर्गविधिभ्यां
प्रेतमात्राधिकृतसामान्यवृषोत्सर्गविध्यवगतफल-
भावनाकरणीभूतवृषकर्म्मकत्यागमनूद्य तत्कर्म्मी-
भूतवृषमपंहाय तत्स्थाने धेनुमात्रगुणविधि-
र्लाघवादवगम्यते । पशुयागे सामान्यविध्यव-
गतापः प्रणयनीयाधिकरणीभूतचमसस्थानेगो-
दोहेनापः प्रणयेदिति विशेषविधिना गोदोह-
गुणविधिवत् । नालाभेऽपि प्रवेशिनीम् । उपोष्य
द्वादशीं तत्र त्रयोदश्यान्तु पारणमित्यत्र एका-
दशीरूपनिमित्तस्थाने द्वादशीमात्रगुणविधि-
वच्च । अन्यथा धेनूत्सर्गस्य पृथक्कर्म्मत्वे फल-
भावना तत्करणनियोज्यानां पृथक्कल्पने
गौरवं स्यात् । उक्तविधिनिषेधयोरुपसंहारवैय-
र्थञ्च स्यात् । ततश्च करणैक्यात् फलैक्यमिति ।
चन्दनधेनूत्सर्गेऽपि प्रेतत्वविमुक्तिपूर्ब्बकस्वर्ग-
प्राप्तिः फलम् । एवं कपिलमन्त्रस्थपापव्यपग-
मस्वर्गप्रार्थनाया अपि तथैव तात्पर्य्यम् । तथा
जातूकर्णवचनस्थपापस्वर्गपदयोरपि तथैव तात्-
पर्य्यं बोध्यम् । भूतार्थानां विधिशेषिणामेव जैमि-
न्युक्तप्रामाण्येन प्रकृते सिद्धे विधिशेषित्वे लाघ-
वात् । पापिष्ठमपि शुद्धेन शुद्धं पापकृतापि वेति
कात्यायनवचनस्थपापपदस्यप्रेतत्वे एव तात्-
पर्य्यदर्शनाच्च । अत्र यद्यपि पतिपुत्त्रवतीत्यत्र
पतिपुत्त्रवत्त्वस्य विशेष्यीभूतकर्त्त्रन्वयिमरणान्वयि-

वतीपरत्वं अवश्यं वाच्यम् ।
तदेकवाक्यतया
पुत्त्रिणीत्यादावपि तथात्वमिति वाच्यम् ।
अपुष्पितेति कपिलार्द्धस्य
प्रसक्तिपूर्ब्बकतार्थं
पतिपुत्त्रवत् निवृत्तरजस्काया
धेनूत्सर्गनिषे-
धार्थत्वात् गत्यां सत्यां लक्षणाया
बीजाभावात् ।
प्रतियोगिवत्ध्वंसप्रागभावयोरपि
अत्यन्ताभाव-
विरोधित्वमते तु अजातपुष्पस्त्रीपरत्वं वा
भवतु
तथात्वेऽपि तस्या धेनुर्व्विगर्हितेति
अप्रसक्ता-
र्थापि अपुष्पिताधेनुदाननिन्दा
पतिपुत्त्रवत्या-
श्चन्दनधेनुदानस्तुतिपरा । यथा
हरेरुत्थाने
पौष्णशेषेण किन्तेन प्रतिपद्यथ यो
निशीत्य-
प्रसक्तापि निन्दा
एकादश्यादिपौर्णमास्यन्त-
पञ्चके रेवत्यन्तपादयोगविधिस्तुतिपरा ।
यथा
वा वेदगाने यो गिरा गिरेति ब्रूयात् स
आत्मान-
मपि गिरेत् इत्यप्रसक्तनिन्दा ऐरं कृत्वा
अव-
गिरेदिति बिधेः स्तुतिपरा । अतएव उक्तं
शावरभाष्ये । न हि निन्दा निन्द्यं निन्दितुं
प्रवर्त्तते अपि तर्हीतरत् स्तोतुमिति ।
स्तुतौ हि
अप्रसिद्धगुणदोषारोपणदोषाय । न चात्र
काम्य-
स्यैव कार्त्तिक्यादिवृषोत्सर्गस्य स्थाने
धेनुदानं
विधीयते इति वाच्यम् । तन्मात्रपरत्वे
माना-
भावात् । प्रत्युत म्रियत इति
वर्त्तमानार्थक-

पदलोपिकर्म्मधारयः ।) पतिपुत्त्रवन्मृतनार्य्युद्देश्यकोत्सृष्टचन्दनाङ्कितसवत्सगौः।
तत्प्रमाण-
प्रयोगौ लिख्येते ।
"नत्वा शिवं चन्दनचर्च्चिताया
धेनोः प्रदाने सविधिप्रयोगम् ।
रत्नाकरादेर्लिखितं विलोक्य
तनोति वाचस्पतिरग्र्यबुद्धिः ॥"
अथ चन्दनधेनुदानविधिः । तत्र रत्नाकरे
देवलः ।
जीवद्भर्त्री तु या नारी पुत्त्रिणी म्रियते यदि ।
सवत्सामङ्कितां धेनुमाचार्य्याय प्रदापयेत् ॥
पतिपुत्त्रवती नारी म्रियते याग्रतस्तयोः ।
वृषं न चोत्सृजेत् पुत्त्रः पिता यावच्च जीवति
॥
तथा कर्म्मोपदेशिन्यां ब्राह्मणसर्व्वस्वे च
हला-
युधधृतानि वचनानि । यथा स्मृतिः ।
पतिपुत्त्रवती नारी म्रियते भर्त्तुरग्रतः ।
चन्दनेनाङ्कितां धेनुं तस्याः स्वर्गाय कल्पयेत्
॥
तथा जातूकर्णः ।
धेनुं चन्दनमालिप्य यो दद्यान्मातृहेतवे ।
यदि पापशतैर्युक्ता तथापि स्वर्गमाप्नुयात् ॥
तथा वशिष्ठः ।
न युक्तश्च वृषोत्सर्गो यावत् पितरि जीवति ।
चन्दनेनाङ्कितां धेनुमाचार्य्याय प्रदापयेत् ॥ *
॥
चतुर्हस्तो भवेद्यूपो यज्ञवृक्षसमुद्भवः ।
वर्त्तुलः शोभनः स्थूलः कर्त्तव्यो धेनुमौलिकः
॥
विल्वस्य वकुलस्यैव कलौ यूपः प्रशस्यते ।

त्वेन न विशेषणत्वं किन्तूपलक्षणत्वमेव ततश्च
काकवन्तो देवदत्तस्य गृहा इतिवत् कादाचित्क
तद्वत्तामादायापि पतिपुत्त्रवतीतिप्रयोग उप-
पद्यते । तथापि अग्रतस्तयोर्भर्त्तुरग्रत इत्याभ्यां
मरणकालिकी पतिपुत्त्रसत्तावगम्यते । गवां
गोष्ठे इतिवत् । अथवा परार्द्धान्वयेन धेनूत्-
सर्गकालिकीति । नचापुष्पिता मृता काचित्
तस्या धेनुर्विगर्हिता । इति कपिलवचने
अपुष्पितायाः पुत्त्रकर्त्तृकधेनूत्सर्गनिषेधस्या-
प्रसक्ततया सपत्नीपुत्त्रकर्त्तृकधेनूत्सर्गनिषेध-
प्राप्तौ तद्दृष्ट्या पतिपुत्त्रवतीत्यस्य सपत्नीपुत्त्र-

विभक्त्या
वर्त्तमानसामीप्येनाचिरप्रमीतोप-
स्थितेश्च । ये तु बह्वीनामेकपत्नीनामेका
चेत्
पुत्त्रिणी भवेत् । सर्व्वास्तास्तेन पुत्त्रेण
प्राह पुत्त्र-
वतीर्म्मनुरिति मनुना
पुत्त्रवतीत्वाभिधानाच्च
पतिपुत्त्रवतीत्यत्र सपत्नीपुत्त्रवती
प्रतीयते इति
ब्रुवते तेऽतीवभ्रान्ताः । पुत्त्रवतीति
पदस्याखण्ड-
तया मतुपा पतिपदस्यान्वये
तटस्थत्वापत्तेः ॥ * ॥
ननु वृषतुल्यवयो वर्णो वृषः स्याद्दक्षिणा
द्विजाः ।
वृषोत्सर्गे तथा पुंसां स्त्रीणां
स्त्रीगौर्विशिष्यते ॥
इति भविष्यसंवादाद्धेनुदानमिदं
पतिपुत्त्रवत्या
वृषोत्सर्गे दक्षिणादानस्य विशेषरूपम् । न
तु
प्रधानकर्म्मान्तरं गौरवात् । न च
दक्षिणाया
अङ्गत्वेन फलासङ्गतिः । यस्य पर्णमयी
जुहू-
र्भवति न स पापश्लोकं
शृणोतीतिवत्तदुपपत्ते-
रिति चेत् न ।
वृषोत्सर्गदक्षिणातश्चन्दना-
ङ्कितधेनुदानस्य प्रकरणान्तराम्नायेन
प्रकरणा-
न्तरन्यायतः प्रधानत्वसिद्धेः ।
वृषोत्सर्गस्थानीय-
त्वेनानुवर्त्तमानशिष्टाचारात् ।
धेनुदानयुगनद्ध-
वृषोत्सर्गनिषेधानामसङ्गतेः ।
कपिलपञ्चरात्रे
चन्दनधेनुदानस्यापीति कर्त्तव्यतायां
वृषरूप-
दक्षिणादानविधानाच्च ॥ * ॥
यथा कपिल उवाच ।
अतः परं प्रवक्ष्यामि धेनुदानमनुत्तमम् ।
पतिपुत्त्रवती नारी म्रियते भर्त्तुरग्रतः ॥

|  |  |  |
| --- | --- | --- |
|  |  | चन्दनेनाङ्कितां धेनुपाचार्य्याय निवेदयेत् ॥<br>तथा ।<br>जीवद्भर्त्ती तु या नारी पुत्रिणी म्रियते यदि ।<br>सवत्सामङ्कितां धेनुमाचार्य्याय निवेदयेत् ॥<br>साध्वी पतिव्रता नारी म्रियते याऽग्रतस्तयोः ।<br>वृषं नैवोत्सृजेत् पुत्त्रो यावत् पितरि जीवति ॥ |

मृतपुत्रा च या नारी संगृहीता तु या भवेत् ।
तस्या धेनुर्न दातव्या वृषोत्सर्गो विधीयते ॥
अपुष्पिता मृता काचित्तस्या धेनुर्विगर्हिता ।
दद्याद्धेनुं सुतो ज्येष्ठः कनिष्ठो वृषमुत्सृजेत् ॥
द्वयोः सोदरयोरेको भवेत् ज्येष्ठः प्रधानतः ।
त्रयाणां द्वौ सुतौ ज्येष्ठौ चतुर्णाञ्च त्रयः स्मृताः ॥
पञ्चानां सोदराणाञ्च त्रयो ज्येष्ठाः प्रकीर्त्तिताः ।
ज्येष्ठेनैव तु कर्त्तव्यं धेनुदानं विधानतः ॥
हेमशृङ्गीं खुरै रूप्यैः सुशीलां वस्त्रसंयुताम् ।
कांस्योदरीं ताम्रपृष्ठां घण्टाचामरभूषिताम् ॥
प्रबालमालिकां दद्यात् कर्णयोरुभयोरपि ।
चन्दनेनाङ्कितां धेनुमाचार्य्याय निवेदयेत् ॥
गवां लोकमवाप्नोति दिवि देवैश्च मोदते ।
चन्दनेनाङ्कितां धेनुं दत्त्वा गच्छेत् सुरालयम् ॥
तावत्तिष्ठति स्वर्लोके यावदाहूतसंप्लवम् ।
न चोत्सर्गो वृषस्यात्र वत्सतर्य्यन्वितस्य च ॥
वृषोत्सर्गविधानेन कर्त्तव्यं सर्व्वकर्म्म च ।
मा नस्तोकेति मन्त्रेण दक्षे वृषाज्यसीति च ॥
धेनोश्च सक्थिदेशे तु त्रिशूलाङ्कं समालिखेत् ।
वामभागे विशेषोऽयं दक्षे चक्रं समालिखेत् ॥
तत्रान्यद्वर्ज्जयेद्विद्वानाचार्य्यस्तु विधानवित् ।
ग्रहीत्वार्घ्यञ्च पाद्यञ्च उत्सृजेत्तामलङ्कृताम् ।
दीयते ब्राह्मणायैषा आचार्य्याय महात्मने ॥
एवंविशिष्टां तां धेनुं दत्त्वा तर्पणमारभेत् ।
पुच्छं गृहीत्वा पित्रादीन् वृषोत्सर्गविधानतः ॥
ऐशान्याञ्चालयेत् किञ्चिदाचार्य्याय च दक्षिणाम् ।
वृषभञ्च ततो दद्यादाचार्य्याय गुणान्वितम् ॥
पूजयेद्ब्राह्मणांश्चैव वस्त्रमाल्यादिभिस्ततः ।
कांस्यपात्रं वस्त्रयुग्मं सुवर्णञ्च विशेषतः ॥
आचार्य्याय प्रदातव्यं ब्रह्मणे कनकं तथा ।
आगतान् पूजयेद्भक्त्या यथाशक्ति विधानतः ॥
दीनार्त्तकृपणादींश्च अन्नाद्यैः परितोषयेत् ॥”
इति कापिले धेनुदानप्रमाणम् ॥ * ॥
पुस्तकान्तरे पाठाधिक्यं यथा, --
“एकादशाहे प्रेतायाः षण्मासे चाब्दिके तथा ।
त्रिपक्षे मासिके वापि दद्याद्गां चन्दनाङ्किताम् ॥
तथा वराहपुराणम् ।
अयने विषुवेऽष्टम्यां युगाद्यापूर्णिमासु च ।
दर्शे मन्वन्तरे चैव धेनुं दद्यात् सुपूजिताम् ॥
ननु आद्यश्राद्धे त्रिपक्षे वेत्यादिना आद्यश्राद्ध-कर्त्तव्यनित्यवृषोत्सर्गकालस्य परपरकालो गौणः । न वा सर्व्वे कालाः स्युः । तत्र नाद्यः त्रिपक्षादौ शिष्टाचारविरोधात् । नापि द्वितीयः त्रिपक्षादौ नित्यत्वबोधकाभावात् । वस्तुतः आद्यश्राद्धे वृषोत्सर्गस्य नित्यत्वं त्रिपक्षादौ काम्यत्वम् । आद्यश्राद्धपदं अशौचान्तद्वितीय-दिनपरम् । अशौचान्ताद्द्वितीयेऽह्नीत्याद्येक-वाक्यत्वात् । अत्र च आद्यश्राद्धस्य विघ्नपतित-त्वन एकादश्यादौ क्रियमाणत्वे वृषोत्सर्गमपि न कुर्य्यात् । आद्यश्राद्धदिने वृषोत्सर्गाकरणे स्वपितुः पितृकृत्येषु अधिकारो न विद्यते । इति छन्दोगपरिशिष्टे अग्निष्वात्ताद्यन्तर्गणमुक्त्वा जीवत्पितृकश्चैतानन्यांश्चेतर इति कात्यायन-सूत्रे च जीवत्पितृकस्य पितृतर्पणनिषेधात् वृषोत्सर्गे तदङ्गभूततत्पुच्छगलितोदकतर्पण-विरहात् साङ्गकरणासामर्थ्ये वृषोत्सर्गानधि-कारः । अतएव द्वैतनिर्णयेऽपि । अनूचितस्त्रियां करणीभूतगर्बाधेन यागवद्वृषोत्सर्गस्य बाध उक्तो वाचस्पतिमिश्रेण । धेनुदानाङ्गतर्पणे तु प्रधानाधिकारश्रुतेः जीवत्पितृकाधिकृतविशेष-विधानाच्चाधिकार एवाभ्युदयिकश्राद्धवत् जन्म-मास्युपनयनाङ्गसशिखवपनवच्च । अयन्तु सामान्य-शास्त्रोपजीवित्वेन निषेधः पर्य्युदास एव । स तु यदि पतिपुत्रवद्भिन्नाया वृषोत्सर्गं कुर्य्यादित्येव मात्रस्तदा पुत्र इत्यादिवचनभागवैयर्थ्यं स्यात् । यदि च जीवत्पितृकभिन्नो वृषोत्सर्गं कुर्य्यात् इत्येव मात्रस्तदा पूर्ब्बभागवैयर्थ्यं स्यात् । यदि वा पतिपुत्रवत्या जीवत्पितृकपुत्रभिन्नोवृषोत् सर्गं कुर्य्यादिति विशिष्टरूपस्तथापि पतिपुत्र-घत्यास्तदुभयरहितायाश्च जीवत्पितृकपौत्रा-दिना वृषोत्सर्गः स्यात् । स चायुक्त एव प्रागुक्तवचनन्यायविरोधात् । तस्मात् समुदाय-वचनसार्थक्याय पतिपुत्रवद्भिन्नाया वृषोत्सर्गं कुर्य्यात् । तथा जीवत्पितृकभिन्नो वृषोत्सर्गं कुर्य्यात् इति वचनन्यायसंवादाद्वाक्यद्वयमेव सिध्यति । प्रमाणवद्गौरवस्य सर्व्वाङ्गीकृतत्वात् । दर्शपौर्णमासयोः षट्प्राधानापूर्ब्बवत् । अथ-वोक्तदेवलादिवचने ज्येष्ठेनैव तु कर्त्तव्यं धेनुदानं विधानत इत्यन्तकापिलसकलवचनपर्य्यालोचनया कनिष्ठपुत्रवतीभिन्नपतिपुत्रवतीतरजनस्यकापिल प्रतिप्रसूतकनिष्ठपुत्रभिन्नजीवत्पितृकात्अन्यो जनो वृषोत्सर्गं कुर्य्यात् । इति सामान्यत एव वृषोत्सर्गविधिः । तथा पतिपुत्रवत्या ज्येष्ठ-पुत्र एव चन्दनाङ्कितधेनुमुत्सृजेदिति विधिश्च सिध्यति । ततश्च पतिपुत्रवत्याः कनिष्ठपुत्रसत्त्व एव तेन तदन्यमृतपितृकेण वा वृषोत्सर्गः कार्य्यः । कनिष्ठपुत्राभावे तु न केनापि । एवं पत्यादिना चन्दनधेनुदानमिति । प्रतिप्रसूत-कनिष्ठान्यजीवत्पितृकेण न कस्यापि वृषोत्सर्गः कार्य्य इत्यपि चपर्य्यवसितम् ॥ वस्तुतस्तु पतिपुत्र-वत्या वृषोत्सर्गनिषेधे तत्पुत्रस्य जीवत्पितृक-त्वनानधिकार एव हेतुः न तु स्त्रियाः पति-

ततो वै संलिखेच्चक्रं
पञ्चाङ्गुलप्रमाणकम् ॥
शूलं षडङ्गुलं कार्य्यं दक्षे वामेयथाविधि
।
पूर्ब्बाशाभिमुखीं धेनुं यजमानोत्तरामुखः
॥
मस्तकादिक्रमेणैव प्रतिमन्त्रैः प्रपूजयेत्
॥" * ॥
शिरसि ॐ ब्रह्मणे नमः । ललाटे ॐ
वृषभध्वजाय नमः । कर्णयोः ओम्
अश्विनी-
कुमाराभ्यां नमः । चक्षुषोः ॐ
शशिभास्क-
राभ्यां नमः । जिह्वायां ॐ सरस्वत्यै
नमः । दन्तेषु ॐ वसुभ्यो नमः ।
ओष्ठयोः
ॐ सन्ध्यायै नमः । ग्रीवायां ॐ नील-
कण्ठाय नमः । हृदि ॐ स्कन्दाय नमः
।
रोमकूपेषु ओम् ऋषिभ्यो नमः ।
दक्षिणपार्श्वे
ॐ कुवेराय नमः । वामपार्श्वे ॐ वरु-
णाय नमः । रोमाग्रेषु ॐ रश्मिभ्यो नमः
।
ऊरुषु ॐ धर्म्माय नमः । जङ्घासु ओम्
अधर्म्माय नमः । श्रोणितटे ॐ पितृभ्यो
नमः । खुरमध्ये ॐ गन्धर्व्वेभ्यो नमः ।
खुराग्रे ओम् अप्सरोभ्यो नमः । लाङ्गूले
ॐ
द्वादशादित्येभ्यो नमः । गोमये ॐ
महालक्ष्म्यै
नमः । गोमूत्रे ॐ गङ्गायै नमः ।
पयोधरेषु
ॐ चतुःसागराय नमः ।
एवमङ्गानि संपूज्य पठेन्मन्त्रं समाहितः
।
ओम् इन्द्रस्य च त्वमिन्द्राणी
विष्णोर्लक्ष्मीश्च या
स्मृता ।
रुद्रस्य गौरी या देवी सा देवी वरदास्तु
मे ॥
ॐ या लक्ष्मीर्लोकपालानांया च
देवेष्ववस्थिता ।

त्रिपक्षाद्यन्यतमकालेऽपि वृषोत्सर्गस्यावश्य-
प्रेतत्वपरीहारकत्वेन तस्य पुनः
संवत्सरसाध्य-
सकृत्कृतस्य नित्यत्वं कल्प्यम् । एवं
धेनुदान-
स्यापि । अतएव पूर्णसंवत्सरे
मलमासपातेऽपि
प्रागकृतश्चेत् कार्य्य एव इति नवीना जगुः ।
एककर्त्तृकानेकवृषोत्सर्गोऽपि शिष्टाचार एक-
दिनेऽपि । तथा हि स्वर्गलोकगमनफलश्रुतेः
काम्यत्वेन यो भूय आरभते तस्मिन् फले
विशेष
इति न्यायादविरोधः ॥ ननु नैमित्तिकत्वात्
कथमावृत्तिः सकृत्कृते कृतः शास्त्रार्थ इति
न्यायात् । न चैकत्र क्रियाद्वयमिति वचनाच्च
।
अत्रायं विशेषः । काम्यनैमित्तिकं
फलविशेषार्थं
भूयः कार्य्यं नैमित्तिकमात्रं सकृदेव । किञ्च ।
संक्रान्त्यादिनिमित्तकश्राद्धमपिपुनः पुनः
स्यात् ।
मैवं तत्र पितृतृप्तिरूपप्रधानफलस्यसत्त्वेन
चरितार्थ इति ॥ * ॥ अत्रोक्तानि
सर्व्वाण्यतानि
वचनानि तिर्य्यगधिकरणन्यायमूलानि ।
तथा
हि तिर्य्यगधिकरणे
तिर्य्यक्पङ्गुत्र्यार्षेयदेवताना-
मनधिकार इति यागमात्रे उक्तम् । तत्र
हेतवः तिरश्चां घिशिष्टान्तःकरणविरहात्
पङ्गोः प्रचरणविरहात् त्र्यार्षेयाणां
अन्धवधिर-
मूकानामवेक्षणश्रवणोच्चारणविरहात्साङ्ग-
यागासामर्थ्ये तेषां यथा
यागानधिकारस्तद्वदत्र

सत्त्वंपुत्त्रसत्त्वं वा । मृतपुत्त्रेत्यादिप्रागुक्तकापिल-
वचने पतिसत्त्वे कनिष्ठपुत्त्रसत्त्वे च वृषोत्सर्गा-
वगतेः । तत्पुत्त्रस्य पितुः सत्त्व एवानधिकारोक्त्या
तन्मरणे वृषोत्सर्गावगमाच्च । न वा तदुभय-
सत्त्वं मिलितं उक्तन्यायावगततत्पुत्त्रस्यजीवत्-
पितृकत्वहेतोरेव तादृशनिषेधप्राप्तेः पतिपुत्त्र-
सत्त्वयोर्निर्बीजहेतुत्वकल्पनानौचित्यात् तयो-
र्व्वाचनिकहेतुत्वे तु अदृष्टकल्पनाया अन्याय्य-
त्वात् सिद्धजीवत्पितृकनिषेधप्रपञ्चतया पति-
पुत्त्रवत्या निषेधोपपत्तौ अधिकनिषेधकल्पने

| | | |
|---|---|---|
| धेनुरूपेण सा देवी तस्याः पापं व्यपोहतु ॥<br>ॐ देहस्था या च रुद्राणी शङ्करस्य सदा प्रिय ॥<br>धेनुरूपेण सा देवी तस्याः शान्तिं प्रयच्छतु ॥<br>ॐ सर्व्वदेवमयी दोग्ध्री सर्व्वलोकमयी तथा ।<br>धेनुरूपेण सा देवी तस्याः स्वर्गं प्रयच्छतु ॥ | | |

गौरवाच्च । यस्तु जीवत्पितृकवृषोत्सर्गनिषेधे पतिपुत्त्रवत्याः पृथगुपसंहारः सोऽपि तस्याः पुत्त्रानधिकारमात्रप्रयुक्तसिद्धवृषोत्सर्गाभावभागित्वानुवादः । पूर्ब्बवाक्यावगतधेनुदानस्य वृषोत्-
सर्गस्थानीयत्वज्ञापनार्थ एवेति प्रागपि निरूपितम् । ततश्चोक्तवचने तिर्य्यगधिकरणन्यायप्राप्तं जीवत्पितृकस्य वृषोत्सर्गकर्त्तृत्वाभावमनूद्य सपतिकाया वृषोत्सर्गस्थाने चन्दनाङ्कित-
धेनूत्सर्ग एव विधीयते । एतेन वृषोत्सर्गकर्त्तरि कपिलप्रतिप्रसूतसपतिकावृषोत्सर्गकृतिमत्कनिष्ठपुत्त्रान्यजीवत्पितृकेत्तरत्वविशेषणं सपति-
काया वृषोत्सर्गस्थाने ज्येष्ठपुत्त्रस्यैव चन्दनाङ्कितधेनूत्सर्गमात्रश्च लभ्यते । अतो जीवत्पितृकेण काम्यवृषोत्सर्गः पतिते प्रव्रजिते वा पितरि जीवति पितामहादिवृषोत्सर्गश्च न कार्य्यः । एवं सपतिकाया अपि पुत्त्रस्य कर्म्मयोग्यत्वे असत्त्वे वा पत्या कन्यादिना वा वृषोत्-
सर्गः कार्य्य एवेति स्थितम् । इदन्तु रत्नाकरहलायुधाचार्य्यचूडामणिविद्याभूषणशुभङ्करमहादेवभट्टआचार्य्यप्रभृतीनामपि सम्मतं तेषां पृथक् पृथक् पद्धतिरपि प्रचरति । क्वचिद्देशे स्मार्त्तभट्टआचार्य्यस्यापि समूलपद्धतिर्दृश्यते । अतएवात्र विशेषादर्शिनामनाचारोऽनाचार एव । अत्र भविष्योक्तप्रकारस्तु वैकल्पिक एव । स्मृतिशास्त्रे विकल्पो हि आकाङ्क्षापूरणे सतीति जैमिन्युक्तेः । तत्रत्यपूजाहोमाद्यङ्गेषु विशेषमन्त्रतन्त्रोक्तेः । कापिलकल्पेन वृषोत्सर्ग-
धर्म्मातिदेशेन विशेषोक्तनिरासाच्च ॥ * ॥ सम्प्रति
विचारितकापिलकल्पप्रयोगोऽभिधीयतेयथा । गोशालादौ वितानयुक्ते प्रागुदक्प्लवनं देशं गोमयेनोपलिप्य कृतनित्यक्रिय आचान्तः कुश-
हस्तो द्विवासाः प्राङ्मुखः ॐ तद्विष्णोः परमं पदं इति विष्णुं स्मृत्वा नत्वा च उदङ्मुखः ॐ तत् सदित्युच्चार्य्य कुशतिलजलपूर्णताम्रपात्रमादाय विशेषानुपदेशात् मुख्यचान्द्रमासो-
चान्ताद्द्वितीयेऽह्नि अमुकगोत्रममुकप्रवरं श्रीअमुकदेवशर्म्माणं त्वामस्मिन् चन्दनाङ्कितधेनु-
दानाङ्गहोमकर्म्मणि ब्रह्मकर्म्मकरणाय गन्धादिभिरभ्यच्च्यीहं वृणे इति ब्रह्माणं वृणुयात् । ॐ वृतोऽस्मीति प्रतिवचनम् । ॐ यथाविहितं ब्रह्म कर्म्म कुरु । ॐ यथाज्ञानं करवाणीति प्रतिवचनम् । स्वयं गानाशक्तौ ब्रह्मकर्म्म करणायेत्यत्र ब्रह्मादिकर्म्मकरणायेति वदेत् । स्वयं
होमासामर्थ्ये होतारं वृणुयात् । तत्र होतृकर्म्मकरणायेति विशेषः । एवं तन्त्रधारकाचार्य्यमपि । आचार्य्यान्तराभावे ब्रह्मैवाचार्य्यत्वेनापि
वरणीयः । तत्र ब्रह्माचार्य्यकर्म्मकरणायेति विशेषः । एवं प्रागुक्तवत् सदस्यवरणमपि । हस्ताङ्गुल्यादिमानन्तु याजमानिकमेव सर्व्वत्र ग्राह्यम् । ततः पुण्याहस्वस्त्यृद्धिवाचनं कृत्वा चन्दनाङ्कितधेनुदाननिमित्तकहोमीयहविरक्षयत्वकामो भारतनामोच्चारणं कुर्य्यात् । ततो यजमानो होता वा गायत्त्र्या गोमूत्रं आ गन्धद्वारेत्यादिना गोमयं ओम् आप्यायस्वेत्यादिना दुग्धं ॐ दधिक्राव्न इत्यादिना दधि ॐ तेजोऽसीत्यादिना घृतं ॐ देवस्य त्वा सवितुः प्रसवेश्विनोर्ब्बाहुभ्यां पूष्णी हस्ताभ्यामाददे इति
कुशोदकञ्च शोधयित्वा गायत्त्र्या सर्व्वमेकीकृत्य
तेन वेदीमभ्युक्ष्य तत्र घटान् संस्थाप्य गणेशं ग्रहान् विष्णुञ्च संपूजयेत् । ततो हस्तप्रमाणं स्थण्डिलं शर्कराङ्गारास्थिकेशतुषादिरहितं पूर्ब्बोत्तरप्लवं समं वा गोमयेनोपलिप्य तत्र स्वगृह्योक्तविधिनाग्निं संस्थाप्य स्वस्वगृह्योक्तवृषोत्सर्गपद्धतिक्रमेण कर्म्म कृत्वा प्राङ्मुखों धेनुमग्निसमीपं नीत्वा ॐ मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नोऽश्वेषु रीरिषः ।
वीरान्मा नो रुद्रभामिनोऽवधीर्हविष्वन्तः सदमित्त्वा हवामहे । इति मन्त्रेण धेनोर्वामसक्थिनि षडङ्गुलं त्रिशूलं चन्दनेन कुशेन लिखेत् ।
शशिभास्कराभ्याम् । जिह्वायां सरस्वत्यै । दन्तेषु
वसुभ्यः । ओष्ठयोः सन्ध्यायै । ग्रीवायां नीलकण्ठाय । हृदि स्कन्दाय । रोमकूपेषु ऋषिभ्यः ।
दक्षपार्श्वे कुवेराय । वामपार्श्वे वरुणाय । रोमाग्रे
रश्मिभ्यः । ऊरुषु धर्म्माय । जङ्घासु अधर्म्माय ।
श्रोणीतटे पितृभ्यः । खुरमध्ये गन्धर्व्वेभ्यः । खुराग्रेषु अप्सरोभ्यः । लाङ्गूले द्वादशादित्येभ्यः ।
गोमये महालक्ष्म्यै । गोमूत्रे गङ्गायै । पयोधरेषु चतुःसागराय । एवं संपूज्य पठेत् ।
ओम् इन्द्रस्य च त्वमिन्द्राणी विष्णोर्लक्षीश्च या
स्मृता ।
रुद्रस्य देवी या गौरी सा देवी वरदास्तु मे ॥
ॐ या लक्ष्मीर्लोकपालानां या च देवेष्ववस्थिता ।
धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥
ॐ देहस्था या च रुद्राणी शङ्करस्य सदा प्रिया ।
धेनुरूपेण सा देवी तस्याः शान्तिं प्रयच्छतु ॥
ॐ सर्व्वदेवमयी दोग्ध्री सर्व्वलोकमयी तथा ।
धेनुरूपेण सा देवी तस्याः स्वर्गं प्रयच्छतु ॥
ततः ओम् आचार्य्याय नमः इत्यनेनोदङ्मुखं सम्प्रदानब्राह्मणं पाद्यादिभिः संपूज्य एवं ॐ रुद्राय नमः इति तद्देवतां संपूज्य ॐ चन्दनाङ्कितसवत्सधेनवे नमः इत्यनेन पाद्यार्घ्याचमनीयगन्धपुष्पैर्धेनुं संपूज्य संप्रोक्ष्य च ब्राह्मणहस्ते जलं दत्त्वा कुशतिलजलान्यादाय ॐ तत्
सदद्यामुके मासि अमुके पक्षे अमुकतिथावमुकगोत्रायाः प्रेताया अमुकाया अशौचान्ताद्द्वितीयेऽह्नि अमुकगोत्रायाःप्रेताया अमुकायाः प्रेतलोकविमुक्तत्वस्वर्गलोकगमनकामोऽहं एतां सालङ्कारां चन्दनाङ्कितसवत्सधेनुं रुद्रदेवताकां
अमुकगोत्राय श्रीअमुकदेवशर्म्मणे आचार्य्यब्राह्मणाय तुभ्यं ददानीति ब्राह्मणहस्ते जलं दद्यात् । ततः सम्प्रदानब्राह्मणः पुच्छं धृत्वा

ल्लेखेन अद्यामुके मासि अमुके पक्षे अमुकतिथौ
अमुकगोत्रायाः प्रेतायाः अमुकायाः अशौ-
चान्तादि्द्वतीयेऽह्नि अमुकगोत्रायाः प्रेतायाः
अमुकायाः प्रेतलोकविमुक्तत्वस्वर्गलोकगमन-
कामः चन्दनाङ्कितसवत्सधेनुदानकर्म्माहंकरि-
ष्यामीति संकल्पयेत् । ततस्तज्जलमैशान्यां
क्षिपेत् । ततः स्वस्वरीत्या सङ्कल्पसूक्तं पठेत् ।
ततः प्रथमं ब्रह्मवरणम् । तत्र उत्तरामुखं
ब्रह्माणमुपवेश्य तत्समीपे आसनमानीय प्राङ्-
मुखो यजमानः प्राञ्जलिः ॐ साधुभवानास्तां
इति वदेत् । ॐ साध्वहमासे इति प्रतिवचनं
दत्त्वा ब्रह्मा तदासने उपविशति । ततः कर्त्ता
ओम् अर्च्चयिष्यामो भवन्तं इति वदेत् । ओम्
अर्च्चयेति प्रतिवचनम् । ततो
गन्धपुष्पताम्बूल-
वस्त्रालङ्कारैर्ब्रह्माणं संपूज्य तद्दक्षिणं जानु
स्पृष्ट्वा
ओम् अद्यामुकेमासि अमुकेपक्षेऽमुकतिथौ
अमुकगोत्रायाः प्रेतायाः अमुकाया अशौ-

वीरान्मा न इति सामगानाम् । यजुषान्तु मा
नो
वीराननिति मन्त्रभागे पाठः । ततः ॐ वृषो-
ह्यसि भानुना द्युमन्तं त्वा हवामहे पवमानः
स्वर्दृ शम् । इति मन्त्रेण दक्षसक्थिनि
पञ्चाङ्गुलं
आरहीन चक्रञ्च तथैवाचार्य्यो लिखेत् ।
अस्मि-
न्नवसरे अग्नेरुत्तरे सवत्सधेनुमौलिकं यूप-
मारोपयेत् । ततः स्वस्वगृह्योक्तविधिना वृष-
वद्धेनुं स्नापयेत् । ततः सितवाससा
जलमपनीय
गन्धचन्दनपुष्पाञ्जनसिन्दूरगोरोचनाद्द्रव्यैः
स्वर्ण-
शृङ्गाभ्यां रूप्यसफैश्च वस्त्रेण कांस्यक्रोडेन
ताम्रपृष्ठेन घण्टाचामराभ्याञ्च यथायोग्यं तथा
कर्णयोः प्रबालमालिकाभ्याञ्च धेनुं भूषयित्वा
पाद्यादिभिरभ्यर्च्च्य
स्वस्वगृह्योक्तश्राव्यमन्त्रान्
श्रावयित्वा च प्राङ्मुखीं धेनुं शुक्लवाससा यूपे
बध्नीयात् । ततो यजमान उत्तरामुखः धेनो-
र्मस्तकादिक्रमेण तत्तन्मन्त्रैः पूजयेद्यथा ।
शिरसि
ॐ ब्रह्मणे नमः । एवं ललाटे वृषभध्वजाय
नमः । कर्णयोः अश्विनीकुमाराभ्याम् ।
चक्षुषोः

ओमित्युक्त्वा प्रतिगृह्य स्वस्तीत्युक्त्वा च
सावित्रीं
पठेत् । ततो धेनुरियं रुद्रदेवताकेति वदेत् ।
यथाशाखं कामस्तुतिञ्च पठेत् । यथा साम-
वेदे । ॐ क इदं कस्मा अदात् कामः
कामाया-
दात् कामो दाता कामः प्रतिग्रहीता कामः
ससुद्रमाविशत् कामेन त्वा प्रतिगृह्णामि कामै-
तत्ते ॥ यजुर्व्वेदे तु । ॐ द्यौस्त्वा परिददातु
पृथिवी त्वा प्रतिगृह्णातु कोऽदात् कस्मा अदात्
कामः कामायादात् कामो दाता कामः प्रति-
ग्रहीता कामैतत्ते तव कामशतात् भुनजामहे ॥
ऋग्वेदे तु । सामगमन्त्रान्ते । ॐ वृष्टिरसि
द्यौस्त्वा परिददातु पृथिवी त्वा प्रतिगृह्णातु ।
इदमधिकम् । ततो यजमानः ॐ अद्योत्यादि
कृतैतत्सालङ्कारचन्दनाङ्कितसवत्सधेनुदानर्क-
र्म्मणः साङ्गतार्थं दक्षिणामिमं वृषं तन्मूल्यं वा
विष्णुदैवतं अमुकगोत्राय श्रीअमुकदेवशर्म्मणे
आचार्य्याय ब्राह्मणाय तुभ्यमहं ददानीत्या-
चार्य्याय दद्यात् । आचार्य्यस्तु ओमिति
गृहीत्वा

स्वस्तीति वदेत् । ततो वृषोत्सर्गवन्मन्त्रोह्नेन स्वस्वगृह्योक्तश्राव्यादिशेषं कर्म्म समापयेत् । ततः सदस्यदक्षिणां दत्त्वा आहूतान् वस्त्र-माल्यादिभिः पूजयेत् । सामगश्चेदिदानीं ब्रह्म-होत्राचार्य्यसदस्येभ्यो ब्राह्मणेभ्यो दक्षिणां वृषोत्सर्गवद्दद्यात् । अन्यवेदी तु स्वस्वगृह्योक्त-रीत्या यथास्थानं दक्षिणां वृषोत्सर्गवद्दद्यात् । शूद्रस्तु यजुर्व्वेदिवत् सर्व्वं कुर्य्यात् । किन्तु मन्त्र-पाठं ब्राह्मणेन कारयेत् । दीनानाथादींश्च वस्त्रान्नाद्यैस्तोषयेदिति ॥” * ॥ इति श्रीचन्द्रशेखर-वाचस्पतिभट्टाचार्य्यविरचितः चन्दनाङ्कितधेनु-दानसविधिप्रयोगः समाप्तः ॥

**चन्दनपुष्पं**, क्ली, (चन्दनमिव सुगन्धि पुष्पं यस्य ।) लवङ्गम् । इति राजनिर्घण्टः ॥

**चन्दनशारिवा**, स्त्री, (चन्दनगोपी शारिवा । शाकपार्थिवादिवत् समासः ।) शारिवाविशेषः । इति राजनिर्घण्टः ॥

**चन्दनसारः**, पुं, (चन्दनस्येव सारो यस्य ।) वज्र-क्षारम् । इति राजनिर्घण्टः ॥

**चन्दना**, स्त्री, (चन्दयति आह्लादयति स्वगन्धा-दिनेति । चदि ह्लादे + णिच् + युच् । स्त्रियां टाप् ।) शारिवाविशेषः । इति राजनिर्घण्टः ॥ नदीविशेषः । सा तु मधुखाल्याख्यनगरसमीप प्रसिद्धा ॥

**चन्दनाचलः**, पुं, (चन्दनस्य चन्दनोत्पादको वा अचलः । चन्दनाकरः पर्व्वत इत्यर्थः ।) मलय-पर्व्वतः । इति जटाधरः ॥

**चन्दनाद्रिः**, पुं, (चन्दनस्य चन्दनोत्पादको वा अद्रिः पर्व्वतः ।) मलयपर्व्वतः । इति त्रिकाण्ड-शेषः ॥

**चन्दनी**, स्त्री, (चन्दयति आह्लादयति जलादिदाने-नेत्यर्थः । चन्दन + ङीष्) नदीविशेषः । इति मेदिनी । ने । ६० ॥ (यथा, गोः रामायणे । ४ । ४० । २० ।
“रुचिरां कुटिलाञ्चैव चन्दनीं चापगां तथा ॥”)

२ । १३ । इति रक् ।) देवताविशेषः । चाँद इति भाषा । तत्पर्य्यायः । हिमांशुः २ चन्द्रमाः ३ इन्दुः ४ कुमुदबान्धवः ५ विधुः ६ सुधांशुः ७ शुभ्रांशुः ८ ओषधीशः ९ निशापतिः १० अब्जः ११ जैवातृकः १२ सोमः १३ ग्लौः १४ मृगाङ्कः १५ कलानिधिः १६ द्विजराजः १७ शशधरः १८ नक्षत्रेशः १९ क्षपाकरः २० । इत्यमरः । १ । ३ । १३ -- १४ ॥ दोषाकरः २१ निशीथिनी-नाथः २२ शर्व्वरीशः २३ एणाङ्कः २४ शीत-रश्मिः २५ । इति ग्रन्थान्तरम् ॥ समुद्रनवनीतः २६ सारसः २७ श्वेतवाहनः २८ नक्षत्रनेमिः २९ उडुपः ३० सुधासूतिः ३१ तिथिप्रणीः ३२ अमतिः ३३ चन्दिरः ३४ चित्राटीरः ३५ पक्ष-धरः ३६ अजः ३७ नभश्चमसः ३८ राजा ३९ रोहिणीशः ४० अत्रिनेत्रजः ४१ पक्षजः ४२ सिन्धुजन्मा ४३ दशाश्वः ४४ हरचूडामणिः ४५ माः ४६ तारापीडः ४७ निशामणिः ४८ । इति जटाधरः ॥ मृगलाञ्छनः ४९ दर्शविपत् ५० छायामृगधरः ५१ ग्रहनेमिः ५२ दाक्षायणी-पतिः ५३ लक्ष्मीसहजः ५४ सुधाकरः ५५ सुधाधारः ५६ शीतभानुः ५७ तमोहरः ५८

रथमारोपयामास लोकानां हितकाम्यया ।
स तेन रथमुख्येन सागरान्तां वसुन्धराम् ॥
त्रिःसप्तकृत्वो द्रुहिणोऽकारयत्तं प्रदक्षिणम् ।
तस्य तत्प्लावितं तेजः पृथिवीमन्वपद्यत ॥
तेनौषध्यः समुद्भूता याभिः सन्धार्य्यते जगत् ।
स लब्धतेजा भगवान् ब्रह्मणा वर्द्धितः स्वयम् ॥”
तस्य क्षीणत्वपूर्णत्वयोः कालो यथा, --
“कृष्णाष्टमीदिनाद्धूर्ध्वं यावच्छुक्लाष्टमीदिनम् ।
तावत् कालं शशी क्षीणः पूर्णस्तत्रोपरि स्मृतः ॥”
इत्यग्निपुराणे ज्योतिःशास्त्रम् ॥
तस्य क्षयवृद्धिकारणं यथा, पाद्मे स्वर्गखण्डे ।
“अश्विन्याद्यास्तु दक्षस्य उपयेमे सुता विधुः ।
रोहिण्यामेव सततं बद्धप्रेमा रराम ह ॥
दृष्ट्वा तदितरास्ताश्च तप्ताः पितरमब्रुवन् ।
अस्माकं कामदस्तात ! जामाता तव रोहिणीम् ।
रमयत्येव सततं तेन तप्ता वयं पितः ! ॥
तत् श्रुत्वा चाप्रियं दक्षः सोममाह भजस्व भोः ।
प्रेम्ना समेन सर्व्वास्त्वं दुहितॄर्म्मम मानद ! ॥
जगृहे तद्वचो नैव सोमः सप्रेम रोहिणीम् ।
तथैव रमयामास श्रुत्वा दक्षश्चुकोप ह ॥
शशाप ते न भविता ह्यपत्यं मद्वचोऽतिगः ।
यक्ष्मणा च परिग्रस्तो भव त्वं क्षीणरेतकः ॥
अथक्षयमिते तस्मिन् सर्व्वास्ताः सहिताः स्त्रियः ।
पितरं शरणं प्राप्ताः क्षीयते नः पतिः पितः ! ।
न वयं तेन वर्त्तामो विना सुखनिराकृताः ॥
उवाच दक्षस्ताः सर्व्वाः शापो मे नान्यथा भवेत् ।
मासमध्ये पक्षमेकं वर्द्धतां स क्रमेण वै ॥
क्षयं क्रमेण प्राप्नोतु पक्षमेकं व्यवस्थया ।
एवं शापं वरञ्चैव ददावस्मै व्यवस्थया ॥
तथैव राजते व्योम्नि क्षयवृद्धी दधद्विधुः ॥”
स च गौरवर्णः वायुकोणस्त्रीवैश्यजातिसत्त्वगुण-कर्कटराशिमृगशिरोनक्षत्ररौप्यलवणरसमुक्ता-गैरिकादिधातुसर्पाणामधिपतिः। आर्द्रभूमि-चारी तपस्वी अपराह्णकाले प्रबलः श्लेष्मप्रकृतिः स्थूलो युवा शुभग्रहः शुभ्राभश्च । इति ताजक-जातकादयः ॥ अर्द्धादूनः शशी पापः । इति समयामृतम् ॥ * ॥ कर्पूरम् । स्वर्णम् । (यथा, ऋग्वेदे । १ । १४१ । १२ ।
“उतनः सुद्योत्मा जीराश्वो होता मन्द्रः शृणवच्चन्द्ररथः ॥”)
जलम् । काम्पिल्लः । इति मेदिनी । रे ३१ ॥ द्वीप-विशेषः । इति शब्दमाला ॥ विसर्गः । इति

**चन्दनीया**, स्त्री, (चन्द्यते दीप्यतेऽनया । चदि + करणे अनीयर ।) गोरोचना । इति राज-निर्घण्टः ॥

**चन्दिरः**, पुं, (चन्दन्ति हृष्यन्ति लोका येन । चदि ह्लादे + "इषिमदीदि ।" उणां । १ । ५१ । इति किरच् ।) चन्द्रः । हस्ती । इति मेदिनी । रे । १५२ ॥

**चन्द्रं**, क्ली, (चन्दति दीप्यते इति । चदि + "स्फायितञ्चीति ।" उणां । २ । १३ । इति रक् ॥)
स्वर्णम् । चुक्रम् । इति राजनिर्घण्टः ॥ (वृत्त-विशेषः । यथा, वृत्तग्रन्थे ।
"द्विजवरगणयुगमुपधाय परिकलय कर-
मथनगणयुगलमिह गन्धयुगमपि वितर ।
फणिनृपतिभणितमिति चन्द्रमिदमिति शृणुत
सकलकविकुलहृदयमोदकरमवतनुत ॥")

**चन्द्रः**, पुं, (चन्दयति आह्लादयति चन्दति दीप्यते इति वा । चन्द + "स्फायितञ्चीति ।" उणां ।

तुषारकिरणः ५९ हरिः ६०
हिमद्युतिः ६१
द्विजपतिः ६२ विश्वप्सा ६३
अमृतदीधितिः ६४
हरिणाङ्कः ६५ रोहिणीपतिः ६६
सिन्धुनन्दनः
६७ तमोनुत् ६८ एणतिलकः ६९
कुमुदेशः ७०
क्षीरोदनन्दनः ७१ कान्तः ७२
कलावान् ७३
यामिनीपतिः ७४ सिप्रः ७५
मृगपिप्लुः ७६
सुधानिधिः ७७ तुङ्गी ७८ पक्षजन्मा ७९
चन्दः ८० अब्धिनवनीतकः ८१
पीयूषमहाः ८२
शीतमरीचिः ८३ शीतलः ८४ । इति शब्दरत्ना-
वली ॥ त्रिनेत्रचूडामणिः ८५
अत्रिनेत्रभूः ८६
सुधाङ्गः ८७ परिज्ञाः ८८ वलक्षगुः ८९ तुङ्गी-
पतिः ९० यज्वनाम्पतिः ९१
पर्व्वधिः ९२ क्लेदुः
९३ जयन्तः ९४ तपसः ९५
खचमसः ९६ विकसः
९७ । इति त्रिकाण्डशेषः ॥ दशवाजी ९८ श्वेत-
वाजी ९९ अमृतसूः १००
कौमुदीपतिः १०१
कुमुदिनीपतिः १०२ भपतिः १०३
दक्षजापतिः
१०४ ओषधीपतिः १०५ कलाभृत् १०६ शश-
भृत् १०७ एणभृत् १०८ छायाभृत् १०९ अत्रि-
दृग्जः ११० निशारत्नम् १११
निशाकरः ११२
अमृतः ११३ श्वेतद्युतिः ११४ । इति हेमचन्द्रः ।
२ । १९ ॥ * ॥ तस्योत्पत्तिर्यथा, --
"ब्रह्मणो मानसः पुत्त्रस्त्वत्रिर्नाम
महातपाः ।

तन्त्रम् ॥ कमनीयः । मेचकः । स तु वर्हचन्द्रकः । इति हेमचन्द्रः ॥ रक्तरजतम् । तत्तु शोणमुक्ता-फलम् । (योगोक्तेडानाडी । यथा, हठयोग-प्रदीपिकायाम् । २ । ७ ।
"बद्धपद्मासनो योगी प्राणं चन्द्रेण पूरयेत् ॥"
"चन्द्रेण चन्द्रनाड्येडया ।" इति तट्टीका ॥ भ्रूमध्य-भागस्थसोममण्डलम् । यथा, तत्रैव । ३ । ४९ ।
"चन्द्रात् स्रवति यः सारः स स्यादमरवारुणी ॥"
"चन्द्रात्भ्रुवोरन्तर्वामभागस्थात्सोमात् ।" तट्टीका ॥)
आह्लादजनकद्रव्ये त्रि । इति भरतधृतव्याडिः ॥

| | | |
|---|---|---|
| | स्रष्टुकामः प्रजा वत्स ! तपस्तेपे सुदुश्चरम् ॥<br>त्रीणि वर्षसहस्राणि दिव्यानीतीह नः श्रुतम् ।<br>ऊद्र्ध्वमाचक्रमे तस्य रेतः सोमत्वमीयिवत् ॥<br>नेत्राभ्यां तस्य सुस्राव दशधा द्योतयद्दिशः ।<br>तं गर्भं ब्रह्मणादिष्टा दश देव्यो दधुर्दिशः ॥<br>संगत्यैव महाराज ! नैव ताः समशक्नुवन् ।<br>यदा न धारणे शक्तास्तस्य गर्भस्य ता दिशः ॥<br>ततस्ताभिः सहैवासौ निपपात वसुन्धराम् ।<br>पतितं सोममालोक्य ब्रह्मा लोकपितामहः ॥ | |

**चन्द्रकं**, क्ली, (चन्द्र इव चन्द्रप्रभा इव कायतीति ।
कै + कः । वर्णसादृश्यात्तथात्वम् ।) सितमरि-
चम् । इति राजनिर्घण्टः ॥

**चन्द्रकः**, पुं, (चन्द्र इव कायति प्रकाशते इति । कै
+ कः ।) वर्हनेत्रम् । मयूरपुच्छेर चाँद इति
भाषा । तत्पर्य्यायः । मेचकः २ । इत्यमरः ।
२ । ५ । ३१ ॥ (यथा, गीतगोविन्दे । २ । ३ ।
“चन्द्रकचारुमयूरशिखण्डकमण्डलवलयित-
केशम् ॥”)
नखः । इति शब्दचन्द्रिका ॥ मत्स्यविशेषः ।
चाँदा माछ इति भाषा । अस्य गुणाः । अन-
भिष्यन्दित्वम् । मधुरत्वम् । बलवर्द्धनत्वञ्च ।
इति
राजनिर्घण्टः ॥ तत्पर्य्यायः । चलत्पूर्णिमा २
चन्द्रचञ्चला ३ चन्द्रिका ४ । इति शब्दरत्ना-
वली ॥ (मण्डलम् । यथा, माघे । ५ । ४० ।
“यां चन्द्रकैर्मदजलस्य महानदीनां
नेत्रश्रियं विकसतो विदधुर्गजेन्द्राः ॥”
“चन्द्रकैश्चन्द्राकारैर्मण्डलैर्महानदीनाम् ।” इति
मल्लिनाथः ।) चन्द्रशब्दात् स्वार्थे के चन्द्रश्च ॥

**चन्द्रकला**, स्त्री, (चन्द्रं चन्द्राकारं मुखभागं कल-
यतीति । कलि + अच् टाप् च ।) द्रगड-
वाद्यम् । वाचामत्स्यः । इति शब्दरत्नावली ॥
(चन्द्रस्य कला ।) चन्द्रस्य षोडशभागेषु भागः ।
तद्यथा, --
“पूषा यशा सुमनसा रतिः प्राप्तिस्तथा धृतिः ।
ऋद्धिः सौम्या मरीचिश्च तथा चैवांशुमालिनी ॥
अङ्गिरा शशिनी चेति छाया सम्पूर्णमण्डला ।
तष्टिश्चैवामृता चेति कलाः सोमस्य षोडश ॥”
आसां प्रयोजनं तिथिभेदे स्त्रीणामङ्गविशेषे
स्थितस्य कामस्य
प्रणवादिसबिन्दुप्रत्येकस्वरयुक्त-
नमोऽन्ततत्तत्प्रत्येककलानामरूपैर्मन्त्रैश्चालनम्
।
इति कामशास्त्रम् ॥ * ॥ तन्त्रोक्ता कला यथा,
“अमृता मानदा पूषा पुष्टिस्तुष्टी रतिर्धृतिः ।
शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीति-
रङ्गदा ॥
पूर्णापूर्णामृताकामदायिन्यःशशिनः कलाः ।
“परीक्षका यत्र न सन्ति देशे
नार्घन्ति रत्नानि समुद्रजानि ।
आभीरदेशे किल चन्द्रकान्तं
त्रिभिर्वराटैर्विपणन्ति गोपाः ॥”)
अस्य गुणाः । शिशिरत्वम् ।
स्निग्धत्वम् । अस्र-
दाहग्रहालक्ष्मीनाशित्वम् ।
शिवप्रीतिकरत्वम् ।
स्वच्छत्वञ्च ॥ * ॥ तदुद्भववारिगुणाः
। विमलत्वम् ।
लघुत्वम् ।
पित्तमूर्च्छापित्तास्रदाहकासमदात्यय-
रोगनाशित्वञ्च । इति राजनिर्घण्टः ॥

**चन्द्रकान्ता**, स्त्री, (चन्द्रः कान्तः प्रियो यस्याः ।)
रात्रिः । इति शब्दचन्द्रिका ॥
(चन्द्रस्य
कान्ता ।) चन्द्रपत्नी च ॥

**चन्द्रकालानलं**, क्ली, चक्रविशेषः । यथा, --
“चन्द्रकालानलं चक्रं व्योमाकारं
लिखेद्बुधः ।
चतुर्द्दिक्षु त्रिशूलानि मध्यभिन्नानि
कारयेत् ॥
पूर्ब्बत्रिशूलमध्यस्थं दिन ऋक्षादि
लिख्यते ।
त्रिशूले च वहिर्मध्ये मध्ये
वहिस्त्रिशूलके ॥
मृत्युस्त्रिशूले नामर्क्षे मध्यमं वहिरष्टके
।
क्षेमलाभजयप्रज्ञा नामर्क्षे चन्द्रगर्भगे ॥
वर्जनीयं प्रयत्नेन प्रथमाष्टत्रिपञ्चकम्
॥”
इति समयामृतम् ॥

**चन्द्रकी**, पुं, स्त्री, (चन्द्रको विद्यतेऽत्रेति अच् ।
चन्द्रक + ङीष् ।) मयूरः । इति
त्रिकाण्डशेषः ॥

**चन्द्रकुण्डः**, पुं, (चन्द्रस्य कुण्डः चन्द्ररश्मिनिर्म्मितः
न्यञ्चभावं समासाद्य सर्व्वदेवेश्वरो हरिः ।
सेवितुं त्रिदशेशानीं सततं वर्त्तते नरः ॥
चन्द्रकूटस्य तु गिरेर्नन्दनस्य तथा गिरेः ॥
प्रतिदर्शं तथा चन्द्रः प्रदक्षिणयति त्रिधा ॥
चन्द्रकुण्डजले स्नात्वा समारुह्याथ नन्दनम्
।
आराध्य शक्रं लोकेशं महाफलमवाप्नुयात् ॥”
इति कालिकापुराणे
कामाख्यारूपनिर्णये
८१ अध्यायः ॥

**चन्द्रगुप्तः**, पुं, (चन्द्रेण गुप्तः रक्षितः । चन्द्र-
वदाह्लादजनकरूपगुणवत्त्वात्तथात्वंवा ।)
राज-
विशेषः । (यथा, भागवते । १२ । १ । ११ --
१२ ।
“नवनन्दान् द्विजः कश्चित् प्रपन्नानुद्धरिष्यति
।
तेषामभावे जगतीं मौर्य्या भोक्ष्यन्ति वै कलौ ।
स एव चन्द्रगुप्तं वै द्विजो राज्येऽभिषेक्ष्यति
॥”)
चित्रगुप्तः । इति केचित् ॥

**चन्द्रगोलस्थाः**, पुं, (चन्द्र एव गोलः चन्द्रगोलक-
स्थानं चन्द्रलोक इत्यर्थः । तत्र तिष्ठन्ति ये ।)
दिव्यपितरः । इति त्रिकाण्डशेषः ॥ बहुवच-
नान्तोऽयं शब्दः ॥

**चन्द्रगोलिका**, स्त्री, (चन्द्रगोलः साधनत्वेना-
स्त्यस्याः । इति ठन् टाप् च ।) ज्योत्स्ना ।
इति हेमचन्द्रः । २ । २० ॥

**चन्द्रचञ्चला**, स्त्री, (चन्द्र इव चलज्जलस्थचन्द्रवत्
चञ्चला ।) चन्द्रकमत्स्यः । इति शब्दरत्ना-
वली जटाधरश्च ॥

**चन्द्रदाराः**, पुं, (चन्द्रस्य दाराः पत्न्यः ।) अश्वि-
न्यादिनक्षत्राणि । इति हलायुधः ॥ बहुवच-
नान्तोऽयम् ॥

**चन्द्रपुष्पा**, स्त्री, (चन्द्र इव पुष्पमस्याः ।) श्वेत-

आसां प्रयोजनं कलावतीदीक्षादौ पूजनम् ॥”
इति रुद्रयामलम् ॥
(चन्द्रः । यथा, कथासरित्सागरे । १ । ३९ ।
“स च दक्षमखस्तेन नाशितो मन्युना मया ।
ततो जाता हिमाद्रेस्त्वमब्धेश्चन्द्रकला यथा
॥”)

**चन्द्रकान्तं**, क्ली, (चन्द्रवत् कान्तं कान्तिः कम-
नीयता अस्य ।) श्रीखण्डचन्दनम् । कैरवम् ।
इति रत्नमाला ॥

**चन्द्रकान्तः**, पुं, (चन्द्रः कान्तः प्रियो यस्य ।) कैरवम् ।
(चन्द्रैव कान्तः कान्तियुक्तः । चन्द्रः कान्तः
अभीष्टो अधिष्ठातृदेवोऽस्येति वा ।) मणिभेदः ।
इति मेदिनी । ते । १९५ ॥ अस्य पर्य्यायाः ।
चन्द्र-
मणिः २ चान्द्रः ३ चन्द्रोपलः ४ । इति हेम-
चन्द्रः । ४ । १३२ ॥ इन्दुकान्तः ५ चन्द्राश्मा
६
संप्रवोपलः ७ शीताश्मा ८ चन्द्रिकाद्रावः ९
शशिकान्तः १० । (यथा, पञ्चतन्त्रे । १ । ८८ ।
कुण्डो वा । चन्द्राधिष्ठातृकः कुण्ड
इत्यर्थः ।)
कामरूपस्थसरोवरविशेषः । (यथा,
कालिका-
पुराणे कामाख्यारूपनिर्ण्ये ८१
अध्याये ।
“चन्द्ररश्मिसमुद्भूत ! चन्द्रकुण्ड !
महोदधे ! ॥”)

**चन्द्रकूटः**, पुं, (चन्द्राख्यः कूटः पर्व्वतः । यद्वा,
चन्द्रः
कूटे शृङ्गे यस्य । प्रतिदने
चन्द्रप्रदक्षिणकरणा-
देवास्य तथात्वम् ।)
कामरूपस्थपर्व्वतभेदः ।
यथा, --
“पूर्ब्बं वायुगिरेः शैलश्चन्द्रकूट इति
स्मृतः ।
त्रिकोणस्ताम्रसङ्काशस्तत्कूध्र्वे
चन्द्रमण्डलम् ॥
द्वितीयवर्गस्याद्यन्तु
बिन्द्विन्दुभ्यामलङ्कृतम् ।
चन्द्रबीजमिति प्रोक्तं तेन चन्द्रं
प्रपूजयेत् ॥
अद्यापि प्रतिदर्शे तु पर्व्वतं तं
निशापतिः ।
प्रदक्षिणीकरोत्येव दशभी
रश्मिभिर्युतः ॥
तस्यैव पूर्ब्बभागे तु सोमकुण्डाह्वयं
सरः ।
तत्र स्नात्वा च पीत्वा च नरः
कैवल्यमश्नुते ॥
स्वर्गादषभृतश्चन्द्रः कामाख्यासेवने
यदा ।
तदा
तद्रश्मिसंघातनिःसृतास्तोयराशयः ॥
तैस्तोयैर्व्वासवः
कुण्डमकरोदिन्द्रचन्द्रयोः ।
मध्ये पुण्यतमस्थाने स्वयं
ब्रह्मशिलोपरि ॥
चन्द्ररश्मिसमुद्भूत ! चन्द्रकुण्ड !
महोदधे ! ।
कण्टकारी । इति राजनिर्घण्टः ॥

**चन्द्रप्रभः**, पुं, (चन्द्र इव प्रभा यस्य ।) वृत्ताह-
द्विशेषः । इति हेमचन्द्रः । १ । २७ ॥ (चन्द्र-
प्रभाविशिष्टे, त्रि । यथा, महाभारते । ६ । २०
। ८ ।
“चन्द्रप्रभं श्वेतमप्यातपत्रं
सौवर्णस्रग्भ्राजते चोत्तमाङ्गे ॥”)

**चन्द्रप्रभा**, स्त्री, (चन्द्रवत् प्रभा स्निग्धादिगुण-
वत्तास्याः ।) वाकुची । इति राजनिर्घण्टः ॥
औषधविशेषः यथा, सुखवोधे ।
“कृमिरिपुदहनव्योषत्रिफलामरदारुचव्यभू
निम्बम् ।
मागधिमूलं मुस्तं सशठीवचामाक्षिकञ्चैव ॥
लवणक्षारनिशायुगकुस्तुम्बुरुगजकणातिविषाः
।
कर्षांशकान्येव समानि कुर्य्यात्
पलाष्टकं चाश्मजतोर्व्विदध्यात् ।
निष्पत्रशुद्धस्य पुरस्य धीमान्
पलद्वयं लौहरजस्तथैव ॥
सिताचतुष्कं पलमत्र वंश्या
निकुम्भकुम्भत्रिसुगन्धियुक्तम् ।
चन्द्रप्रभेयं गुडिका प्रयोज्या
चार्शांसि निर्णाशयते षडेव ॥
भगन्दरं पाण्डुरकामलाञ्च
निर्नष्टवह्नेः कुरुते च दीप्तिम् ।

| | | |
|---|---|---|
| | सुधास्रवण ! साह्लाद ! त्वं चन्द्र ! कलुषं हर ॥<br>इत्यनेन तु मन्त्रेण सुस्नाय चन्द्रपाथसि ।<br>चन्द्रकूटं समारुह्य पूजयेद्यस्तु तं नरः ॥<br>अविच्छिन्ना सन्ततिस्तु सुकान्ता तस्य जायते ।<br>परत्र चन्द्रभवनं भित्त्वा याति परं पदम् ॥<br>तोरे तु चन्द्रकूटस्य नन्दनो नाम वै गिरिः ।<br>तस्मिन् वसति शक्रस्तु कामाख्यासेवने रतः ॥ | |

हन्त्यामयान् पित्तकफानिलोत्था-
न्नाडीगते मर्म्मगते व्रणे च ॥
ग्रन्थ्यर्व्वुदे विद्रधिराजयक्ष्मणो-
र्मेहे भगाख्ये प्रबले च योज्या ।
शुक्रक्षये चाश्मरिमूत्रकृच्छ्रे
शुक्रप्रवाहेऽप्युदरामये च ॥
भक्तस्य पूर्ब्बं सततं प्रयोज्या
तक्रानुपानं त्वथ मस्तुपानम् ।
आजो रसो जाङ्गलजो रसो वा
पयोऽथवा शीतजलानुपानम् ॥
बलेन नागस्तुरगो जवेन
दृष्ट्या सुपर्णः श्रवणे वराहः ॥
वलीपलितनिर्मुक्तो वृद्धोऽपि तरुणायते ॥
न पानभोज्ये परिहार्य्यमस्ति
न शीतवातातपमैथुनेषु ।
शम्भुं समभ्यर्च्च्य कृतप्रसादे-
नाप्ता गुडी चन्द्रमसः प्रसादात् ॥”
(“मृतसूताभ्रकं लौहं नागं वङ्गं समं समम् ।
एलाबीजं लवङ्गञ्च जातीकोषफलन्तथा ॥
मधूकं मधुयष्टी च धात्री च समशर्करा ।
कर्पूरं खादिरं सारं शताह्वा कण्टकारिका ॥
अम्लवेतसतुल्यांशमम्ललोणीद्रवैर्द्दिनम् ।
भावयेन्मेषशृङ्ग्या च नागवल्ल्या दिनं दिनम् ॥
वटिकां वदरास्थ्याभां नाम्ना चन्द्रप्रभां पराम् ।
भक्षयेत्तीव्रमेहार्त्तः सर्व्वमेहकुलान्तकम् ॥
धात्री पटोलपत्रं वा कषायं वामृतायुतम् ।
सक्षौद्रं पाययेच्चानु सर्व्वमेहप्रशान्तये ॥”
इति चन्द्रप्रभावटी ।
इति वैद्यकरसेन्द्रसारसंग्रहे प्रमेहाधिकारे ॥)

**चन्द्रभागः**, पुं, (भज् + भावे घञ् । चन्द्रस्य भागो-
विभागो यत्र इति ।) पर्व्वतविशेषः । यथा, --
ऋषय ऊचुः ।
“चन्द्रभागा कथं सिन्धुस्तत्रोत्पन्ना महागिरौ ।
कीदृक् सरस्तद्विप्रेन्द्र ! बृहल्लोहितसंज्ञकम् ॥
कथं स पर्व्वतश्रेष्ठश्चन्द्रभागाह्वयोऽभवत् ।
चन्द्रभागाह्वया कस्मान्नदी जाता वृषोदका ॥
एतन्नः श्रोष्यमाणानां जायते कौतुकं महत् ।
माहात्म्यं चन्द्रभागायाः कासारस्य गिरेस्तदा ॥
मार्कण्डेय उवाच ।
ऽच् ।” ५ । २ । १२७ । इत्यच् ततष्टाप् ।
चन्द्र-
भागात् पर्व्वतविशेषात् जाता इति वा ।)
नदीविशेषः । इत्यमरः । १ । १० । ३४ ॥
तत्-
पर्य्यायः । चन्द्रभागी २ चन्द्रिका ३ । इति
शब्दरत्नावली ॥ सा तु काश्मीरदेशे
प्रसिद्धा ।
तस्या उत्पत्तिर्यथा, --
मार्कण्डेय उवाच ।
“यत्र देवसभा भूता सानौ तस्य महागिरेः ।
तत्र जाता देवनदी शीताख्या वचनाद्विधेः ॥
स्नापयित्वा यथा चन्द्रं शीतातोयैर्म्मनोहरैः
।
चन्द्रं पपुर्ब्रह्मवाक्यात् सर्व्वे ते त्रिदिवौकसः
॥
तदा शीताजलं चन्द्रस्नानयोगाच्च सामृतम्
।
भूत्वा निपतितं तस्मिन् वृहल्लोहितसंज्ञके ॥
तद्विवृद्धं तदा तोयं तस्मिन् सरसि
निर्म्मलम् ।
तद्ददर्श स्वयं ब्रह्मा विवृद्धं साधु तज्जलम् ॥
तद्दर्शनाज्जलात्तस्मादुत्थिता कन्यकोत्तमा
।
चन्द्रभागेति तन्नाम विधिश्चक्रे स्वयं ततः
॥
भार्य्यार्थे सागरस्तान्तु जग्राह ब्रह्मसम्मते ।
तत्रैवाधिष्ठितं तोयं गदाग्रेण निशापतिः ॥
निर्भिद्य पश्चिमे पार्श्वे गिरिं तत्तु प्रवाहयत्
।
तत् सामृतजलं भित्त्वा बृहल्लोहितसंज्ञकम्
॥
कासारं सागरं जातं चन्द्रभागा नदी तु सा ।
सागरोऽपि तदा भार्य्यां चन्द्रभागां
महानदीम् ॥
तेन तोयप्रवाहेण निनाय भवनं स्वकम् ।
एवं तस्मिन् समुत्पन्ना चन्द्रभागाह्वया नदी
॥
चन्द्रभागे महाशैले गुणैर्गङ्गासमा सदा ।”
इति कालिकापुराणे २२ अध्यायः ॥
मरः । १ । ३ । १३ ॥ (यथा, पञ्चतन्त्रे
। ३ । ६८ ।
“एकोपि कोपि सेव्यो यः क्षीणं क्षीणं
पुनर्नवम् ।
अनुद्विग्नः करोत्येव सूर्य्यश्चन्द्रमसं यथा
॥”)

**चन्द्रमौलिः**, पुं, (चन्द्रः मौलौ शेखरे यस्य ।)
शिवः । इति हारावली । ८ ॥ (यथा,
कुमारे ।
५ । ८६ ।
“अद्य प्रभृत्यवनताङ्गि ! तवास्मि दासः
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ
॥”)

**चन्द्ररेखा**, स्त्री, (चन्द्रस्य रेखा इव आकृति-
र्यस्याः ।) वागुजी । इति
भैषज्यरत्नावली ॥
हाकुच इति भाषा ॥ (यथा,
भैषज्यरत्नावल्यां
कुष्ठाधिकारे ।
“गुडुची चन्द्ररेखा च सोमराट्
चक्रमर्द्दकम् ॥”
वाकुचीशब्दे विवरणमस्या ज्ञातव्यम् ॥)

**चन्द्ररेणुः**, पुं, (चन्द्र आह्लादको रेणुर्यत्र ।)
काव्यचौरः । इति त्रिकाण्डशेषः ॥

**चन्द्रलेखा**, स्त्री, (चन्द्रस्य लेखा इव आकृति-
र्यस्याः ।) वाकुची । इति राजनिर्घण्टः
॥
(अप्सरोविशेषः । यथा, काशीखण्डे ।
९ । ७ ।
“उर्व्वशी मेनका रम्भा चन्द्रलेखा
तिलोत्तमा ॥”
छन्दोविशेषः । यथा, छन्दोमञ्जर्य्याम् ।
“म्रौ मो यौ चेद्भवेतां सप्ताष्टकैश्च
न्द्रलेखा ॥”)

**चन्द्रलोहकं**, क्ली, (चन्द्र इव शुभ्रं लोहकं धातु-
द्रव्यम् ।) रूप्यम् । इति राजनिर्घण्टः ॥

**चन्द्रवंशः**, पुं, (चन्द्रस्य वंशः अन्ववायः ।) चन्द्र-

श्रूयतां चन्द्रभागाया उत्पत्तिर्द्विजसत्तमाः।
युष्माभिश्चन्द्रभागस्य माहात्म्यं नामकारणम्॥
हिमवत्गिरिसंसक्तशतयोजनविस्तृतः।
योजनत्रय उच्छ्रायः कुन्देन्दुधवलो गिंरिः॥
तस्मिन् गिरौ पुरा वेधाश्चन्द्रं शुद्धं सुधानिधिम्।
विभज्य कल्पयामास देवार्थं स पितामहः॥
पित्रर्थञ्च तथा तस्य तिथिवृद्धिक्षयात्मकम्।
कल्पयामास जगतां हिताय कमलासनः॥
विभक्तश्चन्द्रमा यस्मात् तस्मिन् पर्व्वतसत्तमे।
अतो देवाश्चन्द्रभागं नाम्ना चक्रुः पुरा गिरिम्॥"
इत्यादि कालिकापुराणे २० अध्यायः॥

**चन्द्रभागा**, स्त्री, (चन्द्रभागः पर्व्वतविशेषः स उत्पत्तिस्थानत्वेनास्त्यस्याः। "अर्श आदिभ्यो- अस्या जलस्य गुणः। सुशीतलत्वम्। दाहपित्त- वातनाशित्वञ्च। इति राजनिर्घण्टः॥

**चन्द्रभागी**, स्त्री, (चन्द्रभागस्य तदाख्यया प्रसिद्धस्य पर्व्वतस्य इयम्। चन्द्रभागपर्व्वतसञ्जातत्वात्तथा- त्वम्। चन्द्रभाग + "तस्येदम्।" ४। ३ १२०॥ इत्यण्। अत्र न वृद्द्धिः। ततः "बह्वादिभ्यश्च।" ४। १। ४५। इति ङीष्।) चन्द्रभागानदी। इति शब्दरत्नावली।

**चन्द्रभूति**, क्ली, (चन्द्रस्येव शुक्ला भूतिः सम्पत् कान्तिरिति यावत् यस्य। चन्द्रवत् शुभ्रदीप्ति- तयास्य तथात्वम्।) रूप्यम्। इति राज- निर्घण्टः॥

**चन्द्रमणिः**, पुं, (चन्द्रप्रियश्चन्द्रकान्त इत्यर्थः मणिः। शाकपार्थिववत् समासः।) चन्द्रकान्तमणिः। इति हेमचन्द्रः। ४। १३३॥

**चन्द्रमण्डलं**, क्ली, (चन्द्रस्य मण्डलम्।) चन्द्रविम्बम्। चन्द्रपरिवेशः॥ (यथा, गोःरामायणे। ५। ३२। ४८।
"तस्याश्च विमलं वक्त्रं सुदन्तं सुगुणैर्युतम्।
यथा राहुविनिर्मुक्तमभवच्चन्द्रमण्डलम्॥")

**चन्द्रमाः**, [स्] पुं, (चन्द्रमानन्दं मिमीते यद्वा चन्द्रं कर्पूरं सादृश्येन माति परिमातीति। मा + "चन्द्रे मो डित्।" उणां। ४। २२८। इति असिः स च डित्। चन्द्रं रजतं अमृतञ्च तदिव मीयते चन्द्र इति वा मीयते इति दासी- भारादिव्युत्पादने हरदत्तः।) चन्द्रः। इत्य- सन्तानः। यथा। ब्रह्मणः पुत्त्रः अत्रिः तस्य पुत्त्रश्चन्द्रः तस्य बुधः तस्य वैवस्वतमनुकन्यायां इलायां भार्य्यायां पुरूरवाः स प्रतिष्ठाननगरे इदानीं विठोरसंज्ञे राजचक्रवर्त्ती आसीत्। तस्योर्व्वश्यां षट् पुत्त्रा आसन्तेषां आयुर्ज्येष्ठः। तस्य पुत्त्रो नहुषस्तस्य ययातिश्चक्रवर्त्ती। तस्य द्वे भार्य्ये वृषपर्व्वणो दानवराजस्य सुता शर्म्मिष्ठा शुक्रस्य कन्या देवयानी च। देव- यान्यां ययातेर्द्वौ पुत्त्रौ यदुस्तुर्व्वसुश्च। शर्म्मि- ष्ठायां त्रयः पुत्त्राः द्रुह्युः अनुः पूरुश्च। तत्र यदुप्रभृतयश्चत्वारः पितुराज्ञाहेलनं कृतवन्तः पित्रा शप्ताः। ज्येष्ठपुत्त्रं यदुं शशाप तव वंशे- राजचक्रवर्त्ती माभूत्। तुर्व्वसुद्रुह्य्वनून् शशाप युष्माकं वंश्या वेदवाह्या म्लेच्छा भविष्यन्ति। पूरुस्तु पितुराज्ञया दुष्करं कर्म्म कृत्वा पितु- रतिप्रिय आसीत्। ययातिः स्वमरणसमये कनिष्ठपुत्त्रं पूरुं राजचक्रवर्त्तिनं कृतवान्। यदवे दक्षिणस्यां दिशि किञ्चिद्राज्यखण्डं दत्तवान्। तथा द्रुह्यवे पूर्ब्बस्यां दिशि, पश्चि- मायां तुर्व्वसवे, उत्तरस्यां अनवे सर्व्वान् पूरो- रधीनांश्चक्रे। यदुरतीवधर्म्मशीलस्तद्वंशे द्वापर

| | | | |
|---|---|---|---|
| | | | युगस्यान्ते श्रीकृष्णोऽवतीर्णः ।<br>तच्चरितं सर्व्व-<br>शास्त्रप्रसिद्धम् ॥ (अधुना यदोर्घंश<br>उच्यते ।<br>यदोः पुत्रः क्रोष्टा (क्रोष्टु) तस्य<br>वृजिनिवान्<br>तस्य आहिः तस्य उशङ्गुः तस्य<br>चित्ररथः<br>तस्य शशविन्दुः तस्यःपृथुकीर्त्तिः<br>पृथुजयः पृथु-<br>दानः पृथुश्रवा इति चत्वारः पुत्राः ।<br>पृथु |

श्रवसः तमः तस्य उशनाः तस्य शितायुः
तस्य
रुक्मकवचः तस्य ज्यामघः तस्य विदर्भः
तस्य
क्रथः तस्य कुन्तिः तस्य वृष्टिः तस्य
निवृत्तिः
तस्य दशार्हः तस्य व्योमः तस्य जिमूतः
तस्य
विकृतिः तस्य भीमरथः तस्य मधुरथः
तस्य
शकुनिः तस्य करन्तिः तस्य देवमतः
तस्य
देवक्षेत्रः तस्य मधुः तस्य कुरुवशः तस्य
अनु-
रथः तस्य पुरुहोत्रः तस्य अंशुः तस्य
सत्यश्रुतः
तस्य वृष्णिः देवावृधः अन्धकः महाभुजः
इति
चत्वारः पुत्राः । तेषु वृष्णिज्यष्ठः तस्य
सुमित्रः
तस्य अनमित्रः तस्य वृष्टिः तस्य चित्रकः
तस्य
विदूरथः तस्य शूरः तस्य भजमानः तस्य
शिनिः
तस्य भोजः तस्य राधिकः तस्य देवमीढः
तस्य
शूरसेनः तस्य वसुदेवः तस्य पुत्रो
भगवान्
श्रीकृष्णः ॥ * ॥) ययातिपुत्त्रस्य
पूरोरतिविस्तीर्णो
वंश उच्यते । पूरोः पुत्त्रो जनमेजयः तस्य
प्रचिन्वान् तस्य प्रवीरः तस्य मनस्युः
तस्य चारु-
पदः तस्य सुद्युः तस्य बहुगवः तस्य
संयातिः
तस्य अहंयातिः तस्य रौद्राश्वः तस्य
ऋचेयुः
तस्य रन्तिनारः तस्य सुमतिः (तंसुः)
तस्य रैभ्यः

यामास । युधिष्ठिरस्तु राजसूययाजी ।
अर्ज्जु-
नस्य सुभद्रायां भार्य्यायां अभिमन्युस्तस्य
उत्त-
रायां भार्य्यायां परिक्षित् ।
युधिष्ठिरादनन्तरं
कलियुगस्यारम्भे स राजासीत् चक्रवर्त्ती ।
तस्य
जनमेजयः तस्य शतानीकः तस्य
सहसानीकः
तस्य अश्वमेधजः तस्य असीमकृष्णः
तस्य नेमि-
चक्रः स हस्तिनानगरे नद्याहृते कौशाम्ब्यां
पुर्य्यां राजासीत् । तस्य उप्तः तस्य
चित्ररथः
तस्य शुचिरथः तस्य वृष्टिमान् तस्य
सुसेनः
तस्य सुनीथः तस्य नृचक्षः तस्य
सुखीनलः तस्य
परिप्लवः तस्य सुनयः तस्य मेधावी तस्य
नृप-
ञ्जयः तस्य दूर्व्वः तस्य तिमिः तस्य
बृहद्रथः
तस्य सुदासः तस्य शतानीकः तस्य
दुर्द्दमनः
तस्य महीनरः तस्य दण्डपाणिः तस्य
निमिः
तस्य क्षेमकः । एतत्पर्य्यन्तमस्य वंशस्य
शान्तिः एते कलेः सहस्रवर्षपर्य्यन्तं
स्थिताः ॥ * ॥
सोमवंशशाखान्तरे मगधवंश्या राजानः
कलौ
बहुकालं स्थिताः । अतस्ते वर्ण्यन्ते । तत्र
युधिष्ठिरसमकालीनो जरासन्धसुतः
सहदेवो
मगधेषु राजासीत् । तस्य मार्जारिः तस्य
श्रुतश्रवाः तस्य अयुतायुः तस्य निरमित्रः
तस्य सुनक्षत्रः तस्य बृहत्सेनः तस्य
कर्म्म-

सोमलता च ॥ (सोमलताशब्दे गुणादयोऽस्या
ज्ञेयाः ॥)

**चन्द्रवाला**, स्त्री, (चन्द्रं कर्पूरमपि वलते संवृणोति
स्वगन्धेन इति । वलसंवरणे + अण् । ततष्टाप्
।)
स्थूलैला । इत्यमरः । २ । ४ । १२५ ॥
(पर्य्यायो
ऽस्या यथा, --
"एला स्थूला च बहुला पृथ्वीका त्रिपुटापि च
।
भद्रैला बृहदेला च चन्द्रवाला च निष्कुटिः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**चन्द्रविहङ्गमः**, पुं, (चन्द्र इव शुभ्रो विहङ्गमः ।)
वकपक्षी । इति त्रिकाण्डशेषः ॥

**चन्द्रव्रतं**, क्ली, (चन्द्राय चन्द्रलोकप्राप्तये यत् व्रतम् ।
यद्वा, चन्द्रस्य ह्रासवृद्धिभ्यां कृतं यद्व्रतं तत्
।)
चान्द्रायणम् । इति स्मृतिः ॥ (एतद्विवरणं
चान्द्रायणशब्दे द्रष्टव्यम् ॥)

**चन्द्रशाला**, स्त्री, (चन्द्रेण शालते शोभते इति ।
शाल + अच् । ततष्टाप् ।) ज्योत्स्ना । इति
त्रिकाण्डशेषः ॥ (चन्द्र इव शालते श्लाघते
इति ।
उच्चस्थानस्थितत्वाच्च तथात्वम् ।)
प्रासादो-
परिगृहम् । तत्पर्य्यायः । शिरोगृहम् २ । इति
हेमचन्द्रः । ४ । ६१ ॥ चन्द्रशालिका ३
वडभी ४
कूटागारम् ५ । इति त्रिकाण्डशेषः ॥ (यथा,
रघुः । १३ । ४० ।
"तस्यायमन्तर्हितसौधभाजः
प्रसक्तसङ्गीतमृदङ्गघोषः ।
वियद्गतः पुष्पकचन्द्रशालाः
क्षणं प्रतिश्रुन्मुखराः करोति ॥")

**चन्द्रशालिका**, स्त्री, (चन्द्र इव शालते इति ।
शाल + ण्वुल् । टापि अतं इत्वम् । यद्वा,
चन्द्र-

(सुरोधः) तस्य दुष्मन्तश्चक्रवर्त्ती । तस्य शकुन्त-
लायां भार्य्यायां भरतश्चक्रवर्त्ती आसीत् । यस्त्रय-
स्त्रिंशच्छतमश्वमेधान् कृतवान् पञ्चाशद्राज-
सूयान् एवमन्यान् नानाविधान् यज्ञान् अकरोत्
बहूनि धनरत्नादीनि दत्तवान् सप्तविंशतिसहस्र-
वत्सरान् एकच्छत्रं राज्यं कृतवान् । तस्य पुत्त्रो
वितथः तस्य मन्युः तस्य बृहत्क्षेत्रः तस्य हस्ती
येन हस्तिनापुरं निर्म्मितम् । तस्य अजमीढः
तस्य ऋक्षः तस्य सम्बरणः तस्य सूर्य्यकन्यायां
तपत्यां कुरुः तस्य जह्नुः तस्य सुरथः तस्य विदू-
रथः तस्य सार्व्वभौमः तस्य जयत्सेनः तस्य
राधिकः तस्य अयुतायुः तस्य ऋक्षः तस्य
दिलीपः तस्य प्रतीपः तस्य देवापिः शान्तनुः
वाह्लीक इति त्रयः पुत्त्राः । तत्र देवापिः कलाप-
ग्रामे योगी भूत्वा वर्त्तते । स कलौ चन्द्रवंशे लुप्ते
कलेरन्ते पुनः सत्ययुगे चन्द्रवंशं भावयिष्यति ॥ * ॥
तत्र शान्तनू राजा अभवत् स चक्रवर्त्ती तस्य
गङ्गायां भीष्मः पुत्त्रो जातः स परमधर्म्मात्मा
महावीरः येन पितुर्दाशकन्याविवाहार्थं पितृ-
राज्यं त्यक्तम् । यः स्वस्य विवाहं त्यक्त्रा ऊर्द्ध्व-
रेता जातः । शान्तनोर्दाशकन्यायां द्वौ पुत्त्रौ

जित् तस्य श्रुतञ्जयः तस्य विप्रः तस्य शुचिः
तस्य क्षेमः तस्य सुव्रतः तस्य धर्म्मसूत्रः तस्य
समः तस्य दृढसेनः तस्य सुमतिः तस्य सुबलः
तस्य सुनीथः तस्य सत्यजित् तस्य विश्वजित्
तस्य पुरञ्जयः एते राजानः कलेः सहस्रवत्सर-
पर्य्यन्तं राज्यं कृतवन्तः ॥ * ॥ ततः पुरञ्जयस्य
मन्त्री शुनकः पुरञ्जयं हत्वा तस्य पुत्त्रं प्रद्योतं
राजानं कृतवान् । तदारभ्य राजानो वर्णसङ्कर-
दोषदुष्टा जाताः । प्रद्योतपुत्त्रः पालकः तस्य
विशाखयूपः तस्य राजकः तस्य नन्दिवर्द्धनः ।
एते पञ्च अष्टत्रिंशोत्तरशतवर्षं भूमिपा
आसन् ॥ * ॥ नन्दिवर्द्धनस्य पुत्त्रः शिशुनागः
तस्य काकवर्णः तस्य क्षेमधर्म्मा तस्य क्षेत्रज्ञः
तस्य विधिसारः तस्य अजातशत्रुः तस्य दर्भकः
तस्य अजयः तस्य नन्दिवर्द्धनः तस्य महानन्दिः
एते दश नृपाः षष्ट्युत्तरशतत्रयं वत्सरान्
भूमिपाला आसन् ॥ * ॥ महानन्दिसुतो नन्दः
शूद्रायां समुत्पन्नः राजासीत् तस्य सुमाल्याद्या
अष्टौ पुत्त्रा आसन् । ते शतवत्सरान् राज्यं
कृतवन्तः । चाणक्यनामा कश्चिद्ब्राह्मणः नन्दं
तत्पुत्त्रांश्च हत्वा मौर्य्यं चन्द्रगुप्तं राजानं कृत-
वान् । कलौ नन्दान्तः क्षत्त्रियवंशः । इति
श्रीभागवतं महाभारतञ्च ॥

**चन्द्रवल्लरी**, स्त्री, (चदि आह्लादे + रक् । चन्द्रा
शाला + स्वार्थे कन् ।) वडभी । इति त्रिकाण्ड-
शेषः ॥

**चन्द्रशूरं**, क्ली, फलविशेषः । हालिम् इति भाषा ।
तत्पर्य्यायः । चन्द्रिका २ चर्म्महन्त्री ३ पशुमेहन-
कारिका ४ नन्दनी ५ कारवी ६ भद्रा ७ ।
अस्य गुणाः । हिक्वावातश्लेष्मातिसारिणां हित-
त्वम् । असृग्वातरोगद्वेषित्वम् । बलपुष्टिविव-
र्द्धनत्वञ्च । इति भावप्रकाशः ॥

**चन्द्रशेखरः**, पुं, (चन्द्रः शेखरे मौलौ यस्य । यद्वा,
चदि आह्लादे + रक् । चन्द्रः आह्लादः स्वान-
न्दानुभवरूपपरमात्मज्योतिःशेखरे ललाटोर्द्ध्व-
भागे यस्य । स्वप्रकाशात्मनां शरीरत्रयोपाधि-
वर्ज्जितानां योगीन्द्रपुरुषाणामपि ललाटदेशे
सत्यज्ञानानन्दामृतस्रोतोः परब्रह्मणः स्वाभासक-
ज्योतिर्मण्डलस्य प्रकाशमानत्वात् अन्येष्वपि
चन्द्रशेस्वरत्वमिति चेन्न । विश्वगुरोर्महादेवा-
दन्यत्र पूर्णतमयोगसिद्धेरप्रसिद्धेः । किञ्च महे-
श्वरादिशब्दवत् रूढिशक्तितोऽपि सर्व्वयोगीन्द्र-
गुरौ भगवति महेश्वरे एव चन्द्रशेखरपदस्य
समन्वर्थतेति पूर्ब्बाचार्य्यपादाः ॥) शिवः । इत्य-
मरः । १ । १ । ३२ ॥ (यथा, कुमारे । ५ । ५८ ।
"यदा बुधैः सर्व्वगतस्त्वमुच्यसे
न वेत्सि भावस्थमिमं कथं जनम् ।

जातौ चित्राङ्गदो विचित्रवीर्य्यश्च ।
सत्यवत्यां
कन्याकाले पराशरात् व्यासो जातः ।
पुनर्भुने-
र्वरात् व्यासजन्मानन्तरं सा
कन्यारूपाभवत् ।
चित्राङ्गदो युद्ध्वे गन्धर्व्वेण हतः ।
विचित्रवीर्य्यस्य
क्षेत्रे सत्यवत्याज्ञया व्यासः धृतराष्ट्रं
पाण्डुञ्च
जनयामास । धृतराष्ट्रस्यान्धस्य गान्धार्य्यां
भार्य्यायां दुर्य्योधनज्येष्ठं पुत्त्रशतं बभूव ।
पाण्डो-
र्द्वेभार्य्ये कुन्ती माद्री च । मृगीभूतस्य
मुनेःशापा-
न्मैथुनरहितस्य पाण्डोराज्ञया कुन्ती
धर्म्माद्-
युधिष्ठिरं पवनाद्भीमं इन्द्रादर्ज्जुनं
जनयामास ।
माद्री अश्विनीकुमाराभ्यां नकुलसहदेवौ
जन-

आनन्ददायिकावल्लरी ।
सुधातुल्यमधुस्रावित्वा-
त्तथात्वम् । चन्द्रस्य वल्लरी लता इति
केचित् ।)
सोमवल्लरी । सोमलता इति ख्याता ।
ब्रह्मी-
शाकमिति केचित् । इत्यमरटीकायां भरतः
॥

**चन्द्रवल्ली**, स्त्री, (चन्द्र इव आनन्ददायिका वल्ली ।)

प्रसारणी । माधवीलता । इति
राजनिर्घण्टः ॥

इति स्वहस्तोल्लिखितश्च मुग्धया
रहस्युपालभ्यत चन्द्रशेखरः ॥”
चन्द्रयुक्तः शेखरः शृङ्गं यस्य ।) पर्व्वतविशेषः
।
यथा, आगमे शिववाक्यम् ।
“विशेषतः कलियुगे वसामि चन्द्रशेखरे ॥”
(तथा, महालिङ्गेश्वरतन्त्रे ।
“शम्भुनाथश्चन्द्रनाथश्चन्द्रशेखर पर्व्वते ॥”)
चट्टलदेशे महापीठे भैरवविशेषः । यथा, --
“चट्टले दक्षबाहुर्म्मे भैरवश्चन्द्रशेखरः ।
व्यक्तरूपा भगवती भवानी तत्र देवता ॥
विशेषतः कलियुगे वसामि चन्द्रशेखरे ॥”
इति तन्त्रचूडामणौ ५१ पीठनिर्णयः ॥
करवीरपुरराजा । स च पौष्यराजपुत्त्रः । यथा,
--
“अथ काले व्यतीते तु सर्व्वज्ञो वृषभध्वजः ।
तद्भाविकर्म्म ज्ञात्वैव मानुषो ह्यभवत् स्वयम् ॥
ब्रह्मणो दक्षिणाङ्गुष्ठाद्दक्षो ब्रह्मसुतोऽभवत् ।
अदितिस्तत्सुता जाता ततः पूषाह्वयोऽभवत्
॥
पूष्णः पुत्त्रोऽभवत् पौष्यः सर्व्वशास्त्रार्थपारगः
।
यस्य तुल्यो नृपो भूमौ न भूतो न भविष्यति ॥
स पुत्त्रहीनो राजाभूत् पौष्यो नृपतिसत्तमः ।
शेषे वयसि सम्प्राप्ते भार्य्याभिस्तिसृभिः सह ॥
पौष्यः परमया भक्त्या ब्रह्माणं पर्य्यतोषयत् ।
तस्य प्रसन्नो भगवान् ब्रह्मा लोकपितामहः ॥
तमुवाच स राजानं किमिच्छसि वदस्व मे ।
प्रसन्नोऽस्मि नृपश्रेष्ठ ! प्रदास्यामि यथेप्सितम्
॥
यदिष्टं तव जायानां तत्तद्दास्यामि साम्प्रतम् ॥
पौष्य उवाच ।
हिरण्यगर्भापुत्त्रोऽहं पुत्त्रार्थी त्वामुपास्महे ।
त्वयि प्रसन्ने पुत्त्रो मे भवेल्लक्षणसंयुतः ॥
एतदर्थं सभार्य्योऽहं भक्त्या त्वां समुपस्थितः
।
यथा मे जायते पुत्त्रस्तथा कुरु जगत्पते ! ॥
पुन्नाम्नो नरकात् पुत्त्रस्त्रायते पितरं प्रसूम् ।
अतस्तस्माद्भयं ब्रह्मन् ! त्वं नाशयितुमर्हसि ॥
ब्रह्मोवाच ।
उपासते किमर्थं मां तन्मे वद ददामि
ते ॥
पौष्य उवाच ।
अपुत्त्रोऽहं पुत्त्रकामः पूजयामि
वृषध्वज ! ।
यथाहं पुत्त्रवान् वै स्यां वृषध्वज !
तथा कुरु ॥
इति संन्यवदद्राजा भार्य्याभिः सह
हर्षितः ।
प्रणम्य स्तुतिपूर्ब्बेण
भक्तिनम्रात्ममानसः ॥
ततः पुत्त्रार्थिनं भूपं प्रसन्नो
वृषभध्वजः ।
ब्रह्मदत्तफलं हस्ते कृत्वे दं तमुवाच ह
॥
ईश्वर उवाच ।
इदं फलं ब्रह्मदत्तं विभज्य नृपते त्रिधा
।
भोजयैताः स्वजायास्त्वं प्रहृष्टः
सुस्थमानसः ॥
ततः प्रवृत्ते भवत एतासु ऋतुसङ्गमे ।
आधास्यन्ति च गर्भांस्तु भार्य्यास्ते
युगपन्नृप ! ॥
काले प्राप्ते च युगपत् प्रसवो योषितां
तव ।
भविष्यति नृपश्रेष्ठ ! ता एवं त्व
करिष्यसि ॥
एकस्या जठरे शीर्षं भार्य्यायास्ते
भविष्यति ।
अपरस्यास्तथा कुक्षौ मध्यभागो
भविष्यति ॥
अधो नाभ्यास्तु यो भागः सोऽपरस्यां
भविष्यति ।
ततः खण्डत्रयं भूप ! यथास्थानं
पृथक् पृथक् ॥
योजयिष्यसि पश्चात्ते पुत्त्र एको
भविष्यति ।
तस्य शीर्षे चन्द्ररेखा सहजा
संभविष्यति ॥
तिसृभिः सह भार्य्याभिर्व्वनं पौष्यो विवेश ह ॥
वृद्धोचितक्रियां कर्त्तं राजा परमधार्म्मिकः ।
गते पितरि राजा स वनवासं महाबलः ॥
सर्व्वां क्षितिं वशे चक्रेऽमात्यैः स चन्द्रशेखरः ।
सार्व्वभौमो नृपो भूत्वा राजभिः परिषेवितः ॥
अमरैरिव देवेन्द्रो विजहार श्रिया युतः ।
एवं पौष्यसुतो भूत्वा त्र्यम्बकः प्राप्य निर्वृतिम्
॥
ब्रह्मावर्त्ताह्वये रम्ये करवीराह्वये पुरे ।
दृशद्वतीनदीतीरे राजा भूत्वा मुमोद ह ॥”
इति कालिकापुराणे ४६ अध्यायः ॥ * ॥
(स्वनामख्यातः पण्डितविशेषः । असौ हि
सिद्धपुरुषः
त्रिवेणीसन्निकर्षस्थवन्द्यपाडाख्यग्रामे
१६०० शकस्य प्रारम्भ एव वर्त्तमान आसीत् ।
अद्यापि तस्य सिद्धिस्थानं तत्रैव वर्त्तते । अयं
नानाशास्त्रवेत्ता विशेषतो ज्योतिषशास्त्रेषु
लब्धप्रतिष्ठो बभूव । एतत्संकलिता बहवो
ग्रन्था अस्मद्देशेऽद्यापि प्रचरन्ति ॥ * ॥)
षोडशध्रुवकान्तर्गतनवमध्रुवकः । तद्विवरणं
ध्रुवकशब्दे द्रष्टव्यम् ॥ अपि च ।
“ऊनविंशतिवर्णाङ्घ्रिः सिद्धिदश्चन्द्रशेखरः ।
कथितः केन्दुके ताले भवेत् शृङ्गारवीरयोः ॥”
इति सङ्गीतदामोदरः ॥
(वटिकौषधविशेषः ।
“सूतो गन्धष्टङ्गणः सोषणः स्या-
देतैस्तुल्या शर्करा मत्स्यपित्तैः ।
भूयो भूयो भावयेत्तु त्रिवारं
वल्लो देयः शृङ्गवेरस्य वारा ॥
सम्यक् तापे वारिभक्तं सतक्रं
वृन्ताकाढ्यं पथ्यमेव प्रदिष्टम् ।
अङ्गे रोगं हन्ति सामं प्रभावात्
पित्ताधिक्ये मूर्द्ध्नि वारिप्रयोगः ॥”
इति उदकमञ्जरीरसः ॥
“अत्रैव शर्करां त्यक्त्वा शिला च यदि दीयते ।
गुणैः समो भवेदस्य नाम्ना च चन्द्रशेखरः ॥”
इति चन्द्रशेखरो रसः ॥)

**चन्द्रसंज्ञः**, पुं, (चन्द्रस्य संज्ञा संज्ञा यस्य ।)
कर्पूरम् । इत्यमरः । २ । ६ । १३० ॥

शृणु पौष्य ! यथा भावी पुत्त्रस्तव कुलोद्वहः ।
तदहं ते वदाम्यद्य भार्य्याभिस्तत् समाचर ॥
इदं फलं गृहाण त्वं मया दत्त्वं नृपोत्तम ! ।
अजीर्णं बहुले काले प्राप्तेऽपि सुरसं सदा ॥
फलमेतत् समादाय यावत् संवत्सरद्वयम् ।
आराधय महादेवं सुप्रसन्नो भविष्यति ॥
यथा संभाषते भर्गः फलमेतत्तथा भवान् ।
करिष्यति फलं राजन् ! भार्य्याभिस्तिसृभिः सह ॥
ततस्ते लक्षणोपेतस्तनयः कुलवर्द्धनः ।
भविष्यति च यः शास्ता चक्रवर्त्ती भविष्यति ॥
इत्युक्त्रा प्रययौ ब्रह्मा राजापि सह भीरुभिः ।
हरं यष्टुं समारेभे भक्त्या परमया युतः ॥
निराशी संयताहारः कदाचित् फलभोजनः ।
दृशद्वतीनदीतीरे फलं संस्थाप्य चाग्रतः ॥
पुष्पार्घ्यधूपदीपाद्यैर्वृषध्वजमतर्पयत् ।
स तु वर्षद्वयेऽतीते महादेवो जगत्पतिः ॥
पौष्यस्य नृपतेः सम्यक् प्रससादार्थसिद्धये ।
प्रसन्नः प्राह नृपतिं महादेवो हसन्निव ॥
तेनैव नाम्ना स ख्यातिं गमिष्यति च भूपते ! ।
इत्युक्त्वा स महादेवस्तासां गर्भान् स्वयं तदा ॥
संस्कर्त्तुं जाह्नवीतोयमात्मनः शिरसो न्यधात् ।
ततः फले स्वयं देवः प्रविवेश वृषध्वजः ॥
तत्क्षणात् तत् फलं भूतं त्रिभागं स्वयमेव हि ।
पौष्यस्तत् फलमादाय मुदितः सह भार्य्यया ॥
प्रययौ मन्दिरं हृष्टो अनुज्ञाप्य वृषध्वजम् ।
ततः समुचिते काले प्राप्ते ताभिस्तु भक्षितम् ॥
तत् फलं नृपशार्द्दूल ! गर्भाश्चाप्याहिताः शुभाः ।
सम्पूर्णे गर्भकाले तु गर्भेभ्यः समजायत ॥
खण्डत्रयं पृथक् राजा यथा भर्गेण भाषितम् ।
तच्च खण्डत्रयं पौष्यो यथास्थानं नियोज्य च ।
एकं पिण्डं चकाराशु तत्र पुत्त्रो व्यजायत ।
तस्य शीर्षे तदा राजन् सहजेन्दुकला शुभा ॥
विरराज यथा स्वच्छा शरत्काले कला विधोः ।
तं सर्व्वलक्षणीपेतं पीनारस्कं सुनासिकम् ॥
सिंहग्रीवं विशालाक्षं दीर्घायतभुजं तदा ।
दृष्ट्वा पौष्योऽथ भार्य्याभिस्तिसृभिः सह संमुदम् ।
लेभे दरिद्रः सत्कोषं प्राप्येव विपुलं ततः ।
तस्य नामाकरोद्राजा ब्राह्मणैः स्वैः पुरोहितैः ॥
चन्द्रशेखर इत्येवं कान्त्या चन्द्रमसः समः ।

**चन्द्रसम्भवा**, स्त्री, (चन्द्रः सम्भवो यस्याः ।) क्षुद्रैला । इति शब्दचन्द्रिका ॥ (बुधे, पुं ॥)

**चन्द्रहासं**, क्ली, (चन्द्रस्येव शुक्लो हासः प्रभा यस्य ।) रौप्यम् । इति राजनिर्घण्टः ॥

**चन्द्रहासः**, पुं, (चन्द्रस्येव शुक्लो हासो दीप्ति-र्यस्य ।) खड्गः । रावणखड्गः । इति मेदिनी । गे, ५२ ॥

**चन्द्रहासा**, स्त्री, (चन्द्रहास + टाप् ।) गुडूची । इति राजनिर्घण्टः ॥ (चन्द्रवदाह्लादकरो हासो यस्याः इति । गायत्त्रीरूपा भगवती । यथा, देवीभागवते । १२ । ६ । ४८ ।
"चन्द्रहासा चारुदात्री चकोरी चन्द्रहासिनी ॥"
बृहती । तस्याः पर्य्याया यथा, --
"क्षुद्रायां क्षुद्रभण्टाक्यां बृहतीति निगद्यते ।
श्वेता क्षद्रा चन्द्रहासा लक्ष्मणा क्षेत्रदूतिका ॥

|  | ववृधे स महाभागः प्रत्यहं चात्यरुग्यतः ॥<br>कलाभिरिव तेजस्वी शरदीव निशाकरः ।<br>एवं तिसृणामम्बानां गर्भे जातो यतो हरः ॥<br>अतस्त्र्यम्बकनामाभूत्प्रथितो लोकदेवयोः ।<br>स राजपुत्रः कौमारावस्थां प्राप यदा तदा ॥<br>सर्व्वशास्त्रार्थतत्त्वज्ञो जिष्णोस्तुल्यो बभूव ह ।<br>बले वीर्य्ये प्रहरणे शास्त्रे शीले च तत्समः ॥<br>नान्योऽभून्नृपशाद्दूल ! नो वा भूमौ भविष्यति ।<br>अभिषिच्याथ तं बालं कुमारं बलवत्तरम् ॥<br>दशपञ्चैकवर्षीयं सर्व्वराजगुणैर्युतम् । |  |
|---|---|---|

गर्भदा चन्द्रभा चन्द्री चन्द्रपुष्पा प्रियङ्करी ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**चन्द्रा**, स्त्री, (चन्दयति आह्लादयतीति । चदि +
णिच् + रक् । स्त्रियां टाप् ।) एला । वितानम् ।
इति शब्दरत्नावली ॥ गुडूची । इति केचित् ॥

**चन्द्रातपः**, पुं, (चन्द्र इव आतपति शीतलं करोति
छायादानेन । आ + तप् + अच् ।) आच्छादन-
विशेषः । चाँदोया इति भाषा ॥ तत्पर्य्यायः ।
उल्लोचः २ वितानम् ३ चन्द्रा ४ । इति शब्द-
रत्नावली ॥ (चन्द्रस्य आतपः रश्मिः ।)
ज्योत्स्ना । इति हेमचन्द्रः । २ । २१ ॥ (यथा,
कादम्बर्य्याम् । “चन्द्रातपमिव रसतामुपेतम् ॥”)

**चन्द्रापीडः**, पुं, (चन्द्रः आपीडे शेखरे यद्वा
आपीडः शिरोभूषणं यस्य ।) शिवः । इति
त्रिकाण्डशेषः ॥ (काश्मीरस्य राजविशेषः ।
यथा, राजतरङ्गिण्याम् । ४ । ४५ ।
“राजचूडामणिः श्रीमांश्चन्द्रापीडस्ततोऽभवत् ।
पीडितेन्दुत्विषा कीर्त्त्या कलेः पीडा ञ्चकार यः
॥”
कादम्बरीवर्णितनायकविशेषः । स तु
राज्ञस्तारा-
पीडस्य पुत्त्रः । यथा, कादम्बर्य्याम् । १३७ ।
“अतिक्रान्ते च षष्ठीजागरे प्राप्ते दशमेऽहनि
पुण्ये मुहूर्त्ते गाः सुवर्णञ्च कोटिशो ब्राह्मण-
सात् कृत्वा ‘मातुरस्य मया
परिपूर्णमण्डलश्चन्द्रः
स्वप्ने मुखकमलमाविशन् दृष्टः’ इति
स्वप्नानुरूप-
मेव राजा सूनोश्चन्द्रापीड इति नाम चकार ।”
अयं हि एकदा मृगयां गच्छन् किन्नरमिथुन-
मनुधावन् हिमालयशिखरमधिरुह्य अच्छोद-
सरोवरसमीपं गतवान् । तत्रस्थश्च महाश्वेतां
गन्धर्व्वकुमारीमवलोक्य तन्मुखात् तस्याः सर्व्व-
वृत्तान्तमाकर्ण्य च तया सह गन्धर्व्वलोकं गत
वान् । तत्र गत एव गन्धर्व्वराजस्य चित्ररथस्य
कादम्बरीं नाम कन्यां ददर्श । दृष्ट्वा च
तां कन्दर्पबाणपीडितो बभूव । ततोऽतिकष्टेन
“अन्वभुङ्क्त सुरतश्रमापहां
मेघमुक्तविशदां स चन्द्रिकाम् ॥”)
स्थूलैला । चन्द्रकमत्स्यः । चन्द्रभागानदी ।
इति शब्दरत्नावली ॥ कर्णस्फोटा । मल्लिका
।
श्वेतकण्टकारी । मेथिका । सूक्ष्मैला । इति
राजनिर्घण्टः ॥ चन्द्रशूरम् । इति
भावप्रकाशः ॥
(पीठस्थदेवीविशेषः । सा तु हरिश्चन्द्रे
विरा-
जते । यथा, देवीभागवते । ७ । ३० । ६७ ।
“सह्याद्रावेकवीरा तु हरिश्चन्द्रे तु चन्द्रिका
॥”
छन्दोविशेषः । तल्लक्षणं यथा,
छन्दोमञ्जर्य्याम् ।
“ननततगुरुभिश्चन्द्रिकाऽश्वर्त्तुभिः॥”
वासपुष्पा । अस्याः पर्य्याया यथा, --
“चन्द्रिका चर्म्महन्त्री च पशुमेहनकारिका ।
नन्दिनी कारवी भद्रा वासपुष्पा सुवासरा ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**चन्द्रिकाद्रावः**, पुं, (चन्द्रिकया द्रावो द्रवणं यस्य ।)
चन्द्रकान्तमणिः । इति राजनिर्घण्टः ॥

**चन्द्रिकापायी**, [न्] पुं स्त्री, (चन्द्रिकां ज्योत्स्नां
पिबतीति । पा + णिनिः ।) चकोरपक्षी ।
इति
राजनिर्घण्टः ॥

**चन्द्रिकाम्बुजं**, क्ली, (चन्द्रिका इव शुभ्रं अम्बु-
जम् ।) सितोत्पलम् । इति राजनिर्घण्टः ॥

**चन्द्रिलः**, पुं, (चन्द्रो विद्यतेऽस्य । चन्द्र + बाहु-
लकात् अस्त्यर्थे इलच् ।) शिवः । नापितः ।
वास्तूकम् । इति मेदिनी । ले, ८९ ॥

**चन्द्री**, स्त्री, (चन्दयति आह्लादयतीति । चदि +
णिच् + रक् । गौरादित्वात् ङीष् ।) वाकुची ।
इति राजनिर्घण्टः ॥

**चन्द्रेष्टा**, स्त्री, (चन्द्रः इष्टः प्रियो यस्याः ।
शोणैः सुकार्पासभवैः प्रसूनैः
सर्व्वं विमर्द्द्याथ कुमारिकाद्भिः ॥
तत्काचकुम्भे निहितं सुगाढे
मृत्कर्पटैस्तद्दिवसत्रयञ्च ।
पचेत् क्रमाग्नौ सितकाख्ययन्त्रे
ततो रजः पल्लवरागरम्यम् ॥
निगृह्य चैतस्य पलं पलानि
चत्वारि कर्पूररजस्तथैव ।
जातीफलं सोषणमिन्द्रपुष्पं
कस्तूरिकाया इह शाण एकः ॥ * ॥
चन्द्रोदयोऽयं कथितस्तु माषो
भुक्तोऽहिवल्लीदलमध्यवर्त्ती ।
मदोन्मदानां प्रमदाशतानां
गर्व्वाधिकत्वं श्लथयत्यकाण्डे ॥
घृतं घनीभूतमतीव दुग्धं
मृदूनि मांसानि समस्तकानि ।
माषान्नपिष्टानि भवन्ति पथ्या-
न्यानन्ददायीन्यपराणि चात्र ॥ * ॥
वलीपलितनाशनस्तनुभृतां
वयःस्तम्भनः
समस्तगदखण्डनः प्रचुररोगपञ्चाननः
।
गृहेषु रसराडयं भवति यस्य चन्द्रोदयः
स पञ्चशरदर्पितो मृगदृशां भवेद्दुर्ल्लभः
॥”
इति सारकौमुदी सुखबोधश्च ॥

**चन्द्रोदया**, स्त्री, (चदि आह्लादे + भावे रक् ।
चन्द्रस्य दर्शनादिजन्यानन्दस्य उदयो
यस्याः ।
नेत्ररोगस्यौषधविशेषः । यथाह
चक्रपाणिदत्तः ।
“हरीतकी वचा कुष्ठं पिप्पली मरिचानि
च ।
विभीतकस्य मज्जा च
शङ्खनाभिर्मनःशिला ॥
सर्व्वमेतत् समं कृत्वा छागीक्षीरेण
पेषयेत् ।
नाशयेत्तिमिरं कण्डुं पटलान्यर्व्वुदानि
च ॥

तस्मात् स्थानात् प्रत्यागत्य स्वसहचरं वैशम्पायनं
स्कन्धावाररक्षकत्वेन परिकलय्य पित्राहूतः खभवनमाजगाम । अथ गच्छति काले वैशम्पा-यनानयनाय गतोऽसौ चिरबन्धोर्वैशम्पायनस्य मृत्युवार्त्तामाकलय्य छिन्नतरुरिव भूतले पतित्वा महाश्वेतासन्निकर्ष एव विदीर्णहृदयो गतासु-रासीत् । ततो दैवादेशेन रक्षितशरीरोऽसौ पुनर्जीवितश्च कादम्बरीं परिणीतवान् । इत्येषा-तीवाश्चर्य्यजनिका कथा कादम्बरीग्रन्थत एव विशेषतो विज्ञेया ॥)

**चन्द्रावली**, स्त्री, गोपीविशेषः । सा तु चन्द्रभानु-

कन्या व्रजे श्रीकृष्णस्य नित्यप्रिया राधातुल्या । यथा, उज्ज्वलनीलमणौ ।
"राधाचन्द्रावलीमुख्याः प्रोक्ता नित्यप्रिया व्रजे ।
कृष्णवन्नित्यसौन्दर्य्यवैदग्ध्यादिगुणाश्रयाः ॥"

**चन्द्रिका**, स्त्री, (चन्द्र आश्रयत्वेनास्त्यस्याः ।

"अत इनिठनौ ।" ५ । २ । ११५ । इति ठन् ।) ज्योत्स्ना । इत्यमरः । १ । ३ । १६ ॥ (यथा, रघुः । १९ । ३९ ।

निष्ठायाः परनिपातः ।) उत्पलिनी । इति राजनिर्घण्टः ॥

**चन्द्रोदयः**, पुं, (चन्द्रस्य उदयः ।) आकाशे

चन्द्रस्य प्रकाशः । स च यद्दिने सार्द्धप्रहरद्वय-
व्यापिनी या तिथिस्तत्तिथ्यनुसारेण भवति ।
तस्य प्रमाणं यथा, पुराणसमुच्चये ।
"गवां क्रीडादिने यत्र रात्रौ दृश्येत चन्द्रमाः ।
सोमो राजा पशून् हन्ति सुरभीपूजकांस्तथा ॥
तदुदयसम्भावनञ्च निर्णयामृते निर्णीतम् ।
प्रतिपद्यापराह्णिकत्रिमुहूर्त्तव्यापिन्यां द्वितीयायां
चन्द्रदर्शनं सम्भाव्यते ।
तदुक्तमग्न्याधानविषये
वृद्धशातातपेन ।
द्वितीया त्रिमुहूर्त्ता चेत् प्रतिपद्यापराह्णिकी ।
अग्न्याधानं चतुर्द्दश्यां परतः सोमदर्शनादिति ॥
अपराह्णश्च पञ्चधाविभक्तस्याह्नश्चतुर्थो भागः ।
ततश्च यत्र प्रतिपदि षण्मुहूर्त्तव्यापिनी द्वितीया
तत्र चन्द्रदर्शनसम्भावनमिति ।" इति श्रीहरि-
भक्तिविलासे १६ विलासः ॥ (चन्द्रस्य वस्त्र-
खण्डादिरचितचन्द्राकृत्तेरातपो यत्र ।) चन्द्रा-
तपः । औषधविशेषः । इति हेमचन्द्रः । ३ । ३४५ ॥
स तु मकरध्वजाख्यरससिन्दूरम् । यथा, --
"पलं मृदु स्वर्णदलं रसेन्द्रं
पलाष्टकं षोडश गन्धकस्य ।
अधिकानि च मांसानि यश्च रात्रौ न पश्यति ।
अपि द्विवार्षिकं पुष्पं मासेनैकेन साधयेत् ।
वर्त्तिश्चन्द्रोदया नाम्ना तथा दृष्टिप्रसादनी ॥")

**चन्द्रोपलः**, पुं, (चन्द्रप्रभोद्भासित उपलः प्रस्तरः ।)

चन्द्रकान्तमणिः । इति हेमचन्द्रः । ४ । १३३ ॥

**चप**, सान्त्वे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-

सकं-सेट् ।) सान्त्वः प्रियवचनं उपशमो वा ।
चपति पुत्त्रं माता । इति दुर्गादासः ॥

**चप**, क म कल्के । इति कविकल्पद्रुमः ॥ (चुरां-

परं-सकं-सेट् ।) कल्कश्चूर्णीकरणम् । क म,
चपयति तण्डुलं शिला । इति दुर्गादासः ॥

**चपटः**, पुं, (चप + घञर्थे कः । चपः सान्त्वना

चूर्णीकरणं वा तस्मै अटति गच्छतीति । अट
+ पचाद्यच् । ततः शकन्ध्वादिवत् साधुः ।)
चपेटः । इत्यमरटीका ॥ चड इति भाषा ॥

**चपलं**, क्ली, (चपं सान्त्वनां लाति प्राप्नोतीति ।

ला + "आतोऽनुपसर्गे कः ।" ३ । २ । ३ । इति
कः ।) शीघ्रम् । इति मेदिनी । ले, ८८ ॥
क्षणिकम् । इति हेमचन्द्रः ॥

**चपलः**, पुं, (चोपति मन्दं मन्दं गच्छतीति । चुप

मन्दायां गतौ + "चुपेरच्चोपधायाः ।" उणां ।
१ । १११ । इति कलः
धातोरुकारस्य अकारा-

देशश्च ।) पारदः । (अस्य पर्य्याया यथा, --
“पारदो रसधातुश्च रसेन्द्रश्च महारसः ।
चपलः शिववीर्य्यञ्च रसः सूतः शिवाह्वयः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
मीनः । चोरकः । प्रस्तरविशेषः । इति मेदिनी ।
ले, ८७ ॥ क्षवः । इति राजनिर्घण्टः ॥ (मूषिक-
विशेषः । यथा, सुश्रुते कल्पस्थाने ६ अध्याये ।
“पूर्ब्बमुक्ताः शुक्रविषा मूषिका ये समासतः ।
नामलक्षणभैषज्यैरष्टादश निबोध तान् ॥”
“कुलिङ्गश्चाजितश्चैव चपलः कपिलस्तथा ॥”
एतस्य दंशनेन यल्लक्षणं भवति तदुपशमनाय
च यदौषधं तद्यथा तत्रैव, --
“चपलेन भयेच्छर्द्दिर्मूर्च्छा च सह तृष्णया ।
सभद्रकाष्ठां सजटां क्षौद्रेण त्रिफलां लिहेत् ॥”)

**चपलः**, त्रि, (चोपति मन्दं मन्दं गच्छतीति । चुप
+ कलः । धातोरुकारस्याकारादेशश्च ।) तरलः ।
चञ्चलः । इति मेदिनी । ले, ८८ ॥ (यथा,
आर्य्यासप्तशत्याम् । ५३० ।
“विचरति परितः कृष्णे राधायां रागचपल-
नयनायाम् ।
दशदिग्वेधविशुद्धं विशिखं विदधाति विषमेषुः ॥”)
दोषमनिश्चित्य वधबन्धनादेः कर्त्ता । तत्पर्य्यायः ।
चिकुरः २ । इत्यमरः । ३ । १ । ४६ ॥ विकलः ।
इति शब्दरत्नावली ॥

**चपला**, स्त्री, (चपल + टाप् ।) लक्ष्मीः । (यथा,
माघे । ९ । १६ ।
“निलयः श्रियः सततमेतदिति
प्रथितं यदेव जलजन्म तया ।
दिवसात्ययात्तदपि मुक्तमहो

**चपेटी**, स्त्री, भाद्रशुक्लषष्ठी । यथा, भाद्रशुक्लषष्ठ्यां
अक्षयफलप्राप्तिकामः स्नानादिकं कुर्य्यात् ।
सन्तानकामा जलसमीपे षष्ठीं पूजयेत् । षष्ठ्यै
नमः इति अरण्यषष्ठीपूजावत् । चापडाषष्ठी-
यम् । इति कृत्यचन्द्रिकाव्याख्या ॥ * ॥ अन्यच्च ।
“प्रसूत्या द्वादशे मासि सम्पज्ज्यापत्यवृद्धये ।
सुते जाते तथा षष्ठ्यां षष्ठी द्वादशरूपिणी ॥
वैशाखे चान्दनी षष्ठी ज्यैष्ठे चारण्यसंज्ञिता ।
आषाढे कार्द्दमी ज्ञेया श्रावणे लुण्ठनी मता ॥
भाद्रे चपेटी विख्याता दुर्गाख्याश्वयुजे तथा ।
नाड्याख्या कार्त्तिके मासि मार्गे मूलकरूपिणी ॥
पौषे मास्यन्नरूपा च शीतला तपसि स्मृता ।
गोरूपिणीफाल्गुने च चैत्रेऽशोका प्रकीर्त्तिता ॥”
इति स्कन्दपुराणम् ॥
मन्थानषष्ठी इति केचित् ॥

**चम**, उ भक्षे । इति कविकल्पद्रुमः ॥ (भ्वां-उभं-
सकं-सेट् । उदित्वात् क्त्रावेट् ।) चमति । उ,
चमित्वा चान्त्वा । इति दुर्गादासः ॥

**चम**, न र उ भक्षे । इति कविकल्पद्रुमः ॥ (स्वां-
परं-सकं-सेट् । उदित्वात्क्त्रावेट् ।) न, चम्नोति ।
र वैदिकः । उ, चमित्वा चान्त्वा । इति दुर्गा-
दासः ॥

**चमत्कारः**, पुं, (चमत्करोतीति । कृ + अण् ।)
अपामार्गः । इति शब्दरत्नावली ॥ (चमत् +
कृ + भावे घञ् ।) चित्तविस्ताररूपः । तत्-
पर्य्यायः । विस्मयः २ । इति साहित्यदर्पणम् ॥
डमरुः ३ । इति त्रिकाण्डशेषः ॥ लोकातीतार्था-
कलनेन किमेतदिति ज्ञानधाराजनने चित्तस्य
दीर्घप्रायत्वं चित्तविस्तारः ।
दृष्टहेतुभ्योऽसम्भ-

**चमरी**, स्त्री, (चमरस्य स्त्रीजातिः । चमर +
स्त्रियां ङीष् ।) चमरगवी । तत्पर्य्यायः । दीर्घ-
वाला २ गिरिप्रिया ३ । इति राजनिर्घण्टः ॥
(यथा, कुमारे । १ । १३ ।
“यस्यार्थयुक्तं गिरिराजशब्दं
कुर्व्वन्ति वालव्यजनैश्चमर्य्यः ॥”)
मञ्जरी । इति मेदिनी । रे, १५२ ॥

**चमसः**, पुं, क्ली, (चम्यते भक्ष्यते पीयते इति यावत्
सोमोऽस्मिन्निति । चमु भक्षणे + “अत्यवि-
चमीति ।” उणां । ३ । ११७ । इति असच् ।)
यज्ञपात्रभेदः । इति मेदिनी । से, २१ ॥ चमच्-
इति भाषा ॥ (एतल्लक्षणादिकमुक्तं यथा, --
“चमसानां तु वक्ष्यामि दण्डाः स्युश्चतुरङ्गुलाः ।
त्र्यङ्गुलस्तु भवेत् स्कन्धो विस्तारश्चतुरङ्गुलः ॥
विकङ्कतमयाः श्लक्ष्णार्वाग्विलाश्चमसाः स्मृताः ।
अन्येभ्यो वापि वा कार्य्यास्तेषां दण्डेषु लक्षणम् ॥
होतुर्मण्डल एव स्यात् ब्रह्मणश्चतुरस्रकः ।
उद्गातणाञ्च त्र्यस्रिः स्याद् याजमानः पृथुः स्मृतः ॥
प्रशास्तुरवतष्टः स्यादुत्तोष्टो ब्रह्मशंसिनः ।
पोतुरग्रे विशाखी स्यान्नेष्टुः स्याद्विगृहीतकः ॥
अच्छावाकस्य रास्नाव आग्नीध्रस्य मयूखकः ।
इत्येते चमसाः प्रोक्ता ऋत्विजां यज्ञकर्म्मणि ।

चपलाजनं प्रति न चोद्यमदः ॥”
“चपला चापलवती स्त्री कमला च ॥” इति तट्टीकायां मल्लिनाथः ॥) विद्युत् । (यथा, आर्य्यासप्तशत्याम् । १७९ ।
“किंपुत्त्रि ! गण्डशैलभ्रमेण नवनीरदेषु निद्रासि ।
अनुभव चपलाविलासितगर्ज्जितदेशान्तर-भ्रान्तीः ॥”)
पुंश्चली । पिप्पली । इति मेदिनी । ले, ८८ ॥
(अस्याः पर्य्याया यथा, --
“पिप्पली मागधी कृष्णा वैदेही चपला कणा ।
उपकुल्योषणा शौण्डी कोला स्यात्तीक्ष्णतण्डुला ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
जिह्वा । इति शब्दचन्द्रिका ॥ विजया । मदिरा ।
इति राजनिर्घण्टः ॥ (आर्य्याच्छन्दोविशेषः । तल्लक्षणं यथा, वृत्तरत्नाकरे २ अध्याये ।
“उभयार्द्धयोर्जकारौ द्वितीयतुर्य्यौ गमध्यगौ यस्याः ।
चपलेति नाम तस्याः प्रकीर्त्तितं नागराजेन ॥”)

**चपेटः**, पुं, (चप + घञर्थे कः । चपः सान्त्वना चूर्णीकरणं वा तस्मै एटति गच्छतीति । इट गतौ + अच् ।) विस्तृताङ्गुलिपाणिः । चड इति चापड इति च भाषा । तत्पर्य्यायः । प्रतलः २ प्रहस्तः ३ । इत्यमरः । २ । ६ । ८४ ॥
वित्वज्ञानेन हेत्वन्तरानुसन्धाने मनोव्यापार एव
चित्तविस्तार इत्यपरे । इति साहित्यदर्पणटीका ॥
(यथा, कथासरित्सागरे । २२ । २५७ ।
“एवं सकलजगत्त्रयहृदयचमत्कारकारि चरितानाम् ।
स्वयमनुधावन्ति सदा कल्याणपरम्पराः पदवीम् ॥”)

**चमरं**, क्ली, (चमरस्येदम् । चमर + अण् । अत्र न वृद्धिः ।) चामरम् । इति मेदिनी । रे, १५२ ॥

**चमरः**, पुं, (चमति भक्षयतीति । चम + “अर्त्ति-कमिभ्रमिचमीति ।” उणां । ३ । १३२ । इति अरच् ।) चमरगौः । तत्पर्य्यायः । व्यजनी २ वन्यः ३ धेनुगः ४ वालधिप्रियः ५ । इति राज-निर्घण्टः ॥ (यथा, हेः रामायणे । २९ । ३ ।
“चमराः सृमराश्चैव ये चान्ये वनचारिणः ॥”)

**चमरपुच्छः**, पुं, (चमरस्य पुच्छ इव पुच्छो यस्य ।) कोकडः । स तु विलेशयभेदः । इति राज-निर्घण्टः ॥ चामरे क्ली च ॥

**चमरिकः**, पुं, (चमरमिव केशरोऽस्त्यस्य । “अत इनिठनौ ।” ५ । २ । ११५ । इतिठन् ।) कोविदार-वृक्षः । इत्यमरः । २ । ४ । २२ ॥ (पर्य्यायोऽस्य
यथा, भावप्रकाशस्य पूर्ब्बखण्डे १ भागे ।
“कोविदारश्चमरिकः कुद्दालो युगपत्रकः ।
कुण्डलीताम्रपुष्पश्च स्मन्तकः स्वल्पकेशरी ॥”)
पलाशाद्वा वटाद्वान्यवृक्षाद्वा चमसाः स्मृताः ॥”)

**चमसः**, पुं, (चम्यते भक्ष्यते इति । चम + असच् ।) पर्पटः । पिष्टभेदः । लड्डुकः । इत्यजयपालः ॥
(ऋषभदेवस्य पुत्त्राणामन्यतमः । यथा, भाग-वते । ५ । ४ । ११ ।
“कविर्हविरन्तरिक्षः प्रबुद्धः पिप्पलायनः ।
आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजनः ॥
एते भागवतधर्म्मदर्शना नव महाभागवताः ॥”)

**चमसी**, स्त्री, (चमस + गौरादित्वात् ङीष् ।) मुद्गमसूरादिपिष्टम् । काष्ठरचितं यज्ञपात्र-मित्यन्ये । इति लिङ्गादिसंग्रहटीकायां भरतः ॥
“चूर्णं यच्छष्कमाषाणां चमसी सा विधीयते ।”
इति भावप्रकाशः ॥

**चमूः**, स्त्री, (चमति भक्षयति शत्रून् नाशयतीत्यर्थः । चम + “क्वषिचमितनीति ।” उणां । १ । ८० । इति ऊः ।) सेनामात्रम् । (यथा, गीतायाम् । १ । ३ ।
“पश्यैतां पाण्डुपुत्त्राणामाचार्य्य ! महतीं चमूम् ॥”)
सेनाविशेषः । तत्र ७२९ हस्तिनः ७२९ रथाः
२१८७ अश्वाः ३६४५ पदातयः । समुदायेन
७२९० द्विशतनवत्यधिकसप्तसहस्रम् । इत्यमर-मेदिनीकरौ ॥

**चमूरुः**, पुं, स्त्री, (चमतीति । चम + “खर्जिपिञ्जा-दिभ्य ऊरोलचौ ।” उणां । ४ । ९० । इति ऊरः ।

|  |  |  |
|---|---|---|
|  |  | पृषोदरादित्वात् अत उत्वञ्च ।)<br>हरिणविशेषः ।<br>इत्यमरः । २ । ५ । ९ ॥ (यथा, माघे ।<br>१ । ८ ।<br>“चकासतं चारुचमूरुचर्म्मणा<br>कुथेन नागेन्द्रमिवेन्द्रवाहनम् ॥”)<br>**चम्पः**, पुं, (चम्पतीति । चम्प + अच् ।) कोवि-<br>दारवृक्षः । इति शब्दमाला ॥ |

**चम्पकं**, क्ली, (चम्पति सद्गन्धं गच्छतीति । चम्प
+ ण्वुल् ।) कदलीफलविशेषः । चाँपा कला इति
भाषा । अस्य गुणाः । वातपित्तनाशित्वम् ।
गुरुत्वम् । वीर्य्यकारित्वम् । अतिशीतत्वम् । रसे
पाके मधुरत्वञ्च । इति राजवल्लभः ॥ (चम्पकस्य
इदम् । चम्पक + अण् । ततोऽणोलुक् ।) चम्पक-
पुष्पम् ॥ (सांख्यशास्त्रोक्तसिद्धिभेदः । यथा, --
"न्यायेन स्वयं परीक्षितमप्यर्थं तावन्न श्रद्दधते
यावद्गुरुशिष्यसब्रह्मचारिभिःसहन संवाद्यते ।
अतः सुहृदां गुरुशिष्यसब्रह्मचारिणांसंवाद-
कानां प्राप्तिः सुहृत्प्राप्तिः सा सिद्धिश्चतुर्थी
चम्पकमुच्यते ॥")

**चम्पकः**, पुं, (चम्पयति सद्गन्धादिकं गच्छतीति ।
चम्प + ण्वुल् ।) वृक्षविशेषः । चाँपा इति
भाषा । तत्पर्य्यायः । चाम्पेयः २ हेमपुष्पकः ३ ।
इत्यमरः । २ । ४ । ६३ ॥ स्वर्णपुष्पः ४ शीतल-
च्छदः ५ सुभगः ६ भृङ्गमोही ७ शीतलः ८
भ्रमरातिथिः ९ सुरभिः १० दीपपुष्पः ११ स्थिर-
गन्धः १२ अतिगन्धकः १३ स्थिरपुष्पः १४ हेम-
पुष्पः १५ पीतपुष्पः १६ हेमाह्वः १७ सुकुमारः
१८ वनदीपः १९ । अस्य गुणाः । कटुत्वम् ।
तिक्तत्वम् । शिशिरत्वम् । दाहकुष्ठकण्डूव्रण-
नाशित्वम् । गुणाढ्यो राजचम्पकः । इति
राजनिर्घण्टः ॥ कषायत्वम् । मधुरत्वम् । विष-
कृमिकृच्छ्रकफवातास्रपित्तनाशित्वञ्च। इति भाव-
प्रकाशः ॥ पनसफलकोषैकदेशावयवश्च ॥

**चम्पककलिका**, स्त्री, (चम्पकस्य कलिका कोरकः ।)
(चाँपा कला । इति भाषा ॥ गुणादिकं चम्पक-
शब्दे द्रष्टव्यम् ॥)

**चम्पकालुः**, पुं, (चम्पकवत् चम्पकपुष्पवर्णवत् आलु
रभ्यन्तरबीजकोषो यस्य । यद्वा, चम्पकं
चम्पकवर्णं आलाति प्रतिगृह्णातीति । आ +
ला + मितद्रवादित्वात् डुः ।) पनसः । इति
भूरिप्रयोगः ॥

**चम्पकुन्दः**, पुं, (चम्पकवर्णःसन् उनत्तीति । उन्दी
क्लेदने + अच् । पृषोदरादित्वात् अकारलोपः ।)
मत्स्यभेदः । चाँदकुडा । इति भाषा । अस्य
गुणाः । गुरुत्वम् । शुक्रकारित्वम् । मधुरत्वम् ।
वातपित्तनाशित्वञ्च । इति राजवल्लभः ॥

**चम्पकोषः**, पुं, (चम्पश्चम्पक इव कोषो यस्य ।)
पनसः । इति त्रिकाण्डशेषः ॥

**चम्पा**, स्त्री, (चम्पा नदी विद्यतेऽस्यामिति ।
"अर्श आदिभ्योऽच् ।" ५ । २ । १२७ । इत्यच् ।
यद्वा, चम्पेन राज्ञो हरिश्चन्द्रस्य प्रपौत्रेण
निर्म्मिता या पुरी । यदुक्तं भागवते । ९ । ८ । १ ।
"हरितो रोहितसुतश्चम्पस्तस्माद्विनिर्म्मिता ।
चम्पा पुरी...॥")
कर्णपुरी । अधुना भागलपुर इति ख्याता ।
तत्पर्य्यायः । मालिनी २ लोमपादपूः ३ कर्णपूः ४ ।
इति हेमचन्द्रः । ४ । ४२ ॥ चम्पावती ५ चम्पा-
पुरी ६ । इति शब्दरत्नावली ॥ (इयन्तु अङ्ग-
देशान्तर्गता । यदुक्तं हेमचन्द्रेण । ४ । २३ ।
"वङ्गास्तु हरिकेलीया अङ्गाश्चम्पोपलक्षिताः ॥"
तथा च महाभारते । १२ । ५ । ६ -- ७ ।
"प्रीत्या ददौ स कर्णाय मालिनीं नगरीमथ ।

**चम्ब**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-
सेट् ।) चम्बति । इति दुर्गादासः ॥

**चय**, ङ गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-सकं-सेट् ।) ङ, चयते । इति
दुर्गादासः ॥

**चयः**, पुं, (चीयते इति । चि + "एरच् ।" ३ । ३ ।
६६ । इति कर्म्मणि अच् ।) वप्रम् । इत्यमरः ।
२ । २ । ३ ॥ तत्तु प्राकारादिमूलबद्धम् । यदु-
परि प्राकारो निरूप्यते सः । पगार इति
ख्यात इति केचित् । इति तट्टीकासारसुन्दरी ॥
दुर्गनगरे उद्धृतमृत्तिकास्तूपवद्धं यदुपरि प्राकारो
निवेश्यते । तथाचार्थशास्त्रम् । खातमुद्धृतमृदा
वप्रं कारयेत् तस्योपरि प्राकारमिति । इति
भरतः ॥ समूहः । (यथा माघे । १ । ३ ।
"चयस्त्विषामित्यवधारितंपुरा ॥")
समाहृतिः । इति मेदिनी । ये, २१ ॥ प्राकारः ।
(यथा, महाभारते । ३ । १६० । ३७ ।
"शैलादभ्युच्छ्रयवता चयाट्टालकशोभिना ॥")
पीठम् । इति हेमचन्द्रः ॥ (दोषाणां सञ्चयप्रकोप-
प्रशमादिषु प्रकारविशेषः । तद्यथा, --
"ग्रीष्मे सञ्चीयते वायुः प्रावृट्काले प्रकुप्यति ।
वर्षायां चीयते पित्तं शरत्काले प्रकुप्यति ॥
हेमन्ते चीयते श्लेष्मा वसन्ते च प्रकुप्यति ।
प्रायेण प्रशमं याति स्वयमेव समीरणः ॥

चम्पककोरकः । तत्पर्य्यायः । गन्धफली २ बहु-
गन्धा ३ गन्धमोदिनी ४ । इति राजनिर्घण्टः ॥

**चम्पकचतुर्द्दशी**, स्त्री, (चम्पकसाध्या चतुर्द्दशी ।
अस्यां चम्पकैः शिवपूजनात् शिवलोकप्राप्ते-
स्तथात्वम् ।) ज्यैष्ठशुक्लचतुर्द्दशी । यथा, ज्यैष्ठ-
मासमुपक्रम्य मत्स्यसूक्ते ४५ पटले ।
"चतुर्द्दश्याञ्च शुक्लायां चम्पकैः पूजयेत् शिवम् ।
अयुतैर्वा सहस्रैर्वा शतैर्व्वा परमेश्वरि ! ॥
पायसञ्च बलिं दद्यात् ततो नक्तं चरेद्व्रती ।
वृषस्थेन विशेषेण न भूयो जायते भुवि ॥
त्रिमध्वक्तैश्चम्पकैश्च सहस्रं जुहुयान्निशि ।
क्षयषष्टिज्वरान् हन्ति कृत्वा द्रोहाणि यानि च ॥
चम्पकचतुर्द्दशी ख्याता पूजयेद्वा सदाशिवम् ।
दशजन्मकृतं पापमर्च्चनादेव नश्यति ॥"
अन्यच्च ।
"चतुर्द्दश्याञ्चशुक्लायां ज्यैष्ठे मासि महेश्वरम् ।
चम्पकैः पूजयेत् भक्त्या शिवलोकमवाप्नुयात् ॥"
इत्युत्तरकामाख्यातन्त्रे ११ पटलः ॥
अपि च ।
"ज्यैष्ठशुक्तचतुर्द्दश्यां पुष्पैश्चम्पकसम्भवैः ।
अर्च्चयित्वा महादेवं रुद्रलोके महीयते ॥"
इति संवत्सरकौमुदीधृतब्रह्मपुराणवचनम्॥

**चम्पकरम्भा**, स्त्री, (चम्पक इति नाम्ना प्रसिद्धा
रम्भा । यद्वा, चम्पकपुष्पगन्धवद्गन्धविशिष्टा
रम्भा ।) सुवर्णकदली । इति राजनिर्घण्टः ॥

अङ्गेषु नरशार्द्दूल ! स राजासीत् सपत्नजित् ॥
पालयामास चम्पाञ्च कर्णः परबलार्द्दनः ।
दुर्य्योधनस्यानुमते तवापि विदितं तथा ॥"
इयमेव पुरा राज्ञो लोमपादस्य राजधानी
आसीत् । इति रामायणम् ॥
अङ्गदेशस्थनदी-
विशेषः ॥)

**चम्पाधिपः**, पुं, (चम्पाया अधिप ईश्वरः ।) कर्ण
राजः । इति हेमचन्द्रः ॥

**चम्पापुरी**, स्त्री, (चम्पा एव पुरी ।) चम्पा-
नगरी । इति शब्दरत्नावली ॥

**चम्पालुः**, पुं, (चम्पश्चम्पकस्तद्वत् कोशवर्णं आलाति
आ + ला + डुः ।) पनसः । इति
शब्दरत्नावली ॥

**चम्पावती**, स्त्री, (चम्पा तदाख्यया प्रसिद्धा नदी
विद्यतेऽस्यामिति । चम्पा + मतुप् । मस्य वत्वम् ।)
चम्पापुरी । इति शब्दरत्नावली ॥

**चम्पूः**, स्त्री, काव्यविशेषः । इति जटाधरः ॥ तल्ल-
क्षणं यथा, --
"गद्यपद्यमयी वाणी चम्पूरित्यभिधीयते ॥"
इति साहित्यदर्पणे । ६ । २९८ ॥

**चम्पेशः**, पुं, (चम्पाया ईशः ।) कर्णराजः । इति
त्रिकाण्डशेषः ॥

**चम्पोपलक्षितः**, पुं, (चम्पया नगर्य्या नद्या वा
उपलक्षितः ।) अङ्गदेशः । इति हेमचन्द्रः ।
४ । २३ ॥ तद्देशस्थे पुं भूम्नि ॥

शरत्काले वसन्ते च पित्तं प्रावृट्टतौ कफः ।"
"चयकोपशमान् दोषा विहाराहारसेवनैः ।
समानैर्यान्त्यकालेऽपि
विपरीतैर्विपर्य्ययम् ॥"
इति पूर्ब्बखण्डे द्वितीयेऽध्याये
शार्ङ्गधरेणोक्तम् ॥
शोथः । यथा, --
"कटुतैलान्वितैर्लेपात्
सर्पनिर्म्मोकभस्मभिः ।
चयः शाम्यति गण्डस्य प्रकोपः
स्फुटति द्रुतम् ॥"
इति वैद्यकचक्रपाणिसंग्रहे
व्रणशोथाधिकारे ॥)

**चर**, गमने । अदने । आचारे । इति कविकल्प-
द्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) चरति । इति
दुर्गादासः ॥

**चर**, क संशीत्यसंशीत्योः । इति कविकल्पद्रुमः ॥
(चुरां-परं-सकं-सेट् ।) संशीतिः संशयः । असं-
शीतिरसंशयः । क, विचारयति यो धर्म्ममिति
हलायुधः । चर असंशये । इति प्राञ्चः ।
केचित्तु संशये इति पठित्वा संशये हि विचा-
रणा स्यादित्याहुः । इति दुर्गादासः ॥

**चरः**, पुं, (चरति स्वपरराष्ट्रस्य शुभाशुभज्ञानाय
भ्राम्यतीति । चर + अच् ।) राष्ट्रादेः शुभा-
शुभादिज्ञानार्थं राज्ञा सगोपनं नियुक्तः पुरुषः ।
परतत्त्वज्ञानार्थभ्रमणकर्त्ता । तत्पर्य्यायः ।
यथार्हवर्णः २ प्रणिधिः ३ अपसर्पः ४ चारः ५
स्पशः ६ गूढपुरुषः ७ । इत्यमरः । २ ।
८ । १३ ॥

| | | |
|---|---|---|
| | | अपसर्पकः ८ प्रतिष्कः ९ प्रतिष्कसः १० गुप्त-<br>गतिः ११ मन्त्रगूढः १२ हितप्रणीः १३ । इति<br>शब्दरत्नावली ॥ उदास्थितः १४ । इति जटा-<br>धरः ॥ तत्राद्यौ भिक्षुबणिगादिवेशेन नित्य-<br>स्थायिनि चरे । पञ्च स्वदेशपरदेशभ्रमणशीले<br>इत्यन्ये । इति भरतः ॥ * ॥ तस्य लक्षणं यथा, -- |

"विवस्वानिव तेजोभिर्नभस्वानिव वेगतः ।
राजा चरैर्ज्जगत् सर्व्वं प्राप्नुयाल्लोकसम्मतैः ॥
तर्केङ्गितज्ञः स्मृतिमान् स्वीयभावाप्रकाशकः ।
क्लेशायाससहो दक्षः सर्व्वत्र भयवर्जितः ॥
सुभक्तो राजसु तथा कार्य्याणां प्रतिपत्तिमान् ।
नृपो निहन्याच्चारेण परराष्ट्रं विचक्षणः ॥
कालज्ञो मन्त्रकुशलान् संवत्सरचिकित्सकान् ।
तथान्यानपि युञ्जीत समर्थान् शुद्धचेतसः ॥
अक्रुद्धांश्च तथालुब्धान् दृष्टार्थान् तत्त्वभाषिणः ।
पाषण्डिनस्तापसादीन्परराष्ट्रे नियोजयेत् ॥
स्वदेशपरदेशज्ञान् सुशीलान् सुविचक्षणान् ।
वार्त्ताहर्य्यान् बहूंश्चैव चराणां विनियोजयेत् ॥
नैकस्य वचने राजा चारस्य प्रत्ययं वहेत् ।
द्वयोः सम्बन्धमाज्ञाय तद्युक्तं कार्य्यमारभेत् ॥
तस्माद्राजा प्रयुञ्जीत चरान् बहुमुखान् बहून् ।
नीरेतोवामनाः कुब्जास्तद्विधा ये च कारवः ॥
भिक्षुक्यश्चारणा दास्यो मालाकार्य्यः कलाविदः ।
अन्तःपुरगतां वार्त्तां निर्हरेयुरलक्षिताम् ॥
प्रकाशश्चाप्रकाशश्च चरस्तु द्विविधो मतः ।
अप्रकाशोऽयमुद्दिष्टः प्रकाशो दूतसंज्ञकः ॥"

यतश्चर इवायातो न ज्ञातः केनचिद्यतः ॥
तस्माच्चरकनामासौ विख्यातः क्षितिमण्डले ।
स भाति चरकाचार्य्यो देवाचार्य्यो यथा दिवि ॥
सहस्रवदनस्यांशो येन ध्वंसो रुजां कृतः ।
आत्रेयस्य मुनेः शिष्या अग्निवेशादयोऽभवन् ॥
मुनयो बहवस्तैश्च कृतं तन्त्र स्वकं स्वकम् ।
तेषां तन्त्राणि संस्कृत्य समाहृत्य विपश्चिता ॥
चरकेणात्मनो नाम्ना ग्रन्थोऽयं चरकः कृतः ॥"
इति भावप्रकाशः ॥

**चरटः**, पुं, (चरति नृत्यतीव विचरतीर्थः । चर + बाहुलकात् अटच् ।) खञ्जनपक्षी । इति शब्दमाला ॥

**चरणं**, क्ली, (चर + भावे ल्युट् ।) गमनम् ।
(यथा, ऋग्वेदे । ९ । ११४ । ९ ।
"यत्रानुकामं चरणं त्रिनाके त्रिदिवे दिवः ॥")
भक्षणम् । (यथा, मनुः । २ । १८६ ।
अकृत्वा भैक्षचरणमसमिध्य च पावकम् ।
अनातुरः सप्तरात्रमवकीर्णिव्रतञ्चरेत् ॥")
आचारः । इति हेमचन्द्रः । ३ । ५०७ ॥ (यथा,
ऋग्वेदे । १० । १३६ । ६ ।
"अप्सरसां गन्धर्व्वाणां मृगाणां चरणे चरन् ॥")

**चरणः**, पुं क्ली, बह्वृचादिः । (यथा, पञ्चतन्त्रे । ४ । ३ ।
"न पृच्छेच्चरणं गोत्रं न च विद्यां कुलं न च ।
अतिथिं वैश्वदेवान्ते श्राद्धे च मनुरब्रवीत् ॥"
अपि च महाभाष्यवचनम् । यथा, --
"सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥"
"चरणशब्दो वेदैकदेशवाची कठादिरूपः ।" इति
मुग्धबोधटीकाकृद्दुर्गादासः ॥) मूलम् । गोत्रम् ।
इति मेदिनी । णे, ४७ ॥ (चरतीति । चर + ल्युः ।
चरणास्त्रे, त्रि । यथा, रामायणे । ३ । ५६ । ३५ ।
"तुण्डपक्षप्रहारेण जटायुश्चरणायुधः ॥")

**चरमः**, त्रि, (चरतीति । "चरेश्च ।" उणां ५ । ६८ । इति अमच् ।) अन्तः । पश्चिमः । इत्युणादिकोषः ॥ (यथा, मनुः । २ । १९४ ।
"उत्तिष्ठेत् प्रथमं चास्य चरमं चैव संविशेत् ॥")

**चरमक्ष्माभृत्**, पुं, (क्ष्मां बिभर्त्तीति । भृ + क्विप् । ततः चरमश्चासौ क्ष्माभृच्चेति कर्म्मधारयः ।) अस्ताचलः । इत्यमरः । २ । ३ । २ ॥

**चरमाचलः**, पुं, (न चलतीति पचाद्यच् अचलः पर्व्वतः । ततः चरमश्चासौ अचलश्चेति कर्म्मधारयः ।) अस्तपर्व्वतः । इति त्रिकाण्डशेषः ॥

**चरमाद्रिः**, पुं, (चरमश्चासावद्रिश्चेति ।) अस्ताचलः । इति हेमचन्द्रः ॥

**चराचरं**, क्ली, (चराचरयोः समाहारः ।) जगत् ।
इति मेदिनी । रे, २६० ॥ (तथा च मनुः । १ । ५७ ।
"एवं स जाग्रत्स्वप्नाभ्यामिदं सर्व्वं चराचरम् ।
सञ्जीवयति चाजस्रं प्रमापयति चाव्ययः ॥")
आकाशः । इति धरणी ॥ जङ्गमाजङ्गमम् ।
यथा, देवीमाहात्म्ये ।
"तया विसृज्यते विश्वं जगदेतच्चराचरम् ॥"

**चराचरः**, त्रि, (चरश्चलं आचरो व्यवहारचेष्टादिकं तौ विद्येतेऽस्मिन् ।) जङ्गमः । इत्यमरः । ३ । १ । ७४ ॥ इङ्गः । इति विश्वः ॥ इष्टः । इति हेमचन्द्रः ॥ कपर्द्दके पुं । इति राजनिर्घण्टः ॥ (चरतीति चरो जङ्गमः अचरः स्थावरः । चरेण सह अचरः । स्थावरजङ्गमः ।
यथा, भागवते । ३ । ६ । ९ ।
"चुक्षोभान्योन्यमासाद्ययस्मिँल्लोकाश्चराचराः ॥")

**चरिः**, पुं, (चर + "सर्व्वधातुभ्य इन् ।" उणां ४ । ११७ । इति इन् ।) पशुः । इत्युणादिकोषः ॥

**चरितं**, क्ली, (चर + भावे क्तः ।) चरित्रम् ।

इति भोजराजकृतयुक्तिकल्पतरुः ॥
* ॥
अक्षद्यूतभेदः । भौमः । चलः । इति
मेदिनी ।
रे, ३० ॥ खञ्जनपक्षी । इति
शब्दमाला ॥
कपर्द्दकः । इति राजनिर्घण्टः ॥
मेषकर्कटतुला-
मकरलग्नानि । इति ज्योतिषम् ॥
अस्थिर-
विभूतिमित्रं चलमटनं
स्खलितनियममपि चरभे ।
इति दीपिका ॥ (यथा, तिथितत्त्वे ।
"चरलग्ने चरांशे वा स्थापनञ्च
विसर्ज्जनम् ॥"
जङ्गमे, त्रि । यथा मनुः । ७ । १५ ।
"तस्य सर्व्वाणि भूतानि स्थावराणि
चराणिच ॥"
तथाच चरके सूत्रस्थाने २७
अध्याये ।
"चरः शरीरावयवाः स्वभावो धातवः
क्रिया ।
लिङ्गं प्रमाणं संस्कारो मात्रा
चास्मिन् परीक्ष्यते ॥
चरोऽनूपजलाकाशधन्वाद्यो
भक्षसंविधिः ।
जलजानूपजाश्चैव जलानूपचराश्च
ये ॥
गुरुभक्ष्याश्च ये सत्त्वाः सर्व्वेते गुरवः
स्मृताः ॥")

**चरकः**, पुं, (चर एव । स्वार्थे कन् ।) चारः ।

इत्युणादिकोषः ॥ पर्पटः । इति
राजनिर्घण्टः ॥
(चरति गच्छति वेत्ति वेदवैद्यकादीनि
सर्व्व-
शास्त्राणीति । चर + अच् ततः कन्
च । यद्वा
चर इव महीवृत्तं द्रष्टुमागतः । चर +
इवार्थे
कन् ।) मुनिविशेषः ।
तत्कृततन्नामकग्रन्थः ।
तयोरुत्पत्तिर्यथा, --
चरत्यनेनेति करणे ल्युट् वा । अधमाङ्गम् ।
तत्-
पर्य्यायः । पादः २ पत् ३ अङ्घ्रिः ४ ।
इत्यमरः ।
२ । ६ । ७१ ॥ विक्रमः ५ पदः ६ आक्रमः
७ ।
इति राजनिर्घण्टः ॥ क्रमणः ८ चलनः ९
क्रमः १० । इति हेमचन्द्रः । ३ । २८० ॥
पदम् ११
पात् १२ । इति जटाधरः ॥ (यथा, मनुः ।
९ । २७७ ।
"अङ्गुलीग्रन्थिभेदस्य च्छेदयेत् प्रथमे ग्रहे ।
द्वितीये हस्तचरणौ तृतीये वधमर्हति ॥"
श्लोकचतुर्थभागः । यथा, वृत्तरत्नाकरे १
अध्याये ।
"शेषं गाथास्त्रिभिः
षड्भिश्चरणैश्चोपलक्षिताः ॥")

**चरणग्रन्थिः**, पुं, (चरणस्य ग्रन्थिः ।) गुल्फः ।

इति हेमचन्द्रः । ३ । ६१५ ॥

**चरणव्यूहं**, क्ली, (चरणानां वेदशाखानां व्यूहो-

ऽत्र ।)
वेदव्यासविरचितचतुर्व्वेदविवरणशास्त्रम् ।
तत्तु वेदशब्दे द्रष्टव्यम् ॥

**चरणायुधः**, पुं, (चरण एवायुधं अस्त्रविशेषो

यस्य ।) कुक्कुटः । इत्यमरः । २ । ५ । १७
॥
(पर्य्यायोऽस्य यथा, --
"कुक्कुटः कृकवाकुः स्यात्
कलयश्चरणायुधः ।
ताम्रचूडस्तथा दक्षो यामनादी शिखण्डिकः
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥
अस्य मांसगुणादिकं कुक्कुटशब्दे द्रष्टव्यम् ॥
इति शब्दरत्नावली ॥ (यथा, भागवते । १० । १
। १ ।
"कथितो वंशविस्तारो भवता सोमसूर्य्ययोः ।
राज्ञाञ्चोभयवंश्यानां चरितं परमाद्भुतम् ॥")
तद्द्विविधं यथा, उज्ज्वलनीलमणौ ।
"अनुभावाश्च लीला चेत्युच्यते चरितं द्विधा ।
अनुभावा अलङ्काराख्याः उद्भास्वराख्याः
वाचिकाख्याश्च । लीला स्याच्चारुविक्रीडा रास-
कन्दुकखेलाद्या चारुक्रीडा प्रकीर्त्तिता । ताण्डवं
वेणुवादन गोदोहः पर्व्वतोद्धारो गोहूतिर्गमना-
दिका ॥" (यथा, गीतगोविन्दे । १ । २ ।
"वाग्देवताचरितचित्रितचित्तसद्मा ॥"
वाच्यलिङ्गे तु । चर + कर्म्मणिक्तः । कृतम् ।
आच-
रितम् । यथा, रामायणे । १ । ३ । १ ।
"श्रुत्वा पूर्ब्बं काव्यबीजं देवर्षेर्नारदादृषिः ।
लोकादन्विष्य भूयश्च चरितं चरितव्रतः ॥")

**चरितार्थः**, त्रि, (चरितः कृतः अर्थः प्रयोजनं

येन सः ।) प्राप्तप्रयोजनः । यथा, कुमार-
सम्भवे । २ । ७ ।
"पुराणंस्य कवेस्तस्य चतुर्म्मुखसमीरिता ।
प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी ॥"

| | | |
|---|---|---|
| "यदा मत्स्यावतारेण हरिणा वेद उद्धृतः ।<br>तदा शेषश्च तत्रैव वेदं साङ्गमवाप्तवान् ॥<br>अथर्वान्तर्गतं सम्यगायुर्वेदञ्च लब्धवान् ।<br>एकदा स महीवृत्तं द्रष्टुं चर इवागतः ॥<br>तत्र लोकान् गदैर्ग्रस्तान् व्यथया परिपीडितान् ।<br>स्थलेषु बहुषु व्यग्रान् म्रियमाणांश्च दृष्टवान् ॥<br>तान् दृष्ट्वातिदयायुक्तस्तेषां दुःखेन दुःखितः ।<br>अनन्तश्चिन्तयामास रोगोपशमकारणम् ॥<br>संचिन्त्य स स्वयं तत्र मुनेः पुत्रो बभूव ह । | | |

**चरित्रं**, क्ली, (चर + "अर्त्तिलूधूसूखनसहचर इत्रः ।" ३ । २ । १८४ । इति इत्रः ।) स्वभावः । तत्पर्य्यायः । चरितम् २ चारित्रम् ३ चरीत्रम् ४ । इति शब्दरत्नावली ॥ (यथा, कथासरित्सागरे । ४ । ८३ ।
"अचिन्त्यं शीलगुप्तानां चरित्रं कुलयोषिताम् ॥")

**चरित्रा**, स्त्री, (चरित्र + टाप् ।) तिन्तिडीवृक्षः । इति शब्दरत्नावली ॥

**चरिष्णुः**, त्रि, (चरतीति । चर + "अलङ्कृञिति ।" ३ । २ । १३६ । इति इष्णुच् ।) जङ्गमः । इत्यमरः । ३ । १ । ७४ ॥ (यथा, भागवते । २ । ६ । ४० ।
"द्रव्यं विकारो गुण इन्द्रियाणि विराट् स्वराट् स्थास्नु चरिष्णु भूम्नः ॥")

**चरीत्रं**, क्ली, (चरित्र + पृषोदरादित्वाद्दीर्घत्वम् ।) चरित्रम् । इति शब्दरत्नावली ॥

**चरुः**, पुं, (चरन्ति भक्षयन्ति देवा इमं चर्य्यते भक्ष्यते अग्न्यादिभिर्देवैरिति वा चरति होमादिकमस्मादित्येके । चर + "भृमृशीति ।" उणां १ । ७ । इति उः ।) हव्यान्नम् । तत्पाकभाण्डम् । इति मेदिनी । रे, ३२ ॥
"ततश्च संस्कृते वह्नौ गोक्षीरेण चरुं पचेत् ॥"
इति शारदातिलकम् ॥

**चरुव्रणः**, पुं, (चरोर्व्रण इव ।) चित्रापूपः । इति त्रिकाण्डशेषः ॥ चिताइ पिटा इति भाषा ॥

**चर्च्च**, क इङ्समे । इति कविकल्पद्रुमः ॥ (चुरांपरं-सकं-सेट् ।) इङ्समः अध्ययनम् । क, चर्च्चयति वेदं विप्रः । इति दुर्गादासः ॥

**चर्च्च**, श उक्तौ । भर्त्सने । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-सेट् ।) रेफोपधः । श, चर्च्चती चर्च्चन्ती । गुणस्थानरहितानां तुदादिपाठफलन्तु शत्रन्तानामादीपोरितिनुणो विभाषा वेदेषूच्चारणभेदश्च । इति दुर्गादासः ॥

**चर्च्चरी**, स्त्री, (चर्च्च + बाहुलकात् अरन् ततो गौरादित्वात् ङीष् ।) गीतभेदः । चर्च्चरी गीतभेदे च केशभित्करशब्दयोरिति रुद्रः ॥ हर्षक्रीडेति सुभूतिः । कापटिकानां सादरवचनं तौर्य्यत्रिकञ्चेत्यन्ये । वसन्तसमयक्रीड्येके । इत्यमरटीकायां भरतः ॥ हर्षक्रीडावाक् । तत्पर्य्यायः । चर्भटी २ । इति हेमचन्द्रः ॥ (यथा, रत्नावल्याम् । १ अङ्के । "अये ! मधुरमभिहन्यमानमृदुमृदङ्गानुगतसङ्गीतमधुरः पुरः पौराणामुच्चरति चर्च्चरीध्वनिः ॥" एतदुदाहरणं यथा, विक्रमोर्व्वश्याम् । ४ अङ्के । अनन्तरे चर्च्चरीत्युक्त्वा, --
"गन्धोन्मादितमधुकरगीतै-
र्वाद्यमानैः परभृततूर्य्यैः ।
प्रसरितपवनोद्वेल्लितपल्लवनिकरः
सुललितविविधप्रकारैर्नृत्यति कल्पतरुः ॥"
वर्णवृत्तविशेषः । यथा, शब्दार्थचिन्तामणौ ।
"हारयुक्तसुवर्णकङ्कणपाणिशङ्खविराजिता
पादनूपुरसङ्गता सुपयोधरद्वयभूषिता ।
शोभिता बलयेन पिङ्गलपन्नगाधिपवर्णिता
चर्च्चरीतरुणीव चेतसि चाकसीति सुसङ्गता ॥")

**चर्च्चरीकः**, पुं, (चर्च्च + "फर्फरीकादयश्च ।" उणां ४ । २० । इति ईकन्प्रत्ययान्तेन निपातनात् साधुः ।) महाकालः । केशविन्यासः । शाकः । इति मेदिनी । के, १८७ ॥

कुष्ठश्लीषदचर्च्चिका-विषहरं पामाविसर्पापहं क्षीणानां क्षतशोषिणां हितकरं संसेव्यते मानवैः ॥"
इति हारीते प्रथमे स्थाने सप्तमेऽध्याये ॥ (चर्च्चां वेदादिविचारणां वेत्ति इति । ठन् । वेदाद्यध्येतरि, त्रि ॥)

**चर्च्चितं**, त्रि, (चर्च्च + कर्म्मणि क्तः । चर्च्चा लेपनं सञ्जातास्य इति इतच् वा ।) चन्दनादिना कृतलेपनम् । तत्पर्य्यायः । दिग्धम् २ लिप्तम् ३ । इति जटाधरः ॥ (यथा, गीतगोविन्दे । १ । ४० ।
"चन्दनचर्च्चितनीलकलेवरपीतवसनवनमाली ॥")

**चर्त्यः**, त्रि, (चर्त्यते इति । चृत हिंसायाम् + "ऋदुपधाच्चापि चृतेः । ३ । १ । ११० । इति ण्यत् ।) हननीयः । इति पाणिनिव्याकरणम् ॥

**चर्पटः**, पुं, (चृप् + अटन् ।) स्फारः । विपुलः । चपेटः । पर्पटः । इति मेदिनी । टे, ४१ ॥

**चर्पटा**, स्त्री, (चर्पट + टाप् ।) भाद्रशुक्लषष्ठी । चापडाषष्ठी इति भाषा ॥ अस्या विवरणं चपेटीशब्दे द्रष्टव्यम् ॥

**चर्पटी**, स्त्री, (चर्पट + ङीष् ।) पोली । इति त्रिकाण्डशेषः ॥

**चर्ब्ब**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परंसकं-सेट् ।) चर्ब्बति । इति दुर्गादासः ॥

**चर्भटः**, पुं, (चर + क्विप् । भटति भरति स्वशरीरदानेनेति । भट् + अच् । ततः कर्म्मधारयः ।) इर्व्वारुः । इति हलायुधः ॥

**चर्भटी**, स्त्री, (चर्भट + ङीष् ।) चर्च्चरी । हर्षक्रीडावाक् । इति हेमचन्द्रः ॥

**चर्म्मं**, क्ली, (चर्म्म साधनतयास्त्यस्य अच् ।) फलकः । इत्यमरटीकायां भरतः ॥ (यथा, मनुः । ७ । १९२ ।
"स्यन्दनाश्वैः समे युध्येदनूपे नौद्विपैस्तथा ।
वृक्षगुल्मावृते चापैरसिचर्म्मायुधैः स्थले ॥")

**चर्म्म**, [न्] क्ली, (चर + "सर्व्वधातुभ्यो मनिन् ।"

तस्यानुष्ठानं यथा । अग्नेः पश्चिमायान्दिशि प्रागग्रान् कुशानास्तीर्य्य तदुपरि प्रक्षालितं वारुणमुदूखलं मुषलं वैणवञ्च सूर्पं वारुण-चमसस्थजलप्रोक्षितं संस्थाप्य ब्रीहीन् यवान् वा सूर्पे निधाय चमसस्थजलेन ॐ वास्तो-स्पतये त्वा जुष्टं प्रोक्षामि ओम् इन्द्राय त्वा जुष्टं प्रोक्षामि ॐ भूस्त्वा जुष्टं प्रोक्षामि ॐ भुवस्त्वा जुष्टं प्रोक्षामि ॐ स्वस्त्वा जुष्टं प्रोक्षामि ॐ प्रजापतये त्वा जुष्टं प्रोक्षामि द्विस्तूष्णीं इत्यष्टौ वारान् प्रोक्षयेत् । ततः कांस्यपात्रेण चरुस्थाल्या वा ॐ वास्तोस्पतये त्वा जुष्टं निर्व्वपामि ओम् इन्द्राय त्वा जुष्टं निर्व्वमामि ॐ भूस्त्वा जुष्टं निर्व्वपामि ॐ भुवस्त्वा जुष्टं निर्व्वपामि ॐ स्वस्त्वा जुष्टं निर्व्वपामि ॐ प्रजापतये त्वा जुष्टं निर्व्व-पामि इति प्रत्येकं गृहीत्वा उदूखले स्थापयेत् द्विस्तूष्णीम् । ततो दक्षिणहस्तमुपरि कृत्वा मुषलेनावहत्य सूर्पेण प्रस्फोटयेत् । इत्थमेव वारत्रयं कृत्वा त्रिः प्रक्षालयेत् । ततश्चरु-म्याल्याममन्त्रकं कृतोत्तराग्रं पवित्रं निक्षिप्य प्रक्षालिततण्डुलं निधाय दुग्धं निक्षिप्य स्तोकं

**चर्च्चा**, स्त्री, (चर्च्च्यते विचार्य्यते वेदवेदान्तादि-तत्त्वशास्त्रैरसौ इति । चर्च्च + णिच् + अङ् ।) दुर्गा । चिन्ता । चार्च्चिक्यम् । इति मेदिनी । चे, ४ ॥ विचारणा । इत्यमरः । १ । ५ । २ ॥ (चर्च्च + भावे अङ् । लेपनम् । यथा, छन्दोमञ्ज-र्य्याम् । १५ । ४ ।

"मृगमदकृतचर्च्चा पीतकौशेयवासाः ॥"

गायत्रीरूपा महाशक्तिः । यथा, देवीभाग-वते । १२ । ६ । ४६ ।

"ज्ञानधातुमयी चर्च्चा चर्च्चिता चारुहासिनी ॥")

**चर्च्चिका**, स्त्री, (चर्च्चा + स्वार्थे कन् । कापि अत इत्वम् ।) दुर्गा । इति त्रिकाण्डशेषः ॥ चर्च्चा । इति द्विरूपकोषः ॥ (रोगविशेषः । तदपनोदनं तुषारपानीयं यथा, --

"तौषारं लघुशीतलं श्रमहरं पित्तार्त्तिशान्ति-प्रदं
दोषाणां शमनं जलार्त्तिहननं सर्व्वामयघ्नं परम् ।

उणां । ४ । ४१५ । इति मनिन् ।) इन्द्रियविशेषः । चाम इति भाषा ॥ तत्पर्य्यायः । त्वक् २ असृग्धरा ३ कृत्तिः ४ अजिनम् ५ देहचर्म्म ६ रक्ताधारः ७ रोमभूमिः ८ शरीरावरणम् ९ । इति राजनिर्घण्टः ॥ असृग्वरा १० । इति भरतधृतसर्व्वधरः ॥ (यथा, भागवते । ३ । ६ । १६ ।

"निर्भिन्नान्यस्य चर्म्माणि लोकपालोऽनिलो-ऽविशत् ॥")

शरीरावरकं शस्त्रम् । ढाल इति भाषा ॥ तत्-पर्य्यायः । फलकः २ फलम् ३ । इत्यमरः । २ । ८ । ९० ॥ फरम् ४ चर्म्मम् ५ । इति भरतः ॥ * ॥ तस्य लक्षणं यथा, युक्तिकल्पतरौ ।

"शरीरावरकं शस्त्रं चर्म्म इत्यभिधीयते ।
तत् पुनर्द्विविधं काष्ठचर्म्मसम्भवभेदतः ॥
शरीरावरकत्त्वञ्च लघुता दृढता तथा ।
दुर्भेद्यतेति कथिता चर्म्मणां गुणसंग्रहः ॥
स्वल्पता गुरुता चैव मृदुता सुखभेद्यता ।
विरुद्धवर्णता चेति चर्म्मणां दोषसंग्रहः ॥

| स्तोकमुदकं दत्त्वा तन्मध्ये खदिरपलाशोडु-म्बराणामन्यतमस्य प्रादेशप्रमाणं अग्रे उभ-यतोऽङ्गुष्ठपर्व्वप्रमाणं चतुष्कोणपुष्कलं मेक्षणं दक्षिणावर्त्तेन भ्रामयित्वा तथा पचेत् यथान्त-रुष्मणा सम्यक् पाको भवति गालनं न भवति दाहश्च न भवति ततः सम्यक्पाके भूते मध्ये घृतस्रुवं दत्त्वा प्रागादिदिक्चिह्नितं चरुमव-तार्य्य अग्नेरुतरतः कुशोपरि, स्थापयित्वा पुन-र्मध्ये घृतसयं दद्यात् । इति भवदेवभट्टः ॥ | | |
|---|---|---|

सितो रक्तस्तथा पीतः कृष्ण
इत्यभिशब्दितः ।
ब्रह्मादिजातिभेदेन चर्म्मणां वर्णनिर्णयः ॥
चित्रवर्णस्तु सर्व्वेषां सर्व्वदैवोपपद्यते ॥”
* ॥
ब्रह्मचारिधार्य्यकृष्णसारचर्म्म । इत्यमरः
। २ । ७ ।
४७ ॥ (यथा, मनुः । २ । ४१ ।
“कार्ष्णरौरववास्तानि चर्म्माणि
ब्रह्मचारिणः ॥”)

**चर्म्मकषा**, स्त्री, (चर्म्मणः कषा । चर्म्म कषतीति ।
कष् + अच् इत्येके ।) पश्चिमदेशजातं
गन्ध-
द्रव्यम् । केचित्तु चामारकषा इति ख्याता
इत्याहुः । इति भरतः ॥ तत्पर्य्यायः ।
सप्तला २
विमला ३ सातला ४ भूरिफेना ५ ।
इत्यमरः ।
२ । ४ । १४३ ॥ शातला ६ चर्म्मकसा
७ । इति
भरतः ॥ मांसरोहिणी । इति
राजनिर्घण्टः ॥
(“चर्म्मकषायाः कल्कं विल्वसमं मूर्द्ध्नि
काक-
पदमस्य ।
कृत्वा कुर्य्यात् कटभीं
कटुकोटफलाप्रधमनञ्च ॥”
इति चरके चिकित्सास्थाने
पञ्चविंशेऽध्याये ॥)

**चर्म्मकसा**, स्त्री, (चर्म्मणः कसा ।) चर्म्मकषा ।
इत्यमरटीकायां भरतः ॥

**चर्म्मकारः**, पुं, (चर्म्म चर्म्मनिर्म्मितद्रव्यादिकं
करोतीति । कृ + “कर्म्मण्यण्” । ३ । २
। १ । इति
अण् ।) वर्णसङ्करजातिविशेषः । चामार
इति
मुचि इति च भाषा ॥ स तु चण्डाल्यां
तीवरा-

**चर्म्मचटका**, स्त्री, (चर्म्मणा चटकेव ।) निशाचर-
पक्षिविशेषः । चाम्चिका इति भाषा ॥
तत्-
पर्य्यायः । जतुका २ अजिनपत्रिका ३
। इति
हेमचन्द्रः ॥ जतूका ४ गृहमाचिका ५
जतुनी ६
अजिनपत्रा ७ चार्म्मिः ८ चर्म्मचटी ९ ।
इति
शब्दरत्नावली ॥ चर्म्मपत्रा १० । इति
जटा-
धरः ॥ चर्म्मचटिका ११ । इति केचित्
॥

**चर्म्मचटी**, स्त्री, (चर्म्मणा चटीव । यद्वा, चर्म्म
चटति भिनत्तीति । चट + अच् ङीष् ।)
चर्म्म-
चटका । इति शब्दरत्नावली ॥

**चर्म्मचित्रकं**, क्ली, (चर्म्मणि चित्रकं चित्रित-
मिवेत्यर्थः । चर्म्म चित्रयतीति वा । चित्र
+
ण्वुल् ।) श्वेतकुष्ठम् । इति राजनिर्घण्टः
॥

**चर्म्मजं**, क्ली, (चर्म्मणो चर्म्मणि वा जायते । जन
+
डः ।) रोम । रुधिरम् । इति
राजनिर्घण्टः ॥

**चर्म्मण्वती**, स्त्री, (चर्म्मैव
उत्पत्तिहेतुत्वेनास्त्यस्याः
इति मतुप् मस्य वत्वम् ।) नदीविशेषः ।
सा तु
वुन्देलखण्डाख्यदेशे चम्बल् इति
ख्याता ॥
कदली । इति मेदिनी । ते, १९६ ॥
(आसीत् किल
पुरा रन्तिदेवनामा (शशविन्दुनामा वा)
कश्चित्
खजचक्रवर्त्ती । तस्य यज्ञे मारिता ये
गाव-

**चर्म्मप्रभेदिका**, स्त्री, (चर्म्म प्रभिनत्तीति । प्र +
भिद + ण्वुल् । टापि अत इत्वञ्च ।) चर्म्म-
प्रभेदनास्त्रम् । इत्यमरः । २ । १० । ३५ ॥
पोड इति भाषा ॥

**चर्म्मप्रसेवकः**, पुं, (चर्म्मणा प्रसीव्यते इति । सिव्यु
तन्तुसन्ताने + “संज्ञायाम् ।” ३ । ३ । १०९ ।
इति कर्म्मणि ण्वुल् बाहुलकात् वुन् वा ।)
चर्म्मप्रसेविका । इत्यमरटीकायां भरतः ॥

**चर्म्मप्रसेविका**, स्त्री, (चर्म्मप्रसेवक + टाप् अत
इत्वञ्च ।) अग्निसन्दीपनार्थं चर्म्म निर्म्मित-
यन्त्रम् । भाती इति जाँता इति च भाषा ॥
तत्पर्य्यायः । भस्त्रा २ । इत्यमरः । २ । १० । ३३
॥

**चर्म्ममुण्डा**, स्त्री, (चर्म्मणः जीवरहितदैत्यस्ये-
त्यर्थः मुण्डमस्तिहस्तेऽस्या इति । छिन्नशिरो-
धारणादेव तथात्वम् ।) दुर्गा । इति हेम-
चन्द्रः । २ । १२० ॥ (चण्डमुण्डा । इत्यपि
क्वचित् पाठः ॥)

**चर्म्मरङ्गा**, स्त्री, (चर्म्मणे रङ्गो यस्याः ।) आवर्त्त-
कीलता । इति राजनिर्घण्टः ॥ (देशविशेषे, पुं ।
स च देशः कूर्म्मविभागे पश्चिमोत्तरस्यां दिशि
उक्तः । यथा, बृहत्संहितायाम् । १४ । २३ ।
“दिशि पश्चिमोत्तरस्याम् ।” इत्युपक्रम्य, --
“वेणुमती फल्गुलुका
गुरुहा मरुकुच्चचर्म्मरङ्गाख्याः ॥”
इत्युक्तवान् ॥)

**चर्म्मरुः**, पुं, (चर्म्म रचयतीति । रच + बाहु-
लकात् डुः ।) चर्म्मकारः । इति त्रिकाण्डशेषः ॥

**चर्म्मसम्भवा**, स्त्री, (चर्म्मणि सम्भव उत्पत्ति-
र्यस्याः ।) एला । इति हारावली । ९७ ॥

**चर्म्मसारः**, पुं, (चर्म्मणः सारः । भुक्तद्रव्येभ्यो
रसस्य त्वङ्मध्ये जायमानत्वात् तथात्वम् ।)
रसः । इति राजनिर्घण्टः ॥

**चर्म्माम्भः**, पुं, (चर्म्मणोऽम्भः जलम् । सर्व्वे सान्ता
अदन्ताश्च ।” इति न्यायादत्र अकारान्तः ।

ज्जातः । इति पराशरपद्धतिः ॥
तत्पर्य्यायः । पादू-
कृत् २ । इत्यमरः । २ । १ । ७ ॥
पादुकृत् ३ चर्म्मारः ४ ।
इति तट्टीका ॥ चर्म्मकृत् ५ पादुकाकारः
६ ।
इति हलायुधः ॥ चर्म्मरुः ७ कुरटः ८ ।
इति
त्रिकाण्डशेषः ॥ (यथां, मनुः । १० ।
३६ ।
"कारावरो निषादात्तु चर्म्मकारः प्रसूयते
॥")

**चर्म्मकारी**, स्त्री, (चर्म्म करोति वर्द्धयति उत्कर्षं
करोतीति यावत् । कृ + अण् । चर्म्म
किरतीति
चर्म्म + कॄ + अणित्येके । ततो ङीष् ।)
चर्म्म-
कषौषधिः । इति मेदिनी । रे, २६१ ॥

**चर्म्मकीलः**, पुं, (चर्म्म कीलतीति । कील + अच् ।
चर्म्मणि गुह्यस्थचर्म्मणि कील इवेति वा
।)
गुह्यरोगविशेषः । हालीश इति हारिस्
इति
च भाषा ॥ तस्य निदानं यथा, --
"व्यानो गृहीत्वा श्लेष्माणं
करोत्यर्शस्त्वचोवहिः ।
कीलोपमं स्थिरखरं चर्म्मकीलन्तु
तद्विदुः ॥
वातेन तोदपारुष्यं पित्तादसितरक्तता ।
श्लेष्मणा स्निग्धता तस्य ग्रथितत्वं
सवर्णता ॥"
इति माधवकरेण रोगविनिश्चयग्रन्थे
अशो-
रोगाधिकारे धृतम् । अतोऽस्य चिकित्सा
अर्शरोगचिकित्सावत् । अपि च ।
"चर्म्मकीलं जतुमणिं मसकान्
तिलकालकान् ।
उत्कृत्य शस्त्रेण दहेत्
क्षाराग्निभ्यामशेषतः ॥"
इति भावप्रकाशः ॥

**चर्म्मकृत्**, पुं, (चर्म्म करोति चर्म्मघटितपादुका-
स्तेषां चर्म्मगलितरसक्लेदादिभ्यो
जातेयं नदीति
पौराणिकी गाथा । यथा, देवीभागवते ।
१ ।
१८ । ५४ ।
"चर्म्मणां पर्व्वतो जातो
बिन्ध्याचलसमः पुनः ।
मेघाम्बुप्लावनाज्जाता नदी चर्म्मण्वती
शुभा ॥")

**चर्म्मदण्डः**, पुं, (चर्म्मभिश्चर्म्मणा वा निर्म्मितो
दण्डः ।) कशा । इति हेमचन्द्रः ॥
चावुक्
इति भाषा ॥
("चर्म्मदण्डाहतो विप्रः शशापातिरुषा
चतम् ॥"
इति महाभारतशान्तिपर्व्वणि ॥)

**चर्म्मदूषिका**, स्त्री, (चर्म्म दूषयति दोषयति वा ।
दुष् + णिच् + ण्वुल् । ततष्टापि अत
इत्वम् ।)
कोठरोगः । इति राजनिर्घण्टः ॥

**चर्म्मतरङ्गः**, पुं, (चर्म्मणां चर्म्मभिर्वा तरङ्ग इव ।)
बलिः । त्वक्सङ्कोचः । इति
राजनिर्घण्टः ॥

**चर्म्मद्रुमः**, पुं, (चर्म्माकृतिवल्कलमयो द्रुमः ।)
भूर्जवृक्षः । इति राजनिर्घण्टः ॥

**चर्म्मपत्रा**, स्त्री, (चर्म्ममयं पत्रं पक्षद्वयं यस्याः
।)
चर्म्मचटी । इति जटाधरः ॥

**चर्म्मपादुका**, स्त्री, (चर्म्मनिर्म्मिता चर्म्ममयी वा
पादुका ।) उपानत् । चामडार जुता
इति
भाषा ॥ यथा । "ततो ब्रह्मचारी अनेन
मन्त्रेण
चर्म्मपादुकायुगले पादौ निदध्यात् ।"
इति भव-
देवभट्टः ॥ अस्या गुणाः पादुकाशब्दे
द्रष्टव्याः ॥

**चर्म्मपुटः**, पुं, (चर्म्मनिर्म्मितः पुटः पात्रम् ।
क्वचित् क्लीवे सान्तोऽपि दृश्यते ।) रसः । इति
राजनिर्घण्टः ॥

**चर्म्मारः**, पुं, (चर्म्म चर्म्मक्रियां ऋच्छतीति ।
ऋ गतौ + "कर्म्मण्यण् ।" ३ । २ । १ । इत्यण् ।)
चर्म्मकारः । इति जटाधरः ॥

**चर्म्मी**, [न्] पुं, (चर्म्म शरीरावरकं शस्त्रविशेषो-
ऽस्त्यस्य । चर्म्म + इनिः ।) चर्म्मधारियोद्धा ।
ढाली इति भाषा ॥ तत्पर्य्यायः । फलक-
पाणिः २ । (यथा, महाभारते । ३ । २७ । ३१ ।
"श्यामं बृहन्तं तरुणं चर्म्मिणामुत्तमं रणे ।
नकुलं ते वने दृष्ट्वा कस्मात् मन्युर्न वर्द्धते ॥"
चर्म्म त्वक् अस्त्यस्येति ।) भूर्जवृक्षः । इत्य-
मरः । २ । ४ । ४६ ॥ (यथा, सुश्रुते चिकित्-
सितस्थाने ११ अः । "चर्म्मिवृक्षगिरिकर्णिका-
शीतशिवनिचुलदाडिमाजकर्णहरिवृक्षराजाद-
नगोपघोण्टाविकङ्कतेषु वा यवान्नविकारांश्च
सेवेत ॥") भृङ्गरिटिः । मोचा । इति शब्द-
रत्नावली ॥

दिकम् उत्पादयतीत्यर्थः । चर्म्म + कृ + क्विप् ।)
चर्म्मकारः । इति हलायुधः ॥ (यथा, राज-
तरङ्गिण्याम् । ४ । ५५ ।
“चर्म्मकृत् कोऽपि न प्रादात् कुटीं क्षेत्रोपयोगिनीम् ॥”)

पक्षे स्वार्थे कन् । चर्म्ममयं पुट-
मत्र इति कप् इत्येके ।)
चर्म्मनिर्म्मितपात्र-
विशेषः । कुपा इति भाषा ॥ यथा ।
दृतिश्चर्म्म-
पुटकः । दृतिश्चर्म्मपुटे मत्स्ये चेति
मेदिनी ॥
इति पुंलिङ्गसंग्रहटीकायां भरतः ॥
तत्पर्य्यायः ।
दृतिः खल्लश्चर्म्ममयीति हेमचन्द्रः ॥

**चर्म्मपुटकः**, पुं, (चर्म्मनिर्म्मितः पुटः पात्रम् ।

पक्षे स्वार्थे कन् । चर्म्ममयं पुट-
मत्र इति कप् इत्येके ।)
चर्म्मनिर्म्मितपात्र-
विशेषः । कुपा इति भाषा ॥ यथा ।
दृतिश्चर्म्म-
पुटकः । दृतिश्चर्म्मपुटे मत्स्ये चेति
मेदिनी ॥
इति पुंलिङ्गसंग्रहटीकायां भरतः ॥
तत्पर्य्यायः ।
दृतिः खल्लश्चर्म्ममयीति हेमचन्द्रः ॥

**चर्य्या**, स्त्री, (चर + "गदमदचरयमश्चानुपसर्गे ।"
३ । १ । १०० । इति यत् । स्त्रियां टाप् ।)
ईर्य्यापथस्थितिः । इत्यमरः । २ । ७ । ३६ ॥
नियमापरित्यागः । ईर्य्यते गुरोः शास्त्रो-
पासनया ज्ञायते ईर्य्या सा च ध्यानधारणादिः
तस्याः पन्था उपायः तत्र व्रतिनां या स्थिति-
रवस्थानमपरित्यागः सा । इति भरतः ॥ (यथा,
महाभारते । १ । २ । ३२६ ।
"चर्य्यायां हयमुत्सृष्टं पाण्डवस्यानुगच्छतः ॥")
गमनम् । अदनम् । आचरणम् । इति मुग्धबो-
धटीकायां दुर्गादासः ॥ (यथा, मनुः । ६ । ३२ ।
"आसां महर्षिचर्य्याणां त्यक्त्वान्यतमया तनुम् ॥"
सेवा । यथा, हेः रामायणे । २ । २९ । १५ ।
"वनवासस्य शूरस्य मम चर्य्या हि रोचते ॥"
त्रि, अनुष्ठेयः । आचरणीयः । यथा, मनुः । ३ । १ ।
"षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैवेदिकं व्रतम् ॥")

**चर्व्व**, कि भक्षे । इति कविकल्पद्रुमः ॥ (चुरां-
पक्षे भ्वां-परं-सकं-सेट् ।) कि, चर्व्वयति चर्व्वति
तण्डुलं बालकः । इति दुर्गादासः ॥

**चर्व्वणं**, क्ली, (चर्व्व + भावे ल्युट् ।) दन्तैश्चूर्ण-
नम् । इति हेमचन्द्रः । ३ । ८८ ॥ चिवान इति
मानुषी जातिश्चोपकल्पिता । तथा च श्रुतिः ।
पुरुषत्वे चाविस्तरामात्मेति ।" इति तट्टीकायां
श्रीधरस्वामी ॥ (अत्र उणादिवृत्तिकृतोज्ज्वल-
दत्तेन तु "कृषेरादेश्च धः ।" इति पठित्वा
धर्षणिर्बन्धकीति व्याख्यातम् ॥)

**चल**, क भृतौ । इति कविकल्पद्रुमः ॥ (चुरां-परं-
सकं-सेट् ।) क, चालयति । दन्त्यवकारादि-
रयमिति दुर्गसिंहजुमरनन्दी । भृतिरिह पोष-
णम् । इति दुर्गादासः ॥

**चल**, ज गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) ज, चालः चलः । मिच्चले इति
वक्ष्यमाणं न पठित्वा इममेव मानुबन्धं भ्रान्ताः
पठन्ति तद्धेयम् । तेनास्य चालयति हस्तिनं
यन्ता । चलमानोऽनिल इत्यत्र ताच्छील्ये शतुः
शानः । मिच्चले । पूर्ब्बेणान्वयः । चलधातुः
कम्पने मानुबन्धः स्यादित्यर्थः । म, चलयति
लतां वायुः । चलयन् भृङ्गरुचस्तवालकानिति
रघुः । चालयन् सकलां पृथ्वीमिति घञन्तात्
चालं करोतीति ञौ शत्रन्तम् । इति दुर्गादासः ॥

**चल**, श विलासे । इति कविकल्पद्रुमः ॥ (तुदां-
परं-अकं-सेट् ।) श, चलती चलन्ती । विलासः
क्रीडनम् । इति दुर्गादासः ॥

**चलं**, त्रि, (चलति गच्छतीति । चल + पचाद्यच् ।)
चञ्चलम् । इत्यमरः । ३ । १ । ७४ ॥ (यथा,
रघुः । ११ । १५ ।
"ताडका चलकपालकुण्डला
कालिकेव निविडा बलाकिनी ॥"
पारदः । इति हेमचन्द्रः । ४ । ११६ ॥ अष्टा-
दशाक्षरवृत्तभेदः । यथा, वृत्तरत्नाकरे ।

**चलनं**, क्ली, (चल + भावे ल्युट् ।) भ्रमणम् । (यथा,
देवीभागवते १ । १७ । १९ ।
"चलनञ्च विनाकार्य्यं न भवेदिति मे मतिः ॥")
कम्पनम् । (यथा, पञ्चतन्त्रे । २ । १७४ ।
"द्वावुपायाविह प्रोक्तौ विमुक्तौ शत्रुदर्शने ।
हस्तयोश्चलनाद्वेको द्वितीयः पादवेगजः ॥")
कम्प्रे, त्रि । इति मेदिनी । ने, ६१ ॥

**चलनः**, पुं, (चलत्यनेन इति । चल + करणे ल्युट् ।)
पादः । इति हेमचन्द्रः ॥ हरिणः । इति जटा-
धरः ॥

**चलनकः**, पुं, (चलन + संज्ञायां कन् ।) चण्डा-
तकम् । इति हेमचन्द्रः । ३ । ३३८ ॥

**चलनी**, स्त्री, (चलन + ङीप् ।) वारीभेदः । जग-
बन्धनी । वस्त्रघर्घरी । इति हेमचन्द्रः ॥ घाघरा
इति भाषा ॥

**चलपत्त्रः**, पुं, (चलानि पत्राणि यस्य ।) अश्वत्थ-
वृक्षः । इति राजनिर्घण्टः ॥ (यथा, नैषधे ।
"अङ्गेन केनापि विजेतुमस्या
गवेष्यते किं चलपत्रपत्रम् ।
नचेद्विशेषादितरच्छदेभ्य-
स्तस्यास्तु कम्पस्तु कुतो भयेन ॥")

**चला**, स्त्री, (चलतीति चल + पचाद्यच् टाप् च ।
नैकत्रावस्थितत्वात् तथात्वम् ।) लक्ष्मीः । इति
मेदिनी । ले, १५ ॥ सिह्लकः । इति रत्नमाला ॥

**चलाचलः**, त्रि, (चलतीति चल + अच् । चरि-
चलिपतिवदीनां वा द्वित्वमितिद्वित्वे अभ्यासस्य
आगागमश्च इति वार्त्तिकसूत्रेणास्य सिद्धिः ।)
चञ्चलः । इत्यमरः । ३ । १ । ७४ ॥ (यथा,
किरातार्ज्जुनीये । ११ । ३० ।
"जन्मिनोऽस्य स्थितिं विद्वान् लक्ष्मीमिव चलाचलाम् ॥")
काके पुं, । इति राजनिर्घण्टः ॥

**चलातङ्कः**, पुं, (चले चलने आतङ्को भयं यस्मात् ।)
वातरोगः । इति राजनिर्घण्टः ॥

**चलितं**, त्रि, (चल + कर्त्तरि क्तः ।) कम्पितम् ।

भाषा ॥ (यथा, हारिते प्रथमे स्थाने प्रथमे-
ऽध्याये ।
"चर्व्वणं गिलनञ्चापि कासितं श्वासितं तथा ॥")

**चर्व्वा**, [न्] पुं, तलप्रहारः । इति हारावली ।
१६७ ॥

**चर्व्वितं**, त्रि, (चर्व्व्यते स्म इति । चर्व्व + कर्म्मणि
क्तः ।) कृतचर्व्वणम् । भक्षितम् । इत्यमरः ।
३ । २ । ११० ॥ (यथा, भागवते । ७ । ५ । ३० ।
"अदान्तगोभिर्विशतां तमिस्रं
पुनःपुनश्चर्व्वितचर्व्वणानाम् ॥")

**चर्व्वितपात्रकं**, क्ली, (चर्व्वितानां ताम्बूलादीनां
त्यागपात्रम् । ततः स्वार्थे कन् ।) चर्व्वितताम्बू-
लादित्यागपात्रम् । पीग्दान इति भाषा ॥
यथा, रासलीलायां पातालखण्डे ।
"ताम्बूलं दर्पणं पानपात्रं चर्व्वितपात्रकम् ॥"

**चर्व्व्यं**, त्रि, (चर्व्व्यते दन्तैश्चूर्ण्यते इति । चर्व्व +
कर्म्मणि ण्यत् ।) चर्व्वणीयम् । यथा, --
"षट्कोटिं ब्राह्मणाञ्च भोजयामास नित्यशः ।
चूष्यपेयलेह्यचर्व्व्यैरतितृप्तिं दिने दिने ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥

**चर्षणिः**, पुं, (कर्षतीति । कृष + "कृषेरादेश्च
चः ।" पां-उणां । २ । १०३ । इति अनिः
आदेश्च चः ।) जनः । यथा, श्रीभागवते ।
"स चर्षणीनामुदगाच्छुचो मृजन्
प्रियः प्रियाया इव दीर्घदर्शनः ॥"
मनुष्यजातिः । यथा, --
"म्भौ न्जौ भ्रौ चेच्चलमिदमुदितं युगैर्मुनिभिः
स्वरैः ॥")

**चलः**, पुं, (चल + पचाद्यच् ।) कम्पः । तद्युक्ते
त्रि । इति मेदिनी । ले, १५ ॥ (शिवः । यथा,
महाभारते । १३ । १७ । ११६ ।
"महाकेतुर्महाधातुर्नैकसानुचरश्चलः ॥"
विष्णुः । यथा, तत्रैव । १३ । १४९ । ९२ ।
"वीरहा विषमः शून्यो घृताशीरचलश्चलः ॥"
"वायुरूपेण चलः ।" इति भाष्यम् ॥)

**चलचञ्चुः**, पुं, (चला चञ्चला चञ्चुरस्य ।) चकोर-
पक्षी । इति हेमचन्द्रः । ४ । ४०५ ॥

**चलत्पूर्णिमा**, स्त्री, (चलन्ती पुर्णिमा तदाश्रयी-
भूतचन्द्र इवेति तात्पर्य्यार्थः ।) चन्द्रकमत्स्यः ।
इति त्रिकाण्डशेषः ॥

**चलदङ्गः**, पुं, (चलत् चञ्चलं अङ्गं यस्य ।) मत्स्य-
विशेषः । चेङ्गा इति भाषा ॥ अस्य गुणाः ।
अनभिष्यन्दित्वम् । वाते हितत्वम् । रोचन-
त्वञ्च । इति राजवल्लभः ॥

**चलदङ्गकः**, पुं, (चलदङ्गं यस्य इति कप् ।)
चलदङ्गमत्स्यः । इति जटाधरः ॥

**चलदलः**, पुं, (चलानि दलानि पत्त्राणि यस्य ।)
अश्वत्थवृक्षः । इत्यमरः । २ । ४ । २० ॥ (अश्व-
शब्देऽस्य गुणादयो ज्ञातव्याः ॥)
इत्यमरः । ३ । १ । ८७ ॥ (यथा, राजतर-
ङ्गिण्याम् । ५ । ३६५ ।
"तयोर्विलासवलितैश्चलितापाङ्गविभ्रमैः ॥")
गतम् । चल ज गताविति दर्शनात् ॥ (यथा,
गोः रामायणे । ३ । ५७ । २३ ।
"अधिरूढे गजारोहे यथास्याच्चलितोगजः ॥")

**चलुः**, पुं, (चल + उन् ।) गण्डूषः । इति हेम-
चन्द्रः । ३ । २६२ ॥

**चलुकः**, पुं, (चलुना कायतीति । कै + कः ।)
प्रसृतिः । भाण्डभेदः । इति मेदिनी । के, ८६ ॥

**चविः**, स्त्री, (चर्व्व्यते इति । चर्व्व + इन् । पृषो-
दरादित्वात् रलोपे साधुः ।) चविका । इति
शब्दरत्नावली ॥

**चविकं**, क्ली, (चवि + संज्ञायां कन् ।) चविका ।
इति भरतधृतरुद्रः ॥

**चविका**, स्त्री, (चवि + स्वार्थे कन् ।) वृक्षविशेषः ।
चै इति भाषा ॥ तत्पर्य्यायः । चव्यम् २ ।
इत्यमरः । २ । ४ । ९४ ॥ चव्या ३ चविकम् ४

| | | |
|---|---|---|
| “अर्य्यम्नो मातृका पत्नी तयोश्चर्षणयः सुताः । यत्र वै मानुषी जातिर्ब्रह्मणा चोपकल्पिता ॥” इति श्रीभागवते । ६ । ६ । ३१ ॥ “चर्षणयः कृताकृतज्ञानवन्तः । पश्यन्तिकर्म्मत्वेन निघण्ड्वा-दावुक्तेः । यत्र येषु आत्मानुसन्धानविशेषेण | | |

चवी ५ । इति भरतः ॥ चविः ६ । इति शब्द-
रत्नावली ॥ तेजोवती ७ कोला ८ नाकुली ९
उषणा १० चव्यकम् ११ वशिरः १२ गन्ध-
नाकुली १३ वल्ली १४ कोलवल्ली १५ कोलम्
१६
कुटिलसप्तकम् १७ तीक्ष्णम् १८ करिकरणा-
वल्ली १९ कृकरः २० । (यथा, सुश्रुते उत्तर-
तन्त्रे ३९ अध्याये ।
"सारिवाह्वययष्ट्याह्वचविकारक्तचन्दनैः ॥")
अस्या गुणाः । कटुत्वम् । उष्णत्वम् ।
लघुत्वम् ।
रोचनत्वम् । दीपनत्वम् ।
जन्तूद्रेककासश्वास-
शूलनाशित्वञ्च । इति राजनिर्घण्टः ॥ भेद-
कत्वम् । कफनाशित्वञ्च । इति राजवल्लभः ॥

**चवी**, स्त्री, (चवि + "बह्वादिभ्यश्च ।" ४ । १ । ४५ ।
इति ङीष् ।) चविका । इति शब्दरत्नावली ॥
(यथा, कथासरित्सागरे । ६ । १५१ ।
"सर्व्ववर्म्मा चवीहस्तः प्रतिज्ञां तां सुदुस्तराम्
।
पश्यन् सानुशयः सर्व्वं स्वभार्य्यायै शशंस तत्
॥")

**चव्यं**, क्ली, (चर्व्व्यते इति । चर्व्व + ण्यत् । पृषो-
दरादित्वात् रलोपे साधुः ।) चविका ।
इत्यमरः ।
२ । ४ । ९८ ॥ (यथा, सुश्रुते सूत्रस्थाने ४४
अध्याये ।
"चव्येन्द्रबीजं त्रिफला सर्पिर्म्मांसरसाम्बुभिः
॥")

**चव्यकं**, क्ली, (चव्यमेव । स्वार्थे कन् ।) चविका ।
इति राजनिर्घण्टः ॥

**चव्यजा**, स्त्री, (चव्यमिव जायते इति । जन +
डः ।) गजपिप्पली । इति राजनिर्घण्टः ॥
(विवृतिरस्या गजपिप्पलीशब्दे ज्ञेया ॥)

**चव्यफलं**, क्ली, (चव्यमिव फलं यस्य ।) गज-
पिप्पली । इति राजनिर्घण्टः ॥

**चव्या**, स्त्री, (चव्य + टाप् ।) चविका । इत्यमर-

काष्ठजं धातुजं शैलं जाङ्गलादि
महीभुजाम् ।
यदन्यत्तोयपानादि पात्रं पृथ्वीभुजां
भवेत् ॥"
एवं तत्रापि नियम इति भोजस्य
निश्चयः । इति
युक्तिकल्पतरुः ॥ * ॥ सुरापात्रम् ।
मधु । मद्य-
प्रभेदः । इति मेदिनी । के, ८६ ॥

**चषतिः**, पुं, (चष भक्षे वधे वा + भावे अतिः ।)
भक्षणम् । वधः । इति
सिद्धान्तकौमुद्या-
मुणादिवृत्तिः ॥

**चषालः**, पुं, (चष्यते वध्यतेऽस्मिन् । चष +
"सानसि-
वर्णसीति ।" उणां । ४ । १०७ । इति
आल
प्रत्ययेन निपातनात् साधुः ।)
यूपकटकः । इत्य-
मरः । २ । ७ । १८ ॥
यज्ञसमाप्तिसूचकं पशु-
बन्धनाद्यर्थं यज्ञभूमौ यत्
काष्ठमारोप्यते स यूपः
तस्य शिरसि
वलयाकृतिर्डमरुकाकृतिर्व्वा यः
काष्ठविकारः सः ।
यूपमूलेविहितलोहवलयश्च ।
इति केचित् । इति भरतः ॥
मधुस्थानम् । इति
संक्षिप्तसारे उणादिवृत्तिः ॥

**चह**, शाठ्ये । प्रतारण इति यावत् । इति कवि-
कल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।)
चहति ।
इति दुर्गादासः ॥

**चह**, त् क शाठ्ये । इति कविकल्पद्रुमः ॥
(अदन्त-
चुरां-परं-सकं-सेट् ।) चहयति खलः ।
इति

तत्रापि समवेतानां शब्दस्य समवायतः ।
तद्वृत्तीनां समवेतसमवायेन तु ग्रहः ॥"
इति भाषापरिच्छेदे ॥ ५९ -- ६० ॥
(चक्षुषा गृह्यते इति । चक्षुष + अण् । चक्षु-
र्ग्राह्यिरूपादि । चक्षुर्व्याप्ते, त्रि ॥)

**चाक्षुषः**, पुं, (चक्षुषः ब्रह्मणो लोचनात् जातः ।
चक्षुष् + अण् । एतन्निरुक्तिर्यथा, मार्कण्डेये ।
७६ । २ ।
"अन्यजन्मनि जातोऽसौ चक्षुषः परमेष्ठिनः ।
चाक्षुषत्वमतस्तस्य जन्मन्यस्मिन्नपि द्विज !
॥")
षष्ठमनुः । अस्मिन्मन्वन्तरे अजितनामको
विष्णो-
रवतारः । मन्त्रद्रुम इन्द्रः । आप्यादयो देवाः ।
हर्य्यश्मद्वीरकादयः सप्तर्षयः ।
पुरुपुरुषसुद्युम्ना-
दयो मनुपुत्राः । इति श्रीभागवतम् ॥ (अस्य
अन्यद्विवरणं मन्वन्तरशब्दे द्रष्टव्यम् ॥)

**चाङ्गः**, पुं, (चीयते इति । चि + डः । चमङ्गं
यस्य ।) चाङ्गेरी । इत्यमरटीकायां राय-
मुकुटः ॥

**चाङ्गेरी**, स्त्री, (चाङ्गं ईरयतीति । ईर + अण् ।
ततो ङीष् ।) अम्ललोणिका । इत्यमरः । २ ।
४ । १४० ॥
("ग्रहण्यर्शोविकारघ्नी साम्ला वातकफे हिता
।
उष्णा कषायमधुरा चाङ्गेरी चाग्निदीपबी ॥"
इति सुश्रुते सूत्रस्थाने ४६ अध्याये ॥)

**चाचपुटः**, पुं, तालभेदः । यथा, --
"गुरुर्लघुः प्लुतश्चैव भवेच्चाचपुटाभिधे ॥"
इति सङ्गीतदामोदरः ॥

**चाञ्चल्यं**, क्ली, (चञ्चलस्य भावः । चञ्चल + ष्यञ् ।)
चञ्चलता । चापल्यम् । यथा, --
"चाञ्चल्यरहिता लक्ष्मीः पुत्त्रपौत्त्रावधिस्थिरा
॥"
इति जगन्मङ्गलाख्यकवचम् ॥

**चाटः**, पुं, (चट्यते भिद्यते यस्मात् । चट + घञ् ।

टीकायां भरतः ॥ (यथा, सुश्रुते उत्तरतन्त्रे ४१ अध्याये ।
"सर्पिर्मधुभ्यां त्रिकटु प्रलिह्या-
च्चव्याविडङ्गोपहितं क्षयार्त्तः ॥")
वचा । इति मेदिनी ॥ कार्पासी । इति राज-
निर्घण्टः ॥

**चष**, वधे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-
सेट् ।) चषति । इति दुर्गादासः ॥

**चष**, ञ भक्षे । इति कविकल्पद्रुमः ॥ (भ्वां-उभं-
सकं-सेट् ।) ञ, चषति चषते । इति दुर्गा-
दासः ॥

**चषकः**, पुं, क्ली, (चषति भक्षयति पिबत्यनेनेत्यर्थः ।
चष + "क्वुन् शिल्पिसंज्ञयोरपूर्ब्बस्यापि ।" उणां ।
२ । ३२ । इति क्वुन् ।) मद्यपानपात्रम् । तत्-
पर्य्यायः । गल्वर्कः २ सरकः ३ अनुतर्षणम् ४ ।
इति हेमचन्द्रः । ४ । १०२४ ॥ * ॥
अथ चषकोद्देशः ।
"यत् पानपात्रं भूपानां तज्ज्ञेयं चषकं बुधैः ।
कानकं राजतञ्चैव स्फाटिकं काचमेव च ॥
वृत्तं स्वराष्टदिक्कोणं चतुर्णां पृथिवीभुजाम् ।
इत्यन्यसम्मतं तेषां निर्णयः पाठसम्मतः ॥
स्वमुष्टिसम्मितं रत्नैश्चतुर्व्वर्णैः समन्वितम् ।
मार्त्तिकं वाथ फालं वा सर्व्वेषामुपयुज्यते ॥
दुर्गादासः ॥

**चह**, क म शाठ्ये । इति कविकल्पद्रुमः ॥ (चुरां-
परं-सकं-सेट् ।) क म, चहयति खलः साधुं
प्रतारयतीत्यर्थः । इति दुर्गादासः ॥

**चाकचक्यं**, क्ली, उज्ज्वलता । चक्चक् इति भाषा ।
यथा, न हि लोकसिद्धसामग्री प्रातिभासिक-
रजतोत्पादिका किन्तु विलक्षणैव तथा हि ।
काचादिदोषदूषितलोचनस्य पुरोवर्त्तिद्रव्यसंयो-
गादिदमाकारा चाकचक्याकारा च काचि-
दन्तःकरणवृत्तिरुदेति । इति वेदान्तपरिभाषा ॥

**चाकचिच्चा**, स्त्री, श्वेतवुह्ना । इति रत्नमाला ॥

**चाक्रिकः**, पुं, (चक्रेण समूहेन यन्त्रविशेषेण वा
चरतीति । चक्र + "चरति ।" ४ । ४ । ८ ।
इति ठक् ।) बहुभिर्मिलित्वा यः स्तौति सः ।
तत्पर्य्यायः । घाण्टिकार्थकः २ । इत्यमरः ।
२ । ८ । १७ ॥ (यथा, याज्ञवल्क्ये । १ । १६५ ।
"पिशुनानृतिनोश्चैव तथा चाक्रिकवन्दिनाम् ।
एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा ॥")
तैलकारः । इति हेमचन्द्रः ॥ शाकटिकः ।
इति महाभारते राजधर्म्मः ॥ गाडओयान्
इति भाषा ॥

**चाक्षुषं**, क्ली, (चक्षुषा निर्वृत्तम् । चक्षुष् + "तेन
निर्वृत्तम् ।" ५ । १ । ७९ । इत्यण् ।) प्रत्यक्ष-
यद्वा चटतिभिनत्तिभित्त्यादिकम् । चट + णः ।)
चौरः । इति मिताक्षरा ॥ प्रतारकः । यथा, --
"चाटतस्करदुर्व्वृत्तमहासाहसिकादिभिः ।
पीड्यमानाः प्रजा रक्षेत् कायस्थैश्च विशेषतः ॥
चाटाःप्रतारकाः विश्वास्य ये परधनमपहरन्ति ।
प्रच्छन्नापहारिणस्तस्कराः । दुर्व्वृत्ता इन्द्रजालिक-
कितवादयः । सहो बलं सहसा बलेन कृतं
साहसं महच्च तत् साहसञ्च महासाहसं तेन
वर्त्तन्त इति महासाहसिकाः प्रसह्यापहारिणः ।
आदिशब्दान्मौलिककुहकवृत्तयः । एतैः पीड्य-
माना बाध्यमानाः प्रजा रक्षेत् । कायस्था
गणका लेखकाश्च तैः पीड्यमाना विशेषतो
रक्षेत् । तेषां राजवल्लभतया अतिमायावितया
च दुर्निवारत्वात् ।" इति मिताक्षरायां आचारा-
ध्यायः ॥

**चाटकैरः**, पुं, (चटकस्य चटकाया वा पुमपत्य-
मिति । "चटकाया ऐरक् ।" ४ । १ । १२८ ।
इत्यैरक्प्रत्ययः । "चटकस्येति वाच्यम् । लिङ्ग-
विशिष्टपरिभाषया स्त्रिया अपि" । इति वार्त्ति-
कम् ।) चटकस्य पुमपत्यम् । इत्यमरः ॥ चटार
छा इति भाषा ॥

| | | |
|---|---|---|
| | विशेषः। तत्तु चक्षुरिन्द्रियजन्यज्ञानम्। द्रव्य-चाक्षुषं प्रति चक्षुःसंयोगः कारणम्। द्रव्य-समवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवायः। द्रव्य-समवेतसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवेत-समवायः। इति सिद्धान्तमुक्तावली॥ तथा च। "द्रव्यग्रहस्तु संयोगात् संयुक्तसमवायतः। द्रव्येषु समवेतानां तथा तत्समवायतः॥ | |

**चाटुः**, पुं, क्ली, (चटति भिनत्ति मनस्तोषामोद-
वाक्येनेति । चट + “दृसनीति ।” उणां १ । ३ ।
इति ञुण् ।) प्रियवाक्यम् । तत्पर्य्यायः । चटुः २
प्रियप्रायम् ३ । इति हेमचन्द्रः ॥ स्फुटवादी ।
इति संक्षिप्तसारे उणादिवृत्तिः ॥ मिथ्याप्रिय-
वाक्यम् । इति महाभारतम् ॥ खोशामदिया
कथा इति भाषा ॥ (यथा, गीतगोविन्दे ।
२ । १२ ।
“प्रथमसमागमलज्जितया
पटुचाटुशतैरनुकूलम् ॥”
चाटूक्त्यादौ त्रि । यथा, राजतरङ्गिण्याम् ।
१ । २१३ ।
“उपनिन्ये च संगृह्य पुटकैश्चाटुसीत्कृतैः ॥”)

**चाटुपटुः**, पुं, (चाटुषु पटुः निपुणः ।) भण्डः ।
इति हारावली ॥ भाँड इति भाषा ॥
(“पाण्डवानां पण्डितोऽसौ व्यासश्चाटुपटुः कविः
॥
इति नैषधम् ॥”)

**चाटुलोलः**, त्रि, (चाटुरेव लोल इति कर्म्मधारयः ।
चाटुषु लोल इत्येके ।) चटुल्लोलः । इति हारा-
वली ॥

**चाटुवटुः**, पुं, (चाटुपटु + पृषोदरात् साधुः ।)
चाटुपटुः । इति भूरिप्रयोगः ॥

**चाटूक्तिः**, स्त्री, (चाटुरूपा उक्तिः । चाटूना-
मुक्तिर्वा ।) सेवा । इति हारावली ॥ प्रियकथाच ॥

**चाणकीनं**, त्रि, (चणकानां भवनं क्षेत्रंवा ।
“धान्यानां भवने क्षेत्रे खञ् ।” ५ । २ । १ ।
इति खञ् ।) चणकोत्पत्तियोग्यक्षेत्रम् । इत्य-
मरटीकायां रायमुकुटः ॥

**चाणक्यः**, पुं, (चणकस्य गोत्रापत्यम् । “गर्गा-
दिभ्यो यञ् ।” ४ । १ । १०५ । इति यञ् ।)
मुनिविशेषः । तत्पर्य्यायः । द्रोमिणः २ अंशुलः
३ । इति त्रिकाण्डशेषः ॥ (अयमेव द्बिजस्त्वभि-
चारक्रियायोगेन योगनन्दराजं मारयन् नन्दौ-
रसात् क्षौरकारपत्नीगर्भे जातं स्वशिष्यं चन्द्रगुप्तं
राज्येऽभिषेचयंश्चतस्यामात्यपदवीमप्यङ्गीचकार।
कन्दम् ५ कौटिल्यम् ६ मरुसम्भवम् ७
शालाक-
कटुकम् ८ मिश्रम् ९ । अस्य गुणाः ।
उष्णत्वम् ।
कटुत्वम् । रुचिकारित्वम् । दीपनत्वम् ।
कफ-
वातकृमिगुल्मनाशकत्वम् । ग्राहकत्वम् ।
गुरु-
त्वञ्च । इति राजनिर्घण्टः ॥

**चाणूरः**, पुं, कंसराजस्य मल्लविशेषः । यथा, --
“ततः क्रोधातिताम्राक्षः कंसः
परमकोपनः ।
चाणूरमादिशद्युद्धे कृष्णस्य सुमहाबलम्
॥”
इति महाभारते हरिवंशम् ॥
(तथाच, भागवते । १० । ४४ ।
“भगवद्गात्रनिष्पातैर्वज्रनिष्पेषनिष्ठुरैः ।
चाणूरो भज्यमानाङ्गो मुहुर्ग्लानिमवाप ह
॥”)

**चाणूरसूदनः**, पुं, (चाणूरं सूदयतीति । सूदि +
ल्युः ।) श्रीकृष्णः । इति त्रिकाण्डशेषः ॥
(एतस्या-
सुरस्य नाशवृत्तान्तं हरिवंशे ८६
अध्याये
द्रष्टव्यम् ॥)

**चाण्डालः**, पुं, (चण्डति कुप्यति सततमिति । “पति-
चण्डिभ्यामालञ् ।” उणां १ । ११७ ।
इति
आलञ् । यद्वा, चण्डाल +
“कुलादिभ्योऽण्”
यद्वा चण्डाल एवेति प्रज्ञादिभ्योऽण् ।)
चण्डालः ।
इत्यमरः । २ । १० । १९ ॥ (यथा,
मनुः । ४ । ७९ ।
“न संवसेच्च पतितैर्न चाण्डालैर्न
पुक्वशैः ॥”

**चातुरकः**, त्रि, (चातुर + स्वार्थे कन् ।) चातुरः ।
इति हेमचन्द्रः ॥

**चातुराश्रम्यं**, क्ली, (चतुर्णां आश्रमाणां कर्म्म
इति । “गुणवचनब्राह्मणादिभ्यः कर्म्मणि
च ।”
५ । १ । १२४ । इति ष्यञ् ।)
ब्रह्मचर्य्यगार्हस्थ्य-
वानप्रस्थभिक्षुरूपाश्रमचतुष्टयानांधर्म्मः
। इति
पुराणम् ॥ (यथा, महाभारते । १२ ।
४६ । २२ ।
“चातुर्विद्यं चातुर्होत्रं चातुराश्रम्यमेव च ।
राजधर्म्मांश्च निखिलान् पृच्छैनं
पृथिवीपते ! ॥”
चत्वार आश्रमा एवेति स्वार्थे ष्यञ् ।
चतुरा-
श्रममात्रम् ॥)

**चातुरिकः**, पुं, (चातुरीं रथपरिचालनकौशलं
वेत्तीति ठक् ।) सारथिः । इति जटाधरः
॥

**चातुरी**, स्त्री, (चतुरस्येयं “तस्येदम् ।” ४ । ३ ।
१२० ।
इत्यण् । ततो ङीप् । यद्वा चतुरस्य
भावः इति
ष्यञ् षित्वात् ङीष् ततो यलोपः ।)
दाक्ष्यम् ।
चतुरता । इति मेदिनी ॥
“या लोकद्वयसाधनी तनुभृतां सा
चातुरी चातुरी ॥”
इत्युद्भटः ॥)
(गायत्त्रीरूपा महाशक्तिः । यथा,
देवीभाग-
वते । १२ । ६ । ४७ ।
“चतुर्भुजा चारुदन्ता चातुरी च ऋतप्रदा
॥”)

**चातुर्जातकं**, क्ली, (चतुर्जातक एव इति स्वार्थे
अण् ।)
गुडत्वगेलापत्रनागकेशररूपचतुष्टयम् ।

एतद्विवरणं मुद्राराक्षसविष्णुपुराणभागवता-
दिषु विशेषतो दर्शनीयम् । इत्यत्र क्वचिन्मत-
भेदोऽपि दृश्यते यथाच, कथासरित्सागरे ।
५ । १२१ -- २३ ।
"स चाणक्यो द्विजः क्वापि गत्वा कृत्यामसाधयत्
।
तद्वशाद्योगनन्दोऽथ दाहज्वरमवाप्य सः ॥
सप्तमे दिवसे प्राप्ते पञ्चत्वं समुपागमत् ।
हत्वा हिरण्यगुप्तञ्च शकटालेन तत्सुतम् ।
पूर्ब्बनन्दसुते लक्ष्मीश्चन्द्रगुप्ते निवेशिता ॥"
चाणक्येन प्रोक्तमित्यण् ।) ग्रन्थविशेषे, क्ली ।
यथा, तत्रैव ।
"नानाशास्त्रोद्धृतं वक्ष्ये राजनीतिसमुच्चयम् ।
सर्व्वबीजमिदं शास्त्रं चाणक्यं सारसंग्रहम् ॥"

**चाणक्यमूलकं**, क्ली, (चणकमेव चाणक्यं तद्व-
न्मूलमस्य । इति कप् स्वार्थे कन् वा ।) मूलक-
प्रभेदः । चणकमूलीति ख्यातम् । तत्पर्य्यायः ।
वालेयम् २ विष्णुगुप्तकम् ३ स्थूलमूलम् ४ महा-
कर्म्मदोषतो ब्राह्मणानामपि
पारिभाषिकचाण्डा-
लत्वम् । यथा, महाभारते । १२ । ७५ ।
"आह्वायका देवलका नक्षत्रग्रामयाजकाः
।
एते ब्राह्मणचाण्डाला महापथिकपञ्चमाः
॥")

**चाण्डालिका**, स्त्री, (चाण्डालो
वादकत्वेनास्त्यस्याः ।
इति ठन् । चण्डालेन निर्वृत्ता इति ठक्
वा ।)
चण्डालवीणा । इत्यमरः । २ । १० ।
३२ ।
चण्डालिकाशब्दार्थोऽप्यत्र ॥ (चण्डालेन
कृतेति
कुलालादिभ्योऽण् ।
चण्डलाकृतवस्तुमात्रे, त्रि ॥)

**चाण्डाली**, स्त्री, (चाण्डाल + जातित्वात् ङीष् ।)
लिङ्गिनी । इति राजनिर्घण्टः ॥
चाण्डालपत्नीच ॥

**चातकः**, पुं, (चतते याचते जलमम्बुदमिति । चत
याचने + ण्वुल् ।) स्वनामख्यातपक्षी ।
तत्-
पर्य्यायः । स्तोककः २ सारङ्गः ३
मेघजीवनः ४ ।
इति राजनिर्घण्टः ॥ तोककः ५ ।
इत्यमरः ।
२ । ५ । १७ ॥ शारङ्गः ६ । इति भरतः
॥ (यथा,
मेघदूते । ९ ।
"वामश्चायं नुदति मधुरं चातकस्ते
सगर्व्वः ॥")
तन्मांसगुणाः । लघुत्वम् । शीतत्वम् ।
कफरक्त-
पित्तनाशित्वम् । अग्निकारित्वञ्च । इति
राज-
वल्लभः ॥

**चातकानन्दनः**, पुं, (चातकं आनन्दयतीति ।
आ + नन्द + णिच् + ल्युः ।) वर्षाकालः
। इति
राजनिर्घण्टः ॥ (अस्य लक्षणं
गुणाश्च ।
"त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि
त्रिजातकम् ।
नागकेशरसंयुक्तं चातुर्जातकमुच्यते ॥
तद्द्वयं रेचनं रूक्षं
तीक्ष्णोष्णमुखगन्धहृत् ।
लघुपित्ताग्निकृद्वर्ण्यं कफवातविषापहम्
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**चातुर्थकः**, पुं, (चतुर्थे चतुर्थेऽह्नि भव इति । चतुर्थ
+ वुञ् ।) प्रतिचतुर्थदिनभवज्वरः ।
तस्य
मन्त्रौषधं यथा, ॐ जम्भनि स्तम्भनि
विमो-
हय सर्व्वव्याधीन्मे वज्रेण फट् । इति ।
पुष्पमष्टशतं जप्त्वा हस्ते दत्त्वाथ न
स्पृशेत् ।
चातुर्थको ज्वरो रुद्र ! अन्ये चैव
ज्वरास्तथा ॥
जम्बुफलं हरिद्रा च सर्पस्यैव च कञ्चुकम्
।
सर्व्वज्वराणां धूपोऽयं हर ! चातुर्थकस्य
च ॥"
इति गारुडे १८७ अध्यायः ॥
(अस्य सलक्षणचिकित्सादीनियथा, --
"चातुर्थो द्विविधो ज्ञेयो
वातश्लेष्मात्मको ज्वरः ।
चातुर्थको नाम गदो दारुणो विषमज्वरः
॥
शोषणः सर्व्वधातूनां बलवर्णाग्निनाशनः
।
त्रिदोषजो विकारः
स्यादस्थिमज्जगतोऽनिलः ॥
कुपितं पित्तमेवन्तु कफश्चैवं स्वकालतः
।
शीतदाहकरस्तीव्रस्त्रिकालञ्चानुवर्त्तते ॥
स सन्निपातसम्भूतो विषमो विषमज्वरः
।
ऊर्द्ध्वं कायस्य गृह्णाति यः पूर्ब्बं
सोऽनिलात्मकः ।

| | | |
|---|---|---|
| | राजनिर्घण्टः ॥<br>**चातुरः**, पुं, (चतुर्भिरङ्गैः हस्तपदपृष्ठशिरोभि-<br>रित्यर्थः गृह्यते इति । चतुर + अण् । यद्वा चतुर<br>एव । स्वार्थे अण् ।) चक्रगण्डुः । इति मेदिनी ॥<br>गोलवालिश इति भाषा ॥<br>**चातुरः**, त्रि, (चतुर + स्वार्थे अण् ।) नेत्रगोचरः ।<br>चाटुकारः । नियन्ता । इति मेदिनी । रे, १५३ ॥ | पूर्ब्बं गृह्णात्यधः कायं श्लेष्मपूर्ब्बज्वरश्च सः ।<br>जङ्घाभ्यां श्लैस्मिको ज्ञेयः शिरसोऽनिलसम्भवः ।<br>एवं विज्ञाय सद्वैद्यः कुर्य्यात्तत्र प्रतिक्रियाम् ।<br>वेलाज्वरो रसगतो रक्तश्चैकाहिकस्तथा ॥ |

मांसगोऽपि तृतीयः
स्याच्चतुर्थोऽस्थिसमाश्रितः।
सर्व्वधातुगतो ज्ञेयो जीर्णो धातुक्षयङ्करः ॥
भूतजे भूतविद्या स्याद्दधाति समताडनम् ।
वासाधात्रीदारुपथ्या नागरत्रिफला भवः ॥
मधुना संयुतः क्वाथश्चातुर्थकनिवारणः ॥
अगस्तिपत्रस्वरसो निहन्ति
नस्ये च चातुर्थकरोगमुग्रम् ।
कासं भ्रमञ्चापि शिरोरुजाञ्च
विनाशयत्याशु हि तन्नराणाम् ॥”
इति हारीते चिकित्सास्थाने द्वितीयेऽध्याये
॥)

**चातुर्भद्रं**, क्ली, (चतुर्भद्रमेवेति अण् ।) नागराति-
विषामुस्ता गुडूचीति चतुष्टयम् । इति राज-
निर्घण्टः ॥

**चातुर्म्मास्यं**, क्ली, (चतुर्षुमासेषु क्रियते इति ।
“चतुर्म्मासाण्ण्यो यज्ञे ।” ५ । १ । ९४ ।
इत्यस्य
सूत्रस्य वार्त्तिकोक्तेः ण्यः । यागविशेषः ।
चातु-
र्म्मास्ययागस्य चत्वारि पर्व्वाणि । वैश्वदेवो
वरुण-
प्रधासः शाकमेधः शुनासीरीयश्चेति
शब्दार्थ-
चिन्तामणिः ॥)
आषाढशुक्लद्वादश्यादिचतुर्म्मास-
कर्त्तव्यनियमविशेषः । “व्यक्तं वाराहे ।
‘आषाढशुक्लद्वादश्यां पौर्णमास्यामथापि
वा ।
चातुर्म्मास्यव्रतारम्भं कुर्य्यात् कर्कटसंक्रमे
॥
अभावे तु तुलार्केऽपि मन्त्रेण नियमं व्रती ।
कार्त्तिके शुक्लद्वादश्यां विधिवत्तत्
समापयेत् ॥
चतुर्धापि हि तच्चीर्णं चातुर्म्मास्यं व्रतं नरः
।
कार्त्तिक्यां शुक्लपक्षे तु द्वादश्यां तत्
समापयेत् ॥’
मात्स्ये ।
षर्षाभ्योऽन्यत्र वर्षासु मासांश्च चतुरो
वसेत् ॥’
एतदशक्तविषयम् । ‘ऊर्द्ध्वं वार्षिकाभ्यां
मासाभ्यां
नैकस्थानवासी’ इति शङ्खोक्तेः ।” इति
तिथ्यादि-
तत्त्वम् ॥ * ॥ अन्यच्च ।
तत्रोपक्रमकालः सनत्-
कुमारेणोक्तः ।
“एकादश्यान्तु गृह्णीयात् संक्रान्तौ
कर्क्कटस्य तु ।
आषाढ्यां वा नरो भक्त्या
चातुर्म्मास्योदितं
व्रतम् ॥”
तत्र मन्त्रः ।
“चतुरोवार्षिकान् मासान्
देवस्योत्थापनावधि ।
इमं करिष्ये नियमं निर्व्विघ्नं कुरु
मेऽच्युत ! ॥”
अथ चातुर्म्मास्यनियमावश्यकताभविष्ये
।
“यो विना नियमं मर्त्यो व्रतं वा जप्यमेव
वा ।
चातुर्म्मास्यं नयेम्मूर्खो जीवन्नपि मृतो हि
सः ॥”
अथ चातुर्म्मास्यनियमाः । स्कान्दे
नागरखण्डे ।
“श्रावणे वर्ज्जयेच्छाकं दधि भाद्रपदे
तथा ।
दुग्धमाश्वयुजे मासि कार्त्तिके चामिषं
त्यजेत् ॥”
तत्रैव श्रीब्रह्मनारदसंवादे ।
“निष्पावान् राजमाषांश्च सुप्ते देवे
जनार्द्दने ।
यो भक्षयति विप्रेन्द्र ! श्वपचादधिको हि
सः ॥
कार्त्तिके तु विशेषेण राजमाषांश्च भक्षयन्
।
निष्पावान् मुनिशार्द्दूल !
यावदाहूतनारकी ॥
लभते सन्ततिं दीर्घां तैलस्य परिवर्ज्जनात् ॥
अभ्यङ्गवर्ज्जनात् पार्थ ! सुन्दराङ्गः प्रजायते ।
पक्वतैलपरित्यागाच्छत्रुनाशमवाप्नुयात्॥
मधूकतैलत्यागेन सौभाग्यमतुलं भवेत् ।
पुष्पोपभोगत्यागेन स्वर्गे विद्याधरो भवेत् ॥
योगाभ्यासी भवेद्यस्तु स ब्रह्मपदमाप्नुयात् ।
कट्वम्लतिक्तमधुरक्षारकाषायजान्रसान् ॥
यो वर्ज्जयेत् स वैरूप्यं वैगन्ध्यं नाप्नुयात्
क्वचित् ।
ताम्बूलवर्ज्जनाद्भोगी अपक्वादोऽमलो भवेत् ॥
पादाभ्यङ्गशिरोऽभ्यङ्गपरित्यागाच्चपार्थिव ! ।
दीप्तिमान् दीप्तचरणो यक्षो द्रव्यपतिर्भवेत् ॥
दधिदुग्धतक्रनियमात् गोलोकं लभते नरः ।
इन्द्रातिथित्वमायाति स्थालीपाकविवर्ज्जनात्
॥
लभेच्च सन्ततिं दीर्घां तापपक्वस्य वर्ज्जनात्
।
भूमौ प्रस्तरशायी च विष्णोरनुचरो भवेत् ॥
सदा मुनिः सदा योगी मधुमांसस्य वर्ज्जनात् ।
निर्व्याधिर्नीरुगोजस्वी सुरामद्यविवर्ज्जनात् ॥
एकान्तरोपवासेन ब्रह्मलोके महीयते ।
धारणान्नखलोमानां गङ्गास्नानं दिने दिने ॥
मौनव्रती भवेद्यस्तु तस्याज्ञाऽस्खलिता भवेत् ।
भूमौ भुङ्क्ते सदा यस्तु स पृथिव्याः पतिर्भवेत्
॥
नमो नारायणायेति जप्त्वा दानशतं फलम् ।
पादाभिवन्दनाद्विष्णोर्भवेद्गोदानजं फलम् ॥
विष्णुपादाम्बुजस्पर्शात् कृतकृत्यो भवेन्नरः ।
विष्णोर्द्देवकुले कुर्य्यादुपलेपनभार्ज्जने ॥
कल्पस्थायी भवेद्राजा स नरो नात्र संशयः ।
प्रदक्षिणत्रयं यस्तु करोति स्तुतिपाठकः ॥
हंसयुक्तविमानेन स च विष्णुपदं व्रजेत् ।
गीतवाद्यकरो विष्णोर्गान्धर्व्वं लोकमाप्नुयात् ॥
नित्यं शास्त्रविनोदेन लोकान् यस्तु प्रबोधयेत् ।
स व्यासरूपी भगवानन्ते विष्णुपुरं व्रजेत् ॥
पुष्पमालाकुलां पूजां कृत्वा विष्णोः पुरं व्रजेत् ।
कृत्वा प्रेक्षणिकं दिव्यं स्थानमप्सरसां लभेत् ॥
तीर्थाम्भसि कृतस्नानो निर्म्मलं देहमाप्नुयात् ।
पञ्चगव्याशनात् पार्थ ! चान्द्रायणफलं लभेत् ॥
एकभक्ताशनान्नित्यमग्निहोत्रफलंलभेत् ।

‘चतुरो वार्षिकान् मासान्
देवस्योत्थापनावधि।
मधुस्वरो भवेन्नित्यं नरो गुडविवर्ज्जनात् ॥
तैलस्य वर्ज्जनादेव सुन्दराङ्गः प्रजायते ।
कटुतैलपरित्यागात् शत्रुनाशः प्रजायते ॥
लभते सन्ततिं दीर्घां स्थालीपाकमभक्षयन्
।
सदा मुनिः सदा योगी मधुमांसस्य
वर्ज्जनात् ॥
निराधिर्णीरुगोजस्वी विष्णुभक्तश्च जायते
।
एकान्तरोपवासेन विष्णुलोकमवाप्नुयात् ॥
धारणान्नखलोम्नाञ्च गङ्गास्नानं दिने दिने ।
ताम्बूलवर्ज्जनाद्भोगी रक्तकण्ठश्च जायते ।
घृतत्यागात् सुलावण्यं सर्व्वं स्निग्धं
वपुर्भवेत् ॥
फलत्यागात्तु मतिमान् बहुपुत्त्रश्च जायते ।
नमो नारायणायेति जप्त्वानशनजं फलम् ॥
पादाभिवन्दनाद्विष्णोर्लभेद्गोदानजं फलम्
।
एवमादिव्रतैः पार्थ ! तुष्टिमायाति केशवः ॥’
सनत्कुमारः ।
‘इदं व्रतं मया देव ! गृहीतं पुरतस्तव ।
निर्व्विघ्नां सिद्धिमाप्नोतु प्रसन्ने त्वयि
केशव ! ॥
गृहीतेऽस्मिन् व्रते देव ! यद्यपूर्णे त्वहं म्रिये ।
तन्मे भवतु सम्पूर्णं त्वत्प्रसादाज्जनार्द्दन!
॥’
समाप्तौ च ।
‘इदं व्रतं मया देव ! कृतं प्रीत्यै तव प्रभो ! ।
न्यूनं संपूर्णतां यातु त्वत्प्रसादाज्जनार्द्दन!
॥’
अत्रैव यतिमधिकृत्य काठकगृह्यम् ।
‘एकरात्रं वसेद्ग्रामे नगरे पञ्चरात्रकम् ।
कलिङ्गानि पटोलानि वृन्ताकसहितानि
च ।
एतानि भक्षयेद्यस्तु सुप्ते देवे जनार्द्दने ॥
सप्तजन्मार्ज्जितं पुण्यं हरते नात्र संशयः
॥”
किञ्च ।
“रुच्यं तत्तत्काललभ्यं फलमूलादि
वर्ज्जयेत् ।
जपहोमाद्यनुष्ठानं नामसङ्कीर्त्तनन्तथा ।
स्वीकृत्य प्रार्थयेदेवं गृहीतनियमो बुधः ॥
इदं व्रतं मया देव ! गृहीतं पुरतस्तव ।
निर्व्विघ्नं सिद्धिमायातु प्रसादात्तव
केशव ! ॥
गृहीतेऽस्मिन् व्रते देव ! पञ्चत्वं यदि मे
भवेत् ।
तदा भवतु सम्पूर्णं प्रसादात्ते जनार्द्दन !
॥” * ॥
अथ चातुर्म्मास्यव्रतनियममाहात्म्यम्।
विष्णु-
रहस्ये ब्रह्मनारदसंवादे ।
“शृणु नारद ! कार्त् स्न्येन
चातुर्म्मास्यव्रतक्रियाः।
या निर्व्वर्त्त्य नरो भक्त्या प्रयाति परमां
गतिम् ॥
व्रतानि वैष्णवानीह मनस्यपि चिकीर्षतः
।
नरस्य क्षयमाप्नोति पापं जन्मशतोद्भवम्
॥
एकभक्तो नरः शान्तो नित्यस्नायी
दृढव्रतः ।
योऽर्च्चयेच्चतुरो मासान् हरिं स्यात्तस्य
लोक-
भाक् ॥
यस्तु सुप्ते हृषीकेशे क्षितिशायी भवेन्नरः ।
वार्षिकान् चतुरो मासान् लभते वैष्णवीं
गतिम् ॥
यस्तु केशवमुद्दिश्य चान्द्रायणपरायणः ।
चातुर्म्मास्यं नयेद्भक्त्या स
विष्णुतनुमाविशेत् ॥”
भविष्योत्तरे भगवद्युधिष्ठिरसंवादे ।
“चतुरो वार्षिकान् मासान्
देवस्योत्थापनावधि।
नक्तभोजी समग्रन्तु तीर्थयात्राफलं लभेत् ॥
अयाचितेन चाप्नोति वापीकूपप्रपाफलम् ।
षष्ठकालेऽन्नभोजी यः स्थायी स्वर्गे नरो भवेत्
॥
नित्यस्नायी नरो यस्तु नरकं स न पश्यति ।
भाजनं वर्ज्जयेद्यस्तु स स्नानं पौष्करं लभेत् ॥
पत्रेषु यो नरो भुङ्क्ते कुरुक्षेत्रफलं लभेत् ।
शिलायां भोजनं नित्यं भवेत् स्नानं प्रयागजम्
॥
यामद्वयजलत्यागान्न रोगैः परिभूयते ।
एवमादिव्रतैः पार्थ ! तुष्टिमायाति तोषितः ॥”
किञ्च ।
“योगनिद्रां समालम्ब्य शेषाहिशयने स्वपन् ।
क्षीरोदतोयवीच्यग्रैर्धौतपादःसमाहितः ॥
लक्ष्मीकराम्बुजैः श्लक्ष्णैर्म्मृज्यमानपदद्वयः ।
तस्मिन् काले च मद्भक्तोयो मासांश्चतुरः क्षिपेत्
॥
व्रतैरनेकैर्नियमैः पाण्डवश्रेष्ठ ! मानवः ।
कल्पस्थायी विष्णुलोके भवेन्नास्त्यत्र संशयः
॥

| | | |
|---|---|---|
| | स्त्री वा नरो वा मद्भक्तो धर्म्मार्थं सुदृढव्रतः ॥<br>गृह्णीयान्नियमान्नेतान् दन्तधावनपूर्ब्बकम् ।<br>तेषां फलानि वक्ष्यामि तत्कर्त्तॄणां पृथक् पृथक् ॥<br>मधुरस्वरसम्पन्नो भवेल्लवणवर्ज्जनात् । | |

सत्यां व्रतसमाप्तौ च श्रीकृष्णस्य प्रसादतः ।
यद्यद्दानादिकृत्यञ्च लेख्यं तत्तच्च कार्त्तिके ॥
स्तुत्वाथ कृष्णमभ्यर्च्च्य प्रसाद्य च पुनः पुनः ।
शेषं शङ्खोदतीर्थे च स्वीकुर्य्याद्वैष्णवैः सह ॥
गीतनृत्यादिना देवं परितोष्याथ वैष्णवान् ।
संपूज्य नरयानेन देवं स्वालयमानयेत् ॥
प्रभोर्नीराजनं कृत्वा विसर्ज्य वत वैष्णवान् ।
निवेश्य स्वासने देवं शयीत भुवि तं स्मरन् ॥
एवञ्च कुर्व्वतो मासाश्चत्वारो यान्ति ते सुखम् ।
अन्यथा प्रभवेद्दुःखमनावृष्टिश्च जायते ॥
तथा च भविष्ये ।
मिथुनस्थे सहस्रांशौ न स्वापयति यो हरिम् ।
वैष्णवैः सह सम्भूय ह्यनावृष्टिस्तदा भवेत् ॥
किञ्च । भविष्योत्तरे ।
यो देवशयनं पार्थ ! अनुमोद्य समाचरेत् ।
उत्थानं वापि कृष्णस्य स हरेर्लोकमाप्नुयात् ॥”
इति श्रीहरिभक्तिविलासे १५ विलासः ॥

**चातुर्व्वर्ण्यं**, क्ली, (चत्वारो वर्णाः । “चतुर्वर्णादीनां स्वार्थे उपसंख्यानम् ।” इति ष्यञ् ।) ब्राह्मण-क्षत्रियवैश्यशूद्राः । इति हेमचन्द्रः । ३ । ४७२ ॥
(यथा, मनुः । १२ । १ ।

**चान्द्रमसायनः**, पुं, (चन्द्रमसोऽपत्यं पुमान् । चन्द्र-मस् + फक् ।) बुधग्रहः । इति हलायुधः ॥ (“तिकादिभ्यः फिञ् ।” ४ । १ । १५५ । इति फिञ् ।) चान्द्रमसायनिश्च ॥

**चान्द्रमासः**, पुं, (चान्द्रश्चन्द्रसम्बन्धीमासः ।) चन्द्र-सम्बन्धिमासः । स तु गौणमुख्यभेदेन द्विविधः । तत्राद्यः कृष्णप्रतिपदादिपौर्णमास्यन्तः । द्वितीयः शुक्लप्रतिपदादिदर्शान्तः । सामान्यत्रिंशत्तिथ्या-त्मकमासश्च ॥ तत्र मुख्यचान्द्रे कर्म्माणि । आब्दिकश्राद्धाद्यश्राद्धादिसपिण्डीकरणान्तश्रा-द्धानि चान्द्रायणप्राजापत्यादिव्रतानिदानकर्म्म-नित्यस्नानं गृहपुष्करिण्यादिप्रतिष्ठासाधारण-तिथिविहितकर्म्म । गौणचान्द्रे अष्टकादिपार्व्वण-श्राद्धं वारुणीस्नानं जन्मतिथिकृत्यं जन्मा-ष्टम्याद्युपवासः दुर्गोत्सवादितिथिनियतपूजा। सामान्यत्रिंशत्तिथ्यात्मकमासेन मासिकादिमास-गणना । इति स्मृतिः ॥

**चान्द्रायणं**, क्ली, (चान्द्रस्य चन्द्रलोकस्य अयनं प्राप्तिर्यस्मात् । “धर्म्मार्थं यश्चरेदेतच्चन्द्रस्यैति सलोकताम् ।” इति याज्ञवल्क्यवचनाच्च तथात्वम् । यद्वा चन्द्रः अमृतानन्दमयपुरुषः अयनं आश्रयोऽधिष्ठातृत्वेनो यस्य व्रतस्य यत्र व्रते वा ।) व्रतविशेषः । तत्पर्य्यायः । इन्दु-व्रतम् २ । इति त्रिकाण्डशेषः ॥ तत्तु चतुर्व्विधं पिपीलिकामध्याख्यम् १ यवमध्याख्यम् २ यति-चान्द्रायणम् ३ शिशुचान्द्रायणम् ४ । यथा, --
“एकैकं ह्रासयेत् पिण्डं कृष्णे शुक्ले च वर्द्धयेत् ।
उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणं स्मृतम् ॥”
“एतदेव पिपीलिकामध्याख्यम् ।” इति कुल्लूक-भट्टः ॥
“एवमेव विधिं कृत्स्नमाचरेद्यवमध्यमे ।
शुक्लपक्षादिनियतश्चरंश्चान्द्रायणं व्रतम् ॥
अष्टावष्टौ समश्नीयात् पिण्डान् मध्यन्दिने स्थिते ।
नियतात्मा हविष्याशी यतिचान्द्रायणं चरन् ॥
चतुरः प्रातरश्नीयात् पिण्डान् विप्रः समाहितः ।
चतुरोऽस्तमिते सूर्य्ये शिशुचान्द्रायणं स्मृतम् ॥”

**चान्द्री**, स्त्री, श्वेतकण्टकारी । (चन्द्रस्य इयम् । चन्द्र + “तस्येदम् ।” ४ । ३ । १२० । इत्यण् स्त्रियां ङीप् ।) ज्योत्स्ना । इति राजनिर्घण्टः ॥
(चन्द्रसम्बन्धिनि त्रि । यथा, माघे । २ । २ ।
“गुरुकाव्यानुगां बिभ्रच्चान्द्रीमभिनभः श्रियम् ॥”)

**चापं**, क्ली पुं, (चपस्य वंशविशेषस्य विकारः । “अवयवे च प्राण्यौषधिवृक्षेभ्यः ।” ४ । ३ । १३५ । इत्यण् ।) धनुः । इत्यमरः । २ । ८ । ८३ ॥
(यथा, रघुः । १२ । ४७ ।
“क्रमशस्ते पुनस्तस्य चापात् सममिवोद्ययुः ॥”
वृत्तक्षेत्रार्द्धः । यथा, सिद्धान्तशिरोमणौ ।
“दलीकृतं चक्रमुशन्ति चापं
कोदण्डखण्डं खलु तूर्य्यगोलम् ॥”
नवमराशिः । यथा, बृहत्संहितायाम् । ४२ । १० ।
“चापगते गृह्णीयात् कुङ्कुमशङ्खप्रवालकाचानि ॥”)

**चापपटः**, पुं, (चापो धनुस्तद्वत् वक्रीभूताकृतिः पटः पत्रं यस्य ।) पियालवृक्षः । इति जटाधरः ॥

**चापलं**, क्ली, (चपलस्य भावः कर्म्म वा युवादित्वा-दण् ।) अनवस्थितिः । इति हेमचन्द्रः । २ । २२९ ॥ तस्य लक्षणं यथा, साहित्यदर्पणे ।
“मात्सर्य्यद्वेषरागादेश्चापलन्त्वनवस्थितिः ॥”
(यथा, रघुः । १ । ९ ।
“तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः ॥”)

**चापल्यं**, क्ली, (चपलस्य भावः कर्म्म वा । ब्राह्मणा-दित्वात् ष्यञ् ।) चपलता । चाञ्चल्यम् । यथा,
“परदारं परद्रव्यं परीवादं परस्य च ।

"चातुर्व्वर्ण्यस्व कृत्स्नोऽयमुक्तो
धर्म्मस्त्वयानघ ! ॥")
चतुर्वर्णधर्म्मश्च ॥

**चातुर्व्वैद्यः**, पुं, (चतुरो वेदानधीते इति चतुर्व्वेदः ।

स एव । "चतुर्वेदस्योभयपदवृद्धिश्च
।" इति
ष्यञ् ।) चातुर्विद्यः । चतुर्व्वेदवेत्ता ।
इति
व्याकरणम् ॥

**चात्वालं**, क्ली पुं, (चतते याचते इति । चत +

"स्थाचतिमृजेरालच्वालञालीयचः
।" उणां
१ । ११५ । इति वालञ् ।) गर्त्तः ।
अग्नि-
होत्रोपकरणम् । इति संक्षिप्तसारे
उणादिवृत्तिः ॥
(यथा, तैत्तिरीयसंहितायाम् । ६ । १
। ३ । ८ ।
"योनिर्वै यज्ञस्य चात्वालम् ॥")

**चान्द्रं**, क्ली, (चन्द्रस्य इदम् । चन्द्र + अण् ।

यद्वा, चन्द्राय चन्द्रलोकप्राप्तये इदम्
।) चान्द्रा-
यणम् । इति प्रायश्चित्ततत्त्वम् ॥

**चान्द्रः**, पुं, (चन्द्रस्यायम् । "तस्येदम् ।" ४ । ३ । १२० ।

इत्यण् ।) चन्द्रकान्तमणिः । इति
हेमचन्द्रः ।
४ । १३३ ॥ चान्द्रमासः । इति
शब्दरत्नावली ॥

**चान्द्रकं**, क्ली, (चान्द्रं आर्द्रकमिव कायतीति ।

कै + कः ।) शुण्ठी । इति
राजनिर्घण्टः ॥

**चान्द्राख्यं**, क्ली, (चान्द्रमित्याख्या संज्ञा यस्य ।)

आर्द्रकम् । इति राजनिर्घण्टः ॥

**चान्द्रभागा**, स्त्री, (चान्द्रश्चन्द्रसम्बन्धी भागो यस्याम् ।)

चन्द्रभागानदी । इति द्विरूपकोषः ॥

इति मनुः ॥
तद्विधानं यथा, गारुडे १०५ अध्याये ।
"तिथिपिण्डांश्चरेद्बुद्ध्वा शुक्ले
शिख्यण्डसंमितान् ।
एकैकं ह्रासयेत् कृष्णे पिण्डं चान्द्रायणं चरेत् ॥
यथाकथञ्चित् पिण्डानां चत्वारिंशच्छतद्वयम् ।
मासेनैवोपयुञ्जीत चान्द्रायणमथापरम् ॥
कुर्य्यात्त्रिषवणं स्नानं पिण्डं चान्द्रायणं चरेत् ।
पवित्राणि जपेत् पिण्डान् गायत्र्या चाभि-
मन्त्रयेत् ॥
अनादिष्टेषु सर्व्वेषु शुद्धिश्चान्द्रायणेन च ।
धर्म्मार्थी यश्चरेदेतत् चन्द्रस्यैति सलोकताम् ॥
कृच्छ्रकृद्धर्म्मकामस्तु महतीं श्रियमश्नुते ॥"
अपि च ।
"एकैकं वर्द्धयेत् पिण्डं शुक्ले कृष्णे च ह्रासयेत् ।
उपस्पृश्य त्रिषवणं विपरीताघमर्द्दनम् ॥"
इति तत्रैव २२६ अध्यायः ॥

परीहासं गुरोः स्थाने चापल्यञ्च विवर्ज्जयेत्
॥"
इति चाणक्ये । ३० ॥

**चामरं**, क्ली पुं, (चमरी मृगविशेषस्तस्या इदम् ।

चमरी + अण् ।) चमरीपुच्छलोमनिर्म्मित-
व्यजनम् । चौरी । इति भाषा ॥ तत्पर्य्यायः ।
प्रकीर्णकम् २ । इत्यमरः । २ । ८ । ३१ ॥
चमरम् ३ चामरा ४ चामरी ५ । इति भरतः
॥
वालव्यजनम् ६ रोमगुच्छकम् ७ । इति
रभसः ॥
(यथा, पञ्चतन्त्रे । ३ । २६६ ।
"गुणेषु रागो व्यसनेष्वनादरो
रतिः सुभृत्येषु च यस्य भूपतेः ।
चिरं स भुङ्क्ते चलचामरांशुकां
सितातपत्राभरणां नृपश्रियम् ॥")
अस्य वायुगुणः । ओजःकारित्वम् । मक्षि-
कादिव्यपोहनत्वञ्च । इति राजवल्लभः ॥ * ॥
अथ चामरोद्देशः ।
"हस्तद्वयोन्नतः शुक्लः सुवर्णबलिभूषितः ।
हीरेणालङ्कृतो राज्ञां भव्यमानसुखप्रदः ॥
बलेश्चामरदैर्घ्याद्वा आयामत्वं प्रकाशितम् ।
भव्यो भद्रो जयः शीलः सुखः सिद्धिश्चलः
स्थिरः ॥
वितस्त्येकैकसंवृद्ध्या दिनेशादिदिशां भुवाम्
।
सौवर्णं राजतं युग्मं त्रैदेशानां महीभुजाम् ॥
योजयेदिति निश्चित्य बलिकल्पनकर्म्मणि ।
स्थलजं जाङ्गलो राजा अनूपो जलजं वहेत्
॥
हीरञ्च पद्मरागश्च वैदूर्य्यं नील एव च ।
मणिर्बलिषु योक्तव्यो ब्रह्मादीनां यथाक्रमम् ॥
* ॥

| | | |
|---|---|---|
| **चान्द्रमसं**, क्ली, (चन्द्रमाश्चन्द्रोऽधिष्ठातृदेवता यस्य । चन्द्रमस् + अण् ।) मृगशिरोनक्षत्रम् । इति हेमचन्द्रः । २ । २३ ॥ (चन्द्रमसश्चन्द्रस्य इदम् । चन्द्रमस् + "तस्येदम् ।" ४ । ३ । १२० । इत्यण् ।) चन्द्रमस्सम्बन्धिनि त्रि ॥ (यथा, महाभारते । १२ । २५० । २० । "सर्व्वतः सुस्वमन्वेति वपुश्चान्द्रमसं यथा ॥") | | |

शुक्लो रक्तोऽथ पीतश्च नानावर्णो यथाक्रमम् ।
चामरो राजकेशस्य न सामान्यस्य भूपतेः ॥
न भव्यमानतो न्यूनं चामरं गुणमावहेत् ॥”
अथ चामरपरीक्षा ।
स्थलजं जलजञ्चेति चामरं द्विविधं विदुः ।
मेरौ हिमालये बिन्ध्ये कैलासे मलये तथा ॥
उदयेऽस्तगिरौ चैव गन्धमादनपर्व्वते ।
एवमेतेषु शैलेषु याश्चमर्य्यो भवन्ति हि ॥
तासां वालस्य जायेत चामरेत्यभिधा भुवि ॥
आपीताः कनकाद्रिजा हिमगिरेः शुभ्रायता बिन्ध्यजाः
कैलासादसिताः सिता मलयजाः शुक्लास्तथा पिङ्गलाः ।
आरक्ता उदयोद्भवाश्चमरजा आनीलशुक्लत्विषः
कृष्णाः केचन गन्धमादनभवाः पाण्डुत्विषश्चामराः ॥
अन्येषु प्रायशः कृष्णाश्चामराः सम्भवन्ति हि ।
ब्रह्मक्षत्त्रियविट्शूद्रजातयस्ताश्चतुर्व्विधाः ॥
चमर्य्यः पर्व्वतोद्भूता यथापूर्ब्बं गुणावहाः ।
दीर्घवालाः सुलघवः स्निग्धाङ्गाश्चापि कोमलाः ।
विरलास्तनुपर्व्वाणश्चमर्य्योब्रह्मजातयः ।
विना संस्कारमप्यासां चामरं विमलं भवेत् ॥
दीर्घवालाः सुगुरवः कर्करांशा भृशं घनाः ।
विज्ञेयाः स्थूलपर्व्वाणश्चमर्य्यो वैश्यजातयः ॥
संस्कारे चाप्यसंस्कारे न स्वभावं त्यजेदिदम् ।
खर्व्ववालाः सुलघवः कोमलाङ्गा भृशं घनाः ॥
चमर्य्यस्तनुपर्व्वाणो विज्ञेयाः शूद्रजातयः ।
संस्कारेणापि मलिनमासां चामरमिष्यते ॥ * ॥
दीर्घता लघुता चैव स्वच्छता घनता तथा ।
गुणाश्चत्वार इत्येते चामराणां प्रकीर्त्तिताः ॥
खर्व्वता गुरुता चैव वैवर्ण्यं मलिनाङ्गता ।
दोषाश्चत्वार इत्येते चामराणां प्रकीर्त्तिताः ॥
दीर्घे दीर्घायुराप्नोति लघौ भीतिविनाशनम् ।
स्वच्छे स्याद्धनकीर्त्तिश्च घने स्युः स्थिरसम्पदः ॥
खर्व्वे खर्व्वायुरुद्दिष्टं गुरुर्गुरुभयप्रदः ।
वैवर्ण्ये रोगशोकौ च मलिनं मृत्युमादिशेत् ॥”
इति स्थलजम् ॥ * ॥
अथ जलजम् ।
“लवणेक्षुसुरासर्पिर्दधितोयपयोऽब्धिषु ।
नारिष्टं नेतयस्तस्य यस्येदं चामरं गृहे ।
क्षीरोदसम्भवं श्वेतं दीर्घं लघु घनं महत् ॥
अस्य चामरराजस्य विज्ञेयो गुणविस्तरः ।
नाल्पेन तपसा लभ्यो देवानामपि जायते ॥
ह्रियतेऽभ्यन्तरे सिन्धोनर्गैः सम्पत्तिलोलुपैः ।
एषां पूर्ब्बवदुन्नेयं जातिदोषगुणादिकम् ॥ * ॥
स्थलजे जलजे चैव भाव्यमेतद्विशेषणम् ।
स्थलजं सुखदह्यं हि दाहे मिषमिषायते ॥
जलजं वह्निदुर्दह्यं महान्तं धूममुद्गिरेत् ।
चामराणां समुद्दिष्टमित्येवं लक्षणद्वयम् ॥
एवं विमृष्य यो धत्ते स राजा सुखमश्नुते ॥ * ॥
जलजं चामरं राजा यो धत्ते जाङ्गलेश्वरः ।
तस्याचिरात् कुलं वीर्य्यं लक्ष्मीरायुश्च नश्यति ॥
अनूपाधीश्वरो राजा यो वहेत् स्थलजं तथा ।
तस्यैतानि विनश्यन्ति लक्ष्मीरायुर्यशो बलम् ॥
नालं वर्णद्वये तेषां विधेयं शिल्पिना क्रमात् ।
संस्कारो वालुकायन्त्रे मसूरसलिलादिभिः ।
तदुष्णसलिलक्वाथात् कृत्रिमत्वं विपद्यते ॥”
इत्युपकरणयुक्तौ चामरोद्देशः । इति भोज-
राजकृतयुक्तिकल्पतरुः ॥

**चामरपुष्पः**, पुं, (चामरवत् पुष्पमस्य ।) गुवाकः ।

अस्याश्चामुण्डेति नामकारणं यथा, --
“यस्माच्चण्डञ्च मुण्डञ्च गृहीत्वा त्वमुपागता ।
चामुण्डेति ततो लोके ख्याता देवि । भविष्यसि ॥”
इति चण्डी ॥
अस्यास्तन्त्रादिकं यथा, --
“देव्या ललाटनिष्क्रान्ताया कालीति च विश्रुता ।
तस्यास्तन्त्रं प्रवक्ष्यामि कामदं शृणु भैरव ! ॥
समाप्तिसहितो दन्त्यः प्रान्तस्तस्मात् पुरःसरः ।
षष्ठस्वराग्निबिन्द्विन्दुसहितो मादिरेव च ॥
कालीतन्त्रमिति प्रोक्तं धर्म्मकामार्थदायकम् ।
एतन्मूर्त्तिं प्रवक्ष्यामि वत्सकाग्रमनाः शृणु ॥
नीलोत्पलदलश्यामा चतुर्बाहुसमन्विता ।
खट्वाङ्गं चन्द्रहासञ्च बिभ्रती दक्षिणे करे ॥
वामे चर्म्म कपालञ्च ऊर्द्धाधोभावतः पुनः ।
दधती मुण्डमालाञ्च व्याघ्रचर्म्मधराम्बरा ॥
कृशाङ्गी दीर्घदंष्ट्रा च अतिदीर्घातिभीषणा ।
लोलजिह्वा निम्नरक्तनयना नादभैरवा ॥
कबन्धवाहना पीनविस्तारश्रवणानना ।
एषा ताराह्वया देवी चामुण्डेति च कथ्यते ॥
एतस्या योगिनी चाष्टौ पूजयेच्चिन्तयेदपि ।
त्रिपुरा भीषणा चण्डी कर्त्री हन्त्री विधातृका ॥
कराला शूलिनी चेति अष्टौ ताः परिकीर्त्तिताः ।
एषातिकामदा देवी जाड्यहानिकरी सदा ॥

यथोत्तरं गुणवहाश्चमर्य्यः सप्त सप्तसु ॥
पुच्छानि तासां कृत्तानि जन्तुभिर्म्मकरादिभिः ।
कदाचिदुपलभ्येत तत्तीरे पुण्यशालिभिः ॥
लवणाब्धिसमुद्भूतं पीतं गुरु तथा लघु ।
वह्नौ क्षिप्तश्च वालश्चेत् किञ्चिच्चटचटायते ॥
इक्षुसिन्धूद्भवं ताम्रं चामरं विमलं लघु ।
मक्षिका मशकाश्चैव तस्मिन् व्यजति चामरे ॥
सुराब्धिजातं कलुषं कर्व्वुरं गुरुकर्क्कशम् ।
तद्गन्धेनैव माद्यन्ति अपि वृक्षा मतङ्गजाः ॥
सर्पिःसिन्धुभवं स्निग्धं श्वेतापीतं घनं लघु ।
वायुरोगाः प्रशाम्यन्ति तस्य वीजनवायुना ॥
जलसिन्धूद्भवं पाण्डु दीर्घं लघु घनं महत् ।
अस्य वातेन नश्येत्तु तृष्णा मूर्च्छा मदो भ्रमः ॥

काशः । आम्रः । केतकः । इति मेदिनी । पे ३१ ॥

**चामरपुष्पकः**, पुं, (चामरपुष्प + स्वार्थे कन् ।
चामरमिव पुष्पमस्य इति कप् वा ।)
काशः ।
इति जटाधरः ॥ चामरपुष्पार्थोऽप्यत्र ॥

**चामरा**, स्त्री, (चामर + अजादित्वात् टाप् ।)
चामरम् । इत्यमरटीकायां भरतः ॥

**चामरी**, स्त्री, (चामर + संज्ञायां ङीष् ।)
चामरम् । इत्यमरटीकायां भरतः ॥

**चामरी**, [न्] पुं स्त्री, (चामर इव केशरोऽस्त्यस्य ।
इति इनिः ।) घोटकः । इति
त्रिकाण्डशेषः ॥

**चामीकरं**, क्ली, (चमीकरः रत्नाकरविशेषः तत्र
भवमित्यण् ।) स्वर्णम् । (यथा,
शिवपुराणे
वायुसंहितायाम् । २ । १३ ।
“ददृशुर्मुनयो देवा देवर्षिगणसेवितम् ।
शुद्धचामीकरप्रख्यं सर्व्वाभरणभूषितम् ॥”)
धुस्तूरः । इत्यमरः । २ । ९ । ९५ ॥

**चामुण्डा**, स्त्री, (महासंग्रामे चण्डमुण्डाख्यौ द्वौ
शुम्भनिशुम्भसेनाध्यक्षौ अनया शक्त्या
निहतौ
अतः परितुष्टया भगवत्या कौशिक्या
अस्या-
श्चामुण्डेति संज्ञा रक्षिता । एतत्
सर्व्वन्तु वक्ष्य-
माणासु प्रवृत्तिषु दर्शनीयम् ।) दुर्गा ।
इति
जटाधरः ॥ मातृकाभेदः । इति
शब्दरत्ना-
वली ॥ तत्पर्य्यायः । चर्व्विका २
चर्म्ममुण्डा ३
मार्ज्जारकर्णिका ४ कर्णमोटी ५
महागन्धा ६
भैरवी ७ कापालिनी ८ । इति हेमचन्द्रः
॥

एतस्याःसदृशी काचित् कामदा न हि
विद्यते ॥”
इति कालिकापुराणे ६० अध्यायः ॥

**चाम्पिला**, स्त्री, (चपि + भावे घञ् । ततष्टाप् । चम्पै-
वेति चाम्पा । ततोऽस्त्यर्थे इलच् टाप् च
।)
नदी । इति त्रिकाण्डशेषः ॥

**चाम्पेयः**, पुं, (चम्पायां नद्यां भव इति ढक् ।)
चम्पकः । इत्यमरः । २ । ४ । ६३ ॥
(यथास्य पर्य्यायाः ।
“चाम्पेयश्चम्पकः प्रोक्तो हेमपुष्पश्च स
स्मृतः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)
नागकेशरः । (यथा, --
“नागपुष्पः स्मृतो नागः केशरो नागकेशरः
।
चाम्पेयो नागकिञ्जल्कः कथितः
काञ्चनाह्वयः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥
राजविशेषः । यथा, राजतरङ्गिण्याम् । ८
। ५४० ।
“चाम्पेयो जासटोवज्रधरो वल्लापुराधिपः
॥”
विश्वामित्रपुत्त्राणामन्यतमः । यथा,
महाभारते ।
१३ । ४ । ५७ ।
“आराणिर्नाचिकश्चैव चाम्पेयोज्जयनौ
तथा ॥”
क्ली, सुवर्णे । यथा काशीखण्डे । २४ ।
३९ ।
“मणिमाणिक्य-
चाम्पेयदुकूलेभाश्वगोधनम् ॥”)

**चाम्पेयकं**, क्ली, (चाम्पेय इव कायतीति । कै + कः ।
स्वार्थे कन् वा ।) किञ्जल्कः । इति
राजनिर्घण्टः ॥

**चाम्यं**, क्ली, (चम्यते भक्ष्यते इति । चम + कर्म्मणि

| | अस्या ध्यानं यथा, --<br>“काली करालवदना<br>विनिष्क्रान्तासिपाशिनी।<br>विचित्रखट्वाङ्गधरा नरमालाविभूषणा ॥<br>द्वीपिचर्म्मपरीधाना शुष्कमांसातिभैरवा<br>।<br>अतिविस्तारवदना जिह्वाललनभीषणा<br>॥<br>निमग्नारक्तनयना नादापूरितदिङ्मुखा ॥” | ण्यत् ।) भक्ष्यम् । इति व्याकरणम् ॥<br><br>**चाय**, ऋ ञ निशामे । अर्च्चे । इति कविकल्पद्रुमः ॥<br><br>(भ्वां-उभं-सकं-सेट् ।) ऋ, अचचायत् । ञ,<br>चायति चायते । निशाम इति चाक्षुषज्ञानम् ।<br>तं पर्व्वतीयाः प्रमदाश्चचायिरे । इति माघः ।<br>इति दुर्गादासः ॥ |
|---|---|---|

**चारं**, क्ली, (चर्य्यते भक्ष्यते कोपद्वेषादिवशा-
दिति । चर + कर्म्मणि घञ् ।)
कृत्रिमविषम् ।
इति हेमचन्द्रः । ३ । ३९८ ॥

**चारः**, पुं, पियालवृक्षः । गतिः । बन्धः । अपसर्पः ।
इति मेदिनी । रे, ३३ ॥ कारागारम् ।
इति
हेमचन्द्रः । ३ । ३९८ ॥ (चर एव
इति स्वार्थे
अण् ।) गूढपुरुषः । चरः ।
तद्विवरणम् । यदुक्तं
कालिकापुराणे ८५ अध्याये ।
"कृषिर्दुर्गञ्च बाणिज्यं खल्यानां
करसाधनम् ।
आदानं स्यैन्यकरयोर्ब्बन्धनं
गजवाजिनोः ॥
शून्यवप्रमुखानाञ्च योजनं सततं
जनैः ।
प्रजानां सारसेतूनां वन्धनं चेति
चाष्टमम् ॥
एतदष्टासु वर्गेषु चारान् सम्यक्
प्रयोजयेत् ।
कार्य्याकार्य्यविभागाय
चाष्टवर्णाधिकारिणाम् ॥
अष्टौ चारान् नियुञ्जीयादष्टवर्गेषु
पार्थिवः ।
दशस्वन्येषु युञ्जीत क्रमतः शृणु
तानि मे ॥
स्वामी सचिवराष्ट्राणि मित्रं कोषो बलं
तथा ।
दुर्म्मन्तु सप्तमं ज्ञेयं राज्याङ्गं
गुरुभाषितम् ॥
दुर्गयुक्तं चाष्टवर्गे चारं नात्मनि
योजयेत् ।
तस्मादिमानि शेषाणि पञ्च
चारपदानि तु ॥
शुद्धान्तेष्वेव पुत्त्रेषु स्रक्पूपादौ
महानसे ।
"उपगृह्यास्पदञ्चैव चारान् सम्यग्विधाय च
॥"
"चारांश्च कापटिकादीन् ।" इति
कुल्लूकभट्टः ॥
प्रचारः । यथा, रामायणे । २ । ६६ । २६
।
"निवृत्तचारः सहसा गतो रविः
प्रवृत्तचारा रजनी ह्युपस्थिता ।"
"निवृत्तचारः निवृत्तकिरणप्रचारः
प्रवृत्तचारा
प्रवृत्ततमःप्रचारा ।" इति तट्टीकायां रामा-
नुजः ॥ बाणिज्यादिव्यवहारः । यथा,
महा-
भारते । ५ । ३८ । १२ ।
"भृतैर्बाणिज्यचारञ्च पुत्त्रैः सेवेत च
द्विजान् ॥"
सञ्चारः । प्रवृत्तिः । यथा, देवीभागवते ।
१ ।
११ । २२ ।
"न स्त्री दुष्यति चारेण न विप्रो
वेदकर्म्मणा ।"
"चारेण रजःसञ्चारेण ।" इति
टीकाकृन्नील-
कण्ठः ॥)

**चारकः**, पुं, (चारयति इति । चर + णिच् +
ण्वुल् ।) अश्वादेः पालकः । सञ्चारकः ।
(यथा,
रामायणे । ३ । ६६ । १८ ।
"इयं मृते भ्रातरि मे मयि वत्स्यति मैथिली
।
न चाहमाशां कुर्य्यां ते पाप !
प्रच्छन्नचारक ! ॥")
बन्धः । इति मेदिनी ॥ के, ८७ ।
पियालवृक्षः ।
इति राजनिर्घण्टः ॥ (चर एव स्वार्थे अण्
चारः । ततः स्वार्थे कन् । गुप्तचरः । यथा
महाभारते । २ । ५ । ३८ ।
"त्रिभिस्त्रिभिरविज्ञातैर्व्वेत्सि तीर्थानि
चारकैः ॥"

**चारभटः**, पुं, (चारेषु चरेषु भटः । यद्वा, चारे
बुद्धिकौशलादिप्रचारे भटः ।) वीरः । इति
हेमचन्द्रः । ३ । २८ ॥ (यथाह भर्त्तृहरिः । १ ।
९१ ।
"कश्चुम्बति कुलपुरुषो वेश्याधरपल्लवं मनोज्ञमपि
।
चारभटचौरचेटकनटविटनिष्ठीवनशरावम् ॥"

**चारवायुः**, पुं, (चारेण सूर्य्यस्योदग्गतिभेदेन प्रेरितो
यो वायुः ।) निदाघजवायुः । इति त्रिकाण्ड-
शेषः ॥

**चारिणी**, स्त्री, (चारयति स्वगुणमिति । चर +
णिच् + णिनिः ङीप् च ।) करुणीवृक्षः । इति
राजनिर्घण्टः ॥

**चारित्रं**, क्ली, (चरित्रमेव इति । स्वार्थे अण् ।)
चरित्रम् । इति हेमचन्द्रः । ३ । ५०० ॥ (यथा,
रामायणे । ३ । ५९ । ९ ।
"कुलाक्रोशकरं लोके धिक् ! ते चारित्रमीदृशम्
॥"
मरुद्गणानामन्यतमः । यथा, हरिवंशे । १९६ ।
५४ ।
"जयोनश्चाद्भुतिश्चैव चारित्रं बहुपन्नगम् ॥"
चरतीति । "चरेर्वृत्ते ।" ४ । १७२ । उणां ।
इति णित्रम् । वृत्तान्तम् ॥)

**चारित्रा**, स्त्री, (चारित्रं अम्लस्वभावो विद्यते-
ऽस्या इति । अच् टाप् ।) तिन्तिडीवृक्षः । इति
शब्दरत्नावली ॥

**चारी**, स्त्री, (चारः पदनिक्षेपभेदः गतिभेदो वा
अस्त्यस्यामिति । "अर्शआदिभ्योऽच् ।" ५ । २ ।
१२७ ।
इत्यच् । ततो ङीष् ।) नृत्याङ्गविशेषः । यथा, --
"न हि चारीं विना नृत्ये नृत्यस्याङ्गं प्रवर्त्तते ।
शृङ्गारादिरसानाम्नु भावोद्दीपनकारिका ॥
माधुर्य्योद्वर्त्तना नित्यं चारी चारुगतिर्म्मता ॥"
अन्ये तु ।
"एकपादप्रचारो यः सा चारी तु निगद्यते ।
पादयोश्चारणं यच्च सा चारीति निगद्यते ॥

शत्रूदासीनयोश्चैव
बलाबलविनिश्चये ॥
आदौ दशसु चैतेषु चारान् राजा
प्रयोजयेत् ।
नयात् प्रकाशं जानीयात् तत्तु
चारैर्निरूपयेत् ॥
निरूप्य तत्प्रतीकारमवश्यं
छिद्रतश्चरेत् ।
यथानियोगमेतेषां यो यो यत्रान्यथा
चरेत् ॥
ज्ञात्वा तत्र नृपश्चारैर्दण्डयेद्वा
नियोजयेत् ।
चारांस्तु मन्त्रिणा सार्द्धं रहस्ये
संस्थितो नृपः ॥
प्रदोषसमये पृच्छेत्तदानीमेव
साधयेत् ।
स्वपुत्त्रे चाथ शुद्धान्ते ये तु चारा
महानसे ॥
नियुक्तांस्तान् मध्यरात्रौ पृच्छेत्
यश्चापि मन्त्रिणि ।
एतान् चारान्स्वयं पश्येत्
नृपतिर्मन्त्रिणा विना ॥
अन्यांश्च मन्त्रिणा सार्द्धं निरूप्य
प्रदिशेत् फलम् ।
नैकवेशधरश्चारो नैको
नोत्साहवर्ज्जितः ॥
संस्तुतो न हि सर्व्वत्र नातिदीर्घो न
वामनः ।
सततं न दिवाचारी न रोगी
नाप्यबुद्धिमान् ॥
न वित्तविभवैर्हीनो न
भार्य्यापुत्त्रवर्ज्जितः ।
कार्य्यश्चारो नृपतिना
गुह्यतत्त्वविनिर्णये ॥
अनेकवेशग्रहणक्षमं भार्य्यासुतैर्युतम्
।
बहुदेशवचोऽभिज्ञं पराभिप्रायवेदकम्
॥
दृढभक्तं प्रकुर्व्वीत चारं
शक्तमसाध्वसम् ।

चरणशीले, त्रि । यथा, कथासरित्सागरे ।
१४ । ६५ ।
"गुप्तं विरचितां नाम
भेजेऽन्तःपुरचारिकाम् ॥")

**चारटिका**, स्त्री, (चर + णिच् + "शकादिभ्यो-
ऽटन् ।" ४ । ८१ । उणां । इति अटन्
ततः
संज्ञायां कन् कापि अत इत्वञ्च ।)
नलीनाम-
गन्धद्रव्यम् । इति राजनिर्घण्टः ॥

**चारटी**, स्त्री, (चर + णिच् + "शकादिभ्योऽटन् ।"
इति अटन् ततो गौरादित्वात् ङीष् ।)
पद्म-
चारिणीवृक्षः । इत्यमरः । २ । ४ । १४६
॥
भूम्यामली । इति राजनिर्घण्टः ॥

**चारणः**, पुं, (चारयति प्रचारयति नृत्यगीतादि-
विद्यां तज्जन्यकीर्त्तिं वा । चर + णिच् +
ल्युः ।)
नटविशेषः । तत्पर्य्यायः । कुशीलवः ।
इत्यमरः ।
२ । १० । १२ ॥ (यथा, मनुः । १२ ।
४४ ।
"चारणाश्च सुपर्णाश्च पुरुषाश्चैव
दाम्भिकाः ।
रक्षांसि च पिशाचाश्च तामसीषूत्तमा गतिः
॥"
"चारणाः नटादयः ।" इति कुल्लूकभट्टः
॥")
गन्धर्व्वविशेषः । यथा, --
"गन्धर्व्वाणां ततो लोकः परतः
शतयोजनात् ।
देवानां गायनास्ते च चारणाः
स्तुतिपाठकाः ॥"
इति पाद्मे पातालखण्डम् ॥
(देवयोनिविशेषः । यथा, भागवते । २ ।
१ । ३६ ।
"गन्धर्व्वविद्याधरचारणाप्सरः
स्वरःस्मृतीरसुरानीकवीर्य्यः ॥"

करणानां समायोगः खण्डकः परिकीर्त्तितः ।
त्रिभिः खण्डैश्चतुर्भिर्व्वा मण्डलं समुदाहृतम् ॥
समनखा नूपुरविद्धा तिर्य्यङ्मुखी सबला च ।
कातरा च कुवीरा च विश्लिष्टा रथचक्रिका ॥
पार्ष्णिरेचितका तलदर्शिनी गजहस्तिका ।
परावित्ततला चोरुताडिताप्यर्द्धमण्डला ॥
स्तम्भक्रीडनिका हरिणत्रासिका चोरुरेचिका ।
तलोद्वृत्ता सञ्चरिता स्फुरिकापि तथैव च ॥
लङ्घितजङ्घा सङ्घट्टिता स्यादथ मदालसा ।
उत्कुञ्चितातितिर्य्यक्कुञ्चिता चापकुञ्चिता ॥
षड्विंशतिर्भौमचार्य्य इत्याख्याता मनीषिभिः ॥"
अन्ये तु ।
"समपादस्थिता वर्णा शकटास्याध्यर्द्धिकापि च ।
विव्याधा ताडिता बद्धा एडकाक्रीडिता तथा ॥
ऊरुवृत्ता छन्दिता जनितापस्पन्दिता तथा ।
स्पन्दितावत्समतन्वी समोत्सारितमङ्घिता ॥
उच्छन्दिता च विज्ञेयाश्चार्य्यः षोडश भूमिगाः ।"
इति भूमिचारी ॥ * ॥
आकाशचारी यथा, --
"चारीश्चाकाशगा वक्ष्ये विक्षेपा त्वधरी तथा ।
अङ्घ्रिताडिता भ्रमरी पुरःक्षेपा च सूचिका ॥

| अधितिष्ठेत् स्वयं राजा<br>कृषिमात्मसमैस्तथा ॥<br>बणिक्पथे च दुर्गादौ तेषु<br>शक्तान्नियोजयेत् ।<br>अन्तःपुरे पितुस्तुल्यान् धीरान्<br>वृद्धान् नियो-<br>जयेत् ॥<br>षण्डान् पण्डान् तथा वृद्धान् स्त्रियो<br>या बुद्धि-<br>तत्पराः ।<br>शुद्धान्तद्वारि युञ्जीयात् स्त्रियो वृद्धा<br>मनी-<br>षिणीः ॥”<br>यथा च युक्तिकल्पतरौ ।<br>“नृपो निहन्याच्चारेण परराष्ट्रं<br>विचक्षणः ।”<br>(कापटिकपुरुषादयः । यथा, मनुः ।<br>७ । १८४ । | चारपुरुषः । यथा, भागवते । ४ । १६ ।<br>१२ ।<br>“अन्तर्वहिश्च भूतानां पश्यन् कर्म्माणि<br>चारणैः ।<br>उदासीन इवाध्यक्षो वायुरात्मैव देहिनाम्<br>॥”) | |
|---|---|---|

अपक्षेपा जङ्घावर्त्ता विद्धा च हरिणप्लुता ।
ऊरुजङ्घान्दोलिता च जङ्घा जङ्घनिका तथा ॥
विद्युत्क्रान्ता भ्रमरिका दण्डपार्श्वेति षोडश ॥”
अन्ये तु ।
“विभ्रान्तातिक्रान्तापक्रान्तापार्श्वक्रान्तिका ।
ऊर्द्ध्वजानुर्दोलपादाङ्कृत्ता नूपुरपादिका ॥
भुजङ्गभासिका क्षिप्ताविद्धा ताला च सूचिका ।
विद्युत्क्रान्ता भ्रमरिका दण्डपादा तथैव च ॥
आकाशचारिका एताः षोडशैव निरूपिताः ॥”
एतास्वेव भूमिचारीष्वप्यन्तरभेद्योऽस्ति तिर्य्यक्-
चारी ऊद्‌र्ध्वचारी अधश्चारीति ता ऊहनीयाः ॥
“तैलाभ्यक्तेन गात्रेण लध्वाहारो जितश्रमः ।
स्तम्भे वा भित्तिदेशे वा प्रथमं ताः प्रयोजयेत् ॥
रूक्षाहारं तथाम्लञ्च भुक्त्वा तां न समाचरेत् ।
नृत्यपादस्य विन्यासश्चारी सैवाभिधीयते ॥
शृङ्गारादिरसानान्तु भवेद्दीपनकारणम् ।
माधुर्य्यो भूमना नित्यं हृद्यतालत्रयान्विता ॥
नियतोऽङ्गविशेषाणां चारी सञ्चारतो भवेत् ॥”
इति सङ्गीतदामोदरोक्तचारीलक्षणम्॥

**चारुः**, पुं, (चरति देवेषु गुरुत्वेन । चर + “दॄ-
सनिजनिचरीति ।” उणां १ । ३ । इति ञुण् ।)
बृहस्पतिः । (चरति चित्ते इति ।) मनोज्ञे त्रि ।
इति मेदिनी । रे, ३३ ॥ (यथा, गीतगोविन्दे ।
मधिवचनजातम् ॥”
१० । ९ ।
“इति चटुलचाटुपटुचारुमुरवैरिणो राधिका-
श्रीकृष्णस्य
रुक्मिणीगर्भसम्भूतपुत्त्राणामन्यतमः ।
यथा, हरिवंशे । ११७ । ३९ ।
“चारुञ्च बलिनां श्रेष्ठं सुताञ्चारुमतीं तथा ॥”)

**चारुकः**, पुं, (चारु + संज्ञायां कन् ।) शरबीजम् ।
अस्य गुणाः । मधुरत्वम् । रूक्षत्वम् । रक्त-
पित्तकफापहत्वम् । शीतत्वम् । लघुत्वम् ।
अवृष्यत्वम् । कषायत्वम् । वातकोपनत्वञ्च ।
इति
भावप्रकाशः ॥

**चारुनालकं**, क्ली, (चारु नालं यस्य कप् ।)
रक्तपद्मम् । इति पुराणम् ॥

**चारुपर्णी**, स्त्री, (चारु मनोज्ञं पर्णं पत्त्रं अस्याः ।)
प्रसारणी । इति राजनिर्घण्टः ॥
गन्धभादालिया
इति भाषा ॥ (प्रसारणीशब्देऽस्या
गुणादिकं
ज्ञेयम् ॥)

**चारुफला**, स्त्री, (चारु मनोहरं फलं अस्याः ।)
द्राक्षा । इति राजनिर्घण्टः ॥

**चारुबाहुः**, पुं, (चारू बाहू यस्य ।) श्रीकृष्ण-
पुत्त्रः । यथा, हरिवंशे । १६० । ६ ।
“चारुबाहुः कनीयांश्च कन्या
चारुमती तथा ॥”

**चारुबिन्दः**, पुं, (चारुं चारुतां बिन्दतीति ।
बिदि + अण् ।) श्रीकृष्णपुत्त्रः । यथा,
हरि-
वंशे । १६० । ६ ।
“सुषेणश्चारुगुप्तश्च चारुबिन्दश्च
वीर्य्यवान् ॥”

**चारुमती**, स्त्री, (चारु चारुता सौन्दर्य्यं अस्या
अस्तीति । मतुप् ततो ङीप् ।)
रुक्मिण्यां
श्रीकृष्णस्य कन्या । यथा, हरिवंशे ।
१६० । ६ ।
“चारुबाहुः कनीयांश्च कन्या
चारुमती तथा ॥”

**चारुलोचनः**, पुं, (चारुणी लोचनेऽस्य ।) हरिणः ।
इति त्रिकाण्डशेषः ॥
(चारुलोचनविशिष्टे त्रि ॥)

**चारुवर्द्धना**, स्त्री, (चारु चारुत्वं श्रियमित्यर्थः
वर्द्धयति स्वगुणैरिति यावत् । वृध +
णिच् +
सर्व्वदर्शनसंग्रहे । “अथ कथं परमेश्वरस्य
निःश्रय-
सपदत्वमभिधीयते
बृहस्पतिमतानुसारिणा
नास्तिकशिरोमणिना चार्व्वाकेण
दूरोत्सारित-
त्वात् दुरुच्छेदं हि चार्व्वाकस्य चेष्टितम्
॥”)
दुर्य्योधनसखराक्षसविशेषः । (यथा, महा-
भारते । १२ । ३८ । २२ -- २३ ।
“निःशब्दे च स्थिते तत्र ततो विप्रजने
पुनः ।
राजानं ब्राह्मणच्छद्मा चार्व्वाको
राक्षसोऽब्रवीत् ॥
तत्र दुर्य्योधनसखा भिक्षुरूपेण सम्बृतः ।
साक्षः शिखी त्रिदण्डी च धृष्टो
विगतसाध्वसः ॥”)

**चार्व्वी**, स्त्री, (चारु + गुणवचनत्वात् ङीष् ।)
कुवेरपत्नी । ज्योत्स्ना । बुद्धिः । शोभना
। इति
मेदिनी । वे, ६ ॥ दीप्तिः । इति शब्दरत्ना-
वली ॥

**चालः**, पुं, (चालयति छादयतीति । चल + णिच्
+ अच् णो वा । यद्वा चालयति
आच्छादयत्यने-
नेति । चल + णिच् + करणे घञ् ।)
स्वनाम-
ख्यातगृहाच्छादनम् । तत्पर्य्यायः । पिटम्
२ ।
इति त्रिकाण्डशेषः ॥ पटलम् ३ छदिः ४
। इत्य-
मरः । २ । २ । १४ ॥ कटलम् ५ । इति
शब्द-
रत्नावली ॥ छादम् ६ । इति जटांधरः ॥
स्वर्ण-
चूडपक्षी । इति भूरिप्रयोगः ॥

**चालकः**, पुं, (चलति स्वेच्छयैव । चल + ण्वुल् ।)

**चारुकेशरा**, स्त्री, (चारूणि केशराणि अस्याः ।)
नागरमुस्ता । तरुणीपुष्पम् । इति राजनिर्घण्टः ॥

**चारुगर्भः**, पुं, (चारुः मनोज्ञः गर्भः अभ्यन्तर्वर्त्यन्तः-
करणमिति यावत् यस्य । यद्वा चारुर्गर्भ उत्-
पत्तिस्थानं यस्य ।) श्रीकृष्णपुत्त्रः । यथा, हरि-
वंशे । १६० । ६ ।
"चारुभद्रश्चारुगर्भः सुदंष्ट्रो द्रुम एव च ॥"

**चारुगुप्तः**, पुं, (चारु यथा स्यात् तथा गुप्तः । यद्वा
चारुणा ईश्वरेण कृष्णेन गुप्तः पालितः ।)
श्रीकृष्णपुत्त्रः । यथा, हरिवंशे । १६० । ६ ।
"सुषेणश्चारुगुप्तश्च चारुबिन्दश्च वीर्य्यवान् ॥"

**चारुदेष्णः**, पुं, रुक्मिण्यां श्रीकृष्णपुत्त्रः । यथा,
हरिवंशे । १६० । ५ ।
"द्बितीयश्चारुदेष्णश्च वृष्णिसिंहो महारथः ॥"

**चारुधारा**, स्त्री, (चारूणां मनोहरपदार्थानां
धारा इव, त्रैलोक्यसुन्दरत्वेनास्यास्तथात्वम् ।
चार्व्वी धारा नीतिर्व्यवहारो यस्याः वा ।)
शची । इति त्रिकाण्डशेषः ॥ (चारु धाम
यस्याः ।) चारुधामा इत्यपि पाठः ॥

युच् । कर्त्तरि ल्युर्वा ततष्टाप् ।) नारी । इति
राजनिर्घण्टः ॥

**चारुव्रता**, स्त्री, (चारु व्रतमस्याः ।) मासोप-
वासिनी । इति त्रिकाण्डशेषः ॥

**चारुशिला**, स्त्री, (चारुश्चार्व्वी शिला इति नित्य-
कर्म्मधारयः ।) मणिः । इति त्रिकाण्डशेषः ॥

**चार्च्चिक्यं**, क्ली, (चर्च्चिकैव । स्वार्थे ष्यञ् ।)
चन्दनादिना देहविलेपनविशेषः । इत्यमरः ॥
तत्पर्य्यायः । चर्च्चा २ स्थासकः ३ । इत्यमरः ॥
चर्च्चिक्यम् ४ । इति भरतः ॥ अपि च ।
"स्थासकः स्थायकश्चर्च्चा
चर्च्चिक्यञ्च चतुष्टयम् ।
वस्त्रादौ कुङ्कुमादीनां छटादिषु
निगद्यते ॥"
इति शब्दरत्नावली ॥

**चार्म्मः**, पुं, (चर्म्मणा परिवेष्टितः इति । चर्म्म
+ अण् ।) चर्म्माच्छादितरथः । इति भरतः ॥
चर्म्माच्छन्नद्रव्ये त्रि ॥

**चार्म्मणं**, क्ली, (चर्म्मणां समूहः इति । भिक्षा-
दिभ्योऽण् ।" ४ । २ । ३८ । इत्यण् ।) चर्म्म-
समूहः । इत्यमरटीकायां भरतः ॥

**चार्म्मिणं**, क्ली, (चर्म्मिणां चर्म्मधारिणां समूहः ।
इति अण् ।) चर्म्मिसमूहः । इत्यमरटीकायां
स्वामी ॥

**चार्व्वाकः**, पुं, (चारुः आपातमनोरमः लोक-
चित्ताकर्षकः इति यावत् वाकः वाक्यमस्य ।

अङ्कुशदुर्द्धरहस्ती । इति त्रिकाण्डशेषः ॥

**चालनं**, क्ली, (चालयत्यनेनेति । चल + णिच् +
करणे ल्युट् ।) चालनी । इत्यमरटीकायां
भरतः ॥ (यथा, कर्म्मप्रदीपे ।
"क्षुद्रच्छिद्रसमोपेतं चालनं तितौः स्मृतः ॥"
भावे ल्युट् । प्रेरणम् । यथा, भागवते । ३ ।
२६ । ३७ ।
"चालनं व्यूहनं प्राप्तिर्नेतृत्वं द्रव्यशब्दयोः ॥")

**चालनी**, स्त्री, (चालयत्यनेनेति । चल + णिच् +
करणे ल्युट् ङीप् च ।) स्वनामख्यातशस्यादि-
चालनपात्रम् । तत्पर्य्यायः । तितौः २ । इत्य-
मरः । २ । ९ । २६ ॥ चालनम् ३ वहुच्छिद्रा ४ ।
इति भरतः ॥ पाचीरः ५ । इति जटाधरः ॥

**चाषः**, पुं, (चाषयति भक्षयति कणादिकमिति । चष
+ स्वार्थे णिच् + अच् । यद्वा चष्यते भक्ष्यते-
ऽसौ मांसाशिभिरिति । चष् + कर्म्मणि घञ् ।)
स्वर्णचातकः । सोणाचडा इति ख्यातः । नील-
कण्ठ इति क्वचित् ख्यातः । इत्यमरटीकायां
भरतः ॥ तत्पर्य्यायः । किकीदिविः २ नीलाङ्गः ३
पुण्यदर्शनः ४ । इति राजनिर्घण्टः ॥

**चासः**, पुं, (चाष + पृषोदरात् सत्वम् ।) चाष-
पक्षी । इक्षुः । इति मेदिनी । से, ३ ॥

**चि**, ञ चित्याम् । चयने । इति कविकल्पद्रुमः ॥
(भ्वां-उभं-द्विकं-अनिट् ।) ञ, चयति चयते
धनं लोकः । इति दुर्गादासः ॥

| | | |
|---|---|---|
| | ततः पृषोदरादित्वात् साधुः ।) तार्किकविशेषः । तत्पर्य्यायः । बार्हस्पत्यः २ नास्तिकः ३ लौकाय- तिकः ४ । इति हेमचन्द्रः ॥ स च आकाश- भिन्नभूतचतुष्टयवादी । प्रत्यक्षमेकं प्रमाणमिति चार्व्वाकाः । इति न्यायसंग्रहः ॥ (यथा च | **चि**, ञ न चित्याम् । इति कविकल्पद्रुमः ॥ (स्वां- उभं-द्विकं-अनिट् ।) चितिश्चयनं राशीकरण- मिति यावत् । न ञ, चिनोति चिनुते । इति दुर्गादासः ॥ |

**चि**, क मि चित्याम् । इति कविकल्पद्रुमः ॥ (चुरां-
परं-द्विकं-सेट् ।) क मि, चययति चाय-
यति । स्वमते तु चपयति चापयतीत्यपि
।
इति दुर्गादासः ॥

**चिकित्सकः**, पुं, (चिकित्सति रोगमपनयतीति ।
कित् + "गुप्तिज्किद्भ्यः सन् ।" ३ । १
। ५ । इति
स्वार्थे सन् + ण्वुल् ।) चिकित्साकर्त्ता ।
(यथा,
मनुः । ९ । २८४ ।
"चिकित्सकानां सर्व्वेषांमिथ्या प्रचरतां
दमः ॥")
तत्पर्य्यायः । रोगहारी २ अगदङ्कारः ३
भिषक् ४ वैद्यः ५ । इत्यमरः । २ । ६ ।
५७ ॥
तस्य लक्षणं यथा, चाणक्ये ।
"आयुर्व्वेदकृताभ्यासः सर्व्वेषां
प्रियदर्शनः ।
आर्य्यशीलगुणोपेत एष वैद्यो विधीयते
॥"

**चिकित्सा**, स्त्री, (चिकित्सनमिति । कित् व्याधि-
प्रतीकारे + "गुप्तिज्किद्भ्यः सन् ।" ३ ।
१ । ५ ।
इति स्वार्थे सन् ततः अप्रत्ययः ।)
रोगप्रती-
कारः । तत्पर्य्यायः । रुक्प्रतिक्रिया २ ।
इत्य-
मरः । २ । ६ । ५० ॥ उपचारः ३
उपचर्य्या ४
निग्रहः ५ वेदनानिष्टा ६ क्रिया ७
उपक्रमः ८
शमः ९ । इति राजनिर्घण्टः ॥
चिकित्सितम् १०
प्रतीकारः ११ भिषग्जितम् १२ । इति
रत्न-
माला ॥ रोगप्रतिकारः १३ । इति
शब्दरत्ना-
कर्म्माभ्यासः क्वचिच्चेति चिकित्सा
नास्ति
निष्फला ॥" * ॥
चिकित्साङ्गानि यथा, भावप्रकाशे ।
"रोगी दूतो भिषग्दीर्घमायुर्द्रव्यञ्च सेवकः ।
सदौषधं चिकित्सायामित्यङ्गानि बुधा जगुः
॥"

**चिकित्सितं**, क्ली, (कित् + स्वार्थे सन् ततो भावे
क्तः ।) चिकित्सा । इति रत्नमाला ॥
(यथा,
सुश्रुते सूत्रस्थाने २ अः ।
"बीजं चिकित्सितस्यैतत् समासेन
प्रकीर्त्तितम् ॥"
पर्य्याया अस्य यथा, वैद्यकरत्नमालायाम्
।
"चिकित्सितं प्रतीकारश्चिकित्सा च
भिषग्-
जितम् ॥"
चिकित्स्यतेऽनेनेति । करणे क्तः । भेषजम्
।
अस्य पर्य्याया यथा, चरके
चिकित्सास्थाने १ अः ।
"चिकित्सितं व्याधिहरं पथ्यं
साधनमौषधम् ।
प्रायश्चित्तं प्रशमनं प्रकृतिस्थापनं हितम् ॥
विद्याद्भेषजनामानि भेषजं द्विविधञ्च तत् ।
यद्व्याधिनिर्घातकरं वक्ष्यते
तच्चिकित्सितम् ॥
चिकित्सितार्थ एतावान् विकाराणां यदौ-
षधम् ।"
यथा, भागवते । १ । ५ । ३२ ।
"एतत् संसूचितं
ब्रह्मंस्तापत्रयचिंकित्सितम् ।
यदीश्वरे भगवति कर्म्म ब्रह्मणि भावितम्
॥")
कृतप्रतीकारे त्रि ॥

**चिकिनः**, त्रि, (नि नता नासिकास्त्यस्य । "इनच्-
पिटच्-चिकचि च ।" ५ । २ । ३३ । इति

**चिकुरः**, त्रि, (चि + कुर + कः ।) चपलः । स
तु दोषमनिश्चित्य वधबन्धनादेः कर्त्ता ।
इत्यमरः ।
३ । १ । ४६ ॥

**चिकुरपक्षः**, पुं, (चिकुराणां केशानां पक्षः
समूहः ।) कचसमूहः । केशसमुदयः । इत्य-
मरः । २ । ६ । ९८ ॥

**चिकुरपाशः**, पुं, (चिकुराणां केशानां पाशः
समूहः ।) केशसमूहः । इत्यमरः । २ । ६ ।
९८ ॥

**चिकुरहस्तः**, पुं, (चिकुराणां हस्तः समूहः ।)
केशसमूहः । इत्यमरः । २ । ६ । ९८ ॥

**चिकूरः**, पुं, (चिकुर + निपातनात् दीर्घः ।)
केशः । इति शब्दभेदप्रकाशः ॥

**चिक्क**, क अर्त्तौ । इति कविकल्पद्रुमः ॥ (चुरां-
परं-सकं-सेट् ।) कोपधः । तृतीयस्वरभध्यः
।
अर्त्तिः पीडनम् । क, चिक्कयति शत्रुं शूरः ।
इति दुर्गादासः ॥

**चिक्कः**, पुं, (चिक् इत्यव्यक्तशब्देन कायति शब्दा-
यते इति । चिक् + कै + कः ।) छुच्छुन्दरिः
।
इति त्रिकाण्डशेषः ॥ (नि नता
नासिकास्त्य-
स्येति । "इनच्पिटचिति ।" ५ । २ । ३३ ।
इत्यस्य वार्त्तिं "कप्रत्ययचिकादेशौ च
वक्तव्यौ ।"
इति कप्रत्ययो नेश्चिकादेशश्च ।
नतनासिके,
त्रि । इति सिद्धान्तकौमुदी ॥)

**चिक्कणं**, त्रि, (चित्यते ज्ञायते इति । चित् +
"चितेः कणः कश्च ।" उणां । ४ । १७६ ।
इति कर्म्मणि कणः कश्चान्तादेशः ।
बाहुलकाद-

वली ॥ सा त्रिधा यथा, वैद्यके ।
“आसुरी मानुषी दैवी चिकित्सा सा
त्रिधा
मता ।
सूतप्रधाना दैवी स्यात्
छेदभेदात्मिकासुरी ॥
मानुषी षड्रसा ज्ञेया जपहोमादिसंस्कृता
।
कलौ चाल्पबले लोके मानुषी तत्र
पूजिता ॥”
तस्या लक्षणं यथा, --
“याभिः क्रियाभिर्जायन्ते शरीरे धातवः
समाः ।
सा चिकित्सा विकाराणां कर्म्म तद्भिषजां
मतम् ॥
या ह्युदीर्णं शमयति नान्यं व्याधिं करोति
च ।
सा क्रिया न तु या व्याधिं
हरत्यन्यमुदीरयेत् ॥”
चिकित्साविध्युपदेशो यथा, --
“जातमात्रश्चिकित्स्यः
स्यान्नोपेक्ष्योऽल्पतया गदः ।
वह्निशत्रुविषैस्तुल्यः स्वल्पोऽपि
विकरोत्यसौ ॥
रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् ।
ततः कर्म्म भिषक् पश्चाज्ज्ञानपूर्ब्बं
समाचरेत् ॥
औषधं केवलं कर्त्तुं यो जानाति न
चौषधम् ।
वैद्यकर्म्म स चेत् कुर्य्याद्वधमर्हति राजतः
॥
आदावन्ते रुजां ज्ञाने प्रयतेत
चिकित्सकः ।
भेषजानां विधानेऽथ ततः कुर्य्यात्
चिकित्सितम् ॥
शीते शीतप्रतीकारमुष्णे चोष्णनिवारणम्
।
कृत्वा कुर्य्यात् क्रियां प्राप्तां क्रियाकालं
न हाप-
येत् ॥

इनच् प्रकृतेश्चिकादेशश्च ।)
चिपिटनासिकः ।
इति केचित् ॥

**चिकिलः**, पुं, (चि + बाहुलकात् इलच् कुक्
च ।) पङ्कः । इति हेमचन्द्रः । ४ । १५६ ॥

**चिकीर्षा**, स्त्री, (कर्त्तुमिच्छा इति । “धातोः कर्म्मणः
समानकर्त्तृकादिच्छायांवा ।” ३ । १ । ७
।
इति कृधातोः इच्छार्थकसन्प्रत्ययेन
चिकीष् ।
ततः “अप्रत्ययात् ।” ३ । ३ । १०२ ।
इत्यः ।)
कर्त्तुमिच्छा । इति मुग्धबोधम् ॥ करिवार
वाञ्छा इति भाषा । (यथा, भागवते । २ ।
१० । २४ ।
“हस्तौ रुरुहतुस्तस्य नाशकर्म्मचिकीर्षया
॥”)

**चिकीर्षुः**, त्रि, (चिकीर्षतीति । कृ + सन् +
“सनाशंसभिक्ष उः ।” ३ । २ । १६८ ।
इति
उः ।) कर्त्तुमिच्छुः । करणेच्छाविशिष्टः ।
इति
व्याकरणम् ॥

**चिकुरः**, पुं, (चि इत्यव्यक्तशब्दं कुरतीति । कुर-
शब्दे + “इगुपधज्ञेति ।” ३ । १ । १३५ ।
इति
कः ।) केशः । (यथा, राजतरङ्गिण्याम् । ८
। ३६७ ।
“चिकुरनिचये यत् कौटिल्यं
विलोचनयोश्च
या ॥”)
सर्पः । (अयं हि ऐरावतकुलजातस्य
सुमुखस्य
पिता । यथा, महाभारते । ५ । १०३ ।
२४ ।
“एतस्य हि पिता नागश्चिकुरो नाम
मातले ! ।
न चिरात् वैनतेयेन पञ्चत्वमुपपादितः ॥”)

गुणः ।) स्निग्धव्यञ्जनादि
(स्निग्धत्वमसृणत्वादि-
गुणवद्वस्तु ।) इत्यमरः । २ । ९ । ४६ ॥
चिक्णा
इति भाषा ॥ (यथा, महाभारते । १२ ।
१८४ । ३४ ।
“कठिनश्चिक्कणः श्लक्ष्णः पिच्छिलो मृदु-
दारुणः ॥”)

**चिक्कणः**, पुं, (चिक्कणं स्निग्धगुणं विद्यतेऽस्य ।
अच् ।) पूगवृक्षः । तत्फले क्ली । इति राज-
निर्घण्टः ॥ (औषधपाकस्यावस्थाविशेषो
यथा,
“पाकस्तु त्रिविधो मन्दश्चिक्कणः
खरचिक्कणः ॥”
इति वाभटे कल्पस्थाने षष्ठेऽध्याये ॥)

**चिक्कणा**, स्त्री, (चिक्कणं मसृणता विद्यतेऽस्याः ।
अर्शआदित्वादच् । ततष्टाप् ।) उत्तमा गौः ।
तत्पर्य्यायः । नैचिकी २ । इति
शब्दचन्द्रिका ॥
पूगफलम् । इति राजनिर्घण्टः ॥

**चिक्कणी**, स्त्री, (चिक्कण + गौरादित्वात् ङीष् ।)
पूगफलम् । इति राजनिर्घण्टः ॥

**चिक्कसः**, पुं, (चिक्कयति पीडयति चूर्णकारिण-
मिति । चिक्क + असच् ।) यवचूर्णम् । इति
हेमचन्द्रः । ३ । ६६ ॥

**चिक्का**, स्त्री, (चिक्कयति पीडयति भोक्तारमिति ।
चिक्क + अच् ।) पूगफलम् । इति
राजनिर्घण्टः ॥

**चिङ्गटः**, पुं, (चिङ्ग इत्यव्यक्तशब्देन अटतीति । अट
गतौ + अच् । शकन्ध्वादिवत् अलोपः ।)
मत्स्य-
विशेषः । गर्लाचिङ्गडी इति मोचाचिङ्गडी
इति च भाषा ॥ तत्पर्य्यायः । महाशल्कः २
।

| | | |
|---|---|---|
| अप्राप्ते वा क्रियाकाले प्राप्ते वा न क्रिया कृता ।<br>क्रियाहीनातिरिक्ता च साध्येष्वपि न सिध्यति ॥<br>क्रिया यास्तु गुणालाभे क्रियामन्यां प्रयोजयेत् ।<br>पूर्ब्बस्यां शान्तवेगायां न क्रियासङ्करो मतः ॥”<br>चिकित्साफलं यथा, --<br>“क्वचिदर्थः क्वचिन्मैत्री क्वचिद्धर्म्मः क्वचिद्यशः । | पर्व्वतः । पक्षिभेदः । वृक्षविशेषः । गृहवभ्रुः ।<br>तरलः । इति मेदिनी । रे, १५५ ॥ | |

इति हारावली । १८७ ॥ अस्य गुणाः । गुरु-
त्वम् । ग्राहित्वम् । मधुरत्वम् ।
बलवर्द्धनत्वम् ।
मेदःपित्तास्रनाशित्वम् । वृष्यत्वम् ।
रोचनत्वम् ।
कफवातकारित्वञ्च । इति राजवल्लभः ॥ (ऊषा-
पानविधौ भक्षणनिषेधोऽस्य यथा, --
“प्रातः पानीयपाने महदृषिगणितं
द्रव्यमेतच्च
नाद्यात् ।
मांसं क्षीरञ्च शाकं सकलविदलकं
पिष्टकं
चिङ्गटञ्च ॥”
इति वैद्यक-ऋतुचर्य्यायाम् ॥)

**चिङ्गटी**, स्त्री, (चिङ्गट + जातौ ङीष् ।) मत्स्य-
विशेषः । घुषाचिङ्गडी इति भाषा ॥ अस्या
गुणाः । मधुरत्वम् । हृद्यत्वम् ।
वातनाशित्वम् ।
श्लेष्मकारित्वम् । गुरुत्वञ्च । इति
राजवल्लभः ॥

**चिङ्गडः**, पुं, (चिङ्गट + पृषोदरादित्वात् टस्य डत्वे
साधुः ।) चिङ्गटमतस्यः । इति
शब्दमाला ॥
(विवरणमस्य चिङ्गटशब्द व्याख्यातम् ॥)

**चिचिण्डः**, पुं, फलविशेषः । चिचिण्डा इति चिचिङ्गा
इति च भाषा ॥ तत्पर्य्यायः ।
श्वेतराजिः २
सुदीर्घः ३ गृहकूलकः ४ । अस्य
गुणाः । वात-
पित्तनाशित्वम् । पथ्यत्वम् ।
बलरुचिकारित्वम् ।

**चित**, इ क स्मृतौ । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-सकं-सेट् ।) इ क, चिन्तयति विष्णं सुधीः ।
इति दुर्गादासः ॥

**चित**, क ङ ज्ञाने । इति कविकल्पद्रुमः ॥ (चुरां-
आत्मं-सकं-सेट् ।) क ङ, चेतयते । राक्षसस्य
चेतयन्ति न । इति भट्टौ गणकृतानित्यत्वमिति
रमानाथः । वस्तुतस्तु चेतयते ततश्चेतं
करोतीति
ञौ साध्यम् । इति दुर्गादासः ॥

**चित्**, स्त्री, (चित् संज्ञाने + सम्पदादित्वात् भावे
क्विप् ।) ज्ञानम् । इत्यमरः । १ । ५ । १ ॥
(यथा, भागवते । ३ । ७ । २ ।
“ब्रह्मन् कथं भगवतश्चिन्मात्रस्याविकारिणः।
लीलया चापि युज्येरन् निर्गुणस्य गुणाः
क्रियाः ॥”)

**चित्**, व्य, असाकल्यम् । इत्यमरः ॥ यथा । किञ्चित्
कश्चित् इत्यादि ॥ (तत्तु प्रत्ययविशेषः ।
कालाद्य-
निर्णये चित्प्रत्ययस्य प्रयोगो दृश्यते । “किमः
क्त्यन्ताच्चिच्चनौ ।” इति
मुग्धबोधव्याकरणप्रणेता
पूज्यपादवोपदेवाचार्य्यः ॥)

**चितः**, त्रि, (चि + कर्म्मणि क्तः ।) छन्नः । इति
मेदिनी । ते, १८ ॥ (कृतचयनः । सञ्चितः ।
“इह वै कर्म्मचितो लोकः क्षीयते एवममुत्र
पुण्यचितः क्षीयते ।” इति श्रुतेः ॥)

**चिता**, स्त्री, (चीयते श्मशानाग्निरस्यां यद्वा
चीयते उच्चीयतेऽसौ प्रेतस्य परलोकशर्म्मणे इति
।
चि + अधिकरणे वा कर्म्मणि क्तस्ततष्टाप् ।)
शवदाहाधारचुल्ली । तत्पर्य्यायः । चित्या २ ।
इत्यमरः । २ । ९ । ११७ ॥ काष्ठमठी ३ चैत्यम्
४
चिताचूडकम् ५ चित्यम् ६ । इति त्रिकाण्ड-
शेषः ॥ चितिः ७ । (यथा, महाभारते ।
३ । २१९ । १७ ।
उदाहरणम् ।
अष्टादशाङ्गुलं दैर्घ्यं विस्तारो
द्वादशाङ्गुलः ।
उच्छ्रितिस्त्र्यङ्गुला
यस्यामिष्टिकास्ताश्चितौ किल ॥
यद्विस्तृतिः पञ्चकराष्टहस्तं
दैर्घ्यञ्च यस्यां त्रिकरोच्छ्रितिश्च ।
तस्यां चितौ किं फलमिष्टिकानां
सङ्ख्या च का ब्रूहि कतिस्तराश्च ॥
इष्टिकायाः घनहस्तमानम्(३६४)चितेः
क्षेत्र-
फलम् ४० । उच्छ्रयेण गुणितं
चितेर्घनफलम् १२० ।
लब्धा इष्टिकासङ्ख्या २५६० ।
स्तरसङ्ख्या २४ ।
एवं पाषाणचयेऽपि । इति चितिव्यवहारः
॥”
इति लीलावती ॥ (इष्ट्यङ्गविशेषः ।
यथा, मार्क-
ण्डेये । २२ । ९ ।
“चितयस्तत्र कर्त्तव्या नान्तरिक्षगता
यतः ॥”)

**चितिका**, स्त्री, (चितिः काञ्चीभेदः सा इव काय-
तीति । कै + कः ।) कटिशृङ्खला । इति
हारा-
वली । २२४ ॥

**चित्तं**, क्ली, (चेतत्यनेनेति । चित् + करणे क्तः ।) अनु-
सन्धानात्मिकान्तःकरणवृत्तिः। इति
वेदान्तः ॥
“यत्तत् सत्वगुणं स्वच्छं स्वान्तं भगवतः
पदम् ।
यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकम्
॥
स्वच्छत्वमविकारित्वं शान्तत्वमिति
चेतसः ।
प्रवृत्तिलक्षणं प्रोक्तं यथापां प्रकृतिः परा
॥”

शोषिणोऽतिहितत्वम्। पटोलतः किञ्चिद्गुण-
हीनत्वञ्च। इति भावप्रकाशः॥ (यथा च हारीते
प्रथमे स्थाने दशमेऽध्याये।
"चिचिण्डो वातपित्तघ्नो बल्यः पथ्यो रुचिप्रदः।
शोषिणोऽतिहितः किञ्चिद्गुणैर्न्यूनः पटोलतः॥")

**चिञ्चा**, स्त्री, (चिं चयनं चिनोतीति। चि +
अन्येभ्योऽपीति डः।) तिन्तिडीवृक्षः। इत्य-
मरः। २। ४। ४३॥ (यथा, --
"चिञ्चादलरसञ्चानु पथ्यं दध्योदनं हितम्॥"
इति वैद्यकभैषज्यधन्वन्तरिग्रन्थे गुल्माधिकारे॥)

**चिञ्ची**, स्त्री, (चिञ्च + गौरादित्वात् ङीष्।)
गुञ्जा। इति केचित्॥

**चिञ्चाम्लं**, क्ली, (चिञ्चा तिन्तिडी तद्वत् अम्लं
यत्र।) अम्लशाकः। इति राजनिर्घण्टः॥

**चिञ्चासारः**, पुं, (चिञ्चायास्तिन्तिड्याः सार इव
सारोऽम्लं यत्र।) अम्लशाकः। इति राज-
निर्घण्टः॥

**चिञ्चोटकः**, पुं, (चिञ्चेव अटतीति। अट +
ण्वुल्। पृषोदरात् साधुः।) तृणविशेषः।
चैंच्को इति चैंच्डा इति च भाषा॥ तत्-
पर्य्यायः। अङ्कलोड्यः २। इति रत्नमाला॥
चिञ्चाटकोऽपि पाठः॥

**चिट**, प्रेषे। इति कविकल्पद्रुमः॥ (भ्वां-परं-सकं-
सेट्।) चेटति भृत्यं स्वामी। इति दुर्गादासः॥

"चिताग्नेरुद्वहन्नाज्यं पक्षाभ्यां तत् प्रवर्त्तते॥")
संहतिः। इति मेदिनी। ते, १८॥

**चिताचूडकं**, क्ली, (चितैव चूडकम्।) चिता।
इति त्रिकाण्डशेषः॥

**चितिः**, स्त्री, (चीयतेऽस्यामग्निरिति। चि + अधि-
करणे क्तिः।) चिता। (यथा, भागवते। ४। २८। ५०।
"चितिं दारुमयीं चित्वा तस्यां पत्युः कलेवरम्॥")
समूहः। इति मेदिनी। ते, १८॥ दुर्गा। यथा,
"चितिश्चैतन्यभावाद्वा चेतना वा चितिः स्मृता।
महान् व्याप्य स्थिता सर्व्वं महा वा प्रकृति-र्म्मता॥"
इति देवीपुराणे ४५ अध्यायः॥ * ॥
भित्तिस्थेष्टिकादिसङ्ख्याज्ञानार्थाङ्कविशेषः। यथा,
चितौ करणसूत्रं सार्द्धवृत्तम्।
"उच्छ्र्येण गुणितं चितेः किल
क्षेत्रसम्भवफलं धनं भवेत्।
इष्टिकाघनहृते घने चिते-
रिष्टिकापरिमितिश्च लभ्यते॥
इष्टकोच्छ्र्यहृदुच्छ्रितिश्चितेः
स्युः स्तराश्च दृषदां चितेरपि॥

इति श्रीभागवतम्॥
अस्यार्थः। "अधिभूतस्वरूपेण तस्यैव महा-
नितिसंज्ञा अध्यात्मरूपेण चित्तं उपास्यरूपेण
वासुदेवः अधिष्ठाता तु तस्य क्षेत्रज्ञः।" इति
श्रीधरस्वामी॥ (अनेनैव चिच्छक्तेः प्रथमसम्बन्धः।
अतएव भगवत्पतञ्जलिपादैरुपदिष्टं प्रथमसूत्रे
"योगश्चित्तवृत्तिनिरोधः।" तथा च मुण्डकोप-
निषदि। ३। १। ९।
"एषोऽणुरात्मा चेतसा वेदितव्यो
यस्मिन् प्राणः पञ्चधा संविवेश।
प्राणैश्चित्तं सर्व्वमोतं प्रजानां
यस्मिन् विशुद्धे विभवत्येष आत्मा॥")
मनः। इत्यमरः। १। ४। ३१॥

**चित्तप्रसन्नता**, स्त्री, (चित्तस्य प्रसन्नता प्रसादः।)
हर्षः। इति हेमचन्द्रः। २। २२९॥

**चित्तविप्लवः**, पुं, (चित्तस्य विप्लवो विपर्य्ययः।)
उन्मादः। इति हेमचन्द्रः। २। २३४॥

**चित्तविभ्रमः**, पुं, (चित्तस्य विभ्रमः भ्रान्तिः।)
उन्मादः। इत्यमरः। १। ७। २६॥ (उन्माद-
शब्दे विवृतिरस्य ज्ञेया॥)

**चित्तसमुन्नतिः**, (चित्तस्य समुन्नतिः समु-
न्नयनं उत्तेजन मति यावत्।) मानः। इत्य-
मरः। १। ७। २२॥

| | | |
|---|---|---|
| **चिट**, क प्रेषे । इति कविकल्पद्रुमः ॥ (चुरां-परं-<br>सकं-सेट् ॥)<br>**चित**, ई ज्ञाने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-<br>सकं-सेट् ।) ई, चित्तः । ज्ञानमिह जागरणम् ।<br>ज्ञानञ्च अविद्यानिद्रयाक्रान्ते जगत्येकः स चेत-<br>तीति हलायुधः । चिचेत रामस्तत् कृच्छ्रम् ।<br>इति दुर्गादासः ॥ | | |

**चित्ताभोगः**, पुं, (चित्तस्य आभोगः परिपूर्णता इत्यर्थः ।) एकस्मिन् विषये मनसः पुनः पुनः प्रवृत्तिः । तत्पर्य्यायः । मनस्कारः २ । इत्यमरः । १ । ५ । २ ॥

**चित्तोन्नतिः**, स्त्री, (चित्तस्य उन्नतिः उन्नयनम् ।) गर्व्वः । इति हेमचन्द्रः । २ । २३१ ॥

**चित्यं**, क्ली, (चीयते इति । चि + "चित्याग्निचित्ये च ।" ३ । १ । १३२ । इति कर्म्मणि यः । निपातनात्तुगागमे साधुः । यद्वा, क्यप्प्रत्ययेन पिति तुगागमः ।) चिता । इति त्रिकाण्डशेषः ॥ (तज्जाते त्रि । यथा, रामायणे । १ । ५८ । ११ ।
"चित्थमाल्याङ्गरागश्च आयसाभरणोऽभवत् ॥")

**चित्यः**, पुं, (चीयतेऽसौ इति । चि + "चित्याग्निचित्ये च ।" ३ । १ । १३२ । इति कर्म्मणि यः ।) अग्निः । इति मुग्धबोधम् ॥

**चित्या**, स्त्री, (चीयतेऽग्निरस्यां प्रेतस्य । चि + यः निपातनात् साधुः । क्यप् वा ।) चिता । इत्यमरः । २ । ९ । ११७ ॥

**चित्र**, त् क क्षणिकेक्षणे । लेख्येऽद्भुते । इति कविकल्पद्रुमः ॥ (अदन्तचुरां-परं-सकं-सेट् ।) क्षणिकेक्षणं कदाचिद्दर्शनम् । चित्रयति चित्रापयति राहुं लोकः कदाचित् पश्यतीत्यर्थः । चित्रयति प्रतिमां लोकः । इति दुर्गादासः ॥

**चित्रं**, क्ली, (चित्रयतीति । चित्र + कर्म्मणि अप् + "अमिचिमिशमिभ्यः क्त्रः ।" उणां । ४ । १६४ ।
इति क्त्रः ।) यमविशेषः । यथा, तिथ्यादितत्त्वे ।
"वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥"
कर्व्वुरवर्णः । इत्यमरटीकायां भरतः ॥ (सर्पविशेषः । यथा, महाभारते । २ । ९ । ८ ।
"कृष्णश्च लोहितश्चैव पद्मश्चित्रश्च वीर्य्यवान् ॥"
धृतराष्ट्र-पुत्त्रभेदः । यथा, तत्रैव । १ । ११७ । ४ ।
"चित्रोपचित्रौ चित्राक्षश्चारुचित्रः शरासनः ॥")
एरण्डवृक्षः । अशोकवृक्षः । चित्रकवृक्षः । इति राजनिघण्टः ॥

**चित्रकं**, क्ली, (चित्र + स्वार्थे कन् । यद्वा चित्रमिव कायति । कै + कः ।) तिलकम् । इति मेदिनी । के, ८८ ॥ (वृक्षविशेषः । यथा, गारुडे १८७ अध्याये ।
"त्रिफला चित्रकं चित्रं तथा कटुकरोहिणी ॥")

**चित्रकः**, पुं, (चित्रेण चित्र इव वा कायति । कै + कः ।) व्याघ्रः । इति हेमचन्द्रः । ४ । ३५१ ॥ व्याघ्रभेदः । चितावाध् इति भाषा । तत्पर्य्यायः । चित्रकायः २ उपव्याध्रः ३ मृगान्तकः ४ शूरः ५ क्षुद्रशार्दूलः ६ चित्रव्याध्रः ७ ॥ वृक्षविशेषः । चिता इति भाषा ॥ तत्पर्य्यायः । अग्निः २ शार्दूलः ३ चित्रः ४ पाचीकटुः ५ शिखी ६ कृशानुः ७ दहनः ८ व्यालः ९ ज्योतिष्कः १० पालकः ११ अनलः १२ दारुणः १३ वह्निः १४ पावकः १५ शम्बरः १६ पाची १७ द्वीपी १८ चित्राङ्गः १९ शूरः २० । अस्य गुणाः । अग्निसमत्वम् । पाके कटुत्वम् । शोफकफार्त्तिवातोदरार्शोग्रहणीकृमिकण्डुनाशित्वञ्च । इति राजनिर्घण्टः ॥ पाकेऽग्नितुल्यत्वम् । कुष्ठनाशित्वम् । इति राजवल्लभः ॥ (यथा, शब्दार्थचिन्तामणिधृतवचनम् ।
"चित्रकः कटुकः पाके वह्निकृत् पाचनो लघुः ।
रूक्षोष्णो ग्रहणीकुष्ठशोथार्शःकृमिकासनुत् ॥
वातश्लेष्महरो ग्राही वातार्शःश्लेष्मपित्तहृत् ।

**चित्रकरः**, पुं, (चित्रं करोतीति । कृ + टः ।) वर्णसङ्करजातिविशेषः । पटुया इति भाषा ॥ स तु शूद्रागर्भे विश्वकर्म्मौरसजातः । इति ब्रह्मवैवर्त्तपुराणम् ॥ तत्पर्य्यायः । रङ्गाजीवः २ । इत्यमरः । २ । १० । ७ ॥ रङ्गजीवकः ३ । इति शब्दरत्नावली ॥ वर्णी ४ वर्णाटः ५ चित्रकारः ६ । इति जटाधरः ॥ (यथा, आर्य्यासप्तशत्याम् । ३४५ ।
"चित्रकरतूलिकेव त्वां सा प्रतिभित्ति भावयति ॥")

**चित्रकर्म्मा**, [न्] पुं, (चित्रं कर्म्मास्य ।) तिनिशवृक्षः । इति शब्दचन्द्रिका ॥ बहुब्रीहौ आश्चर्य्यकर्म्मा चित्रकारश्च ॥

**चित्रकायः**, पुं, (चित्रो नानावर्णयुक्तः कायो देहो यस्य ।) व्याघ्रः । इति हेमचन्द्रः । ४ । ३५१ ॥ चित्रव्याघ्रः । इति राजनिर्घण्टः ॥

**चित्रकारः**, पुं, (चित्रं करोतीति । कृ + "कर्म्मण्यण् ।" ३ । २ । १ । इत्यण् ।) चित्रकरः । (यथा, महाभारते । १ । १२८ । ४० ।
"संमार्ज्जितं सौधकारैश्चित्रकारैश्च चित्रितम् ॥")
अस्य उत्पत्तिविवृतिर्यथा, पराशरपद्ध्वतौ ।
"स्थपतेरपि गान्धिक्यां चित्रकारो व्यजायत ॥"

**चित्रकूटः**, पुं, (चित्राणि कूटानि शृङ्गाणि यस्य ।)

यद्वा, चीयते इति । “अमिचिमिशमिभ्यः क्त्रः ।”
उणां ४ । १६४ । इति क्त्रः ।) तिलकम् ।
आलेख्यम् । (यथा, पञ्चदश्याम् । ६ । ५ ।
“उत्तमाधमभावेन वर्त्तन्ते पटचित्रवत् ॥”)
अद्भुतम् । (यथा, रामायणे । १ । १० ।
“चित्रं संक्रीडमानास्ताः
क्रीडनैर्व्विविधैस्तथा ॥”)
कर्व्वुरवर्णः । (यथा, माघे । १ । ८
“निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा ॥”)
तद्युक्ते त्रि । इति मेदिनी । रे, २५ ॥
(अल-
ङ्कारविशेषः । यथा, --
“तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता ।”
सन्निवेशविशेषेण यत्रन्यस्ता वर्णाः
खड्गमुरज-
पद्माकारमुल्लासयन्ति तच्चित्रं काव्यम् ॥ * ॥
अष्टिसंज्ञकषोडशाक्षरावृत्तिच्छन्दोभेदः ।
तल्ल-
क्षणं यथा, छन्दोमञ्जर्य्याम् ।
“चित्रसंज्ञमीरितं समानिकापदद्वयन्तु ।”
उदाहरणं यथा, --
“विद्रुमारुणाधरोष्ठशोभिवेणुवाद्यहृष्ट-
वल्लवीजनाङ्गसङ्गजातमुग्धकण्टकाङ्ग! ।
त्वां सदैव वासुदेव ! पुण्यलभ्यपाद ! देव !
वन्यपुष्पचित्रकेश ! त्वां स्मरामि गोपवेश ! ॥”)
आकाशः । कुष्ठविशेषः । इति हेमचन्द्रः । ६ । ३४ ॥
(आश्चर्य्यान्विते, त्रि । यथा, महाभारते । १ ।
१ । ३ ।
“चित्राः श्रोतुं कथास्तत्र
परिवव्रुस्तपस्विनः ॥”)

**चित्रः**, पुं, (चित्रयति पापपुण्ये विचार्य्य चित्रं

करोति लिखतीत्यर्थः । चित्र + णिच् + अच् ।
विचित्रं चैत्रकं शाकं काशमर्द्दविमर्द्दितम् ॥
तप्ततैले सवाह्लीके पाचितं तक्रसम्भृतम् ॥”
ओषधिविशेषः । यथा, सुश्रुते सूत्रस्थाने
३६ अध्याये ।
“पूतिकश्चित्रकः पाठा विडङ्गैलाहरेणवः ॥”)
एरण्डवृक्षः । इत्यमरः । २ । ४ । ५१ ॥ (चित्र
+ क्वुन् ।) चित्रकारः । इति हेमचन्द्रः ॥
(मुचुकुन्दः । यथा, भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ।
मुचुकुन्दः क्षत्रवृक्षश्चित्रकः प्रतिविष्णुकः ॥”
अस्य गुणः । शिरःपीडापित्तास्रविषनाशित्वञ्च॥)

**चित्रकण्ठः**, पुं, (चित्रः चित्रितः कण्ठोऽस्य ।)

कपोतः । इति जटाधरः ॥ (कपोतशब्देऽस्य
विवृतिर्व्याख्याता ॥)

**चित्रकम्बलः**, पुं, (चित्रश्चासौ कम्बलश्चेति ।)

कम्बलविशेषः । दुलिचा गालिचा इत्यादि
भाषा ॥ यथा, उणादिकोषे ।
“कुथः स्त्रीपुंसयोश्चित्रकम्बले पुंसि वर्हिषि ॥”

पर्व्वतविशेषः । इति शब्दरत्नावली ॥ पुरा
रामो वनं गत्वा प्रथमे यत्र
वासमकरोत् ।
(पर्व्वतोऽयं
प्रयागक्षेत्रस्थभरद्वाजाश्रमात् सार्द्ध-
योजनद्वयेऽतीते पार्श्वगताया
मन्दाकिन्या-
ख्याया सरितो दक्षिणतो राजते ।
यदुक्तं रामा-
यणे । २ । ९२ । १० -- १२ ।
“भरतार्द्धतृतीयेषु योजनेष्वजने वने ।
चित्रकूटगिरिस्तत्र रम्यनिर्द्दरकाननः ॥
उत्तरं पार्श्वमासाद्य तस्य
मन्दाकिनी नदी ।
पुष्पितद्रुमसंछन्ना
रम्यपुष्पितकानना ॥
अनन्तरं तत्सरितश्चित्रकूटञ्च
पर्व्वतम् ।
तयोः पर्णकुटीं तात ! तत्र तौ वसतो
ध्रुवम् ॥”)
अघुना वुन्देलखण्डाख्यदेशे काम्ता इति
ख्यातः ॥ (अयं हि पीठस्थानेषु
अन्यतमः ।
अत्र च भगवती सीतारूपेण
महादेवश्चन्द्र-
चूडरूपेण घिराजते । यथा,
देवीभागवते ।
७ । ३० । ७० ।
“चित्रकूटेतथा सीता विन्ध्ये
विन्ध्याधिवासिनी ॥”
तथा, महालिङ्गेश्वरतन्त्रे ।
“चित्रकूटे चन्द्रचूडो योगेन्द्रो
विन्ध्यपर्व्वते ॥”)

**चित्रकृत्**, पुं, (चित्रं नानावर्णं करोतीति । कृ +

क्विप् ।) तिनिशवृक्षः । इत्यमरः ।
२ । ४ । २७ ॥

| यद्वा चीयन्ते उपचीयन्ते प्रेतलोका येन । चि | | (चित्रमालेख्यं करोतीति ।) चित्रकरः । इति हलायुधः ॥ **चित्रकोलः**, पुं, (चित्रो विचित्रः कोल क्रोडदेशो यस्य ।) अञ्जनिका । इति त्रिकाण्डशेषः ॥ **चित्रगन्धं**, क्ली, (चित्रो विचित्रो गन्धो यस्य ।) हरितालम् । इति राजनिर्घण्टः ॥ **चित्रगुप्तः**, पुं, (गुप रक्षणे + भावे क्तः । चित्राणां जीवकृतपापपुण्यादिविचित्राणांगुप्तं गोपनं |
|---|---|---|

रक्षणं यस्मात् । यद्वा, चित्रंविचित्रं गुप्तं धर्म्मस्य
रक्षणं यस्य ।) चतुर्द्दशयमान्तर्गतयमः । तस्य
लेखकः । इति मेदिनी । ते, १९८ ॥ तस्योत्-
पत्तिर्यथा, --
"ब्रह्मपादांशतः शूद्रमसीशौ द्वौ बभूवतुः ।
एको मसीशः सर्व्वाख्यः सर्व्वाणीहृदयद्विजात् ॥
कुलप्रदीपः स्वीयानां जातीनां पूततास्पृहः ।
वगलेति महाविद्यां गृहीत्वा साधयन् मुदा ॥
सर्व्वाणीहृदयाख्यस्य पण्डितस्य प्रसादतः ।
वरं याचितवान् भक्त्या त्रिलोकाधिपतिं, गुरो ! ॥
कृपया कुरु मां नाथ ! त्वमेव वगला मम ।
गुरुणापि वरो दत्तो राज्यं भुक्त्वा पुनर्भवान् ॥
त्रिलोकाधिपतिर्भूत्वा मुदा तत्र सुखिष्यति ।
गुर्व्वाज्ञया मसीशः स राज्यभोगी द्विजार्च्चनात् ॥
विहाय देहं भूयश्च त्रिधारूपो बभूव ह ।
चित्रगुप्तश्चित्रसेनश्चित्राङ्गद इति त्रयः ॥
स्वर्गे मर्त्ये च पाताले राजते चिरमुत्तमः ।
चित्रगुप्तो महाविद्यां प्राप्य कुल्लाख्यविप्रतः ॥
पुत्रान् याचितवान्नैव गुरोर्देवत्वमावहन् ।
यमान्तिस्थो बभूवापि स्वर्मर्त्याधोविवेचकः ॥
चिरं शुभाशुभं कर्म्म विविच्य शमनान्तिके ।
यद्वदेत् सकलानान्तु तदेवाभोजयेद्यमः ॥"
इत्याचारनिर्णयतन्त्रम् ॥
अस्योत्पत्त्यन्तरं कायस्थशब्दे द्रष्टव्यम् ॥

**चित्रजल्पः**, पुं, (चित्रो मनोहरो जल्पः ।) वाक्य-
विशेषः । तल्लक्षणादिर्यथा, --
"प्रेष्ठस्य सुहृदा लोके गूढरोषाभिजृम्भितः ।
भूरिभावमयो जल्पो यस्तीव्रोत्कण्ठितान्तिमः ॥
चित्रजल्पो दशाङ्गोऽयं प्रजल्पः परिजल्पितम् ।
अघद्विषि कटाक्षोक्तिर्व्विजल्पो विदुषां मतः ॥
यथा, --
किमिह बहु षडङ्घ्रे ! गायसि त्वं यदूना-
मधिपतिमगृहाणामग्रतोनः पुराणम् ।
विजयसखसखीनां गीयतां तत्प्रसङ्गः
क्षपितकुचरुजस्ते कल्पयन्तीष्टमिष्टाः ॥ ३ ॥
अथोज्जल्पः ।
हरेः कुहकताख्यानं गर्व्वगर्भितयेर्ष्यया ।
सासूयश्च तदाक्षेपो धीरैरुज्जल्प ईर्य्यते ॥
यथा, --
दिवि भुवि च रसायां काः स्त्रियस्तद्दुरापाः
कपटरुचिरहासभ्रूविजृम्भस्ययाः स्युः ।
चरणरज उपास्ते यस्य भूतिर्व्वयं का
अपि च कृपणपक्षे ह्युत्तमश्लोकशब्दः ॥ ४ ॥
अथ संजल्पः ।
सोल्लुण्ठया गहनया कयाप्याक्षेपमुद्रया ।
तस्याकृतज्ञताद्युक्तिः संजल्पः कथितो बुधैः ॥
यथा, --
विसृज शिरसि पादं वेद्म्यहं चाटुकारै-
रनुनयविदुषस्तेऽभ्येत्य दौत्यैर्मुकुन्दात् ।
स्वकृत इह विसृष्टापत्यपत्यन्यलोका
व्यसृजदकृतचेताः किन्नु सन्धेयमस्मिन् ॥ ५ ॥
अथ अवजल्पः ।
हरौ काठिन्यकामित्वधौर्त्त्यादासक्त्ययोग्यता ।
यत्र सेर्ष्य भियेवोक्ता सोऽवजल्पः सतां मतः ॥
यथा, --
मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्म्मा
स्त्रियमकृतविरूपां स्त्रीजितः कामयानाम् ।
बलिमपि बलिमत्त्वाऽवेष्टयद्ध्वाङ्क्षवद्य-
स्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः ॥ ६ ॥
अथाभिजल्पितम् ।
भङ्ग्या त्यागौचितं तस्य खगानामपि खेदनात् ।
यत्र सानुशयं प्रोक्तं तद्भवेदभिजल्पितम् ॥
नयसि कथमिहास्मान् दुस्त्यजद्वन्द्वपार्श्वं
सततमुरसि सौम्य ! श्रीबधूः साकमास्ते ॥ ९ ॥
अथ सुजल्पः ।
यत्रार्जवात् सगाम्भीर्य्यं सदैन्यं सहचापलम् ।
सोत्कण्ठञ्च हरिः पृष्टः स सुजल्पो निगद्यते ॥
यथा, --
अपि घत !
मधुपुर्य्यामार्य्यपुत्रोऽधुनास्ते
स्मरति स पितृगेहान् ! सौम्यबन्धूश्च गोपान् ।
क्वचिदपि स कथां नः किङ्करीणां गृणीते
भुजमगुरुसुगन्धं मूद्र्ध्न्यधास्यत् कदा नु ॥" १० ॥
इत्युज्ज्वलनीलमणौ स्थायिभावः ॥

**चित्रतण्डुलं**, क्ली, (चित्रो विचित्रस्तण्डुलो यस्य ।)
विडङ्गम् । इति रतमाला ॥

**चित्रतण्डुला**, स्त्री, (चित्रो नानावर्णस्तण्डुलो
यस्याः ।) विडङ्गम् । इत्यमरः । २ । ४ । १०६ ॥
(यथास्याः पर्य्यायाः ।
"पुंसि क्लीवे विडङ्गः स्यात् कृमिघ्नो जन्तुनाशनः ।
तण्डुलश्च तथा वेल्लममोघा चित्रतण्डुला ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**चित्रत्वक्**, [च्] पुं, (चित्रा विचित्रा त्वक्
यस्य ।) भूर्जवृक्षः । इति राजनिर्घण्टः ॥

**चित्रदण्डकः**, पुं, (चित्रो विचित्रो दण्डो यस्य ।

विजल्पो
जल्पसंजल्पाववजल्पोऽभिजल्पितम्॥
आजल्पः प्रतिजल्पश्च सुजल्पश्चेति
कीर्त्तितः ।
एष भ्रमरगीताख्यो दशमे प्रकटीकृतः ॥
असङ्ख्यभाववैचित्री चमत्कृतिसुदुस्तरः ।
अपि चेच्चित्रजल्पोऽयं मनाक् तदपि कथ्यते
॥
तत्र प्रजल्पः ।
असूयेर्ष्यामदयुजा योऽवधीरणमुद्रया ।
प्रेयस्याकौशलोद्गारः प्रजल्पः स तु कीर्त्त्यते
॥
यथा, --
मधुप ! कितवबन्धो ! मा स्पृशाङ्घ्रिं
सपन्त्याः
कुचविलुलितमालाकुङ्कुमश्मश्रुभिर्नः ।
वहतु मधुपतिस्तन्मानिनीनां प्रसादं
यदुसदसि विडम्ब्यं यस्य दूतस्त्वमीदृक् ॥
१ ॥
अथ परिजल्पितम् ।
प्रभोर्निर्दयताशाठ्यचापलाद्युपपादनात्।
स्वविचक्षणताव्यक्तिर्भङ्ग्यास्यात्
परिजल्पितम् ॥
यथा, --
सकृदधरसुधां स्वां मोहिनीं पाययित्वा
सुमनस इव सद्यस्तत्यजेऽस्मान् भवादृक् ।
परिचरति कथं तत्पादपद्मं नु पद्मा
अपि वत हृतचेता ह्युत्तमश्लोकजल्पैः ॥ २
॥
अथ विजल्पः ।
व्यक्तयासूयया गूढमानमुद्रान्तरालया ।

यथा, --
यदनुचरितलीलाकर्णपीयूषविप्रुट्-
सकृददनविधूतद्वन्द्वधर्म्मा विनष्टाः ।
सपदि गृहकुटुम्बं दीनमुत्सृज्य धीरा
बहव इव विहङ्गा भिक्षुचर्य्यां चरन्ति ॥ ७ ॥
अथ आजल्पः ।
ज्यैह्म्यं तस्यार्त्तिदत्वञ्च निर्व्वेदाद्यत्र
कीर्त्तितम् ।
भङ्ग्यान्यसुखदत्वञ्च स आजल्प उदीरितः
॥
यथा, --
वयमृतमिव जिह्मव्याहृतं श्रद्दधानाः
कुलिकरुतमिवाज्ञाः कृष्णबध्वो हरिण्यः ।
ददृशुरसकृदेतत्तन्नखस्पर्शतीव्र-
स्मररुजमुपमन्त्रिन्! भण्यतामन्यवार्त्ता ॥ ८
॥
अथ प्रतिजल्पः ।
दुस्त्यजद्वन्द्वभावेऽस्मिन् प्राप्तिनर्हेत्यनुद्धतम्
।
दूतसंमाननेनोक्तं यत्र स प्रतिजल्पकः ॥
यथा, --
"प्रियसख ! पुनरागाः प्रेयसा प्रेषितः किं
वरय किमनुरुन्धे माननीयोऽसि मेऽङ्ग ! ।

इति कप् ।) ओलवृक्षः । इति
रत्नमाला ॥

**चित्रदेवी**, स्त्री, (चित्रं दीव्यतीति । दिव् + अच्
।
गौरादित्वात् ङीष् ।) महेन्द्रवारुणी ।
इति
राजनिर्घण्टः ॥

**चित्रनेत्रा**, स्त्री, (चित्रे मनोज्ञे नेत्रे यस्याः ।)
सारिकापक्षी । इति हारावली । ८९
॥

**चित्रपक्षः**, पुं, (चित्रौ विचित्रौ पक्षौ यस्य ।)
तित्तिरिपक्षी । इति जटाधरः ॥

**चित्रपत्रिका**, स्त्री, (चित्राणि विचित्राणि पत्राणि
पर्णाणि यस्याः । कापि अत इत्वम्
।) कपित्थ-
पर्णीवृक्षः । इति रत्नमाला ॥
द्रोणपुष्पी ।
इति राजनिर्घण्टः ॥

**चित्रपत्री**, स्त्रीं, (चित्राणि पत्राणि यस्याः ।
गौरादित्वात् ङीष् ।) जलपिप्पली ।
इति
राजनिर्घण्टः ॥

**चित्रपदा**, स्त्री, (चित्रं पदं यस्याः ।) गोधा-
पदीलता । इति शब्दमाला ॥
छन्दोभेदः ।
इति छन्दोमञ्जरी ॥ अस्य लक्षणादि
छन्दःशब्दे
द्रष्टव्यम् ॥ (चित्रं पदं वस्तुविन्यासो
यस्य यत्र वा
इति विग्रहे विचित्रपदयुक्ते त्रि । यथा,
महा-
भारते । ३ । ३१ । १ ।
"वल्गु चित्रपदं श्लक्ष्णं याज्ञसेनि !
त्वया वचः ।
उक्तं तत् श्रुतमस्माभिर्नास्तिक्यन्तु
प्रभाससे ॥")

**चित्रपर्णिका**, स्त्री, (चित्राणि पर्णाणि पत्राणि

| | | |
|---|---|---|
| | | यस्याः । कापि अत इत्वम् ।)<br>चित्रपर्णीभेदः ।<br>तत्पर्य्यायः । दीर्घा २ शृगालविन्ना ३<br>त्रिपर्णी ४<br>सिंहपुच्छिका ५ दीर्घपत्रा ६<br>अतिगुहा ७<br>घृष्ठिला ८ । इति रत्नमाला ॥<br>**चित्रपर्णी**, स्त्री, (चित्राणिं पर्णाणि यस्याः ।<br>गौरादित्वात् ङीष ।) पृश्निपर्णी ।<br>इत्यमरः । |

२ । ४ । ९२ ॥ कर्णस्फोटालता ।
जलपिप्पली ।
द्रोणपुष्पी । इति राजनिर्घण्टः ॥
मञ्जिष्ठा ।
इति रत्नमाला ॥ (यथास्याः पर्य्यायाः
।
"मञ्जिष्ठा विकसा जिङ्गी काला
योजनपर्ण्यपि ।
ताम्रवल्ली चित्रपर्णी काण्डीरी
रक्तयष्टिका ॥"
इति वैद्यकरत्नमालायाम् ॥)

**चित्रपादा**, स्त्री, (चित्रौ पादौ यस्याः ।) सारिका-

पक्षी । इति हारावली । ८९ ॥

**चित्रपिच्छकः**, पुं, (चित्राणि पिच्छानि पुच्छ-

कानि यस्य । ततः कप् ।) मयूरः । इति
राजनिर्घण्टः ॥

**चित्रपुङ्खः**, पुं, (चित्रः पुङ्खो यस्य ।) शरः । इति

त्रिकाण्डशेषः ॥

**चित्रपुष्पी**, स्त्री, (चित्राणि पुष्पाणि यस्याः ।

स्त्रियां ङीप् ।) अम्बष्ठा । इति
राजनिर्घण्टः ॥
(विवरणमम्बष्ठाशब्देऽस्या ज्ञेयम् ॥)

**चित्रपृष्ठः**, पुं, (चित्रं नानावर्णं पृष्ठं यस्य ।)

कलविङ्कपक्षी । इति हारावली । ८९ ॥

**चित्रफलः**, पुं, (चित्रं फलं फलकं तद्वदाकृति-

र्विद्यतेऽस्य । अच् ।) मत्स्यविशेषः ।
चितल
इति भाषा ॥ अस्य गुणाः । गुरुत्वम् ।
स्वादु-
त्वम् । स्निग्धत्वम् । वृष्यत्वम् ।
बलप्रदत्वञ्च । इति
राजवल्लभः ॥

**चित्रफलकः**, पुं, (चित्रफल + स्वार्थे कन् ।)
चित्र-

फलमत्स्यः । इति भूरिप्रयोगः ॥

पर्य्यायः । गन्धर्व्वराजः २ अङ्गारपर्णः ३
कुवेर-
सखः ४ दग्धरथः ५ । (यथा, महाभारते ।
१ ।
१७१ । ३७ -- ३९ ।
गन्धर्व्व उवाच ।
"जितोऽहं पूर्ब्बकं नाम मुञ्चाम्यङ्गारपर्णताम्
।
न च श्लाघे बलेनाङ्ग ! न नाम्ना
जनसंसदि ॥
साध्विमं लब्धवाँल्लाभं योऽहं
दिव्यास्त्रधारिणम् ।
गान्धर्व्व्या माययेच्छामि
संयोजयितुमर्ज्जुनम् ॥
अस्त्राग्निना विचित्रोऽयं दग्धोमे रथ उत्तमः
।
सोऽहं चित्ररथो भूत्वा नाम्ना
दग्धरथोऽभवम् ॥")
स तु मुनिनाम्न्यां दक्षकन्यायां
कश्यपौरसा-
ज्जातः । इति महाभारते । १ । ६५ । ४३
॥

**चित्रलः**, पुं, (चित्रमाश्चर्य्यं लातीति । ला + कः ।)

कर्व्वुरवर्णः । तद्वति त्रि । इति
शब्दरत्नावली ॥

**चित्रलता**, स्त्री, (चित्रा नानावर्णा लता ।)

मञ्जिष्ठा । इति राजनिर्घण्टः ॥

**चित्रला**, स्त्री (चित्रल + "अजाद्यतष्टाप् ।" ४ ।

१ । ४ । इति टाप् ।) गोरक्षीवृक्षः । इति
राजनिर्घण्टः ॥

**चित्रलेखा**, स्त्री, (चित्रो लेखो लेखनशक्तिर्यस्याः ।

चित्रं लेखयतीति वा । लिख + "कर्म्मण्यण्
।"
३ । २ । १ । इत्यण् ।
चित्रलेखनदक्षतयास्या-
स्तथात्वम् ।) अप्सरोविशेषः । सा
ऊषायाः

**चित्रवल्लिकः**, पुं, (चित्रा विचित्रा वल्लिर्लता । सा

इव कायतीति । कै + कः ।) वदालमत्स्यः ।
इति हेमचन्द्रः । ४ । ४११ ॥

**चित्रवल्ली**, स्त्री, (चित्रा विचित्रा वल्ली लता

यस्याः ।) मृगेर्व्वारुः । महेन्द्रवारुणी । इति
राजनिर्घण्टः ॥

**चित्रवीर्य्यः**, पुं, (चित्रमाश्चर्य्यजनकं वीर्य्यमस्य ।)

रक्तैरण्डः । इति राजनिर्घण्टः ॥

**चित्रशिखण्डिजः**, पुं, (चित्रशिखण्डिनोऽङ्गिरसो

मुनेर्ज्जायते इति । जन + डः ।) बृहस्पतिः ।
इत्यमरः । १ । ३ । २४ ॥

**चित्रशिखण्डिप्रसूतः**, पुं, (चित्रशिखण्डिनोऽङ्गि-

रसः प्रसूतः सन्ततिः ।) बृहस्पतिः । इति
हलायुधः ॥

**चित्रशिखण्डी**, [न्] पुं, (चित्रः शिखण्डः शिखा

अस्त्यस्य । "अत इनिठनौ ।" ५ । २ ।
११५ ।
इति इनिः ।) सप्तर्षयः । इत्यमरः । १ । ३ ।
२७ ॥
यथाह भरतः ।
"मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः
।
वशिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः
॥"
(यथाच, महाभारते । १२ । ३३५ । २६ --
२८ ।
"ये हि ते ऋषयः ख्याताः सप्त
चित्रशिखण्डिनः ।
तैरेकमतिभिर्भूत्वा यत् प्रोक्तं शास्त्रमुत्तमम् ॥
वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ ।
आस्यैः सप्तभिरुद्गीर्णं लोकधर्म्ममनुत्तमम् ॥
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
वशिष्ठश्च महातेजास्ते हि चित्रशिखण्डिनः
॥")

**चित्रसर्पः**, पुं, (चित्रः नानावर्णरञ्जितः सर्पः ।)

**चित्रफला**, स्त्री, (चित्राणि फलानि यस्याः ।)

चिर्भिटा । मृगेर्व्वारुः । लिङ्गिनी । महेन्द्र-
वारुणी । वार्त्ताकी । कण्टकारी । इति राज-
निर्घण्टः ॥ मत्स्यविशेषः । फलै इति भाषा ॥
तत्पर्य्यायः । राजग्रीवः २ फलकी ३ महो-
न्मदः ४ । इति शब्दरत्नावली ॥

**चित्रभानुः**, पुं, (चित्रा नानावर्णा भानवो रश्मयो

यस्य ।) अग्निः । (यथा, महाभारते । २ । ३१ । ४२ ।
"चित्रभानुः सुरेशश्च अनलस्त्वं विभावसो ! ॥")
सूर्य्यः । इति मेदिनी । ने, १८३ ॥ चित्रकवृक्षः ।
अर्कवृक्षः । वह्निसंज्ञक इति अर्काह्व इति
चामरदर्शनात् ॥ भैरवः । इति शब्दरत्नावली ॥
(वर्षविशेषः । यथा, बृहत्संहितायाम् । ८ । ३५ ।
"श्रेष्ठं चतुर्थस्य युगस्य पूर्ब्बं
यच्चित्रभानुं कथयन्ति वर्षम् ॥")

**चित्रभेषजा**, स्त्री, (चित्रं भेषजं यस्याः ।) काको-

दुम्बरिका । इति राजनिर्घण्टः ॥

**चित्रमेखलः**, पुं, (चित्रा विचित्रा मेखला यस्य ।)

मयूरः । इति त्रिकाण्डशेषः ॥

**चित्रयोधी**, [न्] पुं, अर्ज्जुनवृक्षः । इति राज-

निर्घण्टः ॥ (चित्रं यथा स्यात् तथा युध्यतीति ।
युध + णिनिः ।) पार्थः ॥ (चित्रयुद्धशीले,
त्रि । यथा, महाभारते । १ । १ । १८६ ।
"यदा द्रोणो विविधानस्त्रमार्गा-
न्निदर्शयन् समरे चित्रयोधी ॥")

सखी कुम्भाण्डस्य कन्या । यथा, हरिवंशे ।
१७४ । ७४ -- ७५ ।
"उवाच रुदतीञ्चैव कुम्भाण्डतनया सखीम् ।
कुशला ते विशालाक्षि ! सर्व्वथा सन्धिविग्रहे ॥
अप्सराश्चित्रलेखा वै क्षिप्रं विज्ञाप्यतां सखि ! ॥"
यथा, श्रीभागवते । १० । ६२ । १४ ।
"बाणस्य मन्त्री कुम्भाण्डश्चित्रलेखा च तत्सुता ।
सख्यपृच्छत् सखीमूषां कौतूहलसमन्विता ॥"
(अस्याश्चित्रलेखनपटुत्वकथा यथा हरिवंशे ।
१७४ । ८० -- ८८ ।
"चित्रलेखाऽब्रवीद्वाक्यमूषां हर्षयती शनैः ॥"
"देवदानवयक्षाणां गन्धर्व्वोरगरक्षसाम् ।
ये विशिष्टाः प्रभावेण रूपेणाभिजनेन च ॥
यथा प्रधानतः सर्व्वानालिखिष्याम्यहं सखि ! ।
मनुष्यलोके ये चापि प्रवरा लोकविश्रुताः ॥
सप्तरात्रेण ते भीरु ! दर्शयिष्याम्यहं प्रियम् ।
ततो विज्ञाय पट्टस्थं भर्त्तारं प्रतिलप्स्यसे ॥
सा चित्रलेखया प्रोक्ता ऊषा हितचिकीर्षया ।
क्रियतामेवमित्याह चित्रलेखां सखीं प्रति ॥
ततः कुशलहस्तत्वात् यथा लेख्यं समन्ततः ।
इत्युक्त्वा सप्तरात्रेण कृत्वा लेख्यगतांस्तु तान् ॥
चित्रपट्टगतान् मुख्यानानयामास शोभना ॥")
छन्दोविशेषः । इति छन्दोमञ्जरी ॥ अस्य विव-
रणं छन्दःशब्दे द्रष्टव्यम् ॥

**चित्रलोचना**, स्त्री, (चित्रे लोचने यस्याः ।)

मालुधानसर्पः । इति शब्दरत्नावली ॥

**चित्रसेनः**, पुं, ब्रह्मपादजमसीशाख्यकायस्थस्यचित्र-

गुप्तादित्रितयान्तर्गतमूर्त्तविशेषः । स तु मर्त्य-
लोकविवेचकः । यथा, --
"चित्रसेने महाविद्यां वगलेति गुरोर्नयन् ।
जप्त्वा सन्तोष्य पुत्त्रादीन् याचित्वा प्राप्य मर्त्यतः ॥
राज्यं चकार सूद्युक्तश्चित्राङ्गद अधो गतः ॥"
इत्याचारनिर्णयतन्त्रम् ॥
(चित्रा सेना यस्य । गन्धर्व्वविशेषः । यथा,
महाभारते । २ । १० । २५ ।
"चित्रसेनश्च गीतज्ञस्तथा चित्ररथोऽपि च ।
एते चान्ये च गन्धर्व्वा धनेश्वरमुपासते ॥"
धृतराष्ट्रपुत्त्रविशेषः । यथा, महाभारते । १ ।
९५ । ५७ । "तेषां धृतराष्ट्रस्य पुत्त्राणां चत्वारः
प्रधाना बभूवुः । दुर्य्योधनो दुःशासनो विकर्ण-
श्चित्रसेनश्चेति ॥" पूरुवंशीयस्य परिक्षितः पुत्त्रा-
णामन्यतमः । यथा, महाभारते । १ । ९४ । ५२ ।
"परिक्षितोऽभवन् पुत्त्राःसर्व्वे धर्म्मार्थकोविदाः ।
कक्षसेनोग्रसेनौ च चित्रसेनश्च बीर्य्यवान् ॥"
शम्बरासुरस्य पुत्त्रविशेषः । यथा, हरिवंशे ।
१६१ । ४३ ।
"चित्रसेनोऽतिसेनश्च विश्वक्सेनजितस्तथा ॥"
नरिष्यन्तपुत्त्रः । यथा, भागवते । ९ । २ । १९ ।
"चित्रसेनो नरिष्यन्तात्दक्षस्तस्यसुतोऽभवत् ॥")

| | | |
|---|---|---|
| **चित्ररथः**, पुं, (चित्रो रथो यस्य ।) सूर्य्यः । गन्धर्व्वविशेषः । इति मेदिनी । थे, २८ ॥ शेषस्य | सारिकापक्षी । इति जटाधरः भूरिप्रयोगश्च ॥ **चित्रवदालः**, पुं, (चित्रवत् आ समन्तादलति पर्य्याप्नोतीति । आ + अल + अच् ।) पाठीन-मत्स्यः । इति जटाधरः ॥ | |

**चित्रा**, स्त्री, (चित्रयति चित्रकर्म्म करोति सर्व्व-
गुणैः शोभते इति वा । चित्र + अच् + टाप् ।) श्रीकृष्णसखीविशेषः । यथा, उज्वलनीलमणौ ।
"परमप्रेष्ठसख्यस्तु ललिता सविशाखिका ।
सचित्रा चम्पकलता तुङ्गविद्येन्दुलेखिका ।
रङ्गदेवी सुदेवी चेत्यष्टौ सर्व्वगुणाग्रिमाः ॥"
अस्याः कुञ्जः श्रीकुण्डस्य पूर्ब्बस्यां आनन्द-
सुखदो नाम । वयः अष्टमासाधिकत्रयोदश-
वत्सरम् । वर्णो गौरः । अस्या वस्त्रं जाती-
पुष्पतुल्यम् । कर्म्म चित्रम् । इति गोस्वामि-
ग्रन्थः ॥ * ॥ मूषिकपर्णी । गोडुम्बा । सुभद्रा ।
दन्तिका । (पर्य्याया यथा, वैद्यकरत्नमालायाम् ।
"चित्रा दन्ती निकुम्भः स्यादुपचित्रा मुकूलकः ।
दाक्षायणी विशल्या च तथोडुम्बरपर्ण्यपि ॥")
माया । सर्पभेदः । नदीविशेषः । इति मेदिनी ॥
अपसरोविशेषः । इति हेमचन्द्रः ॥ अश्वि-
न्यादिसप्तविंशतिनक्षत्रान्तर्गतचतुर्द्दशनक्षत्रम् ।
तत्तु मुक्तावदुज्वलं एकतारकामयम् ।
अस्य अधिष्ठात्री देवता विश्वकर्म्मा । यथा, --
"एकमौक्तिकसमुज्वलप्रभे
त्वष्टरीन्दुवदने खमध्यगे ।"
इति कालिदासः ॥
तत्र जातस्य फलं यथा, कोष्ठीप्रदीपे ।
"प्रतापसन्तापितशत्रुपक्षो
दक्षो नये चापि विचित्रवासाः ।
प्रसूतिकाले यदि यस्य चित्रा
बुद्धिर्विचित्रा खलु तस्य शास्त्रे ॥"
मृगेर्व्वारुः । (यथा, चरके सूत्रस्थाने । १३ अः ।
"तिलः पियालाभिषुकौ विभीतका-
श्चित्राभयैरण्डमधूकसर्षपाः ।
कुसुम्भविल्वारुकमूलकातसी
निकोठकाक्षोडकरञ्जशिग्रुजाः ॥
स्नेहाशयाः स्थावरसंज्ञितास्तथा
स्युर्ज्जङ्गमा मत्स्यमृगाः सपक्षिणः ॥")
गण्डदूर्व्वा । सुतश्रेणी । मञ्जिष्ठा । इति राज-
"चित्राङ्गो वातशमनो बृंहणो बलकृन्मतः ।
श्लेष्मलः कथितो वापि दुर्ज्जरो मेदवर्द्धकः ॥"
इति हारीते प्रथमे स्थाने एकादशेऽध्याये ॥
धृतराष्ट्रपुत्त्राणामन्यतमः । यथा, महाभारते ।
१ । ११७ । ६ ।
"अयोबाहुर्महाबाहुश्चित्राङ्गश्चित्रकुन्तलः ॥")

**चित्राङ्गदः**, पुं, चन्द्रवंशीयराजविशेषः । स तु
शान्तनुराजपुत्त्रः । विचित्रवीर्य्यभ्राता । (अयन्तु
शान्तनुराजस्य स्वर्गगमनानन्तरं राज्यं लब्ध्वा
ऐश्वर्य्यवीर्य्यमदेन शूरान् सर्व्वान् तृणवदमन्यत ।
अथ कदाचित् गन्धर्व्वराजचित्ररथः युद्धार्थमेन-
मभ्ययात् । ततः कुरुक्षेत्रमध्ये प्रवृत्ते महति
युद्धे समधिकमायाबलेनानेन गन्धर्व्वराजेन
निहतोऽयं कौरवप्रवीरः । इत्येषा कथा महा-
भारते । १ । १०१ । अध्याये द्रष्टव्या ॥) गन्धर्व्व-
विशेषः । इति महाभारतम् ॥ (यथा, देवी-
भागवते । १ । २० । २२ ।
"चित्राङ्गदस्तु गन्धर्व्वो दृष्ट्वा तं मार्गगं नृपम् ।
उत्ततारान्तिकं भूमेर्विमानवरमास्थितः ॥")
ब्रह्मपादजमसीशाख्यकायस्थस्य चित्रगुप्तादि-
त्रितयान्तर्गतमूर्त्तविशेषः । स अधोलोकविवे-
चकः । तस्याधोगमनकारणं यथा, --
"अधोगतस्य हेतुत्वं वगले ! शृणु कालिके ! ।
वगलेति मनुं प्राप्य विप्रः स्यामिति वाञ्छया ॥
"तस्य चित्राङ्गदा नाम दुहिता चारुदर्शना ॥")

**चित्राङ्गदसूः**, स्त्री, (चित्राङ्गदं सूते प्रसूते इति ।
सू ङ प्रसवे + क्विप् ।) सत्यवती । सा व्यास-
माता । इति त्रिकाण्डशेषः ॥

**चित्राङ्गी**, स्त्री, (चित्रमङ्गं यस्याः । स्त्रियां ङीप् ।)
मञ्जिष्ठा । कर्णजलौकाः । इति राजनिर्घण्टः ॥

**चित्राटीरः**, पुं, (चित्रां नक्षत्रविशेषं अटतीति ।
अट गतौ + बाहुलकात् ईरच् ।) चन्द्रः । (चित्रं
तिलकं अटति गच्छति प्राप्नोति बलिच्छागास्र-
बिन्दुभिरित्यर्थः । अट + ईरच् ।) घण्टाकर्ण-
बलिच्छागास्रबिन्दुभिरङ्कितभालः । इति
मेदिनी । रे, २६३ ॥

**चित्रापूपः**, पुं, (चित्रो विचित्र आपूपः पिष्टकः ।)
पिष्टकभेदः । चिताइ पिटा इति भाषा ॥ तत्-
पर्य्यायः । चरुव्रणः २ । इति त्रिकाण्डशेषः ॥

**चित्रायसं**, क्ली, (चित्रमायसं लोहम् ।) तीक्ष्ण-
लोहम् । इति राजनिर्घण्टः ।

**चित्रिकः**, पुं, (चित्रा नक्षत्रविशेषः सा पौर्ण-
मास्यामस्त्यस्य । चित्रा + ठन् ।) चैत्रमासः ।
इति शब्दरत्नावली ॥

**चित्रिणी**, स्त्री, (चित्रं विचित्रतास्त्यस्याः । चित्र
+ इनिः + ङीप् ।) पद्मिन्यादिचतुर्व्विधस्त्री-

निर्घण्टः ॥ (यथा, सुश्रुते चिकित्सितस्थाने २ अध्याये ।
“चित्रासमन्वितञ्चैव रुजादाहविनाशनम् ॥”)
छन्दोविशेषः । इति छन्दोमञ्जरी ॥ अस्य विव-
रणं छन्दःशब्दे द्रष्टव्यम् ॥ (गायत्त्रीस्वरूपा महाशक्तिः । यथा, देवीभागवते । १२ । ६ । ५२ ।
“चक्रवाकस्तनी चेष्टा चित्रा चारुविलासिनी ॥”)

**चित्राक्षी**, स्त्री, (चित्रे अक्षिणी नेत्रे यस्याः ।

समासे षच् स्त्रियां ङीष् ।) सारिकापक्षी । इति त्रिकाण्डशेषः ॥

**चित्राक्षुपः**, पुं, (चित्रा मूषिकपर्णीव क्षुपः ह्रस्व-

शांखवृक्षः ।) द्रोणपुष्पी । इति राजनिर्घण्टः ॥

**चित्राङ्गं**, क्ली, (चित्रं अङ्गं यस्मात् ।) हिङ्गुलम् ।

हरितालम् । इति राजनिर्घण्टः ॥

**चित्राङ्गः**, पुं, (चित्रमङ्गं यस्य ।) चित्रकः । रक्त-

चित्रकः । सर्पः । इति राजनिर्घण्टः ॥ (यथास्य गुणाः ।
तपश्चकार पञ्चाब्दं नान्यत् किञ्चिद्गृहीतवान् ।
फलमूलादिकं किञ्चित् सायमत्ति यथा मिलेत् ॥
विहाय विप्रस्य गुरोरपि पूजाञ्च पार्व्वति ! ।
जपेन्नित्यं हि वगलामन्यविप्रञ्च नेक्षयन् ॥
ज्ञात्वेति ब्राह्मणाः सर्व्वे ऊचुश्चित्राङ्गदं क्रुधा ।
वचो हि मधुरं किञ्चित् प्रियाद्वक्ताच्च सुन्दरि ! ॥
रे चित्राङ्गद ! अज्ञस्त्वं वत्स ! विप्रत्वमिच्छसि ।
कदाप्युपानन् मस्तस्थो नैवेति न हि बुध्यसे ॥
वत्स ! शीघ्रमधो गच्छ चिरं कुरु तपो मुदा ॥”
चित्राङ्गदः शापं श्रुत्वा ब्राह्मणान् तुष्टाव ततो ब्राह्मणा लज्जिताः सन्तस्तमूचुः ।
“हे चित्राङ्गद ! हे तात वत्स ! त्वं नोत्सवः किल ।
दुश्चिन्तां कुरु मा तात भद्रं ते कथयाम भोः ॥
जनस्तपोबलेनैव सर्व्वं प्राप्नोत्यसंशयम् ।
नार्हतीशं विना तात ! ब्राह्मणो भवितुं किल ॥
इतीश्वराज्ञा वेदेऽस्ति प्रतिजानीहि तत्त्वतः ।
वरं प्राप्नोति देवत्वं ब्राह्मणत्वं कदापि न ॥
यथामरत्वमीशेन विना क्वापि न शासने ।
नोत्सवस्त्वमधो गच्छ सुखेन वगलां जप ॥
कलेर्द्दशसहस्राणि नागलोकेश्वरो भव ।
ततस्त्रिलोकनाथस्त्वमिन्द्रतुल्योभविष्यसि ॥
राज्यं भुक्त्वान्ततो नैव पुनरावर्त्तनं तव ।
सदा वयं तव शिवं चिन्तयामो न भीं कुरु ॥
तात गच्छ सुखं भुङ्क्ष्व नागलोकेऽपि विस्तरात् ।
तत आनन्दमनसा गतश्चित्राङ्गदस्तलम् ॥”
इत्याचारनिर्णयतन्त्रम् ॥
(स्त्रियां टाप् । मणिपुरेश्वरस्य चित्रवाह-
मध्ये स्त्रीविशेषः । सा मीनगन्धा । तस्या लक्षणं
यथा । रतिमञ्जर्य्याम् । ४ ।
“भवति रतिरसज्ञा नातिदीर्घा न खर्व्वा
तिलकुसुमसुनासा स्निग्धोदेहोत्पलाक्षी ।
कठिनघनकुचाढ्या सुन्दरी सा सुशीला
सकलगुणविचित्रा चित्रिणी चित्रवक्त्रा ॥”
(इयं हि मृगजातीयपुरुषं लब्ध्वा सन्तुष्टा
भवति । यदुक्तं तत्रव । ८ ।
“शशके पद्मिनी तुष्टा चित्रिणी रमते मृगम् ।
वृषभे शङ्खिनी तुष्टा हस्तिनी रमते हयम् ॥”
अस्यां रतिकरणप्रकारमाह तत्रैव । २९ ।
“शीत्कारं चुम्बनं पीडा गले हस्ते च चुम्बनम् ।
क्षणे क्षणे स्तने हस्तं चित्रिणीरतिमादिशेत् ॥”)

**चित्रेशः**, पुं, (चित्रा नक्षत्रविशेषस्तस्या ईशः

पतिः ।) चन्द्रः । इति शब्दचन्द्रिका ॥

**चित्रोक्तिः**, स्त्री, (चित्रा आश्चर्य्यकरी उक्तिर्वाणी ।)

आकाशवाणी । इति त्रिकाण्डशेषः ॥ आश्चर्य्य-
कथनञ्च ॥

**चित्रौदनं**, क्ली, (चित्रमोदनम् ।) विचित्रान्नम् ।

इति ग्रहयज्ञतत्त्वम् ॥

**चिद्रूपः**, त्रि, हृदयालुः । इति भूरिप्रयोगः ।

(चित् ज्ञानमेव रूपं यस्य ।) ज्ञानमयः । यथा ।
चिद्रूपे परमात्मनीति योगशास्त्रम् ॥

| | | |
|---|---|---|
| | नस्य कन्या । यथा, महाभारते । १ । २१६ । १५ । | **चिन्ता**, स्त्री, (चिन्तनमिति । चिति चिन्तायाम् + "चिन्तिपूजिकथिकुम्बिचर्च्चश्च ।" ३ । ३ । १०५ । इति अङ् ।) चिन्तना । चिन्तनम् । तत्पर्य्यायः । स्मृतिः २ आध्यानम् ३ । इत्यमरः । १ । ७ । २९ ॥ आध्या ४ ध्यानम् ५ चिन्तितिः ६ । इति शब्द- रत्नावली ॥ चिन्तिया ७ । इति रभसः ॥ (यथाह कश्चित् । |

"चिता चिन्ता द्वयोर्मध्ये चिन्ता नाम गरीयंसी ।
चिता दहति निर्जीवं चिन्ता हि जीवितन्तथा ॥")
दर्शनसम्भोगयोः प्रकारभावना । इति रस-मञ्जरी ॥ (सा च व्यभिचारिभावविशेषः । यथा,
साहित्यदर्पणे । ३ । १७० ।
"ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत् ॥")

**चिन्तामणिः**, पुं, (चिन्तायां सर्व्वकामप्रदो मणि-रिव । शाकपार्थिवादिवत् समासः । यद्वा, चिन्तया ध्यानधारणादिना मण्यते आहूयते इति । मण + इण् ।) ब्रह्मा । इति शब्दरत्नावली ॥ (चिन्ता एव मणिरिव यस्य । चिन्ता-शीलत्वादेवास्य तथात्वम् ।) बुद्धविशेषः । इति
त्रिकाण्डशेषः ॥ मणिविशेषः । यथा, भट्टिः ।
"सामर्थ्यसम्पादितवाञ्छितार्थ-श्चिन्तामणिः स्यान्न कथं हनूमान् ॥"
स्पर्शमणिः । तथा च ।
"यथा चिन्तामणिं स्पृष्ट्वा लौहं काञ्चनतां भजेत् ॥"
इति पाद्मोत्तरखण्डम् ॥
(अश्वविशेषः । यथा, नकुलकृताश्वचिकित्सिते । ४ । १९ ।
"कण्ठे यस्य महावर्त्त एकोऽश्वस्य प्रजायते ।
चिन्तामणिः स विज्ञेयश्चिन्तितार्थविवृद्धिदः ॥")

**चिन्तावेश्म**, [न्] क्ली, (चिन्ताया मन्त्रणादेर्व्वेश्म गृहम् ।) मन्त्रणागृहम् । तत्पर्य्यायः । दार्व्व-टम् २ । इति हारावली । १६८ ॥

**चिन्तिडी**, स्त्री, (तिन्तिडी । पृषोदरादित्वात् तस्य चत्वम् ।) तिन्तिडी । इति द्विरूपकोषः ॥
इति कश्चित् ॥

**चिन्तितं**, त्रि, (चिति + कर्म्मणि क्तः ।) कृत-
"शालयः सतुषा आर्द्रा भृष्टा अस्फुटितास्ततः ।
कुट्टिताश्चिपिटाः प्रोक्तास्ते स्मृताः पृथुका अपि ॥"
"शालेया यावनालाद्याश्चिपिटाः पुष्टिवर्द्धनाः ॥"
इति राजनिर्घण्टः ॥
तस्य भक्षणविधिनिषेधौ यथा, --
"द्विःस्विन्नमन्नं पृथुकं शुद्धं देशविशेषके ।
नात्यन्तशस्तं विप्राणां भक्षणे च निवेदने ॥
अभक्ष्यञ्च यतीनाञ्च विधवाब्रह्मचारिणाम् ॥"
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डम् ॥
(नि नता नासिका विद्यतेऽस्य ।
"इनच्पिटच्-चिकचि च ।" ५ । २ । ३३ । इति पिटच् प्रकृतेश्चिरादेशश्च । नतनासिके त्रि । यथा,
विश्वकर्म्मप्रकाशे । १३ । २ ।
"दिग्वक्त्रं चिपिटञ्चैव व्यङ्गजं सुरजन्तथा ॥"
इत्यस्य फमाह तत्रैव । ५ म श्लोके ।
"तुङ्गहीनञ्च चिपिटं व्यङ्गञ्चानर्थदर्शनम् ॥"
चिपिटाकारमुखादौ च । यथा, काशीखण्डे ।
३७ । १४ ।
"वक्त्रो ह्रस्वश्च चिपिटः सुखसौभाग्यभञ्जकः ॥"
"चिपिटः चिपिटकाकारः ।" इति तट्टीका ॥)

**चिपिटकः**, पुं, (चिपिट + स्वार्थे कन् ।) चिपिटः । इत्यमरः । २ । ९ । ४७ ॥ (स्त्रियां टाप् । नत-नासिका ॥)

**चिपिटा**, स्त्री, गुण्डासिनीतृणम् । इति राज-निर्घण्टः ॥ (चिपिटा चिपिटाकारा इति ।
"कुर्य्यात् पित्तानिलं पाकं नखमांसे सरुग् ज्वरम्
चिप्पमक्षतरोगञ्च विद्यादुपनखञ्च तम् ॥"
इति वाभटेनोत्तरस्थाने ३१ अध्याये उक्तम् ॥
चिकित्सास्य यथा, --
"चिप्पं शुद्ध्या जितोष्माणं साधयेच्छस्त्रकर्म्मणा ॥"
इत्युत्तरस्थाने द्वात्रिंशेऽध्याये वाभटेन चोक्तम् ॥)

**चिमिः**, पुं, (चिनोति सञ्चिनोति मनुष्यजातिवद्-वाक्यानीति । चि + बाहुलकात् मिक् ।) शुक-पक्षी । इति शब्दमाला ॥

**चिमिकः**, पुं, (चिमि + स्वार्थे कन् ।) शुकपक्षी । इति शब्दरत्नावली ॥

**चिरं**, व्य, (चि + बाहुलकात् रक् ।) दीर्घ-कालः । तत्पर्य्यायः । चिराय २ चिररात्राय ३
चिरस्य ४ । इत्यमरः ॥ चिरेण ५ चिरात् ६
चिरे ७ । इति भरतः ॥ चिरतः ८ । इति शब्दरत्नावली ॥ (यथा, मनुः । ४ । ६० ।
"नैकः प्रपद्येताध्वानं न चिरं पर्व्वते वसेत् ॥)

**चिरकारी**, [न्] त्रि, (चिरं व्याप्य करोतीति । कृ + णिनिः ।) चिरक्रियः । (यथा, महाभारते ।
१२ । २६४ । ३ ।
"चिरकारी हि मेधावी नापराध्यति कर्म्मसु ॥")
गौतमस्य पुत्त्रभेदः । अस्य निरुक्त्यादिकं यदुक्तं महाभारते । १२ । २६५ । ४-५ ।

चिन्तनम् । यथा, --
"यच्चिन्तितं तदिह दूरतरं प्रयाति
यच्चेतसा न गणितं तदिहाभ्युपैति ।"
इत्युद्भटः ॥
कर्त्तरि क्ते चिन्तायुक्तः । भावे क्ते चिन्ता ॥

**चिन्तितिः**, स्त्री, (चिन्त + भावे क्तिच् इट् च ।)

चिन्ता । इति शब्दरत्नावली ॥

**चिन्तिया**, स्त्री, चिन्ता । इति त्रिकाण्डशेषः ॥

**चिन्नः**, पुं, शस्यविशेषः । इति शब्दचन्द्रिका ॥

चिना इति भाषा ॥ (चीनशब्दे विशेषोऽस्य ज्ञातव्यः ॥)

**चिपिटः**, पुं, (चयतीति । चि + बाहुलकात्

पिटच् स च कित् ।) भक्ष्यद्रव्यविशेषः । चिडा ।
इति भाषा ॥ तत्पर्य्यायः । पृथुकः २ । इति
हेमचन्द्रः । ३ । ६५ ॥ चिपिटकः ३ ।
इत्यमरः ॥
चिपुटः ४ । इति भरतः ॥ धान्यचमसः ५ ।
इति त्रिकाण्डशेषः ॥ चिपीटकः ६ । इति
शब्दरत्नावली ॥ अस्य गुणाः । गुरुत्वम् ।
स्निग्धत्वम् । वृंहणत्वम् । कफवर्द्धकत्वञ्च ॥ क्षीर-
युक्तस्य तस्य गुणाः । बलकारित्वम् । वायुनाशि-
त्वम् । मलभेदकत्वञ्च । इति राजवल्लभः ॥
वृं हणत्वम् । वृष्यत्वञ्च । तस्य लक्षणं यथा,
भावप्रकाशे पूर्ब्बखण्डे द्बितीये भागे ।

चिपिट + टाप् । चिपिटमूर्त्तिः । यथा, काशी-
खण्डे । ३७ । १६ ।
"चिपिटाभिर्भ्वेद्दासी ॥")

**चिपुटः**, पुं, (चिपिट + पृषोदरादित्वात् साधुः ।)

चिपिटकः । इति भरतधृतरुद्रकोषः ॥

**चिप्पः**, पुं, (चिक्वति पीडयति अङ्गुलिमिति । चिक्व

+ अच् । निपातनात् क्कस्थाने प्पागमे
साधुः ।)
नखरोगविशेषः । आङ्गुलहाडा इति भाषा ॥
तल्लक्षणं यथा, --
"नखमांसमधिष्ठाय वातः पित्तञ्च
देहिनाम् ।
करोतिदाहपाकौ च तं व्याधिं
चिप्पमादिशेत् ॥"
अथ कुनखस्य लक्षणमाह ।
"अभिघातात् प्रदुष्टो यो नखो
रूक्षोऽसितः खरः ।
भवेत्तं कुनखं विद्यात् कुशीरं वा
विधानतः ॥"
अथ तयोश्चिकित्सा ।
"चिप्पं रुधिरमोक्षेण शोधनेनाप्युपाचरेत् ।
गतोष्माणमथैनन्तु सेचयेदुष्णवारिणा ।
शस्त्रेणापि यथायोग्यमुच्छिद्य स्रावयेत्ततः ॥
व्रणोक्तेन विधानेन रोपयेत्तं विचक्षणः ।
स्वरसेन हरिद्रायाः पात्रे
कृत्वायसेऽभयाम् ॥
घृष्ट्वा तज्जेन कल्केन लिम्पेच्चिप्पं पुनः
पुनः ।
काश्मर्य्याः सप्तभिः पत्रैः कोमलैः
परिवेष्टितः ॥
अङ्गुलीवेष्टकः पुंसां ध्रुवमाशु प्रशाम्यति ।
श्लेष्मविद्रधिकल्पेन कुनखं समुपाचरेत् ॥
नखकोटिप्रविष्टेन टङ्कणेन प्रशाम्यति ।
"चिरकारी महाप्राज्ञो गौतमस्याभवत्
सुतः ।
चिरेण सर्व्वकार्य्याणि विमृष्यार्थान्
प्रपद्यते ॥
चिरं सञ्चिन्तयत्यर्थांश्चिरं जाग्रत् चिरं
स्वपन् ।
चिरं कार्य्याभिपत्तिश्च चिरकारी
तथोच्यते ॥")

**चिरकालः**, पुं, (चिरः काल इति कर्म्मधारयः ।)

दीर्घकालः । तत्पर्य्यायः । दीर्घरात्रम् २ ।
इति त्रिकाण्डशेषः ॥

**चिरक्रियः**, त्रि, (चिरं व्याप्य क्रिया यस्य ।)

चिरकालेन क्रियाकारकः । तत्पर्य्यायः । दीर्घ-
सूत्रः । इत्यमरः । २ । १ । १७ ॥

**चिरजीवकः**, पुं, (चिरं जीवतीति । जीव + ण्वुल् ।)

जीवकवृक्षः । इति जटाधरः ॥

**चिरजीवी**, [न्] पुं, (चिरं जीवतीति । जीव +

णिनिः ।) विष्णुः । काकः । इति मेदिनी ॥
जीवकवृक्षः । शाल्मलिवृक्षः । इति राज-
निर्घण्टः ॥ मार्कण्डेयः । अश्वत्थामा । वलिः ।
व्यासः । हनूमान् । विभीषणः । कृपः । परशु-
रामः । इति तिथ्यादितत्त्वम् ॥ बहुकालजीविनि
त्रि । इति जटाधरः ॥ (यथा, रामायणे । २ ।
१ । ३६ ।
"अथ राज्ञो बभूवैवं वृद्धस्य चिरजीविनः ॥")

**चिरञ्जीवी**, [न्] पुं, (चिरं जीवतीति । जीव

+ णिनिः ।) विष्णुः । काकः । इति हेम-

| | | |
|---|---|---|
| | कुनखश्चेत्तदा शैलः सलिले प्लवतेऽपि च ॥”<br>इति भावप्रकाशे मध्यखण्डे ४ र्थ भागः ॥<br>(लक्षणान्तरमस्य यथा, -- | चन्द्रः । ४ । ३८८ ॥ जीवकवृक्षः । शाल्मलि-<br>वृक्षः । इति राजनिर्घण्टः ॥ चिरजीविनि त्रि ॥<br>**चिरण्टी**, स्त्री, (चिरात् चिरेण वा अटति<br>पितृगृहादिति । अट + अच् । “वयसि प्रथमे ।”<br>४ । १ । २० । इति ङीप् । ततः पृषोदरात्<br>साधुः ।) स्ववासिनी । ऊढा अनूढा वा पितृ- |

गेहस्थिता कन्या । द्वितीयवयाः स्त्री । सा च
युवती । इति भरतधृतरुद्रः हेमचन्द्रश्च ॥

**चिरतिक्तः**, पुं, (चिरं चिरात् वा चिरावधीत्यर्थः
तिक्तः ।) वृक्षविशेषः । चिरता इति भाषा ॥
तत्पर्य्यायः । चिरातिक्तः २ तिक्तकः ३ अनार्य्य-
तिक्तकः ४ किराततिक्तः ५ भूनिम्बः ६ किरा-
तकः ७ सुतिक्तकः ८ । इति शब्दरत्नावली ॥
(भूनिम्बशब्दे विवरणमस्य ज्ञातव्यम् ॥)

**चिरत्नः**, त्रि, (चिर + "चिरपरुत्परारिभ्यस्त्नो
वक्तव्यः ।" ४ । ३ । २३ । सूत्रस्य वार्त्तिकोक्त्या
त्नप्रत्ययः ।) पुरातनः । चिरकालोत्पन्नः । इति
जटाधरः ॥

**चिरन्तनः**, त्रि, (चिरं भव इति । "सायंचिर-
मिति ।" ४ । ३ । २३ । इति ष्ट्युल् तुट् च । निपा-
तनात् साधुः ।) पुरातनः । इत्यमरः । ३ । १ । ७७ ॥
(यथा, पञ्चतन्त्रे । १ । ८० । "अयमस्माकं चिर-
न्तनो मन्त्रिपुत्त्रो दमनकोऽव्याहतप्रवेशः ॥"
पुं, मुनिविशेषः । यथा, सिद्धान्तकौमुद्याम् । ४ ।
३ । १०५ । इत्यस्य वार्त्तिके । "ब्राह्मणेषु पुरा-
णेन चिरन्तनेन मुनिना ॥")

**चिरपाकी**, [न्] पुं, (चिरेण पाकोऽस्त्यस्य ।
पाक + इनिः ।) कपित्थः । इति राजनिर्घण्टः ॥

**चिरस्थायी**, [न्] त्रि, (चिरं तिष्ठतीति । स्था +
णिनिः ।) बहुकालस्थाता ॥

**चिरस्य**, व्य, (चिरमस्यते इति । अस् + यत् ।
शकन्ध्वादित्वात् साधुः ।) दीर्घकालः । इत्य-
मरः । ३ । ४ । १ ॥ (यथा, हरिवंशे । १२६ । २३ ।
"चिरस्य खलु कृष्णेन संस्मृतोऽस्मि महात्मना ॥")

**चिराटिका**, स्त्री, (चिरं अटतीति । अट + ण्वुल्
कापि अत इत्वञ्च ।) श्वेतपुनर्नवा । इति रत्न-
माला ॥ पाताडी इति भाषा ॥ यथा, वैद्यके ।
"गोमूत्रशुद्धस्य पुरातनस्य
यद्वायसस्तानि चिराटिकायाः ॥"

**चिरात्**, व्य, (चिरं अततीति । अत् + क्विप्)
दीर्घकालः । इति हेमचन्द्रः । ६ । १६८ ॥
(यथा, पञ्चतन्त्रे । ४ । ७८ । "भो भगिनीसुत !
किमितिचिराद्दृष्टोऽसि ॥")

**चिरात्**, पुं, (चिरं चिरेण वा अत्ति । अद् + क्विप् ।)
गरुडः । इति त्रिकाण्डशेषः ॥

**चिरातिक्तः**, पुं, (चिरं आतिक्तः ।) चिरतिक्तः ।
इति शब्दरत्नावली ॥

**चिराय**, व्य, (चिरं अयते । अय + अण् ।) दीर्घ-
कालः । इति हेमचन्द्रः । ६ । १६८ ॥ (यथा,
महाभारते । १३ । ९४ । १० ।
"पुरा धर्म्मो वर्त्तते नेह यावत्
तावद्गच्छामः सुरलोकं चिराय ॥")

**चिरायुः**, [स्] पुं, (चिरमायुर्यस्य ।) देवता ।
"भावावबोधकलुषा दयितेव रात्रौ
निद्रा चिरेण नयनाभिमुखी बभूव ॥")

**चिर्भटी**, स्त्री, (चिरेण भटतीति । भट + अच् ।
गौरादित्वात् ङीष् । पृषोदरादित्वात् साधुः ।)
कर्कटी । इति हेमचन्द्रः । ४ । २५५ ॥ (यथा,
पञ्चतन्त्रे । १ । १६७ । "अहो अविवेकोऽस्मद्भूपतेर्यः
पुरीषोत्सर्गमाचरंश्चिर्भटीभक्षणं करोति ॥")

**चिर्भिटा**, स्त्री, कर्कटीभेदः । चिभिडा इति
वेलसेद इति च देशान्तरीयभाषा ॥ तत्-
पर्य्यायः । सुचित्रा २ चित्रफला ३ क्षेत्र
चिर्भिटा ४ पाण्डुफला ५ पथ्या ६ रोचन-
फला ७ चिर्भिटिका ८ कर्कचिर्भिटा ९ । इति
राजनिर्घण्टः ॥ चिर्भिटम् १० धेनुदुग्धम् ११
गोरक्षकर्कटी १२ । अस्या गुणाः । मधुरत्वम् ।
रूक्षत्वम् । गुरुत्वम् । पित्तकफापहत्वम् । अनु-
ष्णत्वम् । ग्राहित्वम् । विष्टम्भित्वञ्च ॥ पक्वाया
अस्या गुणाः । उष्णत्वम् । पित्तलत्वञ्च । इति
भावप्रकाशः ॥ गौल्यत्वम् । दीपनत्वञ्च ॥
बालाया अस्या गुणाः । तिक्तत्वम् । किञ्चिदम्ल-
त्वञ्च । शुष्कायास्तस्या गुणाः । श्लेष्मवातारुचि-
जाड्यनाशित्वम् । रोचनत्वम् । दीपनत्वञ्च । इति
राजनिर्घण्टः ॥ (क्वचित् पुंलिङ्गेपि दृश्यते ॥)

**चिल**, श वासे । इति कविकल्पद्रुमः ॥ (तुदां-परं-
सकं-सेट् ।) वासः परिधानम् । श, चिलति
वस्त्रं लोकः परिदधातीत्यर्थः । चेलिता । इति
दुर्गादासः ॥

**चिलमीलिका**, स्त्री, (चिरं मीलतीति । मील
सङ्कोचे + ण्वुल् । ततष्टापि अत इत्वम् । रस्य

**चिरपुष्पः**, पुं, (चिराणि पुष्पाणि यस्य ।) वकुल-
वृक्षः । इति राजनिर्घण्टः ॥

**चिरम्**, व्य, (चि + रमुक् ।) चिरार्थम् । दीर्घ-
कालार्थम् । तत्पर्य्यायः । चिराय २ चिर-
रात्राय ३ चिरस्य ४ चिरात् ५ चिरेण ६ ।
इति हेमचन्द्रः । ३ । १६८ ॥ (यथा, रघौ । ३ । ६२ ।
"तथापि शस्त्रव्यवहारनिष्ठुरे
विपक्षभावे चिरमस्य तस्थुषः ॥")

**चिरमेही**, [न्] पुं, स्त्री, (चिरेण मेहतीति । मिह
+ णिनिः ।) गर्द्दभः । इति हेमचन्द्रः । ४ । ३२२ ॥

**चिरम्भणः**, पुं, (चिरं भणति क्रोशतीति । चिरं
+ भण + अच् ।) चिल्लः । इति त्रिकाण्डशेषः ॥

**चिररात्रं**, क्ली, (चिरा रात्रिरिति योगविभागात्
अच् समासे ।) दीर्घकालः । इति हलायुधः ॥
(यथा, महाभारते । १ । १६८ । ३ ।
"चिररात्रोषिताः स्मेह ब्राह्मणस्य निवेशने ॥")

**चिररात्राय**, व्य, (चिररात्रं अयते इति । अय +
"कर्म्मण्यण् ।" ३ । २ । १ । इत्यण् ।) दीर्घकालः ।
इत्यमरः । ३ । ४ । १४ ॥ (यथा, मनुः । ३ । २६६ ।
"हविर्यच्चिररात्राय यच्चानन्त्याय कल्पते ।
पितृभ्यो विधिवद्दत्तं तत् प्रवक्ष्याम्यशेषतः ॥")

**चिरविल्वः**, पुं, (चिरं विलति आच्छादयति पत्र-
कण्टकादिभिरिति । विल आच्छादने + वः ।)
करञ्जवृक्षः । इत्यमरः । २ । ४ । ४७ ॥ (यथा, --
इति त्रिकाण्डशेषः ॥ चिरजीविनि त्रि । यथा,
"भवति यदि मनुष्यो गुर्व्वधीनश्चिरायुः ॥"
इत्यागमः ॥
(यथा च पञ्चतन्त्रे । ५ । ३४ ।
"यदि विस्तारविस्तीर्णं तद्भवेन्न चिरायुषम् ॥")

**चिरि**, र न हिंसे । इति कविकल्पद्रुमः ॥ (स्वां-
परं-सकं-सेट् ।) रेफोपधः । र वैदिकः । न,
चिरिणोति । इति दुर्गादासः ॥

**चिरिः**, पुं, (चिनोति मनुष्यवद्वाक्यादिकम् ।
चि + रिक् ।) शुकपक्षी । इति त्रिकाण्डशेषः ॥

**चिरिण्टी**, स्त्री, (चिरण्टी + पृषोदरात् साधुः ।)
ऊढा अनूढा वा पितृगृहस्थिता कन्या । तत्-
पर्य्यायः । स्ववासिनी । इत्यमरः । २ । ६ । ९ ॥
चिरण्टी ३ सुवासिनी ४ । इति भरतः ॥
द्वितीयवयाः स्त्री । युवती । इति मेदिनी ॥

**चिरिविल्वः**, पुं, (चिरविल्वः । पृषोदरादित्वात्
साधुः ।) चिरविल्वः । करञ्जवृक्षः । इत्य-
मरटीकायां भरतः ॥

**चिरु**, क्ली, (चिञ् चयने + क्विप् । चि चयनं
ग्रहणमित्यर्थः रातीति । रा + मृगय्वादयश्चेति
कुः । बाहुसन्धिबलमाश्रित्यैव ग्रहणक्रियासम्भ-
वात् तथात्वम् ।) बाहुसन्धिः । इति शब्द-
चन्द्रिका ॥

**चिरे**, व्य, चिरम् । इत्यमरटीकायां राय-
मुकुटः ॥

**चिरेण**, व्य, चिरम् । इति हेमचन्द्रः ॥ (यथा,
लत्वे साधुः ।) कण्ठीभेदः । खद्योतः । विद्युत् ।
इति मेदिनी । के, २२८ ॥

**चिलिचिमः**, पुं, (चिरिं हिंसां चिनोतीति । चिरि
+ चि + मक् । रस्य लत्वम् ।) मत्स्यविशेषः ।
बालियागडक इति ख्यातः । इञ्चाक इत्येके ।
इति भरतः ॥ तत्पर्य्यायः । नलमीनः २ । इत्य-
मरः । १ । १० । १८ ॥ तलमीनः ३ चिली-
चिमिः ४ चिलीचिमः ५ चिलिचीमः ६ चेलि-
चीमः ७ चिलीमः ८ चिलिमीनकः ९ चिलि-
चीमिः ११ कवलः ११ विलोटकः १२ । इति
भरतधृतकोषान्तरम् ॥ चेङ्गो इति ख्यातो
मत्स्यः । तस्य गुणाः । लघुत्वम् । रूक्षत्वम् ।
अनभिष्यन्दित्वम् । वायुकारित्वम् । कफनाशि-
त्वञ्च । इति राजवल्लभः ॥

**चिल्ल**, शैथिल्ये । हावकृतौ । इति कविकल्पद्रुमः ॥
(भ्वां-परं-अकं-सेट् ।) ह्रस्वी लद्वयान्तः ।
चिल्लति चेचिल्ल्यते । इति दुर्गादास ॥

**चिल्लः**, पुं, (चिल्लति हावभावेन उड्डीयते इति ।
चिल्ल + अच् ।) पक्षिविशेषः । चिल् इति
भाषा ॥ तत्पर्य्यायः । आतायी २ । इत्यमरः ।
२ । ५ । २१ ॥ शकुनिः ३ आतापी ४ । इति
हेमचन्द्रः ॥ खभ्रान्तिः ५ कण्ठनीडकः चिर
म्भणः ७ । इति त्रिकाण्डशेषः ॥ (यथा, विष्णु-
धर्म्मोत्तरे ।

| | | |
|---|---|---|
| “चिरविल्वोऽग्निको दन्ती चित्रको हयमारकः । कपोतगृध्रकङ्कानां पुरीषाणि च दारुणम् ॥” इति सुश्रुते सूत्रस्थाने षट्त्रिंशेऽध्याये ॥) **चिरसूता**, स्त्री, (चिरं सूता या सा ।) चिर- प्रसूता गवी । केलेन् गाइ इति भाषा । तत्- पर्य्यायः । वस्कयनी २ । इत्यमरः । २ । ९ । ७१ ॥ | रघुः । ५ । ६४ । | |

"गृध्रः कङ्कः कपोतश्च उलूकः श्येन एव च ।
चिल्लश्च चर्म्मचिल्लश्च भासः पाण्डर एव च ॥"
क्लिन्ने चक्षुषी अस्य । "क्लिन्नस्य चिल्पिल्
लश्चास्य चक्षुषी ।" ५ । २ । ३३ । इत्यस्य
वार्त्ति
इति चिलादेशो लप्रत्ययश्च ।) क्लिन्नचक्षुः ।
क्लिन्ननेत्रयुक्ते त्रि । इति मेदिनी । ले, १६ ॥

**चिल्लका**, स्त्री, (चिल्ल इव कायतीति । कै + कः ।)

झिल्लिका । इति शब्दरत्नावली ॥

**चिल्लभक्ष्या**, स्त्री, (चिल्लस्य भक्ष्या भक्षणीया ।)

हट्टविलासिनी । इति शब्दचन्द्रिका ॥

**चिल्लाभः**, पुं, (प्रसह्य हारकत्वात् चिल्ल इव आभा-

तीति । आ + भा + कः ।) प्रसह्यचौरः । इति
त्रिकाण्डशेषः ॥ हातछँचड इति गाँटिकाटा
इति च भाषा ॥

**चिल्ली**, स्त्री, (चिल्लति हावं करोति चिल्ल्यतेऽनेन

वा । चिल्ल + इन् । ततो वा ङीष् ।) लोध्रः ।
पत्रशाकभेदः । तत्पर्य्यायः । चिल्लिका २ ड़ुली
३
अग्रलोहिता ४ मृदुपत्री ५ क्षारदला ६ क्षार-
पत्रा ७ वास्तुकी ८ महद्वला ९ गौडवास्तुकः
१० ।
(यथा, सुश्रुते सूत्रस्थाने ४६ अध्याये ।
"सतीनो वास्तुकश्चुच्चू चिल्ली मूलकपोतिकाः
।
मण्डकपर्णी जीवन्ती शाकवर्गे प्रशस्यते ॥")
अस्य गुणाः । वास्तुकतुल्यत्वम् । क्षारत्वम् ।
श्लेष्मपित्तप्रमेहमूत्रकृच्छ्रनाशित्वम् ।
पथ्यत्वम् ।
रुचिकारित्वञ्च । इति राजनिर्घण्टः ॥
("तद्वच्चिल्ली तु विज्ञेया वातपित्तविकारिणाम्
॥"
इति हारीते प्रथमे स्थाने दशमेऽध्याये ॥)
झिल्लिका । इति शब्दरत्नावली ॥

**चिविः**, पुं, (चीव्यते आदराय गृह्यते इति । चीव

**चिह्नं**, क्ली, (चिह्न्यतेऽनेनेति । चिह्न लक्षणे + करणे

घञ् ।) चिह्न्यते येन तत् । चिना इति
दाग् इति
च भाषा ॥ तत्पर्य्यायः । कलङ्कः २
अङ्कः ३
लाञ्छनम् ४ लक्ष्म ५ लक्षणम् ६
लिङ्गम् ७ । इत्य-
मरः । १ । ३ । १७ ॥ लक्ष्मणः ८ ।
इति भरतः ॥
अभिज्ञानम् ९ । इति जटाधरः ॥
(यथा,
भागवते । ४ । १५ । ९ ।
"वैन्यस्य दक्षिणे हस्ते दृष्ट्वा चिह्नं
गदाभृतः ।
पादयोररविन्दञ्च तं वै मेने हरेः कलाम्
॥")
पताका । इति मेदिनी । ने, ४ ॥

**चिह्नकारी**, [न्] त्रि, (चिह्नं करोतीति । कृ +

णिनिः ।) घोरदर्शनः । विघाती । इति
विश्वः ॥

**चिह्नधारिणी**, स्त्री, (चिह्नं धरति धारयतीति वा
।

धृ + णिनिः स्त्रियां ङीप् ।)
श्यामालता । इति
शब्दचन्द्रिका ॥

**चिह्नितः**, त्रि, चिह्न + कर्म्मणि क्तः । चिह्नयुक्तः
।

अङ्कितः । लक्षितः । (यथा, मनुः ।
१० । ५५ ।
"दिवा चरेयुः कार्य्यार्थं चिह्निता
राजशासनैः ॥")

**चीक**, कि मर्शने । इति कविकल्पद्रुमः ॥ (चुरां-
पक्षे

भ्वां-परं-सकं-सेट् ।) कि, चीकयति
चीकति ।
मर्शनं स्पर्शः । तथा च ।
चन्द्रावतीतरङ्ग-

"प्रियङ्गवो ह्यदाराश्च कोरदूषाः सचीनकाः
॥")
अस्य गुणाः । शोषणत्वम् । वायुवर्द्धकत्वम्
।
पित्तश्लेष्मनाशित्वम् । रूक्षत्वञ्च । इति
राज-
वल्लभः ॥ कङ्गनी । चीनकर्पूरः । इति राज-
निर्घण्टः ॥ (चीनदेशवासिषु बहुवचनान्तः
।
यथा, महाभारते । ८ । ८ । १९ ।
"सुह्मानङ्गांश्च वादांश्च निषधान्
पुण्ड्रचीनकान् ॥")

**चीनकर्पूरः**, पुं, (चीननामकः कर्पूरः ।) कर्पूर-

विशेषः । चीनकर्पूर इति देशान्तरीयभाषा
॥
तत्पर्य्यायः । चीनकः २ कृत्रिमः ३ धवलः
४
पटुः ५ मेघसारः ६ तुषारः ७ द्वीपकर्पूरजः
८ ।
अस्य गुणाः । कटुत्वम् । तिक्तत्वम् ।
उष्णत्वम् ।
ईषच्छीतत्वम् ।
कफकण्ठदोषक्रिमिनाशित्वम् ।
मेध्यत्वम् । पावनत्वञ्च । इति राजनिर्घण्टः
॥

**चीनजं**, क्ली, (चीने चीनदेशे जायते इति । जन

+ डः ।) लोहम् । तत्तु तीक्ष्णलौहम् । इति
राजनिर्घण्टः ॥

**चीनपिष्टं**, क्ली, (चीनस्य सीसकस्य पिष्टं कृत-

पेषणं वस्तु चूर्णमित्यर्थः ।) सिन्दूरम् । इति
हेमचन्द्रः ॥ सीसकम् । इति राजनिर्घण्टः
॥
(यथा, कथासरित्सागरे । २३ । ८५ ।
"चीनपिष्टमयो लोकश्चारणैकमयी च भूः
॥")

**चीनवङ्गं**, क्ली, (चीनभवं वङ्गम् ।) सीसकम् ।

इति राजनिर्घण्टः ॥

ग्रहणे + "सर्व्वधातुभ्य इन् ।" उणां ४ । ११७ ।
इति इन् । पृषोदरादित्वात् ह्रस्वः ।) चिवुकम् ।
इति जटाधरः ॥

**चिविटः**, पुं, (चिपिटः निपातनात् पस्य वः ।) चिपिटः । इत्यमरटीका ॥

**चिविल्लिका**, स्त्री, क्षुद्रक्षुपविशेषः । तत्पर्य्यायः । रक्तदला २ क्षुद्रघोली ३ मधुमालपत्त्रिका ४ । अस्या गुणाः । कटुत्वम् । कषायत्वम् । जीर्ण-ज्वरे अतिहितत्वम् । रसायनत्वञ्च । इति राजनिर्घण्टः ॥

**चिवुः**, पुं, (चीव्यते आदराद्यर्थं गृह्यतेऽसौ । चीव + "मृगय्वादयश्च ।" उणां । १ । ३८ । इति कुप्रत्ययेन साधुः ।) चिवुकम् । इति भरतः ॥

**चिवुकं**, क्ली, (चिवु + स्वार्थे कन् । अभिधानात् क्लीवत्वम् ।) अधराधोभागः । इत्यमरः । २ । ६ । ९० ॥ थुँति इति दाडि इति च भाषा ॥ (यथा, हठयोगप्रदीपिकायाम् । १ । ४६ ।
"उत्तम्भ्य चिवुकं वक्षस्युत्थाप्य पवनं शनैः ॥")

**चिवुकः**, पुं, (चिवुरिव कायतीति । कै + कः ।) मुचुकुन्दवृक्षः । इति राजनिर्घण्टः ॥

**चिह्न**, लक्षणे । (अदन्तचुरां-परं-सकं-सेट् ।) सौत्रश्चुरादिरिति वृद्धाः । इत्यमरटीकायां भरतः ॥

द्रश्चीकयन्ति च यद्वपुरिति हलायुधः । वायवः
स्तृशन्तीत्यर्थः । भट्टमल्लस्तु मर्षण इति मूर्द्धन्य-
षमध्यं पठित्वा क्षमार्थमाह । इति दुर्गादासः ॥

**चीडा**, स्त्री, गन्धद्रव्यविशेषः । चीडागन्ध इति ख्याता । तत्पर्य्यायः । दारुगन्धा २ गन्ध-
बधूः ३ गन्धमादनी ४ तरुणी ५ तारा ६ भूत-
मारी ७ मङ्गल्या ८ कपटिनी ९ ग्रहभीति-
जित् १० । अस्या गुणाः । कटुत्वम् । कास-
कफनाशित्वम् । दीपनत्वम् । अत्यन्तसेवनात्
पित्तदोषभ्रमापहत्वञ्च । इति राजनिर्घण्टः ॥

**चीनं**, क्ली, (चिनोति कीर्त्त्यादिकमिति । चि + बाहुलकात् नक् दीर्घश्च ।) पताका । इति
त्रिकाण्डशेषः ॥ सीसकम् । इति रत्नमाला ॥

**चीनः**, पुं, (चीयते सञ्चीयते वृषलत्वादिदोषो यत्र । चि + बाहुलकात् नक् दीर्घश्च ।) देश-
विशेषः । चीना इति भाषा ॥ यथा, --
"काश्मीरन्तु समारभ्य कामरूपात्तु पश्चिमे ।
भोटान्तदेशो देवेशि ! मानसेशाच्च दक्षिणे ।
मानसेशाद्दक्षपूर्ब्बे चीनदेशः प्रकीर्त्तितः ॥"
इति शक्तिसङ्गमतन्त्रम् ॥
(तद्देशवासिषु तन्नृपेषु च बहुवचनान्तः । यथा,
महाभारते । २ । २६ । ९ ।

**चीनाकः**, पुं, (चीनं चीनाकारमकतीति । अक + अण् ।) कर्पूरविशेषः । तद्गुणाः । यथा, भावप्रकाशे ।
"चीनाकसंज्ञः कर्पूरः कफक्षयकरः स्मृतः ।
कुष्ठकण्डूवमिहरस्तथा तिक्तरसश्च सः ॥"

**चीनाकर्क्कटी**, स्त्री, (चीनमिव स्वादुः कर्कटी । ततः पृषोदरात् साधुः ।) कर्कटीप्रभेदः । सा तु चित्रकूटदेशे प्रसिद्धा । तत्पर्य्यायः । राज-कर्कटी २ सुदीर्घा ३ राजफला ४ बाला ५ कुलकर्क्कटी ६ । अस्या गुणाः । रुच्यत्वम् ।
शिशिरत्वम् । पित्तदाहशोषनाशित्वम् । मधु-
रत्वम् । तृप्तिदत्वम् । हृद्यत्वञ्च । इति राज-
निर्घण्टः ॥

**चीभ**, ऋ ङ कत्थे । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-सकं-सेट् ।) कत्थः प्रशंसा । ऋ, अचि-
चीभत् । ङ, चीभते गुणिनं गुणी ओष्ठ्यब-
कारादिरयमित्येके । इति दुर्गादासः ॥

**चीय**, ऋ ञ संवृत्यादानयोः । (भ्वां-उभं-सकं-सेट् ।) चतुर्थस्वरी । ऋ, अचिचीयत् । ञ, चीयति चीयते । इति दुर्गादासः ॥

**चीरं**, क्ली, (चिनोति आवृणोति वृक्षं कटिदेशा-दिकं वा । चि + "शुसिचिमीनां दीर्घश्च ।" उणां । २ । २५ । इति क्रन् दीर्घश्च ।) वृक्ष-
त्वक् । (यथा, रामायणे । ५ । ३१ । २२ ।
"प्रागेव तु महाबुद्धिः सौमित्रिर्भ्रातृवत्सलः ।
पूर्ब्बजस्यानुयात्रार्थं द्रुमचीरैरलङ्कृतः ॥")
जीर्णवस्त्रखण्डम् । इति सुभूतिः । इति लिङ्गादि-
संग्रहटीकायां भरतः ॥ (यथा, भागवते । २ । २ । ५ ।

| | | |
|---|---|---|
| | “स किरातैश्च चीनैश्च वृतः प्राग्ज्योतिषोऽभवत् ॥”)<br>अंशुकविशेषः । (यथा, शकुन्तलायां १ माङ्के ।<br>“चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥”)<br>ब्रीहिभेदः । तन्तुः । मृगविशेषः । इति मेदिनी । ने, ४ ॥<br>**चीनकः**, पुं, (चीन एव । चीन + स्वार्थे कन् ।)<br>धान्यविशेषः । चीना इति भाषा ॥<br>तत्पर्य्यायः ।<br>काककङ्गुः २ । इति हेमचन्द्रः ॥<br>(यथा, विष्णु-<br>पुराणे । १ । ६ । २१ । | |

"चीराणि किं पथि न सन्ति दिशन्ति भिक्षां
नैवाङ्घ्रिपाः परभृतः सरितोऽप्यशुष्यन् ॥")
गोस्तनः । वस्त्रभेदः । (यथा, मनुः । ११ । १०१ ।
"चीरवासा द्विजोऽरण्ये चरेद्ब्रह्महणो व्रतम् ॥")
रेखाभेदः । लेखनभेदः । इति मेदिनी ॥ चूडा ।
(यथा, महाभारते । ३ । ११ । ४९ ।
"मुञ्जवज्जर्ज्जरीभूता बहवस्तत्र पादपाः ।
चीराणीव व्युदस्तानि रेजुस्तत्र महावने ॥")
सीसकम् । इति हेमचन्द्रः ॥

**चीरकः**, पुं, (चीर + संज्ञायां कन् ।) विक्रिया-
लेखः । विकारलेखनम् । इति विश्वः ॥ (स्वार्थे-
कनि चीरशब्दार्थोऽप्यत्र ॥)

**चीरपत्रिका**, स्त्री, (चीरमिव पत्रमस्य । ततः
कन् टापि अत इत्वञ्च ।) चञ्चुशाकः । इति
राजनिर्घण्टः ॥

**चीरपर्णः**, पुं, (चीरमिव पर्णमस्य ।) शालवृक्षः ।
इति राजनिर्घण्टः ॥ (विवृतिरस्य शालशब्दे
विज्ञेया ॥)

**चीरिः**, स्त्री, (चि + बाहुलकात् क्रिः दीर्घश्च ।)
नेत्रांशुकम् । इति शब्दरत्नावली ॥

**चीरिका**, स्त्री, (चीरीति कृत्वा कायति शब्दायते
इति । कै + कः ।) झिल्ली । इति
हेमचन्द्रः ॥

**चीरितच्छदा**, स्त्री, (चीरितः चीरमिव जात-
इति ष्वरच् । निपातनात् धातोर्दीर्घत्वे साधुः ।)
भिक्षुवस्त्रम् । इत्युणादिकोषः ॥ (यथा, महा-
भारते । १ । ९१ । १२ ।
"अनग्निरनिकेतश्चाप्यगोत्रचरणो मुनिः ।
कौपीनाच्छादनं यावत्तावदिच्छेच्च चीवरम् ॥")

**चीवरी**, [न्] पुं, (चीवरं अस्त्यस्येति । इनिः ।)
बुद्धभिक्षुकः । इति त्रिकाण्डशेषः ॥

**चुक्क**, क अर्त्तौ । इत्ति कविकल्पद्रुमः ॥ (चुरां-
परं-सकं-सेट् ।) कोपधः पञ्चमस्वरमध्यः ।
अर्त्तिः पीडनम् । क, चुक्कयति शत्रं शूरः ।
इति दुर्गादासः ॥

**चुक्कारः**, पुं, (चुक्क + भावे अप् । चुक्कं पीडनं
आराति सम्यक् ददातीति । सिंहनादश्रवणेन
भीरूणां भयजनकत्वात्तथात्वम् । आ + रा +
कः ।) सिंहनादः । इति त्रिकाण्डशेषः ॥

**चुक्रं**, क्ली, (चकते तृप्यत्यनेन इति । चक + "चकि-
रम्योरुच्चोपधायाः ।" उणां । २ । १४ । इति
रक् उपधाया उच्च ।) अम्बद्रव्यविशेषः । महादा
इति ख्यातम् । तत्पर्य्यायः । तिन्तिडीकम् २
वृक्षाम्लम् ३ । इत्यमरः । २ । ९ । ३५ ॥ चुक्र-
कम् ४ । इति शब्दरत्नावली ॥ महाम्लम् ५ ।
इति जटाधरः ॥ (अम्लवृक्षकम् ६ । इति भाव-
प्रकाशः । १ । १ ॥) पत्रशाकविशेषः । चुक इति
भाषा ॥ तत्पर्य्यायः । चुक्रवास्तूकम् २ लिकु-
चम् ३ अम्लवास्तुकम् ४ दलाम्लम् ५ अम्ल-
शाकाख्यम् ६ अम्लादि ७ हिलमोचिका ८ ।
अस्य गुणाः । अम्लपत्रत्वम् । लघुत्वम् । उष्ण-
त्वम् । वातगुल्मनाशित्वम् । रुच्यग्रीषत्पित्त-
कारित्वम् । पथ्यत्वम् । तत्पर्य्यायगुणाः ।
"चुक्रिया स्यात्तु पत्राम्ला रोचनी शतवेधिनी ।
चुक्रा त्वम्लतरा स्वाद्वी वातध्नी कफपित्तकृत् ॥
रुच्या लघुतरा पाके वृन्ताके नातिरोचनी ॥"
इति भावप्रकाशः ॥ * ॥
("चुक्रमत्यम्लमुष्णञ्च दीपनं पाचनं परम् ।
शूलगुल्मविबन्धामवातश्लेष्महरं परम् ॥
वमितृष्णास्यवैरस्यहृत्पीडावह्निमान्द्यहृत् ॥"
इति शब्दार्थचिन्तामणिधृतवैद्यकम् ॥)

**चुक्रकं**, क्ली, (चुक्र + संज्ञायां कन् ।) शाक-
विशेषः । चुकापालङ्ग इति भाषा ॥ अस्य
गुणाः । दुर्ज्जरत्वम् । भेदकत्वम् । वायुनाशि-
त्वम् । पित्तकारित्वम् । गुरुत्वञ्च । इति राज-
वल्लभः ॥ (चुक्रार्थे स्वार्थे कन् ॥)

**चुक्रफलं**, क्ली, (चुक्रमेव फलं यस्य । चुक्रं फलति
वा । फल + अच् ।) वृक्षाम्लम् । इति राज-
निघण्टः ॥ (वृक्षाम्लशब्देऽस्य विशेषो
ज्ञातव्यः ॥)

**चुक्रा**, स्त्री, (चुक्रः अम्लत्वं विद्यतेऽस्य इत्यच्
टाप् च ।) चाङ्गेरी । इति मेदिनी । रे, ३५ ॥
आमरुल् इति भाषा ॥ (अस्या गुणा यथा, --
"चुक्रा त्वम्लतरा स्वाद्वी वातघ्नी कफपित्तकृत् ।
रुच्या लघुतरा पाके वृन्ताके नातिरोचनी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
तिन्तिडी । इति शब्दरत्नावली ॥ (यथास्याः
पर्य्यायाः भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ।
"अम्लिका चुक्रिकाम्ली च चुक्रा दन्तशठापि च ।
अम्ला च विचिका चिञ्चा तिन्तिडीका च
तिन्तिडी ॥")

**चुक्राम्लं**, क्ली, (चुक्रमिव अम्लम् । चुक्रवदम्लोऽत्र
इति वा ।) वृक्षाम्लम् । इति
राजनिर्घण्टः ॥

श्छदः पत्त्रं यस्याः ।)
पालङ्क्यशाकम् । इति
भावप्रकाशः ॥

**चीरी**, स्त्री, (चीरि + “कृदिकारादिति ।”
वा ङीष् ।) कच्छाटिका । झिल्ली ।
इति हेम-
चन्द्रः ॥

**चीरुकं**, क्ली, (ची इति कृत्वा रौति । रु + क्विप् ।
चीरुर्झिल्लीपतङ्गः स इव इति इवार्थे
कन् ।)
फलविशेषः । चैँउर इति भाषा ॥
अस्य गुणाः ।
रुचिदाहकफपित्तकारित्वम् ।
अम्लत्वञ्च । इति
राजवल्लभः ॥

**चीर्णं**, त्रि, (चर + नक् । पृषोदरात् साधुः ।) शीलि-
तम् । इति त्रिकाण्डशेषः ॥

**चीर्णपर्णः**, पुं, (चीर्णं विदीर्णं पर्णमस्य ।) निम्ब-
वृक्षः । खर्ज्जूरवृक्षः । इति मेदिनी ॥

**चीलिका**, स्त्री, (चीरिका + रस्य लत्वे साधुः ।)
चीरिका । झिल्ली । इति
शब्दरत्नावली ॥

**चील्लका**, स्त्री, (चीलिका + पृषोदरात् साधुः ।
चीदिति शब्देन लक्ष्यते इति । लक्ष +
घञ् । ततः
पृषोदरादित्वात् साधुः इति वा ।)
झिल्ली ।
इति शब्दरत्नावली ॥

**चीव**, ऋ ञ ग्रहणे । संवृतौ । इति कविकल्प-
द्रुमः ॥ (भ्वां-उभं-सकं-सेट् ।) ऋ,
अचिचीवत् ।
ञ, चीवति चीवते वल्कलं भिक्षुः ।
गृह्णाति
परिदधाति वेत्यर्थः । इति दुर्गादासः
॥

काञ्जिकप्रभेदः । तत्पर्य्यायः । सहस्रवेधम् २
रसाम्लम् ३ चुक्रवेधकम् ४ शाकाम्लभेदनम् ५
चन्द्रम् ६ अम्लसारम् ७ चुक्रिका ८ । अस्य
गुणाः । तिक्तत्वम् । अम्लत्वम् । स्वादुत्वम् ।
कफपित्तनासिकारोगर्व्वान्धशिरोरोगनाशित्वञ्च ।
इति राजनिर्घण्टः ॥ * ॥ सन्धानविशेषः । यथा,
“यन्मस्त्वादिशुचौ भाण्डे सगुडक्षौद्रकाञ्जिकम् ।
धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते ॥
द्विगुणं गुडमध्वारनालमस्तुक्रमादिह ॥”
इति परिभाषा ॥
(अस्य लक्षणं यथा, --
“विनष्टे संहितो यस्तु तच्चुक्रमभिधीयते ॥”
इति शार्ङ्गधरे मध्यखण्डे दशमेऽध्याये ॥)

**चुक्रः**, पुं, (चकते तृप्यतेऽनेनेति । चक + रक् उप-
धाया उच्च ।) अम्लः । अम्लवेतसः । इति विश्वः
॥

(वृक्षाम्लशब्दे विवृतिरस्य ज्ञेया ॥)

**चुक्राम्ला**, स्त्री, (चुक्रमिव अम्लः अम्लत्वं विद्यते-
ऽस्याः । अच् टाप् च ।)
अम्ललोणिका ।
चिञ्चा । काञ्जिकभेदः । इति
राजनिर्घण्टः ॥

**चुक्रिका**, स्त्री, (चुक्रो विद्यतेऽस्मिन् इति । ठन्
टाप् च ।) अम्ललोणिका । इत्यमरः ।
२ । ४ ।
१४० ॥ (अस्याः पर्य्याया यथा,
भावप्रकाशे ।
“चाङ्गेरी चुक्रिका
दन्तशठाम्बष्टाम्ललोणिका ।
अश्मन्तकस्तु शफरी कुशली
चाम्लपत्रकः ॥”)
कुचाङ्गेरी । इति रत्नमाला ॥
चुकापालङ्ग
इति भाषा ॥ (यथास्याः पर्य्यायाः ।
“चुक्रिका स्याच्चु पत्राम्लारोचिनी
शतवेधिनी ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥
तिन्तिडी । तत्पर्य्याया यथा, तत्रैव ।
“अम्लिका चुक्रिकाम्ली च चुक्रा
दन्तशठापि च ॥
अम्ला च विचिका चिञ्चा तिन्तिडीका
च
तिन्तिडी ॥”)

**चुचुकं**, क्ली, (चुचु इत्यव्यक्तशब्देन कायति पान-
काले इति । कै + कः ।) कुचाग्रम् ।
तत्-
पर्य्यायः । चूचुकम् २ चुचूकम् ३ ।
इति शब्द-
रत्नावली ॥ कुचाननम् ४ ।
पुंलिङ्गोऽपि । इति
रत्नकोषः ॥ स्तनवृन्तम् ५ ।
इत्यमरटीकायां

**चीव**, क दीप्तौ । इति कविकल्पद्रुमः ॥ (चुरां-

परं-अकं-सेट् ।) क, चीवयति । इति दुर्गा-
दासः ॥

**चीवरं**, क्ली, (चीयते तन्तुसन्तानैरिति । चि +

“चित्वरच्छत्वरधीवरेति ।” उणां । ३ । १ ।

भरतः ॥ (देशविशेषे तद्देशवासिषु च पुं । यथा,
महाभारते । १२ । २०७ । ४२ ।
“दक्षिणापथजन्मानः सर्व्वे
नरवरान्ध्रकाः ।
गुहाः पुलिन्दाः शवराश्चुचुका मद्रकैः
सह ॥”)

**चुचूः**, पुं, सुनिषण्णशाकम् । इति त्रिकाण्डशेषः ॥

**चुचूकं**, क्ली, (चुचुक + पृषोदरादित्वात् दीर्घः ।)

चुचुकम् । इति शब्दरत्नावली ॥

**चुच्य**, ई अभिषवे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-

अकं-सकञ्च-सेट् ।)
तालव्यवर्गाद्योपधः । पञ्च-

मस्वरी । ई, चुक्तः । यद्वयान्तोऽयमित्येके ।
अभिषवः स्नानं मन्थनं पीडनं सन्धानञ्च ।
इति दुर्गादासः ॥

**चुञ्चुः**, पुं, छुच्छुन्दरिः । इति हारावली । ८३ ॥

(सङ्करजातिविशेषः । यथा, मनुः । १० । ४८ ।
"मेदान्ध्रचुञ्चुमद्गूनामारण्यपशुह्सिनम् ॥"
"चुञ्चुर्मद्गुश्चवैदेहकवन्दिस्त्रियोर्ब्राह्मणेन जातौ
वौधायनेनोक्तौ बोद्धव्यौ ।" इति तट्टीकायां
कुल्लूकभट्टः ॥ व्याकरणोक्तप्रत्ययविशेषः । स
तु प्रसिद्धार्थे भवति । यथा, विद्यया वित्तो
विद्याचुञ्चुः । इति सिद्धान्तकौमुदी ॥ स्त्री,
उद्भिज्जविशेषः । चेवुना इति लोके । नाडीच-
वत् । अस्या पर्य्याया गुणाश्च यथा, --
"चिञ्चा चञ्चुश्चञ्चुकी च दीर्घपत्रा सतिक्तका ।
चुञ्चुः शीता सरा रुच्या स्वाद्वी दोषत्रयापहा ।
धातुपुष्टिकरी बल्या मेध्यपिच्छिलका स्मृता ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
"सुवर्च्चलाया चुञ्चोर्वा लोणिकाया रसैरपि ॥"
इति वाभटे चिकित्सास्थाने नवमेऽध्याये ॥)

**चुञ्चुरी**, स्त्री, (चुञ्चुरिव रातीति । रा + कः ।

स्त्रियां ङीप् ।) तिन्तिडीद्यूतम् । इति त्रिकाण्ड-
शेषः ॥ काँइवीचिर खेला इति भाषा ॥

**चुञ्चुली**, स्त्री, (चुञ्चुरी । रस्य लत्वम् ।) तिन्ति-

डीकास्थिभिर्द्यूतक्रीडा । इति हारावली । ६२ ॥

**चुट**, तुच्छने । इति कविकल्पद्रुमः । (भ्वां-परं-

अकं-सेट् ।) पञ्चमस्वरी । तुच्छनमल्पीभावः ।
चोटति नदी ग्रीष्मे । इति दुर्गादासः ॥

**चुट**, इ तुच्छने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-

अकं-सेट् ।) पञ्चमस्वरी । तुच्छनमल्पीभावः ।
इ, चुण्ट्यते नद्या ग्रीष्मे । इति दुर्गादास्रः ॥

**चुट**, इ क छेदे । इति कविकल्पद्रुमः ॥ (चुरां-

परं-सकं-सेट् ।) पञ्चमस्वरी । इ क, चुण्ट-
यति धान्यं लोकः । इति दुर्गादासः ॥

**चुट**, क शि छेदे । इति कविकल्पद्रुमः । (चुरां-

तुदांच-परं-सकं-सेट् ।) क, चोटयति । शि,

क्विपि संयोगान्तलोपे चुड् ।
कातन्त्रादौ हाव-
करण इत्येकोऽर्थो दृश्यते । अमी
हावाः क्रियाः
शृङ्गारभावजाः । इत्यमरः । भाव
एवाल्प-
संलक्ष्यविकारो हाव इष्यते । इति
साहित्य-
दर्पणम् । चुड्डति कान्ताथवा कान्तः
। इति
दुर्गादासः ॥

**चुण**, शि छिदि । इति कविकल्पद्रुमः ॥ (तुदां-

परं-सकं-सेट् ।) शि, चुणति
अचुणीत् चुचोण ।
इति दुर्गादासः ॥

**चुण्टा**, स्त्री, (चुण्ट्यतेऽसाविति । चुण्टछेदे + घञ् ।

मृत्तिकाखननेन
जायमानत्वात्तथात्वम् ।) कूपः ।
इति त्रिकाण्डशेषः ॥

**चुण्टी**, स्त्री, कूपः । इति त्रिकाण्डशेषः ॥ उपकूपम् ।

कूप समीपे स्वल्पजलाधारः । इति
हेमचन्द्रः ॥

**चुत**, इर् क्षरे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-

सकं-सेट् । अकं-इति केचित् ।) इर्,
अचुतत्
अचोतीत् । क्षर इह आसेचनम् ।
चोततिघृतं
वह्नौ यज्वा आसिञ्चतीत्यर्थः । इति
दुर्गादासः ॥

**चुतः**, पुं, (चोतति क्षरति मलशोणितादिर्य्यस्मात् ।

चुत + घञर्थे कः ।) गुदद्वारम् । इति
शब्द-
रत्नावली ॥

**चुम्बकः**, पुं, (चुम्बति आकर्षति लौहमिति ।

चुम्ब + ण्वुल् ।) कान्तलोहभेदः ।
तत्पर्य्यायः ।
कान्तपाषाणः २ अयस्कान्तः ३
लोहकर्षकः ४ ।
अस्य गुणाः । लेखनत्वम् । शीतत्वम् ।
मेदो-
विषगरापहत्वञ्च । इति भावप्रकाशः ॥
(विशेषो-
ऽस्य कान्तलोहशब्दे ज्ञेयः ॥)
धटस्योर्द्धाब-
लम्बनम् । इति मेदिनी । के, ८९ ॥

**चुम्बकः**, त्रि, (चुम्बतीति । चुम्ब + ण्वुल् । चुम्बन-

परः । धूर्त्तः । बहुग्रन्थैकदेशज्ञः । इति
मेदिनी ।
के, ८९ ॥

**चुम्बनं**, क्ली, (चुब इ कि चुम्बने + भावे ल्युट् ।)

मुखसंयोगः । चुमा इति भाषा ॥ तस्य
स्थानानि यथा, कामशास्त्रे ।
"मुखे स्तने ललाटे च कण्ठे च नेत्रयोरपि
।
गण्डे च कर्णयोश्चैव कक्षोरुभगमूर्द्धसु ।
चुम्बनस्थानमित्युक्तं विज्ञेयं कामुकैरिह
॥"

**चुर**, कि स्तेये । इति कविकल्पद्रुमः ॥ (चुरां-पक्षे-

भ्वां-परं-सकं-सेट् ।) कि, चोरयति चोरति
धनं चौरः । इति दुर्गादासः ॥

**चुरा**, स्त्री, (चुर + बाहुलकात् कः । स्त्रियां टाप् ।)

चौर्य्यम् । इति शब्दरत्नावली ॥

**चुरी**, स्त्री, (चुर + कः । स्त्रियां ङीप् ।) उप-

कूपम् । कूपसमीपस्थाल्पजलाधारः ।
इति
हेमचन्द्रः । ४ । १५९ ॥

**चुलुकं**, क्ली, (चोलयतीति । चुल + बाहुलकात्

चुटति अचुटीत् । इति दुर्गादासः ॥

**चुट्ट**, क तुच्छने । इति कविकल्पद्रुमः ॥ (चुरां-परं-अकं-सेट् ।) टद्वयान्तः । पञ्चमस्वरी । एकटकार इति रामः । तुच्छनमल्पीभावः । क, चुट्टयति नदी ग्रीष्मे । इति दुर्गादासः ॥

**चुड**, इ तौच्छ्ये । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) इ, चुण्ड्यते । तौच्छ्यमल्पीभावः । इति दुर्गादासः ॥

**चुड**, इ क छिदि । इति कविकल्पद्रुमः ॥ (चुरां-परं-सकं-सेट् ।) इ क, चुण्डयति । इति दुर्गादासः ॥

**चुड**, इ क रोषे । (चुरां-परं-अकं-सेट् ।) इ क, चुण्डयति । इति दुर्गादासः ॥

**चुड**, इ ङ रोषे । (भ्वां-आत्मं-अकं-सेट् ।) इ, चुण्ड्यते । ङ, चुण्डते । इति दुर्गादासः ॥

**चुड्ड**, कृतौ । हावे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-अकंच-सेट् ।) टवर्गतृतीयोपधः ।

**चुतिः**, स्त्री, (चोतति क्षरति मलशोणितादिर्यस्याः । चुत + "सर्व्वधातुभ्य इन् ।" उणां ४ । ११७ । इति इन् ।) गुदद्वारम् । इति शब्दरत्नावली ॥

**चुद**, क नुदि । इति कविकल्पद्रुमः ॥ (चुरां-परं-सकं-सेट् ।) नुदि प्रेरणे । क, चोदयति बाणं चापः । इति दुर्गादासः ॥

**चुद्द**, कृतौ । हावे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-अकं च-सेट् ।) तवर्गतृतीयोपधः । क्विपि संयोगान्तलोपे चुद् । कातन्त्रादौ हावकरण इत्येकोऽर्थो दृश्यते । अमी हावाः क्रियाः शृङ्गारभावजाः । इत्यमरः । भाव एवाल्पसंलक्ष्यविकारो हाव इष्यते । इति साहित्यदर्पणम् । चुड्डति कान्ताथवा कान्तः । इति दुर्गादासः ॥

**चुन्दी**, स्त्री, (चोदयति प्रेरयति घटयतीत्यर्थः नायकादीनिति । चुद + कः । निपातनात् नुमागमः । ततः स्त्रियां ङीप् ।) कुट्टनी । इति हेमचन्द्रः । ३ । १९७ ॥

**चुप**, शनैर्गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) चोपतिखञ्जः । चोपति दुष्टं राजा । इति रमानाथः । इति दुर्गादासः ॥

**चुव**, इ कि चुम्बने । इति कविकल्पद्रुमः ॥ (चुरां-उकञ् ।) माषमज्जनजलम् । यथा । माषमज्जनजलमाचामं तच्चुलुकमिति महोपनिषत् ॥

**चुलुकः**, पुं, (चोलयति उन्नतो भवतीति । चुल उन्नतौ + बाहुलकात् उकञ् ।) घनपङ्कः । इति त्रिकाण्डशेषः ॥ प्रसृतिः । भाण्डप्रभेदः । इति हेमचन्द्रः ॥

**चुलुकी**, [न्] पुं, (चुलुक ऊर्द्धोन्नतिर्विद्यतेऽस्य । चुलुक + इनिः ।) शिशुमाराकृतिमत्स्यः । इति शब्दरत्नावली ॥ (यथा, वाभटे सूत्रस्थाने । ६ । ५८ । "चुलुकी नक्रमकरशिशुमारतिमिङ्गिलाः । राजीचिलिचिमाद्याश्च मांसमित्याहुरष्टधा ॥")

**चुलुम्प**, लोपे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) अन्तःस्थतृतीयमध्यः । पञ्चमस्वरद्वयी । ओष्ठ्यवर्गशेषोपधः । चुलुम्पति । यगादौ चुलुम्प्यते इत्यादि । न तु नकारजावनुस्वारपञ्चमाविति स्वरसान्नप्रकृतित्वे यगादौ तल्लोप इति वाच्यम् । तर्हि नोपधस्यैव पठितुमुचितत्वात् । एवं सति अङ्कादीनां न प्रकृतित्वेऽपि ङमध्यपाठः कथमिति चेन्न । ते तु कस्यचिन्मते ङमध्या एवेति ज्ञापनाय ङमध्याः पठिताः । न च तर्हि इदित् पाठेऽपीष्टसिद्धिरिति वाच्यम् । क्विपि संयोगान्तलोपे इदित्पाठे चुलुन् चुलुम्प

पक्षे भ्वां-परं-सकं-सेट् ।) चुम्बनं
मुखसंयोगः ।
इ, चुम्ब्यते । कि, चुम्बयति चुम्बति
कान्ताधरं
कामी । प्रियामुखं किम्पुरुषश्चुचुम्बे
॥ इति
व्यतीहारे आत्मनेपदम् । इति
दुर्गादासः ॥

**चुंब्रं**, क्ली, (चुम्ब्यतेऽनेनात्र वा । चुबि चुम्बने

+ "ऋज्रेन्द्राग्रेति ।" उणां । २ । २८
। इति
रप्रत्ययो नकारलोपश्च ।) वदनम् ।
इत्यु-
णादिकोषः ॥

लोपे चुलुम् इति भेदात् । एवं सर्व्वत्र ।
इति
दुर्गादासः ॥

**चुलुम्पः**, पुं, (चुलुम्प्यते इति चुलुम्पनमिति वा ।

चुलुम्प + भावे घञ् ।) बाललालनम् ।
इति
जटाधरः ॥

**चुलुम्पा**, स्त्री, (चुलुम्पति चञ्चला भवतीति ।
चुलुम्प + अच् । स्त्रियां टाप् ।) छागी । इति
त्रिकाण्डशेषः ॥

**चुलुम्पी**, [न्] पुं, (चुलुम्पो लौल्यं चञ्चलता
इत्यर्थः । सोऽस्यास्तीति । इनिः ।) शिशु-
माराकृतिमत्स्यः । उत्पलमत्स्यः । इति
कश्चित् । इति शब्दरत्नावली ॥

**चुल्ल**, हावकृतौ । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-अकं-सेट् ।) पञ्चमस्वरी
लद्वयान्तः । एको-
ऽर्थः । चुल्लन्ति चारुनयनाश्च सह प्रियेणेति
हलायुधः । इति दुर्गादासः ॥

**चुल्लः**, पुं, क्लिन्नचक्षुः । (क्लिन्ने चक्षुषी अस्य ।
"चुल् च ।" ५ । २ । ३३ । इत्यस्य वार्त्तिकोक्त्यां
क्लिन्नस्य चुलादेशो लप्रत्ययश्च ।) तद्युक्ते-
त्रि । इति हेमचन्द्रः । ३ । १२५ ॥

**चुल्लकी**, स्त्री, (चुल्लति हावभावेन क्रीडतीति ।
चुल्ल + ण्वुल् । गौरादित्वात् ङीष् ।) शिशु-
मारः । कुण्डीभेदः । कुलविशेषः । इति मेदिनी
शब्दरत्नावली च ॥

**चुल्लिः**, स्त्री, (चुल्ल्यते प्रज्वाल्यते अग्निरत्र ।
चुल्ल + "सर्व्वधातुभ्य इन् ।" उणां । ४ । ११७ ।
इति इन् । यद्वा, चुद्यते प्रेर्य्यते अग्निर्यत्र ।
चुद् + बाहुलकात् लिक् ।) पाकार्थमग्नि-

केशपाशी ३ । जूटिका ४ जुटिका ५ । यथा,
शब्दरत्नावल्याम् ।
"शिखा चूडा केशपाशी जूटिका जुटिकेत्यपि ।
शिरोमध्यबद्धचूडे भवेदेतत्तु पञ्चकम् ॥"
वडभी । बाहुभूषणम् । इति मेदिनी । डे, १३ ॥
अग्रम् । इति हेमचन्द्रः ॥ (यथा, हितोपदेशे ।
"अस्ताचलचूडालम्बिनि भगवति चन्द्रमसि ॥")
कूपः । इति त्रिकाण्डशेषः ॥ दशसंस्कारान्त-
र्गतसंस्कारविशेषः । यथा । चूडा कार्य्या यथा-
कुलमिति मलमासतत्त्वम् ॥ (यथाच, --
"अयुग्माब्दे तथा मासि चूडा भौमशनीतरे ।
अर्केन्दुकालशुद्धौ च जन्ममासेन्दुभादृते ॥
रिक्तादर्शाष्टमीषष्ठीप्रतिपद्वर्ज्जिते सिते ॥"
इति संस्कारतत्त्वधृतज्योतिषवचनम्॥
अस्य विशेषविवरणं चूडाकरणशब्दे द्रष्टव्यम् ॥)

**चूडाकरणं**, क्ली, (चूडायाः करणं कर्म्म ।)
दशसंस्कारान्तर्गतसंस्कारविशेषः । तस्य क्रमो
यथा । कुलाचारवशात् प्रथमे तृतीये वा वर्षे
चूडाकरणं कर्त्तव्यम् । तत्र प्रथमं प्रातः-
कृतस्नानः कृतवृद्धिश्राद्धः पिता सत्यनामान-
मग्निं संस्थाप्य विरूपाक्षजपान्तां कुशण्डिकां
समाप्याग्नेर्दक्षिणत एकविंशतिदर्भपिञ्जलीः सप्त-
सप्तभिरेकीकृत्य कुशान्तरेण वेष्टयित्वा उष्णो-

त्तरतः शिखास्थानादधः शिरसः कर्णाभि-
मुखोच्चदेश उच्यते । ततः प्रजापतिरृषिरापो
देवता चूडाकरणे विनियोगः । ओम् आप
उदन्तु जीवसे । ततस्ताम्रक्षुरं तदभावे दर्पणं
वा पश्यन् जपति । प्रजापतिरृषिर्विष्णुर्देवता
चूडाकरणे विनियोगः । ॐ विष्णोर्दंष्ट्रोऽसि ।
ततः कुशबद्धसप्तदर्भपिञ्जलीर्गृहीत्वा क्लिन्न-
दक्षिणकपुष्णिकादेशे अनेन मन्त्रेण ऊर्द्ध्वमूला
निदध्यात् । प्रजापतिरृषिरोषधिर्देवता चूडा-
करणे विनियोगः । ओम् ओषधे त्रायस्वैनम् ।
ततो वामहस्तगृहीतकुशपिञ्जलीसहित-
कपुष्णिकादेशे स्वदक्षिणहस्तगृहीतताम्रक्षुरं
दर्पणं वा अनेन मन्त्रेण निदध्यात् । प्रजापति-
रृषिः स्वधितिर्देवता चूडाकरणे विनियोगः ।
ॐ स्वधिते मैनं हिंसीः । ततः केशच्छेदो
यथा न भवति तथा ताम्रक्षुरं दर्पणं वा तत्रैव
कपुष्णिकादेशे अनेन मन्त्रेण प्रेरयेत् । प्रजा-
पतिरृषिः पूषा देवता चूडाकरणे विनियागः ।
ॐ येन पूषा बृहस्पतेर्वायोरिन्द्रस्य चावपत्तेन
ते वपामि ब्रह्मणा जीवातवे जीवनाय दीर्घायु-
ष्ट्वाय बलाय वर्च्चसे । तूष्णीं वारद्वयम् । ततो
लौहक्षुरेण दक्षिणकपुष्णिकदेशस्य केशं छित्त्वा
दर्भपिञ्जलीसहितकेशस्य बालमित्रविधृत-
पात्रस्थवृसगोमयोपरि निधानं कुर्य्यात् । ततः
कपुच्छलदेशस्य कांस्यपात्रस्थितोष्णादकेन
दक्षिणहस्तगृहीतेन पूर्ब्बवदेव आप उन्दन्तु
जीवसे इत्यनेन मन्त्रेण क्लेदनं ॐ विष्णोर्दंष्ट्रो-
ऽसि इत्यनेन ताम्रक्षुरस्य दर्पणस्य वा प्रेरणं
ओम् ओषधे त्रायस्यैनं इत्यनेन कपुच्छलदेशे
ऊर्द्ध्वमूलदर्भपिञ्जलीनिधानं ॐ स्वधिते मैनं
हिंसीरित्यनेन ताम्रक्षुरस्य दर्पणस्य वा कपु-
च्छलदेशे निधानं ॐ येन पूषा बृहस्पतेरित्य-
नेन पूर्ब्बाभिमुखं ताभ्रक्षुरप्रेरणं लौहक्षुरेण
कपुच्छलदेशस्य केशं छित्त्वा दर्भपिञ्जलीसहित-
केशस्य बालमित्रविधृतपात्रस्थवृषगोमयोपरि
निधानं कुर्य्यात् । कपुच्छलशब्देन पश्चिमतः
शिखास्थानादधःशिरसोनापितक्रोडाभि-

स्थानम् । चुला इति आखा इति च भाषा ॥

तत्पर्य्यायः । अश्मन्तम् २ उद्धानम् ३ अधि-
श्रयणी ४ अन्तिका ५ । इत्यमरः । २ । ९ । २९ ॥
अस्मन्तम् ६ उष्मानम् ७ उद्धारम् ८ चुल्ली ९
आन्दिका १० । इति तट्टीका ॥
उद्धानिः ११ । इति शब्दरत्नावली ॥

**चुल्ली**, स्त्री, (चुल्लि + "कृदिकारादक्तिनः ।" ४ ।
१ । ४५ । इत्यस्य वार्त्तिकोक्त्या वा ङीष् ।)
चिता । उद्धानम् । इति मेदिनी । ले, १७ ॥
(यथा, मनुः । ३ । ६८ ।
"पञ्चसूना गृहस्थस्य चुल्ली पेषण्युपस्करः ।
कण्डनी चोदकुम्भश्च वध्यते यास्तु वाहयन् ॥")

**चुस्तं**, क्ली पुं, वुस्तम् । तत्तु मांसपिण्डकविशेषः ॥
स्थालीभृष्टमांसम् ।
पनसादिफलस्यासारभागः ।
इति लिङ्गादिसंग्रहटीकायां भरतः ॥ भोता
इति ख्यातः ॥

**चूचुकं**, क्ली पुं, (चूष्यते पीयते इति । चूष पाने +
बाहुलकात् उकः षस्य चत्वञ्च ।) चुचुकम् ।
इत्यमरटीकायां भरतः ॥ (यथा, रामायणे ।
६ । २३ । १३ ।
"स्तनौ च विरलौ पीनौ समौ मे मग्नचूचुकौ ॥")

**चूडकः**, पुं, (चुण्डति अल्पीभवतीति । चुड +

दकसहितं कांस्यपात्रं ताम्रनिर्म्मितक्षुरं तदभावे
दर्पणं वा लौहक्षुरपाणिञ्च नापितं स्थापयेत्
अग्नेरुत्तरतो वृषगोमयं तिलतण्डुलमाषसिद्धञ्च
कृशरं अग्नेः पूर्ब्बतो मिश्रितब्रीहियवतिलमाष-
पूरितपात्रत्रयं स्थापयेत् । माता शुचिना वस्त्रेण
कुमारमाच्छाद्य क्रोडे निधाय अग्नेः पश्चिमतो
भर्त्तुर्व्वामपार्श्वे उत्तराग्रेषु कुशेषु प्राङ्मुखी
उपविशति । ततः पिता प्रकृतकर्म्मारम्भे
प्रादेशप्रमाणां घृताक्तां समिधं तूष्णीमग्नौ
हुत्वा व्यस्तसमस्तमहाव्याहृतिहोमं कुर्य्यात् ।
प्रजापतिरृषिर्गायत्री छन्दोऽग्निर्देवता महा-
व्याहृतिहोमे विनियोगः । ॐ भूः स्वाहा ।
प्रजापतिरृषिरुष्णिक् छन्दो वायुर्देवता महा-
व्याहृतिहोमे विनियोगः । ॐ भुवः स्वाहा ।
प्रजापतिरृषिरनुष्टुप् छन्दः सूर्य्यो देवता महा-
व्याहृतिहोमे विनियोगः । ॐ स्वः स्वाहा ।
प्रजापतिरृषिर्बृहती छन्दः प्रजापतिर्देवता
व्यस्तसमस्तमहाव्याहृतिहोमेविनियोगः । ॐ
भूर्भुवः स्वः स्वाहा । ततः पिता उत्थाय प्राङ्-
मुखः कुमारस्य मातुः पश्चादवस्थितः क्षुरपाणिं
नापितं पश्यन् तमेव सवितृरूपं ध्यायन् जपति ।
प्रजापतिरृषिः सविता देवता चूडाकरणे
विनियोगः । ओम् आयमगात् सविता क्षुरेण ।
तत उष्णोदकसहितं कांस्यपात्रं पश्यन् वायुं
मनसा ध्यायन् जपति । प्रजापतिरृषिर्व्वायु-
र्देवता चूडाकरणे विनियोगः । ॐ उष्मेण

मुखोच्चदेशोऽभिधीयते । तथैव वामकपुष्णिका-
प्लावनादिच्छेदनपूर्ब्बकं वृषगोमयोपरिदेशे
निधानान्तं पूर्ब्बवत् सर्व्वं कुर्य्यात् । ततः कुमा-
रस्य शिरः पाणिभ्यामुपगृह्य जपति । प्रजा-
पतिरृषिरुष्णिक् छन्दो जमदग्निकश्यपागस्त्या-
दयो देवताश्चूडाकरणे विनियोगः । ॐ
त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषं अगस्त्यस्य
त्र्यायुषं यद्देवानां त्र्यायुषं तत्तेऽस्तु त्र्यायुषम् ।
ततोऽग्नेरुत्तरदेशं नीत्वा पुष्पाद्यलङ्कृतो नापितः
कुमारं मुण्डयति । सर्व्वमेव केशं वृषगोमयो-
परि निधायारण्ये वंशविटपे स्थापयेत् ततः
पूर्ब्बवत् व्यस्तसमस्तमहाव्याहृतिहोमंकृत्वा
तूष्णीं प्रादेशप्रमाणघृताक्तसमित्प्रक्षेपान्तप्रकृतं
कर्म्म समाप्य उदीच्यं शाट्यायनहोमादिवाम-
देव्यगानान्तं कर्म्म निर्व्वृत्य कर्म्मकारयितृब्राह्म-

| | | |
|---|---|---|
| ण्वुल् ततो निपातनात् दीर्घत्वे साधुः ।) कूपः ।<br>इति त्रिकाण्डशेषः ॥<br>**चूडा**, स्त्री, (चोलयति मस्तकाद्युपरि उन्नता भवतीति । चुल क् उन्नतौ + भिदादित्वादङ्ततो दीर्घस्ततोलस्य डत्वे साधुः ।) मयूरशिखा ।<br>शिरोमध्यस्थशिखामात्रम् ।<br>तत्पर्य्यायः ।<br>शिखा २ । इत्यमरः । २ । ५ । ३२ ॥ | वाय उदकेनैधि । ततः कांस्यपात्रस्थितोष्णो-<br>दकेन दक्षिणहस्तगृहीतेन दक्षिणकपुष्णिकाम-<br>नेन मन्त्रेण क्लेदयति । कपुष्णिकाशब्देन दक्षिणो- | |

णाय दक्षिणां दद्यात् ।
कृशरधान्ययवतिल-
माषशरावान् नापिताय दद्यात् ।
इति चूडा-
करणं समाप्तम् ॥” इति
भवदेवभट्टः ॥

**चूडामणिः**, पुं, (चूडा शिरोभूषणं मुकुटकिरीटा-
दिकम् । तत्र स्थितो मणिः ।
शाकपार्थिवादिवत्
समासः ।) शिरोरत्नम् । (यथा,
महाभारते ।
१ । ११९ । ३८ ।
“ततश्चूडामणिं निष्कमङ्गदे
कुण्डलानि च ॥”
चूडायामग्रभागे मणिरिव यस्य ।)
काकचिञ्चा-
फलम् । इति मेदिनी । णे, ९४ ॥
योगविशेषः ।
(स तु ग्रहणकाले एव भवति ।)
यथा गारुडे ।
“सूर्य्यग्रहः सूर्य्यवारे सोमे
सोमग्रहस्तथा ।
चूडामणिरयं योगस्तत्रानन्तं फलं
स्मृतम् ।
अन्यस्माद्ग्रहणात् कोटिगुणमत्र
फलं लभेत् ॥”
इति तिथ्यादितत्त्वम् ॥
शुभाशुभगणनाविशेषः । तस्य
विवरणं गरुड-
पुराणे २०५ अध्याये द्रष्टव्यम् ॥
* ॥ वङ्ग-
देशीयपण्डितानामुपाधिश्च ॥

**चूडाम्लं**, क्ली, (चूडायां अग्रभागे अम्लो यस्य ।)
वृक्षाम्लम् । इति राजनिर्घण्टः ॥

**चूडालं**, क्ली, (चूडा अस्त्यस्य । “प्राणिस्थादातो

**चूर्ण**, क पेषे । इति कविकल्पद्रुमः ॥ (चुरां-परं-
सकं-सेट् ।) षष्ठस्वरी । पेषश्चूर्णीकरणम् ।
क, चूर्णयति शिला । इति दुर्गादासः ॥

**चूर्णं**, क्ली, (चूर्ण्यते पिष्यते यत् । चूर्ण + कर्म्मणि
घञ् ।) सम्पेषणेन जातरजः । तस्य लक्षणं
यथा, --
“अत्यन्तशुष्कं यद्द्रव्यं सुपिष्टं
वस्त्रगालितम् ।
तत् स्याच्चूर्णं रजः क्षोदस्तन्मात्रा
कर्षसम्मिता ॥
चूर्णे गुडः समो देयः शर्करा द्विगुणा मता ।
चूर्णेषु भर्ज्जितं हिङ्गु देयं नोत्क्लेदकृद्भवेत्
॥
लिहेच्चूर्णं द्रवैः सर्व्वैर्घृताद्यैर्द्विगुणोन्मितैः ।
पिबेच्चतुर्गुणैरेव चूर्णमालोडितं द्रवैः ॥
चूर्णावलेहगुटिका कल्कानामनुपानकम् ।
पित्तवातकफातङ्के त्रिष्वेकपलमाहरेत् ॥”
इति भावप्रकाशः ॥ * ॥
चूर्णौषधस्य पूर्णवीर्य्यं पक्षत्रयपर्य्यन्तं
तिष्ठति ।
इति वैद्यकपरिभाषा ॥
(“कर्षश्चूर्णस्य कल्कस्य गुडिकानाञ्च
सर्व्वशः ।
द्रवशुक्त्या स लेढव्यः पातव्यश्च चतुर्द्रवः
॥”
इति वैद्यकचक्रपाणिसंग्रहे ज्वराधिकारे ॥)
आवीर इति ख्यातम् । (यथा, मेघदूते ।
७० ।
“अर्च्चिस्तुङ्गानभिमुखगतान् प्राप्य
रत्नप्रदीपान्
ह्रीमूढानां भवति विफला प्रेरणा चूर्णमुष्टिः
॥”)
पटरसाक्षोद इत्यन्ये । इति भरतः ॥ गन्ध-
गुँ डा इति ख्यातम् । इति सारसुन्दरी ॥
तत्-
पर्य्यायः । वासयोगः २ । इत्यमरः । २ ।
६ । १३४ ॥

भवत्युत्कलिकाप्रायं समासाढ्यं दृढाक्षरम् ।
वृत्तैकदेशसम्बन्धाद्वृत्तगन्धि पुनः स्मृतम् ॥
चूर्णकं यथा । स हि त्रयाणामेव जगतां गतिः
परमपुरुषः पुरुषोत्तमो दृप्तदानवभरेण भङ्गु-
राङ्गीमवनिमवलोक्य करुणार्द्रहृदयस्तस्याभार-
मवतारयितुं रामकृष्णस्वरूपेणांशतो यदुवंशे
अवततार ।” इति छन्दोमञ्जरी ॥ (क्वचित् वृत्तकं
इत्यपि दृश्यते ॥)

**चूर्णकः**, पुं, (चूर्णैः कायते प्रकाशते इति । कै +
कः ।) सक्तुः । इति त्रिकाण्डशेषः ॥ (षष्टिकः ।
यथा, सुश्रुते सूत्रस्थाने ४६ अध्याये । “षष्टिक-
काङ्गुकमुकुन्दकपीतकप्रमोदककाकलकासन-
पुष्पकमहाषष्टिकचूर्णककुरवककेदारकप्रभृतयः
षष्टिकाः ॥”) स्वार्थे के चूर्णशब्दार्थोऽप्यत्र ॥

**चूर्णकारः**, पुं, (चूर्णं क्षारविशेषं करोतीति ।
चूर्ण + कृ + “कर्म्मण्यण् ।” ३ । २ । १ इत्यण् ।)
वर्णशङ्करजातिविशेषः । चूणरी इति भाषा ॥
स नटकन्यायां पुण्ड्रकाज्जातः । इति पराशर-
पद्धतिः ॥

**चूर्णकुन्तलः**, पुं, (चूर्णं वासयोगस्तद्युक्तः कुन्तलः ।
शाकपार्थिवादिवत् समासः ।) अलकः । इत्य-
मरः । २ । ६ । ९६ ॥

**चूर्णखण्डं**, क्ली, (चूर्णाय यत् खण्डम् ।) कर्करम् ।
इति हारावली । २०८ ॥ काँकर इति घुटिं
इति च भाषा ॥

**चूर्णपारदः**, पुं, (चूर्णः पारदस्य । एकदेशि-
समासः । पारदजन्यतया एवास्य तथात्वम् ।)
हिङ्गुलम् । इति राजनिर्घण्टः ॥

**चूर्णशाकाङ्कः**, पुं, (चूर्ण इव शुभ्रः शाकस्तमङ्कते
सादृश्येन गच्छतीति । अङ्क गतौ + अच् ।)
गौरसुवर्णशाकम् । इति राजनिर्घण्टः ॥

**चूर्णिः**, स्त्री, (चूर्णयति खण्डयति अशेषपण्डि-
तानां तर्कमिति । चूर्ण + “सर्व्वधातुभ्य इन् ।”
उणां । ४ । ११७ । इति इन् । यद्वा, “घृणि-
पृश्निपार्ष्णीति ।” उणां । ४ । ५२ । इति इः ।)

लजन्यतरस्याम् ।” ५ । २ । ९६
। इति लच् ।)
मस्तकम् । इति शब्दरत्नावली ॥
चूडायुक्ते
त्रि । इति हेमचन्द्रः ॥ (यथा,
महाभारते ।
१० । ७ । ३७ ।
“चूडालाः कर्णिकाराश्च प्रहृष्टाः
पिठरोदराः ॥”)

**चूडाला**, स्त्री, (चूडा शिखा अस्त्यस्याः । “प्राणि-

स्थादातो लजन्यतरस्याम् ।” ५
। २ । ९६ । इति
लच् । ततोऽजादित्वात् टाप् ।)
उच्चटातृणम् ।
इत्यमरः । २ । ४ । १६० ॥
श्वेतगुञ्जा । नागर-
मुस्ता । इति राजनिर्घण्टः ॥

**चूडावान्**, [त्] (चूडा अस्त्यस्य । चूडा + मतुप् ।

मस्य वत्वम् ।) चूडाविशिष्टः ।
इति चूडाला-
शब्दार्थे मेदिनी । ले, ९० ॥

**चूण**, क सङ्कोचे । इति कविकल्पद्रुमः ॥ (चुरां-

परं-अकं-सेट् ।)
तालव्यवर्गाद्यादिः । षष्ठ-
स्वरी । क, चूणयति चक्षुः
सङ्कुचितं स्यादि-
त्यर्थः । इति दुर्गादासः ॥

**चूतः**, पुं, (चूष्यते पीयते इति । चूष + कर्म्मणि

क्तः । पृषोदरादित्वात् षलोपः ।
रसालत्वा-
देवास्य तथात्वम् ।) आम्रवृक्षः ।
इत्यमरः ।
२ । ४ । ३३ ॥ (यथा, रामायणे ।
३ । ७९ । १७ ।
“परिचुम्बति संविश्य
भ्रमरश्चूतमञ्जरीम् ।
वासयुक्तिः ३ । इति मेदिनी । ने, १२ ॥
गन्ध-
युक्तिः ४ । इति भूरिप्रयोगः ॥ पटयुक्तिः ५
।
इति शब्दरत्नावली ॥ (कुङ्कुमादिरजः ।
यथा,
रघुः । ४ । ५४ ।
“अलकेषु चमूरेणुश्चूर्णप्रतिनिधीकृतः ॥”)

**चूर्णः**, पुं, (चूर्ण्यते सम्पिष्यते इति । चूर्ण +

कर्म्मणि घञ् ।) सम्पेषणेन जातरजः । चूर
इति गुँडा इति फाकि इति च भाषा ॥ तत्-
पर्य्यायः । क्षोदः २ । इत्यमरः । २ । ८ ।
९९ ॥
चूर्णम् ३ रजः ४ । इति भावप्रकाशः ॥
(यथा,
महाभारते । ६ । ११८ । ३ ।
“कन्याश्चन्दनचूर्णैश्च लाजैर्म्माल्यैश्च
सर्व्वशः ।
अवाकिरञ्छान्तनवं तत्र गत्वा सहस्रशः
॥”)
धूलिः । क्षारविशेषः । इति मेदिनी । ने,
१२ ॥
चूण इति भाषा ॥ (यथा, --
“पर्णानि शीर्णवर्णानि
सीदन्त्याकर्णलोचने ! ।
चूर्णमानीयतां तूर्णं पूर्णचन्द्रनिभानने ! ॥”)
शेषस्य गुणः । वातश्लेष्ममेदोनाशित्वम् ॥
शङ्ख-
चूर्णस्य गुणाः । कटुत्वम् । क्षारत्वम् ।
उष्ण-
त्वम् । कृमिनाशित्वञ्च । इति राजवल्लभः ॥

**चूर्णकं**, क्ली, (चूर्ण इव कायतीति । चूर्ण + कै +

कः ।) गद्यविशेषः । यथा, --
“अपादः पदसन्तानो गद्यं तत्तु त्रिधा मतम्
।
चूर्णकोत्कलिकाप्रायवृत्तगन्धिप्रभेदतः ॥
अकठोराक्षरं स्वल्पसमासं चूर्णकं विदुः ।
तत्तु वैदर्भरीतिस्थं गद्यं हृद्यतरं भवेत् ॥
पातञ्जलव्याकरणम् । महाभाष्यम् । कपर्द्दकः ।
इति लिङ्गादिसंग्रहटीकायां भरतः ॥ शत-
संख्यककपर्द्दकाः । इति सिद्धान्तकौमुद्या-
मुणादिवृत्तिः ॥

**चूर्णिका**, स्त्री, (चूर्णः क्षोदोऽस्यास्तीति । चूर्ण +

“अत इनिठनौ ।” ५ । २ । ११५ । इति ठन् ।)
सक्तुः । इति भूरिप्रयोगः ॥

**चूर्णिकृत्**, पुं, (चूर्णिं महाभाष्यं करोतीति । कृ +

क्विप् ।) भाष्यकारः । इति त्रिकाण्डशेषः ॥

**चूर्णी**, स्त्री, (चूर्णिः + “कृदिकारादक्तिनः ।” ४ ।

१ । ४५ । इत्यस्य वार्त्तिकोक्त्या वा ङीष् ।)
कपर्द्दकः । इति मेदिनी । णे, १२ । नदी-
विशेषः । सा राणाघाट्टाख्यग्रामसमीपे तिष्ठति ॥

**चूलः**, पुं, (चोलयति पुनः पुनः छेदेऽपि उत्तिष्ठ-

तीति । चुल उन्नतौ + “इगुपधज्ञेति ।” ३ ।
१ । १३५ । इति कः । निपातनात् दीर्घः ।
यद्वा, चूर्य्यते इति । चूर् + कः । रस्य लत्वम् ।)

| | | |
|---|---|---|
| नवसङ्गमसंहृष्टः कामी प्रणयिनीमिव ॥" चोतति क्षरति शोणितादिकमस्मादिति। चुत-क्षरणे + बाहुलकात् घञर्थे कः दीर्घश्च ।) गुद-द्वारम् । इति शब्दरत्नावली ॥ च्यूत इत्यपि पाठः ॥<br>**चूतकः**, पुं, (चूत एव । चूत + स्वार्थे कन् ।) आम्रः । कूपकः । इति मेदिनी । के, ९० ॥<br>**चूर**, ई ङ य दाहे । इति कविकल्पद्रुमः ॥ (दिवा-आत्मं सकं-सेट् । (दीर्घी । ङ य, चूर्य्यते वह्नि-रिन्धनम् । ई, चूर्णः । इति दुर्गादासः ॥ | | |

केशः । यथा, । "मुक्तकेशाश्च चूलिनः ।" इति
लिङ्गपुराणम् ॥

**चूलकः**, पुं, (चूल एव । चूल + स्वार्थे कन् ।)
केशः । यथा, मत्स्यसूक्ते ३८ पटले ।
"गृहीतचूलको विप्रो म्लेच्छेन रजकादिना ।
प्राजापत्यद्बयं कुर्य्यात् शूद्रः कुर्य्यात्तु भागतः ॥
सशिखं निर्व्वपेत् केशं धृते चान्त्यावसायिना ।
अन्त्यजैस्तु शिखावर्ज्जं शूद्रैरग्राङ्गुलिद्बयम् ॥"

**चूला**, स्त्री, (चूडा + डस्य लत्वम् ।) चन्द्रशाला ।
गृहोपरिगृहम् । इति शब्दरत्नावली ॥
चूडाच ॥

**चूलिकं**, क्ली, (चोलयति गोधूमचूर्णं पिष्टकाका-
रेण उन्नयति उत्पादयतीत्यर्थः । चुल + णिच् +
ण्वुल् । पृषोदरात् दीर्घत्वे अत इत्वे च साधुः ।)
घृतभृष्टगोधूमचूर्णम् । इति शब्दचन्द्रिका ॥ लूची
इति भाषा ॥

**चूलिका**, स्त्री, (चोलयति सन्निहितचर्म्ममांस-
राशिं उन्नयतीति । चुल + ण्वुल् + कापि अत
इत्वञ्च । पृषोदरात् दीर्घत्वे साधुः ।) हस्तिकर्ण-
मूलम् । इत्यमरः । २ । ८ । ३८ ॥ नाटकाङ्गविशेषः ।
इति मेदिबी । के, ९० ॥

**चूष**, पाने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-

**चेडः**, पुं, (चेटति परप्रेष्यत्वं करोतीति । चिट +
अच् । टस्य डत्वञ्च ।) दासः । इत्यमर-
टीकायां रमानाथः ॥

**चेडकः**, पुं, (चेटति इति । चिट + ण्वुल् । टस्य
डत्वम् ।) दासः । इत्यमरटीका ॥

**चेडिका**, स्त्री, (चेडक + टाप् । कापि अत इत्वम् ।)
दासी । इति द्बिरूपकोषः ॥

**चेडी**, स्त्री, (चेड + ङीप् ।) दासी । इत्यमर-
टीका ॥

**चेत्**, व्य, (चित् + विच् ।) यदि । इत्यमरः ।
३ । ४ । १२ ॥ (यथा, पञ्चदश्याम् । ६ । ४२ ।
"अत्यत्ववारकं सत्वमिति चेदन्यवारणम् ।
कूटस्थस्यात्मतां वक्तुरिष्टमेव हि तद्भवेत् ॥"
पक्षान्तरम् । असन्देहेऽपि सन्देहवचनम् । यथा,
"सत्यञ्चेद्गुरुवाक्यमेव पितरो देवाश्च चेद्-योगिनी
प्रीता चेत् परदेवता च यदि चेद्बेदाः प्रमाणं हि चेत् ।
शाक्तीयं यदि दर्शनं भवति चेदाज्ञाप्य मोघास्मि
चेत्
स्वातन्त्र्या अपि कौलिकाश्च यदि चेत् स्यान्मे
जयः सर्व्वदा ॥"
इति शब्दार्थचिन्तामणिधृतश्लोकः ॥)

**चेतः**, [स्] क्ली, (चेतत्यनेन इति । चित् +
करणेऽसुन् ।) चित्तम् । इत्यमरः । १ । ४ । ३१ ॥
(यथा, पञ्चदश्याम् । १ । ५४ ।
"ताभ्यां निर्व्विचिकित्सेऽर्थे चेतसः स्थापितस्य यत् ।
एकतानत्वमेतद्धि निदिध्यासनमुच्यते ॥")

**चेतकी**, स्त्री, (चेतयते उन्मीलयति ज्ञानेन्द्रिय-
पञ्चरेखाऽभया प्रोक्ता जीवन्ती स्वर्णवर्णिनी ॥
त्रिरेखा चेतकी ज्ञेया सप्तानामियमाकृतिः ।
विजया सर्व्वरोगेषु रोहिणी व्रणरोहिणी ॥
प्रलेपे पूतना योज्या शोधनार्थेऽमृता हिता ।
अक्षिरोगेऽभया शस्ता जीवन्ती सर्व्वरोगहृत् ॥
चूर्णार्थे चेतकी शस्ता यथायोगं प्रयोजयेत् ।
चेतकी द्बिविधा प्रोक्ता श्वेता कृष्णा च वर्णतः ॥
षडङ्गुलायता शुक्ला कृष्णात्वेकाङ्गुला स्मृता ।
काचिदास्वादमात्रेण काचिद्गन्धेन भेदयेत् ॥
काचित् स्पर्शेन दृष्ट्यान्या चतुर्द्धा भेदयेच्छिवा ।
चेतकी पादपच्छायामुपसर्पन्ति ये नराः ॥
भिद्यन्ते तत्क्षणादेव पशुपक्षिमृगादयः ।
चेतकी तु धृता हस्ते यावत्तिष्ठति देहिनः ॥
तावद्भिद्येत रोगैस्तु प्रभावान्नात्र संशयः ।
न धार्य्यं सुकुमाराणां कृशानां भेषजद्बिषाम् ॥
चेतकी परमा शस्ता हिता सुखविरेचनी ॥")
जातीपुष्पम् । इति राजनिर्घण्टः ॥

**चेतनः**, पुं, (चेतति जानाति सर्व्वं इति । चित् +
कर्त्तरि ल्युः ।) आत्मा । इति हेमचन्द्रः ॥
(यथा, पञ्चदश्याम् । ६ । ४५ ।
"चेतना चेतनभिदा कूटस्थात्मकृता न हि ।
किन्तु बुद्धिकृताभासकृतैवेत्यवगम्यताम् ॥")
मनुष्यः । इति राजनिर्घण्टः ॥ प्राणी । इत्य-
मरः । १ । ४ । ३० ॥
("रथादौ नियता चेष्टा चेतनेनाधितिष्ठिते ।
न दृष्टा चेतनस्तेन प्राणादीनां प्रवर्त्तकः ॥"
इति शब्दार्थचिन्तामणिधृतवचनम् ।)
चेतनं चैतन्यं विद्यतेऽस्य इति । "अर्शआदि-
भ्योऽच् ।" ५ । २ । १२७ । इत्यच् ।)
प्राणयुक्ते त्रि ।
इति मेदिनी । ने, ६४ ॥ (यथा, मेघदूते । ५ ।
कामार्त्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ॥")

**चेतनकी**, स्त्री, (चेतनं करोति बुद्धीन्द्रियादिस्फुरणं
वर्द्धयतीत्यर्थः । कृ + डः । ततो ङीष् ।) हरी-
तकी । इति राजनिर्घण्टः ॥

सेट् ।) दीर्घी चूषत्याम्रं लोकः । इति दुर्गा-
दासः ॥

**चूषा**, स्त्री, (चूष्यते पीयते पृष्ठमांसेनादृश्यतां
नीयते इति । चूष + घञर्थे कः ।) कक्ष्या । इत्य-
मरः । २ । ८ । ४२ ॥ काछदडी इति भाषा ॥

**चृत्**, कि सन्दीपने । इति कविकल्पद्रुमः ॥ (चुरां-
पक्षे भ्वां-परं-सकं-सेट् ।) कि, चर्त्तयति । इति
दुर्गादासः ॥

**चृत्**, श हिंसे । ग्रन्थे । इति कविकल्पद्रुमः ॥
(तुदां-परं-सकं-सेट् ।) श, चृतति चर्त्तिता ।
ग्रन्थो ग्रन्थनम् । इति दुर्गादासः ॥

**चेटः**, पुं, (चेटतीति । चिट् परप्रैषे + अच् ।)
दासः । इति हेमचन्द्रः ॥ (यथा, कथासरित्-
सागरे । ६ । १२७ ।
"एतत्तस्य मुखाच्छ्रुत्वा राजचेटस्य दुर्म्मनाः ॥"
सतुशृङ्गारसहायः । यथा, साहित्यदर्पणे । ३ । ४६ ।
"शृङ्गारस्य सहाया विटचेटविदूषकाद्याः स्युः ॥")

**चेटकः**, पुं, (चेटति दासत्वं करोतीति । चिट +
ण्वुल् ।) दासः । इत्यमरः । २ । १० । १७ ॥
(यथा, कथासरित्सागरे । ६ । १२४ ।
"आवाभ्यां राजहंसाख्य आहूतो राजचेटकः ॥")
उपपतिनायकभेदः । तस्य लक्षणं सन्धान-
चतुरः । इति रसमञ्जरी ॥

**चेटिका**, स्त्री, (चेटी + स्वार्थे कन् टापि अत
बलादीनि । चित + ण्वुल् । गौरादित्वात् ङीष् ।)
हरीतकी । इत्यमरः । २ । ४ । ५९ ॥ हिमाचलभवा
त्रिशिरा हरीतकी । सा च सर्व्वरोगनाशिनी
गन्धयुक्तद्रव्यकरणे प्रशस्ता । इति वैद्यकम् ॥
("चेतकी द्विविधा प्रोक्ता आकाराद्वर्णतस्तथा ।
षडङ्गुला हिता प्रोक्ता शुक्ला चैकाङ्गुला स्मृता ॥
श्रेष्ठा कृष्णा समाख्याता रेचनार्थे जिगीषुणा ।
चेतकी वृक्षशाखायां यावत्तिष्ठति तां पुनः ॥
भिन्दन्ति पशुपक्ष्याद्या नराणां कोऽत्र विस्मयः ।
चेतकीं यावद्विधृत्य हस्ते तिष्ठति मानवः ॥
तावद्भिनत्ति रोगांस्तु प्रभावान्नात्र संशयः ॥"
इति कल्पस्थाने प्रथमेऽध्याये हारीतेनोक्तम् ॥
एतस्या उत्तिगुणजात्यादिकं यथा, भावप्रकाशे
पूर्ब्बखण्डे प्रथमे भागे ।
"पपात बिन्दुर्मेदिन्यां शक्रस्य पिबतोऽमृतम् ।
ततो दिव्या समुत्पन्ना सप्तजातिर्हरीतकी ॥
हरीतक्यभया पथ्या कायस्था पूतनाऽमृता ।
हैमवत्यव्यथा चापि चेतकी श्रेयसी शिवा ॥
वयस्था विजया चापि जीवन्ती रोहिणीति च ।
विजया रोहिणी चैव पूतना चामृताऽभया ॥
जीवन्ती चेतकी चेति पथ्यायाः सप्तजातयः ।
अलावुवृत्ता विजया वृत्ता सा रोहिणी स्मृता ॥
पूतनास्थिमती सूक्ष्मा कथिता मांसलामृता ।

**चेतना**, स्त्री, (चेतयतेऽनया इति । चित् संज्ञाने
"न्यासश्रन्थेति ।" युच् टाप् च ।) बुद्धिः । इत्य-
मरः । १ । ५ । १ ॥ (यथा, भागवते । ४ । २१ । ३४ ।
"प्रधानकालाशयधर्म्मसंग्रहे शरीर एष प्रतिपद्य चेतनाम् ॥"
"एष विभुः परमान्दोऽपि शरीरे विषवकारां
बुद्धिं प्राप्य क्रियाफलत्वेन प्रतीयते ।" इति
टीकाकृच्चूर्णिः ॥) सा गर्भस्थबालकस्य सप्तभि-
मासैर्भवति । इति सुखबोधः ॥ (ज्ञानात्मिका
मनोवृत्तिः । यथा, भगवद्गीतायाम् । १३ । ६ ।
"इच्छाद्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः ॥"
तस्यामभिव्यक्तेन्द्रियवृत्तिः तप्त इव लौहपिण्डे-
ऽग्निरात्मचैतन्याभासरसविद्धा चेतना इति
शाङ्करभाष्यम् । ज्ञानात्मिका मनोवृत्तिरिति
श्रीधरस्वामी ॥ स्वरूपज्ञानव्यञ्जिकायां प्रमाणा-
साधारणकारणिकायां चित्तवृत्तौ ज्ञाना-
ख्यायां भगवतो विभूताविति शब्दार्थचिन्ता-
मणिः ॥)

| | | |
|---|---|---|
| इत्वं पूर्ब्बह्रस्वः । यद्वा चिट् ण्वुल् टापि अत इत्वम् ।) दासी । इति द्विरूपकोषः ॥ (यथा, कथासरित्सागरे । ४ । ५१ । “अङ्गीकुर्व्वन् स तन्मूढश्चेटिकाभिः प्रवेशितः ॥”)<br><br>**चेटी**, स्त्री, (चेट + ङीप् ।) दासी । इति हेम-चन्द्रः ॥ (यथा, रामायणे । २ । ९१ । ६४ । “प्रेष्याश्चेट्यश्च बध्वश्च बलस्थाश्चापि सर्व्वशः ॥”) | | |

**चेतनीया**, स्त्री, (चित् + णिच् + अनीयर् टाप् च ।
यद्वा चेतनायै हिता इति च्छः ।) ऋद्धिनामौ-
षधिः । इति राजनिर्घण्टः ॥

**चेदिः**, पुं, देशभेदः । तत्पर्य्यायः । त्रैपुरः २
डाहलः ३ चैद्यः ४ । (अयं देशस्तु आग्नेय्यां
दिशि शुक्तिमतीनदीतीरेस्थितः । यथा, बृहत्-
संहितायाम् । १४ । ८ ।
“शौलिकविदर्भवत्सान्ध्रचेदिकाश्चोद्र्ध्वकण्ठाश्च
॥”)
तद्देशस्थे पुं भूम्नि । इति हेमचन्द्रः ॥

**चेदिपतिः**, पुं, (चेदिदेशस्य पतिः पालकः राजा ।)
उपरिचरवसुः । यथा, --
“इन्द्रप्रीत्यै चेदिपतिश्चकारेन्द्रमहञ्च सः ।
पुत्राश्चास्य महावीर्य्याः पञ्चासन्नमितौजसः ॥”
इति महाभारतम् ॥
(शिशुपालः । यथा, महाभारते । २ । ४० । १५ ।
“इति तस्य वचः श्रुत्वा ततश्चेदिपति र्नृपः ।
भीष्मंरूक्षाक्षरा वाचः श्रावयामास भारत ! ॥”)

**चेदिराजः**, पुं, (चेदीनां राजा इति । “राजाहः-
सखिभ्यष्टच् ।” इति टच् ।) शिशुपालः ।
इति पुराणम् ॥ (यथा, महाभारते । २ ।
४० । १२ ।
“विप्लुता चास्य दुर्बुद्धेर्बुद्धिर्बुद्धिमताम्बर ! ।
चेदिराजस्य कौन्तेय ! सर्व्वेषाञ्च महीक्षिताम् ॥”)
उपरिचरवसुः । स तु चन्द्रवंशीयकृतिराज-
पुत्रो विष्णुभक्त इन्द्रसखा इन्द्रादेशाच्चेदिराज्यं
गृहीतवान् इन्द्रदत्ताकाशगविमानेनोपरिचरो
वभूव । एकदा ऋषयो देवाश्च विवदमानास्त-
मपृच्छन् किमोषध्या पशुना वा यज्ञाः कर्त्तव्या-
स्तेनोक्तं पशुना तत ऋषयस्तं शेपुर्भवता यथा-
शास्त्रमनुक्त्रा देवानां पक्षपातः कृतस्तस्मादधो
गच्छ इत्यभिशप्तः स तत्क्षणात् भूविवरे गतः ।
श्रीविष्णुना तस्य भक्षणार्थं नान्दीश्राद्धादौ गृह-
भित्तौ घृतधारादानं विहितम् । इति महा-
भारतम् ॥

**चेदिराट्**, [ज्] पुं, (चेदिषु राजते इति । राज +
गुणाः । गुरुत्वम् । विष्टम्भित्वम् ।
मधुरत्वम् ।
कफवायुकारित्वञ्च । इति
राजवल्लभः ॥

**चेलालः**, पुं, (चेलमिव त्वचं आलाति । आ +
ला + “कर्म्मण्यण् ।” ३ । २ । १
। इत्यण् ।) फललता-
विशेषः । तत्पर्य्यायः । चित्रफलः
२ सुखाशः ३
राजतेमिषः ४ लतापनसः ५
नाटाम्रः ६ सेदुः ७ ।
इति त्रिकाण्डशेषः ॥

**चेलिका**, स्त्री, (चिल्यते परिधीयतेऽसौ इति ।
चिल + इन् । स्वार्थे कन् ततष्टाप्
।) पट्टवस्त्र-
विशेषः । चेलिरकापड इति भाषा
॥ यथा, --
“सेयं कृष्णस्य वनिता
पीतशाटीपरिच्छदा ।
रक्तचेलिकया च्छन्ना
शातकुम्भघनस्तनी ॥”
इति पाद्मे पातालखण्डम् ॥

**चेलुकः**, पुं, (चेलति बुद्धितत्त्वं गच्छति इति । चेल
+ उकः ।) बुद्धभिक्षुशिष्यः ।
तत्पर्य्यायः ।
श्रामणेरः २ प्रव्रजितः ३
महापासकः ४
गोमी ५ । इति त्रिकाण्डशेषः ॥

**चेल्ल**, ऋ चाले । गतौ । इति कविकल्पद्रुमः ॥
(भ्वां-परं-सकं-सेट् ।) लद्वयान्तः
। ऋ, अचि-
चेल्लत् । अस्य ऋदनुबन्धः
कुटतेः कुटादिपाठ-

**चैतन्यः**, पुं, (चेतन एव । स्वार्थे ष्यञ् ।) भगवद-
तारविशेषः । तस्य प्रमाणं यथा, --
“श्रुत्वा तु कलिधर्म्मांस्तान् ब्रह्मा
लोकपितामहः ।
सर्व्वलोकहितार्थाय प्रोवाच मधुसूदनम्
॥
भविष्यति कलौ केनोपायेन
धर्म्मपालनम् ।
भक्तिमार्गस्थितिः कस्मात्तद्वदस्व
जगद्गुरो ! ॥
श्रीभवानुवाच ।
अवतीर्णो भविष्यामि कलौ निजगणैः
सह ।
शचीगर्भे नवद्वीपे स्वर्धुनीपरिवारिते ॥
अप्रकाश्यमिदं गुह्यं न प्रकाश्यं वहिर्मुखे
।
भक्तावतारं भक्ताख्यं भक्तं भक्तिप्रदं
स्वयम् ॥
मन्मायामोहिताः केचिन्न ज्ञास्यन्ति
वहिर्म्मुखाः ।
ज्ञास्यन्ति मद्भक्तियुताः साधवो
न्यासिनोऽमलाः ॥
कृष्णावतारकाले याः स्त्रियो ये पुरुषाः
प्रियाः ।
कलौ तेऽवतरिष्यन्ति श्रीदामसुवलादयः
॥
चतुःषष्टिर्महान्तस्ते गोपा द्वादश
बालकाः ।
धर्म्मसंस्थापनार्थाय विहरिष्यामि तैरहम्
॥
काले नष्टं भक्तिपथं स्थापयिष्याम्यहं
पुनः ।
कृष्णश्चैतन्यगौराङ्गो गौरचन्द्रो गौरहरिः
॥
शचीसुतः प्रभुर्गौरो नामानि भक्तिदानि मे
।
गच्छन्तु भुवि ते पुत्रा जायन्तां
भक्तरूपिणः ॥

क्विप् । यद्वा चेदिषु राट् ।) शिशुपालः । इति त्रिकाण्डशेषः ॥ (यथा, महाभारते । २ । ३८ । ३१ ।
"स वै पश्येद्यथा धर्म्मं न तथा चेदिराडयम् ॥"
उपरिचरवसुः । दमघोषश्च । इति पुराणम् ॥)

**चेवी**, स्त्री, रागिणीविशेषः । इति हलायुधः ॥

**चेल**, ऋ चाले । गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सकंच-सेट्-ऋदित् ।) ऋ, अचिचेलत् । इति दुर्गादासः ॥

**चेलं**, क्ली, (चेल्यते विस्तार्य्यते तन्तुभिरिति । चेल चाले + कर्म्मणि घञ् । यद्वा चिल्यते परिधीयते यत् इति । चिल + कर्म्मणि घञ ।) वस्त्रम् । (यथा, मनुः । ११ । १६६ ।
"चेलचर्म्मामिषाणाञ्च त्रिरात्रं स्यादभोजनम् ॥")
अधमे त्रि । इत्यमरः । ३ । ३ । २०१ ॥

**चेलानः**, पुं, (चेल + आनच् ।) फललताविशेषः । चेलना इति भाषा ॥ तत्पर्य्यायः । अल्पप्रमाणकः २ । इति रत्नमाला ॥ अस्य फलस्य वन्निष्फलः वेदेषूच्चारणभेदार्थो वा । अयं कैश्चिन्न मन्यते । इति दुर्गादासः ॥

**चेष्ट**, ङ ईहे । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-अकं-सेट् ।) ईहो व्यापारः । ङ, चेष्टते पठितुं शिष्यः । इति दुर्गादासः ॥

**चेष्टकः**, पुं, (चेष्टते इति । चेष्ट + ण्वुल् ।) रतिबन्धविशेषः । यथा, स्मरदीपिकायाम् ।
"पादमेकं हृदि न्यस्य इतरेणैव चेष्टयेत् ।
कान्तः क्रोडे स्थितां नारीं बन्धोऽयं चेष्टको मतः ॥"
चेष्टाकर्त्तरि त्रि ॥

**चेष्टा**, स्त्री, (चेष्ट + भावे अङ् टाप् च ।) कायिकव्यापारः । इति मुग्धबोधटीकायां दुर्गादासः ॥
(यथा, मनुः । ७ । ६७ ।
"आकारमिङ्गितं चेष्टां भृत्येषु च चिकीर्षितम् ।"
"प्रवृत्तिरत्र चेष्टा ज्ञानेच्छा प्रयत्नादीनां देहे ऽभावस्वोक्तप्रायत्वात् चेष्टायाश्च यत्नवानात्माप्यनुमीयते ॥" इति सिद्धान्तमुक्तावली । ५५ ॥)

**चेष्टानाशः**, पुं, (चेष्टायाः सृष्ट्यादेर्व्यापारस्य नाशो निवृत्तिरत्र ।) प्रलयः । इति राजनिर्घण्टः ॥

**चेष्टितं**, क्ली, (चेष्ट + भावे क्तः ।) गतिः । चेष्टा । इति मेदिनी ॥ (यथा, देवीभागवते । १ । १५ । १८ ।

धर्म्मसंस्थापनं काले कुर्व्वन्तु ते ममाज्ञाया ।
कृष्णावतारकाले ये मद्भक्तास्तान् शृणु क्रमात् ॥
श्रीदामनामगोपालो मम रामस्य च प्रियः ।
अभिराम इति ख्यातः पृथिव्यां स भविष्यति ॥
सुदामनामगोपालः श्रीमान् सुन्दरठक्कुरः ।
वसुदामप्रियसखः श्रीधनञ्जयपण्डितः ॥
सुबलो मे प्रियसखो गौरीदासाख्यपण्डितः ।
कमलाकरपिप्पलाइः पूर्ब्बख्यातो महाबलः ॥
महाबाहुर्गोपबालः श्रीमान् साहसपण्डितः ॥
पुरुषोत्तमो वैश्यकुले स्तोककृष्णः प्रियो मम ।
अर्ज्जुनः पूर्ब्बदेहे यः कलौ श्रीपरमेश्वरः ॥
पूर्ब्बप्रियो लवङ्गो मे कृष्णाख्यः स कलौ युगे ।
श्रीधरः श्रीधरसमः पूर्ब्बे श्रीमधुमङ्गलः ॥
सुबलो बलरामसखः कलौ श्रीलहलायुधः ।
द्वादशैते भविष्यन्ति कलौ मद्धर्म्मरक्षणे ॥
चतुःषष्टिर्महान्तो ये स्त्रियः केचिच्च पूरुषाः ।
पुरा गोपाङ्गनाः ख्याताः कलौ ताः पुरुषा भुवि ॥
यतिर्यस्मात् कलौ चाहं तदर्थे पुरुषाः स्त्रियः ।
नीलाम्बरश्चक्रवर्त्ती गर्गः ख्यातो मुनिः पुरा ॥
अतिप्रिया राधिका मे श्रीगदाधरपण्डितः ।
राधिकायाः प्रियांशः स श्रीगदाधरठक्कुरः ॥

| | | |
|---|---|---|
| | "जलूकेव सदा नारी रुधिरं पिबतीति व ।<br>मूर्खस्तु न विजानाति मोहितो भावचेष्टितैः ॥")<br><br>**चैतन्यं**, क्ली, (चेतन एवेति । स्वार्थे भावे वा ष्यञ् ।)<br>प्रकृतिः । इति राजनिर्घण्टः ॥<br>चेतना ॥ (यथा,<br>"चैतन्यं परमाणूनां प्रधानस्यापि नेष्यते ।<br>ज्ञानक्रिये जगत्कर्त्त्र्यौ दृश्येते चेतनाश्रये ॥<br>नेष्यते वैशेषिकैः साङ्ख्यैश्चेति शेषः ।" इति शब्दार्थ-<br>चिन्तामणिः ॥ तथाच,<br>याज्ञवल्क्ये । ३ । ८१ ।<br>"मनश्चैतन्ययुक्तोऽसौ नाडीस्नायुशिरायुतः ।<br>सप्तमे चाष्टमे चैव त्वङ्मांसस्मृतिमानपि ॥") | मधुमती प्रियसखी श्रीनरहरिसंज्ञकः ।<br>वृन्दा देवी प्राणसखी श्रीमुकुन्दः कलौ युगे ॥<br>चन्द्रावली प्राणतुल्या कविराजः सदाशिवः ।<br>ललिता या सखी मुख्या जगदानन्दपण्डितः ॥<br>विशाखा या प्रियसखी श्रीदामोदरनामकः ।<br>वनमाली कविराजः श्रीविशाखा सखी मम ॥<br>श्रीरघुनाथभट्टश्च रङ्गदेवी मम प्रिया ।<br>श्रीगदाधरभट्टस्तु सुदेवी सा मम प्रिया ॥<br>प्रबोधानन्दविख्यातस्तुङ्गविद्यातथा प्रिया ।<br>श्रीलराघवगोस्वामी चम्पकाख्या लता प्रिया ॥ |

गोस्वामी श्रीलभूगर्भ इन्दुलेस्वा तथा प्रिया
।
काशिमिश्रः शशिरेखा रूपः श्रीरूपमञ्जरी ॥
श्रीसनातनगोस्वामी प्रिया श्रीरतिमञ्जरी ।
श्रीरघुनाथदासः श्रीस्वरूपमञ्जरी मम ॥
द्वितीयो रघुनाथश्च श्रीरागमञ्जरी प्रिया ।
श्रीलगोपालभट्टः श्री-अनङ्गमञ्जरी सखी ॥
लोकनाथः प्रेमभक्तो लवङ्गमञ्जरी सखी ।
श्रीगदाधरभट्टस्तु प्रिया श्रीगुणमञ्जरी ॥
भट्टः श्रीजीवगोस्वामी योगमाया सहाथिनी
।
दूती कलावती प्रेष्या श्रीगोविन्दः प्रियो मम
॥
दूती लीलावती श्रीमान् माधवः प्रीतिवर्द्धनः
।
वासुघोषाभिधो दूती ममानन्दप्रदायिनी ॥
श्रीशिवानन्दभार्य्या सा मत्प्रियेन्दुमती
सखी ।
श्रीपरमानन्दपुरि प्रियो मे उद्धवः सखा ॥
श्रीलराघवदासस्तु धनिष्ठा मे प्रिया सखी ।
शुक्लाम्बरो ब्रह्मचारी याज्ञिको ब्राह्मणः
स्मृतः ॥
पण्डितो जगदीशश्च यज्ञपत्नी मम प्रिया ।
आचार्य्यः श्रीलभगवान्
श्रीचैतन्यप्रियांशभाक् ॥
पण्डितो गरुडः श्रीमान् गरुडो मम वाहनः
।
श्रीलगोपीनाथसिंहोऽक्रूरो भक्तो मम प्रियः
॥
घोषः शङ्कर आख्यातो गुणसागररायकः ।
माधवः शान्तनुमुनिर्विश्वकर्म्मा तु भास्करः
॥
वनमाली सुदामा च सार्व्वभौमो बृहस्पतिः
।
प्रिया इन्दुमुखी या मे मकरध्वजविश्रुतः ॥
सिंहानन्दो लोकनाथः कविचन्द्रस्ततः
परम् ।
श्रीनाथो रामनाथश्च चत्वारः सनकादयः
॥

यः श्यामं दधदाशु वर्णकममुं श्यामो युगे
द्वापरे
सोऽयं गौरविधुर्व्विभाति कलयन्नामावतारं
कलौ ॥
नित्यानन्दो भक्तरूपो व्रजे यः श्रीहलायुधः
।
भक्तावतार आचार्य्योऽद्वैतो थः
श्रीसदाशिवः ॥”
इति गौरगणोद्देशः ॥
(अयमेव भगवांश्चैतन्यदेवो
नवीनवैष्णवसम्प्र-
दायविशेषस्य
प्रवर्त्तकस्तत्सम्पदायैश्चोपास्येष्ट-
देवत्वेनासौ परिगृहीतश्च । असौ एव
वृन्दावन-
रमण-श्रीकृष्णस्य पूर्णावतार इति केचित्,
परैस्तु
प्रामाणिकग्रन्थवचनादर्शनात् तन्न मन्यते
अत-
एवास्मिन् विषये पण्डितानां प्रायशो
मतभेदो
दृश्यते ।
स तु प्रभुः (१४०७) सप्ताधिकचतुर्द्दश-
शतशके कुम्भस्थे सवितरि पौर्णमास्यां
तिथौ
शुक्रवारे प्रदोषसमये नवद्वीपाख्यनगर्य्यां
प्रादु-
र्बभूव । तस्मिन्नेव महामहिम्नस्तस्य
भगवतो
जन्मसमये चन्द्रदेवं प्रति सैंहिकेयोपरागो
जातः । एतदुपलक्षीकृत्य गङ्गास्नानार्थं
बहवो
लोका नानादिग्देशादागत्य तत्र मिलिताः ।
तदा ग्रस्तेऽपि राहुणा चन्द्रमसि
भक्तजनकुमुद-
बान्धवो गौरचन्द्रः समवेतलोकानां
हरिसंकी-
र्त्तनप्रभृतिभिर्म्मङ्गलाचरणैः
सहशचीपूर्ब्बपर्व्वता-

तदा सर्व्व एवैनं देवांशसम्भूतममन्यन्त ।
अथ
कदाचिदयं गङ्गास्नानार्थं गत्वा तत्र
वल्लभा-
चार्य्यस्य लोकातीतरूपलावण्यां लक्ष्मीं
नाम
कन्यामवलोक्य मोहित आसीत् ।
वल्लभा-
चार्य्यस्तु एतदवगम्य स्वयमेव तां
कन्यामस्मै
सम्प्रददे । विवाहानन्तरमेवासौ छात्रान-
ध्यापयितुं प्रवृत्तः । एतस्मिन्नेव समये
बहवा
दिगविजयिनः पण्डिता नवद्वीपमागत्य
अस्य
तर्कजालैः समाच्छन्ना भग्नदर्पाश्च सन्तः
प्रति-
निवृत्ताः । असावपि दिग्विजिगीषया
पूर्ब्बादि-
स्थलीं गत्वा तत्रस्थान् पण्डितान्
विमोहयन्
सुविमलं यशः प्राप्तवान् । एतस्मिन्नेव
काले
अस्य पूर्ब्बपत्नी कालधर्म्मं प्राप्ता ।
चैतन्यदेवस्तु
तस्या विरहेण व्याकुलितोऽपि
मातुरनुरोधेनैव
पुनः सनातनपण्डितस्य
विष्णुप्रियानाम्नीं कन्यां
द्वितीयपत्नीत्वेन स्वीचकार । परं
सर्व्वगुणविभू-
षितायाः साक्षात् लक्ष्म्या इव लक्ष्म्या
मरणा-
देवासौ संसारविरक्तः
श्रीवासादिभिर्भक्तवर्गै-
र्मिलितो हरिभक्तिरसनिमग्न एव कालं
यापया-
मास । अथ कदाचित्
पितृलोकोद्धारवासनया

काशिमिश्रस्तु कुब्जा
स्याद्रामानन्दोऽर्ज्जुनः सखा ।
प्रतापरुद्रः ख्यातोऽसाविन्द्रद्युम्नो
महीपतिः ॥
ठक्कुरश्च कालिदासः पुलिन्दीवनचारिणी
।
शिखीचराधिका दासी मा इति
ख्यातिसंयुता ॥
आचार्य्यगोपीनाथश्च रत्नावती मम प्रिया ।
शार्ग्गदासः पद्मिनी स्यात् सूर्य्यो विश्वेश्वरः
स्मृतः ॥
भानुमती सत्यराजो रामानन्दः कलावती ।
जयश्च विजयश्चैव गोविन्दो गरुडस्तथा ॥
आचार्य्यरत्नश्चन्द्रः स्याद्व्यासो वृन्दावनः
स्मृतः ।
शुकदेवा व्यासपुत्रो भट्टो वल्लभ ईरितः ॥
शिवानन्दोऽब्जज इव देवानन्दश्च भार्गवः ।
पण्डितः श्रीजगन्नाथो दुर्व्वासा मुनिरुच्यते
॥
आचार्य्यः श्री-अनन्तश्च हरिदासस्तथैव च
।
एता गोप्यो व्रजे ख्याता हृदयानन्द एव च ॥
प्रियाश्चतुःषष्टिस्ते धर्म्मसंस्थापने कलौ ।
एतेषां पुण्यनामानि ये स्मरन्ति दिने दिने ॥
ते प्राप्नुवन्ति मद्भक्तिं पुनन्ति भुवनत्रयम् ।
मद्भक्तदासा ये मर्त्या नास्ति तेषां समः
क्वचित् ॥
श्रुत्वा भगवतो वाक्यं ब्रह्मा हर्षमवाप्तवान् ।
स्तौति तं देवदेवेशं नेदुर्दन्दुभयस्तदा ॥
जगुर्गन्धर्व्वप्रवरास्तुम्बुरुप्रमुखास्तदा ॥”
इत्यनन्तसंहितायां श्रीचैतन्यजन्मखण्डे
सप्त-
पञ्चाशत्तमोऽध्यायः ॥ * ॥ अपि च ।
“यः सत्ये सितवर्णमादधदसौ
श्रीशुक्लनामाभवत्
त्रेतायां मखभुक् मखाख्य
उचितोऽभूद्रक्तवर्णं
दधत् ।

दुदियाय । भवन्ति हि शुभसूचकानि महता-
माविभूतानि । अतस्तदापि प्रसन्ना दिक्
शैत्यसौगन्ध्यमान्द्यादिगुणगणाढ्यो
मलयसमी-
रणः प्रसन्नानि च साधु जनमनांसि
समभवन् ।
अस्य पिता जगन्नाथमिश्रस्तु पुरा
श्रीहट्टनिवासी
आसीत् । कदाचित् गङ्गास्नानार्थमेव
नवद्वीप-
मागत्य विप्रचक्रवर्त्तिकुलतिलकस्य
नीलाम्बर-
शर्म्मणः शचीनाम्नीं कन्यां परिणीतवान् ।
ततो गच्छति काले अयं चैतन्यदेवः
शचीगर्भे
त्रयोदशमासं यावदुषित्वा जगन्नाथमिश्रस्य
दशमपुत्रत्वेन समभवत् । अस्य पूर्ब्बजो
विश्वरूपो
नाम जगन्नाथमिश्रस्यापरः पुत्र आसीत् ।
स
तु यौवन एव ज्ञानवैराग्यविशारदो दारपरि-
ग्रहमनङ्गीकुर्व्वन् पारिव्राज्यधर्म्मं समाश्रयत्
।
अथ चैतन्यदेवस्य जातकर्म्मादिसंस्कारे
यथा-
कालं क्रमशो निवृत्ते अस्य मातामहो नीला-
म्बरचक्रवर्त्ती सुलक्षणादिकमवलोक्य
विश्वम्भर
इति नाम्नैनमाजुहाव । शचीदेवी तु पुनः
पुनः
पुत्रधनेन वञ्चिता प्रियतममेनं कनीयांसं
संसार-
स्थितिदीर्घजीवनकामनया निमाइ
इत्याख्यया
पौरवासिनस्तु असामान्यरूपलावण्यतया
परम-
समादरेण गौर इत्याख्यया च आहूतवन्तः ।
परं धर्म्मरसिकानां भक्तानां समाजे, शाक्य-
सिंहस्य बुद्धदेव इव अस्य महाप्रभुरिति
चैतन्यदेव इति च आख्या प्रसिद्धा ।

गयातीर्थं गत्वा भक्तचूडामणेः
श्रीमदीश्वरपुरि-
नाम्नो गोस्वामिनः सकाशात्
हरिनामामृत-
दीक्षां लब्ध्वात्मानं कृतकृतार्थं मत्वा च
स्वदेशं
प्रत्यावृत्तवान् । एतस्मिन्नवसरे
पाषण्डदुराचारौ
दस्युप्रवरौ जगाइ माधाइ चेति प्रसिद्धौ
ब्रह्म-
बन्धू अन्यांश्च कुष्ठादिव्याधिपीडितान्
महा-
पातकिनः करुणया हरिनामदीक्षादानेन
संसारसागरात् समुद्धृत्य
यवनजातीयकाजि-
प्रभृतीन् वैष्णवद्वेषिणः स्वमहिम्ना
दमयामास ।
ततः प्रभृत्येवासौ भक्तिरसप्रधानं
वैष्णवधर्म्मं
प्रचारयितुमिच्छन्
नित्यानन्दाद्वैताचार्य्या-
दिभिर्भक्तवर्गैः सह नानाजनपदं
परिभ्रमन्
बहूनेव जनान् प्रेमोन्मत्तानकरोत् । अथ
(१४३१)
एकत्रिंशदधिकचतुर्द्दशशतशके
उत्तरायण-
संक्रान्त्यां संसारमायां परित्यज्य
काटोयाख्य-
ग्रामे केशवभारतिसकाशात्
सन्न्यासधर्म्मं समा-
श्रयत् । अथ नीलाचलमागत्य
श्रीजगन्नाथदेवं
दृष्ट्वा राज्ञः प्रतापादित्यस्य सभापण्डितं
वेदान्त-
शास्त्रपारदर्शिनंसार्व्वभौमं विचारेण
पराजित्य
वैष्णवदीक्षां प्रदत्तवान् । अथ कदाचित्
गोदा-
वरीतीरे भक्तवरं रामानन्दमवलोक्य
सेव्य-

| | | |
|---|---|---|
| | अथ प्राप्ते काले चैतन्यदेवोऽयं शास्त्रसागर-<br>पारगमशेषबुधवर्गवन्दितचरणारविन्दं महा-महोपाध्यायं गङ्गादासशर्म्माणमुपाध्यायत्वेनाङ्गीकृत्य स्वल्पेनैव कालेन सर्व्वशास्त्रार्थ-तत्त्वज्ञः समभवत् । अस्य बुद्धिप्राखर्य्यमवगम्य | निर्णयैर्धर्म्मालापैरात्मानं कृतकृत्यवदमन्यत ।<br>ततोऽसौ त्रिपदी-शिवकाञ्ची-विष्णुकाञ्ची-त्रिमल्ल-प्रभृतीन् बहून् दाक्षिणात्यजनपदान् हरिप्रेम-रसेन प्लावयित्वा द्वारकातीर्थदर्शनार्थं प्रस्थितः ।<br>तत्रैवासौ 'कृष्णकर्णामृतं' नाम सुप्रसिद्धवैष्णव-ग्रन्थं लब्धवान् । अतः परं पुनरेव नीलाचल-मागत्य काशीश्वरनाम्नः कस्यचिद्भक्तप्रधानस्य भवने अवस्थितवान् । अत्रेवासौ श्रीश्रीजगन्नाथ-देवस्य रथयात्रामहोत्सवे हरिसंकीर्त्तना-दिकं विधाय प्रेमोन्मादप्रलापादिभिर्भक्तिलक्षणं दर्शयामास । अथ गच्छति काले वृन्दावनं |

जिगमिषुर्व्वन्येनैव पथा व्रजन्
स्वभावसारल्येन
व्याघ्रादीनपि हिंस्रजन्तून् भक्तिप्रेम्णा
मादयित्वा
वृन्दावनमुपतस्थे । तत्र स्वभक्तवृन्दावृत
एवासौ
गोपीवल्लभश्रीकृष्णस्य
विहारस्थानादिकमवलोक्य
मथुरामुद्दिश्य प्रस्थितः । ततोऽस्मात्
स्थानात्
प्रयागगमनकाले बहून् पाषण्डानपि यव-
नान् हरिभक्तान् विधाय
वाराणसीमुपस्थितः ।
तत्र कियत्कालमुषित्वा स्वधर्म्मं प्रचार्य्य
च
पुनर्नीलाचलमाजगाम । अत्रस्थ एवासौ
स्वप्रचारितवैष्णवधर्म्मस्य माहात्म्यं
विज्ञापयितुं
भक्तवृन्दाग्रगण्यान् रूपसनातनादीन्
नाना-
तीर्थस्थानेषु प्रेषयामास । अथ स्वभक्तै-
र्म्मिलितो नानाविधमहोत्सवेन
हरिसंकीर्त्तना-
दिकं विधाय भक्तिरसस्य
उत्कटकोटिमभि-
गम्य
विरहोन्मादादिप्रगाढभक्तिलक्षणैरन्वित
आसीत् । तत एवासौ स्वभक्तगणान्
कलियुगे
हरिसंकीर्त्तनस्य माहात्म्यादिकं
श्रावयित्वा
अष्टचत्वारिंशद्वर्षवयसि कालस्य
दुरतिक्रमणीय-
त्वात् (१४५५)
पञ्चपञ्चाशदधिकचतुर्द्दशशतशके
मानवकायं परित्यज्य अन्तर्हितवान् ॥)

**चैत्यं**, क्ली पुं, (चित्यस्य इदम् । "तस्येदम् ।" ४ ।
३ । १२० । इत्यण् ।) आयतनम् ।
इत्यमरः ।

**चैत्रः**, पुं, (चित्रे विचित्रे कार्य्यादौ साधुः । चित्र
+ अण् ।) बुद्धभिक्षुकः । इति
त्रिकाण्डशेषः ॥
वर्षपर्व्वतविशेषः । इति मेदिनी । रे,
३७ ॥
(यथा, हारावल्याम् ।
"हिमवान् हेमकूटश्च निषधो मेरुरेव
च ।
चैत्रः कर्णी च शृङ्गी च सप्तैते
वर्षपर्व्वताः ॥"
चित्रायां भवः । चित्रा + अण् ।)
चित्रा-
गर्भजो बुधपुत्त्रः । स
सप्तद्वीपाधिपतिः सुरथ-
राजपितामहः । इति ब्रह्मवैवर्त्ते
प्रकृतिखण्डम् ॥
(चित्रानक्षत्रयुक्ता पौर्णमासी यत्रसः ।
चित्रा +
"विभाषा
फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः ।"
४ । २ । २३ । इति पक्षे अण् ।)
मासभेदः ।
स तु सौरचान्द्रभेदेन द्विविधः । तत्र
मीन-
राशिस्थरविकः सौरः
मीनस्थरविप्रारब्धशुक्ल-
प्रतिपदादिदर्शान्तश्चान्द्रः । इति
मलमास-
तत्त्वम् ॥ तत्पर्य्यायः । चैत्रिकः २
मधुः ३ ।
इत्यमरः । १ । ४ । १५ ॥ चैत्री ४
कालादिकः ५ ।
इति राजनिर्घण्टः ॥ चैत्रकः ६
चित्रिकः ७ ।
इति शब्दरत्नावली ॥ * ॥ तत्र
जातफलम् ।
"सत्कर्म्मशाली विनयी सुवेशो
भोगी सुखी स्यान्मधुरान्नभोजी ।
सत्सङ्गयुक्तो द्विजदेवभक्तो
तत्पर्य्यायः । मधूत्सवः २ सुवसन्तः ३
काममहः ४
वासन्ती ५ कर्द्दनी ६ । इति त्रिकाण्डशेषः ॥

**चैत्रिकः**, पुं, (चित्रानक्षत्रयुक्ता पौर्णमासी विद्यते-
ऽस्मिन् । "विभाषा फल्गुनीति ।" ४ । २ । २३
।
इति पक्षे ठक् ।) चैत्रमासः । इत्यमरः । १ । ४ ।
१५ ॥

**चैत्री**, [न्] पुं, (चैत्री चित्रायुक्ता पौर्णमासी
विद्यतेऽस्मिन् । ब्रीह्यादित्वादिनिः ।) चैत्रमासः ।
इति राजनिर्घण्टः ॥ (चित्रा + इञ् ।) चैत्रि-
रिति च पाठः ॥

**चैद्यः**, पुं, (चेदीनां जनपदानां राजा । चेदि +
ष्यञ् ।) शिशुपालः । स तु दमघोषसुतः ।
इति जटाधरः ॥ (यथा, माघे । २ । ३८ ।
"त्वया विप्रकृतश्चैद्यो रुक्मिणीं हरता हरे ॥"
चेदिराजवसुः । इति पुराणम् ॥) तद्देशीये पुं
भूम्नि । इति त्रिकाण्डशेषः ॥

**चोक्षः**, त्रि, (ख्यायते उच्यते गीयते इत्यर्थः ।
चक्ष + कर्म्मणि घञ् । ततः पृषोदरात् साधुः ।)
गीतः । शुचिः । (यथा, मनुः । ३ । २०७ ।
"अवकाशेषु चोक्षेषु नदीतीरेषु चैव हि ।
विविक्तेषु च तुष्यन्ति दत्तेन पितरः सदा ॥")
दक्षः । (यथा, महाभारते । १२ । ७० । ८ ।
"अनीर्षुर्गुप्तदारः स्याच्चोक्षः स्यादघृणी नृपः
॥")
तीक्ष्णः । मनोज्ञः । इति मेदिनी । षे, १२ ॥

**चोचं**, क्ली, (प्रशस्तं चोचं त्वक् विद्यतेऽस्य ।
"अर्शआदिभ्योऽच् ।" ५ । २ । १२७ । इत्यच्
।)
गुडत्वक् । इत्यमरः । २ । ४ । १३४ ॥ (यथा,
स्पृक्काचौरकचोचपत्रतगरस्थौणेयजातीरसाः
।"
इति वाभटे सूत्रस्थाने । १५ । ४५ ।
तेजपात इति ख्यातम् । इति केचित् ॥ (अस्य
पर्य्यायाः यथा, --

२ । २ । ७ ॥ यज्ञस्थानं केचित्तु
मुखरहितं
देवकुलसदृशंयज्ञायतनं
सचित्यमचित्यमपी-
त्याहुः । देवायतनमात्रम् । मृदां देवकुलम्
।
इति भरतः ॥ (यथा, महाभारते । २ । ३
। १२ ।
"यत्र यूपा मणिमयाश्चैत्याश्चापि
हिरण्मयाः ॥")
चिता । इति त्रिकाण्डशेषः ॥

**चैत्यः**, पुं, (चैत्ये देवायतनादिस्थाने तिष्ठतीति ।

चैत्य + अण् ।) बुद्धः । विम्बः ।
उद्देशवृक्षः ।
इति मेदिनी भरतश्च ॥ शेषस्य पर्य्यायः ।
देव-
तरुः २ देवावासः ३ करिभः ४ कुञ्जरः ५
। इति
त्रिकाण्डशेषः ॥ (यथा, महाभारते । ६ ।
३ । ४० ।
"वृक्षाः पतन्ति चैत्याश्च ग्रामेषु नगरेषु च
॥"
क्षेत्रज्ञः पुरुषः । यथा, भागवते । ३ । २६
। ६० ।
"अहङ्कारस्तयोरुद्रश्चित्तं
चैत्यस्ततोऽभवत् ॥")

**चैत्यद्रुः**, पुं, (चैत्य एव द्रुर्वृक्षः ।) अश्वत्थवृक्षः ।

इति त्रिकाण्डशेषः ॥ (अश्वत्थशब्देऽस्य
गुणादयो
ज्ञातव्याः ॥)

**चैत्यमुखः**, पुं, (चैत्यं चितिसम्पन्नं विस्तृतमित्यर्थः

मुखं यस्य ।) कमण्डलुः । इति
त्रिकाण्डशेषः ॥

**चैत्यवृक्षः**, पुं, (चैत्यस्तदाख्यया प्रसिद्धो वृक्षः ।)

अश्वत्थवृक्षः । इति रत्नमाला ॥ (यथा,
मनुः ।
९ । २६४ ।
"चतुष्पथाश्चैत्यवृक्षाः समाजाः प्रेक्षणानि
च ॥")

भवेन्मनुष्यो मधुमासजन्मा ॥"
इति कोष्ठीप्रदीपः ॥ * ॥
(चैत्रकृत्यानि तु वारुण्यशोकाष्टमी-
श्रीराम-
नवमी-मदनत्रयोदशी-
मदनचर्द्दशीप्रभृतीनि ।
एतेषां प्रकरणादिकं तत्तच्छब्दे
द्रष्टव्यम् ॥)
तत्र शिवव्रतं कर्त्तव्यम् । यथा, --
"चैत्रे मास्यथ माघे वा योऽर्च्चयेत्
शङ्करं व्रती ।
करोति नर्त्तनं भक्त्या
वेत्रपाणिर्दिवानिशम् ॥
मासं वाप्यर्द्धमासं वा दश सप्त
दिनानि वा ।
दिनमानं युगं सोऽपि शिवलोके
महीयते ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥
अधुनास्य सन्न्यास इति गाजन् इति
च भाषा ॥

**चैत्रकः**, पुं, (चैत्र + एव । स्वार्थे कन् ।) चैत्र-

मासः । इति शब्दरत्नावली ॥

**चैत्ररथं**, क्ली, (चित्ररथेन गन्धर्व्वेण निर्वृत्तम् ।

"तेन निर्वृत्तम् ।" ४ । २ । ६८ ।
इत्यण् ।)
कुवेरस्योपवनम् । तत्तु
चित्ररथगन्धर्व्वनिर्म्मि-
तम् । इत्यमरः । १ । २ । ७३ ॥
(यथा, रघुः । ५ । ६० ।
"एको ययौ चैत्ररथप्रदेशान्
सौराज्यरम्यानपरो विदर्भान् ॥"
इदन्तु पीठस्थानानामन्यतमं । यथा,
देवी-
भागवते । ७ । ३० । ५८ ।
"मदोत्कटा चैत्ररथे जयन्ती
हस्तिनापुरे ॥"
पुं, कुरुपुत्त्रविशेषः । यथा, महाभारते
। १ ।
९४ । ४९ ।

"त्वक्पत्रञ्च वराङ्गं स्याद्भृङ्गञ्चोचन्तथोत्कटम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
उपभुक्तफलावशिष्टम् । चोँचा इति ख्यातम् ॥
तालफलम् । इति भरतः । कदलीफलम् ।
इति सारसुन्दरी ॥ नारिकेलम् । इति स्वामी ॥
वल्कलम् । चर्म्म । इति धरणी ॥

**चोचकं**, क्ली, (चोच + स्वार्थे कन् । यद्वा, चोचेन

त्वचा कायतीति । कै + कः ।) वल्कलम् । इति
शब्दरत्नावली ॥

**चोटी**, स्त्री, शाटी । इति हेमचन्द्रः । ३ । ३३९ ॥

**चोडः**, पुं, (चुडति संवृणोति शरीरमिति । चुड

संवरणे + अच् ।) प्रावरणम् ॥ देशविशेषः ।
इति मेदिनी । डे, १३ ॥

**चोदना**, स्त्री, (चोद्यते प्रवर्त्त्यतेऽनयेति । चुद

क् नुदि + युच् टाप् च ।) विधिः । (यथा,
गीतायाम् । १८ । १८ ।
"ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्म्मचोदना ॥")
प्रेरणा । यथा । चोदना लक्षणोऽर्थो धर्म्म इति
जैमिनिसूत्रम् ॥ एकोद्दिष्टादिवृद्ध्यादौ ह्रास-
वृद्ध्यादि चोदना । इति स्मृतिः ॥

**चोदनागुडः**, पुं, (चोदनया प्रेरणया गुड्यते उत्-

क्षिप्यते इति । गुड + "इगुपधज्ञेति ।" ३ । १

**चैत्रं**, क्ली, (चीयन्ते जीवाः स्थानात् स्थानान्तर-

मनेनेति । चि + बाहुलकात् करणे त्रन् । ततः
स्वार्थे अण् ।) मृतम् । देवकुलम् । इति
मेदिनी । रे, ३७ ॥ देउल इति भाषा ॥ (यज्ञ-
स्थानम् । यथा, महाभारते । १ । १०९ । १३ ।
"भीष्मेण धर्म्मतो राजन् ! सर्व्वतः परिरक्षिते ।
बभूव रमणीयश्च चैत्रयूपशताङ्कितः ॥")
"अविक्षितमभिष्वन्तं तथा चैत्ररथं मुनिम् ।
जनमेजयञ्च विख्यातं
पुत्त्रांश्चास्यानुशुश्रुम ॥")

**चैत्रावली**, स्त्री, (चैत्रं चैत्रमासं आ सम्यक्रूपेण

वरयत्यभिलषतीति । आ + वर + णिच् + अच् ।
स्त्रियां ङीप् । रस्य लत्वम् ।) चैत्री पूर्णिमा ।

१३५ । इति कः । क्रीडनकाले कन्दुकानां ऊद्‌र्ध्व-
क्षेपणप्रसिद्धतयास्य तथात्वम् ।) कन्दुकः । इति
त्रिकाण्डशेषः ॥

**चोद्यं**, क्ली, (चोदयति प्रेरयति चित्तं रसविशेषे
अनेनेति । चुद् + णिच् + ण्यत् ।) अद्भुतम् ।
प्रश्नः । इति मेदिनी । ये, २३ ॥ (यथा, महा-
भारते । ५ । ४३ । ३४ ।
"सत्यं ध्यानं समाधानं चोद्यं षैराग्यमेव च ।
अस्तेयं ब्रह्मचर्य्यञ्च तथासंग्रहमेव च ॥")

**चोद्यः**, त्रि, (चोदयितुं प्रेरयितुं योग्यः । "अर्हे
कृत्यतृचश्च ।" ३ । ३ । १६९ । इति यत् ।)
चोदनार्हः । प्रेरणयोग्यः । इति मेदिनी । ये,
२३ ॥ (यथा, महाभारते । ५ । ३८ । ७ ।
"नीवारमूलेङ्गुदशाकवृत्तिः
सुसंयता चाग्निकार्य्येषु चोद्यः ।
वने वसन्नतिथिष्वप्रमत्तो
धुरन्धरः पुण्यकृद्देष तापसः ॥")

**चोपनं**, क्ली, (चुप मन्दगमने + भावे ल्युट् ।) शनै-
र्गमनम् ॥

**चोरः**, पुंस्त्री, (चोरयतीति । चुर + णिच् + पचा-
द्यच् ।) स्तेयकर्त्ता । तत्पर्य्यायः । चौरः २ दस्युः ३
तस्करः ४ प्रतिरोधी ५ मलिम्लुचः ६ स्तेनः ७
ऐकागारिकः ८ स्तैन्यः ९ प्रच्छन्नजनः १०
मोषकः ११ पाटच्चरः १२ परास्कन्दी १३
कुम्भिलः १४ खनकः १५ शङ्कितवर्णः १६

**चोरपुष्पिका**, स्त्री, (चोरपुष्पी + स्वार्थे संज्ञायां
वा कन् टाप् पूर्ब्बह्रस्वश्च ।) चोरपुष्पी । इति
शब्दरत्नावली ॥ ("शङ्खिनी चोरपुष्पिका ।"
इति वैद्यकम् ॥)

**चोरपुष्पी**, स्त्री, (चोरो गन्धद्रव्यविशेषस्तद्वत् सुगन्धि
पुष्पमस्याः । "पाककर्णपर्णेति ।" ४ । १ । ६४ ।
इति ङीष् ।) वृक्षविशेषः । वोणा इति चोर-
हुली इति च ख्याता इति भरतः ॥ तत्पर्य्यायः ।
शङ्खिनी २ केशिनी ३ । इत्यमरः । २ । ४ । १२६ ॥
चोरपुष्पिका ४ । इति शब्दरत्नावली ॥
(चोरा ५ । इति शब्दचन्द्रिका ॥)

**चोरस्नायुः**, स्त्री, (चोरस्य स्नायुरिव ।) काक-
नासालता । तस्करस्नायुरिति राजनिर्घण्ट-
दशनात् ॥

**चोरा**, स्त्री, (चोरो गन्धद्रव्यविशेषः तस्येव गन्धो-
ऽस्त्यस्य । अच् ततष्टाप् ।) चोरपुष्पी । इति
शब्दचन्द्रिका ॥

**चोरिका**, स्त्री, (चोरस्य भावः । मनोज्ञादि-
त्वात् ठन् ।) चौरिका । चौर्य्यम् । इत्यमर-
टीकायां रायमुकुटः ॥

**चोलः**, पुं, (चोलयति समुच्छ्रयति स्त्रीणां वक्षः-
प्रदेशे इति । चुल उन्नतौ + अच् ।) कञ्चुलिका ।
काँचुलि इति भाषा ॥ (यथा, आनन्दलह-
र्य्याम् । ६६ ।
"निजां बीणां वाणी निचुलयति चोलेन निभृतम् ॥")
तत्पर्य्यायः । कुर्पासकः २ । इत्यमरः । २ ।
६ । ११८ ॥
कञ्चूकः ३ । इति जटाधरः ॥ कुञ्चुली ४ कुञ्चु-
लिका ५ । इति शब्दरत्नावली ॥ स्त्रीणां निचोल

**चोषः**, पुं, (चीयते इति । चि + डः । ततः उष-
दाहे + अप् । चश्चासौ उषश्चेति ।) पार्श्व-
ज्वाला ॥ यथा, --
"हृच्छूलपीडनयुतं पवनेन पित्ता-
तृड्दाहचोषबहुलं सकफप्रसेकम् ।
श्लष्मात्मकं बहुरुजं बहुभिश्च विद्यात्
वैगुण्यमोहजडताभिरथापरञ्च ॥
चोषः पार्श्वस्थिताग्निनेव सन्तापः ।"
इति भाव-
प्रकाशः ॥ (यथाच, सुश्रुते । १ । ४२ ।
"यो गले चोषमुत्पादयति मुखवैशद्यं जनयति
भक्तरुचिं चापादयति हर्षञ्च स तिक्तः ॥")

**चोस्कः**, पुं, (चन्दयति आह्लादयति । चदि + डः ।
ततः स्कन्दति आक्रमते शत्रून् स्कुनाति आप्ल-
वते वा । स्कन्दि स्कु वा + डः । ततः पृषोदरा-
दोत्वे साधुः ।) सिन्धुवारदेशीयाश्वः । इति
त्रिकाण्डशेषः ॥

**चौक्षं**, त्रि, (चोक्ष एव इति । स्वार्थे अण् ।) मनो-
ज्ञम् । इति महाभारतम् ॥

**चौरः**, पुं स्त्री, (चोर एव प्रज्ञादिभ्योऽण् । यद्वा
चुरा शीलमस्य । "इति छत्रादिभ्योणः ।" ४ । ४ ।
६२ । इति णः ।) चोरः । इत्यमरः । २ । १० । २४ ॥
(यथा, देवीभागवते । १ । १६ । ५९ ।
"चौरं वा तापसं वापि समानं मन्यते कथम् ॥"
असुरविशेषः । यथा, हरिवंशे । १७६ । १९ ।

खानिकः १७ । इति शब्दरत्नावली ॥
प्रचुर-
पुरुषः १८ । इति त्रिकाण्डशेषः ॥ तृपुः
१९
तक्का २० रिभ्वा २१ रिपुः २२ रिक्का
२३
विहायाः २४ तायुः २५ वनर्गुः २६
हुरश्चित् २७
मूषीवान् २८ मलिम्लुचः २९ अघशंशः
३०
वृकः ३१ । इति वेदनिघण्टौ ३ अध्यायः
॥
(यथा, देवीभागवते १ । १९ । ६ ।
"चोरेषु चौरबुद्धिस्ते साधुबुद्धिस्तु तापसे ।
स्वपरत्वं तवाप्यस्ति विदेहस्त्वं कथं नृप !
॥")
कृष्णशटी । इति क्रमचन्द्रिकाधृतहड्डचन्द्रः
॥
गन्धद्रव्यविशेषः । यथा ।
चोरकुङ्कुमरोचनाः ।
इत्यष्टगन्धकथने आगमः ॥

**चोरकः**, पुं, (चोरो गन्धद्रव्यविशेषस्तद्वत् काय-

तीति । कै + कः ।) पृक्का । इति रत्न-
माला ॥ पिडिङ्ग इति भाषा । (चोर +
स्वार्थे
कन् ।) सुगन्धिद्रव्यविशेषः । तत्पर्य्यायः ।
शङ्कितः २ खड्गः ३ दुष्पत्रः ४ क्षेमकः ५
रिपुः ६
चपलः ७ कितवः ८ धूर्त्तः ९ पटुः १०
नीचः ११
निशाचरः १२ गणहासः १३ कोपनकः
१४
चोरः १५ फलचोरकः १६ दुष्कुलः १७
ग्रन्थिलः १८
सुग्रन्थिः १९ पर्णचोरकः २० ग्रन्थिपर्णः
२१
ग्रन्थिदलः २२ ग्रन्थिपत्रः २३ । (यथा,
सुश्रुते
कल्पस्थाने ६ अध्याये ।
"चोरको वरुणः कुष्ठं सर्व्वगन्धा ससप्तला
॥")

इति रमानाथः ॥ पुंसोऽप्येतौ चोला इति
ख्यातौ
इति सुभूतिः ॥ नदादित्वात् चोली च । कुर्परः
कफोणिर्जानु च तद्द्वयमस्यते क्षिप्यते अत्र
कुर्पासः घञमनीषादित्वाद्रलोपः ततः स्वार्थे
कः । इति भरतः ॥ * ॥ देशविशेषः । इति
शब्दरत्नावली । अधुना ताञ्जोर इति ख्यातः
॥
श्मश्रुधारिवेदयागानधिकारिम्लेच्छविशेषः ।
स तु
पूर्ब्बं क्षत्त्रिय आसीत् सगरराजेनास्य
धर्म्मनाशं
वेशान्यत्वञ्च चकार । इति हरिवंशः ॥

**चोलकं**, क्ली, (चोलयति आच्छादयतीति । चुल +

णिच् + अच् + स्वार्थे कन् । यद्वा चोल इव
कायति इति । कै + कः ।) वल्कलम् । इति
शब्दरत्नावली ॥

**चोलकः**, पुं, (चोल इव कायति इति । कै + कः ।)

बाणवारः । कवचम् । इति हारावली । १९७
॥
(देशभेदः । यथा कथासरित्सागरे । १९ ।
९५ ।
"उल्लङ्घ्यमाना कावेरी तेन संमर्द्दकारिणा ।
चोलकेश्वरकीर्त्तिश्च कालुष्यं ययतुः समम्
॥")

**चोलकी**, [न्] पुं, (चोलकमिवास्त्यस्य इति

इनिः ।) करीरः । नारङ्गः । किष्कुपर्व्व । इति
मेदिनी । ने, १८४ ॥

**चोलण्डुकः**, पुं, (चोलस्य अण्डुक इव शकन्ध्वादि-

त्वात् साधुः ।) शिरोवेष्टः । इति त्रिकाण्ड-
शेषः ॥

"किरातीं चीरवसनां
चौरसेनानमस्कृताम् ॥"
कविभेदः ।
"कविरमरः कविरमरुः कविश्चौरो
मयूरकः ॥"
इत्युद्भटः ॥)
चीरपुष्पी । इति मेदिनी । रे, ३७ ॥
(चोर-
पुष्पीशब्दे विवरणमस्य ज्ञेयम् ॥)
सुगन्धिद्रव्य-
विशेषः । इति हेमचन्द्रः ॥

**चौरिका**, स्त्री, (चोरस्य कार्य्यं भावो वा । "द्वन्द्व-

मनोज्ञादिभ्यश्च ।" ५ । १ । १३३ ।
इति वुञ् ।
टापि अत इत्वम् ।) चौर्य्यम् । इत्यमरः
। २ ।
१० । २५ ॥ (यथा, मनुः । १ । ८२ ।
"चौरिकानृतमायाभिर्धर्म्मश्चापैति
पादशः ॥")

**चौरी**, स्त्री, (चौर + ङीष् ।) चौर्य्यम् । इति

शब्दरत्नावली ॥ (गायत्त्रीरूपा
महाशक्तिः ।
यथा, देवीभागवते । १२ । ६ । ४९ ।
"चन्द्रिका चन्द्रधात्री च चौरी चौरा च
चण्डिका ॥")

**चौर्य्यं**, क्ली, (चोरस्य कर्म्म भावो वा । "गुण-

वचनाद् ब्राह्मणादिभ्यः कर्म्मणि च ।"
५ । १ ।
१२४ । इति ष्यञ् ।) चौरधर्म्मः ।
चोरी इति
चुरी इति च भाषा ॥ तत्पर्य्यायः ।
स्तैन्यम् २
स्तेयम् ३ चौरिका ४ । इत्यमरः । २ ।
१० । २५ ॥
चौरी ५ । इति शब्दरत्नावली ॥
चोरिका ६ ।
इत्यमरटीका ॥ (यथा, मनुः । ९ ।
२७६ ।

| | | |
|---|---|---|
| अस्य गुणाः । तीव्रगन्धत्वम् । उष्णत्वम् । तिक्त-<br>त्वम् ।<br>वातकफनासामुखरुजाजीर्णक्रिमिदोष-<br>नाशित्वञ्च । इति राजनिर्घण्टः ॥ | | “सन्धिं छित्वा तु ये चौर्य्यं रात्रौ कुर्व्वन्ति तस्कराः ।<br>तेषां छित्वा नृपो हस्तौ तीक्ष्णशूले निवेशयेत् ॥”)<br>**चौलकर्म्म**, [न्] क्ली, (चूडाया इदम् । “तस्ये-<br>दम् ।” ४ । ३ । १२० । इत्यण् डस्य लत्वञ्च । |

ततश्चौलमेव कर्म्म इति कर्म्मधारयः ।) चूडा-
कर्म्म । इति स्मृतिः ॥

**चौलुक्यः**, पुं, (चुलकस्य गोत्रापत्यमिति । "गर्गा-

दिभ्यो यञ् ।" ४ । १ । १०५ । इति यञ् ।)
राजर्षिभेदः । इति हेमचन्द्रः । ३ । ७१२ ॥

**च्यु**, क हासे । सहने । इति कविकल्पद्रुमः ॥

(चुरां-परं-अकं-सकच्च-सेट् ।) अन्तःस्थाद्यो-
पधः । क, च्यावयति । इति दुर्गादासः ॥

**च्यु**, ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-

सकं-अनिट् ।) अन्तःस्थाद्योपधः । ङ, च्यवते ।
इति दुर्गादासः ॥

**च्युत्**, इर क्षरणे । इति कविकल्पद्रुमः ॥ (भ्वां-

परं-सकं-सेट् । क्वचित् अकञ्च ।) अन्तःस्थादि-
युक्तः । इर्, अच्युतत् अच्योतीत् । क्षर इह
आसेचनम् । च्योतति घृतं वह्नौ यज्वा । आसिञ्च
तीत्यर्थः । इति दुर्गादासः ॥ (यथाच, भट्टिः ।
६ । २८ ।
"सीतां जिघांसू सौमित्रे ! राक्षसावारतां ध्रुवम् ।
इदं शोणितमभ्यग्रं सम्प्रहारेऽच्युतत्तयोः ॥"
"अच्युतत् गलितमकर्म्मकोऽत्र ।" इति तट्टीकायां
जयमङ्गलभरतौ ॥")

**च्युतं**, त्रि, (च्यूयते स्म इति । च्यु + कर्म्मणि क्तः ।

यद्वा च्युत् + घञर्थे कः ।) क्षरितम् । यथा, --
"पिवन्तं त्वन्मुखाम्भोजच्युतं हरिकथामृतम् ॥"
इति श्रीभागवतम् ॥
(स्खलितम् । यथा, रघुः । ११ । २५ ।
"सम्भ्रमोऽभवदपोढकर्म्मणां
ऋत्विजां च्युतविकङ्कतस्रुचाम् ॥")

**च्युतिः**, स्त्री, (च्यवते शोणितादिकमस्या इति ।

च्यु + अपादाने क्तिन् ।) भगम् । इति हेमचन्द्रः ।
३ । ६०९ ॥ गुदद्वारम् । इति शब्दरत्नावली ॥
(च्यु + भावे क्तिन् ।) क्षरणम् । यथा, --
"कुर्य्यां हरस्यापि पिनाकपाणे-
र्धैर्य्यच्युतिं के मम धन्विनोऽन्ये ॥"
इति कुमारसम्भवे । ३ । १० ॥

**च्युपः**, पुं, (च्यवन्ते भाषन्तेऽनेन इति । च्यु + "च्युवः

किच्च ।" उणां । ३ । २४ । इति पः स च कित्
च्युधातुरत्र भाषणार्थे वर्त्तते इत्युज् ज्वलदत्तः ।)
मुखम् । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

**च्युस**, क हानौ । इति कविकल्पद्रुमः ॥ (चुरां-

परं-अकं-सेट् ।) क्वचित् पुस्तके हासे । अन्तः-
स्थादियुक्तः । क, च्योसयति । इति दुर्गादासः ॥

**च्योतं**, क्ली, (च्युत + पृषोदरादित्वादोत्वे साधुः ।)

श्चोतम् । घृतादिक्षरणम् । इत्यमरटीका ॥

**च्यौत्नः**, त्रि, (च्यवते इति । "जनिदाच्यु स्रिति ।"

उणां । ४ । १०४ । इति त्नण् ।) गमनकर्त्ता ।
अण्डजः । क्षीणपुण्यः । इति सिद्धान्तकौमुद्या-
मुणादिवृत्तिः ॥ बलम् । इत्युज्ज्वलदत्तः ॥)

**छ**

**छ**, छकारः । स तु व्यञ्जनसप्तमवर्णः । चवर्गद्बितीय-
वर्णश्च । (वङ्गाक्षरैः) तस्य लेखनप्रकारो यथा,
“ऊद्ध्वादधोगता रेखा कुञ्चिता कुण्डली ततः ।
पुनश्चाधोगता तासु सन्ति ब्रह्मेशविष्णवः ॥”
इति वर्णोद्धारतन्त्रम् ॥ * ॥
अस्योच्चारणस्थानं तालु । इति व्याकरणम् ॥
(“इचुयशानान्तालु ।” इति सूत्रकारेणोक्तम् ।
“कण्ठ्यावहाविचुयशास्तालव्याओष्ठाजावुपू ॥”
इति शिक्षाग्रन्थः ॥)
अस्योत्पत्तिर्यथा । प्रपञ्चसारे ।
“विसर्गस्तालुगः सोष्मा शं चवर्गञ्च यन्तथा ।”
अत्रोत्तरत्रापि वर्गस्य द्बितीयादिवर्णोच्चारणे
स्वरस्पर्शनादिति स्तोकगम्भीरसंस्पर्शादिति च
यथास्थानमन्वेतीति तट्टीकाकारो विश्वरूपः ॥
अस्या ध्यानं यथा, वर्णोद्धारतन्त्रे ।
“ध्यानमस्याः प्रवक्ष्यामि द्बिभुजान्तु त्रिलोचनाम् ।
पीताम्बरधरां नित्यां वरदां भक्तवत्सलाम् ।
एवं ध्यात्वा छकारन्तु तन्मन्त्रं दशधा जपेत् ॥”
अस्य स्वरूपं यथा, कामधेनुतन्त्रे ।
“छकारं परमाश्चर्य्यं स्वयं परमकुण्डली ।
सततं कुण्डलीयुक्तं पञ्चदेवमयं सदा ॥
पञ्चप्राणमयं वर्णं पञ्चप्राणात्मकं सदा ।
त्रिबिन्दुसहितं वर्णं सदा ईश्वरसंयुतम् ॥
पीतविद्युल्लताकारं छकारं प्रणमाम्यहम् ॥”
तस्य नामानि यथा, तन्त्रशास्त्रे ।
“छश्छन्दनं सुषुम्णा च पशुः पशुपतिर्म्मृतिः ।
निर्म्मलं तरलं वह्निर्भूतमात्रा विलासिनी ॥
एकनेत्रश्च वृषली द्बिशिरा वामकूर्परः ।
गोकर्णा लाङ्गली वामकाममत्ता सदाशिवः ॥
माता निशाचरः पायुर्विक्षतः स्थितिशब्दकः ॥”

**छं**, त्रि, (छायते परिस्क्रियते यत् इति । छो +
कर्म्मणि घञर्थे कः ।) निर्म्मलम् । इति मेदिनी ।
छे, १ ॥ तरलम् । इत्येकाक्षरकोषः ॥

**छः**, पुं, (छो + भावे डः घञर्थे को वा ।) छेदनम् ।
इत्येकाक्षरकोषः ॥

**छगः**, पुं स्त्री, (छं यज्ञादौ छेदनं गच्छति प्राप्नो-

**छगलकः**, पुं स्त्री, (छगल + स्वार्थे कन् ।) छागः
इत्यमरः । २ । ९ । ७६

**छगला**, स्त्री, (छगलस्तदाकारोऽस्त्यस्यछगलवत्
त्वक् विद्यत्येऽस्येति वा । “अर्शआदिभ्योऽच् ।”
५ । २ । १२७ । इति अच् टाप् च ।) वृद्ध-
दारकवृक्षः । इति शब्दरत्नावली मेदिनी च ॥
(व्यवहारोऽस्या यथा, “चुच्चूपूथिकातरुणी-
जीवन्तीविम्बीतिकानन्दीभल्लातकच्छगलान्त्री
वृक्षादनीफञ्जीशाल्मलीशेलुवनस्पतिप्रसवशणक-
र्व्वुदारकोविदारप्रभृतीनि ।” इति सुश्रुते सूत्र-
स्थाने ४६ अध्याये ॥)

**छगलाङ्घ्री**, स्त्री, (छगलवदङ्घ्रिर्म्मूलमस्याः । ततो
ङीष् ।) छगलान्त्री । इत्यमरटीकायां रमा-
नाथः ॥

**छगलाण्डी**, स्त्री, (छगलवदण्डं अन्त्रं यस्याः ।)
छगलान्त्री । इत्यमरटीकायां रायमुकुटः ॥
(पुंसि तु पीठस्थानभेदे । यथा, देवीभागवते ।
७ । ३० । ७३ ।
“छगलण्डे प्रचण्डा तु चण्डिकाऽमरकङ्कटे ॥”)

**छगलान्त्रिका**, स्त्री, (छगलान्त्री + स्वार्थे कन् । टापि
पूर्ब्बह्रस्वः ।) छगलान्त्री । इति शब्दरत्नावली ॥

**छगलान्त्री**, स्त्री, (छगलवदन्त्रं यस्याः ।) वृद्धदारक-
वृक्षः । इत्यमरः । २ । ४ । १३७ ॥ वृकः । इति
राजनिर्घण्टः ॥ (यथा, सुश्रुते सूत्रस्थाने । ३८
अध्याये । “श्यामामहाश्यामात्रिवृद्दन्तीशङ्खिनी-
तिल्वककम्पिल्लकरम्यकक्रमुकपुत्त्रश्रेणीगवाक्षी-
राजवृक्षकरञ्जद्बयगुडचीसप्तलाच्छगलान्त्री
सुधाः सुवर्णक्षीरी चेति ॥”)

**छगली**, स्त्री, (छगल + जातित्वात् ङीष् ।) छाग-
माता । वृद्धदारकवृक्षः । इति विश्वः ॥

**छटा**, स्त्री, (छो + अटन् किच्च ।) दीप्तिः । (यथा,
राजतरङ्गिण्याम् । ४ । १२८ ।
“प्रतापांशुच्छटाकूटैः पटवासमधर्म्मभिः ।
जम्बुद्बीपद्बिजेन्द्रस्य येनातन्यत मण्डनम् ॥”)

तीति । गम + डः ।) छागः । इति हेमचन्द्रः ।
४ । १२७५ ॥

**छगणं**, क्ली पुं, (छद + डः । छः तस्मै अग्रे-

श्छादनायेत्यर्थः गण्यते इति । गण + कर्म्मणि
अप् ।) करीषः । इति हेमचन्द्रः । ४ । १२ । ७३ ॥

**छगलं**, क्ली, (छ्यति छिनत्ति छायते वा । छो +

छेदने + "छो गुग् ह्रस्वश्च ।" उणां । १ । ११३ ।
इति कलच् प्रत्ययः धातोर्गुगागमो ह्रस्वश्च ।)
नीलवस्त्रम् । इति मेदिनी । ले, १ ॥

**छगलः**, पुं स्त्री, (छायते छिद्यते देवोपहाराय

इति । छो + कलच् गुगागमो ह्रस्वश्च ।) छागः ।
इति मेदिनी । ले, ९१ ॥ (यथा, सुश्रुते । १ । ४६ ।
"नाति शीतो गुरुः स्निग्धो मन्दपित्तकफः स्मृतः ।
छगलस्त्वनभिष्यन्दी तेषां पीनसनाशनः ॥")

समूहः । यथा, माघे । १ । ४७ ॥
"सटाच्छटाभिन्नघनेन बिभ्रता
नृसिंहसैंहीमतनुं तनुन्त्वया ।"
(सटाछटाभिःकेशरसमूहैः ।" इति मल्लिनाथः ॥)

**छटाफलः**, पुं, (छटा इव परस्परसंसृष्टानि फलानि

यस्य ।) गुवाकवृक्षः । इति त्रिकाण्डशेषः ॥
(पूगशब्दे विवृतिरस्य ज्ञेया ॥)

**छटाभा**, स्त्री, (छटाभिर्दीप्तिभिर्भाति इति । भा +

क्विप् । यद्वा । भा + कः । टाप् च ।) विद्युत् ।
इति हारावली । ५८ ॥

**छ(त्र)त्रं**, क्ली, (छादयत्यनेनातपादिकमिति । छद

+ णिच् + "सर्व्वधातुभ्यः ष्ट्रन् ।" उणां । ४ ।
१५८ । इति ष्ट्रन् णिलोपः ह्रस्वत्वञ्च ।) रौद्रवृष्टि-
निवारणार्थावरणविशेषः । छाति इति भाषा ॥
तत्पर्य्यायः । आतपत्रम् २ । इत्यमरः । २ । ८ । ३२ ॥
छायामित्रम् ३ पटोटजम् ४ । इति शब्दरत्ना-
वली ॥ आतपवारणम् ५ । राजच्छत्रं यथा, --
"आतपत्रञ्च राज्ञस्तु नृपलक्ष्म सितन्तु तत् ।

पुण्डरीकमथो भद्रासनं राजासनं तु यत्
॥”
इति जटाधरः ॥
अपि च शब्दरत्नावल्याम्।
“छत्त्रे कनकदण्डे तु रागशृङ्गमुदाहृतम्।
नृपलक्ष्म भवेत्तत्तु यच्छत्त्रं पृथिवीभुजाम्
॥”
तस्य गुणाः ।
वृष्ट्यातपधूलिवायुहिमनाशित्वम्।
वर्णदृष्टिकारित्वम्।
गुप्त्यावरणमङ्गलकारि-
त्वञ्च । इति राजवल्लभः ॥ * ॥
तस्योत्पत्ति-
र्यथा । एकदा ज्यैष्ठमासे
जमदग्निमुनिर्धनुषि
बाणान् सन्धाय सन्धाय प्रचिक्षेप तत्पत्नी
रेणुका तान् बाणानानीयानीय तस्मै
प्रादात् ।
सा मध्याह्नकाले रौद्रेण पीडिता
वृक्षच्छाया-
सवलम्ब्य किञ्चित् कालं स्थित्वा
तानानिनाय ।
ऋषिस्तदा क्रुद्धस्तामाह किं चिरेणागता ।
सा
आह सूर्य्यतेजसा मे शिरः पादौ च
सन्तप्तौ
तेन वृक्षच्छायामाश्रित्य स्थिता तस्मात्
चिरायै-
तत् कृतम् । तच्छ्रुत्वा मुनिराह अद्य
सूर्य्यमस्त्रा-
ग्नितेजसा निपातयिष्यामीत्युक्त्वा धनुषि
बाणान्
सन्धाय सूर्य्याभिमुखोऽतिष्ठत्। सूर्य्यस्तं
दृष्ट्वा
मीतो द्विजरूपेण आगत्य आह
सूर्य्यादन्नादि
भवति तेनान्नेन भवद्भिः कर्म्माणि क्रियन्ते
कथ-
मेनं हनिष्यसि एवं माकार्षीस्तथापि मुनिः

विशुद्ध्वकाष्ठस्य तु दण्डकन्दौ
तथा शलाका अपि शुद्धवंशजाः ।
रज्जुश्च रक्ता वसनञ्च रक्तं
छत्त्रप्रसादं नृपतेर्व्वदन्ति ॥
प्रसादमिति प्रसादार्हम् ।
नीलो दण्डश्च वस्त्रञ्च शिरःकुम्भस्तु
कानकः ।
सौवर्णं युवराजस्य प्रतापं नाम
विश्रुतम् ॥
चान्दनौ दण्डकन्दौ चेत् सुशुक्ले
रज्जुवाससी ।
छत्त्रं मनोहरं राज्ञां
स्वर्णकुम्भोपशोभितम्॥
शुक्लानि रज्जुवासांसि
स्वर्णकुम्भस्तथोपरि।
इदं कनकदण्डाख्यं छत्त्रं
सर्व्वार्थसाधकम् ॥
दण्डकन्दशलाकाश्च शुद्धस्वर्णेन
निर्म्मिताः ।
कीलकं स्वर्णघटितमशुक्ले
रज्जुवाससी ॥
कुम्भादिरथ
हंसादिश्चामरादिर्यथाक्रमम् ।
कुम्भादावथ हंसादौ नवरत्नानि
रक्षयेत् ॥
द्वात्रिंशन्मौक्तिकी माला द्वात्रिंशत्तत्र
दापयेत् ।
सर्व्वोपरि ब्रह्मजातिं विशुद्धं हीरकं
न्यसेत् ॥
दण्डान्ते कुरुबिन्दांश्च पद्मरागांश्च
विन्यसेत् ।
स्वामिहस्तैकमानेन चामरः सित
इष्यते ॥
इत्ययं नवदण्डाख्यश्छत्त्रराजो
महीभुजाम् ।
अभिषेके विवाहे च ग्रहाणां
प्रीतिवर्द्धनः ॥
पताका नवदण्डाग्रे
राज्ञोऽष्टाङ्गुलिसंमिताः ।

तदा तस्य भवेद्भङ्गश्छत्त्रस्यास्य न संशयः ।
आसनस्य भवेन्नाश आसनस्थे शनैश्चरे ॥
युवराजक्षयः कीले बन्धनं रज्जुसंस्थिते ।
सौम्ययुक्तोऽतिचारस्थः शनिरुक्तफलो न हि ॥
वक्रगः क्रूरयुक्तश्च सर्व्वं क्रूरं करोति सः ।
शनिराहुकुजादित्या यदा जीवेन्दुसंयुताः ॥
उत्तराधीशराज्ञो वै निश्चितं छत्त्रभङ्गदाः ।
क्रूरं चतुष्टयञ्चैव बुधचन्द्रेण संयुतम् ॥
पूर्ब्बच्छत्त्रविनाशाय तथा पापचतुष्टयम्।
शुक्रेन्दुसंयुतं छत्त्रे दक्षिणे शस्यभङ्गदम्॥
एवमन्येषु राज्येषु नामर्क्षात् फलमादिशेत् ।
यथा दुष्टफलः सौरिस्तथा सौम्यफलो गुरुः ॥
भौमज्ञौ गुरुराहू च रविचन्द्रौ बले समौ ।
यथा हानिकराः क्रूरास्तथा सौम्याः शुभङ्कराः ॥
एतेऽत्राष्टौ ग्रहाश्छत्त्रे परचक्रेण भङ्गदाः ।
नृपनामर्क्षगो राहुः केतुर्व्वा यत्र संस्थितः ॥
छत्त्रभङ्गो भवेत्तस्य विषदानेन भूपतेः ।
मृगयासाहसं यात्रां दुष्टहस्त्यश्ववाहनम्॥
विग्रहञ्च त्यजेद्राजा छत्त्रस्थे क्रूरखेचरे ।
ज्ञात्वैवं शान्तिकं कुर्य्यात् ग्रहाणां जायते
शुभम् ॥”

**छत्त्रधारः**, त्रि, (छत्त्रं धरतीति । धृ + “कर्म्म-
ण्यण् ।” ३ । २ । १ । इत्यण् ।) छत्त्रधरः ।
छातिधरा इति भाषा ॥ तत्पर्य्यायः । छाया-
करः २ । इति हेमचन्द्रः । ३ । ४२८ ॥ (यथा,
पञ्चतन्त्रे । ३ । ६७ । “स्वपक्षे च यथा, जननी
देवी कञ्चुकी मालिकः शय्यापालकः स्पशा-
ध्यक्षः सांवत्सरिकः भिषक् जलवाहकः
ताम्बूल-
वाहकः आचार्य्यः अङ्गरक्षकः स्थानचिन्तकः
छत्त्रधारः विलासिनी च ॥”)

**छत्त्रपत्त्रं**, क्ली, (छत्त्रमिव पत्त्रमस्य ।) स्थलपद्मम् ।
इति त्रिकाण्डशेषः ॥

**छत्त्रपत्त्रः**, पुं, (छत्त्रमिव विस्तृतं पत्त्रमस्य ।)
भूर्जवृक्षः । इति रत्नमाला ॥ (भूर्जशब्दे विवृति-
रस्य ज्ञातव्या ॥) मानकचुः । इति केचित् ॥
सप्तपर्णवृक्षः । इति च केचित् ॥

शमं न जगाम । अथ सूर्य्यः शिरस्त्राणं
छत्त्रं
निर्म्माय तस्मै दत्त्वा अद्यप्रभृति एतत्
लोके
प्रचरिष्यति व्रतादिषु च अस्य दानं
महाफलं
स्यादित्युक्त्वा गतः ॥ * ॥ तस्य
दानफलं यथा, --
“छत्त्रं हि भरतश्रेष्ठ ! यः प्रदद्यात्
द्विजातये ।
शुभ्रं शतशलाकं वै स प्रेत्य सुखमेधते ॥
स शक्रलोके वसति पूज्यमानो
द्विजातिभिः ।
अप्सरोभिश्च सततं देवैश्च भरतर्षभ !
॥”
इति महाभारते दानधर्म्मः ॥
अथ छत्त्रयुक्तिः ।
“विशेषश्चाथ सामान्यं छत्त्रस्य द्विविधा
भिदा ।
राज्ञश्छत्त्रं विशेषाख्यं
सामान्यञ्चान्यदुच्यते ॥
तत्र विशेषच्छत्त्रोद्देशः ।
सदण्डञ्चाथ निर्द्दण्डं तज्ज्ञेयं द्विविधं पुनः
।
सदण्डं तत्र विज्ञेयं सारणाकुञ्चनात्मकम्
॥
दण्डः कन्दः शलाकाश्च रज्जुर्व्वस्त्रञ्च
कीलकः ।
षड्भिरेतैः सुसन्दिष्टैश्छत्त्रमित्यभिधीयते
॥
दिगष्टषट्चतुर्हस्तदीर्घो दण्डो युगक्रमात् ।
षड्बाणवेदनयनवितस्त्या कन्द उच्यते ॥
शतान्यशीतिः षष्टिश्च
चत्वारिंशद्युगक्रमात् ।
शलाकाः षट्पञ्चवेदत्रिहस्तैः सम्मिताः
क्रमात् ॥
नवभिस्तन्तुभिः सूत्रं सूत्रैस्तु नवभिर्गुणः
।
गुणैस्तु नवभिः पाशो रश्मिस्तैर्नवभिर्भवेत्
॥

अयं दिग्विजयी नाम छत्त्रराजो
महीभुजाम् ॥”
इति भोजराजकृतयुक्तिकल्पतरुः ॥

**छत्त्रः**, पुं, (छद + णिच् + ष्ट्रन् ह्रस्वश्च ।) मूलेन
पत्रेन च वचाकारवृक्षः ।
छातारियाविष ।
छातनाविष । खरविष इति च भाषा ।
तत्-
पर्य्यायः । अतिच्छत्त्रः २ कटुः ३ ।
इति रत्न-
माला ॥ भूततृणम् । इति
राजनिर्घण्टः ॥

**छत्त्रकः**, पुं, (छत्त्रमिव कायति इति । कै + कः ।)
मत्स्यरङ्गपक्षी । इति शब्दचन्द्रिका ॥
अति-
च्छत्त्रः । राङ्गा कुलेखाडा इति भाषा
॥ इति
रत्नमाला ॥ ईश्वरगृहविशेषः । इति
शब्द-
रत्नावली ॥

**छत्त्रगुच्छः**, पुं, (छत्त्रमिव गुच्छो यस्य ।) गुण्ड-
तृणम् । इति राजनिर्घण्टः ॥

**छत्त्रचक्रं**, क्ली, (छत्त्राकृति चक्रम् ।) चक्रविशेषः ।
यथा, समयामृते छत्त्रचक्रम् ।
“अश्विनीमघमूलाद्यं चक्रं
छत्त्रत्रयात्मकम् ।
प्रतीचीमध्यरेखाया ईशानान्तं
हयाधिपः ॥
आग्नेयान्तं नराधीशो नैरृ तान्तं
गजाधिपः ।
एषां छत्त्रविभागेन ज्ञातव्यञ्च
शुभाशुभम् ॥
अन्यस्य राज्ञो नामर्क्षं यत्र छत्त्रे ततः
फलम् ।
चामरं कलसं बीणा छत्त्रं दण्डः
पतद्ग्रहः ॥

**छत्त्रभङ्गः**, पुं, (छत्त्रस्येव रक्षितुः स्वामिन इत्यथः
भङ्गो यत्र ।) वैधव्यम् । स्वातन्त्र्यम् । नृपनाशः
।
इति मेदिनी । गे, ५६ ॥

**छत्त्रा**, स्त्री, (छत्त्रमिव आकृतिर्विद्यतेऽस्याः ।
अर्शआदित्वादच ततष्टाप् । यद्वा, छदति
आच्छादयति स्वोत्पत्तिस्थानमिति । छद् +
“सर्व्वधातुभ्यः ष्ट्रन् ।” उणां । ४ । १५८ । इति
ष्ट्रन् । ततः षिल्लक्षणस्य ङीषोऽनित्यत्वात् टाप्
।)
मिषिः । मौरी इति भाषा ॥ कुस्तुम्बुरु ।
धन्या इति भाषा ॥ (यथा, --
“मुस्तपर्पटकोदीच्यछत्त्राख्योशीरचन्दनैः ।
शृतं शीतं जलं दद्यात् तृड्दाहज्वरशान्तये ॥
छत्त्रा धान्याकम् ॥” इति भावप्रकाशः ॥)
शिलीन्ध्रम् । इति मेदिनी । रे, ३८ ॥ काँ
डकछाता
इति भाषा ॥ मञ्जिष्ठा । इति राजनिर्घण्टः ॥
(निवृत्तसन्तापान्तर्गतरसायनौषधिविशेषः ।
तस्य

| | | |
|---|---|---|
| नवाष्टसप्तषट्संख्यैरश्मिभी रज्जवः क्रमात् ।<br>वस्त्रं शलाकाद्विगुणमायाम्मेन प्रतिष्ठितम् ॥<br>भानुदिग्ग्रहवसुभिरङ्गुलीभिस्तु कीलकः ।<br>षण्णां षण्मानमुदितं तद्राज्ञामेव भूतये ॥<br>पादोनं युवराजस्य अन्येषान्तु तदर्द्धतः ॥<br>एतेन राज्ञो दण्डो दशहस्तः युवराजस्य तत्<br>अन्येषामपि तदेव । | आसनं कीलकं रज्जुर्नव भेदाः प्रकीर्त्तिताः ।<br>यत्र छत्रे स्थितः सौरिर्भङ्गं तस्य विनिर्द्दिशेत् ॥<br>चामरे चण्डता वायोरनावृष्टिः प्रजायते ।<br>दुर्भिक्षञ्च भवेत् घोरं प्रजापीडा न संशयः ॥<br>कलसस्थे भवेद्युद्धं भङ्गो घातादिकं ध्रुवम् ।<br>वीणास्थेनार्कपुत्त्रेण पट्टराज्ञी विनश्यति ॥<br>चलचित्तो भवेद्राजा भयभीता च मेदिनी ।<br>यदा ऋक्षत्रये सौरिश्छत्त्रे दण्डे पतद्ग्रहे ॥ | |

लक्षणं यथा, सुश्रुते चिकित्सितस्थाने ३० अः ।
"कृष्णसर्पस्वरूपेण वाराहीकन्दसम्भवा ।
एकपत्रा महावीर्य्या भिन्नाञ्जनसमप्रभा ॥
छत्रातिच्छत्रके विद्यादक्षोघ्ने कन्दसम्भवे ॥")

**छत्राकं**, क्ली, (छत्त्रा इव कायतीति । कै + कः ।)
किम्पाकुः । छत्त्रिका । इति प्रायश्चित्तविवेकः ॥
(यथा, मनुः । ५ । १९ ।
"छत्राकं विड्वराहञ्च लशुनं ग्रामकुक्कुटम् ।
पलाण्डुं गृञ्जनञ्चैव मत्या जग्ध्वा पतेद्द्विजः ॥")

**छत्राकः**, पुं, (छत्त्रमिव अकति आच्छादकत्वं गच्छतीति । छत्त्र + अक् + अच् ।) जालवर्व्वूरकवृक्षः । इति राजनिर्घण्टः ॥

**छत्राकी**, स्त्री, (छत्त्राक + गौरादित्वात् ङीष् ।)
रास्ना । इत्यमरः । २ । ४ । ११५ ॥

**छत्रातिच्छत्त्रः**, पुं, (छत्त्रमतिक्रम्य छदति आच्छादयतीति । अति + छद् + ष्ट्रन् ।) छत्त्राकारजलोद्भवसुगन्धाख्यतृणविशेषः । तत्पर्य्यायः ।
छत्रातिच्छत्त्रा २ पालघ्न्यः ३ अतिच्छत्त्रा ४ सुगन्धा ५ छत्त्रकः ६ कटुकः ७ कटुः ८ । इति शब्दरत्नावली ॥

**छत्त्राधान्यं**, क्ली, (छत्त्रा धान्यमिव ।) धन्याकम् ।
इति राजनिर्घण्टः ॥

**छत्त्रिका**, स्त्री, (छत्त्रा एव । छत्त्रा + स्वार्थे कन् ।
अत इत्वञ्च ।) शिलीन्ध्रम् । कोँडकछाता इति

"छदयति सुरलोकं यो गुणैर्यञ्च युद्धे
सुरयुवतिविमुक्ताश्छादयन्ति स्रजश्च ॥")

**छद**, कि ञ संवृतौ । इति कविकल्पद्रुमः ॥ (चुरां-
पक्षे भ्वां-उभं-सकं-सेट् ।) कि ञ, छादयति
छादयते छदति छदते दिशंमेघः । आच्छादयति इत्यर्थः । इति दुर्गादासः ॥

**छद**, म कि ञ ऊर्ज्जने । ऊर्ज्जनं बलं जीवनञ्च ।
इति कविकल्पद्रुमः ॥ (चुरां-पक्षे भ्वां-उभं-सकं-सेट् ।) छदयति पुत्त्रं पिता । जीवयति
बलवन्तं करोति वा इत्यर्थः । इति दुर्गादासः ॥

**छदः**, पुं, (छदति आच्छादयतीति । छद +
अच् ।) पत्त्रम् । (यथा, रामायणे । २ । ५५ । ६ ।
"ततो न्यग्रोधमासाद्य महान्तं हरितच्छदम् ॥")
पक्षः । ग्रन्थिपर्णवृक्षः । तमालवृक्षः । इति मेदिनी । दे, ५ ॥

**छदनं**, क्ली, (छदति आच्छादयतीति । छद +
ल्युः ।) पत्त्रम् । पक्षः । (यथा, महाभारते ।
३ । १५८ । ६९ ।
"विमलस्फाठिकाभानि पाण्डरच्छदनैर्द्विजैः ।
कलहंसैरुपेतानि सारसाभिरुतानि च ॥"
छद + भावे ल्युट् ।) पिधानम् । इति मेदिनी ।

वशः । इत्यमरः । ३ । ३ । ८८ ॥ अभिलाषः । इति
भरतः ॥ विषम् । इति शब्दचन्द्रिका ॥ रहसि त्रि । इत्यमरटीकासारसुन्दरी ॥

**छन्दः**, [स्] क्ली, (चन्दयति आह्लादयति
चन्द्यतेऽनेन वा । चदि आह्लादे + "चन्देरादेश्च छः ।" उणां । ४ । २१८ । इति असुन् चस्य छश्च ।) वेदः । (यथा, रघुः । १ । ११ ।
"आसीन्महीक्षितामाद्यः प्रणवच्छन्दसामिव ॥")
स्वैराचारः । अभिलाषः । (यथा, महाभारते । १२ । २०१ । १२ ।
"कामात्मकाश्छन्दसि कर्म्मयोगा
एभिर्व्विमुक्तः परमश्नुवीत ॥")
पद्यम् । इति मेदिनी । से, २२ ॥ अस्य लक्षणं यथाह गङ्गादासः ।
"पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ।
वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत् ॥
सममर्द्धसमं वृत्तं विषमञ्चेति तत्त्रिधा ।
समं समचतुष्पादं भवत्यर्द्धसमं पुनः ॥
आदिस्तृतीयवद्यस्य पादस्तुर्य्यो द्वितीयवत् ।
भिन्नचिह्नचतुष्पादं विषमं परिकीर्त्तितम् ॥"
एषामर्थः । अक्षरसंख्यातं अक्षरगणनया परिप्राप्तं वृत्तमुच्यते । मात्राकृता मात्रागणनया निर्णीता जातिर्जातिसंज्ञिका भवति । समं समचतुष्पादम् । अर्द्धसमं यस्य प्रथमः पादः तृतीयेन पादेन तुल्यः चतुर्थः पादो द्वितीयेन पादेन तुल्यः । विषमं पृथक्लक्षणचतुष्पादम् ॥
(तत्र समवृत्तन्तु उक्थादिसंज्ञाभेदेन षड्विंशतिप्रकारकम् । यदुक्तं छन्दोमञ्जर्य्याम् ।
"आरभ्यैकाक्षरात् पादादेकैकाक्षरवर्द्धितैः ।
पादैरुक्थादिसंज्ञं स्याच्छन्दः षड्विंशतिं गतम् ॥
उक्थात्युक्था तथा मध्या प्रतिष्ठान्या सुपूर्ब्बिका ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥
त्रिष्टुप् च जगती चैव तथातिजगती मता ।
शर्करी सातिपूर्ब्बा स्थादष्ट्यत्यष्टी तथा स्मृते ॥
धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः ।
विकृतिः संस्कृतिश्चैव तथातिकृतिरुत्कृतिः ॥"

भाषा ॥ तत्पर्य्यायः । गोमयच्छत्रिका २ दिली-
रम् ३ शिलीन्ध्रकम् ४ उर्व्वङ्गम् ५ वसारोहम् ६
गोलासम् ७ । इति हारावली ॥ छत्राकम् ८ ।
इति स्मृतिः ॥ उच्छिलीन्ध्रम् ९ । इति श्रीभाग-
तम् ॥
करीषेक्षुपलालपृथ्वीबेणुजच्छत्रिकायाः
सामान्यगुणाः । शीतत्वम् । कषायत्वम् । स्वादु-
त्वम् । पिच्छिलत्वम् । गुरुत्वम् । छर्द्द्यतीसार-
ज्वरश्लेष्मरोगकारित्वञ्च ॥ पलालजच्छत्रिका-
गुणाः । पाके स्वादुरसत्वम् । रूक्षत्वम् । दोष-
कारित्वञ्च ॥
शुचिस्थानकाष्ठवंशगोष्ठजश्वेत-
च्छत्रिकाया गुणः । अतिदोषकारित्वम् । अन्य-
च्छत्रिकास्तेभ्यो विगर्हिताः । इति राजवल्लभः ॥

**छत्री**, [न्] पुं, (छत्रं कौशलादिभिराच्छादकत्वं
विद्यतेऽस्य । छत्र + इनिः ।) नापितः । इति
शब्दरत्नावली ॥ छत्रविशिष्टे, त्रि । यथा, --
"गच्छेद्वर्षातपे छत्री दण्डी रात्र्यटवीषु च ।"
इति स्मृतिः ॥
(यथा च हरिवंशे । २५३ । ५ ।
"मौञ्जी यज्ञोपवीती च छत्री दण्डाजिनी तथा ।
वामनो धूमरक्ताक्षो भगवान् बालरूपधृक् ॥")

**छत्वरः**, पुं, (छदते अपवारयति वर्षोष्णादिक-
मिति । छद अपवारणे + "छित्वरच्छत्वरेति ।"
उणां । ३ । १ । इति ष्वरच् प्रत्ययेन साधुः ।)
ने, ६५ ॥ तमालपत्रम् । इति राजनिर्घण्टः ॥
तेजपात इति भाषा ॥

**छदपत्त्रः**, पुं, (छदानि आच्छादकानि पत्त्रानि
यस्य ।) भूर्जपत्रवृक्षः । इति काचित् रत्नमाला ॥

**छदिः**, [स्] क्ली, (छादयतीति छाद्यतेऽनेन
वा । छंद् + णिच् + "अर्च्चिशुचिहुसृपिछादि-
छर्द्दिभ्य इसिः ।" उणां । २ । १०९ । इति
इसिः । "इस्मन्त्रन्क्विषु च ।" ६ । ४ । ९७ ।
इति ह्रस्वः ।) पटलम् । इत्यमरः । २ । २ ।
१४ ॥ (यथा, भागवते । ७ । १४ । १३ ।
"कृमिविड् भस्मनिष्ठान्तं क्वेदं तुच्छं कलेवरम् ।
क्व तदीयरतिर्भार्य्या क्वायमात्मा नभश्छदिः ॥")

**छद्म**, [न्] क्ली, (छद्यते आव्रियते स्वरूपमने-
नेति । छद + "सर्व्वधातुभ्यो मनिन् ।" उणां ।
४ । १४४ । इति मनिन् ।) व्याजः । (यथा,
रघुः । १२ । २
"तं कर्णमूलमागत्य रामे श्रीर्न्यस्यतामिति ।
कैकेयीशङ्कयेवाह पलितच्छद्मना जरा ॥")
कपटः । शाठ्यम् । अपदेशः । स्वरूपाच्छा-
दनम् । इति मेदिनी । ने, ६४ ॥

**छद्मतापसः**, पुं, (छद्मना कपटेन तापसः । अप्र-
कृततपस्वितया एवास्य तथात्वम् ।) छल-

छन्दोलक्षणोपयोगिगणास्तुदश । यदुक्तं तत्रैव-
"म्यरस्तजैभ्नगैर्लान्तैरेभिदशभिरक्षरैः ।
समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥
मस्त्रिगुरुस्त्रिलघुश्च नकारो
भादिगुरुः पुनरादिलघुर्यः ।
जो गुरुमध्यगतो रलमध्यः
सोऽन्तगुरुः कथितोऽन्तलघुस्तः ॥
गुरुरेको गकारस्तु लकारो लघुरेककः ।
क्रमेण चैषां रेखाभिः संस्थानं दर्श्यते यथा ॥"
म ऽऽऽ, न ।।।, भ ऽ।।, य ।ऽऽ, ज ।ऽ।,
र ऽ।ऽ, स ।।ऽ, त ऽऽ।, ग ऽ, ल ।)
छन्दस्तु नानाविधम् । तस्य ग्रन्थाः छन्दो-
विचितिपिङ्गलच्छन्दोमञ्जरीवृत्तरत्नाकरश्रुत
वोधादयः सन्ति तेषु छन्दोमञ्जर्य्याद्युक्तलक्षणो
दाहरणादीनि लिख्यन्ते ॥

गृहम् । कुञ्जः । इति सिद्धान्तकौमुद्यामुणादि-वृत्तिः ॥

**छद**, त् क संवृतौ । इति कविकल्पद्रुमः ॥ (अदन्त-चुरां-परं-सकं-सेट् ।) छदयति । इति दुर्गादासः ॥ (यथा, कविरहस्ये । १६ ।

तपस्वी । तत्पर्य्यायः । सर्व्वाभिसन्धी २ वैडाल-व्रतिकः ३ वेशधारी ४ । इति शब्दरत्नावली ॥

**छद्मिका**, स्त्री, (छद्म अस्त्यस्याः । ब्रीह्यादित्वा-दिनिः संज्ञायां कन् टाप् च ।) गुडूची । इति राजनिर्घण्टः ॥

**छन्दः**, पुं, (छन्द्यते इति । छन्द + भावे घञ् ।) अभिप्रायः । (यथा, रामायणे । २ । ९ । ७ ।

“मयोच्यमानं यदि ते श्रोतुं छन्दो विलासिनि ! ।
श्रूयतामभिधास्यामि श्रुत्वा चैतद्विधीयताम् ॥”)

**छन्दसां वृत्तिनामानि ।**

एकाक्षरा वृत्तिः । उक्था ।
श्रीः
द्व्यक्षरा वृत्तिः । अत्युक्था ।
स्त्री
त्र्यक्षरा वृत्तिः । मध्या ।
नारी
मृगी
चतुरक्षरा वृत्तिः । प्रतिष्ठा ।
कन्या
सती
पञ्चाक्षरा वृत्तिः । सुप्रतिष्ठा ।
पङ्क्तिः
प्रिया
षडक्षरा वृत्तिः । गायत्री ।
तनुमध्या
शशिवदना
सोमराजी
विद्युल्लेखा
वसुमती
सप्ताक्षरा वृत्तिः । उष्णिक् ।
मधुमती
कुमारललिता
मदलेखा
हंसमाला
अष्टाक्षरा वृत्तिः । अनुष्टुप् ।
चित्रपदा
माणवकम्
माणवकक्रीडमिति । केचित् ।
विद्युन्माला
समानिका
प्रमाणिका
नगस्वरूपिणी इति कुत्रापि ।
गजगतिः
हंसरुतम्
नाराचिका
नवाक्षरा वृत्तिः । बृहती ।
भुजगशिशुभृता
भृतेत्यत्र सृतेति युतेति च केचित् ।

**छन्दसां लक्षणगणाः ।**

ग्श्री ऽ
गौ स्त्री ऽ,ऽ
मो नारी ऽऽऽ
रो मृगी ऽ।ऽ
ग्मौ चेत् कन्या ऽ,ऽऽऽ
नगि सती ॥।,ऽ
भ्गौ गिति पङ्क्तिः ऽ॥,ऽ,ऽ
सलगैः प्रिया ॥ऽ,।,ऽ
त्यौ चेत् तनुमध्या ऽऽ।,।ऽऽ
शशिवदना न्यौ ॥।,।ऽऽ
द्विया सोमराजी ।ऽऽ,।ऽऽ
विद्यल्लेखा मो मः ऽऽऽ,ऽऽऽ
त्सौ चेद् वसुमती ऽऽ।,॥ऽ
ननगि मधुमती ॥।,॥।,ऽ
कुमारललिता ज्स्गाः ।ऽ।,॥ऽ,ऽ
मस्गौ स्यात् मदलेखा ऽऽऽ,॥ऽ,ऽ
सरगैर्हंसमाला ॥ऽ,ऽ।ऽ,ऽ
चित्रपदा यदि भौ गौ ऽ॥,ऽ॥,ऽ,ऽ
भात्तलगा माणवकम् ऽ॥,ऽऽ।,।,ऽ
मो मो गो गो विद्युन्माला ऽऽऽ,ऽऽऽ,ऽ,ऽ
ग्लौ रजौ समानिका तु ऽ,।,ऽ।ऽ,।ऽ।
प्रमाणिका जरौ लगौ ।ऽ।,ऽ।ऽ,।,ऽ
नभलगा गजगतिः ॥।,ऽ॥,।,ऽ
म्नौ गौ हंसरुतमेतत् ऽऽऽ,॥।,ऽ,ऽ
नाराचिका तरौ लगौ ऽऽ।,ऽ।ऽ,।,ऽ
भुजगशिशुभृता नौ मः ॥।,॥।,ऽऽऽ

**छन्दसामुदाहरणानि ।**

श्रीस्ते । सास्ताम् ॥
गोपस्त्रीभिः । कृष्णो रेमे ॥
गोपानां नारीभिः । श्लिष्टोऽव्यात् कृष्णो वः ॥
सा मृगीलोचना । राधिका श्रीपतेः ॥
भास्वत्कन्या सैका धन्या । यस्याः कूले
कृष्णोऽस्वेलत् ॥
मुररिपो ! तव पदम् । नमति सा ननु सती ॥
कृष्णसनाथा तर्णकपङ्क्तिः । यामुनकच्छे चारु
चचार ॥
व्रजसुभ्रुवो विलसत्कलाः । अभवन् प्रिया
मुरवैरिणः ॥
मूर्त्तिर्मुरशत्रोरत्यद्भुतरूपा ।
आस्तां मम चित्ते नित्यं तनुमध्या ॥
शशिवदनानां व्रजतरुणीनाम् ।
अधरसुधोर्म्मिं मधुरिपुरैच्छत् ॥
हरे ! सोमराजीसमा ते यशःश्रीः ।
जगन्मण्डलस्य च्छिनत्त्यन्धकारम् ॥
रविदुहितृतटे नवकुसुमततिः ।
व्यधित मधुमती मधुमथनमुदम् ॥
मुरारितनुवल्ली कुमारललिता सा ।
व्रजैणनयनानां ततान मुदमुच्चैः ॥
रङ्गे बाहुविलग्नाद्दन्तीन्द्रान्मदलेखा ।
लग्नाभून्मुरशत्रौ कस्तूरीरसचर्च्चा ॥
यामुनसैकतदेशे गोपवधूजलकेलौ ।
कंसरिपोर्गतिलीला चित्रपदा जगदव्यात् ॥
चञ्चलचूडञ्चपलैर्वत्सकुलैः केलिपरम् ।
ध्याय सखे स्मेरमुखं नन्दसुतं माणवकम् ॥
वासो वल्लीविद्युन्माला वर्हश्रेणी शाक्रश्चापः ।
यस्मिन्नास्तां तापोच्छित्त्यै गोमध्यस्थः
कृष्णाम्भोदः ॥
यस्य कृष्णपादपद्ममस्ति हृत्तडागसद्म ।
धीः समानिका परेण नोचितात्र मत्सरेण ॥
पुनातु भक्तिरच्युता सदाच्युताङ्घ्रिपद्मयोः ।
श्रुतिस्मृतिप्रमाणिका भवाम्बुराशितारिका ॥
रविसुतापरिसरे विहरतो दृशि हरेः ।
व्रजबधूगजगतिमुदमलंव्यतनुत ॥
ह्रदतटनिकटक्षौणी भुजगशिशुभृता यासीत् ।
मुररिपुदलिते नागे व्रजजनसुखदा साभूत् ॥

**छन्दसां वृत्तिनामानि ।**

मणिमध्यम्
भुजङ्गसङ्गता
हलमुखी
भद्रिका
दशाक्षरा वृत्तिः । पङ्क्तिः ।
रुक्मवती
रूपवती क्वचित् । चम्पकमाला इति क्वापि ।
मत्ता
त्वरितगतिः
मनोरमा
शुद्धविराट्
पणवम्
मयूरसारिणी
उपस्थिता
दीपकमाला
हंसी
एकादशाक्षरा वृत्तिः । त्रिष्टुप् ।
इन्द्रवज्रा
उपेन्द्रवज्रा
उपेन्द्रवज्राया इन्द्रवज्रायाश्च चरणघटिता उपजातयः । ताश्च चतुर्व्वर्णप्रस्तारभेदादाद्यन्त्यौ त्यक्त्वा चतुर्द्दशप्रकारा भवन्ति ।
सुमुखी
शालिनी
अस्याश्चतुर्थे ततः सप्तमे च यतिः ।
वातोर्म्मी
भ्रमरविलसिता
भ्रमरविलसितमिति केचित् ।
अनुकूला
रथोद्धता
स्वागता

**छन्दसां लक्षणगणाः ।**

स्यान्मणिमध्यं चेत् भमसाः ऽ॥,ऽऽऽ,॥ऽ
सजरैर्भुजङ्गसङ्गता ॥ऽ,।ऽ।,ऽ।ऽ
रान्नसाविह हलमुखी ऽ।ऽ,॥।,॥ऽ
भद्रिका भवति रो नरौ ऽ।ऽ,॥।,ऽ।ऽ
रुक्मवती सा यत्र भमस्गाः ऽ॥,ऽऽऽ,॥ऽ,ऽ
ज्ञेया मत्ता मभसगसृष्ट ऽऽऽ,ऽ॥,॥ऽ,ऽ
त्वरितगतिश्च नजनगैः ॥।,।ऽ।,॥।,ऽ
नरजगैर्भवेन्मनोरमा ॥।,ऽ।ऽ,।ऽ।,ऽ
म्सौ ज्गौ शुद्धविराडिदं मतम् ऽऽऽ,॥ऽ,।ऽ।,ऽ
म्नौ य्गौ चेति पणवनामेदम् ऽऽऽ,॥।,।ऽऽ,ऽ
र्जौ रगौ मयूरसारिणी स्यात् ऽ।ऽ,।ऽ।,ऽ।ऽ,ऽ
तो जौ गुरुणेयमुपस्थिता ऽऽ।,।ऽ।,।ऽ।,ऽ
दीपकमाला भ्मौ मता जगौ ऽ॥,ऽऽऽ,।ऽ।,ऽ
ज्ञेया हंसी मभनगयुता ऽऽऽ,ऽ॥,॥।,ऽ
स्यादिन्द्रवज्रा यदि तौ जगौ गः ऽऽ।,ऽऽ।,।ऽ।,ऽ,ऽ
उपेन्द्रवज्रा जतजास्ततो गौ । ऽ।,ऽऽ।,।ऽ।,ऽ,ऽ
अनन्तरोरितलक्ष्मभाजौ
पादौ यदीयावुपजातयस्ताः।
इत्थं किलान्यास्वपि मिश्रितासु
वदन्ति जातिष्विदमेव नाम ॥
नजजलगैर्गदिता सुमुखी ॥।,।ऽ।,।ऽ।,।,ऽ
मात्तौ गौ चेत् शालिनी वेदलोकैः ऽऽऽ,ऽऽ।,ऽऽ।,ऽ,ऽ
वातोर्म्मीयं गदिता म्भौ तगौ गः ऽऽऽ,ऽ॥,ऽऽ।,ऽ,ऽ
मो गो नौ गो भ्रमरविलसिता ऽऽऽ,ऽ,॥।,॥।,ऽ

**छन्दसामुदाहरणानि ।**

कालियभोगाभोगगतस्तन्मणिमध्यस्फीतरुचा॥
चित्रपदाभो नन्दसुतश्चारु ननर्त्त स्मेरमुखः ॥
तरला तरङ्गरिङ्गितैर्यमुना भुजङ्गसङ्गता ।
कथमेतु वत्सचारकश्चपलः सदैव तां हरिः ॥
कायमनोवाक्यैः परिशुद्धैर्यस्य सदा कंशद्विषि भक्तिः ।
राज्यपदे हर्म्म्यालिरुदारा रुक्मवती विघ्नः खलु तस्य ॥
पीत्वा मत्ता मधु मधुपाली कालिन्दीये तटवनकुञ्जे ।
उद्दीव्यन्तीर्व्रजजनरामाः कामासक्ता मधुजिति चक्रे ॥
त्वरितगतिर्व्रजयुवतिस्तरणिसुताविपिनगता।
मुररिपुणा रतिगुरुणा परिरमिता प्रमदमिता ॥
तरणिजातटे विहारिणी व्रजविलासिनी विलासतः ।
मुररिपोस्तनुः पुनातु वः सुकृतशालिनां मनोरमा ॥
गोष्ठे गिरिं सव्यकरेण धृत्वा रुष्टेन्द्रवज्राहतियुक्तवृष्टौ ।
यो गोकुलं गोपकुलञ्च सुस्थं चक्रे स नोरक्षतु चक्रपाणिः ॥
उपेन्द्रवज्रादिमणिच्छटाभिर्विभूषणानां छुरितं वपुस्ते ।
स्मरामि गोपीभिरुपास्यमानं सुरद्रुमूले मणिमण्डपस्थम् ॥
तरणिसुतातटकुञ्जगृहे वदनविधुस्मितदीधितिभिः।
तिमिरमुदस्य मुखं सुमुखी हरिमवलोक्य चुचुम्ब चिरम् ॥
अंहो हन्ति ज्ञानवृद्धिं विधत्ते धर्म्मं घत्ते काममर्थञ्च सूते ।

**मुक्तिंदत्ते** सर्व्वदोपास्यमाना पुंसां श्रद्धाशालिनी विष्णुभक्तिः ॥

ध्याता मूर्त्तिः क्षणमप्यच्युतस्य
श्रेणी नाम्नां गदिता हेलयापि ।
संसारेऽस्मिन् दुरितं हन्ति पुंसां
वातोर्म्मीपोतमिवाम्भोधिमध्ये॥
मुग्धे ! मानं परिहर न चिरात्तारुण्यन्ते सफलयतु हरिः ।
फुल्लावल्ली भ्रमरविलसिताभावे शोभां कलयति किमु ताम् ॥

| | | |
|---|---|---|
| | स्यादनुकूला भतनगगाश्चेत्<br>ऽ॥,ऽऽ।,॥।,ऽ,ऽ<br>रात् परैर्नरलगै रथोद्धता ऽ।ऽ,॥।,ऽ।ऽ,।,ऽ<br>स्वागता रनभगैर्गुरुणा च ऽ।ऽ,॥।,ऽ॥,ऽ,ऽ | वल्लववेशा मुररिपुमूर्त्तिर्गोपमृगाक्षीकृत्तरतिपूर्त्तिः ।<br>वाञ्छितसिद्ध्यै प्रणतिपरस्य स्यादनुकूला जगति न कस्य ॥<br>राधिका दधिविलोडनस्थिता<br>कृष्णवेणुनिनदैरथोद्धता ।<br>यामुनं तटनिकुञ्जमञ्जसा सा<br>जगामसलिलाहृतिच्छलात् ॥<br>यस्य चेतसि सदा मुरवैरी<br>वल्लवीजनविलासविलोलः ।<br>तस्य नूनममरालयभाजः स्वागतादरकरः सुरराजः ॥ |

**छन्दसां वृत्तिनामानि ।**

दोधकम्

मोटनकम्

श्येनी

श्येनिका इति क्वचित् ।

श्रीः

वृत्ता

भद्रिका

मौक्तिकमाला

उपस्थितम्

उपचित्रम्

कुपुरुषजनिता

अनवसिता

विध्वङ्कमाला

सान्द्रपदम्

शिखण्डितम्

द्वादशाक्षरा वृत्तिः । जगती ।

चन्द्रवर्त्म

वंशस्थविलम्

वंशस्तनितमिति क्वापि ।

इन्द्रवंशा

वंशस्थविलेन्द्रवंशचरणोभयघटिता-

श्चतुर्व्वर्णप्रस्तारीयाद्यन्तव्यतिरिक्त-

चतुर्द्दशप्रकारा उपजातयो भवन्ति ।

जलोद्धतगतिः

भुजङ्गप्रयातम्

तोटकम्

स्रग्विणी

वैश्वदेवी

**छन्दसां लक्षणगणाः ।**

दोधकमिच्छति भत्रितयाद्गौ

ऽ॥,ऽ॥,ऽ॥,ऽ,ऽ

स्यान्मोटनकं तजजाश्च लगौ

ऽऽ।,।ऽ।,।ऽ।,।,ऽ

श्येन्युदीरिता रजौ रलौ गुरुः ऽ।

ऽ,।ऽ।,ऽ।ऽ,।,ऽ

बाणरसैः स्यात् भतनगगैः श्रीः

ऽ॥,ऽऽ।,॥।,ऽ,ऽ

ननसगगुरुरचिता वृत्ता ॥।,॥।,॥

ऽ,ऽ,ऽ

ननरलगुरुभिश्च भद्रिका

॥।,॥।,ऽ।ऽ,।,ऽ

मौक्तिकमाला यदि भतनात् गौ

ऽ॥,ऽऽ।,॥।,ऽ,ऽ

उपस्थितमिदं ज्सौताद् गकारौ ।

ऽ।,॥ऽ,ऽऽ।,ऽ,ऽ

उपचित्रमिदं ससभाल्लगौ ॥ऽ,॥ऽ,॥

ऽ,।,ऽ

कुपुरुषजनिता ननौ र्गौ गः

॥।,॥।,ऽ।ऽ,ऽ,ऽ

अनवसिता न्यौ भ्गौ गुरुरन्ते ॥।,।

ऽऽ,ऽ॥,ऽ,ऽ

विध्वङ्कमाला भवेत्तौ तगौ गः

ऽऽ।,ऽऽ।,ऽऽ।,ऽ,ऽ

सान्द्रपदं स्याद्भतनगलैश्च

ऽ॥,ऽऽ।,॥।,ऽ,।

शिखण्डितमिदं ज्सौ त्गौ गुरुश्चेत्

।ऽ।,॥ऽ,ऽऽ।,ऽ,ऽ

चन्द्रवर्त्म निगदन्ति रनभसैः ऽ।

ऽ,॥।,ऽ॥,॥ऽ

वदन्ति वंशस्थविलं जतौ जरौ ।

ऽ।,ऽऽ।,।ऽ।,ऽ।ऽ

स्यादिन्द्रवंशा ततजैरसंयुता

ऽऽ।,ऽऽ।,।ऽ।,ऽ।ऽ

जसौ जसयुतौ जलोद्धतगतिः ।

ऽ।,॥ऽ,।ऽ।,॥ऽ

भुजङ्गप्रयातं चतुर्भिर्यकारैः ।ऽऽ,।

ऽऽ,।ऽऽ,।ऽऽ

**छन्दसामुदाहरणानि ।**

देव ! सदोधकदम्बतलस्थ ! श्रीधर !

तारकनामपदं मे ।

कण्ठतलेऽसुविनिर्गमकाले स्वल्पमपि क्षणमेष्यति

योगम् ॥

रङ्गे खलु

मल्लकलाकुशलश्चाणूरमहाभटमोटनकम् ।

यः केलिलवेन चकार स मे संसाररिपुं

प्रतिमोटयतु ॥

यस्य

कीर्त्तिरिन्दुकुन्दचन्दनश्येन्यशेषलोकपावनी सदा

।

जाह्नवीवविश्वबन्द्यविभ्रमातं भजामि

भावगम्यमच्युतम् ॥

चन्द्रवर्त्म पिहितं घनतिमिरै राजवर्त्म रहितं

जनगमनैः ।

इष्टवर्त्म तदलङ्कुरु सरसे ! कुञ्जवर्त्मनि हरिस्तव

कुतुकी ॥

विलासवंशस्थविलं मुखानिलैः

प्रपूर्य्य यः पञ्चमरागमुद्गिरन् ।

व्रजाङ्गनानामपि गानशालिनां

जहार मानं स हरिः पुनातु नः ॥

दैत्येन्द्रवंशाग्निरुदीर्णदीधितिः

पीताम्बरोऽसौ जगतीतमोहरः ।

यस्मिन् ममज्जुः शलभा इव स्वयं

ते कंसचाणूरमुखा मखद्विषः ॥

यदीयहलतो विलोक्य विपदं

कलिन्दतनया जलोद्धतगतिः ।

विलासविपिनं विवेश सहसा

करोतु कुशलं हली स जगताम् ॥

सदारात्मजज्ञातिभृत्यो विहाय

स्वमेतं ह्रदं जीवनं लिप्समानः ।

मया क्लेशितः कालियेत्थं कुरु त्वं

भुजङ्ग ! प्रयातं द्रुतं सागराय ॥

यमुनातटमच्युतकेलिकला-

लसदङ्घ्रिसरोरुहसङ्गरुचिम् ।

मुदितोऽट कलेरपनेतुमघं

यदि चेच्छसि जन्म निजं सफलम् ॥

इन्द्रनीलोपलेनेव या निर्म्मिता

| | | |
|---|---|---|
| | वद तोटकमब्धिसकारयुतम् ॥ऽ,॥ऽ,॥ऽ,॥ऽ<br>कीर्त्तितैषा चतूरेफिका स्रग्विणी<br>ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ<br>बाणाश्वैश्छिन्ना वैश्वदेवी ममौ यौ<br>ऽऽऽ,ऽऽऽ,।ऽऽ,।ऽऽ | शातकुम्भद्रवालङ्कृता शोभते ।<br>नव्यमेघच्छविः पीतवासा हरे-<br>र्मूर्त्तिरास्तां ममैवोरसि स्रग्विणी ॥<br>अर्च्चामन्येषां त्वं विहायामराणा-<br>मद्वैतेनैकं कृष्णमभ्यर्च्च भक्त्या ।<br>तत्राशेषात्मन्यर्च्चिते भाविनी ते<br>भ्रातः ! सम्पन्नाराघना वैश्वदेवी ॥ |

**छन्दसां वृत्तिनामानि।**

प्रमिताक्षरा

द्रुतविलम्बितम्

मन्दाकिनी

कुसुमविचित्रा

तामरसम्

मालती

यमुनेति क्वापि।

मणिमाला

अस्याः षड्वर्णैर्य्यतिः।

जलधरमाला

अस्याश्चतुर्भिरष्टाभिश्च यतिः।

पुटः

प्रमुदितवदना

प्रभेति मल्लिनाथः। गौरीति

कौमुदीकारः।

प्रियंवदा

ललिता

उज्ज्वला

नवमालिका

ललना

ललितम्

द्रुतपदम्

विद्याधारः

पञ्चचामरम्

सारङ्गम्

मौक्तिकदाम

**छन्दसां लक्षणगणाः।**

प्रमिताक्षरा सजससैः कथिता ॥ऽ,।ऽ।,॥

ऽ,॥ऽ

द्रुतविलम्बितमाह नभौ भरौ ॥।,ऽ॥,ऽ॥,ऽ।

ऽ

ननररघटिता तु मन्दाकिनी ॥।,॥।,ऽ।ऽ,ऽ।

ऽ

नयसहितौ न्यौ कुसुमविचित्रा ॥।,।

ऽऽ,॥।,।ऽऽ

इह वद तामरसं नजजा यः ॥।,।ऽ।,।ऽ।,।

ऽऽ

भवति नजावथ मालती जरौ ॥।,।ऽ।,।

ऽ।,ऽ।ऽ

त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैः

ऽऽ।,।ऽऽ,ऽऽ।,।ऽऽ

मो भ, स्मौ चेज्जलधरमालाब्ध्यन्त्यैः

ऽऽऽ,ऽ॥,॥ऽ,ऽऽऽ

वसुयुगविरतिर्नौ म्यौ पुटोऽयम्

॥।,॥।,ऽऽऽ,।ऽऽ

प्रमुदितवदना भवेन्नौ च रौ ॥।,॥।,ऽ।ऽ,ऽ।ऽ

भुवि भवेन्नभजरैः प्रियंवदा ॥।,ऽ॥,।ऽ।,ऽ।

ऽ

धीरैरभाणि ललिता तभौ जरौ ऽऽ।,ऽ॥,।

ऽ।,ऽ।ऽ

ननभरसहिता गदितोज्ज्वला ॥।,॥।,ऽ॥,ऽ।

ऽ

इह नवमालिका नजभयैः स्यात् ॥।,।

ऽ।,ऽ॥,।ऽऽ

पञ्चमुनि भमौ सात् सयुता ललना

ऽ॥,ऽऽऽ,॥ऽ,॥ऽ

ललितमभिहितं नौ म्रौ नामतः

॥।,॥।,ऽऽऽ,ऽ।ऽ

द्रुतपदं भवति नभनयाश्चेत् ॥।,ऽ॥,॥।,।

ऽऽ

सर्व्वे मा यस्मिन् सोऽयं विद्याधारः स्यात्

ऽऽऽ,ऽऽऽ,ऽऽऽ,ऽऽऽ

लघुर्गुरुर्वदन्ति पञ्चचामरम् ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ

सारङ्गसंज्ञं समस्तैस्तकारैस्तु

ऽऽ।,ऽऽ।,ऽऽ।,ऽऽ।

**छन्दसामुदाहरणानि।**

अमृतस्य शीकरमिवोद्गिरती

रदमौक्तिकांशुलहरीच्छुरिता।

प्रमिताक्षरा मुररिपोर्भणिति-

र्व्रजसुभ्रुवामभिजहार मनः॥

तरणिजापुलिने नववल्लवी-

परिषदा सह केलिकुतूहलात्।

द्रुतविलम्बितचारुविहारिणं

हरिमहं हृदयेन सदा वहे॥

बलिदमनविधौ बभौ सङ्गता

पदजलरुहि यस्य मन्दाकिनी।

सुरनिहितसिताम्बुजस्रङ्गिनिभा

हरतु जगदघं स पीताम्बरः॥

विपिनविहारे कुसुमविचित्रा

कुतुकितगोपीमहितचरित्रा।

मुररिपुमूर्त्तिर्मुखरितवंशा

चिरमवताद्वस्तरलवतंसा॥

स्फुटसुषमामकरन्दमनोज्ञं

व्रजललनानयनालिनिपीतम्।

तव मुखतामरसं मुरशत्रो!

हृदयतडागविकाशि ममास्तु॥

इह कलयाच्युतकेलिकानने

मधुरससौरभसारलोलुपः।

कुसुमकृतस्मितचारुविभ्रमा

मलिरपि चुम्बति मालतीं मुहुः॥

प्रह्वामरमौलौ रत्नोपलक्लृप्ते

जातप्रतिविम्बा शोणा मणिमाला।

गोविन्दपदाब्जे राजी नखराणा-

मास्तां मम चित्ते ध्वान्तं शमयन्ती॥

या भक्तानां कलिदुरितोत्तप्तानां

तापोच्छेदे जलधरमाला नव्या।

भव्याकारा दिनकरपुत्रीकूले

केलीलोला हरितनुरव्यात् सा वः॥

| छन्दसां वृत्तिनामानि। | छन्दसां लक्षणगणाः। | छन्दसामुदाहरणानि। |
|---|---|---|
| मोटकम् | मोटकनाम समस्तभमीरय ऽ॥,ऽ॥,ऽ॥,ऽ॥ | |
| तरलनयनम् | वरिलघु तरलनयनमिह ॥॥॥॥॥॥ | |
| त्रयोदशाक्षरावृत्तिः। अतिजगती। | | |
| प्रहर्षिणी<br>त्रिभिर्दशभिश्च यतिः। | त्र्यशाभिर्मनजरगाः प्रहर्षिणीयम्<br>ऽऽऽ,॥।,।ऽ।,ऽ।ऽ,ऽ | गोपीनामधरसुधारसस्यपानै-<br>रुत्तुङ्गस्तनकलसोपगूहनैश्च।<br>आश्चर्य्यैरपि रतिविभ्रमैर्मुरारेः<br>संसारे मतिरभवत् प्रहर्षिणीह॥ |
| रुचिरा<br>चतुर्भिर्नवभिश्च यतिः। | जभौ सजौ गिति रुचिरा चतुर्ग्रहैः<br>।ऽ।,ऽ॥,॥ऽ,।ऽ।,ऽ | पुनातु वो हरिरतिरासविभ्रमी<br>परिभ्रमन् व्रजरुचिराङ्गनान्तरे।<br>समीरणोल्लसितलतान्तरालगो<br>यथा मरुत्तरलतमालभूरुहः॥ |
| मत्तमयूरः<br>चतुर्भिर्नवभिश्च यतिः। | वेदरन्ध्रैर्म्तौ यसगा मत्तमयूरः<br>ऽऽऽ,ऽऽ।,।ऽऽ,॥ऽ,ऽ | लीलानृत्यन्मत्तमयूरध्वनिकान्तं<br>नृत्यन्नीपामोदिपयोदानिलरम्यम्।<br>कामक्रीडाकृष्टमना गोपबधूभिः<br>कंसध्वंसी निर्ज्जनवृन्दावनमाप॥ |
| चण्डी | नयुगलसयुगलगैरिति चण्डी ॥।,॥।,॥ऽ,॥ऽ,ऽ | जयति दितिजरिपुताण्डवलीला-<br>कुपितकवलकरकालियमौलौ।<br>चरणकमलयुगचापलचण्डी<br>पदनखरुचिजितभोगमणिश्रीः॥ |
| मञ्जुभाषिणी<br>सुनन्दिनीति शम्भौ | सजसा जगौ च यदि मञ्जुभाषिणी<br>॥ऽ,।ऽ।,॥ऽ,।ऽ।,ऽ | अमृतोर्म्मिशीतलकरेण लालयं-<br>स्तनुकान्तिचोरितविलोचनोहरे!।<br>नियतं कलानिधिरसीति वल्लवी<br>मुदमच्युते व्यधित मञ्जुभाषिणी॥ |
| चन्द्रिका<br>उत्पलिनीति क्वापि। विद्युदिति क्षमेति च क्वापि। सप्तभिः षड्भिश्च यतिः। | ननततगुरुभिश्चन्द्रिकाऽश्वर्तुभिः<br>॥।,॥।,ऽऽ।,ऽऽ।,ऽ | शरदमृतरुचश्चन्द्रिकाक्षालिते<br>दिनकरतनयातीरदेशे हरिः।<br>विहरति रभसाद्वल्लवीभिः समं<br>त्रिदिवयुवतिभिः कोऽपि देवो यथा॥ |
| कलहंसः<br>सिंहनादः क्वापि। | सजसाः सगौ च कथितः कलहंसः<br>॥ऽ,।ऽ।,॥ऽ,॥ऽ,ऽ | यमुनाविहारकुतुके कलहंसो<br>व्रजकामिनीकमलिनीकृतकेलिः।<br>जनचित्तहारिकलकण्ठनिनादः<br>प्रमदं तनोतु तव नन्दतनूजः॥ |
| प्रबोधिता | सजसा जगौ च भवति प्रबोधिता ॥ऽ,।ऽ।,॥ऽ,।ऽ।,ऽ | शयिता मृषा चटुलमाननिद्रया<br>रतिकेलिकुञ्जनिलये विलासिनी।<br>मुरवैरिणा वदनचुम्बनादिना<br>स्मितमाततान सपदि प्रबोधिता॥ |
| मृगेन्द्रमुखम् | भवति मृगेन्द्रमुखं नजौ जरौ गः ॥।,।ऽ।,।ऽ।,ऽ।ऽ,ऽ | गुरुभुजवीर्य्यभरं हरिं मदान्धा<br>युधि समुपेत्य न दानवा जिजीवुः।<br>क्षुधितमृगेन्द्रमुखं मृगा उपेत्य<br>क्व नु खलु बिभ्रति जीवनस्य योगम्॥ |
| चञ्चरीकावली | यमौ रौ विख्याता चञ्चरीकावली गः<br>।ऽऽ,ऽऽऽ,ऽ।ऽ,ऽ।ऽ,ऽ | |
| चन्द्ररेखा | नसरयुगगैश्चन्द्ररेखर्त्तुलोकैः ॥।,॥ऽ,ऽ।ऽ,ऽ।ऽ,ऽ | |
| कन्दुकम् | इदं कन्दुकं यत्र येभ्यश्चतुर्भ्यो गः ।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,ऽ | |
| मृगेन्द्रमुखम् | भवति मृगेन्द्रमुखं नजौ जरौ गः ॥।,।ऽ।,।ऽ।,ऽ।ऽ,ऽ | |
| उपस्थितम् | उपस्थितमिदं ज्सौ त्सौ यदि गुरुः स्यात्<br>।ऽ।,॥ऽ,ऽऽ।,॥ऽ,ऽ | |
| मञ्जुहासिनी | जतौ सजौ गो भवति मञ्जुहासिनी<br>।ऽ।,ऽऽ।,॥ऽ।ऽ।,ऽ | |
| नन्दिनी | इह नन्दिनी सजससैर्गुरुयुक्तैः ॥ऽ,।ऽ।,॥ऽ,॥ऽ,ऽ | |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
|---|---|---|
| कुटजगतिः<br>प्रभावती ।<br>चतुर्द्दशाक्षरा वृत्तिः । शर्करीं । | कुटजगतिर्नजौ सप्तर्त्तु म्तौ गुरुः<br>॥।, ।ऽ।,ऽऽऽ,ऽऽ।,ऽ<br>यस्यां प्रिये ! प्रथमकमक्षरद्वयं<br>तुर्य्यं तथा गुरु नवमं दशान्तिमम् ।<br>सान्त्यं भवेद्यतिरपि चेद्युगग्रहैः<br>सा लक्ष्यताममृतरुते ! प्रभावती ॥ | |
| असम्बाधा<br>पञ्चभिर्नवभिश्च यतिः । | मो गो गो नौ मः शरनवभिरसम्बाधा<br>ऽऽऽ,ऽ,ऽ,॥।,॥।,ऽऽऽ | वीर्य्याग्नौ येन ज्वलति रणरसात् क्षिप्ते<br>दैत्येन्द्रे जाता धरणिरियमसम्बाधा ।<br>धर्म्मस्थित्यर्थं प्रकटिततनुसम्बन्धः<br>साधूनां वाधां प्रशमयतु स कंसारिः ॥ |
| वसन्ततिलकम्<br>अष्टाभिः षड्भिश्च यतिः । सिंहो-<br>द्धता क्वापि । सिंहोन्नता इति<br>मुनिकाश्यपः । उद्धर्षिणी इति<br>मुनिसैतवः ॥ | ज्ञेयं वसन्ततिलकं तभजा जगौ गः<br>ऽऽ।,ऽ॥,।ऽ।,।ऽ।,ऽ,ऽ | फुल्लं वसन्ततिलकं तिलकं वनाल्या<br>लीलापरं पिककुलं कलमत्र रौति ।<br>वात्येष पुष्पसुरभिर्म्मलयाद्रिवातो<br>यातो हरिः स मथुरां विधिना हताः स्मः ॥ |
| अपराजिता<br>सप्तभिर्यतिः । | ननरसलघुगैः स्वरैरपराजिता ॥।,॥।,ऽ।ऽ,॥ऽ,।,ऽ | यदनवधिभुजप्रतापक्कतास्पदा<br>यदुनिचयचमूः परैरपराजिता ।<br>व्यजयत समरे समस्तरिपुव्रजं<br>स जयति जगतां गतिर्गरुडध्वजः ॥ |
| प्रहरणकलिका<br>सप्तभिर्व्वर्णैर्यतिः । | ननभनलगिति प्रहरणकलिका<br>॥।,॥।,ऽ॥,॥।,।,ऽ | व्यथयति कुसुमप्रहरण ! कलिका<br>प्रमदवनभवा तव धनुषि तता ।<br>विरहविपदि मे शरणमिह ततो<br>मधुमथनगुणस्मरणमविरतम्॥ |
| वासन्ती | मात्तो नो मो गौ यदि गदिता वासन्तीयम्<br>ऽऽऽ,ऽऽ।,॥।,ऽऽऽ,ऽ,ऽ | भ्राम्यद्भृङ्गीनिर्भरमधुरालापोद्गीतैः<br>श्रीखण्डाद्रेरद्भुतपवनैर्मन्दान्दोला ।<br>लीलालोला पल्लवविलसद्धस्तोल्लासैः<br>कंसारातौ नृत्यति सदृशी वासन्तीयम् ॥ |
| लोला<br>अस्याः सप्तभिर्यतिः । | द्विःसप्तच्छिदि लोला म्सौ म्भौ गौ चरणे चेत्<br>ऽऽऽ,॥ऽ,ऽऽऽ,ऽ॥,ऽ,ऽ | मुग्धे यौवनलक्ष्मीर्विद्युद्विभ्रमलोला<br>त्रैलोक्याद्भतरूपो गोविन्दोऽतिदुरापः ।<br>तद्वृन्दावनकुञ्जे गुञ्जद्भृङ्गसनाथे<br>श्रीनाथेन समेता स्वच्छन्दं कुरु केलिम् ॥ |
| नान्दीमुखी<br>अस्याः सप्तभिर्यतिः । | स्वरभिदि यदि नौ तौ च नान्दीमुखी गौ<br>॥।,॥।,ऽऽ।,ऽऽ।,ऽ,ऽ, | सरसखगकुलालापनान्दीमुखीयं<br>लहरिभुजलता चारुफेनस्मितश्रीः ।<br>मुरहरकलयासत्तिमासाद्यकिन्ते<br>प्रमुदितहृदया भानुजा नृत्यतीह ॥ |
| इन्दुवदना | इन्दुवदना भजसनैः सगुरुयुग्मैः ऽ॥,।ऽ।,॥ऽ,॥।,ऽ,ऽ | |
| नदी<br>समभिर्यतिः । | ननतजगुरुगैः सप्तयतिर्नदी स्यात्<br>॥।,॥।,ऽऽ।,।ऽ।,ऽ,ऽ | |
| लक्ष्मीः | लक्ष्मीरन्तविरामा म्सौ तभौ गुरुयुग्मम्<br>ऽऽऽ,॥ऽ,ऽऽ।,ऽ॥,ऽ,ऽ | |
| सुपवित्रम् | त्रिननगागति वसुयति सुपवित्रम्<br>॥।,॥।,॥।,॥।,ऽ,ऽ | |
| मध्यक्षामा | मध्यक्षामा युगदशविरमा म्भौ न्यौ गौ<br>ऽऽऽ,ऽ॥,॥।,।ऽऽ,ऽ,ऽ | |
| कुटिलम् | युगदिग्भिः कुटिलमिति सभौ न्यौ गौ चेत्<br>॥ऽ,ऽ॥,॥।,।ऽऽ,ऽ,ऽ | |
| प्रमदा | नजभजला गुरुश्च भवति प्रमदा<br>॥।,।ऽ।,ऽ॥,।ऽ।,।,ऽ | |

**छन्दसां वृत्तिनामानि ।**

मञ्जरी

पञ्चमे नवमे च यतिः ।

कुमारी

अष्टमे नवमे च यतिः ।

सुकेसरम्

चन्द्रौरसः

चक्रपदम्

वासन्ती

पञ्चदशाक्षरा वृत्तिः । अतिशर्करी ।

शशिकला

स्रक्

अस्याः षड्भिर्नवभिश्च यतिः ।

मणिगुणनिकरः

अष्टभिः सप्तभिश्च यतिः ।

मालिनी

अष्टभिः सप्तभिश्च यतिः ।

लीलाखेलः

विपिनतिलकम्

तूणकम्

चन्द्रलेखा

सप्तमे अष्टमे च यतिः ।

चित्रा

**छन्दसां लक्षणगणाः ।**

सजसा यलौ गिति शरग्रहैर्मञ्जरी

IIऽ, IऽI, IIऽ, IऽऽI, I,ऽ

नजभजगैर्गुरुश्च वसुषट् कुमारी

III, IऽI,ऽII, IऽI,ऽ,ऽ

नरनरैर्लगौ च रचितं सुकेसरम्

III,ऽIऽ, III,ऽIऽ, I,ऽ

म्भौ न्यौ ल्गौ चेदिह भवति च चन्द्रौरसः

ऽऽऽ,ऽII, III, IऽऽI, I,ऽ

चक्रपदमिह भनननलगुरुभिः

ऽII, III, III, III, I,ऽ

वासन्तीयं स्यादिह खलु मतौ म्यौ गौ चेत्

ऽऽऽ,ऽऽI, III, Iऽऽ,ऽ,ऽ

गुरुनिधनमनुलघुरिह शशिकला

IIIIIIIIIIIIII,ऽ

स्रगियमपि च रसनव-रचितयतिः

IIIII, III, IIIII,ऽ

वसुमुनियतिरिति मणिगुणनिकरः

IIIIII, I, IIIII,ऽ

ननमययुतेयं मालिनी भोगिलोकैः

III, III,ऽऽऽ, Iऽऽ, Iऽऽ

एकन्यूनौ विद्युन्मालापादौ चेल्लीलाखेलः

ऽऽऽ,ऽऽऽ,ऽ,ऽ,ऽऽऽ,ऽऽऽ,ऽ

विपिनतिलकं नसनरेफयुग्मैर्भवेत्

III, IIऽ, III,ऽIऽ,ऽIऽ

तूणकं समानिकापदद्वयं विनान्तिमम्

ऽ, I,ऽIऽ, IऽI,ऽ, I,ऽIऽ, Iऽ

म्रौ मो यौ चेद्भवेतां सप्ताष्टकैश्चन्द्रलेखा

ऽऽऽ,ऽIऽ,ऽऽऽ, Iऽऽ, Iऽऽ,

चित्रा नामच्छन्दश्चित्रञ्चेत् त्रयो मा यकारौ

ऽऽऽ,ऽऽऽ,ऽऽऽ, Iऽऽ, Iऽऽ

**छन्दसामुदाहरणानि ।**

मलयजतिलकसमुदितशशिकला

व्रजयुवतिलसदलिकगगनगता ।

सरसिजनयनहृदयसलिलनिधि

व्यतनुत विततरभसपरितरलम् ॥

अयि सहचरि ! रुचिरतरगुणमयी

म्रदिमवसतिरनपगतपरिमला ।

स्रगिव निवस विलसदनुपमरसा

सुमुखि ! मुदितदनुजदलनहृदये ॥

नरकरिपुरवतु निखिलसुरगति-

रमितमहिमभरसहजनिवसतिः ।

अनवधिमणिगुणनिकरपरिचितः

सरिदधिपतिरिव धृततनुविभवः ॥

मृगमदकृतचर्च्चा पीतकौषेयवासा

रुचिरशिखिशिखण्डाबद्धधम्मिल्लपाशा ।

अनृजुनिहितमंशे वंशमुत्क्वाणयन्ती

धृतमधुरिपुलीला मालिनी पातु राधा ॥

पायाद्वो गोविन्दः कालिन्दीकूलक्षौणीचक्रे

रासोल्लासक्रीडद्गोपीभिः सार्द्धं लीलाखेलः ।

मन्दाकिन्यास्तीरोपान्तेस्वैरक्रीडाभिर्लोलो

यद्वद्देवानामीशः स्वर्व्वेश्याभिः खेलन्तीभिः ॥

विपिनतिलकं विकसितं वसन्तागमे

मधुकृतमदैर्मधुकरै रणद्भिर्वृतम् ।

मलयमरुता रचितलास्यमालोकयन्

व्रजयुवतिभिर्विहरति स्म मुग्धो हरिः ॥

सा सुवर्णकेतकं विकाशि भृङ्गपूरितं

पञ्चबाणबाणजालपूर्णहेमतूणकम् ।

राधिका वितर्क्य माधवाद्य मासि माधवे

मोहमेति निर्भरं त्वया विना कलानिधे ! ॥

विच्छेदे ते मुरारे ! पाण्डुप्रकाशा कृशाङ्गी

म्लानच्छायं दुकूलं न भ्राजते बिभ्रती सा ।

राधाम्भोदस्य गर्भे लीना यथा चन्द्रलेखा

किञ्चार्त्ता त्वां स्मरन्ती धत्ते ध्रुवं जीवयोगम् ॥

गोपाली लीलालोला यद्वत् कलिन्दात्मजान्ते

खेलन्मुक्ताहारा वन्यस्रग्लसन्मूर्द्धचित्रा ।

कंसारातेर्मूर्त्तिस्तद्वन्मे हृदि क्रीडतीयं

कोऽन्यः स्वर्गो मोक्षो वास्माद्विद्यते तन्न जाने ॥

**छन्दसां वृत्तिनामानि ।**

प्रभद्रकम्

एला

पञ्चभिर्दशभिश्च यतिः ।

कामक्रीडा

सुखेलकम्

चन्द्रकान्ता

सप्तभिरष्टाभिश्च यतिः ।

उपमालिनी

अष्टाभिः सप्तभिश्च यतिः ।

ऋषभः

मानसहंसः

नलिनी

निशिपालकम्

षोडशाक्षरा वृत्तिः । अष्टिः ।

चित्रम्

ऋषभगजविलसितम्

गजतुरगविलसितमिति शम्भौ ।

सप्तभिर्नवभिश्च यतिः ।

चकिता

अस्या अष्टमे यतिः ।

पञ्चचामरम्

मदनललिता

चतुर्थे षष्ठे च यतिः ।

वाणिनी

प्रवरललितम्

**छन्दसां लक्षणगणाः ।**

भवति नजौ भजौ रसहितौ प्रभद्रकम्

ऽऽ।,।ऽ।,ऽऽ।,।ऽ।,ऽ।ऽ

सजना नयौ शरदशयतिरियमेला

ऽऽऽ,।ऽ।,ऽऽ।,ऽऽ।,।ऽऽ

माः पञ्च स्युयस्यां सा कामक्रीडासंज्ञा ज्ञेया

ऽऽऽ,ऽऽऽ,ऽऽऽ,ऽऽऽ,ऽऽऽ

नजभजरैर्विराजितमिदं सुखेलकम्

ऽऽ।,।ऽ।,ऽऽ।,।ऽ।,ऽ।ऽ

चन्द्रकान्ताभिधा रौ म्सौ यो विरमः स्वराष्टौ

ऽ।ऽ,ऽ।ऽ,ऽऽऽ,ऽऽऽ,।ऽऽ

ननतभरकृताष्टस्वरैरुपमालिनी

ऽऽ।,ऽऽ।,ऽऽ।,ऽऽ।,ऽ।ऽ

ऋषभाख्यमेतदुदितं सजसा सयौ चेत्

ऽऽऽ,।ऽ।,ऽऽऽ,ऽऽऽ,।ऽऽ

कथयन्ति मानसहंसनाम सजौ ज्भराः

ऽऽऽ,।ऽ।,।ऽ।,ऽऽ।,ऽ।ऽ

सगणैः शिववक्त्रमितैर्गदिता नलिनी

ऽऽऽ,ऽऽऽ,ऽऽऽ,ऽऽऽ,ऽऽऽ,

शंस निशिपालकमिदं भजसनाश्च रः

ऽऽ।,।ऽ।,ऽऽऽ,ऽऽ।,ऽ।ऽ

चित्रसंज्ञमीरितं समानिका पदद्वयन्तु

ऽ,।,ऽ।ऽ,।ऽ।,ऽ,।,ऽ।ऽ,।ऽ।

भ्रत्रिनगैः स्वराङ्कमृषभगजविलसितम्

ऽऽ।,ऽ।ऽ,ऽऽ।,ऽऽ।,ऽऽ।,ऽ

भात् समतनगैरष्टच्छेदे स्यादिह चकिता

ऽऽ।,ऽऽऽ,ऽऽऽ,ऽऽ।,ऽऽ।,ऽ

प्रमाणिका पदद्वयं वदन्ति पञ्चचामरम्

।ऽ।,ऽ।ऽ,।,ऽ,।ऽ।,ऽ।ऽ,।,ऽ

म्भौ नो म्नौ गो मदनललिता वेदैः षड्ऋतुभिः

ऽऽऽ,ऽऽ।,ऽऽ।,ऽऽऽ,ऽऽ।,ऽ

नजभजरैर्यदा भवति वाणिनी गयुक्तैः

ऽऽ।,।ऽ।,ऽऽ।,।ऽ।,ऽ।ऽ,ऽ

यमौ नः स्रौ गश्च प्रवरललितं नाम वृत्तम्

।ऽऽ,ऽऽऽ,ऽऽ।,ऽऽऽ,ऽ।ऽ,ऽ

**छन्दसामुदाहरणानि ।**

विद्रुमारुणाधरोष्ठशोभिवेणुवाद्यहृष्ट-
वल्लवीजनाङ्गसङ्गजातमुग्धकण्टकाङ्ग ! ।
त्वां सदैव वासुदेव ! पुण्यलभ्यपादसेव !
वन्यपुष्पचित्रकेश ! संस्मरामि गोपवेश ! ॥

यो हरिरुच्चखान खरतरनखरशरै-
र्दुर्ज्जयदैत्यसिंहसुविकटहृदयतटम् ।
किन्त्विह चित्रमेष यदखिलमपहृतवान्
कंसनिदेशदृप्यदृषभगजविलसितम् ॥

दुर्ज्जयदनुजश्रेणीदुश्चेष्टाशतचकिता
यद्भुजपरिघत्राता याता साध्वसविगमम् ।
दीव्यति दिवि यन्माला स्वेच्छं नन्दनविपिने
गच्छत शरणं कृष्णं तं भीता भवरिपुतः ॥

सुरद्रुमूलमण्डपे विचित्ररत्ननिर्म्मिते
लसद्वितानभूषिते सलीलविभ्रमालसम् ।
सुराङ्गनाभवल्लवीकरप्रपञ्चचामर-
स्फुरत्समीरवीजितं सदाच्युतं भजामि तम् ॥

विभ्रष्टस्रग्गलितचिकुरा धौताधरपुटा
ग्लायत्पत्रावलिकुचतटोच्छ्वासोर्म्मितरला ।
राधात्यर्थं मदनललितान्दोलालसवपुः
कंसारातेरतिरसमहो चक्रेऽतिचटुलम् ॥

स्फुरतु ममाननेऽद्य ननु वाणि ! नीतिरम्यं
तव चरणप्रसादपरिपाकतः कवित्वम् ।
भवजलराशिपारकरणक्षमंमुकुन्दं
सततमहं स्तवैः स्वरचितैः स्तवानि नित्यम् ॥

भुजोत्क्षेपः शून्ये चलबलयझङ्कारयुक्तो
मुधा पादन्यासः प्रकटिततुलाकोटिनादः ।
स्मितं वक्त्रेऽकस्मादृदृशि पटुकटाक्षोर्म्मिलीला
हरौ जीयादीदृक् प्रवरललितं वल्लवीनाम् ॥

**छन्दसां वृत्तिनामानि ।**

अचलधृतिः

गरुडरुतम्

धीरललिता

अश्वगतिः

मणिकल्पलता

रूपम्

वरयुवतिः

सप्तदशाक्षरा वृत्तिः । अत्यष्टिः ।

शिखरिणी

षष्ठे एकादशे च यतिः ।

पृथ्वी

अष्टमे नवमे च यतिः ।

वंशपत्रपतितम्

वंशदलमिति शम्भौ वंशपत्रपतिता

इति केचित् । अस्य दशमे सप्तमे

च यतिः ।

मन्दाक्रान्ता

अस्याश्चतुर्थे षष्ठे सप्तमे च यतिः ।

इयं दौत्यवर्णनोपयोगिनी शस्ता ।

हरिणी

षष्ठे चतुर्थे सप्तमे च यतिः ।

नर्द्दटकम्

कोकिलकम्

अस्य सप्तमे षष्ठे चतुर्थे च यतिः ।

**छन्दसां लक्षणगणाः ।**

द्विगुणितवसुलघुभिरचलधृतिरिह

।। ।। ।। ।।, ।। ।। ।। ।।

गरुडरुतं नजौ भजतगा यदा स्युस्तदा

।।।, ।ऽ।,ऽ।।, ।ऽ।,ऽऽ।,ऽ

संकथिता भरौ नरनगाश्च धीरललिता

ऽ।।,ऽ।ऽ, ।।।,ऽ।ऽ, ।।।,ऽ

पञ्चभकारयुताऽश्वगतिर्यदि चान्त्यगुरुः

ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ

नजरभभेन गेन च स्यान्मणिकल्पलता

।।।, ।ऽ।,ऽ।ऽ,ऽ।।,ऽ।।,ऽ

यस्मिन् सर्व्वे गा राजन्ते ब्रह्माद्यं तद्रूपं नाम

ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ

भो रयना नगौ च यस्यां वरयुवतिरियम्

ऽ।।,ऽ।ऽ, ।ऽऽ, ।।।, ।।।,ऽ

रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी

।ऽऽ,ऽऽऽ, ।।।, ।।ऽ,ऽ।।, ।,ऽ

जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः

।ऽ।, ।।ऽ, ।ऽ।, ।।ऽ, ।ऽऽ, ।,ऽ

दिङ्मुनि वंशपत्रपतितं भरनभनलगैः

ऽ।।,ऽ।ऽ, ।।।,ऽ।।, ।।।, ।,ऽ

मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्

ऽऽऽ,ऽ।।, ।।।,ऽऽ।,ऽऽ।,ऽ,ऽ

नसमरसला गः षड्वेदैर्हयैर्हरिणी मता

।।।, ।।ऽ,ऽऽऽ,ऽ।ऽ, ।।ऽ, ।,ऽ

यदि भवतो नजौ भजजला गुरु नर्द्दटकम्

।।।, ।ऽ।,ऽ।।, ।ऽ।, ।ऽ।, ।,ऽ

हयऋतुसागरैर्यतियुतं यदि कोकिलकम्

।।।, ।ऽ।,ऽ।।, ।ऽ।, ।ऽ।, ।,ऽ

**छन्दसामुदाहरणानि ।**

तरणिदुहितृतटरुचिरतरवसति-

रमरमुनिमुखजनविहितधृतिरिह।

मधुरिपुरभिनवजलधररुचितनु-

रचलधृतिरुदयति सुकृतिहृदि खलु ॥

अमरमयूरमानसमुदे पयोदध्वनि-

र्गरुडरुतं सुरारिभुजगेन्द्रसन्त्रासने ।

धरणिभरावतारविधिडिण्डिमाडम्बरः

स जयति कंसरङ्गभुवि सिंहनादो हरेः ॥

करादस्य भ्रष्टे ननु शिखरिणी दृश्यति शिशो-

र्विलीनाः स्मः सत्यं नियतमवधेयं तदखिलैः ।

इति त्रस्यद्गोपानुचितनिभृतालापजनितं

स्मितं बिभ्रद्देवो जगदवतु गोवर्द्धनधरः ॥

दुरन्तदनुजेश्वरप्रकरदुःस्थपृथ्वीभरं

जहार निजलीलया यदुकुलेऽवतीर्य्याशु यः ।

स एष जगतीगतिर्दुरितभारमस्मादृशां

हरिष्यति हरिः स्तुतिस्मरणचाटुभिस्तोषितः ॥

नूतनवंशपत्रपतितं रजनिजललवं

पश्य मुकुन्द ! मौक्तिकमिवोत्तममरकतगम्।

एष च तं चकोरनिकरः प्रपिबति मुदितो

वान्तमवेत्य चन्द्रकिरणैरमृतकणमिव ॥

प्रेमालापैः प्रियवितरणैः प्रीणितालिङ्गनाद्यै-

र्मन्दाक्रान्ता तदनु नियतं वश्यतामेति बाला ।

एवं शिक्षावचनसुधया राधिकायाः सखीनां

प्रीतः पायात् स्मितसुवदनो देवकीनन्दनो नः

॥

व्यधित स विधिर्नेत्रं नीत्वा ध्रुवं हरिणीगणाद्-

व्रजमृगदृशां सन्दोहस्योल्लसन्नयनश्रियम्।

यदयमनिशं दूर्व्वाश्यामे मुरारिकलेवरे

व्यकिरदधिकं बद्धाकाङ्क्षं विलोलविलोचनम् ॥

व्रजवनिता वसन्तलतिका विलसन्मधुपं

मधुमथनं प्रणम्रजनवाञ्छितकल्पतरुम्।

विभुमभिनौति कोऽपि सुकृती मुदितेन हृदा

रुचिरपदावलीघटितनर्द्दटकेन कविः ॥

लसदरुणेक्षणं मधुरभाषणमोदकरं

मधुसमयागमे सरसकेलिभिरुल्लसितम् ।

अलिललितद्युतिं रविसुतावनकोकिलकं

ननु कलयामि तं सखि ! सदा हृदि नन्दसुतम्

॥

**छन्दसां वृत्तिनामानि।**

हारिणी

अस्याश्चतुर्थे षष्ठे सप्तमे च यतिः।

भाराक्रान्ता

चतुर्थे षष्ठे सप्तमे च यतिः।

हरिः

कान्ता

चित्रलेखा

दशमे सप्तमे च यतिः।

अतिशायिनी

पञ्चचामरम्

अष्टादशाक्षरा वृत्तिः। धृतिः।

कुसुमितलतावेल्लिता

पञ्चमे षष्ठे सप्तमे च यतिः।

नन्दनम्

एकादशे सप्तमे च यतिः। इद-

मेव वेदरैफैश्छिन्ना महामालिका

त्र्यधिकदशभिस्तारकादशवसु-

भिर्लसा इति कुत्रापि।

नाराचम्

चित्रलेखा

चन्दलेखा इति क्वचित्।

शार्दूलललितम्

द्वादशे चरणान्ते च यतिः।

हरिणप्लुतम्

हरिणप्लुतेति कुत्रापि।

अश्वगतिः

सुधा

चित्रलेस्वा

**छन्दसां लक्षणगणाः।**

वेदर्त्वश्वैर्मभनमयला गश्चेत्तदा

हारिणी

ऽऽऽ,ऽ॥,॥।,ऽऽऽ,।ऽऽ,।,ऽ

भाराक्रान्ता मभनरसला गुरुः

श्रुतिषढयैः

ऽऽऽ,ऽ॥,॥।,ऽ।ऽ,॥ऽ,।,ऽ

रसयुगहययुङ् नौ म्रौ सो लगौ हि यदा

हरिः

॥।,॥।,ऽऽऽ,ऽ।ऽ,॥ऽ,।,ऽ

भवेत् कान्ता युगरसहयैर्यभौ नरसा

लगौ

।ऽऽ,ऽ॥,॥।,ऽ।ऽ,॥ऽ,।,ऽ

ससजा भजगा ग दिक्स्वरैर्भवति

चित्रलेखा

॥ऽ,॥ऽ,।ऽ।,ऽ॥,।ऽ।,ऽ,ऽ

ससजैरतिशायिनी मता

भजपरैर्गुरुभ्याम्

॥ऽ,॥ऽ,।ऽ।,ऽ॥,।ऽ।,ऽ,ऽ

अवेहि पञ्चचामरं जरौ जरौ जगौ

लघुश्च

।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ,।

स्याद्भूतर्त्वश्वैः कुसुमितलतावेल्लिता

म्तौ नयौ यौ

ऽऽऽ,ऽऽ।,॥।,।ऽऽ,।ऽऽ,।ऽऽ

नजभजरैस्तु रेफसहितैः

शिवैर्हयैर्नन्दनम्

॥।,।ऽ।,ऽ॥,।ऽ।,ऽ।ऽ,ऽ।ऽ

इह ननरचतुष्कसृष्टन्तु नाराचमाचक्षते

॥।,॥।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ

मन्दाक्रान्ता नपरलघुयुता कीर्त्तिता

चित्रलेखा

ऽऽऽ,ऽ॥,॥।,।,ऽऽ।,ऽऽ।,ऽ,ऽ

मः सो जः सतसा दिनेशऋतुभिः

शार्दूलललितम्

ऽऽऽ,॥ऽ,।ऽ।,॥ऽ,ऽऽ।,॥ऽ

मात् सो जौ भरसंयुतौ

करिबाणखैर्हरिणप्लुतम्

ऽऽऽ,॥ऽ,।ऽ।,।ऽ।,ऽ॥,ऽ।ऽ

**छन्दसामुदाहरणानि।**

यस्या नित्ये श्रुतिकुवलये श्रीशालिनी लोचने

रागः स्वीयोऽधरकिसलये लाक्षारसारञ्जनम्।

गौरी कान्तिः प्रकृतिरुचिरा रम्याङ्गरागच्छटा

सा कंसारेरजनि न कथं राधा मनोहारिणी॥

भाराक्रान्ता मम तनुरियं गिरीन्द्रविधारणात्

कम्पं धत्ते श्रमजलकणं तथा परिमुञ्चति।

इत्यावृण्वन् जयति जलदस्वनाकुलवल्लवी-

संश्लेषोत्थं स्मरविलसितं विलोक्य गुरुं हरिः॥

क्रीडत्कालिन्दीललितलहरीवारिभिर्दाक्षिणात्यै

र्वातैः खेलद्भिः कुसुमितलता वेल्लिता मन्दमन्दम्।

भृङ्गालीगीतैः किसलयकरोल्लासितोल्लास्यलक्ष्मीं

तन्बाना चेतो रभसतरलं चक्रपाणेश्चकार॥

तरणिसुतातरङ्गपवनैः सलीलमान्दोलितं

मधुरिपुपादपङ्कजरजःसुपूतपृथ्वीतलम्।

मुरहरचित्रचेष्टितकलाकलापसंस्मारकं

क्षितितलनन्दनं व्रज सखे ! सुखाय वृन्दावनम्॥

दिनकरतनयातटीकाननेचारुसञ्चारिणी

श्रवणनिकटकृष्टमेणेक्षणा कृष्ण ! राधा त्वयि।

ननु विकिरति नेत्रनाराचमेषातिहृच्छेदनं

तदिह मदनविभ्रमोद्भ्रान्तचित्तावधतस्वद्रुतम्॥

शङ्केऽमुष्मिन् जगति मृगदृशां साररूपं यदासी-

दाकृष्येदं व्रजयुवतिसभा वेधसा सा व्यधायि।

नैतादृक् चेत् कथमुदधिसुतामन्तरेणाच्युतस्य

प्रीतं तस्यां नयनयुगमभूच्चित्रलेखाद्भुतायाम्॥

कृत्वा कंसमृगे पराक्रमविधिं शार्दूलललितं

यश्चक्रे क्षितिभारकारिषु सुरारातिष्वतिदरम्॥

सन्तोषं परमन्तु देवनिवहे त्रैलोक्यशरणं

श्रेयो वः स तनोत्वपारमहिमा लक्ष्मीप्रियतमः॥

|  | पञ्चभकारयुताश्वगतिर्यदि<br>चान्त्यसरचिता<br>ऽ॥,ऽ॥,ऽ॥,ऽ॥,ऽ॥, ॥ऽ<br>सुधा तर्कैस्तर्कैर्भवति ऋतुभिर्यो मो<br>नसतसाः<br>।ऽऽ,ऽऽऽ, ॥।, ॥ऽ,ऽऽ।, ॥ऽ<br>वर्णाश्वैर्मननततमकैः कीर्त्तिता<br>चित्रलेखेयम्<br>ऽऽऽ, ॥।, ॥।,ऽऽ।,ऽऽ।,ऽऽऽ, |  |
|---|---|---|

**छन्दसां वृत्तिनामानि ।**

भ्रमरपदकम्
शार्दूलम्
केसरम्
चलम्
लालसा
लता
सिंहविस्फूर्ज्जितम्
हरनर्त्तनम्
विबुधप्रिया इति च कुत्रापि ।
क्रीडचक्रम्
हीरकम्
ऊनविंशत्यक्षरा वृत्तिः ।
अतिधृतिः ।
मेघविस्फूर्ज्जिता
षष्ठे षष्ठे सप्तमे च यतिः ।
छाया
षष्ठे द्वादशे अन्ते च यतिः ।
शार्दूलविंक्रीडितम्
द्वादशे ऊनविंशतौ च यतिः ।
सुरसा
सप्तमे चतुर्द्दशे अन्ते च यतिः ।
फुल्लदाम
पञ्चमे द्वादशे अन्ते च यतिः ।
पुष्पदाम इति केचित् ।
पञ्चचामरः
विम्बम्

**छन्दसां लक्षणगणाः ।**

भाद्रनना नसौ भ्रमरपदकमिदमभिहितम्
ऽ॥,ऽ।ऽ,॥।,॥।,॥।,॥ऽ
शार्दूलं वद मासषट्कयति मः सो जसौ
रो
मश्चेत्
ऽऽऽ,॥ऽ,।ऽ।,॥ऽ,ऽ।ऽ,ऽऽऽ
अर्थाश्वाश्वैर्म्भनयरयुगैर्वृत्तं मतं केसरम्
ऽऽऽ,ऽ॥,॥।,।ऽऽ,ऽ।ऽ,ऽ।ऽ
म्भौ न्जौ भ्रौ चेच्चलमिदमुदितं
युगैर्मुनिभिः स्वरैः
ऽऽऽ,ऽ॥,॥।,।ऽ।,ऽ॥,ऽ।ऽ
सैका वसुविरतिस्तनौ रैश्चतुर्भिर्युता
लालसा
ऽऽ।,॥।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ
भवति नयुगलं रभौ रौ
दशभिर्गजेन्द्रैर्लता
॥।,॥।,ऽ।ऽ,ऽ॥,ऽ।ऽ,ऽ।ऽ
तद्भूतर्त्वश्वैर्मौ भ्मौ विरतिश्चेत् सिंहवि-
स्फूर्ज्जितं यौ
ऽऽऽ,ऽऽऽ,ऽ॥,ऽऽऽ,।ऽऽ,।ऽऽ
र्सौ जजौ भरसंयुतौ
करिबाणखैर्हरनर्त्तनम्
ऽ।ऽ,॥ऽ,।ऽ।,।ऽ।,ऽ॥,ऽ।ऽ
इदं क्रीडचक्रं सदीर्घं समस्तैर्यकारैः
समेतम्
।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,
हीरकमुदितं भसनजनैरिह रगणोऽन्ततः
ऽ॥,॥ऽ,॥।,।ऽ।,॥।,ऽ।ऽ
रसर्त्वश्वैय्मौ न्सौ ररगुरुयुतौ
मेघविस्फूर्ज्जिता
स्यात् ।
।ऽऽ,ऽऽऽ,॥।,॥ऽ,ऽ।ऽ,ऽ।ऽ,ऽ
भवेत् सैवच्छाया तयुगगयुता स्यात्
द्वादशान्ते
यदा
।ऽऽ,ऽऽऽ,॥।,॥ऽ,ऽऽ।,ऽऽ।,ऽ
सूर्य्याश्वैर्यदि मः सजौ सततगाः
शार्दूल-

**छन्दसामुदाहरणानि ।**

कदम्बामोदाढ्या विपिनपवनाः केकिबः कान्तकेका
विनिद्राः कन्दल्यो दिशि दिशि मुदा दर्दुरा दृप्तनादाः ।
निशा नृत्यद्विद्युद्विलसितलसन्मेघविस्फूर्ज्जिता चेत्
प्रियः स्वाधीनोऽसौ दनुजदलनो राज्यमस्मात्
किमन्यत् ॥
अभीष्टं जुष्टो यो वितरति लसद्दोश्चारुशाखोज्ज्वलः
स्फुरन्नानारत्नस्तवकिततनुश्चित्रांशुकालम्बितः।
न यस्याङ्घ्रेश्छायामुपगतवतांसंसारतीव्रातप-
स्तनोति प्रोत्तापं स जगदवतात् कंसारिकल्पद्रुमः ॥
गोविन्दं प्रणमोत्तमाङ्ग ! रसने ! त्वं घोषयाहर्न्निशं
पाणी ! पूजयतं मनः ! स्मर पदे ! तस्यालयं गच्छतम्
।
एवञ्चेत् कुरुताखिलं मम हितं शीर्षादयस्तद् ध्रुवं
न प्रेक्षे भवतां कृते भवमहाशार्दूलविक्रीडितम् ॥
कामक्रीडासतृष्णो मधुसमयसमारम्भरभसात्
कालिन्दीकूलकुञ्जे विहरणकुतुकाकृष्टहृदयः ।
गोविन्दो वल्लवीनामधररससुधां प्राप्य सुरसां
शङ्के पीयूषपानप्रभवकृतसुखं व्यस्मरदसौ ॥
शश्वल्लोकानां प्रकटितकदनं ध्वस्तमालोक्य कंसं
हृष्यच्चेतोभिस्त्रिदिववसतिभिर्व्योमसंस्थैर्विमुक्तम् ।
मुग्धामोदेन स्थगितदशदिगाभोगमाहूतभृङ्गं
मौलौ दैत्यारेर्न्यपतदनुपमं स्वस्तरोः फुल्लदाम ॥

| | | | |
|---|---|---|---|
| | विक्रीडितम्<br>ऽऽऽ,IIऽ,IऽI,IIऽ,ऽऽI,ऽऽI,ऽ<br>म्रौ भ्नौ यो नो गुरुश्चेत्<br>स्वरमुनिकरणैराह<br>सुरसाम्<br>ऽऽऽ,ऽIऽ,ऽII,III,Iऽऽ,III,ऽ<br>मो गौ नौ तौ गौ स्वरहयतुरगैः फुल्लदाम<br>प्रसि-<br>द्धम्<br>ऽऽऽ,ऽ,ऽ,III,III,ऽऽI,ऽऽI,ऽ,ऽ<br>नयुगलगलघू रजौर्लगा यदा स<br>पञ्चचामर्ः<br>III,III,ऽ,I,ऽIऽ,IऽI,ऽIऽ,I,ऽ<br>वृत्तं विम्बाख्यं शरमुनितुरगैर्म्तौं न्सौ<br>ततौ<br>चेद्गुरुः<br>ऽऽऽ,ऽऽI,III,IIऽ,ऽऽI,ऽऽI,ऽ | |

| **छन्दसां वृत्तिनामानि।** | **छन्दसां लक्षणगणाः।** | **छन्दसामुदाहरणानि।** |
|---|---|---|
| मकरन्दिका | रसैः षड्भिर्लोकैर्य्मनसजजा गुरुर्मकरन्दिका ।ऽऽ,ऽऽऽ,॥।,॥ऽ,।ऽ।,।ऽ।,ऽ | प्रत्याहृत्येन्द्रियाणि त्वदितरविषयान्नासाग्रनयना त्वां ध्यायन्ती निकुञ्जे परमतररुचं हर्षोत्थपुलका। आनन्दाश्रुप्लुताक्षी वसति सुवदना योगैकरसिका कामार्त्तिं त्यक्तुकामा ननु नरकरिपो! राधा मम सखी ॥ |
| मणिमञ्जरी | इनाश्वैः स्यात् यभनयजजगाः कीर्त्तिता मणि- मञ्जरी ।ऽऽ,ऽ॥,॥।,।ऽऽ,।ऽ।,।ऽ।,ऽ | करतालचञ्चलकङ्कणस्वनमिश्रणेन मनोरमा रमणीयवेणुनिनादरङ्गिमसङ्गमेन सुखावहा। बहुलानुरागनिवासरातसमुद्भवाभवरागिणं विदधौ हरिं खलु वल्लवीजनचारु चामरगीतिका॥ |
| समुद्रतता | गजाब्धितुरगैर्जसौ जसतभा गश्चेत् समुद्रतता ।ऽ।,॥ऽ,।ऽ।,॥ऽ,ऽऽ।,ऽ॥,ऽ | चित्रवृत्तलीलया निसर्गरम्यदेहरूपविभ्रमेण राजमानसद्वयोविलाससम्पदाकलाकुतूहलेन। यः समं व्रजाङ्गनाजनैः सुराङ्गनानिभैः सुखं समेत्य विष्णुरुल्ललास चित्तपद्मकोषषट्पदः स मे सदास्तु॥ |
| विंशत्यक्षरा वृत्तिः। कृतिः। | | |
| सुवदना | ज्ञेया सप्ताश्वषड्भिर्म्मरभनययुता भ्लौ गः सुवदना ऽऽऽ,ऽ।ऽ,ऽ॥,॥।,।ऽऽ,ऽ॥,।,ऽ | सपीयूषोन्मीलत्सरसिजयुगला मध्यनम्रा फलाभ्यां तयोरूर्द्ध्वं राजत्तरलकिशलयाश्लिष्टसुस्निग्धशाखा। लसन्मुक्तारक्तोत्पलकुवलयवच्चन्द्रविम्बाञ्चिताग्रा महाशोभा मौलौ मिलदलिपटलैः कृष्ण! सा कापि वल्ली॥ |
| सप्तमे चतुर्द्दशे विंशतौ च यतिः। | | |
| गीतिका | सजजा भरौ सलगा यदा कथिता तदा खलु गीतिका ॥ऽ,।ऽ।,।ऽ।,ऽ॥,ऽ।ऽ,॥ऽ,।,ऽ | व्याकोषेन्दीवराभा कनककषलसत्पीतवासाः सुहासा वर्हैरुच्चन्द्रकान्तैर्व्वलयितचिकुरा चारुकर्णावतंसा। अंसव्यासक्तवंशध्वनिसुखितजगद्वल्लवीभिर्ल्लसन्ती मूर्त्तिर्गोपस्य विष्णोरवतु जगति वः स्रग्धरा हारिहारा॥ |
| वृत्तम् | वृचमीदृशन्तु नामतो रजौ रजौ रजौ गुरुर्लघुश्च ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ,। | |
| शोभा | रसाश्वाश्वः शोभा नयुगगजठरा मेघविस्फू- र्ज्जिता चेत् ।ऽऽ,ऽऽऽ,॥।,॥।,ऽ,ऽ।ऽ,ऽ।ऽ,ऽ | |
| षष्ठे त्रयोदशे अन्ते च यतिः। | | |
| सुवंशा | ख्याता पूर्ब्बैः सुवंशा यदि मरभना तद्वयं गो गुरुश्च ऽऽऽ,ऽ।ऽ,ऽ॥,॥।,ऽऽ।,ऽऽ।,ऽ,ऽ | |
| मत्तेभविक्रीडितम् | **सभरा** नगौ यलगास्त्रयोदशयतिर्मत्तेभविक्री- डितम् ॥ऽ,ऽ॥,ऽ।ऽ,॥।,ऽऽऽ,।ऽऽ,।,ऽ | |
| त्रयोदशे यतिः। | | |
| एकविंशत्यक्षरा वृत्तिः। प्रकृतिः। | | |
| स्रग्धरा | म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम् ऽऽऽ,ऽ।ऽ,ऽ॥,॥।,।ऽऽ,।ऽऽ,।ऽऽ | |
| सप्तमे चतुर्द्दशे एकविंशतौ च यतिः। | | |
| सरसी | नजभजजा जरौ यदि तदा गदिता सरसी कवीश्वरैः ॥।,।ऽ।,ऽ॥,।ऽ।,।ऽ।,।ऽ।,ऽ।ऽ | चिकुरकलापशैवलकृतप्रमदासु लसद्रसोर्म्मिषु स्फुटवदनाम्बुजासु विलसद्भुजबालमृणालवल्लिषु। कुचयुगचक्रवाकमिथुनानुगतासु कलाकुतूहली व्यरचयदच्युतो व्रजमृगीनयनासरसीषु विभ्रमम्॥ |
| सिंहकमिति सलिलनिधिरिति च क्वापि। | | |
| द्वाविंशत्यक्षरा वृत्तिः। आकृतिः। | | |
| हंसी | मौ गौ नाश्चत्वारो गो गो वसुभुवनयतिरिति भवति हंसी ऽऽऽ,ऽऽऽ,ऽ,ऽ,॥।,॥।,॥।,॥।,ऽ,ऽ | सार्द्धं कान्तेनैकान्तेऽसौ विकचकमलमधुसुरभि पिबन्ती कामक्रीडाकूतस्फीतप्रमदरसरभसमलघुरसन्ती। कालिन्दीये पद्मारण्ये पवनपतनपरितरलपरागे कंसाराते! पश्य स्वेच्छं सरभसगतिरिह विलसति हंसी॥ |
| अष्टमे द्वाविंशतौ च यतिः। | | |
| मदिरा | सप्तभकारयुतैकगुरुर्गदितेयमुदारतरा मदिरा | माधवमासि विकस्वरकेशरपुष्पलसन्मदिरामुदितै- र्भृङ्गकुलैरुपगीतवने वनमालिनमालि! कलानिलयम् कुञ्जगृहोदरपल्लवकल्पिततल्पमनल्पमनोजरसं त्वं भज माधविका मृदुनर्त्तकयामुनवातकृतोपगमा॥ |

**छन्दसां वृत्तिनामानि ।**

भद्रकम्

लालित्यम्

महास्रग्धरा

त्रयोविंशत्यक्षरा वृत्तिः । विकृतिः ।

अद्रितनया

अश्वललितमित्यन्यत्र ।

मत्ताक्रीडम्

अष्टमे त्रयोदशे त्रयोविंशतौ च यतिः । मत्ताक्रीडा इति क्वचित् ॥

सुन्दरिका

चतुर्व्विंशत्यक्षरा वृत्तिः ।

संस्कृतिः ।

तन्वी

पञ्चमे द्वादशे चतुर्व्विंशतौ च यतिः ।

किरीटम्

दुर्म्मिलम्

पञ्चविंशत्यक्षरा वृत्तिः ।

अतिकृतिः ।

क्रौञ्चपदा

पञ्चमे दशमे अष्टादशे पञ्चविंशतौ च यतिः ।

षड्विंशत्यक्षरा वृत्तिः । उत्कृतिः ।

भुजङ्गविजृम्भतम्

अष्टमे ऊनविंशतौ षड्विंशतौ च यतिः ।

अपवाहम्

**छन्दसां लक्षणगणाः ।**

भ्रौनरना रनावथगुरुर्दिगर्कविरमं हि भद्रकमिदम्

ऽ॥,ऽ।ऽ,॥।,ऽ।ऽ,॥।,ऽ।ऽ,॥।,ऽ

लालित्यं भुजगेन्द्रेण भाषितमेतच्चेन् मसरस्त-
जनगुभिः

ऽऽऽ,॥ऽ,ऽ।ऽ,॥ऽ,ऽऽ।,।ऽ।,॥।,ऽ

सजता नसौ ररौ गः फणितुरगहयैः स्यान्महा
स्रग्धराख्या

॥ऽ,।ऽ।,ऽऽ।,॥।,॥ऽ,ऽ।ऽ,ऽ।ऽ,ऽ

नजभजभा जभौ लघुगुरू बुधैस्तु गदितेय-
मद्रितनया

॥।,।ऽ।,ऽ॥,।ऽ।,ऽ॥,।ऽ।,ऽ॥,।,ऽ

मत्ताक्रीडं वस्विष्वाशायति मयुगगयुगमनुलघु-
गुरुभिः

ऽऽऽ,ऽऽऽ,ऽ,ऽ,॥॥॥॥॥॥॥,ऽ

इह सुन्दरिका पिङ्गलमुनिनोक्ता सद्वयतो
भसता ज्लभगाः

॥ऽ,॥ऽ,ऽ॥,॥ऽ,ऽऽ।,।ऽ।,।,ऽ॥,ऽ

भूतमुनीनैर्यतिरिह भतनाः स्भौ भनयाश्च यदि
भवति तन्वी

ऽ॥,ऽऽ।,॥।,॥ऽ,ऽ॥,ऽ॥,॥।,।ऽऽ

नाम किरीटमिदं भगणा यदि पिङ्गलनाग-
मुनीन्द्रमतं किल

ऽ॥,ऽ॥,ऽ॥,ऽ॥,ऽ॥,ऽ॥,ऽ॥,ऽ॥

सगणैरिह वृत्तवरं वसुभिः किल दुर्म्मिलमुक्तमिदं
कविभिः

॥ऽ,॥ऽ,॥ऽ,॥ऽ,॥ऽ,॥ऽ,॥ऽ,॥ऽ

क्रौञ्चपदा स्यात् भो
मसभाश्चेदिषुशरवसुमुनि-
यति मनुलघुगैः

**छन्दसामुदाहरणानि ।**

खरतरशौर्य्यपावकशिखापतङ्गनिभमग्नदृप्तदनुजो
जलधिसुताविलासवसतिःसतां
गतिरशेषमान्यमहिमा ।
भुवनहितावतारचतुरश्चराचरधरोऽवतीर्णइह हि
क्षितिवलयेऽस्ति कंसशमनस्तवेति तमवोचदद्रितनया ॥

मुग्धोन्मीलन्मत्ताक्रीडंमधुसमयसुलभमधुरमधुरसात्
गाने याने
किञ्चित्स्पन्दत्पदमरुणनयनयुगलसरसिजम् ।
रासोल्लासक्रीडत्कम्रव्रजयुवतिवलयरचितभुजरसं
सान्द्रानन्दं वृन्दारण्ये स्मरत हरिमनघचरणपरिचयम् ॥

माधव मुग्धैर्मधुकरविरुतैः
कोकिलकूजितमलयसमीरैः
कम्पमुपेता मलयजसलिलैः
प्लावनतोऽप्यधिगततनुदाहा।
पद्मपलाशैर्व्विरचितशयना देहजसंज्वरभरपरिदूनै
र्निःश्वसती सा मुहुरतिपरुषं ध्यानलये तव निवसति
तन्वी ॥

क्रौञ्चपदालीचित्रिततीरा
मदकलखगकुलकलकलरुचिरा
फुल्लसरोजश्रेणिविलासा मधुमुदितमधुपरवरभसकरी ।
फेनविलासप्रोज्ज्वलहासा
ललितलहरिभरपुलकितसुतनुः
पश्य हरेऽसौ कस्य न चेतो हरति तरलगतिरहिम-
किरणजा ॥

हेलोदञ्चन्न्यञ्चत्पादप्रकटविकटनटनभरो
रणत्करतालक-
श्चारुप्रेङ्खच्चूडावर्हः शुतितरलनवकिसलयस्तरङ्गित-
हारधृत् ।
त्रस्यन्नागस्त्रीभिर्भक्त्या मुकुलितकरकमलयुगं
कृतस्तुति-
रच्युतः
पायाद्वश्छिन्दन्
कालिन्दीह्रदकृतनिजवसतिबृहद्भुजङ्ग-
विजृम्भितम् ॥

| | ऽ॥,ऽऽऽ,।।ऽ,ऽ॥,।।।।।।।।।।।,ऽ<br>वस्वीशाश्वैश्छेदोपेतं ममतननयुग रसलगै-<br>र्भुजङ्गविजृम्भितम्<br>ऽऽऽ,ऽऽऽ,ऽऽ।,।।।,।।।,।।।,ऽ।ऽ,।।ऽ,।,ऽ<br>मो नाः षट् सगगिति यदि नवरसरसशर-<br>यतियुतमपवाहाख्यम्<br>ऽऽऽ,।।।,।।।,।।।,।।।,।।।,।।।,।।ऽ,ऽ,ऽ | |
| --- | --- | --- |

**छन्दसां वृत्तिनामानि ।**

अथ दण्डकाः ।

सप्तविंशत्यक्षरा वृत्तिः ।

चण्डवृष्टिप्रपातः

प्रचितकः

कुसुमस्तवकम्

मत्तमातङ्गलीलाकरः

अष्टविंशत्यक्षरा वृत्तिः ।

अशोकपुष्पमञ्जरी

अनङ्गशेखरः

**छन्दसां लक्षणगणाः ।**

यदिह नयुगलं ततः सप्तरेफास्तदा चण्ड-
वृष्टिप्रपातो भवेद्दण्डकः
॥।,॥।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,

प्रचितकसमभिधो धीरधीभिः स्मृतो दण्डको
नद्वयादुत्तरैः सप्तभिर्यैः
॥।,॥।,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ

सगणः सकलः खलु यत्र भवेत्तमिह प्रवदन्ति
बुधाः कुसुमस्तवकम्
॥ऽ,॥ऽ,॥ऽ,॥ऽ,॥ऽ,॥ऽ,॥ऽ,॥ऽ,॥ऽ

यत्र रेफः परं स्वेच्छया गुम्फितः स स्मृतो दण्डको
मत्तमातङ्गलीलाकरः
ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ

यत्र दृश्यते गुरोः परो लघुः क्रमात् स उच्यते
बुधैरशोकपुष्पमञ्जरीति
ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।

लघुर्गुरुर्निजेच्छया यदा निवेश्यते तदैष दण्डको
भवत्यनङ्गशेखरः
।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ

**छन्दसामुदाहरणानि ।**

प्रलयघनघटामहारम्भमेघावलीचण्डवृष्टिप्रपाताकुलं गोकुलं
सपदि समवलोक्य सव्येन हस्तेन गोवर्द्धनं नाम शैलं दधल्लीलया ।
कमलनयन ! रक्ष रक्षेति गर्ज्जत्त्रसन्मुग्धगोपाङ्गनालिङ्गनानन्दितो
गलदभिनवधातुधाराविचित्राङ्गरागोमुरारातिरस्तु प्रमोदाय वः ॥

मुरहर ! यदुकुलाम्भोधिचन्द्र ! प्रभो ! देवकीगर्भरत्न ! त्रिलोकैकनाथ !
प्रचितकपटसुरारिव्रजोद्दामदन्ताबलस्तोमविद्रावणे केशरीन्द्र ! ।
चरणनखरसुधांशुच्छटोन्मेषनिःशेषितध्यायिचेतो निविष्टान्धकार !
प्रणतजनपरितापोग्रदावानलोच्छेदमेघ ! प्रसीद प्रसीद प्रसीद ॥

विरराज यदीयकरः कनकद्युतिबन्धुरवामदृशः कुचकुट्टलगो
भ्रमरप्रकरेण
यथावृतमूर्त्तिरशोकलताविलसत्कुसुमस्तवकः ॥
स
नवीनतमालदलप्रतिमच्छविबिभ्रदतीवविलोचनहारिवपु
श्चपलारुचिरांशुकवल्लिधरोहरिरस्तु मदीयहृदम्बुज-
मध्यगतः ॥

हेमगौरं वसानोऽंशुकं शक्रनीलासिते वर्ष्मणि स्पष्टदिव्या-
नुलेपाङ्कितो
हारतारांशुवक्षोनभश्चित्रमालाञ्चितोभव्यभूषोज्वलाङ्गः
समं सीरिणा ।
अञ्जनाभास्वरेणेन्दुकुन्दाभ देहेन लीलापरिहास-
हासोर्म्मिकौतूहलैः
कंसरङ्गाद्रिपः पातु वश्चक्रपाणिर्गतिक्रीडया मत्तमातङ्ग-
लीलाकरः ॥

मूर्द्ध्नि चारुचम्पकस्रजा सलीलवेष्टनं लसल्लवङ्गचारु-
चन्द्रिका कचेषु
कर्णयोरशोकपुष्पमञ्जरीवतंसको गलेच कान्तकेशरो-
पक्लृप्तदाम ।
फुल्लनागकेशरादिपुष्परेणुरूषणं तनौ विचित्रमित्युपात्त-
वेश एष

| | | |
|---|---|---|
| | | केशवः पुनातु वः सुपुष्पभूषितः स मूर्त्तिमानिवागतो मधुर्विहर्त्तुमत्र ॥<br>उदेत्यसौ सुधाकरः पुरो विलोकयाद्य राधिके ! विजृम्भ-माणगौरदीधिती<br>रतिस्वहस्तनिर्म्मितः कलाकुतूहलेन चारुचम्पकैरनङ्ग-शेखरः किमु ।<br>इति प्रमोदकारिणीं प्रियाप्रमोदलक्षणां गिरं समुद्गिर-न्मुरारिरद्भुतां<br>प्रदोषकालसङ्गमोल्लसन्मनामनोजकेलिकौतुकी करोतु वः कृतार्थताम् ॥ |

**छन्दसां वृत्तिनामानि।**

त्रिंशदक्षरा वृत्तिः।

अर्णः

सिंहविक्रीडः

त्रयस्त्रिंशदक्षरा वृत्तिः

अर्णवः

अशोकमञ्जरी

षट्त्रिंशदक्षरा वृत्तिः।

व्यालः

ऊनचत्वारिंशदक्षरा वृत्तिः।

जीमूतः

द्वाचत्वारिंशदक्षरा वृत्तिः।

लीलाकरः

पञ्चचत्वारिंशदक्षरा वृत्तिः

उद्दामः

सिंहविक्रान्तः

अष्टचत्वारिंशदक्षरा वृत्तिः।

शङ्कः

इत्यादयः।

इति समवृत्तानि समाप्तानि ॥ * ॥

अथार्द्धसमवृत्तानि।

उपचित्रम् ११। ११ वृत्तिः।

प्रथमपाद तृतायपादे च

द्वितीयपादे चतुर्थपादे च

वेगवती १०। ११ वृत्तिः।

प्रथमपादे तृतीयपादे च

द्वितीयपादे चतुर्थपादे च

**छन्दसां लक्षणगणाः।**

प्रतिचरणविवृद्धरेफाः

स्युरर्णोऽर्णवव्यालजीमूत-

लीलाकरोद्दामशङ्कादयः

प्रतिचरणं चण्डवृष्टिप्रपातस्य इत्यर्थः।

॥।,॥।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ

यकारैः कवीच्छानुरोधान्निबद्धैः प्रसिद्धो

विशुद्धो-

ऽपरो दण्डकः सिंहविक्रीडनामा

।ऽऽ, ।ऽऽ, ।ऽऽ, ।ऽऽ, ।ऽऽ, ।ऽऽ, ।ऽऽ, ।ऽऽ, ।ऽऽ, ।

ऽऽ

॥।,॥।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।

ऽ,ऽ।ऽ

स्वेच्छया रजौ क्रमेण संनिवेशयत्युदारधीः

कविः

स दण्डकः स्मृतो जयत्यशोकमञ्जरी

ऽ।ऽ, ।ऽ।,ऽ।ऽ, ।ऽ।,ऽ।ऽ, ।ऽ।,ऽ।ऽ, ।ऽ।,ऽ।ऽ, ।

ऽ।,ऽ।ऽ

॥।,॥।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।

ऽ,ऽ।ऽ,ऽ।ऽ

॥।,॥।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।

ऽ,ऽ।ऽ,ऽ।ऽ,

ऽ।ऽ

॥।,॥।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।

ऽ,ऽ।ऽ,ऽ।ऽ,

ऽ।ऽ,ऽ।ऽ

॥।,॥।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।

ऽ,ऽ।ऽ,ऽ।ऽ,

ऽ।ऽ,ऽ।ऽ,ऽ।ऽ

नयुगलगुरुयुगेवं यकाराः कबीच्छानुरोधा-

त्तदा यत्र वक्ष्यन्त एषोऽपरो दण्डकः

पण्डितै-

रीरितः सिंहविक्रान्तनामा

॥।,॥।, ।,ऽऽ, ।ऽऽ, ।ऽऽ, ।ऽऽ, ।ऽऽ, ।ऽऽ, ।ऽऽ, ।

ऽऽ, ।ऽऽ,

।ऽऽ, ।ऽऽ, ।ऽऽ, ।ऽऽ

॥।,॥।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।

ऽ,ऽ।ऽ,

ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ

**छन्दसामुदाहरणानि।**

जय जय जगदीश विष्णो हरे राम दामोदर

श्रीनिवासा-

च्युतानन्त नारायण

त्रिदशगणगुरो मुरारे मुकुन्दासुरारे हृषीकेश

पीताम्बर

श्रीपते माधव।

गरुडगमन कृष्ण वैकुण्ठ गोविन्द

विश्वम्भरोपेन्द्र चक्रायुधा-

धोक्षज श्रीनिधे

वलिदमन नृसिंह शौरे। भवाम्भोधिघोरार्णसि

त्वं निमज्जन्त-

मभ्युद्धरोपेत्य माम् ॥

अर्णोवदर्णवादीनामप्युदाहरणानि बोद्धव्यानि

॥

मुरवैरिवपुस्तनुतां मुदं

हेमनिभांशुकचन्दनलिप्तम्।

गगनश्चपलामिलितं यथा

शारदनीरधरैरुपचित्रम् ॥

स्मर वेगवती व्रजरामा केशववंशरवैरतिमुग्धा।

रभसान्न गुरून् गणयन्ती केलिनिकुञ्जगृहाय

जगाम ॥

| | | |
|---|---|---|
| | विषमे यदि सौ सलगा दले भौ युजि भाद्-गुरुकावुपचित्रम् ।<br>द्विरावृत्त्या श्लोकः पूरयितव्यः<br>IIऽ, IIऽ, IIऽ, I,ऽ<br>ऽII,ऽII,ऽII,ऽ,ऽ<br>विषमे प्रथमाक्षरहीनं दोधकमेव हि वेगवती स्यात्<br>IIऽ, IIऽ, IIऽ,ऽ<br>ऽII,ऽII,ऽII,ऽ,ऽ | |

**छन्दसां वृत्तिनामानि।**

भद्रविराड् १० । ११ वृत्तिः ।
प्रथमपादे तृतीयपादे च
द्वितीयपादे चतुर्थपादे च
केतुमती १० । ११ वृत्तिः ।
प्रथमपादे तृतीयपादे च
द्वितीयपादे चतुर्थपादे च
विपरीतपूर्बा ११ । ११ वृत्तिः ।
प्रथमपाद तृतीयपादे च
द्वितीयपादे चतुर्थपादे च
आख्यानकी ११ । १२ वृत्तिः ।
प्रथमपादे तृतीयपादे च
द्वितीयपादे चतुर्थपादे च
हरिणप्लुता ११ । १२ वृत्तिः ।
प्रथमपादे तृतीयपादे च
द्वितीयपादे चतुर्थपादे च
अपरवक्त्रम् ११ । १२ वृत्तिः ।
प्रथमे तृतीये च पादे
द्वितीये चतुर्थे च पादे
द्रुतमध्या ११ । १२ वृत्तिः ।
प्रथमपादे तृतीयपादे च
द्वितीयपादे चतुर्थपादे च
मालभारिणी ११ । १२ वृत्तिः ।
प्रथमपादे तृतीयपादे च
द्वितीयपादे चतुर्थपादे च
कौमुदी १२ । १२ वृत्तिः ।
प्रथमपादे तृतीयपादे च
द्वितीयपादे चतुर्थपादे च
पुष्पिताग्रा १२ । १३ वृत्तिः ।
प्रथमपादे तृतीयपादे च
द्वितीयपादे चतुर्थपादे च
जवमती १२ । १३ वृत्तिः ।
प्रथमपादे तृतीयपादे च
द्वितीयपादे चतुर्थपादे च
मञ्जुसौरभम् १२ । १३ वृत्तिः ।
प्रथमपादे तृतीयपादे च
द्वितीयपादे चतुर्थपादे च

**छन्दसां लक्षणगणाः।**

ओजे तपरौ जरौ गुरुश्चेत् म्सौ ज्गौ ग् भद्र-
विराड् भवेदनोजे
ऽऽ।,।ऽ।,ऽ।ऽ,ऽ
ऽऽऽ,।।ऽ,।ऽ।,ऽ,ऽ
असमे सजौ सगुरुयुक्तौ केतुमती समे भरनगाद्
गः
।।ऽ,।ऽ।,।।ऽ,ऽ
ऽ।।,ऽ।ऽ,।।।,ऽ,ऽ
जतौ जगौ गो विषमे समे चेत् तौ ज्गौ ग एषा
विपरीतपूर्बा
।ऽ।,ऽऽ।,।ऽ।,ऽ,ऽ
ऽऽ।,ऽऽ।,।ऽ।,ऽ,ऽ
आख्यानकी तौ जगुरू ग ओजे
जतावनोजे
जगुरू गुरुश्चेत्
ऽऽ।,ऽऽ।,।ऽ।,ऽ,ऽ
।ऽ।,ऽऽ।,।ऽ।,ऽ,ऽ
अयुजि प्रथमेन विवर्ज्जितं
द्रुतविलम्बितकं
हरिणप्लुता
।।,ऽ।।,ऽ।।,ऽ।ऽ
।।।,ऽ।।,ऽ।।,ऽ।ऽ
अयुजि ननरला गुरुः समे
तदपरवक्त्रमिदं नजौ
जरौ
।।।,।।।,ऽ।ऽ,।,ऽ
।।।,।ऽ।,।ऽ।,ऽ।ऽ
भत्रयमोजगतं गुरुणी चेद् युजि च
नजौ
ज्ययुतौ द्रुतमध्या
ऽ।।,ऽ।।,ऽ।।,ऽ,ऽ
।।।,।ऽ।,।ऽ।,।ऽऽ
विषभे ससजा यदा गुरू चेत् सभरा
येन तु
मालभारिणीयम्

**छन्दसामुदाहरणानि।**

स्फुटफेनचया हरिणप्लुता वलिमनोज्ञतटा तरणेः सुता ।
कलहंसकुलारवशालिनी विहरतो हरति स्म हरेर्म्मनः ॥
स्फुटसुमधुरवेणुगीतिभिस्तमपरवक्त्रमवेक्ष्य माधवम् ।
मृगयुवतिगणैः समं स्थिता व्रजवनिता
धृतचित्तविभ्रमाः ॥
करकिसलयशोभया विभान्ती
कुचफलभारविनम्रदेहयष्टिः ।
स्मितरुचिरविलासपुष्पिताग्राव्रजयुवतिव्रतती
हरेर्मुदेऽभूत् ॥

| | | |
|---|---|---|
| | ।।ऽ,।।ऽ,।ऽ।,ऽ,ऽ<br>।।ऽ,ऽ।।,ऽ।ऽ,।ऽऽ<br>अयुजि ननभभा समकेऽपि तु<br>नयुगरयुगलं तदा<br>कौमुदी<br>।।।,।।।,ऽ।।,ऽ।।<br>।।।,।।।,ऽ।ऽ,ऽ।ऽ<br>अयुजि नयुगरेफतो यकारो युजि च<br>नजौ<br>जरगाश्च पुष्पिताग्रा<br>।।।,।।।,ऽ।ऽ,।ऽऽ<br>।।।,।ऽ।,।ऽ।,ऽ।ऽ,ऽ<br>स्यादयुग्मके रजौ रयौ समे चेत् जरौ<br>जरौ<br>गुरुर्ज्जवात् परा मतीयम्<br>ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽऽ<br>।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ,ऽ<br>यदि विषमे भवतो नजौ जरौ सजयाः<br>समे तु<br>जगौ मञ्जसौरभम्<br>।।।,।ऽ।,।ऽ।,ऽ।ऽ<br>।।ऽ,।ऽ।,।ऽऽ,।ऽ।,ऽ | |

**छन्दसां वृत्तिनामानि।**

सुन्दरी १० । ११ वृत्तिः ।
प्रथमे तृतीये पादे च
द्वितीये चतुर्थे पादे च
इत्यर्द्धसमवृत्तानि समाप्तानि ॥ * ॥
अथ विषमवृत्तानि ।
उद्गता
प्रथमे पादे १०
द्वितीये १०
तृतीये १०
चतुर्थे १३
अन्यविधोद्गता
प्रथमे पादे १०
द्वितीये १०
तृतीये ११
चतुर्थे १३
सौरभम्
प्रथमे पादे १०
द्वितीये १०
तृतीये १०
चतुर्थे १३
ललितम्
प्रथमे पादे १०
द्वितीये १०
तृतीये १२
चतुर्थे १३
वक्त्वम्
प्रथमे पादे ८
द्वितीये ८
तृतीये ८
चतुर्थे ८
पथ्यावक्त्रम्
प्रथमे पादे ८
द्वितीये ८
तृतीये ८
चतुर्थे ८

**छन्दसां लक्षणगणाः।**

अयुजोर्यदि सौ जगौ युजोः सभराः ल्गौ
यदि
सुन्दरी तदा
॥ऽ,॥ऽ,।ऽ।,ऽ
॥ऽ,ऽ॥,ऽ।ऽ,।,ऽ
प्रथमे सजौ यदि सलौ च
नसजगुरुकाण्य-
नन्तरम् ।
यद्यथ भनभगाः स्युरथो सजसा जगौ च
भव-
तीयमुद्गता ॥
॥ऽ,।ऽ।,॥ऽ,।
॥।,॥ऽ,।ऽ।,ऽ
ऽ॥,॥।,ऽ॥,ऽ
॥ऽ,।ऽ।,॥ऽ,।ऽ।,ऽ
प्रथमे सजौ यदि सलौ च
नसजगुरुकाण्य-
नन्तरम् ।
यद्यथ भनजलगाः स्युरथो सजसा जगौ
च
भवतीयमुद्गता ॥
॥ऽ,।ऽ।,॥ऽ,।
॥।,॥ऽ,।ऽ।,ऽ
ऽ॥,॥।,।ऽ।,।,ऽ
॥ऽ,।ऽ।,॥ऽ,।ऽ।,ऽ
त्रयमुद्गता सदृशमेव पदमिह
तृतीयमन्यथा ।
जायते रनभगैर्ग्रथितं कथयन्ति सौरभक-
मेतदीदृशम् ॥
॥ऽ,।ऽ।,॥ऽ,।
॥।,॥ऽ,।ऽ।,ऽ
ऽ।ऽ,॥।,ऽ॥,ऽ
॥ऽ,।ऽ।,॥ऽ,।ऽ।,ऽ
नयुगं सकारयुगलञ्च भवति चरणे
तृतीयके ।
तदुदितमुरुमतिभिर्ललितं यदि शेषमस्य
सकलं
यथोद्गता ।

**छन्दसामुदाहरणानि।**

यदवोचदवेक्ष्य सुन्दरी परितः स्नेहमयेन चक्षुषा ।
अपि कंसहरस्य दुर्व्वचं वचनन्तद्विदधीत विस्मयम्
॥
विललास गोपरमणीषु तरणितनयाप्रभोद्गता।
कृष्णनयनचकोरयुगे दधती
सुधांशुकिरणोर्म्मिविभ्रमम् ॥
अथ वासवस्य वचनेन रुचिरवदनस्त्रिलोचनम्।
क्लान्तिरहितमभिराधयितुंविधिवत्तपांसि विदधे
धनञ्जयः ॥
इति भारवावुद्गताभेदः । १२ । १ ॥
परिभूतफुल्लशतपत्रवनविसृतगन्धविभ्रमा।
कस्य हृन्न हरतीह हरे मुखपद्मसौरभकला
तवाद्भुता ॥
व्रजसुन्दरी समुदयेन मुदितमनसा स्म पीयते ।
हिमकरगलितमिवामृतकंललितं मुरारिमुखचन्द्र-
विच्युतम् ॥
वक्त्राम्भोजं सदा स्मेरं चक्षुर्नीलोत्पलं फुल्लम् ।
वल्लवीनां मुरारातेश्चेतोभृङ्गं जहारोच्चैः ॥
रासकेलिसतृष्णस्य कृष्णस्य मधुवासरे ।
आसीद्गोपमृगाक्षीणां पथ्या वक्त्रमधुस्रुतिः ॥

| | | |
|---|---|---|
| | ॥ऽ, ।ऽ।, ॥ऽ, ।<br>॥।, ॥ऽ, ।ऽ।,ऽ<br>॥।, ॥।, ॥ऽ, ॥ऽ<br>॥ऽ, ।ऽ।, ॥ऽ, ।ऽ।,ऽ<br>वक्त्रं युग्भ्यां मगौ स्यातामब्धेर्योऽनुष्टुभि<br>ख्यातम् ।<br>ऽऽऽऽ।ऽऽऽ<br>ऽऽऽऽ।ऽऽऽ<br>ऽ।ऽऽ।ऽऽऽ<br>ऽऽऽऽ।ऽऽऽ<br>युजोश्चतुर्थतो जेन पथ्यावक्त्रं<br>प्रकीर्त्तितम् ।<br>ऽ।ऽ॥ऽऽ।<br>ऽऽ॥।ऽ।ऽ<br>ऽऽऽ॥ऽऽऽ<br>ऽऽऽ॥ऽ।ऽ | |

**छन्दसां वृत्तिनामानि।**

अनुष्टुप
प्रथमे चरणे ८
द्वितीये ८
तृतीये ८
चतुर्थे ८
इति वृषमवृत्तानि समाप्तानि ॥ * ॥
अथ मात्रावृत्तानि।
आर्य्या अर्थात् गाथा
प्रथमे पादे १२
द्वितीये १८
तृतीये १२
चतुर्थे १५
प्रकारान्तरो यथा
प्रथमे पादे १२
द्वितीये १८
तृतीये १२
चतुर्थे १५
नवधा आर्य्या क्रमेण यथा ।
पथ्या
प्रथमे पादे १२
द्वितीये १८
तृतीये १२
चतुर्थे १५
विपुला
प्रथमे पादे १८
द्वितीये १२
तृतीये १४
चतुर्थे १३
चपला
प्रथमे पादे १२
द्वितीये १८
तृतीये १२
चतुर्थे १५
मुखचपला
प्रथमे पादे १२
द्वितीये १८
तृतीये १२
चतुर्थे

**छन्दसां लक्षणगणाः।**

पञ्चमं लघु सर्व्वत्र सप्तमं द्विचतुर्थयोः ।
गुरु षष्ठञ्च पादानां शेषेष्वनियमो मतः ॥
प्रयोगे प्रायिकं प्राहुः केऽप्येतद्वक्त्रलक्षणम्।
लोकेऽनुष्टुबिति ख्यातं तस्याष्ठाक्षरता मता ॥
ऽ।ऽ॥ऽऽ।
ऽ।ऽ॥ऽ।ऽ
॥ऽऽ।ऽऽऽ
ऽऽ॥।ऽ।ऽ
लक्ष्मैतत् सप्तगणा गोपेता भवति नेह विषमे जः
।
षष्ठो जश्च नलघु वा प्रथमार्द्धे नियतमार्य्यायाः
॥
षष्ठे द्वितीयलात् परके न्ले मुखलाच्च
सयतिपद-
नियमः ।
चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥
ऽऽ।ऽ।ऽऽ
ऽ॥॥ऽ।ऽ।ऽ॥ऽ
॥॥।ऽ।ऽ॥
।ऽ।ऽऽ।ऽऽऽ
ऽऽ।ऽ।ऽऽ
ऽऽ॥ऽ॥॥॥ऽऽ
ऽ॥ऽ॥ऽऽ
ऽऽ॥॥।ऽऽऽ
प्रथमगणत्रयविरतिर्द्दलयोरुभयीः प्रकीर्त्तिता
पथ्या ।
॥॥ऽ॥ऽऽ
ऽ॥ऽऽ।ऽ।ऽऽऽ
॥॥ऽ॥॥ऽ
ऽऽ॥ऽ।ऽऽऽ
संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति
पादः ।
यस्यास्तां पिङ्गलनागो विपुलामिति
समाख्याति ॥
ऽऽ॥ऽऽऽ॥ऽऽ
ऽ॥॥ऽऽऽ
ऽ॥।ऽ।ऽऽऽ
ऽऽऽ।ऽ॥ऽ

**छन्दसामुदाहरणानि।**

पञ्चमं लघु सर्व्वत्र सप्तमं द्विचतुर्थयोः ।
गुरु षष्ठश्च पादानां शेषेष्वनियमो मतः ॥
कृष्णः शिशुः सुतो मे वल्लवकुलटाभिराहृतो
न गृहे ।
क्षणमपि वसत्यसाविति जगाद गोष्ठ्यां
यशोदार्य्या ॥
वृन्दावने सलीलं
वल्गुद्रुमकाण्डनिहिततनुवष्टिः।
स्मेरमुखार्पितवेणुः कृष्णो यदि मनसि कः
स्वर्गः ॥
जय जय नाथ ! मुरारे ! केशव !
कंसान्तकाच्युतानन्त ! ।
कुरु करुणामिति विनतिः पथ्या
भवरोगदुःस्थानाम् ॥
अत्र द्वितीयपादान्तलघोर्गुरुत्वम् ।
पूर्ब्बपरार्द्धयोर्द्वादशमात्रायांयतिः ॥
पुंसां कलिकालव्यालहतानां
नास्त्युपहतिरल्पापि।
वीर्य्यविपुला मुखे चेत्
स्याद्गोविन्दाख्यमन्त्रकला॥
अत्र द्वितीयचरणान्तलघोर्गुरुत्वम् ।
पूर्ब्बपरार्द्धयोर्द्वादशमात्रां संलङ्घ्य यतिः ॥
चपला न चेत् कदाचिन्नृणां भवेद्भक्तिभावना
कृष्णे ।
धर्म्मार्थकाममोक्षास्तदा करस्था न सन्देहः ॥
नन्दसुत ! वञ्चकस्त्वं दृढं न ते प्रेम गच्छ
तत्रैव ।
यत्र भवति ते रागः कापि जगादेति मुखचपला
॥
अत्र द्वितीयपदान्तलघोर्गुरुत्वम् ॥

|  |  |  |
| --- | --- | --- |
|  | दलयोर्द्वितीयतुर्य्यौ गणौ जकारौ तु यत्र चपला सा ।<br>ıısısıss<br>ısıssısısss<br>ssısıss<br>ısıssısss<br>आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः ।<br>शेषः पूर्ब्बजलक्ष्मा मुखचपला सोदिता मुनिना ॥<br>sıı ıısıss<br>ısıssısısss<br>sıı ıısss<br>sııssıı ıı ıs |  |

**छन्दसां वृत्तिनामानि।**

जघनचपला

प्रथमे चरणे १२

द्वितीये १८

तृतीये १२

चतुर्थे १५

गीतिः

प्रथमे चरणे १२

द्वितीये १८

तृतीये १२

चतुर्थे १८

उपगीतिः

प्रथमे चरणे १२

द्वितीये १५

तृतीये १२

चतुर्थे १५

उद्गीतिः

प्रथमे चरणे १२

द्वितीये १५

तृतीये १२

चतुर्थे १८

आर्य्यागीतिः

प्रथमे चरणे १२

द्वितीये २०

तृतीये १२

चतुर्थे २०

पूर्ब्बार्द्धे विंशत्याश्चतुर्विंशत्या वा

मात्राणां परार्द्धे षोडशमात्राणां

परे लघुवर्णचतुष्टये सति प्रथमं

द्वितीयं वा लघ्वक्षरं प्राप्य

आर्य्यायाः सामान्येन यतिनियमः ॥

वैतालीयम्। अपरवक्त्रमित्येके।

प्रथमे चरणे १४

द्वितीये १६

तृतीये १४

चतुर्थे १६

औपच्छन्दसकम्

प्रथमे चरणे १६

द्वितीये १८

**छन्दसां लक्षणगणाः।**

प्राक्प्रतिपादितमर्द्धे प्रथमे प्रथमेतरे च

चप-

लायाः।

लक्ष्माश्रयेत सोक्ता

विशुद्धधीभिर्जघनचपला ॥

ऽऽऽऽ।।ऽ

ऽ।।।।ऽ।ऽ।।।ऽऽ

ऽऽ।ऽ।ऽऽ

।ऽ।ऽ।।।।।ऽऽ

आर्य्याप्रथमार्द्धसमं यस्या अपरार्द्धमाह तां

गीतिम्।

ऽ।।ऽऽऽऽ

ऽ।।ऽ।।।ऽ।ऽ।।ऽ

ऽऽऽऽऽऽ

।ऽ।ऽऽ।ऽ।ऽऽऽ

आर्य्यापरार्द्धतुल्ये दलद्वये प्राहुरुपगीतिम्

।

।।ऽ।ऽ।ऽऽ

ऽऽऽऽ।ऽऽऽ

ऽऽ।।।।ऽऽ

ऽ।।ऽऽ।ऽऽऽ

आर्य्याशकलद्वितये विपरीते

पुनरिहोद्गीतिः।

ऽऽ।ऽ।ऽ।।

ऽऽऽऽ।ऽऽऽ

ऽऽऽऽऽऽ

ऽ।।ऽऽ।ऽ।ऽ।।ऽ

आर्य्याप्राग्दलमन्तेऽधिकगुरु तादृगपरार्द्ध-

मार्य्यागीतिः।

ऽऽऽ।।।।ऽ

।ऽ।ऽऽ।ऽ।ऽ।।ऽऽ

ऽऽऽऽऽऽ

ऽऽऽऽ।ऽ।।।ऽऽऽ

षड्विषमेऽष्टौ समे कलास्ताश्च समेस्युर्नो

निर-

न्तरा।

न समात्र पराश्रिता कला वैतालीयेऽन्ते

रलौ

**छन्दसामुदाहरणानि।**

कृष्णः शृङ्गारपटुर्यौवनमदचञ्चलः सुललिताङ्गः

।

आसीद्व्रजाङ्गनानां मनोहरो जघनचपलानाम् ॥

केशववंशीगीतिर्लोकमनोहरिणहारिणीजयति।

गोपीमानग्रन्थेर्व्विमोचनी दिव्यगायनाश्चर्य्या ॥

अत्र द्वितीयचरणान्तलघोर्गुरुत्वम् ॥

नवगोपसुन्दरीणां रासोल्लासे मुरारातिम्।

अस्मारयदुपगीतिः स्वर्गकुरङ्गीदृशां गीतिम् ॥

नारायणस्य सन्ततमुद्गीतिः संस्मृतिर्भक्त्या।

अर्च्चायामासक्तिर्दुस्तरसंसारसागरे तरणिः ॥

हर्षाश्रुस्तिमितदृशः

प्रमोदरोमाञ्चकञ्चुकाञ्चितदेहाः।

आर्य्यागीतिं भक्त्या गायन्ति

श्रीपतेश्चरितसम्बद्धाम् ॥

लघुगुरुविपर्य्ययरूपप्रस्तारभेदेन बहुविधा

आर्य्या भवन्ति ॥

घुसृणेन मदेन चर्च्चितं तव यन्निन्दति राधिके

कुचम्।

मुदमातनुतेऽत्र पक्त्रिमं तद्वैतालीयं फलं हरेः ॥

लघुगुरुव्यत्यथयेनापि बहुधा भवति ॥

आतन्वानं सुरारिकान्तास्वौपच्छन्दसकं हृदा

विनोदम्।

कंसं यो निर्जघान देवो वन्दे तं जगतां स्थितिं

दधानम् ॥

| तृतीये १६<br>चतुर्थे १८<br>एतद्वैतालीयभेदः ॥ | गुरुः ॥<br>ISIISISIS<br>IISSIISISIS<br>IISIISISIS<br>SSSSSISIS<br>तत्रैवान्तेऽधिके गुरौ स्यादौपच्छन्दसकं कवीन्द्र-<br>हृद्यम् ।<br>SSSSISISS<br>SSSIISISISS<br>SSSSISISS<br>SSSIISISISS | |
|---|---|---|

पृष्ठ २/४८६

**छन्दसां वृत्तिनामानि ।**

पज्झटिका
प्रथमे चरणे १६
द्वितीये १६
तृतीये १६
चतुर्थे १६
दोहडिका
प्रथमे चरणे १३
द्वितीये १३
तृतीये ११
चतुर्थे ११
अस्या अन्त्या मात्रा लघ्वी अप-
भ्रंशभाषया प्रचारः ॥
इति मात्रावृत्तानि समाप्तानि ॥ * ॥

**छन्दसां लक्षणगणाः ।**

प्रतिपदयमकितषोडशमात्रा नवमगुरुत्वविभू-
षितगात्रा ।
पज्झटिकापुनरत्र विवेकः क्वापि न मध्य-
गुरुर्गण एकः ॥
IIIISSSSSS
IIIISIISIISS
SIIIIISIISS
SIIIIISIISS
मात्रा त्रयोदशकं यदि पूर्बं लघुकविरामि ।
पश्चादेकादशकन्तु दोहडिका द्विगुणेन ॥
SSSIIIIII।
SISSISS।
SSIIIIS।
IISIIIIS।

**छन्दसामुदाहरणानि ।**

तरलवतंसाश्लिष्टस्कन्धश्चलतरपज्झटिकाकटिबन्धः।
मौलिचपलशिखिचन्द्रकवृन्दःकालियशिरसि ननर्त्त मुकुन्दः ॥
इयं प्रतिपदयमकितषोडशमात्रालघुगुरुव्यत्ययेनापि बहुधा ।
अस्या नवमी मात्रा च कदाचित् लघ्वी भवति ॥
माई दोहडिपठण शुणि हासिओ काणु गोआल ।
वृन्दावणघणकुञ्ज चलिओ कमलरसाल ॥

अस्यार्थः । हे मातः ! दोहडिकापाठं श्रुत्वा कृष्णो

गोपालो हसित्वा कमपि रसालं चलितः कुत्र वृन्दावनघन-कुञ्जे वृन्दावनस्य निविडनिकुञ्जे । राई इति क्वचित् पाठः तन्मतेन राधिकाया दोहडिकापाठं श्रुत्वा ॥
गुरुलघुव्यत्ययेन बहुधा भवति ॥

अत्र समवृत्तानि (२४७) सप्तचत्वारिंशदधिकं द्विशतं, अर्द्धसमवृत्तानि (१५) पञ्चदश, विषमवृत्तानि (७) सप्त, मात्रावृत्तानि च (१५) पञ्चदश,

समुदायेन (२८४) चतुरशीत्यधिकद्विशतसंख्यकानि छन्दांसि लिखितानीति ॥ * ॥

**छन्दकपातनः**, पुं, (छन्दकेन छद्मना पातयति लोकानिति । पत् + णिच् + ल्युः ।) छद्म-तापसः । इति जटाधरः ॥

**छन्दोगः**, पुं, (छन्दो वेदविशेषं सामेत्यर्थः गाय-तीति । गै + "गोपोष्टक् ।" ३ । २ । ८ । इति टक् ।) सामगः । सामवेदी । इति जटाधरः ॥ (यथा, मनुः । ३ । १४५ ।
"यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगम् ।
शाखान्तगमथाध्वर्य्युं छन्दोगन्तु समाप्तिकम् ॥")

**छन्दोगपरिशिष्टं**, क्ली, (छन्दोगेन सामगेन कात्या-यनेन मुनिनेत्यर्थः । प्रणीतं यत् परिशिष्टम् । यद्वा, छन्दोगेभ्यः कृतं परिशिष्टम् ।) कात्यायन-मुनिकृतं सामवेदिकर्म्मबोधकगोभिलसूत्राणां परिशेषशास्त्रम् । इति स्मृतिः ॥

**छन्दोविचितिः**, स्त्री, (छन्दसां विचितिर्यत्र ।) श्रुतिच्छन्दसां प्रत्यायकं शास्त्रम् । इत्यमर-टीकायां भरतः ॥ (यथा, बृहत्संहितायाम् । १०४ । ६४ ।
"विपुलामपि बुद्ध्वा छन्दोविचितिं भवति क्रार्य्य-मेतावत् ।
श्रुतिसुखदवृत्तसंग्रहमिममाह वराहमिहिरो-ऽतः ॥")

**छन्नं**, क्ली, (छद् + क्तः ।) रहः । निर्जनस्थानम् । इति मेदिनी । ने, ५ ॥

**छन्नः**, त्रि, (छद् + क्तः ।) छादितः । इति

**छप**, इ क सर्पे । इति कविकल्पद्रुमः ॥ (चुरां-परं-सकं-सेट् ।) इ क, छम्पयति । सर्पो गतिः । इति दुर्गादासः ॥

**छम**, उ भक्षे । इति कविकल्पद्रुमः । (भ्वां-परं सकं-सेट् । उदित्वात् क्त्वावेट् ।) छमति । उ, छमित्वा छान्त्वा । इति दुर्गादासः ॥

**छमण्डः**, पुं, (छमति भक्षयति जन्मग्रहणान्तरं पितरं नाशयतीत्यर्थः । छम + बाहुलकादण्डन् ।) मृत-पितृकः । इत्युणादिकोषः ॥ छेमडा इति भाषा ॥ बन्धुहीनः । इति संक्षिप्तसारे उणादिवृत्तिः ॥

**छर्द्द**, क वमने । इति कविकल्पद्रुमः । (चुरां-परं-सकं-सेट् ।) वमनं वान्तिः । क, छर्दयति अन्नं लोकः । इति दुर्गादासः ॥ (तथाच, महा-भारते । ५ । ९६ । ४२ ।
"स्वपन्ति च प्लवन्ति च छर्द्दयन्ति च मानवाः ॥")

**छर्द्दं**, क्ली, (छर्द्द + भावे घञ् ।) वमनम् । इति हेमचन्द्रः । ३ । १३३ ॥

**छर्द्दनं**, क्ली, (छर्द्द + भावे ल्युट् ।) वमनम् । इति हेमचन्द्रः ॥ (यथा, सुश्रुते । ४ । १० ।
"तत्राशु मदनालायुविम्बीकोशातकीफलैः ।
छर्द्दनं दध्युदश्विभ्यामथवा तण्डुलाम्बुना ॥")

**छर्दनः**, पुं, (छर्द्दयति नरपश्वादिकं ग्रसित्वा पुन-रुद्गिरतीति । छर्द्द + ल्युः ।) अलम्बुषराक्षसः ।

**छर्द्दिः**, स्त्री, (छर्द्दयत्यनेनेति । छर्द्द वमने + इन् ।) वमिरोगः । वाँति इति भाषा ॥ तत्-पर्य्यायः । प्रच्छर्द्दिका २ छर्द्दम् ३ वमथुः ४ वमनम् ५ वमिः ६ । इति हेमचन्द्रः । ३ । ३३ ॥ छर्द्दिका ७ छर्द्दीका ८ वान्तिः ९ उद्गारः १० । इति राजनिर्घण्टः ॥ उत्कासिका ११ छर्द्द-नम् १२ । इति शब्दरत्नावली ॥ तस्या निदा-नादि यथा, --
"दुष्टैर्दोषैः पृथक्सर्व्वैर्वीभत्सालोकनादिभिः ।
छर्द्दयः पञ्च विज्ञेयास्तासां लक्षणमुच्यते ॥
अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरति ।
अकाले चातिमात्रैश्च तथा सात्म्यैश्च भोजनैः ।
श्रमाद्भयात्तथोद्वेगादजीर्णात्क्रिमिदोषतः ।
नार्य्याश्चापन्नसत्त्वायास्तथातिद्रुतमश्नतः॥
वीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लेशितो बलात् ।
छादयन्नाननं वेगैरर्द्दयन्नङ्गभञ्जनैः ॥
निरुच्यते छर्द्दिरिति दोषो वक्त्रं प्रधावितः ॥"
तस्याः पूर्ब्बरूपं यथा, --
"हृल्लासोद्गाररोधौ च प्रसेको लवणस्तनुः ।
भृशं द्वेषोऽन्नपाने च वमीनां पूर्ब्बलक्षणम् ॥"
वातजायास्तस्या रूपं यथा, --
"हृत्पार्श्वपीडामुखशोषशीर्ष-नाभ्यर्त्तिकासस्वरभेद्दतोदैः ।
उद्गारशब्दप्रबलं सफेनं विच्छिन्नकृष्णं तनुकं कषायम् ॥
कृच्छ्रेण चाल्पं महता च वेगे-नार्त्तोऽनिलाच्छर्द्दयतीहदुःखम् ॥"
तस्याः पित्तजाया रूपं यथा, --
"मूर्च्छा पिपासा मुखशोषमूर्द्ध-ताल्वक्षिसन्तापतमोभ्रमार्त्तः ।

मेदिनी । ने, ५ ॥ (व्याप्तः । यथा,
महाभारते ।
३ । २० । २४ ।
“न हया न रथो वीर ! न यन्ता मम
दारुकः ।
अदृश्यन्त शरैश्छन्नास्तथाहं सैनिकाश्च
मे ॥”)
रहः । इत्यमरः । २ । ८ । २२ ॥

(छर्द्दयति कटुगन्धेन उद्गिरत्यनेनेति ।
छर्द +
ल्युट् ।) निम्बवृक्षः । इति हेमचन्द्रः ॥
मदन-
वृक्षः । इति भावप्रकाशः ॥

**छर्द्दापनिका**, स्त्री, (छर्द्दं वमनं आपयति प्राप-

यतीत्यर्थः । आप् + णिच् + ल्युः ।
ततः स्वार्थे
कः । टापि अत इत्वञ्च ।) कर्क्कटी ।
इति
राजनिर्घण्टः ॥

पीतं भृशोष्णं हरितं सतिक्तं
धूम्रञ्च पित्तेन वमेत् सदाहम् ॥”
तस्याः श्लेष्मजाया रूपं यथा, --
“तन्द्रास्यमाधुर्य्यकफप्रसेक-
सन्तोषनिद्रारुचिगौरवार्त्तः ।
स्निग्धं घनं स्वादु कफाद्विशुद्धं
सलोमहर्षोऽल्परुजं वमेच्च ॥”
तस्यास्त्रिदोषजाया रूपं यथा, --
“शूलाविपाकारुचिदाहतृष्णा-
श्वासप्रमोहप्रबलाप्रसक्तम् ।
छर्द्दिस्त्रिदोषाल्लवणाम्लनील-
सान्द्रोष्णरक्तं वमतां नृणां स्यात् ॥”
असाध्याया लक्षणं यथा, --
“विट्स्वेदमूत्राम्बुवहानि वायुः
स्रोतांसि संरुध्य यदोर्द्ध्वमेति ।
उत्सन्नदोषस्य समाचितं तं
दोषं समूद्धूय नरस्य कोष्ठात् ॥
विण्मूत्रयोस्तत्समगन्धवर्णं
तृट्श्वासकासार्त्तियुतं प्रसक्तम् ॥
प्रच्छर्द्दयेद्दुष्टमिहातिवेगा-
त्तयार्द्दितश्चाशु विनाशमेति ॥”
आगन्तुजाया लक्षणं यथा, --
“वीभत्सजा दौर्हृदजामजा तु
असात्म्यजा या क्रिमिजा च या हि ।
सा पञ्चमी ताञ्च विभावयेच्च
दोषोच्छ्र्येणैव यथोक्तमादौ ॥”
क्रिमिजाया लक्षणं यथा, --
“शूलहृल्लासबहुला क्रिमिजा च विशेषतः ।
क्रिमिहृद्रोगतुल्येन लक्षणेन च लक्षिता ॥
क्षीणस्य या च्छर्द्दिरतिप्रसक्ता
सोपद्रवा शोणितपूययुक्ता ।
सचन्द्रिकां तां प्रवदेदसाध्यां
साध्याञ्चिकित्सेन्निरुपद्रवाञ्च ॥”
तस्या उपद्रवा यथा, --
“कासः श्वासो ज्वरो हिक्का तृष्णा वैचित्त्य-
मेव च ।
हृद्रोगस्तमकश्चैव ज्ञेयाश्छर्द्देरुपद्रवाः ॥”
इति माधवकरः ॥
तस्यौषधं यथा, गारुडे १८७ अध्याये ।

विधीयते मारुतजां विना तु
संशोधनं वा कफपित्तहारि ॥”
अत्र च्छर्द्दीशब्दः ।
“हन्यात् क्षीरोदकं पीतं छर्द्दिं
पवनसम्भवाम् ।
मुद्गामलकयूषो वा ससर्पिष्कः
ससैन्धवः ॥
क्षीरोदकं नाशितस्य क्षीरस्योदकम् ।
गुडूचीत्रिफलानिम्बपटोलैः क्वथितं
जलम् ।
पिबेत् मधुयुतं तेन छर्द्दिर्नश्यति
पित्तजा ॥
हरीतकीनां चूर्णन्तु
लिह्यान्माक्षिकसंयुतम् ।
अधोमार्गीकृते दोषे छर्द्दिः शीघ्रं
निवर्त्तते ॥
विडङ्गत्रिफलाविश्वाचूर्णं मधुयुतं पिबेत्
।
विडङ्गप्लवशुण्ठीनां चूर्णं वा कफजां
वमिम् ॥
प्लवं कैवर्त्तीमुस्तं गुडतजी इति लोके
।
पिष्ट्वा धात्रीफलं लाजान् शर्कराञ्च
पलोन्मितान् ।
दत्त्वा मधुपलञ्चापि कुडवं सलिलस्य
च ॥
वाससा गालितं पीतं हन्ति छर्द्दिं
त्रिदोषजाम् ।
गुडूच्या रचितं हन्ति हिमं
मधुसमन्वितम् ॥
दुर्निवारामपि छर्द्दिं त्रिदोषजनितां
बलात् ॥
एलालवङ्गगजकेशरकोलमज्जा-
लाजाप्रियङ्गुघनचन्दनपिप्पलीनाम् ।
चूर्णानि माक्षिकसितासहितादिलीढ्वा
छर्द्दिं निहन्ति कफमारुतपित्तजाताम्
॥
इति एलादिचूर्णम् ॥

**छर्द्दिकारिपुः**, पुं, (छर्द्दिकाया रिपुः नाशक इत्यर्थः ।)
क्षुद्रैला । इति शब्दचन्द्रिका ॥

**छर्द्दिघ्नः**, पुं, (छर्द्दिं हन्तीति । हन् + टक् ।) निम्बवृक्षः ।
इति रत्नमाला ॥ (निम्बशब्देऽस्य
विवरणंज्ञेयम् ॥)

**छलं**, क्ली, (छो + वृषादित्वात् कलच् । यद्वा, छल +
अच् ।) स्खलितम् । शाठ्यम् । इति मेदिनी
।
ले, १७ ॥ (यथा, मनुः । ८ । ४९ ।
“धर्म्मेण व्यवहारेण च्छलेनाचरितेन च ।
प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च ॥”
व्याजः । यथा, मार्कण्डेये । २५ । १० ।
“सा वै मदालसा पुत्त्रं बालमुत्तानशायिनम्
।
उल्लापनच्छलेनाह रुदमानमविस्वरम् ॥”
तात्पर्य्यान्तरेण प्रयुक्तस्य
शब्दस्यार्थान्तरेण
कथनम् । यथा, अक्षपादसूत्रे । ५० ।
“वचनविघातोऽर्थविकल्पोपपत्त्या च्छलम्
॥”
“अर्थस्य वाद्यभिमतस्य यो विकल्पो
विरुद्धः
कल्पः अर्थान्तरकल्पनेति यावत्
तदुपपत्त्या
युक्तिविशेषेण यो वचनस्य वाद्युक्तस्य
विघातो
दूषणं तच्छलमित्यर्थः ।
वक्तृतात्पर्य्याविषयार्थ-
कल्पनेन दूषणाभिधानमिति फलितम् ।
तात्-
पर्य्याविषयत्वं विशेष्ये विशेषणे संसर्गे वा ।
यथा,
नेपालादागतोऽयं नवकम्बलवत्त्वादित्यत्र
नव-
संख्यापरत्वकल्पनयाऽसिद्ध्यभिधानम् ।
प्रमेयं

"अश्वगन्धाभया चैव उदकेन समं पिबेत् ।
हरीतकीकुष्ठचूर्णं कृत्वा आस्यञ्च पूरयेत् ॥
शीतं पीत्वाथ पानीयं सर्व्वच्छर्द्दिनिवारणम् ।
गुडूचीपद्मकारिष्टधन्याकं रक्तचन्दनम् ॥
पित्तश्लेष्मज्वरच्छर्द्दिदाहतृष्णाघ्नमग्निकृत्
॥"
अपिच ।
"विल्वमूलञ्च समधु गुडू चीक्वथितं जलम् ।
पीतं हरेच्च त्रिविधां छर्द्दिं वै नात्र संशयः ॥
पीता दूर्व्वा च्छर्द्दिं नश्येत् पिष्टा
तण्डुलवारिणा ॥"
इति च गारुडे १९४ अध्यायः ॥ * ॥
अथ छर्द्देश्चिकित्सा ।
"आमाशयोत्क्लेशभवा हि सर्व्वा-
श्छद्द्यो मता लङ्घनमेव तस्मात् ।
अश्वत्थवल्कलं शुष्कं दग्धं निर्व्वापितं
जले ।
तज्जलं पानमात्रेण छर्द्दिं जयति
दुर्ज्जयाम् ॥
यथा त्रिकटुधान्याकजीरकाणां रजो
लिहन् ।
मधुना नाशयेच्छर्द्दिमरुचिञ्च
त्रिदोषजाम् ॥
विल्वत्वचो गुडूच्या वा क्वाथः क्षौद्रेण
संयुतः ।
छर्द्दिं त्रिदोषजां हन्ति पर्पटः पित्तजां
तथा ॥
आम्रास्थिविल्वनिर्यूहः पीतः
समधुशर्करः ।
निहन्याच्छद्द्यतीसारं वैश्वानर
इवाहुतिम् ॥
निर्यहः क्वाथः ।
जम्ब्वाम्रपल्लवशृतं लाजरजःसंयुतं
शीतम् ।
शमयति मधुना युक्तं वमिमतिसारं
तृषार्त्ति-
मुग्राम् ॥
वीभत्सजां हृद्यतमैरिष्टैर्द्दौर्हृदजां फलैः
।
लङ्घनैरामजां छर्द्दिं जयेत् सात्म्यै
रसात्मजाम् ॥
कृमिहृद्रोगवद्धन्याद्वर्मिं कृमिसमुद्भवाम्
।
तत्र तत्र यथा दोषं क्रियां
कुर्य्याच्चिकित्सकः ॥
इति छर्द्यधिकारः ।" इति
भावप्रकाशः ॥

**छर्द्दिः**, [स्] स्त्री, (छर्द्दयति छद्द्यते इति वा ।
छर्द्द वमने +
"अर्च्चिशुचिहुसृपिच्छादिछर्द्दिभ्य
इसिः ।" उणां । २ । १०८ । इति
इसिः ।)
वमिः । इत्युणादिकोषः ॥ (यथा,
चरके
चिकित्सास्थाने २३ अध्याये ।
"तदग्निवेशस्य वचो निशम्य
धर्म्मत्वादित्यत्र पुण्यत्वार्थकल्पनया
भागासिद्ध्य-
भिधानम् । वह्निमान् धूमादित्यत्र धूमावयवे
व्यभिचाराभिधानम् । तत्त्रिविधम् ।
वाक्छलं
सामान्यच्छलमुपचारच्छलञ्च ॥" "छलं
नाम
परिशठमर्थाभाससमपार्थकं वाग्वस्तुमात्रमेव ।
तद्द्विविधं वाक्छलं सामान्यच्छलञ्च । तत्र
वाक्-
छलं नाम यथा कश्चिद्ब्रूयात् नवतन्त्रोऽयं
भिषगितिभिषग् ब्रूयात् नाहं नवतन्त्र
एकतन्त्रो-
ऽहमिति । परो ब्रूयात् नाहं ब्रवीमि नव
तन्त्राणि तवेति अथतु नवाभ्यस्तं ते
तन्त्रमिति
भिषग् ब्रूयात् न मया नवाभ्यस्तं तन्त्रं
अनेक-
शताभ्यस्तं मया तन्त्रमिति । एतद्वाक्छलम्
।
सामान्यच्छलं नाम यथा,
व्याधिप्रशमनायौषध-
मित्युक्ते परो ब्रूयात् सत् सत्प्रशमनायेति
भवा-
नाह सत्रोगः सदौषधं यदिच सत्प्रशमनाय
भवति सत्कासः सत्क्षयः सत्सामान्यात्
कासस्ते
क्षयप्रशमनाय भविष्यतीति एतत्सामान्य-
छलम् ॥" इति चरके विमानस्थाने अष्टमे
अध्याये ॥)

**छल्लिः**, स्त्री, (छदं छाद्यतां लातीति । ला +
बाहुलकात् किः ।) त्वक् । इति
शब्दरत्नावली ॥
छाल इति भाषा ॥

**छल्ली**, स्त्री, (छदं छाद्यतां लातीति । ला + किः ।
ततः कृदिकारादिति वा ङीष् ।) वीरुत् ।
सन्तानः । वल्कलम् । कुसुमविशेषः । इति
मेदिनी । ले, १८ ॥

**छविः**, स्त्री, (छ्यति सूक्ष्मं करोति यद्वा

| | | |
|---|---|---|
| | प्रीतो भिषक्श्रेष्ठ इदं जगाद ।<br>छर्द्दींषि यानीह पुरोदितानि<br>विस्तारतस्तानि निबोध सम्यक् ॥”)<br>**छर्द्दिका**, स्त्री, (छर्द्दि + स्वार्थे कन् । स्त्रियां टाप् । यद्वा,<br>छर्द्दयतीति । छर्द्दि + ण्वुल् । टापि<br>अत इत्वञ्च ।)<br>छर्द्दिः । विष्णुक्रान्ता । इति<br>राजनिर्घण्टः ॥ | छ्यति छिनत्ति दूरीकरोति<br>मालिन्यादिक्लेश-<br>मिति । छो +<br>“कृवृघृष्विच्छविस्थविकिकीदिवि।” |

उणां । ४ । ५६ । इति क्विन् प्रत्ययेन
निपातनात्
साधुः ।) शोभा । दीप्तिः । इत्यमरः । १ । ३ ।
१७ ॥
(यथा, मेघदूते । ३५ ।
“भर्त्तुः कण्ठच्छविरिति गणैः सादरं
वीक्ष्यमाणः ॥”)

**छष**, ञ वधे । इति कविकल्पद्रुमः । (भ्वां-उभं-
सकं-सेट् ।) ञ, छषति छषते । अयं कैश्चिन्न
मन्यते । इति दुर्गादासः ।

**छा**, स्त्री, (छद् + डः टाप् च ।) आच्छादनम् ।
इति मेदिनी । छे, १ ॥

**छाः**, पुं, (छाद्यते मातृपक्षाभ्यामसौ । छद् + “सर्व्व-
धातुभ्योऽसुन् ।” उणां । ४ । १८८ । इति
असुन् ततः
पृषोदरात् साधुः ।) शावकः । इत्येकाक्षरकोषः
॥

**छागः**, पुं, स्त्री, (छायते छिद्यते देवबलये इति ।
छो + “छापूखडिभ्यः कित् ।” उणां । १ ।
१२४ ।
इति गन् ।) पशुविशेषः । तत्पर्य्यायः ।
वस्तः २ छगलकः ३ अजः ४ स्तुभः ५ ।
इत्य-
मरः । २ । ९ । ७६ ॥ छगः ६ छगलः ७
छागलः ८ तभः ९ स्तभः १० शुभः ११ ।
इति
तट्टीका ॥ लघुकामः १२ क्रयसदः १३ वर्करः
१४ पर्णभोजनः १५ लम्बकर्णः १६ भेनादः
१७
वुक्कः १८ अल्पायुः १९ शिवाप्रियः २० ।
इति
शब्दरत्नावली ॥ अवुकः २१ मेध्यः २२ पशुः
२३ पयस्वलः २४ । तन्मांसगुणाः । लघुत्वम्
।
स्निग्धत्वम् । नातिशीतत्वम् । रुचिबलपुष्टि-
दातृत्वम् । निर्द्दोषत्वम् । वातपित्तनाशित्वम् ।
मधुरत्वञ्च । इति राजनिर्घण्टः ॥ शुक्रधातु-

यथाह मनुः । ३ । २६९ ।
“षण्मासान् छागमांसेन पार्षतेन च
सप्त वै ॥”
भोजराजेन युक्तिकल्पतरौ
एतत्परीक्षोक्ता ।
यथा, --
“नक्षत्राणां विभेदेन नराणान्तु
गणत्रयम् ।
तेषां शुभाय निर्द्दिष्टं पशुवस्तत्त्रयं
बलौ ।
ये कृष्णाः शुचयश्छागाः पशबोऽन्ये
तथैव च ।
देवजातिभिरुत्सृज्यास्ते
सर्व्वार्थोपसिद्धये ॥
ये पीता हरिता वापि
नरजातेरुदीरिताः ।
ये शुक्लाश्च महान्तो वा रक्षोजातेः
शुभप्रदाः ॥
यो मोहादथवाज्ञानाद्बलिमन्यं
प्रयच्छति ।
वध एव फलं तस्य नान्यत् किञ्चित्
फलं भवेत् ॥”
एतस्य पशोर्लक्षणादिकं विशेषतो
बृहत्संहि-
तायाम् ६५ अध्याये उक्तम् । यथा,
--
“छागशुभाशुभलक्षण-
मभिधास्ये नवदशाष्टदन्तास्ते ।
धन्याः स्थाप्या वेश्मनि
सन्त्याज्याः सप्तदन्ता ये ॥
दक्षिणपार्श्वे मण्डल-
मसितं शुक्लस्य शुभफलं भवति ।
ऋष्यनिभकृष्णलोहित-
वर्णानां श्वेतमपि शुभदम् ॥
स्तनवदवलम्बते यः
कण्ठेऽजानां मणिः स विज्ञेयः ।
एकमणिः शुभफलकृ-
द्धन्यतमा द्वित्रिमणयो ये ॥
मुण्डाः सर्व्वे शुभदाः
सर्व्वसिताः सर्व्वकृष्णदेहाश्च ।

वर्णैः प्रशस्तैर्मणिभिश्च युक्ता
मुण्डाश्च ये ताम्रविलोचनाश्च ।
ते पूजिता वेश्मसु मानवानां
सौख्यानि कुर्व्वन्ति यशः श्रियञ्च ॥”)

**छागणः**, पुं, (छगण एव । स्वार्थे अण् ।) करी-
षाग्निः । इति त्रिकाण्डशेषः ॥ घुँटेर आगुण
इति भाषा ॥

**छागभोजी**, [न्] पुं, स्त्री, (छागं भुङ्क्ते भक्षय-
तीति । भुज् + णिनिः ।) वृकः । इति राज-
निर्घण्टः ॥ छागभक्षके, त्रि ॥

**छागरथः**, पुं, (छागः रथो वाहनमस्य ।) अग्निः ।
इति हेमचन्द्रः । ४ । १६३ ॥

**छागलः**, पुं, स्त्री, (छगल एव इति प्रज्ञाद्यण् ।)
छागः । इति राजनिर्घण्टः ॥ (यथा, पञ्च-
तन्त्रे । ३ । ११७ ।
“बहुबुद्धिसमायुक्ताः सुविज्ञाना बलोत्कटान्
।
शक्ता वञ्चयितुं धूर्त्ता ब्राह्मणं छागलादिव ॥”
छगलस्य गोत्रापत्यं पुमान् इति । छगल +
“विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु ।”
४ । २ । ११७ । इति अण् । आत्रेय
ऋषिभेदः ।
इति सिद्धान्तकौमुदी ॥)

**छागलकः**, पुं, (छागल इव कायतीति । कै + कः ।)
मत्स्यविशेषः । यथा, --
“श्वेतं सुपाकं समदीर्घवृत्तं
निःशल्कलं छागलकं वदन्ति ।
गले द्विकण्टः किल तस्य पृष्ठे
कण्टः सुपथ्यो रुचिदो बलप्रदः ॥”
इति राजनिर्घण्टः ॥
(स्वार्थे कन् ।) छागलश्च ॥

**छागलाद्यं**, क्ली, (छागल आद्यः प्रधानो यत्र ।)
छागलादिघृतम् । तच्च वातरोगस्यौषधम् ।
यथा,

साम्यकारित्वम् । बृंहणत्वम् । स्निग्धत्वम् ।
मृदुत्वम् । अनभिष्यन्दित्वम् । नात्युष्णत्वञ्च ।
इति राजवल्लभः ॥ * ॥ छागपोतमांसगुणाः ।
लघु-
त्वम् । शीतत्वम् । प्रमेहनाशित्वञ्च ॥ तृण-
चारिछागस्य मांसगुणः । ईषल्लघुत्वम् । बल-
दातृत्वञ्च ॥ तन्मूत्रगुणाः । कटुत्वम् ।
उष्णत्वम् ।
रूक्षत्वम् । नाडीविषार्त्तिप्लीहोदरकफश्वास-
गुल्मशोफनाशित्वम् । लघुत्वञ्च । इति राज-
निर्घण्टः ॥
"छागलो वर्करश्छागो वस्तोऽजश्छेलकः शुभः
।
छागमांसं लघु स्निग्धं स्वादुपाकं त्रिदोषणुत् ॥
नातिशीतमदाहि स्यात् स्वादु पीनसनाशनम् ।
परं बलकरं रुच्यं बृंहणं बलवर्द्धनम् ॥
अजाया अप्रसूताया मांसं पीनसनाशनम् ।
शुष्ककासेऽरुचौ शोषे हितमग्नेश्च दीपनम् ॥
अजासुतस्य बालस्य मांसं लघुतरं स्मृतम् ।
हृद्यं ज्वरहरं श्रेष्ठं सुखादु वलदं भृशम् ॥
मांसं निष्कासिताण्डस्य छागस्य कफकृद्गुरु
।
सोतःशुद्धिकरं वल्यं मांसदं वातपित्तनुत् ॥
वृद्धस्य वातलं रूक्षं तथा व्याधिमृतस्य च ।
ऊर्द्ध्वजत्रुविकारघ्नं छागमुण्डं रुचिप्रदम् ॥"
इति भावप्रकाशः ॥
(एतन्मांसं पितॄणां तृप्तिकरत्वात् श्राद्धाय देयम्
।
यथाह याज्ञवल्क्यः । १ । २५८ ।
"मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः ॥"
छागमांसेन पितॄणां षण्मासान् यावत्तृप्तिः ।

अर्द्धासिताः सितार्द्धा
धन्याः कपिलार्द्धकृष्णाश्च ॥
विचरति यूथास्याग्रे
प्रथमं चाम्भोऽवगाहते योऽजः ।
स शुभः सितमूर्द्धा वा
मूर्द्धनि वा टिक्किका यस्य ॥
सपृषतकण्ठशिरा वा
तिलपिष्टनिभश्च ताम्रदृक् शस्तः ।
कृष्णचरणः सितो वा
कृष्णो वा श्वेतचरणो यः ॥
यः कृष्णाण्डः श्वेतो
मध्ये कृष्णेन भवति पट्टेन ।
यो वा चरति सशब्दं
मन्दञ्च स शोभनश्छागः ॥
ऋष्यशिरोरुहपादो
यो वा प्राक् पाण्डुरो ऽपरे नीलः ।
स भवति शुभकृच्छागः
श्लोकश्चाप्यत्र गर्गोक्तः ॥"
कुट्टकः कुटिलश्चैव जटिलो
वामनस्तथा ।
ते चत्वारः श्रियः पुत्रा नालक्ष्मीके
वसन्ति ते ॥
अथाप्रशस्ताः खरतुल्यनादाः
प्रदीप्तपुच्छाः कुनखा विवर्णाः ।
निकृत्तकर्णा द्विपमस्तकाश्च
भवन्ति ये चासिततालुजिह्वाः ॥

"आजं चर्म्मविनिर्म्मुक्तं त्यक्तशृङ्गनखादिकम्
।
पञ्चमूलीद्वयञ्चैव जलद्रोणे विपाचयेत् ॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ।
जीवनीयैः सयष्ट्याह्वैः क्षीरञ्चैव शतावरी ॥
छागलाद्यमिदं नाम्ना सर्व्ववातविकारणुत् ।
अर्दिते कर्णशूले च वाधिर्य्ये मूकमिन्मिने ॥
जडगद्गदपङ्गूनां खञ्जे गृध्रसिकुब्जयोः ।
अपतानेऽपतन्त्रे च सर्पिरेतत् प्रशस्यते ॥
पृथगर्द्धतुलां पञ्चमूलद्वन्द्वाजमांसयोः ।
निःक्वाथ्य सलिलद्रोणे क्वाथे पादावशेषिते
॥"
इति स्वल्पच्छागलाद्यं घृतम् ॥ * ॥
घृतारम्भे मन्त्रः ।
"ॐ कालि वज्रेश्वरि अमुकस्य फलसिद्धं
देहि
रुद्रवचनेन खाहा ।
स्नापयित्वा छागमादौ मधु दत्त्वा ललाटके ।
उदङ्मुखः प्राङ्मुखो वा भिषगेनमुपालभेत् ॥
छागमारणमन्त्रः ।
ॐ हाँ ॐ गाँ गणपतये स्वाहा ।
छागमांसतुलां गृह्य दशमूल्याः पलं शतम् ।
अश्वगन्धापलशतं वाट्यालकशतं तथा ॥
घृताढकं पचेत्तोयैश्चतुर्भागावशेषितैः ।

क्षीरं स्नेहसमं दद्यात् शतावर्य्या रसं तथा ॥
ताम्रपात्रे दृढे चैव शनैर्मृ द्वग्निना पचेत् ।
अस्यौषधस्य कल्कस्य प्रत्येकं शुक्तिसम्मितम् ॥
जीवन्ती मधुकं द्राक्षाकाकोल्यौ नीलमुत्पलम् ।
मुस्तं सचन्दनं रास्ना पर्णिनीद्वयशारिवे ॥
मेदे द्वे च तथा कुष्ठं जीवकर्षभकौ शटी ।
दार्व्वी प्रियङ्गु त्रिफला नतं तालीशपद्मकौ ॥
एलापत्रं वरीनागजातीकुसुमधान्यकम् ।
मञ्जिष्ठा दाडिमं दारु रेणुकं शैलवालुकम् ॥
विडङ्गं जीरकञ्चैव पेषयित्वा विनिक्षिपेत् ।
वस्त्रपूते च शीते च शर्कराप्रस्थसंयुतम् ॥
निधापयेत् स्निग्धभाण्डे आर्द्रे वा भाजने शुभे ।
अस्यौषधस्य सिद्धस्य शृणु वीर्य्यमतःपरम् ॥
देवदेवं नमस्कृत्य संपूज्य गणनायकम् ।
पिबेत् पाणितलं तस्य व्याधिं वीक्ष्यानु-
पानतः ॥
सर्व्वबातविकारेषु अपस्मारे विशेषतः ।
उन्मादे पक्षघाते च आध्माने कोष्ठनिग्रहे ॥
कर्णरोगे शिरोरोगे वाधिर्य्ये चापतन्त्रके ।
भूतोन्मादे च गृध्रस्यां सोद्गारे चाक्षिपातजे ॥
शिवं शुभं रोगभयापहञ्च
चकार हारीतमुनिर्व्विशिष्टः ॥
शृगालवर्हिणः पाके पुमांसं तत्र दापयेत् ।
मयूरी जम्बुकी छागी वीर्य्यहीनाः स्वभावतः ॥
भाषितं काशिराजेन छागमेव नपुंसकम् ॥”
घृतम् १६ शेर । क्वाथार्थं छागमांसपलम् १०० ।
पाकार्थंजलं शं ६४ । शेषः शं १६ । विल्वादि-
दशमूलं प्रपलम् १० । जलं शं ६४ । शेषः
शं १६ । अश्वगन्धा १०० पलम् । जलं शं ६४ ।
शेषः शं १६ । वाट्यालकं १०० पलम् ।
जलं शं ६४ । शेषः शं १६ । दुग्धं शं १६ ।
शतमूलीरसः शं १६ । कल्कार्थं जीवन्त्या-
दीनां जीरकपर्य्यन्तानां कल्कद्रव्याणां प्रं तो ४ ।
वस्त्रपूते शीते शर्का शं २ । इति बृहच्छागलाद्यं
घृतम् । इति भैषज्यरत्नावली ॥
(“छागमांसं तुलार्द्धं स्यात् दशमूलं तथापरम् ।
तोयद्रोणे पचेद्धीमान् यावत् स्यादंशशेषितम् ॥
तैलप्रस्थद्वयञ्चैव क्षीरञ्चैव शतावरी ।
जीवनीयं समधुकं बला रास्ना च शैलजम् ॥
मांसीस्याद्धेमतालीशनालुकाघनवालुकम् ।
पृथक् पृथक् समादाय सर्व्वमेकत्र साधयेत् ॥
मञ्जिष्ठालोध्रलाक्षा च प्रत्येकं कुडवान्वितम् ।
आढकञ्च जलञ्चैव विधिना च विपाचयेत् ॥
छागलाद्यमिदं तैलं हारीतेन महात्मना ।
पाने वस्तौ तथाभ्यङ्गे भोज्ये चैव प्रशस्यते ।
सर्व्वज्वरगदं हन्ति सन्धिमज्जास्थिजन्तथा ॥”
इति छागलाद्यं तैलम् ॥
इति वैद्यकस्नेहमालिकायां वातरोगाधिकारे ॥)

**छागलान्त्रिका**, स्त्री, (छागलान्त्री + संज्ञायां कन् । टापि पूर्ब्बह्रस्वः ।) वृद्धदारकवृक्षः । इति राज-निर्घण्टः ॥

**छागलान्त्री**, स्त्री, (छागलं अन्तयतीति बाहु-लकात् रक् ततो ङीष् ।) वृकः । इति राज-निर्घण्टः ॥

“अजानां
लघुकायत्वान्नानाद्रव्यनिषेवणात् ।
नात्यम्बुपानात् व्यायामात् सर्व्वव्याधिहरं पयः ॥”
कषायत्वम् । लघुत्वम् । अतीसारज्वरनाशि-त्वञ्च । यथा, भावप्रकाशे ।
“छागं कषायं मधुरं शीतं ग्राहि पयो लघु ।
रक्तपित्तातिसारघ्नं क्षयकासज्वरापहम् ॥
अजानामल्पकायत्वात् कटुतिक्तादिभक्षणात् ।
स्तोकाम्बुपानाद्व्यायामात्सर्व्वरोगापहं पयः ॥”
तद्दधिगुणाः । उत्तमत्वम् । ग्राहित्वम् । लघु-त्वम् । दोषत्रयापहत्वम् । श्वासकासार्शःक्षय-कार्श्येषु शस्तत्वम् । दीपनत्वञ्च । इति भाव-प्रकाशः ॥
कफवातनेत्रदोषदुर्नामश्वासकास-नाशित्वम् । उष्णत्वम् । रुच्यत्वम् । पाचनत्वञ्च ॥
तन्नवनीतगुणाः । लघुत्वम् । मधुरत्वम् । कषा-यत्वम् । त्रिदोषनाशित्वम् । चक्षुष्यत्वम् । दीप-नत्वम् । बल्यत्वम् । सदा हितत्वञ्च ॥ तन्नवोत्थ-नवनीतगुणाः ।
क्षयकासनेत्रामयकफनाशित्वम् ।
बल्यत्वम् । परमदीपनत्वञ्च ॥ तद्घृतगुणाः ।
चक्षुष्यत्वम् । दीपनत्वम् । बलवर्द्धनत्वम् । कास-श्वासकफनाशित्वम् । राजयक्ष्मणि शस्तत्वञ्च ।
इति राजनिर्घण्टः ॥

**छातः**, त्रि, (छो + क्तः । “शाच्छोरन्यतरस्याम् ।”

पार्श्वशूले च हृच्छूले वाह्यायामार्द्दिते तथा ।
वातकण्टकहृद्रोगमूत्रकृच्छ्रे सपङ्गुले ॥
क्रोष्टुशीर्षे तथा खञ्जे कुब्जे चाध्मनि मिन्मिने ।
अपतानेऽन्तरायामे रक्तपित्ते तथोद्ध्र्वगे ॥
आनाहेऽर्शोविकारेषु चातुर्थकज्वरेऽपि च ।
हनुग्रहे तथा शोषे क्षीणे चैवावबाहुके ॥
दण्डापतानके भग्ने दाहे चाक्षेपके तथा ।
जीर्णज्वरे विषे कुष्ठे शेफःस्तम्भे मदात्यये ॥
आद्यवातेऽग्निमान्द्ये च वातरक्तगदेषु च ।
एकाङ्गरोगिणे चैव तथा सर्व्वाङ्गरोगिणे ॥
हस्तकम्पे शिरःकम्पे जिह्वाकम्पे जडे भ्रमे ।
क्षीणेन्द्रिये नष्टशुक्रे शुक्रनिःसरणे तथा ॥
स्त्रीणां वातास्रपाते च पटले चाक्षिस्पन्दने ।
एकाङ्गस्पन्दने चैव सर्व्वाङ्गस्पन्दने तथा ॥
नगादिपतिते वाते स्त्रीणामप्राप्तिहेतुके ।
आभिचारिकदोषे च धनसन्तापसम्भवे ॥
ये वातप्रभवा रोगा ये च पित्तसमुद्भवाः ।
शिरोमध्यगता ये च जङ्घापार्श्वादिसंस्थिताः ॥
मातृग्रहाभिभूतश्च शिशुर्यश्च विशुष्यति ।
प्रक्षीणबलमांसश्च न वर्त्मगमनक्षमः ॥
घृतेनानेन सिध्यन्ति वज्रमुक्तिरिवासुरान् ।
निहन्ति सकलान् रोगान् घृतं परमदुर्लभम् ॥

**छागवाहनः**, पुं, (छागेन आत्मानं वाहयतीति ।
वह + णिच् + ल्युः । यद्वा, छागो वाहनमस्य ।) अग्निः । इति त्रिकाण्डशेषः ॥

**छागिका**, स्त्री, (छागी + स्वार्थे कन् । ततः टापि पूर्ब्बह्रस्वः ।) छागी । इति हेमचन्द्रः । ४ । ३४१ ॥

**छागी**, स्त्री, (छायते छिद्यते देवोपहारायेति ।
छो + “छापूखडिभ्यः कित् ।” उणां । १ । १२४ ।
इति गण् छागः ततः स्त्रियां जातौ ङीष् ।) छागमाता । वक्री इति पाँटी इति च भाषा । तत्पर्य्यायः । अजा २ पयस्विनी ३ भीरुः ४ मेध्या ५ गलेस्तनी ६ । इति राजनिर्घण्टः ॥ छागिका ७ मञ्जा ८ सर्व्वभक्ष्या ९ गलस्तनी १० ।
इति हेमचन्द्रः ॥ चुलुम्पा ११ । इति त्रिकाण्ड-शेषः ॥ सञ्ज्ञा १२ मुखविलुण्ठिका १३ । इति शब्दरत्नावली ॥ तद्दुग्धगुणाः । मधुरत्वम् । शीतलत्वम् । ग्राहित्वम् । दीपनत्वम् । रक्त-पित्तविकारक्षयकासनाशित्वञ्च । यथा, राज-निर्घण्टे ।

७ । ४ । ४१ । इति विभाषायामित्वाभावः ।)
छिन्नः । दुर्ब्बलः । इत्यमरः । ३ । १ । १०३ ॥

**छात्रं**, क्ली, वरटीच्छत्रसम्भवं मधु । तस्य गुणाः ।
श्वित्रक्रिमिरोगरक्तपित्तनाशित्वम् । गुरुत्वञ्च ।
इति राजवल्लभः ॥
(“वरटाः कपिलाः पीताः प्रायो हिमवतो वने ।
कुर्व्वन्ति छत्रकाकारं तज्जं छात्रं मधु स्मृतम् ॥”
छात्रं कपिलपीतं स्यात् पिच्छिलं शीतलं गुरु ।
स्वादुपाकं क्रिमिश्वित्ररक्तपित्तप्रमेहजित् ।
भ्रमतृण्मोहविषहृत् तर्पणञ्च गुणाधिकम् ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥)

**छा(त्त्र)त्रः**, पुं, (छत्रं गुरोर्दोषाणामावरणं तच्छील-मस्येति । “छत्रादिभ्यो णः ।” ४ । ४ । ६२ ।
इति णः ।) शिष्यः । इत्यमरः । २ । ७ । ११ ॥
(यथा, राजतरङ्गिण्याम् । ६ । ८७ ।
“भूभुजा दानशौण्डेन पैत्रिके स्थण्डिले कृतः ।
छात्त्राणामार्य्यदेश्यानां तेन विद्यार्थिनां मठः ॥”)

**छात्रकं**, क्ली, (छात्र + स्वार्थे कन् ।) छात्रं मधु ।
यथा, राजनिर्घण्टे ।
“छत्राकारन्तु पटलं सरघाः पीतपिङ्गलाः ।
ये कुर्व्वन्ति तदुत्पन्नं मधु च्छात्रकमीरितम् ।
श्वित्रमेहकृमिघ्नञ्च विद्याच्छात्रं गुणोत्तरम् ॥”
अपिच भावप्रकाशे ।

रसायनं वह्निबलप्रदञ्च
वपुःप्रकर्षं विदधाति रूपम् ।
दन्तावलेन्द्रेण समानतेजा
दीर्घायुषं पुत्त्रशतं करोति ॥
स्त्रीणां शतं गच्छति वातिरेकं
न याति तृप्तिं सरसः समाङ्गः ।
अपुत्त्रिणीपुत्त्रशतं करोति
शतायुषं कामसमं बलिष्ठम् ॥
महद्धृतं नाम तु छागलाद्यं
विनिर्म्मितं वातनिसूदनञ्च ।

"वरटाः कपिलाः पीताः प्रायो हिमवतो वने ।
कुर्व्वन्ति छत्रकाकारं तज्जं छात्रं मधु स्मृतम् ॥
छात्रं कपिलपीतं स्यात् पिच्छिलं शीतलं गुरु ।
स्वादुपाकं कृमिश्वित्ररक्तपित्तप्रमेहजित् ॥
भ्रमतृड्मोहविषहृत्तर्पणञ्च गुणाधिकम् ॥"

**छात्रगण्डः**, पुं, (छात्रा गण्ड इव ।) पदाद्यवित् ।

विभक्त्यन्तस्य श्लोकचरणस्य वा आदिमात्रवेत्ता ।
(अल्पज्ञश्छात्त्रः ।) इति हारावली ।२१६ ॥

**छात्रदर्शनं**, क्ली, (छात्रं वरटीच्छत्रसम्भूतं मधु

तदिव दृश्यते इति । दृश + कर्म्मणि ल्युट् ।)
हैयङ्गवीनम् । इति शब्दचन्द्रिका ॥ (छात्राणां
दर्शनम् ।) शिष्यावलोकनञ्च ॥

**छादं**, क्ली, (छाद्यते गृहमनेनेति । छद + णिच् +

करणे घञ् । छादयतीति । छद् + णिच् +
अच्
वा ।) पटलम् । इति जटाधरः ॥ छात इति
चाल इति च भाषा ॥

**छादनं**, क्ली, (छद कि संवृतौ + णिच् + करणे

ल्युट् ।) छदनम् । अन्तर्द्धानम् । (कर्त्तरि
ल्युः ।)
पत्रम् । इत्यमरटीकायां भरतः ॥ (भावे ल्युट्
।)
आच्छादनम् । (यथा, हरिवंशे । ६५ । २५ ।
"नियोगपाशैरासक्तैर्गर्गरीस्तम्भमूर्द्धसु ।
छादनाथं प्रकीर्णैश्च कण्टकैस्तृणसङ्कटैः ॥")

**छादनः**, पुं, (छादयति आवृणोति पत्त्रादिभिरिति ।

छादि + ल्युः ।) नीलाम्लानवृक्षः । इति
राज-
निर्घण्टः ॥

**छादितः**, त्रि, (छाद्यते स्मेति । छद + "वा दान्त-

शान्तेति ।" ७ । २ । २७ । इडागमात् साधुः
।)
छन्नः । इति जटाधरः ॥ आच्छादितः ।
यथा,
"घनतरघनवृन्दैश्छादितौ पुष्पवन्तौ ॥"
इत्युद्भटः ॥

**छान्दसः**, पुं, (छन्दो वेदं अधीते वेत्ति वा ।

छन्दस् + "तदधीते तद्वेद ।" ४ । २ । ५९ ।
इत्यण् ।) वेदाध्येता । इत्यमरः । २ । ७ । ६
॥
(छन्द एवेति । स्वार्थे अण् । वेदः ।
"मन्ये त्वां विषये वाचां स्नातमन्यत्र
छान्दसात् ॥"
इति भागवते । १ । ४ । १३ ॥

"दीपखट्वातनुच्छाया छिन्नकेशनखादिकम्
।
अजमार्ज्जाररेणुश्च हन्ति पुण्यं पुराकृतम्
॥"
इति कर्म्मलोचनम् ॥ * ॥
(लक्षणभेदेनास्या अरिष्टकारित्वं यथा, --
"ज्योत्स्नायामातपे दीपे
सलिलादर्शयोरपि ।
अङ्गेषु विकृता यस्य छायाप्रेतस्तथैव सः
॥
छिन्ना भिन्नाकुला च्छाया हीना
वाप्यधिकापि
वा ।
नष्टा तन्वी द्विधा च्छाया विशिराविस्तृता
च या ॥
एताश्चान्याश्च याः काश्चित् प्रतिच्छाया
विग-
र्हिताः ।
सर्व्वा मुमूर्षतां ज्ञेया नचेल्लक्ष्यनिमित्तजाः
॥
संस्थानेन प्रमाणेन वर्णेन प्रभया तथा ।
छाया विवर्त्तते यस्य स्वप्नेऽपि प्रेत एव
सः ॥"
"खादीनां पञ्चपञ्चानां छाया
विविधलक्षणाः ।
नाभसी निर्म्मला नीला सस्नेहा सप्रभेव च
॥
रूक्षा श्यावारुणा या तु वायवी सा
हतप्रभा ।
विशुद्धरक्तात्वाग्नेयी दीप्ताभा दर्शनप्रिया ॥
शुद्धवैदुर्य्यविमला सुस्निग्धा चाम्भसी
मता ।
स्थिरा स्निग्धा घना श्लक्ष्णा श्यामा श्वेता
च
पार्थिवी ॥
वायवी गर्हिता त्वासां चतस्रः स्युः
सुखोदयाः ।
वायवी तु विनाशाय क्लेशाय महतेऽपि वा
॥

**छायाकरः**, त्रि, (करोतीति । कृ + अच् ।
छायायाः

करः । छायां करोतीति वा ।) छत्रधारः ।
इति
हेमचन्द्रः ॥ छातावरदार इति भाषा ॥

**छायातनयः**, पुं, (छायायाः सूर्य्यपत्न्यास्तनयः

पुत्त्रः ।) शनिः । इति हलायुधः ॥

**छायातरुः**, पुं, (छायाप्रदः छायाप्रधानो वा तरुः ।

शाकपार्थिववत् मध्यपदलोपिसमासः ।)
स्थिर-
च्छायवृक्षः । इति त्रिकाण्डशेषः ॥
(अस्य लक्षणं
यदाह कश्चित् ।
"पूर्ब्बाह्णे च पराह्णे च तलं यस्य न
मुञ्चति ।
अत्यन्तशीतलच्छायास
च्छायातरुरुच्यते ॥"
यथा, मेघदूते । १ ।
"कश्चित् कान्ताविरहगुरुणा
स्वाधिकारप्रमत्तः
शापेनास्तंगमितमहिमा वर्षभोग्येन भर्त्तुः
।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं
रामगिर्य्याश्रमेषु ॥")

**छायात्मजः**, पुं, (छायायाः सूर्य्यपत्न्या आत्मज-

स्तनयः ।) शनिग्रहः । इति त्रिकाण्ड-
शेषः ॥

**छायापथः**, पुं, (छाया मेघच्छाया तदभ्यन्तरः

पन्थाः । छायायुक्तः पन्था इत्येके ।)
देवपथः ।
आकाशः । इति त्रिकाण्डशेषः ॥

**छायापुरुषः**, पुं, (छायायां दृष्टः पुरुषः पुरुषा-

कृतिविशेषः ।) आकाशेदृष्टः
स्वीयच्छायारूप
पुरुषः । यथा, --

त्रि, छन्दसो व्याख्यानस्तत्र भवः । "छन्दसो यदणौ ।" ४ । ३ । ७१ । इत्यण् । वेदभवः ॥ छन्दसोऽयम् । "तस्येदम् ।" इत्यण् । वेदसम्बन्धी ।
स्त्रियान्तु ङीप् । यथा, हरिवंशे । २१५ । ७ ।
"छान्दसीभिरुदाराभिः श्रुतिभिः समलङ्कृतः ॥")

**छान्दोग्यं**, क्ली, (छन्दोगानां धर्म्मः आम्नायो वा ।
छन्दोग + "छन्दोगौक्थिकयाज्ञिकवह्वृच नटाञ्
ञ्यः ।" ४ । ३ । १२९ । इति ञ्यः ।) साम-वेदोपनिषत् । इति वैदिकसम्प्रदायः ॥ (यथा, मौक्तिकोपनिषदि १ अध्याये ।
"ऐतरेयञ्च छान्दोग्यं बृहदारण्यकन्तथा ॥")

**छाया**, स्त्री, (छ्यति छिनत्ति सूर्य्यादेः प्रकाशं नाश-
यतीत्यर्थः । छो + "माच्छाससिसूभ्यो यः ।" उणां । ४ । १०९ । इति यस्ततष्टाप् च ।) रौद्रशून्यम् । तत्पर्य्यायः । भावानुगा २ श्यामा ३ अतेजः ४ भीरुः ५ अनातपः ६ आभीतिः ७ आतपाभावः ८ भावालीना ९ । अस्या गुणाः । मधुरत्वम् । शीतलत्वम् । दाहश्रमहरत्वञ्च । इति राजनिर्घण्टः ॥ घर्म्म-नाशित्वम् । मेघच्छायागुणः । श्रमभ्रममूर्च्छा-मन्तापनाशित्वम् । इति राजवल्लभः ॥ * ॥ छायाविशेषे दोषो यथा, --
स्यात्तैजसी प्रभा सर्व्वा सा तु सप्तविधा स्मृता ।
रक्ता पीता सिता श्यावा हरिता पाण्डुरासिता ॥
तासां याः स्युर्विकासिन्यः स्निग्धाश्च विपुलाश्च
याः ।
ताः शुभा रुक्षमलिनाः संक्षिप्ताश्चाशुभोदयाः ॥
वर्णमाक्रामति च्छाया भास्तु वर्णप्रकाशिनी ।
आसन्ना लक्ष्यते च्छाया भाः प्रकृष्टा प्रकाशते ॥
नाच्छायो नाप्रभः कश्चिद्विशेषाच्चिह्नयन्ति तु ।
नृणां शुभाशुभोत्पत्तिं काले च्छायाः प्रभा-श्रिताः ॥"
इतीन्द्रियस्थाने सप्तमेऽध्याये चरकेणोक्तम् ॥)
प्रतिविम्बम् । (यथा, याज्ञवल्क्ये । ३ । २७९ ।
"मयि तेज इति च्छायां स्वां दृष्ट्वाम्बुगतां जपेत् ॥")
सूर्य्यपत्नी । सा संज्ञाप्रतिकृतिः । (यथा मत्स्य-
पुराणे । ११ । ५ ।
"नारीमुत्पादयामास स्वशरीरादनिन्दिताम् ।
त्वाष्ट्रीस्वरूपेण नाम्ना छायेति भामिनी तदा ॥")
पालनम् । उत्कोचः । कान्तिः । (यथा, मेघ-
दूते । ३१ ।
"वेणीभूतप्रतनुसलिला तामभीतस्य सिन्धुः
पाण्डुच्छायातटरुहतरुभ्रंशिभिःशीर्णपर्णैः ॥")
सच्छोभा । पङ्क्तिः । इति मेदिनी । ये, २३ ॥
कात्यायनी । इति शब्दरत्नावली ॥ तमः ।
श्रीदेव्युवाच ।
"भगवन् ! देवदेवेश ! सर्व्वागमविशारद ! ।
नराणां पापिनां लोके पापनिर्म्मोचनं कथम् ॥
कालज्ञानं कथं वा स्यात् सूक्ष्मोपायेन तद्वद ।
श्रुतानि साधनानीश ! मयानेकानि भूरिशः ॥
तथापि तानि मनुजैरशक्यान्यल्पबुद्धिभिः ।
प्रायेण मनुजा लोके कलौ स्वल्पायुषो ध्रुवम् ॥
अनेकवर्षसाध्येऽस्मिन् योगाभ्यासे ह्यशक्तयः ॥
शिव उवाच ।
साधु देवि ! त्वया पृष्टं लोकानां हितकाम्यया ।
तादृशं साधनं वक्ष्ये सर्व्वसाधारणं लघु ॥
गोपनीयं प्रयत्नेन न वाच्यं वै कथञ्चन ।
सिद्धाय भक्तियुक्ताय सेवकाय सुचेतसे ॥
पापिने क्रूरचेष्टाय भक्तिहीनाय भामिनि ! ।
न वदेद्यदि वा मोहात् वदेत् सिद्धिं न विन्दति ॥
तस्मात् परीक्ष्य वक्तव्यं शिष्याय ज्ञानिने शिवे ! ।
स्वच्छायापुरुषं पश्येद्गगने शुद्धमानसः ॥
तस्यावलोकनात् सद्यः पापराशिर्व्विनश्यति ।
महापातकसङ्घैश्च तत्समैश्चोपपातकैः ॥
विमुच्यते क्षणार्द्धेन तूलराशिर्यथानलात् ।
कालज्ञानञ्च षण्मासे तस्मिन् दृष्टे भवेद्ध्रुवम् ॥
देव्युवाच ।

| | | |
|---|---|---|
| | इति हेमचन्द्रः ॥ सादृश्यम् । यथा, -- "अङ्गादङ्गेत्यृचं जप्त्वा आघ्राय शिशुमूर्द्धनि । वस्त्रादिभिरलङ्कृत्य पुत्त्रच्छायावहं सुतम् ॥ पुत्त्रच्छाया पुत्त्रसादृश्यम् ।" इति दत्तकचन्द्रिका ॥ (ऊनविंशत्यक्षरवृत्तिविशेषः । इति छन्दोमञ्जरी ॥ अस्य लक्षणादिकं छन्दःशब्दे द्रष्टव्यम् ॥) | अतश्छायां कथं पश्येद्गगने भूतलस्थिताम् । षण्मासकालज्ञानञ्च तस्मिन् दृष्टे कथं भवेत् ॥ शिव उवाच । निरभ्रं गगनं देवि ! यदा भवति निर्म्मलम् । तदा छायामुखो भूत्वा निश्चलं प्रयतो धिया ॥ |

स्वच्छायाकण्ठमालोक्य
स्वगुरूक्तक्रमेण वै ।
सम्मुखं गगनं
पश्येन्निर्निमेषस्तथैकधीः ॥
शुद्धस्फटिकसङ्काशः पुरुषस्तत्र
दृश्यते ।
न दृश्यते यदा तत्र पुनस्तद्वत्
परीक्षयेत् ॥
बहुधा दर्शनेनैव साक्षात्कारो भवेद्
ध्रुवम् ।
कस्यचिद् भाग्यतः पश्येद् यदि
विम्बोऽक्षिगोचरः ।
भवत्येव न सन्देहो गुरुविश्वासतः
शिवे ! ।
गुरुं सम्यक् पूजयित्वा पश्येच्छायां
समाहितः ॥
तथा षण्मासपर्य्यन्तं मृत्युस्तस्य न
विद्यते ।
शिरोहीनं यदा पश्येत्
षण्मासाभ्यन्तरे मृतिः ॥
यदा पादौ न दृश्येते भार्य्याहानिर्न
संशयः ।
न दृश्येते यदा पाणी भ्रातुर्हानिर्न
संशयः ॥
एतज्ज्ञात्वा सुधीः सम्यक् गङ्गातीरं
समाश्रयेत् ।
योगाभ्यासेन सततं प्राणायामेण
संस्मृतिः ॥
यथा वा सत्समीपस्थो लक्षं मृत्युञ्जयं
जपेत् ।
यो न भुक्तो हविष्याशी यतवाग्
यतमानसः ॥
मृत्युञ्जयेन्न सन्देहो ह्यन्यथा
मृत्युमृच्छति ।
यदा तु मलिनं पश्येत् ज्वरपीडा
भवेत्तदा ॥
तस्य शान्तिं प्रकुर्व्वीत शिवसेवां
समाहितः ।
पाथेयञ्च चतुष्कोणं चक्रं मृत्युञ्जयं भवेत्
॥
ज्वरादिसर्व्वरोगादिदाहशान्तिकरं परम् ।
मृत्युञ्जयं महाचक्रं सर्व्वरक्षाकरं नृणाम् ॥”
अथ ध्यानम् ।
“चन्द्रार्काग्निविलोचनं स्मितमुखं
पद्मद्वयान्तः-
स्थितं
मुद्रापाशमृगाक्षसूत्रविलसत्पार्णिहिमांशु-
प्रभम् ।
कोटीरेन्दुगलत्सुधाप्लुततनुं
हारादिभूषोज्ज्वलं
कान्त्या विश्वविमोहनं पशुपतिं मृत्युञ्जयं
भावयेत् ॥ * ॥
नत्वा तातगुरुं शिवं मणपतिं मन्त्रं जपेत्
सर्व्वदा ।
खे लक्षेत् सततं विलोकनषशं शुक्ले रवौ
प्रत्यहम् ॥
खे विलोकनमन्त्रस्तु ।
ॐ ह्रीँ भूचरी खेचरी आत्मानमाकाशे
दर्शय सर्व्ववृत्तान्तं कथय कथय हुं फट्
स्वाहा ।
यः पश्येत् सर्व्वगं शान्तमात्मानं
सत्यमद्वयम् ।
न तेन किञ्चिद्ध्यातव्यं ज्ञातव्यं
वावशिष्यते ॥”
इति योगप्रदीपिकायां छायापुरुषोपदेशो
नाम षष्ठः पटलः ॥

**छायाव्यवहारः**, पुं, ज्योतिःशास्त्रोक्ताङ्कविशेषः ।

अथ छायाव्यवहारे करणसूत्रं वृत्तम् ।
“छाययोः कर्णयोरन्तरे ये तयो-
र्व्वर्गविश्ले षभक्ता रसाद्रीषवः ।
सैकलब्धेः पदघ्नन्तु कर्णान्तरं
भान्तरेणोनयुक्तं दले स्तः प्रभे ॥
उदाहरणम् ।
नन्दचन्द्रैर्मितं छाययोरन्तरं
कर्णयोरन्तरं विश्वतुल्यं ययोः ।
ते प्रभे वक्ति यो युक्तिमान् वेत्त्यसौ
व्यक्तमव्यक्तयुक्तं हि मन्येऽखिलम् ॥
छायान्तरे करणसूत्रं वृत्तार्द्धम् ।
शङ्कुः प्रदीपतलशङ्कुतलान्तरघ्न-
श्छाया भवेद्विनरदीपशिखौच्च्यभक्तः ।
उदाहरणम् ।
शङ्कुप्रदीपान्तरभूस्त्रिहस्ता
दीपोच्छ्रितिः सार्द्धकरत्रया चेत् ।
शङ्कोस्तदार्काङ्गुलसम्मितस्य
तस्य प्रभा स्यात् कियती वदाशु ॥
भूः ३
छाया(१२)शङ्कुः(१२)प्रदीपशङ्कुतलान्तरम् ३
अनयोर्घातः (३२) विनरदीपशिखौच्च्येन । ३ ।
भक्तो
लब्धानि छायाङ्गुलानि । १२ ।
अथ दीपोच्छ्रित्यानयनाय करणसूत्रं वृत्तार्द्धम् ।
छायाहृते तु नरदीपतलान्तरघ्ने
शङ्कौ भवेन्नरयुते खलु दीपकौच्च्यम् ।
उदाहरणम् ।
प्रदीपशङ्क्वन्तरभूस्त्रिहस्ता
छायाङ्गुलैः षोडशभिः समा चेत् ।
दीपोच्छ्रितिः स्यात् कियती वदाशु
प्रदीपशङ्क्वन्तरमुच्यतांमे ॥
न्यासः
शङ्कुः । १२ । छायाङ्गुलानि । १६ । शङ्कु
प्रदीपान्तरहस्ताः । ३ । लब्धं दीपकौच्च्यं
हस्ताः (११४)
प्रदीपशङ्कन्तरभूमानानयनायकरणसूत्रं
वृत्तार्द्धम् ।
विशङ्कुदीपोच्छ्र्यसंगुणा भा
शङ्कूद्धृता दीपनरान्तरं स्यात् ॥
उदाहरणम् । पूर्ब्बोक्त एव दीपोच्छ्रायः (११४)
शङ्क्वङ्गुलानि । १२ । छाया । १६ । लब्धाः
शङ्कुप्रदीपान्तरहस्ताः । ३ ।
छायाप्रदीपान्तरदीपौच्च्यानयनायकरणसूत्रं
सार्द्धवृत्तम् ।
छायाग्रयोरन्तरसंगुणाभा
छायाप्रमाणान्तरहृद्भवेद्भूः ।

रक्तवर्णं यदा पश्येदैश्वर्य्यं भवति ध्रुवम् ॥
मध्यच्छिद्रं यदा पश्येत् शत्रुघातो भवेत्तदा ।
एवं सन्दर्शनाद् देवि ! ज्ञानवान् भवति ध्रुवम् ॥
नारदाय पुरा प्रोक्तं मया पुरुषदर्शनम् ।
तत्प्रसादान्महायोगी भूत्वा लोकांश्चरत्यसौ ॥
स्वच्छायादर्शनं देवि ! कलौ पुरुषलक्षणम् ।
दीर्घायुः समवाप्नोति ज्ञानञ्चापि सुनिर्म्मलम् ॥"
इति योगप्रदीपिकायां उमामाहेश्वरसंवादे छायापुरुषलक्षणं नाम पञ्चमः पटलः ॥ * ॥
"ओमस्य श्रीच्छायापुरुषग्रहणमन्त्रस्यब्रह्मर्षि-र्बृहद्गायत्री छन्दः छायादेवी देवताः हां बीजं स्वाहा शक्तिः पुरुष इति कीलकं सर्व्व-सिद्धिसन्दर्शनसिद्ध्यर्थे जपे विनियोगः । हामि-त्यादि षडङ्गन्यासः ॥ मायया मायया लाँ लाँ ह्रीँ माया शिवविचार्य्या ऋषयः ॐ ह्रीँ अं गां सरस्वति ॐ नमो भगवते भूतशरीर-मात्मानमाकाशे दर्शय दर्शय त्राँ त्राँ त्राँ ह्रीँ भैरवाय नमः स्वाहा । इति मन्त्रः ॥
पादाभावे च पुत्त्रं वा बाह्वभावे च बान्धवम् ।
आत्मानं शिरसोऽभावे सर्व्वाभावे कुलक्षयम् ॥
विशीर्णे विधृते धूते कुम्भे धूमे च विज्वरम् ।

न्यासः
छां(७२) छाया(४५२)
छायान्तरम् । १९ । कर्णान्तरम् । १३ । अनयो-र्व्वर्गान्तरेण । १९२ । भक्ता रसाद्रीषवः । ५७६ ।
लब्धम् । ३ । सैकस्यास्य । ४ । मूलम् । २ ।
अनेन कर्णान्तरम् । १३ । गुणितम् । २६ ।
द्विस्थम् । २६ । भान्तरेण । १९ । ऊनयुते ।
७ । ४५ । तदर्द्धे लब्धे छाये (७२ ४५२) तत्कृत्यो-र्योगपदमित्यादिना जातौ कर्णौ (२५२ ५१२)

| दुर्भिक्षं जायते घोरं कज्जले च पराङ्मुखे ॥<br>संपूर्णे च मुखे सूक्ष्मे क्षेमलाभं सुसिद्धये ।<br>हीने रक्ते जये शीते उष्णे मृत्युर्न संशयः ॥<br>पतिभीतिं शस्त्रघातमिति वेदविदो विदुः ।<br>मृत्युञ्जयं जपन्नेव शान्तिस्तस्य विधीयते ॥<br>षण्मासे मरणं तस्य शीर्षाद्यपचये विदुः ॥<br>अथ मृत्युञ्जययन्त्रम् ।<br>"प्रथमं प्रणवमालिख्य तन्मध्ये साध्यनामकम् ।<br>बहिरष्टदलं पद्मं यान्तान्तं वसुपत्रके ॥<br>विलेखेत् सहकारञ्च केशरेषु सुशोभितम् ।<br>तद्बहिश्चन्द्रवृत्तं स्यात् षोडशस्वरकं लिखेत् ॥<br>द्वारं भूपुरमालिख्य चतुर्द्वारञ्च वारुणम् । | | |
|---|---|---|

भूशङ्कुघातः प्रभया विभक्तः
प्रजायते दीपशिखौच्च्यमेवम् ॥
त्रैराशिकेनैव यदेतदुक्तं
व्याप्तं खभेदैर्हरिणेव विश्वम् ॥
उदाहरणम् ।
शङ्कोर्भार्किमिताङ्गुलस्य सुमते ! दृष्टा किलाष्टाङ्गुला
छायाग्राभिमुखे करद्वयमिते न्यस्तस्य देशे पुनः ।
तस्यैवार्कमिताङ्गुला यदि तदा छायाप्रदीपान्तरं
दीपौच्च्यञ्च कियद्वद व्यवहृतिं छायाभिधां वेत्सि चेत् ॥
भूः (१३३) छां (१३) भूः २ छां (१२)
अत्र छायाग्रयोरन्तरमङ्गुलात्मकम् । ५२ । छाये च । ८ । १२ । अनयोराद्या । ८ । इयमनेन । ५२ । गुणिता । ४१७ । छायाप्रमाणान्तरेण । ४ । भक्ता लब्धं भूमानम् । १०४ । इदं प्रथमछायाग्रदीपतलयोरन्तरमित्यर्थः । एवं द्वितीयच्छायाग्रमानम् । १५६ । भूशङ्कुघातः प्रभया विभक्त इति जातमुभयतोऽपि दीपौच्च्यं सममेव हस्ताः ६(१२) ।
एवमित्यत्र छायाव्यवहारे त्रैराशिककल्पनयानयनं वर्त्तते तद्यथा । प्रथमच्छायातो द्वितीयच्छाया । १२ । यावताधिका तावता छायावयवेन यदि छायाग्रान्तरतुल्याभूर्लभ्यते तदा छायया किमिति एवं कृथक् पृथक् छ याप्रदीपतलान्तरप्रमाणं लभ्यते । ततो द्वितीयं त्रैराशिकं यदि छायातुले भुजे शङ्कुः कोटिस्तदा भूतुल्ये भुजे किमिति लब्धं दीपकौच्च्यमुभयतोऽपि तुल्यमेव । एवं पञ्चराशिकादिकमखिलं त्रैराशिककल्पनयैव सिद्ध्वं यथा भगवता श्रीनारायणेन जननमरणक्लेशापहारिणा निखिलजगज्जननैकबीजेन सकलभुवनभावनेन गिरिसरित्सुरनरासुरादिभिःस्वभेदैरिदं जगद्व्याप्तं तथेदमखिलं गणितजातं त्रैराशिकेन व्याप्तं यद्येवं तद्बहुभिः किमित्याशङ्क्याह ।
यत्किञ्चिद्गुणभागहारविधिनाबीजेऽत्र वा गण्यते
तत् त्रैराशिकमेव निर्म्मलधियामेवावगम्यं विदाम् ।

**छायाभृत्**, पुं, (छायां छायारूपमृगलाञ्छनंयद्वा छायां शीतलकान्तिं बिभर्त्तीति । भृ + क्विप् ।) चन्द्रः । इति हेमचन्द्रः । २ । १९ ॥

**छायामित्रं**, क्ली, (छायया छायाकरणेन मित्रमिव छायाया मित्रमिति वा ।) छत्रम् । इति शब्दरत्नावली ॥

**छायामृगधरः**, पुं, (छाया छायारूप एव मृगस्तं धरतीति । धृ + अच् । छायामृगस्य धरो वा ।) चन्द्रः । इति त्रिकाण्डशेषः ॥

**छायासुतः**, पुं, (छायायाः सूर्य्यपत्न्याः सुतः पुत्त्रः ।) शनिः । इति हेमचन्द्रः । २ । ३४ ॥

**छिः**, पुं, (छ्यति छिनत्ति कीर्त्त्यादिकं नाशयतीत्यर्थः । छो + बाहुलकात् किः ।) गर्हा । इत्येकाक्षरकोषः ॥

**छिक्कनी**, स्त्री, (छिक् इत्यव्यक्तक्षुतशब्दं कनत्यनया । कन् + करणे अप् ततो ङीष् ।) वृक्षविशेषः । छिक्नी इति नाकछिक्नी इति हाँचोटी इति च भाषा ॥ तत्पर्य्यायः । क्षवकृत् २ तिक्ता ३ छिक्किका ४ घ्राणदुःखदा ५ । अस्या गुणाः । कटुत्वम् । रुच्यत्वम् । तीक्ष्णत्वम् । उष्णत्वम् । वह्निपित्तकारित्वम् । वातरक्तकुष्ठकृमिवातकफनाशित्वञ्च । इति भावप्रकाशः ॥

**छिक्का**, स्त्री, (छिगित्यव्यक्तशब्देन कायतीति । कै + कः । ततष्टाप् ।) क्षुतम् । इति शब्दरत्नावली ॥ छिँक् इति हिन्दी भाषा ॥ (यथा,

**छिदा**, स्त्री, (छिद् + “षिद्भिदाद्यङ् ।” ३ । ४ । १०४ । इत्यङ् ततष्टाप् ।) छेदनम् । इति मुग्धबोधम् ॥

**छिदिः**, स्त्री, (छिद्यतेऽनया इति । छिद् + “कृगृपृकुटिभिदिछिदिभ्यश्च ।” उणां । ४ । १४२ । इति इः स च कित् ।) कुठारः । इत्युणादिवृत्तिः ॥

**छिदिरः**, पुं, (छिनत्त्यनेनेति । छिद् + “इषिमदिमुदिखिदिच्छिदीति ।” उणां । १ । ५१ । इति किरच् ।) करवालः । परश्वधः । पावकः । रज्जुः । इति मेदिनी । रे, १५५ ॥

**छिदुरः**, पुं, (छिनत्तीति । छिद् + “विदिभिदिच्छिदेः कुरच् ।” ३ । २ । १६२ । इति कुरच् ।) छेदनद्रव्यम् । धूर्त्तः । वैरी । इति मेदिनी । रे, १५६ ॥ (स्वयं छिन्ने, त्रि । यथा, रघुः । १६ । ६२ । “संलक्ष्यते न छिदुरोऽपि हारः ॥”)

**छिद्र**, त् क भेदे । इति कविकल्पद्रुमः ॥ (अदन्तचुरां-परं-सकं-सेट् ।) भेद इह रन्ध्रकरणम् । छिद्रयति छिद्रापयति भाण्डं बालकः । इति दुर्गादासः ॥

**छिद्रं**, क्ली, (छिद्यते भिद्यते यत् । छिदिरौ छेदने + “स्फायितञ्चिवञ्चीति ।” उणां । २ । १३ । इति रक् ।) भेदः । छेँदा इति भाषा । तत्-

एतद्यद्बहुधास्मदादिजडधीधीवृद्धिबुद्ध्याबुधै-
स्तद्भेदान् सुगमान् विधाय रचितं प्राज्ञैः
प्रकीर्णादिकम् ॥”
इति श्रीभास्कराचार्य्यविरचितायां लीलावत्यां
छपाधिकारः समाप्ततामगात् ॥

गारुडे ज्योतिश्चक्रे ६० अध्याये ।
“छिक्काया लक्षणं वक्ष्ये लभेत् पूर्ब्बे
महाफलम् ।
आग्नेये शोकसन्तापौ दक्षिणे
हानिमाप्नुयात् ॥
नैरृते शोकसन्तापौ मिष्टान्नञ्चैव पश्चिमे ।
अन्नं प्राप्नोति वायव्ये उत्तरे कलहो भवेत्
।
ईशाने मरणं प्रोक्तं प्रोक्तं
छिक्काफलाफलम् ॥”)

**छिक्किका**, स्त्री, (छिक्का क्षुतं साध्यत्वेनास्त्यस्याः
।
बाहुलकात् ठन् ।) छिक्कनी । इति भाव-
प्रकाशः ॥

**छित्,** [द्] त्रि, (छिनत्तीति । छिद् + क्विप् ।)
छेदनकर्त्ता ॥

**छितं**, त्रि, (छायते स्मेति । छो + क्तः । “शाच्छो-
रन्यतरस्याम् ।” ७ । ४ । ४१ । इतीः ।)
छिन्नम् ।
इत्यमरः । । ३ । १ । १०३ ॥

**छित्तिः**, पुं, (छिद् + क्तिन् ।) करजवृक्षः । इति
शब्दचन्द्रिका ॥ छेदश्च ॥

**छित्वरः**, त्रि, (छिनत्तीति । छिद् + “छित्वर-
च्छत्वरेति ।” उणां । ३ । १ । इति स्वरच्
प्रत्य-
येन निपातनात् साधुः ।) छेदनद्रव्यम् ।
धूर्त्तः ।
वैरी । इत्युणादिकोषः ॥

**छिद**, इर ध ञ औ छेदे । इति कविकल्पद्रुमः ॥
(रुधां-उभं-सकं-अनिट् ।) छेदो
द्विधाकरणम् ।
इर्, अच्छिदत् अच्छैत्सीत् । ध ञ,
छिनत्ति
छिन्ते दात्रेण तृणं लोकः । औ, छेत्ता ।
इति
दुर्गादासः ।

**छिदकं**, क्ली, (छिनत्तीति । छिद् + क्वुन् ।) वज्रम् ।
इत्युणादिकोषः ॥

पर्य्यायः । कुहरम् २ शुषिरम् ३
विवरम् ४
विलम् ५ निर्व्यथनम् ६ रोकम् ७
रन्ध्रम् ८
श्वभ्रम् ९ वपा १० शुषिः ११ ।
इत्यमरः ।
१ । ८ । २ ॥ स्वभ्रम् १२ शुषी १३
। इति
तट्टीका ॥ (यथा, महाभारते । ३ ।
८२ । ५३ ।
“ततो गच्छेत धर्म्मज्ञ !
हिमवत्सुतमर्व्वुदम् ।
पृथिव्यां यत्र वै छिद्रं पूर्ब्बमासीत्
युधिष्ठिर ! ॥”)
दूषणम् । इति मेदिनी । रे, ३८ ॥
(यथा,
महाभारते । २ । १२ । २९ ।
“बहुविघ्नश्च नृपते ! क्रतुरेष स्मृतो
महान् ।
छिद्राण्यस्य तु वाञ्छन्ति यज्ञघ्ना
ब्रह्मराक्षसाः ॥”
अवकाशः । नवमसंख्या । इति
ज्योतिषम् ॥
लग्नादष्टमस्थानम् । “छिद्राख्यमष्टमं
स्थान-
मिति ।” इति ज्योतिस्तत्त्वम् ॥)

**छिद्रवैदेही**, स्त्री, (छिद्रमधाना वैदेही पिप्पली
।)
गजपिप्पली । इति राजनिर्घण्टः ॥

**छिद्रान्तः**, [र्], पुं, (छिद्रमन्तर्मध्ये यस्य ।)
नलः । इति राजनिर्घण्टः ॥

**छिद्राफलं**, क्ली, (छिद्रं दूषणमाफलतीति ।
आ +
फल + अच् ।) मायाफलम् । इति
राजनिर्घण्टः ॥

**छिद्रितः**, त्रि, (छिद्र + क्तः ।) कृतच्छिद्रः ।
तत्पर्य्यायः । वेधितः २ विद्धः ३ ।
इत्यमरः ।
३ । १ । ९९ ॥

| | | **छिन्नं**, त्रि, (छिद्यते स्म इति । छिद् + क्तः ।) कृतच्छेदनम् । छेँडा इति काटा इति च भाषा । तत्पर्य्यायः । छातम् २ लूनम् ३ कृत्तम् ४ दातम् ५ दितम् ६ छितम् ७ वृक्णम् ८ । इत्यमरः । ३ । १ । १०३ ॥ कृष्टम् ९ छादितम् १० । इति जटाधरः ॥ छेदितम् ११ खण्डितम् १२ । इति हेमचन्द्रः ॥ (यथा, मार्कण्डेये । ९० । ११ । |
|---|---|---|

"छिन्ने धनुषि दैत्येन्द्रस्तथा
शक्तिमथाददे ॥" * ॥
मन्त्रविशेषे, पुं । तल्लक्षणादिकं यथा,
विश्वसारे ।
"मनोर्यस्यादिमध्यान्तेष्वानिलं
बीजमुच्यते ।
संयुक्तं वा वियुक्तं वा पराक्रान्तस्त्रिधा
पुनः ॥
चतुर्धा पञ्चधा वापि स
मन्त्रश्छिन्नसंज्ञकः ॥")

**छिन्नग्रन्थिनिका**, स्त्री, (छिन्ना ग्रन्थिनी । संज्ञायां
कन् ततष्टाप् पूर्ब्बह्रस्वश्च ।)
त्रिपर्णिका । इति
राजनिर्घण्टः ॥

**छिन्नपत्री**, स्त्री, (छिन्नं पत्रं यस्याः । स्त्रियां
ङीष् ।) अम्बष्ठा । इति राजनिर्घण्टः
॥ (विव-
रणमस्या अम्बष्ठाशब्दे ज्ञेयम् ॥)

**छिन्नमस्ता**, स्त्री, (छिन्नं मस्तं शिरो यस्याः ।)
दशमहाविद्यान्तर्गतषष्ठमहाविद्या । सा
च
प्रचण्डचण्डिका । यथा, --
"प्रचण्डचण्डिकां वक्ष्ये
सर्व्वकामफलप्रदाम् ।
यस्याः प्रसादमात्रेण सदाशिवो
भवेन्नरः ॥
अपुत्त्रो लभते पुत्त्रं अधनो धनवान्
भवेत् ।
कवित्वञ्च सुपाण्डित्यं लभते नात्र
संशयः ॥"
अथप्रचण्डचण्डिकामन्त्राः।
विश्वसारे जामले च ।
"लक्ष्मीं लज्जां ततो मायां मात्रां
द्वादशिका-
मपि ।
वज्रवैरोचनीये द्वे माये फट्स्वाहया
युतः ॥
समीचीनः । भैरवमते तु माया भुवनेश्वर्य्येव
॥
लक्ष्मीः प्रथमबीजेऽस्ति लज्जाबीजे
मनोभवः ।
तृतीयेऽस्मिन् सदा देवी महापातकनाशिनी
॥
चतुर्थे तु गुणातीता मुक्तिविद्याप्रदायिका ।
बकारे बरुणः साक्षात् जकारे तु सुराधिपः ॥
रेफे हुताशनो देवो वकारे वसुधाधिपः ।
ऐकारे त्रिपुरा देवी रेफे त्रिपुरसुन्दरी ॥
त्रैलोक्यविजया देवी सदैवौकारसंस्थिता ।
चकारे चन्द्रमा देवो नकारे हि विनायकः ॥
ईकारे कमला साक्षात् यकारे च सरस्वती ।
मायायुग्मे सदा देवी प्रकृत्या सह सङ्गता ॥
वैखरीं चैव फट्कारे स्वाकारे कुसुमायुधः ।
हाकारे च रतिस्तिष्ठेदेवं मन्त्रसमुच्चयः ॥"
इति व्याख्यानाच्च ॥ * ॥
अस्याः पूजाप्रयोगः ।
प्रातःकृत्यादिकं कृत्वा मन्त्राचमनं कुर्य्यात् ।
यथा, --
"लक्ष्मीमायाकूर्च्चबीजैस्त्रिभिः पीत्वाम्बु
साधकः ।
वाग्भवेनौष्ठौ संमृज्य मायाभ्यान्तु
द्विरुन्मृजेत् ॥
कूर्च्चेन क्षालयेत् पाणी एभिर्म्मन्त्रैश्च
विन्यसेत् ।
श्रीमायाकूर्च्चवाक्कामत्रिपुटाभगवर्णकैः ॥
कामकलाङ्कुशाभ्याञ्च वक्त्रनासाक्षिकर्णकान्
।
नाभिहृन्मस्तकं चांसौ स्पृष्ट्वा शम्भुर्भवेत्
क्षणात् ॥
आचम्यैवं छिन्नमस्तां वत्सरात्तां प्रपश्यति ॥
ततः प्राणायामान्तं विधाय षोढान्यासं
कुर्य्यात् ।
मन्त्रषोढां ततः कुर्य्यात्
त्रैलोक्यवशकारिणीम् ।
श्रीबालात्रिपुटायोनिप्रासादप्रणवैस्तथा ॥
कालीबध्वङ्कुशैः कामकलाकूर्च्चास्त्रकैः
क्रमात् ।
ईंकारञ्च ततो देवि ! चन्द्रकोटिसमप्रभम् ।
सुखड्गाय ततो वाच्यं शिरसे तदनन्तरम् ॥
स्वाहायुक्तं ततो वाच्यं पवित्राङ्गुलिसंयुतम् ।
ऊकारञ्च ततो वाच्यं बिन्दुलाञ्छितमस्तकम्
॥
सुवज्राय ततो वाच्यं शिखायै तदनन्तरम् ।
स्वाहान्तं मध्यमायाञ्च विन्यसेत्तदनन्तरम् ॥
मात्रां द्वादशिकां देवीं विन्यसेच्च ततः परम् ।
पाशायेति समुच्चार्य्य प्रवदेत् कवचाय च ॥
स्वाहान्तं विन्यसेन्मन्त्रं तर्ज्जन्यां
तदनन्तरम् ।
औङ्कारञ्च ततो देवि ! चाङ्कुशं तदनन्तरम् ॥
नेत्रत्रयाय स्वाहान्तमङ्गुष्ठे करयोर्द्वयोः ।
अकारञ्च विसर्गान्तं सुरक्षारक्षसंयुतम् ॥
असुरक्षायसंयुक्तं अस्त्रायेति ततः परम् ।
फडक्षरसमायुक्तं विन्यसेत् करयोर्द्वयोः ॥
हृदि मूर्द्ध्नि शिखायाञ्च कवचे नेत्रमण्डले ।
यावदस्त्रं चतुर्द्दिक्षु विदिक्षु च यथाक्रमम् ॥"
त्रिशक्तितन्त्रे भैरववाक्यम् ।
"उच्चरेत् प्रणवं पूर्ब्बमाकारं बिन्दुसंयुतम् ।"
इत्यादिवाक्यात् कराङ्गेषु प्रणवसम्बलितो
न्यासः । ततो मूलेन मस्तकादिपादपर्य्यन्तं
पादादिमस्तकपर्य्यन्तं वारत्रयं न्यसेत् ॥ *
॥
ततो ध्यानम् ।
"स्वनाभौ नीरजं ध्यायेदर्द्धं विकसितं सितम्
।
तत्पद्मकोषमध्ये तु मण्डलं चण्डरोचिषः ॥
जवाकुसुमसङ्काशं रक्तबन्धूकसन्निभम् ।
रजःसत्त्वतमोरेखायोनिमण्डलमण्डितम् ॥
मध्ये तु तां महादेवीं सूर्य्यकोटिसमप्रभाम् ।
छिन्नमस्तां करे वामे धारयन्तीं स्वमस्तकम्
॥
प्रसारितमुखीं देवीं लेलिहानाग्रजिह्विकाम् ।
पिबन्तीं रौधिरीं धारां निजकण्ठविनिर्गताम्
॥
विकीर्णकेशपाशाञ्च नानापुष्पसमन्विताम् ।
दक्षिणे च करे कर्त्रीं मुण्डमालाविभूषिताम् ॥
दिगम्बरीं महाघोरां प्रत्यालीढपदे स्थिताम् ।

लक्ष्मीबीजं यदाद्यं स्यात् तदा श्रीः
सर्व्वतोमुखी ।
लज्जाबीजेन चाद्येन वश्यतां यान्ति
योषितः ॥
मायाबीजेन चाद्येन महापातकनाशनम्
।
मात्रां द्वादशिकां बीजमाद्यं
स्यान्मुक्तिदायकम् ॥
भैरवोऽस्य ऋषिर्द्देवि ! सम्राट् छन्द
उदीरितम् ।
छिन्नमस्ता स्मृता देवी बीजं कूर्च्चद्वयं
पुनः ॥
स्वाहा शक्तिरभीष्टार्थे विनियोग
उदाहृतः ॥”
“अत्र लज्जापदं कामबीजपरम् । तथा
च ।
अत्र लज्जापदे देवि ! कामबीजं
वितन्यते ।
महाकालमतं ज्ञेयं मन्त्रोद्धारं शुभावहम्
॥”
पूर्ब्बमायापदे इति पाठे मायायाः पूर्ब्बं
लज्जा-
बीजं तस्मिन्नित्यर्थः । तथा च ।
पूर्ब्बमायापदेन
लज्जाबीजमुच्यते । अन्यथा
तापिन्यादिविरोधः ।
तथा च ।
“कामाद्यां वाग्भवाद्यां वा मायाद्यां वा
जपेत्
सुधीः ।
लक्ष्म्याद्यां वा जपेद्विद्यां
चतुर्व्वर्गफलप्रदाम् ॥
अन्येषाञ्च मुनीनां मते सर्व्वत्र मायापदं
कूर्च्च-
परम् । तत्रैव ।
वान्तं वह्निसमायुक्तं
रतिबिन्दुसमन्वितम् ।
लक्ष्मीबीजमिदं प्रोक्तं
सर्व्वकामार्थसिद्धये ॥
वामाक्षिवह्निसंयुक्तं
बिन्दुनादविभूषितम् ।

षोडशीमनुवर्णैश्च पृथगष्टादशाक्षरी ॥
एभिर्बीजैर्म्मातृकार्णान् स्वेषु स्थानेषु
विन्यसेत् ।
एषा ब्रह्मस्वरूपा हि बीजषोढा प्रकीर्त्तिता ॥
अस्याः संन्यसनात् सर्व्वे वज्रदेहा भवन्ति
हि ।
सर्व्वैश्वर्य्ययुतास्तेहि जीवन्मुक्ता दशाब्दतः
॥” * ॥
तत ऋष्यादिन्यासः ।
अस्य मन्त्रस्य भैरव ऋषिः सम्राट् छन्दः
छिन्नमस्ता देवता हुकारद्वयं बीजं स्वाहा
शक्तिरभीष्टार्थसिद्धये विनियोगः । यथा,
शिरसि
भैरवऋषये नमः । मुखे सम्राट्छन्दसे नमः ।
हृदि छिन्नमस्तायै देवतायै नमः । गुह्ये हूँ
हूँ बीजाय नमः । पादयोः स्वाहाशक्तये
नमः ॥ ततः कराङ्गन्यासौ । ओम् आं
खड्गाय हृदयाय स्वाहा । इति कनीयसि ।
ओम् ईं सुखड्गाय शिरसे स्वाहा । इति
पवित्राङ्गुलयोः । ओम् ऊं सुवज्राय शिखायै
स्वाहा । इति मध्यमयोः । ओम् ऐं पाशाय
कवचाय स्वाहा । इति तर्ज्जन्योः । ओम् ॐ
अङ्कुशाय नेत्रत्रयाय स्वाहा । इत्यङ्गुष्ठयोः ।
ओम् अः सुरक्षारक्षासुरक्षायास्त्रायफट् ।
इति
करतलपृष्ठयोः । एवं हृदयादिषु । तदुक्तं
भैरव-
तन्त्रे ।
“उच्चरेत् पूर्ब्बमाकारं
बिन्दुलाञ्छितमस्तकम् ।
खड्गाय हृदयायेति स्वाहायुक्तं कनीयसि ॥

अस्थिमालाधरां देवीं नागयज्ञोपवीतिनीम् ॥
रतिकामोपरिष्ठाञ्च सदा ध्यायन्ति मन्त्रिणः ।
सदा षोडशवर्षीयां पीनोन्नतपयोधराम् ॥
विपरीतरतासक्तौ ध्यायेद्रतिमनोभवौ ।
डाकिनीवर्णिनीयुक्तां वामदक्षिणयोगतः ॥
देवीगलोच्छलद्रक्तधारापानंप्रकुर्व्वतीम् ।
वर्णिनीं लोहितां सौम्यां मुक्तकेशीं दिगम्बरीम्
।
कपालकर्त्तृकाहस्तां वामदक्षिणयोगतः ।
नागयक्षोपवीताढ्यां ज्वलत्तेजोमयीमिव ॥
प्रत्यालीढपदां दिव्यां नानालङ्कारभूषिताम् ।
सदा द्वादशवर्षीयामस्थिमालाविभूषिताम् ॥
डाकिनीं वामपार्श्वे तु कल्पसूर्य्यानलोपमाम्
।
विद्युज्जटां त्रिनयनां दन्तपंक्तिवलाकिनीम् ॥
दंष्ट्राकरालवदनां पीनोन्नतपयोधराम् ।
महादेवीं महाघोरां मुक्तकेशीं दिगम्बरीम् ॥
लेलिहानमहाजिह्वां मुण्डमालाविभूषिताम् ।
कपालकर्त्तृकाहस्तां वामदक्षिणयोगतः ॥
देवीगलोच्छलद्रक्तधारापानंप्रकुर्व्वतीम् ।
करस्थितकपालेन भीषणेनातिभीषणाम् ॥

| | | |
|---|---|---|
| शिवबीजं महेशानि ! लज्जाबीजमुदाहृतम् ॥ ईशानमुद्धृत्य पुरारिबीजं सबिन्दुकं नादविभूषितञ्च । सवामकर्णं परितः प्रकल्प्य मायां वदन्तीह मनीषिणस्ताम् ॥ द्वादशस्वरवर्णं स्यात् नादबिन्दुविभूषितम् । वाग्भवं बीजमित्युक्तं सर्व्ववाक्यविशुद्धये ॥ इति मन्त्रे चतुर्ब्बीजव्याख्यानात् अयन्तु | | |

आभ्यां निषेव्यमानां तां ध्यायेद्देवीं विचक्षणः ॥"
ध्यानस्यावश्यकत्वमाह। तन्त्रे ।
"प्रचण्डचण्डिकाम्वेवमध्यात्वा यस्तु पूजयेत् ।
सद्यस्तस्य शिरश्छित्वा देवी पिबति शोणितम्
॥"
पिबन्तीमिति तेन मुखेनेति शेषः ।
तथा च ।
"स्वमस्तकं सखर्परं रक्तधाराभिपूरितम्।
ललज्जिह्वं महाभीमं धृतं वामभुजे तथा ॥"
इति भैरवतन्त्रे ।
तत्रैव ।
"सितं कुर्य्याद्दलं पूर्ब्बमाग्नेयं रक्तवर्णकम् ।
याम्यं कृष्णमतः पीतं शुक्लं रक्तं सितासितम् ॥
ततः पीतां प्रकुर्व्वीत कर्णिकां तस्य मध्यगाम् ।
तन्मध्ये तु प्रकुर्व्वीत मण्डलं चण्डरोचिषः ॥
रजःसत्त्वतमोरेखा रक्ता शुक्लासिता क्रमात् ।
मायायुग्मं ततो न्यस्य षडक्षरसमन्वितम्॥
वाह्यं तस्य च चक्रस्य कुर्य्यात् प्राकारवेष्टितम् ।
पूर्ब्बं रक्तं ततः कृष्णं सितं पीतं यथाक्रमम् ॥
चतुर्द्वारसमायुक्तं क्षेत्रपालैरधिष्ठितम् ॥"
इत्यस्याः पूजायन्त्रम् ॥ * ॥
यथा वा ।
"त्रिकोणं विन्यसेदादौ तम्मध्ये मण्डलत्रयम् ।
तन्मध्ये विन्यसेद्योनिं द्वारत्रयसमन्विताम् ॥
वहिरष्टदलं पद्मं भूविम्बत्रितयं पुनः ।
कूर्च्चबीजं लिखेम्मध्ये त्रिकोणे फट् समन्वितम्
॥"
यद्वा एतद्ध्यानोक्तं यन्त्रम् ।
तथाच ।
"अपरञ्च प्रवक्ष्यामि शृणु देवि ! यथाक्रमम् ।
स्वनाभौ नीरजं ध्यायेद्भानुमण्डलसन्निभम् ॥
योनिचक्रसमायुक्तं गुणत्रितयसंज्ञितम् ।
तत्र मध्ये महादेवीं छिन्नमस्तां स्मरेद्यतिः ॥
प्रदीपकलिकाकारामद्वितीयव्यवस्थिताम्।
योनिमुद्रासमायुक्तां हृदयस्थितलोचनाम् ॥
ध्येयमेतद्यतीनाञ्च गृहस्थानां निशामय ॥"
यथा, --
"अन्तरे स्वशरीरस्य नाभिनीरजसङ्गताम् ।
निर्लेपां निर्गुणां सूक्ष्मां बालचन्द्रसमप्रभाम् ॥

रतिकामोपरि वज्रवैरोचनीये देहि
देहि
एहि एहि गृह्ण गृह्ण मम सिद्धिं देहि
देहि
मम शत्रून् मारय मारय करालिके हूँ
फट्
स्वाहेति पीठमन्त्रः ॥ सर्व्वत्र
प्रणवादिनमो-
ऽन्तन पूजयेत् । पुनर्ध्यात्वावाहयेत्
। सर्व्व-
सिद्धिवर्णनीये सर्व्वसिद्धिडाकिनीये
वज्रवैरोच-
नीये इहावह इहावह
पुनस्तन्मन्त्रमुच्चार्य्य इह
तिष्ठ इह तिष्ठ इह सन्निधेहि इह
सन्निरुध्यस्व
इत्यनेनावाह्य आं ह्रीँ क्रौँ हं सः
इत्यनेन प्राण-
प्रतिष्ठां कृत्वा । ओम् आं खड्गाय
हृदयाय
स्वाहा इत्यादिना षडङ्गं विन्यस्य
यथाशक्ति
पूजां कृत्वा बलिं दद्यात् । यथा ।
वज्ववैरो-
चनीये देहि देहि एहि एहि गृह्ण गृह्ण
इमं
बलिं मम सिद्धिं देहि देहि मम शत्रून्
मारय
मारय करालिके हूं फट् स्वाहा इति
मन्त्रेण ।
ततो देव्या दक्षिणे ॐ वर्णिन्यै नमः ।
वामे
ॐ डाकिन्यै नमः । ततो देव्यङ्गे
षडङ्गं
संपूज्य दक्षिणे ॐ शङ्खनिधये नमः ।
वामे
ॐ पद्मनिधये नमः । पूर्ब्बादिदिक्षु
लक्ष्मीं

जपः । सिद्धविद्यात्वात् ॥ * ॥ बलिदाने
तु
भैरवीये ।
"रात्रौ बलिः प्रदातव्यो
मत्स्यमांससुरादिभिः ।
अथवा मधुपानाद्यैर्म्मधुरैर्व्विभवक्रमैः ॥
मन्त्रस्तु ।
उच्चरेत् प्रणवं पूर्ब्बं
सर्व्वसिद्धिप्रदेऽन्वितम् ।
वर्णिनीये ततो वाच्यं सर्व्वसिद्धिप्रदे ततः
॥
डाकिनीये ततो वाच्यं देवीनाम ततः परम्
।
एह्येहीति ततो वाच्यं इमं बलिमनन्तरम् ॥
गृह्ण गृह्ण ततः प्रोक्त्वा मम
सिद्धिमनन्तरम् ।
देहि देहीति माये च ततः फट्स्वाहया
युतः ॥
बलिमन्त्रः समाख्यातः पूजितोऽयं
सुरेश्वरीति ॥
मन्त्रान्तरम् ।
भुवनेशी कामबीजं कूर्च्चबीजञ्च वाग्भवम्
।
भुवनेशी कूर्च्चबीजं वाग्भवं तदनन्तरम् ॥
वज्रवैरोचनीये च हूं फट् स्वाहा ततः परम्
॥
अस्य पूजाप्रयोगन्यासपूजादिकं
षोडशीवत्
कार्य्यम् ॥ * ॥
हृल्लेखा मादनं लक्ष्मीर्व्वाग्भवं कूर्च्चमेव च
।
अस्त्रान्ता छिन्नमस्ताया महाविद्या
प्रकीर्त्तिता ॥
अस्यापि सदृशी विद्या जगत्स्वपि न
विद्यते ।
षड्वर्णोऽयं मनुः साक्षान्मोक्षदो नात्र
संशयः ॥
अस्या ध्यानमहं वक्ष्ये शृणुष्व
कमलानने ! ।

समाधिमात्रगम्यान्तु गुणत्रितयवेष्टिताम् ।
कलातीतां गुणातीतां मुक्तिमात्रप्रदायिनीम् ॥"
एवं ध्यात्वा मानसैः संपूज्य तारिणीवच्छङ्ख-
स्थापनं कुर्य्यात् । ततः पीठपूजा । आधारश-
क्तये । प्रकृतये । कूर्म्माय । अनन्ताय । पृथिव्यै ।
क्षीरसमुद्राय । रत्नद्वीपाय । कल्पवृक्षाय । तदधः
स्वर्णसिंहासनाय । आनन्दकन्दाय । सम्बि-
न्नालाय । सर्व्वतत्त्वात्मकपद्माय । सं सत्त्वाय ।
रं रजसे । तं तमसे । आं आत्मने । अं अन्त-
रात्मने । पं परमात्मने । ह्रीं ज्ञानात्मने नमः ।
पद्ममध्ये रतिकामाभ्याम् ॥ भैरवमते तु ।
"आधारशक्तिं कूर्म्मन्तु नागराजमतःपरम् ।
पद्मनालञ्च पद्मञ्च पूजयेन्मन्त्रविन्नरः ॥
मण्डलं चतुरस्रञ्च रजः सत्त्वं तमस्तथा ।
रतिकामौ च संपूज्य शक्तिपूजां समाचरेदिति ॥

लज्जां मायां वाणीञ्च पूजयेत् ।
विदिक्षु ब्रह्म-
विष्णुरुद्रेश्वरान् मध्ये सदाशिवं
सर्व्वत्र प्रणवादि
नमोऽन्तेन पूजयेत् । ततः पञ्च
पुष्पाञ्जलिं
दत्त्वा आवरणान् पूजयेत् ।
अग्नीशासुरवायुषु
मध्ये दिक्षु च ओम् आं खड्गाय
हृदयाय
स्वाहा इत्यादिना षडङ्गानि संपूज्य
अष्टपत्रेषु
पूर्ब्बादिक्रमेण ओम् ह्रीं काल्यै नमः
एवं वर्णिन्यै
डाकिन्यै भैरव्यै महाभैरव्यै इन्द्राक्ष्यै
पिङ्गाक्ष्यै
संहारिण्यै सर्व्वत्र प्रणवादिनमोऽन्तेन
पूजयेत् ।
यथा, --
"एकां नामाभिधां कालीं वर्णिनीं
डाकिनीं तथा ।
भैरवीञ्च महापूर्ब्बां भैरवीं तदनन्तरम्
॥
इन्द्राक्षीञ्च सपिङ्गाक्षीं ततः
संहारकारिणीम् ।
पूर्ब्बादिके दले पूज्याः शक्तयश्च
यथाक्रमम् ॥
प्रणवादिनमोऽन्तेन लज्जाबीजं
समुच्चरन् ।"
पद्ममध्ये हूं हूं फट् नमः स्वाहा नमः
।
देव्या दक्षिणे सम्राट्छन्दसे नमः ।
देव्या
उत्तरे सर्व्ववर्णेभ्यो नमः । पुनर्द्दक्षिणे
ओं बीज-
शक्तिभ्यां नमः । पत्राग्रेषु
पूर्ब्बादिक्रमेण ब्राह्म्यै
माहेश्वर्य्यै कौमार्य्यै वैष्णव्यै वाराह्यै
इन्द्राण्यै
चामुण्डायै महालक्ष्म्यै सर्व्वत्र
प्रणवादिनमो-

प्रत्यालीढपदां रुदैव दधतीं छिन्नं शिरः
कर्त्तृकां
दिग्वस्त्रां स्वकबन्धशोणितसुधाधारां
पिबन्तीं
मुदा ।
नागाबद्धशिरोमणिं त्रिनयनां
हृद्युत्पलालङ्कृतां
रत्यासक्तमनोभवोपरिदृढां
ध्यायेज्जवासन्नि-
भाम् ॥
दक्षे चातिसिता विमुक्तचिकुरा कर्त्रीं तथा
स्वर्परं
हस्ताभ्यां दधती रजोगुणभवा नाम्नापि
सा
वर्णिनी ।
देव्याश्छिन्नकबन्धतः पतदसृग्धारां
पिबन्ती मुदा
नागाबद्धशिरोमणिर्म्मनुविदा ध्येया सदा
सासुरैः ॥
वामे कृष्णतनुस्तथैव दधती खड्गं तथा
खर्परं
प्रत्यालीढपदा कबन्धविगलद्रक्तं पिबन्ती
मुदा ।
सैषा या प्रलये समस्तभुवनं भोक्तुं क्षमा
तामसी
शक्तिः सापि परात्परा भगवती नाम्ना परा
डाकिनो ॥
इति ध्यानम् ।
अस्याः पूजादिकं सर्व्वं षोडशीवत्
कार्य्यम् ॥ * ॥
मन्त्रान्तरम् ।
तारं लज्जाद्वयं वज्रवैरोचनीये हूं फट्
स्वाहा ।
अस्यापि ध्यानपूजादिकं सर्व्वं षोडशीवत्
॥ * ॥
वियत्सूत्रयुतं बिन्दुनादयुक्तं ततः प्रिये ! ।
एकाक्षरी महाविद्या त्रैलोक्यवशकारिणी ॥
सूत्रं दीर्घ ऊकारः ॥
ठठान्तैषा महाविद्या त्रैलोक्यमोहकारिणी
।

| | | |
|---|---|---|
| | ऽन्तेन पूजयेत् । ततश्चतुर्द्दिक्षु द्वारेषु ओम्<br>करालाय नमः । विकरालाय नमः । एवं अति-<br>करालाय महाकरालाय । यथा, भैरवीये ।<br>“पूर्ब्बद्वारे करालञ्च विकरालञ्च दक्षिणे ।<br>पश्चिमेऽतिकरालञ्च महाकरालमुत्तरे ॥”<br>ततो धूपादिविसर्ज्जनान्तं कर्म्म समापयेत् ।<br>विसर्ज्जने त्वयं विशेषः । संहारमुद्रां प्रदर्श्य<br>अञ्जलावारोप्य वामनासापुटेन । योनिमुद्रासमारूढां<br>प्रदीपकलिकोज्ज्वलाम्।<br>कृष्णपक्षे विधुमिव क्रमेण क्षीणतां गताम् ॥<br>इमं मन्त्रं समुच्चार्य्य चण्डरश्मौ निवेशयेत् ।<br>उत्तरे शिखरे इत्यादि । अस्य पुरश्चरणं लक्ष- | ताराद्यन्ता भवत्येषा चतुर्व्वर्गफलप्रदा ॥<br>* ॥ |

मन्त्रान्तरं यथा, --
वज्रवैरोचनीये च कूर्च्चयुग्मं सफट्टटः ।
ताराद्यैषा महाविद्या सर्व्वतेजोऽपहारिणी ॥
त्रैलोक्याकर्षिणी विद्या चतुर्व्वर्गफलप्रदा ।
ध्यानपूजादिकं सर्व्वं षोडशीवत् समाचरेत् ॥ * ॥
इदानीं षोडशीविद्याप्रशंसामाह ।
तथा सर्व्वप्रयत्नेन सर्व्वापास्या च षोडशी ।
लक्ष्मीबीजादिका सैव सर्व्वैश्वर्य्यप्रदायिनी ॥
लज्जाद्या स्वर्गभूनागयोषिदाकर्षिणी परा ।
कूर्च्चाद्या सर्व्वजन्तूनां महापातकनाशिनी ॥
वाग्भवाद्या यदा देबी वागीशत्वप्रदायिनी ।
एषा तु षोडशीविद्या वेद्या सप्तदशाक्षरी ॥
श्रीबीजपुटिता सा तु लक्ष्मीवृद्धिकरी सदा ।
लज्जया पुटिता विद्या त्रैलोक्याकर्षिणी परा ॥
कूर्च्चेन पुटिता सर्व्वपापिनां पापहारिणी ।
वाग्बीजपुटिता चैषा वागीशत्वप्रदायिनी ॥
चतुर्व्विधेति विद्यैषा प्रिये ! सप्तदशाक्षरी ।
ताराद्या षोडशी चान्या भवेत् सप्तदशाक्षरी ।
एषा विद्या महाविद्या भुक्तिमुक्तिकरी सदा ।
कमला भुवनेशानी कूर्च्चबीजं सरस्वती ॥
बज्रवैरोचनीये च पूर्ब्बबीजानि चोच्चरेत् ।
फट् स्वाहा च महाविद्या वसुचन्द्राक्षरी परा ।
ताराद्येकोनविंशार्णा ब्रह्मविद्यास्वरूपिणी ।
एते विद्योत्तमे देवि ! भुक्तिमुक्तिप्रदे शुभे ॥ * ॥
लक्ष्म्यादिपुटिता पूर्ब्बा रन्ध्रचन्द्राक्षरी भवेत् ।
चतुर्द्धा च महाविद्या चतुर्व्वर्गफलप्रदा ॥
प्रणवाद्या यदा चैषा भोगमोक्षकरी सदा । * ।
विद्यान्तरं प्रवक्ष्यामि सावधानावधारय ।
हृल्लेखाकूर्च्चवाग्बीजवज्रवैरोचनीये हूं ॥
अस्त्रं स्वाहा महाविद्या चतुर्द्दशाक्षरी मता ।
सर्व्वैश्वर्य्यप्रदा चैषा सर्व्वसंमोहकारिणी ॥ * ॥
भुवनेशी त्रितत्त्वञ्च वाग्बीजं प्रणवं ततः ।
वज्रवैरोचनीये च फट् स्वाहा च तथापरा ॥
चतुर्द्दशाक्षरी चैषा चतुर्व्वर्गफलप्रदा ।
एषा विद्या महाविद्या जन्ममृत्युविनाशिनी ॥ * ॥
तन्त्रान्तरे ।
रमाकामस्तथालज्जावाग्भवं वज्र वै पदम् ।
अतिस्नेहतरङ्गेन भक्त्या दासोऽस्मि ते प्रिये ! ।
एतासांध्यानपूजादिकंषोडशीवत् कार्य्यम् ॥ * ॥
नाभौ शुद्धारविन्दं तदुपरि कमलं मण्डलं चण्ड-
रश्मेः
संसारस्यैकसारां त्रिभुवनजननीं धर्म्म-कामोदयाढ्याम् ।
तस्मिन् मध्ये त्रिकोणे त्रितयतनुधरां छिन्नमस्तां
प्रशस्तां
तां वन्दे ज्ञानरूपां निखिलभयहरां योगिनीं
योगमुद्राम् ॥”
इति छिन्नमस्ताप्रकरणम् । इति तन्त्रसारः ॥

**छिन्नरुहः**, पुं, (छिन्नोऽपि रोहतीति । रुह + “इगुपधज्ञेति ।” ३ । १ । १३५ । इति कः ।) तिलकवृक्षः । इति राजनिर्घण्टः ॥

**छिन्नरुहा**, स्त्री, (छिन्ने सत्यपि रोहतीति । रुह + कः । अजादित्वात् टाप् ।) गुडूची । इत्य-मरः । २ । ४ । ८२ ॥ (यथास्याः पर्य्यायाः ।
“वत्सादनी च्छिन्नरुहा मधुपर्ण्यमृतामरा ।
कुण्डल्यमृतवल्ली च गुडूची चक्रलक्षणा ॥”
इति वैद्यकरत्नमालायाम् ॥) स्वर्णकेतकी । शल्लकी । इति राजनिर्घण्टः ॥

**छिन्नवेशिका**, स्त्री, (छिन्नो विच्छिन्नो वेशो यस्याः । संज्ञायां कन् । ततष्टापि अत इत्वम् ।) पाठा ।
“अभ्यङ्गान्नाशयेत् क्षिप्रं गण्डमालां सुदारुणाम् ।
छुछन्दर्य्या विपक्वन्तु क्षणात्तैलवरं ध्रुवम् ॥”
इति वैद्यकचक्रपाणिसंग्रहे गण्डमालाधिकारे ॥)

**छुट**, क शि छेदे । इति कविकल्पद्रुमः ॥ (चुरां तुदां च-सकं-सेट् ।) क, छोटयति । शि, छुटति । अच्छुटीत् । इति दुर्गादासः ॥

**छुद्रं**, क्लो, (छद + रक् । पृषोदरादित्वात् उत्वम् ।) प्रतीकरणम् । रश्मिः । इति संक्षिप्तसारे उणादिवृत्तिः ॥

**छुप**, श औ स्पर्शे । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-अनिट् ।) श, छुपति । औ, छोप्ता ।
इति दुर्गादासः ॥

**छुपः**, पुं, (छुप + घञर्थे कः ।) क्षुपः । स्पर्शनम् । इति मेदिनी । पे, ६ ॥ चपलः । युद्धम् । इति विश्वः ॥

**छुर**, छेदे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् । छोरति । अच्छोरीत् ॥)

**छुर**, शि लोपे । इति कविकल्पद्रुमः । (तुदां-परं-सकं-सेट् ।) शि, छुरति, अच्छुरीत् चुच्छोर ।
लोपश्छेदः । इति दुर्गादासः ॥

**छुरा**, स्त्री, (छुरति रञ्जयति नाशयति दुर्गन्धा-दिकमिति वा । छुर + कः टाप् च ।) सुधा ।
चूर्णम् । इति हारावली । १३५ ॥

**छुरिका**, स्त्री, (छुरति छिनत्तीति । छुर + क्वुन् । यद्वा, छुरी + स्वार्थे कन् । पूर्ब्बह्रस्वश्च ।)

रोचनीये लज्जाद्वन्द्वमन्त्रं स्वाहासमन्वितम् ॥
इयं सा षोडशी प्रोक्ता सर्व्वकामफलप्रदा ।
कथिताः सकला विद्याः सारात्सारतराः शुभाः ॥
आसां ऋषिर्भैरवोऽहं नाम्ना तु क्रोधभूपतिः ।
सम्राट् छन्दो देवता च छिन्नमस्ता प्रकीर्त्तिता ।
षड्दीर्घभाक्खरेणैव प्रणवाद्येन सुन्दरि ! ।
खड्गाद्येन ठठान्तानि षडङ्गानि प्रकल्पयेत् ॥
नारिदोषादिकञ्चासां ताः सुसिद्धाः सुरासुरैः ।
सकलेषु च वर्णेषु सकलेष्वाश्रमेषु च ॥
अन्तिमेषु च वर्णेषु भुक्तिमुक्तिप्रदायिका ।
प्रणवाद्याश्च या विद्या शूद्रादौ न समीरिताः ॥
अस्याश्चैव विशेषोऽयं योषिच्चेत् समुपासयेत् ।
डाकिनी सा भवत्येव डाकिनीभिः प्रजायते ॥
पतिहीना पुत्त्रहीना यथा स्यात् सिद्धयोगिनी ।
इति ते कथितं तत्त्वं रहस्यमखिलं प्रिये ! ॥
इति शब्दचन्द्रिका । आकनादी इति भाषा ॥

**छिन्ना**, स्त्री, (छिद्यतेऽसौ । छिद + क्त । "अजाद्यतष्टाप् ।" ४ । १ । ४ । इतिटाप् ।) गुडूची । (यथा, भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ।
"गुडूची मधुपर्णी स्यादमृतामृतवल्लरी ।
छिन्ना छिन्नरुहा छिन्नोद्भवा वत्सादनीति च ॥"
छिद्यते कुलात् वहिष्क्रियते इति ।) पुंश्चली । इति विश्वः ॥

**छिन्नोद्भवा**, स्त्री, (छिन्ना विभिन्ना सत्यपि उद्भवति पुनर्जायते इति । उत् + भू + अच् । यद्वा, छिन्ने छेदनेऽपि उद्भव उत्पत्तिर्यस्याः ।) गुडूची । इति राजनिर्घण्टः ॥ (गुडूचीशब्देऽस्या विवृतिर्ज्ञेया ॥)

**छिलिहिण्डः**, पुं, (चिलिना वसनखण्डरूपतया हिण्डते अनाद्रियते इति । हिण्ड अनादरे + अच् । पृषोदरादित्वात् चस्य छः ।) पातालगरुडवृक्षः । इति भावप्रकाशः ॥

**छुछुन्दरी**, स्त्री, (छुछुमित्यव्यक्तशब्दो दीर्य्यति निर्गच्छत्यस्याः । दॄ + "सर्व्वधातुभ्य इन् ।" उणां ४ । ११७ । इति इन् । ततः कृदिकारादिति ङीष् ।) जन्तुविशेषः । छुँचा इति भाषा । तत्पर्य्यायः । गन्धमूषा २ । इति हेमचन्द्रः । ४ । ३६७ ॥ चिक्कः ३ वेश्मनकुलः ४ पुंवृषः ५ गन्धमूषिकः ६ । इति त्रिकाण्डशेषः ॥ गन्धमूषिका ७ । अस्त्रविशेषः । छुरी इति ख्याता । तत्पर्य्यायः ।
शस्त्री २ असिपुत्री ३ असिधेनुका ४ । इत्यमरः । २ । ८ । ९२ ॥ छुरी ५ । इति भरतः ॥
खुरी ६ छूरी ७ कृपाणिका ८ धेनुपुत्री ९ ।
इति हेमचन्द्रः ॥ छूरिका १० । इति शब्दरत्नावली ॥ (यथा, कथासरित्सागरे । २५ । १४९ ।
"तावत् स्त्रियमपश्यत्तां छित्त्वा च्छुरिकया मुहुः ।
खादन्ती तस्य मांसानि पुंसः शूलाग्रवर्त्तिनः ॥")

**छुरितं**, त्रि, (छुर + क्तः ।) खचितम् । इति जटाधरः ॥ (रञ्जितम् । यथा, माघे । १ । २२ ।
"परस्परेण च्छुरितामलच्छवी तदैकवर्णाविव तौ बभूवतुः ॥")
छिन्नञ्च ॥

**छुरी**, स्त्री, (छुरति छिनत्तीति । छुर छेदे + "इगुपधज्ञेति ।" ३ । १ । १३५ । इति क । ततो ङीष् ।) छुरिका । इति भरतः ॥

**छूरिकापत्री**, स्त्री, (छुरिका इव पत्राणि यस्याः । स्त्रियां ङीष् ।) श्वेता । इति राजनिर्घण्टः ॥

**छूरी**, स्त्री, (छुरी + पृषोदरादित्वात् दीर्घः ।) छुरिका । इति हेमचन्द्रः । ३ । ४४८ ॥

**छृद**, कि सन्दीपे । इति कविकल्पद्रुमः ॥ (चुरांपक्षे भ्वां-परं-सकं-सेट् ।) सन्दीपो दीप्तीकरणम् । कि, छर्द्दयति छर्दति दीपं लोकः । इति दुर्गादासः ॥

**छृद**, उ ञ ध इर् देवने । त्विषि । वमने । इति

|  | इति हलायुधः । राजपुत्री ८<br>प्रतिमूषिका ९<br>सुगन्धिमूषिका १० गन्धशुण्डिनी ११<br>शुण्डि-<br>मूषिका १२ । इति राजनिर्घण्टः ॥<br>गन्धाखुः १३<br>गन्धनकुलः १४ चुच्चुः १५ । इति<br>हारावली ।<br>(छुछुन्दरिः १६ । इतिमार्कण्डेयपुराणम्<br>। १५ । ३१ ॥ | कविकल्पद्रुमः ॥ (रुधां-उभं-सकं-सेट्<br>। उदित्वात<br>क्त्वावेट् ।) उ, छिद्दित्वा छृत्त्वा । ञ ध,<br>छृणत्ति |
|---|---|---|

छृन्ते । इर्, अछृदत् अच्छर्द्दीत् । देवनं जिगीषेच्छाव्यवहारस्तुतिद्युतिक्रीडागतयः। इति केचित् । स्वमते तु क्रीडनमेव अन्यथा त्विषो ग्रहणमनर्थकं स्यात् । त्विषि दीप्तौ । इति दुर्गादासः ॥

**छेकः**, त्रि, (छ्यति वनवासादिसुखं छिनत्ति नाशयतीति । छो य लूनौ + बाहुलकात् डेकन् ।) गृहासक्तपक्षिमृगौ । तत्पर्य्यायः । गृह्यकः २ । इत्यमरः । २ । ६ । ४३ ॥ नागरः । इति मेदिनी । के, २४ ॥ (शब्दालङ्कारविशेषे, पुं । स तु अनुप्रासभेदः । तल्लक्षणं यथा, साहित्यदर्पणे । १० । ४ ।
"छेको व्यञ्जनसङ्घस्य सकृत्साम्यमनेकधा ॥"
तदुदाहरणं यथा, तत्रैव, --
"आदाय वकुलगन्धानन्धीकुर्व्वन् पदे पदे भ्रमरान् ।
अयमेति मन्दमन्दं कावेरीवारिपावनः पवनः ॥"
अत्र गन्धानन्धीति संयुक्तयोः कावेरीवारीत्यसंयुक्तयोः पावनः पवन इति बहूनां व्यञ्जनानां सकृदावृत्तिः । छेको विदग्धस्तत्प्रयोज्यत्वादेष छेकानुप्रासः ॥")

**छेकोक्तिः**, स्त्री, (छेकानां विदग्धानां उक्तिः ।) वक्रोक्तिः । इति जटाधरः ॥ (विशेषस्तु वक्रोक्तिशब्दे ज्ञेयः ॥)

**छेद**, त् क छेदे । इति कविकल्पद्रुमः ॥ (अदन्तचुरां-परं-सकं-सेट् ।) अचिच्छेदत् । इति दुर्गादासः ॥

**छेदः**, पुं, (छिद + भावे घञ् ।) छेदनम् । इति हेमचन्द्रः । ३ । ३६ ॥ (यथा, कुमारे । २ । ४१ ।
"तेनामरबधूहस्तैः सदयालूनपल्लवाः ।
अभिज्ञाश्छेदपातानां क्रियन्ते नन्दनद्रुमाः ॥"
नाशः । अपगतिः । यथा, शाकुन्तले २ य अङ्के ।
"मेदच्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ॥" * ॥
छिद्यते इति । छिद् + कर्म्मणि घञ् ।) खण्डम् । इति त्रिकाण्डशेषः ॥ (यथा, कुमारे । १ । ४ ।
"वलाहकच्छेदविभक्तरागामकालसन्ध्यामिव धातुमत्ताम् ॥")

"ज्वलनार्कप्रभं घोरं छेदनं सोमहारिणाम् ।
घोररूपं तदत्यर्थं यन्त्रं देवैः सुनिर्म्मितम् ॥")

**छेदनीयः**, पुं, (छेदितुं योग्यः । छेद + "अर्हेकृत्यतृचश्च ।" ३ । ३ । १६९ । इति अनीयर् ।) कतकवृक्षः । इति राजनिर्घण्टः ॥ (कतकशब्दे गुणादयोऽस्य व्याख्याताः ॥) छेद्ये, त्रि ॥ (यथा, सुश्रुते । १ । २७ ।
"अनुत्तुण्डित शल्यानि छेदनीयमुखानि च ॥")

**छेदिः**, त्रि, (छिनत्तीति । छिद् + "हृपिषिरुहीति ।" उणां ४ । ११८ । इति इन् ।) छेदनकर्त्ता । इत्युणादिकोषः ॥

**छेदितं**, त्रि, (छेद त् क छेदे + क्त ।) छिन्नम् । इति हेमचन्द्रः ॥ (यथा, काशीखण्डे । २९ । ६२ ।
"छेदिताखिलपापौघा छद्मघ्नी छलहारिणी ॥")

**छेमण्डः**, पुं, (छमु अदने + बाहुलकात् अण्डन् अत एत्वञ्च ।) पितृहीनः । इत्युणादिवृत्तिः । १ । १२८ । छेमडा इति भाषा ॥

**छेलुः**, पुं, सोमराजी । इति शब्दचन्द्रिका ॥

**छो**, य लूनौ । इति कविकल्पद्रुमः ॥ (दिवां-परंसकं-अनिट् ।) लूनिश्छेदः । य, छ्यति धान्यं लोकः । इति दुर्गादासः ॥

**छोटिका**, स्त्री, (छटति यज्ञविघ्नकारिणां मायां छिनत्तीति । छुट + ण्वुल् । टापि अत इतञ्च ।) तर्ज्जन्यङ्गुष्ठाङ्गुलिध्वनिः । यथा, "छोटिकाभिर्दशदिग्बन्धनं कृत्वा भूतशुद्धिं कुर्य्यात् ।" इति तन्त्रसारः ॥

**छोटी** [न्] पुं, (छुटति नीचजातितया स्वल्पी भवतीति । छुट + णिनिः ।) कैवर्त्तः । इति त्रिकाण्डशेषः ॥

**छोरणं**, क्ली, (छुर + भावे ल्युट् ।) परित्यागः । इति त्रिकाण्डशेषः ॥ छोडन इति हिन्दी भाषा ॥

**छोलङ्गः**, पुं, (छुरतीति । छुर + बाहुलकात्

**छेदनं**, क्ली, (छिद् + भावे ल्युट् ।) अस्त्रेण द्विधा

करणम् । तत्पर्य्यायः । वर्द्धनम् २ । इत्यमरः ।

३ । २ । ७ ॥ कर्त्तनम् ३ कल्पनम् ४ छेदः ५ ।

इति हेमचन्द्रः ॥ (यथा, मनुः । ११ । १४२ ।

“फलदानान्तु वृक्षाणांछेदने जप्यमृक्शतम् ॥”

नाशः । अपनोदनम् । यथा, महाभारते ।

३ । १८५ । २४ ।

“श्रुत्वैव तु महात्मानो मुनयोऽभ्यद्रवन् द्रुतम् ।

सनत्कुमारं धर्म्मज्ञं संशयच्छेदनाय वै ॥” * ॥)

भेदः । इति मेदिनी । ने, ६५ ॥

(छिनत्तीति । छिद् + ल्युः । छेदके, त्रि । यथा,

महाभारते । २ । ५४ । ९ ।

“प्रच्छन्नो वा प्रकाशो वा योगो योऽरिं प्रवाधते ।

तद्वै शस्त्रं शस्त्रविदां न शस्त्रं छेदनं स्मृतम् ॥”

तथाच तत्रैव । १ । ३३ । ३ ।

अङ्गच् । ततो रस्य लत्वम् ।) मातुलुङ्गः ।

इति शब्दरत्नावली ॥ टावालेवु इति भाषा ॥

**छ्यु**, ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-

सकं-सेट् ।) ङ, छ्यवते । इति दुर्गादासः ॥

**ज**

**ज**, जकारः । स व्यञ्जनाष्टमवर्णः । चवर्गतृतीय-

वर्णश्च । अस्योच्चारणस्थानं तालु । इति व्याक-
रणम् ॥ (यदुक्तं सिद्धान्तकौमुद्याम् । "इचु
यशानां तालु ।" तथाच शिक्षायाम् ।
"कण्ठ्यावहाविचुयशास्तालव्याओष्ठजावुपू ॥")
अस्योत्पत्तिर्य्यथा, प्रपञ्चसारे ।
"विसर्गस्तालुगः सोष्मा शं चवर्गञ्च यन्तथा ॥"
(वङ्गाक्षरेण) अस्य लेखनप्रकारो यथा, वर्णो-
द्धारतन्त्रे ।
"ऊद्ध्वाधःकुञ्चिता रेखा तासु ब्रह्मेशसंविभुः ।
वाग्देवी कमला नित्या द्विधा मात्रा प्रकीर्त्तिता ॥"
अस्य स्वरूपं यथा, कामधेनुतन्त्रे ।
"जकारं परमेशानि ! या स्वयं मध्यकुण्डली ।
शरच्चन्द्रप्रतीकाशं सदा त्रिगुणसंयुतम् ॥
पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा ।
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं प्रिये ! ॥"
तस्य ध्यानं यथा, वर्णोद्धारतन्त्रे ।
"ध्यानमस्याः प्रवक्ष्यामि शृणुष्व कमलानने ! ।
नानालङ्कारसंयुक्तैर्भुजैर्द्वादशभिर्युताम् ॥
रक्तचन्दनदिग्धाङ्गीं विचित्राम्बरधारिणीम् ।
त्रिलोचनां जगद्धात्रीं वरदां भक्तवत्सलाम् ॥
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत् ॥"
तस्य पर्य्याया यथा, --
"जः शवो वानरः शूली भोगदा विजया स्थिरा
ललदेवो जयो जेता धातकी सुमुखी विभुः ॥
लम्बोदरी स्मृतिः शाखा सुप्रभा कर्त्तृकाधरा ।
दीर्घबाहू रुचिर्हंसो नन्दी तेजाः सुराधिपः ॥
जवनो वेगितो वामो मानवाक्षः सदात्मकः ।
ह्न्मारुतेश्वरो वेगी चामोदो मदविह्वलः ॥"
इति नानातन्त्रम् ॥
(धातुपाठेऽनुबन्धविशेषः । यथा, कविकल्पद्रुमे ।
"जो ज्वलाद्यो ञिरद्यक्तष्टुः साथुर्ड्विस्त्रिमक्-
युतः ॥"
छन्दःशास्त्रोक्तमध्यगुरुर्गणविशेषः । (। ऽ ।)
यदुक्तं छन्दोमञ्जर्य्याम् ।
"जो गुरुमध्यगतो रलमध्यः ॥" इति ॥)

**जः**, पुं, (जयति जायते वा । जि जन् वा +

"अन्येष्वपि दृश्यते ।" ३ । २ । १०१ । इति
डः ।) मृत्युञ्जयः । जनिः । तातमात्रम् ।

जनार्द्दनः । इति मेदिनी । जे, १ ॥ विषम् ।
भुक्तिः । तेजः । पिशाचः । इति शब्दरत्ना-
वली ॥ वेगः । इत्येकाक्षरकोषः ॥

**जः**, त्रि, (जयति विपक्षमिति । जि + डः ।)

जेता । वेगितः । इति शब्दरत्नावली ॥

**जकुटं**, क्ली, (जं जातं सत् कुठति वक्रीभवतीति ।

कुट् कौटिल्ये + "इगुपधज्ञेति ।" ३ । १ । १३५ । इति
कः ।) वार्त्ताकुपुष्पम् । इति मेदिनी ॥ जे, ४३ ॥

**जकुटः**, पुं, (जो जातः सन् कुटतीति । कुट्

+ कः ।) मलयपर्व्वतः । कुक्कुरः । इति मेदिनी ॥
जे, ४३ ॥

**जक्ष**, इ म ङ दाने । गतौ । इति कविकल्पद्रुमः ॥

(भ्वां-आत्मं-सकं-सेट् ।) इ, जङ्क्ष्यते । न मध्य-
पाठे नैवेष्टसिद्धे इदनुबन्धो वेदेषूच्चारणभेदार्थः ।
म, अजङ्क्षि अजाङ्क्षि जङ्क्षं जङ्क्षं जाङ्क्षं जाङ्क्षं
अनुबन्धबलादनुपधाया अपि दीर्घः । क्षमते तु
अत्र दीर्घविधिरुपधां नापेक्षते । ङ, जङ्क्षते ।
इति दुर्गादासः ॥

**जक्ष**, क्ष लु घ भक्षे । हासे । इति कविकल्प-

द्रुमः ॥ (अदां-परं-भक्षे सकं-हासे-अकञ्च-सेट् ।)
केचित्तु विष्णुपुराणे यक्षराक्षसोत्पत्तिप्रसङ्गे
यक्ष्यतामिति यैरुक्तं ते वै यक्षास्तु यक्षणादिति
भक्षणार्थस्यैव यक्षशब्दव्युत्पादनादेतमन्तः-
स्थादिं मन्यन्ते ॥ तत्र अमरटीकायां वर्ग्य-

जकारस्यान्तःस्थयकारश्छान्दसोद्रष्टव्य
इत्युक्त्वा
वर्ग्यादिरयं निर्णीतः । क्ष, जक्षति । लु घ,
जक्षिति । इति दुर्गादासः ॥

**जक्षणं**, क्ली, (जक्ष + भावे ल्युट् ।) भक्षणम् ।

इति हेमचन्द्रः । ३ । ८७ ॥

**जक्ष्मः**, पुं, (जक्षिति भक्षयति शरीरं नाशयती-

त्यर्थः । जक्ष + बाहुलकात् मन् ।) जक्ष्मा ।
इत्य-
मरटीका ॥ (केचित् तु "अर्त्तिस्तुसुहुसिति ।"
१ । १३९ । उणादिसूत्रेण यक्ष पूजायामिति
धातोर्मन्प्रत्ययनिर्द्देशात्
अन्तःस्थयकारादिरिति
मन्यन्ते ॥)

**जक्ष्मा**, [न्] पुं, (जक्षिति भक्षयति शरीरं

नाशयतीत्यर्थः । जक्ष + "सर्व्वधातुभ्यो मनिन्
।"
उणां । ४ । १४४ । इति मनिन् ।) यक्ष्मरोगः ।
इत्यमरटीकायां भरतः ॥

**जगच्चक्षुः**, [स्] पुं, (जगतां भुवनानां चक्षुरिव

प्रकाशकत्वात् ।) सूर्य्यः । इति हेमचन्द्रः ।
२ । १२ ॥ (यथा, काशीखण्डे । ४६ । ४४ ।
"इति काशीप्रभावज्ञो जगच्चक्षुस्तमोनुदः ।
कृत्वा द्वादशधात्मानं काशीपुर्य्यां व्यवस्थितः
॥")

**जगत्**, क्ली, (गच्छतीति । गम + "द्युतिगमिजुहो-

तीनां द्वे च ।" ३ । २ । १३८ । इत्यस्य वार्त्ति
इति क्विपि द्वित्वे च "गमः क्वौ ।" ६ । ४ ।
४० ।
इति मलोपे तुक् ।) विश्वम् । तत्पर्य्यायः ।
जगती २ लोकः ३ पिष्टपम् ४ भुवनम् ५ ।
इत्य-
मरः । २ । १ । ६ ॥ विष्टपम् ६ । इति तट्टीक्वा
॥
(यथा, मनुः । १ । ५२ ।
"यदा स देवो जागर्त्ति तदेदं चेष्टते जगत् ।
यदा स्वपिति शान्तात्मा तदा सर्व्वं निमीलति
॥"
जनः । छन्दोविशेषः । इति मेदिनी । ते,
१०९ ॥
(सा च द्वादशाक्षरा वृत्तिः । यथा, छन्दो-
मञ्जर्य्यां १ स्तवके ।
"त्रिष्टुप् च जगती चैव तथातिजगती मता ॥"
अस्या उदाहरणादीनि छन्दःशब्दे द्रष्टव्यानि
॥)
जम्बूवप्रम् । इति हेमचन्द्रः ॥

**जगदम्बा**, स्त्री, (जगतामम्बा माता ।) दुर्गा ।

यथाह कश्चित् ।
"अदूरे जगदम्बाया शारदीयो महोत्सवः ॥"
"जगदम्बापदद्वन्द्वमापदांक्षयसाधनम् ॥"
इति शूलपाणिः ॥
अपि च ब्रह्मवैवर्त्ते प्रकृतिखण्डे ३१ अध्याये
।
"विष्णुमायां भगवतीं दुर्गां दुर्गतिनाशिनीम् ।
प्रकृतिं जगदम्बाञ्च पतिपुत्त्रवतीषु च ॥"

**जगदम्बिका**, स्त्री, (जगतां अम्बा जननी । ततः

स्वार्थे कन् । टापि अत इत्वम् ।) दुर्गा । यथा,
"सृष्टिस्थितिविनाशानां विधात्री जगदम्बिका
।
अहं सर्व्वान्तरस्था च संसारार्णवतारिणी ॥"
इति भगवतीगीतायां ५ अध्यायः ॥
(यथा च देवीभागवते । १ । ७ । ४६ ।
"कामं कुरुष्व वधमद्य ममैव मात-
र्दुःखं न मे मरणजं जगदम्बिकेऽत्र ॥")

**जगदाधारः**, पुं, (जगतामाधारः आश्रयः ।)

वायुः । इति शब्दचन्द्रिका ॥ जगदाश्रयः ।
यथा,
"कालो हि जगदाधारः ।" इति स्मृतिः ।

**जगदीशः**, पुं, (जगतामीशो नियन्ता ।) विष्णुः ।

इति शब्दरत्नावली ॥ (यथा, पाद्मे उत्तर-
खण्डे । १११ अध्याये ।
"सर्व्वान्तर्यामी जगदीशश्चानूरमर्द्दनःप्रभुः
॥"
विधाता । यथा, कुमारे । २ । ९ ।
"जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः ।
जगदादिरनादिस्त्वं जगदीशो निरीश्वरः ॥"
प्रातश्च सात्त्विकी पूजा मध्याह्ने राजसी मता
।
सायाह्ने तामसी पूजा त्रिविधा परिकीर्त्तिता ॥
जपयज्ञादिभिर्व्वे ! इति त्रैकालिकी मता ।
अथान्यत् संप्रवक्ष्यामि शृणुष्व परमेश्वर ! ॥
सप्तम्यादिनवम्यान्तं पूजाकालमितीरितम् ।
त्रिदिने त्रिविधा पूजा दशम्याञ्च विसर्ज्जयेत्
॥
पूजापरेऽह्नि देवेश ! तत्राप्यत्र विसर्ज्जनम् ।
बोधितायाः प्रकारेण तत्र पूजा प्रकीर्त्तिता ॥
श्रीशिव उवाच ।
त्रिसन्ध्याव्यापिनी सा तु यदि स्यान्नवमी
तिथिः ।
त्रिकाले त्रिविधा पूजा कथं देव्या जगन्मयि !
॥
कथयस्व महेशानि ! इति मे संशयो हृदि ॥
श्रीदेव्युवाच ।
सा प्रातर्व्यापिनी यत्र वासरे नवमी तिथिः ।
त्रिसन्ध्यं पूजयेत्तत्र वासरे जगदम्बिकाम् ॥
मुहूर्त्तव्यापिनी चापि तत्र ग्राह्या महेश्वर ! ।
एककाले त्रिधा पूजा साधको नैव कारयेत् ॥
इति ते कथितं वत्स ! किमन्यत्
श्रोतुमिच्छसि ।
कथयिष्यामि तद्भक्त्या तव प्रीत्या
त्रिलोचन ! ॥"
श्रीपार्व्वत्युवाच ।
"दशम्यां बलिदानन्तु निषिद्धं जगदीश्वर ! ।
कथं त्रिकालं पूजा सा सम्भवेत् परमेश्वर ! ॥
श्रीशिव उवाच ।
नवमीतिथिमाश्रित्य यत्र पूजाविधिर्भवेत् ।
निषिद्धं वलिदानन्तु दशम्यां तत्र सुन्दरि ! ॥
नवमीदिनमाश्रित्य पूजाविधिरिहोदितः ।
दशम्यां वलिदानन्तु निषिद्धं नात्र पार्व्वति !
॥
ज्ञानामृतसारे पूर्ब्बं पूजाप्रकारं उक्त्राः ।
"मुहूर्त्तव्यापिनी चापि प्रातश्चेन्नवमी तिथिः ।
तद्दिने पूजनं कार्य्यं त्रिसन्ध्यं वरवर्णिनि ! ॥
त्रिकालं पूजयेत्तत्र नैककाले कदाचन ॥"
अथ कात्यायनीतन्त्रे अष्टसप्ततिपटले ।
"कुम्भराशिगते चन्द्रे नवम्यां कार्त्तिकस्य च
।
उषस्यर्द्धोदितो भानुर्द्दुर्गामाराध्य यत्नवान् ॥

गच्छति इतस्ततो वातीति ।) वायौ, पुं । (गच्छ-
न्त्यस्मिन् जीवा इति । महादेवः । यथा,
महाभारते । १३ । १७ । १५१ ।
“विमुक्तो मुक्ततेजाश्च श्रीमान् श्रीवर्द्धनो जगत्
॥”)
जङ्गमे त्रि । इति मेदिनी । ते, १०८ ॥

**जगत्कर्त्ता**, [ऋ] पुं, (करोतीति । कृ + तृच् ।

ततो जगतः कर्त्ता कारकः ।) ब्रह्मा । इति
हेमचन्द्रः । २ । १२६ ॥

**जगत्प्राणः**, पुं, (जगतां विश्वस्थजीवानां प्राणो

जीवनम् ।) वायुः । इत्यमरः । १ । १ । ३५ ॥

**जगत्साक्षी**, [न्] पुं, (जगतां भुवनानां साक्षी

कर्म्मद्रष्टा ।) सूर्य्यः । इति हेमचन्द्रः । २ । १२
॥

**जगती**, स्त्री, (गच्छति कार्य्यत्वात् नष्टा भवतीति ।

गम + “वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्च ।”
उणां २ । ८४ । इति अतिप्रत्ययेन निपा-
तनात् साधुः । ततः शतृतुल्यत्वात् “उगितश्च
।”
४ । १ । ६ । इति ङीप् ।) भुवनम् । (यथा,
रामायणे । २ । ६९ । ११ ।
“स्वप्नेऽपि सागरं शुष्कं चन्द्रञ्च पतितं भुवि ।
उपरुद्धाञ्च जगतीं तमसेव समावृताम् ॥”)
पृथ्वी । (यथा, मार्कण्डेये । ९ । २२ ।
“तमायान्तं ततो देवी सर्व्वदैत्यजनेश्वरम् ।
जगत्यां गातयामास भित्वा शूलेन वक्षसि ॥”)

स्वनामख्यातपण्डितविशेषः । स च
न्यायशास्त्र-
टीकाहास्यार्णवादिग्रन्थप्रणेता अस्य
जन्मस्थानं
नवद्वीपः ॥)

**जगद्गौरी**, स्त्री, (जगत्सु मध्ये गौरी ।) मनसा-

देवी । इति शब्दरत्नावली ॥

**जगद्धात्री**, स्त्री, (जगतां धात्री विधात्री ।) दुर्गा-

विशेषः । अस्याः पूजायाः कालो विधिश्च
यथा,
निगमकल्पसारज्ञानसारस्वतेग्रन्थे दुर्गाकल्पे
।
श्रीशिव उवाच ।
“प्रसीद जगतां मातर्ज्जगन्निस्तारकारिणि ! ।
अतएव महेशानि ! तवाहं शरणागतः ॥
त्वया यत् कथितं पूर्ब्बं तत् सर्व्वञ्च श्रुतं मया
।
जगद्धात्री महादुर्गा चतुर्व्वर्गफलप्रदा ॥
तस्याः पूजाविधिदिनं कालं तन्न प्रकाशितम्
।
तदेव कथयेशानि ! श्रोतुमिच्छामि साम्प्रतम्
॥
श्रीदेव्युवाच ।
कथयामि महेशान ! सावधानोऽवधारय ।
तस्याः पूजाविधिदिनं समयं भावभेदतः ॥
कार्त्तिकि शुक्लपक्षे च या दुर्गानवमी तिथिः ।
सा प्रशस्ता महादेव । महादुर्गाप्रपूजने ॥

पुत्त्रारोग्यबलं लेभे लोकसाक्षित्वमेव च ।
तां तिथिं प्राप्य मनुजः शनिभौमदिने यदि ॥
प्रपूजयेन्महादुर्गां धर्म्मकामार्थमोक्षदाम् ॥”
शक्तिसङ्गमतन्त्रे ।
“कार्त्तिकस्य सिते पक्षे नवम्यां जगदीश्वरीम्
।
त्रिकालमेककालं वा वर्षे वर्षे प्रपूजयेत् ॥
निर्म्माय प्रतिमां शक्त्या जगद्धात्र्या
विधानतः ।
पूजयित्वा परदिने प्रतिमां तां विसर्ज्जयेत् ॥
एवं कृत्वा चक्रवर्त्ती भवेत् साधकसत्तमः ।
पुत्त्रपौत्त्रधनैश्वर्य्यसंयुतास्य भवेत् पुरी ॥”
तन्त्रान्तरे ।
“कुजवारे युगाद्यायां नवम्यान्तु जगत्प्रसूः ।
प्रादुर्भूता महेशानी तत्र तां परिपूजयेत् ॥”
तन्त्रान्तरे ।
“त्रिकालं पूजयेद्दुर्गां मूलेनैकाक्षरेण च ।
नानारत्नविधानेन गीतवाद्यपुरःसरम् ॥
कार्त्तिकस्य सिते पक्षे नवम्याञ्च विशेषतः ।
कृत्वैवं साधकश्रेष्ठो लभेद्राज्यमकण्टकम् ॥”

योगिनीतन्त्रे ।
“कार्त्तिकेऽमलपक्षे तु नवम्याञ्च विशेषतः ।
प्रगल्भान्तु जगद्धात्रीं पूजयेद्दीपमालया ॥”
आगमतत्त्वसारे ।
“कार्त्तिकेऽमलपक्षे तु नवम्यां भौमवासरे ।
आविर्भूता जगद्धात्री युगादौ दैत्यनाशिनी ॥”
उत्तरकामाख्यातन्त्रे ।
“कार्त्तिके शुक्लपक्षे तु त्रेतायां प्रथमेऽहनि ।
त्रिसन्ध्यं पूजयेद्देवीं दुर्गां सम्पत्प्रवृद्धये ॥” * ॥
कुब्जिकातन्त्रे ।
“कार्त्तिके शुक्लपक्षे तु नवम्यां जगदम्बिकाम् ।
दुर्गां प्रपूजयेद्भक्त्या धर्म्मकामार्थसिद्धये ॥” * ॥
दुर्गाकल्पे विद्योत्पत्तिः ।
“कार्त्तिके शुक्लपक्षेऽह्नि भौमवारे जगत्प्रसूः ।
सर्व्वदेवहितार्थाय दुर्व्वृत्तशमनाय च ॥
आविरासीज्जगच्छान्त्यैयुगादौ परमेश्वरी ॥”
व्रतकालविवेकधृतवचनम् ।
“कार्त्तिकेऽमलपक्षस्य त्रेतायां नवमेऽहनि ।
पूजयेत्तां जगद्धात्रीं सिंहपृष्ठे निषेदुषीम् ॥” * ॥
स्मृतिः ।
“युगाद्या वर्षवृद्धिश्च सप्तमी पार्व्वतीप्रिया ।
रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता ॥” * ॥
कृत्यतत्त्वार्णवे ।
“कार्त्तिकेऽमलपक्षे तु युगाद्या नवमी स्मृता ।
पूर्ब्बाह्णसमये तत्र पूजाविधिरिहोदितः ॥” * ॥
भविष्यपुराणकृत्यतत्त्वार्णवयोः ।
“कार्त्तिके शुक्लपक्षे तु युगाद्या नवमी स्मृता ।
पूर्ब्बाह्णसमये काष्ठात्मिका परदिने यदि ॥
तत्र पूजादिकं कुर्य्यात् पिण्डनिर्व्वपणादृते ॥”
स्मृतिसागरे
“कार्त्तिकस्य युगाद्यायामृद्धिकामोऽर्च्चयेदुमाम् ॥”
इति जगद्धात्रीपूजाकालव्यवस्था ॥ * ॥ * ॥
अथ जगद्धात्रीविद्योत्पत्तिः ।
श्रीपार्व्वत्युवाच ।
“भगवन् ! प्राणनाथेश ! सर्व्वतत्त्वविशारद ! ।
श्रुता कात्यायनीविद्यासमुत्पत्तिस्त्रिलोचन! ॥
महादुर्गाजगद्धात्रीविद्योत्पत्तिर्भ्मेद्यतः ।
तत् सर्व्वं ब्रूहि भगवन् ! कृपया परमेश्वर ! ॥
यदि न कथ्यते देव ! विमुञ्चामि तदा तनुम् ॥
श्रीशिव उवाच ।

वायुमाहुः समाहूय किमेतत् परमाद्भुतम् ॥
विजानीहि मरुद्वीर ! मातरिश्वा
दिशःपते ! ॥
ततो वायुर्द्रुतं तत्र गतस्तेजोऽन्तिकं ततः ।
तमन्तिकमुपायातं प्राह तेजोमयी ततः ॥
बलवान् कस्त्वमायातो वीर्य्यं किञ्चास्ति वा त्वयि ।
आदातुं शक्यते सर्व्वं पृथिवीतलसम्भवम् ॥
इति प्रत्युक्तवान् वायुः क्षणं तत्रैव तिष्ठति ।
आदत्स्वैतत् तृणमिति निदधौ वायवे तृणम् ॥
वायुः सर्व्वप्रयत्नेन नादातुं तत् क्षमोऽभवत् ।
ततो देवाः प्राहुरग्निं भीता उद्विग्नमानसाः ॥
अग्ने ! एतद्विजानीहि किमेतत् कर्म्म चाद्भुतम् ।
इत्युक्तो देवतावृन्दैरग्निस्तेजोऽन्तिकं गतः ॥
अमरा जातवेदा वा तेजो वागित्युवाच तम् ।
स प्रोक्तवानग्निरस्मि सर्व्वदाहकशक्तिकः ॥
दहैतत्तृणमत्यल्पमिति तस्मै तृणं ददौ ।
अग्निः सर्व्वप्रयत्नेन दग्धुं नैतत् क्षमोऽभवत् ॥
ततो निववृते वह्निर्भूत्वा सोऽपत्रपान्वितः ।
एकत्रस्थाः सुराः सर्व्वे मन्त्रयामासुरुत्तमम् ॥
इयमेवेश्वरी नूनं स्तोष्यामो नेश्चरा वयम् ।
इति निश्चित्य सुधियस्तुष्टुवुः परमेश्वरीम् ॥
प्राहुर्द्देवगणाः सर्व्वे त्वमीशा नेश्वरा वयम् ।
ईश्वरत्वाभिमानेन यदस्माकं सुदुष्कृतम् ॥
क्षन्तुमर्हसि तत् सर्व्वं कृपया जगदम्बिके ! ।
तव रूपं सुगोप्यं यन्मङ्गल्यं सर्व्वमङ्गलम् ॥
तद्द्रष्टुं वयमिच्छामो देहि दर्शनमुत्तमम् ।
इत्युक्तानां सुबुद्धीनामाविरासीच्छिवाम्बरे ॥
तेजस्यन्तर्हिते तस्मिन् चमत्कारकलेवरे ।

प्राणायामं विना देवि ! जपमात्रेण सिद्धिदा
मन्त्रस्यास्य ऋषिर्द्देवि ! नारदः परिकीर्त्तितः
गायत्री छन्द आख्यातं जगद्धात्री च देवता
चतुर्व्वर्गप्रदा दुर्गा सर्व्वसत्त्वेषु संस्थिता ॥
दीर्घस्वरसमायुक्तनिजबीजानि पार्व्वति ! ।
विन्यसेदात्मनो देहे हृदयादिषु शङ्करि ! ॥
पूर्ब्बवन्न्यासवर्ण्णन्तु पूर्ब्बवत् कर्म्म चाचरेत् ।
कालीवदाचरेद्विद्यां जपेद्विद्यामहर्न्निशम् ॥
लक्षद्वादशकैर्द्देवि ! पुरश्चरणमीरितम् ।
यथास्थाने यथाकाले यथाचारविधानतः ॥
प्रजपेत् परया भक्त्या दुर्गां दुर्गतिनाशिनीम् ॥ * ॥
ध्यानमस्याः प्रवक्ष्यामि शृणुष्व नगनन्दिनि ! ॥
सिंहस्कन्धाधिसंरूढां नानालङ्कारभूषिताम् ।
चतुर्भुजां महादेवीं नागयज्ञोपवीतिनीम् ॥
शङ्खचक्रधनुर्व्वाणलोचनत्रितयान्विताम् ।
रक्तवस्त्रपरीधानां बालार्कसदृशीतनुम् ॥
नारदाद्यैर्म्मुनिगणैः सेवितां भवसुन्दरीम् ।
त्रिबलीबलयोपेतनाभिनालमृणालिनीम् ॥
रत्नद्वीपे महाद्वीपे सिंहासनसमन्विते ॥
प्रफुल्लकमलारूढां ध्यायेत्तां भवगेहिनीम् ।
एवं ध्यात्वा जगद्धात्रीं पूर्ब्बोक्तपूजनं चरेत् ॥
यन्त्रमस्याः प्रवक्ष्यामि शृणुष्व हरवल्लभे ! ।
त्रिकोणत्रितयञ्चादौ त्रैविम्बसहितन्ततः ॥
अष्टपत्रं ततो लिख्य त्रिरेखासहितं ततः ।
वज्रभूपुरसंयुक्तं विलिखेद्विधिनामुना ॥
तत्र तां पूजयेद्देवीं मूलप्रकृतिरूपिणीम् ।
प्रभाद्याः शक्तयः पूज्या गन्धाद्यैर्नवकोणके ॥
प्रभा माया जया सूक्ष्मा विशुद्धा नन्दिनी पुनः ।
सुप्रभा विजया सर्व्वसिद्धिदा नव शक्तयः ॥
ह्रीमाद्याः पूजयेत्तास्तु रक्तचन्दनदूर्व्वकैः ।
शङ्खपद्मनिधी देव्या वामदक्षिणयोगतः ॥
पूजयेत् परया भक्त्या रक्तचन्दनदूर्व्वकैः ।
अर्घ्यदानं ततः कुर्य्यात् पूजान्ते नगनन्दिनि ! ॥
अङ्गावृतिः पुनः पूज्या पत्रकोणेषु मातरः ।
वज्राद्यायुधसंयुक्ता भूपुरे लोकनायकाः ॥”
इति कात्यायनीतन्त्रे ७७ पटोलः ॥ * ॥
श्रीशिव उवाच ।
“पूजा तिथिविशेषेण चतुर्व्वर्गफलाप्तये ।
कर्त्तव्या या तु दुर्गायास्तां शृणुष्व शुभानने ! ॥
अष्टम्याञ्च चतुर्द्दश्यां नवम्यां वापि यत्नतः ।
यः पूजयेन्महादुर्गां सोऽभीष्टफलमाप्नुयात् ॥

शृणु पार्व्वति ! वक्ष्यामि रहस्यं परमाद्भुतम् ।
यत् श्रुत्वा लभते देवि ! सौभाग्यं सुखमुत्तमम् ॥
पुरा पुरन्दरमुखाः स्वेश्वरत्वाभिमानिनः ।
प्राहुः किमीश्वरोऽस्त्यस्मदतिरिक्तःसुरानिति ॥
अथ दुर्गा जगन्माता नित्या चैतन्यरूपिणी ।
एतेषां धर्म्मसेतूनामिन्द्रादीनां नियन्त्रणम् ॥
करिष्यामीति निश्चित्य ज्योतीरूपं दधात्यलम् ।
तेषामाविरभूद्दर्गा जगद्धात्री जगन्मयी ॥
कोटिसूर्य्यप्रतीकाशा चन्द्रकोटिसमप्रभा ।
ज्वलन्तं पर्व्वतमिव सर्व्वलोकभयङ्करी ॥
तद्दृशुः सुराः सर्व्वे भयमापुर्म्महौजसः ।
किमेतन्न विनिश्चेतुं शक्तास्ते ह्यभवन् सुराः ॥
मृगेन्द्रोपरि सुस्मेरा सर्व्वालङ्कारभूषिता ॥
चतुर्भुजा महादेवी रक्ताम्बरधरा शुभा ।
बालार्कसदृशीदेहा नागयज्ञोपवीतिनी ॥
त्रिनेत्रा कोटिचन्द्राभा देवर्षिमुनिसेविता ।
दर्शयामास देवानामेवं रूपं जगन्मयी ॥
ततस्तां तुष्टुवुर्द्देवा जगद्धात्रीं महेश्वरीम् ।
वरं प्रापुः सुरगणा यथेष्टं त्रिदशालये ॥
तत्रैवान्तर्हिता देवी महादुर्गा जगन्मयी ।
इति ते कथितं भद्रे ! विद्योत्पत्तिं सुदुर्ल्लभाम् ॥”
इति कात्यायनीतन्त्रे ७६ पटलः ॥ * ॥
श्रीशिव उवाच ।
“अथ दुर्गामनुं वक्ष्ये शृणुष्व हरवल्लभे ! ।
यस्य प्रसादमात्रेण मुच्यते भवबन्धनात् ॥
थान्तवर्णं समुद्धृत्य वामकर्णं विभूषितम् ।
इन्दुबिन्दुसमायुक्तं बीजं परमदुर्ल्लभम् ॥
चतुर्व्वर्गप्रदं साक्षान्महापातकनाशनम् ।
एकाक्षरीसमा नास्ति विद्या त्रिभुवने प्रिये ! ॥
कूर्च्चाद्यां वा जपेद्विद्यां तदन्ते वह्निसुन्दरी ।
लज्जाद्यां वा जपेद्विद्यां फडन्तं वा जपेत् सुधीः ॥
बधूबीजयुतां वापि स्वाहान्तां वा जपेत् पुनः ।
लक्ष्म्याद्यां वा जपेद्विद्यां चतुर्व्वर्गफलाप्तये ॥
वाग्भवाद्यां जपेद्वापि प्रणवाद्यां जपेत् पुनः ।
कामबीजादिकां वापि फडन्तां वा जपेत् पुनः ॥
त्र्यक्षरी विविधा विद्या कथिता ब्रह्मणा पुरा ।
विना गन्धैर्व्विना पुष्पैर्व्विना होमपुरःसरैः ॥
पौर्णमास्याममायां वा रविसंक्रमणे तथा ।
शनिभौमदिने चैव पूजयेत् परमेश्वरीम् ॥
सुखं सौभाग्यमारोग्यमैश्वर्य्यं लभते ध्रुवम् ।
शनिभौमदिने चैव यदि स्यादष्टमी तिथिः ॥
तत्र पूज्या जगद्धात्री पुत्त्रपौत्त्रधनप्रदा ।
सोमवारेऽप्यमावास्या मघानक्षत्रसंयुता ॥
उत्तरा सप्तमीयुक्ता आदित्याहे च पार्व्वति ! ।
चतुर्थ्यङ्गारवारे च रोहिणीसंयुता यदि ॥
गुर्व्वष्टम्यां तथा स्वाती यदि स्यात् परमेश्वरि ! ।
एषु पूजा महादेव्याः कर्त्तव्या सर्व्वसिद्धये ॥
मधुमासे सिताष्टम्यां वैशाखत्रितयेऽहनि ।

पौर्णमास्यां तथा ज्यैष्ठे अमायाञ्च महेश्वरि ! ॥
मिथुनेऽर्के द्वितीयायां श्रावणे द्वादशीदिने ।
भाद्रे मास्यसिताष्टम्यां आश्विने शुक्लपक्षके ॥
सप्तम्यामेव चाष्टम्यां नवम्याञ्च विशेषतः ।
अमायां कार्त्तिके चैव नवम्यां शुक्लपक्षके ॥
नक्तं मार्गशिरे भूते पौषेऽष्टम्यां सितेतरे ।
माघे च सितपञ्चम्यां फाल्गुन्यां च सुरेश्वरि ! ॥
एषु द्वादशमासेषु तिथिष्वेतासु पार्व्वतीम् ।
पूजयेत् परया भक्त्या यथाविभवविस्तरैः ॥
राजराजेश्वरो भूत्वा वसेत् कल्पायुतं दिवि ।
पुत्त्रपौत्त्रधनर्द्धीनामधिपोजायते ऽचिरात् ॥
अन्ते देवीपुरं याति भुक्त्रा भोगान् यथेप्सि-
तान् ॥
श्रीपार्व्वत्युवाच ।
देवदेव ! महादेव ! विश्वनाथ ! महेश्वर ! ।
श्रुता तव मुखाम्भोजाद्दुर्गापूजा महाफला ॥
केन वा पूजिता देवी कस्य वा किञ्च सिध्यति ।
केन प्रकाशिता मूर्त्तिस्तत् सर्व्वं कथय प्रभो ! ॥
श्रीशिव उवाच ।
रामरावणयोर्युद्धे दुर्गा रामेण पूजिता ।
अवधीद्रावणं राम इषे मासि प्रपूजनात् ॥
तेन लोकाश्चरिष्यन्ति दुर्गायाः शारदोत्सवम् ।
एवमाराध्य देवेशीमिन्द्रजिद्रावणात्मजः ॥
अभवत् कार्त्तिके यो वै दुर्गामिवं समर्च्चयन् ।
अमायां कार्त्तिके मासि तारकासुरनाशकः ॥
कुम्भराशिगते चन्द्रे नवम्यां कार्त्तिकस्य च ।
उषस्यर्द्धोदितो भानुर्द्दुर्गामाराध्य यत्नवान् ॥
पुत्रारोग्यवरं लेभे लोकसाक्षित्वमेव च ।
तां तिथिं प्राप्य मनुजः शनिभौमदिने यदि ॥
प्रपूजयेन्महादुर्गां धर्म्मकामार्थमोक्षदाम् ।
एवं मार्गशिरे मासि वृषराशिगते विधौ ॥
चतुर्द्दश्यां निशायान्तु चन्द्रः संपूज्य पार्व्वतीम् ।
महापापाद्विमुक्तोऽसौ रात्रीशत्वमवाप च ॥
तेन मार्गशिरे मासि चतुर्द्दश्यां प्रपूजयेत् ।
इन्द्रत्वमेवमिन्द्रोऽसौ लेभे दुर्गां समर्च्चयन् ॥
ब्रह्मत्वमपि विष्णुत्वं रुद्रत्वञ्च महेश्वरि ! ।
देवत्वं सर्व्वदेवानामभवच्चण्डिकार्च्चनात् ॥
भूतं भव्यं भविष्यं यत् स्थावराणि चराणि च ।
सर्व्वं दुर्गाप्रभावेण स्वस्वभोगमवाप्नुयुः ॥
विना दुर्गां महेशानि ! न किञ्चिदपि वर्त्तते ।
इति ते कथितं देवि ! संक्षेपेण तवाग्रतः ॥
महादुर्गाजगद्धात्रीविद्योत्पत्तिं सुदुर्ल्लभाम् ॥”

विष्णुः । इति तस्य सहस्रनाम ॥ (यथा, विष्णु-
पुराणे । १ । १२ । ३२ ।
“ते समेत्य जगद्योनिमनादिनिधनं हरिम् ॥”
केचित्तु हरिविशेषणं कल्पयन्ति ॥)
ब्रह्मा । (यथा, कुमारे । २ । ९ ।
“जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः ॥”)
पृथिव्यां स्त्री । इति शब्दचन्द्रिका ॥

**जगद्वहा**, स्त्री, (जगन्ति वहति धारयतीति ।
वह + अच् । अजादित्वात् टाप् ।) पृथिवी ।
इति त्रिकाण्डशेषः ॥

**जगद्विनाशः**, पुं, (जगतां विनाशो ध्वंसः अखिल-
कार्य्यनाश इत्यर्थः यस्मिन् ।) युगान्तः । इति
हलायुधः ॥ (प्रलयकाले च अखिलकार्य्य-
शून्यत्वं यथाह मनुः । १ । ५२ -- ५४ ।
“यदा स्वपिति शान्तात्मा तदा सर्व्वं निमीलति
॥
तस्मिन् स्वपिति तु स्वस्थे कर्म्मात्मानः
शरीरिणः ।
स्वकर्म्मभ्यो निवर्त्तन्ते मनश्च ग्लानिमृच्छति ॥
युगपच्च प्रलीयन्ते तदा तस्मिन् महात्मनि ।
तदायं सर्व्वभूतात्मा सुखं स्वपिति निर्वृतः ॥”)

**जगन्नाथः**, पुं, (जगतां नाथ ईश्वरः ।) विष्णुः ।
इति हेमचन्द्रः ॥ (यथा, देवीभागवते । १ । ४ ।
३६ ।
“देवदेव ! जगन्नाथ ! भूतभव्यभवत्प्रभो ! ।
तपश्चरसि कस्मात्त्वं किं ध्यायसि जनार्द्दन !
॥”)
पुरुषोत्तमक्षेत्रम् । यथा,
मुनय ऊचुः ।
“पुरुषोत्तमाख्यं सुमहत् क्षेत्रं परमपावनम् ।
यत्रास्ते दारवतनुः श्रीशो मानुषलीलया ॥
दर्शनान्मुक्तिदः साक्षात् सर्व्वतीर्थफलप्रदः ।
तन्नो विस्तरतो ब्रूहि तत् क्षेत्रं केन निर्म्मितम् ॥
ज्योतिःप्रकाशो भगवान् साक्षान्नारायणः प्रभुः ।
कथं दारुमयस्तस्मिन्नास्ते परमपूरुषः ॥
जैमिनिरुवाच ।
एतत् क्षेत्रवरञ्चास्य वपुर्भूतं महात्मनः ।
स्वयं वपुष्मान् यत्रास्ते स्वनाम्नाख्यापितं हि
तत् ॥
यथा चानुदिनं देवाः सिद्ध्वाः ब्रह्मर्षयस्तथा ।

तत्तीरे निवसन्तो मां पश्यन्तश्चर्म्मचक्षुषा
॥
तदम्भसा क्षीणपापा मम सायुज्यमाप्नुयुः
॥
व्रतेषु तीर्थेषु च यज्ञदानयोः
पुण्यं यदुक्तं विमलात्मनां हि ।
अहर्निवासाल्लभते च सर्व्वं
निमेषवासात् खलु चाश्वमेधिकम् ॥
जैमिनिरुवाच ।
उदकार्त्तः समागत्य कुतश्चिद्वायसोत्तमः
।
कारणोदकसम्पूर्णे तस्मिन् कुण्डे
निमज्जितः ॥
विलोक्य माधवं नीलरत्नकान्तिं
कृपानिधिम् ।
काकदेहं समुत्सृज्य लुठमानं मुहुः क्षितौ
॥
शङ्खचक्रगदापाणिस्तस्यपार्श्वे
व्यवस्थितः ॥”
यमं प्रति लक्ष्मीवाक्यम् ।
“पञ्चक्रोशमिदं क्षेत्रं समुद्रान्तर्व्यवस्थितम्
।
त्रिक्रोशं तीर्थराजस्य तटभूमौ सुनिर्म्मलम्
॥
सुवर्णबालुकाकीर्णं नीलपर्व्वतशोभितम् ।
योऽसौ विश्वेश्वरो देवः
साक्षान्नारायणात्मकः ॥
संयम्य विषयग्रामं समुद्रतटमास्थितः ।
उपासितुं जगन्नाथं चतुःषष्ट्युत्तमः प्रभुः
॥
यमेश्वर इति ख्यातो यमसंयमनाशनः ।
यं दृष्ट्वा पूजयित्वा तु कोटिलिङ्गफलं
लभेत् ॥
सीमा प्रतीची क्षेत्रस्य शङ्खाकारस्य मूर्द्धनि
।
शङ्खाग्रे नीलकण्ठः स्यादेतत् क्रोशं
सुदुर्लभम् ॥
परमं पावनं क्षेत्रं साक्षान्नारायणस्य वै ।
शङ्खस्योत्तरभागस्तु समुद्रोदकसंप्लुतः ॥
यत्सम्पर्कात् ससुद्रोऽत्र तीर्थराजत्वमागतः
।
यथायं भगवान्मुक्तिप्रदो दृष्टिपथं गतः ॥

इति कात्यायनीतन्त्रे ७८ पटलः ॥

(सरस्वती । यथा, मार्कण्डेये । २३ । ३० ।

"जगद्धात्रीमहं देवीमारिराधयिषुः शुभाम् ।

स्तोष्ये प्रणम्य शिरसा ब्रह्मयोनिं सरस्वतीम् ॥")

**जगद्बलः**, पुं, (जगतां बलं यस्मात् ।) वायुः । इति त्रिकाण्डशेषः ॥

**जगद्योनिः**, पुं, (जगतां योनिरुत्पत्तिस्थानम् ।) शिवः । इति त्रिकाण्डशेषः ॥ (यथा, महा- भारते । ७ । २०० । १३ ।

"जगद्योनिं जगद्बीजं जयिनं जगतो गतिम् ॥")

समर्च्चितुमिहायान्ति देवेशं न तथान्यतः ॥

अहो ! तत् परमं क्षेत्रं विस्तृतं दशयोजनैः ।

तीर्थराजस्य सलिलादुत्थितं बालुकाचितम् ॥

नीलाचलेन महता मध्यस्थेन विराजितम् ।

एकं स्तनमिवावन्याः सुदूरात् परिभावितम् ॥"

ब्रह्माणं प्रति विष्णुवाक्यम् ।

"सागरस्योत्तरे तीरे महानद्यास्तु दक्षिणे ।

स प्रदेशः पृथिव्यां हि सर्व्वतीर्थफलप्रदः ॥

एकाम्रकाननाद्यावद्दक्षिणोदधितीरभूः ।

पदात् पदात् श्रेष्ठतमः क्रमेण परिकीर्त्तितः ॥

सिन्धुतीरे च यो ब्रह्मन् ! राजते नीलपर्व्वतः ।

पृथिव्यां गोपितं स्थानं तव चापि सुदुर्लभम् ॥

सुरासुराणां दुर्ज्ञेयं माययाच्छादितं मम ।

सर्व्वसङ्गपरित्यक्तस्तत्र तिष्ठामि देहभृत् ॥

सृष्ट्यालयेन नाक्रान्तं क्षेत्रं मे पुरुषोत्तमम् ।

नीलाद्रेरन्तरभुवि कल्पन्यग्रोधमूलतः ॥

वारुण्यां दिशि यत् कुण्डं रोहिणं नामविश्रुतम् ॥

तथेदं मरणात् क्षेत्रं सिन्धुस्नानाद्विमुक्तिदम् ।

चिच्छेद ब्रह्मणः पूर्ब्बं रुद्रः क्रोधात्तु पञ्चमम् ॥

तच्छिरो दुस्त्यजं गृह्णन् ब्रह्माण्डं परिबभ्रमे ।

तत्रागतो यदा ब्रह्मकपालं परिमुक्तवान् ॥

कपालमोचनं तीर्थं द्वितीयावर्त्तसंस्थितम् ।

तस्य दक्षिणपार्श्वे तु मरणं भवमोचनम् ॥

तृतीयावर्त्तसीमायां शक्तिं मे विमलाह्वयाम् ।

जानीहि धर्म्मराज ! त्वं भुक्तिमुक्तिफलप्रदाम् ॥

नाभिदेशे स्थितं ह्येतत् त्रयं कुण्डं वटो विभुः ।

कपालमोचनं यावदर्द्धशिनी प्रतिष्ठिता ॥

मध्यं शङ्खस्य जानीयात् सुगुप्तं चक्रपाणिना ।

तां दृष्ट्वा प्रणमेद्यस्तु भोगान् सोऽश्नातिशाश्वतान् ॥

सिन्धुराजस्य सलिलात् यावन्मूलं वटस्य वै ।

कीटपक्षिमनुष्याणां मरणान्मुक्तिदो मतः ॥

अन्तर्व्वेदी त्वियं पुण्या वाञ्छ्यते त्रिदशैरपि ।

अत्र स्थितान् हि पश्यन्ति सर्व्वांश्चक्राब्जधारिणः ॥

कामाख्या क्षेत्रपालश्च विमला चान्तरा स्थिता ।

साक्षाद्ब्रह्मस्वरूपोऽसौ नृसिंहो दक्षिणे विभोः ॥

अन्तर्व्वेद्या रक्षणार्थं शक्तयोऽष्टौ प्रकल्पिताः ।

उग्रेण तपसा पूर्ब्बमहं सर्व्वेण भाविता ॥

पत्न्यर्थं सा मया सृष्टा गौरी तस्याथ भाविनी ।

सर्व्वसौन्दर्य्यवसतिर्व्वपुषो मे विनिर्गता ॥

तदा दृष्टा मया भद्रे ! वचनं मे प्रियं कुरु ।

अन्तर्व्वेदीं रक्ष मम परितस्त्वं स्वमूर्त्तिभिः ॥

सात्र तिष्ठति मत्प्रीत्या अष्टधा दिक्षु संस्थिता ।
मङ्गला वठमूले तु पश्चिमे विमला तथा ।
शङ्खस्य पूर्ब्बभागे तु संस्थिता सर्व्वमङ्गला ॥
अर्द्धाशनी तथा लम्बा कुवेरदिशि संस्थिता ।
कालरात्रिर्दक्षिणस्यां पूर्ब्बस्यान्तु मरीचिका ॥
कालरात्र्यास्तथा पश्चात् चण्डरूपा व्यवस्थिता ।
रुद्राण्याश्चाष्टधा भेदं दृष्ट्वा रुद्रोऽपि शङ्करः ।
आत्मानमष्टधा भित्त्वा उपास्ते परमेश्वरम् ॥
कपालमोचनं नाम क्षेत्रपालं यमेश्वरम् ।
मार्कण्डेयं तथेशानं विश्वेशं नीलकण्ठकम् ॥
वटमूले वटेशञ्च लिङ्गान्यष्टौ महेशितुः ।
यानि दृष्ट्वा तथा स्मृत्वा पूजयित्वा विमुच्यते ॥”
तत्र जगन्नाथस्याविर्भावकारणम्।
जैमिनिरुवाच ।
“इन्द्रद्युम्नस्य नृपतेः क्षेत्रे श्रीपुरुषोत्तमे ।
जगदीशप्रसादाय पितामहनिदेशतः ॥
एकोनं क्रमशः संस्थामवाप पृथिवीपतेः ॥
सहस्रं हयमेधस्य यथावद्विधिचोदितम्।
सूत्या सप्तदिनात् पूर्ब्बं या रात्रिरभवद्द्विजाः ! ॥
तस्यास्तुरीयप्रहरे ध्यायतो विष्णुमव्ययम् ।
ध्याने तस्मिन् ददर्शासौ महाभाग्यवशान्नृपः ॥
प्रत्यक्षमिव स श्वेतद्वीपं स्फाटिकनिर्म्मितम् ।
तन्मध्ये ददृशे देवं शङ्खचक्रगदाधरम् ॥
नीलजीमूतसङ्काशं वनमालाविभूषितम् ।
दक्षपार्श्वे स्थितं तस्य अनन्तं धरणीधरम् ॥
हललाङ्गलशङ्खाब्जस्फुरद्बाहुचतुष्टयम् ।
दक्षपार्श्वे स्थितां विष्णोर्लक्ष्मीं तां शुभलक्षणाम् ॥
वराभयाब्जहस्तां वै कुङ्कुमाभां सुलोचनाम् ।
ददर्श पद्मासनगां लावण्याम्बुधिपुत्त्रिकाम्॥
पितामहञ्च ददृशे पुरतोऽस्य कृताञ्जलिम् ।
वामपार्श्वस्थितं चक्रं सर्व्वज्ञानमयं विभोः ॥
ततः प्रववृते सूत्या नृपतेर्वाजिमेधिका ।
शस्तैः स्तोत्रैर्दिव्यदृग्भिर्वर्णक्रमसमुज्ज्वलैः ॥
दक्षिणे तटभूदेशे विश्वेश्वरसमीपतः ।
नियुक्ताः सेवका राज्ञा ससम्भ्रममुपस्थिताः॥
न्यवेदयन्तो नृपतिं कृताञ्जलिपुटा द्विजाः ।
देव ! दृष्टो महावृक्षस्तटभूमौ महोदधेः ॥
प्रविष्टाग्रसमुद्रान्तकल्लोलप्लवमूलकः।
सुसमृद्धौ ततो यातौ यत्रासौ भगवान् द्रुमः ॥
पुनः पुनः प्रणम्यैनं हर्षाश्रुनयनो नृपः ।
द्विजैराहारयामास तरुं कक्कोललोहितम् ॥
स्रग्गन्धालेपनं दिव्यं महावेदीं विनिन्यतुः ।
वचसा नारदस्यैनं पूजयामास पार्थिवः ॥
पूजावसाने पप्रच्छ नारदं मुनिसत्तमम् ।
कीदृशीं प्रतिमां विष्णोर्घटयिष्यति कः पुनः ॥
विचारयन्तौ तावित्थं यावन्नारदपार्थिवौ ।
अशरीरा ततो वाणी शुश्राव चान्तरीक्षतः ॥
अपौरुषेयो भगवान् सद्विचारपथे स्थितः ।
सुगुप्तायां महावेद्यां स्वयं सोऽवतरिष्यति ॥
प्रच्छाद्यतां दिनान्येव यावत् पञ्चदशानि वै ।
उपस्थितोऽयं यो वृद्धः शस्त्रपाणिस्तु वर्द्धकी ॥
एनमन्तः प्रवेश्यैव द्वारं बध्नन्तु यत्नतः ।
बहिर्वाद्यानि कुर्व्वन्तु यावत्तु घटना भवेत् ॥
श्रुतस्तद्घटनाशब्दो वाधिर्य्यान्धित्वदायकः ।
नरके वसतिञ्चैव कुर्य्यात् सन्ताननाशनम् ॥
नान्तः प्रवेशनं कुर्य्यान्न पश्येच्च कदाचन ।
नियुक्तान्यः प्रपश्येच्चेद्राज्ञो राष्ट्रस्य चैव हि ॥
द्रष्टुश्चापि महाभीतिरन्धता च युगे युगे ।
तच्छ्रुत्वा नारदाद्यास्ते यथोक्तं विष्णुना स्वयम् ॥
चिकीर्षन्ति तथा कर्त्तुं तत्रायातस्तु वर्द्धकी ।
प्रोवाच नृपतिं सोऽथ स्वप्ने दृष्टास्तु यास्त्वया ॥
ता एवाहं घटिष्यामि दारुणा दिव्यरूपिणा ।
इत्युक्त्वान्तर्द्दधे वेद्यां वृद्धवर्द्धकिरूपधृक् ॥
वञ्चनार्थं मनुष्याणां साक्षान्नारायणो विभुः ।
ततः स पृथिवीपालस्तथा कृत्वान्तरीक्षगा ॥
यदुवाच गिरां देवी तत्तत् परिचचार च ।
निर्व्वाह स्वयं देवः क्रमात् पञ्चदशे दिने ॥
चतुर्मूर्त्तिः स भगवान् यथा पूर्ब्बं मयोदितः ।
दिव्यसिंहासनगतो बलभद्रसुदर्शनैः ॥
शङ्खचक्रगदापद्मलसद्बाहुर्जनार्द्दनः ।
हलं मूषलचक्राब्जं धारयन् पन्नगाकृतिः ॥
छत्रीकृतफणासप्तमुकुटोज्ज्वलकुण्डलः ।
सुभद्रा चारुवदना वराब्जाभयधारिणी ॥
लक्ष्मीः प्रादुर्ब्बभूवेयं सर्व्वचैतन्यरूपिणी ।
सुदर्शनन्तु यच्चक्रं सदा विष्णोः करे स्थितम् ॥
शाखाग्रस्तम्भमध्यस्थं तद्रूपन्तु तुरीयकम् ॥ * ॥
निर्वृत्ते भगवद्रूप चतुर्द्धा दिव्यरूपिणी ॥
नीलाद्रौ कल्पवृक्षस्य वायव्यां शतहस्ततः ॥
प्रदेशे सुमहत्स्थाने प्रासादं सुदृढायतम् ।
उत्तरे नरसिंहस्य सहस्रकरमुच्छ्रितम् ॥
कारयित्वा प्रतिष्ठाप्य तत्रैनं विनिवेशय ।
पुरा स्थितः पर्व्वतेऽस्मिन् योऽभ्यर्च्चयति माधवम् ॥
नाम्ना विश्वावसुर्नाम शवरो वैष्णवोत्तमः ।
तस्य सन्ततिरेवास्य लेपनस्थानकर्म्मणि ॥
नियुज्यतां महाराज ! भविष्यत्सूत्सवेषु च ।
ततः स नृपतिः श्रीमान् शिल्पशास्त्रविशारदान् ॥
सत्कारैर्दानमानैश्च योजयामास सारदम् ।
दिने दिने सुघटितः प्रासादो ववृधे द्विजाः ॥
परितः पूर्य्यमाणस्तु शुक्लपक्षे यथा शशी ॥
नारद उवाच ।
प्रवर्षं बहुराजेन्द्र ! स्थित्वा चास्मिन् चिरं भुवि ।
आराधय जगन्नाथमुपचारैर्म्महोत्सवैः ।
पितामहं द्रष्टुकामो गन्ता चेदन्तिकं विभोः ॥
उपदेक्ष्यति सोऽप्यस्य यात्रास्तास्ता महोत्सवाः ।
उभौ तौ दिव्ययानेन जग्मतुर्मुनिभूभुजौ ॥
प्रदक्षिणीकृत्य हरिं व्योममण्डलमध्यगम् ।
दृष्ट्वा पितामहं दूरात् स्रष्टारं जगतां नृपः ॥
अमन्यत द्विजश्रेष्ठाः साक्षाद्दारुमयं हरिम् ।
शनैः शनैर्ययौ भूपः प्रणनाम कृताञ्जलिः ॥
स्तुवन् प्रणिपतन् भूमौ साध्वसस्खलितं व्रजन् ।
जानन्नपि हि तत् कार्य्यं मानयन्नृपसत्तमम् ॥
उवाच परमप्रीत इन्द्रद्युम्नं पितामहः ।
किमर्थमागतोऽस्यत्र तद् ब्रूहि हृदयस्थितम् ॥
इन्द्रद्युम्न उवाच ।
आविर्ब्बभूव भगवान् भूतभव्यभवत्प्रभुः ।

माञ्जिष्ठवर्णः सर्व्वत्र शङ्खचक्राङ्कितः प्लवन् ॥
न दृष्टपूर्ब्बो वृक्षोऽयमुद्यत्सूर्य्यनिभांशुना ।
नियुक्तानां वचः श्रुत्वा राजा नारदमब्रवीत् ॥
तत् किं निमित्तं यद्दृष्टं तरुश्रेष्ठं वदन्ति ते ।
नारदः प्रहसन् वाक्यमुवाच नृपसत्तमम् ॥
उपस्थितन्तु ते भाग्यं स्वप्ने यद्दृष्टवान् पुरा ।
श्वेतद्वीपे विश्वमूर्त्तिर्दृष्टो यो विष्णुरव्ययः ॥
तदङ्गस्खलितं लोम तरुत्वमुपपद्यते ।
तद्धाम्यवशगः सर्व्वलोकानां नयनातिथिः ॥
भविष्यति महाराज ! सर्व्वकल्मषनाशनः ।
समाप्यावभृथस्नानं तटान्ते सरितां पतेः ॥
उत्सवं सुमहत् कृत्वा कृतकौतुकमङ्गलम् ।
महावेद्यां स्थापयात्र यज्ञेशं तरुरूपिणम् ॥
विचार्य्येत्थं मुदा युक्तौ तौ च नारदभूभुजौ ।

लोकानामुपकाराय पुनराहान्तरीक्षगा ।
पटैराच्छाद्य सुदृढं नृपते ! प्रतिमास्त्विमाः ॥
स्वं स्वं वर्णं प्रापयाशु वर्णकैश्चित्रकर्म्मणा ।
अमूर्द्धारुस्वरूपेण दृष्टाः पापाय हेतवः ॥
गोपनीयाः प्रयत्नेन पट्टनिर्यासवल्कलैः ।
शिल्पिभिः कर्म्मकुशलैर्दृढमाच्छादयाग्रतः ॥
वर्षे वर्षे च संस्कार्य्या पूर्ब्बसंस्कारमोचनात् ।
ऋते वल्कललेपन्तु स तु दिव्यश्चिरन्तनः ॥
प्रमादाद्यदि तं लेपमपनीयेत कश्चन ।
दुर्भिक्षं मरकं राज्ये सन्ततिश्चास्य हीयते ॥
नेक्षितव्यास्त्वया राजन् ! कदाचिदपवारणाः ।
मनुष्येण च राजेन्द्र ! दृष्टाः स्युर्भयहेतवः ॥
तस्मात् सुचित्रा द्रष्टव्या बहुलेपविलेपिताः ।

गत्वा देवं जगन्नाथं स्थापयिष्यसि च
प्रभो ! ॥
ब्रह्मोवाच ।
त्वमग्रतोऽधरां गत्वा यावत् सम्भारमृद्धिमत्
।
करिष्यसि महाभाग ! तावदेव व्रजाम्यहम्
॥
इन्द्रद्युम्नोऽपि हृष्टात्मा दृष्ट्वा ब्राह्मीं श्रियं
द्विजाः ।
आजगाम भुवं विप्रा विधिना चानुमोदितः
॥
आगत्य च जगन्नाथं चिरादुत्कण्ठमानसः ।
दण्डवत् प्रणनामासौ घनरोमाञ्चकञ्चुकः ॥
ततः क्रमात् सन्ददृशे विमानाग्रं प्रजापतेः ।
स्वर्णहंसशतैः स्कन्धैरुह्यमानं समन्ततः ॥
प्रणिपत्य जगन्नाथं त्रिः परीत्य पितामहः ।
आनन्दसिन्धुसंमग्नः सरोमाञ्चवपुः स्वयम्
॥
समुत्तस्थौ ततो ब्रह्मा कृतस्वस्त्ययनः
स्वयम् ।
ऋषिभिर्नारदाद्यैश्च विद्वद्भिर्ब्राह्मणैस्तथा ॥
प्रासादद्वारि रचिते रत्नस्तम्भेऽथ मण्डपे ।
वासयित्वाभिषेकाय सम्मुखादर्शमण्डले ॥
सुवासितै रत्नकुम्भैस्तीर्थवार्य्युपसंभृतैः ।
युक्ताभ्यां स्त्रीपुरुषयोरभिषेकं पितामहः ॥
चकार भगवान् लोकसंग्रहार्थं द्विजोत्तमाः !
।
ततोऽभ्यलङ्कृतान् देवान्
गन्धमाल्योपशोभितान् ॥
नीराजयित्वा विधिवत् स स्वयं
लोकभावनः ।
रत्नसिंहासने रम्ये स्थापयामास मन्त्रतः ॥
स्थापयित्वा जगन्नाथं स्पृष्ट्वा तस्य
हृदम्बुजम् ।

आनुष्टुभं मन्त्रराजं सहस्रं प्रजजाप ह ॥
वैशास्वस्यामले पक्षे अष्टम्यां पुष्ययोगतः ।
कृता प्रतिष्ठा भो विप्राः शोभने गुरुवासरे ॥”
तन्महाप्रसादमाहात्म्यं यथा, --
“बहून् नियोजयेत्तत्र लोकान् त्रैवर्गिकानुत ।
लौकिकव्यवहारोऽयं पचति श्रीः स्वयं ध्रुवम् ।
भुङ्क्ते नारायणो नित्यं तया पक्वं शरीरवान् ॥
अमृतं तद्धि नैवेद्यं पापघ्नं मूर्द्ध्नि धारणात् ।
भक्षणान्मद्यपानादिमहादुरितनाशनम् ॥
आघ्राणान्मानसं पापं दर्शनाद्दृष्टिजं तथा ।
आस्वादाद्वाक्कृतं पापं श्रावणञ्च व्यपोहति ॥
स्पर्शनात् त्वक्कृतं पापं मिथ्यालापं तथा द्विजाः ! ।
मात्रे लेपाद्दहेत् पापं शारीरं वै न संशयः ॥
महापवित्रं हि हरेर्निवेदितं
नियोजयेद्यः पितृदेवकर्म्मसु ।
तृप्यन्ति तस्मै पितरः सुराश्च
प्रयान्ति लोकं मधुसूदनस्य ॥
नातः परं हि वस्त्वस्ति हव्यकव्येषु भो द्विजाः ! ।
नराणां रूपमास्थाय तदश्नन्ति दिवौकसः ॥
विष्णवालयगतं तद्धि निर्म्माल्यं पतितादयः ।
स्पृशन्ति चेन्न दुष्टं हि यथा विष्णुस्तथैव तत् ॥
निन्दन्ति ये तदमृतं मूढाः पण्डितमानिनः ।
स्वयं दण्डधरस्तेषु सहते नापराधिनः ॥
येषामत्र न दण्डश्चेद्ध्रुवा तेषां हि दुर्गतिः ।
कुम्भीपाके महाघोरे पच्यन्ते तेऽतिदारुणे ॥
चिरस्थमपि संशुष्कं नीतं वा दूरदेशतः ।
यथा तथोपयुक्तं तत् सर्व्वपापापनोदनम् ॥
नैवेद्यान्नं जगन्नत्तुर्गाङ्गं वारि समं द्वयम् ।
दृष्टिस्पर्शनचिन्ताभिर्भक्षणादघनाशनम् ॥”
इत्युत्कलखण्डम् ॥ * ॥
स च कलेर्दशसहस्रवर्षपर्य्यन्तं पृथिव्यां स्थास्यति ।
यथा, --
“शालग्रामो हरेर्मूर्त्तिर्जगन्नाथश्च भारतम् ।
कलेर्द्दशसहस्रान्ते ययौ त्यक्त्वा हरेः पदम् ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥
(स्वनामख्यातो बहुलग्रन्थकर्त्ता पण्डितविशेषः । भिरुपास्यमानेन कृतयुगीकृतकलिकालेन कुमतितृणजालसमाच्छादितवेदवनमार्गविलोकनाय समुद्दीपितसुतर्कदहनज्वालाजालेन मूर्त्तिमतेव नव्वाबासफखानमनःप्रसादेन माथुरकुलसमुद्रेन्दुना रायमुकुन्देनादिष्टेन सार्व्वभौमश्रीशाहजान्प्रसादाधिगतपण्डितराजपदवीबिराजितेन तैलङ्गकुलावतंसेन पण्डितजगन्नाथेनासफविलासाख्येयमाख्यायिका निरमीयत । सेयमनुग्रहेण सहृदयानामनुदिनमुल्लासिताभवतात् ॥”

एतत्पण्डितविरचिता बहवो ग्रन्थाः सन्ति ।

तेषु अद्यावधि ज्ञातास्त्वेते, रसगङ्गाधरः १, यमुनावर्णनचम्पूः २, रतिमन्मथनाटकम् ३, वसुमतीपरिणयनाटकम् ४, जगदाभरणकाव्यम् ५, प्राणाभरणकाव्यम् (कामरूपदेशाधिपस्य प्राणनारायणमहीपस्य स्तुतिरूपोऽयं ग्रन्थः) ६, पीयूषलहरी ७, अमृतलहरी (यमुनास्तुतिरूपोऽयं ग्रन्थः) ८, सुधालहरी (सूर्य्यस्तवरूपोऽयं ग्रन्थः) ९, करुणालहरी (विष्णुलहरी वा) १०, लक्ष्मीलहरी ११, भामिनीविलासः १२, मनोरमाकुचमर्द्दिनी १३, अश्वघाटीकाव्यम् १४, आसफविलासः १५ ॥ * ॥
तर्कपञ्चाननोपाधिकोऽपरपण्डितविशेषः । अयं हि विवादभङ्गार्णवसेतु-रामचरितादिग्रन्थानां प्रणेता । पितास्य रुद्रदेवः मात च अम्बिका । रुद्रदेवस्तु चतुःषष्टितमवयसि पूर्ब्बसहधर्म्मिण्यां ससुतायां मृतायां ससारविरक्तः काशीवाससुखमभिलषन् चिरसुहृदं नित्यानन्दपुरनिवासिनं ज्योतिर्विद्याविशारदं सुप्रसिद्धं चन्द्रशेखरवाचस्पतिमभिगम्य स्वीयान्तिमदशाफलाफलं पृष्टवान् । चन्द्रशेखरस्तु रुद्रदेवस्य जन्मलग्नानुसारतश्चरमे वयसि सुप्रसिद्धपुत्त्रलाभरूपं शुभफलमवगम्य वासुदेवनाम्नः कस्यचिद् विप्रवरस्याम्बिकानाम्नीं कन्यामुद्वाहयामास । रुद्रदेवस्तु ज्योतिर्विद्यापारदर्शिनश्चन्द्रशेखरस्य वाक्यादम्बिकां परिणीय सत्पुत्त्रप्राप्तिकामो काशीमभिगम्य विश्वेश्वरमुद्दिश्यैकविंशतिपुरश्चरणं कृतनिकरेण बहूनां नितरां प्रियपात्रमासीत् । अयं प्रथमतः पितृसन्निधाने व्याकरणमधीत्य ततो ज्येष्ठतातस्य न्यायलङ्कारोपनामकस्य भवदेवस्य समीपे साहित्यादिकमधीतवान् । ततो भवदेवस्य परलोकप्राप्त्यनन्तरं कामालपुरनिवासिनं रघुदेवविद्यावाचस्पतिं अध्यापकत्वेन स्वीकृत्य दर्शनशास्त्रादिचिन्तया कालं यापयामास । अस्य एतादृशी प्रखरा स्मृतिशक्तिरासीत् बदनधीतस्यापि भिन्नदेशीयभाषायां निबद्धस्य ग्रन्थस्य द्वित्रिपत्राणि एकवारमात्रमाकर्ण्यैवायं अबर्गलं अभ्रान्त इव आवर्त्तयितुं समर्थः । एतादृशीमेधाशक्तिरेवैनं अल्पसमयेन बहुशास्त्रपारयायिनमकरोत् । पञ्चदशवर्षसमय एवासौ द्रौपदीनाम्नीं सुलक्षणां कन्यामुपनीतवान् । विवाहात् परमेवास्य ज्येष्ठतातो भवदेवः परलोकं गतः । माता तु पूर्ब्बमेव कालधर्म्ममुपगता पिता च चतुर्व्विंशतिवयस्कमेनमवलोक्यैव इह लोकं तत्याज । पितृवियोगानन्तरमेवायं छात्रानध्यापयितुं प्रवृत्त आसीत् ।

अथ कदाचित् वर्द्धमानाधिपतिर्म्महाराजस्त्रिलोकचन्द्रवाहादुरोऽस्य पाण्डित्यप्रभावमवगम्य राजसभामधिरोहयितुं निमन्त्रयामास । जगन्नाथस्तु राजप्रसादमुपलब्धुं राजसभां

अयं हि तैलङ्गवंशोद्भवः। अस्य पिता पेरम-
भट्ट इति ख्यातः। असौ पण्डितराजजगन्नाथो
दिल्लीप्रभोः शाहजहान्-ज्येष्ठसूनोर्यवनस्य
दाराशाहस्य सभायामासीत्। यतोऽनेन
जगदाभरणकाव्ये दाराशाहस्यैव यशोवणनं
कृतम्। अपिच भामिनीविलाससमाप्तौ
"दिल्ली-
वल्लभपाणिपल्लवतले नीतं नवीनं वयः" इत्यु-
क्तम्। दाराशाहस्तु १५८१
एकाशीत्यधिकपञ्च-
दशशतशकाब्दपर्य्यन्तं जीवित आसीत्।
अतः
पण्डितराजजगन्नाथोऽयंतात्कालिक इत्येवा-
यातम्। अनेन पण्डितराजपदवी शाह-
जहान्सम्राजो दिल्लीप्रभोः प्राप्तेति तत्कृतादा-
सफविलासनामकग्रन्थाद्वेगम्यते यथा, --

"अथ
सकललोकविस्तारविस्तारितमहोप

कारपरम्पराधीनमानसेन प्रतिदिनमुद्यदनवद्य-
गद्यपद्याद्यनेकविद्याविद्योतितान्तःकरणैः
कवि-
वान्। चरमपुरश्चरणदिवसीययामिन्याः
शेषयामे
प्राप्तसत्पुत्रलाभस्वप्नः प्रहृष्टमनाः पुनः
स्वस्थानं
त्रिवेणीप्रदेशं प्रत्यावृत्य गार्हस्थधर्म्मानुरक्तो
बभूव। अथ गच्छति काले पतिपरायणाम्बिका
गर्भमुपलभ्य १६१६ शके (११०१
परिमितवङ्गाब्दे)
सौराश्विनस्य देवीपक्षीयपञ्चम्यां पुत्त्ररत्नं जग-
न्नाथं प्रसूतवती। रुद्रदेवस्तु नवजातपुत्त्रस्य
जात-
संस्कारादिकं विघाय राश्यनुसारतो रामराम
इति नाम चक्रे परं कुमारस्य मातामहो वासु-
देवः अस्मिन्नेव समये श्रीजगन्नाथक्षेत्रात् तीर्थ-
स्थानात् प्रत्यावृत्य दौहित्रमुखं दृष्ट्वा जगन्नाथ
इत्याख्ययैनमयोजयत्। ततः प्रभृत्येवायं
जगन्नाथ
इति नाम्ना प्रसिद्धोऽभूत्।

अयन्तु
बाल्यावस्थायामतीवचञ्चलप्रकृति-

र्दुर्द्दान्तोऽपि स्मृतिशक्तिसत्यवादितादिगुण-
प्रविश्य तर्कजालेन तत्रस्थान् पण्डितान्
जित-
वान्। महीपतिस्तु जगन्नाथस्य तादृशीं
बुद्धि-
शक्तिं मेधाशक्तिञ्चावलोक्य विशेषेण
परीक्षितुं
पथि दृष्टस्य समग्रवस्तुनो वार्त्तां
विज्ञापयितु-
मादिदेश। जगन्नाथस्तु
नृपतेर्मनोऽभिप्रायमव-
गम्य त्रिवेणीप्रदेशात् वर्द्धमानपर्य्यन्तं यावत्
पथि स्थितानां प्रत्येकपादपमन्दिराणामपि
वृत्तान्तं कथयामास। राजा तु
स्वकर्म्मचारिभि-
रेतद्वृत्तान्तस्य याथार्थ्यमुपगम्य
सातिशयेना-
नन्दितो बभूव।

एकदा
मुर्शिदावादाख्यप्रदेशनृपतेर्यवनस्य

मन्त्री नन्दकुमारोऽस्य पाण्डित्यमवगम्य
(नवाव)
महीपतिसमीपमेनमानयामास। नृपतिस्तु
बहु-
विधैर्दुरूहप्रश्नैरेनं वञ्चयितुमभिललाष परं
जग-
न्नाथः स्वीयबुद्धिप्राखर्य्येण
नृपतिकृतप्रश्नानां
सदुत्तरं दत्त्वा तं सन्तोष्य च तस्माद् बहु-
लार्थप्रदां भूम्यादिसम्पत्तिं लब्धवान्।

अथ कालचक्रगत्यनुसारतो
यवनराजानां

वैभवरविरस्तं गतः इंराजराजानां सौभाग्य-
समयः समुपागतश्च। तदा इंराजनृपतय-
स्तदानीन्तनप्रजारञ्जनार्थं विचारकार्य्यस्य
सौ-
कर्य्याय जगन्नाथतर्कपञ्चाननं ममाहूय व्यव-
हारोपयोगिनं ग्रन्थमेकं प्रणेतुमादिदेश।
जग-
न्नाथस्तु नवीननृपतिभिस्तथादिष्टः
"विवादभङ्गा-
र्णवसेतु" नामकं ग्रन्थं प्रणीतवान्।

| | | अस्य द्विषष्टितमवयसि<br>सहधर्म्मिणी द्रौपदी<br>बहुपुत्त्रपौत्त्रादिकं संरक्ष्य परलोकं गता।<br>अस्य<br>द्वौ पुत्त्रौ तिस्रः कन्याश्चाभवन्।<br>पुत्त्रयोर्घनश्याम-<br>सार्व्वभौम एव ज्येष्ठः प्रतिभाशाली<br>बहुशास्त्र- |
|---|---|---|

पारदर्शीच । जगन्नाथोऽयमन्तिमावस्थायांवृद्ध-
प्रपौत्रादिमुखमवलोक्य अतिदुर्लभमेतादृशं
संसारसुखमनुभूय शकनरपतेः १७२९ वत्सरे
(१२१४ वङ्गाब्दे) आश्विनकृष्णपक्षीयतृतीयायां
गङ्गातीरे प्राणान् तत्याज । मृत्योः प्राक्काल-
पर्य्यन्तमेवास्येन्द्रियशैथिल्यं न जातम् । गङ्गा-
तीरं गतेन मुमूर्षुणामुना मृत्युप्राक्काले कृतः
श्लोको यथा, --
"केचिद् ब्रह्म निराकारं नराकारञ्च केचन ।
वयन्तु दीर्घयोगेन नीराकारमुपास्महे ॥" इति ॥)

**जगन्नुः**, पुं, (जगता विश्वस्थजीवजातेन नम्यते
इति । जगत् + नम् + वाहुलकात् डुः । यद्वा,
नु + क्विप् पृषो । नु र्नवनं स्तुतिरित्यर्थः जगति
विश्वसंसारे नुः स्तुतिर्यस्य । सर्व्वजीवस्तुतत्वा-
देवास्यतथात्वम् ।) अग्निः । जन्तुः । इति विश्वः
शब्दरत्नावली च ॥ जगनुरपि पाठः ॥

**जगरः**, पुं, (जागर्त्ति संग्रामेऽनेनेति । जागृ +
अप् । पृषोदरादित्वात् साधुः ।) कवचः । इति
हेमचन्द्रः । ३ । ४३० ॥

**जगलः**, पुं, (पुनःपुनरतिशयेन वा गलतीति ।
गल क्षरणे + यङ्लुगन्तात् अच् । संज्ञापूर्ब्बक-
त्वात् "दीर्घोऽकितः ।" ७ । ४ । ८३ । इति न
दीर्घः ।
यद्वा, जन् + डः । जः जातः सन् गलति
निर्गच्छ-
तीति । गल + अच् ।) सुराकल्कम् । मेया
इति भाषा ॥ तत्पर्य्यायः । मेदकः २ । इत्य-
मरः । २ । १० । ४२ ॥ (यथा, शार्ङ्गधरे मध्य-
खण्डे दशमेऽध्याये ।
"तदधो जगलो ज्ञेयो मेदको जगलाद्घनः ॥")
मदनवृक्षः पिष्टमद्यम् । (तद्गुणा यथा, --
"शूलप्रवाहिकाटोपकफवातार्शसां हितः ।
जगलो ग्राहिरूक्षोष्णः शोफघ्नो भुक्तपाचनः ॥"
इति चरके सूत्रस्थाने सप्तविंशेऽध्याये ॥
"ग्राह्युष्णो जगलः पक्ता रूक्षस्तृट्‌कफशोफहृत् ।
हृद्यः प्रवाहिकाटोपदुर्नामानिलशोषहृत् ॥"
इति सुश्रुते सूत्रस्थाने ४५ अध्याये ॥)
धूर्त्ते त्रि । इति मेदिनी । ले, ९१ ॥ कवचः ।
रलयोरैक्यात् ॥ गोमये, क्ली । इति रत्नमाला ॥
(यथा, वैद्यकरत्नमालायाम् ।

**जग्मिः**, पुं, (गच्छति इतस्ततो वातीति । गम +
"आदृगमहनजनः किकिनौ लिट् च ।" ३ ।
२ ।
१७१ । इत्यस्य "भाषायां
घाञ्कृसृगमिजनि-
नमिभ्यः ।" इति वार्त्तिकोक्त्या किर्द्वित्वञ्च
।)
वायुः । इति केचित् ॥

**जघनं**, क्ली, (हन्यते इति । हन् + "हन्तेः शरीरा-
वयवे द्वे च ।" उणां । ५ । ३२ । इति अच्
द्वित्वञ्च । "अभ्यासाच्च ।" ७ । ३ । ५५ ।
इति
कुत्वम् ।) स्त्रीकट्याः पुरोभागः । (यथा,
माघे । ५ । २९ ।
"नाभिह्रदैः परिगृहीतरयाणि यत्र
स्त्रीणां बृहज्जघनसेतुनिवारितानि ॥")
कटिः । इति मेदिनी । ने, ६७ ॥ (यथा,
देवी-
भागवते । १ । ९ । ८१ ।
"भगवान् द्विगुणं चक्रे जघनं विस्मितौ तदा
।
शीर्षे सन्दधतां तत्र जघने परमाद्भुते ॥")

**जघनकूपकौ**, पुं, (जघनकूपे इव कायतः इति ।
कै + कः ।) कुकुन्दरौ । इति हलायुधः ॥
द्विवचनान्तोऽयं शब्दः ॥

**जघनेफला**, स्त्री, (जघने इव मध्यभागे फलमस्याः
।)
काकोडुम्बरिका । इत्यमरः । २ । ४ । ६१
॥

**जघन्यः**, त्रि, (कुटिलं हन्यते निन्द्यते इति । हन
+ यङन्तात् अचो यत् ।
अनित्यमागमशास्त्र-
मिति नुगतोऽनुनासिकान्तस्येति न नुक् ।
यद्वा,
जघनमिव । "शाखादिभ्यो यत् ।" ५ । ३ ।
१०३ । इति यत् ।) चरमः । (यथा,
वैद्यकचक्र-
पाणिसंग्रहे स्नेहाधिकारे ।
"उत्तमस्य पलं मात्रा त्रिभिरक्षैश्च मध्यमे ।
पूर्ब्बोक्तभूपानुचरा भवन्ति
सङ्कीर्णसंज्ञाः शृणु लक्षणैस्तान् ॥"
"मालव्यसेवी तु जघन्यनामा
खण्डेन्दुतुल्यश्रवणः सुगन्धिः ।
शुक्रेण सारः पिशुनः कविश्च
रूक्षच्छविः स्थूलकराङ्गुलीकः ॥
क्रूरो धनी स्थूलमतिः प्रतीत-
स्ताम्रच्छविः स्यात् परिहासशीलः ।
उरोऽङ्घ्रिहस्तेष्वसिशक्तिपाश-
परश्वधाङ्कश्च जघन्यनामा ॥")

**जघन्यजः**, पुं स्त्री, (जघन्ये चरमे जायते इति ।
जन् + "सप्तम्यां जने र्डः ।" ३ । २ । ९७ ।
इति डः ।) शूद्रः । कनिष्ठे, त्रि ॥ इति मेदिनी
॥
जे, ३२ ॥ (यथा, महाभारते । १ । ६५ । १६
।
"एकादशस्तथा त्वष्टा द्वादशो विष्णुरुच्यते ।
जघन्यजस्तु सर्व्वेषामादित्यानां गुणाधिकः
॥")

**जघ्निः**, पुं, (हन्यते इति । हन + "आदृगम-
हनेति ।" ३ । २ । १७१ । इति किन् द्वित्वञ्च
।)
हननयोग्यास्त्रम् । इति संक्षिप्तसारः ॥ (यथा,
ऋग्वेदे । ९ । ६१ । २० ।
"जघ्निर्म्मित्रममित्रियं सस्निर्व्वाजं दिवे दिवे
॥")

**जघ्नुः**, त्रि, (हन्तीति । हन वधे + "कुर्भ्रश्च ।"
उणां । १ । २३ । चकारात् हन्तेरपि
कुर्द्वित्वञ्च ।)
हन्ता । हननकर्त्ता । इत्युणादिकोषः ॥

**जङ्गमः**, त्रि, (पुनः पुनर्गच्छतीति । गम् + यङ् +
अच् ।) अस्थावरः । गतिशक्तिविशिष्टः । तत्-
पर्य्यायः । चरिष्णुः २ चरः ३ त्रसः ४ इङ्गः ५
चराचरः ६ । इत्यमरः । ३ । १ । ७४ ॥
(यथा,
रघौ । २ । ४४ ।
"मान्यः स मे स्थावरजङ्गमानां
सर्गस्थितिप्रत्यवहारहेतुः ॥"

"गोमयं जगलं गोविट् गोहन्नं तच्च गोशकृत् ॥")

**जग्धं**, त्रि, (अद्यते स्म इति । अद् भक्षणे + क्तः ।

"अदो जग्धिर्ल्यप्ति किति ।" २ । ४ । ३६ ।
इति जग्ध्यादेशः । इकार उच्चारणार्थः ।)
भुक्तम् । इत्यमरः । ३ । २ । १११ ॥
("स्निग्धं घनं कुटजवल्कमजन्तु जग्धम् ॥"
इति वैद्यकचक्रपाणिसंग्रहेऽतीसाराधिकारे ॥)

**जग्धिः**, स्त्री, (अद भक्षणे + क्तिन् । "अदो जग्धि-

र्ल्यप्ति किति ।" २ । ४ । ३६ । इति जग्ध्या-
देशः ।) सहभोजनम् । इत्यमरः । २ । ९ । ५५
॥
भक्षणम् । इति हेमचन्द्रः ॥ (यथा, मनौ ।
३ । ११५ ।
"अदत्त्वा तु य एतेभ्यः पूर्ब्बं भुङ्क्तेऽविचक्षणः ।
स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः ॥")

जघन्यस्य पलार्द्धेन स्नेहक्वाथ्यौषधेषु च
॥")
गर्हितः । (यथा, महाभारते । ३ । ३५ ।
१३ ।
"तत्र द्यूतमभवन्नो जघन्यं
तस्मिन् जिताः प्रव्रजिताश्च सर्व्वे ॥" * ॥
जघने कटिदेशे भवम् । दिगादित्वात् यत् ।)
मेहने, क्ली । इति मेदिनी । ये, ८३ ॥ पुं,
शूद्रः ।
इति शब्दरत्नावली ॥ (हीनजातिमात्रम् ।
यथा,
मनौ । ८ । ३६६ ।
"उत्तमां सेवमानस्तु जघन्यो वधमर्हति ॥"
"हीनजातिरुत्कृष्टजातीयां
कन्यामिच्छन्तीं-
मनिच्छन्तीं वा गच्छन्
जात्यपेक्षयाऽङ्गच्छेदन-
मारणात्मकं वधमर्हति ॥" इति तट्टीकायां
कुल्लूकभट्टः ॥ * ॥ पृष्ठभागः । यथा, रामा-
यणे । २ । १०४ । २९ ।
"ततो जघन्यं सहितैः स्वमन्त्रिभिः
पुरप्रधानैश्च तथैव सैनिकैः ।
जनेन धर्म्मज्ञतमेन धर्म्मवा-
नुपोपविष्टो भरतस्तदाग्रजम् ॥"
"जघन्यं जघनभागं पृष्ठभागमाश्रितः सन्
।"
इति तट्टीकायां रामानुजः ॥ * ॥
राजानुचर-
विशेषः । यथा, बृहत्संहितायाम् । ६९ ।
३१,
३३ -- ३४ ।
"पञ्चापरे वामनको जघन्यः
कुब्जोऽपरो मण्डलकोऽथ सामी ।

"ओषधयस्तावद्द्विविधाःस्थावरा जङ्गमाश्च
।"
"जङ्गमास्त्वपि चतुर्व्विधा
जरायुजाण्डजस्वेद-
जोद्भिज्जाः । तत्र पशु-मनुष्य-व्यालादयो
जरा-
युजाः । खग-सर्प-सरीसृप-प्रभृतयोऽण्डजाः ।
कृमिकीटपिपीलिकाप्रभृतयःस्वेदजाः । इन्द्र-
गोपमण्डूकभृतय उद्भिज्जाः ॥" इति सुश्रुते
सूत्रस्थाने प्रथमेऽध्याये ॥)

**जङ्गमकुटी**, स्त्री, (जङ्गमा गतिशक्तिविशिष्टा

कुटी गृहमिव ।) छत्रम् । इति त्रिकाण्डशेषः ॥

**जङ्गलं**, त्रि, (पुनः पुनरतिशयेन वा गलतीति ।

गल + यङ् + अच् । पृषोदरादित्वात् साधुः ।)
निर्व्वारिदेशः । इति शब्दरत्नावली ॥
निर्ज्जन-
स्थानम् । पिशिते, स्त्री । इति मेदिनी । ते,
९३ ॥

**जङ्गालः**, पुं, (जङ्गं कुटिलगतिं अलति प्राप्नो-

तीति । अल + "कर्म्मण्यण् ।" ३ । २ । १
इत्यण् ।)
रोधविशेषः । जाङ्गाल इति भाषा ॥ तत्-
पर्य्यायः । आलिः २ पङ्कारः ३ सेतुः ४
सञ्चरः ५ । इति जटाधरः ॥

**जङ्गुल**, क्ली, विषम् । इति त्रिकाण्डशेषः ॥

**जङ्घा**, स्त्री, (जङ्घन्यते कुटिलं गच्छतीति । हन

वधे गतौ च यङ् लुगन्तात् + "अन्येभ्योऽपीति
।"

डः ।) गुल्फोर्द्ध्वजान्वधोभागः । जाङ् इति भाषा ॥ तत्पर्य्यायः । प्रसृता २ । इत्यमरः ॥ टङ्का ३ टङ्कम् ४ टक्किका ५ । इति शब्दरत्नावली ॥ (यथा, महाभारते । ५ । १३३ । १९ ।
"शत्रुर्निमज्जता ग्राह्यो जङ्घायां प्रपतिष्यता ॥")

**जङ्घाकरिकः**, पुं, (जङ्घा तत्साध्यगतिरेव आकरो निधिः जीविकानिर्व्वाहधनस्येत्यर्थः । सोऽस्त्यस्येति । जङ्घाकर + "अत इनिठनौ ।" ५ । २ । ११५ । इति ठन् ।) धावकः । तत्पर्य्यायः । जाङ्घिकः २ । इत्यमरः । २ । ८ । ७३ ॥ डाकचक्री ३ । इति शब्दरत्नावली ॥

**जङ्घात्राणं**, क्ली, (त्रायतेऽनेनेति । त्रै + करणे ल्युट् । त्राणं वर्म्म । ततो जङ्घायास्त्राणमिति ।) जङ्घासन्नाहः । तत्पर्य्यायः । मञ्जुणम् २ । इति त्रिकाण्डशेषः ॥

**जङ्घालः**, त्रि, (प्रशस्ता वेगवतीत्यर्थः जङ्घास्त्यस्येति । जङ्घा + "सिध्मादिभ्यश्च ।" ५ । २ । ९७ । इति लच् । जङ्घाबलेनैव वेगस्य जननात्तथात्वम् ।) अतिवेगवान् । तत्पर्य्यायः । अविजवः २ । इत्यमरः । २ । ८ । ७३ ॥ (यथा, काशीखण्डे गङ्गामाहात्म्ये । २९ । ६४ ।
"जाह्नवीज्या जगन्माता जप्या जङ्घालवीचिका ॥")
हरिण । एणः । कुरङ्गः । ऋष्यः । पृषतः । न्यङ्कुः । शम्बरः । राजीवः । मुण्डी । (यथा, --
"एणहरिणर्ष्यकुरङ्गकरालकृतमालशरभश्वदंष्ट्रापृषतचारुष्करमृगमातृकाप्रभृतयो जङ्घाला मृगाः कषाया मधुरा लघवो वातपित्तहरास्तीक्ष्णा हृद्या वस्तिशोधनाश्च ॥" इति सुश्रुते सूत्रस्थाने ४६ अध्यायः ॥)
एषां मांसगुणाः ।
"जङ्घालाः प्रायशः सर्व्वे पित्तश्लेष्महराः स्मृताः ।
किञ्चिद्वातकराश्चापि लघवो बलवर्द्धनाः ॥"
इति भावप्रकाशः ॥

**जङ्घाशूलं**, क्ली, (जङ्घायाः शूलं रोगविशेषः ।) जङ्घावेदना । तस्यौषधं यथा, --
"हरीतकी शृङ्गवेरं देवदारु च चन्दनम् ।

**जटा**, स्त्री, (जटति परस्परं संलग्ना भवतीति । जट् + अच् । यद्वा, जायते प्रादुर्भवतीति । जन् + "जनेष्टन् लोपश्च ।" उणां । ५ । ३० । इनि टन् अन्त्यलोपश्च ।) व्रतिनां शिखा । लग्नकचः । तत्पर्य्यायः । शटा २ । इत्यमरः ॥ जटिः ३ जटी ४ जूटः ५ जुटकम् ६ शटम् ७ कौटीरम् ८ जूटकम् ९ हस्तम् १० । इति शब्दरत्नावली ॥ (यथा, महाभारते । ३ । ११२ । २ ।
"नीलाः प्रसन्नाश्च जटाः सुगन्धा
हिरण्यरज्जुग्रथिताः सुदीर्घाः ॥")
मूलम् । यथा, --
"यदि न समुद्धरन्ति यतयो हृदि कामजटा
दुरधिगमोऽसतां हृदि गतोऽस्मृतकण्ठमणिः ॥"
इति श्रीभागवते श्रुतिस्तवे ८७ अध्यायः ॥
मांसी । इति मेदिनी । टे, १५ ॥ रुद्रजटा । (यथा, सुश्रुते कल्पस्थाने ७ अध्याये ।
"कालेयकं पद्मकञ्च मधुकं नागरं जटाम् ॥")
शतावरी । इति राजनिर्घण्टः ॥ कपिकच्छुः । इति रत्नमाला ॥ (वेदपाठविशेषः । यथा, --
"जटा माला शिखा लेखा ध्वजो दण्डो रथो घनः ।
अष्टौ विकृतयः प्रोक्ताः क्रमपूर्ब्बं महर्षिभिः ॥")

**जटाजूटः**, पुं, (जटानां जूटः समूहः ।) जटासमूहः । यथा, महानाटके ।
"जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः ॥"
शिवजटा च ॥

**जटाज्वालः**, पुं, (जटेव ज्वाला यस्य ।) प्रदीपः । इति हारावली । २४ ॥

**जटाटङ्कः**, पुं, (जटा टङ्क इवास्य ।) शिवः । इति त्रिकाण्डशेषः ॥

**जटाटीरः**, पुं, (जटामटतीति । अट् + बाहुलकादीरन् ।) शिवः । इति त्रिकाण्डशेषः ॥

**जटाधरः**, पुं, (धरतीति । धृ + अच् । जटाया धरः ।) शिवः । इति शब्दरत्नावली ॥ (यथा, महाभारते । १३ । १७ । १२६ ।

नलदम् २ वह्निनी २ पेषी ४ मांसी ५ कृष्णजटा ६ जटी ७ किरातिनी ८ जटिला ९ लोमशा १० तपस्विनी ११ । इति रत्नमाला ॥ भूतजटा १२ । इति भावप्रकाशः ॥ पेशी १३ क्रव्यादि १४ पिशिता १५ पिशी १६ पेशिनी १७ जटा १८ हिंस्रा १९ मांसिनी २० जटाला २१ नलदा २२ मेषी २३ तामसी २४ चक्रवर्त्तिनी २५ माता २६ अमृतजटा २७ जननी २८ जटावती २९ मृगभक्ष्या ३० जडामांसी ३१ मिंसी ३२ मिसिः ३३ मिसी ३४ मिषिका- ३५ मिषिः ३६ । इति शब्दरत्नावली ॥ अस्या गुणाः । सुरभित्वम् । कषायत्वम् । कटुत्वम् । शीतलत्वम् । कफभूतदाहपित्तनाशित्वम् । कान्तिमोदकारित्वञ्च । इति राजनिर्घण्टः ॥ तिक्तत्वम् । मेध्यत्वम् । बलप्रदत्वम् । स्वादुत्वम् । त्रिदोषास्रवीसर्पकुष्ठनाशित्वञ्च । इति भावप्रकाशः ॥ अनुलेपनेन ज्वररूक्षतानाशित्वम् । इति राजवल्लभः ॥

**जटायुः**, पुं, (जटां याति प्राप्नोतीति । या + मृगय्वादित्वात् कुः । सान्तपक्षे जटं संहतमायुर्यस्य ।) स्वनामख्यातपक्षी । स तु अरुणपुत्त्रः सम्पातेरनुजः दशरथराजसखः सीताहरणसमये राव-

क्वाथयेच्छागदुग्धेन अपामार्गस्य मूलकम् ॥
जङ्घाशूलमूरुस्तम्भं सप्तरात्रे तु नाशयेत् ॥”
इति गारुडे १८७ अध्यायः ॥

**जज**, युधि । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-
सेट् ।) जजति । युधि योधने । इति दुर्गादासः ॥

**जज**, इ युधि । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
अकं-सेट् ।) इ, जञ्ज्यते । युधि योधने । इति
दुर्गादासः ।

**जञ्जपूकः**, त्रि, (पूनःपुनरतिशयेन वा जपतीति ।
जप + यङ् + “यजजपदशां यङः ।” ३ । २ ।
१६६ ।
इति ऊकः ।) पुनःपुनर्जपकर्त्ता । इति मुग्ध-
बोधम् ॥

**जट**, संहतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
अकं-सेट् ।) जटति केशः परस्परं लग्नः
स्यादित्यर्थः । इति दुर्गादासः ॥

“त्रिनेत्रश्च विषणाङ्गो मणिबिद्ध्वो जटाधरः
॥”)
बुद्धभेदः । इति त्रिकाण्डशेषः ॥ पर्य्याय-
नानार्थकोषाख्याभिधानतन्त्रकारश्च॥
(स्कन्द-
स्यानुचरविशेषः । यथा, महाभारते । ९ ।
४५ । ५९ ।
“परिश्रुतः कोकनदः कृष्णकेशो जटाधरः ॥”
देशविशेषः । स तु दाक्षिणात्यप्रदेशः । यथा,
बृहत्संहितायाम् । १४ । १३ ।
“अथ दक्षिणेन ।” इत्युक्त्वा, --
“क्रौञ्चद्वीपजटाधरकाव्यो रिष्यमूकश्च ॥”
इत्युक्तवान् ॥
जटाधारिणि, त्रि । यथा, रामायणे । २ । ८६ ।
२५ ।
“जटाधरौ तौ द्रुमचीरवाससौ
महाबलौ कुञ्जरयूथपोपमौ ॥”)

**जटामांसी**, स्त्री, (जटां जटाकृतिं मन्यते इति ।
मन + “मनेर्दीर्घश्च ।” उणां । ३ । ६४ । इति
सो
दीर्घश्च ।) सुगन्धिद्रव्यविशेषः । तत्पर्य्यायः ।

णेन हतः । इति रामायणम् ॥ (यथा, च
महाभारते । ३ । २७८ । १ -- ७ ।
“सखा दशरथस्यासीत्
जटायुररुणात्मजः ।
गृध्रराजो महावीरः सम्पातिर्यस्य सोदरः
॥
स ददर्श तदा सीतां रावणाङ्कगतां स्नुषाम्
।
सक्रोधोऽभ्यद्रवत् पक्षी रावणं
राक्षसेश्वरम् ॥
अथैनमब्रवीद्‌गृध्रो मुञ्च मुञ्चस्व मैथिलीम्
।
ध्रियमाणे मयि कथं हरिष्यसि निशाचर !
॥
नहि मे मोक्ष्यसे जीवन् यदि नोत्सृजसे
बधूम् ।
उक्त्वैवं राक्षसेन्द्रं तं चकर्त्त नखरैर्भृशम्
॥”
“स वध्यमानो गृध्रेण रामप्रियहितैषिणा ।
खड्गमादाय चिच्छेद भुजौ तस्य
पतत्रिणः ॥
निहत्य गृध्रराजं स भिन्नाभ्रशिखरोपमम् ।
ऊद्‌र्ध्वमाचक्रमे सीतां गृहीत्वाङ्केन
राक्षसः ॥”)
गुग्गुलु । इति मेदिनी । ये, ८४ ॥
(“गुग्गुलुर्देवधूपश्च जटायुः कौशिकः पुरः
।
कुम्भोलूखलकं क्लीवे महिषाक्षः
पलङ्कषः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥
“जटायुः कालनिर्य्यासः कौशिको
गुग्गुलुः पुरः ॥”
इति वैद्यकरत्नमालायाम् ॥)
सान्तोऽप्ययम् । इति द्विरूपकोषः ॥
(यथा,
महाभारते । १ । ६६ । ७० ।
“अरुणस्य भार्य्या श्येनी तु वीर्य्यवन्तौ
महाबलौ ।
सम्पातिं जनयामास वीर्य्यवन्तं
जटायुषम् ॥”)

**जटालः**, पुं, (जटास्त्यस्येति । जटा + “सिध्मादि-

| | | |
|---|---|---|
| | | भ्यश्च ।” ५ । २ । ९७ । इति लच् ।)<br>कर्च्चूरः ।<br>वटः । मुष्ककः । गुग्गुलुः । इति राज-<br>निर्घण्टः । जटायुक्ते, त्रि । इति<br>शब्दरत्नावली ॥<br>(यथा, हरिवंशे । १८० । २२ ।<br>“चीरिणः शिखिनश्चान्ये<br>जटालोद्र्ध्वशिरोरुहाः ॥”) |

**जटाला**, स्त्री, (जटास्त्यस्या इति । जटा + “सिध्मा-
दिभ्यश्च । ५ । २ । ९७ । इति लच् । ततो
ऽजादित्वात् टाप् ।) जटामांसी । इति राज-
निर्घण्टः ॥ (विवरणमस्या जटामांसीशब्दे
ज्ञातव्यम् ॥)

**जटावती**, स्त्री, (जटा विद्यतेऽस्याः । जटा + मतुप् ।
मस्य वः स्त्रियां ङीप् च ।) जटामांसी । इति
राजनिर्घण्टः ॥

**जटावल्ली**, स्त्री, (जटेव वल्ली ।) रुद्रजटा । गन्ध-
मांसी । इति राजनिर्घण्टः ॥

**जटिः**, स्त्री, (जटति परस्परं संलग्ना भवतीति ।
जट + “सर्व्वधातुभ्य इन् ।” उणां । ४ । ११७ ।
इति इन् ।) प्लक्षवृक्षः । इति शब्दरत्नावली ॥
जटा । समूहः । इत्युणादिकोषः ॥

**जटिलः**, पुं, (जटा अस्त्यस्येति । जटा + “लोमादि-
पामादिपिच्छादिभ्यः शनेलचः ।” ५ । २ । १०० ।
इति इलच् ।) सिंहः । इति शब्दचन्द्रिका ॥
(ब्रह्मचारी । यथा, मनुः । ३ । १५१ ।
“जटिलञ्चानधीयानं दुर्ब्बलं कितवन्तथा ॥”
“जटिलो ब्रह्मचारी ।” इति तट्टीकायां कुल्लूक-
भट्टः ॥) जटायुक्ते, त्रि । इति मेदिनी । ले, ९२ ॥
(यथा, कुमारे । ५ । ३० ।
“विवेश कश्चिज्जटिलस्तपोवनं
शरीरबद्धः प्रथमाश्रमो यथा ॥”)

**जटिला**, स्त्री, (जटिल + अजादित्वात् टाप् ।)
जटामांसी । इत्यमरः । २ । ४ । १३४ ॥

**जठरं**, त्रि, (जटति एकत्रीभवतीति । जट +
बाहुलकादरः ठान्तादेशश्च । यद्वा, जनयते
इति । जन + “जनेररष्ठ च ।” उणां ५ । ३८ ।
इति अरः ठश्चान्तादेशः ।) बद्धम् । कठिनम् ।
इति शब्दरत्नावली ॥ (यथा, शान्ति-
शतके । ४ । १३ ।
“इदानीमस्माकं जठरकमठपृष्ठकठिना
मनोवृत्तिस्तत् किं व्यसनिविमुखैव क्षपयसि ॥”)

**जठरः**, पुं क्ली, (जायते गर्भो मलं वा अस्मिन्निति ।
जन + “जनेररष्ठ च ।” उणां । ५ । ३८ । इति
अरः ठश्चान्तादेशः ।) उदरम् । इति मेदिनी ॥
(यथा, हितोपदेशे । २ । ४४ ।
“पृष्ठतः सेवयेदर्कं जठरेण हुताशनम् ।
स्वामिनं सर्व्वभावेन परलोकममायया ॥”
देशविशेषे, पुं । स तु कूर्म्मविभागे आग्नेय्यां दिशि
वर्त्तते । यथा, बृहत्संहितायाम् । १४ । ८ ।
“आग्नेय्यां दिशि कोशलकलिङ्गवङ्गो
पवङ्गजठराङ्गाः ॥”
तथाच महाभारते । ६ । ९ । ४२ ।
“अत ऊर्द्ध्वं जनपदान् निबोध गदतो मम ।”
इत्युपक्रम्य, --
“जठराः कुकुराश्चैव सदशार्णाश्च भारत ! ॥”
इत्युक्तवान् ॥
पर्व्वतविशेषः । यथा, भागवते । ५ । १६ । २७ ।
“जठरदेवकूटौ मेरुं
पूर्ब्बेणाष्टादशयोजनसहस्र-
मुदगायतौ द्विसहस्रपृथुतुङ्गौ भवतः ॥”
उदररोगविशेषः ।
“राजी जन्म बलीनाशो जठरे जठरेषु तु ।”
इति निदानस्थाने द्वादशेऽध्याये
वाभटेनोक्तम् ।
एतत्सम्प्राप्तिर्यथा, सुश्रुते निदानस्थाने

**जडः**, त्रि, (जलति बुद्धिशक्तिमाच्छादयतीति ।
जल आच्छादने + अच् ।) हिमग्रस्तः ।
(शीतलः । यथा, रघौ । ३ । ६८ ।
“परामृशन् हर्षजडेन पानिना
तदीयमङ्गं कुलिशव्रणाङ्कितम् ॥”
“हर्षजडेन हर्षशिशिरेण ।” इति तट्टीकायां
मल्लिनाथः ॥) मूकः । (यथा, मनौ । २ । ११० ।
“नापृष्टः कस्यचिद्ब्रूयात् न चान्यायेन पृच्छतः ।
जानन्नपि हि मेधावी जडवल्लोक आचरेत् ॥”
वधिरः । यथा, तत्रैव । ९ । २०१ ।
“उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः ॥”
तथा तत्रैव । ८ । ३९४ ।
“अन्धो जडः पीठसर्पी सप्तत्या स्थविरश्च यः ॥”
“अन्धो वधिरः पङ्गुः सम्पूर्णसप्ततिवर्षः ।” इति
तट्टीकायां कुल्लूकभट्टः ॥) अप्रज्ञः । इति
मेदिनी । डे, १४ ॥ (यथा, विक्रमोर्व्वश्याम्
१ अङ्के ।
“अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्म्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥”
निष्पन्दः । यथा, रघौ । २ । ४२ ।
“जडीकृतस्त्र्यम्बकवीक्षनेन
वज्रं मुमुक्षन्निव वज्रपाणिः ॥”
मोहितः । यथा, तत्रैव । ८ । ७५ ।
अथ तं सवनाय दीक्षितः प्रणिधानाद् गुरुराश्रमस्थितः
अभिषङ्गजडं विजज्ञिवान्
इति शिष्येण किलान्वबोधयत् ॥”)

**जडक्रियः**, त्रि, (जडस्य मोहितस्येव क्रिया कार्य्यं
यस्य ।) दीर्घसूत्री ॥ चिरक्रियः । इति हला-
युधः ॥

**जडता**, स्त्री, (जडस्य भावः । जड + भावे तल् ।)
जाड्यम् । तत्पर्य्यायः । स्तैमित्यम् २ शीतलत्वम् ३
अपाटवम् ४ । इति राजनिर्घण्टः (यथा,
रघुः । ९ । ४६ ।
“अनयदासनरज्जुपरिग्रहे

("जटामांसी भूतजटा जटिला च
तपस्विनी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)
पिप्पली । इति मेदिनी ॥ वचा । उच्चटा
। इति
रत्नमाला । दमनकवृक्षः । इति
राजनिर्घण्टः ॥
राधिकाश्वश्रूः । यथा, गौरगणोद्देशे ।
"जटिला राधिकाश्वश्रूः
कार्य्यतोऽविशदेव तम् ॥"
(ऋषिपत्नीविशेषः । यथा, महाभारते । १
। १९७ । १४ ।
"श्रूयते हि पुराणेऽपि जटिला नाम गौतमी
।
ऋषीनध्यासितवती सप्त धर्म्मभृताम्बरा
॥")

**जटी**, स्त्री, (जटि + "कृदिकारादिति ।" ४ । १ । ४५ ।

इत्यस्य वार्त्तिकोक्त्या वा ङीष् ।)
पर्कटीवृज्ञः ।
इति शब्दरत्नावली ॥ जटामांसी । इति
रत्नमाला ॥

**जटी** [न्], पुं, (जटा अस्त्यस्येति । जटा + इनिः ।)

प्लक्षवृक्षः । इत्यमरः । २ । ४ । ३२ ॥
(यथा, --
"प्लक्षो जटी पर्क्करी च पर्क्कटी च
स्त्रियामपि ।"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥
स्कन्दस्यानुचरविशेषः । यथा, महाभारते
।
९ । ४५ । ५८ ।
"ज्वालाजिह्वः करालश्च शितकेशो जटी
हरिः ॥")
जटाविशिष्टे, त्रि । (यथा, महाभारते । ७ ।
५० । ४३
"ततो हरो जटी स्थाणुर्निशाचरपतिः
शिवः ॥")

**जटुलः**, पुं, (जटति देहे संहतो भवतीति । जट

संहतौ + बाहुलकादुलच् ।) जतुकम् ।
जरुड
७ अध्याये ।
"कोष्ठादुपस्नेहवदन्नसारो
निःसृत्य दुष्टोऽनिलवेगनुन्नः ।
त्वचः समुन्नम्य शनैः समन्ता-
द्विवर्द्धमानो जठरं करोति ॥")

**जठरनुत्**, पुं, (नुदतीति । नुद् + क्विप् । ततः

षष्ठीतत्पुरुषः । एतत्सेवनेनोदरभङ्गाद्वोस्य
तथात्वम् ।) आरग्वधवृक्षः । इति शब्द-
चन्द्रिका ॥

**जठरामयः**, पुं, (जठरस्य आमयो रोगः ।)

जलोदररोगः । इति राजनिर्घण्टः ॥
(अतीसाररोगश्च । तस्य चिकित्सा यथा, -
-
"कपित्थमध्यं लीढ्वा तु
सव्योषक्षौद्रशर्करम् ।
कट्फलं मधुयुक्तं वा मुच्यते जठरामयात्
॥"
इति चरके चिकित्सास्थाने दशमेऽध्याये ॥)

**जडं**, क्ली, (जलति लोकान् जीवयतीति । जल +

अच् । डलयोरैक्यात् लस्य डत्वम् ।) जलम्
।
इत्यमरटीकायां रायमुकुटः ॥ (जलति
घनी-
भवतीति ।) सीसकम् । इति राजनिर्घण्टः ॥
(अचेतनपदार्थानां स्वरूपम् । यदुक्तं पञ्च-
दश्याम् । ६ । १२७ ।
"अचिदात्मघटादीनां यत् स्वरूपं जडं हि
तत् ॥")
भुजलतां जडतामबलाजनः ॥"
इयं हि व्यभिचारिभावविशेषः । अस्या लक्षणं
यथा, साहित्यदर्पणे । ३ । १४४ ।
"अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः ।
अनिमिषनयननिरीक्षणतूष्णीम्भावादयस्तत्र॥")
विरहदुःखेन जीवनमात्रस्थितिः । इति रस-
मञ्जरी ॥

**जडा**, स्त्री, (जडयति तत्करोतीति णिजन्तात्

अच् ततष्टाप् ।) शूकशिम्बी । इत्यमरः ॥
भूम्यामलकी । इति रत्नमाला ॥

**जडिमा**, [न्] पुं, (जडस्य भावः । "वर्णदृढादिभ्यः

व्यञ् च ।" ५ । १ । १२३ । इति इमनिच् ।)
जडता । तस्य लक्षणं यथा, --
"इष्टानिष्टापरिज्ञानं यत्र प्रश्नेष्वनुत्तरम् ।

| | | |
|---|---|---|
| इति भाषा ॥ तत्पर्य्यायः । कालकः २<br>पिप्लुः ३ ।<br>इत्यमरः । २ । ६ । ४९ ॥ | | |

दर्शनश्रवणाभावो जडिमा सोऽभिधीयते ॥”
इत्युज्ज्वलनीलमणिः ॥

**जड्डुलः**, पुं, (जटुलः पृषोदरादित्वात् टस्य डत्वम् ।)
देहस्थिततिलकः । इति हेमचन्द्रः ॥

**जतु**, क्ली, (जायते वृक्षादिभ्य इति । जन + “फलि-
पाटिनमिमनिजनामिति ।” उणां १ । १९ ।
इति उः तोऽन्तादेशश्च ।) वृक्षनिर्य्यासविशेषः ।
जौ इति ला इति च भाषा ॥ तत्पर्य्यायः ।
राक्षा २ लाक्षा ३ यावः ४ अलक्तः ५ द्रुमा-
मयः ६ । इत्यमरः । ६ । २ । १२५ ॥ रक्षा ७ ।
इति
रभसः ॥ कीटजा ८ क्रिमिजा ९ जतुका १०
जन्तुका ११ गवाषिका १२ । इति रत्नमाला ॥
जतुकम् १३ यावकः १४ अलक्तकः १५ रक्तः
१६ ।
इति शब्दरत्नावली ॥ पलङ्कषा १७ कृमिः १८
वरवर्णिनी १९ । इति जटाधरः ॥ (यथा, महा
भारते । १ । १४७ । १३ ।
“जिघ्रन् सोऽस्य वसागन्धं सर्पिर्जतुविमिश्रितम्
॥”)

**जतुकं**, क्ली, (जतु इव कायतीति । कै + कः ।)
हिङ्गु । (जतु एव । स्वार्थे कन् ।) लाक्षा ।
इति मेदिनी । के, ९१ ॥

**जतुका**, स्त्री, (जतु इव आकृत्या कायतीति ।
कै + “आतोऽनुपसर्गे कः ।” ३ । २ । ३ । इति
कः ।) जनीनामगन्धद्रव्यम् । इत्यमरटीकायां
भरतः ॥ चर्म्मचटिका । इति शब्दरत्नावली ॥
(यथा, वैद्यकचक्रपाणिसंग्रहेऽपस्माराधिकारे ।
“जतुकाशकृता तद्वद्गन्धैर्व्वा वस्तरोमभिः ।
अपस्मारहरो लेपो मूत्रसिद्धार्थशिग्रुभिः ॥”)
पर्पटी । इति भावप्रकाशः ॥ लताविशेषः । सा
तु मालवे प्रसिद्धा । तस्याः पर्य्यायाः । जतु-
कारी २ जननी ३ चक्रवर्त्तिनी ४ तिर्य्यक्फला ५
निशान्धा ६ बहुपुत्त्री ७ सुपुत्रिका ८ राज-
वृक्षा ९ जनेष्टा १० कपिकच्छुफलोपमा ११
रञ्जनी १२ सूक्ष्मवल्ली १३ भ्रमरी १४ कृष्ण-
वल्लिका १५ विज्जुलिका १६ कृष्णरुहा १७
ग्रन्थिपर्णा १८ सुवर्च्चिका १९ तरुवल्ली २०
दीर्घफला २१ । अस्या गुणाः । शिशिरत्वम् ।
जतुकृष्णाग्निसंस्पर्शा जतुकृच्चक्रवर्त्तिनी
॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**जतुकृष्णा**, स्त्री, (जतु इव कृष्णा ।) पर्पटी ।
इति भावप्रकाशः ॥

**जतुनी**, स्त्री, (जतु इव नयति जत्वाकारेण प्राप-
यति संश्लिष्टद्रव्यमिति । नी + क्विप् ।
अस्याः
संश्लेषात् द्रव्यस्य जतुवद्रूपत्वात्तथात्वम्
।) चर्म्म-
चटिका । इति त्रिकाण्डशेषः ॥

**जतुपुत्त्रकः**, पुं, (जतुनिर्म्मितः पुत्त्र इव । इवार्थे
कन् ।) पाशकगुटिका । नयः । इति
त्रिकाण्ड-
शेषः ॥

**जतुमणिः**, पुं, क्षुद्ररोगविशेषः । (जड्डुल इति
भाषा ॥) तस्य निदानं यथा, --
“सममुत्सन्नमरुजं मण्डलं कफरक्तजम् ।
सहजं लक्ष्म चैकेषां लक्ष्यो जतुमणिश्च सः
॥”
इति माधवकरः ॥
तच्चिकित्सा यथा --
“चर्म्मकीलं जतुमणिं मशकान्
तिलकालकान् ।
उत्कृत्य शस्त्रेण दहेत् क्षाराग्निभ्यामशेषतः
॥”
इति भावप्रकाशः ॥

**जतुरसः**, पुं, (जतुनो रसः ।) अलक्तकः ।
इति राजनिर्घण्टः ॥
(विवृतिरस्यालक्तकशब्दे
ज्ञातव्या ॥)

**जतूका**, स्त्री, (जतुका निपातनात् दीर्घः ।)
जनीनामगन्धद्रव्यम् । इत्यमरः । २ । ४ ।
१५३ ॥
चर्म्मचटी । इति शब्दरत्नावली ॥

**जत्रु**, क्ली, (जायते बाहुरस्मात् । जन् + “जत्र्वा-
महर्लोकादूर्द्ध्वलोकः । पामरः । इति मेदिनी
।
ने, ६ ॥ (असुरविशेषः । जनार्द्दन इति शब्द-
दर्शनात् ॥)

**जनकः**, पुं, (जनयतीति । जन + णिच् + ण्वुल् ।)
पिता । राजभेदः । स तु मिथिलाधिपतिः ।
इति मेदिनी । के, ९० ॥ इक्ष्वाकुराजपुत्रो
निमिर्वशिष्ठं त्यक्त्वा यज्ञं कृतवान्
वशिष्ठस्तद्-
यज्ञस्थानमागत्य राजानं आह्वयामास राजा
तदा निद्रित आसीत् । मुनिस्तु क्रोधात् त्वं
विदेहो भव इत्युक्त्रा तमभिशशाप । ततः, --
“दृष्ट्वा विदेहं राजानमृषयः सर्व्व एव ते ।
तञ्च ते याजयामासुर्यावद्दीक्षां मनीषिणः ॥
नरेन्द्रस्यापि तं देहमरक्षन्नृषिपुङ्गवाः ।
वस्त्रैर्माल्यैश्च गन्धैश्च पूज्यमानं मुहुर्मुहुः ॥
ऋषयोऽपि महात्मानो निमिदेहं ममन्थिरे ।
अरणिन्तस्य देहात्तु मन्थानञ्चापि चक्रिरे ॥
मन्त्रहोमैर्म्महात्मानः पुत्त्रहेतोर्न्निमेस्तदा ।
अरण्यां मथ्यमानायां प्रादुर्भूतो यतश्च सः ॥
अतो मिथिरिति ख्यातो
जननाज्जनकोऽभवत् ।
विदेहश्चाभवद्यस्मान्महात्मास महातपाः ॥
तस्माद्विदेहाः प्रोच्यन्ते सर्व्वे तद्वंशजा नृपाः ।
एवं विदेहराजस्तु पूर्ब्बको जनकोऽभवत् ॥
मिथिर्नाम महावीर्य्यो येन सा मिथिलाभवत्
॥”
इति रामायणम् ॥
(ऋषिविशेषः । स तु वैद्यसन्देहभञ्जनग्रन्थस्य
प्रणेता । यथा, ब्रह्मवैवर्त्ते । १ । १६ । १९ ।
“चकार जनको योगी वैद्यसन्देहभञ्जनम् ॥”
शम्बरासुरस्य पुत्त्रविशेषः । यथा, हरिवंशे ।
१६१ । ४४ ।
“श्रुत्वा तु शम्बराद्वाक्यं सुतास्ते शम्बरस्य ह
।
सन्नद्धा निर्ययुर्हृष्टाः प्रद्युम्नवधकाम्यया ॥”
इत्युपक्रम्याह ।
“सेनस्कन्धोऽतिसेनश्च सेनको जनकस्ततः
॥”)
उत्पादके, त्रि ॥ (यथा, ब्रह्मवैवर्त्ते । १ । १६
। २७ ।

तिक्तत्वम् । रक्तपित्तकफदाहतृष्णाविषनाशित्वम् । रुचिकारित्वम् । दीपनत्वञ्च । इति राजनिर्घण्टः ॥ जन्तुकापि पाठः । निशान्धाकृष्णरुहयोरित्यत्र क्रमेण निशाह्वा वृक्षरुहा च पाठः ॥ (लाक्षा । तत्पर्य्याया यथा, --
"कीटजा क्रिमिजा लाक्षा जतुका च गवायिका ॥"
इति वैद्यकरत्नमालायाम् ॥)

**जतुकारी**, स्त्री, (जतु करोतीति । जतु + कृ +
"कर्म्मण्यण् ।" ३ । २ । १ । इत्यण् ततः स्त्रियां ङीष् ।) जतुकालता । इति राजनिर्घण्टः ॥
(गुणादयोऽस्या जतुकाशब्दे व्याख्याताः ॥)

**जतुकृत्**, स्त्री, (जतु करोति उत्पादयतीति ।
कृ + क्विप् । जतोः कृदिति वा ।) जनीनामगन्धद्रव्यम् । इत्यमरः । २ । ४ । १५३ ॥
(अस्याः पर्य्याया यथा, --
"पर्प्पटी रञ्जना कृष्णा जतुका जननी जनी ।
दयश्च ।" उणां ४ । १०२ । इति रुर्नकारस्य
तकारश्च ।) स्कन्धसन्धिः । इत्यमरः । २ । ६ । ७८ ॥
पाखुरा इति भाषा ॥ (यथा, महाभारते । ३ । १७ । २२ ।
"तैः स बिद्धो महाबाहुः प्रद्युम्नः समरे स्थितः ।
जत्रुदेशे भृशं वीरो व्यवासीदद्रथे तदा ॥")

**जत्रुकं**, क्ली, (जत्रु एव । स्वार्थे कन् ।) जत्रु ।
इति शब्दरत्नावली ॥

**जत्वश्मकं**, क्ली, (जतुरूपमश्मकम् ।) शिलाजतु ।
इति राजनिर्घण्टः ॥

**जन**, ई म य ङ जनौ । इति कविकल्पद्रुमः ॥
(दिवां-आत्मं-अकं-सेट् ।) ई, जातः । म, जनयति । य ङ, जायते जन्यते । जनिर्ज्जन्म ।
प्रादुर्भावे इति प्राञ्चः । प्रादुर्भावः स्फुटीभावः ।
प्राकाश्ये प्रादुराविः स्यादित्यमरः । बीजादङ्कुरो जायते पत्रकाण्डादिभेदेन प्रकाशते इत्यर्थः । प्रादुर्भावोऽसदुत्पत्तिरिति केचित् ।
घटो जायते । इति दुर्गादासः ॥

**जन**, म लि र जनौ । इति कविकल्पद्रुमः ॥
(ह्वां-परं-अकं-सेट् ।) म, जनयति । लि, जजन्ति ।
रवैदिकः । इति दुर्गादासः ॥

**जनः**, पुं, (जायते इति । जन + अच् ।) लोकः ।
(यथा, महाभारते । १ । १४९ । ९ ।
"अथ प्रवाते तुमुले निशि सुप्ते जने तथा ।
तदुपादीपयत् भीमः शेते यत्र पुरोचनः ॥")
"जनकः सर्व्वरोगाणां दुर्व्वारो दारुणो ज्वरः ॥")

**जनकतनया**, स्त्री, (जनकस्य विदेहनृपतेस्तनया ।)
सीता । इति रामायणम् ॥ (यथा, मेघदूते । १ ।
"यक्षश्चत्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्य्याश्रमेषु ॥")

**जनकनन्दिनी**, स्त्री, (जनकस्य नन्दिनी ।) सीता ।
इति रामायणम् ॥

**जनकसुता**, स्त्री, (जनकस्य सुता ।) सीता ।
इति रामायणम् ॥

**जनकात्मजा**, स्त्री, (जनकस्य आत्मजा ।) सीता ।
इति शब्दरत्नावली ॥ (यथाह कश्चित् ।
"युष्मत्कृते खञ्जनगञ्जनाक्षि !
शिरो मदीयं यदि यातु यातु ।
लूनानि नूनं जनकात्मजार्थे
दशाननेनापि दशाननानि ॥")

**जनकारी**, [न्], पुं, (जनान् किरति आच्छादयति स्ववर्णेनेति । कृ आच्छादने + णिनिः ।)
अलक्तकः । इति राजनिर्घण्टः ॥

जनङ्गमः, पुं, (जनेभ्यो गच्छतीति । "गमश्च ।"
३ । २ । ४३ । खच् मुमागमश्च ।) चाण्डालः ।
इत्यमरः । २ । १० । १९ ॥ (यथा, माघे । १५ । ३५ ।
"अवधीज्जनङ्गम इवैष
यदि हतवृषो वृषं ननु ।
स्पर्शमशुचिवपुरर्हति न
प्रतिमाननान्तु नितरां नृपोचिताम् ॥")

**जनता**, स्त्री, (जनानां समूहः । जन + "ग्राम-
जनबन्धुभ्यस्तल् ।" ४ । २ । ४३ । इति तल् ।)
जनसमूहः । इत्यमरः । ३ । ३ । ४३ ॥ (यथा,
रघौ । ११ । ८२ ।
"तावुभावपि परस्परस्थितौ
वर्द्धमानपरिहीनतेजसौ ।
पश्यति स्म जनता दिनात्यये
पार्व्वणौ शशिदिवाकराविव ॥" * ॥
जनस्य भावः ।) जनत्वञ्च ॥

**जननं**, क्ली, (जन्यतेऽस्मिन्निति । जन + अधिकरणे
ल्युट् ।) वंशः । (जन + भावे ल्युट् ।) जन्म ।
इति मेदिनी । ने, ६६ ॥ (यथा, महानिर्व्वाण-
तन्त्रे । ३ । ५० ।
"जननमरणभीतिभ्रंशि सच्चित्स्वरूपं
सकलभुवनबीजं ब्रह्मचैतन्यमीडे ॥"
उत्पत्तिः । यथा, कुमारे । १ । ४२ ।
"अन्योन्यशोभाजननाद्बभूव
साधारणो भूषणभूष्यभावः ॥"
पुं, जनयति उत्पादयति जीवानिति । जन +
णिच् + कर्त्तरि ल्युः । विष्णुः । यथा, महा-
भारते । १३ । १४९ । ११४ ।
"जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥"
"जन्तून् जनयन् जननः ।" इति तद्भाष्यम् ॥
जनयतीति । जनि + ल्युः । उत्पादके, त्रि ।
यथा, महाभारते । ३ । ३६ । ३५ ।
"एकत्र चिरवासो हि न प्रीतिजननो भवेत् ॥")

**जननिः**, स्त्री, (जनयति घ्राणसुखमिति । जन +

**जनपदः**, पुं, (जनस्य लोकस्य पदं आश्रयस्थानं
यत्र । जनः पदं वस्तु यस्येति वा ।) देशः ।
(यथा, चाणक्यशतके । ३१ ।
"त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥"
जनपदनामानि महाभारते भीष्मपर्व्वणि ९ अध्याये
कथितानि अतस्तत्रैव विशेषतो द्रष्टव्यानि ॥)
जनः । इति मेदिनी । दे, ४८ ॥

**जनप्रवादः**, पुं, (जनेषु लोकेषु प्रवादोऽपवादः ।)
लोकापवादः । तत्पर्य्यायः । कौलीनम् २
विगानम् ३ वचनीयता ४ । इति हेमचन्द्रः ।
। २ । १८४ ॥ (यथा, महाभारते । २ । ७२ । १६ ।
"जनप्रवादान् सुबहून् शृण्वन्नपि नराधिपः ।
ह्रिया च धर्म्मसंयोगात् पार्थो द्यूतमियात् पुनः ॥")

**जनप्रियः**, पुं, (जनानां प्रियः ।) धान्यकम् ।
शोभाञ्जनवृक्षः । इति राजनिर्घण्टः ॥ (लोक-
प्रिये, त्रि ॥)

**जनमेजयः**, पुं, (जनान् शत्रुजनान् एजयति प्रतापैः
कम्पयतीति । एजृङ् कम्पने + णिच् + "एजेः
खश् ।" ३ । २ । २८ । इति खश् ततो मुमागमः ।)
परीक्षितराजपुत्त्रः । तत्पर्य्यायः । राजर्षिः २
पारीक्षितः ३ । इति त्रिकाण्डशेषः ॥ (यथा,
देवीभागवते । २ । ११ । ६ ।
"पौरजानपदा लोकाश्चक्रुस्तं नृपतिं शिशुम् ।
जनमेजयनामानं राजलक्षणसंयुतम् ॥"
जन्मेजय इति पाठोऽपि क्वचित् दृश्यते । तन्नि-
रुक्तिस्तच्छब्दे द्रष्टव्या ॥

अयं हि चतुरशीतिवर्षाणि राज्यं कृतवान् ।

तत्र अश्वमेधादिकं बहुयज्ञं कृत्वा पितृवधा-
मर्षात् सर्पसत्रं चकार । अत्रैवासौ जरत्-
कारुपुत्त्रेण आस्तीकेन प्रार्थितः सर्पसत्रात्

भ्रातृभिरभिहतो रोरूयमाणो मातुः समीप-
मुपागच्छत् । तं माता रोरूयमाणमुवाच किं
रोदिषि केनास्यभिहत इति । स एवमुक्तो
मातरं प्रत्युवाच जनमेजयस्य भ्रातृभिरभिहतो-
ऽस्मीति । तं माता प्रत्युवाच व्यक्तं त्वया तत्रा-
पराद्धं येनास्यभिहत इति । स तां पुनरुवाच
नापराध्यामि किञ्चिन्नावेक्षे हवींषि नावलिह
इति । तच्छ्रुत्वा तस्य माता सरमा पुत्त्रदुःखार्त्ता
तत् सत्रमुपागच्छद्यत्र स जनमेजयः सह
भ्रातृभिर्दीर्घ सत्रमुपास्ते । स तया क्रुद्धया
तत्रोक्तोऽयं मे पुत्त्रो न किञ्चिदपराध्यति नावे-
क्षते हवींषि नावलेढि किमर्थमभिहत इति ।
न किञ्चिदुक्तवन्तस्ते सा तानुवाच यस्मादय-
मभिहतोऽनपकारी तस्माददृष्टन्त्वां भयमाग-
मीष्यतीति । जनमेजय एवमुक्तो देवशुन्या
सरमया भृशं संभ्रान्तो विषण्णश्चासीत् । स
तस्मिन् सत्रे समाप्ते हास्तिनपुरं प्रत्येत्य पुरो-
हितमनुरूपमन्विच्छमानः परं यत्नमकरोत्
यो मे पापकृत्यां शमयेदिति । स कदाचि-
न्मृगयां गतः पारीक्षितो जनमेजयः कस्मिंश्चित्
स्वविषये आश्रममपश्यत् । तत्र कश्चिदृषि-
रासाञ्चक्रे श्रुतश्रवा नाम तस्य तपस्यभिरतः
पुत्त्र आस्ते सोमश्रवा नाम । तस्य तं पुत्त्र-
मभिगम्य जनमेजयः पारीक्षितः पौरहित्याय
वव्रे । स नमस्कृत्य तमृषिमुवाच भगवन्नयं तव
पुत्त्रो मम पुरोहितोऽस्त्विति । स एवमुक्तः
प्रत्युवाच जनमेजयं भो जनमेजय ! पुत्त्रोऽयं मम
सर्प्याञ्जातो महातपस्वी स्वाध्यायसम्पन्नो मत्तपो-
वीर्य्यसम्भूतो मच्छुक्रपातवत्यास्तस्याः कुक्षौ
जातः । समर्थोऽयं भवतः सर्व्वाः पापकृत्याः
शमयितुमन्तरेण महादेवकृत्याम् । अस्य त्वेक-
मुपांशुव्रतं यदेनं कश्चिद्ब्राह्मणः कश्चिदर्थ-
मभियाचेत्तं तस्मै यद्यादयं यद्येतदुत्सहसे ततो
नयस्वैनमिति । तेनैवमुक्तो जनमेजयस्तं प्रत्यु-
वाच भगवंस्तत्तथा भविष्यतीति ॥ * ॥

णिच् + बाहुलकात् अनिः ।) जनीनामगन्धद्रव्यम् । इति शब्दरत्नावली ॥

**जननी**, स्त्री, (जनयतीति । जनि + बाहुलकादनिः ।

कृदिकारादिति वा ङीष् । यद्वा, कृत्यल्युटो बहुलमिति ल्युट् टित्वात् ङीप् ।) माता ।
(यथा, पञ्चतन्त्रे । १ । ३६ ।
"निरतिशयं गरिमाणं
तेन जनन्याः स्मरन्ति विद्वांसः ।
यत् कमपि वहति गर्भं
महतामपि यो गुरुर्भवति ॥")
दया । इति मेदिनी । ने, ६६ ॥ जनीनामगन्धद्रव्यम् । (पर्य्यायाः यथा, --
"पर्प्पटी रञ्जना कृष्णा जतुका जननी जनी ।
जतुकृष्णाग्निसंस्पर्शा जतुकृच्चक्रवर्त्तिनी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
चर्म्मचटी । इति शब्दरत्नावली ॥ यूथिका ।
इति शब्दचन्द्रिका ॥ कटुका । मञ्जिष्ठा ।
अल-
क्तकः । जटामांसी । इति राजनिर्घण्टः ॥

विरराम ततश्चित्तप्रशमनार्थं भारतादिकं श्रुतवान् । वृत्तान्तस्त्वेषः क्रमशः प्रदर्श्यते । यथा, राजावल्यां १ परिच्छेदे ।
"पारीक्षितस्तदा राजा नीतिमानीतिभीतितः ।
पृथिवीं पालयामास निवसन् गजसाह्वये ।
कृत्वा पितृवधामर्षी सर्पेष्टिं मुनिभिः समम् ।
नाशयामास सर्पाणां कुलानि कुलनायकः ॥
हयमेधस्ततश्चक्रे सम्भारैर्बहुविस्तरैः ।
ब्रह्महत्याभवत्तत्र यागेऽकालकृते तदा ॥
तत् पापमभवत् तस्य दारुणं पृथिवीपतेः ।
वैशम्पायनतो वेदव्यासशिष्यात्तपोनिधेः ।
श्रुत्वा भारतमाख्यानं तत्पापात् मुक्तिमाप सः
।
चतुरशीतिवर्षाणि कृत्वा राज्यं सुनिर्म्मलम् ।
शतानीकं सुतं राज्ये संस्थाप्यैवं दिवं गतः ॥"
सोमश्रवसमृषिमसौ पौरहित्याय वृतवान् ।
तत्कथा यथा, महाभारते । १ । ३ । १ -- २०
।

"जनमेजयः पारिक्षितः सह भ्रातृभिः कुरु-

क्षेत्रे दीर्घसत्रमुपास्ते । तस्य भ्रातरस्त्रयः श्रुतसेन उग्रसेनो भीमसेन इति । तेषु तत्सत्रमुपासीनेष्वागच्छत् सारमेयः । स जनमेजयस्य

अस्य सर्पसत्रविवरणकथा यथा देवीभागवते । २ । ११ । ४६ -- ६० ।
"इति तस्य वचः श्रुत्वा राजा जन्मेजयस्तदा
।
नेत्राभ्यामश्रुपातञ्च चकारातीवदुःखितः ॥
धिङ्मामस्तु सुदुर्बुद्धेर्वृथामानकरस्य वै ।
पिता यस्य गतिं घोरां प्राप्तः पन्नगपीडितः ॥
अद्याहं मखमारभ्य करोम्यपचितिं पितुः ।
हत्वा सर्पानसन्दिग्धो दीप्यमाने विभावसौ ॥
आहूय मन्त्रिणः सर्व्वान् राजा वचनमब्रवीत् ।
कुर्व्वन्तु यज्ञसम्भारं यथार्हं मन्त्रिसत्तमाः ! ॥
गङ्गातीरे शुभां भूमिं मापयित्वा द्विजोत्तमैः ।
कुर्व्वन्तु मण्डपं स्वस्थाः शतस्तम्भं मनोहरम्
॥
वेदी यज्ञस्य कर्त्तव्या ममाद्य सचिवाः खलु ।
तदङ्गत्वे विधेयो वै सर्पसत्रः सुविस्तरः ॥
तक्षकस्तु पशुस्तत्र होतोत्तङ्को महामुनिः ।
शीघ्रमाहूयतां विप्राः सर्व्वज्ञा वेदपारगाः ॥
मन्त्रिणस्तु तदा चक्रुर्भूपवाक्यैर्व्विचक्षणाः ।

यज्ञस्य सर्व्वसम्भारं वेदीं यज्ञस्य विस्तृताम् ॥
हवने वर्त्तमाने तु सर्पाणां तक्षको गतः ।
इन्द्रं प्रति भयार्त्तोऽहं त्राहि मामिति चाब्रवीत् ॥
भयभीतं समाश्वास्य स्वासने सन्निवेश्य च ।
ददावभयमत्यर्थं निर्भयो भव पन्नग ! ॥
तमिन्द्रशरणं ज्ञात्वा मुनिर्द्दत्ताभयं तथा ।
उत्तङ्कोऽह्वयदुद्विग्नः सेन्द्रं कृत्वा निमन्त्रणम् ॥
स्मृतस्तदा तक्षकेण यायावरकुलोद्भवः ।
आस्तीको नाम धर्म्मात्मा जरत्कारुसुतो मुनिः ॥
तत्रागत्य मुनेर्बालस्तुष्टाव जनमेजयम् ।
राजा तमर्च्चयामास दृष्ट्वा बालं सुपण्डितम् ॥”)

**जनयित्री**, स्त्री, (जनयितृ + ङीप् ।) माता । इत्यमरः । २ । ६ । २९ ॥ (यथा, रघुः । १० । ७० ।
“कैकेय्यास्तनयो जज्ञे भरतो नाम शीलवान् ।
जनयित्रीमलञ्चक्रे यः प्रश्रय इव श्रियम् ॥”)

**जनरवः**, पुं, (जनेषु लोकेषु रवः प्रवादः ।) लोकवादः । यथाह लक्ष्मणसेनः ।
“परीवादस्तथ्यो भवति वितथो वापि महतां
तथाप्युच्चैर्धाम्नां हरति महिमानं जनरवः ॥”

**जनलोकः**, पुं, (जन एव लोकः ।) महर्लोकोपरिभुवनम् । यथा, --
“अयं स हि महर्लोकः स्वर्लोकात् परमाद्भुतः ।
कल्पायुषो वसन्त्यत्र तपसा धुतकल्मषाः ॥
इत्थं कथां कथयतोर्भगवद्गणयोः प्रिये ! ।
क्षणादूर्द्ध्वेन विमानन्तज्जनलोकं निनाय तान् ॥
निवसन्त्यमला यत्र मानसा ब्रह्मणः सुताः ।
सनन्दनाद्या योगीन्द्राः सर्व्वे ते ह्यूद्र्ध्वरेतसः ॥
शशाप । यथा, --
“सप्तरात्रेण राजासौ सभृत्यबलवाहनः ।
पापकर्म्मसमाचारो वधं प्राप्स्यति दुर्म्मतिः ॥
सर्व्वसत्त्वानि यानीह जङ्गमानि स्थिराणि च ।
सर्व्वेषां पांशुवर्षेण क्षयः क्षिप्रं भविष्यति ॥
दण्डस्य विषयो यावत् तावत् सवनमाश्रमम् ।
पांशुभूतमिवाकस्मात् सप्तरात्राद्भविष्यति ॥
इत्युक्त्वा क्रोधसन्तप्तस्तदाश्रमनिवासिनम् ।
जनं जनपदस्यान्ते स्थीयतामित्यवोचत ॥
सप्ताहाद्भस्मसाद्भूतः स चापि ब्रह्मतेजसा ।
तस्य दण्डस्य विषयो विन्ध्यशैलस्य सानुषु ॥
तदाप्रभृति काकुत्स्थ ! दण्डकारण्यमुच्यते ।
तपस्विनः स्थिता यत्र तज्जनस्थानमुच्यते ॥”
इति रामायणम् ॥
(अत्र रावणस्य खरदूषणप्रभृतीनि सैन्यान्यासन् । यथा, रामायणे । १ । १ । ४६ ।
“तेन तत्रैव वसता जनस्थाननिवासिनी ।
विरूपिता शूर्पनखा राक्षसी कामरूपिणी ॥”
“जनस्थानं नाम दण्डकारण्ये रावणबलनिवेशस्थानम् ।” इति तट्टीकायां रामानुजः ॥)

**जना**, स्त्री, (जननमिति । जन + बाहुलकात् अङ् ।) उत्पत्तिः । इति मुग्धबोधम् ॥

**जनान्तः**, पुं, (जनस्य प्रदेशस्य अन्तः ।) देशः । इति धनञ्जयः । जेला इति पारस्यभाषा ॥

**जनान्तिकम्**, क्ली, अप्रकाशः । इति त्रिकाण्डशेषः ॥ (एतल्लक्षणं यथा, साहित्यदर्पणे ।
“त्रिपताककरेणान्यानपवार्य्यान्तरा कथाम् ।
अन्योन्यामन्त्रणं यत् स्याज्जनान्ते तज्जनान्तिकम् ॥”
एतल्लक्षणोक्तमप्रकाशकथनम् । नाटके एव अस्य भूरिप्रयोगो दृश्यते ॥ जनस्य अन्तिकम् । जनसमीपञ्च ॥)

**जनार्द्दनः**, पुं, विष्णुः । इत्यमरः । १ । १ । १९ ॥ तन्नामव्युत्पत्तिर्यथा । “समुद्रान्तवासिनो जननाम्नोऽसुरान् अर्द्दितवान् जनार्द्दनः । अर्द्दञ्
जीवता दधिसंमिश्रं सर्व्वे ते विष्णुलोकगाः ।
यस्तु पिण्डो मया दत्तस्तव हस्ते जनार्द्दन ! ॥
यमुद्दिश्य त्वया देयस्तस्मिन् पिण्डो मृते प्रभो ! ।
एष पिण्डो मया दत्तस्तव हस्ते जनार्द्दन ! ॥
अन्तकाले गते मह्यं त्वया देयो गयाशिरे ।
जनार्द्दन ! नमस्तुभ्यं नमस्ते पितृमोक्षद ! ॥
पितृपात्र नमस्तुभ्यं नमस्ते पितृरूपिणे ।
गयायां पितृरूपेण स्वयमेव जनार्द्दनः ॥
तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात् ।
नमस्ते पुण्डरीकाक्ष ! ऋणत्रयविमोचन ! ॥
लक्ष्मीकान्त ! नमस्तेऽस्तु पितृमोक्षप्रदो भव ।
वामजानु च सम्पात्य नत्वा भीमो जनार्द्दनम् ॥
श्राद्धं सपिण्डकं कृत्वा भ्रातृभिर्ब्रह्मलोकभाक् ।
पितृभिः सह धर्म्मात्मा कुलानाञ्च शतेन च ॥
शिलायां व्यक्तरूपेण व्यक्ताव्यक्तात्मना स्थितः ।
लक्ष्मीशो विबुधैः सार्द्धं तस्माद्देवमयी शिला ॥”
इति श्रीवायुपुराणे श्वेतवाराहकल्पे गयामाहात्म्ये ४ अध्यायः ॥ * ॥ शालग्रामशिलाविशेषः । तल्लक्षणं यथा, --
“सशङ्खचक्राब्जगदं जनार्द्दनमिहो नमः ।
उपेन्द्रं गदिनं साविपद्मशङ्ख ! नमोऽस्तु ते ॥”
इति पाद्मे पातालखण्डे १० अध्यायः ॥
“आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात् ।
ज्ञानञ्च शङ्करादिच्छेन्मुक्तिमिच्छेज्जनार्द्दनात् ॥”
इति कर्म्मलोचनम् ॥

**जनाशनः**, पुं, (जनानश्नाति भक्षयतीति । अश + ल्युः ।) वृकः । इति राजनिर्घण्टः ॥

**जनाश्रयः**, पुं, (जनानां लोकानामाश्रयः ।) मण्डपः । इत्यमरः । २ । २ । ९ ॥

**जनिः**, स्त्री, (जननमिति । जन + “जनिघसिभ्यामिण् ।” उणां ४ । १२९ । इति इण् । जनिवध्योश्चेति वृद्धिनिषेधः ।) उत्पत्तिः । इत्यमरः । १ । ४ । ३० ॥ (यथा, हरिवंशे । २०८ । ४० ।
“वनस्पत्योषधींश्चैव युगपत् प्रतिपद्यसे ।
बालभावाय वसुधां पक्षे पक्षे जनिस्तव ॥”
जायते यस्याम् । जन + आधारे इण् ।) नारी ।

अन्ये तु योगिनो ये वै ह्यस्खलद्‌ब्रह्मचारिणः ।
सर्व्वद्वन्द्वविनिर्म्मुक्तास्ते वसन्त्यत्र निर्म्मलाः ॥
महर्लोकः क्षितेरूर्द्ध्वमेककोटिप्रमाणतः ।
कोटिद्वयेतिसंख्यातो जनो भूर्लोकतो जनैः ॥”
इति स्कान्दे काशीखण्डम् ॥

**जनवल्लभः**, पुं, (जनानां लोकानां वल्लभः प्रियः ।) श्वेतरोहितवृक्षः । इति राजनिर्घण्टः ॥ लोक-प्रिये, त्रि ॥

**जनवादः**, पुं, (जनेषु लोकेषु वादोऽपवादः ।) जन-प्रवादः । इति हलायुधः ॥ (यथा, आर्य्यासप्त-शत्याम् । ४१९ ।
“भस्मपरुषेऽपि गिरिशे स्नेहमयी त्वमुचितेन सुभगासि ।
मोघस्त्वयि जनवादो यदोषधिप्रस्थदुहितेति ॥”)

**जनश्रुतिः**, स्त्री, (जनेभ्यः श्रुतिः श्रवणम् ।) सत्य-मसत्यं वा लोकप्रवादः । तत्पर्य्यायः । किंव-दन्ती २ । इत्यमरः । १ । ६ । ७ ॥ (यथा, आर्य्यासप्तशत्याम् । ३६५ ।
“पुंसां दर्शय सुन्दरि ! मुखेन्दुमीषत्त्रपामपाकृत्य ।
जायाजित इति रूढा जनश्रुतिर्मे यशो भवतु ॥”)

**जनस्थानं**, क्ली, (जनस्य स्थानं भूभागः ।) दण्ड-कारण्यम् । इति जटाधरः ॥ दण्डकारण्य-समीपस्थानविशेषः । यथा ।
इक्ष्वाकुराजपुत्त्रो दण्डः शुक्राचार्य्यकन्यामरजां बलाद्‌गृहीत्वा मैथुनं कृतवान् स मुनिस्तत् श्रुत्वा राजानं वधे अर्द्दक्च नन्दादित्वादनः । किंवा जनै-र्लोकैरर्द्यते याच्यते पुरुषार्थानसौ जनार्द्दनः । अर्द्द यातनागतियाचने कर्म्मणि अनट् । किंवा जननं जनः भावे घञ् । जनं जन्म अर्द्दयति हन्ति भक्तस्य मुक्तिदत्वादिति जनार्द्दनः । किंवा जनान् लोकान् अर्द्दति हररूपेण संहारकत्वादिति जनार्द्दनः । किंवा जनयति उत्पादयति लोकान् ब्रह्मरूपेण सृष्टिकर्त्तृत्वा-दिति जनः जनेर्य्यन्तात् पचाद्यन् । अर्द्दति हन्ति लोकान् हररूपेण संहारकारित्वादिति अर्द्दनः जनश्चासौ अर्द्दनश्चेति जनार्द्दनः । किंवा जनान् लोकान् अर्द्दति गच्छति प्राप्नोति रक्षणार्थं पालकत्वादिति जनार्द्दनः ।” इत्यमर-टीकायां भरतः ॥ * ॥ गयायां तस्य हस्ते जीवितस्य पिण्डदानविधिर्य्यथा, --
“जनार्द्दनो भस्मकूटे तस्य हस्ते तु पिण्डदः ।
आत्मनोऽप्यथवान्येषां सव्येनैव तिलैर्व्विना ॥

माता । इति शब्दरत्नावली ॥ (जायते सुख-मनयेति । करणे इण् ।) जनीनामगन्धद्रव्यम् । इत्यमरटीकायां रायमुकुटः ॥

**जनिका**, स्त्री, (जायते वंशो यस्यामिति जनिः । ततः स्वार्थे कन् टाप् च ।) स्नुषा । इति शब्द-रत्नावली ॥ (जनिशब्दार्थः ॥) जननकर्त्री च ॥

**जनितं**, त्रि, (जन्यते स्मेति । जन + णिच् + क्तः ।) उत्पादितम् । यथा, --
“सेनाचरी भवदिभाननदानवारि-वासेन यस्य जनिता सुरभी रणश्रीः ॥”
इति नैषधम् ॥
(यथा च हरिवंशे । १६१ । ३१ ।
“अतोऽहं कामयामित्वां नहि त्वं जनितो मया ।
रूपन्ते सौम्य ! पश्यन्ती सीदामि हृदि दुर्ब्बला ॥”)

**जनिता** [ऋ] पुं, (जनयतीति । जन + णिच् + तृच् । "जनिता मन्त्रे ।" ६ । ४ । ५३ । इति निपातनात् णिलोपः ।) पिता । इति शब्द-रत्नावली ॥ (यथा, ऋग्वेदे । १ । १२९ । ११ ।
"अधा हि त्वा जनिता जीजनद्वसो
रक्षोहणं त्वा जीजनद्वसो ॥"
क्वचित् लौकिकेऽपि दृश्यते । यथा, पञ्चतन्त्रे । १ । ९ ।
"अर्थार्थी जीवलोकोऽयं श्मशानमपि सेवते ।
जनितारमपि त्यक्त्वा निःस्वं गच्छति दूरतः ॥")

**जनित्री**, स्त्री, (जनितृ + स्त्रियां ङीप् ।) माता । इति शब्दरत्नावली ॥ (यथा, ऋग्वेदे । ३ । ४८ । २ ।
"तं ते माता परि योषा जनित्री
महः पितुर्दम आसिञ्चदग्रे ॥"
यथाच शङ्करकृतविष्णुस्तोत्रे ९ ।
"या सूते सत्त्वजालं सकलमपि सदा सन्निधा-नेन पुंसो
धत्ते या सत्त्वयोगाच्चरमचरमिदंभूतये भूत-जातम् ।
धात्रीं स्थात्रीं जनित्रीं प्रकृतिमविकृतिं विश्व-शक्तिं विधात्रीं
विष्णोर्विश्वात्मनस्तां विपुलगुणमयीं प्राणनाथां प्रणौमि ॥")

**जनित्वः**, पुं, (जायतेऽस्मादिति । जन + "जनि-दाच्युस्रिति ।" उणां ४ । १०४ । इति इत्वन् ।) पिता । इत्युणादिकोषः ॥

**जनित्वा**, स्त्री, (जायतेऽस्थाः । जन + इत्वन् । अजादित्वात् टाप् ।) माता । इत्युणादिकोषः ॥

**जनिनीलिका**, स्त्री, (जन्या उत्पत्त्या नीलिका ।)

**जनूः**, स्त्री, (जनु + स्त्रियां ऊङ् ।) जन्म । इति शब्दरत्नावली ॥

**जनेष्टः**, पुं, (जनानामिष्टः प्रियः ।) मुद्गरवृक्षः । इति राजनिर्घण्टः ॥

**जनेष्टा**, स्त्री, (जनानामिष्टा प्रिया ।) जतुका । वृद्धिनामौषधिः । जातीपुष्पम् । हरिद्रा । इति राजनिर्घण्टः ॥

**जनोदाहरणं**, क्ली, (जनैरुदाह्रियते कथ्यते इति । उत् + आ + हृ + कर्म्मणि ल्युट् ।) यशः । इति धनञ्जयः ॥

**जनौः**, पुं, (जनानवति रक्षतीति । अव + क्विप् । "च्छ्वोः शूडनुनासिके च ।" ६ । ४ । १९ । इति ऊट् ततो वृद्धिः ।) जनरक्षकः । इति मुग्धबोधम् ॥

**जन्तुः**, पुं, (जायते उद्भवतीति । जन + "कमि-मनिजनीति ।" उणां । १ । ७२ । इति तुः ।) प्राणी । इत्यमरः । १ । ४ । ३० ॥ (यथा, मनौ । ४ । २४० ।
"एकः प्रजायते जन्तुरेक एव प्रलीयते ।
एकोऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतम् ॥"
मनुष्ये बहुवचनान्तः । इति निघण्टुः ॥ यथा, ऋग्वेदे । १ । ९४ । ५ ।
"विशां गोपा अस्य चरन्ति जन्तवो
द्विपच्च यदुत चतुष्पदक्तुभिः ॥"
सोमकस्य राज्ञः पुत्त्रविशेषः । अस्य विवरण-मुक्तं यथा, महाभारते । ३ । १२७ -- १२८ अध्याययोः ।
"युधिष्ठिरासीन्नृपतिः सोमको नाम धार्म्मिकः ।
तस्य भार्य्याशतं राजन् ! सदृशीनामभूत्तदा ॥
स वै यत्नेन महता तासु पुत्त्रं महीपतिः ।
कञ्चिन्नासादयामास कालेन महता ह्यपि ॥
कदाचित्तस्य वृद्धस्य घटमानस्य यत्नतः ।
जन्तुर्नाम सुतस्तस्मिन् स्त्रीशते समजायत ॥
तं जातं मातरः सर्व्वाः परिवार्य्य समासते ।
सततं पृष्ठतः कृत्वा कामभोगान् विशाम्पते ! ॥
ततः पिपीलिका जन्तुं कदाचिददशत् स्फिचि ।
पुत्त्रार्थिना मया चोढं न तासां विद्यते प्रजा ॥
एकः कथञ्चिदुत्पन्नः पुत्त्रो जन्तुरयं मम ।
यतमानासु सर्व्वासु किन्नु दुःखमतः परम् ॥
वयश्च समतीतं मे सभार्य्यस्य द्विजोत्तम ! ।
आसां प्राणाः समायत्ता मम चात्रैकपुत्त्रके ॥
स्यात्तु कर्म्म तथा युक्तं येन पुत्त्रशतं भवेत् ।
महता लघुना वापि कर्म्मणा दुष्करेण वा ॥
ऋत्विगुवाच ।
अस्ति चैतादृशं कर्म्म येन पुत्त्रशतं भवेत् ।
यदि शक्नोषि तत् कर्त्तुमथ वक्ष्यामि सोमक ! ॥
सोमक उवाच ।
कार्य्यं वा यदि वाकार्य्यं येन पुत्त्रशतं भवेत् ।
कृतमेवेति तद्विद्धि भगवन् ! प्रब्रवीतु मे ॥
ऋत्विगुवाच ।
यजस्व जन्तुना राजंस्त्वं मया वितते क्रतौ ।
ततः पुत्त्रशतं श्रीमद्भविष्यत्यचिरेण ते ॥
वपायां हूयमानायां धूममाघ्राय मातरः ।
ततस्ताः सुमहावीर्य्यान् जनयिष्यन्ति ते सुतान् ।
तस्यामेव तु ते जन्तुर्भविता पुनरात्मजः ।
उत्तरे चास्य सौवर्णं लक्ष्म पार्श्वे भविष्यति ॥
ततः स याजयामास सोमकं तेन जन्तुना ।
मातरस्तु वलात् पुत्त्रमपाकार्षुः कृपान्विताः ॥
हा हताः स्मेति वाशन्त्यस्तीव्रशोकसमाहताः ।
रुदत्यः करुणञ्चापि गृहीत्वा दक्षिणे करे ॥
सव्ये पाणौ गृहीत्वा तु याजकोऽपि स्म कर्षति ।
कुररीणामिवार्त्तानां समाकृष्य तु तं सुतम् ॥
विशस्य चैनं विधिना वपामस्य जुहाव सः ।
वपायां हूयमानायां गन्धमाघ्राय मातरः ॥
आर्त्ता निपेतुः सहसा पृथिव्यां कुरुनन्दन ! ॥
सर्व्वाश्च गर्भानलभंस्ततस्ताः परमाङ्गनाः ॥
ततो दशसु मासेषु सोमकस्य विशाम्पतेः ।
जज्ञे पुत्त्रशतं पूर्णं तासु सर्व्वासु भारत ! ॥
जन्तुर्ज्येष्ठः समभवत् जनित्र्यामेव पार्थिव ! ।
स तासामिष्ट एवासीत् न तथा ते निजाः सुताः ॥
तच्च लक्षणमस्यासीत् सौवर्णं पार्श्व उत्तरे ।
तस्मित् पुत्त्रशते चाग्र्यः स बभूव गुणैरपि ॥")

महानीली । इति राजनिर्घण्टः ॥
(महानीली-
शब्देऽस्या विवरणं ज्ञातव्यम् ॥)

**जनिमा**, [न्] पुं, (जन्यते इति । जन + “जनि-
मृङ्भ्यामिमनिन् ।” उणां ४ । १४८ । इति
इमनिन् ।) जन्म । इत्युणादिकोषः ॥

**जनी**, स्त्री, (जायते सन्ततिर्यस्यामिति । जन +
“जनिघसिभ्यामिण् ।” उणां ४ । १२९ ।
इतीण्
जनिवध्योश्चेति वृद्धिनिषेधः । ततः
कृदिकारा-
दिति ङीष् ।) सीमन्तिनी । बधूः (जन +
भावे
इण् ।) उत्पत्तिः । (जायते आरोग्यमनया ।
करणे इण् ।) ओषधीभित् । इति मेदिनी ।
ने, ६ ॥ शेषस्य पर्य्यायः । जतूका २
रजनी ३
जतुकृत् ४ चक्रवर्त्तिनी ५ संस्पर्शा ६ ।
इत्य-
मरः । २ । ४ । १५३ ॥ जतुका ७ जनिः
८
जननी ९ । इति भरतः ॥
राजनिर्घण्टोक्तगुण-
पर्य्यायौ जतुकाशब्दे द्रष्टव्यौ ॥

**जनुः** [स्] क्ली, (जन्यते इति । जन + “जने-
रुसिः ।” उणां । २ । ११६ । इति उसिः
॥)
जन्म । इत्यमरः । १ । ४ । ३० ॥ (यथा,
ऋग्वेदे । ४ । १७ । २० ।
“त्वं राजा जनुषां धेह्यस्मे अधिश्रवो
माहिनं यज्जरित्रे ॥”)

**जनुः**, स्त्री, (जन्यते इति । जनीम्याङ जनौ +
बाहुलकात् उः ।) जन्म । इत्युणादिकोषः
॥

स दष्टो व्यनदन्नादं तेन दुःखेन बालकः ॥
ततस्ता मातरः सर्व्वाः प्राक्रोशन्
भृशदुःखिताः ।
प्रावार्य्य जन्तुं सहिताः स शब्दस्तुमुलोऽभवत्
॥
तमार्त्तनादं सहसा शुश्राव स महीपतिः ।
अमात्यपर्षदो मध्ये उपविष्टः सहर्त्विजा ॥
ततः प्रस्थापयामास किमेतदिति पार्थिवः ।
तस्मै क्षत्ता यथावृत्तमाचचत्ते सुतं प्रति ॥
त्वरमाणः स चोत्थाय सोमकः सह मन्त्रिभिः ।
प्रविश्यान्तःपुरं पुत्त्रमाश्वासयदरिन्दमः ॥
सान्त्वयित्वा तु तं पुत्त्र निष्क्रम्यान्तःपुरान्नृपः
।
ऋत्विजा सहितो राजन् ! सहामात्य उपा-
विशत् ॥
सोमक उवाच ।
धिगस्त्विहैकपुत्त्रत्वमपुत्त्रत्वं वरं भवेत् ।
नित्यातुरत्वाद्भूतानां शोक एवैकपुत्त्रता ॥
इदं भार्य्याशतं ब्रह्मन् ! परीक्ष्य सदृशं प्रभो ! ।

**जन्तुकम्बुः**, पुं, (जन्तुश्चेत्ननाविशिष्टः कम्बुरिव ।)
कृमिशङ्खः । इति राजनिर्घण्टः ॥

**जन्तुका**, स्त्री, (जन्तुभिः कायति प्रकाशते इति ।
कै + कः । अजादित्वात् टाप् ।) नाडीहिङ्गु ।
लाक्षा । इति राजनिर्घण्टः ॥ (यथा, --
“जन्तुका जलजन्मा च तथा शावरकन्दकम्
।”
इत्युत्तरस्थानेऽष्टादशेऽध्याये वाभटेनोक्तम् ॥)

**जन्तुघ्नं**, क्ली, (जन्तून् कृमीन् हन्तीति । हन +
“अमनुष्यकर्त्तृके च ।” ३ । २ । ५३ । इति
टक् ।) विडङ्गम् । इति शब्दरत्नावली ॥
(यथा, भावप्रकाशस्य मध्यखण्डे चतुर्थभागे
योनिकन्दचिकित्सायाम्।
“पौरिकाम्रास्थि जन्तुघ्नं रजन्यञ्जनकट्फलाः
॥”)
हिङ्गु । इति रत्नमाला ॥

**जन्तुघ्नः**, पुं, (जन्तून् क्रिमीन् हन्तीति । हन +
टक् ।) बीजपूरः । इति राजनिर्घण्टः ॥

**जन्तुघ्नी**, स्त्री, (जन्तुघ्न + टित्वात् ङीप् ।) विड-
ङ्गम् । इति राजनिर्घण्टः ॥

**जन्तुनाशनं**, क्ली, (जन्तून् क्रिमीन् नाशयतीति ।
नश + णिच् + ल्युः । यद्वा, जन्तूनां नाशनं
विनाशो यस्मादिति ।) हिङ्गु । इति राज-
निर्घण्टः ॥

**जन्तुपादपः**, पुं, (जन्तुप्रधानः पादपः ।) कोषाम्र-
वृक्षः । इति राजनिर्घण्टः ॥

**जन्तुफलः**, पुं, (जन्तवः कीटाः फले यस्य ।)
उडुम्बरः । इत्यमरः । २ । ४ । २२ ॥
(पर्य्यायो-
ऽस्य यथा, --
"उडुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**जन्तुमारी**, स्त्री, (जन्तून् क्रिमीन् मारयतीति । जन्तु
+ मृ + णिच् + "कर्म्मण्यण् ।" ३ । २ । १
। इत्यण् ।
ततो ङीप् ।) निम्बूकः । इति राजनिर्घण्टः
॥

**जन्तुला**, स्त्री, (जन्तून् कीटान् लाति आददा-
तीति । ला + कः ।) काशतृणम् । इति
त्रिकाण्ड-
शेषः ॥

**जन्तुहन्त्री**, स्त्री, (हन्तीति । हन् + तृच् स्त्रियां
ङीप् । ततो जन्तूनां हन्त्री नाशिका ।)
विड-
ङ्गम् । इति राजनिर्घण्टः ॥

**जन्म**, [न्] क्ली, (जायते इति । जन +
"सर्व्वधातुभ्यो
मनिन् ।" उणां । ४ । १४४ । इति मनिन्
।)
उत्पत्तिः । आद्यक्षणसम्बन्धः । इति तिथि-
तत्त्वेऽमावस्याप्रकरणे व्याख्यातम् ॥ तथा
च ।
बुद्बुदः सप्तरात्रेण मांसपेषी भवेत्ततः ।
द्विसप्ताहाद्भवेत् पेषी रक्तमांसाचिता दृढा ॥
वीजस्यैवाङ्कुराः पेष्याः पञ्चविंशतिरात्रतः ।
भवन्ति मासमात्रेण पञ्चधा जायते पुनः ॥
ग्रीवा शिरश्च कण्ठश्च पृष्ठवंशस्तथोदरम् ।
पाणिपादं तथा पार्श्वं कटिमात्रं तथैव च ॥
मासद्वयेन सर्व्वाणि क्रमशः सम्भवन्ति हि ।
त्रिभिर्म्मासैः प्रजायन्ते सर्व्वाङ्गाङ्कुरसन्धयः ॥
मासैश्चतुर्भिरङ्गुल्यः प्रजायन्ते यथाक्रमम् ।
स्थैर्य्यं चतुर्थे चाङ्गानां पञ्चमे शोणितोद्भवः ॥
मुखं नासा च कर्णौ च जायन्ते मासि पञ्चमे ।
षष्ठे बलस्य वर्णस्य नखलोम्नाञ्च सम्भवः ॥
दन्तपंक्तिस्तथा गुह्यं जायन्ते च नखाः पुनः ।
कर्णयोश्च भवेच्छिद्रं षण्मासाभ्यन्तरेण च ॥
पायुर्मेढ्रमुपस्थञ्च नाभिश्चैवोपजायते ।
सन्धयो ये च गात्रेषु जायन्ते मासि सप्तमे ॥
मनस्तु चेतनायुक्तो नाडीस्नायुसिरास्ततः ।
सप्तमे चाष्टमे चैव त्वङ्मांसस्मृतिमानपि ॥
अङ्गप्रत्यङ्गसम्पूर्णः शिरःकेशसमन्वितः ।
विभक्तावयवः स्पष्टः पुनर्म्मासाष्टमेन च ॥
नवमे दशमे मासि प्रबलैः सूतिमारुतैः ।
निःसार्य्यते बाण इव जन्तुश्छिद्रेण सज्वरः ॥
मनसश्चञ्चलत्वेन यदा गर्भस्थितिर्भवेत् ।
तदा विकृतिरूपेण पापात्मा हि प्रजायते ॥
पुटद्वयं समासाद्य यदा वहति मारुतः ।
तदा प्रसूते पापिष्ठान् षण्डान् कर्म्मवहिष्कृतान्
॥
मातृरक्तोत्तरा नारी पितुः शुक्रोत्तरो नरः ।
उभयोर्बीजसामान्ये जायते वै नपुंसकम् ॥"
अन्यच्च ।
"विषमायां तिथौ क्षिप्तं कुर्य्याद्वीजन्तु कन्यकाम्
।
समायां पुरुषं नूनं केचिदाहुर्मनीषिणः ॥
वामाङ्गेन भवेन्नारी दक्षिणेन पुमान् भवेत् ।
रक्ताधिक्ये मातृरूपं रेतोऽधिक्ये तु पैतृकम् ॥
शुक्रशोणितसङ्घाते वायुना च द्विधा कृते ।
यमौ स्यातां त्रिधा चेति चतुर्द्धा बहुधापि वा ॥
ततो हीनाधिकव्यङ्गकुब्जवामनकादयः ।
जायन्ते सर्पकुण्डाण्डा विकृतान्याश्च योनयः
॥"
तथा च सारकलिकायाम् ।
कण्डूयनेऽपि चाशक्तः परिवर्त्तेऽप्यनीश्वरः ।
स्नानपानादिकाहारमप्याप्नोतिपरेच्छया ॥
अशुचिः संस्तरे सूक्ष्मकीटदंशादिभिस्तथा ।
भक्ष्यमाणोऽपि नैवैषां समर्थो विनिवारणे ॥
केन बन्धनबद्धोऽहं कारणं किमकारणम् ।
किं कार्य्यं किमकार्य्यं वाकिं वाच्यं किञ्च
नोच्यते ॥
कोऽधर्म्मः कश्च वै धर्म्मः कस्मिन् वा वर्त्तते
कथम् ।
किं कर्त्तव्यमकर्त्तव्यं किं वा किं गुणदोषवत् ॥
संमूढस्य स्मृतिभ्रंशः शीघ्रं संजायते पुनः ।
रतिः संजायते तूर्णं जन्तोस्तत्रैव जन्मनि ॥
रक्तो मूढश्च लोकोऽयमकार्य्ये सम्प्रवर्त्तते ।
देही देहं परित्यज्य नेन्द्रस्थानमपीच्छति ॥
तस्मात् कीटोऽपि जन्तूनां सुमूढो जायते
भृशम् ।
न चात्मानं विजानाति न परं न च दैवतम् ॥
न शृणोति परं श्रेयः सति चक्षुषि नेक्षते ।
बुद्धौ सत्यां न जानाति बुध्यमानो बुधैरपि ॥
संसारे क्लिश्यते तेन रागलोभवशानुगः ॥"
इति सुखबोधः ॥

**जन्मं**, क्ली, (जायते इति । जन + बाहुलकात्
मन् ।) उत्पत्तिः । "अनन्तरं नाम्नीति
मप्रत्यये
जन्म मदन्तञ्च । जन्ममदन्तमपीत्युणादाविति
मुकुटः । जन्मे पञ्चनवस्थिते
कलहरिपुभयमिति
ज्योतिषे ।" इत्यमरटीकायां भरतः ॥

**जन्मकीलः**, पुं, (जन्मनः कील इव । विष्णुसेव-
नेन हि जन्माभावात् तथात्वम् ।) विष्णुः ।
इति त्रिकाण्डशेषः ॥

**जन्मदः**, पुं, (जन्म ददातीति । जन्म + दा + "आतो
ऽनुपसर्गे कः ।" ३ । २ । ३ । इति कः ।)
पिता । इति शब्दरत्नावली ॥

**जन्मवर्त्म**, [न्] क्ली, (जन्मन उत्पत्तेर्वर्त्म पन्थाः ।)
योनिः । इति त्रिकाण्डशेषः ॥

**जन्मान्तरं**, क्ली, (जन्मनः अन्तरम् ।) परलोकः ।
इति भरतः ॥ तत्पर्य्यायः । भावान्तरम् २

"अध्वस्तक्षणयोगस्य क्षणयोगो जनिर्म्मता
।"
इति सामान्यलक्षणाग्रन्थे
शिरोमणिधृतोदय-
नाचार्य्यकारिका ॥ तत्पर्य्यायः । जनुः २
जन-
नम् ३ जनिः ४ उद्भवः ५ । इत्यमरः । १ ।
४ । ३० ॥
जन्मम् ६ जनी ७ । इति भरतः ॥ प्रभवः ८
भावः ९ भवः १० सम्भवः ११ जनूः १२
प्रज-
ननम् १३ । इति शब्दरत्नावली ॥ जातिः
१४ ।
इति जटाधरः ॥ तच्च शुभाशुभकर्म्मणा
भवति ।
यथा, ब्रह्मवैवर्त्ते प्रकृतिखण्डे ।
"शुभानामशुभानाञ्च कर्म्मणा जन्म जायते ।
पुण्यक्षेत्रे च सर्व्वत्र नान्यत्र भुञ्जते जनाः ॥"
* ॥
तस्य क्रमो यथा, --
"ऋतौ विकाशे भवति योनिः कमलवत्
सदा ।
गर्भाशयस्ततः शुक्रं धत्ते रक्तसमन्वितः ॥
अन्यत्र काले मुकुला योनिर्भवति योषिताम्
।
स्पृष्टं शुक्रमतो योनौ नैति गर्भाशयं शनैः ॥
ऋतावपि च योनिश्चेद्वातपित्तकफावृता ।
भवेत्तदा विशेषत्वं नैव तस्यां प्रजायते ॥
ऋतुकाले यदा शुक्रं निर्दोषं योनिसंस्थितम्
।
तदा तद्वायुना स्पृष्टं स्त्रीरक्तेनैकतां व्रजेत् ॥
निषेकं मानवं स्त्रीणां बीजं प्राप्तं रजस्यथ ।
मुक्तमात्रोऽपि नरकात् स्वर्गाद्वापि प्रपद्यते ॥
विसर्गकाले शुक्रस्य जीवः करणसंवृतः ।
धृत्या प्रविशते योनिं कर्म्मभिः
स्वैर्नियोजितः ॥
तच्छुक्ररक्तमेकस्थमेकाहात् कलनं भवेत् ।
पञ्चरात्रेण कलनं बुद्बुदाकारतां व्रजेत् ॥

"गर्भात् कोटिगुणं दुःखं योनियन्त्रनिपीडने ।
संमूर्च्छा तस्य जठराज्जायमानस्य देहिनः ॥
जायमानः पुरीषासृङ्मूत्रशुक्राविलाननः ।
प्राजापत्येन वातेन पीड्यमानास्थिबन्धनः ॥
अधोमुखो वै क्रियते प्रबलैः सूतिमारुतैः ।
क्लेशान्निष्क्रान्तिमायाति जठरान्मातुरातुरः ॥
ततस्तं वैष्णवी माया समास्कन्दति मोहिनी ।
तया विमोहितात्मासौ ज्ञानभ्रंशमवाप्नुयात् ॥
सृष्टमात्रस्य घोरश्च ज्वरः समुपजायते ।
तेन ज्वरेण महता महामोहः प्रजायते ॥
कण्टकैरिव छिन्नाङ्गः क्रकचैरिव दारितः ।
पूतिव्रणान्निपतितो धरण्यां क्रिमिको यथा ॥
तृड्बुभुक्षापरीताङ्गः क्वचित्तिष्ठति वा रटन् ।
विण्मूत्रभक्षणाद्यञ्च गतज्ञानः समाचरेत् ॥

प्रेत्य ३ अमुत्र ४ । इत्यमरः ॥ (यथा, महा-
भारते । ३ पर्व्वणि ।
"नूनं जन्मान्तरकृतं पापमाचरितं महत् ॥"
अन्यत् जन्म । मयूरव्यंसकादिवत् समासः ।
पुनर्जन्म । यथा, पञ्चतन्त्रे । २ । १८५ ।
"वरं प्राणपरित्यागो न वियोगो भवादृशैः ।
प्राणा जन्मान्तरे भूयो न भवन्ति भवद्विधाः
॥")

**जन्माष्टमी**, स्त्री, (जन्मनः श्रीकृष्णोत्पत्तेरष्टमी
तिथिः ।) भाद्रकृष्णाष्टमी । सा च श्रीकृष्णस्य
जन्मतिथिः । सा तु मुख्यचान्द्रेण श्रावणस्य
कृष्णाष्टमी गौणचान्द्रेण भाद्रस्य । तत्र
श्रीकृष्णस्य जन्मकालो यथा, ब्रह्मपुराणे ।
"अथ भाद्रपदे मासि कृष्णाष्टम्यां कलौ युगे ।
अष्टाविंशतिमे जातः कृष्णोऽसौ देवकीसुतः
॥"
विष्णुपुराणे महामायां प्रति भगवद्वाक्यम् ।
"प्रावृट्काले च नभसि कृष्णाष्टम्यां महानिशि
।
उत्पत्स्यामि नवम्यान्तु प्रसूतिं त्वमवाप्स्यसि
॥
श्रावणे वा नभस्ये वा रोहिणीसहिताष्टमी ।
यदा कृष्णे नरैर्लब्धा सा जयन्ती प्रकीर्त्तिता
॥"

अग्निपुराणे ।
"रोहिणीसहिता कृष्णा मासि भाद्रपदेऽष्टमी
।
सप्तम्यामर्द्धरात्राधःकलयापियदा भवेत् ॥
तत्र जातो जगन्नाथः कौस्तुभी हरिरीश्वरः
।
तमेवोपवसेत् कालं तत्र कुर्य्याच्च जागरम्
॥
अविद्धायाञ्च सर्क्षायां जातो देवकीनन्दनः
॥"
इति सप्तम्यवेधे
जन्मश्रवणकल्पभेदादविरुद्धम् ॥
नवम्यादियोगस्य प्रशंसा यथा । ब्रह्मवैवर्त्ते
।
"उदये चाष्टमी किञ्चिन्नवमी सकला यदि ।
भवेत्तु बुधसंयुक्ता प्राजापत्यर्क्षसंयुता ।
अपि वर्षशतेनापि लभ्यते वा न वा विभो !
॥"
पद्मपुराणे ।
"प्रेतयोनिगतानान्तु प्रेतत्वं नाशितन्तु तैः
।
यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता
॥
किं पुनर्बुधवारेण सोमेनापि विशेषतः ।
किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा
॥"
उपवासादिफलं यथा, भविष्यपुराणे ।
"एकेनैवोपवासेन कृतेन कुरुनन्दन ! ।
सप्तजन्मकृतात् पापान्मुच्यते नात्र संशयः
॥"
ब्रह्मवैवर्त्ते ।
"मन्वादिदिवसे प्राप्ते यत् फलं
स्नानपूजनैः ।
फलं भाद्रपदेऽष्टम्यां भवेत् कोटिगुणं द्विज !
॥
तस्यान्तिथौ वारिमात्रं पितॄणां यः
प्रयच्छति ।
गयाश्राद्धं कृतं तेन शताब्दं नात्र संशयः
॥"
उपवासाकरणे दोषो यथा, भविष्योत्तरे ।
"श्रावणेऽबहुले पक्षे कृष्णजन्माष्टमीव्रतम् ।
यशोदा चापि तत्रैव प्रसूतवरकन्यका ।
बलभद्रस्तथा नन्दो दक्षो गर्गश्चतुर्मुखः ॥
एवं संपूजयेद्भक्त्या गन्धपुष्पाक्षतैः फलैः ।
स्थण्डिले स्थापयेद्देवीं सचन्द्रां रोहिणीन्तथा ॥
देवकीं वसुदेवञ्च यशोदां नन्दमेव च ।
चण्डिकां बलदेवञ्च पूज्य पापैः प्रमुच्यते ॥
अर्द्धरात्रे वसोर्धारां पातयेद्गुडसर्पिषा ।
ततो वर्द्धापनं षष्ठीं नामादेः करणं मम ॥
कर्त्तव्यं तत्क्षणाद्रात्रौ प्रभाते नवमीदिने ।
यथा मम तथा कार्य्यो भगवत्या महोत्सवः ॥
ब्राह्मणान् भोजयेद्भक्त्या तेभ्यो दद्याच्च दक्षिणाम्
।
सुवर्णं काञ्चनं गाश्च वासांसि कुसुमानि च ॥
यद्यदिष्टतमं लोके कृष्णो मे प्रीयतामिति ।
यं देवं देवकी देवी वसुदेवादजीजनत् ॥
भौमस्य ब्रह्मणो गुप्त्यै तस्मै ब्रह्मात्मने नमः ।
सुब्रह्मवासुदेवाय गोब्राह्मणहिताय च ॥
शान्तिरस्तु शिवञ्चास्तु इत्युक्त्वा तान्
विसर्ज्जयेत् ॥
एवं यः कुरुते देव्या देवक्या सुमहोत्सवम् ।
वर्षे वर्षे भगवतो मद्भक्त्या धर्म्मनन्दन ! ।
नरो वा यदि वा नारी यथोक्तफलमाप्नुयात् ॥
पुत्रसन्तानमारोग्यधनधान्यर्द्धिमद्गृहम् ।
सम्पर्केणापि यः कुर्य्यात् कश्चिज्जन्माष्टमीव्रतम्
॥
विष्णुलोकमवाप्नोति नरो नास्त्यत्र संशयः ॥"
पूजा च मध्यरात्रे गारुडे ।
"कृष्णाष्टम्यान्तु रोहिण्यामर्द्धरात्रेऽर्च्चनं हरेः ॥"
व्रतपारणयोः कालनियमः । एकदिने जयन्ती-
लाभे तत्रैवोपवासः । उभयदिने चेत्तदा पर-
दिने । जयन्त्यलाभे तु रोहिणीयुक्ताष्टम्याम् ।
उभयदिने रोहिणीयुताष्टमीलाभे परदिने तद-
लाभे तु निशीथसम्बन्धिन्यामष्टम्यांउभयदिने
निशीथसम्बन्धे तदसम्बन्धे वा परदिने इति ।
उपवासपरदिने तिथिनक्षत्रयोरवसाने पार-
णम् । यदा महानिशायाः पूर्ब्बमेकतरस्याव-
सानमन्यतरस्य महानिशायां तदनन्तरं वा
तदैकतरावसाने पारणं यदा महानिशाया-
मुभयस्थितिस्तदा उत्सवान्ते पारणम् ।" इति
तिथ्यादितत्त्वम् ॥ * ॥
हरिभक्तिविलासमते तूपवासकालो यथा, --
तद्व्रतकथा यथा, --
"एकदा श्रीकुलाचार्य्यं वशिष्ठमृषिसत्तमम् ।
राजा दिलीपः पप्रच्छ विनयावनतः सुधीः ॥
दिलीप उवाच ।
भाद्रे मास्यसिते पक्षे यस्यां जातो जनार्द्दनः ।
तत्कथां श्रोतुमिच्छामि कथयस्व महामुने !
॥
कथं वा भगवान् जातः शङ्खचक्रगदाधरः ।
देवकीजठेरे विष्णुः किं कर्त्तुं केन हेतुना ॥
वशिष्ठ उवाच ।
शृणु राजन् ! प्रवक्ष्यामि यस्माज्जातो
जनार्द्दनः ।
पृथिव्यां त्रिदिवं त्यक्त्वा भवते कथयाम्यहम्
॥
पुरा वसुन्धरा ह्यासीत् कंसाराघनतत्परा ।
स्वाधिकारप्रमत्तेन कंसदूतेन ताडिता ॥
क्रन्दन्ती लज्जिता सापि ययौ घूर्णितलोचना
।
यत्र तिष्ठति देवेश उमाकान्तो वृषध्वजः ॥
कंसेन ताडिता नाथ ! इति तस्मै निवेदितम्
।
वास्पधारां प्रवर्षन्तीं विवर्णामपमानिताम् ॥
क्रन्दन्तीं तां समालोक्य कोपेन स्फुरिताधरः
।
उमया सहितः सर्व्वैर्द्देववृन्दैरनुद्रुतः ॥
आजगाम महादेवो विधातुर्भवनं रुषा ।
गत्वा चोवाच ब्रह्माणं कंसध्वंसनिमित्तकम् ॥
उपायः सृज्यतां ब्रह्मन् ! भवता विष्णुना सह
।
ऐश्वरं तद्वचः श्रुत्वा गन्तुं प्राक्रामदात्मभूः ॥
क्षीरोदे यत्र वैकुण्ठः सुप्तः स भुजगोपरि ।
हंसपृष्ठे समारुह्य हरेरन्तिकमाययौ ॥
तत्र गत्वा हरिं ध्यात्वा देववृन्दैर्हरादिभिः ।
तुष्टाव भगवान् वाग्भिरर्थ्याभिर्व्वाग्विदाम्बरः
॥
नमः कमलनेत्राय हरये परमात्मने ।
जगतः पालयित्रे च लक्ष्मीकान्त ! नमोऽस्तु
ते ॥
नमः कमलकिञ्जल्कपीतनिर्म्मलवाससे ।
नमः समस्तदेवानामधिपाय महात्मने ॥
नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।

न करोति नरो यस्तु स भवेत् क्रूरराक्षसः ॥
वर्षे वर्षे च या नारी कृष्णजन्माष्टमीव्रतम् ।
न करोति महाक्रूरा व्याली भवति कानने ॥”
स्कान्दे ।
“न करोति यदा विष्णोर्ज्जयन्तीसंज्ञकं व्रतम् ।
यमस्य वशमापन्नः सहते नारकीं व्यथाम् ॥”
भविष्ये ।
“तुष्ट्यर्थं देवकीसूनोर्ज्जयन्तीसंज्ञकं व्रतम् ।
कर्त्तव्यं चिन्त्यमानेन भक्त्या भक्तजनैः सह ॥
अकुर्व्वन् नरकं याति यावदिन्द्राश्चतुर्द्दश ॥”
तत्रोपवासक्रमः, भविष्यपुराणे ।
“पार्थ ! तद्दिवसे प्राप्ते दन्तधावनपूर्ब्बकम् ।
उपवासस्य नियमं गृह्णीयाद्भक्तिभावतः ॥
वासुदेवं समुद्दिश्य सर्व्वपापप्रशान्तये ।
उपवासं करिष्यामि कृष्णाष्टम्यां नभस्यहम् ॥
अद्य कृष्णाष्टमीं देवीं नभश्चन्द्रसरोहिणीम् ।
अर्च्चयित्वोपवासेन भोक्ष्येऽहमपरेऽहनि ॥
एनसो मोक्षकामोऽस्मि यद्गोविन्द ! त्रियोनिजम् ।
तन्मे मुञ्चतु मां त्राहि पतितं शोकसागरे ॥
आजन्ममरणं यावद्यन्मया दुष्कृतं कृतम् ।
तत् प्रणाशय गोविन्द ! प्रसीद पुरुषोत्तम ! ॥”
गृहमुपक्रम्य ।
“तन्मध्ये प्रतिमा स्थाप्या काञ्चनादिविनिर्म्मिता ।
प्रतप्तकाञ्चनाभा सा देवकी सुतपस्विनी ॥
माञ्चापि बालकं सुप्तं प्रसूता नीरदच्छविम् ।
वसुदेवोऽपि तत्रैव खड्गचर्म्मधरं स्थितम् ॥
“जन्माष्टमी पूर्ब्बविद्धा न कर्त्तव्या कदाचन ।
पलवेधे तु विप्रेन्द्र ! सप्तम्यां चाष्टमीं त्यजेत् ॥
सुराया बिन्दुना स्पृष्टं गङ्गाम्भःकलसं यथा ।
विना ऋक्षेण कर्त्तव्या नवमीसंयुताष्टमी ॥
सऋक्षापि न कर्त्तव्या सप्तमीसंयुताष्टमी ।
तस्मात् सर्व्वप्रयत्नेन त्याज्यमेवाशुभं बुधैः ॥
वेधे पुण्यक्षयं याति तमः सूर्य्योदये यथा ।
यच्च वह्निपुराणादौ प्रोक्तं विद्धाष्टमीव्रतम् ।
अवैष्णवपरं तच्च कृतं वा देवमायया ॥”
पारणकालो यथा, --
“यद्वा तिथ्यर्क्षयोरेव द्वयोरन्ते तु पारणम् ।
समर्थानामशक्तानां द्वयोरेकवियोगतः ॥
केचिच्च भगवज्जन्ममहोत्सवदिने शुभे ।
भक्त्योत्सवान्ते कुर्व्वन्ति वैष्णवा व्रतपारणम् ॥”
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥
इति तेभ्यः स्तुतीः श्रुत्वा प्रत्युवाच जनार्द्दनः ।
देवा नम्रमुखाः सर्व्वे भवतामागमः कथम् ॥
ब्रह्मोवाच ।
शृणु देव ! जगन्नाथ ! यस्मादस्माकमागमः ।
कथयामि सुरश्रेष्ठ ! तदहं लोकतारण ! ॥
शूलिदत्तवरोन्मत्तः कंसराजो दुरासदः ।
वसुधा ताडिता तेन पदाघातेन मुष्टिना ॥
वरं दत्त्वा पुराप्युग्रो मायया स प्रवञ्चितः ।
भागिनेयं विना राजन् ! शास्ता न भविता तव ॥
तस्माद्गच्छ स्वयं देव ! हन्तुं कंसं दुरासदम् ।
देवकीजठरे जन्म लभ गत्वा च गोकुलम् ॥
ब्रह्मणा प्रेषितो विष्णुः प्रत्युवाच पशोः पतिम् ।
पार्व्वतीं देहि देवेश ! अब्दं स्थित्वागमिष्यति ॥
उमया रमया सार्द्धं शङ्खचक्रगदाधरः ।
उद्दिश्य मथुरां चक्रे प्रयाणं कंसनाशनम् ॥
देवकीजठरे जन्म लेभे विष्णुर्गदाधरः ।
यशोदाकुक्षिमध्ये तु सर्व्वाणी मृगलोचना ॥
नव मांसांश्च विश्राम्य कुक्षौ नवदिनाधिकान् ।
भाद्रे मास्यसिते पक्षे अष्टमीसंज्ञया तिथौ ॥

रोहिणीतारकायुक्ता रजनी धनघोरिता ।
घूमयोनौ तडिद्युक्ते वारि वर्षति सर्व्वदा ॥
तस्यां जातो जगन्नाथः कंसारिर्व्वसुदेवजः
।
वैराटे नन्दपत्नी च यशोदाजीजनत्
सुताम् ॥
पुत्त्रं पद्मकरं पद्मनाभं पद्मदलेक्षणम् ।
रम्यं चतुर्भुजं शान्तं शङ्खचक्रगदाधरम् ॥
तदा क्रन्दितुमारेभे दृष्ट्वा चानकदुन्दुभिः ।
तत्रैव वाण्यभूद्दैवी देवकीमात्रगोचरा ॥
पुत्त्रं दत्त्वा यशोदायै कन्यां तस्याः
समानय ।
कंसासुरभयात्तं हि उवाच देवकी तदा ॥
वैराटं गच्छ विप्रेन्द्र ! सुतं प्रत्यर्पितुं प्रभो !
।
पुत्त्रं दत्त्वा यशोदायै सुतां तस्याः समानय
॥
तां दृष्ट्वा कंसराजोऽपि सभायां न
हनिष्यति ।
तस्या वचः समाकर्ण्य
वसुदेवोऽतिदुःखितः ॥
अङ्के कुमारमादाय वैराटाभिमुखं ययौ ।
यमुना जलसंपूर्णा तत्पथे मध्यवर्त्तिनी ॥
अतिश्रोता महावीर्य्या
सुतीक्ष्णोर्म्मिभयाकुला ।
तां दृष्ट्वा तत्तटे स्थित्वा
यमुनामवलोकयन् ॥
वसुदेवोऽतिदुःखार्त्तो विलोलचेतनोऽभवत्
।
किं करोमि क्व गच्छामि विधिनात्रापि
वञ्चितः ॥
कथमद्य गमिष्यामि वैराटे नन्दमन्दिरम् ।
हरिणा तत्र सानन्दं मायया वञ्चितः पिता
॥
क्षणमात्रं तटे स्थित्वा यमुनामप्यलोकयत्
।
तेन दृष्टा पुनः सापि क्षीणा जानुवहाभवत्
॥
ततः सोऽपि पुरो दृष्ट्वा धावन्तं खलु
जम्बुकम् ।
तत्रातिष्ठज्जगन्नाथः कंसारिः सुरकृत्यकृत् ।
क्रीडित्वा बालभावेन कंसध्वंसे मनो दधौ ॥
प्राप्तिमात्रेण तं कंसं जघान जगदीश्वरः ।
एतत्ते कथितं राजन् ! कृष्णजन्माष्टमीव्रतम् ॥
य इदं कुरुते राजन् ! या च नारी हरेर्व्रतम् ।
प्राप्नोत्यैश्वर्य्यमतुलमिह लोके यथेप्सितम् ॥
अन्तकाले हरेः स्थानं दुर्ल्लभञ्च गमिष्यति ।
एकेनैवोपवासेन कृतेन कुरुनन्दन ! ॥
सप्तजन्मकृतात् पापान्मुच्यते नात्र संशयः ।
वत्सरद्वादशे चैव यत् पुण्यं समुपार्ज्जितम् ॥
विफलं तद्भवेत् सर्व्वं पुरा व्यासेन भाषितम् ।
न द्रष्टव्यं सुखं तेषां नराणां न च योषिताम् ॥
जयन्ती न कृता यैस्तु जागरादिसमन्विता ।
श्वानश्चैते तु विज्ञेया जयन्तीविमुखा नराः ॥
योषितश्च न सन्देहः सत्योक्तं तव सुव्रते ! ॥”
इति भविष्यपुराणे वशिष्ठदिलीपसंवादे
श्रीकृष्णजन्माष्टमीव्रतकथा समाप्ता ॥

**जन्मी** [न्] पुं, (जन्म अस्त्यस्येति । जन्मन् +
“ब्रीह्यादिभ्यश्च ।” ५ । २ । ११६ । इति
इनिः ।)
प्राणी । इत्यमरः । १ । ४ । ३० ॥ (यथा,
भारविः । ११ । ३० ।
“जन्मिनोऽस्य स्थितिं विद्वान् लक्ष्मीमिव
चलाचलाम् ।
भवान्मास्म वधीत् न्याय्यं न्यायाधारा हि
साधवः ॥”)

**जन्मेजयः**, पुं, (जनान् शत्रून् एजयति कम्पय-
तीति । एज + णिच् + “एजेः खश् ।” ३ । २
। २८ ।
इति खश् ततो मुमागमात् जनमेजय इति
सिद्धे
शकन्ध्वादित्वादलोपे साधुः ।)
जनमेजयराजः ।
इति श्रीभागवतम् ॥ (एतन्निरुक्तिर्यथा देवी-
भागवतस्य । २ । ११ । ४६ श्लोकटीकायाम्
।
“जन्मनैवातिशुद्धेन शत्रूनेजितवान् यतः ।
एजृङ् कम्पने धातोर्हि जन्मेजय इति श्रुतः
॥”)

**जन्यं**, क्ली, (जन्यते इति । जनि + “तकिशसि-
यथा श्रीकृष्णपादाङ्कं कालीयवंशमस्तके ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डम् ॥
(“जन्यानां जनकः कालो जगतामाश्रयो मतः
॥”
इति च भाषापरिच्छेदे ४५ ॥)
जनयिता । (जनीं बधूं वहति प्रापयति वा ।
संज्ञायामिति साधुः ।) नवोढाज्ञातिः । नवोढा-
भृत्यः । वरस्य स्निग्धः । स तु जामातृवत्सलः ।
इति मेदिनी । ये, २६ ॥ (जनाय हितः । यत् ।)
जनहितः । इति व्याकरणम् ॥

**जन्या**, स्त्री, (जायतेऽस्याम् । जन् + ण्यत् यत् वा ।
मातृतुल्यत्वाद्वास्यास्तथात्वम् ।) मातृवयस्या
।
इति मेदिनी । ये, २६ ॥ (यथा, रघौ । ६ । ३०
।
“अथाङ्गराजादवतार्य्य चक्षु-
र्याहीति जन्यामवदत् कुमारी ॥”)
प्रीतिः । इति हेमचन्द्रः ॥

**जन्युः**, पुं, (जायते इति । जन + “यजिमनि
शुन्धिदसिजनिभ्यो युच् ।” उणां ३ । २० । इति
युच् ।) प्राणी । अग्निः । धाता । इति मेदिनी ।
ये, २६ ॥ (उत्पत्तिः । जन्म । यथा, हरिवंशे ।
१२३ । ४९ ।
“अमृताया द्वितीयोऽयं जन्युर्हि मम सर्व्वथा ॥”)

**जप**, हृदुच्चारे वाचि । इति कविकल्पद्रुमः ॥
(भ्वां-परं-सकं-सेट् ।) जिह्वोष्ठादिव्यापार-
रहितं शब्दार्थयोश्चिन्तनं हृदुच्चारः । जपति
मन्त्रं साधकः । इति दुर्गादासः ॥

**जपः**, पुं, (जप्यते इति । जप + “व्यधजपो-
रनुपसर्गे ।” ३ । ३ । ६१ । इति भावे अप् ।)
विधानेन मन्त्रोच्चारणम् । तद्विधिर्यथा, --
“नोच्चैर्ज्जपञ्च संकुर्य्यात् रहः कुर्य्यादतन्द्रितः ।
समाहितमनास्तूर्ष्णीं मनसा वापि चिन्तयेत् ॥
विधियज्ञात् जपयज्ञो विशिष्टो दशभिर्गुणैः ।
उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः ।
विना दर्भैस्तु यत् स्नानं यच्च दानं विनोदकम् ।
असंख्येयन्तु यद्जप्यं सर्व्वं तदफलं स्मृतम् ॥
मुक्ताफलैर्विद्रुमेण रुद्राक्षैः स्फटिकेन वा ।
गणना सर्व्वथा कार्य्या सम्यगङ्गुलिपर्व्वभिः ॥

क्रोडे कृत्वा सुतं स्वैरं गन्तुं पारं प्रचक्रमे ॥
तं दृष्ट्वा हृष्टचित्तन्तु भगवान् यमुनाजले ।
मायां कृत्वा जगन्नाथो ह्यङ्कात् स पतितः पितुः ॥
तं सुतं पतितं दृष्ट्वा सूर्य्यजाजीवने द्विजः ।
तदा क्रन्दितुमारेभे भाले घात्वा करं दृढम् ॥
विधिना वैरिणा ह्यत्र दुःखितोऽहं प्रवञ्चितः ।
त्राहि मां जगतां नाथ ! पुत्त्रं देहि सुरोत्तम ! ॥
जनकं क्रन्दितं दृष्ट्वा कंसारिः कृपया विभुः ।
जलक्रीडां समाचर्य्य पितुरङ्केऽवसत् पुनः ॥
पथा तेन द्विजश्रेष्ठो गतवान्नन्दमन्दिरम् ।
सुतं दत्त्वा यशोदायै सुतां तस्याः समानयत् ॥
सुतामङ्के तथा सोऽपि गृहीत्वानकदुन्दुभिः ।
निजागारं पुनः प्राप्य प्रत्यर्प्य तादृशीं सुताम् ॥
प्रतियुज्य पदे लोहमासीत् पूर्ब्बवदावृतः ।
देवकी च प्रसूतेति वार्त्ता प्राप्ता सुरारिणा ॥
आनेतुं प्रहितो दूतःसुतं दुहितरञ्च वा ।
आगत्य कंसदूतोऽसौ सुतां नेतुं प्रचक्रमे ॥
बलादङ्कात् समाकृष्य देवकीवसुदेवयोः ।
कंसदूतो गृहीत्वा तां कंसायादर्शयत् पुनः ॥
दृष्ट्वा तां कंसराजोऽपि सभयोऽभूद्दुरासदः ।
शुद्धकाञ्चनवर्णाभां पूर्णेन्द्वसदृशाननाम् ॥
दृष्ट्वा कंसो विहस्यन्तीं विद्युत्स्फुरितलोचनाम् ।
आदिदेशासुरश्रेष्ठो वध नीत्वा शिलोपरि ॥
आज्ञां लब्ध्वासुरास्ते तु निष्पेष्टुं तां प्रवर्त्तिताः ।
विद्यु्युद्रूपधरा गौरी जगाम शङ्करान्तिकम् ॥
अन्तरीक्षे क्षणं स्थित्वा कंसं प्रोवाच शङ्करी ।

चतियतिजनिभ्यो यद्वाच्यः ।" इति वार्त्तिकोक्त्या यत् ।) हट्टः । परीवादः । संग्रामः । इति मेदिनी । ये, २५ ॥ (यथा, रघौ । ४ । ७७ ।
"तत्र जन्यं रघोर्घोरं पार्व्वतीयैर्गणैरभूत् ॥")

**जन्यः**, पुं, (जायते जनयति वा । जन + "भव्यगेयेति ।" ३ । ४ । ६८ । इति कर्त्तरि यत् ।) जनकः । इति मेदिनी । ये, २६ ॥ (महादेवः । यथा, महाभारते । १३ । १७ । ५६ ।
"उग्रतेजा महातेजा जन्यो विजयकालवित् ॥"
देहः । यथा, भागवते । १ । ९ । ३१ ।
"निवृत्तसर्व्वेन्द्रियवृत्तिविभ्रम-
स्तुष्टाव जन्यं विसृजन् जनार्द्दनम् ॥"
जनस्य जल्पः । जन + "मतजनहलादिति ।" ४ । ४ । ९७ । इति यत् । जनजल्पः । इति सिद्धान्तकौमुदी ॥)

**जन्यः**, त्रि, (जन्यते इति । जन् + णिच् + कर्म्मणि यत् ।) उत्पाद्यः । यथा, --
"जनकस्य स्वभावो हि जन्ये तिष्ठति निश्चितम् ।
हिरण्यरत्नमणिभिर्जप्यं शतगुणं भवेत् ।
सहस्रगुणमिन्द्राक्षैः पद्माक्षैरयुतं भवेत् ॥
नियुतं वापि रुद्राक्षैर्भद्राक्षैस्तु न संशयः ।
पुत्त्रजीवकजप्यस्य परिसंख्या न विद्यते ॥
दशभिर्जन्मजनितं शतेन च पुरा कृतम् ।
त्रियुगं तु सहस्रेण गायत्र्या हन्ति दुष्कृतम् ॥
दर्भहस्तस्तथासीनो दर्भैषूदकपाणिना ।
प्राङ्मुखो वर्त्तयेत् मालां सहस्रं शतमेव वा ॥"
इत्याद्ये वह्निपुराणे नित्याह्निकस्नानविधिनामाध्यायः ॥ तस्यानुष्ठानं यथा, --
"मनः संहृत्य विषयान्मन्त्रार्थगतमानसः ।
न द्रुतं न विलम्बञ्च जपेन्मौक्तिकपङ्क्तिवत् ॥
जपः स्यादक्षरावृत्तिर्मानसोपांशुवाचिकैः ।
धिया यदक्षरश्रेणीं वर्णस्वरपदात्मिकाम् ॥
उच्चरेदर्थमुद्दिश्य मानसः स जपः स्मृतः ।
जिह्वोष्ठौ चालयेत् किञ्चिद्देवतागतमानसः ॥

किञ्चिच्छ्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः ।
मन्त्रमुच्चारयेद्वाचा वाचिकः स जपः स्मृतः ॥
उच्चैर्जपाद्विशिष्टः स्यादुपांशुर्दशभिर्गुणैः ।
जिह्वाजपः शतगुणः साहस्रो मानसः स्मृतः ।
जिह्वाजपः स विज्ञेयः केवलं जिह्वया बुधैः ॥”
तत्र वर्ज्यं यथा, --
“विन्मूत्रोत्सर्गशङ्कादियुक्तः कर्म्म करोति च ।
जपार्च्चनादिकं सर्व्वमपवित्रं भवेत् प्रिये ! ॥
मलिनाम्बरकेशादिमुखदौर्गन्ध्यसंयुतः ।
यो जपेत्तं दहत्याशु देवता गुप्तिसंस्थिता ॥
आलस्यं जृम्भणं निद्रां क्षुतं निष्ठीवनं भयम् ।
नीचाङ्गस्पर्शनं कोपं जपकाले विवर्ज्जयेत् ॥”
अथ करमालाजपनियमो यथा, --
“तर्ज्जना मध्यमानामा कनिष्ठा चेति ताःक्रमात् ।
तिस्रोऽङ्गुल्यस्त्रिपर्व्वाणो मध्यमा चैकपर्व्विका ॥
पर्व्वद्वयं मध्यमाया मेरुत्वेनोपकल्पयेत् ।
अनामामध्यमारभ्य कनिष्ठादित एव च ॥
तर्ज्जनीमूलपर्य्यन्तं दशपर्व्वसु संजपेत् ।
अनामामूलमारभ्य कनिष्ठादित एव च ।
तर्जनीमध्यपर्य्यन्तमष्टपर्व्वसु संजपेत् ॥”
एतद्वचनन्तु अष्टोत्तरशतादिविषयम्।
शक्तिविषये पुनः ।
“अनामिकात्रयं पर्व्व कनिष्ठादित्रिपर्व्विका ।
मध्यमायाश्च त्रितयं तर्ज्जनीमूलपर्व्वणि ॥
तर्ज्जन्यग्रे तथा मध्ये यो जपेत् स तु पापकृत् ।
अनामामूलमारभ्य प्रादक्षिण्यक्रमेण च ॥
मध्यादिमूलपर्यन्तमष्टपर्व्वसु संजपेत् ॥”
श्रीविद्याविषये पुनः ।
“अनामामध्यमायाश्च मूलाग्रञ्च द्वयं द्वयम् ।
कनिष्ठायाश्च तर्ज्जन्यास्त्रयं पर्व्व सुरेश्वरि ! ॥
अनामामध्यमायाश्च मेरुः स्यात् द्वितयं शुभम् ।
प्रदक्षिणक्रमाद्देवि ! जपेत्त्रिपुरसुन्दरीम् ॥
कनिष्ठामूलमारभ्य प्रादक्षिण्यक्रमेण च ।
तर्ज्जनीमूलपर्य्यन्तमष्टपर्व्वसु संजपेत् ॥”
इदमपि अष्टोत्तरशतादिविषयम्॥ * ॥
“अङ्गुलीर्न वियुञ्जीत किञ्चिदाकुञ्चिते तले ।
अङ्गुलीनां वियोगाच्च छिद्रे च स्रवते जपः ॥
अङ्गुल्यग्रे च यज्जप्तं यज्जप्तं मेरुलङ्घने ।
पर्व्वसन्धिषु यज्जप्तं तत् सर्व्वं निष्फलं भवेत् ॥
गणनाविधिमुल्लङ्घ्य यो जपेत्तज्जपं यतः ।
गृह्णन्ति राक्षसास्तेन गणयेत् सर्व्वथा बुधः ॥
वर्णमाला समाख्याता अनुलोमविलोमतः ।
पञ्चाशल्लिपिभिर्म्मालाविहिता सर्व्वकर्म्मसु ॥
अकारादिक्षकारान्ता वर्णमाला प्रकीर्त्तिता ॥
क्षार्णं मेरुमुखं तत्र कल्पयेन्मुनिसत्तम ! ।
अनया सर्व्वमन्त्राणां जपः सर्व्वसमृद्धिदः ॥” * ॥
तस्य फलं यथा, --
“जपनिष्ठो द्विजश्रेष्ठोऽखिलयज्ञफलं लभेत् ।
सर्व्वेषामेव यज्ञानां जायतेऽसौ महाफलः ॥
जपेन देवता नित्यं स्तूयमाना प्रसीदति ।
प्रसन्ना विपुलान् कामान् दद्यान्मुक्तिञ्च शाश्वतीम् ॥
यक्षरक्षःपिशाचाश्च ग्रहाः सर्पाश्च भीषणाः ।
जापिनं नोपसर्पन्ति भयभीताः समन्ततः ॥
यावन्तः कर्म्मयज्ञाः स्युः प्रदिष्टानि तपांसि च ।
सर्व्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥
माहात्म्यं वाचिकस्यैतत् जपयज्ञस्य कीर्त्तितम् ।
तस्माच्छतगुणोपांशुः साहस्रो मानसः स्मृतः ॥”
इति तन्त्रसारः ॥

**जपनं**, क्ली, (जप ह्रदुच्चारे + भावे ल्युट् ।) जपः । इत्यमरटीका ॥ (यथा, महाभारते । १२ । १९६ । ७ ।
“संन्यास एव वेदान्ते वर्त्तन्ते जपनं प्रति ॥”)

**जपपरायणः**, त्रि, (जप एव परमयनं आश्रयो यस्य ।) जपासक्तः । जपनशीलः । यथा, --
“शिवरात्रिव्रतं देव ! पूजाजपपरायणः ।
ऽचीत्यस्यैव नुण् आत्मनेपदप्रकरणे सूत्रविधान-सामर्थ्यात् । इति दुर्गादासः ॥

**जम**, उ भक्षे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् । उदित्त्वात् क्त्रावेट् ।) उ, जमित्वा जान्त्वा । इति दुर्गादासः ॥

**जम्**, व्य, पत्नी । इति जम्पतीशब्दटीकायां भरत-धृतनामप्रपञ्चः ॥

**जमजौ**, त्रि, (यमौ एकत्र सहचरौ सन्तौ जायेते इति । जन + ड । पृषोदरादित्वात् यस्य जः ।) यमजौ । इति द्विरूपकोषः ॥

**जमदग्निः**, पुं, (जमन् हुतभक्षणशीलः प्रज्वलित इत्यर्थः । तथाविधोऽग्निरिव । यद्वा, यमदग्निः । पृषोदरादित्वात् यस्य जः ।) यमदग्निमुनिः । इति द्विरूपकोषः ॥ स तु भृगुवंशोद्भव ऋचीकमुनिपुत्त्रः परशुरामपिता च । इति श्रीभागवतम् ॥ (अस्य जन्मविवरणादिकं महाभारते वनपर्व्वणि । ११५-११६ अध्याययोर्द्रष्टव्यम् ॥ असौ च सावर्णिके मन्व-न्तरे ऋषिविशेषः । यथा, मार्कण्डेये । ७९ । ९-१० ।
“अत्रिश्चैव वशिष्ठश्च काश्यपश्च महानृषिः ।
गौतमश्च भरद्वाजो विश्वामित्रोऽथ कौशिकः ॥
तथैव पुत्त्रो भगवानृचीकस्य महात्मनः ।
जमदग्निस्तु सप्तैते मुनयोऽत्र तथान्तरे ॥”)

**जमनं**, क्ली, (जम भक्षे + भावे ल्युट् ।) जेमनम् । भोजनम् । इत्यमरटीकायां भरतः ॥

**जम्पती**, पुं, (जाया च पतिश्च । राजदन्तादि-गणे पाठात् जायाशब्दस्य जम्भावो निपात्यते ।)

हृदये हस्तमारोप्य तिर्य्यक् कृत्वा कराङ्गुलीः ।
आच्छाद्य वाससा हस्तौ दक्षिणेन सदा जपेत् ॥"
जपसंख्यायां निषिद्धद्रव्यं यथा, --
"नाक्षतैर्हस्तपर्व्वैर्व्वा न धान्यैर्न च पुष्पकैः ।
न चन्दनैर्मृत्तिकया जपसंख्याञ्च कारयेत् ॥" * ॥
तत्र विहितद्रव्यं यथा, --
"लाक्षाकुषीदसिन्दूरं गोमयञ्च करीषकम् ।
एभिर्निर्म्माय वटिकां जपसंख्यान्तु कारयेत् ॥"
अथ वर्णमालाजपनियमो यथा, --
"सबिन्दुं वर्णमुच्चार्य्य पश्चान्मन्त्रं जपेद्बुधः ।
अकारादिक्षकारान्तं बिन्दुयुक्तं विभाव्य च ॥
करोमि विधिवद्दत्तं गृहाणार्घ्यं महेश्वर !
॥"
इति तिथ्यादितत्त्वम् ॥

**जपा**, स्त्री, (जपन्ति तान्त्रिका अनयेति । जप + अप् ततष्टाप् ।) जवापुष्पवृक्षः । इति हेम-चन्द्रः । ४ । २१३ ॥ तस्य पर्य्यायगुणाः ।
"ओड्रपुष्पं जपा चाथ त्रिसन्ध्या सारुणा सिता ।
जपा संग्राहिणी केश्या त्रिसन्ध्या कफवातजित् ॥"
इति भावप्रकाशः ॥
(विशेषश्चास्या जवाशब्दे ज्ञातव्यः ॥)

**जभ**, जभने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) जभनं मैथुनम् । जभति युवा ।
इति दुर्गादासः ॥

**जभ**, इ जभने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) जभनं मैथुनम् । इ, जम्भ्यते ।
इति दुर्गादासः ॥

**जभ**, इ क नशि । इति कविकल्पद्रुमः ॥ (चुरां-परं-सकं-सेट् ।) नशीति
अन्तर्भूतण्यर्थत्वा-
न्नष्टीकरणे । इ क, जम्भयति पापं गङ्गा ।
इति
दुर्गादासः ॥

**जभ**, इ ङ जृम्भे । गात्रशैथिल्य इति यावत् ।
इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-अकं-सेट् ।)
इ, जम्भ्यते । ङ, जम्भते । प्रत्यूषकाले भुज-
गाङ्गनानां मुखेषु कामः प्रतिजृम्भतीव ।
इति
गणकृतानित्यत्वात् । इति दुर्गादासः ॥

**जभ**, ङ जृम्भे । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-अकं-सेट् ।) जृम्भो
गात्रशैथिल्यमिति
गोविन्दभट्टः । ङ, जम्भते लोकः । नुण् जभो-
जायापती । इत्यमरः । २ । ६ । ३८ ॥
द्विवच-
नान्तोऽयं शब्दः ॥

**जम्बालः**, पुं, (जमु अदने + बाहुलकाद्वालन् ।
यद्वा, जम्ब + भावे घञ् । जम्बं आलातीति । ला + कः ।) पङ्कः । इत्यमरः । १ । १० । ९ ॥
(यथा, श्रीकण्ठचरिते । २ । १० ।
"अवद्यजम्बालगवेषणाय
कृतोद्यमानां खलसैरिभाणाम् ।
कवीन्द्रवाङ्निर्झरनिर्झरिण्यां
संजायते व्यर्थमनोरथत्वम् ॥")
शैवालः । इति मेदिनी । ले, ९१ ॥ केतक-वृक्षः । इति शब्दरत्नावली ॥

**जम्बालिनी**, स्त्री, (जम्बालः शैवालोऽस्त्यस्या इति ।
जम्बाल + इनिः ।) नदी । इति हेमचन्द्रः । ४ । १४६ ॥

**जम्बिरः**, पुं, (जम्बीर + निपातनात् ह्रस्वः ।)
जम्बीरः । इति शब्दरत्नावली ॥

**जम्बीरः**, पुं, (जम्यते भक्ष्यते इति । जमु भक्षे + "गम्भीरादयश्च ।" इति निपातनात् ईरन् प्रत्ययेन साधुः ।) फलवृक्षविशेषः । जामीर इति लेवु इति च भाषा । तत्पर्य्यायः । दन्त-शठः २ जम्भः ३ जंम्भीरः ४ जम्भलः ५ । इत्यमरः । २ । ४ । २४ ॥ जम्भी ६ रोच-नकः ७ शोधी ८ जाड्यारिः ९ दन्तहर्षणः १०
गम्भीरः ११ जम्बिरः १२ दन्तकर्षणः १३ । इति शब्दरत्नावली ॥ रेवतः १४ वक्त्रशोधी १५
दन्तहर्षकः १६ । इति जटाधरः ॥ तस्य गुणाः ।

"जम्बीरमुष्णं गुर्व्वम्लं
वातश्लेष्मविबन्धनुत् ।
शूलं
कासकफक्लेशच्छर्द्दितृष्णामदोषजित्
॥
आस्यवैरस्यहृत्पीडावह्निमान्द्यकृमीन्
हरेत् ।
स्वल्पजम्बीरिका तद्वत्
तृष्णाच्छर्द्दिनिवारिणी ॥"
इति भावप्रकाशः ॥
तस्य फलस्य गुणाः ।
अम्लमधुररसत्वम् । वात-
नाशित्वम् । पथ्यत्वम् । पाचनत्वम् ।
रोचन-
त्वम् । पित्तबलाग्निवृद्धिकारित्वञ्च ।
इति राज-
निर्घण्टः ॥ अत्यम्लत्वम् । गुरुत्वम् ।
सुगन्धि-
लम् । दुर्ज्जरत्वम् ।
वह्निकफवातविबन्धनाशि-
त्वञ्च । इति राजवल्लभः ॥ पक्वस्य
तस्य गुणाः ।
मधुरत्वम् ।
कफार्त्तिपित्तास्रदोषनाशित्वम् ।
वर्णवीर्य्यरुचिपुष्टितृप्तिकारित्वञ्च ।
मरुवकः ।
अर्जकः । सितार्जकः । इति
राजनिर्घण्टः ॥
(क्षुद्रपत्रतुलसी । यथा,
वैद्यकरत्नमालायाम् ।
"खरपर्णस्तु जम्बीरः प्रस्थपुष्पः
फणिज्झकः ॥")

**जम्बुः**, स्त्री, (अम्यते इति । जमु भक्षणे + "अन्दू-
दृन्फूजम्ब्रिति ।" उणां । १ । ९५ ।
इति कू प्रत्य-
येन निपातनात् साधुः । बाहुलकात्
ह्रस्वः ।)
जम्बूः । इत्यमरटीकायां भरतः ॥
(यथा, --

तदुत्तरे हिरण्मयवर्षं तदुत्तरे शृङ्गवान् पर्व्वत
तस्य विस्तारादयः श्वेतपर्व्वतवत् दैर्घ्ये श्वेत-
पर्व्वतात् किञ्चिदधिकदशांशेन न्यूनः । * ।
तदुत्तरे कुरुवर्षं तदुत्तरे लवणसमुद्रः । इला-
वृतवर्षस्य दक्षिणे निषधपर्व्वतः द्विसहस्रयोजन-
विस्तीर्णः अयुतयोजनोत्सेधः पूर्ब्बपश्चिमयोः
क्षारससुद्रावधि दीर्घः । * । तद्दक्षिणे हरिवर्षं
तद्दक्षिणे हेमकूटपर्व्वतः अस्य विस्तारादयो
निषधवत् दैर्घ्ये निषधात् किञ्चिदधिकदशांशेन
न्यूनः । तद्दक्षिणे हिमालयपर्व्वतः अस्य विस्ता-
रादयः पूर्ब्बवत् दैर्घ्ये हेमकूटपर्व्वतात् किञ्चि-
दधिकदशांशेन न्यूनः । * । तद्दक्षिणे भारत-
वर्षं तद्दक्षिणे क्षारसमुद्रः । इलावृतस्य पश्चिमे
माल्यवान् पर्व्वतः द्विसहस्रयोजनविस्तीर्णः
अयुत-
योजनोत्सेधः उत्तरदक्षिणयोर्नीलनिषधपर्व्वता-
वधि दीघः । * । तत्पश्चिमे केतुमालवर्षं तत्-
पश्चिमे लवणसमुद्रः । इलावृतस्य पूर्ब्बे गन्ध-
मादनपर्व्वतः अस्य विस्तारादयो माल्यवद्वत् ।
तत्पूर्ब्बे भद्राश्ववर्षं तत्पूर्ब्बे लवणसमुद्रः । * ।
मेरोः पूर्ब्बादिचतुर्द्दिक्षु मन्दरमेरुमन्दरसुपार्श्व-
कुमुदनामानः पर्व्वतास्तिष्ठन्ति । तेषु चूतजम्बू-
कदम्बन्यग्रोधाश्चत्वारोवृक्षाः सन्ति । ते सर्व्वे
दैर्घ्ये एकादशशतयोजनपरिमिताःविस्तारे
शतयोजनपरिमिताः । तेषां शाखाविस्तारः
एकादशशतयोजनपर्य्यन्तम् । तेषु पर्व्वतेषु ह्रदा-
श्चत्वारः पयोमध्विक्षुरसमृष्टजलाः । एवं नन्दन-
चैत्ररथवैभ्राजकसर्व्वतोभद्रसंज्ञकावि चत्वारि
देवोद्यानानि च सन्ति । * । मन्दरोपरिस्थितै-
कादशशतयोजनोच्चचूतमस्तकात्पर्व्वतशृङ्गवत्
स्थूलानि फलान्यनृतकल्पानि पतन्ति । तेषां
विशीर्य्यमाणानामतिमधुरसुगन्धिबह्लारुण-
रसोदेनारुणोदा नाम नदी मन्दरगिरिशिखरा-
न्निपतन्ती पूर्ब्बेणेलावृतमुपप्लावयति । * । एवं
जम्बूफलानामत्युच्चनिपातविशीर्णानामनस्थिप्रा-
याणामिभकायनिभानांरसेन जम्बूर्नाम नदी
मेरुमन्दरशिखरादवनितलेनिपतन्ती दक्षिणे-
नेलावृतं वहति । तस्या उभयोस्तीरयोर्मृत्तिका
जम्बूरसेनानुविध्यमाना वाय्वर्कसंयोगविपाकेन
सदामरलोकाभरणं जाम्बूनदं नाम स्वर्णं

वासकपिलशङ्खवैदूर्य्यजारुधिहंसऋषभनागकाल-
ञ्जरनीरदादयः पर्व्वता मेरोर्मूलदेशे परित उप-
कॢप्ताः । मेरोः पूर्ब्बदिशि उत्तरस्यामष्टादश-
योजनदीर्घौ जठरदेवकूटपर्व्वतौ तिष्ठतः । तौ
द्विसहस्रयोजनविस्तारौएवं द्विसहस्रयोज-
नोच्चौ । मेरोः पश्चिमायान्दिशि पवनपारि-
पात्रौ पर्व्वतौ उत्तरस्यां अष्टादशयोजनदीर्घौ
द्विसहस्रयोजनविस्तारौ द्विसहस्रयोजनोच्चौ ।
एवं दक्षिणस्यान्दिणि कैलासकरवीरपर्व्वतौ
पूर्ब्बस्यामष्टादशयोजनदीर्घौ द्विसहस्रयोजन-
विस्तारौ द्विसहस्रयोजनोच्चौ । एवमुत्तरस्यां
त्रिशृङ्गमकरपर्व्वतौ पूर्ब्बस्यामष्टादशयोजनदीर्घौ
द्विसहस्रयाजनविस्तारौ द्विसहस्रयोजनोच्चौ ।
एवं वर्षे वर्षे नदाः नद्यश्च बहवः सन्ति ॥ * ॥
तत्रापि भारतमेव वर्षं कर्म्मक्षेत्रं अन्यान्यष्टानि
वर्षाणि सर्गिणां पुण्यशेषोपभोगस्थानानि भूस्वर्ग-
नामाख्यातानि । एषु वर्षेषु पुरुषाणां आयु-
रयुतवर्षाणि ते देवकल्पा अयुतहस्तिबल-
विशिष्टाः वज्रवद्दृढशरीराः सर्व्वदा मोदयुक्ताः
सन्ति । येषु देवपतयः सगणाः सस्त्रीकाः नाना-
स्थानेषु स्वैरं विहरन्ति । नवसु वर्षेषु भगवा-
न्नारायणस्तत्तत्पुरुषाणामनुग्रहायस्वमूर्त्ति-
भेदेनाद्यापि सन्निहितो भवति ॥ * ॥ इला-
वृते तु वर्षे भगवान् शिव एक एव पुरुषः भवानी
प्रधानार्ब्बुदसहस्रैः स्त्रीगणैः परिवृतः नारा-
यणस्य सङ्कर्षणसंज्ञां मूर्त्तिं ध्यानेन सन्निधाप्य
स्तुवन्नास्ते ॥ * ॥ भद्राश्वे वर्षे तद्वर्षपतिर्भद्र-
श्रवा नाम धर्म्मसुतः तत्कुलपतयः पुरुषा भग-
वतो हयशीर्षाभिधानां मूर्त्तिं परमसमाधिना
सन्निधाप्य स्तुवन्ति ॥ * ॥ हरिवर्षे भगवान्नर-
हरिरूपेणास्ते तत्र प्रह्लादो दैत्यदानवकुलतीर्थ-
स्वरूपः तद्वर्षपुरुषैः सहानन्यभक्तियोगेनो-
पास्ते ॥ * ॥ केतुमाले भगवान् कामदेवस्वरू-
पेण लक्ष्म्याः प्रियचिकीर्षया आस्ते तद्भगवतो
मायामयं रूपं परमसमाधियोगेन रमा देवी
संवत्सरस्य रात्रिषु प्रजापतेर्दु हितृभिरुपेता
अहःसु तद्भर्त्तृभिरुपेता उपास्ते ॥ * ॥ हिर-
ण्मये वर्षे भगवान् कूर्म्मतनुं बिभ्राणो निवसति
तद्भगवन्मूर्त्तिं पितृगणाधिपतिरर्य्यमा तद्वर्षपुरुषैः
सह उपास्ते ॥ * ॥ उत्तरकुरुवर्षे भगवान्
वराहरूपी आस्ते तं भूमिस्तद्वर्षपुरुषैः सहा-

"जम्बुर्ग्राही मधुरकफहा रोचनो वातहारी ।"
इति हारीते प्रथमस्थाने दशमेऽध्याये ॥)

**जम्बु**, क्ली, स्त्री, जम्बूफलम् । तत्पर्य्यायः । जम्बूः २
जाम्बवम् ३ । इत्यमरः । २ । ४ । १९ ॥

**जम्बुकः**, पुं, (जमतीति । जमु भक्षणे + "मृगय्वा
दयश्च ।" उणां १ । ३८ । इति कुप्रत्ययेन निपा-
तनात् साधुः । ततः स्वार्थे कन् ।)
शृगालः ।
(यथा, महाभारते । १ । १४१ । ४६ ।
"एवं तेषु प्रयातेषु जम्बुको हृष्टमानसः ।
खादति स्म तदा मांसमेकः सन्मन्त्रनिश्चयात् ॥")
वरुणः । (जम्बु इव कायतीति । कै + कः ।)
वृक्षविशेषः । गोलापजाम इति भाषा ॥ नीचे
त्रि । इति शब्दरत्नावली ॥
श्योणाकप्रभेदः ।
इति राजनिर्घण्टः ॥ (सुवर्णकेतकी । यथा, --
"केतकः सूचिकापुष्पो जम्बुकः क्रकचच्छदः ।
सुवर्णकेतकी त्वन्या लघुपुष्पा सुगन्धिनी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे मागे ॥)

**जम्बुद्वीपः**, पुं, (जम्बुवृक्षयुक्तो द्वीपः ।) पृथिव्याः
सप्तद्वीपान्तर्गतद्वीपविशेषः । अयं द्वीपः पद्म-
कोषमध्यवर्त्तिकोष इव लक्षयोजनविस्तीर्णः
पद्मपत्र इव समवर्त्तुलः लक्षयोजनविस्ततलवण-

भवति । * । सुपार्श्वपर्व्वतस्थो यो कदम्बवृक्षस्तस्य
पञ्चकोटरेभ्यो विनिःसृताः पञ्चव्यामस्थूलाः
पञ्च मधुधाराः सुपार्श्वशिखरात् पतन्त्यः पश्चि-
मेनेलावृतमनुमोदयन्ति । * । कुमुदपर्व्वतोपरि-
स्थितो यो वटवृक्षस्तस्य स्कन्धेभ्यो निर्गताः
पयोदधिधृतमधुगुडान्नाद्यम्बरशय्यासनाभरणा-
दियुक्ताः कामदुघा नदाः कुमुदाग्रात् प्रप-
तन्त उत्तरेणेलावृतमुपभोजयन्ति । * । तान्
नदान् सेवमानानां प्रजानां वलीपलितक्लमस्वेद-
दौर्गन्ध्यजरामयमृत्युशीतोष्णवैवर्ण्योपसर्गादय-
स्तापविशेषा न कदाचित् भवन्ति यावज्जीवं
निरतिशयसुखमेव । कुरङ्गकुररकुसुम्भवैकङ्क-
त्रिकूटशिखरशिशिरपतङ्गरुचकनिषधशिति-

स्खलितभक्तियोगेनोपास्ते ॥ * ॥ किम्पुरुषे वर्षे
भगवान् दाशरथी रामरूपेणास्ते तं तच्चरण-
सन्निकर्षाभिरतः परमभागवतो हनुमान् अवि-
रतभक्तिस्तद्वर्षपुरुषैरुपास्ते ॥ * ॥ भारते वर्षे
भगवान्नरनारायणाख्य आत्मज्ञानिनामनुग्रहा-
यानुकम्पया अव्यक्तगतिस्तपश्चरति । तन्मूर्त्तिं
नारदः वर्णाश्रमयुक्ताभिर्भारतवर्षीयप्रजाभिः
सह भगवदनुभावोपवर्णनं पञ्चरात्रं सावर्णे-
रुपदेक्ष्यमाणः परमभक्तिभावेन सेवते । * ।
भारतेऽप्यस्मिन् वषे सरिच्छैला बहवः सन्ति ।
यथा, मलयः भङ्गलप्रस्थः मैनाकः त्रिकूटः

| | | |
|---|---|---|
| ससुद्रेण वेष्टितः । यस्मिन्<br>प्रत्येकनवसहस्र-<br>योजनायामानि नव वर्षाणि तेषां<br>वर्षाणामष्टौ<br>सीमपर्व्वताः सन्ति । * । एषां वर्षाणां<br>मध्य<br>इलावृतवर्षं मध्यवर्त्ति यस्य मध्यदेशे<br>सुमेरु-<br>पर्व्वतः लक्षयोजनोत्सेधः ।<br>इलावृतवर्षस्यो-<br>त्तरे नीलपर्व्वतः<br>द्विसहस्रयोजनविस्तीर्णः अयुत-<br>योजनोत्सेधः पूर्ब्बपश्चिभयोः<br>क्षारसमुद्रावधि<br>दीर्घः । * । तदुत्तरे रम्यकवर्षं तदुत्तरे<br>श्वेत-<br>पव्वतः द्विसहस्रयोजनविस्तीर्णः<br>अयुतयोज-<br>नोत्सेधः पूर्ब्बपश्चिमयोः<br>क्षारसमुद्रावधि दीर्घः<br>दैर्घ्ये नीलपर्व्वतात्<br>किञ्चिदधिकदशांशेन न्यूनः । * । | | |

ऋषभः कूटकः कोल्लः सह्यः देवगिरिः ऋष्य-
मूकः श्रीशैलः महेन्द्रः वारिधारः विन्ध्यः शुक्ति-
मान् ऋक्षगिरिः पारिपात्रः द्रोणः चित्रकूटः
गोवर्द्धनः रैवतकः ककुभः नीलः कोकः गोमुखः
इन्द्रकीलः कामगिरिरिति चान्ये च शतसह-
स्रशः शैलाः । * । तेषां नितम्बप्रभवा नद्यो
ह्यसंख्याताः । यथा, चन्द्रवंशा ताम्रपर्णी अव-
टोदा कृतमाला वैहायसी कावेरी वेण्वा पय-
स्वती शर्करावर्त्ता तुङ्गभद्रा कृष्णवेण्वा भीमरथी
गोदावरी निर्व्विन्ध्या पयोष्णी तापी रेषा सुरसा
नर्म्मदा चर्म्मण्वती महानदी वेदस्मृतिः ऋषि-
कुल्या त्रिसामा गण्डकी वाग्मती कौशिकी
मन्दाकिनी यमुना सरस्वती दृशद्वती गोमती
सरयूः ओधवता सुषोमा शतद्रुः चन्द्रभागा
मरुद्वृधा वितस्ता असिक्नी विश्वा इति महा-
नद्यः । अन्धः शोणश्च नदौ । * । अस्मिन्
वर्षे लब्धजन्मभिः पुरुषैः
शुक्ललाहितकृष्णवर्णेन
स्वारन्धेन कर्म्मणा दिव्यमानुषनारकगतयो
भवन्ति ॥ * ॥ जम्बुद्वीपस्य अष्टौ उपद्वीपाः
सन्ति सगरात्मजैरश्वान्वेषणे इमां महीं परितो
निखनद्भिरुपकल्पिताः । तद्यथा, स्वर्णप्रस्थः
चन्द्रशक्तः आवर्त्तनः रमणकः मन्दहरिणः
पाञ्चजन्यः सिंहलः लङ्का इति । इति श्रीभाग-
वते । ५ । १६ अध्याये । तथा च मार्कण्डेये ५४
अध्याये मात्स्ये ११२ अध्याये च द्रष्टव्यम् ॥ *
॥
ल्योतिःशास्त्रमते लवणसमुद्रस्योत्तरे जम्बुद्वीपः
।
स तु भूम्यर्द्धभागः । तस्य दक्षिणे द्वितीयार्द्ध-
भागे द्वीपषट्कस्य सप्तसमुद्रस्य च निवेशः ।
इति सिद्धान्तशिरोमणिः ॥

**जम्बुलः**, पुं, (जम्बुं जम्बु फलं लातीति । ला + कः ।)

जम्बूवृक्षः । केतकवृक्षः । इति विश्वः ॥ (यथा,
सुश्रुते । १ । १६ ।
"अवमन्थः सकण्डूको ग्रन्थिको जम्बुलस्तथा
॥")

**जम्बुवनजं**, क्ली, (जम्बुवनमिव जायते इति ।

जन् + डः ।) श्वेतजवापुष्पम् । यथा, --
"पारिभद्रं पाटला च वकुलं गिरिशालिनी ।
क्षुद्रभेदेन द्विविधा । तत्र बृहत्याः
पर्य्यायः ।
महाजम्बूः १ महापत्रा २ राजजम्बूः ३
बृहत्-
फला ४ । इति रत्नमाला ॥ फलेन्द्रः
५ नन्दः ६
महाफला ७ सुरभिपत्रा ८ ।
एतत्फलगुणाः ।
विष्टम्भित्वम् । गुरुत्वम् । रोचनत्वम् ।
इति
भावप्रकाशः ॥ क्षुद्रायाः पर्य्यायः ।
सूक्ष्म-
कृष्णफला १ दीर्घपत्रा २ मध्यमा ३ ।
वन-
जम्बूपर्य्यायः । भूमिजम्बूः १
काकजम्बूः २
नादेयी ३ शीतपल्लवा ४ । इति
रत्नमाला ॥
सूक्ष्मपत्रा ५ जलजम्बुका ६ ।
तत्फलगुणाः ।
ग्राहित्वम् । रूक्षत्वम् ।
कफपित्तास्रदाह-
नाशित्वञ्च । इति भावप्रकाशः ॥
तत्फलस्य
पर्य्यायः । जम्बु २ जाम्बवम् ३ ।
इत्यमरः ।
। २ । ४ । १९ ॥ (स्वनामख्याता
नदी । यथा,
मात्स्ये । १२० । ६७ ।
"मेरोः पार्श्वात् प्रभवति ह्रदश्चन्द्रप्रभो
महान् ।
जम्बूश्चैव नदी पुण्या यस्यां जाम्बूनदं
स्मृतम् ॥")

**जम्बूकः**, पुं, स्त्री, (जम्बुकः पृषोदरादित्वात्

दीर्घः ।) शृगालः । इति शब्दरत्नावली
॥
जम्बुकशब्दार्थोऽप्यत्र ॥

**जम्बूका**, स्त्री, (जम्बूरिव कायतीति । कै + कः
।

"पर्व्वणः पूतनो जम्भः खरः क्रोधवशो हरिः ॥"
जम्भ्यते भक्ष्यतेऽनेनेति । जम्भ + करणे घञ् ।)
दन्तः । यथा, ऋग्वेदे । ८ । ९१ । २ ।
"इमं जम्भसुतं पिब ।" "जम्भसुतं दन्तैरभि-
षुतम् ।" इति तद्भाष्यम् ॥ * ॥ जम्भ्यते भक्ष्यते
ऽसौ इति कर्म्मणि घञ् ।) जम्बीरः । (यथा, --
"स्याज्जम्बीरोदन्तशटोजम्भजम्भीरजम्भलाः
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥ * ॥
जम्भ + भावे घञ् ।) भक्षणम् । इति मेदिनी ।
भे, ४ ॥ (यथा, महाभारते । ५ । ६४ । २० ।
"इति ते कथयन्ति स्म ब्राह्मणा जम्भसाधकाः
॥")
अंशः । हनुः । तूणः । इति हेमचन्द्रः ॥

**जम्भकः**, पुं, (जम्भ एव । स्वार्थे कन् ।) जम्बीरः ।

इति शब्दचन्द्रिका ॥ (स्वनामख्यातो नृपविशेषः
।
यथा, महाभारते । २ । ३१ । ७ ।
"ततश्चर्म्मण्वतीकूले जम्भकस्यात्मजं नृपम् ।
ददर्श वासुदेवेन शेषितं पूर्ब्बवैरिणा ॥" * ॥)
जम्भतीति जभैजभने + ण्वुल् । कामुके,
त्रि ॥)

**जम्भका**, स्त्री, (जम्भा एव । स्वार्थे कन् ।) जृम्भा ।

इति राजनिर्घण्टः ॥

**जम्भगः**, पुं, (जम्भाय भक्षणाय गच्छति भ्रम-

तीति । गम + डः । अतिशयभक्षणशीलत्वात्
तथात्वम् ।) राक्षसविशेषः । यथा, --
"देवा यक्षास्तथा नागा गन्धर्व्वाप्सरसोऽसुराः ।
क्रूराः सर्पाः सुपर्णाश्च तरवो जम्भगाः खगाः ॥
विद्याधरा जलाधारास्तथैवाकाशगामिनः ।
निराहाराश्च ये जीवाः पापेऽधर्म्मे रताश्च ये ॥
तेषामाप्यायनायैतद्दीयते सलिलं मया ॥"
इत्याह्निकाचारतत्त्वधृतपद्मपुराणवचनम्॥

**जम्भद्विट्**, [ष्] पुं, (जम्भं तदाख्यया प्रसिद्ध-

मसुरं द्वेष्टीति । द्विष् + क्विप् । जम्भस्य द्विट्
इति वा ।) इन्द्रः । इति हेमचन्द्रः ॥ (विष्णुः ।
इति महाभारतम् ॥)

**जम्भभेदी**, [न्] पुं, (जम्भं भेत्तुं शीलमस्य ।

तिलकं जम्बुवनजं पीतकं तगरन्त्वपि ॥
एतानि हि प्रशस्तानि कुसुमान्यच्युतार्च्चने ॥”
इति वामनपुराणम् ॥

**जम्बूः**, स्त्री, (जम्यते भक्ष्यते इति । जमु अदने
+ “अन्दूदृन्फूजम्ब्विति ।” उणां १ । ९५ ।
इति कूः ।) नागदमनी । इति राजनिर्घण्टः ॥
वृक्षविशेषः । जाम इति भाषा । तत्पर्य्यायः ।
सुरभिपत्रा २ नीलफला ३ श्यामला ४ महा-
स्कन्धा ५ राजार्हा ६ राजफला ७ शुकप्रिया ८
मोदमोदिनी ९ । तत्फलगुणाः । कपायत्वम् ।
मधुरत्वम् । श्रमपित्तदाहकण्ठार्त्तिशोषकृमि-
दोषश्वासातिसारकफकासविनाशित्वम्। विष्ट-
म्भित्वम् । रोचनत्वम् । पाचनत्वञ्च । इति
राजनिर्घण्टः ॥ गुरुत्वम् । स्वादुत्वम् । शीत-
लत्वम् । अग्निसंदूषणत्वम् । रूक्षत्वम् । वात-
कारित्रम् । इति राजवल्लभं ॥ सा बृहत्-
अजादित्वात् टाप् ।) काकलीद्राक्षा ।
इति
राजनिर्घण्टः ॥

**जम्बूलः**, पुं, (जम्बूं जम्बूफलं लातीति । ला + कः ।)
जम्बूवृक्षः । केतकवृक्षः । इति मेदिनी
। ले, ९४ ॥
(यथा, हरिवंशे । ९६ । १६ ।
“जम्बू जम्बूलवृक्षाढ्यं
कन्दकन्दलभूषितम् ॥”
वरपक्षीयस्त्रीणां परिहासवचनम् । इति
नीलकण्ठः ॥)

**जम्बूलमालिका**, स्त्री, (जम्बू लस्य वरपक्षीयरमणी-
परिहासवचनस्य मालिका परम्परा ।)
कन्या-
वरयोर्मुखचन्द्रिका । इत्युद्वाहतत्त्वम् ॥
(यथा,
हरिवंशे । १८३ । २२ ।
“आशीर्भिर्व्वर्द्धयित्वा च देवर्षिः
कृष्णमब्रवीत् ।
अनिरुद्धस्य वीर्य्याख्यो विवाहः
क्रियतां विभो ! ।
जम्बू लमालिकां द्रष्टुं श्रद्धा हि मम
जायते ॥”)
“जम्बूलं वरपक्षीयस्त्रीणां
परिहासवचनं तेषां
मालिका श्रेणी ।” इति तट्टीकायां
नीलकण्ठः ॥

**जम्भः**, पुं, (जम्भते जृम्भते इति । जभि गात्र-
विनामे + पचाद्यच् । “रधिजभोरचि ।”
७ । १
६१ । इति नुम् ।) दैत्यभेदः । (इन्द्र
एनं निहत-
वान् ॥ अपरो दैत्यविशेषः । विष्णुरेनं
जघान ।
यथा, महाभारते । ३ । १०२ । २४ -
- २५ ।
“असुरश्च महेष्वासो जम्भ
इत्यभिविश्रुतः ।
यज्ञक्षोभकरः क्रूरस्त्वयैव
विनिपातितः ॥
भिद् + “सुप्यजातौ णिनिस्ताच्छील्ये ।” ३ । २
। ७८ ।
इति णिनिः ।) इन्द्रः । इत्यमरः । १ । १ । ४६
॥

**जम्भरः**, पुं, (जम्भं भक्षणरुचिं राति ददातीति ।
जम्भ + रा + कः ।) जम्बीरः । इति शब्द-
चन्द्रिका ॥

**जम्भलः**, पुं, (जम्भर । रस्य लत्वम् ।) जम्बीरः ।
(यथा, भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ।
“स्याज्जम्बीरो दन्तशठो जम्भजम्भीरजम्भलाः
॥)”
बुद्धदेवविशेषः । इति मेदिनी । ले, ९३ ॥

**जम्भला**, स्त्री, (जम्भं भक्षणं लाति आददा-
तीति । ला + कः ।) राक्षसीविशेषः । यथा, --
“समुद्रस्योत्तरे तीरे जम्भला नाम राक्षसी ।
तस्याः स्मरणमात्रेण विशल्या गर्भिणी भवेत् ॥”
इति ज्योतिषतत्त्वे राजमार्त्तण्डः ॥

**जम्भा**, स्त्री, (जम्भ्यते इति । जभि जृम्भायाम् +
भावे अः ततः स्त्रियां टाप् ।) जृम्भा । इति
राजनिर्घण्टः ॥

| | | |
|---|---|---|
| | एवमादीनि कर्म्माणि येषां संख्या न विद्यते ।<br>अस्माकं भयभीतानां त्वं गतिर्मधुसूदन ! ॥"<br>प्रह्लादपुत्त्राणामेकतमः । यथा, हरिवंशे । २१८ । ३५ ।<br>"प्रह्लादस्य त्रयः पुत्त्रा विक्रान्ताश्च महाबलाः ।<br>विरोचनश्च जम्भश्च कुजम्भश्चेति विश्रुताः ॥"<br>राक्षसविशेषः । स तु रावणस्यानुचरः । यथा, महाभारते । ३ । २८४ । रामरावणयुद्धे । २ । | |

**जम्भारिः**, पुं, (जम्भस्यासुरस्य अरिः शत्रुः ।)
इन्द्रः । यथा, "जम्भारिदम्भोलयः ।" इत्युत्तर-
नैषधम् ॥ वह्निः । वज्रम् । इति विश्वः ॥
(विष्णुः । इति महाभारतम् ॥)

**जम्भी**, [न्] पुं, (जम्भयति क्षुधामान्द्यादिकं
नाशयतीति । जभि क नाशे + णिनिः ।)
जम्बीरः । इति शब्दचन्द्रिका ॥

**जम्भीरः**, पुं, (जम्भ्यते अग्निवृद्ध्यर्थं भक्ष्यते इति ।
जभ + "गम्भीरादयश्च ।" इति ईरन् । ततो
"रधिजभोरचि ।" ७ । १ । ६१ । इति नुम् ।)
जम्बीरः । इत्यमरः । २ । ४ । ७९ ॥ मरु-
वकः । इति तट्टीकायां भरतः ॥

**जयः**, पुं, (जि जये + "एरच् ।" ३ । ३ । ५६ ।
इत्यच् ।) शत्रुपराङ्मुखीकरणम् । जित् इति
भाषा । तत्पर्य्यायः । विजयः २ जयनम् ३ ।
इत्यमरः । २ । ८ । १० ॥ (यथा, मनुः । ७ ।
४४ ।
"इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम् ।
जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः
॥")
अग्निमन्थः । (जयतीति । जि + पचाद्यच् ।)
जयन्तः । युधिष्ठिरः । इति मेदिनी । ये, २५
॥
(एतन्नाम तु विराटगृहे छद्मप्रवाससमये जातम्
।
यथा, महाभारते । ४ । ५ । ३४ ।
"जयो जयन्तो विजयो जयत्सेनो जयद्बलः ।
इति गुह्यानि नामानि चक्रे तेषां युधिष्ठिरः ॥")
विजयनन्दनराजः । स तु इक्ष्वाकुवंशोद्भवः ।
इति हेमचन्द्रः । ३ । ३५८ ॥ श्रीनारायण-
पार्षदः । यथा, --
"एतौ द्वौ पार्षदौ मह्यं जयो विजय एव च ।
कदर्थीकृत्य मां यद्वो बह्वक्रातामतिक्रमम् ॥"
इति श्रीभागवते । ३ । १६ । २ ॥
(सर्व्वाणि भूतानि जयतीति । जीयते संसार-
मनेन वा । विष्णुः । यथा, महाभारते । १३ ।
१४९ । ६७ ।
ऊर्व्वशीगर्भजातः पुरूरवसः पुत्त्रविशेषः ।
यथा,
तत्रैव । ९ । १५ । १ ।
"ऐलस्य चोर्व्वशीगर्भात् षडासन्नात्मजा
नृप ! ।
आयुः श्रुतायुः सत्यायू रयोऽथ विजयो जयः
॥"
राजर्षिविशेषः । यथा, महाभारते । २ । ८ ।
१४ ।
"तस्यां राजर्षयः पुण्यास्तथा
ब्रह्मर्षयोऽमलाः ।
यमं वैवस्वतं तात ! प्रहृष्टाः पर्य्युपासते ॥"
इत्युपक्रम्याह ।
"अङ्गो विष्टश्च वेणश्च दुष्मन्तः सृञ्जयो
जयः ॥"
धृतराष्ट्रपुत्त्राणामन्यतमः । यथा, तत्रैव । १
।
६३ । ११७ ।
"जयः सत्यव्रतश्चैव पुरुमित्रश्च भारत !
॥"
सृञ्जयस्य राज्ञः पुत्त्रः । यथा, हरिवंशे ।
२९ । २ ।
"सृञ्जयस्य जयः पुत्त्रो विजयस्तस्य
चात्मजः ॥"
सञ्जयस्य राज्ञः पुत्त्रः । यथा, भागवते । ९
।
१७ । १६ ।
"कुशात् प्रतिः क्षात्त्रवृद्धात् सञ्जयस्तत्
सुतोजयः ॥"
दौष्मन्तेर्मन्योः पुत्त्रविशेषः । यथा, तत्रैव ।
९ ।
२१ । १ ।
"वितथस्य सुतात् मन्योर्वृहत्क्षत्त्रो
जयस्ततः ॥"
युयुधानपुत्त्रः । यथा, तत्रैव । ९ । २४ ।
१४ ।
"युयुधानः सात्यकिर्व्वै जयस्तस्य
कुणिस्ततः ॥"
भारतादिशास्त्रविशेषः । यथा, भविष्यपुराणे
।
"अष्टादशपुराणानि रामस्य चरितं तथा ।

**जयन्तः**, पुं, (जयतीति । जि + "तॄभूवहि-
वसीति ।" उणां ३ । १२८ । इति झच् ।)
इन्द्रपुत्त्रः । तत्पर्य्यायः । पाकशासनिः २ ।
इत्यमरः । १ । १ । ४९ ॥ ऐन्द्रिः ३ । इति
मेदिनी । ते, ११० । (यथा, रघौ । ३ । २३ ।
"उमावृषाङ्कौ शरजन्मना यथा
यथा जयन्तेन शचीपुरन्दरौ ।
तथा नृपः सा च सुतेन मागधी
ननन्दतुस्तत्सदृशेन तत्समौ ॥"
विष्णुः । यथा, महाभारवे । १३ । १४९ । ९८
।
"अर्को वाजसनः शृङ्गी जयन्तः सर्व्वविज्जयी
॥"
"अतिशयेनारीन् जयते जयहेतुरिति वा
जयन्तः ।" इति तद्भाष्यम् ॥) शिवः । (यथा,
मात्स्ये । ५ । ३० ।
"सावित्रश्च जयन्तश्च पिनाकी चापराजितः ।
एते रुद्राः समाख्याता एकादशगणेश्वराः ॥")
चन्द्रः । इति त्रिकाण्डशेषः ॥ भीमः । इति
मेदिनी । ते, ११० ॥ (एतन्नाम तु छद्मना
विराटगृहवासकाले जातम् । यथा, महा-
भारते । ४ । ५ । ३४ ।
"जयो जयन्तो विजयो जयत्सेनो जयद्बलः ।
इति गुह्यानि नामानि चक्रे तेषां युधिष्ठिरः ॥"
मरुत्वतीगर्भजातो धर्म्मपुत्त्रविशेषः । अयं हि
उपेन्द्र इत्याख्यया प्रसिद्धः । यथा, भागवते ।
६ । ६ । ८ ।
"मरुत्वांश्च जयन्तश्च मरुत्वत्या बभूवतुः ।
जयन्तो वासुदेवांश उपेन्द्र इति यं विदुः ॥"
राज्ञो दशरथस्य मन्त्रिविशेषः । यथा, रामा-
यणे । १ । ७ । २ -- ३ ।
"अष्टौ बभूवुर्वीरस्य तस्यामात्या यशस्विनः ।
शुचयश्चानुरक्ताश्च राजकृत्येषु नित्यशः ॥
धृष्टिर्जयन्तो विजयः सुराष्ट्रो राष्ट्रवर्द्धनः ।
अकोपो धर्म्मपालश्च सुमन्त्रश्चाष्टमोऽर्थवित्
॥"
पर्व्वतविशेषः । यथा, हरिवंशे । १७० । १४ ।
"ततश्च पर्व्वताः सप्त केशवं समुपस्थिताः ।
जयन्तो वैजयन्तश्च नीलो रजतपर्व्वतः ।
महामेरुः सकैलाश इन्द्रकूटश्च नामतः ॥"
ज्योतिषोक्तयात्रिकयोगविशेषः । यथा, --

"नयो जयः सत्यसन्धो दाशार्हः सात्वतां पतिः ॥"
नागविशेषः । यथा, महाभारते । ५ । १०३ । १६ ।
"विरजा धारणश्चैव सुवाहुर्मुखरो जयः ॥"
दानवविशेषः । यथा, हरिवंशे । २३४ । ८३ ।
"जयो निकुम्भः कुपथश्च दानवो
ररक्षुरेते दश दानवाधिपम् ॥"
दशममन्वन्तरीय-ऋषिविशेषः । यथा, भाग-वते । ८ । १३ । २१ -- २२ ।
"दशमो ब्रह्मसावर्णिरुपश्लोकसुतो मनुः ॥"
"हविष्मान् सुकृतः सत्यो जयो मूर्त्तिस्तदा द्विजाः ॥"
ध्रुववंशीयस्य वत्सरनृपस्य पुत्त्रविशेषः । यथा,
तत्रैव ४ । १३ । १२ ।
"सुवीथीर्वत्सरस्येष्ठा भार्य्यासूत षडात्मजान् ।
पुष्पार्णं तिग्मकेतुञ्च इषमूर्जं वसुं जयम् ॥"
विश्वामित्रपुत्त्रविशेषः । (यथा, तत्रैव । ९ । १६ । ३६ ।
"एष वः कुशिका वीरो देवरातस्तमन्वित ।
अन्ये चाष्टकहारीतजयक्रतुमदादयः॥"

विष्णुधर्म्मादिशास्त्राणि शिवधर्म्माश्च भारत ! ॥
कार्ष्ण्यञ्च पञ्चमो वेदो यन्महाभारतं स्मृतम् ।
सौराश्च धर्म्मा राजेन्द्र ! मानवोक्ता महीपते ! ॥
जयेति नाम एतेषां प्रवदन्ति मनीषिणः ॥"
दक्षिणद्वारगृहम् । इति शब्दार्थचिन्तामणिः ॥
वत्सरविशेषः । तत्फलं यथा, --
"क्षत्त्रियाश्च तथा वैश्याः शूद्राश्च नटनर्त्तकाः ।
पीडितास्ते वरारोहे ! जये सर्व्वे न संशयः ॥")

**जयकोलाहलः**, पुं, (जयस्य कोलाहलो यत्र ।)
पाशकभेदः । इति शब्दरत्नावली ॥ (जयस्य
कोलाहलः ।) जयध्वनिश्च ॥

**जयढक्का**, स्त्री, (जयघोषिका ढक्का । विजय-
काले एव वादनादस्य तथात्वम् ।) वाद्य-विशेषः । इति लाकप्रसिद्धा । जयढाक इति भाषा ॥

**जयदत्तः**, पुं, (जयेन विजयेन दत्त इव । जय-
शीलत्वादेवास्य तथात्वम् ।) इन्द्रपुत्त्रः । इति
हेमचन्द्रः । २ । ८९ ॥

**जयनं**, क्ली, (जीयतेऽनेनेति । जि + करणे ल्युट् ।)
तुरङ्गादिसन्नाहः । (यथा माघे । १७ । २३ ।
"सकल्पनं द्विरदगणं वरूथिन-
स्तुरङ्गिणो जयनयुजश्च वाजिनः ।
त्वरायुजः स्वयमपि कुर्व्वतो नृपाः
पुनः पुनस्तदधिकृतानतत्वरन् ॥" * ॥
भावे ल्युट् ।) जयः । इति मेदिनी । ने, ६७ ॥

**जयनी**, स्त्री, (जयन + स्त्रियां ङीप् ।) इन्द्र-
कन्या । इति शब्दरत्नावली ॥

"यत्र स्वोच्चगतश्चन्द्रो लग्नादेकादशे स्थितः ।
जयन्तो नाम योगोऽयं शत्रुपक्षविनाशकृत् ॥")
षोडशध्रुवकान्तर्गतध्रुवविशेषः । तस्य लक्षणं यथा, --
"आदिताले जयन्तः स्यात् शृङ्गाररससंयुतः ।
रुद्रसंख्याक्षरपद आयुर्वृद्धिकरः परः ॥"
इति सङ्गीतदामोदरः ॥

**जयन्तिका**, स्त्री, (जयन्तीव कायतीति । कै +
कः । ततो ह्रस्वो निपातनात् ।) हरिद्रा । इति राजनिर्घण्टः ॥ (दुर्गायाः सखीविशेषः । यथा, काशीखण्डे । ४७ । ४६ ।
"यथा जया च विजया यथा चैव जयन्तिका ॥")

**जयन्ती**, स्त्री, (जयतीति । जि + "तॄभूवहीति ।"
उणां ३ । १२८ । इति झच् । ततो गौरा-

दित्वात् ङीष् ।) गौरी । (यथा, कलिकापुराणे ।
"जयन्ती मङ्गला काली भद्रकाली कपालिनी ।
दुर्गा शिवा क्षमा धात्री स्वाहा स्वधा नमो-
ऽस्तु ते ॥")
इन्द्रपुत्त्री । पताका । इति मेदिनी । ते, १०९ ।
वृत्तविशेषः । तत्पर्य्यायः । जया २ तर्कारी ३
नादेयी ४ वैजयन्तिका ५ । इत्यमरः । २ । ४
। ६५ ॥
बला ६ मोटा ७ हरिता ८ विजया ९ सूक्ष्म-
मूला १० विक्रान्ता ११ अपराजिता १२ ।
(यथा, तिथितत्त्वे ।
"कदली दाडिमी धान्यं हरिद्रा मानकं कचु ।
विल्वोऽशोको जयन्ती च विज्ञेया नवपत्त्रिकाः
॥")
अस्याः गुणाः । मदगन्धयुक्तत्वम् । तिक्तत्वम् ।
कटुत्वम् । उष्णत्वम् । कृमिभूतनाशित्वम् ।
कण्ठविशोधनत्वञ्च । तत्र कृष्णा रसायनी ।
इति राजनिर्घण्टः ॥ एतच्छाकस्य गुणाः ।
गरदोषनाशित्वम् । चक्षुर्हितत्वम् । मधुरत्वम् ।
हिमत्वञ्च । इति राजवल्लभः ॥
("श्वेतजयन्ती भूलं पिष्टं पीतञ्च गव्यपयसैव ।
श्वित्रं निहन्ति नियतं रविवारे वैद्यनाथाज्ञा ॥"
इति वैद्यकचक्रपाणिसंग्रहे कुष्ठाधिकारे ॥)
योगविशेषः । यथा, तिथ्यादितत्त्वे स्कान्दम् ।
"जयं पुण्यञ्च कुरुते जयन्तीमिति तां विदुः ।
रोहिणीसहिता कृष्णा मासे च श्रावणेऽष्टमी ॥
अर्द्धरात्रादधश्चोर्द्ध्वं कलयापि यदा भवेत् ।
जयन्ती नाम सा प्रोक्ता सर्व्वपापप्रणाशिनी ॥"
(द्वादशीविशेषः । यथा, ब्रह्मवैवर्त्ते ।
"उन्मिलनी वञ्जुली च त्रिस्पृशा पक्षवर्द्धिनी ।
जया च विजया चैव जयन्ती पापनाशिनी ।
द्वादश्यष्टौ महापुण्याः सर्व्वपापहरा द्विज ! ॥"
वटिकौषधविशेषः । तद्यथा, --
"विषं पाठाश्वमन्धा च वचातालीशपत्रकम् ।
मरिचं पिप्पलीनिम्बमजामूत्रेण तुल्यकम् ।
वटिका पूर्ब्बवत्कार्य्या जयन्तीयोगवाहिका ॥"
इति जयन्ती वटी ।
इति वैद्यकरसेन्द्रसारसंग्रहे ज्वराधिकारे ॥)

**जयपत्रं**, क्ली, (जयसूचकं पत्रम् ।) अश्वमेधीय-
यज्ञघोटककपाले बद्धा लिपिः । तद्यथा, --
"त्रैलोक्यविजयी रामो रावणान्तकरः प्रभुः ।
विशेषः । जमाल्गोटा इति भाषा । तत्-
पर्य्यायः । सारकः २ रेचकः ३ तिन्तिडीफलम्
४
दन्तीबीजम् ५ मलद्रावि ६ बर्जरेचनम् ७
कुम्भी-
बीजम् ८ कुम्भिनीबीजम् ९ घण्टावीजम् १०
घण्टिनीबीजम् ११ निकुम्भाख्यबीजम् १२
शोधनीबीजम् १३ चक्रदन्तीबीजम् १४ ।
अस्य
गुणाः । कटुत्वम् । उष्णत्वम् । विरेचनत्वम् ।
दीपन वम् । कृमिकफामजठरामयनाशित्वञ्च ।
इति राजनिर्घण्टः ॥

**जयपुत्त्रकः**, पुं, (जयेन विजयेन पुत्त्र इव काय-
तीति । कै + कः । पुत्त्रतुल्यप्रीतिप्रदत्वात्
तथा-
त्वम् ।) पाशकभेदः । इति शब्दरत्नावली ॥

**जयमङ्गलः**, पुं, (जय एव मङ्गलं यस्य । जयेन
मङ्गलं यस्मादिति वा ।) राजवाह्यहस्ती ।
इति शब्दरत्नावली ॥ ध्रुवकविशेषः । यथा, --
"चतुर्व्विंशतिवर्णाङ्घ्रिः कथितो जयमङ्गलः ।
शृङ्गारवीरयोरेव ताले चाचपुटे च सः ॥"
इति सङ्गीतदामोदरः ॥ *
ज्वरघ्न औषधविशेषः । यथा, --
"हिङ्गूलसम्भवं सूतं गन्धकं टङ्कणं तथा ।
ताम्रं वङ्गं माक्षिकञ्च सैन्धवं मरिचं तथा ॥
समं सर्व्वं समाहृत्य द्विगुणं स्वर्णभस्मकम् ।
तदर्द्धं कान्तलौहञ्च रूप्यभस्मापि तत् समम् ॥
ततसमं पारदसमम् ।
एतत् सर्व्वं विचूर्ण्याथ भावयेत् कनकद्रवैः ।
शेफालीदलजैश्चापि दशमूलरसेन च ॥
किराततिक्तकक्वाथैस्त्रिवारं भावयेत् सुधीः ।
भावयित्वा तु तत् कार्य्या गुञ्जाद्वयमिता वटी ॥
व्यनुपानं प्रयोक्तव्यं जीरकं मधुसंयुतम् ।
जीर्णज्वरं महाघोरं चिरकालसमुद्भवम् ॥
ज्वरमष्टवियं हन्ति साध्यासाध्यमथापि वा ।
पृथग्दोषांश्च विविधान् समस्तान् विषमज्वरान्
॥
मेदोगतं मांसगतमस्थिमज्जगतं तथा ।
अन्तर्गतं महाघोरं वहिस्थञ्च विशेषतः ॥
नानादेशोद्भवञ्चैव ज्वरं शुक्रगतं तथा ।
जयन्तीवृक्षः । यथा, वैद्यकरत्नमालायाम्
।
"वैजयन्ती च तर्कारी जयन्ती विजया
जया ॥"
तिथिबिशेषः । सा तु
तृतीयाष्टमीत्रयोदश्यः ।
(यथा, ज्योतिषे ।
"नन्दा भद्रा जपा रिक्ता पूर्णा प्रतिपदः
क्रमात् ॥"
द्वादशीविशेषः । यथा, ब्रह्मवैवर्त्ते ।
"जया च विजया चैव जयन्ती पापनाशिनी
।
द्वादश्योऽष्टौ महापुण्याः
सर्व्वपापहराद्विज ! ॥")
हरीतकी । दुगासखी । इति मेदिनी । ये,
२४ ॥
(यथा, काशीखण्डे । ४७ । ४६ ।
"यथा जया च विजया यथा चैव
जयन्तिका ॥"
देवी भगवती तु वराहशैले पीठस्थाने
जया-मूर्त्या
विराजते । यथा, देवीभागवते । ७ । ३० ।
५२ ।
"वराहशैले तु जया कमला कमलालये
॥")
विजया । (यथा, रसप्रदीपे अजीर्णचिकित्
सायाम् ।
"क्षारत्रयं सूतगन्धौ पञ्चकोलमिदं शुभम् ।
सर्व्वैस्तुल्या जया भृष्टा तदर्द्धा शिग्रुजा
जटा ॥")
शान्तावृक्षः । नीलदूर्व्वा । अग्निमन्थवृक्षः ।
इति राजनिर्घण्टः ॥ (यथा,
भावप्रकाशस्य
पूर्ब्बखण्डे प्रथमे भागे ।
"अग्निमन्थो जयः स स्याच्छ्रीपर्णी
पणिकारिका ।
जया जयन्ती तर्कारी नादेयी वैजयन्तिका
॥")
पताकाविशेषः । इति युक्तिकल्पतरुः ॥
(ज्वरघ्नौषधविशेषः । यथा, --

स दीक्षितो वाजिमेधे तस्यायं प्रोक्षितः पशुः ॥
पालितो लक्ष्मणेनैव सुलक्षणविलक्षितः ।
संपूज्य च पारेत्याज्यः सर्व्वैरिति च संस्कृताम्
॥”
इति वाशिष्ठरामायणम् ॥ * ॥
विवादविषयकजयबोधकलिपिः। डिक्रि इति
इङ्गराजी भाषा । यथा, व्यवहारतत्त्वे ।
“यद्वृत्तं व्यवहारात्तु पूर्व्वपक्षोत्तरादिकम् ।
क्रियावधारणोपेतं जयपत्रेऽखिलं लिखेत् ॥
पूर्ब्बोत्तरक्रियायुक्तं निर्णयान्तं यदा नृपः ।
प्रदद्याच्चयिने लेख्यं नयपत्रं तदुच्यते ॥”

**जयपालः**, पुं, (जयं पालयतीति । पालि +

“कर्म्मण्यण् ।” ३ । २ । १ । इत्यण् ।) विधिः
।
विष्णुः । भूपालः । इति शब्दरत्नावली ॥ वृक्ष-

निखिलं ज्वरनामानं हन्ति श्रीशिवशासनात् ॥
जयमङ्गलनामायं रसः श्रीशिवनिर्म्मितः ।
बलपुष्टिकरश्चैव सर्व्वरोगनिवर्हणः ॥”
इति श्रीजयमङ्गलो रसः ।
इति भैषज्यरत्नावली ॥

**जयवाहिनी**, स्त्री, (जयस्य जयन्तस्य वाहिनी

यद्वा स्वयवरसभायां संयामे वा जयं वह-
तीति । वह + णिनिः । ततो ङीप् ।)
शची । इन्द्राणी । इति हेमचन्द्रः । २ । ८९ ॥

**जया**, स्त्री, (जीयतेऽनया । जि + “एरच् ।”

इति करणे अच् ततष्टाप् ।) दुर्गा । (यथा,
महाभारते । ६ । २२ । २२ ।
“कात्यायनि महाभागे करालि विजये जये !
॥”)
अस्या व्युत्पत्तिर्यथा, --
“जयः कल्याणवचनो ह्याकारो दातृवाचकः ।
जयं ददाति सा नित्यं सा जया परिकीर्त्तिता ॥
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डम् ॥

“विषं त्रिकटु कं मुस्तं हरिद्रा निम्बपत्रकम्
।
विडङ्गमष्टमं चूर्णं छागमूत्रैः समं समम् ।
चणकाभा वटी कार्य्या स्याज्जया
योगवाहिका ॥
जयन्ती वा जया वाथ क्षीरैः पित्तज्वरापहा
।
मुद्रामलकयूषेण पथ्यं देयं घृतं विना ॥
जयन्ता वा जया जथ विषमज्वरनुद्भूतैः ।
सर्व्वज्वरं मधुव्योषैर्गवां मूत्रेण शीतकम् ॥
चन्दनस्य कषायेण रक्तपित्तज्वरापहा ।
जयन्ती वा जया वाथ माक्षिकेण च
कासजित् ॥
जयन्ती वा जया वाथ गोमूत्रेण युतां पिबेत्
।
हन्त्याशु काकर्णं कुष्ठं सुलेपेन च तद्द्रुतम्
॥
द्विनिष्कं केतकीमूलं पिष्ट्वा तोयेन पाचयेत्
।
जयन्ती वा जया वाथ मेहं हन्ति सुराह्वयम्
॥
जयन्ती वा जया वाथ मधुना सर्व्वमेहनुत्
।
जयन्ती वा जया वाथ गुडैः कोष्णजलैः
पिबेत् ॥
त्रिदोषोत्थं हरेद्गुल्मं रसो वा नन्दभैर्वः ।
जयन्ती वा जया वाथ शुण्ठ्या
सर्व्वभगन्दरम् ।
जयन्ती वा जया वाथ तक्रेण ग्रहणीप्रणुत्
।
जयन्ती वा जया वाथ
शृङ्गीद्रावैर्निशान्ध्यनुत् ॥
जयन्ती वा जया वाथ घृष्ट्वा स्तन्येन
चाञ्जनम् ।
श्रावणं सर्व्वदोषोत्थं मांसवृद्धिञ्च नाशयेत्
॥”
इति जयाजयन्ती वटी ॥
इति वैद्यकरसन्द्रसारसंग्रहे ज्वराधिकारे
॥ * ॥)

**जयावहा**, स्त्री, (जयमावहतीति । आ + वह +

अच् ।) भद्रदन्तीवृक्षः । इति राजनिर्घण्टः
॥

**जयाश्रया**, स्त्री, (जयमाश्रयतीति । आ + श्रि +

**जयाह्वा**, स्त्री, (जयस्य आह्वा आख्या आह्वा
यस्याः ।) भद्रदन्तीवृक्षः । इति राज-
निर्घण्टः ॥

**जयी**, [न्] त्रि, (जेतुं शीलमस्य । जि + "जि-
दृक्षिविश्रीति ।" ३ । २ । १५७ । इति इनिः ।)
जययुक्तः । पिजयी । यथा, --
"जगति जयिनो यस्य विशिखाः ।"
इति महिम्नः स्तोत्रम् ॥
(यथा, च रघौ । ४ । ३४ ।
"पौरस्त्यानेवमाक्रामंस्तांस्तान् जनपदान् जयी ।
प्राप तालीवनश्याममुपकण्ठंमहोदधेः ॥")

**जय्यः**, त्रि, जेतुं शक्यः । ("शकि लिङ् च ।"
३ । ३ । १७२ । इति शक्तौ यत् । गुणः ।
"क्षय्यजय्यौ शक्यार्थे ।" ६ । १ । ८१ । इति ।
यान्तादेशः ।) जयकरणयोग्यः । इत्यमरः ।
२ । ८ । ७४ ॥ (यथा, शतपथब्राह्मणे । १४ ।
४ । ३ । २४ ।
"सोऽयं मनुष्यलोकः पुत्त्रेणैव जय्यो नान्येन कर्म्मणा ॥")

**जरठः**, त्रि, (जीर्य्यत्यनेनेति । जॄ वयोहानौ +
उणां १ । १०२ । सूत्रे बाहुलकात् जॄशमोर-
प्यटः इत्युज्ज्वलदत्तोक्तेरठः ।) कर्कशः । पाण्डुः ।
कठिनः । इति मेदिनी । ठे, १३ ॥ (यथा,
माघे । ४ । २९ ।
"अयफतिजाठाः प्रकामगुर्व्वी-
रलघुविलम्बिपयोधरोपरुद्धाः ॥")
जीर्णः । इति हेमचन्द्रः ॥ (वृद्धः । यथा,
भागवते । ६ । १ । २५ ।
"स बद्धहृदयस्तस्मिन्नर्भके कलभाषिणि ।
निरीक्षमाणस्तल्लीलां मुमुदे जरठो भृशम् ॥"
परिणतः । यथा, माघे । ११ । १४ ।
"हिमरुचिररुणिम्ना राजते रज्यमानै-
र्जरठकमलकन्दच्छेदगौरैर्मयूखैः ॥")
जरायां पुं । इति विश्वः ॥

**जरडी**, स्त्री, (जॄ + बाहुलकात् अड । ततो
गौरादित्वात् ङीष् ।) तृणविशेषः । तत्-

**जरणा**, स्त्री, (जरख + टाप् ।) कृष्णजीरकः ।
इति राजनिर्घण्टः ॥ (यथा, ऋग्वेदे । १०
। ३७ । ६ ।
"भद्रं जीवन्तो जरणामशीमहि ॥")

**जरणद्रुमः**, पुं, (जरणो जीर्णः दुमः ।) अश्व-
कर्णवृक्षः । इति राजनिर्घण्टः ॥

**जरण्डः**, त्रि, (जीर्य्यतीति । जॄ + अण्डन् ।)
जीर्णः । इति संक्षिप्तसारे उणादिवृत्तिः ॥

**जरत्**, त्रि, (जॄ + अतृन्) वृद्धः । इत्यमरः । २ । ६ । ४२ ॥
पुरातनम् । इति हेमचन्द्रः ॥

**जरत्कारुः**, पुं, मुनिविशेषः । तत्पर्य्यायः । याया-
वरः २ । इति त्रिकाण्डशेषः ॥
(एतान्निरुक्ति-
र्यथा, महाभारते । १ । ४० । ३ -- ४ ।
"जरेति क्षयमाहुर्व्वै दारुणं कारुसंज्ञितम् ।
शरीरं कारु तस्यासीत्तत् स धीमाञ्छनैः शनैः ॥
क्षपयामास तीव्रेण तपसेत्यत उच्यते ।
जरत्कारुरिति ब्रह्मन् ! वासुकेर्भगिनी तथा ॥"
एतद्विवरणं यथा, देवी भागवते । २ । १२ । ७-९ ।
"जरत्कारुर्मुनिः शान्तो न चकार गृहाश्रमम् ।
तेन दृष्ट्वा वने गर्त्ते लम्बमानाः स्वपूर्ब्बजाः ॥
ततस्तमाहः कुरु पुत्त्रदारान्
यथा च नः स्यात् परमा हि तृप्तिः ।
स्वर्गे व्रजामः खलु दुःखमुक्ता
वयं सदाचारयुते सुते वै ॥
स तानुवापाथ लभे सनामा-
मयाचितां चातिवशानुगाञ्च ।
यदा गृहारम्भमहं करोमि
व्रवीमि तथ्यं मम पूर्ब्बजा वै ॥
इत्युक्त्वा तान् जरत्कारुर्गतस्तीर्थान् प्रति द्विजः ॥"
अथ मात्राभिशप्तो वासुकिः ब्रह्मोपदेशात्
त्वन्तु भ्रातृगृहं याहि निद्राविच्छेदकारिणी ॥
वेपमानाब्रवीद्वाक्यमित्युक्त्वा मुनिना तदा ।
भ्रात्रा दत्त्वा यदर्थं तत् कथं स्यादमितप्रभ ! ॥
मुनिः प्राह जरत्कारुं तदस्तीति निराकुलः ॥"
अस्य पुत्त्रः आस्तीकनामा मुनिप्रवरः । योऽसौ
जनमेजयं गत्वा सर्पसत्रात् निवारयामास ।
जरत्कारुमुनेर्विशेषविवरणन्तु महाभारते
आदिपर्व्वणि ४४ -- ४८ अध्यायेषु द्रष्टव्यम् ॥)

**जरत्कारुः**, स्त्री, मनसादेवी । इति त्रिकाण्डशेषः ॥
(यथा, देवीभागवते । २ । १२ । ४७ ।
"मुनिः प्राह जरत्कारुं तदस्तीति निराकुलः ॥")

**जरत्कारुप्रिया**, स्त्री, (जरत्कारोः स्वनाम
ख्यातस्य मुनेः प्रिया ।) मनसादेवी । इति
शब्दरत्नावली ॥

**जरती**, स्त्री, (जरत् + "उगितश्च ।" ४ । १ । ६ ।
इति ङीप् ।) वृद्धा । इति राजनिर्घण्टः ॥

**जरद्गवः**, पुं, (जरंश्चासौ गौश्चेति । "गोरतद्धित-
लुकि ।" ५ । ४ । ५२ । इति टच् ।) जीर्ण-
वृषः । तत्पर्य्याया । वृद्धोक्षः २ । इत्यमरः ।
२ । ९ । ६१ ॥ (यथा, पञ्चतन्त्रे । ४ । ८४ ।
"अकृन्य पौरुषं या श्रीः किं तयापि सुभोग्यया ।
जरद्गवः समश्नाति दैवादुपगतं तृणम् ॥"
जरन् क्षीयमाणो गौर्वृषरूपो धर्म्मः । धर्म्मरूप-
जीर्णवृषः । यथा, महाभारते । १३ । ९३ ।
६८ ।
"नैतस्येह यथास्माकं शश्वच्छास्त्रं जरद्गवः ।
अलसः क्षुत्परो मर्खस्तेन पीवाञ्छुना सह ॥")
गृध्रपक्षिविशेषः । यथा, --
"अज्ञातकलशीलस्य वासो देयो न कस्यचित् ।
मार्ज्जारस्य हि दोषेण हतो गृध्रो जरद्गवः ॥"
इति हितोपदेशे मित्रलाभपरिच्छेदः ॥

**जरन्**, पुं, (जरतीति । जॄ + शतृ ।) वृद्धः ।
इति राजनिर्घण्टः ॥
("वान्तमात्रे जरत् पित्तं शूलमाशु व्यपोहति ॥"

पर्य्यायः । गर्म्मोटिका २ सुनाला ३ जया-
श्रया ४ । अस्या गुणाः । मधुरत्वम् । शीत-
त्वम् । सारकत्वम् । दाहरक्तदोपनाशित्वम् ।
रुच्यत्वम् । पशूनां दुग्धदातृत्वञ्च । इति राज-
निर्घण्टः ॥

**जरणं**, क्ली, (जरयतीति । जॄष् + णिच् + ल्युः ।)

हिङ्गु । कुष्ठौषधी । जीर्णे, त्रि । इति शब्द-
रत्नावली ॥ (श्वेतजीरकः । पर्य्याया यथा, --
"अजाजी जरणं दीप्यं मागधी जीरकं सितम्
॥"
इति वैद्यकरत्नमालायाम् ॥)

**जरणः**, पुं, (जरयतीति । जॄष् + णिच् + ल्यः ।)

जीरकः । (यथा, --
"जीरको जरणो जाजी कणा स्याद्दीर्घजीरकः
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
कृष्णजीरकः । सौवर्च्चललवणम् । इति शब्द-
रत्नावली ॥ कासमर्द्दः । इति राजनिर्घण्टः ॥

स्वभगिनीं जरत्कारुमेनमर्पयामास ।
तद्यथा,
तत्रैव । २ । १२ । ३५ -- ४५ ।
"वासुकिस्तु तदाकर्ण्य वचनं ब्रह्मणः
शिवम् ।
वनं गत्वा सुतां तस्मै ददौ विनयपूर्ब्बकम्
॥
सनामां तां मुनिर्ज्ञात्वा जरत्कारुरुवाच
तम् ।
अप्रियं मे यदा कुर्य्यातदा तां
सन्त्यजाम्यहम् ॥
वाग्बन्धं तादृशं कृत्वा मुनिर्जग्राह तां
स्वयम् ।
दत्त्वा च वासुकिः कामं भवनं स्वं जगाम ह
॥
कृत्वा पर्णकुटीं शुभ्रां जरत्कारुर्म्महावने ।
तया सह सुखं प्राप रममाणः परन्तप ! ॥
एकदा भोजनं कृत्वा सुप्तोऽसौ मुनिसत्तमः
।
भगिनी वासुकेस्वत्र संस्थिता वरवर्णिनी ॥
न सम्बोधयितव्योऽहं त्वया कान्ते !
कथञ्चन ।
इत्युक्त्वा तु गतो निद्रां मुनिस्तां सुदतीं
तदा ॥
रविरस्तगिरिं प्राप्तः सन्ध्याकाल उपस्थिते
।
किं करोमि न मे शान्तिस्त्यजेन्मां बोधितः
पुनः ॥
धर्म्मलोपभयाद्भीता जरत्कारुरचिन्तयत् ।
नोचेत् प्रबोधयाम्येनं सन्ध्याकालो वृथा
व्रजेत् ॥
धर्म्मनाशाद्वरं त्यागस्तथापि मरणं ध्रुवम् ।
धर्म्महानिर्न्नराणां हि नरकाय भवेत् पुनः ॥
इति सञ्चिन्त्य सा बाला तं मुनिं
प्रत्यबोधयत् ।
सन्ध्याकालोऽपि सञ्जात उत्तिष्ठोत्तिष्ठ
सुव्रत ! ॥
उत्थितोऽसौ मुनिः कोपात्तामुवाच
व्रजाम्यहम् ।

इति माधवकृतरुग्विनिश्चये शूलाधिकारे ॥)

**जरन्तः**, पुं, (जीर्य्यतीति । ज + "जॄविशिभ्यां

झच् ।" उणां । ३ । १२६ । इति झच् ।)
महिषः ।
वृद्धः । इति त्रिकाण्डशेषः ॥

**जरसानः**, पुं, (जीर्य्यति जराग्रस्तो भवतीति ।

जॄ वयोहानौ + "छन्दस्यसानच् शुजॄभ्याम् ।"
उणां । २ । ८६ । इति असानच् ।) मनुष्यः ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**जरा**, स्त्री, (जीर्य्यत्यनया । जॄ + "षिद्भिदादि-

भ्योऽङ् ।" ३ । ३ । १०४ । इत्यङ् ।
"ऋदृशो-
ऽङि गुणः ।" ७ । ४ । १६ । इति गुणः ।)
वयःकृतश्लथमांसाद्यवस्थाभेदः । वार्द्धक्यम् ।
"जीर्य्यत्यनया जरा जॄ ष वयोहानौ षित्वात् ङः
दृश्रोर्ण्डुरिति गुणः ।" इत्यमरटीकायां भरतः ॥
तत्पर्य्यायः । विस्रसा २ । इत्यमरः । २ । ६ ।
४१ ॥
सा तु कालकन्या । यथा, --
"कालकन्या जरा साक्षात् लोकस्तां
नाभिनन्दति ।
स्वसारं जगृहे मृत्युः क्षयाय यवनेश्वरः ॥"
इति श्रीभागवतम् ।

एषां भेदप्रभेदेन चतुःषष्टिरुजः स्मृताः ।
मृत्युकन्यासुताश्चैव जरा तस्याश्च कन्यका ।
जरा च भ्रातृभिः सार्द्धं शश्वद्भ्रमति भूतलम् ॥
एते चोपायवेत्तारं न गच्छन्ति च संयतम् ।
पजयन्ते च तं दृष्ट्वा वैनतेयमिवोरगाः ॥
चक्षुर्जलञ्च व्यायामः पादाधस्तैलसेवनम् ।
कर्णयोर्मूर्द्ध्नि तैलञ्च जराव्याधिविनाशकम् ॥
वसन्ते भ्रमणं वह्निसेवां स्वप्लां करोति यः ।
वालाञ्च सेवते काले जरा तं नोपगच्छति ॥
खातशीतोदकस्नायी सेवते चन्दनद्रवम् ।
नोपयाति जरा तञ्च निदाघेऽनिलसेविनम् ॥
प्रावृष्युष्णोदकस्नायी घनतोयं न सेवते ।
समये च समाहारी जरा तं नोपगच्छति ॥
शरद्रौद्रं न गृह्णाति भ्रमणन्तत्र वर्ज्जयेत् ।
खातस्नायी समाहारी जरा तं नोपतिष्ठते ॥
खातस्नायी च हेमन्ते काले वह्निं निषेवते ।
भुङ्क्ते नवान्नमुष्णञ्च जरा तं नोपगच्छति ॥
शिशिरेऽंशुकवह्निञ्च नवोष्णान्नञ्च सेवते ।
य एवोष्णोदकस्नायी जरा तं नोपगच्छति ॥
सद्योमांसं नवान्नञ्च बाला स्त्री क्षीरभोजनम् ।
वृतञ्च सेवते यो हि जरा तं नोपगच्छति ॥
भुङ्क्ते सदन्नं क्षुत्काले तृष्णायां पीयते जलम् ।
नित्य भुङ्क्ते च ताम्बूलं जरा तं नोपगच्छति ॥
दधि हैयङ्गवीनञ्च नवनीतं तथा गुडम् ।
नित्यं भुङ्क्ते संयमी यो जरा तं नैव गच्छति ॥
शुष्कमांसं स्त्रियं वृद्धां बालार्कन्तरुणं दधि ।
संसेवन्तं जरा याति प्रहृष्टा भ्रातृभिः सह ॥
रात्रौ ये दधि सेवन्ते पुंश्चलीञ्च रजस्वलाम् ।
तानुपैति जरा हृष्टा भ्रातृभिः सह सुन्दरि ! ॥
रजस्वला च कुलटा चावीरा जारदूतिका ।

अपिच ।
"श्लक्ष्णीकृतं भृङ्गराजस्य चूर्णं
तिलार्द्धकं चामलकार्द्धकञ्च ।
सशर्करं भक्षयते गुडैर्व्वा
न तस्य रोगो न जरा न मृत्युः ॥"
अन्धः पश्येद्गमनरहितो मत्तमातङ्गगामी
मूको वाम्मी श्रवणरहितो दूरशब्दानुसारी ।
नीरुङ्नर्त्त्यो भवति पलिती नीलजीमूतकेशो
जीर्णा दन्ताः पुनरपि नवाः क्षीरगौरा भवन्ति ॥"
इति भैषज्यरत्नावल्यां भृङ्गराजादिचूर्णम् ॥
("क्लैव्यं जरासम्भवं हि प्रवक्ष्याम्यथ तत् शृणु ॥
जघन्यमध्यप्रवरं वयस्त्रिविधमुच्यते ।
अघ प्रवयसां शुक्रं प्रायशः क्षीयते नृणाम् ॥
रसादीनां संक्षयाच्च तथैवावृष्यसेवनात् ।
वलवीर्य्येन्द्रियाणाञ्च क्रमेणैव परिक्षयात् ॥
परिक्षयादायुषश्चाप्यनाहारात् श्रमात् क्लमात् ।
जरासम्भवजं क्लैव्यं इत्येतैर्हेतुभिर्नणाम् ॥
जायते तेन सोऽत्यर्थं क्षीणधातुः सुदुर्ब्बलः ।
विवर्णो विह्वलो दीनः क्षिप्रं व्याधिमथाश्नुते ॥
एतज्जरा सम्भवं हि ॥"
"जरासम्भवजे क्लैव्ये क्षयजे चैव कारयेत् ।
स्नेहस्वेदोपपन्नस्य सस्नेहं शोधनं हितम् ॥
क्षीरसर्पिर्बृष्ययोगा वस्तयश्चैव यापनाः ।
रसायनप्रयोगाश्च तयोर्भैषजमुच्यते ॥"
इति चरके चिकित्सास्थाने त्रिंशेऽध्याये ॥ * ॥
"या च भार्य्या विरूपाक्षी कश्मला कलहप्रिया ।
वचनोत्तरवक्त्री च सा जरा न जरा जरा ॥"
इति चाणक्यम् ॥ * ॥)
क्षीरिकावृक्षः । इति शब्दचन्द्रिका ॥ राक्षसी-विशेषः । यथा, श्रीभागवते ।
"अन्यस्यामपि भार्य्यायां शकले द्वे बृहद्रथात् ।
ते मात्रा बहिरुत्सृष्टे जरया चाभिसन्धिते ॥"

**जरातुरः**, त्रि, (जरया आतुरः ।) जीर्णः ।
जरारोगग्रस्तः । इति शब्दमाला ॥ (यथा, नैषधे । १ । १३५ ।
"मदेकपुत्त्रा जननी जरातुरा
नवप्रसूतिर्व्वरटा तपस्विनी ।
गतिस्तयोरेष जनस्तमर्द्दय-

"या तु चर्म्माकृतिः सूक्ष्मा जरायुः सा निगद्यते ॥"
इति महाभागवते भगवतीगीता ॥
अग्निजारवृक्षः । इति राजनिर्घण्टः ॥

**जरायुजः**, त्रि, (जरायौ जायते इति । जन + डः ।) गर्भाशयजातः । स तु नृगवादिः । इत्यमरः । ३ । १ । ५० ॥
"या तु चर्म्माकृतिः सूक्ष्मा जरायुः सा निगद्यते ।
श्रुक्रशोणितयोर्योगस्तस्मिन् संजायते यतः ।
तत्र गर्भो भवेद्यस्मात्तेन प्रोक्तो जरायुजः ॥"
इति महाभागवते भगवतीगीता ॥

**जरासन्धः**, पुं, (जरया तदाख्यया प्रसिद्धया राक्षस्या कृता सन्धा देहसंयोजनमस्य ।) चन्द्रवंशीयराजविशेषः । स तु बृहद्रथराज-पुत्त्रः । कंसश्वशुरः द्वन्द्वयुद्धे भीमस्तं हतवान् ।
अस्य नामकरणं यथा, --
"अन्यस्यामपि भार्य्यायां शकले द्वे बृहद्रथात् ।
ते मात्रा बहिरुत्सृष्टे जरया चाभिसन्धिते ॥
जीव जीवेति क्रीडन्त्या जरासन्धोऽभवत् सुतः ॥"
इति श्रीभागवतम् ॥
तत्पर्य्यायः । बार्हद्रथिः २ । इति त्रिकाण्डशेषः ॥
(अस्य जन्मविवरणं महाभारते सभापर्व्वणि १७ अध्याये तथा मृत्युविवरणं तत्रैव २४ अध्याये द्रष्टव्यम् ॥ अयं हि विप्रचित्तिनामकस्यासुरस्यावतारः । यथा, महाभारते । १ । ६७ । ४ ।
"विप्रचित्तिरिति ख्यातो य आसीद्दानवर्षभः ।
जरासन्ध इति ख्यातः स आसीत् मनुजर्षभः ॥"
धृतराष्ट्रपुत्त्राणामन्यतमः । यथा, महाभारते । १ । ११७ । ८ ।
"दृढसन्धो जरासन्धः सत्यसन्धः सदःसुवाक् ॥")

**जरासन्धजित्**, पुं, (जयतीति । जि + क्विप् । ततो

शूद्रयाजकपत्नी या ऋतुहीना च या सति !
॥
यो हि तासामन्नभोजी ब्रह्महत्यां लभेत्तु सः
।
तेन पापेन सार्द्धं सा जरा तमुपगच्छति ॥
पापानां व्याधिभिः सार्द्धं मित्रता सन्ततं
ध्रुवम् ।
पापं व्याधिजरावीजं विघ्नवीजञ्च निश्चितम्
॥
पापेन जायते व्याधिः पापेन जायते जरा ।
पापेन जायते दैन्यं दुःखं शोको भयङ्करः ॥
तस्मात् पापं महावैरं दोषवीजममङ्गलम् ।
भारते सन्ततं सन्तो नाचरन्ति भयातुराः ॥
स्वधर्म्माचारयुक्तञ्च दीक्षितं हरिसेवकम् ।
गुरुदेवातिथीनाञ्च भक्तं सक्तं तपःसु च ॥
व्रतोपवासयुक्तञ्च सदा तीर्थनिसेवकम् ।
रोगा द्रवन्ति तं दृष्ट्वा वैनतेपमिवोरगाः ॥
एतान् जरा न सेवेत व्याधिसंघश्च दुर्ज्जयः
।
सर्व्वं बोध्यमसमये काले सर्व्वं ग्रसिष्यति
॥”
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे । १ । १६ । ३३
-- ५५ ॥
जराया औषधं यथा, गारुडे १९६ अध्याये
।
“पलाशचूर्णं समधु गव्याज्यामलकान्वितम्
।
सविडङ्गं पीटमात्रं नरं कुर्य्यान्महामतिम् ॥
मासैकेन महादेव ! जरामरणवर्ज्जितः ।
पलाशबीजं सधृतं तिलमध्वन्वितं समम् ।
सप्ताहं भक्षितं रुद्र ! जरां नयति संक्षयम् ॥”

न्नहो विधे ! त्वां करुणा रुणद्धि न ॥”)

**जरापुष्टः**, पुं, (जरया राक्षस्या पुष्टः ।) जरा-
सन्धः । इति शब्दरत्नावली ॥

**जराभीरुः**, पुं, (जरातो भीरुः ।) कामदेवः ।
इति हेमचन्द्रः । २ । १४१ ॥ जरामयशीले, त्रि
॥

**जरायणिः**, पुं, (जराया राक्षस्या अपत्यम् । जरा
+ वाहुलकात् फिः । तत्प्राप्तजीवत्वात् तथा-
त्वम् ।) जरासन्धः । इति शब्दरत्नावली ॥

**जरायुः**, पुं, (जरामेतीति । जरा + इण् + “किंञ-
रयोः श्रिणः ।” उणां १ । ४ । इति ञुण् ।)
येन वेष्टितो गर्भः कुक्षौ तिष्ठति सः । गर्भ-
वेष्टनचर्म्म । आँओल इति भाषा । तत्पर्य्यायः ।
गर्भाशयः २ उल्वम् ३ कललः ४ । इत्यमरः ।
२ । ६ । ३७ ॥

जरासन्धस्य जित् जेता ।) भीमः । इति
त्रिकाण्डशेषः ॥

**जरी**, [न्] त्रि, (जरास्त्यस्येति । जरा + इनिः ।)
वृद्धः । इति हेमचन्द्रः । ३ । ४ ॥

**जरूथं**, क्ली, (जीर्य्यतीति । जॄ + “जॄवृञ्भ्या-
मूथन् ।” उणां । २ । ६ । इति ऊथन् ।)
मांसम् । इति त्रिकाण्डशेषः ॥

**जर्च्च**, श उक्तौ । भर्त्से । इति कविकल्पद्रुमः ॥
(तुदां-परं-सकं-सेट् ।) श, जर्च्चती जर्च्चन्ती
।
गुणस्थानरहितानां तुदादिपाठफलस्तु शत्र-
न्तानां आदीपोरिति नुणो विभाषा
वेदेषूच्चारण-
भेदश्च । भर्त्सस्तर्ज्जनम् । इति दुर्गादासः ॥

**जर्च्छ**, श उक्तौ । भर्त्से । इति कविकल्पद्रुमः ॥
(तुदां-परं-सकं-सेट् ।) श, जर्च्छती जर्च्छन्ती
।
भर्त्सस्तर्ज्जनम् । इति दुर्गादासः ॥

**जर्ज्ज**, श वाच । भर्त्से । इति कविकल्पद्रुमः ॥
(तुदां-परं-सकं-सेट् ।) श, जर्ज्जती जर्ज्जन्ती
।
भर्त्सस्तर्ज्जनम् । इति दुर्गादासः ॥

**जर्ज्जरः**, पुं, (जर्जति स्वगुणेनापरान् निन्दतीति ।
जर्ज्ज + वाहुलकात् अरः ।) शैलजः ।
(जर्जति
शत्रून् तर्ज्जयतीति ।) शक्रध्वजः । (जर्ज्यते
निन्द्यते इति । कर्म्मणि बहुलवचनादरः ।)

जरातुरे, त्रि । इति मेदिनी । रे, १५७ ॥
(जीर्णे । यथा, महाभारते । ३ । ११ ।
६५ ।
"अथ जर्ज्जरसर्व्वाङ्गं
व्याविद्धनयनाम्बरम्।
भूतले भ्रामयामाम वाक्यञ्चेदमुवाच ह
॥"
विदीर्णे । यथा, माघे । ४ । २३ ।
"कृत्वा पुंवत्पातमुच्चैर्भृगुभ्यो
मूर्द्ध्नि ग्राव्णां जर्ज्जरा निर्झरौघाः ॥")

**जर्ज्जरीकः**, त्रि, (जर्जति जीणो भवतीति । जर्ज्ज
+ "फर्फरीकादयश्च ।" उणां ४ । २०
। इति
ईकन्प्रत्ययेन साधुः ।) बहुच्छिद्रद्रव्यम्
। जरा-
तुरः । इति मेदिनी । के, १८९ ॥

**जर्झ**, श भर्त्से । उक्तौ । इति कविकल्पद्रुमः ।
(तुदां-परं-सकं-सेट् ।) श, जर्झती
जर्झन्ती ।
भर्त्सस्तर्ज्जनम् । इति दुर्गादासः ॥

**जर्णः**, पुं, (जीर्य्यति क्षीणो भवतीति । जॄ + "कृवॄ-
जृषिद्रुपनीति ।" उणां ३ । १० । इति
नन् ।)
चन्द्रः । वृक्षः । इति मेदिनी । णे, १३
॥ जीर्णे,
त्रि । इति हेमचन्द्रः ॥

**जर्त्तः**, पुं, (जायतेऽस्मादिति । जन + बाहुलकात्
तप्रत्ययेन साधुः ।) योनिः । हस्ती ।
इति
संक्षिप्तसारे उणादिवृत्तिः ॥ (अत्र
जर्तुरित्येव
पाठो भवितुं युक्तः ॥)

**जर्त्तिलः**, पुं, वनोद्भवतिलः । इति राजनिर्घण्टः
हेमचन्द्रश्च ॥ (यथा, विष्णुपुराणे । १ ।
६ । २५ ।
"श्यामाकास्त्वथ नीवारा जर्त्तिलाः
सगवेधुकाः ।
भूम्यादीनिति वा । जल + पचाद्यच् ।)
पानी-
यम् । पञ्चभूतान्तर्गतभूतविशेषः । अस्य
धर्म्माः ।
रूपं द्रवत्वं प्रत्यक्षयोगित्वञ्च । इदं गुरुरस-
विशिष्टञ्च । अस्य गुणाश्चतुर्द्दश । यथा, --
स्पर्शः १ संख्या २ परिमितिः ३
पृथक्त्वम् ४
संयोगः ५ विभागः ६ परत्वम् ७ अपरत्वम्
८
वेगः ९ द्रवत्वम् १० गुरुत्वम् ११ रूपम्
१२
रसः १३ स्नेहः १४ । अस्य वर्णः शुक्लः
रसो
मधुरः स्पर्शः शीतलः । स्नेहः द्रवत्वं
स्वाभा-
विकगुणः । परमाणुजलं नित्यम् ।
सावयव-
जलं अनित्यम् । अनित्यजलं त्रिविधं यथा
।
देहं अयोनिजम् १ इन्द्रियं रसनम् २
विषयः
सिन्धुहिमादिः ३ । इति भाषापरिच्छेदः ॥
* ॥
तस्यात्पत्तिर्यथा --
"रूपमात्राद्विकुर्व्वाणात्तेजसो दैवचोदितात्
।
रसमात्रमभूत्तस्मादम्भो जिह्वारसग्रहः ॥"
* ॥
तस्य लक्षणं यथा, --
"क्लेदनं पिण्डनं तृप्तिः
प्राणनाप्यायनादनम्।
तापापनोदो भूयस्त्वभम्भसो
वृत्तयस्त्विमाः ॥"
इति श्रीभागवतम् ॥ * ॥
"अपां शैत्यं तथा क्लेदो द्रवत्वं
स्नेहसौम्यता ।
जिह्वाविस्यन्दनञ्चापि भौमानां श्रपणं तथा
॥
चतुर्थमापो विज्ञेयं जिह्वाध्यात्मं प्रचक्ष्यते ।
अधिभूतं रसस्तत्र सोमस्तत्राधिदैवतम् ॥"
त्वम् । विवर्णत्वम् । विरसत्वम् । सान्द्रत्वम् ।
दुर्गन्धित्वम् । अहितकारित्वञ्च ॥ * ॥ दिवा
सूर्य्यकिरणरात्रिचन्द्ररश्मिजुष्टजलगुणाः। अरू-
क्षत्वम् । अनभिष्यन्दित्वम । गगनाम्बुतुल्य-
त्वञ्च ॥ * ॥ साधारणजलगुणाः । वृष्यत्वम् ।
दीपनत्वम् । मधुरत्वम् । लघुत्वञ्च ॥ * ॥ वर्षा-
कालीनजलगुणाः । गुरुत्वम् । अभिष्यन्दित्वम् ।
मधुरत्वम् । सारकत्वञ्च ॥ * ॥ शरत्कालीन-
जलगुणाः । अनभिष्यन्दित्वम् । लघुत्वञ्च ॥ * ॥
हैमन्तिकजलगुणाः । स्निग्धत्वम् । वल्यत्वम् ।
वृष्यत्वम् । हितकारित्वभ् । गुरुत्वञ्च ॥ * ॥
शैशिरजलगुणः । कफवातनाशित्वम् । हैम-
न्तिकात् किञ्चिल्लघुत्वञ्च ॥ * ॥ वासन्तिक-
जलगुणाः । कषायत्वत् । मधुरत्यम् । वल्य-
त्वम् । रूक्षत्वञ्च ॥ * ॥ ग्रैष्मिकजलगुणः ।
अनभिष्यन्दित्वम् ॥ * ॥ शीतलजलगुणाः ।
मदमूर्च्छाच्छर्द्दिपित्तज्वरश्रमक्लमतृषादाहमद्य
त्ययविषनाशित्वम् ॥ * ॥ पवनाहतधारापात-
जलगुणाः । विष्टम्भित्वम् । दुर्जरत्वञ्च ॥ * ॥
यत् अन्तर्वाष्पशीतलं तत् शृतशीतं तस्य गुणः ।
त्रिदोषनाशित्वम् ॥ * ॥ जलस्य सिद्धकरण-
प्रकारः । हेमन्ते शिशिरे पादहीनं वसन्त
पादस्थितं ग्रीष्मशरत्कालयोरर्द्धावशेषितं वर्षा-
स्वष्टावशेषितम् । दिवासिद्धं जलं रात्रौ गुरु
रात्रिसिद्धं दिवागुरु ॥ * ॥ पुष्पसुवासितशुक्ल-
वस्त्रपूतनूतनमृत्पात्रस्थजलगुणः। मङ्गलरुचि-
कारित्वम् ॥ * ॥ अजीर्णे जलमौषधं जीर्णे
वलप्रदं आहारकाले आयुर्जनकं भुक्तान्नोपरि
रात्रौ न षेयम् ॥ * ॥ रात्रिशेषे जलपानगुणाः ।
कासश्वासातीसारज्वरवमथुकटीकोठुकुष्ठमूत्रा-
घात-उदरार्शःश्वयथुगलशिरःकर्णनासाचक्षु-
रोगवातपित्तकफक्षयजरोगनाशित्वम्॥ * ॥
मेघशून्यरात्रिशेषे नाशिकारन्ध्रेण जलपान-
गुणाः । बुद्धिकारित्वम् । चक्षुर्हितत्वम् । वली-
पलितसर्व्वरोगनाशित्वञ्च ॥ * ॥
"जलञ्चतुर्व्विधं प्राहुरन्तरीक्षोद्भवं बुधाः ।
धारञ्च कारकचैव तौषारं हैममित्यपि ॥"
इति राजनिर्घण्टः ॥ * ॥
तृषिताय रोगिणेऽपि जलं देयं यथा, --
"पानीयं प्राणिनां प्राणास्तदायत्तं हि जीवनम् ।
तस्मात् सर्व्वास्ववस्थासु न क्वचिद्वारि वार्य्यते ॥

तथा वेणुयवाः प्रोक्तास्तद्वन् मर्कटका मुने ! ॥”)

**जत्तुः**, पुं, (जायते यस्मादिति । जन + “जनेस्तु रः ।” उणां ५ । ४६ । इति तुः रेफश्चान्तादेशः ।) योनिः । हस्ती । इत्युणादिकोषः ॥

**जर्त्स**, झर्झे । रक्षे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) रेफयुक्तः दन्त्यवर्गाद्योपधः । जर्त्सति । झर्झा भर्त्सनमुक्तिश्च । इति दुर्गादासः ॥

**जहिलः**, पुं, अरण्यतिलः । इति राजनिर्घण्टः ॥

**जल**, क पिधाने । इति कविकल्पद्रुमः ॥ (चुरां-परं-सकं-सेट् ।) पिधानमाच्छादनम् । क, जालयति चन्द्रं मेघः । इति दुर्गादासः ॥

**जल**, ज धान्ये । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् । अकं इति केचित् ।) ज, जालः जलः । धीयते अनेनेति धानं तस्य भावः धान्यं जीवनोपयोगिक्रिया । जलति लोकान् जलम् । जीवयतीत्यर्थः । धीयते आच्छाद्यते अनेनेति धानं तस्य भावः धान्यं आच्छादनक्रिया । जलति जालेन मत्स्यान् जालिक इति वा । गोविन्दभट्टस्तु धनस्य भावः धान्यं समृद्धिः । जलति धनी समृद्धः स्यादित्यर्थ इत्याह । इति दुर्गादासः ॥

**जलं**, क्ली, गोकलनम् । ह्रीवेरम् । इति मेदिनी । ले, १८ ॥ (यथा, भावप्रकाशे अरोचकाधि-

इत्याश्वमेधिकपर्व्व ॥ * ॥
तत्पर्य्यायः । आपः २
स्त्रीलिङ्गवहुवचनान्तोऽयम् । वाः ३ वारि ४ सलिलम् ५ कमलम् ६
पयः ७ कीलालम् ८ अमृतम् ९ जीवनम् १०
भुवनम् ११ वनम् १२ कवन्धम् १३ उदकम् १४
पाथः १५ पुष्करम् १६ सर्व्वतोमुखम् १७ अम्भः
१८ अर्णः १९ तोयम् २० पानीयम् २१ नीरम् २२
क्षीरम् २३ अम्बु २४ सम्बरम् २५ मेघपुष्पम् २६
घनरसः २७ । इत्यमरः । १ । १० । ३ ॥ आपः २८
सान्तक्लीवोऽयम् । सरिलम् २९ सलम् ३० जडम्
३१ कम् ३२ अन्धम् ३३ कपन्धम् ३४ उदम् ३५
दकम् ३६ नारम् ३७ शम्बरम् ३८ अब्भ्रपुष्पम्
३९ धनरसम् ४० घृतम् ३१ । इति भरतः ॥
पीप्पलम् ४२ कुशम् ४३ विषम् ४४ काण्डम् ४५
सवरम् ४६ सरम् ४७ कृपीटम् ४८ चन्द्रोरसम् ४९
सदनम् ५० कर्व्वुरम् ५१ व्योम ५२ सम्बः ५३
सरः ५४ इरा ५५ वाजम् ५६ तामरम् ५७ ।
इति जटाधरः ॥ कम्बलम् ५८ स्यन्दनम् ५९ सम्बलम् ६० जलपीथम् ६१ क्षरम् ६२ ऋतम् ६३
ऊर्ज्जम् ६४ कोमलम् ६५ सोमम् ६६ । इति शब्दरत्नावली ॥ * ॥ तस्य गुणाः । ईषत् कषायत्वम् । मधुरत्वम् । क्लेदित्वम् । शीतलत्वम् ।

अन्नेनापि विना जन्तुः प्राणान् धारयते चिरम् ।
तोयाभावे पिपासार्त्तः क्षणात् प्राणैर्विमुच्यते ॥
तृषितो मोहमायाति मोहात् प्राणान् विमुञ्चति ।
तस्माज्जलमवश्यं हि दातव्यं भेषजैः ममम् ॥”
इति राजवल्लभः ॥ * ॥
“पादेन घटमुत्थाप्य भाजने पूरयेज्जलम् ।
तज्जलं मदिरातुल्यं भाण्डस्थं सुरया समम् ॥”
इति कर्म्मलोचनम् ॥ * ॥
तस्य दानमाहात्म्यं यथा, --
“अन्ने दत्ते नरेणेह प्राणा दत्ता भवन्त्युत ।
प्राणदानाद्धि परमं न दानमिह विद्यते ॥

| | | |
|---|---|---|
| कारे ।<br>“जलं सकृष्णागुरुभृङ्गकेसरम् ।” इति<br>॥ * ॥<br>जलति जीवयति लोकात् जलति<br>आच्छादयति | तृष्णानाशित्वम् । अव्यक्तरसत्वम् ।<br>शरीरेन्द्रिय-<br>तर्पणत्वञ्च ॥ * ॥ सुगन्धस्य तस्य गुणाः ।<br>अस्पष्ट-<br>रसत्वम् । सुशीतत्वम् । तर्षनाशित्वञ्च ॥ *<br>॥<br>स्वच्छस्य तस्य गुणाः । लघुत्वम् ।<br>हृद्यत्वम् ।<br>गुणवत्त्वञ्च ॥ * ॥<br>पर्णशैवालकर्दमयुक्तजल-<br>गुणाः । पिच्छिलत्वम् । कृमिलत्वम् ।<br>क्लिन्न- | |

अन्नं नापि प्रभवति पानीयात्
कुरुसत्तम ! ।
नीरजातेन हि विना न किञ्चित्
संप्रवर्त्तते ॥
अन्नौषध्यो महाराज ! वीरुधश्च
जलोद्भवाः ।
यतः प्राणभृतां प्राणाः सम्भवन्ति
विशाम्पते ! ॥
तस्मात् पानीयदानाद्वै न परं विद्यते
क्वचित् ।
तच्च दद्यान्नरो नित्यं
यदीच्छेद्भूतिमात्मनः ॥
धन्यं यशस्यमायुष्यं जलदानमिहोच्यते
।
शत्रूंश्चाप्यधि कौन्तेय ! सदा तिष्ठति
तोयदः ॥
सर्व्वकामानवाप्नोति कीर्त्तिञ्चैवेह
शाश्वतीम् ।
प्रेत्य चानन्त्यमश्नाति पापेभ्यश्च
प्रमुच्यते ॥
तोयदो मनुजव्याघ्र ! स्वर्गं गत्वा
महाद्युते ! ।
अक्षयान् समवाप्नोति
लोकानित्यब्रवीन्मनुः ॥”
इति महाभारते दानधर्म्मः ॥ * ॥
“एकहस्ते धृतं तोयमभक्ष्यं
सर्व्वसम्मतम् ॥”
इति ब्रह्मवैवर्त्ते जन्मखण्डम् ॥ * ॥
“उद्धृतं वामहस्तेन यत्तोयं पिबति
द्विजः ।
सुरापानेन तुल्यं स्यान्मनुराह
प्रजापतिः ॥”
इति मनुः ॥
तस्य वेदोक्तपर्य्यायाः । अर्णः १ क्षोदः
२ क्षद्मः ३
नभः ४ अम्भः ५ कवन्धम् ६ सलिलम्
७ वाः ८
वनम् ९ घृतम् १० मधु ११ पुरीषम्
१२ पिप्पलम्
१३ क्षीरम् १४ विषम् १५ रेतः १६
कशः १७

तौषारञ्च तथा हैमं तेषु धारं गुणाधिकम् ॥”
तत्र धारस्य लक्षणं गुणाश्च ।
“धाराभिः पतितं तोयं गृहीतं स्फीतवाससा ।
शिलायां वा सुधायां वा धौतायां पतितञ्च यत् ॥
सौवर्णे राजते ताम्रे स्फाटिके काचनिर्म्मिते ।
भाजने मृण्मये चापि स्थापितं धारमुच्यते ॥
धारनीरं त्रिदोषघ्नमनिर्द्देश्यरसं लधु ।
सौम्यं रसायनं वल्यं तर्पणं ह्लादिजीवनम् ॥
पाचनं मतिकृन्मूर्च्छातन्द्रादाहश्रमक्लमान् ।
तृष्णां हरति तत्पथ्यं विशेषात् प्रावृषि स्मृतम् ॥”
अथ धाराजलस्य भेदौ ।
“धाराजलञ्च द्विविधं गाङ्गसामुद्रभेदतः ॥”
तत्रगाङ्गसामुद्रयोर्लक्षणं गणाश्च ।
“आकाशगङ्गासम्बन्धि जलमादाय दिग्गजाः ।
मेघैरन्तरिता वृष्टीः कुर्व्वन्तीति वचः सताम् ॥
गाङ्गमाश्वयुजे मासि प्रायो वर्षति वारिदः ।
सर्व्वथा तज्जलं देवं तथैव चरके वचः ।
स्थापितं हैमजे पात्रे राजते मृण्मयेऽपि वा ।
शाल्यन्नं येन संसिक्तं भवेदक्लेदिवर्णवत् ॥
तद्गाङ्गं सर्व्वदोषघ्नं ज्ञेयं सामुद्रमन्यथा ।
तत्तु सक्षारलवणं शुक्रदृष्टिबलापहम् ।
विम्नञ्च दोषलं तीक्ष्णं सव्वकर्म्मसु गर्हितम् ।
सामुद्रं त्वाश्विने मासि गुणैर्गाङ्गवदादिशेत् ॥
यतोऽगस्त्यस्य दिव्यर्षेरुदयात् सकलं जलम् ।
निर्म्मलं निर्व्विषं स्वादु शुक्रलं स्याददोषलम् ॥”
अतएवाह ।
“फुत्कारविषवातेन नागानां व्योमचारिणाम् ।
वर्षासु सविषं तोयं दिव्यमप्याश्विनं विना ॥”
अथानार्त्तवजलगुणाः ।
“अनार्त्तवं प्रमुञ्चन्ति वारि वारिधरास्तु यत् ।
तत्त्रिदोषाय सर्व्वेषां देहिनां परिकीर्त्तितम् ॥”
अनार्त्तवं पौषादिमासचतुष्टयविषयम् ॥
अथ करकजलस्य लक्षणं गुणाश्च ।
“दिव्यवाय्वग्निसंयोगात् संहताः खात् पतन्ति याः ।
पाषाणखण्डवच्चापस्ताःकारक्योऽमृतोपमाः ॥
करकाजं जलं रूक्षं विशदं गुरु च स्थिरम् ।
दारुणं शीतलं सान्द्रं पित्तहृत्कफवातकृत् ॥”
अथ तौषारजललक्षणं गुणाश्च ।
“अपि नद्याः समुद्रान्ते वह्निरापश्च तद्भवाः ।
धूमावयवनिर्म्मुक्तास्तुषाराख्यास्तु ताः स्मृताः ॥”
अपि नद्याः समुद्रान्ते वह्निः । नदीमारभ्य

“और्व्वानलधूमेरित-
मम्बु समुद्रस्य यद्घनीमूतम् ।
पवनानीतमुदीच्यां
तद्धिममिति कथ्यते मुनिभिः ॥
हिमं कुहंस इति लोके ।
हिमन्तु शीतलं रूक्षं दारुण सूक्ष्ममित्यपि ।
न तद्दूषयते वातं नच पित्तं न वा कफम् ॥” *
॥
अथ भौमं जलं तद्भेदाश्च ।
“भौममम्भो निगदितं प्रथमं त्रिविधं बुधैः ।
जाङ्गलं परमानूपं ततः साधारणं क्रमात् ॥”
तेषां लक्षणानि गुणाश्च ।
“अल्पोदकोऽल्पवृक्षश्च पित्तरक्तामयान्वितः
।
ज्ञातव्यो जाङ्गलो देशस्तत्रत्यं जाङ्गलं जलम्
॥
बहुवार्ब्बहुवृक्षश्च वातश्लेष्मामयान्वितः ।
देशोऽनूप इति ख्यात आनूपं तद्भवं जलम् ॥
मिश्रचिह्नस्तु यो देशः स हि साधारणः स्मृतः
।
तस्मिन् देशे यदुदकं तत्तु साधारणं स्मृतम् ॥
जाङ्गलं भलिलं रूक्षं लवणं लघु तत्तनु ।
वह्निकृत् कफकृत् पथ्यं विकारान् कुरुते
बहून् ॥
आनूपं वार्य्यभिष्यन्दि स्वादु स्निग्धं घनं गुरु
।
साधारणन्तु मधुरं दीपनं शीतलं लघु ॥
तर्पणं रोचनं तृष्णादाहदोषत्रयप्रणुत् ॥”
अथ भौगानामेव नादेयादीनां लक्षणानि
गुणाश्च । तत्र नादेयस्य लक्षणं गुणाश्च ।
“नद्या नदस्य वा नीरं नादेयमिति कीर्त्तितम् ।
नादयमुदकं रूक्षं वातलं लघु दीपनम् ॥
अनभिष्यन्दि विशदं कटुकं कफपित्तनुत् ।
नद्यः शीघ्रवहा लघ्व्यः सर्व्वा याश्चामलोदका
॥
गुर्व्व्यः शैवालसंछन्ना मन्दगाः कलुषाश्च याः
।
नदीसरस्तडागस्थे कूपप्रस्रवणादिजे ॥
उदके देशभेदेन गुणान् दोषांश्च लक्षयेत् ॥”
अथौद्भिदस्य लक्षणं गुणाश्च ।

जन्म १८ वृवूकम् १९ वूसम् २० तुरया २१ वर्व्वुरम्
२२ सुक्षेम २३ धरुणम् २४ सुरा २५ अर-
विन्दानि २६ ध्वस्मन्वतु २७ जामि २८ आयु-
धानि २९ क्षपः ३० अहिः ३१ अक्षरम् ३२
मोतः ३३ तृप्तिः ३४ रहसः ३५ उदकम् ३६
पयः ३७ रसः ३८ भेषजम् ३९ सहः ४० शवः
४१ यहः ४२ ओजः ४३ सुखम् ४४ क्षत्त्रम् ४५
आवयाः ४६ शुभम् ४७ यादुः ४८ भूतम् ४९
भुवनम् ५० भविष्यत् ५१ आपः ५२ महत् ५३
व्योमः ५४ यशः ५५ महः ५६ सर्णीकम् ५७
स्वतीकम् ५८ सतीनम् ५९ गहनम् ६० गभी-
रम् ६१ गम्भनम् ६२ ईम् ६३ अन्नम् ६४ हविः
६५ सद्म ६६ सदनम् ६७ ऋतम् ६८ योनिः ६९
ऋतस्ययोनिः ७० सत्यम् ७१ नीरम् ७२ रयिः
७३ सत् ७४ पूर्णम् ७५ सर्व्वम् ७६ अक्षितम्
७७ वर्हिः ७८ नाम ७९ सर्पिः ८० अपः ८१
पवित्रम् ८२ अमृतम् ८३ इन्दुः ८४ हेम ८५
स्वः ८६ स्वर्गाः ८७ शम्बरम् ८८ अम्बम् ८९
वपुः ९० अम्बु ९१ तोयम् ९२ तूयम् ९३ कृपीटम्
९४ शुक्रम् ९५ तेजः ९६ स्वधा ९७ वारि ९८
जलम् ९९ जलाषम् १०० ।
इदमित्येकशत-
मुदकनामानि । इति वेदनिर्घण्टौ १ अध्यायः ॥ * ॥

समुद्रपर्य्यन्तं वह्निरास्ते । तद्भवाः वह्निभवाः ।
धूमावयवनिर्म्मुक्ताः धूमांशरहिताः आपस्तुषा-
राख्याः । तुष इति लोके तुस इति च ।
“अपथ्याः प्राणिनां प्रायो भूरुहाणान्तु ता हिताः ।
तुषाराम्बु हिमं रूक्षं स्याद्वातलमपित्तलम् ॥
कफोरुस्तम्भकण्ठाग्निमेह्रोगण्डादिरोगनुत् ॥”
अथ हैमजलस्य लक्षणं गुणाश्च ।
“हिमवच्छिखरादिभ्यो द्रवीभूयाभिवर्षति ।
यत्तदेव हिमं हैमं जलमाहुर्म्मनीषिणः ॥
हिमाम्बु शीतं पित्तघ्नं गुरु वातविवर्द्धनम् ॥”
हैमं जलं कुहंसजलम् । अन्ये तु ।

“विदार्य्य भूमिं निम्नां यन्महत्या धारया स्रवेत् ।
तत्तोयमौद्भिदं नाम वदन्तीति महर्षयः ॥
औद्भिदं वारे पित्तघ्नमविदाह्यतिशीतलम्
प्रीणनं मधुरं बल्यमीषद्वातकरं लघु ॥”
अथ नैर्झरस्य लक्षणं गुणाश्च ।
“शैलसानुस्रवद्वारिप्रवाहो निर्झरो झरः ।
स तु प्रस्रवणश्चापि तत्रत्यं नैर्झरं जलम् ॥
नैर्झरं रुचिकृन्नीरं कफघ्नं दीपनं लघु ।
मधुरं कटुकं पाके वातलं स्यादपित्तलम् ॥”
अथ सारसस्य लक्षणं गुणाश्च ।
“नद्याः शैलादिरुद्धाया यत्र संस्रुत्य तिष्ठति ।
तत् सरो जलजच्छन्नं तदम्भः सारसं स्मृतम् ॥
सारसं सलिलं बल्यं तृष्णाघ्नं मधुरं लघु ।
रोचनं तुवरं रूक्षं बद्धमूत्रमलं सितम् ॥”
अथ तडागस्य लक्षणं गुणाश्च ।
“प्रशस्तभूमिभागस्थो बहुसंवत्सरोषितः ।
जलाशयस्तडागः स्यात्ताडायं तज्जलं स्मृतम् ॥
ताडागमुदकं स्वादु कषायं कटुपाकि च ।
वातलं बद्धविण्मूत्रमसृक्पित्तकफापहम् ॥”
अथ वाप्यस्य लक्षणं गुणाश्च ।

| | | |
|---|---|---|
| अस्य गुणाः ।<br>पानीयं भ्रमनाशनं क्लमहरं मूर्च्छापिपासापहं<br>तन्द्राच्छर्द्दिविनाशनं बलकरं निद्राहरं तर्पणम् ।<br>हृद्यं गुप्तरसं ह्यजीर्णशमकं नित्यं हितं शीतलं<br>लघ्वच्छं रसकारणं निगदितं पीयूषवज्जीवनम् ॥”<br>अथ तस्य भेदाः ।<br>“पानीयं मुनिभिः प्रोक्तं दिव्यं भौममिति द्विधा ।<br>दिव्यं चतुर्व्विधं प्रोक्तं धाराजं करकाभवम् ॥ | | |

"पाषाणैरिष्टकाभिर्व्वा बद्धकूपा बृहत्तरा ।
ससोपाना भवेद्वापी तज्जलं वाप्यमुच्यते ॥
वाप्यं वारि यदि क्षारं पित्तकृत् कफवातहृत् ।
तदेव मिष्टं कफकृत् वातपित्तहरं भवेत् ॥"
अथ कौपस्य लक्षणं गुणाश्च ।
"भूमौ खातोऽल्पविस्तारो गम्भीरो मण्डलाकृतिः ।
बद्धोऽबद्धः स कूपः स्यात्तदम्भः कौप्यमुच्यते ॥
कौपं पयो यदि स्वादु त्रिदोषघ्नं हिमं लघु ।
तत् क्षारं कफवातघ्नं दीपनं कफकृत् परम् ॥"
अथ चौड्यस्य लक्षणं गुणाश्च ।
"शिलाकीर्णं स्वयं श्वभ्रं नीलाञ्जनसमोदकम् ।
लतावितानसंछन्नं चौड्यमित्यभिधीयते ॥
अश्मादिभिरबद्धं यत्तत् चौड्यमिति चापरे ।
तत्रत्यमुदकं चौड्यं मुनिभिः समुदाहृतम् ॥
चौड्यं वह्निकरं नीरं रूक्षं कफहरं लघु ।
मधुरं पित्तनुद्रुच्यं पाचनं विशदं स्मृतम् ॥"
अथ पाल्वलस्य लक्षणं गुणाश्च ।
"अल्पं सरः पल्वलं स्यात् यत्र चन्द्रर्क्षगे रवौ ।
न तिष्ठति जलं किञ्चित् तत्रत्यं वारि पाल्वलम् ॥
पाल्वलं वार्य्यभिष्यन्दि गुरु स्वादु त्रिदोषकृत् ॥"
अथ विकिरस्य जलस्य लक्षणं गुणाश्च ।
"नद्यादिनिकटे भूमिर्य्या भवेद्वालुकामयी ।
आषाढे शस्यते कौपं श्रावणे दिव्यमेव च ॥
भाद्रे कौपं पयः शस्तमाश्विने चौड्यमेव च ।
कार्त्तिके मार्गशीर्षे च जलमात्रं प्रशस्यते ॥"
अथ जलस्य ग्रहणकालः ।
"भौमानामम्भसां प्रायो ग्रहणं प्रातरिष्यते ।
शीतत्वं निर्म्मलत्वञ्च यतस्तेषां महान् गुणः ॥"
अथ जलस्य पाने विधिः ।
"अत्यम्बुपानान्न विपच्यतेऽन्न-
मनम्बुपानाच्च स एव दोषः ।
तस्मान्नरो वह्निविवर्द्धनाय
मुहुर्म्मुहुर्व्वारि पिबेदभूरि ॥"
अथ शीतलजलपानस्य बिषयाः ।
"मूर्च्छापित्तोष्णदाहेषु विषे रक्ते मदात्यये ।
भ्रमे श्रमे विदग्धेऽन्ने तमके वमथौ तथा ।
ऊर्द्ध्वगे रक्तपित्ते च शीतमम्भः प्रशस्यते ॥"
अथ तन्निषेधः ।
"पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे ।
आध्माने स्तिमिते कोष्ठे सद्यः शुद्धौ नवज्वरे ॥
अरुचिग्रहणीगुल्मश्वासकासेषु विद्रधौ ।
हिक्कायां स्नेहपाने च शीताम्बु परिवर्ज्जयेत् ॥"
अथाल्पजलपानस्य विषयाः ।
"अरोचके प्रतिश्याये मन्देऽग्नौ श्वयथौ क्षये ।
मुखप्रसेके जठरे कुष्ठे नेत्रामये ज्वरे ।
व्रणे च मधुमेहे च पिबेत् पानीयमल्पकम् ॥"
अथ जलपानस्यावश्यकता ।
"जीवानां जीवनं जीवो जगत् सर्व्वन्तु तन्मयम् ।
अतोऽत्यन्ततया सुज्ञो न क्वचित् वारि वार्य्यते ॥"
हारीतश्च ।
"तृष्णा गरीयसी घोरा सद्यःप्राणविनाशिनी ।
तस्माद्देयं तृषार्त्ताय पानीयं प्राणधारणम् ॥
तृषितो मोहमायाति मोहात् प्राणान् विमु-
ञ्चति ।
अतः सर्व्वास्ववस्थासु न क्वचित् वारि वारयेत् ॥"
अथ प्रशस्तं जलम् ।
"अगन्धमव्यक्तरसं सुशीतं तर्षनाशनम् ।
अच्छं लघु च हृद्यञ्च तोयं गुणवदुच्यते ॥"
अथ निन्दितं जलम् ।
"पिच्छिलं कृमिलं क्लिन्नं पर्णशैवालकर्द्दमैः ।
विवर्णं विरसं सान्द्रं दुर्गन्धं न हितं जलम् ॥
कलुषं छन्नमम्भोजपर्णनीलीतृणादिभिः ।
दुर्द्दशजमसंस्पृष्टं सौरचान्द्रमसांशुभिः ॥
स्वच्छं कनकमुक्ताद्यैः शुद्धं स्याद्दोषवर्ज्जितम् ॥
पर्णमूलविसग्रन्थिमुक्ताकनकशैवलैः ।
गोमेदेन च वस्त्रेण कुर्य्यादम्बुप्रसादनम् ॥"
अथ पीतस्य जलस्य पाकावधिः ।
"आमं जलं जीर्य्यति याममात्रं
तदर्द्धमात्रं शृतशीतलञ्च ।
तदर्द्धमात्रं तु शृतं कदुष्णं
पयःप्रपाकेऽवधिरेष उक्तः ॥"
इति भावप्रकाशे वारिवर्गः ॥
अथ जले भगवत्पूजाविधिः ।
"उत्तापेऽर्कांशुतो जाते शीतलेन सुगन्धिना ।
जलेन पूरिते पात्रे श्रीकृष्णमुपवेशयेत् ॥
नित्यार्च्चाविधिनाभ्यर्च्च्यसायं सन्ध्यामुपास्य च ।
देवं सिंहासने नीत्वा गन्धादिभिरथार्च्चयेत् ॥
नीराज्य देवं सर्व्वेभ्यो दत्त्वा तीर्थं भजेत् स्वयम् ।
द्वादश्यान्तु विशेषेण रात्रौ तोयस्थमर्च्चयेत् ॥"
तन्माहात्म्यं यथा, गारुडे ।
"स्वर्णपात्रेऽथवा रौप्ये ताम्रेवा मृण्मयेऽपि वा ।
तोयस्थं योऽर्च्चयेद्भक्त्या शालग्रामसमुद्भवम् ॥
चक्राङ्कितं वा भूपाल ! निवृत्ते मधुमाधवे ।
प्रतिमां स महाभागस्तस्य पुण्यमनन्तकम् ॥
यावद्धराधरो लोके यावच्चन्द्रदिवाकरौ ।
तावत्तस्य कुले कश्चिन्न भवेद्भूप ! नारकी ॥
तस्माज्ज्यैष्ठे सदा भूप ! तोयस्थं पूजयेद्धरिम् ।
वीततापो नरस्तिष्ठेद्यावदाहूतसंप्लवम् ॥
कृतैः सुशीतलैस्तोयैस्तुलसीदलवासितैः ।
शुचिशुक्रगते काले येऽर्च्चयिष्यन्ति केशवम् ॥
जलस्थं विविधैः पुष्पैर्म्मुच्यते यमयातनात् ॥
जलस्रष्टा यतो विष्णुर्ज्जलशायी जलप्रियः ।
तस्माद्ग्रीष्मे विशेषेण जलस्थं पूजयेद्धरिम् ॥

उद्भाव्यते ततो यत्तु तज्जलं विकिरं विदुः ॥
विकिरं शीतलं स्वच्छं निर्द्दोषं लघु तत् स्मृतम् ।
तुवरं स्वादु पित्तघ्नं क्षारं तत् पित्तलं मनाक् ॥”
अथ कैदारस्य लक्षणं गुणाश्च ।
“केदारं क्षेत्रमुद्धिष्टं कैदारं तज्जलं स्मृतम् ।
कैदारं वार्य्यभिष्यन्दि मधुरं गुरु दोषकृत् ॥”
अथ वृष्टिजलस्य लक्षणं गुणाश्च ।
“वार्षिकं तदहर्वृष्टं भूमिष्ठमहितं जलम् ।
त्रिरात्रमुषितं तत्तु प्रसन्नममृतोपमम् ॥”
अथ हेमन्तादिकालविशेषे विहितो जल-
विशेषः ।
“हेमन्ते सारसं तोयं ताडागं वा हितं स्मृतम् ।
हेमन्ते विहितं तोयं शिशिरेऽपि प्रशस्यत ॥
वसन्तग्रीष्मयोः कौपं वाप्यं वा नैर्झरं जलम् ।
न देयं वारि नादेयं वसन्तग्रीष्मयोर्बुधैः ॥
विषवद्वनवृक्षाणां पत्राद्यैर्दूषितं यतः ।
औद्भिदं वान्तरीक्षं वा कौपं वा प्रावृषि स्मृतम् ॥
शस्तं शरदि नादेयं नीरमंशूदकं परम् ।
दिवा रविकरैर्ज्जुष्टं निशि शीतकरांशुभिः ॥
ज्ञेयमंशूदकं नाम स्निग्धं दोषत्रयापहम् ।
अनभिष्यन्दि निर्द्दोषमान्तरीक्षजलोपमम्॥
बल्यं रसायनं मेध्यं शीतं लघु सुधासमम् ॥”
रविकरैर्ज्जुष्टमित्युक्ते दिवापदं समस्तदिवस-
प्राप्त्यर्थं शीतकरांशुभिर्जुष्टमित्युक्ते निशीतिपदं
समस्तरात्रिप्राप्त्यर्थम् । अन्यच्च ।
“शरदि स्वच्छमुदयादगस्त्यस्याखिलं हितम् ॥”
वृद्धसुश्रुतस्तु ।
अनार्त्तवं वार्षिकमपि प्रथमं तच्च भूमिगम् ।
व्यापन्नं परिहर्त्तव्यं सर्व्वदोषप्रकोपणम् ॥
तत् कुर्य्यात् स्नानपानाभ्यां तृष्णाध्मानोदर-
ज्वरान् ।
कासाग्निमान्द्याभिष्यन्दिकण्डूगण्डादिकांस्तथा ॥”
अथ दुष्टजलस्य निर्द्दोषीकरणोपायः ।
“निन्दितं चापि पानीयं क्वथितं सूर्य्यतापितम् ।
सुवर्णं रजतं लोहं पाषाणं सिकतां मृदम् ॥
भृशं संताप्य निर्व्वाप्य सप्तधा साधितं तथा ।
कर्पूरजातिपुन्नागपाटलादिसुवासितम्॥
शुचिसान्द्रपटस्राबैः क्षुद्रजन्तुविवर्ज्जितम् ।
नीरमध्यस्थितं कृत्वा शालग्रामसमुद्भवम् ।
योऽभ्यर्च्चयेन्महाभक्त्या स भवेत् कुलपावनः ॥
कर्किराशिगते सूर्य्ये मिथुनस्थे विशेषतः ।
येनार्च्चितो हरिर्भक्त्या जलमध्ये महीपते ! ॥
द्वादश्यान्तु विशेषेण जलस्थं जलशायिनम् ।
योऽभ्यर्च्चयेत् कृत तेन यज्ञकोटिशतं भुवि ॥
पात्रे गन्धादिकं कृत्वा यः क्षिपेद्गरुडध्वजम् ।
द्वादश्यां पूजयेद्रात्रौ मुक्तिभागी भवेन्नरः ॥”
किञ्च ।
“घनागमे प्रकुर्व्वन्ति जलस्थं वै जनार्द्दनम् ।
ये नरा नृपतिश्रेष्ठ ! तेषां वै नरकं ध्रुवम् ॥”
“तथैवात्युष्णसमये कालिन्द्यादौ विशेषतः ।
सम्पादयेद्भगवतो जलक्रीडामहोत्सवम् ॥”
इति श्रीहरिभक्तिविलासे १५ विलासः ॥

**जलः**, त्रि, (जलति आच्छादयति विनाशयति वा ज्ञानं बुद्धिप्रतिमां वेति । जल + अच् ।) जडः ।
इति मेदिनी । ले, १८ ॥ (यथा, काशीखण्डे । २९ । ६६ ।
“जाड्यविध्वंसनकरी जगद्योनिर्ज्जलाविला ॥”
“जलानां जडानामज्ञानानामित्यर्थः । आविलेव
कलुषितेव आवृतेवेति वा ।” इति तट्टीका ॥)

**जलकण्टकः**, पुं, (जले जातः कण्टकः । कण्टका-न्वितत्वादेवास्य तथात्वम् ।) शृङ्गाटः । पानी-

| | | |
|---|---|---|
| “पौषे वारि सरोजातं माघे तत्तु तडागजम् ।<br>फाल्गुने कूपसम्भूतं चैत्रे चौड्यं हितं मतम् ॥<br>वैशाखे नैर्झरं नीरं ज्यैष्ठे शस्तं तथौद्भिदम् । | | |

फल इति भाषा ॥ (जले कण्टकः शत्रु-
रिव ।) कुम्भीरः । इति हारावली । ७६ ॥

**जलकपिः**, पुं, (जले कपिरिव ।) शिशुमारः ।
इति हारावली । ७७ ॥

**जलकरङ्कः**, पुं, (जलपूर्णः करङ्कः । मध्यपदलोपि-
समासः ।) नारिकेलफलम् । (जले करङ्कः
अशस्यनारिकेलफलास्थि इव ।) पद्मम् ।
शङ्खः ।
जललता । मेघः । इति मेदिनी । के, २२८
॥

**जलकल्कः**, पुं, (जलस्य कल्क इव ।) जम्बालः ।
इति हारावली । २०५ ॥

**जलकाकः**, पुं, (जले जलस्य वा काक इव ।)
पक्षिविशेषः । पानीकौडि इति भाषा ॥ तत्-
पर्य्यायः । दात्यूहः २ कालकण्टकः ३ ।
अस्य
मांसगुणाः । स्निग्धं गुरु हिमं वृष्यं मांसं
जलपक्षिणान्तु वातहरम् । इति राजनिर्घण्टः
॥

**जलकाङ्क्षः**, पुं, स्त्री, (जलं काङ्क्षति अभिलषतीति ।
जल + काङ्क्ष + "कर्म्मण्यण् ।" ३ । २ । १ ।
इत्यण् ।) हस्ती । इति त्रिकाण्डशेषः ॥

**जलकाङ्क्षी**, [न्] पुं स्त्री, (जलं काङ्क्षति अभि-
लषतीति । काङ्क्ष + णिनिः ।) हस्ती । इति
हारावली । १४ ॥ जलाभिलाषिणि, त्रि ॥

**जलकान्तारः**, पुं, (जलमेव कान्तारं दुर्गमपथो
यस्य यस्मै इति वा । जलाधिष्ठातृत्वाद्वास्य
तथात्वम् ।) वरुणः । इति हेमचन्द्रः । २ ।
१०२ ॥

**जलकामुकः**, पुं, (जलस्य कामुकः अभिलाषुकः ।)
कुटुम्बिनीवृक्षः । इति राजनिर्घण्टः ॥ (स्त्री,
अर्कपुष्पी । यथा, भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ।
"अर्कपुष्पी क्रूरकर्म्मा पयस्या जलकामुका
॥")

**जलकिराटः**, पुं, (जले किरः शूकर इव अटति
व्यात्युक्षी ३ करपत्रिका ४ । इति हारा-
वली । ११६ ॥ (यथा, महाभारते । १ ।
१२८ । ३६ ।
"सहिता भ्रातरः सर्व्वे जलक्रीडामवाप्नुमः
॥")

**जलगुल्मः**, पुं, (जलस्य गुल्म इव ।) जलावर्त्तः ।
कच्छपः । जलचत्वरम् । इति मेदिनी । मे,
६० ॥

**जलङ्गः**, पुं, (जलं गच्छतीति । जल + गम् + डः ।
ततो मुम् ।) महाकालः । लताविशेषः । इति
राजनिर्घण्टः ॥

**जलङ्गमः**, पुं, (जलं ग्रामान्तजलभूमिं गच्छ-
तीति । जल + गम + "गमश्च ।" ३ । २ ।
४७ ।
इति खच् मुम् च । ग्रामान्तवासित्वाद्वास्य
तथात्वम् ।) जनङ्गमः । चाण्डालः । इत्यमर-
टीकायां भरतः ॥

**जलचारी**, [न्] पुं, (जले चरतीति । चर +
णिनिः ।) मत्स्यः । इति शब्दचन्द्रिका ॥ जल-
चरे, त्रि ॥ (यथा, रामायणे । ३ । १५ । ६ ।
"ददृशुः सहिता रम्यं तडागं योजनायतम् ।
शरारिहंसकुररैराकीर्णं जलचारिभिः ॥")

**जलजं**, क्ली, (जले जायते इति । जन + डः ।)
पद्मम् । (यथा, कुमारे । २ । ३० ।
"वाचस्पतिरुवाचेदं प्राञ्जलिर्ज्जलजासनम्
॥")
शङ्खः । इति मेदिनी । जे, २४ ॥ (यथा,
रघुः । ७ । ६३ ।
"ततः प्रियोपात्तरसेऽधरौष्ठे
निवेश्य दध्मौ जलजं कुमारः ॥")
लोणारम् । इति राजनिर्घण्टः ॥

**जलजः**, पुं, (जले जायते इति । जल + जन् + डः ।)
मत्स्यः । इति शब्दचन्द्रिका ॥ (यथा, रामा-
यणे । २ । ६१ । २२ ।
"स तादृशः सिंहबलो वृषभाक्षो नरर्षभः ।
स्वयमेव हतः पित्रा जलजेनात्मजो यथा ॥")
जले निवासात् कुम्भीरशिशुमारादयः । एषां

**जलजम्बूका**, स्त्री, (जलप्रधाना जम्बूका क्षुद्र-
जम्बूः ।) क्षुद्रजम्बूः । इति भावप्रकाशः ॥
भूँइजाम इति वनजाम इति च भाषा ॥

**जलजिह्वः**, पुं, (जडा स्वादग्रहणासमर्था जिह्वा
यस्य । डस्य लः ।) नक्रः । इति हारावली ।
७६ ॥

**जलडिम्बः**, पुं, (जले डिम्ब इव ।) शम्बूकः ।
इति हारावली । ११२ ॥ (शम्बूकशब्देऽस्य
विवरणं ज्ञातव्यम् ॥)

**जलतापिकः**, पुं, (जलतापिन् + संज्ञायां कन् ।)
इल्लीशमत्स्यः । काकचीमत्स्यः । इति शब्द-
रत्नावली ॥

**जलतापी**, [न्] पुं, (जलेऽपि तपति प्रकाशयती-
वेति । तप + णिनिः ।) इल्लीशमत्स्यः । इति
शब्दरत्नावली ॥

**जलतालः**, पुं, (जलं अगाघसलिलं तलति आश्रय-
त्वेन गच्छतीति । तल + अण् ।) इल्लीश-
मत्स्यः । इति त्रिकाण्डशेषः ॥

**जलतिक्तिका**, स्त्री, (स्वल्पा तिक्ता तिक्तिका ।
स्वल्पार्थे कन् । जलप्रधाना तिक्तिका ।)
शल्लकीवृक्षः । इति राजनिर्घण्टः ॥

**जलत्रा**, स्त्री, (जलात् त्रायते इति । त्रै + कः ।)
छत्त्रम् । इति हारावली । ४० ॥

**जलदः**, पुं, (जलं ददातीति । दा + कः ।) मेघः ।
(यथा, मेघदूते । १३ ।
"मार्गं तावत् शृणु कथयतस्त्वत्प्रयाणानुरूपं
सन्देशं मे तदनु जलद ! श्रोष्यसि श्रोत्रपेयम्
॥")
मुस्तकम् । इति मेदिनी । दे, २९ ॥ (यथा, -
-
"अमृता-नागर-सहचर-भद्रोत्कट-पञ्चमूल-
जलदजलम् ।
शृतशीतं मधुयुक्तं निवारयति सूतिकातङ्कम्
॥"
इति वैद्यकचक्रपाणिसंग्रहे सूतिकाधिकारे ॥
शाकद्वीपान्तर्गतवर्षविशेषः । यथा, महा-

गच्छतीति । अट + अच् ।) ग्राहः । इति हारावली । ७७ ॥

**जलकुक्कुटी**, स्त्री, (जले कुक्कुट इव । ततः स्त्रियां जातित्वात् ङीष् ।) गङ्गाचिल्ली । इति हारा-वली । ८६ ॥

**जलकुक्कुभः**, पुं, (जले कुक्कुभः पक्षिविशेष इव ।) जलचरपक्षिविशेषः । कोडापाखी इति भाषा ॥
तत्पर्य्यायः । कोयष्टिः २ शिखरी ३ । इति हेमचन्द्रः ॥

**जलकुन्तलः**, पुं, (जलस्य कुन्तलः केश इव ।) शैवालम् । इति भूरिप्रयोगः ॥
(शैवालशब्देऽस्य
विधृतिर्विधेया ॥)

**जलकूपी**, स्त्री, (जलस्य कूपीव ।) कूपगर्त्तः । पुष्करिणी । इति मेदिनी । पे, २४ ॥

**जलकूर्म्मः**, पुं, (जले कूर्म्म इव । प्लवनसमये कूर्म्म-स्येव दृश्यत्वादस्य तथात्वम् ।) शिशुमारः । इति त्रिकाण्डशेषः ॥

**जलकेशः**, पुं, (जलस्य केश इव ।) शैवालम् । इति हारावली । १०६ ॥

**जलक्रीडा**, स्त्री, (जलेन जले वा क्रीडा ।) नद्यादौ वयस्यादिभिः सह जलनिःक्षेपादि-रूपक्रीडा । तत्पर्य्यायः । करपात्रम् २

मांसगुणाः । गुरुत्वम् । उष्णत्वम् । मधुरत्वम् । स्निग्धत्वम् । वातनाशित्वम् । शुक्रवर्द्धनत्वञ्च ।
इति राजवल्लभः ॥ हिज्जलवृक्षः । शैवलः । वानीरवृक्षः । शङ्खः । इति राजनिर्घण्टः ॥ कुपीलुः । इति भावप्रकाशः ॥ कर्कटमीन-कुम्भराशयः मकरशेषार्द्धञ्च । इति दीपिका ॥ जलजाते, त्रि ॥ (यथा, हरिवंशे । ६७ । ३२ ।
"जलजैः प्राणिभिः कीर्णां जलजैर्भूषितां गुणैः ।
जलजैः कुसुमैश्चित्रां जलजैर्हरितोदकाम् ॥")

**जलजन्तुः**, पुं, (जलजातो जन्तुः ।) जलजप्राणी । तत्पर्य्यायः । यादः २ । इत्यमरः । १ । १० । २० ॥

**जलजन्तुका**, स्त्री, (जलजो जन्तुः । ततः संज्ञायां कन् । स्त्रियां टाप् ।) जलौका । इति भरतः ॥

**जलजन्म**, [न्] क्ली, (जले जन्म यस्य ।) पद्मम् । इति हेमचन्द्रः । ४ । २२८ ॥ (शावरकन्दके, पुं ।
तद्यथा, --
"जन्तूका जलजन्मा च तथा शावरकन्दकम् ॥"
इत्युत्तरस्थानेऽष्टादशेऽध्याये वाभटेनोक्तम् ॥)

भारते । ६ । ११ । २२ -- २३ ।
"वर्षाणि तेषु कौरव्य ! सप्तोक्तानि मनीषिभिः ।
महामेरुर्महाकाशो जलदः कुमुदोत्तरः ।
जलधारो महारज ! सुकुमार इति स्मृतः ॥")

**जलदागमः**, पुं, (जलदानां मेघानां आगम आगमनं यत्र ।) वर्षाकालः । इति राज-निर्घण्टः (यथाह वररुचिः ।
"भद्रं कृतं कृतं मौनं कोकिलैर्जलदागमे ।
दर्द्दुरा यत्र वक्तारस्तत्र मौनं हि शोभनम् ॥")

**जलदाशनः**, पुं, (अश्यते भक्ष्यते इति । अश + कर्म्मणि ल्युट् । जलदानां मेघानामशनः । मेघाः शालपत्रं भक्षयन्तीति प्रसिद्धेः ।) शाल-
वृक्षः । इति शब्दचन्द्रिका ॥

**जलधरः**, पुं, (धरतीति धरः । धृ + अच् । जलस्य धरः ।) मेघः । (यथा, महाभारते । १ । १३५ । १८ ।
"नभो जलधरैर्हीनं साङ्गारक इवांशुमान् ॥")
मुस्तकम् । इत्यमरः । १ । ३ । ७, २ । ४ । १५९ ॥
समुद्रः । इति हेमचन्द्रः ॥ तिनिशवृक्षः । इति राजनिर्घण्टः ॥ जलधारिणि, त्रि ॥

**जलधिः**, पुं, (जलानि धीयन्तेऽस्मिन्निति । जल + धा + "कर्म्मण्यधिकरणे च ।" ३ । ३ । ९३ ।
इति किः ।) समुद्रः । (यथा, आर्य्यासप्त-
शत्याम् । ४८० ।
"या दक्षिणा त्वमस्यामदक्षिणो दक्षिणस्त्व-
मितरस्याम् ।
जलधिरिव मध्यसंस्थो न वेलयोः सदृशमाच-
रसि ॥")
दशशङ्कुसङ्ख्या । सा तु शतलक्षकोटयः । इति
लीलावती ॥

**जलधिगा**, स्त्री, (जलधिं समुद्रं गच्छतीति । गम- + डः । स्त्रियां टाप् ।) नदी । इति हेम-
चन्द्रः । ४ । १४६ ॥

**जलधिजा**, स्त्री, (जलधौ जायते इति । जन् + "सप्तम्यां जनेर्डः ।" इति डः ।) लक्ष्मीः ।
इति त्रिकाण्डशेषः ॥

**जलधेनुः**, स्त्री, (जलकल्पिता धेनुः ।) दानार्थ-
कृत्रिमधेनुः । यथा, --
होतोवाच ।
"जलधेनुं प्रवक्ष्यामि पुण्येऽह्नि विधिपूर्ब्बकम् ।
गोचर्म्ममात्रं भूभागं गोमयेनोपलेपयेत् ॥
तत्र मध्ये च राजेन्द्र ! पूर्णकुम्भन्तु विन्यसेत् ।
जलपूर्णसुगन्धाढ्यं कर्पूरागुरुचन्दनैः ॥
वासितां गन्धतोयेन तां धेनुं परिकल्पयेत् ।
षत्सं तथापरं कल्प्यं घृतेन परिपूरितम् ॥
वर्द्धनीकं महाराज ! पत्रपुष्पैः समन्वितम् ।
दूर्व्वाङ्कुरैरुपस्तीर्य्य स्रग्दामैश्च विभूषितम् ॥
पञ्चरत्नानि निःक्षिप्य तस्मिन् कुम्भे नराधिप ! ।
मांसीमुशीरं कुष्ठञ्च तथा शैलेयबालुकम् ॥
अथवा हविस्त्वेकदिने यः पयोव्रतमास्थितः ॥
ग्राहकोऽपि त्रिरात्रं वै तिष्ठेदेवं न संशयः ।
यत्र क्षीरवहा नद्यो मधुपायसकर्द्दमाः ॥
यत्र चाप्सरसां गीतं तत्र यान्ति जलप्रदाः ।
दाता च दापकश्चैव प्रतिग्राही च यो द्विजः ॥
ते सर्व्वे पापनिर्म्मुक्ता विष्णुलोकञ्च प्राप्नुयुः ॥"
इति वाराहे जलधेनुमाहात्म्यनामाध्यायः ॥

**जलनकुलः**, पुं, (जले नकुल इव ।) जलजन्तु-
विशेषः । धाडिया इति उद्बिडाल इति च
भाषा । तत्पर्य्यायः । उद्रः २ जलमार्जारः ३
जलाखुः ४ जलप्लवः ५ । इति त्रिकाण्डशेषः ।
जलविडालः ६ नीराखुः ७ । इति हारावली । । ७६ ॥ पानीयनकुलः ८ वसी ९ । इति हेम-
चन्द्रः ॥

**जलनिधिः**, पुं, (जलानि निधीयन्तेऽस्मिन्निति ।
धा + "कर्म्मण्यधिकरणे च ।" ३ । ३ । ९३ ।
इति किः । जलानां निधिरिति वा ।) समुद्रः ।
इत्यमरः । १ । १० । २० ॥ (यथा, आर्य्याशप्त-
शत्याम् । ६१४ ।
"सरित इव यस्य गेहे शुष्यन्ति विशालगोत्रजा नार्य्यः ।
क्षारास्वेव स तृप्यति जलनिधिलहरीषु जलद इव ॥"
चतुः संख्या समुद्रवाचित्वात् । यथा, सत्कृत्य-
मुक्तावल्याम् ।
"वारे शीतकरं तिथौ जलनिधिं भेऽग्निञ्च योगे द्वयम् ॥" इति ॥)

**जलनिर्गमः**, पुं, (गम + "ग्रहवृदृनिश्चिगमश्च ।"
३ । ३ । ५८ । इति भावे अप् । जलानां
निर्गमो वहिर्गमनं यस्मात् ।) प्राकारगृह-
भित्त्यादिषु जलनिःसरणमार्गः । इति भरतः ॥
देबकुलप्राकारादिषु जलनिःसरणद्वारम् । इति
सर्व्वानन्दः ॥ तत्पर्य्यायः । भ्रमः २ ।
इत्यमरः ।
पुत्रः अस्य जातकर्म्मादि कुरु इत्युक्त्रा ब्रह्मा
क्रोडे ददौ स बालस्तस्व श्मश्रु दधार श्मश्रु
धुन्वतो ब्रह्मणो नेत्राभ्यां जलमगमत् ब्रह्मा
समुद्रमुवाच यस्मादनेन मम नेत्राभ्यां निर्गतं
जलं धृतं तस्मादयं जलन्धरनामा अधुनैव सर्व्व-
शास्त्रवेत्ता रुद्रं विना सर्व्वभूतावध्यश्च भवि-
ष्यति इत्युक्त्रा शुक्रमाहूय तमासुरराज्ये न्यवे-
शयत् स कालनेमिसुतां वृन्दामुपयेमे । इति
पाद्मोत्तरखण्डम् ॥

**जलपतिः**, पुं, (जलस्य पतिः ।) वरुणः । इति
हेमचन्द्रः । २ । १०२ ॥ (अस्य जलपतित्वकथा
यथा, काशीखण्डे । १२ । ८९ -- ९५ ।
"ततस्तं तनयः पृष्ट्वा पितरं प्रणिपत्य च ।
जगाम तूर्णं तपसे श्रीमद्वाराणसीं पुरीम् ॥
तत्र तप्त्वा तपो घोरं लिङ्गं संस्थाप्य शाम्भवम् ।
पञ्चवर्षसहस्राणि स्थितः पाषाणनिश्चलः ॥
आविरासीन्महादेवस्तुष्टस्तत्तपसा ततः ।
उवाच कार्द्दमे ! ब्रूहि कं ददामि वरोत्तमम् ॥
कार्द्दमिरुवाच ।
यदि नाथ ! प्रसन्नोऽसि भक्तानामनुकम्पक ! ।
सर्व्वासामाधिपत्यं मे देह्यपां यादसामपि ॥
इति श्रुत्वा महेशानः सर्व्वचिन्तितदः प्रभुः ।
अभ्यषिञ्चत तं तत्र वारुणे परमे पदे ॥
रत्नानामब्धिजातानामब्धीनांसरितामपि ।
सरसां पल्वलानाञ्च वाप्यम्बुस्रोतसां पुनः ॥
जलाशयानां सर्व्वेषां प्रतीच्याश्चापि वै दिशः ।
अधीश्वरः पाशपाणिर्भव सर्व्वामरप्रियः ॥")
समुद्रः । अप्पतिरित्यमरदर्शनात् ॥

**जलपारावतः**, पुं, (जले पारावत इव ।) पक्षि-
विशेषः । तत्पर्य्यायः । कोपी २ जलकपोतः ३ ।
इति राजनिर्घण्टः ॥

**जलपित्तं**, क्ली, (जलानां पित्तमिव ।) अग्निः ।
इति शब्दरत्नावली ॥

**जलपिप्पली**, स्त्री, (जलजाता पिप्पली ।) पिप्पली-
विशेषः । पनिसगा इति लोके । जलपिपरी
इति हिन्दी भाषा । तत्पर्य्यायः । महाराष्ट्री
२ शारदी ३ तोयवल्लरी ४ मत्स्यादनी ५
मत्स्यगन्धा ६ लाङ्गली ७ शकुलादनी ८ अग्नि-

आमलासर्षपाश्चैताः सर्व्वधान्यानि पार्थिव ! ।
चतुर्दिक्ष्वपि पत्राणि चत्वार्य्येव प्रकल्पयेत् ॥
एवं घृतमयं पात्रं द्बितीयं दधिपूरितम् ।
तृतीयं मधुनश्चैव चतुर्थं शर्क्करावृतम् ॥
सुवर्णं मुखचक्षूंषि शृङ्गं कृष्णागुरूणि च ।
प्रशस्तपत्रश्रवणां मुक्ताफलमयेक्षणाम् ॥
ताम्रपृष्ठां कांस्यदोहां दर्भरोमसमन्विताम् ।
पुच्छं सूत्रमयं कृत्वा कृष्णाभरणघण्टिकाम् ॥
कम्बले पुष्यमालाञ्च गुडास्यां शुक्तिदन्तिकाम् ।
जिह्वां शर्करया कृत्वा नवनीतेन च स्तनम् ॥
इक्षुपादान्तु राजेन्द्र ! गन्धपुष्पोपशोभिताम् ।
कृष्णाजिनोपरि स्थाप्य वस्त्रैराच्छादितान्तु ताम् ॥
गन्धपुष्पैः समभ्यर्च्च्य विप्राय विनिवेदयेत् ।
एवं घेनुं तदा दत्त्वा ब्राह्मणे वेदपारगे ॥
साधुविप्राय राजेन्द्र ! श्रोत्रियायाहिताग्नये ।
तपोवृद्धे वयोवृद्धे दातव्या च कुटुम्बिने ॥
यो ददाति नरो राजन् ! यः पश्यति शृणोति च ।
प्रतिगृह्णाति यो विप्रः सर्व्वे मुच्यन्ति पातकात् ॥
ब्रह्महा पितृहा गोघ्नः सुरापो गुरुतल्पगः ।
विमुक्तः सर्व्वपापैस्तु विष्णुलोकं स गच्छति ॥
योऽश्वमेधेन यजते समाप्तवरदक्षिणः ।
जलधेनुञ्च यो दद्यात् सममेतन्नराधिपः ॥
जलाहारस्त्वेकदिनं तिष्ठेच्च जलधेनुदः ।

१ । १० । ७ ॥ वक्रम् ३ पुटभेदः ४ । इति स्वामी ॥

**जलनीली**, स्त्री, (जलं नीलयतीति । नील + तत् करोतीति णिच् + ततः "कर्म्मण्यण् ।" ३ । २ । १ । इत्यण् । ततो ङीष् ।) शैवालम् । इत्यमरः । १ । १० । ३८ ॥ (शैवालशब्देऽस्या विवृति-र्द्रष्टव्या ॥)

**जलन्धरः**, पुं, (जलं ब्रह्मनेत्रच्युताश्रुजलं धरतीति । जल + धृ + बाहुलकात खच् मुम् च ।) असुर-विशेषः । तस्योत्पत्तिकारणं यथा, --
इन्द्रः शिवं द्रष्टुं शिवलोकं गत्वा एकं भयानकं पुरुषं दृष्ट्वा तं पुनःपुनः पप्रच्छ ईश्वरः क्वगतः ।
स उत्तरं न ददौ इन्द्रः क्रुद्धस्तं वज्रेण जघान ।
ततो रुद्रस्तेजसा प्रजज्वाल । तत इन्द्रो भीतस्तं प्रणम्य तुष्टाव रुद्रस्तुष्ट इन्द्रदाहार्थोत्पन्नं भाल-नेत्रस्थवह्निं गृहीत्वा गङ्गासागरसङ्गमे प्राक्षि-पत् ततः स बालरूपोभूत्वा रुरोद तस्य रोदन-शब्देन सप्तलोका वधिरीकृतास्तच्छ्रुत्वा ब्रह्मा विस्मितस्तत्रागत्य तं बालं समुद्रक्रोडे दृष्ट्वा तं पप्रच्छ कस्यायं पुत्त्रः समुद्रस्तं प्रणम्योवाच मम

ज्वाला ९ चित्रपत्री १० प्राणदा ११ तृणशीता १२ बहुशिखा १३ । अस्य गुणाः । कटुत्वम् । तीक्ष्णत्वम् । कषायत्वम् । मलशोधनत्वम् । व्रणकीटादिदोषरसदोषनाशित्वञ्च। इति राज-निर्घण्टः ॥ तत्पर्य्यायगुणाः ।
"जलपिप्पल्यभिहिता शारदी शकुलादनी ।
मत्स्यादनी मत्स्यगन्धा लाङ्गलीत्यपि कीर्त्तिता ॥
जलपिप्पलिका हृद्या चक्षुष्या शुक्रला लघुः ।
संग्राहिणी हिमा रूक्षा रक्तदाहव्रणापहा ॥
कटुपाका रसा रुच्या कषाया वह्निवर्द्धिनी ॥"
इति भावप्रकाशः ॥
("गम्भीरो जलपिप्पल्यस्तुम्बुरुः शृङ्गवेरिका ।
तीक्ष्णोष्णकटुरूक्षाणि कफवातहराणि च ॥"
इति चरके सूत्रस्थाने सप्तविंशेऽध्याये ॥)

**जलपृष्ठजा**, स्त्री, (जलस्य पृष्ठे उपरि प्रदेशे जायते इति । जन + डः ।) शैवालम् । इति शब्दचन्द्रिका ॥

**जलप्रायं**, क्ली, (जलस्य प्रायो बाहुल्यं यत्र ।) जलबहुलस्थानम् । अनूपदेशः । इत्यमरः । २ । १ । १० ॥

**जलप्रियः**, पुं, (जलं प्रियं यस्य ।) चातकपक्षी । इति शब्दरत्नावली ॥ मत्स्यः । इति शब्दचन्द्रिका ॥

**जलप्लवः**, पुं, (जले प्लवते इति । प्लु + अच् ।) जलनकुलः । इति हारावली । ७६ ॥

**जलफलं**, क्ली, (जलजातं फलम् ।) शृङ्गाटकम् । इति भावप्रकाशः ॥

**जलबन्धः**, पुं, (जलं बध्नाति जीवनवृत्त्यै निर्ब्बन्धेन परिकल्पयतीति । बन्ध + अच् ।) मत्स्यः । इति शब्दचन्द्रिका ॥

**जलबन्धकः**, पुं, (जलं बध्नातीति । बन्ध + ण्वुल् ।) जलमध्यगं स्रोतोभेदकरं दारुशिलादि । तत्-
पर्य्यायः । विदारकः २ कूपकः ३ । इति शब्द-
रत्नावली ॥

**जलबालकः**, पुं, (जलेन बलयति जीवयति स्वाश्रितवृक्षादीनिति । बल जीवने + णिच् + ण्वुल् ।)
बिन्ध्यपर्व्वतः । इति हेमचन्द्रः । ४ । ९५ ॥

**जलबालिका**, स्त्री, (जलस्य बालिकेव ।) विद्युत् । इति हेमचन्द्रः । ४ । १७१ ॥

**जलबुद्बुदं**, क्ली, (जलस्य बुद्बुदम् ।) जलविम्बम् । यथा, शुद्धितत्त्वधृतवचनम् ।
"मानुष्ये कदलीस्तम्भनिःसारेसारमार्गणम् ।
यः करोति स वै मूढो जलबुद्बुदसन्निभे ॥"

**जलब्रह्मी**, स्त्री, (जले ब्रह्मीव ।) हिलमोची । अहृद्यं हन्ति तृष्णास्रदाहश्वासक्षतक्षयान् ॥"
इति भावप्रकाशः ॥

**जलमसिः**, पुं, (जलेन जलाकारेण मस्यति परिणमतीति । मस परिणामे + इन् । घनीभूतमेघस्य जलाकारेण परिणमनात् तथात्वम् ।) मेघः । इति हारावली । १८ ॥

**जलमार्गः**, पुं, (जलस्य मार्गः निर्गमपथः ।) प्रणाली । इति हेमचन्द्रः । ४ । ५५ ॥ नर्दमा इति भाषा ॥

**जलमार्जारः**, पुं, (जलस्य मार्जारः जले मार्जार इव इति वा ।) जलनकुलः । इति त्रिकाण्डशेषः ॥

**जलमुक्**, [च्] पुं, (जलं मुञ्चतीति । मुच् + क्विप् ।) मेघः । इत्यमरः । १ । ३ । ७ ॥ (यथा,
मेघदूते । ७१ ।
"शङ्कास्पृष्टा इव जलमुचस्त्वादृशा यत्र जालैर्धूमोद्गारानुकृतिनिपुणा जर्ज्जरा निष्पतन्ति ॥"
जलमोचके, त्रि । यथा, बृहत्संहितायाम् । १९ । २ ।
"तीक्ष्णं तपत्यदितिजः शिशिरेऽपि काले
नात्यम्बुदा जलमुचोऽचलसन्निकाशाः ॥")

**जलमूर्त्तिः**, पुं, (जलं मूर्त्तिर्यस्य ।) शिवः । इति तस्याष्टमूर्त्तिपूजायां तिथ्यादितत्त्वम् ॥

**जलमूर्त्तिका**, स्त्री, (जलस्य मूर्त्तिः घनीभूताकृतिः । ततः स्वार्थे संज्ञायां वा कन् टाप् च ।) करका । इति शब्दचन्द्रिका ॥

**जलमोदं**, क्ली, (जलेन जलसंयोगेन मोदयति आनन्दयति सद्गन्धप्रदानेनेत्यर्थः । मुद् + णिच्
+ अण् ।) उशीरम् । इति राजनिर्घण्टः ॥

**जलयन्त्रगृहम्**, क्ली, (जलयन्त्रमिव कृतं गृहम् ।) जलमध्यकृतगृहम् । जल्टुङ्गि इति फोयारार घर इति च भाषा । तत्पर्य्यायः । समुद्रगृहम् २ । इति त्रिकाण्डशेषः ॥ जलयन्त्रनिके-

**जलरुहं**, क्ली, (जले रोहतीति । रुह + "इगुपधज्ञेति ।" ३ । १ । १३५ । इति कः ।) पद्मम् । इति हेमचन्द्रः । ४ । २२८ ॥ (यथा, महाभारते । १ । १२८ । ४१ ।
"जलञ्च शुशुभे छन्नं फुल्लैर्जलरुहैस्तथा ॥")

**जलरूपः**, पुं, (जलस्य रूपमिवरुपं यस्य । शुभ्रवर्णत्वा-
दस्य तथात्वम् ।) मकरः । इति त्रिकाण्डशेषः ॥

**जललता**, स्त्री, (जले लतेव तदाकारत्वात् ।) तरङ्गः । इति हारावली । २०५ ॥

**जलवरण्टः**, पुं, (जलं रसस्तत्प्रधानो वरण्टो वसन्तः ।) जलवसन्ताख्यव्रणः । पानीवसन्त
इति भाषा । तत्पर्य्यायः । मोगः २ । इति हारावली । १४२ ॥

**जलवल्कलः**, पुं, (जलस्य वल्कल इव ।) कुम्भिका । इति हारावली ॥ ११२ । पाना इति भाषा ॥)

**जलवल्ली**, स्त्री, (जलजाता जलप्रधाना वा वल्ली ।) शृङ्गाटकः । इति राजनिर्घण्टः ॥

**जलवायसः**, पुं, (जले वायसः काक इव कृष्णवर्णत्वात् ।) मद्गुपक्षी । इति हेमचन्द्रः । ४ । ३८९ ॥ पानीकौडि इति भाषा ॥

**जलवासं**, क्ली, (जलेन वासो गन्धो यस्य ।) उशीरम् । इति राजनिर्घण्टः ॥

**जलवासः**, पुं, (जलं वासयतीति । वस + णिच् + अण् ।) विष्णुकन्दः । इति राजनिर्घण्टः ॥ (जले वासः निवासः । सलिलनिवासः । यथा,
महाभारते । १२ । २६० । ५ ।
"स चिन्तायमास मुनिर्जलवासे कदाचन ॥"
जले वासो यस्य इति विग्रहे जलवासिनि, त्रि । यथा तत्रैव । १२ । २६० । ४ ।
"स कदाचित् महातेजा जलवासो महीपते ! ।
चचार लोकान् विप्रर्षिः प्रेक्षमाणो
मनोजवः ॥")

इति हाराबली । १८० ॥

**जलभूः**, पुं, (भवत्यस्मादिति । भू + अपादाने

क्विप् । ततो जलस्य भूः ।) मेघः । (जलं भूरुत्-
पत्तिस्थानमस्य ।) कञ्चटम् । इति शब्द-
चन्द्रिका ॥

**जलमक्षिका**, स्त्री, (जलजाता मक्षिका ।) वारि-

कृमिः । इति त्रिकाण्डशेषः ॥

**जलमद्गुः**, पुं, (जले मद्गुरिव ।) मत्स्यरङ्ग-

पक्षी । इति हारावली । ८८ ॥

**जलमधुकः**, पुं, (जलजातो मधुकः ।) मधुक-

वृक्षप्रभेदः । जलमहुया इति भाषा । तत्-
पर्य्यायः । मङ्गल्यः २ दीर्घपत्रकः ३ मधुपुष्पः ४
क्षौद्रप्रियः ५ पतङ्गः ६ कीरेष्टः ७ गैरिकाख्यः
८ । अस्य गुणाः । मधुरत्वम् । व्रणवान्तिनाशि-
त्वम् । शुक्रबलकारित्वम् । शीतत्वम् । रसा-
यनत्वञ्च । इति राजनिर्घण्टः ॥ तत्पर्य्याय-
गुणाः । अथ महुया वनमहुया ।
"मधुको गुडपुष्पः स्यात् मधुवृक्षो मधुस्रवः ।
वानप्रस्थो मधुष्ठीलो जलजोऽत्र मधूलकः ॥
मधूकपुष्पं मधुरं शीतलं गुरु बृंहणम् ।
बलशुक्रकरं प्रोक्तं वातपित्तविनाशनम् ॥ * ॥
फलं शीतं गुरु स्वादु शुक्रलं वातपित्तनुत् ।
तनम् ३ । इति हारावली ॥ जलयन्त्रमन्दि-
रम् ४ । यथा, --
"क्वचिद्विचित्रं जलयन्त्रमन्दिरम् ।"
इति कालिदासः ॥

**जलरङ्कः**, पुं, (जले सरसि रङ्क इव ।) वक-

पक्षी । इति हारावली । १८३ ॥

**जलरङ्कुः**, पुं, (जले रङ्कुरिव ।) दात्यहपक्षी ।

इति हलायुधः ॥

**जलरञ्जः**, पुं, (जले रजति अनुरक्तो भवतीति ।

रञ्ज अनुरागे + अच् ।) वकपक्षी । इति
हेमचन्द्रः । ४ । ३ । ८ ॥ (वकशब्देऽस्य विवरणं
ज्ञातव्यम् ॥)

**जलरण्डः**, पुं, (जलस्य रण्ड इव भयजनकत्वात् ।)

जलावर्त्तः । पयोरेणुः । भुजङ्गमः । इति हेम-
चन्द्रः शब्दरत्नावली च ॥

**जलरसः**, पुं, (जलजातो रसः । जलप्रधानो रसो

वा ।) लवणम् । इति हारावली । ७५ ॥

**जलरुट्**, [ह्] पुं, (जले रोहतीति । रुह् +

क्विप् ।) पद्मम् । इति हेमचन्द्रः । ४ । २२८ ॥

**जलवाहः**, पुं, (जलं वहतीति । वह + "कर्म्म-

ण्यण् ।" ३ । २ । १ । इत्यण् ।) मेघः । इति
हेमचन्द्रः । २ । ७८ ॥ (यथा, भारविः । १२ । २१
"सादिजलधिजलवाहपं
सदिगशनुवानिव विश्वमोजसा ॥"
जलवाहके, त्रि । यथा, महाभारते । २ । ७ । २० ।
"जलवाहास्तथा मेघा वायवस्तनयित्नवः ॥")

**जलविडालः**, पुं, (जले विडाल इव ।) जलनकुलः ।

इति हारावली । ७६ ॥

**जलबिन्दुजा**, स्त्री, (जलबिन्दुभ्यो जायते इति ।

जन + डः ।) यावनालीशर्करा । इति राज-
निर्घण्टः ॥

**जलविल्वः**, पुं, (जलप्रधानो विल्व इव ।) कर्कटः ।

पञ्चाङ्गः । जलचत्वरम् । इति मेदिनी । वे, ५८ ॥
चातरजल इति भाषा ॥

**जलविषुवं**, क्ली, (जलप्रधानं विषुवम् ।) तुला-

संक्रान्तिः । तत्पर्य्यायः । आश्विनचिह्नितम् २ ।
इति शब्दरत्नावली ॥ चक्रविशेषः । यथा, --
"मानं शिरे षण्मुखपञ्चवैरं
वक्षश्चतुर्भे बहुवित्तलाभः ।

भोगः करे षट्पदयोस्तु षट्के
भीतिर्नृणां स्याद्विषुवस्य चक्रे ॥
यस्मिन्नृक्षे वसेद्भानुस्तस्मात् संगणयेद्बुधः ॥”
इति समयामृतम् ॥

**जलवृश्चिकः**, पुं, (जले वृश्चिक इव ।) चिङ्गट-
मत्स्यः । इति त्रिकाण्डशेषः ॥

**जलवेतसः**, पुं, (जलजातो वेतसः ।) वानीर-
वृक्षः । इति राजनिर्घण्टः ॥ (यथास्य पर्य्याया
गुणाश्च ।
“निकुञ्चकः परिव्याधो नादेयो जलवेतसः ।
जलजो वेतसः शीतः कुष्ठहृद्वातकोपनः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**जलव्यधः**, पुं, (जलं विध्यतीति । व्यध + अच् ।)
कङ्कत्रोटमत्स्यः । इति त्रिकाण्डशेषः ॥

**जलव्यालः**, पुं, (जलस्थितो व्यालो हिंस्रजन्तुः ।)
अलगर्दसर्पः । इत्यमरः । १ । ८ । ५ ॥ क्रूर-
कर्म्मा जलजन्तुः । इति राजनिर्घण्टः ॥

**जलशयः**, पुं, (जले शेते । शी + अच् । पुंसीति
घो वा ।) विष्णुः । इति हेमचन्द्रः । २ । १२८
॥

**जलशयनः**, पुं, (जले क्षीरोदसलिले शेते इति ।
शी + ल्युः ।) विष्णुः । इति हलायुधः ॥

**जलशायी**, [न्] पुं, (जले शेते इति । शी +
णिनिः ।) विष्णुः । यथा, पुराणम् ।
“जलमध्ये वराहञ्च पावके जलशायिनम् ॥”

**जलशुक्तिः**, स्त्री, (जलचरी शुक्तिः ।) शम्बूकः ।
इत्यमरः । १ । १० । २३ ॥ शामूक इति
जल-
सीपी इति च भाषा ॥ तत्पर्य्यायः । वारि-
शुक्तिः २ कृमिशुक्तिः ३ क्षुद्रशुक्तिका ४
शम्बूका ५
नरशुक्तिः ६ पुष्टिका ७ तोयशुक्तिका ८ ।
तस्या गुणाः । कटुत्वम् । स्निग्धत्वम् । दीपन-
त्वम् । गुल्मशूलविषदोषनाशित्वम् । रुच्यत्वम्
।
पुस्तकान्तरे १८६ अध्यायः ॥
(जलस्तम्भनविद्या
दुर्य्योधनेन विदितासीत् । अतएवायं
द्वैपायन-
ह्रदजलं संस्तभ्य तत्र सुष्वाप । एतत्कथा
महाभारते शल्यपर्व्वणि २९ अध्याये
द्रष्टव्या ॥)

**जलस्था**, स्त्री, (जले जलबहुलप्रदेशे तिष्ठतीति ।
स्था + कः । स्त्रियां टाप् ।) गण्डदूर्व्वा ।
इति
राजनिर्घण्टः ॥ (जलावस्थिते, त्रि । यथा,
भाग-
वते । ३ । २७ । १२ ।
“यथा जलस्थ आभासो जलस्थेनावदृश्यते
।
स्वाभासेन तथा सूर्य्यो जलस्थेन दिवि
स्थितः ॥”)

**जलहं**, क्ली, (जलेन हन्यते इति । हन + बाहु-
लकात् डः ।) स्वल्पजलयन्त्रगृहम् । इति
त्रिकाण्डशेषः ॥

**जलहासः**, पुं, (जलानां हास इव शुक्लत्वात् ।)
समुद्रफेनः । इति त्रिकाण्डशेषः ॥

**जलाका**, स्त्री, (जले आकायति प्रकाशते इति ।
आ + कै + कः ।) जलौकसः । इति शब्द-
रत्नावली ॥

**जलाक्षी**, स्त्री, (जलमक्ष्णोति व्याप्नोति करण-
तयेति । अक्ष + अण् ।) जलपिप्पली । इति
शब्दरत्नावली ॥

**जलाखुः**, पुं, (जले आखुरिव ।) जलनकुलः ।
इति त्रिकाण्डशेषः ॥

**जलाञ्चलं**, क्ली, (जलमञ्चति व्याप्नोतीति । अञ्च
+ बाहुलकात् अलच् । यद्वा, जले अञ्चलः
वस्त्रप्रान्त इव । अभिधानात् क्लीवत्वम् ।)
शैवालम् । स्वतो वारिनिर्गमः । इति मेदिनी
।
ले, १५४ ॥

**जलाटनः**, पुं, (जले अटति भ्रमतीति । अट +

**जलाम्बिका**, स्त्री, (जलस्य अम्बिका माता इव ।
क्रोडदेशे जलधारणादस्यास्तथात्वम् ।) कूपः
।
इति हारावली । ४१ ॥ जलात्मिका इति
क्वचित् पाठः ॥

**जलायुका**, स्त्री, (जलमायुरस्याः । कप् । पृषो-
दरादित्वात् सलोपः ।) जलौका । इति शब्द-
रत्नावली ॥ (यथा, सुश्रुते । १ । १३ ।
“अथ जलायुकाः वक्ष्यन्ते । जलमासामायु-
रिति जलायुकाः ॥” अस्या अन्यद्विवरणं
जलौकःशब्दे द्रष्टव्यम् ॥ यस्मिन्नियं व्यवहृता
तद्यथा, --
“नस्याञ्जनाभ्यञ्जनपानधूमं
तथावपीडं कवलग्रहञ्च ।
संशोधनञ्चोभयतः प्रयुञ्ज्या-
द्रक्तं हरेच्चापि जलायुकाभिः ॥”
इति सुश्रुते कल्पस्थानेऽष्टमेऽध्याये ॥)

**जलार्द्रः**, पुं, (जलेन आर्द्रः सिक्तः ।) आर्द्र-
वस्त्रम् । इति हारावली । ११६ ॥ (जलसिक्ते,
त्रि । यथा, मेघदूते । ४५ ।
“तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा
पुष्पासारैः स्नपयतु भवान् व्योमगङ्गाजलार्द्रैः
॥”)

**जलार्द्रा**, स्त्री, (जलेन आर्द्रा सिक्ता ।) क्लिन्न-
वस्त्रम् । इति हेमचन्द्रः । ३ । ३४३ ॥ (आर्द्र-
तालवृन्तम् । यथा, वैजयन्ती ।
“धुवित्रं तालवृन्तं स्यादुत्क्षेपव्यजनञ्च तत् ।
जलेनार्द्रं जलार्द्रा स्यात् -- ॥”)

**जलार्णवः**, पुं, (जलप्रचुरोऽर्णवः समुद्रो यत्र
काले ।) वर्षाकालः । इति त्रिकाण्डशेषः ॥
(जलप्रचुरोऽर्णवः ।) जलसमुद्रश्च ॥

**जलालुः**, पुं, (जलजात आलुः । शाकपार्थिववत्
समासः ।) पानीयालुः । इति राजनिर्घण्टः ॥

**जलालुकं**, क्ली, (जलालुरिव कायति प्रकाशते
इति । कै + कः ।) पद्मकन्दः । इति राज-
निर्घण्टः ॥

**जलालुका**, स्त्री, (जले अलति गच्छतीति । अल

पाचनत्वम् । बलदातृत्वञ्च । इति राजनिर्घण्टः ॥

**जलशूकं**, क्ली, (जले शूकं सूक्ष्माग्रमिव ।) शैवालम् ।

इति हेमचन्द्रः । ४ । २३३ ॥ (पुंलिङ्गेऽपि दृश्यते ।
यथा, --
"जलशूकः स्वयं गुप्ता रजन्यौ बृहतीद्वयम् ॥"
इत्युत्तरस्थानेऽष्टादशेऽध्याये वाभटेनोक्तम् ॥)

**जलशूकरः**, पुं, (जले जलस्य वा शूकर इव ।)

कुम्भीरः । इति हेमचन्द्रः । ४ । ४१५ ॥

**जलसर्पिणी**, स्त्री, (जले सर्पति गच्छतीति । सृप

+ णिनि + ङीप् ।) जलौका । इति हेमचन्द्रः । ४ । २७० ॥

**जलसूचिः**, पुं, (जले सूचिरिव । अभिधानात्

पुंस्त्वम् ।) कङ्कत्रोटमत्स्यः । शृङ्गाटः । शिशुमारः । जलौकायां स्त्री । इति मेदिनी । चे, २० ॥ काकः । इति हेमचन्द्रः ॥

**जलस्तम्भनं**, क्ली, (जलस्य स्तम्भनम् ।) मन्त्रादि-

द्वारा जलगतिनिवारणम् । तन्मन्त्रो यथा, --
"ओम् नमो भगवते जलं स्तम्भय स्तम्भय संस-
मंसके कके कचर ।
जलस्तम्भनमन्त्रोऽयं जलं स्तम्भयते शिव ! ॥"
इति गारुडे १७९ अध्यायः ॥

ल्युः ।) कङ्कपक्षी । इति मेदिनी । ने, १८४ ॥
(विशेषोऽस्य कङ्कशब्दे ज्ञातव्यः ॥)

**जलाटनी**, स्त्री, (जले अटति भ्रमतीति । अट +

ल्युः । स्त्रियां ङीष् ।) जलौका । इति मेदिनी ।
ने, १८४ ॥

**जलाण्टकः**, पुं, (जले अण्ठते इतस्ततो भ्रम-

तीति । अण्ठ गतौ + ण्वुल् ।
पृषोदरादित्वात्
ठस्य टः ।) नक्रराजः । इति हारावली । ७७ ॥

**जलाण्डकं**, क्ली, (जले अण्डमिव कायतीति ।

कै + कः ।) पोताधानम् । इति शब्दरत्नावली ॥

**जलात्मिका**, स्त्री, (जलमेव आत्मा यस्याः । कप्

ततः टापि अत इत्वम् ।) जलौका । इति शब्दरत्नावली ॥

**जलाधारः**, पुं, (जलस्य आधारः ।) जलाशयः ।

इत्यमरः । १ । १० । २५ ॥ (यथा, याज्ञवल्क्ये । ३ । १४४ ।
"आकाशमेकं हि यथा घटादिषु पृथग् भवेत् ।
तथात्मैकोऽप्यनेकस्तु
जलाधारेष्विवांशुमान् ॥")

**जलाधिदैवतः**, पुं, (जलस्याधिदैवतं अधिष्ठात्री

देवता ।) वरुणः । इति हलायुधः ॥ (जलं अधिदैवतं यस्य ।) पूर्ब्बाषाढानक्षत्रे, क्ली । इति ज्योतिषम् ॥

गतौ + बाहुलकात् उकः ।) जलौका । इति शब्दरत्नावली ॥

**जलालोका**, स्त्री, (जले आलोक्यते दृश्यते इति ।

आ + लोक दर्शने + कर्म्मणि घञ् ।) जलौका ।
इत्यमरटीकायां भरतः ॥

**जलावर्त्तः**, पुं, (जलस्य आवर्त्तः सम्भमः ।) जल-

गुल्मः । अम्भसां भ्रमः । इति जटाधरः ॥

**जलाशयं**, क्ली, (जले जलबहुलप्रदेशे आशेते

इति । आ + शी + अच् ।) उशीरम् । इत्यमरः । २ । ४ । १६४ ॥ लामज्जकम् । इति राजनिर्घण्टः ॥ (जलशायिनि, त्रि । यथा, महाभारते । ३ । १४३ । ५४ ।
"ततः सत्त्वान्युपाक्रामन् सुबहूनि महान्ति च ।
रुरुवानरसिंहांश्च महिषांश्च जलाशयान् ॥")

**जलाशयः**, पुं, (जलस्य आशय आधारः ।)

जलाधारः । स तु पुष्करिण्यादिः ।
इत्यमरः ।
१ । १० । २६ ॥ (यथा, मनुः । ४ ।
१२९ ।
"न स्नानमाचरेद्भुक्त्रा नातुरो न
महानिशि ।
न वासोभिः सहाजस्रं नाविज्ञाते
जलाशये ॥"
जलं आशेते तिष्ठत्यत्र । आ + शी +
"पुंसि
संज्ञायां घः प्रायेण ।" ३ । ३ । ११८ ।
इति
घः ।) समुद्रः । इति हेमचन्द्रः ॥
शृङ्गाटकः ।
इति राजनिर्घण्टः ॥

**जलाशया**, स्त्री, (जले जलसमीपे आशेते उद्भव-

तीति । आ + शी + अच् । स्त्रियां टाप् ।)
गुण्डालावृक्षः । इति राजनिर्घण्टः ॥

**जलाश्रयः**, पुं, (जले जलप्रचुरप्रदेशे आश्रय उत्-

पत्तिस्थानं यस्य ।) वृत्तगुण्डतृणम् ।
इति राज-
निर्घण्टः ॥

**जलाश्रया**, स्त्री, (जले जलबहुलप्रदेशे आश्रयो

यस्याः ।) शूलीतृणम् । बलाका । इति
राज-
निर्घण्टः ॥

**जलाष्ठीला**, स्त्री, (जलेनाष्ठीला संहता ।) पुष्क-

रिणी । इति हारावली । ४२ ॥

**जलाह्वयं**, क्ली, (जले आह्वयः स्पर्द्धा यस्य ।)
उत्-

पलम् । इति राजनिर्घण्टः ॥

**जलिका**, स्त्री, (जलं उत्पत्तिस्थानत्वेनास्त्यस्याः
।

जल + "अत इनिठनौ ।" ५ । २ ।
११५ । इति ठन्
स्त्रियां टाप् ।) जलौका । इत्यमरटीकायां
भरतः ॥

**जलेवाहः**, पुं, (जले जलमध्ये वाहते जलमग्न-

द्रव्यस्य लाभार्थं प्रयतते इति । वाह प्रयत्ने +
अच् ।) जातिविशेषः । डुवरु इति भाषा ॥
यथा, पाद्म पातालखण्डे ।
"जलेवाहानथाहूय बहूंस्तत्र न्ययोजयत् ।
तत् कृत्वा परमं यत्नमापुराभरणं न तत् ॥"

**जलेशयः**, पुं, (जले शेते इति । शी + अच् ।

"तत्पुरुषे कृतीति ।" अलुक् ।) मत्स्यः । इति
त्रिकाण्डशेषः ॥ (कारणतोयशायित्वात् विष्णुः ।
यथा, हरिवंशे । २२ । ६८ ।
"नमोऽस्त्वनन्तपतये अक्षयाय महात्मने ।
जलेशयाय देवाय पद्मनाभाय विष्णवे ॥"
महादेवः । यथा, महाभारते । १३ । १७ । ९८ ।
"तुम्बवीणो महाक्रोध ऊर्द्ध्वरेता जलेशयः ॥"
जलाशायिनि, त्रि ॥)

**जलेश्वरः**, पुं, (जलस्य ईश्वरः ।) वरुणः । इति

शब्दरत्नावली ॥ (यथा, महाभारते । १ । २२६ । ३
।
"तमब्रवीत् धूमकेतुः प्रतिगृह्य जलेश्वरम् ।
चतुर्थं लोकपालानां देवदेवं सनातनम् ॥"
जलानामाश्रयत्वात्) समुद्रश्च ॥

**जलोका**, स्त्री, (जलमोकं आश्रयो यस्याः । पृषो-

दरादित्वात् साधुः ।) जलौका । इत्यभर-
टीकायां भरतः ॥

**जलोच्छ्वासः**, पुं, (जलानां उच्छ्वासः ।) जलाशयं

परिपूर्य्य समधिकजलस्य सर्व्वतो वहनम् । इति
केक्कटः ॥ समधिकजलस्योपायैर्निष्कासनम् ।
इति स्वामी ॥ जलात्युपचये पुष्करिण्यादावुपायेन-
जलनिष्कासनम् । इति सर्व्वस्वम् ॥ सेतुभङ्गादि-
भयेन जलाशयादुपायैर्ज्जलवहिष्करणम् ।
इत्यन्ये ॥ पुष्करिण्यादौ जलप्रवेशार्थमुपायः
मुयान् इति ख्यात इत्येके । इति भरतः ॥
तत्पर्य्यायः । परीवाहः २ । इत्यमरः । १ । १० ।
१० ॥

**जलोदरं**, क्ली, (जलप्रधानं उदरं यस्मात् ।)

जठरामयः । तस्य निदानादि यथा, --
"यः स्नेहपीतोऽप्यनुवासितो वा
वान्तो विरिक्तोऽप्यथवा निरूढः ।
पीतन्तूदरमेवञ्च तस्माज्जातं जलोदरम् ।
उदरं सजलं यस्य सघोषमतिवर्द्धितम् ॥
श्वयथुः पादयोः शोथो जलोदरस्य लक्षणम्
।
विरेकं वमनं कुर्य्यात् पाचनानि च कारयेत्
॥
क्षारयोगश्च वटकस्तेन तदुपशाम्यति ।
तस्मान्नाभेर्वलीभागे वज्जयित्वाङ्गुलद्वयम्
॥
जलनाडीञ्चानुमन्य कुशपत्रेण वेष्टयेत् ।
एरण्डजलनालञ्च तत्र सञ्चारयेद्बुधः ॥
अन्तर्गतं जलं स्राव्यं ततः सन्धारयेद्द्रुतम्
।
यदा न धरते तच्च तदा दाहः प्रशस्यते ॥
कणा कल्कं परिस्राव्य घृतं देयं चतुर्गुणम् ।
शुण्ठी विषा समं पाच्यं पानमालेपनं हितम्
॥
शस्त्रकर्म्म भिषक् श्रेष्ठो विज्ञातेनैव कारयेत्
।
दुष्करं शस्त्रकर्म्मैव न कुर्य्यत् यत्र तत्र तु ॥
अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो
भवेत् ।
तस्मादवश्यकर्त्तव्यमीश्वरंसाक्षिकारिणा
॥" * ॥)

**जलोद्भवा**, स्त्री, (जले उद्भवो यस्याः ।) लघु-

ब्राह्मी । इति राजनिर्घण्टः ॥
(कालानुशारिवा ।
शिउली छोपरं इति च यस्य ख्यातिः ।
यथास्याः पर्य्यायाः ।
"शीतली शीतकुम्भी च शुक्लपुष्पा
जलोद्भवा ।
कालानुशारिवा तस्याः प्रवाहो नतवद्गुणैः
॥"
इति वैद्यकरत्नमालायाम् ॥)

**जलोद्भूता**, स्त्री, (जले उद्भूता ।) गुण्डालाक्षुपः ।

इति राजनिर्घण्टः ॥

**जलोरगी**, स्त्री, (जले उरगी सर्पिणीव ।)

जलौका । इत्यमरटीकासारसुन्दरी ॥

**जलौकसः**, स्त्री, (जले ओको वासस्थानं यासाम् ।)

**जलुका**, स्त्री, (जले तिष्ठतीति । जल + बाहुलकात्
उकः ।) जलौका । इति शब्दरत्नावली ॥

**जलूका**, स्त्री, (जलुका । पृषोदरादित्वात् दीर्घः ।)
जलौका । इति हेमचन्द्रः । ४ । २७० ॥ (यथा,
देवीभागवते । १ । १५ । १८ ।
"जलूकेव सदा नारी रुधिरं पिबतीति वै ।
मूर्खस्तु न विजानाति मोहितो भावचेष्टितैः ॥")

**जलेचरः**, पुं, (जले चरतीति । चर + "चरेष्टः ।"
३ । २ । १६ । इति टः । "तत्पुरुषे कृति बहु-
लम् ।" ६ । ३ । १४ । इत्यलुक् ।) जलचर-
पक्षी । स तु हंसमद्गुवकादिः । तस्य मांस-
गुणाः । गुरुत्वम् । उष्णत्वम् । स्निग्धत्वम् । मधु-
रत्वम् । वायुनाशित्वम् । शुक्रकारित्वञ्च । इति
राजवल्लभः ॥ (जलचारिणि, त्रि । यथा, महा-
भारते । १ । २१७ । ११ ।
"स तमादाय कौन्तेयो विस्फुरन्तं जलेचरम् ।
उदतिष्ठन्महाबाहुर्ब्बलेन बलिनां वरः ॥")

**जलेच्छया**, स्त्री, (जलमेतीति जलेत् जलप्रचुर-
स्थानम् । इ + क्विप् । तत्र शेते उद्भवतीति ।
शी + अच् । स्त्रियां टाप् ।) हस्तिशुण्डा-
वृक्षः । इति शब्दरत्नावली ॥

**जलेजातं**, क्ली, (जले जातमुत्पन्नम् ।) पद्मम् ।
इति शब्दरत्नावली ॥

**जलेन्द्रः**, पुं, (जलस्य इन्द्रः अधिपतिः ।) वरुणः ।
महोदधिः । जम्भलः । इति मेदिनी । रे, १५८ ॥

पिबेज्जलं शीतलमाशु तस्य
स्रोतांसि दुष्यन्ति हि तद्वहानि ॥
स्नेहोपलिप्तेष्वथवापि तेषु
दकोदरं पूर्ब्बवदभ्युपैति ।
स्निग्धं महत्तत् परिवृत्तनाभि-
समाततं पूर्णमिवाम्बुना च ॥
यथा दृतिः क्षुभ्यति कम्पते च
शब्दायते चापि दकोदरन्तत् ॥
जन्मनैवोदरं सर्व्वं प्रायः कृच्छ्रतमं मतम् ।
बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम् ॥"
इति माधवकरः ॥
(अस्य सकारणलक्षणचिकित्सितंयथा,
हारीते चिकित्सितस्थाने २७ अध्याये ।
आत्रेय उवाच ।
"विषमाशनोपवेशात् पीततोयादथापि वा ।
श्रमाध्वश्वासनिष्क्रान्तादतिव्यायामतोऽपिवा ॥

जलौका । सान्तबहुवचनान्तोऽयं शब्दः । इत्य-
मरः । १ । १० । २२ ॥

**जलौकसः**, पुं, स्त्री, (जलमेव ओको वासस्थानं
तदस्त्यस्येति । अर्शआदित्वादच् ।) जलौका ।
इत्यमरटीकायां रायमुकुटः ॥ अकारान्तोऽयम् ॥

**जलौकाः**, [स्] स्त्री, (जलमेव ओको वसतिस्थानं
यस्याः ।) जलौका । इति भरतः ॥ (यदुक्तम् ।
"गृह्णाति साधुरपरस्य गुणं न दोषं
दोषान्वितो गुणिगुणं परिहाय दोषम् ।
बालस्तनात् पिबति दुग्धमसृग्विहाय
त्यक्त्रा पयो रुधिरमेव न किं जलौकाः ॥"
जलवासिनि, त्रि । यथा, महाभारते । १३ । ५० । १० ।
"जलोकसां स सत्त्वानां बभूव प्रियदर्शनः ॥"
विवरणमस्या यथा, --
"नृपाढ्य-बाल-स्थविर-भीरु-दुर्ब्बल-नारीसुकु-
माराणामनुग्रहार्थं परमसुकुमारोऽयं शोणि-
तावसेचनोपायोऽभिहितो जलाकसः । तत्र
वातपित्तकफ-दुष्ट-शोणितं यथासङ्ख्यं शृङ्ग-
जलौकालावुभिरवसेचयेत् स्निग्धशीतरूक्षत्वात्
सर्व्वाणि सर्व्वर्व्वा ॥"
"उष्णं समधुरं स्निग्धं गवा शृङ्गं प्रकीर्त्तितम् ।
तस्माद्वातोपसृष्टे तु हितं तदवसेचने ॥
शीताधिवासा मधुरा जलौका वारिसम्भवा ।

**जलेन्धनः**, पुं, (जलान्येव इन्धनानि यस्य ।) वाड-

वाग्निः । इति भूरिप्रयोगः ॥

**जलेरुहा**, स्त्री, (जले रोहति उद्भवतीति । रुह

+ कः । "तत्पुरुषे कृतीति ।" अलुक् ।)

कुटुम्बिनीवृक्षः । इति राजनिर्घण्टः ॥

तस्मात् पित्तोपसृष्टे तु हिता सा त्ववसेचने ॥
अलावुकटुकं रूक्षं तीक्ष्णञ्च परिकीर्त्तितम् ।
तस्मात् श्लेष्मोपसृष्टे तु हितं तदवसेचने ॥"
"अथ जलायुका वक्ष्यन्ते ।
जलमासामायुरिति
जलायुका जलमासामोक इति जलौकसः ।
ता द्वादश, तासां सविषाः षट् तावत्य एव निर्व्विषाः । तत्र सविषाः कृष्णा कर्व्वुरा अलगर्द्दा इन्द्रायुधा सामुद्रिका गोचन्दना चेति ।
तास्वञ्जनचूर्णवर्णा पृथुशिराः कृष्णा । वर्म्मिमत्स्यवदायता छिन्नोन्नतकुक्षिः कुर्व्वुरा ।
रोमशा महापार्श्वा कृष्णमुख्यलगर्द्दा । इन्द्रायुधवदूर्द्ध्वराजिभिश्चित्रा इन्द्रायुधा ।
ईषदसित-
पीतिका विचित्रपुष्पाकृतिचित्रा सामुद्रिका ।
गोवृषणवदधोभागे द्विधाभूताकृतिरणुमुखी गोचन्दनेति । ताभिर्द्दष्टे पुरुषे दंशे श्वयथुरतिमात्रं कण्डूर्मूर्च्छा ज्वरोदाहश्छर्द्दिर्म्मदः सदनमिति लिङ्गानि भवन्ति । तत्र महागदः पानालेपननस्यकर्म्मादिषूपयोज्यः ।
इन्द्रायुधा-
दष्टमसाध्यमित्येताः सविषाः सचिकित्सिता व्याख्याताः ।

अथ निर्व्विषाः । कपिला पिङ्गला शङ्कुमुखी

मूषिका पुण्डरीकमुखी सावरिका चेति ।
तत्र मनःशिलारञ्जिताभ्यामिवपार्श्वाभ्यां पृष्ठे स्निग्धमुद्गवर्णा कपिला । किञ्चिद्रक्ता वृत्तकाया
पिङ्गाशुगा च पिङ्गला । यकृद्वर्णा शीघ्रपायिनी दीर्घतीक्ष्णमुखी शङ्कुमुखी मूषिकाकृतिवर्णाऽनिष्टगन्धा च मूषिका । मुद्गवर्णा पुण्डरीकतुल्यवक्त्रा पुण्डरीकमुखी । स्निग्धा पद्मपत्रवर्णा-
ष्टादशाङ्गुलप्रमाणा सावरिका सा च पश्वर्थे ।
इत्येता अविषा व्याख्याताः । तासां यवनपाण्ड्यसह्यपौतनादीनि क्षेत्राणि । तेषु महाशरीरा बलवत्यः शीघ्रपायिन्यो महाशना निर्व्विषाश्च विशेषेण भवन्ति । तत्र सविषमत्स्य-
येत् । सूक्ष्मशुक्लार्द्रपिचुप्लोतावच्छन्नांकृत्वा मुखमपावृणुयादगृह्णन्त्यै क्षीरबिन्दुं शोणितबिन्दुं वा दद्याच्छस्त्रपदानि वा कुर्व्वीत यद्येवमपि न गृह्णीयात्तदन्यां ग्राहयेत् । यदा च निविशतेऽश्वखुरवदाननं कृत्वोन्नम्य च स्कन्धं
तदा जानीयाद् गृह्णातीति गृह्णन्तीञ्चार्द्रवस्त्रावच्छन्नां धारयेत् सेचयेच्च । दंशे तोदकण्डूप्रादुर्भावैर्ज्जानीयाच्छुद्धमियमादत्त इति शुद्धमाददानामपनयेत् । अथ शोणितगन्धन न मुञ्चेन्मुखमस्याः सैन्धवचूर्णेनावकिरेत् । अथ पतितां तण्डुलकण्डनप्रदिग्धगात्रीं तैललवणा-
भ्यक्तमुखीं वामहस्ताङ्गुष्ठाङ्गुलीभ्यां गृहीतपुच्छां दक्षिणहस्ताङ्गुष्ठाङ्गुलीभ्यां शनैः शनैरनुलोमानुमार्ज्जयेदामुखाद्वामयेत्तावद् यावत् सम्यग्वान्तलिङ्गानीति । सम्यग्वान्ता सलिल-
सरकन्यस्ता भोक्तुकामा सती चरेत् । या सीदति न चेष्टते सा दुर्व्वान्ता तां पुनः सम्यग्-
वामयेत् । दुर्व्वान्ताया व्याधिरसाध्य इन्द्रमदो नाम भवति । अथ सुवान्तां पूर्ब्बवत् सन्निदध्यात् शोणितस्य च योगायोगानवेक्ष्य जलौको
व्रणान्मधुनावघट्टयेच्छीताभिरद्भिश्च परिषेचयेद्बध्नीत वा व्रणं कषायमधुर-स्निग्धशीतैश्च प्रदेहैः प्रदिह्यादिति ।"
"क्षेत्राणि ग्रहणं जातीः पोषणं सावचारणम् ।
जलौकसाञ्च योवेत्ति तत् साध्यान् स जयेद्गदान् ॥"
इति सूत्रस्थाने त्रयोदशाध्याये सुश्रुतेनोक्तम् ॥)

**जलौका**, स्त्री, (जलमेव ओकं वसतिस्थानं यस्याः ।) जलजन्तुविशेषः । जौँक इति भाषा ।
तत्पर्य्यायः । रक्तपा २ जलौकसः ३ इत्यमरः । १ । १० । २२ ॥ जलूका ४ जलाका ५
जलौकाः ६ जलोरगी ७ जलायुका ८ जलिका ९
इति जटाधरो गौतमश्च ॥ ("यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भोजल्पः ॥"
इति न्यायसूत्रम् । १ । ४२ ॥
"स वादो द्विविधः संग्रहेण जल्पो वितण्डा च ।
तत्र पक्षाश्रितयोर्व्वचनं जल्पः ।"
"यथैकस्य पक्षः पुनर्भवोऽस्तीति
नास्तीत्यपरस्य
तौ च स्वपक्षं स्वस्वहेतुभिः
स्थापयतस्तत्परपक्ष-
मुद्भावयतः एषः जल्पः ।" इति चरके विमानस्थानेऽष्टमेऽध्याये ॥) कथा । (यथा, भागवते । १ । ७ । १७ ।
"इति प्रियां वल्गुविचित्रजल्पैः
स सान्त्वयित्वाच्युतमित्रसूतः ॥")

**जल्पनं**, क्ली, (जल्प + भावे ल्युट् ।) कथनम् ।
यथा, --
"किं मिथ्या शतजल्पनेन सततं रे वक्त्र रामं वद ॥"
इत्युद्भटः । (जल्पतीति । जल्प + नन्द्यादित्वात्
ल्युः । कथके, त्रिं ॥)

**जल्पाकः**, त्रि, (जल्पतीति । जल्प + "जल्पभिक्षकुट्टलुण्टवृङः षाकन् ।" ३ । २ । १५५ । इति
षाकन् ।) बहुकुत्सितभाषी । तत्पर्य्यायः ।
वाचालः २ वाचाटः ३ बहुगर्ह्यवाक् ४ ।
इत्यमरः । ३ । १ । ३६ ॥ (स्त्रियां षित्वात् ङीप् ।
यथा, भट्टिः । ७ । १९ ।
"जल्पाकीभिः सहासीनः स्त्रीभिः प्रजविना त्वया ॥")

**जल्पितं**, त्रि, (जल्प्यते स्म इति । जल्प + क्तः ।
उक्तम् । इत्यमरः । ३ । १ । १०७ ॥ (यथा, पञ्चतन्त्रे । १ । १४९ । "भो भो गोरम्भ ! सत्यमेतत् यत् त्वया जल्पितम् । किं देवी दन्तिलेन समालिङ्गिता ॥") कथने, क्ली ।
(यथा, पञ्चतन्त्रे । २ । १३२ ।

कीटदर्दुरमूत्रपुरीषकोषजाताः कलुषेष्वम्भःसु च सविषाः ।
पद्मोत्पलनलिनकुमुदसौगन्धिक-
कुवलयपुण्डरीकशैवालकोथजाता विमलेषु
अम्भःसु च निर्व्विषाः ॥”
“क्षेत्रेषु विचरन्त्येताः सलिलेषु सुगन्धिषु ।
न च सङ्कीर्णचारिण्यो न च पङ्केशयाः सुखाः ॥”
“अथैनां नवे महति घटे सरस्तडागोदकपङ्क-
मावाप्य निदध्यात् । भक्षार्थे चासामुपहरे-
च्छैबलं वल्लूरमौदकांश्च कन्दांश्चूर्णीकृत्य शय्यार्थं
तृणमौदकानि च पत्राणि । द्व्यहात्त्र्यहा-
च्चान्यज्जलं भक्ष्यं च दद्यात् सप्तरात्रात् सप्त-
रात्राच्च घटमन्यं संक्रामयेत् ॥”
“स्थूलमध्याः परिक्लिष्टाः पृथ्व्वो मन्दविचेष्टिताः ।
अग्राहिण्योऽल्पपायिन्यः सविषाश्च न पूजिताः ॥
अथ जलौकोऽवसेकसाध्यव्याधितमुपवेश्य संवेश्य
वा विरुक्ष्य चास्य तमवकाशं मृद्गोमयचूर्णैर्यद्य-
रुजः स्यात् । गृहीताश्च ताः सर्षपरजनी-
कल्कोदकप्रदिग्धगात्रीः सलिलसरकमध्ये मुहूर्त्त-
स्थिता विगतक्लमा ज्ञात्वा ताभी रोगं ग्राह-
जलासुका १० जलजन्तुका ११ वेणी १२ जला-
लोका १३ जलौकसः १४ जलौकसी १५ ।
इति भरतः ॥ जलौकसम् १६ जलौकसा १७ ।
इति रायमुकुटः ॥ रक्तपायिनी १८ रक्तसन्द-
शिका १९ तीक्ष्णा २० वमनी २१ जल-
जीवनी २२ । इति राजनिर्घण्टः ॥ रक्तपाता २३
वेधिनी २४ जलसर्पिणी २५ जलसूचिः २६
जलाटनी २७ जलाका २८ जलपटात्मिका २९
जलिका ३० जलालुका ३१ । इति शब्दरत्ना-
वली ॥ (यथा सुश्रुते शारीरस्थानेऽष्टमेऽध्याये ।
“सिरा-विषाणतुम्बैस्तु जलौकाभिः पदैस्तथा ।
अवगाढं यथापूर्ब्बं निर्हरेद्दुष्टशोणितम् ॥”
अस्या विवरणमन्यत् सविस्तरं जलौकःशब्दे
व्याख्यातम् ॥)

**जल्प**, वाचि । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) अन्तःस्थतृतीयोपधः । जल्पति ।
इति दुर्गादासः ॥ (यथा, महाभारते । ७ ।
१४६ । १२ ।
“नारिं जित्वा विकत्थन्ते नच जल्पन्ति
दुर्व्वचः ॥”)

**जल्पः**, पुं, (जल्प वाचि + घञ् ।) विजिगीषोः
कथा । परमतखण्डनपूर्ब्बकं
स्वमतव्यवस्थापनम् ।
“सा प्राह भो प्रियतम ! मिथ्याजल्पितमेतत् ॥”)

**जवः**, पुं, (जवनमिति । जु वेगगतौ + “ऋदो-
रप् ।” ३ । ३ । ५७ । इति अप् ।) वेगः ।
(यथा, महाभारते । ३ । १४१ । २१ ।
“यस्य बाहूबले तुल्यः प्रभावे च पुरन्दरः ।
जवे वायुर्म्मुखे सोमः क्रोधे मृत्युः सनातनः ॥”)
वेगवति, त्रि । इति मेदिनी । वे, ७ ॥

**जवनं**, क्ली, (जु वेगगतौ + भावे ल्युट् ।) वेगः ।
इत्यमरः । ३ । २ । ३९ ॥

**जवनः**, पुं, (जु + “जुचङ्क्रम्येति ।” ३ । २ । १५० ।
इति युच् ।) वेगः । वेगयुक्ताश्वः । देश-
विशेषः । इउनान इति पारस्यभाषा । इति
हेमचन्द्रः ॥ श्रीकारी मृगः । घोटकः । इति
राजनिर्घण्टः ॥ म्लेच्छजातिविशेषः । एष पूर्ब्बं
जवनदेशोद्भवः क्षत्त्रिय आसीत्
सगरराजेनास्य
सर्व्वशिरोमुण्डनं सर्व्वधर्म्मवहिष्कृतत्वञ्च चकार ।
इति हरिवंशः ॥ (स्कन्दस्य सैनिकविशेषः
यथा, महाभारते । ९ । ४५ । ७२ ।
“शृणु नामानि चाप्येषां येऽन्ये स्कन्दस्य
सैनिकाः ॥”

इत्युपक्रम्याह ।
"लोहाजवक्त्रो जवनः कुम्भवक्त्रश्च कुम्भकः ॥")
वेगयुक्ते त्रि । इति मेदिनी । ने, ६६ ॥ (यथा, महाभारते । ३ । १६ । १६ ।
"अपायाज्जवनैरश्वैः शाम्बबाणप्रपीडितः ॥")

**जवनालं**, क्ली, (जवनाय अलति पर्य्याप्नोतीति । अल + अच् ।) फलविशेषः । जनार इति भाषा ॥ अस्य गुणाः । स्वादुत्वम् । शीतत्वम् । वायुकारि-
त्वम् । कफपित्तनाशित्वञ्च । इति राजवल्लभः ॥

**जवनिका**, स्त्री, (जवनं वेगेन प्रतिरोधनमस्त्यस्याः । जवन + ठन् । टाप् च ।) व्यवधायकवस्त्रम् । कानात् इति भाषा ॥ तत्पर्य्यायः । प्रतिसीरा २ तिरस्करिणी ३ । इत्यमरः । २ । ६ । १२० ॥ यव-
निका ४ यमनिका ५ तिरस्कारिणी ६ । इति तट्टीका ॥ अन्तस्पटः ७ पटी ८ चित्रा ९ काण्ड-
पटः १० । इति शब्दरत्नावली ॥ (यथा, माघे । ४ । ५४ ।
"समीरशिशिरः शिरःसु वसतां
सतां जवनिका निकामसुखिनाम् ॥")

**जवनी**, स्त्री, (जूयते आच्छाद्यतेऽनया । जु + करणे ल्युट् । स्त्रियां ङीप् ।) अपटी । कानात् इति भाषा ॥ (यथा, आर्य्यासप्तशत्याम् । ५३८ ।
"व्रीडाप्रसरः प्रथमं तदनु च रसभावपुष्टचेष्टेयम् ।
जवनीविनिर्गमादनु नटीव दयिता मनो हरति ॥")
ओषधीभेदः । इति हेमचन्द्रः ॥ (जवनजातिस्त्री ।
यथाह ।
"जवनी नवनीतकोमलाङ्गी
शयनीये यदि नीयते कथञ्चित् ॥"
वेगशीला । यथा, ऋग्वेदे । १ । ५१ । २ ।
"इन्द्रं दक्षासऋभवो मदच्युतं

**जवादि**, क्ली, सुगन्धिद्रव्यभेदः । तत्पर्य्यायः । गन्ध-
राजम् २ कृत्रिमम् ३ मृगघर्म्मजम् ४ समूह-
गन्धम् ५ गन्धाढ्यम् ६ स्निग्धम् ७ साम्राणि-
कर्द्दमम् ८ सुगन्धतैलनिर्य्यासम् ९ कटुमोदम् १० ।
अस्य लक्षणम् । नीरसत्वम् । स्निग्धत्वम् । ईषत्पिङ्गत्वम् । सुगन्धदत्वम् । आतपे बहला-
मोदत्वम् । राज्ञां योग्यत्वञ्च । अस्य गुणाः । सौगन्धिकत्वम् । स्निग्धत्वम् । उष्णत्वम् । सुखा-
वहत्वम् । वाते हितत्वम् । राज्ञां मोहना-
ह्लादकारकत्वञ्च । इति राजनिर्घण्टः ॥

**जवाधिकः**, पुं, (जवेन वेगेन अधिकः ।) वेगाधिक-
घोटकः । इत्यमरः । २ । ८ । ४५ ॥ अतिशय-
वेगयुक्ते, त्रि ॥

**जवापुष्पं**, क्ली, (जवायाः स्वनामख्यातवृक्षस्य पुष्पम् । यद्वा, जवैव पुष्पम् ।) ओड्रपुष्पम् । इति शब्दरत्नावली ॥

**जवी**, [न्] त्रि, (जवो तेगः सोऽस्यास्तीति । जव + इनिः ।) वेगयुक्तः । इति हेमचन्द्रः । ३ ।
१५८ ॥ (यथा, याज्ञवल्क्ये । २ । १११ ।
"समकालमिषुं क्षिप्तमानीयान्यो जवी नरः ।
गतेतस्मिन् निमग्नाङ्गं पश्येच्चेत् शुद्धिमाप्नुयात् ॥"
पुं, उष्ट्रः । घोटकः । इति राजनिर्घण्टः ॥

**जष**, ञ वधे । इति कविकल्पद्रुमः ॥ (भ्वां-उभं-
सकं-सेट् ।) ञ, जषति जषते । परस्मैपदी-
त्यन्ये । इति दुर्गादासः ॥

**जस**, इ क रक्षणे । इति कविकल्पद्रुमः ॥ (चुरां-
परं-सकं-सेट् ।) इ क, जंसयति । इति दुर्गा-
दासः ॥

**जस**, उ इर् य मोक्षे । इति कविकल्पद्रुमः ॥

आशनशयनाटनस्नानादिषुसह मृगजहुना
स्नेहानुबद्धहृदयः आसीत् ।" इति श्रीभागवते
पञ्चमस्कन्धे आदिभरतचरिते । ८ । ११ ॥
"इत्येवं कृतोऽनुषङ्गो आसक्तिर्य्येन ।
मृगजहुना
मृगापत्येन सह । स्नेहानुबद्धं हृदयं येन ।"
इति तट्टीकायां श्रीधरस्वामी ॥

**जह्नुः**, पुं, (जहातीति । हा + "जहातेर्द्वे अन्त-
लोपश्च ।" उणां । ३ । ३६ । इति नुः द्वित्व-
मन्तलोपश्च ।) विष्णुः । राजर्षिभेदः । स चन्द्रवंशोद्भवकुरुराजपुत्रः । गङ्गागमनकाले येन
गङ्गा पीता पुनर्भगीरथप्रार्थनेन ऊरुं भित्त्वा
वहिर्निर्गमिता तेन सा जाह्नवीति ख्याता ।
इति रामायणम् ॥

**जह्नुतनया**, स्त्री, (जह्नोस्तनया ।) गङ्गा । इत्य-
मरः । १ । १० । ३१ ॥

**जह्नुसप्तमी**, स्त्री, (जह्नोः सप्तमी । अस्यां तिथौ
जह्नमुनिना हि गङ्गा पीता पुनस्त्यक्ता अतो-
ऽस्यास्तथात्वम् ।) वैशाखशुक्लसप्तमी । तन्नाम-
कारणं यथा वाराहे नारदाम्बरीषसंवादे ।
"वैशाखशुक्लसप्तम्यां जाह्नवी जह्नना पुरा ।
क्रोधात् पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणात् ॥
तस्यां समर्च्चयेद्देवीं गङ्गां भुवनमेखलाम् ।
स्नात्वा सम्यग्विधानेन स धन्यः सुकृती नरः ॥
तस्यां सन्तर्पयेद्देवान् पितॄन् मर्त्यान् यथाविधि ।
साक्षात् पश्यन्ति ते गङ्गास्नातकं गतपातकम् ॥"
इति श्रीहरिभक्तिविलासे १४ विलासः ॥
अपि च उत्तरकामाख्यातन्त्रे ११ पटले ।
"शुक्लपक्षस्य सप्तभ्यां वैशाखे जह्नपुत्रिकाम् ।
प्रपूजयेत् सुखार्थाय स्वर्गमोक्षफलाप्तये ॥"

**जह्नुसुता**, स्त्री, (जह्नोः सुता ।) गङ्गा । इति

शतक्रतुं जवनी सूनृतारुहत् ॥”)

**जवसं**, क्ली, (जूयते भक्षार्थं प्राप्यते गवादिभि-

रिति । जु + बाहुलकात् कर्म्मणि असच् ।)
घासः । इति शब्दरत्नावली ॥

**जवा**, स्त्री, (जवते रक्तवर्णत्वं गच्छतीति । जु

गतौ + अच् । ततष्टाप् ।) स्वनामख्यातपुष्प-
वृक्षः । तत्पर्य्यायः । ओड्रपुष्पम् २ । इत्य-
मरः । २ । ४ । ७६ ॥ जपा ३ ओड्राख्या ४
रक्तपुष्पी ५ अर्कप्रिया ६ रागपुष्पी ७ प्रतिका
८
हरिवल्लभा ९ । (यथा, माघे । ६ । ४६ ।
“अनुवनं वनराजिबधूमुखे
बहलरागजवाधरचारुणि ॥”)
अस्या गुणाः । कटुत्वम् । उष्णत्वम् । इन्द्र
लुप्तविनाशकारित्वम् । विच्छर्द्दिजन्तुजनकत्वम्
।
सूर्य्याराधनसाधनत्वञ्च । इति राजनिर्घण्टः ॥
मलमूत्रस्तम्भनरञ्जनकारित्वम् । इति राज-
वल्लभः ॥
(यस्मिन्निय़ं व्यवह्रियते तद्यथा, --
“सकाञ्जिकं जवापुष्पं भृष्टं ज्योतिष्मतीदलम् ।
दूर्व्वापिष्टञ्च संप्राश्य वनिता त्वार्त्तवं लभेत् ॥”
इति वैद्यकचक्रपाणिसंग्रहे योनिव्यापदधिकारे
॥)

(दिवां-परं-सकं-सेट् । उदित्त्वात् क्त्रावेट् ।)
उ, जसित्वा जस्त्वा । इर्, अजसत्
अजासीत् ।
अस्मात् पुषादित्वात् नित्यं ङ इत्यन्ये । य,
जस्यति वत्सं गोपः । इति दुर्गादासः ॥

**जस**, क वधे । अनादरे । इति कविकल्पद्रुमः ॥

(चुरां-परं-सकं-सेट् ।) क, जासयति । इति
दुर्गादासः ॥

**जसुरिः**, पुं, (जस्यते मुच्यते हन्यते वाऽनेनेति ।

जस + “जसिसहोरुरिन् ।” उणां । २ ।
७३ ।
इति उरिन् ।) वज्रम् । इत्युणादिकोषः ॥

**जहकः**, पुं, (जहाति परित्यजतीति । ओ हाक

लि त्यागे + “जहातेर्द्वे च ।” उणां । २ ।
३४ ।
इति क्वुन् द्वित्वञ्च ।) कालः । इति
त्रिकाण्ड-
शेषः ॥ त्यागकर्त्तरि, त्रि । इत्युणादिकोषः
॥
बालः । निर्म्मोहः । निर्म्मोकः । इति
संक्षिप्तसारे
उणादिवृत्तिः ॥

**जहा**, स्त्री, (जहातीति । हा + बाहुलकात् शः ।)

मुण्डितिका । इति शब्दचन्द्रिका ॥ मुण्डिरी
इति भाषा ॥

**जहानकः**, पुं, प्रलयः । इति हेमचन्द्रः । २ ।

७५ ॥

**जहुः**, पुं, (जहातीति । हा + बाहुलकात् उन्

द्वित्वञ्च ।) अपत्यम् । यथा । “इति
कृतानुषङ्ग

राजनिर्घण्टः ॥ (यथा, महाभारते । १ । ९८ ।
१८ ।
“अहं गङ्गा जह्नुसुता महर्षिगणसेविता ॥”)

**जा**, स्त्री, (जायते सम्बन्धिनी या । जन + बाहु-

लकात् डः ।) याता । भर्त्तुर्भ्रातृपत्नी ।
इत्येका-
क्षरकोषः ॥

**जागरः**, पुं, स्त्री, (जागृ जागरणे + भावे घञ् ।

“जाग्रोऽविचीति ।” ७ । ३ । ८५ । इति
गुणः ।) जागरणम् । इत्यमरः । २ । ८ । ६४
॥
(यथा, आर्य्यासप्तशत्याम् । ३६० ।
“प्रोञ्छति तवापराधं मानं मर्द्दयति निवृत्तिं
हरति ।
स्वकृतान्निहन्ति शपथान् जागरदीर्घा निशा
सुभग ! ॥”
जागर्त्ति जीवति संग्रामस्थलेऽनेनेति । जागृ +
करणे घञ् ।) कवचे, पुं, । इति तट्टीका ॥

**जागरणं**, क्ली, (जागृ + भावे ल्युट् ।) निद्रा-

भावः । जागा इति भाषा ॥ तत्पर्य्यायः ।
जागर्य्या २ जागरा ३ जागरः ४ । इति हेम-
चन्द्रः ॥ जाग्रिया ५ जागर्त्तिः ६ । इत्यमर-
टीका ॥ (यथा, महाभारते । ३ । १२६ । १२
।
“रात्रिजागरणात् श्रान्ताः सौद्युम्निः समतीत्य-
तान् ॥”)

**जागरिता**, [ऋ] त्रि, (जागर्त्तीति । जागृ + तृच् ।) जागरणशीलः । इत्यमरः । ३ । १ । ३२ ॥

**जागरी**, [न्] त्रि, (जागरो जागरणमस्त्यस्येति । जागर + "अत इनिठनौ ।" ५ । २ । ११५ । इति इनिः ।) जागरूकः । इति हेमचन्द्रः । ३ । १०७ ॥

**जागरूकः**, त्रि, (जागर्त्तीति । जागृ + "जागरूकः ।" ३ । २ । १६५ । इति ऊकः ।) जागरणशीलः । जागरणकर्त्ता । तत्पर्य्यायः । जागरिता २ । इत्यमरः । ३ । १ । ३२ ॥ जागरी ३ । इति हेमचन्द्रः । ३ । १०७ ॥ (यथा, रघुः । १० । २४ ।
"अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।
स्वपतो जागरूकस्य याथार्थं वेद कस्तव ॥"
कर्त्तव्यपालनाद्यर्थं अप्रमत्तः । यथा, रघुः । १४ । ८५ ।
"निगृह्य शोकं स्वयमेव धीमान्
वणाश्रमावेक्षणजागरूकः ॥")

**जागर्त्तिः**, स्त्री, (जागृ + भावे क्तिन् ।) जागरणम् । इत्यमरटीकायां रायमुकुटः ॥

**जागर्य्या**, स्त्री, (जागृ + "जागर्त्तेरकारो वा ।" ३ । ३ । १०१ । इत्यस्य वार्त्तिकोक्त्या यक् । "जाग्रोऽविचीति ।" ७ । ३ । ८५ । इति गुणः ।) जागरणम् । इत्यमरः । ३ । १ । १९ ॥

**जागुडं**, क्ली, (जागुडे तदाख्यया प्रसिद्धे देशे भवमित्यण् ।) कुङ्कुमम् । इति त्रिकाण्डशेषः ॥ (देशविशेषः । यथा, माघे । २० । ३ ।
"अभिचैद्यमगाद्रथोऽपि शौरे-
रवनिं जागुडकुङ्कुमाभिताम्रैः ॥"
जागुडोऽभिजनोऽस्येत्यण् । तद्देशवासिनि, त्रि, ।

**जाग्रिया**, स्त्री, (जागृ + "जागर्त्तेरकारो वा ।" इति पक्षे शस्ततो रिङादेशः ।) जागरणम् । इत्यमरटीकायां रायमुकुटः ॥

**जाघनी**, स्त्री, (जघनस्य समीपम् । जघन + शैषिकोऽण् । ततः स्त्रियां ङीप् ।) ऊरुः । इति त्रिकाण्डशेषः ॥ (यथा, मनुः । १० । १०८ ।
"क्षुधार्त्तश्चात्तुमभ्यागाद्विश्वामित्रःश्वजाघनीम् ।
चण्डालहस्तादादाय धर्म्माधर्म्मविचक्षणः ॥"
विश्वामित्रस्य जाघनीहरणकथा महाभारते शान्तिपर्व्वणि १४१ अध्याये द्रष्टव्या ॥)

**जाङ्गलं**, क्ली, (जाङ्गलेषु स्थलजपशुविशेषेषु भवम् । जाङ्गल + अण् ।) मांसम् । इति हेमचन्द्रः ॥

**जाङ्गलः**, पुं, (जङ्गले भवः । जङ्गल + अण् ।) कपिञ्जलपक्षी । इति मेदिनी । ले, ९५ ॥ निर्व्वारिदेशः । इति शब्दरत्नावली ॥ (अस्य लक्षणं यथा, --
"स्वल्पोदकतृणो यस्तु प्रवातः प्रचुरातपः ।
स ज्ञेयो जाङ्गलो देशः बहुधान्यादिसंयुतः ॥")
भावप्रकाशमतेऽस्य लक्षणं यथा, --
"आकाशशुभ्र उच्चश्च स्वल्पपानीयपादपः ।
शमीकरीरविल्वार्कपीलुकर्कन्धुसङ्कुलः ॥
हरिणैणर्क्षपृषतगोकर्णखरसङ्कुलः ।
सुस्वादुफलवान् देशो वातलो जाङ्गलः स्मृतः ॥"
("खरपरुषविशालाः पर्व्वताः कण्टकीर्णाः
दिशि दिशि मृगतृष्णा भूरुहाः शीर्णपर्णाः ।
अतिखररविरश्मिः पांशुभृत् शुष्कभूमिः
सरसरसविहीनः कूपकाम्भःप्रकर्षः ॥
तदनुविरसशस्याद्दारुणोगोमनुष्यः
प्रभवति रसमांसं रूक्षभावञ्च सम्यक् ।
पुनरपि हिमवाहं शालिशस्यं न चेक्षु-
र्भवति रुधिरपित्तं कोपमाशु ह्युपैति ॥"
इति च हारीते प्रथमस्थाने चतुर्थेऽध्याये ॥)
तस्य गुणाः । वातपित्तकारित्वम् । उष्णत्वम् । रूक्षत्वञ्च । तद्देशीयजलगुणः । अनूपदेशात् विपरीतत्वम् । इति राजवल्लभः ॥ रूक्षत्वम् । लवणत्वम् । लघुत्वम् । तनुत्वम् । पथ्यत्वम् । वह्निकफबहुविकारकारित्वञ्च । इति भावप्रकाशः ॥ जङ्गलदेशोद्भवश्च ॥ सुखजरोगश्लीपदगलगण्डवाय्वाशित्वञ्च । इति भावप्रकाशः ॥ शीतत्वम् । मनुष्यहितत्वम् । इति राजवल्लभः ॥ * ॥

**जाङ्गलिः**, पुं, (जाङ्गलो जङ्गलभवः सर्पादिर्ग्राह्य-तयास्त्यस्यैति । जाङ्गल + बहुलवचनात् इञ् ।) व्यालग्राही । इति शब्दरत्नावली ॥

**जाङ्गली**, स्त्री, (जङ्गले भवा । जङ्गल + अण् । ततो ङीप् ।) शूकशिम्बी । इति । मेदिनी । ले, ९५ ॥ (यथास्याः पर्य्यायाः ।
"कपिकच्छुरात्मगुप्ता वृष्या प्रोक्ता च मर्कटी ।
अजरा कण्डुरा व्यङ्गा दुष्पर्शा प्रावृषायणी ॥
जाङ्गली शूकशिम्बी च सैव प्रोक्ता महर्षिभिः ॥"
इति भावप्रकाशस्य पूर्ब्बस्वण्डे प्रथमे भागे ॥)

**जाङ्गुलं**, क्ली, (जङ्गुलमेव । स्वार्थे अण् ।) विषम् । जानिलीफलम् । इति शब्दरत्नावली ॥

**जाङ्गुलिः**, पुं, (जङ्गुलं विषं व्यवहार्य्यतया विद्यते-ऽस्येति । जङ्गुल + बाहुलकात् इञ् ।) विषवैद्यः । इति शब्दरत्नावली ॥ सापुडे इति भाषा ॥

**जाङ्गुलिकः**, पुं, (जाङ्गुलो विषप्रधानः सर्पादि-र्ग्राह्यतयास्त्यस्येति । जाङ्गुल + टन् ।) व्यालग्राही । इत्यमरः । १ । ८ । ११ ॥

**जाङ्गुली**, स्त्री, (जङ्गुलस्य इयम् । "तस्येदम् ।" ४ । ३ । १२० । इत्यण् । ततो ङीप् ।) विषविद्या । इति हेमचन्द्रः ॥

यथा, महाभारते । ३ । ५१ । २४ ।
“जागुडान् रामठान् मुण्डान् स्त्रीराज्यानथ-
तङ्गनान् ॥”)

**जागृ,** क्ष लु जागरे । इति कविकल्पद्रुमः ॥

(अदां-परं-अकं-सेट् ।) क्ष, जाग्रति । लु,
जागर्त्ति । दिशो निरीक्षमाणस्य नास्ति जाग-
रतो भयमिति पचादित्वादनि जागर इवाचर-
तीति क्वौ शत्रन्तम् । इति दुर्गादासः ॥

**जागृविः**, पुं, (जागर्त्ति साक्षिस्वरूपतयेति । जागृ +

“जॄशॄस्तॄजागृभ्यः क्विन् ।” उणां । ४ । ५४ ।
इति क्विन् ।) अग्निः । इति हेमचन्द्रः । ४ ।
१६५ ॥ (यथा, ऋग्वेदे । ५ । ११ । १ ।
“जनस्य गोपा अजनिष्ट जागृविरग्निः ॥”
जागर्त्ति प्रजानां शुभाशुभकार्य्यदर्शनार्थमिति ।
नृपतिः । इत्युज्ज्वलदत्तः ॥)

**जाग्रत्,** त्रि, (जागर्त्तीति । जागृ + शतृ ।) जाग-

रणविशिष्टः । यथा, --
“गङ्गोत्तुङ्गतरङ्गसङ्गतजटाजूटाअजाग्रत्फणि
स्फुर्ज्जत्फुत्कृतिभीतिसम्भृतचमत्कारस्फुरत्-
सम्भ्रमा ॥”
इति काव्यचन्द्रिका ॥
(जागरणम् । यथा, मनौ । १ । ५७ ।
“एवं स जाग्रत्स्वप्नाभ्यामिदं सर्व्वं चराचरम् ।
सञ्जीवयति चाजस्रं प्रमापयति चाव्ययः ॥”)

**जाङ्गलः**, त्रि, स्थलजपशुविशेषः । यथा, --

“हरिणैणकुरङ्गर्ष्यपृषतन्यङ्कुशम्बराः ।
राजीवोऽपि च मुण्डी चेत्याद्या जाङ्गलसंज्ञकाः ॥
हरिणस्ताम्रवर्णः स्यादेणः कृष्णः प्रकीर्त्तितः ।
कुरङ्ग ईषत्ताम्रः स्याद्धरिणाकृतिको महान् ॥
ऋष्यो नीलाण्डको लोके स रोरु इति कीर्त्तितः ।
पृषतश्चन्द्रबिन्दुः स्याद्धरिणात् किञ्चिदल्पकः ॥
न्यङ्कुर्बहुविषाणोऽथ शम्बरो गवयो महान् ।
राजीवस्तु मृगो ज्ञेयो राजीभिः परितो वृतः ॥
यो मृगः शृङ्गहीनः स्यात् स मुण्डीति निगद्यते ॥”
तस्य मांसस्य गुणाः । मधुरत्वम् । रूक्षत्वम् ।
कषायत्वम् । लघुत्वम् । वल्यत्वम् । बृंहणत्वम् ।
वृष्यत्वम् । दीपनत्वम् । दोषहरत्वम् । मूकत्व-
मिन्मिनत्वगद्गदत्वार्द्दितवाधिर्य्यारुचिच्छर्द्दिप्रमेह

**जाङ्घिकः**, पुं, (जङ्घाभिश्चरतीति । जङ्घा +

“पर्पादिभ्यष्ठन् ।” ४ । ४ । १० । इति
ठन् । यद्वा,
जङ्घाभिर्जीवतीति । “वेतनादिभ्यो
जिवति ।”
४ । ४ । १२ । इति ठञ् ।) उष्ट्रः ।
श्रीकारी-
वृक्षः । इति राजनिर्घण्टः ॥ जङ्घाजीवी ।
धावकादिः । तत्पर्य्यायः । जङ्घाकरिकः
२ ।
इत्यमरः । २ । ८ । ७३ ॥
(प्रशस्तजङ्घाविषिष्टे,
त्रि । यथा, भोजराजकृत्युक्तिकल्पतरौ ।
“जाङ्गलस्था जाङ्घिकाश्च श्वानस्ते
राजसा
मताः ॥”)

**जाज्वल्यमानः**, त्रि, (भृशं ज्वलतीति । ज्वल +

यङ् + शानच् ।) देदीप्यमानः । यथा,
चण्डी ।
“जाज्वल्यमानं तेजोभी
रविबिम्बमिवाम्बरात् ॥”

**जाटलिः**, पुं स्त्री, (जाटं सङ्घातं लातीति । ला

+ बाहुलकात् किः ।) वृक्षविशेषः । इति
लिङ्गादिसंग्रहे अमरः ॥

**जाड्यं**, क्ली, (जडस्य भावः । जड + ष्यञ् ।)

जडता । तत्पर्य्यायः । स्तम्भः २ ।
(यथा,
पञ्चदशी । ६ । ९६ ।
“विना जाड्यानुभूतिं न कथञ्चिदुपपद्यते
॥”)
मौर्ख्यम् । इति हेमचन्द्रः ॥

**जाड्यारिः**, पुं, (जाड्यस्य अरिः शत्रुः । भक्षणेन

जाड्यदोषनिराकरणात्तथात्वम् ।)
जम्बीरः ।
इति राजनिर्घण्टः ॥

**जातं**, क्ली, (जन + कर्त्तरि क्तः ।) व्यक्तम् ।

समूहः । (यथा, भट्टिः । ३ । ३३ ।
“अन्याहुतिं हावयितुं सविप्रा-
श्चिचीषयन्तोऽध्वरपात्रजातम् ॥”

भावे क्तः ।) जन्म । (पारिभाषिकपुत्त्रविशेषे,
पुं । यथा, पञ्चतन्त्रे । १ । ४४१ -- ४४२ ।
"जातः पुत्त्रोऽनुजातश्च अतिजातस्तथैव च ।
अपजातश्च लोकेऽस्मिन् मन्तव्याः
शास्त्रवेदिभिः ॥
मातृतुल्यगुणो जातस्त्वनुजातः पितुः समः ।
अतिजातोऽधिकस्तस्मादपजातोऽधमाधमः
॥")
उत्पन्ने त्रि । इति मेदिनी । ते, १९ ॥ (यथा,
हितोपदेशे । १ । १४ ।
"कोऽर्थः पुत्त्रेण जातेन यो न विद्वान् न
धार्म्मिकः ।
काणेन चक्षुषा किं वा चक्षुःपीडैव केवलम् ॥")

**जातकं**, क्ली, (जातं जन्म तदधिकृत्य कृतो ग्रन्थः

इत्यण् ततः स्वार्थे कन् । यद्वा, जातेन शिशो-
र्जन्मना कायतीति । कै + कः ।) जातबाल
कस्य शुभाशुभनिर्णायकग्रन्थः । तस्य भेदाः ।
जातकदीपिका १ जातकामृतम् २ जातक-
तरङ्गिणो ३ जातककौमुदी ४ जातकरत्ना-
करः ५ जातकसारः ६ जातकार्णवः ७ जातक-
चन्द्रिका ८ लघुजातकम् ९ बृहज्जातकम् १०
इत्यादि । इति ज्योतिषम् ॥

**जातकः**, पुं, कारण्डी । भिक्षुः । (जात + स्वार्थे

कन् ।) जाते, त्रि । इति धरणिः ॥

**जातकर्म्म**, क्ली, (जातस्य जाते सति वा यत्

कर्म्म ।) दशसंस्कारान्तर्गतसंस्कारविशेषः ।
तस्य क्रमो यथा । पुत्त्रे जाते पिता नाभिं मा
कृन्तत स्तनञ्च मा दत्त इत्यभिधाय कृतस्नानः
कृतवृद्धिश्राद्धः प्रक्षालितशिलायां ब्रह्मचारिणा
कुमार्य्या गर्भवत्या वा
श्रुतस्वाध्यायशीलब्राह्मणेन
वा अनावृतलोष्टपिष्टौ व्रीहियवौ दक्षिणहस्ता-
नामिकाङ्गुष्ठाभ्यां गृहीत्वा मन्त्रेण कुमारस्य
जिह्वां मार्ष्टि । ततस्तथैव सुवर्णेन घृतं गृहीत्वा
मन्त्रेण तथैव कुमारस्य जिह्वां मार्ष्टि । ततः
पुनरपि सुवर्णेन घृतं गृहीत्वा मन्त्रेण तथैव
कुमारस्य जिह्वां मार्ष्टि । ततो नाभिं कृन्तत
स्तनञ्च दत्तेति पिता ब्रूयात् । स्नानं पुनः
पिता न कुर्य्यात् । इति भवदेवभट्टः ॥

"पुनश्च याचमानाय जातरूपमदात् प्रभुः
॥")
धुस्तूरः । इत्यमरः । २ । ९ । ९५ ।
उत्पन्नरूपे,
त्रि । यथा, नैषधे । १ । १२९ ।
"न जातरूपच्छदजातरूपता
द्विजस्य दृष्टेयमिति स्तुवन् मुहुः ॥"

**जातापत्या**, स्त्री, (जातमपत्यमस्याः ।) प्रसूता ।

इत्यमरः । २ । ६ । १६ ।

**जातिः**, स्त्री, (जायतेऽस्यामिति । जन् + अधि-

करणे क्तिन् ।) गोत्रम् । (जन + भावे क्तिन् ।)
जन्म ॥ अश्मन्तिका । आमलकी ।
सामान्यम् ।
तत्तु ब्राह्मणक्षत्त्रियवैश्यशूद्रात्मकम् । छन्दः ।
जातीफलम् । मालती । इति मेदिनी । ते,
१९ ॥ (अस्याः पर्य्याया यथा, --
"जातिर्ज्जाती च सुमना मालती राजपुत्त्रिका
।
चेतिका हृद्यगन्धा च सा पीता स्वर्णजातिका
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
काम्पिल्लः । इति विश्वः ॥ गोत्वादिः । तस्य
लक्षणं यथा, मुग्धबोधे ।
"आकृतिग्रहणा जातिर्लिङ्गानाञ्च ब सर्व्वभाक्
।
सकृदाख्यातनिर्ग्राह्या गोत्रञ्च चरणैः सह ॥"
अस्यार्थः । "आक्रियते व्यज्यतेऽनयेति
आकृतिः
संस्थानं आकृत्या ग्रहणं ज्ञानं यस्याः सा
आकृतिग्रहणा जातिराकृतिग्रहणा भवति
संस्थानव्यङ्ग्या इत्यर्थः । तेन
मनुष्यगोमृगहंसा-
दीनां पृथक् पृथक् संस्थानैर्व्यज्यमाना
मनुष्यत्व-
गोत्वमृगत्वहंसत्वादिर्जातिः । एवं ब्राह्मण-
क्षत्त्रियवैश्यशूद्राणां पृथक्
संस्थानाभावाद्ब्राह्म-
णत्वादेर्जातित्वं नायातमिति लक्षणान्तरमाह
लिङ्गानाञ्च न सर्वभागिति या सर्व्वाणि
लिङ्गानि न भजते सा च जातिरित्यर्थः ।

परिभाषितं गोत्रमिह ग्रह्यते गार्गीवात्सी-
त्यादि । चतुर्थलक्षणमाह चरणैः सहेति
चर-
णञ्च जातिरित्यर्थः । चरणशब्दो
वेदैकदेशवाची
कठादिरूपः स च अध्ययनक्रियासम्बन्धेन
प्रवृ-
त्तत्वात् क्रियावाचक एव न तु जातिवाचकः
तेनास्य जातिसंज्ञार्थं चरणैः सहेत्युक्तं
गार्ग्या-
दिनां षित्वादीपि सिद्धेऽपि जातिसंज्ञा
फलन्तु
गार्गी भार्य्या यस्यासौ गार्गीभार्य्य इत्यादौ
नोप्ताककोङित्यादिना पुंवद्भावनिषेधः ।
गार्गी
चासौ भार्य्या चेति गार्ग्यभार्य्या इत्यादौ
कोङादिः पुंवदित्यादिना पुनः पुंवद्भावः ।"
इति
दुर्गादासः ॥
"सामान्यं द्विविधं प्रोक्तं परञ्चापरमेव च ।
द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ॥
परभिन्ना तु या जातिः सैवापरतयोच्यते ।
व्यापकत्वात् परापि स्यात्
व्याप्यत्वादपरापि च ॥
द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥"
इति भाषापरिच्छेदे । ८-९ ॥
तल्लक्षणन्तु "नित्यत्वे सत्यनेकसमवेतत्वम्
।"
इति सिद्धान्तमुक्तावली ॥

**जातिकोशं**, क्ली, (जातेः कोशमिवेति ।) जाती-

फलम् । इति भावप्रकाशः ॥

**जातिकोषं**, क्ली, (जातेः कोषमिव ।) जाती-

फलम् । इति हेमचन्द्रः । ३ । ३०७ ॥
(जयित्री इति लोके प्रसिद्धम् । तदत्र जाती-
फलानामावरणदलं व्यवहृतम् । तद्यथा
वैद्यक-
रसेन्द्रसारसंग्रदे कासाधिकारे शृङ्गाराभ्ररसे
।
"कर्पूरं जातिकोषं
सजलमिभकणातेजपत्रंलवङ्गं

**जातवेदाः**, [स्] पुं, (विद्यते लभ्यते इति । विद्
लाभे + असुन् । जातं वेदो धनं यस्मात् ।) अग्निः । (अस्य निरुक्तिरुक्ता यथा, महाभारते २ । ३१ । ४१ ।
"पावनात् पावकश्चासि वहनाद्धव्यवाहनः ।
वेदास्त्वदर्थं जाता वै जातवेदास्ततो ह्यसि ॥")
चित्रकवृक्षः । इत्यमरः । १ । १ । ५६ ॥
(जाते जाते सर्व्वप्रपञ्चस्य स्वस्मिन् अध्यस्ततया
विद्यते यो जीवः । यद्वा, जातानि सर्व्वाणि कारणत्वेन विदन्ति यमिति । विद् ज्ञाने + असुन् । अन्तर्य्यामी परमेश्वरः । यथा, भागवते । ५ । ७ । १४ । "ॐ परो रजः सवितु र्जातवेदो देवस्य भर्गो मनसेदं जजान ॥" "जातं वेदो धनं कर्म्मफलं यस्मात् कर्म्मफलदमित्यर्थः ॥"
इति श्रीभागवतटीकाकृत् श्रीधरस्वामी ॥)

**जातरूपं**, क्ली, (जातं प्रशस्तं रूपं यस्य ।)
स्वर्णम् । (यथा, भागवते । १ । १७ । ३८ ।
स्त्रीपुंसयोरपत्यान्ता द्विचतुःषट्पदोरगाः ।
जातिभेदाः पुमाख्याश्च इत्यमरसिंहे जातिभेदानां स्त्रीपुंसयोरेवेति नियमे ब्राह्मणादीनां सर्व्वलिङ्गभाजित्वाभावाज्जातित्वम्। किन्तु अज्ञातहंसस्य जनस्य हंसं दृष्टवतोऽपि तस्य संस्थानेन हंसत्वं व्यञ्जितुं न शक्यते इति हंस-
स्यापि जातित्वं नायातमिति पूर्ब्बलक्षणस्य दोषः । एवं देवदत्तादिसंज्ञाशब्दस्यापि सर्व्वलिङ्गभाजित्वाभावाज्जातित्वापत्तिरिति द्वितीय-
लक्षणस्य दोषः इति दोषद्वयमपाकर्त्तुं द्वयोर्लक्षणयोर्विशेषणमाह सकृदाख्यातनिर्ग्राह्येति सकृदेकवारमाख्यातेन उपदेशेन निर्निश्चयेन ग्राह्या ग्रहीतुं शक्या इत्यर्थः । तेन ईदृशो हंस इत्युपदेशे हंसं दृष्टवतस्तस्य संस्थानेन हंसत्वं व्यञ्जितुं शक्यत एवेति पूर्ब्बलक्षणस्य न
दोषः । एवं देवदत्तादिसंज्ञाशब्दस्य एकस्मिन्नु-
पदेशेऽपि अन्यस्मिन् ज्ञानाभावात् जातित्वं न स्यादिति परलक्षणस्यापि न दोषः । गार्ग्यपुरुषः गार्गी स्त्री गार्ग्यं कुलमिति सर्व्वलिङ्गभाजित्वात् संस्थानव्यङ्ग्यत्वाभावाच्च गार्ग्यादीनां
जातित्वानुपपत्तौ तृतीयलक्षणमाह गोत्रञ्चेति । पुत्त्रपौत्त्रप्रभृतिकमपत्यंगोत्रमिति पूर्ब्बाचार्य्य-
मांसी तालीशचोचे गजकुसुमगदं धातकी चेति तुल्यम् ।
पथ्या धात्री विभीतं त्रिकटुरपि पृथक्त्वर्द्धशाणं द्विशाण-
मेलाजातीफलाख्यं
क्षितितलविधिनाशुद्धगन्धस्य
कोलम् ॥"
जातिकोषजातीफलयोरेकस्मिन्नौषधे समुल्लेखा-
दत्रैव जयित्रीति लोकप्रसिद्धम् । औषधन्तु सर्व्वत्रैव प्रयुज्यते ॥)

**जातिकोषी**, स्त्री, (जातिकोषमस्या अस्तीति ।
"अर्श-आदिभ्योऽच् ।" ५ । २ । १२७ । इत्यच्
ततो ङीप् ।) जातीपत्री । इति राजनिर्घण्टः ॥

**जातिफलं**, क्ली, (जात्याख्यं फलमिति ।) जाती-
फलम् । इति हेमचन्द्रः । ३ । ३०७ ॥

**जातिभ्रंशकरं**, क्ली, (जातेर्भ्रंशं करोतीति । कृ +
टः ।) नवविधपापान्तर्गतपापविशेषः । यथा,
मनुः । ११ । ६७ ।
"ब्राह्मणस्य रुजः कृत्याघ्रातिरघ्रेयमद्ययोः ।
जैह्मं पुंसि च मैथुन्यं जातिभ्रंशकरं स्मृतम् ॥"
"ब्राह्मणस्य दण्डहस्तादिना पीडाक्रिया अघ्रेयं
लशुनपुरीषादि जैह्मं कुटिलत्वं वक्रता ।" इति
कुल्लूकभट्टः ॥

**जातिवैरं**, क्ली, (जात्या स्वभावतो वैरं शत्रुत्वम् ।)
स्वाभाविकशत्रुत्वम् । तत्पञ्चविधम् ।
स्त्रीकृतम् १

यथा श्रीकृष्णशिशुपालयोः ॥ वास्तुजम् २ यथा
कौरवपाण्डवानाम् ॥ वाग्जम् ३ यथा द्रोण-
द्रुपदयोः ॥ सापत्नम् ४ मूषिकनकुलयोः ॥ अप-
राधजम् ५ यथा पूजनीब्रह्मदत्तयोः ॥ इति
महाभारतम् ॥

**जातिसारं**, क्ली, (जात्या स्वभावतः सारोऽत्र ।)
जातीफलम् । इति राजनिर्घण्टः ॥ (जातीफल-
शब्देऽस्य विवृतिर्ज्ञेया ॥)

**जाती**, स्त्री, (जन + क्तिच् । ततो वा ङीप् ।) जाती-
पुष्पम् । चमेली इति हिन्दी भाषा ॥ तत्पर्य्यायः
सुरभिगन्धा २ मुमनाः ३ सुरप्रिया ४ चेतकी ५
सुकुमारा ६ सन्ध्यापुष्पी ७ मनोहरा ८ राज-
पुत्त्री ९ मनोज्ञा १० मालती ११ तैलभाविनी १२
जनेष्टा १३ हृद्यगन्धा १४ । (एतस्या हि
सर्व्वपुष्पेषु श्रेष्ठत्वमुक्तम् । यथा, "पुष्पेषु जाती
नगरेषु काञ्ची ।" इति उद्भटः ॥) अस्या
गुणाः । तिक्तत्वम् । शीतत्वम् । कफमुखपाक-
नाशित्वम् । इति राजनिर्घण्टः ॥ उष्णत्वम् ।
तुवरत्वम् । लघुदोषशिरोऽक्षिदन्तरोगविषकुष्ठ-
व्रणरक्तदोषनाशित्वञ्च । इति भावप्रकाशः ॥
तत्कुट्मलस्य गुणः । नेत्ररोगव्रणविस्फोटकुष्ठ-
नाशित्वम् । इति राजनिर्घण्टः ॥

**जातीकोशं**, क्ली, (जातीत्याख्यया कोशमिव फल-
मिति यावत् ।) जातीफलम् । इति हेम-
चन्द्रः । ३ । ३०७ ॥ (क्वचित् पुंलिङ्गेऽपि दृश्यते ।
यथा, सुश्रुते सूत्रस्थाने ४६ अध्याये ।
"जातीकोशोऽथ कर्पूरं जातीकटुकयोः फलम् ।
कक्कोलकं लवङ्गञ्च तिक्तं कटुकफापहम् ॥")

**जातीकोषं**, क्ली, (जातीत्याख्यया कोषमिव
फलम् ।) जातीफलम् । इति हेमचन्द्रः ॥

**जातीपत्री**, स्त्री, (जातीपत्रमिवास्त्यस्यामिति।
"जातीफलागुरुवचापिप्पल्यश्चन्दनंच भृगोः ॥")
अस्य गुणाः । कषायत्वम् । उष्णत्वम् । कटु-
त्वम् । कण्ठामयार्त्तिवातातीसारमेहनाशि-
त्वम् । वृष्यत्वम् । दीपनत्वम् । लघुत्वञ्च । इति
राजनिर्घण्टः ॥ रसे तिक्तत्वम् । तीक्ष्णत्वम् ।
रोचनत्वम् । ग्राहित्वम् । स्वरहितत्वम् । श्लेष्मा-
निलमुखवैरस्यमलदौर्गन्ध्यकृष्णताकृमिकासवमि-
श्वासशोषपीनसहृद्रुङ्नाशित्वञ्च । इति भाव-
प्रकाशः ॥ तृष्णाशूलनाशित्वम् । इति राज-
वल्लभः ॥

**जातीयः**, त्रि, (जातौ भवः । "वृद्धाच्छः ।"
४ । २ । ११४ । इति छः । जातिभवः । यथा,
कथासरित्सागरे । २३ । ४८ ।
"प्राग्जन्मभिन्नजातीयाः परिहृत्यैव कन्यकाः ॥")
तद्धितप्रत्ययविशेषः । स तु प्रकारार्थे भवति ।
यथा । तार्क्किकजातीया । इति मुग्धबोध-
मतम् । (पाणिनिमते तु जातीयर् ॥)

**जातीरसं**, क्ली, (जात्या रसः इव रसो यस्य ।)
वोलः । इति राजनिर्घण्टः ॥

**जातु**, व्य, (जन + क्तुन् । पृषोदरात् साधुः ।)
कदाचित् । इत्यमरः । ३ । ४ । ४ ॥ (यथा,
मनुः । २ । ९४ ।
"न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥")
सम्भावितार्थः । (यथा, महाभारते । ५ । १७९ । २२ ।
"को जातु परंभावां हि नारीं व्यालीमिव स्थिताम् ।
वासयेत गृहे जानन् स्त्रीणां दोषो महात्ययः ॥")
गर्हार्थः । इति शब्दरत्नावली ॥
("जातु निन्दसि गोविन्दं जातु निन्दसि शङ्करम् ॥"
इति मुग्धबोधव्याकरणम् ॥)

**जातुकं**, क्ली, (जातु गर्हितं निन्दितं दूषितमित्यर्थः
कं जलं यस्मादिति ।) हिङ्गु । इति शब्द-
चन्द्रिका ॥

**जातुधानः**, पुं, (धीयते सन्निधीयते इति धानं
सन्निधानमस्य जातु गर्हितं । धानमभिधानमस्ये-
त्येके ।) यातुधानः । राक्षसः । इत्यमरटीकायां

**जात्यः**, त्रि, (जातौ भवः इति यत् ।) कुलीनः ।
श्रेष्ठः । इति हेमचन्द्रः ॥ (यथा, महाभारते ।
१३ । १६ । ९ ।
"स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः ॥")
कान्तः । इति जटाधरः ॥ (यथा, महाभारते ।
५ । ३३ । १२२ ।
"अतीव स ज्ञायते ज्ञातिमध्ये
महामणिर्ज्जात्य इव प्रसन्नः ॥")

**जात्यन्धः**, त्रि, (जात्या जन्मनैव अन्धः ।) जन्मान्धः
यथा, मनुः । ९ । २०१ ।
"अनंशौ क्लीवपतितौ जात्यन्धवधिरौ तथा ।
उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः ॥"

**जादो**, त्रि, (जात इत्यस्य जादो इतेत्यत्प्रयोगस्तु
प्राकृतलङ्केश्वरसम्मत इति बोध्यम् ।) जातः ।
इति प्राकृतलङ्केश्वरः ॥

**जानकी**, स्त्री, (जनकस्य मिथिलाधिपस्यापत्यं
स्त्रीत्यण् ङीप् च ।) सीता । इति त्रिकाण्ड-
शेषः ॥ (यथा, महाभारते । ३ । २७३ । १ ।
"प्राप्तमप्रतिमं दुःखं रामेण भरतर्षभ ! ।
रक्षसा जानकी तस्य हृता भार्य्या बलीयसा ॥")

**जानपदः**, पुं, (जानेन जन्मना पद्यते इति अप् ।)
जनः । (यथा, याज्ञवल्क्ये । २ । ३७ ।
"देयं चौराहृतं द्रव्यं राज्ञा जानपदाय तु ।

"अर्शआदिभ्योऽच् ।" ५ । २ । १२७ । इत्यच् ।
ततो ङीप् ।) जातीफलत्वक् । जैत्री इति
भाषा । तत्पर्य्यायः । जातिकोषी २ सुमनः-
पत्रिका ३ मालतीपत्रिका ४ सौमनसायनी ५
जातिपत्री ६ । अस्या गुणाः । कटुत्वम् । तिक्त-
त्वम् । सुरभित्वम् । कफजाड्यनाशित्वम् । वक्त्र-
वैषद्यजननत्वञ्च । इति राजनिर्घण्टः ॥ लघु-
त्वम् । स्वादुत्वम् । उष्णत्वम् । रुचिवर्णकारि-
त्वम् । कफकासवमिश्वासतृष्णाविषनाशित्वञ्च ।
इति भावप्रकाशः ॥ दुर्गन्धनाशित्वम् । इति
राजवल्लभः ॥

**जातीफलं**, क्ली, (जातीत्याख्यं फलम् ।) सुगन्ध-
फलविशेषः । जायफल इति भाषा ॥ तत्-
पर्य्यायः । जातीकोषम् २ । इत्यमरः । २ । ६ । १३२ ॥
जातीकोशम् ३ जातिफलम् ४ । इति तट्टीका ॥
जातिशस्यम् ५ शालूकम् ६ मालतीफलम् ७
मज्जसारम् ८ जातिसारम् ९ पपुटम् १०
सुमनःफलम् ११ फलञ्जातिः १२ फलञ्जाती १३
कोशम् १४ कोषम् १५ जातिकोषम् १६ कोष-
कम् १७ । इति शब्दरत्नावली ॥ (यथा,
बृहत्संहितायाम् । १६ । ३० ।
रमानाथः ॥ (यथा, कालिकास्तोत्रे ।
("जातुधानाः पिशाचाश्च कुष्माण्डा भैरवा-
दयः ॥"

**जातुषं**, त्रि, (जतुनो विकारः । "त्रपुजतुनोः
षुक् ।" ४ । ३ । १३८ । इति अण् षुक् च ।)
जतुविकारः । जतुनिर्म्मितम् । इति जटाधरः ॥
(यथा, पञ्चतन्त्रे । १ । १२० ।
"अन्यप्रतापमासाद्य यो दृढत्वं न गच्छति ।
जातुषाभरणस्येव रूपेणापि हि तस्य किम् ॥")

**जातोक्षः**, पुं, (जातश्चासौ उक्षा चेति । जातः
प्राप्तदम्यावस्थः उक्षा इत्यर्थः । "अचतुरेति ।"
५ । ४ । ७७ । इति निपातनात् साधुः ।) उत्-
पन्न उक्षा । इत्यमरः । २ । ९ । ६१ ॥ उत्-
पन्नो दृष्टदम्यभावः प्राप्तबलीवर्द्दभाव उक्षा ।
इति भरतः ॥
अदद्भि समवाप्नोति किल्विषं यस्य
तस्य तत् ॥"
जनपद एव । स्वार्थे अण् ।) देशः । इति
मेदिनी । दे, ४ । ४८ ॥ जनपदे भवः । इति
"उत्सादिभ्योऽञ् । ४ । १ । ८६
इत्यञ् । देशभवे,
त्रि ॥ यथा, मनुः । ८ । ४१ ।
"जातिजानपदान् धर्म्मान्
श्रेणीधर्म्मांश्च
धर्म्मवित् ॥")

**जानु**, क्ली, (जायते इति । जन् "दृसनिजनिचरि-
चटिभ्यो ञुण् ।" उणां १ । ३ ।
इति ञुण् ।)
ऊरुजङ्घयोर्म्मध्यभागः । हाँटु इति भाषा ॥
(यथा, महाभारते । ४ । ३२ । ३९ ।
"तस्य जानु ददौ भीमो जघ्ने
चैनमरत्निना ॥")
तत्पर्य्ययायः । ऊरुपर्व्व २ अष्ठीवत् ३ अष्ठी-
वान् ४ । इत्यमरः । २ । ६ । ७२ ॥ चक्रिका ५ ।
इति राजनिर्घण्टः ॥

**जापः**, पुं, (जप + भावे घञ् ।) जपः । इति
जटाधरः ॥

**जापकः**, त्रि, (जपतीति । जप् + ण्वुल् ।) जप-
कर्त्ता । (यथा, महाभारते । १२ । १९६ । ३ ।
"जापकानां फलावाप्तिं
श्रोतुमिच्छामि भारत ! ।
किं फलं जपतामुक्तं क्व वा
तिष्ठन्ति जापकाः ॥"
जपेन कृतं जपजन्यमित्यर्थः । जप् + अण् +
स्वार्थे कन् । जपजन्ये, त्रि । यथा, महा-
भारते । १२ । १९९ । ४९ ।

| | | “अथवा सर्व्वमेवेह मामकं जापकं फलम् ॥”)<br><br>**जापनं**, क्ली, (जप् + स्वार्थे णिच् + भावे ल्युट् ।)<br><br>निरसनम् । निर्व्वर्त्तनम् । इति धरणिः ॥ (जपः ।<br>यथा, संवर्त्तकसंहितायाम् । २०९ ।<br>“मुच्यते सर्व्वपापेभ्यो गायत्र्याश्चैव जापनात् ॥”) |
|---|---|---|

**जाबालः**, पुं, (जबालाया अपत्यं पुमानिति ।
अण् ।) अजाजीवः । इत्यमरः । २ ।
१० । ११ ॥
मुनिविशेषः । (यथा, ब्रह्मवैवर्त्ते । १ ।
१६ । १४ ॥
"जाबालो याजलिः पैलः करथोऽगस्त्य
एव च ।
एते वेदाङ्गवेदज्ञाः षोडशव्याधिनाशकाः
॥"
उपनिषद्विशेषः । यथा, मौक्तिकोपनिषदि
।
"ब्रह्मकैवल्यजाबालश्वेताश्वो हंस
आरुणिः ।
दर्शनशास्त्रविशेषः । यथा,
रामचन्द्रदत्तशाप
प्रकरणे ।
"अधीत्य कूटजाबालं शार्गालिं
योनिमाप्नुयात् ॥")

**जाबालिः**, पुं, (जबालाया अपत्यं पुमान् इति ।
इञ् ।) मुनिविशेषः । यथा, रामायणम् ॥
"सुयज्ञं वामदेवञ्च जाबालिमथ
काश्यपम् ।"
(तथाच ब्रह्मवैवर्त्ते । २ । ४ । ७० ।
"ऋष्यशृङ्गो भरद्वाजश्चास्तीको
देवलस्तथा ।
जैगीषव्योऽथ जाबालिर्यद्भूत्वा
सर्व्वपूजितः ॥")

**जामदग्न्यः**, पुं, (जमदग्नेरपत्यं पुमान् इति ।
"गर्गादिभ्यो यञ् ।" ४ । १ । १०५ ।
इति
यञ् ।) जमदग्निपुत्त्रः । परशुरामः । इति
हेमचन्द्रः ॥ (यथा, देवीभागते । २५ ।
४१ ।
"पित्राज्ञया जामदग्न्येन पूर्ब्बं
छिन्नं शिरो मातुरिति प्रसिद्धम् ॥")

**जामाता**, [ऋ] पुं, (जायां माति मिमीते-
मिनोति वा । "नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृ-
जामात्रिति ।" उणां । २ । ९६ । इति
निपा-

"लेभे जाम्बवतीं कन्यामृक्षराजस्य
सम्मताम् ॥")
नागदमनी । इति राजनिर्घण्टः ॥

**जाम्बवान्**, [त्] पुं, (जम्बोर्वर्णं जाम्बवं तदस्या-
स्तीति मतुप् मस्य वः । पृषोदरादित्वात्
साधुः ।
जम्बुतुल्यकृष्णत्वादस्य तथात्वम् ।)
ऋक्षराजः ।
स ब्रह्मपुत्त्रः । यथा, रामायणे ।
"ऋक्षराजस्य पुत्त्रोऽत्र महाप्राज्ञः सुदुर्ज्जयः
।
पितामहसुतश्चात्र जाम्बवानिति विश्रुतः
॥")
(यथाच, हरिवंशे । ३८ । ३५ ।
"धात्र्या कुमारमादाय सुतं जाम्बवतो नृप !
॥")

**जाम्बवी**, स्त्री, (जाम्बवस्याकारोऽस्त्यास्याःइति ।)
नागदमनी । इति राजनिर्घण्टः ॥

**जाम्बुवान्**, [त्] पुं, (जाम्बवान् पृषोदरात् साधुः ।)
जाम्बवान् । इति भरतो द्विरूपकोषश्च ॥

**जाम्बूनदं**, क्ली, (जम्बूनद्यां भवमिति । अण् ।)
स्वर्णम् । धुस्तूरः । इति राजनिर्घण्टः ॥
स्वर्ण-
विशेषः । यथा ।
"मेरुमन्दरपर्व्वतस्थजम्बूफलाना-
मत्युच्चनिपातनविशीर्णानां अनस्थिप्रायाणां
इभकायनिभानां रसेन जम्बूनामनदी
इलावृतं
वहति तस्या उभयोस्तीरयोर्मृत्तिका जम्बू-
रसेनानुविध्यमाना वाय्वर्कसंयोगविपाकेन
सदा-
मरलोकाभरणं जाम्बूनदं नाम स्वर्णं भवति
।"
इति श्रीभागवतम् ॥

**जायकं**, क्ली, (जयति अपरं गन्धमिति । जि +
ण्वुल् ।) कालीयकम् । कालिया इति ख्यातं
पीतवर्णसुगन्धिकाष्ठम् । इत्यमरः । २ । ६ ।
१२५ ॥

**जारः**, पुं, (जीर्य्यति स्त्रियाः सतीत्वमनेन । जॄ +
करणे घञ् ।) उपपतिः । इत्यमरः । २ । ६ । ३५ ॥
(यथा, याज्ञवल्क्ये । २ । ३० ।
"जारं चौरेत्यभिवदन् दाप्यः पञ्चशतं दमम् ॥"
जारयति नाशयति इति । जॄ + णिच् + अच् ।
हन्ता । यथा, ऋग्वेदे । १ । ६६ । ४ ।
"यमोह जातो यमो जनित्वं जारः कनीनां
पतिर्ज्जनीनाम् ॥")

**जारजः**, त्रि, (जारात् उपपतेर्ज्जायते इति । जन् +
डः ।) उपपतिजातसन्तानः । इत्यमरः । २ ।
६ । ३६ ॥ (यथा, मनुः । ३ । १५८ । श्लोके
कुल्लूकभट्टधृतटीकायाम् ।
"अमृते जारजः कुण्डो मृते भर्त्तरि गोलकः ॥")

**जारणी**, स्त्री, (जारयति परिपाकं कारयतीति ।
जॄ + णिच् + ल्युः । ततो ङीप् ।) स्थूलजीरकः ।
इति राजनिर्घण्टः ॥

**जारी**, स्त्री, (जारयति जीर्णं कारयतीति । जॄ +
णिच् + अच् + गौरादित्वात् ङीष् ।) ओषधी-
विशेषः । इति मेदिनी । रे, ३९ । जाडी इति
भाषा ॥

**जारूत्थः**, पुं, (जरूथं मासं तदर्हतीति । जरूथ
+ ञ्यः ।) त्रिगुणदक्षिणाकयज्ञः । (यथा,
महाभारते । ३ । २९० । ७० ।
"ततो देवर्षिसहितः सरितं गोमतीमनु ।
दशाश्वमेधानाजह्रे जारूथ्यान् स निरर्गलान् ॥")

**जालं**, क्ली, (जल्यते आच्छाद्यतेऽनेनेति । जल-
संवरणे + करणे घञ् । यद्वा, जले क्षिप्यते
इति । जल + "शेषे ।" ४ । २ । ९२ । इत्यण् ।)
स्वनामख्यातसूत्रादिनिर्म्मितमत्स्यादिधारणो-
पायः । तत्पर्य्यायः । आनायः २ । इत्यमरः ।
३ । ३ । १९९ ॥ जालकम् ३ । इति शब्द-
रत्नावली ॥ (यथा, आर्य्यासप्तशत्याम् । ५५८ ।
"वंशावलम्बनं यद् यो विस्तारो गुणस्य
यावनतिः ।
तज्जालस्य खलस्य च निजाङ्कसुप्तप्रणाशाय ॥")
गवाक्षः । (यथा, रघुः । ६ । ४३ ।
"प्रासादजालैर्जलवेणिरम्यां
रेवां यदि प्रेक्षितुमस्ति कामः ॥")

तनात् साधुः ।) दुहितृपतिः । इत्यमरः । २ ।
६ । ३२ । जामाइ इति भाषा ॥ (यथा, हरिवंशे । ११६ । २५ ।
"जामाता त्वभवत्तस्य कंसस्तस्मित् हते युधि ॥")
सूर्य्यावर्त्तः । धवः । इति मेदिनी । ते, ११० ॥

**जामिः**, स्त्री, (जम् + इञ् । इन् निपातनात्

साधुरित्येके ।) स्वसा । कुलस्त्री । इत्यमरः ।
३ । ३ । १४२ ॥ (यथा, मनुः । ३ । ५७ ।
"शोचन्ति जामयो यत्र विनश्यन्त्याशु तत्-
कुलम् ॥")

**जामी**, स्त्री, (जामि + वा ङीष् ।) जामिः ।

इति शब्दरत्नावली ॥ (यथा, महाभारते ।
१३ । ४६ । ७ ।
"यामीशप्तानि गेहानि निकृत्तानीव कृत्यया ॥")

**जामेयः**, पुं, (जाम्या अपत्यमिति । "स्त्रीभ्यो

ढक् ।" ४ । १ । १२० । इति ढक् ।) भागिनेयः ।
इति हेमचन्द्रः ॥

**जाम्बवं**, क्ली, (जम्ब्वाः फलम् । "जम्ब्वा वा ।" ४ ।

३ । १६४ । इवेत्यण् तस्य विधानात् न लुक् ।)
जम्बूफलम् । इत्यमरः । २ । ४ । १९ ॥ (यथा,
मुश्रुते । १ । ४६ ।
"अत्यर्थं वातलं ग्राहि जाम्बवं कफपित्तजित् ॥")
मुवर्णम् । इति राजनिर्घण्टः ॥
जाम्बवति, पुं ।
इति शब्दभेदः ॥

**जाम्बवती**, स्त्री, (जाम्बवतो अपत्यं स्त्री । अण्

ततो ङीप् ।) श्रीकृष्णपत्नी ।
जाम्बवत्कन्या । इति

**जाया**, स्त्री, (जायते पुत्त्ररूपेणात्माऽस्यामिति ।

जन् + यक आत्वञ्च ।) भार्य्या । इत्यमरः ।
२ । ६ । ६ ॥ (यथा, मनुः । ९ । ८ ।
"पतिर्भार्य्यां संप्रविश्य गर्भो भूत्वेह जायते ।
जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ॥")

**जायाजीवः**, पुं, (जाया आजीवः जीवनोपायो

यस्य इति । जायया जीवतीति वा । जीव +
अच् । जायायाः सङ्गीतनर्त्तनादिना जीवना-
दस्य तथात्वम् ।) नटः । इत्यमरः । २ ।
१० । १२ ॥

**जायानुजीवी**, [न्] पुं, (जायया अनुजीवतीति ।

अनु + जीव + णिनिः ।) नटः । वकपक्षी । इति
मेदिनी । ने, १५५ ॥ वेश्यापतिः । इति शब्द-
रत्नावली ॥ दुस्थः । इति हेमचन्द्रः ॥

**जायापती**, पुं, (जाया च पतिश्चेति तौ ।) भार्य्या-

पती । माग्भातार इति भाषा ॥ नित्यद्विव-
चनान्तोऽयं शब्दः । इत्यमरः । २ । ६ ।
३८ ॥

**जायी**, [न्] पुं, (जै + णिनिः । यद्वा, जि +

णिनिः ।) ध्रुवकभेदः । यथा, --
"जायीति नाम्ना ध्रुवको द्वाविंशत्यक्षरान्वितः ।
सन्निपातेन तालेन शृङ्गारेऽभीष्टदो रसे ॥"
इति सङ्गीतदामोदरः ॥
(यथा, महाभारते । ३ । ३५ । ८ ।
"अफलं जन्म तस्याहं मन्ये दुर्ज्जातजायिनः ॥")

**जायुः**, पुं, (जयति रोगान् इति । जि + उण् ।)

औषधम् । इत्यमरः । २ । ६ । ५० ॥ (जय-
तीति । जयशीले, त्रि ॥)

क्षारकः । स तु अस्फुटकलिकाकुष्माण्डादि-
क्षुद्रफलञ्च । दम्भः । समूहः । इति मेदिनी ।
ले, १९ ॥ (यथा, रघुः । ७ । ६२ ।
"ततो धनुष्कर्षणमूढहस्तं
एकांशपर्य्यस्तशिरस्त्रजालम् ॥"
वंशलौहादिनिर्म्मितजालवद्द्रव्यविशेषः । यथा,
भट्टिः । १ । ८ ।
"अन्तर्निविष्टोज्ज्वलरत्नभासो
गवाक्षजालैरभिनिष्पतन्त्यः ॥")
इन्द्रजालम् । इति हेमचन्द्रः । ३ । ५९० ॥

**जालः**, पुं, (जालयति शाखाप्रशाखादिभिः संवृ-

णोतीति । जल संवरणे + णिच् + "नन्दि-
ग्रहीति ।" ३ । १ । १३४ । इत्यच् ।) कदम्बवृक्षः ।
इति मेदिनी । ले, १९ ॥

**जालकं**, क्ली, (जल संवरणे + भावे घञ् । जालेन
ईषदावरणेन कायति प्रकाशते इति । कै + कः । जाल + स्वार्थे कन् वा ।) अस्फुटकलिका । इति भरतः ॥ (यथा, मेघदूते । ९९ ।
"तामुत्थाप्य स्वजलकणिकाशीतलेनानिलेन प्रत्याश्वस्तां सममभिनवैर्जालकैर्मालतीनाम् ॥")
कुष्माण्डादिक्षुद्रफलम् । इति सारसुन्दरी ॥ तत्पर्य्यायः । क्षारकः २ । इत्यमरः । २ । ४ । १६ ॥ कोरकः । दम्भः । कुलायः । आनायः । इति मेदिनी । के, ९२ ॥ (यथा, सुश्रुते । उत्तरतन्त्रे ७ अध्याये ।
"दृष्टिर्भृशं विह्वलति द्वितीयं पटलं गते । मक्षिकान् मशकान् केशान् जालकानि च पश्यति ॥")
समूहः । इति शब्दरत्नावली ॥ (यथा, शाकुन्तले प्रथमाङ्के ।
"बद्धं कर्णशिरीषरोधि वदने घर्म्माम्भसां जालकं बन्धे स्रंसिनि चैकहस्तयमिताः पर्य्याकुला मूर्द्धजाः ॥"
वंशलौहादिनिर्म्मितजालाकृतिद्रव्यविशेषः । यथा, पञ्चतन्त्रे । ३ । १७ । ९ ।
"ततो यष्टिं शलाकाञ्च जालकं पञ्जरं तथा । बभञ्ज लुब्धको दीनां कपोतीञ्च मुमोच ताम् ॥")

**जालकं**, क्ली स्त्री, (जल संवरणे + भावे घञ् ।
जालेन आवरणेन कायति प्रकाशते इति । कै + कः ।) मोचकफलम् । इति मेदिनी ॥ के, ९२ ॥

**जालकः**, पुं, (जालेन वंशलौहादिनिर्म्मितजाला-
कृतिद्रव्यविशेषेण कायतीति । कै + कः ।) गवाक्षः । इति हेमचन्द्रः । ४ । ७८ ॥

**जालकारकः**, पुं, (जालं करोतीति । कृ + ण्वुल् ।
जालस्य कारको वा ।) मर्कटकः । इति हेमचन्द्रः । ४ । २७६ ॥ जालकर्त्तरि, त्रि ॥

**जालकिनी**, स्त्री, (जालकं लोमसमूहस्तदस्त्यस्या
इति । "अत इनिठनौ ।" ५ । २ । ११५ । इति इनि-
स्ततो ङीप् ।) मेषी । इति हेमचन्द्रः । ४ । ३ । ४३ ॥

**जालगर्द्दभः**, पुं, रोगविशेषः । तस्य लक्षणं यथा,

अत्र भगवती विश्वमुखीमूर्त्या विराजते । यथा, देवीभागवते । ७ । ३० । ७६ ।
"जालन्धरे विश्वमुखी तारा किष्किन्धपर्व्वते ॥"
जालन्धरोऽभिजन एषामिति । अण् ।) तद्देशस्थे पुं भूम्नि । (दैत्यविशेषः । यथा, काशीखण्डे । २१ । १०६ ।
"पुरा जालन्धरं दैत्यं ममापि परिकम्पनम् । पादाङ्गुष्ठाग्ररेखोत्थं चक्रं सृष्ट्वा हरोऽहरत् ॥"
ऋषिविशेषः । इति व्याकरणम् ॥)

**जालपात्** [द्] पुं, (जालमिव पादौ यस्य ।)
हंसः । इति त्रिकाण्डशेषः ॥ (यथाह सम्बर्त्तः ।
१४६ ।
"टिट्टिभं जालपादञ्च कोकिलं कुक्कुटं तथा ॥")

**जालप्राया**, स्त्री, (जालस्य प्रायो बाहुल्यं यत्र ।)
अङ्गरक्षिणी । इति हेमचन्द्रः । ३ । ४३३ ॥
लोहार साँजोया इति भाषा ॥

**जालवर्व्वूरकः**, पुं, (जालाकारो वर्व्वूरकः । शाक-
पार्थिवादिवत्समासः ।) वर्व्वूरवृक्षविशेषः । तत्पर्य्यायः । छत्राकः २ स्थूलकण्टकः ३ सूक्ष्म-
शाखः ४ तनुच्छायः ५ रन्ध्रकण्टः ६ । अस्य
गुणाः । रूक्षत्वम् । वातामयकफनाशित्वम् ।
पित्तदाहकारित्वम् । कषायत्वम् । उष्णत्वञ्च ।
इति राजनिर्घण्टः ॥

**जालिकः**, पुं, (जालेन जीवतीति । जाल + "वेतना-
दिभ्यो जीवति ।" ४ । ४ । १२ । इति ठन् ।
यद्वा, जालेन चरतीति । "पर्पादिभ्यः ष्ठन् ।" ४ ।
४ । १० । इति ठन् ।) कैवर्त्तः । इति त्रिकाण्ड-

जायन्ते । तद्यथा, शराधिका सर्षपिका कच्छपिका जालिनी विनता पुत्त्रिणी मसूरिका
अलजी विदारिका विद्रधिका चेति ।"
"जालिनी तीव्रदाहा तु मांसजालसमावृता ॥")

**जाली**, स्त्री, (जालं जालाकृतिरस्ति अस्याः
अच् ततो गौरादित्वात् ङीष् ।) ज्योत्स्नी । इत्यमरः । २ । ४ । ११८ ॥ झिङ्गा । इति ख्याता । पटोलः । इति राजनिर्घण्टः ॥

**जाल्मः**, त्रि, (जालयति दूरीकरोति हिताहित-
ज्ञानमिति । जल + णिच् + बाहुलकात् मः ।)
पामरः । (यदुक्तम् ।
"क्षणं विश्राम्यतां जाल्म ! स्कन्धं ते यदि बाधति ।
न तथा बाधते स्कन्धं यथा बाधति बाधते ॥")
क्रूरः । असमीक्ष्यकारी । इति मेदिनी । मे, १३ ॥ (यथा, माघे । १५ । ३३ ।
"त्वयि पूजनं जगति जाल्म ! कृतमिदमपाकृते गुणैः ।
हासकरमघटते नितरां शिरसीव कङ्कतमपेतमूर्द्धजे ॥")

**जाषकं**, क्ली, (जस्यति मुञ्चति सद्गन्धादिकमिति ।
जस + ण्वुल् । पृषोदरादित्वात् सस्य षत्वम् ।)
कालीयनामगन्धद्रव्यम् । इत्यमरटीकासार-
सुन्दरी ॥

**जाहकः**, पुं, घोङ्गः । घोघ इति भाषा ।
माज्जारः । खट्टा । कारुण्डिका । इति मेदिनी ।
के, ९२ ॥ विलेशयजन्तुविशेषः । तत्पर्य्यायः ।
गात्रसङ्कोची २ मण्डली ३ बहुरूपकः ४ काम-
रूपी ५ विरूपी ६ विलवासः ७ । इति राज-

"विसर्पवत् सर्पति यः शोथस्तनुरपाकवान्।
दाहज्वरकरः पित्तात् स ज्ञेयो जालगर्द्दभः ॥"
अपाकवान् ईषत्पाकवान्। पित्तकृतत्वेन सर्व्वथा
पाकाभावस्यायुक्तत्वात्। अयमग्निवात इति
ख्यातः ॥ * ॥ अथ विकृतेन्द्रवृद्धागर्द्दभिकाजाल-
गर्द्दभानां चिकित्सा।
"विकृतामिन्द्रवृद्धाञ्च गर्द्दभीं जालगर्द्दभम्।
पैत्तिकस्य विसर्पस्य क्रियया साधयेद्भिषक्।
पाके तु रोपयेदाज्यैः पक्वैर्म्मधुरभेषजैः ॥"
इति भावप्रकाशः ॥

**जालगोणिका**, स्त्री, (जालवत् गोण्या छिद्रवस्त्रेण
कायतीति। कै + कः। ततो ह्रस्वः।) दधि-
मन्थनभाण्डविशेषः। तत्पर्य्यायः। कण्ठाला २।
इति शब्दरत्नावली ॥

**जालन्धरः**, पुं, त्रिगर्त्तदेशः। इति हेमचन्द्रः।
४। १४ ॥ (देशोऽयं पीठस्थानानामन्यतमः।
शेषः ॥ वागुरिकः। जालेन मृगबन्धनकर्त्ता
इत्यमरः। २। १०। १४ ॥ मर्कटकः।
इति हेम-
चन्द्रः। ४। २७७ ॥ (ऐन्द्रजालिकः।
इति
व्याकरणम् ॥)

**जालिकः**, त्रि, (जालेन जीवतीति। जाल + ठन्।)
ग्रामजाली। जालोपजीवी। इति मेदिनी।
के, ९४ ॥

**जालिका**, स्त्री, (जालं जालवदाकृतिरस्ति
अस्याः। जाल + "अत इनिठनौ।" ५।
२।
११५। इति ठन्।) वस्त्रविशेषः। गिरि-
सारः। (जलमेवेति स्वार्थे अण्। ततो
जालं
सलिलं उत्पत्तित्वेनास्त्यस्या इति ठन्।)
जलौका। विधवा। भटानामश्मरचिताङ्ग-
रक्षिणी। इति मेदिनी। के, ९४ ॥

**जालिनी**, स्त्री, (जालं चित्रकर्म्मवस्तुसमूहो
विद्यतेऽस्यामिति। इनिस्ततो ङीप्।)
चित्र-
शाला। इति हेमचन्द्रः। ४। ६५ ॥ (जालं
आनायसदृशद्रव्यं विद्यतेऽस्या इति।)
कोशा-
तकी। इति राजनिर्घण्टः ॥ (यथास्याः
पर्य्याया भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे।
"धामार्गवः पीतपुष्पो जालिनी कृतवेधना।
राजकोशातकी चेति तथोक्ता राजिमत्फला
॥"
घोषातकी। इति रत्नमाला ॥ प्रमेहरोगिणः
पीडकाविशेषः। यथा, सुश्रुते निदानस्थाने
६
अध्याये। "तत्र
वसामेदोभ्यामभिपन्नशरीरस्य
त्रिभिर्दोषैश्चानुगतधातोः प्रमेहिणो दश
पीडका
निर्घण्टः ॥

**जाह्नवी**, स्त्री, (जह्नोरपत्यं स्त्री। जह्नु + अण् +
ङीप्।) गङ्गा। इति हेमचन्द्रः। ४। १४७
॥
एतन्नामकारणं यथा, --
"जानुद्वारा पुरा दत्त्वां जह्नुः संपीय कोपतः
।
तस्य कन्यास्वरूपा च जाह्नवी तेन
कीर्त्तिता ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डम् ॥ * ॥
तस्यां तिथिविशेषे स्नानफलं यथा, --
"सामान्यदिवसस्नानसङ्कल्पं शृणु
सुन्दरि!।
पुण्यं दशगुणञ्चैव मौषलस्नानतः परम् ॥
ततस्त्रिंशद्गुणं पुण्यं रविसंक्रमणे दिने।
अमायाञ्चापि तत्तुल्यं द्विगुणं दक्षिणायने ॥
ततो दशगुणं पुण्यं नराणाञ्चोत्तरायणे।
चातुर्म्मास्यां पौर्णमास्यामनन्तं पुण्यमेवच
॥
अक्षयायाञ्च तत्तुल्यं नैतद्वेदनिरूपितम्।
असंख्यपुण्यफलदमेतेषु स्नानदानकम्।
सामान्यदिवसस्नानात् दानात् शतगुणं
भवेत् ॥
मन्वन्तरायां देवेशि! युगाद्यायां तथैव च।
माघस्य सितसप्तम्यां भीष्माष्टम्यां तथैव च
॥
ततोऽपि द्विगुणं पुण्यं नन्दायां भवदुर्ल्लभे!।
दशहरादशम्याञ्च युगाद्यादि समं फलम् ॥
नन्दासमञ्च वारुण्यां महत्पूर्ब्बे चतुर्गुणम्।
ततश्चतुर्गुणं पुण्यं द्विमहत्पूर्ब्बके सति ॥
पुण्यं कोटिगुणञ्चैव सामान्यस्नानतो हि
यत्।

चन्द्रोपरागसमये सूर्य्ये दशगुणं ततः ॥
पुण्येऽप्यर्द्धोदये काले ततः शतगुणं फलम् ।
सर्व्वेषामेव सङ्कल्पं वैष्णवानां विपर्य्ययः ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥

**जि**, जये । अभिभवे । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-अकं-सकंच-अनिट् ।) जय उत्कर्षः स्वीका-
रश्च । उत्कर्षेऽकर्म्मकः । जयन्ति यमुनाकूले रहः-
केलयः । मखैरसङ्ख्यैरजयत् सुरालयमिति काद-
म्बरी । जयति शत्रुं बली । अनभिधानादस्मात्
तुवन्त्वोः प्रयोगाभावः । किञ्च तयोः स्थाने
तिवन्तीति । किञ्च तुपः स्थाने तातङ् दृश्यते ।
यथा, भावगम्यलयः कोऽपि जयताद्वागगोचरः ।
इति दुर्गादासः ॥

**जिः**, त्रि, (जयतीति । जि + बाहुलकात् डिः ।)
जेता । पिशाचे, पुं । इत्येकाक्षरकोषः ॥

**जिगत्नुः**, पुं, (गच्छतीति । गम + “गमेः सन्वच्च ।”
उणां ३ । ३१ । इति क्त्नुः सन्वत्कार्य्यञ्च ।
अनुदात्तोपदेशे इत्यादिना मलोपः ।) प्राण-
वायुः । इत्युणादिकोषः ॥

**जिगमिषा**, स्त्री, (गन्तुमिच्छा । गम + सन् +
अ । ततष्टाप् ।) गमनेच्छा । इति व्याकरणम् ॥

**जिगीषा**, स्त्री, (जेतुमिच्छा । जि + सन् + अ ।
ततष्टाप् ।) जयेच्छा । (यथा, महाभारते १ । ७६ । ६ ।
“जिगीषया ततो देवा वव्रिरेऽङ्गिरसं मुनिम् ॥”)
व्यवसायः । प्रकर्षः । इति मेदिनी । षे, ३६ ॥

**जिघत्सा**, स्त्री, (अत्तुमिच्छा । अद् भक्षणे +

**जिघ्रः**, त्रि, (जिघ्रतीति । घ्रा गन्धोपादाने +
“पाघ्राध्माधेट्दृशः शः ।” ३ । १ । १३७ । इति
शः ।) घ्राणकर्त्ता । यथा, साहित्यदर्पणे ।
“स्वामी निश्वसितेऽप्यसूयति मनोजिघ्रः
सपत्नीजनः ॥”

**जिङ्गिनी**, स्त्री, वृक्षविशेषः । तत्पर्य्यायः ।
झिङ्गिनी २ झिङ्गी ३ सुनिर्यासा ४ प्रमो-
दिनी ५ । (यथा, गारुडे १९४ अध्याये ।
“जिङ्गिन्येरण्डकं रुद्र ! शूकशिम्बीसमन्वितम् ।
शीतोदकञ्च तन्नस्यो बाहुग्रीवाव्यथां हरेत् ॥”
यथाच, वाभटे सूत्रस्थाने १५ अध्याये ॥
“रोध्रशावरकरोध्रपलाशा
जिङ्गिनी सरलकट्फलयुक्ताः ।
कुत्सिताम्बकदली गतशोकाः
सैलवालुपरिपेलवमोचाः ॥”)
अस्या गुणाः । मधुरत्वम् । उष्णत्वम् । कषा-
यत्वम् । योनिशोधनत्वम् । कटुत्वम् । व्रण-
हृद्रोगवातातीसारनाशित्वम् । पटुत्वञ्च । इति
भावप्रकाशस्य पूर्ब्बखण्डे १ मे भागे ॥

**जिङ्गी**, स्त्री, मञ्जिष्ठा । इत्यमरः । २ । ४ । ९० ॥
(यथा, भैषज्यरत्नावल्यां कुष्ठचिकित्सायाम् ।
“आचु जिङ्गी महातिक्ता विशाला छपि-
पत्रकम् ॥”)

**जिज्ञासा**, स्त्री, (ज्ञातुमिच्छा । ज्ञा + सन् +
अः । स्त्रियां टाप् ।) ज्ञातुमिच्छा । यथा, --
“अथातो ब्रह्मजिज्ञासा ।”
इति शारीरकप्रथमसूत्रम् ॥
तत्पर्य्यायः । अनुयोगः १ प्रश्नः २ पृच्छा ३
निरूपणा ४ । इति जटाधरः ॥

**जिज्ञासितः**, त्रि, (जिज्ञासास्य जाता । तार-
कादित्वात् इतच् । यद्वा ज्ञा + सन् + कर्म्मणि
क्तः ।) कृतजिज्ञासः । पृष्टः । विचारितः ।
यथा, श्रीभागवते १ । ५ । ४ ।
“जिज्ञासितमधीतञ्च ब्रह्म यत्तत् सनातनम् ॥”
“किञ्च यत् सनातनं नित्यं परं ब्रह्म तच्च त्वया
जिज्ञासितं विचारितं अधीतं अधिगतं प्राप्त-
ञ्चेत्यर्थः ।” इति श्रीधरस्वामी ॥

**जिज्ञासुः**, त्रि, (ज्ञातुमिच्छुः । ज्ञा + सन् + “सना-

**जितः**, त्रि, (जि + कर्म्मणि क्तः ।) प्राप्तपरा-
जयः । तत्पर्य्यायः । पराभूतः २ परिभूतः ३
अभिभूतः ४ भग्नः ५ पराजितः ६ । इति
हेमचन्द्रः ॥ (यथा, मनुः । ४ । १८१ ।
“एभिर्जितैश्च जयति सर्व्वान् लोकानि-
मान् गृही ॥”)

**जितकाशिः**, पुं, (जितेन जयोद्यमेन काशते प्रका-
शते इति । काश + इन् ।) दृढमुष्टिः । इति
भारतटीकायां नीलकण्ठः ॥

**जितकाशी** [न्] त्रि, (जितेन जयेन काशते
इति । काश + णिनिः ।) जययुक्तः । तत्-
पर्य्यायः । जिताहवः २ । इति हेमचन्द्रः ।
३ । ४७० ॥ (यथा, हरिवंशे । १७५ । १४१ ।
“अनिरुद्धं रणे वासो जितकाशी महाबलैः ।
वाचं प्रोवाच संक्रुद्धो गृह्यतां हन्यतामिति ॥”)

**जितनेमिः**, पुं, (जिता नेमिर्य्येन ।) अश्वत्थ-
निर्म्मितदण्डः । तत्पर्य्यायः । आश्वत्थः २ ।
इति हेमचन्द्रः । ३ । ४९० ॥

**जितशत्रुः**, पुं, (जितः शत्रुर्य्येन ।) वृत्तार्हत्-
पिता । इति हेमचन्द्रः । १ । ३६ ॥ कृतशत्र-
पराजये, त्रि ॥

**जिताक्षरः**, त्रि, (जितानि आयत्तीकृतानि अक्ष-
राणि येन ।) कृताक्षरजयः । वशीभूताक्षरकः ।
दृष्टिमात्रेणाक्षरबोधेन पाठक्षमः । इति लोक-
प्रसिद्धिः ॥

**जितामित्रः**, पुं, (जिता अमित्रा रागद्वेषादयो
वाह्यावरणादयश्च येन इति ।) विष्णुः । इति
शब्दरत्नावली ॥ (यथा, महाभारते । १३ ।
१४९ । ६९ ।
“अजो महार्हः स्वाभाव्यो जितामित्रः
प्रमोदनः ॥”
जितीऽमित्रः शत्रुर्येन ।) कृतशत्रुपराजये, त्रि ॥

सन् + अः । “लुङ्सनोर्घसॢ ।” २ । ४ । ३७ ।
इति घसॢ ।) क्षुधा । इति हेमचन्द्रः । ३ । ५७ ॥

**जिघत्सुः**, त्रि, (अत्तुमिच्छुः । अद् + सन् + “लुङ्सनोर्घसॢ ।” २ । ४ । ३७ । इति घस्-लादेशः । ततः “सनाशंसभिक्ष उः ।” ३ । २ ।
१६८ । इति उः ।) क्षुधितः । इत्यमरः । ३ । १ । २० ॥

**जिघांसकः**, त्रि, (जिघांसति हन्तुमिच्छतीति । हन + सन् + ण्वुल् ।) हननेच्छुकः । इति व्याक-रणम् ॥

**जिघांसा**, स्त्री, (हन्तुमिच्छा । हन् + सन् + “अभ्यासाच्च ।” ७ । ३ । ५५ । इति कुत्वम् ।
“अज्झनगमां सनि ।” ६ । ४ । १६ । इति दीर्घः । ततः अप्रत्ययस्ततःस्त्रियां टाप् ।) हननेच्छा । इति व्याकरणम् ॥ (यथा, मनुः । ११ । २०६ ।
“जिघांसया ब्राह्मणस्य नरकं प्रतिपद्यते ॥”)

**जिघांसुः**, पुं, (हन्तुमिच्छुः । हन् + सन् + “सना-शंसभिक्ष उः ।” ३ । २ । १६८ । इति उः ।)
शत्रुः । इति हेमचन्द्रः । ३ । ३९३ । हननेच्छौ,
त्रि । यथा, भट्टिः ।
“प्रशान्तचेष्टं हरिणं जिघांसुः ॥”
(यथाच, महाभारत । ३ । १५४ । १८ ।
“जिघांसवः क्रोधवशाः सुभीमा
भीमं समन्तात् परिवव्रुरुग्राः ॥”)

शंसभिक्ष उः ।” ३ । २ । १६८ । इति उः ।)
आत्मज्ञानेच्छुः । यथा, श्रीभगवद्गीतायां ७ । १५ ॥
“चतुर्व्विधा भजन्ते मां जनाः सुकृतिनोऽर्ज्जुन ! ।
आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ! ॥”
सामान्यबोधेच्छकश्च ॥

**जिज्ञास्यः**, त्रि, (जिज्ञास्यते इति । ज्ञा + सन् + कर्म्मणि यत् ।) जिज्ञासितव्यः । जिज्ञासनीयः ।
(विचार्य्यम् । यथा, भागवते । २ । ९ । ३५ ।
“एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनात्मनः ।
अन्वयव्यतिरेकाभ्यां यत् स्यात् सर्व्वत्र सर्व्वदा ॥”
“आत्मनस्तत्त्वजिज्ञासुनाएतावदेव जिज्ञास्यं विचार्य्यम् ॥” इति श्रीधरस्वामी ॥)

**जितः**, पुं, (जितं जयमस्यास्तीति । अच् ।) अर्हदुपासकविशेषः । इति हेमचन्द्रः ॥

(यथा, मार्कण्डेये । ३४ । ११३ ।
“ऋणप्रदाता वैद्यश्च श्रोत्रियः सजला नदी ।
जितामित्रो नृपो यत्र बलवान् धर्म्मतत्परः ॥”)

**जितारिः**, पुं, (जिता अरयः कामक्रोधादयो येन ।) बुद्धः । इति त्रिकाण्डशेषः ॥ वृत्तार्हत्पिता । इति हेमचन्द्रः । १ । ३६ ॥ (कुरुपुत्त्रस्या-विक्षितः पुत्त्राणामन्यतमः । यथा, महाभा-रते । १ । ९५ । ५० ।
“अविक्षितः परिक्षिच्च शवलाश्वश्च वीर्य्यवान् ।
आदिराजो विराजश्च शिल्पिनश्च महाबलः ।
उच्चैःश्रवा भङ्गकारो जितारिश्चाष्टमः स्मृतः ॥”)
जितशत्रौ, त्रि ॥

**जिताष्टमी**, स्त्री, (जिता पुत्त्रसौभाग्यदानेन सर्व्वोत्-कर्षेण स्थिता या अष्टमी ।)
गौणाश्विनकृष्णा-ष्टमी । सैव जीमूताष्टमी । यथा, “आश्विन-कृष्णाष्टम्यां जीमूतवाहनपूजा । तत्राष्टमी प्रदोषव्यापिनी ग्राह्या । भविष्योत्तरे ।
“इषे मास्यसिते पक्षे अष्टमी या तिथिर्भवेत् ।
पुत्त्रसौभाग्यदा स्त्रीणां ख्याता सा जीवपुत्त्रिका ॥
शालिवाहनराजस्य पुत्त्रो जीमूतवाहनः ।

तस्यां पूज्यः स नारीभिः पुत्त्रसौभाग्यलिप्सया ॥
प्रदोषसमये स्त्रीभिः पूज्यो जीमूतवाहनः ।
पुस्करिणीं विधायाथ प्राङ्गणे चतुरस्रिकाम् ॥”
किञ्च विष्णुधर्म्मोत्तरे ।
“पूर्ब्बेद्युरपरेद्युर्व्वा प्रदोषे यत्र चाष्टमी ।
तत्र पूज्यः सदा स्त्रीभी राजा जीमूतवाहनः ॥”
तथा च । यद्दिने प्रदोषव्यापिनी अष्टमी तत्रैव व्रतं उभयदिने चेत् परदिने त्रिसन्ध्यव्यापित्वात् ।
उभयदिने प्रदोषाव्याप्तौ उदयगामिन्यां तदुक्तं निर्णयामृतसिन्धौ ।
“लक्ष्मीव्रतं चाभ्युदिते शशाङ्के
यत्राष्टमी चाश्विनकृष्णपक्षे ।
तत्रोदयं वै कुरुते दिनेश-
स्तदा भवेज्जीवितपुत्त्रिका सा ॥” इति ।
अस्यामष्टम्यां स्त्रीभिर्न भोक्तव्यम् ।
“आश्विनस्यासिताष्टम्यांयाः स्त्रियाऽन्नं हि भुञ्जते ।
मृतवत्सा भवेयुस्ता वैधव्यञ्च भवेद्ध्रुवम् ॥”
इति वचनात् ।
इति वाचस्पतिमिश्रकृतचमत्कारचिन्तामणिः ॥

**जिताहवः**, पुं, (जित आहवो युद्धं येन ।) जित-
काशी । इति हेमचन्द्रः । ३ । ४७० ॥

**जितेन्द्रियः**, त्रि, (जितानि वशीकृतानि इन्द्रि-
याणि श्रोत्रादीनि येन ।) वशीकृतेन्द्रियः ।
तत्पर्य्यायः । शान्तः २ श्रान्तः ३ । इति
हेमचन्द्रः ॥ (यथा, शब्दचिन्तामणिधृतवचनम् ।
“श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः ।
न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः ॥”)

**जितेन्द्रियाह्वः**, पुं, (जितेन्द्रियं आह्वयते स्पर्द्धते
इति । आ + ह्वे + कः ।) कामवृद्धिवृक्षः ।
इति राजनिर्घण्टः ॥

**जित्तमः**, पुं, (अयमेषामतिशयेन जित् जयशीलः ।
जित् + तमप् ।) जितुमः । मिथुनराशिः । इति
ज्योतिषतत्त्वम् ॥ जयशीलानां मध्ये उत्तमश्च ॥

**जिनयोनिः**, पुं, मृगः । इति शब्दरत्नावली ॥

**जिनसद्म**, [न्] क्ली, (जिनानां सद्म गृहम् ।)
जिनगृहम् । तत्पर्य्यायः । चैत्यः २
विहारः ३ ।
इति हेमचन्द्रः । ४ । ६० ॥

**जिनेन्द्रः**, पुं, (जिनानां इन्द्रः ।) बुद्धः । इति
हलायुधः ॥

**जिम**, उ भक्षे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् । उदित्त्वात् क्त्रावेट् ।) उ, जिमित्वा
जिन्त्वा । इति दुर्गादासः ॥

**जिरि**, र न हिंसायाम् । इति कविकल्पद्रुमः ॥
(स्वां-परं-सकं-सेट् ।) रेफोपधः । र, वैदिकः ।
न, जिरिणोति । इति दुर्गादासः ॥

**जिव**, इ प्रीणने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) ह्वखी । इ, जिम्ब्यते । जिम्बति
लोकः पितरम् । इति दुर्गादासः ॥

**जिवाजिवः**, पुं, (जीवञ्जीवः पृषोदरादित्वात् साधुः ।)
जीवञ्जीवपक्षी । इति शब्दरत्नावली ॥

**जिव्रिः**, पुं, (जीर्य्यत्यनेनेति । जॄष वयोहानौ +
“जीर्य्यतेः क्रिन् रश्च वः ।” उणां ५ । ४९ ।
इति क्रिन् । इरादिकार्य्यं रेफस्यच वः । बाहु-
लकात् हनि चेति न दीर्घः ।) समयः । पक्षी ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ (जीर्णे,
त्रि । यथा, ऋग्वेदे । १ । ७० । ५ ।
“वित्वा नरः पुरुत्रा सपर्य्यन् पितुर्न
जिव्रेर्वि वेदोभरन्त ॥”)

**जिष**, उ सेके । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् । उदित्त्वात् क्त्वा वेट् ।) उ, जेषित्वा

१४० । इति मन् ।) कुटिलः । (यथा, महा-
भारते । १ । १०२ । १८ ।
“सक्रोधामर्षजिह्मभ्रूकषायीकृतलोचनाः ॥”)
मन्दः । इति मेदिनी । मे, १३ ॥

**जिह्मगः**, पुं, (जिह्मं कुटिलं वक्रमित्यर्थः यथा
स्यात् तथा गच्छतीति । गम + डः ।) सर्पः ।
(यथा, महाभारते । १ । ९ । १९ ।
“स लब्ध्वा दुर्ल्लभां भार्य्यां
पद्मकिञ्जल्कवर्च्चसम् ।
व्रतं चक्रे विनाशाय जिह्मगानां धृतव्रतः ॥”
जिह्मं मन्दं गच्छतीति ।) मन्दगे, त्रि । इति
मेदिनी । गे, २५ ॥

**जिह्ममोहनः**, पुं, (जिह्मं कुटिलं यथा तथा मुह्य-
तीति । मुह + “नन्दिग्रहीति ।” ३ । १ । १३४ ।
इति ल्यः । यद्वा, जिह्मस्य कुटिलस्य सर्पस्य
मोहनश्चित्तमोहनः । भक्ष्यत्वात् ।) भेकः । इति
शब्दरत्नावली ॥

**जिह्मशल्यः**, पुं, (जिह्मं कुटिलं शल्यं यस्मात् ।)
खदिरः । इति जटाधरः ॥

**जिह्वं**, क्ली, (जिह्वां निपातनात् मस्य वत्वे साधुः ।)
तगरमूलम् । इति रत्नमाला ॥

**जिह्वः**, पुं स्त्री, (हूयते आहूयनेऽनेनेति । ह्वे + बाहु-
लकात् डप्रत्ययेन द्वित्वादौचेति साधुः ।) जिह्वा ।
इत्यमरटीकायां भरतः ॥ (यथा, हरिवंशे ।
११२ । ६५ ।
“द्विसहस्रेण जिह्वेन वासुकिः कथयिष्यति ॥”)

**जिह्वलः**, त्रि, (जिह्वेन जिह्वया लाति आदत्ते
परद्रव्याणीति । जिह्व + ला + कः ।) लुब्धः ।
लोलुपः । यथा, श्राद्धतत्त्वे ।
“श्राद्धं कृत्वा परश्राद्धे भुञ्जते ये च जिह्वलाः ।
पतन्ति नरके घोरे लुप्तपिण्डोदकक्रियाः ॥”

**जिह्वा**, स्त्री, (जयति रसमनयेति । जि + “शेता-
यह्वजिह्वाग्रीवाप्वामीवाः ।” उणां । १ । १५४ ।
इति वन् प्रत्ययेन ह्रुगागमे निपातनात् साधुः ।)
रसज्ञानेन्द्रियम् । जिव् इति भाषा । तत्-

**जित्या**, स्त्री, (जि + "विपूयविनीयजित्यामुञ्ज-
कल्कहलिषु ।" ३ । १ । ११७ । इति क्यप् ।) हलिः । इति हेमचन्द्रः । ३ । ५५४ ॥ (सिद्धान्त-
कौमुदीमते तु पुंलिङ्गान्तोऽयं शब्दः ॥)

**जित्वरः**, त्रि, (जयतीति । जि + "इण्नशजि-
शर्त्तिभ्यः क्वरप् ।" ३ । २ । १६३ । इति क्वरप् ।) जेता । इत्यमरः । २ । ८ । ७७ ॥ (यथा, माघे । २ । ९ ।
"करदीकृतभूपालो भ्रातृभिर्जित्वरैर्दृशाम् ।
विनाप्यस्मदलम्भूष्णुरिज्यायै तपसः सुतः ॥")

**जित्वरी**, स्त्री, (जयति सर्व्वोत्कर्षेन वर्त्तते इति ।
जि + क्वरप् । "टिड्ढेति ।" ४ । १ । १५ । इति ङीप् ।) काशी । इति त्रिकाण्डशेषः ॥

**जिनः**, पुं, (जयतीति । जि + "इण् षिञ् जीति ।"
उणां । ३ । २ । इति नक् ।) अर्हन् । बुद्धः । विष्णुः । इति हेमचन्द्रः । २ । १३० ॥ अति-
वृद्धः । इत्युणादिकोषः ॥ जित्वरे, त्रि । इति मेदिनी । ने, ८ ॥
जिष्ण्वा । इति दुर्गादासः ॥

**जिष्णुः**, पुं, (जयतीति । जि जये + "ग्लाजिस्थश्च
ग्स्नुः ।" ३ । २ । १३९ । इति ग्स्नुः ।) विष्णुः । इति हेमचन्द्रः । २ । १२८ ॥ (यथा, महा-
भारते । ५ । ७० । १३ ।
"विष्णुर्व्विक्रमणाद्देवो जयनाज्जिष्णुरुच्यते ।
शाश्वतत्वादनन्तश्च गोविन्दो वेदनाद्गवाम् ॥")
इन्द्रः । (यथा, अथर्व्ववेदे । ११ । ९ । १८ ।
"जयंश्च जिष्णुश्चामित्रा जयतामिन्द्रमेदिनौ ॥")
अर्ज्जुनः । (यथा, महाभारते । ४ । ४२ । २१ ।
"अहं दुरापो दुर्द्धर्षो दमनः पाकशासनिः ।
तेन देवमनुष्येषु जिष्णुर्नामास्मि विश्रुतः ॥"
भौत्यस्य मनोः पुत्त्राणामन्यतमः । यथा, हरि-
वंशे । ७ । ८८ ।
"तरङ्गभीरुर्व्वष्मश्च तरस्वानुग्र एव च ।
अभिमानी प्रवीरश्च जिष्णुः संक्रन्दनस्तथा ॥
तेजस्वी सबलश्चैव भौत्यस्यैते मनोः सुताः ॥")
जेतरि त्रि । इति मेदिनी । णे, १३ ॥ (यथा, रघुः । ४ । ८५ ।
"इति जित्वा दिशो जिष्णुर्न्यवर्त्तत रथोद्धतम् ।
रजो विश्रामयन् राज्ञां छत्रशून्येषु भौलिषु ॥")

**जिह्मं**, क्ली, (जहातीति । हा + "जहातेः सन्वदा-
लोपश्च ।" उणां । १ । १४० । इति मन् ।) तगरवृक्षः । इति मेदिनी । मे, १३ ॥

**जिह्मः**, त्रि, (जहाति परित्यजति सारल्यमिति ।
पर्य्यायः । रसज्ञा २ रसना ३ । इत्यमरः । २ । ६ । ९१ ॥ रशना ४ रसनम् ५ जिह्वः ६ । इति तट्टीका ॥ रसालः ७ सुधास्रवा ८ रसिका ९ रसाङ्क्षा १० । इति शब्दरत्नावली ॥ रसा ११ लोला १२ रसाला १३ रसला १४ ललना १५ । इति जटाधरः ॥ (यथा, मुकुन्दमाला-
याम् । २६ ।
"जिह्वे ! कीर्त्तय केशवं मुररिपुं चेतो ! भज श्रीधरं
पाणिद्वन्द्व ! समर्च्चयाच्युतकथां श्रोत्रद्वय ! त्वंशृणु ।
कृष्णं लोकय लोचनद्वय ! हरेर्गच्छाङ्घ्रियुग्मालयं
जिघ्र घ्राण ! मुकुन्दपादतुलसीं मूर्द्धन्नमाधो-
क्षजम् ॥")
अस्याः परीक्षा यथा, भावप्रकाशे ।
"शाकपत्रप्रभा रूक्षा स्फुटिता रसनानिलात् ।
रक्ता श्यामा भवेत् पित्तात्लिप्तार्द्रा धवला कफात् ॥
परिदग्धा खरस्पर्शा कृष्णा दोषत्रयेऽधिके ।
सैव दोषद्वयाधिक्ये दोषद्वितयलक्षणा ॥"
(यथास्या उत्पत्तिविषयः ।

"उदरे पच्यमानानामाध्मानाद्रुक्मसारवत्।
कफशोणितमांसानां सारो जिह्वा प्रजायते ॥"
इति सुश्रुते शारीरस्थाने ४ र्थे अध्याये ॥)

**जिह्वानिर्लेखनं**, क्ली, (जिह्वाया निर्लेखनं संस्कारः ।)
जिह्वामार्ज्जनम् । जिवआँचडान इति भाषा ।
जिह्वामार्ज्जनद्रव्यम् । जिवाँचडा चेयाडि
इति भाषा । तत् दशाङ्गुलं कोमलं कृशं
स्वर्णरूप्यताम्रलोहनिर्म्मितं जिह्वामलापकर्षणे
प्रशस्तम् । तस्य गुणः ।
वक्त्रवैरस्यजिह्वाश्रित-
मलनाशित्वम् । आरोग्यरुचिकारित्वञ्च । इति
राजवल्लभः ॥
("जिह्वानिर्लेखनं रौप्यं सौवर्णं वार्क्षमेव च ।
तन्मलापहरं शस्तं मृदुश्लक्ष्णं दशाङ्गुलम् ।
मुखवैरस्यदौर्गन्ध्य-शोफजाड्यहरं सुखम् ॥"
अस्याधिक्येन रोगजनकता यथा, --
"जिह्वातिलेखनाच्छुष्कभक्षणादभिघाततः।
कुपितो हनुमूलस्थः स्रंसयित्वानिलो हनू ॥
करोति विवृतास्यत्वमथवा संवृतास्यताम् ।
हनुस्रंसः स तेन स्यात्
कृच्छ्राच्चर्व्वणभाषणम् ॥"
इति वाभटे निदानस्थाने पञ्चदशेऽध्याये ॥)

**जिह्वापः**, पुं, (जिह्वया पिबतीति । पा + "आतो-
ऽनुपसर्गे कः ।" ३ । २ । ३ । इति कः ।)
कुक्कुरः । व्याघ्रः । विडालः । भल्लूकः । इति
शब्दरत्नावली ॥ चित्रकव्याघ्रः । इति विश्वः
॥

**जिह्वामलं**, क्ली, (जिह्वाया मलम् ।) जिह्वा-
स्थितमलम् । तत्पर्य्यायः । कुलुकम् २ ।
इति
त्रिकाण्डशेषः ॥

**जिह्वामूलीवः**, पुं, (जिह्वामूले भवः । "जिह्वा-
मूलाङ्गुलेश्छः ।" ४ । ३ । ६२ । इति छः ।)
वज्राकृतिवर्णः । वोपदेवेनास्य मू इति संज्ञा
कृता । स तु कखपरे विसर्गस्थाने भवति ।
यथा
हरि × काम्यः । अस्योच्चारणं विसर्गवत् ।
इति
व्याकरणम् ॥

अयं रोगो लोके जलीति ख्यातः ।
जाडीति
वङ्गभाषा ॥ * ॥ कफजमाह ।
कफेन गुर्व्वी बहलाचिता च
मांसोच्छ्रयैः शाल्मलिकण्टकाभैः ।
बहला स्थूला । मांसोच्छ्रयैः
मांसजकण्टकैः ॥ * ॥
अलासमाह ।
जिह्वातले यः श्वयथुः प्रगाढः
सोऽलाससंज्ञः कफरक्तमूर्त्तिः ।
जिह्वां सरुक् स्तम्भयति प्रवृद्धो
मूले च जिह्वा भृशमेति पाकम् ॥
प्रगाढः प्रकर्षेण गाढो दारुणः ।
कफरक्तमूर्त्तिः
कफरक्ताभ्यां मूर्त्तिर्यस्य स कफरक्तज
इत्यर्थः ।
जिह्वास्तम्भेन वायुरप्यत्र बोद्धव्यः । भृशं
पाकेन
पित्तञ्च । अतस्त्रिदोषजोऽयम् ।
असाध्यत्व-
ञ्चास्य ॥ * ॥ उपजिह्विकामाह ।
जिह्वाग्ररूपः श्वयथुश्च जिह्वा-
मुन्नाम्य जातः कफरक्तयोनिः ।
प्रसेककण्डूपरिदाहयुक्तः
प्रकथ्यतेऽसायुपजिह्विकेति ॥
जिह्वाग्ररूपः जिह्वाग्राकृतिः ॥" * ॥
अथ जिह्वारोगाणां चिकित्सा ।
"जिह्वागतविकाराणां शस्तं
शोणितमोक्षणम् ।
गुडुचीपिप्पलीनिम्बकवलः कटुभिः
सुखः ॥
ओष्ठप्रकोपेऽनिलजे यदुक्तं
प्राक्चिकित्सितम् ।
कण्टकेष्वनिलोत्थेषु तत् कार्य्यं भिषजा
खलु ॥
पित्तजे परिघृष्टे तु निःसृते दुष्टशोणिते ।
प्रतिसारणगण्डूषनस्यञ्च मधुरं हितम् ॥
कण्टकेषु कफोत्थेषु लिखितेष्वसृजः
क्षये ।
पिप्पल्यादिर्म्मधुयुतः कार्य्यस्तु
प्रतिसारणे ॥

जीवनं जलं मूत्रयति स्रावयतीति । पृषोदरा-
दित्वात् साधुः । इति पुरुषोत्तमदेवः ।) मेघः ।
(यथा, महाभारते । ६ । १९ । ३१ ।
"राजानमन्वयुः पश्चात् जीमूता इव वार्षिकाः ॥")
मुस्ता । देवताडवृक्षः । इत्यमरः । ३ । ३ । ५८ ॥
इन्द्रः । भृतिकरः । घोषकलता । इति हेम-
चन्द्रः ॥ (यथा, चरके सूत्रस्थाने प्रथमेऽध्याये ।
"धामार्गवमथेक्ष्वाकु जीमूतं कृतवेधनम् ॥"
सूर्य्यः । यथा, महाभारते । ३ । ३ । सूर्य्य-
स्याष्टोत्तरशतनामकीर्त्तने । २२ ।
"वरुणः सागरोऽंशुश्च जीमूतो जीवनोऽरिहा ॥"
ऋषिविशेषः । यथा, महाभारते ५ । १११ । २४ ।
"जीमूतस्यात्र विप्रर्षेरुपतस्थे महात्मनः ॥"
मल्लविशेषः । भीमसेनस्तु विराटगृहवासकाले
नियुद्धेनैनं निहतवान् । यथा, महाभारुते ।
४ । १२ । २२ ।
"ततस्तु वृत्रसङ्काशं मीमो मल्लं समाह्वयत् ।
जीमूतं नाम तं तत्र मल्लं विख्यातविक्रमम् ॥"
स्वनामख्यातो दशार्हस्य पौत्रः । यथा, हरि
वंशे । ३२ । २५ ।
"दशार्हस्य सुतो व्योमा व्योम्नो जीमूत
उच्यते ॥"
वपुष्मत्पुत्त्रः । स तु शाल्मलद्वीपस्य ईश्वर-
विशेषः । यथा, ब्रह्माण्डे ३६ अध्याये ।
"शाल्मलस्येश्वराः सप्त सुतास्ते तु वपुष्मतः ।
श्वेतश्च हरितश्चैव जीमूतो रोहितस्तथा ॥"
अस्य वर्षस्तु एतन्नाम्नैव विख्यातः । यथा,
तत्रैव, --
"जोमूतस्य च जीमूतो रोहितस्य च रोहितः ॥"
ऊनचत्वारिंशदक्षरवृत्तिविशेषः । तल्लक्षणा-
दिकं छन्दःशब्दे द्रष्टव्यम् ॥)

**जीमूतकूटः**, पुं, (जीमूतो मेघः कूटे शिखरे यस्य ।
अत्युन्नतत्वादेवास्य तथात्वम् ।) पर्व्वतः । इति
हारावली । ५१ ॥

**जीमूतमूलं**, क्ली, (जीमूतस्यं मुस्ताया मूलमिव
मूलमस्य ।) शटी । इति रत्नमाला ॥

**जीमूतवाहनः**, पुं, (जीमूतो मेघो वाहनं यस्य ।)
इन्द्रः । मेघवाहन इत्यमरदर्शनात् । धर्म्मरत्न-
नामकस्मृतिसंग्रहकर्त्ता ॥ (यदुक्तं दायभागे ।

"अधोविरेकयुक्ताग्रामात्रवद्वयरूपकः।
जिह्वामूलीय इत्येव गजकुम्भोपमोऽपरः॥"
इति सुपद्मव्याकरणटीका॥

**जिह्वारदः**, पुं, (जिह्वा एव रदो दन्त इव यस्य।)

पक्षी। इति हारावली। ५६॥

**जिह्वारोगः**, पुं, (जिह्वाया रोगः।) मुखरोगा-

न्तर्गतरसनाजातव्याधिः। तत्र जिह्वारोगाणां
निदाननामसङ्ख्याः प्राह।
"वातजः पित्तजश्चापि कफजोऽलाससंज्ञकः
।
उपजिह्विका च गदा जिह्वायां पञ्च कीर्त्तिताः
॥"
तत्र वातजस्य लक्षणमाह।
जिह्वानिलेनस्फुटिता प्रसुप्ता
भवेच्च शाकच्छदनप्रकाशा।
स्फुटितामनाग्विदीर्णा। प्रसुप्ता रसानभिज्ञ-
तया सुप्तेव। शाकच्छदनप्रकाशा शाको मरु-
भूमिजो द्रुमः तद्वत् कण्टकचिता॥ * ॥
पित्तजमाह।
पित्तात् सदाहैरुपचीयते च
दीर्घैः सरक्तैरपिकण्टकैश्च।

उपजिह्वान्तु संलिख्य क्षारेण
प्रतिसारयेत्।
शिरोविरेकगण्डूषधूमैश्चैनामुपाचरेत्॥
व्योषक्षाराभयावह्निचूर्णमेतत् प्रघर्षणम्।
उपजिह्वाप्रशान्त्यर्थमेभिस्तैलञ्च
पाचयेत्॥"
इति भावप्रकाशः॥

**जिह्वालिट्** [ह्] पुं, (जिह्वया लेढीति। लिह

+ क्विप्।) कुक्कुरः। इति भूरिप्रयोगः
॥

**जिह्वाशल्यः**, पुं, (जिह्वाया शल्यमिव।
अभिधानात्

पुंस्त्वम्।) खदिरवृक्षः। इति
राजनिर्घण्टः॥

**जिह्वास्वादः**, पुं, (जिह्वया स्वाद आस्वादनम्।)

लेहनम्। इति हेमचन्द्रः। ३। ८८॥

**जीनः**, त्रि, (जिनाति जीर्य्यतीति। ज्या वयो

हानौ + "गत्यर्थेति।" क्तः। ग्रहिज्येति
सम्प्र-
सारणम्। हल इति दीर्घः। लादिश्चेति
नत्वम्।) वृद्धः। इत्यमरः। २। ६।
४२॥
(चर्म्मपुटे। यथा, मनुः। ११। १३८।
"जीनकार्म्मुकवस्तावीन् पृथग् दद्यात्
विशुद्धये॥")

**जीमूतः**, पुं, (जयति आकाशमिति। जि +

"जेर्मूट्चोदात्तः।" उणां ३। ९१। इति
क्तः।
मूडागमो धातोदीर्घश्च।) पर्व्वतः।
(यथा-
मत्स्यपुराणे। १२०। ७५।
"जीमूतो द्रावणश्चैव
मैनाकश्चन्द्रपर्व्वतः।
आयतास्ते महाशैलाः समुद्रं दक्षिणं प्रति
॥" * ॥

"बहुविधपूर्ब्बनिवन्धृव्याख्यासञ्जातसंशयस्यैतत्
जीमूतवाहनकृतं प्रकरणमपनुत्तये ध्येयम्॥
परिभद्रकुलोद्भूतः श्रीमान् जीमूतवाहनः।
दायभागं चकारेमं विदुषां संशयच्छिदे॥"
शालिवाहननृपस्य पुत्रः। आश्विनकृष्णा-
ष्टम्यां पुत्रसौभाग्यकामाभिर्नारीभिरयंपूज्यः।
एतद्विवरणं जिताष्टमीशब्दे द्रष्टव्यम्॥ जीमूत-
केतोर्नृपस्य पुत्रः। यथा, कथासरित्सागरे।
२२। २४।
"अथ तस्याचिराद्वे राज्ञः सूनुरजायत।
जीमूतवाहनं तं च नाम्ना स विदधे पिता॥")

**जीमूतवाही**, [न्] पुं, (जीमूतं वहति जीमूता-

कारेणात्मानं परिणामयतीत्यर्थः। वह +

णिनिः । मेघयोनित्वादेवास्य तथात्वम् ।) धूमः
।
इति हेमचन्द्रः ॥

**जीरः**, पुं, (जवतीति । जु गतौ + “जोरी च ।”
उणां २ । २३ । इति रक् ईश्चान्तादेशः ।)
जीरकः । खड्गः । इति मेदिनी । रे, ३९ ॥
अनुः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥
(विद्यावति, त्रि । यथा, ऋग्वेदे । १ । ४४ । ११
।
“मनुष्वद्देव धीमहि प्रचेतसं जीरं दूतममर्त्त्यम् ।”
“जीरं विद्यावन्तम् ।” इति दयानन्दभाष्यम् ॥)

**जीरकः**, पुं, (जीर + संज्ञायां कन् ।) वणिग्-
द्रव्यविशेषः । जीरा इति भाषा । तत्पर्य्यायः ।
जरणः २ अजाजी ३ कणा ४ । इत्यमरः ।
२ । ९ । ३६ ॥ जीर्णः ५ जीरः ६ दीप्यः ७
जीरणः ८ अजाजिका ९ वह्निशिखः १०
मागधः ११ दीपकः १२ । इति जटाधरः ॥
अस्य गुणाः । कटुत्वम् । उष्णत्वम् । दीपन-
त्वम् । वातगुल्माध्मानातीसारग्रहणीक्रिमि-
नाशित्वञ्च । इति राजनिर्घण्टः ॥ रुचिस्वर-
कारित्वम् । गन्धयुक्तत्वम् । कफवातनाशित्वम्
।
पाके कटुत्वम् । तीक्ष्णत्वम् । लघुत्वम् । पित्त-
वर्द्धनत्वञ्च । इति राजवल्लभः ॥ अपि च ।
शुक्लजीरा कृष्णजीरा कलौञ्जी एषां नामानि
गुणाश्च ।
“जीरको जरणोऽजाजी कणा स्याद्दीर्घजीरकः ।
कृष्णजीरः सुगन्धश्च तथैवोद्गारशोधनः ॥
कलाजाजी तु सुषवी कालिका चोपकालिका ।
पृथ्वीका कारवी पृथ्वी पृथुस्तूष्णोपकुञ्चिका ॥
उपकुञ्ची च कुञ्ची च बृहज्जीरक इत्यपि ।
जीरकत्रितयं रूक्षं कटुकं दीपनं लघु ॥
संग्राहि पित्तलं मेध्यं गर्भाशयविशुद्धिकृत् ।
ज्वरघ्नं पाचनं बल्यं वृष्यं रुच्यं कफापहम् ॥
चक्षुष्यं पवनाध्मानगुल्मच्छर्द्यतिसारहृत्॥”
इति भावप्रकाशः ॥

**जीरणः**, पुं, (जीरकः पृषोदरादित्वात् कस्य णः ।)
जीरकः । इति राजनिर्घण्टः ॥

**जीरिका**, स्त्री, (जीर्य्यतीति । जॄ + बाहुलकात्

“तत्याज देहंधर्म्मात्मा देही जीर्णमिवाम्बरम्
॥”)
गतबहुवयः । जराविशिष्टः । पक्वः । पाक-
विशिष्टः ॥ * ॥ (यथा, चाणक्ये । ७९ ।
“जीर्णमन्नं प्रशंसीयात् भार्य्याञ्च गतयौवनाम्
।
रणात् प्रत्यागतं शूरं शस्यञ्च गृहमागतम् ॥”)
अथ जीर्णद्रव्याणि ।
“नारीकेलफलेषु तण्डुलमथ क्षीरं रसाले हितं
जम्बीरोत्थरसो घृते समुचितः सर्पिस्तु मोचा-
फले ।
गोधूमेषु च कर्क्कटी हिततमा मांसात्यये
काञ्जिकं
नारङ्गे गुडभक्षणञ्च कथितं पिण्डारके कोद्रवः
॥
पिष्टान्ने सलिलं पियालफलजे पथ्या हिता
माषजे
खण्डक्षीरभवे तु तक्रमुचितं कोष्णाम्बु
कोलम्बजे ।
मत्स्ये चूतफलं त्वजीर्णशमनं
मध्वम्बुपानात्यये
तैलं पौष्करजे कटुप्रशमनं शेषांस्तु बुद्ध्या
जयेत् ॥
पनसे कदलं कदले च घृतं
घृतपाकविधावपि जम्बुरसः ।
तदुपद्रवशान्तिकरं लवणं
लवणेषु च तण्डुलवारि वरम् ॥
नारिकेलफलतालबीजयोः
पाचनं य इह तण्डुलं विदुः ।
ते वदन्ति मुनयोऽथ तण्डुलान्
क्षीरवारि परिपाचयत्यपि ॥
दाडिमामलकतालतिन्दुकी-
बीजपूरलवलीफलान्यपि ।
वाकुलेन फलेन च पाचयेत्
पाकमेति बकुलं स्वमूलतः ॥
मधूक-मालूर-नृपादनानां
परूषखर्ज्जूरकपित्थकानाम् ।
पाकाय पेयं पिचुमर्द्दबीजं
घृतेऽपि तक्रं प्रवदन्ति पथ्यम् ॥
गोधूममाषहरिमन्थसतीनमुद्ग-
पाको भवेदिति च मातुलपत्रकेण ।

अम्लेन केनाप्यथ व्योषणेन
कोष्णाम्बुना वा घृतमेति पाकम् ।
तिलादितैलान्यपि काञ्जिकेन
सर्ज्जस्य मज्जा पनसामलक्यौ ॥
किमत्र चित्रं बहुमांसमत्स्य-
भोजी सुखी स्यात् परिपीय शुक्तम् ।
इत्यद्भुतं केवलवह्निपक्व-
मांसेन मत्स्यं परिपाकमेति ॥
कपोतपारावतनीलकण्ठ-
कपिञ्जलानां पिशितानि जग्ध्वा ।
काशस्य मूलं परिपेयमुष्णं
सुखीभवेन्ना बहुशो न भूतम् ॥
व्योषै रसाला सुरभीयवस्तु-
मण्डेन कोष्णेन विपाकमेति ।
शङ्खस्य चूर्णेन हयारिनारी-
पयोदधिक्षीरमुपैति पाकम् ॥
वटो वेसवाराल्लवङ्गेन फेणी-
शमं पर्पटः शिग्रुबीजेन याति ।
कणामूलतो लड्डुका पूपकादे-
र्व्विपाको भवेच्छष्कुलीमण्डयोश्च ॥
श्वाविद्गोधा गण्डकाश्चित्रतैलाद्-
यावत् क्षारात् कोलकूर्म्मादयोऽपि ।
जीर्य्यन्त्येवं पायसो मुद्गयूषात्
सामुद्राद‌प्यारनालं सुखाय ॥
तप्तं तप्तं हेम वा तारमग्नौ
तोये क्षिप्तं सप्तकृत्यस्तदम्भः ।
पीत्वावश्यं दीर्घकालोपपन्न-
मम्भो जीर्णं शीघ्रमेवं जहाति ॥
पालङ्किकाकेमुककारवल्ली-
वार्त्ताकुवंशाङ्कुरमूलकानाम् ।
उपोदकालावुपटोलकानां
सिद्धार्थको मेघवरस्य पक्ता ॥
शुण्ठीसतीनस्य च नागरङ्ग-
जम्बीरयोः कोद्रवको निहन्ता ।
जरामिरा गैरिकचन्दनाभ्या-
मभ्येति शीघ्रं बहुशो न भूतम् ॥
पटोलवंशाङ्कुरकारवल्ली-
फलान्यलावूनि बहूनि जग्धा ।
क्षारोदकं ब्रह्मतरोर्न्निपीय
भोक्तुं पुनर्व्वाञ्छति तावदेव ॥
विपच्यते शूरणको गुडेन

रिक् । ईश्चान्तादेशः । ततः स्वार्थे कन् ।)
वंशपत्रीतृणम् । इति राजनिर्घण्टः ॥

**जीर्णं**, क्ली, (जीर्य्यति स्मेति । जृ ष् वयोहानौ +

गत्यर्थेति क्तः । निष्ठातस्य नत्वम् ।) शैलजम् ।
इति राजनिर्घण्टः ॥ (वयःप्रकारविशेषः । यथा,
“तद्वयो यथा स्थूलभेदेन त्रिविधम् । बालं
मध्यं जीर्णमिति ।” इति चरके विमानस्थाने-
ऽष्टमेऽध्याये ॥)

**जीर्णः**, पुं, (जीर्य्यत्यनेनेति । जॄ + करणे क्तः ।)

जीरकः । इति राजनिर्घण्टः ॥ (वृक्षः । इति
हेमचन्द्रः । ४ । १८० ॥)

**जीर्णः**, त्रि, (जीर्य्यतीति । जॄ + “गत्यर्थाकर्म्मक-

श्लिषेति ।” ३ । ४ । ७२ । इति कर्त्तरि
क्तः ।) वृद्धः । इत्यमरः । २ । ६ । ४२ ॥ पुरा-
तनः । इति हेमचन्द्रः ॥ (यथा, देवीभाग-
वते । १ । २० । १७ ।

खर्ज्जूरिकाविशकशेरुसितासु शस्तं
शृङ्गाटके मधुफलेष्वपि भद्रमुस्तम् ।
पिशितपनसयोः स्यादाम्रबीजेन पाकः
कृशरमहिषयोषित्क्षीरयोः सैन्धवेन ।
चिपिटपरिणतिः स्यात् पिप्पलीदिप्पकाभ्या-
मपहरति तुषाम्भो वैदलानामजीर्णम् ॥
कर्पूरपूगीफलनागवल्ली-
काश्मीरजातीफलजातिकाशम् ।
कस्तूरिका सिह्लकनारिकेल-
जलं पचत्याशु समुद्रफेनः ॥
श्यामाकनीवारकुलत्थषष्टि-
निष्पावकङ्गूदधिमस्तकस्तु ।
चिञ्चाकुलत्थौ तिलतैलयोगात्
जटाब्दनादस्य निहन्त्यथाम्रम् ॥
कशेरुशृङ्गाटमृणालमृद्वी-
खर्ज्जूरखण्डा अपि नागरेण ।
पलाशभस्माम्बु तथार्द्रजो वा
रसो निहन्याद्रसमिक्षुजातम् ॥

तथालुकं तण्डुलतोयपानात् ।
जम्बीरनीरेण निशारशोनं
मुस्तेन तूर्णं परिपाकमेति ॥
चञ्चूकसिद्धार्थकवास्तुकानां
गायत्रिसारक्वथितेन पाकः ।
शाकानि सर्व्वाण्युपयान्ति पाकं
क्षारेण सद्यस्तिलनालजेन ॥
आम्रातकोदुम्बरपिप्पलीनां
फलानि च प्लक्षवटादिकानाम् ।
स्युः शामनं पर्य्युषितोदकेन
पियालमज्जा च कदुष्णकेन ॥

स्नेहाजीर्णं रोगिणां मुद्गचूर्णं
ज्वालां मुस्तो हन्ति वैरेचकानाम् ।
माषो भूयान्निम्बमूलेन पाक-
श्चिञ्चा मुञ्चत्यम्लतां चूर्णयोगात् ॥
उष्णेन शीतं शिशिरेण चोष्ण-
मम्लेन च क्षारगणो गुणाय ।
स्नेहेन तीक्ष्णं वमनातियोगे
सिता हिता स्यादिति काशिराजः ॥
ताम्बूलमध्यस्थितचूर्णकेन
संदह्यते यस्य मुखं नरस्य ।
तैलेन वा केवत्वकाञ्जिकेन
सुखाय गण्डूषमसौ विदध्यात् ॥
शीतोदकं नस्यजरोगहारि
नारीपयश्चाञ्जनरुग्विनाशि।
एलोदकं धूमगदे प्रशस्तं
धात्रीप्रलेपोऽतिविरेचनेषु ॥
मृगस्य मांसं श्रमजेऽनुकूलं
प्रवातसुप्तिः सुरतावसाने ।
क्षीरोषणासैन्धवसाधितन्तु
च्छागाण्डमुक्तं सुरतातिरेके ॥
श्रवणपूरणजे तिलतैलतः
श्रवणपूरणमेव सुखं विदुः ।
कबलजेषु गदेष्वथ कारयेत्
कबलमार्द्रकजद्रवजं पुनः ॥”
इति जीर्णमञ्जरी ॥

**जीर्णज्वरः**, पुं, (जीर्णः पुरातनो ज्वरः ।) पुरा-
तनज्वररोगः । अथ जीर्णज्वराधिकारः । तत्र
जीर्णज्वरस्य सामान्यलक्षणमाह ।
“यो द्वादशभ्यो दिवसेभ्य ऊर्द्ध्वं
दोषत्रयस्तद्द्विगुणेभ्य ऊर्द्ध्वम् ।
नृणां तनौ तिष्ठति मन्दवेगो
भिषग्भिरुक्तो ज्वर एष जीर्णः ॥” * ॥
जीर्णज्वरस्यैव विशेषं वातवलासकमाह ।
“नित्यं मन्दज्वरो रूक्षः शूनः कृच्छ्रेण सिध्यति
।
स्तब्धाङ्गः श्लेष्मभूयिष्ठो नरो वातवलासकी ॥”
वातवलासकाख्यो ज्वरोऽस्यास्ति इति वात-
वलासकी । नर ईदृग्भवेत् । शूनः शोथी ।
श्लेष्मभूयिष्ठो बहुलश्लेष्मकः ॥ * ॥
अथ जीर्णज्वरस्य सामान्यचिकित्सा ।
“जीर्णज्वरी नरः कुर्य्यान्नोपवासं कदाचन ।
अमृतायाः कषायन्तु शीतलीकृतमीरितम् ।
मधुपादयुतं पीतं जीर्णज्वरहरं परम् ॥
पिप्पलीमधुसंमिश्रं गुडूचीस्वरसं पिबेत् ।
जीर्णज्वरकफप्लीहकासारोचकनाशनम्॥
जीर्णज्वरेऽग्निमान्द्ये च शस्यते गुडपिप्पली ।
कासाजीर्णारुचिश्वासहृत्पाण्डुज्वररोगनुत् ॥
द्विगुणः पिप्पलीचूर्णाद्गुडोऽत्र भिषजां मतः ।
पिप्पली मधुसंयुक्ता मेदःकफविनाशिनी ॥
श्वासकासज्वरहरी पाण्डुप्लीहोदरापहा ।
आमलं चित्रकं पथ्या पिप्पली सैन्धवं तथा ॥
चूर्णितोऽयं गणो ज्ञेयः सर्व्वज्वरहरः परः ।
भेदी रुचिकरः श्लेष्महर्त्ता दीपनपाचनः ॥”
इति आमलक्यादिचूर्णम् ॥ * ॥
“द्राक्षामृता शटी शृङ्गी मुस्तकं रक्तचन्दनम् ।
नागरं कटुका पाठा भूनिम्बः सदुरालभः ॥
उशीरं धान्यकं पद्मं बालकं कण्टकारिका ।
पुष्करं पिचुमर्द्दञ्च दशाष्टाङ्गमिदं स्मृतम् ॥
जीर्णज्वरारुचिश्वासकासश्वयथुनाशनम्॥”
इति द्राक्षाद्यष्टादशाङ्गक्वाथः ॥ * ॥
“त्रिवृद्ध्या पञ्चवृद्ध्या वा सप्तवृद्ध्याथवा कणाः
।
गव्यक्षीरेण संपिष्टा पिबेद्दश दिनानि हि ॥
तथैव न्यूनयेदेता एवं विंशतिवासरान् ।
पिबतां ज्वरशान्तिः स्यात् पाण्डरोगश्च शाम्यति
॥
कासः श्वासोऽग्निमान्द्यञ्च कफाधिक्यञ्च नश्यति
।
त्रयादिवृद्धिर्यथाकफवृद्धिः ।
दुग्धवृद्धिर्यथाग्निवृद्धिः ।
इति वर्द्धमानपिप्पली ॥ * ॥
“वातश्लेष्मज्वरोक्ता स्यात् क्रिया वातवलासके ।
जीर्णे ज्वरे कफे क्षीणे दाहतृष्णासमन्विते ॥
पयः पीयूषसदृशं तन्नवे तु विषोपमम् ।
चन्दनाद्यं हितं तैलं शीर्षाधिकारकीर्त्तितम्॥
तथा नारायणन्तैलं जीर्णज्वरहरं परम् ॥”
इति जीर्णज्वराधिकारः । इति भावप्रकाशः ॥

**जीर्णदारुः**, पुं, (जीणमिव दारुयस्य ।) वृद्धदारक-
भेदः । विधाराविशेष इति लोके । तत्पर्य्यायः ।
जीर्णफञ्जी २ सुपुष्पिका ३ अजरा ४ सूक्ष्म-
पर्णा ५ । अस्य गुणाः । गौल्यत्वम् । पिच्छि-
लत्वम् । कफवातकासामदोषनाशित्वम्। बल्य-

**जीर्णवज्रं**, क्ली, (जीर्णं वज्रं हीरकमिव ।)
वैक्रान्तमणिः । इति राजनिर्घण्टः ॥

**जीर्णवस्त्रं**, क्ली, (जीर्णं पुरातनं वस्त्रम् ।) पुरा-
तनवस्त्रम् । तत्पर्य्यायः । पटच्चरम् २
। इत्य-
मरः । २ । ६ । ११५ ॥

**जीर्णा**, स्त्री, (जीर्य्यत्यनयेति । ज + करणे क्तः
।)
स्थूलजीरकः । इति राजनिर्घण्टः ॥

**जीर्णिः**, स्त्री, (जॄ + क्तिन् ।) ज्यानिः । जीर्णता ।
इत्यमरः । ३ । २ । ९ ॥

**जीर्णोद्धारः**, पुं, (जीर्णानां भग्नमन्दिरादीनां
उद्धारः संस्कारः ।) भग्नमन्दिरादेः
संस्कारः ।
यथा, विष्णुधर्म्मोत्तरतृतीयकाण्डे।
“यस्य राज्ञस्तु विषये देववेश्म
विशीर्य्यते ।
तस्य सीदति तद्राज्यं देववेश्म यथा
तथा ॥
कृत्वा शीर्णस्य संस्कारं तथा
देवेशवेश्मनि ।
द्विगुणं फलमाप्नोति नात्र कार्य्या
विचारणा ॥”
विष्णुरहस्ये ।
“पतितस्य च यः कर्त्ता पतमानस्य
रक्षिता ।
विष्णोरायतनस्येह स नरो
विष्णुलोकभाक् ॥”
अग्निपुराणे ।
“पतितं पतमानन्तु तथार्द्धस्फुटितं
नरः ।
समुद्धृत्य हरेर्धाम द्विगुणं फलमाप्नुयात्
॥”
देवीपुराणे ।
“मूलाच्छतगुणं पुण्यं
प्राप्नुयाज्जीर्णकारकः ।
तस्मात् सर्व्वप्रयत्नेन
जीर्णस्योद्धारमाचरेत् ॥”
हयशीर्षपञ्चरात्रे ।

लङ्घनात् स भवेत् क्षीणो ज्वरस्तु स्याद्बली यतः ॥
पुराणेऽपि ज्वरे दोषा यद्यपथ्यैः पुनस्तथा ।
लङ्घयेत्तत्र तं पश्चात् पूर्ब्बवत् कारयेत् क्रियाम् ॥”
तथा पूर्ब्बवत् ॥ * ॥
“निदिग्धिकानागरकामृतानां
क्वाथं पिबेन्मिश्रितपिप्पलीकम् ।
जीर्णज्वरारोचककासशूल-
श्वासाग्निमान्द्यार्द्दितपीनसेषु ॥
हन्त्यूद्‌र्ध्वजानयं प्रायः सायं तेनोपयुज्यते ॥”
इति त्रिकण्टकक्वाथः ॥ * ॥
“पिप्पलीचूर्णसंयुक्तक्वाथश्छिन्नोद्भवोद्भवः ।
जीर्णज्वरकफध्वंसी पञ्चमूलकृतोऽथवा ॥

त्वञ्च । इति राजनिर्घण्टः ॥

**जीर्णपत्रिका**, स्त्री, (जीर्णानि पत्राण्यस्याः । कप् ततष्टापि अत इत्वम् ।) वंशपत्रीतृणम् । इति राजनिर्घण्टः ॥

**जीर्णपर्णः**, पुं, (जीर्णानि पर्णानि यस्य ।) कदम्बः । इति राजनिर्घण्टः ॥ (जीर्णं पर्णं पत्रम् ।) पुरातनपत्र, क्ली ॥ (जीर्णं पर्णं ताम्बूलं इति विग्रहे पुरातनताम्बूले च । यदुक्तं वैद्यके । “पर्णमूले भवेद्‌व्याधिः पर्णाग्रे पापसम्भवः । जीर्णपर्णं हरेदायुः शिराबुद्धिप्रणाशिनी ॥”)

**जीर्णबुध्नः**, पुं, (जीर्णोऽदृढो बुध्नो मूलमस्य ।) पट्टिकालोध्रः । इति राजनिर्घण्टः ॥

**जीर्णबुध्नकं**, क्ली, (जीर्णो बुध्नो मूलं यस्य । ततः कप् ।) परिपलम् । इति राजनिर्घण्टः ॥ केओटमुता इति भाषा ॥

“वापीकूपतडागानां सुरधाम्नां तथानघ ! ।
प्रतिमानां सभानाञ्च संस्कर्त्ता यो नरो भुवि ॥
पुण्यं शतगुणं तस्य भवेन्मूलान्न संशयः ।
प्रतिष्ठाया विधिः कार्य्यस्तथा मन्दिरनिर्म्मिते ॥
प्रायः श्रीहयशीर्षोक्तेरनुसारेण वैष्णवैः ।
देवालयप्रतिष्ठा च ख्याता तल्लिखनेन किम् ॥
श्रीमूर्त्तिस्थापनेनैव संपूर्णा सा विशेषतः ।
देवगृहं देवतायाः प्रतिष्ठाविधिना सदा ॥
संस्कार्य्यं मनुजानान्तु समुदायोक्तकर्म्मणा ॥”
इति श्रीहरिभक्तिविलासे २० विलासः ॥

**जीर्विः**, पुं, (जीर्य्यति छिन्नीभवत्यनेनेति । जॄ + “जॄशॄस्तॄजागृभ्यः क्विन् ।” उणां ४ । ५४ । इति करणे क्विन् ।) कुठारः । इति सिद्धान्त-कौमुद्यामुणादिवृत्तिः ॥ (जीर्य्यतीति । कर्त्तरि क्विन् ।) शकटम् । कायः । पशुः । इति संक्षिप्तसारे उणादिवृत्तिः ॥

**जीव**, ऋ प्राणे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) ऋ, अजीजिवत् अजिजीवत् । प्राणः प्राणधारणम् । जीवति लोकः । इति दुर्गादासः ॥

**जीवः**, पुं, (जीवनमिति । जीव + “हलश्च ।” ३ । ३ । १२१ । इति घञ् ।) असुधारणम् । इत्यमरः । २ । ८ । ११९ । (यथा, हरिवंशे ।

|  |  |  |
| --- | --- | --- |
|  |  | १७४ । ७३ ।<br>“त्वमेष चिन्तय सखि ! नोत्तरं प्रतिभाति मे ।<br>खकार्य्ये मुह्यते लोको यथा जीवं लभाम्वहम् ॥”) |

(जीवतीति । जीव प्राणे + “इगुपधज्ञेति ।” ३ । १ । १३५ । इति कः ।) प्राणी । (यथा, भागवते । १ । १३ । ४४ ।
“अहस्तानि सहस्तानामपदानि चतुष्पदाम् ।
फल्गूनि तत्र महतां जीवो जीवस्य जीवनम् ॥”)
वृत्तिः । वृक्षविशेषः । (स एव महानिम्बवृक्षः ।
तत्पर्य्याया यथा, --
“महानिम्बः स्मृतोद्रेका रम्यको विषमुष्टिकः ।
केशामुष्टिनिम्बकश्च कार्म्मुको जीव इत्यपि ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
बृहस्पतिः । इति मेदिनी । वे, ८ ॥ (यथा, काशीखण्डे । १७ । ४४ ।
“अस्माल्लिङ्गार्च्चनान्नित्यं जीवभूतोऽसि मे यतः ।
अतो जीव इति ख्यातिं त्रिषु लोकेषु यास्यसि ॥”)
कर्णः । इति धरणी ॥ क्षेत्रज्ञः । तत्पर्य्यायः ।
आत्मा २ पुरुषः ३ पुद्गलः ४ अन्तर्यामी ५ ईश्वरः ६ । इति त्रिकाण्डशेषः । (यथा, भगवद्गीतायाम् । १३ । २ टीकायां श्रीधरस्वामिपादाः ।
“तञ्च क्षेत्रज्ञं संसारिणं जीवं वस्तुतः सर्व्वक्षेत्रेष्वनुगतं मामेव विद्धि ॥”) तस्य स्वरूपं यथा, --
“कर्म्मणा जीवरूपश्च सन्ततं तत्फलप्रदः ।
कर्म्मरूपश्च भगवान् श्रीकृष्णः प्रकृतेः परः ॥
सोऽपि तद्धेतुरूपश्च कर्म्म तेन भवेत् सति ।
जीवः कर्म्मफलं भुङ्क्ते आत्मा निर्लिप्त एव च ॥
आत्मनः प्रतिविम्बश्च देही जीवः स एव च ।
प्राणदेहादिभृद्देही स जीवः परिकीर्त्तितः ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥ * ॥
(तथाच भागवते । १२ । १८४ । १७ ।
“जीवं पश्यामि वृक्षाणामचैतन्यं न विद्यते ॥”)
वेदान्तमते घटावच्छिन्नाकाशवत् शरीरत्रितयावच्छिन्नं चैतन्यम् । केषाञ्चिन्मते दर्पणस्थमुखप्रतिविम्बवत् बुद्धिस्थचैतन्यप्रतिविम्बम् ॥ (जीवयति लोकानन्तर्य्याम्यात्मकरूपेणेति । जीव + णिच् + अच् । विष्णुः । यथा, महाभारते । १३ । १५९ । ६८ ।
प्रियः ११ चिरञ्जीवी १२ मधुरः १३ मङ्गल्यः १४
कूर्च्चशीर्षकः १५ वृद्धिदः १६ आयुष्मान् १७
जीवदः १८ बलदः १९ । अस्य गुणाः । मधुरत्वम् । शीतत्वम् । रक्तपित्तानिलार्त्तिक्षयदाहज्वरनाशित्वम् । शुक्रश्लेष्मविवर्द्धनत्वञ्च ।
इति राजनिर्घण्टः ॥ बलकारित्वम् । कार्श्यवातनाशित्वम् । तस्य रूपं यथा, --
“जीवकर्षभकौ ज्ञेयौ हिमाद्रिशिखरोद्भवौ ।
रसोनकन्दवत्कन्दौ निःसारौ सूक्ष्मपत्रकौ ॥
जीवकः कूर्च्चकाकारः ऋषभो वृषशृङ्गवत् ।
जीवकर्षभकस्थाने विदारीमूलम् ॥”
इति भावप्रकाशः ॥ * ॥
प्राणकः । पीतशालः । क्षपणः । इति मेदिनी । के, ९५ ॥

**जीवकः**, त्रि, (जीवति प्रभुसेवावृत्त्या इति । जीव + ण्वुल् ।) सेवकः । वृद्ध्याशी । जीवी ॥ (यथा, महाभारते । १३ । १४१ । ६६ ।
“त्रैविद्यो ब्राह्मणो विद्वान् न चाध्ययनजीवकः ॥”)
अहितुण्डिकः । इति मेदिनी । के, ९५ ॥

**जीवजीवः**, पुं, (जीवेन भक्ष्यक्षुद्रकीटादिना जीवतीति । जीव + अच् । यद्वा, जीवञ्जीव + पृषोदरात् साधुः ।) जीवञ्जीवपक्षी । इति शब्दरत्नावली ॥

**जीवञ्जीवः**, पुं, (जीवं जीवयति विषदोषं नाशयतीति । कृत्यल्युटो बहुलमिति बाहुलकात् खच् ।) चकोरपक्षी । इत्यमरः । २ । ५ । ३५ ॥
(अपरः पक्षिविशेषः । विषादिविकृतस्यान्नादेः परीक्षार्थमस्यावश्यकत्वं भवति । यथा, वाभटे सूत्रस्थाने ७ अध्याये १६ ।

**जीवधनं**, क्ली, (जीव एव धनमिति ।) गवादिकम् । इति त्रिकाण्डशेषः ॥

**जीवनं**, क्ली, (जीव्यतेऽनेनेति । जीव + करणे ल्युट् ।) वृत्तिः । (यथा, भागवते । १ । १३ । ४४ ।
“अहस्तानि सहस्तानामपदानि चतुष्पदाम् ।
फल्गूनि तत्र महतां जीवो जीवस्य जीवनम् ॥”
“जीवनं जीविकेति ॥” तट्टीकायां श्रीधरस्वामी ॥)
जलम् । (यथा, आर्य्यासप्तशत्याम् । ४६३ ।
“यमुनाया इव तस्याः सखि ! मलिनं जीवनं मन्ये ॥”
जीव + भावे ल्युट् ।) प्राणधारणम् । इति मेदिनी । ने, ६९ ॥ (यथा, हटयोगप्रदीपिकायाम् । २ । ३ ।
“यावद्वायुः स्थितो देहे तावज्जीवनमुच्यते ॥”
“प्राणान् हन्ति जगत्प्राणो जीवनं हन्ति जीवनम् ।
किमाश्चर्य्यं क्षारभूमौ प्राणदा यमदूतिका ॥”
इत्युद्भटः ॥)
हैयङ्गवीनम् । इति शब्दचन्द्रिका ॥ मज्जा ।
इति राजनिर्घण्टः ॥ (गङ्गा । यथा, काशीखण्डे । २९ । ६५ ।
“जीवनं जीवनप्राणा जगज्ज्येष्ठा जगन्मयी ॥”)

**जीवनः**, पुं, (जीवयति सेवनादिना । जीव + कर्त्तरि ल्युः ।) जीवकौषधम् । वातः । इति राजनिर्घण्टः ॥ क्षुद्रफलकवृक्षः । इति शब्दचन्द्रिका ॥ पुत्त्रः । इति हेमचन्द्रः ॥ (सर्व्वान् प्राणरूपेण जीवयतीति । जीव + णिच् + कर्त्तरि

"जीवो विनयिता साक्षी मुकुन्दोऽमितविक्रमः ॥"
जीवनविशिष्टे, त्रि । यथा, महाभारते । १२ । २८८ । २३ ।
"मृते वा त्वयि जीवेवा यदा भोक्ष्यति वैजनः ॥")

**जीवः**, पुं क्ली, (जीव + भावे घञ् ।) जीवितम् ।

इति मेदिनी । वे, ९ ॥ (यथा, भागवते । १ । २ । १० ।
"जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्म्मभिः ॥"
"जीवस्य जीवनस्य च पुनर्द्धर्म्मानुष्ठानद्वारा कर्म्मभिर्य्य इह प्रसिद्धः स्वर्गादिः सोऽर्थो न भवति ।" इति तट्टीकायां श्रीधरस्वामी ॥)

**जीवकः**, पुं, (जीवयति आरोग्यं करोतीति । जीव

+ णिच् + ण्वुल् ।) अष्टवर्गान्तर्गतौषधविशेषः । तत्पर्य्यायः । कूर्च्चशीर्षः २ मधुरकः ३ शृङ्गः ४ ह्रस्वाङ्गः ५ । इत्यमरः । २ । ४ । १४२ ॥ जीवनः
६ दीर्घायुः ७ प्राणदः ८ जीव्यः ९ भृङ्गाह्वः १०

"हंसः प्रस्खलति ग्लानिर्ज्जीवञ्जीवस्य जायते ।
चकोरस्याक्षिवैराग्यं क्रौञ्चस्य स्यान्मदोदयः ॥")
वृक्षविशेषः । इति मेदिनी । वे, ५९ ॥

**जीवत्तोका**, स्त्री, (जीवत् तोकं अपत्यं अस्याः ।)

जीवत्पुत्त्रिका । तत्पर्य्यायः । जीवसूः २ । इति हेमचन्द्रः ॥

**जीवत्पतिः**, स्त्री, (जीवन् पतिर्यस्याः ।) सधवा ।

इति हेमचन्द्रः ॥

**जीवत्पितृकः**, पुं, (जीवन् पिता यस्य इति कप् ।)

विद्यमानपितृकः । यथा, --
"अमास्नानं गयाश्राद्धं दक्षिणामुखभोजनम् ।
नजीवत्पितृकः कुर्य्यात् कृतेऽपि पितृहा भवेत् ॥"
इति तिथ्यादितत्त्वम् ॥

**जीवथः**, पुं, (जीवत्यनेनेति । जीव + "शीङ्शपि-

रुगमिवञ्चिजीवि प्राणिभ्योऽथः ।" उणां ३ । ११३ । इति अथः ।) प्राणः । कूर्म्मः । मयूरः ।
मेघः । धार्म्मिके चिरायुषि च त्रि । इत्युणादि-कोषः ॥

**जीवदः**, पुं, (जीवं जीवनं ददाति औषधादि-

सुप्रयोगेणेति । दा + कः ।) वैद्यः । विद्विट् । इति मेदिनी । दे, २९ ॥ जीवनदातरि, त्रि ॥

**जीवदात्री**, स्त्री, (जीवं जीवनं ददातीति । दा +

तृच् ङीप् च ।) ऋद्धिः । इति राजनिर्घण्टः ॥

ल्युः । विष्णुः । यथा, महाभारते । १३ । १४९ । ११२ ।
"वीरहा रक्षणः सन्तो जीबनः पर्य्यवस्थितः ॥"
शिवः । महाभारते । १३ । १७ । १२१ ।
"निर्जीवो जीवनो मन्त्रः शुभाक्षो बहुकर्क्कशः ॥")

**जीवनकं**, क्ली, (जीव्यतेऽनेन । जीव + करणे ल्युट् ।

ततः स्वार्थे कन् ।) अन्नम् । इति हेमचन्द्रः ॥

**जीवनयोनिः**, स्त्री, (जीवनस्य योनिः कारणम् ।)

यत्नविशेषः । स तु अतीन्द्रियः शरीरे प्राण-
सञ्चारकारणम् । इति भाषापरिच्छेदः ॥

**जीवनहेतुः**, पुं, (जीवनस्य हेतुरुपायः ।) वर्त्त-

नोपायः । स च दशविधः । यथा, --
"विद्या शिल्पं भृतिः सेवा गोरक्षं विपणिः कृषिः ।
वृत्तिर्भैक्षं कुशीदञ्च दश जीवनहेतवः ॥"
इति गारुडे २१४ अध्यायः ॥

**जीवना**, स्त्री, (जीवयतीति । जीव + णिच् + युच्

ल्युः वा ततष्टाप् ।) मेदौषधम् । इति मेदिनी ।
ने, ६९ ॥

**जीवनाघातं**, क्ली, (जीवनं आहन्त्यनेनेति । आ +

हन् + करणे घञ् ।) विषम् । इति शब्द-चन्द्रिका ॥

**जीवनावासः**, पुं, (आवसत्यस्मिन् । आ + वस + घञ् ।

जीवनं जलं आवासोऽस्य ।) वरुणः । इति शब्दरत्नावली ॥ (वारिवासिनि, त्रि ॥)

**जीवनिका**, स्त्री, (जीवन + ठन् । टाप् । यद्वा, जीवनी

+ संज्ञायां कन् ह्रस्वश्च ।) हरीतकी । इति राज-

निर्घण्टः ॥ (हरीतकीशब्दे
विवरणविशेषोऽस्याः
ज्ञातव्यः ॥)

**जीवनी**, स्त्री, (जीवत्यनेनेति । जीव + करणे ल्युट्
ङीप् च ।) जीवन्ती । (पर्य्याया यथा, --
"जीवन्ती जीवनी जीवा जीवनीया
मधुस्रवा ।
मङ्गल्यनामधेया च शाकश्रेष्ठा
पयस्विनी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)
काकोली । डोडी । मेदा । महामेदा ।
इति
राजनिर्घण्टः ॥ यूथी । इति
शब्दचन्द्रिका ॥

**जीवनीयं**, क्ली, (जीव्यतेऽनेन अस्माद्वा । जीव +
करणे अपादाने वा अनीयर् ।) जलम् ।
इति हेमचन्द्रः ॥ (जीवनप्रदे, त्रि ।
यथा,
सुश्रुते । १ । ४५ ।
"गोक्षीरमनभिष्यन्दि स्निग्धं गुरु
रसायनम् ।
जीवनीयं यथा वातपित्तघ्नं परमं
स्मृतम् ॥")

**जीवनीयगणः**, पुं, (जीवनीयानामोषधीनांगणः ।)
औषधविशेषः । यथा,
वैद्यकपरिभाषायाम् ।
"अष्टवर्गश्च पर्णिन्यौ जीवन्ती
मधुकन्तथा ।
जीवनीयगणः प्रोक्तो जीवनस्तु
पुनस्तया ॥"
("जीवन्ती काकोल्यौ मेदे द्वे
मुद्गमाषपर्ण्यौ च ।
ऋषभकजीवकमधुकंचेति गणो
जीवनीयाख्यः ॥"
इति च वाभटे सूत्रस्थाने
पञ्चदशेऽध्याये ॥)

श्वासा २४ जीववृषा २५ सुखङ्करी २६
मृग-
राटिका २७ जीवपत्री २८ जीवपुष्पा २९ ।
इति केचित् ॥ (यथा, --
"वरा शाकेषु जीवन्ती सर्षपास्त्ववराः परम्
॥"
इति वाभटे सूत्रस्थाने षष्ठेऽध्याये ॥)
अस्या गुणाः । मधुरत्वम् । शीतत्वम् । रक्त-
पित्तवायुक्षयदाहज्वरनाशित्वम् ।
कफवीर्य्य-
विवर्द्धनत्वञ्च । इति राजनिर्घण्टः ॥
स्वादुत्वम् ।
स्निग्धत्वम् । त्रिदोषनाशित्वम् ।
रसायनत्वम् ।
बलकारित्वम् । चक्षुर्हितत्वम् । ग्राहित्वम् ।
लघुत्वञ्च । इति भावप्रकाशः ॥
श्वासकासधातु-
क्षयनाशित्वम् । स्वरकारित्वञ्च ।
सुराष्ट्रदेशज-
स्वर्णवर्णहरीतकी । सा स्नेहपाके प्रशस्ता
जीर्णरोगनाशिनी । इति राजवल्लभः ॥
(अस्याः
लक्षणं व्यवहरश्च यथा, --
"जीवप्रस्वर्णवर्णिनी ॥"
"जीवन्ती सर्व्वरोगहृत् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)
शमी । गुडूची । (पर्य्याया यथा, --
"गुडूची मधुपर्णी स्यादमृतामृतवल्लरी ।
छिन्ना च्छिन्नरुहा च्छिन्नोद्भवा वत्सादनीति
च ॥
जीवन्ती तन्त्रिका सोमा सोमवल्ली च
कुण्डली ।
चक्रलक्षणिका धीरा विशल्या च रसायनी ॥
चन्द्रहासी वयस्था च मण्डली देवनिर्म्मिता
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)
वन्दा । इति मेदिनी । ते, ११२ ॥ डोडी ।
इति राजनिर्घण्टः ॥ (जीव इति शाक-

मिति ज्ञानवान् तदिन्द्रजालं पश्यन्नपि परमार्थ-
मिदमिति न पश्यति । सचक्षुरचक्षुरिव सकर्णो-
ऽकर्ण इव समना अमना इव सप्राणोऽप्राण
इव इत्यादिश्रुतेः । उक्तञ्च ।
'सुषुप्तवज्जाग्रति यो न पश्यति
द्वयञ्च पश्यन्नपि चाद्वयत्वतः ।
तथापि कुर्व्वन्नपि निष्क्रियश्च यः
स आत्मविन्नान्य इतीह निश्चयः ॥' इति ।
अस्य ज्ञानात् पूर्ब्बं विद्यमानानामेवाहार-
विहारादीनां अनुवृत्तिवच्छुभवासनानामेवानु-
वृत्तिर्भवति । शुभाशुभयोरौदासीन्यं वा । तदु-
क्तम् ।
'बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि ।
शुनां तत्त्वदृशाञ्चैव को भेदोऽशुचिभक्षणे ॥
ब्रह्मवित्त्वं तथामुक्त्वा स आत्मज्ञो न चेतरः' इति ।
तदानीममानित्वादीनि ज्ञानसाधनान्यद्वेष्टृत्वा-
दयः सद्गुणाश्चालङ्कारवदनुवर्त्तन्ते। तदुक्तम् ।
'उत्पन्नात्मावबोधस्य ह्यद्वेष्टृत्वादयो गुणाः ।
अयत्नतो भवन्त्यस्य न तु साधनरूपिणः ॥' इति ।
किं बहुना अयं देहयात्रामात्रार्थमिच्छानिच्छा-
परेच्छाप्रापितानि सुखदुःखलक्षणान्यारब्ध-
फलान्यनुभवन्नन्तःकरणाभासादीनामवभासकः
सन् तदवसाने प्रत्यगानन्दपरब्रह्मणि प्राणे
लीने सति अज्ञानतत्कार्य्यसंस्काराणामपि
विनाशात् परमकैबल्यमानन्दैकरसमखिलभेद-
प्रतिभासरहितमखण्डंब्रह्मावतिष्ठते । न तस्य
प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते विमुक्तश्च
विमुच्यते । इत्येवमादिश्रुतेः ।" इति वेदान्त-
सारः ॥

**जीवपुत्त्रकः**, पुं, (जीवः प्राणन् पुत्त्र इव । पुत्त्र-
वद्धर्षजनकत्वात् तथात्वम् । इवार्थे कन् ।) इङ्गुदी-
वृक्षः । इति शब्दरत्नावली ॥ वृक्षविशेषः ।
इत्यमरटीकायां रमानाथः ॥ जीयापुता इति
भाषा ॥

**जीवपुष्पा**, स्त्री, (जीवयतीति । जीव + णिच् +
अच् । जीवं प्राणदं पुष्पमस्याः ।) बृह-
ज्जीवन्ती । इति राजनिर्घण्टः ॥

**जीवप्रिया**, स्त्री, (जीवानां प्राणिनां प्रिया
हितकारित्वात् ।) हरीतकी । इति राज-

**जीवनीया**, स्त्री, (जीवनीय + टाप् ।) जीवन्ती ।

इत्यमरः । २ । ४ । १४२ ॥

**जीवनेत्री**, स्त्री, (जीवं नयतीति । जीव + नी + तृच्

+ ङीप् च ।) सैंहली । इति
राजनिर्घण्टः ॥

**जीवनौषधं**, क्ली, (जीवनस्य औषधं उपाय-

विशेषः ।) येन म्रियमाणो जीवति
तदौषधम् ।
जीवरक्षाकारि । जीवनोपायः ।
तत्पर्य्यायः ।
जीवातः २ । इत्यमरः । २ । ९ ।
१२० ॥

**जीवन्तः**, पुं, (जीवयति जीव्यतेऽनेन वा । जीव +

"रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि
।" उणां ।
३ । १२७ । इति झच् ।) औषधम् ।
प्राणः ।
आयुर्व्विशिष्टे, त्रि । इत्युणादिकोषः ॥
जीव-
शाकः । इति राजनिर्घण्टः ॥

**जीवन्तिकः**, पुं, (जीवान्तकः । पृषोदरात् साधुः ।)

जीवान्तकः । इत्यमरटीकासारसुन्दरी
॥

**जीवन्तिका**, स्त्री, (जीवयतीति । जीव + झच् + कन्

टाप् च । कापि अत इत्वम् ।) वन्दा ।
वृक्षो-
परिजातवृक्षः । गुडूची ।
जीवाख्यशाकः ।
इति मेदिनी । के, १९० ॥ जीवन्ती
हरीतकी ।
इति राजनिर्घण्टः ॥

**जीवन्ती**, स्त्री, (जीवन्त + ङीष् ।) लताविशेषः ।

जीवै इति जीयाती इति च भाषा । तत्-
पर्य्यायः । जीवनी २ जीवनीया ३
जीवा ४
विशेषः । शर्करावन्मधुरपुष्पा व्रततिः ।
अस्याः
पर्य्याया यथा, --
"जीवन्ती जीवनी जीवा जीवनीया मधुस्रवा
।
मङ्गल्यनामधेया च शाकश्रेष्ठा पयस्विनी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**जीवन्मुक्तः**, त्रि, (जीवन्नेव मुक्तः आत्मज्ञानेन

मायाबन्धरहितः ।) जीवद्दशायां मायाबन्ध-
रहितः । (यथा, देवीभागवते । १ । १६ ।
४८ ।
"जीवन्मुक्तः स राजर्षिर्ब्रह्मज्ञानमतिः शुचिः
।
तथ्यवक्तातिशान्तश्च योगी योगप्रियः सदा
॥")
तल्लक्षणं यथा ।
"स्वस्वरूपाखण्डशुद्धब्रह्मज्ञानेन
तदज्ञानबाधनद्वारा स्वस्वरूपाखण्डे ब्रह्मणि
साक्षात्कृते सति
अज्ञानतत्कार्य्यसञ्चितकर्म्म-
संशयविपर्य्ययादीनामपि
बाधितत्वादखिलबन्ध-
रहितो ब्रह्मनिष्ठः ।
'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः ।
क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे
॥'
इत्यादिश्रुतेः ।
अयन्तु व्युत्थानसमये
मांसशोणितमूत्रपुरीषादि-
भाजनेन शरीरेण
आन्ध्यमान्द्यापटुत्वादिभाज-
नेनेन्द्रियग्रामेण
अशनायापिपासाशोकमोहादि
भाजनेनान्तःकरणेन च
तत्तत्पूर्ब्बपूर्ब्बवासनया
क्रियमाणानि कर्म्माणि भुज्यमानानि ज्ञाना-
विरुद्धान्यारब्धफलानिच पश्यन्नपि
बाधितत्वात्
परमार्थतो न पश्यति । यथा इदमिन्द्रजाल-
निर्घण्टः ॥

**जीवभद्रा**, स्त्री, (जीवानां प्राणिनां भद्रं मङ्गलं

यस्याः ।) जीवन्तीलता । वृद्धिनामौषधम् ।
इति राजनिर्घण्टः ॥

**जीवमन्दिरं**, क्ली, (जीवस्य आत्मनो मन्दिरं गृह-

मिव ।) शरीरम् । इति शब्दचन्द्रिका ॥

**जीवला**, स्त्री, (जीवं उदरस्थकृमिं लाति गृह्णाति

नाशयतीति । ला + "आतोऽनुपसर्गे कः ।"
३ । २ । ३ । इति कः ।) सैंहली । इति राज-
निर्घण्टः ॥

**जीववल्ली**, स्त्री, (जीवयतीति जीवा प्राणदात्री ।

सा चासौ वल्ली चेति ।) क्षीरकाकोली । इति
राजनिर्घण्टः ॥

| | | |
|---|---|---|
| मधुः ५ । इत्यमरः । २ । ४ । १४२ ॥<br>जीवना ६<br>मधुस्रवा ७ स्रवा ८ । इति तट्टीका ॥<br>पय-<br>स्विनी ९ जीव्या १० जीवदा ११<br>जीवदात्री १२<br>शाकश्रेष्ठा १३ जीवभद्रा १४ भद्रा १५<br>मङ्गल्या<br>१६ क्षुद्रजीवा १७ यशस्या १८<br>शृङ्गाटी १९<br>जीवदृष्टा २० काञ्जिका २१<br>शशशिम्बिका २२<br>सुपिङ्गला २३ । इति राजनिर्घण्टः ॥<br>मधु- | | |

**जीवशाकः**, पुं, (जीवो हितकरः शाकः । जीवाख्यः
शाको वा ।) मालवे प्रसिद्धशाकविशेषः । तत्-
पर्य्यायः जीवन्तः २ रक्तनालः ३ ताम्रपत्रः ४
प्रवालः ५ शाकवीरः ६ सुमधुरः ७ मेषकः ८ ।
अस्य गुणाः । सुमधुरत्वम् । बृंहणत्वम् । वस्ति-
शोधनत्वम् । दीपनत्वम् । पाचनत्वम् । बल्य-
त्वम् । वृष्यत्वम् । पित्तापहारकत्वञ्च । इति
राजनिर्घण्टः ॥

**जीवशुक्ला**, स्त्री, (जीवयतीति । जीव + णिच् +
अच् । जीवा हितकरी शुक्ला शुभ्रवर्णलता ।)
क्षीरकाकोली । इति राजनिर्घण्टः ॥

**जीवश्रेष्ठा**, स्त्री, (जीवाय जीवनाय श्रेष्ठा ।)
ऋद्धिनामौषधम् । इति राजनिर्घण्टः ॥

**जीवसंज्ञः**, पुं, (जीव इति संज्ञा यस्य । यद्वा,
जीवस्य संज्ञा आख्या संज्ञा यस्य ।) कामवृद्धि-
वृक्षः । इति राजनिर्घण्टः ॥

**जीवसाधन**, क्ली, (जीवस्य जीवनस्य साधनं कार-
णम् ।) धान्यम् । इति राजनिर्घण्टः ॥

**जीवसूः**, स्त्री, (जीवं प्राणिनं सूते इति । सू +
क्विप् ।) जीवत्तोका । जीवत्पुत्त्रिका । हेमचन्द्रः ।
३ । १९४ ॥ (यथा, महाभारते । १ । २०० । ७ ।
"जीवसूर्वीरसूर्भद्रे ! बहुसौख्यगुणान्विता ।
सुभगा भागसम्पन्ना यज्ञपत्नी पतिव्रता ॥")

**जीवस्थानं**, क्ली, (जीवस्य जीवनस्य स्थानम् ।)
मर्म्म । इति हलायुधः ॥

**जीवा**, स्त्री, (जीवयतीति । जीव + णिच् + अच् ।
जन्तुः ७ जन्युः ८ । इति हेमचन्द्रः ॥ प्राणी ९
चेतनः १० जन्मी ११ शरीरी १२ । इत्यमरः ।
१ । ४ । ३० ॥ (यथा, भागवते । ८ । २२ । २५ ।
"यदा कदाचित् जीवात्मा संसरन्निजकर्म्मभिः ।
नानायोनिष्वनीशोऽयं पौरुषीं गतिमाव्रजेत् ॥"
"एवं चतुर्व्विंशतिभिस्तत्त्वैः सिद्धे वपुर्गृहे ।
जीवात्मा नियतो नित्यं वसति स्वात्मदूतवान् ॥
स देही कथ्यते पापपुण्यदुःखसुखादिभिः ।
व्याप्तो बद्धश्च मनसा कृत्रिमैः कर्म्मबन्धनैः ॥
कामक्रोधौ लोभमोहावहङ्कारश्च पञ्चमः ।
दशेन्द्रियाणि बुद्धिश्च तस्य बन्धाय देहिनः ॥
आप्नोति बन्धमज्ञानादात्मज्ञानाच्चमुच्यते ॥"
इति पूर्ब्बखण्डे पञ्चमेऽध्याये शार्ङ्गधरेणोक्तम् ॥)

**जीवाधारः**, पुं, (जीवस्य क्षेत्रज्ञस्य आधारः
आश्रयस्थानम् ।) क्षेत्रम् । इति हेमचन्द्रः ॥

**जीवान्तकः**, पुं, (जीवं अन्तयति नाशयतीति ।
अन्त + णिच् + ण्वुल् ।) जीवनार्थं पक्षि-
घातकः । तत्पर्य्यायः । शाकुनिकः २ । इत्य-
मरः । २ । १० । १४ ॥ जीवनाशके, त्रि ॥

**जीवाला**, स्त्री, (जीवं उदरस्थकृमिं आलाति
गृह्णाति नाशयतीत्यर्थः । आ + ला + कः ।)
सैंहिली । इति राजनिर्घण्टः ॥

**जीविका**, स्त्री, (जीव्यतेऽनयेति । जीव + "गुरीश्च
हलः ।" ३ । ३ । १०३ । इत्यः । ततः संज्ञायां कन्
टापि अत इत्वञ्च ।) जीवनोपायः । तत्पर्य्यायः ।
आजीवः २ वार्त्ता ३ वृत्तिः ४ वर्त्तनम् ५ जीव-
नम् ६ । इत्यमरः । २ । ९ । १ ॥ जीवः ७ ।
गन्धवद्रुधिरचन्दनोक्षिता
जीवितेशवसतिं जगाम सा ॥"
"जीवितेशस्य अन्तकस्य प्राणेश्वरस्य च वसतिं
जगाम ।" इति तट्टीकायां मल्लिनाथः ॥)
चन्द्रः । सूर्य्यः । इति शब्दरत्नावली ॥ जीवातुः ।
इति हेमचन्द्रः ॥ जीवितेश्वरे, त्रि । इति
मेदिनी । शे, ३५ ॥

**जीवी**, [न्] पुं, (जीवोऽस्त्यस्येति । जीव +
इनिः ।) प्राणी । यथा, ब्रह्मवैवर्त्ते गणेशखण्डे ।
"जीविनां दारुणो रोगः कर्म्मभोगः शुभाशुभः ।
भक्तो वैद्यस्तं निहन्ति कृष्णभक्तिरसायनात् ॥"

**जीव्या**, स्त्री, (जीवाय जीवनाय हिता । जीव +
यत् ।) गोक्षुरदुग्धा । जीवन्ती । हरीतकी ।
इति राजनिर्घण्टः ॥

**जु**, रंहसि । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
अकं-अनिट् ।) रंहो वेगगतिः । जवति घोटकः ।
इति दुर्गादासः ॥

**जु**, ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-
सकं-अनिट् ।) ङ, जवते । इति दुर्गादासः ॥

**जुग**, इ त्यागे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) इ, कर्म्मणि जुङ्ग्यते । इति
दुर्गादासः ॥

**जुगुप्सनं**, क्ली, (गुप + स्वार्थे सन् + ल्युट् ।) निन्दा ।
इति हेमचन्द्रः । २ । १८५ ॥ (निन्दाशीले, त्रि । तत्र
"अनुदात्तेतश्च हलादेः ।" ३ । २ । १४९ । इति
युच् ॥)

**जुगुप्सा**, स्त्री, (गुप निन्दायाम् + सन् + भावे अ-
स्ततष्टाप् ।) निन्दा । इत्यमरः । १ । ६ । १३ ॥
(यथा, साहित्यदर्पणे । ३ । १७६ ।
"दोषेक्षणादिभिर्गर्हा जुगुप्सा विषयोद्भवा ॥")

**जुङ्गः**, पुं, (जुगि + अच् ।) वृद्धदारकः । इत्य-
मरः । २ । ४ । १३७ ॥ (यथास्य पर्य्यायाः ।
"जुङ्गक्ष्यर्गन्धाच्छगलान्त्र्यावेगी वृद्धदारकः ॥"
इति वैद्यकरत्नमालायाम् ॥)

ततष्टाप् ।) जीवन्तीवृक्षः । मौर्व्वी । (यथा, आर्य्यासप्तशत्याम् । ३ । २१ ।
"निर्गुण इति मृत इति च
द्वावेकार्थाभिधायिनौ
विद्धि ।
पश्य धनुर्गुणशून्यं निर्ज्जीवं तदिह शंसन्ति ॥"
"निर्गता जीवा ज्या यस्मात् तत् । 'जीवा ज्या
शिञ्जिनीत्यपि' इत्यभिधानात् ।" इति तट्टीका ॥)
वचा । शिञ्जितम् । भूमिः । इति मेदिनी । वे, ८ ॥
जीवितम् । इति जटाधरः ॥

**जीवातुः**, पुं, क्ली, (जीवत्यनेनेति । जीव + "जीवे-

रातुः ।" उणां । १ । ८० । इति करणे आतुः ।)
भक्तम् । जीवनौषधम् । (यथा, काशीखण्डे ।
२९ । ६५ ।
"जीवजीवातुलतिका जन्मिजन्मनिवर्हिणी ॥"
"जीवानां प्राणिनां जीवनौषधरूपा ।" इति तट्टीका ॥ * ॥ (जीव + भावे आतुः ।) जीवितम् ।
इति मेदिनी । ते, ११२ ॥ (यथा, उत्तरराम-
चरिते २ अङ्के ।
"रे हस्त दक्षिण ! मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम् ।
रामस्य गात्रमसि दुर्व्वहगर्भखिन्न-
सीताविवासनपटोः करुणा कुतस्ते ॥")

**जीवात्मा**, [न्] पुं, (जीवस्य जीवनस्य आत्मा

अधिष्ठाता । यद्वा, जीवश्चासौ आत्मा चेति
कर्म्मधारयः ।) देही । तत्पर्य्यायः । पुनर्भवी २
जीवः ३ असुमान् ४ सत्त्वम् ५ देहभृत् ६
इति शब्दरत्नावली ॥ (यथा, मनुः । ४ । ११ ।
"अजिह्मामशठां शुद्धां जीवेद्ब्राह्मण-
जीविकाम् ॥")
जीवन्ती । इति मेदिनी । के, ९५ ॥

**जीवितं**, क्ली, (जीव + भावे क्तः ।) जीवनम् ।

इति हेमचन्द्रः ॥ (यथा, उत्तररामचरिते ३ अङ्के ।
"त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्के ।
इत्यादिभिः प्रियशतैरनुरुद्ध्य मुग्धां
तामेव, शान्तमथवा किमिहोत्तरेण ॥" * ॥
कर्त्तरि क्तः ।) जीवनयुक्ते, त्रि ॥ (यथा, रघुः । १२ । ७५ ।
"कामं जीवति मे नाथ इति सा विजहौ शुचम् ।
प्राङ्मत्वा सत्यमस्यान्तं जीवितास्मीति
लज्जिता ॥")

**जीवितकालः**, पुं, (जीवितस्य जीवनस्य कालः ।)

आयुः । इत्यमरः । २ । ८ । १२० ॥

**जीवितज्ञा**, स्त्री, (जीवितस्य जीवनस्य ज्ञा ज्ञानं

यस्याः । नाडीस्पन्दनेन हि जीवानां जीवनज्ञाना-
दस्यास्तथात्वम् ।) नाडी । इति
राजनिर्घण्टः ॥

**जीवितेशः**, पुं, (जीवितस्य ईशः प्रभुः ।) प्राण-

नाथः । यमः । (यथा, रघुः । ११ । २० ।
"राममन्मथशरेण ताडिता
दुःसहेन हृदये निशाचरी ।

**जुङ्गकः**, पुं, (जुङ्ग + स्वार्थे कन् ।) वृद्धदारकवृक्षः ।

इति राजनिर्घण्टः ॥

**जुङ्गा**, स्त्री, (जुङ्ग + टाप् ।) जुङ्गः । इत्यमर-

टीकायां रमानाथः ॥

**जुङ्गितः**, त्रि, (जुग इ त्यागे + कर्म्मणि क्तः ।)

त्यक्तः । इति व्याकरणम् ॥

**जुटकं**, क्ली, (जुट् संहतौ + "इगुपधेति ।" ३ ।

१ । १३५ । इति कः । ततः संज्ञायां कन् ।)
जटा । इति शब्दरत्नावली ॥

**जुटिका**, स्त्री, (जुटक + टाप् । टापि अत

इत्वञ्च ।) शिखा । इति शब्दरत्नावली ॥ झुँटी
इति टिकी । इति च भाषा ॥ (यथा, आह्निकतत्त्वधृतब्रह्मपुराणवचनम्।
"जुटिकाञ्च ततो बद्ध्वा ततः कर्म्म समारभेत् ॥")

**जुड**, क नोदे । इति कविकल्पद्रुमः ॥ (चुरां-

परं-सकं-सेट् ।) क, जोडयति । नोदः प्रेर-
णम् । इति दुर्गादासः ॥

**जुड**, श गतौ । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-

सेट् ।) श, जुडति जोडिता । इति दुर्गादासः ॥

**जुड**, शि बन्धे । इति कविकल्पद्रुमः ॥ (तुदां-
परं-सकं-सेट् ।) शि, जुडति अजुडीत् । तानु-
च्छृङ्खलतापन्नान् शृङ्खलेन जुडत्यसौ । जुजोड ।
इति दुर्गादासः ॥

**जुत**, ऋ ङ दीप्तौ । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-अकं-सेट् ।) ऋ, अजुजोतत् । ङ,
जोतते । इति दुर्गादासः ॥

**जुन**, श गतौ । इति कविकल्पद्रुमः ॥ (तुदां-
परं-सकं-सेट् ।) श, जुनति जोनिता । इति
दुर्गादासः ॥

**जुर्व्व**, ई वधे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) ह्रस्वी । जूः जुरौ जुरः । ई, जूर्णः ।
इति दुर्गादासः ॥

**जुल**, क पिषि । इति कविकल्पद्रुमः ॥ (चुरां-परं-
सकं-सेट् ।) क, जोलयति । पिषि चूर्णीकरणे ।
इति दुर्गादासः ॥

**जुष**, कि तर्के । तृप्तौ । इति कविकल्पद्रुमः ॥
(चुरां पक्षे भ्वां-परं-सकं-अकं च-सेट् ।) कि,
जोषयति जोषत्यन्यगुणं सुधीः ।
तर्कयतीत्यर्थः ।
इति दुर्गादासः ॥

**जुष**, श ङ ई ञि मुदि । सेवे । इति कविकल्प-
द्रुमः ॥ (तुदां-आत्मं अकं-सकं च-सेट् ।) पञ्चम-
स्वरी । श ङ, जुषते । ई ञि, जुष्टोऽस्ति ।
मुदि हर्षे । इति दुर्गादासः ॥

**जुष्ककः**, पुं, (जुष् + कक् । ततः संज्ञायां कन् ।)
यूषः । इति शब्दचन्द्रिका ॥

**जुष्टं**, क्ली, (जुष्यते स्म इति । जुष + क्तः ।) उच्छि-
ष्टम् । सेविते, त्रि । इति मेदिनी । टे, १५ ॥
(यथा, भट्टिः । १ । ४ ।
“पुण्यो महाब्रह्मसमूहजुष्टः
सन्तर्पणो नाकसदां वरेण्यः ॥”)

**जूटः**, पुं, (जट सङ्घाते + अच् निपातनादूवागमे
साधुः ।) शिवजटा । इत्यमरटीकायां
भरतः ।
जटा । इति शब्दरत्नावली ॥

**जूटकं**, क्ली, (जूट + स्वार्थे कन् ।) केशबन्धः ।
जटा । इति भूरिप्रयोगः ॥

**जूतिः**, स्त्री, (जु वेगे + “ऊतियूतिजूतीति ।”
३ । ३ । ९७ । इति क्तिन् निपातनात्
दीर्घत्वञ्च ।)
वेगः । इत्यमरः । ३ । २ । ३९ ॥ (यथा,
अथर्व्व-
वेदे । १३ । २ । १३ ।
“तं समाप्नोति जूतिभिः ॥”)

**जूतिका**, स्त्री, (जूत्या कायतीति । कै + कः ।
तत ष्टाप् ।) कर्पूरभेदः । इति राजनिर्घण्टः ॥

**जूर**, ङ य ई ज्यानौ । वधे । इति कविकल्पद्रुमः ॥
(दिवां-आत्मं-अकं-सकं-च-सेट् ।) दीर्घी ।
ङ
य, जूर्य्यते । ई, जूर्णः ।
ज्यानिर्गतबहुवयोभावः ।
इति दुर्गादासः ॥

**जूर्णाख्यः**, पुं, (जूर + क्तः । जूर्ण इति आख्या यस्य ।)
तृणविशेषः । उलू इति भाषा ॥ तत्पर्य्यायः ।
सूच्यग्रः २ स्थूलकः ३ दर्भः ४ खरच्छदः
५ ।
इति रत्नमाला ॥ उलूकम् ६ उलपः ७ ।
इति
केचित् ॥

**जूर्णाह्वयः**, पुं, (जूर्ण इति आह्वयः आख्या यस्य ।)
देवधान्यम् । इति हेमचन्द्रः ॥

**जूर्णिः**, स्त्री, (ज्वर + “वीज्याज्वरिभ्यो निः ।”
उणां । ४ । ४८ । इति निः । “ज्वरत्वरेति
।” ६ ।
(अस्य लक्षणं यथा, सुश्रुते । ३ । ४ ।
“निद्रार्त्तस्येव यस्येहा तस्य तन्द्रां विनिर्द्दिशेत् ।
पीत्वैकमनिलोच्छासमद्वेष्टन् विवृताननः ॥
यन्मुञ्चति सनेत्रास्रं स जृम्भ इति संज्ञितः ॥”)
“जृम्भात्यर्थं समीरणात् ।” इति वैद्यकम् ॥
“क्षुदुत्पतनजृम्भेषु जीवोत्तिष्ठाङ्गुलिध्वनिः ।
अवश्यमेव कर्त्तव्यश्चान्यथा तद्वधी भवेत् ॥”
इति कर्म्मलोचनम् ॥ * ॥
विकाशः । स्फारितः । इति शब्दरत्नावली ॥
(यथा, प्रबोधचन्द्रोदये । ४ । २८ । “एताश्च
प्रति-
मुकुललग्नमधुपावलीरणितमुखराजृम्भारम्भ-
भरविगलन्मकरन्दवुर्द्दिनाः कुसुमसुरभयः ॥”)

**जृम्भणं**, क्ली, (जृम्भ + भावे ल्युट् ।) जृम्भः । इत्य-
मरः । १ । ७ । ३५ ॥ (यथा, सुश्रुते । ३ । ४ ।
“इन्द्रियार्थेष्वसंप्राप्तिर्गौरवं जृम्भणं क्लमः ॥”)

**जृम्भा**, स्त्री, (जृम्भ + भावे घञ् ततष्टाप् ।)
जृम्भः । इति शब्दरत्नावली ॥ (यथा, देवी-
भागवते । १ । १५ । ६१ ।
“तुष्टिः पुष्टिः क्षमा लज्जा जम्भा तन्त्रा च
शक्तयः ॥”)

**जृम्भिका**, स्त्री, (जृम्भा + स्वार्थे कन् टापि अत
इत्वञ्च ।) जृम्भः । इति शब्दरत्नावली ॥
(निद्रावेगधारणजनितरोगविशेषः । यथा, वाभटे
सूत्रस्थाने चतुर्थेऽध्याये ।
“निद्राया मोहमूर्द्धाक्षिगौरवालस्यजृम्भिकाः।
अङ्गमर्द्दश्च तत्रेष्टः स्वप्नः संवाहनानि च ॥”
जृम्भ + णिच् + ण्वुल् । टापि अत इत्वम् ।
जृम्भणकारकोऽस्त्रविशेषः । यथा, महाभारते ।
५ । ९ । ५२ ।
“असृजंस्ते महासत्त्वा जृम्भिकां वृत्तनाशि-
नीम् ॥”)

**जृम्भितं**, क्ली, (जृभि + भावे क्तः ।) विचेष्टितम् ।
प्रवृद्धम् । जृम्भा । स्फुटितम् । इति हेमचन्द्रः ॥
(यथा, कथासरिसागरे । २६ । ८९ ।
“अहो कि मे तदाश्चर्य्यमायाडम्बरजृम्भितम्
॥”)
स्त्रीणां करणम् । इति मेदिनी । ते, ११२ ॥

**जृम्भिणी**, स्त्री, (जृभि + णिनिः ।) एलापर्णी ।

**जुष्यः**, त्रि, (जुष् + कर्म्मणि क्यप् ।) सेव्यः ।

इति मुग्धबोधम् ॥

**जुहुवानः**, पुं, (हूयते इति । हु + कर्म्मणि कानच् ।)

कठिनहृदयः । अग्निः । वृक्षः । इति संक्षिप्त-
सारे उणादिवृत्तिः ॥

**जुहूः**, स्त्री, (जुहोत्यनया । इति हु + "हुवः

श्लुवच्च ।" उणां । २ । ६० । इति क्विप्
निपातनात्
दीर्घत्वं द्वित्वञ्च ।)
पलाशकाष्ठनिर्म्मितार्द्धचन्द्रा-
कृतियज्ञपात्रम् । जुहोत्यनया जुहूः । इत्यमर-
भरतौ ॥ (यथा, ऋग्वेदे । १ । ७६ । ५ ।
"अग्ने ! मन्त्रया जुह्वा यजस्व ॥")

**जुहूराणः**, पुं, (जुह्वं रणति इति । "कर्म्मण्यण् ।"

३ । २ । १ । इत्यण् ।) अग्निः । अध्वर्य्युः ।
इति
विश्वः ॥ चन्द्रः । इत्युणादिकोषः ॥

**जुहूवान्**, [त्] पुं, (जुहूः पात्रं होमक्रियोद्देश्य-

तयास्त्यस्मिन् । जुहू + मतुप निपातनात्
मस्य
वत्वम् ।) अग्निः । इति शब्दरत्नावली ॥

**जूः**, स्त्री, (जु + "क्विब्वचिप्रच्छीति ।" उणां । २ ।

५७ । क्विप् दीर्घश्च ।) आकाशः । सरस्वती
।
पिशाची । जवनम् । इति शब्दरत्नावली ॥
त्वरा-
गमनम् । गमनम् । इति मेदिनी । जे, २ ॥

४ । २० । इत्यूट् च ।) वेगः ।
इत्युणादिकोषः ॥
आदित्यः । देहः ब्रह्मा । ज्वरः । इति
संक्षिप्त-
सारे उणादिवृत्तिः ॥

**जूर्त्तिः**, स्त्री, (ज्वर् + भावे क्तिन् । "ज्वरत्वरे-

त्यादिणा" ऊट्च ।) ज्वरः । इत्यमरः । ३
। २ । ३९ ॥

**जूष**, ञ वधे । इति कविकल्पद्रुमः ॥ (भ्वां-उभं-

सकं-सेट् ।) षष्ठस्वरी । ञ, जूषति जूषते ।
परस्मैपदीत्यन्ये । इति दुर्गादासः ॥

**जूषं**, क्ली, पुं, (यूष + पृषोदरात् साधुः ।) यूषम् ।

मुद्गादिक्वाथरसः । इति
लिङ्गादिसंग्रहटीकायां
भरतः ॥

**जूषणं**, क्ली, (जूष्यतेऽनेनेति । जूष + करणे ल्युट्
।)

वृक्षविशेषः । इति शब्दचन्द्रिका ॥
धाइफुल
इति भाषा ॥

**जृ**, न्यक्कारे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-

सकं-अनिट् ।) न्यक्कारस्तिरस्करणम् ।
जरति
शत्रुं शूरः । इति दुर्गादासः ॥

**जृभ**, इ ङ जृम्भे । इति कविकल्पद्रुमः ॥ (भ्वां-

आत्मं-अकं-सेट् ।) सप्तमस्वरी । इ,
जृम्भ्यते ।
ङ, जृम्भते । इति दुर्गादासः ॥

**जृभ**, ङ ई जृम्भे । गात्रशैथिल्य इति यावत् ।

इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-अकं-
सेट् ।)
ङ, जर्भते । ई, जृब्धः । इति दुर्गादासः ॥

**जृम्भः**, पुं क्ली, (जृम्भ + भावे घञ् ।)
मुखादिविकाशः ।

हाइ इति भाषा ॥ तत्पर्य्यायः । जृम्भणम्
२
जृम्भा ३ जृम्भिका ४ । इति
शब्दरत्नावली ॥

इति शब्दचन्द्रिका ॥ (एलापर्णीशब्देऽस्या
विशेषो ज्ञेयः ॥)

**जॄ**, इर् ष म य ज्याने । इति कविकल्पद्रुमः ॥

(दिवां-परं-अकं-अनिट् ।) इर्, अजरत् अजा-
रीत् । ष, जरा । म, जरयति । य, जीर्य्यति ।
ज्यानं गतबहुवयोभावः । इति दुर्गादासः ॥

**जॄ**, गि कि ज्याने । इति कविकल्पद्रुमः ॥ (क्र्यां-

चुरांपक्षे भ्वां-च-परं-अकं-नेट् ।) गि, जृणाति
जीर्णः जीर्णिः । कि, जारयति जरति । इति
दुर्गादासः ॥

**जेता**, [ऋ] त्रि, (जयतीति । जि + तृच् ।)
जयशीलः । तत्पर्य्यायः । जिष्णुः २ जित्वरः ३ जैत्रः ४ । इत्यमरः । २ । ८ । ७७ ॥ (यथा, रघुः । १२ । ८९ ।
"जेतारं लोकपालानां स्वमुखैरर्च्चितेश्वरम् ॥"
विष्णुः । यथा, महाभारते । १३ । १४९ । २९ ।
"अनघो विजयो जेता विश्वयोनिः पुनर्वसुः ॥")

**जेन्ताकः**, पुं, स्वेदविशेषः । यथा, "अथ
जेन्ताकं चिकीर्षुर्भूमिं परीक्षेत पूर्ब्बस्यान्दिशि उत्तरस्यां वा गुणवति प्रशस्तभूमिभागे देशे कृष्णमधुरमृत्तिके सुवर्णवर्णमृत्तिके वा नदीपरीवापपुष्करिण्यादीनांजलाशयानामन्यतमस्य कूले दक्षिणे पश्चिमे वा सूपतीर्थे समसुविभक्तभागे देशे सप्ताष्टौ वा अरत्नीः प्रक्रम्य उदकात् प्राङ्मुखमुदङ्मुखं वा अभिमुखतीर्थं कूटागारं कारयेत् । उत्सेधविस्तारतः परमरत्नीः षोडशासमन्तात् संवृतं मृत्कर्म्मसम्पन्नमनेकवातायनम् । अस्य च कूटागारस्यान्तः सम-
न्ततो भित्तिमरत्निविस्तारोत्सेधां पिण्डिकां कारयेत् आकवाटान्मध्ये चास्य च कूटागारस्य चतुष्किष्कुमात्रं द्विपुरुषप्रमाणं मृण्मयं कन्दुसंस्थानं बहुसूक्ष्मच्छिद्रं अङ्गारकोष्ठकस्तम्भं सपिधानं कारयेत् । तञ्च खादिराणामाश्वकर्णिकानां वा मेध्येन काष्ठेनापूरयित्वा प्रदीपयेत् । स यदा जानीयात् साधु दग्धानि काष्ठानि गतधूमानि अथ तसं केवलमग्निना तदग्निगृहं स्वेदयोग्येन चोष्मणा युक्तमिति । तत्रैनं वातहराभ्यङ्गाभ्यक्तगात्रंवस्त्रावच्छन्नं प्रवेशयेत् प्रवेशयंश्चैनमनुशिष्यात् सौम्य ! प्रविश
कल्याणायारोग्याय चेति प्रविश्य चैनां पिण्डिका-
मधिरुह्य पार्श्वापरपार्श्वाभ्यां यथासुखं शयीथाः ।
न च त्वया स्वेदमूर्च्छापरीतेनापि सता पिण्डिकैषा मोक्तव्या आप्राणोच्छ्वासात् भ्रस्यमानो ह्यतः पिण्डिकावकाशात् द्वारमधिगच्छन् स्वेदमूर्च्छापरीततया सद्यः प्राणान् जह्याः तस्मात् पिण्डिकां न कथञ्चन मुञ्चेथाः । स यदा जानीयाद्विगताभिष्यन्दमात्मानंसम्यक् प्रसृतस्वेदपिच्छं सर्व्वस्रोतोविमुक्तं लघुभूतमपगत-

**जै**, क्षये । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-
अनिट् ।) जायति । इति दुर्गादासः ॥

**जैत्रं**, क्ली, (रोगजयात् जेतृ । तदेव । "प्रज्ञादि-
भ्यश्च ।" ५ । ४ । ३८ । इत्यण् ।) औषधम् । इति राजनिर्घण्टः ॥

**जैत्रः**, त्रि, (जेतैव । जेतृ + प्रज्ञादित्वादण् ।) जेता ।
इत्यमरः । २ । ८ । ७४ ॥ (यथा, माये । ३ । ६१ ।
"शरीरिणा जैत्रशरेण यत्र
निःशङ्कमूषे मकरध्वजेन ॥")
पारदे, पुं । इति राजनिर्घण्टः ॥

**जैत्ररथः**, पुं, (जैत्रो जयशीलो रथो यस्य ।)
जयशीलः । इति हलायुधः ॥

**जैत्री**, स्त्री, (जयति रोगादिनाशकतया सर्व्वोत्-
कर्षेण वर्त्तते इति । जि + तृच् । ततः स्वार्थे अण् ततः स्त्रियां ङीप् ।) जयन्तीवृक्षः । इति शब्दरत्नावली ॥

**जैनः**, पुं, (जिन एव । यद्वा, जिन उपास्य-
देवतास्येति । जिन् + अण् ।) जिनोपासकः । बौद्धः । इति हलायुधः ॥ (धर्म्मक्षेत्रेऽस्मिन् भारतवर्षे प्रचलितेषु विविधेषु धर्म्मेषु जिनधर्म्म एव श्रेष्ठतम इति जैनाः प्रवदन्ति । एषामुपास्यदेवता जिनः । ते तु श्वेताम्बरदिगम्बरभेदेन द्विविधाः । श्वेताम्बरास्तु प्रायश आश्रमिणः । अधुना नानाशाखासु विभक्ताः समभवन् । दिगम्बरास्तु प्रायशो निर्ग्रन्थाः । एतेषां यन्मतं तत् सर्व्वदर्शनसंग्रहात् प्रदर्श्यते । यथा, --

"ननु न कश्चित् पुरुषविशेषः सर्व्वज्ञपदवेद-

नीयः प्रमाणपद्धतिमध्यास्ते सद्भावग्राहकस्य प्रमाणपञ्चकस्य तत्रानुपलम्भात् तथाचोक्तं तौतातितैः ।
सर्व्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः ।
दृष्टो न चैकदेशोऽस्ति लिङ्गं वा योऽनुमापयेत् ॥
न चागमविधिः कश्चिन्नित्यसर्व्वज्ञबोधकः ।
न च तत्रार्थवादानां तात्पर्य्यमपि कल्प्यते ॥
न चान्यार्थप्रधानैस्तैस्तदस्तित्वं विधीयते ।
न चानुवदितुं शक्यः पूर्ब्बमन्यैरबोधितः ॥
अनादेरागमस्यार्थो न च सर्व्वज्ञ आदिमान् ।
कृत्रिमेन त्वसत्येन स कथं प्रतिपाद्यते ॥

युक्तं तत्सद्भावादेकस्यानुमानादेः सद्भावात् । तथाहि कश्चिदात्मा सकलपदार्थसाक्षात्कारी तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययत्वात् यद्यद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययं तत्तत्साक्षात्कारि यथा अपगततिमिरादिप्रतिबन्धं लोचनविज्ञानं रूपसाक्षात्कारि । तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययश्च कश्चिदात्मा तस्मात् सकलपदार्थसाक्षात्कारीति । न तावदशेषार्थग्रहणस्वभावत्वमात्मनोऽसिद्धं चोदनाबलान्निखिलार्थज्ञानात् नोत्पत्त्यन्यथानुपपत्त्या सर्व्वमनैकान्तात्मकं सत्त्वादिति व्याप्तिज्ञानोत्पत्तेश्च । चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवं जातीयकमर्थमवगमयतीत्येवंजातीयकैरध्वरमीमांसागुरुभिर्विधिप्रतिषेधविचारणानिबन्धनं सकलार्थविषयज्ञानं प्रतिपद्यमानैः सकलार्थग्रहणस्वभावकत्वमात्मनोऽभ्युपगतम् । न चाखिलार्थप्रतिबन्धकावरणप्रक्षयानुपपत्तिः सम्यग्-दर्शनादित्रयलक्षणस्यावरणप्रक्षयहेतुभूतस्य सामग्रीविशेषस्य प्रतीतत्वात् अनया मुद्रयापि क्षुद्रोपद्रवा विद्राव्याः ।
नन्वावरणप्रक्षयवशादशेषविषयं विज्ञानं विशदं मुख्यप्रत्यक्षं प्रभवतीत्युक्तं तदयुक्तं तस्य सर्व्वज्ञस्यानादिमुक्तत्वेनावरणस्यैवासम्भवादिति चेत्तन्न अनादिमुक्तत्वस्यैवासिद्धेर्न सर्व्वज्ञोऽनादिमुक्तः मुक्तत्वादितरमुक्तवत् बद्धापेक्षया च मुक्तव्यपदेशः तद्रहिते चास्याप्यभावः स्यादाकाशवत् । नन्वनादेः क्षित्यादिकार्य्यपरम्परायाः कर्तृत्वेन तत्सिद्धिः तथाहि क्षित्यादिकं सकर्त्तृकं कार्य्यत्वाद्घटवदिति तदप्यसमीचीनं कार्य्यत्वस्यैवासिद्धेः । न च सावयवत्वेन तत्साधनमित्यभिधातव्यं यस्मादिदं विकल्पजालमवतरति सावयवत्वं किमवयवसंयोगित्वं अवयवसमवायित्वं अवयवजन्यत्वं समवेतद्रव्यत्वं सावयवबुद्धिविषयत्वं वा । न प्रथमः आकाशादावनैकान्त्यात् । न द्वितीयः सामान्यादौ व्यभिचारात् । न तृतीयः साध्याविशिष्टत्वात् । न चतुर्थः विकल्पयुगलागलग्रहगलत्वात् समवायसम्बन्धमात्रवद्द्रव्यत्वं समवेतद्रव्यत्वमन्यत्र समवेतद्रव्यत्वं वा विवक्षितं हेतूक्रियते । आद्ये गगनादौ व्यभिचारः तस्यापि गुणादिसमवायवत्त्वद्रव्यत्वयोः सम्भवात् । द्वितीये साध्याविशिष्टता अन्यशब्दार्थेषु समवायकारणभूतेष्ववयवेषु समवायस्य साधनीयत्वात् । अभ्युपगम्यैतदभाणि वस्तुतस्तु समवाय एव न समस्ति प्रमाणाभा-

विबन्धस्तम्भसुप्तिगौरवक्लेदनमिति ततस्तां पिण्डि
कामनुवसन् द्वारं प्रपद्येत निष्क्रम्य च न सहसा चक्षुषोः परिपालनार्थं शीतमुदकं स्पृशेत् । अप-गतक्लमसन्तापस्तु मुहूर्त्तात् सुखोष्णेन वारिणा यथान्यायं परिषिक्तोऽश्नीयात् ।” इति चरकः ॥

**जेमनं**, क्ली, (जिमु भक्षणे + भावे ल्युट् ।) भोजनम् ।

इत्यमरः । २ । ९ । ५६ ॥

**जेयः**, त्रि, (जीयते इति । जि जये + “अचो

यत् ।” ३ । १ । ९७ । इति कर्म्मणि यत् ।) जेतव्यमात्रकम् । इत्यमरः । २ । ८ । ७४ ॥ (यथा, मार्कण्डेये । २७ । १२ ।
“तस्मात् कामादयः पूर्ब्बं जेयाः पुत्त्र ! महीभुजा ।
तज्जये हि जयोऽवश्यं राजा नश्यति तैर्ज्जितः ॥”)

**जेष**, ऋ ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वां-

आत्मं-सकं-सेट् ।) ऋ, अजिजेषत् । ङ, जेषते जिजेषे । इति दुर्गादासः ॥

**जेह**, ङ ऋ यत्ने । इति कविकल्पद्रुमः ॥ (भ्वां-

आत्मं-सकं-सेट् ।) ङ, जेहते जिजेहे । ऋ, अजिजेहत् । इति दुर्गादासः ॥

अथ तद्वचनेनैव सर्व्वज्ञोऽनयैः प्रतीयते ।
प्रकल्प्येत कथं सिद्धिरन्योन्याश्रययोस्तयोः ॥
सर्व्वज्ञोक्ततया वाक्यं सत्यं तेन तदस्तिता ।
कथं तदुभयं सिध्येत् सिद्धमूलान्तरादृते ॥
असर्व्वज्ञप्रणीतात्तु वचनान्मूलवर्ज्जितात् ।
सर्व्वज्ञमवगच्छन्तस्तद्वाक्योक्तंन जानते ॥
सर्व्वज्ञसदृशं किञ्चिद्यदि पश्येम सम्प्रति ।
उपमानेन सर्व्वज्ञं जानीयाम ततो वयम् ॥
उपदेशोऽपि बुद्धस्य धर्म्माधर्म्मादिगोचरः ।
अन्यथा नोपपद्येत सार्व्वज्ञ्यं यदि नाभवत् ॥
इत्यादि ॥

अत्र प्रतिविधीयते यदभ्यधायि सद्भावग्राह-

कस्य प्रमाणपञ्चकस्य तत्रानुपलम्भादिति तद-

वात् । नापि पञ्चमः आत्मादिनानैकान्त्यात्तस्य सावयवबुद्धिविषयत्वेऽपि कार्य्यत्वाभावात् । न च निरवयवत्वेऽप्यस्य सावयवार्थसम्बन्धेन साव-यवबुद्धिविषयत्वमौपचारिकमित्येष्टव्यं निरवय-वत्वे व्यापित्वविरोधात् परमाणुवत् । किञ्च किमेकः कर्त्ता साध्यते किं वा स्वतन्त्रः प्रथमे प्रासादादौ व्यभिचारः स्थपत्यादीनां बहूनां

पुरुषाणां तत्र कर्त्तृत्वोपलम्भादनेनैव सकलजग-
ज्जननोत्पत्ताावितरवैयर्थ्यञ्च । तदुक्तं वीत-
रागस्तुतौ ।
कर्त्तास्ति नित्यो जगतः स चैकः
स सर्व्वगः सन् स्ववशः स सत्यः ।
इमाः कुहेयाः कुविडम्बनाः स्यु-
स्तेषां न येषामनुशासकस्त्वम् ॥ इति ॥
अन्यत्रापि ।
कर्त्ता न तावदिह कोऽपि यथेच्छया वा
दृष्टोऽन्यथा कटकृतावपि तत्प्रसङ्गः ।
कार्य्यं किमत्र भवतापि च तक्षकाद्यै-
राहत्य च त्रिभुवनं पुरुषः करोतीति ॥
तस्मात् प्रागुक्तकारणत्रितयबलादावरणप्रक्षये सार्व्वज्ञ्यं युक्तम् । न चास्योपदेष्ट्रन्तराभावात् सम्यग्दर्शनादित्रितयानुपपत्तिरिति भणनीयं पूर्व्वसर्व्वज्ञप्रणीतागमप्रभवत्वादमुष्याशेषार्थज्ञानस्य । नचान्योन्याश्रयतादिदोषः आगमसर्व्वज्ञपरम्पराया बीजाङ्कुरवदनादित्वाङ्गीकारादित्यलम् ।

रत्नत्रयपदवेदनीयतया प्रसिद्धं सम्यग्दर्शनादि-

त्रितयमर्हत्प्रवचनसङ्ग्रहपरे परमागमसारे प्ररूपितं सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग इति । विवृतञ्च योगदेवेन येन रूपेण जीवाद्यर्थो व्यवस्थितस्तेन रूपेणार्हता प्रतिपादिते तत्त्वार्थे विपरीताभिनिवेशरहितत्वाद्यपरपर्य्यायं श्रद्धानं सभ्यग्दर्शनं तथा च तत्त्वार्थसूत्रं तत्त्वार्थं श्रद्धानं सम्यग्दर्शनमिति ।
अन्यदपि ।
रुचिर्जिनोक्ततत्त्वेषु सम्यक् श्रद्धानमुच्यते ।
जायते तन्निसर्गेण गुरोरधिगमेन वेति ॥

परोपदेशनिरपेक्षमात्मस्वरुपं निसर्गः व्याख्या-

नादिरूपपरोपदेशजनितं ज्ञानमधिगमः । येन स्वभावेन जीवादयः पदार्थाः व्यवस्थिताः तेन स्वभावेन मोहसंशयरहितत्वेनावगमः सम्यग्ज्ञानम् । यथोक्तम् ।
यथावस्थिततत्त्वानां संक्षेपाद्विस्तरेण वा ।
योऽवबोधस्तमत्राहुः सम्यग्ज्ञानं मनीषिणः ॥
इति ॥

तज्ज्ञानं पञ्चविधं मतिश्रुतावधिमनःपर्य्याय-

केवलभेदेन । तदुक्तम् मतिश्रुतावधिमनःपर्य्याय-
प्रत्यक्षञ्च परोक्षञ्च द्विधा मेयविनिश्चयादिति ॥

अन्तर्गणिकभेदस्तु सविस्तरस्तत्रैवागमेऽव-

गन्तव्यः । संसरणकर्म्मोच्छित्तावुद्यतस्यश्रद्धधानस्य ज्ञानवतः पापगमनकारणक्रियानिवृत्तिः सम्यक्चारित्रम् । तदेतत् सप्रपञ्चमुक्तमर्हता ।
सर्व्वथावद्ययोगानां त्यागश्चारित्रमुच्यते ।
कीर्त्तितं तदहिंसादिव्रतभेदेन पञ्चधा ॥
अहिंसासूनृतास्तेयब्रह्मचर्य्यापरिग्रहाः ॥
न यत्प्रमादयोगेन जीवितव्यपरोपणम् ।
चराणां स्थावराणाञ्च तदहिंसाव्रतं मतम् ॥
प्रियं पथ्यं वचस्तथ्यं सूनृतं व्रतमुच्यते ।
तत्तथ्यमपि नो तथ्यमप्रियञ्चाहितञ्च यत् ॥
अनादानमदत्तस्यास्तेयव्रतमुदीरितम् ।
वाह्याः प्राणा नृणामर्थो हरता तं हता हि ते ॥
दिव्यौदरिककामाणां कृतानुमतकारितैः ।
मनोवाक्कायतस्त्यागो ब्रह्माष्टादशधा मतम् ॥
सर्व्वाभावेषु मूर्च्छायास्त्यागः स्यादपरिग्रहः ।
यदसत्स्वपि जायेत मूर्च्छया चित्तविप्लवः ॥
भावनाभिर्भावितानि पञ्चभिः पञ्चधा क्रमात् ।
महाव्रतानि लोकस्य साधयन्त्यव्ययं पदमिति ॥
भावनापञ्चकप्रपञ्चनञ्च प्ररूपितम् ।
हास्यलोभभयक्रोधप्रत्याख्यानैर्निरन्तरम् ।
आलोच्यभाषणेनापि भावयेत् सूनृतं व्रतम् ॥
इत्यादिना ॥

एतानि सम्यग्दर्शनज्ञानचारित्राणि मिलि-

तानि मोक्षकारणं न प्रत्येकं यथा रसायनज्ञानं श्रद्धानावरणानि सम्भूय रसायनफलं साधयन्ति न प्रत्येकम् ।

अत्र संक्षेपतस्तावज्जीवाजीवाख्येद्वे तत्त्वे

स्तः तत्र बोधात्मको जीवः अबोधात्मकस्त्वजीवः । तदुक्तं पद्मनन्दिना ।
चिदचिद्द्वे परे तत्त्वे विवेकस्तद्विवेचनम् ।
उपादेयमुपादेयं हेयं हेयञ्च कुर्व्वतः ॥
हेयं हि कर्त्तृरागादि तत्कार्य्यमविवेकिनः ।
उपादेयं परं ज्योतिरुपयोगैकलक्षणमिति ॥

सहजचिद्रूपपरिणतिं स्वीकुर्व्वाणे ज्ञानदर्शने

उपयोगः स परस्परप्रदेशात्तु प्रदेशबन्धात् कर्म्मणैकीभूतस्य आत्मनोऽन्यत्वप्रतिपत्तिकारणं माद्यनपेक्षः सहजो भावश्चेतनत्वादिः पारिणामिकः । तदेतत् सत्त्वं यथासम्भवं भव्यस्याभव्यस्य वा जीवस्य तत्त्वं स्वरूपमिति सूत्रार्थः ।
तदुक्तं स्वरूपसम्बोधने ।
ज्ञानाद् भिन्नो न चाभिन्नो भिन्नाभिन्नः कथञ्चन ।
ज्ञानं पूर्ब्बापरीभूतं सोऽयमात्मेति कीर्त्तितः ॥
इति ॥

ननु भेदाभेदयोः परस्परपरिहारेणावस्थाना-

दन्यतरस्यैव
वास्तवत्वादुभयात्मकत्वमयुक्तमिति
चेत्तदयुक्तं वाधे प्रमाणाभावात् अनुपलम्भो हि बाधकं प्रमाणं न सोऽस्ति समस्तेषु वस्तुष्वनेक-
रसात्मकत्वस्य स्याद्वादिनो मते सुप्रसिद्धत्वादित्यलम् ।

अपरे पुनर्जीवाजीवयोरपरं प्रपञ्चमाचक्षते

जीवाकाश-धर्म्माधर्म्म-पुद्गलास्तिकायभेदात् ।
एतेषु पञ्चसु तत्त्वेषु कालत्रयसम्बन्धितया स्थिति-
व्यपदेशः अनेकप्रदेशत्वेन शरीरवत् कायव्यपदेशः । तत्र जोवा द्विविधाः संसारिणो मुक्ताश्च भवाद् भवान्तरप्राप्तिमन्तः संसारिणः । ते च द्विविधाः समनस्का अमनस्काश्च तत्र संज्ञिनः समनस्काः शिक्षाक्रियालापग्रहणरूपासंज्ञा तद्विधुरास्त्वमनस्काः । ते चामनस्का द्विविधाः त्रसस्थावरभेदात् तत्र द्वीन्द्रियादयः शङ्खगण्डोलकप्रभृतयश्चतुर्व्विधास्त्रसाः
पृथिव्यप्तेजोवायुवन-
स्पतयः स्थावराः । तत्र मार्गगतधूलिः पृथिवी इष्टकादिः पृथिवीकायः पृथिवी कायत्वेन येन गृहीता स पृथिवीकायकः पृथिवीं कायत्वेन यो ग्रहीष्यति स पृथिवीजीवः । एवमवरादिष्वपि भेदचतुष्टयं योज्यम् । तत्र पृथिव्यादि कायत्वेन गृहीतवन्तो ग्रहीष्वन्तश्च स्थावरा गृह्यन्ते न पृथिव्यादिपृथिवीकायादयःतेषां जीवत्वात् । ते च स्थावराः स्पर्शनैकेन्द्रियाश्च भवान्तरप्राप्तिविधुरा मुक्ताः धर्म्माधर्म्माकाशा-

केवलानि ज्ञानमिति । अस्यार्थः ज्ञानावरण-
क्षयोपशमे सति इन्द्रियमनसीपुरस्कृत्य व्यापृतः
सन् ययार्थ मनुते सा मतिः । ज्ञानावरण-
क्षयोपशमे सतिं मतिजनितं स्पष्टं ज्ञानं श्रुतम् ।
असम्यग्दर्शनादिगुणजनितक्षयोपशमनिमित्त
मवच्छिन्नविषयं ज्ञानमवधिः । ईर्ष्यान्तराय-
ज्ञानावारणक्षयोपशमे सति परमनोगत-
स्यार्थस्य स्फुटं परिच्छेदकं ज्ञानं मनःपर्य्यायः ।
तपःक्रियाविशेषान् यदर्थं सेवन्ते तपस्विनस्तज्
जानमन्यज्ञानसंस्पृष्टं केवलम् । तत्राद्यं परोक्षं
प्रत्यक्षमन्यत् । तदुक्तम्
षिजानं स्वपराभामि प्रमाणं वाधवर्ज्जितम ।

लक्षणं भवति । सकलजीवसाधारणं चैतन्यमुप-
शमक्षयक्षयोपशमवशादौपशमिकक्षयात्मक
क्षयौपशमिकभावेन कर्म्मोदयवशात् कलुषा-
न्याकारेण च परिणतजीवपर्य्यायजीवविवक्षायां
स्वरूपं भवति । यदवोचद्वाचकाचार्य्यः औप-
शमिकक्षायिकौ भावौ मिश्रश्च जीवस्य सत्त्व-
मौदयिकपारिणामिकौ चेति । अनुदयप्राप्ति-
रूपे कर्म्मण उपशमे सति जीवस्योत्पद्यमान-
भावः औपशमिकः यथा पङ्के कलुषतां
कुर्व्वति कतकादिद्रव्यसम्बन्धादधःपतिते
जलस्य
स्वच्छता । कर्म्मणः क्षयोपशमे सति जायमानो
भावः क्षायिकः यथा मोक्षः । उभयात्मा
भावो मिश्रः यथा जलस्यार्द्धस्वच्छता । कर्म्मो-
दये सति भवन् भाव औदयिकः । कर्म्मोपश-

स्तिकायास्ते एकत्वशालिनो निष्क्रियाश्च
द्रव्यस्य
देशान्तरप्राप्तिहेतुः । तत्र धर्म्माधर्म्मौ प्रसिद्धौ
आलोकेनाविच्छिन्ने नभसि लोकाकाशपदवे द
नीये सर्व्वत्रावस्थितिगतिस्थित्युपग्रहो
धर्म्माधर्म्म-
योरुपकारः अतएव धर्म्मास्तिकायः प्रवृत्त्यनु-
मेयः अधर्म्मास्तिकायः स्थित्यनुमेयः ।
अन्यवस्तुप्र-
देशमध्येऽन्यस्य वस्तुनः प्रवेशोऽवगाहः तदा-
काशकृत्यम् । स्पर्शरसवर्णवन्तः पुद्गलाः ते च
द्विविधाः अणवः स्कन्धाश्च । भोक्तुमशक्या
अणवः
द्व्यणुकादयः स्कन्धाः । तत्र
द्व्यणुकादिस्कन्ध-
भेदादण्वादिरुत्पद्यते अण्वादिसंघातात्
द्ब्यणु-
कादिरुत्पद्यते क्वचिद्भेदसंघाताभ्यां
स्कन्धोत्पत्तिः
अतएव पूरयन्ति गलन्तीति पुद्गलाः । काल-
स्यानेक-प्रदेशत्वाभावेनाऽस्तिकायत्वाभावेऽपि
द्रव्यत्वमस्ति तल्लक्षणयोगात् तदुक्तं
गुणपर्य्याय-
वद्द्रव्यमिति । द्रव्याश्रया निर्गुणा गुणाः यथा
जीवस्य ज्ञानत्वादिसामान्यरूपाःपुद्गलस्य
रूपत्वादिसामान्यस्वभावाःधर्म्माधर्म्माकाश-
कायानां यथासम्भवं
गतिस्थित्यवगाहहेतुत्वादि-

सामान्यानि गुणाः । तस्य द्रव्यस्योक्तरूपेण भवनमुत्पादः तद्भावः परिणामः पर्य्याय इति पर्य्यायाः यथा जीवस्य घटादिज्ञानसुखक्लेशादयः पुद्गलस्य मृत्पिण्डघटादयः धर्म्मादीनां गत्यादिविशेषाः अतएव षट् द्रव्याणीति प्रसिद्धिः ।

केचन सप्त तत्त्वानीति वर्णयन्ति तदाह जीवा-

जीवास्रव-बन्ध-संवर-निर्जर-मोक्षास्तत्त्वानीति । तत्र जीवाजीवौ निरूपितौ आस्रवो निरूप्यते । औदारिकादिकायादिवलनद्वारेणात्मनश्चलनं योगपदवेदनीयमास्रवः यथा सलिलावगाहिद्वारं नद्यास्रवणं कारणत्वादास्रव इति निगद्यते तथा योगप्रणाडिकयाकर्म्मास्रवतीतिस योग आस्रवः । यथा आर्द्रं वस्त्रं समन्ताद्वातानीतं रेणुजातमुपादत्ते तथा कषायजलार्द्र आत्मा योगानीतं कर्म्म सर्व्वप्रदेशैर्गृह्णाति यथा वा निष्टप्तायःपिण्डे जले क्षिप्ते अम्भः समन्ताद् गृह्णाति तथा कषायोष्णो जीवो योगानीतं कर्म्म समन्तादादत्ते । कषति हिनस्त्यात्मानं कुगतिप्रापणादिति कषायः क्रोधो मानो माया लोभश्च स द्विविधः शुभाशुभभेदात् । तत्राहिंसादिः शुभः काययोगः सत्यमितहितभाषणादिः शुभो वाग्योगः । तदेतदास्रवभेदप्रभेदजातं कायवाङ्मनःकर्म्मयोगः स आस्रवः शुभः पुण्यस्य अशुभः पापस्येत्यादिना सूत्रसन्दर्भेण ससंरम्भमभाणि । अपरे त्वेवं मेनिरे आस्रवयति पुरुषंविषयेष्विन्द्रियप्रवृत्तिरास्रव इन्द्रियद्वारा हि पौरुषं ज्योतिर्व्विषयान् स्पृशद्रूपादिज्ञानरूपेण परिणमत इति ।

मिथ्यादर्शनाविरतिप्रमादकषायवशाद्योग-

वशाच्चात्मा सूक्ष्मैकक्षेत्रावगाहिनामनन्तान्तप्रदेशानां पुद्गलानां कर्म्मबन्धयोग्यानामादानमुपश्लेषणं यत् करोति स बन्धः । तदुक्तं सकषायत्वाज्जीवः कर्म्मभावयोग्यान् पुद्गलानादत्ते स बन्ध इति । तत्र कषायग्रहणं सर्व्वबन्धहेतूपलक्षणार्थम् । बन्धहेतून् पपाठ वाचकाचार्य्यः । मिथ्यादर्शनाविरतिप्रमादकषाया बन्धहेतव इति । मिथ्यादर्शनं द्विविधं मिथ्याकर्म्मोदयात् परोपदेशानपेक्षं तत्त्वाश्रद्धानं नैसर्गिकमेकम् अपरं परोपदेशजम् । पृथिव्यादिषट्कापादानकं षडिन्द्रियासंयमनञ्च अविरतिः । पञ्चसमितिगुप्तिष्वनुत्साहः प्रमादः । कषायः

वदायुषो देहबन्धकर्तृत्वं जलवत् नाम्नी विचित्रनामकारित्वं चित्रिकवद्गोत्रस्योच्चनीचकारित्वं कुम्भकारवद्दानादीनां विघ्ननिदानत्वमन्तरायस्य स्वभावः कोशाध्यक्षवत् । सोऽयं प्रकृतिबन्धोऽष्टविधः द्रव्यकर्म्मावान्तरभेदमूलप्रकृतिवेदनीयः । तथावोचदुमास्वातिवाचकाचार्य्यः आद्यो ज्ञानदर्शनावरणवेदनीयमोहनीयायुर्नामगोत्रान्तराया इति तद्भेदश्च समगृह्णात् पञ्चनवाष्टाविंशतिचतुर्द्विचत्वारिंशद्द्विपञ्चदशभेदा यथाक्रममिति । एतच्च सर्व्वं विद्यानन्दादिभिर्व्विवृतमिति विस्तरभयान्न प्रस्तू-
यते । यथा अजागोमहिष्यादिक्षीराणामेतावन्तमनेहसं माधुर्य्यस्वभावादप्रच्युतिस्थितिः तथा ज्ञानावरणादीनां मूलप्रकृतीनामादितस्तिसृणामन्तरायस्य च त्रिंशत्सागरोपमकोटिकोट्यः परास्थितिरित्याद्युक्तं कालदुर्द्धानवत् स्वीयस्वभावादप्रच्युतिस्थितिः । यथा अजा-
गोमोहिष्यादिक्षीराणां तीव्रमन्दादिभावेन स्वकार्य्यकारणे सामर्थ्यविशेषोऽनुभावः तथा कर्म्मपुद्गलानां स्वकार्य्यकरणे
सामर्थ्यविशेषोऽनुभावः ।
कर्म्मभावपरिणतपुद्गलस्कन्धानामनन्तान्तप्रदेशानामात्मप्रदेशानुप्रवेशः प्रदेशबन्धः । आस्रवनिरोधः संवरः । येनात्मनि प्रविशत् कर्म्म प्रतिषिध्यते स गुप्तिसमित्यादिः संवरः । संसारकारणाद्योगादात्मनो गोपनं गुप्तिः । सा त्रिविधा कायवाङ्मनोनिग्रहभेदात् । प्राणिपीडापरिहारेण सम्यगयनं समितिः सा ईर्य्याभाषादिभेदात् पञ्चधा । प्रपञ्चितञ्च हेमचन्द्राचार्य्यैः ।
लोकातिवाहिते मार्गे चुम्बिते भास्वदंशुभिः ।
जन्तुरक्षार्थमालोक्य गतिरीर्य्या मता सताम् ॥
आपद्य रागतः सर्व्वजनीनं मितभाषणम् ।
प्रिया वाचंयमानां सा भाषा समितिरुच्यते ॥
द्विचत्वारिंशता भिक्षादोषैर्नित्यमदूषितम् ।
मुनिर्य्यदन्नमादत्ते सैषणासमितिर्म्मता ॥
आसनादीनि संवीक्ष्य प्रतिलङ्घ्य च यत्नतः ।
गृह्णीयान्निक्षिपेद्ध्यायेत् सादानसमितिः स्मृता ॥
कफमूत्रमलप्रायैर्निर्जन्तु जगतीतले ।
यत्नाद्यदुत्सृजेत् साधुः सोत्सर्गसमितिर्भवेत् ॥
अत एवास्रवः स्रोतसो द्वारं संवृणोतीति संवर इति निराहुः । तदुक्तमभियुक्तैः ।
आस्रवो भवहेतुः स्यात् संवरो मोहकारणम् ।
इतीयमार्हती मुष्टिरन्यदस्याः प्रपञ्चनम् ॥

संसारबीजभूतानां कर्म्मणां जरणादिह ।
निर्ज्जरा संस्मृता द्वेधा सकामा कामनिर्ज्जरा ॥
स्मृता सकामा यमिनामकामा त्वन्यदेहिनामिति ॥
मिथ्यादर्शनादीनां बन्धहेतूनां निरोधः अभिनवकर्म्माभावात् निर्ज्जराहेतुसन्निधानेनार्ज्जितस्य कर्म्मणो निरसनादात्यन्तिककर्म्ममोक्षणं मोक्षः बन्धहेतुभवहेतुनिर्ज्जराभ्यां कृत्स्नकर्म्मविप्रमोक्षनं मोक्ष इति तदनन्तरमूर्द्ध्वं गच्छत्यालोकान्तात् यथा हस्तदण्डादिभ्रमिप्रेरितं कुलालचक्रमुपरतेऽपि तस्मिन् तद्बलादेवासंस्कारक्षयं भ्रमति तथा भवस्थेनात्मना अपवर्गप्राप्तये बहुशो यत् कृतं प्रणिधानं मुक्तस्य तदभावेऽपि पूर्ब्बसंस्कारादालोकान्तं गमनमुपपद्यते यथा वा मृत्तिकालेपकृतमलावुद्रव्यं जलेऽधःपतति पुनरपेतमृत्तिकाबन्धमूर्द्ध्वं गच्छति तथा कर्म्मरहित आत्मा असङ्गत्वादूर्द्ध्वं गच्छति बन्धच्छेदादेरण्डबीजवच्चोर्द्ध्वगतिस्वभावाच्चाग्निशिखावत् । अन्योन्यं प्रदेशानुप्रवेशे सत्यविभागेनावस्तानं बन्धः परस्परप्राप्तिमात्रं सङ्गः । तदुक्तं पूर्ब्बप्रयोगादसङ्गत्वाद्बन्धच्छेदात्तथा गतिपरिणामाच्चाविरुद्धं कुलालचक्रवद्व्यपगतलेपालावुवदेरण्डबीजवदग्निशिखावच्चेति । अतएव पठन्ति ।
गत्वा गत्वा निवर्त्तन्ते चन्द्रसूर्य्यादयो ग्रहाः ।
अद्यापि न निवर्त्तन्ते त्वालोकाकाशमागताः इति ।
अन्ये तु गतसमस्तक्लेशतद्वासनस्यानावरणज्ञानस्य सुखैकतानस्यात्मन उपरिदेशावस्थानं मुक्तिरित्वास्थिषत । एवमुक्तानि सुखदुःखसाधनाभ्यां पुण्यपापाभ्यां सहितानि नव पदार्थान् केचनाङ्गीचक्रुः । तदुक्तं सिद्धान्ते जीवाजीवौ पुण्यपापयुतावास्रवः संवरो निर्ज्जरणं बन्धो मोक्षश्च नव तत्त्वानीति । संग्रहे प्रवृत्ता वयमुपरताः स्म ।

अत्र सर्व्वत्र सप्तभङ्गिनयाख्यं न्यायमवतार-

यन्ति जैनाः स्यादस्ति स्यान्नास्ति स्यादस्ति च नास्ति च स्यादवक्तव्यः स्यादस्ति चावक्तव्यः स्यान्नास्ति चावक्तव्यः स्यादस्ति च नास्ति चावक्तव्य इति तत्सर्व्वमनन्तवीर्य्यः प्रत्यपीपदत् ।
तद्विधानविवक्षायां स्यादस्तीति गतिर्भवेत् ।
स्यान्नास्तीति प्रयोगः स्यात्तन्निषेधे विवक्षिते ॥
क्रमेणोभयवाञ्छायां प्रयोगः समुदायभाक् ।

| | | |
|---|---|---|
| क्रोधादिः । तत्र कषायान्ताः स्थित्यनुभावबन्ध-हेतवः प्रकृतिप्रदेशबन्धहेतुर्योग इति विभागः । बन्धश्चतुर्व्विध इत्युक्तं प्रकृतिस्थित्यनुभावप्रदे-शास्तु तद्विधय इति यथा निम्बगुडादेस्तिक्तत्व-मधुरत्वादिस्वभावः एवमावरनीयस्य ज्ञान-दर्शनावरणत्वमादित्यप्रभोच्छेदकाम्भोधरवत् प्र-दीपप्रभातिरोधायककुम्भवच्च सदसद्वेदनीयस्य सुखदुःखोत्पादकत्वमसिधारामधुलेहनवद्दर्शन-मोहनीयस्य तत्त्वार्थाश्रद्धानकारित्वं दुर्ज्जनसङ्ग-वच्चारित्रे मोहनीयस्यासंयमहेतुत्वं मद्यमद- | अर्ज्जितस्य कर्म्मणस्तपःप्रभृतिभिर्निर्ज्जरणं निर्ज्ज-<br>राख्यं तत्त्वं चिरकालप्रवृत्तकषायकलापंपुण्यं सुखदुःखे च देहेन जरयति नाशयति केशो-ल्लुञ्चनादिकं तप उच्यते । सा निर्ज्जरा द्विविधा यथाकालौपक्रमिकभेदात् तत्र प्रथमा यस्मिन् काले यत् कर्म्म फलप्रदत्त्वेनाभिमतं तस्मिन्नेव काले फलदानाद्भवन्ती निर्ज्जरा कामादिपाक-जेति च जेगीयते । यत् कर्म्म तपोबलात् स्वकामनयोदयावलिं प्रवेश्य प्रपद्यते तत् कर्म्म निर्ज्जरा । यदाह ॥ | युगपत्तद्विवक्षायां स्यादवाच्यमशक्तितः ॥<br>आद्यावाच्यविवक्षायां पञ्चमो भङ्ग इष्यते ।<br>अन्त्यावाच्यविवक्षायां षष्ठभङ्गसमुद्भवः ॥<br>समुच्चयेन युक्तश्च सप्तमो भङ्ग उच्यत इति ।<br>स्याच्छब्दः खल्वयं निपातः तिङन्तप्रतिरूपको-ऽनेकान्तद्योतकः । यथोक्तम् ।<br>वाक्येष्वनेकान्तद्योतिगम्यं प्रति विशेषणम् ।<br>स्यान्निपातोऽर्थयोगित्वात्तिङन्तप्रतिरूपकइति ॥<br>यदि पुनरेकान्तद्योतकः स्याच्छब्दोऽयं स्यात्तदा |

स्यादस्तीति वाक्ये स्यात्पदमनर्थकं स्यात् अने-
कान्तद्योतकत्वे तु स्यादस्ति कथञ्चिदस्तीति
स्यात्पदात् कथञ्चिदिति अयमर्थो लभ्यत इति
नानर्थकम् । तदाह ।
स्याद्वादः सर्व्वथैकान्तत्यागात् किं वृततद्विधेः ।
सप्तभङ्गिनयापेक्षो हेयादेयविशेषकृदिति ॥
यदि वस्त्वस्त्येकान्ततः सर्व्वथा सर्व्वदा सर्व्वत्र
सर्व्वात्मनास्तीति न उपादित्साजिहासाभ्यां
क्वचित् कदा केनचित् प्रवर्त्तेत निवर्त्तेत वा प्राप्त-
प्रापणीयत्वह्येहानानुपपत्तेश्च । अनेकान्त-
पक्षे तु कथञ्चित् क्वचित् केनचित् सत्त्वेन
हानोपादाने प्रेक्षवतामुपपद्येते । किञ्च वस्तुनः
सत्त्वं स्वभावः असत्त्वं वेत्यादि प्रष्टव्यं न ताव-
दस्तित्वं वस्तुनः स्वभाव इति समस्ति घटो-
ऽस्तीत्यनयोः पर्य्यायतया युगपत्प्रयोगायोगात्
नास्तीति प्रयोगविरोधाच्च एवमन्यत्रापि
योज्यम् । यथोक्तम् ।
घटोऽस्तीति न वक्तव्यं सन्नेव हि यतो घटः ।
नास्तीत्यपि न वक्तव्यं विरोधात् सदसत्त्वयोः ॥
इत्यादि ॥
तस्मादित्थं वक्तव्यं सदसत्सदसदनिर्व्वचनीय-
वादभेदेन प्रतिवादिनश्चतुर्व्विधाः पुनरप्य-
निर्व्वचनीयमतेनामिश्रितानि सदसदादिमता-
नीति त्रिविधाः तान् प्रति किं वस्त्वस्तीत्यादि-
पर्य्यनुयोगे कथञ्चिदस्तीत्यादिप्रतिवचनसम्भेक्ता
ते वादिनः सर्व्वे निर्व्विण्णाः सन्तः तूष्णीमासत
इति सम्पूर्णार्थविनिश्चायिनः स्याद्वादमङ्गी-
कुर्व्वतस्तत्र तत्र विजय इति सर्व्वमुपपन्नम् ।
यदवोचदाचार्य्यः स्याद्वादमञ्जर्य्याम् ।
अनेकान्तात्मकं वस्तु गोचरः सर्व्वसंविदाम् ।
एकदेशविशिष्टोऽर्थो न यस्य विषयो मतः ॥
न्यायानामेकनिष्ठानां प्रवृत्तौ श्रुतवर्त्मनि ।
सम्पूर्णार्थविनिश्चायि स्याद्वस्तु श्रुतमुच्यत इति ॥
अन्योन्यपक्षप्रतिपक्षभावाद्
यथापरे मत्सरिणः प्रवादाः ।
नयानशेषानविशेषमिच्छ-
न्नपक्षपाती समयस्तथार्हत इति ॥
जिनदत्तसूरिणा जैनं मतमित्थमुक्तम् ।
बलभोगोपभोगानामुभयोर्द्दानलाभयोः ।
अन्तरायस्तथा निद्रा भीरज्ञानं जुगुप्सितम् ॥
हिंसा रत्यरती रागद्वेषौ रतिरतिस्मरः ।
शोको मिथ्यात्वमेतेऽष्टादश दोषा नयस्य सः ॥
जिनो देवो गुरुः सम्यक् तत्त्वज्ञानोपदेशकः ।
ज्ञानदर्शनचारित्राण्यपवर्गस्य वर्त्तिनि ॥
स्याद्वादस्य प्रमाणे द्वे प्रत्यक्षमनुमापि च ।
पुण्यस्य संस्रवे पापस्यास्रवे क्रियते पुनः ।
लब्धानन्तचतुष्कस्य लोकागूढस्य चात्मनः ।
क्षीणाष्टकर्म्मणो मुक्तिर्निर्व्यावृत्तिर्ज्जिनोदिता ॥
सरजोहरणा भैक्षभुजो लुञ्चितमूर्द्धजाः ।
श्वेताम्बराः क्षमाशीलाः निःसङ्गा जैनसाधवः ॥
लुञ्चिताः पिच्छिकाहस्ताः पाणिपात्रा दिग-
म्बराः ।
ऊर्द्ध्वशिनो गृहे दातुर्द्वितीयाः स्युर्ज्जिनर्षयः ॥
भुङ्क्ते न केवलं न स्त्री भोक्षमेति दिगम्बरः ।
प्राहुरेषामयं भेदो महान् श्वेताम्बरैः सहेति ॥”
इति सर्व्वदर्शनसंग्रहे आर्हतदर्शनम् ॥)

**जैपालः**, पुं, (जयपालः पृषादरादित्वात् साधुः ।) जयपालवृक्षः । इति द्विरूपकोषः ॥

**जैमिनिः**, पुं, मुनिविशेषः । स वेदव्यासशिष्यः उत्तरमीमांसाकर्त्ता भारतकृत् वज्रवारकश्च । यथा, पुराणवचनम् ।
“जैमिनिश्च सुमन्तुश्च वैशम्पायन एव च ।
पुलस्त्यः पुलहश्चैव पञ्चैते वज्रवारकाः ॥”

**जैवातृकः**, पुं, (जीवयति ओषधिप्रभृतीनीति । जीव + णिच् + “आतृकन् वृद्धिश्च ।” उणां । १ । ८१ । इति आतृकन् ईकारस्य वृद्धिश्च ।) चन्द्रः । कर्पूरः । इत्यमरः । १ । ३ । १४ । २ । ६ । १३० ॥ पुत्त्रः । इति संक्षिप्तसारे उणादि-वृत्तिः ॥ भेषजम् । इति हेमचन्द्रः ॥

**जैवातृकः**, त्रि, (जीवतीति । जीव + आतृकन् वृद्धिश्च ।) दीर्घायुः । (यथा, दशकुमार-चरिते । “जैवातृक ! ननु श्रूयते पतिरस्याः मिथिलायां प्रहारवर्म्मासीत् ॥”) कृशः । इति मेदिनी । के, १९० ॥

**जैह्म्यं**, क्ली, (जिह्मस्य कुटिलस्य भावः । जिह्म + भावे ष्यञ् ।) जिह्मता । कुटिलता । यथा, मनुः । ११ । ६७ ।
“जैह्म्यं पुंसि च मैथुन्यं जातिभ्रंशकरं स्मृतम् ॥”

**जोङ्गकं**, क्ली, (जुङ्गति त्यजति सद्गन्धमिति । जुगि त्यामे + ण्वुल् । निपातनात् गुणः ।) अगुरु । इत्यमरः । २ । ६ । १२६ ॥

**जोङ्गटः**, पुं, (जुङ्गति अरोचकत्वं परित्यजत्यनेनेति । जुङ्ग + बाहुलकात् अटन् गुणश्च ।) गर्भि-ण्यभिलाषः । इति हारावली । २१९ ॥ साधु
“मैवमित्यब्रवीच्चैनं जोषमास्वेति भारत ! ॥”)
सुखम् । इत्यमरः । ३ । ३ । २५० ॥

**जोषा**, स्त्री, (जुष्यते सेव्यते उपभुज्यते इति । जुष् + घञ् । स्त्रियां टाप् ।) योषा । इति शब्दरत्नावली ॥

**जोषिका**, स्त्री, (जुषते सेवते इति । जुष + ण्वुल् । टापि अत इत्वम् ।) जालिका । इति शब्द-रत्नावली ॥

**जोषित्**, स्त्री, (युष्यते उपभुज्यते । युष् + “हृसृ-रुहियुषिभ्य इतिः ।” उणां । १ । ९९ । इति-प्रत्ययः । पृषोदरादित्वात् यस्य जः ।) योषित् । इति शब्दरत्नावली ॥

**जोषिता**, स्त्री, (जोषित् + हलन्तत्वाद् वा टाप् ।) योषित् । इति शब्दरत्नावली ॥

**ज्ञः**, पुं, (जानातीति । ज्ञा + “इगुपधज्ञा-प्रीकिरः कः ।” ३ । १ । १३५ । इति कः ।) ब्रह्मा । बुधः । पण्डितः । (यथा, चरके सूत्र-स्थाने ३० अध्याये ।
“पशुः पशूनां दौर्ब्बल्यात् कश्चित् मध्येवृकायते ।
ससत्वं वृकमासाद्य प्रकृतिं भजते पशुः ॥
तद्वदज्ञो ज्ञमध्यस्थः कश्चित् मौखर्य्यसाधनः ।
स्थापयत्याप्तमात्मानमाप्तंत्वासाद्य भिद्यते ॥”)
महीसुतः । इति धरणी ॥

**ज्ञप**, क म ज्ञप्तौ । इति कविकल्पद्रुमः । (चुरां-परं-सकं-सेट् ।) क म, ज्ञपयति । ज्ञप्ति-र्म्मारणालोकनिशाणतोषणस्तुतयः। ज्ञाक्म इत्य-नेनैवेष्टसिद्धौ ज्ञपपाटश्चुरादिरुभयपदीतिमते फलवत्कर्त्तरि परस्मैपदार्थः । इति धातुप्र-दीपः । वस्तुतस्तु ज्ञप्तिपदमस्माद्वे निष्पादितम् । तेन अनिर्द्दिष्टार्थतया ज्ञप्तिरिह ज्ञानम् । अत-एव प्रच्छौ श ज्ञीप्से इत्यत्र अस्यैव सनन्तस्य निष्पादितेन ज्ञीप्सशब्देन ज्ञातुमिच्छा प्रति-पाद्यते । एवं ज्ञानपर्य्यायि प्रतिपज्ज्ञप्तिचेत-नेत्यमरः । इति दुर्गादासः ॥

**ज्ञपितः**, त्रि, (ज्ञप्यते स्मेति । ज्ञप + णिच् + क्तः ।) ज्ञापितः । इत्यमरः । ३ । १ । ९८ ॥

**ज्ञप्तः**, त्रि, (ज्ञप्यते स्मेति । ज्ञप + णिच् + क्तः । “वा दान्तशान्तेति ।” ७ । २ । २७ । इति साधुः ।) ज्ञापितः । इत्यमरः । ३ । १ । ९८ ॥

**ज्ञप्तिः**, स्त्री, (ज्ञप्यते ज्ञायते ऽनयेति । ज्ञप +

नित्यानित्यात्मकं सर्व्वं नव तत्त्वानि सप्त वा ॥
जीवाजीवौ पुण्यपापे चास्रवः संवरोऽपि च ।
बन्धो निर्ज्जरणं मुक्तिरेषां व्याख्याधुनोच्यते ॥
चेतनालक्षणो जीवः स्यादजीवस्तदन्यकः ।
सत्कर्म्मपुद्गलाः पुण्यं पापं तस्य विपर्य्ययः ॥
आस्रवः कर्म्मणां बन्धो निर्ज्जरस्तद्वियोजनम् ।
अष्टकर्म्मक्षयान्मोक्षोऽथान्तर्भावश्चकैश्चन ॥

इति भाषा ॥

**जोटिङ्गः**, पुं, (जूटेन इङ्गति प्रकाशते इति । अच् । पृषोदरादित्वात् साधुः ।) महादेवः । महाव्रती । इति त्रिकाण्डशेषः ॥

**जोन्ताला**, स्त्री, देवधान्यम् । इति हेमचन्द्रः । ४ । २४४ ॥ (जोन्नाला इति क्वचित् पाठः ॥)

**जोषं**, क्ली, (जुष हर्षे + भावे घञ् ।) सुखम् । इति शब्दरत्नावली ॥ (यथा, ऋग्वेदे । १ । १२० । १ ।
"का राधद्धोत्राश्विना वां को वां जोष उभयोः ॥"
"जोषे प्रीतिजनके व्यवहारे ।" इति दयानन्दभाष्यम् ॥)

**जोषम्**, व्य, (जुष् + बाहुलकात् अम् ।) तूष्णीम् । (यथा, महाभारते । २ । ६८ । १६ । भावे क्तिन् । इडभावः ।) बुद्धिः । इत्यमरः । १ । ५ । १ ॥ (यथा, कथासरित्सागरे । २५ । ५७ ।
"ततो दीर्घतपोवाक्यात् सम्भाव्य द्वीपगाञ्च ताम् ।
तज्ज्ञप्तये दाशपतेरुत्स्थलद्वीपवासिनः ॥")

**ज्ञा**, क प्रेरणे । इति कविकल्पद्रुमः ॥ (चुरां-परंसकं-सेट् ।) प्रेरणमिह नियोजनम् । क, ज्ञापयति भृत्यं स्वामी नियुक्तं करोतीत्यर्थः । इति दुर्गादासः ॥

**ज्ञा**, क म मारणे । आलोके । निशाणे । तोषणे । स्तुतौ । इति कविकल्पद्रुमः ॥ (चुरां-परं-सकंसेट् ।) कम, ज्ञपयति अज्ञपि अज्ञापि ज्ञपं ज्ञप

ज्ञापं ज्ञापम् । आलोको दर्शनप्रेरणम् । निशाणं तिक्ष्णीकरणम् । तोषणं तुष्टीकरणम् । ज्ञपयति शत्रुं शूरो मारयतीत्यर्थः । ज्ञपयति रूपं कामिनी षिड्गान् दर्शयतीत्यर्थः । ज्ञपयति खड्गं कर्म्मकारः शाणयतीत्यर्थः । ज्ञपयति गुरुं शिष्यस्तोषयतीत्यर्थः । स्तुतिः कैश्चिन्न मन्यते । आलोको ज्ञानप्रेरणमित्यनुन्यास-रक्षितौ । अतएव क्रमदीश्वरोऽपि जानाते-र्घटादित्वं विभाषया मन्यते । तेन ज्ञपयितुं बोधयितुमिष्यमाणो ज्ञीप्समान इति पाणिनीय-वृत्तौ ज्ञानप्रेरणापि ह्रस्वे सनि ज्ञीप्समान इति प्रसिद्धम् । एवं विज्ञप्तिरेषा मम जीवबन्धौ इत्यादिषु च विज्ञापनमेवार्थः । इति दुर्गादासः ॥

**ज्ञा**, ग बोधे । इति कविकल्पद्रुमः ॥ (क्र्यां-परं-सकं-अनिट् ।) ग, जानाति । "सन्दर्भशुद्धिं गिरां जानीते जयदेव एवेत्यत्र अनुपसर्गात् फलवत्कर्त्तर्य्यात्मनेपदम् । ततोऽनुजज्ञे गमनं सुतस्य इत्यत्रानुशब्दस्योपसर्ग प्रतिरूपकत्वेना-नुपसर्गत्वात् ॥" इति दुर्गादासः ॥

**ज्ञातं**, त्रि, (ज्ञायते विद्यते स्मेति । ज्ञा + कर्म्मणि क्तः ।) कृतज्ञानम् । जाना इति भाषा । तत्-पर्य्यायः । विदितम् २ बुद्धम् ३ बुधितम् ४ प्रमितम् ५ मतम् ६ प्रतीतम् ७ अवगतम् ८ मनितम् ९ अवसितम् १० । इति जटाधरः ॥ (यथा, पञ्चतन्त्रे । १ । १२३ ।
"पूर्ब्बमेव मया ज्ञातं पूर्णमेतद्धि मेदसा ॥")

**ज्ञातव्यं**, त्रि, (ज्ञायते यदिति । ज्ञा + तव्य ।) ज्ञानीयम् । ज्ञेयम् । वेद्यम् । अवगन्तव्यम् । बोध्यम् । (यथा, महाभारते । ४ । २८ । ५ ।
"स्वराष्ट्रे परराष्ट्रेच ज्ञातव्यं बलमात्मनः ॥")
मन्तव्यम् । इति व्याकरणम् ॥

**ज्ञातसिद्धान्तः**, पुं, (ज्ञातो विदितः सिद्धान्तः शास्त्रतत्त्वार्थो येन ।) शास्त्रतत्त्वज्ञः । तत्-पर्य्यायः । तान्त्रिकः २ । इत्यमरः । २ । ८ । १५ ॥

**ज्ञाता**, [ऋ] त्रि, (ज्ञा + तृच् ।) ज्ञानशीलः । तत्-पर्य्यायः । विदुरः २ बिन्दुः ३ । इत्यमरः । ३ । १ । ३० ॥ विदितः ४ ज्ञानसमन्वितः ५ । इति शब्दरत्नावली ॥

**ज्ञातिः**, पुं, जानाति छिद्रं कुलस्थितिञ्च ज्ञातिः (ज्ञायते विद्यतेऽस्मादिति । ज्ञा + अपादाने क्तिन् ।) पिता । इति मेदिनी । ते, २० ॥

**ज्ञातेयं**, क्ली, (ज्ञातेर्भावः कर्म्म वा । ज्ञाति + "कपिज्ञात्योर्ढक् ।" ५ । १ । १२७ । इति ढक् ।) ज्ञातित्वम् । इत्यमरः । २ । ६ । ३५ ॥

**ज्ञानं**, क्ली, (ज्ञा + भावे ल्युट् ।) विशेषेण सामान्येन चावबोधः ॥
"मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः ।"
इत्यमरः । १ । ५ । ६ ॥
अस्यार्थः । "मोक्षे शिल्पे शास्त्रे च या धीः सा ज्ञानं विज्ञानञ्चोच्यते एषा विशेषप्रवृत्तिः । अन्यत्र घटपटादौ या धीः सापि ज्ञानं विज्ञान-ञ्चोच्यते एषा सामान्यप्रवृत्तिः । मोक्षे धीर्ज्ञानं विज्ञानञ्च यथाज्ञानान्मुक्तिरिति सा याचिता च विज्ञानं तुष्टा ऋद्धिं प्रयच्छति इति । अन्यत्र यथा ज्ञानमस्ति समस्तस्य जन्तोर्विषयगोचरे इति घटत्वप्रकारकज्ञानमितिये केचित् प्राणिनो लोके सर्व्वे विज्ञानिनो मताः इति । ब्रह्मणो नित्यविज्ञानानन्दरूपत्वादितिएवं चित्रज्ञानं व्याकरणज्ञानं घटपदविज्ञानमित्यादिकंप्रयु-ज्यत एव । मोक्षनिमित्तं शिल्पशास्त्रयोर्धी-र्ज्ञानमुच्यते तन्निमित्ततोऽन्यनिमित्तंया तयोर्धीः सा विज्ञानमिति केचित् । मोक्षविषया मोक्ष-फला धीर्ज्ञानं अन्यधीर्विज्ञानं क्वान्यत्र इत्याह शिल्पशास्त्रयोरिति केचित् । अवबोध इत्य-ध्याहृत्य मोक्षविषये अवबोधो धीः अन्यत्र घटपटादिविज्ञानं शिल्पशास्त्रविषये विज्ञान-मिति केचित् ।" इति भरतः ॥ * ॥ योगशास्त्र-मते तु ।
"एकत्वं बुद्धिमनसोरिन्द्रियाणाञ्चसव्वशः ।
आत्मनो व्यापिनस्तात ज्ञानमेतदनुत्तमम् ॥"
इति मोक्षधर्म्मः ॥
"एकत्वं बुद्धिमात्रेणावस्थानं बुद्धिवृत्तिनिरोध इति यावत् ।" इति तट्टीका ॥ * ॥
"अमानित्वमदम्भित्वमहिंसाक्षान्तिरार्जवम् ।
आचार्य्योपासनं शौचं स्थैर्य्यमात्मविनिग्रहः ॥
इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥
असक्तिरनभिष्वङ्गः पुत्त्रदारगृहादिषु ।
नित्यञ्च समचित्तत्वमिष्टानिष्टोपपत्तिषु॥
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥"
तामसं यथा, --
"यत्तु कृत्स्नवदेकस्मिन् कार्य्ये सक्तमहेतुकम् ।
अतत्वार्थवदल्पञ्च तत्तामसमुदाहृतम् ॥" ३ ॥
इति श्रीभगवद्गीतायाम् । १८ । २० -- २२ ॥

"सर्व्वेषु भूतेषु ब्रह्मादिस्थावरान्तेषु विभक्तेषु

परस्परं व्यावृत्तेषु अविभक्तमनुस्यूतं एकमव्ययं निर्विकारं भावं परमात्मतत्त्वं येन ज्ञानेनेक्षते आलोचयति तज्ज्ञानं सात्विकं विद्धि ॥ १ ॥

सर्व्वेषु भूतेषु नानाभावान् वस्तुत एवानेकान्

क्षेत्रज्ञान् पृथग्विधान् सुखिदुःखित्वादिरूपेण विलक्षणान् येन ज्ञानेन वेत्ति तज्ज्ञानं राजसं विद्धि ॥ २ ॥

एकस्मिन् कार्य्ये देहे प्रतिमादौ वा कृत्-

स्नवत् परिपूर्णवत् सक्तं एतावानेव आत्मा ईश्वरो वा इत्यभिनिवेशयुक्तं अहैतुकं निरुप-पत्तिकं अतत्त्वार्थवत् परमार्थालम्बनशून्यं अत-एवाल्पं तुच्छं अल्पविषयत्वात् अल्पफलत्वाच्च यदेवम्भूतं ज्ञानं तत् तामसमुदाहृतम् ॥" ३ ॥
इति तट्टीकायां श्रीधरस्वामी ॥
न्यायमते तु ।
"अप्रमा च प्रमा चैव ज्ञानं द्विविधमुच्यते ।
तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरुपिता ॥
तत्प्रपञ्चो विपर्य्यासः संशयोऽपि प्रकीर्त्तितः ।
आद्यो देह आत्मबुद्धिः शङ्खादौ पीतिमा मतिः ॥
भवेन्निश्चयरूपा सा संशयोऽथ प्रदर्श्यते ।
किं स्विन्नरो वा स्थाणुर्व्वेत्यादि बुद्धिस्तु संशयः ।
तदभावाप्रकारा धीस्तत्प्रकारा तु निर्णयः ॥
स संशयो भवेद्या धीरेकत्राभावभावयोः ।
साधारणादिधर्म्मस्य ज्ञानं संशयकारणम् ॥
दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत् ।
पित्तदूरत्वादिरूपो दोषो नानाविधो मतः ॥"
"गुणः स्याद्भ्रमभिन्नन्तु ज्ञानमत्रोच्यते प्रमा ।
अथवा तत्प्रकारं यज्ज्ञानं तद्वत् विशेष्यकम् ॥
ज्ञानं यन्निर्व्विकल्पाख्यं तदतीन्द्रियमिष्यते ।
तत् प्रमा न प्रमा नापि भ्रमः स्यान्निर्व्विकल्पकम् ॥
प्रकारतादिशून्यं हि सम्बन्धानवगाहि तत् ॥"
इति भाषापरिच्छेदः ॥
(यथा, वायुपुराणे उत्तरभागे । ११ । ३६ ।
"वैराग्याज्जायते ज्ञानं ज्ञानाद्योगः प्रवर्त्तते ।

नाम्नीति तिक् । इत्यमरटीकायां भरतः ॥
सपि-
ण्डादिः । तत्पर्य्यायः । सगोत्रः २ बान्धवः ३
बन्धुः ४ स्वः ५ स्वजनः ६ । इत्यमरः । २ ।
६ । ३४ ॥
अंशकः ७ गन्धः ८ दायादः ९ । इति
त्रिकाण्ड-
शेषः ॥ सकुल्यः १० समानोदकः ११ । इति
जटाधरः ॥ स चतुर्व्विधः । सप्तमपुरुषपर्य्यन्तं
सपिण्डः । ततस्त्रिपुरुषपर्य्यन्तं सकुल्यः ।
तत-
श्चतुर्थपुरुषपर्य्यन्तं समानोदकः ।
जन्मनामस्मृति-
पर्य्यन्तमपि समानोदकः । ततः परंगोत्रजः ।
इति
शुद्धितत्त्वम् ॥ एषां विशेषस्तत्तच्छब्दे द्रष्टव्यः ॥
* ॥
ज्ञातिद्रोहे दोषो यथा, ब्रह्मवैवर्त्ते प्रकृतिखण्डे ।
"यानि कानि च पापानि ब्रह्महत्यादिकानि च ।
ज्ञातिद्रोहस्य पापस्य कलां नार्हन्ति षोडशीम्
॥"

सात्त्विकराजसतामसभेदेन तत्त्रिविधम् ।
सात्विकं यथा, --
"सर्व्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्विकम् ॥"
राजसं यथा, --
"पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्वि-
धान् ।
वेत्ति सर्व्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥"

योगज्ञः पतितो वापि मुच्यते नात्र संशयः ॥"
विष्णुः । यथा महाभारते । १३ । १४९ । ६१ ।
"सर्व्वदर्शी विमुक्तात्मा सर्व्वज्ञो ज्ञानमुत्तमम् ॥"
"ज्ञानं प्रकृष्टमजन्यमनवच्छिन्नं सर्व्वस्य साधक-
मिति ज्ञानमुत्तमं 'सत्यं ज्ञानमनन्तं ब्रह्म'
इति श्रुतेः ॥" इति तद्भाष्यम् ॥)

**ज्ञानदर्पणः** पुं, (ज्ञानं दर्पण इव यस्य ।) पूर्ब्ब-
जिनः । इति त्रिकाण्डशेषः ।

**ज्ञानयोगः**, पुं, (युज्यते ब्रह्मणानेनेति । युज +
करणे घञ् । ज्ञानमेव योगः ।) ब्रह्मज्ञान-
प्राप्त्युपायः । यथा, --
"सर्व्वभूतेषु गोविन्दो बहुरूपो व्यवस्थितः ।
इति मत्वा महाप्राज्ञः प्रतिकूलं न कारयेत् ॥

शब्दादयो ये विषया विषयी चाथ पूरुषः ।
जानीयात्तदशेषं वै स्वरूपं परमात्मनः ॥
परमात्मा च भगवान् विष्वक्सेनो जनार्द्दनः ।
तद्भक्तिमान् भगवतो नाल्पपुण्यैर्हि जायते ॥
भगवच्छासनालम्बी भगवच्छासनप्रियः ।
भगवद्भक्तिमास्थाय वत्स ! भागवतो भव ॥
भगवान् भूतभव्येशो भूतादिप्रभवोऽव्ययः ।
भावेन तं भजस्वेशं भवभङ्गकरं हरिम् ॥
भजस्व भावेन विभु भगवन्तं भवेश्वरम् ।
ततो भागवतो भूत्वा भवबन्धात् प्रमोक्ष्यसि ॥
तत्र चित्तं समाधातुं न शक्नोति भवान् यदि ।
तदभ्यासपरस्तस्मिन् कुरु योगं दिवानिशम् ॥
तत्र यद्यसमर्थस्त्वं ज्ञानयोगे महामते ! ।
क्रियायोगे दिवारात्रौ तत्परः सततं भव ॥"
इत्याद्ये वह्निपुराणे वैष्णवक्रियायोगे यमानु-
शासनो नामाध्यायः । विस्तारस्तु श्रीभगवद्-
गीतायां ७ अध्याये द्रष्टव्यः ॥

**ज्ञानलक्षणा** स्त्री, (ज्ञानं लक्षणं स्वरूपं यस्याः ।)

त्रिविधालौकिकसन्निकर्षान्तर्गतसन्निकर्षः ।
तस्य लक्षणं यथा, --
"विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः ॥"
इति भाषापरिच्छेदे । ६५ ॥
अस्यार्थः । "तद्विषयज्ञापकतद्विषयज्ञानम् । यथा
पूर्ब्बे घटादिज्ञाने सति पश्चात् घटादिज्ञानम् ॥"

**ज्ञानवापी**, स्त्री, (ज्ञानस्य ज्ञानरूपोदकस्य

वापी दीर्घिकेव ।) वाराणस्यन्तर्गततीर्थ-
विशेषः । तदुत्पत्त्यादिर्यथा, --
अगस्त्य उवाच ।
"स्कन्द ! ज्ञानोदतीर्थस्य माहात्म्यं वद साम्प-
तम् ।
ज्ञानवापीं प्रशंसन्ति यतः स्वर्गौकसोऽप्यलम् ॥
स्कन्द उवाच ।
घटोद्भव ! महाप्राज्ञ ! शृणु पापापनोदिनीम् ।
ज्ञानवाप्याः समुत्पत्तिं कथ्यमानां मयाधुना ॥
अनादिसिद्धे संसारे पुरा दैवयुगे मुने ! ।
प्राप्तः कुतश्चिदीशानश्चरन् स्वैरमितस्ततः ॥
न वर्षन्ति यदाभ्राणि न प्रावर्त्तन्त निम्नगाः ।
जलाभिलाषो न यदा स्नानपानादिकर्म्मणि ॥
क्षारस्वादूदयोरेव यदासीज्जलदर्शनम् ।
पृथिव्यां नरसञ्चारे वर्त्तमाने क्वचित् क्वचित् ॥
निर्व्वाणकमलाक्षेत्रं श्रीमदानन्दकाननम् ॥"
"सुखसन्तानजनकं मोक्षसाधनसिद्धिदम् ।
प्रविश्य क्षेत्रमेतत् स ईशानो जटिलस्तदा ।
लसत्त्रिशूलविमलरश्मिजालसमाकुलः ॥
भूप्रमाणाद्दशगुणैर्यैरियं वसुधावृता ।
तैर्जलैः स्नापयाञ्चक्रे त्वस्पृष्टैरन्यदेहिभिः ॥"
"विश्वभर्त्तुरुमास्पर्शसुखातिसुखकारिभिः ।
महावभृथसुस्नानमहाशुद्धिविधायिभिः॥
सहस्रधारैः कलसैः स ईशानो घटोद्भव ! ।
सहस्रकृत्वः स्नपयामास संहृष्टमानसः ॥
ततः प्रसन्नो भगवान् विश्वात्मा विश्वलोचनः ।
तमुवाच तदेशानं रुद्रं रुद्रवपुर्द्धरम् ॥
तव प्रसन्नोऽस्मीशान ! कर्म्मणानेन सुव्रत ! ।
गुरुणानन्यपूर्ब्बेण ममातिप्रीतिकारिणा ॥
ततस्त्वं जटिलेशान ! वरं ब्रूहि तपोधन ! ।
अदेयं न तवास्त्यद्य महोद्यमपरायण ! ॥
ईशान उवाच ।
यदि प्रसन्नो देवेश ! वरयोग्योऽस्माहं यदि ।
तदेतदतुलं तीर्थं तव नाम्नास्तु शङ्कर ! ॥
विश्वेश्वर उवाच ।
त्रिलोक्यां यानि तीर्थानि भूर्भुवःस्वःस्थितान्यपि ।
तेभ्योऽखिलेभ्यस्तीर्तेभ्यः शिवतीर्थमिदं परम् ॥
शिवं ज्ञानमिति ब्रूयुः शिवशब्दार्थचिन्तकाः ।
तच्च ज्ञानं द्रवीभूतमिह मे महिमोदयात् ॥
अतो ज्ञानोदनामैतत्तीर्थं त्रैलोक्यविश्रुतम् ।
अस्य दर्शनमात्रेण सव्वपापैः प्रमुच्यते ॥
ज्ञानोदतीर्थसंस्पर्शादश्वमेधफलं लभेत् ।
स्पर्शनाचमनाभ्याञ्च राजसूयाश्वमेधयोः ॥
फल्गुतीर्थे नरः स्नात्वा संतर्प्य तु पितामहान् ।
यत् फलं समवाप्नोति तदत्र श्राद्धकर्म्मणा ॥"
"ज्ञानरूपोऽहमेवात्र द्रवमूर्त्तिं विधाय च ।
जाड्यविध्वंसनं कुर्य्यां कुर्य्यां ज्ञानोपदेशनम् ॥
इति दत्त्वा वरान् शम्भुस्तत्रैवान्तरधीयत ।
कृतकृत्यमिवात्मानं सोऽप्यमंस्त त्रिशूलभृत् ॥
ईशानो जटिलो रुद्रस्तत् प्राश्य परमोदकम् ।
अवाप्तवान् परं ज्ञानं येन निर्व्वृतिमाप्तवान् ॥"
इति स्कान्दे काशीखण्डे ३३ अध्यायः ॥

**ज्ञानी**, [न्] पुं, (ज्ञानमस्त्यस्येति । ज्ञान +

"अत इनिठनौ ।" ५ । २ । ११५ । इति इनिः ।)
दैवज्ञः । (सामान्यबोधयुक्तमात्रे, त्रि । यथा,
मार्कण्डेये । ८१ । ३६ ।
"ज्ञानिनो मनुजाः सत्यं किन्तु ते नहि केवलम् ।
यतो हि ज्ञानिनः सर्व्वे पशुपक्षिमृगादयः ॥")
ज्ञानयुक्ते च, त्रि । इति मेदिनी । ते, ६९ ॥
तस्य लक्षणं यथा, --
"प्रजहाति यदा कामान् सर्व्वान् पाथ ! मनो-
गतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥
कुर्य्याद्विद्वांस्तथा सक्तश्चिकीर्षुः कर्म्म
संग्रहम् ॥
न बुद्धिभेदं जनयेदज्ञानां कर्म्मसङ्गिनाम् ।
योजयेत् सर्व्वकर्म्माणि विद्वान् युक्तः
समाचरन् ॥
प्रकृतेः क्रियमाणानि गुणैः कर्म्माणि सर्व्वशः
।
अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते ॥
तत्त्ववित्तु महाबाहो ! गुणकर्म्मविभागयोः ।
गुणा गुणेषु वर्त्तन्त इति मत्वा न सज्जते ॥"
ज्ञानिप्रशंसा यथा, --
"चतुर्व्विधा भजन्ते मां जनाः
सुकृतिनोऽर्ज्जुन ! ।
आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ! ॥
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः
॥
उदाराः सर्व्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां
गतिम् ॥
बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।
वासुदेवः सर्व्वमिति स महात्मा सुदुर्लभः ॥"
इति श्रीभगवद्गीता ॥

**ज्ञानेन्द्रियं**, क्ली, (ज्ञायतेऽनेनेति । ज्ञा + करणे ल्युट्
।

ज्ञानप्रकाशकं ज्ञानसाधनं वा इन्द्रियमिति
।)
बुद्धीन्द्रियम् । तत् षड्विधम् । मनः १ नेत्रम्
२
श्रोत्रम् ३ घ्राणम् ४ जिह्वा ५ त्वक् ६ । इति
श्रीभागवतम् ॥

**ज्ञापनं**, क्ली, (ज्ञा + णिच् + भावे ल्युट् ।) बोधनम् ।

इति व्याकरणम् । जानान इति भाषा ॥
(यथा,
राजतरङ्गिण्याम् । ४ । १८२ ।
"क्षितिभृद्दाक्षिणात्यानां तिर्य्यक्त्वज्ञापनाय
सः ।
पुच्छं महीतलस्पर्शि चक्रे कौपीनवाससि
॥")

**ज्ञाप्तिः**, स्त्री, (ज्ञा + णिच् + भावे क्तिन् ।) ज्ञापनम् ।

इति मुग्धबोधम् ॥

**ज्ञेयं**, त्रि, (ज्ञायते इति । ज्ञा + कर्म्मणि यत् ।)

ज्ञानयोग्यम् । ज्ञातव्यम् । यथा, --

आलुलोके महालिङ्गं वैकुण्ठपरमेष्ठिनोः ।
महाहमहमिकायां प्रादुरास यदादितः ॥
ज्योतिर्म्मयीभिर्म्मालाभिः परितः परिवेष्टितम् ॥”
“अस्येशानस्य तल्लिङ्गं दृष्ट्वेच्छेत्यभवत्तदा ।
स्नापयामि महालिङ्गं कलसैः शीतलैर्जलैः ।
चखान च त्रिशूलेन दक्षिणाशोपकण्ठतः ॥
कण्डं प्रचण्डषेगेन रुद्रो रुद्रवपुर्धरः ।
पृथिव्यां वरुणाम्भांसि निष्क्रान्तानि तदा मुने ! ॥

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥
यः सर्व्वत्रानभिस्नेहस्तत्तत् प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥
यदा संहरते चायं कर्म्मोऽङ्गानीव सर्व्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥”
ज्ञानिनापि कर्म्म कर्त्तव्यम् । यथा, --
“सक्ताः कर्म्मण्यविद्वांसो यथा कुर्व्वन्ति भारत ! ।

“ज्ञेयं यत् तत् प्रवक्ष्यामि
यज्ज्ञात्वामृतमश्नुते ।
अनादिमत् परं ब्रह्म न सत्तन्नासदुच्यते ॥
सर्व्वतः पाणिपादं तत्
सर्व्वतोऽक्षिशिरोमुखम् ।
सर्व्वतः श्रुतिमल्लोके सर्व्वमावृत्य तिष्ठति ॥
सर्व्वेन्द्रियगुणाभासं सर्व्वेन्द्रियविवर्ज्जितम् ।
असक्तं सर्व्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥
वहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात् तदविज्ञेयं दूरस्थं चान्तिके च
तत् ॥
अविभक्तञ्च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्त्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्व्वस्य धिष्ठितम्
॥
इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥”
इति श्रीभगवद्गीतायां १३ अध्यायः ॥

**ज्या**, गि जरायाम् । इति कविकल्पद्रुमः ॥ (क्र्यां-
परं-अकं-अनिट् ।) जरा गतबहुवयोभावः ।
गि, जिनाति वृद्धः । जीनः । इति दुर्गादासः
॥

**ज्या**, स्त्री, (ज्या + अन्येभ्योऽपीति डस्ततष्टाप् ।)
धनुर्गुणः । तत्पर्य्यायः । मौर्व्वी २ शिञ्जिनी
३
गुणः ४ इत्यमरः । २ । ८ । ८५ ॥ शिञ्ज्या
५ जीवा ६

पतञ्चिका ७ । इति शब्दरत्नावली ॥ गव्या ८ वाणासनः ९ द्रुणा १० । इति हेमचन्द्रः ॥ (यथा, महाभारते । १ । २२६ । २० ।
"जग्राह बलमास्थाय ज्यया च युयुजे धनुः ॥")
माता । वसुधा । इति मेदिनी । ये, २ ॥

**ज्यानिः**, स्त्री, (ज्या + "वीज्याज्वरिभ्यो निः ।" उणां ४ । ४८ । इति निः ।) जीर्णता । हानिः । तटिनी । इति शब्दरत्नावली ॥

**ज्यायान्**, [स्] त्रि, (अयमनयोरतिशयेन वृद्धः प्रशस्यो वा इति । वृद्ध वा प्रशस्य + ईयसुन् ज्यादेशश्च ततो "ज्यादादीयसः ।" ६ । ४ । १६० ।
इत्यात्वम् ।) वृद्धतमः । तत्पर्य्यायः । वर्षीयान् २ दशमी ३ प्रशस्यः ४ । इत्यमरः । २ । ६ । ४३ ॥ अतिवृद्धः ५ दशमीस्थः ६ । इति जटाधरः ॥ (यथा, मनुः । ३ । १३७ ।
"ज्यायांसमनयोर्व्विद्यात् यस्य स्याच्छ्रोत्रियः पिता ॥")

**ज्यु**, ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-सकं-अनिट् ।) ङ, ज्यवते । इति दुर्गादासः ॥

**ज्युत**, इर् दीप्तौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) इर्, अज्युतत् अज्योतीत् जुज्योत ।
इति दुर्गादासः ॥

**ज्युत**, ऋ ङ दीप्तौ । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-अकं-सेट् ।) अन्तःस्थादियुक्तः । ऋ, अजुज्योतत् । ङ, ज्योतते चन्द्रः । इति दुर्गादासः ॥

**ज्येष्ठः**, त्रि, (अयमेषामतिशयेन वृद्धः प्रशस्यो वा इति । वृद्ध वा प्रसस्य + इष्ठन् ततो ज्यादेशः ।) अतिवृद्धः । श्रेष्ठः । (यथा, महाभारते । १३ । १४३ । ७ ।
"ज्येष्ठं वर्णमनुप्राप्य तस्माद्रक्षेत वै द्विजः ॥"
ज्येष्ठानक्षत्रयुक्ता पौर्णमासीत्यण् इति ज्येष्ठी सा अस्मिन् मासीति पुनरण् संज्ञापूर्ब्बस्य विधरनित्यत्वान्न वृद्धिः ।) ज्यैष्ठमासि, पुं । इति मेदिनी । ठे, ५ ॥ अग्रजः । (यथा, रघुः । १२ । १९ ।

**ज्येष्ठा**, स्त्री, अश्विन्यादिसप्तविंशतिनक्षत्रान्तर्गताष्टादशनक्षत्रम् । सा तु शूकरदन्ताकृतितारकत्रितयात्मिका । इति कालिदासः ॥ वलयाकृतिः । अस्या देवता इन्द्रः मिश्रगुणः । इति दीपिका ॥ अत्र जातस्य फलम् ।
"सत्कीर्त्तिपुत्त्रैर्व्विविधैः समेतो
वित्तान्वितोऽत्यन्तलसत्प्रतापः।
श्रेष्टप्रतिष्ठो विकलस्वभावो
ज्येष्ठा भवेद्यस्य च जन्मकाले ॥"
इति कोष्ठीप्रदीपः ॥ * ॥
(यथा, मार्कण्डेयपुराणे । ३४ । १३ ।
"कुर्व्वन्तश्चानुराधासु लभन्ते चक्रवर्त्तिताम् ।
आधिपत्यञ्च ज्येष्ठासु मूले चारोग्यमुत्तमम् ॥")
गृहगोधिका । इति मेदिनी । ठे, ५ ॥ मध्यमाङ्गुलिः । इति हेमचन्द्रः ॥ गङ्गा । इति राजनिर्घण्टः ॥ धीरादिनायिकाभेदः । तस्या लक्षणं यथा । परिणीतत्वे सति भर्त्तुरधिकस्नेहा । इति रसमञ्जरी ॥ * ॥ अलक्ष्मीः । यथा भगवतीं प्रति महादेववाक्यम् ।
"मां प्रणम्य पुनर्देवा ममन्थुः क्षीरसागरम् ।
तस्मिन् प्रमथ्यमाने तु मया देवैश्च भाविनि ! ॥
ज्येष्ठा देवी समुत्पन्ना रक्तस्रग्वाससावृता ।
उत्पन्ना साब्रवीद्देवान् किं कर्त्तव्यं मयेति वै ॥
तामब्रुवंस्तदा देवीं सर्व्वे देवगणा भृशम् ।
येषां गृहान्तरे नित्यं कलहं संप्रवर्त्तते ॥
तत्ते स्थानं प्रयच्छामो वासस्तत्र शुभानने ! ।
यस्य गेहे कपालास्थिभस्मकेशादिचिह्नितम् ॥
परुषं भाषते नित्यं वदन्त्यनृतवादिनः ।
सन्ध्याकाले च ये पापाः स्वपन्ति मलचेतसः ॥
तेषां वेश्मनि संतिष्ठ दुःखदारिद्र्यदायिनी ।
कपालकेशभस्मास्थितुषाङ्गाराणियत्र तु ॥
तत्र ते सततं स्थानं भविष्यति न संशयः ।
अकृत्वा पादयोः शौचं यस्त्वाचामति दुर्म्मतिः ॥
तं भजस्व सदा देवि ! कलुषेणावृता भृशम् ।
तृणाङ्गारकपालाश्मवालुकायसचर्म्मभिः ॥
दन्तधावनकर्त्तारो भविष्यन्ति नराधमाः ।
रमस्व कलिना देवि ! तेषां वेश्मसु नित्यशः ॥
तिलपिष्टञ्च नक्तञ्च कालिङ्गंशिग्रुगृञ्जनम् ।
छत्राकं विड्वराहञ्च विल्वकोषातकीफलम् ॥
अलावुश्रीफलं ये वै खादयन्ति नराधमाः ।
तेषां गृहे तव स्थानं देवि ! दारिद्र्यदे ! सदा ॥
इत्यादिश्य सुराः सर्व्वे ते ज्येष्ठां कलिवल्लभाम् ।
पुनश्च मन्थनं चक्रुः क्षीराब्धिं सुसमाहिताः ॥"
इति पाद्मे उत्तरखण्डम् ॥

**ज्येष्ठामूलीयः**, पुं, (ज्येष्ठां मूलां वा नक्षत्रमर्हति

**ज्येष्ठाश्रमी**, [न्] पुं, (आश्रमोऽस्त्यस्य इति । आश्रम + इनिः । ज्येष्ठः श्रेष्ठ आश्रमी ।)
"ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः ।
चत्वार आश्रमाः प्रोक्ताः सर्व्वेगार्हस्थमूलकाः ॥"
"यथा वायुं समाश्रित्य वर्त्तन्ते सर्व्वजन्तवः ।
तथा गार्हस्थमाश्रित्य वर्त्तन्ते सर्व्व आश्रमाः ॥"
इति वचनाच्च गृहस्थाश्रमस्य सर्व्वाश्रमेषूत्कृष्टत्वात् तथात्वम् ।) गृहस्थः । इति हेमचन्द्रः ॥

**ज्येष्ठी**, स्त्री, गृहगोधा । जेठी इति टिक्टिकी इति च भाषा । तत्पर्य्यायः । मुषली २ मुसली ३ कुड्यमत्स्या ४ गृहगोधिका ५ मूली ६ टुक्टुकी ७ शकुनज्ञा ८ गृहापिका ९ । इति शब्दरत्नावली ॥ तस्याः पतनफलं यथा, --
"निपतति यदि पल्ली दक्षिणाङ्गे नराणां
स्वजनधनवियोगो लाभदा वामभागे ।
उरसि शिरसि पृष्ठे कण्ठदेशे च राज्यं
करचरणहृदिस्था सर्व्वसौख्यं ददाति ॥"
इति ज्योतिषम् ॥
दिग्विशेषे तस्य शब्दफलम् ।
"वित्तं ब्रह्मणि कार्य्यसिद्धिरतुला शक्रे हुताशे भयं
याम्यामग्निभयं सुरद्विषि कलिर्लाभः समुद्रालये ।
वायव्यां वरवस्त्रगन्धसलिलं दिव्याङ्गना चोत्तरे
ऐशान्यां मरणं ध्रुवं निगदितं दिग्लक्षणं खञ्जने ॥
ज्येष्ठीरुते क्षुतेऽप्येवमूचुः केचिच्च कोविदाः ॥"
इति तिथ्यादितत्त्वम् ॥

**ज्यैष्ठः**, पुं, (ज्येष्ठानक्षत्रयुक्ता पौर्णमासीत्यण् ङीप् च । सा अस्मिन् मासे इति पुनरण् ।) मासविशेषः । ज्येष्ठानक्षत्रयुक्ता पौर्णमासी ज्यैष्ठी सा यत्र मासे भवति सः । वृषस्थरविप्रारब्धशुक्लप्रतिपदादिदर्शान्तश्चान्द्रः । वृषराशिस्थरविकः सौरः । इति स्मृतिः ॥ तत्पर्य्यायः । शुक्रः २ । इत्यमरः । १ । ४ । १६ ॥ ज्येष्ठः ३ । इति
शब्दरत्नावली ॥ तत्र जातस्य फलं यथा, --
"विदेशवृत्तिः पुरुषः सुतीव्रः
क्षमान्वितः स्यात् खलु दीर्घसूत्रः ।
विचित्रबुद्धिर्व्विदुषां वरिष्ठो
ज्यैष्ठाभिधाने जननं हि यस्य ॥"
इति कोष्ठीप्रदीपः ॥

**ज्यैष्ठसामा**, [न्] पुं, (ज्येष्ठसाम अधीते यः सः । इत्यण् ।) ज्येष्ठसामा । ज्यैष्ठसामवेदाध्येता । इति मिताक्षरा ॥

**ज्यैष्ठी**, स्त्री, (ज्येष्ठानक्षत्रान्विता पौर्णमासीत्यण्

"दृढभक्तिरिति ज्येष्ठे राज्यतृष्णापराङ्मुखः ॥")
अधिकवयाः । इति भरतः ॥

**ज्येष्ठतातः**, पुं, (तातस्य पितुर्ज्येष्ठः । राजदन्तादित्वात् पूब्बनिपाते साधुः ।) पितुरग्रजः । इति शब्दरत्नावली ॥ ज्येठा इति भाषा ॥

**ज्येष्ठवर्णः**, पुं, (वर्णानां ज्येष्ठः श्रेष्ठः निर्द्धारणे तु वर्णेषु ज्येष्ठः । पूर्ब्बनिपातः ।) ब्राह्मणः । इति शब्दरत्नावली ॥

**ज्येष्ठवला**, स्त्री, (ज्येष्ठाख्या वला ।) सहदेवी । इति राजनिर्घण्टः ॥

**ज्येष्ठश्वश्रूः**, स्त्री, (ज्येष्ठा पूज्या श्वश्रूरिव संज्ञात्वात् पुंवद्भावः ।) पत्न्या ज्येष्ठभगिनी । वडशाली इति भाषा । तत्पर्य्यायः । कुली २ । इति हेमचन्द्रः ॥

**ज्येष्ठसाम**, [न्] क्ली, (ज्येष्ठं साम इति नित्यकर्म्मधारयः ।) सामभेदः । तदध्ययनाङ्गव्रतम् । इति
मिताक्षरा ॥ (यथा, महाभारते । १२ । ३४८ । ४६ ।
"ज्येष्ठं नाम्नाभिविख्यातं ज्येष्ठसामव्रतो हरिः ॥")

पौर्णमास्यामिति छः ।) ज्यैष्ठमासः । इति त्रिकाण्डशेषः ॥ (यथा, शब्दार्थचिन्तामणिः ।
"ज्येष्ठामूलीयमिच्छन्ति मासमाषाढपूर्ब्बजम् ॥")

**ज्येष्ठाम्बु**, क्ली, (ज्येष्ठं विविधरोगविनाशकत्रात् श्रेष्ठं अम्बु तण्डुलधौतं जलमिति । नित्यकर्म्मधारयः ।) तण्डुलाम्बु । इति वैद्यकपरिभाषा ॥ चेलुनि जल इति भाषा ॥

ङीप् च ।) ज्यैष्ठपूर्णिमा । इति शब्दरत्नावली ॥ (यथा, तिथितत्त्वधृतभविष्यपुराणवचनम् ।
"कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता ।
मन्वन्तरादयस्त्वता दत्तस्याक्षयकारिकाः ॥")
ज्येष्ठी च ॥

**ज्यो**, ङ नियमे । व्रतादेशे । उपनीतौ । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-अकं नियमार्थे-व्रतादेशादौ तु सकं-अनिट् ।) व्रतस्यादेशो व्रतादेशः । ङ, ज्यवते याज्ञिको नियमी स्यादित्यर्थः ।

ज्यवते पण्डितो जनं व्रतमुपदिशतीत्यर्थः ।
ज्यवते पुत्त्रं विप्रः उपनयतीत्यर्थः । इति दुर्गा-
दासः ॥

**ज्योतिः**, [स्] क्ली, (ज्युतृ दीप्तौ + इसिः । यद्वा,
द्युत दीप्तौ + "द्युतेरिसिन्नादेश्च जः ।" उणां ।
२ । १११ । इति इसिन् दस्य च जः ।) दृष्टिः ।
नक्षत्रम् । (यथा, "ज्योतींष्यग्निञ्चामेध्यमशस्तञ्च
नाभिवीक्षेत ॥" इति चरके सूत्रस्थानेऽष्टमे-
ऽध्याये ॥) प्रकाशः । इति मेदिनी । से, २३ ॥

**ज्योतिः**, [स्] पुं, (ज्योतते इति । ज्युतृ + कर्त्तरि
इसिः । द्युत + इसिन् वा ।) अग्निः । (यथा, --
"तस्यान्तरेण नाभेस्तु ज्योतिः स्थानं ध्रुवं
स्मृतम् ।
तदा धमति वातस्तु देहस्तेनास्य वर्द्धते ॥"
इति सुश्रुते शारीरस्थाने चतुर्थेऽध्याये ॥)
सूर्य्यः । इति मेदिनी । से, २२ ॥ मेथिका । इति
राजनिर्घण्टः ॥ (विष्णः । यथा, महाभारते
१३ । १४९ । ७९ ।
"स्वक्षः स्वङ्गः शतानन्दी नन्दिर्ज्योतिगणेश्वरः
॥")

**ज्योतिरिङ्गः**, पुं, (ज्योतिषा इङ्गतीति । इगि
गतौ + अच् । ज्योतिरिव इङ्गतीति वा ।)
खद्योतः । इति शब्दरत्नावली ॥

**ज्योतिरिङ्गणः**, पुं, (ज्योतिरिव इङ्गतीति । इगि
गतौ + ल्युः ।) कीटविशेषः । ज्योनाकपोका
इति भाषा । तत्पर्य्यायः । खद्योतः २ ध्वान्तो-
न्मेषः ३ तमोमणिः ४ दृष्टिबन्धुः ५ तमो-
ज्योतिः ६ ज्योतिरिङ्गः ७ निमेषकः ८ । इति
शब्दरत्नावली ॥ ज्योतिर्व्वीजम् ९ निमेषरुक्
१० । इति त्रिकाण्डशेषः ॥

**ज्योतिर्व्वीजं**, क्ली, (ज्योतिर्वीजमिवास्य ज्योतिषो
वीजमिव वा ।) ज्योतिरिङ्गणः । इति त्रिकाण्ड-
शेषः ॥

**ज्योतिर्हस्ता**, स्त्री, (ज्योतिर्ज्योतीरूपं हस्तं शरीर-
मस्याः ।) दुर्गा । अस्या नामनिरुक्तिर्यथा, --
"हस्तं शरीरमित्याहुर्हस्तञ्च गगनं तथा ।
ज्योतिषि ग्रहनक्षत्राज्ज्योतिर्हस्ता ततः स्मृता ॥"
इति देवीपुराणे देवीनिरुक्तनाम ४५ अध्यायः ॥

**ज्योतिश्चक्रं**, क्ली, (ज्योतिर्म्मयं चक्रम् । ज्योतिर्भिः
स्वस्वावस्थानेन विरचितं चक्रं वा ।) चन्द्र-
अस्य सम्बन्धादि यथा, --
"अस्य शास्त्रस्य सम्बन्धो वेदाङ्गमिति चोदितः ।
अभिधेयञ्च जगतां शुभाशुभनिरूपणम् ॥
इज्याध्ययनसंक्रान्तिग्रहषोडशकर्म्मणाम् ।
प्रयोजनञ्च विज्ञेयं तत्तत्कालविनिर्णयः ॥"
इति नारदीयम् ॥ * ॥
अस्याध्ययनं द्विजैः कर्त्तव्यम् । यथा, --
"सिद्धान्तसंहिताहोरारूपस्कन्धत्रयात्मकम् ।
वेदस्य निर्म्मलं चक्षुर्ज्योतिःशास्त्रमकल्मषम् ॥
विनैतदखिलं श्रौतं स्मार्त्तं कर्म्म न सिध्यति ।
तस्माज्जगद्धितायेदं ब्रह्मणा निर्म्मितं पुरा ॥
अतएव द्विजैरेतदध्येतव्यं प्रयत्नतः ॥"
इति नारदः ॥ * ॥
शूद्रस्य पाठनिषेधो यथा, --
"स्नेहाल्लोभाच्च मोहाच्च यो विप्रोऽज्ञानतो-
ऽपि वा ।
शूद्राणामुपदेशन्तु दद्यात् स नरकं व्रजेत् ॥"
इति गर्गः ॥ * ॥
अस्य ज्ञानमावश्यकं यथा, --
"वेदा हि यज्ञार्थमभिप्रवृत्ताः
कालानुपूर्ब्या विहिताश्च यज्ञाः ।
तस्मादिदं कालविधानशास्त्रं
यो ज्योतिषं वेद स वेद यज्ञान् ॥
यथा शिखा मयूराणां नागानां मणयो यथा ।
तद्वद्वेदाङ्गशास्त्राणां गणितं मूर्द्ध्नि संस्थितम् ॥"
इति वेदाङ्गज्योतिषम् ॥ * ॥
अस्याध्ययनफलं यथा, --
"एवंविधस्य श्रुतिनेत्रशास्त्र-
स्वरूपभर्त्तुः खलु दर्शनं वै ।
निहन्त्यशेषं कलुषं जनानां
षडब्दजं धर्म्मसुखास्पदं स्यात् ॥"
इति माण्डव्यः ॥ * ॥
अस्य ज्ञाने फलं यथा, --
"ज्योतिश्चक्रे तु लोकस्य सर्व्वस्योक्तं शुभाशुभम् ।
ज्योतिर्ज्ञानन्तु यो वेद स याति परमां गतिम् ॥"
इति गर्गः ॥

**ज्योतिषिकः**, पुं, (ज्योतिर्ज्योतिःशास्त्रं अधीते इति ।
क्रतूक्थादित्वात् ठक् संज्ञापूर्ब्बस्य विधेरनित्य-
त्वात् न वृद्धिः ।) ज्यौतिषिकः । इत्यमरटीका ॥
(यथा, मार्कण्डेये ।
"धर्म्मारण्या ज्योतिषिका गौरग्रीवा
गुडाश्मकाः ॥")

**ज्योतिषी**, स्त्री, (ज्योतिरस्त्यस्या इति अच् ङीप्
च ।) तारा । इति हेमचन्द्रः । ज्योतिष-

**ज्योतिष्काः**, पुं, (ज्योतिर्भिः कायतीति । कै + कः ।)
चन्द्रार्कग्रहनक्षत्रतारकाः । इति हेमचन्द्रः ॥
बहुवचनान्तोऽयं शब्दः ॥

**ज्योतिष्का**, स्त्री, (ज्योतिरिव कायतीति । कै + कः
टाप् च ।) ज्योतिष्मतीलता । इत्यमरटीकायां
स्वामी ॥

**ज्योतिष्टोमः**, पुं, (ज्योतींषि त्रिवृदादयः स्तोमा
यस्य । "ज्योतिरायुषः स्तोमः ।" ८ । ३ । ८३
। इति
षत्वम् ।) षोडशऋत्विक्साध्ययज्ञविशेषः । तत्र
द्वादशशतगोदक्षिणा । इति मलमासतत्त्वम् ॥
(यथा, महाभारते । ३ । २२१ । ३० ।
"बहुधा निःसृतः कायाज्ज्योतिष्टोमः क्रतुर्यथा
॥")

**ज्योतिष्मती**, स्त्री, (ज्योतिरस्त्यस्या इति । मतुप्
उदित्वात् ङीप् च ।) लताविशेषः । माल-
कङ्गनी इति लताफट्करी इति नयाफट्की
इति च भाषा ॥ तत्पर्य्यायः । पारावताङ्घ्रिः २
कटभी ३ पिण्या ४ । इत्यमरः । २ । ४ । १५०
॥
पारावतपदी ५ नगणा ६ स्फुटबन्धनी ७ पूति-
तैला ८ इङ्गुदी ९ । इति रत्नमाला ॥ स्वर्ण-
लता १० अनलप्रभा ११ ज्योतिर्लता १२
सुपि-
ङ्गला १३ दीप्ता १४ मेध्या १५ मतिदा १६
दुर्ज्जरा १७ सरस्वती १८ अमृता १९ ।
अस्याः
सूक्ष्मायां गुणाः । अतितिक्तत्वम् । किञ्चित्कटु-
त्वम् । वातकफापहत्वञ्च । अस्याः स्थूलाया
गुणाः । दाहप्रदत्वम् । दीपनत्वम् । मेधाप्रज्ञा-
वृद्धिकारित्वञ्च । इति राजनिर्घण्टः ॥ तीक्ष्ण-
त्वम् । व्रणविस्फोटनाशित्वञ्च । इति राज-
वल्लभः ॥ रात्रिः । इति राजनिर्घण्टः ॥ (नदी-
विशेषः । यथा, मात्स्ये । १२० । ६५ ।
"सरस्वती प्रभवति तस्माज्ज्योतिष्मती तु या ।
अवगाढे ह्युभयतः समुद्रौ पूर्ब्बपश्चिमौ ॥"
ज्योतिर्विशिष्टे, त्रि । यथा, रघुः । ६ । २२ ।
"नक्षत्रताराग्रहसङ्कुलापि
ज्योतिष्मती चन्द्रमसैव रात्रिः ॥")

**ज्योतीरथः**, पुं, (ज्योतिरेव रथोऽस्य सर्व्वस्य
ज्योतिश्चक्रस्य रथ इव वा ज्योतिःपदार्थानां
सूर्य्यादीनामाधारत्वात् तथात्वमिति बोध्यम् ।)

सूर्य्यादिग्रहनक्षत्रमण्डलम् । राशिचक्रम् । यथा,
"ज्योतिश्चक्रं भुवो मानमूर्द्ध्वं प्रोवाच केशवः ।
चातुर्लक्षं ज्योतिषस्य सारं रुद्राय सर्व्वदः ॥"
इति गरुडपुराणम् ॥
अपि च तिथ्यादितत्त्वे ।
"सप्तविंशतिभैर्ज्योतिश्चक्रं स्तिमितवायुगम् ।
तदर्कांशो भवेद्राशिर्नवर्क्षचरणाङ्कितः ॥"

**ज्योतिषं**, क्ली, (ज्योतिः सूर्य्यादीनां ग्रहाणां गत्या-

दिकं प्रतिपाद्यतया अस्त्यस्येति अच् ।) वेदाङ्ग-
शास्त्रविशेषः । तत् ग्रहणादिगणनशास्त्रम् ।
इत्यमरटीकायां भरतः ॥
"पञ्चम्कन्धमिदं शास्त्रं होरागणितसंहिता ।
केरलिः शकुनञ्चैव -- ॥"
इति प्रश्नरत्नटीका ॥ * ॥

शास्त्रज्ञे, त्रि ॥

**ज्योतिष्कः**, पुं, (ज्योतिरिव कायतीति । कै + कः ।)

चित्रकवृक्षः । मेथिकाबीजम् । इति राज-
निर्घण्टः ॥ (अस्य व्यवहारो यथा, "ज्योतिष्क-
फलतैलं वा क्षीरेण स्वर्ज्जिका हिङ्गु मिश्रं
पिबेत् ॥" इति चिकित्सितस्थाने चतुर्द्दशेऽध्याये
सुश्रुतेनोक्तम् ॥) गणिकारिकावृक्षः । इति
रत्नमाला ॥

ध्रुवः । इति त्रिकाण्डशेषः ॥

**ज्योत्स्ना**, स्त्री, (ज्योतिरस्त्यस्यामिति । "ज्योत्स्ना-

तमिस्रेति ।" ५ । २ । ११४ । इति निपातनात्
नप्रत्यय उपधालोपश्च ।) चन्द्रज्योतिः ।
चाँदनी
इति हिन्दी भाषा ॥ तत्पर्य्यायः । चन्द्रिका २
कौमुदी ३ । इत्यमरः । १ । ३ । १६ ॥ चान्द्री
४
कामवल्लभा ५ चान्द्रातपः ६ चन्द्रकान्ता ७
शीता ८ अमृततरङ्गिणी ९ । (यथा, महा-
भारते । १ । १ । ८६ ।
"पुराणपूर्णचन्द्रेण श्रुतिज्योत्स्नाः प्रकाशिताः
॥")
ज्योत्स्नायुक्तरात्रिः । इति मेदिनी । ने, ८ ॥
पटोलिका । इत्यमरटीकायां स्वामी ॥ अस्या
गुणाः । त्रिदोषशमनत्वम् । इति राजनिर्घण्टः ॥
कषायत्वम् । मधुरत्वम् । दाहरक्तपित्तनाशि-
त्वञ्च । इति राजवल्लभः ॥ श्वेतघोषा । इति

रत्नमाला ॥ दुर्गा । यथा, --
“प्रभाप्रसादशीलत्वात् ज्योत्स्ना चन्द्रार्क-
मालिनी ।”
इति देवीपुराणे ४५ अध्यायः ॥
अपि च ।
“रौद्रायै नमो नित्यायै गौर्य्यै धात्र्य नमो नमः ।
ज्योत्स्नायै चेन्दुरूपिण्यै सुखायै सततं नमः
॥”
इति मार्कण्डेये देवीमाहात्म्ये ५ अध्यायः ॥
(प्रभातकालः । यथा, विष्णुपुराणे । १ । ५ ।
३६ ।
“ज्योत्स्ना समभवत् सापि प्राक्सन्ध्या याऽभि-
धीयते ॥”)

**ज्योत्स्नाप्रियः**, पुं, (ज्योत्स्ना प्रियाऽस्य ।) चकोरः ।
इति हेमचन्द्रः ॥

**ज्योत्स्नावृक्षः**, पुं, (ज्योत्स्नाया दीपधारण वृक्ष
इव ।) दीपाधारः । इति त्रिकाण्डशेषः ॥

**ज्योत्स्नी**, स्त्री, (ज्योत्स्ना अस्त्यस्या इत्यण् ङीप्
च । संज्ञापूर्ब्बकस्य विधेरनित्यत्वान्न वृद्धिः ।)
चन्द्रिकायुक्ता रात्रिः । ज्योत्स्नारात्रिरिति
ख्याता । पटोलिका । इत्यमरः । २ । ४ ।
११८ ॥
झिङ्गा इति भाषा ॥ रेणुकानाम गन्धद्रव्यम् ।
इति शब्दचन्द्रिका ॥

**ज्यौतिषिकः**, पुं, (ज्योतिषं ज्योतिषशास्त्रमधीते
वेद वा इति ठक् वृद्धिश्च ।) दैवज्ञः । इत्य-
मरः । २ । ८ । १४ ॥

**ज्यौत्स्नः**, त्रि, (ज्योत्स्नया अन्वितः । इत्यण् ।)
दीप्तः । ज्योत्स्नायुक्तः ॥

**ज्यौत्स्निका**, स्त्री, (ज्योत्स्ना अस्त्यस्या इति
ठक् पूर्ब्बवृद्धिष्टाप् च ।) ज्योत्स्नान्विता निशा ।
इति शब्दरत्नावली ॥

**ज्यौत्स्नी**, स्त्री, (ज्योत्स्ना पूर्णचन्द्रचन्द्रिका
अस्त्यस्याः इत्यण् पूर्ब्बवृद्धिः ङीप् च ।)
पूर्णिमा-
युक्तरात्रिः । इति हेमचन्द्रः ॥ ज्योत्स्नी । इत्य-
मरटीकायां रायमुकुटः ॥

**ज्रि**, अभिभवे । इति कविकल्पद्रुमः ॥ (भ्वां परं-
सकं-अनिट् ।) रेफोपधः । ज्रयति शत्रं बली ।
इति दुर्गादासः ॥

तस्योत्पत्तिर्यथा, --
“कालाग्निरुद्रः कोपेन चिक्षेप ज्वरमुल्वणम् ।
बभूवुर्य्यादवाः सर्व्वे ज्वराक्रान्ता हरिं विना ॥
तं दृष्ट्वा भगवान् कृष्णः ससर्ज्ज वैष्णवं ज्वरम् ।
तं चिक्षेप ज्वरं हन्तुं माहेशं रणमूर्द्धनि ॥” * ॥
माहेशज्वराकारो यथा, --
“जनकः सर्व्वरोगाणां दुर्व्वारो दारुणो ज्वरः ।
शिवभक्तश्च योगी च स एव विकृताकृतिः ॥
भीमस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचनः ।
भस्मप्रहरणो रौद्रः कालान्तकयमोपमः ॥” * ॥
तस्य भेदाः ।
“वायुजः पित्तजश्चैव श्लेष्मजश्च तथैव च ।
ज्वरभेदाश्च त्रिविधाश्चतुर्थश्च त्रिदोषजः ॥”
इति ब्रह्मवैवर्त्तपुराणम् ॥ * ॥
जातिभेदे ज्वरभेदो यथा, हरिवंशे ।
श्रीकृष्ण उवाच ।
“शृणुष्व ज्वर ! सन्देशं यथा लोके चरिष्यसि ।
सर्व्वजातिषु विन्यस्तस्तथा स्थावरजङ्गमे ॥
त्रिधा विभज्य चात्मानं मत्प्रियं यदि काङ्क्षसि ।
चतुष्पादान् भजैकेन द्वितीयेन च स्थावरान् ॥
तृतीयो यश्च ते भागो मानुषेषूपपत्स्यते ।
त्रिधाभूतं वपुः कृत्वा पक्षिषु त्वं भव ज्वर ॥
चतुर्थो यस्तृतीयस्य भविष्यति च ते ध्रुवम् ।
एकान्ततश्चतुर्भागः खोरकश्च चतुर्थकः ॥
मानुषेष्वथ खेदाय वस त्वं प्रविभज्य वै ।
जातिष्वथावशेषासु निवस त्वं शृणुष्व मे ॥”
अस्यार्थः । “मानुषेषु यस्तृतीयो भागः तस्य
चतुर्भागं कृत्वा एकांशेन पक्षिषु वस द्वितीयेन
एकान्ता देवास्तेषु तृतीयांशः खोरकः चतु-
र्थांशेन मानुषेषु वस ॥”
“वृक्षेषु कीटरूपेण तथा सङ्कोचपत्रकः ।
पाण्डुपत्रश्च विख्यातः फलेष्वातुर्य्यमेव च ॥”
आतुर्य्यं निःसारताः ॥
“पद्मिनीषु हिमो भूत्वा पृथिव्यामपि चोषरः ।
अपां तु नीलिकां विद्यात् शिखोद्भेदश्च वर्हिणाम्
॥
गैरिकः पर्व्वतेष्वेव मत्प्रसादाद्भविष्यसि ।
गोष्वपस्मारको भूत्वा खोरकश्च भविष्यसि ॥
एवं विविधरूपेण भविष्यसि महीतले ।
दर्शनात् स्पर्शनाच्चैव प्राणिनां वधमेष्यसि ॥
ऋते देवमनुष्यांश्च नान्यस्तां विषहिष्यति ॥”
तस्य गारुडोक्तनिदानादिर्यथा, --
धन्वन्तरिरुवाच ।
“वक्ष्ये ज्वरनिदानं हि सर्व्वज्वरविबुद्धये ।
ज्वरो रोगपतिः पाप्मा मृत्युराजोऽशनोऽन्तकः ॥

काले यथास्वं सर्व्वेषां प्रवृत्तिर्व्वृद्धिरेव वा ।
निदानोक्तानुपशयो विपरीतोपशायिता ॥ * ॥
अरुचिश्चाविपाकश्च स्तम्भमालस्यमेव च ।
हृद्दाहश्च विपाकश्च तन्द्रा आलस्यमेव च ॥
वस्तिर्विसर्गविलया दोषाणामप्रवर्त्तनम् ।
लालाप्रसेको हृल्लासः क्षुन्नाशो रसदं मुखम् ॥
यच्च सुष्टु गुरुत्वञ्च गात्राणां बहुमूत्रता ।
न विजीर्णा न चाग्लानिर्ज्ज्वरस्यामस्य लक्षणम् ॥
क्षुत्क्षामता लघुत्वञ्च गात्राणां ज्वरमार्द्दवम् ।
दोषप्रवृत्तिरष्टाहो निरामज्वरलक्षणम् ॥ * ॥
यथास्वलिङ्गं संसर्गे ज्वरसंसर्गजोऽपि वा ।
शिरोऽर्त्तिमूर्च्छावमिदाह-
कण्ठास्यशोषारुचिपर्व्वभेदाः ।
उन्निद्रता संभ्रमरोमहर्षा
जृम्भातिवाक्त्वं पवनात् सपित्तात् ॥ * ॥
तापहान्यरुचिपर्व्वशिरोरुक्-
पीनसश्वसनकासविबन्धाः ।
शीतजाड्यतिमिरभ्रमितन्द्राः
श्लेष्मवातजनितज्वरलिङ्गम् ॥ * ॥
शीतस्तम्भस्वेददाहव्यवस्था-
त्यष्णाकासश्लेष्मपित्तप्रवृत्तिः ।
मोहस्तन्द्रालिप्ततिक्तास्यताच
ज्ञेयं रूपं श्लेष्मपित्तज्वरस्य ॥ * ॥
सर्व्वजो लक्षणैः सर्व्वैर्द्दाहोऽत्र च मुहुर्म्मुहुः ।
तद्वच्छीतं महानिद्रा दिवा जागरणं निशि ॥
सदा वा नैव वा निद्रा महास्वेदोऽति नैव वा ।
गीतनर्त्तनहास्यादिप्रकृतेहाप्रवर्त्तनम् ॥
साश्रुणी कलुषे रक्ते भग्ने लुलितपक्ष्मणी ।
अक्षिणी पिण्डिकापार्श्वमूर्द्धपर्व्वास्थिरुग्भ्रमः ॥
सस्वनौ सरुजौ कर्णौ महास्वेदोऽति नैव वा ।
परिदग्धा खरा जिह्वा गुरुस्रस्ताङ्गसन्निभा ॥
रक्तपित्तकफे जिह्वा लोचने शिरसोऽतितृट् ।
कोठानां श्यावरक्तानां मण्डलानाञ्च दर्शनम् ॥
हृद्व्यथा मलसंसर्गः प्रवृत्तिर्वाल्पशोऽति वा ।
स्निग्धास्यता बलभ्रंशः स्वरसादः प्रलापिता ॥
दोषपाकश्चिरात्तन्द्रा प्रततं कण्ठकूजनम् ।
सन्निपातमभिन्यासं तं ब्रूयाच्च हृतौजसम् ॥
वायुना कफरुद्धेन पित्तमन्तःसुपीडितम् ।
व्यवायित्वाच्च सौख्याच्च वहिर्म्मार्गं प्रपद्यते ॥
तेन हारिद्रनेत्रत्वं सन्निपातोद्भवे ज्वरे ।
दोषे विवृद्धे नष्टेऽग्नौ सर्व्वसंपूर्णलक्षणः ॥
असाध्यः सोऽन्यथाकृच्छ्रो भवेद्वैकल्यदोऽपि वा ।
अन्यश्च सन्निपातोत्थो यत्र पित्तं पृथक् स्थितम् ॥
त्वचि कोष्ठे च वा दाहं विदधाति पुरोऽनु वा ।
तद्वद्वातकफौ शीतं दाहादिर्दुस्तरस्तयोः ॥

**ज्री**, गि कि ज्याने । गतबहुवयोभाव इति यावत् ।

इति कविकल्पद्रुमः ॥ (क्र्यां-चुरां पक्षे भ्वां-परं-अकं-अनिट् ।) गि, ज्रीणाति ज्रीणः ज्रीणिः । कि, ज्राययति ज्रयति । गिकाभ्यामेव पाक्षिक-चुरादित्वे सिद्धे कि पाठो भ्वादित्वार्थः । इति दुर्गादासः ॥

**ज्वर**, म रोगे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-

अकं-सेट् ।) ज्वरति जनो धातुवैषम्यात् । म, ज्वरयति । इति दुर्गादासः ॥

**ज्वरः**, पुं, (ज्वरति जीर्णो भवत्यनेन । ज्वर +

करणे घञ् भावे घञ् वा । संज्ञापूर्ब्बक-त्वात् वृद्ध्यभावः ।) ज्वरणम् । स्वनामख्यात-रोगः । तत्पर्य्यायः । जूर्त्तिः २ । इत्यमरः । ३ । २ । ३९ ॥ ज्वरिः ३ आतङ्कः ४ रोगपृष्ठः ५ महागदः ६ । इति राजनिर्घण्टः ॥ तापकः ७ सन्तापः ८ । इति शब्दरत्नावली ॥ * ॥

क्रोधो दक्षाध्वरध्वंसी रुद्रोद्दर्ध्वनयनोद्भवः ।
तत्सन्तापो मोहमयः सन्तापात्मापचारजः ॥
विविधैर्नामभिः क्रूरो नानायोनिषु वर्त्तते ।
पाकलो गजेष्वभितापो वाजिष्वलर्क्कः कुक्कुरेषु ।
इन्द्रमदो जलदेऽप्सु नीलिका ज्योतिरोषधिषु भूम्यामूषरो नाम ॥ * ॥
“हृल्लासश्छर्द्दनं कासः स्तम्भः शैत्यं त्वगादिषु ।
अङ्गेषु शीतपिडकामात्रोदर्द्दः कफोद्भवे ॥

शीतादौ तत्र पित्तेन कफे स्यन्दितशोषिते ।
शीते शान्तेऽष्टके मूर्च्छा मदस्तृष्णा च जायते ॥
दाहादौ पुनरन्ते स्युस्तन्द्रास्वेदवमिक्रमाः ॥ * ॥
आगन्तुरभिघाताभिषङ्गशापाभिचारतः॥
चतुर्द्धा तु कृतच्छेददाहाद्यैरभिघातजः ॥ * ॥
श्रमाच्च तस्मिन् पवनः प्रायो रक्तं प्रदूषयन् ॥
सव्यथाशोफवैवर्ण्यं सरुजं कुरुते ज्वरम् ।

ग्रहावेशौषधिविषक्रोधभीशोककामजः॥
अभिषङ्गाद्ग्रहेणास्मिन्न कस्मात्त्रासरोदने।
ओषधीगन्धजे मूर्च्छा शिरोरुग्वमथुः क्षवः ॥ * ॥
विषाम्मूर्च्छातिसारास्यश्यावतादाहतृड्भ्रमः।
क्रोधात् कम्पः शिरोरुक् च प्रलापो भयशोकजे
॥
कामाद्भ्रमोऽरुचिर्द्दाहो ह्रीनिद्राधीधृतिक्षयः॥
ग्रहादौ सन्निपातस्य रूपादौ मरुतस्तयोः॥
कोपः कोपेऽपि पित्तस्य यौ तु शापाभिचारजौ।
सन्निपातज्वरौ घोरौ तावसह्यतमौ मतौ ॥ * ॥
तत्राभिचारिकैर्म्मन्त्रैर्हूयमानस्य तप्यते।
पूर्ब्बञ्चेतस्ततो देहस्ततो विस्फोटतृड्भ्रमैः ॥
सदाहमूर्च्छैर्ग्रस्तस्य प्रत्यहं वर्द्धते ज्वरः।
इति ज्वरोऽष्टधा दृष्टः समासाद्विविधस्तु सः ॥
शारीरो मानसः सौम्यस्तीक्ष्णोऽन्तर्व्वहिराश्रयः।
प्राकृतो वैकृतः साध्योऽसाध्यः सामो निरामकः
॥
पूर्ब्बं शरीरे शारीरे तापो मनसि मानसे।
पवने योगवाहित्वाच्छीतं श्लेष्मयुते भवेत् ॥
दाहः पित्तयुते मिश्रं मिश्रेऽन्तःसंश्रये पुनः।
ज्वरोऽधिकं विकाराः स्युरन्तःक्षोभो मलग्रहः ॥
वहिरेव वहिर्व्वेगे तापोऽपि च सुसाधितः।
वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात् ॥
वैकृतोऽन्यः सुदुःसाध्यः प्रायश्च
प्राकृतोऽनिलात्।
वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितो ज्वरम् ॥
कुर्य्यात् पित्तञ्च शरदि तस्य चानुबलः कफः।
तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद्भयम् ॥
कफो वसन्त तमपि वातपित्तं भवेदनु।
बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः ॥
सर्व्वथा विकृतिज्ञाने प्रागसाध्य उदाहृतः।
ज्वरोपद्रवतीक्ष्णत्वमग्लानिर्ब्बहुमूत्रता ॥
न प्रवृत्तिर्न विजीर्णा न क्षुत् सामज्वराकृतिः।
ज्वरवेगोऽधिका तृष्णा प्रलापः श्वसनं भ्रमः ॥
मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् ॥
जीर्णतामविपर्य्यासात् सप्तरात्रञ्च लङ्घनात्।
ज्वरः पञ्चविधः प्रोक्तो मलकालबलावलात् ॥
प्रायशः सन्निपातेन भूयसाप्युपदृश्यते।
सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ।
धातुमूत्रशकृद्वाहिस्रोतसा व्यापिनो मलाः ॥
तापयन्तस्तनूं सर्व्वां तुल्यदृष्ट्यादिवर्द्धिताः।
बलिनो गुरवस्तद्वद्विशेषेण रसान्विताः ॥
सततं निष्प्रतिद्वन्द्वा ज्वरं कुर्य्युः सुदुःसहम्।
मलं ज्वरोष्मा धातून् वा स शीघ्रं क्षपयेत्ततः ॥

दोषः प्रवर्त्तते तेषां स्वे काले ज्वरयन् बली ॥
निवर्त्तते पुनश्चैव प्रत्यनीकबलाबलः।
क्षीणदोषे ज्वरः सूक्ष्मो रसादिष्वेव लीयते ॥
लीनत्वात् कार्ष्यवैवर्ण्यजाड्यादीनादधाति सः।
आसन्नबिवृतास्यत्वात् स्रोतसां रसवाहिनाम् ॥
आशु सर्व्वस्य वपुषो व्याप्तिद्दोषेण जायते।
सन्ततः सततस्तेन विपरीतो विपर्य्ययात् ॥
विषमो विषमारम्भः क्षपाकालेन सङ्गवान्।
दोषो रक्ताशयः प्रायः करोति सन्ततं ज्वरम् ॥
अहोरात्रस्य सन्धिः स्यात् सकृदन्येद्युराश्रितः।
तस्मिन्मांसवहा नाडी मेदोनाडी तृतीयके ॥
ग्राही पित्तानिलाम्मूद्‌र्ध्नस्त्रिकस्य कफपित्ततः।
स पृष्ठास्यानिलकफात् स चैकाहान्तरः स्मृतः ॥
चतुर्थको मलैर्म्मेदो मज्जास्थ्यन्यतरस्थिते।
मज्जामूत्रैस्त्यपरः प्रभावमनुदर्शयेत् ॥
द्विविधं कफेन जङ्घाभ्यां स पूर्ब्बं शिरसोऽनिलात्।
अस्थिमज्जारूपगते चातुर्थकविपर्य्ययः ॥
त्रिधा त्र्यहं ज्वरयति दिनमेकञ्च मुञ्चति।
बलाबलेन दोषाणामनुचेष्टादिजन्मनाम् ॥
पक्वानामविपर्य्यासात् सप्तरात्रन्तु लङ्घयेत्।
ज्वरः स्यात् मनसस्तद्वत् कर्म्मणश्च तदा तदा ॥
गम्भीरधातुचारित्वात् सन्निपातेन सम्भवात्।
तुल्यो ब्रूयाच्च दोषाणां दुश्चिकित्स्यश्चतुर्थकः ॥
सूक्ष्मात् सूक्ष्मतरास्येषु दूराद्दूरतरेषु च।
दोषो रक्तादिमार्गेषु शनैरल्पश्चिरेण यत् ॥
याति देहञ्च नाशेषं सन्तापादीन् करोत्यतः।
क्रमो यत्नेन विच्छिन्नः सन्तापो लक्ष्यते ज्वरः ॥
विषमो विषमारम्भः क्षपाकालानुसारवान्।
यथोत्तरं मन्दमतिर्मन्दशक्तिर्यथायथम् ॥
कालेनाप्नोति सदृशान् स रसादींस्तथा तथा।
दोषो ज्वरयति क्रुद्धश्चिराच्चिरतरेण च ॥ * ॥
भूमौ स्थितं जलैः सिक्तं कालमेव प्रतीक्षते।
अङ्कुराय यथा बीजं दोषबीजं भवेत्तथा ॥
वेगं कृत्वा विषं यद्वदाशये नीयते बलम्।
कुप्यत्याप्तबलं भूयः काले दोषविषं तथा ॥
एवं ज्वराः प्रवर्त्तन्ते विषमाः सततादयः। * ।
उत्क्लेशो गौरवं दैन्यं भङ्गोऽङ्गानां विजृम्भणम् ॥
अरोचको वमिः श्वासः सर्व्वस्मिन्नसगे ज्वरे।
रक्तनिष्ठीवनं तृष्णा अक्ष्णोस्तु पिडकोद्गमः ॥
दाहरागभ्रममदप्रलापो रक्तसंश्रिते।
तृड्ग्लानिस्पष्टवर्च्चस्कमन्तर्द्दाहो भ्रमस्तमः ॥
दौर्ब्बल्यं गात्रविक्षेपो मांसस्थे मेदसि स्थिते।
स्वेदोऽतितृष्णा वमनं दौर्गन्ध्यं चासहिष्णुता ॥
प्रलापो ग्लानिररुचिरस्थिगे त्वस्थिभेदनम्।
दोषप्रवृत्तिरूद्‌र्ध्वाधःश्वासाङ्गक्षेपकूजनम् ॥

स्तब्धाङ्गः श्लेष्मभूयिष्ठो भवेदङ्गबलाशकः ॥ * ॥
हरिद्रामेदवर्णाभस्तद्वल्लेपः प्रमेहति।
स वै हारिद्रको नाम ज्वरभेदोऽन्तकः स्मृतः ॥
कफवातौ समौ यत्र हीनपित्तस्य देहिनः।
तीक्ष्णोऽथ वा दिवा मन्दो जायते रात्रिजो
ज्वरः ॥
दिवाकरापीतबले व्यायामाच्च विशोषिते।
शरीरे नियतस्थाता ज्वरः स्यात् पौर्व्वरात्रिकः।
आमाशये यदा दुष्टे श्लेष्मपित्ते ह्यधःस्थिते।
तदार्द्धं शीतलं देहे त्वर्द्धं चोष्णं प्रजायते ॥ * ॥
काये पित्तं यदा दुष्टं श्लेष्मा चान्ते व्यवस्थितः।
उष्णत्वं तेन देहस्य शीतत्वं करपादयोः ॥ * ॥
रसरक्ताश्रयः साध्यो मांसमेदो गतश्च यः।
अस्थिमज्जागतः कृच्छ्रस्तैस्तै साङ्गैर्हतप्रभः ॥ *
॥
विसंज्ञो ज्वरवेगार्त्तः सक्रोध इव वीक्ष्यते।
सदोषशब्दञ्च शकृद्द्रवं मुञ्चति वेगवत् ॥ * ॥
देहो लघुर्व्यपगतक्लममोहतापः
पाको मुखे करणसौष्ठवमव्यथत्वम्।
स्वेदः क्षवः प्रकृतिगामि मनोऽन्नलिप्सा
कण्डूश्च मूद्‌र्ध्नि विगतज्वरलक्षणानि ॥
इत्यादि महापुराणे गारुडे ज्वरनिदानं
समाप्तम्। १५२ अध्यायः ॥
अथ ज्वरस्य चिकित्सा।
यन्वन्तरिरुवाच।
“ज्वरोऽष्टधा पृथक् द्वन्द्वसंङ्घातागन्तुजः स्मृतः।
मुस्तपर्पटकोशीरचन्दनोदीच्यनागरैः।
शृतशीतं जलं दद्यात् पिपासाज्वरशान्तये ॥ १ ॥
नागरं देवकाष्ठञ्च धन्याकं वृहतीद्वयम्।
दद्यात् पाचनकं पूर्ब्बंज्जरिताय ज्वरापहम् ॥ २ ॥
आरग्वधाभयामुस्ततिक्तग्रन्थिकनिर्म्मितः।
कषायः पाचनं सामे सशूले च ज्वरे हितः ॥ ३ ॥
मधूकसारसिन्धूत्थवचोषणकणाःसमाः।
श्लक्ष्णं पिष्ट्वाम्भसा नस्यं कुर्य्यात् संज्ञाप्रबोधनम्
॥ ४
त्रिवृद्विशालात्रिफलाकटुकारग्वधैः कृतः।
सक्षारो भेदनं क्वाथः पेयः सर्व्वज्वरापहः ॥ ५ ॥
महौषध्यमृतामुस्तचन्दनोशीरधान्यैक।
क्वाथस्तृतीयकं हन्ति शर्क्करामधुयोजितः ॥ ६ ॥
अपामार्गजटा कट्यां लोहितैः सप्ततन्तुभिः।
बद्ध्वा वारे रवेर्नूनं ज्वरं हन्ति तृतीयकम् ॥ ७ ॥
गङ्गाया उत्तरे कूले ह्यपुत्रस्तापसो मृतः।
तस्मै तिलोदकं दद्यान्मुञ्चत्यैकाहिको ज्वरः ॥ ८ ॥
गुडूच्याः क्वाथकल्काभ्यां त्रिफलाया वृषस्य च।
मृद्वीकाया बलायाश्च सिद्धाः स्नेहाः ज्वर-

सर्व्वाकाररसादीनां शुद्ध्याशुद्ध्यापिवा क्रमात्
।
वातपित्तकफैः सप्तदशद्वादशवासरान् ॥
प्रायोऽनुयाति मर्य्यादां मोक्षाय च वधाय च ।
इत्यग्निवेशस्य मतं हारीतस्य पुनः स्मृतिः ॥
द्विगुणा सप्तमी या च नवम्येकादशी तथा ।
एषा त्रिदोषमर्य्यादा सोक्षाय च वधाय च ॥
शुद्ध्यशुद्ध्यै ज्वरः कालं दीर्घमप्यत्र वर्त्तते ।
कृशानां व्याधियुक्तानां मिथ्याहारादिसेविनाम् ॥
अल्पोऽपि दोषो दुष्ट्यादेर्लब्धान्यतमतो बलम् ।
स प्रत्यनीको विषमं यस्मावृद्धिक्षयान्वितः ॥
सोऽरिपक्षो ज्वरं कुर्य्याद्विषमक्षयवृद्धिभाक् ।

अन्तर्द्दाहो वहिःशैत्यं श्वासो हिक्वा च मज्जगे ।
तमसो दर्शनं मर्म्मच्छेदनं स्तब्धमेढ्रता ॥
शुक्रप्रवृत्तिर्म्मृत्युश्च जायते शुक्रसंश्रये ।
उत्तरोत्तरदुःसाध्याः पञ्चान्ये तु विपर्य्यये ॥
प्रलिम्पन्निव गात्राणि श्लेष्मणा गौरवेति च ।
मन्दज्वरः प्रलापस्तु सशीतः स्यात् प्रलेपकः ॥
नित्यं मन्दज्वरो रूक्षः शीतः कृच्छ्रेण गच्छति ।

च्छिदः ॥ ९ ॥
धात्री शिवा कणा वह्निक्वाथः सर्व्वज्वरान्तकः १०
ज्वरातिसारहरणमौषधंप्रवदाम्यथ ।
पृश्निपर्णीबलाविल्वनागरोत्पलधान्यैक ॥
पाठेन्द्रयवभूनिम्बमुस्तपर्प्टकाः स्मृताः ।
जयन्त्याममतीसारज्वरंरसमहौषधाः ॥ ११ ॥
नागरातिविषामुस्तभूनिम्बामृतवत्सैक ।
सर्व्वज्वरहरः क्वाथः साव्वातीसारनाशनः ॥ १२
॥
मुस्तपर्पटकोदीच्यशृङ्गवेवशृतं पयः ।

शालपर्णी पृश्निपर्णी बृहती कण्टकारिका ॥
बलाश्वदंष्ट्राविल्वानि पाठा नागरधान्यकम् ।
एतदाहारसंयोगे हितं सर्व्वातिसारिणाम् ॥ १३
विल्वचूतास्थिनिर्य्यूहः खण्डं मध्वतिसारणुत् । १४
।
अतीसारे हितस्तद्वत् कुटजत्वक्फलावृतः ॥ १५ ॥
वत्सकातिविषाविल्वबालाकन्दकषायकः।
सविश्व आमशूलाढ्ये ह्यतीसारे सशोणिते ॥” १६
इति गारुडे १७४ अध्यायः ॥
अपि च ।
“हस्तबद्धं पलाशस्य अपामार्गस्य वा हर ! ।
मूलं सर्व्वज्वरहरं भूतप्रेतादिनुद्भवेत् ॥ १७ ॥
पीतं वृश्चिकमूलन्तु पर्य्युषितजलेन वै ।
सार्द्धं विनाशयेद्दाहज्वरञ्च परमेश्वर ! ॥ १८ ॥
शिखायाञ्चैव तद्बद्धं भवेदैकाहिकादिनुत् । १९ ।
एतत् सकाञ्जिकं पीतं रक्तकुष्ठज्वरादिनुत् ॥” २०
इति तत्रैव १९३ अध्यायः ॥
“वचा त्रिकटुकञ्चैव करञ्जं देवदारु च ।
मञ्जिष्ठा त्रिफला श्वेता शिरीषो रजनीद्वयम् ॥
प्रियङ्गुनिम्बत्रिकटुगोमूत्रेणावघर्षितम् ।
नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनं तथा ॥
अपस्मारविषोन्मादशोषालक्ष्मीज्वरापहम्।
भूतेभ्यश्च भयं हन्ति राजद्वारे च शासनम् ॥ २१
अभयामलकद्राक्षाः पाठा चैव विभीतकम् ।
शर्क्करा च समञ्चैव जग्धं ज्वरहरं भवेत् ॥” २२
इति च गारुडे १९९ अध्यायः ॥ * ॥
वैद्यकमते शिवज्वरस्योत्पत्तिर्य्यथा, --
“दक्षापमानसंक्रुद्धरुद्रनिश्वाससम्भवः।
ज्वरोऽष्टधा पृथग्द्वन्द्वसंघातागन्तुजः स्मृतः ॥
तस्य विप्रकृष्टकारणकथनपूर्व्विका सम्प्राप्तिर्यथा,
“मिथ्याहारविहारस्य दोषा ह्यामाशयाश्रयाः ।
बहिर्न्निरस्य कोष्ठाग्निं ज्वरदाः स्यूरसानुगाः ॥”
तस्य सामान्यलक्षणं यथा, --
“स्वेदावरोधः सन्तापः सर्व्वाङ्गग्रहणन्तथा ।
युगपद्यत्र रोगे तु स ज्वरो व्यपदिश्यते ॥” * ॥
तस्य पूर्ब्बरूपं यथा, --
“श्रमोऽरतिर्व्विवर्णत्वं वैरस्यं नयनप्लवः ।
इच्छाद्वेषौ मुहुश्चापि शीतवातातपादिषु ॥
जृम्भाङ्गमर्द्दौ गुरुता रोमहर्षोऽरुचिस्तमः ।
अप्रहर्षश्च शीतञ्च भवत्युपत्स्यति ज्वरे ॥” * ॥
सन्ततादिज्वराणां प्रति नियतदूष्या धातवोयथा,
“सन्ततं रसरक्तस्थः सोऽन्येद्युः पिशिताश्रितः ।
मेदोगतस्तृतीयेऽह्नि त्वस्थिमज्जगतः पुनः ॥
कुर्य्याच्चातुर्थकं घोरमन्तकं रोगसङ्करम् ।
सप्ताहं वा दशाहं वा द्वादशाहमथापि वा ॥

जङ्घाभ्यां श्लैष्मिकः पूर्ब्बं शिरस्तोऽनिलसम्भवः ।
विषमज्वर एवान्यश्चातुर्थकविपर्य्ययः ॥
मध्ये अहनी ज्वरयत्यादावन्ते च मुञ्चति ॥” * ॥
वातबलासकज्वरो यथा, --
“नित्यं मन्दज्वरो रुक्षः शूनकस्तेन सीदति ।
स्तब्धाङ्गः श्लेष्मभूयिष्ठो नरो वातबलासकी ॥”
विषमज्वरविशेषाः ।
“विदग्धेऽन्नरसे देहे श्लेष्मपित्ते व्यवस्थिते ।
तेनार्द्धं शीतलं देहे चार्द्धञ्चोष्णं प्रजायते ॥” * ॥
शीतपूर्ब्बो ज्वरो यथा, --
“त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो ज्वरे ।
तयोः प्रशान्तयोः पित्तमन्ते दाहं करोति च ॥”
दाहपूर्ब्बो ज्वरो यथा, --
“करोत्यादौ तथा पित्तं त्वक्स्थं दाहमतीव च ।
तस्मिन् प्रशान्ते त्वितरौ कुरुतः शीतमन्ततः ॥
द्वावेतौ दाहशीतादी ज्वरौ संसर्गजौ स्मृतौ ।
दाहपूर्ब्बस्तयोः कष्टः कृच्छ्रसाध्यतमश्च सः ॥”
उक्तवातादिज्वराणां धातुविशेषदूष्यतया
अधिकलक्षणानि यथा, --
“गुरुता हृदयोत्क्लेशः सदनं छर्द्यरोचकौ ।
रसस्थ तु ज्वरे लिङ्गं दैन्यञ्चास्योपजायते ॥ १ ॥
रक्तनिष्ठीवनं दाहो मोहश्छर्द्दनविभ्रमौ ।
प्रलापः पिडका तृष्णा रक्तप्राप्ते ज्वरे नृणाम् ॥ २
पिण्डिकोद्वेष्टनं तृष्णासृष्टमूत्रपुरीषतः ।
उष्मान्तर्द्दाहविक्षेपौ ग्लानिः स्यान्मांसगे ज्वरे ॥ ३
भृशं स्वेदस्तृषा मूर्च्छा प्रलापश्छर्द्दिरेव च ।
दौर्गन्ध्यारोचकौ ग्लानिर्मेदःस्थे चासहिष्णुता ॥ ४
भेदोऽस्थ्नां कूजनं श्वासो विरेकश्छर्द्दिरेव च ।
विक्षेपणञ्च गात्राणामेतदस्थिगते ज्वरे ॥ ५ ॥
तमःप्रवेशनं हिक्का कासः शैत्यं वमिस्तथा ।
अन्तर्द्दाहो महाश्वासो मर्म्मच्छेदश्च मज्जगे ॥ ६ ॥
मरणं प्राप्नुयात्तत्र शुक्रस्थानगते ज्वरे ।
शेफसः स्तब्धता मोक्षः शुक्रस्य तु विशेषतः ॥” ७
अथ वैद्यकमते सामान्यतो ज्वरस्य चिकित्सा-
माह ।
“अंशांशं यत्र दोषाणां विवेक्तुं नैव शक्नुयात् ।
साधारणीं क्रियान्तत्र विदधीत चिकित्सकः ॥
सामान्यतो ज्वरी पूर्ब्बं निर्व्वाते निलये वसेत् ।
निर्व्वातमायुषो वृद्धिमारोग्यं कुरुते यतः ॥
व्यजनस्यानिलस्तृष्णास्वेदमूर्च्छाश्रमापहः ॥
तालवृन्तभवो वातस्त्रिदोषशमनो मतः ॥
वंशव्यजनजः सोष्णो रक्तपित्तप्रकोपणः ।
चामरो वस्त्रसंभूतो मायूरो वेत्रजस्तथा ॥
एते दोषजिता वाताः स्निग्धा हृद्याः सुपूजिताः ।
नवज्वरी भवेद्यत्नाद्गुरुष्णवसनावृतः ।

परिषेकः स्नानादिः । प्रदेहो अनुलेपना-
भ्यङ्गादिः । स्नेहान् पाने निषिद्धान् ॥ * ॥
निषिद्धानिषेधाद्दोषमाह ।
“शोषं छर्द्दिं मदं मूर्च्छां भ्रमं तृष्णामरोचकम् ।
प्राप्नोत्युपद्रवानेतान् परिषेकादिसेवनात् ॥”
आदिशब्देन प्रदेहादयो गृह्यन्ते ॥ * ॥
हारीतेन प्रव्येकं दूषणमुक्तम् ।
“व्यायामाज्ज्वरसंवृद्धिर्व्व्यवायात् स्तम्भमूर्च्छनम्
।
मृतिश्च स्नेहपानाच्चु मूर्च्छा छर्द्दिर्मदोऽरुचिः ॥
गुर्व्वन्नभोजनात् स्वप्नाद्विष्टम्भो दोषकोपनम् ।
अग्निसादः खरत्वञ्च श्रोतसां चाप्रवर्त्तनम् ॥”
मृतिरिति व्यवायादित्यत्र सम्बध्यते । स्वप्नात्
दिवास्वापात् ॥ * ॥ अन्यच्च वर्ज्जयेत् ।
“सज्वरो ज्वरमुक्तो वा विदाहीनि गुरूणि च ।
असात्म्यान्यन्नपानानि विरुद्धाध्यशनानि च ॥
व्यायाममतिचेष्टाञ्चाभ्यङ्गं स्नानञ्च वर्ज्जयेत् ।
तेन ज्वरः शमं याति न शान्तश्च पुनर्भवेत् ॥
ज्वरी लङ्घनं कुर्य्यादिति चरकः वाग्भटश्च ।”
“आमाशयस्थो हत्वाग्निं सामो मार्गं पिधापयन्
।
विदधाति ज्वरं दोषस्तस्माल्लङ्घनमाचरेत् ॥”
अस्यायमर्थः । “यतो हेतोः आमाशयस्थो
दोषो
वातपित्तश्लेष्मरूपः स्वहेतुदुष्टः अग्निं हत्वा
आच्छाद्य सामः अपक्वाहारसहितोमार्गं रस-
मार्गं पिधापयन् । अत्रार्षत्वादर्हतावपि कर्त्त-
रीन् । तेन पिदधदित्यर्थः । ज्वरं करोति
तस्मा-
द्धेतोर्ज्वरी लङ्घनमाचरेदित्यर्थः ॥ * ॥
“त्रिविधं त्रिविधे दोषे तत् समीक्ष्य प्रयोजयेत् ।
दोषेऽल्पे लङ्घनं पथ्यं मध्ये लङ्घनपाचनम् ।
प्रभूते शोधनं तच्च मूलादुन्मूलयेन्मलान् ॥”
चक्रश्च ।
“तरुणन्तु ज्वरं पूर्ब्बं लङ्घनेन क्षयं नयेत् ।
आमदोषमलिङ्गाद्वा लङ्घयीत यथाविधि ॥”
अन्यच्च ।
“ज्वरादौ लङ्घनं कुर्य्यात् ज्वरमध्ये तु पाचनम्
।
ज्वरान्ते रेचनं कुर्य्यात् कोष्ठशुद्ध्यै यथाबलम्
॥
दोषशेषस्य पाकार्थमग्नेः सन्धुक्षणाय च ।
लङ्घितश्चाप्यदोषश्च यवागूपानमाचरेत् ।
शालिषष्टिकमुद्गानां यूषं वा शस्तमाहरेत् ।
पञ्चकोलेन संसिद्धा यवागूर्म्मध्यलङ्घने ॥

सन्तत्या योऽविसर्गी स्यात् सन्ततः स निगद्यते ।
अहोरात्रे सततको द्वौ कालावनुवर्त्तते ॥
अन्येद्युष्कस्त्वहोरात्र एककालं प्रवर्त्तते ।
तृतीयकस्तृतीयेऽह्नि चतुर्थेऽह्नि चतुर्थकः ॥
केचिद्भूताभिषङ्गोत्थं ब्रुवते विषमज्वरम् ।
कफपित्तात्त्रिकग्राही पृष्ठाद्वातकफात्मकः ॥
वातपित्ताच्छिरोग्राही त्रिविधः स्यात्तृतीयकः ।
चातुर्थको दर्शयति प्रभावं द्विविधं ज्वरः ॥

यथर्त्तुपक्कं पानीयं पिबेत् किञ्चिन्निवारयन् ॥
विनापि भेषजैर्व्याधिः पथ्यादेव निवर्त्तते ।
न तु पथ्यविहीनस्य भेषजानां शतैरपि ॥" * ।
ततो ज्वरे वर्ज्जनीयान्याह सुश्रुतः ।
"परिषेकान् प्रदेहांश्च स्नेहान् संशोधनानि च ।
दिवास्वप्नं व्यवायञ्च व्यायामं शिशिरं जलम् ॥
क्रोधप्रवातभोज्यानि वर्ज्जयेत्तरुणज्वरी ॥"

अतिलङ्घितञ्च तं दृष्ट्वा तस्य सन्तर्पणं हितम् ।
द्राक्षादाडिमखर्ज्जूरपियालैः सपरूषकैः ॥
तर्पणार्हे तु कर्त्तव्यं तर्पणं ज्वरशान्तये ॥"
अत्र लङ्घनशब्देनानशनमुच्यते । यत आह
सुश्रुतः ।
"आनद्धस्तिमितैर्दोषैर्य्यावन्तं कालमातुरः ।
तावत्त्वनशनं कुर्य्यात्ततः संसर्गमाचरेत् ॥"
आनद्धस्तिमितैर्द्दोषैर्निश्चलैर्दोषैः सम्बद्धः ।
संसर्गं औषधान्नादिप्रसङ्गम् ॥ * ॥
यत्तु चरक आह ।
"चतुःप्रकारा संशुद्धिः पिपासा मारुतातपौ ।
पाचनान्युपवासश्च व्यायामश्चेति लङ्घनम् ॥"
चतुःप्रकारा संशुद्धिः वमनविरेचननिरूहवस्ति-

शिरोविरेचनानि । न त्वनुवासनं तस्य बृंहण-
त्वात् । अत्र लङ्घनं कर्षणमित्यर्थः । तथा च
सुश्रुतः ।
“शरीरलाघवकरं यद्‌द्रव्यं कर्म्म वा पुनः ।
तल्लङ्घनमिति ज्ञेयं बृंहणन्तु पृथग्विधम् ॥
लङ्घनात् कर्षणादन्यत् शरीरपोषकमित्यर्थः ॥ * ॥
ननु आनद्धस्तिमितैर्द्दोषैरित्यादिपूर्ब्बोक्तसुश्रुत-
वचनात् सामान्यतो ज्वरिणा यथाशनरूपं
लङ्घनं क्रियते तथा चतुःप्रकारा संशुद्धिः
इत्यादिचरकवचनाद्वमनादिरूपलङ्घनं सर्व्वै-
र्ज्वरिभिः कथं न क्रियते । तत्रोच्यते । वम-
नादिकमवस्थाविशेषेषु क्रियते न तु सर्व्वज्वरेषु ।
तथा च सुश्रुतः ।
“सोत्क्लेशे बलिने देयं वमनं श्लैष्मिके ज्वरे ।
पित्तप्राये विरेकस्तु कार्य्यः प्रशिथिलाशये ॥”
प्रशिथिलाशये अत्र प्रोपसर्गः वैपरीत्ये तेन
गूढाशये इत्यर्थः ॥ * ॥
“सरुजेऽनिलजे कार्य्यं सोदावर्त्ते निरूहणम् ।
कफाभिपन्ने शिरसि कार्य्यमूर्द्ध्वविरेचनम् ॥”
अपि च । सर्व्वज्वरिभिः पिपासानिग्रहश्च न
कार्य्यः ॥ यत आह हारीतः ।
“तृष्णा गरीयसी घोरा सद्यःप्राणविनाशिनी ।
तस्माद्देयं तृषार्त्ताय पानीयं प्राणधारणम् ॥”
अतोऽवस्थाविशेष एव पिपासासहनम् ॥ * ॥
ज्वरिभिर्म्मारुतसेवनं न कार्य्यम् । सुश्रुतेन प्रवात-
सेवनस्य सर्व्वथा निषिद्धत्वात् अतो मारुतसेवनं
अवस्थाविशेष एव युक्तम् । आतपसेवनञ्चा-
वस्थाविशेष एव संगृहीतम् ॥ * ॥
“लङ्घनाम्बुयवागूभिर्य्यदा दोषो न पच्यते ।
तदा तं मुखवैरस्यतृष्णारोचकनाशनैः ॥
ज्वरघ्नैः पाचनैर्हृद्यैः कषायैः समुपाचरेत् ।”
इत्यत्र लङ्घनपाचनयोः स्फुट एव भेदः । व्याया-
मोऽपि न कार्य्यस्तस्यातिनिषिद्धत्वात् । अवस्था
विशेषे पुनःपार्श्वपरिवर्त्तनादिरूपः सोऽपि
कर्त्तव्यः । तस्माच्चतुःप्रकारा संशुद्धिरित्यादि-
श्लोके लङ्घनपदं कर्षणपर्य्यायमिति निर्णीतम् ॥
अनशनरूपस्य लङ्घनस्य फलमाह ।
“लङ्घनेन क्षयं नीते दोषे सन्धुक्षितेऽनले ।
विज्वरत्वं लघुत्वञ्च क्षुच्चैवास्योपजायते ॥
लङ्घनेन अनशनेन दोषे प्रवृद्धे क्षयं नीते ।
यत आह ।
“आहारं पचति शिखी दोषानाहारवर्ज्जितः ।”
पचतीति । सन्धुक्षितेऽनले आच्छादकदोषे
संक्षीणे अग्नौ प्रदीप्ते । यथोक्तसंप्राप्तिसामग्री-
विघटनात् । विज्वरत्वं शरीरस्य गौरवाभावेन
न्मुखशोषादिनाशे मुखस्य यत् प्रकृतत्वं सैव
रुचिः शोभा । रुचिः स्त्री दीप्तौ शोभायामभि-
लाषयोरिति मेदिनीकारः ॥ * ॥ संप्रति कृतस्य
लङ्घनस्य लक्षणमाह ।
“वातमूत्रपुरीषाणां विसर्गाद्‌गात्रलाघवे ।
हृदयोद्‌गारकण्ठास्य शुद्धौ तन्द्राक्लमे गते ॥
स्वेदे जाते रुचौ वापि क्षुत्पिपासासहोदये ।
कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनि ॥”
हृदयस्य शुद्धिरनवरोधः । उद्‌गारशुद्धिःसधूमा-
म्लोद्‌गाराभावः । कण्ठस्य शुद्धिः
कफाद्यलिप्तत्वम् ।
आस्यशुद्धिः मुखस्य प्रकृतरसत्वम् । तन्द्राक्लमे
तन्द्रया क्लमः तस्मिन् । तन्द्रा निद्रावत् ।
क्लमोऽत्र ग्लानिः । क्षुत्पिपासासहोदये क्षुत्-
पिपासाभ्यां सह युगपदुदये । अन्तरात्मनि
मनसि । एतानि लक्षणाति मिलितान्येव सम्यक्
कृतं लङ्घनं बोधयन्ति । न तु प्रत्येकम् ॥ * ॥
हीनस्य लङ्घनस्य लक्षणमाह ।
“कफोत्क्लेशः सहृल्लासः ष्ठीवनञ्च मुहुर्म्मुहुः ।
कण्ठास्यहृदयाशुद्धिस्तन्द्रास्याद्धीनलङ्घने ॥
कफोत्क्लेशः कफस्य वमनायोपस्थितिः ॥”
हृल्लासः हृदयात् कट्वम्लनिर्गमः ॥ * ॥
अतिशयितस्य लङ्घनस्य लक्षणमाह ।
“पर्व्वभेदोऽङ्गमर्द्दश्च कासः शोषो मुखस्य च ।
क्षुत्प्रणाशोऽरुचिस्तृष्णादौर्ब्बल्यं श्रोत्रनेत्रयोः ॥
मनसः संभ्रमोऽभीक्ष्णमूर्द्ध्ववातस्तमो हृदि ।
देहाग्निबलहानिश्च लङ्घनेऽति कृते भवेत् ॥
दौर्ब्बल्यं श्रोत्रनेत्रयोः कर्णनेत्रयोः स्वविषय-
ग्रहणासामर्थ्यम् । मनसः संभ्रमः भ्रान्तिः ।
ऊर्द्ध्ववात उद्‌गारबाहुल्यम् । हृदि तमः अन्ध-
कारप्रविष्टस्येव ज्ञानम् ॥ * ॥ बलं रक्षन्
लङ्घनं कारयेदित्याह ।
“बलाविरोधिना चैनं लङ्घनेनोपपादयेत् ।
बलाधिष्ठानमारोग्यं यदर्थोऽयं क्रियाक्रमः ॥
अयमर्थः । एनं ज्वरिणं बलविरोधिना अनति-
बलक्षयकारिणा लङ्घनेन उपपादयेत् उप-
चरेत् । कुत इति चेत्तत्राह । यदर्थ इति । यस्मै
आरोग्याय अयं क्रियाक्रमः चिकित्सोपक्रमः ।
तत् आरोग्यं बलाधिष्ठानं बलाश्रयमित्यर्थः ॥ * ॥
केषाञ्चिदनशनस्य निषेधमाह सुश्रुतः ।
तद्धि मारुततृष्णाक्षुन्मुखशोषभ्रमान्वितैः ।
न कार्य्यं गुर्व्विणीबालवृद्धदुर्ब्बलभीरुभिः ॥
न क्षयाध्वश्रमक्रोधकामशोकचिरज्वरे।
तत् अनशनं उल्वणमारुतयुक्तेन ज्जरिणा न
कार्य्यम् । मारुतोऽत्र निरामो बोद्धव्यः । सामे तु
आमसंज्ञां स लभते बहुव्याधिसमाश्रयः ॥”
तन्त्रान्तरे ।
“आममन्नरसं केचित् केचित्तु मलसञ्चयम् ।
प्रथमां दोषदुष्टिं वा केचिदामं प्रचक्षते ॥”
अन्यच्च ।
“अपि पक्वमसंसक्तं दुर्गन्धं बहुपिच्छिलम् ।
सदनं सर्व्वगात्राणामाम इत्यभिशब्दितः ॥
तेनामेन समायुक्ता दोषा दूष्याश्च तादृशाः ।
तदुद्भवा आमयाश्च सामा इति बुधैः स्मृताः ॥”
अत्र सामस्य वातस्य लक्षणमाह ।
“वायुः सामो विबन्धाग्निसादतन्द्रान्त्रकूजनैः ।
वेदना शोथनिस्तोदैः क्रमशोऽङ्गानि पीडयेत् ॥
विचरेद्युगपच्चापि गृह्णाति कुपितो भृशम् ॥
स्नेहाद्यैर्वृद्धिमायाति मेघसूर्य्योदये निशि ॥”
विचरेद्युगपद्वायुरामश्चैककालं विचरेत् ।
कुपितः सामो वायुः भृशमतिशयेन गृह्णात्य-
ङ्गानीत्यर्थः ॥ * ॥ तस्यैव निरामस्य लक्षण-
माह ।
“निरामो विशदो रूक्षो निर्व्विबन्धोऽल्पवेदनः ।
विपरीतगुणैः शान्तिं स्निग्धैर्याति विशेषतः ॥ *
॥
अत्र प्रसङ्गात् सामस्य पित्तस्य लक्षणमाह ।
पित्तं सामं भवेदम्लं दुर्गन्धं हरितं गुरु ।
अम्लीकाकण्ठहृद्दाहकरंश्यावं तथा स्थिरम् ॥
अम्लीका अम्बिलचुकी इति लोके ॥ * ॥
तस्य निरामस्य लक्षणमाह ।
“निरामं पीतमाताम्रमत्युष्णं कटुकं सरम् ।
दुर्गन्धि रुचिकृद्वह्निबलवर्द्धनमीरितम्॥
अथ सामस्य कफस्य लक्षणमाह ।
“आविलस्तन्तुलस्त्यानः कण्ठदेशेऽवतिष्ठते ।
सामो वलाशो दुर्गन्धस्तृट्‌क्षुधोरभिघातकृत् ॥
स्त्यानः संहतः ॥
तस्य निरामस्य लक्षणमाह ।
“श्लेष्मा निरामो निर्गन्धः फेनवांश्छेदवानपि ।
भवेत् स पिण्डितः पाण्डुरास्यवैरस्यनाशकृत्
॥”
अथ सामस्य व्याधेर्लक्षणमाह ।
“आलस्यतन्द्राहृदयाविशुद्धि
र्दोषाप्रवृत्त्याविलमूत्रताभिः ।
गुरूदरत्वारुचिसुप्तताभि-
रामान्वितं व्याधिमुदाहरन्ति ॥
आमं जयेल्लङ्घनकोलपेया
लघ्वन्नसूपौदनतिक्तयूषैः ।
विरूक्षणस्वेदनपाचनैश्च
संशोधनैरूर्द्ध्वमधस्तथैव ॥

| | | |
|---|---|---|
| लघुत्वम् । क्षुत् बुभुक्षा च जायते इत्यर्थः ॥ * ॥<br>अन्यच्चाह सुश्रुतः ।<br>“अनवस्थितदोषाग्नेर्लङ्घनं दोषपाचनम् ।<br>ज्वरघ्नं दीपनं काङ्क्षारुचिलाघवकारकम् ॥<br>अनवस्थितदोषाग्नेः अनवस्थितः स्वस्थानादि-<br>तस्ततो गतो दोषोऽग्निश्च यस्य तस्य ज्वरिणः ।<br>काङ्क्षा अन्नाभिलाषः । रुचिः लङ्घनेनामपाका- | मारुते लङ्घनं कार्य्यमेव । यत आह तन्त्रान्तरे ।<br>“अवश्यमेव कुर्व्वीत ज्वरी सामे समीरणे ।<br>लङ्घनं ह्यामपाकार्थं न तदूद्ध्वं यथा कफे ॥<br>तदूद्ध्वं आमपक्वादूद्ध्वम् । अतएवोक्तम् ।<br>कफपित्ते द्रवे धातू सहेते लङ्घनं बहु ।<br>आमक्षयादूद्ध्वमपि वायुर्न सहते क्षणम् ॥” * ॥<br>आमस्य लक्षणमाह ।<br>“आहारस्य रसः सारो यो न पक्वोऽग्निलाघवात् । | तद्धि मारुततृष्णाक्षुदित्यादिश्लोकतृष्णापि<br>निरा-<br>मैव विवक्षिता तेन निरामतृष्णान्वितेन लङ्घनं<br>नकार्य्यम् । सामायान्तु तृष्णायां लङ्घनं<br>कार्य्यमेव ।<br>तथा मुखशोषभ्रमावपि निरामावेव विवक्षितौ ।<br>सामयोस्तु तयोर्ल्लङ्घनं कार्य्यमेव । गुर्व्विणीबाल-<br>वृद्धादिभिरपि निरामैरेव लङ्घनं न कार्य्यम् ।<br>सामैः पुनस्तैरपि लङ्घनं कार्य्यमेव । क्षयो घातु-<br>क्षयोराजयक्ष्मा । वातजे ज्वरे लङ्घनं न कार्य्यम्<br>॥<br>ज्वरी लङ्घनेऽपि जलं पिबेदित्याह सुश्रुतः । |

तृषितो मोहमायाति मोहात् प्राणान् विमुञ्चति ।
अतः सर्व्वास्ववस्थासु न क्वचिद्वारि वारयेत् ॥
हारीतश्च ।
तृष्णा गरीयसी घोरा सद्यःप्राणविनाशिनी ।
तस्माद्देयं तृषार्त्ताय पानीयं प्राणधारणम् ॥
अवश्यं पेयमपि जलं ज्वरी किञ्चिद्वारयन्
पिबेद्यत आह सुश्रुत एव ।
जीवनं जीविनां जीवो जगत् सर्व्वन्तु तन्मयम् ।
अतोऽत्यन्ततया सुज्ञो न क्वचिद्वारि वारयेत् ॥
जीवनं जलम् ॥ किञ्चित्तु वारयेदेव । तथा च ।
ज्वरे नेत्रामये कोठे मन्देऽग्नावुदरे तथा ।
अरोचके प्रतिश्याये प्रसेके श्वयथौ क्षये ॥
व्रणे च अम्धुमेहे च पानीयं मन्दमाचरेत् ॥
प्रसेके मुखप्रसेके । मन्दमाचरेत् अल्पं पिबेत् ।
यत आह ।
"अतियोगेन सलिलं तृष्यतेऽपि प्रयोजितम् ।
प्रयाति श्लेष्मपित्तत्वं ज्वरितस्य विशेषतः ॥ * ॥
तच्च जलं ज्वरी शीतलं न पिबेदित्याह सुश्रुतः ।
नवज्वरे प्रतिश्याये पार्श्वशूले गलग्रहे ।
सद्यःशुद्धौ तथाध्माने व्याधौ वातकफोद्भवे ॥
अरुचिग्रहणीगुल्मश्वासकासेषु विद्रधौ ।
हिक्कायां स्नेहपाने च शीतं वारि विवर्ज्जयेत् ॥"
अन्यच्च स एव ।
"सेव्यमानेन शीतेन ज्वरस्तोयेन वर्द्धते ।"
अत्र शीतं जलमक्वथितं निषिद्धम् । तथा सति क्वथितं ग्राह्यं आयातम् ॥ तत्र क्वथितस्य विधिर्गणाश्च ।
"क्वाथ्यमानन्तु निर्व्वेगं निष्फेनं निर्म्मलञ्च यत् ।
तत्तोयं क्वथितं ज्ञेयं दोषघ्नं पाचनं लघु ॥
निर्व्वेगं शनैः ॥ क्वथितस्य विषयानाह सुश्रुतः ।
"वातश्लेष्मज्वरार्त्ताय हितमुष्णाम्बु तृष्यते ।
दीपनं स्यात् कफच्छेदि वातपित्तानुलोमनम् ॥
तद्धि मार्द्दवकृद्दोषस्रोतसां शीतमन्यथा ॥"
वाग्भटश्च ।
"तृष्णायां प्राप्तमुष्णाम्बु पिबेद्वातकफज्वरे ।
तत् कफं विलयं नीत्वा तृष्णामाशु निवर्त्तयेत् ॥
उदीर्य्य चाग्निं स्रोतांसि समुत्कृत्य विशोधयेत् ।
वातपित्तकफस्वेदशकृन्मूत्राणि सारयेत् ॥" * ॥
अथोष्णोदकस्य लक्षणं गुणाश्च ।
"क्वाथ्यमानन्तु निर्व्वेगं निष्फेनं निर्म्मलं तथा ।
अर्द्धावशिष्टं यत्तोयं तदुष्णोदकमुच्यते ॥
ज्वरकासकफश्वासवातपित्तामभेदसाम् ।
केचित्तु ।
"वसुष्वङ्गेषु बाणेषु वेदेषु त्रिषु पक्षयोः ।
एकभागावशेषं स्यादम्बु वर्षादिषु क्रमात् ॥"
अत्र दोषाणां यथोल्वणता हीनता वा तथा व्यवस्था कल्पनीया ॥
"तत् पादहीनं पित्तघ्नमर्द्धहीनन्तु वातनुत् ।
त्रिपादहीनं श्लेष्मघ्नं संग्राह्यग्निप्रदं लघु ॥" * ॥
त्रिपादहीनस्य तन्त्रान्तरे आरोग्याम्बुसंज्ञा ।
तस्य लक्षणं गुणाश्च ।
"पादशेषन्तु यत्तोयमारोग्याम्बु तदुच्यते ।
आरोग्याम्बु सदा पथ्यं कासश्वासकफापहम् ॥
सद्यो ज्वरहरं ग्राहि दीपनं पाचनं लघु ।
आनाहपाण्डुशूलार्शोगुल्मशोथोदरापहम् ॥"
अथर्त्तुभेदे जलस्य ग्रहणाय देशभेदः ।
"हेमन्ते शिशिरे चाम्बु सारसं वा तडागजम् ।
वसन्तग्रीष्मयोः कौप्यं वाप्यं वा नैर्झरं हितम् ॥
नादेयं वारि नादेयं वसन्तग्रीष्मयोर्बुधैः ।
विषवत् पत्रपुष्पादिदुष्टं निर्झरयोगतः ॥
औद्भिदं चान्तरीक्षं वा कौपं प्रावृषि च स्मृतम् ।
शस्तं शरदि नादेयं नीरमंशूदकं परम् ॥
दिवा रविकरैर्ज्जुष्टं शीतं शीतकरैर्न्निशि ॥
ज्ञेयमंशूदकं नाम स्निग्धं दोषत्रयापहम् ।
अनभिष्यन्दि निर्द्दोषमान्तरीक्षजलोपमम् ॥
बल्यं रसायनं मेध्यं शीतं लघु सुधासमम् ॥"
अन्यच्च ।
"शरद्यगस्तेरुदयादस्विलं सलिलं हितम् ।
वृद्धसुश्रुतश्च ।
"कार्त्तिके मार्गशीर्षे च पयोमात्रं प्रशस्यते ॥"
यथर्त्तुपक्वमपि जलं विषयविशेषे शीतलं पिबेदित्याह सुश्रुतः ।
"दाहातिसारपित्तासृङ्मूर्च्छामद्यविषार्त्तिषु ।
मूत्रकृच्छ्रे पाण्डुरोगे तृष्णाच्छर्द्दिभ्रमेषु च ॥
मद्यपानात् समुद्भूते रोगे पित्तोत्थिते तथा ।
सन्निपातसमुत्थे च शृतं शीतं प्रशस्यते ॥"
क्वथितस्य जलस्य शीतलकरणविशेषे गुणविशेषमाह सुश्रुतः ।
"शृताम्बु तत्त्रिदोषघ्नं यदन्तर्व्वास्पशीतलम् ।
अरूक्षमनभिष्यन्दि कृमितृड्ज्वरहल्लघु ॥
धारापातेन विष्टम्भि दुर्ज्जरं पवनाहतम् ॥
अन्तर्व्वास्पशीतलं पिहितमेव शीतलम् ।
अत्रापरेऽपि विशेषाः ।
"दिवा शृतं पयो रात्रौ गुरुतामधिगच्छति ।
रात्रौ शृतं दिवा पीतं गुरुत्वमधिगच्छति ॥
तत्तु पर्य्युषितं वह्निगुणभ्रष्टं त्रिदोषकृत् ।
गुर्व्वम्लपाकं विष्टम्भि सर्व्वरोगेषु निन्दितम् ॥
श्वासकासज्वरहरं पीतमुष्णोदकं निशि ॥"
अन्यच्च ।
"भिनत्ति श्लेष्मसङ्घातं मारुतं चापकर्षति ।
अजीर्णं जरयत्याशु पीतमुष्णोदकं निशि ॥"
रात्रावुष्णोदकञ्च तप्तमेव पिबेदित्याह ।
"उष्णं तदग्निजननं लघ्वच्छं वस्तिशोधनम् ।
पार्श्वरुक्पीनसाध्मानहिक्कानिलकफापहम् ॥
शस्तं तृट्श्वासशूलेषु सद्यःशुद्धौ नवज्वरे ॥"
विषयविशेषे त्वाममेव जलं शीतलं पिबेदित्याह सुश्रुतः ।
"मूर्च्छापित्तोष्णदाहेषु विषे रक्ते मदात्यये ।
भ्रमश्रमपरीतेषु तमके वमथौ तथा ॥
धूमोद्गारेऽविदग्धेऽन्ने शोषे च मुखकण्ठयोः ।
ऊर्द्ध्वगे रक्तपित्ते च शीतमम्भः प्रशस्यते ॥"
शीतमम्भः आममेव न तु क्वथितम् । क्वथितन्तु शीतं दाहादिषु यदुक्तं तत् सज्वरेषु । विज्वरेषु तु दाहादिष्वामं शीतं प्रशस्यते इति भेदः ॥ * ॥
आमादिजलानां जठराग्निना पाककालावधिमाह ।
"आमं जलं पाकमुपैति यामं
पक्वं पुनः शीतलमर्द्धयामम् ।
पक्वं कदुष्णञ्च ततोऽर्द्धकालं
कालास्त्रयः पीतजलस्य पाके ॥
पित्तमद्यविषोत्थेषु तिक्तकैः शृतशीतलम् ॥"
जलं हितमिति शेषः ॥ * ॥ तिक्तानि बहुलानि तेभ्यो निर्धार्य्य योगमाह सुश्रुतः ।
"मुस्तपर्पटकोदीच्यच्छत्राख्योशीरचन्दनैः ।
शृतं शीतं जलं दद्यात् तृड्दाहज्वरशान्तये ॥"
छत्रात्र धान्यकम् । यत आह निघण्टौ धन्वन्तरिः । कुस्तुम्बुरुः स्वर्णिकारा छत्रा धान्यं वितुन्नकमित्यादि । तद्गुणाश्च ।
"धान्यकं दीपनं रुच्यं पाचनं स्वादुपाकि च ।
दोषत्रयतृषादाहश्वासकासज्वरप्रणुदित्यादि ॥"
चक्रदत्तवङ्गसेनवृन्दादयः छत्रास्थाने नागरं पठन्ति । तद्यथा, --
"मुस्तपर्पटकोशीरचन्दनोदीच्यनागरैरिति ।
नागरं कटुकमपि नात्र पित्तजनकं मधुरपाकित्वादिति तेषामभिप्रायः । नागरं नागरमुस्तकं इति केचित् । क्वचिदेकदेशेन समुदायोऽवगम्यते । यथा भीमो भीमसेन इति । तीसटे तु नागरस्थाने पद्मकम् ॥ * ॥ एतस्य प्रक्रिया ।
चन्दनैरित्यत्र सहार्थे तृतीया । तेन मुस्तादिभिः षड्भिरामैरेव क्षुण्णैः सहितं जलं शृतं जलमेव केवलं यथर्त्तुपक्वं पश्चात्तच्छीतलीकृतं दद्यात् । तथा च वङ्गसेनः ।

नाशनं वस्तिसंशोधि पथ्यमुष्णोदकं सदा ॥ *
॥”
अथर्त्तुभेदे जलस्य पाकभेदः ।
त्रिपादशेषं सलिलं ग्रीष्मे शरदि शस्यते ।
हिमेऽर्द्धशेषं शिशिरे तथा वर्षावसन्तयोः ॥” * ॥
अन्ये तु ।
“निदाघे त्वर्द्धपादोनं पादहीनन्तु शारदम् ।
शिशिरे च वसन्ते च हिमे चार्द्धावशेषितम् ॥
अष्टमांशावशेषन्तु वारि वर्षासु शस्यते ।
इति केचिद्बुधाः प्राहुर्ज्जेज्जटागमदर्शनात् ॥”

शृतं शीतं पुनस्तप्तं तोयं विषसमं भवेत् ।
निर्य्युहोऽपि तथा शीतः पुनस्तप्तो विषोपमः ॥”
रात्रौ तूष्णोदकस्य लक्षणमन्यदाह ।
“अष्टमेनांशशेषेण चतुर्थेनार्द्धकेन वा ।
अथवा क्वथनेनैव सिद्धमुष्णोदकं वदेत् ॥”
तस्य गुणाः ।
“श्लेष्मानिलामदोषघ्नं दीपनं वस्तिशोधनम् ।

यदप्सु शृतशीतासु षडङ्गादि प्रयुज्यते
कर्षमात्रं ततो द्रव्यं ग्राहयेत् प्रास्थिकेऽम्भसि ॥
अस्यायमर्थः । यत् हेतोः । अप्सु जलेषु ।
शृतशीतासु शृतासु केवलास्वेव यथर्त्तुपक्वासु ।
शीतासु शीतलीकृतासु षडङ्गादि द्रव्यं प्रयु-
ज्यते । आममेव संक्षुद्य जले स्थाप्यते । ततः
प्रक्षेप्यत्वात् कर्षमात्रं द्रव्यं समुदितं षडङ्गादि

प्रास्थिकेऽम्भसि प्रस्थमात्रे क्वथितशीतले जले क्षेप्तुं ग्राहयेत् । अतएव षडङ्गमभिधाय षडङ्ग-पानीयमिति वङ्गसेनादिभिरुक्तम् । अस्मिन् पक्षे चन्दनं श्वेतं ग्राह्यं न तु रक्तम् । तत्-कषायलेपयोरेव प्रयोक्तुमुक्तम् । यत आह ।
कषायलेपयोः प्रायो युज्यते रक्तचन्दनमिति ।
षडङ्गपानीयमिदम् ॥ * ॥ षडङ्गादेः पाने तु विधातव्ये प्रक्रिया भिन्ना तामाह वङ्गसेनः ।
कर्षमात्रमिह द्रव्यं ग्राहयेत् प्रास्थिकेऽम्भसि ।
अर्द्धश‍ृतं प्रयोक्तव्यं पाने पेयादिसम्बिधौ ॥
आदिशब्देन यूषयवागूविलेपिभक्तानिगृह्यन्ते ॥ *
पानप्रक्रियां शार्ङ्गधरोऽप्येतामेवाह ।
क्षुण्णं द्रव्यं पलं साध्यं चतुःषष्टिपले जले ।
अर्द्धशिष्टन्तु तद्देयं पाने पेयादिसम्बिधौ ॥
पानप्रयोगञ्च षडङ्गमुक्तवान् । अस्मिन् पक्षे चन्दनं रक्तं ग्राह्यम् । कषायलेपयोः प्रायो युज्यते रक्तचन्दनमिति वचनात् ॥ * ॥
अथ रक्तचन्दनस्य गुणाः ।
तत्तु रक्तं हिमं स्वादु श्छर्द्दितृष्णास्रपित्तजित्।
तिक्तं नेत्रहितं वृष्यं ज्वरव्रणविषापहम् ॥
षडङ्गादि प्रयुज्यते इत्यादि शब्देन वक्ष्यमाणा योगा उच्यन्ते । ते यथा, --
श्रीपर्णीचन्दनोशीरपरूषकमधुकजम्।
पानं पित्तज्वरं हन्याच्छारिवाद्यं सशर्करम् ॥
अत्र श्रीपर्णीपरूषकयोः फले ग्राह्ये । मधूकस्य तु पुष्पम् । अन्यच्च ।
हन्यात् सयष्टीमधुकं तथैवोत्पलपूर्ब्बकम् ।
पानं श‍ृतं हिमं किंवा सोत्पलं शर्करायुतम् ॥
हन्यात् पित्तज्वरमिति शेषः । उत्पलमत्र-कमलमित्यादि ।
दिवास्वापं न कुर्व्वीत यतोऽसौ स्यात्कफावहः ।
ग्रीष्मवर्जेषु कालेषु दिवास्वापो निषिद्ध्यते ॥
उचितो हि दिवास्वापो नित्यं तेषां शरीरिणाम्
वातादयः प्रकुप्यन्ति येषामस्वपतां दिवा ॥ * ॥
येषां दिवास्वप्न उचितस्तानाह ।
व्यायामप्रमदाध्ववाहनरतान्क्लान्तानती-सारिणः
शूलश्वासवतस्तृषापरिगतान्हिक्वामरुत्पीडि-तान् ।
क्षीणान् क्षीणकफान् शिशून् मदहतान् वृद्धा-न्रसाजीर्णिनो
रात्रौ जागरितान् नरान् निरशनान् कामं दिवा स्वापयेत् ॥ * ॥
अथ वातिकादिज्वराणां पाकावधिमाह ।
वातिकः सप्तरात्रे तु दशरात्रेण पैत्तिकः ।
ज्वरस्य तारुण्यमध्यावस्थता जीर्णतावधिः ।
आसप्तरात्रात्तरुणं ज्वरमाहुर्म्मनीषिणः ।
द्वादशाहमभिव्याप्य मध्यं जीर्णं ततः परम् ॥
आसप्तरात्रादिति । अत्राङ् मर्य्यादायाम् ।
रात्रिशब्दो दिवसस्योपलक्षकः । तेन सप्तम-दिवसादर्व्वाक् ज्वरस्तरुण इत्यर्थः । तथा चोक्तं तन्त्रान्तरे ।
ज्वरे व्यतीते षडहे जीर्ण इत्युच्यते बुधैरिति ।
दशरात्रात् परं जीर्णमाहुरन्ये मनीषिणः ।
अतएव जातूकर्णः । जीर्णस्त्रयोदशदिवस इति ॥
अथ ज्वरे भेषजप्रयोगसमयः ।
वातिके सप्तरात्रे तु दशरात्रेण पैत्तिके ।
श्लैष्मिके द्वादशाहेन ज्वरे युञ्जीत भेषजम् ॥
सप्तरात्रे इत्यत्र रात्रिशब्दो दिवसस्योपलक्षकः ।
अतएवोक्तम् ।
पाययेदातुरं साममौषधं सप्तमे दिने ।
शमनेनाथ वा दृष्ट्वा निरामं तमुपाचरेदिति ॥
शार्ङ्गधरेणाप्युक्तम् ।
गुडूचीपिप्पलीमूलनागरैः पाचनं श‍ृतम् ।
वातज्वरे तथा पेयं कालिङ्गं सप्तमेऽहनीति ॥
हारीतेनाप्युक्तम् ।
एतां क्रियां प्रयुञ्जीत षड्रात्रं सप्तमेऽहनि ।
पिबेत् कषायसंयोगात् पेयां ज्वरविनाशिनीम् ॥
एतां क्रियां लङ्घनादिरूपाम् । कषायसंयोगात् कषायेण साधितां पेयामित्यर्थः ॥ खरनादेना-प्युक्तम् ।
इति षड्रात्रिकः प्रोक्तो नवज्वरहरो विधिः ।
ततः परं पाचनीयं शमनीयं ज्वरे हितम् ॥
ततः परं सप्तमेऽहनीत्यर्थः ॥ वाग्भटश्च ।
सप्ताहादौषधं केचिदाहुरन्ये दशाहतः ।
लघ्वन्ने भोजिते केचिद्देयमामोल्वणे न तु ॥
सप्ताहात् सप्ताहमारभ्येत्यर्थः । अत्र ल्यप्-लोपे कर्म्मणि पञ्चमी । अतएव सुश्रुतः ।
दशरात्रात् परं सर्व्वैर्दातव्यमिति निश्चितम् ।
अतएव दशरात्रेण द्वादशाहेनेति लङ्घनवता व्यतीतेनेत्यर्थः ॥ अत्र चरकस्त्वेवमाह ।
ज्वरितं षडहेऽतीते लघ्वन्नं प्रतिभोजितम् ।
पाचनं शमनीयं वा कषायं पाययेत्तु तम् ॥
अस्यायमर्थः । ज्वरितं षडहे लङ्घनेन व्यतीते सप्तमेऽहनि भोजितलघ्वन्नं अष्टमे दिने कषायं पाययेदित्यर्थः ॥ तथा च सुश्रुतः ।
सप्तरात्रात् परं केचिन्मन्यन्ते देयमौषधम् ॥
सप्तरात्रात् परं अष्टमेऽहनीत्यर्थः । केचि-च्चरकादयः । चक्रदत्तोऽपि ।
सप्तरात्रेण पच्यन्ते सप्तधातुगता मलाः ।
अस्यायमर्थः । अल्पकालसमुत्थिते पैत्तिके ज्वरे दोषपाकं दृष्ट्वा भैषज्यं देयम् । न तु तत्र दश-रात्रापेक्षा । तथा अचिरज्वरितस्यापि पैत्तिके-तरनवज्वरयुक्तस्यापि दोषपाकं दृष्ट्वा भैषज्यं देयमित्यर्थः ॥ * ॥ दोषपाकलक्षणमाह सुश्रुतः ।
मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च ।
पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधमिति ॥
ज्वरे मृदौ स्वल्पीभूते । मलेषु वातपित्तकफ-मूत्रपुरीषेषु । प्रचलेषु स्वमार्गसञ्चारिषु । पक्वं निरामम् । दोषप्रकृतिवैकृत्यादेकेषां पक्वलक्ष-णम् । दोषाणां दुष्टवातपित्तकफानां प्रकृतिः ज्वरस्य तदुपद्रवाणां चोत्पादनम् । तस्या वैकृत्यं वैपरीत्यं तस्मात् दोषपाकज्ञानं एकेषां मते ।
क्षुत्क्षामता लघुत्वञ्च गात्राणां ज्वरमार्द्दवम् ।
दोषप्रकृतिरुत्साहो निरामज्वरलक्षणम् ॥
दोषप्रकृतिः दोषाणां स्वमार्गसञ्चारः । माधब-निदाने उत्साहस्थाने अष्टाह इति पाठः ॥ * ॥
ज्ञेयः पञ्चविधः कालो भैषज्यग्रहणे नृणाम् ।
अत्रानुक्ते प्रभातं स्यात् कषायेषु विशेषतः ॥
मुख्यभेषजसम्बन्धो निषिद्धस्तरुणे ज्वरे ।
तोयपेयादिसंस्कारैर्निर्दोषं तत्र भैषजम् ॥
मुख्यभैषजं क्वाथः तस्य सम्बन्धः पानम् ।
यत आह ।
न कषायं प्रशंसन्ति नराणां तरुणे ज्वरे ।
कषायेणाकुलीभूता दोषा जेतुं सुदुस्तराः ॥
आकुलीभूताः प्रवृद्धाः स्वमार्गं परित्यज्य यतस्ततो गताः । अत्र कषायशब्देन क्वाथो गृह्यते ॥ * ॥ उक्ताश्च क्वाथस्य पर्य्यायाः ।
श‍ृतं क्वाथः कषायश्च निर्य्यूहः स निगद्यते ।
तोयपेयादिसंस्कारैर्न्निर्द्दोषं तत्र भेषजमिति ॥
तत्र तरुणे ज्वरे भेषजं मुख्यभेषजं क्वाथरूपम् ।
तोयपेयादिसंस्कारैर्न्निर्दोषम् । यत आह ।
न तु कल्पनमुद्दिश्य कषायः प्रतिषिद्ध्यत इति ।
कल्पनं तोयपेयायवाग्वादिकम् ॥ * ॥ ननु ।
स्वरसश्च तथा कल्कः क्वाथश्च हिमफाण्टकौ ।
ज्ञेयाः कषायाः पञ्चैते लघवः स्युर्यथोत्तरम् ॥
इति वचनात् स्वरसादयोऽपि कथं न निषिध्यन्ते ।
तन्न ।
यः कषायः कषायः स्यात् स वर्ज्यस्तरुणे ज्वरे ।
इति ।
यः कषायः कषायः स्यात् चतुर्थभागावशेष-करणेन अष्टमभागावशेषकरणेन वा कषाय-वर्णः कषायरसञ्च स्यात् । स कः क्वाथः । स

| | | |
|---|---|---|
| श्लैष्मिको द्वादशाहेन ज्वरः पाकमुपैति हि ॥ *<br>रसस्यामत्वेऽवधिमतिक्रम्यापि ज्वरस्तिष्ठति।<br>यत आह सुश्रुतः ।<br>बहुदोषस्य मन्दाग्नेः सप्तरात्रात् परं ज्वरे ।<br>लङ्घनाम्बुयवागूभिर्य्यदा दोषो न पच्यते ॥<br>तदा तं मुखवैरस्यतृष्णारोचकनाशनैः ।<br>कषायैः पाचनैर्हृद्यैर्ज्वरघ्नैः समुपाचरेत् ॥ * ॥ | निरामस्तु ततः प्रोक्तो ज्वरः प्रायोऽष्टमे दिने ॥<br>एवं सति कषायदाने सप्तमाष्टमयोर्द्दिवसयो-<br>र्व्विकल्पः ॥ * ॥ तत्रापि वयोबलाग्निदोषदेश-<br>कालोचितं कुर्य्यात् भेषजमन्नञ्च दोषपाकं दृष्ट्वा<br>दद्यादित्याह सुश्रुतः ।<br>"पैत्तिके वा ज्वरे देयमल्पकालममुत्थिते।<br>अचिरज्वरितस्यापि भैषज्यं दोषपाकतः ॥"<br>इति । | तरुणज्वरे निषिद्धः ॥ * ॥ क्वाथवाचकस्य कषा-<br>यस्य लक्षणमाह ।<br>पादशिष्टः कषायः स्याद्यः षोडशगुणाम्भसा।<br>क्वथितोऽतः षडङ्गादि न निषिद्धो नवज्वरे ॥<br>अस्यायमर्थः । यः क्वात्थ्यद्रव्यात् षोडशगुणेना-<br>म्भसा क्वथितः पक्वः अथ च पादशिष्टः चतुर्थ-<br>भागावशेषः स कषायः स्यात् । अतः षड-<br>ङ्गादिस्तरुणज्वरे न निषिद्धः । अपाकादर्द्ध- |

पाकाच्चोक्तलक्षणाभावे कषायत्वाभावात् ॥ * ॥
तरुणज्वरे कषायस्य दोषमाह ।
“दोषा वृद्धाः कषायेण स्तम्भितास्तरुणे ज्वरे ।
स्तम्भ्यन्ते न विपच्यन्ते कुर्व्वन्ति विषमज्वरम् ॥
कषायेण स्तम्भिताः प्रवृत्तये निवारिताः ।
यत आह कषायरसगुणान् ।
कषायः स्तम्भनः शीतो रूक्षः पित्तकफापहः ।
इत्यादि ।
स्तम्भ्यन्ते आध्मानं कुर्व्वन्ति । न विपच्यन्ते
सुखेन न विपच्यन्ते दुःखं दत्त्वा विलम्बेन विप-
च्यन्ते इति यावत् ॥ अन्यच्च ।
“न च्यवन्ते न पच्यन्ते कषायैः स्तम्भिता मलाः ।
तिर्य्यग्विमार्गगा वाते घोरं कुर्य्युर्नवज्वरम् ॥ * ॥
अनुपस्थितदोषाणां वमनं तरुणे ज्वरे ।
हृद्रोगं श्वासमानाहमोहञ्च कुरुते भृशम् ॥”
अस्यायमर्थः । कफादिदोषोपस्थितौ स्वयमेव
चेद्भवति वमनं न तद्दोषाय । अनुपस्थित-
दोषाणान्तु तरुणे ज्वरे वमनं यत्नकृतं हृद्रो-
गादीन् करोतीत्यर्थः । एतेन वचनेन तरुणे
ज्वरे यत्नाद् वमनं निषिद्धम् ॥ * ॥
अवस्थाविशेषे तदपि कर्त्तव्यमित्याह ।
“सद्यो भुक्तस्य वा जाते ज्वरे सन्तर्पणोत्थिते ।
वमनं वमनार्हस्य शस्तमित्याह वाग्भटः ॥”
वमनं वेति विकल्पो लङ्घनापेक्षया वमनार्हस्ये-
त्यनेन गर्भिण्यतिकृशातिवृद्ध्याद्यनिरासः । वाग्-
भटोऽत्र वृद्धवाग्भटः ॥
“वमितं लङ्घयेत् प्राज्ञो लङ्घितं न तु वामयेत् ।
वमनं क्लेशबाहुल्याद्धन्यात्लङ्घनकर्षितम् ।
न कार्य्यं गुर्व्विणीबालवृद्धदुर्ब्बलभीरुभिः ॥”
अनशनमिति शेषः । अनेन वचनेन गुर्व्विण्या-
दीनामनशननिषेधात् ज्वरे सामे पाचनं निरामे
शमनं पथ्यान्नमण्डादिकञ्च दद्यात् ॥ * ॥
पाचनशमनयोर्ल्लक्षणमाह ।
“यत् पचत्याममाहारं पचेदामरसञ्च यत् ।
यदपक्वान् पचेद्दोषांस्तद्धि पाचनमुच्यते ॥
न शोधयति यद्दोषान् समान्नोदीरयत्यपि ।
समीकरोति संवृद्धांस्तत् संशमनमुच्यते ॥”

न शोधयति नोद्ध्र्वाधोमार्गाभ्यां पातयति ।

नोदीरयति न वर्द्धयति ॥ * ॥ तयोः संप्रदानं
कालञ्चाह ।
“पाययेदातुरं सामं पाचनं सप्तमे दिने ।
शमनेनाथवा दृष्ट्वा निरामं तमुपाचरेत् ॥
तस्मादादौ प्रदेयन्तु पाचनं दिवसत्रयम् ।
भेषजं ह्यामदोषस्य भूयो जनयति ज्वरम् ॥”
भूयो बाहुल्येन । अन्यच्च ।
“पाययेद्दोषहरणं मोहादामज्वरे तु यः ।
स सुप्तं कृष्णसर्पन्तु कराग्रेण परामृशेत् ॥”
इति वचनादामज्वरे भेषजनिषेधात् कथं सामे
ज्वरे पाचनं देयम् । उच्यते निरुपद्रवे सामे
ज्वरे पाचनं देयम् । सोपद्रवे तु सामे भेषजं
निषिद्धम् । तथा च वाग्भटः ।
“सप्ताहात् परतोऽदुष्टे सामे स्यात् पाचनं ज्वरे ।
निरामे शमनं स्तब्धे सामे नौषधमाचरेत् ॥”
अदुष्टे निरुपद्रवे । स्तब्धे सोपद्रवे ॥ * ॥ अथ
सामान्यज्वरे पाचनं कषायमाह सुश्रुतः ।
“नागरं देवकाष्ठञ्च ध्यामकं बृहतीद्वयम् ।
दद्यात् पाचनकं पूर्ब्बं ज्वरितेभ्यो ज्वरापहम् ॥
ध्यामकं रौहिषम् । तदलाभादुशीरं दद्यात् ।
बृहतीद्वयं बृहत्फला सूक्ष्मफला बृहती । क्षुद्रा
बृहती चेति । कण्टकारीद्वयं वा दद्यात् ॥
कण्टकारीद्वयं शुण्ठी ध्यामकं सुरदारु चेति
शार्ङ्गधरेण उक्तत्वात् । नागरादिक्वाथः सर्व्व-
ज्वरेषु ॥ * ॥ अथ सामान्यतः संशमनीयान्याह
सुश्रुतः ।
“अथ संशमनीयानि कषायाणि निबोध मे ।
सर्व्वज्वरेषु देयानि यानि वैद्येन जानता ॥
वृश्चीरविल्ववर्षाभूपयःसोदकमेव च ।
पचेत् क्षीरावशेषं तत् पेयं सर्व्वज्वरापहम् ॥

वृश्चीरः श्वेतपुनर्नवा । वर्षाभू रक्तपुनर्नवा ।

तथाच मदनपालः ।
“पुनर्नवः श्वेतमूलो वृश्चीरो दीर्घपत्रकः ।
पुनर्नवा परा रक्ता वर्षाभू रक्तपुष्पकः ॥”
पाकप्रकारमाह ।
“क्षीरमष्टगुणं द्रव्यात् क्षीरान्नीरं चतुर्गुणम् ।
क्षीरावशेषं पातव्यं क्षीरपाके ह्ययं विधिः ॥”
द्रव्यात् पलपरिमितात् ॥ अन्यच्च ।
“उदकाद्द्विगुणं क्षीरं शिंशपासारमेव च ।
तत् क्षीरशेषं क्वथितं पेयं सर्व्वज्वरापहम् ॥
गुडूचीधान्यकारिष्टं पद्मकं रक्तचन्दनम् ।
एषां क्वाथः सुप्रसिद्धः सर्व्वज्वरहरः स्मृतः ॥
दीपनो दाहहृल्लासतृष्णाच्छर्द्दरुचीञ्जयेत् ॥”
गुडूच्यादिक्वाथः ॥ * ॥ संशोधनं तरुणज्वरिणो
निषिद्धं तदाह सुश्रुतः ।
“छर्द्दिं मूर्च्छां मन्दमोहं भ्रमतृड्विषमज्वरान् ।
संशोधनस्य पानेन प्राप्नोति तरुणज्वरी ॥”
संशोधनस्य लक्षणमाह ।
जीर्णज्वरगरच्छर्द्दिगुल्मप्लीहोदरेषु च ।
शूले शोथे मूत्रघाते कृमिरोगे विरेचयेत् ॥”

दोषदुर्ब्बलं दोषैरुपचितैर्दुर्ब्बलं न तु उप-

वासादिकृशम् । अतएव समीक्ष्येति । अन्यच्च ॥
“चले दोषे मृदौ कोष्ठे नेक्षेतात्र बलं नृणाम् ।
अव्यापत् दुर्ब्बलस्यापि शोधनं हि तदा भवेत् ॥”
कुतो बलं नापेक्षणीयमित्याशङ्कायामाह ।
तदा तस्यामवस्थायां शोधनं दुर्ब्बलस्यापि दोष-
दुर्ब्बलस्यापि अव्यापत् भवेत् । छर्द्यादिव्याधि-
कृत् न भवतीत्यर्थः ॥ * ॥ बलवतः पुरुषस्य
पक्वस्य दोषस्य स्वस्थानस्थितस्य शोधनाविधाने
दोषमाह सुश्रुतः ।
“पक्वोऽप्यनिर्हृतो दोषो देहे तिष्ठन्महात्ययम् ।
विषमं वा ज्वरं कुर्य्याद्बलव्यापादमेव च ॥”

पक्वः लङ्घनतिक्ताम्बुपानपेयादिभिः । अनि-

र्हृतः अधोमार्गेणानुत्सृष्टः । महात्ययं विषम-
ज्वरं चातुर्थकम् । तस्यैव महात्ययत्वादिति
गदाधरः ॥ गम्भीरमिति कार्त्तिकः ॥ महा-
त्ययं महाकष्टं वा । बलव्यापादं बलक्षयम् ॥ * ॥
संशोधनमाह ।
“आरग्वधग्रन्थिकमुस्ततिक्ता-
हरीतकीभिः क्वथितः कषायः ।
सामे सशूले कफवातपित्त-
ज्वरे हितो रेचनपाचनश्च ॥”
आरग्वध धनवहेरा ॥ अन्यच्च ।
“पथ्यारग्वधतिक्तात्रिवृदामलकैः शृतं तोयम् ।
पाचनसारकमुक्तं मुनिभिर्ज्जीर्णज्वरे सामे ॥”
इति आरोग्यपञ्चकद्वयम् ॥ * ॥
“अनन्तां बालकं मुस्तं नागरं कटुरोहिणीम् ।
पिष्ट्वा मुखाम्बुना कल्कं पाययेदक्षसम्मितम् ॥
कल्कः स्वल्पेन कालेन हन्यात् सर्व्वज्वरानयम् ।
विदध्यात् कोष्ठसंशुद्धिं दीपयेच्च हुताशनम् ॥”

अनन्ता सारिवा । इति सारिवादिकल्कः ॥ * ॥

संशोधनं संशमनञ्च येषां निषिद्धं तानाह ।
“पीताम्बुर्ल्लङ्घनक्षीणो जीर्णी भुक्तः पिपासितः ।
न पिबेदौषधं यत्तु संशोधनमथेतरत् ॥”
पीताम्बुः पीततिक्ताम्बुः । भुक्तः भुक्तवानित्यर्थः ।
अत्राध्यवसितादित्वात् कर्त्तरि क्तप्रत्ययः । इतरत्
संशमनम् ॥ * ॥
“त्रिफला रजनीयुग्मं कण्टकारीयुतं शटी ।

| | | |
|---|---|---|
| शमनीयं प्रदेयन्तु पञ्चरात्रं ततः परम् ॥<br>शोधनं दीपनञ्चैव एकरात्रं प्रदापयेत् ॥"<br>इत्यत्रिसंहितातः ॥ अन्यच्च ।<br>"कृशञ्चैवाल्पदोषञ्च शमनीयैरुपाचरेत् ॥"<br>ननु ।<br>"लालाप्रसेको हृल्लासो हृदयाशुद्ध्यरोचकौ ।<br>तन्द्रालस्याविपाकास्यवैरस्यं गुरुगात्रता ॥<br>क्षुन्नाशो बहुमूत्रत्वं स्तब्धता बलवान् ज्वरः ।<br>आमज्वरस्य लिङ्गानि न दद्यात्तत्र भेषजम् ॥ | "स्थानाद्बहिर्नयेदूर्द्ध्वमधो वा दोषसञ्चयम् ।<br>संशोधनं तदेव स्याद्देवदालीफलं यथा ॥"<br><br>निषिद्धमपि संशोधनमवस्थाविशेषे देयं यत<br><br>आह ।<br>"रोगे शोधनसाध्ये तु यं विद्याद्दोषदुर्ब्बलम् ।<br>तं समीक्ष्य भिषक् कुर्य्याद्दोषप्रच्यावनं मृदु ॥"<br>शोधनसाध्यान् रोगानाह ।<br>"सद्योज्वरे विषेऽजीर्णे मन्दाग्नावरुचौ तथा ।<br>स्तन्यरोगे च हृद्रोगे कासे श्वासे च वामयेत् ॥ | त्रिकटु ग्रन्थिकं मूर्व्वा गुडूची धन्वयासकः ॥<br>कटुका पर्पटो मुस्तं त्रायमाणा च बालुकम् ।<br>निम्बं पुष्करमूलञ्च मधुयष्टी च वत्सकः ॥<br>यवानीन्द्रयवो भार्गी शिग्रुबीजं सुराष्ट्रजा ॥<br>वचा त्वक् पद्मकोशीरचन्दनातिविषाबला ॥<br>शालीपर्णी पृश्निपर्णी विडङ्गं तगरं तथा ।<br>चित्रकं देवकाष्ठञ्च चव्यं पत्रं पटोलजम् ॥<br>जीवकर्षभकौ चैव लवङ्गं वंशलोचनम् ।<br>पुण्डरीकञ्च काकोली पत्रकं जातिपत्रकम् ॥<br>तालीशपत्रमेतानि समभागानि चूर्णयेत् ।<br>अर्द्धांशं सर्व्वचूर्णस्य किरातं प्रक्षिपेत् सुधीः ॥<br>एतत् सुदर्शनं नाम चूर्णं दोषत्रयापहम् । |

ज्वरांश्च निखिलान् हन्यान्नात्र कार्य्या
विचारणा ॥
पृथग्द्वन्द्वागन्तुजांश्च धातुस्थान् विषमांस्तथा
।
सन्निपातीद्भवांश्चापि मानसानपि नाशयेत् ॥
शीतादीनपि दाहादीन् मोहं तन्द्रां भ्रमं तृषाम् ।
कासं श्वासञ्च पाण्डुञ्च हृद्रोगं कामलामपि ॥
त्रिकपृष्ठकटीजानुपार्श्वशूलञ्च नाशयेत् ।
शीताम्बुना पिबेदेतत् सर्व्वज्वरनिवृत्तये ॥
सुदर्शनं यथा चक्रं दानवानां विनाशनम् ।
तद्वज्ज्वराणां सर्व्वेषां चूर्णमेतत् प्रणाशनम् ॥"
पुष्करमूलाभावे कुष्ठमपि दद्यात् । भार्ग्यभावे
कण्टकारीमूलम् । सौराष्ट्राभावे स्फुटिकां
दद्यात् । तगरालाभे कुष्ठं देयम् । जीवकर्षभ-
कयोरलाभे विदारीकन्दस्य भागद्वयं दद्यात् ।
पुण्डरीकं श्वेतकमलम् । काकोल्यभावे अश्व-
गन्धामूलं दद्यात् । तालीशपत्रकाभावे स्वर्ण-
ताली प्रदीयते । इति । अथवा कण्टकारीजटा
देया । इति सुदर्शनचूर्णम् । * ।
"शटी निशाद्वयं शुण्ठी दारु पुष्करमूलकम् ।
एला गुडूची कटुका पर्पटश्च सवासकः ॥
भार्गी किराततिक्तञ्च दशमूलं तथैव च ।
क्वाथमेषां पिबेत् कृष्णसिन्धुचूर्णयुतं नरः ॥
ज्वरान् सर्व्वान् द्रुतं हन्ति नात्र कार्य्या
विचारणा ॥"
अनुभूतमत्युत्तममेतत् ॥ *
"हरीतकीत्रिवृद्वृद्धदारकाणां पृथग्भवेत् ।
पलद्वयं कणा शुण्ठी मुडूची गोक्षुरो वरी ॥
सहदेवी विडङ्गञ्च प्रत्येकं पलसम्मितम् ।
मधुना वटिकां कृत्वा स्वादेत् ज्वरमपोहति ॥
कासं श्वासं मलस्तम्भं वह्निमान्द्यं नियच्छति
॥
लाक्षा दशाक्षा अरुणा षडक्षा
सचन्दनं लोहितचन्दनञ्च ।
त्वक्पत्रकं वारि मुरा समुस्ता
प्रत्येकमेतानि पलोन्मितानि ॥
किराततिक्तस्त्रिवृतासतिक्ता-
मृताकणापर्पटकण्टकार्य्यः ।
विडङ्गविश्वामलकानि वासा-
रसानिशावारुणसिन्धुवाराः ॥
एतानि देयानि पृथक् पलार्द्ध-
मानानि सर्व्वाणि च भेषजानि ।
कल्कानमीषां विदधीत गव्य-
दुग्धेन वै सार्द्धतुलामितेन ॥
तैलं तिलानान्तु तुलानुमानं
अश्वगन्धानिशादारुकौन्तीकुष्ठाब्दचन्दनैः ॥
समूर्व्वारोहिणीरास्नाशताह्वामधुकैः समैः ।
सिद्धं लाक्षादिकं नाम तैलमभ्यञ्जनादिना ॥
सर्व्वज्वरक्षयोन्मादश्वासापस्मारवातनुत् ।
यक्षराक्षसभूतघ्नं गर्भिणीनाञ्च शस्यते ॥"

मस्तु दधिजलम् । कौन्ती रेणुका । चन्दन-

मत्र श्वेतमेव न तु रक्तम् । रोहिणी कटुकी ।
इति च लाक्षादितैलम् ॥ * ॥
"लाक्षा हरिद्रा मञ्जिष्ठा फेनिलं मधुकं बला ।
लामज्जकं चन्दनञ्च चम्पकं नीलमुत्पलम् ॥
प्रत्येकमेषां षण्मुष्टीः पक्त्वा तोये चतुर्गुणे ।
चतुर्भागावशेषे तु गर्भे चैतत् समापयेत् ॥
रेणुका पद्मकञ्चैव वाजिगन्धा तथैव च ।
वेतसं चोरकं कुष्ठं देवदारु नखं त्वचम् ॥
शतपुष्पा पुण्डरीकं मांसी मधुकमेव च ।
एभिरक्षमितैः कल्कैः कषायेणैव पेषितैः ॥
मस्तुशुक्तारनालानामाढकाढकमावपेत् ।
क्षीराढकसमायुक्तं तैलप्रस्थं विपाचयेत् ॥
अभ्यङ्गात्तैलमेतद्धि शीघ्रं दाहमपोहति ।
व्यपोहति तथा वातं पित्तं श्लेष्मभवं ज्वरम् ॥
सप्रलापं सतृष्णञ्च तालुशोषभ्रमान्वितम् ।
ग्रहोपसृष्टा ये बाला रक्षःसंदूषिताश्च ये ॥
तेषां कष्टं प्रशमयेत्तैलं लाक्षादिकं महत् ॥"
फेनिलं वदरम् । लामज्जकमुशीरवत् पीतच्छवि-
तृणविशेषः ।
लामज्जकं यदा न स्यादुशीरं दीयते तदा ।
चम्पकमित्यस्य स्थाने कुत्रापि गैरिकं इति पाठः ।
नीलोत्पलस्यालाभे तु कुमुदं देयमिष्यते ।

समापयेत् प्रक्षिपेदित्यर्थः । चोरकं ग्रन्थि-

पर्णस्य भेदः भण्टिउर इति नैपालदेशे भवति ।
तदलाभे ग्रन्थिपर्णं देयम् । पुण्डरीकं श्वेतकम-
लम् । मस्तु दधिजलम् । शुक्तं सन्धानभेदः ।
आरनालमपि सन्धानभेदः । इति महालाक्षादि-
तैलम् ॥ * ॥ अथ नवज्वरे रसाः ।
"सूतो गन्धष्टङ्कणः शोषणश्च
सर्व्वैस्तुल्या शर्करा मत्स्यपित्तैः ।
भूयो भूयो मर्द्दयेत्तं त्रिरात्रं
वल्लो देयः शृङ्गवेरद्रवेण ॥
तापे शीतं वीजनैस्तक्रभक्तं
वृन्ताकाद्यं पथ्यमेतत् प्रदिष्टम् ।
अद्रौ चोग्रं हन्ति सद्यो ज्वरन्तु
पित्ताधिक्ये मूर्द्ध्नि तोयञ्च दद्यात् ॥"
अस्य प्रक्रिया । पाराशुद्ध भाग १ गन्धकशुद्ध
नवज्वरे वल्लयुगं त्रिघस्र-
मार्द्राम्भसायं ज्वरधूमकेतुः ॥"
प्रक्रिया । पाराशुद्धगन्धकशुद्धहिङ्गुलशुद्धसमुद्र-
फेनसभागं सर्व्वं याममेकमार्द्रकरसेन संमर्द्द्य
रक्तिकाष्टकमितमार्द्रकरसेन दिनत्रयं नवज्वरी
भक्षयेत् । दिनत्रयान्नवज्वरो नश्येत् । इति
ज्वरधूमकेतुः ॥ * ॥ रसेन्द्रचिन्तामणौ ।
"शुद्धः सूतो विषो गन्धः प्रत्येकं शाणसंमितः ।
धूर्त्तबीजं त्रिशाणं स्यात् सर्व्वेभ्यो द्विगुणा
भवेत् ॥
हेमाह्वा कारयेदेषां चूर्णं सूक्ष्मं प्रयत्नतः ।
जम्बीरजीरकैर्द्देयश्चूर्णं गुञ्जाद्वयोन्मितम् ॥
आर्द्रकस्य रसेनापि ज्वरं हन्ति त्रिदोषजम् ।
ऐकाहिकं द्व्याहिकञ्च त्र्याहिकञ्च चतुर्थकम् ॥
विषमञ्च ज्वरं हन्यान्नवं जीर्णञ्च सर्व्वथा ।
महाज्वराङ्कुशो नाम्ना रसोऽयं सर्व्वसंमतः ॥"
प्रक्रिया । शुद्धपारा शुद्धगन्धक शुद्धविष प्रत्येकं
टङ्क १ धत्तूरबीज टङ्क ३ चोकटङ्क १२ सर्व्वेषां
चूर्णमतिसूक्ष्मं कर्त्तव्यम् । इति महाज्वरा-
ङ्कुशः ॥ * ॥ सर्व्वज्वरेषु शार्ङ्गधरे ।
"एको भागो रसात् शुद्धाच्छैलेयः पिप्पली शिवा ।
आकारकरभो गन्धः कटुतैलेन शोधितः ॥
फलानि चेन्द्रवारुण्याश्चतुर्भागमिता अमी ।
एकत्र मर्द्दयेच्चूर्णमिन्द्रवारुणिकारसैः ॥
माषोन्मितां वटीं कृत्वा दद्यात् सद्योज्वरे बुधः ।
छिन्नारसानुपानेन ज्वरघ्नी वटिका मता ॥"
शैलेयः छड इति लोके । शिवात्र हरीतकी ।
आकारकरभः अकरकरहा इति लोके । चतु-
र्भागमिता अमी शैलेयादयः षट् समुदिता
भागचतुष्टयमिताः । इति ज्वरघ्नीवटिका ॥ * ॥
शार्ङ्गधरे ।
"रसं गन्धञ्च दरदं जैपालं क्रमवर्द्धितम् ।
दन्तीरसेन संपिष्य वटी गुञ्जामिता कृता ॥
प्रभाते सितया सार्द्धमसिता शीतवारिणा ।
एकेन दिवसेनैषा नवज्वरहरी भवेत् ॥"
इति च ज्वरघ्नीवटिका ॥ * ॥ रसरत्नप्रदीपे ।
"रसो गन्धो विषं शुण्ठी पिप्पली मरिचानि च ।
पथ्या विभीतकं धात्री दन्तीबीजञ्च शोधितम् ॥
चूर्णमेषां समांशानां द्रोणपुष्पीरसैः पुटेत् ।
वटीं माषनिभां कुर्य्यात् भक्षयेन्नूतने ज्वरे ॥"
इति नवज्वरीहरीवटी । इति नवज्वरे रसाः ॥ * ॥
अथ सामान्यज्वरे रसाः ।
"शुद्धं सूतं विषं गन्धं धूर्त्तबीजं त्रिभिः समम् ।
चतुर्णां द्विगुणं व्योषं चूर्णं गुञ्जाद्वयोन्मितम् ॥
आर्द्रकस्य रसैः किंवा जम्बीरस्य रसैर्युतम् ।

तेनैव कल्केन शनैः पचेत्तु ।
हन्यात् ज्वरान् तैलमिदं समस्तान्
कुर्य्याद्बलं वीर्य्यमतीवपुष्टिम् ॥
विमर्द्दनादाशु परिभ्रमं श्रमं
शमं नयेत् संजनयेत् द्युतिं तनोः ।
तथा व्यथामस्थिसमुद्भवामपि
प्रहत्य निद्रां समुपार्ज्जयेत् सुखम् ॥"
अरुणा मञ्जिष्ठा । वारि वाला । रसा रास्ना ।
इति लाक्षादितैलम् ॥ * ॥
"लाक्षारससमं तैलं तैलान्मस्तु चतुर्गुणम् ।

भाग १ सोहागाभृष्ट भाग १ मरिच भाग १
शर्करा भाग ४ रोहुमत्स्यकपित्त भाग ३ ।
अमुं प्रतिदिनं सर्व्वं दिनत्रयं मर्दयेत् । रस-
मिमं रक्तित्रयमितमार्द्रकरसेन दद्यात् । ओदनं
तकं वृन्ताकफलं भोक्तुं दद्यात् । व्यजनाद्यैः
शीतलमुपचारं कुर्य्यात् । उदकमञ्जरीरसो नव-
ज्वरेषु ॥ * ॥ रसरत्नप्रदीपे ।
"अद्यात् समं सूतसमुद्रफेन
हिङ्गूलगन्धं परिमृद्य यामम् ।

महाज्वराङ्कुशो नाम्ना सर्व्वज्वरविनाशनः ॥
ऐकाहिकं द्व्याहिकञ्च त्र्याहिकञ्च चतुर्थकम् ।
विषमं वा त्रिदोषंवा ज्वरं हन्ति न संशयः ॥"
प्रक्रिया । शुद्धपाराटङ्क १ शुद्धविषटङ्क १ शुद्ध-
गन्धकटङ्क १ धत्तूरबीजटङ्क ३ शोटिटङ्क ४
पीपरीटङ्क ४ मरिचटङ्क ४ सर्व्वेषां चूर्णमति-
सूक्ष्मं कर्त्तव्यम् । इति महाज्वराङ्कुशः ॥ * ॥

सर्व्वज्वरेषु सर्व्वरसग्रन्थेषु ।
"सूतं गन्धं विषञ्चैव टङ्कणञ्च मनःशिला ।
एतानि टङ्कमात्राणि मरिचं त्वष्टटङ्ककम् ॥
कटुत्रयं टङ्कषट्कं खल्ले क्षिप्त्वा विचूर्णयेत् ।
रसः श्वासकुठारोऽयं श्वाससर्व्वज्वरापहः ॥"
इति श्वासकुठारो रसः ॥ * ॥
श्वासे सर्व्वज्वरे रसरत्नाकरे ।
"दारुमूषां शिखिग्रीवां रसकञ्च पृथक् पृथक् ।
टङ्कत्रयानुमानेन गृहीत्वा कनकद्रवैः ॥
मर्द्दयेत्त्रिदिनं कार्य्या वटी चणकमात्रया ।
मरिचैरेकविंशत्या सप्तभिस्तुलसीदलैः ॥
खादेद्वटीद्वयं पथ्यं दुग्धभक्तं सशर्करम् ।
तरुणं विषमं जीर्णं हन्यात् सर्व्वज्वरं ध्रुवम् ॥"
दारुमूषा दारुमूषी । शिखिग्रीवा तुतिया ।
रसकं खपरिया । प्रत्येकं टङ्क ३ धत्तूरपत्र-
स्वरसेन मर्द्दयेत् । इति ज्वराङ्कुशः ॥ * ॥
सर्व्वज्वरेषु ।
"नागरं कर्षमात्रं स्यात् कर्षमात्रञ्च टङ्कणम् ।
मरिचं सार्द्धकर्षं स्यात् तावद्गन्धवराटकम् ॥
विषं कर्षचतुर्थांशं सर्व्वमेकत्र चूर्णयेत् ।
रसो हुताशनो नाम्ना खाद्यो गुञ्जामितो ज्वरे
॥"
इति हुताशनो रसो ज्वरे ॥ * ॥
"शुद्धजैपालटङ्कन्तु कद्वीटङ्कद्वयोन्मितम् ।
गैरिकं टङ्कमेकञ्च कन्यानीरेण मर्द्दयेत् ॥
कलायसदृशी कार्य्या वटिका ताञ्च भक्षयेत् ।
शीतलेन जलेनैषा वटी जीर्णज्वरापहा ॥"
इति ज्वरघ्नीवटी ॥
"द्विभागतालेन हतञ्च ताम्रं
रसञ्च गन्धञ्च समीनमायुः ।
विषं समञ्च द्विगुणञ्च ताम्रं
त्रिसप्तरात्रेण दिवाकरांशैः ॥
विमर्द्दयरिष्टस्वरसेन चूर्णं
गुञ्जैकदत्तं सितया समेतम् ।
ज्वराङ्कुशोऽयं रविसुन्दराख्यो
ज्वरान्निहन्त्यष्टविधान् समस्तान् ॥"
अस्य प्रक्रिया । पाराटङ्क १ गन्धकटङ्क १
विष-
टङ्क १ द्विगुणतालकहतताम्रटङ्क २
रोहुमत्स्यक-
पित्त १ सव एकत्र खले जवचूर्ण होइ मिले
तव नीविके पातकी स्वरसकभावना २१ घामे
मह देवै मात्रा रत्ती एक अनुपान श्वेत-
शर्करा रती २ खाइ । इति सर्व्वज्वरे रवि-
सुन्दरो रसः ॥ * ॥

चूर्णयित्वा समं तेन रसेन सह मर्द्दयेत् ॥
नष्टसूतं यदा चूर्णं भवेत् कज्जलसन्निभम् ।
निर्धूमे वरदाङ्गारे द्रवीकुर्य्यात् प्रयत्नतः ॥
तत्र तं महिषीविष्ठास्थापिते कदलीतले ।
निःक्षिप्य तदुपर्य्यन्यत् पत्रं दत्त्वा प्रपीडयेत् ॥
शीतलान्तात् ततः पत्रात् समुद्धृत्य विचूर्णयेत्
।
एवं सिद्धा भवेद्व्याधिघातिनी रसपर्पटी ॥
ज्वरादिव्याधिभिर्व्याप्तं विश्वं दृष्ट्वा पुरा हरः ।
चकार कृपया युक्तः सुधावद्रसपर्पटीम् ॥
रक्तिकासंमितां तावद्भृष्टजीरकसंयुताम् ।
गुञ्जार्द्धभृष्टहिङ्ग्वाढ्यां भक्षयेद्रसपर्पटीम् ॥
रोगानुरूपभैषज्यैरपि तां भक्षयेद्बुधः ।
पिबेत्तदनुपानीयं शीतलं चुलुकत्रयम् ॥
प्रत्यहं वर्द्धयेत्तस्या एकैकां रक्तिकां भिषक् ।
नाधिकां दशगुञ्जातो भक्षयेत्तां कदाचन ॥
एकादशदिनारम्भात् तां तथैवापकर्षयेत् ।
एवमेताः समश्नीयान्नरो विंशतिवासरान् ॥
शिवं गुरुं तथा विप्रान् पूजयित्वा प्रणम्य च ।
श्रद्धया भक्षयेदेतां क्षीरमांसरसाशनः ॥
ज्वरञ्च ग्रहणीञ्चापि तथातीसारमेव च ।
कामलां पाण्डुरोगञ्च शूलप्लीहजलोदरम् ॥
एवमादीन् गदान् हत्वा हृष्टः पुष्टश्च वीर्य्यवान् ।
जीवेद्वर्षशतं साग्रं वलीपलितवर्ज्जितः ॥"
इति रसपर्पटी ॥ * ॥
अथ ज्वरिणे अन्नदानसमयः । तत्र चरकः ।
"क्षुत् सम्भवति पक्वेषु रसदोषमलेषु च ।
काले वा यदि वाकाले सोऽन्नकाल उदाहृतः ॥"
अन्यच्च ।
"आमे पाकं गते नृणां यदा भोजनलालसा ।
भवेत् काले ह्यकाले वा सोऽन्नकाल उदाहृतः
॥"
तत्र कालमाह । ज्वरस्य
पाकावस्थान्नदानकालः
ज्वरस्य पाककालश्च ।
"वातिकः सप्तरात्रेण दशरात्रेण पैत्तिकः ।
श्लैष्मिको द्वादशाहेन ज्वरः पाकमुपैति हि ॥"
ज्वरस्य पाक उपशमः ॥ ज्वरपाकेनैव रसपाके
दोषपाकोऽपि कथितः । यतो दोषपाकं विना
ज्वरपाको न भवति रसपाकं विना दोषपाकश्च
न भवति ॥ * ॥ ननु यथा पैत्तिको ज्वरो
दशाहो-
रात्रेण पाकं याति । एकादशे दिनेऽन्नं दीयते ।
तथा श्लैष्मिको ज्वरो द्वादशाहोरात्रेण पाकं
याति त्रयोदशदिवसेऽन्नं दीयते । तथा वातिको

"ज्वराभिभूतः षडहे व्यतीते
विपक्वदोषः कृतलङ्घनादिः ।
यो भेषजं खादति वैद्यवश्यो
निःसंशयं हन्त्यचिरात् स रोगान् ॥"
ज्वराभिभूतः वातज्वराभिभूतः । विपक्वदोषः
पक्ववातः । कृतलङ्घनादिः आदिशब्दात् कृत-
पक्वजलपाननिर्व्वातगृहवासगुरूष्णवसनधार
णादिः । भेषजमित्यन्नस्याप्युपलक्षणम् । अतएव
चरकः ।
"ज्वरितं षडहेऽतीते लघ्वन्नं प्रतिभोजितम् ।
पाचनं शमनीयंवा कषायं पाययेत्तु तमिति ॥"
ज्वरितं वातज्वरिणम् ॥ षडहेऽतीते इत्युपलक्ष-
णम् ॥ पित्तज्वरिणं दशाहेऽतीते ॥ श्लेष्मज्वरिणं
द्वादशाहेऽतीते ॥ लघ्वन्नं भोजितं ज्वरिणं पाचनं
शमनीयंवा कषायं पाययेत् । पुनः स एव ।
"सर्व्वज्वरेषु ज्वरितं दिनान्ते भोजयेल्लघु ॥"
दिनान्तेऽन्तशब्दोऽत्र मध्यवाची तेन त्रिधा
विभक्तस्य दिवसस्य मध्यभागे पित्तप्राधान्यसमये ॥
उक्तञ्च वाग्भटेन ।
"वयोऽहोरात्रिभुक्तानां तेऽन्तमध्यादिगाः क्रमा-
दिति ।"
ते वातपित्तश्लेष्माणः ॥ पित्तकालेऽपि मध्याह्ना-
दर्व्वाक् । यत आह ।
"याममध्ये न भोक्तव्यं यामयुग्मं न लङ्घयेत् ।
याममध्ये रसोत्पत्तिर्यामयुग्माद्बलक्षयः ॥" इति ॥
एतत् सुस्थपरमिति चेत्तन्न । यत आह ।
"श्लेष्मक्षये प्रवृद्धोष्मा बलवाननलस्तदा ।
वेगापायेऽन्यथा तद्धि ज्वरवेगाभिवर्द्धनम् ॥"
तदा पित्तप्राधान्यसमये । अन्यथा उक्तसम-
यादन्यदा । वेगापाये जठराग्निवेगनाशे । तत्
भोजनं ज्वरवेगाभिवर्द्धनं भवतीत्यर्थः ॥ * ॥
अत्र विषमज्वरिणेऽन्नं दातुं कालविशेषमाह
चरकः ।
"सर्व्वज्वरेषु सप्ताहं मात्रावल्लघु भोजयेत् ।
वेगापायेऽन्यथा तद्धि ज्वरवेगाभिवर्द्धनम् ॥"
सर्व्वज्वरेषु सर्व्वविषमज्वरेषु । वेगापाये ज्वर-
वेगापाये भोजयेत् । अन्यथा ज्वरवेगापायं
विना । तत् भोजनं ज्वरवेगाभिवर्द्धनं भवती-
त्यर्थः ॥ * ॥ अथान्नग्रहणाय स्थानमाह ।
"आहारनिर्हारविहारयोगाः
सदैव सद्भिर्विजने विधेयाः ॥" इति ॥ * ॥
अत्यबलस्य ज्वरितस्य भोजनार्थोपवेशनप्रकार-
माह सुश्रुतः ।
"ज्वरे प्रमेहो भवति स्वल्पैरपि विचेष्टितैः ।
निषण्णं भोजयेत्तस्मान्मूत्रोच्चारौ च कारयेत् ॥"

"शुद्धं सूतं तथा गन्धं खल्ले तावद्विमर्द्दयेत् ।
सूतं न दृश्यते यावत् किन्तु कज्जलवद्भवेत् ॥
एषा कज्जलिका ख्याता वृं हणी वीर्य्यवर्द्धिनी
।
नानानुपानयोगेन सर्व्वव्याधिविनाशिनी ॥" *
॥
कज्जलिकाविधानं तद्गुणश्च रसरत्नप्रदीपे ।
"जयापत्ररसेनाथ वर्द्धमानरसेन च ।
भृङ्गराजरसेनापि काकमाच्या रसेन च ॥
रसं संशोध्य यत्नेन तत्समं शोययेद्बलिम् ।
भृङ्गराजरसैः पिष्ट्वा शोषयेदर्करश्मिभिः ॥
सप्तधा वा त्रिधा वापि पश्चाच्चूर्णन्तु कारयेत् ।

ज्वर सप्ताहोरात्रेण पाकं याति । अष्टमे
दिवसेऽन्नं कथं न दीयते । कथं सप्तम एव
दिवसेऽन्नं दीयते । इति । उच्यते ।
"कफपित्ते द्रवे धातू सहेते लङ्घनं बहु ।
आमक्षयादूर्द्धमपि वायुर्न सहते क्षणम् ॥"
इति वचनादामरसपाके जाते आहारलाभं
विना वायुः क्षणमात्रमपि सोढुं न शक्नोति ।
स आशुकारित्वाम् क्षणादाक्षेपकादीन् विका-
रान् संजनयति ॥ अतो वातिके ज्वरे पाक-
दिनानामन्तिमे सप्तम एव दिनेऽन्नं दीयते ।
तथा च धन्वन्तरिः ।

निषण्णं यथास्थानस्थितमेव न तु स्थानान्तरं
नीतम् ॥ * ॥ अन्नग्रहणसमये प्रथमं ज्वरितेन
कवलः कर्त्तव्य इत्याह ।
"यथा दोषोचितैर्द्रव्यैः कर्त्तव्यः कवलग्रहः ।
अरोचकास्यवैरस्यमलपूतिप्रसेकहृत् ॥
भृष्टजीरकचूर्णेन सिन्धुजन्मयुतेन च ।
जिह्वां दन्तान् मुखस्यान्तर्घृष्ट्वा कवलमाचरेत् ॥

मुखे मलं विगन्धत्वं विरसत्वञ्च नश्यति ।
मनः प्रसन्नं भवति भोजनेऽतिरुचिर्भवेत् ॥
ज्वरितो हितमश्नीयाद्यद्यप्यस्यारुचिर्भवेत् ।
अन्नकाले ह्यभुञ्जानः क्षीयते म्रियतेऽपि च ॥”
अयमर्थः । यद्यपि अस्य ज्वरितस्य हिते भक्ष्ये
अरुचिर्भवेत् तथापि ज्वरितो हितमेवाश्नीया-
दिति नियमः । यत आह सुश्रुतः ।
“गुर्व्वभिष्यन्द्यकालञ्च ज्वरी नाद्यात् कथञ्चन ।
न तु तस्याहितं भुक्तमायुषे चासुखाय च ॥
आनद्धस्तिमितैर्द्दोषैर्यावन्तं कालमातुरः ।
तावत्कालं स लघ्वन्नमश्नीयात् सविरिक्तवत् ॥”
आनद्धस्तिमितैर्द्दोषैः अपक्वैर्दोषैर्व्याप्त इत्यर्थः ॥
ननु हिते वस्तुनि कथमरुचिः स्यादत आह ।
सातत्यात् स्वाद्वभावाच्च पथ्यं
द्वेष्यत्वमागतमिति ।
सातत्यात् एकस्यैव भक्षस्य सर्व्वदोपयोगात् ।
स्वाद्वभावाच्च भक्ष्यान्तरादपि विस्वादुतः ।
पथ्य-
मप्रियं स्यात् तथापि तदेव पथ्यम् । कल्पना-
विधिइभिस्तैस्तैः प्रियत्वं गमयेत् पुनरिति ॥
अथ च ज्वरितोऽन्नकालेऽश्नीयादेवेति द्वितीयो
नियमः । कुत इति चेत् हि यतो हेतो अभुञ्जानः
क्षीयतेऽपक्वधातुर्भवति ततो म्रियतेऽपि च ॥ * ॥
ज्वरिताय हितान्यन्नादीन्याह ।
“रक्तशाल्यादयः शस्ताः पुराणाः षष्टिकैः सह ।
यवाग्वोदनलाजार्थे ज्वरितानां ज्वरापहाः ॥”
तत्र रक्तशालिगुणाः ।
“रक्तशालिर्व्वरस्तेषां बल्यो वर्ण्यस्त्रिदोषजित् ।
चक्षुष्यो मूत्रलः स्वर्य्यः शुक्रलस्तृड्ज्वरापहः ॥
विषव्रणश्वासकासदाहनुद्वह्निपुष्टिदः।
तस्मादल्पान्तरगुणाः शालयो महदादयः ॥”
रक्तशालिर्यो मगधदेशे दाउदखानी इति प्रसिद्धः
॥
“मुद्गान् मसूरांश्चणकान् कुलत्थान् समकुष्ट-
कान् ।
यूषार्थे यूषसात्म्यानां ज्वरितानां प्रदापयेत् ॥”
तत्र मुद्गादिगुणास्तत्तच्छब्देद्रष्टव्याः ॥ * ॥
“पटोलपत्रं वार्त्ताकुं कुलकं कारवेल्लकम् ।
कर्कोटकं पर्पटकं गोजिह्वां बालमूलकम् ॥
पत्रं गुडूच्याः शाकार्थे ज्वरितानां प्रदापयेत् ॥”
तत्र पटोलादिगुणास्तत्तच्छब्देद्रष्टव्याः ॥ * ॥
“लावान् कपिञ्जलानेणान् हरिणान् पृषतान्
शशान् ।
कुरङ्गान् कालपुच्छांश्च तथैव मृगमातृकान् ॥
मांसार्थे मांससात्म्यानां ज्वरितानां प्रदापयेत् ।

अथौषधसिद्धायाः पेयायाः गुणाश्च ।
“अन्नकाले हिता पेया यथास्वं पाचनैः कृता ।
दीपनी पाचनी लघ्वी ज्वरार्त्तानां ज्वरापहा ॥”
यथास्वं पाचनैः कृता यथादोषं पाचनैः कृता ।
यथा, --
“पञ्चमूल्याः कषायन्तु पाचनं वातिके ज्वरे ।
सक्षौद्रं पैत्तिके मुस्तकटुकेन्द्रयवैः कृतम् ॥
पिप्पल्यादिकषायन्तु पाचनं कफजे ज्वरे ।
लघुना पञ्चमूलेन पिप्पल्या सह धान्यया ॥
महत्या पञ्चमूल्याथ व्याघ्री दुस्पर्शगोक्षुरैः ।
सिद्धानि भिषगन्नानि प्रयुञ्जीत यथाक्रमम् ॥
वातपित्ते श्लेष्मपित्ते कफवाते त्रिदोषजे ॥”
अस्यायमर्थः । वातपित्ते लघुना पञ्चमूलेन
सिद्धान्यन्नानि भिषक् प्रयुञ्जीत ।
“शालिपर्णी पृश्निपर्णी कण्टकारीद्वयं तथा ।
गोक्षुरः पञ्चमः प्रोक्तः पञ्चमूलमिदं लघु ॥
श्लेष्मपित्ते वातपित्ते पिप्पल्या सह धान्यया ॥”
कफवाते महत्या पञ्चमूल्या ।
“श्रीफलः सर्व्वतोभद्रा पाटला गणिकारिका ।
श्योनाकः पञ्चमः प्रोक्तः पञ्चमूलमिदं महत् ॥
त्रिदोषजे ज्वरे देया व्याघ्री दुस्पर्शगोक्षुरैः ।
व्याघ्री कण्टकारिका । दुस्पर्शो यवासः ।
पेयांवा रक्तशालीनां वस्तिपार्श्वशिरोरुजि ।
श्वदंष्ट्राकण्टकारीभ्यां सिद्धां ज्वरहरीं पिबेत् ॥
विबद्धवर्च्चाः सयवां पिप्पल्यामलकैः शृताम् ।
सर्पिष्मन्तीं पिबेत् पेयां ज्वरी दोषानुलोमनीम् ॥
कासीश्वासी च हिक्की च पञ्चमूलीशृतांपिबेत् ॥”
यवोऽत्रान्नम् । अत्र पञ्चमूली बृहती लघ्वी च
हिता । तया शृतां पेयां पिबेदित्यर्थः ।
“पेया भेषजसंयोगाल्लघुत्वाच्चाग्निदीपिका।
वातमूत्रपुरीषाणां दोषाणां चानुलोमिका ॥
स्वेदनाय च सोष्णत्वाद्द्रवत्वात् तृट्शमाय च ।
आहारभावात् प्राणाय सरत्वाल्लाघवाय च ॥
ज्वरघ्नीहेतुसात्म्यत्वात्तस्मात्तां पूर्ब्बमाचरेत् ॥”
हेतुसात्म्यत्वात् हेतवो वातपित्तकफास्तेषां
सात्म्यत्वात् ॥
“यवकोलकुलत्थानां मुद्गमूलकशुण्ठयोः ।
एकैकं मुष्टिमादाय पचेदष्टगुणे जले ॥
पञ्चमुष्टिक इत्येष वातपित्तकफापहः ।
शूले प्रशस्यते गुल्मे कासे श्वासे क्षये ज्वरे ॥”
पञ्चमुष्टिकयूषः ॥ * ॥
“रुद्धमूत्रपुरीषस्य गुदे वर्त्तिं निधापयेत् ।
पिप्पलीपिप्पलीमूलं यवानीचव्यसाधितम् ॥
पाययेत यवागूं वा मारुताद्यनुलोमनीम् ॥”
पेवाया यवाग्वाश्च क्वचिदपवादमाह ।

शर्क्करामधुसंयुक्तं पाययेल्लाजतर्पणम् ।
ज्वरापहैः फलरसैर्युक्तमन्नं हितं क्वचित् ॥” * ॥
सन्तर्पणस्वरूपञ्चाह धन्वन्तरिः ।
“द्राक्षादाडिमखर्ज्जूरमृदिताम्बुसशर्क्करम् ।
लाजचूर्णं समध्वाज्यं सन्तर्पणमुदाहृतम् ॥
लाजाचूर्णम् । द्राक्षादिजलशर्क्करामध्वाज्यसहितं
तर्पणमुक्तमित्यर्थः ॥ लाजशक्तुगुणाश्च गुणग्रन्थे ।
“लाजानां शक्तवः क्षौद्रसितायुक्ता विशेषतः ।
छर्द्यतीसारतृड्दाहविषमूर्च्छाज्वरापहाः॥”
चरकश्च ।
“तत्र तर्पणमेवादौ प्रदेयं लाजशक्तुतः ।
ज्वरापहैः फलरसैर्युक्तं मधुसशर्क्करम् ॥”
ज्वरघ्नानि फलान्याह चरक एव ।
“द्राक्षादाडिमखर्ज्जूरपियालैः सपरूषकैः ।
तर्पणार्हस्य दातव्यं तर्पणं ज्वरनाशनम् ॥”
पियालमत्र पक्वफलं न तन्मज्जातिगुरुत्वात् ।
तर्पणार्हस्य दाहच्छर्द्दितृषार्त्तस्य लङ्घितस्य
क्षीणस्येत्यर्थः ।
श्रमोपवासानिलजे हितो नित्यं रसौदनः ॥
रसोऽत्र मांसरसः । तेन सिक्त ओदनो रसौ-
दनः । अन्नेन व्यञ्जनमित्यनेन समासः ॥
“मुद्गयूषौदनश्चैव हितः कफसमुत्थिते ।
स एव सितया युक्तः शीतपित्तज्वरे हितः ॥”
स एव मुद्गयूषौदन एव ॥
“कृशोऽल्पदोषो यः क्षीणकफो जोर्णज्वरान्वितः ।
विबन्धासृष्टदोषश्च रूक्षः पित्तानिलज्वरी ॥
पिपासार्त्तः सदाहश्च पयसा स सुखी भवेत् ॥”
अन्यच्च ।
“अजादुग्धं गुडोपेतं पातव्यं ज्वरशान्तये ।
तदेव तु पयः पीतं तरुणे हन्ति मानवम् ॥”
तरुणे ज्वरे । अन्यच्च ।
“जीर्णे ज्वरे कफे क्षीणे क्षीरं स्यादमृतोपमम् ।
तदेव तरुणे पीतं विषवद्धन्ति मानवम् ॥” * ॥
अथ ज्वरिणो नियममाह ।
“न द्विरद्यान्न पूर्ब्बाह्णे नाभिष्यन्दि कदाचन ।
न तीक्ष्णं न गुरुप्रायो भुञ्जीत तरुणज्वरी ॥
न जातु तर्पयेत् प्राज्ञः सहसा ज्वरकर्षितम् ।
तेन संशमितोऽप्यस्य पुनरेव भवेज्ज्वरः ॥” * ॥
अथ ज्वरविमुक्तेः पूर्ब्बरूपमाह ।
“दाहः स्वेदो भ्रमस्तृष्णा कम्पविड्भिदसंज्ञिताः ।
कूजनं चाति वैगन्ध्यमाकृतिज्वरमोक्षणे ॥”
विड्भित् मलप्रवृत्तिः । अत्र सम्पदादित्वात्
भावे क्विप् । कूजनं कुन्थनम् । अतिवैगन्ध्यं
गात्रस्य । ज्वरमुक्तौ भविष्यत्यामेतल्लक्षणं भवति ॥
ननु दोषक्षयं विना न व्याधिनिवृत्तिः । क्षीणश्च

सारसक्रौञ्चशिखिनस्तथातित्तिरकुक्कुटान् ॥
गुरूष्णत्वान्न शंसन्ति केचिदेवं व्यवस्थिताः ॥”
तित्तिरिरत्र कृष्णतित्तिरिः । गौरतित्तिरेः
कपिञ्चलपदेन पूर्ब्बं गृहीतत्वात् ॥
“ज्वरितानां प्रकोपन्तु यदा याति समीरणः ।
तदैतेऽपि हि शस्यन्ते मात्राकालोपपादिताः ॥
कपिञ्जल इति ख्यातो लोकेषु गौरतित्तिरिः ॥”
इति ॥ * ॥
“निम्बूकं दाडिमं धात्रीफलमम्लं प्रकाङ्क्षते ।
प्रदद्यादम्लसात्म्याय काञ्जिकं वा पुरातनम् ॥”
“मदात्ययये मद्यनित्ये ग्रीष्मे पित्तकफोत्थिते ।
ऊद्ध्वगे रक्तपित्ते च यवागूर्न्न हिता ज्वरे ॥
दाहच्छद्दर्यर्द्दितं क्षामं निरन्नं तृष्णयान्वितम् ।
शर्क्करामधुसंयुक्तं पाययेल्लाजतर्पणम् ॥”
लाजशक्तुरूपं तर्पणम् । तथा च ग्रन्थान्तरे ।
“दाहच्छद्दर्यर्द्दितं क्षामं निरन्नं तृष्णयान्वितम् ।
घर्म्मार्त्तं मद्यपञ्चापि तोयालोडितशक्तुकम् ॥
दोषः कथमेवंविधं रूपं करिष्यति । उच्यते ।
कश्चित् क्षीणोऽपि दोषः विनाशकाले स्वशक्तिं
दर्शयति । यथा निर्व्वाणावस्थायां दीपो विशे-
षात् प्रज्वलति । वाग्भटोऽप्याह ।
“धातून् प्रक्षोभयन्दोषो मोक्षकाले विलीयते ।
ततो नरः श्वसन् कूजन् वमन् खिद्यन्न चेष्टते ॥”
न चेष्टते अचेष्टश्च स्यात् ।

"त्रिदोषजे ज्वरे ह्येतदन्तर्वेगे च धातुगे ।
लक्षणं मोक्षकाले स्यादन्यस्मिन् स्वेददर्शनम् ॥"
एतद्दाहादिकं लक्षणं मोक्षकाले एतेष्वेव ज्वरेषु स्यात् । केषु त्रिदोषजे । अन्तर्व्वेगे । धातुगे ज्वरे । अन्यस्मिन् स्वेदमात्रं दर्शनं भवति ॥ * ॥
अथ ज्वरमुक्तस्य लक्षणमाह ।
"देहो लघुर्व्यपगतक्लममोहतापः
पाको मुखे करणसौष्ठवमव्यथत्वम् ।
स्वेदः क्षवः प्रकृतियोगिमनोऽन्नलिप्सा
कण्डूश्च मूर्द्धिर्न विगतज्वरलक्षणानि ॥"
सुश्रुतोऽप्याह ।
"स्वेदो लघुत्वं शिरसः कण्डूः पाको मुखस्य च ।
क्षवथुश्चान्नकाङ्क्षा च ज्वरमुक्तस्यलक्षणम् ॥" * ॥
अथ ज्वरमुक्तस्य नियमाः ।
"व्यायामञ्च व्यवायञ्च स्नानं चंक्रमणानि च ।
ज्वरमुक्तो न सेवेत यावन्न बलवान् भवेत् ॥"
अन्यच्च ।
"व्यायामञ्च व्यवायञ्च प्रवातं शिशिरं जलम् ।
ज्वरमुक्तो न सेवेत यावन्न बलवान् भवेत् ॥
अपि ज्वरविमुक्तस्य स्नानं कुर्य्यात् पुनर्ज्वरम् ।
तस्माज्वरविमुक्तोऽपि स्नानं विषमिव त्यजेत् ॥
बलवर्णाग्निवपुषां यावन्न प्रकृतिर्भवेत् ।
तावज्जरेण मुक्तोऽपि वर्ज्जनीयानि वर्ज्जयेत् ॥"
अथ वातज्वराधिकारः । तत्र वातज्वरस्य विप्रकृष्टसन्निकृष्टकारणकथनपूर्ब्बिकां संप्राप्तिमाह ।
"वातलाहारचेष्टाभ्यां वायुरामाशयाश्रयः ।
बहिर्निरस्य कोष्ठाग्निं ज्वरकृत् स्याद्रसानुगः ॥"
अथ तस्य पूर्ब्बरूपमाह । जृम्भात्यर्थं समीरणादिति । समीरणात् ज्वरे उत्पत्स्यति अत्यर्थं
जृम्भा स्यात् । जृम्भा च श्रमादिपूर्ब्बिका भवति ॥
अथ वातज्वरस्य लक्षणमाह ।
"वेपथुर्व्विषमो वेगः कण्ठौष्ठमुखशोषणम् ।
निद्रानाशः क्षवस्तम्भो गात्राणां रौक्षमेव च ॥
शिरोहृद्गात्ररुग्वक्त्रवैरस्यं बद्धविट्कता ।
शूलाध्माने जृम्भणञ्च भवत्यनिलजे ज्वरे ॥"
एतानि लक्षणानि प्रायो भावित्वेन सुश्रुतेन निर्द्दिष्टानि । चकारादन्यान्यपि चरकनिदा-

अथ वातज्वरचिकित्सा ।
"आमाशयस्थो हत्वाग्निं सामो मार्गान् पिधापयन् ।
विदधाति ज्वर दोषस्तस्माल्लङ्घनमाचरेत् ॥"
इति वचनात् सामान्यतो ज्वरिमात्रस्य यावदारोग्यदर्शनं लङ्घनाभिधाने वातज्वरिणो लङ्घनविधाने विशेषमाह चरकः ।
"ज्वरितं षडहेऽतीते लघ्वन्नं प्रतिभोजितम् ।
पाचनं शमनीयंवा कषायं पाययेद्भिषक् ॥"
सुश्रुतोऽप्याह ।
"वातिके सप्तरात्रेण दशरात्रेण पैत्तिके ।
श्लैष्मिके द्वादशाहेन ज्वरे युञ्जीत भेषजमिति ॥"
ननु अन्नं वै प्राणिनां प्राणा इति श्रुतिः तदन्नं विना प्राणिभिः कथं स्थातव्यमित्याह ।
"दोषाणामेव सा शक्तिर्ल्लङ्घने या सहिष्णुता ।
न हि दोषक्षये कश्चित् सोढुं शक्नोति लङ्घनम् ॥
कफपित्ते द्रवे धातू सहेते लङ्घनं बहु ।
आमक्षयादूर्द्धमपि वायुर्न्न सहते क्षणम् ॥" * ॥
भेषजमाह ।
"श्रीफलः सर्व्वतोभद्रा कामदूती च शोणकः ।
तर्कारी गोक्षुरः क्षुद्रा बृहती कलसी स्थिरा ॥
रास्ना कणा कणामूलं कुष्ठं शुण्ठी किरातकः ।
मुस्तामृता बला बालं द्राक्षा यासः शताह्विका ॥
एषां क्वाथो निहन्त्येव प्रभञ्जनकृतं ज्वरम् ।
सोपद्रवञ्च योगोऽयं सर्व्वयोगवरः स्मृतः ॥"
श्रीफलो विल्वः । सर्व्वतोभद्रा गम्भारी । कामदूती पाटला । शोणकः शोनापाढा इति लोके । तर्क्कारी गणिकारिका । कलसी पृश्निपर्णी । स्थिरा शालिपर्णी । बालं सुगन्धबाला । यासो यवासः । इति दशमूलादिक्वाथः ॥ * ॥
सुश्रुतस्तु ।
"पञ्चमूली कषायन्तु पाचनं वातिके ज्वरे ।" इति ।
अत्र पञ्चमूली बृहत्पञ्चमूली । अतएव त्रिशती ।
"श्रीपर्णी तर्क्कारी श्रीफलटुण्टुकपाटलामूलैः ।
पाचनमुदितं मारुतजनितज्वरहारिवारिणि कथितैः ॥"
इति बृहत्पञ्चमूली क्वाथः ॥ * ॥
"किराताब्दामृतोदीच्यबृहतीद्वयगोक्षुरैः ।
त्रिपर्णीकलसीविश्वैः क्वाथो वातज्वरापहः ॥"
उदीच्यं बालकम् । त्रिपर्णी शालिपर्णी । कलसी पृश्निपर्णी । इति किरातादिक्वाथः ॥ * ॥
"गुडूचीपिप्पलीमूलनागरैः पाचनं शृतम् ।
वातज्वरे तथा पेयं कालिङ्गं सप्तमेऽहनि ॥"

क्वाथो हन्याच्छिरःकम्पं पर्व्वभेदं मरुज्जरम् ॥"
पञ्चमूली विल्वादिः । इति बृहत्पञ्चमूल्यादिक्वाथः ॥
"कणारसोनामृतवल्लिविश्वानिदिग्धिकासिन्धुकभूमिनिम्बैः ।
समुस्तकैराचरितः कषायो हिताशिनां हन्ति गदानिमांस्तु ॥
ज्वरं मरुद्धुष्टिसमुद्भवं तथा बलासजञ्चानलमन्दताञ्च ।
कण्ठावरोधं हृदयावरोधं स्वेदञ्च रोमाञ्चहिमत्वमोहान् ॥"
इति कणादिक्वाथः ॥ * ॥
"शुद्धं शङ्करशुक्रमक्षतुलितं मारारिनारीरजस्तावत्तावदुमापतिस्फुटगलालङ्कारवस्तु स्मृतम् ॥
तावत्येव मनःशिला च विमला तावत्तथा टङ्कणं शुण्ठी द्व्यक्षमिता कणा च मरिचं दिक्पालसंख्याक्षकम् ॥
विषादि वस्तूनि शिलोपरिष्टाद्विचूर्णयेद्वाससि शोधयेच्च ।
ततस्तु खल्ले रसगन्धकौ च चूर्णञ्च तद्यामयुगं विमर्द्द्य ॥
कल्पतरुनामधेयो यथार्थनामा रसः श्रेष्ठः ।
समीरणश्लेष्मगदान् हरते मात्रास्य गुञ्जैका ॥
आर्द्रकेण सममेष भक्षितो हन्ति वातकफसम्भवं ज्वरम् ।
श्वासकासमुखसेककशीततावह्निमान्द्यविरुचींश्च नाशयेत् ॥
नस्येनाश्वेव हरति शिरोऽर्त्तिं कफवातजाम् ।
मोहं महान्तमपि च प्रलापं क्षवथुग्रहम् ॥"
कल्पतरुरसः ॥ सामान्यज्वरचिकित्सोक्तोमहाज्वराङ्कुशः प्रदेयोऽत्र ॥ * ॥
"विषमहौषधमागधिकोषणा द्युमणिरक्तकमार्द्रकमर्द्दितम् ।
क्रमविवर्द्धितमुद्दलितज्वरस्त्रिपुरभैरव एव रसो वरः ॥"
द्युमणिः मारितं ताम्रं तस्य भागाः पञ्च । रक्तकं हिङ्गुलं तस्य भागाः षट् । मात्रास्य रक्तिकार्द्धम् । त्रिपुरभैरवो रसो ज्वरे ॥ * ॥
"वातश्लेष्मज्वरे स्वेदं जङ्घापार्श्वास्थिशूलिनि ।
पीनसश्वासवाधिर्य्ये कारयेत्तद्विधानवित् ॥
स्रोतसां मार्द्दवं कृत्वा नीत्वा पावकमाशयम् ।
हत्वा वातकफस्तम्भं स्वेदो ज्वरमपोहति ॥
"खर्परभृष्टपटस्थितकाञ्जिकसंसिक्तबालुकास्वेदः ।
शमयति वातकफामयमस्तकशूलाङ्गभङ्गादीन् ॥"
बालुकास्वदः कम्पे शिरोहृदयगात्रव्यथायां

| | | |
|---|---|---|
| नोक्तानि बोद्धव्यानि । तान्येव श्लोकेन प्रदर्श्यन्ते ।<br>“भवन्ति विविधा वातवेदना स्यादसुप्तता ।<br>पिण्डिकोद्वेष्टनं कर्णस्वनो वक्त्रकषायता ॥<br>ऊरुसादो हनुस्तम्भो विश्लेषः सन्धिजानुनोः ।<br>शुष्ककासो वमिर्लोमदन्तहर्षः श्रमभ्रमौ ॥<br>अरुणं नेत्रमूत्रादि तृट् प्रलापोष्णकामिता ॥”<br>विषमो वेगः शरीरोष्णतादिरूपो ज्वरवेगो विषमो भवतीत्यर्थः । क्षवस्तम्भः छिक्काया अभावः । तथा च वाग्भटः ।<br>“हर्षी रोमाङ्गदन्तेषु वेपथुः क्षवथोग्रहः ॥” इति ।<br>चरकोऽपि । क्षवथूद्गारनिग्रह इति । शिरो-हृद्गात्ररुक् गात्रपदे प्रयुक्ते शिरोहृच्छब्द-प्रयोगस्तत्र विशेषेण वेदनाबोधनार्थः ॥ * ॥ | कालिङ्गं शृतं ऐन्द्रयवं शृतम् ॥ * ॥<br>त्रिशती ।<br>“विश्वामृताग्रन्थिकसिद्धतोयं<br>मरुज्ज्वरस्याप्तिवतः कुतोऽयम् ।<br>क्वाथोऽथ कुस्तुम्बुरुदेवदारु-<br>क्षुद्रौषधैः पाचनमत्र चारु ॥”<br>औषधं शुण्ठी । क्वाथः पाचनमिति । वेदाः प्रमाणमितिवत् ।<br>“पञ्चमूलीबलारास्नाकुलत्थः सह पुष्करैः । | जृम्भायाम् । पादसुप्ततायां पिण्डिकोद्वेष्टने ऊरु-सादे हनुस्तम्भे लोमहर्षे च ॥ * ॥<br>“मातुलुङ्गफलकेशरो धृतः<br>सिन्धुजन्ममरिचान्वितोमुखे ।<br>हन्ति वातकफरोगमास्यग<br>शोषमाशु जडतामरोचकम् ॥”<br>इति कवलः कण्ठौष्ठमुखशोषे ॥ * ॥ |

अन्यच्च ।
“शर्क्करादाडिमाभ्याञ्च द्राक्षादाडिमयोस्तथा ।
कल्कं विधारयेदास्ये शोषवैरस्यनाशनम् ॥
द्राक्षामलकयोः कल्कं सघृतं वदने क्षिपेत् ।
तेन घृष्ट्वा मुखस्यान्तः संशोषस्तेन शाम्यति ॥
सुरसं जायते वक्त्रं रुचिर्भवति भोजने ॥” * ॥
निद्रानाशस्य निदानमाह ।
“लावणं लङ्घनं चिन्ता व्यायामः शोकभीक्रुधः ।
एभिरेव भवेन्निद्रानाशः श्लेष्मातिसंक्षयात् ॥”
अस्य चिकित्सामाह ।
“भृष्टन्तु विजयाचूर्णं मधुना निशि भक्षयेत् ।
निद्रानाशेऽतिसारे च ग्रहण्यां पावकक्षये ॥
गुडं पिप्पलीमूलस्य चूर्णेनालोडितं लिहन् ।
चिरादपि च संनष्टां निद्रामाप्नोति मानवः ॥
वायसजङ्घामूलं मूलं वा शिरसि काकमाच्याश्च ।
विधृतं निद्राजनकं स्नुङ्मूलं वा शृतं सगुडम् ॥”
पीतमिति शेषः ॥
“मूलन्तु काकमाच्या बद्धं सूत्रेण मस्तके नियतम् ।
विदधाति नष्टनिद्रो निद्रामाश्वेव सिद्धमिदम् ॥
शीलयेन्मन्दनिद्रस्तु क्षीरमद्यरसान् दधि ।
अभ्यङ्गोद्वर्त्तनस्नानमूद्‌र्ध्वकर्णाक्षितर्पणम् ॥”
रसं मांसरसम् ॥
“कान्ताबाहुलताश्लेषानिवृत्तिकृतकृत्यता ।
मनोऽनुकूला विषयाः कामं निद्रासुखप्रदाः ॥
रसे शाके च सूपे च सर्पिर्यूषपयःसु च ।
निद्रां सञ्जनयत्याशु पलाण्डुरुपयोजितः ॥”
रसे मांसरसे ॥
“ऐक्षवं पोतकी माषाः सुरा मांसरसः पयः ।
गोधूमतिलमत्स्याश्च निद्रां कुर्व्वन्ति देहिनाम् ॥”
निद्रानाशे ॥ * ॥
“दारु हैमवती कुष्ठशताह्वाहिङ्गुसैन्धवैः ।
लिम्पेत् कोष्णैरम्लपिष्टैः शूलाध्मानयुतोदरम् ॥”
हैमवती श्वेतवचा । दारुषट्कलेपः शूलाध्मा-
नयोः ॥ * ॥
“कटुतैलं कणाहिङ्गुवचालशुनसाधितम् ।
उष्णं विनिहितं हन्ति कर्णयोर्न्निस्वनं व्यथाम् ॥”
तैलं कर्णस्वने ॥ * ॥
“कणासुगन्धिवचया यवान्या च समन्विता ।
ताम्बूलसहिता हन्ति शुष्ककासं मुखे धृता ॥”
शुष्ककासे ॥ * ॥ अथान्नमाह ।
“श्रमोपवासानिलजे हितो नित्यं रसौदनः ।
मुद्गामलकयूषस्तु बद्धविट्काय दीयते ॥”
रसो विहितमांसरसः ॥
“पेयांवा रक्तशालीनां वस्तिपार्श्वशिरोरुजि ।
श्वदंष्ट्राकण्टकारीभ्यां सिद्धां ज्वरहरीं पिबेत् ॥

पित्तस्य पङ्गुत्वात्तेन कोष्ठाग्नेरुष्मा बहिर्नेतुं न शक्यते । यत आह ।
“पित्तं पङ्गु कफः पङ्गुः पङ्गवो मलधातवः ।
वायुना यत्र नीयन्ते तत्र गच्छन्ति मेघवत् ॥”
इति ॥
ततोऽत्र पित्तं वायुसहायं बोद्धव्यम् । यत आह ।
“द्रव्यमेकरसं नास्ति न रोगोऽप्येकदोषजः ।
एकस्तु कुपितो दोष इतरानपि कोपयेत् ॥” इति ।
अथ तस्य पूर्ब्बरूपमाह । पित्तान्नयनयोर्द्दाह इति । पित्तात् ज्वरे उत्पत्स्यति नेत्रदाहः स्यात् ।
स च श्रमादिपूर्ब्बको भवति ॥ * ॥
अथ पित्तज्वरस्य लक्षणमाह ।
“वेगस्तीक्ष्णोऽतिसारश्च निद्राल्पत्वं तथा वमिः ।
कण्ठौष्ठमुखनासानां पाकः स्वेदश्च जायते ॥
प्रलापो वक्त्रकटुता मूर्च्छा दाहो मदस्तृषा ।
पीतविण्मूत्रनेत्रत्वं पैत्तिके भ्रम एव च ॥”
अतिसारः पित्तस्य सरत्वात् सद्रवा प्रवृत्तिर्न त्वतीसार एव तस्य ज्वरोपद्रवत्वात् । वमिः यदा पित्तं कफस्थानं याति तदा बोद्धव्या । प्रलापोऽनर्थकं वचः । मूर्च्छारुपादेरज्ञानम् । मदः पूगकोद्रवधत्तूरभक्षणादिवमत्तता । भ्रमः चक्रारूढस्येव ज्ञानम् । चकारात् रक्तकोष्ठा-दयो बोद्धव्याः ॥ * ॥ अथ पित्तज्वरस्य चिकित्सा ।
“आमाशयस्थो हत्वाग्निं सामो मार्गान् पिधा-पयन् ।
विदधाति ज्वरं दोषस्तस्माल्लङ्घनमाचरेत् ॥”
इति वचनात् सामान्यतो ज्वरिमात्रस्य याव-दारोग्यदर्शनं लङ्घनाभिधाने पित्तज्वरिणो लङ्घनविधाने विशेषमाह सुश्रुतः । पैत्तिके दश रात्रेण ज्वरे युञ्जीत भेषजमिति । दशरात्रेण लङ्घनवता व्यतीतेनेत्यर्थः ॥ * ॥
किन्तद्भेषजं तदाह ।
“तिक्तामुस्तायवैः पाठाकट्फलाभ्यां सदोहकम् ।
पक्वं सशर्क्करं पीतं पाचनं पैत्तिके ज्वरे ॥”
इति तिक्तादिक्वाथः ॥ * ॥
“पर्पटो वासकस्तिक्ता कैरातो धन्वयासकः ।
प्रियङ्गुश्च कृतः क्वाथ एषां शर्क्करया युतः ॥
पिपासादाहपित्तास्रयुक्तं पित्तज्वरं हरेत् ॥”
इति पर्पटादिक्वाथः ॥ * ॥
“द्राक्षा हरीतकी मुस्ता कटुका कृतमालकः ।
पर्पटश्च कृतः क्वाथ एषां पित्तज्वरापहः ॥

“ह्रीवेरं चन्दनोशीरघनपर्पटसाधितम् ।
दद्यात् सुशीतलं वारितृट्छर्द्दिज्वरदाहनुत् ॥”
इति ह्रीवेरादिक्वाथः ॥ * ॥
“भूनिम्बातिविषालोध्रमुस्तेन्द्रयवामृताः ।
बालकं धान्यकं विल्वं कषायो माक्षिकान्वितः ॥
विड्भेदश्वासकासांश्च रक्तपित्तज्वरं हरेत् ॥”
इति भूनिम्बादिक्वाथः ॥ * ॥
“द्राक्षाचन्दनपद्मानि मुस्ता तिक्तामृतापि च ।
धात्री बालमुशीरञ्च लोध्रेन्द्रयवपर्पटाः ॥
परूषकं प्रियङ्गुश्च यवासो वासकस्तथा ।
मधूकं कुलकं चापि किरातो धान्यकं तथा ॥
एषां क्वाथो निहन्त्येव ज्वरं पित्तसमुत्थितम् ।
तृषां दाहं प्रलापञ्च रक्तपित्तं भ्रमं क्लमम् ॥
मूर्च्छां छर्द्दिं तथा शूलं मुखशोषमरोचकम् ।
कासं श्वासञ्च हृल्लासं नाशयेन्नात्र संशयः ॥”
इति महाद्राक्षादिक्वाथः ॥ * ॥
“ससितो निशि पर्य्युषितः प्रातर्धान्याकतण्डुल-क्वाथः ।
पीतः शमयत्यचिरादन्तर्द्दाहं ज्वरं पैत्तम् ॥”
इति धान्याकक्वाथः ॥ * ॥
“अमृताया हिमः प्रातः ससितः पैत्तिकज्वरम् ।
वासायाश्च तथा कासरक्तपित्तज्वरान् जयेत् ॥”
“गुडूची भूमिनिम्बश्च बालं वीरणमूलकम् ।
लघु मुस्तं त्रिवृद्धात्री द्राक्षा वासा च पर्पटः ॥
एषां क्वाथो हरत्येव ज्वरं पित्तकृतं द्रुतम् ।
सोपद्रवमपि प्रातर्निपीतो मधुना सह ॥”
इति गुडूच्यादिक्वाथः ॥ * ॥
“पलाशस्य वदर्य्या वा निम्बस्य मृदुपल्लवैः ।
अम्लपिष्टैः प्रलेपोऽयं हन्याद्दाहयुतं ज्वरम् ॥ * ॥
उत्तानसुप्तस्य गभीरताम्र-
कांस्यादिपात्रे निहिते च नाभौ ।
शीताम्बुधारा बहुला पतन्ति
निहन्ति दाहं त्वरितं ज्वरञ्च ॥ * ॥
पथ्यां तैलघृतक्षौद्रैर्लिहन्दाहज्वरापहः ।
कासासृक्पित्तवीसर्पश्वासान् हन्ति वमीरपि ॥
तैलघृतक्षौद्रैरित्यत्र न समुच्चयस्तेन केवलेन क्षौद्रेणापि लिह्यात् ॥ * ॥
“काञ्जिकार्द्रपटेनावगुण्ठनं दाहनाशनम् ।
अथ गोतक्रसंस्विन्नशीतलीकृतवाससा ॥ * ॥
द्राक्षामलककल्केन कवलोऽत्र हितो मतः ।
पक्वदाडिमबीजैर्व्वा धानाकल्केन च क्वचित् ॥”
धानात्र धान्याकम् । इति कवलः ॥ * ॥
अथान्नमाह ।
“दाहवम्यर्द्दितं क्षामं निरन्नं तृषयान्वितम् ।
शर्क्करामधुसंयुक्तं पाययेल्लाजतर्पणम् ॥”

कासी श्वासी च हिक्वी च पञ्चमूलीशृतां पिबेत् ॥”
पेयमिति शेषः । इति वातज्वराधिकारः ॥ * ॥
अथ पित्तज्वराधिकारः । तत्र पित्तज्वरस्य विप्र-कृष्टसन्निकृष्टकारणकथनपूर्ब्बिकां संप्राप्तिमाह ।
“पित्तलाहारचेष्टाभ्यां पित्तमामाशयाश्रयम् ।
बहिर्निरस्य कोष्ठाग्निं ज्वरकृत्स्याद्रसानुगम् ॥”

मुखशोषप्रलापान्तर्दाहमूर्च्छाभ्रमप्रणुत् ।
पिपासारक्तपित्तानां शमनो भेदनो मतः ॥”
इति द्राक्षादिक्वाथः ॥ * ॥
“पटोलयवधान्याकमधूकंमधुसंयुतम् ।
हन्ति पित्तज्वरं दाहं तृष्णां चातिप्रमाथिनीम् ॥”
इति पटोलादिक्वाथः ॥ * ॥
“गुडूच्यामलकीयुक्तः केवलो वापि पर्पटः ।
पित्तज्वरं हरेत्तूर्णं दाहशोषभ्रमान्वितम् ॥”
इति गुडूच्यादिक्वाथः ॥ * ॥
“एकः पर्पटकः श्रेष्ठः पित्तज्वरविनाशनः ।
किं पुनर्यदि युज्येत चन्दनोशीरबालकैः ॥” * ॥

लाजतर्पणं लाजाशक्तुरूपं तर्पणम् । सन्त-र्पणस्वरूपमुक्तं सामान्यज्वरचिकित्सायाम् ॥ * ॥
“मुद्गयूषौदनो देयः सितया पैत्तिके ज्वरे ।
हर्म्म्ये शुभ्राभ्रसङ्काशे शशाङ्ककरशीतले ॥
मलयोदकसंसिक्ते स्वप्यात् पित्तज्वरी नरः ॥
हारावली चन्दनशीतलानां
सुगन्धपुष्पाम्बरभूषितानाम् ।

नितम्बिनीनां सुपयोधराणा-
मालिङ्गनान्याशु हरन्ति दाहम् ॥
वाप्यः कमलहासिन्यो जलयन्त्रगृहाः शुभाः ।
नार्य्यश्चन्दनदिग्धाङ्ग्यो दाहदैन्यहरा मताः ॥"
इति पित्तज्वराधिकारः ॥ * ॥ * ॥

अथ श्लेष्मज्वराधिकारः । तत्र श्लेष्मज्वरस्य

विप्रकृष्टसन्निकृष्टकारणकथनपूर्ब्बिकां संप्राप्ति-
माह ।
"श्लेष्मलाहारचेष्टाभ्यां कफ आमाशयाश्रयः ।
बहिर्निरस्य कोष्ठाग्निं ज्वरकृत् स्याद्रसानुगः ॥"

कफस्य कोष्ठाग्नितेजसो बहिर्नयनेन पङ्गुत्वा-

दाशङ्कायां जातायां पित्तस्येव सिद्धान्तो
बोद्धव्यः ॥ * ॥ अथ तस्य पूर्ब्बरूपमाह ।
कफान्नान्नाभिनन्दनमिति । कफात् ज्वरे उत्-
पत्स्यति अन्नानभिलाषः स्यात् । स च श्रमादि-
पूर्ब्बको भवति ॥ * ॥ अथ श्लेष्मज्वरस्य
लक्षण-
माह ।
"स्तैमित्यं स्तिमितो वेग आलस्यं मधुरास्यता ।
शुक्लमूत्रपुरीषत्वं स्तम्भस्तृप्तिरथापि च ॥
गौरवं शीतमुत्क्लेदो रोमहर्षातिनिद्रता ।
प्रतिश्यायोऽरुचिः कासः कफजेऽक्ष्णोऽति-
शुक्लता ॥
स्तैमित्यं अङ्गानामार्द्रपटावगुण्ठित्वमिव ।
स्तिमितो वेगः ज्वरस्य मन्दवेगः । आलस्यं
समर्थस्यापि कर्म्मण्यनुत्साहः । स्तम्भः अङ्गा-
नम्रता । तृप्तिः अन्नाभिलाषे सत्यपि भोजना-
सामर्थ्यम् । गौरवं गात्राणाम् । शीतं शीतं
लगति । उत्क्लेदः वमनोपस्थितिरिव । अति-
निद्रता निद्राधिक्यम् । प्रतिश्यायो नासारोग-
विशेषः । अरुचिः भोजनानिच्छा । चकारात्
पिडका शीता मुखप्रसेकश्छर्द्दिस्तन्द्रा हृदयोप-
लेप उष्णाभिलाषो वह्निमान्द्यमिति । यत
उक्तम् ।
"प्रसेकः पिडकाः शीताश्छर्द्दिस्तन्द्रोष्णकामिता
।
कफेन लिप्तहृदयं भवेदग्नेश्च मन्दता ॥"
अथ श्लेष्मज्वरचिकित्सा ।
"आमाशयस्थो हत्वाग्निं सामो मार्गान् पिधा-
पयन् ।
विदधाति ज्वरं दोषस्तस्माल्लङ्घनमाचरेत् ॥"
गुल्मशूलज्वरहरो दीपनश्चामपाचनः ॥"
इति पिप्पल्यादिक्वाथः ॥
"क्षौद्रोपकुल्यासंयोगः श्वासकासज्वरापहः ।
प्लीहानं हन्ति हिक्काञ्च बालानामपि शस्यते ॥
पिप्पलीं त्रिफलाञ्चापि समभागां ज्वरी लिहन् ।
मधुना सर्पिषा वापि कासी श्वासी सुखी
भवेत् ॥ * ॥
कट्फलं पौष्करं शृङ्गी कृष्णा च मधुना सह ।
श्वासकासज्वरहरो लेहोऽयं कफनाशनः ॥"
इति चातुर्भद्रिकावलेहः ॥ * ॥
"कट्फलं पौष्करं शृङ्गी यवानी कारवी तथा ।
कटुत्रयञ्च सर्व्वाणि समभागानि चूर्णयेत् ॥
आर्द्रकस्य रसैर्लिह्यान्मधुना वा कफज्वरी ।
कासश्वासारुचिच्छर्द्दिश्लेष्मानिलनिवृत्तये ॥"
इत्यष्टाङ्गोऽवलेहः ॥ * ॥
"सिन्धुवारदलक्वाथं कणाढ्यं कफजे ज्वरे ।
जङ्घयोश्च बले क्षीणे कर्णे च पिहिते पिबेत् ॥
यवानी पिप्पली वासा तथा खाखसवल्कलम् ।
एषां क्वाथं पिबेत् कासे श्वासे च कफजे ज्वरे ॥
वासाक्षुद्रामृताक्वाथः क्षौद्रेण ज्वरकासहृत् ॥"
इति वासादिक्वाथः ॥ * ॥
"मरिचं पिप्पलीमूलं नागरं कारवी कणा ।
चित्रकं कट्फलं कुष्ठं ससुगन्धिवचा शिवा ॥
कण्टकारी जटा शृङ्गी यवानी पिचुमर्द्दकः ।
एषां क्वाथो हरत्येव ज्वरं सोपद्रवं कफात् ॥"
इति मरिचादिक्वाथः ॥
वातज्वराधिकारोक्तकल्पतरुरसोऽपि । श्लेष्म-
ज्वरे दातव्यस्तस्य कफव्याधिहरत्वात् ॥ * ॥
"सिन्धुत्रिकटुराजीभिरार्द्रकेण कफे हितः ॥"
कवल इति शेषः ॥ * ॥ अथान्नमाह ।
"मुद्गयूषौदनो दोषो ज्वरे कफसमुत्थिते ॥"
इति श्लेष्मज्वराधिकारः ॥ * ॥
अथ वातपित्तज्वराधिकारः । तत्र द्वन्द्वज-
ज्वरस्य विप्रकृष्टसन्निकृष्टकारणकथनपूर्ब्बिकां
संप्राप्तिमाह । तत्र वातपित्तज्वरस्य ।
"वातपित्तकरैर्व्वातपित्ते आमाशयाश्रये ।
बहिर्न्निरस्य कोष्ठाग्निं रसगे ज्वरकारिणी ॥"
स्यातामिति शेषः ॥ * ॥
अथ तस्य पूर्ब्बरूपमाह ।
"प्राग्रूपे वातपित्तस्य भवतो वातपैत्तिके ॥"
ज्वर इति शेषः ॥ * ॥
अथ वातपित्तज्वरस्य लक्षणमाह ।
"तृष्णा मूर्च्छा भ्रमो दाहो निद्रानाशः शिरो-
रुजा ।
कण्ठास्यशोषो वमथू रोमहर्षोऽरुचिस्तमः ॥
"गुडूची पर्पटो मुस्तं किरातो विश्वभेषजम् ।
वातपित्तज्वरे देयं पञ्चभद्रमिदं शुभम् ॥"
इति पञ्चभद्रक्वाथः ॥ * ॥
"त्रिफलाशाल्मलीरास्नाराजवृक्षाटरूषैक ।
शृतमम्बु हरत्याशु वातपित्तभवं ज्वरम् ॥"
इति त्रिफलादिक्वाथः ॥ * ॥
"मधुकं सारिवा द्राक्षा मधूकं चन्दनोत्पलम् ।
काश्मीरफलकं लोध्रं त्रिफला पद्मकेशरम् ॥
परूषकं मृणालञ्च क्षिपेत् संचूर्ण्य वारिणि ।
निशोषितं सिताक्षौद्रलाजयुक्तञ्च तत् पिबेत् ।
वातपित्तज्वरं दाहं तृष्णामूर्च्छारुचिभ्रमान् ॥
शमयेद्रक्तपित्तञ्च जीमूतमिव मारुतः ॥"
अत्र मधुकादिमृणालान्तं समुदितं पलपरि-
मितं संचूर्ण्य क्षिपेत् वारिणि षट्पलपरिमिते ।
मधुकादिर्हिमो दाहे ॥ * ॥
अथान्नमाह ।
"मुद्गामलकयूषस्तु वातपित्तज्वरे हितः ।
महादाहे प्रदातव्यो यूषश्चणकसम्भवः ॥"
दाडिमामलकमुद्गसम्भवोयूष उक्त इति वात-
पैत्तिके ।
"कफपित्तहरा मुद्गाः कारवेल्लादयस्तथा ।
प्रायेण न च ते देया वातपित्तोत्तरे ज्वरे ॥
दत्तास्तु ज्वरविष्टम्भशूलोदावर्त्तकारिणः ॥"
इति वातपित्तज्वराधिकारः ॥ * ॥
अथ वातश्लेष्मज्वराधिकारः । तत्र तस्य विप्र-
कृष्टसन्निकृष्टकारणकथनपूर्ब्बिकां सम्प्राप्तिमाह ।
"वातश्लेष्मकरैर्व्वातकफावामाशयाश्रयौ ।
बहिर्न्निरस्य कोष्ठाग्निं रसगौ ज्वरकारिणौ ॥"
पूर्ब्बरूपमाह ।
"प्राग्रूपे वातकफयोः स्यातां वातकफज्वरे ॥"
तस्य लक्षणमाह ।
"स्तैमित्यं पर्व्वणां भेदो निद्रागौरवमेव च ।
शिरोग्रहः प्रतिश्यायः कासः स्वेदाप्रवर्त्तनम् ॥
सन्तापे मध्यवेगश्च वातश्लेष्मज्वराकृतिः ॥"
स्वेदाप्रवर्त्तनं स्वेदस्य आसमन्तात्बाहुल्येन प्रवृत्तिः ॥
तथाह हारीतः ।
"शिरोग्रहः स्वेदभवश्च कासो
ज्वरस्य लिङ्गं कफवातजस्येति ॥"
स्वेदभवः स्वेदोत्पत्तिः ॥ * ॥

ननु स्वेदः पित्तस्य धर्म्मः अतएव पित्तज्वरे

कण्ठौष्ठमुखनासानां पाकः स्वेदश्च जायत इत्यु-
क्तम् । तस्मात् कथं वातश्लेष्मज्वरे स्वेदस्याति-
प्रवृत्तिः । उच्यते । विकृतिविषमसमवायारब्ध-

इति वचनात् सामान्यतो ज्वरिमात्रस्य याव-
दारोग्यदर्शनं लङ्घनाभिधाने श्लेष्मज्वरिणो
लङ्घन
विधाने विशेषमाह सुश्रुतः । श्लैष्मिके द्वाद-
शाहेन ज्वरे युञ्जीत भेषजमिति । द्वादशाहेन
लङ्घनवता व्यतीतेनेत्यर्थः ॥ * ॥ किन्तद्भेषजं
तदाह ।
“पिप्पल्यादिकषायन्तु कफजे परिपाचनमिति
।”
पिप्पल्यादिगणमाह ।
“पिप्पली पिप्पलीमूलं मरिचं गजपिप्पली ।
नागरं चित्रकं चव्यं रेणुकैलाजमोदिका ॥
सर्षपो हिङ्गु भार्गी च पाठेन्द्रयवजीरकाः ।
महानिम्बश्च मूर्व्वा च विषा तिक्ता विडङ्गकम् ॥
पिप्पल्यादिगणो ह्येष कफमारुतनाशनः ।

पर्व्वभेदश्च जृम्भा च वातपित्तज्वराकृतिः ॥”
पर्व्वभेदः पर्व्वाणि भिद्यन्त इवेति सन्धिषु व्यथा ॥
अथ वातपित्तज्वरस्य चिकित्सा ।
“वातपित्तज्वरे देयमौषधं पञ्चमेऽहनि ।
किराततिक्तामममृतां द्राक्षामामलकीं शटीम् ।
निष्काथ्य सगुडं क्वाथं वातपित्तज्वरे पिबेत् ॥”
इति किरातादिक्वाथः ॥ * ॥

त्वान्न दोष इति कार्त्तिकः । प्रकृतिसमसमवा-
यस्य विकृतिविषमसमवायस्य चायमर्थः ।
प्रकृत्या हेतुभूतया समः कारणानुरूपः सम-
वायः कार्य्यकारणभावः सम्बन्धः प्रकृतिसम-
समवायः कारणानुरूपं कार्य्यमिति यावत् ।
यथा प्रकृतैर्यथास्थितैः शुक्लैस्तन्तुभिः समवाय-
कारणैरारब्धः पटः शुक्ल एव भवति । तथा
प्रकृतेन केवलेन वातेन पित्तेन कफेन वा
जनितो ज्वरो वाताद्युचितैर्धर्म्मैर्वमथुवेगाधिक्य-

स्तैमित्यादिभिर्युक्तो भवति । विकृतिविषमसम-
वायस्तु विकृत्या हेतुभूतया विषमः कारणाननु-
रूपः समवायः कार्य्यस्य कारणेऽसम्बन्धः ।
यथा
संयोगाद्विकृताभ्यां हरिद्राचूर्णाभ्यां हेतुभूताभ्यां
विषमः कारणानुरूपो लोहितो वर्णो जायते ।
तथा योगेन विकृताभ्यां वातश्लेष्मभ्यां हेतु-
भूताभ्यां विषमा कारणाननुरूपा स्वेदस्याति-
प्रवृत्तिरिति सिद्धान्तः ॥ * ॥
अथ वातश्लेष्मज्वरस्य चिकित्सा ।
"वातश्लेष्मज्वरे देयमौषधं नवमेऽहनि ।
पिप्पली पिप्पलीमूलं चव्यचित्रकनागरैः ।
दीपनीयः स्मृतो वर्गो वातश्लेष्मज्वरापहः ॥
कोलमात्रोपयोगित्वात् पञ्चकोलमिदं स्मृतम् ।
तीक्ष्णोष्णं पाचनं श्रेष्ठं दीपनं कफवातनुत् ॥
गुल्मप्लीहोदरानाहशूलघ्नं पित्तकोपनम् ॥"
इति पञ्चकोलम् ॥ * ॥
"किरातविश्वामृतवल्लिसिंहिका-
कणाकणामूलरसोनसिन्धुकैः ।
कृतः कषायो विनिहन्ति सत्वरं
ज्वरं समीरात् सकफात् समुत्थितम् ॥"
इति किरातादिक्वाथः ॥ * ॥
"पिप्पल्यादिगणं क्वाथं पिबेद्वातकफज्जरी ।
नातःपरं किञ्चिदस्मिन् ज्वरे भेषजमुत्तमम् ॥"
इति पिप्पल्यादिक्वाथः ॥ * ॥
"पिप्पलीपिप्पलीमूलचव्यचित्रकनागरः।
वचा सातिविषा जातीपाठावत्सकरेणुकम् ॥
किराततिक्तको मूर्व्वा सर्षपा मरिचानि च ।
कट्फलं पुष्करं भार्गी विडङ्गं कर्कटाह्वयम् ॥
अर्कमूलं बृहत्सिंही श्रेयसी सदुरालभा ।
दीप्यकश्चाजमोदा च शुकनासा सहिङ्गुका ॥
एतानि समभागानि गण एषोऽष्टविंशतिः ।
एषां क्वाथो निपीतः स्याद्वातश्लेष्मज्वरापहः ॥
हन्ति वातं तथा शीतं प्रस्वेदमपि वेपथुम् ।
प्रलापञ्चातितन्द्राञ्च रोमहर्षरुची तथा ॥
महावातेऽपतन्त्रे च शून्यत्वे सर्व्वगात्रजे ।
पिप्पल्यादिर्म्महाक्वाथो ज्वरे सर्व्वत्र पूजितः ॥"
इति बृहत्पिप्पल्यादिक्वाथः ॥ * ॥
"दशमूलीरसः पीतः कणाढ्यः कफवातजे ।
ज्वरे विपाके निद्रायां पार्श्वरुक्श्वासकासके ॥
इति दशमूलीक्वाथः ॥ * ॥
तत्र श्रेयसी रास्ना वातश्लेष्मज्वरहरत्वात् ॥
"पिप्पलीभिः श्रृतं तोयमनभिष्यन्दि दीपनम् ।
वातश्लेष्मज्वरं हन्ति सेवितं प्लीहनाशनम् ॥"
इति पिप्पलीक्वाथः ॥ * ॥

"स्वेदोद्गमे भृष्टकुलत्थचूर्ण-
निपातनं शस्तमिति ब्रुवन्ति ।
जीर्णं शकृद्गोर्लवणस्य भाजनं
संचूर्णितं स्वेदहरं सुधूलनात् ॥"
मरिचं पिप्पली शुण्ठी पथ्या लोध्रश्च पौष्करम् ।
भूनिम्बः कटुका कुष्ठं कर्च्चूरो लिङ्गिका शटी ॥
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ।
एतदुद्धूलनं श्रेष्ठं स्रोतोवत् स्वेदनिर्गमे ॥"

लिङ्गिका पञ्च गुरिया इति लोके । अत्र शटी

गन्धपलाशी । इति मरिचाद्युद्धूलनम् ॥ * ॥
"भूनिम्बकारवीतिक्तावचाकट्फलजंरजः ।
एषामुद्धूलनं श्रेष्ठं सन्ततं स्वेदसंस्रवे ॥"
इति भूनिम्बाद्युद्धूलनम् ॥ * ॥
पूर्ब्बोक्तो बालुकास्वेदोऽप्यत्र समुचितः ॥ यत
उक्तम् ।
"पीनसश्वासवाधीर्य्ये जङ्घापार्श्वास्थिशूलिनि ।
वातश्ले ष्मज्वरे स्वेदं कारयेत् तद्विधानवित् ॥ * ॥
मातुलुङ्गफलकेशरो धृतः
सिन्धुजन्ममरिचान्वितोमुखे ।
हन्ति वातकफरोगमास्यगं
शोषमाशु जडतामरोचकम् ॥
इति कवलः ॥"
अथान्नमाह ।
"महत्या पञ्चमूल्यान्नं सम्यक् सिद्धं चिकित्सकः ।
सप्तमे दिवसे दद्यात् ज्वरे वातबलासजे ॥"
इति वातश्लेष्मज्वराधिकारः ॥ * ॥

अथ पैत्तिकश्लेष्मज्वराधिकारः । तत्र तस्य

विप्रकृष्टसन्निकृष्टकारणकथनपूर्ब्बिकां सम्पाप्ति-
माह ।
"पित्तश्ले ष्मकरैः पित्तकफवामाशयाश्रयौ ।
बहिर्न्निरस्य कोष्ठाग्निं रसगौ ज्वरकारिणौ ॥"
पूर्ब्बरूपमाह ।
"प्राग्रूपे पित्तकफयोः स्यातां पित्तकफे ज्वरे ॥"
अथ तस्य लक्षणमाह ।
"लिप्ततिक्तास्यता तन्द्रा मोहः कासोऽरुचिस्तृषा ।
मुहुर्द्दाहो मुहुः शीतं पित्तश्ले ष्मज्वराकृतिः ॥"
आस्यस्य तिक्तत्वं पित्तेन । लिप्तत्वं कफेन ।
तन्द्रा अर्द्धोन्मीलितनेत्रत्वम् । मोहो मूर्च्छा ॥ * ॥
अथ पित्तश्ले ष्मज्वरस्य चिकित्सा ।
"पित्तश्ले ष्मज्वरे देयमौषधं दशमेऽहनि ।
गुडूचीनिम्बधान्याकचन्दनं कटुरोहिणी ॥

दाहतृष्णारुचिच्छर्द्दिकासशूलनिवारणम्॥"
इति कण्टकार्य्यादिक्वाथः ॥ * ॥
"नागरोशीरविल्वाब्दधान्यमोचरसाम्बुभिः।
कृतः क्वाथो भवेद्ग्राही पित्तश्ले ष्मज्वरापहः ॥"
इति नागरादिक्वाथः ॥ * ॥
"सशर्क्करामक्षमात्रां कटुकाञ्च्येष्णवारिणा ।
पीत्वा ज्वरं जयेज्जन्तुः पित्तश्ले ष्मसमुद्भवम् ॥"

अत्र कटुकाया द्वादशमाषाः । शर्क्कराया-

श्चत्वारो माषाः । एवं कर्ष इति चक्रदत्तः ॥
वैद्यव्यवहारे तु कटुकाशर्क्करयोः समभागयो-
रेव कर्षः । इति कटुकीकल्कः ॥ * ॥
"सपत्रपुष्पवासायाः रसः क्षौद्रसितायुतः ।
पित्तश्ले ष्मज्वरं हन्ति सास्रपित्तं सकामलम् ॥"

अत्र वासाया रसो अर्द्धपलपरिमितो देयः ।

मधुसितयोः प्रत्येकं टङ्कः प्रक्षेप्तव्यः ॥ * ॥
अथान्नमाह ।
"कषायः परिपीतस्तु शृङ्गवेरपटोलयोः ।
पित्तश्ले ष्मज्वरवमीदाहकण्डूहरो भवेत् ॥" * ॥
अन्यच्च ।
"पटोलधान्ययोर्यूषः पित्तश्ले ष्मज्वरापहः ॥"
इति पित्तश्ले ष्माधिकारः ॥ * ॥

अथ सन्निपातज्वराधिकारः । तस्य निदा-

नादिचिकित्सा सन्निपातज्वरशब्दे द्रष्टव्या ॥ * ॥
अथागन्तुकज्वराधिकारमाह। तत्रागन्तुक-
ज्वरस्य निदानान्याह ।
"अभिघाताभिषङ्गाभ्यामभिचाराभिशापतः।
आगन्तुर्जायते दोषैर्यथास्वं तं विभावयेत् ॥"

अभिघातः शस्त्रमुष्टिलगुडादिभिरभिहननम्।

अभिषङ्गः कामशोकभयक्रोधभूतादीनामावेशः ।
अभिचारः कृत्याद्युत्पादनम् । अभिशापः
ब्राह्मणगुरुवृद्धसिद्धादिकृतः शापः । तं आगन्तु-
ज्वरं यथास्वं यथादोषलक्षणं दोषैर्व्विभावयेत्
विजानीयात् ॥ * ॥ अपराण्यपि निदाना-
न्याह ।
"ये भूतविषवाय्वग्निक्षतभङ्गादिसम्भवाः।
रागद्वेषभयाद्ये च ते स्युरागन्तवो गदाः ॥"
भयाद्येत्याद्यशब्देन भूतविषवाय्वग्निक्षतभङ्गादयः
संगृह्यन्ते । तेन रागादयोभङ्गाद्यन्ता हेतवो-

| | | |
|---|---|---|
| "सूतकं टङ्कणं भृष्टं गन्धं शुद्धं समं समम् ।<br>द्विगुणं सूतकाद्देयं जैपालं तुषवर्ज्जितम् ॥<br>सैन्धवं मरिचं चिञ्चा त्वक् क्षारः शर्करापि च ।<br>प्रत्येकं सूततुल्यं स्याज्जम्बीरैर्म्मर्द्दयेद्दिनम् ॥<br>सूर्य्यशेस्वरनामायं रसो गुञ्जाद्वयोन्मितः ।<br>भक्षितस्तप्ततोयेन वातश्ले ष्मज्वरापहः ॥"<br>सूर्य्यशेखरो रसो वातश्लेष्मज्वरे शीतज्वरे च ॥<br>रमप्रदीपे । | गुडूच्यादिरयं क्वाथः पाचनो दीपनः स्मृतः ।<br>तृष्णादाहारुचिच्छर्द्दिपित्तश्लेष्मज्वरापहः ॥"<br>इति गुडूच्यादिक्वाथः ॥ * ॥<br>"अमृताकटुकारिष्टपटोलं घनचन्दनम् ।<br>नागरेन्द्रयवश्चैतदमृताष्टकमीरितम् ॥<br>क्वथितं सकणाचूर्णं पित्तश्लेष्मज्वरापहम् ।<br>हृल्लासारोचकच्छर्द्दितृष्णादाहनिवारणम् ॥"<br>इति अमृताष्टकम् ॥ * ॥<br>"कण्टकार्य्यमृता भार्गी विश्वेन्द्रयववासकम् ।<br>भूनिम्बं चन्दनं मुस्तं पटोलं कटुरोहिणीम् ॥<br>विपाच्य पाययेत् क्वाथं पित्तश्ले ष्मज्वरापहम् । | ऽप्यागन्तुसंज्ञाः स्युः । कार्य्यकारणयोरभेदोप-<br>चारात् । एतेन आगन्तुजः स्मृत इत्यत्राप्या-<br>गन्तुशब्दो हेतुवाची आगन्तुर्ज्जायते दौषैरि-<br>त्यत्र व्याधिवाची अभिघाताभिषङ्गाभ्यामित्यादि<br>श्लोके दौषैर्य्यथास्वं तं विभावयेदितिवचनेनैव<br>प्रतीयते । अभिधातादीनां विप्रकृष्टकारणत्वं<br>मिथ्याहारविहाराणामिवदोषाणां सन्निकृष्ट-<br>कारणत्वम् । तथा सति दक्षापमानसंक्रुद्धरुद्रे-<br>त्यादि श्लोके आगन्तुज्वरस्याष्टमत्वविघातो<br>दोषजेष्वेव प्रवेशात् । उच्यते । आगन्तुज्वरस्य<br>दोषा आरम्भका न किन्तु पश्चादनुबन्धिनः ॥ * ॥<br>तथा चागन्तुज्वरस्य सम्प्राप्तिमाह चरकः ।<br>आगन्तुर्हि व्यथापूर्ब्बो जायते पश्चान्निजैर्दोषै-<br>रनुबध्यत इति ॥ * ॥ |

तत्र कस्यागन्तोः को निजो दोष इत्यपेक्षाया-
माह ।
“कामशोकभयाद्वायुः क्रोधात् पित्तं त्रयो मलाः
।
भूताभिषङ्गात् कुप्यन्ति भूतसामान्यलक्षणाः
॥”
कामशोकभयात् कामशोकभयजादागन्तोर्वायुः
कुप्यति । क्रोधात् क्रोधजादागन्तोः पित्तं
कुप्यति । भूताभिषङ्गात् भूतावेशजादागन्तोः
त्रयो मला दोषाः कुप्यन्ति इत्यर्थः । भूत-
सामान्यलक्षणाः भूतस्य भूतलक्षणस्य
सामान्यं
समानता येषां तानि भूतसामान्यानि भूतसा-
मान्यानि लक्षणानि येषां ते भूतसामान्य-
लक्षणाः मलाः ॥ * ॥

अथागन्तुज्वराणां
हेतुभेदैर्लक्षणभेदानाह ।

“श्याव्यास्यता विषकृते तथातीसार एव च ।
भक्तारुचिः पिपासा च तोदश्च सह मूर्च्छया
॥”
विषकृते स्थावरजङ्गमविषभक्षणकृते ज्वरे ।
श्यावः शुक्लानुविद्धः कृष्णो वर्णः शाकवर्णो
वा ।
अतीसारः स्थावरविषेणैव तस्याधोगामित्वात्
।
तोदः सूचीव्यधनेनेव व्यथा ॥ * ॥
“ओषधीगन्धजे मूर्च्छा शिरोरुग्वमथुस्तथा ।
कामजे चित्तविभ्रंशस्तन्द्रालस्यमभोजनम्॥
हृदये वेदना चास्य गात्रञ्च परिशुष्यति ॥”
कामजे समीहितकान्ताद्यप्राप्तिनिमित्तकेज्वरे
।
चकारात् वाग्भटोक्तान्यपि लक्षणानि बोद्ध-
व्यानि । तानि यथा, --
“कामाद्भ्रमोऽरुचिर्द्दाहो ह्रीनिद्राधीधृतिक्षयः ।
भयात् प्रलापः शोकाच्च भवेत् कोपाच्च
वेपथुः ॥”
भयात् भयजे ज्वरे प्रलापः । शोकाच्च
चकारेण
प्रलाप एवानुकृष्यते । कोपाच्च कोपादपि
वेपथुर्भवति ॥ * ॥ ननु वेपथुर्व्वातस्य धर्म्मः
तत्
कथं क्रोधजे ज्वरे वेपथुः । यत उक्तम् ।
क्रोधात्
पित्तमिति । उच्यते ।

“लङ्घनं न हित कामशोकचिन्ताप्रहारजे ।
भयभूतश्रमक्रोधलङ्घनैश्च कृते ज्वरे ॥
किन्तु दीप्ताग्नये तत्र दद्यान्मांसरसौदनम् ।
अभिघातज्वरे युञ्ज्यात् क्रियामुष्णविवर्ज्जिताम्
॥
कषायं मधुरं स्निग्धं यथादोषमथापि वा ।
अभिघातज्वरो नश्येत् पानाभ्यङ्गेन सर्पिषः ॥
रक्तावसेकैर्म्मेध्यैश्च तथा मांसरसौदनैः ॥”
मेध्यैर्म्मेधाय हितैः ॥ * ॥
“व्यधबन्धश्रमात्यध्वभङ्गभ्रंशसमुद्भवान् ।
ज्वरानुपाचरेत् पूर्ब्बं क्षीरमांसरसौदनैः ॥”
व्यधस्ताडनं कर्णादिवेधो वा । भङ्गश्छेदभेदादिकः
।
भ्रंशो वृक्षादितः पतनम् ॥ * ॥
“अध्वश्रान्तेषु चाभ्यङ्गं दिवानिद्राञ्च कारयेत् ।
ओषधीगन्धविषजौ विषपित्तप्रवाधनैः ।
जयेत् कषायैर्म्मतिमान् सर्व्वगन्धकृतैर्भिषक् ॥”
सर्व्वगन्धमाह ।
“चातुर्जातककर्पूरकक्कोलागुरुकुङ्कुमम् ।
लवङ्गसहितञ्चैव सर्व्वगन्धं विनिर्द्दिशेत् ॥ * ॥
क्रोधजे पित्तजे काम्ये नार्य्याः सद्वाक्यमेव च ।
आश्वासेनेष्टलाभेन वायोः प्रशमनेन च ॥
हर्षणैश्च शमं यान्ति कामशोकभयज्वराः ।
कामैरथ मनोघ्नैश्च पित्तघ्नैश्चाप्युपक्रमैः ॥
सद्वाक्यैश्च शमं याति ज्वरः क्रोधसमुत्थितः ॥”
कामैः कामावेशैः । मनोघ्नैः धिक्कारादिभि-
र्भयजनकवचनैर्व्वा ॥ * ॥
“कामात क्रोधज्वरो नश्येत् क्रोधात् कामज्वर-
स्तथा ।
षातिताभ्यामुभाभ्याञ्च कामक्रोधज्वरक्षयः ॥”
घातिताभ्यामुभाभ्यां मनसि निगृहीताभ्यां काम-
क्रोधाभ्याम् ॥ * ॥
“भूतविद्यासमुद्दिष्टैर्बन्धावेशनताडनैः ।
जयेद्भूताभिषङ्गोत्थं मनःसान्त्वैश्च मानसम् ॥”
ताडनैरित्यस्य स्थाने केचित् पूजनैरिति पठन्ति
॥
“सहदेवाया मूलं विधिना कण्ठे निबद्धमपहरति ।
एकद्वित्रिचतुर्भिर्द्दिवसैर्भूतज्वरं पुंसाम् ॥
अभिचाराभिशापोत्थौ ज्वरौ होमादिभिर्जयेत् ।
दानस्वस्त्ययनातिथ्यैरुत्पातग्रहदुष्टिजौ ॥”
इत्यागन्तुज्वराधिकारः ॥ * ॥
अथ विषमज्वराधिकारमाह । तत्र विषम-
ज्वरस्य निदानादिचिकित्सापर्य्यन्तं विषमज्वर-
शब्दे द्रष्टव्यम् ॥ * ॥

“विषं भागद्वयं दग्धकपर्द्दः पञ्चभागकः ।
मरिचं नवभागञ्च चूर्णं वस्त्रेण शोधयेत् ॥
आर्द्रकस्य रसेनास्य कुर्य्यान्मुद्गनिभां वटीम् ।
वारिणा वटिकायुग्मं प्रातः सायञ्च भक्षयेत् ॥
अयं रसो ज्वरे योज्यः सामे दुर्ज्जलजेऽपि च ।
अजीर्णाध्मानविष्टम्भशूलेषु श्वासकासयोः ॥”
इति दुर्ज्जलजेता रसः ॥ * ॥
“पटोलमुस्तामृतवल्लिवासकं
सनागरं धान्यकिराततिक्तकम् ।
कषायमेषां मधुना पिबन्नरो
निवारयेत् दुर्ज्जलदोषमुल्वणम् ॥”
इति पटोलादिक्वाथः ॥ * ॥
“किराततिक्तत्रिवृदम्बुपिप्पली-
विडङ्गविश्वाकटुरोहिणीरजः ।
निहन्ति लीढं मधुनातिसत्वरं
सुदुस्तरं दुर्ज्जलदोषजं ज्वरम् ॥”
इति किराततिक्तादिचूर्णम् ॥ * ॥
“भोजनादौ नरैर्भुक्तं शुण्ठीराज्यभयोत्थितम् ।
कल्कं तु सहते नित्यं नानादेशोद्भवं जलम् ॥
महार्द्रकयवक्षारौ पीत्वा चोष्णेन वारिणा ।
नानादेशसमुद्भूतंवारिदोषमपोहति ॥” * ॥
अथ साध्यस्य ज्वरस्य लक्षणमाह ।
“बलवत्स्वपि दोषेषु ज्वरः साध्योऽनुपद्रवः ॥”
ज्वरस्योपद्रवानाह ।
“श्वासमूर्च्छारुचिच्छर्द्दितृष्णातीसारविड्ग्रहाः ।
हिक्काकासाङ्गभेदाश्च ज्वरस्योपद्रवा दश ॥” * ॥
प्रसङ्गादुपद्रवाणां चिकित्सायां विशेषमाह ।
“संजातोपद्रवो व्याधिस्त्याज्यो न स्याच्चिकित्-
सकैः ।
व्याधौ शान्त प्रणश्यन्ति सद्यः सर्व्वेऽप्युपद्रवाः ॥
अतो व्याधिं जयेद्यत्नात् पूर्ब्बं पश्चादुपद्रवम् ।
भिषग्यः कुशलः सोऽत्र जयेत् पूर्ब्बमुपद्रवम् ॥
तेष्वपि प्रचुरेषु प्राङ्नाशयेदाशुकारिणम् ।
मूलव्याधिं जयेत् पूर्ब्बं जेयो यो वा भवेद्बली ॥
अविरोधेन वा कुर्य्यादुभयोरपि च क्रियाम् ॥”
तत्र ज्वरे श्वासस्य चिकित्सा ।
“सिंही व्याघ्री ताम्रमूली पटोली
शृङ्गी पद्मा पुष्करं रोहिणी च ।
शाकं शट्या शैलमल्ल्याश्च बीजं
श्वासं हन्यात् सन्निपाते दशाङ्गः ॥”
सिंही वडीकटैया । व्याघ्री कटैया । ताम्रमूली
दुरालभा । पद्मा भार्गी । रोहिणी कटुकी ।
शैलमल्ली कोरैया । इति दशाङ्गो योगः ॥ * ॥
“भार्गीनिम्बघनाभयामृतलताभूनिम्बवासाविषा
त्रायन्तीकटुकावचात्रिकटुकश्योनाकशत्रुद्रुमैः ।

“एकः प्रकुपितो दोष इतरानपि कोपयेत् ॥”
इति वचनात् पित्तकोपितषातजन्य एवात्र वेपथुः ॥ * ॥ किञ्च क्रोधाद्वायुरपि भवति । यत उक्तं विदेहेन । क्रोधशोकौ स्मृतौ वात-पित्तरक्तप्रकोपनाविति । यत उक्तम् ।
“भूताभिषङ्गादुद्वेगो हास्यं रोदनकोपने ।
केचिद्भूताभिषङ्गोत्थं ब्रुवते विषमज्वरम् ॥”
भूताभिषङ्गोत्थो विषमज्वरो भवति । कदा-चिदपि वेगवान् कदाचिच्छान्तवेग इत्यर्थः ॥
‘अभिचाराभिशापाभ्यां मोहस्तृष्णा च जायते ।”
तृष्णा चेति चकारेण हारीतानुवादि वाग्-भटोक्तञ्च बोद्धव्यम् । तद्यथा, --
“अत्राभिचारिकैर्म्मन्त्रैर्हूयमानस्य तप्यते ।
पूर्ब्बं मनस्ततो देहस्ततो विष्फोटविभ्रमैः ।
सदाहमूर्च्छाग्रस्तस्य प्रत्यहं वर्द्धते ज्वर इति ॥”
अथ तेषां चिकित्सा ।
“आगन्तुजे ज्वरे नैव नरः कुर्व्वन्ति लङ्घनम् ॥”
तथा च वाग्भटः ।
“शुद्धवातक्षयागन्तुजीर्णज्वरिषु लङ्घनम् ॥”
नेष्यते इति शेषः । अन्यच्च ।

अथ जीर्णज्जराधिकारः । तस्य निदानादिकं

जीणज्जरशब्दे द्रष्टव्यम् ॥ * ॥

अथ दुर्ज्जलजनितस्य ज्वरस्य चिकित्सामाह ।

“हरीतकी निम्बपत्रं नागरं सैन्धवोऽनलः ।
एषां चूर्णं सदा खादेत् दुर्ज्जलज्वरशान्तये ॥”
इति हरीतक्यादि चूणम् ॥ * ॥
“अरुचिमनलमान्द्यं पीनसश्वासकासा-नुदरमुदकदोषानाशु हन्यादशेषान् ।
जनयति तनुकान्तिं चित्तनेत्रप्रसादं पलपरिमितशुण्ठीक्षोदसिद्धः कषायः ॥”
इति शुण्ठीक्वाथः ॥ * ॥

रास्नायासपटोलपाटलिशटीदार्व्वीविशालाम्
त्रिवृद्-
ब्राह्मीपुष्करसिंहिकाद्वयनिशाधात्र्यक्षवो-दुमैः ॥
क्वाथोऽयं खलु सन्निपातनिवहान् द्वात्रिंशतां पानतो ।
दुर्द्धर्षान्निजतेजसा विजयते सर्पान् गरुत्मानिव

किञ्च श्वासवलासकासगुदरुघृद्रोगहिक्कामरु
न्मन्यास्तम्भगलामयार्द्दितमलाविष्टम्भव्रध्ना-
नपि ॥”
विषा अतीस । शक्रद्रुमः ककुभः । देवद्रुमः देव-
दारु ॥ इति द्वात्रिंशदङ्गक्वाथः ॥ * ॥
“मधुना कृष्णाकट्फलकर्क्कटशृङ्गीभवं चूर्णम् ।
श्वासामये महोग्रे लीढ्वा लोकः सुखी भवति ॥
वन्योपलाग्नितापितदात्रस्याग्रेणपञ्जरे दाहः ।
अपहरति श्वासामयमसंशयं भाषितं मुनिभिः ॥”
अथ ज्वरे मूर्च्छायाश्चिकित्सा ।
“आर्द्रकस्य रसैर्नस्यं मूर्च्छायामाचरेन्नरः ।
अञ्जनञ्च प्रयुञ्जीत मधुसिन्धुशिलोषणैः ॥
शीताम्भसाक्षिसेकः सुरभिर्धूपः सुगन्धिपुष्पञ्च ।
मृदुतालवृन्तवातः कोमलकदलीदलस्पर्शः ॥”
अथ ज्वरे अरुचेश्चिकित्सा ।
“अरुचौ तु शृङ्गवेरजरसकैः साम्लैः ससिन्धुजैः
कवलः ।
सिन्धूत्थमातुलुङ्गीफलकेशरधारणं वक्त्रे ॥”
अन्यच्च ।
“अरुचौ मातुलुङ्गस्य केशरं साज्यसैन्धवम् ।
धात्रीद्राक्षासितानां वा कल्कमास्ये तु
धारयेत् ॥”
अथ ज्वरे छर्द्देश्चिकित्सा ।
“क्वाथो गुडू च्याः समधुः सुशीतः
पीतः प्रशान्तिं वमनस्य कुर्य्यात् ।
विण्मक्षिकाणां मधुनावलीढा
सचन्दना शर्करयान्विता च ॥”
अथ ज्वरे तृष्णायाश्चिकित्सा ।
“दन्तशठवीजपूरकदाडिमवदरैः सचुक्रकैर्व्वदने ।
लेपो जयति पिपासामथ रजतगुटीमुखान्तःस्था ॥
शीतं पयः क्षौद्रयुतं निपीत-
माकण्ठमाश्वेव तदुद्वमेच्च ।
तर्षप्रकर्षप्रशमाय वक्त्रे
दध्याद्गदक्षौद्रवटाग्रलाजान् ॥” * ॥
अथ ज्वरे अतीसारस्य चिकित्सा ।
“लङ्घनमेकं मुक्त्वा न चान्यदस्तीह भेषजं बलिनः
।
समुदीर्णदोषनिचयं शमयति तत् पाचयत्यपि च ॥
वत्सादनीवत्सकवारिवाह-
विश्वम्भरानिम्बविषाः सविश्वाः ।
ज्वरातिसारं त्वरितं जयन्ति
विश्वामृतावत्सकवारिवाहः ॥”
विश्वम्भरानिम्बो भूनिम्बः ।
“पाठामृतापर्पटमुस्तविश्वा-
किराततिक्तेन्द्रयवान् विपाच्य ।

अथ ज्वरे हिक्कायाश्चिकित्सा ।
“नीरेण सिन्धूत्थरजोऽतिसूक्ष्मं
नस्येन नूनं विनिहन्ति हिक्काम् ।
शुण्ठी हठाद्वा सितया समेता
धूपोऽथवा हिङ्गुसमुद्भवश्च ॥” * ॥
अथ ज्वरे कासस्य चिकित्सा ।
“कासे कणाकणामूलं कलिद्रुमफलं रजः ।
सविश्वभेषजं लिह्यात् मधुना वा वृषाद्रसम् ॥”
रजः पर्पटकम् ।
“पुष्करमूलकटुत्रिकशृङ्गीकट्फलयासककारु
विकाभिः ।
मधुलुलिताभिरयं खलु लेहः कासरिपुः कफ-
रोगहरश्च ॥” * ॥
अथ ज्वरे दाहस्य चिकित्सा ।
“दाहाधिकारलिखितं दाहे कुर्य्याच्चिकित्सितम् ।
परं ज्वराविरुद्धं यन्मुख्यो नाश्यो ज्वरो यतः ॥”
अथ सुखसाध्यस्य ज्वरस्य लक्षणम् ।
“सन्तापोऽभ्यधिको वाह्यस्तृष्णादीनाञ्च मार्द्दवम् ।
वहिर्व्वेगस्य लिङ्गानि सुखसाध्यत्वमेव च ॥”
तृष्णादीत्यादिशब्देनान्तर्द्दाहसन्ध्यस्थि-व्यथा-
श्वासा गृह्यन्ते । तेषामार्द्दवमल्पता । बहि-
र्व्वेगस्य ज्वरस्य ।
“वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात् ।
प्राकृतः सुखसाध्यस्तु शरत्सुरभिसम्भवः ॥”
सुरभिर्व्वसन्तः ॥ * ॥
अथ कष्टसाध्यस्य ज्वरस्य लक्षणमाह ।
“वैकृतोऽन्यः स दुःसाध्यः प्राकृतेष्वनिलोद्भवः ॥”
अन्यः प्राकृतादन्यः वैकृतः । * । वर्षादिषु
ज्वरं जनयतां वातादीनां चिकित्साविशेषार्थं
प्राधान्यमप्राधान्यञ्चाह ।
“वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितं ज्वरम् ।
कुर्य्यात् पित्तञ्च शरदि तस्य चानुबलः कफः ॥”
तस्य पित्तज्वरस्य चिकित्सामाह ।
“तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद्भयम् ॥”
तत्प्रकृत्या तस्य पित्तस्य प्रकृत्या स्वभावेन ।
यत उक्तम् ।
“कफपित्ते द्रवे धातू सहेते लङ्घनं बहु ॥” इति ।
विसर्गाच्च शरदो विसर्गकालत्वाच्च । यत उक्तम् ।
वर्षाशरद्धेमन्ता विसर्गाः कालास्तत्रोपचितबला-
प्राणिनो भवन्ति सोमस्य बलवत्त्वादिति । तत्र
शरदि पित्तज्वरे अनशनाद्भयं न । कफो वसन्ते
तमपि वातपित्तं भवेदनु । वसन्ते कफज्वरेऽपि
कफप्रकृत्या लङ्घनाद्भयं न भवति । किन्तु
वसन्तस्यादानकालत्वात्निःशङ्कं न कर्त्तव्यम् ।
यत उक्तम् । शिशिरवसन्त-ग्रीष्मास्त्वादानकालाः

नस्य प्राधान्येन चिकित्सा कर्त्तव्या । तथा
चोक्तम् ।
“संसर्गे यो गरीयान् स्यादुपक्रम्य स वै भवेत् ।
शेषदोषाविरोधेन सन्निपाते तथैव च ॥”
संसर्गे दोषद्वयस्य संसर्गे । गरीयान् प्रधानः ।
“अन्तर्द्दाहोऽधिका तृष्णा प्रलापः श्वसनं भ्रमः
।
सन्ध्यस्थिशूलमस्वेदो दोषवर्च्चोविनिग्रहः ॥
अन्तर्व्वेगस्य लिङ्गानि कष्टसाध्यत्वमेव च ॥”
वर्च्चोविनिग्रहः पुरीषाप्रवृत्तिः ॥ * ॥
अथासाध्यस्य ज्वरस्य लक्षणमाह ।
“ज्वरः क्षीणस्य शूलस्य गम्भीरो दैर्घ्यरात्रिकः ।
असाध्यो बलवान् यश्च केशसीमन्तकृत् ज्वरः
॥”
दैर्घ्यरात्रिकः बहुरात्रानुबन्धी । केशसीमन्तकृत्
प्रभावात् केशेषु सीमन्तं यः करोति ॥ * ॥
गम्भीरस्य लक्षणमाह ।
“गम्भीरस्तु ज्वरो ज्ञेयो ह्यन्तर्द्दाहेन तृष्णया ।
आनद्धत्वेन चात्यर्थं कासश्वासोद्गमेन च ॥”
आनद्धत्वेन विबद्धमलत्वेन ॥ * ॥ सामान्य-
ज्वरेऽपि कर्णमूलशोथस्यासाध्यत्वादिकमाह ।
“ज्वरस्य पूर्ब्बं ज्वरमध्यतो वा
ज्वरान्ततो वा श्रुतिमूलशोथः ।
क्रमादसाध्यः खलु कृच्छ्रसाध्यः
सुखेन साध्यो मुनिभिः प्रदिष्टः ॥” * ॥
अथारिष्टमाह । तत्रारिष्टस्य लक्षणम् ।
“रोगिणो मरणं यस्मादवश्यम्भावि लक्ष्यते ।
तल्लक्षणमरिष्टं स्यादिष्टमप्यभिधीयते ॥
हेतुभिर्बहुभिर्जातो बहुभिर्बहुलक्षणः ।
ज्वरः प्राणान्तकृद्यश्च शीघ्रमिन्द्रियनाशनः ॥”
शीघ्रमिन्द्रियनाशनः उत्पन्नमात्र एव चिकित्-
स्यमानोऽपीन्द्रियाणां चक्षुरादीनां शक्तिं यो
नाशयति ॥ * ॥ अन्यच्चारिष्टमाह ।
“विसंज्ञस्ताम्यते यस्तु शेते निपतितोऽपि वा ।
शीतार्द्दितोऽन्तरुष्णश्च ज्वरेण म्रियते नरः ॥”
विसंज्ञः विगतज्ञानः । ताम्यते नष्टहर्षः । शेते
निपतितोऽपि वा अत्रापिशब्द एवार्थः निप-
तित एव तिष्ठति न चोत्थातुं समर्थः तथा सन्
शेत एव । शीतार्दितः बहिः । अन्तरुष्णः
अन्तर्द्दाहवान् ॥ * ॥ अन्यच्च ।
“यो हृष्टरोमा रक्ताक्षो हृदि सङ्घातशूलवान् ।
वक्त्रेण चैवाच्छ्वसिति ज्वरस्तं हन्ति मानवम्
॥”
हृष्टरोमा रोमाञ्चवान् । हृदि सङ्घातशूलवान्
सान्निपातिकशूलवान् । वक्त्रेण चैवोच्छ्वसिति

| | | |
|---|---|---|
| पिबन् हरत्येव दृढेन सर्व्व-<br>ज्वरातिसारानपि दुर्न्निवारान् ॥" * ॥<br>अथ ज्वरे विड्ग्रहस्य चिकित्सा ।<br>"विड्ग्रहे वातजित् कर्म्म कुर्य्यादन्नानुलोमनम् ।<br>मलं प्रवर्त्तयेदाशु तीक्ष्णाभिः फलवर्त्तिभिः ॥<br>पथ्यारग्वधतिक्तात्रिवृदामलकैः शृतं तोयम् ।<br>जीर्णज्वरे विबन्धे दद्यादाश्वेव विड्ग्रहः<br>शाम्येत् ॥" | स्तत्रापचितबलाः प्राणिनो भवन्ति सूर्य्यस्य<br>बलवत्त्वादिति । एतेनेदं उक्तम् । वर्षासु वायुः<br>प्रधानं पित्तश्लेष्माणावप्रधाने । शरदि पित्तं<br>प्रधानं कफोऽप्रधानम् । वसन्ते श्लेष्मा प्रधानं<br>वातपित्ते अप्रधाने । तत्र प्रधानस्य प्राधा-<br>न्येन चिकित्सा कर्त्तव्या । सा चाप्रधाना<br>निषिद्धा विषेया । एवं वैकृतेष्वपि प्रधा- | न तु नासिकया ॥ * ॥ अन्यच्च ।<br>"हिक्काश्वासतृषायुक्तं मूढं विभ्रान्तलोचनम् ।<br>सन्ततोच्छासिनं क्षीणं नरं क्षपयति ज्वरः ॥"<br>क्षपयति समापयतीत्यर्थः ॥ * ॥ अन्यच्च ।<br>"हतप्रभेन्द्रियं क्षाममरोचकनिपीडितम् ।<br>गम्भीरतीक्ष्णवेगार्त्तं ज्वरितं परिवर्ज्जयेत् ॥"<br>हता प्रभा दीप्तिर्येषाम् । अथवा हता प्रभा<br>प्रतिभा विषयग्रहणशक्तिर्येषां तथाविधानीन्द्रि-<br>याणि यस्य तं हतप्रभेन्द्रियम् । क्षामं क्षीणम् ।<br>गम्भीरतीक्ष्णवेगार्त्तं गम्भीरः उक्तलक्षणः |

तीक्ष्णवेगः अतिदुःसहवेगः ताभ्यां आर्त्तं दुःखितम् ॥ * ॥ अन्यच्च ।
"मरणं प्राप्नुयात्तत्र शुक्रस्थानगते ज्वरे ।
शेफसः स्तब्धता मोक्षः शुक्रस्य तु विशेषतः ॥"
व्याख्यातोऽयं श्लोकः ॥ * ॥
विषमज्वरस्यारिष्टमाह।
"आरम्भाद्विषमो यस्य यस्य वा दैर्घ्यरात्रिकः ।
क्षीणस्य चातिरूक्षस्य गम्भीरोहन्ति यस्य तम् ॥"
यस्य आरम्भाद्विषमः प्रथमोत्पत्तेरेव विषमः न तु ज्वरोत्सृष्टस्य । यस्य दैर्घ्यरात्रिको वा यस्य क्षीणस्यातिरूक्षस्य च गम्भीरोभवति तंविषमो दैर्घ्यरात्रिको गम्भीरश्च हन्तीत्यर्थः ॥ इति ज्वराधिकारः ॥ * ॥ अथ ज्वरातिसाराधिकारः।
"ज्वरातिसारयोरुक्तं निदानं यत् पृथक् पृथक् ।
तस्माज्ज्वरातिसारस्य निदानं नोदितं पुनः ॥"
अथ ज्वरातिसारस्य चिकित्सामाह।
"ज्वरातिसारयोरुक्तं भेषजं यत् पृथक् पृथक् ।
न तन्मिलितयोः कार्य्यमन्योन्यं वर्द्धयेत् पुनः ॥"
अयमभिप्रायः । ज्वरहरमनुलोमनं भवति । अतीसारहरं स्तम्भनं भवति । अतः परस्पर-विरुद्धत्वात् पृथक् उक्तं भेषजं मिलितयोर्न्न कार्य्यम् । यत आह ।
"अनुलोमनं ज्वरघ्नं ग्राहकमतिसारहृद्भवति।
पृथगुत्तमौषधं तज्ज्वरातिसारे विरुद्धमन्योन्यम्॥
अतस्तौ प्रतिकुर्व्वीत विशेषोक्तचिकित्सितैः ॥
लङ्घनमेकं मुक्त्र्य न चान्यदस्तीह भेषजं बलिनः ।
समुदीर्णदोषनिचयं तत् पाचयेत्तथा शमयेत् ॥
लङ्घनमुभयोरुक्तं मिलिते कार्य्यं विशेषतस्तदनु ।
उत्पलषष्ठकसिद्धं लाजमण्डादिकं सकलम् ॥"
उत्पलषष्ठकं यथा, --
"पृश्निपर्णीबलाविल्वधनिकानागरोत्पलैः ।
ज्वरातिसारी पेयां वा पिबेत् साम्लां शृतां नरः ॥"
अत्र लाजमण्डाद्यपेक्षया वाशब्दः । अतिसारे पुरीषातिप्रवृत्त्या साम्लत्वञ्च दाडिमरसादिना कर्त्तव्यम् । इत्यत्पलषष्ठकम् ॥ * ॥
"कणा करिकणा लाजक्वाथो मधुसितायुतः ।
पीतो ज्वरातिसारस्य तृष्णावम्योश्च नाशनः ॥"
इति कणादिक्वाथः ॥ * ॥
"नागरातिविषामुस्तामृताभूनिम्बवत्सकैः ।
क्वाथः सर्व्वज्वरहरः सर्व्वातीसारनाशनः ॥"
इति नागरादिक्वाथः ॥ * ॥
"गुडूच्यतिविषाधान्यशुण्ठीविल्वाब्दबालकैः ।
पाठा भूनिम्बकुटजं चन्दनोशीरपर्पटैः ।
पिबेत् कषायं सक्षौद्रं ज्वरातीसारशान्तये ॥
हृल्लासारुचितृड्दाहवमीनांविनिवृत्तये ॥"
"नागरातिविषाविश्वागुडूचीविल्वमुस्तकैः ।
कषायः पाचनः शोथज्वरातीसारवारणः ॥"
इति नागरादिक्वाथः ॥ * ॥
"दशमूलीकषायेण विश्वामक्षसमां पिबेत् ।
ज्वरे चैवातिसारे च सशोथे ग्रहणीगदे ॥"
इति दशमूलीक्वाथः ॥ * ॥
इति ज्वरातिसाराधिकारः । इति भावप्रकाशः ॥

**ज्वरघ्नः**, पुं, (ज्वरं हन्तीति । हन् + टक् ।) गुडूची । वास्तूकम् । इति राजनिर्घण्टः ॥ ज्वरनाशके, त्रि । (यथा, भावप्रकाशे पूर्ब्बखण्डे प्रथमे भागे ।
"ज्वरघ्नं पाचनं बल्यं वृष्यं रुच्यं कफापहम् ॥")

**ज्वरहन्त्री**, स्त्री, (ज्वरं हन्ति या । हन् + तृच् ङीप् च ।) मञ्जिष्ठा । इति राजनिर्घण्टः ॥ ज्वरघ्नी च ॥

**ज्वराग्निः**, पुं, (ज्वर एवाग्निः । दाहकत्वादस्य तथात्वम् ।) ज्वररूपाग्निः । तत्पर्य्यायः । आधिमन्यवः २ । इति हारावली ॥

**ज्वराङ्गी**, स्त्री, (ज्वरमङ्गति विनाश्यतया प्राप्नोतीति । अङ्ग गतौ + अच् । गौरादित्वात् ङीष् ।) भद्रदन्तिका । इति राजनिर्घण्टः ॥

**ज्वरान्तकः**, पुं, (ज्वरस्य अन्तको विनाशकः ।) नेपालनिम्बः । आरग्वधः । इति राजनिर्घण्टः ॥ ज्वरघ्नौषधविशेषः । यथा, --
"भास्करो गन्धकः शर्व्वो देवी विहङ्गतीक्ष्णकम्।
शोणितं गगनञ्चैव पुष्पकञ्च महेश्वरम् ॥
भूनिम्बादिगणैर्भाव्यं मधुना गुटिका दृढा ।
चातुर्थकं तृतीयञ्च ज्वरं सन्ततकं तथा ॥
आमज्वरं भूतकृतं सर्व्वज्वरमपोहति ॥
अत्र भास्करः ताम्रम् । शर्व्वो रसः । देवी सौराष्ट्रमृत्तिका । विहङ्गं स्वर्णमाक्षिकम् । गगनं अभ्रकम् । पुष्पकं रसाञ्जनम् । महेश्वरं सुवर्णम् । अन्यत् सुगमम् । ताम्रादीनां सम-भागचूर्णं भूनिम्बादिक्वाथेन भावयेत् । भूनिम्बा-द्यष्टादशद्रव्याणि सर्व्वद्रव्यतुल्यानि अष्टभागा-वशिष्टं क्वाथं कृत्वा दिनत्रयं विभाव्य विशोष्य मधुना विमर्द्द्य अनुरूपं लिहेत् । ज्वरान्तको रसः ।" इति भैषज्यरत्नावली ॥ ज्वरनाश-कश्च ॥

**ज्वरापहा**, स्त्री, (ज्वरं अपहन्ति नाशयतीति । अप + हन + डः ।) विल्वपत्री । इति शब्द चन्द्रिका ॥ वेलशुँठा इति भाषा ॥ ज्वर-दिनं भावयित्वा गुञ्जाप्रमाणमार्द्रकरसेन देयम् ।
ज्वरारी रसः ।" इति भैषज्यरत्नावली ॥

**ज्वराशनिः**, पुं, (ज्वरे अशनिर्वज्रमिवामोघत्वात् ।) ज्वरनाशकौषधविशेषः । यथा, --
"रसं गन्धं सैन्धवञ्च विषं ताम्रसमं भवेत् ।
सर्व्वचूर्णसमं लौहं तत्समं चूर्णमभ्रकम् ॥
लौहे च लौहदण्डे च निर्गुण्ड्याः स्वरसेन च ।
मर्द्दयेद्यत्नतः पश्चान्मरिचं सूततुल्यकम् ॥
पर्णेन सह पातव्यो रसो रक्तिकसम्मितः ।
सर्व्वज्वरहरश्रेष्ठो ज्वराशनिरुदाहृतः ॥
कासं श्वासं महाघोरं विषमाख्यं ज्वरं वमिम् ।
धातुस्थं प्रबलं दाहं ज्वरदोषं चिरोद्भवम् ॥
यकृद्गुल्मोदरप्लीहश्वयथुञ्च विनाशयेत् ॥
ज्वराशनी रसः ।" इति भैषज्यरत्नावली ॥

**ज्वरितः**, त्रि, (ज्वरः सञ्जातोऽस्य । ज्वर + "तदस्य सञ्जातं तारकादिभ्य इतच् ।" ५ । २ । ३६ । इति इतच् ।) ज्वरी । इति राज-निर्घण्टः ॥ (यथा, सुश्रुते उत्तरतन्त्रे ३९ अध्याये ।
"मुद्गान् मसूरांश्चणकान् कुलत्मान् समकुष्ठकान् ।
आहारकाले यूषार्थं ज्वरिताय प्रदापयेत् ॥"
यथाच, --
"ज्वरितो हितमश्नीयात्
यद्यप्यस्यारुचिर्भवेत् ।
अन्नकाले ह्यभुञ्जानः क्षीयते म्रियतेऽथवा ॥"
इति वैद्यकचक्रपाणिसंग्रहे ज्वराधिकारे ॥)

**ज्वरी**, [न्] त्रि, (ज्वरोऽस्त्यस्येति । ज्वर + इनिः ।) ज्वरयुक्तः । (यथा, सुश्रुते उत्तरतन्त्रे ३९ अध्याये ।
"गुर्व्वभिष्यन्द्यकाले वा ज्वरीनाद्यात् कथञ्चन ॥")

**ज्वल**, ज म चले । त्विषि । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) वकारयुक्तः । ज, ज्वालः ज्वलः । म, प्रज्वलयति । मित्त्वेऽपि ञौ ज्वलह्वलह्मल इत्यादिना केवलस्य ह्रस्वविक-ल्पनात् सोपसर्गस्यैव नित्यं ह्रस्वः । ज्वालयति

इति बृहद्गुडूच्यादिक्वाथः ॥ * ॥
"उत्पलं दाडिमत्वक् च पद्मकेशरमेव च ।
पिबेत्तण्डुलतोयेन ज्वरातीसारनाशनम् ॥"
इत्युत्पलादिचूर्णम् ॥ * ॥
विल्वबालकभूनिम्बगुडूचीधान्यनागरैः ।
कुटजाब्दयुतः क्वाथो ज्वरातीसारशूलनुत् ॥
इति विल्वादिक्वाथः ॥ * ॥

नाशके, त्रि ॥

**ज्वरारिः**, पुं, (ज्वरस्य अरिः शत्रुर्नाशकत्वात् ।)

ज्वरघ्नौषधविशेषः । यथा, --
"दरदवलिरसानां शुल्वनागाभ्रकाणां
सुभगविटशिलानां सर्व्वमेकत्र योज्यम् ।
विपिननृपदलोत्थे भावितं शोषयेत्तं
दिवसदशसमाप्तौ रक्तिकैकाञ्च कुर्य्यात् ॥
एकैकां भक्षयेदस्य चार्द्रकस्य रसैर्युतम् ।
दत्तमात्रं ज्वरं हन्ति ज्वरारिः स निगद्यते ॥
सर्व्वशूलविनाशी च कफपित्तविनाशनः ॥
वलिः । गन्धकः । सर्व्वं शोनालिपत्ररसेन दश-

ज्वलयति प्रज्वलयति । त्विट् दीप्तिः ।
ज्वलति
वह्निः । इति दुर्गादासः ॥ (यथाह कश्चित् ।
"जागर्त्ति लोको ज्वलति प्रदीपः
सखीगणः पश्यति कौतुकेन ।
मुहूर्त्तमात्रं कुरु नाथ ! धैर्य्यं
बुभुक्षितः किं द्विकरेण भुङ्क्ते ॥")

**ज्वलः**, पुं, ज्वालः । दीप्तिः । (ज्वलतीति । ज्वल

दीप्तौ + अच ।) दीप्तिविशिष्टे, त्रि । इति
मुग्धबोधम् ॥

**ज्वलका**, स्त्री, (ज्वलतीति । ज्वल + बाहुलकात्

वुन् ।) अग्निशिखा । इति हेमचन्द्रः ॥

**ज्वलत्**, त्रि, (ज्वल + शतृ ।) दीप्तिमत् । तत्-

पर्य्यायः । जमत् १ कल्मलीकिनम् २
जञ्जना-
भवन् ३ मल्मलाभवन् ४ अर्च्चिः ५ शोचिः
६
तपः ७ तेजः ८ हरः ९ हृणिः १० शृङ्गाणि
११ ।
इत्येकादश ज्वलति नामधेयानि ॥ * ॥
भ्राजते १
भ्रासते २ भास्यति ३ दीदयति ४ शोचति ५
मन्दते ६ भन्दते ७ रोचते ८ ज्योतते ९

द्योतते १० द्युमत् ११ । इत्येकादश ज्वलति-
कर्म्माणः । इति वेदनिघण्टौ १ अध्यायः ॥

**ज्वलनः**, पुं, (ज्वलतीति । ज्वल + “जुचङ्क्रम्य-
दन्द्रम्यसृगृधिज्वलशुचलषपतपदः।” ३ । २ ।
१५० । इति युच् ।) अग्निः । (यथा, कला-
विलासे । १ । ४ ।
“यत्र त्रिनयननयनज्वलनज्वालावलीशलभ
वृत्तिः ।
जीवति मानसजन्मा शशिवदनावदनकान्ति-
पीयूषैः ॥”)
चित्रकवृक्षः । इत्यमरः । १ । १ । ५६ ॥ (ज्वल +
भावे ल्युट् ।) दहने, क्ली ॥

**ज्वलनाश्मा**, [न्] पुं, (ज्वलनः सूर्य्यवद्दीप्ति-
विशिष्टः अश्मा प्रस्तरमणिः । नित्यकर्म्मधारयः ।)
सूर्य्यकान्तमणिः । इति राजनिर्घण्टः ॥

**ज्वलितः**, त्रि, (ज्वल + क्तः ।) दग्धः । उज्ज्वलः ।
इति मेदिनी । ते, ११० ॥ (प्रदीप्तः । यथा,
महाभारते । ६ । १८ । ६ ।
“काञ्चनाङ्गदिनो रेजुर्ज्वलिता इव पावकाः ॥”)

**ज्वलिनी**, स्त्री, (ज्वलो दीप्तिरस्त्यस्याः । ज्वल +
इनिः + ङीप् ।) मूर्व्वालता । इति राज-
निर्घण्टः ॥

**ज्वालः**, पुं स्त्री, (ज्वलतीति । ज्वल + “ज्वलितिक-
सन्तेभ्यो णः ।” ३ । १ । १४० । इति णः ।
पक्षे
स्त्रियां टाप् ।) अग्निशिखा । इत्यमरः । १ । १ ।
६० ॥
(यथा, महाभारते । ३ । २१८ । ३ ।
“दीप्तो ज्वालैरनेकाभैरग्निरेषोऽथ वीर्य्यवान् ॥”)
दीप्तिविशिष्टे, त्रि । इति मुग्धबोधम् ॥

**ज्वाला**, स्त्री, दग्धान्नम् । इति शब्दचन्द्रिका ॥
(ज्वलतीति । ज्वल + णः + टाप् ।)
अग्निशिखा ।
इत्यमरः । १ । १ । ६० ॥ (यथा, विष्णुपुराणे ।
१ । १२ । २४ ।
“अभ्युद्यतोग्रशस्त्राणि ज्वालामालाकुलैर्म्मुखैः
॥”)
दाहश्च ॥ (स्वनामख्याता ऋक्षस्य पत्नी ।
यथा,
महाभारते । १ । ९५ । २५ ।
“ऋक्षः खलु तक्षकदुहितरमुपयेमे ज्वालां नाम
।
तस्यां पुत्त्रं मतिनारं नामोत्पादयामास ॥”)

**ज्वालागर्द्दभकः**, पुं, (जालगर्द्दभ + स्वार्थे कन् ।
ततः पृषोदरादित्वात् साधुः ।) रोगविशेषः ।
तत्पर्य्यायः । ज्वलारासभकामयः २ ज्वाला-
खरगदः ३ गर्द्दभगदः ४ । इति राजनिर्घण्टः ॥
अस्य लक्षणं जालगर्द्दभशब्दे द्रष्टव्यम् ॥

**ज्वालाजिह्वः**, पुं, (ज्वाला शिखा एव जिह्वा
यस्य ।) अग्निः । इति हेमचन्द्रः । ४ । १६५ ॥
(स्कन्दस्यानुचरविशेषः । यथा, महाभारते
९ । ४५ । ५८ ।
“ज्वालाजिह्वः करालश्च शितकेशो जटी हरिः ॥”
दानवविशेषः । स तु वलिराजस्य सेनानी-
विशेषः । यथा, हरिवंशे । २३२ । ६ ।
“करालो ज्वालजिह्वश्च शताङ्गः शतलोचनः ॥”)

**ज्वालामुखी**, स्त्री, (ज्वालैव मुखं प्रधानं यस्याम् ।
तत्राजमप्रज्वलितज्वालाभिस्व पूजादिकं गृह्णाति
देवीत्यतोऽस्यास्तथात्वम् ।) पीठस्थानविशेषः ।
तत्र भगवत्या जिह्वा पतिता । तत्र अम्बिका
देवी । उन्मत्तनामकभैरवश्च । इति पीठमाला ॥
यथाच ।
“जालामुख्यां महाजिह्वा देव उन्मत्तभैरवः ।
अम्बिका सिद्धिदा नाम्नी स्तनं जालन्धरे मम ॥”
इति तन्त्रचूडामणौ पीठनिर्णयः ॥
विद्याविशेषः । यथा, --
“ज्वालामुखीक्रमं वक्ष्ये सा पूज्या मध्यतः
शुभे ! ।
नित्यारुणा मदनान्तरा मदमोहापकृष्यसिः ॥
कमला श्रीभारती च आकर्षणी महेन्द्र्यपि ।
ब्रह्माणी चैव माहेशी कौमारी वैष्णवी तथा ।
वाराही चैव माहेन्द्री चामुण्डेति च पूजयेत् ।
विजया चाजिता चैव मोहनी चापराजिता ॥
स्तम्भनी जपनी पूज्या कालिका पद्मवाह्यतः ।
ज्वालामुखीक्रमं पूज्य विषादिहरणं भवेत् ॥”
इति गारुडे ज्वालामुखीविद्या २०४ अध्यायः ॥

**झ**

**झ**, झकारः । स व्यञ्जननवमवर्णः चवर्गचतुर्थ-
वर्णश्च । अस्योच्चारणस्थानं तालु । इति व्याक-
रणम् ॥ (यदुक्तं शिक्षायाम् । १७ ।
“कण्ठ्यावहाविचुयशास्तालव्याओष्ठजावुपू ॥”)
अस्योत्पत्तिर्यथा, --
“विसर्गस्तालुगः सोष्मा श चवर्गश्च यन्तथा ॥”
इति प्रपञ्चसारः ॥
(वङ्गीयवर्णमालायाम्) अस्य लेखनप्रकारोयथा,
“त्रिकोणकुण्डलीरूपा वामदक्षिणयोगतः ।
क्रमशस्तासु तिष्ठन्ति चन्द्रसूर्य्याग्नयः प्रिये ! ॥
तत्र क्रोडगता मात्रा शक्तिर्ब्रह्मस्वरूपिणी ।
ऊर्द्ध्वमात्रा तथेन्द्राणी मध्ये नारायणी स्मृता ॥”
अस्य ध्यानं यथा, वर्णोद्धारतन्त्रे ।
“ध्यानमस्य प्रवक्ष्यामि शृणुष्व कमलानने ! ।
सन्तप्तहेमवर्णाभां रक्ताम्बरविभूषिताम् ॥
रक्तचन्दनलिप्ताङ्गीं रक्तमाल्यविभूषिताम् ।
चतुर्द्दशभुजां देवीं रत्नहारोज्ज्वलां पराम् ॥
ध्यात्वा ब्रह्मस्वरूपां तां तन्मन्त्रं दशधा जपेत् ॥”
अस्य स्वरूपं यथा, --
“झकारं परमेशानि ! कुण्डली मोक्षरूपिणी ।
रक्तविद्युल्लताकारं सदा त्रिगुणसंयुतम् ॥
पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं सदा ।
त्रिबिन्दुसहितं वर्णं त्रिशक्तिसहितं तथा ॥”
इति कामधेनुतन्त्रम् ॥
तस्य ३५ पञ्चत्रिंशत् नामानि यथा, --
“झो झङ्कारी गुहो झञ्झावायुः सत्यः षडुन्नतः ।
अजेशो द्राविणी नादः पाशी जिह्वा जलं
स्थितिः ॥
विराजेन्द्रो धनुर्हस्तः कर्क्कशो नादजः कुजः ।
दीर्घबाहुबलो रूपमाकन्दितः सुचञ्चलः ॥
दुर्म्मुखो नष्ट आत्मवान् विकटा कुचमण्डलः ॥
कलहंसप्रिया वामा अङ्गुलीमध्यपर्व्वकः ।
दक्षहासाट्टहासश्च पाथात्मा व्यञ्जनः स्वरः ॥”
इति नानातन्त्रशास्त्रम् ॥

**झः**, पुं, (झटति सङ्घीभवतीति । झट सङ्घाते +
बाहुलकात् डः ।) झञ्झावातः । अम्बुवर्षणम् ।
इति शब्दरत्नावली ॥ झण्टीशः । सुरगुरुः ।
दैत्यराजः । ध्वनिः । तारवायुः । इति मेदिनी ।
झे, १ ॥ नष्टे, त्रि । इति शब्दरत्नावली ॥

**झगझगायमानः**, त्रि, (झगझग इवाचरतीति ।
झगझग + “कर्त्तुः क्यङ् सलोपश्च ।” ३ । १ । ११ ।
इति क्यङ् ततः शानच् ।) चाकचिक्ययुक्तः ।
झक्झकिया इति भाषा । यथा, --
“मयूरवरगामिनीं सुरदशुद्धवर्णोत्कटां
रणक्वणितघण्टिकां निशितशक्तिहस्तोद्यताम् ।
प्रभानिकररश्मिभिर्झगझगायमानांशुकां
नयामि गुहसम्भवां त्रिदशशत्रुनिर्णाशिनीम् ॥”
इति देवीपुराणे रुरुवधे मातृस्तवनामाध्यायः ॥

**झङ्कारः**, पुं, (कृ + भावे घञ् कारः । झमित्यव्यक्त-
शब्दस्य कारः करणं यत्र ।) भ्रमरादिशब्दः ।
यथाह वल्लालसेनः ।
“प्रारब्धो मधुपैरकारणमहो झङ्कारकोला-
हलः ॥”
(तथा च पञ्चतन्त्रे । ५ । ४२ ।
“शरज्ज्योत्स्नाहते दूरं तमसि प्रियसन्निधौ ।
घन्यानां विशति श्रोत्रे गीतझङ्कारजा सुधा ॥”)

**झञ्झा**, स्त्री, (झमित्यव्यक्तशब्देन झटति वेगेन
वहतीति । झट् + बाहुलकात् डः । ततष्टाप् ।)
ध्वनिविशेषः । जलकणवर्षणम् । इति शब्द-
रत्नावली ॥

**झञ्झानिलः**, पुं, (झञ्झाध्वनियुक्तोऽनिलः ।)
प्रावृषिजवायुः । झञ्झावातः । इति त्रिकाण्ड-
शेषः ॥

**झञ्झावातः**, पुं, (झञ्झाध्वनियुक्तो वातः ।)
प्रावृषिजवायुः । इति हलायुधः ॥ (यथा,
ब्रह्मवैवर्त्ते गणपतिखण्डे ३५ अध्याये ।

"झञ्झावातं रक्तवृष्टिं वात्याञ्च वृक्षपातनम् ॥")

**झट**, संहतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-

अकं-सेट् ।) झटति केशः । परस्मरं लग्नः
स्यादित्यर्थः । इति दुर्गादासः ॥

**झटिः**, पुं, (झटति परस्परं संलग्नो भवतीति ।

झट संहतौ + "सर्व्वधातुभ्य इन् ।" उणां ४ ।
११७ । इति इन् ।) क्षुद्रवृक्षः । इत्युणादिकोषः ॥

**झटिति**, व्य, द्रुतम् । शीघ्रम् । तत्पर्य्यायः । स्राक् २

अञ्जसा ३ अह्नाय ४ सपदि ५ द्राक् ६ मंक्षु ७ ।
इत्यमरः । ३ । ४ । २ ॥ (यथा, पञ्चदशी ।
७ । १२५ ।
"तत्त्वविस्मृतिमात्रान्नानर्थः किन्तु विपर्य्ययात् ।
विपर्य्येतुं न कालोऽस्ति झटिति स्मरतः
क्वचित् ॥")

**झत्ति**, व्य, (झटिति इति शब्दस्य प्राकृतभाषायां

झत्ति इति सिद्धम् ।) झटिति । इति प्राकृत-
भाषायां काव्यप्रकाशः ॥

**झनत्कारः**, पुं, (कृ + भावे घञ् कारः । झनदित्य-
व्यक्तशब्दस्य कारः करणं यत्र ।) अनुकरण-
शब्दः । कङ्कणादिध्वनिः । यथा, कालिदासः ।
“उद्वेल्लद्भुजवल्लिकङ्कणझनत्कारः क्षणं वार्य्य-
ताम् ॥”

**झम**, उ भक्षे । इति कविकल्पद्रुमः । (भ्वां-परं-
मकं-सेट् । उदित्त्वात् क्त्वावेट् ।) उ, झमित्वा
झान्त्वा । इति दुर्गादासः ॥

**झम्पः**, पुं, (लम्फः पृषोदरादित्वात् साधुः ।)
सम्पातपतनम् । लम्फः । इति जटाधरः ॥
(यथा, महावीरचरिते ।
“पुच्छास्फोटदलत्-समुद्रविवरैः
पातालझम्पाश्च ताः ॥”)

**झम्पारुः**, पुं, (झम्पं लम्फं आराति आददातीति ।
आ + रा + बाहुलकात् डुः ।) वानरः । इति
शब्दरत्नावली ॥

**झम्पाशी**, [न्] पुं, (झम्पेन सम्पातेन अश्नातीति ।
अश + णिनिः । मत्स्यादिधारणकाले झम्प-
दानपूर्ब्बकपतनादस्य तथात्वम् ।) मत्स्यरङ्ग-
पक्षी । इति जटाधरः ॥

**झम्पी**, [न्] पुं, (झम्पो लम्फोऽस्त्यस्येति । झम्प
+ “अत इनिठनौ ।” ५ । २ । ११५ । इति
इनिः ।) वानरः । इति शब्दरत्नावली ॥

**झरः**, पुं, (झीर्य्यति जीर्णीभवति पतनादिस्थान-
मनेनेति । झॄ + “ऋदोरप् ।” ३ । ३ । ५७ ।
इत्यप् ।) निर्झरः । पर्व्वतावतीर्णजलप्रवाहः ।
इत्यमरः । २ । ३ । ५ ॥ (समूहः । यथा,

**झर्झरः**, पुं, (झर्झ्यते निन्द्यते इति । झर्झ भर्त्से + अरः ।)
कलियुगम् । (झर्झरोझर्झरशब्द इवास्त्यस्येति ।
अच् ।) नदभेदः । इति मेदिनी । रे, १५८ ।
(हिरण्याक्षपुत्त्रविशेषः । यथा, हरिवंशे । ३ । ७९ ।
“हिरण्याक्षसुताः पञ्च विद्वांसः सुमहाबलाः ।
झर्झरः शकुनिश्चैव भूतसन्तापनस्तथा ।
महानाभश्च विक्रान्तः कालनाभस्तथैव च ॥”)

बहुलवचनात् अरः ।) वाद्यविशेषः । इत्यमरः ।
१ । ७ । ८ ॥
चर्म्मपुटाच्छादितकाष्ठस्थानम् ।
इति तट्टीकासारसुन्दरी ॥ करड इति ख्यातः ।
“डिण्डिमो डेङ्गरीप्रोक्तो झर्झरः पटहः स्मृतः ॥”
इति भरतधृतवैकुण्ठः ॥
तत्पर्य्यायः । झल्लकी २ झल्ली ३ झलरी ४
झर्झरी ५ । इति शब्दरत्नावली ॥ (यथा,
हठयोगप्रदीपिकायाम् । ४ । ८५ ।
“आदौ जलधिजीमूतभेरीझर्झरसम्भवाः ॥”

**झर्झरकः**, पुं, (झर्झर + स्वार्थे कन् ।) कलियुगम् ।
इति त्रिकाण्डशेषः ॥

**झर्झरा**, स्त्री, (झर्झ्यते निन्द्यते इति । झर्झ
भर्त्से + बाहुलकात् अरः । ततष्टाप् ।) वेश्या ।
इति त्रिकाण्डशेषः ॥ (जलशब्दविशेषः । यथा,
काशीखण्डे । २९ । ६८ ।
“झिण्टीशवन्द्या झाङ्कारकारिणी झर्झरावती ॥”)

**झर्झरी**, स्त्री, (झर्झर + गौरादित्वात् ङीष् ।)
झर्झरवाद्यम् । इति शब्दरत्नावली ॥ (यथा,

**झल्लकण्ठः**, पुं, (झल्लो झल्लकशब्द इव कण्ठः
कण्ठस्वरो यस्य ।) पारावतः । इति हारा-
वली । ८७ ॥

**झल्लरी**, स्त्री, (झल्लं झल्लकशब्दं रातीति ।
रा + कः । स्त्रियां ङीष् ।) हुडुक्कः । झर्झर-
वाद्यम् । (यथा, काशीखण्डे । २९ । ६८ ।
“झल्लरीवाद्यकुशला झलज्झालजलावृता ॥”)
बालचक्रम् । बालडीति ख्यातम् । इति मेदिनी ।
रे, १५९ ॥ शुद्धम् । क्लेदः । इत्यजयपालः ॥

**झल्लिका**, स्त्री, (झल्लीव कायतीति । कै + कः ।
पृषोदरादित्वात् साधुः ।) उद्वर्त्तनपटः । व्योतः ।
इति मेदिनी । के, ९६ ॥ उद्वर्त्तनमलम् । इति
शब्दरत्नावली ॥

**झल्ली**, स्त्री, (झल्ल + ङीष् ।) झर्झरवाद्यम् ।
इति शब्दरत्नावली ॥

**झल्लोलः**, पुं, (झर्झ क्विप् तादृशः सन् लोलः ।
ततः पृषोदरादित्वात् साधुः ।) तर्कुलासकः
इति हारावली । २१३ ॥ टेकुयार वाँटुल इति भाषा ॥

**झष**, वधे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-
सेट् ।) आद्यस्वरी । झषति । षष्ठस्वरी चाय-
मिति केचित् । झूषति । इति दुर्गादासः ॥

**झष**, ञ ग्रहे । पिधाने । इति कविकल्पद्रुमः ॥
(भ्वां-उभं-सकं-सेट् ।) ञ, झषति झषते

नैषधे । २ । ३२ ।
"कलसे निजहेतुदण्डजः
किमु चक्रभ्रमिकारिता गुणः ।
स तदुच्चकुचौ भवन् प्रभा-
झरचक्रभ्रमिमातनोति यत् ॥"
"स कलसः प्रभारूपेण कान्तिसमूहेन चक्रभ्रमिं
कुलालचक्रभ्रमणमातनोति जनयति । यद्वा
प्रभाझरे कान्तिप्रवाहे चक्रभ्रमिं चक्रवाक-
भ्रान्तिमातनोति ।" इति तट्टीका ॥)

**झरा**, स्त्री, (झर + टाप् ।) झरः । इत्यमर-
टीकायां भरतः ॥

**झरी**, स्त्री, (झर + ङीष् ।) झरः । इत्यमर-
टीकायां भरतः ॥

**झर्च्चे**, श उक्तौ । भर्त्से । इति कविकल्पद्रुमः ॥
(तुदां-परं-सकं-सेट् ।) रेफोपधः । श, झर्च्चती
झर्च्चन्ती । गुणस्थानरहितानां तुदादिपाठफलन्तु
शत्रन्तानामादीपीरिति नुणो विभाषा वेदेषू-
च्चारणभेदश्च । भर्त्सस्तर्ज्जनम् । इति दुर्गादासः ॥

**झर्च्छे**, श उक्तौ । भर्त्से । इति कविकल्पद्रुमः ॥
(तुदां-परं-सकं-सेट् ।) श, झर्च्छती झर्च्छन्ती ।
भर्त्सस्तर्ज्जनम् । इति दुर्गादासः ॥

**झर्झ**, श उक्तौ । भर्त्से । इति कविकल्पद्रुमः ॥
(तुदां-परं-सकं-सेट् ।) श, झर्झती झर्झन्ती ।
भर्त्सस्तर्ज्जनम् । इति दुर्गादासः ॥

**झर्झरः**, पुं, (झर्झ इत्यव्यक्तशब्दं रातीति । रा +
कः । यद्वा, झर्झति शब्दायते इति । झर्झ +
हरिवंशे । २३७ । २ ।
"गोमुखाडम्बराणाञ्च भेरीणां मुरजः सह ।
झर्झरीडिण्डिमानाञ्च व्यश्रूयन्त महास्वनाः ॥")

**झर्झरीकः**, पुं, (झर्झतीति । झर्झ + "फर्फ-
रीकादयश्च ।" उणां । ४ । २० । इति ईकन्
प्रत्ययेन निपातनात् साधुः ।) शरीरम् ।
इत्युणादिकोषः ॥ देशः । चित्रम् । इति संक्षिप्त-
सारे उणादिवृत्तिः ॥

**झलज्झला**, स्त्री, (झलज्झल इत्यव्यक्तशब्दो-
ऽस्त्यस्यति । अच् ।) हस्तिकर्णास्फालनम् ।
इति त्रिकाण्डशेषः ॥

**झलरी**, स्त्री, (झल्लरी । पृषोदरादित्वात् ललोपः ।)
हुडुक्कः । झर्झरवाद्यम् । बालचक्रम् । केश-
चक्रम् । इति मेदिनी । रे, १५९ ॥

**झला**, स्त्री, कन्या । आतपस्योर्म्मिः । इति
भेदिनी । ने, २० ॥

**झल्लः**, पुं, वर्णसङ्करजातिविशेषः । इति जटाधरः ॥
स क्षत्त्रियात् व्रात्यात् सवर्णायां जातः । (यथा,
मनुः । १० । २२
"झल्लो मल्लश्च राजन्यात्
व्रात्यान्निच्छिविरेवच ॥")
प्रहासकः । इति महाभारतम् ॥ भाँड इति
भाषा ॥ (क्ली, झर्झरवाद्यम् ॥)

**झल्लकं**, क्ली, (झल्ल + स्वार्थे कन् ।) कांस्यनिर्म्मित-
करतालकम् । यथा, तिथ्यादितत्त्वे ।
"शिवागारे झल्लकञ्च सूर्य्यागारे च शङ्खकम् ।
दुर्गागारे वंशिवाद्यं मधुरीञ्च न वादयेत् ॥"
वस्त्रं जनो गृह्णाति परिदधाति वेत्यर्थः ।
सप्तम-
स्वरादिरयमिति पूर्णचन्द्रत्रिलोचनरामाः ।
अर्षति अर्षते । इति दुर्गादासः ॥

**झषं**, क्ली, (झस ग्रहे + अच् ।) खिलम् । इत्यजय-
पालः ॥

**झषः**, पुं, (झष्यते वध्यते भक्षणाय झष्यते गृह्यते
इति वा । झष + "खनो घ च ।" ३ । ३ । १२५ ।
इति घ ।) मत्स्यः । इत्यमरः । १ । १० । १ ॥
(यथा, भगवद्गीतायाम् । १० । ३१ ।
"झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥"
मकरः । यथा, रामायणे । २ । ११४ । ४ ।
"लीनमीनझषग्राहां कृशां गिरिनदीमिव ॥")
तापः । वनम् । इति मेदिनी । षे, १२ ॥
मीनराशिः । यथा, --
"सार्द्धसप्तझषे मेषे वसुसार्द्धो घटे वृषे ॥"
इति समयप्रदीपः ॥

**झषकेतनः**, पुं, (झषो मकरो मीनो वा केतनं केतु-
रस्य ।) कन्दर्पः । इति हलायुधः ॥

**झषा**, स्त्री, (झष् + अच् ततष्टाप् ।) नागबला ।
इत्यमरः । २ । ४ । ११७ ॥

**झषाङ्कः**, पुं, (झषः अङ्को यस्य ।) अनिरुद्धः ।
इति हेमचन्द्रः ॥ (कन्दर्पः । यथा, श्रीकण्ठ-
चरिते । ११ । २ ।
"यत्कला किल झषाङ्कपुलिन्द-
स्पन्दमानवडिशव्रतमाधात् ॥")

**झषाशनः**, पुं, (झषान् मत्स्यान् अश्नातीति ।
अश् ग भोजने + कर्त्तरि ल्युः ।) शिशुमारः ।

**झषोदरी**, स्त्रो, (झषो मत्स्य एव उदरं उत्-
पत्तिस्थानमस्याः । झषस्य उदरं उत्पत्तिस्थान-
तयास्त्यस्याः इति अर्शआदिभ्योऽजित्येके ।)
व्यासमाता । इति त्रिकाण्डशेषः ॥

**झाङ्कृतं**, क्ली, (झाम् इत्यव्यक्तशब्दस्य कृतं करणं
यत्र ।) चरणालङ्कारविशेषः । इति धरणिः ॥

**झाटः**, पुं, (झट + घञ् ।) निकुञ्जः । कान्तारः ।
व्रणादीनां मार्ज्जनम् । इति मेदिनी । टे, १६ ॥

**झाटलः**, पुं, (झाटं लातीति । ला + कः ।) घण्टा-
पाटलिः । इत्यमरः । २ । ४ । ३९ ॥

**झाटा**, स्त्री, (झट् + णिच् + अच् ततष्टाप् च ।)
भूम्यामलकी । इत्यमरः ॥ यूथीवृक्षः । इति
शब्दचन्द्रिका ॥

**झाटिका**, स्त्री, (झाटा + स्वार्थे कन् । टापि अत
इत्वञ्च ।) भूम्यामलकी । इति शब्दचन्द्रिका ॥

**झामकं**, क्ली, (झम् + ण्वुल् ।) दग्धेष्टका । इति
हारावली । २१४ ॥ झामा इति भाषा ॥

**झामरः**, पुं, (झामं रातीति । रा + कः ।)
तर्कुशाणः । इतिशब्दरत्नावली ॥ टेकुयार शाण
इति भाषा ॥

**झार्झरः**, पुं स्त्री, (झर्झरवादनं शिल्पमस्य ।
"मड्डुकझर्झरादन्यतरस्याम् ।" ४ । ४ । ५६ ।
इति अण् ।) झार्झरिकः । झर्झरवाद्यकर्त्ता ।
झिञ्झिरा ४ रोमाश्रयफला ५ वृत्ता ६ । अस्या
गुणाः । कटुत्वम् । शीतत्वम् । कषायत्वम् ।
रक्तातिसारनाशित्वम् । वृष्यत्वम् । सन्तर्पणत्वम् ।
बल्यत्वम् । महिषीक्षीरवर्द्धनत्वञ्च । इति राज-
निर्घण्टः ॥

**झिञ्झी**, स्त्री, (झिञ्झा इत्यव्यक्तशब्दोऽस्त्यस्याः ।
अच् ततो ङीष् च ।) झिल्ली । यथा, --
"झिञ्झीवाव्यक्तमधुरा कूजन्ती मधुराकृतिः ॥"
इत्यागमः ॥

**झिण्टी**, स्त्री, (झिमिति कृत्वा रटतीति । रट् +
अच् । ङीष् च पृषोदरात् साधुः ।) पुष्पवृक्ष-
विशेषः । झाँटी इति भाषा । तत्पर्य्यायः ।
सैरीयकः २ इत्यमरः । २ । ४ । ७५ ॥ कण्ट-
कुरण्टः ३ सैरेयकः ४ झिण्टिका ५ । इति
राजनिर्घण्टः ॥ नीलझिण्ट्याः पर्य्यायः ।
वाणा १ दासी २ अर्त्तगलः ३ । इत्यमरः ।
२ । ४ । ७४ ॥ वाणः ४ आर्त्तगलः ५ इति
तट्टीका ॥ सहचरः ६ नीलकुरण्टकः ७ ।
इति रत्नमाला ॥ अरुणझिण्ट्याः पर्य्यायः ।
कुरवकः १ । इत्यमरः ॥ पीतझिण्ट्याः पर्य्यायः ।
कुरुण्टकः १ सहचरी २ । इत्यमरः ॥ सह-
चरः ३ सहाचरः ४ । इति तट्टीका ॥ वीरः
५ पीतपुष्पः ६ दासी ७ कुरण्टकः ८ । इति
रत्नमाला ॥ अस्या गुणाः । कटुत्वम् । तिक्त-
त्वम् । दन्तामयशूलवातकफशोफकासत्वग्दोष
नाशित्वञ्च । कुन्दरतृणम् । इति राजनिर्घण्टः ॥

**झिरिका**, स्त्री, (झिरीति अव्यक्तशब्देन कायति
शब्दायते इति । कै + कः टाप् च ।) झिल्ली ।
इति शब्दरत्नावली ॥

**झिरी**, स्त्री, (झिर् इत्यव्यक्तशब्दो अस्त्यस्याः ।
अच् ङीष् ।) झिल्ली । इति शब्दरत्नावली ॥

**झिल्लिः**, स्त्री, (झिर् इत्यव्यक्तशब्देन लिश-
तीति । लिश् + डिः । रस्य लः ।) वाद्य-
विशेषः । यथा, गूढार्थदीपिकायाम् ।
"अदृश्यझिल्लीस्वनकर्णशूल-
उलूकवाग्भिर्व्यथितान्तरात्मा ॥")
आतपरुचिः । वर्त्ती । उद्वर्त्तनांशुकम् । इति
मेदिनी ॥ स्थालीलग्नदग्धान्नम् ।
इत्यजयपालः ॥

**झिल्लीकण्ठः**, पुं, (झिल्लीवत् कण्ठः कण्ठशब्दो
ऽस्य ।) गृहकपोतः । इति त्रिकाण्डशेषः ॥

**झिल्लीका**, स्त्री, (झिल्ली + संज्ञायां कन् तत
ष्टाप् ।) झिल्लिका । इति हेमचन्द्रः ॥

**झीरुका**, स्त्री, (झिर इति कृत्वाव्यक्तं रौतीति ।
रु + शब्दे बाहुलकात् कक् टाप् च ।) झिल्ली ।
इत्यमरः । २ । ५ । २८ ॥

**झु**, ङ गत्याम् । (भ्वां-आत्मं-सकं-अनिट् ।) जुङ-
स्थाने झुङ इत्यपि केचित् । ङ, झवते । इति
दुर्गादासः ॥

**झुण्टः**, पुं, (झट् संघाते + घञि पृषोदात् साधुः ।)
स्तम्बः । अप्रकाण्डवृक्षः । इति शब्दचन्द्रिका ॥

**झुमरिः**, स्त्री, रागिणीविशेषः । यथा, --
"प्रायः शृङ्गारबहुला माध्वीकमधुरा मृदुः ।
एकैव झुमरिर्लोके वर्णादिनियमोज्झिता ॥
अतो लक्षणमेतस्या नोदाहारि विशेषकम् ।
इदं हि शालगं सूत्रं प्रसिद्धं नृपरञ्जनम् ॥"
इति सङ्गीतदामोदरः ॥

**झूणिः**, पुं, क्रमुकभेदः । स्त्री, दुष्टदैवश्रुतिः । इति
मेदिनी । णे, १४ ॥

**झॄ**, ष य ज्याने । गतबहुवयोभाव इति यावत् ।

इति व्याकरणम् ॥

**झालिः**, स्त्री, व्यञ्जनविशेषः । झारि इति ख्याता ।

यथा, भावप्रकाशस्य पूर्ब्बखण्डे २ भागे ।
“आम्रमामफलं पिष्टं राजिकालवणान्वितम्।
भृष्टं हिङ्गुयुतं पूतं घोलितं झालिरुच्यते ॥
झालिर्हरति जिह्वायाः कुण्ठत्वं कण्ठशोधिनी ।
मन्दं मन्दं निपीता सा रोचनी वह्निबोधिनी ॥”
(जारिः जालिः इति पाठोऽपि कुत्रचित् दृश्यते ॥)

**झावुः**, पुं, (झा इति कृत्वा वाति वायुरत्र । वा + डुः ।) वृक्षविशेषः । इति शब्दरत्नावली ॥
झाउ इति भाषा ॥

**झावुकः**, पुं, (झावुरेव । स्वार्थे कन् ।) वृक्षविशेषः ।

झाउ इति भाषा । तत्पर्य्यायः । पिचुलः २ झावुः ३ झावूः ४ । इति शब्दरत्नावली ॥

**झिङ्गाकं**, क्ली, (लिगि + आकन् । पृषोदरात् साधुः ।) फलविशेषः । झिङ्गा इति भाषा ।
अस्य गुणाः । तिक्तत्वम् । मधुरत्वम् । आम-
वातमन्दाग्निकारित्वञ्च । इति राजवल्लभः ॥

**झिङ्गिनी**, स्त्री, (लिगि + णिनिः । पृषोदरात् साधुः ।

ङीप् च ।) जिङ्गिनीवृक्षः । इति भावप्रकाशः ॥
उल्का । इति शब्दरत्नावली ॥

**झिङ्गी**, स्त्री, (लिगि + अच् ङीष् । पृषोदरात्

“घण्टाशङ्खस्तथा भेरीमृदङ्गौ झिल्लिरेव च ।
पञ्चानां शस्यते वाद्यं देवताराधनेषु च ॥”

**झिल्लिका**, स्त्री, (झिर् इत्यव्यक्तशब्दं लिशतीति ।

लिश + डिः रस्य लत्वे साधुः । ततः स्वार्थे कन् ।) झिल्ली । (यथा, रामायणे । २ । ९६ । ११ ।
“झिल्लिकाविरुतैर्दीर्घै रुदतीव समन्ततः ॥”)
आतपस्य रुचिः । विलेपनमलम् । इति हेमचन्द्रः ॥
झिल्लिकारावः । उद्वर्त्तनवस्त्ररुचिः । इति शब्द-
रत्नावली ॥ (उद्वर्त्तनवस्त्रम् । झिण्टी । इति मेदिनी । के, ९६ ॥)

**झिल्ली**, स्त्री, (झिल्लि + कृदिकारादिति वा

ङीष् ।) कीटविशेषः । झिँझिपोका इति भाषा ।
तत्पर्य्यायः । झिल्लीका २ झिल्लिका ३ झिरिका ४
झीरुका ५ झिरी ६ चीलिका ७ चील्लिका ८
चिल्ली ९ भृङ्गारी १० चील्लका ११ । इति
शब्दरत्नावली ॥ चीरी १२ । इत्यमरः । २ । ५ ।
२८ ॥ चीरुका १३ । इति तट्टीका ॥ (यथा, भागवते, । ६ । १३ । ५ ।

(दिवां-परं-अकं-अनिट् ।) इति कविकल्पद्रुमः ॥
ष, झरा । य, झीर्य्यति । इति दुर्गादासः ॥

**झोडः**, पुं, गुवाकवृक्षः । इति भूरिप्रयोगः ॥

**झ्यु**, ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-

सकं-अनिट् ॥)

**ञ**

**ञ**, ञकारः । स व्यञ्जनदशमवर्णः चवर्गपञ्चम-

वर्णश्च । (असौ तु अर्द्धमात्राकालेनोच्चार्य्यः ।)
अस्योच्चारणस्थानं तालु । इति व्याकरणम् ॥ * ॥
अस्योत्पत्तिर्यथा, --
“विसर्गस्तालुगः सोष्मा शं चवर्गञ्च यन्तथा ॥”
इति प्रपञ्चसारः ॥ * ॥
(पाणिनिमते तु अस्योत्पत्तिस्थानं नासिका-
न्वितताल । अस्योच्चारणे जिह्वामध्येन तालु-
मध्यस्य स्पर्शः आभ्यन्तरप्रयत्नः । संवारनाद-
घोषा अल्पप्राणश्च वाह्यप्रयत्नाः । मातृकान्यासे-
ऽस्य वामहस्ताङ्गुल्यग्रे न्यासक्रिया स्यात् ।
वङ्गीयवर्णमालायां) अस्य लेखनप्रकारो यथा,
“कुण्डलीरूपमास्थाय दक्षतो वामतस्ततः ।
ऋजुश्चाधोगता मात्रा वामतः कुञ्चिता पुनः ॥
तिष्ठन्ति तासु नित्यासु सूर्य्येन्द्रवरुणाः सदा ।
कुण्डलीद्वयरूपा तु या मात्रा मध्यतः स्थिता ॥
महाशक्तिस्वरूपा सा ध्यानमस्य प्रचक्षते ॥ * ॥

साधुः ।) जिङ्गिनीवृक्षः । इति भावप्रकाशः ॥

**झिञ्झिमः**, पुं, (झिम् इत्यव्यक्तशब्दं कृत्वा झमति

अत्ति वृक्षादीन् दहतीत्यर्थः । (झम भक्षे + अच् । पृषोदरादित्वात् साधुः ।) दापाग्निः । इति हारावली ॥ २६८ ॥

**झिञ्झिरिष्टा**, स्त्री, क्षुपविशेषः । झिञ्झिरीटा ।

इति भाषा । तत्पर्य्यायः । फला २ पीतपुष्पा ३

चतुर्भुजां धूम्रवर्णां कृष्णाम्बरविभूषिताम् ।

नानालङ्कारसंयुक्तां जटामुकुटराजिताम् ॥

ईषद्धास्यमुखीं नित्यां वरदां
भक्तवत्सलाम् ।
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा
जपेत् ॥”
इति वर्णोद्धारतन्त्रम् ॥ * ॥
अस्य स्वरूपं यथा, कामधेनुतन्त्रे ।
“सदा ईश्वरसंयुक्तं ञकारं शृणु सुन्दरि !
।
रक्तविद्युल्लताकारं या स्वयं परकुण्डली ॥
पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं सदा ।
त्रिशक्तिसहितं वर्णं त्रिविन्दुसहितं सदा
॥”
तस्य २२ द्वाविंशतिर्नामानि यथा, --
“ञकारो बोधनी विश्वा कुण्डली मखदो
वियत् ।
कौमारी नागविज्ञानी सव्याङ्गुलनखो
वकः ॥
शर्व्वेशश्चूर्णिता बुद्धिः स्वर्गात्मा
घर्घरध्वनिः ।
धर्मैकपादः सुमुखो विरजा चन्दनेश्वरी ॥
गायनः पुष्पधन्वा च रागात्मा च
वराक्षिणी ॥”
इति नानातन्त्रशास्त्रम् ॥

**ञः**, पुं, गायनः । घर्घध्वनिः । इत्येकाक्षर-
कोषः ॥ बलीवर्द्दः । शुक्रः । वाममतिः ।
इति
मेदिनी । ञे, १ ॥ (गणपाठे धातोरुभय-
पदत्वविज्ञापकोऽनुबन्धविशेषः । इति
वोपदेवः ॥)

**ञिः**, पुं, प्रत्ययविशेषः । स प्रेरणार्थे भवति ।
तस्य इकारस्तिष्ठति ।
धातोरनुबन्धविशेषः ।
स वर्त्तमानक्तप्रत्ययबोधकः । इति
वोपदेव-
स्वामी ॥

**ञ्यन्तः**, पुं, (ञिः प्रत्ययविशेषोऽन्ते यस्य ।) ञि-
पञ्चप्राणयुतं वर्णं गुणत्रयसमन्वितम् ।
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा
॥”
इति कामधेनुतन्त्रम् ॥
तस्य २७ सप्तविंशतिनामानि यथा, --
“टष्टङ्कारः कपाली च सोमवाः खेचरी
ध्वनिः ।
मुकुन्दो विनदा पृथ्वी वैष्णवी वारुणी
नवः ॥
दक्षाङ्गकार्द्धचन्द्रश्च जरा भूतिः
पुनर्भवः ।
बृहस्पतिर्धनुश्चित्रा प्रमोदा विमला
कटिः ॥
राजा गिरिर्म्महाधनुर्घ्राणात्मा सुमुखो
मरुत् ॥”
इति नानातन्त्रशास्त्रम् ॥

**टं**, क्ली, (टल् + डः ।) करङ्कः । इति विश्वः ॥

**टः**, पुं, (टल् + डः ।) वामनः । पादः । निस्वनः
।
इति मेदिनी । टे, १ ॥

**टक**, इ क बन्धे । इति कविकल्पद्रुमः ॥ (चुरां-
परं-सकं-सेट् ।) इ क, टङ्कयति । इति
दुर्गा-
दासः ॥

**टक्कदेशीयः**, पुं, (टक्कदेशे भव इति छः ।)
वास्तूकशाकः । इति त्रिकाण्डशेषः ॥

**टगरः**, पुं, (टः टङ्कणः क्षारविशेषः गर इव ।
तीव्रगुणत्वात्तथात्वम् ।) टङ्कणक्षारः ।
हेला-
विभ्रमगोचरः । केकराक्षे, त्रि । इति
मेदिनी ।
रे, १६० ॥

**टङ्कः**, पुं, (टकि + घञ् ।) कोपः । कोषः ।
असिः ।
ग्रावदारणः । इति मेदिनी । के, २४ ॥
(यथा,
अनर्घराघवे । १ । २२ ।
तत्पर्य्यायः । पाचनकः २ मालतीतीरजः ३
लोहश्लेषणः ४ रसशोधनः ५ । इति हेम-
चन्द्रः । ४ । १० ॥ टङ्कणक्षारः ६ रङ्गक्षारः ७
रसाधिकः ८ लोहद्रावी ९ रसघ्नः १० सुभगः
११ रङ्गदः १२ वर्त्तुलम् १३ कनकम् १४
क्षारम् १५ मलिनम् १६ धातुवल्लभम् १७ ।
इति राजनिर्घण्टः ॥ मालतीतीरसम्भवः १८
द्रावी १९ द्रावकः २० लोहशुद्धिकारकः २१ ।
इति भावप्रकाशः ॥ स्वर्णपाचकः २२ । इति
रत्नमाला ॥ अस्य गुणाः । कटुत्वम् । उष्ण-
त्वम् । कफस्थावरादिविषकासश्वासनाशित्वञ्च
।
इति राजनिर्घण्टः ॥ अग्निवातपित्तकारित्वम् ।
रूक्षत्वम् । इति भावप्रकाशः ॥ (देश-
विशेषः । यथा, बृहत्संहितायाम् । १४ । १२ ।
“कङ्कटटङ्कणवनवासि
शिविककणिकारकोङ्कणा-
भीराः ॥”)

**टङ्का**, स्त्री, (टकि + अच् टाप् ।) जङ्घा । इति
मेदिनी । के, २५ ॥

**टङ्कानकः**, पुं, (टङ्कं दर्पं कोप वा आनयति उद्दी-
पयतीति । अन् + णिच् + ण्वुल् ।) ब्रह्मदारु-
वृक्षः । इति शब्दचन्द्रिका ॥

**टङ्कारः**, पुं, (टल् वैक्लवे + बाहुलकात् डः । टं
वैक्लवं चित्तस्य विकृतिं करोतीति । कृ +
कर्म्मण्यण् ।) विस्मयः । प्रसिद्धः । शिञ्जित-
ध्वनिः । इति मेदिनी । रे, १६० ॥ (यथा,
काशीखण्डे । २९ । ६९ ।
“टीकिताशेषपाताला टङ्किकैलोऽद्रिपाटले ।
टङ्कारनृत्यत्कल्लोला टीकनीया महातटा ॥”
कृ + घञ् । कारः टं इति अव्यक्तशब्दस्य-
कारः करणं यत्र । ध्वनिमात्रे । यथा, भाग-
वते । ३ । १७ । ९ ।
“अन्तर्ग्रामेषु मुखतो वमन्त्यो वह्निमुल्वणम् ।
शृगालोलूकटङ्कारैः प्रणेदुरशिवाः शिवाः ॥”)

**टङ्कारी**, स्त्री, (टङ्कं ऋच्छतीति । ऋ + “कर्म्म-
ण्यण् ।” ३ । २ । १ । इत्यण् । ततो गौरादि-

प्रत्ययान्तः । यथा, “ञिज्यन्तपिबथे”
इत्यादि
आत्मनेपदप्रकरणीयसूत्रम् ॥ स च
प्रत्ययः
घातोः शब्दाच्च भवति । यथा, ञिः
प्रेरणे
इति लेः कृत्याख्याने ञिरिति च
मुग्धबोध-
व्याकरणम् ॥ मुग्धबोधव्याकरणस्य
परिच्छेद-
विशेषः । यथा, इति ञ्यन्तपादः ॥

**ट**

**ट**, टकारः । सं व्यञ्जनैकादशवर्णः । टवर्गप्रथम-

वर्णश्च । अस्योच्चारणस्थानं मूर्द्धा ।
इति व्याक-
रणम् ॥ (अस्योच्चारणे मूर्द्धस्थानेन
जिह्वामध्यस्य
स्पर्शः आभ्यन्तरप्रयत्नः ।
मातृकान्यासेऽस्य
दक्षिणस्फिचि न्यास्यत्वम् ।
वङ्गीयवर्णमाला-
याम्) तस्य लेखनप्रकारो यथा, --
“ऊर्द्धाधःक्रमतो रेखा
कुण्डलीरूपतस्त्वधः ।
तिष्ठन्ति तासु नित्यासु कुवेरयमवायवः
॥
मात्रा कोणगता चोद्र्ध्वा तत ऊद्र्ध्वगता
तु सा ।
या नित्या परमा शक्तिश्चतुर्व्वर्गप्रदायिनी
॥
ध्यानमस्य प्रवक्ष्यामि शृणुष्व
वरवर्णिनि ! ।
मालतीपुष्पवर्णाभां पूर्णचन्द्रनिभेक्षणाम्
॥
दशबाहुसमायुक्तां सर्व्वालङ्कारसंयुताम् ।
परमोक्षप्रदां नित्यां सदा स्मेरमुखीं पराम्
॥
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशघा
जपेत् ॥”
इति वर्णोद्धारतन्त्रम् ॥ * ॥

“यः क्षत्रदेहं परितक्ष्य टङ्कै-
स्तपोमयैर्ब्राह्मणमुच्चकार ॥”)
परिमाणविशेषः । स तु
चतुर्म्माषकरूपश्चतु-
र्व्विंशतिरक्तिकारूपो वा । जङ्घा । इति
हेम-
चन्द्रः । ३ । ५८३ ॥ दर्पः । इति
हलायुधः ॥

**टङ्कः**, पुं क्ली, (टकि + घञ् अच् वा ।) नील-

कपित्थः । (यथा, सुश्रुते सूत्रस्थाने
४६ ।
“शीतं कषायं मधुरं टङ्कं मारुतकृद्गुरु
॥”)
खनित्रम् । टङ्कणः । इति मेदिनी । के,
२४ ॥
दर्पः । इति शब्दरत्नावली ॥

**टङ्ककः**, पुं, (टङ्कति बध्नाति मनः स्नेहेनेति ।

टकि + ण्वुल् । यद्वा, टङ्क्यते
रुध्यतेऽनेन मन
इति । घञ् । ततः संज्ञायां कन् ।)
रजतमुद्रा ।
इति रूप्याध्यक्षशब्दे
अमरटीकासारसुन्दरी
भरतश्च ॥ टाका इति भाषा ॥

**टङ्ककपतिः**, पुं, (टङ्ककस्य पतिः रक्षकः ।) रूप्या-

ध्यक्षः । टङ्ककशालानियुक्तः ।
इत्यमरटीका-
सारसुन्दरी ॥ टाकशालेर अध्यक्ष इति
भाषा ॥

**टङ्ककशाला**, स्त्री, (टङ्ककस्य शाला ।) रजत-

मुद्रागृहम् । इत्यमरटीकासारसुन्दरी ॥
टाक-
शाल इति भाषा ॥

**टङ्कटीकः**, पुं, शिवः । इति त्रिकाण्डशेषः ॥

**टङ्कणः**, पुं, (टकि बन्धे + ल्युः । पृषोदरात् णत्वे

साधुः ।) क्षारविशेषः । सोहागा इति
भाषा ।

त्वात् ङीष् ।) क्षुपविशेषः । टेकारी इति
भाषा । अस्य गुणाः । वातश्लेष्मशोफोदर-
व्यथानाशित्वम् । तिक्तत्वम् । दीपनत्वम् ।
लघु-
त्वञ्च । इति राजनिर्घण्टः ॥

**टङ्गः**, पुं क्ली, (टकि + अच् ।) खनित्रम् । खड्ग-

भेदः । जङ्घा । इति मेदिनी । गे, ७ ॥

**टङ्गः**, पुं, (टङ्क + पृषोदरात् साधुः ।) टङ्कणः ।

इति शब्दचन्द्रिका ॥ सोहागा इति भाषा ।
चतुर्म्माषकपरिमाणम् । इति वैद्यकपरिभाषा ॥

**टङ्गणः**, पुं क्ली, (टङ्कण + पृषोदरात् साधुः ।)

टङ्कणः । सोहागा इति भाषा । अस्य गुणाः ।
श्लेष्मवायुनाशित्वम् । क्षाररसत्वम् ।
तीक्ष्णत्वम् ।
उष्णत्वम् । अग्निवर्द्धकत्वम् । विरूक्षणत्वम् ।
भेदकत्वम् । बलवर्द्धनत्वञ्च । इति राजवल्लभः
॥

**टङ्गिणी**, स्त्री, (टकि बन्धे + णिनिः । ततः पृषो-

दरात् णत्वे ङीषि च साधुः ।) वृक्षविशेषः ।
इति शब्दचन्द्रिका ॥ आकनादि इति भाषा ॥

| | | |
|---|---|---|
| अस्य स्वरूपं यथा, --<br>“टकारं चञ्चलापाङ्गि ! स्वयं परमकुण्डली ।<br>कोटिविद्युल्लताकारं पञ्चदेवमयं सदा ॥ | (यथा, सुश्रुते सूत्रस्थाने ४६ अध्याये ।<br>“विरुक्षणोऽनिलकरः श्लेष्मघ्नः पित्तदूषणः ।<br>अग्निदीप्तिकरस्तीक्ष्णष्टङ्कणः क्षार उच्यते ॥”) | |

**टट्टनी**, स्त्री, (टट्ट इत्यव्यक्तशब्दं नयतीति । नी + क्विप् ।) ज्येष्ठी । इति त्रिकाण्डशेषः ॥

**टट्टरी**, स्त्री, (टट्टमित्यव्यक्तशब्दं रातीति । रा + कस्ततो ङीष् ।) मृषावादः । लम्पावाद्यम् । पटहवाद्यम् । इति मेदिनी । रे, १५९ ॥

**टड्डुरः**, पुं, (टड्डु इत्यव्यक्तशब्दं रातीति । रा + कः ।) भेरीशब्दः । इति हेमचन्द्रः ॥

**टल**, ज विक्लवे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) ज, टालः टलः । विक्लवो विह्व-लीभावः । इति दुर्गादासः ॥

**टलनं**, क्ली, (टल + भावे ल्युट् ।) विक्लवः । टला इति भाषा ॥

**टा**, स्त्री, (टलति प्रलये भूकम्पादौ वा । टल + ड ष्टाप् च ।) पृथिवी । इत्येकाक्षरकोषः ॥

**टाङ्करः**, पुं, (टङ्कस्येदं टाङ्कम् । टङ्क + अण् । टाङ्कं रातीति । रा + कः ।) नागवीटः । इति त्रिकाण्डशेषः ॥

**टारः**, पुं, (टां पृथ्वीं ऋच्छतीति । ऋ + अण् ।) लङ्गः । तुरङ्गः । इति हेमचन्द्रः ॥

**टिक**, ऋ ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-सवं-सेट् ।) ऋ, अटिटेकत् । ङ, टेकते । इति दुर्गादासः ॥

**टिटिभकः**, पुं, (टिटीत्यव्यक्तशब्दं भणति । भण + डः । ततः स्वार्थे कन् ।) टिट्टिभपक्षी । इत्यमरटीका ॥

**टिट्टिभः**, पुं, (टिट्टीत्यव्यक्तशब्दं भणतीति । भण + डः ।) पक्षिविशेषः । टीठि इति भाषा । तत्पर्य्यायः । टीठिभकः २ । इति शब्दरत्ना-वली ॥ टिट्टिभकः ३ । इत्यमरः । २ । ५ । ३५ ॥
टिट्टिभकः ४ । इति तट्टीका ॥ (यथा, मनुः । ५ । ११ ।

**टिप**, क नुदि । इति कविकल्पद्रुमः ॥ (चुरां-परं-सकं-सेट् ।) क, टेपयति । नुदि प्रेरणे । इति
दुर्गादासः ।

**टिप्पनी**, स्त्री, (टेपयति व्याख्यायतेऽनया । टिप + करणे ल्युट् ङीप् च । पृषोदरादित्वात् पस्य द्वित्वे
साधुः ।) टीका । यथा, --
"श्रीमतङ्गाननं नत्वा लीलावत्याः सुटिप्पनी ।
भवेशेन सुबोधार्थं क्रियते यद्गुरोः श्रुतम् ॥")

**टीक**, ऋ ङ गत्याम् । इति कविकल्पद्रुमः । (भ्वां-आत्मं-सकं-सेट् ।) ऋ, अटिटीकत् । ङ, टीकते ।
इति दुर्गादासः ॥

**टीका**, स्त्री, (टीक्यते गम्यते प्रविश्यते ज्ञायते वानया । टीक + घञर्थे कः । टाप् च ।) विव-
रणग्रन्थः । इति लिङ्गादिसंग्रहे अमरः ॥

**टुण्टुकः**, पुं, श्योणाकवृक्षः । इत्यमरः । २ । ४ । ५६ ॥
कृष्णखदिरवृक्षः । इति शब्दचन्द्रिका ॥ (टुण्टु
इत्यव्यक्तशब्देन कायति शब्दायते इति । कै +
कः ।) पक्षिविशेषः । इति शब्दरत्नावली ॥
टुण्टुनि इति भाषा । श्योनाकप्रभेदः । इति
राजनिर्घण्टः ॥

**टुण्टुकः**, त्रि, नीचः । इति मेदिनी ॥ क्रूरः । इति विश्वः ॥

**टुण्टुका**, स्त्री, टङ्गिणीवृक्षः । इति शब्दचन्द्रिका ॥

**टुनाका**, स्त्री, तालमूलीवृक्षः । इति शब्द-

पञ्चदेवात्मकं वर्णं पञ्चप्राणमयं सदा ।
त्रिबिन्दुसहितं वर्णं त्रिशक्तिसहितं सदा ॥"
तस्य ३१ एकत्रिंशन्नामानि यथा, --
"ठः शून्यो मञ्जरी बीजः पाणिनी लाङ्गली
क्षया ।
वनजो नन्दनो जिह्वा सुनञ्जो घूर्णकः सुधा ॥
वर्त्तुलः कुण्डलो वह्निरमृतं चन्द्रमण्डलः ।
दक्षजानूरुभावश्च देवभक्षो बृहद्ध्वनिः ॥
एकपादो विभूतिश्च ललाटं सर्व्वमित्रकः ।
वृषघ्नो नलिनी विष्णुर्म्महेशो ग्रामणीः शशी ॥"
इति नानातन्त्रशास्त्रम् ॥

**ठः**, पुं, शिवः । महाध्वनिः । चन्द्रमण्डलः । इत्येकाक्षरकोषः ॥ मण्डलः । शून्यम् । लोक-
गोचरः । इति मेदिनी । ठे, १ ॥

**ठक्कुरः**, पुं, देवता । ठाकुर इति ख्यातः । यथा,
"श्रीदामनामगोपालः श्रीमान् सुन्दरटक्कुरः ॥"
इत्यनन्तसंहिता ॥

**ठठं** व्य, अनुकरणशब्दः । ठन् ठन् इति भाषा । यथा, महानाटके । ९६ ।

**ठठठं** व्य, अनुकरणशब्दः । ठन् ठन् इति भाषा । यथा, महानाटके । ९६ ।
"रामाभिषेके मदविह्वलायाः
कक्षाच्च्युतो हेमघटस्तरुण्याः ।
सोपानमारुह्य चकार शब्दं
ठठं ठठं ठं ठठठं ठठं ठः ॥"

**ठेरः**, त्रि, वृद्धः । यथा, जा ठेरं व्व हसन्ती ।

"अनिर्द्दिष्टांश्चैकशफांष्टिट्टिभञ्च विवर्ज्जयेत् ॥")
त्रयोदशमन्वन्तरीयेन्द्रशत्रुदानवविशेषः । यथा,
"इन्द्रो दिवस्पतिः शत्रुष्टिट्टिभो नाम दानवः ।
मायूरेण च रूपेण घातयिष्यति माधवः ॥"
इति गारुडे ८७ अध्यायः ॥
(वरुणसभारक्षकदानवानामन्यतमः। असौ हि मर्त्यधर्म्मविवर्ज्जितः । यथा, महाभारते । २ । ९ । १५ ।
"टिट्टिभो विटभूतश्च संह्लादश्चेन्द्रतापनः ॥"
इत्युपक्रम्याह ।
"सर्व्वे लब्धवराः शूराः सर्व्वे विगतमृत्यवः ॥")

**टिट्टिभकः**, पुं, (टिट्टिभ + स्वार्थे कन् ।) टिट्टिभ-पक्षी । इत्यमरः । २ । ५ । ३५ ॥

**टिण्टिणिका**, स्त्री, अम्बुशिरीषिका । इति भावप्रकाशः ॥

**टिण्डिशः**, पुं, वृक्षविशेषः । डिण्डिशा । इति डेँडशी इति च भाषा । तत्पर्य्यायः । रोमशफलः २ तिन्दिशः ३ मुनिनिर्म्मितः ४ । इति राजनिर्घण्टः ॥ डिण्डिशः ५ । अस्य गुणाः । रुचिकारित्वम् । भेदकत्वम् । पित्तश्लेष्माश्मरीनाशित्वम् । सुशीतत्वम् । वातलत्वम् । रूक्षत्वम् । मूत्रलत्वञ्च । इति भावप्रकाशः ॥ चन्द्रिका ॥

**टेरकः**, त्रि, वक्रचक्षुः । टेरा इति भाषा । तत्पर्य्यायः । बलिरः २ केकरः ३ केदरः ४ । इति शब्दरत्नावली ॥

**ट्वल**, ज विक्लवे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) वकारयुक्तः । ज, ट्वालः ट्वलः । विक्लवो विह्वलीभावः । इति दुर्गादासः ॥

## ठ

**ठ**, ठकारः । स व्यञ्जनद्वादशवर्णः टवर्गद्वितीयवर्णश्च । (अर्द्धमात्राकालेनोच्चार्य्योऽयं वर्णः ।)
अस्योच्चारणस्थानं मूर्द्धा । इति व्याकरणम् ॥
(अस्योच्चारणे जिह्वामध्येन मूर्द्धस्थानस्पर्शः
आभ्यन्तरप्रयत्नः । विवारश्वासघोषा महाप्राणश्च वाह्यप्रयत्नाः ।
वङ्ग्यवर्णमालायाम्)
तस्य लेखनप्रकारो यथा, --
"वार्त्ताकुवर्त्तुलाकारो रेखाधिष्ठितदेवताः ।
तिष्ठन्ति क्रमतो नित्यं चन्द्रसूर्य्याग्नयः प्रिये ! ॥
मात्राहीनस्तूद्दर्ध्वशिखष्ठकारः परमेश्वरि ! ॥
ध्यानमस्य प्रवक्ष्यामि शृणुष्व कमलानने ! ।
पूर्णचन्द्रप्रभां देवीं विकसत्पङ्कजेक्षणाम् ॥
सुन्दरीं षोडशभुजां धर्म्मकामार्थमोक्षदाम् ।
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत् ॥"
इति तन्त्रोद्धारतन्त्रम् ॥ * ॥
अस्य स्वरूपं यथा, कामधेनुतन्त्रे ।
"ठकारं चञ्चलापाङ्गि ! कुण्डली मोक्षरूपिणी ।
पीतविद्युल्लताकारं सदा त्रिगुणसंयुतम् ॥
इति काव्यप्रकाशे देशीभाषा ॥

## ड

**ड**, डकारः । स व्यञ्जनत्रयोदशवर्णः टवर्गतृतीयवर्णश्च । अस्योच्चारणस्थानं मूर्द्धा । इति व्याकरणम् ॥ (यथा, शिक्षायाम् । १७ ।
"स्युर्मूर्द्धन्या ऋटुरषा दन्त्या ऌतुलसाः स्मृताः ॥")
वङ्गीयवर्णमालायामस्य लेखनप्रकारो यथा,
"ऊद्ध्वाधःक्रमतो रेखा मध्ये त्वाकुञ्चिता तथा ।
लक्ष्मीर्व्वाणी भवानी च क्रमशस्तत्र संस्थिता ॥
ब्रह्मरूपा तथा मात्रा महाशक्तिः प्रकीर्त्तिताः ।
ध्यानमस्य प्रवक्ष्यामि शृणुष्वावहिता मम ।
जवासिन्दूरसङ्काशां वराभयकरां पराम् ॥
त्रिनेत्रां वरदां नित्यां परमोक्षप्रदायिनीम् ।
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत् ॥"
इति वर्णोद्धारतन्त्रम् ॥ * ॥
अस्य स्वरूपं यथा, कामधेनुतन्त्रे ।
"डकारं चञ्चलापाङ्गि ! सदा त्रिगुणसंयुतम्
पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा ॥
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा ।
चतुर्ज्ञानमयं वर्णं आत्मादितत्त्वसंयुतम् ॥
पीतविद्युल्लताकारं डकारं प्रणमाम्यहम् ।"
तस्य २४ चतुर्विंशतिनामानि यथा, --
"डः स्मृतिर्द्दारुको नन्दिरूपिणी योगिनी प्रियः ।

दुरूहो जटिली भीमा द्विजिह्वः पृथिवी सती ।
कोरगिरिः क्षमा कान्तिर्नाभिः स्वाती च
लोचनम् ॥”
इति नानातन्त्रशास्त्रम् ॥
(पद्यादौ अस्य प्रथमोपन्यासे फलं शोभा ।
यदुक्तं वृत्तरत्नाकरटीकायाम् ।
“डः शोभां ढो विशोभां भ्रणणमथ च णस्तस्तु
खं थस्तु युद्धम् ॥”)

**डः**, पुं, (डयते उड्डीयते भक्तानां हृदयाकाशे
यः । डी + बाहुलकात् डः ।) शिवः ।
(डीयते आकाशमार्गे नभोगुणत्वादिति । डी
+ डः ।) शब्दः । त्रासः । इत्येकाक्षरकोषः ॥
वाडवाग्निः । इति मेदिनी । डे, १ ॥

**डङ्गरी**, स्त्री, (डं अरोचकादिजनितत्रासं
गिरति नाशयतीति । गॄ + अच् । निपातनात्
मुमागमः । ततो ङीष् ।) फलविशेषः । तत्-
पर्य्यायः । डाङ्गरी २ दीर्घेर्व्वारुः ३ दण्डरी ४
डङ्गारी ५ नामशुण्डी ६ गजदन्तफला ७ ।
अस्या गुणाः । शीतलत्वम् । रुचिकारित्वम् ।
दाहपित्तास्रदोषार्शोजाड्यमूत्ररोधनाशित्वम्।
तर्पणत्वम् । गौल्यत्वञ्च । इति राजनिर्घण्टः ॥

**डङ्गारी**, स्त्री, (डङ्गरी पृषोदरादित्वादात्वम् ।)
डङ्गरीफलम् । इति राजनिर्घण्टः ॥

**डप**, इ क ङ ञ संहतौ । इति कविकल्पद्रुमः ॥
(चुरां-आत्मं उभं च-सकं-सेट् ।) मूर्द्धन्य-
वर्गतृतीयादिः । इ क ङ, डम्पयते । ञ, डम्प-
यति डम्पयते । अयमात्मनेपदीत्यन्ये । संहती
राशीकरणम् । इति दुर्गादासः ॥

**डप**, क ङ ञ संहतौ । इति कविकल्पद्रुमः ॥
(चुरां-आत्मं-उभं च-सकं सेट् ।) मूर्द्धन्यवर्ग-
तृतीयादिः । क ङ, डापयते । ञ, डापयति
डापयते । पुनःपाठान्नेदनुबन्धः । अयं आत्मने-
पदीत्यन्ये । संहती राशीकरणम् । इति दुर्गा-
दासः ॥

**डब**, इ क नोदे । इति कविकल्पद्रुमः ॥ (चुरां-

विप्लवः ३ । इत्यमरः । ३ । २ । १४
॥ डिम्बः ४
विम्बः ५ डामरः ६ । इति भरतः ॥
(यथाह
गर्गः ।
“तल्लक्षणोऽस्थिकेतुः स तु रूक्षः
क्षुद्भयावहः
प्रोक्तः ।
स्निग्धस्तादृक् प्राच्यां शास्त्राख्यो
डमर-
मरकाय ॥”)

**डमरुः**, पुं, (डमित्यव्यक्तशब्दं ऋच्छतीति । ऋ
+ “मृगय्वादयश्च ।” उणां १ । ३८ ।
इति कु-
प्रत्ययेन निपातनात् साधुः ।) वाद्यभेदः
।
इत्यमरः । १ । ७ । ८ ॥
कपालियोगिवाद्यम् ।
इति भरतः ॥ क्षीणमध्यो
गुटिकाद्वयालम्बितः ।
इति सारसुन्दरी ॥ (यथा, योगसारे २
परि-
च्छेदे ।
“वादयन् डमरुं योगी यत्र कुत्राश्रमे
स्थितः ॥”)
चमत्कारः । इति त्रिकाण्डशेषः ॥

**डयनं**, क्ली, (डीयते आकाशमार्गे गम्यतेऽनेनेति
।
डी + करणे ल्युट् ।) कर्णीरथः । (डी ङ
नभो-
गतौ + भावे ल्युट् ।) नभोगतिः । इति
हेम-
चन्द्रः । ४ । ३८४ ॥

**डल्लकं**, क्ली, वंशादिनिर्म्मितपात्रम् । डाला इति
भाषा । यथा, --
“त्रिशतञ्च षष्ट्यधिकं डल्लकं
वस्त्रसंयुतम् ।

**डामरः**, पुं, शिवोक्तशास्त्रविशेषः । (यथा,
काशीखण्डे । २९ । ७० ।
“डमड्डमरुहस्ता च
डामरोक्तमहाण्डका ॥”
“डामरो डामरकल्पो
नवाक्षरदेवीमन्त्रस्य
प्रतिपादको ग्रन्थो महाराष्ट्रे
सुप्रसिद्धस्तत्रोक्तं
प्रतिपादितं मन्त्रमयं महच्छरीरं
यस्याः ॥”
इति तट्टीका ॥) स तु षड्विधः ।
तेषां
नामानि श्लोकसंख्याश्च यथा ।
योगडामरः
२३,५३३ । शिवडामरः ११,००७
। दुर्गाडामरः
११,५०३ । सारस्वतडामरः
९,९०५ । ब्रह्म-
डामरः ७,१०५ । गन्धर्व्वडामरः
६०,०६० ।
इति वाराहीतन्त्रम् ॥ डमरः ।
इत्यमर-
टीकायां भरतः ॥ चमत्कारः । यथा ।
भूतानां
डामरश्चमत्कारोऽत्रेति
भूतडामरशब्दनिर्व्व-
चने निबन्धकारः ॥ (गर्व्वः । आटोपः
। यथा,
गीतगोविन्दे । १२ । २२ ।
“मम रुचिरे चिकुरे कुरु मानद !
मानसज-
ध्वजचामरे ।
रतिगलिते ललिते कुसुमानि
शिखण्डि-
शिखण्डकडामरे ॥”
कोटचक्रविशेषः । यथा, समयामृते ।
“अथातः संप्रवक्ष्यामि
कोटचक्रमिहाष्टधा ॥”
इत्युपक्रम्य, --

परं-सकं-सेट् ।) मूर्द्धन्यवर्गतृतीयादिः । इ क, डम्बयति । नोदः प्रेरणम् । इति दुर्गादासः ॥

**डभ**, इ क ञ सङ्घे । इति कविकल्पद्रुमः ॥ (चुरां-

उभं-अकं-सेट् ।) मूर्द्धन्यवर्गतृतीयादिः । इ क, डम्भयति डम्भयते । अयमात्मनेपदीति केचित् । सङ्घो राशीकरणम् । इति दुर्गादासः ॥

**डमः**, पुं, (डं नीचयोनित्वात् भीतिं मातीति । मा

+ कः ।) वर्णसङ्करजातिविशेषः । डोम इति भाषा । स चाण्डाल्यां लेटात् जातः । इति ब्रह्मवैवर्त्तपुराणम् ॥

**डमरं**, क्ली, (मृ + भावे अप् । मरं पलायनं

धातूनामनेकार्थत्वात् । डेन त्रासेन मरम् ।) भीत्या पलायनम् । तत्पर्य्यायः । शृगालिका २ विद्रवः ३ डिम्बः ४ । इति हारावली । ९९ ॥

**डमरः**, पुं, (डेन भयेन मरो मृतिविर यत्र ।)

परचक्रादिभयम् । अस्त्रकलहः । इत्यमर-टीकायां स्वामी ॥ तत्पर्य्यायः । डिम्बम् २

सभोज्यं सोपवीतञ्च सोपहारं मनोहरम् ॥”

इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥

**डवित्थः**, पुं, काष्ठमयमृगः । यथा, --

“डित्थः काष्ठमयो हस्ती
डवित्थस्तन्मयो मृगः ॥”
इति सुपद्मव्याकरणे विभक्तिपादः ॥
(द्रववाचिसंज्ञाशब्दविशेषः । यथा साहित्य-
दर्पणे । “द्रव्यशब्दा एकव्यक्तिवाचिनो हरि-
हरडित्थडवित्थादयः ॥”)

**डहुः**, पुं, (दहति तापयति सर्व्वशरीरमिति ।

दह + मृगय्वादित्वात् कुप्रत्ययेन निपातनात्
साधुः ।) वृक्षविशेषः । डेहुया इति मादार
इति च भाषा । तत्पर्य्यायः । लकुचः २ लिकुचः ३ । इत्यमरः । २ । ४ । ६० ॥ अस्य
गुणाः । गुरुत्वम् । विष्टम्भित्वम् । त्रिदोष-
शुक्रटुष्टिकारित्वञ्च । इति राजवल्लभः ॥

**डहूः**, पुं, (डहुः । पृषोदरादित्वात् दीर्घः ।)

डहुः । इति शब्दरत्नावली ॥

**डा**, स्त्री, (डीयते नभोमार्गे गच्छतीति । डी

+ अन्येष्वपीति डः स्त्रियां टाप् ।) डाकिनी ।
इति मेदिनी । डे, १ ॥

**डाकिनी**, स्त्री, (डाय भयदानाय अकति कुटिलं

व्रजतीति । अक वक्रगतौ + इनिः । ततो ङीप् ।)
कालीगणविशेषः । यथा, ब्रह्मवैवर्त्ते प्रकृतिखण्डे ।
“सार्द्धञ्च डाकिनीनाञ्च विकटानां त्रिकोटिभिः ॥”
(डाकानां समूहः । “खलादिभ्य इनिर्व्वक्तव्यः ।”

“पञ्चमी गिरिकोटश्च षष्ठः कोटश्च डामरः ॥”
इत्युक्तवान् ॥
अस्य विशेषविवृतिः चक्रशब्दे द्रष्टव्या ॥ * ॥
क्षेत्रपालविशेषः । यथा, प्रयोगसारे ।
“भेदा एकोनपञ्चाशत् क्षेत्रपालस्य कीर्त्तिताः ॥”
इत्युपक्रम्य, --
“टङ्कपाणिस्तथा चान्यष्ठानबन्धुश्च डामरः ॥”)

**डालिमः**, पुं, (दाडिम्बः पृषोदरादित्वात् साधुः ।)

दालिमः । इत्यमरटीकायां भरतः ॥

**डाहलः**, पुं, त्रिपुरदेशः । इति भूरिप्रयोगः ॥

**डाहुकः**, पुं, दात्यूहपक्षी । इति जटाधरः ॥

**डिङ्गरः**, पुं, डङ्गरः । क्षेपः । खलः । धूर्त्तः ।

सेवकः । इति शब्दरत्नावली ॥

**डिण्डिमः**, पुं, (डिण्डीति शब्दं मातीति । मा +

कः ।) वाद्यप्रभेदः । इत्यमरः । १ । ७ । ८ ॥
डेङ्गरीति ख्यातः । इति भरतः ॥ माहेश्वर-
दण्डीति ख्यातः । इति सारसुन्दरी ॥ (यथा,
महाभारते । ७ । १९३ । ४४ ।
“भेरीश्चाभ्यहनन् हृष्टा डिण्डिमांश्च सहस्रशः ॥”
डिण्डिम इव आकृतिरस्त्यस्येति । अर्श
आदित्वादच् ।) कृष्णपाकफलः । इति शब्द-
चन्द्रिका ॥ पानी आमला इति भाषा ॥

**डिण्डिरः**, पुं, (हिण्डिरः पृषोदरादित्वात् हस्य

डः ।) समुद्रफेनः । इति हेमचन्द्रः । ४ । १४३ ॥

**डिण्डिरमोदकं**, क्ली, (मोदयतीति । मुद् + ण्वुल् ।

| | | |
|---|---|---|
| | ४ । २ । ५१ । इत्यस्य वार्त्तिकोक्त्या इनिः ।<br>डाकानां समूहः । इति सिद्धान्तकौमुदी ॥)<br>**डाङ्गरी**, स्त्री, (डङ्गरी पृषोदरादित्वादात्वम् ।)<br>डङ्गरीफलम् । इति राजनिर्घण्टः ॥ | डिण्डिर इव मोदकम् ।) गृञ्जनम् । इति राज-<br>निर्घण्टः ॥<br>**डिण्डिशः**, पुं, टिण्डिशः । ढेँडश् इति भाषा ॥<br>(यथा, भावप्रकाशे पूर्ब्बखण्डे प्रथमभागे । |

"डिण्डिशो रोमशफलो मुनिनिर्म्मित इत्यपि ।
डिण्डिशो रुचिकृद्भेदी पित्तश्लेष्मापहः स्मृतः ।
सुशीतो वातलो रूक्षो मूत्रलश्चाश्मरीहरः ॥")

**डित्थः**, पुं, काष्ठमयहस्ती । यथा, सुपद्मव्याकरणे

विभक्तिपादे ।
"डित्थः काष्ठमयो हस्ती डवित्थस्तन्मयो मृगः ॥"
विशेषलक्षणयुक्तपुरुषः । यथा, --
"श्यामरूपो युवा विद्वान् सुन्दरः प्रियदर्शनः ।
सर्व्वशास्त्रार्थवेत्ता च डित्थ इत्यभिधीयते ॥"
इति कलापटीकाव्याख्यासारः ॥
(द्रव्यवाचिसंज्ञाशब्दभेदः । यथा, साहित्य-
दर्पणे । "द्रव्यशब्दा एकव्यक्तिवाचिनो हरि-
हरडित्थडवित्थादयः ॥")

**डिप**, इ क ङ ञ संहतौ । इति कविकल्पद्रुमः ॥

(चुरां-आत्मं-उभं च-सकं-सेट् ।) मूर्द्धन्यवर्ग-
तृतीयादिः । इ क ङ, डिम्पयते । ञ, डिम्प-
यति डिम्पयते । अयमात्मनेपदीत्यन्ये । संहती
राशीकरणम् । इति दुर्गादासः ॥

**डिप**, क ङ ञ संहतौ । इति कविकल्पद्रुमः ॥

(चुरां-आत्मं-उभं-च सकं-सेट् ।) मूर्द्धन्यवर्ग-
तृतीयादिः । क ङ, डेपयते । ञ, डेपयति डेप-
यते । पुनःपाठान्नेदनुबन्धः । अयमात्मनेपदी-
त्यन्ये । संहती राशीकरणम् । इति दुर्गादासः ॥

**डिप**, शि क य इर् नुदि । इति कविकल्पद्रुमः ॥

(तुदां-चुरां-दिवां च-सकं-सेट् ।) शि, डिपति
अडिपीत् । क, डेपयति । य, डिप्यति । इर्
अडिपत् अडेपीत् । तुदाद्यन्तर्गणस्यैव कुटादि-
त्वमिति दिवादिपक्षे गुणः । दिवादिपक्षे पुषा-
दित्वान्नित्यं ङ इत्यन्ये । नुदि प्रेरणे । इति
दुर्गादासः ॥

**डिब**, इ क नोदे । इति कविकल्पद्रुमः ॥ (चुरां-

परं-सकं-सेट् ।) मूर्द्धन्यवर्गतृतीयादिः । इ क,
डिम्बयति । नोदः प्रेरणम् । इति दुर्गादासः ॥

**डिभ**, इ क ञ सङ्घे । इति कविकल्पद्रुमः ॥

**डिम्बं**, क्ली, (डिम्ब + घञ् ।) भयम् । कललम् ।

फुप्फुसः । इति हारावली । २४४ ॥
डमरः ।
इत्यमरः । ३ । २ । १४ ॥

**डिम्बः**, पुं, (डिवि नोदे + भावे घञ् ।) भय-

ध्वनिः । अण्डम् । फुप्फुसः । प्लीहा ।
विप्लवः । इति मेदिनी । बे, ५ ॥
डिम्भः । इति
द्विरूपकोषः ॥

**डिम्बाहवः**, पुं, (डिम्बः नृपतिहीनत्वात् विप्लव-

मूल आहवः ।) नृपतिरहितयुद्धम् ।
इति
जटाधरः ॥ (यथा, मनुः । ५ । ९५ ।
"डिम्बाहवहतानाञ्च विद्युता पार्थिवेन च ॥"
"डिम्बाहवो नृपरहितयुद्धं तत्र हतानाम् ।"
इति तट्टीकायां कुल्लूकभट्टः ॥)

**डिम्बिका**, स्त्री, (डिम्बयति नायकसमीपे नोदय-

त्यात्मानमिति । डिम्ब + ण्वुल् । टाप् अत
इत्वञ्च ।) कामुकी । जलविम्बः ।
शोणक-
वृक्षः । इति शब्दरत्नावली ।

**डिम्भः**, त्रि, (डिम्भयति संहतो भवतीति । डिम्भ-

+ पचाद्यच् ।) शिशुः । इत्यमरः । २ ।
५ । ३८ ॥
(यथा, रसिकरञ्जने । १ ।
"शुभारम्भेऽदम्भे
महितमतिडिम्भेङ्गितशतं ।
मणिस्तम्भे रम्भेक्षणसकुचकुम्भे
परिणतम् ॥")
मूर्खः । इति मेदिनी । भे, ४ ॥ अस्य
रूपा-
न्तरं डिम्बः । इति द्विरूपकोषः ॥

जहार । स्वमते तु डीत इत्येव । इति
दुर्गा-
दासः ॥

**डीनं**, क्ली, (डी नभोगतौ + भावे क्तः ।) पक्षि-

गतिः । इति जटाधरः ॥ तद्भेदा यथा, --
"क्षणात् संपत्य निष्क्रम्य
पक्षसम्पातमुच्यते ।
ऊर्द्ध्वाधोगतिसम्बन्धः समुदीर्णं
प्रचक्षते ॥
संकल्प्य पक्षगमनमुच्यते
व्यतिरिक्तकम् ।
षड्विंशतिरमी भेदाः पातानामिह
दर्शिताः ॥
महाडीनं विहायैषां पातानां त्रिविधा
गतिः ।
गतं तत्र यथोद्दिष्टं आगतं पुनरागमः ॥
प्रत्यावृत्तिः प्रतिगतिरिति षट् सप्तभिः
स्मृताः ।
तेषां निपाताः कथ्यन्ते प्रत्येकं
पञ्चविंशतिः ॥"
तद्यथा । उड्डीनं ऊर्द्ध्वगमनम् १
अवडीनं अधः-
पतनम् २ प्रडीनं पतनवेगवत्ता ३ डीनं
पतन-
मात्रम् ४ निडीनं नीचैःपतनम् ५ संडीनं
सम्यक्पतनम् ६ तिर्य्यग्डीनं
तिर्य्यक्पतनम् ७
विडीनं विचित्रं पतनम् ८ परिडीनं
सर्व्वतः
पतनम् ९ पराडीनं परावृत्य गमनम्
१०
सुडीनं सुकुमारपातः ११ अभिडीनं
आभि-
मुख्येन पुनः पुनः पतनम् १२ महाडीनं
क्षुद्र-
पतनेन प्रत्यावृत्तिः १३ निडीनं
भक्ष्यमाश्रयं वा

(चुरां-उभं-सकं-सेट् ।) इ क ञ, डिम्भयति डिम्भयते । अयमात्मनेपदीति केचित् । सङ्घो राशीकरणम् । इति दुर्गादासः ॥

**डिम**, हिंसे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-

सकं-सेट् ।) डिण्डिमः । सौत्रधातुरयम् । इति दुर्गादासः ॥

**डिमः**, पुं, नाटकस्य रूपकविशेषः । इति हेम-

चन्द्रः । २ । १९८ ॥ (तल्लक्षणादिकं यदुक्तं साहित्यदर्पणे । ६ । २४६ ।
"मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ।
उपरागैश्च भूयिष्ठो डिमः ख्यातोऽतिवृत्तकः ॥
अङ्गो रौद्ररसस्तत्र सर्व्वेऽङ्गानि रसाः पुनः ।
चत्वारोऽङ्का मता नेह विष्कम्भकप्रवेशकौ ॥
नायका देवगन्धर्व्वयक्षरक्षोमहोरगाः ।
भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः ।
वृत्तयः कौशिकीहीना निर्व्विमर्षाश्च सन्धयः ।
दीप्ताः स्युः षड्रसाः शान्तहास्यशृङ्गार-
वर्ज्जिताः ॥")

**डिम्भकः**, त्रि, (डिम्भ एव । डिम्भ + स्वार्थे कन् ।)

बालकः । इति शब्दरत्नावली ॥
(स्वनामख्यातः
शाल्वदेशाधिपतेर्ब्रह्मदत्तस्य पुत्त्रः ।
यथा, हरि-
वंशे भविष्यपर्व्वणि । ३२ । १८ ।
"हंसो ज्येष्ठो नृपसुतो
डिम्भकोनन्तरोऽभवत् ॥"
अस्य विशेषविवरणं तत्रैव विस्तरशो
द्रष्टव्यम् ॥)

**डिम्भचक्रं**, क्ली, (डिम्भ इव चक्रम् ।) नराणां

शुभाशुभनिर्णायकचक्रविशेषः । यथा, --
"डिम्भचक्रे न्यसेद्भानि
भानुभादित्रिमस्तके ।
मुखे त्रीणि द्वयं स्कन्धे चैकैकं
बाहुहस्तयोः ॥
हृदि पञ्च नाभिगुह्ये चैकैकं षट् च
जानुनोः ।
चरणाभ्यां तथैकैकं जन्मर्क्षपतनात्
फलम् ॥
शीर्षस्थे छत्रलाभः स्यात् वक्त्रे
मिष्टान्नभोजनम् ।
स्कन्धे धनी च बाहुभ्यां स्थानभ्रष्टो
भवेन्नरः ॥
पाणिभ्यां तस्करो लक्ष्मीर्हृद्यल्पायुश्च
नाभितः ।
गुह्ये कामो भ्रमो जान्वोरल्पजीवी च
पादयोः ॥"
इति स्वरोदयः ॥

**डिम्भा**, स्त्री, (डिम्भ + टाप् ।) अतिशिशुः ।

इत्यमरः । २ । ६ । ४१ ॥

**डी**, ओ ङ य गतौ । नभोगतौ । इति कवि-

कल्पद्रुमः ॥ (दिवां-आत्मं-सकं अकं
च-सेट् ।)
ओ, डीनः । ङ य, डीयते । इति
दुर्गादासः ॥

**डी**, ङ नभोगतौ । इति कविकल्पद्रुमः ॥ (भ्वां-

पश्यतः पतनम् १४ अतिडीनं
दीर्घपतनम् १५
अवडीनं अधःपतनम् १६ प्रडीनं
अधःपतने
वेगवत्ता १७ अवसंडीनं अधःपतने
शोभन-
वत्ता १८ डीनडीनकं पतनं निर्व्विशेषणं
कुत्-
सितञ्च १९ संडीनोड्डीनं
शोभनमूद्र्ध्वगमनम् २०
संडीनडीनं शोभनगगनमात्रम् २१
पुनर्डीनं
तदेव सामान्यगमनम् २२
डीनावडीनकं तदे-
वाधः कुत्सितञ्च २३ सम्पातं बहुभिः
सह
गमनम् २४ समुदीर्णं परस्परस्पर्द्धया
गम-
नम् २५ ततोऽन्यत् व्यतिरिक्तकं
तस्मात् स्पर्द्धा-
कृतादेत्यस्नेहकृतं पतनम् २६ । एतेषु
षड्-
विंशतिसंख्येषु पतनं एकं डीननामकं
निर्व्वि-
शेषणं पतनमात्रं सविशेषणानि पतनानि
पञ्च-
विंशतिसंख्यानि तत्र तानि सविशेषानि
वक्ष्य-
माणचतुर्भिर्विशेषणैर्विशिष्टानि इति शतं
निर्व्वि-
शेषञ्चैकमिति एकोत्तरं शतम् । तानि
चत्वारि
विशेषणानि यथा । गतं गमनमात्रम् ।
आमतं
आगमनम् । प्रतिगतं गत्वैव पुनरागमनं
आग-
त्यैव पुनर्गमनञ्च । इति महाभारते । ८
। ४१ अः ॥ * ॥
आगमशास्त्रविशेषः । यथा,
मुण्डमालातन्त्रे ।

| | | |
|---|---|---|
| | आत्मं-अकं-सेट् ।) ङ, डयते पक्षी । अस्यापि निष्ठायां डीनः । इति कातन्त्राद्याः । धातु- पारायणिकास्तु इम्निषेधे ओदनुबन्धडीङो ग्रहणादस्मादिमि वक्तव्याद्गुणे डयित इत्याहुः । गोयीचन्द्रोऽपि । डयितः डयितवान् इत्युदा- | "डामरं डमरं डीनं श्रुतं कालीविलासकम् । सप्तकोटिमहाग्रन्था मम वक्त्राद्विनिर्गताः ॥"<br>**डीनडीनकं**, क्ली, (डी + भावे क्तः । ततः स्वार्थे कन् । डीनेन सह डीनकं निर्व्विशेषणं कुत्सितं वा पतनम् ।) पक्षिणां गतिक्रियाविशेषः । इति जटाधरः । अस्य विवरणं डीनशब्दे द्रष्टव्यम् ॥<br>**डीनावडीनं**, क्ली, (डीनेन सह अवडीनम् ।) पक्षिगतिविशेषः । तत्तु एकस्यां गतौ गत्यन्तर- मिश्रणम् । अधःकुत्सितगमनञ्च । इति महा- भारते कर्णपर्व्वटीका ॥ |

**डुण्डुः**, पुं, (डुमिति कृत्वा डयते गच्छतीति । डी + डुः ।) डुण्डुभसर्पः । इति त्रिकाण्डशेषः ॥

**डुण्डुभः**, पुं, (डुण्डुः सन् भातीति । डुण्डु इत्यनु-करणशब्देन भाति वा । भा + कः ।) सर्प-विशेषः । ढोँडा इति भाषा । तत्पर्य्यायः । राजिलः २ इत्यमरः । १ । ८ । ५ ॥ दुण्डुभः ३ । इति भरतः ॥ नागभृत् ४ डुण्डुः ५ । इति त्रिकाण्डशेषः ॥ (यथा, देवीभागवते । २ । ११ । २८ ।
"एकदा स वने घोरं डुण्डुभं जरसान्वितम् ।
अपश्यद्दण्डमुद्यम्य हन्तुं तं समुपाययुः ॥")

**डुण्डुलः**, पुं, (डुण्डुरिति शब्दं लातीति । ला + कः ।) क्षुद्रपेचकः । तत्पर्य्यायः । क्षुद्रोलूकः २ शाकुनेयः ३ पिङ्गलः ४ वृक्षाश्रयी ५ बृह-द्रावी ६ विशालाक्षः ७ भयङ्करः ८ । इति राजनिर्घण्टः ॥

**डुलिः**, स्त्री, (दुलि + पृषोदरादित्वात् साधुः ।) दुलिः । कमठी । इत्यमरटीकायां रायमुकुटः ॥

**डुलिका**, स्त्री, (डुलिरिव कायतीति । कै + कः । ततष्टाप् ।) खञ्जनाकारपक्षिविशेषः । इति जटाधरः ॥

**डुली**, स्त्री, (डुलिः + ङीष् वा ।) चिल्लीशाकः । इति राजनिर्घण्टः ॥

**डोडी**, स्त्री, क्षुपविशेषः । तत्पर्य्यायः । जीवन्ती २ शाकश्रेष्ठा ३ सुखालुका ४ बहुवल्ली ५ दीर्घपत्रा ६ सूक्ष्मपत्रा ७ जीवनी ८ । अस्या गुणाः । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । दीपनत्वम् । कफवातकण्ठामयरक्तपित्तार्त्ति दाहनाशित्वम् । रुच्यत्वञ्च । इति राजनिर्घण्टः ॥

**डोमः**, पुं, स्वनामख्यातास्पृश्यजातिः । यथा, --

प्राणश्च बाह्यप्रयत्नाः ।
मातृकान्यासेऽस्य दक्ष-पादाङ्गुलीमूले न्यासक्रिया ।
वङ्गीयवर्णमाला-याम् ।) तस्य लेखनप्रकारो यथा, --
"ऊद्ध्वाधःक्रमतो रेखा वामदक्षिणतो गता ।
ततः सा कुण्डलीरूपा विष्ण्वीशब्रह्मरूपिणी ॥
महाशक्तिमयी मात्रा ध्यानमस्य प्रचक्ष्यते ।
रक्तोत्पलनिभां रम्यां रक्तपङ्कजलोचनाम् ॥
अष्टादशभुजां भीमां महामोक्षप्रदायिनीम् ।
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत् ॥"
इति वर्णोद्धारतन्त्रम् ॥ * ॥
अस्य स्वरूपं यथा, कामधेनुतन्त्रे ।
"ढकारं परमाराध्यं या स्वयं कुण्डली परा ।
पञ्चदेवात्मकं वर्णं पञ्चप्राणमयं सदा ॥
सदा त्रिगुणसंयुक्तं आत्मादितत्त्वसंयुतम् ।
रक्तविद्युल्लताकारं ढकारं प्रणमाम्यहम् ॥"
तस्य २६ षड्विंशतिनामानि यथा, --
"ढो ढक्का निर्णयः पूर्ब्बो यज्ञेशादनदेश्वरः ।
अर्द्धनारीश्वरस्तोयमीश्वरीत्रिशिखी नवः ॥
दक्षपादाङ्गुलेर्मूलं सिद्धिदण्डा विनायकः ।
प्रहासा त्रिवेरा ऋद्धिर्निर्गुणो निधनो ध्वनिः ॥
विघ्नेशः पालिनी त्वक्कधारिणी क्रोडपुच्छकः ।
एलापुरं त्वगात्मा च विशाखा श्रीमनोरतिः ॥"
इति नानातन्त्रशास्त्रम् ॥

**ढः**, पुं, (ढौकते उच्चैःशब्देन आवृणोति श्रवणे-न्द्रियमिति । ढौक गत्यावरणयोः + डः ।) ढक्का ।

"ढालिपक्षजयकरी ढकारवर्णरूपिणी ॥"
इति रुद्रयामले अन्नपूर्णासहस्रनामस्तोत्रम् ॥

**ढामरा**, स्त्री, हंसी । इति धनञ्जयः ॥

**ढुण्ढ**, अन्वेषणे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) ढाद्यन्तो दन्त्यनोपधः । ढ-योगान्मूर्द्धन्यः । तेन यगादौ तल्लोपे ढुढ्यत इत्यादि । ढुण्ढति धनं लोकः । इति दुर्गादासः ॥

**ढुण्ढिः**, पुं, (ढुढ्यतेऽसौ भक्तैरिति । ढुण्ढ अन्वे-षणे + इन् ।) गणेशः । तन्नामकरणं यथा, --
गणेशं प्रति शिववाक्यम् ।
"अन्वेषणे ढुढिरयं प्रथितोऽस्ति धातुः
सर्व्वार्थढुण्ढिततया भव ढुण्ढिनामा ।
काशीप्रवेशमपि को लभतेऽत्र देही
तोषं विना तव विनायक ! ढुण्ढिराज ! ॥"
तन्माहात्म्यं यथा, --
"ढुण्ढे ! प्रणम्य पुरतस्तव पादपद्मं
यो मां नमस्यति पुमानिह काशिवासी ।
तत्कर्णमूलमधिगम्य पुरादिशामि
तत्किञ्चिदत्र न पुनर्भवतास्ति येन ॥"
"यः प्रत्यहं नमति ढुण्ढिविनायक ! त्वां
काश्यां प्रगे प्रतिहताखिलविघ्नसङ्घः ।
नो तस्य जातु जगतीतलवर्त्ति वस्तु
दुष्प्रापमत्र परत्र च किञ्च नापि ॥"
"प्रथमं ढुण्ढिराजोऽसि मम दक्षिणतो मनाक् ।
आढुण्ढ्य सर्व्वभक्तेभ्यः सर्व्वार्थान् संप्रयच्छसि ॥"
तस्य यात्राविधानं यथा, --
"माघशुक्लचतुर्थ्यान्तु नक्तं व्रतपरायणाः ।
ये त्वां ढुण्ढेऽर्च्चयिष्यन्ति तेऽर्च्च्याः स्युरसुरद्वि-

"चाण्डालश्चैव डोमश्च ज्ञानकश्च तथा इति
।
दण्डीरश्चैव भण्डीरो भूषुण्डश्च वृथाश्रमी ॥
वृथासुण्डी लिङ्गधारी समा एते यशस्विनि !
।
स्पृष्ट्वा प्रमादतः स्नात्वा गायत्र्यष्टशतं
जपेत् ॥"
इति मत्स्यसूक्ततन्त्रे ३९ पटलः ॥

**डोरं**, क्ली, हस्तादिबन्धनसूत्रम् । यथा, --

"कोऽनन्त इत्युदीर्य्याथ धृत्वा तत्करपल्लवम्
।
हस्तादाकृष्य तड्डोरं क्षिप्तवान् पावकोपरि ॥"
इति भविष्यपुराणे अनन्तव्रतकथा ॥

**डोरकं**, क्ली, (डोर + स्वार्थे कन् ।) डोरम् । यथा,

"चतुर्द्दशग्रन्थियुक्तं कुङ्कुमाक्तं सुडोरकम् ।
स्त्रियश्च पुरुषश्चैव बध्नीयात् वामदक्षिणे
॥"
इति भविष्यपुराणे अनन्तव्रतकथा ॥

**डोरडी**, स्त्री, (डोरमिव डयते इति । डी + क्विप् ।)

वृहती । इति राजनिर्घण्टः ॥

**ढ**

**ढ**, ढकारः । स व्यञ्जनचतुर्द्दशवर्णः । टवर्गचतुर्थ-

वर्णश्च । (अर्द्धमात्राकालेनोच्चारणीयः ।)
अस्यो-
च्चारणस्थानं मूर्द्धा । इति व्याकरणम् ॥
(पाणि-
नीयादिषु अस्योच्चारणे जिह्वामध्यभागेन
मूद्दर्ध्नः
स्पर्शः आभ्यन्तरप्रयत्नः । संवारणादघोषा
महा-

(यथा, तन्त्रे ।
"ढो ढक्का निर्णयः पूर्ब्बो
यज्ञेशादनदेश्वरः ॥")
श्वा । श्वलाङ्गूलम् । इति मेदिनी । ढे, १
॥
निर्गुणः । ध्वनिः । इत्येकाक्षरकोषः ॥

**ढक्कः**, पुं, देशविशेषः । इति भूरिप्रयोगः ॥ ढाका

इति भाषा ॥

**ढक्का**, स्त्री, (ढक् इति गभीरशब्देन कायतीति ।

कै + कः टाप् च ।) वाद्यविशेषः । ढाक
इति
भाषा । तत्पर्य्यायः । यशःपटहः २ ।
इत्य-
मरः । १ । ७ । ६ ॥ विजयमर्द्दलः ३ ।
इति
शब्दरत्नावली ॥ (यथा,
अर्य्यासप्तशत्याम् । २४७ ।
"ढक्कामाहत्य मदं वितन्वते करिण इव
चिरं
पुरुषाः ॥")

**ढक्कारी**, स्त्री, (ढक्कं जयढक्कावत्
गभीरसिंहनादं

ऋच्छति समराङ्गणे इति । ऋ + अण्
ङीप्
च ।) तारिणी । यथा, --
"ढक्कारवा च ढक्कारी ढक्कारवरवा
ढका ॥"
इति कुलसद्भावे तारासहस्रनामस्तोत्रम् ॥

**ढण्टी**, स्त्री, वाक्यविशेषः । यथा, रुद्रयामले

अन्नपूर्णासहस्रनामकथने ।
"ढण्टीवाक्यस्वरूपा च ढकाराक्षररूपिणी
॥"

**ढालं**, क्ली, (ढौकते आवृणोति शरीरं अनेन ।

ढौक + अच् । पृषोदरात् आत्वे लत्वे च
साधुः ।)
फलकम् । ढालिपक्षजयकरीति
अन्नदाकल्पीय-
सहस्रनामविवरणात् ॥

षाम् ॥
विधाय वार्षिकीं यात्रां चतुर्थीं प्राप्य
तापसीम् ।
शुक्लां शुक्लतिलैर्ब्बद्धान्
प्राश्नीयाल्लड्डुकान् व्रती ॥
कार्य्या यात्रा प्रयत्नेन
क्षेत्रसिद्धिमभीप्सुभिः ।
तस्यां चतुर्थ्यां त्वत्प्रीत्यै ढुण्ढे !
सर्व्वोपसर्गहृत् ॥
तां यात्रां नात्र यः कुर्य्यान्निवेद्य तिललड्डु-
कान् ।
उपसर्गसहस्रैस्तु स हन्तव्यो ! ममाज्ञया
॥
होमं तिलाज्यद्रव्येण यः करिष्यति
भक्तितः ।
तस्यां चतुर्थ्यां मन्त्रज्ञस्तस्य मन्त्रः
प्रसेत्स्यति ॥"
इति काशीखण्डे । ५० अध्याये ॥

**ढोलः**, पुं, (ढः ढक्का तदाकारं लातीति । ला +
कः

पृषोदरात् ओत्वे साधुः । दुल उत्क्षेपे अच्
।
पृषोदरात् साधु र्वा ।)
स्वनामख्यातवाद्यम् ।
यथा, --
"ढक्काढोलप्रिया नित्या
ढोलवाद्यप्रमोदिनी ।
ढोलरूपा ढोलधरा ढोलशब्दस्वरूपिणी
॥"
इति रुद्रयामले
अन्नपूर्णासहस्रनामस्तोत्रम् ॥

**ढौक**, ऋ ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वां-

आत्मं-सकं-सेट् ।) चतुर्द्दशस्वरी । ऋ,
अडु-
ढौकत् । ङ, ढौकते । इति दुर्गादासः ॥
(आवृतौ । वदनं ढौकते । इति
कालिदासः ॥)

| | **ढाली** [न्] त्रि, (ढालमस्त्यस्येति । इनिः ।) ढाल-<br>विशिष्टः । चर्म्मी । यथा, -- | |
|---|---|---|

**ण**

**ण**, णकारः । स व्यञ्जनपञ्चदशवर्णः । टवर्ग-
पञ्चमवर्णश्च ॥
(अर्द्धमात्राकालेनोच्चारणीयः ।)
अल्योच्चारणस्थानं मूर्द्धा । इति
व्याकरणम् ॥
(शिक्षाग्रन्थादिमते तु अस्योच्चारणे जिह्वा-
मध्येन मूद्‌र्ध्नः स्पर्शः
नासिकायत्नप्रभेदश्च आभ्य-
न्तरप्रयत्नः । संवारणादघोषाः
अल्पप्राणश्च
वाह्यप्रयत्नाः । मातृकान्यासेऽस्य
दक्षपादा-
ङ्गुल्यग्रे न्यासक्रिया ॥ वङ्गीयवर्णमालायाम्
।)
तस्य लेखनप्रकारो यथा, --
"कुण्डलीत्वगता रेखा मध्यतस्तत
ऊद्‌र्ध्वतः ।
वामादधोगता सैव पुनरूद्‌र्ध्वं गता प्रिये ! ॥
ब्रह्मेशविष्णुरूपा सा चतुर्व्वर्गफलप्रदा ॥
ध्यानमस्य णकारस्य प्रवक्ष्यामि च तत्
शृणु ।
द्विभुजां वरदां रम्यां भक्ताभीष्टप्रदायिनीम्
॥
राजीवलोचनां नित्यां धर्म्मकामार्थमोक्षदाम्
।
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्
॥"
इति वर्णोद्धारतन्त्रम् ॥ * ॥
अस्य स्वरूपं यथा, --
"णकारं परमेशानि ! या स्वयं परकुण्डली ।
पीतविद्युल्लताकारं पञ्चदेवमयं सदा ॥
पञ्चप्राणमयं देवि ! सदा त्रिगुणसंयुतम् ।
आत्मादितत्त्वसंयुक्तं महामोहप्रदायकम् ॥"
इति कामधेनुतन्त्रम् ॥
तस्य २४ चतुर्विंशतिनामानि यथा, --
"णो निर्गुणं रतिर्ज्ञानं जम्भनः पक्षिवाहनः ।
जया शम्भो नरकजित् निष्कला
योगिनीप्रियः ॥
स्फटिककटकभूतिर्नाटयत्येष शैलः । इति
माघः ।
अस्य तु । नाट्येन केन नटयिष्यति दीर्घ-
मायुरिति मुरारिः । इति दुर्गादासः ॥

**णद**, म्लिष्टोक्तौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
अकं-सेट् ।) म्लिष्टोक्तिरव्यक्तशब्दः । नदति
घण्टा । इति दुर्गादासः ॥

**णद**, क भाषि । इति कविकल्पद्रुमः ॥ (चुरां-
परं-सकं-सेट् ।) क, नादयति । इति दुर्गा-
दासः ॥

**णभ**, ऌ ङ हिंसे । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-सकं-सेट् ।) ऌ, अनभत् । ङ, नभते
।
इति दुर्गादासः ॥

**णभ**, य ग हिंसे । इति कविकल्पद्रुमः ॥ (दिवां-
क्र्यां-च-परं-सकं-सेट् ।) य, नभ्यति । ग
नभ्नाति । इति दुर्गादासः ॥

**णम**, औ शब्दे । नतौ । इति कविकल्पद्रुमः । (भ्वां-
परं-अकं-नतौ सकं अकं च अनिट् ।) औ,
नन्ता । शब्दार्थो न भाषायाम् । नतिरिह
नमस्कारो नम्रीभावश्च । नमति गुरुं लोकः
।
नमन्ति फलिनो वृक्षाः । अमन्तेऽप्यस्य
ज्वल-
ह्वलह्मलेत्यादिना केवलस्य
ह्रस्वविकल्पनात्
सोपसर्गस्यैव नित्यं ह्रस्वः । नमयति
नामयति
प्रणमयति । श्वपुच्छमवनामितं
बधिरकर्णजापः
कुतः । इत्यादौ अवनमनं अवनामः घञ्
ततो
अवनामं करोतीति ञौ रूपम् । इति दुर्गा-
दासः ॥

**णय**, ङ गतौ । रक्षे । इति कविकल्पद्रुमः ॥ (दिवां-
णोपदेशविधौ वर्ज्जनेऽप्याद्यस्य पाठः
कस्य
चिदनुरोधात् । ऋ, अननाथत् । ङ,
प्रणाथते ।
दव उपतापः । आशीरिष्टार्थस्याशंसनम्
।
ङित्त्वेऽपि शपथाशीर्गत्यनुकारे इति
नियमादा-
भ्यामाशिषोऽन्यत्र परस्मैपदम् । नाथति
शत्रुं
बली उपतापयति इत्यर्थः । नाथते श्रियं
लोकः
आशंसत इत्यर्थः । नाथति धनी
ईश्वरःस्यादि-
त्यर्थः । नाथति भूपं भूमिं विप्रः
प्रार्थयती-
त्यर्थः । मार्गणैरथ तव प्रयोजनं नाथसे
किमु न भूभृतः पतिमिति भारवौ ।
याचन-
मप्याशंसाविशेषः । आशिषि
नित्यमात्मने-
पदमन्यत्र विभाषेति केचित् । इति
दुर्गादासः ॥

**णाध**, ऋ ङ नाथे । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-सकं-सेट् ।) णोपदेशविधावस्य
वर्ज्जने-
ऽपि इह पाठः कस्यचिदनुरोधात् । ऋ,
अन-
नाधत् । ङ, नाधते नाथो
दवाशीरैश्वर्य्यार्थ-
नानि । इति दुर्गादासः ॥

**णास**, ऋ ङ ध्वाने । शब्द इति यावत् । इति
कवि-
कल्पद्रुमः ॥ (भ्वां-आत्मं-अकं-सेट् ।)
ऋ,
अननासत् । ङ, नासते । इति दुर्गादासः
॥

**णिक्ष**, चुम्बने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-

द्विमुखं कोटवी श्रोत्रं समृद्धिर्बोधनी मता ।
त्रिनेत्रो मानुषी व्योमदक्षपादाङ्गुलेर्म्मुखः ॥
माधवः शङ्खिनी वीरो नारायणश्च निर्णयः
॥”
इति नानातन्त्रशास्त्रम् ॥

**णः**, पुं, (णखति गच्छति जानात्यनेन इति । णख
गतौ + डः । पृषोदरादित्वात् णत्वम् ।)
ज्ञानम् ।
निश्चयः । इत्येकाक्षरकोषः । बिन्दुदेवः ।
स
बुद्धदेवताविशेषः । भूषणम् । गुणवर्ज्जितः
।
पानीयनिलयः । इति मेदिनी । णे, १ ॥

**णक्ष**, व्रजे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-
सेट् ।) नक्षति । व्रजो गतिः । इति
दुर्गादासः ॥

**णख**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-
सेट् ।) प्रणखति । इति दुर्गादासः ॥

**णट**, नृत्यर्हिंसयोः । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-अकं-सकं च-सेट् ।) प्रणटति ।
णोपदेश-
विधौ वर्ज्जनेऽपि अस्य परस्य चेह पाठः
केषाञ्चिदनुरोधात् । अत्र नृत्यं
साभिनयनर्त्तनम् ।
इति दुर्गादासः ॥

**णट**, म नृतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
अकं-सेट् ।) म, प्रणटयति । नृताविति
नृत्यते-
रौणादिककिप्रत्यये रूपम् । अत्र मिकारानु-
बन्धेनैवेष्टसिद्धे पूर्ब्बे नृत्यग्रहणमर्थभेदार्थम्
।
तेन पूर्ब्बे नृत्यं साभिनयनर्त्तनम् इह तु
नृति-
रभिनयरहितनर्त्तनमिति । यथा पूर्ब्बस्य ।
आत्मं-सकं-सेट् ।) ङ, नयते । इति दुर्गा-
दासः ॥

**णर्द**, शब्दे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-
सेट् ।) णोपदेशविधावस्य वर्ज्जनेऽपि इह
पाठः
केषाञ्चिदनुरोधात् । प्रणर्दति । इति
दुर्गादासः ॥

**णल**, ज बन्धे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं
सेट् ।) ज, नालः नलः । नलति केशं लोकः
बध्नाति इत्यर्थः । गन्धे इति केचित् ।
गन्धो-
ऽदर्शनमिति गोविन्दभट्टः । इति दुर्गादासः
॥

**णश**, लृ य ऊ नाशे । इति कविकल्पद्रुमः ॥ (दिवां-
परं-अक वेट्-लृरङ् वान् ।) नाशो दर्शना-
भावः । इति प्राञ्चः । लुक्कायनमिति
सर्व्वस्वः ।
लृ, अनेशत् अनशत् । य, नश्यति
शत्रुस्तिरो-
भवति इत्यर्थः । ऊ, नशिष्यति नङ्क्ष्यति ।
इति
दुर्गादासः ॥

**णस**, ङ ह्वृतौ । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-
अकं-सकं च-सेट् ।) ह्वृतिरिह कुटिली-
भावस्तत्करणञ्च । ङ, नसते खलः कुटिलः
स्यादित्यर्थः । नसते लतांवायुः
कुटिलांकरोती-
त्यर्थः । इति दुर्गादासः ॥

**णह**, य ञ औ बन्धे । इति कविकल्पद्रुमः ॥
(दिवां-उभं-सकं-अनिट् ।) य ञ, नह्यति
नह्यते । औ, अनद्ध । इति दुर्गादासः ॥

**णाथ**, ऋ ङ आशिषि । दवैश्येऽर्थे । इति कवि-
कल्पद्रुमः ॥ (भ्वां-आत्मं-सकं-अकं च-सेट्
।)
सकं-सेट् ।) निक्षति । इति दुर्गादासः ॥

**णिज**, इ ल ङ शुद्धौ । इति कविकल्पद्रुमः ॥
(अदां
आत्मं-सकं सेट्-इदित् ।) शुद्धिरिह
शुद्धीकरणम्
इ, कर्म्मणि निञ्ज्यते । ल ङ, प्रणिङ्क्ते
। दक्षिणी
यानां विप्राणां समूहः इति हलायुधः ।
इति
दुर्गादासः ॥

**णिज**, लि इर् ञ औ पोषे । शुद्धौ । इति कवि-
कल्पद्रुमः ॥ (ह्वां-उभं-सकं-अनिट् ।)
लि ञ-
नेनेक्ति नेनिक्ते । इर्, अनिजत् अनैक्षीत्
। औ,
नेक्ता । इति दुर्गादासः ॥

**णिद**, इ कुत्सने । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-
सकं-सेट्-इदित् ।) निंसनिन्दनिक्षां
णोपदेश-
फलं चिन्त्यम् । णत्वविकल्पने
स्वरूपग्रहणात् ।
केचित्तु कृतिविकल्पमिच्छन्ति त्यादौ
तूपसर्गा-
दसमासे उपसर्गात् समासे त्यादौ
नित्यमित्यर्थः ।
यथा, प्रणिन्दकः प्रनिन्दकः । प्रणिन्दति
। भट्टौ
तु त्यादावपि विकल्पो दृश्यते । इ,
कर्म्मणि
निन्द्यते । निन्दति दुष्टं लोकः । इति
दुर्गा-
दासः ॥

**णिद**, ऋ ञ सन्निधौ । कुत्सने । इति कविकल्प-
द्रुमः ॥ (भ्वां-उभं-अकं-कुत्सने-सकं-
सेट्-
ऋदित् ।) सन्निधिः सन्निकर्षः । ऋ,
अनिनेदत् ।

| | | |
|---|---|---|
| | | ञ, नेदति नेदते दयालुं दीनः । निनिदुः । इति दुर्गादासः ॥<br>**णिल**, श गहने । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-सेट् ।) ह्रस्वी । गहनं दुर्ब्बोधः । श, निलति शास्त्रं कुधीः दुःखेन जानातीत्यर्थः । इति दुर्गादासः ॥<br>**णिव**, इ सेके । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् । इदित् ।) ह्रस्वी । इ, निन्व्यते । इति दुर्गादासः ॥ |

**णिश**, शीले । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-
सेट् ।) शीले समाधौ । नेशति योगी । निनि-
शतुः । इति दुर्गादासः ॥

**णिष**, उ सेके । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् । उदित्वात् क्त्रावेट् ।) उ, नेषित्वा
निष्ट्वा । इति दुर्गादासः ॥

**णिस**, इ ङ ल चुम्बने । इति कविकल्पद्रुमः ॥
(अदां-आत्मं-सकं-सेट् ।) ल ङ, निंस्ते । इ,
निंस्यते । इति दुर्गादासः ॥

**णी**, ञ प्रापणे । इति कविकल्पद्रुमः ॥ (भ्वां-उभं-
द्विकं-अनिट् ।) णोपदेशपाठो नादित्वेन
प्राग्वन्न इति णत्वार्थः । प्रणयति । एवं सर्व्वत्र ।
प्रापणमिह ज्यन्तस्य रूपम् । तथा च । नृणाति
लम्भयति च वेहत्यपि नयत्यमू । इति क्रिया-
निर्घण्टः ॥ ञ, नयति नयते गांवनं गोपः प्रापय-
तीत्यर्थः । इति दुर्गादासः ॥

**णील**, वर्णे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-
सकं च-सेट् ।) वर्ण इह कृष्णवर्णीभावस्तत्-
करणञ्च । नीलति पत्रं तमालस्य । नीलति
सूत्रं तन्त्रवायः । इति दुर्गादासः ॥

**णीव**, स्थौल्ये । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
अकं-सेट् ।) नीवति लोकः स्यूलः स्यादित्यर्थः ।
इति दुर्गादासः ॥

**णु**, ल स्तुतौ । इति कविकल्पद्रुमः ॥ (अदां-परं-
सकं-सेट् ।) ल, नौति । इति दुर्गादासः ॥

**णुद**, ञ श औ प्रेरणे । इति कविकल्पद्रुमः ॥
(तुदां-उभं-सकं-अनिट् ।) ञ श, नुदति नुदते
शरं योधः । औ, नोत्ता । इति दुर्गादासः ॥

**णू**, शि स्तवने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) ह्रस्वान्तोऽयमिति वररुचिः । शि,
नुवति । अनुवीत् । इति दुर्गादासः ॥

**णेद**, ऋ ञ सन्निधौ । कुत्सने । इति कविकल्पद्रुमः ॥
(भ्वां-उभं-अकं-सकं च-सेट् ।) सन्निधिः सन्नि-

कर्षः । ऋ, अनिनेदत् । ञ, नेदति नेदते दयालुं दीनः । निनेदुः । इति दुर्गादासः ॥

**णेष**, ऋ ङ व्रजे । इति कविकल्पद्रुमः ॥ (भ्वां-

आत्मं-सकं-सेट् ।) ऋ, अनिनेषत् । ङ, नेषते निनेषे । व्रजो गतिः । इति दुर्गादासः ॥ * ॥ एते धातवः स्वभावतो दन्त्यनादयो णोपदेशेन मूर्द्धन्यणाद्याः ॥

**त**

**त**, तकारः । स व्यञ्जनषोडशवर्णः । तवर्गप्रथम-
वर्णश्च । (अर्धमात्राकालेनोच्चार्य्यः ।) अस्यो-
च्चारणस्थानं दन्तः । इति व्याकरणम् ॥ (अस्यो-
च्चारणे दन्तमूलेन जिह्वाग्रस्य स्पर्शः आभ्य-
न्तरप्रयत्नः । विवारश्वासघोषाः बाह्यप्रयत्नाः ।
मातृकान्यासेऽस्य वामस्फिचि न्यासक्रिया
स्यात् । वङ्गीयवर्णमालायां) तस्य लेखनप्रकारो
यथा, --
"आदौ बिन्दुस्ततो मध्ये कुण्डलीत्वमवाप्य सा ।
दक्षाद्वामगता नित्या ब्रह्मविष्णवीशरूपिणी ॥
ध्यानमस्य प्रवक्ष्यामि शृणुष्व कमलानने ! ।
चतुर्भुजां महाशान्तां महामोक्षप्रदायिनीम् ॥
सदा षोडशवर्षीयां रक्ताम्बरधरां पराम् ।
नानालङ्कारभूषां वा सर्व्वसिद्धिप्रदायिनीम् ॥
एवं ध्यात्वा तकारन्तु तन्मन्त्रं दशधा जपेत् ॥"
इति वर्णोद्धारतन्त्रम् ॥ * ॥
अस्य स्वरूपं यथा, कामधेनुतन्त्रे ।
"तकारं चञ्चलापाङ्गि ! स्वयं परमकुण्डली ।
पञ्चदेवात्मकं वर्णं पञ्चप्राणमयं सदा ॥
त्रिशक्तिसहितं वर्णं आत्मादितत्त्वसंयुतम् ।
त्रिबिन्दुसहितं वर्णं पीतविद्युत्समप्रभम् ॥"
तस्य ३२ द्वात्रिंशन्नामानि यथा, --
"तः पूतना हरिः शुद्धिः शक्ती शक्तिर्जटी ध्वजा ।
वामस्फिक्वामकट्यौ च कामिनी मध्यकर्णकः ॥
आषाढी तण्डतुस्नश्च कामिका पृष्ठपुच्छकः ।
रत्नकश्च श्याममुखी वाराही मकरोऽरुणा ॥
सुगतोऽर्द्धमुखा बुद्धजानुश्च क्रोडपुच्छकः ।
गन्धो विश्वामरुच्छत्रश्चानुराधा च सौरकः ॥
जयन्तिपुलको भ्रान्तिरनङ्गमदनातुरा ॥"
इति नानातन्त्रशास्त्रम् ॥

**तं**, क्ली स्त्री, (त + भावे डः ।) तरणम् । (तरति
भवसागरमनेनेति । तॄ + करणे डः ।) पुण्यम् ।
इति मेदिनी । ते, १ ॥

**तः**, पुं, (तर्द्दति तम्बति वा हिनस्ति द्रव्यादिहर-
णेन जनानिति । तर्द्द तम्ब वा + डः ।) चौरः ।
अमृतम् । पुच्छम् । क्रोडः । म्लेच्छः । इति
तत्पर्य्यायः । गोरसजम् २ घोलम् ३ काल-
सेयम् ४ विलोडितम् ५ दण्डाहतम् ६ अरि-
ष्टम् ७ अम्लम् ८ उदश्वित् ९ मथितम १०
द्रवः ११ । इति राजनिर्घण्टः ॥ तत् पञ्च-
विधम् । तेषां भिन्नानि नामानि लक्षणानि च
यथा, --
"ससरं निर्जलं घोलं मथितं त्वसरोदकम् ।
तक्रं पादजलं प्रोक्तमुदश्विदर्द्धवारिकम् ॥
छच्छिका सरहीनं स्यादच्छा प्रचुरवारिका ॥"
तेषां गुणाः ।
"वातपित्तहरं घोलं मथितं कफपित्तनुत् ।
तक्रं ग्राहि कषायाम्लं स्वादुपाकरसं लघु ॥
वीर्य्योष्णं दीपनं वृष्यं प्रीणनं वातनाशनम् ।
ग्रहण्यादिमतां पथ्यं भवेत् संग्राहि लाघवात् ॥
किञ्च स्वादु विपाकित्वान्न च पित्तप्रकोपणम् ।
कषायोष्णविकाशित्वाद्रौक्ष्याच्चापिकफापहम् ॥
न तक्रसेवी व्यथते कदाचि-
न्न तक्रदग्धाः प्रभवन्ति रोगाः ।
यथा सुराणाममृतं सुखाय
तथा नराणां भुवि तक्रमाहुः ॥
उदश्वित् कफकृद्बल्यं श्रमघ्नं परमं मतम् ।
छच्छिका शीतला लघ्वी पित्तश्रमतृषाहरी ॥
वातनुत् कफकृत् सा तु दीपनी लवणान्विता ॥"
अथोद्धृतघृतस्तोकोद्धृतघृतानुद्धृतघृतानां तक्राणां
गुणाः ।
"समुद्धृतं घृतं तक्रं पथ्यं लघु विशेषतः ।
स्तोकोद्धृतघृतं तस्माद्गुरु वृष्यं कफापहम् ॥
अनुद्धृतघृतं सान्द्रं गुरु पुष्टिकफप्रदम् ॥" * ॥
अथ दोषविशेषे व्याधिविशेषे च तक्र-
विशेषाः ।
"वातेऽम्लं शस्यते तक्रं शुण्ठीसैन्धवसंयुतम् ।
पित्ते स्वादुसितायुक्तं सव्योषमवृषं कफे ॥
हिङ्गुजीरयुतं घोलं सैन्धवेन सुसंयुतम् ।
भवेदतीव वातघ्नमर्शोऽतीसारहृत्परम् ॥
सुरुच्यं पुष्टिदं बल्यं वस्तिशूलविनाशनम् ।
मूत्रकृच्छ्रे तु सगुडं पाण्डुरोगे सचित्रकम् ॥" * ॥
अथामपक्वतक्रगुणाः ।
"तक्रमामं कफं कोष्ठे हन्ति कण्ठे करोति च ।
पीनसश्वासकासादौ पक्वमेव प्रयुज्यते ॥" * ॥

मेदिनी । ते, १ ॥ गर्भः । शठः । इति शब्दरत्नावली ॥ रत्नम् । सुगतः । योधः । गौरविवर्ज्जित-पुच्छम् । क्रोष्टुपुच्छम् । इत्येकाक्षरकोषः ॥

**तक**, सहने । हासे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-हासे अकं-सेट्) तकति । इति दुर्गादासः ॥

**तक**, इ दौस्थ्ये । इति कविकल्पद्रुमः (भ्वां-परं-अकं-सेट् ।) दौस्थ्यं दुःखेन जीवनम् । इ, तङ्क्यते दरिद्रेण दुःखेन जीव्यते इत्यर्थः । तङ्कति दीनः दुःखेन जीवति इत्यर्थः । इति दुर्गादासः ॥

**तकिलः**, त्रि, (तक् + “मिथिलादयश्च ।” उणां । १ । ५६ । इति इलच् नलोपश्च ।) धूर्त्तः । इत्युणादिकोषः ॥

**तकिला**, स्त्री, (तकिल + टाप् ।) औषधम् । इत्युणादिकोषः ॥

**तक्यः**, त्रि, (तकं हासमर्हतीति । तक + यत् ।) हास्यः । (तक सहने + “तकिशसि चयति जनिभ्यो यद्वाच्यः ।” ६ । ४ । ६५ । इत्यस्य सूत्रस्य वार्त्तिकोक्त्या यत् ।) सहनीयः ॥

**तक्रं**, क्ली, (तनक्ति सङ्कोचयति दुग्धं पादाम्बुदधिरूपेण परिणमयतीत्यर्थः । “स्कायितञ्चीति ।” उणां । २ । १३ । इति रक् न्यङ्क्वादित्वात् कुत्वं च ।) पादाम्बुसंयुतदधि । इत्यमरः । २ । ९ । ५३ ॥

अथ तक्रसेवननिमित्तानि ।
“शीतकालेऽग्निमान्द्ये च तथा वातामयेषु च ।
अरुचौ स्रोतसां रोधे तक्रं स्यादमृतोपमम् ॥
तत्तु हन्ति गरच्छर्द्दिप्रसेकविषमज्वरान् ।
पाण्डुमेदोग्रहण्यर्शोमूत्रग्रहभगन्दरान् ॥
मेहं गुल्ममतीसारं शूलप्लीहोदरारुचीः ।
श्वित्रकोठधृतव्याधीन्कुष्ठशोथतृषाकृमीन् ॥”
अथातक्रविषयाः ।
“नैव तक्रं क्षते दद्यान्नोष्णकाले न दुर्ब्बले ।
न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके ॥” * ॥
अथ गव्यादीनां तक्राणां विशिष्टगुणाः ।
“यान्युक्तानि दधीन्यष्टौ तद्गुणं तक्रमादिशेत् ॥”
इति भावप्रकाशः ॥

("गव्यन्त्रिदोषशमनं तक्रं श्रेष्ठन्तदुच्यते ।
दीपनं रुचिकृन्मेध्यमर्शोदरविकारजित् ॥"
इति गव्यतक्रगुणाः ॥
"माहिषं कफकृत् किञ्चिद्घनं शोफकरं नृणाम्
।
प्लीहार्शोग्रहणीगुल्मपाण्ड्वामयविनाशनम्
॥"
इति माहिषतक्रगुणाः ॥
"छागलं लघु संस्निग्धं त्रिदोषशमनं परम् ।
गुल्माशग्रिहणीशूलं पाण्ड्वामयविनाशनम्
॥"
इति छागीतक्रगुणाः ॥
"तथाच त्रिविधं तक्रं कथ्यते शृणु पुत्त्रक ! ।
यथायोगेन तत् सम्यक् शस्यते येषु रोगिषु ॥
समुद्धतघृतं तक्रमर्द्धोद्धृतघृतञ्च तत् ।
अनुद्धृतघृतञ्चान्यदित्येतत्त्रिविधं मतम् ॥
सर्व्वं लघु च पथ्यञ्च त्रिदोषशमनं परम् ।
ततः परं वृष्यतमं क्रमेण समुदीरितम् ।
समुद्धृतघृतन्तक्रं लघु पथ्यतमं मतम् ॥
गरोदरार्शोग्रहणीपाण्डुरोगज्वरातुरे ।
वर्च्चोमूत्रग्रहे वापि प्लीहाव्यापदमेहिषु ॥
हितं संप्रीणनं बल्यं पित्तरक्तविबोधकृत् ॥
अर्द्धोद्धृतघृतं तस्माद्वृष्यं गुरु कफप्रदम् ।
मधुरं पित्तरक्तघ्नं श्रमघ्नं परमं मतम् ॥
अनुद्धृतघृतं सान्द्रं गुरु विद्यात् कफावहम् ।
बलप्रदन्तु क्षीणानामामशोफातिसारकृत् ॥"
इति त्रिविधतक्रगुणाः ॥ * ॥
"तक्रं ग्राहि कषायाम्लं वीर्य्योष्णं दीपनं लघु
।
श्रमापहरणं स्निग्धं ग्रहण्यर्शोऽतिसारनुत् ॥
इति तक्रगुणाः प्रोक्ता न दद्याद् यत्र तच्छृणु ।
षाते शोफे च क्षीणानां नोष्णकाले शरत्सु च
॥
संमूर्च्छाभ्रमतृष्णासु तथाच रक्तपित्तके ।
न शस्तं तक्रपानञ्च करोति विविधान् गदान्
॥"
एतेषां तक्रं निषिद्धम् ॥
इति हारीते प्रथमस्थानेऽष्टमेऽध्याये ॥ * ॥)

**तक्रकूर्च्चिका**, स्त्री, (तक्रजाता कूर्च्चिका ।) तक्र-

**तक्ष**, त्वचो ग्राहे । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-सकं-सेट् ।) त्वचो ग्राहश्चर्म्मणो
ग्रहणम् ।
तक्ष त्वचने इति प्राञ्चः । त्वचनं
संवरणमिति
रमानाथः । तक्षति कायं वर्म्मणा भटः ।
इति
दुर्गादासः ॥

**तक्ष**, ऊ कार्श्ये । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-वेट् ।) ऊ, तक्षिष्यति तक्ष्यति ।
कार्श्यं
कृशकरणम् । तक्षति काष्ठं तक्षा । इति
दुर्गादासः ॥

**तक्ष**, ऊ न तक्षे । इति कविकल्पद्रुमः ॥ (स्वां-
परं-सकं-वेट् ।) तक्षः कृशकरणम् । ऊ,
तक्षि-
ष्यति तक्ष्यति । न, तक्ष्णोति काष्ठं
तक्षा । इति
दुर्गादासः ॥

**तक्षकः**, पुं, (तक्षतीति । तक्ष + ण्वुल् ।)
पातालस्थाष्टनागान्तर्गतनागविशेषः ।
स कश्य-
पात् कद्रुगर्भे जातः इन्द्रसखः । अस्य
वासः
खाण्डववने आसीत् । अयं परीक्षितं
दष्टवान् ।
इति श्रीभागवतम् ॥ (अयं हि
क्षपणकरूपधारी
उतङ्कस्य मुनेर्गुरुदक्षिणार्थमानीते
कुण्डले
ऽपहृत्य नागलोकं गतवान् । यथा, महा-
भारते । १ । ३ । १२७ ।
"तस्य तंक्षको दृढमासन्नः स तं जग्राह
। गृहीत-
मात्रः स तद्रूपं विहाय तक्षकस्वरूपं
कृत्वा

**तग**, इ स्खलने । कम्पे । गतौ । इति कविकल्प-
द्रुमः ॥ (भ्वां-परं-अकं-गतौ तु सकं-सेट् ।)
इ, कर्म्मणि तङ्ग्यते । इति दुर्गादासः ॥

**तगरं**, नदीवृक्षः । पिण्डतगर इति कोङ्कणे
प्रसिद्धः । तगरमूल इति ख्यातञ्च । तत्-
पर्य्यायः । कालानुशारिवा २ वक्रम् ३
कुटि-
लम् ४ शठम् ५ महोरगम् ६ नतम् ७
जिह्मम्
८ दीपनम् ९ तगरपादिकम् १० । इति
रत्न-
माला ॥ विनम्रम् ११ कुञ्चितम् १२ षण्ढम्
१३
नहुषाख्यम् १४ दण्डहस्तम् १५ वर्हणम्
१६
पिण्डीतगरकम् १७ पार्थिवम् १८ राजहर्ष-
णम् १९ कालानुसारकम् २० क्षत्रम् २१
दीनम् २२ । अस्य गुणाः । शीतलत्वम् ।
तिक्त-
त्वम् ।
दृष्टिदोषविषार्त्तिभूतोन्मादभयनाशित्वम्।
पथ्यत्वञ्च ॥ आहुल्यवृक्षः । इति
राजनिर्घण्टः ॥
गन्धद्रव्यविशेषः । तस्य पर्य्यायगुणाः ।
"कालानुसार्य्यं तगरं कठिनं लघु संनतम् ।
अपरं पिण्डतगरं दण्डहस्ति च वर्हणम् ॥
तगरद्वयमुष्णं स्यात् स्वादु स्निग्धं लघु
स्मृतम् ।
विषापस्मारमृर्द्धाक्षिरोगदोषत्रयापहम्॥"
इति भावप्रकाशः ॥

**तगरः**, पुं, (तं क्रोडभागं गिरतीति । गॄ + अच् ।)
पुष्पवृक्षविशेषः । टगर इति भाषा । तत्-
पर्य्यायः । सितपुष्पः २ । कालपर्णः ३
कटु-
च्छदः ४ । इति शब्दरत्नावली ॥ (यथा,
महा-
भारते । १३ । १०४ । ८५ ।
"प्रियङ्गुचन्दनाभ्याञ्च विल्वेन तगरेण च ।

योगेन ऊष्णदुग्धात् जाता । छाना इति भाषा ।
अस्या गुणाः । मलबद्धवातकारित्वम् । रूक्ष-
त्वम् । दुर्ज्जरत्वञ्च । इति राजवल्लभः ॥
(यथा सुश्रुते सूत्रस्थाने ४५ अध्याये ।
“ग्राहिणी वातला रूक्षा दुर्ज्जरा
तक्रकूर्च्चिका ॥”)

**तक्रमांसं**, क्ली, (तक्रयोगेन पाचितं मांसम् ।)

व्यञ्जनविशेषः । एख्नि इति पारस्य भाषा ।
तस्य पाकप्रकारो यथा, --
“पाकपात्रे घृतं दत्त्वा हरिद्राहिङ्गु भर्ज्जयेत् ।
छागादेः सकलस्यापि खण्डान्यष्टौ च
भर्जयेत् ॥
मिद्धियोग्यं जलं दत्त्वा पचेम्मृदुतरं यथा ।
राजिकादियुते तक्रे मांसखण्डानि धारयेत् ॥”
तस्य गुणाः ।
“तक्रमांसन्तु वातघ्नं लघु रुच्यं बलप्रदम् ।
कफघ्नं पित्तलं किञ्चित् सर्व्वाहारस्य
पाचनम् ॥”
इति भावप्रकाशः ।

**तक्राटः**, पुं, (तक्राय तक्रोत्पादनाय अटतीति ।

अट + अच् ।) मन्थानदण्डः । इति हारा-
वली । ३४ ॥

सहसा घरण्यां विवृतं महाविलं प्रविवेश ॥
तक्ष तनूकरणे + “क्वुन् शिल्पिसंज्ञयोः ।” उणां ।
२ । ३२ । इति क्वुन् ।) त्वष्टा ।
इत्यमरः ।
३ । ३ । ४ ॥ विश्वकर्म्मा । इति
शब्दरत्नावली ॥
द्रुमभेदः । इति हेमचन्द्रः ॥ सूत्रधारः ।
इत्य-
मरटीकासारसुन्दरी ॥ (स्वनामख्यातः
प्रसेन-
जित्-पुत्त्रः । यथा, भागवते । ९ । १२ । ८ ।
“ततः प्रसेनजित् तस्मात् तक्षको
भविता पुनः ॥”
छेदके, त्रि । यथा, रामायणे । २ । ८० । २ ।
“तथा वर्द्धकयश्चैव मार्गिणो
वृक्षतक्षकाः ॥”)

**तक्षणं**, क्ली, (तक्ष तनूकरणे + भावे ल्युट् ।)

कृशकरणम् । (यथा, मनुः । ५ । ११५ ।
“द्रवाणाञ्चैव सर्व्वेषां शुद्धिरुत्प्लवनं
स्मृतम् ।
प्रोक्षणं संहतानाञ्च दारवाणाञ्च तक्षणम् ॥”)

**तक्षणी**, स्त्री, (तक्षत्यनेनेति । तक्ष + करणे ल्युट् ।

टित्त्वात् ङीप् ।) वासी अस्त्रम् । इति
शब्द-
रत्नावली ॥

**तक्षशिला**, स्त्री, देशविशेषः । इति सिद्धान्त-

कौमुदी ॥ (यथा, महाभारते । १ । ३ । २२ ।
“तेनैवमुक्ता भ्रातरस्तस्य तथा चक्रुः स
तथा
भ्रातॄन् सन्दिश्य तक्षशिलां
प्रत्यभिप्रतस्थे ॥”)

**तक्षा**, [न्] पुं, (तक्षति तनूकरोतीति । तक्ष +

पृथगेवानुलिम्पेत केशरेण च बुद्धिमान् ॥”)
मदनवृक्षः । इति राजनिर्घण्टः ॥

**तगरपादिकं**, क्ली, (तगरस्य पादो मूलदेश इव

विद्यतेऽत्र इति ठन् ।) तगरम् । इति रत्न-
माला ॥

**तङ्कः**, पुं क्ली, (टङ्क + पृषोदरात् साधुः ।) पाषाण-

दारणः । इत्यमरटीकायां रमानाथः ॥
(तकि
कृच्छ्रजीवने + भावे घञ् ।) प्रियविरहज-
स्तापः । भयम् । इति
लिङ्गादिसंग्रहटीकायां
भरतः ॥

**तज्वी**, स्त्री, (तं पुच्छाकारं जवति गच्छतीति ।

जु + क्विप् ङीष् ।) हिङ्गुपत्री । इति राज-
निर्घण्टः ॥

**तट**, उच्छ्राये । इति कविकल्पद्रुमः ॥ (भ्वां-परं-

अकं-सेट् ।) उच्छ्राय उच्चीभावः । तटति
पुलिनम् । इति दुर्गादासः ॥

**तट**, क आहतौ । इति कविकल्पद्रुमः ॥ (चुरां-

परं-सकं-सेट् ।) क, ताटयति । इति दुर्गा-
दासः ॥

**तटं**, क्ली, (तटति उच्छ्रितं भवतीति । तट उच्छ्राये

+ पदाद्यच् ।) क्षेत्रम् । इति मेदिनी । टे,
१६ ॥
(प्रदेशः । यथा, महाभारते । १ । ३६ । ३ ।
“गोकर्णे पुष्करारण्ये तथा हिमवतस्तटे ॥”)

**तटः**, त्रि, (तटति उच्छ्रितो भवतीति तट् +

अच् ।) तीरम् । इत्यमरः । १ । १० । ७ ॥

|  | “कविन् युवृषितक्षिराजीति ।” उणां १ ।१५६ ।<br>इति कनिन् ।) त्वष्टा । इत्यमरः । २ । १० । ९ ॥<br>(यथा, माघे । १२ । २५ ।<br>“स्रस्ताङ्गसन्धौ विगताक्षपाटवे<br>रुजा निकामं विकलीकृते रथे ।<br>“आप्तेन तक्ष्णा भिषजेव तत्क्षणं<br>प्रचक्रमे लङ्घनपूर्ब्बकः क्रमः ॥”) |  |
|---|---|---|

तड् इति भाषा ॥ (यथा, हरिवंशे । ६७ ।
५५ ।
"कर्त्तव्यमार्गौ भ्राजेते ह्रदस्यास्य
तटावुभौ ॥"
महादेवे, पुं । सर्व्वोच्छ्रितत्वादस्य
तथात्वम् ।
यथा, महाभारते । १२ । २८४ । ३६ ।
"नमस्तटाय तट्याय: तटानाम्पतये
नमः ॥")

**तटस्थं**, क्ली, लक्षणविशेषः । तस्य स्वरूपं यथा,

तद्भिन्नत्वे सति तद्बोधकत्वम् । तथाच ।
"स्वरूपं तटस्थं द्विधालक्षणं स्यात्
स्वरूपस्य बोधो यतो लक्षणाभ्याम् ।
स्वरूपे प्रविष्टात् स्वरूपेऽप्रविष्टात्
यथा काकवन्तो गृहाः खं विलञ्च ॥"
इति वेदान्तकारिका ॥
(तटे तिष्ठतीति । स्था + कः ।)
तटस्थिते,
त्रि ॥ (उदासीनः । यथा, नैषधे । ३ ।
५५ ।
"धिक् चापले वत्सिमवत्सलत्वं
यत्प्रेरणादुत्तरलीभवन्त्या ।
समीरसङ्गादिव नीरभङ्ग्या
मया तटस्थस्त्वमुपद्रुतोऽसि ॥"
समीपस्थः । यथाह बलः ।
"तटस्थः स्यादुदासीने
तीरस्थनिकटस्थयोः ॥")

**तटाकः**, पुं, (तटमकति गच्छतीति । अक +

"कर्म्मण्यण् ।" ३ । २ । १ । इत्यण् ।)
तडागः ।
पद्मादियुक्तसरः । इति शब्दरत्नावली ।
(यथा,
वैराग्यशतके । ४६ ।
"प्रादेशमात्रमुदरं परिपूरयितुं कियानयं
यत्नः ।
चुलकेनाम्भः पातुं खनितव्यः किं
तटाकोऽपि ॥")

**तटिनी**, स्त्री, (तटमस्त्यस्या इति । तट + "अत

आकः ।) आघातः । इति संक्षिप्तसारे
उणादि-
वृत्तिः ॥ (प्रभा । इत्युज्ज्वलदत्तः । ४ ।
१५ ॥)

**तडागः**, पुं क्ली, (तड + तडागादयश्च । इति

आगप्रत्ययेन निपातनात् साधुः ।)
यन्त्रकूटकः ।
इति मेदिनी । गे, ३६ ॥ (तण्ड्यते
आहन्यते
ऊर्म्मिमालाभिरिति । तडि आहतौ +
कर्म्मणि
आकः ।) पद्मादियुक्तं सरः । तत्पर्य्यायः ।
पद्माकरः २ । इत्यमरः । १ । १० । २८
॥
तडाकः ३ तटाकः ४ । इति
शब्दरत्नावली ॥
तडगः ५ । इति द्विरूपकोषः ॥ शञ्चशत-
घनुःपरिमाणजलाशयः । चतुर्द्दिक्षु
पञ्चचत्वा-
रिंशद्धस्तान्यूनतायां
सहस्रद्वितयहस्तान्यूनत्वेन
तडागः । इति नव्यवर्द्धमानधृतो वशिष्ठः ॥
* ॥
तस्य जलगुणाः । वायुकारित्वत् ।
स्वादुत्वम् ।
कषायत्वम् । पाके कटुत्वम् ।
शिशिरहिमकाले
प्रशस्तत्वञ्च । इति राजवल्लभः ॥ * ॥
तस्योत्-
सर्गविधिर्यथा, --
पुलस्त्य उवाच ।
"शृणु राजन्महाबाहो ! तडागादिषु यो
विधिः ।
पुराणेष्वितिहासेषु मन्यते राजसत्तम ! ॥
प्राप्य पक्षं शुभं शुक्लमागते चोत्तरायणे ।
पुण्येऽह्नि विप्रैः क्रियते कृत्वा
ब्राह्मणवाचनम् ॥
प्राक्प्रस्रवणादम्भस्तडागस्यसमीपतः ॥
चतुर्हस्तसमा वेदी चतुरस्रा समन्ततः ।
यजमानः सपत्नीकः पुत्रपौत्रसमन्वितः ॥
पश्चिमं द्वारमासाद्य प्रविशेद्यागमण्डपम् ।
ततो मङ्गलशब्देन भेरीणां निस्वनेन च ॥
रजसा मण्डलं कुर्य्यात् पञ्चवर्णेन चार्च्चितम्
।
षोडशारं ततश्चक्रं पद्मरागसुशोभनम् ॥
वेद्यामुपरि तत् कृत्वा ग्रहान् ग्रहपतींस्तथा ।
संन्यसेन्महतः सर्व्वान् प्रतिदिक्षु विचक्षणः ॥
तत् पात्रं स्थापयेन्मध्ये वारुणं मन्त्रमाश्रितम्
।
ब्रह्माणञ्च शिवं विष्णुं तत्त्वेन स्थापयेद्बुधः ॥
विनायकञ्च विन्यस्य कमलामम्बिकां ततः ।
शान्त्यर्थं सर्व्वलोकानां भूतग्राममशेषतः ।
पुष्पभक्ष्यफलैर्युक्तमेवं कृत्वाधिवासनम् ।
कुम्भांश्च रत्नगर्भांश्च वासोभिः परिवेष्टयेत्
॥
गन्धपुष्पैरलङ्कृत्य द्वारपालान् समन्ततः ।
पठध्वमिति तान् ब्रूयादाचार्य्यमपि पूजयेत् ॥
बह्वृचौ पूर्ब्बतः स्थाप्यौ दक्षिणे च यजुर्व्विदौ
।
पश्चिमे सामगौ स्थाप्यावुत्तरेणाप्यथर्व्वगौ ॥
उदङ्मुखो दक्षिणतो यजमान उपाविशेत् ।
पठध्वमिति तान् ब्रूयात् यजध्वमिति
याजकम् ॥
उत्कृष्टमन्त्रपाठेन तिष्ठध्वं मन्त्रजापकाः ।
एवमादिश्य तान् सर्व्वान् पर्युष्याग्निं स
मन्त्रवित् ॥
जुहुयादाहूतीर्म्मन्त्रैराज्यञ्च समिधस्तथा ।
ऋत्विग्भिश्चैव होतव्यं वारुणैरेव सर्व्वतः ॥
वैराजं पौरुषं सूक्तं पौण्ड्रं चन्द्रं सुसंहितम् ।
शैशवं पञ्चनिधनं गायन्ति ज्येष्ठसामगाः ॥
वामदेवं बृहत्साम रौरवं सरथन्तरम् ।
गवां व्रतं विकर्णञ्च रक्षोघ्नं नरथन्तथा ॥
गायन्ति सामगा राजन् !
पश्चिमद्वारमाश्रिताः ।
अथर्व्वगाश्चोत्तरतः शान्तिकं पौष्टिकं तथा
॥
जपन्ते मनसा देवमाश्रिता वरुणं प्रभुम् ।
पूर्ब्बेद्युरभितो मन्त्रैरेवं कृत्वाधिवासनम् ॥

इनिठनौ ।” ५ । २ । ११५ । इति इनि-
स्ततो ङीप् ।) नदी । इत्यमरः । १ ।
१० । ३० ॥
(यथा, आर्य्याशप्तशत्याम् । ६९२ ।
“हृत्वा तटिनि ! तरङ्गैर्भ्रमितश्चक्रेषु
नाशये
निहितः ।
फलदलवल्कलरहितस्त्वयान्तरिक्षे
तरुस्त्यक्तः ॥”)

**तटी**, स्त्री, (तटति उच्छ्रिता भवतीति । तट +
अच् । ङीष् ।) तीरम् । इत्यमरः । १ ।
१० । ७ ॥
(यथा, साहित्यदर्पणे । ३ । ८६ ।
“मालयञ्च श्मशानञ्च नद्यादीनां तटी
तथा ॥”)

**तड**, इ ङ आहतौ । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-सकं-सेट् ।) इ, तण्ड्यते । ङ,
तण्डते ।
इति दुर्गादासः ॥

**तड**, क त्विषि । आहतौ । इति कविकल्पद्रुमः ॥
(चुरां-परं-अकं-सकं च-सेट् ।) क, ताड-
यति । त्विषि दीप्तौ । इति दुर्गादासः ॥

**तडगः**, पुं, (तण्ड्यते आहन्यते ऊर्म्मिभिरिति ।
तड + आगः । पृषोदरादित्वात् आलोपे
साधुः ।)
तडागः । इति द्विरूपकोषः ॥

**तडाकः**, पुं, (तण्ड्यते आहन्यते ऊर्म्मिमालाभि-
रिति । तडि आहतौ + “पिनाकादयश्च
।”
उणां ४ । १५ । इति आकप्रत्ययेन
निपातनात्
साधुः ।) तडागः । इति शब्दरत्नावली ॥

**तडाका**, स्त्री, (तडाक + स्त्रियां टाप् ।) नदी-
समुद्राणां तटभागः । (तडि आहतौ +
भावे

तथा षोडशहस्तः स्यान्मण्डपश्च
चतुर्मुखः ॥
वेद्या उत्तरतो गर्त्तारत्निमात्रा तु मेखला ।
नवसप्ताथवा पञ्च योनिवक्त्रा नृपात्मज !
॥
वितस्तिमात्रा योनिः स्यात् षट्सप्ताङ्गुल-
विस्तृता ।
सर्व्वे स्वहस्तमात्राः
स्युस्त्रिपर्व्वोच्छ्रितमेखलाः ॥
सर्व्वे च सर्व्ववर्णाः स्युः
पताकाध्वजसंयुताः ।
अश्वत्थोडम्बरप्लक्षवटशाखाकृतानि च ॥
मण्डपस्य प्रतिदिशं द्वाराण्येतानि कारयेत्
॥
शुभास्तत्राष्ट होतारो द्वारपालास्तथापरे ।
अष्टौ तु जापकाः कार्य्या ब्राह्मणा
वेदपारगाः ॥
सर्व्वलक्षणसम्पूर्णा मन्त्रविद्विजितेन्द्रियाः
।
कुलशीलसमायुक्ताः स्थापिता
द्विजसत्तमाः ॥
प्रतिस्तम्भेषु कलसा यज्ञोपस्करणानि च
।
व्यजनञ्चासनं शुभ्रं ताम्रपात्रं सुविस्तरम् ॥
आचार्य्यः प्रक्षिपेद्भूम्यामनुचन्द्रं विचक्षणः
।
त्र्यरत्निमात्रो यूपः स्यात्
क्षीरिवृक्षविनिर्म्मितः ॥
यजमानप्रमाणो वा संस्थाप्यो
भूतिमिच्छता ॥
हेमालङ्कारिणः कार्य्याः
पञ्चविंशतिऋत्विजः ॥
कुण्डलानि च हैमानि केयूरकटकानि च ।
तथाङ्गुलीपवित्राणि वासांसि विविधानि च
॥
दद्युः समानि सर्व्वेषामाचार्य्ये द्विगुणं पुनः
।
दद्याच्छयनसंयुक्तमात्मनश्चापि यत्
कृतम् ॥
सौवर्णौ कूर्म्ममकरौ राजतौ मत्स्यडुण्डुभौ
।

गजाश्वरथ्यावल्मीकसंग्रामरथगोकुलात् ।
मृदमादाय दद्याच्च प्रक्षिपेच्च यथा तथा ॥
रोचनाञ्च ससिद्धार्थान् गन्धान् गुग्गुलमेव च ।
स्नपनं तस्य कर्त्तव्यं पञ्चगव्यसमन्वितम् ॥
मूर्द्ध्नि कर्त्तुर्म्महामन्त्रैरेवं कृत्वा विधानतः ।
एवं रक्षति राज्यार्थान् विधियुक्तेन कर्म्मणा ॥
* ॥
ततः प्रभाते विमले संजाते तु गवां शतम् ।
ब्राह्मणेभ्यः प्रदातव्यं होमान्ते वाथवा पुनः ॥
पञ्चाशद्वाथ षट्त्रिंशत् पञ्चविंशतिरेव च ।
ततः संवत्सरे प्राप्ते शुद्धे लग्ने सुशोभने ॥
वेदशब्दैश्च गान्धर्व्वैर्व्वाद्यैश्च विविधैः पुनः ।
कनकालङ्कृतां कृत्वा जले गामवतारयेत् ॥
सामगाय च सा देया ब्राह्मणाय विशाम्पते ! ।
पात्रीमादाय सौवर्णीं पञ्चरत्नसमन्विताम् ॥
तत्र निःक्षिप्य मकरं मत्स्यादींश्चैव सर्व्वशः ।
धृतांश्चतुर्भिर्व्विप्रैश्च वेदवेदाङ्गपारगैः ॥
महानदीजलोपेतान् दध्यक्षतविभूषितान् ।
उत्तराभिमुखो युक्तो जलमध्ये प्रकालयेत् ॥
आथर्व्वणेन सुस्नातः पुनर्म्मासांस्तथैव च ।
आपो हि ष्ठेतिमन्त्रेण क्षिपेदागत्य मण्डपम् ॥

|  | तथा कुलीरमण्डूका वायसः शिशुमारकः<br>॥<br>एवमासाद्य तत् सर्व्वं स्वर्णपात्रं<br>विशाम्पते ! ।<br>शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः<br>॥<br>सर्व्वौषध्युदकस्नातः पाठितो वेदपुङ्गवैः । |  |
|---|---|---|

पूजयित्वा सुरांस्तत्र वलिं दद्यात् समन्वितः ।
पुनर्द्दिनानि होतव्यं चत्वारि राजसत्तम ! ॥
चतुर्थीकर्म्म कर्त्तव्यं देयं तत्रापि शक्तितः ।
कृत्वा तु यज्ञपात्राणि यज्ञोपकरणानि च ॥
ऋत्विग्भ्यस्तु समं दद्यात् मण्डपं विभजेत् पुनः ।
होमपात्रञ्च शय्याञ्च आचार्य्याय निवेदयेत् ॥
ततः सहस्रं विप्राणामथवाष्टशतं तथा ।
भोजयेच्च यथाशक्त्या पञ्चाशद्वाथ विंशतिः ॥
एवमेव पुराणेषु तडागविधिरुच्यते ।
कूपवापीषु सर्व्वासु तथा पुष्करिणीषु च ॥
एष एव विधिर्दृष्टः प्रतिष्ठासु तथैव च ।
मन्त्रतस्तु विशेषः स्यात् प्रासादोद्यानभूमिषु ॥
अयन्तु ऋत्विगाचार्य्यविधिदृष्टेन कर्म्मणा ।
अल्पेष्वेकाग्निवत् कार्य्यं वित्तशाठ्याद‍ृते नृणाम् ॥”
तडागे कालविशेषे जलस्थितेः फलं यथा, --
“प्रावृट्काले स्थितं तोयमग्निष्टोमसमं स्मृतम् ।
शरत्काले स्थितं तोयं यदुक्तफलदायकम् ॥
वाजपेयफलसमं हेमन्तशिशिरस्थितम् ।
अश्वमेधसमं प्राहुर्व्वसन्तसमयस्थितम् ॥
ग्रीष्मेऽपि तु ख्यितं तोयं राजसूयफलाधिकम् ॥”
तडागकरणे फलं यथा, --

**तण्डुरीणः**, पुं, कीटमात्रम् । (तण्डुले भवः ।
तण्डुल + छः । लस्य रः ।) तण्डुलोदकम् ।
वर्व्वरे, त्रि । इति मेदिनी । णे, ९५ ॥

**तण्डुलः**, पुं, (तण्ड्यते आहन्यते इति । तड आघाते + “सानसिवर्णसीति ।” उणां ४ । १०७ । इति
उलच् । यद्वा, “वृञ्लुटितनितडिभ्य उलन् तण्डश्च ।” उणां । ५ । ९ । इतिउलन् तण्डादेशश्च ।)
विडङ्गम् । इति मेदिनी । ले, ९६ ॥
(“पुंसि क्लीवे विडङ्गः स्यात् कृमिघ्नो जन्तुनाशनः ।
तण्डुकश्च तथा वेल्लममोघा चित्रतण्डुला ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
तण्डुलीयशाकम् । इति शब्दरत्नावली ॥
घान्यादिनिकरः । इति मेदिनी । ले, ९६ ॥
चाउल इति भाषा । (यथा, पञ्चतन्त्रे । ३ । ५५ ।
“सङ्गतिः श्रेयसी पुंसां स्वपक्षे च विशेषतः ।
तुषैरपि परिभ्रष्टा न प्ररोहन्ति तण्डुलाः ॥
सुदुर्ज्जरः स्वादुरसो बृंहणस्तण्डुलो नवः ।
सन्धानकृन्मेहहरः पुराणस्तण्डुलः स्मृतः ॥
द्रव्यसंयोगसंस्कारविकारान् समवेक्ष्य तु ।
यदाकारणमासाद्य भोक्तृणां छन्दतोऽपि वा ॥
अनेकद्रव्ययोनित्वाच्छास्त्रतस्तान्विनिर्द्दिशेत् ॥”
इति सुश्रुते सूत्रस्थाने ४६ अध्याये ॥)
भृष्टतण्डुलगुणाः । सुगन्धित्वम् । कफनाशित्वम् ।
रूक्षत्वम् । पित्तकारित्वञ्च । इति राजवल्लभः ॥

**तण्डुलपरीक्षा**, स्त्री, (तण्डुलेन परीक्षा ।) नव-
विधदिव्यान्तर्गतदिव्यविशेषः । चालपडा इति
भाषा । तद्विधानं यथाह पितामहः ।
“चौर्य्ये तु तण्डुला देया नान्यत्रेति विनिश्चयः ।
तण्डुलान् कारयेच्छुक्लांच्छालेर्न्नान्यस्य कस्य चित् ॥

**तण्डुला**, स्त्री, (तण्ड्यते आहन्यते इति । तण्ड +
उलच् ततष्टाप् ।) महासमङ्गा । विडङ्गम् ।
इति राजनिर्घण्टः ॥

**तण्डुलाम्बु**, क्ली, (तण्डुलस्य अम्बु ।) तण्डुलोदकम् ।
चेलुनि इति भाषा । तत्पर्य्यायः । ज्जेष्ठाम्बु २ ।
इति वैद्यकपरिभाषा ॥ तण्डुलोत्थम् ३ । इति
राजनिर्घण्टः ॥ यथा, वैद्यकचक्रपाणिसंग्रहे
ग्रहण्यधिकारे ।
“पिबेत् समांशं तच्चूर्णं सक्षौद्रं तण्डुलाम्बुना ॥”

**तण्डुली**, स्त्री, (तण्डुल + ङीष् ।) यवतिक्ता
लता । शशाण्डुलीकर्कटी । तण्डुलीयशाकः ।
इति राजनिर्घण्टः ॥
(विवृतिरस्यास्तण्डुलीय-
शब्दे ज्ञातव्या ॥)

**तण्डुलीकः**, पुं, (तण्डुलीव कायतीति । कै + कः ।)
तण्डुलीयशाकः । इति शब्दरत्नावली ॥

**तण्डुलीयः**, पुं, (तण्डुलाय हितः । तण्डुल +
“विभाषा हविरपूपादिभ्यः ।” ५ । १ । ४ ।
इति छः ।) पत्रशाकविशेषः । क्षुदियानटिया
इति चाँपानटिया इति च वङ्गभाषा । चवराइ
इति अल्पमरुषा इति च हिन्दी भाषा । तत्-
पर्य्यायः । अल्पमारिषः २ । इत्यमरः । २ । ४ ।
१३६ ॥ तण्डुलीकः ३ तण्डुलः ४ । इति शब्द-
रत्नावली ॥ भण्डीरः ५ तण्डली ६ तण्डुलीयकः
७ ग्रन्थिलः ८ बहुवीर्य्यः ९ मेघनादः १० घन-

"एतान्महाराज! विशेषधर्म्मान्
करोति योऽर्घ्यान्त्वथ शुद्धबुद्धिः।
स याति ब्रह्मालयमेककल्पं
दिवं पुनर्याति तथैव दिव्यम्॥"
इति पाद्मे सृष्टिखण्डम्॥

**तडाघातः**, पुं, (तटे आघातः। पृषोदरात् टस्य डत्वम्।) ऊद्‌ध्वीकृत्य हस्तिशुण्डाघातः। यथा,
"उच्चैःकरिकराक्षेपे तडाघातं विदुर्बुधाः॥"
इति कुमारसम्भवटीका॥

**तडित्**, स्त्री, (ताडयत्यभ्रमिति। तड आघाते + "ताडेर्णिलुक् च।" उणां। १। १०० । इति इतिप्रत्ययः णेर्लुक् च।) विद्युत्। इत्यमरः। १। ३। ९॥ (यथा, रघुः। ९। ५४।
"अथ नभस्य इव त्रिदशायुधं
कनकपिङ्गतडिद्‌गुणसंयुतम्।
धनुरधिज्यमनाधिरुपाददे
नरवरो रवरोषितकेशरी॥")

**तडित्वान्**, [त्] पुं, (तडित् विद्युदस्त्यस्येति। तडित् + मतुप्। मस्य वः।) मेघः। मुस्तकम्। इत्यमरः। १। ३। ७, २। ४। १५९॥ (विद्युद्-विशिष्टे, त्रि। यथा, --
"समुदितन्निचयेन तडित्वतीं
लघयता शरदम्बुदसंहतिम्॥"
इति किरातार्ज्जुनोये। ५। ४॥)

**तण्डकः** पुं, (तण्डते नृत्यतीति। तण्ड + ण्वुल्।) खञ्जनपक्षी। फेनः। समासप्रायवाक्। गृहदारु। तरुस्कन्धः। मायाबहुलके, त्रि। इति मेदिनी। के, ९८॥

**तण्डकः**, पुं क्ली, (तण्ड + ण्वुल्।) परिष्कारः। इति मृण्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः।
स्नानोदकेन संमिश्रान् रात्रौ तत्रैव वासयेत्॥
प्राङ्मुखोपोषितं स्नातं शिरोरोपितपत्रकम्।
तण्डुलान् भक्षयित्वा तु पत्रे निष्ठीवयेत्त्रिधा॥
भूर्ज्जस्यैव तु नान्यस्य अभावे पिप्पलस्य तु।
शोणितं दृश्यते यस्य हनुस्तालु च शीर्य्यते॥
गात्रञ्च कम्पते यस्य तमशुद्धं विनिर्द्दिशेत्॥"
स्नानोदकेन देवतास्नानोदकेन। तथा च कात्यायनः।
"देवतास्नानपानीयस्निग्धतण्डुलभक्षणे।
शुद्धनिष्ठीवनात् शुद्धो नियम्योऽशुचिरन्यथा॥"
शिरोरोपितपत्रकं तण्डुलान् भक्षयित्वा निष्ठीवयेत् प्राड्विवाकः इति। निष्ठीवयेदिति ण्यन्तात् सिद्धम्। तुलानिरूपितं सर्व्वदिव्यसाधारणञ्च धर्म्मवाहनादिहवनान्तं पूर्ब्बवदिहापि कर्त्तव्यम्॥
शिरोरोपितपत्रलेख्यमन्त्रादि यथा, --
"तत्रार्थमभियुक्तस्य लेखयित्वा तु पत्रके।
मन्त्रेणानेन सहितं कुर्य्यात्तस्य शिरोगतम्॥
आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च सन्ध्ये
धर्म्मो हि जानाति नरस्य वृत्तम्॥"
इति दिव्यतत्त्वम्॥

स्वनः ११ सुशाकः १२ पथ्यशाकः १३ स्फूर्जथुः १४ स्वनिताह्वयः १५ वीरः १६ तण्डुलनामा १७। अस्य गुणाः। शिशिरत्वम्। मधुरत्वम्। विष-पित्तदाहभ्रमनाशित्वम्। रुचिकारित्वम्। दीप-नत्वम्। पथ्यत्वञ्च। तद्दलगुणाः। हिमत्वम्। अर्शःपित्तरक्तविषकासविनाशित्वम्। ग्राहक-त्वम्। मधुरत्वम्। विपाके दाहशोषशमनत्वम्। रुचिदातृत्वञ्च। इति राजनिर्घण्टः॥ विड-ङ्गम्। ताप्यम्। इति मेदिनी। ये, ११९॥ अस्य पर्य्यायगुणाः।
"तण्डुलीयो मेघनादः काण्डेरस्तण्डुलेरकः।
भण्डीरस्तण्डुलीवीजो विषघ्नश्चाल्पमारिषः॥
तण्डुलीयो लघुः शीतो रूक्षः पित्तकफास्रजित्।
सृष्टमूत्रमलो रुच्यो दीपनो विषहारकः॥"
तद्भेदः। जलतण्डुलीयं शास्त्रे कञ्चटमिति प्रसिद्धम्।
"पानीयतण्डुलीयन्तु कञ्चटं समुदाहृतम्।
कञ्चटं तिक्तकं रक्तपित्तानिलहरं लघु॥"
इति भावप्रकाशः॥

**तण्डुलीयकः**, पुं, (तण्डुलीय + स्वार्थे कन्।) तण्डुलीयशाकः। (यथा, हारीते १ स्थाने १० अः।
"स्वादुः पाके त्वसृक्पित्तविषघ्नस्तण्डुलीयकः।
हन्ति वातं विड्‌विबन्धं मूत्रवातकफे हितः॥")
विडङ्गम्। इति राजनिर्घण्टः॥

**तण्डुलीयिका**, स्त्री, (तण्डुलीय + स्वार्थे कन् स्त्रियां टाप्। कापि अत इत्वञ्च।) विडङ्गम्। इति राजनिर्घण्टः॥

| | | |
|---|---|---|
| लिङ्गादिसंग्रहे अभरः ॥<br><br>**तण्डुः**, पुं, शिवद्वारपालविशेषः । इति हलायुधः ॥ | | **तण्डुलुः**, स्त्री, (तण्डुल + पृषोदरात् उत्वे साधुः ।)<br><br>विडङ्गम् । इति शब्दरत्नावली ॥ |

**तण्डुलेरः**, पुं, (तण्डुल + बाहुलकात् स्वार्थे ढ्र ।)
तण्डुलीयशाकः । इति हेमचन्द्रः । ४ । २५० ॥

**तण्डुलोत्थं**, क्ली, (तण्डुलात् तण्डुलप्रक्षालनात्
उत्तिष्ठतीति । उत् + स्था + कः ।)
तण्डुलाम्बु ।
इति राजनिर्घण्टः ॥

**तण्डुलोदकं**, क्ली, (तण्डुलस्य तण्डुलक्षालनस्य
उदकम् । तण्डुलक्षालितं उदकं वा ।) तण्डु-
लाम्बु । यथा, वैद्यकपरिभाषायाम् ।
"जलमष्टगुणं दत्त्वा पलं
कण्डिततण्डुलात् ।
भावयित्वा ततो देयं
तण्डुलोदककर्म्मणि ॥"
(अस्य गुणा यथा, --
"सन्धानं शीतलं बल्यं
महातिसारनाशनम् ।
सुस्वादु शीतलञ्चैव बृंहणं
तण्डुलोदकम् ॥"
इति हारीते प्रथमे स्थानेऽष्टमेऽध्याये ॥)

**तण्डुलौघः**, पुं, (तण्डुलानामोघ इव यत्र ।) वेष्टवंशः ।
इति शब्दचन्द्रिका ॥ वेउडवाँश इति
भाषा ।
तण्डुलसमूहश्च ॥

**तत्**, व्य, हेतुः । इत्यमरः । ३ । ४ । ३ ॥ (यथा,
रघुः । ३ । ४६ ।
"तदङ्गमग्र्यं मघवन् ! महाक्रतो-
रमुं तुरङ्गं प्रतिमोक्तुमर्हसि ॥")

**तत्**, [द्] त्रि, बुद्धिस्थपरामर्शः । सेइ इति
भाषा । सर्व्वनामशब्दोऽयम् । इति
व्याकरणम् ॥

सप्तम्यर्थः । यथा, मनुः । ४ । १५ ।
"न विद्यमानेष्वर्थेषु नार्त्त्यामपि
यतस्ततः ॥"
तृतीयार्थः । यथा, नारदपञ्चरात्रे । २ । ६ ।
"आराधितो यदि हरिस्तपसा ततः
किं
नाराधितो यदि हरिस्तपसा ततः
किम् ॥")
कथान्तरम् । आनन्तर्य्यम् । इति
विश्वः ॥ (यथा,
महाभारते । ४ । ५ । २ ।
"ततस्ते दक्षिणं तीरमन्वगच्छन्
पदातयः ॥")

**ततपत्री**, स्त्री, (ततं विस्तृतं पत्रमस्याः ।) कदली-
वृक्षः । इति शब्दचन्द्रिका ॥

**ततमः**, त्रि, (तेषां मध्ये निर्द्धारितो योऽसौ ।
तद् + "वा बहूनां जातिपरिप्रश्ने
डतमच् ।)
५ । ३ । ९३ । इति डतमच् ।)
बहुषुमध्ये सः ।
अनेकेर मध्ये सेइ इति भाषा । (यथा,
ऐतरेयोपनिषदि । ३ । १२ । १३ ।
"स एतमेव पुरुषं ब्रह्म
ततममपश्यदिदमदर्श-
मिति ॥")

**ततरः**, त्रि, (तयोर्मध्ये निर्द्धारतो योऽसौ । तद् +
"किंयत्तदो निर्द्धारणे द्वयोरेकस्य
डतरच् ।"
५ । ३ । ९२ । इति डतरच् ।)
द्वयोर्मध्ये सः ।
दुयेर मध्ये सेइ इति भाषा ॥

**ततस्त्यं**, त्रि, (ततस्तत्रभवमिति । ततस् + "अव्यया-
त्यप् ।" ४ । २ । १०४ । इत्यस्य
"अमेह-

बभूव सर्व्वं शुभशंसि तत्क्षणं
भवो हि लोकाभ्युदयाय तादृशाम् ॥")

**त(त्व)त्त्वं**, क्ली, (तनोति सर्व्वमिदमिति । तन् +
क्विप् तुक् च । पृषोदरादित्वात् साधुः । यद्वा,
"सर्व्वं खल्विदं ब्रह्म ।" "ब्रह्मैवेदं सर्व्वम् ।"
इति श्रुतेस्तस्य ब्रह्मणो भावः इति । तत् + त्व ।)
स्वरूपम् । परमात्मा । विलम्बितनृत्यम् । इति
मेदिनी । वे, ९ ॥ वाद्यप्रभेदः । इति विश्वः ॥ वस्तु
।
इति त्रिकाण्डशेषः ॥ चेतः । इति धरणिः ॥ * ॥
चतुर्व्विंशतितत्त्वानि यथा । क्षितिः १ आपः २
तेजः ३ मरुत् ४ व्योम ५ गन्धः ६ रसः ७ रूपम् ८
स्पर्शः ९ शब्दः १० नेत्रम् ११ नासिका १२
जिह्वा १३ कर्णः १४ त्वक् १५ हस्तः १६ पादः
१७
मुखम् १८ पायुः १९ लिङ्गम् २० प्रकृतिः २१
मनः २२ बुद्धिः २३ अहङ्कारः २४ । इति पुराण-
तन्त्रे ॥ तत्तु नानामुनिभिर्न्नानाविधमुक्तम् । तत्र
त्रीणि तत्त्वानि यथा । सत्वम् १ रजः २ तमः ३ ।
चतुर्व्विधानि यथा । तेजः १ आपः २ पृथ्वी ३
आत्मा ४ । पञ्चविधानि यथा । शब्दः १ स्पर्शः २
रसः ३ गन्धः ४ रूपम् ५ । षड्विधानि यथा ।
क्षितिः १ आपः २ तेजः ३ वायुः ४ आकाशम् ५
परमात्मा ६ । सप्तविधानि यथा । क्षितिः १
आपः २ तेजः ३ वायुः ४ आकाशम् ५ जीवः ६
आत्मा ७ । नवविधानि यथा । पुरुषः १
प्रकृतिः २ महत्तत्त्वम् ३ अहङ्कारः ४ नभः ५
वायुः ६ ज्योतिः ७ आपः ८ क्षितिः ९ ।
एकादशविधानि यथा । श्रोत्रम् १ त्वक् २
चक्षुः ३ घ्राणम् ४ जिह्वा ५ वाक् ६ पाणिः ७
उपस्थः ८ पायुः ९ अङ्घ्रिः १० मनः ११ ।
त्रयोदशविधानि यथा । नभः १ वायुः २ ज्योतिः
३ आपः ४ क्षितिः ५ श्रोत्रम् ६ त्वक् ७ चक्षुः
८ घ्राणम् ९ जिह्वा १० मनः ११ जीवात्मा
१२ परमात्मा १३ । षोडशविधानि यथा ।
नभः १ वायुः २ ज्योतिः ३ आपः ४ पृथ्वी ५
शब्दः ६ स्पर्शः ७ रूपम् ८ रसः ९ गन्धः १०
श्रोत्रम् ११ त्वक् १२ चक्षुः १३ जिह्वा १४
घ्नाणम् १५ मनः १६ । सप्तदशविधानि यथा ।

(यथा, किरातार्ज्जुनीये । २ । २ ।
"अपि वागधिपस्य दुर्व्वचं
वचनन्तद्विदधीत विस्मयम् ॥")

**तत्**, क्ली, ब्रह्मणो नामविशेषः । यथा, --

"ॐ तत् सदिति निर्द्देशो
ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च
विहिताः पुरा ॥
तस्मादोमित्युदाहृत्य
यज्ञदानतपःक्रियाः ।
प्रवर्त्तन्ते विधानोक्ताः सततं
ब्रह्मवादिनाम् ॥
तदित्यनभिसन्धाय फलं
यज्ञतपःक्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते
मोक्षकाङ्क्षिभिः ॥"
इति श्रीभगवद्गीतायाम् । १७ ।
२३-२५ ॥

**ततं**, क्ली, (तनोति मनोऽनेनेति । तन + "तनि-
मृङ्भ्यां किच्च ।" उणां । ७ । ८८ ।
इति तन् ।)
वीणादिवाद्यम् । इत्यमरः । १ । ७ ।
४ ॥

**ततः**, त्रि, (तन्यते स्म इति । तन् + क्तः ।) विस्तृतः ।
(यथा, महाभारते । ४ । ५ । १ ।
"ते वीरा
बद्धनिस्त्रिंशास्ततायुधकलापिनः ॥")
व्याप्तः । (यथा, भगवद्गीतायाम् । ८
। २२ ।
"यस्यान्तःस्थानि भूतानि येन
सर्व्वमिदं ततम् ॥")
वायौ, पुं । इति मेदिनी । ते, २० ॥

**ततः**, [स्] व्य, (तद् + "पञ्चम्यास्तसिल् ।" ५ ।
३ । ७ । इति तसिल् । यद्वा,
सर्व्वविभक्तिषु
तसिल् ।) हेतुः इत्यमरः । ३ । ४ ।
३ ॥

क्वतसित्रेभ्य एव ।" इति वार्त्तिकोक्तेः
त्यप्
प्रत्ययः ।) तत्रभवम् । तत्सम्बन्धि ।
इति व्याक-
रणम् ॥ तार इति भाषा ॥

**ततिः**, स्त्री, (तन् + भावे क्तिन् ।) श्रेणी । इति
हेमचन्द्रः । ६ । ५९ ॥ (यथा,
विष्णुपादादि-
केशान्तवर्णनस्तोत्रे । १५ ।
"अस्माकं
विस्मयार्हाण्यखिलमुनिजनप्रार्थ-
नीयानि सेयं
दद्यादाद्यानवद्या
ततिरतिरुचिरामङ्गलान्यङ्गु-
लीनाम् ॥")

**तति**, त्रि, (तत् परिमाणमेषामिति । तद् + डति ।)
तत्परिमाणम् । ततगुलि इति भाषा ।
बहु-
वचनान्तोऽयम् । इति व्याकरणम् ॥

**तत्कालः**, पुं, (स चासौ कालश्चेति ।) वर्त्तमान-
कालः । तत्पर्य्यायः । तदात्वम् १ ।
इत्यमरः ।
२ । ८ । २९ ॥ (यथा,
कथासरित्सागरे । २ । ८३ ।
"वर्षस्य वेश्म वसुभिः स किलादरेण
तत्कालमेव समपूरयदुन्नतश्रीः ॥")

**तत्कालधीः**, त्रि, (तस्मिन् काले कार्य्यकाले
धीरुपस्थिता बुद्धिर्य्यस्य ।)
प्रत्युत्पन्नमतिः ।
उपस्थितबुद्धिः । इति हेमचन्द्रः । ३
। ८ ॥

**तत्क्रियः**, त्रि, (सा क्रिया निसर्गतो वेतनमृते
यस्येति ।) कर्म्मकारः । वेतनं विना
भारवहादि-
कर्त्ता । इत्यमरः ॥

**तत्क्षणः**, पुं, (स चासौ क्षणश्चेति स एव क्षणो

पूर्ब्बोक्तानि षोडश १६ आत्मा च १७ । पञ्च-
विंशतितत्त्वाति यथा । पूर्ब्बोक्तानि सप्तदश १७
पुरुषः १८ प्रकृतिः १९ महान् २० अहङ्कारः
२१ मुखम् २२ पाणिः २३ उपस्थः २४ पायुः
२५ । षड्विंशतिविधानि यथा । पूर्ब्बोक्तानि
पञ्चविंशतिः २५ जीवः २६ । सप्तविंशति-
विधानि यथा । पूर्ब्बोक्तानि षड्विंशतिः २६
ईश्वरः २७ । इति श्रीभागवतम् ॥

**तत्त्वज्ञानं**, क्ली, (तत्त्वस्य ब्रह्मतत्त्वस्य ज्ञानम् ।)
बुद्धिगुणविशेषः । तत्तु ब्रह्मज्ञानम् । इति हेम-
चन्द्रः । २ । २२५ ॥ यथा, --
"प्रमाणप्रमेयसंशय-प्रयोजनदृष्टान्त-सिद्धान्ता-
वयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छल-
जातिनिग्रहस्थानानां षोडशपदार्थानां तत्त्व-
ज्ञानान्निःश्रेयसाधिगमः ।" इति गोतमसूत्रे । १ ॥

| | | |
|---|---|---|
| (यथा, महाभारते । १२ । ३४८ । ७९ ।<br>“हीनाः सत्त्वेन सूक्ष्मेण ततो वैकारिकाः स्मृताः ॥”<br>आदिः । परिप्रश्नः । पञ्चम्यर्थः । (यथा, मनुः ।<br>१२ । ८५ ।<br>“सर्व्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम् ।<br>तद्ध्यग्र्यं सर्व्वविद्यानां प्राप्यते ह्यमृतं ततः ॥” | वा ।) सद्यः । इत्यमरः । ३ । ४ । ९ ॥ (यथा,<br>रघुः ३ । १४ ।<br>“दिशः प्रसेदुर्म्मरुतो वबुः सुखाः प्रदक्षिणार्च्चिर्हविरग्निराददे । | |

**तत्त्वन्यासः**, पुं, (तत्त्वानां न्यासः ।) विष्णुपूजा-
विषयकन्यासविशेषः । यथा, --
“मादिकान्तानथार्णांश्च जीवाद्येकैकशो वदेत्
।
नमः परायेत्युच्चार्य्य ततस्तत्त्वात्मने नमः ॥
जीवं प्राणं द्वयं प्रोक्त्वा सर्व्वाङ्गेषु प्रविन्यसेत् ।
ततो हृदयमध्ये च तत्त्वत्रयञ्च विन्यसेत् ॥
इत्यच्युतीकृततनुर्व्विदधीत तत्त्व-
न्यासं मपूर्ब्बकपराक्षरनत्युपेतम् ।
भूयः पराय च तदाह्वयमात्मने च
नत्यन्तमुद्धरतु तत्त्वमनुक्रमेण ॥
सकलवपुषि जीवं प्राणमायोज्य मध्ये
न्यसतु मतिमहङ्कारं मनश्चेति मन्त्री ।
कमुखहृदयगुह्याङ्घ्रिष्वथोशब्दपूर्ब्बं
गुणगणमथ कर्णादिस्थितं श्रोत्रपूर्ब्बम् ॥
वागादीन्द्रियवर्गमात्मनिलये त्वाकाशपूर्ब्बं गणं
मूर्द्धास्ये हृदये शिरे चरणयोर्हृत्पुण्डरीकं हृदि ॥
शं बीजं हृत्पुण्डरीकतत्त्वं हृदि प्रविन्यसेत् ।
हं बीजं सूर्य्यमण्डलतत्त्वं हृदि प्रविन्यसेत् ॥
सं बीजं चन्द्रमण्डलतत्त्वं तत्र प्रविन्यसेत् ।
रं बीजं वह्निमण्डलतत्त्वं तत्रैव विन्यसेत् ॥
षं बीजं परमेष्ठितत्त्वं वासुदेवञ्च मूर्द्धनि ।
यं बीजमथ पुंस्तत्त्वं सङ्कर्षणमथो मुखे ॥
लं बीजं विश्वतत्त्वञ्च प्रद्युम्नञ्च हृदि न्यसेत् ।
वं बीजं निवृत्तितत्त्वञ्च अनिरुद्धमुपस्थके ॥
लं बीजं सर्व्वतत्त्वञ्च पादे नारायणं न्यसेत् ।
क्ष्रौं बीजं कोपतत्त्वञ्च नृसिंहं सर्व्वगात्रके ॥
एवं तत्त्वानि विन्यस्य प्राणायामं समाचरेत् ॥”
अस्य फलं यथा, --
“तत्त्वन्यासं ततः कुर्य्यात् साधकः सिद्धिहेतवे
।
कृतेन येन देवस्य रूपतामेव यात्यसौ ॥”
इति गौतमीयतन्त्रम् ॥

**तत्परः**, त्रि, (सः परोऽस्य । यद्वा, तदेव परं सर्व्वो-
त्तममस्य ।) आसक्तः । इत्यमरः । ३ । १ । ९
॥
(यथा, भागवते । ४ । १५ । ६ ।
“एष साक्षाद्धरेरंशो जातो लोकरिरक्षया ।
पधः । इति केचित् । तन्द्रीः ।
सौत्रधातुरयम् ।
इति दुर्गादासः ॥
पधः । इति केचित् । तन्द्रीः ।
सौत्रधातुरयम् ।
इति दुर्गादासः ॥

**तत्र**, इ क ङ धारणे । इति कविकल्पद्रुमः ॥
(चुरां-आत्मं-सकं-सेट् ।)
आदिमध्ययोस्तकारः
शेषो रेफयुक्तः । धारणं धरणम् ।
भाषायामस्य
विस्तारणे प्रायः प्रयोगः । इ क ङ,
तन्त्रयते
तन्तून् तन्त्रवायः । इति दुर्गादासः ॥

**तत्र**, व्य, (तस्मिन्निति । तद् + “सप्तम्यास्त्रल् ।”
५ । ३ । १० । इति त्रल् ।) तस्मिन् ।
तयोः । तेषु ।
इति आकरणम् ॥ सेखाने इति भाषा ।
(यथा,
मनुः । २ । ११२ ।
“धर्म्मार्थौ यत्र न स्यातां शुश्रूषा वापि
तद्विधा ।
तत्र विद्या न वप्तव्या शुभं बीजमिवोषरे
॥”)

**तत्रत्यः**, त्रि, तत्र भवः । (तद् + “अव्ययात्त्यप्
।”
४ । २ । १०४ । इत्यस्य
“अमेहक्वतसित्रेभ्य एव ।”
इति वार्त्तिकोक्त्या त्यप् ।)
तस्मिन्नुत्पन्नः । इति
मुग्धबोधव्याकरणम् ॥ (यथा,
कथासरित्-
सागरे । ५ । ९९ ।
“प्राप्तस्यैवे च तत्रत्यो जनोऽरोदीत्
पुरो मम ॥”)

**तत्रभवान्**, [त्] त्रि, (इतराभ्योऽपि दृश्यन्ते
(यथा, मनुः, । ९ । १९ ।
“तथाच श्रुतयो बह्व्यो निगीता निगमेष्वपि
॥”
अव्ययद्वयेनैव सिद्धेः कैश्चिदयं शब्दो न
मन्यते ॥)

**तथैव**, व्य, (तथा च एव च ।) तद्वदेव । सेइ
प्रकार इति भाषा । यथा, चाणक्ये । ४२ ।
“अस्ति पुत्त्रो वशे यस्य भार्य्या
भर्त्तुस्तथैव च ॥”
अव्ययद्वयेनैव सिद्धेः कैश्चिच्छब्दोऽयं न
मन्यते ॥)

**तथ्यं**, क्ली, (तथा साधु । तथा + “तत्र साधुः ।”
४ । ४ । ९८ । इति यत् ।) सत्यम् ।
(यथा,
मनुः । ८ । २७४ ।
“काणं वाप्यथवा खञ्जमन्यं वापि
तथाविधम् ।
तथ्येनापि ब्रुवन् दाप्यो दण्डं
कार्षापणावरम् ॥”)
तद्वति त्रि । इत्यमरः । १ । ६ । २२ ॥
(यथा,
महाभारते । ७ । १५७ । ३ ।
“यदर्ज्जुनगुणांस्तथ्यान् कीर्त्तयानं
नराधम ! ।
शूरद्वेषात् सुदुर्ब्बुद्धे ! त्वं भर्त्सयसि
मातुलम् ॥”)

**तदा**, व्य, (तस्मिन् काले । “तदो दा च ।” ५ ।
३ । १९ । इति दा ।) तस्मिन् काले ।
इत्य-
मरः । ३ । ४ । २२ ॥ सेइ समये इति
भाषा ॥
(यथा, मनुः । १ । ५५ ।
“न च स्वं कुरुते कर्म्म तदोद्क्रामति
मूर्त्तिः ॥”)

**तदात्वं**, क्ली, (तदा इत्यस्व भावः । तदा + “तस्य
भावस्त्वतलौ ।” ५ । १ । ११९ । इति
त्व ।)

इयञ्च तत्परा हि श्रीरनुजङ्गेऽनपायिनी ॥”)

**तत्परायणः**, त्रि, (तदेव परमयनमस्य ।) तदा-

सक्तः । यथा, --
“शुद्धा भवन्ति यद्यन्येऽन्त्यजाः
कृष्णपरायणाः ॥”
इति पद्मोत्तरखण्डम् ॥

**तत्फलः**, पुं, (तदेव फलमस्य । यद्वा, तनोति तन्यते

वा । तन + क्विप् तुक् च । तत् विस्तृतं
फलमस्य ।)
कुवलयम् । कुष्ठनामौषधिः । चौरनाम-
सुगन्धिद्रव्यम् । इति धरणिः ॥

**तत्र**, इ कुटुम्बधारणे । इति प्राञ्चः । (भ्वां-परं-

अकं-सेट् ।) द्वावेतौ धारणेऽर्थे वर्त्तेते । इति
चान्द्राः । केचित्तु
कुटुम्बधातुममन्यमानास्तत्रि-
धातुः कुटुम्बस्य धारणेऽर्थे वर्त्तते इत्याहुः ।
तन्त्र धारणे इत्यनेनैवेष्टसिद्धे इदनुबन्धो वेदेषू-
च्चारणभेदार्थः । इति दुर्गादासः ॥

**तत्र** इ सादे । मोहे । (भ्वां-परं-अकं-सेट् ।)

दन्त्यवर्गाद्योपधः । तन्त्रीः । दन्त्यवर्गतृतीयो-

**तत्र** इ सादे । मोहे । (भ्वां-परं-अकं-सेट् ।)

दन्त्यवर्गाद्योपधः । तन्त्रीः । दन्त्यवर्गतृतीयो-

इति प्राग्दीव्यतीयः प्रथमार्थे त्रल् ।
ततः
सुप्सुपेतिसमासः ।) श्लाघ्यः । इति
जटाधरः ॥

**तथा**, व्य, (तेन प्रकारेण । तद् + “प्रकारवचने

थाल् ।” ५ । ३ । २३ । इति थाल् ।
तेन प्रकारे-
णेत्यर्थः । यथा, मनुः । १ । ४ ।
“स तैः पृष्टस्तथा सम्यगमितौजा
महात्मभिः ।
प्रत्युवाचार्च्च्य तान् सर्व्वान् महर्षीन्
श्रूयता-
मिति ॥”)
साम्यम् । इत्यमरः । ३ । ४ । ९ ॥
(यथा,
मनुः । ६ । ९० ।
“यथा नदीनदाः सर्व्वे सागरे यान्ति
संस्थितिम् ।
तथैवाश्रमिणः सर्व्वे गृहस्थे यान्ति
संस्थितिम् ॥”)
अभ्युपगमः । पृष्टप्रतिवाक्यम् ।
समुच्चयः ।
(यथा, देवीभागवते । १ । २ । २६ ।
“सपादलक्षञ्च तथा भारतं मुनिना
कृतम् ।
इतिहास इति प्रोक्तं पञ्चमं वेदसम्मतम्
॥”)
निश्चयः । इति मेदिनी । थे, ३६ ॥
(यथा,
रघुः । १ । २९ ।
“तं वेधा विदधे नूनं महाभूतसमाधिना
।
तथा हि सर्व्वे तस्यासन् परार्थैकफला
गुणाः ॥”)

**तथागतः**, पुं, (यथा पुनरावृत्तिर्न भवति तथा

तेन प्रकारेण गतः । यद्वा, तथा सत्यं
गतं
ज्ञानं यस्य । सुप्सुपेति समासः ।)
बुद्धः ।

तत्कालः । वर्त्तमानकालः । इत्यमरः । २
। ८ । २९ ॥
(यथा, महाभारते । २ । ५९ । १४ ।
“स चोपभोगलोभान्धो हिरण्यार्थे
परन्तप ! ।
आयतिञ्च तदात्वञ्च उभे सद्यो व्यनाशयत्
॥”)

**तदानीं**, [म्] व्य, (तस्मिन् काले । “तदो

दा च ।” । ५ । ३ । १९ । इति चकारात्
दानीम् ।) तस्मिन् काले । इत्यमरः । ३ ।
४ । २२ ॥
(यथा, ऋग्वेदे । १० । १२९ । १ ।
“नासदासीन्नोसदासीत्तदानीं
नासीद्रजो नो व्योमा परो यत् ॥”)

**तदामुखं**, क्ली, (तदा तस्मिनेव काले मुखं यस्य ।)

आरम्भः । इति भूरिप्रयोगः ॥

**तद्दिनं**, [म्] व्य, (तत् प्रखरकिरणत्वेन प्रसिद्धं

दिनं दिनांशः ।) दिनमध्यम् । (तत्तदेव
दिनम् ।)
प्रतिदिनम् । इति हेमचन्द्रः ॥ (तदेव दिनम्
।)
पूर्ब्बोक्तदिने, क्ली ॥

**तद्धनः**, त्रि, (तदेव अव्ययेनाहीनं धनं यस्य ।)

कृपणः । इति हेमचन्द्रः । ३ । ३२ ॥
(तदेव
धनमिति विग्रहे पूर्ब्बोक्तधने, क्ली ॥)

**तद्बलः**, पुं, (तस्मिन् लक्ष्ये एव बलं यस्य ।)

बाणविशेषः । इति हेमचन्द्रः । ३ । ४४४
॥

**तन**, उ कि उपकृतौ । श्रद्धाघाते । शब्दोपतापयोः ।

इति कविकल्पद्रुमः ॥ (चुरां पक्षे भ्वां-परं-
अकं-
सकं च-सेट् । उदित्त्वात् क्त्वावेट् ।) उ,
तनित्वा
तत्वा । कि, तानयति तनति ।
उपकृतिरुप-

इत्यमरः । १ । १ । १३ ॥ (यथा, सर्व्वदर्शनसंग्रहे ।

"यथा गतास्ते मुनयः शिवां गतिं

तथा गतिं सोऽपि गतस्तथागतः ॥" * ॥

तथा तेन प्रकारेणागतः ।) पूर्ब्बोक्तप्रकारेणा-

गते, त्रि ॥ (यथा, महाभारते । ३ । ७७ । ५ ।

"ततो वभूव नगरे सुमहान् हर्षजः स्वनः ।

जनस्य संप्रहृष्टस्य नलं दृष्ट्वा तथागतम् ॥")

**तथाच**, व्य, (तथा च, च च इति द्वन्द्वसमासः ।) पूर्ब्बो-

क्तार्थदृढीकरणम् । इति संक्षिप्तसारव्याकरणम् ॥

कारः । अघातो हिंसावर्ज्जनम् । सुनीतिरिति

गोविन्दभट्टः । उपसर्गाद्दैर्घ्यके । दैर्घ्यकं दीर्घी-

करणम् । वितानयति यः कीर्त्तिं वितनत्यमल-

यशः । इति हलायुधः । इति दुर्गादासः ॥

**तन**, द ञ उ विस्तृतौ । इति कविकल्पद्रुमः ॥

(तनां-उभं-सकं-सेट् । उदित्वात् क्त्वावेट् ।)
द ञ, तनोति तनुते पुण्यं ऋषिः । उ, तनित्वा
तत्वा । इति दुर्गादासः ॥

**तनयः**, पुं, (तनोति विस्तारयति कुलमिति ।

तन् + “वलिमलितनिभ्यः कयन् ।” उणां । ४ ।
९९ । इति कयन् ।) पुत्त्रः । इत्यमरः । २ । ६ ।
२७ ॥ (यथा, मनुः । ३ । १६ ।
“शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च ॥”)

**तनया**, स्त्री, (तनोति कुलमिति । तन + कयन् +

टाप् ।) कन्या । इत्यमरः । २ । ६ । २७ ॥
(यथा, भागवते । १ । १६ । २ ।
“स उत्तरस्य तनयामुपयेमे इरावतीम् ॥”)
चक्रकुल्यालता । इति शब्दचन्द्रिका ॥

**तनिष्ठः**, त्रि, अयमनयोरतिशयेन तनुः । (तनु

+ इष्ठन् ।) क्षुद्रः । इति व्याकरणम् ॥

**तनीयान्** [स्] त्रि, अयमेषामतिशयेन तनुः ।

(तनु + ईयसुन् ।) अल्पः । इति व्याकरणम् ॥

**तनुः**, स्त्री, (तनोति तन्यते इति वा । तन +

“भृमृशीतृचरीति ।” उणां । १ । ७ । इति उः ।)
शरीरम् । (वथा, विष्णुपुराणे । १ । १७ । ५ ।
“देवाः स्वर्गं परित्यज्य तत्त्रासात् मुनिसत्तम ! ।
विचेरुरवनौ सर्व्वे बिभ्राणा मानुषीं तनुम् ॥”)
त्वक् । इति मेदिनी । ने, ९ ॥ स्त्री । इति राजनिर्घण्टः ॥

**तनुः**, त्रि, (तन + “भृमृशीति ।” उणां १ । ७ ।

**तनुजा**, स्त्री, (तनोः शरीरात् जायते इति । जन

+ डः + टाप् ।) कन्या । इति शब्दरत्नावली ॥

**तनुत्रं**, क्ली, (तनुं त्रायते इति । त्रै + “आतो-

ऽनुपसर्गे कः ।” ३ । २ । ३ । इति कः ।)
वर्म्म । इत्यमरः । २ । ८ । ६४ ॥

**तनुत्राणं**, क्ली, (त्रायतेऽनेनेति । त्रै + करणे

ल्युट् । तनोः शरीरस्य त्राणम् ।) तनुत्रम् ।
इति हलायुधः ॥ (यथा, महाभारते । ३ । १७४ । ४ ।
“इदञ्च मे तनुत्राणं प्रायच्छन्मघवान् प्रभुः ॥”)
शरीररक्षणञ्च ॥

**तनुत्वचा**, स्त्री, (तनुः तन्वी त्वक् वल्कलमस्याः ।)

क्षुद्राग्निमन्थः । इति राजनिर्घण्टः ॥

**तनुपत्रः**, पुं, (तनूनि पत्राणि यस्य ।) इङ्गुदी-

वृक्षः । इति राजनिर्घण्टः ॥

**तनुभस्त्रा**, स्त्री, (तनोः शरीरस्य भस्त्रा इव ।

निश्वासवायुनिर्गमात्तथात्वम् ।) नासिका ।
इति शब्दरत्नावली ॥

**तनुरसः**, पुं, (तनोर्देहस्य रस इव तनोर्निगतो

रस इति वा ।) घर्म्मः । इति हारावली । १५४ ॥

**तनुरुट्**, [ह्] क्ली, (तनौ शरीरे रोहतीति ।

रुह + क्विप् ।) तनूरुहम् । इति शब्दरत्ना-
वली ॥

**तनुरुहं**, क्ली, (तनौ रोहति उत्पद्यते इति ।

रुह + “इगुपधज्ञाप्रीकिरः कः ।” ३ । १ । १३५ ।

६ । ३ । ७५ । इति निपातितः ।) अग्निः ।
(यथा, ऋग्वेदे । ३ । २९ । ११ ।
“तनूनपादुच्यते गर्भ आसुरो
नराशंसो भवति यद्विजायते ॥”)
चित्रकवृक्षः । इत्यमरः । २ । ४ । ८० ॥

**तनूरुहं**, क्ली, (तन्वां रोहतीति । रुह + कः ।)

रोम । (यथा, भागवते । ७ । ८ । २२ ।
“चन्द्रांशुगौरैश्छुरितं तनूरुहै-
र्विष्वग्भुजानीकशतं नखायुधम् ॥”
तथाच शिवपुराणे । वायुसंहितायाम् । १ । १४ ।
“नमश्चकार तं दृष्ट्वा हृष्टसर्व्वतनूरुहः ॥”)
पतत्रम् । इति मेदिनी । हे, ३० ॥

**तनूरुहः**, पुं, (तन्वाः शरीरात् रोहति उत्-

पद्यते । रुह + कः ।) पुत्त्रः । गरुत् । (यथा,
बृहत्संहितायाम् । ६३ । १ ।
“कुक्कुटस्त्वृजुतनूरुहाङ्गुलि-
स्ताम्रवक्त्रनखचूलिकः सितः ॥”)
लोम । इति हेमचन्द्रः ॥

**तनूह्रदः**, पुं, (तन्वाः तन्वां वा ह्रद इव ।) पात्युः ।

इति त्रिकाण्डशेषः ॥

**तन्च**, उ इतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-

सकं-सेट् ।) उ, तञ्चित्वा तक्त्रा । इति दुर्गादासः ॥

**तन्च**, उ घ सङ्कुचि । इति कविकल्पद्रुमः ॥ (रुधां-

परं-अकं-सेट् ।) उ, तञ्चित्वा तक्त्रा । ध,
तनच्मि व्योम विस्तृतम् । इति दुर्गादासः ॥

**तन्ज**, उ घ सङ्कोचे । इति कविकल्पद्रुमः ॥ (रुधां-

परं-अकं-सेट् ।) उ, तञ्जित्वा तक्त्वा । ध, तनज्मि
व्योम विस्तृतम् । इति दुर्गादासः ॥

इत्युः ।) अल्पः । विरलः । (यथा, मनुः । ३ । १० ।
“तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत् स्त्रियम् ॥”)
कृशः । इति मेदिनी । ने, ९ ॥ (यथा, आर्य्या-
शप्तशत्याम् । ५२५ ।
“वितरन्ती रसमन्तर्म्ममार्द्रभावं तनोषि तनुगात्रि ! ॥”)

**तनुः**, [स्] क्ली, (तनोति तन्यते वा । तन + “अर्त्तिपॄवपियजितनिधनितपिभ्योनित् ।” उणां २ । ११८ । इति उसिः स च नित् ।) शरी-रम् । इत्युणादिकोषः ॥

**तनुक्षीरः**, पुं, (तनौ क्षीरं बहुलनिर्य्यासो यस्य ।) आम्रातकः । इति राजनिर्घण्टः ॥

**तनुच्छायः**, पुं, (तनुर्विरला स्वल्पा छाया यस्य ।) जालवर्व्वूरकवृक्षः । इति राजनिर्घण्टः ॥ (तनो-श्छाया ।) शरीरच्छायायां क्ली स्त्री च ॥

**तनुजः**, पुं, (तनोः शरीरात् जायते इति । जन + “अन्येष्वपि दृश्यते ।” ३ । २ । १०१ । इति डः ।) पुत्त्रः । इति हलायुधः ॥ (यथा, पञ्च-तन्त्रे । ५ । २२ ।
“स्वामी द्वेष्टि सुसेवितोऽपि सहसा प्रोज्झन्ति सद्बान्धवा
द्योतन्ते न गुणास्त्यजन्ति तनुजाः स्फारीभवन्त्यापदः ।
भार्य्या नो तमवंशजापि भजते नो यान्ति मित्राणि च
न्यायारोपितविक्रमानपिनरान् येषां न हि स्याद्धनम् ॥”)

इति कः ।) तनूरुहम् । इति शब्दरत्नावली ॥

**तनुलः**, त्रि, (तन्यते स्म इति । तन + उलच् ।) विस्तृतः । इति संक्षिप्तसारे उणादिवृत्तिः ॥

**तनुवातः**, पुं, (तनुः क्षीणो वातः वायुर्यत्र ।) नरकविशेषः । इति हेमचन्द्रः । ५ । २ ॥

**तनुवीजः**, पुं, (तनु क्षीणं स्वल्पमात्रं वा वीज-मस्य ।) राजवदरः । इति राजनिर्घण्टः ॥

**तनुव्रणः**, पुं, (तनुः क्षुद्रः स्वल्पः व्रणो यत्र ।) वल्मीकरोगः । इति शब्दरत्नावली ॥

**तनुसञ्चारिणी**, स्त्री, (तनु अल्पमात्रं यथा स्यात् तथा सञ्चरतीति । सम् + चर + णिनिः ङीप् च ।) बालिका स्त्री । इति शब्दमाला ॥

**तनूः**, स्त्री, (तनु + ऊङ् ।) शरीरम् । इत्य-मरः । २ । ६ । ७१ ॥

**तनूकृतः**, त्रि, (अतनुस्तनुरकारि । कृ + कर्म्मणि क्तः ।) तष्टः । अल्पीकृतः । इत्यमरः । ३ । १ । ९९ ॥

**तनूजः**, पुं, (तन्वाः शरीरात् जायते इति । जन + डः ।) पुत्त्रः । इति जटाधरः ॥ (यथा, रघुः । ५ । ५३ ।
“अवेहि गन्धर्व्वपतेस्तनूजं प्रियंवदं मां प्रियदर्शनस्य ॥”
स्त्री, कन्या ॥)

**तनूनपं**, क्ली, (तन्वा ऊनं कृशं पातीति । पा + कः ।) घृतम् । इति शब्दचन्द्रिका ॥

**तनूनपात्**, [द्] पुं, (तनूनपं घृतं अत्तीति । अद् + विच् क्विबित्येके । यद्वा, तनूं स्वशरीरं न पात यतीति । पत + णिच् + क्विप् । “नभ्राण्नपात् ।”

**तन्तुः**, पुं, (तन्यते विस्तीर्य्यते इति तनोति वा । तन + “सितनिगमीति ।” उणां १ । ७० । इति तुन् ।) सूत्रम् । इत्यमरः । २ । १० । २८ ॥ (यथा, महाभारते । १२ । ४७ । २२ ।
“यस्मिन् नित्यं तते तन्तौ दृढे स्रगिव तिष्ठति ॥”)
ग्राहः । इति हेमचन्द्रः ॥ सन्ततिः । यथा, --
“अन्तःस्थः सर्व्वभूतानामात्मा योगेश्वरो हरिः ।
स्वमाययावृणोद्गर्भं वैराट्याः कुरुतन्तवे ॥”
इति श्रीभागवतम् ॥

**तन्तुकः**, पुं, (तन्तुरिव तन्तुनेव वा कायतीति । कै + कः । तन्तु + संज्ञायां कन् वा ।) तन्तुभः । सर्षपः । इत्यमरटीकायां रमानाथः ॥ (यथा, सुश्रुते कल्पस्थाने ४ अध्याये ।
“पिङ्गलस्तन्तुक-पुष्पपाण्डुः षडगोऽग्निको वभ्रुकषायः ॥”)

**तन्तुकाष्ठं**, क्ली, (तन्तुसमन्वितं काष्ठम् ।) तूली । इति शब्दरत्नावली ॥ ताँतेर काट इति भाषा ॥

**तन्तुकी**, स्त्री, (तन्तुरिव कायतीति । कै + कः ङीप् च ।) नाडी । इति राजनिर्घण्टः ॥

**तन्तुकीटः**, पुं, (तन्तूत्पादकः कीट इति शाक-पार्थिववत् मध्यपदलोपी समासः ।) कोषकारः । इति जटाधरः ॥ गुटिपोका इति भाषा ॥

**तन्तुणः**, पुं, (तन + बाहुलकात् तुनन् निपातनात् णत्वं दन्त्यनकारान्त इत्येके ।) ग्राहः । इति हेमचन्द्रः ॥ हाङ्गर इति माषा ॥

**तन्तुपर्व्व**, [न्] क्ली, (तन्तुः यज्ञोपवीतिः तत्प्रदा-
नाय यत् पर्व्व तिथिरित्यर्थः ।)
परमेश्वरोप-
वीतिदानतिथिः । सा श्रावणी पूर्णिमा । इति
तिथ्यादितत्त्वम् ॥

**तन्तुनागः**, पुं, (तन्तुर्नाग इव ।) ग्राहः । इति
हेमचन्द्रः ॥

**तन्तुनिर्यासः**, पुं, (तन्तुनेव निर्य्यासः तन्तुवत् निर्य्यासो
यस्य वा ।) तालः । इति
शब्दरत्नावली ॥

**तन्तुभः**, पुं, (तन्तुरिव भातीति । भा + कः ।) सर्षपः ।
इत्यमरः । २ । ९ । १७ ॥ वत्सः ।
इति जटाधरः ॥

**तन्तुरं**, क्ली, (तन्तुरस्त्यस्येति । तन्तु + कुञ्जादित्वात्
रः ।) मृणालम् । इति शब्दरत्नावली
॥

**तन्तुलं**, क्ली, (तन्तुरम् । रस्य लत्वम् ।) मृणा-
लम् । इति हेमचन्द्रः ॥

**तन्तुवापः**, पुं, (तन्तून् वपतीति । वप + “कर्म्म-
ण्यण् ।” ३ । २ । १ । इति अण् ।)
तन्त्रवायः ।
इति जटाधरः ॥ ताँति इति भाषा ॥
तन्त्रम् ।
इति शब्दमाला ॥ ताँत् इति भाषा ॥

**तन्तुवायः**, पुं, (तन्तून् वयति विस्तारयति जाला-
कारेणेति । वे + “संज्ञायाञ्च ।” ६ ।
२ । ७७ ।
इत्यण् ।) लूता । इत्यमरः । २ । ६ ।
१३ ॥ (तन्तून्

धरणिः ॥ धनम् । गृहम् । वपनसाधनम् ।
(यथा, महाभारते । १ । ३ । १४० ।
“तदापश्यत्
स्त्रियौ तन्त्रे अधिरोप्य सुवेमे पटं वयन्तौ
॥”)
कुलम् । इति नानार्थध्वनिमञ्जरी । (शास्त्रम्
।
इति विश्वः । यथा, देवीभागवते । २ । ११ ।
१९ ।
“अवैरज्ञमतन्त्रज्ञं बालचेष्टासमन्वितम् ॥”
व्यवहारः । नियमादिः । यथा, महाभारते ।
१ । १०३ । २६ ।
“शुत्वा त्वं प्रतिपद्यस्व प्राज्ञैः सह पुरोहितैः ।
आपद्धर्म्मार्थकुशलैर्लोकतन्त्रमवेक्ष्य च ॥”)
शिवोक्तशास्त्रम् । तच्च चतुःषष्टिसंख्यकम् ।
यथा, --
“सिद्धीश्वरं महातन्त्रं कालीतन्त्रं कुलार्णवम्
।
ज्ञानार्णवं नीलतन्त्रं फेत्कारीतन्त्रमुत्तमम् ॥
देव्यागमं उत्तराख्यं श्रीक्रमं सिद्धियामलम् ।
मत्स्यसूक्तं सिद्धसारं सिद्धिसारस्वतं तथा ॥
वाराहीतन्त्रं देवेशि ! योगिनीतन्त्रमुत्तमम् ।
गणेशविमर्षिणी तन्त्रं नित्यातन्त्रं शिवागमम्
॥
चामुण्डाख्यं महेशानि !
मुण्डमालाख्यतन्त्रकम् ।
हंसमाहेश्वरं तन्त्रं निरुत्तरमनुत्तमम् ॥
कुलप्रकाशकं देवि ! कल्पं गान्धर्व्वकं शिवे !
।
क्रियासारं निबन्धाख्यं स्वतन्त्रं तन्त्रमुत्तमम्
॥
सम्मोहनं तन्त्रराजं ललिताख्यं तथा शिवे !
।
राधाख्यं मालिनीतन्त्रं रुद्रयामलमुत्तमम् ॥
बृहत्श्रीक्रमं तन्त्रं गवाक्षं सुकुमुदिनी ।
विशुद्धेश्वरतन्त्रञ्च मालिनीविजयं तथा ॥
समयाचारतन्त्रञ्च भैरवीतन्त्रमुत्तमम् ।
यीगिनीहृदयं तन्त्रं भैरवं परमेश्वरि ! ॥
सनत्कुमारकं तन्त्रं योनितन्त्रं प्रकीर्त्तितम् ।

सप्तभिर्लक्षणैर्युक्तमागमं तद्विदुर्बुधाः ॥” * ॥
यामलस्य लक्षणम् ।
“सृष्टिश्च ज्योतिषाख्यानं
नित्यकृत्यप्रदीपनम् ।
क्रमसूत्रं वर्णभेदो जातिभेदस्तथैव च ॥
युगधर्म्मश्च संख्यातो यामलस्याष्टलक्षणम्
॥” * ॥
तन्त्रस्य लक्षणम् ।
“सर्गश्च प्रतिसर्गश्च मन्त्रनिर्णय एव च ।
देवतानाञ्च संस्थानं तीर्थानाञ्चैव वर्णनम् ॥
तथैवाश्रमधर्म्मश्च विप्रसंस्थानमेव च ।
संस्थानञ्चैव भूतानां यन्त्राणाञ्चैव निर्णयः ॥
उत्पत्तिर्व्विबुधानाञ्च तरूणां कल्पसंज्ञितम् ।
संस्थानं ज्योतिषाञ्चैव पुराणाख्यानमेव च ॥
कोषस्य कथनञ्चैव व्रतानां परिभाषणम् ।
शौचाशौचस्य चाख्यानं नरकाणाञ्च वर्णनम् ॥
हरचक्रस्य चाख्यानं स्त्रीपुंसोश्चैव लक्षणम् ।
राजधर्म्मो दानधर्म्मो युगधर्म्मस्तथैव च ॥
व्यवहारः कथ्यते च तथा चाध्यात्मवर्णनम् ॥
इत्यादिलक्षणैर्युक्तं तन्त्रमित्यभिधीयते ॥” *
॥
तस्य माहात्म्यम् ।
“विष्णुर्व्वरिष्ठो देवानां ह्रदानामुदधिस्तथा ।
नदीनाञ्च यथा गङ्गा पर्व्वतानां हिमालयः ॥
अश्वत्थः सर्व्ववृक्षाणां राज्ञामिन्द्रो यथा वरः
।
देवीनाञ्च यथा दुर्गा वर्णानां ब्राह्मणो यथा ॥
तथा समस्तशास्त्राणां तन्त्रशास्त्रमनुत्तमम् ॥
सर्व्वकामप्रदं पुण्यं तन्त्रं वै वेदसम्मितम् ।
कीर्त्तनं देवदेवस्य हरस्य मतमेव च ॥
पावनं श्रद्दधानानामिह लोके परत्र च ॥” * ॥
तस्य श्लोकसंख्या यथा, --
“न शक्यं विस्तराद्वक्तुमपि वर्षशतैरपि ।
संक्षेपाद्वै प्रवक्ष्यामि लोककल्पोक्तवर्त्मना ॥
दिवि देवे नवलक्षं पाताले ब्रह्मशासने ॥
लक्षमात्रं भारते च क्षितौ तन्त्राणि यानि च ।
आगमं त्रिविधं प्रोक्तं चतुर्थमैश्वरं स्मृतम् ॥
कल्पश्चतुर्व्विधः प्रोक्तः आगमो डामरस्तथा
।

वयतीति । वे + "कर्म्मण्यण् ।" ३ ।
२ । १ ।
इत्यण् ।) तन्त्रवायः । इति
शब्दरत्नावली ॥
(यथा, मनुः । ८ । ३९७ ।
"तन्तुवायो दशपलं
दद्यादेकपलाधिकम् ॥")

**तन्तुविग्रहा**, स्त्री, (विगृह्यतेऽसौ । वि + ग्रह +

अप् । विग्रहो देहः । तन्तुभिनिर्म्मितो
विग्रहो-
ऽस्याः ।) कदली । इति
त्रिकाण्डशेषः ॥

**तन्तुशाला**, स्त्री, (तन्तुवपनार्थं या शाला गृह-

मित्यर्थः ।) तन्तुवपनगृहम् । ताँत्घर
इति
भाषा । तत्पर्य्यायः । गर्त्तिका २ ।
इति हेम-
चन्द्रः ॥

**तन्तुसन्ततं**, त्रि, (तन्तुनातन्तुभिर्व्वा सन्ततं व्याप्तम् ।)

सूत्रविस्तृतवस्त्रादि । सिङ्गान कापड
इति
भाषा । तत्पर्य्यायः । ऊतम् २
स्यूतम् ३
उतम् ४ । इत्यमरः । ३ । १ । १०१
॥

**तन्तुसारः**, पुं, (तन्तुः एव सारो यत्र ।) गुवाक-

वृक्षः । इति त्रिकाण्डशेषः ॥

**तन्त्रं**, क्ली, (तनोति तन्यते इति वा । तन +

कर्त्रादौ यथायथं ष्ट्रन् । तत्रि
कुटुम्बधारणे +
घञ् वा ।) कुटुम्बकृत्यम् ।
(कुलप्रतिष्ठादिक-
स्थितिः । यथा, महाभारते । १३ ।
४८ । ६ ।
"सर्व्वानुपायानथ सम्प्रधाय
समुद्धरेत् स्वस्य कुलस्य तन्त्रम् ॥")

तन्त्रान्तरञ्च देवेशि ! नवरत्नेश्वरं तथा ॥
कुलचूडामणितन्त्रं भावचूडामणीयकम् ।
तन्त्रदेवप्रकाशञ्च कामाख्यानामकं तथा ॥
कामधेनु कुमारी च भूतडामरसंज्ञकम् ।
मालिनीविजयं तन्त्रं यामलं ब्रह्मयामलम् ॥
विश्वसारं महातन्त्रं महाकालं कुलामृतम् ।
कुलोड्डीशं कुब्जिकाख्यं
यन्त्रचिन्तामणीयकम् ॥
एतानि तन्त्ररत्नानि सफलानि युगे युगे ।
कालीविलासकादीनि तन्त्राणि परमेश्वरि !
॥
कालकल्पे सुसिद्धानि अश्वक्रान्तासु भूमिषु
।
महाचीनादितन्त्राणि अविकल्पे महेश्वरि ! ॥
सुसिद्धानि वरारोहे ! रथक्रान्तासु भूमिषु ॥"
इति महासिद्धिसारस्वतम् ॥ * ॥
अपि च ।
"चतुःषष्टिश्च तन्त्राणि यामलादीनि
पार्व्वति ! ।
सफलानीह वाराहे ! विष्णुक्रान्तासु भूमिषु ॥
कल्पभेदेन तन्त्राणि कथितानि च यानि च ।
पाषण्डमोहनायैव विफलानीह सुन्दरि ! ॥"
इति महाविश्वसारतन्त्रम् ॥
तत्रागमस्य लक्षणं यथा, --
"सृष्टिश्च प्रलयश्चैव देवतानां यथार्च्चनम् ।
साधनञ्चैव सर्व्वेषां पुरश्चरणमेव च ॥
षट्कर्म्मसाधनञ्चैव ध्यानयोगश्चतुर्व्विधः ।

यामलश्च तथा तन्त्रं तेषां भेदाः पृथक पृथक्
॥
मुक्तकाख्यं प्रपञ्चश्च सारदाख्यञ्च नारदः ।
महार्णवश्च कपिलो योगः कल्पः कपिञ्जलः ॥
अमृतशुद्धिर्व्वीरश्च सिद्धसंवरणन्तथा ।
प्रथमोऽष्टसहस्रन्तु श्लोका दश प्रकीर्त्तिताः ॥
द्वितीयो मुक्तकस्तत्र षट्सहस्राणि संख्यया ।
श्लोकाः शतार्द्धसंख्यातास्तृतीयस्त्रिसहस्रकः
॥
शतद्वयं साधिकञ्च श्लोकानां पञ्चविंशतिः ।
त्रिंशोत्तरसहस्राणि श्लोकानां भानुसंख्यया ॥
प्रपञ्चे प्रथमे तन्त्रे द्वितीये वसुसंख्यया ।
सहस्राणि तथा श्लोकाः सप्तविंशतिसंख्यया
॥
भूतनेत्रसहस्राणि तृतीये पञ्चसहस्रकम् ।
शतत्रयं पङ्क्तिश्लोकाः प्रपञ्चः कथितस्त्रिधा
॥
कलासंख्या सहस्राणि शारदायाः प्रकीर्त्तिताः
।
पञ्चविंशाधिकाः श्लोका वसुश्लोकाश्च नारदे
॥
विंशतिश्च सहस्राणि षट्सहस्राणि संख्यया ।
वसुश्लोकाश्च कथिताः कपिले
श्लोकसंख्यया ॥
त्रयोदशसहस्राणि कालोत्तरशतत्रयम् ।

| | | |
|---|---|---|
| सिद्धान्तः । ओषधिः । प्रधानम् । तन्त्रवायः । परिच्छदः । श्रुतिशाखाविशेषः । हेतुः । उभ-यार्थप्रयोजकम् । इतिकर्त्तव्यता । इति मेदिनी ॥ राष्ट्रम् । परच्छन्दः । करणम् । अर्थसाधकः । तन्तुः । सैन्यम् । स्वराष्ट्रचिन्ता । इति हेम-चन्द्रः ॥ (यथा, माघे । २ । ८८ । "तन्द्रावापविदा योगैर्मण्डलान्यधितिष्ठता ॥") प्रबन्धः । इति शब्दरत्नावली ॥ शपथः । इति | | |

श्लोकसंख्यासमुद्दिष्टं योगे कल्पे च
संख्यया ॥
वाणसंख्यासहस्राणि श्लोका नवतिः
कीर्त्तिताः ।
श्लोकानान्तु सहस्राणि
अष्टाविंशतिसंख्यया ॥
श्लोकाश्च भानुसंख्यातास्तन्त्रेऽपि च
कपिञ्जले ।
अमृतशुद्धौ सहस्राणि
पञ्चश्लोकाधिकानि च ॥
पञ्चैव कथिता नेत्रसंख्यातानि यथाथतः
।
वीरागमे षडधिकानि शतानि
परिसंख्यया ॥
सहस्राणि च तावन्ति श्लोकानान्तु
यथार्थतः ।
पञ्चाधिकसहस्राणि
श्लोकानामृतुसंख्यया ॥
सिद्धसम्बरणोक्तानि ऐश्वरेण यथा पुरा ॥
* ॥
डामरः षड्विधो ज्ञेयः प्रथमो योगडामरः
॥
श्लोकास्तत्र त्रयस्त्रिंशत् तथा
पञ्चशतानि च ।
त्रिविंशतिसहस्राणि श्लोकानि चेह
संख्यया ।
एकादशसहस्राणि संख्याताः शिवडामरे
॥
श्लोकाः सप्तैव निश्चित्य ईश्वरेणैव
भाषिताः ।
तावत्श्लोकसहस्राणि पञ्चश्लोकशतानि
च ।
गुणोत्तराणि दुर्गाया डामरे कथितानि च
॥
नवश्लोकसहस्राणि नवश्लोकशतानि च
।
सारस्वते तथा श्लोकाः पञ्चैव
परिकीर्त्तिताः ॥

अर्कसंख्यासहस्राति द्वितीये तन्त्रवेदिभिः ।
अष्टाविंशतिश्च श्लोकाः
सङ्ख्यातास्तन्त्रनिर्ण्ये ॥
कुब्जिकाख्ये महातन्त्रे श्लोकाश्च
दशसंख्यया ।
सहस्राणि तथा सप्तसङ्ख्यातानि मनीषिभिः
॥
द्वितीये षट्सहस्राणि तदर्द्धञ्च कनिष्ठके ।
अर्कसंख्यासहस्राणि तथाङ्कुशशतानि च ॥
तावद्देव्या महातन्त्रे सङ्ख्यातानि द्विजोत्तमैः
।
द्वाविंशतिसहस्राणि द्वाविंशतिशतानि च ॥
कात्यायन्यास्तु तन्त्रस्य सङ्ख्यातानि
मनीषिभिः ।
वसुश्लोकसहस्राणि तावन्त्येव शतानि च ॥
प्रत्यङ्गिरायास्तन्त्रे च निश्चितानि यथार्थतः
।
भूतसङ्ख्यासहस्राणि तथाहि तच्छतानि च
॥
महालक्ष्म्यास्तन्त्रराजे पञ्चश्लोकाश्च
कीर्त्तिताः ।
गजसंख्यासहस्राणि श्लोकाश्च
ऋतुसङ्ख्यया ॥
त्रिपुरार्णवे महातन्त्रे लिखिताः परमर्षिभिः ।
सरस्वत्याः सहस्रे द्वे द्वे शते सङ्ख्यया स्मृते
॥
पञ्चश्लोकास्तथैवात्र विज्ञातव्या द्विजातिभिः
।
द्वाविंशतिसहस्राणि आद्ये तन्त्रोत्तमोत्तरे ॥
अङ्कसङ्ख्याशतान्यत्र श्लोकाः पञ्चदशैव तु
।
द्वाविंशतिसहस्राणि तथा बाणशतानि च ।
द्वात्रिंशच्च तथा श्लोका
योगिन्यास्तन्त्रराजके।
द्वितीये षट्सहस्राणि तथा च त्रिशतानि च ॥
त्रयः श्लोकास्तथैवात्र वाराह्यास्तन्त्र उत्तमे
।
ऊर्म्मिसङ्ख्यासहस्राणि
तत्त्वसङ्ख्याशतानि च ॥

चामुण्डापिङ्गलातन्त्रे वाराहीतन्त्रकं तथा
॥
मुण्डमालाख्यतन्त्रञ्च योगिनीतन्त्रमुत्तमम्
।
मालिनीविजयं तन्त्रं तन्त्रं स्वच्छन्दभैरवम्
॥
महातन्त्रं शक्तितन्त्रं तन्त्रं चिन्तामणिं परम्
।
उन्मत्तभैरवं तन्त्रं त्रैलोक्यसारतन्त्रकम् ॥
विश्वसाराह्वयं तन्त्रं तथा तन्त्रामृताभिधम्
।
महाफेत्कारीयतन्त्रं वायवीयञ्च तोडलम् ॥
मालिनीललितातन्त्रे त्रिशक्तितन्त्रकं तथा
।
राजराजेश्वरीतन्त्रं महामोहस्वरोत्तरम् ॥
गवाक्षतन्त्रं गान्धर्व्वं तन्त्रं त्रैलोक्यमोहनम्
।
हंसमाहेश्वरं हंसपरमेश्वरतन्त्रकम् ॥
कामधेन्वाख्यतन्त्रञ्च तन्त्रं वर्णविलासकम्
।
मायातन्त्रं मन्त्रराजं कुब्जिकातन्त्रमुत्तमम्
॥
विज्ञानलतिकां लिङ्गागमं कालोत्तरं तथा
॥”

- * * *

“ब्रह्मजामलकञ्चादिजामलं रुद्रजामलम् ॥
बृहज्जामलकं सिद्धजामलं कल्पसूत्रकम्
।
मत्स्यसूक्तं कल्पसूक्तं कामराजं शिवागमम्
॥
उड्डीशञ्च कुलोड्डीशमुड्डीशं वीरभद्रकम् ।
भूतडामरकं तद्वत् डामरं यक्षडामरम् ॥
कालिकाकुलसर्व्वस्वं कुलसर्व्वस्वमेव च
।
कुलचूडामणिं दिव्यं कुलसारं कुलार्णवम्
॥
कुलामृतकुलावल्यौ तथा
कालीकुलार्णवम् ।

स्वरसंख्यासहस्राणि श्लोकानां
ब्रह्मडामरे ।
पञ्चोत्तरशतान्यत्र संख्यातानि शिवेन तु
॥
षष्टिः श्लोकसहस्राणि गान्धर्व्वे
डामरोत्तमे ।
श्लोकाश्च षष्टिसंख्याता
ब्रह्मणाव्यक्तयोनिना ॥
यामलाः षट्च
संख्यातास्तत्रादावादियामले।
द्वात्रिंशच्च सहस्राणि त्रयस्त्रिंशत्शतानि
च ॥
द्वितीये ब्रह्मसंज्ञे ते द्वाविंशतिश्च
संख्यया ।
सहस्राणि शतान्यत्र तान्येव कथितानि
च ॥
तावत्संख्यासहस्राणि शतानि
परिसंख्यया ।
विंशतिश्च तथा संख्या श्लोकाश्च
विष्णुयामले ॥
कालसंख्यासहस्राणि वेदसंख्याशतानि
च ।
पञ्चषष्टिस्तथा श्लोकाः कनिष्ठे
रुद्रयामले ॥
नवश्लोकसहस्राणि त्रयोदशशतानि च ।
द्वाविंशतिस्तथा श्लोका गणेशे
यामलोत्तमे ॥
रविसंख्यासहस्राणि आदित्याख्ये तु
यामले ।
तन्त्रे नीलपताकायां सहस्राणि च पञ्च च
॥
पञ्चविंशतिश्लोकाश्च कथिता
वामकेश्वरे ।
त्रयोदशसहस्राणि द्वे शते विंशतिस्तथा
॥
श्लोका मृत्युञ्जये तन्त्रे
संख्यातास्तन्त्रवेदिभिः ।
गजसंख्यासहस्राणि त्रीणि संख्याशतानि
च ॥
सप्तश्लोकास्तथैवात्र तन्त्रे योगार्णवोत्तमे
।
गवाक्षे तन्त्रराजेऽस्मिन् श्लोका हि
तत्त्वसङ्ख्यया ।
वर्णसङ्ख्यासहस्राणि द्वे शते परिनिश्चिते ॥
श्लोकास्त्रयश्च सङ्ख्यातास्तन्त्रे
नारायणीयके ।
वेदसङ्ख्यासहस्राणि तान्येव च शतानि च
॥
श्लोका नवतिसङ्ख्याता मृडानीतन्त्रराजके
।
तृतीये त्रिसहस्राणि त्रिशतानि कनिष्ठके ॥
त्रिंशत्श्लोकाश्च सङ्ख्याता ज्ञातव्यास्तन्त्र-
वेदिभिः ॥”
उपतन्त्राणि यथा, --
“बौद्धोक्तान्युपतन्त्राणि कापिलोक्तानि यानि
च ।
अद्भुतानि च एतानि जैमिन्युक्तानि यानि च ॥
वशिष्ठः कपिलश्चैव नारदो गर्ग एव च ।
पुलस्त्यो भार्गवः सिद्धो याज्ञवल्क्यो
भृगुस्तथा ॥
शुक्रो बृहस्पतिश्चैव अन्ये ये मुनिसत्तमाः ।
एभिः प्रणीतान्यन्यानि उपतन्त्राणि यानि च
॥
न सङ्ख्यातानि तान्यत्र
धर्म्मविद्भिर्म्महात्मभिः ।
सारात्सारतराण्येव सङ्ख्यातानि निबोधत
॥”
इति वाराहीतन्त्रम् ।
(आगमतत्त्वविलासोक्ततन्त्रनामानियथा, --
“स्वतन्त्रतन्त्रं फेत्कारीतन्त्रमुत्तरतन्त्रकम् ।
नीलतन्त्रं वीरतन्त्रं कुमारीतन्त्रमुज्ज्वलम् ॥
कालीनारायणीतन्त्रे तारिणीतन्त्रमुत्तमम् ।
बालातन्त्रञ्च समयातन्त्रं भैरवतन्त्रकम् ॥
भैरवीत्रिपुरातन्त्रे वामकेश्वरतन्त्रकम् ।
कुक्कुटेश्वरतन्त्रञ्च मातृकातन्त्रमेव च ॥
सनत्कुमारतन्त्रञ्च विशुद्धेश्वरतन्त्रकम् ।
सम्मोहनाख्यतन्त्रञ्च गौतमीयञ्च तन्त्रकम् ॥
बृहद्गोतमीयतन्त्रं भूतभैरवतन्त्रकम्
कुलप्रकाशं वाशिष्ठं सिद्धसारस्वतं तथा ॥
योगिनीहृदयं कालीहृदयं मातृकार्णवम् ।
योगिनीजालकुरकं तथा लक्ष्मीकुलार्णवम्
॥
तारार्णवं चन्द्रपीठं मेरुचन्द्रं चतुःशतीम् ।
तत्त्वबोधं महोग्रञ्च स्वच्छन्दसारसंग्रहम् ॥
ताराप्रदीपं सङ्केतचन्द्रोदयमतिस्फुटम् ।
षट्त्रिंशत्तत्त्वकं लक्ष्यनिर्णयं त्रिपुरार्णवम् ॥
विष्णुधर्म्मोत्तरं मन्त्रदर्पणं वैष्णवामृतम् ।
मानसोल्लासकं पूजाप्रदीपं भक्तिमञ्जरीम् ॥
भुवनेश्वरीं पारिजात प्रयोगसारमुत्तमम् ।
कामरत्नं क्रियासारं तथैवागमदीपिकाम् ॥
भावचूडामणिग्रन्थं तन्त्रचूडामणिं परम् ।
बृहच्छ्रीक्रमसंज्ञञ्च तथा श्रीक्रमसंज्ञकम् ॥
सिद्धान्तशेखरं ग्रन्थं तां गणेशविमर्शिनीम्
।
मन्त्रमुक्तावलीं तत्त्वकौमुदीं तन्त्रकौमुदीम्
॥
मन्त्रतन्त्रप्रकाशाख्यं
श्रीरामार्च्चनचन्द्रिकाम् ।
शारदातिलकं ज्ञानार्णवं सारसमुच्चयम् ॥
कल्पद्रुमं ज्ञानमालां पुरश्चरणचन्द्रिकाम् ।
आगमोत्तरकं तत्त्वसागरं सारसंग्रहम् ॥
देवप्रकाशिनीं तन्त्रार्णवञ्च क्रमदीपिकाम् ।
ताराहस्यं श्यामाया रहस्यं तन्त्ररत्नकम्
॥
तन्त्रप्रदीपं ताराया विलासं विश्वमातृकाम्
।
प्रपञ्चसारं तं तन्त्रसारं रत्नावलीं तथा ॥”
कालतन्त्रम् । वासनाजालम् । यथा, महा-
भारते । १ । ३ । १४२ ।
“तन्त्रञ्चेदं विश्वरूपे युवत्यौ
वयतस्तन्तून् सततं वर्त्तयन्तौ ॥”
“तन्त्रं कालतन्त्रं
विश्वोपादाननिमित्तादिकारण-
समूहसम्बन्धम् ॥” इति
दुर्घटार्थप्रकाशिन्यां

| | | |
|---|---|---|
| दशश्लोकसहस्राणि तावन्त्येव शतानि च ॥<br>मायाख्ये च महातन्त्रे यथार्थतः प्रकीर्त्तिताः ।<br>पञ्चश्लोकसहस्राणि तावन्त्येव शतानि च ॥<br>शतार्द्धसंख्यया श्लोका दक्षिणामूर्त्तितन्त्रके ।<br>दशश्लोकसहस्राणि तावन्त्येव शतानि च ॥<br>त्रयोदश तथा श्लोकाः कालिकाख्ये च तन्त्रके ।<br>कामेश्वर्य्यास्तन्त्रवरे सहस्राणि त्रयं महत् ॥<br>श्लोकानां संख्यया चात्र तन्त्रराजे च संख्यया ।<br>नवश्लोकसहस्राणि नवश्लोकशतानि च ॥<br>द्वाविंशति सहस्राणि हरगौर्य्योश्च तन्त्रके ।<br>तथा च विंशतिः श्लोकास्तन्त्रेऽस्मिन् परि-<br>कीर्त्तिताः । | | |

विमलबोधः ॥ "इह तन्त्रं वासनाजालम् ।"
इति नीलकण्ठः ॥)

**तन्त्रकं**, क्ली, (तन्त्रात् सूत्रवापात् अचिराप-
हृतम् । तन्त्र + "तन्त्रादचिरापहृते । ५ । २ ।
७१ । इति कन् ।) नूतनवस्त्रम् । इत्यमरः ।
२ । ६ । ११२ ॥

**तन्त्रकाष्ठं**, क्ली, (तन्त्रस्थं काष्ठम् ।) तन्त्रवायस्य
तुरी । इति त्रिकाण्डशेषः ॥

**तन्त्रता**, स्त्री, (तन्त्रस्य भावः । तन्त्र + तल् ।)
अनेकमुद्दिश्य सकृत्प्रवृत्तिः । यथा । "आग्नेया-
ष्टाकपालेन्द्रदध्यैन्द्रपयोयागानां त्रयाणां आग्ने-
याष्टाकपालोपांशुयागाग्नीसोमीयैकादशकपाल-
यागानां त्रयाणां सकृत् सकृदनुष्ठितेन प्रया-
जाद्यङ्गेनोपकारः सिध्यति ।" "तथा नानाब्रह्म-
वधसत्त्वे सर्व्वोद्देशेन सकृत् प्रायश्चित्ते कृते
ब्रह्म-
वधजन्यपापनाशः ।" "तन्त्रताया हेतुश्च ।
अदृष्टार्थैकजातीयकर्म्मणः कालदेशकर्त्रादीनां
प्रयोगानुबन्धवैधहेतुभूतानामभेदे उद्देश्य-
विशेषाग्रह इति । एवञ्च ।
'स्नातोऽधिकारी भवति दैवे पैत्रे च कर्म्मणि ।
पवित्राणां तथा जाप्ये दाने च विधिदर्शितः ॥'
इति विष्णूक्तम् ॥
'अस्नात्वा नाचरेत् कर्म्म जपहोमादि किञ्चन
।'
इति दक्षोक्तञ्च क्रियाङ्गस्नानं कर्त्तृसंस्कार-
द्वारैव तद्दिनकर्त्तव्याशेषकर्म्मार्थमेकमेव न तु
प्रतिकर्म्म कर्त्तव्यम् ।" इति प्रायश्चित्ततत्त्वम्
॥

**तन्त्रवापः**, पुं, (तन्यते विस्तीर्य्यते इति तन्त्रं
सूत्रम् । तत् वपतीति । वप + "कर्म्मण्यण् ।"
३ । २ । १ । इत्यण् ।) तन्त्रवायः । तन्त्रे,
पुं क्ली । इति शब्दरत्नावली ॥

**तन्त्रवायः**, पुं, (तन्त्रेण वयतीति । वे ञ तन्तुसन्ताने
+ "ह्वावामश्च ।" ३ । २ । २ । इत्यण् ।) वर्ण-

**तन्त्रीः**, स्त्री, (तन्त्रयति मोहयति लोकानिति ।
तन्त्र + "अवितृस्तृतन्त्रिभ्यईः ।" उणां । ३
।
१५८ । इति ईः ।) वीणागुणः । (यथा,
रामा-
यणे । २ । ३९ । २९ ।
"नातन्त्रीर्विद्यते वीणा नाचक्रो विद्यते रथः
॥"
बीणा । यथा, तत्रैव । १ । २ । १८ ।
"पादबद्धोऽक्षरसमस्तन्त्रीलयसमन्वितः ।
शोकार्त्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा
॥")
गुडूची । देहसिरा । इति मेदिनी ॥ नदी-
विशेषः । युवतीभेदः । इति शब्दरत्नाबली ॥
रज्जुः । इति हेमचन्द्रः ॥ (यथा, मनुः । ४ ।
३८ ।
"न लङ्घयेद्वत्सतन्त्रीं न प्रधावेच्च वर्षति ।
न चोदके निरीक्षेत स्वं रूपमिति धारणा ॥")

**तन्द्रवायः**, पुं, (तन्त्रवायः निपातनात् तस्य दः ।)
तन्त्रवायः । इत्यमरटीकायां रायमुकुटः ॥

**तन्द्रा**, स्त्री, (तत् द्रातीति । तत् + द्रा + कः ।
निद्रातन्द्रेति नान्तत्वं निपात्यते । यद्वा, तन्द्र
अवसादे + भावे घञ् ततष्टाप् ।) निद्रा ।
आलस्यम् । इति हेमचन्द्रः ॥ (यथा, हठ-
योगप्रदीपिकायाम् । ३ । ३९ ।
"न रोगो मरणं तन्द्रा न निद्रा न क्षुधा तृषा
॥")
तस्या निदानं यथा । "तमोवातकफात्तन्द्रा
।"
इति । लक्षणञ्च ।
"इन्द्रियार्थेष्वसंवित्तिर्गौरवं जृम्भणं क्लमः ।
निद्रार्त्तस्येव यस्येहा तस्य तन्द्रा विनिर्द्दिशेत्
॥"
इति माधवकरः ॥
(कारणपूर्ब्बकमस्याः सम्प्राप्तिर्लक्षणं
चिकित्-
सितञ्च यथा, चरके सिद्धिस्थाने
नवमेऽध्याये ।
त्वम् । अत्यन्तश्रमादिना
सर्व्वाङ्गनिमीलनं
निःसहतेति यावत् इत्यन्ये । इति
भरतः ॥ तत्-
पर्य्यायः । प्रमीला २ । इत्यमरः ॥
तन्द्रा ३
तन्द्रिः ४ । इति तट्टीका ॥ तन्द्रिका
५ विषया-
ज्ञानम् ६ । इति राजनिर्घण्टः ॥
(यथा,
महाभारते । ३ । ३०३ । १९ ।
"निक्षिप्य राजपुत्त्री तु तन्द्रीं मानं
तथैव च ।
आतस्थे परमं यत्नं
ब्राह्मणस्याभिराधणे ॥")
निद्रा । इति मेदिनी । रे, ४२ ॥
(केचित्तु तन्त्र-
धातोर्बाहुलकात् ईप्रत्ययेन
तन्द्रीरिति पदं कल्प-
यन्ति यथा, चरके सूत्रस्थाने
त्रयोदशेऽध्याये ।
"पाण्डुता गौरवं जाड्यं
पुरीषस्याविपक्वता ।
तन्द्रीररुचिरुत्क्लेशः
स्यादतिस्निग्धलक्षणम् ॥")

**तन्निः**, स्त्री, (तन्नयतीति । नी + बाहुलकात्
डिः ।) चक्रकुल्या । इति रत्नमाला
॥ तन्वि-
रपि पाठः ॥

**तन्मात्रं**, क्ली, (तदेवेति । तत् + एवार्थे
मात्रच् ।
यद्वा, सा मात्रा यस्य ।)
अपञ्चीकृतरूप-
रसगन्धस्पर्शशब्दानां संज्ञा । यथा,
--
"इमान्येव सूक्ष्मभूतानि
तन्मात्राण्यपञ्चीकृतानि
चोच्यन्ते । एतेभ्यः सूक्ष्मशरीराणि
स्थूलभूतानि

सङ्करजातिविशेषः । ताँति इति भाषा । अस्योत्-
पत्तिर्य्यथा, पराशरपद्धतौ ।
"ताम्रकुट्टाच्छङ्खकार्य्यां मणिकारश्च जायते ।
मणिकारात् ताभ्रकुट्ट्यां मणिबन्धोऽप्यजायत ।
मणिवन्धान्मणिकार्य्यां तन्त्रवायाश्च जम्मिरे ॥"
तत्पर्य्यायः । कुविन्दः २ । इत्यमरः । २ । १० । ६ ॥
तन्त्रवापः ३ । इति भरतः ॥ तन्तुवापः ४ । इति
जटाधरः ॥ तन्तुवायः ५ । इति शब्दरत्नावली ॥
लूता । इत्यमरटीकायां स्वामी ॥

**तन्त्रिका**, स्त्री, (तन्त्री एव । तन्त्री + स्वार्थे कन् ।
पूर्ब्बह्रस्वश्च ।) गुडूची । इत्यमरः । २ । ४ । ८२ ॥
(यथास्याः पर्य्यायाः ।
"गुडूचीमधुपर्णी स्यादमृतामृतवल्लरी ।
छिन्ना च्छिन्नरुहा च्छिन्नोद्भवा वत्सादनीति च ॥
जीवन्ती तन्त्रिका सोमा सोमवल्ली च कुण्डली ।
चक्रलक्षणिका वीरा विशल्या च रसायनी ॥
चन्द्रहासी वयस्था च मण्डली देवनिर्म्मिता ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**तन्त्रिपालकः**, पुं, जयद्रथराजः । इति शब्द-
माला ॥

"मधुरस्निग्धगुर्व्वम्लसेवनाच्चिन्तनाद्भयात् ।
शोकाद्व्याध्यनुषङ्गाच्च वायुनोदीरितः कफः ॥
यदासौ समवस्कन्द्य हृदयं हृदयाश्रयान् ।
समावृणोति ज्ञानादींस्तदा तन्द्रोपजायते ॥
हृदये व्याकुलीभावो वाक्चेष्टेन्द्रियगौरवम् ।
मनोबुद्ध्यप्रसादश्च तन्द्राया लक्षणं मतम् ॥
कफघ्नं तत्र कर्त्तव्यं शोधनं शमनानि च ।
व्यायामो रक्तमोक्षश्च भोज्यञ्च कटुतिक्तकम् ॥")

**तन्द्रालुः**, त्रि, (तत् द्रातीति । तत् + द्रा + "स्पृहि
गृहीति ।" ३ । २ । १५८ । इति आलुच् तत्-
शब्दस्य नान्तत्वं निपात्यते ।) निद्रालुः । इति जटा-
धरः ॥ (यथा, सुश्रुते उत्तरतन्त्रे ३९ अध्याये ।
"अपि जाग्रत् स्वपन् जन्तुस्तन्द्रालुश्च प्रलाप-
वान् ॥")

**तन्द्रिः**, स्त्री, (तदि सौत्रो धातुः + "वङ्क्र्या-
दयश्च ।" उणां । ४ । ६६ । इति क्रिन् ।)
निद्रा । आलस्यम् । इत्युणादिकोषः ॥ (यथा,
भागवते । ३ । २० । ४० ।
"सृष्ट्वा भूतपिशाचांश्च भगवानात्मतन्द्रिणा ।
दिग्वाससोमुक्तकेशान् वीक्ष्य चामीलयद्दृशौ ॥")

**तन्द्रिका**, स्त्री, (तन्द्रिरेव । स्वार्थे कन् टाप् च ।)
तन्द्रिः । इति शब्दरत्नावली ॥

**तन्द्री**, स्त्री, (तन्द्रि + "कृदिकारादिति ।" वा
ङीष् ।) अत्यन्तश्रमादिना सर्व्वाङ्गेन्द्रियाप्रभु-

चोत्पद्यन्ते ।" इति वेदान्तसारः । २७ ॥ तट्टीका
यथा । "नन्वव्याकृतात् पञ्चतन्मात्राणि क्रमेण
जायन्ते इति हि स्मृतीतिहासपुराणेषु प्रसिद्धि-
स्तत् कथमाकाशादेरिहोत्पत्तिराम्नायते इति
तत्राह एतान्येवेति । एतान्येवाकाशादीनि
सूक्ष्मभूतानि व्यवहाराक्षमाणि शब्दादिताव-
न्मात्रैकस्वभावानि अपञ्चीकृतानि परमसंसृ-
ष्टानि चेति स्मृत्यादिषूच्यन्ते महर्षिभिरित्यर्थः ॥"
इति विद्वन्मनोरञ्जिनी ॥ * ॥ अपि च ।
"भूतादिस्तु विकुर्व्वाणः सर्गं तन्मात्रिकं ततः ।
ससर्ज्ज शब्दतन्मात्रादाकाशं शब्दलक्षणम् ॥"
इति विष्णुपुराणे १२ अध्यायः ॥

**तन्यतुः**, पुं, (तनोति विस्तारयति तमः शब्दं वा ।
तनु विस्तारे + "ऋतन्यञ्जिवनीति ।" उणां । ४ ।
२ । इति यतुच् ।) रात्रिः । वाद्यम् । इत्यु-
णादिकोषः ॥ (वायुः । इत्युज्ज्वलदत्तः ॥ अशनिः ।
इति माघवः ॥ विद्युत् । इति दयानन्दः ॥ यथा,
ऋग्वेदे । १ । ५२ । ६ ।
"वृत्रस्य यत् प्रवणे दुर्गृभिश्वनो निजघन्थ हन्वो
रिन्द्रतन्यतुम् ॥")

**तन्वी**, स्त्री, (तनुः + "वोतो गुणवचनात् ।" ४ ।

| | | |
|---|---|---|
| | | १ । ४४ । इति ङीष् ।) कृशाङ्गी । यथा, -- “तव तन्वि ! कुचावेतौ नियतौ चक्रवर्त्तिनौ । आसमुद्रकरग्राही भवान् यत्र करप्रदः ॥” इति कालिदासः ॥ शालपर्णी । इति राजनिर्घण्टः ॥ (चतुर्व्विंशत्य-क्षरवृत्तिविशेषः । इति छन्दोमञ्जरी ॥ तस्या लक्षणादिकं छन्दःशब्दे द्रष्टव्यम् ॥)<br>**तप**, क दाहे । इति कविकल्पद्रुमः ॥ (चुरां-परं-सकं-सेट् ।) क, तापयति । अयमात्मनेपदीत्येके ॥ इति दुर्गादासः ॥ |

**तप**, ङ ञ दाहे । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-उभंच-सकं-सेट् ।) ङ, तपते । ञ,
तपति तपते । अयमात्मनेपदीत्यन्ये । इति दुर्गा-
दासः ॥

**तप**, औ दवैश्ययोः । इति कविकल्प-
द्रुमः ॥ (भ्वां-परं-सकं-अकंच-
अनिट् । दिवादिपक्षे आत्मं ।) दव उप-
तापः । "तपति तनुगात्रि !
मदनस्त्वाम् ।" औ,
अताप्सीत् । य ङ, तप्यते धनी ईश्वरः स्यादि-
त्यर्थः । औ, अतप्त । दिवादिपक्षे ऐश्वर्य्य एव
इत्यन्ये । इति दुर्गादासः ॥

**तप**, य ङ औ दवैश्ययोः । इति कविकल्प-
द्रुमः ॥ (भ्वां-परं-सकं-अकंच-
अनिट् । दिवादिपक्षे आत्मं ।) दव उप-
तापः । "तपति तनुगात्रि !
मदनस्त्वाम् ।" औ,
अताप्सीत् । य ङ, तप्यते धनी ईश्वरः स्यादि-
त्यर्थः । औ, अतप्त । दिवादिपक्षे ऐश्वर्य्य एव
इत्यन्ये । इति दुर्गादासः ॥

**तपः**, [स्] क्ली, (तपति तापयति वा । तप उप-
तापे + "सर्व्वधातुभ्योऽसुन् ।" उणां । ४ । १८८ ।
इति असुन् ।) वैधक्लेशजनकं कर्म्म । यथा, --
"उमेऽतिचपला पुत्त्रि ! न क्षमं तावकं वपुः ।
जनलोकादूर्द्ध्वलोकः । यथा, --
"अस्योपरि तपोलोकस्तेजोमय उदाहृतः ।
वैराजा यत्र ते देवा वसेयुर्द्देवपूजिताः ॥
वासुदेवे मनो येषां वासुदेवेऽर्पितक्रियाः ।
तपसा तोष्य गोविन्दमभिलाषविवर्ज्जिताः ॥
तं तपोलोकमासाद्य वसन्ति विजितेन्द्रियाः ।
शिलोञ्छवृत्तयो ये वै दन्तोलूखलिकाश्च ये ॥
येऽश्मकुट्टाश्च मुनयः शीर्णपर्णाशिनश्च ये ।
ग्रीष्मे पञ्चाग्नितपसो वर्षासु स्थण्डिलेशयाः ॥
हेमन्ते शिशिरे वा ये क्षिपन्ति सलिले क्षपाः ।
कुशाग्रनीरबिन्दूंश्च तृषिता यतयोऽपिबन् ॥
वाताशिनोऽतिक्षुधिताः पादाङ्गुष्ठाग्रभूस्पृशः ।
ऊद्ध्वहस्ता रविदृशस्त्वेकाङ्घ्रिस्थाननिश्चलाः ॥
ये वै दिवानिरुच्छ्वासा मासोच्छ्वासाश्च ये परे ।
मासोपवासं कुर्व्वन्ति चातुर्म्मास्यव्रताश्च ये ॥
ऋत्वन्ते तोयपाना ये ये षण्मासोपवासकाः ।
ये च वर्षानिमेषा वै वर्षधाराम्बुतर्षकाः ॥
स्थाणुसाम्योपसंप्राप्ता मृगकण्डूतिसौख्यदाः ।
जटाटवीकोटरान्तः कृतनीडाण्डजाश्च ये ॥
प्ररूढवल्मिकाङ्गाश्च स्नायुनद्धास्थिसञ्चयाः ।
लताप्रतानैः परितो वेष्टितावयवाश्च ये ॥
शस्यानि च प्ररूढानि यदङ्गेषु महीपते ! ।
इत्येतैर्न्नियमैर्य्ये तु क्लिष्टात्मानस्तपोधनाः ॥
ब्रह्मायुषस्तपोलोके ते वसन्त्यकुतोभयाः ॥"
इति पद्मपुराणम् ॥ * ॥
चान्द्रायणादिव्रतम् । धर्म्मः । इति मेदिनी । से, २४ ॥

**तपः**, पुं, (तपति तापयति वा । तप सन्तापे +
पचाद्यच् ।) ग्रीष्मः । इत्यमरः । १ । ४ । १९ ॥
(यथा, माघे । १ । ६६ ।
"तपेन वर्षाः शरदा हिमागमो
वसन्तलक्ष्म्या शिशिरः समेत्य च ।
प्रसूनकॢप्तिं दधतः सदर्त्तवः
पुरेऽस्य वास्तव्यकुटुम्बितां ययुः ॥")

**तपःकरः**, पुं, (तपः करोतीति । कृ + टः ।)
अर्कवृक्षः । क्षुद्राग्निमन्थवृक्षः । सूर्य्यकान्त-
मणिः । इति राजनिर्घण्टः ॥ (यथा, आर्य्या-
सप्तशत्याम् । २६ ।
"अनयनपथे प्रिये ! न व्यथा यथा दृश्य एव
दुष्प्रापे ।
म्लानैवकेवलं निशि तपनशिला वासरे ज्वलति ॥"
अग्निविशेषः । यथा, हरिवंशे । १७८ । ३१ ।
"ते जातवेदसः सर्व्वे कल्मासः कुसुमस्तथा ।
दहनः शोषणश्चैव तपनश्च महाबलः ॥"
स्त्रीणां सत्त्वजे अलङ्कारविशेषे, क्ली । तल्लक्षणं
यथा साहित्यदर्पणे । ३ । ११६ ।
"तपनं प्रियविच्छेदे स्मरावेशोत्थचेष्टितम् ॥"
उदाहरणं यथा, तत्रैव, --
"श्वासान्मुञ्चति भूतले विलुठति त्वन्मार्गमालोकते
दीर्घं रोदिति विक्षिपत्यत इतः क्षामां भुजा-
वल्लरीम् ।
किञ्च प्राणसमानकाङ्क्षितवती स्वप्नेऽपि ते सङ्गमं
निद्रां वाञ्छति न प्रयच्छति पुनर्द्दग्धो विधि-
स्तामपि ॥")

**तपनच्छदः**, पुं, (तपनः अतिरूक्षश्छदो यस्य ।)
आदित्यपत्रवृक्षः । इति राजनिर्घण्टः ॥

**तपनतनया**, स्त्री, (तपनस्तापको वह्निस्तनयो
यस्याः । वह्निगर्भत्वादस्यास्तथात्वम् ।) शमी-
वृक्षः । (तपनस्य सूर्य्यस्य तनया ।) यमुना ।
इति राजनिर्घण्टः ॥

सोढुं क्लशस्वभावस्य तपसः
सौम्यदर्शने ॥”
इति तिथ्यादितत्त्वे मत्स्यपुराणवचनम्
॥ * ॥
तत्फलं यथा, --
“तपोभिः प्राप्यतेऽभीष्टं नासाध्यं हि
तपस्यतः ।
दुर्भगत्वं वृथा लोको वहते सति साधने
॥”
इति च तत्रैव तद्वचनम् ॥ * ॥
अपि च । मरीचिरुवाच ।
“ब्राह्मणस्य तपोमूलं यज्ञः स्वाध्याय
एव च ।
तस्मादग्ने ! फलं ब्रूहि
तपसोऽध्ययनस्य च ॥
वह्निरुवाच ।
स्वाध्यायतपसोर्व्वक्ष्ये तन्मे निगदितं
शृणु ।
तपसो हि परं नास्ति तपसा विन्दते
महत् ॥
तपसा क्षीयते पापं मोदते सह दैवतैः ।
तपसा प्राप्यते स्वर्गस्तपसा प्राप्यते
यशः ॥
तपसा सर्व्वमाप्नोति तपसा विन्दते
परम् ।
ज्ञानविज्ञानसम्पन्नः सौभाग्यं रूपमेव
च ॥
तपसा लभते सर्व्वं तथैवाध्ययनेन च
।
तस्मात् स्वधर्म्मसंयुक्तो नित्यं
सिध्यति पण्डितः ॥
धर्म्मात् सुखमवाप्नोति इह लोके परत्र
च ॥”
इत्याद्ये वह्निपुराणे
नित्याह्निकस्नानविधि-
नामाध्यायः ॥ तपस्या । तत्त्रिविधम्
। शारीरं
वाचिकं मानसञ्च । यथा, --
“देवद्विजगुरुप्राज्ञपूजनं शौचमार्ज्जवम्
।

तपस्वी मत्स्यः । इति शब्दरत्नावली ॥
तपस्या-
कारके, त्रि ॥

**तपःक्लेशसहः**, त्रि, (तपसः क्लेशं सहते इति ।
सह + अच् ।) दान्तः । इत्यमरः । २ । ७ ।
४३ ॥

**तपःस्थली**, स्त्री, (तपसः स्थली ।) काशी । इति
त्रिकाण्डशेषः ॥

**तपती**, छाया नाम सूर्य्यपत्नी । इति त्रिकाण्ड-
शेषः ॥ सूर्य्यकन्या । सा पूरुवंशीयऋक्षराज-
पुत्त्रसम्बरणभार्य्या । इति श्रीभागवतम् ॥
(यथा,
महाभारते । १ । ९४ । ४७ ।
“ततः सम्बरणात् सौरी सुषुवे तपती कुरुम् ॥”
अस्या विशेषविवरणादिकं तत्रैव १७२
अध्याये
द्रष्टव्यम् ॥)

**तपनः**, पुं, (तपतीति । तप + कर्त्तरि ल्युः ।)
सूर्य्यः । (यथा, महाभारते । ३ । ३ । ६२ ।
“सहस्ररश्मिरादित्यस्तपनस्त्वंगवां पतिः ॥”)
भल्लातकवृक्षः । अग्न्यादिदाहात्मकनरकः ॥
ग्रीष्मः । इति हेमचन्द्रः ॥ तापः । इति धरणिः
॥

**तपनमणिः**, पुं, (तपनः सूर्य्यस्तत्प्रियो मणिः ।)
सूर्य्यकान्तमणिः । इति राजनिर्घण्टः ॥

**तपनात्मजा**, स्त्री, (तपनस्य सूर्य्यस्य आत्मजा
कन्या ।) गोदावरी नदी । इति हेमचन्द्रः ॥
यमुना च ॥

**तपनी**, स्त्री, (तपनः सूर्य्यो जनकतयास्त्यस्या इति
अच् । ततो गौरादित्वात् ङीष् ।) गोदावरी
।
इति हेमचन्द्रः ॥

**तपनीयं**, क्ली, (तप + अनीयर् । वह्नौ शोधनीय-
परीक्षणीयत्वादस्य तथात्वम् ।) स्वर्णम् ।
इत्य-
मरः । २ । ९ । ९४ ॥ (यथा, रघुः । १८
। ४१ ।
“तस्मादधः किञ्चिदिवावतीर्णा-
वसंस्पृशन्तौ तपनीयपीठम् ॥”)

**तपनीयकं**, क्ली, (तपनीय + स्वार्थे कन् ।) सुव-
र्णम् । इति राजनिर्घण्टः ॥

**तपनेष्टं**, क्ली, (तपनस्यं सूर्य्यस्य इष्टम् । सूर्य्यप्रिय-
त्वादस्य तथात्वम् ।) ताम्रम् । इति राज-
निर्घण्टः ॥

**तपसः**, पुं, (तपतीति । तप + “अत्यविचमि-
तमीति ।” उणां । ३ । ११७ । इति असच्
।)
चन्द्रः । इति त्रिकाण्डशेषः ॥ पक्षी । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

**तपस्तक्षः**, पुं, (तपस्तपस्यां तक्षति तनूकरोतीति ।
तक्ष तनूकरणे + अण् । स्वर्व्वेश्यादिप्रेरणेन
तपस्विनां तपोविघ्नकरणादस्य तथात्वम्
।)
इन्द्रः । इति हेमचन्द्रः । २ । ८७ ॥

| | | |
|---|---|---|
| ब्रह्मचर्य्यमहिंसा च शारीरं तप उच्यते ॥ १ ॥<br>अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत् ।<br>स्वाध्यायाभ्यसनञ्चैव वाङ्मयं तप उच्यते ॥ २ ॥<br>मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।<br>भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥” ३ ॥<br>तदपि त्रिविधम् । सात्त्विकं राजसं तामसञ्च<br>यथा, --<br>“श्रद्धया परया तप्तं तपस्तत् त्रिविधं नरैः ।<br>अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १ ॥<br>सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।<br>क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ २ ॥<br>मूढग्राहेणात्मनो यत् पीडया क्रियते तपः ।<br>परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥” ३ ॥<br>इति श्रीभगवद्गीतायाम् । १७ । १४ -- १९ ॥ * ॥ | | |

**तपस्यं**, क्ली, (तपसि ग्रीष्मे भवम् । तपस् + यत् ।)

कुन्दपुष्पम् । इति शब्दचन्द्रिका ॥ (तपश्चर-
तीति । तपस् + कृतौ क्यङ् । ततो भावे घञ् ।
तपश्चरणम् । यथा, महाभारते । १३ । १० ।
१३ ।
"अथास्य बुद्धिरभवत् तपस्ये भरतर्षभ ! ॥")

**तपस्यः**, पुं, (तपसि ग्रीष्मे साधुः । तपस् + "तत्र

साधुः ।" ४ । ४ । ९८ । इति यत् ।) फाल्-
गुनमासः । इत्यमरः । १ । ४ । १५ । (यथा,
सुश्रुते सूत्रस्थाने ६ अध्याये । "तत्र माघादयो
द्वादशमासाः द्विमासिकमृतुं कृत्वा षड्ऋतवो
भवन्ति । ते शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ताः
।
तेषां तपस्तपस्यौ शिशिरः ॥") अर्ज्जुनः ।
इति
हेमचन्द्रः ॥ (तामसस्य मनोः पुत्त्रविशेषः ।
यथा, हरिवंशे । ७ । २४ ।
"द्युतिस्तपस्यः सुतपास्तपोमूलस्तपोशनः।
तपोरतिरकल्माषस्तन्वीधन्वी परन्तपः ।
तामसस्य मनोरेते दश पुत्त्रा महाबलाः ॥")

**तपस्या**, स्त्री, (तपश्चरतीति । "कर्म्मणो रोमन्थ-

तपोभ्यां वर्त्तिचरोः ।" ३ । १ । १५ । इति
क्यङ् । ततः "अ प्रत्ययात् ।" ३ । ३ । १०२
।
इति अ ततष्टाप् ।) तपः । तत्पर्य्यायः ।
व्रतादानम् २ परिव्रज्या ३ नियमस्थितिः ४ ।
इति हेमचन्द्रः ॥ व्रतचर्य्या ५ । इति मेदिनी ॥

**तपस्विनी**, स्त्री, जटामांसी । इत्यमरः । २ । ४ ।

१३४ ॥
(तपस्वितुल्यजटायुक्तत्वादस्यास्तथात्वम्।
यथा, वैद्यकरत्नमालायाम्।
"नलदं नन्दिनी पेषी मांसी कृष्णजटा जटी ।
किरातिनी च जटिला लोमशा तु तपस्विनी
॥")
कटुरोहिणी । इति हेमचन्द्रः ॥ महाश्राव-
णिका । इति भावप्रकाशः ॥ (तपोऽस्या

**तपस्विपत्रः**, पुं, (तपस्विप्रियं पत्रमस्य ।) दम-

नकवृक्षः । इति राजनिर्घण्टः ॥

**तपस्वी**, [न्] त्रि, (तपोऽस्यास्तीति । तपस् +

"तपःसहस्राभ्यां विनीनी ।" ५ । २
। १०२ ।
इति विनिः ।) तपोयुक्तः ।
तत्पर्य्यायः ।
तापसः २ पारिकाङ्क्षी ३ । इत्यमरः ।
२ । ७ । ४२ ॥
पारकाङ्क्षी ४ पारिकाङ्क्षकः ५ । इति
शब्द-
रत्नावली ॥ तपोधनः ६ । (यथा,
मनुः । ४ ।
१६२ ।
"न हिंस्याद्ब्राह्मणान् गाश्च
सर्व्वांश्चैव तपस्विनः ॥")
आनुकम्प्यः । इति मेदिनी । ने,
१८५ ॥

**तपस्वी**, [न्] पुं, (तपस् + अस्त्यर्थे विनिः ।)

नारदः । इति शब्दरत्नावली ॥
मत्स्यविशेषः ।
तपास्या माछ इति भाषा ।
तत्पर्य्यायः । तपः-
करः २ चेष्टकः ३ चेष्टः ४ । इति
शब्द-
चन्द्रिका ॥ (चाक्षुषस्य मनोः
पुत्त्रविशेषः । यथा,
हरिवंशे । २ । १८ ।
"ऊरुः पुरुः शतद्युम्नस्तपस्वी
सत्यवान् कविः ॥")
घृतकरञ्जवृक्षः । इति राजनिर्घण्टः ॥

**तपाः**, [स्] पुं, (तपत्यस्मिन्निति । तप + असुन् ।)

ग्रीष्मः । इत्यमरटीकायां नयनानन्दः
॥
माघमासः । शिशिरकालः । इति
मेदिनी ।

"षण्मासान् वायुभक्षा च स्थाणुभूता
तपोधना ॥")

**तपोवटः**, पुं, ब्रह्मावर्त्तदेशः । इति त्रिकाण्डशेषः ॥

**तप्तः**, त्रि, (तप्यते स्मेति । तपौ सन्तापे + क्तः ।)

तापयुक्तः । तत्पर्य्यायः । सन्तापितः २
दूनः
३ धूपायितः ४ धूपितः ५ । इति हेमचन्द्रः
॥
(यथा, हठयोगप्रदीपिकायाम्। १ । १० ।
"अशेषतापतप्तानां समाश्रयमठो हठः ॥")

**तप्तकुम्भः**, पुं, (तप्तः सन्तापितः कुम्भो यत्र ।)

नरकविशेषः ॥ (यथा, मार्कण्डेये । १२ ।
३४-३९ ।
"अतःपरं भीमतरं तप्तकुम्भं निबोध मे ।
समन्ततस्तप्तकुम्भा वह्निज्वालासमावृताः
॥
ज्वलदग्निचयोद्वृत्ततैलायश्चूर्णपूरिताः ।
तेषु दुष्कृतकर्म्माणो याम्यैः क्षिप्ता
ह्यधोमुखाः ॥
क्वाथ्यन्ते
विस्फुटद्गात्रगलन्मज्जजलाविलाः।
स्फुटत्कपालनेत्रास्थिछिद्यमाना विभीषणैः
॥
गृध्रैरुत्पाट्य मुच्यन्ते पुनस्तेष्वेव वेगितैः ।
पुनः सिमसिमायन्ते तैलेनैक्यं व्रजन्ति च ॥
द्रवीभूतैः शिरागात्रस्नायुमांसत्वगस्थिभिः ।
ततो याम्यैर्नरैराशु दर्व्व्याघट्टनघट्टिताः ॥
कृतावर्त्ते महातैले मथ्यन्ते पापकर्म्मिणः ।
एष ते विस्तरेणोक्तस्तप्तकुम्भो मया पितः !
॥")

**तप्तकृच्छ्रः**, पुं क्ली, (तप्तेन जलदुग्धादिना आच-

रितं कृच्छ्रं कष्टं यत्र । यद्वा, तप्तेनाचरितं
कृच्छ्रम् ।) व्रतविशेषः । यथा,
"पयोघृतमुदकं
वायुतप्तं प्रतित्र्यहं पिबेत् स तप्तकृच्छ्रः ।"
इति गौतमः ॥ (द्वादशाहसाध्यव्रतमेतत् ।
यथा,

अस्तीति । तपस् + "तपःसहस्राभ्यां विनीनी ।"
५ । २ । १०२ । इति विनिः । ततः स्त्रियां ङीप् ।) तपोयुक्ता स्त्री ॥ (यथा, रामायणे । ३ । २ । ७ ।
"पत्नीं स च महावृद्धां सिद्धां शुद्धां तपस्विनीम् ।
अनसूयां महाभागां सर्व्वभूतहिते रताम् ॥"
दीना । दुःखिता । यथा, भागवते । १ । ९ । ४४ ।
"ततो युधिष्ठिरो गत्वा सहकृष्णो गजाह्वयम् ।
पितरं सान्त्वयामास गान्धारीञ्च तपस्विनीम् ॥"
पतिव्रता । यथा, नैषधे । १ । १३५ ।
"मदेकपुत्त्रा जननी जरातुरा
नवप्रसूतिर्व्वरटा तपस्विनी ।
गतिस्तयोरेष जनस्तमर्द्दय-
न्नहो विधे ! त्वां करुणा रुणद्धि न ॥"
"वरटा हंसी मम स्त्री नवा नूतना प्रसूतिः प्रसवो यस्यास्तादृशी सापि स्वतो जीवितुमस-
मर्था तर्हि पत्यन्तरेण तस्या जीविका भवे-
दित्यपि निषेधयति यतस्तपस्विनी पतिव्रता मम
मरणानन्तरं पत्यन्तराश्रयणाभावात्तस्या जीवनं शिशूनां पोषणञ्च दुर्घटमेव भवेदिति भावः ॥" इति तट्टीका ॥)

से, २४ ॥ (यथा, सुश्रुते सूत्रस्थाने ६ अध्याये ।
"तेषां तपस्तपस्यौ शिशिरः ॥")

**तपात्ययः**, पुं, (तपस्य ग्रीष्मस्य अत्ययो यत्र ।)
वर्षाकालः । इति हेमचन्द्रः । २ । ७१ ॥ (यथा,
कुमारे । ५ । २३ ।
"तपात्यये वारिभिरुक्षिता नवै-
र्भुवा सहोष्माणममुञ्चदूर्ध्वगम् ॥")

**तपितं**, त्रि, (तप्यते स्मेति । तप दाहे + क्तः ।)
तप्तम् । इति द्विरूपकोषः ॥ (यथा, हरि-
वंशे । २३४ । २९ ।
"तपितकनकविन्दुपिङ्गलाक्षो
दितितनयोऽसुरसैन्ययुद्धनेता ॥")

**तपुः**, [स्] पुं, (तपति तापयतीति वा । तप +
"अर्त्तिपृवपीति ।" उणां । २ । ११८ । इति
उसिः ।) अग्निः । सूर्य्यः ।
इत्युणादिकोषः ॥
(शत्रुः । इत्युज्ज्वलदत्तः ॥ तापयुक्ते तापने च,
त्रि । यथा, ऋग्वेदे । १ । ३६ । १६ ।
"तपुर्जम्भ यो अश्मध्रुक् ॥")

**तपोधनः**, पुं, (तप एव धनं यस्य ।) तपस्वी ।
इति मेदिनी ॥ (यथा, मनुः । ११ । २४२ ।
"यत्किञ्चिदेनः कुर्व्वन्ति
मनोवाङ्मूर्त्तिभिर्ज्जनाः ।
तत् सर्व्वं निर्द्दहन्त्याशु तपसैव
तपोधनाः ॥")
दमनकवृक्षः । इति राजनिर्घण्टः ॥ (यथास्य
पर्य्यायाः ।
"उक्तो दमनको दान्तो
मुनिपुत्त्रस्तपोधनः ।

मनुः । ११ । २१५ ।
"तप्तकृच्छ्रं चरन् विप्रो जलक्षीरघृतानिलान् ।
प्रतित्र्यहं पिबेदुष्णान् सकृत्स्नायी समाहितः ॥"
"तप्तकृच्छ्रं चरन् द्विजातिः त्र्यहमुष्णोदकं
त्र्यहमुष्णगोक्षीरं त्र्यहमुष्णघृतं
त्र्यहमुष्णवायुं
एकवारं स्नानं कुर्व्वन् संयतवान् पिबेत् ।
अत्र
पराशरोक्तविशेषः ।
षट्पलन्तु पिबेदम्भस्त्रिपलन्तु पयः पिबेत् ।
पलमेकं पिबेत् सर्पिस्तप्तकृच्छ्रं विधीयते ॥"
इति तट्टीकायां कुल्लूकभट्टः ॥)

**तप्तपाषाणकुण्डं**, क्ली, (तप्तानां पाषाणानां कुण्डमिव ।)
नरकविशेषः । इति ब्रह्मवैवर्त्ते
प्रकृतिखण्डम् ॥

**तप्तबालुकः**, पुं, (तप्ता बालुका यत्र ।) नरक-
विशेषः । इति पुराणम् ॥
(उत्तप्तबालुकामये,
त्रि । यथा, भागवते । ३ । ३० । २२ ।
"क्षुत्तृड्परितोऽर्कदवानलानिलैः
संतप्यमानः पथि तप्तबालुके ॥)

**तप्तमाषकं**, क्ली, (तप्तं माषमितं सुवर्णादिकं
यत्र कप् ।) परीक्षाविशेषः । तद्विधिर्यथा ।
पितामहः ।
"कारयेदायसं पात्रं ताम्रं वा षोडशाङ्गुलम् ।
चतुरङ्गुलखातन्तु मृण्मयं वाथ मण्डलम् ॥
मण्डलं सूर्य्यमण्डलाकारं वर्त्तुलमिति
यावत् ।
पूरयेद्घृततैलाभ्यां विंशत्या तु पलैस्तु तत् ।
सुवर्णमाषकं तस्मिन् सुतप्ते निःक्षिपेत्ततः ॥

| | | |
|---|---|---|
| | गन्धोत्कटो ब्रह्मजटो विनीतः<br>कुलपत्रकः ॥”<br>इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे<br>भागे ॥)<br>**तपोधना**, स्त्री, (तपो ग्रीष्मकाल एव धनमिव<br>यस्याः ।) मुण्डीरी । इति मेदिनी ॥<br>(तपो-<br>धने, त्रि । यथा, महाभारते । ५ ।<br>१८८ । २० । | |

अङ्गुष्ठाङ्गुलियोगेन उद्धरेत्तप्तमाषकम् ।
कराग्रं यो न धुनुयात् विस्फोटो वा न जायते ।
शुद्धो भवति धर्म्मेण पितामहवचो यथा ॥
कल्पान्तरमाह ।
सौवर्णे राजते ताम्रे आयसे मृण्मयेऽपि वा ।
गव्यं घृतमुपादाय तदग्नौ तापयेच्छुचिः ॥
सौवर्णीं राजतीं ताम्रीमायसीञ्च सुशोधिताम् ।
सलिलेन सकृद्धौतां प्रक्षिपेत्तत्र मुद्रिकाम् ॥
भ्रमद्वीचितरङ्गाढ्ये न नस्वस्पर्शगोचरे ।
परीक्षेतार्द्रपर्णेन चुचुकारं सघोषकम् ॥
ततश्चानेन मन्त्रेण सकृत्तदभिमन्त्रयेत् ।
परं पवित्रममृतं घृत ! त्वं यज्ञकर्म्मसु ॥
दह पावक ! पापं त्वं हिमशीतः शुचौ भव ।
उपोषितं ततः स्नातमार्द्रवाससमागतम् ॥
ग्राहयेन्मुद्रिकां तान्तु घृतमध्यगतान्तथा ।
प्रदेशिनीञ्च तस्याथ परीक्षेयुः परीक्षकाः ॥
यस्य विस्फोटका न स्युः
शुद्धोऽसावन्यथाशुचिः ॥
प्रयोगस्तु । मध्यविधाष्टयवतण्डुलमध्यमिता-
ङ्गुलिषोडशाङ्गुलमितप्रस्तारे तथाविधाङ्गुलि-
चतुष्टयखाते ताम्रादिघटितेऽशक्तौ मृण्मये वा
चक्राकारे वर्त्तुले पात्रे लौकिकाष्टरत्तिकाधिक-
माषद्वयाधिकत्रयस्त्रिंशत्तोलकरूप ३३ । २ ।
८ ।
वैदिकपलदशकमितं घृतं एवं तैलञ्च
निक्षिप्य लौकिकचतुरत्तिकाधिकपञ्चमाषक-
षट्षष्टितोलकरूप ६६ । ५ । ४ ।
वैदिकविंशति-
पलपरिमितं केवलं गव्यं घृतं वा निक्षिप्य
तस्मिन् सुतप्ते सकृद्धौतां पञ्चरत्तिकामितां
काञ्चनमुद्रिकां रजतादिकां वा निक्षिपेत् ।
धर्म्मावाहनादिहवनान्तं तुलोक्तं सदक्षिणं
कर्म्म कृत्वा, --
ओम् परं पवित्रममृतं ! घृत त्वं यज्ञकर्म्मसु ।
दह पावक ! पापं त्वं हिमशीतः शुचौ भव ॥
इत्यनेनाभिमन्त्रयेत् प्राड्विवाकः । ततः
कृतोप-
वासः स्नातार्द्रवासाः शोध्यशिरसि प्रतिज्ञापत्रं
निधाय, --

अग्निनैव च सन्तप्तं चक्रमादाय वैष्णवः ।
धारयेत् सर्व्ववर्णानां
हरिसालोक्यसिद्धये ॥”
ब्रह्माण्डे ।
कृत्वा धातुमयीं मुद्रां तापयित्वा स्वकां
तनूम् ।
चक्रादिचिह्नितां भूप ! धारयेद्वैष्णवो नरः
॥
नारदीयपञ्चरात्रे ।
द्वादशारन्तु षट्कोणं बलयत्रयसंयुतम् ।
हरेः सुदर्शनं तप्तं धारयेत्तद्विचक्षणः ॥
सौपर्णे च श्रीभगवद्गरुडसम्बादे
तप्तमुद्राप्रकरणे ।
गरुत्मन्नविशेषेण सर्व्ववर्णेष्वयं विधिः ।
विप्रो वा क्षत्त्रियो वापि वैश्यः
शूद्रस्तथैव च ॥
पाद्मे ।
अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं
यथा ।
ब्राह्मणस्य तथैवेदं तप्तचक्रादिधारणम् ॥
किञ्च । तत्रैवोत्तरखण्डे
श्रीशिवोमासम्बादे ।
शङ्खचक्राङ्कनं कुर्य्याद्ब्राह्मणो
बाहुमूलयोः ।
हुताग्निनैव सन्तप्य सर्व्वपापापनुत्तये ॥
चक्रं वा शङ्खचक्रे वा तथा पञ्चायुधानि
वा ।
धारयित्वैव विधिवद्ब्रह्मकर्म्म समारभेत्
॥ * ॥
किञ्च । तत्प्रसङ्ग एव ।
अधृत्वा विधिना चक्रं ब्राह्मणः प्राकृतो
भवेत् ॥
किञ्च ।
न तस्य किञ्चिदश्नीयादपि
कृत्यसहस्रिणः ।
सर्व्ववेदविदो वापि सर्व्वशास्त्रविशारदः
॥
अधृत्वा विधिना चक्रं ब्राह्मणः पतितो
भवेत् ॥

अथर्व्वपरिशिष्टे तप्तचक्रादिप्रकरणे ।
देवासो यत्र वितनेन बाहुना
सुदर्शनेन प्रयताः स्वर्गमायन् ।
येनाङ्किता मनवो लोकसृष्टिं
वितन्वते ब्राह्मणास्तद्वहन्तीति ॥ * ॥
किञ्च । पाद्मे श्रीशिवेन तप्तमुद्राप्रसङ्गे ।
विष्णुचक्राङ्कितं विप्रं पूजयेत्
सर्व्वकर्म्मणि ।
विष्णुचक्रविहीनन्तु प्रयत्नेन विवर्ज्जयेत्
॥
नारदीये तप्तमुद्राप्रसङ्गे ।
श्रीकृष्णचक्राङ्कविहीनगात्रः
श्मशानतुल्यः पुरुषोऽथ नारी ।
दृष्ट्वा नरस्तं नृपते ! सवासाः
स्नात्वा समर्च्चेद्धरिमङ्ग सद्य इति ॥ * ॥
बह्व्यश्च वेङ्कटाचार्य्यपादप्रभृतिभिर्ब्बुधैः
।
श्रुतयः स्मृतयोऽप्यत्र विख्याता
लिखिताः पराः ॥
अतएव तदनादरे दोषाः । पाद्मे ।
तप्तचक्राङ्कितं दृष्ट्वा ये निन्दति नराधमाः
।
अवलोक्य मुखं तेषामादित्यमवलोकयेत्
॥
अग्निपुराणे च ।
दशरथहतपुत्त्रविप्रविलापे ।
शिलाबुद्धिः कृता किंवा प्रतिमायां
हरेर्म्मया ।
किं मया पथि दृष्टस्य विष्णुभक्तस्य
कर्हिचित् ॥
तन्मद्राङ्कितदेहस्य चेतसा नादरः कृतः ।
येन कर्म्मविपाकेन पुत्त्रशोको ममेदृशः ॥
* ॥
अथ तप्तमुद्राधारणमाहात्म्यं सौपर्णे ।
अशुचिर्व्वाप्यनाचारः सर्व्वधर्म्मबहिष्कृतः
।
प्रतप्तशङ्खचक्राभ्यामङ्कितः पङ्क्तिपावनः
॥
वाराहे तप्तमुद्राधारणप्रसङ्गे ।

ओम् त्वमग्ने ! सर्व्वभूतानामन्तश्चरसि
पावक ! ।
साक्षिवत् पुण्यपापेभ्यो ब्रूहि सत्यं करे मम ॥
इत्यनेनाभिमन्त्र्य आर्द्रपत्रनिक्षेपकृतचुचुक-
शब्दात् घृतात् मुद्रिकां तर्ज्जन्यङ्गुष्ठाभ्यां
उत्तो-
लयेत् । घृततैलाभ्यां वा तप्तमाषकमुत्तोलयेत्
।
अदग्धश्चेत्तदा शुद्ध इति । ततो दक्षिणां दद्यात्
॥”
इति दिव्यतत्त्वम् ॥

**तप्तमुद्रा**, स्त्री, (तप्ता अग्निसन्तप्ता मुद्रा ।) शरीर-
धार्य्याग्नितप्तधातुमयभगवदायुधचिह्नम् । यथा,
“आषाढशुक्लद्वादश्यां हरौ शिशयिषौ सति ।
वैष्णवः पारणं कृत्वा तप्तमुद्राश्च धारयेत् ॥
ब्राह्मणः क्षत्त्रियो वैश्यः शूद्रश्चैकान्तितर्द्धये ।
कुर्व्वन्नात्मार्पणं तप्तमुद्राभिर्द्देहमङ्कयेत् ॥ * ॥
तप्तमुद्राधारणं वाराहे तप्तमुद्राप्रसङ्गे ।
चक्रादिधारणं पुंसां परं सम्बन्धवेदनम् ।
पातिव्रत्यनिमित्तं हि बलयादिविभूषणमिति ॥
*
अथ तप्तमुद्राधारणनित्यता । वायुपुराणे ।
किञ्च ।
तप्तेनैवाङ्कनं कुर्य्यात् ब्राह्मणस्य
विधानतः ।
श्रौतस्मार्त्तादिसिद्ध्यर्थं मन्त्रसिद्ध्यै
तथैवच ॥
हरेः पूजाधिकारार्थं चक्रं धार्य्यं
विधानतः ।
वैष्णवत्वस्य सिद्ध्यर्थं भक्तिसिद्ध्यै
विशेषतः ॥
किञ्च ।
उपवीतादिवद्धार्य्याः शङ्खचक्रादयस्तथा
।
ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः
॥ * ॥
श्रुतयश्च । यो ह वै
सुश्लोकमौलेर्धर्म्मानिनुतिष्ठ-
मानोऽग्निनाचक्रं धत्ते । अग्निर्व्वै सहस्रारः
सह-
स्रारो नेमिर्न्नेमिना तप्ततनुः सायुज्यं
सलोक-
तामाप्नोतीति ॥
चक्रं विभर्त्ति वपुषाभितप्तं
बलं देवानाममृतस्य विष्णोः ।
स एति नाकं दुरितं विधूय
विशन्ति यद्यतयो वीतरागा इति ॥”
ऋक्परिशिष्टे । अतप्ततनुर्न्नतदामो
अश्नुतेऽश्नुता
सह इद्वहन्तस्तत्समासतेति यजुः ॥
ऋग्वेदीया-
श्वलायनशाखायाञ्च ।
प्रतद्विष्णोरब्जचक्रे सुतप्ते
जन्माम्भोधिं वर्त्तते चर्षणीन्द्राः ।
मूले बाह्वोर्द्दधतेऽन्ये पुराणा
लिङ्गान्यन्ये तप्तायुधान्यर्पयन्ते इति ॥
छन्दोगपरिशिष्टे । सहोवाच
यज्ञवल्क्यस्तत्-
पुमानात्महिताय प्रेम्णा हरिम्भजेत् ।
सुश्लो-
कमौलेर्धर्म्माण्यङ्गेष्वग्निनाधत्ते इति
शतपथी
श्रुतिः ॥
म्लेच्छदेशे शुभे वापि चक्राङ्को यत्र
तिष्ठति ।
योजनानि तथा त्रीणि मम क्षेत्रं वसुन्धरे !
॥
ब्रह्माण्डे ।
आयुधैर्व्वैष्णवैः सर्व्वैस्तापितैः स्वतनुं
यदि ।
चिह्नयेद्वैष्णवो यस्तु स याति परमां गतिम्
॥
पाद्मे च तत्रैव ।
अग्नितप्तं पवित्रञ्च धृत्वा तु बाहुमूलयोः ।
त्यक्त्वा यमपुरं घोरं यान्ति विष्णोः परं
पदम् ॥
हुताग्नितप्तचक्रेण शरीरं यस्य चिह्नितम् ।
तेन तीर्थानि यज्ञाश्च लभ्यन्ते नात्र
संशयः ॥
अग्नितप्तेन चक्रेण ब्राह्मणो बाहुमूलयोः ।
अङ्कयित्वा जपन्मन्त्रं
संसारान्मोक्षभाग्भवेत् ॥
अग्नितप्तेन चक्रेण बाहुमूलेषु लाञ्छिताः ।
ते सर्व्वे पापनिर्म्मुक्ता यान्ति विष्णोः परं
पदम् ॥
किञ्च ।
अप्राकृता महात्मानो विष्णुचक्रेण
लाञ्छिताः ।
विष्णुचिह्नविहीनास्तु प्राकृताः पतिताः
स्मृताः ॥
इति ॥
इत्थं निषेधवचनं निर्मूलं सदनादृतम् ।
समूलं यच्च तत्
सम्यग्विध्यभावादितत्परम् ॥ * ॥
अथ तप्तमुद्राधारणविधिः ।
तप्तमुद्राधारणार्थमुपचारैस्तु पञ्चभिः ।
कृष्णमभ्यर्च्च्य संपूज्य चक्रशङ्खौ तथा
नमेत् ॥
तत्र मन्त्रः ।
सुदर्शन ! नमस्तेऽस्तु पाञ्चजन्य
नमोऽस्तु ते इति ।

अग्निमभ्यर्च्च्य मूलेन हुत्वा चाज्याहुतीः कृती ।
चक्रशङ्खगदादीनि शस्त्राण्यग्नौ प्रतापयेत् ॥
तत्तम्मन्त्रैरथावाह्य तान्यभ्यर्च्च्य प्रणम्य च ।
गुरुं कृष्णञ्च संवन्द्य भक्त्या विज्ञापयेदिदम् ॥
उच्छिष्टभोजनाद्येव किङ्करः शरणागतः ।
तप्तचक्रगदादीनि तवाङ्कानीश ! धारये ॥ इति ॥
अथ चक्रादीनामावाहनादिमन्त्रः।
ओम् नमो भगवते सुदर्शनाय निर्णाशितसकल-
रिपुध्वजाय भगवन्नारायणकराम्भोरुहस्पर्श-
दुर्ललिताय ।
एह्येहि त्वं सहस्रार चक्रराज सुदर्शन ! ।
यज्ञभागं प्रगृह्णस्व पूजाञ्चैव नमो नमः ॥
ओम् नमो भगवते पाञ्चजन्याय विष्णुशङ्खाय
गम्भीरधीरध्वन्याकुलीकृतकौरववाहिनीनाथाय
त्रिरेखादक्षिणावर्त्ताय त्रिप्रशस्ताय ।
एह्येहि पाञ्चजन्य ! त्वं नारायणकरास्थत ! ।
यज्ञभागं प्रगृह्णस्व पूजाञ्चैव नमो नमः ॥
ओम् रं णं मं नं पाञ्चजन्याय नमः ॥ ओम्
भगवते खड्गाय नन्दकाय त्रैलोक्यपावित्र्याय
जयिने सकलसुरासुरसुन्दरीनेत्रोत्पलार्च्चिताय ॥
एह्येहि खड्गरत्न ! त्वं नन्दकाख्य सुरार्च्चित ! ।
यज्ञभागं प्रगृह्णस्व पूजाञ्चैव नमो नमः ॥
ओम् खड्गाय नमः ॥ ओम् नमो भगवत्यै
कौमोदक्यै गदायै दानवेन्द्रनिसूदनायै भगवद्-
भट्टारकवासुदेवलालितायै ।
एह्ये हि त्वं गदे ! देवि कौमोदक्यायुधेश्वरि ! ।
यज्ञभागं प्रगृह्णस्व पूजाञ्चैव नमो नमः ॥
ओम् रं खं चं कं सं गदायै नमः ॥ एवं पद्माय
नमः । सशराय शार्ङ्गाय नमः । इति ॥ * ॥
अथ धारणमन्त्रः ।
सुदर्शन ! महाध्वान सूर्य्यकोटिसमप्रभ ! ।
अज्ञानान्धस्य मे नित्यं विष्णोर्म्मार्गं प्रदर्शय ॥
तथा ।
पाञ्चजन्य ! निजध्वानध्वस्तपातकसञ्चय।
पाहि मां पापिनं घोरसंसारार्णवपातिनमिति ॥
इत्थमुच्चारयन् मन्त्रं दक्षिणादिक्रमेण तु ।
भुजयोश्चक्रपूर्ब्बाणि कृष्णशस्त्राणि धारयेत् ॥
कलत्रादिपरीवारान् निजान् सर्व्वांश्च वैष्णवः ।
भगवत्यर्पयन् तप्तमुद्राभिस्ताभिरङ्कयेत् ॥
सौवर्णं राजतं ताम्रं कांस्यमायसमेव वा ।
चक्रं कृत्वा तु मेधावी धारयेत विचक्षण
इति ॥
एवमेव प्रबोधन्यां द्वादश्यां भगवत्परैः ।
तप्तमुद्रा ध्रुवं धार्य्या द्वारकायां विशेषतः
॥
इति श्रीहरिभक्तिविलासे १५ विलासः
॥

**तप्तरूपकं**, क्ली, (तप्तं वह्निशोधितं रूपकं रूप्यम् ।)

शुद्धरौप्यम् । इति राजनिर्घण्टः ॥

**तप्तशूर्म्मिकुण्डं**, क्ली, (तप्ता अग्निमयी शूर्म्मिः लौहप्रतिमूर्त्तिर्यत्र । तथाविधं कुण्डं यस्मिन् ।)
नरकविशेषः । इति ब्रह्मवैवर्त्ते
प्रकृतिखण्डम् ॥

**तप्तसुराकुण्डं**, क्ली, (तप्तायाः सुरायाः कुण्डमिव ।)

नरकविशेषः । इति ब्रह्मवैवर्त्ते
प्रकृतिखण्डम् ॥

**तम**, उ इर् भ य खेदे । इच्छायाम् । इति कवि-
कल्पद्रुमः ॥ (दिवां-परं-अकं-सेट् ।) उ,
तमित्वा तान्त्वा । इर्, अतमत् अतमीत्
।
अस्मात् पुषादित्वात् नित्यं ङ इत्यन्ये ।
भ य,
ताम्यति लोकः उत्तप्तः स्यादित्यर्थः ।
इति
दुर्गादासः ॥

**तमं**, क्ली, (ताम्यत्यस्मादनेन वा । तम + अपा-
दाने करणे वा संज्ञायां घः ।) अन्धकारः
। इति
शब्दरत्नावली ॥ पादाग्रम् । इति शब्द-
चन्द्रिका ॥

**तमः**, पुं, (ताम्यत्यनेनेति । तम + संज्ञायां घः ।)
यदा सत्त्वे प्रवृद्धे तु प्रलयं याति
देहभृत् ।
तदोत्तमविदां लोकानमलान्
प्रतिपद्यते ॥
रजसि प्रलयं गत्वा कर्म्मसङ्गिषु
जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु
जायते ॥
कर्म्मणः सुकृतस्याहुः सात्त्विकं
निर्म्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः
फलम् ॥
सत्त्वात् सञ्जायते ज्ञानं रजसो लोभ
एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च
॥
ऊर्द्ध्वं गच्छन्ति सत्त्वस्था मध्ये
तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तस्था अधो गच्छन्ति
तामसाः ॥”
इति श्रीभगवद्गीतायाम् । १४ ।
८१८ ॥
तत्तु आवरकं मोहहेतुः ।
इत्यमरभरतौ ॥
अस्य कार्य्यं संहारः । इति
श्रीधरस्वामी ॥
तस्य धर्म्मो यथा । प्रमादः १ मोहः
२ भयम् ३
क्लान्तिः ४ विषादः ५ शोकः ६
अरतिः ७
अनार्य्यता ८ । इति मोक्षधर्म्मः ॥
श्रमः ९
तन्द्रा १० । इत्याश्वमेधिकपर्व्व ॥
अन्धकारः ।
(यथा, महाभारते । १ । १०५ । १०
।
“तमसा लोकमावृत्य नौगतामेव
भारत ! ॥”)

तथा च । वाराहे ।
अङ्कयेत्तप्तचक्राद्यैरात्मनो बाहुमूलयोः ।
कलत्रापत्यभृत्येषु पश्वादिषु च सम्पदे ॥
किञ्च ।
आयसं विधिवत् कृत्वा पञ्चायुधविधानतः ।
तत्तन्मन्त्रेण मन्त्रज्ञः प्रतिष्ठाप्य पृथक् पृथक् ॥
ललाटे च गदा धार्य्या मूर्द्धिर्न चापं शरन्तथा ।
नन्दकञ्चैव हृन्मध्ये शङ्खचक्रे भुजद्वये ॥
किञ्च ।
दक्षिणे तु भुजे विप्रो विभृयाद्वै सुदर्शनम् ।
सव्ये च शङ्खं विभृयादिति ब्रह्मविदो विदुः ॥
अथ चक्रादिप्रतिकृतिद्रव्यम् । नवप्रश्नपञ्चरात्रे ।

तमोगुणः । इत्यमरटीकायां रायमुकुटः ॥
तमालवृक्षः । इति शब्दचन्द्रिका ॥
(राहुः ।
इत्यमरः । १ । ३ । २६ । यथा,
ज्योतिषे होरायाम् ।
"भृगुतमबुधजीवैरिति ।
कितवस्तमस्येति
वराहः ॥" इति उणादिवृत्तिटीकायां उज्-
ज्वलदत्तः । ४ । १८८ ॥)

**तमः**, [स्] क्ली, (ताम्यत्यनेनेति । तम + "सर्व्व-
धातुभ्योऽसुन् ।" उणां । ४ । १८८ । इति
असुन् ।) प्रकृतेर्गुणविशेषः । यथा, --
"सत्त्वं रजस्तम इति दृश्यन्ते पुरुषे गुणाः ।
कालसञ्चोदितास्तेऽपि परिवर्त्तन्त आत्मनि ॥
प्रभूतञ्च यदा सत्त्वं मनोबुद्धीन्द्रियाणि च ।
तदा कृतयुगं विद्याद्दाने तपसि यद्रतिः ॥
यदा कर्म्मसु कार्य्येषु शक्तिर्यशसि देहिनाम् ।
तदा त्रेता रजोवृत्तिरिति जानीहि शौनक ! ॥
यदा लोभस्त्वसन्तोषो मानो दम्भोऽथ मत्सरः ।
कर्म्मणाञ्चापि काम्यानां द्वापरस्तद्रजस्तमः ॥
यदा सदानृतं तन्द्री निद्राहिंसादिसाघनम् ।
शोकमोहभयं दैन्यं स कलिस्तु तदा स्मृतः ॥"
इति गारुडे २२७ अध्यायः ॥ * ॥
अपि च ।
"तमस्त्वज्ञानजं विद्धि मोहनं सर्व्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ! ॥

तत्पर्य्यायः । तमसम् २ निशाचर्म्म ३ नीलपङ्कम् ४
रजोबलम् ५ दिवान्तकः ६
वियद्भूतिः ७ खलुक् ८
वृत्रः ९ । इति त्रिकाण्डशेषः ॥
रजोरसम् १०
दिनान्तरम् ११ अन्धकम् १२ ।
इति शब्दरत्नावली ॥
अमरोक्तपर्य्यायोऽन्धकारशब्दे
द्रष्टव्यः ॥ शोकः ।
इति मेदिनी । से, २४ ॥ पापम् ।
इति हेमचन्द्रः ॥
(राहुः । इति मेदिनी । से, २४ ॥
यथा, रघुः ।
८ । ३७ ।
"निमिमील नरोत्तमप्रिया
हृतचन्द्रा तमसेव कौमुदी ॥")

**तमङ्गकः**, पुं, इन्द्रकोषः । मञ्चकः । इति हेमचन्द्र-
स्त्रिकाण्डशेषश्च ॥

**तमतः**, त्रि, (तम + "भृमृदृशियजिपर्व्विपच्यमि-
तमीति ।" उणां । ३ । ११० । इति
अतच् ।)
तृषितः । वाञ्छितः ।
इत्युणादिकोषः ॥

**तमप्रभः**, पुं, (तम इव प्रभाऽस्य अस्मिन् वा ।)
नरकभेदः । इति हेमचन्द्रः ॥

**तमरं**, क्ली, (तमं रातीति । रा + कः ।)
वङ्गम् । इति हेमचन्द्रः ॥

**तमराजः**, पुं, (तम इव राजते । राज + अच् ।)
शर्कराविशेषः । नवात इति ख्यात
इति केचित् ।
तत्पर्य्यायः । शालकः २ । तस्य
गुणः । तृष्णा-
ज्वरदाहरक्तपित्तनाशित्वम् । इति
राजवल्लभः ॥

**तमसं**, क्ली, (तम + "अत्यविचमितमीति ।"

| | | |
|---|---|---|
| | सत्त्वं सुखे सञ्जयति रजः कर्म्मणि भारत ! । ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ रजस्तमश्चाभिभूय सत्त्वं भवति भारत ! । रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥" "अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च । तमस्यतानि जायन्ते विवृद्धे कुरुनन्दन ! ॥ | उणां । ३ । ११७ । इति असच् ।) अन्धकारः । इति त्रिकाण्डशेषः ॥ नगरम् । इति संक्षिप्त-सारे उणादिवृत्तिः ॥<br>**तमसः**, पुं, (तम + असच् ।) कूपः । अन्धकारः ।<br>इति संक्षिप्तसारे उणादिवृत्तिः ॥<br>**तमसा**, स्त्री, (तमैव जलमस्त्यस्याः । अच् टाप् च ।) नदीविशेषः । इति संक्षिप्तसारेउणादि-वृत्तिः ॥ (यथा, महाभारते । ३ । २२१ । २४ । "तमसा नर्म्मदा चैव नदी गोदावरी तथा ॥") |

**तमस्ततिः**, स्त्री, (तमसस्ततिः समूहः ।) अन्धकारसमूहः । इति तमिस्राशब्दार्थे मेदिनी ॥

**तमस्विनी**, स्त्री, (तमो विद्यतेऽस्यामिति विनिः ङीप् च ।) रात्रिः । (यथा, महाभारते । ४ । २१ । ३८ ।
“अदृश्यमानस्तस्याद्य तमस्विन्यामनिन्दिते! ।
नागोविल्वमिवाक्रम्य पोथयिष्याम्यहं शिरः ॥”)
हरिद्रा । इत्यमरः । २ । ९ । ४१ ॥

**तमा**, स्त्री, (तमोऽस्त्यस्यामिति । तम + अच् टाप् च ।) रात्रिः । इति हेमचन्द्रः ॥ तमालवृक्षः । इति शब्दचन्द्रिका ॥

**तमाः**, [स्] पुं, राहुः । इति मेदिनी । से, २४ ॥

**तमालं**, क्ली, (तम्यते काङ्क्ष्यते इति । तमु काङ्क्षायाम् + “तमिविशिविडीति ।” उणां । १ । ११७ । इति कालन् ।) पत्रकम् । इति राजनिर्घण्टः ॥

**तमालः**, पुं, (तमु काङ्क्षायाम् + कालन् ।) वृक्षविशेषः । तत्पर्य्यायः । कालस्कन्धः २ तापिञ्छः ३ । इत्यमरः । २ । ४ । ६८ ॥ तापिञ्जः ४ । इति भरतः ॥ नीलतालः ५ तमालकः ६ नीलध्वजः ७ कालतालः ८ महाबलः ९ । (यथा, भागवते । ३ । १३ । ३३ ।
“तमालनीलं सितदन्तकोट्या क्ष्मामुत्क्षिपन्तं गजलीलयाङ्ग ॥”)
अस्य गुणाः । मधुरत्वम् । बल्यत्वम् । वृष्यत्वम् ।

**तमालिका**, स्त्री, (तमालाः सन्त्यत्र । तमाल + ठन् ।) तामलिप्तदेशः । इति त्रिकाण्डशेषः ॥ ताम्रवल्ली । भूम्यामलकी । इति राजनिर्घण्टः ॥

**तमालिनी**, स्त्री, (तमालो तमालवर्णोऽस्त्यस्या इति । इनिः ततो ङीप् ।) भूम्यामलकी । इति राजनिर्घण्टः ॥ तामलिप्तदेशः । इति हेमचन्द्रः ॥

**तमाली**, स्त्री, (तम + कालन् । गौरादित्वात् ङीष् ।) ताम्रवल्ली । वरुणवृक्षः । इति राजनिर्घण्टः ॥

**तमिः**, स्त्री, (तम्यते ग्लायतेऽत्र । तम + “सर्व्वधातुभ्य इन् ।” उणां । ४ । ११७ । इतीन् ।) रात्रिः । इत्यमरटीकायां भरतः ॥

**तमिस्रं**, क्ली, (तमोऽस्त्यत्र । “ज्योत्स्नातमिस्रेति ।” ५ । २ । ११४ । इति निपातनात् साधुः । यद्वा, तमिस्रा अस्त्याश्रयत्वेनास्य अच् ।) अन्धकारम् । इत्यमरः ॥ (यथा, महाभारते । ४ । २१ । १७ ।
“यदेतन्नर्त्तनागारं मत्स्यराजेन कारितम् ।
दिवात्र कन्या नृत्यन्ति रात्रौ यान्ति यथागृहम् ॥
तमिस्रे तत्र गच्छेथा गन्धर्व्वास्तन्न जानते ॥”)
क्रोधः । इति मेदिनी । रे, ६१ ॥ (नरकविशेषः । यथा, भागवते । ४ । ७ । ४४ ।
“अमङ्गलानाञ्च तमिस्रमुल्वणं विपर्य्ययः केन तदेव कस्यचित् ॥”)

**तमिस्रपक्षः**, पुं, (तमिस्रमन्धकारं तत्प्रधानः

**तमोनुत्**, [द्] पुं, (तमोऽन्धकारं नुदतीति ॥ नुद् + क्विप् ।) अग्निः । सूर्य्यः । चन्द्रः । दीपः इति शब्दरत्नावली ॥ (तमोनाशके, त्रि यथा महाभारते । १३ । १६६ । ८ ।
“एवमुक्तस्तदात्रिर्वै तमोनुदभवच्छशी ।
अभवत् सौम्यभावाच्च सामवत् प्रियदर्शनः ॥”)

**तमोनुदः**, पुं, (तमोऽन्धकारं नुदतीति । नुद् + “इगुपधज्ञेति ।” ३ । १ । १३५ । इति कः ।) सूर्य्यः । इति शब्दरत्नावली ॥ (अग्निः । चन्द्रः । इति विश्वः ॥ यथा, रघुः । ३ । ३३ ।
“नरेन्द्रकन्यास्तमवाप्य सत्पतिं तमोनुदं दक्षसुता इवाबभुः ॥”
प्रकृतिप्रेरकः । यथा, मनुः । १ । ६ ।
“ततः स्वयम्भुर्भगवानव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः ॥”)

**तमोपहः**, पुं, (तमोऽन्धकारं अपहन्तीति । अप + हन् + “अपे क्लेशतमसोः ।” ३ । २ । ५० । इति डः ।) सूर्य्यः । चन्द्रः । बुद्धिः । अग्निः । इति मेदिनी । हे, ३० ॥ (अज्ञाननाशके, त्रि । यथा, किरातार्ज्जुनीये । ५ । २२ ।
“आगमादिव तमोपहादितः सम्भवन्ति मतयो भवच्छिदः ॥”)

**तमोभित्**, [द्] पुं, (तमस्तिमिरं भिनत्ति स्वज्योतिःप्रकाशनेन नाशयतीति । भिद् + क्विप् ।) खद्योतः । इति शब्दमाला ॥

**तमोमणिः**, पुं, (तमसि अन्धकारे मणिरिव ।)

शिशिरत्वम् । गुरुत्वम् ।
कफपित्ततृषादाह-
श्रमशान्तिकरत्वञ्च । इति राजनिर्घण्टः ॥
तिलकम् । (यथा, कुट्टनीमते । १६ ।
“यस्यामुपवनवीथ्यां तमालपत्राणि
युवतिवदने च ।
नखरप्रहाररणितं तन्त्रीवाद्येषु
सुरतकलहेषु ॥”
तमालस्तापिञ्छवृक्षः युवतिवदनपक्षे
तिलक-
मिति ॥) खड्गः । वरुणवृक्षः । इति
मेदिनी ।
ले, ९७ ॥ क्वष्णखदिरः । इति
शब्दचन्द्रिका ॥
वृक्षभेदे वंशत्वचि च पुं क्ली । इति
लिङ्गादि-
संग्रहे अमरभरतौ ॥

**तमालकं**, क्ली, (तमालपत्रवत् वर्णेन कायतीति ।

कै + कः ।) सुनिषण्णशाकम् । इति
त्रिकाण्ड-
शेषः ॥ (तमालमेव । स्वार्थे कन् ।)
पत्रकम् ।
इति राजनिर्घण्टः ॥ तेजपात इति भाषा
॥

**तमालकः**, पुं, क्ली, (तमाल एव । स्वार्थे कन् ।)

तमालवृक्षः । (यथा, रामायणे । २ । ९१
। ५० ।
“ततः सरलतालाश्च तिलकाः
सतमालकाः ।
प्रहृष्टास्तत्र सम्पेतुः कुब्जा भूत्वाथ
वामनाः ॥”)
वंशत्वक् । इति शब्दरत्नावली ॥

**तमालपत्रं**, क्ली, (तमालस्य पत्रमिव वर्णोऽस्या-

स्तीति । अर्श आदित्वात् अच् ।)
तिलकम् ।
पत्रकम् । (यथास्य पर्य्यायाः ।
“पत्रन्तमालपत्रञ्च तथा स्यात्
पत्रनामकम् ॥”

पक्षः ।) कृष्णपक्षः । यथा, तमिस्रपक्षत्रुटि-
कूटभक्षितमिति श्रीहर्षः ॥

**तमिस्रा**, स्त्री, (तमोबहुत्वमस्ति अस्याम् ।

“ज्योत्स्नातमिस्रेति ।” ५ । २ । ११४ ।
इति
निपातनात् साधुः ।) अन्धकाररात्रिः ।
कृष्ण-
पक्षनिशा । इत्यमरः ॥ तमोयुक्तरात्रिमात्रम्
।
इति रायमुकुटः ॥ दर्शरात्रिः । इति वाच-
स्पतिः ॥ तमस्ततिः । इति मेदिनी । रे,
१६१ ॥
(यथा, रघुः । ५ । १३ ।
“सूर्य्ये तपत्यावरणाय दृष्टेः
कल्पेत लोकस्य कथं तमिस्रा ॥”)

**तमी**, स्त्री, (तमिः कृदिकारादिति वा ङीष् ।)

रात्रिः । (यथा, माघे । ९ । २३ ।
“ददृशेऽपि भास्कररुचाह्नि न यः
स तमीं तमोभिरभिगम्य तताम् ॥”)
हरिद्रा । इत्यमरः । २ । ९ । ४१ ॥

**तमोघ्नः**, पुं, (तमोऽन्धकारं मोहमज्ञानं वा

हन्तीति । हन + टक् ।) वह्निः । सूर्य्यः ।
(यथा,
महाभारते । ७ । १४४ । १३६ ।
“स देवशत्रूनिव देवराजः
किरीटमाली व्यधमत् समन्तात् ।
यथा तमांस्यभ्युदितस्तमोघ्नः
पूर्ब्बप्रतिज्ञां समवाप्य वीरः ॥”)
चन्द्रः । बुद्धः । केशवः । शम्भुः । इति
मेदिनी ।
ने, ७१ ॥

**तमोज्योतिः**, [स्] पुं, (तमसि ज्योतिर्यस्य ।)

ज्योतिरिङ्गणः । इति शब्दरत्नावली ॥

खद्योतः । इति त्रिकाण्डशेषः ॥
गोमेदकमणिः ।
इति राजनिर्घण्टः ॥

**तमोलिप्ती**, स्त्री, (तमसा लिप्यते इति । लिप +

क्तः निपातनात् ङीप् ।) देशविशेषः ।
तमो-
लुक इति भाषा ॥ तत्पर्य्यायः । तामलिप्तः
२
वेलाकुलम् ३ तमालिका ४ । इति
शब्दरत्ना-
वली ॥ तामलिप्तम् ५ तामलिप्ती ६ । इति
त्रिकाण्डशेषः ॥ दामलिप्तम् ७ तमालिनी
८
स्तम्बपूः ९ विष्णुगृहम् १० । इति
हेमचन्द्रः ॥

**तमोविकारः**, पुं, (तमसैव विकारो यत्र ।) रोगः ।

इति राजनिर्घण्टः ॥

**तमोहरः**, पुं, (तमो हरतीति । हृ + अच् ।

तमस्य हर इति वा ।) चन्द्रः । इति
शब्दरत्ना-
वली ॥ (अग्निः । सूर्य्यः । इति
व्युत्पत्तिलब्धो-
ऽर्थः ॥)

**तम्पा**, स्त्री, (तम्बति गच्छतीति । तम्ब + अच् ।

पृषोदरादित्वात् साधुः ।) गौः । इति हेम-
चन्द्रः । ४ । ३३ ॥

**तम्ब**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-

सेट् ।) ओष्ठ्यवर्गशेषोपधः । तम्बति ।
इति
दुर्गादासः ॥

**तम्बा**, स्त्री, (तम्बति गच्छतीति । तम्ब + अच् ।)

गौः । इति हेमचन्द्रः । ४ । ३३२ ॥

**तय**, ङ गतौ । रक्षे । इति कविकल्पद्रुमः ॥ (भ्वां-

आत्मं-सकं-सेट् ।) ङ, तयते । इति दुर्गा-
दासः ॥

| | | |
|---|---|---|
| इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)<br>तमालवृक्षः । इति मेदिनी । रे, ३०२ ॥ (तमा-<br>लस्य पत्रम् । यथा, रघुः । ६ । ६४ ।<br>"तमालपत्रास्तरणासु रन्तुं<br>प्रसीद शश्वन्मलयस्थलीषु ॥") | | |

**तरः**, पुं, (तॄतरणे + "ऋदोरप् ।" ३ । ३ । ५७ । इति अप् ।) तरणम् । (यथा, मनुः । ८ । ४०४ ।
"पणं यानं तरे दाप्यं पौरुषोऽर्द्धपणं तरे ॥")
कृशानुः । इति मेदिनी । रे, ४० ॥ वृक्षः । इति भूरिप्रयोगः ॥ ("तरतमौ द्विबहूनामेकोत्-कर्षे ।" इति मुग्धबोधसूत्रात् प्रत्ययविशेषश्च ॥)

**तरः**, [स्] क्ली, (तॄ प्लवनतरणयोः + करणादौ यथायथं असुन् ।) बलम् । (यथा, रघुः । ११ । ७७ ।
"तिष्ठतु प्रधनमेवमप्यहं
तुल्यबाहुतरसा जितस्त्वया ॥")
वेगः । तीरम् । प्लवगः । इति शब्दरत्नावली ॥

**तरक्षः**, पुं, (तरक्षु + पृषोदरात् उलोपः ।) तरक्षुः । इत्यमरटीकायां भरतः ॥ (यथा, बृहत्संहि-तायाम् । १२ । ६ ।
शैलकूटैस्तरक्षर्क्षशार्द्दूलशाखामृगाध्यासितैः ॥)

**तरक्षुः**, पुं, (तरं बलं मार्गं वा क्षिणोति । क्षिणु हिंसायाम् + मितद्र्वादित्वात् डुः ।) व्याघ्र-
विशेषः । नेकडे वाघ इति भाषा ॥ तत्-पर्य्यायः । तर्क्षुः २ मृगादनः ३ तरक्षुकः ४ । इति शब्दरत्नावली ॥ (यथा, हरिवंशे । १६३ । १४ ।
"ततो मायां परां चक्रे देवशत्रुः प्रतापवान् ।
सिहान् व्याघ्रान् वराहांश्चतरक्षूनृक्षवा-नरान् ॥")

**तरक्षुकः**, पुं, (तरक्षु + स्वार्थे कन् ।) तरक्षुः । इति शब्दरत्नावली ॥

**तरङ्गः**, पुं, (तरति प्लवते इवि । तॄ + "तरत्यादि-भ्यश्च ।" उणां । १ । ११९ । इति अङ्गच् ।) वायुना नाद्यादिजलस्य तिर्य्यगूद्ध्वर्प्लवनम् । ढेउ
"त्वामनुधावति तरणिस्तदपि गुणाकर्षतरले-यम् ॥")
घृतकुमारी । इत्यमरः । ४ । २ । ७३ ॥

**तरणिः**, पुं, (तरति पापमनेनेति । तॄ + अणिः ।) सूर्य्यः । (यथा, देवीभागवते । ३ । ६ । २८ ।
"इत्युक्त्वा तरणिः कुन्तीं तन्मनस्कां सुलज्जिताम् ।
भुक्त्वा जगाम देवेशो वरं दत्त्वाभिवाञ्छितम् ॥")
अर्कवृक्षः । इत्यमरः ॥ भेलकः । (यथा, वोप-
देवप्रशंसाश्लोकः ।
"सोऽयं
व्याकरणार्णवैकतरणिश्चातुर्य्यचिन्तामणि-
र्जीयात् कोविदगर्व्वपर्व्वतपविः श्रीवोपदेवः कविः ॥")
किरणः । इति हेमचन्द्रः ॥

**तरणिपेटकः**, पुं, (तरणिः पेटक इव ।) काष्ठाम्बु-वाहिनी । इति जटाधरः ॥

**तरणिरत्नं**, क्ली, (तरणिः सूर्य्यस्तत्प्रियं रत्नम् ।) माणिक्यम् । इति राजनिर्घण्टः ॥

**तरणी**, स्त्री, (तरणिः । कृदिकारादिति वा ङीष् ।) नौका । इति शब्दरत्नावली ॥ पद्मचारिणी । इति शब्दचन्द्रिका ॥ घृतकुमारी । इत्यमर-टीकायां भरतः ॥

**तरण्डः**, पुं, क्ली, (तरति प्लवत इति । त प्लवनतर-णयोः + बाहुलकात् अण्डन् ।) । वडिशीसूत्र-बद्धकाष्ठादि । प्लवः । नौका । इति मेदिनी । डे, २९ ॥ कुम्भतुम्बीरम्भादिसञ्चरः । इति शब्दरत्नावली ॥

**तरण्डः**, पुं, देशविशेषः । इति शब्दरत्ना-वली ॥

**तरण्डपादा**, स्त्री, (तरण्डः प्लवनशीलः पादः प्रायेण तुरीयांशो यस्याः ।) नौका । इति शब्दरत्नावली ॥

**तरम्बुजं**, क्ली, (तरं तरलं अम्बुवत् जायतेऽत्र । जन + बहुलवचनात् डः ।) फलविशेषः । तर-
मूज इति ख्यातः । यथा,
उत्तरकामाख्यातन्त्रे ।
"ज्यैष्ठे मासि महेशानि ! पौर्णमास्यां निशार्द्धके ।
तृष्णातुरा महाकाली भ्रमन्ती पितृकानने ॥
तज्ज्ञात्वा ब्रह्मणा तस्यै फलं दत्तं तरम्बुजम् ।
तत्फलभक्षणात्तृप्ता वरदा सा हरप्रिया ॥
यो मे दद्यात् फलं रम्यं स चिरायुश्चतुर्युगम् ॥"

**तरलः**, पुं, (तॄ + "वृषादिभ्यश्चित् ।" उणां । १ । १०८ । इति कलप्रत्ययश्चिच्च ।) हारः । हार-
मध्यमणिः । (यथा, महाभारते । ८ । ९४ । १९ ।
"प्रकीर्णका विप्रकीर्णाश्च राजन् !
प्रवालमुक्तातरलाश्च हाराः ॥")
तलम् । इत्यजयपालः ॥
(जनपदविशेषः ।
तद्देशवासिनि बहुवचनान्तः । यथा, महा-
भारते । ८ । ८ । २० ।
"वत्सान् कलिङ्गान्
तरलानश्मकानृषिकानपि ॥")

**तरलः**, त्रि, (तॄ + कलच् ।) चलः । (यथा नैषधे । ५ । २४ ।
"आः स्वभावमधुरैरनुभावै-
स्तावकैरतितरां तरलाः स्मः ॥")
षिड्गः । भास्वरः । इति मेदिनी । ले, ९५ ॥
मध्यशून्यद्रव्यम् । इति धरणिः । द्रवीभूतश्च ॥

इति भाषा ॥ तत्पर्य्यायः । भङ्गः २ ऊर्म्मिः ३
वीचिः ४ । इत्यमरः ॥ ऊर्म्मी ५ वीची ६
विचिः ७ लहरी ८ हली ९ विलिः १० । इति
भरतः ॥ लहरिः ११ । इति सारसुन्दरी ॥
जललता १२ भृण्डिः १३ । इति हारावली ॥
उत्कलिका १४ ऊर्म्मिका १५ । इति जटा-
धरः ॥ वस्तम् । हयादीनां समुत्फालः । इत्यु-
णादिकोषः ॥

**तरङ्गिणी**, स्त्री, (तरङ्गो वीचिरस्त्यस्या इति ।
तरङ्ग + "अत इनिठनौ ।" इति इनिः ।)
नदी । इत्यमरः । १ । १० । ३० ॥ (यथा, माघः ।
"तरङ्गिणी वेणिरिवायता भुवः ॥")

**तरणं**, क्ली, (तॄ + भावे ल्युट् ।) प्लवनपूर्ब्बक-
देशान्तरगमनम् । इति दुर्गादासः ॥ पारगम-
नम् । सन्तरणम् । यथा, मोहमुद्गरे । ६ ।
"क्षणमपि सज्जनसङ्गतिरेका
भवति भवार्णवतरणे नौका ॥"

**तरणः**, पुं, (तीर्य्यतेऽनेनेति । तॄ + करणे ल्युट् ।)
भेलकः । इति त्रिकाण्डशेषः ॥ स्वर्गः । इति
शब्दसन्दर्भसिन्धुः ॥

**तरणिः**, स्त्री, (तीर्य्यतेऽनयेति । तॄ + "अर्त्तिसृधृ-
धमीति ।" उणां । २ । १०३ । इति अनिः ।)
नौका । (यथा, आर्य्यासप्तशत्याम् । ३९० ।

**तरण्डी**, स्त्री, (तरत्यनयेति । त + अण्डन् । गौरा-
दित्वात् ङीष् ।) नौका । इति शब्दरत्नावली ॥
(तरण्डा । इति हारावलीधृतपाठः । ५५ ॥)

**तरत्**, [द्] स्त्री, (तरत्यनेनेति । त + बाहु-
लकाददिः ।) प्लवः । (तरतीति । तॄ + कर्त्तरि
अदिः ।) कारण्डवपक्षी । इति मेदिनी । दे, २९ ॥

**तरदी**, स्त्री, कण्टकिवृक्षभेदः । तत्पर्य्यायः ।
तारदी २ तीव्रा ३ खर्वुरा ४ रक्तवीजका ५ ।
अस्या गुणाः । तिक्तत्वम् । मधुरत्वम् । गुरु-
त्वम् । बल्यत्वम् । कफनाशित्वञ्च । इति राज-
निर्घण्टः ॥

**तरन्तः**, पुं, (तरतीति । त + "तॄभूवहिवसीति ।"
उणां । ३ । १२८ । इति झच् ।) भेकः । आसारः ।
(तीर्य्यते इति । + कर्म्मणि झच् ।) समुद्रः ।
इत्युणादिकोषः ॥

**तरन्ती**, स्त्री, (तीर्य्यतेऽनयेति । तॄ + झच् । ततो
ङीष् ।) तरिः । इत्युणादिकोषः ॥

**तरपण्यं**, क्ली, (तॄ + भावे अप् । तरस्तरणं तस्य
पण्यम् ।) आतरः । इत्यमरः । १ । १० । ११ ॥
नौका भाडा इति भाषा ॥

**तरललोचना**, स्त्री, (तरले चञ्चले लोचने यस्याः ।)
चञ्चलनयना नारी । इति हेमचन्द्रः ॥

**तरला**, स्त्री, (तॄ + कलच् टाप् च ।) यवागूः ।
सुरा । इति मेदिनी । ले, ९६ ॥ मधुमक्षिका ।
इति हेमचन्द्रः ॥

**तरलितं**, त्रि, (तरलं तारल्यमस्य जातम् । तरल +
इतच् । तरल इवाचरति तारलं करोतीति ।
तरल + क्विप् + णिच् + क्त इति केचित् ।)
जाततारल्यम् । तत्पर्य्यायः । प्रेङ्खोलितम् २
लुलितम् ३ प्रेङ्खितम् ४ द्रुतम् ५ चलितम् ६
कम्पितम् ७ धूतम् ८ वेल्लितम् ९ आन्दोलि-
तम् १० । इति हेमचन्द्रः ॥ (यथा, गीतगोविन्दे ।
१२ । १५ ।
"व्यालोलः केशपाशस्तरलितमलकैः स्वेदलोलौ
कपोलौ ॥")

**तरवारिः**, पुं, (तरं समागतविपक्षबलं वारय-
तीति । वृ + णिच् + इन् ।) खड्गः । तरवार
इति भाषा । इति हेमचन्द्रः । ३ । ४४५ ॥
अथ खड्गपरीक्षा ।
"अङ्गं रूपं तथा जातिर्नेत्रारिष्टे च भूमिका ।
ध्वनिर्म्मानमिति प्रोक्तं खड्गज्ञानाष्टकं शुभम् ॥
अभिन्ने दृश्यते यादृक् विभिद्य घटिते तथा ।
यदेव दृश्यते चिह्नं तदङ्गं संप्रचक्षते ॥
नीलकृष्णादिकं खड्गे रूपमित्यभिधीयते ।

|  |  |  |
|---|---|---|
|  |  | तेनैव यत् प्रतीतं स्यात्<br>तज्जातिरिति गद्यते ॥<br>अङ्गातिरिक्तं<br>यज्जातिस्तन्माहात्म्योपसूचकम्।<br>तन्नेत्रमिति जानीयात् खड्गे<br>खड्गविशारदाः ॥<br>अङ्गातिरिक्तं<br>खड्गादियच्छुब्धत्वापसूचकम्।<br>तदरिष्टमिति प्राहुर्भूमिरङ्गादिधारणम्<br>॥ |

यः खड्गे जायते शब्दो नखदण्डादिनाहते।
स ध्वनिस्तुलनामानं ज्ञानमष्टविधन्त्विदम्॥
पञ्चाद्या निपुणैः खड्गे सम्भाव्यन्तेऽपि कृत्रिमाः।
अन्त्यावकृत्रिमौ ज्ञेयौ तावेव सहजाविति॥
शतमङ्गानि चत्वारि रूपाणि जायतस्तथा।
त्रिंशन्नेत्राणि जानीयादरिष्टानि तथैव च॥
भूमिश्च द्विविधा ज्ञेया ध्वनिरष्टविधो मतः।
मानन्तु द्विविधं प्रोक्तमित्येषां संग्रहो मतः॥" ॥
अथ खड्गस्य शताङ्गगणना लौहार्णवे।
"रूप्यस्वर्णगजोरुवूकदमनस्थूलाङ्गकृष्णारुण-
श्वेता-
म्भोजगदातिलानलकणाग्रन्थिस्थिरातैत्तिराः।
मालाजीरकषट्पदोद्ध्र्वमरिचव्यालाश्ववर्हाञ्जन-
क्षौद्रक्षुद्रकमक्षिकातुषयवव्रीहिक्षुमार्सर्षपाः॥
सिंहीतण्डुलगोशिराशिवनखग्राहाक्षिकेशोपल-
द्रोणीकाककपालपत्रतुवरीविम्बीफलीसर्षपाः।
नीलीरक्तवचारसोनसुमनाजिङ्गीशमीरोहित
प्रोष्ठीमारिषमार्कवाखुरतडिन्मेघाद्रिगुञ्जाशराः॥
दूर्व्वाविल्वमसूरटुण्टुकशटीमार्जारिकाकेतकी-
मूर्व्वाविज्रकलायचम्पकबलान्यग्रोधवंशासनाः।
ज्येष्ठीजालपिपीलिकानलरजःकुष्माण्डरोम-
स्पृही
कर्कन्धुर्व्वकुलारनालमहिषस्वच्छर्त्तुवक्राइति॥
प्रोक्ता लौहविशारदेन मुनिना खड्गस्य भेदाः
क्रमात्॥"
अथ तस्य चत्वारि रूपाणि।
"नीलः कृष्णः पिशङ्गश्च धूम्रश्चेति चतुर्व्विधः।
वर्णप्रकर्षः खड्गानां कथितो मुनिपुङ्गवैः॥"
अथ चतस्रो जातयः।
"ब्राह्मणः क्षत्त्रियो वैश्यः शूद्रश्चेति चतुर्व्विधः।
जातिभेदो विनिर्द्दिष्टः खड्गानां मुनिपुङ्गवैः॥"
अथ त्रिंशन्नेत्राणि।
"चक्रं पद्मं गदा शङ्खो डमरुर्द्धनुरङ्कुशः।
छत्रं पताका वीणा च मत्स्यलिङ्गध्वजेन्दवः॥
कुम्भः शूलश्च शार्द्दूलः सिंहः सिंहासनं गजः।
हंसो मयूरो जिह्वा च दशनः खड्ग एव च॥
पुत्रिका चामरं शैलः पुष्पमाला भुजङ्गमः।
त्रिंशदेतानि नेत्राणि खड्गानां कथितानि वै॥"
अथ त्रिंशदरिष्टानि।

इति प्रोक्तानि सूत्राणि खड्गानां
ज्ञानहेतवे॥
एतानि तत्त्वतो ज्ञात्वा भवेन्नृपतिपूजितः
॥"
इति सूत्राध्यायः॥ * ॥
तत्र प्रथमतोऽङ्गानां लक्षणानि निबोधत
॥
लौहप्रदीपे।
"रूप्यपत्रसमा भूमिरङ्गं श्वेतं प्रतीयते।
ऊद्ध्र्वं तर्त्तुं महामूल्यं रूप्यवज्रमुषन्ति
तम्॥
एष खड्गवरो दद्याल्लक्ष्मीमायुर्य्यशो
बलम्। १।
स्वर्णरेखा वली तन्वी यद्भूमौ
निकषोपमा।
स्वर्णवज्रमिति प्राहुरायुर्लक्ष्मीजयप्रदम्
॥ २ ॥
गजशुण्डाकृतिर्भूमौ
कृष्णायामङ्गसम्भवः।
गजवज्रमिति प्राहू रक्तस्पर्शे तु तद्विशेत्
॥
ज्वरादिव्याधिशमनं तस्य
प्रक्षालनाम्भसा।
अपि क्षीणोऽपि भूपालस्तद्वीर्य्यात्
साधयेन्
महीम्॥ ३ ॥
एरण्डबीजप्रतिममङ्गं भूमिः सितेतरा।
रुवुवज्रमिदं नाम्ना शत्रुदर्पक्षयङ्करः॥
एतस्य स्पर्शमात्रेण नरः सम्यग्विमुच्यते
।
महिषाख्यमिदं वज्रं केचिदाहुर्मनीषिणः
॥ ४ ॥
अङ्गं दमनपत्राभं खड्गे यस्मिन्
प्रतीयते।
विद्याद्दमनवज्रञ्च तज्ज्ञेयं द्विविधं बुधैः
॥
नीला शुभ्रा भवेद्भूमिस्तत्र नीला
गरीयसी।

अङ्गं कृष्णतिलाकारं भूमिश्चैव
सितासिता।
तिलवज्रमिदं ज्ञेयं
लक्ष्मीबलयशःप्रदम्॥
तत्क्षते तिलतैलाभा वसा
प्रच्यवतेऽधिकम्। १३।
धूम्रवर्णा भवेद्भूमिरङ्गं
वह्निशिखोपमम्॥
अग्निवज्रमिदं ज्ञेयं शत्रूणां
दाहकारकम्।
अत्र शीतोदकं न्यस्तं तप्तं भवति च
क्षणात्॥
शाणे वह्निं वमेद्यस्तु तथा
सूर्य्यांशुसङ्गमात्।
तत्क्षते बलवान् दाहो दग्धवच्च
व्रणो भवेत्॥
एतत् परमभाग्येन लभ्यते
धरणीतले। १४।
भूमिः सिता तिला वापि अङ्गञ्चेत्
पिप्पली-
प्रभम्॥
कणावज्रमिदं ज्ञेयमन्तर्दाहस्तु
तत्क्षते। १५।
कृष्णाभूमिर्य्यदैवाङ्गे दृश्यते
ग्रन्थिसञ्चयः॥
ग्रन्थिवज्रमिदं ज्ञेयं
वैरिपक्षविनाशनम्।
तत्क्षते बलवान् दाहस्तृषा च ज्वर
एव च॥ १६ ॥
शालपर्णीदलाकारमङ्गं
कृष्णासिपुत्त्रिका।
स्थिरावज्रमिदं प्राहुस्तत्क्षते
वेपथुर्भवेत्॥ १७ ॥
यदा तित्तिरिपक्षाभमङ्गं भूमिः
सितेतरा।
एतत्तिरिरिवज्रं स्यात् तत्क्षते
बहुवेदनम्॥ १८ ॥
वनमालासमा यस्मिन् माला खड्गे
प्रदृश्यते।

“छिद्रं काकपदं रेखा भिन्नं भेकश्च मूषिकः ।
विडालः शर्करा नीली मशको भृङ्गसूचिके ॥
त्रिबिन्दुः कालिका दारी कपोतः काक एव च ।
खर्परः शकली क्रोडी कुशपत्रकजालिके ॥
करालकङ्कखर्ज्जूरशृङ्गपुच्छखनित्रकम् ।
लाङ्गलं वडिशाख्यञ्च मुनिना तत्त्ववेदिना ॥
प्रोक्तान्येतान्यरिष्टानि खड्गानां त्रिंशदेव हि ॥”
अथ द्विविधा भूमिः ।
“दिव्यभौमविभागेन भूमिस्तु द्विविधा भवेत् ।”
अथाष्ठधा ध्वनिः ।
“हंसकांस्याभ्रढक्कानां काकतन्त्रीखराश्मनाम् ।
ध्वनयोऽष्टविधाः प्रोक्ता नागार्ज्जुनमुनेर्मताः ॥”
अथ द्विविधं मानम् ।
“उत्तमाधमभेदेन मानं तद्द्विविधं भवेत् ।
तस्मिन् पर्य्युषितं तोयं गन्धे
दमनकोपमम् ॥
तत्प्रभावान्महीपालः कृत्स्नां पृथ्वीं हि
साध-
येत् ॥ ५” ॥
शार्ङ्गधरस्य ।
“एका स्थूला सिता रेखा भूमिर्न्नीला
दृढा यदि ।
स्थूलाङ्गमङ्गवज्रं
तद्विद्याल्लक्ष्मीयशःप्रदम् ॥
एतत्क्षते भवेच्छोथः
स्थूलश्चिरतरस्थितिः ।
एतं महान्तमपरे वदन्ति खड्गकोविदाः
॥ ६ ॥
घृष्टायां दृश्यते भूमौ अङ्गञ्च
प्रतिविम्बितम् ।
अङ्गवज्रं भवेत्तस्य द्विधाभूमिः
सितासिता ॥ ७” ॥
लौहप्रदीपेऽपि ।
“निरङ्गं रूप्यपत्राभमीषन्मणिनिभञ्च
यत् ।
दुर्ल्लभं तन्महामूल्यं कान्तलौहं प्रचक्षते
॥
कृष्णा भूमिर्भवेत् स्वच्छा पीता
वज्राङ्गसङ्गता ।
कृष्णावज्रमिति प्राहुस्तत्क्षते मोह
उच्यते ॥”
प्रदीपेऽपि ।
“कृष्णा भूमिः
सुवर्णाभमीषच्छुक्लाङ्गसङ्गतम् ।
डाहुलीवज्रकं विद्यात् कालसंज्ञमथापरे
॥ ८ ॥
अरुणं सूक्ष्ममूर्द्धञ्चेदङ्गं भूमिः सितेतरा ।
अरुणाख्यमिदं वज्रं शत्रुदर्पनिसूदनम् ॥
सूर्य्यांशुस्पर्शमात्रेण वह्निरूपां वमेत्
शिखाम् ।
तस्य स्पर्शनमात्रेण पद्मकोषः
स्फुटेन्निशि ॥
दुर्ल्लभं तन्मनुष्याणां भाग्यैः कुत्रापि
लभ्यते ।
मालाङ्गमिति तद्विद्यात्तत्तोयं
गन्धवद्भवेत् ॥
अत्र तप्तोदकं न्यस्तं शीतं भवति
तत्क्षणात् ।
एष दाहपरीतानामृते
पित्तहतात्मनाम् ॥
भवेत् परमभैषज्यं भाग्यैनैतद्धि
लभ्यते । १९ ।
यदा जीरकसङ्काशमङ्गं भूमिः
सितासिता ॥
एतज्जीरकवज्रं स्यात्तत्क्षते
तत्क्षणाज्ज्वरः । २० ।
भूमिः सितासितक्षेत्रा अङ्गं
भृङ्गाभमिष्यते ॥
तत्र चेन्मध्यमन्यस्तं शेषमाप्नोति
केवलम् ।
एतद्भ्रमरवज्रस्यात्तत्क्षते
स्याद्विसूचिका ॥ २१ ॥
ऊद्‌र्ध्वगं कपिलाभासमङ्गं यस्मिन्
प्रतीयते ।
ऊद्‌र्ध्ववज्रमिदं
प्राहुर्विषवेगनिसूदनम् ॥”
लौहप्रदीपेऽपि ।
“ऊद्‌र्ध्वगं कपिलाभासमङ्गं यस्मिन्
प्रतीयते ।
लाङ्गलाङ्गन्तु तद्विद्यात् स्पर्शे
तस्याहिनाशनम् ॥
२२ ॥
अङ्गं मरीचसङ्काशं भवेद्भू मिः
सितेतरा ।
मरीचाङ्गमिदं वज्रं तत्क्षते कटुरक्तता
॥
तत्प्रक्षालनतोयेन नश्यन्ति
पीनसादयः । २३ ।
यदा सर्पफणाकारमङ्गं भूमिस्तु
निर्म्मला ॥
भुजङ्गवज्रं तद्विद्यात्तत्क्षते
विषवद्रुजा ।
तस्य स्पर्शनमात्रेण भेकः
प्राणैर्विमुच्यते ॥

| | | |
|---|---|---|
| | तद्योजनसहस्रस्य रिष्टं नाशयति ध्रुवम् ॥ ९ ॥<br>श्वेतास्तिस्रो यदा रेखा आमूलादुपलक्ष्यते ।<br>श्वेताङ्गमिति तद्विद्याद्यशोलक्ष्मीबलप्रदम्॥ १० ॥<br>अम्भोजदलसङ्काशमङ्गं भूमिः सितेतरा ।<br>अम्भोजवज्रं तज्ज्ञेयं कथितं मुनिपुङ्गवैः ॥ ११ ॥<br>अङ्गं यस्य गदाकारं भूमिश्चैव सितेतरा ।<br>गदावज्रमिदं ब्रूयात् तत्क्षते शूलसम्भवः ॥ १२ ॥ | एकस्यास्य प्रसादेन कृत्स्नां शास्ति महीं नृपः ।<br>२४ ।<br>यदाश्वखुरसङ्काशमङ्गं भूमिस्तु निर्म्मला ॥<br>अश्वाङ्गमिति तंविद्यात् खड्गं परमदुर्ल्लभम् ।<br>तस्य संयोगमात्रेण वाजी मन्दोऽपि धावति ॥<br>तस्य क्षालनतोयेन हयानां रोगनाशनम् ।<br>एतत्क्षते भृशं मूर्च्छा दाहश्च भ्रम एव च ॥ २५ ॥<br>मयूरपिच्छसदृशमङ्गं भूमिः सितेतरा ।<br>वर्हाङ्गमिति तं विद्यात्तत्क्षते वान्तिरिष्यते ॥<br>सर्पाणामिह सर्व्वेषामस्य स्पर्शासहिष्णुता ।<br>एतदेव नृपतिभिर्भाग्यैः कुत्रापि लभ्यते ॥ २६ ॥ |

भूमिरञ्जनसङ्काशा धारा चास्य सिता भवेत्
।
अञ्जनाख्यमिदं प्रायः सर्व्वदैवोपलभ्यते ॥”
लौहप्रदीपेऽपि ।
“धारा शुभ्रा भवेद्यस्य भूमिः
कज्जलसन्निभा ।
कृष्णरङ्गैश्चितं वापि विद्यात्
कज्जलवज्रकम् ॥ २७ ॥
मधुवर्णसमा भूमिरङ्गं वा मधुबिन्दुवत् ।
क्षौद्राख्यभिति जानीयात्
जयलक्ष्मीयशःप्रदम् ॥”
शार्ङ्गधरेऽपि ।
“निम्नकक्षो भवेद्यत्र रात्रिन्दिवविलेपितः ।
मधुरो मधुवर्णाभः स खड्गो देववल्लभः ॥
विशेषाच्चात्र रज्यन्ति सततं मक्षिकादयः ।
२८ ।
आसीमकोणिका यस्य क्षुद्राङ्गं
कुण्डलीकृतम् ॥
क्षुद्रवज्रकनामानं प्राह नागार्ज्जुनो मुनिः ।
इदं कुण्डलवज्रञ्च प्राह लौहार्णवे मुनिः ॥
अस्य क्षतेषु बलवान् दाहः समवलोकितः ।
२९ ।
यदङ्गं मक्षिकाकारं भूमिश्चैव सितासिता ॥
स्नेहः शुष्यति चैवात्र मक्षिकाङ्गं तमादिशेत्
। ३० ।
अङ्गं यदा तुषाकारं या च भूमिः सितासिता
॥
तुषवज्रमिदं ख्यातं प्राह नागार्ज्जुनोमुनिः ।
३१ ।
अङ्गं यवफलाकारं भूमिः कृष्णा सिता तथा
॥
यवाङ्गमिति तं विद्यात्तत्स्पर्शे कण्डूसम्भवः
।
एष स्वड्गाधमस्त्याज्यो
यदीच्छेद्भूतिमात्मनः ॥ ३२
अङ्गं व्रीहिप्रसूनाभं भूमिर्धूम्रा क्षतेऽतिरुक् ।
तद्व्रीहिवज्रं जानीयाच्छत्रूणां भयवर्द्धनम्
३३ ॥
अतसीफलसङ्काशमङ्गंभूमिः सितासिता ।

केशाङ्गमिति जानीयात्
क्लेशदुःखभयापहम् ॥ ४४ ॥
निरङ्गं स्थूलप्रकृतिमुपलाङ्गं विदुर्बुधाः ।
एतद्धि प्रायशो लोके दृश्यते द्विजसत्तम !
॥” ४५
पद्मपुराणस्य ।
“निरङ्गा निशिता धारा शाणे वह्निं वमत्यपि
।
द्रोणीवज्रमिदं ज्ञेयं पृथिव्यां नातिदुर्ल्लभम् ॥
४६ ॥
अङ्गं काकपदाकारं भूमिराघातनिःसहा ।
एष स्वड्गाधमस्त्याज्यो काकाङ्गो भूति-
मिच्छता ॥ ४७ ॥
यदा कपालमङ्गेषु दृश्यते स्पर्शतः खरम् ।
एतद्धि दुःखजनकं कपालाङ्गं बुधस्त्यजेत्
॥ ४८ ॥
तन्वीपत्रा वलाङ्का या सुवर्णाङ्गासिपुत्त्रिका
।
पत्रवज्रकमाहुस्तं आयुर्व्वेदविदो जनाः ॥”
लौहार्णवेऽपि ।
“सुपर्णसन्निभा भूमिरङ्गं कालं प्रतीयते ।
तत् पत्रवज्रं काकस्य सुपर्णमुपजायते ॥
४९ ॥
तुवरीदलसङ्काशमङ्गंयस्मिन् प्रतीयते ।
बुवरीवज्रमाहुस्तं तत्क्षते शिरसो भ्रमः ॥
एष खड्गाधमस्त्याज्यो यदीच्छेज्जीवनं
निजम् ॥
५० ॥
विम्बीदलसमा भूमिरङ्गं विम्बीफलोपमम् ॥
विम्बीवज्रन्तु तद्विद्यात्तज्जलं तिक्तमुच्यते
।
पित्तश्लेष्मविकाराणां प्रशमाय प्रयुज्यते ॥
५१ ॥
प्रियङ्गुसदृशन्त्वङ्गं भूमिश्च कपिलाकृतिः ।
फलवज्रमिदं प्रोक्तं शाणे धूम्रं वमत्यपि ॥
५२ ॥
अङ्गं सर्षपपुष्पाभं भूमिश्चैव सितासिता ।
एतत् सर्षपवज्रं स्यात् शाणे वह्निं वमत्यपि
॥

धूम्रा गम्भीरस्वरयुक्तं धारा तीक्ष्णा सिता
भवेद्रेखा ॥
रोहिताख्यमिदं वज्रं सर्व्वारिष्टविनाशनम्
।
वह्निसंस्पर्शमात्रेण किञ्चिच्चिमिचिमायते
।
इत्ययं दुर्ल्लभः खड्गो देवानामपि कथ्यते
॥ ६१ ॥
शफरीवल्कलाकारमङ्गंभूमिः सितासिता
।
प्रोष्ठीवज्रमिदं प्रोक्तं न्यस्तं तरति वारिणि
॥
एष खड्गोत्तमो राज्ञां विपक्षकुलनाशकः
।
कदाचिल्लभ्यते भाग्यैर्लभ्यते लभ्यते मही
॥ ६२ ॥
अङ्गं मारिषपत्राभं भूमिः स्याद्विषमच्छविः
।
इत्ययं मारिषाङ्गः स्यात् पृथिव्यां
नातिदुर्ल्लभः ॥
६३ ॥
भृङ्गराजस्य पुष्पाभमङ्गं भूमिर्द्दलप्रभा ।
आघातं सहते नैव एष खड्गाधमो मतः
॥ ६४ ॥
धारा तीक्ष्णा खुराकारा
भूमिरङ्गविवर्ज्जिता ।
आघातं सहते घोरं शाणे वह्निं वमत्यपि ।
खुराङ्गमिति जानीयात् पृथिव्यां
नातिदुर्ल्ल-
भम् ॥ ६५ ॥
निर्मला समला भूमिर्भवेच्चैव कदा कदा ।
मन्दा तीव्रा मवेद्धारा तडिद्वज्रस्य लक्षणम्
॥ ६६ ॥
नीलाञ्जनसमा भूमिरङ्गं जलतरङ्गवत् ।
मेघाङ्गमिति जानीयाच्छाणे शीतं
भवत्यपि ॥
एष खड्गाधमस्त्याज्यो
यदीच्छेद्भूतिमात्मनः ।

अतसीवज्रमाहुस्तं तत्क्षते शिरसो रुजा
३४ ॥
यदा सषपबीजाभमङ्गं भूमिः सितासिता ।
खरधारः खरस्पर्शः सर्षपाङ्गः स दुर्ल्लभः ॥
३५ ॥
सिंह्याकारं भवेद्यस्य अङ्गं भूमिः सितासिता
।
सिंहीवज्रन्तु तद्विद्यात्तत्क्षते प्रलपेन्नरः ॥
एतद्धावनतोयेन कासरोगोपनाशनम् ॥ ३६
॥
अङ्गं तण्डुलसङ्काशं भूमिर्धूम्रा सितासिता ।
तण्डुलाङ्गमिमं विद्याद्यशःश्रीबलवर्द्धनम् ।
एतत्पर्य्युषितं तोयं तण्डुलोदकसन्निभम् ॥
अस्य प्रभावान्मनुजो भ्रष्टां हि लभते श्रियम्
॥ ३७
अङ्गञ्चेद्गोक्षुराकारं भूमिराघातनिःसहा ॥
खड्गाधममिदं विद्याद्गोवज्रं नाम नामतः ॥
३८ ॥
स्थला दीर्घाः शिराः कृष्णा भूमिश्चैव
सिता-
सिता ॥
शिराङ्गमिति तं ब्रूयादेनं खड्गाधमं बुधाः ।
३९ ।
शिवलिङ्गाकृतिश्चाङ्गे धारा चैव सिताथवा
॥
शिवाङ्गमिति तं ब्रूयाच्छत्रुपक्षनिसूदनम् ॥
४० ॥
यदा व्याघ्रनखाकारमङ्गं भूमिस्तु पिङ्गला ॥
नखवज्रमिदं ब्रूयात्तत्क्षते श्वययुर्भवेत् ।
एतदामिषसंस्पर्शात् प्रविशेत् स्वयमेव हि ॥
४१ ॥
ग्राहपुच्छोपमन्त्वङ्गं भूमिर्धूम्रा खराकृतिः ।
ग्राहाङ्गमिति जानीयाच्छत्रुवंशोपनाशनम् ॥
अस्य स्पर्शनमात्रेण जीवन्मतस्या
जहत्यसून् ॥ ४२ ॥
यदा मनुजनेत्राभमङ्गं भूमिः सितासिता ॥
नेत्राङ्गमिति जानीयात् संग्रामे विजयप्रदम् ।
एतद्धावनतोयेन नूनमन्धोऽपि पश्यति ॥
४३ ॥
अङ्गं केशसमं यस्य भूमिर्धूम्रा सितासिता ।
अपि कुण्डलिकां याति
एतदत्यन्तकोमलम् ।
एतत्प्रसादात् क्षितिपः कृत्स्नां साधयते
महीम् ॥
५३ ॥
नीलीरससमा भूमिरङ्गं नीलीतरङ्गवत् ।
नीलीवज्रमिदं दृष्टं शाणे वह्निशिखां वमेत् ॥
एष खड्गवरो नृणामरिष्टभयनाशनः ॥ ५४
॥
रक्तास्तिस्रो महारेखा भूमिश्चैव
सितासिता ॥
रक्ताङ्गमिति जानीयाद्वैरिपक्षविनाशनम् ।
शाणेन यस्तु रक्तां वा नीलां वा वमते
शिखाम् ॥
रक्तस्पर्शनमात्रेण स्वयमेव निकृन्तति ।
क्षतेऽस्य रक्तश्वयथुस्तृषा दाहश्च जायते
॥ ५५ ॥
अङ्गं वचादलसमं भूमिश्चैव सितासिता ।
वचावज्रमिदं ज्ञेयं तत्क्षताद्विषनाशनम् ॥
एष खड्गवरो राज्ञा साधनीयः प्रयत्नतः ॥
५६ ॥
रसोनादुत्तमं ह्यङ्गं भूमिस्तस्य दलोपमा ॥
रसोनवज्रं जानीयात् शाणे वह्निं वमत्यपि ।
अस्य धावनतोयेन आमवातविनाशनम् ॥
५७ ॥
निरङ्का निर्म्मला भूमिर्धारा तीक्ष्णा खरः
स्वरः ।
सुमनावज्रमेतत् स्याद्भुवि नात्यन्तदुर्ल्लभम्
॥ ५८ ॥
मञ्जिष्ठासदृशा दीर्घास्तन्व्यो रेखाः
सुविस्तराः ।
जिङ्गीवज्रमिदं नाम सर्व्वकामार्थसाधनम् ॥
५९ ॥
अङ्गं शमीपत्रसमं भूमिर्धूम्रा सितासिता ।
शमीवज्रमिदं ज्ञेयं शनैश्चरमुदावहम् ॥
शाणेषु वमते वह्निं सहते वह्निपीडनम् ॥
६० ॥
रोहितवल्कलसदृशमङ्गं भूमिः
सितासितावापि ।
भर्त्तुः प्रतापं शमयेद्रविविम्बं यथा घनः ॥
६७ ॥
मन्दा धारा भृशं गाढा भूमिरङ्गविवर्ज्जिता
।
पर्व्वताङ्गमिदं नाम सर्व्वत्रैवोपलभ्यते ॥
६८ ॥
अङ्गं गुञ्जाफलसमं भूमिर्म्मीनदलोपमा ।
गुञ्जावज्रमिदं पृष्ठं तप्तं भवति घर्षणे ॥
शाणे सिन्दूरसङ्काशं रजो वमति चासकृत्
।
एष खड्गवरो राज्ञा भाग्यादेवोपयुज्यते ॥
अस्य प्रभावात्तन्नास्ति यन्न साधयते नृपः
॥ ६९ ॥
अङ्गं तनुशराकारं भूमिश्चैव सितासिता ।
धारा तीक्ष्णा वमति च शाणे वह्निसमाः
शिखाः ।
शरवज्रमिदं ज्ञेयं राज्ञां वाञ्छितसिद्धये ॥
७० ॥
दूर्व्वादलनिभा भूमिर्धारा तीक्ष्णा खरः
स्वरः ।
शाणेन वमते वह्निं दूर्व्वावज्रं सुदुर्ल्लभम् ॥
७१ ॥
अङ्गं विल्वदलाकारं भूमिश्चैव
सितासिता ।
विल्ववज्रमिदं शाणे नीलपीते वमेच्छिखे
॥
एष खड्गवरः प्रोक्तः शत्रूणां कुलनाशनः
॥ ७२ ॥
मसूरदलसङ्काशा भूमिरङ्गं मसूरवत् ।
मसूराङ्गमिदं शाणे रजो वमति चारुणम् ॥
७३ ॥
शोणपुष्पनिभा रेखा दीर्घा भूमिः सितेतरा
।
शोणाङ्गमिति जानीयात् खड्गं परमदुर्ल्ल-
भम् ॥ ७४ ॥
शटीदलसमा भूमिरङ्गं तत्कुसुमोपमम् ।
शटीवज्रमिदं प्रायो लभ्यते गुणवत्तरम् ॥
७५ ॥
मार्ज्जाररोमसदृशमङ्गं भूमिः सितेतरा ।
मार्ज्जाराङ्गमिदं नाम्ना
रोगशोकभयावहम् ।

|  |  | एष खड्गाधमस्त्याज्यो<br>यदीच्छेद्भूतिमात्मनः ॥<br>७६ ॥<br>केतकीपत्रसदृशमङ्गं यस्मिन् प्रतीयते । |
| --- | --- | --- |

विद्यात् केतकवज्रं तत्
वाराणससमुद्भवम् ॥” ७७
लौहप्रदीपस्य ।
“अङ्गं मूर्व्वातन्तुनिभं
भूमिर्मूर्व्वादलच्छविः ।
शाणेन वमते शुक्लां शिखां मौर्व्वी
भवेत्ततः ॥
मौर्व्यङ्गमिदमुत्कृष्टं
यशःकृईर्त्तिबलावहम् ॥ ७८ ॥
लिङ्गं तीक्ष्णं खरं गाढं शाणे वह्नेर्व्वमेत्
कणम् ॥
छिनत्त्यन्यविधं लौहं वज्राङ्गमिति
तद्वदेत् ॥ ७९ ॥
कलायपुष्पसदृशमङ्गं भूमिः
सितासिता ।
कलायवज्रं जानीयात् तत्क्षते पाक
इष्यते ॥ ८० ॥
अङ्गं चम्पकपुष्पाभं भूमिः कृष्णा तथा
सिता ।
शिखां शाणे वमेच्छीतं तिक्तं तस्य
जलं भवेत् ।
इदं चम्पकवज्रं स्यात् सर्व्वत्र
विजयप्रदम् ॥ ८१ ॥
अङ्गं बलादलसमं भूमिः शुक्ला
तथेतरा ।
बलावज्रमिदं ज्ञेयं नानाभावं
भवेद्द्रुतम् ॥
इत्ययं वातरोगाणां नाशने परमौषधम्
॥ ८२ ॥
अङ्गं वटारोहसमं भूमिर्व्वटदलच्छविः
।
वटवज्रमिदं ज्ञेयं खरं खड्गाधमं बुधैः
।
एतस्य स्पर्शमात्रेण नरो मुच्येत
सम्पदा ॥ ८३ ॥
वंशनीलीसमा भूमिः खरधारा
सिताकृतिः ।
वंशाङ्गमिति जानीयाद्वंशवृद्धिकरं परम्
॥ ८४ ॥

एष खड्गाधमस्त्याज्यो जेतव्या यदि विद्विषः
॥
९४ ॥
रङ्गं वकुलपुष्पाभं भूमिस्तत्फलसन्निभा ॥
वकुलाङ्गमिदं पूज्यं शाणे सुरभिगन्धवत् ।
तन्नास्ति जगतीमध्ये यदनेन न साध्यते ॥
९५ ॥
अङ्गं संमिश्रितं यस्मिन्न किञ्चिद्व्यक्तमीक्ष्यते
।
सर्व्वेषां दर्शनं वापि तीक्ष्णधारः खरस्वरः ॥
एष काञ्जिकवज्रः स्याद्यत्नादेवोपलभ्यते ।
नैनं प्राप्यापि वर्द्धन्ते शेषाश्चित्रादयोऽपि च ॥
९६ ॥
भूमिः कृष्णानिरङ्गा चेद्धारा तीक्ष्णा दृढापि च
।
आघातं सहते घोरं रक्तं स्पर्शेन यो विशेत् ॥
शाणेन वह्निं वमति ध्रुवं वाप्यतिघर्षणात् ।
महिषाङ्गः स वै खड्गः पृथिव्यां नातिदुर्ल्लभः
॥
९७ ॥
अत्यन्तनिर्म्मला भूमिः शरीरं प्रतिविम्बितम्
।
धारा तीक्ष्णा स्वरस्तीक्ष्णः स्वच्छाङ्गं
तद्विनि-
र्द्दिशेत् ॥ ९८ ॥
तस्मिन् यदा भवेद्रेखा ऊर्द्ध्वा ऋत्वाख्यकं
तदा ॥ ९९
अस्मिन्नपि भवेद्वक्रा रेखा वक्राभिधन्तु तत् ॥
१०० ॥
एतत्त्रितयमुद्दिष्टं खड्गानां प्रवरं बुधैः ।
प्रायशो लभ्यते लोके यदि सर्व्वगुणावहम् ॥
इतीदं निखिलं प्रोक्तं वज्राणां लक्षणं मया ।
प्रयत्नैर्लिखितं व्यक्तं सर्व्वेषां हितकाम्यया ॥
इतः परन्तु लौहानां लक्षणं यत्र लक्ष्यते ।
तस्य दासो भवाम्येष प्रतिज्ञेति कृता मया ॥
द्विलिङ्गमिश्रमालोक्य मिश्राङ्गमिति निर्द्दिशेत्
।
सर्व्वेषामङ्गमालोक्य सर्व्वाङ्गमिति निर्द्दिशेत्
॥”

रूपैश्चतुर्भिः संयुक्तं चतुरं खड्गमुत्तरम् ॥”
इति लौहार्णवस्य खड्गपरीक्षायां वर्णा-
ध्यायस्तृतीयः ॥ * ॥
“जातिश्चतुर्व्विधा प्रोक्ता खड्गानां या पुरा
मया ।
सम्प्रत्यपि प्रयत्नेन तासां लक्षणमुच्यते ॥
शुद्धाङ्गः शुद्धवर्णश्च सुनेत्रः सुस्वरश्च यः ।
मृदुस्पर्शः सुसन्धेयस्तीक्ष्णधारो महागुणः ॥
खड्गं ब्राह्मणजातिं तं प्राह नागार्ज्जुनो मुनिः
।
अस्य क्षते भवेच्छोथो घोरः सर्व्वाङ्गगोचरः ॥
मूर्च्छा पिपासा दाहश्च ज्वरो मृत्युश्च जायते
।
अघृष्टं त्रिफलाकल्कमर्द्धरात्रिन्दिवोषितम्।
मलिनत्वं न सन्धत्ते निर्म्मलं कुरुते परम् ।
तरुणादित्यकिरणस्पर्शाद्वि तृणे स्थितः ॥
दहेत् सर्व्वं न तु करं पुरुषस्य हि धारिणः ।
गायत्र्युच्चारमात्रेण खरतां व्रजति स्फुटम् ॥
एष खड्गवरः सर्व्वमरिष्टं नाशयेद्ध्रुवम् ।
अस्य प्रसादात् पुरुषस्त्रिलोकमपि साधयेत्
॥
तस्मादेष मनुष्याणां सुलभो न हि भूतले ।
दृश्यन्ते प्रायशः स्वर्गे कुशद्वीपे हिमालये ॥
१ ॥
धूम्रवर्णं महासारं तीक्ष्णधारं खरस्वरम् ।
सर्व्वाघातसहं सर्व्वनेत्रवर्णस्वराकरम् ॥
खड्गं क्षत्त्रियजातिं तं जानीयात्
खड्गकोविदः ।
अस्य क्षते भवेद्दाहस्तृषानाहो ज्वरो भ्रमः ॥
मृत्युश्च जायते शाणे वमेद्वह्निकणान् बहून् ।
संस्कारे चाप्यसंस्कारे नैर्म्मल्यं तस्य
लक्ष्यते ॥
शाणेऽप्यशाणे खरता मूर्द्ध्नि
चात्यन्ततीक्ष्णता ।
रक्तस्पर्शनमात्रेण विशेदन्तरमन्तरम् ॥
अयं खड्गवरः पूज्यो मनुष्यैरपि लभ्यते ॥
२ ॥
नीलवर्णः कृष्णवर्णः संस्कारे निर्म्मलो भवेत्
॥

भूमिः शालदलाकारा अङ्गं लघु सितासितम् ।
शालाङ्ग एष खड्गः स्यात् पूज्यः सर्व्वार्थदायकः ।
अयं शाणे वमेद्वह्निं धारा चाप्यथवा भवेत् ॥ ८५ ॥
भूमिः सितासिता वापि अङ्गं ज्येष्ठीसमं लघु ।
ज्येष्ठीवज्रमिदं निन्द्यं न स्पृश्यं वा हितेच्छुभिः ॥
८६ ॥
पुराणजालसदृशमङ्गं भूमिः सितासिता ॥
जालवज्रमिदं पूज्यं शत्रुसम्पत्तिनाशनम् ।
यदि शाणे वमेन्नीलां शिखां वह्निं वमेच्च वा ॥
तदैष दुर्ल्लभः खड्गो नान्यथा भयहेतुकः ॥ ८७ ॥
अङ्गं पिपीलिकाकारं भूमिर्धूम्रा तथासिता ॥
पिपीलिकाङ्ग इत्येष तत्क्षते कण्डुसम्भवः ।
स्वयं यदि भवेद्धूम्रः शाणे पूज्यतमस्तदा ॥ ८८ ॥
नलपत्रसमा भूमिरङ्गन्तत्कुसुमोपमम् ।
नलाङ्गमिति जानीयाद्भर्त्तुः सर्व्वार्थसाधकः ॥
८९ ॥
निरङ्का निर्म्मला भूमिर्घृष्टं घृष्टं वमेद्रजः ।
दृढा धारा भृशं स्थूला आघातं सहते न च ॥
रजोवज्रमिदं निन्द्यं शत्रूणां विजयावहम् ॥ ९० ॥
कुष्माण्डबीजसदृशमङ्गं भूमिः सितासिता ॥
कुष्माण्डवज्रं जानीयात्तत्क्षते वेगनिग्रहः ॥ ९१ ॥

इति खड्गपरीक्षायामङ्गाध्यायोद्वितीयः ॥ * ॥
खड्गस्य रूपाणि यथा, --
"नीलीकलायकुसुमच्छविगुञ्जनाभा
या चन्द्रनीलमणिकाचमणिप्रभाच ।
भूमिश्च या मरकतप्रतिमावभासा
खड्गस्य नीलमिति रूपमिदं वदन्ति ॥"
तत्र चेन्निन्दितान्यङ्गान्यरिष्टानिबहून्यपि ।
दृश्यन्ते बहुदोषापि तथापि गुणवत्तरम् ॥ १ ॥
या कालकाम्बुदमसीरसकालसर्प-
शङ्कान्धकारकचभारसमाविभाति ।
भूमिश्च या भ्रमरबन्धुसमावभासा
खड्गस्य कृष्णमिति रूपमिदं वदन्ति ॥
अत्र नेत्राणि सम्पत्त्यै अरिष्टान्यशुभानि च ।
साधारणमिदं रूपं प्राह नागार्ज्जुनो मुनिः ॥ २ ॥
या प्रावृषेण्यनवभेकसमानवर्णा
गोमेदरत्नसदृशापि च यस्य भूमिः ।
खड्गस्य पिङ्गमिति रूपमिदं वदन्ति
भर्त्तुर्य्यशोबलधनक्षयकारणाय ॥ ३ ॥
या मन्दधूमसदृशा च शिरीषपुष्प-
तुल्या विभाति मलिनापि च खड्गभूमिः ।
नागार्ज्जुनो वदति धूम्रमिदं हि रूपं
भर्त्तुर्य्यशोबलधनाबलिवर्द्धनाय ॥ ४ ॥
द्विरूपं मिश्रितं कृत्वा शङ्करं प्रवदेद्बुधः ।
त्रिभी रूपैः समेतन्तु खड्गं त्रिपुरसङ्गितम् ॥

शाणेन खरता चास्य घाततुल्यं निकृन्तति ।
वैश्यजातिरयं खड्गः क्षते त्वङ्गात्रदर्शनम् ॥
नात्युत्कृष्टो नातिहीनं सर्व्वत्रैवोपलभ्यते ॥ ३ ॥
सजलाम्भोदसङ्काशः स्थूलधारो मृदुस्वरः ॥
संस्कारे चैव मलिनः शाणे चापि खरेतरः ।
शूद्रजातिरयं खड्गः क्षते नाल्पापि वेदना ॥
दूरादेषोऽधमस्त्याज्यो यदीच्छेद्धितमात्मनः ।
प्रायशः सर्व्वलोकेषु स्वयमेवोपदृश्यते ॥ ४ ॥
द्वयोर्लक्षणमालोक्य जारजं खड्गमादिशेत् ।
त्रयाणां लक्षणेनैव त्रिजातिं खड्गमादिशेत् ।
चतुर्णां लक्षणेनैव जातिसङ्करमुच्यते ॥"
इति लौहावर्णवस्य खड्गपरीक्षायां जात्य-ध्यायः ॥ * ॥
अथ त्रिंशन्नेत्राणां लक्षणानि ।
"चक्राकारं यदा नेत्रं खड्गस्याङ्गे प्रदृश्यते ।
तं चक्रनेत्रं जानीयात् भर्त्तुः सर्व्वार्थसाधनम् ॥
अनेनैकेन खड्गेन कृत्स्नां साधयते महीम् ॥ १ ॥
प्रफुल्लपद्मसङ्काशं नेत्रं पद्मदलोपमम् ॥
यदि वा दृश्यते खड्गे पद्मनेत्रं समादिशेत् ।
अयं खड्गवरो यत्र तत्रैव कमलालया ॥ २ ॥
ऊर्द्ध्वा स्थूला यदा रेखा गदाकारा प्रतीयते ।
गदानेत्रमिदं विद्धि सर्व्वशत्रुनिसूदनम् ॥ ३ ॥
शङ्खाकारं यदा नेत्रं खड्गमध्येऽभिदृश्यते ।

| | | |
|---|---|---|
| अङ्गं नृरोमसदृशं भूमिर्धूम्रा सितासिता ।<br>रोमाङ्गमिति जानीयात्तत्क्षते पिडकोद्गमः ॥ ९२ ॥<br>भूमिः स्नुहीदलसमा अङ्गं तत्कण्टकोपमम् ॥<br>धारा तीक्ष्णा रवस्तीक्ष्णो लघुमानं खरा स्पृशा ।<br>सुधाङ्गः खड्ग इत्येष तत्क्षते दाहतृड्भ्रमाः ॥<br>मुखाक्षिकर्णनासानां दाहः पाकश्च जायते ।<br>अयं यदि च सर्पाणां फणासूपरि विश्यते ॥<br>फणाविदारमाप्नोति सर्पो लोटयते शिरः ।<br>अस्य धावनतोयेन कुष्ठरोगविनाशनम् ॥ ९३ ॥<br>कर्कन्धुदलपृष्ठाभा भूमिरङ्गन्तु तत्समम् ।<br>कर्कन्धुवज्रं जानीयात्तत्क्षते दाहनाशनम् ॥ | | |

शङ्खनेत्रमिदं सर्व्वदेवानामपि दुर्ल्लभम् ॥
४ ॥
डमरुप्रतिमं नेत्रं यस्य भूमौ प्रतीयते ।
सर्व्वार्थसाधकं खड्गं तं
विद्याद्विजयप्रदम् ॥ ५ ॥
धनुःस्वरूपं यन्नेत्रं धनुर्नेत्रमुषन्ति तम् ।
तस्य स्पर्शनमात्रेण मन्दोऽपि
प्रमुखायते ॥
अयं निशीथे विजने खड्गो
झनझनायते ॥ ६ ॥
यन्नेत्रमङ्कुशाकारं तंविद्याद्गुणवत्तरम् ॥
खड्गमङ्कुशनेत्राख्यं भर्त्तुः
सर्व्वार्थसाधकम् ।
अलक्ष्मीपापरक्षोघ्नं
कृत्याग्रहनिवारणम् ॥ ७ ॥
छत्राकारं यदा नेत्रं छत्रनेत्रं वदन्ति तम्
।
अस्य प्रभावात् क्षीणोऽपि
सार्व्वभौमोभवेन्नृपः ॥
दीनोऽपि च सुखीभूयात् सुखी
भूयान्महेश्वरः ।
महेश्वरोऽपि सचिवः सचिवो
मण्डलेश्वरः ॥
मण्डलेशश्चक्रवर्त्ती भवेदत्र न संशयः
॥ ८ ॥
पताकाकृतिनेत्रञ्चेत्
सर्व्वसम्पत्तिकारकम् ॥
पताकानेत्रमाहुस्तं संग्रामे विजयप्रदम्
॥ ९ ॥
नेत्रं वीणाकृति यदा वीणानेत्रमुषन्ति
तम् ।
निशीथे विजने खड्गो वीणावत्
स्वनमावहेत् ।
अस्य प्रभावात् सर्व्वेश्या अपि वश्या
भवन्ति
हि ॥ १० ॥
मत्स्याकृति यदा नेत्रं मत्स्यनेत्रमिमं
विदुः ।

मनुष्यपुत्त्रिकाकारा पुत्त्रिकानेत्रमुच्यते ॥
अयं सशैलां सद्वीपां कृत्स्नां साधयेत्
क्षितिम् ।
न चेयं पुत्त्रिका किन्तु जयलक्ष्मीरिह
स्वयम् ॥
तस्मान्नायं मनुष्याणामल्पभाग्येन लभ्यते
॥ २६ ॥
चामराकृतिनेत्रत्वात्तन्नेत्रमिति निर्द्दिशेत् ।
अस्य प्रभावाज्जायन्ते चामरोद्धृतसम्पदः
॥ २७ ॥
एकानेकशिखे शैलनेत्रे तन्नेत्रसंज्ञकम् ।
अपि राष्ट्रभये युद्धे विषमे वैरिसङ्कटे ।
स्थिरीकरोति धरणीं धरणीं पर्व्वतो यथा ॥
२८ ॥
पुष्पमालासमं नेत्रं पुष्पनेत्रं वदन्ति तम् ।
अस्य प्रभावात्तुष्यन्ति ग्रहाः सर्व्वाश्च
देवताः ॥
२९ ॥
भुजङ्गमसमे नेत्रे सर्पनेत्रमिदं मतम् ।
अयं शत्रुगणं हन्ति यथा मर्त्त्यं भुजङ्गमः ॥
३० ॥
सवर्णं समवर्णञ्च तत् सर्व्वं द्विविधं मवेत् ।
सवर्णं शान्तिसम्पत्त्यै रिपुनाशे तथापरम् ॥
द्वयोरेकत्र पृष्ठे च तत् पुनर्व्विविधं भवेत् ।
एकलोकसुखं नेदं ददाति द्विविधं द्वयोः ॥
मूलमध्याग्रसंस्थानात्तत् पुनर्द्विविधं भवेत्
।
अग्रे चाग्र्यफलं ज्ञेयं मध्ये मध्यफलं मतम्
॥
मूले फलं जघन्यं स्यात् प्राह नागार्ज्जुनो
मुनिः ।
एकं द्वे त्रीणि नेत्राणि नात्र संख्या
व्यतिक्रमः ॥
एकं घर्म्मः स्वर्गकामौ द्वे त्रीणि च त्रिवर्गकम्
।
तत्फलानि प्रयच्छन्ति प्राह नागार्ज्जुनो
मुनिः ॥
द्विनेत्रमिति जानीयात् स्वसंज्ञां नेत्रयोर्द्वयोः
।

अरिष्टं शर्कराकारं यदा स्पर्शेन बुध्यते ।
शर्करारिष्ठमेतत् स्याद्धनबुद्धिविनाशनम् ॥ ८
॥
यदा नीलीरसाभासमरिष्टं दृश्यते क्वचित् ।
नील्यरिष्टमिदं ज्ञेयं यशोलक्ष्मीविनाशनम् ॥ ९
॥
अरिष्ठे मशकाकारे मशकारिष्टमुच्यते ।
भर्त्तुः कुलं यशो बुद्धिं धृतिं प्रीतिञ्च नाशयेत् ॥
१० ॥
भृङ्गमाप्रतिमो विन्दुरेकोऽनेकोऽथवा यदा ।
भृङ्गमारिष्ट इत्येष धृतिस्मृतिविनाशनः ॥ ११
॥
सूचीरूपमरिष्टञ्चेदूर्द्ध्वंवा तिर्य्यगेव वा ।
सूच्यरिष्टमिदं नाम भर्त्तुः कुलविनाशनम् ॥
१२ ॥
त्रयश्चेद्विन्दवो राजन् ! पङ्क्तयो विषमेण वा
।
उपर्य्युपरि वाघोऽधस्त्रिबिन्द्वाख्यमरिष्टकम् ॥
तस्य स्पर्शनमात्रेण सचेलः स्नानमाचरेत् ॥
१३ ॥
कालिकारिष्टमित्येतद् धीधृतिस्मृतिनाशनम्
॥
१४ ॥
एकत्र यदि न ह्येष प्रयत्नेनापि संवृतः ।
दारी नाम महारिष्टं सर्व्वाभीष्टविनाशनम् ॥
अनेकगुणसम्पन्नः खड्गो लोकैर्न गृह्यते ॥
१५ ॥
कपोतपक्षप्रतिममरिष्टञ्चेत्तदाह्वयम् ।
भर्त्तुः कुलं यशो विद्यां बलं बुद्धिञ्च नाशयेत् ॥
१६ ॥
काकाकृति यदारिष्टं काकारिष्टं तदोच्यते ।
अनेन भर्त्तुः संग्रामे भङ्ग एवोपजायते ॥ १७
॥
अरिष्टे खर्पराकारे खर्परारिष्टमुच्यते ।
भर्त्तुर्यशो बलं वीर्य्यं बुद्धिं प्रीतिञ्च नाशयेत् ॥
१८ ॥
यदान्यल्लोहशकलं लग्नं स्यादिव लक्ष्यते ।
शकलीति स वै खड्गः सर्व्वाभीष्टनिसूदनः ॥
१९ ॥

अस्य प्रभावात् क्षितिपः कृत्स्नां साधयते
महीम् ॥ ११ ॥
शिवलिङ्गसमं नेत्रं लिङ्गनेत्रमिमं विदुः ।
भर्त्तुः सर्व्वार्थसंसिद्ध्यै शत्रूणां नाशनाय च ॥
वामपार्श्वे तु यात्रायां धर्त्तव्योऽयं तथा रणे १२ ।
अत्र ध्वजार्द्धचन्द्रकलसानां लक्षणानि पति-
तानि । १३ । १४ । १५ ।
शूलाकृति यदा नेत्रं शूलनेत्रं वदन्ति तम् ।
सर्व्वार्थसाधकः
सर्व्वारिष्टानिष्टप्रणाशनः ॥ १६ ॥
शार्द्दूलनेत्रं तं विद्यात्
शार्द्दूलाकृतिनेत्रतः ।
शत्रुश्रेणीविनाशाय संग्रामे विजयाय च ॥ १७ ॥
सिंहाकृति यदा नेत्रं सिंहनेत्रमिमं विदुः ।
अस्य प्रभावात् क्षीणोऽपि कृत्स्नां साधयते
महीम् ॥ १८ ॥
तत् सिंहासननेत्रं स्यात् नेत्रे
सिंहासनोपमे ।
अस्य प्रभावात् क्षितिपः कृत्स्नां साधयते
महीम् ॥ १९ ॥
गजाकृति यदा नेत्रं गजनेत्रं वदन्ति तम् ॥
अस्य प्रभावात् क्षीणोऽपि लभते राजसम्पदम् ॥
२० ॥
नेत्रं हंसाकृति यदा हंसनेत्रं वदन्ति तम् ।
अस्य प्रभावात् भूपालो
यशःप्राप्नोत्यनुत्तमम् ॥
२१ ॥
मयूराकृतिनेत्रे द्वे तन्नेत्रमिति निर्द्दिशेत् ॥
त्रिनेत्रञ्च त्रिभिर्ज्ञेयं बहुनेत्रमतः परम् ॥
यथोत्तरं गुणवहं खड्गमाहुरनुत्तमम् ।
दिङ्मात्रमिति निर्द्दिष्टं नेत्राणां शुभदायिनाम् ॥
तीव्राणां मङ्गलानाञ्च दर्शनञ्च शुभावहम् ॥”
इति खड्गपरीक्षायां नेत्राध्यायः पञ्चमः ॥
* ॥
“यथा नेत्रस्य संस्थानं तथारिष्टस्य लक्षयेत् ।
नेत्रेषु स्थाननियमो नारिष्टे स्थाननिर्णयः ॥
प्रशस्ताङ्गोऽपि यः खड्गोऽरिष्टेनैकेन निन्दितः ॥”
अथ त्रिंशदरिष्टानां लक्षणानि ॥
“छिद्रवद्दृश्यते खड्गे स्वभावेन च लक्ष्यते ।
छिद्रारिष्टमिदं विद्धि भर्त्तुर्व्वीर्य्यबलापहम् ॥
१ ॥
यदा काकपदाकारमरिष्टं दृश्यते क्वचित् ।
अयं काकपदारिष्टः सर्व्वाभीष्टविनाशनः ॥
२ ॥
रेखाकारं यदारिष्टमूर्द्ध्वं वा तिर्य्यगेव वा ।
रेखारिष्टमिदं विद्धि भर्त्तुवीर्य्यबलापहम् ॥
३ ॥
भिन्नभ्रान्तिकरं पापं भिन्नारिष्टमिदं विदुः ।
भर्त्तुः कुलं यशो राष्ट्रं नाहत्वा न व्रजेत्
स्वयम् ॥ ४ ॥
यदा भेकशिरोरूपमरिष्टं दृश्यते क्वचित् ।
भेकारिष्टमिदं नाम्ना संग्रामे भयदायकम् ५ ॥
अरिष्टे मुषिकाकारे मुषिकारिष्टमुच्यते ।
अयं खड् गाधमः कुर्य्यात् पत्युः पातालसङ्-
मम् ॥ ६ ॥
विडालनयनाकारो बिन्दुरेकोऽतिविस्तरः ।
विडालारिष्टमेतत् स्यात् भर्त्तुः सर्व्वार्थनाश-
नम् ॥ ७ ॥
क्रोडीकुशपत्रकयोर्लक्षणे पतिते २० । २१ ।
यस्मिन्निम्नमिवाभाति मध्ये वा दृश्यते
क्वचित् ।
जालारिष्टमिदं नाम भर्त्तुः कुलधनापहम् ॥
२२ ॥
एकैकरेखा दीर्घाग्रा यदा पल्लविनी भवेत् ।
स्पर्शे वाथ करेणाथ करालारिष्टमुच्यते ॥
अयं हि क्षितिपालानां दृष्टियोग्यो भवेन्न हि ।
दर्शनादेव नश्यन्ति यशोलक्ष्मीजयादयः ॥
२३ ॥
अरिष्टे कङ्कपत्राभे कङ्कारिष्टं तदुच्यते ।
अस्य स्पर्शनमात्रेण नश्यत्यायुर्यशो बलम् ॥
२४ ॥
खर्ज्जूरवृक्षप्रतिमं यदारिष्टन्तु लक्ष्यते ।
खर्ज्जुरारिष्टमेतत् स्याद्भर्त्तुः कुलधनापहम् ॥
२५ ॥
गोशृङ्गाभमरिष्टञ्चेत् शृङ्गारिष्टं तदुच्यते ।
अनेन भर्त्तुर्नश्यन्ति लक्ष्मीबलकुलादयः ॥
२६ ॥
गोपुच्छाकृति चेत् खड्गे अरिष्टं संप्रतीक्ष्यते ।
पुच्छारिष्टमिदं नाम भर्त्तुः सर्व्वार्थनाशनम् ॥
२७ ॥
खनित्राभमरिष्टञ्चेत् खनित्रारिष्टमुच्यते ।
शूराणामपि संग्रामे भङ्गमेतत् प्रयच्छति ॥ २८ ॥
अरिष्टे लाङ्गलाकारे लाङ्गलारिष्टमुच्यते ।
अयं पापात् पापतरः प्रेक्षणीयो न भूभुजा ॥
अयमायुः श्रियं हन्ति विद्यां बलमशेषतः ॥
२९ ॥
वडिशारिष्टस्य लक्षणं पतितम् ॥ ३० ॥
इत्यरिष्टानि प्रोक्तानि नानातन्त्रात् प्रयत्नतः ।
विचार्य्यैतानि मतिमान् खड्गं कोशे
निधापयेत् ॥
दिङ्मात्रमिदमुद्दिष्टमरिष्टानां हितात्मनाम् ।
अमङ्गलानां मन्दानां दर्शनञ्चाशुभावहम् ॥

| | | |
|---|---|---|
| अस्य प्रभावान्मनुजः<br>सर्पदर्पान्निसूदयेत् ॥ २२ ॥<br>जिह्वाकारं यदा नेत्रं जिह्वानेत्रं वदन्ति च ॥<br>संग्रामखर्परेष्वेवं पिबेद्वैरिशिरोरजः ॥ २३ ॥<br>दन्ताकारं यदा नेत्रं दन्तनेत्रं वदन्ति तम् ॥<br>अयं रिपुगणं मूद्ध्र्ने<br>चर्व्वयत्यतिभैरवम् ॥ २४ ॥<br>सड्गाकारं यदा नेत्रं खड्गनेत्रं वदन्ति तम् ।<br>तस्य प्रभावान्मनुजस्त्रिलोकीं<br>वशयेदपि ॥ २५ ॥ | | |

अरिष्टमेकमेव स्याद्दि्वरिष्टं शुभावहम् ।
अन्योन्यमशुभं हन्याद्विषस्य हि विषं यथा ॥
एकमारभ्य सप्तान्तमरिष्टं प्राह नान्यथा ।
यथोत्तरं द्विगुणितं फलमाहुर्मनीषिणः ॥
इति खड्गपरीक्षायामरिष्टाध्यायःषष्ठः ॥ * ॥
अथ द्विविधा भूमिः ।
दिव्यमौमविभागेन भूमिर्या द्विविधा मता ।
दिव्या दिवि समुद्भूता भौमा भूमिसमुद्भवा ॥
तल्लक्षणमशेषेण लिख्यते तन्निबोधत ।
देवदानवयोर्मध्ये खड्गसृष्टिरभूत् पुरा ॥
ते खड्गाः पुण्यदेशेषु केषु केषु प्रतिष्ठिताः ॥
दिव्यलक्षणं यथा, --
ये खड्गाः स्थूलधारा भृशमतिलघवो निर्म्म-
लाङ्गाः सुनेत्रा
ये रिष्टाश्चास्वरूपाः
सुविमलतनवश्चाप्यसंस्कार-
योगात् ।
दुर्भेद्या दुर्घटाश्च ध्वनिगुणगुरवो यत्क्षते
दाहपाकौ
ते दिव्याः कुर्व्वतेऽमी कुलधनविजयश्रीयशो-
वृद्धिमाशु ॥ १ ॥
अथ भौमलक्षणं बृहद्धारीते ।
पूर्ब्बं महेशेन विषाणि यानि
भुक्तानि तेषां पतितास्तु बिन्दवः ।
यस्मिन् प्रदेशे स स एव देशः
कालायसामाकरतां जगाम ॥
पुरामृतं क्षीरसमुद्रमध्या-
दुत्पाद्य संगृह्य ययुः सुरेन्द्राः ।
तद्बिन्दवो यत्र निपेतुरेष
शुद्धायसामाकरतां जगाम ॥
ये विषोत्था भृशङ्कालाः खराङ्गाः सम्भवन्ति
हि ।
मूर्च्छादाहज्वरानाहशोकहिक्कावमीकराः॥
येऽमृतोत्थाः कर्व्वुराङ्गा मन्दाङ्गाः संभवन्ति च
।
बलीपतितमालिन्यजराव्याधिविनाशनाः॥
यत्रैव पतितं यत्तु तत्तदाकरताङ्गताः ॥
तद्यथा, --
वाराणसीमगधसिंहलभूमिभागे

एषां रूपेण मिश्रेण ज्ञेया हि द्विजजातयः ॥
सामान्यात् द्विगुणञ्चौड्रं कलिर्दशगुणस्ततः ।
कलेः शतगुणं भद्रं भद्राद्वज्रं सहस्रधा ।
वज्रात् षष्ठिगुणः पाण्डिर्निरविर्द्दशभिर्गुणैः ।
ततः कोटिसहस्रेण ह्ययस्कान्तः प्रशस्यते
॥”
इत्यादिकं रसायनौपयौगिकमेव न तु खड्गे
दृष्टफलम् ॥ यदाह ।
आसान्तु लौहजातीनां वज्रं खड्गाय
युज्यते ।
तथाच ।
ये खड्गास्तीक्ष्णधारा भृशमतिगुरवः षड्-
गुणाढ्याः सुभेद्याः
केचित् साङ्गा निरङ्गाः कति च न समला
निर्म्मलाः केचिदेव ।
ते भौमाः कुर्व्वतेऽमी धनविजयबलं षड्गुणा
निर्गुणा वा
ते दुःखं शोकमुग्रं दधति
बलकुलश्रीयशोनाश-
कास्ते ॥
इति खड्गपरीक्षायां भूम्यध्यायः सप्तमः ॥
२ * ॥
अथाष्टधा ध्वनिः ।
ध्वनिरष्टविधः प्रोक्तो यः पूर्ब्बं सूत्रसंग्रहे ।
तेषामपि लिखाम्यत्र सगुणं लक्षणाष्टकम् ॥
तद्यथा, --
पूर्ब्बे चत्वारः शुभदाः परे निन्दास्पदास्तथा
।
विचार्य्य खड्गमानञ्च कर्त्तव्यं खड्गकोविदैः
॥
घोरस्तार इति ख्यातो द्विविधः
खड्गकोविदैः ।
घोरः स्यात् सुखसम्पत्त्यै तार उच्चाटने
मतः ॥
यत्र हंसरवस्येव खड्गे नखहते ध्वनिः ।
हंसध्वनिरयं खड्गः सकलार्थप्रसाधनः ॥
१ ॥
कांस्यशब्द इवाभाति यस्मिन् खड्गे हते
ध्वनिः ।

अथ द्विविधं मानम् ।
यन्मानं द्विविधं प्रोक्तं तस्य
लक्षणमुच्यते ।
उत्तमाधमभेदेन भेदो हि द्विविधो मतः
॥
उत्तमं यद्विशालं स्याल्लघुमानं
प्रकीर्त्तितम् ॥ १ ॥
अधमं तच्च यत् खर्व्वं गुरुमानं
प्रकीर्त्तितम् ॥ २ ॥
तत्पुनस्त्रिविधं
प्रोक्तमादिमध्यान्तभेदतः ।
यो मुष्टिविंशतिसमायततीव्रधारो
भर्त्तुर्भवेत् प्रसरतोऽपि षडङ्गुलीभिः ।
मानेन चाष्टपलिकः स हि खड्गमध्ये
नातिप्रकृष्टनविकृष्टफलप्रदः स्यात् ॥
यो द्वादशाष्टनवमुष्टिभिरायतःस्यात्
मन्दो भवेत् प्रसरतोऽपि चतुर्थभागः ।
तावत्पलैः परिमितस्तु ततोऽधिको
वा
खड् गाधमो धनयशःकुलनाशनाय ॥
नागार्ज्जुनोऽपि ।
यावत्यो मुष्टयो दैर्घ्ये तदर्द्धाङ्गुलयो
यदा ।
प्रसरे तच्चतुर्थांशमितिवै मानमुत्तमम्
॥
यावत्यो मुष्टयो दैर्घ्ये प्रसरे
तत्त्रिभागिकः ।
पलैस्तदर्द्धैस्तुलितः स खड्गो मध्य
उच्यते ॥
यावत्यो मुष्टयो दैर्घ्ये तुर्य्यांशः प्रसरे
तु तत् ।
अधमः कीर्त्तितः खड्गस्तत्समो
वाधिकः
पलैः ॥
भौमानामिदमुद्दिष्टं दिव्यास्तु लघवो
मताः ॥”
इति खड्गपरीक्षायां मानाध्यायः ॥ *
॥
भोजस्तु ।

नेपालभूमिषु तथाङ्गमहीप्रदेशे ।
सौराष्ट्रिकेऽन्यतरधन्यमहीविभागे
शुद्धायसां कृतिवराः प्रवदन्ति जन्म ॥
तद्यथा, --
वाराणसेयाः सुस्निग्धास्त्रीक्ष्णधाराःसदङ्गिनः
।
लघवः सुखसन्धेया ज्ञेयाश्चाभेद्यशालिनः ॥
मागधाः कर्कशाः स्थूलधारा गूढतराङ्गिनः ।
गुरवो दुःखसन्धेयाः खड्गा ज्ञेया विचक्षणैः ॥
नेपालदेशप्रभवा निरङ्गा निश्चलाश्च ये ।
ज्ञेयाः सदङ्गा मलिना लघवः स्थूलधारिणः ॥
कालिङ्गा गुरवः स्वच्छा व्यक्ताङ्गास्तन्तुहेतवः
।
सौराष्ट्रा निर्म्मलाः स्निग्धाः सुव्यक्ताङ्गा भृशं
खराः ॥
सिंहलद्वीपजातानां चतुर्द्धा भेद उच्यते ।
केचित् सदङ्गा गुरवः कर्कशाः स्निग्धधारिणः
॥
केचित् सदङ्गा लघवः सुस्निग्धा स्थूलधारिणः
।

कांस्यध्वनिरयं खड्गः प्राह नागार्ज्जुनो
मुनिः ॥ २ ॥
अभ्रस्य लक्षणं पतितम् ॥ ३ ॥
ढक्काशब्द इवाभाति यस्मिन् खड्गे हते
ध्वनिः ।
ढक्काध्वनिरयं खड्गः सर्व्वशत्रुनिसूदनः ॥
४ ॥
काकस्वर इवाभाति यस्मिन् खड्गे हते
ध्वनिः ।
काकस्वरोऽयं खड्गः स्यात् श्रीयशःकुल-
नाशनः ॥ ५ ॥
तन्त्रीस्वरसमो यस्मिन् भवेत् खड्गे हते
ध्वनिः ।
तन्त्रीध्वनिरयं खड्गः कुलश्रीधननाशनः ॥
६ ॥
खरस्येव ध्वनिर्यस्मिन् खरध्वनिरयं मतः ।
श्रीयशोज्ञानविज्ञानजयतेजोविनाशनः ॥ ७
॥
प्रस्तरस्येव यः खड्गः स निन्द्यः खडग-
लक्षणे ॥ ८ ॥
गभीरतारध्वनिता खड्गस्याशुभलक्षणम् ।
उत्तानमन्द्रध्वनिता खड्गस्याशुभलक्षणम्
॥
अपाङ्गनेत्रहीनोऽपि खड्गः सुध्वनिरुत्तमः ।
अन्धः कुरूपो मनुजो यथा भुवि सुगायनः
॥
सर्व्वलक्षणसम्पन्नः खड्गो यो
ध्वनिवर्ज्जितः ।
स निन्द्यः सुन्दराङ्गोऽपि यथा
वाक्यविवर्ज्जितः ॥
नखेन वाथ दण्डेन तथा लौहशलाकया ।
लोष्टेन शर्कराभिर्व्वा ध्वनिविज्ञानमुच्यते ॥”
इति खड्गपरीक्षायां ध्वन्यध्यायोऽष्टमः ॥ *
॥

“दीर्घता लघुता चैव खरविस्तीर्णता
तथा ।
दुर्भेद्यता सुघटता खड्गानां
गुणसंग्रहः ॥
खर्व्वता गुरुता चैव मन्दता तनुता
तथा ।
सुभेद्यता दुर्घटता खड्गानां
दोषसंग्रहः ॥
इति निखिलमुदारमुक्तमत्र
बहुतन्त्रेषु निकृष्य खड्गयष्टेः ।
नृपतिरिति विचिन्त्य यो विधत्ते
स चिरतरां श्रियमुच्छ्रितां लभेत ॥”
इति युक्तिकल्पतरूक्तखड्गपरीक्षा
समाप्ता ॥

**तरसं**, क्ली, (तॄ + बाहुलकात् असच् ।) मांसम् ।

इत्यमरः । २ । ६ । ६३ ॥ (यथा,
कात्यायन-
श्रौतसूत्रे ।
“तरसमयाः पूर्ब्बोक्तभागाः ॥”
“तरसमया मांसमयाः ।” इति कर्कः
॥)

**तरस्थानं**, क्ली, (तराय अवतरणाय यत् स्थानम् ।

तरस्य स्थानं वा ।) घट्टः । इति
जटाधरः ॥

**तरस्वान्**, [त्] त्रि, (तरो बलं वेगो वा अस्त्य-

स्येति मतुप् । मस्य वः ।) शूरः । वेगी
।
इति व्याकरणम् ॥
(चतुर्थमनुपुत्त्रविशेषः ।
यथा, हरिवंशे । ७ । ८८ ।
“तरङ्गभीरुर्व्वुष्मश्च तरस्वानुग्र एव च
।
अभिमानी प्रवीरश्च जिष्णुः
सङ्क्रन्दनस्तथा ॥”)

**तरस्वी**, [न्] त्रि, (तरो वेगः बलं वास्त्यस्य ।

तरस् + “अस्मायामेधास्रजो विनिः
।” ५ । २ ।

|  |  | १२१ । इति विनिः ।) शूरः । वेगी । इत्यमरः ।<br>३ । ३ । १२७ । (यथा, भागवते । ८ । १० । ३१ ।<br>“राहुणा च तथा सोमः पुलोम्ना युयुधेऽनिलः ।<br>निशुम्भशुम्भयोर्देवी भद्रकाली तरस्विनी ॥”)<br>गरुडे वायौ च पुं । इति राजनिर्घण्टः ॥ |
|---|---|---|

**तरान्धुः**, पुं, (तराय तरणाय तरे तरणे वा अन्धुरिव अतिगभीरमध्यदेशत्वात् तथात्वम् ।) नौकाविशेषः । भड इति भाषा । तत्पर्य्यायः । होडः २ वहनम् ३ वार्व्वटः ४ वहित्रम् ५ । इति त्रिकाण्डशेषः ॥

**तरालुः**, पुं, (तराय तरणार्थं अलति पर्य्याप्नोतीति । अल + उन् ।) नौकाविशेषः । इति हारावली ॥

**तरिः**, स्त्री, (तरत्यनया इति । तॄ + “अच इः ।” उणां । ४ । १३८ । इति इः ।) नौका । इत्यमरः । १ । १० । १० ॥ (यथा, महाभारते । १ । १०० । ४८ ।
“साब्रवीद्दाशकन्यास्मि धर्म्मार्थं वाहये तरिम् ॥”)
दशा । वस्त्रादिपेटकः । इति हेमचन्द्रः ॥

**तरिकः**, पुं, (तराय तरणाय हितः । तॄ + ठन् ।) प्लवः । इति त्रिकाण्डशेषः ॥ (तरणे तरणनिमित्तकदेयशुल्केऽधिकारोऽस्त्यस्य । तरणशुल्कग्रहणाधिकारी । यथा, याज्ञवल्क्ये । २ । २६६ ।
“तरिकः स्थलजं शुल्कं गृह्णन् दाप्यः पणान् दश ॥”)

**तरिका**, स्त्री, (तरिक + टाप् ।) नौका । इति शब्दरत्नावली ॥

**तरिणी**, स्त्री, (तरस्तरणं कृत्यत्वेनास्त्यस्याः इति इनिः ङीप् च ।) नौका । इति हेमचन्द्रः ॥

**तरिता**, स्त्री, (तर + इतच् ।) तर्ज्जनी । इति शब्दचन्द्रिका ॥ गृञ्जनम् । गाँजा इति भाषा । यथा, कुलार्णवतन्त्रे ।
“सम्बिदा कालकूटञ्च ताम्रकूटञ्च धुस्तुरम् । अहिफेनं खर्ज्जुरसस्तारिका तरिता तथा ॥”

**तरिरथः**, पुं, (तरेर्नौकाया रथ इव तत्परि-

**तरुकूणिः**, पुं, (तरौ वृक्षे कूणयतीति । कूण + इन् ।) वाग्गुदपक्षी । इति त्रिकाण्डशेषः ॥

**तरुजीवनं**, क्ली, (तरोर्जीवनं जीवनकारणम् ।) वृक्षमूलम् । इति शब्दचन्द्रिका ॥

**तरुणं**, क्ली, (तॄ + “त्रो रश्च लो वा ।” उणां । ३ । ५४ । इति उनन् ।) कुब्जपुष्पम् । इति मेदिनी । णे, ४९ ॥

**तरुणः**, पुं, (तॄ + उनन् ।) स्थूलजीरकः । एरण्डः । इति राजनिर्घण्टः ॥

**तरुणः**, त्रि, (तरति प्लवते प्रमोदसलिले इति । तॄ + त्रो रश्च लो वा ।” उणां । ३ । ५४ । इति उनन् ।) युवा । इति मेदिनी । णे, ४९ । (यथा, महाभारते । १ । ४० । २६ ।
“तरुणस्तस्य पुत्त्रोऽभूत्तिग्मतेजा महातपाः ॥”)
नूतनः । इति धरणिः ॥ (यथा, छन्दोमञ्जर्य्याम् ।
“तरुणं सर्षपशाकं नवौदनं पिच्छिलानि दधीनि । स्वल्पव्ययेन सुन्दरि ! ग्राम्यजनोमिष्टमश्नाति ॥”)

**तरुणज्वरः**, पुं, (तरुणश्चासौ ज्वरश्चेति ।) सप्ताहावधिज्वरः । (यथा, चक्रदत्तः ।
“आसप्तरात्रं तरुणं ज्वरमाहुर्म्मनीषिणः ॥”

**तरुणदधि**, क्ली, (तरुणं तरुणलक्षणोक्तं दधीति ।) पञ्चदिनातीतदधि । इति वैद्यकम् ॥

अस्या गुणाः । शिशिरत्वम् । स्निग्धत्वम् । पित्तदाहज्वरमुखपाकतृष्णाविच्छर्द्दिनाशित्वम्। मधुरत्वञ्च । इति राजनिर्घण्टः ॥

**तरुणीकटाक्षमालः**, पुं, (तरुणीनां कटाक्षाणां माला यत्र ।) तिलकवृक्षः । इति राजनिर्घण्टः ॥

**तरुतूलिका**, स्त्री, (तरुस्थिता तूलिका चित्रशलाका इव । यद्वा, तरौ वृक्षे दोलयतीति । दुल क्षेपे + ण्वुल् । टापि अत इत्वम् । पृषोदरादित्वात् साधुः ।) वातुलिः । इति हारावली ॥ वादुड इति भाषा ॥ तरुदूलिकापि पाठः ॥

**तरुनखः**, पुं, (तरौ तरोर्वा नख इव ।) कण्टकः । इति हारावली ॥

**तरुभुक्**, [ज्] पुं, (तरुं भुनक्तीव । भुज + क्विप् ।) वन्दाकः । इति राजनिर्घण्टः ॥

**तरुमृगः**, पुं, (तरौ तिष्ठन् मृग इव । शाकपार्थिववत् मध्यपदलोपी समासः । यद्वा, तरु प्रियो मृगः पशुः ।) वानरः । इति शब्दरत्नावली ॥

**तरुरागं**, क्ली, (तरो रागो रक्तिमाभा यस्मात् ।) किशलयम् । नूतनपल्लवः । इति हारावली ॥

**तरुराजः**, पुं, (तरूणां राजा अत्युच्चत्वादस्य तथात्वम् । समासे टच् ।) तालवृक्षः । इति राजनिर्घण्टः ॥ (सर्व्वपूज्यत्वात् स्वर्लोकभोग्यत्वाच्च पारिजातपुष्पवृक्षः । यथा, हरिवंशे । १२४ । ५५ ।
“यदेतदाहृतं स्वर्गात् तत् त्वदर्थं मया विभो ! । देवोपभोग्यमेतद्धि तरुराजसमुद्भवम् ॥”)

**तरुरुहा**, स्त्री, (तरौ रोहतीति । रुह + कः । टाप् ।) बन्दाकः । इति राजनिर्घण्टः ॥

**तरुरोहिणी**, स्त्री, (तरुषु रोहतीति । रुह + णिनिः + ङीप् ।) वन्दाकः । इति राजनिर्घण्टः ॥

**तरुवल्ली**, स्त्री, (तरुषु वल्लीव तरुर्वल्लीव वा ।) जतुकालता । इति राजनिर्घण्टः ॥

**तरुशायी**, [न्] पुं, (तरौ तरुकोठरे शाखायां

चालनात्तथात्वम् ।) अरित्रम् । इति हारा-
वली ॥

**तरीः**, स्त्री, (तरत्यनया इति । तॄ + “अवितॄस्तृ-
तन्त्रिभ्य ईः ।” उणां । ३ । १५८ । इति ईः
।)
नौका । (यथा, माघे । ३ । ७६ ।
“तरीषु तत्रत्यमफल्गुभाण्डम् ॥”)
गदा । वस्त्रादिपेटकः । इत्युणादिकोषः ॥
धूमः । इति त्रिकाण्डशेषः ॥ द्रोणी । इति
जटाधरः ॥ दशा । इति मेदिनी । रे, ४० ॥

**तरीषः**, पुं, (तॄ + “कृतॄभ्यामीषण् ।” उणां । ४ ।
२६ । इति ईषण् ।) शोभनाकारः । भेलः ।
व्यवसायः । इत्युणादिकोषः ॥ समुद्रः ।
समर्थः ।
इति संक्षिप्तसारे उणादिवृत्तिः ॥ स्वर्गः । इति
मेदिनी । षे, ३७ ॥

**तरीषी**, स्त्री, (तरीष + संज्ञायां ङीष् ।) इन्द्र-
कन्या । इति मेदिनी । षे, ३८ ॥

**तरुः**, पुं, (तरति समुद्रादिकमनेनेति । तॄ +
“भृमृशीतॄचरीति ।” उणां । १ । ७ । इति
उः ।) वृक्षः । इत्यमरः । २ । ४ । ५ ॥ (यथा,
रघुः । ३ । ७० ।
“मुनिवनतरुच्छायां देव्या तया सह शिश्रिये
॥”)

“शुष्कं मांसं स्त्रियो वृद्धा
बालार्कस्तरुणं दधि ।
प्रभाते मैथुनं निद्रा सद्यःप्राणहराणि
षट् ॥”
इति चाणक्ये । ६४ ॥

**तरुणी**, स्त्री, (तरुण + गौरादित्वात् ङीष् ।)
द्वितीयवयाः स्त्री । (यथा, --
“ततस्तु तरुणी ज्ञेया
द्वात्रिंशद्वत्सरावधि ।
निदाघशरदोर्बाला हिता विषयिणी
मता ॥
तरुणी शीतसमये ॥”
‘नित्यम्बाला सेव्यमाना नित्यं
वर्द्धयते बलम् ।
तरुणी ह्रासयेच्छक्तिम् ॥”
“वृद्धोऽपि तरुणीं गत्वा
तरुणत्वमवाप्नुयात् ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ॥)
भूयोभूयः प्रवर्त्तमानरजाः स्त्री ।
इत्यमरटीका-
सारसुन्दरी ॥ तत्पर्य्यायः । युवती
२ । इत्य-
मरः । २ । ६ । ८ ॥ तलुनी ३
युवतिः ४ । इति
भरतः ॥ यूनी ५ दिक्करी ६
धनिका ७
धनीका ८ । इति शब्दरत्नावली ॥
गृहकन्या ।
दन्तीवृक्षः । चीडानामगन्धद्रव्यम् ।
पुष्पविशेषः ।
सेउती इति भाषा ॥ तत्पर्य्यायः ।
सहा २
कुमारी ३ गन्धाढ्या ४ चारुकेशरा
५ भृङ्गेष्टा ६
रामतरुणी ७ सुदला ८ बहुपत्रिका
९ भृङ्ग-
वल्लभा १० । इति राजनिर्घण्टः ॥
सेवती ११ ।
यथा, नारसिंहपुराणे ।
“चम्पकात् पुष्पशतकादशोकं
पुष्पमुत्तमम् ।

वा शेते इति । शी + णिनिः ।) पक्षी । इति
हारावली ॥

**तरुसारः**, पुं, (तरोः सारः ।) कर्पूरः । इति
हारावली ॥ (यथा, सुश्रुते चिकित्सित-
स्थाने ३५ अध्याये । “तत्रनेत्राणि सुवर्णरजत-
ताम्रायोरीतिदन्तशृङ्गमणितरुसारमयानि
श्लक्षाणीति ॥” कर्पूरशब्देऽस्य विवृतिर्ज्ञातव्या ॥)

**तरुस्था**, स्त्री, (तरौ तिष्ठतीति । स्था + कष्टाप्
च ।) वन्दाकः । इति राजनिर्घण्टः ॥

**तरूटः**, पुं, (तरोः ऊट इव ।) उत्पलकन्दः ।
अस्य गुणाः । गुरुत्वम् । विष्टम्भित्वम् । शीतल-
त्वञ्च । इति राजवल्लभः ॥ (यथा, चरके सूत्र-
स्थाने सप्तविंशेऽध्याये ।
“तरूटविसशालूकक्रौञ्चादनकशेरुकम् ।
शृङ्गाटकं कलोड्यञ्च गुरुविष्टम्भि शीतलम् ॥”)

**तर्क**, क दीप्तौ । इति कविकल्पद्रुमः ॥ (चुरां-
परं-अकं-सेट् ।) क, तर्कयति । वितर्कणेऽप्ययम् ।
(अत्र सकं ।) तर्कयत्यन्यगुणं सुधीः । इति
दुर्गादासः ॥

| | | |
|---|---|---|
| | अशोकात् पुष्पसाहस्रात्<br>सेवतीपुष्पमुत्तमम् ।<br>सेवतीपुष्पसाहस्रात् कुब्जकं<br>पुष्पमुत्तमम् ॥”<br>(यथा, भावप्रकाशस्य पूर्ब्बखण्डे<br>प्रथमे भागे ॥<br>“शतपत्री तरुण्युक्ता कर्णिका<br>चारुकेशरा ।<br>महाकुमारी गन्धाढ्या<br>लाक्षाकृष्णातिमञ्जला ॥” | |

**तर्कः**, पुं, (तर्क + भावे घञ् ।) आकाङ्क्षा । वितर्कः । व्यभिचारशङ्कानिवर्त्तकः । इति भाषापरिच्छेदः ॥ (यथा, महाभारते । ३ । १९९ । १०८ । "शुष्कतर्कं परित्यज्य आश्रयस्व श्रुतिं स्मृतिम् ॥") स च पञ्चविधः । यथा । आत्माश्रयः १ अन्यो- न्याश्रयः २ चक्रकः ३ अनवस्था ४ प्रमाण- वाधितार्थकः ५ । इति जगदीशः ॥ एषां लक्ष- णानि तत्तच्छब्दे द्रष्टव्यानि ॥ ऊहः । हेतु- शास्त्रम् । तत्तु मीमांसादि । इति मेदिनी । के, २५ । (यथा, मनुः । १२ । १०६ । "आर्षं धर्म्मोपदेशञ्च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्म्मं वेद नेतरः ॥" न्यायशास्त्रम् । यथा, नैषधे । "यत्काव्यं मधुवर्षिधर्षितपरास्तर्केषु यस्यो- क्तयः ॥" ज्ञानम् । यथा, महाभारते । १ । १६८ । १८ । "तं वै फलार्थिनं मन्ये भ्रातरं तर्कचक्षुषा ॥" अर्थवाद इति कर्कोपाध्यायः । यथा, अक्ताः शर्करा उपदधातीति विधिः श्रूयते । तत्राञ्जन- साधनं घृतं तैलं वा तन्मध्ये केनाक्ता इति संशये तेजो वै घृतमित्यर्थवादात् घृतेनाक्ता इति निर्णीयते । अतस्तर्कोऽर्थवादः ॥")

**तर्ककः**, पुं, (तर्केण आकाङ्क्षया कायति प्रकाशते इति । कै + कः ।) याचकः । इति हेमचन्द्रः ॥ (यथा, महाभारते । १२ । ४५ । ६ । "तथानुजीविनो भृत्यान् संश्रितानतिथीनपि । कामैः सन्तर्पयामास कृपणांस्तर्ककानपि ॥"

**तर्की**, [न्] त्रि, (तर्कयितुं शीलमस्य यद्वा तर्कय- तीति । तर्क + णिनिः ।) तर्कविशिष्टः । मीमां- सकः । यथा, -- "त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्म्मपाठकः । त्रयश्चाश्रमिणः पूर्ब्बे परिषत् स्याद्दशावरा ॥" इति मनुः । १२ । १११ ॥

**तर्कुः**, स्त्री, (कृत् + उः । निपातनात् साधुः ।) सूत्रनिर्म्माणयन्त्रम् । टेको इति भाषा ॥ तत्- पर्य्यायः । कपालनालिका २ । इति त्रिकाण्ड- शेषः ॥ तर्कुटी ३ सूत्रला ४ । इति हारावली ॥ (कुम्भकारस्य चक्राकारशिलाभाण्डम् । यथा, अनर्घराघवे । २ । ६ । "शङ्के सम्प्रति यावदभ्युदयते तत्तर्कुटङ्कोन्मृजा रज्यद्बिम्बरजश्छटावलयितो देवस्त्विषामीश्वरः ॥")

**तर्कुटं**, क्ली, (तर्कयति सूत्रोत्पादकतया शोभते इति । तर्क दीप्तौ + बाहुलकात् उटन् ।) कर्त्त- नम् । इति त्रिकाण्डशेषः ॥ काटनाकाटा इति भाषा ॥

**तर्कुटी**, स्त्री, (तर्कुट + स्त्रियां गौरादित्वात् ङीष् ।) तर्कुः । इति हारावली । २१३ ।

**तर्कुपिण्डः**, पुं, (तर्कुस्थितः पिण्डः । मध्यपदलोपि- समासः ।) तर्कुस्थितमृत्पिण्डः । टेकोर वाँटुल इति भाषा ॥ तत्पर्य्यायः । वर्त्तिनी २ । इति जटाधरः ॥ तर्कुपीठी ३ वर्त्तुला ४ । इति हारावली । २१३ ॥

इत्यमरः । २ । ६ । ८१ ॥ सा तु गर्भस्थस्य चतुर्भिर्म्मासैर्भवति । इति सुखबोधः ॥ (यथा, कथासरित्सागरे । १७ । ८८ । "तच्छ्रुत्वा श्वशुरं तं सा बधूः सोमप्रभा क्रुधा । विलोक्य भ्रामयामास यमाज्ञामिव तर्ज्जनीम् ॥")

**तर्ज्जिकः**, पुं, (तर्ज्जस्तर्ज्जनमस्त्यत्र । तर्ज्ज + ठन् ।) देशविशेषः । तत्पर्य्यायः । तायिकः २ । इति हेमचन्द्रः । ४ । २४ ॥

**तर्णः**, पुं, (तर्णोति तृणादिकं भक्षयतीति । तृण् भक्षणे + अच् ।) वत्सः । इति हेमचन्द्रः । ४ । ३२६ ॥

**तर्णकः**, पुं, (तर्ण एव । स्वार्थे कन् ।) सद्योजात- वत्सः । इत्यमरः । २ । ९ । ६१ ॥ कोमले वाछुर इति भाषा ॥ (यथा, राजतरङ्गिण्याम् । ५ । ४३६ । "म्लानक्षीरां वरां पत्नीं रुद्धद्वारां निपात्यते । आलिङ्ग्यमानां क्रन्दद्भिस्तर्णकैरिव दारकैः ॥" बालकः । यथा, अनर्घराघवे । २ । २३ । "मुनिविनियोगलूनप्ररूढमूछ्राद्बलानि बर्हींषि । गोकर्णतर्णकोऽयं तर्णोत्युपकण्ठकच्छेषु ॥")

**तर्णिः**, पुं, (तरणिः पृषोदरादित्वादलोपः ।) सूर्य्यः । प्लवः । इति शब्दार्थकल्पतरुः ॥

**तर्त्तरीकं**, क्ली, (तीर्य्यतेऽनेनेति । तॄ + "फर्फरीका- दयश्च ।" उणां । ४ । २० । इति ईकप्रत्ययेन निपातनात् साधुः ।) नौका । (तरतीति । कर्त्तरि ईकः ।) पारगे, त्रि । इति मेदिनी । के, १९१ ॥

**तर्द**, हिंसे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं- सेट् ।) तर्दति । इति दुर्गादासः ॥

**तर्दूः**, स्त्री, (तरति प्लवते इति । तॄ + "त्रो दुक् च ।" उणां । १ । ९१ । इति ऊः दुगागमश्च ।) दारुहस्तकः । इत्यमरः । २ । ९ । ३४ । काठेर हाता इति भाषा ॥

तर्कयतीति । तर्क + ण्वुल् ।)
तर्ककारकश्च ॥

**तर्कविद्या**, स्त्री, (तर्कोपदेष्ट्री विद्या तर्करूपा
या विद्या वा ।) न्यायविद्या । तत्पर्य्यायः ।
आन्वीक्षिकी २ । इत्यमरः । १ । ६ । ५ ॥
(यथा,
महाभारते । १३ । ३७ । १२ ।
"आन्विक्षिकीं तर्कविद्यामनुरक्तो
निरर्थिकाम् ॥)

**तर्कारी**, स्त्री, (तर्कं ऋच्छतीति । ऋ + कर्म्म-
ण्यण् ।" ३ । २ । १ । इत्यण् । ङीप् च ।)
जयन्तीवृक्षः । इत्यमरः । ४ । २ । ६५ ॥
(पर्य्यायोऽस्या यथा, वैद्यकरत्नमालायाम् ।
"वैजयन्ती च तर्कारी जयन्ती विजया जया
॥"
अस्या गुणा यथा, --
"तर्कारी वरुणं स्वादु सतिक्तं कफवातजित्
॥"
इति वाभटे सूत्रस्थाने षष्ठेऽध्याये ॥
अस्याः व्यवहारो यथा, --
"तर्कारी विश्वशिग्रुसुरसवत्सकनिम्बजैः ।
पत्रमूलफलैस्तोयं शृतमुष्णञ्च सेचनम् ॥"
इति चरके चिकित्सास्थाने सप्तविंशेऽध्याये
॥
इयं गणिकारिकापि वाच्या । तत्पर्य्याया
यथा,
"अग्निमन्थो जयः स स्याच्छ्रीपर्णी
गणिकारिका ।
जया जयन्ती तर्कारी नादेयी वैजयन्तिका
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**तर्किणः**, पुं, चक्रमर्दवृक्षः । इतिरत्नमाला ॥ तर्कि-
लोऽपि पाठः ॥ (चक्रमर्द्दशब्देऽस्य विवृति-
र्वख्याता ॥)

**तर्कुपीठी**, स्त्री, (तर्कुस्थिता पीठी स्वल्पो मृत्-
पिण्डः ।) तर्कुपिण्डः । इति हारावली ।
२१३ ॥

**तर्कुलासकः**, पुं, (लासयति शोभयतीति । लस
कान्तौ + णिच् + ण्वुल् । तर्कुः
सूत्रनिर्म्माण-
यन्त्रं तस्या लासकः ।) झल्लोलः । इति
हारा-
वली । २१३ ॥ खरसा इति भाषा ॥

**तर्कुशाणः**, पुं, (तर्कोः शाणः ।) सामकः । इति
त्रिकाण्डशेषः ॥ टेकोर शाण इति भाषा ॥

**तर्क्षुः**, पुं, (तरक्षुः पृषोदरादित्वात् साधुः ।)
तरक्षुः । इति शब्दरत्नावली ॥

**तर्क्ष्यः**, पुं, यवक्षारः । इति रत्नमाला ॥

**तर्ज्ज**, भर्त्सने । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-सकं-सेट् ।) तर्ज्जति । इति दुर्गादासः
॥

**तर्ज्ज**, क ङ भर्त्से । इति कविकल्पद्रुमः ॥ (चुरां-
आत्मं सकं-सेट् ।) क ङ, तर्ज्जयते ।
भर्त्स-
स्तर्ज्जनम् । तामतर्ज्जयदम्बरे । इति
रघुप्रयो-
गस्तु तर्ज्वनं तर्ज्जः । तर्ज्जं करोतीति ञौ
साध्यः ।
इति दुर्गादासः ॥

**तर्ज्जनं**, क्ली, (तर्ज्ज + भावे ल्युट् ।) भर्त्सनम् ।
यथा । अधीरायास्तर्ज्जनताडनादि । इति
रस-
मञ्जरी ॥ (यथाच कुमारे । ६ । ४५ ।
"भ्रूभेदिभिः सकम्पोष्ठैर्ललिताङ्गुलितर्ज्जनैः
।
यत्र कोपैः कृताः स्त्रीणामाप्रसादार्थिनः
प्रियाः ॥")

**तर्ज्जनी**, स्त्री, (तर्ज्यतेऽनयेति । तर्ज्ज भर्त्सने +
करणे ल्युट् । ततः स्त्रियां ङीप् ।) अङ्गुष्ठ-
समीपाङ्गुलिः । तत्पर्य्यायः । प्रदेशिनी २ ।

**तर्पणं**, क्ली, (तृप प्रीणने + भावे ल्युट् ।) तृप्तिः ।
प्रीणनम् । इत्यमरः । २ । ९ । ५६ ॥ (यथा,
कथासरित्सागरे । २६ । २३६ ।
"तत्राहूय तरोर्मूले वेतालं नृकलेवरे ।
पूजयित्वाकरोत्तस्य नृमांसबलितर्पणम् ॥")
यज्ञकाष्ठम् । इति हेमचन्द्रः ॥ (तृप्यन्ति पितरो
येन । तृप् + करणे ल्युट् ।) देवर्षिपितृमनु-
ष्याणां जलाञ्जलिदानेन तृप्तिसम्पादनम् । यथा,
"एवं स्नात्वा पितॄन् देवान् मनुष्यांस्तर्पयेन्नरः ।
नाभिमात्रे जले स्थित्वा चिन्तयेदूर्द्ध्वमानसः ॥
आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम् ।
त्रींस्त्रीञ्जलाञ्जलीन्दद्यादाकाशेदक्षिणे तथा ॥
वसित्वा वसनं शुक्लं स्थले चास्तीर्णवर्हिषि ।
विधिज्ञास्तर्पणं कुर्य्युर्न पात्रे तु कदाचन ॥
यदपां क्रूरमांसन्तु यदमेध्यन्तु किञ्चन ।
अशान्तं मलिनं यच्च तत् सर्व्वमपगच्छतु ॥
गृहीत्वानेन मन्त्रेण तोयं सव्येन पाणिना ।
प्रक्षिपेद्दिशि नैरृत्यां रक्षोपहतयेऽद्भुतम् ॥
अनाक्षिकन्तु यद्भुक्तं पापाद्यच्च प्रतिग्रहम् ।

दुष्कृतं यच्च मे किञ्चिद्वाङ्मनःकायकर्म्मभिः ॥
पुनातु मे तदिन्द्रस्तु वरुणः सबृहस्पतिः ।
सविता च भगश्चैव मुनयः सनकादयः ॥
आब्रह्मस्तम्बपर्य्यन्तं जगत् तृप्यत्विति ब्रुवन्
।
क्षिपेदपोऽञ्जलोंस्त्रींस्तु कुर्व्वन् सङ्क्षेपतर्पणम्
॥”
इति गारुडे २१५ अध्यायः ॥
तर्पणविशेषस्तु गारुडे २१९ अध्याये तथा वह्निपुराणे नित्याह्निकस्नानविधिनामाध्याये च
द्रष्टव्यः ॥ * ॥ जीवत्पितृकस्य तर्पणनिषेधो यथा, --
“दर्शस्नानं गयाश्राद्धं तिलैस्तर्पणमेव च ।
न जीवत्पितृको भूप ! कुर्य्यात्
कृत्वाघमाप्नुयात् ॥”
इति कालिकापुराणे ८९ अध्यायः ॥
महायज्ञविशेषः । तत्तु पितृयज्ञः । पितॄणां कव्यजलादीनाञ्च विधिना जलान्नदानेन तृप्ति-सम्पादनम् । इत्यमरटीकायां भरतः ॥ “तत् द्विविधं प्रधानं अङ्गञ्च । तत्राद्यं यथा, --
‘तर्पणञ्च शुचिः कुर्य्यात् प्रत्यहं स्नातको द्विजः ।
देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम्
॥’
इति शातातपः ॥
विधवामधिकृत्य काशीखण्डे ।
‘तर्पणं प्रत्यहं कार्य्यं भर्त्तुः कुशतिलोदकैः ।
तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्ब्बकम्
॥’
द्बितीयं यथा, ब्रह्मपुराणे ।
‘नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते
।
तर्पणन्तु भवेत्तस्य अङ्गत्वेन व्यवस्थितम् ॥’
तर्पणाकरणे दोषः । यथा, योगियाज्ञवल्क्यः ।
“नास्तिक्यभावाद्यश्चापिन तर्पयति वै सुतः
।
पिबन्ति देहरुधिरं पितरो वै जलार्थिनः ॥”
तस्य निषिद्धस्थानादि यथा । “नेष्टकारचिते स्थाने पितृंस्तर्पयेत् ।” इति शङ्खलिखितौ ॥
उद्धृतोदके तु ।
‘पात्राद्वा जलमादाय शुचौ पात्रान्तरे क्षिपेत् ।
जलपूर्णेऽथवा गर्त्ते न स्थले तु विवर्ह्हिषि ॥’
इति हारीतः ॥
‘यद्युद्धृतैः प्रसिञ्चेत्तु तिलान् संमिश्रयेज्जले
।
अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः
॥’
इति योगियाज्ञवल्क्यः ॥
“अङ्गुष्ठानामिकाभ्याञ्च दक्षिणस्येतरात्
करात् ।
तिलान् गृहीत्वा पात्रस्थान् ध्यायन्
सन्तर्पयेत्
पितॄन् ॥”
इति नारदः ॥ * ॥
देवतर्पणं यथा, --
‘ब्रह्माणं तर्पयेत् पूर्ब्बं विष्णुं रुद्रं प्रजापतिम् ।
देवा यक्षास्तथा नागा गन्धर्व्वाप्सरसोऽसुराः
॥
क्रूराः सर्पाः सुपर्णाश्च तरवो जम्भकाः
स्वगाः ।
विद्याधरा जलाधारास्तथैवाकाशगामिनः ॥
निराहाराश्च ये जीवाः पापे धर्म्मे रताश्च ये ।
तेषामाप्यायनायैतद्दीयते सलिलं मया ॥’
इदं उपवीतिना प्राङ्मुखेन दैवतीर्थेन कार्य्यम्
॥
मनुष्यतर्पणं यथा, --
‘सनकश्च सनन्दश्च तृतीयश्च सनातनः ।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा ॥
सर्व्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा ॥’
इदं निवीतिना मनुष्यतीर्थेन सामगेन प्रत्यङ्-मुखेन कार्य्यम् । अन्यवेदिना उदङ्मुखेन कार्य्यम् ॥ * ॥ तत ऋषितर्पणं प्राङ्मुखेन उपवीतिना दैवतीर्थेन कार्य्यम् । ततो दिव्य-पितृतर्तणं दक्षिणामुखेन प्राचीनावीतिना सतिलजलेन पितृतीर्थेन कार्य्यम् । ततः पितृ-
तर्पणम् ॥ * ॥ भीष्माष्टम्यां भीष्मतर्पणम् । तस्य
मन्त्रो यथा, --
‘वैयाघ्रपद्यगोत्राय साङ्कृतिप्रवराय च ।
सूर्य्यशुक्रादिवारेऽपि न दोषस्तिलतर्पणे ।
तीर्थे तिथिविशेषे च कार्य्यं प्रेते च सर्व्वदा
॥’
इति स्मृतिः ॥
‘तीर्थे तिथिविशेषे च गङ्गायां प्रेतपक्षके ।
निषिद्धेऽपि दिने कुर्य्यात् तर्पणं
तिलमिश्रितम् ॥’
इति मरीचिवचनम् ॥ * ॥
तिलाभावे प्रतिनिधिर्य्यथा ।
‘तिलानामप्यभावे तु सुवर्णरजतान्वितम् ।
तदभावेऽपि सिञ्चेत्तु दर्भैर्मन्त्रेण चाप्यथ ॥’
इति याज्ञवल्क्यः ॥ * ॥
अशक्तौ । आब्रह्मस्तम्बपर्य्यन्तं जगत्तृप्यतु
।
इत्यनेन त्रोंस्तर्पयेत् ।” इत्याह्निकतत्त्वम् ॥
काशीखण्डमते तु ।
“आब्रह्मस्तम्बपर्य्यन्तं देवर्षिपितृमानवाः ।
तृप्यन्तु सर्व्वे पितरो मातृमातामहादयः ॥
अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ।
आब्रह्मभुवनाल्लोकादिदमस्तुतिलोदकम्
॥” * ॥
जन्माष्टम्यां तर्पणस्य फलं यथा, --
“तस्यां तिथौ वारिमात्रं पितॄणां यः
प्रयच्छति ।
गयाश्राद्धं कृतं तेन शताब्दं नात्र संशयः ॥”
इतिब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डम् ॥

**तर्पणी**, स्त्री, (तृप्यतेऽनयेति । तृप + करणे ल्युट् ।
स्त्रियां ङीप् ।) गुरुस्कन्धवृक्षः । स च श्लेष्मणा-
वृक्षः । इति शब्दमाला ॥ (सर्व्वजनतृप्ति-प्रदायित्वात् गङ्गा । यथा, काशीखण्डे ।
२९ । ७२ ।
“तर्पणी तीर्थतीर्था च त्रिपथा त्रिदशेश्वरी
॥”
प्रीतिप्रदे, त्रि । यथा, सुश्रुते सूत्रस्थाने ४६
अध्याये ।
“क्षुत्तृट्श्रमग्लानिहरी पेया वातानुलोमनी ।
विलेपी तर्पणी हृद्या ग्राहिणी बलवर्द्धिनी
॥”)

**तर्पणेच्छुः**, पुं, (तर्पणमिच्छतीति । इष + उः

'यन्न सर्व्वाय चोत्सृष्टं यच्चाभोज्यनिपानजम् ।
तद्वर्ज्यं सलिलं तात ! सदैव पितृकर्म्मणि ॥'
इति मार्कण्डेयपुराणम् ॥ * ॥
तस्य विधानं यथा । स्नातश्चार्द्रवासा देवपितृ-
तर्पणमम्भःस्थ एव कुर्य्यात् परिवर्त्तितवासाश्चेत्
तीरमुत्तीर्य्येति । इति विष्णुः ॥ तीर्थे विशेषो यथा, मत्स्यपुराणे ।
'तिलोदकाञ्जलिर्द्देयो जलस्थैस्तीर्थवासिभिः ॥'
तीर्थे स्थलस्थश्चेत् तर्पणं करोति तदा जलैक-
चरणः आचम्य कुर्य्यात् तस्य जले च तर्पणमवि-
रुद्धम् । स्थले तर्पणं दर्भेषु कार्य्यम् । यथा, --
'प्रागग्रेषु सुरांस्तर्प्येत् मनुष्यांश्चैव मध्यतः ।
पितॄंश्च दक्षिणाग्रेषु दद्यादिति जलाञ्जलीन् ॥'
इति आग्नेयपुराणम् ॥
अशुचिदेशे तु ।
'यत्राशुचिस्थलं वा स्यादुदके देवतापितॄन् ।
तर्पयेत्तु यथाकाममप्सु सर्व्वं प्रतिष्ठितम् ॥'
इति विष्णुः ॥
'प्रादेशमात्रं उद्धृत्य सलिलं प्राङ्मुखः सुरान् ।
उदङ्मनुष्यांस्तर्प्येत पितॄन् दक्षिणतस्तथा ॥'
इति दक्षः ॥

अपुत्त्राय ददाम्येतत् सलिलं भीष्मवर्म्मणे ॥'
प्रार्थनमन्त्रो यथा, --
'भीष्मः शान्तनवो वीरः सत्यवादी जितेन्द्रियः ।
आभिरद्भिरवाप्नोतु पुत्त्रपौत्त्रोचितां क्रियाम् ॥'
प्रेतचतुर्द्दश्यां यमतर्पणं यथा, --
'यमाय धर्म्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्व्वभूतक्षयाय च ॥
औडुम्बराय दघ्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥'
प्रत्येकनामभिस्त्रींस्त्रीनञ्जलीन्दद्यात् ॥ * ॥
तिलतर्पणनिषेधो यथा, --
'रविशुक्रदिने चैव द्वादश्यां श्राद्धवासरे ।
सप्तम्यां जन्मदिवसे न कुर्य्यात् तिलतर्पणम् ॥'
इति स्मृतिः ॥
'संक्रान्त्यां निशि सप्तम्यां रविशुक्रदिने तथा ।
श्राद्धे जन्मदिने चैव न कुर्य्यात्तिलतर्पणम् ॥'
इति मत्स्यपुराणम् ॥
तत्र प्रतिप्रसवो यथा, --
'अयने विषुवे चैव संक्रान्त्यां ग्रहणेषु च ।
उपाकर्म्मणि चोत्सर्गे युगादौ मृतषासरे ॥

निपातनात् साधुः ।) भीष्मः । इति शब्द-
रत्नावली ॥ तर्पणाकाङ्क्षिणि, त्रि ॥

**तर्पिणी**, स्त्री, (तर्पयति प्रीणयतीति । तृप् +
णिच् + णिनिः । ततो ङीप् ।) पद्मचारिणी ।
इति शब्दचन्द्रिका ॥

**त(र्ब्ब)र्ब**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) रेफोपधः । तर्बति । इति दुर्गा-
दासः ॥

**तर्बटः**, पुं, (तर्बति द्रुतं गच्छतीति । तर्ब +
बाहुलकात् अटन् ।) वत्सरः । इति शब्द-
रत्नावली ॥ चक्रमर्द्दः । इति राजनिर्घण्टः ॥

**तर्म्म**, [न्] क्ली, (तरतीति । तृ + "सर्व्व-
धातुभ्यो मनिन् ।" उणां ४ । १४४ । इति
मनिन् ।) यूपाग्रम् । इत्यमरः । २ । ७ । १९ ॥

**तर्षः**, पुं, (तृष पिपासायाम् + भावे घञ् ।) अभि-
लाषः । (यथा, महाभारते । १२ । २०४ । ६ ।
"तर्षच्छेदो न भवति पुरुषस्येह कल्मषात् ।
निवर्त्तते तदा तर्षः पापमन्तगतं यदा ॥")
तृष्णा । इत्यमरः । २ । ९ । ५५ ॥ (यथा,
राजतरङ्गिण्याम् । ३ । ४८० ।
"लवणार्णवपानेन तर्षोत्कर्षमिवोद्वहन् ।

यत्प्रतापो रिपुस्त्रीणां सनेत्राम्भोऽभजन्मुखम् ॥”
यथा, वैद्यकचक्रपाणिसंग्रहे तृष्णाधिकारे ।
“काश्मर्य्यशर्करायुक्तं चन्दनोशीरपद्मकम् ।
द्राक्षामधुकसंयुक्तं पित्ततर्षे जलं पिबेत् ॥”
तीर्य्यतेऽनेनेति । तॄ प्लवनतरणयोः + “वृतॄ-
वदिहनीति ।” उणां ३ । ६२ । इति सः ।)
प्लवः । (तीर्य्यतेऽसौ इति कर्म्मणि सः ।) समुद्रः ।
इत्युणादिकोषः ॥ सूर्य्यः । इति संक्षिप्तसारे उणादिवृत्तिः ॥

**तर्षणं**, क्ली, (तृष + भावे ल्युट् ।) पिपासा ।
इति जटाधरः ॥ (अभिलाषः । यथा, भाग-
वते । ३ । २५ । ७ ।
“निर्व्विण्णा नितरां भूमन्नसदिन्द्रियतर्षणात् ।
येन संभाव्यमानेन प्रपन्नान्धं तमः प्रभो ! ॥”)

**तर्षितः**, त्रि, (तर्षोऽस्य जातः । तर्ष + तारकादि-
त्वात् इतच् ।) तृषितः । इति त्रिकाण्ड-
शेषः ॥ (यथा, भागवते । ९ । ६ । २७ ।
“राजा तद्यज्ञसदनं प्रविष्टो निशि तर्षितः ।
दृष्ट्वा शयानान् विप्रांस्तान् पपौ सन्त्रजलं स्वयम् ॥”
जाताभिलाषः । यथा, रामायणे । २ । १०४ । १ ।
“वशिष्ठः पुरतः कृत्वा दारान् दशरथस्य च ।
अभिचक्राम तं देशं रामदर्शनतर्षितः ॥”)

**तल**, गतौ । (भ्वां-परं-सकं-सेट् ।) सौत्रधातु-
रयम् । तालिशः । इति दुर्गादासः ॥

**तल**, कि प्रतिष्ठितौ । इति कविकल्पद्रुमः ॥ (चुरां-
पक्षे भ्वां-परं-अकं-सेट् ।) कि, तालयति तलति
व्रतम् । संपूर्णं स्यादित्यर्थः । इति दुर्गादासः ॥

**तलं**, क्ली पुं, (तलतीति । तल प्रतिष्ठायाम् +

**तलं**, क्ली, (तलतीति । तल + अच् ।) ज्याघात-
वारणा । (यथा, --
“ततः समुत्पेतुरुदायुधास्ते
महीक्षितो बद्धतलाङ्गुलित्राः ॥”)
इति महाभारते । १ । १९० । १५ ।
काननम् । कार्य्यवीजम् । इति मेदिनी । ले,
२१ ॥ गर्त्तः । इति त्रिकाण्डशेषः ॥ पादतलस्य
मध्यम् । इति हेमचन्द्रः । ३ । २८२ ॥ (यथा,
भागवते । ८ । २० । २३ ।
“रसामचष्टाङ्घ्रितलेऽथ पादयो-
र्महीं महीध्रान् पुरुषस्य जङ्घयोः ।
पतत्त्रिणो जानुनि विश्वमूर्त्ते-
रूर्व्वोर्गणं मारुतमिन्द्रसेनः ॥”
हस्तस्य मध्यमपि । यथा, मनुः । ४ । १४३ ।
“पृष्ट्वैतानशुचिर्नित्यमद्भिः प्राणानुपस्पृशेत् ।
गात्राणि चैव सर्व्वाणि नाभिं पाणितलेन तु ॥”)

**तलः**, पुं, तालवृक्षः । चपेटः । (यथा, मार्क-
ण्डेये । ९० । १६ ।
“स मुष्टिं पातयामास हृदये दैत्यपुङ्गवः ।
देव्यास्तञ्चापि सा देवी तलेनोरस्यताडयत् ॥”
करतलाघातजन्यशब्दः । यथा, महाभारते ।
३ । २७७ । २४ ।
ततः प्रहसिताः सर्व्वे तेऽन्योन्यस्य तलान् ददुः ॥”)
त्सरुः । सव्यपाणिना तन्त्रीघातः । इति मेदिनी ।
ले, २१ ॥ स्वभावः । आधारः । इति हेम-
चन्द्रः ॥ महादेवः । यथा, महाभारते शिव-
सहस्रनामस्तोत्रे । १३ । १७ । १२८ ।
“तलस्तालः करस्थाली ऊर्द्ध्वसंहननो महान् ॥”)

**तलकं**, क्ली, (तलेन गभीरगर्त्तेन कायतीति ।

त्रिपुरारिणा त्रिलोक्याः शं चिकीर्षुणा निदग्ध-
स्वपुरत्रयस्तत्प्रसादात् लब्धपदो मायाविनामा-
चार्य्यो महादेवेन परिरक्षितो विगतसुदर्शन-
भयो महीयते ।” इति श्रीभागवतम् ॥

**तलिका**, स्त्री, (तलं वक्षसोऽधोभागो बन्धनस्थान-
त्वेनास्त्यस्या इति । तल + ठन् ।) तलसारकम ।
इति हेमचन्द्रः । ४ । ३१७ ॥

**तलितं**, क्ली, भृष्टमांसम् । यथा, --
“शुद्धमांसविधानेन मांसं सम्यक् प्रसाधितम् ।
पुनस्तदाज्ये संभृष्टं तलितं प्रोच्यते बुधैः ॥”
अस्य गुणाः । यथा, भावप्रकाशे । १ । १ ।
“तलितं वलमेधाग्निमांसौजःशुक्रवृद्धिकृत् ।
तर्पणं लघु सुस्निग्धं रोचनं दृढताकरम् ॥”

**तलिनं**, क्ली, (तल्यते शयनार्थं गम्यतेऽत्र । तल +
“तलिपुलिभ्यां च ।” उणां । २ । ५३ । इति
इनन् ।) शय्या । इति हारावली । १७२ ॥

**तलिनः**, त्रि, (तल + इनन् ।) विरलः । स्तोकः ।
स्वच्छः । इति मेदिनी । ने, ७० ॥ दुर्ब्बलः ।
इति हेमचन्द्रः ॥

**तलिमं**, क्ली, (तल + बाहुलकात् इमन् ।) कुट्टिमम् ।
तल्पम् । चन्द्रहासः । वितानकः ॥ इति मेदिनी ।
मे, ४४ ॥

**तलुनः**, पुं, (तरति वेगेन गच्छतीति । त + “त्रोरश्च
लो वा ।” उणां । ३ । ५४ । इति उनन् रस्य
लश्च ।) पवनः । युवा । इति मेदिनी । ने, ७० ॥

**तलुनी**, स्त्री, (तलुन + गौरादित्वात् ङीष् ।)
तरुणी । युवती । इति शब्दरत्नावली ॥

**तलेक्षणः**, पुं, (तले अधोभागे ईक्षणं दृष्टिरस्य ।)
शूकरः । इति शब्दार्थकल्पतरुः ॥

**तलोदरी**, स्त्री, (तलमतिगभीरमपूर्य्यतयेतिभावः
उदरं यस्याः । बह्वच्कत्वेऽपि “नासिकोदरौष्ठ-
जङ्घादन्तकर्णशृङ्गाच्च ।” ४ । १ । ५५ । इति

पचाद्यच् ।) स्वरूपम् । यथा महीतलम् । (यथाच माघे । २ । १११ ।
"कृत्वा कृत्यविदस्तीर्थेष्वन्तः प्रणिधयः पदम् ।
विदाङ्कुर्व्वन्तु महतस्तलं विद्विषदम्भसः ॥"
"तलं स्वरूपं प्रमाणमिति यावत् ॥" इति तट्टीकायां मल्लिनाथः ॥) अनूद्र्ध्वम् । इति मेदिनी ।
ले, २१ ॥ (अधः । इत्यमरः । ३ । ३ । २०१ ॥
यथा, मनुः । २ । ५९ ।
"अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते ॥"
यथा च शान्तिशतके । २ । १९ ।
"वासो वल्कलमास्तरः किशलयान्योक-स्तरूणां तलं
मूलानि क्षतये क्षुधां गिरिनदीतोयं तृषाशान्तये ॥"
हस्तादीनासुपरिभागः । यथा, --
"तलं प्रत्यङ्गुलीनां याः कण्डरा बाहुपृष्ठतः ।
बाह्वोः कर्म्मक्षयकरी -- ॥"

इति माधवकृतरुग्विनिश्चये वातव्याधौ ॥

"तलं हस्तस्योपरिभागः तलशब्दोऽत्र उपरि-
वचनः यथा भूतलमिति गयदासः । तेनाय-
मर्थः, बाह्वोः पृष्ठं बाहुपृष्ठं तत आरभ्य हस्त-
तलं लक्ष्यीकृत्येति ॥" इति विजयरक्षितकृत-
व्याख्यानम् ॥)

कै + कः ।) पुष्करिणी । इति हारावली । ४२ ॥
तलाओ इति हिन्दी भाषा ॥

**तलप्रहारः**, पुं, (तलेन पाणितलेन प्रहारो यस्य ।)

चपेटः । तत्पर्य्यायः । चर्व्वा २ । इति हारा-
वली । १६७ ॥ (यथा, मार्कण्डेये । ९० । १७ ।
"तलप्रहाराभिहतो निपपात महीतले ॥
तलस्य प्रहारः ।) तलाघातः ॥

**तलसारकं**, क्ली, (तले सारो यस्य कप् ।)

घोटकस्यान्नभोजनपात्रम् । इति केचित् ॥
घोटकस्य वक्षस्थलबन्धनरज्जुः । तत्पर्य्यायः ।
वक्रपट्टः २ तलिका ३ । इति हेमचन्द्रः । ४ ।
३१७ ॥

**तलहृदयं**, क्ली, (तलस्य पादतलस्य हृदयमिव ।)

पादतलस्य मध्यम् । इति हेमचन्द्रः । ३ । २८२ ॥

**तला**, स्त्री, (तल + स्त्रियां टाप् ।) गोधा ।

ज्याघातवारणा । इत्यमरः । २ । ८ । ८४ ।

**तलाची**, स्त्री, (तलमञ्चतीति । अन्च + क्विप् ।

स्त्रियां ङीष् ।) नलनिर्म्मितकटः । इति हारा-
वली । १७७ ॥

**तलातलं**, क्ली, (नास्ति तलं यस्येति अतलम् ।

तलादपि अतलम् । अत्यन्तनिम्नतयास्य तथा-
त्वम् ।) पातालविशेषः । इति शब्दमाला ॥ तत्र मयनामा
दानवेन्द्रस्त्रिपुराधिपतिर्भगवता

ङीष् । आद्ययोर्बह्वज्लक्षणो निषेधो बाध्यते
पुरस्तादपवादन्यायात् ।) भार्य्या । इति शब्दार्थ-
कल्पतरुः ॥

**तलोदा**, स्त्री, (तले उदकं यस्याः । उदकशब्द-

स्योदादेशश्च ।) नदी । इति त्रिकाण्डशेषः ॥

**तल्कं**, क्ली, (तल् + बाहुलकात् कन् ।) वनम् ।

इति त्रिकाण्डशेषः ॥

**तल्पं**, क्ली पुं, (तल्यते शयनार्थं गम्यतेऽत्र । तल +

"खष्पशिल्पशष्पवाष्परूपपर्प्तल्पाः ।" उणां । ३ । २८ । इति पप्रत्ययेन निपातनात् साधुः ।)
शय्या । (यथा, मनुः । ३ । ३ ।
"स्रग्विणं तल्प आसीनमर्हयेत् प्रथमं गवा ॥")
अट्टालिका । दाराः । इत्यमरभरतौ ॥ (यथा, सम्बर्त्तकसंहितायाम् । १५८ ।
"पितृव्यदारगमने भ्रातृभार्य्यागभे तथा ।
गुरुतल्पव्रतं कुर्य्यात् नान्या निष्कृतिरुच्यते ॥")

**तल्पकीटः**, पुं, (तल्पे शय्यायां जातः कीटः ।)

कीटविशेषः । छारपोका इति भाषा । यथा,
"जन्मैकं तल्पकीटश्च तदा शूद्रो भवेद्ध्रुवम् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृणाजम्मखण्डम् ॥

**तल्पनं**, क्ली, (तल्प इवाचरति । तल्प + क्विप् +
ल्युश्च ।) करिपृष्ठम् । इति भूरिप्रयोगः ॥
पृष्ठवंशस्य मांसम् । इति हारावली ॥

**तल्लं**, क्ली, (तस्मिन् भूदेशे लीयते इति । ली +
डः ।) विलम् । इति त्रिकाण्डशेषः ॥

**तल्लः**, पुं, (तस्मिन् लीयते इति । ली + डः ।)
जलाधारविशेषः । इति मेदिनी । ले, २२ ॥
तलाओ इति हिन्दीभाषा ॥

**तल्लजः**, पुं, (तत् प्रसिद्धं यथास्यात् तथा लजतीति ।
लज + अच् ।) प्रशस्तः । इत्यमरः ॥ अयं
अजहल्लिङ्गः समासे उत्तरपदे भवति । यथा
कुमारीतल्लजः । इत्यमरटीका ॥

**तल्ली**, स्त्री, (तत् प्रसिद्धं यथा तथा लसतीति । लस
+ डः स्त्रियां ङीष् च ।) तरुणी । इति
मेदिनी । ले, २२ ॥

**तवक्षीरं**, क्ली, (तु + अच् । तवं क्षीरमिति नित्य-
कर्म्मधारयः ।) तोयाक्षीर इति ख्यातम् । तत्-
पर्य्यायः । पयःक्षीरम् २ यवजम् ३ यवजोद्-
भवम् ४ । अस्य गुणाः । मधुरत्वम् । शिशिर-
त्वम् । दाहपित्तक्षयकासकफश्वासास्रदोषनाशि
त्वञ्च । इति राजनिर्घण्टः ॥

**तवक्षीरी**, स्त्री, (तवक्षीर + ङीष् ।) गन्धपत्रा ।
इति राजनिर्घण्टः ॥

**तवराजः**, पुं, (तु + अच् तवः पूर्णः सन् राजते ।
राज + अच् ।) यवासशर्करा । इति राज-
निर्घण्टः ॥ (यवासशर्कराशब्देऽस्य विवृति-
र्ज्ञातव्या ॥)

**तवराजोद्भवखण्डः**, पुं, (उद्भवत्यस्मादिति । उत् +
भू + अच् । उद्भव उत्पत्तिस्थानम् । तवराज
उद्भवोऽस्य । यद्वा, तवराजात् उद्भवतीति ।
उद् + भू + अच् ।) ततः कर्म्मधारयः । यवास-
शर्कराभवखण्डः । तत्पर्य्यायः । सुधामोदकजः २
खण्डजोद्भवजः ३ सिद्धमोदकः ४ अमृतसारजः
५
सिद्धखण्डः ६ । अस्य गुणाः । दाहतापतृष्णा-
तंस्यते । कि, तंसयति तंसति हारो
जनम् ।
इति दुर्गादासः ॥

**तस**, य उ इर उत्क्षेपे । इति कविकल्पद्रुमः ॥
(भ्वां-परं-सकं-सेट् । उदित्वात्
क्त्वावेट् ।) य,
तस्यति धूलिं वायुः । उ, तसित्वा
तस्त्वा ।
इर्, अतसत् । अतासीत् । अतसीत्
। अस्मात्
पुषादित्वात् नित्यं ङ इत्यन्ये । इति
दुर्गादासः ॥

**तसरः**, पुं, (तनोतीति । तन + "तनृषिभ्यां
क्सरन् ।"
उणां ३ । ७५ । इति सरन् किच्च ।)
त्रसरः ।
सूत्रवेष्टनम् । इत्युणादिकोषः ॥
(यथा, वाजस-
नेयसंहितायाम् । १९ । ८३ ।
"रसं परिसुता न रोहितं
नग्नहुर्धीरस्तसरं न वेम ॥")

**तस्करः**, पुं, (तत् करोतीति । कृ +
"दिवाविभेति ।"
३ । २ । २१ । इत्यस्य सूत्रस्य "किं
यत्तद्-
बहुषु कृञोज्विधानम् ।" इति
वार्त्तिकोक्तेरच् ।
ततः । "तद्बृहतोः करपत्योः इति
सुट्दलोपौ ।
चौरः । पृक्काशाकः । इति रत्नमाला
॥ मदन-
वृक्षः । इति जटाधरः ॥ कर्णः ।
यथा, रघुः ।
१ । २७ ।
"व्यावृत्ता यत् परस्वेभ्यः श्रुतौ
तस्करता स्थिता ॥"
"तस्करः कर्णचौरयोरिति
कोषान्तरम् ।" इति
तट्टीका ॥

त्रिकाण्डशेषः ॥ ताटङ्कः ३ । इति द्विरूपकोष-
टीकायां भरतः ॥ कर्णिका ४ तालपत्रम् ५ ।
इत्यमरः ॥ ताडपत्रम् ६ । इति हेमचन्द्रः ।
३ । ३२० ॥ कर्णमुकुरः ७ । इति जटाधरः ॥
(यथा, मनसाध्याने ।
"ताडङ्काङ्गदमेखलागुणरणन्मञ्जीरतांप्रापितां
कैरातीं वरदाभयोद्यतकरां देवीं त्रिनेत्रां
भजे ॥")

**ताडनं**, क्ली, (ताडि + भावे ल्युट् ।) आघातः ।
यथा, शृङ्गारतिलके ।
"श्लाघ्यं नीरसकाष्ठताडनशतं श्लाघ्यः
प्रचण्डातपः ॥"
यथाच, गारुडे ९६ अध्याये ।
"श्रुतिस्मृत्युक्तमाचारं कुर्य्यान्मर्म्माणि न
स्पृशेत् ।
न निन्दाताडने कुर्य्यात् सुतं शिष्यञ्च ताडयेत्
।
आचरेत् सर्व्वदा धर्म्मं तद्विरुद्धन्तु नाचरेत् ॥"
अपि च चाणक्ये । १२ ।
"लालने बहवो दोषास्ताडने बहवो गुणाः ।
तस्मात् पुत्रञ्च शिष्यञ्च ताडयेन्न तु लालयेत्
॥"

**ताडनी**, स्त्री, (ताड्यतेऽनयेति । ताडि + करणे
ल्युट् स्त्रियां ङीप् ।) अश्वताडनयष्टिः । तत्-
पर्य्यायः । चर्म्मयष्टिः २ कशा ३ भीमा ४
चर्म्म-
लालिका ५ । इति शब्दमाला ॥

**ताडपत्रं**, क्ली, (तालस्य पत्रमिव । लस्य डत्वम् ।)
ताडङ्कः । इति हेमचन्द्रः । ३ । ३२० ॥

**ताडिः**, स्त्री, (ताडयति पत्रैः शोभते इति ।
तड दीप्तौ + णिच् + इन् ।) वृक्षविशेषः । इत्य-
मरटीकायां भरतः ॥ ताडियात् इति भाषा ॥

**ताडी**, स्त्री, (ताडिः कृदिकारादिति वा ङीष् ।)
पत्रद्रुमः । इत्यमरमेदिनीकरौ ॥ तत्पर्य्यायः ।
ताडिः २ ताली ३ तालिः ४ । इति भरतः ॥
ताडियात् इति भाषा ॥ (यथा, राजतर-
ङ्गिण्याम् । ३ । ३२८ ।

मोहमूर्च्छाश्वासनाशित्वम् । इन्द्रियतर्पणत्वम् । शीतत्वम् । सदासुमधुरत्वञ्च । इति राजनिर्घण्टः ॥

**तविषः**, पुं, (तव + "तवेर्णिद्वा ।" उणां । १ । ४९ । इति टिषच् ।) स्वर्गः । समुद्रः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**तविषी**, स्त्री, (तविष + संज्ञायां ङीष् ।) नदी । देवकन्या । भूमिः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ (बलम् । यथा, ऋग्वेदे । १ । ३५ । ४ ।
"कृष्णरजांसि तविषीं दधानः ॥")

**तष्टः**, त्रि, (तक्ष + क्तः । पृषोदरात् कलोपे साधुः ।) तनूकृतः । इत्यमरः । ३ । १ । ९९ ।

**तष्टा**, [ऋ] पुं, (तक्षकार्श्ये + तृच् पृषोदरात् कलोपे साधुः ।) त्वष्टा । छुतार इति भाषा । विश्वकर्म्मा । आदित्यविशेषः । इत्यमरटीकायां रमानाथः ॥

**तस**, इ कि अलङ्कृतौ । इति कविकल्पद्रुमः ॥ (चुरां-पचे भ्वां-परं-सकं-सेट् ।) इ, कर्म्मणि

**तस्करस्नायुः**, पुं, (तस्करस्य पृक्काशाकस्य स्नायुरिव ।) काकनासालता । इति राजनिर्घण्टः ॥

**तस्करी**, स्त्री, (तद् + कृ + चौरान्यर्थे टः टित्त्वात् ङीप् । सुटि दलोपे च साधुः ।) कोपना नारी । इति शब्दार्थकल्पतरुः ॥

**ताटङ्कः**, पुं, (ताडङ्क + पृषोदरात् साधुः ।) ताडङ्कः । इति द्विरूपकोषटीकायां भरतः ॥
(यथा, देवीभागवते । १२ । ६ । ७१ ।
"तलोदरी तिरोभावा ताटङ्कप्रियवादिनी ॥")

**ताटस्थ्यं**, क्ली, (तटस्थ + भावे ष्यञ् ।) उदासीनत्वम् । निकटस्यत्वम् । यथा, ताटस्थ्येन उदासीनत्वेन इति । तटस्थो निकटस्थः प्रसिद्धपूर्ब्बप्रणय इति च काव्यप्रकाशटीकायां चण्डिदासः ॥

**ताडः**, पुं, (तड + भावे घञ् ।) ताडनम् । शब्दः । मुष्टिमेयतृणादि । इति मेदिनी । डे, १४ ॥
पर्व्वतः । इति हेमचन्द्रः ॥

**ताडका**, स्त्री, राक्षसीविशेषः । सा सुकेतुयक्षकन्या ब्रह्मवरेण सहस्रहस्तिबलयुता धुन्धुदैत्यपुत्रस्य सुन्दस्य भार्य्या मारीचमाता सुन्दे निहते पुत्रेण सह अगस्त्यमृषिं धर्षयितुमुद्यता तस्य शापात् सपुत्रा राक्षसत्वं गता श्रीरामेण निहता । इति रामायणम् ॥

**ताडकाफलं**, क्ली, (तारकेव नक्षत्रमिव फलमस्य ।

"शुष्यत्तमालपत्राणि शीर्णताडीदलानि च ।
तत्सेनार्णवतीराणि चक्रेऽरिस्त्रीमुखानि च ॥")
आभरणविशेषः । इति दुर्गसिंहः ॥

**ताडुलः**, पुं, (ताडयतीति । तड + णिच् + उल ।) ताडयिता । इति संक्षिप्तसारे उणादिवृत्तिः ॥

**ताड्यमानः**, पुं, (ताड्यते असौ । ताडि + कर्म्मणि शानच् ।) पटहादिः । इति त्रिकाण्डशेषः ॥
ताडनयुक्ते, त्रि । (यथा, कुमारे । १ । ४५ ।
"अप्यन्यपुष्टा प्रतिकूलशब्दा श्रोतुर्व्वितन्त्रीरिव ताड्यमाना ॥")

**ताण्डवं**, क्ली, पुं, नृत्यम् । इत्यमरः । १ । ७ । १० ॥ ताण्डेन मुनिना कृतं ताण्डि नृत्यशास्त्रं तदस्यास्तीति । इति भरतः ॥ तण्डुना प्रोक्तमिति स्वामी ॥
("पुंनृत्यं ताण्डवं प्राहुः स्त्रीनृत्यं लास्यमुच्यते ॥"
इति शब्दार्थचिन्तामणिधृतवचनेन पुंनृत्यम् ॥)
तृणविशेषः । उद्धतनृत्यम् । इति मेदिनी । वे, ३६ ॥ (यथा, मत्स्यपुराणे । १ । १ ।
"प्रचण्डताण्डवाटोपे प्रक्षिप्ता येन दिग्गजाः ।
भवन्तु विघ्नभङ्गाय भवस्य चरणाम्बुजाः ॥")

| | | |
|---|---|---|
| | रस्य डत्वम् ।) बृहदेला । इति<br>रत्नमाला ॥<br><br>**ताडङ्कः**, पुं, (तालं तालपमिव अङ्क्यते लक्ष्यते<br><br>इति । अङ्क + घञ् । लस्य डत्वम् ।<br>शकन्ध्वा-<br>दित्वात् साधुः ।) कर्णभूषा ।<br>कानतडका इति<br>भाषा ॥ तत्पर्य्यायः । कर्णदर्पणः २ ।<br>इति | |

**ताण्डवतालिकः**, पुं, (ताण्डवे शिवनृत्यकाले
यस्तालः स कार्य्यतयास्त्यस्येति । ठन् ।) नन्दी ।
स शिवद्वारी । इति त्रिकाण्डशेषः ॥

**ताण्डवप्रियः**, पुं, (ताण्डवं उद्धतनृत्यं प्रियमस्य ।)
शिवः । इति शब्दमाला ॥

**ताण्डि**, क्ली, (ताण्डेन मुनिना कृतम् । ताण्ड +
बहुलवचनात् इञ् ।) नृत्यशास्त्रम् । इत्यमर-
टीकायां भरतः ॥

**तातः**, पुं, (तनोति विस्तारयति गोत्रादिकमिति ।
तन + "दुतनिभ्यां दीर्घश्च ।" उणां । ३ । ९० ।
इति क्तः दीर्घश्च । अनुदात्तेति नलोपः ।)
पिता । इत्यमरः । २ । ६ । २८ । (यथा,
रघुः । ९ । ७५ ।
"हा तातेति क्रन्दितमाकर्ण्यविषण्ण-
स्त स्यान्विष्यन् वेतसगूढं प्रभवं सः ।
शल्यप्रोतं प्रेक्ष्य सकुम्भं मुनिपुत्त्रं
तापादन्तःशैल्य इवासीत् क्षितिपोऽपि ॥")
अनुकम्प्यः । इति मेदिनी । ते, २१ ॥ (यथा,
भागवते । १ । १४ । ३९ ।
"कच्चित्तेऽनामयं तात ! भ्रष्टतेजा विभासि मे ।
अलब्धमानोऽवज्ञातः किं वा तात ! चिरो-
षितः ॥")
पूज्ये, त्रि । इति शब्दरत्नावली ॥ (यथा, रघौ ।
१ । ७२ । वशिष्ठं प्रति दिलीपोक्तिः ।
"तस्मात् मुच्ये यथा तात ! संविधातुं तथार्हसि ।
इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः ॥")
वक्तुरिच्छा । (यथा, भाषापरिच्छेदे । ८४ ।
"आकाङ्क्षा वक्तुरिच्छा तु तात्पर्य्यं परिकीर्त्ति-
तम् ॥")

**तादात्म्यं**, क्ली, (तदात्मनो भावः । तदात्मन् +
ष्यञ् ।) तत्स्वरूपम् । अभेदसम्बन्धः । इति
न्यायशास्त्रम् ॥

**तादृक्**, [श्] त्रि, स इव दृश्यतेऽसौ । (तद् +
दृश् + "त्यदादिषु दृशेरनालोचने कञ्च ।" ३ ।
२ । ६० । इति क्विन् । "आ सर्व्वनाम्नः ।"
६ । ३ । ९१ । इति आत्वम् ।) तादृशः ।
ताहार मत इति भाषा ॥ इति मुग्धबोधम् ॥
(यथा, पञ्चतन्त्रे । १ । २७९ ।
"यादृशैः सेव्यते भृत्यैर्यादृशांश्चोपसेवते ।
कदाचिन्नात्र सन्देहस्तादृग् भवति पूरुषः ॥")

**तादृक्षः**, त्रि, (स इव दृश्यते इति । तद् + दृश्
+ त्यदादिष्वित्यत्र क्सोऽपि वाच्य इति क्सः ।)
तादृक् । इति मुग्धबोधम् ॥ (यथा, राज-
तरङ्गिण्याम् । ४ । २४२ ।
"ततः प्रभृति तादृक्षयोग्यार्थप्राप्तिलालसः ।
परिहासपुरे चक्रे स्थिरां गुर्व्वीं सपर्व्विणीम् ॥")

**तादृशः**, त्रि, (स इव दृश्यते इति । तद् +
दृश् + "त्यदादिष्विति ।" ३ । २ । ६० । इति
कञ् ।) तादृक् । (यथा, पञ्चतन्त्रे । १ । ४३५ ।
"उपदेशो न दातव्यो यादृशे तादृशे जने ॥")

**तानं**, क्ली, (तन दु ञ विस्तारे + भावे घञ् ।)

**तापः**, पुं, (तप + घञ् ।) सन्तापः । (यथा,
भागवते । ३ । १४ । ४८ ।
"नैदाघजं तापमिवोडुराजः ॥")
कृच्छ्रम् । इति मेदिनी । पे, ७ ॥ (त्रिविघ
दुःखम् । यथा देवीभागवते । १ । १ । ७ ।
"दीर्घायुर्भव सर्व्वज्ञ ! तापत्रयविवर्ज्जितः ॥")

**तापकः**, पुं, (तापयतीति । तप + णिच् + ण्वुल् ।)
ज्वरः । इति शब्दरत्नावली ॥ तापकर्त्तरि त्रि ॥

**तापत्यः**, पुं, (तपती सूर्य्यकन्या तस्या अपत्यं
पुमान् । तपती + ण्यः ।) अर्ज्जुनः । इति
पुराणम् ॥ (यथा, महाभारते । ५ । ४६ । २ ।
"तस्मात्तापत्य ! यत्किञ्चिन्नृणां श्रेय इहेप्सितम् ।
तस्मिन् कर्म्मणि योक्तव्या दान्तात्मानः पुरोहिताः ॥"
तपतीवंशोद्भवकौरवमात्रम् । यथा, तत्रैव ।
१ । १७१ । ६९ ।
"सोऽहं त्वयेह विजितः संख्ये तापत्यवर्द्धन ! ॥"
तपत्या उपाख्यानम् । तपती + ष्यञ् । तप-
त्युपाख्याने, क्ली । यथा, तत्रैव । १ । २ । १०९ ।
"तापत्यमथ वाशिष्टमौर्व्वञ्चाख्यानमुत्तमम् ॥"
एतदुपाख्यानन्तु महाभारते आदिपर्व्वणि १७२
अध्याये द्रष्टव्यम् ॥)

**तापनः**, पुं, (तापयतीति । तप + णिच् + कर्त्तरि
ल्युः ।) सूर्य्यः । इति हेमचन्द्रः । २ । ९ ॥
(यथा, महाभारते । ५ । ४६ । २ ।
"शुक्राद्ब्रह्म प्रभवति ब्रह्म शुक्रेण वर्द्धते ।
तच्छुक्रं ज्योतिषां मध्ये तप्तं तपति तापनम् ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥")
कामबाणुः । इति जटाधरः ॥ (यदुक्तं, --
"सम्मोहनोन्मादनौ च शोषणस्तापनस्तथा ।
स्तम्भनश्चेति कामस्य पञ्च बाणाः प्रकीर्त्तिताः ॥")
सूर्य्यकान्तमणिः । इति राजनिर्घण्टः ॥ (क्ली,
नरकविशेषः । यथा, याज्ञवल्क्ये । ३ । २२४ ।
"असिपत्रवनञ्चैव तापनञ्चैकविंशकम् ॥"
भावे ल्युट् । तापकरणम् । यथा, सुश्रुते । १ । ४१ ।
"तद्दहनपचनदारणतापनप्रकाशनप्रभावर्ष्णकर-
मिति ॥") तापयितरि, त्रि ॥ (यथा, महा-
भारते । १ । १९ । २१ ।

**तातगुः**, पुं, (तातस्य पितुरिव गौर्वाचकशब्दो यत्र । गवान्तत्वात् गौण्ये ह्रस्वः ।) क्षुद्रतातः । पितृव्यः । जनकस्य हिते, त्रि । इति मेदिनी । गे, ३६ ॥

**तातजनयित्र्यौ**, स्त्री, (तातश्च जनयित्री च ते ।) मातापितरौ । इत्यमरः ॥ द्विवचनान्तोऽयम् ॥

**ताततुल्यः**, त्रि, (तातस्य पितुस्तुल्यः ।) पितृसमः । तत्पर्य्यायः । मनोजवसः २ । इति हेमचन्द्रः । ३ । १५२ ॥ मनोजवः ३ पितृसन्निभः ४ । इत्यमरः । तातलः ५ इति मेदिनी ॥

**तातनः**, पुं, (तातं मनोहरं यथा तथा नृत्यतीति । बृत् + बाहुलकात् डः ।) खञ्जनपक्षी । इति त्रिकाण्डशेषः ॥

**तातलः**, पुं, (तापं लातीति । ला + कः । पृषोदरादित्वात् पस्य तः ।) रोगः । पाकः । लौहकूटः । मनोजवः । इति मेदिनी । ले, ९८ ॥ तप्तमात्रे, त्रि । इत्यजयपालः ॥

**तातिः**, पुं, पुत्त्रः । इति जटाघरः ॥

**तात्कालिकः**, त्रि, (तत्काले भवः । तत्काल + "आपदादिपूर्ब्बपदात्कालान्तात् ।" ४ । २ । ११६ । इत्यस्य वार्त्तिकोक्त्या ठञ् ।) तत्कालभवः । यथा, शुद्धितत्त्वे शङ्खः ।
"ततः श्राद्धमशुद्धौ तु कुर्य्यादेकादशे तथा ।
कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः ॥"

**तात्पर्य्यं**, क्ली, (तत्परस्य भावः । तत्पर + विस्तारः । ज्ञानविषयः । इति शब्दार्थकल्पतरुः ॥

**तानः**, पुं, (तन्यते गीतमनेनेति । तन + घञ् ।) गानाङ्गविशेषः । यथा, सङ्गीतदामोदरे ।
"विस्तार्य्यन्ते प्रयोगा यैर्मूर्च्छनाशेषसंश्रयाः ।
तानास्तेऽप्यूनपञ्चाशत् सप्तस्वरसमुद्भवाः ॥
तेभ्य एव भवन्त्यन्ये कूटतानाः पृथक् पृथक् ।
ते स्युः पञ्चसहस्राणि त्रयस्त्रिंशच्छतानि च ॥"

**तानवं**, क्ली, (तनोर्भावः । तनु + "इगन्ताच्च लघुपूर्ब्बात् ।" ५ । १ । १३१ । इत्यण् ।) गात्रे तनुता । यथा, उज्ज्वलनीलमणिः ।
"तानवत् तनुता गात्रे दौर्ब्बल्यभ्रमणादिकृत् ॥"
(यथा, आर्य्यासप्तशत्याम् । ३९३ ।
"परपतिनिर्द्दयकुलटाशोषित शठ ! नेर्ष्यया न कोपेन ।
दग्धममतोपतप्ता रोदिमि तव तानवं वीक्ष्य ॥")

**तानूरः**, पुं, (तन् + बाहुलकात् ऊरण् ।) पयसां भ्रमः । आवर्त्तः । इति भूरिप्रयोगः ॥

**तान्तः**, त्रि, (तम + क्तः ।) श्रान्तः । इति शब्दार्थकल्पतरुः ॥ (यथा, प्रद्युम्नविजये । २ अङ्के ।
"पान्थं श्रान्तिनितान्ततान्तमतुलं सन्तोषयत्यामृशन्
यत्रात्यन्तघनच्छदैर्व्विटपिभिश्छन्ने निरस्तातपे ॥")

**तान्त्रिकः**, त्रि, (तन्त्रं सिद्धान्तं अधीते वेद वा । तन्त्र + "उक्थादित्वात् ठक् ।) ज्ञातसिद्धान्तः । शास्त्रतत्त्वज्ञः । इत्यमरः । २ । ८ । १५ ॥ तन्त्रशास्त्रवेत्ता तत्सम्बन्धी च ॥ (यथा, भागवते । ८ । ६ । ९ ।
"ततोऽम्बराच्चिन्तितमात्रमागतं महाप्रभं चक्रममित्रतापनम् ॥")

**तापसं**, क्ली, तमालपत्रम् । इति राजनिर्घण्टः ॥ तेजपात इति भाषा ॥

**तापसः**, त्रि, (तपोऽस्त्यस्येति । तपस् + "अण्च ।" ५ । २ । १०३ । इति अण् । यद्वा, तपः शीलमस्य । "छत्रादिभ्यो णः ।" ४ । ४ । ६२ । इति णः ।) तपस्वी । इत्यमरः । २ । ७ । ४२ ॥ (यथा, मनुः । ६ । २७ ।
"तापसेष्वेव विप्रेषु यात्रिकं भैक्षमाहरेत् ॥"
तपःसम्बन्धी । यथा, गोः रामायणे । २ । ५२ । ५ ।
"तापसं व्रतमाश्रित्य ततो गुहसुवाच ह ॥")
पुं, दमनकवृक्षः । वकपक्षी । इति राजनिर्घण्टः ॥ (इक्षुविशेषः । यथा, सुश्रुते । १ । ४५ ।

"कान्तारस्तापसेक्षुश्च काष्ठेक्षुः सूचिपत्रकः ॥"
"इत्येता जातयः स्थौल्यात् गुणान् वक्ष्याम्यतः परम् ॥"
"कान्तारतापसाविक्षू वंशकानुगुणौ मतौ ॥")

**तापसतरुः**, पुं, (तापसप्रियस्तरुर्वृक्षः ।) इङ्गुदी-
वृक्षः । इत्यमरः । २ । ४ । ४६ ॥ (इङ्गुदीशब्देऽस्य विवरणं ज्ञातव्यम् ॥)

**तापसद्रुमः**, पुं, (तापसप्रियो द्रुमः ।) इङ्गुदी-
वृक्षः । इति हेमचन्द्रः । ४ । २०९ ॥ (पर्य्यायोऽस्य यथा, --
"इङ्गुदोऽङ्गारवृक्षश्च तिक्तकस्तापसद्रुमः ॥"
इति, भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**तापसद्रुमसन्निभा**, स्त्री, (तापसद्रुमस्य सन्निभा
समा ।) गर्भदात्रीक्षुपः । इति राजनिर्घण्टः ॥

**तापसप्रियः**, पुं, (तापसानां प्रियः ।) प्रियाल-
वृक्षः । इति राजनिर्घण्टः ॥ (इङ्गुदीवृक्षः ।
यथा, वैद्यकरत्नमालायाम् ।
"पीतपुष्पोऽङ्गारपुष्प इङ्गुदी तापसप्रियः ॥")

**तापसप्रिया**, स्त्री, (तापसानां प्रिया ।) द्राक्षा ।
इति राजनिर्घण्टः ॥ (द्राक्षाशब्देऽस्या गुणा-
दयो ज्ञातव्याः ॥)

**तापहरी**, स्त्री, (तापं अरुचिजन्यसन्तापं हर-
तीति । हृ + बाहुलकात् टः । स्त्रियां ङीप् ।)
व्यञ्जनविशेषः । यथा, --
"घृते हरिद्रासंयुक्ता माषाणां भर्जयेद्वटीः ।
तण्डुलांश्चापि निर्धौतान् सहैव परिभर्जयेत् ॥)
सिद्धियोग्यं जलं तत्र प्रक्षिप्य कुशलः पचेत् ।
लवणार्द्रकहिङ्गूनि मात्रया तत्र निःक्षिपेत् ॥
एषां सिद्धिं समायाता प्रोक्ता तापहरी बुधैः ॥"
अस्या गुणाः ।
"तापी पयोष्णी निर्व्विन्ध्या क्षिप्रा च ऋषभा नदी ।
बिन्ध्यपादप्रसूतास्ताः सर्व्वाः शीतजलाः शुभाः ॥"
इयं सह्यपादोद्भवा इति विष्णुपुराणम् । २ । ३ । ११ ॥
"तापी तापा च गोलोमी गोमती शालिता मही ।
सरस्वती युता नद्यो नर्म्मदा पश्चिमानुगाः ॥
आसां जलं घनं शीतं पित्तघ्नं कफकृत्तथा ।
वातदोषहरं हृद्यं कण्डुकुष्ठविनाशनम् ॥"
इति हारीते प्रथमे स्थाने सप्तमेऽध्याये ॥)
यमुना । इति त्रिकाण्डशेषः ॥

**तापी**, [न्] (तापोऽस्यास्तीति । ताप + "अत
इनिठनौ" ५ । २ । ११५ । इति इनिः ।)
बुद्धः । इति त्रिकाण्डशेषः ॥ तापयुक्ते, त्रि ॥

**ताप्यं**, क्ली, (तापे हितम् । ताप + यत् ।) धातु-
माक्षिकम् । इति रत्नमाला ॥ हेमचन्द्रे पुंलिङ्गो-
ऽयम् । ४२१ ॥ (यथा, भावप्रकाशे ।
"ताप्यस्य पलत्रितयं द्वे लोहश्रावणीकायाः ॥")

**ताप्यकं**, क्ली, (ताप्यमेव । स्वार्थे कन् ।) माक्षि-
कम् । इति राजनिर्घण्टः ॥ (माक्षिकशब्दे विवृतिरस्य ज्ञेया ॥)

**ताप्युत्थसंज्ञकं**, क्ली, (ताप्युत्थासंज्ञा यस्य । कप् ।)
माक्षिकधातुः । इति रत्नमाला ॥

**तामः**, पुं, (ताम्यत्यनेनेति । तम + करणे घञ् ।)
भीषणः । दोषः । इत्यजयपालः ॥

**तामरं**, क्ली, (तामं म्लानिं रातीति । रा + कः ।)
जलम् । घृतम् । इति भरतधृतरुद्रः ॥

सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥
यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।
प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥
यातयामं गतरसं पूतिपर्य्युषितञ्च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥
विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥
मूढग्राहेणात्मनो यत् पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥
अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञानं तत्तामसमुदाहृतम् ॥"
इति श्रीभगवद्गीतायां १७ अध्यायः ॥ * ॥
किञ्च तत्रैव १८ अध्याये ।
"नियतस्य तु सन्न्यासः कर्म्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः ॥
यत्तु कृत्स्नवदेकस्मिन् कार्य्ये सक्तमहेतुकम् ।
अतत्त्वार्थवदल्पञ्च तत्तामसमुदाहृतम् ॥
अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म्म यत्तत्तामसमुच्यते ॥
अयुक्तः प्राकृतस्तब्धः शटो नैकृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्त्ता तामस उच्यते ॥
अधर्म्मं धर्म्ममिति या मन्यते तमसावृता ।
सर्व्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ ! तामसी ।
यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्म्मेधा धृतिः सा तामसी मता ॥
यदग्रे चानुबन्धे च सुखमोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥"

**तामसः**, पुं, (तमस्तमोगुणः प्रधानत्वेनास्त्यस्येति ।
अण् ।) सर्पः । खलः । इति मेदिनी । से, २५ ॥
उलूकः । इति राजनिर्घण्टः ॥ चतुर्थमनुः ।
अस्मिन्मन्वन्तरे हरिनामा विष्णोरवतारः ।
त्रिशिखनामा इन्द्रः । वैधृतयो देवाः । ज्योति-
र्घामादयः सप्तर्षयः । वृषख्यातिनरादयो मनु-
सुताः । इति श्रीभागवतम् ॥ * ॥ तमोगुण-
युक्ते, त्रि ॥ (यथा, मनुः । १२ । ३३ ।
"लोभः स्वप्नोऽधृतिः क्रौर्य्यं नास्तिक्यं भिन्न-
वृत्तिता ।
याचिष्णुता प्रमादश्च तामसं गुणलक्षणम् ॥")

"भवेत्तापहरी वल्या वृष्या श्लेष्माणमाचरेत् ।
बृंहणी तर्पणी रुच्या गुर्व्वी तत्र गुणाः स्मृताः ॥"
ताहरी इति लोके । इति भावप्रकाशः ॥
तापहारिण्यां त्रि ॥

**तापिञ्छः**, पुं, (तापिनं सन्तप्तं छदति आच्छादयतीति । छद् + अन्येष्वपीति डः । पृषोदरादित्वात् साधुः ।) तमालवृक्षः । इत्यमरः । २ । ४ । ६८ ॥ (यथा, गीतगोविन्दे । ११ । ११ ।
"व्यक्ष्णोर्निक्षिपदञ्जनं श्रवणयोस्तापिञ्छगुच्छावलीम् ॥"
क्ली, तापिञ्छस्य पुष्पम् । फले लुगिति तद्धितलुक् । द्विहीनं प्रसवे सर्व्वमिति नपुंसकत्वम् । तापिञ्छपुष्पम् । यथा, माघे । १ । २२ ।
"प्रफुल्लतापिञ्छनिभैरभीषुभिः
शुभैश्च सप्तच्छदपांशुपाण्डुभिः ॥")

**तापिञ्जं**, क्ली, (तापिनं जयतीति । जि + डः ।) धातुमाक्षिकम् । इति राजनिर्घण्टः ॥

**तापिञ्जः**, पुं, तापिञ्छः । इत्यमरटीकायां भरतः ॥

**तापी**, स्त्री, (तापयतीति । तप + णिच् + अच् । गौरादित्वात् ङीष् ।) तापिनी नदी । सा पश्चिमवाहिनी बिन्ध्याचले प्रसिद्धा । इति राजनिर्घण्टः ॥ (यथा, मात्स्ये । ११३ । २७ ।

**तामरसं**, क्ली, (तामरे जले सस्तीति । सस् + डः । यद्वा, बाहुलेकात् अमेरप्यसच् । तस्य णित्त्वञ्च । धातोस्तुगागमश्च । णित्वात् वृद्धिः । इत्युज्ज्वलदत्तः । ३ । ११७ ॥) पद्मम् । (यथा, राजेन्द्रकर्णपूरे । ५४ ।
"जाता तामरसोदरे भगवतो धातुः कृतार्था स्थितिः ॥")
सारसः । इत्यमरः । १ । १० । ४० ॥ स्वर्णम् । ताम्रम् । इति मेदिनी । से, ५३ ॥ (द्वादशाक्षरच्छन्दोविशेषः । तस्य लक्षणादिकं छन्दःशब्दे द्रष्टव्यम् ॥)

**तामलकी**, स्त्री, भूम्यामलकी । इत्यमरः । २ । ४ । १२७ ॥ (यथा, सुश्रुते उत्तरतन्त्रे ३९ अध्याये ।
"कटुकेन्द्रयवोशीरसिंही तामलकीघनैः ॥")

**तामलिप्तं**, क्ली, देशविशेषः । तमलुक् इति भाषा ॥ तत्पर्य्यायः । दामलिप्तम् २ तामलिप्ती ३ तमालिनी ४ स्तम्बपूः ५ विष्णुगृहम् ६ । इति हेमचन्द्रः । ४ । ४५ ॥ तमोलिप्ती ७ वेलाकूलम् ८ तमालिका ९ । इति त्रिकाण्डशेषः ॥

**तामलिप्ती**, स्त्री, देशविशेषः । तमलुक् इति भाषा ॥ तत्पर्य्यायः । दामलिप्तम् २ तामलिप्ती ३ तमालिनी ४ स्तम्बपूः ५ विष्णुगृहम् ६ । इति हेमचन्द्रः । ४ । ४५ ॥ तमोलिप्ती ७ वेलाकूलम् ८ तमालिका ९ । इति त्रिकाण्डशेषः ॥

तामसमुनयो यथा । कणादः १ गौतमः २ शक्त्रिः ३ उपमन्युः ४ जैमिनिः ५ दुर्व्वासाः ६ मृकण्डुः ७ बृहस्पतिः ८ भार्गवः ९ जमदग्निः १० ॥ तामसशास्त्राणि यथा । असुरमोहनार्थशिवकृतशैवपाशुपतादि १ कणादकृतनग्ननीलपटादि २ ब्राह्मणरूपिभगवद्कृतबौद्धशास्त्रम् ३ जैमिनिकृतनिरीश्वरसांख्यम् ४ ॥ तामसपुराणानि यथा । मात्स्यम् १ कौर्म्मम् २ लैङ्गम् ३ शैवम् ४ स्कान्दम् ५ आग्नेयम् ६ ॥ तामसस्मृतयो यथा । गौतमम् १ बार्हस्पत्यम् २ सामुद्रम् ३ यमम् ४ शाङ्ख्यम् ५ औशनसम् ६ ॥ * ॥ राजसतामसकर्म्माणि यथा, --
"यत् शैवं दैवतं पैत्रमौपदैवं तथाध्वरम् ।
शाक्तं शैवं गाणपत्यं यागहोमादिकं तथा ॥

| | | |
|---|---|---|
| | **तामसं**, त्रि, (तम एव । तमस् + स्वार्थे अण् ।) प्रकृतिगुणविशेषः । तद्धर्म्मा यथा, -- “त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा । | |

पौरोहित्यं याजनञ्च देवल्कं ग्रामयाजकम् ।
विष्णुसेवापराधञ्च तथा नामापराधकम् ॥
असत्प्रतिग्रहं देवि ! साङ्कल्पमाभिचारिकम् ।
पशुजीवादिहननं पातकञ्चोपपातकम् ॥
अतिपापं महापापमनुपातकमेव च ।
लोभं मोहमहङ्कारं कामं क्रोधं मदन्तथा ॥
एतद्यदपरं कर्म्म गर्हितञ्च वरानने ! ।
राजसं तामसं प्रोक्तं मया च मुनिभिः सदा ॥”
इति पाद्मोत्तरखण्डम् ॥

**तामसिकं**, त्रि, (तमसा तमोगुणेन निर्वृत्तम् ।
तमस् + ठञ् ।) तामसम् । तमोगुणकार्य्यम् ॥

**तामसी**, स्त्री, (तमोऽन्धकारः प्राधान्येन अस्ति
अस्याम् । तमस् + अण् । स्त्रियां ङीष् ।)
निशा । दुर्गा । इति मेदिनी । से, २५ ॥ जटा-
मांसी । इति राजनिर्घण्टः ॥ (तमोगुणसम्ब-
न्धिनी । यथा, देवीभागवते । ३ । ८ । ५ ।
“साात्त्विकी राजसी चैव तामसी च तथा परा ।
श्रद्धा तु त्रिविधा प्रोक्ता मुनिभिस्तत्त्वदर्शिभिः
॥”)

**तामिस्रं**, क्ली, (तमिस्रं अन्धकारततिरस्त्यस्येति ।
तमिस्र + अण ।) अन्धकारमयनरकम् । इति
मनुः ॥ परवित्तापत्यकलत्रापहर्त्ता
यमदूतैर्निपा-
त्यते यत्र । इति श्रीभागवतम् ॥
(अन्धकारमये,
त्रि । यथा, महाभारते । ३ । १६२ । १० ।
“तामिस्रं प्रथमं पक्षं वीतशोकभयो वस ॥”
अन्धकारविचारिणि । यथा, रघुः । १५ । २ ।
“लवणेन विलुप्तेज्यास्तामिस्रेण तमभ्ययुः ॥”)

**तामिस्रः**, पुं, (तमिस्रं तमोगुणोत्थः क्रोधः
प्रचुरतयास्त्यस्येति । अण् ।)
भोगेच्छाप्रतिघाते
क्रोधः । इति श्रीभागवतटीकायां स्वामी ॥
(यथा, भागवते । ३ । १२ । २ ।
“ससर्ज्जाग्रेऽन्धतामिस्रमथतामिस्र आदिकृत्
॥”)

**ताम्बूलं**, क्ली, (तम + “खर्जिपिञ्जादिभ्य ऊरो-

“शिरापर्णन्तु शैथिल्यं
कुर्य्यात्तस्यास्रहृद्रसः ।
शीर्णं त्वग्दोषदन्तस्य भक्षिते तु
सितासिते ॥
अनिधाय मुखे पर्णं पूगं स्वादयते नरः ।
मतिभ्रंशो दरिद्रः स्यादन्ते न स्मरते
हरिम् ॥”
इति राजनिर्घण्टः ॥ * ॥
“पर्णमूले वसेद्व्याधिः पर्णाग्रे
पापसञ्चयः ।
चूर्णपर्णं हरेदायुः शिरा बुद्धिविनाशिनी
॥
नायुरग्रे विषं मूले
मध्येऽलक्ष्मीर्व्यवस्थिता ।
तस्मादग्रञ्च मूलञ्च मध्यं पर्णस्य
वर्ज्जयेत् ॥
चूर्णाधिकं हरति गन्धमथाधिपूगं
रागं तथाधिकदलञ्च सुगन्धिकारि ।
ताम्बूलमुत्तममिदं रसनाग्रभिन्न-
पर्णं निशास्वधिकखण्डितपर्णमह्नि ॥
ताम्बूलं न हितं प्रोक्तं शरीरे रूक्षदुर्ब्बले
।
ज्वरास्यशोषपित्तास्रमदमूर्च्छाक्षिरोगिषु
॥
ताम्बूलात्युपयोगात् स्याच्छोषः
पित्तानिलास्रता ।
देहदृक्केशदन्ताग्निश्रोत्रवर्णबलक्षयः ॥”
इति राजवल्लभः ॥ * ॥
“विना पर्णं मुखे दत्त्वा गुवाकं
भक्षयेद्यदि ।
तावद्भवति चण्डालो यावद्गङ्गां न
गच्छति ॥”
इति कर्म्मलोचनम् ॥ * ॥
“ताम्बूलं विधवास्त्रीणां यतिनां
ब्रह्मचारिणाम् ।
तपस्विनाञ्च विप्रेन्द्र ! गोमांससदृशं
ध्रुवम् ॥”
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डम् ॥ * ॥
अस्य नामानि गुणाश्च । यथा,
भावप्रकाशे ।

राजनिर्घण्टः ॥ ताम्बूलवल्लिका १० पर्णवल्ली
११
ताम्बूलिः १२ । इति शब्दरत्नावली ॥ नागिनी
१३
नागवल्लरी १४ । इति भावप्रकाशः ॥

**ताम्बूली**, स्त्री, (ताम्बूल + गौरादित्वात् संज्ञायां
वा ङीष् ।) ताम्बूलवल्ली । इत्यमरः । २ । ४ ।
१२० ॥
(यथा, कथासरित्सागरे । ९ । ८१ ।
“ताम्बूलीश्च सहाम्लानिमालातिलकयुक्तिभिः
॥”)

**ताम्रं**, क्ली, (तम्यते आकाङ्क्ष्यते इति । तमु
काङ्क्षायाम् + “अमितम्योर्दीर्घश्च ।” उणां । २ ।
१६ । इति रक् उपधाया दीर्घश्च ।) तैजस-
धातुविशेषः । तामा इति ताँवा इति च भाषा ॥
तत्पर्य्यायः । ताम्रकम् २ शुल्वम् ३ म्लेच्छ-
मुखम् ४ द्व्यष्टम् ५ वरिष्ठम् ६ उडुम्बरम् ७ ।
इत्यमरः । २ । ९ । ९७ ॥ द्विष्टम् ८ उदम्बरम्
९
औदुम्बरम् १० उदुम्बरम् ११ औडुम्बरम् १२ ।
इति तट्टीका ॥ तपनेष्टम् १३ अम्बकम् १४
अरविन्दम् १५ रविलोहम् १६ रविप्रियम् १७
रक्तम् १८ नैपालिकम् १९ रक्तधातु २० मुनि-
पित्तलम् २१ अर्कम् २२ सूर्य्याङ्गम् २३ लोहि-
तायसम् २४ । इति शब्दरत्नावली ॥ सुपक्वस्य
तस्य गुणाः । मधुरत्वम् । कषायत्वम् । तिक्त-
त्वम् । विपाके कटुत्वम् । शीतलत्वम् ।
कफपित्त-
विबन्धशूलपाण्डूदरगुल्मनाशित्वञ्च । इति राज-
निर्घण्टः ॥ अम्लत्वम् । सारकत्वम् । रोपण-
त्वम् । लघुत्वम् । लेखनत्वम् । अर्शोज्वरकुष्ठ-
कासश्वासक्षयपीनसाम्लपित्तशोथकृमिनाशि-
त्वम् । अल्पबृंहणत्वञ्च । इति भावप्रकाशः ॥
परिणामशूलप्लीहवाय्यामशूलब्रध्नरोगनाशित्वम् ।
शुद्धिकारित्वम् । बलायुस्तेजःपुष्टितुष्टिकारित्वं
नित्यसेवने वलीपलितनाशित्वञ्च ॥ * ॥ मृद्-
वेष्टितशूरणकन्दगर्भनिहितगोमयाग्निभस्मीकृत-
पञ्चामृतद्वारा पञ्चपुटदत्तताम्रस्य गुणाः ।
वान्तिभ्रान्तिशूलाग्निमान्द्याम्लपित्तनाशित्वम्।

लचौ ।” उणां । ४ । ९० । इति ऊलच् बुगा-
गमो दीर्घश्च ।) पर्णम् । पान इति भाषा ।
अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । उष्ण-
त्वम् । मधुरत्वम् । क्षारत्वम् । कषायत्वम् ।
वातकृमिकफदुःखदोषनाशित्वम् । कामाग्नि-
सन्दीपनत्वम् । स्त्रीसम्भाषणभूषणत्वम् ।
धृति-
वक्त्रपाटवोत्साहकान्तिकारित्वम् । सुप्तोत्थिते
भुक्ते च शस्तत्वम् । दन्तास्यदृग्गदे
त्याज्यत्वम् ।
स्वर्गेऽपि दुर्लभत्वञ्च । इति राजवल्लभः ॥
अपि च । तीक्ष्णत्वम् । पीनसकासनाशित्वम् ।
रुच्यत्वम् । दाहकारित्वञ्च ॥ * ॥ कृष्णपर्णस्य
गुणाः । तिक्तत्वम् । उष्णत्वम् । कषायत्वम् ।
दाहवक्त्रजाड्यमलधारित्वञ्च ॥ * ॥
शुभ्रपर्णस्य
गुणाः । श्लेष्मवातामयनाशित्वम् । पथ्यत्वम्
।
रुच्यत्वम् । दीपनत्वम् । पाचनत्वञ्च ॥ * ॥
सद्यस्त्रोटितताम्बूलभक्षणगुणाः ।
मुखरोगजाड्य-
दोषवातारोचकरक्तमलविष्टम्भकान्तिकारित्वम्
॥
त्रिरात्रत्रोटितभूयोजलयोजितताम्बूलगुणाः ।
उत्तमत्वम् । रुचिबलकारित्वम् । त्रिदोषार्त्ति-
नाशित्वञ्च ॥ * ॥

“ताम्बूलवल्ली ताम्बूली नागिनी
नागवल्लरी ।
ताम्बूलं विशदं रुच्यं तीक्ष्णोष्णं तुवरं
सरम् ॥
वश्यं तिक्तकटुक्षारं रक्तपित्तकरं लघु ।
बल्यं
श्लेष्मास्यदौर्गन्धमलवातश्रमापहम् ॥”
क्रमुकम् । इति मेदिनी । ले, ९७ ॥

**ताम्बूलकरङ्कः**, पुं, (ताम्बूलस्य ताम्बूलरक्षणाय
वा करङ्कः ।) ताम्बूलपात्रम् । पानेर
वाटा इति
भाषा ॥ तत्पर्य्यायः । स्थगी २ । इति
हेम-
चन्द्रः । ३ । ३८२ ॥

**ताम्बूलदः**, त्रि, (ताम्बूलं ददातीति । दा + कः ।)
ताम्बूलदाता । तत्पर्य्यायः ।
वाग्गुलिकः २ ।
इति त्रिकाण्डशेषः ॥

**ताम्बूलपत्रः**, पुं, (ताम्बूलस्य पत्रमिव पत्रमस्य ।)
पिण्डालुः । इति राजनिर्घण्टः ॥
(ताम्बूलपर्णे,
क्ली । यथा, सुश्रुते । १ । ४६ ।
“ताम्बूलपत्रं तीक्ष्णोष्णं
कटुपित्तप्रकोपनम् ॥”)

**ताम्बूलरागः**, पुं, (ताम्बूलस्य चर्व्वितताम्बूलस्य
राग इव रागोऽत्र ।) मसूरः । इति हारा-
वली । १३३ ॥ ताम्बूलस्य रङ्गञ्च ॥

**ताम्बूलवल्लिका**, स्त्री, (ताम्बूलस्य वल्ली ततः स्वार्थे
कन् टापि पूर्ब्बह्रस्वश्च ।) ताम्बूली ।
इति शब्द-
रत्नावली ॥

**ताम्बूलवल्ली**, स्त्री, (ताम्बूलस्य वल्ली ।) ताम्बूल-
लता । पानेर गाछ । इति भाषा ॥
तत्पर्य्यायः ।
ताम्बूली २ नागवल्ली ३ । इत्यमरः । २
। ४ ।
१२० ॥ पर्णलता ४ सप्तशिरा ५
सर्पलता ६

बलकारित्वञ्च ॥ * ॥ अशोधितताम्रदोषाः ।
आयुःशुक्रबलनाशित्वम् । रोगवृद्धिच्छर्द्दिमूर्च्छा-
भ्रमक्लेदनानारोगकुष्ठशूलविदाहस्वेदारुचिचित्त-
सन्तापकारित्वम् । विषतुल्यत्वञ्च । इति सुख-
बोधः ॥ * ॥ तस्योत्पत्तिर्यथा, --
“शुक्रं यत् कार्त्तिकेयस्य पतितं धरणीतल ।
तस्मात् ताम्रं समुत्पन्नमिदमाहुः पुराविदः ॥”
तस्य लक्षणं यथा, --
“जपाकुसुमसङ्काशं स्निग्धं मृदुं घनं क्षमम् ।
लोहनागोज्झितं ताम्रं मारणाय प्रशस्यते ॥
कृष्णरूक्षमतिस्तब्धं श्वेतञ्चापि घनासहम् ।
लोहनागयुतञ्चेति शुल्वं दुष्टं प्रकीर्त्तितम् ॥”
तस्य शोघनविधिर्यथा, --
“पत्तलीकृतपत्राणि ताम्रस्याग्नौ प्रतापयेत् ।
निषिञ्चेत् तप्ततप्तानि तैले तक्रे च काञ्जिके ॥
गोमूत्रे च कुलत्थानां कषाये च त्रिधा त्रिधा ।
एवं ताम्रस्य पत्राणां विशुद्धिः संप्रजायते ॥”
अथ तस्य मारणविधिर्यथा, --
“सूक्ष्माणि ताम्रपत्राणि कृत्वा संस्वेदयेद्बुधः ।

वासरत्रयमम्लेन ततः खल्ले विनिःक्षिपेत् ॥
पादांशं सूतकं दत्त्वा याममम्लेन मर्द्दयेत् ।
तत उद्धृत्य पत्राणि लेपरेद्द्विगुणेन च ।
गन्धकेनाम्लघृष्टन तस्य कुर्य्याच्च गोलकम् ॥
ततः पिष्ट्वा च मीनाक्षीं चाङ्गेरीं सपुनर्नवाम् ।
तत्कल्केन बहिर्गोलं लेपयेद्द्व्यङ्गुलोन्मितम् ॥
धृत्वा तद्गोलकं भाण्डे शरावेण च रोघयेत् ।
बालुकाभिः प्रपूर्य्याथ विभूतिलवणाम्बुभिः ॥
दत्त्वा भाण्डमुखे मुद्रां ततश्चुल्यां विपाचयेत् ।
क्रमवृद्ध्याग्निना सम्यक् यावद्यामचतुष्टयम् ॥
स्वाङ्गशीतं ससुद्धृत्य मर्द्दयेच्छूरणद्रवैः ।
यामैकं गोलकं तच्च निःक्षिपेच्छूरणोदरे ॥
मृदा लेपस्तु कर्त्तव्यः सर्व्वतोऽङ्गुष्ठमात्रकः ।
पाच्यं गजपुटे क्षिप्तं मृतं भवति निश्चितम् ॥
वमनञ्च विरेकञ्च भ्रमं क्लममथारुचिम् ।
विदाहं स्वेदमुत्क्लेदं न करोति कदाचन ॥”
इति भावप्रकाशः ॥ * ॥
शुल्वनिभः । अरुणवर्णः । इति हेमचन्द्रः
शब्दरत्नावली च ॥ तद्वति, त्रि ॥
(“न विषं विषमित्याहुस्ताम्रञ्च विषमुच्यते ।
एकदीषो विषे त्वष्टौ दोषास्ताम्रे प्रकीर्त्तिताः ॥
भ्रमो मूर्च्छा विदाहश्च उत्क्लेदशोषवान्तयः ।
अरुचिश्चित्तसन्तापएते दोषा विषोपमाः ॥
तस्माद्विशुद्धं ताम्रं हि ग्राह्यं रोगोपशान्तये ।
पटुना रविदुग्धेन ताम्रपत्राणि लेपयेत् ॥
अग्नौ सन्ताप्य निर्गुण्डीरसे सिञ्चेत् पुनः पुनः ॥
मतान्तरम् ।
गोमूत्रेण पचेद्यामं ताम्रपत्रं दृढाग्निना ।
शुध्यते नात्र सन्देहो मारणञ्चात्र कथ्यते ॥
इति ताम्रशोधनम् ॥ * ॥
अथ ताम्रमारणम् ।
सूतमेकं द्विधा गन्धं यामं मर्द्दयन्तु कन्यया ।
द्वयोस्तुल्यं ताम्रपत्रं लिप्त्वा स्थाल्यां निधापयेत्
।
सम्यक् शूरणजैः सार्द्धं पार्श्वे भस्म निधापयेत् ।
चतुर्यामं पचेच्चुल्ल्यां पात्रपृष्ठे सगोमये ॥
जलं पुनः पुनर्द्देयं स्वाङ्गशीतं विमर्द्दयेत् ।
म्रियते नात्र सन्देहः सर्व्वरोगेषु योजयेत् ॥
मतान्तरम् ।
जम्ब्वाम्भसा सैन्धवसंयुतेन
सगन्धकं स्थापय शुल्वपत्रम् ।
भुक्तः स्थौल्यजरापमृत्युशमनं पथ्याशिना वत्स-
रात् ॥
ताम्रमुष्णं गरहरं यकृत्प्लीहोदरापहम् ।
क्रिमिशूलामवातघ्नं ग्रहण्यर्शोऽम्लपित्तजित्
॥”
इति ताम्रमारणम् ॥ * ॥
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणाधि-
कारे ॥)

**ताम्रः**, पुं, (ताम्रस्येव वर्णोऽस्त्यस्य । अच् ।
ताम्रवर्णत्वादस्य तथात्वम् ।)
कुष्ठरोगविशेषः ।
इति कर्म्मविपाकः ॥ (द्वीपभेदः । यथा, महा-
भारते । २ । ३१ । ६५ ।
“द्वीपं ताम्राह्वयञ्चैव पर्व्वतं रामकं तथा ॥”)

**ताम्रकं**, क्ली, (ताम्र + स्वार्थे संज्ञायां वा कन् ।)
ताम्रम् । इत्यमरः । २ । ९ । ९७ ॥

**ताम्रकर्णी**, स्त्री, (ताम्रवर्णौ कर्णौ यस्याः
स्त्रियां ङीष् ।) अञ्जना नाम पश्चिमदिग्घस्ति-
पत्नी । इत्यमरः । १ । ३ । ५ ॥

**ताम्रकारः**, पुं, (ताम्रं करोति ताम्रधातुभिः
पात्रादिकं निर्म्मातीति । कृ + अण् ।) वर्ण-
सङ्करजातिविशेषः । तत्पर्य्यायः । ताम्रिकः २
शौल्विकः ३ ताम्रकुट्टकः ४ । इति शब्दरत्ना-
वली ॥ अस्योत्पत्तिः कंसकारशब्दे द्रष्टव्या
॥

**ताम्रकुट्टकः**, पुं, (ताम्रं कुट्टयतीति । कुट्ट + ण्वुल् ।)
ताम्रकारः । इत्यमरः । २ । १० । ८ ॥

**ताम्रकूटः**, पुं क्ली, (ताम्रनिर्म्मितं कूटमिव
ताम्रस्य कूटमिव वा ।) क्षुपविशेषः । तामाक्
इति भाषा । यथा, --
“सम्बिदा कालकूटञ्च ताम्रकूटञ्च धुस्तुरम् ।
अहिफेणं खर्ज्जुरसः तारिका तरिता तथा ॥

**ताम्रपत्रः**, पुं, (ताम्रं ताम्रवर्णं पत्रमस्य ।)
जीवशाकः । इति राजनिर्घण्टः ॥ ताम्र-
निर्म्मितपत्रे, क्ली ॥

**ताम्रपर्णी**, स्त्री, दीर्घिकाभेदः । इति भूरिप्रयोगः ॥
नदीविशेषः । इति पुराणम् ॥ (यथा, रघुः
।
४ । ५० ।
“ताम्रपर्णी समेतस्य मुक्तासारं महोदधेः
॥”)

**ताम्रपल्लवः**, पुं, (ताम्रवर्णं पल्लवमस्य ।)
अशोकवृक्षः । इति राजनिर्घण्टः ॥
(अस्य
पर्य्याया यथा, --
“अशोको हेमपुष्पश्च वञ्जुलस्ताम्रपल्लवः
।
कङ्केलिः पिण्डपुष्पश्च गन्धपुष्पो
नटस्तथा ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**ताम्रपाकी**, [न्] पुं, (पच्यते इति । पच + घञ्
कुत्वञ्च । ताम्रः ताम्रवर्णः पाकः
परिणति-
रस्त्यस्येति । इनिः ।) गर्द्दभाण्डवृक्षः ।
इति
रत्नमाला ॥

**ताम्रपादी**, स्त्री, (ताम्रो रक्तवर्णः पादो मूल-
देशोऽस्याः ।) हंसपदी । इति
राजनिर्घण्टः ॥
(हंसपदीशब्दे विवृतिरस्या ज्ञातव्या ॥)

**ताम्रपुष्पः**, पुं, (ताम्रवर्णं पुष्पमस्य ।) रक्त-
काञ्चनः । इति जटाधरः ॥ (अस्य
पर्य्यायाः
यथा भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ।
“कोविदारश्चमरिकः कुद्दालो युगपत्रकः
।

पक्वायमानं पुटयेत् सुयुक्त्या
वातादिकं यावदुपैति शान्तिम् ॥
अन्यतरमतम् ।
शुद्धं ताम्रदलं विमर्द्द्य पटुना क्षारेण जम्बीरजै
र्नीरैर्घस्रमिदं स्नुह्यर्कपयसा लिप्तं धमेत् सप्तधा ।
निर्गुण्ड्यम्बुहिमं रसेन्द्रकलितं दुग्धाज्यगन्धेन तत्
तुल्येनाथ मृतंभवेत् सुपठितं पञ्चामृतेन त्रिधा ॥
गुणा यथा, --
वान्तिभ्रान्तिविवर्ज्जितं क्षयरुजाकुष्ठानि पाण्ड्वामयं
शूलं मेहगुदाङ्कुरानिलगदानुक्तानुपानैर्जयेत् ।
गुञ्जामात्रमिदन्ततो द्विगुणितं तच्छुद्धकायेन चेत्
इत्यष्टौ सिद्धिद्रव्याणि यथा सूर्य्याष्टकं प्रिये ॥"
इति कुलार्णवतन्त्रम् ॥

**ताम्रक्रमिः**, पुं, (ताम्रवर्णः क्रमिः कीटः ।) इन्द्र-
गोपकीटः । इति भूरिप्रयोगः हारावली च ॥

**ताम्रगर्भं**, क्ली, (ताम्रं गर्भ उत्पत्तिस्थानमस्य ।)
तुत्थम् । इति राजनिर्घण्टः ॥

**ताम्रचूडः**, पुं स्त्री, (ताम्रा ताम्रवर्णा चूडा
अस्य ।) कुक्कुटः । इत्यमरः । २ । ५ । १७ ॥
(यथा, महाभारते । ३ । २२४ । २४ ।
"अपरेणाग्निदायादस्ताम्रचूडं भुजेन सः ।
महाकायमुपश्लिष्टं कुक्कुटं बलिनां वरम् ॥"
यथा चोत्तरतन्त्रे ३९ अध्याये सुश्रुतेनोक्तम् ।
"ताम्रचूडस्य मांसेन पिबेद्वा मद्यमुत्तमम् ॥")
कुक्कुरद्रुः । इति राजनिर्घण्टः ॥

**ताम्रदुग्धा**, स्त्री, (ताम्रं रक्तवर्णं दुग्धं क्षीरं
रसोऽस्याः ।) गोरक्षदुग्धा । इति राज-
निर्घण्टः ॥

**ताम्रपट्टं**, क्ली, (ताम्रेण निर्म्मितं पट्टं पत्रम् ।)
ताम्रनिर्म्मितलेखनपत्रम् । यथा, --
"दत्त्वा भूमिं निबन्धं वा कृत्वा लेख्यन्तु कारयेत् ।
आगामिभद्रनृपतिः परिज्ञानाय पार्थिवः ॥
पटे वा ताम्रपट्टे वा समुद्रोपरिचिह्नितम् ॥"
इति मिताक्षरा ॥
कुण्डली ताम्रपुष्पश्च स्मन्तकः स्वल्पकेशरी ॥")
भूमिचम्पकः । इति शब्दचन्द्रिका ॥

**ताम्रपुष्पिका**, स्त्री, (ताम्रवर्णं पुष्पमस्याः । कप्
टापि अत इत्वञ्च ।) रक्तत्रिवृत् । इति राज-
निर्घण्टः ॥ (रक्तत्रिवृत्शब्दे ज्ञातव्यमस्या विव-
रणम् ॥)

**ताम्रपुष्पी**, स्त्री, (ताम्रवर्णं पुष्पमस्या इति ।
ङीष् ।) धातकी । (अस्याः पर्य्याया यथा, --
"घातकी धातुपुष्पी च ताम्रपुष्पी च कुञ्जरा ।
सुभिक्षा बहुपुष्पी च वह्निज्वाला च सा स्मृता ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
पाटलावृक्षः । इति राजनिर्घण्टः ॥ (पर्य्यायाः
यथा, --
"पाटलिः पाटला मोघा मधुदूती फलेरुहा ।
कृष्णवृन्ता कुवेराक्षी कालस्थाल्यलिवल्लभा ॥
ताम्रपुष्पी च कथिता परा स्यात् पाटला सिता ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**ताम्रफलः**, पुं, (ताम्रं ताम्रवर्णं फलमस्य ।)
अङ्कोटवृक्षः । इति राजनिर्घण्टः ॥

**ताम्रमूला**, स्त्री, (ताम्रं ताम्रवर्णं मूलमस्याः ।)
दुरालभा । (यथा, भावप्रकाशे । ज्वराधिकारे
श्वासचिकित्सायाम् ।
"सिंही व्याघ्री ताम्रपर्णी पटोली ॥")
लज्जालुः । इति राजनिर्घण्टः ॥ कच्छुरा ।
इति रत्नमाला ॥ खिराइ इति भाषा ॥

**ताम्रवर्णः**, पुं, (ताम्रस्येव वर्णोऽस्य ।) पल्लि-

"भारतस्यास्य वर्षस्य नव भेदान् निबोध मे ।
इन्द्रद्वीपः कसेरुश्च ताम्रवर्णो गभस्तिमान् ॥")

**ताम्रवर्णा**, स्त्री, (ताम्रस्येव वर्णमस्या इति । टाप् ।) ओड्रपुष्पवृक्षः । इति शब्दचन्द्रिका ॥

**ताम्रवल्ली**, स्त्री, (ताम्रवर्णा वल्ली । मध्यपदलोपी समासः ।) मञ्जिष्ठा । इति रत्नमाला ॥ चित्र-
कूटदेशप्रसिद्धा लता । तत्पर्य्यायः । ताम्रा २
ताली ३ तमाली ४ तमालिका ५ सूक्ष्मवल्ली ६
सुलोमा ७ शोधनी ८ तालिका ९ । अस्या गुणाः । कषायत्वम् ।
कफदोषमुखकण्ठोत्थ-
रोगनाशित्वम् । श्लेष्मशुद्धिकारित्वञ्च । इति
राजनिर्घण्टः ॥

**ताम्रवीजः**, पुं, (ताम्रवर्णं वीजमस्य ।) कुलत्थः । इति राजनिर्घण्टः ॥

**ताम्रवृक्षः**, पुं, (ताम्रमिव रक्तवर्णो वृक्षः ।) रक्तचन्दनम् । कुलत्थः । इति रत्नमाला ॥

**ताम्रवृन्तः**, पुं, (ताम्रमिव रक्तवर्णं वृन्तमस्य ।) कुलत्थः । इति त्रिकाण्डशेषः ॥

**ताम्रवृन्ता**, स्त्री, (ताम्रमिव रक्तवर्णं वृन्तमस्याः इति टाप् ।) कुलत्थिका । इति हेमचन्द्रः । ४ । २४१ ॥

**ताम्रशिखी**, [न्] पुं स्त्री, (ताम्रवर्णा शिखा चूडा अस्त्यस्य । इति इनिः ।) कुक्कुटः । इति जटाधरः ॥

**ताम्रसारं**, क्ली, (ताम्रवत् रक्तवर्णः सारोऽस्य ।) रक्तचन्दनम् । इति रत्नमाला ॥

**ताम्रसारकं**, क्ली, (ताम्रसार + स्वार्थे कन् ।)

**ताम्रिकः**, पुं, (ताम्रं तत्पात्रादिनिर्म्माणं कार्य्य-त्वेनास्त्यस्य । ताम्र + ठन् ।) कंसकारः । इति
शब्दरत्नावली ॥ ताम्रनिर्म्मिते, त्रि । यथा,
कार्षिके ताम्रिके पणः । इत्यमरः । २ । ९ । ८८ ॥
(यथा, मनुः । ८ । १३६ ।
"कार्षापणन्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः ॥")

**ताम्रिका**, स्त्री, (ताम्रवद्वर्णाभा अस्त्यस्या इति ठन् ततः टाप् ।) गुञ्जा । इति राज-
निर्घण्टः ॥ मानरन्धावाद्यम् । इति भूरि-
प्रयोगः ॥

**ताम्री**, स्त्री, (ताम्रस्य विकारः । इति अण् ततो ङीप् ।) वाद्यविशेषः । तत्पर्य्यायः । मान-
रन्ध्रा २ विकारिका ३ । इति त्रिकाण्डशेषः ॥

**ताय**, ऋ ङ पालने । सन्ततौ । इति कविकल्प-द्रुमः ॥ (भ्वां-आत्मं-सकं-सेट् ।)
सन्ततिर्विस्तारः ।
ऋ, अततायत् । ङ, तायते विद्यां सुधीः ।
इति दुर्गादासः ॥

**तायिकः**, पुं, (ताये पालने साधुरिति ठञ् ।) तर्ज्जिकाभिधदेशः । इति हेमचन्द्रः । ४ । २४ ॥

**तारं**, क्ली, (तार्य्यते विस्तार्य्यते इति । तॄ + णिच् + घञ् ।) रूप्यम् । इति मेदिनी । ते, ४३ ॥
("दग्धोत्तीर्णं सुशीतं यन्निर्म्मलं कुन्दसन्निमम् ।
गुरुस्निग्धकुमारञ्च तारसुत्तममिष्यते ॥"
अशुद्धस्यामृतस्यास्य गुणा यथा, --
"आयुः शुक्रं बलं हन्ति रोगसंघं करोति च ।
अशुद्धञ्चामृतन्तारं शुद्धमार्य्यमतो बुधैः ॥"
अस्य मारणं यथा, --
"तारयेद् यद् भवाम्बोधेः स्वजपासक्त-मानसम् ।
ततस्तार इति ख्यातो यस्तं ब्रह्माव्यलोकयत् ॥")
प्रणवः । इति तन्त्रम् ॥ (यथा, महागणपति-स्तोत्रे । २ ।
"तारश्रीपरशक्तिकामवसुधारूपानुगंयं विदु-
स्तस्मै स्तात् प्रणतिर्गणाधिपतये यो रागिणा-
भ्यर्थ्यते ॥")
तरणम् । इति विश्वः ॥ कूर्च्चबीजम् । इति
तन्त्रसारम् ॥ (नक्षत्रम् । इति मेदिनी । रे,
४३ ॥ अत्युच्चशब्दः । इति हेमचन्द्रः । ६ । ३८ ॥
यथा, हेमचन्द्रटीकायाम् ।
"नृणामुरसि मन्द्रस्तु द्वाविंशतिबिधो ध्वनिः ।
स एव कण्ठमध्यः स्यात् तारः शिरसि गीयते ॥"
विष्णुः । यथा, महाभारते । १३ । १४९ । ११७ ।
"अशोकस्तारणस्तारः शूरः सौरिर्जनेश्वरः ॥"
राक्षसविशेषः । यथा महाभारते । ३ । २८४ । ९ ।
"युयुधे लक्षणश्चापि तथैवेन्द्रजिता सह ।
विरूपाक्षेण सुग्रीवस्तारेण च निखर्व्वटः ॥"
दैत्यविशेषः । यथा, हरिवंशे । ४३ । ९ ।
"तारस्तु क्रोशविस्तारमायसं वायसध्वजम् ॥")
महादेवः ।
"काश्यां विश्वेश्वरोऽहं गिरिपतितनयासंयुतो वामभागे
शुण्डादण्डेन दक्षे त्रिपथगतटिनीतीर-शुद्धाम्बुभागे ।
मायावीजञ्च कर्णे सुरमुनिसहितो ध्यानयुक्तं वदामि
प्रीत्या लोकस्य तस्मात् सुरमुनिगणकैरुच्यते तारनाम ॥"
इति शब्दार्थचिन्तामणिः ॥)

**तारः**, त्रि, अत्युच्चशब्दविशिष्टः । इति मेदिनी । रे, ४४ ॥ स्फुरितकिरणः । निर्म्मलः । इति
धरणिः ॥ (तारं मुक्तास्त्यत्रेति अच् । मुक्ता-

रक्तचन्दनम् । इति राजनिर्घण्टः ॥

**ताम्रसारकः**, पुं, (ताम्रवत् रक्तवर्णः सारोऽस्येति

कप् ।) रक्तखदिरः । इति राजनिर्घण्टः ॥

**ताम्रा**, स्त्री, (ताम्र + टाप् ।) सैंहली । इति

राजनिर्घण्टः ॥ (प्रजापतेः कश्यपस्य पत्नीना-
मन्यतमा । यथा, मात्स्ये । ६ । २ ।
"सुरभिर्विनता तद्वत्ताम्रा क्रोधवशा इरा ॥"
सप्तत्वगन्तर्गतचतुर्थत्वग्विशेषः । यथा, --
"चतुर्थी ताम्रा नामाष्टभागप्रमाणा विविध-
किलासकुष्ठाधिष्ठाना ॥" इति सुश्रुते शारीर-
स्थाने चतुर्थेऽध्याये ॥)

**ताम्राकुः**, पुं, उपद्वीपभेदः । इति शब्दमाला ॥

**ताम्राक्षः**, पुं, (ताम्रे रक्ताभे अक्षिणी यस्य ।

अक्षिन् + समासे षच् ।) कोकिलः । इति
त्रिकाण्डशेषः ॥ (ताम्रनयने, त्रि । यथा,
भागवते । १ । ७ । ३३ ।
"तत आसाद्य तरसा दारुणं गौतमीसुतम् ।
बबन्धामर्षताम्राक्षः पशुं रसनया यथा ॥")

**ताम्राभं**, क्ली, (ताम्रमिवाभातीति । आ + भा +

कः । ताम्रवदाभा अस्येति वा रक्तवर्णत्वात्
तथात्वम् ।) रक्तचन्दनम् । इति शब्दचन्द्रिका ॥
(पर्व्वतविशेषः । यथा, ब्रह्माण्डे ४७ अध्याये ।
"रुचका निषधं प्राप्ता ताम्राभं निषधादपि ॥")

**ताम्रार्द्धं**, क्ली, (ताम्रस्यार्द्धं अर्द्धभागतया उत्-

पत्तिकारणमस्य ताम्रस्यार्द्ध उत्पादकोऽस्य इति
वा ।) कांस्यम् । इति त्रिकाण्डशेषः ॥

"कण्टवेध्यं तारपत्रं दिह्याद्द्विगुणहिङ्गुलम् ।
पातयन्त्रे रसो ग्राह्यो रजतं मृतमुच्यते ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणा-
धिकारे ॥) मुक्ता । इति राजनिर्घण्टः ॥
(यथा, रसेन्द्रसारसंग्रहे त्रैलोक्यचिन्तामणि-
वटिकायाम् ।
"हारं सुवर्णं सुमृतञ्च तारम् ॥"
"तारं मौक्तिकम् । तारशब्देनात्र मौक्तिक-
मेवोच्यते न तु रजतम् ।" इति तट्टीका ॥
गौणसिद्धिभेदः । यथा, "विहन्यमानस्य दुःखस्य
त्रित्वात् तद्विघातास्त्रय इति इमा मुख्यास्त्रिस्रः
सिद्धयस्तदुपायतया त्वितरा गौण्यः पञ्चसिद्धय-
स्तत्रापि हेतुमत्तया तिस्रः हेतुतया पञ्च
व्यवस्थिताः । तास्वाद्या अध्ययनादिलक्षणाः
सिद्धयो हेतवः मुख्यास्तु हेतुमत्यः । विधिवद्-
गुरुमुखादध्यात्मविद्यानां अक्षरस्वरूपग्रहण-
मध्ययनं प्रथमसिद्धिस्तारमुच्यते ॥" इति तत्त्व-
कौमुदी ॥ अक्षिमध्यम् । इति मेदिनी । रे, ४३ ॥)

**तारः**, पुं, वानरविशेषः । मुक्ताविशुद्धिः । शुद्ध-

मौक्तिकः । इति मेदिनी । रे, ४३ ॥ (तार्य्यते
उत्तार्य्यते भवसागरादनेन । तॄ + णिच् + घञ् ।
यद्वा तारयति स्वोच्चारणजपादिभिर्लोकान् ।
तॄ + णिच् + अच् । एतन्निरुक्तिर्यथा, काशी-
खण्डे । ७३ अध्याये ।

विशिष्टः । यथा, अमरुशतके । २८ ।
"उरसि निहितस्तारो हारः कृता जघने
घने ॥")

**तारकं**, क्ली, (तारेण कनीनिकया कायतीति ।

कै + कः ।) चक्षुः । इति मेदिनी । के, १०० ॥

**तारकं**, क्ली, स्त्री, (तारमेव । स्वार्थे कन् ।)

चक्षुस्तारा । नक्षत्रम् । इति मेदिनी । के, १०० ॥

**तारकः**, पुं, (तारयति दैत्यानिति । तॄ + णिच् +

ण्वुल् ।) द्वादशमन्वन्तरीयेन्द्रशत्रुरसुरविशेषः ।
यथा, --
"मनोस्तु दक्षपुत्त्रस्य द्वादशस्यात्मजान् शृणु ।
देववानुपदेवश्च देवश्रेष्ठो विदूरथः ॥
मित्रवात् मित्रदेवश्च मित्रविन्दश्च वीर्य्यवान् ।
मित्रवाहः सुवर्च्चाश्च दक्षपुत्त्रमनोः सुताः ॥
तपस्वी सुतपाश्चैव तपोमूर्त्तिस्तपोरतिः ।
तपोधृतिर्द्युतिश्चान्य ऋषयश्च तपोधनाः ॥
सुधर्म्माणः सुतपसो हरिता रोहितास्तथा ।
सुरारयो गणाः पञ्च प्रत्येकं दशको गणः ॥

ऋतधामा च तन्त्रेन्द्रस्तारको नाम तद्रिपुः
।
हरिर्नपुंसको भूत्वा घातयिष्यति शङ्कर !
॥
इति गारुडे ८७ अध्याये ॥
(अपरोऽसुरविशेषः । कार्त्तिकेयः एनं
निहत-
वान् । यथा, मतस्यपुराणे । १४५ । ५ --
११ ।
“वज्राङ्गो नाम दैत्योऽभूत्तस्य पुत्रस्तु
तारकः ।
सुरानुद्वासयामास पुरेभ्यः स महाबलः ॥
ततस्ते ब्रह्मणोऽभ्यासं
जग्मुर्भयनिपीडिताः ।
भीतांश्च त्रिदशान् दृष्ट्वा ब्रह्मा तेषामुवाच
ह ॥
सन्त्यजध्वं भयं देवाः ! शङ्करस्यात्मजः
शिशुः ।
तुहिनाचलदौहित्रस्तं हनिष्यति दानवम् ॥
ततः काले तु कस्मिंश्चित् दृष्ट्वा वै
शैलजां शिवः ।
स्वरेतो वह्निवदने व्यसृजत्कारणान्तरे ॥
तत्प्राप्तं वह्निवदने रेतो देवानतर्पयत् ।
विदार्य्य जठराण्येषां अजीर्णं निर्गतं मुने !
॥
पतितं तत् सरिद्वरे ततस्तु शरकानने ।
तस्मात्तु स समुद्भूतो गुहो दिनकरप्रभः ।
स सप्तदिवसो वालो निजघ्ने तारकासुरम्
॥”
अस्य विशेषविवरणन्तु तत्रैव १४५
अध्यायमारभ्य
१५९ अध्यायेषु द्रष्टव्यम् ॥ तारयतीति ।
तॄ +
णिच् + ण्वुल् ।) कर्णधारः । इति मेदिनी ।
के,
९९ ॥ भेलकः । इति शब्दरत्नावली ॥
(तरणो-
पायः । यथा, हठयोगप्रदीपिकायाम् । ४ ।
४० ।
“केचिदागमजालेन केचिन्निगमसङ्कुलैः ।
भूत्वा काश्यां विश्वनाथो मदाज्ञापरिपालकः ।
कृत्वा मुक्तान् जीवमात्रान् मानुषादीन् परं
पदम् ॥
अन्यत् किन्ते भयं मन्त्रप्रभावात् प्रापयिष्यसि ।
इति सन्दिश्य मां विष्णुर्विससर्ज्ज मरुद्गणान्
॥”
इति पाद्मोत्तरखण्डे श्रीशिवं प्रति श्रीविष्णु-
वाक्यम् ॥ अपि च ।
“मुमूर्षोर्मुनिकर्ण्यान्तु अर्द्धोदकनिवासिनः ।
अहं दिशामि ते मन्त्रं तारकं ब्रह्मवाचकम् ॥
ॐ श्रीरामरामरामेत्येतत्तारकमुच्यते ।
अतस्त्वं जानकीनाथ ! परं ब्रह्म विनिश्चितम्
॥”
इति पाद्मोत्तरखण्डे श्रीरामं प्रति श्रीशिव-
वाक्यम् ॥

**तारका**, स्त्री, क्ली, (तरति तारयति वा । तॄ +
णिच् + ण्वुल् । टाप् । “तारका ज्योतिषि ।”
७ । ३ । ४५ । इत्यस्य वार्त्तिकोक्त्या न अत
इत्वम् ।) नक्षत्रम् । (यथा, मार्कण्डेये । १५ ।
७१ ।
“अप्-बिन्दवो यथाम्भोधौ यथा वा दिवि
तारकाः ।
यथा वा वर्षतो धारा गङ्गायां सिकता यथा ॥”)
कनीनिका । इति मेदिनी । के, १०० ॥
(यथा, रघुः । ११ । ६९ ।
“क्षत्त्रकोपदहनार्च्चिषं ततः
सन्दधे दृशमुदयतारकाम् ॥”)
इन्द्रवारुण्यां स्त्री । इति राजनिर्घण्टः ॥

**तारकारिः**, पुं, (तारकस्य तारकासुरस्य अरिः ।)
कार्त्तिकेयः । इति हेमचन्द्रः । २ । १२३ ॥

**तारकिणी**, स्त्री, (तारकाः सन्त्यत्र । तारका +
इनिः ङीप् ।) रात्रिः । इति राजनिर्घण्टः ॥

**तारकितं**, त्रि, (तारकाः सञ्जाता अस्य । तारका
+ “तदस्य सञ्जातं तारकादिभ्य इतच् ।”
५ । २ । ३६ । इति इतच् ।) तारकायुक्तम् ।
यथा, --
“सिति निशा दृशदि स्फुटदुत्पतत्
कणगणाधिपतारकिताम्बरः ॥”
“तारणायास्य दुःखस्य प्रस्थानाय जयाय च
॥”)
तरणकारयितरि, त्रि ॥

**तारणिः**, स्त्री, (तारयतीति । तॄ + णिच् +
अनिः ।) नौका । इति हारावली । ५९ ॥

**तारतण्डुलः**, पुं, (तारं मुक्तेव शुभ्रस्तण्डुलो यस्य ।)
धवलयावनालः । इति राजनिर्घण्टः ॥

**तारतम्यं**, क्ली, तरतमयोर्भावः । (तरतम +
ष्यञ् ।) न्यूनाधिक्यम् । यथा, --
“निर्द्धनं निधनमेतयोर्द्वयो-
स्तारतम्यविधिमुग्धचेतसा ।
बोधनाय विधिना विनिर्म्मिता
रेफ एव जयवैजयन्तिका ॥”
इत्युद्भटः ॥

**तारदी**, स्त्री, (तरदी एव । स्वार्थे अण् ततो
ङीष् ।) तरदीवृक्षः । इति राजनिर्घण्टः ॥

**तारपुष्पः**, पुं, (तारं रूप्यमिव शुभ्रं पुष्पं यस्य ।)
कुन्दवृक्षः । इति राजनिर्घण्टः ॥

**तारलः**, त्रि, (तरल एव । स्वार्थे अण् ।) विटः ।
इति भूरिप्रयोगः ॥

**तारविमला**, स्त्री, (तारं रूप्यमिव विमला ।)
धातुविशेषः । इति शब्दार्थकल्पतरुः ॥

**तारशुद्धिकरं**, क्ली, (तारस्य रजतस्य शुद्धिं करो-
तीति । कृ + टः ।) सीसकम् । इति राज-
निर्घण्टः ॥

**तारा**, स्त्री, पुं, (तारयतीति । तॄ + णिच् + अच् ।)
नक्षत्रम् । इत्यमरः । १ । ३ । २१ ॥ (यथा,
महाभारते । १ । २११ । २६ ।
“चन्द्रादित्यौ ग्रहास्तारा नक्षत्राणि दिवौ-
कसः ॥”)
यथाच कर्म्मलोचने ।
“एकतारं नभो दृष्ट्वा स्मर्त्तव्यो नारदो मुनिः
।
तावद्भवति चाण्डालो यावदन्यां न पश्यति
॥”

केचित्तर्केण मुह्यन्ति नैव जानन्ति तारकम्
॥”
“तारयतीति तारकस्तं तारकं तरणोपायं
नैव जानन्ति ।” इति तट्टीका ॥ महादेवः
।
वथा, महाभारते । १२ । २८४ । ३५ ।
“गर्भमांसशृगालाय तारकाय तराय च ।
नमो यज्ञाय यजिने हुताय प्रहुताय च ॥”)
त्रातरि, त्रि । इति मेदिनी । के, १०० ॥
(यथा,
प्रबोधचन्द्रोदये । २ । १३ ।
“कथयति भगवान् इहान्तकाले
भवभयकातरतारकं प्रबोधम् ॥”
स्त्रियां टापि अत इत्वम् । यथा, गोः रामा-
यणे । २ । ९७ । २३ ।
“नारीणां तारिकाः काश्चित् काश्चित्
परम-
वाजिनाम् ॥”)

**तारकजित्**, पुं, (तारकं तारकासुरं जयतीति ।

जि + क्विप् तुगागमश्च ।) कार्त्तिकेयः ।
इत्यमरः ।
१ । १ । १४२ ॥ (एतद्विवरणं मात्स्ये
१५९
अध्याये द्रष्टव्यम् ॥)

**तारकब्रह्म**, क्ली, (तारकं संसारसागरपारकारकं

ब्रह्म ।) षडक्षरमन्त्रविशेषः । यथा, --
“षडक्षरं महामन्त्रं तारकं ब्रह्म उच्यते ।
ये भजन्ति च मां भक्त्या तेषां मुक्तिर्न
संशयः ॥
रामाय नम इत्येवमुच्चार्य्य मन्त्रमुत्तमम् ।
सर्व्वदुःखहरञ्चैतत् पापिनामपि मुक्तिदम्
॥
इमं मन्त्रं जपन्नित्यममलस्त्वं भविष्यसि ।
भम्मास्थिधारणाद्यस्तु
सम्भूतश्चाशुचिस्त्रयि ॥
मङ्गलं तद्भूत सर्व्वं मन्मन्त्रोच्चारणात्
शुभात् ।
लमप्यनेन श्रीरामतारकाख्येन मन्त्रतः ॥

इति नैषधम् ॥

**तारणः**, पुं, (तारयतीति । तॄ + णिच् + ल्युः ।)

भेलकः । इति शब्दरत्नावली ॥
(संसारसागरात्
तारयतीति । विष्णुः । यथा, महाभारते । १३ ।
१४९ । ५० ।
“अशोकस्तारणस्तारः शूरः सर्व्वजनेश्वरः ॥”
महादेवः । यथा, तत्रैव । १३ । १७ । ११७ ।
“तोरणस्तारणो वातः परिधीपतिखेचरः ॥”
क्ली, षष्ठिवत्सरेषु अष्टादशवत्सरः । यथा,
ज्योतिषतत्त्वे ।
“अतिवृष्टिश्च जायेत धान्यस्याथ प्रपीडनम् ।
शस्यं भवति सामान्यं तारणे सुरवन्दिते ! ॥”
तथाच वृहत्संहितायाम् । ८ । ३६ ।
“तारणं तदनु भूरिवारिदं
शस्यवृद्धिमुदितञ्च पार्थिवम् ॥”
तॄ + णिच् + भावे ल्युट् । उत्तारणम् । उद्धा-
रणम् । यथा, महाभारते । ४ । ४ । ५३ ।

अक्षिमध्यम् । इति मेदिनी । रे, ४३ ॥
शेषस्य
पर्य्यायः । विम्बिनी २ कनीनिका ३ । इति
राजनिर्घण्टः ॥ तारका ४ । इत्यमरः । १ ।
३ । २१ ॥
(यथा, हठयोगप्रदीपिकायाम् । ४ । ३९ ।
“तारे ज्योतिषि संयोज्य किञ्चिदुन्नमयेद्भ्रुवौ
॥”)

**तारा**, स्त्री, (तारयति तापादिति । तॄ + णिच् +

अच् + टाप् ।) बुद्धदेवताभेदः । बृहस्पति-
भार्य्या । इति मेदिनी । रे, ४३ ॥ (यथा,
देवी-
भागवते । १ । ११ । ७५ ।
“ततः कालेन कियता तारासूत सुतं शुभम्
॥”)
बालिभार्य्या । सा सुषेणवानरकन्या । इति
रामायणम् ॥ (यथा, महाभारते । ३ । २७९
। १८ ।
“हेममाली ततो बाली तारां ताराधिपान-
नाम् ।
उवाच वचनं वाग्मी तां वानरपतिः पतिः ॥”)
चीडा । मुक्ता । इति राजनिर्घण्टः ॥ * ॥
द्वितीया शक्तिः । यथा, --
“लीलया वाक्प्रदा चेति तेन लीलसरस्वती ।
तारकत्वात् सदा तारा सुखमोक्षप्रदायिनी ॥
उग्रापत्तारिणी यस्मादुग्रतारा प्रकीर्त्तिता ॥”

अस्या ध्यानं यथा, --
"प्रत्यालीढपदार्पिताङ्घ्रिशवहृद्घोराट्टहासापरा
खड्गेन्दीवरकर्त्तृखर्परभुजा क्रूङ्कारबीजोद्भवा ।
खर्व्वा नीलविशालपिङ्गलजटाजूटैकनागैर्युता
जाड्यं न्यस्य कपालके त्रिजगतां हन्त्युग्रतारा-
स्वयम् ॥"
अपि च ।
"प्रत्यालीढपदां घोरां मुण्डमालाविभूषिताम् ।
खर्व्वां लम्बोदरीं भीमां व्याघ्रचर्म्मावृतां कटौ ॥
नवयौवनसम्पन्नां पञ्चमुद्राविभूषिताम् ।
चतुर्भुजां ललज्जिह्वां महाभीमां वरप्रदाम् ॥
खडगकर्त्तृसमायुक्तसव्येतरभुजद्वयाम् ।
कपालोत्पलसंयुक्तसव्यपाणियुगान्विताम् ॥
पिङ्गोग्रैकजटां ध्यायेन्मौलावक्षोऽभ्यभूषिताम् ।
बालार्कमण्डलाकारलोचनत्रयभूषिताम् ॥
ज्वलच्चितामध्यगतां घोरदंष्ट्रां करालिनीम् ।
सावेशस्मेरवदनां स्त्र्यलङ्कारविभूषिताम् ॥
विश्वव्यापकतोयान्तःश्वेतपद्मोपरिस्थिताम् ॥"
अस्या दशाक्षरमन्त्रोक्तध्यानं यथा, --
"श्यामवर्णां त्रिनयनां द्विभुजां वरपङ्कजे ।
दधानां बहुवर्णाभिर्बहुरूपाभिरावृताम् ॥
शक्तिभिः स्मेरवदनां स्मेरमौक्तिकभूषणाम् ।
रत्नपादुकयोर्न्यस्तपादाम्बुजयुगां स्मरेत् ॥"
इति तन्त्रसारः ॥
(अस्या बीजं यथा, "ह्रीँ स्त्रीँ हुँ फट् ॥")

**तारापतिः**, पुं, (तारायाः पतिः ।) शिवः ।
चन्द्रः । (यथा, राजेन्द्रकर्णपूरे । २७ ।
"शान्तध्वान्तकलङ्क शङ्करशिखालङ्कार तारापते
राकाकान्त सविभ्रमं भ्रम सदा निःशङ्कमङ्के
दिवः ॥")
बृहस्पतिः । वाली । सुग्रीवः । इति पुराणम् ॥
(यथा, नैषधे । १९ । ८ ।
"व्रजति कुमुदे दृष्ट्वा मोहं दृशोरपिधायके
भवति च नले दूरं तारापतौ च हतौजसि ।
लघु रघुपतेर्ज्जायां मायामयीमिव रावणि-
स्तिमिरचिकुरग्राहं रात्रिं हिनस्ति गभस्ति-
राट् ॥")

**तारापथः**, पुं, (ताराणां नक्षत्राणां पन्थाः ।
समासे अ ।) आकाशः । इति हलायुधः ॥

**ताराभूषा**, स्त्री, (तारा नक्षत्राणि भूषा भूषणं
यस्याः ।) रात्रिः । इति राजनिर्घण्टः ॥

**ताराभ्रः**, पुं, (तारो निर्म्मलोऽभ्र इव । शुक्लवर्ण-
त्वादस्य तथात्वम् ।) कर्पूरः । इति
राज-
निर्घण्टः ॥ (विवरणमस्य कर्पूरशब्दे
द्रष्टव्यम् ॥)

**तारामण्डलः**, पुं, (ताराणां मुक्तानां मण्डलं यत्र
।)
ईश्वरगृहविशेषः । इति शब्दरत्नावली
॥
(नक्षत्रमण्डले, क्ली ॥)

**तारारिः**, पुं, (तारस्य रूप्यस्य अरिः । एतत्-
संसर्गेण रूप्यस्य चाकचिक्यादिकं
विनश्यतीत्य-
तोऽस्य तथात्वम् ।) विटमाक्षिकः ।
इति हेम-
चन्द्रः । ४ । १२१ ॥

**तारावती**, स्त्री, चन्द्रशेखरराजपत्नी । सा च
ककुत्स्थराजेन तत्पत्न्यां
मनोन्मथिन्यां जाता ।
असौ गिरिजांशजा । यथा, --
"इक्ष्वाकुवंशजो राजाककुत्स्थो नाम
धार्म्मिकः ।
भोगवत्याह्वयायान्तु पुर्य्यां
रिपुनिसूदनः ॥
सर्व्वलक्षणसम्पन्नो भूपालगुणसंयुतः ।
तस्य भार्य्या महाभागा भर्गदेवस्य
पुत्रिका ॥
सा मनोन्मथिनी नाम्ना पूजिता
पतिवल्लभा ।
तस्याः पुत्रशतं जज्ञे
देवगर्भाभमच्युतम् ॥
बलवीर्य्यसमायुक्तं
ककुत्स्थनृपसत्तमात् ।
पुत्री न विद्यते तस्यास्तदर्थं सा
गृहान्तरे ॥
स्वयंवरं जगामाशु देवालङ्कारमण्डितः ।
एतस्मिन्नन्तरे राज्ञः कुमारी वरवर्णिनी ॥
वृद्धां धात्रीं निजां सम्यक्
सम्पूर्णज्ञानशालिनीम् ।
स्वयंवरसभां द्रष्टुं प्राहिणोत् सदसं प्रति ॥
स्वयंवरसभां गत्वा चारुरूपं सुलक्षणम् ।
नृपं निरूप्य भो धात्रि ! मह्यमेत्य निवेदय ॥
एवं तां प्रेषयित्वाथ धात्रीं नृपतिपुत्त्रिका ।
सा मनोन्मथिनी यत्र प्राराधयति चण्डिकाम्
॥
तत्र प्रायान्महाभागा शुभा तारावती तदा ।
तत्र गत्वा महादेवीं प्रणम्य कालिकाह्वयाम् ॥
मानुषेणाथ भावेन न ज्ञात्वात्मानमात्मना ।
प्रणनाम महाभक्त्या वाक्यञ्चैतदुवाच ह ॥
प्रणमामि महामायां योगनिद्रां जगम्मयीम् ।
सा मे प्रसीदतां गौरी चण्डिका भक्तवत्सला ।
यदि सत्यं जनन्या मे मदर्थे त्वं प्रपूजिता ।
तेन सत्येन सुभगः पतिर्म्मम नृपोत्तमः ॥
स्वयंवरेऽद्य भवतु प्रसीद हरवल्लभे ! ।
इति तस्या वचः श्रुत्वा चण्डिका हरमोहिनी
॥
मोहयन्ती नृपसुतां यथात्मानं न वेत्ति च ।
अथ प्राहादृश्यमूर्त्तिरिदं सा सूनृतं वचः ॥
श्रीदेव्युवाच ।
पौष्यस्य तनयो योऽसौ नाम्ना तु चन्द्रशेखरः
।
स मनोहररूपस्ते प्रियः स्वामी भविष्यतिं ॥
तमिन्दूकलया शीर्षे चिह्नितं नृपसत्तमम् ।
वरयस्व रवारोहे पार्व्वतीव वृषध्वजम् ॥
अथाजगाम सा धात्री निरूप्य सदृशं पतिम् ।
तारावत्यास्तदाचष्ट रहस्यं नृपसत्तमम् ॥
दृष्ट्वा तामागतां धात्रीं प्रहृष्टा नृपतेः सुता ।
पप्रच्छ निभृतं कीदृक् को वा दृष्टस्त्वया नृपः
॥
सा प्राह धात्री वचनात्तव भूपा विलोकिताः ।
चारुरूपाः कुलीनाश्च शास्त्रे शस्त्रे च पारगाः
॥"
"नृपौ पुनर्म्महासत्त्वौ सिंहस्कन्धौ बृहद्भुजौ ।
सर्व्वलक्षणसम्पन्नौ देवालङ्कारमण्डितौ ॥
तयोरपि वयःस्थत्वात् प्रशस्तश्चन्द्रशेखरः ।
स एव ते पतिर्योग्यश्चिह्नेनानेन सुन्दरि ! ॥

(देशविशेषः । यथा, रघुः । १५ । ९० ।
"अङ्गदं चन्द्रकेतुञ्च लक्षणोऽप्यात्मसम्भवौ ।
शासनात् रघुनाथस्य चक्रे तारापथेश्वरौ ॥"
"कारापथेश्वरौ ।" इति वा पाठः ॥)

**तारापीडः**, पुं, (ताराणां नक्षत्राणां आपीडो भूषणमिव ।) चन्द्रः । इति त्रिकाण्डशेषः ॥ (स्वनामख्यातश्चन्द्रापीडस्यराज्ञो भ्राता । यथा, राजतरङ्गिण्याम् । ४ । ४३ ।
"तारापीडोऽपि तनयः क्रमात् तस्यामजायत ॥"
कादम्बरीकथितनायकविशेषः । यथा, कादम्बर्य्याम् । १०२ पत्रे । "अवतार इव धर्म्मस्य प्रतिनिधिरिव पुरुषोत्तमस्य परिहृतप्रजापीडो राजा तारापीडोऽभवत् ॥")

निभृतं स्थण्डिलं कृत्वा चण्डिकां समपूजयत् ।
पूज्यमाना महादेवी चण्डिका राजभार्य्यया ॥
प्रसन्ना सा त्रिभिर्व्वर्षैस्तां स्वप्ने चाब्रवीदिदम् ।
योषिल्लक्षणसंयुक्ता सार्व्वभौमस्य भाविनी ॥
नक्षत्रमालया युक्ता पुत्त्री तव भविष्यति ।
सापि स्वप्ने वरं प्राप्य मुदिताभून्नृपाङ्गना ॥
पार्व्वत्यपि स्वयं तस्या गर्भे काले विवेश ह ।
सा मनोन्मथिनी देवी प्रवृत्ते ऋतुसङ्गमे ॥
गर्भं दधौ महासत्त्वं चन्द्रिकेवामृतोत्करम् ।
सम्पूर्णे तु ततः प्राप्ते तदा नक्षत्रमालिनीम् ॥
सा मनोन्मथिनी देवी सुषुवे तनयां शुभाम् ।
तां दृष्ट्वा हारसंयुक्तां शरज्ज्योत्स्नोपमां शुभाम् ॥
ककुत्स्थो भार्य्यया सार्द्धमत्यन्तमुदितीऽभवत् ।
सहजेनाथ हारेण भूषिता सा ककुत्स्थजा ॥
ववृधे मन्दिरे तस्य वर्षास्विव सुरापगा ।
तेनैव हारचिह्नेन तस्यास्तारावतीति वै ॥
नामाकरोत् पिता काले यथोक्ते नृपसत्तमः ।
कालक्रमेण सा बाल्यं व्यतीत्य वरवर्णिनी ॥
मञ्जुलं यौवनोद्भेदं प्राप श्रीरिव माधवे ।
तस्यास्तु यौवनोद्भेदं दृष्ट्वा राजा सुतैः सह ॥
ककुत्स्थः कारयामास समयेऽथ स्वयंवरम् ।
माघवे मासि संप्राप्ते चन्द्रवृद्धौ शुभे दिने ॥
तं त्वं वरय राजानं तव योग्यं शुभोदयम् ।
धात्र्याश्चैवं वचः श्रुत्वा राजपुत्त्री जगाद ताम् ॥
मत्पार्श्वचारिणी भूत्वा निदेशय नृपोत्तमम् ।
सावतीर्य्य तदा याप्ययानात्तारावती तदा ॥
धात्र्या चानुगया युक्ता व्यचरत् सदसोऽन्तरे ।
सभामध्ये चिरं सा तु विहृत्य वरवर्णिनी ॥
भावित्वान्नियतेर्योगाच्चण्डिकायाः प्रसादतः ।
तयोः समत्वादेकत्वात्तया धात्र्या विबोधिता ॥
इति खेदजघर्म्माम्भःकणिकानिचितानना ।
पतिं पूर्ब्बतरं पुत्त्री राज्ञान्तारावती सती ॥
स्वयं सा पार्व्वती देवी वव्रे च चन्द्रशेखरम् ।
वैवाहिकेन विधिना स राजा चन्द्रशेखरः ॥
तारावतीं तदा भार्य्यां ककुत्स्थनृपतेः सुताम् ।
संस्कृत्य ज्ञापयामास देवेभ्यो वैदिकैर्मखैः ॥
पाणिग्रहणसंस्कारं कृत्वा तां सहचारिणीम् ।
करवीरपुरायाशु प्रययौ चन्द्रशेखरः ॥"
इति कालिकापुराणे ४८ अध्यायः ॥

|  |  |  |
| --- | --- | --- |
|  | स्वयंवरसभां चक्रे तारावत्याः पिता सुतैः ।<br>वार्त्तिकान् सुबहून् राजा वडवाभिः क्रमेण वै ॥<br>तूर्णं प्रस्थापयामास नानादेशनृपान् प्रति ।<br>ते राजानस्तथा श्रुत्वा वार्त्तां वै वार्त्तिकाननात् ॥<br>तूर्णमेव समाजग्मुस्तारावत्याः स्वयंवरम् ।<br>तत् श्रुत्वा पौष्यतनयश्चतुरङ्गबलैर्युतः ॥ |  |

**तारिका**, स्त्री, (तारस्तीव्रतास्या अस्तीति । तार
+ "अत इनिठनौ ।" ५ । २ । ११५ ।
इति ठन् ।)
तालरसः । ताडी इति भाषा । यथा, --
"सम्बिदा कालकूटञ्च ताम्रकूटञ्च धुस्तुरम् ।
अहिफेनं खर्जुरसस्तारिका तरिता तथा ॥"
इति कुलार्णवतन्त्रम् ॥
(तरणमूल्ये, क्ली । यथा, मनुः । ८ । ४०७ ।
"गर्भिणी तु द्विमासादिस्तथा प्रव्रजितो मुनिः ।
ब्राह्मणा लिङ्गिनश्चैव न दाप्यास्तारिकं तरे ॥")

**तारिणी** स्त्री, (तारयतीति । तॄ + णिच् +
णिनिः ङीप् च ।) बुद्धदेवताभेदः ।
तत्पर्य्यायः ।
तारा २ महाश्रीः ३ ॐ कारा ४ स्वाहा ५ श्रीः
६ मनोरमा ७ जया ८ अनन्ता ९ शिवा १०
लोकेश्वरात्मजा ११ खदूरवासिनी १२ भद्रा
१३ वैश्या १४ नीलसरस्वती १५ शङ्खिनी १६
महातारा १७ वसुधारा १८ धनन्ददा १९
त्रिलोचना २० लोचना २१ । इति त्रिकाण्ड-
शेषः ॥ * ॥ द्वितीया शक्तिः । यथा, --
"अथ भेदान् प्रवक्ष्यामि तारिण्याः सर्व्वसिद्धिदान् ।
येषां विज्ञानमात्रेन जीवन्मुक्तस्तु साधकः ॥
कवितां लभते शुद्धामनर्गलविजृम्भिणीम् ।
पाण्डित्यं सर्व्वशास्त्रेषु धनैर्धनपतिर्भवेत् ॥
राजद्वारे सभायाञ्च विवादे व्यवहारके ।
सर्व्वत्र जयमाप्नोति बृहस्पतिरिवापरः ॥"
इति तन्त्रसारः ॥
अस्या ध्यानं ताराशब्दे द्रष्टव्यम् ॥

"प्रमथ्य तरसा राज्ञः शाल्वादींश्चैद्यपक्षगान् ।
पश्यतां सर्व्वलोकानां तार्क्षपुत्त्रः सुधामिव ॥"
(विनतायां जातः कश्यपपुत्त्रविशेषः । यथा,
महाभारते । १ । १२३ । ७० ।
"तार्क्षश्चारिष्टनेमिश्च गरुडश्चामितध्वजः ।
अरुणश्चारुणिश्चैव वैनतेया व्यवस्थिताः ॥")

**तार्क्षी**, स्त्री, (तार्क्ष + गौरादित्वात् ङीष् ।)
पातालगरुडीलता । इति राजनिर्घण्टः ॥

**तार्क्ष्यं**, क्ली, रसाञ्जनम् । इति मेदिनी । ये, २७ ॥
(यथास्य पर्य्यायाः वैद्यकरत्नमालायाम् ।
"तार्क्ष्यं शैलं नीलवर्णमञ्जनञ्च रसाञ्जनम् ॥")

**तार्क्ष्यः**, पुं, (तार्क्षस्य कश्यपस्य अपत्यम् । तार्क्ष
+ "गर्गादिभ्यो यञ् ।" ४ । १ । १०५ । इति
यञ् ।) अश्वः । सर्पः । गरुडाग्रजः । गरुडः ।
इति मेदिनी । रे, २७ ॥ (यथा, रघुः । ६ । ४९ ।
"त्रस्तेन तार्क्ष्यात् किल कालियेन
मणिं विसृष्टं यमुनौकसा यः ॥"
तथाच ऋग्वेदे । १ । ८९ । ६ ।
"स्वस्तिनस्तार्क्ष्योऽरिष्टनेमिः
स्वस्तिनो बृहस्पतिर्दधातु ॥"
"तृक्षस्य पुत्रो गरुत्मान् नोऽस्माकं स्वस्ति अवि-
नाशं विदधातु ।" इति तद्भाष्ये सायनः ॥
"तार्क्ष्यो रथो गरुडो वा नः स्वस्ति दधातु ॥"
इति वाजसनेयसंहिताभाष्ये महीधरः । २५ ।
१९ ॥ तृक्षमुनेर्गोत्रापत्यम् । यथा, महाभारते ।
३ । १८४ । ८ ।
"जग्मुश्चारिष्टनेम्नोऽथ तार्क्ष्यस्याश्रममञ्जसा ॥"
तथाच तत्रैव । १२ । २८८ । ४ ।
"एवमुक्तस्तदा तार्क्ष्यः सर्व्वशास्त्रविदां वरः ।
विबुध्य सम्पदञ्चाग्र्यां तद्वाक्यमिदमब्रवीत् ॥")

"सिन्धूद्भूतं चक्रमर्द्दस्य वीज-
मिक्षूद्भूतं केशवं तार्क्ष्यशैलम् ॥")

**तार्क्ष्यी**, स्त्री, (तार्क्ष्यस्य पक्षिणः प्रिया । अण्
ङीप् च ।) वनलताविशेषः । इति शब्दरत्ना-
वलो ॥

**तालं**, क्ली, (तलत्यनेनेति । तल प्रतिष्ठायाम् +
"हलश्च ।" ३ । ३ । १२२ । इति घञ् ।)
हरि-
तालम् । (अस्य नामानि यथा, --
"हरितालं तालमालं मालं शैलूषभूषणम् ।
पिञ्जकं रोमहरणं तालकं पातमित्यपि ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणाधि-
कारे ॥)
तालीशपत्रम् । इति राजनिर्घण्टः ॥ दुर्गा-
सिंहासनम् । इति हेमचन्द्रः । ४ । २०२ ॥
(तालस्य विकारः । "तालादिभ्योऽण् ।" ४ ।
३ । १५२ । इत्यस्य तालाद्धनुषि इति वार्त्ति-
कोक्त्या अण् । धनुः । इति सिद्धान्तकौमुदी ॥
तालस्येदम् । अण् तस्य लुक् ।) तालफलम् ॥
(यथा, महाभारते । ३ । १०१ । ५ ।
"शिरोभिः प्रपतद्भिश्चाप्यन्तरीक्षात्महीतलम् ।
तालैरिव महाराज ! वृन्तादभ्रष्टैरदृश्यत ॥")

**तालः**, पुं, (तलत्यत्र । तल + "हलश्च ।" ३ । ३ । १२२ ।
इति घञ् ।) वृक्षविशेषः । तत्पर्य्यायः । ताल-
द्रुमः २ पत्री ३ दीर्घस्कन्धः ४ ध्वजद्रुमः ५ तृण-
राजः ६ मधुरसः ७ मदाढ्यः ८ दीर्घपादपः ९
चिरायुः १० तरुराजः ११ दीर्घपत्रः १२ गुच्छ-
पत्रः १३ आसवद्रुः १४ । इति राजनिर्घण्टः ॥
लेख्यपत्रः १५ महोन्नतः १६ । इति भाव-
प्रकाशः ॥ अस्य गुणाः । मधुरत्वम् । शीत-
त्वम् । पित्तदाहश्रमापहत्वञ्च ॥ * ॥ अस्य
रसगुणः । कफपित्तदाहशोफनाशित्वम् । मद-

("तारा चोग्रा महोग्रा च वज्रा नीला
सरस्वती ।
कामेश्वरी भद्रकाली इत्यष्टौ तारिणी स्मृता
॥"
इति मन्त्रकोषः ॥
त्रि, उद्धारकर्त्त्री । यथा, मार्कण्डेये ।
"तारिणी भवसंसारसागरस्य कुलोद्भवे !
॥")

**तारुण्यं**, क्ली, (तरुणस्य भावः । तरुण + ब्राह्म-

णादित्वात् ष्यञ् ।) यौवनम् । इत्यमरः ।
२ ।
६ । ४० ॥ (यथा, मार्कण्डेये । २४ । ७ ।
"तृणकोटिसमं वित्तं तारुण्याद्वित्तकोटिषु
॥")

**तारेयः**, पुं, (ताराया वालिपत्न्या अपत्यं पुमान् ।)

तारा + ढक् ।) वालिपुत्त्रः । इति जटाधरः
॥
(यथा, रामायणे । ४ । २२ । १२ ।
"अनुरूपाणि कर्म्माणि विक्रम्य बलवान्
रणे ।
करिष्यत्येष तारेयस्तेजस्वी तरुणोऽङ्गदः
॥"
बृहस्पतिपत्न्यास्ताराया:पुत्रो बुधोऽपि
॥)

**तार्किकः**, त्रि, (तर्कं षेत्ति अधीते वा । तर्क +

ठक् ।) तर्कशास्त्रवेत्ता । तर्काध्ययनकर्त्ता
।
इति व्याकरणम् ॥ स षडिधो यथा । वैशे-
षिकः १ औलूक्यः २ बार्हस्पत्यः ३
नास्तिकः ४
लौकायतिकः ५ चार्व्वाकः ६ । इति
हेमचन्द्रः ॥
(यथा, अप्पयदीक्षित-वैराग्यशतक । ६१ ।
"कोपो मैत्रावरुणेः शापो वा तार्किकस्य
मुनेः ।
संस्मर्य्यते यदि सकृच्छत्रोरपि मास्तु शक्र-
पदम् ॥")

**तार्क्षः**, पुं, (तृक्ष एव । स्वार्थे अण् ।) कश्यपः ।

यथा, श्रीभागवते ।

शालवृक्षः । स्वर्णम् । इति शब्दरत्नावली ॥
अश्वकर्णवृक्षः । स्यन्दनम् । इति हेमचन्द्रः ।
४ । २९८ ॥ (क्षत्त्रियविशेषः । यथा, महा-
भारते । २ । ५१ । १५ ।
"अम्बष्ठाः कौकुरास्तार्क्ष्या वस्त्रपाः पह्लवैः
सह ॥"
महादेवः । यथा, महाभारते । १३ । १७ ।
९७ ।
"गन्धर्व्वो ह्यदितिस्तार्क्ष्यः सुविज्ञेयः
सुशारदः ॥"
पर्व्वतविशेषः । इति कश्चित् ॥)

**तार्क्ष्यजं**, क्ली, (तार्क्ष्यः सुवर्णं तद्वत् जायते ।

यद्वा, तार्क्ष्ये पर्व्वते जायते इति । जन + डः
।)
रसाञ्जनम् । इति भावप्रकाशः ॥

**तार्क्ष्यध्वजः**, पुं, (तार्क्ष्यो गरुडः ध्वजे यस्य ।)

विष्णुः । इति हेमचन्द्रः । २ । १२८ ॥

**तार्क्ष्यनायकः**, पुं, (तार्क्ष्याणां सर्पाणां नायकः

प्रापकः । स्वमातुर्दासत्वकाले
विमातृपुत्त्रसर्पाणां
बहनात् तथात्वम् ।) गरुडः । इति राज-
निर्घण्टः ॥ (तार्क्ष्यनाशकः । इति कश्चित्
॥)

**तार्क्ष्यप्रसवः**, पुं, (तार्क्ष्यः पर्व्वतः प्रसवोऽस्य ।)

अश्वकर्णवृक्षः । इति राजनिर्घण्टः ॥

**तार्क्ष्यशैलं**, क्ली, (तार्क्ष्यशैले भवम् । अण् ।)

रसाञ्जनम् । इति राजनिर्घण्टः ॥ (यथा,
सुश्रुते चिकित्सितस्थाने ९ अध्यायेः

कारित्वञ्च ॥ * ॥ तत्फलगुणाः । शीतलत्वम्
।
बल्यत्वम् । स्निग्धत्वम् । स्वादुरसत्वम् । गुरु-
त्वम् । विष्टम्भित्वम् ।
वातपित्तास्रक्षतदाहक्षय-
नाशित्वञ्च । इति राजनिर्घण्टः ॥ पित्तरक्त-
श्लेष्मविवर्द्धनत्वम् । दुर्ज्जरत्वम् । बहुमूत्रत्वम्
।
तन्द्राभिष्यन्दिशुक्रदातृत्वञ्च। इति
भावप्रकाशः ॥
वातकृमिकुष्ठरक्तपित्तनाशित्वम् । बृंहणत्वम् ।
वृष्यत्वम् । स्वादुत्वञ्च । इति राजवल्लभः ॥ *
॥
तद्वीजस्य अर्थात् तालशस्यस्य गुणाः । मूत्र-
करत्वम् । मिष्टत्वम् । वातपित्तहरत्वम् । गुरु-
त्वञ्च ॥ * ॥ तदस्थिमज्जगुणाः । मधुरत्वम् ।
मूत्रलत्वम् । शीतलत्वम् । गुरुत्वञ्च ॥ * ॥
तालाम्बुगुणाः । पित्तनाशित्वम् । शुक्रस्तन्य-
वृद्धिकारित्वम् । गुरुत्वञ्च । इति राजनिर्घण्टः
॥
तालजतरुणतोयगुणाः । अतिशयमदकारित्वम्
।
तदेवाम्लीभूतं पित्तवातदोषकृत् । इति भाव-
प्रकाशः ॥ कफकृमिहरत्वम् । रुच्यत्वम् ।
वात-
लत्वम् । दुर्ज्जरत्वञ्च । इति राजवल्लभः ॥ *
॥
तालप्रलम्बगुणाः । रुक्षत्वम् । क्षतरोगनाशि-
त्वञ्च । इति राजनिर्घण्टः ॥ * ॥ तालतरुण-
मज्जगुणाः । किञ्चिन्मदकरत्वम् । लघुत्वम् ।

श्लेष्मकारित्वम् । वातपित्तनाशित्वम् ।
सस्नेह-
त्वम् । मधुरत्वम् । सारकत्वञ्च । इति भाव-
प्रकाशः ॥ * ॥ तालशिरोगुणाः । स्वादुत्वम् ।
तिक्तत्वम् । कषायत्वम् । मूत्रातङ्करोगनाशि-
त्वम् । बलप्राणशुक्रवृद्धिकारित्वञ्च । इति ।
राजवल्लभः ॥ * ॥
गीतकालक्रियामानम् । अयं स्वर इयत् कालं
गेयः इयत् कालं विलम्बितं इयत् कालं द्रतं
इयत् कालं मध्यमिति बोधयितुं ईदृशै-
र्हस्तैरङ्गुल्याकुञ्चन
प्रसारणादिक्रियाभिर्नर्त्तितव्यं
गातव्यञ्चेति कालक्रिययोः प्रमाणं तालः ॥
साञ्जे
इदमियत् कालं गेयमिति
कालेनाङ्गुल्याद्याकुञ्च-
नादिक्रियामानं ताल इति ॥ कालस्य एकद्वि-
त्रिमात्राद्युच्चारणनियमितस्यक्रियायाः परि-
स्पन्दात्मिकायाः परिच्छेदहेतुस्ताल इति
मधुः ॥
कालेन नर्त्तनगलवादनक्रियाणांमानं तालः ।
तारादेककालमेषां विरामस्ताल इत्यन्ये ।
इत्य-
मरटीकायां भरतः ॥ * ॥ तस्योत्पत्तिर्यथा ।
गौरीहरयोर्नृत्येन तालो ब्रभूव । तस्य कार-
णम् । क्रियाकालश्च । हरनृत्यस्य ताण्डवं
गौर्य्या
नृत्यस्य लास्यं इति संज्ञा अर्थात्
पुरुषनृत्यस्य
ताण्डवं नार्य्या नृत्यस्य लास्यमिति नाम ।
ताण्डवस्याद्याक्षरेण लास्यस्याद्याक्षरेण च
मिलित्वा ताल इति संज्ञा जाता । इति
सङ्गीतशास्त्रम् ॥ * ॥ तस्य भेदा यथा, --
"चच्चत्पुट १ श्चाचपुटः २
षट्पितापुत्त्रकस्तथा ३ ।
उद्घट्टकः ४ सन्निपातः ५ कङ्कणः ६
कोकिलारवः ७ ॥
राजकोलाहलो ८ रङ्गविद्याधर ९ शचीप्रियौ
१० ।
पार्व्वतीलोचनो ११ राजचूडामणि १२ जय-
श्रियौ १३ ॥

सम्पक्वेष्टाक ६० इत्यादि ताला
भरतसंमताः ।
संक्षेपतो निगदिता अथैषां लक्षणं यथा ॥
* ॥
अर्द्धमात्रं द्रुतं ज्ञेयमेकमात्रं लघु स्मृतम् ।
द्विमात्रन्तु गुरु ज्ञेयं त्रिमात्रन्तु प्लुतं मतम्
॥
ताले चच्चत्पुटे ज्ञेयं गुरुद्वन्द्वं लघुः प्लुतः
१ ।
गुरुर्लघुः प्लुतश्चैव भवेच्चाचपुटाभिधे ॥
२ ॥
गलगालगलाश्चैव षट्पितापुत्त्रके मताः ३
।
उद्घट्टके तु गमनाः ४ सन्निपाते गुरुर्म्मतः
॥ ५ ॥
चतुर्व्विधः परिज्ञेयस्तालः कङ्कणनामकः
६ ।
पूर्णः खण्डः समश्चैव विषमश्चैव कथ्यते
॥
लचतुष्क गलौ पूर्णे खण्डे बिन्दुद्वयं गुरुः ।
यगणस्तु समे ज्ञेयस्तगणो विषमे भवेत् ॥
खचतुष्कं सयत्यन्तं गुरुर्बिन्दुचतुष्टयम् ।
सयत्यन्तं लघुश्चैव तालोऽयं
कोकिलारवः ॥ ७ ॥
लचतुष्कं सयत्यन्तं खत्रयं खत्रयं लघुः ।
लघुर्बिन्दुद्वयञ्चेति राजकोलाहलाभिधे ॥
८ ॥
खद्वयं द्वौ प्लुतौ यत्र रङ्गविद्याधरः स तु ९
।
लघूनि त्रीणि यत्र स्युर्गुरूणि त्रीणि यत्र वै
॥
प्लुतद्वयञ्च यत्रास्ति स तालः
स्याच्छचीप्रियः ॥ १० ॥
खद्वयं गुरुलौ बिन्दुर्गौ प्लुतौ गौ प्लुतौ
पुनः ।
यत्र तालः स विज्ञेयः
पार्व्वतीलोचनाभिधः ॥ ११ ॥
राजचूडामणौ बिन्दुर्लश्च बिन्दुर्लगौ मतौ
॥ १२ ॥
रगणो नो गुरुश्चैव जयश्रीरिति कथ्यते ॥
१३ ॥

सकारश्च यकारश्च जयमङ्गलनामनि ॥ ३८
॥
चत्वारो गुरवो बिन्दूश्चत्वारश्च प्लुता अपि ।
बिन्दवो दशषट् लाश्च ताले गन्धर्व्वसंज्ञके ॥
३९ ॥
मकरन्दे द्रुतद्वन्द्वं लघुद्वन्द्वमथो गुरुः ॥ ४० ॥
गुरुर्लघुः प्लुतश्चैव त्रिभङ्गिः परिकीर्त्तितः ॥
४१ ॥
अत्र रतितालस्य लक्षणं पतितम् ॥ ४२ ॥
वसन्तताले कर्त्तव्यो नगणो मगनस्तथा ॥
४३ ॥
जगझम्पे गुरुश्चैको विरामान्तञ्च खद्वयम् ॥
४४ ॥
गप्लुतौ लौ द्रुतौ लश्च प्लुतो गारुणि । ४५ ।
शेखरे ॥ ४६ ॥
प्लुतः शून्ये नगौ लश्च खद्वयञ्च ततो लघुः ॥
खचतुष्कं विना शब्दं यत्र घोषः स उच्यते ।
४७ ।
हरवल्लभताले च प्लुतो लो गौ च खद्वम् ॥ ४८
॥
भगणः प्लुतौ गनौ गयौ प्लुतो लघुश्च भैरवे ।
४९ ।
गतप्रत्यागते ताले लो मौ गौ नौ प्रकीर्त्तितौ ॥
५० ॥
चतुर्लघुर्मल्लताले विरामान्तं द्रुतद्वयम् ।
लगौ गौ नो नगौ गश्च खद्वयं लद्वयं पुनः ॥
५१ ॥
नचतुष्कं विना शब्दं ताले भैरवमस्तके । ५२
।
सरस्वतीकण्ठाभरणेगौ लघुश्च द्रुतद्वयम् ॥
५३ ॥
एक एव प्लुतो यत्र क्रीडातालः स उच्यते ॥
५४ ॥
द्रुतद्वयं विरामान्तं ताले निःसारुके मतम् ।
५५ ।
खत्रयं सविरामान्तं नौ पुनः खत्रयन्तथा ॥
प्लुतौ गः खयुगं गश्च यत्र मुक्तावली तु सां ।
५६ ।
लगौ बिन्दुयुगं गौ लो रङ्गराजे प्रकीर्त्तितः ॥
५७ ॥
खद्वयं सविरामान्तं गुरुः प्लुतद्वयं लघुः ।

वादकाकुल १४ कन्दर्प १५ नलकूवर १६
दर्पणाः १७ ।
रतिलीलो १८ मोक्षपतिः १९ श्रीरङ्गः २०
सिंह-
विक्रमः २१ ॥
दीपको २२ मल्लिकामोदो २३ गजलीलश्च
२४
चर्च्चरी २५ ।
कुहक्को २६ विजयानन्दो २७ वीरविक्रम
२८
टेङ्किके २९ ॥
रङ्गाभरण ३० श्रीकीर्त्ति ३१ वनमालि ३२
चतु-
र्म्मुखाः ३३ ।
सिंहनन्दन ३४ नन्दीश ३५ चन्द्रविम्ब ३६
द्विती-
यकाः ३७ ॥
जयमङ्गल ३८ गन्धर्व्व ३९ मकरन्द ४०
त्रिभ-
ङ्गयः ४१ ।
रतितालो ४२ वसन्तश्च ४३ जगझम्पो ४४
ऽथ
गारुणिः ४५ ॥
कविशेखर ४६ घोषौ च ४७ हरवल्लभ ४८
भैरवौ ४९ ।
गतप्रत्यागतो ५० मल्लतालो ५१
भैरवमस्तकः ५२ ॥
सरस्वतीकण्ठाभरणः ५३ क्रीडा ५४
निःसारु-
रेव च ५५ ।
मुक्तावली ५६ रङ्गराज ५७ भरतानन्दा ५८
दितालकाः ५९ ॥

प्लुतौ लघुचतुष्कञ्च मौ नौ द्रुतयुगं लघुः ।
लचतुष्कंविना शब्दं तालः
स्याद्वादकाकुलः ॥ १४ ॥
द्रुतद्वयं यकारश्च कन्दर्पेपि प्रकीर्त्तितः ॥
१५ ॥
चत्वारो गुरवो यत्र चत्वारः प्लुतका अपि
।
लघ्वक्षराणि चत्वारि तालोऽयं नलकूवरः
॥ १६ ॥
बिन्धुद्वयं गुरुश्चैव भवेद्यत्र स दर्पणः ॥
१७ ॥
रतिलीले विधातव्यं लघुद्वन्द्वं गुरुद्वयम् ॥
१८ ॥
आदौ षोडशगुरवो द्वात्रिंशल्लघवस्ततः ।
चतुःषष्टिर्द्रुता यत्र सोऽयं मोक्षपतिर्मतः ॥
१९ ॥
श्रीरङ्गसंज्ञके ताले मगणाल्लघुप्लुतौ मतौ
॥ २० ॥
सिंहविक्रमताले तु मगणो नखगाः खगौ ॥
२१ ॥
प्लुतो लघुः प्लुतश्चैव ताले दीपकनामनि
॥ २२ ॥
ताले स्यान्मल्लिकामोदे लद्वयं खचतुष्टयम्
॥ २३ ॥
लचतुष्कं विरामान्तं गजलीले प्रकीर्त्तितम्
॥ २४ ॥
अष्टकृत्वस्तु चर्च्चर्य्यां विरामान्ते द्रुतौ
लघुः ॥ २५ ॥
द्रुतद्वन्द्वं भवेत्ताले कुहक्काख्ये लघुद्वयम्
॥ २६ ॥
भवेयुर्विजयानन्दे लत्रयञ्च लघुत्रयम् ॥
२७ ॥
वीरविक्रमताले तु द्रुतौ लगौ ततः प्लुतः
॥ २८ ॥
टेङ्किका रगणेन स्यादेकेनैव कृतास्पदे ॥
२९ ॥
भगणो गप्लुतौ स्यातां रङ्गाभरणनामके ॥
३० ॥
श्रीकीर्त्तिसंज्ञके ताले गुरुद्वन्द्वं लघुद्वयम्
॥ ३१ ॥
चतुर्द्रुता लघू द्वौ तु द्रुतो गो वनमालिनि ॥
३२ ॥

यत्र ताले स विज्ञेयो भरतानन्दसंज्ञकः ॥ ५८
॥
आदिताले लगुश्चैक इत्याह भरतो मुनिः ।
५९ ।
मगणश्च प्लुताद्यन्तः संपक्वेष्टाकतालके ॥
६० ॥
एकाधिकशते ताले षष्टिर्मुख्यतमा इमे ॥” * ॥
अथ प्रस्तारः ।
“गुरुः प्लुताधोभागे तु गुर्व्वधोभागतो लघुः ।
द्रुतं लघोरधोभागे तुल्ये तुल्या तु पङ्क्तिका ॥
उद्धृत्ता च कला पश्चादित्थं प्रस्तारणक्रमः ।
सर्व्वप्लु तात् समारभ्य मात्रानिवहनिर्म्मितात्
॥
तावत् प्रस्तारयेदन्ते यावत् सर्व्वं द्रुतं भवेत्
॥”
अत्र तालप्रस्तारे पिङ्गलवन्नष्टोद्दिष्टमेरुपताका-
दयः सन्ति बाहुल्यभयान्नोक्ताः ॥ * ॥
अथ प्लुतादिमात्राभेदेन तालघातनम् ।
“ताले निष्टातहस्तः प्लुतमनुघटयेद्धातमेकं
सशब्दं
तत्पश्चात् द्वौ च घातौ निनदविरहितौ दर्शये
दूर्द्धतोऽधः ।
शून्यत्वात् फक्वतालाविति जगति पुनः
सूत्रसिद्धौ
सनन्दा-
वित्थं घातत्रयं तत् त्रिकलतनुवहिर्व्वर्द्धयेद्दुर्ल-
कारम् ॥
एको घातः सशब्दो द्विकल इह गुरौ शब्दहीन-
स्तथान्यः
सोऽप्यूदर्ध्वं याति लीलावलयवलयितोत्तान-
हस्ताङ्गुलीभिः ।
किञ्चोच्चैकैकमात्रा समुदयिनि लधौ घात एको
निनादी

| | | |
|---|---|---|
| | चतुर्मुखाभिधे ताले यगणानन्तरं प्लुतः ॥ ३३ ॥<br>भगणः प्लुतो लगौ बिन्दुद्वयं गौ नः प्लुतस्तथा ।<br>लघुः प्लुतो द्रुतश्चैको लघुद्वयमथापि च ॥<br>निःशब्दं लचतुस्कञ्च ताले स्यात् सिंहनन्दने ॥ ३४ ।<br>गो लघुर्गौ लघुः प्लुतस्ताले नन्दीश्वरे मताः ॥ ३५ ॥<br>गो द्रुतौ नौ प्लुतद्वन्द्वं चन्द्रविम्बे प्रकीर्त्तितम् ॥ ३६ ॥<br>द्रुतद्वन्द्वं लघुश्चैकस्ताले स्यात्तु द्वितीयके ॥ ३७ ॥ | |

घात्यो मात्रार्द्धभाजि द्रुतवपुषि लधोरर्द्धनादेन घातः ॥
इति तालघातनप्रकारः ॥ * ॥
श्रीरङ्गो मणिबन्धकङ्कणवहो मुक्तावलीमण्डनः
क्रीडाहेतुवसन्तरक्तहृदयो गन्धर्व्वलीलारतः ।
साक्षान्मोक्षपतिश्चतुर्मुखनतो यो राजचूडामणिः
सोऽयं तालमयस्तृणेद्धतृणवत् संसारबन्धं हरिः ॥
अपि च ।
नन्दीशोऽर्द्धतनुर्मुखेन वनतस्तच्चन्द्रविम्बोदयः
कन्दर्पो नलकूवरश्च तुलितौ यस्यातिरूपे तुले ।
कण्ठान्तः किल कोकिलारवभवो बाहौ जय-श्रीरहो
तालात्मा मुरजिच्छिनत्तु सगुणः संसारपाशा-वलीम् ॥
ख्यातो यः कविचक्रवर्त्तिपदतो विद्याचनैरञ्चितः
सौभद्रेयमिमं यमर्ज्जुनयशाः सोऽजीजनत् श्रीधरः ।
तस्य श्रीलशुभङ्करस्य भणितौ भङ्गीतदामोदरे
तालाद्यः स्तवकोच्युतस्तवकृतौ यातस्तृतीयः पट्टः ॥" * ॥
अन्यच्च ।
"आदावष्टस्तथा रुद्रो ब्रह्म इन्द्रश्चतुर्द्दशः ।
दशावतारबन्धादि नृत्यनाट्यं ततः परम् ॥
अथाष्टतालभेदाः । आडः १ दोजः २ ज्योतिः ३
चन्द्रशेखरः ४ गञ्जनम् ५ पञ्चतालः ६ रूप-कम् ७ समतालः ८ ॥ अथ रुद्रतालस्य भेदाः ।
वीरविक्रमः १ विषमसमुद्रः २ धरणम् ३ वीर-
दशकः ४ मण्डूकः ५ कन्दर्पः ६ डाँशपाहिडः ७
ध्रुवचरणम् ८ दशकोषी ९ गजेन्द्रगुरुः १०

शेषे च युगलं तालं रूपकं परिकीर्त्तितम् ७ ॥
एकतालं तथा शून्यं क्रमेण द्विविधं भवेत् ।
शेषे युगलतालञ्च समतालं भवेत् परम् ८ ॥
एकतालं तथा शून्यं क्रमेण त्रिविधं भवेत् ।
तत्परं युगलं तालमित्येवं वीरविक्रमः १ ॥
युग्मतालं तथा शून्यं तत्परं द्वयतालकम् ।
शेषे च युगलं तालं समुद्रविषमं स्मृतम् २ ॥
युग्मतालञ्च शून्यञ्च एकतालञ्च तत्परे ।
शेषैकत्र त्रिशून्यञ्च विषमं धरणं भवेत् ३ ॥
एकतालं तथा शून्यं क्रमेणापि त्रिधा भवेत् ।
युगलं युगलं पश्चात् स वीरदशकः स्मृतः ४ ॥
प्रथमं एकतालञ्च तत्परं शून्यमेककम् ।
शेषैकत्र त्रितालञ्च मण्डूकस्य गतिर्यथा ५ ॥
समतालं यथा दृष्टं तथा कन्दर्पसंज्ञितम् ।
समताले भवेत् शून्यं कन्दर्पे नास्ति तत् पुनः ६ ॥
पञ्चतालात् परं शून्यं डाँशपाहिडमुत्तमम् ।
अत्यूद्र्ध्वञ्च भवेत् त्रस्तं संग्रामस्य यथा गतिः ७ ॥
एकतालं तथा शून्यं क्रमेणापि द्विधा भवेत् ।
शेषैकत्र त्रितालञ्च ध्रुवचरणभाषितम् ८ ॥
एकतालमेकशून्यमित्येवञ्च भवेत् क्रमात् ।
विरामं एकतालञ्च वाग्भेदे दशकोषिका ९ ॥
युगलं युगलं पश्चात् तदन्तेऽप्येकतालकम् ।
शेषे च युग्मशून्यञ्च गजेन्द्रगुरुभाषितम् १० ॥
युग्मशून्यं विरामे च एकतालं भवेत् क्रमे ।
छुटकाख्यानकं धीर सङ्गीतपरिनिष्ठितम् ११ ॥
युग्मञ्च त्रस्तं प्रथमैकतालं
किञ्चिद्विरामे पुनरेकतालम् ।
ब्रह्मस्य तालञ्च सङ्गीतमध्ये
यथा कपोती हि करोति शब्दम् १ ॥
युग्मतालं भवेत्रस्तं एकतालञ्च तत्परे ।
शेषे द्वितीयशून्ये च विरामब्रह्मतालकम् २ ॥
प्रथमञ्चैकतालञ्च युग्मशून्यं तथा परे ।
शेषैकत्र त्रितालेति षट्कला खलु कथ्यते ३ ॥
आदौ युग्मं तथा युग्मं त्रितालञ्च तथा परे ।
सप्तमात्रा भवत्येषा ब्रह्मतालान्तरे शुभे ४ ॥

शेषे युग्मं तथा शून्यं देवमात्रा च सोच्यते ३ ॥
चन्द्रशून्यं त्रितालञ्च विरामेण क्रमेण तु ।
अत्यूद्र्ध्वन्तु भवत्येवं अर्द्धज्योतिरिति स्थितिः ४ ॥
एकैकतालान्तरयुग्मतालात्
शून्यत्रयं तत्परमेकतालम् ।
कलाभिदा शून्यभिदा समाख्या
स स्वर्गसाराख्यनवीनतालः ५ ॥
युग्मशून्यं विरामेण देवतालमिति क्रमात् ।
क्षमाष्टाख्योऽन्तरे शून्यं इति सर्व्वत्र भाषितम् ६ ॥
नवाम्बुदे दामिनि शीघ्रयानं
तथा सुसम्बद्धसुतालभानम् ।
युग्मं सत्रस्तं क्रमतश्च तालं
शेषे त्रितालञ्च धराधराख्या ७ ॥
एकतालञ्च शून्यञ्च क्रमेणापि चतुष्टयम् ।
क्रमात्तालत्रयञ्चैव वसन्तवागुदाहृतः ॥ ८ ॥
सविरामं द्वयं तालं युग्मतालं तथा परे ।
शेषैकत्र त्रितालञ्च भवेत् काककलेति सा ॥ ९ ॥
त्रितालञ्च भवेत्रस्तं तत्परं त्वेकतालकम् ।
शेषेऽपि च त्रितालञ्चेत् कीरशब्दा प्रचक्ष्यते १० ॥
युग्मं युग्मं तथा युग्मं तालन्त्वेकं भवेत् क्रमात् ।
शेषशून्यं कलाभेदे ताण्डवीति भवेत् पृथक् ११ ॥
सविरामं द्वयं तालं युग्मशून्यञ्च तत्परम् ।
शेषोद्र्ध्वन्तु त्रितालञ्च हर्षधारा प्रकीर्त्तिता १२ ॥
चन्द्रशून्यं विरामेण द्वयं तालं भवेत् क्रमात् ।
अत्यूद्र्ध्वन्तु भवेत्रस्तं भाषाख्यं तालमुत्तमम् १३ ॥
अत्यूद्र्ध्वन्तु त्रितालञ्च द्वयं तालं विरामकम् ।
इत्यर्द्धमात्रा विज्ञेवा सङ्गीतभुवि सर्व्वतः ॥"
इति सङ्गीतदामोदरः ॥
दशावतारप्रबन्धलक्षणं प्रबन्धशब्दे नित्यनाट्य-प्रबन्धवाद्यलक्षणं वाद्यशब्दे द्रष्टव्यम् ॥ * ॥

छटका ११ । अथ ब्रह्मतालभेदाः । ब्रह्म १
विराम-
ब्रह्म २ षट्कला ३ सप्तमात्रा ४ ॥
अथेन्द्रताल-
भेदाः । देवसारः १ देवचाली २ मदनदोला
३
गुरुगन्धर्व्वः ४ पञ्चाली ५ इन्द्रभाषः ६ ॥
अथ चतुर्द्दशतालभेदाः । चिह्नतालः १ चन्द्र-
मात्रा २ देवमात्रा ३ अर्द्धज्योतिका ४ स्वर्ग-
सारः ५ क्षमाष्टः ६ धराधरा ७ वसन्तवाक् ८
काककला ९ कीरशब्दा १० ताण्डवी ११
हर्ष-
घारिका १२ भाषा १३ अर्द्धमात्रा १४ ॥
तेषां लक्षणानि यथा, --
एकतालस्ततः शून्यं युगलं तालिका परे ।
सङ्गीतः प्रथमः सार आडतालः प्रकीर्त्तितः
१ ॥
एकतालञ्च शून्यञ्च क्रमेणापि त्रिधा भवेत् ।
शेषशून्यं कलाभेदे दोजाख्यश्च भवेत् पृथक्
२ ॥
प्रथमं युगलं तालं एक एकस्तथापरे ।
कलाभेदे गानभेदं ज्योतिश्च परिकीर्त्तितम् ३
॥
चन्द्रश्चन्द्रस्तथा युग्मं तथा चन्द्रस्तथापरे ।
षट् ताला निभवन्त्येवं चन्द्रशेखरभाषितः ४
॥
एकतालो भवेच्छ्रेष्ठः क्रमेणापि चतुष्टयम् ।
शेषशून्यं गञ्जनञ्च सर्व्वतो मुनिभाषितम् ५ ॥
प्रथमं युगलञ्चैव तत्परं तालमेककम् ।
शेषे युग्मं तथा शून्यं पञ्चतालं प्रकीर्त्तितम् ६
॥
युगलं प्रथमं तालं तत्परन्त्वेकशून्यकम् ।
सविरामं त्रितालञ्च एकं शून्यन्तथापरे ।
शेषे त्रस्तं त्रितालञ्च देवसार इतीर्य्यते १ ॥
द्वितयशून्यं विरामे भवति ततश्च त्रितालानि
।
शेषेण द्विशून्यमित्येवं देवचाली २ ॥
प्रथममेव युग्मतालं तत्पश्चादेकशून्यं विरामे
।
शेषे त्रितयतालं भवतीति मदनदोला ३ ॥
युग्मतालं समारभ्य पञ्चतालं भवेत्तथा ।
अत्यूदृर्ध्वञ्च तथा त्रस्तं गुरुगन्धर्व्व ईरितः
४ ॥
श्रावणस्य यथा धारास्तथा तालो भवेद्घनः ।
पञ्चतालान्तराणीति पञ्चालीति प्रकीर्त्तिता
५ ॥
सविरामं चतुस्तालं त्रितालं शून्यमन्ततः ।
मेधारम्भे यथा केका रूयन्ते इन्द्रभाषितः ६
॥
एकतालञ्च शून्यञ्च क्रमेण त्रितयं ततः ।
शेषे चतुष्टयं त्रस्तं चिह्नताल इतीर्य्यते १ ॥
एकचन्द्रस्तथा युग्मं तालं प्रत्येकतस्त्रयम् ।
शेषे त्रीणि च शून्यानि चन्द्रमात्रा भवेत् परा
२ ॥
प्रथमं षट्कवालञ्च अत्यूदृर्ध्वन्तु भवेत् क्रमे
।
करतलम् । अङ्गुष्ठमध्यमाभ्यां सम्मितम् ।
करा-
स्फालः । (यथा, मेघदूते । ७९ ।
"तालैः सिञ्चद्वलयसुभगैर्न्नर्त्तितः कान्तया मे
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः
॥")
कांस्यनिर्म्मितवाद्यभाण्डम् । त्सरुः । इति
मेदिनी । ले, २४ ॥ (महादेवः । यथा, महा-
भारते । १३ । १७ । १२८ ।
"तलस्तालः करस्थाली ऊद्र्ध्वसंहननो
महान् ॥")

**तालकं**, क्ली, (तालमेव । ताल + स्वार्थे कन् ।)
हरितालम् । इति राजनिर्घण्टः ॥ (अथ
ताल-
कस्याशुद्धस्य दोषमाह ।
"अशुद्धं तालमायुर्घ्नं त्कफमारुतमेहकृत् ।
तापस्फोटाङ्गसङ्कोचं कुरुते तेन शोधयेत् ॥
अथ तालकस्य शोधनविधिः ।
तालकं कणशः कृत्वा तच्चूर्णं काञ्जिके पचेत्
।
दोलायन्त्रेण यामैकं ततः कुष्माण्डजैर्द्रवैः ॥
तिलतैले पचेद्यामं यामञ्च त्रिफलाजले ।
एवं यन्त्रे चतुर्यामं पक्वं शुध्यति तालकम् ॥
अथ तालकस्य मारणविधिः ।
सदलं तालकं शुद्धं पौनर्नवरसेन तु ।
खल्वे विमर्द्दयेदेवं दिनं पश्चाद्विशोषयेत् ॥
ततः पुनर्नवाक्षारैः स्थाल्यामर्द्धं प्रपूरयेत् ।

तत्र तद्गोलकं धृत्वा पुनस्तेनैव पूरयेत् ॥
आकण्ठं पिठरं तस्य पिधानं धारयेन्मुखे ।
स्थाल्यां चुल्व्यां समारोप्य क्रमाद्वह्निं विवर्द्धयेत् ॥
दिनान्यन्तरशून्यानि पञ्चवह्निं प्रदापयेत् ।
एवं तन्म्रियते तालं मात्रा तुल्यैकरक्तिका ॥
अनुपानान्यनेकानि यथायोग्यं प्रयोजयेत् ॥"
अन्यच्च ।
"तालकं हरते रोगान् कुष्ठमृत्युज्वरापहम् ।
शोधितं कुरुते कान्तिं वीर्य्यबुद्धिं तथायुषम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥
अन्यान्यविधं हरितालमारणम् । यथा, वैद्यक-
रसेन्द्रसारसंग्रहे जारणमारणाधिकारे ।
"तालकं कणशः कृत्वा सुशुद्धं हुण्डिकान्तरे ।
चूर्णोदकेन संपिष्टमपामार्गजटोद्भवैः ॥
क्षारोदकैश्च संपिष्टमूर्द्धाधो यावशूकजम् ।
चूर्णं दत्त्वा निरुध्याथ कुष्माण्डैश्च प्रपूरयेत् ॥
पुनर्मुखं निरुध्याथ चतुर्यामं क्रमाग्निना ।
पचेदेवं हि तच्चूर्णं कुष्ठादौ परियोजयेत् ॥"
मतान्तरम् ।
"अम्ललोनीजलैर्भाव्यं तालं द्वादशयामकम् ।
तथैव निम्बनीरेण ततश्चूर्णोदकेन च ।
प्रक्षाल्य शाल्मलीक्षारैर्द्विगुणैः खातमध्यगम् ।
विधाय कवचीयन्त्रं बालुकाभिः प्रपूरयेत् ।
द्वादशप्रहरं पक्त्वा स्वाङ्गशीतञ्च चूर्णयेत् ।
खादयेद्रक्तिकामेकां कुष्ठश्लीपदशान्तये ॥"
इति हरितालमारणम् ॥)

तस्यां संपूज्य वै दुर्गामश्वमेधफलं लभेत् ॥"
इति संवत्सरकौमुदीधृतगरुडपुराणवचनम्॥
इयमेव तालनवमी ख्याता ॥ (अस्यां नवम्यां सौभाग्यफलकाङ्क्षिणीभिः स्त्रीभिर्यथाविधानं नारायणं लक्ष्मीञ्च संपूज्य व्रतकथा श्रोतव्या । तत्कथा यथा, --
"मेरुपृष्ठे सुखासीनं कृष्णं कमलया सह ।
उवाच मधुरं वाक्यं स्मितपूर्ब्बं मुदाम्बिका ॥
शृणु मे वचनं देव ! स्त्रीणां सौभाग्यकारणम् ।
केन वा सुभगा चासीत् केन वा दुर्भगा भवेत् ॥
किं कृतेन विमुच्येत किं कृतेन फलं लभेत् ।
तन्मे ब्रूहि सुरश्रेष्ठ ! नारीणां कारणं ध्रवम् ॥
श्रीभगवानुवाच ।
पूर्ब्बं हि मम भार्य्ये द्वे सत्यभामा च रुक्मिणी ।
रुक्मिणी सुभगा साध्वी सत्यभामा च दुर्भगा ॥
तस्याः कर्म्मविपाकेन सौभाग्यमन्यथा गतम् ।
केनचिद्वाक्यदोषेण सत्यभामा च दुर्भगा ॥
दुःखार्त्ता शोकसन्तप्ता रुदती बहुशो मुहुः ।
कियत्काले च सम्पन्ने व्रजन्ती च तपोवने ॥
अरण्ये विजने गत्वा कस्मिन्मुनिवराश्रमे ।
रुदित्वा च विधानेन सर्व्वं दुःखं न्यवेदयत् ॥
तच्छ्रुत्वा तु मुनिश्रेष्ठः प्रोवाच रुदतीं शुभाम् ।
भव्ये पुत्रिणि ! मा रोदीः सौभाग्यं ते भविष्यति ॥
सत्यभामोवाच ।
दुःखं मे बहुशस्तात ! शरीरं दुर्भगं कथम् ।
कथ्यतां मुनिशार्द्दूल ! स्वामिसौभाग्यकारणम् ॥
मुनिरुवाच ।
भाद्रे मासि सिते पक्षे नवमी या तीथिर्भवेत् ।
तस्यां नारायणं लक्ष्मीं पूजयेच्च विधानतः ॥
सत्यभामोवाच ।
विधानं कीदृशं तस्य किं दानं किञ्च पूजनम् ।
तन्मे ब्रूहि मुनिश्रेष्ठ ! कारणं किन्तदुच्यताम् ॥
मुनिरुवाच ।
स्थण्डिले मण्डलं कृत्वा घटं तत्र निवेशयेत् ।
तत्र नारायणं लक्ष्मीं गन्धपुष्पादिनार्च्चयेत् ॥
नैवेद्येन सदा भक्त्या पूजयेत् भक्तवत्सलाम् ।
तालेन पूजयेत् देवीं तालेनैव विनिर्म्मितम् ॥
तस्यै तत् पिष्टकं दत्त्वा ब्राह्मणायोपपादयेत् ।
गन्धमाल्यैः समभ्यच्चर्य्य विप्रहस्ते समर्पितम् ॥
सौभाग्यमतुलं प्राप्य यथा गौरी हरस्य च ।
शचीव पुरुहूतस्य रतीव मदनस्य च ॥
यथा नारायणे लक्ष्मीस्तथा त्वं भव शोभने ! ।
इति तस्यै वरं दत्त्वा गृहीत्वा तां पुरं ययौ ॥
इदं या कुरुते साध्वी व्रतं सा सुभगा भवेत् ।
एवं व्रतञ्च या नारी करोति धर्म्मतत्परा ॥
तस्याश्च भवने लक्ष्मीश्चञ्चला निश्चला भवेत् ।
जन्मान्तरे भवेत् साध्वी अवैधव्यं सदा पुनः ॥
पत्युश्च सुभगा साध्वी पुत्रपौत्रान्विता भवेत् ।
धनधान्यसमृद्धिञ्च ततो मोक्षमवाप्नुयात् ॥"
इति भविष्यपुराणोक्ततालनवमीव्रतकथा समाप्ता ॥ * ॥ व्रतेऽस्मिन् नवफलानि दातव्यानि ।
तानि यथा, --
"पिण्डखर्ज्जूरं जातिश्च एला चैव हरीतकी ।
नारिकेलं तथा पूगं रम्भापक्वफलन्तथा ।
तत्र मुख्यं प्रदातव्यं तालस्य फलमुत्तमम् ॥"
* ॥)

**तालपत्रं**, क्ली, (तालस्य पत्रमिव ।) ताडङ्कः ।
इत्यमरः । २ । ६ । १०३ ॥ तालवृक्षस्य पर्णञ्च ॥
(एतस्य व्यजनगुणा यथा, --
"तालपत्रमरुद्रूक्षः कोष्णो वातस्य शान्तिकृत् ।
निद्राकरः प्रीतिकरः शोषरोगविकारहा ॥
दाहपित्तश्रमग्लानिनाशनोभ्रमशान्तिकृत् ।
मधुरोऽतिश्रमघ्नः स्यादार्द्रत्वे कफकोपनः ॥"
इति हारीते प्रथमे स्थाने पञ्चमेऽध्याये ॥)

**तालपत्रिका**, स्त्री, (तालपत्री + स्वार्थे कन् टाप् ह्रस्वश्च ।) मुषली । तालमूली । इति राज-
निर्घण्टः ॥ (तालमूलीशब्देऽस्या विवृति-र्ज्ञातव्या ॥)

**तालपत्री**, स्त्री, (तालस्य पत्रमिव पत्रमस्याः ।)

(तालमिव कायतीति । कै + कः ।) द्वार-यन्त्रम् । इति हेमचन्द्रः । ४ । ७१ ॥
ताला
इति भाषा ॥ तुवरिका । इति
शब्दरत्नावली ॥

**तालकाभः**, पुं, (तालकस्य हरितालस्य आभा इव आभा यस्य ।) हरितवर्णः । इति हेम-चन्द्रः । ६ । ३१ ॥ तद्वति, त्रि ॥

**तालकी**, स्त्री, (तालकस्य तालवृक्षस्य इयम् । तालक + अण् + ङीष् ।) तालसुरा । इति त्रिकाण्डशेषः ॥ ताडी इति भाषा ॥

**तालक्षीरकं**, क्ली, (तालजातं क्षीरमिव । ततः इवार्थे स्वार्थे वा कन् ।)
तालसम्भूततवक्षीरम् ।
इति राजनिर्घण्टः ॥

**तालध्वजः**, पुं, (तालो ध्वजो यस्य ।) बलदेवः । इति हलायुधः ॥ (यथा, महाभारते । ९ । ५४ । १० ।
"नातिदूरं ततो गत्त्वा नगं तालध्वजो बली ।
पुण्यं तीर्थवरं दृष्ट्वा विस्मयं परमं गतः ॥"
पर्व्वतविशेषः । यथा, शत्रुञ्जयमाहात्म्ये । १ । ३५२ ।
"शत्रुञ्जयो रैवतश्च सिद्धिक्षेत्रं सुतीर्थराट् ।
टङ्कः कपर्द्दी
लौहित्यस्तालध्वजकदम्बकौ ॥")

**तालध्वजा**, स्त्री, (तालस्तालवृक्षो ध्वजश्चिह्नं यस्याः ।) पुरीविशेषः । यथा,
क्रियायोगसारे ।
"अस्ति तालध्वजा नाम नगरी
त्रिदिवोपमा ॥"

**तालनवमी**, स्त्री, (तालोपहारा नवमी । शाक-पार्थिववत् समासः ।) भाद्रशुक्लनवमी ।
यथा,
"मासि भाद्रपदे या स्यान्नवमी बहुलेतरा ।
स्वस्तीति ब्राह्मणो ब्रूयात् व्रतं साङ्गं समाचरेत् ।
एवं क्रमेण साध्वीभिः कर्त्तव्यमतियत्नतः ॥
नवमं वत्सरं यावत् मासि भाद्रपदे तथा ।
पुत्त्रपौत्त्रैः परिवृता सौभाग्यमतुलं भवेत् ॥
धनधान्यसमृद्धिञ्च अवैधव्यञ्च नित्यशः ।
अभीष्टफलमाप्नोति नवमीव्रतकारणात् ॥
सम्पूर्णे तु व्रते भूते प्रतिष्ठां तदनन्तरम् ।
विप्राय दक्षिणा देया सुभोज्यञ्च विधानतः ॥
एवं कुरु सदा विज्ञे ! शृणु भाषणमुत्तमम् ॥
तथा चक्रे च सा साध्वी मुनेर्व्वचनगौरवात् ।
व्रते सम्पूर्णतां याते केशवस्तामुपागतः ॥
उवाच प्रहसन् देवो वचनं मधुरं शुभम् ।
असौभाग्येन यद्दुःखं तत् ते सर्व्वं विनश्यतु ॥
मूषिकपर्णी । इति मेदिनी । रे, २६३ ॥
(यथा,
"गोजी च पिष्टा सह तालपत्र्या
ग्रन्थौ विधेयोऽनिलजे प्रलेपः ॥"
इति सुश्रुते चिकित्सितस्थाने १८ अध्याये ॥)

**तालपर्णं**, क्ली, स्त्री, (तालः खड्गमुष्टिरिव पर्ण-मस्य ।) मुरानामगन्धद्रव्यम् । इति शब्द-चन्द्रिका ॥

**तालपर्णी**, स्त्री, (तालस्य पर्णमिव पर्णमस्याः । ङीष् ।) मधुरिका । इति जटाधरः ॥ मुरा । इत्यमरः । २ । ४ । १२३ ॥

**तालपुष्पकं**, क्ली, (तालस्य पुष्पमिव पुष्पमस्य । कप् ।) प्रपौण्डरीकम् । इति शब्दरत्नावली ॥

**तालभृत्**, पुं, (तालं बिभर्त्ति ध्वजरूपेणेति । भृ + क्विप् ।) बलदेवः । इति त्रिकाण्डशेषः ॥

**तालप्रलम्बं**, क्ली, (ताले तालवृक्षे प्रलम्बते इति । प्र + लम्ब + अच् ।) तालजटा । यथा, --
"तथा तालप्रलम्बञ्च रूक्षं क्षतरुजापहम् ॥"
इति राजवल्लभः ॥

**तालमूलिका**, स्त्री, (तालमूली + स्वार्थे कन् टाप् ह्रस्वश्च ।) तालमूली । इत्यमरः । २ । ४ । ११९ ॥

**तालमूली**, स्त्री, (तालस्य मूलमिव मूलमस्याः । ङीष् ।) स्वनामख्यातवृक्षः । तत्पर्य्यायः । अर्शोघ्नी २ मुषली ३ ताली ४ खलिनी ५ ।

इति रत्नमाला ॥ सुवहा ६ तालपत्रिका ७ गोधापदी ८ हेमपुष्पी ९ भूताली १० दीर्घ-
कन्दिका ११ । अस्या गुणाः । मधुरत्वम् ।
शीतत्वम् । वृष्यत्वम् ।
पुष्टिबलकफप्रदत्वम् ।
पिच्छिलत्वम् । पित्तदाहश्रमहरत्वञ्च ।
इति
राजनिर्घण्टः ॥ उष्णवीर्य्यत्वम् ।
बृंहणत्वम् ।
सुरुत्वम् । तिक्तत्वम् । रसायनत्वम् ।
गुदज-
रोगानिलनाशित्वञ्च । इति भावप्रकाशः ॥
"मुषली च द्विधा प्रोक्ता श्वेता चापरसंज्ञका ।
श्वेता स्वल्पगुणोपेता अपरा च रसायनी ॥"
इति राजनिर्घण्टः ॥
(अस्या विषयो यथा,
वैद्यकरसेन्द्रसारसंग्रहे
ज्वरे महाराजवट्याम् ।
"माषद्वयमितं भागं तालमूल्या रसेन च ।
पिष्ट्वा च वटिका कार्य्या
चतुर्गुञ्जाप्रमाणतः ॥")

**ताललक्ष्मा**, [न्] पुं, (ताल एव लक्ष्म चिह्नं
यस्य ।) बलदेवः । इति हेमचन्द्रः । २ ।
१३८ ॥

**तालवृन्तं**, क्ली, (तालस्य तालपत्रस्य वृन्तं कारणे-
त्वेन अस्ति अस्य । अच् ।) व्यजनम् ।
इति
हेमचन्द्रः । ३ । ३५१ । तालपातार
पाखा इति
भाषा ॥ (यदुक्तम्, --
"परे ब्रह्मणि विज्ञाते समस्तैर्नियमैरलम् ।
तालवृन्तेन किं कार्य्यं लब्धे मलयमारुते ॥")
तस्य वायुगुणः । त्रिदोषशमनत्वम् । लघु-

इति रत्नमाला ॥ (ताड्यते निहन्यते
मतिरन-
येति । तड ताडने + णिच् + करणे इन् ।
डस्य
लत्वम् ।) ताली । इत्यमरटीकायां
भरतः ॥

**तालिकः**, पुं, (तलेन करतलेन निर्वृत्तः । तल +
"तेन निर्वृत्तम् ।" ५ । १ । ७९ । इति
ठक् ।)
प्रसारिताङ्गुलिपाणिः । तत्पर्य्यायः ।
चपेटः २
प्रतलः ३ तलः ४ प्रहस्तः ५ तालः ६ ।
इति
हेमचन्द्रः । ३ । २३० ॥ (यथा,
पञ्चतन्त्रे । २ ।
१३७ ।
"यथैकेन न हस्तेन तालिकः सम्प्रपद्यते ।
तथोद्यमपरित्यक्तं न फलं कर्म्मणः
स्मृतम् ॥")
लिखितस्य निबन्धनम् । तत्पर्य्यायः ।
काचनी २
काचनकी ३ । इति शब्दरत्नावली ॥

**तालिका**, स्त्री, (तलेन निर्वृत्ता । तल + ठक् ।
स्त्रियां टाप् ।) चपेटः । तालमूली । इति
शब्दरत्नावली ॥ ताम्रवल्ली । इति राज-
निर्घण्टः ॥

**तालितं**, क्ली, (ताड्यते यदिति । तड ताडने +
णिच् + क्तः । डस्य लत्वम् ।)
वाद्यभाण्डम् ।
तुलितपटः । गुणः । इत्यजयः ॥

**तालिशः**, पुं, (तलतीति । तल गतौ + "इशः
कप्यर्पिवडिभ्यस्तलेस्तु णित् ।" १ ।
३३९ ।
इत्युणादिकोषटीकाधृतसूत्रात्इशः
णित्त्वात्
वृद्धिश्च ।) पर्व्वतः । इत्युणादिकोषः ॥

**ताली**, स्त्री, (तालि + कृदिकारादिति वा ङीष् ।)

गुणाः । तिक्तत्वम् । उष्णत्वम् । मधुरत्वम् । कफ-
वातकासहिक्काक्षयश्वासच्छर्द्दिदोषनाशित्वञ्च।
इति राजनिर्घण्टः ॥ लघुत्वम् । अरुचिगुल्मा-
मवह्निमान्द्यनाशित्वञ्च । इति भावप्रकाशः ॥
भूम्यामलकी । इति मेदिनी । रे, ३०३ ॥

**तालु**, क्ली, (तरन्त्यनेन वर्णा इति । तॄ + "त्रोरश्च
लः ।" उणां । १ । ५ । इति ञुण् रस्य लश्च ।)
जिह्वेन्द्रियाधिष्ठानम् । यथा, श्रीभागवते ।
"मुखतस्तालु निर्भिन्नं जिह्वा तत्रोपजायते ।
ततो नानारसो जज्ञे जिह्वया योऽधिगम्यते ॥"
तेलुया इति टाकरा इति च भाषा ॥ तत्-
पर्य्यायः । काकुदम् २ । इत्यमरः । २ । ६ ।
९१ ॥ तालुकम् ३ । इति राजनिर्घण्टः ॥

**तालुजिह्वः**, पुं, (तालु एव जिह्वा यस्य ।)
कुम्भीरः । इति हेमचन्द्रः । ४ । ४१५ ॥

**तालूरः**, पुं, (तालयतीति । तल + णिच् + बाहु-
लकात् ऊरः ।) आवर्त्तः । इति हेमचन्द्रः ।
४ । १४२ ॥

**तावकीनं**, त्रि, तव इदम् । (युष्मद् + "युष्मदस्मदो-
रन्यतरस्यां खञ्च ।" ४ । ३ । १ । इति खञ् ।
ततः "तवकममकावेकवचने ।" ४ । ३ । ३ ।
इति तवकादेशः ।) त्वदीयम् । इति व्याक-
रणम् ॥ तोमार एइ इति भाषा ॥

**तावत्**, व्य, (तत् परिमाणस्य । तद्धिता इति बहु-
वचनेनान्येऽनुक्ता अपि ज्ञापितास्तेन डावतु-
प्रत्ययः ।) साकल्यम् । अवधिः । मानम् ।
(यथा, कुमारे । ५ । ६७ ।
"त्वमेव तावत् परिचिन्तय स्वयं
कदाचिदेते यदि योगमर्हतः ॥"
"तावत् इति मानार्थे यावन्मात्रं विचारणीयं
तावन्मात्रमित्यर्थः ॥" इति तट्टीकायां मल्लि-
नाथः ॥) अवधारणम् । इत्यमरः । ३ । ३ । २४५
॥
(यथा, माघे । २ । ६३ ।
"इन्द्रप्रस्थगमस्तावत् कारि मा सन्तु चेदयः ॥")
प्रशंसा । पक्षान्तरम् । इति शब्दरत्नावली ॥
(तत्परिमाणमस्येति । "यत्तदेतेभ्यः परिमाणे

त्वञ्च । इति राजवल्लभः ॥ (सोमविशेषे, पुं । यथा, --
"एक एव खलु भगवान् सोमः स्थाननामाकृति-
वीर्य्यविशेषैश्चतुर्व्विंशतिधा भिद्यते ।"
"प्रतानवांस्तालवृन्तः करवीरोऽंशवानपि ॥"
इति सुश्रुते चिकित्सितस्थाने २९ अध्याये ॥)

**तालवृन्तकं**, क्ली, (तालवृन्तमेव । स्वार्थे कन् ।) व्यजनम् । इत्यमरः । २ । ७ । १४० ॥

**तालवेचनकः**, पुं, (तालस्य वेचनं पृथक्करणं संस्थानेन नियमनं यत्र । कप् ।) नटः । इति शब्दरत्नावली ॥ तालरेचनकोऽपि पाठः ॥

**तालव्यं**, त्रि, (तालोर्जातम् । तालु + "शरीरावयवात् यत् ।" ५ । १ । ६ । इति यत् ।) तालुजातम् । इति व्याकरणम् ॥ (यथा, शिक्षायाम् । १७ ।
"कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजायुपू ॥")

**तालाख्या**, स्त्री, (तालं तालपर्णं आख्या यस्याः ।) मुरा । इति शब्दचन्द्रिका ॥

**तालाङ्कः**, पुं, (तालस्तालवृक्षः अङ्को ध्वजो यस्या ।) वलदेवः । इत्यमरः । १ । १ । २५ ॥ करपत्रम् । शाकभेदः । महालक्षणसम्पन्नपुरुषः । पुस्तकम् । हरः । इति हेमचन्द्रः ॥

**तालावचरः**, पुं, (तालेन अवचरति नृत्यतीति । अव + चर + अच् ।) नटः । इति त्रिकाण्डशेषः ॥

**तालिः**, स्त्री, (तालयति प्रतितिष्ठत्यनयेति । तल ताडी । ताडियात् इति भाषा । तामलकी । इत्यमरः । २ । ४ । २२७ ॥ भूँइ आमला इति भाषा ॥ (अस्याः पर्य्याया यथा, --
"बहुपुष्पी जडाध्यण्डा ताली भूम्यामलक्यपि ।
तामलक्यजटा सूक्ष्मफला क्षेत्रामलक्यपि ॥"
इति वैद्यकरत्नमालायाम् ॥) तुवरिका । इति शब्दरत्नावली ॥ तालमूली । इति रत्नमाला ॥ प्रतिताली । कुञ्चिकाविशेषः । इति हेमचन्द्रः ॥ ताम्रवल्ली । इति राजनिर्घण्टः ॥ सुराभेदः । इति स्मृतिः ॥ ताडी इति भाषा ॥ (करास्फालनम् । यथा, अम्बाष्टके । ५ ।
"यालीभिरात्मतनुतालीसकृत् प्रियकपालीषु खेलति भयव्यालीनकुल्यसितचूलीभरा चरणधूलीलसन्मुनिवरा ॥")

**तालीपत्रं**, क्ली, (ताल्याः पत्रमिव पत्रमस्य ।) तालीशपत्रम् । इति राजनिर्घण्टः ॥

**तालीशं**, क्ली, (तालीव श्यति नाशयति रोगानिति । शो नाशे + डः ।) तालीशपत्रम् । इति राजनिर्घण्टः ॥

**तालीशपत्रं**, क्ली, (तालीशं रोगनाशकं पत्रं यस्य ।) वृक्षविशेषः । तत्पर्य्यायः । तालीशम् २ पत्राख्यम् ३ शुकोदरम् ४ धात्रीपत्रम् ५ अर्कवेधम् ६ करिपत्रम् ७ करिच्छदम् ८ नीलम् ९ नीलाम्बरम् १० तालम् ११ तालीपत्रम् १२ वतुप् ।" ५ । २ । ३९ । इति वतुप् प्रत्ययेन तत्परिमाणे, त्रि । यथा, भागवते । ३ । २६ । १२ ।
"महाभूतानि पञ्चैव भूरापोऽग्निर्मरुन्नभः ।
तन्मात्राणि च तावन्ति गन्धादीनि मतानि मे ॥")

**तावरं**, क्ली, धनुर्गुणः । इति भूरिप्रयोगः ।

**ताविषः**, पुं, (तव्यते गम्यते सत्कर्म्मिभिरत्र । तव सौत्रो धातुः + "तवेर्णिद्वा ।" उणां । १ । ४९ । इति टिषच् स च णित् ।) स्वर्गः । समुद्रः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**ताविषी**, स्त्री, (तवति सौन्दर्य्यं गच्छतीति । तव + टिषच् सच णित् । टित्त्वात् ङीप् ।) देवकन्या । नदी । पृथिवी । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**तावीषः**, पुं, (ताविष + पृषोदरादित्वात् दीर्घः ।) स्वर्गः । अम्बुधिः । काञ्चनम् । इति मेदिनी । षे, ३७ ॥

**तावीषी**, स्त्री, (ताविषी + पृषोदरादित्वात् दीर्घः ।)

चन्द्रकन्या । इति मेदिनी । ते, ३८ ॥ (इन्द्र-
कन्या । इति कुत्रचित् ॥)

**तावुरिः**, पुं, वृषराशिः । इति दीपिका ॥

**तिक**, ऋ ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वां-

आत्मं-सकं-सेट् ।) ऋ, अतितेकत् । ङ, तेकते ।
इति दुर्गादासः ॥

**तिक**, न आस्कन्दे । वधे । इति कविकल्पद्रुमः ॥

(स्वां-परं-सकं-सेट् ।) न, तिक्नोति । इति
दुर्गादासः ॥

**तिक्तं**, क्ली, (तेजयतीति । तिज + बाहुलकात्

क्तः ।) पर्पटिकौषधिः । इति हेमचन्द्रः ॥

**तिक्तः**, पुं, (तेजयतीति । तिज + सामान्यापेक्ष-

ज्ञापकात् चुरादीनां णिजभावे गत्यार्थाकर्म्म-
केति क्तः ।) रसविशेषः । तित इति भाषा ॥
(यथा, सुश्रुते । १ । ४२ ।
"यो गले चोषमुत्पादयति मुखवैशद्यं जन-
यति भक्तरुचिञ्चापादयति हर्षञ्च स तिक्तः ॥")
स वाय्वाकाशगुणबाहुल्यात् भवति । इति शिव-
दासः ॥ तस्य गुणाः । जन्तुकुष्ठज्वरार्त्तिकास-
दाहनाशित्वम् । रोचनत्वम् । इति राज-
निर्घण्टः ॥ शीतत्वम् । तृषामूर्च्छापित्तकफ-
विषोत्क्लेशरक्तगदनाशित्वम् । स्वयमरोचिष्णु-
त्वम् । कण्ठस्तन्यास्यशोधनत्वम् । वातलत्वम् ।
अग्निकारित्वम् । नासाशोषणत्वम् । रूक्षत्वम् ।
लघुत्वञ्च । अतियुक्तस्य तस्य गुणाः । शिरःशूल-
मन्यास्तम्भश्रमार्त्तिकम्पमूर्च्छातृषाकारित्वम् ।
बलशुक्रक्षयप्रदत्वञ्च । इति भावप्रकाशः ॥ * ॥
("तिक्ताख्यो वत वातलोऽपि हि नृणां कुष्ठादि
दोषापहः
सोऽन्तः सर्व्वरुजापहो भ्रमहरो रुच्योऽपि
संक्लेदहृत् ।
जिह्वास्फोटकनाशनोऽथभवति क्षीणक्षतानां
हितो
वक्त्रोत्क्लान्तिहरः प्रकृष्टगुणधृत् निम्बादिकानां
रसः ॥"
इति भावप्रकाशः ॥ (तिक्तप्रधाने, त्रि । यथा,
सुश्रुते । ४ । २४ ।
"निम्बश्च तिक्तके श्रेष्ठः कषाये खदिरस्तथा
॥")
द्रव्याणां गणः । यथा चक्रपाणिसंग्रहे ज्वरा-
धिकारे ।
"तृष्यते सलिलञ्चोष्णं दद्याद्वातकफज्वरे ।
मद्योत्थे पैत्तिके वापि शीतलं तिक्तकैः शृतम्
॥"
"मुस्तपर्पटकोशीरचन्दनोदीच्यनागरैः ।
शृतशीतं जलं दद्यात् पिपासाज्वरशान्तये
॥"
"तिक्तकैः शृतमिति यदुक्तं तदाह मुस्तेत्यादि
।"
इति तट्टीका ॥)

**तिक्तकन्दिका**, स्त्री, (तिक्तरसप्रधानः कन्दो मूलं

सोऽस्त्यस्या इति । तिक्तकन्द + ठन् ।)
गन्ध-
पत्रा । इति राजनिर्घण्टः ॥

**तिक्तका**, स्त्री, (तिक्तेन रसेन कायतीति । कै +

कः ।) कटुतुम्बी । इति शब्दरत्नावली ॥
(कटु-
तुम्बीशब्देऽस्या विवरणं ज्ञातव्यम् ॥)

**तिक्तगन्धिका**, स्त्री, (तिक्तो गन्धो यस्याः । कप्

ततष्टाप् अत इत्वञ्च ।) वराहक्रान्ता । इति
शब्दमाला ॥

**तिक्तगुञ्जा**, स्त्री, (गुञ्जेव तिक्ता । राजदन्तादि-

त्वात् प्राङ्निपातः ।) करञ्जः । तत्पर्य्यायः ।
क्षुद्र-
रसा २ रसघा ३ विद्धपर्कटी ४ । इति हारा-
वली । १०१ ॥

**तिक्ततण्डुला**, स्त्री, (तिक्तस्तण्डुलोऽन्तःशस्यं

यस्याः ।) पिप्पली । इति राजनिर्घण्टः ॥
(अस्याः पर्य्याया यथा, --
"पिप्पली चपला शौण्डी वैदेही मागधी कणा
।

**तिक्तभद्रकः**, पुं, (तिक्तस्तिक्तरसप्रधानो
भद्रो

हितकारी चेति कर्म्मधारयः ।
ततः स्वार्थे कन् ।)
पटोलः । इति शब्दचन्द्रिका ॥

**तिक्तमरिचः**, पुं, (तिक्तो मरिच इव ।)
कतक-

वृक्षः । इति राजनिर्घण्टः ॥

**तिक्तरोहिणिका**, स्त्री, (तिक्तरोहिणी +
स्वार्थे कन्

टाप् पूर्ब्बह्रस्वश्च ।) कटुका ।
इति रत्नमाला ॥

**तिक्तरोहिणी**, स्त्री, (तिक्ता सती रोहतीति ।

रुह + णिणिः + ङीप् ।) कटुका
। इति राज-
निर्घण्टः ॥
(कटुरोहिणीशब्देऽस्या विवृति-
र्ज्ञातव्या ॥)

**तिक्तवल्ली**, स्त्री, (तिक्ता वल्ली ।) मूर्व्वालता
।

इति रत्नमाला ॥

**तिक्तवीजा**, स्त्री, (तिक्तं वीजमस्याः ।)
कटु-

तुम्बी । इति राजनिर्घण्टः ॥

**तिक्तशाकः**, पुं, (तिक्तः शाको यस्य ।)
खदिर-

वृक्षः । वरुणवृक्षः । (अस्य
पर्य्याया यथा, --
"वरुणस्तिक्तशाकश्च
सेतुवृक्षोऽम्भसां पतिः ॥"
इति वैद्यकरत्नमालायाम् ॥)
पत्रसुन्दरवृक्षः । इति मेदिनी ।
के, १९१ ॥

**तिक्तसारं**, क्ली, (तिक्तः सारो निर्य्यासो
यस्य ।)

दीर्घरोहिषकतृणम् । इति
राजनिर्घण्टः ॥

इति हारीते प्रममे स्थाने सप्तमेऽध्याये ॥)
सुगन्धः । इति मेदिनी । ते, २१ ॥ (सुरभिः ।
यथा, माघे । ५ । ३३ ।
“नादातुमन्यकरिमुक्तमदाम्बुतिक्तं
धूताङ्कुशेन न विहातुमपीच्छताम्भः ॥”
तिक्तस्तिक्तरसोऽस्यास्तीति। अर्श आदित्वात्
अच् ।) कुटजवृक्षः । इति शब्दचन्द्रिका ॥
वरुणवृक्षः । इति शब्दमाला ॥ तिक्तरसयुक्ते,
त्रि । इत्यमरः । १ । ५ । ९ ॥

**तिक्तकः**, पुं, (तिक्तेन तिक्तरसेन कायतीति । कै +
कः ।) पटोलः । इत्यमरः । २ । ४ । १५५ ॥
चिरतिक्तः । इति शब्दरत्नावली ॥ चिरता इति
भाषा ॥ (यथा, वाभटे चिकित्सितस्थाने । ३ ।
“पित्तकासे तनुकफे त्रिवृतां मधुरैर्युताम् ।
युञ्ज्यात् विरेकाय युतां घनश्लेष्मणि तिक्तकैः
॥”)
कृष्णखदिरः । इति शब्दमाला । इङ्गुदीवृक्षः ।
कृष्णोपकुल्या मगधी कोला
स्यात्तिक्ततण्डुला ॥”
इति वैद्यकरत्नमालायाम् ॥)

**तिक्ततुण्डी**, स्त्री, (तिक्ततुम्बी । पृषोदरादित्वात्
साधुः ।) कटुतुम्बीलता । इति राजनिर्घण्टः
॥

**तिक्ततुम्बी**, स्त्री, (तिक्ता तुम्बी ।) कटुतुम्बी । इति
रत्नमाला ॥

**तिक्तदुग्धा**, स्त्री, (तिक्तं दुग्धं क्षीरं यस्याः ।)
क्षीरिणी । अजशृङ्गी । इति राजनिर्घण्टः ॥

**तिक्तधातुः**, पुं, (तिक्तस्तिक्तरसप्रधानो धातुः ।)
पित्तम् । इति राजनिर्घण्टः ॥

**तिक्तपत्रः**, पुं, (तिक्तानि पत्राणि यस्य ।) कर्को-
टकः । इति हेमचन्द्रः । ४ । २५६ ॥ काक-
रोल इति भाषा ॥

**तिक्तपर्व्वा**, [न्] पुं, (तिक्तं पर्व्व ग्रन्थिर्यस्य ।)
दूर्व्वा । इति जटाधरः ॥ स्त्री, हिलमोची ।
गुडूची । यष्टिमधु । इति मेदिनी । ने, २३७
॥

**तिक्तपुष्पा**, स्त्री, (तिक्तानि पुष्पानि यस्याः ।)
पाठा । इति राजनिर्घण्टः ॥ (पाठाशब्देऽस्या
विवरणं ज्ञातव्यम् ॥)

**तिक्तफलः**, पुं, (तिक्तानि फलानि यस्य ।)
कतकवृक्षः । इति राजनिर्घण्टः ॥

**तिक्तफला**, स्त्री, (तिक्तानि फलानि यस्याः ।)
यवतिक्तालता । वार्त्ताकी । षड्भुजा । इति
राजनिर्घण्टः ॥

**तिक्तसारः**, पुं, (तिक्तः सारो निर्य्यासोऽस्य
।)
खदिरवृक्षः । इति रत्नमाला ॥
(खदिरशब्देऽस्य
गुणादयो ज्ञेयाः ॥)

**तिक्ता**, स्त्री, (तिक्तस्तिक्तरसोऽस्त्यस्याः। अच्
ततष्टाप् ।) कटुरोहिणी । इति
मेदिनी ।
ते, २२ ॥ (यथास्याः पर्य्यायाः ।
“कट्वी तु कटुका तिक्ता
कृष्णभेदा कटुम्भरा ।
अशोका मत्स्यशकला चक्राङ्गी
शकुलादनी ॥
मत्स्यपित्ता काण्डरुहा रोहिणी
कटुरोहिणी ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ॥)
पाठा । इति रत्नमाला ।
यवतिक्ता लता । षड्-
भुजा । इति राजनिर्घण्टः ॥
छिक्कनी । इति
भावप्रकाशः ॥

**तिक्ताख्या**, स्त्री, (तिक्तः आख्या अभिधानं
यस्याः ।)
कटुतुम्बी । इति राजनिर्घण्टः ॥

**तिक्ताङ्गा**, स्त्री, (तिक्तं अङ्गं यस्याः ।) पाताल-
गरुडीलता । इति राजनिर्घण्टः
॥

**तिक्तिका**, स्त्री, (तिक्ता + स्वार्थे कन् । टापि अत-
इत्वम् ।) कटुतुम्बी । इति
शब्दरत्नावली ॥

**तिग**, न हिंसायाम् । आस्कन्दे । इति कविकल्प-
द्रुमः ॥ (स्वां-परं-सकं-सेट् ।) न,
तिग्नोति ।
आस्कन्दः कैश्चिन्न मन्यते ।
इति दुर्गादासः ॥

| | | |
|---|---|---|
| | | **तिग्मं**, क्ली, (तेजयति उत्तेजयतीति। तिज + "युजिरुजितिजां कुश्च।" उणां। १। १४५। इति मक् कवर्गश्चान्तादेशः।) तीक्ष्णम्। खरम्। तद्वति, त्रि। इत्यमरः। १। ४। ३५॥ (यथा, महाभारते। १। २०। ११। "तिग्मवीर्य्यविषा ह्येते दन्दशूका महाबलाः॥" वज्रम्। इति निघण्टुः। २। २० ॥ पुं, क्षत्त्रिय-विशेषः। यथा, विष्णुपुराणे। ४। २१। ३। |

"ततो मृदुस्तस्मात् तिग्मस्तिग्मात्
बृहद्रथः ॥"
मत्स्यपुराणमते तु अयं उर्व्वस्य
सुतः । यथा,
तत्रैव । ५० । ८४ ।
"उर्व्वो भाव्यो सुतस्तस्य
तिग्मात्मा तस्य चात्मजः ।
तिग्मात् बृहद्रथो भाव्यो वसुदामा
बृहद्रथात् ॥"
अयं तिमिरित्याख्ययापि प्रसिद्धः ।
इति राजा-
वली ॥ अस्य
राज्यपालनकालादिकं तिमिशब्दे
द्रष्टव्यम् ॥)

**तिग्मांशुः**, पुं, (तिग्मास्तीक्ष्णा अंशवः किरणानि
यस्य ।) सूर्य्यः । इति हलायुधः ॥
(यथा,
महाभारते । १ । २ । १३९ ।
"धौम्योपदेशात्
तिग्मांशुप्रसादादन्नसम्भवः ॥"
अग्निः । यथा, महाभारते । १ ।
२३३ । १८ ।
"इदं वै सद्म तिग्मांशो वरुणस्य
परायणम् ॥"
तीक्ष्णकिरणे, त्रि ॥)

**तिघ**, न घातने । इति कविकल्पद्रुमः ॥ (स्वां-परं-
सकं-सेट् ।) न, तिघ्नोति । तिघ
घाते इति
जौमराः पठन्ति । तेन
तदर्थकल्पनमेवोचितम् ।
ततश्च घातनमिति हन्त्यर्थस्य
पाक्षिकचुरादि-
त्वेन हन्तेः स्वार्थे ञौ रूपम् ।
हननमित्यर्थः ।
किञ्च । हिंसनपाठेनैवेष्टसिद्धे
घातनपाठो हिंसा-
इत्युक्तेरस्य क्लीवत्वमपि ॥ छत्रम् ।
इति उज्ज्वल-
दत्तः । ५ । ५२ ॥)

**तितिक्षा**, स्त्री, (तिज + स्वार्थे सन् + "अ प्रत्य-
यात् ।" ३ । ३ । १०२ । इति अ
ततष्टाप् ।)
क्षान्तिः । इत्यमरः । १ । ७ । २४ ॥
(परा-
पराधसहनम् । यथा, भागवते । १ ।
१६ । २६ ।
"शमो दमस्तपः साम्यं तितिक्षोपरतिः
श्रुतम् ॥")
शीतोष्णादिद्वन्द्वसहिष्णुता । इति
वेदान्तसारः ॥
(यथा, भागवते । ४ । २२ । २४ ।
"यमैरकामैर्नियमैश्चाप्यनिन्दया
निरीहया द्वन्द्वतितिक्षया च ॥")

**तितिक्षितः**, त्रि, (तितिक्षा सञ्जातास्य । "तदस्य
सञ्जातं तारकादिभ्य इतच् ।" ५ । २ ।
३६ ।
इति इतच् ।) क्षान्तः । इति जटाधरः ॥

**तितिक्षुः**, त्रि, (तितिक्षते इति । तिज क्षमायाम् +
"गुप्तिज्किद्भ्यः सन् ।" ३ । १ । ५ ।
इति
सन् । ततः तितिक्ष + "सनाशंसभिक्ष
उः ।"
३ । २ । १६८ । इत्युः ।) क्षमाशीलः ।
क्षान्तः ।
इत्यमरः । ३ । १ । ३१ ॥ (यथा,
महाभारते ।
१ । ८७ । ६ ।
"अक्रोधनः क्रोधनेभ्यो विशिष्ट-
स्तंथा तितिक्षुरतितिक्षोर्विशिष्टः ॥"
पुरुवंशीयस्य महामनसः पुत्त्रविशेषः ।
यथा,
हरिवंशे । ३१ । २१ ।
भाषा । तत्पर्य्यायः । तित्तिरः २ । इति शब्द-
रत्नावली ॥ तितिरिः ३ तैतिरः ४ याजुषोदरः ५ ।
अस्य मांसस्य गुणाः । रुच्यत्वम् । लघुत्वम् ।
वीर्य्यबलप्रदत्वम् । कषायत्वम् । मधुरत्वम् ।
शीतत्वम् । त्रिदोषशमनत्वञ्च । इति राज-
निर्घण्टः ॥
"तित्तिरिः कृष्णवर्णः स्यात् स तु गौरः कपिञ्जलः ।
तित्तिरिर्व्वर्णदो ग्राही हिक्कादोषत्रयापहः ।
श्वासकासज्वरहरस्तस्माद्गौरोऽधिकोगुणः ॥"
इति भावप्रकाशः ॥
मुनिविशेषः । इति विश्वः ॥ (यथा, महा-
भारते । २ । ४ । १२ ।
"तित्तिरिर्याज्ञवल्क्यश्च ससुतो लोमहर्षणः ॥")
तैत्तिरीशाखा । इत्युणादिकोषः ॥ (नागविशेषः ।
यथा, महाभारते । १ । ३५ । १५ ।
"कुमुदः कुमुदाक्षश्च तित्तिरिर्हलिकस्तथा ॥"
तथा च स्कान्दे सह्याद्रिखण्डे । ४ । ५ ।
"तित्तिरिर्हरिभद्रश्च जम्बुरुद्रो बलाहकः ॥")

**तिथः**, पुं, (तेजयतीति । तिज + "तिथपृष्ठ-
गूथयूथप्रोथाः ।" उणां । २ । १२ । इति
थक्प्रत्ययेन निपातनात् साधुः ।) अग्निः ।
कामः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥
कालः । इति त्रिकाण्डशेषः ॥ प्रावृट्कालः ।
इति संक्षिप्तसारे उणादिवृत्तिः ॥

**तिथिः**, स्त्री पुं, (तनोति विस्तारयति चन्द्रकला-
मिति । तन्यते चन्द्रकलयेति वा । तन + बाहु-
लकात् इथिन् नादिलोपश्च । तदुक्तं "तन्यन्ते
कलया यस्मात् तस्मात् तास्तिथयः स्मृताः ।"
इति । यद्वा, अततीति । अत सातत्यगमने +
"ऋतन्यञ्जीति ।" उणां । ४ । २ । इथिन् प्रत्य-
येन अतिथिरिति सिद्धे बाहुलकात् अलोपः ।
इति वर्णविवेकः ।) चन्द्रकलाक्रियारूपा । चन्द्र-
कलाक्रियोपलक्षितः काल इति वा । तस्याः
स्वरूपं यथा, --
"अमादिपौर्णमास्यन्ता या एव शशिनः कलाः ।
तिथयस्ताः समाख्याताः षोडशैव वरानने ! ॥
तत्र प्रथमकलाक्रियारूपां प्रतिपत् एवं द्विती-
यादिकलाक्रियारूपा द्वितीयादिः । सा च वृद्धि-

प्रेरणार्थः स्यान्न वेति काकदन्तान्वेषणवद्विफलं त्रयाणामेव कातन्त्राद्यसम्मतत्वात् । इति दुर्गादासः ॥

**तिज**, क शिते । इति कविकल्पद्रुमः ॥ (चुरां-परं-सकं-सेट् ।) क, तेजयति । शितं तीक्ष्णीकरणम् । इति दुर्गादासः ॥

**तिज**, ङ क्षान्तौ । निशाने । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-सकं-सेट् ।) क्षान्तिः सहनम् । ङ, तितिक्षते दुःखं दीनः । तेजते । तत्र तिबादयो न प्रयुज्यन्ते । इति रमानाथः । इति दुर्गादासः ॥

**तिजिलः**, पुं, (तेजयति तीक्ष्णीकरोति । यद्वा, तिज्यते सह्यते सर्व्वैरिति । तिज + "गुपादिभ्यः कित् ।" उणां । १ । ५७ । इति इलच् स च कित् ।) चन्द्रः । इत्युणादिकोषः ॥ राक्षसः । इति संक्षिप्तसारे उणादिवृत्तिः ॥

**तिण्टी**, स्त्री, त्रिवृत् । इति शब्दचन्द्रिका ॥ (त्रिवृत्-शब्दे गुणादिरस्या ज्ञातव्यः ॥)

**तितउः**, पुं, (तन्यन्ते भृष्टयवा अत्रेति । तन विस्तारे + "तनोतेर्डौः सन्वच्च ।" उणां । ५ । ५२ । इति डौः सन्वच्च तेन अभ्यासस्येत्त्वादिकार्य्यम् ।) चालनी । इत्यमरः । २ । ९ । २६ ॥ हेमचन्द्रश्च । ४ । ८४ ॥ (यथा, ऋग्वेदे । १० । "महामनास्तु पुत्त्रौ द्वौ जनयामास भारत ! । उशीनरञ्च धर्म्मज्ञं तितिक्षुञ्च महाबलम् ॥")

**तितिभः**, पुं, (तितीति शब्देन भणतीति । भण + डः ।) इन्द्रगोपकीटः । इति हेमचन्द्रः । ४ । २७५ ॥

**तितिलं**, क्ली, (तिलति स्निह्यतीति । तिल + बाहुलकात् कः द्वित्वञ्च ।) नन्दकम् । नादा इति भाषा । तैतिलकरणम् । तिलपिच्चटम् । इत्यजयः ॥

**तित्तिरः**, पुं, (तित्ति इति शब्दं राति ददातीति । रा + "आतोऽनुपसर्गे कः ।" ३ । २ । ३ । इति कः ।) तित्तिरिपक्षी । इति शब्दरत्नावली ॥ (यथा, महाभारते । ५ । ९ । ३८ । "निकृत्तेषु ततस्तेषु निष्क्रामन्ति शिरःस्वथ । कपिञ्जलास्तित्तिराश्च कलविङ्काश्च सङ्घशः ॥" अस्य गुणाः । यथा, -- "तथैव तित्तिरो वृष्यो मेधाग्निबलवर्द्धनः । सर्व्वदोषहरो बल्यो लावकैः समतागुणैः ॥ कृष्णगौरावभेदाश्च श्रेष्ठो गौरश्च तित्तिरः । तृतीयस्तित्तिरोऽन्योऽपि सामान्यगुणलक्षणैः । सवातलोऽतिबलकृद्धनः किञ्चिद्रसायनः ॥" इति हारीते प्रथमे स्थाने ११ अध्याये ॥ जनपदविशेषः । तद्देशजाते बहुवचनान्तः । यथा, महाभारते । ६ । ४७ । ५० ।

रूपा चेत् शुक्ला ह्रासरूपा चेत् कृष्णा ॥ यथा, "तत्र पक्षावुभौ मासे शुक्लकृष्णक्रमेण हि । चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः ॥ पक्षत्याद्यास्तु तिथयः क्रमात् पञ्चदश स्मृताः । दर्शान्ताः कृष्णपक्षे ताः पूर्णिमान्ताश्च शुक्लके ॥ गोभिलोक्तामावास्याघटकोपर्य्यधोभावापन्नसमसूत्रपातन्यायेन राश्येकावच्छेदेन सहावस्थानयुक्तार्कमण्डलाच्चन्द्रमण्डलस्यराशिद्वादशांशद्वादशांशभोगात्मकनिर्गमरूपवियोगेन शुक्लायाः प्रतिपदादितत्तत्तिथेरुत्पत्तिः । एवं गोभिलोक्तपौर्णमासीघटकसप्तमराश्यवस्थानरूपपरमनियोगानन्तरमर्कमण्डलप्रवेशाय चन्द्रमण्डलस्य राशिद्वादशांशद्वादशांशभोगात्मकप्रवेशरूपसन्निकर्षेण कृष्णायास्तत्तत्तिथेश्चोत्पत्तिरिति ।

| | | |
|---|---|---|
| ७१ । २<br>“सक्तुमिव तितौना पुनन्तो यत्र धीरा मनसा-<br>वाचमक्रत ॥”<br>यथाच, --<br>“शूर्पवद्दोषमुत्सृज्य गुणं गृह्णन्ति साधवः ।<br>दोषग्राही गुणत्यागी असाधुस्तितौर्य्यथा ॥”<br>इत्युद्भटः ॥<br>“क्षुद्रच्छिद्रसमोपेतं चालनं तितौ स्मृतम् ॥” | “वाह्लीकास्तित्तिराश्चैव चोलाः पाण्ड्याश्च भारत ॥)<br>**तित्तिरिः**, पुं, (तरतीति । तॄ + “तरतेः सन्वत्तुक् चाभ्यासस्य ।” उणां । ४ । १४२ । इत्यत्र उज्ज्वल-<br>दत्तधृतसूत्रात् इः सन्वत्कार्य्यमभ्यासस्य । तुगागमश्च ।) पक्षिविशेषः । तितिरि इति | |

यथा, --
अर्काद्विनिःसृतः प्राचीं यद्यात्यहरहः शशी ।
भागैर्द्वादशभिस्तत् स्यात्तिथिश्चान्द्रमसं दिनम् ॥
त्रिंशांशकस्तथा राशेर्भाग इत्यभिधीयते ।
आदित्याद्विप्रकृष्टस्तु भागं द्वादशकं यदा ॥
चन्द्रमाः स्यात्तदा राम
तिथिरित्यभिधीयते ॥ * ॥
सा देवकृत्ये पूर्ब्बाह्णयुता ग्राह्या ।
एकादश्युपवासा-
तिरिक्तस्थले सर्व्वत्र त्रिसन्ध्यव्यापिनी ग्राह्या ॥ * ॥
अथ प्रतिपत् ।
सा च कृष्णा द्वितीयायुता ग्राह्या शुक्ला अमा-
वस्यायुता ग्राह्या कृष्णाप्युपवासे द्वितीयायुता न
ग्राह्या । अत्र तैलाभ्यङ्गं कुष्माण्डभक्षणं क्षौरञ्च
न कार्य्यम् ॥ * ॥
अथ द्वितीया ।
सा च कृष्णा पूर्ब्बयुता शुक्ला परयुता ग्राह्या ।
भ्रातृद्वितीया तु
अष्टधाविभक्तदिनपञ्चमांशुयुक्ता
याह्या उभयदिने तल्लाभे परयुता ग्राह्या । तत्र
बृहतीभक्षणं न कार्य्यम् ॥ * ॥
अथ तृतीया ।
सा च रम्भाव्रतेतरदेवकार्य्येषु
चतुर्थीयुता ग्राह्या
रम्भाव्रते तु द्वितीयायुता । तत्र मांसभक्षणं
पटोलभक्षणञ्च न कार्य्यम् ॥ * ॥
अथ चतुर्थी ।
सा च पञ्चमीयुता ग्राह्या । विनायकव्रते

अथ नवमी ।
सा चाष्टमीयुता ग्राह्या । तत्रालावुभक्षणं न
कर्त्तव्यम् । माघस्य शुक्ला नवमी
महानन्दा ।
रामनवमीव्यवस्था तच्छब्दे द्रष्टव्या ॥ * ॥
अथ दशमी ।
सा च शुक्ला एकादश्या कृष्णा तु नवम्या युता
ग्राह्या । अत्र कलम्बीभक्षणं न कर्त्तव्यम् ॥ * ॥
एकादशीव्यवस्था श्रीविष्णोः
शयनव्यवस्था च
तत्तच्छब्दे द्रष्टव्या ॥ * ॥ अथ द्वादशी ।
सा च एकादशीयुता ग्राह्या । अत्र पूतिका-
भक्षणं न कर्त्तव्यम् । फाल्गुनस्य शुक्ला द्वादशी
पुष्यनक्षत्रयुक्ता चेत् गोविन्दद्वादशी ॥ * ॥
अथ त्रयोदशी ।
सा च शुक्ला द्वादशीयुता कृष्णा परयुता ग्राह्या ।
अत्र वार्त्ताकीभक्षणं न कर्त्तव्यम् ॥ * ॥
अथ चतुर्द्दशी ।
सा शुक्ला पूर्णिमायुता कृष्णा त्रयीदशीयुता
ग्राह्या । तत्र माषो न भोक्तव्यः ।
ज्यैष्ठकृष्ण-
चतुर्द्दश्यां प्रदोषे सावित्रीव्रतं कर्त्तव्यम् । तत्र
यदा त्रयोदशी दिवाभागे
दण्डद्वयमात्रसत्त्वे-
ऽपि चतुर्द्दशी भवेत् तद्दिने व्रतं कर्त्तव्यम् ।
पूर्ब्बाहे तद्विधत्वेऽपि पराहे
त्रिसन्ध्यव्यापित्वे
पराह एव । यदा तु पूर्ब्बापरयोर्न तथाविधा
तदापि पराह एव । भाद्रे मासि कृष्णा चतु-

**तिथिप्रणीः**, पुं, (तिथिं प्रणयति ह्रासवृद्धिरूप-
कलाक्रिययेति । प्र + नी + क्विप् णत्वञ्च ।) चन्द्रः । इति हेमचन्द्रः । ३ । १८ ॥

**तिथी**, स्त्री, (तिथिः । कृदिकारादिति वा ङीष् ।)
तिथिः । इति भरतः ॥ (यथा, महाभारते । १३ । ८७ । १८ ।
"कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्द्दशीम् ।
श्राद्धकर्म्मणि तिथ्यस्तु प्रशस्ता न तथेतराः ॥")

**तिनाशकः**, पुं, (तिनिश एव । स्वार्थे कन् । पृषो-
दरादित्वात् आत्वम् ।) तिनिशवृक्षः । इति शब्दरत्नावली ॥

**तिनिशः**, पुं, (अतिशयेन नेशतीति । निश
समाधौ + "इगुपधेति ।" ३ । १ । ११५ । इति
कः । यद्वा, अतिक्रान्तो निशाः अत्यादय इति
समासः । पृषोदरादित्वात् साधुः ।) वृक्ष-
विशेषः । मथुरादौ तिनाश इति ख्यातः ।
कुत्रचित् सादन इति ख्यातश्च । तत्पर्य्यायः ।
स्यन्दनः २ नेमी ३ रथद्रुः ४ अतिमुक्तकः ५
वञ्जुलः ६ चित्रकृत् ७ । इत्यमरः । २ । ४ । २६ ॥
चक्री ८ शताङ्गः ९ शकटः १० रथः ११
रथिकः १२ भस्मगर्भः १३ मेषी १४ जलधरः १५ ।
(यथा, सुश्रुते चिकित्सितस्थाने । १९ ।
"शल्लकीवदरीविल्वपलाशतिनिशत्वचः ॥")
अस्य गुणाः । कषायत्वम् । उष्णत्वम् । कफ-
रक्तातीसारवातामयनाशित्वम् । ग्राहकत्वम् ।
दाहजनकत्वञ्च । इति राजनिर्घण्टः ॥

**तिन्तिडः**, पुं, (तिम्यते क्लिद्यते मुखाद्यनेनेति ।
तिम + ईकन्प्रत्ययेन तिन्तिडीकः । ततः पृषो-
दरादित्वात् साधुः ।) चिञ्चा । वृक्षाम्लः ।
इति विश्वः ॥ दैत्यभेदः । इति हेमचन्द्रः ॥

**तिन्तिडिका**, स्त्री, (तिन्तिडी + स्वार्थे कन् । टाप्

तृतीयायुता ग्राह्या । मङ्गलवारे शुक्ला चतुर्थी
अक्षया । अत्र मूलकभक्षणं क्षोरं प्रदोषे
अध्ययनञ्च न कार्य्यम् । भाद्रमासे चतुर्थ्यां
चन्द्रो न द्रष्टव्यः । प्रमादाद्दृष्ट्वा, --
सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः ।
सुकुमारक ! मा रोदीस्तव ह्येष स्य मन्तकः ॥
अनेन मन्त्रेणाभिमन्त्रितं जलं पेयं आचारात्
स्यमन्तकोपाख्यानञ्च श्रोतव्यम् ॥ * ॥
अथ पञ्चमी ।
सा च चतुर्थीयुता ग्राह्या अत्र विल्वं न भोक्त-
व्यम् ॥ * ॥
अथ षष्ठी ।
सा सप्तमीयुता ग्राह्या । स्कन्दषष्ठी तु पञ्चमी-
युता ग्राह्या अस्यां शिरोऽभ्यङ्गो निम्बभक्षणञ्च
न कर्त्तव्यम् ॥ * ॥
अथ सप्तमी ।
सा षष्ठीयुता ग्राह्या तत्र तालं न भक्षयेत् ।
शुक्लपक्षस्य सप्तम्यां यदि रविवारो भवेत् सा
विजया सप्तमी । माघमासस्य शुक्लसप्तम्यां दिवा-
करा रथमापुः तस्मात् सा रथसप्तमी ॥ सा
मन्वादिश्च । तस्यां अध्ययनं न कर्त्तव्यम् ॥ * ॥
अथाष्टमी ।
सा शुक्ला नवमीयुता ग्राह्या कृष्णा सप्तमीयुता ।
तत्राध्ययनं नारिकेलभक्षणञ्च न कर्त्तव्यम् ॥
शनिवारे अथवा मङ्गलवारे कृष्णाष्टमी पुण्य-
र्द्दशी अघोरा । माघे कृष्णा चतुर्द्दशी रटन्ती ।
शिवरात्रिव्यवस्था तच्छब्दे द्रष्टव्या ॥ * ॥
अथ पौर्णमासी ।
तत्र मांसं न भोक्तव्यम् । सा च चतुर्द्दशीयुता
ग्राह्या । सा तु मासर्क्षयुता चेत् तदा महती ।
कार्त्तिकमासे कृत्तिकानक्षत्रयुता पौर्णमासी
महाकार्त्तिकी एवमन्यत्रापि । महाज्यैष्ठी-
व्यवस्था तच्छब्दे द्रष्टव्या ।
कोजागरव्यवस्था
तच्छब्दे द्रष्टव्या ॥ * ॥ अथामावस्या ।
अत्र मांसं न भोक्तव्यम् । सा प्रतिपद्युता
ग्राह्या । मङ्गलवारे यदि अमावस्या भवेत्
तदा अरुणोदयमारभ्य मौनी भूत्वा यो गङ्गायां
स्नायात् स सहस्रगोदानजन्यफलमाप्नुयात्।
अमावस्याश्राद्धव्यवस्था श्राद्धशब्दे द्रष्टव्या ।
पौषमाघयोरमावास्या यदि दिवारविवार-
व्यतीपात-श्रवणनक्षत्रयुक्ता भवति तदा अर्द्धो-
दययोगः स्यात् । अयं कोटिसूर्य्यग्रहतुल्यः अत्र
तावज्जलं गङ्गोदकतुल्यं यत्किञ्चिद्दानं सेतु-
सन्निभञ्च भवति । इति तिथ्यादितत्त्वम् ॥ तिथि-
कृत्यं मासशब्दे द्रष्टव्यम् ॥

**तिथिक्षयः**, पुं, (तिथीनां तिथ्युपलक्षितचन्द्र-
कलानां क्षयो यत्र ।) अमावस्या । इति शब्दार्थ-
कल्पतरुः ॥ दिनक्षयः । त्र्यहस्पर्शः । यथा, --
“एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा ।
पूर्ब्बह्रस्वश्च ।) तिन्तिडी । इति शब्दरत्ना-
वली ॥

**तिन्तिडी**, स्त्री, (तिम्यते क्लिद्यते मुखाभ्यन्तर-
मनेनेति । तिम + ईकन्प्रत्ययेन तिन्तिडीका ।
ततः पृषोदरादित्वात् साधुः ।) वृक्षविशेषः ।
तेँतुल् इति भाषा ॥ तत्पर्य्यायः । चिञ्चा २
अम्लिका ३ । इत्यमरः । २ । ४ । ४३ ॥ तिन्ति-
डिकः ४ तिन्तिडीकम् ५ तिन्तिडीका ६
अम्लीका ७ आम्लिका ८ आम्लीका ९ । इति
तट्टीका ॥ तिन्तिली १० तिन्तिडिका ११
आब्दिका १२ चुक्रुः १३ चुक्रा १४ चुक्रिका १५
अम्ला १६ अत्यम्ला १७ भुक्ता १८ भुक्तिका १९
चारित्रा २० गुरुपत्रा २१ पिच्छिला २२ यम-
दूतिका २३ । इति शब्दरत्नावली ॥ शाक-
चुक्रिका २४ सुचुक्रिका २५ सुतिन्तिडा २६ ।
अस्या आमफलस्य गुणाः । अत्यम्लत्वम् । कफ-
पित्तकारित्वञ्च । इति राजनिर्घण्टः ॥ वात-
नाशित्वम् ॥ अस्याः पक्वफलस्य गुणाः । दीप-
नत्वम् । रुचिकारित्वम् । भेदित्वम् । उष्ण-
त्वम् । कफवातनाशित्वञ्च । इति राजवल्लभः ॥
विष्टम्भनाशित्वम् । मधुराम्लत्वम् ।
पित्तदाहास्र-

| | | |
|---|---|---|
| तरा । बृहस्पतिवारे शुक्लाष्टमी अक्षया ।<br>दूर्व्वाष्टमी पूर्ब्बविद्धा ग्राह्या ।<br>जन्माष्टमीव्यवस्था<br>तच्छब्दे द्रष्टव्या ॥ * ॥ | तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम् ॥”<br>अपिच ।<br>“शतमिन्दूक्षये पुण्यं सहस्रन्तु दिनक्षये ॥”<br>इति तिथ्यादितत्त्वम् ॥ | |

कफदोषप्रकोपणत्वञ्च ।
पक्वचिञ्चाफलरसगुणाः ।
मधुराम्लत्वम् । रुचिप्रदत्वम् ।
शोफपाककर-
त्वम् । लेपे व्रणदोषनाशित्वञ्च ॥
अस्याः पत्रस्य
गुणाः । शोफरक्तदोषव्यथानाशित्वम् ।
अस्याः
शुष्कत्व क्षारस्य गुणः ।
शूलमन्दाग्निनाशि-
त्वम् । इति राजनिर्घण्टः ॥
"अम्लिकायाः फलं पक्वं मर्द्दितं
वारिणा दृढम् ।
शर्करामरिचोन्मिश्रं
लवङ्गेन्दूसुवासितम् ॥
अम्लिकाफलसम्भूतं पानकं
वातनाशनम् ।
पित्तश्लेष्मकरं किञ्चित् सुरुच्यं
वह्निबोधकम् ॥"
इति भावप्रकाशः ॥
वृक्षाम्लम् । इति विश्वः ॥

**तिन्तिडीकं**, क्ली, (तिम्यते क्लिद्यते मुखं येन ।
तिम + "फर्फरीकादयश्च ।" उणां ४ ।
२० ।
इति ईकन्प्रत्ययेन निपातनात् साधुः
।)
वृक्षाम्लम् । इत्यमरः । २ । ९ । ३५ ॥
(यथा,
तन्त्रसारे पुरश्चरणप्रकरणे ।
"रम्भाफलं तिन्तिडीकं कमला
नागरङ्गकम् ।
फलान्येतानि भोज्यानि एभ्योऽन्यानि
विवर्ज्जयेत् ॥"
यथास्य पर्य्यायाः ।
"वृक्षाम्लन्तिन्तिडीकञ्च चुक्रं
स्यादम्लवृक्षकम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥
आमपक्वावस्थयोरस्य गुणा यथा, --
तिन्दुकञ्च विजानीयात् कवडग्रहमेव च ॥"
इति कल्पस्थाने द्वादशेऽध्याये चरकेणोक्तम् ॥)

**तिन्दुकः**, पुं, स्त्री, (तिन्दु + स्वार्थे संज्ञायां वा
कन् ।) वृक्षविशेषः । गाव् इति ख्यातः ।
इत्यमरटीकासारसुन्दरी ॥ केन्दूकवृक्षः । इति
भरतः ॥ इति राजनिर्घण्टश्च । तैँदु इति भाषा
॥
तत्पर्य्यायः । स्फुर्जकः २ कालस्कन्धः ३
शिति-
सारकः ४ । इत्यमरः । २ । ४ । ३८ ॥
स्फूर्जकः
५ केन्दुः ६ तिन्दुः ७ तिन्दुलः ८ तिन्दुकिः ९
तिन्दुकी १० । इति शब्दरत्नावली ॥ नील-
सारः ११ अतिमुक्तकः १२ स्वर्य्यकः १३
रामणः १४ स्फूर्जनः १५ स्पन्दनाह्वयः १६
कालसारः १७ । (यथा, महाभारते । ३ । ६४
। ३ ।
"शालवेणुधवाश्वत्थतिन्दुकेङ्गुदकिंशुकैः ।
अर्ज्जुनारिष्टसंछन्नं स्यन्दनैश्च सशाल्मलैः ॥")
अस्य आमफलस्य गुणाः । कषायत्वम् । ग्राहि-
त्वम् । वातकारित्वम् । शीतलत्वम् । लघुत्वञ्च
।
पक्वफलस्य गुणाः । मधुरत्वम् । स्निग्धत्वम् ।
दुर्जरत्वम् । श्लेष्मदत्वम् । गुरुत्वम् । व्रणवात-
नाशित्वम् । पित्तप्रमेहास्रकारित्वम् । विषद-
त्वञ्च । इति राजनिर्घण्टः ॥ पित्तप्रमेहास्र-
श्लेष्मघ्नाशित्वम् । इति भावप्रकाशः ॥ तत्सारं
चिररोगजित् ॥ विश्वतिन्दुकमप्येवं विशेषात्
ग्राहि शीतलम् ॥ इति राजनिर्घण्टः ॥

**तिन्दुकिः**, स्त्री, (तिन्दुकी । निपातनात् ह्रस्वः ।)
तिन्दुकः । इति शब्दरत्नावली ॥

**तिन्दुकिनी**, स्त्री, (तिन्दुकस्तदाकारः फलेऽस्त्यस्याः ।
तिन्दुक + इनि + ङीप् ।) आवर्त्तकी । इति
राजनिर्घण्टः ॥

**तिन्दुकी**, स्त्री, (तिन्दुक + गौरादित्वात् ङीष् ।)
तिन्दुकः । इति शब्दरत्नावली ॥ (यथा,
सुश्रुते चिकित्सितस्थाने २ अध्याये ।
१९ ॥ तिमिर्महाकायो मत्स्यः कश्चित्
सामुद्रः ।
तथा च । अस्ति मत्स्यस्तिमिर्नाम
शतयोजन-
विस्तरः । इति भरतः ॥ (यथा च रघौ ।
१३ । १० ।
"ससत्त्वमादाय नदीमुखाम्भः
संमीलयन्तो विवृताननत्वात् ।
अमी शिरोभिस्तिमयः सरन्ध्रै-
रूर्द्ध्वं वितन्वन्ति जलप्रवाहान् ॥")
समुद्रः । इति त्रिकाण्डशेषः ॥
(राजविशेषः । स
तु दूर्व्वस्य पुत्त्रः । यथा, भागवते । ९ ।
२२ । ४२ ।
"नृपञ्जयस्ततो दूर्व्वस्तिमिस्त
स्माज्जनिष्यति ॥"
अयं हि नवमासाधिकसप्तचत्वारिंशद्वर्षं
यावत्
राज्यं पालयामास । यथा, राजावल्याम्
।
१ परिच्छेदे ।
"तिमिं पुत्त्रं ततो राज्ये न्यस्य स्वर्गं
स्वयं गतः ।
मुनिवेदमितान् वर्षान्नवमासाधिकान्
तिमिः ॥
पालयित्वाखिलं राज्यं भुक्त्वा
भोगमनुत्तमम् ।
पुत्त्रं बृहद्रथं राज्ये सोऽभिषिच्य वनं ययौ
॥")

**तिमिकोषः**, पुं, (तिमेः कोष इव ।) समुद्रः ।
इति त्रिकाण्डशेषः ॥

**तिमिङ्गिलः**, पुं, (तिमिं गिरतीति । गॄ + कः ।
रस्य लः । गिलेऽगिलस्येति मुम् ।)
मत्स्य-
विशेषः । इत्यमरः । १ । १० । २० ॥
(यथा,
महाभारते । १ । २२ । ३ ।

"वातापहं तिन्तिडीकमामं
पित्तबलासकृत् ।
ग्राह्युष्णं दीपनं रुच्यं सम्पक्वं
कफवातनुत् ॥"
इति सुश्रुते सूत्रस्थाने ४६ अध्याये ॥)

**तिन्तिडीकः**, पुं, (तिम + ईकन् । निपातनात्

साधुः ।) तिन्तिडी । इत्यमरटीकायां
भरतः ॥

**तिन्तिडीद्यूतम्**, क्ली, (तिन्तिडीभिस्तिन्तिडी-

जात-वीजैर्यद्द्यूतम् ।) चुच्चुरी । इति
शब्द-
रत्नावली ॥ काँइवीचिर खेला इति
भाषा ॥

**तिन्तिलिका**, स्त्री, (तिन्तिडिका । डस्य लत्वम्
।)

तिन्तिडी । इत्यमरटीका ॥

**तिन्तिली**, स्त्री, (तिन्तिडी । डस्य लत्वम् ।)

तिन्तिडी । इति शब्दरत्नावली ॥

**तिन्तिलीका**, स्त्री, (तिन्तिडीका । डस्य लत्वम्
।)

तिन्तिडी । इत्यमरटीका ॥

**तिन्दिशः**, पुं, टिण्डिशवृक्षः । इति राजनिर्घण्टः
॥

**तिन्दुः**, पुं, (तिम्यति आर्द्रीभवतीति । तिम
आर्द्री-

भावे + "मृगय्वादयश्च ।" इति
कुप्रत्ययेन साधुः ।)
तिन्दुकवृक्षः । इति शब्दरत्नावली ॥

**तिन्दुकं**, क्ली, (तिन्दुरिव कायतीति । कै + कः
।)

कर्षपरिमाणम् । इति वैद्यकपरिभाषा ॥
(यथा,
शार्ङ्गधरे पूर्ब्बखण्डे १ अध्याये ।
"कोलद्वयञ्च कर्षः स्यात् स प्रोक्ता
पाणि-
मालिका ।
अक्षः पिचुः पाणितलं किञ्चिपाणिश्च
तिन्दु-
कम् ॥"
"पियालवीजं तिन्दुक्यास्तरुणानि फलानि च ।
यथालाभं समाहृत्य तैलमेभिर्विपाचयेत् ।
सद्यो व्रणेषु देयानि तानि वैद्येन जानता ॥"
अस्य पर्य्याया यथा, वैद्यकरत्नमालायाम् ।
"कालस्कन्दस्तिन्दुकश्च
स्फूर्ज्जकस्तिन्दुकीति च ॥")

**तिन्दुलः**, पुं, तिन्दुकवृक्षः । इति शब्दरत्नावली ॥

**तिप**, ऊ ऋ ङ च्युति । इति कविकल्पद्रुमः ॥

(भ्वां-आत्मं-अकं-वेट् ।) ऊ, तेपिष्यते तेप्स्यते
।
ऋ, अतितेपत् । ङ, तेपते तितिपे । च्युत् क्षर-
णम् । इति दुर्गादासः ॥

**तिम**, क्लेदने । आर्द्रीभाव इति यावत् । इति

कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ॥)

**तिम**, य क्लेदने । इति कविकल्पद्रुमः ॥ (दिवां-

परं-अकं-सेट् ।) य, तिम्यति । तितेम ।
क्लेदन-
मार्द्रीभावः । इति दुर्गादासः ॥

**तिमिः**, पुं, (तिम्यतीति । तिम क्लेदने + इन् ।

यद्वा, ताम्यति आकाङ्क्षतीति । तमु काङ्क्षा-
याम् + "क्रमितमिशतिस्तम्भामतइच्च ।"
उणां
४ । १२१ । इति इन् अकारस्य इकारा-
देशश्च ।) मत्स्यविशेषः । इत्यमरः । १ । १०
।
"तिमिङ्गिलसमाकीर्णं मकरैरावृतं तथा
॥"
द्वीपविशेषः । तद्द्वीपजाते, त्रि । यथा,
महा-
भारते । २ । ३२ । ६६ ।
"तिमिङ्गिलञ्च स नृपं वशे कृत्वा
महामतिः ॥")

**तिमिङ्गिलगिलः**, पुं, (तिमिङ्गिलमपि गिरतीति ।

गॄ + कः । मुम् च ।) महामत्स्यविशेषः ।
इति हेमचन्द्रः । ४ । ४१४ ॥

**तिमितः**, त्रि, (तिम + कर्त्तरि क्तः ।) निश्चलः ।

इति धरणिः ॥ (यथा, पञ्चदशी । २ ।
३५ ।
"अतस्तिमितगम्भीरं न तेजो न
तमस्ततम् ॥")
क्लिन्नः । इत्यमरः । ३ । १ । १०५ ॥

**तिमिरं**, क्ली, (तिम्यतीति । तिम + "इषिमदि-

मुदीति ।" उणां । १ । ५२ । इति किरच्
।)
अन्धकारः । इत्यमरः । १ । १० । ३ ॥
(यथा,
रामायणे । २ । २८ । १८ ।
"अतीववातस्तिमिरं बुभुक्षा चास्ति
नित्यशः ।
भयानि च महान्त्यत्र अतो दुःखतरं वनम्
॥")
नेत्ररोगविशेषः । तस्य लक्षणमाह
माधवकरः ।
"तिमिराख्यः स वै दोषश्चतुर्थं पटलं
गतः ।
रुणद्धि सर्व्वतो दृष्टिं लिङ्गनाशमतः परम्
॥"
(अस्य लक्षणानि यथा, --
"दोषे मण्डलसंस्थाने मण्डलानीव
पश्यति ।
द्विधैकं दृष्टिमध्यस्थे बहुधा बहुधास्थिते
॥
दृष्टेरभ्यन्तरगते ह्रस्ववृद्धविपर्य्ययम् ।

| यथास्य पर्य्यायाः ।<br>“विद्याद्द्वौ द्रंक्षणौ कर्षं सुवर्णञ्चाक्षमेव च ।<br>विडालपदकन्तच्च<br>पिचुम्पाणितलन्तथा ॥ | | नान्तिकस्थमधःसंस्थे दूरगं<br>नोपरिस्थितम् ॥<br>पार्श्वे पश्येन्न पार्श्वस्थे<br>तिमिराख्योऽयमामयः ।<br>प्राप्नोति काचतां दोषे तृतीयपटलाश्रिते ॥<br>तेनोर्द्धमीक्षते नाधस्तनुचेलावृतोपमम् । |
|---|---|---|

यथा वर्णञ्च रज्येत दृष्टिर्हीयेत च क्रमात् ॥
तथाप्युपेक्षमाणस्य चतुर्थं पटलं गतः ।
लिङ्गनाशं मलः कुर्व्वन् छादयेद्दृष्टिमण्डलम् ॥
तत्र वातेन तिमिरे व्याविद्धमिव पश्यति ।
चलाविलारुणाभासं प्रसन्नञ्चेक्षते मुहुः ॥
जालानि केशान् मशकान् रश्मींश्चोपेक्षितेऽत्र च ।
काचीभूते दृगरुणा पश्यत्यास्यमनासिकम् ॥
चन्द्रदीपाद्यनेकत्वं वक्रमृज्वपि मन्यते ।
वृद्धः काचो दृशं कुर्य्याद्रजोधूमावृतामिव ॥
स्पष्टारुणाभां विस्तीर्णां सूक्ष्मां वा हतदर्शनाम् ।
सलिङ्गनाशो वाते तु सङ्कोचयति दृक्शिराः ॥
दृङ्मण्डलं विशत्यन्तर्गम्भीरादृगसौ स्मृता ।
पित्तजे तिमिरे विद्युत् खद्योतद्योतदीपितम् ॥
शिखितित्तिरिपिच्छाभं प्रायो नीलञ्च पश्यति ।
काचे दृक्काचनीलाभा तादृगेव च पश्यति ॥
अर्केन्दुपरिवेषाग्निमरीचीन्द्रधनूंषि च ।
भृङ्गनीला निरालोका दृक्स्निग्धा लिङ्गनाशतः ॥
दृष्टिः पित्तेन ह्रस्वाख्या सा ह्रस्वा ह्रस्वदर्शना ।
भवेत् पित्तविदग्धाख्या पीता पीताभदर्शना ॥
कफेन तिमिरे प्रायः स्निग्धं श्वेतञ्च पश्यति ।
शङ्खेन्दूकुन्दकुसुमैः कुमुदैरिव चाचितम् ॥
काचे तु निष्प्रभेन्द्वर्क प्रदीपाद्यैरिवाचितम् ।
सिताभा सा च दृष्टिः स्याल्लिङ्गनाशे तु लक्ष्यते ॥
मूर्त्तः कफो दृष्टिगतः स्निग्धो दर्शननाशनः ।
बिन्दूर्जलस्येव चलः पद्मिनीपुटसंस्थितः ॥
उष्णे सङ्कोचमायाति छायायां परिसर्पति ।
शङ्खकुन्देन्दूकुमुदस्फटिकोपमशुक्लिमा ॥
रक्तेन तिमिरे रक्तं तमोभूतञ्च पश्यति ।
काचेन रक्ता कृष्णा वा दृष्टिस्तादृक् च पश्यति ॥
लिङ्गनाशेऽपि तादृक्दृङ्निष्प्रभा हतदर्शना ।
संसर्गसन्निपातेषु विद्यात् सङ्कीर्णलक्षणान् ॥

“त्रिंशद्भागा भुजङ्गस्य
गन्धपाषाणपञ्चकम् ।
शुल्वतालकयोर्द्वौ द्वौ
वङ्गस्यैकोऽञ्जनात्रयम् ॥
अन्धमूषीकृतं ध्मातं पक्वं
विमलमञ्जनम् ।
तिमिरान्तकरं लोके द्वितीय इव
भास्करः ॥
गोमूत्रे छगलरसेऽम्लकाञ्जिके च
स्त्रीस्तन्ये हविषि विषे च माक्षिके च ।
यत्तुत्थं ज्वलितमनेकशो निषिक्तं
तत्कुर्य्यात् गरुडसमं नरस्य चक्षुः ॥”
“रसेन्द्रभुजगौ तुल्यौ
तयोस्तुल्यमथाञ्जनम् ।
ईषत् कर्पूरसंयुक्तमञ्जनं नयनामृतम् ॥”
“सामान्यं साधनमिदं प्रतिदोषमतः
शृणु ।
वातजे तिमिरे तत्र दशमूलाम्भसा
घृतम् ॥
क्षीरे चतुर्गुणे श्रेष्ठाकल्कपक्वं
पिबेत्ततः ॥”
“पित्तजे तिमिरे
सर्पिर्जीवनीयफलत्रयैः ।
विपाचितं पाययित्वा स्निग्धस्य
व्यधयेच्छिराम् ॥
श्लेष्मोद्भवेऽमृताक्वाथवराकणशृतं
घृतम् ।
विध्येच्छिरां पीतवतो
दद्याच्चानुविरेचनम् ॥”
“रक्तजे पित्तवत्सिद्धिः शीतैश्चास्रं
प्रसादयेत् ।”
“दद्यादुशीरनिर्य्यूहचूर्णितं
कणसैन्धवम् ॥
तत् शृतं सघृतं भूयः पचेत् क्षौद्रं घने
पिबेत् ।
शीते चास्मिन् हितमिदं सर्व्वजे
तिमिरेऽञ्जनम् ॥”
“चक्षूरक्षायां सर्व्वकालं मनुष्यै-

क्तिश्च । लिङ्ग्यते चिह्न्यते अनेनेति लिङ्गं
दृष्टि-
तेजः तस्य नाशोऽस्मिन् इति लिङ्गनाशः ।
अस्मिन्नपि तिमिरेऽपि तमोभूते तमस्तुल्ये ।
अत्र तु भूतशब्दस्तुल्यार्थः । भूतं प्राण्यतीते
समे त्रिष्वित्यमरवचनात् । नातिरूढे अप्रौढे
।
चन्द्रादित्यौ नक्षत्राणि च पश्यति ।
अन्तरीक्षे
अन्तरीक्षस्य प्रकाशमयत्वेन
तमोऽभिभावात् ।
तेजांसि अग्न्यादेः । भ्राजिष्णूनि
रत्नसुवर्णा-
दीनि । अस्मिन् प्रौढे नीरजे च
चन्द्रादित्यादीन्न
पश्यतीत्यन्वयः । नीलिकाकाचसंज्ञितः
नीलिका-
काचेति नामान्तराभ्यां युक्तः ॥ * ॥
दृष्टिरोगाणां सङ्ख्यानामानि चाह ।
दृष्ट्याश्रया षट् च षडेव रोगाः
षड्लिङ्गनाशा हि भवन्ति तत्र ।
वातेन पित्तेन कफेन सर्व्वै-
रुक्तात् परिम्लाय्य विधिश्च षष्ठः ॥
दृष्ट्याश्रया षट् च षडेव रोगाः षट् षट्
द्वादशे-
त्यर्थः । तत्र लिङ्गनाशाः षट् तान् विवृ-
णोति वातेनेत्यादि ॥ * ॥
तथा नरः पित्तविदग्धदृष्टिः
कफेन चान्यस्त्वथ धूमदर्शी ।
यो ह्रस्वजात्यो नकुलान्ध्यसंज्ञो
गम्भीरसंज्ञा च तथैव दृष्टिः ॥
पित्तविदग्धदृष्ट्यादयः षट् । एवं
दृष्ट्यादयश्च
षट् । एवं दृष्ट्याश्रया द्वादशरोगाः ॥ * ॥
तत्र द्वावन्यौ चाह ।
तत्रैवान्यौ गदौ बद्धौ सनिमित्तानिमित्तकौ ॥
तेषु वातजस्य लिङ्गनाशस्य लक्षणमाह ।
वातेन खलु रूपाणि भ्रमन्तीव च पश्यति ।

तिमिरादीनकस्माच्च तैः
स्याद्व्यक्ताकुलेक्षणम् ।
तिमिरे शेषयोर्दृष्टौ चित्रो रागः प्रजायते ॥"
इति वाभटेनोत्तरस्थाने द्वादशेऽध्याये उक्तम् ॥
अस्य चिकित्सा यथा, --
"तिमिर काचतां याति काचोऽप्यान्ध्य-
मुपेक्षया ।
नेत्ररोगेष्वतो घोरं तिमिरं साधयेद्द्रुतम् ॥
तुलां पचेत जीवन्त्या द्रोणेऽपां पादशेषितैः ।
तत्क्वाथे द्विगुणं क्षीरं घृतप्रस्थं विपाचयेत् ॥
प्रपौण्डरीककाकोली पिप्पली लोध्रसैन्धवैः ।
शताह्वा मघुकद्राक्षा सितादारुफलत्रयैः ॥
कार्षिकैर्निशि तत् पीतं तिमिरापहरं परम् ॥"
"पटोलनिम्बकटुका दार्व्वीसेव्यवरावृषम् ।
सधन्वयासत्रायन्ती पर्पटं पालिकं पृथक् ॥
प्रस्थमामलकानाञ्च क्वाथयेन्नल्वणेऽम्भसि ।
तदाढकेऽर्द्धपलिकैः पिष्टैः प्रस्थं घृतात् पचेत्
॥
मुस्तभूनिम्बषष्ट्याह्वकुटजोदीच्यचन्दनैः ।
सपिप्पलीकैस्तत्सर्पिर्घ्राणकर्णास्यरोगजित् ॥
विद्रधिज्वरदुष्टारुर्विसर्पापचिकुष्ठनुत् ।
विशेषाच्छुक्रतिमिरनक्तान्ध्योष्णाम्लदाहनुत्
॥"

र्यत्नः कर्त्तव्यो जीविते यावदिच्छा ।
व्यर्थो लोकोऽयं तुल्यरात्रिन्दिवानां
पुंसामन्धानां विद्यमानेऽपि वित्ते ॥"
इति चोत्तरस्थाने त्रयोदशेऽध्याये
वाभटे-
नोक्तम् ॥
"सौवीरमञ्जनन्तुत्थन्ताप्यो
धातुर्म्मनःशिला ।
चक्षुष्यं मधुकं लोहा मणयः
पौष्यमञ्जनम् ॥
सैन्धवं शौकरीदंष्ट्रा कतकञ्चाञ्जनं
शुभम् ।
तिमिरादिषु चूर्णं वा वर्त्तिर्व्वेयमनुत्तमा
॥"
"वदने कृष्णसर्पस्य निहितं
मासमञ्जनम् ।
ततस्तस्मात् समुद्धृत्य सशुष्कं
चूर्णयेद्बुधः ॥
सुमनःक्षारकैः शुष्कैरर्द्धांशैः सैन्धवेन
च ।
एतन्नित्याञ्जनं कार्य्यं
तिमिरघ्नमनुत्तमम् ॥"
इति चरके चिकित्सास्थाने २६
अध्याये ॥)

**तिमिरः**, पुं, (तिम्यति क्लिद्यति चक्षुरनेन । तिम +
"इषिमदिमुदीति ।" उणां । १ । ५२ ।
इति किरच् ।)
चक्षूरोगविशेषः । तस्य निदानादि
यथा ।
चतुर्थपटलगतदोषमाह ।
"तिमिराख्यः स यो दोषश्चतुर्थपटलं
गतः ।
रुणद्धि सर्व्वतो दृष्टिं लिङ्गनाश इति
क्वचित् ॥
अस्मिन्नपि तमोभूते नातिरूढे महागदे
।
चन्द्रादित्यौ स नक्षत्रावन्तरीक्षे च
विद्यतः ॥
निर्म्मलानि च तेजांसि भ्राजिष्णूनि च
पश्यति ।

आविलान्यरुणाभानि व्याविद्धानीव मानवः
॥
आविलानि कलुषाणि । अरुणानि अव्यक्त-
लौहित्ययुक्तानि । आविद्धानीव कुटिलानीव
॥ *
पैत्तिकमाह ।
पित्तेनादित्यखद्योतशक्रचापतडिद्गुणान् ।
नृत्यतश्चैव शिखिनः सर्व्वं नीलञ्च पश्यति
॥
आदित्यादीनां गुणान् रूपाणि ॥ * ॥
श्लैष्मिकमाह ।
कफेन पश्येद्रूपाणि स्निग्धानि च सितानि च
।
सलिलप्लावितानीव जालकानीव मानवः ॥
* ॥
सन्निपातजमाह ।
सन्निपातेन चित्राणि विपरीतानि पश्यति ।
बहुधापि द्विधा वापि सर्व्वाण्येव समन्ततः
॥
हीनाधिका सान्यथा वा ज्योतींष्यपि च
पश्यति ॥
चित्राणि नानावर्णानि । विपरीतानि वैपरीत्यं
विवृणोति बहुधेत्यादि ॥ * ॥
रक्तजमाह ।
पश्येद्रक्तेन रक्तानि तमांसि विविधानि च ।
हरितान्यथ कृष्णानि पीताश्वपि च मानवः
॥ * ॥
परिम्लायिनमाह ।
रक्तेन मूर्च्छितं पित्तं परिम्लायिनमाचरेत् ।
तेन पीता दिशः पश्येदुद्यन्तमिव भास्करम्
॥

| | | |
|---|---|---|
| | स एव लिङ्गनाशस्तु<br>नीलिकाकाचसंज्ञितः ॥<br>यो दोषः दोषोऽत्र रोगः चतुर्थपटलं<br>वाह्य-<br>पटलं गतः स तिमिराख्यः ।<br>तिमिरदर्शनेन<br>तिमिरमस्यास्तीति तिमिरः अर्श<br>आदित्वात् ।<br>तस्य लक्षणमाह रुणद्धीत्यादि । स<br>तिमि-<br>राख्यः । सर्व्वतः सर्व्वत्र । लिङ्गनाश<br>इति<br>क्वचित् तन्त्रान्तरे लिङ्गनाशसंज्ञः ।<br>तस्य निरु- | |

विकीर्य्यमाणान् खद्योतैर्वृक्षांस्तेजांसि चैव हि ॥
विकीर्य्यमाणान् व्याप्यमानान् अग्न्यादिभिरिव ॥
वातादिजनितैर्नेत्रवर्णैरपि स षड्विधः ।
लिङ्गनाशो निगदितो वर्णो वातादितो यथा ॥
रागारुणो मारुततः प्रदिष्टो
म्लायी च नीलश्च तथैव पित्तात् ।
कफात् सितः शोणिततः सरक्तः
समस्तदोषप्रभवो विचित्रः ॥ * ॥
वातादिना हेतुभूतेन जनिते नेत्रविषये मण्डले
रूपविशेषमाह ।
अरुणं मण्डलं वाताच्चञ्चलं परुषं तथा ।
पित्ततो मण्डलं नीलं कांस्याभं वा सपीतकम् ॥
श्वेतं पीतं वा कथमेतत् व्याधिप्रभावात् ॥
श्लेष्मणा बहलं स्निग्धं शङ्खकुन्देन्दुपाण्डरम् ।
चलत्पद्मपलाशस्थशुक्लो बिन्दुरिवाम्भसः ।
मृद्यमाने तु नयने मण्डलं तद्विसर्पति ॥
बहलं स्थूलम् ।
मण्डलं तु भवेच्चित्रं लिङ्गनाशे त्रिदोषजे ।
प्रवालपद्मपत्राभं मण्डलं शोणितात्मकम् ॥
चित्रं वातादिवर्णम् ।
रक्तजं मण्डलं दृष्टौ स्थूलकाचारुणप्रभम् ।
परिम्लायिनि रोगे स्यात् म्लानं नीलमथापि वा ॥
दोषक्षयात् स्वयं तत्र कदाचित् स्यात्तु दर्शनम् ॥
रक्तजं पित्तानुगामिरक्तजम् ।
स्थूलकाचारुण-

दिवा स सूर्य्यानुगृहीतदृष्टिः
पश्येत्तु रूपाणि कफाल्पभावात् ॥
दोषोऽत्र कफस्तस्योपक्रान्तत्वात् ।
नक्तान्ध्यस्य श्लेष्मविदग्धदृष्टावन्तर्भूतत्वाच्च पृथग्गणना ॥ * ॥
धूमदर्शिनमाह ।
शोकज्वरायाः सशिरोऽभितापै-
रव्याहता यस्य नरस्य दृष्टिः ।
धूम्रांस्तु यः पश्यति सर्व्वभावात्
स धूमदर्शीति नरः प्रदिष्टः ॥
शिरोऽभितापः शिरसि घर्म्मादिना सन्तापः ।
एतस्य पित्तदोषो बोद्धव्यः ॥ * ॥
ह्रस्वजात्यमाह ।
यो वासरे पश्यति कष्टतोऽथ
रूपं महच्चापि निरीक्षतेऽल्पम् ।
रात्रौ पुनर्यः प्रकृतानि पश्येत्
स ह्रस्वजात्यो मुनिभिः प्रदिष्टः ॥ * ॥
नकुलान्ध्यमाह ।
विद्योतते यस्य नरस्य दृष्टि-
र्दोषाभिपन्ना नकुलस्य यद्वत् ।
चित्राणि रूपाणि दिवा स पश्येत्
स वै विकारो नकुलान्ध्यसंज्ञः ॥ * ॥
गम्भीरकमाह ।
दृष्टिर्व्विरूपा श्वसनोपसृष्टा
सङ्कुच्य याभ्यन्तरतः प्रयाति ।
रुजावगाढा च तमक्षिरोगं
गम्भीरकेति प्रवदन्ति तज्ज्ञाः ॥
विरूपा विकृता । श्वसनोपसृष्टा वातोपहता ।
रुजावगाढा गम्भीरवेदनान्विता ॥ * ॥
वाह्यौ पुनर्द्वावपि संप्रदिष्टौ
निमित्ततश्चाप्यनिमित्ततश्च ।
निमित्ततस्तस्य शिरोऽभितापात्
ज्ञेयस्त्वभिष्यन्दनिदर्शनैः सः ॥
वाह्यौ सुश्रुतोक्तद्वादशसंख्येभ्योऽधिकौ तत्र
निमित्तत आह शिरोऽभितापात् शिरोऽभि-

अचिरेणैव तद्वारि तिमिराणि व्यपोहति ॥ * ॥
शङ्खनाभिर्व्विभीतस्य पथ्यामज्जा मनःशिला ।
पिप्पली मरिचं कुष्ठं वचा चेति समांशकम् ॥
छागीक्षीरेण संपिष्य वटीं कुर्य्याद्यवोन्मिताम् ।
हरेणुमात्रां संघृष्य जलेनाञ्जनमाचरेत् ॥
तिमिरं मांसवृद्धिञ्च काचं पटलमर्व्वुदम् ।
रात्र्यन्धं वार्षिकं पुष्पं वटी चन्द्रोदया हरेत् ॥”
इति चन्द्रोदया वटी ॥ * ॥
कणा सलवणोषणा सहरसाञ्जना साञ्जना
सरित्पतिकफः सिता सितपुनर्न्नवा सम्भवा ।
रजन्यरुणचन्दनं मधु च तुत्थपथ्याशिला
अरिष्टदलसावरस्फुटिकशङ्खनाभीन्दवः ॥
इमानि तु विचूर्णयेन्निविडवाससा शोधये-
त्तथायसि विमर्द्दयेत् समधुताम्रखण्डेन तत् ।
इदं मुनिभिरीरितं नयनशोणनामाञ्जनं
करोति तिमिरक्षयं पटलपुष्पनाशं बलात् ॥
लवणं सैन्धवम् । अञ्जनं सुरमा इति लोके ।
सरित्पतिकफः समुद्रफेनः । शिला मनःशिला ।
सावरो लोध्रः । स्फुटिकः फट्करी । इन्दूः कर्पूरः । नयनशोणं तिमिरे नूतनकुसुमे नूतन-पटले च ॥ * ॥
हरीतकी वचा कुष्ठं पिप्पली मरिचानि च ।
विभीतकस्य मज्जा च शङ्खनाभिर्म्मनःशिला ॥
सर्व्वमेतत् समं कृत्वा गव्यक्षीरेण पेषयेत् ।
नाशयेत्तिमिरं कण्डुं पटलाण्यर्व्वुदानि च ॥
अपि त्रैवार्षिकं शुक्रं मासेनैकेन नाशयेत् ।
अधिकानि च मांसानि रात्रावन्धत्वमेव च ॥
चन्द्रोदया वटी पुष्पे तिमिरे च ॥ * ॥
रजनी निम्बपत्राणि पिप्पली मरिचानि च ।
विडङ्गं भद्रमुस्तञ्च सप्तमी त्वभया स्मृता ॥
अजामूत्रेण संपिष्य छायायां शोषयेद्वटीम् ।
वारिणा तिमिरं हन्ति गोमूत्रेण तु पिष्टिकाम् ॥
मधुना पटलं हन्ति नारीक्षीरेण पुष्पकम् ।
एषा चन्द्रप्रभावर्त्तिः स्वयं रुद्रेण निर्म्मिता ॥
इति चन्द्रप्रभावर्त्तिः ॥ * ॥
कणा छागयकृन्मध्ये पक्वा तद्रसपेषिता ।
अचिराद्धन्ति नक्तान्ध्यं तद्वत् सक्षौद्रमूषणम् ॥
त्रिफलाया रसं प्रस्थं प्रस्थं भृङ्गरजस्य च ।

प्रभं स्थूलकाचस्येवारुणा प्रभा यस्य
तत् । एतेन
स्थौल्यमरुणत्वञ्च बोध्यते ।
दोषक्षयादित्यादि ।
तत्र परिम्लायिनि कालान्तरेण
दोषक्षयात्
कदाचित् स्वयमेव दर्शनं स्यात् ॥ * ॥
अनुक्त-
व्यथादाहगौरवादिदोषलिङ्ग-
संग्रहणार्थमाह ।
यथास्वं दोषलिङ्गानि सर्व्वेष्वेव भवन्ति
हि ॥ * ॥
पत्तविदग्धदृष्टेर्लक्षणमाह ।
पित्तेन दुष्टेन गतेन दृष्टिं
पीता भवेद्यस्य नरस्य दृष्टिः ।
पीतानि रूपाणि च तेन पश्येत्
सर्व्वो नरः पित्तविदग्धदृष्टिः ॥
पित्तेन गतेन दृष्टिं दृष्टावपि
प्रथमद्वितीये
पटले गतेनेति बोद्धव्यम् । तेन
व्याधिना ॥ * ॥
तस्मिन्नेव पित्ते दृष्टौ तृतीयं पटलं गते
रूप-
विशेषमाह ।
प्राप्ते तृतीयं पटलं तु दोषे
दिवा न पश्येन्निशि वीक्षते सः ।
रात्रौ स शीतानुगृहीतदृष्टिः
पित्ताल्पभावात् सकलानि पश्येत् ॥
दोषेऽत्र पित्ते ॥ * ॥ अथ
श्लेष्मविदग्धदृष्टि-
लक्षणमाह ।
तथा नरः श्लेष्मविदग्धदृष्टि-
स्तान्येव शुक्लानि हि मन्यते तु ।
अत्रापि श्लेष्मणो दृष्टौ
प्रथमद्वितीयपटलगतस्यै-
तल्लिङ्गं बोद्धव्यम् ॥ * ॥ स एव श्लेष्मा
दृष्टौ
पटलत्रयं गतो नक्तान्ध्यं करोतीत्याह ।
त्रिपु स्थितो यः पटलेषु दोषो
नक्तान्ध्यमापादयति प्रसह्य ।

ताप्यते येन
विषकुसुमगन्धवहपवनस्पर्शेन स
शिरोऽभितापस्तस्मात् ।
अभिष्यन्दनिदर्शनैः
रक्ताभिष्यन्दलिङ्गैरिति गदाधरः ॥
सन्निपाता-
भिष्यन्दलिङ्गैरिति कार्त्तिकः ॥ * ॥
अनिमित्तत आह ।
सुरर्षिगन्धर्व्वमहोरगाणां
सन्दर्शनेनापि च भास्करस्य ।
हन्येत दृष्टिर्म्मनुजस्य तस्य
स लिङ्गनाशस्त्वनिमित्तसंज्ञः ॥
अनुपलभ्यमानानां सुरादीनां
दर्शननिमित्त-
मप्यनिमित्तं मन्यते ॥ * ॥
अनिमित्ततो लिङ्गनाशस्य लक्षणमाह ।
तत्राक्षिविस्पष्टमिवावभाति
षैदूर्य्यवर्णा विमला च दृष्टिः ।
विस्पष्टं ज्योतिर्युक्तम् । वैदूर्य्यवर्णा श्यामा
विमला निर्म्मला । इति दृष्टिरोगाः ॥ * ॥
अथ तिमिरचिकित्सा ।
"भुक्त्वा पाणितलं घृष्ट्वा चक्षुषोर्यदि
दीयते ।

वृषस्य च रसं प्रस्थं शतावर्य्याश्च तत्समम् ॥
गुडूच्या आमलक्याश्च रसं छागीपयस्तथा ।
प्रस्थं प्रस्थं समाहृत्य सर्व्वैरेभिर्घृतं पचेत् ॥
कल्कः कणा सिता द्राक्षा त्रिफला नीलमुत्-
पलम् ।
मधुकं क्षीरकाकोली मधुपर्णी निदिग्धिका ॥
तत्साधुसिद्धं विज्ञाय शुभे भाण्डे निधापयेत् ।
ऊद्‌र्ध्वं पानमधःपानं मध्ये पानं प्रशस्यते ॥
यावन्तो नेत्रजा रोगास्तान् पानादपकर्षति ।
सुरक्ते रक्तदुष्टे च रक्ते वा विश्रुते तथा ॥
नक्तान्ध्ये तिमिरे काचे नीलिका पटलार्व्वुदे ।
अभिष्यन्देऽधिमन्थे च यक्ष्मकोपे सुदारुणे ॥
नेत्ररोगेषु सर्व्वेषु दोषत्रयकृतेष्वपि ।
परं हितमिदं प्रोक्तं त्रिफलाद्यं महाघृतम् ॥

भृङ्गरजः भृङ्गराजः भङ्गरा इति लोके ।
क्षीरकाकोल्या अलाभे अश्वगन्धामूलं ग्राह्यम् ॥
मधुपर्ण्यत्र जलजं यष्टीमधु चक्षुष्यत्वात् । तद-
लाभे सामान्यं यष्टीमधु ग्राह्यं तूल्यगुणत्वात् ॥
त्रिफलाद्यं घृतम् ॥ * ॥
शतमेकं हरीतक्या द्विगुणञ्च विभीतकम् ।
चतुर्गुणं त्वामलकं वृषमार्कवयोः समम् ॥
चतुर्गुणोदकं दत्त्वा शनैर्म्मृद्वग्निना पचेत् ।
भागं चतुर्थं संरक्ष्य क्वाथं तमवतारयेत् ॥
शर्करा मधुकं द्राक्षा मधुयष्टिर्न्निदिग्धिका ।
काकोली क्षीरकाकोली त्रिफला नागकेशरम् ॥
पिप्पली चन्दनं मुस्तं त्रायमाणामथोत्पलम् ।
घृतप्रस्थसमं क्षीरं कल्कैरेतैः शनैः पचेत् ॥
हन्यात् सतिमिरं काचं नक्तान्ध्यं शुक्रमेव च ।
तथा स्रावञ्च कण्डूञ्च श्वयथुञ्च कषायताम् ॥
कलुषत्वञ्च नेत्रस्य विधर्म्मपटलान्वितम् ।
बहुनात्र किमुक्तेन सर्व्वान् नेत्रामयान् हरेत् ॥
यस्य चोपहता दृष्टिः सूर्य्याग्निभ्यां प्रपश्यतः ।
तस्यैतद्भेषजं प्रोक्तं मुनिभिः परमं हितम् ॥
मार्ज्जितं दर्पणं यद्वत् परां निर्म्मलतां व्रजेत् ।
तद्वदेतेन पीतेन नेत्रं निर्म्मलतामियात् ॥
वारिद्रोणद्वयं चात्र वृषमार्कवयोस्तुले ।
काकोलीयुगलालाभे अश्वगन्धामूलं ग्राह्यम् ॥
द्वितीयं त्रिफलाद्यं घृतम् ॥ * ॥
वासाविश्वामृतादार्व्वीरक्तचन्दनचित्रकैः ।
भूनिम्बनिम्बकटुकापटोलत्रिफलाम्बुदैः ॥
निशाकलिङ्गकुटजैः क्वाथः सर्व्वाक्षिरोगहा ।
वैस्वर्य्यं पीनसं श्वासं कासं नाशयति ध्रुवम् ॥
वासादिक्वाथः ।
इति नेत्ररोगाधिकारः ।” इति भावप्रकाशः ॥ * ॥
किञ्च । गारुडे १९८ अध्याये ।
“कतकस्य फलं शङ्खं सैन्धवं त्र्युषणं वचा ।
फेनो रसाञ्जनं क्षौद्रं विडङ्गानि मनःशिला ॥

**तिरस्करिणी**, स्त्री, (तिरोऽन्तर्धानं करोतीति ।
तिरस् + कृ + “नन्दिग्रहीति ।” ३ । १ । १३४ ।
इति णिनिः । संज्ञापूर्ब्बकविधेरनित्यत्वात् वृद्ध्य-
भावः । ततो ङीप् ।) व्यवधायकपटः । इत्य-
मरः । २ । ६ । १२० ॥ कानात् इति भाषा ॥
(यथा, कुमारे । १ । १४ ।
“यत्रांशुकाक्षेपविलज्जितानां
यदृच्छया किम्पुरुषाङ्गनानाम् ।
दरीगृहद्वारविलम्बिविम्बा-
स्तिरस्करिण्यो जलदा भवन्ति ॥”)

**तिरस्कारः**, पुं, (तिरस् + कृ + घञ् ।) अना-
दरः । इति हलायुधः ॥ (यथा, पञ्चदशी । ७ । ८ ।
“भ्रमांशस्य तिरस्कारात्
अधिष्ठानप्रधानता ।
यदा तदा चिदात्माहमसङ्गोऽस्मीतिबुध्यते ॥”)

**तिरस्कारिणी**, स्त्री, (तिरोऽन्तर्धानं करोतीति ।
तिरस् + कृ + णिनिः ङीप् ।) तिरस्करिणी ।
इत्यमरटीकायां नीलकण्ठः ॥

**तिरस्कृतः**, त्रि, (तिरस् + कृ + क्तः ।) अना-
दृतः । कृततिरस्कारः । यथा, --
“अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद्ध्वनौ ।
अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ॥”
इति भावप्रकाशः ॥
(तन्त्रसारोक्तमन्त्रविशेषे, पुं । यथा, --
“यस्य मध्ये हकारोऽस्ति कवचं भूर्द्धनि द्विधा ।
अस्त्रं तिष्ठति मन्त्रः स तिरस्कृत उदीर्य्यते ॥”)

“अतीतानागतानर्थान्
विप्रकृष्टतिरोहितान् ॥”)
आच्छादितः । इत्यमरः । २ । ८ । ११२ ॥

**तिर्य्यक्**, [च्] व्य, वक्रम् । तत्पर्य्यायः । साचि २
तिरः ३ । इत्यमरः । ३ । १ । ३४ । (यथा,
रामायणे । २ । २३ । ४ ।
“तिर्य्यगूर्द्ध्वं शरीरे च पातयित्वा
शिरोधराम् ॥”)
तिरोऽर्थः । निरुद्धार्थः । इति शब्दरत्नावली ॥

**तिर्य्यक्स्रोताः**, [स्] पुं, (तिर्य्यक् वक्रं स्रोत
आहारसञ्चारो यस्य । भुक्तान्नस्य तिर्य्यक्तया
उदरे सञ्चारादस्य तथात्वम् ।) पशुपक्ष्यादिः ।
(यथा, विष्णुपुराणे । १ । ५ । ८ ।
“तस्याभिध्यायतः सर्गं
तिर्य्यक्स्रोताभ्यवर्त्तत ।
यस्मात् तिर्य्यक्प्रवृत्तः स
तिर्य्यक्स्रोतास्ततः
स्मृतः ॥”)
स ब्रह्मणोऽष्टमः सर्गः । स तु अष्टाविंशद्विधः ।
यथा, --
“तिरश्चामष्टमः सर्गः सोऽष्टाविंशद्विधो मतः ॥”
तेषां लक्षणं यथा, --
“अविदो भूरितमसो घ्राणजा हृद्यवेदिनः ॥”
इति श्रीभागवते । ३ । १० । २१ ॥
“तिरश्चां तिर्य्यक्स्रोतसाम् । अविदः श्वस्तनादि-
ज्ञानशून्याः । भूरितमसः आहारादिमात्र-
निष्ठाः । घ्राणजा घ्राणेनैव इष्टमर्थं जानन्ति ।

एषां वर्त्तिर्हन्ति कासं तिमिरं पटलं तथा ॥”

**तिमिररिपुः**, पुं, (तिमिरस्य अन्धकारस्य रिपुः ।) सूर्य्यः । इति हलायुधः ॥

**तिमिषः**, पुं, ग्राम्यकर्क्कटी । इति त्रिकाण्डशेषः ॥ नाटाम्रः । इति हारावली । १२६ ॥

**तिमीः**, पुं, (तिमिः पृषोदरादित्वात् साधुः ।) तिमिमत्स्यः । इति द्विरूपकोषः ॥ (तिमि + वा ङीष् । तिमिजातिस्त्री । इति केचित् ॥)

**तिरः**, [स्] व्य, (तरति दृष्टिपथमिति । तॄ + “सर्व्व-धातुभ्योऽसुन् ।” उणां । ४ । १८८ । इति असुन् । क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते इति गुणविषये इर् ।) अन्तर्द्धानम् । (यथा, भाग-वते । २ । ६ । ४१ ।
“यदा तदेवासत्तर्क्कैस्तिरोधीयेत विप्लुतम् ॥”)
तिर्य्यगर्थः । इत्यमरः । ३ । ४ । २२५ ॥ तिर-स्कारः । इति तट्टीकायां स्वामी ॥

**तिरश्ची**, स्त्री, (तिर्य्यक्जातिः स्त्रियां ङीप् ।) पशुपक्ष्यादीनां स्त्री । इति मुग्धबोधम् । मादी इति भाषा ॥

**तिरस्क्रिया**, स्त्री, (तिरस्करणमिति । “कृञः श च ।” ३ । ३ । १०० । इति भावे शः ।) अना-दरः । तिरस्कारः । इत्यमरः । १ । ७ । २२ ॥ (यथा, माघे । १ । ३९ ।
“हरे ! हिरण्याक्षपुरःसरासुर-
द्विपद्विषः प्रत्युत सा तिरस्क्रिया ॥”)

**तिरिटिः**, पुं, इक्षुग्रन्थिः । इति शब्दमाला ॥

**तिरिमः**, पुं, शालिभेदः । इति राजनिर्घण्टः ॥

**तिरियः**, पुं, शालिविशेषः । अस्य गुणाः । मधु-रत्वम् । स्निग्धत्वम् । शीतलत्वम् । दाहपित्त-सर्व्वामयनाशित्वम् । त्रिदोषशमनत्वम् । रुच्य-त्वम् । पथ्यत्वञ्च । इति राजनिर्घण्टः ॥

**तिरीटं**, क्ली, (तीर्य्यते शिरोविपदोऽनेनेति । तॄ + “कृतॄकृपिभ्यः कीटन् ।” उणां । ४ । १८४ । इति कीटन् ।) किरीटम् । इत्युणादिकोषः ॥

**तिरीटः**, पुं, (तॄ + कीटन् ।) लोध्रः । इत्यमरः । २ । ४ । ३३ ॥ (यथा, भावप्रकाशे अर्शरोगा-धिकारे ।
“समङ्गोत्पलमोचाह्वतिरीटतिलचन्दनैः ॥”)

**तिरोधानं**, क्ली, (तिरस् + धा + भावे ल्युट् ।) अन्तर्धानम् । इत्यमरः । १ । ३ । १३ ॥ (यथा, भागवते । ३ । २१ । ४४ ।
“सिद्धान् विद्याधरांश्चैव तिरोधानेन सोऽसृजत् ॥”)

**तिरोहितः**, त्रि, (तिरस् + धा + क्तः ।) अन्त-र्हितः । (यथा, मार्कण्डेये । ३९ । २४ ।
हृदि अवेदिनः दीर्घानुसन्धानशून्याः ।” इति तट्टीकायां श्रीधरस्वामी ॥ अष्टाविंशतिभेदा यथा, --
“गौरजो महिषः कृष्णः शूकरो गवयो रुरुः ।
द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सत्तम ! ॥
खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा ।
एते चैकशफाः क्षत्तः शृणु पञ्चनखान् पशून् ॥
श्वा शृगालो वृको व्याघ्रो मार्ज्जारः शश-शल्यकौ ।
सिंहः कपिर्गजः कूर्म्मो गोधा च मकरादयः ॥
कङ्कगृध्रवकश्येनभासभल्लूकवर्हिणः ।
हंससारसचक्राह्वकाकोलूकादयःखगाः ॥”
इति श्रीभागवते । ३ । १० । २२-२३ ॥
“गवादय उष्ट्रान्ता द्विशफा द्विखुरा नव । खरादयश्चमर्य्यन्ता एकशफाः षट् । श्वादयो गोधान्ताः पञ्चनखा द्वादश । एते भूचराः सप्तविंशतिः । मकरादयो जलचराः कङ्कादयः खगाः अभूचरत्वेनैकीकृत्य गृहीता एवमष्टा-विंशतिभेदान् वदन्ति । अन्येषामपि तिर्य्यक्-प्राणिनां यथायथमेतेष्वन्तर्भावः ।” इति तट्टी-कायां श्रीधरस्वामी ॥

**तिर्य्यग्यानः**, पुं, (तिर्य्यक् वक्रं यानं गमनं यस्य ।) कुलीरः । इति त्रिकाण्डशेषः ॥

**तिर्य्यङ्**, [ञ्च्] पुं, (तिर्य्यगञ्चतीति । अन्च +

| | | | |
|---|---|---|---|
| | | | क्विप् । "तिरसस्तिर्य्यलोपे ।" ६ । ३ । ९४ । इति तिरिः ।) विहङ्गादिः । इति मेदिनी ॥ (यथा, महाभारते । १३ । १११ । १२५ । "पापानि तु नरः कृत्वा तिर्य्यग् जायेत भारत ! ॥" |

यथाच मनुः । ५ । ४० ।
"ओषध्यः पशवो वृक्षास्तिर्य्यञ्चः पक्षिणस्तथा ॥"
"तिर्य्यञ्चः कूर्म्मादयः ।" इति तट्टीकायां कुल्लूकभट्टः ॥) पशुः । इति हेमचन्द्रः । ३ । १०८ ॥
(यथा, पञ्चतन्त्रे । ३ । ११९ ।
"तिर्य्यञ्चं मानुषं वापि यो मृतं संस्पृशेत् कुधीः ।
पञ्चगव्येन शुद्धिः स्यात् तस्य चान्द्रायणेन च ॥")
वक्रगामी । इति शब्दरत्नावली ॥

**तिर्य्यञ्ची**, स्त्री, (तिर्य्यञ्च + स्त्रियां ङीप् ।) तिरश्ची । स्त्रीपशुपक्ष्यादिः । इति मुग्धबोधम् ॥

**तिल**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) ह्रस्वी । तेलति । इति दुर्गादासः ॥

**तिल**, क श स्निहि । इति कविकल्पद्रुमः ॥ (चुरां-तुदां च-परं-अकं-सेट् ।) स्निहि स्निग्धीभावे ।
क, तेलयति । श, तिलति तैलेनाङ्गम् । इति दुर्गादासः ॥

**तिलः**, पुं, (तिलति स्निह्यति तैलेन पूर्णो भवतीति । तिल + "इगुपधज्ञेति ।" ३ । १ । १३५ । इति कः ।) स्वनामख्यातशस्यम् । तत्पर्य्यायः । होमधान्यम् २ पवित्रः ३ पितृतर्पणः ४ पापघ्नः ५ पूतधान्यम् ६ । इति राजनिर्घण्टः ॥ स्नेहयावन्तस्ते तिलाः स्वर्गे तावत्कालं स मोदते ॥"
सप्तमीं नवमीं पर्व्वकालञ्च त्यक्त्वा तिलतैलेनाङ्गानि विमृक्ष्य स्नानं कर्त्तव्यम् । यथा, मार्कण्डेये ।
"सर्व्वकालं तिलैः स्नानं पुण्यं व्यासोऽब्रवीन्मनुः ।
श्रीकामः सर्व्वदा स्नानं कुर्व्वीतामलकैर्नरः ।
सप्तमीं नवमीञ्चैव पर्व्वकालञ्च वर्ज्जयेत् ॥"
तिथितत्त्वे जन्मतिथिकृत्ये ।
"तिलोद्वर्त्ती तिलस्नायी तिलहोमी तिलप्रदः ।
तिलभुक् तिलवापी च षट्तिली नावसीदति ॥"
रात्रौ तिलान्वितवस्तुमात्रं न भक्षयेत् । यथा, काशीखण्डे ।
"सर्व्वञ्च तिलसम्बद्धं नाद्यादस्तमिते रवौ ॥"
तिलैस्तर्पणनिषेधस्तत्प्रतिप्रसवादिकञ्च तर्पणशब्दे द्रष्टव्यम् ॥) तिलकालकः । यथा, --
"देवगुरुप्रसादेन जिह्वाग्रे मे सरस्वती ।
तेनाहं नृप जानामि भानुमत्यास्तिलं यथा ॥"
इति कालिदासः ॥
(स्वल्पप्रमाणम् । तिलतुल्यत्वादस्य तथात्वम् ।
यथा, राजतरङ्गिण्याम् । ४ । ३२८ ।
"तिलं तिलं तं कृत्वा च चिक्षिपुर्दिक्षु सर्व्वतः ।
नगरान्निर्गतैः सैन्यैर्हन्यमानाः पदे पदे ॥")

**तिलकं**, क्ली, (तिलति स्निह्यतीति । तिल + "क्वुन् शिल्पिसंज्ञयोः ।" इति क्वुन् ।) क्लोम । प्रधाने त्रि । इति नानार्थध्वनिमञ्जरी ॥ ध्रुवकभेदः । यथा, --
"पञ्चविंशतिवर्णाङ्घ्रिस्तिलको ध्रुवको भवेत् ।
इष्टश्चच्चत्पुटे ताले रसे वीरेऽद्भुतेऽपि वा ॥"
इति सङ्गीतदामोदरः ॥

**तिलकः**, पुं क्ली, (तिलवत् तिलपुष्पवत् कायतीति । कै + कः ।) चन्दनादिना ललाटादिद्वादशाङ्गकर्त्तव्यचिह्नविशेषः । तत्पर्य्यायः । तमालपत्रम् २ चित्रकम् ३ विशेषकम् ४ । इत्यमरः । २ । ६ । १२३ ॥ (यथा, माघे । ३ । ६३ ।
"विशेषको वा विशिशेष यस्याः श्रियं त्रिलोकीतिलकः स एव ॥")
अथ द्वादशतिलकविधिः । पद्मपुराणे उत्तरखण्डे ।
"ललाटे केशवं ध्यायेन्नारायणमथोदरे ।
वक्षःस्थले माधवन्तु गोविन्दं कण्ठकूपके ॥
विष्णुञ्च दक्षिणे कुक्षौ वाहौ च मधुसूदनम् ।
त्रिविक्रमं कन्धरे तु वामनं वामपार्श्वके ॥
श्रीधरं वामबाहौ तु हृषीकेशन्तु कन्धरे ।
पृष्ठे तु पद्मनाभञ्च कट्यां दामोदरं न्यसेत् ॥
तत्प्रक्षालनतोयन्तु वासुदेवेति मूर्द्धनि ॥"
किञ्च ।
"ऊर्द्ध्वपुण्ड्रं ललाटे तु सर्व्वेषां प्रथमं स्मृतम् ।
ललाटादिक्रमेणैव धारणन्तु विधीयते ॥ इति ।
एवं न्यासं समाचर्य्य सम्प्रदायानुसारतः ।
न्यसेत् किरीटमन्त्रञ्च मूर्द्ध्नि सर्व्वार्थसिद्धये ॥"
अथ किरीटमन्त्रः । ओम् श्रीकिरीटकेयूरहारमकरकुण्डलचक्रशङ्खगदापद्महस्तपीताम्बरधरश्रीवत्साङ्कितवक्षःस्थलश्रीभूमिसहितस्वात्मज्योतिर्दीप्तिकराय सहस्रादित्यतेजसे नमो नमः ।" इति श्रीहरिभक्तिविलासे ४ विलासः ॥
तस्य धारणप्रकारो यथा, --
"द्वादशाङ्गे ललाटादौ तिलकं हरिमन्दिरम् ।
स्नानान्ते वैष्णवः कुर्य्यात् प्रत्येकं कृष्णनामभिः ॥
वामे वक्षसि नेत्रान्ते गण्डेऽंशे शङ्खचिह्नितम् ।

फलः ७ स्नेहफलपूरफलः ८ ।
अस्य गुणाः ।
रसे कटुत्वम् । तिक्तत्वम् ।
मधुरत्वम् । तुवर-
त्वम् । गुरुत्वम् । विपाके कटुत्वम् ।
स्वादुत्वम् ।
स्निग्धत्वम् । उष्णत्वम् ।
कफपित्तकारित्वम्।
बल्यत्वम् । केशहितत्वम् ।
हिमस्पर्शत्वम् ।
त्वच्यत्वम् । स्तन्यत्वम् । व्रणे
हितत्वम् । दन्त्य-
त्वम् । अल्पमूत्रकारित्वम्।
ग्राहित्वम् । वात-
घ्नत्वम् । अग्निमतिप्रदत्वञ्च । इति
भावप्रकाशः ॥
वर्णकारित्वम् ॥ * ॥
"कृष्णः पथ्यतमः सितोऽल्पगुणदः
क्षीणाःकिलान्ये
तिलाः ॥"
इति राजनिर्घण्टः ॥
अपि च । भावप्रकाशः ।
"कृष्णश्रेष्ठतमस्तेषु शुक्लो मध्यमः
सितः ।
अन्ये हीनतराः
प्रोक्तास्तज्ज्ञैरक्तादयस्तिलाः ॥"
तत्तैलगुणाः । अलङ्करत्वम् ।
केश्यत्वम् । मधु-
रत्वम् । तिक्तत्वम् । कषायत्वम् ।
उष्णत्वम् ।
तीक्ष्णत्वम् । बलकारित्वम् ।
कफवातजन्तु-
खर्जुव्रणकण्डूतिनाशित्वम् ।
कान्तिदत्वम् ।
वस्त्यभ्यङ्गपाननस्यकर्णाक्षिपूरणेषु
हितत्वञ्च ।
इति राजनिर्घण्टः
(तिलप्रतिग्रहनिषेधो
यथा, ब्रह्मपुराणे ।
"ब्राह्मणः प्रतिगृह्णीयात् वृत्त्यर्थं
साधुतस्तथा ।
कृष्णवर्णसौवर्च्चलम् । इत्यमरः । २ । ६ ।
६५ ॥
सौवर्च्चलम् । इति मेदिनी । के, १०० ॥

**तिलकः**, पुं, (तिल इव कायतीति । कै + कः ।)

पुष्पवृक्षविशेषः । तत्पर्य्यायः । विशेषकः २
मुखमण्डनकः ३ पुण्ड्रकः ४ पुण्ड्रः ५
स्थिर-
पुष्पी ६ छिन्नरुहः ७ दग्धरुहः ८ मृतजीवः
९
तरुणीकटाक्षकामः १० वासन्तसुन्दरः
११
दुग्धरुहः १२ भालविभूषणसंज्ञः १३
पुन्नागः १४
रेठकः १५ । इति राजनिर्घण्टः ॥ क्षुरकः
१६ श्रीमान् १७ पुरुषः १८ छत्रपुष्पकः
१९ ।
इति भावप्रकाशः ॥ (यथा, रघुः । ९ । ४१
।
"न खलु शोभयति स्म वनस्थलीं
न तिलकस्तिलकः प्रमदामिव ॥")
अस्य गुणाः । पाके कटुत्वम् ।
वातपित्तकफ-
नाशित्वम् । बलपुष्टिमेदःकारित्वम् ।
हृद्यत्वम् ।
लघुत्वञ्च । तत्त्वग्गुणाः । कषायत्वम् ।
उष्ण-
त्वम् ।
पुंस्त्वदन्तदोषकृमिशोफव्रणरक्तदोषनाशि-
त्वञ्च । इति राजनिर्घण्टः ॥ * ॥ (तिल +
स्वार्थे
कन् ।) शरीरस्थतिलः । तत्पर्य्यायः ।
तिल-
कालकः २ । इत्यमरः । २ । ६ । ४९ ॥
कालकः ३
पिप्लुः ४ जड़ुलः ५ । इति हेमचन्द्रः ॥ *
॥ मरु-
वकः । इति रत्नमाला ॥ अश्वभेदः । रोग-
भेदः । इति मेदिनी । के, १०० ॥ शेषस्य
निदानलक्षणे यथा, --
"कृष्णानि तिलमात्राणि नीरुजानि समानि
च ।
तथैव दक्षिणे कुर्य्याद्धरेश्चक्राङ्कितं मुने ! ॥ * ॥
ललाटे केशवं विद्यात् कण्ठे श्रीपुरुषोत्तमम् ।
वामबाहौ वासुदेवं सव्ये दामोदरन्तथा ॥
नाभौ नारायणञ्चैव माधवं हृदये तथा ।
गोविन्दं दक्षिणे पार्श्वे वामे चैव त्रिविक्रमम् ॥
विष्णुं सव्ये कर्णमूले दक्षिणे मधुसूदनम् ।
शिरोमध्ये हृषीकेशं पद्मनाभञ्च पृष्ठतः ॥
हरेर्द्वादशनामानि पठित्वा तिलकानि तु ।
यः कुर्य्याद्वैष्णवो नित्यं स प्रेमभक्तिमाप्नुयात् ॥
* ॥
ये कण्ठलग्नतुलसीभवकाष्ठमाला
ये द्वादशाङ्गहरिनामकृतोर्द्ध्वपुण्ड्राः ।
ये कृष्णभक्तिसुदृढा धृतशङ्खचक्रा-
स्ते वैष्णवा भुवनमाशु पवित्रयन्ति ॥ * ॥
तिलकन्तूर्द्ध्वपुण्ड्राख्यं मध्यच्छिद्रं हि नारद !
।
यदि कुर्य्याल्ललाटे तद्विज्ञेयं हरिमन्दिरम् ॥
आनासामूलमाश्रित्य शिरोमध्यगतं मुने ।
हरिपादाकृतं नासामूलमारभ्य यत्नतः ॥

| अव्यश्वमपि मातङ्गतिललौहांश्च वर्ज्जयेत् ॥”<br>तिलदाने फलमाह विष्णुः ।<br>“तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥”<br>तथा महाभारते ।<br>“कल्यमुत्थाय यो विप्रः स्नातः शुक्लेन वाससा ।<br>तिलपात्रं प्रयच्छन् वै सर्व्वपापैः प्रमुच्यते ॥”<br>शुद्धितत्त्वे ।<br>“प्रेतमुद्दिश्य यो दद्यात् हेमगर्भांस्तिलान्नृप ! । | वातपित्तकफोच्छेकात् तान् विद्यात्तिलकाल-<br>कान् ॥”<br>इति माधवकरः ॥ | |
|---|---|---|

हरिमन्दिरवत् सर्व्वं तद्राधावल्लभीयकम् ।
श्रीराधावल्लभीयं यत्तिलकं सुमनोहरम् ॥
यौगलं तत्तु विज्ञेयं यदि मध्यसुरङ्गितम् ॥
* ॥
यदूद्र्ध्वपुण्ड्रं तिलकं शोभनं तन्मनोहरम्
।
तन्मध्यपीतरेखञ्च श्रीमद्रामानुजं विदुः ॥
* ॥
श्रीरामोपासना यस्य तिलकं
तूद्र्ध्वपुण्ड्रकम् ।
भ्रवोर्म्मध्ये सबिन्दु स्याद्यदि विप्र !
मनोहरम् ॥
हरेः सर्व्वावताराणां मत्स्यादीनां विशेषतः
।
उपासकानां तिलकं केवलं हरिमन्दिरम् ॥
* ॥
ऊद्र्ध्वपुण्ड्रं द्बिजः कुर्य्यात् क्षत्त्रियाणां
तथैव च ।
वैश्यानान्तु तथा विप्र !
शूद्रादेर्मण्डलाकृतम् ॥
अच्छिद्रमूद्र्ध्वपुण्ड्रन्तु ये कुर्व्वन्ति
जनाधमाः ।
तेषां ललाटे सततं शुनः पादो न संशयः
॥
दृष्ट्वा भाले
द्बिजातीनामच्छिद्रमूद्र्ध्वपुण्ड्रकम् ।
कार्ष्णः कृष्णस्मृतिं कृत्वा
वस्त्रेणाच्छादयेन्मुखम् ॥
ललाटदक्षिणे ब्रह्मा वसेद्बामे महेश्वरः ।
मध्ये विष्णुर्व्वसेन्नित्यं तस्मान्मध्यं न
लेपयेत् ॥ * ॥
वर्त्तुलं तिर्य्यगच्छिद्रं ह्रस्वं दीर्घं ततं न तु
।
षष्ठलक्ष्मणसंयुक्तं तिलकं यन्निरर्थकम् ॥
खनित्रयष्टिकुकुनत्रिशूलमुकुराकृतम् ।
त्रिपुण्ड्रमर्द्धचन्द्रञ्च तिलकं यन्निरर्थकम् ॥
प्रमाणन्तूर्द्धपुण्ड्रस्य दीर्घं स्यात्
कलिवर्द्धनम् ।
आनासामूलमारभ्य ब्रह्मरन्ध्रगतं यदि ॥
गोरोचना च कस्तूरी
हरिद्रागुरुचन्दनम् ।
वल्मीकमृत्तिका गन्धः पद्मकं
हरिचन्दनग् ॥
गन्धकाष्ठं महानिम्बो
यमुनातीरमृत्तिका ।
गुरुपादरजोवारिणी
साध्वङ्घ्रिरजोजले ॥
कृत्वा प्रतिदिनं
स्नानमेतैर्गन्धमृदादिभिः ।
चारु यत्तिलकं ग्राह्यं तन्नाम्ना
वैष्णवैर्ध्रुवम् ॥ * ॥
काम्यं नैमित्तिकं नित्यं यत्किञ्चित्
कर्म्म नारद ! ।
वर्णाश्रमाणां तन्नास्ति स्नानान्ते
तिलकं विना ॥
कर्म्म वर्णाश्रमाणां स्यात दैवं पैत्रं न
तत्फलम् ।
स्नानं सन्ध्यां पञ्चयज्ञान् पैत्रं
होमादि कर्म्म यः ।
विना तिलकदर्भाभ्यां
कुर्य्यात्तन्निष्फलं भवेत् ॥”
इति पाद्मोत्तरखण्डम् ॥ * ॥
“वीक्ष्यादर्शे जले वापि यो
विदध्यात् प्रयत्नतः ।
ऊद्र्ध्वपुण्ड्रं महाभागः स याति
परमाङ्गतिम् ॥”
इति पाद्मे पातालखण्डम् ॥ * ॥
“शिवागमे दीक्षितैस्तु धार्य्यं तिर्य्यक्
त्रिपुण्ड्रकम् ।
विष्णवागमे दीक्षितस्तु ऊद्र्ध्वपुण्ड्रं
विधारयेत् ॥”
इति नागोजीभट्टधृतसूतसंहिता ॥

**तिलकटः**, पुं, तिलस्य रजः । (तिल + “अलावू-
तिलोमाभङ्गाभ्यो रजस्युपसंख्यानम्
।” ५ । २ ।
२९ । इत्यस्य वार्त्तिकोक्त्या कटच्
।) तिलचूर्णम् ।

**तिलचित्रपत्रकः**, पुं, (तिलचित्राणि तिलवच्चित्र
युक्तानि पत्राणि यस्य । कप् ।) तैलकन्दः ।
इति राजनिर्घण्टः ॥

**तिलचूर्णं**, क्ली, (तिलस्य चूर्णम् ।) चूर्णीकृत-
तिलः । तत्पर्य्यायः । तिलकल्कम् २ पललम् ३
पिष्टकम् ४ । अस्य गुणाः । मधुरत्वम् । रुच्य-
त्वम् । पित्तास्रबलपुष्टिदत्वञ्च । इति राज-
निर्घण्टः ॥ (यथा, पञ्चतन्त्रे । २ । ८३ ।
“ततस्तिलान् लुण्ठयित्वा तिलचूर्णेन ब्राह्मणं
भोजयिष्यामि ॥”)

**तिलतण्डुलकं**, क्ली, (तिलस्य तण्डुल इव संश्लेषेण
कायतीति । कै + कः । तिलतण्डुलवत् दृढ-
संश्लेषणादस्य तथात्वम् ।) आलिङ्गनम् । इति
शब्दमाला ॥ तिलमिश्रिततण्डुलम् ॥ (तिलस्य
शस्यञ्च ॥)

**तिलतैलं**, क्ली, (तिलस्य स्नेहः । तिल + “स्नेहे
तैलच् ।” ५ । २ । २९ । इत्यस्य वार्त्तिकोक्त्या
तैलच् ।) तिलस्नेहः । तिलेषु तैलम् । इति
व्याकरणम् ॥ (यथा, सुश्रुते । १ । ४५ ।
सर्व्वेभ्यस्त्विह तैलेभ्यस्तिलतैलं प्रशस्यते ॥”)
अस्य गुणाः तिलशब्दे द्रष्टव्याः ॥ (अपरे
गुणाश्च । यथा, हारीते १ स्थाने नवमेऽध्याये ।
“तच्च ज्ञेयं समासेन यथायोगं यथाविधि ।
कषायानुरसं स्वादु सूक्ष्ममुष्णं व्यवायि च ॥
पित्तकृद्वातशमनं श्लेष्मरोगादिवर्द्धनम् ।
अल्पं रुचिकरं मेध्यं कण्डूकुष्ठविकारनुत् ॥
वृष्यं श्रमापहं ज्ञेयं तिलतैलं विदुर्ब्बुधाः ।
छिन्ने भिन्ने च्युते घृष्टे क्षते भग्नेऽग्निदाहके ॥
वाताभिष्यन्दिस्फुटने चाभ्यङ्गे तिलतैलकम् ।
विषे व्यालशौनसर्प्ये सेकाभ्यङ्गावगाहने ॥
पाने वस्तौ च नस्ये च तथाकर्णप्रपूरणे ।
तिलतैलं विधेयं स्यात् सर्व्वरोगनिवारणम् ॥”
“तथा छिन्नभिन्नविद्धोत्पिष्टच्युतमथितक्षत-
पिच्छितभग्नस्फुटितक्षाराग्निदग्धविश्लिष्टदारि
ताभिहतदुर्भग्नमृगब्यालविदष्टप्रभृतिषुच परि-
षेकाभ्यङ्गावगाहेषु तिलतैलं प्रशस्यते ।
तद्बस्तिषु च पाने च नस्ये कर्णाक्षिपूरणे ।

शूद्रस्यैकाङ्गुलं प्रोक्तमायतं द्व्यङ्गुलं विशि ।
क्षत्त्रिये त्र्यङ्गुलं तद्वद्ब्राह्मणे चतुरङ्गुलम् ॥
नासिकायास्त्रिभागैको भागो मानेन यो भवेत् ।
भ्रुवोर्म्मध्यादधःस्थानं मूलमाहुर्म्मनीषिणः ॥ * ॥
ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ।
कुर्य्याद्यदूर्द्ध्वपुण्ड्रं तद्वैष्णवा हरिमन्दिरम् ॥
वैष्णवा विप्र ! भूपाश्चेत् वैश्यशूद्रान्त्यजाश्रमाः ।
यदूर्द्ध्वपुण्ड्रं विभृयुस्तदेव हरिमन्दिरम् ॥
नरो वाप्यथवा नारी यदि कृष्णपथं लभेत् ।
यन्नतस्तुलसीमाला सन्धार्य्या हरिमन्दिरम् ॥
मध्यच्छिद्रं न कुर्य्याद्यस्तिलकं यदि वैष्णवः ।
श्वपदं तच्चितातुल्यं भवेन्नारद ! नान्यथा ॥ * ॥
दण्डाकारद्विरेखं यत्तिलकं मूलकोणकम् ।
मध्यच्छिद्रन्तु तत् प्राहुरूद्दर्ध्वपुण्ड्रं मनोहरम् ॥
अधोसुखाब्जकलिकाकारंतिलकमुत्तमम् ।
मध्यच्छिद्रं युग्मरेखमूद्दर्ध्वपुण्ड्रं प्रकीर्त्तितम् ॥ * ॥
तीर्थमृद्यज्ञकाष्ठञ्च विल्वो मलयसम्भवम् ।
अश्वत्थतुलसीमूलमृत्तिकागोष्पदस्य च ॥
जाह्नवीमृन्महानिम्बतुलसीकाष्ठमेव च ।
कस्तूरी कुङ्कुमं फल्गु सिन्दूरं रक्तचन्दनम् ॥
गोरोचना गन्धकाष्ठं जलं चागुरु गोमयम् ।
धात्रीमूलस्य मृद्गन्धो हरिद्रा गोगृहस्य च ॥
स्नानान्ते सर्व्ववर्णानामाश्रमाणान्तथैव च ।
एतानि तिलकान्याहुः सन्ध्यादिसर्व्वकर्म्मसु ॥” * ॥
इति शब्दार्थकल्पतरुः व्याकरणञ्च ॥

**तिलका**, स्त्री, (तिलस्तिलवीजकोष इव काय-
तीति । कै + कः ।) हारभेदः । इति जटा-
धरः ॥ (षडक्षरपादके छन्दोभेदे । शब्दार्थ-
चिन्तामणिधृततल्लक्षणादिकंयथा, --
“सगणद्वितयं भवतीह यदा ।
रसवर्णपदा तिलकेति तदा ॥”
उदाहरणम् ।
“वनमालिकथा सकलालि ! वृथा ।
पुनरेति कथं मम दृष्टिपथम् ॥”)

**तिलकालकः**, पुं, (तिल इव कालकः कृष्णवर्णः ।)
शरीरस्थतिलः । इत्यमरः । २ । ६ । ४९ ॥
तल्लक्षणानि यथा, --
“कृष्णानि तिलमात्राणि नीरुजानि समानि च ।
वातपित्तकफोद्रेकात्तान् विद्यात्तिलकालकान् ॥”
समानि अनुद्गतानि । अयं तिल इति लोके
प्रसिद्धः । तच्चिकित्सा यथा, --
“चर्म्मकीलं जतुमणिं मशकान् तिलकालकान् ।
उत्कृत्य शस्त्रेण दहेत् क्षाराग्निभ्यामशेषतः ॥”
इति भावप्रकाशः ॥
तिलयुक्तः । इत्यमरटीका ॥

**तिलकाश्रयः**, पुं, (तिलकस्य आश्रयः ।) ललाटम् ।
इति शब्दार्थकल्पतरुः ॥

**तिलकिट्टं**, क्ली, (तिलस्य किट्टं मलम् ।) तिल-
मलम् । (खैल इति भाषा ॥)
तत्पर्य्यायः ।
अन्नपानविधौ चापि प्रयोज्यं वातशान्तये ॥”
इति सुश्रुते सूत्रस्थाने ४५ अध्याये ॥)

**तिलधेनुः**, स्त्री, (तिलैर्विहिता धेनुः । शाक-
पार्थिवादिवत् समासः ।) तिलनिर्म्मिता धेनुः ।
यथा, --
“विधानं तिलधेनोस्त्वं ब्रूहि शीघ्रं द्विजोत्तम ! ।
मुनिः प्राह विधानं यत् तच्छृणुष्ब नराधिप ! ॥
षोडशाढमयी धेनुश्चतुभिर्व्वत्सको भवेत् ।
इक्षुदण्डमयाः पादा दन्ताः पुष्पमयाः शुभाः ॥
नासा गन्धमयी तस्या जिह्वा गुडमयी तथा ।
स्थितां कृष्णाजिने धेनुं वासोभिर्व्वासितां शुभाम् ॥
सूत्रेण वासितां कृत्वा पञ्चरत्नसमन्विताम् ।
सर्व्वौषधिसमायुक्तां मन्त्रपूतान्तु दापयेत् ॥
अन्नं मे जायतां सद्यः पानं सप्तरसास्तथा ।
कामं सन्धापयास्माकं तिलधेनुमुपार्ज्जिताम् ॥

| | | |
|---|---|---|
| अपि च ।<br>“गङ्गामृत्तुलसीमूलमृत्तिकामलयोद्भवम् ।<br>साधोश्चरणसंलग्नं रजो मृद्गोष्पदस्य च ॥<br>याश्वत्थमूलमृद्गोपीचन्दनंतीर्थमृत्तिका ।<br>कुङ्कुमं तुलसीकाष्ठं वैष्णवाहृतमृत्तिका ॥ | पिण्याकः २ तिलखलिः ३ । अस्य गुणाः । ग्लप-<br>नत्वम् । रूक्षत्वम् । बिष्टम्भित्वम् । दृष्टिदूषण-<br>त्वञ्च । इति भावप्रकाशः ॥<br>**तिलकी**, [न्] त्रि, (तिलकमस्त्यस्येति । तिलक +<br>इनिः ।) तिलकयुक्तः । यथा । शिखी तिलकी<br>कर्म्म कुर्य्यात् । इति स्मृतिः ॥ | |

गृह्णामि त्वां देवि ! भक्त्या कुटुम्बार्थे विशेषतः ।
कुटुम्बकामं कुरुतां तिलधेनो ! नमोऽस्तु ते ॥
एवंविधां नरो दत्त्वा तिलधेनुं नृपोत्तम ! ।
सर्व्वकामसमाप्तिन्तु कुरुते नात्र संशयः ॥”
इति पाद्मे सृष्टिखण्डम् ॥

**तिलपर्णं**, क्ली, (तिलस्येव पर्णमस्य ।) चन्दनम् ।
इति राजनिर्घण्टः ॥ (रक्तचन्दनम् । यथा,
भावप्रकाशस्य पूर्ब्बखण्डे १ भागे ।
“रक्तचन्दनमाख्यातं रक्ताङ्गं क्षुद्रचन्दनम् ।
तिलपर्णं रक्तसारं तत्प्रवालफलं स्मृतम् ॥”
तिलस्य पर्णम् ।) तिलवृक्षपत्रञ्च ॥

**तिलपर्णः**, पुं, (तिलस्य पर्णानीव पर्णान्यस्य ।)
श्रीवेष्टः । इति राजनिर्घण्टः ॥

**तिलपर्णिका**, स्त्री, (तिलपर्णी + स्वार्थे कन् टाप्
च ।) रक्तचन्दनम् । इति हेमचन्द्रः ॥ (यथा, --
“वेत्राग्रं बृहती वासा कुन्तली तिलपर्णिका ॥”
इति वाभटे सूत्रस्थाने षष्ठेऽध्याये ॥)

**तिलपर्णी**, स्त्री, (तिलस्येव पर्णान्यस्याः । पाक-
कर्णेति ङीष् । तिलपर्णी नदी आकरोऽस्त्यस्या
इति अच् ङीष् च । इत्यमरटीका ।) रक्त-
चन्दनम् । इत्यमरः । २ । ६ । १३२ ॥ (यथा,
सुश्रुते । १ । ४६ ।
“चित्रकस्तिलपर्णी च कफशोफहरो लघुः ॥”

**तिलौदनं**, क्ली, (तिलमिश्रितं ओदनम् ।) कृशरः ।
इति हारावली । १६९ ॥ (यथा, रामा-
यणे । २ । ६९ । १० ।
“ततस्तिलौदनं भुक्त्वा पुनः पुनरधःशिराः ॥”
तिलोदनमिति पाठोऽपि दृश्यते ॥)

**तिल्यं**, क्ली, (तिलानां भवनं क्षेत्रं वा । तिल +
“विभाषा तिलमाषोमाभङ्गाणुभ्यः ।” ५ । २ ।
४ । इति यत् ।) तिलक्षेत्रम् । तत्पर्य्यायः ।
तैलीनम् २ । इत्यमरः । २ । ९ । ७ ॥ (तिलाय
हितम् । “खलयवमासतिलवृषब्रह्मणश्च ।” ५ ।
१ । ७ । इति यत् । तिलहिते, त्रि ॥)

**तिल्ल**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) लद्वयान्तः । ह्रस्वी । तिल्लति ।
इति दुर्गादासः ॥

**तिल्वः**, पुं, (तिलतीति । तिल + “उल्वादयश्च ।”
उणां । ४ । ९५ । इति वनप्रत्ययेन निपातनात्
साधुः ।) लोध्रः । इत्यमरः । २ । ४ । ३३ ॥
श्वेतलोध्रः । इति तट्टीकायां सुभूतिः ॥ रक्त-
लोध्रः । इति स्वामी ॥

**तिल्वकः**, पुं, (तिल्व + स्वार्थे कन् ।) लोध्रः ।
इति राजनिर्घण्टः ॥ (अस्य पर्य्याया यथा, --
“तिल्वकस्तु मतो लोध्रो बृहत्पत्रस्तिरीटकः ॥”
अस्य विशिष्टव्यवहारो यथा, --
“तस्य मूलत्वचं शुष्कामन्तर्व्वल्कलवर्ज्जिताम् ।
चूर्णयेत्तु त्रिधा कृत्वा द्वौ भागौ श्च्योतयेत्ततः ॥
लोध्रस्यैव कषायेण तृतीयं तेन भावयेत् ।
भागं तं दशमूलस्य पुनः क्वाथेन भावयेत् ॥
शुष्कं चूर्णं पुनः कृत्वा तत ऊर्द्ध्वं प्रयोजयेत् ।
दधितक्रसुरामण्डमूत्रैर्व्वदरसीधुना ॥
रसेनामलकानां वा ततः पाणितलं पिबेत् ॥”
“तिल्वकस्य कषायेण दशकृत्वः सुभाविताम् ।
मात्रां कम्पिल्लकस्यैव कषायेण पुनः पिबेत् ।

“चत्वारि भारते वर्षे युगानि भरतर्षभ ! ।
कृतं त्रेता द्वापरञ्च तिष्यञ्च कुरुवर्द्धन ! ॥”)

**तिष्यकः**, पुं, (तिष्य एव । स्वार्थे कन् ।) पौष-
मासः । इति शब्दरत्नावली ॥

**तिष्यपुष्पा**, स्त्री, (तिष्ये पौषे पुष्पमस्याः ।)
आमलकी । इति शब्दचन्द्रिका ॥

**तिष्यफला**, स्त्री, (तिष्ये पौषमासे फलमस्याः ।)
आमलकी । इत्यमरः । २ । ४ । ५७ ॥ (विव-
रणमस्या आमलकीशब्दे ज्ञातव्यम् ॥)

**तिष्या**, स्त्री, (तिष्यः पौषमासः उत्पत्तिकाल-
त्वेनास्त्यस्या इति । अच् टाप् च ।) आम-
लकी ॥ इति शब्दरत्नावली ॥ (अस्याः पर्य्याया
यथा, वैद्यकरत्नमालायाम् ।
“धात्रीकर्षफला तिष्या वयस्थामलकी शिवा ॥”)

**तिहा**, [न्] पुं, व्याधिः । ब्रीहिः । घनुः ।
सद्भावः । इति संक्षिप्तसारे उणादिवृत्तिः ॥

**तीक्ष्णं**, क्ली, (तेजयति तेज्यतेऽनेन वा । तिज
निशाने + “तिजेर्दीर्घश्च ।” उणां । ३ । १८ ।
इति क्स्नः दीर्घश्च ।) खरम् । विषम् । लौहम् ।
(यथास्य पर्य्यायाः वैद्यकरत्नमालायाम् ।
“कृष्णायसं काललोहं रुक्मं तत्तीक्ष्णमन्यथा ॥”)
युद्धम् । इत्यमरः । ३ । ३ । ५३ ॥ मरणम् ।
शस्त्रम् । शीघ्रम् । इति तट्टीकासारसुन्दरी ॥

नदीविशेषः । इत्यमरटीका । २ । ६ । १३२ ॥)

**तिलपिच्चटं**, क्ली, (तिलस्य पिष्टकम् । पृषोदरादि-
त्वात् साधुः ।) तिलपिष्टकम् । इति केचित् ॥
तिलकुटा इति भाषा ॥

**तिलपिञ्जः**, पुं, (निष्फलस्तिलः । तिल + “तिला-
न्निष्फलात् पिञ्जपेजौ ।” ४ । २ । ३६ । इत्यस्य
वार्त्तिकोक्त्या पिञ्जः ।) निष्फलतिलवृक्षः । इत्य-
मरः । २ । ९ । १९ ॥

**तिलपेजः**, पुं, (निष्फलस्तिलः । “तिलान्निष्फलात्
पिञ्जपेजौ ।” ४ । २ । २६ । अस्य वार्त्तिकोक्त्या
पेजः ।) निष्फलतिलः । इत्यमरः । २ । ९ । १९ ॥

**तिलमयूरः**, पुं, (तिलाकृतिवत् चित्रितो मयूरः ।
शाकपार्थिववत् समासः ।) मयूरविशेषः । तत्-
पर्य्यायः । गुरुण्टकः २ । इति त्रिकाण्डशेषः ॥

**तिलरसः**, पुं, (तिलस्य रसः ।) तिलतैलम् । इति
शब्दार्थकल्पतरुः ॥

**तिलस्नेहः**, पुं, (तिलस्य स्नेहः ।) तिलतैलम् ।
इति शब्दार्थकल्पतरुः ॥

**तिलाङ्कितदलः**, पुं, (तिलवदङ्कितानि दलानि
यस्य ।) तैलकन्दः । इति राजनिर्घण्टः ॥

**तिलापत्या**, स्त्री, (तिलवत्कृष्णं क्षुद्रञ्चापत्यं वीज-
मस्याः ।) कृष्णजीरकः । इति शब्दचन्द्रिका ॥

चतुरङ्गुलकल्पेन लेहोऽन्यः कार्य्य एव च ॥”
“तिल्वकस्य कषायेण कल्केन च सशर्करः ।
सघृतः साधितो लेहः स च श्रेष्ठं विरेचनम् ॥”
इति चरके कल्पस्थाने नवमेऽध्याये ॥)

**तिष्ठद्गुः**, पुं, (तिष्ठन्ति गावो यस्मिन् काले दोहाय ।
“गावो हि रात्रिप्रथमनाडिकायामतीतायां
विश्रान्ताः सत्यः उत्थाप्य दुह्यन्ते ।” इति जय-
मङ्गलः । “तिष्ठद्गुप्रभृतीनि च ।” २ । १ ।
१७ । इति निपातनात् साधुः ।) सन्ध्याकालः ।
यथा, भट्टिः । ४ । १४ ।
“आतिष्ठद्गु जपन् सन्ध्यां
प्रक्रान्तामायतीगवम् ॥”

**तिष्यः**, पुं, (तुष्यन्त्यस्मिन्निति । तुष + क्यप् । निपा-
तनात् साधुः ।) पुष्यनक्षत्रम् । इत्यमरः ।
१ । ३ । २२ ॥ (यथा, महाभारते । ३ । १९० । ८७ ।
“यदा सूर्य्यश्च चन्द्रश्च तथा तिष्यबृहस्पती ।
एकराशौ समेष्यन्ति प्रवर्त्स्यति तदा कृतम् ॥”
तिष्यः पुष्यनक्षत्रं पौर्णमास्यामस्त्यस्येति ।
अच् ।) पौषमासः । इति शब्दरत्नावली ॥
कलियुगम् । इति मेदिनी । ये, २८ ॥ (अत्र क्लीवे-
ऽपि दृश्यते । यथा, महाभारते । ६ । १० । ४ ।

सामुद्रलवणम् । मुष्ककः । इति मेदिनी । णे,
१५ ॥ चव्यकम् । इति राजनिर्घण्टः ॥ मरकम् ।
इति हेमचन्द्रः ॥ * ॥ तीक्ष्णवस्तूनि यथा ।
प्रतिभा १ हीरकम् २ कटाक्षः ३ दुर्व्वाक्यम् ४
नखः ५ लवणम् ६ रविकरः ७ । इति कवि-
कल्पलता ॥

**तीक्ष्णः**, पुं, (तिज + क्स्नः दीर्घश्च ।) यवक्षारः ।
इति मेदिनी । णे, १५ ॥ (पर्य्याया यथा, --
“यावशूको यवक्षारो यवशूको यवाग्रजः ।
क्षारस्तीक्ष्णस्तीक्ष्णरसोयवजो यवनालजः ॥”
इति वैद्यकरत्नमालायाम् ॥)
श्वेतकुशः । कुन्दुरुकः । इति राजनिर्घण्टः ॥
तीक्ष्णगणो यथा । अश्लेषा आर्द्रा ज्येष्ठा मूला ।
इति ज्योतिषम् ॥

**तीक्ष्णः**, त्रि, (तिज + क्स्नः दीर्घश्च ।) तिग्मः ।
(उग्रः । यथा, मनुः । ७ । १४० ।
“तीक्ष्णश्चैव मृदुश्च स्यात् कार्य्यं वीक्ष्य मही-
पतिः ॥”
असह्यः । यथा, वाजसनेयसंहितायाम् । १६ ।
३६ । “नमस्तीक्ष्णेषवे चायुधिने ।”
“तीक्ष्णा असह्या इषवो बाणा यस्य स तीक्ष्णेषु-
स्तस्मै नमः ।” इति महीधरः ॥)
आत्मत्यागी ।
इति मेदिनी । णे, १५ ॥ निरालस्यः । सुबुद्धिः
इति धरणी ॥ योगी । इत्यजयपालः ॥

**तीक्ष्णकः**, पुं, (तीक्ष्ण + संज्ञायां कन् ।) मुष्ककः ।
गौरसर्षपः । इति राजनिर्घण्टः ॥

**तिलित्सः**, पुं, गोनससर्पः । इत्यमरः । १ । ८ । ५ ॥

**तिलोत्तमा**, स्त्री, (तिलैः तिलप्रमाणैः सर्व्वरत्ना-

नामंशैरुत्तमा ।) स्वर्व्वेश्या । इति शब्द-
चन्द्रिका ॥ तस्या नामकारणं यथा, महा-
भारते । १ । २१२ । १७ ।
"तिलं तिलं समानीय रत्नानां यद्विनिर्म्मिता ।
तिलोत्तमेति तत्तस्या नाम चक्रे पितामहः ॥"

**तीक्ष्णकण्टकः**, पुं, (तीक्ष्णानि कण्टकानि यस्य ।)

धुस्तूरः । इति जटाधरः ॥ वर्व्वूरः । इङ्गुदी ।
करीरः । इति राजनिर्घण्टः ॥

**तीक्ष्णकण्टका**, स्त्री, (तीक्ष्णं कण्टकं यस्याः ।)

कन्थारीवृक्षः । इति राजनिर्घण्टः ॥

**तीक्ष्णकन्दः**, पुं, (तीक्ष्णः कन्दोऽधोगेण्डुकोऽस्य ।)

पलाण्डुः । इति राजनिर्घण्टः ॥

**तीक्ष्णकर्म्मा**, [न्] त्रि, (तीक्ष्णं कर्म्मास्य ।)

तीव्रकर्म्मा । तत्पर्य्यायः । आयःशूलिकः २ ।
इति त्रिकाण्डशेषः ॥

**तीक्ष्णकल्कः**, पुं, (तीक्ष्णः कल्को यस्य ।) तुम्बूरु-

वृक्षः । इति राजनिर्घण्टः ॥

**तीक्ष्णकान्ता**, स्त्री, (तीक्ष्णा उग्रा कान्ता कम-

नीया च ।) मङ्गलचण्डिकाया रूपभेदः । यथा, --
"पीठे दिक्करवासिन्या द्विरूपा रमते शिवा ।
तीक्ष्णकान्ताह्वया त्वेका योग्रतारा प्रकीर्त्तिता ॥
पुरा ललितकान्ताख्या या श्रीमङ्गलचण्डिका ।
तस्यास्तु सततं रूपं तीक्ष्णकान्ताह्वयं नृप ! ॥
कृष्णा लम्बोदरी या तु सा स्यादेकजटा शिवा ।
तेन रूपेण तां देवीं सततं परिपूजयेत् ॥
अङ्गाङ्गिमन्त्रौ रूपञ्च तस्याः प्राक् प्रतिपादि-
तम् ।
त्रिकोणं मण्डलं चास्याः कर्त्तव्यं मन्त्रपूर्ब्बकम् ॥
आदौ रेखे ततः पश्चात् सुरेखेति पदं ततः ।
तथा पदं चाधिगत्य तिष्ठन्त्विति पदं ततः ॥
मण्डलन्यासमन्त्रोऽयं तीक्ष्णायाः परिकीर्त्तितः ।
नव त्रिपुरदेवादियमवेतालदुर्द्धराः ॥

**तीक्ष्णगन्धा**, स्त्री, (तीक्ष्ण उग्रो गन्धो यस्याः ।)

श्वेतवचा । कन्थारी । राजिका । इति राज-
निर्घण्टः ॥ (पर्य्याया यथा, --
"राजीतु राजिका तीक्ष्णगन्धा कुञ्जनिकासुरी ।
क्षवः क्षुताभिजनकः कृमिकृत्कृष्णसर्षपः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
वचा । इति मेदिनी । धे, ४६ ॥
जीवन्ती । इति शब्दचन्द्रिका ॥ (यथा, सुश्रुते
उत्तरतन्त्रे २४ अध्याये ।
"उग्रा कुष्ठं तीक्ष्णगन्धा विडङ्गं
श्रेष्ठं नित्यं चावपीडे करञ्जम् ॥")
सूक्ष्मैला । इति रत्नमाला ॥

**तीक्ष्णतण्डुला**, स्त्री, (तीक्ष्णास्तण्डुला यस्याः ।)

पिप्पली इति रत्नमाला ॥ (अस्याः पर्य्याया यथा,
"पिप्पली मागधी कृष्णा वैदेही चपला कणा ।
उपकुल्योषणा शौण्डी कोला स्यात्तीक्ष्ण-
तण्डुला ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**तीक्ष्णतैलं**, क्ली, (तीक्ष्णमुग्रं तैलं स्नेहो यस्य ।)

सर्ज्जरसः । स्नुहीक्षीरम् । सुरा । इति शब्द-
रत्नावली ॥

**तीक्ष्णदंष्ट्रः**, पुं, (तीक्ष्णा द्रंष्ट्रा यस्य ।) व्याघ्रः ।

इति राजनिर्घण्टः ॥

**तीक्ष्णपत्रः**, पुं, (तीक्ष्णानि पत्राणि यस्य ।) तुम्बुरु-

त्वम् । उष्णत्वम् । तिक्तत्वम् । वातपित्तकफ-
प्रमेहपाण्डुशूलनाशित्वम् । तीक्ष्णत्वम् । मुण्ड-
लोहाधिकत्वञ्च । इति राजनिर्घण्टः ॥ (व्यव-
हारोऽस्य यथा, रसेन्द्रसारसंग्रहे शूलाधिकारे
त्रिफलालौहे, ॥
"तीक्ष्णायश्चूर्णसंयुक्तं त्रिफला चूर्णमुत्तमम् ।
क्षीरेण पाययेद्धीमान् सद्यः शूलनिवारणम् ॥")

**तीम**, य क्लेदने । इति कविकल्पद्रुमः ॥ (दिवां-

परं-अकं-सेट् ।) य, तीम्यति तितीम । क्लेदन-
मार्द्रीभावः । इति दुर्गादासः ॥

**तीर**, त् क कर्म्मणां समाप्तौ । इति कविकल्पद्रुमः ॥

(अदन्तचुरां-परं-सकं-सेट् ।) कर्म्मणामिति
स्पष्टार्थः । अतितीरत् व्रतं लोकः समापित-
वानित्यर्थः । इति दुर्गादासः ॥

**तीरं**, क्ली, (तीरयति समापयति नद्यादिकमिति ।

तीर + अच् ।) नदीकूलम् । इत्यमरः । १ ।
१० । ७ ॥
गङ्गातीरं यथा, --
"सार्द्धहस्तशतं यावत् गर्भतस्तीरमुच्यते ।
भाद्रकृष्णचतुर्द्दश्यां यावदाक्रमते जलम् ।
तावद्गर्भं विजानीयात् तदन्यत्तीरमुच्यते ॥"
इति प्रायश्चित्ततत्त्वम् ॥
शायकः । इति त्रिकाण्डशेषः ॥

**तीरः**, पुं, (तीरयतीति । तीर + पचाद्यच् ।)

त्रपु । इति मेदिनी । रे, ४५ ॥

**तीरभुक्तिः**, पुं, (तीरे भुक्तिरस्य ।) देशविशेषः ।

तीरहोत् इति भाषा ॥ तत्पर्य्यायः । निच्छविः २
विदेहः ३ । इति त्रिकाण्डशेषः ॥

**तीरितं**, क्ली, (तीर कर्म्मणां समाप्तौ + भावे क्तः ।)

कर्म्मणां समाप्तिः । इति व्याकरणम् ॥

**तीर्णः**, त्रि, (तॄ प्लवनतरणयोः + कर्त्तरि क्तः ।

उत्तीर्णः । (यथा, वह्निपुराणे कन्यादाननामा-

गणाश्रमेऽत्यन्तकान्ता द्वारपालाः
प्रकीर्त्तिताः ।
एतांस्तु पूजयेत् सम्यक् मण्डलस्याष्टदिक्षु
वै ॥
आदौ सम्बोधनं कृत्वा वज्रपुष्पं ततः परम् ।
वह्निजाया ततः पश्चात् मन्त्रमेषां
प्रकीर्त्तितम् ॥
पात्रोपकरणादीनां स्थानन्यासस्य सर्व्वतः
।
सर्व्वमुत्तरतन्त्रोक्तं ग्राह्यं रूपद्वयेऽपि च ॥
चामुण्डा च कराला च शुभगा भीषणा भगा
।
विकटेति च योगिन्यः प्रोक्तास्तस्यास्तु
भूपते ! ॥
हे भगवत्येकजटे विद्महे पदमन्ततः ।
विकटदंष्ट्रे धीमहीति तन्नस्तारे प्रचोदयात् ॥
एषा तु तीक्ष्णा गायत्त्री पीठदेव्याः
प्रकीर्त्तिता ।
निर्म्माल्यधारिणी चास्या देवी
विकटचण्डिका ॥
माला तु मृण्मयी प्रोक्ता रुद्राक्षसम्भवापि वा
।
विशेष एष देव्यास्तु पूजने परिकीर्त्तितः ॥
उपचारादिकं कृत्यं बलिदानं जपादिकम् ।
सर्व्वन्तु पूर्ब्बवद्ग्राह्यं कामाख्यापूजने यथा
॥
पानेषु मदिरा शस्ता नरो बलिषु पार्थिव ! ।
मोदको नारिकेलञ्च मांसं व्यञ्जनमैक्षवम् ॥
नैवेद्येषु प्रियकरास्तीक्ष्णायाः परिकीर्त्तिताः
॥”
इति कालिकापुराणे ८२ अध्यायः ॥

**तीक्ष्णगन्धः**, पुं, (तीक्ष्णः प्रचण्डो गन्धो यस्य ।)
शोभाञ्जनः । इति राजनिर्घण्टः ॥
रक्ततुलसी ।
इति रत्नमाला ॥ कुन्दूरुनामगन्धद्रव्यम् ।
इति
जटाधरः ॥

**तीक्ष्णगन्धकः**, पुं, (तीक्ष्णो गन्धोऽस्य । “शेषात्
विभाषा ।” ५ । ४ । १५४ । इति कप् ।)
शोभा-
वृक्षः । इति राजनिर्घण्टः ॥

**तीक्ष्णपुष्पं**, क्ली, (तीक्ष्णानि पुष्पानि यस्य ।)
लव-
ङ्गम् । इति राजनिर्घण्टः ॥
(लवङ्गशब्देऽस्य
गुणादयो ज्ञातव्याः ॥)

**तीक्ष्णपुष्पा**, स्त्री, (तीक्ष्णं पुष्पं यस्याः ।)
केतकी ।
इति राजनिर्घण्टः ॥

**तीक्ष्णफलः**, पुं, (तीक्ष्णं फलं यस्य ।)
तुम्बुरुवृक्षः ।
इति राजनिर्घण्टः ॥

**तीक्ष्णमूलः**, पुं, (तीक्ष्णं मूलमस्य ।) शिग्रुः ।
कुल-
ञ्जनः । इति राजनिर्घण्टः ॥ (शिग्रुशब्दे
विवृति-
रस्य ज्ञातव्या ॥)

**तीक्ष्णरसः**, पुं, (तीक्ष्णो रसोऽस्य ।) यवक्षारः ।
इति रत्नमाला ॥

**तीक्ष्णशूकः**, पुं, (तीक्ष्णः शूकोऽग्रभागो यस्य ।)
यवः । इति हेमचन्द्रः । ४ । २३६ ॥

**तीक्ष्णसारा**, स्त्री, (तीक्ष्णः कठिनः सारो यस्याः
।)
शिंशपा । इति राजनिर्घण्टः ॥

**तीक्ष्णा**, स्त्री, (तीक्ष्ण + टाप् ।) वचा ।
सर्पकङ्का-
लिकावृक्षः । इति रत्नमाला ॥
कपिकच्छूः ।
महाज्योतिष्मती । अत्यम्लपर्णी ।
इति जटा-
धरः ॥

**तीक्ष्णायसं**, क्ली, (अय एव आयसम् ।
तीक्ष्णञ्च
तत् आयसञ्चेति ।) लोहविशेषः ।
तीखा इति
इश्पात इति च भाषा ॥ तत्पर्य्यायः ।
लोहम् २
ध्याये ।
“तीर्णस्त्वं सर्व्वदुःखेभ्यः परं स्वर्गमवाप्स्यसि
॥”)
अभिभूतः । प्लुतः । (तॄ + कर्म्मणि क्तः ।
कृतो-
त्तरणः । यथा, महाभारते । १ । १ । १९२ ।
“सत्यां तीर्णां शत्रुमध्ये च तेन
तदा नाशंसे विजयाय सञ्जय ! ॥”)

**तीर्णपदी**, तालमूली । इति शब्दचन्द्रिका ॥

**तीर्थं**, क्ली, (तरति पापादिकं यस्मात् । तॄ +
“पातॄतुदिवचीति ।” उणां । २ । ७ । इति
थक् ।) पुण्यस्थानादि । तीर्थतोयस्य स्नाने
पुण्यत्वं यथा, --
“नदीदेवनिखातेषु तडागेषु सरःसु च ।
स्नानं समाचरेन्नित्यं गर्त्तप्रस्रवणेषु च ॥
निपानादुद्धृतं पुण्यं ततः प्रस्रवणादिकम् ।
ततोऽपि सारसं पुण्यं ततो नादेयमुच्यते ॥
तीर्थतोयं ततः पुण्यं गङ्गातोयं ततोऽधिकम्
॥”
इत्याद्ये वह्निपुराणे स्नानविधिर्नाम ४
अध्यायः ॥
जलसमीपस्थारत्निमात्रस्थानम् । यथा,
आदित्य-
पुराणे ।
“अरत्निमात्रं जलं त्यक्त्वा
कुर्य्याच्छौचमनुद्धृते ।
पश्चाच्च शोधयेत्तीर्थमन्यथा न शुचिर्भवेत् ॥

| | | |
|---|---|---|
| ञ्जनवृक्षः । इत्यमरः । २ । ४ । ३१ ॥ | शस्त्रायसम् ३ शस्त्रम् ४ पिण्डा ५ पिण्डायसम् ६ शठम् ७ आयसम् ८ निशितम् ९ तीव्रम् १० खड्गम् ११ मुण्डितम् १२ अयः १३ चित्रा- यसम् १४ चीनजम् १५ । अस्य गुणाः । रूक्ष- | |

तस्मिन् देशे शौचं कर्त्तव्यं
यस्मादरत्निमात्रव्यव-
हितं जलं तत् स्थलमेव तीर्थं
जलसमीपत्वात् ।”
इत्याह्निकाचारतत्त्वम् ॥ * ॥
विप्रचरणयोस्तीर्थवासस्थानत्वं
ब्राह्मणशब्दे
द्रष्टव्यम् ॥ * ॥ विप्रदक्षिणकर्णस्य
तीर्थवास-
स्थानत्वं यथा । पराशरः ।
“प्रभासादीनि तीर्थानि गङ्गाद्याः
सरितस्तथा ।
विप्रस्य दक्षिणे कर्णे वसन्ति मनुरब्रवीत् ॥”
इत्याह्निकाचारतत्त्वम् ॥
हस्तस्थिततीर्थानि यथा, --
“अङ्गुल्यग्रे तीर्थं दैवं स्वल्पाङ्गुल्योर्मूले
कायम् ।
मध्येऽङ्गुष्ठाङ्गुल्योः पैत्रं मूले ह्यङ्गुष्ठस्य
ब्राह्मम् ॥”
इत्यमरः । २ । ७ । ५१ ॥
(यथा च, मार्कण्डेये । ३४ । १०३ --
१०९ ।
“कुर्य्यात् कर्म्माणि तीर्थेन स्वेन स्वेन
यथाविधि ।
देवादीनां तथा कुर्य्याद्
ब्राह्मेणाचमनक्रियाम् ॥
अङ्गुष्ठोत्तरतो रेखा पाणेर्या दक्षिणस्य तु ।
एतद्ब्राह्ममिति ख्यातं तीर्थमाचमनाय वै ॥
तर्ज्जन्यङ्गुष्ठयोरन्तः पैत्रं तीर्थमुदाहृतम् ।
पितृणां तेन तोयादि दद्यान्नान्दीमुखादृते ॥
अङ्गुल्यग्रे तथा दैवं तेन दिव्यक्रियाविधिः ।
तीर्थं कनिष्ठिका मूले कायं तेन प्रजापतेः ॥
एवमेभिः सदा तीर्थैर्देवानां पितृभिः सह ।
सदा कार्य्याणि कुर्व्वीत नान्यतीर्थेन
कर्हिचित् ॥
ब्राह्मेणाचमनं शस्तं पित्र्यं पैत्रेण सर्व्वदा ।
देवतीर्थेन देवानां प्राजापत्यं निजेन च ॥
नान्दीमुखानां कुर्व्वीत प्राज्ञः
पिण्डोदकक्रियाम् ।

तीथगमने फलं यथा, --
“अग्निष्टोमादिभिर्यज्ञैरिष्टा विपुलदक्षिणैः ।
न तत्फलमवाप्नोति तीर्थाभिगमनेन यत्
॥ * ॥
तीर्थान्यनुस्मरन् धीरः श्रद्दधानः
समाहितः ।
कृतपापो विशुध्येत किं पुनः
शुद्धकर्म्मकृत् ॥
तिर्य्यग्योनिं न वै गच्छेत् कुदेशे न च
जायते ।
न दुःखी स्यात् स्वर्गभाक् च मोक्षोपायञ्च
विन्दति ॥
तीर्थफलभागिनो यथा, --
यस्य हस्तौ च पादौ च मनश्चैव
सुसंयतम् ।
विद्या तपश्च कीर्त्तिश्च स
तीर्थफलमश्नुते ॥
प्रतिग्रहादुपावृत्तः सन्तुष्टो येन केनचित् ।
अहङ्कारविमुक्तश्च स तीर्थफलमश्नुते ॥
अदाम्भिको निरारम्भो लघ्वाहारो
जितेन्द्रियः ।
विमुक्तः सर्व्वसङ्गैर्यः स तीर्थफलमश्नुते
॥
अकोपनोऽमलमतिः सत्यवादी दृढव्रतः ।
आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते ॥
अश्रद्दधानः पापात्मा
नास्तिकोऽच्छिन्नसंशयः ।
हेतुनिष्ठश्च पञ्चैते न तीर्थफलभागिनः ॥”
इति काशीखण्डम् ॥ * ॥
तीर्थयात्राविधानं यथा, --
“यो यः कश्चित्तीर्थयात्रान्तु गच्छेत्
सुसंयतः स च पूर्ब्बं गृहे स्वे ।
कृतोपवासः शुचिरप्रमत्तः
संपूजयेद्भक्तिनम्रो गणेशम् ॥
देवान् पितॄन् ब्राह्मणांश्चैव साधून्
धीमान् प्रीणयन् वित्तशक्त्या प्रयत्नात् ।
प्रत्यागतश्चापि पुनस्तथैव
देवान् पितॄन् ब्राह्मणान् पूजयेच्च ॥
एवं कुर्व्वतस्तस्य तीर्थे यदुक्तं

तीर्थोपवासः कर्त्तव्यः शिरसो मुण्डनं तथा
।
शिरोगतानि पापानि यान्ति मुण्डनतो यतः
॥
तीर्थं प्राप्य प्रसङ्गेन स्नानं तीर्थे समाचरेत्
।
स्नानजं फलमाप्नोति तीर्थयात्राश्रितं न तु
॥”
इति काशीखण्डम् ॥
“मुण्डनञ्चोपवासश्च सर्व्वतीर्थेष्वयं विधिः
।
वर्ज्जयित्वा गयां गङ्गां विशालां
विरजान्तथा ॥”
इति स्कान्दम् ॥ * ॥
“षोडशांशं स लभते यः परार्थेन गच्छति ।
अर्द्धं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति
॥”
इति पैठीनसिः ॥
“स्नापयेत् स्निग्धमित्रादीन् ज्ञातींस्तीर्थे
नरोत्तमः ।
अन्यथापहरन्त्येते बलात्तीर्थभवं फलम्
॥”
इति स्कान्दम् ॥
“मातरं पितरं जायां भ्रातरं सुहृदं गुरुम् ।
यमुद्दिश्य निमज्जेत अष्टभागं लभेत सः
॥”
इति प्रायश्चित्ततत्त्वे मार्कण्डेयपुराणम् ॥ *
॥
कलौ तीर्थानां पृथिव्यां स्थितिकालो यथा,
“सरस्वती पुण्यक्षेत्रमाजगाम च भारतम् ।
गङ्गा शापेन कलया स्वयं तस्थौ हरेः पदे
॥
पश्चाद्भगीरथानीता महीं भागीरथी शुभा ।
समाजगाम कलया वाणी शापेन नारद ! ॥
पद्मा जगाम कलया सा च पद्मावती नदी ।
भारतं भारती शापात् स्वयं तस्थौ हरेः पदे
कलेः पञ्चसहस्रञ्च वर्षं स्थित्वा च भारते ।
जग्मुस्ताश्च सरिद्रूपं विहाय श्रीहरेः पदम्
॥

प्राजापत्येन तीर्थेन यच्च किञ्चित् प्रजापतेः ॥”)
तीर्थं त्रिविधम् । यथा । जङ्गमम् १ मानसम् २
स्थावरम् ३ । तथा च ।
“ब्राह्मणा जङ्गमं तीर्थं निर्म्मलं सार्व्वकामिकम् ।
येषां वाक्योदकेनैव शुद्ध्यन्ति मलिनो जनाः ॥
अगस्तिरुवाच ।
शृणु तीर्थानि गदतो मानसानि ममानघे ! ।
येषु सम्यक् नरः स्नात्वा प्रयाति परमां गतिम् ॥
सत्यं तीर्थं क्षमा तीर्थं तीर्थमिन्द्रयनिग्रहः ।
सर्व्वभूतदया तीर्थं सर्व्वत्राज्र्जवमेव च ॥
दानं तीर्थं दमस्तीर्थं सन्तोषस्तीर्थमुच्यते ।
ब्रह्मचर्य्यं परं तीर्थं तीर्थञ्च प्रियवादिता ॥
ज्ञानं तीर्थं धृतिस्तीर्थं पुण्यं तीर्थमुदाहृतम् ।
तीर्थानामपि तत्तीर्थं विशुद्धिर्म्मनसः परा ।
एतत्ते कथितं देवि ! मानसं तीर्थलक्षणम् ॥
भौमानामपि तीर्थानां पुण्यत्वे कारणं शृणु ।
यथा शरीरस्योद्देशाः केचिन्मेध्यतमाः स्मृताः ।
तथा पृथिव्यामुद्देशाः केचित्पुण्यतमाः स्मृताः ॥
प्रभावादद्भुताद्भूमेः सलिलस्य च तेजसा ।
परिग्रहान्मुनीनाञ्च तीर्थानां पुण्यता स्मृता ॥
तस्माद्भौमेषु तीर्थेषु मानसेषु च नित्यशः ।
उभयेष्वपि यः स्नाति स याति परमां गतिम् ॥”
तीर्थागमने दोषो यथा, --
“अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ।
अदत्वा काञ्चनं गाञ्च दरिद्रो नाम जायते ॥”
फलं तत् स्यान्नात्र सन्देह एव ॥”
इति ब्रह्मपुराणम् ॥ * ॥
“प्रयागे तीर्थयात्रायां पितृमातृवियोगतः ।
कचानां वपनं कुर्य्यात् वृथा न विकचो भवेत् ॥”
इति भविष्यपुराणम् ॥ * ॥
“तीर्थयात्रासमारम्भे तीर्थात् प्रत्यागमेऽपि च ।
वृद्धिश्राद्धं प्रकुर्व्वीत बहुसर्पिःसमन्वितम् ॥”
इति कूर्म्मपुराणम् ॥ * ॥
“ऐश्वर्य्यलाभमाहात्म्यात् गच्छेद्यानेन यो नरः ।
निष्फलं तस्य तत्तीर्थं तस्माद्यानं विवर्ज्जयेत् ॥”
इति मत्स्यपुराणम् ॥ * ॥
“संवत्सरं द्विमासोनं पुनस्तीर्थं व्रजेद्यदि ।
मुण्डनञ्चोपवासञ्च तदा यत्नेन कारयेत् ॥”
इति गङ्गावाक्यावली ॥ * ॥
तीर्थप्राप्त्यानन्तरविधानं यथा, --
“न परीक्ष्यो द्विजस्तीर्थेष्वन्नार्थी भोज्य एवहि ।
सक्तुभिः पिण्डदानञ्च चरुणा पायसेन च ॥
कर्त्तव्यमृषिभिर्दृष्टं पिण्याकेन गुडेन च ।
श्राद्धं तत्र तु कर्त्तव्यमर्घ्यावाहनवर्ज्जितम् ॥
अकालेऽप्यथवा काले तीर्थश्राद्धन्तु तर्पणम् ।
अविलम्बेन कर्त्तव्यं नैव विघ्नं समाचरेत् ॥
यदह्नि तीर्थप्राप्तिः स्यात्ततोऽह्नः पूर्ब्बवासरे ।
उपवासश्च कर्त्तव्यः प्राप्तेऽह्नि श्राद्धदो भवेत् ॥
यानि सर्व्वाणि तीर्थानि काशीं वृन्दावनं विना ।
यास्यन्ति ताभिः सार्द्धञ्च वैकुण्ठमाज्ञया हरेः ॥”
तीर्थप्रतिग्रहे दोषो यथा, --
“तत्र नारायणक्षेत्रे कुरुक्षेत्रे हरेः पदे ।
वाराणस्यां वदर्य्याञ्च गङ्गासागरसङ्गमे ॥
पुस्करे भास्करक्षेत्रे प्रभासे रासमण्डले ।
हरिद्वारे च केदारे सोमे वदरपाचने ॥
सरस्वतीनदीतीरे पुण्ये वृन्दावने वने ।
गोदावर्य्याञ्च कौशिक्यां त्रिवेण्याञ्च हिमालये ॥
एतेष्वन्येषु यो दानं प्रतिगृह्णाति कामतः ।
स च तीर्थप्रतिग्राही कुम्भीपाकं प्रयाति च ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥ * ॥
यानादिना गमने दोषो यथा, --
“पुण्यार्द्धं हरते याने तदर्द्धं छत्रपादुके ।
तदर्द्धं तैलमांसाभ्यां सर्व्वं हरति मैथुने ॥”
इति कर्म्मलोचनम् ॥ * ॥
युगभेदे तीर्थविशेषस्य श्रेष्ठत्वं पाद्मे ।
“कृते तु पुष्करं तीर्थं त्रेतायां नैमिषन्तथा ।
द्वापरे तु कुरुक्षेत्रं कलौ गङ्गां समाश्रयेत् ॥”
तीर्थसंख्या यथा, --
“तिस्रः कोट्योऽर्द्धकोटी च तीर्थानां वायुरब्रवीत् ।
दिवि भुव्यन्तरीक्षे च तानि ते सन्ति जाह्नवि ! ॥”
अथ भूमण्डलस्य प्रादक्षिण्येन तीर्थानि यथा ।
पुष्करम् १ तत्तु ब्रह्मणः स्थानं तीर्थराजेति नाम्ना
ख्यातं तत्र त्रिसन्ध्यं दशकोटितीर्थान्यायान्ति।
तस्य फलं अश्वमंधतुल्यंब्रह्मलोकगमनञ्च ॥ जम्बू-

मार्गः २ तस्य फलं अश्वमेधतुल्यं
विष्णुप्राप्तिश्च ॥
तण्डुलिकाश्रमः ३ तस्य फलं
दुर्गतिविनाशः
ब्रह्मलोकप्राप्तिश्च ॥ अगस्त्यसरः ४ तत्र
त्रिरात्रो-
पवासेन वाजपेयतुल्यं फलं शाकाहारेण
कौमार-
लोकप्राप्तिश्च ॥ घर्म्मारण्यम् ५ तत्तु
कण्वाश्रमः
तस्य फलं प्रवेशमात्रेण पापक्षयः
देवपितृपूजनेन
अश्वमेधतुल्यं फलं विबुधलोकप्राप्तिश्च
॥ ययाति-
पतनम् ६ तत्र गमनेन अश्वमेधयज्ञतुल्यं
फलम् ॥
कोटितीर्थम् ७ तत्र महाकालस्तिष्ठति
स्नानेन
अश्वमेधतुल्यं फलम् ॥ भद्रवटः ८ तत्र
उमापति-
स्तिष्ठति तं दृष्ट्वा गोसहस्रदानफलं
दर्शकस्य
गाणपत्यञ्च भवति ॥ नर्म्मदा नदी ९ तत्र
पितृदेव-
तर्पणात् अग्निष्टोमतुल्यं फलम् ।
दक्षिणसिन्धुः
१० तत्र ब्रह्मचर्य्येण अग्निष्टोमतुल्यं फलं
त्रिदिव-
प्राप्तिश्च । चर्म्मण्वती नदी ११
तत्रेन्द्रियसंयमनेन
ज्योतिष्टोमफलम् । हिमवत्सुतार्व्वुदः
१२ तत्र
वशिष्ठाश्रमः तस्मिन्नेकरात्रवासेन
गोसहस्रदान-
फलम् । पिङ्गतीर्थम् १३
तत्रेन्द्रियसंयमनेनसवत्स-
शतकपिलादानफलम् । प्रभासः १४
तत्र हुता-

निवेदनेन च सर्व्वकामप्राप्तिर्देवलोकप्राप्तिश्च
।
देविकायां रुद्रतीर्थं तत्र स्नानात् सिद्धिप्राप्तिः
।
एवं देविकायां
यजनयाजनब्रह्मबालुकपुष्पन्यास
संज्ञकानि तीर्थानि तेषु स्नानात् मरणभय-
विनाशः । दीर्घसत्रम् ३४ तत्र गमनादेव
दीर्घसत्र-
फलप्राप्तिः राजसूयाश्वमेधफलप्राप्तिश्च ।
विन-
शनम् ३५ मेरुपृष्ठे अन्तर्हिता सरस्वती यत्र
याति
सा चमसतीर्थे एवं शिरोद्भेदे नागोद्भेदे च
दृश्यते
चमसे स्नानात् वाजपेयफलं नागोद्भेदे
स्नानात्
नागलोकप्राप्तिः । शशपानतीर्थम् ३६ तत्र
स्नानात्
शिववद्दीप्तिः गोसहस्रदानफलप्राप्तिश्च ।
कुमार-
कोटी ३७ तत्र स्नानेन पितृदेवपूजनेन च
गवा-
मययागफलप्राप्तिः । रुद्रकोटी ३८ यत्र
कोटि-
रृषयो मिलिता अहमग्रे रुद्रं द्रक्ष्यामीति
प्रस्थितानां तेषां सन्तोषार्थं एको रुद्रः
कोटि-
मूर्त्तयोऽभवत् । तत्र स्नानात्
अश्वमेधफलप्राप्तिः
कुलोद्धरणञ्च । सरस्वतीसङ्गमः ३९ तत्र
जना-
र्द्दनस्तिष्ठति तत्र स्नानात् बहुसुवणयागफल-
प्राप्तिः । सयावसानम् ४० तत्र गमनात्
गोसहस्र-
दानफलप्राप्तिः । कुरुक्षेत्रम् ४१ तत्र गमनात्
सर्व्वपापक्षयः ततो मचक्रुकद्वारपालस्य नम-
स्कारेण गोसहस्रदानफलप्राप्तिः ।
विष्णुस्थानं

तत्राभिषेकेण गोसहस्रदानफलम् ।
शङ्खिनी-
तीर्थम् ६४ तत्र स्नानात् उत्तमवीर्य्यप्राप्तिः
।
ब्रह्मावर्त्तः ६५ तत्र स्नानात्
ब्रह्मलोकप्राप्तिः ।
सुतीर्थकम् ६६ तत्र पितृदेवानां सान्निध्यं
तत्र
स्नानपितृदेवपूजनैरश्वमेधफलं
पितृलोकप्राप्तिश्च ।
अम्बुमती ६७ तत्र काशीश्वरतीर्थे
स्नानात् सर्व्व-
रोगनाशः ब्रह्मलोकप्राप्तिश्च तत्रैव मातृतीर्थे
तत्र स्नानात् सन्तानवृद्धिः श्रीप्राप्तिश्च ॥
शीत-
वनम् ६८ तत्र केशाभ्युक्षणेन प्वित्रता ॥
श्वान-
लोमापहः ६९ तत्र स्नानात्
परमगतिप्राप्तिः ।
दशाश्वमेधिकम् ७० तत्र स्नानात्
निश्चलगति-
प्राप्तिः ॥ मानुषतीर्थम् ७१ तत्र
व्याधपीडिताः
कृष्णमृगा विगाह्य मानुषत्वं प्राप्ताः तत्र
स्नानात्
सर्व्वपापमुक्तिः स्वर्गवसतिश्च ॥
आपगानदी ७२
तत्र देवपित्रुद्देशेनैकब्राह्मणभोजनेन कोटि-
ब्राह्मणभोजनसिद्धिः ॥ प्लक्षोडुम्बरः ७३
तत्र ब्रह्मा
तिष्ठति तत्र सप्तर्षिकुण्डे स्नानात्
सर्व्वपापनाशो
ब्रह्मलोकप्राप्तिश्च । कपिलस्य केदारम्
७४ तत्र
तपसा सर्व्वपापनाशः अन्तर्धानप्राप्तिश्च ।
सर-
कम् ७५ तत्र वृषध्वजप्रणामेन
सर्व्वकामशिव-

शनस्तिष्ठति तत्र स्नानेन
अग्निष्टोमातिरात्रयोः
फलम् । सरस्वतीसागरसङ्गमः १५ तत्र
स्नानेन
गोसहस्रदानफलं त्रिरात्रोपवासेन
पितृदेवतर्प-
णेन च अश्वमेघफलम् । वरदानम् १६
यत्र विष्णवे
दुर्व्वाससा वरो दत्तः तत्र स्नानेन
गोसहस्र-
दानफलम् । द्वारवत्यां पिण्डारकतीर्थम्
१७
तत्र पद्मचिह्नयुक्ता मुद्राः शूलचिह्नितानि
पद्मानि
अद्यापि दृश्यन्ते महादेवस्तिष्ठति
स्नानेन बहु-
सुवर्णयज्ञफलम् । समुद्रसिन्धुसङ्गमः
१८ तत्र
स्नानेन पितृदेवतर्पणेन च
वरुणलोकप्राप्तिः ।
द्रिमीतीर्थम् १९ तत्र महादेवस्तिष्ठति
तत्र
स्नानेनाश्वमेघफलं
महादेवदर्शनार्च्चनाभ्यां सर्व्व-
पापनाशः । वसुधारा २० तस्या दर्शनेन
अश्व-
मेधफलं स्नानतर्पणाभ्यां
विष्णुलोकप्राप्तिः । सिन्धू-
त्तमम् २१ तत्र स्नानेन
बहुसुवर्णयज्ञफलम् ।
यदुतुङ्गम् २२ तत्र गमनेन
ब्रह्मलोकप्राप्तिः ।
कुमारिकाशक्रतीर्थम् २३ तत्र स्नानेन
विमलत्वं
भवति । पञ्चनदः २४ तत्र
पञ्चयज्ञफलम् । भीमा-
स्थानम् २५ तत्र स्नात्वा नरो देवीपुत्रो
भवति
गोसहस्रदानफलञ्च लभते । गिरिकुञ्जम्
२६ तत्र

४२ तत्र स्नानात् विष्णुदर्शनात्
अश्वमेधफलं
विष्णुलोकप्राप्तिश्च । परिपल्लवम् ४३ तत्र
अग्नि-
ष्टोमातिरात्रयागफलप्राप्तिः । पृथिवीतीर्थम्
४४
तत्र गोसहस्रदानफलम् । शालूकिनीतीर्थम्
४५
तत्र दशाश्वमेधिके स्नानात्
गोसहस्रदानफलम् ।
सर्पिर्द्दर्व्वी ४६ सा नागतीर्थं तत्र गमनेन
अग्नि-
ष्टोमफलं नागलोकप्राप्तिश्च ।
अवर्णकद्वारपालः
४७ तत्रैकरात्रवासात्
गोसहस्रदानफलप्राप्तिः ।
पञ्चनदम् ४८ तत्र कोटितीर्थे स्नानात्
अश्वमेध-
फलम् । अश्वितीर्थम् ४९ तत्र रूपप्राप्तिः ।
वराह-
तीर्थम् ५० यत्र वराहरूपी विष्णुः स्थितः
तत्र
स्नानात् अग्निष्टोमफलप्राप्तिः । जयन्त्यम्
५१ तत्र
सोमतीर्थे स्नानात् राजसूयफलप्राप्तिः ।
एक-
हंसतीर्थम् ५२ तत्र गोसहस्रदानफलप्राप्तिः ।
कृतशौचम् ५३ तत्र गमनात्
पुण्डरीकयज्ञफल-
प्राप्तिः । मुञ्जावटतीर्थम् ५४ तत्तु
महादेवस्थानं
तत्रैकरजनीवासात् गाणपत्यप्राप्तिः तत्रैव
विशा-
लाक्षीयक्षीदर्शनात् सर्व्वकामप्राप्तिः । जाम-
दग्न्याहृतपुष्करतीर्थम् ५५ तत्र
स्नानपूजनाभ्यां
हयमेधफलम् । रामह्रदः ५६ यत्र रामेण
क्षात्र-
मुत्साद्य तेषां रक्तेन पञ्च ह्रदाः कृताः तेषु
स्नानतर्पणाभ्यां पितृगणाद् वरप्राप्तिः
बहुसुवर्ण-

लोकयोः प्राप्तिः । इलास्पदम् ७६ तत्र
स्नान-
देवपितृपूजनाभ्यां दुर्गतिविनाशः
वाजपेयफल-
प्राप्तिश्च । किन्दानम् ७७ तत्र
स्नानादप्रमेय-
दानफलम् । किंजप्यम् ७८ तत्र स्नानात्
अप्र-
मेयजपफलम् ॥ अनाजन्मतीर्थम् ७९ तत्
नारदस्थानं तत्र प्राणत्यागात्
अनुत्तमलोक-
प्राप्तिः ॥ वैतरणी नदी ८० तत्र स्नानशूल-
पाणिपूजनाभ्यां सर्व्वपापमुक्तिः परमपद-
प्राप्तिश्च । फलकींतीर्थम् ८१ फलकीवने
देवा-
स्तपश्चरन्ति ॥ मिश्रकम् ८२ तत्र नारदेन
सर्व्व-
तीर्थानि मिश्रितानि तत्र स्नानात्
सर्व्वतीर्थ-
स्नानफलम् ॥ मधुवटी ८३ सा देवीस्थानं
तत्र
स्नानदेवपितृपूजनाभ्यां
गोसहस्रदानफलप्राप्तिः
कौशिकीदृषद्वतीसङ्गमः ८४ तत्र स्नानात्
सर्व्व-
पापमुक्तिः । किन्दत्तकूपः ८५ तत्र
तिलप्रस्थ-
दानात् ऋणत्रयमुक्तिः परमसिद्धिप्राप्तिश्च ।
वेदीतीर्थम् ८६ तत्र स्नानात्
गोसहस्रदानफल-
प्राप्तिः ॥ अहः सुदिनं तीर्थद्वयम् ८७ तयोः
स्नानात् सूर्य्यलोकप्राप्तिः । नृगधूमः ८८
तत्र
विष्णु पदे स्नानात् वामनपूजनाच्च
सर्व्वपाप-
मुक्तिः रविलोकप्राप्तिश्च ॥
सरस्वत्यास्तीर्थं
श्रीकुञ्जम् ८९ तत्र स्नानात् स्वर्गवसतिः ॥
नैमिषकुञ्जम् ९० तस्मिन् स्नानात्
हयमेधफल-

| | | |
|---|---|---|
| ब्रह्मा तिष्ठति तस्य नत्या<br>गोसहस्रदानफलम्।<br>विमलतीर्थम् २७ अद्यापि तत्र<br>सौवर्णराजत-<br>मत्स्या दृश्यन्ते तत्र स्नानपानाभ्यां<br>वाजपेय-<br>फलम्। वितस्ता नदी २८ तत्र तर्पणेन<br>वाज-<br>पेयफलं स्वर्गप्राप्तिश्च। काश्मीरे<br>वितस्ताख्यं<br>तक्षकनागसदनम् २९ तत्र स्नानेन<br>वाजपेयफलं<br>विष्णुलोकप्राप्तिश्च। शमपरा ३० तत्र<br>सायं-<br>सन्ध्यायां स्नानेन सप्तार्च्चिषे<br>चरुनिवेदनेन च<br>अश्वमेधसहस्राधिकफलम्।<br>रुद्रास्पदम् ३१ तत्र<br>महादेवदर्शनात् अश्वमेधफलम्।<br>मणिमान्<br>पर्व्वतः ३२ तत्र त्रिरात्रोपवासेन<br>ज्योतिष्टोम-<br>फलम्। देविका नदी ३३ तत्र<br>महादेवस्थानम्<br>तत्र स्नानमहादेवदर्शनाभ्यां महादेवाय<br>चरु- | यज्ञफलप्राप्तिश्च। वंशमूलकम् ५७ तत्र<br>स्नानात्<br>स्वकुलोद्धरणम्। कायशोधनम् ५८ तत्र<br>स्नानात्<br>देहशुद्धिः। लोकोद्धारः ५९ तत्र स्नानात्<br>स्वकीयलोकोद्धारः। श्रीतीर्थम् ६० तत्र<br>गमनात्<br>उत्तमश्रीप्राप्तिः। कपिलातीर्थम् ६१ तत्र<br>स्नान-<br>देवपितृपूजनाभ्यां कपिलासहस्रदानफलम्।<br>सूर्य्यतीर्थम् ६२ तत्र<br>स्नानोपवासपितृपूजनैरग्नि-<br>ष्टोमफलं देवलोकप्राप्तिश्च। गवां भवनम्<br>६३ | प्राप्तिः। कन्यातीर्थम् ९१ तत्र स्नानात्<br>ज्योति-<br>ष्टोमफलप्राप्तिः। ब्रह्मस्थानम् ९२ तत्र<br>स्नानात्<br>शूद्रस्यापि ब्राह्मणत्वं ब्राह्मणस्य परमगतिः<br>॥<br>सोमतीर्थम् ९३ तत्र स्नानात्<br>सोमयागफल-<br>प्राप्तिः॥ सप्तसारस्वततीर्थम् ९४ तत्र<br>स्नान-<br>जपाभ्यां ब्रह्मलोकप्राप्तिः॥ औशनसकम्<br>९५<br>तत्र त्रिसन्ध्यं कार्त्तिकेयस्य सन्निधानम्।<br>कपाल-<br>मोचनम् ९६ तत्र स्नानात् सर्व्वपापनाशः<br>॥<br>अग्नितीर्थम् ९७ तत्र स्नानात्<br>वह्निलोकप्राप्तिः |

कुलोद्धरणञ्च । विश्वामित्रतीर्थम् ९८ तत्र
स्नानात् ब्रह्मण्यप्राप्तिः । ब्रह्मयोनिः ९९
तत्र
स्नानात् ब्रह्मलोके वासः । पृथूदकम्
१०० तत्
कार्त्तिकेयस्थानं तत्राभिषेकात्
अश्वमेधफल-
प्राप्तिः पापिनामपि स्वर्गप्राप्तिः । मधुस्रवम्
१०१ तत्र स्नानात्
गोसहस्रदानफलप्राप्तिः ॥
सरस्वत्यरुणासङ्गमः १०२ तत्र
त्रिरात्रोपवास-
स्नानाभ्यां ब्रह्महत्यापापनाशः ।
अवकीणम्
१०३ तत् दर्भिमुनिनिर्म्मितं दर्भिणा
चत्वारः
समुद्रा आनीताः तत्र स्नानात्
दुर्गतिविनाशः ।
शतसहस्रकम् १०४ साहस्रकम् १०५
उभयत्र
स्नानात् गोसहस्रदानफलं दानोपवासौ
सहस्र-
गुणौ भवेत् ॥ रेणुकातीर्थम् १०६
तत्राभिषेक-
पितृदेवपूजनाभ्यां सर्व्वपापनाशः
अग्निष्टोमफल-
प्राप्तिश्च । विमोचनम् १०७ तत्र स्नानात्
सर्व्व-
प्रतिग्रहकृतपापनाशः । पञ्चवटतीर्थम्
१०८
तत्र गमनात् महापुण्यप्राप्तिः स्वर्गगमनञ्च
॥
तैजसम् १०९ यत्र ब्रह्मादिभिः सैनापत्ये
कार्त्ति-
केयोऽभिषिक्तः । कुरुतीर्थम् ११० तत्र
स्नानात्
रुद्रलोकप्राप्तिः । स्वर्गद्वारम् १११ तत्र
गम-

म्भरी देवी तत्र त्रिरात्रोपवासशाकाहाराभ्यां
द्वादशवर्षशाकाहारफलप्राप्तिः । सवर्णाख्यम्
१३० तत्र शिवस्तिष्ठति तस्य पूजनात्
अश्व-
मेधफलगाणपत्ययोः प्राप्तिः । धूमावती
१३१
तत्र त्रिरात्रोपवासात् मनस्कामप्राप्तिः । धूमा-
वती दक्षिणार्द्धे रथावर्त्तः १३२ तत्रारोहणेन
महादेवप्रसादात् परमगतिप्राप्तिः । धारा
१३३
तत्र स्नानात् शोकनाशः । गङ्गाद्वारम् १३४
तत्र कोटितीर्थे स्नानात् पुण्डरीकयागफल-
प्राप्तिः कुलोद्धरणं एकरात्रवासेन
गोसहस्रदान-
फलप्राप्तिश्च । सप्तगङ्गम् १३५ त्रिगङ्गम्
१३६
सप्तावर्त्तः १३७ एतेषु पितृदेवतर्पणात् पुण्य-
लोकप्राप्तिः । गङ्गायमुनासङ्गमः १३८ तत्र
स्नानात् दशाश्वमेधफलप्राप्तिः कुलोद्धरणञ्च
।
कनखलः १३९ तत्र
स्नानत्रिरात्रोपवासाभ्यां
वाजिमेधफलब्रह्मलोकयोः प्राप्तिः ॥
कपिला-
वटः १४० तत्रैकरात्रवासेन
गोसहस्रदानफल-
प्राप्तिः । कपिलनागराजः १४१
तत्राभिषेकात्
कपिलासहस्रदानफलप्राप्तिः। ललितिका
१४२
सा शान्तनुतीर्थं तत्र स्नानात् दुर्गतिविनाशः
॥
सुगन्धा १४३ तत्र गमनात्
सर्व्वपापविशुद्धिः
ब्रह्मलोकप्राप्तिश्च। रुद्रावर्त्तः १४४ तत्र
स्नानात्
ब्रह्मलोकप्राप्तिः ॥ गङ्गासरस्वतीसङ्गमः
१४५

ब्राह्मणिका १६३ तत्र गमनात्
ब्रह्मलोकप्राप्तिः ।
नैमिषम् १६४ तत्र ब्रह्मा तिष्ठति तत्र
प्रवेशात्
सर्व्वपापनाशः स्नानात्
गवामययागफलप्राप्तिः
सप्तकुलोद्धारः उपवासेन प्राणत्यागात्
स्वर्ग-
प्राप्तिश्च ॥ गङ्गोद्भेदः १६५ तत्र
त्रिरात्रोप-
वासात् वाजिमेधफलप्राप्तिः
विष्णुलोकवासश्च ॥
सरस्वती १६६ तत्र पितृदेवतर्पणात्
सारस्वत-
लोकवासः ॥ बाहुदा नदी १६७
तत्रैकरात्रि-
वासात् ब्रह्मलोकप्राप्तिः । गोप्रचारतीर्थम्
१६८
तत्तु सरयूतीरं तत्र स्नानात्
सर्व्वपापनाशः
देवलोकप्राप्तिश्च ॥ गोमत्यां रामतीर्थम्
१६९
तत्र स्नानात् अश्वमेधफलप्राप्तिः
निजकुलपाव-
नञ्च । साहस्रवम् १७० तत्र गमनात्
राज-
सूयाश्वमेधफलप्राप्तिः । राजगृहम् १७१
तत्र
स्नानात् कुवेरवदाह्लादप्राप्तिः । मणिनागः
१७२ तत्र गमनात्
गोसहस्रदानफलप्राप्तिः
एवं तत् समीपे नित्यकर्म्मकरणात्
सर्पविषभय-
नाशः एकरात्रवासात् सर्व्वपापनाशश्च ।
गोतम-
वनम् १७३ तत्र अहल्याह्रदे स्नानात्
परम-
गतिप्राप्तिः । श्रीदेवी १७४ तत्र गमनात्

नात् स्वर्गलोकाग्निष्टोमफलप्राप्तिः।
अनरकम्
११२ तत्र स्नानात् दुर्गतिनाशः।
अस्थिपुरम्
११३ तत्र पितृदेवतर्पणात्
अग्निष्टोमफलप्राप्तिः।
गङ्गाह्रदकूपः ११४ तत्र स्नानात्
ब्रह्मलोक-
प्राप्तिः। स्थाणुवटतीर्थम् ११५ तत्र
स्नानैक-
रात्रवासाभ्यां रुद्रलोकप्राप्तिः।
वदरीपाचनम्
११६ तत्तु वशिष्ठाश्रमः तत्र
त्रिरात्रोपवास-
वदरभक्षणाभ्यां अश्वमेधफलम् हरलोक-
प्राप्तिश्च। इन्द्रमार्गम् ११७ तत्राहोरात्रोप-
वासात् इन्द्रलोकप्राप्तिः। आदित्याश्रमः
११८
तत्र स्नानात् सूर्य्यलोकप्राप्तिः।
सोमतीर्थम्
११९ तत्र स्नानात् सोमलोकप्राप्तिः।
कन्या-
श्रमः १२० तत्र त्रिरात्रवासोपवासाभ्यां
कन्या-
शतप्राप्तिः ब्रह्मलोकगमनञ्च। दधीचतीर्थम्
१२१ तत्र स्नानात् वाजपेयफलप्राप्तिः।
सन्नि-
हितातीर्थम् १२२ तत्र अमावस्यायां
सर्व्वाणि
तीर्थान्यायान्ति एवं सूर्य्यग्रहणे स्नानात्
शता-
श्वमेधफलप्राप्तिः स्नानदानाभ्यां
स्वर्गलोक-
प्राप्तिश्च। तत्रामावस्यायां सूर्य्यग्रहणे
स्नान-
श्राद्धाभ्यां अश्वमेधसहस्रफलप्राप्तिः।
स्नान-
मात्रात् सर्व्वपापनाशः ब्रह्मलोकप्राप्तिश्च
॥
गङ्गाह्रदः १२३ तत्र स्नानात्
राजसूयाश्वमेध-
तत्र स्नानात् अश्वमेधफलप्राप्तिः
स्वर्गगमनञ्च॥
भद्रकर्णह्रदः १४६ तत्र
स्नानशङ्करपूजनाभ्यां
दुर्गतिनाशः विष्णुलोकप्राप्तिश्च।
कुब्जाम्रकम्
१४७ तत्र गमनात् स्वर्गप्राप्तिः। अरुन्धती-
वटः १४८ तत्रैकरात्रवासात् गोसहस्रदान-
फलप्राप्तिः कुलोद्धरणञ्च। सामुद्रकम् १४९
तत्र
त्रिरात्रोपवासेन गोसहस्रदानफलं कुलोद्धर-
णञ्च॥ ब्रह्मावर्त्तः १५० तत्र गमनात् अग्नि-
ष्टोमफलं ब्रह्मलोकप्राप्तिश्च। यमुनाप्रभवः
१५१
तत्र स्नानात् अश्वमेधफलस्वर्गलोकयोः
प्राप्तिः॥
दर्व्वीसंक्रमणम् १५२ तत्र गमनात्
वाजिमेध-
फलप्राप्तिः ब्रह्मलोकगमनञ्च। सिन्धुप्रभवः
१५३
तत्र पञ्चरात्रवासात् बहुसुवर्णयज्ञफलप्राप्तिः
॥
अर्थवेदी १५४ तत्र गमनात् अश्वमेधफल-
स्वर्गयोः प्राप्तिः॥ वाशिष्ठी नदी तत्रैव ऋषि-
कुल्या १५५ वाशिष्ठी गमनात् सर्व्ववर्णानां
द्विजत्वप्राप्तिः ऋषिकुल्यायां
स्नानैकमासवास-
शाकाहारैः ऋषिलोकप्राप्तिः॥ भृङ्गतुङ्गम्
१५६ तत्र गमनात् वाजिमेधफलप्राप्तिः॥
वीर-
प्रमोक्षः १५७ तत्र गमनात् सर्व्वपापप्रणाशः
॥
सन्ध्या सा विद्यातीर्थम् १५८ तत्र स्नानात्
यत्र
तत्रैव विद्याप्राप्तिः॥ महाश्रमः १५९ तत्रैक-
कालनिराहारात् शुभलोकप्राप्तिः॥ महालयः
१६० तत्र षष्ठकालोपवासेनैकमासवासात्
आत्मना सहैकविंशतिपुरुषोद्धारः तत्रैव महे-
श्वरदर्शनात् सर्व्वपापमरणभययोर्व्विनाशः
बहु-
श्रीप्राप्तिः। उदपानम् १७५
तत्राभिषेकात्
वाजिमेधफलप्राप्तिः। जनकराजकूपः
१७६
तत्राभिषेकात् विष्णुलोकप्राप्तिः॥
विनशनम्
१७७ तत्र गमनात् वाजपेयफलप्राप्तिः।
विशल्या १७८ सा सर्व्वतीर्थजलोद्भवा
तत्र
गमनात् वाजपेयफलप्राप्तिः
रविलोकगमनञ्च॥
तपोवनम् १७९ तत्राधिवासात्
गुह्यकलोक-
वासः। कम्पना नदी १८० सा
सिद्धनिषेविता
तत्र गमनात् पुण्डरीकयागफलप्राप्तिः।
विशल्या
नदी १८१ तत्र गमनात् अग्निष्टोमफलं
देव-
लोके चिरवासश्च। माहेश्वरी १८२ तत्र
गम-
नात् अश्वमेधफलप्राप्तिः
स्वकुलोद्धरणञ्च।
दिवौकःपुष्करिणी १८३ तत्र गमनात्
दुर्गति-
विनाशः वाजिमेधफलप्राप्तिश्च।
रामपदम् १८४
तत्र गमनात् अश्वमेधफलम्।
माहेश्वरपदम्
१८५ तत्र स्नानात् अश्वमेधफलं तत्र
तीर्थ-
कोटी तत्र स्नानात्
पुण्डरीकयागफलप्राप्तिः।
नारायणस्थानम् १८६ यत्र
शालग्रामनामा
हरिस्तिष्ठति तत्र गमनात् अश्वमेधफलं
विष्णु-
लोकगमनञ्च। तत्रैव उदपानं यत्र चत्वारः
समुद्राः सन्निहिताः तत्र स्नानात्
दुर्गतिनाशः

| | | |
|---|---|---|
| फलप्राप्तिः । कुरुक्षेत्रम् १२४ तत्<br>तरन्तुकार-<br>न्तुकयोः एवं रामह्रदमचक्रुकयोरन्तरं<br>एतत्<br>स्यमन्तपञ्चकं पितामहस्योत्तरबेदिः ॥<br>धर्म्म-<br>तीर्थम् १२५ तत्र<br>स्नानादासप्तमकुलोद्धरणम् ॥<br>कारापचनम् १२६ तत्र स्नानात्<br>अग्निष्टोम-<br>फलं विष्णुलोकप्राप्तिश्च । सौगणिकवनम्<br>१२७<br>यत्र ब्रह्मादयो देवाः प्रत्यहमायान्ति तद्वन-<br>प्रवेशमात्रेण सर्व्वपापनाशः ॥<br>प्लक्षसरस्वती<br>१२८ तत्र स्नानपितृदेवपूजनाभ्यां<br>अश्वमेधफल-<br>प्राप्तिः । ईशानाध्युषितम् १२९ तत्र<br>शाक- | सुवर्णयागफलप्राप्तिश्च ॥ वेतसीका १६१<br>तत्र<br>गमनात् अश्वमेधफलं औशनसगतिप्राप्तिश्च<br>॥<br>सुन्दरिका १६२ तत्र गमनात् रूपप्राप्तिः ॥ | तत्र महादेवस्तिष्ठति तत्र गमनात्<br>अश्वमेध-<br>फलप्राप्तिः इन्द्रलोकवासश्च ॥<br>जातिस्मरः १८७<br>तत्र स्नानात् जातिस्मरत्वप्राप्तिः ।<br>वटेश्वरपुरम्<br>१८८ तत्र केशवस्य<br>दर्शनपूजनाभ्यामुपवासेन<br>च वाच्छितकामप्राप्तिः । वामनतीर्थम्<br>१८९<br>तत्र गमनात् दुर्गतिविनाशः विष्णुलोक-<br>प्राप्तिश्च । तत्र कौशिकी तिष्ठति तस्याः<br>सेव-<br>नात् राजसूययज्ञफलप्राप्तिः ।<br>चम्पकारण्यम्<br>१९० तत्रैकरात्रवासात्<br>गोसहस्रदानफल-<br>प्राप्तिः । गोष्ठीनम् १९१<br>तत्रैकरात्रोपवासात्<br>अग्निष्टोमफलप्राप्तिः । तत्र देव्या सह<br>विश्वे- |

श्वरस्तिष्ठति तस्य दर्शनात्
मित्रावरुणलोक-
वासः ॥ कन्यासंवेद्यम् १९२
तत्राहारजयात्
मनुलोकप्राप्तिः तत्रान्नदानमक्षयं भवति
॥
निश्चीरा नदी १९३ तत्र गमनात्
अश्वमेध-
फलप्राप्तिः स्वकुलोद्धरणञ्च ।
निश्चीरासङ्गमे
अन्नदानेन ब्रह्मलोकगमनम् । तत्र
वशिष्ठा-
श्रमः तत्राभिषेकात् वाजपेयफलप्राप्तिः
॥ देव-
कूटम् १९४ तत्र गमनात्
वाजिमेधफलप्राप्तिः
कुलोद्धरणञ्च ॥ कौशिकमुनिह्रदः १९५
तत्र
मासवासात् अश्वमेधफलप्राप्तिः ॥
सर्व्वतीर्थवर-
ह्रदः १९६ तत्र वासात्
बहुसुवर्णयागफल-
प्राप्तिः दुर्गतिविनाशश्च ॥ वीराश्रमः
१९७ तत्र
कुमारस्तिष्ठति तत्र गमनात्
अश्वमेधफलप्राप्तिः ।
अग्निधारा १९८ तत्र गमनात्
अश्वमेधफल-
प्राप्तिः कुलोद्धरणञ्च ॥ पितामहसरः
१९९ तत्र
शैलराजप्रतिष्ठितौ शिवविष्णू तिष्ठतः
तत्रा-
भिषेकात् अग्निष्टोमफलप्राप्तिः । तत्रैव
कुमार-
धारा तत्र स्नानात् कृतार्थता
त्रिकालोपवासेन
ब्रह्महत्यानाशः ॥ गौरीशिखरम् २००
तत्रा-

प्रभवः २२५ वंशगुल्मः २२६ तत्र
स्नानात्
वाजिमेधफलप्राप्तिः । ऋषभः २२७ तत्र
गम-
नात् गोसहस्रदानफलप्राप्तिः । पुष्पवती
२२८
तत्र स्नानत्रिरात्रोपवासाभ्यां
गोसहस्रदानफल-
प्राप्तिः कुलोद्धरणञ्च ॥ वदरिकम् २२९
तत्र
स्नानात् दीर्घायुष्ट्वप्राप्तिः स्वर्गगमनञ्च ।
महेन्द्र-
पर्व्वतः २३० तत्र रामतीर्थे स्नानात्
वाजि-
मेधफलप्राप्तिः । मतङ्गकेदारम् २३१ तत्र
स्नानात् स्वर्गलोकप्राप्तिः । श्रीपर्व्वतः
२३२ तत्र
नदीतीरे स्नानात् अश्वमेधफलं
परमसिद्धि-
प्राप्तिश्च तत्र महादेवो देव्या सह तिष्ठति
तत्र
देवह्रदे स्नानात् अश्वमेधफलप्राप्तिः
शिवलोक-
गमनञ्च । पाण्ड्यदेशे ऋषभपर्व्वतः २३३
तत्र
गमनात् वाजपेयफलप्राप्तिः स्वर्गगमनञ्च ॥
कावेरी २३४ तत्र गमनात्
गोसहस्रदानफलम् ।
समुद्रतीरे कन्यातीर्थम् २३५ तत्र स्नानात्
सर्व्वपापनाशः । समुद्रमध्ये गोकर्णतीर्थम्
२३६
तत्र शिवस्तिष्ठति तस्य पूजनात् त्रिरात्रोप-
वासाच्च
दशाश्वमेधतुल्यफलङ्गाणपत्यप्राप्तिः ।
द्वादशरात्रोपवासात् कृतार्थता च । तत्र
गायत्रीस्थानं तत्र त्रिरात्रोपवासात्
गोसहस्र-
दानफलप्राप्तिः ब्राह्मणस्य गायत्रीपाठात्
सदा

मन्दाकिन्यां स्नानपितृदेवतर्पणाभ्यां
अश्वमेध-
फलप्राप्तिः परमगतिलाभश्च ॥ भर्त्तृस्थानम्
२५९
तत्र कार्त्तिकेयस्तिष्ठति तत्र गमनात्
सर्व्वकाम-
प्राप्तिः । कोटितीर्थे स्नानात्
गोसहस्रदानफल-
प्राप्तिः । ज्येष्ठस्थानम् २६० तत्र महादेव-
स्तिष्ठति तद्दर्शनात् चन्द्रवद्दीप्तिः । तत्र कूपे
चत्वारः समुद्रास्तिष्ठन्ति तत्र
स्नानप्रदक्षिणाभ्यां
परमगतिप्राप्तिः । शृङ्गवेरपुरम् २६१ यत्र
रामो गङ्गामुत्तीर्णः तत्र स्नानात् सर्व्वपाप-
नाशः विष्णुलोकप्राप्तिश्च । मुञ्जावटः २६२
तत्र
महादेवस्तिष्ठति तस्य पूजनप्रदक्षिणाभ्यां
गाण-
पत्यप्राप्तिः । तत्तीर्थे जाह्नवीस्नानात्
सर्व्वपाप
नाशः ॥ प्रयागः २६३ तत्र त्रीण्यग्निकुण्डानि
तत्र यमुनया गङ्गा सङ्गता यत्र ब्रह्मादयो देवा
सिद्धाः पितरः सनत्कुमारमुखा ऋषयो नाग-
सुपर्णसिद्धक्रतुगन्धर्व्वाप्सरसस्तिष्ठन्तिएवं
वेदा
यज्ञाश्च मूर्त्तिमन्तः ब्रह्माणमुपासते । स
सर्व्व-
तीर्थेभ्योऽधिकः । तस्य नामसङ्कीर्त्तनश्रवण-
मृत्तिकालभनैः सर्व्वपापनाशः तत्र स्नानात्
त्रिलोके एवं वेदविद्यासु यत् पुण्यं तत्प्राप्तिः
राजसूयाश्वमेधफलप्राप्तिश्च तत्र वपनं महत्
॥
भोगवती नाम वासुकितीर्थम् २६४ तत्राभि-
षेकात् अश्वमेधफलप्राप्तिः ॥ * ॥
“अयोध्या मथुरा माया काशी काञ्ची
अवन्तिका ।
पुरी द्वारवती चैव सप्तैता मोक्षदायिकाः ॥
तासु वासं प्रकुर्व्वन्ति ये मृता वा नराः परम् ।
लभन्ते न पुनर्जन्म मातृगर्भेषु कुत्रचित् ॥”

रोहणात् शुद्धता तत्र कुण्डे
स्नानपितृदेवार्च्च-
नाभ्यां अश्वमेधफलप्राप्तिः स्वर्गगमनञ्च
। ताम्रा-
रुणा २०१ तत्र गमनात्
वाजिमेधफलप्राप्तिः
शक्रलोकगमनञ्च ॥ नन्दिनी २०२ तत्र
त्रिदश-
सेवितः कूपः तत्र गमनात्
नरमेधफलप्राप्तिः ॥
कौशिक्यारुणसङ्गमः २०३ तत्र
त्रिरात्रोप-
वासात् सर्व्वपापमुक्तिः ॥ उर्व्वशीतीर्थम्
२०४
सोमाश्रमः २०५ कुम्भकर्णाश्रमः २०६
तेषु
स्नानात् अश्वमेधफलप्राप्तिः
स्वर्गगमनञ्च ॥
कोकामुखम् २०७ तत्र स्नानात्
जातिस्मर-
त्वम् ॥ नन्दा २०८ तत्र गमनात्
कृतार्थता
सर्व्वपापनाशः स्वर्गगमनञ्च ।
ऋषभद्वीपः २०९
तत्र क्रौञ्चनिसूदनसेवनात् सरस्वत्यां
स्नानाच्च
विमाने विराजः ॥ औद्दालकतीर्थम्
२१०
तत्राभिषेकात् सर्व्वपापनाशः ।
ब्रह्मतीर्थम् २११
तत्र गमनात् वाजपेयफलप्राप्तिः । चम्पा
२१२
तत्र गमनात् गोसहस्रदानफलप्राप्तिः ।
नरे-
तिका २१३ तत्र गमनात् वाजपेयफलं
विमान-
प्राप्तिश्च । संविद्यतीर्थम् २१४ तत्र
स्नानात्
विद्याप्राप्तिः । लौहित्यम् २१५ तत्र
गमनात्

सम्पन्नता अब्राह्मणस्य पाठात् तस्या
विनाशः ॥
सम्बर्त्तवापी २३७ तत्र गमनात्
रूपसौभाग्य-
प्राप्तिः । वेण्वा २३८ तत्र पितृदेवतर्पणात्
मयूरहंसयुक्तविमानप्राप्तिः ॥ गोदावरी
२३९
तत्र गमनेन गवामययज्ञफलप्राप्तिः
वायुलोक-
गमनञ्च । वेण्वासङ्गमः २४० तत्र स्नानात्
सर्व्वपापनाशः । वरदासङ्गमः २४१ तत्र
स्नानात्
वाजिमेधफलप्राप्तिः । ब्रह्मस्थूणा २४२
तत्र
त्रिरात्रोपवासात् गोसहस्रदानफलप्राप्तिः
स्वर्ग-
गमनञ्च । कुशप्लवनम् २४३ तत्र
स्नानत्रिरा-
त्रोपवासाभ्यां चन्द्रलोकप्राप्तिः । देवह्रदः
२४४
कृष्णवेण्वासमुद्भववनम् २४५
ज्योतिर्मात्रिह्रदः
२४६ कन्याश्रमः २४७ तेषु गमनात्
अग्नि-
ष्टोमफलप्राप्तिः । देवह्रदे स्नानात्
गोसहस्र-
दानफलप्राप्तिः । ज्योतिर्मात्रिह्रदे स्नानात्
जाति-
स्मरत्वम् ॥ पयोष्णी नदी २४८ तत्र
स्नानतर्प-
णाभ्यां गोसहस्रदानफलप्राप्तिः ।
दण्डकारण्यम्
२४९ तत्र महाराजे जलस्पर्शात्
गोसहस्रदान-
फलप्राप्तिः । शरभङ्गाश्रमः २५०
कुशाश्रमः २५१
तत्र गमनात् दुर्गतिनाशः कुलपवित्रता च ॥
सूर्पारकम् २५२ तत्तु रामतीर्थम् तत्र
स्नानात्
बहुसुवर्णयज्ञफलप्राप्तिः । सप्तगोदावरम्
२५३

इति पाद्मे भूमिखण्डम् ॥
शास्त्रम् । अध्वरः । क्षेत्रम् । उपायः । (यथा,
महाभारते । ५ । १२५ । २६ ।
“वासुदेवेन तीर्थेन तात ! गच्छस्व संशमम्
॥”
“तीर्थेन उपायेन ।” इति तट्टीकायां नील-
कण्ठः ॥ अवसरः । यथा, भागवते । ३ ।
१९ । ४ ।
“स तदा लब्धतीर्थोऽपि न ववाधे निरायुधम्
।
मानयन् स मृधे धर्म्मं विष्वक्सेनं प्रकोपयन्
॥”)
नारीरजः । अवतारः । ऋषिजुष्टाम्बु । (यथा,
रामायणे । १ । २ । ४ ।
“अकर्द्दममिदं तीर्थं भरद्वाज ! निशामय ।
रमणीयं प्रसन्नाम्बु सन्मनुष्यमनो यथा ॥”)
पात्रम् । (यथा, मनुः । ३ । १३० ।
“दूरादेव परीक्षेत ब्राह्मणं वेदपारगम् ।
तीर्थन्तद्धव्यकव्यानां प्रदाने सोऽतिथिः
स्मृतः ॥”)
उपाध्यायः । (यथा, महाभारते । ४ । ४० ।
१८ ।
“शिक्षितो ह्यसि सारथ्ये तीर्थतः पुरुषर्षभ !
॥”
“तीर्थतो गुरुतः ।” इति नीलकण्ठः ॥)
मन्त्री । इति मेदिनी । थे, ८ ॥ (मन्त्रि-
प्रभृत्यष्टादशराष्ट्रसम्पत् । यथा, महाभारते ।
२ । ५ । ३८ ।
“कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च ।
त्रिभिस्त्रिभिरविज्ञातैर्वेत्सितीर्थानि चारकैः
॥”
“तीर्थानि मन्त्रिप्रभृतीन्यष्टादश यान्यवगाह्य

| | | |
|---|---|---|
| बहुसुवर्णयागफलप्राप्तिः। करतोया २१६ तत्र त्रिरात्रोपवासात् वृषभैकादशदानफलप्राप्तिः॥ कोशलायां कालतीर्थम् २१७ तत्र गमनात् गोसहस्रदानफलप्राप्तिःस्वर्गगमनञ्च। गङ्गा-सागरसङ्गमः २१८ तत्र गमनात् शताश्वमेध-फलप्राप्तिः। गङ्गायाः परद्वीपः २१९ तत्र स्नानत्रिरात्रोपवासाभ्यांसर्व्वकामप्राप्तिः। वैत-रणी २२० तत्र गमनात् सर्व्वपापनाशः॥ विरजम् २२१ तत्र गमनात् चन्द्रवद्दीप्तिः॥ प्रभवः २२२ तत्र गमनात् सर्व्वपापनाशः गोसहस्रदानफलस्वकुलपावनञ्च। शोणज्योती-रथीसङ्गमः २२३ तत्र पितृदेवतर्पणात् अग्नि-ष्टोमफलप्राप्तिः॥ शोणप्रभवः २२४ नर्म्मदा- | तत्र स्नानात् महापुण्यप्राप्तिः देवलोकगमनञ्च। देवपथम् २५४ तत्र गमनेन देवसत्रफलप्राप्तिः॥ तुङ्गकारण्यम् २५५ तत्र प्रवेशात् सद्यः पाप-नाशः मासवासात् स्वकुलस्य पवित्रता ब्रह्म-लोकगमनञ्च। मेधाविकम् २५६ तत्र पितृ-देवतर्पणात् अग्निष्टोमफलस्मृतिमेधानां प्राप्तिः॥ कालञ्जरपर्व्वतः २५७ तत्र देवह्रदे स्नानात् सूर्य्यलोकप्राप्तिः। त्रिकूटपर्व्वतः २५८ तत्र | |

राजाकृतकृत्यो भवति । तानि चोक्तानि नीति-
शास्त्रे यथा, --
‘मन्त्री पुरोहितश्चैव युवराजश्च भूपतिः ।
पञ्चमो द्वारपालश्च षष्ठोऽन्तर्वंशिकस्तथा ॥
कारागाराधिकारी च द्रव्यसञ्चयकृत्तथा ।
कृत्याकृत्येषु चार्थानां नवमो विनियोजकः ॥
प्रदेष्टा नगराध्यक्षः कार्य्यनिर्म्माणकृत्तथा ।
धर्म्माध्यक्षः सभाध्यक्षो दण्डपालस्त्रिपञ्चमः ॥
षोडशो दुर्गपालश्च तथा राष्ट्रान्तपालकः ।
अटवीपालकान्तानि तीर्थान्यष्टादशैव तु ॥
चारान् विचारयेत्तीर्थे स्वात्मनश्च परस्य च ।
पाषण्डादीनविज्ञातानन्योन्यमितरेष्वपि ॥
मन्त्रिणं युवराजञ्च हित्वा स्वेषु पुरोहितम् ॥’
इत्येषां तीर्थशब्दवाच्यत्वम् ॥ हलायुधः ।
योनौ जलावतारे च मन्त्र्याद्यष्टादशस्वपि।
पुण्यक्षेत्रे तथा पात्रे तीर्थं स्यात् दर्शनेष्वपि ॥”
इति तट्टीकायां नीलकण्ठः ॥)
योनिः । दर्शनम् । घट्टः । इति हेमचन्द्रः ॥
विप्रः । आगमः । निदानम् । अग्निः । इति
संक्षिप्तसारे उणादिवृत्तिः ॥ (पुण्यकालः ।
इति स्वामी ॥ यथा, भागवते । १ । १२ । १४
।
“हिरण्यं गां महीं ग्रामान् हस्त्यश्वान्
नृपतिर्वरान् ।
प्रादात् स्वन्नञ्च विप्रेभ्यः प्रजातीर्थे स तीर्थवित्
॥”
पुं, सन्न्यासिनामुपाधिविशेषः । यथा, प्राण-
तोषिण्यां अवधूतप्रकरणे ।
“त्रिवेणीसङ्गमे तीर्थे तत्त्वमस्यादिलक्षणे ।
स्नायात्तत्त्वार्थभावेन तीर्थनामा स उच्यते ॥”)

**तीर्थकरः**, पुं, (करोतीति करः । तीर्थस्य शास्त्रस्य
पुण्यक्षेत्रस्य वा करः ।) जिनः । इति हेम-
चन्द्रः । १ । २४ ॥ (विष्णुः । यथा, महा-
भारत । १३ । १४९ । ८७ ।
“मनोयवस्तीर्थकरो वसुरेता वसुप्रदः ॥”
“चतुर्द्दशविद्यानां बाह्यविद्यामयानाञ्च प्रणेता
प्रवक्ता चेति तीर्थकरः ।” इति तद्भाष्यम् ॥)

**तीर्थकृत्**, पुं, (तीर्थं करोतीति । कृ + क्विप्
तां ब्रह्मचारी विधिवत् करोति
स्वयं यतो गुरुणा सन्नियुक्तः ॥
नित्यं गृहस्थाश्रमसंस्थितस्य
मनीषिभिस्तीर्थगतिर्निषिद्धा
मातुः पितुर्भक्तिमना गृहस्थः
सुतो न कुर्य्यात् खलु तीर्थयात्राम् ॥
गङ्गाजलेनानुदिनं मनुष्यो
मृद्गोमयेनापि सदा मुनीन्द्राः ।
स्नातीह सम्यक् यदि भावशुद्धः
फलं तदाप्नोति न चान्यदेतत् ॥
सर्व्वाणि तीर्थानि हि यानि तानि
स्वर्गेऽन्तरीक्षेऽपि पुनः पृथिव्याम् ।
तुल्यानि सम्यक् मुनयोऽग्निहोत्रे
सत्यं गृहस्थाश्रमसंश्रितस्य ॥
यस्यह यज्ञेष्वधिकारितास्ति
गृहेऽन्वहं दानवतो मुनीन्द्राः ।
संजुह्वतः कल्कविवर्ज्जितस्य
तीर्थे गतिः पूर्ब्बतरैर्निषिद्धा ॥”
इति वह्निपुराणे १ अध्यायः ॥

**तीथराजी**, स्त्री, (तीर्थानां राजी श्रेणिरिव ।
यद्वा, तीर्थेषु राजते शोभते इति । राज +
इन् ।
ततो वां ङीष् ।) काशी । इति
त्रिकाण्डशेषः ॥

**तीर्थवाकः**, पुं, (तीर्थस्येव वाको वचनमस्य ।
उत्तमाङ्गस्थित्यां प्रशंसनीयत्वादस्य
तथात्वम् ।)
केशः । इति हेमचन्द्रः । ३ । २३१ ॥

**तीर्थसेवी**, [न्] पुं स्त्री, (तीर्थं घट्टादिजल-
प्रान्तस्थानं सेवते इति । सेव + णिनिः
।) वक-
पक्षी । इति राजनिर्घण्टः ॥
तीर्थवासिनि, त्रि ॥

**तीव**, स्थौल्ये । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
अकं-सेट् ।) तीवति । इति दुर्गादासः ॥

**तीवरः**, पुं, (तीर्य्यते इति । तॄ प्लवनतरणयोः +
कटुः । इत्युणादिकोषः ॥ (दुःसहः ।
यथा,
आर्य्यासप्तशत्याम् । ६९१ ।
“हन्त विरहः समन्ताज्जलयति
दुर्व्वारतीव्र-
संवेगः ॥”
ताक्ष्णम् । यथा, तत्रैव । १५२ ।
“कृतकस्वाप
मदीयश्वासध्वनिदत्तकर्ण! किं तीव्रैः ।
विध्यसि मां निश्वासैः स्मरः शरैः
शब्दवेधीव ॥”)
शिवे, पुं । इति शब्दरत्नावली ॥

**तीव्रकण्ठः**, पुं, (तीव्रः कण्ठो यस्मात् । अस्य
भक्षणेन हि कण्ठदेशे
पीडोत्पत्तेस्तथात्वम् ।)
शूरणः । इति राजनिर्घण्टः ॥

**तीव्रगन्धा**, स्त्री, (तीव्रः कटुर्गन्धो यस्याः ।)
यवानी । इति राजनिर्घण्टः ॥

**तीव्रज्वाला**, स्त्री, (तीव्रं यथा स्यात् तथा ज्वाल-
यति उत्तेजयति सेविनमिति । ज्वल +
णिच् +
अच् टाप् च ।) धातकी । इति
राजनिर्घण्टः ॥

**तीव्रवेदना**, स्त्री, (तीव्रा अत्यन्ता वेदना ।)
यातना । अतिशयवेदना । इत्यमरः । १
। १० । ३ ॥

**तीव्रा**, स्त्री, (तीव्र + टाप् ।) कटुरोहिणी ।
गण्डदूर्व्वा । राजिका । इति मेदिनी । रे,
४५ ॥
नदीविशेषः । इति शब्दरत्नावली ॥
महा-
ज्योतिष्मती । तरदीवृक्षः । तुलसी ।
इति
राजनिर्घण्टः ॥

**तु**, ल वृत्तौ । हिंसायाम् । पूर्त्तौ । इति कविकल्प-

तुगागमश्च ।) जिनः । इति धरणिः ॥

**तीर्थङ्करः**, पुं, (तीर्थं करोतीति । कृ + ख मुम् च ।)

जिनः । इति हेमचन्द्रः । १ । २४ ॥

**तीर्थयात्रा**, स्त्री, (तीर्थे यात्रा गमनम ।) तीर्थ-

गमनम् । तद्विधिनिषेधौ यथा, --
ऋषय ऊचुः ।
"कर्त्तव्या तीर्थयात्रास्मिन् लोके केन कथं द्विजैः ।
श्रोतं न एतदिच्छामो वद वह्निमतान् मुने ! ॥
सूत उवाच ।
एतत् श्रुत्वा ततः सूतः पुराणो मुनिसत्तमः ।
प्रोवाच तान् मुनिश्रेष्ठान् स्वधर्म्मं शृणुतानघाः ॥
यज्ञाधिकारे च गते द्विजेन्द्राः
सर्व्वस्वनाशे क्षितिपोऽथ वैश्यः ।
शुश्रूषणायां बलवीर्य्यहीनः
शूद्रस्तु तीर्थानि भजेत् सुदान्तः ॥
मुमुक्षुभिस्तीर्थगतिर्मुनीन्द्रैः
कार्य्या तथा तत्फलकाङ्क्षिभिश्च ।

"छित्वरच्छत्वरेति ।" उणां ३ । १ । इति
ष्वरच्प्रत्ययेन निपातनात् साधुः ।)
समुद्रः ।
(तीरयति कर्म्मसमाप्तिं करोतीति । तीर +
ष्वरच् । गुणाभावो रेफलोपश्च ।
इत्युज्वल-
दत्तः ।) व्याधः । इति मेदिनी । रे, १६३ ॥
वर्णसङ्करजातिविशेषः । तेओर इति
भाषा ।
स तु राजपुत्रस्त्रियां क्षत्रियाज्जातः ।
इति
ब्रह्मवैवर्त्तम् ॥ चूर्णकभार्य्यायां
पुण्ड्रकाज्जातः ।
इति पराशरपद्धतिः ॥

**तीवरी**, स्त्री, (तीवर + षित्त्वात् ङीप् ।) व्याध-

पत्नी । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**तीव्रं**, क्ली, (तीव स्थौल्ये + बाहुलकात् रक् ।

तिज निशाने + बाहुलकात् रन् ।
दीर्घत्वम् ।
जकारस्य वकारः । इत्युज्वलदत्तः । २ । २८ ॥)
अतिशयः । इत्यमरः । १ । २ । ७० ॥
तीरम् ।
तीक्ष्णम् त्रपु । इत्युणादिकोषः ॥ लोहम् । इति
राजनिर्घण्टः ॥

**तीव्रः**, त्रि, (तिज + बाहुलकात् रन् ।) दीर्घत्वादि-

कञ्च । अत्युष्णः । नितान्तः । (यथा,
रघुः । ९ । ६५ ।
"तान् हत्वा गजकुलबद्धतीव्रवैरान्
काकुत्स्थः कुटिलनखाग्रलग्नमुक्तान् ॥")

द्रुमः ॥ (अदां-परं-अकं-सकं च-सेट् ।)
ल,
तौति तवीति । इति दुर्गादासः ॥

**तु**, व्य, पादपूरणम् । (यथा, मनुः । ११ । २०७ ।

"अवगूर्य्य त्वब्दशतं सहस्रमभिहत्य च ।
जिघांसया ब्राह्मणस्य नरकं प्रतिपद्यते ॥")
भेदः । अवधारणम् । इत्यमरः ॥
संमुच्चयः ।
(यथा, मनुः । ११ । २०२ ।
"उष्ट्रयानं समारुह्य खरयानन्तु कामतः ।
स्नात्वा तु विप्रो दिग्वासाः प्राणायामेन
शुध्यति ॥")
पक्षान्तरम् । नियोगः । प्रशंसा ।
विनिग्रहः ।
इति शब्दरत्नावली ॥

**तुक्**, [ज्] पुं, (तुज्ज्यते जीव्यतेऽनेनेति । तुज

प्राणे + क्विप् ।) अपत्यम् । इति
हेमचन्द्रः ॥

**तुकाक्षीरी**, स्त्री, (तुगाक्षीरी + पृषोदरादित्वात्

गस्य कः ।) तुगाक्षीरी । इति हेमचन्द्रः । ४ । २२० ॥

**तुगा**, स्त्री, (तुज + बाहुलकात् घः किच्च ।) वंश-

लोचना । इति राजनिर्घण्टः ॥
(पर्य्यायोऽस्या
यथा, भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ।
"स्याद्वंशरोचना वंशी तुगाक्षीरी तुगा
शुभा ।
त्वक्क्षीरी वंशजा शुभ्रा वंशक्षीरी च
वैणवी ॥")

**तुगाक्षीरी**, स्त्री, (तुगा सा एव क्षीरी ।) वंश-

लोचना । इति राजनिर्घण्टः ॥
वंशलोचना-

|  |  | भेदः । अस्या गुणाः । क्षयश्वासकासनाशि- त्वम् । मधुरत्वम् । हिमत्वञ्च । इति राजवल्लभः ॥ (यथा, भावप्रकाशे मध्यखण्डे २ भागे काश- रोगाधिकारे । “द्विगुणा च तुगाक्षीरी सिता सर्व्वचतुर्गुणा ॥”) |
|---|---|---|

**तुङ्गः**, पुं, (तुजि हिंसायाम् + घञ् ।) पुन्नागवृक्षः ।

(यथा, वैद्यकरत्नमालायाम् ।
"कुम्भीकः पुरुषस्तुङ्गः पुन्नागो रक्तकेशरः
॥")
पर्व्वतः । बुधग्रहः । इति हेमचन्द्रः । ६ ।
६४ ॥
नारिकेलः । गण्डकः । इति राजनिर्घण्टः ॥
योगभेदः । इति शब्दरत्नावली ॥ स तु
ग्रहाणां
उच्चराशिः । यथा, --
"सूर्य्याद्युच्चान्
क्रियवृषमृगस्त्रीकुलीरान्त्ययूके
दिग्वह्नीन्द्रद्वयतिथिशरान्सप्तविंशांश्च
विंशान् ।
अंशानेतान् वदति जवनश्चान्त्यतुङ्गान्
सुतुङ्गां-
स्तानेवांशान् मदनभवनेष्वाह नीचान् सुनी-
चान् ॥"
इति दीपिका ॥
"आदित्यमेषे वृषभे शशाङ्के
कन्यागते ज्ञे च गुरौ कुलीरे
मीने च शुक्रे मकरे महीजे
शनौ तुलायामिति तुङ्गगेहाः ॥"
इति समयामृतम् ॥ * ॥
अथ तुङ्गस्थग्रहफलम् ।
"तुङ्गेऽर्कः शुभसंयुतः शुभकरैर्म्मित्रैश्च दृष्टो
यदा
दैवात् पश्यति सोऽपि वा शुभकरानेकं द्विकं
वा
त्रिकम् ।
वित्तेशः प्रथितो विमर्द्दितरिपुः क्षौणीशमान्यो
यदा
क्ष्मापालार्च्चितपादपद्मयुगलो राजा त्रिकोणे
यदा ॥
तुङ्गे चन्द्रमसि प्रसन्नवपुषि ब्रध्नादनष्टद्युतौ
प्रख्यातोऽरिविमर्द्दकोऽगदतनूराजेश्वरो
रूप-
वान् ।
क्ष्मापालार्च्चितपादपद्मयुगलो वा धर्म्मशीलो
तुङ्गे शनौ मित्रखगेन दृष्टे
प्रचण्डदण्डो नृपतिप्रधानः ।
न दृश्यते दिग्गमने च धुर्व्वी
त्रिकोणगे चापि नरेन्द्रमूर्त्तिः ॥
भवति धरणिपालो नीचबुद्धिः प्रतापी
हयगजधनपूर्णो जातिवर्गे विरक्तः ।
कुटिलमतिरनीतो भूरिभाण्डारयुक्त-
स्तमसि मिथुनसंस्थे जायते मानवेन्द्रः ॥
मृगपतिवृषकन्याकर्क्टस्थे च राहौ
भवति विपुललक्ष्णी राजराजाधिपो वा ।
हयगजनरनौकामण्डितःसार्व्वभौमो
नृपतिरमरपूज्यो राहुतुङ्गी चिरायुः ॥
अरिनिधनव्ययतुङ्गे कीर्त्तितमेतत् फलं
व्यर्थम् ।
केन्द्रत्रिकोणे लाभे वा तुङ्गफलं
यथोद्दिष्टम् ॥"
इति कोष्ठीप्रदीपः ॥

**तुङ्गः**, त्रि, (तुजि हिंसायाम् + घञ् ।) उग्रः ।

प्रधानम् । उन्नतः । इति शब्दरत्नावली ॥
(यथा,
रघुः । ६ । ३ ।
"शिलाविभङ्गैर्मृगराजशाव-
स्तुङ्गं नगोत्सङ्गमिवारुरोह ॥"
प्रचुरः । यथा, तत्रैव । ४ । ७० ।
"तेषां सदश्वभूयिष्ठास्तुङ्गा द्रविणराशयः
॥")
किञ्जल्के क्ली । इति राजनिर्घण्टः ॥

**तुङ्गकः**, पुं, (तुङ्ग + स्वार्थे संज्ञायां वा कन् ।) पुन्नाग-

वृक्षः । इति शब्दरत्नावली ॥
(अरण्यरूप-
तीर्थविशेषे, क्ली । यथा, महाभारते । ३
। ८५ ।
४६-५४ ।
"तुङ्गकारण्यमासाद्य ब्रह्मचारी जितेन्द्रियः
।
वेदानध्यापयत् तत्र मुनीन् सारस्वतः पुरा
॥
तस्या जलस्य गुणाः । स्निग्धत्वम् ।
निर्म्मल-
त्वम् । स्वादुत्वम् । गुरुत्वम् ।
कण्डुपित्तास्रदातृ-
त्वम् । प्रायःसात्म्यत्वम् । मेधाकरत्वञ्च ।
इति
राजनिर्घण्टः ॥

**तुङ्गशेखरः**, पुं, (तुङ्गान्युच्चानि शेखराणि शृङ्गाणि

यस्य ।) पर्व्वतः । इति शब्दमाला ॥

**तुङ्गा**, स्त्री, (तुङ्ग + टाप् ।) वंशलोचना । शमी ।

इति राजनिर्घुण्टः ॥ (अस्याः पर्य्याया
यथा, --
"शमी शक्तुफला तुङ्गा केशहन्त्री शिवा
फला ।
मङ्गल्या च तथा लक्ष्मीः शमीरः
साल्पिका
स्मृता ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**तुङ्गिनी**, स्त्री, (तुङ्गो वृक्षविशेषस्तद्वदाकृति-

रस्त्यस्याः । तुङ्ग + इनिः । ङीप् ।)
महाशता-
वरी । इति राजनिर्घण्टः ॥

**तुङ्गी**, स्त्री, (तुङ्ग + गौरादित्वात् ङीष् ।) हरिद्रा ।

वर्व्वरी । इति मेदिनी । गे, ८ ॥ (अस्याः
पर्य्याया यथा, भावप्रकाशस्य पूर्ब्बखण्डे
१ भागे ।
"वर्व्वरी तुवरी तुङ्गी खरपुष्पाजगन्धिका ।
पर्णाशस्तत्र कृष्णे तु कठिल्लककुठेरकौ
॥"
रात्रिः । इति त्रिकाण्डशेषः ॥)

**तुङ्गी**, [न्] पुं, (तुङ्गः उच्चस्थानं आश्रयत्वेन

अस्त्यस्य । इनिः ।) तुङ्गस्थानस्थितः ।
उच्चस्थ-
ग्रहः । इति ज्योतिषम् ॥

**तुङ्गीपतिः**, पुं, (तुङ्ग्या निशायाः पतिः ।) चन्द्रः ।

महान्
सौ म्यैरेव युतोऽथवा प्रियतमैर्दृष्टे त्रिकोणेऽपि च ॥
यदि भवति मृगस्थो भूमिपुत्त्रस्तदा वै
न दिनकरमयूखाद्भ्रष्टरश्मिर्न्नरेन्द्रः ।
अगदतनुरभीतः शत्रुदर्पापहारी
प्रणतरिपुनरेन्द्रः स्यात्त्रिकोणेऽपि जातः ।
कन्यास्थः शशलाञ्छनस्य
तनयस्तिथ्यंशकैः
संयुतो
दृष्टो वा यदि संयुतः शुभकरैर्ज्जातस्तदा भूपतिः ।
यात्रायां तुरगोष्ट्रमत्तकरिणां यातैर्मही कम्पते
सक्ष्माभृद्धरणीरुहा विगलिता यान्ति त्रिकोणे-
ऽपि च ॥
तुङ्गे गुरौ मित्रखगेन दृष्टो
राजा भवेदिन्द्रसमानमूर्त्तिः ।
गजाश्वनौकानरपूर्णलक्ष्मीः
पृथ्वीपतिः स्वस्य त्रिकोणगेऽपि ॥
तुङ्गे भृगो शुभसुहृत्प्रयुते च दृष्टे
दैवात् पुनः स यदि पश्यति मित्रसंघान् ।
भूपाधिपो भवति कीर्त्तिकरप्रधानो
दीर्घायुरुग्रसुखभुग्भृगुजे त्रिकोणे ॥

तत्र वेदेषु नष्टेषु मुनेरङ्गिरसः सुतः ।
ऋषीणामुत्तरीयेषु सूपविष्टो यथासुखम् ॥
ॐकारेण यथान्यायं सम्यगुच्चारितेन ह ।
येन यत् पूर्ब्बमभ्यस्तं तत् सर्व्वं समुपस्थितम् ॥
ऋषयस्तत्र देवाश्च वरुणोऽग्निः प्रजापतिः ।
हरिर्नारायणस्तत्र महादेवस्तथैव च ॥
पितामहश्च भगवान् देवैः सह महाद्युतिः ।
भृगुं नियोजयामास यजनार्थं महाद्युतिम् ॥
ततः स चक्रे भगवानृषीणां विधिवत्तदा ।
सर्व्वेषां पुनराधानं विधिदृष्टेन कर्म्मणा ॥
आज्यभागेन तत्राग्निं तर्पयित्वा यथाविधि ।
देवाः स्वभवनं याता ऋषयश्च यथाक्रमम् ॥
तदरण्यं प्रविष्टस्य तुङ्गकं राजसत्तम ! ।
पापं प्रणश्यत्यखिलं स्त्रिया वा पुरुषस्य वा ॥
तत्र मासं वसेद्धीरो नियतो नियताशनः ।
ब्रह्मलोकं व्रजेद्राजन् ! कुलञ्चैव समुद्धरेत् ॥”)

**तुङ्गभद्रः**, पुं, (तुङ्ग उच्चोऽपि भद्रः ।) मदोत्-
कटहस्ती । इति मेदिनी । रे, २६३ ॥

**तुङ्गभद्रा**, स्त्री, (तुङ्गा प्रधाना भद्रा निर्म्मला च ।)
नदीविशेषः । सा दक्षिणे प्रसिद्धा । (यथा, मत्स्यपुराणे । ११३ । २९ ।
“तुङ्गभद्रा सुप्रयोगा वाह्य कावरी चैव तु ।
दक्षिणापथनद्यस्ताः सह्यपादाद्विनिःसृता ॥”)

इति त्रिकाण्डशेषः ॥

**तुङ्गीशः**, पुं, (तुङ्गी सर्व्वप्रधान ईशः प्रभुश्च ।)
शिवः । कृष्णः । सूर्य्यः । इति शब्दरत्नावली ॥

**तुच्छं**, क्ली, (तौति असारत्वं गच्छतीति । तु +
“छोऽदिकचिभ्यां शुतुभ्यान्तु कित् पीपूङोः स्वश्चा ।”
२ । ३३ । उणादिकोषटीकाधृतसूत्रात् छः स
च कित् ।) पुलाकजम् । इत्युणादिकोषः ॥
भुषि इति भाषा ॥

**तुच्छः**, त्रि, (तुद् + क्विप् । तेन तं वा छ्यतीति ।
छो + कः ।) शून्यः । इत्यमरः । ३ । १ । ५६ ॥
हीनः । इत्युणादिकोषः ॥ (यथा, भागवते ।
७ । ७ । ४५ ।
“किमेतैरात्मनस्तुच्छैः सह देहेन नश्वरैः ॥”)
अल्पः । इति हेमचन्द्रः । ६ । ६२ ॥

**तुच्छद्रुः**, पुं, (तुच्छो हीनो द्रुर्वृक्षः ।) एरण्ड-
वृक्षः । इति शब्दचन्द्रिका ॥

**तुच्छधान्यकं**, क्ली, (तुच्छं धान्यम् । अल्पार्थे
कन् ।) पुलाकः । इति रत्नमाला ॥ आग्डा
इति भाषा ।

**तुच्छा**, स्त्री, (तुच्छ + टाप् ।) तुत्था । नीली-
वृक्षः । इति भावप्रकाशः ॥ (सूक्ष्मैला । मुज-
राट्देशीया एलाची । अस्याः पर्य्याया यथा,
“सूक्ष्मोपकुञ्चिका तुच्छा कोरङ्गी द्राविडी गुटिः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**तुज**, हिंसे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) तोजति । इति दुर्गादासः ॥

**तुज**, इ प्राणे । बले । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-अकं-सकं च-सेट् ।) पञ्चमस्वरी । इ,
तुञ्ज्यते । प्राणो जीवनम् । हिंसायाच्चायामिति
कश्चित् । इति दुर्गादासः ॥

**तुज**, इ क भाषष्टार्थे । इति कविकल्पद्रुमः ॥
(चुरां-परं-अकं-सकं च-सेट् ।) पञ्चमस्वरी ।
इ क, तुञ्जयति । भा दीप्तिः । षष्टार्थो निके-
तनहिंसाबलदानानि । इति दुर्गादासः ॥

**तुट**, शि कलहे । इति कविकल्पद्रुमः ॥ (तुदां-
परं-अकं-सेट् ।) शि, तुटति अतुटीत् नीचः
परस्परं वचसा । तुतोट । इति दुर्गादासः ॥

**तुटुमः**, पुं, (तुटति नाशयति द्रव्यजातमिति ।
तुट + बाहुलकात् उमः ।) उन्दुरुः । इति
त्रिकाण्डशेषः ॥

**तुड**, इ ङ वधे । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-सकं-सेट् ।) पञ्चमस्वरी । इ, तुण्ड्यते ।
ङ, तुण्डते । वधो निष्पीडनमिति रमानाथः ।
तुण्डते पान्थं पिकः । इति दुर्गादासः ॥

**तुड**, ऋ वधे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) पञ्चमस्वरी । ऋ, अतुतोडत् ।
वधो द्विधाकरणमिति गोविन्दभट्टः । तोडति

**तुण्डकेरिका**, स्त्री, कार्पासी । इति राजनिर्घण्टः ॥

**तुण्डकेरी**, स्त्री, (प्रशस्तं तुण्डम् । प्रशंसायां कन् ।
तदीर्त्ते ईरयति वा तत्तुल्यशोभाधारणात् ।
ईर + कर्म्मण्यण् । स्त्रियां ङीष् ।) विम्बिका ।
इत्यमरटीकायां भरतः ॥ तेलाकुचा इति
भाषा ॥

**तुण्डिः**, पुं, (तुण्डते निष्पीडयति मध्यस्थद्रव्य-
मिति । तुण्ड + "सर्व्वधातुभ्य इन् ।" उणां
४ । ११७ । इतीन् ।) मुखम् । चञ्चुः ।
इत्युणादिकोषः ॥ नाभौ स्त्री । इति शब्दरत्ना-
वली ॥

**तुण्डिका**, स्त्री, (तुण्डिरेव । तुण्डि + स्वार्थे कन्
टाप् च ।) नाभिः । विम्बिका । इति शब्द-
रत्नावली ॥ (अस्या गुणा यथा, --
"तुण्डिका चाग्निरुचिकृद्वातपित्तनिवारणी ॥"
इति हारीते प्रथमे स्थाने दशमेऽध्याये ॥)

**तुण्डिकेरी**, स्त्री, कार्पासी । विम्बिका । इत्य-
मरः । २ । ४ । ११६ ॥ (अस्या पर्य्यायाः यथा,
"तुष्टी रक्तफला विम्बी तुण्डिकेरी च विम्बिका ॥"
इति वैद्यकरत्नमालायाम् ॥)
अस्या रूपान्तराणि । तुण्डिकेरिका तुण्डि-
केरिः तुण्डकेरी तुण्डिकेशी । इत्यमरटीका ॥

**तुण्डिकेशी**, स्त्री, विम्बिका । इति शब्दचन्द्रिका ॥

**तुण्डिभः**, त्रि, (तुण्डिर्वृद्धा नाभिरस्य । "तुन्दिवलि-
वटेर्भः ।" ५ । २ । १४० । इति भः । "मूर्द्धन्योपधो-
ऽयं तुण्डिः ।" इति माधवः ।) वृद्धनाभिः ।
बृहन्नाभियुक्तः । इत्यमरः । २ । ६ । ६१ ॥

**तुण्डिलः**, स्त्री, (तुण्डिरस्त्यस्येति । सिध्मादित्वात्
इलच् ।) वृद्धनाभिः । इत्यमरः । २ । ६ ।
६१ ॥
मुखरः । इत्युणादिकोषः ॥

तुत्थं ताम्रोपधातुर्हि किञ्चित्ताम्रेण तद्भवेत् ॥
किञ्चित्ताम्रगुणं तस्माद्वक्ष्यमाणगुणञ्च तत् ।
तुत्थकं कटुकं क्षारं कषायं वामकं लघु ॥
लेखनं भेदनं शीतं चक्षुष्यं कफपित्तहृत् ।
विषाश्मकुष्ठकण्डूघ्नं खर्परं चापि तद्गुणम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे १ भागे ॥
(अस्य शोधनविधिर्यथा, --
"ओतोर्व्विष्ठासमं तुत्थं सक्षौद्रं टङ्गणाङ्घ्रियुक् ।
त्रिधा सुपुटितं शुद्धं वान्तिभ्रान्तिविवर्ज्जितम् ॥"
अन्यच्च ।
"गन्धकेन समं तुत्थं तुत्थार्द्धेनार्द्धयामकम् ।
वान्तिभ्रान्ती यदा न स्तस्तदा सिद्धिं विनिर्द्दि-
शेत् ॥"
शोधितस्यास्य गुणा यथा, --
"तुत्थं सकटुकक्षारं कषायं विशदं लघु ।
लेखनं भेदि चक्षुष्यं कण्डूक्रिमिविषापहम् ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणाधि-
कारे ॥)
रसाञ्जनम् । ग्रावा । इत्युणादिकोषः ॥ अग्निः ।
इति संक्षिप्तसारे उणादिवृत्तिः ॥ अग्नौ पुं ।
इति हेमचन्द्रः ॥

**तुत्थकं**, क्ली, (तुत्थमेव । स्वार्थे कन् ।) तुत्थम् ।
इति शब्दचन्द्रिका ॥ (अस्य गुणा यथा, --
"तुत्थकं कटुकं क्षारं कषायं वामकं लघु ।
लेखनम्भेदनं शीतं चक्षुष्यं कफपित्तहृत् ।
विषाश्मकुष्ठकण्डूघ्नं खर्परञ्चापि तद्गुणम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

मल्लो मल्लाङ्गं भिनत्तीत्यर्थः । इति दुर्गादासः ॥

**तुड**, शि भेदे । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-सेट् ।) शि, तुडति अतुडीत् तुतोड । उपहनने इति कश्चित् । इति दुर्गादासः ॥

**तुड्ड**, नादरे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) पञ्चमस्वरी डद्वयान्तः । नादरः अनादरः । तुड्डति । फलाभावान्न ऋदनुबन्धः । इति दुर्गादासः ॥

**तुण**, श जैह्म्ये । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-सेट् ।) जैह्म्यमिह कुटिलीकरणम् । श, तुणति तृणं वायुः । तोणिता । इति दुर्गादासः ॥

**तुणिः**, पुं, (तुणति सङ्कोचयतीति । तुण जैह्म्ये + "सर्व्वधातुभ्य इन् ।" उणां । ४ । ११७ । इति इन् ।) कुणिः । तुन्नवृक्षः । इत्यमरटीकायां स्वामी ॥ (अस्य पर्य्याया गुणाश्च यथा, --
"तुणिस्तुन्नक आपीनस्तुणिकः कच्छकस्तथा ।
कुठेरकः कान्तलको नन्दिवृक्षश्च नन्दकः ॥
तुणी रक्तः कटुः पाके कषायो मधुरो लघुः ।
तिक्तो ग्राही हिमो वृष्यो व्रणकुष्ठास्रपित्तजित् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**तुण्डं**, क्ली, (तुण्डते निष्पीडयति अभ्यन्तरस्थ-द्रव्यमिति । तुण्ड + पचाद्यच् ।) मुखम् ।

**तुत्थ**, त् क स्तृतौ । इति कविकल्पद्रुमः ॥ (अदन्त चुरां-परं-सकं-सेट् ।) आद्ये पञ्चमस्वरः शेषो दन्त्यवर्गाद्ययुक्तस्थकारः । तुत्थयति तुत्थापयति । स्तृतिराच्छादनम् । इति दुर्गादासः ॥

**तुत्थं**, क्ली, (तुदति पीडयत्यनेन । तुद + "पातृ-तुदेति ।" उणां २ । ७ । इति थक् । यद्वा, तुत्थ आच्छादने + अच् ।) खर्परीतुत्थम् । उपघातुभेदः । तुतिया इति भाषा । तत्-पर्य्यायः । नीलाञ्जनम् २ हरिताश्मम् ३ तुत्थ-कम् ४ मयूरग्रीवकम् ५ ताम्रगर्भम् ६ अमृ-तोद्भवम् ७ मयूरतूत्थम् ८ शिखिकण्ठम् ९ नीलम् १० । इति राजनिर्घण्टः ॥ तुत्थाञ्जनम् ११ शिखिग्रीवम् १२ वितुन्नकम् १३ मयूर-कम् १४ । इत्यमरः । २ । ९ । १०१ ॥ तूतकम् १५ मृषातुत्थम् १६ मृतामदम् १७ । इति शब्द चन्द्रिका ॥ अस्य गुणाः । कटुत्वम् । कषाय-त्वम् । उष्णत्वम् । श्वित्रनेत्रामयनाशित्वम् । सर्व्वविषदोषशमनत्वम् । वान्तिकारकत्वञ्च । इति राजनिर्घण्टः ॥ क्षारत्वम् । निर्म्मलत्वम् । लघुत्वम् । भेदकत्वम् । कृमिकण्डुकुष्ठकफनाशि-त्वञ्च । इति राजवल्लभः ॥ * ॥
"तुत्थं वितुन्नकं चापि शिखिग्रीवं मयूरकम् ।

**तुत्था**, स्त्री, (तुत्थ + टाप् ।) नीलीवृक्षः । क्षुद्रैला । इत्यमरः । २ । ४ । ९५ ॥ महानीली । इति राजनिर्घण्टः ॥

**तुत्थाञ्जनं**, क्ली, (तुत्थयति तुत्थ्यते वा । तुत्थ + अच् । तुत्थञ्च तदञ्जनञ्चेति कर्म्मधारयः ।) उपघातुविशेषः । तुत्थम् । इत्यमरः । २ । ९ । १०१ ॥

**तुद**, ञ श औ व्यथे । इति कविकल्पद्रुमः ॥ (तुदां-उभं-सकं-अनिट् ।) ञ श, तुदति तुदते । औ, तोत्ता । व्यथ इह ञ्यन्तस्य रूपम् । तुदोद गदया चारिम् । इति भट्टिः ॥ विधु-न्तुदः । इति दुर्गादासः ॥

**तुन्दं**, क्ली, (तुदतीति । तुद + "अब्दादयश्च ।" उणां ४ । ९८ । इति दन् तुदेर्नुम्च इत्युक्तेर्नुम् ततो दस्य लोपः ।) उदरम् । इत्यमरः । २ । ६ । ७७ ॥

**तुन्दकूपिका**, स्त्री, (क्षुद्रः कूपः कूपिका । तुन्दस्य उदरस्य कूपिकेव ।) नाभिः । इति हेमचन्द्रः । ३ । २ । ७० ॥

**तुन्दकूपी**, स्त्री, (तुन्दस्य उदरस्य कूपी क्षुद्रकूप इव ।) नाभिः । इति त्रिकाण्डशेषः ॥

**तुन्दपरिमार्ज्जः**, त्रि, (तुन्दमुदरं परिमार्ष्टीति । परि + मृज + अण् ।) तुन्दपरिमृजः । इत्य-मरटीकायां रमानाथः ॥ (अलसादन्यत्र तुन्द-परिमार्ज्ज एव ।" इति सिद्धान्तकौमुदी । पां ३ । २ । ५ ॥)

| इत्यमरः । २ । ६ । ८९ ॥ (चञ्चुः । यथा,<br>देवीभागवते । २ । १ । २६ ।<br>“आमिषं स तु विज्ञाय शीघ्रमभ्यद्रवत् खगम् ।<br>तुण्डयुद्धमथाकाशे तावुभौ समचक्रतुः ॥”<br>पुं महादेवः । यथा, हरिवंशे भविष्यपर्व्वणि ।<br>१५ । १५ ।<br>“नमस्तुण्डाय तुष्याय नमस्तुटितुटाय च ॥”<br>राक्षसविशेषः । यथा, महाभारते । ३ । २८४ । ९ ।<br>“तुण्डेन च नलस्तत्र पटुशः पनसेन च ॥”) | | |
|---|---|---|

**तुन्दपरिमृजः**, त्रि, (तुन्दमुदरं परिमार्ष्टीति । परि + मृज + “तुन्दशोकयोः परिमृजापनुदोः ।” ३ । २ । ५ । इत्यत्र “आलस्यसुखाहरणयोरिति वक्तव्यम् ।” इति वार्त्तिकोक्त्या कः ।) अलसः । इत्यमरः । २ । १० । १८ ॥

**तुन्दि**, क्ली, (तुद + इन् बाहुलकात् नुम् च ।) उदरम् । इति हेमचन्द्रः । ३ । १६८ ॥ गन्धर्व्वविशेषे, पुं । इति जटाधरः ॥

**तुन्दिः**, स्त्री, (तुद् + इन् बाहुलकात् नुम् च ।) नाभिः । इति त्रिकाण्डशेषः ॥

**तुन्दिकः**, त्रि, (अतिशयितं तुन्दमुदरमस्त्यस्य । “तुन्दादिभ्य इलच्च ।” ५ । २ । ११७ । इति चकारात् ठन् ।) विशालजठरो जनः । इति शब्दरत्नावली ॥

**तुन्दिका**, स्त्री, (तुन्दमुदरं आश्रयत्वेनास्त्यस्याः । तुन्द + ठन् टाप् च ।) नाभिः । इति शब्दरत्नावली ॥

**तुन्दितः**, त्रि, तुण्डिलः । इति भरतस्य द्विरूपकोषः ॥

**तुन्दिभः**, त्रि, (तुन्दिर्वृद्धा नाभिरस्त्यस्येति । तुन्दि + “तुन्दिवलिवटेर्भः ।” ५ । २ । १३९ । इति भः ।) तुन्दिलः । इति शब्दरत्नावली ॥

**तुन्दिलः**, त्रि, (तुन्दं विशालमुदरमस्त्यस्येति । तुन्द + “तुन्दादिभ्य इलच्च ।” ५ । २ । ११७ । तुप प श तुन्प श क्लिशि वधे इत्येताभ्यामेव तुम्पति तुपतीति सिद्धौ तुन्प वधे इत्यस्य भ्वादौ पाठस्तु वेदे शबन्तस्य शान्तस्य चोच्चारणभेदार्थः । इति दुर्गादासः ॥

**तुन्फ**, वधे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) तुम्फति । इति दुर्गादासः ॥

**तुन्फ**, श वधे । क्लेशे । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-अकं च-सेट् ।) श, तुफति तुतुम्फ । इति दुर्गादासः ॥

**तुप**, वधे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) तोपति । इति दुर्गादासः ॥

**तुप**, इ क अर्द्दने । इति कविकल्पद्रुमः ॥ (चुरां-परं-सकं-सेट् ।) पञ्चमस्वरी । इ क, तुम्पयति । अर्द्दनं वधः । इति दुर्गादासः ॥

**तुप**, प श क्लेशे । वधे । इति कविकल्पद्रुमः ॥ (तुदां-परं-अकं-सकं च-सेट् ।) प श, तुम्पति तुतोप । इति दुर्गादासः ॥

**तुफ**, वधे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) तोफति । इति दुर्गादासः ॥

**तुफ**, प श क्लेशे । वधे । इति कविकल्पद्रुमः ॥ (तुदां-परं-अकं-सकं च-सेट् ।) प श, तुम्फति तुतोफ । इति दुर्गादासः ॥

**तुब**, इ कि अर्द्दे । इति कविकल्पद्रुमः ॥ (चुरां-पक्षे भ्वां-परं-सकं-सेट् ।) तवर्गाद्यादिः । पञ्चम-टीकायां भरतः ॥ (अलावोः शुष्कत्वक् । यथा, हरिवंशे । ६४ । ५ ।
“सशिक्यतुम्बकरकौ गोपवेणुप्रवादकौ ॥”)

**तुम्बकः**, पुं, (तुम्बति अरुचिमिति । तुम्ब + ण्वुल् ।) अलावुः । इति शब्दरत्नावली ॥ राजालावुः । इति राजनिर्घण्टः ॥

**तुम्बा**, स्त्री, (तुम्ब + टाप् ।) अलावुः । इति शब्दरत्नावली ॥ (यथा, अम्बाष्टके । ७ ।
“कुम्बावतीसमविडम्बा गलेन नवतुम्बाभवीणसविधा
शं बाहुलेयशशिविम्बाभिराममुखसंग्राधितस्तनभरा ॥”)
गवी । इति त्रिकाण्डशेषः ॥

**तुम्बिः**, स्त्री, (तुम्बति नाशयत्यरुचिमिति । तुबि अर्द्दने + “सर्व्वधातुभ्य इन् ।” उणां ४ । ११७ । इतीन् ।) अलावुः । इति शब्दरत्नावली ॥ (अलावुशब्देऽस्या विवरणं ज्ञातव्यम् ॥)

**तुम्बिका**, स्त्री, (तुम्ब अर्द्दने + ण्वुल् । टापि अत इत्वम् ।) अलावुः । इति शब्दरत्नावली ॥ कटुतुम्बी । इति राजनिर्घण्टः ॥

**तुम्बिनी**, स्त्री, (तुम्बति नाशयत्यरुचिमिति । तुम्ब + णिनिः ङीप् ।) कटुतुम्बी । इति राजनिर्घण्टः ॥

**तुम्बी**, स्त्री, (तुम्बि + कृदिकारादिति वा ङीष् ।) अलावुः । इत्यमरः । २ । ४ । १५६ ॥ (यथा, शान्तिशतके । ३ । १६ ।
“अरे चेतोमीन ! भ्रमणमधुना यौवनजले
त्यज त्वं स्वच्छन्दं युवतिजलधौ पश्यसि न किम् ।
तनूजालीजालं स्तनयुगलतुम्बीफलयुगं
मनोभूः कैवर्त्तः क्षिपति परितस्त्वां प्रति मुहुः ॥”
“अलावुः कथिता तुम्बी द्बिधा दीर्घा च वर्त्तुला ।
मिष्टं तुम्बीफलं हृद्यं पित्तश्लेष्मापहं गुरु ॥
वृष्यं रुचिकरं प्रोक्तं धातुपुष्टिविवर्द्धनम् ॥”

इतीलच् ।) विशालजठरो जनः । भुँडे इति
भाषा ॥ तत्पर्य्यायः । पिचिण्डिलः २ बृहत्-
कुक्षिः ३ तुन्दिकः ४ तुन्दिभः ५ तुन्दी ६ ।
इति शब्दरत्नावली ॥

**तुन्दिलफला**, स्त्री, (तुन्दिलवत् फलमस्याः ।)

त्रपुषी । इति राजनिर्घण्टः ॥

**तुन्दी**, स्त्री, (तुन्दि + वा ङीष् ।) नाभिः । इति

शब्दरत्नावली ॥

**तुन्दी**, [न्] त्रि, (तुन्दं विशालमुदरमस्त्यस्येति ।

"तुन्दादिभ्य इलच्च ।" ५ । २ । ११७ । इति
चकारात् इनिः ।) तुन्दिलः । इति शब्द-
रत्नावली अमरश्च ॥

**तुन्नः**, पुं, (तुद्यते इति । तुद + क्तः ।) नन्दी-

वृक्षः । तुँद इति भाषा । इत्यमरः । २ । ४ ।
१२७ ॥ त्रि, व्यथितः । (यथा, रामायणे ।
२ । १४ । २३ ।
"स तुन्न इव तीक्ष्णेन प्रतोदेन हयोत्तमः ।
राजा प्रचोदितोऽभीक्ष्णं कैकेयीमिदमब्रवीत् ॥"
छिन्ने । द्विधाकृते च ॥)

**तुन्नवायः**, पुं, (तुन्नं छिन्नं वयतीति । वे + "ह्वावा-

मश्च ।" ३ । २ । २ । इत्यण् ।) सौचिकः ।
इत्यमरः । २ । १० । ६ ॥ दरजी इति भाषा ॥
(यथा, मनुः । ४ । २१४ ।
"शैलूषतुन्नवायान्नं कृतघ्नस्यान्नमेव च ॥")

**तुन्प**, वधे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-

स्वरी । इ, तुम्प्यते । कि, तुम्बयति तुम्बति ।
अर्द्दो वधः । इति दुर्गादासः ॥

**तुभ**, लृ ङ हिंसे । इति कविकल्पद्रुमः ॥ (भ्वां-

आत्मं-सकं-सेट् ।) लृ, अतुभत् । ङ, तोभते ।
इति दुर्गादासः ॥

**तुभ**, य ग हिंसे । इति कविकल्पद्रुमः ॥ (दिवां-

क्र्यां च-परं-सकं-सेट् ।) य, तुभ्यति । ग,
तुभ्नाति । तुतोभ । इति दुर्गादासः ॥

**तुमुरः**, पुं क्ली, (तुमुलः । रस्य लः ।) तुमुलः ॥

इत्यमरटीकायां रायमुकुटः ॥ (क्षत्त्रियजाति-
विशेषः । यथा, मात्स्ये । ११३ । ५३ ।
"तुमुरास्तुम्बराश्चैव पङ्गमा नैषधैः सह ॥")

**तुमुलं**, क्ली, (तु सौत्रो धातुः + बाहुलकात्

मुलक् ।) रणसङ्कुलम् । सङ्कीर्णयुद्धम् । इत्य-
मरमेदिनीकरौ ॥ परस्परसम्बाधो रणसंघट्टः ।
इति भरतः ॥ (यथा, देवीभागवते । ५ । ४१ । २८ ।
"तत्राभूत्तुमुलं युद्धं देवदानवसैन्ययोः ॥")

**तुमुलः**, पुं, (तु + बाहुलकात् मुलक् ।) कलि-

वृक्षः । इति मेदिनी । ले, ९८ ॥ व्याकुलो
रणः । इति त्रिकाण्डशेषः ॥ (प्रचण्डे उग्रे
सङ्कुलमात्रे च त्रि । यथा, राजतरङ्गिण्याम् ।
४ । ५४१ ।
"एकस्य करुणाक्रन्दैः सैन्यस्यान्यस्य गर्ज्जितैः ।

इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
कुलिकवृक्षः । इति रत्नमाला ॥

**तुम्बीपुष्पं**, क्ली, (तुम्ब्याः पुष्पमिव पुष्पमस्य ।) लता-

म्बुजम् । अलावुपुष्पम् । इति हारावली । २०२ ॥

**तुम्बुकं**, क्ली, (तुम्ब + बाहुलकात् उकः ।) अलावु-

फलम् । इति हड्डचन्द्रः ॥

**तुम्बुकः**, पुं, (तुम्ब + बाहुलकात् उकः ।) अलावुः ।

इति भरतधृतहड्डचन्द्रः ॥

**तुम्बुरी**, स्त्री, (तुम्बवदाकारं रातीति । रा + कः ।

ङीप् । पृषोदरादित्वात्कुत्वम् ।) कुक्कुरी । धन्या-
कम् । इति मेदिनी । रे, १६३ ॥

**तुम्बुरु**, क्ली, कुस्तुम्वुरु । इत्यमरटीकायां भरतः ॥

(यथा, वैद्यके ।
"तुम्बुरुभृङ्गषष्ठ्याह्वकन्दकंकटुरोहिणी ॥"
अस्य तैलगुणाः ।
"तुम्बुरुत्थं करञ्जोत्थं ज्योतिष्मत्युद्भवन्तथा ।
अर्शकुष्ठकृमिश्लेष्मशुक्रमेदोऽनिलापहम् ॥"
इति हारीते प्रथमे स्थाने नवमे ऽध्याये ॥)

| | | |
|---|---|---|
| सेट् ।) तुम्पति । इति दुर्गादासः ॥<br>**तुन्प**, श वधे । क्लेशे । इति कविकल्पद्रुमः ॥<br>(तुदां-सकं-अकं च-सेट् ।) श, तुपति तुतुम्प । | सरित्तरङ्गघोषैश्च बभूवुस्तुमुला दिशः ॥"<br>तथा, महाभास्ते । १ । ५३ । १२ ।<br>"ववौ गन्धश्च तुमुलो दह्यतामनिशं तदा ॥")<br>**तुम्बः**, पुं स्त्री, (तुम्बति नाशयत्यरुचिमिति ।<br>तुम्ब अर्द्दने + अच् ।) अलावुः । इत्यमर- | |

**तुम्बुरुः**, पुं क्ली, गन्धर्व्वविशेषः । स्वर्गगायकः । इति
जटाधरः ॥ (यथा, महाभारते । १ ।
१२३ । १५ ।
"गन्धर्व्वैः सहितः श्रीमान् प्रागायत च
तुम्बुरुः ॥"
तपस्विविशेषः । यथा, हरिवंशे । १२६ ।
९ ।
"अर्च्चिष्मांस्तुम्बु रुश्चैव भारिश्च वदतां
वरः ।
नेतारो देवदेवानामेते हि तपसान्विताः
॥")
अहदुपासकविशेषः । इति हेमचन्द्रः ॥
फलवृक्ष-
विशेषः । तत्फलन्तु त्याप्तमुखं मरीचवत्
। तत्
पर्य्यायः । शूलघ्नः २ । इति रत्नमाला ॥
सौरजः ३ सौरः ४ वनजः ५ सानुजः ६
द्बिजः
७ तीक्ष्णकल्कः ८ तीक्ष्णफलः ९
तीक्ष्णपत्रः १०
महामुनिः ११ स्फुटलः १२ सुगन्धिः
१३ ।
अस्य गुणाः । मधुरत्वम् । तिक्तत्वम् ।
कटुत्वम् ।
उष्णत्वम् ।
कफवातशूलगुल्मोदराध्मानक्रिमि
नाशित्वम् । वह्निदीपनत्वञ्च । इति राज-
निर्घण्टः ॥ तद्वृक्षपर्य्यायास्तत्फलगुणाश्च
।
"तुम्बुरुः सौरभः सौरो वनजः
सानुजोऽन्धकः ।
तुम्बु रु प्रथितं तिक्तं कटुपाके हि तत् कटु
॥
रूक्षोष्णं दीपनं तीक्ष्णं रुच्यं लघु विदाहि
च ।
वातश्लेष्माक्षिकर्णौष्ठशिरोरुग्गुरुताक्रमीन्
॥

**तुरगलीलकः**, पुं, (तुरगस्येव लीला यस्य ततः
कन् ।) तालप्रभेदः । यथा,
सङ्गीतदामोदरः ।
"द्रुतद्वन्द्वं विरामान्तं
लघुस्तुरगलीलके ॥"

**तुरगी** [न्] त्रि, (तुरगो घोटको वाहनत्वेना-
स्त्यस्येति । तुरग + इनिः ।)
अश्वारोहः ।
इति हेमचन्द्रः । ३ । ४२५ ॥

**तुरगी**, स्त्री, (तुरगवत् गन्धोऽस्त्यस्याः । अर्श
आदित्वात् अच् ततो गौरादित्वात्
ङीष् ।)
अश्वगन्धा । इति मेदिनी । गे, ३८
॥ अश्वस्त्री ।
इति व्याकरणम् ॥

**तुरङ्गः**, पुं स्त्री, (तुरेण वेगेन गच्छतीति । तुर +
गम् + "गमे सुपि वाच्यः ।" ३ । २ ।
३८ ।
इत्यस्य वार्त्तिकोक्त्या खच् ।
"खच्च डिद्वा
वाच्यः ।" इति डित् ।
"अरुर्द्विषदिति ।" ६ ।
३ । ६७ । इति मुम् ।) घोटकः ।
इत्यमरः ।
२ । ८ । ४३ ॥ (यथा, पञ्चतन्त्रे । १
। ३१४ ।
"मृगा मृगैः सङ्गमनुव्रजन्ति
गावश्च गोभिस्तुरगास्तुरङ्गैः ॥")
चित्तम् । इति शब्दरत्नावली ॥

**तुरङ्गकः**, पुं, (तुरङ्ग इव कायतीति । कै + कः
।)
घोषकाकृतिः । इति रत्नमाला ॥
हस्तिघोषा
इति ख्यातः ॥

**तुरङ्गद्वेषणी**, स्त्री, (द्विष भावे ल्युट् । तुरङ्गेन

"तुरायणं वैशाखपञ्चम्याम् । चैत्रस्य वा ॥"
यथा, महाभारते । १३ । १०३ । ३५ ।
तुरायणं हि व्रतमप्यधृष्य-
मक्रोधनोऽकरवं त्रिंशतोऽब्दान् ॥")

**तुराषाट्**, [ह्] पुं, (तुरं वेगवन्तं साहयति
अभिभवतीति । सह + णिच् + क्विप् । "सहेः
साडः सः ।" ८ । ३ । ५६ । इति षत्वम् ।
अन्येषामपीति पूर्ब्बपदस्य दीर्घः ।) इन्द्रः ।
इत्यमरः । १ । १ । ४७ ॥ अस्य रूपान्तरम् ।
तुराषाड् ॥ (यथा, देवीभागवते । १ । ११ । ६३
।
"तुराषाडपि तच्छ्रुत्वा क्रोधयुक्तो बभूव ह ॥")

**तुरिः**, स्त्री, (तुतोर्त्ति द्रुतं गच्छतीति । तुर +
इन् ।) तुरी । इति शब्दरत्नावली ॥

**तुरी**, स्त्री, (तुरि + कृदिकारादिति वा ङीष् ।)
तन्त्रवायस्य काष्ठनिर्म्मितोपकरणविशेषः । तत्-
पर्य्यायः । तन्त्रकाष्ठम् २ तुलिः ३ तुली ४
तुरिः ५ । इति शब्दरत्नावली ॥ (यथा,
आर्य्यासप्तशत्याम् । ४४३ ।
"मेदिन्यां तव निपतति न पदं बहुवल्लभेति
गर्व्वेण ।
अश्लिष्य कैर्न तरुणैस्तुरीव वसनैर्विमुक्तासि
॥")

**तुरीयं**, क्ली, (चतुर्णां पूरणम् । चतुर्थस्थानस्थित-
त्वादस्य तथात्वम् ।) ब्रह्म । इति वेदान्तसारः ॥
"अज्ञानतदुपहितचैतन्ययोराधारभूतं अनुप-
हितचैतन्यम् । यथा । वनवृक्षतदवच्छिन्ना-
काशयोर्जलजलाशयतद्गतप्रतिविम्बाकाशयोर्वा
आधारभूतानुपहिताकाशवदनयोरज्ञानतदुप-
हितचैतन्ययोराधारभूतं यदनुपहितं चैतन्यं
तत्तुरीयमित्युच्यते । शान्तं शिवमद्बैतं चतुर्थं
मन्यन्ते । इत्यादि श्रुतेः ।" इति वेदान्तसारः ॥
(शुक्लयजुर्व्वेदान्तर्गतोपनिषद्बिशेषः । यथा,
मुक्ति-
कोपनिषदि ।
"तुरीयातीतसंन्यासपरिव्राजाक्षमालिका ॥")

कुष्ठशूलारुत्तिश्वासप्लीहकृच्छ्राणि नाशयेत् ॥”
इति भावप्रकाशः ॥

**तुर**, लि र वेगे । इति कविकल्पद्रुमः ॥ (ह्वां-
परं-अकं-सेट् ।) ह्रस्वी । लि, तुतोर्त्ति । र, वैदिकः । वेगः शीघ्रगमनम् । अदादिवर्ज्ज-
धातुभ्यः शपो विधानेनैव सिद्धे अदादेः शपं
विधाय तल्लुक्करणं निष्ठायां भावादिढे वोदुङो-
ऽव्वत इत्यनेन गुणार्थमिति चतुर्भुजः । तेन
तोरितं तुरितमिति । तन्मते रुदेरपि रोदितं
रुदितमिति स्यात् । इति दुर्गादासः ॥

**तुरः**, त्रि, (तुतोर्त्ति वेगेन गच्छतीति । तुर +
कः ।) वेगवान् । इति तुरगशब्दटीकायां
भरतः ॥ (यथा, ऋग्वेदे । ७ । ५६ । १९ ।
“इमे तुरं मरुतो रामयन्तीमे सहः सहस आ नमन्ति ॥”
“तुरं कर्म्मसु क्षिप्रवन्तम् ।” इति सायनः ॥
क्षिप्रस्तोत्रकारी । यथा, ऋग्वेदे । ८ । २६ । ४ ।
“उपस्तोमान्तुरस्य दर्शथः श्रिये ॥”
“तुरस्य क्षिप्रं स्तोत्रं कुर्व्वतः ।”
इति सायनः ॥)

**तुरगः**, पुं, (तुर वेगे + भावे घञर्थे कः । तुरेण
वेगेन गच्छतीति । गम + अन्येष्वपीति डः ।)
चित्तम् । घोटकः । इति मेदिनी । गे, ३८ ॥
(यथा, रघुः । ३ । ५१ ।
“ततः प्रहस्यापभयः पुरन्दरं
पुनर्वभाषे तुरगस्य रक्षिता ॥”)

**तुरगगन्धा**, स्त्री, (तुरगस्य गन्ध इव गन्धो
सह द्वेषणं शत्रुता यस्य । ततो ङीप् ।) घोट-
केन सह स्वभाववैरिभावादेवास्यास्तथात्वम् ।)
महिषी । इति राजनिर्घण्टः ॥ (तुरङ्गद्विषणी
तुरङ्गद्वेषिणी इत्यपि च कुत्रचिद् दृश्यते ॥)

**तुरङ्गप्रियः**, पुं, (तुरङ्गाणां घोटकानां प्रियः ।)
यवः । इति राजनिर्घण्टः ॥

**तुरङ्गमः**, पुं, स्त्री, (तुरेण वेगेन गच्छतीति । गम
+ खच् + मुम् च ।) घोटकः । इत्यमरः । २ ।
८ । ४३ ॥ (यथा, रघुः । ७ । ४७ ।
“तुरङ्गमस्कन्धनिषण्णदेहं
प्रत्याश्वसन्तं रिपुमाचकाङ्क्ष ॥”)

**तुरङ्गवक्त्रः**, पुं, (तुरङ्गस्येव वक्त्रं वदनं यस्य ।)
किन्नरः । इति जटाधरः ॥

**तुरङ्गवदनः**, पुं, (तुरङ्गस्येव वदनं यस्य ।) किन्नरः ।
इत्यमरः । १ । २ । ७४ ॥

**तुरङ्गारिः**, पुं, (तुरङ्गस्य अरिः शत्रुः । अश्वनाशक-
त्वादस्य तथात्वम् ।) करवीरः ।
इति रत्नमाला ॥

**तुरङ्गिका**, स्त्री, (तुरङ्गवत् आकृतिरस्त्यस्य
फलादौ । तुरङ्ग + ठन् ।) देवदालीलता ।
इति राजनिर्घण्टः ॥ (गुणादयोऽस्या देवदाली-
शब्दे ज्ञातव्याः ॥)

**तुरङ्गी**, स्त्री, (तुरङ्गस्तद्गन्धोऽस्त्यस्याः । अच् ।
गौरादित्वात् ङीष् ।) अश्वगन्धा । इति शब्द-

**तुरीयः**, त्रि, (चतुर्णां पूरणः । चतुर् + “चतुर-
श्छयतावाद्यक्षरलोपश्च ।” ५ । २ । ५१ ।
इत्यस्य वार्त्तिकोक्त्या छः । चस्य लोपश्च ।)
चतुर्थः । इति मुग्धबोधम् ॥ (यथा, देवी-
भागवते । १ । १९ । ८ ।
“जाग्रत् स्वप्नसुषुप्तिश्च तव राजन् ! भवन्ति हि ।
अवस्थास्तु यथाकालं तुरीया तु कथं नृप ! ॥”
तारकः । इति सायनः ॥ यथा, ऋग्वेदे । ३ । ४ । ९ ।
“तन्नस्तुरीयमध पोषयित्नु
देव त्वष्टर्वि रराणः स्यस्व ॥”)

**तुरीयवर्णः**, पुं, (तुरीयश्चतुर्थो वर्णः ।) शूद्रः ।
इति हलायुधः ॥

**तुरुष्कः**, पुं, गन्धद्रव्यभेदः । शिलारस इति
ख्यातः । तत्पर्य्यायः । यवनः २ धूम्रः ३ धूम्र-
वर्णः ४ सुगन्धिकः ५ सिह्लकः ६ सिह्लसारः ७
पीतसारः ८ कपिः ९ पिण्याकः १० कपिजः
११ कल्कः १२ पिण्डितः १३ पिण्डितैलकः १४
करेवरः १५ कृत्रिमकः १६ लेपनः १७ सिह्लः

| | | |
|---|---|---|
| यस्याः ।) अश्वगन्धा । इति रत्नमाला ॥ (अश्व- गन्धाशब्देऽस्या-विवरणमाख्यातम् ॥)<br>**तुरगब्रह्मचर्य्यकं**, क्ली, (तुरगस्येव ब्रह्मचर्य्यम् । ततः स्वार्थे कन् ।) अभावादङ्गनात्यागः । इति त्रिकाण्डशेषः ॥ | रत्नावली ॥ घोटिकावृक्षः । इति राजनिर्घण्टः ॥<br>**तुरायणः**, त्रि, (तुरेण वेगेन अयनं यत्र । "पूर्ब्ब- पदात् संज्ञायामगः ।" ८ । ४ । ३ । इति णत्वम् ।) परायणः । इत्यमरटीकायां स्वामी ॥ (क्ली, यज्ञविशेषः । इति सिद्धान्तकौमुदी ॥ यथा, कात्यायनश्रौतसूत्रे । २४ । ८ । १ । २ । | |

१८ कपिचञ्चलः १९ यावलः २० तैलाख्यः २१
पिण्डिकः २२ जावः २३ यावतः २४ । इति
शब्दरत्नावली ॥ * ॥ अस्य गुणाः ।
सुरभित्वम् ।
तिक्तत्वम् । कटुत्वम् । स्निग्धत्वम् ।
कुष्ठकफ-
पित्ताश्मरीकृच्छ्रमूत्राघातज्वरार्त्तिनाशित्वञ्च ।
इति राजनिर्घण्टः ॥ अन्यच्च "अथ
शिलारसः ।
सिह्लकस्तु तुरुष्कः स्याद्यतोऽपवनदेशजः ।
कपितैलञ्च स ख्यातस्तथा च कपिनामकः ॥
सिह्लकः कटुकः स्वादुः स्निग्धोष्णः
शुक्रकान्ति-
कृत् ।
वृष्यः कण्डूस्वेदकुष्ठज्वरदाहग्रहापहः ॥"
इति भावप्रकाशः ॥
(अस्य शोधनविधिर्यथा, --
"तुरुष्को मधुना भाव्यः काश्मीरञ्चापि सर्पिषा ॥"
इति वैद्यकचक्रपाणिसंग्रहे वातरोगाधिकारे ॥)
म्लेच्छजातिविशेषः । इति मेदिनी । के,
१०२ ॥
तुरुक् इति भाषा । देशविशेषः । तुरक्-
स्तान् इति पारस्य भाषा । तत्पर्य्यायः ।
शाखिः २ । इति हेमचन्द्रः । ४ । २५ ॥
श्रीवासवृक्षः । इति विश्वः ॥ (घोटकविशेषः ।
यथा, अश्ववैद्यके । ६ । ११ ।
"तुरुष्कः कीर्त्तितो वाजी स्थूलवक्रमुखश्च
यः ॥")

**तुर्य्यः**, त्रि, (चतुर्णां पूरणः । चतुर् + "चतुरश्छ-
यतावाद्यक्षरलोपश्च ।" ५ । २ । ५१ ।
इत्यस्य
वार्त्तिकोक्त्या यत् चस्य लोपश्च ।) चतुर्थः ।
इति
मुग्धबोधम् ॥ (यथा, भागवते । ७ । ९ । ३२
।
"योगेन मीलितदृगात्मनिपीतनिद्र-
स्तुर्य्ये स्थितो न तु तमो न गुणांश्च युङ्क्षे ॥")

देव सादृश्याभावादस्यास्तथात्वम् । यदुक्तं
ब्रह्म-
वैवर्त्ते प्रकृतिखण्डे । १५ । १५ ।
"नरा नार्य्यश्च तां दृष्ट्वा तुलनां
दातुमक्षमाः ।
तेन नाम्ना च तुलसीं तां वदन्ति पुराविदः ॥"
अस्या अन्यानिरुक्तिरुक्ता बृहद्धर्म्मपुराणे ।
७ । ६३ ।
"तकारो मरणं प्रोक्तं तद्योगः स्यादुकारतः
।
मृता लसति सेत्येवं तुलसीत्येव गीयते ॥")
स्वनामख्यातवृक्षः । तत्पर्य्यायः । सुभगा
२
तीव्रा ३ पावनी ४ विष्णुवल्लभा ५ सुरेज्या
६
सुरसा ७ कायस्था ८ सुरदुन्दूभिः ९
सुरभिः १०
बहुपत्री ११ मञ्जरी १२ हरिप्रिया १३
अपेत-
राक्षसी १४ श्यामा १५ गौरी १६
त्रिदशमञ्जरी १७
भूतघ्नी १८ भूतपत्री १९ । इति
राजनिर्घण्टः ॥
पर्णासः २० वृन्दा २१ कठिञ्जरः २२
कुठेरकः २३ ।
इति शब्दरत्नावली ॥ वैष्णवी २४ पुण्या
२५
पवित्रा २६ माधवी २७ अमृता २८
पत्रपुष्पा २९
सुगन्धा ३० गन्धहारिणी ३१ । इति
भरत-
धृतमधुमित्रः ॥ सुरवल्ली ३२ प्रेतराक्षसी
३३
सुवहा ३४ ग्राम्या ३५ सुलभा ३६ बहु-
मञ्जरी ३७ देवदुन्दूभिः ३८ । इति भाव-
प्रकाशः ॥ * ॥ क्षुद्रपत्रतुलस्याः पर्य्यायः ।
खरपत्रः १ जम्बीरः २ पत्रपुष्पः ३
फणिज्-

मायां जाता नरा नार्य्यश्च तां दृष्ट्वा
तुलनां
दातुमयोग्यास्तेन इह लोकेऽपि
तुलसीति नाम्ना
ख्याता । सा तपस्तप्तुं वनं गता ।
तदानीं राधा-
शापात् सुदामगोपालो दानवीं योनिं
प्राप्य
शङ्खचूडनाम्ना ख्यातः । सोऽपि ब्रह्मणो
वरात
सर्व्वाविध्यत्वं प्राप्तवान् परन्तु यदा तव
पत्न्याः
सतीत्वनाशो भविष्यति तदा
मरिष्यसीति ब्रह्मा
तमुक्तवान् । स तुलसीमुवाह
देवानामधिकार
जहार । देवाः ब्रह्मसभां गताः । ब्रह्मा
तैः
सार्द्धं शिवलोकं गतवान् । शिवस्तैः
सार्द्धं
वैकुण्ठं गतवान् । नारायणो
ब्रह्माणमुवाच
मम शूलं गृहीत्वा शिवो युद्धार्थं तत्र
गच्छतु
अहञ्च शङ्खचूडरूपेण तत्पत्न्याः
सतीत्वभङ्गं
करिष्यामीति श्रुत्वा शिवस्तत्र जगाम,
स
शिवेन सह युद्धे नियुक्तस्तदानीं
नारायणस्तत्-
पत्नीं तद्रूपेण धर्षितवान् । पश्चात् सा
नारायणं
ज्ञात्वा शशाप त्वं पाषाणो भव
जन्मान्तरे
आत्मानं विस्मरिष्यसि इत्युक्त्वा
तच्चरणे पपात
रुरोद च । तदा नारायणस्तामुवाच
त्वमिदं

**तुर्व्व**, ई हिंसे । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-सकं-सेट् ।) ह्रस्वी । तूः तुरौ तुरः । ई,
तूर्णः । इति दुर्गादासः ॥

**तुर्व्वसुः**, पुं, ययातिराजपुत्त्रः । (अयं हि देव-
यानीगर्भसम्भूतः । शापग्रस्तस्य
पितुर्ययातेर्जरां
नासौ गृहीतवान् ।) यथा, --
ययातिरुवाच ।
"यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि
।
तस्मात् प्रजासमुच्छेदं तुर्व्वसो ! तव यास्यति
॥
संकीर्णाचारधर्म्मेषु प्रतिलोमचरेषु च ।
पिशिताशिषु लोकेषु नूनं राजा भविष्यसि ॥
गुरुदारप्रयुक्तेषु तिर्य्यग्योनिगतेषु च ।
पशुधर्म्मेषु म्लेच्छेषु पापेषु च भविष्यसि ॥"
इति मत्स्यपुराणम् ॥

**तुल**, कि उन्मितौ । इति कविकल्पद्रुमः ॥ (चुरां-
पक्षे भ्वां-परं-सकं-सेट् ।) उन्मितिः परि-
माणम् । कि, तोलयति तोलति काञ्चनं बणिक्
।
त्वदीयं सौन्दर्य्यं तुहिनगिरिकन्ये !
तुलयितुमिति
शङ्करोक्तम् । तुलां करोति इति ञौ साध्यम् ।
इति दुर्गादासः ॥

**तुलसारिणी**, स्त्री, (तुलेन वेगेन सरतीति । सृ +
णिनि + ङीप् ।) तृणम् । इति शब्दमाला ॥

**तुलसी**, स्त्री, (तुलां सादृश्यं स्यति नाशयतीति ।
सो + कः । गौरादित्वात् ङीष् ।
सर्व्वोत्तमत्वा-
झकः ४ अल्पपत्रः ५ समीरणः ६ । इति
रत्न-
माला ॥ मरुवकः ७ प्रस्थपुष्पः ८ ।
इत्यमरः ।
२ । ४ । ७९ ॥ * ॥ गन्धतुलस्याः
पर्य्यायः ।
सुगन्धकः १ गन्धनामा २ तीक्ष्णगन्धः ३
फणिज्-
झकः ४ गन्धफणिज्झः ५ सुगन्धः ६ देव-
दुन्दूभिः ७ एते रक्ततुलस्याः पर्य्यायाः ।
इति
लोकव्यवहारः ॥ * ॥ विल्वगन्धतुलस्याः
पर्य्यायः ।
वैकुण्ठकः १ विल्वगन्धः २ अल्पमानकः
३ ॥ * ॥
श्वेततुलस्याः पर्य्यायः । अर्ज्जकः १
श्वेतपर्णासः २
गन्धपत्रः ३ कुठेरकः ४ अस्राज्र्जकः ५
तीक्ष्णः ६
तीक्ष्णगन्धः ७ सिताज्र्जकः ८ ॥ * ॥
कृष्णतुलस्याः
पर्य्यायः । कृष्णार्ज्जकः १ कृष्णवर्णी २
कालमानः ३
करालकः ४ कालपर्णी ५ सुरभिः ६
मानकः ७
कालमानकः ८ ॥ * ॥ वर्व्वरीतुलस्याः
पर्य्यायः ।
सुरभिः १ तुलसीद्वेषा २ सुरसा ३ अपेत-
राक्षसी ४ । इति रत्नमाला ॥ वर्व्वरी ५
कवरी ६ तुङ्गी ७ खरपुष्पा ८ अजगन्धिका
९ ।
इत्यमरः । २ । ४ । १४९ ॥ * ॥
सामान्यतुलस्या गुणाः ।
कटुत्वम् । तिक्तत्वम् । उष्णत्वम् ।
सुरभित्वम् ।
श्लेष्मवातजन्तुभूतकृमिवान्तिनाशित्वम् ।
रुचि-
कारित्वञ्च । इति राजनिर्घण्टः ॥ दाहपित्त-
कारित्वम् । दीपनत्वम् ।
कुष्ठकृच्छ्रास्रपार्श्व-
शरीरं त्यक्त्वा रमासदृशी भव मया
सह क्रीड
इयं तनुर्गण्डकी नदी भवतु तव
केशसमूह-
स्तुलसीनामा पुण्यवृक्षो भवतु तदा तत्
सर्व्व-
मभूत् । एतद्विवरणन्तु ब्रह्मवैवर्त्ते
प्रकृतिखण्डे
१५ अध्यायमारभ्य विस्तरशो
द्रष्टव्यम् ॥ * ॥
पद्मपुराणमते
जलन्धरपत्नीवृन्दालावण्यदर्श-
नेन विष्णुर्मुग्धः । तन्मोहवारणार्थं देवा
महा-
देवशरणङ्गताः । महादेवस्तानुवाच
मायामारा-
धय । ते मायां तुष्टुयुः माया तानुवाच
अहं रजः-
सत्वतमोगुणैर्गौरीलक्ष्मीस्वधारूपेण
तिष्ठामि ।
ता युष्माकं कार्य्यं विधास्यन्ति
तच्छ्रुत्वा देवास्तासां
समीपमागत्य प्रणेमुः तास्तेभ्यो
वीजानि ददु-
र्वाक्यानि जगदुश्च यत्र विष्णुस्तिष्ठति
तत्रे-
मानि वीजानि वपत देवास्तथा
चक्रुस्तद्वीजेभ्य-
स्त्रयो वृक्षा अभवन् धात्री मालती
तुलसी च
धात्री स्वधांशभूता मालती
लक्ष्म्यंशभूता तुलसी
गौर्य्यंशभूता ॥ * ॥ तुलस्या माहात्म्यं
यथा ।
ब्रह्मोवाच ।
"तुलस्याः शृणु माहात्म्यं पापघ्नं
सर्व्वकामदम् ।
यत् पुरा विष्णुना प्रोक्तं तत्ते
वक्ष्याम्यशेषतः ॥
सम्प्राप्तं कार्त्तिकं दृष्ट्वा नियमेन
जनार्द्दनः ।

रुङ्नाशित्वञ्च । शुक्ला कृष्णा च तुलसी
गुणै-
स्तुल्या । इति भावप्रकाशः ॥ * ॥ अस्या
उत्-
पत्तिर्यथा । गोलोके इयं तुलसी गोपी
श्रीकृष्ण-
प्रिया श्रीकृष्णेन सह अस्याः क्रीडां दृष्ट्वा
राधा
शशाप त्वं मानवीं योनिं याहि । तच्छ्रुत्वा
सा
खिन्ना । गोविन्दस्तामुवाच त्वं भारते
तपस्तप्त्वा
ममांशं नारायणं लभिष्यसि । सा पृथिव्यां
धर्म्मध्वजराजपत्न्यां माधव्यां
कार्त्तिकीपूर्णि-

पूजनीयो महद्भिश्च
कोमलैस्तुलसीदलैः ॥
दृष्टा स्पृष्टा तथा ध्याता कार्त्तिके
नमितार्च्चिता ।
रोपिता सेविता नित्यं पापं हन्ति
युगार्ज्जितम् ॥
अष्टधा तुलसी यैस्तु सेविता
द्बिजसत्तम ! ।
युगकोटिसहस्राणि ते वसन्ति हरेर्गृहे ॥
रोपिता तुलसी यावत् कुरुते
मूलविस्तृतम् ।
तावद्युगसहस्राणि तनोति सुकृतं हरिः
॥
तुलसीदलपुष्पाणि यो दद्याद्धरये मुने !
।
कार्त्तिके सकलं पापं सोऽत्र
जन्मार्ज्जितं दहेत् ॥
रोपिता तुलसी यावत् वर्द्धते
वसुधातले ।
तावत्कल्पसहम्ग्रणि विष्णुलोके
महीयते ॥
यत् फलं सव्वः सर्व्वपत्रेण यत् फलम्
।

तुलस्यास्तद्दलार्द्धेन पुण्यं स्याद्विष्णुपूजने ॥
तुलसीगन्धमादाय यत्र गच्छति मारुतः ।
दिशो दश पुनात्याशु भूतग्रामांश्चतुर्व्विधान् ॥
तुलसीकाननोद्भूता छाया यत्र भवेन्मुने ! ।
तत्र श्राद्धं प्रदातव्यं पितॄणां तृप्तिहेतवे ॥
तुलसीवीजनिकरो यस्मिन् पतति वै मुने ! ।
तत् स्थानं परमं ज्ञेयं पितॄणां प्रीतिवर्द्धनम् ॥
यस्मिन् गृहे द्विजश्रेष्ठ ! तुलसीतलमृत्तिका ।
तत्रैव नोपसर्पन्ति भूतले यमकिङ्कराः ॥
तुलसीमृत्तिकालिप्तो यदि प्राणान् परित्यजेत्
।
यमेन नेक्षितुं शक्यो मुक्तः पापशतैरपि ॥
तुलसीमृत्तिकालिप्तं ललाटं यस्य दृश्यते ।
कुलं स्पृशति नो तस्य कलिर्मुनिवरोत्तम ! ॥
यः कश्चित्तुलसीमूले कार्त्तिके केशवप्रियः ।
दीपं ददाति विप्रेन्द्र ! स लभेद्वैष्णवं पदम् ॥
तुलसीकाननञ्चैव गृहे यस्यावतिष्ठते ।
तद्गृहं तीर्थभूतं हि नायान्ति यमकिङ्कराः ॥
दर्शनं नर्म्मदायास्तु गङ्गास्नानं तथैव च ।
तुलसीवनसं सर्गः सममेतत्त्रयं स्मृतम् ॥
रोपणात् पालनात् सेवाद्दर्शनात्
स्पर्शनान्नृणाम् ।
तुलसी दहते पापं वाङ्मनःकायसञ्चितम् ॥
तुलसीमञ्जरीभिर्यः कुर्य्याद्धरिहरार्च्चनम् ।
न स गर्भगृहं याति मुक्तिभागी भवेन्नरः ॥
पुष्कराद्यानि तीर्थानि गङ्गाद्याः सरितस्तथा
।
वासुदेवादयो देवा वसन्ति तुलसीदले ॥
तुलसीमञ्जरीयुक्तो यस्तु प्राणान् विमुञ्चति ।
यमो न वीक्षितुं शक्तो युक्तः पापशतैरपि ॥”
इति पाद्मोत्तरखण्डम् ॥ * ॥
“यत्रैकस्तुलसीवृक्षस्तिष्ठतिद्विजसत्तम ! ।
तत्रैव त्रिदशाः सर्व्वे ब्रह्मविष्णुशिवादयः ॥
केशवः पत्रमध्येषु पत्राग्रेषु प्रजापतिः ।
पत्रवृन्ते शिवस्तिष्ठेत् तुलस्याः सर्व्वदैव हि ॥
लक्ष्मीः सरस्वती चैव गायत्री चण्डिका तथा
।
शची चान्या देवपत्न्यस्तत्पुष्पेषु वसन्ति वै
॥
रजांसि तस्य यावन्ति दूरीभूतानि
जैमिने ! ।
तावत्कल्पसहस्राणि मोदते ब्रह्मणा सह
॥
यद्धर्म्मकर्म्म कुरुते मनुजः पृथिव्यां-
नारायणप्रियतमां तुलसीं विना च ।
तत् सर्व्वमेव विफलं भवति द्विजेन्द्र !
पद्मेक्षणोऽपि न हि तुष्यति देवदेवः ॥
यस्य स्यात् तुलसीपत्रं मुखे शिरसि
कर्णयोः ।
मृत्युकाले द्विजश्रेष्ठ ! तस्य स्वामी न
भास्करिः ॥”
इति पाद्मे क्रियायोगसारः ॥ * ॥
“स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु
दीक्षितः ।
तुलसीपत्रतोये च योऽभिषेकं समाचरेत् ॥
गवामयुतदानेन यत् फलं लभते नरः ।
तुलसीपत्रदानेन तत् फलं कार्त्तिके सति
॥
तुलसीतोयकणिकां मृत्युकाले च यो
लभेत् ।
रत्नयानं समारुह्य वैकुण्ठं स प्रयाति च
॥
त्रिकालं तुलसीपत्रं शुद्धं पर्य्युषितं सति ।
श्राद्धे व्रते वा दाने वा प्रतिष्ठायां सुरार्च्चने
॥
भूगतं तोयपतितं यद्दत्तं विष्णवे सति ।
शुद्धन्तु तुलसीपत्रं क्षालनादन्यकर्म्मणि
॥” * ॥
तुलसीचयननिषेधकालो यथा, --
“पूर्णिमायाममायाञ्च द्वादश्यां रविसंक्रमे ।
तैलाभ्यङ्गे च स्नातेन मध्याह्ने
निशिसन्ध्ययोः ॥
अशौचेऽशुचिकाले च रात्रिवासान्वितेऽपि
वा ।
तुलसीं ये च चिन्वन्ति ते छिन्दन्ति हरेः
शिरः ॥” * ॥
तुलसीस्पर्शनेन मिथ्याप्रतिज्ञायां
मिथ्याशपथे च
“सात्वतैस्तुलसीकाष्ठमाला कुञ्जसमुद्भवा
।
धार्य्या नित्यं प्रयत्नेन त्वेतद्भक्तस्य
लक्षणम् ॥
हरिभक्तस्य तुलसीकुञ्जकाष्ठसमुद्भवा ।
चिह्नार्थमात्मनो माला पुरा कृष्णेन
दर्शिता ॥”
इति पाद्मोत्तरखण्डम् ॥ * ॥
गणेशपूजने तुलसीनिषेधो यथा । तुलसीं
प्रति
गणेशवाक्यम् ।
“पुष्पाणां सारभूता त्वं भविष्यसि
मनोरमे ! ।
कलांशेन महाभागे ! स्वयं नारायणप्रिया
॥
प्रिया त्वं सर्व्वदेवानां कृष्णस्य च
विशेषतः ।
पूजा विमुक्तिदा नृणां मम त्याज्या च
सर्व्वदा ॥”
इति ब्रह्मवैवर्त्ते गणेशखण्डम् ॥ * ॥
तुलस्याः स्तवो यथा, --
नारायण उवाच ।
“वृन्दां वृन्दावनीं विश्वपूजितां
विश्वपावनीम् ।
पुष्पसारां नन्दिनीञ्च तुलसीं
कृष्णजीवनीम् ॥
एतन्नामाष्टकञ्चैतत् स्तोत्रं नानार्थसंयुतम्
।
यः पठेत्ताञ्च संपूज्य सोऽश्वमेधफलं
लभेत् ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥
महादेवाय तस्याः पत्रदानफलं यथा, --
“गयाश्राद्धफलं दातुः पितॄणां परितोषदम्
।
तत्फलं स्याच्छतगुणं तुलसीपत्रदानतः
॥”
इति बृहद्धर्म्मपुराणे १० अध्यायः ॥ * ॥
तस्यास्तन्मञ्जर्य्याश्च हरिहरपूजने
मुक्तिप्रदत्वं

इन्द्रोऽग्निः शमनश्चैव नैरृ तो वरुणस्तथा ।
पवनश्च कुवेरश्च तच्छाखायां वसन्त्यमी ॥
आदित्यादिग्रहाः सर्व्वे विश्वेदेवाश्च सर्व्वदा
।
वसवो मनवश्चैव तथा देवर्षयोऽखिलाः ॥
विद्याधराश्च गन्धर्व्वाः
सिद्धाश्चाप्सरसस्तथा।
तुलसीपत्रमाश्रित्य सर्व्वदा निवसन्ति वै ॥
चिन्वन्ति तृणजातीनि तुलसीमूलजानि वै ।
तद्देहस्था ब्रह्महत्याश्चिनोति तत्क्षणाद्धरिः ॥
ग्रीष्मकाले द्विजश्रेष्ठ ! सुगन्धैः शीतलैर्जलैः ।
तुलसीसेचनं कृत्वा नरो निर्व्वाणमाप्नुयात् ॥
चन्द्रातपं वा छत्रं वा तुलस्यै यस्तु यच्छति ।
विशेयतो निदाघेषु स मुक्तः सर्व्वपातकैः ॥
वैशाखेऽक्षतधाराभिरद्भिर्यस्तुलसीं जनः ।
सन्यथेत् सोऽश्वमेधस्य फलं प्राप्नोति
नित्यशः ॥
कदाचित्तुलसीं दुग्धैः सेचयेद्यो नरोत्तमः ।
तस्य वेश्मनि विप्रर्षे ! लक्ष्मीर्भवति निश्चला
॥
गोमयैस्तुलसीमूले यः कुर्य्यादनुलेपनम् ।
सम्मार्जनञ्च कुरुते तस्य पुण्यफलं शृणु ॥

दोषो यथा, --
"तुलसीं स्वकरे कृत्वा स्वीकारं यो न
रक्षति ।
स याति कालसूत्रञ्च यावच्चन्द्रदिवाकरौ
॥
करोति मिथ्याशपथं तुलस्या यो हि
मानवः ।
स याति कुम्भीपाकञ्च
यावदिन्द्राश्चतुर्द्दश ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ।
तुलसीपत्रचयने मन्त्रा यथा, --
"मातस्तुलसि
गोविन्दहृदयानन्दकारिणि! ।
नारायणस्य पूजार्थं चिनोमि त्वां
नमोऽस्तु ते ॥
कुसुमैः पारिजाताद्यैः सुगन्धैरपि केशवः
।
त्वया विना नैव तृप्तिं चिनोमि त्वामतः
शुभे ॥
त्वया विना महाभागे समस्तं कर्म्म
निष्फलम् ।
अतस्तुलसि देवि ! त्वां चिनोमि वरदा
भव ॥
चयनोद्भवदुःखं यद्देवि ! ते हृदि वर्त्तते ।
तत् क्षमस्व जगन्मातस्तुलसि ! त्वां
नमाम्यहम् ॥
कृताञ्जलिरिमान्मन्त्रान् पठित्वा वैष्णवो
जनः ।
करतालत्रयं दत्वा चिनुयात्तुलसीदलम् ॥
शनैः शनैस्तथाकारैश्चीयते तुलसीदलम्
।
यथा न कम्पते शाखा तुलस्या
द्विजसत्तम ! ॥
पत्राणां चयने विप्र ! भग्नशाखा यथा
भवेत् ।
तथा हृदि व्यथा विष्णोर्द्दीयते तुलसीपतेः
॥"
इति पाद्मे क्रियायोगसारः ॥ * ॥
तुलसीकाष्ठमालामाहात्म्यंयथा, --
"तुलसीकाष्ठनिर्म्माणमालांगृह्णन्ति ये
नराः ।

पाद्मे देवदूतविकुण्डलसंवादे ।
"तुलसीमञ्जरीभिर्य्यः
कुर्य्याद्धरिहरार्च्चनम् ।
न स गर्भगृहं याति मुक्तिभागी भवेन्नरः ॥"
इति श्रीहरिभक्तिविलासे ७ विलासः ॥ *
॥
तत्पत्रेण शक्तिपूजाविधिर्य्यथा, --
"वाजिदन्तकपत्रैश्च पुष्पौघैरपि
चण्डिकाम् ।
तुलसीकुसुमैः पत्रैरर्च्चयेच्छ्रीविवृद्धये ॥"
इति श्रीकालिकापुराणे ६८ अध्यायः ॥
* ॥
अथ तुलसीग्रहणविधिः । वायुपुराणे ।
"अस्नात्वा तुलसीं छित्त्वा यः पूजां
कुरुते नरः ।
सोऽपराधी भवेत् सत्यं तत् सर्व्वं निष्फलं
भवेत् ॥"
तत्रादौ मन्त्रः । स्कान्दे ।
"तुलस्यमृतजन्मासि सदां त्वं केशवप्रिया
।
केशवार्थे चिनोमि त्वां वरदा भव शोभने
॥
त्वदङ्गसम्भवैः पत्रैः पूजयामि यथा हरिम्
।
तथा कुरु पवित्राङ्गि कलौ
मलविनाशिनि ! ॥"
गारुडे च ।
"मोक्षैकहेतो धरणीप्रशस्ते
विष्णोः समस्तस्य गुरोः प्रियेति ।
आराधनार्थं वरमञ्जरीकं
लुनामि पत्रं तुलसि ! क्षमस्व ॥
इत्युक्त्वा तुलसीं नत्वा चित्वा
दक्षिणपाणिना ।
पत्राण्येकैकशो न्यस्येत् सत्पात्रे
मञ्जरीरपि ॥"
तन्माहात्म्यञ्च स्कान्दे ।
"मन्त्रेणानेन यः कुर्य्याद् गृहीत्वा
तुलसीदलम् ।
पूजनं वासुदेवस्य लक्षकोटिफलं लभेत्
॥"
किञ्च ।

| | | |
|---|---|---|
| | पदे पदेऽश्वमेधानां लभते निश्चितं फलम् ॥”<br>इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥ | “शालग्रामशिलार्च्चार्थं प्रत्यहं तलसीक्षितौ । |

तुलसीं ये विचिन्वन्ति धन्यास्ते करपल्लवाः
॥”
इति ॥ * ॥
“संक्रान्त्यादौ निषिद्धोऽपि तुलस्यवचयः
स्मृतः ।
परं श्रीविष्णुभक्तैस्तु द्वादश्यामेव नेष्यते ॥”
* ॥
अथ तुलस्यवचयनिषेधकालः । विष्णु
धर्म्मोत्तरे ।
“न छिन्द्यात् तुलसीं विप्रा द्वादश्यां वैष्णवः
क्वचित् ॥”
गारुडे ।
“भानुवारं विना दूर्व्वां तुलसीं द्वादशीं विना ।
जीवितस्याविनाशाय न विचित्वीत धर्म्मवित्
॥”
पाद्मे च ।
श्रीकृष्णसत्यासंवादीयकार्त्तिकमाहात्म्ये।
“द्वादश्यां तुलसीपत्रं धात्रीपत्रञ्च कार्त्तिके ।
लुनाति स नरो गच्छेन्निरयानतिगर्हितान् ॥”
अतएवोक्तम् ।
“देवार्थे तुलसीच्छेदो होमार्थे समिधान्तथा ।
इन्दूक्षये न दुष्येत गवार्थे तु तृणस्य च ॥
एवं कृत्वा महापूजामङ्गोपाङ्गादिकं प्रभोः ।
क्रमाद्यथा सम्प्रदायं तत्तत्स्थानेषु पूजयेत्
॥”
इति श्रीहरिभक्तिविलासे ७ षिलासः ॥ * ॥
अथ तुलसीविवाहः प्रतिष्ठाविधिश्च ।
श्रीवशिष्ठ उवाच ।
“विवाहं संप्रवक्ष्यामि तुलस्यास्तु यथाविधि
।
यथोक्तं पञ्चरात्रे वै ब्रह्मणा भाषितं पुरा ॥
आदावेव वनेऽवाप्य तुलसीं स्वगृहेऽपि वा ।
वर्षत्रयेण पूर्णेन ततो यजनमारभेत् ॥
सौम्यायने प्रकर्त्तव्यं गुरुशुक्रोदये तथा ।
अथवा कार्त्तिके मासि भीष्मपञ्चदिनेषु च ॥
वैवाहिकेषु ऋक्षेषु पूर्णिमायां विशेषतः ।
मण्डपं कारयेत्तत्र कुण्डवेदीं तथा पुनः ॥
शान्तिकञ्च प्रकर्त्तव्यं मातृणां स्थापनं तथा ।
मातृश्राद्धादिकं सर्व्वं विवाहवत् समाचरेत् ॥

सेनाय । वैकुण्ठाय । जनार्द्दनाय ।
मुकुन्दाय ।
अधोक्षजाय स्वाहा । इति होमः ॥
यजमानः सपत्नीको ह्यन्ये ये
गोत्रबान्धवाः ।
प्रदक्षिणाश्च कर्त्तव्याश्चत्वारो विष्णुना
सह ॥
तुलस्याः पाणिग्रहणे वेदिकायां विभावसौ
।
शतकुम्भं जपेत् सूक्तं पावमानीं विशेषतः
॥
तथैव शान्तिकाध्यायं नवसूक्तं तथैव च ।
जीवसूक्तं पुनर्ज्जप्ता तथा वैष्णवसंहिताम्
॥
शङ्खझल्लरिनिर्घोषैर्भेरीतूर्य्यस्य निस्वनैः ।
गायन्ते मङ्गला नार्य्यो माङ्गल्यं
विधिमाचरेत् ॥
दद्यात् पूर्णाहुतिं पश्चादभिषेकविधिं ततः
।
ब्राह्मणे वृषभं दद्यादाचार्य्यं परिधाप्य च ॥
गां पटञ्च तथा शय्यामाचार्य्याय प्रदापयेत्
।
ऋत्विग्भ्यो दापयेद्वस्त्राण्येषां दद्याच्च
दक्षि-
णाम् ॥
एवं प्रतिष्ठितां देवीं विष्णुना च समर्च्चयेत्
।
आजन्मोपार्ज्जितं पापं दर्शनेन प्रणश्यति
॥
रोपयेत्तुलसीं यस्तु सेवयेच्च प्रयत्नतः ।
प्रतिष्ठाप्य यथोक्तेन विष्णु ना सह मानवः
॥
स मोक्षं लभते जन्तुर्विष्णु लोकं
तथाक्षयम् ।
प्राप्नोति विपुलान् भोगान् विष्णुना सह
मोदते ॥
प्रतिष्ठा श्रीतुलस्यास्तु लिखिता विष्ण
यामले ॥”
इति श्रीहरिभक्तिविलासे २० विलासः ॥

जातस्य फलम् । वक्ता विद्यावरः
स्त्रीदुःखितः ।
इति जातकम् ॥
जन्मकालीनचन्द्राश्रितैतद्राशि-
फलम् ।
“वृषतुरङ्गगजक्रयविक्रयो
द्विजसुरार्च्चनदानमनाः पुमान् ।
शशिनि तौलिगते बहुदारभा-
ग्विभवसञ्चितचित्रितविक्रमः ॥”
इति कोष्ठीप्रदीपः ॥
तस्या उदये तन्नामकलग्नं भवति । तस्य
गणितप्राप्तपरिमाणं
दशव्यङ्गुलाधिकपञ्चाङ्गुल-
प्रभे देशे वर्त्तमानोनविंशायनांशे षट्त्रिंशत्
पलाधिकपञ्चदण्डाः । इति ज्योतिषम् ॥
तत्र
जातफलम् ।
“तुलालग्ने पुमान् जातः सुधीः
सत्कर्म्मतत्परः ।
विद्वान् सर्व्वकलाविज्ञो धनाढ्यो
जनपूजितः ॥”
इति कोष्ठीप्रदीपः ॥ * ॥
परीक्षाविशेषः । यथा नारदः ।
“ब्राह्मणस्य धटो देयः क्षत्त्रियस्य
हुताशनः ।
वैश्यस्य सलिलं देयं शूद्रस्य विषमेव तु ॥
साधारणः समस्तानां कोषः प्रोक्तो
मनीषिभिः ।
विषवर्ज्जं ब्राह्मणस्य सर्व्वेषान्तु तुला
स्मृता ॥” *
अथ तस्या उत्पत्तिविधिः । यज्ञियं वृक्षं
यूप-
वन्मन्त्रपूर्ब्बकं छित्त्वा लोकपालेभ्यः
प्रणम्य
पण्डितैः चतुर्हस्ता चतुरस्रा ऋज्वी तुला
कार्य्या
तत्र त्रिषु स्थानेषु बलयानि दातव्यानि ।
तत्र

ब्राह्मणांश्च शुचिस्नातान् वेदवेदाङ्गपारगान् ।
ब्रह्मा चादेशकश्चैव चत्वारश्च तथर्त्विजः ॥
वैष्णवेन विधानेन वर्द्धनीकलसं यजेत् ।
मण्डपं कारयेत्तत्र लक्ष्मीनारायणं शुभम् ॥
ग्रहयज्ञं पुरः कृत्वा मातणां यजनं तथा ।
कृत्वा नान्दीमुखं श्राद्धं सौवर्णं स्थापयेद्धरिम् ॥
कृत्वारोप्य च तुलसीं लग्ने त्वस्तमिते रवौ ।
वासः शतेन मन्त्रेण वस्त्रयुग्मेन वेष्टयेत् ॥
यदा वध्नेति मन्त्रेण कङ्कणं पाणिपल्लवे ।
कोऽदादिति च मन्त्रेण पाणिग्राहो विधीयते ॥
ततः कुण्डे समागत्य आचार्य्यः सहसा द्विजैः ।
आचार्य्यो वेदिकाकुण्डे जुहुयाच्च नवाहुतीः ॥
विवाहकर्म्मवत् सर्व्वं वैष्णवं देशिकोत्तमैः ।
कर्त्तव्यश्च ततो होमो विशेषाद्विधिपूर्ब्बकम् ॥”
ॐ नमो भगवते केशवाय नमः स्वाहा ।
नारायणाय स्वाहा । माधवाय । गोविन्दाय ।
विष्णवे । मधुसूदनाय । त्रिविक्रमाय । वाम-
नाय । श्रीधराय । हृषीकेशाय । पद्मनाभाय ।
दामोदराय । उपेन्द्राय । अनिरुद्धाय । अच्यु-
ताय । अनन्ताय । गदिने । चक्रिणे । विष्वक्-

**तुलसीद्वेषा**, स्त्री, (तुलसीं द्वेष्टि तुल्यगन्धत्वात् स्पर्द्धते इति । द्विष + अण् । ततष्टाप् ।) वर्व्वरी । इति रत्नमाला ॥ (वर्व्वरीशब्देऽस्या गुणादिकं ज्ञेयम् ॥)

**तुला**, स्त्री, (तोल्यतेऽनया । तुल उन्माने भिदा-द्यङ् । अतुलोपमाभ्यामिति निर्द्देशात् गुणा-भावः ।) सादृश्यम् । (यथा, रघुः । ८ । १५ ।
“नभसा निभृतेन्दूना तुला-
मुदितार्केण समारुरोह तत् ॥”)
मानम् । (यथा, पञ्चतन्त्रे । २ । ८४ ।
“सकृदपि दृष्ट्वा पुरुषं विबुधा जानन्ति सारतां तस्य ।
हस्ततुलयापि निपुणाः पलपरिमाणं विजानन्ति ॥”)
गृहाणां दारुबन्धाय पीठिका । पलशतम् । (यथा, अमरकोषे । २ । ९ । ८७ ।
“तुला स्त्रियां पलशतं भारः स्यात् विंशति-
स्तुला ॥”)
भाण्डम् । इति मेदिनी । ले, २५ ॥ मेषादि-द्वादशराश्यन्तर्गतसप्तमराशिः । तत्पर्य्यायः । यूकः २ युक् ३ धटः ४ तौली ५ तुलाभृत् ६ । इति ज्योतिषम् ॥ सा चित्राशेषपादद्वयस्वाती-समुदाययुक्तविशाखाप्रथमपादत्रयेण भवति । तदधिष्ठातृदेवता तुलाधारिपुरुषः । अस्याः शिरस उदयः नानावर्ण उष्णस्वभावः । सा पश्चिमदिकस्वामिनी वायुराशिः स्निग्धा चिक्कणा निःशब्दा वनचारिणी अल्पसन्ताना अल्पस्त्रीसङ्गा शूद्रवर्णा समानाङ्गा च । तत्र षड्हस्तौ स्तम्भौ कृत्वा हस्तद्वयव्यवधानेन दक्षिणोत्तरयोर्द्दिशोर्हस्तद्वयनिखननं कृत्वा पट्ट-धारककीलकाग्रस्तम्भयोरुपरि अन्तद्वयच्छिद्रं मध्यनिवेशितलौहाङ्कुशपट्टकं निधाय तत्पट्ट-कस्य मध्यस्थिताङ्कुशेन तुलामध्यबलयस्थलौहं संयुञ्ज्यात् । एवञ्च सति स्तम्भयोरन्तरतिर्य्यक् तुलादण्डस्तिष्ठति तुलाग्रस्थिताभ्यामायसकील-काभ्यां शिक्यद्वयरज्जुबन्धनं कुर्य्यात् । तुलायाः पार्श्वयोः प्राक्प्रत्यक्दिशोस्तोरणस्तम्भौ तुलातो दशाङ्गुलोच्छ्रायौ कार्य्यौ तोरणयोरुपरिसूत्र-संनद्धौ मृण्मयावधोमुखौ धटमस्तकचुम्बिनाव-वलम्बौ कार्य्यौ । तुलादण्डः पूर्ब्बपश्चिमयोर्धार्य्यः । पूर्ब्बशिक्ये शिलां तोलयेत् पश्चिमे कर्त्तारं तुलाया उपरि जलं देयं यदि जलं न प्लवते तदा तुला समा ज्ञेया ॥ * ॥ अथैतत्प्रयोगः । कृतोपवासः कृतस्नानादिः प्राड्विवाको ब्राह्मणः कार्य्यं पृच्छेत् निवेदितं विवेचयेत् । ततोऽभि-युक्तं तोलयित्वावतार्य्य धर्म्मावाहनादिकं कुर्य्यात् । ॐ तत् सदित्युच्चार्य्य ब्राह्मणत्रयं गन्धादिना पूजयित्वा तान् स्वस्तिपुण्याहमृद्धिं प्रत्येकं त्रिर्व्वाचयित्वा दिव्याङ्गभूतहोमार्थं ब्रह्म-

| | | |
|---|---|---|
| | | चतुष्टयं ऋत्विक्चतुष्टयञ्च पाद्यादिभिरभ्यर्च्च्य वृणुयात् । अशक्तावेकं ब्रह्माणमेकं ऋत्वि-जञ्च । ततस्तुलां सपताकां ध्वजालङ्कृतां भूमौ निधाय तस्यां प्राङ्मुखः प्राड्विवाकः पुष्पा क्षतमादाय ॐ भूर्भुवः स्वरित्युच्चार्य्य । एह्येहि भगवन् धर्म्म ! दिव्ये ह्यस्मिन् समाविश । |

सहितो लोकपालैश्च वस्वादित्यमरुद्गणैः ॥
इति मन्त्रेण धर्म्ममावाह्य इदमर्घ्यं ॐ धर्म्माय नमः इत्यादिप्रयोगेणार्घ्यपाद्याचमनीयमधुपर्का-चमनीयवस्त्रयज्ञोपवीताचमनीयमुकुटकटक-भूषणान्तं दत्त्वा तथैवार्घ्यादिभूषणान्तं प्रणवादि-नमोऽन्तेनस्वस्वनाम्ना पूर्ब्बस्यां इन्द्राय दक्षिणस्यां
यमाय पश्चिमे वरुणाय उत्तरस्यां कुवेराय आग्नेय्यां अग्नये नैरृत्यां निरृतये वायव्यां वायवे ऐशान्यां ईशानाय । इन्द्रस्य दक्षिणपार्श्वे अष्ट-वसुभ्यः प्रत्येकं नामभिः । तत्र धवाय ध्रुवाय सोमाय आपाय अनिलाय अनलाय प्रत्यूषाय प्रभासाय । इन्द्रेशानयोर्म्मध्ये तथा द्वादशादि-त्येभ्यः तत्र घात्रे अर्य्यम्णे मित्राय वरुणाय अंशवे भगाय इन्द्राय विवस्वते पूष्णे पर्ज्जन्याय त्वष्ट्रे विष्णवे । अग्निपश्चिमभागे तथैकादश-रुद्रेभ्यः तत्र वीरभद्राय शम्भवे गिरीशाय अजैकपदे अहिव्रध्नाय पिनाकिने अपराजिताय भुवनाधीश्वराय कपालिने स्थाणवे भवाय । यम-रक्षसोर्म्मध्ये तथा मातृभ्यः तत्र ब्राह्म्यै माहेश्वर्य्यै
कौमार्य्यै वैष्णव्यै वाराह्यै माहेन्द्र्यै चामुण्डायै निरृत्युत्तरे गणेशाय वरुणोत्तरे अष्टमरुद्भ्यः तत्र श्वसनाय स्पर्शनाय वायवे अनिलाय मारु-ताय प्राणाय प्राणेशाय जीवाय घटोत्तरभागे दुर्गायै पाद्यादिभूषणान्त दत्त्वा धर्म्माय गन्ध-पुष्पधूपदीपनैवेद्यानि पूर्ब्बवद्दत्त्वा इन्द्रादिदुर्गा-न्तेभ्यो गन्धादिकं दद्यात् । ततश्चतुर्द्दिक्षु चतुर्भि-
रृत्विग्भिश्चतुरोऽग्नीन् अशक्तावेकर्त्विजै-कमग्निं प्राड्विवाकः गृह्योक्तविधिना संस्थाप्य प्रणवपुटितां सव्याहृतिकां गायत्रीं स्वाहान्ता-मुच्चार्य्य घृतेन पायसेन समिद्भिर्म्मिलिताभिरष्टो-त्तरशतं अष्टाविंशतिं अष्टौ वा जुहुयात् ।
ततो दक्षिणां दद्यात् । एवं हवनान्तां देवपूजां विधाय शोध्यं कृतोपवासं आर्द्रवाससं पश्चिम-शिक्ये कृत्वा इष्टकांश्च पूर्ब्बशिक्ये कृत्वा उत्तोल्य
घटोपरि जलदानेन साम्यमवगम्य अवतारयेत् ।

तदेनं संशयादस्माद्धर्म्मतस्त्रातुमर्हसि ॥”
तुलाधारकञ्च नियमेदनेन ।
“ब्रह्मध्ना ये स्मृता लोका ये लोकाः कूटसाक्षिणः ।
तुलाधारस्य ते लोकास्तुलां धारयतो मृषा ॥”
शोध्यस्तु तुलामभिमन्त्रयेदनेन ।
त्वं तुले ! सत्यधामासि पुरा देवैर्विनिर्म्मिता ।
तत् सत्यं वद कल्याणि ! संशयान्मां विमोचय ॥
यद्यस्मिन् पापकृन्मातस्ततो मां त्वमधो नय ।
शुद्धश्चेद्गमयोद्‌र्ध्वं मां सर्व्वं वेत्सि कृताकृतम् ॥
ततः प्राड्विवाकः पूर्ब्बाननं तं पूर्ब्बवद्घटमारो-
पयेत् । आरोपितं मा कान्ते पक्षस्यान्ते पर्य्या-
काशे देशे स्वाप्सीः कान्तं वक्त्रं वृत्तं पूर्णं चन्द्रं
मत्वा रात्रौ चेत् । क्षुत्क्षामः प्राटंश्चेतश्चेतो
राहुः क्रूरः प्राद्यात्तस्माद्ध्वान्ते हर्म्मस्यान्ते शय्यै-
कान्ते कर्त्तव्या इत्यस्य पञ्चधा पाठकालस्तत्र
शुद्धाशुद्धज्ञानाय स्थापयेत् । ततः प्रतिमान-
द्रव्यादूद्‌र्ध्वावस्थाने शुद्धः ।
अधोऽवस्थाने त्वशुद्धः ।
समावस्थाने अल्पदोषः । सन्देहे पुनःपरीक्षा
देया । कक्षकीलकशिक्यपादाक्षादीनां दृष्ट-
कारणव्यतिरेकेण छेदे भङ्गे वाप्यशुद्धिमादि-

संक्रान्त्यां पौर्णमास्याञ्च द्वादशीष्वष्टकासु च ॥
यज्ञोत्सवविवाहेषु दुःस्वप्नाद्भुतदर्शने ।
द्रव्यब्राह्मणलाभो वा श्रद्धा वा यत्र जायते ॥”
तस्य देशो यथा, --
“तीर्थे वायतने गोष्ठकूपारामसरित्सु च ।
गृहे वाथ वने वापि तडागे रुचिरेऽथवा ॥
महादानानि देयानि संसारभयभीरुणा ॥”
अस्य विधानं यथा, --
“पुण्यां तिथिमथासाद्य कृत्वा ब्राह्मणवाचनम् ।
मण्डपं रचयेद्विद्वान् षोडश द्वादश वा करान् ॥
मण्डपं कारयेद्विद्वांश्चतुर्भद्रासनं बुधः ।
सप्तहस्ता भवेद्वेदी मध्ये पञ्चकराथ वा ॥
तन्मध्ये तोरणं कुर्य्यात् सारदारुमयं शुभम् ।
कुर्य्यात् कुण्डानि चत्वारि चतुर्द्दिक्षु विचक्षणः ॥”
तुलारोपणप्रस्तावे ।
“रश्मिभिस्तोरणाग्रे तु बन्धयेच्च विधानतः ।
सुमेखलायोनिसमायुक्तानि संपूर्णकुम्भानि सहासनानि ।
सुताम्रकुण्डद्वयसंयुतानि सयज्ञपात्राणि सहस्रुवाणि ॥
हस्तप्रमाणानि तिलाज्यपूर-पुष्पोपहाराणि सुशोभनानि ।
पूर्ब्बोत्तरे हस्तमिता च वेदी ग्रहादिदेवेश्वरपूजनाय ॥
अर्घ्यार्च्चनं ब्रह्मशिवाच्युतानां तत्रैव कार्य्यं फलवस्त्रमाल्यैः ।

ततः प्राड्विवाकः तद्दिनकज्जलमस्या विच्छेदा-
ङ्कादिशून्यां पङ्क्तिद्वयेन समसंख्याक्षरेण
आदित्यचन्द्रावनिलो नलश्च
द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये
धर्म्मोऽपि जानाति नरस्य वृत्तम् ॥
इति चतुश्चत्वारिंशदक्षरमन्त्रसमेतार्मभियुक्तार्थ-
करणाकरणरूपमिदमस्मैदत्तमिदमृणमस्मान्
मया न गृहीतमित्यादिरूपां प्रतिज्ञां लिपिपत्रे
विलिख्य तत् पत्रं शोध्य शिरोगतं कुर्य्यात् ।
ततः प्राड्विवाको धटमामन्त्रयेदेभिः ।
त्वं घटो ब्रह्मणा मृष्टः परीक्षार्थं दुरात्मनाम् ।
घकाराद्धर्म्ममूर्त्तिस्त्वं टकारात् कुटिलं नरम् ॥
धृतो घारयते यस्माद्धटस्तेनाभिधीयते ।
त्वं वेत्सि सर्व्वभूतानां पापानि सुकृतानि च ॥
त्वमेव देव ! जानीषे न विदुर्यानि मानवाः ।
व्यवहाराभिशस्तोऽयंमानुषः शुद्धिमिच्छति ॥

शेत् । ततः पुरोहिताचार्य्यादीन्
दक्षिणादिभि-
स्तोषयेत् ।” इति दिव्यतत्त्वम् ॥

**तुलाकोटिः**, स्त्री, (तुलां सादृश्यं कोटयते इति ।

कुट + इन् ।) नूपुरः । (यथा, माघे ।
१२ । ४४ ।
“लीलाचलत्स्त्रीचरणारुणोत्पल-
स्खलत्तुलाकोटिनिनादकोमलः ॥”
तुलया मानेन कुटतीति । कुट कौटिल्ये
+
इन् ।) मानभेदः ॥ अर्वुदः । इति
हेमचन्द्रः ।
३ । ३२९ ॥

**तुलाकोटी**, स्त्री, (तुलाकोटि + कृदिकारादिति वा

ङीष् ।) तुलाकोटिः । इत्यमरटीकायां
भरतः ॥

**तुलाकोषः**, पुं, (तुलायाः परिमाणस्य कोष इव ।)

तुलापरीक्षा । इति मिताक्षरा ॥

**तुलाधारः**, पुं, (तुलां धरति धारयति वा । तुला +

धृ + “कर्म्मण्यण् ।” ३ । २ । १ ।
इत्यण् ।)
तुलाराशिः । बणिजि, त्रि । इति मेदिनी
। रे,
२६४ ॥ तुलागुणः । इति हेमचन्द्रः ॥
(स्वनाम-
ख्यातो बणिग्धर्म्मा पुरुषविशेषः । यथा,
महा-
भारते । १२ । २६० । ८ ।
“तुलाधारो बणिग्धर्म्मा वाराणस्यां
महायशाः ।
सोऽप्येवं नार्हते वक्तुं यथा त्वं
द्बिजसत्तम ! ॥”)

**तुलापुरुषदानं**, क्ली, (तुलापुरुषस्य
तुलोन्मितपुरुष-

भारसमपरिमितद्रव्यस्यदानम् । यद्वा,
तुला-
पुरुषविधिना दानम् ।)
षोडशमहादानान्तर्गत-
दानविशेषः । यथा, --

ब्रह्मशिवाच्युतानां प्रतिमासु पूजा
कार्य्या इत-
रेषां स्थण्डिले कार्य्या ।
लोकेशवर्णाः परितः पताका-
मध्ये ध्वजं किङ्किणिकायुतं स्यात् ॥
द्वारेषु कार्य्याणि च तोरणानि
चत्वार्य्यपि क्षीरवनस्पतीनाम् ।
द्वारेषु कुम्भद्वयमत्र कार्य्यं
स्नग्गन्धधूपाम्बररत्नयुक्तम् ॥ * ॥
यत्पूर्ब्बं सारदारुमयं कुर्य्यादित्युक्तं
तस्येदानी-
मनुष्ठानमाह ।
सालेङ्गुदीचन्दनदेवदारु-
श्रीपर्णिविल्वप्रियकाञ्चनोत्थम् ।
स्तम्भद्वयं हस्तयुगावखातं
कृत्वा दृढं पञ्चकरोच्छ्रितं तत् ॥
तदन्तरं हस्तचतुष्टयं स्या-
दथोत्तरायाञ्च तदङ्गमेव ॥ * ॥
चतुर्हस्ता तुला कार्य्या पादौ कार्य्यौ
तथाविधौ ।
अन्तरन्तु तयोर्हस्तौ भवेदध्यर्द्धमेव च
॥
समानजातिश्च तुलावलम्ब्या
हैमेन मध्ये पुरुषेण युक्ता ।
हैमेन पुरुषेणेति
सुवर्णनिर्म्मितबासुदेवाकृति-
नेति बोद्धव्यम् ।
दैर्घ्येण सा हस्तचतुष्टयं स्यात्
पूर्णत्वमस्यास्तु दशाङ्गुली स्यात् ॥
सुवर्णपत्राभरणा च कार्य्या
सुलोहपाशद्वयशृङ्खलाभिः ।

|  | “आद्यन्तु सर्व्वदानानां<br>तुलापुरुषसंज्ञितम् ॥”<br>तस्य कालो यथा, --<br>“नोक्तानि यानि गुह्यानि महादानानि षोडश ।<br>तानि ते संप्रवक्ष्यामि यथावदनुपूर्ब्बशः ॥<br>तुलापुरुषयागोऽयं येषामादौ विधीयते ।<br>अयने विषुवे चैव व्यतीपाते दिनक्षये ॥<br>युगादिषूपरागेषु तथा मन्वन्तरादिषु । |  |
|---|---|---|

युता सुवर्णेन तु रत्नमाला
विभूषिता माल्यविलेपनाढ्या ॥
चक्रं लिखेद्वारिजगर्भयुक्तं
नानारजोभिर्भुवि कीर्णपुष्पम् ।
वितानकञ्चोपरि पञ्चवर्णं
संस्थापयेत् पञ्चपताकशोभम् ॥
इति तुलानिर्म्माणमुक्तम् ॥ * ॥
अथ द्विजा वेदविदश्च कार्य्याः
सुवामवेशान्वयशीलयुक्ताः ।
विधानदक्षाः पटवोऽनुकूला
ये चार्य्यदेशप्रभवा द्विजेन्द्राः ॥
गुरुश्च वेदाङ्गविदार्य्यदेश-
समुद्भवः शीलकुलाभिरूपः ।
कार्य्यः पुराणाभिरतोऽतिदक्षः
प्रसन्नगम्भीरसरस्वतीकः ॥
पूर्ब्बेण ऋग्वेदविदौ यथास्तां
यजुर्व्विदौ दक्षिणतश्च शस्तौ ।
स्थाप्यौ द्विजौ सामविदौ च पश्चा-
दथर्व्वणावुत्तरतश्च कार्य्यौ ॥
विनायकादिग्रहलोकपाल-
वस्वष्टकादित्यमरुद्गणानाम्।
ब्रह्माच्युतेशानवनस्पतीनां
स्वमन्त्रतो होमचतुष्टयं स्यात् ॥
जप्यानि सूक्तानि तथैव चैषा-
मनुक्रमेणापि यथा स्वरूपम् ।
अभ्यर्च्चयेल्लोकपतीन् क्रमेण
मन्त्रैरमीभिर्यजमानयुक्तः ॥
इत्यावाह्य सुरान्दद्यादृत्विग्भ्यो
हेमभूषणम् ।
कुण्डलानि च हैमानि सूत्राणि कटकानि
च ॥
द्विगुणं गुरवे दद्याद्भूषणाच्छादनादिकम् ।
जपेयुः शान्तिकाध्यायं जापकाः
सर्व्वतो दिशम् ॥
उपोषितास्ततः सर्व्वे
कृत्वैवमधिवासनम् ।
आदावन्ते च मध्ये च
कुर्य्याद्‌ब्राह्मणवाचनम् ॥
ततो मङ्गलशब्देन स्नापितो वेदपुङ्गवैः ।
सा स्यादभ्यधिकं यावत् काञ्चनं
चातिनिर्म्मलम्
पुष्टिकामस्तु कुर्व्वीत भूमिसंस्थन्नरेश्वर ! ॥
क्षणमात्रं ततः स्थित्वा पुनरेतदुदीरयेत् ।
नमस्ते साक्षीभूतानां साक्षीभूते सनातनि ! ॥
पितामहेन देवि ! त्वं निर्म्मिता परमेष्ठिना ।
त्वया धृतं जगत् सर्व्वं सहस्थावरजङ्गमम् ॥
सर्व्वभूतात्मभूतस्थे नमस्ते विश्वधारिणि ।
ततोऽवतीर्य्य गुरवे पूर्ब्बमर्द्धं निवेदयेत् ॥
प्राप्य तेषामनुज्ञाञ्च तथान्येभ्योऽपि दापयेत् ।
दीनानाथविशिष्टादीन् पूजयेत् ब्राह्मणैः सह ॥
न चिरं घारयेद्गेहे हेम संप्रोक्षितं बुधः ।
तिष्ठद्भयावहं यस्माच्छोकव्याधिकरं नृणाम् ॥
शीघ्रं परस्वीकरणात् श्रेयः प्राप्नोति
पुष्कलम् ॥”
तस्य द्रव्यविशेषेण फलं यथा, --
“अष्टानामपि धातूनां यस्तुलां कुरुते नरः ।
सर्व्वपापैः प्रमुच्येत मनोवाक्कायसम्भवैः ॥
यावद्धातु स्थितं तत्र तावत् कोटिशतानि च ।
मोदते तत्र वर्षाणां स्वर्गलोके न संशयः ॥
अथ मानुष्यमाक्रम्य कदाचित् कालपर्य्यये ।
धनधान्यसमृद्धो वै जायते महतां कुले ॥
आत्मनस्तु तुलां कृत्वा सुवर्णं यः प्रयच्छति
।
स तारयेत् पितृगणान् दश पूर्ब्बान् दशापरान्
॥
आत्मनस्तु तथा तद्वत् फलभाग्जायते नरः ।
जन्मप्रभृति यत् पापं मातृकं पैतृकं तथा ॥
सुवर्णदानात् दारिद्र्यं न पश्यति कदाचन ।
रजतस्य तुलां कृत्वा सुकृती यः प्रयच्छति ॥
तावद्वर्षप्रमाणेन निर्म्मलः स्वर्गभाग्भवेत् ।
अनन्तरं भवेद्राजा पृथिव्यां नात्र संशयः ॥
सुवर्णहारी कुष्ठी वा सर्व्वव्याधियुतोऽपि वा ।
ताम्रस्य तु तुलां कृत्वा मुच्यते नात्र संशयः ॥
स तु वर्षसहस्रं वै स्वर्गलोके महीयते ।
कांस्यस्य तु तुलां कृत्वा विप्रेभ्यो यः
प्रयच्छति ॥
स तु इन्द्रपदं प्राप्य ऊर्व्वश्या सह मोदते ।
कर्म्मक्षयादिह पुनर्भुवि राजराजो
भूपालमौलिमणिराजितपादपीठः ।
श्रद्धान्वितो भवति यज्ञसहस्रयाजी
दीप्तप्रतापजितसर्व्वमहीपलोकः ॥
यो दीप्यमानमपि पश्यति तन्नियुक्तः
कालान्तरे स्मरति वाचयतीह लोके ।
यो वा शृणोति पठतीन्द्रसमानरूपः
प्राप्नोति वासवपुरं परदेवजुष्टम् ॥”
इति दानसागरः ॥

**तुलावीजं**, क्ली, (तुलायास्तोलनस्य वीजं मूलम् । यद्वा, तुलायै परिमाणाय वीजम् ।) गुञ्जा । इति त्रिकाण्डशेषः ॥

**तुलिः**, स्त्री, (तुरिः । रस्य लः ।) तुरी । इति शब्दरत्नावली ॥ तूलिका । इत्यमरटीकासार-सुन्दरी ॥

**तुलिका**, स्त्री, (तोलयति सादृश्यं गच्छतीति । तुल + बाहुलकात् इकन् । स च कित् ।) खञ्ज-निका । इति त्रिकाण्डशेषः ॥

**तुलिनी**, स्त्री, (तूलमस्ति फलेऽस्याः । तुल + इनिः । ङीप् । पृषो ह्रस्वः ।) शाल्मलिः । इति रत्नमाला ॥

**तुलिफला**, स्त्री, (तूलि तूलयुक्तं फलं यस्याः । पृषो-दरादित्वात् ह्रस्वः ।) शाल्मलिः । इति रत्न-माला ॥

**तुली**, स्त्री, (तुरी + रस्य लः ।) तुरी । इति शब्दरत्नावली ॥

**तुल्यः**, त्रि, (तुलया सम्मितः । “नौवयोधर्म्मेति ।” ४ । ४ । ९१ । इति यत् ।) सादृश्ययुक्तः । तत्-

त्रिः प्रदक्षिणमावृत्य गृहीतकुसुमाञ्जलिः ॥
शुक्लमाल्याम्बरो भूत्वा तां तुलामभिमन्त्रयेत् ।
नमस्ते सर्व्वदेवानां शक्तिस्त्वं शक्तिमास्थिता ।
साक्षीभूता जगद्धात्रा निर्म्मिता विश्वयोनिना ॥
एकतः सर्व्वसत्यानि तथा भूतशतानि च ।
धर्म्माधर्म्मकृतां मध्ये स्थापितासि जगद्धिते ॥
त्वं तुले ! सर्व्वभूतानां प्रमाणमिह कीर्त्तिता ।
मां तोलयन्ती संसारादुद्धरस्व नमोऽस्तु ते ॥
योऽस्य तत्त्वाधिपो देवः पुरुषः पञ्चविंशकः ।
स एवाधिष्ठितो देवि ! त्वयि तस्मान्नमोऽस्तुते ॥
नमो नमस्ते गोविन्द ! तुलापुरुषसंज्ञक ! ।
त्वं हरे ! तारयस्वास्मानस्मात् संसारसागरात् ॥
पुण्यं कालमथासाद्य कृत्वाधिवासनं पुनः ।
षुनः प्रदक्षिणं कृत्वा तां तुलामारुहेद्बुधः ॥
सखड्गचर्म्मः कवची सर्व्वाभरणभूषितः ।
धर्म्मराजमथादाय हैमं सूर्य्येण संयुतम् ॥
कराभ्यां मृदुमुष्टिभ्यामास्ते पश्यन् हरेर्मुखम् ।
ततोऽपरे तुलाभागे न्यसेयुर्द्विजपुङ्गवाः ॥
आयसस्य तुलां कृत्वा दाता रत्नाधिपो भवेत् ॥
लभते ह्युत्तमस्थानं बलवान् जायते सदा ।
रैत्यस्य तु तुलां कृत्वा यो ददाति द्विजातये ॥
सोऽप्सरःशतसंकीर्णे विमाने दिवि मोदते ।
सीसकस्य तुलां कृत्वा यो ददातीह मानवः ॥
स गन्धर्व्वपदं गच्छेत् नानाभरणभूषितः ।
रङ्गस्य तु तुलां कृत्वा विप्रेभ्यो यः प्रयच्छति ॥
विमुक्तः सर्व्वपापेभ्यश्चन्द्रसायुज्यमाप्नुयात् ।
घृतस्य तु तुलां कृत्वा ये प्रयच्छन्ति मानवाः ॥
तेजस्विनोऽभिजायन्ते गोभिश्च चिरजीविनः ।
तैलस्य तु तुलां कृत्वा यो वै दद्याद् द्विजा-तये ॥
अरागित्वं सुखित्वं वै आयुष्मानपि जायते ।
अन्नदः सर्व्वसौभाग्यं सर्व्वान् कामान् मधुप्रदः ॥
अनेन विधिना यस्तु तुलापुरुषमाचरेत् ।
प्रतिलोकाधिपस्थाने प्रतिमन्वन्तरं वसेत् ॥
विमानेनार्कवर्णेन किङ्किणीजालमालिना ।
पूज्यमानोऽप्सरोभिश्च ततो विष्णुपुरं व्रजेत् ॥
कल्पकोटिशतं यावत्तस्मिल्लोके महीयते ॥
पर्य्यायः । समः २ सदृक्षः ३ सदृशः ४ सदृक् ५
साधारणः ६ समानः ७ । इत्यमरः । २ । १० । ३७ ॥
सधर्म्मः ८ सम्मितः ९ स्वरूपः १० । इति जटा-
धरः ॥ (यथा, पञ्चतन्त्रे । १ । २७८ ।
"तुल्यार्थं तुल्यसामर्थ्यं मर्म्मज्ञं व्यवसायिनम् ।
अर्द्धराज्यहरं भृत्यं यो न हन्यात् स हन्यते ॥")
उत्तरपदस्थास्तुल्यवाचकायथा । निभः १
सङ्काशः २ नीकाशः ३ प्रतीकाशः ४ उपमा ५ ।
इत्यमरः । २ । १० । ३८ ॥ भूतः ६ रूपः ७
कल्पः ८ । इति भरतः ॥ प्रभः ९ । इति शब्द-
रत्नावली ॥ (पुं, स्वनामख्यातो गन्धर्व्वविशेषः ।
यथा, महाभारते । १ । १०१ । ७ ।
"गन्धर्व्वराजो बलवांस्तुल्यनामाभ्ययात्तदा ॥")

**तुल्यपानं**, क्ली, (तुल्यैरात्मीयजनैः सह पानम् ।)
आत्मीयेन जनेन सह मिलित्वा एककाले कृतं
पानम् । तत्पर्य्यायः । सपीतिः २ । इत्यमरः ।
२ । ९ । ५५ ॥

**तुवरः**, पुं क्ली, (तवति हिनस्ति रोगानिनि ।
तु + बाहुलकात् ष्वरच्प्रत्ययेन साधुः ।) कषाय-
रसः । इत्यमरः । १ । ५ । ९ ॥ त्रि, कषाययुक्तः ।
(यथा, सुश्रुते १ । ४५ ।
"नातिसान्द्रद्रवं तक्रं स्वाद्वम्लं तुवरं रसे ॥")
श्मश्रुहीनः । इत्युणादिकोषः ॥

**तुवरथावनालः**, पुं, (तुवरः कषायो यावनालः ।)

यावनालः ३ रक्तयावनालः ४ लोहितकुस्तुम्बुरु-
धान्यम् ५ । अस्य गुणाः । कषायत्वम् । उष्ण-
त्वम् । विरेचकत्वम् । संग्राहित्वम् । वातशमन-
त्वम् । विदाहित्वम् । शोषकारित्वञ्च । इति
राजनिर्घण्टः ॥

**तुवरिका**, स्त्री, (तुवरः कषायरसोऽस्त्यस्याः ।
तुवर + ठन् ।) सुराष्ट्रजमृत्तिका । इत्यमरः ।
२ । ४ । १३१ ॥ (तुवर्य्येव । तुवरी + स्वार्थे
कन् ह्रस्वश्च ।) आढकी । इति भरतः ॥

**तुवरी**, स्त्री, (तुवर + षित्त्वात् ङीष् ।) आढकी ।
(यथा, वैद्यकरत्नमालायाम् ।
"आढकी तुवरी ज्ञेया ॥"
वर्व्वरी तुलसी । तत्पर्य्यायाश्च यथा, --
"वर्व्वरी तुवरी तुङ्गी खरपुष्पाजगन्धिका ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
सौराष्ट्रमृत्तिका । तत्पर्य्यायः । मृत् २ सौराष्ट्री ३
मृत्स्ना ४ आसङ्गः ५ मसी ६ सुराष्ट्रजा ७
मृत्तालकम् ८ काली ९ मृत्तिका १० सुर-
मृत्तिका ११ स्तुत्या १२ काक्षी १३ सुजाता १४ ।
अस्या गुणाः । तिक्तत्वम् । कटुत्वम् । कषाय-
त्वम् । उष्णत्वम् । लेखनत्वम् । चक्षुष्यत्वम् ।

**तुषसारः**, पुं, (तुषं सरति अनुसरतीति । सृ +
अण् । तुषपुञ्जाभ्यन्तरे क्रमशः सञ्चारादस्य
तथात्वम् ।) अग्निः । इति शब्दमाला ॥

**तुषानलः**, पुं, (तुषस्यानलः ।) तुषाग्निः । तत्-
पर्य्यायः । कुकूलः २ । इति हेमचन्द्रः । ४ ।
१६७ ॥
(यथा, धूर्त्तसमागमे ।
"तुषानलकणप्रायाश्च भूरेणवः ॥")

**तुषारः**, पुं, (तुष्यत्यनेन शस्यादिरिति । तुष तुष्टौ
+ "तुषारादयश्च ।" उणां ३ । १३९ । इति
आरन् स च कित् ।) हिमम् । (यथा, ऋतु-
संहारे । ४ । १ ।
"विलीनपद्मः प्रपतत्तुषारो
हेमन्तकालः समुपागतः प्रिये ! ॥"
तौषारलक्षणगुणाश्च यथा, --
"अपि नद्याः समुद्रान्ते वह्निरापस्तदुद्भवाः ।
धूमावयवनिर्मुक्तास्तुषाराख्यास्तु ताः स्मृताः ॥
अपि नद्याः समुद्रान्ते वह्निः नदीमारभ्य समुद्र-
पर्य्यन्ते वह्निरास्ते तदुद्भवाः । वह्निभवा धूमा-
वयवनिर्मुक्ता धूमांशरहिताः । आपस्तुषा-
राख्याः । तुष इति लोके । तुषार इति च ।
अपथ्याः प्राणिनां प्रायः भूरुहाणान्तु न हिताः ।
तुषाराम्बु हिमं रूक्षं स्याद्वातलमपित्तलम् ।
कफोरुस्तम्भकण्ठाग्निमेहगण्डादिरोगनुत् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे द्बितीये भागे ॥)
देशभेदः । (तद्देशोद्भवे, पुं भूम्नि । यथा,
मात्स्ये । १२० । ४५ ।
"तुषारान् वर्वरान् कारान् पह्नवान् पारदान्
शकान् ॥")
शीकरः । हिमभेदः । इति हेमचन्द्रः । ६ । २१ ॥
(यथा, माघे । १ । १५ ।
"न यावदेतावुदपश्यदुत्थितौ
जनस्तुषाराञ्जनपर्व्वताविव ॥")
कर्पूरभेदः । इति राजनिर्घण्टः ॥ शीतले, त्रि ।
यथा, नैषधे । ३ । ९३ ।
"अपां हि तृप्ताय न वारिधारा
स्वादुः सुगन्धिः स्वदते तुषारा ॥"

**तुषितः**, पुं, (तुष्यतीति । तुष तुष्टौ + बाहुलकात्
आगच्छत द्रुतं देवा अदितिं संप्रविश्य वै ।
मन्वन्तरे प्रसूयामस्तन्नः श्रेयो भविष्यति ॥
एवमुक्त्वा तु ते सर्व्वे चाक्षुषस्यान्तरे मनोः ।
मारीचात् कश्यपात् जातास्तेऽदित्या दक्षकन्यया ।
तत्र विष्णुश्च शक्रश्च जज्ञाते पुनरेव च ।
अर्य्यमा चैव धाता च त्वष्टा पूषा तथैव च ॥
विवस्वान् सविता चैव मित्रो वरुण एव च ।
अंशो भगश्चादितिजा आदित्या द्वादश स्मृताः ॥
चाक्षुषष्यान्तरे पूर्ब्बमासन् ये तुषिताः सुराः ।
वैवस्वतेऽन्तरे ते वै आदित्या द्वादश स्मृताः ॥"
तथा च मत्स्यपुराणे । ६ । ३ -- ४ ।
"तुषिता नाम ये देवाश्चाक्षुषस्यान्तरे मनोः ।
वैवस्वतेऽन्तरे चैते आदित्या द्वादश स्मृताः ॥
इन्द्रो धाता भगस्त्वष्टा मित्रोऽथ वरुणो यमः ।
विवस्वान् सविता पूषा अंशुमान् विष्णुरेव च ॥"
तथा, भागवते । ४ । १ । ७ ।
"तोषः प्रतोषः सन्तोषो भद्रः शान्तिरिडस्पतिः ।
इध्मः कविर्व्विभुः स्वाहा सुदेवो रोचनो द्बिषट् ।
तुषिता नाम ते देवा आसन् सायम्भुवान्तरे ॥")

**तुषोत्थं**, क्ली, (तुषादुत्तीष्ठतीति । उत् + स्था +
कः ।) तुषोदकम् । इति राजनिर्घण्टः ॥

**तुषोदकं**, क्ली, (तुषादुत्थितमुदकम् ।) काञ्जि-

ग्राहित्वम् । छर्दिपित्तजृम्भानाशित्वञ्च । इति
राजनिर्घण्टः ॥
"तुवरी ग्राहिणी शीता लघ्वी कफविषास्रजित् ।
तीक्ष्णोष्णा वह्निदा कण्डूकुष्ठकोठकृमिप्रणुत् ॥"
इति भावप्लकाशः ॥

**तुवरीशिम्बः**, पुं, (तुवरी आढकीव शिम्बः ।
तुवरीसदृशत्वात् तथात्वम् । यद्वा, तुवर्य्या इव
शिम्बा फलत्वक् यस्य ।) चक्रमर्द्दकवृक्षः । इति
शब्दचन्द्रिका ॥

**तुविः**, स्त्री, तुम्बी । इति शब्दमाला ॥ (बहु-
शब्दार्थः । इति निघण्टुः । ३ । १ ॥ "तवति-
वृद्ध्यर्थः सौत्रो धातुः । 'अच इः ।' उणां
४ । १३८ । इति इः । वृद्धिर्हि बहुः ।" इति
तट्टीका ॥ "उरु । तुवि । पुरु । भूरि । शश्वत् ।
विश्वम् । परीणसा । व्यानशिः । शतम् । सह-
स्रम् । सलिलम् । कुविदिति द्वादश बहु-
नामानि ॥" इति निघण्टुः । ३ । १ ॥ यथा,
ऋग्वेदे । ३ । ३० ।
"तुविकूर्म्मिरृधावान् ॥")

**तुष**, ऌ य औ ञि तुष्टौ । इति कविकल्पद्रुमः ॥
(दिवां-परं-अकं-अनिट् ।) ऌ, अतुषत् । य,
तुष्यति । औ, तोष्टा । ञि, तुष्टोऽस्ति । इति
दुर्गादासः ॥

**तुषः**, पुं, (तुष + "इगुपधज्ञेति ।" ३ । १ । १३५ ।
कितच् । यद्वा, तुष + क्विप् । तुट् सन्तोषो
ऽस्य जातः । तारकादित्वात् इतच् ।) देव-
गणविशेषः । इत्यमरः । १ । १ । १० ॥ ते
षट्त्रिंशत् स्मृताः । इति भरतः ॥ केषाञ्चिन्मते
द्वादश । ते तु मन्वन्तरभेदे विभिन्ननामानः ।
यथा, --
"प्राणापानसमानाश्च उदानो व्यान एव च ।
चक्षुः श्रोत्ररसा घ्राणस्पर्शौ बुद्धिर्म्मनस्तथा ।
द्वादशैते तु तुषिता देवाः स्वारोचिषेऽन्तरे ॥"
इति सारसुन्दरी ॥
(यथाच विष्णुपुराणे । १ । १५ । १२७-१३३ ।
"पूर्व्वमन्वन्तरे श्रेष्ठा द्वादशासन् सुरोत्तमाः ।
तुषिता नाम तेऽन्योन्यमूचुर्वैवस्वतेऽन्तरे ॥
उपस्थितेऽतियशसश्चाक्षुषस्यान्तरेमनोः ।
समवायीकृताः सर्व्वे समागम्य परस्परम् ॥
कम् । इति हारावली । ११५ ॥ काञ्जिक-
भेदः । अस्य लक्षणं यथा, --
"तुषोदकं यवैरामैः सतुषैः शकलीकृतैः ॥"
यवैरुदकसहितैः सन्धानवर्गोक्तत्वात् ॥
अस्य गुणाः । दीपनत्वम् हृद्यत्वम् । पाण्डु-
क्रिमिगदवस्तिशूलनाशित्वम् । तीक्ष्णत्वम् ।
उष्णत्वम् । पाचनत्वम् । पित्तरक्तकारित्वञ्च ।
इति भावप्रकाशः ॥ (यथाच ।
"तुषोदकं वातहरं प्रभेदि
प्रकोपयेद्रक्तपित्तं सदैव ।
विपाचनं स्याज्जरणं कृमिघ्न-
मजीर्णहन्तृ कटुकं विपाके ॥"
इति हारीते प्रथमे स्थानेऽष्टमेऽध्याये ॥)

**तुष्टः**, त्रि, (तुष + कर्त्तरि क्तः ।) तोषप्राप्तः ।
यथा, पुराणे ।
"तस्मिंस्तुष्टे जगत्तुष्टं प्रीणिते प्रीणितं जगत् ॥"
(यथाच हितोपदेशे ।
"सर्व्वा एवापदस्तस्य यस्य तुष्ट न मानसम् ॥")

**तुष्टिः**, स्त्री, (तुष + भावे क्तिन् ।) तोषः । (यथा,
मनुः । २ । ६ ।
"वेदोऽखिलो धर्म्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥")
अधिगतार्थादन्यत्र तुच्छत्वबुद्धिः । इति चण्डी-
टीकायां नागोजीभट्टः ॥ (सा च नवविधा ।
इति सांख्याचार्य्याः ॥ तथाचोक्तम् ।
"आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकाल-
भाग्याख्याः ।

| | | |
|---|---|---|
| इति कः ।) धान्यत्वक् । (यथा, प्रबोधचन्द्रो-<br>दये द्वितीयाङ्के ।<br>“ब्रीहीन् जिहासति<br>सितोत्तमतण्डुलाढ्यान्<br>को नाम भोस्तुषकणोपहितान्<br>हितार्थी ॥”)<br>विभीतकवृक्षः । इत्यमरः । २ । ४ ।<br>५८ ॥<br>**तुषग्रहः**, पुं, (तुषेण गृह्यते इति । ग्रह + कर्म्मणि<br>अप् ।) अग्निः । इति त्रिकाण्डशेषः ॥ | | वाह्याविषयोपरमात् पञ्च नव<br>तुष्टयोऽभिमताः ॥”<br>इयमेव पुराणमते दक्षस्य प्रजापतेः<br>कन्या<br>धर्म्मस्य पत्नी च । यथा, मार्कण्डेये ।<br>५० । १९ । २१ । |

“प्रसूत्याञ्च तथा दक्षश्चतस्रो
विंशतिस्तथा ।
ससर्ज्ज कन्यास्तासाञ्च
सम्यङ्नामानि मे शृणु ॥
श्रद्धा लक्ष्मीर्धृतिस्तुष्टिः पुष्टिर्मेधा
क्रिया तथा ।
बुद्धिर्लज्जा वपुः शान्तिः सिद्धिः
कीर्त्तिस्त्रयो-
दशी ॥
पत्न्यर्थे प्रतिजग्राह धर्म्मो दाक्षायणीः
प्रभुः ॥”)
मातृकाविशेषः । इति भवदेवभट्टः ॥
(शक्ति-
विशेषः । यथा, देवीभागवते । १ । १५
। ६१ ।
“तुष्टिः पुष्टिः क्षमा लज्जा जृम्भा तन्द्रा
च शक्तयः ।
संस्थिताः सर्व्वतः पार्श्वे महादेव्याः
पृथक्
पृथक् ॥”)

**तुष्टः**, पुं, (तुष + बाहुलकात् तुक् ।) कर्ण-

मणिः । इति शब्दचन्द्रिका ॥

**तुस**, ध्वाने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-

अकं-सेट् ।) तोषति । इति दुर्गादासः
॥

**तुसः**, पुं, (तुषः । पृषोदरादित्वात् सत्वम् ।) तुषः ।

इत्यमरटीकायां रमानाथः ॥

**तुस्तं**, क्ली, धूलिः । इति लिङ्गादिसंग्रहे बुस्तशब्द-

टीकायां सारसुन्दरी ॥

**तुह**, इर् अर्द्दने । इति कविकल्पद्रुमः ॥ (भ्वां-

परं-सकं-सेट् ।) इर्, अतुहत् अतोहीत्
।
अर्द्दनमिह वधः । इति दुर्गादासः ॥

**तुहिनं**, क्ली, (तोहति अर्द्दति तुह्यतेऽनेनेति वा ।

**तूणः**, पुं स्त्री, (तूण्यते पूर्य्यते बाणैरिति । तूण +

पूरणे घञ् ।) बाणाधारः । तत्पर्य्यायः ।
उपा-
सङ्गः २ तूणीरः ३ निषङ्गः ४ इषुधिः ५
। इत्य-
मरः । २ । ८ । ८८ ॥ तूणी ६ । इति
शब्द-
रत्नावली ॥ (यथा, महाभारते । ३ ।
१७ । ३ ।
“तूणखड्गधरः शूरो
बद्धगोधाङ्गुलित्रवान् ॥”)

**तूणकं**, क्ली, (तूणयति सङ्कुचितं भवति समा-

निकापदद्वयमिति । तूण + ण्वुल् ।)
छन्दो-
विशेषः । यथा, छन्दोमञ्जर्य्याम् ।
“तूणकं समानिकापदद्वयं विनान्तिमम्
॥”

**तूणी**, स्त्री, (तूण्यते पूर्य्यते बाणैरिति । तूण +

कर्म्मणि घञ् । गौरादित्वात् ङीष् ।)
तूणः ।
इति शब्दरत्नावली ॥ (यथा, रघुः । ९ ।
५६ ।
“तूणीमुखोद्धृतशरेण विशीर्णपङ्क्ति ॥”
वेदनाविशेषः । यथा, सुश्रुते
निदानस्थाने
१ अध्याये ।
“अधो या वेदना याति
वर्चोमूत्राशयोत्थिता ।
भिन्दन्तीव गुदोपस्थं सा
तूणीत्युपदिश्यते ॥”)

**तूणी**, [न्] पुं, (तूणवदाकृतिरस्त्यस्येति । तूण +

इनिः ।) नन्दीवृक्षः । इति राजनिर्घण्टः
॥
(अस्य पर्य्याया यथा, --
“तूणी तुन्नक आपीनस्तुणिकः
कच्छकस्तथा ।

**तूरं**, क्ली, (तूर्य्यते ताड्यते इति । तूर + घञ् ।)

वाद्यम् । इति हेमचन्द्रः । २ । २०० ॥

**तूरी**, स्त्री, (तूरं वाद्यविशेषस्तदाकृतिः पुष्पादौ

अस्त्यस्येति । तूर + अच् । गौरादित्वात् ङीष् ।)
धुस्तूरवृक्षः । इति भावप्रकाशः ॥

**तूर्णं**, क्ली, (त्वर सम्भ्रमे + क्तः । पक्षे इडभावः

“ज्वरत्वरेति ।” ६ । ४ । २० । इत्यूट् ।
“रदाभ्यां
निष्ठातो नः पूर्ब्बस्य च दः ।” ८ । २ । ४२ ।
इति तस्य नः ।) शीघ्रम् । (यथा, देवीभाग-
वते । १ । १० । ३१ ।
“तां दृष्ट्वा चपलापाङ्गीं समीपस्थां वराप्सराम् ।
पञ्चबाणपरीताङ्गस्तूर्णमासीद्धृतव्रतः ॥”)
तद्वति, त्रि । इत्यमरः । १ । २ । ६८ ॥

**तूर्णिः**, पुं, (त्वरते त्वरणं वा । त्वर + “बहिश्रिश्रु-

युद्रुग्लाहात्वरिभ्यो नित् ।” उणां । ४ । ५१ ।
इति निः स च नित् ।) मलम् । इत्युणादि-
कोषः । २ । १४१ ॥ त्वरा । इति हेमचन्द्रः ।
२ । २३६ ॥ श्लोकः । मनः । इति संक्षिप्तसारे
उणादिवृत्तिः ॥ (क्षिप्रे, त्रि । इति निघण्टुः ।
२ । १५ ॥ यथा, ऋग्वेदे । १० । ८८ । ६ ।
“मायामू तु यज्ञियानामेतामपो यत्तूर्णिश्चरति
प्रजानन् ॥”
“तूर्णिस्त्वरमाणः ।” इति सायनः ॥)

**तूर्य्यं**, क्ली, (तूर्य्यते ताड्यते इति । तूर् + ण्यत् ।)

वाद्यम् । इति हेमचन्द्रः । २ । २८६ ॥ (यथा,
महाभारते । १ । ११३ । ४४ ।
“स तूर्य्यशतशङ्खानां भेरीणाञ्च महास्वनैः ।
हर्षयन् सर्व्वशः पौरान् विवेश गजसाह्व-
यम् ॥”)

**तूर्य्यखण्डः**, पुं, (तूर्य्यस्य खण्ड इव ।) द्रगडवाद्यम् ।

इति हारावली । २२२ ॥ (क्वचित्
तूर्य्यगण्डोऽपि
पाठः ॥)

**तूल**, क ङ पूरणे । इति कविकल्पद्रुमः ॥ (चुरां-

तुह + "वेपितुह्योर्ह्रस्वश्च ।" उणां । २ । ५२ ।
इति इनन् गुणे कृते ह्रस्वश्च ।) हिमम् । इत्य-
मरः । १ । ३ । १८ ॥ (यथा, आर्य्यासप्त-
शत्याम् । ६३२ ।
"सा श्यामा तन्वङ्गी दहता शीतोपचारतीव्रेण ।
विरहेण पाण्डिमानं नीता तुहिनेन दूर्व्वेव ॥")
चन्द्रतेजः । इत्युणादिकोषः ॥ (यथा, पञ्च-
तन्त्रे । २ । ५८ ।
"किं चन्दनैः सकर्परैस्तुहिनैः शीतलैश्च किम् ।
सर्व्वे ते मित्रगात्रस्य कलां नार्हन्ति षोडशीम् ॥"
शीतले, त्रि । यथा, आर्य्यासप्तशत्याम् । ३६६ ।
"प्रसरतु शरत्त्रियामा जगन्ति धवलयतु धाम तुहिनांशोः ।
पञ्जरचकोरिकाणां कणिकाकल्पोऽपि न विशेषः ॥")

**तुहिनांशुतैलं**, क्ली, (तुहिनांशोः कर्पूरस्य तैलम् ।)
कर्पूरतैलम् । इति राजनिर्घण्टः ॥

**तूड**, ऋ अनादरे । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-सकं-सेट् ।) षष्ठस्वरी । ऋ, अतुतूडत् ।
इति दुर्गादासः ॥

**तूण**, क सङ्कोचे । इति कविकल्पद्रुमः ॥ (चुरां-
परं-अकं-सेट् ।) दन्त्यवर्गाद्यादिः । क, तूणयति
चक्षुः सङ्कुचितं स्यादित्यर्थः । इति दुर्गादासः ॥

**तूण**, क ङ पूरणे । इति कविकल्पद्रुमः ॥ (चुरां-
आत्मं-सकं-सेट् ।) दीर्घी । क ङ, तूणयते । इति
दुर्गादासः ॥

**तूणः**, पुं, स्त्री, (तूण्यते पूर्य्यते बाणैरिति । तूण + घञ् ।) ... 

**तूणी**, ... 

कुठेरकः कान्तलको नन्दिवृक्षश्च नन्दकः ॥"
गुणाश्चास्य यथा, --
"तुणी रक्तः कटुः पाके कषायो मधुरो लघुः ।
तिक्तो ग्राही हिमो वृष्यो व्रणकुष्ठास्रपित्त-
जित् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
तूणयुक्ते, त्रि ॥ (यथा, हरिवंशे भविष्यपर्व्वणि ।
१८ । ३५ ।
"आरुह्य भगवान् विष्णुर्गरुडं पक्षिपुङ्गवम् ।
शङ्खी चक्री गदी खड्गी शार्ङ्गी तूणी तलत्र-
वान् ॥")

**तूणीकः**, पुं, (तूणी तूण इव कायतीति । कै +
कः ।) नन्दीवृक्षः । इति राजनिर्घण्टः ॥

**तूणीरः**, पुं, (तूण्यते पूर्य्यते बाणैरिति । तूण +
बाहुलकात् ईरन् ।) तूणः । इत्यमरः । २ । ८ ।
८८ ॥ (यथा, महाभारते । ७ । २८ । १६ ।
"तस्य पार्थो धनुश्छित्त्वा तूणीरान् सन्निकृत्य च ।
त्वरमाणो द्विसप्तत्या सर्व्वमर्म्मस्वताडयत् ॥"
क्लीवलिङ्गेऽपि दृश्यते । यथा, तत्रैव । ६ । ५१ ।
५१ ।
"तूणीराण्यथ यन्त्राणि विचित्राणि धनूंषि च ॥")

**तूतकं**, क्ली, तुत्थम् । इतिशब्दचन्द्रिका ॥ तुतिया
इति भाषा ॥ (तुत्थशब्देऽस्य गुणादिकं ज्ञात-
व्यम् ॥)

**तूदः**, पुं, (तुदतीति । तुद व्यथने + "इगुपधेति ।"
कः ।) ...

**तूल**, क निष्कर्षे । इति कविकल्पद्रुमः ॥ (चुरां-
परं-सकं-सेट् ।) दीर्घी । निष्कर्ष इह इयत्ता-
परिच्छेदः । क, तूलयति काञ्चनं बणिक् । इति
दुर्गादासः ॥ (क्वचित् तूल कि निष्कर्षे इति
पाठोऽपि दृश्यते । कि, तूलति तूलयति ॥)

**तूलं**, क्ली, (तूलयते पूरयति सर्व्वं व्यापकत्वात् ।
तूल पूरणे + कः ।) आकाशम् । इति मेदिनी ।
ले, २५ ॥ अश्वत्थाकारवृक्षविशेषः । पलाश-
पिपल इति तूत इति च भाषा ॥ तत्पर्य्यायः ।
तूदः २ ब्रह्मकाष्ठम् ३ ब्राह्मणेष्टः ४ पूषकः ५
ब्रह्मदारु ६ सुपुष्पम् ७ सुरूपम् ८ नीलवृन्त-
कम् ९ क्रमुकः १० विप्रकाष्ठम् ११ मदसारः
१२ ।
इति राजनिर्घण्टः ॥ पूगः १३ । तत्पक्वफल-
गुणाः । गुरुत्वम् । स्वादुत्वम् । हिमत्वम् ।
पित्तानिलनाशित्वञ्च । तदामफलगुणाः । गुरु-
त्वम् । सारकत्वम् । अम्लत्वम् । उष्णत्वम् ।
रक्तपित्तकारित्वञ्च । इति भावप्रकाशः ॥ मधु-

आत्मं-सकं-सेट् ।) क ङ, तूणयते । इति दुर्गा-
दासः ॥

**तूण**, त् क सङ्कोचे । इति कविकल्पद्रुमः ॥ (अदन्त-
चुरां-परं-अकं-सेट् ।) दीर्घी मूर्द्धन्योपधः ।
अतुतूणत् । इति दुर्गादासः ॥

३ । १ । १३५ । इति कः । पृषोदरादित्वात्
दीर्घः ।) तूलवृक्षः । इति राजनिर्घण्टः ॥

**तूर**, य ङ ई हिंसे । वेगे । इति कविकल्पद्रुमः ।
(दिवां-आत्मं-सकं-वेगे अकं-सेट् ।) य ङ,
तूर्य्यते । ई, तूर्णः । इति दुर्गादासः ॥

राम्लत्वम् । दाहप्रशमनत्वम् । वृष्यत्वम् । कषा-
यत्वम् । कफनाशित्वञ्च । इति राजनिर्घण्टः ॥

**तूलं**, क्ली पुं, (तूल्यते इयत्तया परिच्छिद्यते इति ।
तूल + कर्म्मणि घञ् । यद्वा, तूलयते स्वल्पोऽपि
बहुस्थानं पूरयतीति । तूल + “इगुपधेति ।” कः ।)
कार्पासादितूलः । (इति मेदिनी । ले, २६ ॥)
तत्पर्य्यायः । पिचुः २ । इत्यमरः । २ । ९ । १०६ ॥
पिचुलः ३ पिचुतूलः ४ तूलपिचुः ५ । इत्यमर-
टीका ॥ पिचुतूलम् ६ । इति त्रिकाण्डशेषः ॥
(यथा, देवीभागवते । ५ । १० । ३६ ।
“विपरीतं यदा दैवं तृणं वज्रसमं भवेत् ।
विधिश्चेत् सुमुखः कामं कुलिशं तूलवत्तदा ॥”)

**तूलकं**, क्ली, (तूल + स्वार्थे कन् ।) तूलः । इति
हेमचन्द्रः । ४ । २० । ५ ॥

**तूलकार्म्मुकं**, क्ली, (तूलाय तूलस्फोटनाय कार्म्मुक-
मिव ।) तूलस्फोटनार्थधनुः । धुनखरा इति
भाषा । तत्पर्य्यायः । पिञ्जलम् २ । इति त्रिकाण्ड-
शेषः ॥

**तूलचापः**, पुं, (तूलाय तूलस्फोटनाय चाप इव ।)
तूलकार्म्मुकम् । इति शब्दरत्नावली ॥

**तूलनालिका**, स्त्री, (तूलनिर्म्मिता नालिका नाली ।)
पिञ्जिका । इति त्रिकाण्डशेषः ॥ पाँइज इति
भाषा ॥

**तूलनाली**, स्त्री, (तूलनिर्म्मिता नाली ।) तूल-
नालिका । इति भूरिप्रयोगः ॥

१०२ ॥ तोषक् इति भाषा । (यथा, कथासरित्-
सागरे । २६ । ७८ ।
“प्रविश्य चान्तः सद्रन्तपर्य्यङ्के न्यस्ततूलिके
पटावगुण्ठिततनुं शयानां काञ्चिदैक्षत ॥”
तथा च काशीखण्डे । ४ । ९७ ।
“कञ्चुकं तूलगर्भञ्च तूलिकां सूपवीतिकाम् ॥”)
वर्त्तिः । इति शब्दरत्नावली ॥

**तूलिनी**, स्त्री, (तूलोऽस्त्यस्याः । तूल + इनिः ।
ङीप् ।) लक्ष्मणाकन्दः । इति राजनिर्घण्टः ॥
शाल्मलिवृक्षः । इति भावप्रकाशः ॥ (तद्यथा,
“ताम्बूलं कटुतैलमुष्णभवनं तूलीपटी तूलिनी ॥”
इति वैद्यकपथ्यापथ्यविधौ शिशिराद्याचारे ॥)

**तूलिफला**, स्त्री, (तूलि तूलयुक्तं फलमस्याः ।)
शाल्मलिः । इति रत्नमाला ॥

**तूली**, स्त्री, (तूलयतीति । तूल + इन् कृदिकारा-
दिति वा ङीप् ।) नीली । वर्त्तिः । इति शब्द-
रत्नावली ॥ तूलिका । इत्यमरटीकायां भरतः ॥
(यथा, --
“उच्चैस्तूलीविलासं सुललितशयनं प्राणि-
नामाभिरामम् ॥”
इति वैद्यकपथ्यापथ्यविधौ हेमन्तकृत्ये ॥)

**तूवरः**, पुं, (तु सौत्रो धातुः + बाहुलकात् ष्वरच्

(“तूस्तानि विनिहन्ति वितूस्तयति पन्थानं
वातः ।” इति मुग्धबोधम् ॥) जटा । इति
मेदिनी । ते, २२ ॥ पापम् । सूक्ष्मम् । इति
शब्दरत्नावली ॥

**तृक्ष**, इत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा-पर-
सकं-सेट् ।) सप्तमस्वरी । तृक्षति । इत्यां गतौ ।
इति दुर्गादासः ॥

**तृखं**, क्ली, जातीफलम् । इति शब्दचन्द्रिका ॥

**तृट्**, [ष्] स्त्री, (तृष + क्विप् ।) इच्छा । तृष्णा ।
(यथा, ऋतुसंहारे । १ । ११ ।
“मृगाः प्रचण्डातपतापिता भृशं
तृषा महत्या परिशुष्कतालवः ॥”)
कामकन्या । इति मेदिनी । षे, १३ ॥

**तृण**, द ञ उ भक्षे । इति काविकल्पद्रुमः ॥ (तनां-
उभं-सकं-सेट् । क्त्वावेट् ।) द ञ, तृणोति
तर्णोति तृणुते तर्णुते । उ, तर्णित्वातृत्वा । इति
दुर्गादासः ॥

**तृणं**, क्ली, (तृण्यते भक्ष्यते गवादिभिरिति । तृण +
घञ् । संज्ञापूर्ब्बकत्वात् न गुणः । यद्वा, तृह
हिंसायाम् + “तृहेः क्नो हलोपश्च ।” उणां ५ । ८ ।
इति क्नप्रत्ययो हकारलोपश्च ।) नडादि ।
चिनाखड इति ख्यातम् । इति केचित् । इति
भरतः ॥ तत्पर्य्यायः । अर्ज्जुनम् २ । इत्यमरः ।
२ । ५ । १६७ ॥ त्रिणम् ३ खटम् ४ खेट्टम् ५
हरितम् ६ ताण्डवम् ७ । इति शब्दरत्नावली ॥ * ॥
(यथा, पञ्चतन्त्रे । १ । ३४ ।
“जातस्य नदीकूले तस्य तृणस्यापि जन्म कल्याणम् ।
यत् सलिलमज्जनाकुलजनहस्तालम्बनं भवति ॥”)
गोभ्यस्तृणदानफलं यथा, --
“तीर्थस्नानेषु यत् पुण्यं यत् पुण्यं विप्रभोजने ।

**तूलपिचुः**, पुं, (तूलप्रधानः पिचुस्तूलवृक्षः ।) तूलः । इत्यमरटीकायां भरतः ॥

**तूलवृक्षः**, पुं, (तूलस्य तूलप्रधानो वा वृक्षः ।) शाल्मली । इति राजनिर्घण्टः

**तूलशर्करा**, स्त्री, (तूलस्य शर्करेव ।) कार्पास-वीजम् । इति शब्दमाला ॥

**तूलसेचनं**, क्ली, (तूलस्य सेचनम् ।) सूत्रकर्त्तनम् । इति शब्दमाला ॥ काटना इति भाषा ॥

**तूला**, स्त्री, (तूलयते पूरयति स्थानमिति । तूल + अच् + ततः स्त्रियां टाप् ।) कार्पासी । इति राजनिर्घण्टः ॥ वर्त्तिः । इति शब्दरत्नावली ॥

**तूलिः**, स्त्री, (तूलतीति । तूल निष्कर्षे + "इगुप-धात् कित् ।" उणां । ४ । ११९ । इति इन् स च कित् ।) स्वनामख्यातचित्रकरोपकरणम्। इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

**तूलिका**, स्त्री, (तूलिरेव । स्वार्थे कन् ।) चित्र-करोपकरणम् । तूली इति भाषा । (यथा, कुमार । १ । ३२ ॥
"उन्मीलितं तूलिकयेव चित्र
सूर्य्यांशुभिर्भिन्नमिवारविन्दम् ॥")
तत्पर्य्यायः । ईषिका २ । इत्यमरः । २ । १० । ३३ ॥
तुलिः ३ तूली ४ ईषीका ५ इषीका ६ । वीर-णादिशलाका । इत्यन्ये । आवात्ततमनावर्त्तितं सुवर्णं ज्ञातुं यन्निक्षिप्यते तत्रेत्यन्य । आवर्त्तित-सुवण द्रवाकारं यत्र निक्षिप्यत तत्रेति केचित् । इति भरतः ॥ (तूलमस्त्यस्या इति । तूल + ठन् ।) शय्योपकरणम् । इति मेदिनी । के, दीर्घश्च ।) काले अजातशृङ्गो गौः । नेडा गरु इति भाषा । अश्मश्रुपुरुषः । इत्यमरः । ३ । ३ । १६४ ॥ माकुन्दिया इति भाषा । पुरुषव्यञ्जन-त्यक्तः । कषायरसः । इति मेदिनी । वे, १६४ ॥

**तूवरिका**, स्त्री, (तूवरी + स्वार्थे कन् टाप् पूर्ब्ब-ह्रस्वश्च ।) तुवरिका । इत्यमरटीकायां रमा-नाथः ॥

**तूवरी**, स्त्री, (तूवर + षित्वात् ङीष् ।) आढकी । सौराष्ट्रमृत्तिका । इत्यमरटीकायां भरतः ॥

**तूष**, तुष्टौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) षष्ठस्वरी । तूषन्ति कुलदेवताः । इति दुर्गादासः ॥

**तूष्णीं**, [म्] व्य, मौनम् । इत्यमरः । ३ । ४ । ९ ॥
(यथा, मनुः । ८ । १४७ ।
"यत्किञ्चिद्दशवर्षाणि सन्निधौ प्रेक्षते धनी ।
भुज्यमानं परैस्तुष्णीं न स तल्लब्धुमर्हति ॥")

**तूष्णींशीलः**, त्रि, (तुष्णीं मौनं शीलं स्वभावो यस्य ।) मौनी । तत्पर्य्यायः । तूष्णीकः २ । इत्यमरः । ३ । १ । ३९ ॥

**तूष्णीकः**, त्रि, (तुष्णीं शीलं यस्य । "शीले को मलोपश्च ।" ५ । ३ । ७३ । इत्यस्य वार्त्तिकोक्त्या कः मलोपश्च ।) तूष्णींशीलः । इत्यमरः । ३ । १ । ३९ ॥
(यथा, महाभारते । ५ । ३४ । २३ ।
यत् पुण्यञ्च महादाने यत् पुण्यं हरिसेवने ॥
सर्व्वव्रतोपवासेषु सर्व्वेष्वेव तपःसु च ।
भुवः पर्य्यटने यत्तु सत्यवाक्येषु यद्भवेत् ॥
यत् पुण्यं सर्व्वयज्ञेषु दीक्षायाञ्च लभेन्नरः ।
तत् पुण्यं लभते प्राज्ञो गोभ्यो दत्त्वा तृणानि च ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डम् ॥ * ॥
धनिष्ठादिपञ्चनक्षत्रेषु गृहनिमित्ततृणकाष्ठा-हरणे दोषा यथा, --
"अग्निचौरभयं रोगो राजपीडा धनक्षतिः ।
संग्रहे तृणकाष्ठानां कृते वस्वादिपञ्चके ॥"
इति ज्योतिःसारसंग्रहः ॥
(गन्धद्रव्यविशेषः । रामकर्पूर इति भाषा ॥
अस्य पर्य्याया यथा, --
"कुतृणञ्च सुगन्धञ्च तृणं शीतं सुशीतलम् ॥"
इति वैद्यकरत्नमालायाम् ॥)

**तृणकुङ्कुमं**, क्ली, (तृणसम्भूतं कुङ्कुमम् ।) सुगन्ध-द्रव्यभेदः । तत्पर्य्यायः । तृणासृक् २ गन्धि ३ तृणशोणितम् ४ तृणपुष्पम् ५ गन्धाधिकम् ६ तृणोत्थम् ७ तृणगौरम् ८ लोहितम् ९ । अस्य गुणाः । कटुत्वम् । उष्णत्वम् । कफमारुतशोफ-कण्डूतिपामाकुष्ठामदोषनाशित्वम् । परमभास्व-रत्वम् । इति राजनिर्घण्टः ॥

“आसीनमपि तूष्णीकमनुरज्यन्ति तं प्रजाः ॥”)

**तूष्णीकां** [म्] व्य, (तूष्णीम् + अकच्प्रकरणे “तूष्णीमः काम् वक्तव्यः ।” इति वार्त्तिकोक्त्या काम् । मित्त्वादन्त्यादचः परः ।) मौनम । इत्य- मरः । ३ । ४ । ९ ॥

**तूस्तं**, क्ली, (तुस शब्दे + बाहुलकात् तुसेरपि तन् दीर्घश्च । इत्यज्जलदत्तः । ३ । ८६ ।) धूलिः ।

**तृणकुटी**, स्त्री, (तृणाच्छादिता कुटी ।) तृणा-
च्छादितगृहम् । तत्पर्य्यायः । कायमानम् २ ।
इति त्रिकाण्डशेषः ॥ तृणौकः ३ । इति हेमचन्द्रः ॥

**तृणकूर्म्मः**, पुं, (तृणस्य कूर्म्म इव ।) तुम्बी । इति शब्दमाला ॥

**तृणकेतुः**, पुं, (तृणेषु केतुर्ध्वज इव ।) वंशः । इति हारावली । १०८ ॥

**तृणकेतुकः**, पुं, (तृणकेतु + स्वार्थे कन् ।) वंशः । इति राजनिर्घण्टः ॥

**तृणगोधा**, स्त्री, (तृणस्य गोधेव क्षुद्रत्वात् ।)
चित्रकोलः । कृकलासः । इति मेदिनी । धे,
४६ ॥ तृणजलौका । इति केचित् ॥

**तृणग्रन्थिः** स्त्री, (तृणस्य ग्रन्थिरिव ग्रन्थिर्यस्य ।) स्वर्णजीवन्ती । इति राजनिर्घण्टः ॥

**तृणग्राही**, [न्] पुं, (तृणं गृह्णातीति । ग्रह +
णिनिः ।) नीलमणिः । इति राजनिर्घण्टः ॥
मणिविशेषः । इति शब्दार्थकल्पतरुः ॥ काफुर-
दाना इति भाषा । तत्पर्य्यायः । शूकापुङ्खः २
तृणमणिः ३ । इति हारावली ॥

**तृणजम्भा**, [न्] त्रि, (तृणं जम्भो भक्ष्यं यस्य ।
"जम्भा सुहरिततृणसोमेभ्यः ।" ५ । ४ । १२५ ।
इति निपातनात् साधुः ।) तृणभक्षकः । (तृण-
मिव जम्भो दन्तो यस्य ।) तृणवर्णदन्तयुक्तः ।
इति सिद्धान्तकौमुदी ॥

**तृणता**, स्त्री, धनुः । (तृणस्य भावः । तृण +

**तृणमणिः**, पुं, (तृणेषु मणिः ।) तृणग्राही । इति हारावली । २१६ ॥

**तृणमत्कुणः**, पुं, लग्नकः । इति त्रिकाण्डशेषः ॥ जामिन् इति भाषा ॥

**तृणराजः**, पुं, (तृणेषु राजते शोभते इति । राज
+ अच् । तृणानां राजा वा समासे टच् ।)
तालवृक्षः । इत्यमरः । २ । ५ । १६८ ॥ (यथा,
आर्य्यासप्तशत्याम् । ५६७ ।
"श्रीः श्रीफलेन राज्यं
तृणराजेनाल्पसाम्यतो लब्धम् ।
कुचयोः सम्यक् साम्यात् गतो
घटश्चक्रवर्त्तित्वम् ॥")
नारिकेलः । इति राजनिर्घण्टः ॥

**तृणवल्वजा**, स्त्री, (तृणरूपा वल्वजा ।) वल्वजा । इति राजनिर्घण्टः ॥

**तृणवीजः**, पुं, (तृणस्य वीजमिव वीजमस्य ।) श्यामाकः । इति रत्नमाला ॥

**तृणवीजोत्तमः**, पुं, (तृणवीजेषु उत्तमः ।) श्यामाकः । इति राजनिर्घण्टः ॥

**तृणशीतं**, क्ली, (तृणेषु शीतं शीतलम् ।) कत्तृ-
णम् । गन्धतृणम् । इति रत्नमाला ॥

**तृणशीता**, स्त्री, (तृणेषु शीता शीतला ।) जल-
पिप्पली । इति राजनिर्घण्टः ॥

**तृणशून्यं**, क्ली, (तृणेन शून्यम् ।) मल्लिका ।
केतकीफलम् । इति मेदिनी । ये, ११९ ॥
(एतद्गुणा यथा, --
"नीपं सभार्गवं पीलु तृणशून्यं विकङ्कतम् ।
प्राचीनामलकञ्चैव दोषघ्नङ्गरहारि च ॥"
इति चरके सूत्रस्थाने सप्तविंशेऽध्याये ॥)
तृणरहिते, त्रि ॥

**तृणषट्पदः**, पुं, (तृणमिव षट् पदा यस्य ।)
वरोलः । इति हारावली । २१७ ॥ बोल्ता

**तृणासृक्**, [ज्] पुं, (तृणेषु असृगिव रक्तवर्ण-
त्वात् ।) तृणकुङ्कुमम् । इति राजनिर्घण्टः ॥

**तृणेक्षुः**, पुं, (तृणेषु इक्षुरिव ।) वल्वजा । इति राजनिर्घण्टः ॥

**तृणोत्तमः**, पुं, (तृणेषु उत्तमः ।) उखर्व्वलतृणम् । इति राजनिर्घण्टः ॥

**तृणोद्भवः**, पुं, (तृणैः सह उद्भवतीति । उत् +
भू + अच् ।) नीवारः । इति राजनिर्घण्टः ॥

**तृणौकः**, [स्] क्ली, (तृणनिर्म्मितमोको वसति-
स्थानम् ।) कायमानम् । तृणनिर्म्मितगृहम् ।
इति हेमचन्द्रः । ४ । ६२ ॥ खड्या घर इति
भाषा ॥

**तृणौषधं**, क्ली, (तृणात्मकं औषधम् ।) एल-
बालुकाख्यगन्धद्रव्यम् । इति शब्दचन्द्रिका ॥

**तृण्या**, स्त्री, (तृणानां समूहः । "पाशादिभ्यो
यः ।" ४ । २ । ४९ । इति यः ।) तृणसमूहः ।
इत्यमरः । २ । ५ । १६८ ॥

**तृतीयः**, त्रि, (त्रयाणां पूरणः । त्रि + "त्रेः सम्प्र-
सारणञ्च ।" ५ । २ । ५५ । इति तीयः सम्प्र-
सारणञ्च ।) त्रयाणां पूरणः । इति व्याकर-
णम् ॥ तेसरा इत्यादि भाषा । (यथा, मनुः ।
२ । ३५ ।
"चूडाकर्म्म द्विजातीनां सर्व्वेषामेव धर्म्मतः ।
प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात् ॥")

**तृतीयप्रकृतिः**, स्त्री, तृतीया प्रकृतिः । इत्यमर-

भावे तल् ।) तृणत्वम् । इति मेदिनी । ते, ११३ ॥

**तृणद्रुमः**, पुं, (तृणप्रधानो द्रुमः । तृणमिव द्रुमो वा ।) तालः । गुवाकः । ताली । केतकी । खर्ज्जूरः । खर्ज्जूरी । नारिकेलः । हिन्तालः ।
एषां निर्यासगुणाः । शीतलत्वम् ।
लघुत्वम् ।
मोहनत्वम् । बलकारित्वम् । हृद्यत्वम् ।
तृष्णा-
सन्तापनाशित्वञ्च । इति राजनिर्घण्टः ॥

**तृणधान्यं**, क्ली, (तृणबहुलं धान्यम् ।) धान्य-विशेषः । उडिधान इति भाषा ।
तत्पर्य्यायः ।
नीवारः २ । इत्यमरः । २ । ९ । २५ ॥

**तृणध्वजः**, पुं, (तृणेषु ध्वज इव दीर्घत्वात् ।) वंशः । इत्यमरः । २ । ४ । १६० ॥

**तृणनिम्बः**, पुं, (तृणाकारो निम्बः ।) नेपाल-निम्बः । इति राजनिर्घण्टः ॥

**तृणपत्रिका**, स्त्री, (तृणस्येव पत्रमस्त्यस्याः । ठन् टाप् च ।) इक्षुदर्भा । इति राजनिर्घण्टः ॥

**तृणपत्री**, स्त्री, (तृणमिव पत्रमस्याः । ङीष् ।) गुण्डाशिनी । इति राजनिर्घण्टः ॥

**तृणपुष्पं**, क्ली, (तृणस्य पुष्पमिव ।) तृणकुङ्कु-मम् । इति राजनिर्घण्टः ॥

**तृणपुष्पी**, स्त्री, (तृणमिव पुष्पमस्याः । ङीष् ।) सिन्दूरपुष्पीवृक्षः । इति राजनिर्घण्टः ॥

**तृणपूली**, स्त्री, (तृणस्य पूलः संहतिर्यत्र । ततो गौरादित्वात् ङीष् । तृणनिर्म्मितत्वादस्य तथा-
त्वम् ।) चञ्चा । इति हारावली । १९९ ॥
चाँच इति भाषा ॥

**तृणसारा**, स्त्री, (तृणवत् सारो यस्याः । असा-रत्वात् तथात्वम् ।) कदली । इति हारा-वली । १०५ ॥

**तृणसिंहः**, पुं, (तृणेषु सिंह इव तन्नाशकत्वात् ।) कुठारः । इति शब्दार्थकल्पतरुः ॥

**तृणहर्म्म्यः**, पुं, (तृणाच्छादितो हर्म्म्यः ।) तृण-युक्ताट्टालिका । अट्टालिकोपरि
तृणनिर्म्मित-
गृहम् । तत्पर्य्यायः । मयटः २ । इति
हारा-
वली । २२३ ॥

**तृणांह्रिपः**, पुं, (तृणरूपोऽंह्रिपो वृक्षः ।) मन्था-नकतृणम् । इति राजनिर्घण्टः ॥

**तृणाग्निः**, पुं, (तृणजातोऽग्निः । शाकपार्थिववत् समासः ।) तृणजाताग्निः । तत्पर्य्यायः ।
वत्-
सलः २ । इति त्रिकाण्डशेषः ॥

**तृणाञ्जनः**, पुं, (तृणमिव अञ्जनो ज्येष्ठी । तृणवदाकृतित्वादस्य तथात्वम् ।) कृकलासः ।
इति त्रिकाण्डशेषः ॥

**तृणाढ्यं**, क्ली, (तृणेषु आढ्यं पुष्टत्वात् ।) पर्व्वत-तृणम् । इति राजनिर्घण्टः ॥

**तृणाम्लं**, क्ली, (तृणेषु अम्लम् ।) लवणतृणम् । इति राजनिर्घण्टः ॥

टीकायां भरतः ॥

**तृतीया**, स्त्री, (त्रयाणां पूरणी । त्रि + "त्रेः सम्प्रसारणञ्च ।" ५ । २ । ५५ । इति
तीयः
सम्प्रसारणञ्च । ततष्टाप् ।) तिथिविशेषः ।
सा चन्द्रमण्डलस्य तृतीयकलाक्रियारूपा
तत्-
क्रियोपलक्षितः कालो वा । इति तिथ्यादि-
तत्त्वम् ॥
अस्यां जातस्य फलं यथा, --
"सकलगुणगभीरो भूमिपालानुरागी
पवनगरविगाही सर्व्वलोकोपकारी ।
परविषयनिवासी कौतुकी सत्यवादी
भवति निखिलविद्यो यस्तृतीयाप्रसूतः ॥"
इति कोष्ठीप्रदीपः ॥
वा वैशाखस्य शुक्ला अक्षयतृतीयां । यथा,
स्मृतिः ।
"वैशाखे मासि राजेन्द्र ! शुक्लपचे
तृतीयिका ।
अक्षया सा तिथिः प्रोक्ता कृत्तिकारोहिणी-
युता ॥
तस्या दानादिकं पुण्यं अक्षयं समुदाहृतम्
॥"
भविष्ये ।
या शुक्ला कुरुशार्द्दूल ! वैशाखे मासि वै
तिथिः ।
तृतीया साक्षया लोके गीर्व्वाणैरभिवन्दिता
॥
योऽस्यां ददाति करकान्
वारिवाजसमन्वितान् ।
स याति पुरुषो वीर ! लोकान् वै
हेममालिनः ॥
करकान् कुम्भान् । वाजमन्नम् ।
हेममालिनः
सूर्य्यस्य ॥ ब्रह्मपुराणे ।
"यः पश्यति तृतीयायां कृष्णं
चन्दनचर्च्चितम् ।

वैशाखस्य सिते पक्षे स
यात्यच्युतमन्दिरम् ॥”
स्कन्दपुराणम् ।
“वैशाखस्य सिते पक्षे तृतीयाक्षयसंज्ञिता
।
तत्र मां लेपयेद्गन्धलेपनैरतिशोभनैः ॥”
* ॥
ब्रह्मपुराणम् ।
“वैशाखशुक्लपक्षे तु तृतीयायां जनार्द्दनः
।
यवानुत्पादयामास युगञ्चारब्धवान् कृतम्
॥
ब्रह्मलोकात्त्रिपथगां पृथिव्यामवतारयत् ।
तस्यां कार्य्यो यवैर्होमो यवैर्व्विष्णुं
समर्च्चयेत् ॥
यवान् दद्यात् द्विजातिभ्यः प्रयतः
प्राशयेद्-
यवान् ।
पूजयेत् शङ्करं गङ्गां कैलासञ्च हिमालयम्
॥
भगीरथञ्च नृपतिं सागराणां सुखावहम् ।
स्नानं दानं तपः श्राद्धं जपहोमादिकञ्च
यत् ॥
श्रद्धया क्रियते तत्र तदानन्त्याय कल्प्यते
॥
अत्रानन्त्यफलश्रुतेः पूर्ब्बवचने नक्षत्रयोगः
फला-
तिशयार्थः ।” इति तिथ्यादितत्त्वम् ॥ * ॥
पाद्मे श्रीवराहधरणीसंवादे ।
“त्रेतायुगं तृतीयायां शुक्लायां मासि
माधवे ।
प्रवृत्तञ्च त्रयीधर्म्माः प्रवृत्तास्ते प्रवर्त्तिताः
॥
अक्षया सोच्यते लोके तृतीया हरिवल्लभा
।
स्नाने दानेऽर्च्चने श्राद्धे जपे पूर्ब्बजतर्पणे
॥
येऽर्च्चयन्ति यवैर्व्विष्णुं श्राद्धं कुर्व्वन्ति
यत्नतः ।

**तृप**, न प्रीणने । इति कविकल्पद्रुमः ॥ (स्वां-परं-
सकं-सेट् ।) प्रीणनं प्रीतीकरणम् । न,
तृप्नोति
पितरं पुत्त्रः । ततर्प । इति दुर्गादासः ॥

**तृप**, प श प्रीणने । इति कविकल्पद्रुमः ॥ (तुदां-
परं-सकं-सेट् ।) प श, तृम्पति ततर्प ।
इति
दुर्गादासः ॥

**तृप**, ञि ऌ य ऊ प्रीणने । इति कविकल्पद्रुमः ॥
(दिवां-परं-अकं-सकं च-वेट् ।) ञि,
तृप्तोऽस्ति । ऌ,
अतृपत् । अस्य ऌदित्वेऽपि
कृषमृशस्पृशेत्यादि-
विशेषविधानात् पक्षे ट्यांसिस्तेन
अताप्र्सीत्
अत्राप्सीत् अतर्पीदित्यपि । य, तृप्यति ।
ऊ,
तर्पिष्यति तप्र्स्यति । प्रीणनमिह
प्रीतीभावः
प्रीतीकरणञ्च । स्यन्दीनि तृप्यतु मधूनि
पिब-
न्निवायमिति श्रीहर्षः ।
पितॄनताप्र्सीन्नृपरक्ततोयै-
रिति भट्टिः । इति दुर्गादासः ॥

**तृपत्**, पुं, (तृप्नोति प्रीणयतीति । तृप + “संश्च-
त्तृ पद्वेहत् ।” उणां २ । ८५ । इति
अतिप्रत्ययेन
निपातनात् साधुः ।) चन्द्रः ।
इत्युणादिकोषः ॥
छत्रम् । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः
॥
(प्रीणयति, त्रि । यथा, ऋग्वेदे । २ । २२
। १ ।
“तृपत्सोमपिबद्वितृना सुतं यथावशत् ।”
“तृप प्रीणने तुदादिः ।
आगमानुशासनस्या-
“न यं शुक्रो न दुराशीर्न तृप्रा उरुव्यचसम् ।
अपस्पृण्वते सुहार्दम् ॥” “तृप्रास्तर्पका
अन्ये
चरुपुरोडाशादयश्च यमिन्द्रं नापस्पृण्वते न
न प्रीणयन्ति अपि तु प्रीणयन्त्येव तमिन्द्रं
स्तुमः
इति शेषः ।” इति तद्भाष्ये सायनः ॥)

**तृफ**, प श प्रीणने । इति कविकल्पद्रुमः ॥ (तुदां-
परं-सकं-सेट् ।) प श, तृम्फति ततर्फ । इति
दुर्गादासः ॥

**तृफला**, स्त्री, (तृम्फति प्रीणातीति । तृफ + “कल-
स्तृपश्च ।” उणां १ । १०६ । इति
चकारात्
तृफतेरपि कलः ।) त्रिफला । इति
त्रिकाण्ड-
शेषः ॥

**तृफूः**, पुं, (तृफति पीडयतीति । तृफ क्लेशे +
“खर्ज्जादिभ्य ऊः ।” १ । ४६६ ।
इत्युणादिकोष-
टीकाधृतसूत्रेण ऊः । निपातनात् न गुणः ।)
सर्पजातिः । इत्युणादिकोषः ॥

**तृष**, इर् य तृञि षि । इति कविकल्पद्रुमः ॥
(दिवां-परं-सकं-सेट् ।) इर्, अतृषत् अत-
र्षीत् । अस्मात् पुषादित्वात् नित्यं ङ
इत्यन्ये ।
य, तृष्यति । ञि, तृषितोऽस्ति । तृट्
आकाङ्क्षा ।
तथा च । इच्छाकाङ्क्षा स्पृहेहा तृट् वाञ्छा
लिप्सा मनोरथः । इत्यमरसिंहः । तदुप-
स्थितमग्रहीदजः पितुराज्ञेति न
भोगतृष्णयेति
रघुः । तृष्यति धनं लोकः । तृषि
पिपासाया-
मिति प्राञ्चः । तृष्यति तोयं पान्थः । इति
रमानाथः । इति दुर्गादासः ॥

**तृषा**, स्त्री, (तृष + क्विप् पक्षे टाप् ।) तृष्णा ।

तस्यां ददति दानानि धन्यास्ते वैष्णवा
नराः ॥”
इति श्रीहरिभक्तिविलासे १४ । १३४ ॥

**तृतीयाकृतं**, त्रि, (तृतीयं कर्षणं कृतम् । “कृञो
द्वितीयतृतीयशम्बवीजात्कृतौ ।” ५ । ४
। ५८ । इति
डाच् ।) वारत्रयकृष्टक्षेत्रम् । इत्यमरः । २
। ९ । ९ ॥
तिनवार चाष देओया क्षेत इति भाषा ॥

**तृतीयाप्रकृतिः**, स्त्री, (तृतीया प्रकृतिः । “संज्ञा-
पूरण्याश्च ।” ६ । ३ । ३८ । इति न
पुंवद्भावः ।)
नपुंसकम् । इत्यमरः । २ । ६ । ३९ ॥

**तृद**, हिंसे । (भ्वां-परं-सकं-सेट् ।) तर्द्दति । इति
दुर्गादासः ॥

**तृद**, उ ञ ध इर् । अनादरे । हिंसे । इति कवि-
कल्पद्रुमः ॥ (रुधां-उभं-सकं-सेट् ।
उदित्वात्
क्त्वावेट् ।) उ, तर्द्दित्वा तृत्त्वा । ञ ध,
तृणत्ति
तृन्ते । इर, अतृदत् अतर्द्दीत् । इति
दुर्गादासः ॥

**तृन्प**, श प्रीणने । इति कविकल्पद्रुमः ॥ (तुदां
परं-सकं-सेट् ।) प्रीणनमिह प्रीतीभावः ।
श,
तृपति तृम्पति वा लाभाल्लोकः । ततृम्प ।
इति
दुर्गादासः ॥

**तृन्फ**, श प्रीणने । इति कविकल्पद्रुमः ॥ (तुदां-
परं-सकं-सेट् ।) श, तृफति तृम्फति ।
ततृम्फ ।
इति दुर्गादासः ॥

**तृन्ह**, ऊ श हिंसे । इति कविकल्पद्रुमः ॥ (तुदां-
परं-सकं-वेट् ।) सप्तमस्वरी । ऊ,
अतृंहीत्
अतृङ्क्षीत् । श, तृहति । इति दुर्गादासः ॥

**तृप**, कि सन्दीपने । प्रीणने । इति कविकल्पद्रुमः ॥
नित्यत्वान्नुमभावः तृप्यन् इन्द्रः ॥” इति
सायनः ॥)

**तृपला**, स्त्री, (तृप्यतीति । तृप प्रीणने + “कल-
स्तृपश्च ।” उणां १ । १०६ । इति कलः
। तत-
ष्टाप् ।) लता । इत्युणादिकोषः ॥ त्रिफला
।
इति संक्षिप्तसारे उणादिवृत्तिः ॥
(क्षिप्रप्रहा-
रिणि, त्रि । यथा, ऋग्वेदे । ९ । ९७ । ८ ।
“प्रहंसासस्तृपलं मन्युमच्छामादस्तं
वृषगणाः
अयासुः ॥”
“तृपलशब्दः क्षिप्रवाची । तदुक्तं यास्केन
।
तृपलप्रभर्म्मा क्षिप्रप्रहारीति ।
क्षिप्रप्रहारिणं
मन्युम् ।” इति सायनः ॥)

**तृप्तः**, त्रि, (तृप प्रीणने + क्तः ।) तृप्तियुक्तः ।
इत्यमरः । ३ । १ । १०३ ॥ (यथा, नैषधे
।
३ । ९३ ।
“शुद्धान्तसम्भोगनितान्ततुष्टे
न नैषधे कार्य्यमिदं निगाद्यम् ।
अपां हि तृप्ताय न वारिधारा
स्वादुः सुगन्धिः स्वदते तुषारा ॥”)

**तृप्तिः**, स्त्री, (तृप प्रीणने + भावे क्तिन् ।) भक्ष-
णादिनाकाङ्क्षानिवृत्तिः । तत्पर्य्यायः ।
सौहि-
त्यम् २ तर्पणम् ३ । इत्यमरः । २ । ९ ।
५६ ॥
प्रीणनम् ४ आसितम्भवम् ५ । इति शब्द-
रत्नावली ॥ (यथा, देवीभागवते । १ । १
। २० ।
“श्रुतान्यन्यानि सर्व्वज्ञ !
तन्मुखान्निःसृतानि च ।
नैव तृप्तिं व्रजामोऽद्य सुधापानेऽमरा यथा
॥”)

**तृप्रः**, पुं, (तृप्यत्यनेनेति । तृप + “स्कायितञ्चीति
।”
(अस्याः निवारणोपायो यथा, --
“काश्मर्य्यं पद्मकोशीरं द्राक्षामधुकचन्दनम् ।
बालकं शर्करायुक्तं क्वाथं पित्ततृषापहम् ॥
वटद्रुमो रोध्रसिता च चन्दनं
सदाडिमं तण्डुलधावनेन ।
पिष्टं सुशीतेन जलेन वापि
पीतञ्च पित्तोत्थतृषापहञ्च ॥”
इति हारीते चिकित्सितस्थाने
चतुर्द्दशेऽध्याये ॥
भुक्तोद्भवायास्तृषाया हेतुर्यथा, --
“स्निग्धं तथाम्लं लवणञ्च भुक्तं
गुर्व्वन्नमेवाशु तृषां करोति ॥”
इति वैद्यकमाधवकरकृतरुग्विनिश्चये
तृष्णाधि-
कारे ॥) इच्छा । (यथा, हितोपदेशे । १ ।
२६६ ।
“लोभेन बुद्धिश्चलति लोभो जनयते तृषाम्
।
तृषार्त्तो दुःखमाप्नोति परत्रेह च मानवः ॥”)
कामकन्या । इति शब्दरत्नावली ॥ लाङ्ग-
लिकीवृक्षः । इति शब्दचन्द्रिका ॥

**तृषाभूः**, स्त्री, (तृषाया भूरुत्पत्तिस्थानम् ।)
क्लोम । इति शब्दचन्द्रिका ॥

**तृषाहं**, क्ली, (तृषां हन्तीति । हन + डः ।)
जलम् । इति शब्दचन्द्रिका ॥

**तृषाहा**, स्त्री, (तृषां हन्तीति । हन + डः +
टाप् ।) मधुरिका । इति शब्दचन्द्रिका ॥

**तृषितः**, त्रि, (तृट् तृषा वा सञ्जातास्य । तारका-
दित्वात् इतच् ।) तृष्णायुक्तः । तत्पर्य्यायः ।

| (चुरां-पक्षे भ्वां-परं-सकं-सेट् ।) कि, तर्पयति तर्पति । योऽग्नित्रयं तर्पयतीति हलायुधः । इति दुर्गादासः ॥ | उणां २ । १३ । इति रक् ।) घृतम् । इत्यु- णादिकोषः ॥ पुरोडाशः । इति संक्षिप्तसारे उणादिवृत्तिः ॥ (तर्पके, त्रि । यथा, ऋग्वेदे । ८ । २ । ५ । | |
|---|---|---|

तर्षितः २ सतृट् ३ । इति त्रिकाण्डशेषः ॥
(यथा, देवीभागवते । २ । ८ । २० ।
“तृषितश्च परिश्रान्तः क्षुधितश्चोत्तरासुतः
॥”
भावे क्तः ।) तृषायाम्, क्ली ॥

**तृषितोत्तरा**, स्त्री, (तृषितः उत्तरो यस्याः ।)

अशनपर्णी । इति शब्दचन्द्रिका ॥

**तृष्णक्**, [ज्] त्रि, (तृष्यति आकाङ्क्षतीति । तृष्

+ “स्वपितृषोर्नजिङ् ।” ३ । २ । १७२ ।
इति
नजिङ् ।) लुब्धः । इत्यमरः । ३ । १ । २२ ॥
(तृषितः । यथा, ऋग्वेदे । १ । ८५ । ११ ।
“असिञ्चन्नुत्सं गोतमाय तृष्णजे ॥”)

**तृष्णा**, स्त्री, (तृष + “तृषिशुषिरादिभ्यः कित् ।”

उणां ३ । १२ । इति नः स च कित् ।) अना-
त्मीयस्वीकारेच्छा । इति चण्डीटीकायां
नागोजी-
भट्टः ॥ सा लिप्सा । (यथा, रघुः । ८ । २ ।
“तदुपस्थितमग्रहीदजः
पितुराज्ञेति न भोगतृष्णया ॥”)
पानेच्छा । इति मेदिनी । णे, १६ ॥ तत्-
पर्य्यायः । उदन्या २ पिपासा ३ तृट् ४ तर्षः
५
इत्यमरः । ३ । ३ । ५१ ॥ तृषा ६ । इति
शब्द-
रत्नावली ॥ तर्पणम् ७ । इति जटाधरः ॥ *
॥
रोगविशेषः । तन्निदानं यथा, --
“वातात् पित्तात् कफात् तृष्णा सन्निपातात्
द्रवक्षयात् ।
षष्ठी स्यादुपसर्गाच्च वातपित्ते तु कारणम् ॥
सर्व्वासु तत् प्रकोपो हि सौम्यधातुप्रशोषणात्
।
सर्व्वदेहे भ्रमात् कम्पतापकृद्दाहमोहकृत् ॥
जिह्वामूलगलक्लोमतालुतोयवहाःशिराः ।
संशोष्य तृष्णा जायन्ते तासां सामान्यलक्ष-
णम् ॥ * ॥

तदौषधं यथा, --
“त्रिफलापिप्पलीचूर्णं भक्षितं मधुना
युतम् ।
भोजनादौ हि समधु पिपासां त्वरितं
हरेत् ॥”
इति तत्रैव १९४ अध्यायः ॥ * ॥
अपि च । “अथ तृष्णाधिकारः ।
तत्र तृष्णाया
निदानपूर्ब्बिकां सम्प्राप्तिमाह ।
भयश्रमाभ्यां वलसङ्क्षयाद्वा
ऊद्‌र्ध्वं चितं पित्तविवर्द्धनैश्च ।
पित्तं सवातं कुपितं नराणां
तालुप्रपन्नं जनयेत् पिपासाम् ॥
स्रोतःस्वपां वाहिषु दूषितेषु
दोषैश्च तृट् सम्भवतीह जन्तोः ।
तिस्रः स्मृतास्ताः क्षतजा चतुर्थी
क्षयात्तथान्यामसमुद्भवा च ॥
भुक्तोद्भवा सप्तमिकेति तासां
निबोध लिङ्गान्यनुपूर्ब्बशस्तु ॥
नराणां चितं स्वस्थान एव सञ्चितं
पित्तं
सवातं पित्तविवर्द्धनैः
कट्वम्लोष्णादिभिः कुपि-
तम् । भयश्रमाभ्यां
बलसङ्क्षयादुपवासादेश्च
वातः कुपितः । तद्द्वयं ऊद्‌र्ध्वं
प्रसरन् तालु-
प्रपन्नं सत् पिपासां जनयेत् । न
केवलं तालु-
न्येव दूषिते तृषा भवति । किन्तु
जलवाहि-
स्रोतःस्वपि । अत आह ।
स्रोतःस्वित्यादि ।
नन्वत्र बहुवचनं युक्तम् । यतो
जलवहे द्वे
स्रोतसी सुश्रुतेनोक्ते । उच्यते ।
तयोरेवानेक-
प्रतानयोगान्न दोषः । अपां वाहिषु
स्रोतः-

अग्नौ जठराग्नौ । कफसंवृते स्वकारणकुपितेन
कफेनोपरिष्टादाच्छादिते । वास्पावरोधात्
अग्ने-
रुष्मावरोधात् ।
अवरुद्धानलोष्मणाम्बुवहस्रोतः-
शोषणात् वलासेन कफेन नरस्य तृष्णा भवेत्
।
तया तृष्णया अर्द्दितः पीडितः । शुष्यति कृशो
भवति ॥ * ॥
क्षतजामाह ।
क्षतस्य रुक्शोणितनिर्गमाभ्यां
तृष्णा चतुर्थी क्षतजा मता तु ।
क्षतस्य शस्त्रादिक्षतयुक्तस्य । रुक् पीडा ॥ *
॥
क्षयजामाह ।
रसक्षयाद्या क्षयसम्भवा सा
तयाभिभूतस्तु निशादिनेषु ।
पेपीयतेऽम्भः स सुखं न याति
तां सन्निपातादिति केचिदाहुः ॥
रसक्षयोक्तानि च लक्षणानि
तस्यामशेषेण भिषग्व्यवस्येत् ।
रसक्षयलक्षणानि सुश्रुतेनोक्तानि ॥ रसक्षये
हृत्पीडा कम्पः शोषः शून्यता तृष्णा चेति ।
व्यवस्येत् जानीयात् ॥ * ॥
आमजामाह ।
त्रिदोषलिङ्गामसमुद्भवा च
हृच्छूलनिष्ठीवनसादकर्त्री ॥ * ॥
भुक्तोद्भवामाह ।
स्निग्धं तथाम्लं लवणञ्च भुक्तं
गुर्व्वन्नमेवाशु तृषां करोति ।
लवणञ्चेति चकारात् कटु च ॥ * ॥
उपसर्गजामाह ।
क्षीणस्वरः प्रताम्यन्
दीनाननहृदयशुष्कगलतालुः ।
भवति खलु सोपसर्गात् तृष्णा सा शोषिणी
कष्टा ॥
शोषिणी धातुशोषिणी ॥ * ॥
उपसर्गानाह ।

मुखशोषो जलातृप्तिरन्नद्वेषः स्वरक्षयः।
कण्ठोष्ठजिह्वाकार्क्कश्यं जिह्वानिष्क्रमणं
क्लमः।
प्रलापश्चित्तविभ्रंशो मृद्ग्रहोक्तास्तथामयाः।
मरुतः क्षामता दैन्यं शङ्खतोदः शिरोभ्रमः॥
गन्धाज्ञानास्यवैरस्यश्रुतिनिद्राबलक्षयाः।
शीताम्बुफेन्नवृद्धिश्च पित्तान्मूर्च्छास्यतिक्तता
॥
रक्तेक्षणत्वं सततं शोषो दाहोऽतिधूमकः।
कफं रुणद्धि कुपितस्तोयवाहिषु मारुतः॥
स्रोतःसु स कफस्तेन पङ्कवच्छोष्यते ततः।
शूकैरिवाचितः कण्ठो निद्रामधुरवक्त्रता॥
आत्मनः शिरसो जाड्यं
स्तैमित्यच्छर्द्यरोचका।
आलस्यमविपाकश्च यः स स्यात्
सर्व्वलक्षणः॥
आमोद्भवा च भक्ष्यस्य संरोधाद्वातपित्तजा।
उष्णक्रान्तस्य सहसा शीताम्भो भजतस्तृषा
॥
तृष्णा वोद्र्ध्वं गतं कोष्ठं कुर्य्यात् पित्तरुजैव
सा।
या च पानातिपानोत्था तीक्ष्णाग्नेः स्नेह-
पाकजा॥
स्निग्धकट्वम्ललवणभोजनेन कफोद्भवा।
तृष्णारसक्षयोक्तेन लक्षणेन क्षयात्मिका॥
शोषमोहज्वराद्यस्य दीर्घरोगोपसर्गतः।
यातृष्णा जायते तीव्रा सोपसर्गात्मिका स्मृता
॥”
इति गारुडे तृष्णानिदानम् १५९ अध्यायः॥
*॥

स्विति जिह्वादेरप्युपलक्षणम्। यत
आह चरकः
रसवाहिनीश्च धमनीर्जिह्वा
हृदयगलतालुक्लोम
च। संशोष्य नृणां देहे
कुरुतस्तृष्णामतिबलौ
पित्तानिलाविति॥ सङ्ख्यामाह।
तिस्र इत्यादि॥
तृष्णायाः सामान्यं लक्षणमाह।
सततं यः पिबेत्तोयं न
तृप्तिमधिगच्छति।
मुहुः काङ्क्षति तोयन्तु तं
तृष्णार्द्दितमादिशेत्॥
वातजाया लक्षणमाह।
क्षामास्यता मारुतसम्भवायां
तोदस्तथा शङ्खशिरःसु चापि।
स्रोतोनिरोधो विरसञ्च वक्त्रं
शीताभिरद्भिश्च विवृद्धमेति॥
शङ्खशिरःसु शङ्खयोः शिरसि च।
स्रोतोनिरोधो
रसाम्बुवाहिधमनीनिरोधः॥*॥
पित्तजामाह।
मूर्च्छ्रान्नविद्वेषविलापदाहा
रक्तेक्षणत्वं प्रततश्च शोषः।
शीताभिनन्दा मुखतिक्तता च
पित्तात्मिकायां परिधूपनञ्च॥
विलापः प्रलापः। प्रततश्च शोषः
अविरतश्च
शोषः। शीताभिनन्दा शीतेच्छा।
परिधूपनं
कण्ठाद्धूमनिर्गम इव॥
कफजामाह।
वास्पावरोधात् कफसंवृतेऽग्नौ
तृष्णा वलासेन भवेन्नरस्य।
निद्रागुरुत्वं मधुरास्यता च
तयार्द्दितः शुष्यति चातिमात्रम्॥

ज्वरो मोहः क्षयः श्वासो वाधिर्य्यं कास एव च
।
वहिर्निर्गतजिह्वात्वं सप्तैते तदुपद्रवाः॥*॥
तद्युक्ताया अरिष्टत्वञ्चाह।
ज्वरमोहक्षयकासश्वासाद्युपसृष्टेह्वानाम्।
सर्व्वास्त्वतिप्रसक्ता रोगकृशानां
वमिप्रसक्तानाम्॥
घोरोपद्रवयुक्तास्तृष्णा मरणाय विज्ञेयाः।
आदिशब्दादतीसारादीनांग्रहणम्। अति-
प्रसक्ताः निरन्तराः। घोरोपद्रवयुक्ताः अतीव-
मुखशोषादियुताः॥*॥
अथ तृष्णायाश्चिकित्सा।
वातघ्नमन्नपानं मृदु लघु शीतञ्च
वाततृष्णायाम्।
तृष्णायां पवनोत्थायां सगुडं दधि शस्यते।
स्वादु तिक्तं द्रवं शीतं पित्ततृष्णापहं परम्॥*
॥
मुस्तपर्प्प टकोदीच्यछत्राख्योशीरचन्दनैः।
शृतं शीतं जलं दद्यात् तृड्दाहज्वरशान्तये॥
छत्रा धान्याकम्। कश्चिद्धात्रीञ्च दद्यात्।
चन्दनमत्र धवलं दद्यात्तस्यातितृष्णाहरत्वात्।
शृतमर्द्धपक्वमत्र कर्त्तव्यम्। इति षडङ्गपानम्
॥१॥
लाजोदकं मधुयुतं शीतं गुडविमर्द्दितम्।
काश्मरीशर्करायुक्तं पिबेत् तृष्णार्द्दितो नरः॥
२॥

आस्तरणमार्द्रवासः प्रावरणं चाद्रेमेव स्यात्
।
तेन पिपासा शाम्यति दाहश्चोग्रोऽपि देहिनां नियतम् ॥ ३ ॥
गोस्तनीक्षुरसक्षीरयष्टीमधुमधूत्पलैः ।
नियतं नासिकापीतैस्तृष्णा शाम्यति दारुणा ॥ ४ ॥
वैषद्यं जनयत्यास्ये सन्दधाति मुखे जलम् ।
तृष्णादाहप्रशमनं मधुगण्डूषधारणम् ॥ ५ ॥
जिह्वातालुगलक्लोमशोषेमूर्द्धनि दापयेत् ।
केशरं मातुलुङ्गस्य घृतसैन्धवसंयुतम् ॥ ६ ॥
दाडिमं वदरं लोध्रं कपित्थं वीजपूरकम् ।
पिष्टा मूद्धान लेपस्तु पिपासादाहनाशनः ॥ ७ ॥
वारि शीतं मधुयुतमाकण्ठाद्वा पिपासितम्
पाययेद्वामयेच्चापि तेन तृष्णा प्रशाम्यति ॥ ८ ॥
प्रातः सशर्करः पेयो हिमो धान्याकसम्भवः
।
जयेत् तृष्णां तथा दाहं भवेत् स्रोतोविशो-
धनम् ॥ ९ ॥
आमलं कमलं कुष्ठं लाजाश्च वटरोहकम् ।
एतच्चूर्णस्य मधुना गुटिकां धारयेन्मुखे ॥
तृष्णां प्रवृद्धां हन्त्येषा मुखशोषञ्च दारुणम् ॥ १० ॥
क्षतोद्भवां रुग्विनिवारणेन
जयेत् क्षतानामसृजश्च पातैः । ११ ।
क्षयोत्थितां क्षीरजलं निहन्या-
न्मांसोदकं वा मधुरोदकं वा ॥ १२ ॥
आमोद्भवां विल्ववचायुतानां
जयेत् कषायैरथ दीपनानाम् १३ ।
गुर्व्वन्नजामुल्लिखनैर्ज्जयेच्च
क्षयं विना सर्व्वकृताञ्च तृष्णाम् ॥
उल्लिखनैः लेखनद्रव्यैः ॥ १४ ॥
स्निग्धेऽन्ने भुक्ते या तृष्णा स्यात्तां गुडाम्बुना शमयेत् ।
अतिरोगदुर्ब्बलानां तृष्णां शमयेन्नृणामिहाशु पयः ॥
कपित्थं कोलमम्लीका
कुष्माण्डकमुपोदिका ।
खर्ज्जरं दाडिमं धात्री कर्कटी
नलदाम्बु च ॥
जम्बीरं करमर्द्दञ्च वीजपूरं गवां पयः
।
मधूकपुष्पं ह्रीवेरं तिक्तानि मधुराणि च ॥
बालतालाम्बु शीताम्बु पयः
पेटीप्रपानकम् ।
माक्षिकं सरसां तोयं शताह्वा
नागकेशरम् ।
एलाजातीफलं पथ्या कुस्तुम्बुरु च
टङ्गणम् ।
घनसारो गन्धसारः कौमुदी
शिशिरानिलः
चन्दनार्द्रप्रियाश्लेषो
रत्नाभरणधारणम् ।
हिमानुलेपनञ्च स्यात्
पथ्यमेतत्तृषातुरे ॥”
अपथ्यानि यथा, --
“स्नेहाञ्जनस्वेदनधूमपान-
व्यायामनस्यातपदन्तकाष्ठम् ।
गुर्व्वन्नमम्लं लवणं कषायं
कटु स्त्रियं दुष्टजलानि तीक्ष्णम् ॥
एतानि सर्व्वाणि हिताभिलाषी
तृष्णातुरो नैव भजेत् कदाचित् ॥”
इति वैद्यकपथ्यापथ्यविधिग्रन्थे
तृष्णाधिकारे ॥)

**तृष्णाक्षयः**, पुं, (तृष्णाया विषयलिप्सायाः क्षयो
नाशो यत्र ।) शान्तिः । इति
हेमचन्द्रः । २ ।
२१८ ॥ (यथा,
शब्दार्थचिन्तामणिधृतवचनम् ।
“यच्च कामसुखं लोके यच्च दिव्यं
महत् सुखम् ।
तृष्णाक्षयसुखस्यैव कलां नार्हति
षोडशीम् ॥”
पराक्रमः । (यथा, महाभारते । ३ । २८ । ६ ।
“न श्रेयः सततं तेजो न नित्यं श्रेयसी क्षमा ।
इति तात ! विजानीहि द्वयमेतदसंशयम् ॥”)
रेतः । इति मेदिनी । से, २५ ॥ (यथा, रघुः ।
“अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः
सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम् ॥”
“तत्र स्त्रीपुंसयोः संयोगे तेजः शरीराद्वायु-
रुदीरयति । ततस्तेजोऽनिलसन्निपाताच्छुक्रं
च्युतं
योनिमभिप्रतिपद्यते संसृज्यते चार्त्तवेन ।”
“तत्र तेजोधातुः सर्व्ववर्णानां प्रभवः स यदा
गर्भोत्पत्तावब्धातुप्रायो भवति तदा गर्भं गौरं
करोति पृथिवीधातुप्रायः कृष्णं पृथिव्याकाश-
धातुप्रायः कृष्णश्यामं तोयाकाशधातुप्रायो
गौरश्यामम् ॥” इति सुश्रुते शारीरस्थाने
द्वितीयेऽध्याये ॥ सारः । यथा, मुश्रुते । १ । १५
।
रसादीनां शुक्रान्तानां धातूनां यत् परं तेज-
स्तत् खल्वोजस्तदेव बलमित्युच्यते स्वशास्त्र-
सिद्धान्तात् ॥”
“यत् परं तेजः इति यदुत्कृष्टं सारः ।”
इति तट्टीका ॥
शारीराग्निसम्भूतपदार्थविशेषः । तद्यथा, --
“तेजोऽप्याग्नेयं क्रमशः पच्यमानानां धातूना-
मभिनिर्वृत्तमन्तरस्थं स्नेहजातं वसाख्यं स्त्रीणां
विशेषतो भवात तेन मार्द्दवसौकुमार्य्यमृद्व-
ल्परोमतोत्साहदृष्टिस्थितिपक्तिकान्तिदीप्तयो
भवन्ति तत् कषायतिक्तशीतरूक्षविष्टम्भिवेग-
विघातव्यवायव्यायामव्याधिकर्षणैश्च विक्रियते ॥”
इति च सुश्रुते सूत्रस्थाने पञ्चदशेऽध्याये ॥)
त्विट् । (देहजकान्तिः । यथा, वाजसनेय-
संहितायाम् । १ । ३१ ।
“तेजोऽसि शुक्रमस्यमृतमसि ।
धामनामासि प्रियं देवानामनाधृष्टं देवयजन-
मसि ॥”
“हे आज्य ! त्वं तेजोऽसि शरीरकान्तिहेतु-
त्वात्तेजस्त्वम् ।” इति महीधरः ॥) नवनीतम् ।
अग्निः । इति हेमचन्द्रः । २ । १५ ॥ सुवर्णम् ।

पयोऽत्र दुग्धम् ॥ १५ ॥
मूर्च्छाच्छर्द्दितृषादाहस्त्रीमद्यभृशकर्षिताः ।
पिबेयुः शीतलं तोयं रक्तपित्ते मदात्यये ॥
१६ ॥
सात्म्यान्नपानभैष्यज्यैस्तृष्णां तस्य जयेत्
पुनः ।
तस्यां जितायामन्योऽपि व्याधिः
शक्यश्चिकित्-
सितुम् ॥ १७ ॥ * ॥
तृष्यन् पूर्ब्बामयक्षीणो न लभेत जल यदि ।
मरणं दीर्घरोगं वा प्राप्नुयात् त्वरितं नरः ॥
तृषितो मोहमायाति मोहात् प्राणान्
विमुञ्चति ।
तस्मात् सर्व्वास्ववस्थासु न क्वाचद्वारि
वारयेत् ॥
अन्नेनापि विना जन्तुः प्राणान् धारयत
चिरम् ।
तोयाभावात् पिपासार्त्तः क्षणात्
प्राणैर्व्विमुच्यते ॥
इति तृष्णाधिकारः ॥” इति भावप्रकाशः ॥
(अथास्याः पथ्यापथ्यनियमः ॥ पथ्यानि
यथा, --
“शोधनं शमनं निद्रां स्नानं कवलधारणम् ।
जिह्वाधःसिरयोर्द्दाहो दीपदग्धहरिद्रया ॥
कोद्रवाः शालयः पेया विलेपी लाजशक्तवः
।
अन्नमण्डो धन्वरसाः शर्करा वागषाडवौ ॥
भृष्टैर्मुद्गैर्मसूरैर्व्वा चणकैर्वा कृतो रसः ।
रम्भापुष्पं तैलकूर्च्चं द्राक्षापर्पटपल्लवाः ॥

तृष्णायाः पिपासायाः क्षयः ।)
पिपासा-
नाशश्च ॥

**तृष्णारिः**, पुं, (तृष्णायाः पिपासायाः अरिः
शत्रुः ।) पर्पटः । इति राजनिर्घण्टः
॥

**तृह**, ध ऊ श हिंसे । इति कविकल्पद्रुमः ॥
(रुधां-
तुदां च-परं-सकं-वेट् ।) सप्तमस्वरी
। ध,
तृणेढि । (यथा, भट्टिः ।
“तृणेढु रामः सह लक्षणेन ॥”)
ऊ, अतर्हीत् अतृक्षत । श, तृहति ।
इति
दुर्गादासः ॥

**तॄ**, तर । अभिभवे । प्लुत्याम् । इति
कविकल्प-
द्रुमः ॥ (भ्वां-परं-सकं-प्लतौ अकं-
सेट् ।) तरः ।
प्लवनपूर्ब्बकदेशान्तरगमनम् ।
प्लुतिर्म्मज्जना-
भावः । तरति नदीं भेलया पान्थः ।
तरति
सकलदुःखं वामनं भावयद्यः ।
तरति शुष्क-
काष्ठं जले मज्जति नेत्यर्थः ॥ इति
दुर्गादासः ॥

**ते**, व्य, त्व्या, इति त्रिकाण्डशेषः ॥ (गौरी ।
यथा, सङ्गीतदामोदरः ।
“तेशब्देनोच्यते गौरी नशब्देनोच्यते
हरः ।
तन माङ्गलिकश्चाय शब्दस्तेन इति
स्मृतः ॥”)

**तेजः**, [स्] क्ली, (तेजयति तेज्यतेऽनेन वा ।
तिज निशाने + “सर्व्वधातुभ्योऽसुन्
।” उणां ।
४ । १८८ । इति असुन् ।) दीप्तिः ।
(यथा,
माघे । २ । ६२ ।

मज्जा । पित्तम् । इति राजनिर्घण्टः ॥ अस-
हनम् । यथा, साहित्यदर्पणे । ३ । ६४ ।
“अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् ।
प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम् ॥”
पञ्चमहाभूतान्तर्गततृतीयमहाभूतम् । यथा, --
“तृतीयं ज्योतिरित्याहुश्चक्षुरध्यात्ममुच्यते ।
अधिभूतं ततो रूपं सूर्य्यस्तत्राधिदैवतम् ॥”
इत्याश्वमेधिकपर्व्व ॥
अस्य धर्म्माः रूपम् १ द्रवत्वम् २ प्रत्यक्ष-
योगित्त्वम् ३ ॥ अस्य गुणाः । स्पर्शः १ संख्या
२
परिमाणम् ३ पृथक्त्वम् ४ संयोगः ५ विभागः ६
परत्वम् ७ अपरत्वम् ८ रूपम् ९ द्रवः १०
वगः ११ । अस्य नैमित्तिकद्रवत्वम् । अस्य
स्पर्श
उष्णः । रूपं शुक्लभास्वरम् । इदं द्विधा ।
परमाणुस्वरूपं नित्यम् । सावयवमनित्यम् ।
अनित्यं त्रिधा देहः इन्द्रियं विषयः । इति
भाषापरिच्छेदः ॥ (विष्णुः । यथा, महा-
भारते । १३ । १४९ । ४३ ।

| | | |
|---|---|---|
| | “अन्यदुच्छङ्खलं सत्त्वमन्यच्छास्त्रनियान्त्रितम्। सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ॥”) प्रभावः । (यथा, महाभारते । ६ । १४ । ४८ । “तस्मान्नूनं महावीर्य्याद्भार्गवाद्युद्धदुर्म्मदात् । तेजोवीर्य्यबलैर्भूयान् शिखण्डी द्रुपदात्मजः ॥”) | |

"ओजस्तेजो द्युतिधरः प्रकाशात्मा प्रतापनः ॥"
शिवः । यथा, तत्रैव । १३ । १७ । ५२ ।
"तेजोऽपहारी बलहा मुदितोऽर्थोऽजितोऽवरः ॥"
द्रिसप्ततिसाध्यमौलिककायस्थानामन्यतमः । तत्र
अकारान्तोऽयम् । यथा, कुलदीपिकायाम् ।
"खामः क्षोमो घर वैओषो
वीदस्तेजश्चार्णव आशः ॥")

**तेजःफलः**, पुं, (तेजसे बलाय तेजःप्रदं वा फल-
मस्य ।) वृक्षविशेषः । तेजफल इति भाषा ।
तत्पर्य्यायः । बहुफलः २ शाल्मलीफलः ३
स्तवकफलः ४ स्तेयफलः ५ गन्धफलः ६ कण्ट-
वृक्षः ७ । अस्य गुणाः । कटुत्वम् । तीक्ष्ण-
त्वम् । सुगन्धित्वम् । दीपनत्वम् । वातश्लेष्मा-
रुचिनाशित्वम् । बालरक्षाकरत्वञ्च । इति
राजनिर्घण्टः ॥

**तेजनः**, पुं, (तेजयति अग्निमिति । तिज + णिच्
+ ल्युः ।) वंशः । इत्यमरः । २ । ४ । १६१ ॥
मुञ्जः । भद्रमुञ्जः । इति राजनिर्घण्टः ॥
(बाणादीनां फलके । यथा, मनुः । ७ । ९० ।
"न कर्णिभिर्नापि दिग्धैर्नाग्निज्वलिततेजनैः ॥"
उद्दीपने, क्ली । यथा, सुश्रुते चिकित्सा-
स्थाने । २४ अध्याये ।
"सिरामुखविविक्तत्वं त्वक्स्थस्याग्नेश्च
तेजनम् ॥")

**तेजनकः**, पुं, (तेजयतीति । तिज + णिच् + ल्युः
संज्ञायां कन् । यद्वा, तेजनेन फलकेन काय-
तीति । कै + कः ।) शरः । इत्यमरः । २ । ४
। १६२ ॥

**तेजनी**, स्त्री, (तेजयतीति । तिज + णिच् + ल्युः ।
गौरादित्वात् ङीष् ।) मूर्व्वा । इत्यमरः ।
त्वचं लघूष्णं कटुक स्वादु तिक्तञ्च
रूक्षकम् ॥
पित्तलं कफवातघ्नं
कण्ड्वामारुचिनाशनम् ।
हृद्वस्तिरोगवातार्शःकृमिपीनसशुक्रहृत् ॥"
इति भावप्रकाशः ॥

**तेजलः**, पुं, (तेजति अतिशयेन पालयति शावका-
निति । तेज पालने + बाहुलकात्
कलच् ।)
कपिञ्जलपक्षी । इति राजनिर्घण्टः ॥

**तेजस्करं**, त्रि, (तेजः करोतीति । तजस् + कृ +
टः ।) तेजोवृद्धिकारकद्रव्यम् । इति
वैद्यकम् ॥

**तेजस्विनी**, स्त्री, (तेजो विद्यतेऽस्याः । तजस् +
विनिः स्त्रियां ङीप् ।) ज्योतिष्मती ।
इति शब्द-
रत्नावली ॥ महाज्योतिष्मती । इति राज-
निर्घण्टः ॥ (तेजवल्कल इति च । तत्पर्य्याया
यथा, --
"तेजस्विनी तेजवती तेजोह्वा तेजनी
तथा ॥"
अस्या गुणा यथा, --
"तेजस्विनी
कफश्वासकाशास्यामयवातहृत् ।
पाचन्युष्णा कटुस्तिक्ता
रुचिवह्निप्रदीपनी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**तेजस्वी**, [न्] त्रि, (तेजोऽस्त्यस्येति । विनिः ।)
तेजोयुक्तः । यथा, --
"महातपस्वी तेजस्वी ब्रह्मचारी च
सुव्रती ।
पाचन्युष्णा कटुस्तिक्ता रुचिवह्निप्रदीपनी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
(अग्नेर्विमानम् । यथा, ब्रह्माण्डे ३८
अध्याये ।
"महाविमानं प्रथितं भास्करं जातवेदसः ।
सा हि तेजोवती नाम हुताशस्य महासमा ॥")

**तेजोवृक्षः**, पुं, (तेजोयुक्तो वृक्षः । अग्न्युत्पादकत्वा-
दस्य तथात्वम् ।) क्षुद्राग्निमन्थः । इति राज-
निर्घण्टः ॥

**तेन**, व्य, तद्धेतुना । इत्यमरटीकायां भरतः ॥ सेइ
निमित्ते इति भाषा ॥

**तेनः**, पुं, (ते गौरी न शिवो यत्र ।) गानाङ्ग-
विशेषः । यथा, सङ्गीतदामोदरे ।
"तेनेति शब्दस्तेनः स्यात् मङ्गलानां प्रदर्शकः ।
ते शब्देनोच्यते गौरी नशब्देनोच्यते हरः ॥
तेन माङ्गालकश्चायं शब्दस्तेन इति स्मृतः ॥"

**तेप**, ऋ ङ कम्पे । च्युतौ । इति कविकल्पद्रुमः ॥
(भ्वां-आत्मं-अकं-सेट् ।) ऋ, अतितेपत् । ङ,
तेपते वृक्षः । तितेपे । इति दुर्गादासः ॥

**तेमः**, पुं, (तिम आर्द्रीभावे + भावे घञ् ।) आर्द्री-
भावः । इत्यमरः । ३ । २ । २९ ॥

**तेमनं**, क्ली, (तिम + भावे ल्युट् ।) आर्द्रीकरणम् ।
व्यञ्जनम् । इति मेदिनी । ने, ७२ ॥

**तेमनी**, स्त्री, (तिम्यतेऽनेनेति । तिम + ल्युट् + ङीप् ।)
चुल्लीभेदः । इति हेमचन्द्रः ॥

**तेव**, ऋ ङ देवने । इति कविकल्पद्रुमः ॥ (भ्वां-

२ । ४ । ८३ ॥ (अस्याः पर्य्याया यथा, --
“तेजनी पिलुनी देवा तिक्तवल्ली पृथक्त्वचा ।
धनुः श्रेणी मधुरसा मूर्व्वा निर्द्दहनीति च ॥”
इति वैद्यकरत्नमालायाम् ।
पर्य्यायान्तरं यथा, --
“मूर्व्वा मधुरसा देवी मोरटा तेजनी स्रुवा ।
मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ॥”
इति भावप्रकाशे पूर्ब्बखण्डे प्रथमे भागे ॥)
ज्योतिष्मती । इति शब्दरत्नावली ॥
(तेजवती ।
अस्या पर्य्यायाः यथा, --
“तेजस्विनी तेजवती तेजोह्वा तेजनी तथा ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**तेजपत्रं**, क्ली, (तेजयतीति । तिज + णिच् + अच् ।
तेजं पत्रमस्य ।) स्वनामख्यातवृक्षः । तज इति
तेजपात इति च भाषा । तत्पर्य्यायः । गन्ध-
जातम् २ पत्रम् ३ पत्रकम् ४ । इति शब्दरत्ना-
वली । अस्य गुणाः ।
कफवाय्वार्शोहृल्लासारुचि-
नाशत्वम् । इति राजवल्लभः ॥ अमरोक्त-
पर्य्यायास्त्वक्पत्रशब्दे द्रष्टव्याः ॥ तस्य नाम-
गुणाः ।
“त्वक्पत्रञ्च वराङ्गं स्याद्भृङ्गं चोचं तथोत्कटम् ।
युष्मद्विधोक्तं शास्त्रञ्च पठित्वान्यश्च पण्डितः ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डम् ॥
(इन्द्रस्य पुत्त्रविशेषः । यथा, महाभारते ।
१ । १९८ । २९ ।
“शान्तिश्चतुर्थस्तेषां वैतेजस्वी पञ्चमः स्मृतः ॥”)

**तेजितः**, त्रि, (तिज + क्तः ।) तीक्ष्णीकृतः ।
शाणान इति भाषा । तत्पर्य्यायः ।
निशितः २
क्षुतः ३ शाणितः ४ । इत्यमरः । ३ । १ । ९१ ॥
शान्तः ५ शाणादिमार्ज्जितः ६ । इति शब्द-
रत्नावली ॥ क्ष्णुतः ७ निशातः ८
शितः ९
शातः १० । इति जटाधरः ॥

**तेजीयान्,** [स्] त्रि, (तेजो विद्यतेऽस्य । तेजस् +
ईयसुन् ।) तेजोयुक्तः । यथा, --
“अज्ञानी पुरुषः शश्वज्जडितश्च स्वकर्म्मणा ।
तेजीयसां न दोषाय वह्नेः सर्व्वभुजो यथा ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डम् ॥

**तेजोमन्थः**, पुं, (तेजो मथ्नातीति । मन्थ + कर्म्म-
ण्यण् ।) गणिकारिका । इति रत्नमाला ॥

**तेजोरूपं**, क्ली, (तेजः सर्व्वप्रकाशकं चैतन्यं रूपं
यस्य ।) ब्रह्म । यथा, --
“अशरीरं विग्रहवदिन्द्रियवदतीन्द्रियम् ।
यदसाक्षि सर्व्वसाक्षि तेजोरूपं नमाम्यहम् ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डम् ॥

**तेजोवती**, स्त्री, (तेजोऽस्त्यस्या इति । तेजस् +
मतुप् मस्य वः ।) गजपिप्पली । इति शब्द-
आत्मं-अकं-सेट् ।) देवनमिह क्रीडा । ऋ,
अतितेवत् । ङ, तेवते । तेवते बालः कन्दूकै-
र्नित्यमिति हलायुधः । देवनमिह रोदनमिति
भट्टमल्लः । इति दुर्गादासः ॥

**तेवनं**, क्ली, (तेव्यते दीव्यतेऽस्मिन्निति । तेव क्रीडा-
याम् + अधिकरणे ल्युट् ।) केलिकाननम् ।
(भावे ल्युट् ।) क्रीडा । इति मेनिनी । ने, ७१ ॥
(यथा,
शब्दार्थचिन्तामणिधृतरामायणबचनम् ।
“तेवनेन वनं गत्वा नदीस्तीर्त्त्वा बहूदकाः ॥”)

**तैक्ष्ण्यं**, क्ली, (तीक्ष्णस्य भावः । तीक्ष्ण + ष्यञ् ।)
तीक्ष्णता । इति व्याकरणम् ॥ (यथा, सुश्रुते ।
१ । ५ ।
“शौर्य्यमाशुक्रियाशास्त्रतैक्ष्ण्यमस्वेदवेपथू ॥”
कठोरता । यथा, रामायणे । २ । २१ । ४४ ।
“तदेतां विसृजानार्य्यां क्षत्त्रधर्म्माश्रितां मतिम् ।
धर्म्ममाश्रय मा तैक्ष्ण्यं मद्बुद्धिरनुगम्यताम् ॥”
क्रूरता । यथा, मनुः । ४ । १६३ ।
“द्वेषं दम्भञ्च मानञ्च क्रोधं तैक्ष्ण्यञ्च वर्जयेत् ॥”
“मात्सर्य्यं
धर्म्मानुत्साहामिमानकोपक्रौर्य्याणि
त्यजेत् ।” इति तट्टीकायां कुल्लूकभट्टः ॥)

**तैजसं**, क्ली, (तेजसो विकारः । तेजस् + “तस्य
विकारः ।” ४ । ३ । १३४ । इत्यण् ।) घृतम् ।
इति स्मृतिः ॥ धातुद्रव्यम् । इत्यमरः । २ । ९ । ९९ ॥
(यथा, मनुः । ५ । १११ ।

| | | |
|---|---|---|
| | रत्नावली ॥ चविका । इति रत्नमाला ॥ महा-<br>ज्योतिष्मती । इति राजनिर्घण्टः ॥ तेजल इति<br>तेजवल्कल इति च भाषा । तस्याः पर्य्यायगुणाः ।<br>“तेजस्विनी तेजवती तेजोह्वा तेजनी तथा ।<br>तेजस्विनी<br>कफश्वासकासास्यामयवातहृत्॥ | “तैजसानां मणीनाञ्च सर्व्वस्याश्ममयस्य च ॥”<br>तीर्थविशेषः । यथा, महाभारते । ९ । ४६ । १०३ ।<br>“तैजसं नाम तत्तीर्थं यत्र पूर्ब्बमपाम्पतिः । |

अभिषिक्तः सुरगणैर्व्वरुणो
भरतर्षभ ! ॥”
तेजःसम्बन्धिनि, त्रि । यथा, रघुः ।
११ । ४३ ।
“तैजसस्य धनुषः प्रवृत्तये
तोयदानिव सहस्रलोचनः ॥”)

**तैजसः**, पुं, (तेजसो विकारः । तेजस् + अण् ।)
सूक्ष्मशरीरव्यष्ट्युपहितचैतन्यम् ।
यथा, --
“एतद्व्यष्ट्युपहितं चैतन्यं तैजसो
भवति तेजो-
मयान्तःकरणोपहितत्वात् ॥” इति
वेदान्त-
सारः ॥ (तैजसाहङ्कारविशेषः ।
यथा, भाग-
वते । २ । ५ । २४ ।
“सोऽहङ्कार इति प्रोक्तो विकुर्व्वन्
समभूत्त्रिधा ।
वैकारिकस्तैजसश्च तामसश्चेति
यद्भिदा ॥”
घोटकविशेषः । तल्लक्षणादिकं यथा,
भोज-
राजकृतयुक्तिकल्पतरौ ।
“ये क्रोधशीला भृशवेगयुक्ता
मुक्ता दिनात् क्रोशशतं व्रजन्ति ।
ते तैजसाः पुण्यवतां प्रदेशे
भवन्ति पुण्यैरपि ते मिलन्ति ॥”
सुमतिपुत्त्रः । यथा, ब्रह्माण्डे ३६
अध्याये ।
“तैजसस्तत्सुतश्चापि
प्रजापतिरमित्रजित् ॥”)

**तैजसावर्त्तनी**, स्त्री, (आवर्त्ततेऽत्र । आ + वृत् +
ल्युट् स्त्रियां ङीप् । तैजसानां
धातुद्रव्यानां
सुवर्णादीनां आवर्त्तनी ।) मूषा ।
इत्यमरः ।
यजूंषि तित्तिरा भूत्वा तल्लोलुपतया ददुः ।
तैत्तिरीया इति यजुःशाखा आसन् सुपेशलाः ॥”
इति श्रीभागवतम् ॥

**तैरणी**, स्त्री, (तीरे नमतीति । नम + डः । ततः
स्वार्थे अण् । स्त्रियां गौरादित्वात् ङीष् ।)
क्षुपविशेषः । तत्पर्य्यायः । तैरणः २ तैरः ३
कुनीली ४ रागदः ५ । अस्य गुणाः । शिशिर-
रत्वम् । तिक्तत्वम् । व्रणनाशित्वम् । अरुण-
रङ्गदत्वञ्च । इति राजनिर्घण्टः ॥

**तैलं**, क्ली, (तैलं तैलवत् स्नेहोऽस्त्यस्येति । अच् ।)
सिह्लकः । इति रत्नमाला ॥ (तिलस्य तत्-
सदृशस्य वा विकारः । तिल + “तस्य विकारः
।”
४ । ३ । १३४ । इत्यण् ।) तिलादिजातस्नेहः ।
यथा, भावप्रकाशे ।
“तिलादिस्निग्धवस्तूनांस्नेहस्तैलमुदाहृतम् ॥”
तत्पर्य्यायः । म्रक्षणम् २ स्नेहः ३ अभ्य-
ञ्जनम् ४ । इति हेमचन्द्रः । ३ । ८१ ॥ अस्य
गुणाः । कषायत्वम् । मधुरत्वम् । त्वच्यत्वम् ।
उष्णत्वम् । व्यवायित्वम् । पित्तकारित्वम् ।
वद्ध-
विन्मूत्रत्वम् । श्लेष्मावर्द्धकत्वम् । सर्व्ववात-
विकारनाशित्वम् । मेधाग्निबलवर्द्धनत्वञ्च ।
“नास्ति तैलात् परं किञ्चित् भेषजं मारुता-
पहम् ॥”
इति राजनिर्घण्टः ॥
पक्वपुरातनतैलस्य गुणः । महद्गुणत्वम् ।
किञ्चिद्गन्धहीनत्वञ्च । द्रव्यसंयोगे
संस्कृततैलस्य
सर्व्वरोगनाशित्वम् ॥ अवगाहने युक्ततैलस्य
गुणः । शरीरबलकारित्वम् । शिंरामुखरोम-
कूपधमनीनाडीद्वारा तृप्तिकारित्वञ्च । नित्यं
मस्तके अधिकतैलदानगुणाः । शिरःशूल-
खालित्यपालित्यनाशित्वम् । केशमूलस्य
दृढता-
कारित्वम् । केशस्यापतनघनताकृष्णतादीर्घता-
कारित्वम् । इन्द्रियप्रसन्नताग्निशुद्धिकारित्वञ्च ॥
नित्यं कर्णे तैलपूरणस्य गुणाः । मन्याहनु-
अर्थग्लानिर्भवति च गुरौ भार्गवे शोकयुक्त-
स्तैलाभ्यङ्गात्तनयमरणं सूर्य्यजे दीर्घमायुः
॥”
इति ज्योतिःसारसंग्रहः ॥
वारादिविशेषे तदभ्यङ्गे गुणदोषौ यथा, --
“सन्तापः कीर्त्तिरल्पायुर्धनं निधनमेव च ।
आरोग्यं सर्व्वकामाप्तिरभ्यङ्गाद्भास्करादिषु
॥
उपोषितस्य व्रतिनः कृत्तकेशस्य नापितैः
।
तावत् श्रीस्तिष्ठति प्रीता यावत्तैलं न
संस्पृशेत् ॥”
इति गारुडे ११४ अध्यायः ॥ * ॥
अथ तैलवर्गः । तत्र तैलस्य
स्वरूपनिरूपणम् ।
“तिलादिस्निग्धवस्तूनां
स्नेहस्तैलमुदाहृतम् ।
तत्तु वातहरं सर्व्वं विशेषात्तिलसम्भवम् ॥”
* ॥
अथ तिलतैलगुणाः ।
“तिलतैलं गुरु स्थैर्य्यं बलवर्णकरं परम् ।
वृष्यं विकाशि विशदं मधुरं रसपाकयोः ॥
सूक्ष्मं कषायानुरसं तिक्तं वातकफापहम् ।
वीर्य्येणोष्णं हिमं स्पर्शे बृंहणं रक्तपित्तहृत्
॥
लेखनं बद्धविम्मूत्रत्वगामाशयशोधनम् ।
दीपनं बुद्धिदं मेध्यं व्यवायि व्रणमेहनुत् ॥
श्रोत्रयोनिशिरःशूलनाशनंलघुताकरम् ।
त्वच्यं केश्यञ्च चक्षुष्यमभ्यङ्गे
भोजनेऽन्यथा ॥
छिन्नभिन्नच्युतोत्पिष्टमथितक्षतपिच्चिते ।
भग्नस्फुटितविद्धाग्निदग्धाविश्लिष्टदारिते ॥
तथाभिहतनिर्भुग्नमृगव्याघ्रादिविक्षते ।
वस्तौ पानेऽन्नसंस्कारे नस्ये कर्णाक्षिपूरणे
॥
सेकाभ्यङ्गावगाहेषु तिलतैलं प्रशस्यते ॥”
* ॥
ननु बृंहणलेखनयोः कथं
सामानाधिकरण्य-

२ । १० । ३३ ॥ तैजसगलानं मूची इति भाषा ॥

**तैतिलं**, क्ली, ववाद्येकादशकरणान्तर्गत्तचतुर्थकर-

णम् । तत्र जातफलं यथा, --
"कलासु दक्षो ललनाभिलाषी
सुमूर्त्तिसन्तर्जितकामदेवः ।
वक्ता गुणज्ञः कुशलः सुशील-
श्चेत्तैतिलाख्यं करणं प्रसूतौ ॥"
इति कोष्ठीप्रदीपः ॥

**तैतिलः**, पुं, गण्डकः । इति मेदिनी । ने, ९९ ॥

**तैत्तिरं**, क्ली, (तित्तिरीणां पक्षिणां समूहः ।

तित्तिरि + "अनुदात्तादेरञ् ।" ४ । २ । ४४ ।
इति अञ् ।) तित्तिरिगणः । इत्यमरः । २ ।
६ । ४३ ॥ (यथा, गोः रामायणे । २ । १०० । ६३ ।
"वाप्यो मैरेयपूर्णाश्च
भृष्टमांसचयैर्वृताः ।
प्रतप्तैः पैटरैश्चैव मार्गमायूरतैत्तिरैः ॥")

**तैत्तिरः**, पुं, (तित्तिर एव । स्वार्थे अण् ।)

तित्तिरिपक्षी । इति राजनिर्घण्टः ॥ (गर्भिणी
एतन्मांसाशनाद्यादृशं सुतं जनयेत् तद्यथा,
"नित्यभीतञ्च तैत्तिरात् ॥"
इति सुश्रुते शारीरस्थाने
तृतीयाध्याये ॥)

**तैत्तिरीयकः**, पुं, (तैत्तिरं तित्तिरिप्रोक्तयजुर्व्वेदीय-

शाखामधीते वेत्ति वा । छण् । ततः स्वार्थे
कन् ।) तैत्तिरीयी ।
यजुर्व्वेदीयशाखाविशेष-
वेत्ता ॥ (उपनिषद्विशेषे, की । तत्तु
कृष्णयजु-

संग्रहोच्चैःश्रुतिवाधिर्य्यकर्णवातजरोगाजनक-
त्वम् ॥ मर्द्दने तैलस्य गुणः । घृतादष्टगुणगुरु-
त्वम् । इति राजवल्लभादिः ॥ * ॥
"प्रातःस्नाने व्रते श्राद्धे द्वादश्यां ग्रहणे तथा ।
मद्यलेपसमं तैलं तस्मात्तैलं विवर्जयेत् ॥"
इति कर्म्मलोचनम् ॥
"घृतञ्च सार्षपं तैलं यत्तैलं पुष्पवासितम् ।
अदुष्टं पक्वतैलञ्च तैलाभ्यङ्गे च नित्यशः ॥"
इति तिथ्यादितत्त्वम् ॥ * ॥
वारविशेषे तैलग्रहणफलं यथा, --
रवौ हृद्रोगः सोमे कीर्त्तिलाभः कुजे मृत्युः बुधे
पुत्त्राप्तिः गुरौ अर्थहानिः शुक्रे शोकः शनौ
दीर्घायुः ॥ * ॥
अथ निषिद्धदिने तैलग्रहणदोषशान्त्यर्थदेय-
द्रव्यनियमः । रवौ पुष्पं गुरौ दूर्व्वा कुजे भूमिः
शुक्रे गोमयम् । अस्य प्रमाणं यथा, --
"अर्के नूनं दहति हृदयं कीर्त्तिलाभश्च सोमे
भौमे मृत्युर्भवति नियतं चन्द्रजे पुत्त्रलाभः ।

मित्याह ।
"रूक्षादिदुष्टपवनः स्रोतः सङ्कोचयेद्यदा ।
रसेऽसम्यग्वहन् कार्श्यं
कुर्य्याद्रक्ताद्यवर्द्धनम् ॥
तेषु प्रवेष्टुं सरता सौक्ष्म्यस्निग्धत्वमार्द्दवैः ।
तैलं क्षमं रसं नेतुं कृशानां तेन बृंहणम् ॥
व्यवायसूक्ष्मतीक्ष्णोष्णसरत्वैर्म्मेदसः क्षयः ।
शनैः प्रकुरुते तैलं तेन लेखनमीरितम् ॥
द्रुतं पुरीषं बध्नाति स्खलितं तत् प्रवर्त्तयेत् ।
ग्राहकं सारकं वापि तेन तैलमुदीरितम् ॥
घृतमब्दात् परं पक्वं हीनवीर्य्यं प्रजायते ।
तैलं पक्वमपक्वं वा चिरस्थायि
गुणाधिकम् ॥" *
अथ सरिषबराइतैलगुणाः ।
"दीपनं सार्षपं तैलं कटुपाकरसं लघु ।
लेखनं स्पर्शवीर्य्योष्णं तीक्ष्णं
पित्तास्रदूषकम् ।
कफमेदोऽनिलार्शोघ्नं शिरःकर्णामयापहम् ।
कण्डूकोठकृमिश्वित्रकुष्ठदुष्टव्रणप्रणुत् ॥
तद्वद्राजिकयोस्तैलं विशेषान्मूत्रकृच्छ्रकृत् ।
राजिकयोः कृष्णराइ आरक्तराइ द्वयोः ॥ * ॥
अथ तोरीतैलगुणाः ।
तीक्ष्णोष्णं तुवरीतैलं लघु ग्राहि
कफास्रजित् ।
वह्निकृद्विषहृत् कण्डूकुष्ठकोठकृमिप्रणुत् ॥
मेदोदोषापहञ्चापि व्रणशोथहरं परम् ॥ * ॥
अथ तिसीतैलगुणाः ।
"अतसीतैलमाग्नेयं स्निग्धोष्णं
कफपित्तकृत् ।
कटुपाकमचक्षुष्यं बल्यं वातहरं गुरु ॥

| | | |
|---|---|---|
| र्व्वेदान्तर्गतम् । इति मुक्तिकोपनिषत् ॥)<br>**तैत्तिरीया**, स्त्री, (तित्तिरिणा प्रोक्ता । छण् ।)<br>यजुर्व्वेदस्य शाखाविशेषः । यथा, --<br>“देवरातसुतः सोऽपि छर्द्दित्वा यजुषां गणम् ।<br>ततो गतोऽथ मुनयो ददृशुस्तान् यजुर्गणान् ॥ | | |

मलकृद्रसतः स्वादु ग्राहि त्वग्दोषहृत् व्रणम् ।
वस्तौ पाने तथाभ्यङ्गे नस्ये कर्णस्य पूरणे ॥
अनुपानविधौ चापि प्रयोज्यं वातशान्तये ॥
* ॥
अथ वररैतैलगुणाः ।
कुसुम्भतैलमम्लं स्यादुष्णं गुरु विदाहि च ।
चक्षुर्भ्यामहितं बल्यं रक्तपित्तकफप्रदम् ॥ *
॥
अथ खाखसवीजतैलगुणाः ।
तैलं खाखसवीजानां बल्यं वृष्यं गुरु स्मृतम्
।
वातहृत् कफकृच्छीतं स्वादुपाकरसञ्च तत्
॥ * ॥
अथ एरण्डतैलगुणाः ।
एरण्डतैलं तीक्ष्णोष्णं दीपनं पिच्छिलं गुरु ।
वृष्यं त्वच्यं वयःस्थायि मेधाकान्तिबलप्रदम्
॥
कषायानुरसं सूक्ष्मं योनिशुक्रविशोधनम्।
विस्रं स्वादु रसे पाके सतिक्तं कटुकं सरम् ॥
विषमज्वरहृद्रोगपृष्ठगुह्यादिशूलहृत्।
हन्ति वातोदरानाहगुल्माष्ठीलाकटीग्रहान्॥
वातशोणितविड्बन्धव्रध्नशोथामविद्रधीन्।
आमवातगजेन्द्रस्य शरीरवनचारिणः ।
एक एव निहन्तायमेरण्डस्नेहकेशरी ॥ * ॥
अथ रालतैलगुणाः ।
तैलं सर्ज्जरसोद्भूतं विस्फोटव्रणनाशनम्।
कुष्ठपामाकृमिहरं वातश्लेष्मामयापहम् ॥ *
॥
अथ सर्व्वतैलगुणाः ।
तैलं स्वयोनिगुणकृद्वाग्भटेनाखिलं मतम् ।
अतः शेषस्य तैलस्य गुणा ज्ञेयाः
स्वयोनिवत् ॥
इति भावप्रकाशे तैलवर्गः ॥ * ॥
अथ पुराणतैलगुणाः ।
"यामं कल्ककषायवीर्य्यमखिलं चूर्णञ्च
पक्षत्रयं
षण्मासान् घृतमोदकौ सहगुडौ मासत्रयं
गुग्गुलोः ।
चालयति पार्थिवानपि यः स कुलालः परं
चक्री ॥"
यात्राकालेऽस्य दर्शनममङ्गलसूचकम्। यथा,
ब्रह्मवैवर्त्ते गणपतिखण्डे ३५ अध्याये ।
"ददर्शामङ्गलं राजा पुरो वर्त्तनि वर्त्तनि ॥"
"कुम्भकारं तैलकारं व्याधं सर्पोपजीविनम् ॥")

**तैलकिट्टं**, क्ली, (तैलस्य किट्टं मलम् ।) तैल-
मलम् । खलि इति ख्यातम् । तत्पर्य्यायः ।
पिण्याकः २ खलिः ३ तैलकल्कजः ४ । अस्य
गुणाः । कटुत्वम् । गौल्यत्वम् । कफवात-
प्रमेहनाशित्वञ्च । इति राजनिर्घण्टः ॥

**तैलङ्गः**, पुं, देशविशेषः । इति शब्दरत्नावली ॥
(यथा, शब्दार्थचिन्तामणिधृतवचनम्।
"श्रीशैलन्तु समारभ्य चोलेशान्मध्यभागतः ।
तैलङ्गदेशो देवेशि ! ध्यानाध्ययनतत्परः ॥")

**तैलचौरिका**, स्त्री, (तैलस्य चौरिकेव । चौर-
वत् तैलपानादस्यास्तथात्वम् ।) तैलपायिका ।
इति शब्दरत्नावली ॥

**तैलद्रोणी**, स्त्री, (तैलपूर्णा द्रोणी ।) कण्ठपर्य्यन्त-
मज्जनार्थतैलपूर्णकाष्ठादिनिर्म्मितपात्रविशेषः ।
तत्रावस्थितिगुणाः । वातरोगव्याकुण्ठरोगपङ्गु-
वाधिर्य्यमिन्मिनगद्गदधन्वङ्गस्तब्धपृष्ठप्रचलित-
पवनगात्रकम्पकपाटीग्रीवाभङ्गापतन्त्रक्षयरुधिर-
भवमूत्रकृच्छ्रवस्तिरोगेषु शस्ततत्वम् । इति राज-
वल्लभः ॥

**तैलपर्णकं**, क्ली, (तैलं तैलयुक्तमिव पर्णमस्य ।
कप् ।) ग्रन्थिपर्णवृक्षः । इति भावप्रकाशः ॥

**तैलपर्णिकं**, क्ली, (तैलयुक्तं पर्णमस्त्यस्य । यद्वा,
तिलपर्णो वृक्ष उत्पत्तिस्थानत्वेनास्त्यस्येति ।
ठन् ।) हरिचन्दनम् । इत्यमरः । २ । ६ । १३१ ॥
चन्दनविशेषः । तत्तु तिलपर्णवृक्षजातं धवलं
सुशीतलम् । इति भरतः ॥ (अस्य पर्य्याय यथा,
"श्रीखण्डं चन्दनं न स्त्री भद्रश्रीस्तैलपर्णिकः ।
गन्धसारो मलयजस्तथा चन्द्रद्युतिश्च सः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
चौरिका ३ । इति शब्दरत्नावली
॥ तैलपा ४ ।
इति राजनिर्घण्टः ॥ तैलाम्बुका
५ खला-
धारा ६ । इति जटाधरः ॥
(यथा, महा-
भारते । १३ । १०४ । १११ ।
"गृहे पारावता धन्याः शुकाश्च
सहसारिकाः ।
गृहेष्वेते न पापाय तथा वै
तैलपायिकाः ॥")

**तैलपिपीलिका**, स्त्री, (तैलप्रिया
पिपीलिका ।)
पिपीलिकाभेदः । तत्पर्य्यायः ।
उदद्या २
कपिजाङ्गिका ३ । इति
राजनिर्घण्टः ॥

**तैलफलः**, पुं, (तैलप्रधानं फलं यस्य ।)
इङ्गुदी ।
विभीतकः । इति राजनिर्घण्टः ॥

**तैलभाविनी**, स्त्री, (तैलं भावयति संद्गन्धं
करो-
तीति । भू + णिच् + णिनि +
ङीप् ।) जाती-
पुष्पवृक्षः । इति राजनिर्घण्टः ॥

**तैलमाली**, स्त्री, (तैलानां माला समूहो यत्र
। ततो
गौरादित्वात् ङीष् ।) वर्त्तिः ।
इति शब्दमाला ॥

**तैलम्पाता**, स्त्री, (तिलपातोऽस्यां वर्त्तते ।
"घञः
सास्याङ्क्रियेति ञः ।" ४ । २ ।
५८ । इति
ञः । "श्येनतिलस्य पाते ञे ।"
६ । ३ । ७१ ।
इति मुम् ।) स्वधा ।
तिलपातोऽस्यां स्वधायां

सिद्धानां रसभस्मनां सुविपुलं वीर्य्यन्तु वर्षत्रयं
किञ्चिद्गन्धविवर्ज्जितं गुणपरं तैलं पुराणं महत् ॥”
इति नारायणदासकृतपरिभाषा ॥

**तैलकं**, क्ली, (स्वल्पं तैलम् । अल्पार्थे कन् ।)
अल्पपरिमाणतैलम् । इति व्याकरणम् ॥

**तैलकन्दः**, पुं, (तैलप्रधानः कन्दः ।) कन्दविशेषः ।
तत्पर्य्यायः । द्रावककन्दः २ तिलाङ्कितदलः ३ करवीरकन्दसंज्ञः ४ तिलचित्रपत्रकः ५ । अस्य गुणाः । लोहद्रावित्वम् । कटुत्वम् । उष्णत्वम् । वातापस्मारविषशोफनाशित्वम् । रसस्य बन्ध-कारित्वम् । स्नेहसिद्धिकारित्वञ्च । इति राज-निर्घण्टः ॥

**तैलकारः**, पुं, (तैलं करोतीति । कृ + “कर्म्म-ण्यण् ।” ३ । २ । १ । इत्यण् ।) वर्णसङ्कर-जातिविशेषः । कलु इति भाषा । स कोटक-स्त्रीगर्भे कुम्भकाराज्जातः । इति ब्रह्मवैवर्त्ते ब्रह्मखण्डम् ॥ तत्पर्य्यायः । धूसरः २ चाक्रिकः ३ तैली ४ । इति हेमचन्द्रः ॥ (यथा, आर्य्या-सप्तशत्याम् । ५९२ ।
“स्नेहमयान् पीडयतः किं चक्रेणापि तैल-कारस्य ।
वृक्षविशेषे, पुं । यथा, हरिवंशे । २२३ । ६८ ।
“कदम्बाश्चैव भव्याश्च दाडिमा वीजपूरकाः ।
कालीयका दुकूलाश्च हिङ्गवस्तैलपर्णिकाः ॥”)

**तैलपर्णी**, स्त्री, (तिलपर्णे वृक्षे जातः । “तत्र जातः ।” ४ । ३ । २५ । इत्यण् ततो ङीप् ।) चन्दनम् । श्रीवासः । (पर्य्यायोऽस्या यथा, --
“तैलपर्णी दधित्थाख्यः पिण्याको रक्तशीर्षकः ।
वेष्टो रसाह्वः श्रीवासः श्रीपिष्टसरलद्रवौ ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥) सिह्लकः । इति मेदिनी । णे, ९६ ॥

**तैलपा**, स्त्री, (तैलं पिबतीति । पा पाने + “आतो ऽनुपसर्गे कः ।” ३ । २ । ३ । इति कः ।) तैल-पायिका । इति राजनिर्घण्टः ॥

**तैलपायिका**, स्त्री, (तैलं पिबतीति । पा + ण्वुल् । टापि अत इत्वम् ।) कीटविशेषः । तेलापोका इति आरशुला इति च भाषा । तत्पर्य्यायः । पयोष्णी २ । इत्यमरः । २ । ५ । २६ ॥ तैल-सा । इति लिङ्गादिसंग्रहे अमरभरतौ ॥

**तैलसाधनं**, क्ली, (तैलं साधयति निष्पादयति सुगन्धीकरोतीति । साध + णिच् + ल्युः ।) गन्ध-द्रव्यविशेषः । काकला इति भाषा । तत्-पर्य्यायः । काकोलम् २ कोलकम् ३ गन्ध-व्याकुलम् ४ कक्कोलकम् ५ कोषफलम् ६ । इति शब्दचन्द्रिका ॥

**तैलस्फटिकः**, पुं, (तैलाक्तः स्फटिक इव । स्वच्छ-त्वात् तथात्वम् ।) तृणमणिः । इति हेम-चन्द्रः । ४ । १३४ ॥

**तैलागुरु**, क्ली, (तैलाक्तमिव अगुरु ।) दाहा-गुरु । इति राजनिर्घण्टः ॥

**तैलाटी**, स्त्री, (तैलेन तैलप्रदानेन अटति दूरी-भवतीति । अट गतौ + अच् + गौरादित्वात् ङीष् ।) वरटा । इति हेमचन्द्रः । ४ । २८१ ॥

**तैलाम्बुका**, स्त्री, (तैलं अम्बु जलमिव पेयं यस्याः । कप् । टाप् च ।) तैलपायिका । इति जटाधरः ॥

**तैलिकः**, पुं, (तैलं पण्यत्वेनास्त्यस्य । तैल + ठन् ।) तैलकारः । इति व्याकरणम् ॥ (अस्य अपाङ्-क्तेयत्वमुक्तम् । यथा, मनुः । ३ । १५८ ।
“समुद्रयायी वन्दी च तैलिकः कूटकारकः ॥”)

| | | |
|---|---|---|
| | | **तैलिनी**, स्त्री, (तैलं भक्ष्यत्वेन आश्रयत्वेन बा<br>अस्त्यस्येति । तैल + इनि +<br>ङीप् ।) कीटभेदः<br>तत्पर्य्यायः । तैलकीटः २<br>षड्विन्ध्या ३ दर्द्रु-<br>नाशिनी ४ । इति राजनिर्घण्टः<br>॥ दशावर्त्तिः ।<br>इति शब्दमाला ॥<br>**तैलिशाला**, स्त्री, (तैलिनस्तिलसम्बन्धिनस्तैलकारस्य<br>वा शाला गृहम् ।) यन्त्रगृहम् ।<br>इति हेम-<br>चन्द्रः । ४ । ६३ ॥ घाणिघर<br>इति भाषा ॥ |

**तैली**, [न्] पुं, (तैलं निष्पाद्यत्वेन पण्यत्वेन
वास्त्यस्येति । तैल + इनिः ।) तैलकारः । इति
हेमचन्द्रः । ३ । ५८१ ॥ तैलसम्बन्धिनि, त्रि ॥

**तैलीनं**, क्ली, (तिलानां भवनं क्षेत्रम् । तिल +
"विभाषा तिलमाषेति ।" ५ । २ । ४ । इति पक्षे खञ् ।) तिलक्षेत्रम् । इत्यमरः । २ । ९ । ७ ॥
(यथाच शब्दरत्नावल्याम् ।
"तिलोद्भवोचितं यत्तु तिल्यं तैलीनमित्यपि ॥")

**तैषः**, पुं, (तैषी तिष्यनक्षत्रयुक्ता पौर्णमासी
अस्मिन्निति । तैषी + "सास्मिन् पौर्णमासीति ।"
४ । २ । २१ । इत्यण् ।) पौषमासः । इत्य-
मरः । १ । ४ । १५ ॥
(तिष्यनक्षत्रसम्बन्धिनि,
त्रि । "तैषमहः । तैषी रात्रिः ।" इति
सिद्धान्तकौमुदी ॥)

**तैषी**, स्त्री, (तिष्येण नक्षत्रेण युक्ता । "सन्धि-
वेलाद्यृतुनक्षत्रेभ्योऽण् ।" ४ । ३ । १ । इत्यण् ।
"तिष्यपुष्ययोर्नक्षत्रानि यलोप इति वाच्यम् ।"
इति यलोपः । ङीप् ।) पुष्यनक्षत्रयुक्ता पौर्ण-
मासी । इति मुग्धबोधम् ॥

**तोकं**, क्ली, (तौति पूरयति गृहमिति । तु पूर्त्तौ
+ बाहुलकात् कः ।) अपत्यम् । पुत्त्रो दुहिता
च । इत्यमरः । २ । ६ । २८ ॥ (यथा, ऋग्वेदे ।
१ । ६४ । १४ ।
"तोकं पुष्येम तनयं शतं हिमाः ॥"
इत्यमरः । २ । ८ । ४१ ॥ वेणुकम् ३ । इति
भरतः ॥ (यथा, रामायणे । २ । ४० । ४१ ।
"न हि तत्पुरुषव्याघ्रो दुःखजं दर्शनं पितुः ।
मातुश्च सहितुं शक्तस्तोत्त्रैर्नुन्न इव द्विपः ॥")

**तोदः**, पुं, (तुद व्यथे + भावे घञ् ।) व्यथा ।
इति रत्नमाला ॥ (यथा, भागवते । ३ । १८ । ६ ।
"तोदं मृषन्निरगादम्बुमध्याद्-
ग्राहाहतः सकरेणुर्यथेभः ॥"
तुदतीति । तुद + अच् । पीडादायके, त्रि ।
यथा, ऋग्वेदे । ४ । १६ । ११ ।
"यासि कुत्सेन सरथमवस्युस्तोदो वातस्य
हर्य्योरीशानः ॥"
"तोदस्तोदकः ।" इति सायनः ॥)

**तोदनं**, क्ली, (तुद्यतेऽनेनेति । तुद + करणे ल्युट् ।)
तोत्त्रम् । इत्यमरः । २ । ९ । १२ ॥ (तुद +
भावे ल्युट् ।) व्यथा । इति मेदिनी ॥ ने, ७३ ॥
(यथा, सुश्रुते । १ । २२ ।
"तोदनभेदनताडनच्छेदनायमनमन्थनेत्यादि ॥"
वृक्षविशेषः । यथा, तत्रैव । १ । ४६ ।
"क्षीरवृक्षफलजाम्बवराजादनतोदनतिन्दुकवकुल-
धन्वनाश्मन्तकाश्वकर्णफल्गुपरूषकगाङ्गेरुकी-
पुष्करवर्त्तिविल्वविम्बीप्रभृतीनि॥")

**तोमरः**, पुं क्ली, (तुम्पति हिनस्तीति । तुम्प +
बाहुलकात् अरप्रत्ययेन साधुः । इत्युज्ज्वलदत्ते-
नोक्तम् । ३ । १३१ ।) अस्त्रविशेषः । शावली
इति भाषा । तत्पर्य्यायः । शर्व्वला २ । इत्य-
मरः । २ । ८ । ९३ ॥ (यथा, देवीभागवते ।
५ । ५ । २९ ।
"गदाभिः पट्टिशैः शूलैश्चक्रैश्च शक्तितोमरैः ॥")
हस्तक्षेप्यसशल्यदण्डः । इति महाभारतटीका ॥
रायवाँश इति भाषा ॥ (अस्य आकृत्यादिक-
मुक्तं वैशम्पायनेन तद्यथा, --
"तोमरः काष्ठकायः स्यात् लौहशीर्षः सुपुच्छवान् ।
हस्तत्रयोन्नताङ्गश्च रक्तवर्णस्त्ववक्रगः ॥"
शार्ङ्गधरेण तु, --
"फणवत् शीर्षदेशः स्यात्तोमरस्त्वायसस्तथा ॥"
उदाहरणम्, --
"सखि ! मादके मधुमासि
व्रज सत्वरं किमिहासि ।
सहते न किं विहरामि
किमु पावकं प्रविशामि ॥")

**तोमरधरः**, पुं, (तोमरं धरतीति । धृ + अच् ।
यद्वा, तोमरस्य अस्त्रविशेषस्य
धरः ।) अग्निः ।
इति शब्दार्थकल्पतरुः ॥

**तोमरिका**, स्त्री, (तोमर + संज्ञायां कन् ।
स्त्रीलिङ्गत्वात् टाप् अत इत्वञ्च ।) तुवरिका ।
इति शब्दरत्नावली ॥

**तोयं**, क्ली, ("तवतेर्वृद्धिकर्म्मणः + 'अघ्न्यादयश्च ।'
उणां ४ । १०८ । इति
यत्प्रत्ययो निपातितो
द्रष्टव्यः । वर्द्धते वर्षासु । 'तुदति तोयम्' इति
क्षीरस्वामी । तुदतेः पूर्ब्बवत् यत्प्रत्यये निपा-
तनात् दकारलोपे गुणः । यद्वा, तुदिः सौत्र
आवरणार्थः ।" इति
निघण्टुनिर्व्वचने देव-
राजयज्वा । १ । १२ । ९२ ।)
जलम् । इत्य-
मरः । १ । १० । ४ ॥ (यथा, देवीभागवते ।
१ । ६ । २९ ।
"तया ततमिदं तोयं तदाधारञ्च तिष्ठति ॥"
पूर्ब्बाषाढानक्षत्रम् ।
जलदैवतत्वादस्य तथा-
त्वम् ॥)

**तोयकामः**, पुं, (तोयं जलं कामयते इति ।

शिशुः । बालकः । यथा, भागवते । २ । ७ । २७ ।
"तोकेन जीवहरणं यदुलूकिकाया-
स्त्रैमासिकस्य च पदा शकटोऽपवृत्तः ॥")

**तोक्मं**, क्ली, कर्णमलम् । इति हेमचन्द्रः ॥ मेषः । इत्यजयपालः ॥

**तोक्मः**, पुं, (तकन्ति हसन्ति आनन्दिता भवन्ति लोका अनेनेति । तक + बाहुलकात् मः ओत्वञ्च ।) हरिद्यवः । अपक्वयवः । इत्य-मरः । २ । ९ । १६ । ("यबास्तोक्माः भृष्ट-
ब्रीहयो लाजाः ।" इति वाजसनेयसंहितायां महीधरः । १९ । १ ॥ क्वचित् क्लीवलिङ्गोऽयम् ।
यथा, वाजसनेयसंहितायाम् । १९ । १३ ।
"दीक्षायै रूपं£शष्पाणि प्रायणीयस्य तोक्मानि ॥")
पल्लवाद्यङ्कुरः । यथा, --
"पत्रपुष्पफलच्छायामूलवल्कलदारुभिः।
गन्धनिर्यासभस्मास्थितोक्मैः कामान् वितन्वते ॥"
इति श्रीभागवते । १० । २२ । २५ ॥
"निर्यासो घनरसः तोक्माः पल्लवाद्यङ्कुराः ।"
इति तट्टीकायां श्रीधरस्वामी ॥

**तोटकं**, क्ली, द्वादशाक्षरपादच्छन्दः । इति छन्दो-मञ्जरी ॥ (अस्य लक्षणादिकन्तु छन्दःशब्दे द्रष्टव्यम् ॥)

**तोड**, ऋ नादरे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) ऋ, अतुतोडत् । नादरो-ऽनादरः । इति दुर्गादासः ॥

**तोत्त्रं**, क्ली, (तुद्यते ताद्यतेऽनेनेति । तुद + "दाम्नी-शसयुयुजस्तुतुदेति ।" ३ । २ । १८२ । इति
ष्ट्रन् ।) गवादिताडनदण्डः । पाँचनी इति ख्यातः । तत्पर्य्यायः । प्राजनम् २ तोदनम् ३
वैशम्पायनोक्तान्यस्य कार्य्याणि यथा, --
"उद्वानं विनियुक्तिश्च वेधनञ्चेति तत्त्रिकम् ।
वल्गितं शस्त्रतत्त्वज्ञाः कथयन्ति नराधिपाः ॥"
अग्निपुराणोक्तधनुर्व्वेदमतेऽस्य कार्य्याणि यथा,
"दृष्टिघातं भुजाघातं पार्श्वघातं द्विजोत्तम ! ।
ऋजुपक्षेषुणा पातं तोमरस्य प्रकीर्त्तितम् ॥"
जनपदविशेषः । यथा, मात्स्ये । १२० । ५७ ।
"तोमरान् प्लावयन्ती च हंसमार्गान् समूहकान् ॥"
नवाक्षरछन्दोविशेषे, क्ली । शब्दार्थचिन्ता-मणिधृतं तल्लक्षणादिकं यथा, --
"प्रथमं सकं विनिधाय
जगणद्वयञ्च निधाय ।
कुरु तोमरं सुखकारि
फणिराजवक्त्रविहारि ॥"
कम् + अण् ।) परिव्याधः । जलवेतसः । इति जटाधरः ॥ जलाभिलाषिणि, त्रि ॥

**तोयकृच्छ्रं**, क्ली, (तोयेन तोयमात्रपानेन यत् कृच्छ्रं व्रतम् ।) जलमात्रपानरूपव्रतविशेषः । इति मिताक्षरा ॥ (यथा, मार्कण्डेये ।
"मूलकृच्छ्रं स्मृतं
मूलैस्तोयकृच्छ्रं जलेन तु ॥")

**तोयडिम्भः**, पुं, (तोयस्य जलस्य डिम्भ इव ।) घनोपलः । इति हारावली । ५८ ॥

**तोयदः**, पुं, (तोयं ददातीति । दा + कः ।) मेघः । (यथा, महानिर्व्वाणतन्त्रे । ४ । ५३ ।
"यदा क्षौणी स्वल्पफला
तोयदाः स्तोकवर्षिणः
असम्यक्फलिनो वृक्षास्तदैव
प्रबलः कलिः ॥")
मुस्तकम् । घृते, क्ली । इति मेदिनी । दे, ३० ॥
जलदातरि त्रि ॥ (यथा, महाभारते शान्ति-पर्व्वणि ।
"तोयदो मनुजव्याघ्र ! स्वर्गं
गत्वा महाद्युते ! ।
अक्षयान् समवाप्नोति
लोकानित्यब्रवीन् मनुः ॥")

**तोयधरः**, पुं, (तोयं जलं धरतीति । धृ + अच् । तोयस्य धरो वा ।) मेघः । मुस्ता । सुनिष-ण्णकशाकः । इति मेदिनी । रे, २६५ ॥ (जल-

| | | |
|---|---|---|
| गजस्य तोदनदण्डः । तत्पर्य्यायः । वैणुकम् २ । | | घारिणि, त्रि । यथा, रामायणे । २ । ९३ । १० ।<br>"मुञ्चन्ति कुसुमान्येते नगाः पर्व्वतसानुषु ।<br>नीला इवातपापाये तोयन्तोयधरा घनाः ॥")<br>**तोयधिः**, पुं, (तोयानि धीयन्तेऽत्र । धा + "कर्म्म-ण्यधिकरणे च ।" ३ । ३ । ९३ । इति किः । आतो लोपः ।) समुद्रः । इति पुराणम् ॥<br>(यथा, सूर्य्यसिद्धान्ते भूगोलाध्याये । ३७ ।<br>"समन्तात् मेरुमध्यात्तु तुल्यभागेषु तोयधेः ॥") |

**तोयधिप्रियं**, क्ली, (प्रीणातीति । प्री + "इगु-
पधेति ।" ३ । १ । १३५ । इति कः । तोयधिः प्रियो
यस्य ।) लवङ्गम् । इति शब्दचन्द्रिका ॥

**तोयनिधिः**, पुं, (तोयानि निधीयन्तेऽत्र । नि +
धा + किः । तोयानां निधिर्वा ।) समुद्रः ।
इति शब्दरत्नावली ॥ (यथा, कुमारे । १ । १ ।
"पूर्ब्बापरौ तोयनिधी वगाह्य
स्थितः पृथिव्या इव मानदण्डः ॥")

**तोयपिप्पली**, स्त्री, (तोये जले पिप्पलीव ।)
काँचडा इति ख्यातजलजशाकभेदः । तत्-
पर्य्यायः । लाङ्गली २ शारदी ३ शकुलादनी
४ । इत्यमरः । २ । ४ । १११ ॥

**तोयपुष्पी**, स्त्री, (तोयेन बहुजलप्रदानेन पुष्पाणि
यस्याः ।) पाटलावृक्षः । इति
शब्दमाला ॥

**तोयप्रसादनं**, क्ली, (प्रसादयतीति । प्र + सद् +
णिच् + ल्युः । तोयस्य प्रसादनम् । अस्य फल-
योगेन जलस्य निर्म्मलत्वं भवतीति तथात्वम् ।)
कतकम् । इति भूरिप्रयोगः ॥

**तोयप्रसादनफलं**, क्ली, (तोयप्रसादनस्य तोय-
प्रसादनाय वा फलम् ।) कतकफलम् । इति
रत्नमाला ॥

**तोयफला**, स्त्री, (तोयप्रधानं फलं यस्याः ।)
इर्व्वारुः । इति राजनिर्घण्टः ॥

**तोयवल्ली**, स्त्री, (तोये जलप्रधानस्थाने वल्ली लता-
बन्धनमालेति ख्यातं इति केचित् । इत्यमर-
टीकायां भरतः ॥ (महादेवे, पुं । यथा,
महाभारते । १३ । १७ । ११७ ।
"तोरणस्तारणो वातः परिधीपतिखेचरः ॥")

**तोलं**, क्ली पुं, (तुल्यते परिमीयते इति । तुल +
कर्म्मणि घञ् ।) तोलकम् । यथा, --
"एकतोलं द्बितोलं वा त्रितोलं वेदतोलकम् ।
इतोऽधिकं नरः कृत्वा प्रायश्चित्तीयते ध्रुवम् ॥"
इत्यागमः ॥

**तोलकं**, क्ली पुं, (तोलमेव + स्वार्थे कन् ।) शाण-
द्बयमानम् । इति शब्दमाला ॥ अशीतिरक्ति-
परिमाणम् । तत्तु षोडशमासकः षण्णवतिरक्ति-
परिमाणञ्च । तोला इति भरि इति च भाषा ।
तत्पर्य्यायः । कोलम् २ द्रङ्क्षणम् ३ वटकम् ४
कर्षार्द्धम् ५ । इति वैद्यकपरिभाषा । कर्षम् ६ ।
इति लीलावती ॥ (यथा, वैद्यकरसेन्द्रसारसंग्रहे
ज्वराधिकारे बृहज्ज्वरान्तके ।
"रसं गन्धं तोलकञ्च जातीकोषफले तथा ।"
"किराततिक्तकं बालं तोलकञ्च समाहरेत् ॥")

**तोषः**, पुं, (तुष सन्तोषे + भावे घञ् ।) तुष्टिः ।
इति धरणिः ॥ (यथा, --
"देवश्च परमं तोषं जगाम च सहोमया ॥"
इति हरिवंशे । १७३ । १३ ॥
स्वायम्भुवमन्वन्तरगततुषितानांद्वानामन्यतमः ।
यथा, भागवते । ४ । १ । ७ ।
"तोषः प्रतोषः सन्तोषो भद्रः शान्तिरिडस्पतिः ।
इध्मः कविर्व्विभुः स्वाह्नः सुदेवो रोचनो द्बिषट् ।
तुषिता नाम ते देवा आसन् स्वायम्भुवान्तरे ॥")

**तौक्षिकः**, पुं, धनूराशिः । इति दीपिका ॥ (यथा,
दीपिकायाम् ।
"क्रियतावरिजित्तमकुलीरलेयपाथेययूक-
कौर्पाख्याः ।
तौक्षिक आकोकेरो हृद्रोगश्चान्त्यभं चेत्थम् ॥")

**तौतातिकं**, क्ली, (तुतातेन निर्वृत्तम् । तुतात +
"तेन निर्वृत्तम् ।" ५ । १ । ७९ । इति ठक् ।)
तुतातभट्टकृतशास्त्रम् । यथा, --
(यथा, मनुः । ७ । ४७ ।
"मृगयाक्षो दिवास्वप्नः परिवादः स्त्रियो मदः ।
तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः ॥")
विष्णुगृहे गीतवाद्यनृत्यफलं यथा, --
"गायनं ये प्रकुर्व्वन्ति मम कर्म्मपरायणाः ।
तेषां यद्यत् फलं भूमे ! शृणुष्व गदतो मम ॥
यावन्ति चाक्षराण्येव गीयमाने यशास्विनि ! ।
तावद्वर्षसहस्राणि इन्द्रलोके महीयते ॥
रूपवान् गुणवान् सिद्धः सर्व्ववेदविदां वरः ।
नित्यं पश्यति वै वज्रपाणिं देवं न संशयः ॥
मद्भक्तश्चैव जायेत इन्द्रलोकपथे स्थितः ।
सर्व्वकर्म्मगुणश्रेष्ठस्तत्रापि मम पूजकः ॥
इन्द्रलोकात् परिभ्रष्टो मम गीतपरायणः ।
प्रमुक्तः सर्व्वसंसारान्मम लोकाय गच्छति ॥
यस्तु गायति सुश्रोणि ! कौमुद्याञ्चैव द्बादशीम् ।
सर्व्वसङ्गं परित्यज्य मम लोकाय गच्छति ॥
यस्तु गायति गीतानि मम जागरणे सदा ।
सर्व्वसङ्गात् प्रमुक्तो वै मम लोकाय गच्छति ॥
एतत्ते कथितं देवि ! गायनस्य फलं महत् ।
यस्य गीतस्य शब्देन तरेत् संसारसागरम् ॥ * ॥

सन्ततिर्यस्याः ।) कारवेल्लः । इति
रत्न-
माला ॥ उच्छे इति भाषा ॥

**तोयशुक्तिका**, स्त्री, (तोयजाता शुक्तिका । शाक-

पार्थिवादिवत् समासः ।) जलशुक्तिः ।
इति
राजनिर्घण्टः ॥

**तोयसूचकः**, पुं, (तोयं जलवर्षणं सूचयति रवे-

णेति । सूच् + ण्वुल् ।) भेकः । इति
शब्दार्थ-
कल्पतरुः ॥

**तोयाधिवासिनी**, स्त्री, (तोयं जलप्रधानस्थलं

अधिवसतीति । अधि + वस + णिनिः
। यद्वा,
तोयेन अधिवास इव
संस्कारोऽस्त्यस्येति ।
इनिः ।) पाटलावृक्षः । इति रत्नमाला
॥
तोयादिवासिन्यपि पाठः ॥
(पाटलाशब्देऽस्या
विवृतिर्ज्ञातव्या ॥)

**तोरणं**, क्ली, (तोलयति उन्नमयति मस्तकमिति
।

तुल + ल्युः । लस्य रः ।) कन्धरा ।
कण्ठी ।
इति हारावली । १७४ ॥

**तोरणः**, पुं क्ली, (तुतोर्त्ति त्वरया गच्छत्यनेनेति
।

तुर त्वरणे + करणे ल्युट् ।) बहिर्द्वारम् ।
इत्यमरः । २ । ३ । १६ ॥ (यथा,
कुमारे ।
७ । ३ ।
"भासोज्ज्वलत्काञ्चनतोरणानां
स्थानान्तरं स्वर्ग इवावभासे ॥")
मूलद्वाराद्वाह्यद्वारम् । इति
कोक्कटादयः ॥
द्वाराग्रे निखातस्तम्भयोरुपरिनिबद्धं
नानावस्त्र-

"नैवाश्रावि गुरोर्म्मतं न विदितं तौतातिकं
दर्शनम् ।
तत्त्वं ज्ञातमहो न शालिकगिरां वाचस्पतेः का
कथा ॥"
इति प्रबोधचन्द्रोदयः । २ । ३ ॥

**तौतिकं**, क्ली, मुक्ता । इति राजनिर्घण्टः ॥

**तौतिकः**, पुं, शुक्तिः । इति राजनिर्घण्टः ॥

**तौर्य्यं**, क्ली, (तूर्य्ये मुरजादौ भवम् । तूर्य्य + अण् ।)

तूर्य्ये मुरजादौ भवं शब्दरूपम् । इत्यमर-
टीकायां भरतः ॥

**तौर्य्यत्रिकं**, क्ली, (त्रयोऽंशा यस्य तत् । त्रि +

"संख्याया अतिशदन्तायाः कन् ।" ५ । १ । २२ ।
इति कन् । तौर्य्योपलक्षितं त्रिकम् ।) नृत्य-
गीतवाद्यमिदं समुदितं त्रयं नाट्यञ्च । इत्य-
मरः । १ । ७ । १० ॥ नटसम्बन्धि नृत्यगीत-
वाद्यमिति त्रयम् । इति तट्टीकासारसुन्दरी ॥

वादित्रस्य प्रवक्ष्यामि तत् शृणुष्व
वसुन्धरे ! ।
प्राप्तवान्मनुजो येन देवेभ्यः समतां
स्वयम् ॥
सम्पत्कालप्रयोगेण सन्निपातेन वा
पुनः ।
नववर्षसहस्राणि नववर्षशतानि च
॥
कुवेरभवनं गत्वा मोदते वै यदृच्छया
।
कुवेरभवनाद्भ्रष्टः
स्वच्छन्दगमनालयः ॥
शय्यादितालसम्पातैर्मम लोकाय
गच्छति ॥ * ॥
नृत्यमानस्य वक्ष्यामि तच्छृणुष्व
वसुन्धरे ! ।
मनुजा येन गच्छन्ति छित्त्वा
संसारसागरम् ॥
त्रिंशद्वर्षसहस्राणि त्रिंशद्वर्षशतानि च
।
पुष्करद्वीपमासाद्य
स्वच्छन्दगमनालयः ॥
फलं प्राप्नोति सुश्रोणि ! मम
कर्म्मपरायणः ।
रूपवान् गुणवान् शूरः शीलवान्
सुपथे स्थितः ॥
मद्भक्तश्चैव जायेत
संसारपरिमोचितः ॥ * ॥
यस्तु जागरतो नित्यं गीतवाद्येन
नर्त्तकः ।
जम्बुद्वीपं समासाद्य राजराजस्तु
जायते ॥
सर्व्वकर्म्मसमायुक्तो रक्षिता वै
महीपतिः ।
मद्भक्तश्चैव जायेत मम
कर्म्मपरायणः ॥"
इति वराहपुराणम् ॥

**तौलं**, क्ली, (तुला एव । स्वार्थे अण् ।
स्वार्थिका

अपि प्रत्ययाः क्वचित् प्रकृतितो
लिङ्गवचनान्य-

| | | |
|---|---|---|
| रत्नादिमयं घनुराकारं यल्लक्ष्यं तत् तोरण-<br>मिति बहवः ॥<br>उपरिस्रगादियुक्तस्तम्भादिद्वय-<br>निर्म्मितपुरादिबहिर्द्वारम् । इति साङ्गः ॥ | | तिवर्त्तन्ते इत्युक्तेरस्य क्लीवत्वम्<br>।) तुला । तुला-<br>राशौ, पुं । तौली । इति ज्योतिषम्<br>॥<br>**तौलिकः**, पुं, (तुल्या तुलिकया जीवतीति । तुलि<br>+ ठक् ।) चित्रकारः । इति<br>शब्दमाला ॥<br>(तुलानिर्वृत्ते, त्रि । यथा, सुश्रुते<br>चिकित्सित-<br>स्थाने १३ अध्याये ।<br>"शतं शतं तुलायान्तु सहस्रं<br>दशतौलिके ॥")<br>**तौलिकिकः**, पुं, (तुलिकया जीवतीति । तुलिका<br>+ ठक् ।) चित्रकारः । तत्पर्य्यायः ।<br>रङ्गा-<br>जीवः २ चित्रकृत् ३ । इति<br>हेमचन्द्रः । ३ ।<br>५८५ ॥ तौलिकः ४ । इति<br>शब्दमाला ॥ |

**तौषारं**, क्ली, (तुषारस्येदम् । तुषार + “तस्ये-
दम् ।” ४ । ३ । १२० । इत्यण् ।)
तुषारजलम् ।
इति राजनिर्घण्टः ॥ (यथा, सुश्रुते । १ ।
४५ ।
“धारं कारं तौषारं हैममिति ॥”)

**त्यक्तं**, त्रि, (त्यज्यते स्मेति । त्यज त्यागे + क्तः ।)
कृतत्यागम् । तत्पर्य्यायः । हीनम् २ विधु-
तम् ३ समुज्झितम् ४ धूतम् ५ उत्सृष्टम्
६ ।
इत्यमरः । ३ । १ । १०७ ॥ विनाकृतम्
७
विरहितम् ८ निर्व्यूढम् ९ । इति त्रिकाण्ड-
शेषः ॥ (यथा, रामायणे । २ । ३७ । २ ।
“त्यक्तभोगस्य मे राजन् ! वने वन्येन
जीवतः ।
किं कार्य्यमनुयात्रेण त्यक्तसङ्गस्य सर्व्वतः
॥”)

**त्यज**, औ हानौ । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-सकं-अनिट् ।) औ, अत्याक्षीत् ।
हानि-
र्वर्ज्जनम् । त्यजति दुष्टलोकं जनः । इति
दुर्गा-
दासः ॥

**त्यजनं**, क्ली, (त्यज + भावे ल्युट् ।) त्यागः ।
वर्ज्जनम् ॥

**त्यत्**, [द्] त्रि, (त्यजति संसर्गमिति । त्यज् +
“त्यजितनियजिभ्यो डित् ।” उणां १ ।
१३१ ।
इति अदिः स च डित् ।) तत् । सेइ इति
भाषा । अस्य पुंलिङ्गस्त्रीलिङ्गयो रूपं स्यः
स्या । सर्व्वनामशब्दोऽयम् । इति
व्याकरणम् ॥
(यथा, ऋग्वेदे । १ । ६३ । ४ ।
“त्वं ह त्यदिन्द्र चोदीः सखा वृत्रं यद्वज्रिन्
वृषकर्म्मन्नुभ्नाः ॥”)
तयोर्नेत्रं नयनसाधनं नेतारं
प्रवर्त्तकमिति
यावत् । एवं सर्व्वप्रकारेण सत्यात्मकं
त्वां वयं
शरणं प्रपन्ना इत्यर्थः ।” इति तट्टीकायां
श्रीधर-
स्वामी ॥

**त्यागः**, पुं, (त्यज् + घञ् ।) दानम् । इत्यमरः ।
२ । ७ । २९ ॥ (यथा, रघुः । १ । ७ ।
“त्यागाय सम्भृतार्थानां सत्याय मित-
भाषिणाम् ॥”)
वर्ज्जनम् । इति मेदिनी । गे, ८ ॥
(यथा,
मनुः । ८ । ३८९ ।
“न माता न पिता न स्त्री न पुत्त्रस्त्याग-
मर्हति ॥”)
विवेकिपुरुषः । इति शब्दरत्नावली ॥
सर्व्व-
कर्म्मफलविसर्ज्जनम् । यथा, --
“काम्यानां कर्म्मणां न्यासं सन्न्यासं
कवयो विदुः ।
सर्व्वकभफलत्यागं प्राहुस्त्यागं
विचक्षणाः ॥
त्याज्यं दोषवदित्येके कर्म्म
प्राहुर्म्मनीषिणः ।
यज्ञदानतपःकर्म्म न त्याज्यमिति चापरे
॥
निश्चयं शृणु मे तत्र त्यागे भरतसत्तम !
।
त्यागो हि पुरुषव्याघ्र ! त्रिविधः
संप्रकीर्त्तितः ॥
यज्ञो दानं तपः कर्म्म न त्याज्यं
कार्य्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि
मनीषिणाम् ॥
एतान्यपि च कर्म्माणि सङ्गं त्यक्त्वा
फलानि च ।
कर्त्तव्यानीति मे पार्थ ! निश्चितं
मतमुत्तमम् ॥
न हि देहभृता शक्यं त्यक्तुं कर्म्माण्यशेषतः ।
यस्तु कर्म्मफलत्यागी स त्यागीत्यभिधीयते
॥”
इति श्रीभगवद्गीतायां १८ । १०-११ ।

**त्याज्यः**, त्रि, (त्यज्यते इति । त्यज + कर्म्मणि
ण्यत् । “त्यजेश्च ।” इति ७ । ३ । ६६ ।
इत्यस्य
वार्त्तिकोक्त्या न कुत्वम् ।) त्यागयोग्यः ।
वर्ज्ज-
नीयः । यथा, प्रायश्चित्ततत्त्वे ।
“तीरे प्रतिग्रहस्त्याज्यस्त्याज्योधर्म्मस्य
विक्रयः ॥”
(यथा, च देवीभागवते । १ । ११ । ५९ ।
“तारामय्यनुरक्ता च यथा न तु तथा गुरौ ।
अनुरक्ता कथं त्याज्या घर्म्मतो न्घायतस्तथा
॥”)

**त्रक**, इ ङ गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-सकं-सेट् ।) दन्त्यवर्गादिः । इ,
त्रङ्क्यते ।
ङ, त्रङ्कते । इति दुर्गादासः ॥

**त्रग**, इ गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) इ, त्रङ्ग्यते । इति दुर्गादासः ॥

**त्रङ्गः**, पुं स्त्री, (त्रङ्गति शोभादिकं गच्छतीति ।
त्रङ्ग + अच् ।) पुरविशेषः । इति त्रिकाण्ड-
शेषः ॥

**त्रद**, इ चेष्टे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
अकं-सेट् ।) दन्त्यवर्गाद्यादिः । इ, त्रन्द्यते
तत्रन्द । इति दुर्गादासः ॥

**त्रप**, ऊ ष मि ङ ह्रियि । इति कविकल्पद्रुमः ॥
(भ्वां-आत्मं-अकं-वेट् ।) ऊ, अत्रपिष्ट अत्रप्त
।
ष, त्रपा । मि, त्रपयति त्रापयति । ङ, त्रपते ।
ह्रियि लज्जायाम् । इति दुर्गादासः ॥

**त्रपा**, स्त्री पुं, (त्रप्यते इति । त्रप + “षिद्भिदा-
दिभ्योऽङ् ।” ३ । ३ । १०४ । इत्यङ् । तत-

**त्यत्,** [द्] क्ली, (त्यज् + "त्यजितनीति ।" उणां ।
१ । १३१ । इति अदिः स च डित् ।)
वायुः ।
आकाशः । यथा, --
"सत्यव्रतं सत्यपरं त्रिसत्यं
सत्यस्य योनिं निहितञ्च सत्ये ।
सत्यस्य सत्यमृतसत्यनेत्रं
सत्यात्मकं त्वां शरणं प्रपन्नाः ॥"
इति भागवते । १० । २ । २६ ॥
"सत्यव्रतमिति । सत्यं व्रतं सङ्कल्पो यस्य
तम् ।
सत्यपरं सत्यं परं श्रेष्ठं प्राप्तिसाधनं
यस्मिन् तम् ।
त्रिसत्यं त्रिष्वपि कालेषु सृष्टेः पूर्ब्बं
प्रलयानन्तरं
स्थितिसमये च सत्यं अव्यभिचारेण
वर्त्तमानम् ।
तदेवाहुः सत्यस्य योनिमिति । सच्छब्देन
पृथिव्यप्तेजांसि त्यच्छब्देन वाय्वाकाशौ
एवं
सच्च त्यच्च सत्यं भूतपञ्चकम् । 'तत्
सत्यमित्या-
चक्षते ।' इति श्रुतेः । तस्य योनिं कारणम्
।
अनेन सृष्टेः पूर्ब्बं वर्त्तमानतोक्ता । तथा
सत्ये
तस्मिन्नेव निहितं अन्तर्यामितया स्थितम्
।
अनेन स्थितिसमयेऽपि सत्यत्वमुक्तम् ।
तथा
मत्यस्य सत्यं तस्यैव सत्यस्य सत्यं
पारमार्थिकं
नाशेऽप्यवशिष्यमाणरूपम् । अनेन
प्रलयेऽप्य-
वधित्वे न सत्यत्वं दर्शितम् । एवं
त्रिसत्यत्व-
मुपपादितम् । तथा ऋतसत्यनेत्रं ऋतं
सूनृता
वाणी सत्यं समदर्शनम् । तथा भगवता
व्याख्यास्य
मानत्वात् । सत्यञ्च समदर्शनम् । ऋतञ्च
नियतस्य तु सन्न्यासः कर्म्मणो
नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः
परिकीर्त्तितः ॥
दुःखमित्येव यत् कर्म्म
कायक्लेशभयात् त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं
लभेत् ॥
कार्य्यमित्येव यत् कर्म्म नियतं
क्रियतेऽर्ज्जुन ! ।
सङ्गं त्यक्त्वा फलञ्चैव स त्यागः
सात्त्विको मतः ॥"
इति श्रीभगवद्गीतायाम् । १८ । २-९
॥
(त्रि, दाता । यथा, ऋग्वेदे । ४ । २४ ।
३ ।
"मिथो यत्त्यागमुभयासो अग्मन् नरः
स्तोकस्य
तनयस्य सातौ ॥"
"उभयास उभये यजमानाः स्तोतारश्च
त्यागं
त्थागकर्त्तारं दातारमिन्द्रं अग्मन्
उपगच्छन्ति ॥"
इति सायनः ॥)

**त्यागिमः**, त्रि, (त्यागेन निर्वृत्तः ।
भावप्रत्ययत्वादि-
मप् ।) त्यक्तः । त्यागेन निष्पन्नः । इति
व्याक-
रणम् ॥

**त्यागी**, [न्] त्रि, (त्यजतीति । त्यज् + "सम्पृ-
चानुरुधाङ्यमेति ।" ३ । २ । १४२ ।
इति
घिनुण् ।) दाता । (यथा, पञ्चतन्त्रे । ३ ।
२५९ ।
"त्यागिनि शूरे विदुषि च संसर्गरुचिर्जनो
गुणी
भवति ॥")
शूरः । इति मेदिनी । ने, ७१ ॥
वर्ज्जनशीलः ।
यथा, --
ष्टाप् ।) लज्जा । इत्यमरः । १ । ७ । २३ ॥
(यथा, रत्नावल्याम् ।
"नीचं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपा-
मन्तः कञ्चकिकञ्चुकस्य विशति त्रासादयं
वामनः ॥"
त्रपते अनया अस्याः वा । करणे अपादाने
वा अङ् ।) कुलटा । इति मेदिनी । पे, ७ ॥
कुलम् । कीर्त्तिः । इति शब्दरत्नावली ॥

**त्रपाकः**, पुं, (त्रपते लज्जते इति । त्रप + "आकः
खजादेः ।" १ । २१९ । इति उणादिकोष-
टीकाधृतसूत्रात् आकः ।) म्लेच्छविशेषः ।
इत्युणादिकोषः ॥

**त्रपारण्डा**, स्त्री, (त्रपायां रण्डेव । लज्जाहीन-
त्वादेव तथात्वम् ।) वेश्या । इति जटाधरः ॥

**त्रपिष्ठः**, त्रि, (अयमेषामतिशयेन तृप्रः । तृप्र +
"अतिशायने तमबिष्ठनौ ।" ५ । ३ । ५५ ।
इति इष्ठन् । "प्रियस्थिरेति ।" ६ । ४ ।
१५७ ।
इति तृप्रस्य त्रप्-आदेशः ।) अतिलज्जितः ।
इति मुग्धबोधम् ॥

**त्रपीयान्,** [स्] त्रि, (अयमनयोरतिशयेन तृप्रः ।
तृप्र + "द्विवचनविभज्योपपदे तरबीयसुनौ ।"
५ । ३ । ५७ । इति ईयसुन् । "प्रियस्थिरेति
।"
६ । ४ । १०७ । इति तृप्रस्य त्रबादेशः ।)
त्रपिष्ठः । इति व्याकरणम् ॥

| | | |
|---|---|---|
| सूनृता, वाणी कविभिः परिकीर्त्तिता इति । | “यस्तु कर्म्मफलत्यागी स त्यागीत्यभिधीयते ॥” इति भगवद्गीता । १८ । ११ । कर्म्मफलत्यागवान् । यथा, -- “न द्वेष्ट्यकुशलं कर्म्म कुशलेनानुषज्जते । त्यागी सत्त्वसमाविष्टो मेधावी च्छिन्नसंशयः ॥ | |

**त्रपु**, क्ली, (त्रपते अग्निस्पर्शेन लज्जते इव । त्रप
+ "शॄस्वृस्निहित्रपीति ।" उणां । १ । ११ ।
इति उः ।) सीसकम् । रङ्गम् । इति मेदिनी ।
पे, ६ ॥ (यथा, पञ्चतन्त्रे । १ । ८५ ।
"कनकभूषणसंग्रहणोचितो
यदि मणिस्त्रपुणि प्रतिबध्यते ।
न स विरौति न चाप्युपशोभते
भवति योजयितुर्वचनीयता ॥")

**त्रपुः**, [स्] क्ली, (त्रपते वह्निं प्राप्य लज्जते इव ।
त्रप + "उस् स्यात्तपादेः स तु कित् ।" १ । ४६० ।
इति उणादिकोषटीकाधृतसूत्रात् उस् ।)
रङ्गम् । इत्युणादिकोषः ॥ (यथा, ग्रहभाव-
प्रकाशे ।
"भौमे त्रपुः शनौ लौहं राहावश्मानि कीर्त्त-
येत् ॥"
रङ्गशब्देऽस्य विवरणं ज्ञातव्यम् ॥)

**त्रपुकर्कटी**, स्त्री, (त्रपुवत् शुभ्रा कर्क्कटी ।)
त्रपुषी । इति राजनिर्घण्टः ॥

**त्रपुटी**, स्त्री, सूक्ष्मैला । इति रत्नमाला ॥

**त्रपुलं**, क्ली, (त्रपते वह्निसंस्पर्शेन लज्जते इव ।
त्रप + बाहुलकात् उलच् ।) रङ्गम् । इति
भरतकृतद्विरूपकोषः ॥

**त्रपुषं**, क्ली, (त्रप + बाहुलकादुषः ।) रङ्गम् ।
इति भरतकृतद्विरूपकोषः ॥
त्रपुषीफलम् ।
शसा इति भाषा । तत्पर्य्यायः । कण्टकिफलम्
२ सुधावासम् ३ सुशीतलम् ४ । तल्लघुफल-
रुच्यत्वम् । मधुरत्वम् । शिशिरत्वम् । गुरुत्वम् ।
भ्रमपित्तविदाहार्त्तिवान्तिनाशित्वम् । बहुमूत्र-
दत्वञ्च । काण्डालुरित्यत्र कण्टालुरपि पाठः ।
इति राजनिर्घण्टः ॥ (अस्या व्यवहारो यथा,
सुश्रुते उत्तरतन्त्रे ४५ अध्याये ।
"त्रपुसीमूलकल्कं वा सक्षौद्रं तण्डुलाम्बुना ।
पिबेदक्षसमं कल्कं यष्टीमधुकमेव वा ॥")

**त्रप्स्यं**, क्ली, (द्रप्स्यं निपातनात् दस्य तः ।)
द्रप्स्यम् । घनेतरदधि । इत्यमरटीकायां भरत-
धृतविद्याविनोदः ॥ पातला दै इति भाषा ॥

**त्रयं**, क्ली, (त्रयोऽवयवा यस्य । त्रि + "संख्याया
अवयवे तयप् ।" ५ । २ । ४२ । इति तयप् ।
"द्वित्रिभ्यां तयस्यायज्वा ।" ५ । २ । ४३ ।
इति तयस्यायच् ।) त्र्यवयवम् । इति मुग्ध-
बोधम् ॥ तिन इति भाषा ॥ (यथा, मनुः । २ । ७६ ।
"अकारञ्चाप्युकारञ्च मकारञ्च प्रजापतिः ।
वेदत्रयात् निरदुहत् भूर्भुवःस्वरितीति च ॥")

**त्रयः**, पुं, (तरतीति । तॄ + "तरतेर्ड्रिः ।" उणां
५ । ६६ । इति ड्रिः ।) त्रिसंख्या । तिन इति
भाषा । त्रिशब्दस्य बहुवचनान्तरूपोऽयम् ।
अस्य स्त्रीलिङ्गक्लीवलिङ्गयोरूपे तिस्रः त्रीणि ।
इति व्याकरणम् ॥ तद्वाचकानि यथा, --
कालः १ अग्निः २ भुवनम् ३ गङ्गामार्गः ४
शिवचक्षुः ५ गुणः ६ ग्रीवारेखा ७ कालिदास-
काव्यम् ८ वलिः ९ सन्ध्या १० पुरम् ११ पुष्क-

**त्रयीमुखः**, पुं, (त्रयी वेदा मुखे यस्य ।) ब्राह्मणः ।
इति हेमचन्द्रः । ३ । ४ । ७५ ॥

**त्रयोदश**, [न्] त्रि, (त्र्यधिका दश इति कर्म्म-
धारयः । "त्रेस्त्रयः ।" ६ । ३ । ४८ । इति
त्रयस् ।) संख्याविशेषः । १३ तेर इति भाषा ।
बहुवचनान्तोऽयम् । (यथा, मनुः । ९ । १२९ ।
"ददौ स दश धर्म्माय कश्यपाय त्रयोदश ॥")
तत्संख्यायुक्तश्च । इत्यमरः ॥ तद्वाचकः ।
ताम्बूलगुणः १ । इति कविकल्पलता ॥

**त्रयोदशः**, त्रि, (त्रयोदशानां पूरणः । "तस्य
पूरणे डट् ।" ५ । २ । ४८ । इति डट् ।)
त्रयोदशानां पूरणः । इति व्याकरणम् ॥ तेरै
इत्यादि भाषा । (यथा, रामायणे । २ । ७७ । २२ ॥
"त्रयोदशोऽयं दिवसः पितुर्वृत्तस्य ते विभो ! ।
सावशेषास्थिनिचये किमिह त्वं विलम्बसे ॥")

**त्रयोदशी**, स्त्री, (त्रयोदश + टित्त्वात् ङीप् ।)
तिथिविशेषः । सा चन्द्रस्य त्रयोदशकलाक्रिया-
रूपा त्रयोदशकलाक्रियावच्छिन्नकालरूपावा ।
इति तिथ्यादितत्त्वम् ॥ तत्र जातस्य फलं यथा,
"रूपान्वितः सात्विकभावहीनः
सुखी च बाल्ये जननीप्रियश्च ।
सदालसः शिल्पगुणैकवेत्ता
त्रयोदशी जन्मतिथिर्यदि स्यात् ॥"
इति कोष्ठीप्रदीपः ॥
इयं धर्म्मस्य तिथिः । इति वराहपुराणम् ॥

**त्रस**, क धृतौ । ग्रहे । निषेधे । इति कविकल्पद्रुमः ॥
(चुरां-परं-सकं-सेट् ।) एतदाद्याश्चत्वारो रेफ-
युक्ताद्याः । क, त्रासयति मृगं व्याधः वधति

गुणाः । नीलत्वम् ।
बलतृड्भ्रमदाहपित्तरक्त-
पित्तनाशित्वम् । स्वादुत्वम् ।
शीतत्वञ्च । तत्पक्व-
फलगुणाः । अम्लत्वम् । उष्णत्वम् ।
पित्तलत्वम् ।
कफवातनाशित्वञ्च । तद्बृहत्फलगुणाः
। मूत्र-
लत्वम् । शीतत्वम् । रूक्षत्वम् ।
पित्तास्रकृच्छ्र-
नाशित्वञ्च । इति भावप्रकाशः ॥ अस्य
सामान्य-
गुणाः । स्वादुत्वम् । गुरुत्वम् ।
विष्टम्भित्वम् ।
शीतलत्वम् । मुखप्रियत्वम् । रूक्षत्वम्
। अति-
मूत्रलत्वञ्च । इति राजवल्लभः ॥

**त्रपुषी**, स्त्री, (त्रपुष + गौरादित्वात् ङीष् ।)

कर्क्कटी । इति हेमचन्द्रः । ४ । २५५
॥ (यथा,
“पटोलकैर्व्वारुत्रपुष्यलावूः ॥”
इति हारीते प्रथमेस्थाने दशमेऽध्याये
॥)
दन्त्यसान्तोऽपि पाठः ॥

**त्रपुसं**, क्ली, (त्रपते वह्नियोगेन लज्जते इव । त्रप

+ बाहुलकात् उसः ।) रङ्गम् । इति
राज-
निर्घण्टः ॥ कर्कटी । अस्य गुणा यथा,
--
“बालं सुनीलं त्रपुसं तेषां पित्तहरं
स्मृतम् ।
तत् पाण्डुकफकृज्जीर्णमम्लं
वातकफापहम् ॥”
इति सुश्रुते सूत्रस्थाने ४६ अध्याये ॥)

**त्रपुसी**, स्त्री, (त्रपुस + गौरादित्वात् ङीष् ।)

महेन्द्रवारुणी । कर्क्कठी ।
लताविशेषः । शसा
इति क्षीरा इति च भाषा । तत्पर्य्यायः ।
रम् १२ रामः १३ विष्णुः १४ ज्वरपादः
१५ ।
इति कविकल्पलता ॥ त्रिसंख्याविशिष्टे, त्रि
।
इत्यमरः ॥
“तिस्रोभार्य्या त्रिशालाश्च त्रयो भृत्याश्च
बान्धवाः ।
ध्रुवं वेदविरुद्धाश्च न ह्येते मङ्गलप्रदाः ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥

**त्रयी**, स्त्री, (त्रय + “टिड्ढेति ।” ४ । १ । १५ ।

इति ङीप् ।) ऋक्सामयजुर्व्वेदा एतत्त्रितयम्
।
इत्यमरः । १ । ६ । ३ ॥ (यथा, मनुः । ७ ।
४३ ॥
“त्रैविद्येभ्यस्त्रयींविद्यात्दण्डनीतिञ्च
शाश्वतीम् ।
आन्वीक्षिकीञ्चात्मविद्यांवार्त्तारम्भांश्च
लोकतः ॥”)
पुरन्ध्री । सुमतिः । इति विश्वः ॥
सोमराजी-
वृक्षः । इति शब्दचन्द्रिका ॥ दुर्गा । यथा, --
“ऋग्यजुःसामभागेन साङ्गवेदगतापि वा ।
त्रयीति पठ्यते लोके दृष्टादृष्टार्थसाधिनी ॥”
इति देवीपुराणे ४५ अध्यायः ॥

**त्रयीतनुः**, पुं, (त्रयी वेदा एव तनुः शरीरं यस्य ।

“त्रय्या विद्यया भगवन्तं त्रयीमयं
सूर्य्यमात्मानं
यजन्ते ।” इति भागवतवाक्यात् । ५ । २०
। ४ ।
अस्य तथात्वम् ।) सूर्य्यः । इति हलायुधः
॥

**त्रयीधर्म्मः**, पुं, (त्रय्या वेदत्रयेण विहितो धर्म्मः ।)

ऋग्यजुःसाम्नां विधानम् । त्रिवेदोक्तकर्म्म ।
इत्यमरः । १ । ६ । ३ ॥ (यथा, महाभारते
।
३ । १५० । ३२ ।
“सा चेद्धर्म्मकृता न स्यात्त्रयीधर्म्ममृते भुवि
॥”)
गृह्णाति निराकरोति वा इत्यर्थः । इति दुर्गा-
दासः ॥

**त्रस**, इ कि भासि । इति कविकल्पद्रुमः ॥ (चुरां-

पक्षे भ्वां-परं-अकं-सेट् ।) इ, त्रंस्यते । कि,
त्रंसयति त्रंसति । भासि दीप्तौ । इति
दुर्गादासः ॥

**त्रस**, ई ण भये । इति कविकल्पद्रुमः ॥ (भ्वां-

परं-अकं-सेट् । ईदित्वात् अनिड्निष्ठः ।) ई,
त्रस्तः । ण, त्रेसतुः तत्रसतुः । त्रसति । इति
दुर्गादासः ॥

**त्रस**, य ई भये । इति कविकल्पद्रुमः ॥ (दिवां-

परं-अकं-सेट् । ईदित्वादनिड्निष्ठः ।) य,
त्रस्यति । ई, त्रस्तः । इति दुर्गादासः ॥

**त्रसं**, क्ली, (त्रस्यति बिभेत्यस्मिन् इति । त्रस-

भये + घञर्थे कः ।) वनम् । इति त्रिकाण्ड-
शेषः ॥

**त्रसः**, त्रि, (त्रसतीति । त्रस भये + पचाद्यच् ।)

जङ्गमः । इत्यमरः । ३ । १ । ७४ ॥ (यथा,
महाभारते । १२ । ९ । १९ ।
“ऋजुः प्रणिहितो गच्छंस्त्रसस्थावरवर्ज्जकः
॥”)

**त्रसरः**, पुं, (त्रसन्ति धातूनामनेकार्थत्वात् सूत्राणि

वेष्टयन्त्यनेनेति । त्रस + बाहुलकात् अरन् ।)
तन्त्रवायोपकरणविशेषः । तासनी इति भाषा
।
तत्पर्य्यायः । सूत्रवेष्टनम् २ । इत्यमरः । ३ ।
२ । २४ ॥
तसरः ३ । इति भरतः ॥

| | | |
|---|---|---|
| पीतपुष्पा २ काण्डालुः ३ त्रपुकर्क्कटी ४ बहु-<br>फला ५ कोषफला ६ तुन्दिलफला ७ कण्टकी-<br>लता ८ सुधावासा ९ । अस्याः फलस्य गुणाः । | | |

**त्रसरेणुः**, स्त्री, सूर्य्यभार्य्याविशेषः । इति त्रिकाण्ड-

शेषः ॥

**त्रसरेणुः**, पुं, (त्रसश्चञ्चलत्वात् भीत इव रेणुः ।)

त्रिंशत्परमाणुपरिमाणम् । स गवाक्षान्तर्गते
सूर्य्यकिरणे दृश्यते । तत्पर्य्यायः । ध्वंसी २ ।
यथा, वैद्यकपरिभाषायाम् ।
“जालान्तरगते सूर्य्यकरे ध्वंसी विलोक्यते ।
त्रसरेणुस्तु विज्ञेयस्त्रिंशता परमाणुभिः ॥”
(द्व्यणुकत्रयात्मकरेणुः । यथा, ब्रह्मवैवर्त्ते ।
“परमाणुद्वयेनाणुस्त्रसरेणुस्तु ते त्रयः ॥”
तथाच मनुः । ८ । १३२ ।
“जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः ।
प्रथमन्तत् प्रमाणानां त्रसरेणुं प्रचक्षते ॥”)

**त्रसुरः**, पुं, (त्रस्यतीति । त्रस भये + उरच् ।)

भीरुकः । इति संक्षिप्तसारे उणादिवृत्तिः ॥

**त्रस्तः**, त्रि, (त्रस भये + क्तः ।) भीतः । इति

जटाधरः ॥ (यथा, देवीभागवते । १ । ५ । २६ ।
“प्रत्यञ्चायां विमुक्तायां मुक्ता कोटिस्तथोत्तरा ।
शब्दः समभवद्घोरस्तेन त्रस्ताः सुरास्तदा ॥”)
शीघ्रे, क्ली । यथा, --
“सविरामं त्रितालञ्च एकं शून्यन्तथापरे ।
शेषे त्रस्तं त्रितालञ्च देवसार इतीर्य्यते ॥”

**त्रातं**, त्रि, (त्रै + क्तः नुदविदेति नत्वाभावः ।)

रक्षितम् । इत्यमरः । ३ । १ । १०६ ॥ (यथा, मार्कण्डेये । ८४ । २२ ।
“त्रैलोक्यमेतदखिलं रिपुनाशनेन
त्रातं त्वया समरमूर्द्धनि तेऽपि हत्वा ।
नीता दिवं रिपुगणा भयमप्यपास्त-
मस्माकमुन्मदसुरारिभवन्नमस्ते ॥”
भावे क्तः ।) रक्षणे, क्ली ॥

**त्रापुषं**, त्रि, (त्रपुषेण निर्वृत्तम् । त्रपुष + “तेन

निर्वृत्तम् ।” ४ । २ । ६८ । इत्यण् ।) त्रपुष-
निर्म्मितम् । इति व्याकरणम् ॥ (त्रपुणो विकारः ।
“त्रपुजतुनोः षुक् ।” ४ । ३ । १३८ । इत्यण्
षुगागमश्च । रङ्गस्य विकारः । इति सिद्धान्त-
कौमुदी ॥)

**त्रायन्ती**, स्त्री, (त्रै + सम्पदादित्वात् क्विप् । त्रां

त्राणं अयतीति । इ गतौ + शतृ । यद्वा, त्रै
ङ पालने + क्वचित् आत्मनेपदी धातुरपि पर-
स्मैपदमिछतीति न्यायात् शतृ । “उगितश्च ।”
इति ङीप् ।) त्रायमाणा लता । इत्यमरः । २ ।
४ । १५० ॥ (यथा, --
“त्रायन्ती तु वरा तिक्ता सरा पित्तकफापहा ।
ज्वरहृद्रोगगुल्मार्शोभ्रमशूलविषप्रणुत् ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
त्राणकर्त्री च ॥

**त्रायमाणं**, त्रि, (त्रायते इति । त्रै + कर्म्मणि

शानच् ।) रक्ष्यमाणम् । इति व्याकरणम् ॥
(यथा, अथर्व्ववेदे । ६ । ४ । १ ।
“त्वष्टा मे दैव्यं वचः पर्जन्यो ब्रह्मणस्पतिः ।
पुत्त्रैर्भ्रातृभिरदितिर्नु पातु नो दुष्टरं त्रायमाणं सहः ॥”)

**त्रायमाणा**, स्त्री, (त्रायते इति । त्रै + शानच् ।)

बला इति बहुला इति च ख्याता । तत्पर्य्यायः ।
वार्षिकम् २ त्रायन्ती ३ बलभद्रिका ४ । इत्य-
मरः । २ । ४ । १०५ ॥ कृतत्रा ५ त्रायमाणिका ६
बलभद्रा ७ सुकामा ८ वार्षिकी ९ गिरिजा १०

**त्रासदायी**, [न्] त्रि, (त्रासं भयं ददातीति ।

दा + णिनिः ।) भयदाता । तत्पर्य्यायः । शङ्कुरः
२ । इति हेमचन्द्रः । ३ । १४३ ॥

**त्रिंशः**, त्रि, (त्रिंशत् + “तस्य पूरणे डट् ।” ५ ।

२ । ४८ । इति डट् ।) त्रिंशतः पूरणः । इति
व्याकरणम् ॥ (यथा, तिथ्यादितत्त्वे ।
“त्रिंशांशकस्तथा राशेर्भाग इत्यभिधीयते ॥”)

**त्रिंशकः**, त्रि, त्रिंशत्समूहः । समूहार्थे डक-

प्रत्ययः । इति सुपद्मव्याकरणम् ॥ (त्रिंशता
क्रीतः । त्रिंशत् + “विंशतित्रिंशद्भ्यां ड्वुन्न-
संज्ञायाम् ।” ५ । १ । २४ । इति असंज्ञायां
ड्वुन् । त्रिंशत्संख्यकद्रव्येण क्रीतः । इति
सिद्धान्तकौमुदी ॥)

**त्रिंशत्**, स्त्री, (त्रयोदशतः परिमाणमस्य । “पङ्क्ति-

त्रिंशदिति ।” ५ । १ । ५९ । इति निपातनात्
साधुः ।) संख्याविशेषः । त्रिश इति भाषा ।
एकवचनान्तोऽयम् । त्रिंशद्द्वये त्रिंशतौ ।
त्रिंशतो बहुत्वे त्रिंशतः । इति व्याकरणम् ॥
(यथा, मनुः । १ । २२ ।
“निमेषा दश चाष्टौ च काष्ठा त्रिंशत्तु ताः कलाः ।
त्रिंशत्कला मुहूर्त्तः स्यादहोरात्रन्तु तावतः ॥”)

**त्रिंशत्पत्रं**, क्ली, (त्रिंशत्संख्यकानि पत्राणि

दलानि यस्य ।) कुमुदम् । इति शब्दमाला ॥

**त्रिकं**, क्ली, (त्रयाणां सङ्घः । “संख्यायाः संज्ञा-

इति सङ्गीतदामोदरः ॥

**त्रस्नुः**, त्रि, (त्रस्यतीति । त्रस भये + "त्रसि-
गृधिधृषिक्षिपेः क्नुः ।" ३ । २ । १४० । इति
क्नुः ।) त्रासशीलः । इत्यमरः । ३ । १ । २६ ॥
(यथा, भट्टिः । ६ । ७ ।
"सीतां सौमित्रिणा त्यक्तां सध्रीचीं त्रस्नुमेकि-
काम् ।
विज्ञायामंस्त काकुत्स्थः क्षये क्षेमं सुदुर्ल्लभम् ॥")

**त्रा**, ङ पालने । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-सकं-अनिट् ।) त्रै ङ पालन इत्यत्र
कैश्चिददादौ त्रा पठ्यते । इति क्रमदीश्वरः ॥
इति कविकल्पद्रुमटीकायां दुर्गादासः ॥

**त्राणं**, क्ली, (त्रै + भावे ल्युट् क्तो वा । नुदविदेति
पक्षे नत्वम् ।) रक्षणम् । (यथा, शाकुन्तले
१ अङ्के ।
"आर्त्तत्राणाय वः शस्त्रं न प्रहर्त्तुमनागसि ॥"
त्रायते इति कर्त्तरि ल्युः । रक्षिता । यथा,
महाभारते । १ । २३ । १८ ।
"त्वं प्रभास्त्वमभिप्रेतं त्वं नस्त्राणमनुत्तमम् ॥"
तथाच रघौ । १५ । ३ ।
"अवेक्ष्य रामं ते तस्मिन् न प्रजह्रुः स्वतेजसा ।
त्राणाभावे हि शापास्त्राः कुर्व्वन्ति तपसो
व्ययम् ॥"
त्रायतेऽनेनेति करणे ल्युट् । कवचम् । अस्त्रम् ।
अनुजा ११ माङ्गल्यार्हा १२ देवबला १३
पालिनी १४ भयनाशिनी १५ अवनी १६
रक्षणी १७ त्राणा १८ । इति राजनिर्घण्टः ॥
सुभद्राणी १९ भद्रनामिका २० । इति रत्न-
माला ॥ अस्य गुणाः । शीतत्वम् । मधुरत्वम् ।
गुल्मज्वरकफास्रभ्रमतृष्णाक्षयग्लानिविषच्छर्द्दि
विनाशित्वञ्च । इति राजनिर्घण्टः ॥ पित्त-
नाशित्वम् । इति राजवल्लभः ॥ (यथा, --
"पटोलं पिचुमर्द्दञ्च दार्व्वीं कटुकरोहिणीम् ।
षष्ठ्याह्वां त्रायमाणाञ्च दद्याद्वीसर्पशान्तये ॥"
इति चरके चिकित्सास्थाने एकादशेऽध्याये ॥)

**त्रासः**, पुं, (त्रस + भावे घञ् ।) भयम् । इत्यमरः ।
१ । ७ । २१ ॥ (यथा आर्य्यासप्तशत्याम् । ३७६ ।
"प्रणयचलितोऽपि सकपटकोपकटाक्षैर्भया-
हितस्तम्भः ।
त्रासतरलो गृहीतः सहासरभसं प्रियः कण्ठे ॥")
मणेर्दोषः । इति मेदिनी । से, ४ ॥
सङ्घसूत्राध्ययनेषु ।" ५ । १ । ५८ । इति
कन् ।)
पृष्ठवंशाधरः । इत्यमरः । २ । ६ । ७६ ॥ (यथा,
माघे । १२ । १० ।
"नस्या गृहीतोऽपि धुवन्विषाणयो-
र्युगं ससूत्कारविवर्त्तितत्रिकः ॥")
त्रयम् । इति मेदिनी । के, २६ ॥ (यथा,
मनुः । ७ । ५१ ।
"दण्डस्य पातनञ्चैव वाक्पारुष्यार्थदूषणे ।
क्रोधजेऽपि गणे विद्यात् कष्टमेतत्त्रिकं सदा ॥")
त्रिपथसंस्थानम् । इति हेमचन्द्रः । ४ । ५२ ॥
त्रिफला । त्रिकटु । त्रिमदः । यथा, सुखबोधे ।
गुडूचीसारसंयुक्तात्त्रिकत्रयसमन्वयात् ।
वातरक्तं निहन्त्याशु सर्व्वरोगहरन्त्वयः ॥"
(तृतीयेन रूपेण ग्रहणं यस्य । तृतीय +
"तावतिथं ग्रहणमिति लुग्वा ।" ५ । २ । ७७ ।
इति कन् पूरणप्रत्ययस्य च लुक् । तृतीयके,
त्रि । यथा, मनुः । ८ । १४२ ।
"द्विकं त्रिकं चतुष्कञ्च पञ्चकञ्च शतं समम् ।
मासस्य वृद्धिं गृह्णीयात् वर्णानामनुपूर्ब्बशः ॥")

**त्रिककुत्**, [द्] पुं, (त्रीणि ककुत्-सदृशानि ध्वज-
तुल्याणि शृङ्गाणि यस्य ।) त्रिकूटपर्व्वतः ।
इत्यमरः । २ । ३ । २ ॥ (यथा, शतपथब्राह्मणे ।
३ । १ । ३ । १२ । "यत्र वा इन्द्रो वृत्रमहं-
स्तस्य यदक्ष्यासीत्तं गिरिं त्रिककुदमकरोत् ॥"
विष्णोर्नामविशेषः । यथा, महाभारते । १२ ।
३४२ । ९० ।

| | | |
|---|---|---|
| यथा, महाभारते । ३ । १६८ । १४ । "दंशिता विविधैस्त्राणैर्षिचित्रायुधपाणयः ॥") त्रायमाणालता । रक्षिते, त्रि । इति मेदिनी । णे, १४ ॥<br>**त्राणा**, स्त्री, (त्रायते पालयतीति । त्रै + ल्युः । टाप् ।) त्रायमाणा । इति राजनिर्घण्टः ॥ | | "तथैवासं त्रिककुदो वाराहं रूपमास्थितः । त्रिककुत्त्वेन विख्यातः शरीरस्य प्रमापणात् ॥" |

दशरात्रसाध्ययज्ञविशेषः । यथा, तैत्तिरीय-
संहितायाम् । ७ । २ । ५ । २ ।
"त्रिककुद्वा एष यज्ञो यद्दशरात्रः ककुत्पञ्च-
दशः ककुदेकविंशः कुकुत्त्रयस्त्रंशो य एवं
विद्वान् दशरात्रेण यजते त्रिककुदेव समानानां
भवति ॥")

**त्रिकटः**, पुं, (त्रीन् वातपित्तश्लेष्मदोषान् कटति
नाशयतीति । कट + अच् ।) गोक्षुरकः । इति
शब्दरत्नावली ॥

**त्रिकटु**, क्ली, (त्रयाणां कटूनां शुण्ठीमरीचपिप्प-
लीनांसमाहारः ।) मिश्रितशुण्ठीमरीचपिप्पल्यः ।
तत्पर्य्यायः । त्र्युषणम् २ व्योषम् ३ । इत्यमरः ।
२ । १० । १११ ॥ कटुत्रयम् ४ कटुत्रिकम् ५ ।
अस्य गुणाः । दीपनत्वम् । श्वासकासत्वगामय-
गुल्ममेहकफस्थौल्यमेदःश्लीपदपीनसनाशित्वञ्च
।
इति राजनिर्घण्टः ॥ तन्नामगुणाः ।
"विश्वोपकुल्या मरिचं त्रयं त्रिकटु कथ्यते ।
कटुत्रयन्तु त्रिकटु त्र्युषणं व्योषमुच्यते ॥
त्र्युषणं दीपनं हन्ति श्वासकासत्वगामयान् ।
गुल्ममेहकफस्थौल्यमेदःश्लीपदपीनसान् ॥"
इति भावप्रकाशः ॥

**त्रिकण्टं**, क्ली, (त्रयाणां कण्टानां बृहत्यग्निदमनी-
दुस्पर्शारूपाणां समाहारः ।) मिलितबृहत्यग्नि-
दमनीदुस्पर्शात्रयरूपम् । तत्पर्य्यायः । कण्ट-
कारीत्रयम् २ कण्टकत्रयम् ३ । इति राज-
निर्घण्टः ॥

**त्रिकण्टः**, पुं, (त्रीणि कण्टानि कण्टकानि यस्य ।)
गोक्षुरकः । इति शब्दरत्नावली ॥ पत्रगुप्तवृक्षः ।
इति शब्दचन्द्रिका ॥ तेकाँटासिज इति भाषा ।
मत्स्यभेदः । टेङ्गरा इति भाषा । अस्य गुणाः ।
पित्तकफनाशित्वम् । रूक्षत्वम् । अग्निदीपन-
त्वम् । लघुत्वञ्च । इति राजवल्लभः ॥
(पर्य्यायोऽस्य यथा, वैद्यकरत्नमालायाम् ॥
"त्रिकण्टः स्थलशृङ्गाटो गोकण्टोऽथ त्रिकण्टकः ।
त्रिपुटः कण्टकफलः श्वदंष्ट्रा गोक्षुरः क्षुरः ॥")
कण्टकः, पुं, (त्रीणि कण्टकानि यस्य ।) लघु-

**त्रिकार्षिकं**, क्ली, (कर्षाय हितम् कार्षिकम् ।
त्रयाणां कार्षिकाणां समाहारः ।)
मिलित-
नागरातिविषामुस्तात्रयरूपम् । इति
राज-
निर्घण्टः ॥

**त्रिकालज्ञः**, पुं, (त्रिकालं वर्त्तमानातीतभवि-
ष्यत्कालविवरणं जानातीति । ज्ञा +
"आतो-
ऽनुपसर्गे कः ।" ३ । २ । ३ । इति कः
।) बुद्धः ।
इति हेमचन्द्रः । २ । १४६ ॥ सर्व्वज्ञे,
त्रि ॥
(यथा, बृहत्संहितायाम् । १७ । १ ।
"युद्धं यथा यदा वा भविष्यदादिश्यते
त्रिका-
लज्ञैः ॥")

**त्रिकालदर्शी**, [न्] पुं, (त्रिकालं वर्त्तमानातीत-
भविष्यद्रूपं पश्यतीति । दृश + णिनिः ।)
ऋषिः ।
इति हलायुधः ॥
भूतभविष्यद्वर्त्तमानवेत्तरि, त्रि ॥
(यथा, बृहसंहितायाम् । २१ । ४ ।
"प्रध्वंसिन्यपि काले त्रिकालदर्शी कलौ
भवति ॥")

**त्रिकालवित्**, पुं, (त्रिकालं वेत्तीति । विद् +
क्विप् ।) बुद्धः । इति हलायुधः ॥
त्रिकालज्ञे, त्रि ॥

**त्रिकूटं**, क्ली, (त्रिकूटः पर्व्वतः उत्पत्तिस्थानत्वे-
नास्त्यस्येति अर्श आदित्वादच् ।)
सिन्धुलवणम् ।
सामुद्रलवणम् । इति रत्नमाला ॥

**त्रिकूटः**, पुं, (त्रीणि कूटानि शृङ्गाणि यस्य ।)
पर्व्वतविशेषः । यस्योपरि लङ्का । (यथा,
रामा-
यणे । ५ । २ । १ ।

नानापुष्पसमायुक्तं
नानागन्धाधिवासितम् ॥
द्वितीयं राजतं शृङ्गं सेवते यन्निशाकरः
।
पाण्डराम्बुदसं काशं
तुषारचयसन्निभम् ॥
वज्रेन्द्रनीलवैदूर्य्यतेजोभिर्भासयन्
दिशः ।
तृतीयं ब्रह्मसदनं प्रकृष्टं शृङ्गमुत्तमम् ॥
न तत् कृतघ्नाः पश्यन्ति न नृशंसा
न नास्तिकाः ।
नातप्ततपसो लोके ये च पापकृतो
जनाः ॥
तस्य सानुमतः पृष्ठे सरः
काञ्चनपङ्कजम् ।
कारण्डवसमाकीर्णं
राजहंसोपशोभितम् ॥
गजो ह्यचलसंकाशो
मदाच्चलितलोचनः ।
तृषितः पातुकामोऽसाववतीर्णश्च
तज्जलम् ॥
स लीनः पङ्कजवने
यूथमध्यगतश्चरन् ।
गृहीतस्तेन रौद्रेण ग्राहेणाव्यक्तमूर्त्तिना
॥
गरुडस्थो जगन्नाथो
लोकाधारस्तपोधन ! ।
ग्राहग्रस्तं गजेन्द्रं तं तञ्च ग्राहं
जलाशयात् ॥
उज्जहाराप्रमेयात्मा तरसा
मधुसूदनः ।
स्थलस्थं दारयामास ग्राहं चक्रेण
माधवः ॥
मोक्षयामास नागेन्द्रं पापेभ्यः
शरणागतम् ॥"
इति वामनपुराणम् ॥
(घोटकविशेषः । यथा,
नकुलकृताश्वचिकित्-
सिते । ४ । ९ ।

गर्गमत्स्यः । इति त्रिकाण्डशेषः ॥ गोक्षुरक-
वृक्षः । इति हेमचन्द्रः । ४ । २२२ ॥ (यथा, --
"त्रिकण्टः स्थलशृङ्गाटो गोकण्टोऽथ त्रिक-
ण्टकः ॥"
इति वैद्यकरत्नमालायाम् ॥)

**त्रिका**, स्त्री, (तिस्रोऽस्रयो यस्याः । "संख्यायाः

संज्ञासङ्घसूत्राध्ययनेषु च ।" ५ । १ । ५८ । इति
कन् । ततष्टाप् ।) कूपोपरिस्थपट्टप्रान्तभागः ।
भूमिष्ठकूपपट्टम् । इत्यन्ये ॥ कूपस्य समीपे
रज्जुधारणार्थं त्रिस्त्रिदारुयन्त्रम् । इति स्वामी ॥
इत्यमरटीकायां भरतः ॥

**त्रिकायः**, पुं, (त्रिकं आध्यात्मिकाधिभौतिकाधि

दैविकदुःखत्रयं अयति गच्छत्यस्मादिति । अय
गतौ + अपादाने घञ् । यद्वा, त्रिकं त्रिकाल-
मयति वेत्तीति । अय + अच् ।) बुद्धः । इति
हेमचन्द्रः । २ । १४८ ॥

"स सागरमनाधृष्यमतिक्रम्य महाबलः ।
त्रिकूटस्य तटे लङ्कां स्थितः स्वस्थो
ददर्श ह ॥")
तत्पर्य्यायः । त्रिककुत् २ । इत्यमरः ।
२ । ३ । २ ॥
सुवेलः ३ त्रिमुकुटः ४ । इति हेमचन्द्रः
॥
त्रिशृङ्गः ५ । चित्रकूटकः ६ । इति
शब्दरत्ना-
वली ॥ (अयन्तु पीठस्थानानामन्यतमः
। अत्र
भगवती रुद्रसुन्दरीरूपेण विराजते ।
यथा,
देवीभागवते । ७ । ३० । ६६ ।
"नारायणी सुपार्श्वे तु त्रिकूटे रुद्रसुन्दरी
॥")
क्षीरोदसमुद्रतीरस्थपर्व्वतः । यथा, --
"सर्व्वरत्नमयः श्रीमान् त्रिकूटो नामः
पर्व्वतः ।
सुतः पर्व्वतराजस्य सुमेरोर्भास्करद्युतेः
॥
क्षीरोदजलवीच्याा यो
धौतामलशिलातलः ।
उत्थितः सागरं भित्त्वा देवर्षिगणसेवितः
॥
अप्सरोभिः परिवृतः श्रीमान्
प्रस्रवणाकुलः ।
गन्धर्व्वैः किन्नरैर्यक्षैः सिद्धचारणपन्नगैः ॥
विद्याधरैः सपत्नीकैः संयुतैस्तु
तपस्विभिः ।
मृगद्वीपिगजेन्द्रैश्च वृतगात्रो विराजते ॥
पुन्नागैः कर्णिकारैश्च
विल्वामलकपाटलैः ।
चूतनिम्बकदम्बैश्च चन्दनागुरुचम्पकैः
॥
शालैस्तालैस्तमालैश्च
शरलार्ज्जुनपिप्पलैः ।
तथान्यैर्व्विविधैर्वृक्षैः सर्व्वतः समलङ्कृतः
॥
नानाधात्वङ्कितैः शृङ्गैः प्रस्रवद्भिः
समन्ततः ।

"त्रयो यस्य ललाटस्था आवर्त्ता
अधरोत्तराः ।
त्रिकूटः स परिज्ञेयो वाजिवृद्धिकरः
परः ॥")

**त्रिकूटलवणं**, क्ली, (त्रिकूटं सामुद्रमिव लवणम्
।)

द्रोणीलवणम् । इति राजनिर्घण्टः ॥

**त्रिकोणं**, क्ली, (त्रयः कोणा यस्य ।) योनिः ।

इति शब्दार्थकल्पतरुः ॥
(कामरूपपीठ-
विशेषः । यथा,
शब्दार्थचिन्तामणिधृतवचनम् ।
"करतोयां समारभ्य
यावद्दिक्करवासिनी ।
शतयोजनविस्तारं त्रिकोणं
सर्व्वसिद्धिदम् ॥")
लग्नात् नवपञ्चमलग्ने । इति दीपिका
॥ (त्रिभुज-
क्षेत्रभेदः । इति लीलावती ॥) त्र्यस्रे,
त्रि ।
त्रिकोणवस्तूनि यथा । हलः १
शिवचक्षुः २
कामाख्या ३ वह्निमण्डलम् ४ एकारः
५ वज्रम्
६ शृङ्गाटम् ७ शकटादि ८ योनिः ९
। इति
कविकल्पलता ॥

**त्रिकोणफलं**, क्ली, (त्रिकोणं त्र्यस्रं फलं यस्य
।)

शृङ्गाटकम् । इति भावप्रकाशः ॥

**त्रिक्षारं**, क्ली, (त्रयाणां क्षाराणां समाहारः ।)

क्षारत्रयम् ।
मिलितस्वर्जिकाक्षारयवक्षार-
टङ्कणक्षाराणि । इति राजनिर्घण्टः ॥
(यथा,
वैद्यकरसेन्द्रसारसंग्रहे
जारणमारणाधिकारे ।
"सर्ज्जिका टङ्कणञ्चैव यवक्षार
उदाहृतः ॥")

| | | |
|---|---|---|
| | शोभितो रुचिरप्रख्यैस्त्रिभिर्व्वर्णैश्च सानुभिः ॥<br>मृगैः शाखामृगैः सिंहैर्म्मातङ्गैश्च सदामदैः ।<br>जीवञ्जीवकसंधुष्टैश्चकोरशिखिनादितैः ॥<br>तस्यैकं काञ्चनं शृङ्गं सेवते यद्दिवाकरः । | **त्रिक्षुरः**, पुं, (त्रीणि क्षुराणीवाग्राणि यस्य ।)<br>कोकिलाक्षवृक्षः । इति रत्नमाला ॥<br>कुलेखारा<br>इति भाषा ॥<br><br>**त्रिखं**, क्ली, त्रपुषम् । इति शब्दचन्द्रिका ॥<br><br>**त्रिखट्टं**, क्ली, तिसृणां खट्टानां समाहारः । खट्टा-<br>त्रयम् । इत्यमरः । ३ । ५ । ४१ ॥<br><br>**त्रिखट्टी**, स्त्री, (तिसृणां खट्टानां समाहारः ।<br>“द्विगोः ।” ४ । १ । २१ । इति ङीप् ।) त्रिख-<br>ट्टम् । इत्यमरः । ३ । ५ । ४१ ॥ |

**त्रिगणः**, पुं, (त्रयाणां धर्म्मार्थकामानां गणो

वर्गः ।) त्रिवर्गः । धर्म्मार्थकामाः ।
इत्यमर-
टीकायां नीलकण्ठः ॥ (यथा,
किरातार्ज्जुनीये ।
१ । ११ ।
"गुणानुरागादिव सख्यमीयिवा-
न्न वाधतेऽस्य त्रिगणः परस्परम् ॥")

**त्रिगर्त्तः**, पुं, (त्रयो गर्त्ता यत्र ।) देशविशेषः ।

लाहोराख्यदेशैकभागः । तत्पर्य्यायः ।
जाल-
न्धरः २ । इति हेमचन्द्रः । ४ । २४ ॥
(देशो-
ऽयं कूर्म्मविभागे उत्तरस्यामुक्तः । यथा,
बृहत्-
संहितायाम् । १४ । २५ ।
"उत्तरतः कैलासः" इत्युपक्रम्य, --
"त्रिगर्त्ततुरगाननाश्वमुखाः ॥"
इत्युक्तवान् ॥)
तद्देशस्थे पुं भूम्नि । (यथा, महाभारते ।
२ ।
२७ । १८ ।
"ततस्त्रिगर्त्ताः कौन्तेयं दार्व्वाः
कोकनदास्तथा ।
क्षत्त्रिया बहवो राजन्नुपावर्त्तन्त सर्व्वशः
॥")
गणितान्तरम् । इति मेदिनी । ते, ११३
॥

**त्रिगर्त्तकः**, पुं, (त्रिगर्त्त एव । स्वार्थे कन् ।)

त्रिगर्त्तदेशः । इति त्रिकाण्डशेषः ॥

**त्रिगर्त्ता**, स्त्री, (त्रयो गर्त्ता यस्याः ।) घुर्घुरिका ।

(त्रयो बहवो गर्त्ता इव योनिद्वाराणि
यस्याः ।)
कामुकाङ्गना । इति मेदिनी । ते, ११३
॥

**त्रिगर्त्तिकः**, पुं, (त्रयो गर्त्ताः सन्ति यत्र । त्रिगर्त्त

**त्रिजटा**, स्त्री, (तिस्रो जटा यस्याः ।) राक्षसी-

विशेषः । यथा, --
"सीतां ताभिरनार्य्याभिर्दृष्ट्वा सन्तर्ज्जितां
तदा ।
राक्षसी त्रिजटा वृद्धा प्रबुद्धा वाक्यमब्रवीत्
॥"
इति रामायणे सुन्दरकाण्डे २७ अध्यायः
॥ * ॥
विल्ववृक्षः । यथा, ज्ञानभैरवतन्त्रे ६
पटोले ।
"शृणु देवि ! प्रवक्ष्यामि रहस्यं
त्रिजटोत्तमम् ।
पत्रं ब्रह्ममयं देवि ! अद्भुतं वरवर्णिनि ! ॥
श्रीशैलशिखरे जातः श्रीफलः
श्रीनिकेतनः ।
विष्णुप्रीतिकरश्चैव मम प्रीतिकरः सदा ॥
ब्रह्मविष्णुशिवाः पत्रे वृन्तञ्च शक्तिरूपिणी
।
वृन्तमूले तु वज्रं स्यात् पत्रं ब्रह्म त्विदं
प्रिये ! ॥
एकञ्च त्रिजटापत्रैर्हरं वा हरिमर्च्चयेत् ।
कैवल्यं तस्य तेनैव शक्तिपूजा विशेषतः
॥"
अन्यत् विल्वशब्दे द्रष्टव्यम् ॥ (भगवती ।
सा च
गायत्त्रीस्वरूपा । यथा, देवीभागवते ।
१२ । ६ । ७२ ।
"त्रिजटा तित्तिरी तृष्णा त्रिविधा
तरुणाकृतिः ॥")

**त्रिजातकं**, क्ली, (त्रिगुणितं जातं सुगन्धिद्रव्य-

रूपम् । ततः स्वार्थे कन् ।) मिलिततुल्य-
त्वगेलापत्राणि । यथा, --
"एलादित्रिभिरुद्दिष्टं त्रिजातं त्रिसुगन्धिकम्
।
चातुर्जातं सनागन्तु द्रव्यं वातकफापहम्
॥"
अपि च ।

देशो ग्रन्थः । तद्वेदाध्यायी । (यथा, मनुः ।
३ । १८५ ।
"त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः षडङ्गवित्
॥"
"त्रिणाचिकेतः अध्वर्य्युवेदभागस्तद्व्रतञ्च
तद्-
योगात् पुरुषोऽपि त्रिणाचिकेतः ॥" इति तट्टी-
कायां कुल्लूकभट्टः ॥ नारायणस्य नामविशेषः
।
यथा, महाभारते १२ । ३३८ । ४ ।
"पञ्चाग्ने ! त्रिणाचिकेत ! षडङ्गनिधान ! ॥")

**त्रितक्षं**, क्ली स्त्री, त्रयाणां तक्षाणां समाहारः ।

तक्षत्रयम् । इत्यमरः । ३ । ५ । ४१ ॥

**त्रितयं**, क्ली, (त्रयोऽवयवा अस्य । त्रि +

"संख्याया अवयवे तयप् ।" ५ । २ । ४२ ।
इति तयप् ।) त्रयम् । इति व्याकरणम् ॥
(यथा, महाभारते । १३ । १११ । १८ ।
"धर्म्मश्चार्थश्च कामश्च त्रितयं जीविते
फलम् ।
एतत्त्रयमवाप्तव्यमधर्म्मपरिवर्ज्जितम् ॥"
त्रिप्राकारे, त्रि । यथा, पञ्चदश्याम् । १ । ४६
।
"त्रितयीमपि तां मुक्त्वा परस्परविरोधिनीम् ।
अखण्डं सच्चिदानन्दं महावाक्येन लक्ष्यते
॥")

**त्रिदण्डः**, पुं, (त्रिदण्डं चतुरङ्गुलगोबालवेष्टना-

दन्योन्यसम्बन्धं अस्त्यस्येति ।
अर्शआदित्वा-
दच् ।) सन्न्यासाश्रमः । यथा, --
"यस्त्वसंयतषड्वर्गः प्रचण्डेन्द्रियसारथिः ।
ज्ञानवैराग्यरहितस्त्रिदण्डमुपजीवति ॥"
इति श्रीभागवतम् ॥
(त्रयाणां दण्डानां समाहारः । यतित्रिदण्डे,
क्ली । यथा, महाभारते । १२ । ३२० ।
१५५ ।
"सप्ताङ्गस्यास्य राज्यस्य त्रिदण्डस्येव
तिष्ठतः ।

+ बहुलवचनात् ठन् ।) त्रिगर्त्तदेशः । इति
भूरिप्रयोगः ॥

**त्रिगुणं**, क्ली, (त्रयाणां सत्त्वरजस्तमसां गुणानां
समाहारः ।) सत्त्वरजस्तमांसि । इति श्रीभाग-
वतम् ॥ (प्रधानः । यथा, भागवते । ४ । २४ । २८ ।
"यः परं रहसः साक्षात्त्रिगुणाज्जीवसंज्ञितात् ।"
"रहसः सूक्ष्मात् त्रिगुणात् प्रधानात् जीव-
संज्ञितात् पुरुषाच्च परम् ॥" इति तट्टीकायां
स्वामी ॥) त्रयाणां पूरणे गुणत्रययुक्ते च त्रि ॥
(यथा, मनुः । १ । १५ ।
"महान्तमेव चात्मानं सर्व्वाणि त्रिगुणानि च ।
विषयाणां ग्रहीतॄणि शनैः पञ्चेन्द्रियाणि च ॥"
त्रयो गुणा आवृत्तयो यस्य । त्रिभिर्गुणिते ।
यथा, रघुः । २ । २५ ।
"सप्त व्यतीयुस्त्रिगुणानि तस्य
दिनानि दीनोद्धरणोचितस्य ॥")

**त्रिगुणा**, स्त्री, (त्रयो गुणा यस्याः ।) दुर्गा ।
यथा, देवीपुराणे ४५ अध्याये ।
"पदैस्त्रिभिर्व्वलिर्बद्धो रागादित्रिपदाथ वा ।
उत्पत्तिस्थितिनाशेषु रजादित्रिगुणा मता ॥"
(तथाच देवीभागवते । १२ । ६ । ६५ ।
"त्रिगुणा त्रिपदा तन्द्रीस्तुलसी तरुणातरुः ॥"
स्वनामख्यातो बीजभेदः । इति तन्त्रसारः ॥)

**त्रिगुणाकृतं**, त्रि, (त्रिगुणं कर्षणं कृतम् । त्रिगुण
"त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम् ।
नागकेशरसंयुक्तं चातुर्जातकमुच्यते ॥"
इति स्रजनिर्घण्टः ॥
(अस्य लक्षणपर्य्याया यथा, --
"त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम् ।
तद्द्वयं रेचनं रुक्षं तीक्ष्णोष्णं मुखगन्धहृत् ।
लघुपित्ताग्निकृद्बल्यं कफवातविषापहम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**त्रिणं**, क्ली, (तृण + पृषोदरादित्वात् साधुः ।)
तृणम् । इति शब्दरत्नावली ॥ (यथा, तृण-
शब्दव्युत्पत्तौ उज्ज्वलदत्तः । ५ । ८ ।
"रेफेकारसंयुक्तमव्युत्पन्नं शब्दान्तरमस्ति ।
'उत्क्षिप्तत्रिणपत्रपांशुविहगःसौम्यस्वनः पूजितः ।'
इति वराहः ॥")

**त्रिणता**, स्त्री, (त्रिषु स्थानेषु नता । "पूर्ब्बपदात्
संज्ञायामगः ।" ८ । ४ । ३ । इति णत्वम् ।)
धनुः । इति त्रिकाण्डशेषः ॥ (यथा, माघे । १९ । ६१ ।
"स्वगुणेराप्तफलप्राप्तेराकृष्य गणिका इव ।
कामुका इव नालीकांस्त्रिणताः सहसामुचन् ॥"
त्रिणस्य भावः । त्रिण + तल् ।) त्रिणत्वञ्च ।
(त्रिषु स्थानेषु नते, त्रि । यथा, रामायणे । ६ । २० । २८ ।
"भिन्नमुष्टिपरिध्वस्तं त्रिणतं रुक्मरञ्जितम् ।
बाणपातान्तरे रामः पतितं पुरुषर्षभम् ।
शयानं लक्ष्मणं दृष्ट्वा निराशो जीवितेऽभवत् ॥")

**त्रिणाचिकेतः**, पुं, (त्रिकृत्वश्चितो नाचिकेतोऽग्नि-
अन्योन्यगुणयुक्तस्य कः केन गुणतोऽधिकः ॥"
कायवाङ्मनोदण्डत्रये । यथा, मनुः । १२ । ११ ।
"त्रिदण्डमेतन्निक्षिप्य सर्व्वभूतेषु मानवः ।
कामक्रोधौ तु संयम्य ततः सिद्धिं नियच्छति ॥
"सत्त्वमात्मा शरीरञ्च त्रयमेतत्त्रिदण्डवत् ।
लोकास्तिष्ठति संयोगात्तत्र सर्व्वं प्रतिष्ठितम् ॥"
इति चरके सूत्रस्थाने प्रथमेऽध्याये ॥)

**त्रिदण्डी**, [न्] पुं, (त्रिदण्डमस्त्यस्येति । इनिः ।)
त्रिदण्डधारियतिः । (यथा, महाभारते । १२ । ३२० । ८ ।
"तया जगदिदं कृत्स्नमटन्त्या मिथिलेश्वरः ।
तत्र तत्र श्रुतो मोक्षे कथ्यमानस्त्रिदण्डिभिः ॥")
कायवाङ्मनोदण्डयुक्तः । इति श्रीभागवतम् ॥
(यथा, मनुः । १२ । १० ।
"वाग्दण्डोऽथ मनोदण्डः कायदण्डस्तथैव च ।
यस्यैते निहिता बुद्धौ त्रिदण्डीति स उच्यते ॥")
यज्ञोपवीतम् । इति लोकप्रसिद्धिः ॥

**त्रिदला**, स्त्री, (त्रीणि त्रीणि दलानि पत्राणि
यस्याः ।) गोधापदी लता । इति जटाधरः ॥

**त्रिदलिका**, स्त्री, (त्रीणि दलानि यस्याः । कापि
अत इत्वम् ।) चर्म्मकषा । इति शब्दचन्द्रिका ॥

**त्रिदशः**, पुं, (तृतीया यौवनाख्या दशा यस्य ।
त्रिशब्दस्यात्र त्रिभागवत् तृतीयार्थकता । यद्वा,
तिस्रो जन्मसत्त्वाविनाशाख्याः न तु मर्त्यानामिव

| | | |
|---|---|---|
| + कृतम् । "संख्यायाश्च गुणान्तायाः ।" ५ ।<br>४ । ५९ । इति डाच् ।)<br>वारत्रयकृष्टक्षेत्रम् ।<br>इत्यमरः । २ । ९ । ९ ॥ | र्येन । पूर्ब्बपदादिति णत्वम् ।) यवुर्व्वैदैक- | |

वृद्धिपरिणामक्षयाख्याःदशा यस्य । यद्वा,
त्रीन् तापान् दशति नाशयतीति । दन्श +
मूलविभुजादित्वात्कः पृषोदरादित्वात् न-
लोपः । यद्वा, त्र्यधिकास्त्रिरावृत्ताश्च दश
परिमाणमस्य । समासे डच् । शाकपार्थि-
वादिवत् मध्यलोपः ।) देवः । इत्यमरः ।
१ । १ । ७ ॥ (यथा, महाभारते । ३ । ८५ । १९ ।
"न्यवसत् परमप्रीतो ब्राह्मा च त्रिदशैः सह ॥"
ते च अर्का द्वादश १२ रुद्रा एकादश ११
वसवोऽष्टौ ८ विश्वेदेवौ द्वौ २ समुदायेन त्रय-
स्त्रिंशत् ३३ ॥ त्रिंशत् परिमिते, त्रि । यथा,
महाभारते । १ । ११३ । २१ ।
"ततः स कौवरो राजा विहृत्य त्रिदशा निशाः ॥")

**त्रिदशदीर्घिका**, स्त्री, (त्रिदशानां देवानां
दीर्घिका ।) स्वर्गङ्गा । इति हेमचन्द्रः । ४ ।
१४७ ॥

**त्रिदशमञ्जरी**, स्त्री, (त्रिदशप्रिया मञ्जरी
यस्याः ।) तुलसी । इति राजनिर्घण्टः ॥
(तुलसीशब्देऽस्या गुणादयो व्याख्याताः ॥)

**त्रिदशायुधं**, क्ली, (त्रिदशानां देवानां आयुधम् ।)
वज्रम् । इति त्रिकाण्डशेषः ॥

**त्रिदशारिः**, पुं, (त्रिदशानामरिः शत्रुः ।)
असुरः । इति शब्दरत्नावली ॥

विषये संख्याशब्दस्य पूरणार्थत्वं त्रिभागवत् ।"
इति शिशुपालवधटीकायां मल्लिनाथः । १ ।
३६ ।) स्वर्गः । इत्यमरः । १ । १ । ६ ॥ (यथा,
मनुः । ९ । २५३ ।
"रक्षणादार्य्यवृत्तानां कण्टकानाञ्च शोधनात् ।
नरेन्द्रास्त्रिदिवं यान्ति प्रजापालनतत्पराः ॥")
क्ली, आकाशः । इति हेमचन्द्रः ॥

**त्रिदिवा**, स्त्री, नदीभेदः । इति मेदिनी । वे, ३७ ॥
(यथा, मत्स्यपुराणे । ११३ । ३१ ।
"त्रिभामा ऋषिकुल्या च इक्षुदा त्रिदिवा-
चला ॥")

**त्रिदिवेशः**, पुं, (त्रिदिवस्य स्वर्गस्य ईशः ।)
देवः । इत्यमरः । १ । १ । ७ ॥

**त्रिदिवोद्भवा**, स्त्री, (त्रिदिवादुद्भवो यस्याः ।)
स्थूलैला । इति राजनिर्घण्टः ॥ (गङ्गा ।
स्वर्गोद्भवमात्रे, त्रि । इति व्युत्पत्तिलब्धोऽर्थः ॥)

**त्रिदृक्**, [श्] पुं, (तिस्रः दृशो नेत्राणि यस्य ।)
शिवः । इति हेमचन्द्रः । २ । ११० ॥

**त्रिदोषं**, क्ली, (त्रयाणां दोषानां समाहारः ।)
दोषत्रयम् । वातपित्तकफरूपम् । इति राज-
निर्घण्टः ॥

**त्रिदोषजः**, त्रि, (त्रिदोषाज्जायते इति । जन +
"पञ्चम्यामजातौ ।" ३ । २ । ९८ । इति डः ।)
त्रिदोषजनितः । सन्निपातरोगः । यथा, --

**त्रिधामा**, [न्] पुं, (त्रीणि भूरादीनि सत्त्वा-
दीनि वा धामानि स्थानानि यस्य ।) विष्णुः ।
(यथा, मुकुन्दमालायाम् । ११ ।
"तृष्णातोये मदनपवनोद्धूतमोहोर्म्मिमाले
दारावर्त्ते सहजतनयग्राहसङ्घाकुले च ।
संसाराख्ये महति जलधौ मज्जतां नस्त्रिधामन् !
पादाम्भोजे वरद ! भवतो भक्तिनावे प्रसीद ॥")
शिवः । अग्निः । मृत्युः । इति शब्दार्थकल्प-
तरुः ॥ (दशमद्वापरस्य व्यासः । यथा, देवी-
भागवते । १ । ३ । २८ ।
"स्वारस्वतस्तु नवमे त्रिधामा दशमे तथा ॥")
धामत्रये, क्ली स्त्री च ॥ (क्ली, स्वर्गः । यथा,
भागवते । ३ । २४ । २० ।
"हंसो हंसेन यानेन त्रिधाम परमं ययौ ॥"
"त्रिधाम तृतीयं धाम स्वर्गः तस्य परां काष्ठां
सत्यलोकम् ॥" इति तट्टीकायां स्वामी ॥)

**त्रिधारकः**, पुं, (तिस्रो धारा यस्य । ततः स्वार्थे
संज्ञायां वा कन् ।) गुण्डतृणम् । इति राज-
निर्घण्टः ॥ (त्रयाणां धारकानां समाहारः ।)
धारकत्रये, क्ली ॥

**त्रिधारस्नुही**, स्त्री, (त्रिषु भागेषु धारा यस्याः ।
सा एव स्नुही ।) स्नुहीविशेषः । तत्पर्य्यायः ।
त्र्यस्रः २ धारास्नुही ३ । इति राजनिर्घण्टः ॥

**त्रिनयनः**, पुं, (त्रीणि चन्द्रसूर्य्याग्निरूपाणि नय-
नानि यस्य । "क्षुभ्नादिषु च ।" ८ । ४ । ३९ ।
इति निषेधात् न णत्वम् ।) शिवः । इति हला-
युधः ॥ (यथा, महाभारते । १४ । ८ । २७ ।
"त्रिपुरघ्नं त्रिनयनं त्रिलोकेशं महौजसम् ॥")
नयनत्रये, स्त्री ॥ (लोचनत्रयविशिष्टे, त्रि ।
यथा, मातृकासरस्वतीध्याने ।
"मुद्रामोक्षगुणं सुधाढ्यकलसं विद्याञ्च हस्ताम्बुजै-
र्बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवता-
माश्रये ॥")

**त्रिनयना**, स्त्री, (त्रीणि नयनानि यस्याः । टाप् ।)
दुर्गा । यथा, देवीपुराणे ४५ अध्याये ।

**त्रिदशालयः**, पुं, (त्रिदशानां देवानां आलयः ।)

स्वर्गः । इत्यमरः । १ । १ । ६ ॥
(यथा, महा-
भारते । १ । ७६ । ६६ ।
"गुरोरुष्य सकाशे तु दशवर्षशतानि सः
।
अनुज्ञातः कचो गन्तुमियेष त्रिदशालयम्
॥")
सुमेरुपर्व्वतः । इति हलायुधः ॥

**त्रिदशावासः**, पुं, (त्रिदशानां सुराणां आवासो

वासस्थानम् ।) स्वर्गः । इति हलायुधः
॥

**त्रिदशाहारः**, पुं, (त्रिदशानां आहारः ।) अमृ-

तम् । इति हलायुधः ॥

**त्रिदशेश्वरी**, स्त्री, (त्रिदशानामिन्द्रादिदेवाना-

मीश्वरी ।) दुर्गा । यथा, --
"सुराङ्गास्त्रिदशा देवा नन्दिनी
दुन्दूभिर्म्मता ।
तेषाञ्च वन्दिनी नन्दी ईशत्वात्
त्रिदशेश्वरी ॥"
इति देवीपुराणे ४५ अध्यायः ॥
(गङ्गा । यथा, काशीखण्डे । २९ । ७२
।
"तपणी तीर्थतीर्था च त्रिपथा
त्रिदशेश्वरी ॥")

**त्रिदिनस्पृक्**, [श्] पुं, (त्रिदिनं चान्द्रदिनत्रयं

स्पृशतीति । स्पृश् + क्विप् ।)
त्र्यहस्पर्शः । यथा,
"तिथ्यन्तद्वयमेको दिनवारः स्पृशति
यत्र तद्-
भवत्यवमदिनम् । त्रिदिनस्पृक्
दिनत्रयस्पर्शना-
दह्नः ।" इति ज्योतिषतत्त्वम् ॥

**त्रिदिवः**, पुं, (त्रयो ब्रह्मविष्णुरुद्रा दीव्यन्त्यत्रेति ।

दिव + "हलश्च ।" ३ । २ । १२१ ।
इति घञ् ।
संज्ञापूर्ब्बकत्वात् न गुणः । यद्वा,
दीव्यन्तीति

"चिरज्वरे वातकफोल्वणे वा
त्रिदोषजे वा दशमूलमिश्रः ।
किराततिक्तादिगणः प्रयोज्यः
शुद्ध्यर्थिने वा त्रिवृता विमिश्रः ॥"
इति चक्रपाणिदत्तः ॥
("दृष्ट्वा त्रिदोषजं घोरं ज्वरं
प्राणापहारकम् ।
तस्मादादौ कफस्यास्य शोधनं
परिकीर्त्तितम् ॥
न कुर्य्यात् पित्तशमनं यदीच्छेदात्मनो
यशः ।
कफो वातो बलीयांस्तु सद्यो हन्ति
रुजातुरम् ॥
लङ्घनं वमनं वारि ष्ठीवनं स्यात्त्रिदोषजे
।
त्रिरात्रं पञ्चरात्रं वा सप्तरात्रमथापि वा ॥
लङ्घनञ्च समुद्दिष्टं ज्ञात्वा दोषबलाबलम्
।
कफं विशोधितं ज्ञात्वा ततो
वातनिवारणम् ॥
पित्तसंशमनं कार्य्यं ज्ञात्वा पित्तस्य
कोपनम् ।
शोधनीयौ वातकफौ न तु पित्तं
विनाशयेत् ॥"
इति हारीते चिकित्सितस्थाने
द्बितीयेऽध्याये ॥)

**त्रिधा**, व्य, (त्रि + "संख्याया विधार्थे धा ।" ५ ।

३ । ४२ । इति धा ।) त्रिप्रकारः । इति
मुग्धबोधम् ॥ यथा, वराहपुराणे ।
"नारायणः परो देवः सत्त्वरूपो
जनार्द्दनः ।
त्रिधात्मानं स भगवान् ससर्ज
परमेश्वरः ॥"
(यथा, महाभारते । १३ । १४१ । ७८
।
"धर्म्मेणार्थः समाहार्य्यो धर्म्मलब्धं
त्रिधा धनम् ।
कर्त्तव्यं धर्म्मपरमं मानवेन प्रयत्नतः
॥")

**त्रिधातुः**, पुं, (त्रीन् धर्म्मार्थकामान् दधाति पुष्णा-

"पक्षिणां चोत्तरं लोकं तथा ब्रह्मायनं परम् ।
नयं सन्मार्गधर्म्मत्वं दृष्टौ त्रिनयना मता ॥"

**त्रिनेत्रः**, पुं, (त्रीणि नेत्राणि यस्य ।) शिवः ।

यथा, नैषधे । १ । ६ ।
"दिगीशवृन्दांशविभूतिरीशिता
दिशां स कामप्रसरावरोधिनीम् ।
दधार शास्त्राणि दृशं द्वयाधिकां
निजत्रिनेत्रावतरत्वबोधिकाम् ॥"
तस्य गणाः । यथा, मत्स्यपुराणे ।
"ततः साध्यगणानीशस्त्रिनेत्रानसृजत् पुनः ।
कोटयश्चतुराशीतिर्जरामरणवर्जिताः ॥
वामः सृजन्नमर्त्यांस्तान् ब्रह्मणा विनिवारितः ।
नैवंविधा भवेत् सृष्टिर्ज्जरामरणवर्ज्जिता ॥"

**त्रिनेत्रचूडामणिः**, पुं, (त्रिनेत्रस्य महादेवस्य

चूडामणिः शिरोभूषणम् ।) चन्द्रः । इति
त्रिकाण्डशेषः ॥

| | | |
|---|---|---|
| दिवाः । इगुपधज्ञेति कः । त्रयः<br>सत्त्वरजस्तमो-<br>रूपाः दिवाः क्रीडका विलासका<br>इत्यर्थः यत्र ।<br>“तृतीया द्यौस्त्रिदिवः । घञर्थे कविधानं<br>वृत्ति- | तीति । धा + तुन् ।) गणेशः । इति<br>त्रिकाण्ड-<br>शेषः ॥ (त्रयाणां घातूनां समाहारः ।)<br>धातु-<br>त्रये, क्ली ॥ | |

**त्रिनेत्रा**, स्त्री, (त्रीणि नेत्राणीव शरीरे यस्याः ।)

वाराहीकन्दः । इति राजनिर्घण्टः ॥ नेत्रत्रय-
युक्ता च ॥

**त्रिपताकं**, क्ली, (तिस्रः पताका इव रेखा यत्र ।)

रेखात्रयाङ्कितभालम् । इति हारावली । ११४
॥
(तिस्रः पताका इव अङ्गुलयो यत्र । त्रिपताक-
लक्षणान्विते हस्ते, पुं । यथा, साहित्यदर्पणे ।
६ । १५४ ।
"त्रिपताककरेणान्यानपवार्य्यान्तरा कथाम् ।
अन्योन्यामन्त्रणं यत् स्याज्जनान्ते
तज्जनान्ति-
कम् ॥"
"यः कश्चिदर्थो यस्माद् गोपनीयस्तस्यान्तरत
ऊद्‌र्ध्वं सर्व्वाङ्गुलिनामितानामिकं
त्रिपताकलक्षणं
करं कृत्वान्येन सह यन्मन्त्र्यते तत्जनान्तिकम्
॥")

**त्रिपत्रं**, क्ली, (त्रीणि त्रीणि पत्राणि यत्र ।) दल-

त्रययुक्तविल्वपत्रम् । यथा, --
विष्णुरुवाच ।
"ऊद्‌र्ध्वपत्रं हरो ज्ञेयः पत्रं वामं विधिः स्वयम् ।
अहं दक्षिणपत्रञ्च त्रिपत्रदलमित्युत ॥"
इति बृहद्धर्म्मपुराणे बिल्वपत्रमाहात्म्ये
११ अध्यायः ॥

**त्रिपत्रः**, पुं, (त्रीणि त्रीणि पत्राणि यस्य ।) बिल्वः ।

इति राजनिर्घण्टः ॥ पत्रत्रये, स्त्री ॥

**त्रिपत्रकः**, पुं, (त्रीणि त्रीणि पत्राणि यस्य ।)

पलाशवृक्षः । इति हेमचन्द्रः । ४ । २०२ ॥
(त्रयाणां पत्राणां समाहारः । ततः कन् ।
तुलस्यादि पत्रत्रये, क्ली । यथा, देवीपुराणे ।
"तुलसीकुन्दमालूरपत्राण्याहुस्त्रिपत्रकम् ॥")

**त्रिपथं**, क्ली, (त्रयाणां पथां समाहारः । "ऋक्-

पूरिति ।" ५ । ४ । ७४ । इत्यः ।) त्रिमार्गम् ।
तेमाथा पथ इति भाषा । तत्पर्य्यायः ।
त्रिकम् २ । इति हेमचन्द्रः । ४ । ५२ ॥
(त्रयः पादाश्चरणानि यस्याः ।
त्रिपादयुक्ते,
त्रि । यथा, मनुः । २ । ८१ ।
"ओङ्कारपूर्व्विकास्तिस्रो
महाव्याहृतयोऽव्ययाः ।
त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो
मुखम् ॥")

**त्रिपदिका**, स्त्री, (त्रयः पादा अस्याः इति त्रिपदी

ततः संज्ञायां कन् ततष्टाप् ।)
अर्घ्यार्थधातु-
निर्म्मितत्रिपादयुक्तशङ्खाधारः । इति
तन्त्र-
सारः ॥ ("तत्र त्रिपदिकामारोप्य
तदुपरि
शङ्खं स्थापयेत् ।" इति पूजापद्धतिः ॥)

**त्रिपदी**, स्त्री, (त्रयः पादा अस्याः । ङीपि

पद्भावः ।) गोधापदी । इति रत्नमाला ॥
हस्ति-
गात्रबन्धः । इति हेमचन्द्रः । ४ । २९६
॥ (हस्ति-
पादबन्धनम् । इति यादवः ॥ यथा,
रघुः ।
४ । ४८ ।
"नास्रसत् करिणां ग्रैवं
त्रिपदीच्छेदिनामपि ॥")
त्रिपादयुक्ता । पदत्रयम् । इति
व्याकरणम् ॥
भाषाकवितायाश्छन्दोविशेषः । यथा, -
-
"पज्झटिकान्ता यदि यमकान्ता
द्वादश परिणतमात्रा ।
किन्नरगीतिः तदिति निवीतिः
स्यार्द्धसमाक्षरगात्रा ॥"
स्यपादान्त उदाहृतः ।
"यैषा सङ्गीतके नित्यं निवीतिः
किन्नराख्यिका ।
सैव स्यात् प्राकृते गाने त्रिपदीति
परिश्रुता ॥"
पुराणादिमते वामनावतारे त्रिपात् भूत्वा
बलिसकाशात् सर्व्वं राज्यादिकं
गृहीतवानित्य-
तोऽस्य तथात्वम् । तथाच भागवते । ८
। २० । ३४ ।
"क्षितिं पदैकेन बलेर्विचक्रमे
नभः शरीरेण दिशश्च बाहुभिः ॥
पदं द्वितीयं क्रमतस्त्रिविष्टपं
न वै तृतीयाय तदीयमण्वपि ।
उरुक्रमस्याङ्घ्रिरुपर्य्युपर्य्यथो
महर्जनाभ्यां तपसः परं गतः ॥")
ज्वरः । यथा, --
"विद्राविते भूतगणे ज्वरस्तु
त्रिशिरास्त्रिपात् ॥"
इति श्रीभागवतम् ॥

**त्रिपादिका**, स्त्री, (त्रयः पादाः मूलानि यस्याः ।

कप् ततष्टापि अत इत्वम् ।) हंसपदीलता
।
इति राजनिर्घण्टः ॥ (पर्य्यायोऽस्या
यथा, --
"हंसपादी हंसपदी कीटमाता त्रिपादिका
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमभागे
॥)

**त्रिपिष्टपं**, क्ली, (त्रिदशानां देवानां पिष्टपं वास-

स्थानम् । पृषोदरादित्वात् दशशब्दस्य
लोपः ।
यद्वा, मर्त्यपातालापेक्षया तृतीयं पिष्टपम्
भुवनम् । वृत्तौ त्रिशब्दस्य त्रिभागवत्
पूरणा-
र्थता ।) स्वर्गः । इत्यमरः । १ । १ । ६
॥ (यथा,
महाभारते । १ । २०८ । ३५ ।
"तत् त्रिपिष्टपसङ्काशमिन्द्रप्रस्थंव्यरोचत
॥")
आकाशम् । इति शब्दरत्नावली ॥

**त्रिपिष्टपसत्**, [द्] पुं, (त्रिपिष्टपे स्वर्गे सीदतीति ।

"शून्यागारे श्मशाने वा निर्जने वा चतुष्पथे ।
बिल्वधात्रीद्रुमस्यान्तस्त्रिपथेवा भजेन्निशि ।
स भवेत् सर्व्वसिद्धीशः सर्व्ववेदविदां वरः ॥"
इति गुप्तसाधनतन्त्रम् ॥
(तिसृणां नाडीनां पन्थाः । इति विग्रहे कपाल-
कुहरे, पुं । यथा, हठयोगप्रदीपिकायाम् । ३ ।
३७ ।
"कलां पराङ्मुखीं कृत्वा त्रिपथे परियोजयेत् ।
सा भवेत् खेचरी मुद्रा व्योमचक्रं तदुच्यते ॥")

**त्रिपथगा**, स्त्री, (त्रिपथे स्वर्गमर्त्त्यपातालमार्गे

गच्छतीति । गम + डः ।) गङ्गा । इत्यमरः । १
।
१० । ३१ ॥ (अस्या निरुक्तिरुक्ता यथा,
रामा-
यणे । १ । ४३ । ६ ।
"गङ्गा त्रिपथगा नाम दिव्या भागीरथीति च ।
त्रीन् पथो भावयन्तीति तस्मात् त्रिपथगा
स्मृता ॥")

**त्रिपदा**, स्त्री, (त्रयः पादा मूलानि यस्याः ।

टापि पादस्य पद्भावः ।) हंसपदीवृक्षः । इति
राजनिर्घण्टः ॥ (पर्य्यायोऽस्या यथा, --
"गोधापदी तु सुवहा त्रिपदा हंसपद्यपि ॥"
इति वैद्यकरत्नमालायाम् ॥

इति काव्योदयः ॥
(त्रिषु मार्गेषु पादो गमनं यस्याः । गङ्गा ।
यथा, काशीखण्डे । २९ । ७६ ।
"त्रैलोक्यलक्ष्मीस्त्रिपदी तथ्या
तिमिरचन्द्रिका ॥")

**त्रिपर्णः**, पुं, (त्रीणि त्रीणि पर्णानि यस्या ।)
पलाशः ।

इति राजनिर्घण्टः ॥

**त्रिपर्णिका**, स्त्री, (त्रीणि त्रीणि पर्णानि यस्याः ।

संज्ञायां कन् । टापि अत इत्वञ्च ।)
कन्द-
विशेषः । तत्पर्य्यायः । बृहत्पत्रा २
छिन्न-
ग्रन्थिनिका ३ कन्दालुः ४ कन्दवहुला
५ आम्ल-
वल्ली ६ विनारुहा ७ त्रिपर्णी ८ । अस्या
गुणाः । मधुरत्वम् । शीतत्वम् ।
श्वासकासविष-
व्रणविनाशित्वम् ।
पित्तप्रकोपशमनत्वञ्च । इति
राजनिर्घण्टः ॥

**त्रिपर्णी**, स्त्री, (त्रीणि त्रीणि पर्णानि यस्याः ।

गौरादित्वात् ङीष् ।) शालपर्णी । इति
भाव-
प्रकाशः ॥ (अस्या गुणा यथा, --
"यातुकः शालकल्याणी त्रिपर्णी
पीलुपर्णिका ।
शाकङ्गुरु च रूक्षञ्च प्रायो विष्टभ्य
जीर्य्यति ।
मधुरं शीतवीर्य्यञ्च पुरीषस्य च भेदनम्
॥"
इति चरके सूत्रस्थाने २७ अध्याये ॥)
वनकार्पासी । पृश्निपर्णीभेदः । इति
रत्नमाला ॥

**त्रिपात्**, [द्] पुं, (त्रयः पादा अस्य । "संख्या

सुपूर्ब्बस्य ।" ५ । ४ । १४० । इति
पादस्यान्त-
लोपः ।) विष्णुः । इति त्रिकाण्डशेषः ॥
(वेदादि-
सद + क्विप् ।) देवता । इति हलायुधः
॥

**त्रिपुटः**, पुं, (त्रीणि पुटानि यस्य ।) सतीलकः ।

तीरम् । इति मेदिनी । के, ४५ ।
हस्तभेदः ।
तालकः । इति शब्दरत्नावली ॥
गोक्षुरवृक्षः ॥
इति रत्नमाला ॥ (कलायविशेषः ।
खेसारी
इति भाषा ॥ अस्य पर्य्याया गुणाश्च
यथा, --
"त्रिपुटः खण्डिकोऽपि स्यात् कथ्यन्ते
तद्गुणा
अथ ।
त्रिपुटो मधुरस्तिक्तस्तुवरो रूक्षणो भृशम्
॥
कफपित्तहरो रुच्यो ग्राहकः
शीतलस्तथा ।
किन्तु खञ्जत्वपङ्गुत्वकारी
वातातिकोपनः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥
"अन्यानि चैव शस्तानि
कौलत्थान्युषितानि च ।
मसूरास्त्रिपुटा बल्याः कलायाद्याश्च
वर्ज्जिताः ॥"
इति हारीते प्रथमे स्थाने नवमेऽध्याये ॥)

**त्रिपुटा**, स्त्री, (त्रीणि पुटानि दलवृत्तयो यस्याः ।)

मल्लिका । सूक्ष्मैला । त्रिवृत् । इति
मेदिनी ।
के, ४५ ॥ कर्णस्फोटा । स्थूलैला ।
रक्तत्रिवृत् ।
इति राजनिर्घण्टः ॥ देवीविशेषः । यथा,
--
"ऋषिः सम्नोहनश्छन्दो गायत्री देवता
पुनः ।
त्रिपुटाख्या द्विरुक्तैस्तैर्व्वीजैरङ्गानि षट्
क्रमात् ॥"
अस्या रूपं यथा, --
"पारिजातवने रम्ये मण्डपे मणिकुट्टिमे ।

|  |  |  |
| --- | --- | --- |
|  | मते संसाररहितो ब्रह्मस्वरूपः पुरुषः ।<br>यथा,<br>ऋग्वेदे । १० । ९० । ४ ।<br>“त्रिपादूर्ध्व उदैत् पुरुषः<br>पादोऽस्येहाभवत् पुनः ॥” | रत्नसिंहासने रम्ये पद्मे षट्कोणशोभिते<br>॥<br>अधस्तात् कल्पवृक्षस्य निषण्णां देवतां<br>स्मरेत् । |

चापं पाशाम्बुजसरसिजान्यङ्कुशं पुष्पबाणान्
संबिभ्राणां करसरसिजै रत्नमौलिं त्रिनेत्राम् ।
हेमाब्जाभां कुचभरनतां रत्नमञ्जीरकाञ्ची-
ग्रैवेयाद्यैर्व्विलसिततनुं भावयेच्छक्तिमाद्याम् ॥
चामरादर्शताम्बूलकरण्डकसमुद्गकान्।
वहन्तीभिः कुचार्त्ताभिर्दूतीभिः परिवारिताम् ॥
करुणामृतवर्षिण्या पश्यन्तीं साधकं दृशा ॥”
इति तन्त्रसारः ॥

**त्रिपुटी**, [न्] पुं, (त्रिपुट इव आकारोऽस्त्य-
स्येति । त्रिपुट + इनिः ।) एरण्डवृक्षः । इति
शब्दमाला ॥

**त्रिपुटी**, स्त्री, (त्रीणि पुटानि यस्याः । गौरादि-
त्वात् ङीष् ।) त्रिवृता । इत्यमरटीकायां भरतः
॥
(त्रयाणां ज्ञातृज्ञानज्ञेयरूपाणां पुटानामाका-
राणां समाहारः । “द्विगोः ।” इति ङीप् ।
ज्ञातृज्ञानज्ञेयरूपपुटत्रयम् । यथा, पञ्चदश्याम्
।
११ । १४ ।
“भूतोत्पत्तेः पुरा भूमा त्रिपुटीद्वैतवर्जनात् ।
ज्ञातृज्ञानज्ञेयरूपा त्रिपुटी प्रलये हि नो ॥”)

**त्रिपुटीफलः**, पुं, (त्रिपुटी पुटत्रयं फले यस्य ।)
एरण्डः । इति हारावली । १०८ ॥

**त्रिपुण्ड्रं**, क्ली, (त्रयाणां पुण्ड्राणां इक्षुवदाका-
राणां समाहारः ।) भस्मादिकृतकपालस्थ-
तिर्य्यग्रेखात्रयम् । यथा, --
“विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया ।
पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः ॥
तस्मान्मृदापि कर्त्तव्यं ललाटेऽपि त्रिपुण्ड्रकम्
॥”
इति तिथ्यादितत्त्वम् ॥
ब्रह्माण्डपुराणे ।
“ऊद्र्ध्वपुण्ड्रं मृदा कुर्य्यात् त्रिपुण्ड्रं भस्मना
सदा ।
तिलकं वै द्विजः कुर्य्यात् चन्दनेन यदृच्छया
॥

“महात्मना शङ्करेण त्रिपुरं निहतं यदा ।
तदैतदस्त्रं निर्म्मुक्तं येन दग्धा महासुराः ॥”)
पुरा असुरा देवैर्न्निर्जिताः सन्तो मायिनां
परमाचार्य्यं मयं शरणमाययुः । स
गमनागमने
अदृश्या दुर्व्वितर्क्यपरिच्छदा हैमी
रौप्यायसीति
तिस्रः पुरो निर्म्माय तेभ्यो ददौ ते
असुरास्ताभिः
पुरीभिरलक्षिताः पूर्ब्बवैरमनुस्मरन्तः
सेश्वरान्
त्रीन् लोकान् नाशयाञ्चक्रुस्ततः सेश्वरा
लोका
हरं उपासाञ्चक्रिरे । हरो मा भैष्टेति सुरानु-
च्चार्य्य धनुषि शरं सन्धाय पुरेषु व्यमुञ्चत् ।
तैः
शरैः स्पृष्टाः पुरौकसोऽसुरा व्यसवः सन्तो
निपेतुः । महायोगी मयस्तानसुरानानीय
त्रिपुरस्थितसिद्धामृतरसकूपेऽक्षिपत्
तेऽसुरा-
स्तद्रसं प्सृष्ट्वा दृढशरीराः सन्त
उत्तस्थुस्तदा
विष्णुर्गौर्ब्रह्मा च वत्सो भूत्वा त्रिपुरं प्रविश्य
रसकूपामृतं पपौ असुरा विष्णुमायया
मोहिताः
सन्तो न न्यषेधन् तदा विष्णुः स्वाभिः
शक्तिभिः
शम्भोर्युद्धोपकरणं रथसारथिधनुर्बाणादिकं
व्यधात् । ततः शम्भुः सन्नद्धो रथमास्थाय
शरन्धनुषि सन्धाय मध्याह्नकाले त्रिपुरं
ददाह ।
इति श्रीभागवतम् ॥ (त्रीणि पुराणि यस्येति
विग्रहे त्रिपुरासुरे, पुं । यथा, महाभारते ।
७ । २०० । ७६ ।
“आरुह्य स रथं दिव्यं सर्व्वदेवमयं शिवः ।
त्रिपुरस्य वधार्थाय स्थाणुः प्रहरतां वरः ॥”)

**त्रिपुरदहनः**, पुं, (त्रिपुरं दहतीति । दह + ल्युः ।)
शिवः । इति हारावली । ८ ॥

समाप्तिर्बिन्दुसहिता संहितास्तु
तृतीयकम् ।
एतत्तत्त्वं विजानाति यो नरो भुवि
भूमणिः ॥
सिद्धविद्याधरेभ्यश्च सोऽधिको
मन्मथो महान् ।
एतत्त्रयोदश प्रोक्ता मन्त्रा मन्त्रेषु
चोज्वलाः ॥
विंशतेस्तु सहस्रेभ्यः पराश्चैते
प्रकीर्त्तिताः ।
विंशतेस्तु सहस्राणामाद्यमेतत्
प्रकीर्त्तितम् ॥”
तस्या ध्यानं यथा, --
“चतुर्भुजां रक्तवर्णां
रक्तवस्त्रविभूषिताम्।
दक्षिणोद्र्ध्वे स्रजञ्चाधो बिभ्रतीं
पुस्तकोत्तमम् ॥
अभयं वामहस्ताभ्यां वरञ्च दधतीं
तथा ।
सहस्रसूर्य्यसङ्काशां त्रिनेत्रां
गजगामिनीम् ॥
पीनोत्तुङ्गस्तनयुगां
सितप्रेतासनस्थिताम्।
स्मितप्रभिन्नवदनां
सर्व्वालङ्कारसंयुताम् ॥
तिसृभिर्म्मुण्डमालाभिः
शिरोवक्षःकटीषु च ।
त्रिगुणं त्रिगुणीभूतैः प्रत्येकं
परिभूषिताम् ॥
मदिराघूर्णनयनां रक्तदन्तच्छदद्वयाम्
।
चिन्तयेद्वरदां देवीमेवं त्रिपुरभैरवीम्
॥”
इति कालिकापुराणे ७७ अध्यायः ॥

**त्रिपुरमल्लिका**, स्त्री, (त्रीणि पुराणि दलावृत्तयो
यस्याः । सा चासौ मल्लिका चेति ।)
पुष्पवृक्ष-
विशेषः । त्रिपुरमालिका इति ख्याता
। तत्-

ऊद्‌र्ध्वपुण्ड्रं द्विजः कुर्य्यात् क्षत्रियश्च त्रिपुण्ड्रकम् ।
अर्द्धचन्द्रञ्च वैश्यश्च वर्त्तुलं शूद्रयोनिजः ॥”
इत्याह्निकाचारतत्त्वम् ॥
“शिवागमे दीक्षितैस्तु धार्य्यं तिर्य्यक्त्रिपुण्ड्रकम् ।
विष्णवागमे दीक्षितस्तु ऊद्‌र्द्ध्वपुण्ड्रं विधारयेत् ॥”
इति नागोजीभट्टधृतसूतसंहिता ॥
(यथा, शब्दचिन्तामणिधृतदेवीभागवतम् ।
“येषां वपुर्मनुष्याणां त्रिपुण्ड्रेण विना स्थितम् ।
श्मशानसदृशं तत् स्यान्न प्रेक्ष्यं पुण्यकृज्जनैः ॥”
“त्रिपुण्ड्रं ये विनिन्दन्ति निन्दन्ति शिवमेव ते ।
धारयन्ति च ये भक्त्या धारयन्ति तमेव ते ॥
तिर्य्यग्रेखा प्रदृश्यन्ते ललाटे सर्व्वदेहिनाम् ।
तथापि मानवा मूर्खा न कुर्व्वन्ति त्रिपुण्ड्रकम् ॥”)

**त्रिपुण्ड्रकं**, क्ली, (त्रिपुण्ड्रमेव । स्वार्थे कः ।)
त्रिपुण्ड्रम् । यथा, --
“वक्रा ललाटगास्तिस्रो भस्मरेखास्त्रिपुण्ड्रकम् ॥”
इति हारावली । ६२ ॥

**त्रिपुरं**, क्ली, (त्रयाणां पुराणां समाहारः । तद्धि-तार्थेति समासः । पात्रादित्वात् स्त्रीत्वाभावः ।)
मयदानवनिर्म्मितं पुरत्रयम् । (यथा, महा-भारते । ३ । ४१ । ३८ ।

**त्रिपुरभैरवी**, स्त्री, (त्रिपुरा धर्म्मार्थकामानां दात्री । सा चासौ भैरवी चेति ।) देवीविशेषः ।
तन्मन्त्रादि यथा, --
“वैष्णव्या मन्त्रमुख्येषु त्रिपुरायास्ततः शृणु ।
तस्यास्तु सर्व्वमन्त्राणि त्रयोदशयुतानि वै ॥
विंशतिस्तु सहस्राणि तत्राद्यं वाग्भवं स्मृतम् ।
द्वितीयं कामराजाख्यं मोहनञ्च तृतीयकम् ॥
आम्रेडितं वाग्भवन्तु चतुर्थं परिकीर्त्तितम् ।
नेत्रवीजं द्वितीयन्तु द्विरुक्तं वाग्भवं तथा ॥
आद्यं तत् पञ्चमं प्रोक्तं चतुर्भिरपि चाक्षरैः ।
नेत्रवीजं द्वितीयन्तु प्रथमं परिकीर्त्तितम् ॥
द्वितीयं कामराजन्तु तृतीयं वाग्भवं तथा ।
एभिस्त्रिभिश्च यन्मन्त्रं तत् षष्ठं परिकीर्त्तितम् ॥
नेत्रवीजद्वितीयेन वाग्भवान्तेन सप्तमम् ।
तदेव वाग्भवाद्यन्तु अष्टमं परिकीर्त्तितम् ॥
वाग्भवं कामराजञ्चेत्येताभ्यां नवमं स्मृतम् ।
कामराजं तथैवाद्यं द्वितीयञ्चैव मोहनम् ॥
एकादशमिदं प्रोक्तं तदेवाद्यन्तु वाग्भवम् ।
द्वादशं कीर्त्तितं मन्त्रं शेषतस्त्रैपुरं महत् ॥
तन्महत् त्रैपुरं मन्त्रं शृणुष्वैकमनास्त्विदम् ।
प्रान्तादिस्तस्य चाप्यादिर्वह्निर्व्वाग्भवसंज्ञितः ॥
आद्यं त्रिपुरभैरव्या वीजमाद्यं प्रकीर्त्तितम् ।
उपान्त्यश्च तदादिश्च व्यञ्जनाद्यं वृषाणकः ॥
चतुर्थस्वरविन्द्विन्दूयुक्तश्चैतत् द्वितीयकम् ।
उपान्त्यश्च तदादिश्च वह्निः शेषस्वरस्तथा ॥

पर्य्यायः । श्लेष्मघ्ना २ । इति त्रिकाण्डशेषः ॥

**त्रिपुरा**, स्त्री, (त्रीन् धर्म्मार्थकामान् पुरति पुरतो ददातीति । पुरअग्रगमने अत्र अग्रदाने + “इगु-पधज्ञेति ।” ३ । १ । १३५ । इति कः । ततष्टाप् ।)
देवीविशेषः । तन्मन्त्रध्यानादिकं यथा, --
“शृणुतं त्रिपुरामूर्त्तेः कामाख्यायास्तु पूजनम् ।
एतस्या मूलमन्त्रन्तु पूर्ब्बमुत्तरतन्त्रके ॥
युवयोरिष्टयोः सम्यक् क्रमात्तु प्रतिपादितम् ।
वाग्भवं कामराजन्तु डामरञ्चेति तत्त्रयम् ॥
सर्व्वधर्म्मार्थकामादिसाधनं कुण्डलीयुतम् ।
त्रीन् यस्मात् पुरतो दद्यात् दुर्गा ध्याता महेश्वरी ॥
त्रिपुरेति ततः ख्याता कामाख्या कामरूपिणी ।
तस्यास्तु स्नापनं यादृक् कामाख्यायाः प्रकी-र्त्तितम् ॥
तेनैव स्नापनं कुर्य्यात् मूलमन्त्रेण साधकः ।
त्रिकोणं मण्डलं चास्यास्त्रिपुरन्तु त्रिरेखकम् ॥
मन्त्रन्तु त्र्यक्षरं ज्ञेयं तथा रूपत्रयं पुनः ।
त्रिविधा कुण्डलीशक्तिस्त्रिदेवानाञ्च सृष्टये ॥
सर्व्वं त्रयं त्रयं यस्मात् तस्मात्तु त्रिपुरा मता ॥ * ॥
दहनं प्लवनं कृत्वा आद्यां मूर्त्तिं विचिन्तयेत् ।
त्रिधावर्त्याथ हृदये तां मूर्त्तिं शृणु भैरव ! ॥

| | | |
|---|---|---|
| | | सिन्दूरपुञ्जसङ्काशां त्रिनेत्रान्तु चतुर्भुजाम् ।<br>वामोद्र्ध्वे पुष्पकोदण्डं धृत्वाधः पुस्तकं तथा ॥<br>दक्षिणोद्र्ध्वे पञ्चबाणानक्षमालां दधात्यधः ।<br>चतुर्णां कुणपानान्तु पृष्ठेऽन्यं कुणपान्तरम् ॥<br>निधाय तस्य पृष्ठे तु समपादेन संस्थिताम् ।<br>जटाजूटार्द्धचन्द्रैस्तु समाबद्धशिरोरुहाम् ॥<br>नग्नां त्रिवलिभङ्गेन चारुमध्यां मनोहराम् ।<br>सर्व्वालङ्कारसम्पूर्णां सर्व्वाङ्गसुन्दरीं शुभाम् ॥<br>स्रवद्द्रविणसन्दोहां सर्व्वलक्षणसंयुताम् ।<br>एवन्तु प्रथमं ध्यात्वा त्रिधात्मानञ्च चिन्तयेत् ॥ * ॥ |

द्वितीयं त्रिपुरारूपं तथैव तु तृतीयकम् ।
आवाहनार्थं देव्यास्तु चिन्तयेत् योनिमुद्रया ॥
वन्धूकपुष्पसङ्काशां जटाजूटेन्दुमण्डिताम् ।
सर्व्वलक्षणसम्पूर्णां सर्व्वालङ्कारभूषिताम् ॥
उद्यद्रविप्रख्यवस्त्रां पद्मपर्य्यङ्कसंस्थिताम् ।
मुक्तारत्नावलीयुक्तां पीनोन्नतपयोधराम् ॥
बलीविभङ्गचतुरामासवामोदमोदिताम्।
नेत्राह्लादकरीं शुद्धां क्षोभिणीं जगतां तथा ॥
त्रिनेत्रां योगनिद्रां यामीषद्धाससमायुताम् ।
नवयौवनसम्पन्नां मृणालाभचतुर्भुजाम् ॥
वामोर्द्ध्वे पुस्तकं धत्ते अक्षमालान्तु दक्षिणे ।
वामेनाभयदां देवीं दक्षिणाधोवरप्रदाम् ॥
प्रस्रवद्रक्तसूर्य्याभां शिरोमालान्तु बिभ्रतीम् ।
आपादलम्बिनीं कल्पद्रुममासाद्य संस्थिताम् ॥
कदम्बोपवनान्तःस्थां कामाह्लादकरीं शुभाम् ।
द्वितीयां त्रिपुरां ध्यायेदेवं रूपां मनोहराम् ॥ * ॥
तृतीयं त्रिपुरारूपं शृणु वेतालभैरव ! ।
जवाकुसुमसङ्काशां मुक्तकेशीं वराननाम् ॥
सदाशिवं हसन्तन्तु प्रेतवद्विनिधाय वै ।
हृदये तस्य देवस्य ह्यर्द्धपद्मासनस्थिताम् ॥
रक्तोत्पलैर्म्मिश्रितान्तु मुण्डमालां पदानुगाम् ।
ग्रीवायां धारयन्तीन्तु पीनोन्नतपयोधराम् ॥
चतुर्भुजां तथा नग्नां दक्षिणोर्द्ध्वेऽक्षमालिनीम् ।
वरदां तदधो वामे जगन्मायां तथाभयम् ॥
अधस्तु पुस्तकं धत्ते त्रिनेत्रां हसिताननाम् ।
स्रवद्द्रविणभोगार्त्तां तथा सर्व्वाङ्गसुन्दरीम् ॥
एवंविधं तृतीयन्तु रूपं ध्यायेत्तु पूजकः ।
आद्यन्तु वाग्भवं रूपं द्वितीयं कामराजकम् ॥
डामरं मोहनञ्चापि तृतीयं परिकीर्त्तितम् ।
एकैकन्तु त्रिरूपाणि प्राग्विचिन्त्याथ साधकः ॥
मन्त्रत्रयेण प्रत्येकं हृदि षोडशकैस्तथा ।
पूजयेदुपचारैस्तु बहिर्यद्वत्तथैव च ॥”
इति कालिकापुराणे ६२ अध्यायः ॥
(अस्याः वीजम् । “हसरैँ” “हसकलरीँ” “हसरौँ” इति मन्त्रकोषः ॥ ऋग्वेदान्तर्गतोपनिषद्विशेषः । यथा, मुक्तिकोपनिषदि । “सहोवाच श्रीरामः । ऐतरेयकौषीतकीनादबिन्द्वात्मप्रबोधनिर्व्वाणमुद्गलाक्षमालिकात्रिपुरासौभाग्यबह्वृचानामृग्वेदगतानां दशसंख्यकानामुपनिषदां

**त्रिपुषा**, स्त्री, (त्रीन् वातादिदोषत्रयान् पुष्णातीति । पुष + कः । ततष्टाप् ।) कृष्णत्रिवृत् । इति शब्दचन्द्रिका ॥

**त्रिपृष्ठः**, पुं, (त्रयो वंश्याः पृष्ठे पश्चिमप्रदेशेऽस्येति ।) राजभेदः । तत्पर्य्यायः । प्राजापत्यः २ । इति हेमचन्द्रः । ३ । ३५९ ॥

**त्रिफला**, स्त्री, (त्रयाणां फलानां समाहारः । अजादित्वात् “द्विगोः ।” ४ । १ । २१ । इति न ङीप् ।) मिलितसमभागहरीतकीविभीतकामलकीफलानि । तत्पर्य्यायः । त्रिफली २ फलत्रयम् ३ फलत्रिकम् ४ । इति राजनिर्घण्टः ॥ अस्या गुणाः । त्रिदोषनाशित्वम् । नात्युष्णत्वम् । मलभेदित्वञ्च । इति राजवल्लभः ॥ तन्नामगुणाः ।
“पथ्याविभीतधात्रीणां फलैः स्यात्त्रिफला समैः ।
फलत्रिकञ्च त्रिफला सा वरा च प्रकीर्त्तिता ॥
त्रिफला कफपित्तघ्नी मेहकुष्ठहरा सरा ।
चक्षुष्या दीपनी रुच्या विषमज्वरनाशिनी ॥”
इति भावप्रकाशः ॥
(“हरीतक्याश्चामलक्या विभीतस्य फलन्तथा ।
त्रिफलेत्युच्यते वैद्यैर्वक्ष्यामि भागनिर्णयम् ॥
एकभागं हरीतक्या द्वौ भागौ च विभीतकम् ।
स शीतकाले गुडनागरेण
सशर्करा क्षीरयुता तथोष्णे ।
वर्षासु शुण्ठी सहिता नराणां
फलत्रिका सर्व्वरुजाहरा स्यात् ॥”
इति महर्ष्यात्रियभाषिते हारीतोत्तरे कल्पस्थाने त्रिफलाकल्पोनाम द्वितीयोऽध्यायः ॥)

**त्रिफली**, स्त्री, त्रिफला । इति राजनिर्घण्टः ॥

**त्रिबलीकं**, क्ली, (तिस्रो बल्यो यत्र । कप् ।) पायुः । इति हेमचन्द्रः । ३ । २७६ ॥

**त्रिभण्डी**, स्त्री, (त्रीन् वातादिदोषान् भण्डति परिहसतीति । भण्ड परिहासे + अण् । ततो ङीप् ।) त्रिवृता । इत्यमरः । २ । ४ । १०८ ॥ (पर्य्यायोऽस्या यथा, --
“त्रिवृद्वृकाक्षी सुवहा त्रिभण्डी त्रिपुटा च सा ।
व्याघ्रादनी कूटरणा निःसृता त्रिवृता कणा ॥”
इति वैद्यकरत्नमालायाम् ॥
यथाच सुश्रुते चिकित्सितस्थाने । १७ ।
“श्यामा त्रिभण्डी त्रिफला सुसिद्धं
हरिद्रयो रोध्रकवृक्षयोश्च ।
घृतं सदुग्धं व्रणतर्पणेन
हन्याद्गतिं कोष्ठगतापि या स्यात् ॥”)

**त्रिभद्रं**, क्ली, (त्रिषु नखक्षतदन्तक्षतमर्द्दनेष्वपि भद्रं यस्मिन् ।) सुरतम् । इति त्रिकाण्डशेषः ॥

**त्रिभुवनं**, क्ली, त्रयाणां भुवनानां समाहारः । (तद्धितार्थेत्यादिना समासः । पात्रादित्वात् न ङीप् । पां २ । ४ । १७ ।) त्रिलोकी । इति व्याकरणम् ॥ (यथा, भागवते । ३ । ११ । ३० ।

वाङ्कं मनसीति शान्तिः ॥” नगरीविशेषः ।
यथा, महाभारते । ३ । २५३ । ९ ।
“मोहनं पत्तनञ्चैव त्रिपुरां कोशलां तथा ।
एतान् सर्व्वान् विनिर्जित्य करमादाय सर्व्वशः
॥”)

**त्रिपुरान्तकः**, पुं, (त्रिपुरस्य अन्तकः ।) शिवः ।

इत्यमरः । १ । १ । ३५ ॥ (यथा, काशीखण्डे
१०० अध्याये ।
“लाङ्गलीशमथालोक्य ततस्तु त्रिपुरान्तकम् ॥”
तथाच महालिङ्गेश्वरतन्त्रे शिवशतनामस्तोत्रे ।
“आशुतोषो मित्रमध्ये शत्रूणां त्रिपुरान्तकः ॥”)

**त्रिपुरी**, स्त्री, देशविशेषः । त्रिपुरा इति ख्याता ।

तत्पर्य्यायः । चेदिनगरी २ । इति हेमचन्द्रः ।
४ । ४१ ॥

आमलक्यास्त्रिभागञ्च सहैकत्र
प्रयोजयेत् ।
त्रिफला कफपित्तघ्नी
महाकुष्ठविनाशिनी ॥
आयुष्या दीपनी चैव चक्षुष्या
व्रणशोधिनी ।
वणप्रदायिनी घृष्ट्वा
विषमज्वरनाशिनी ॥
सर्व्वरोगप्रशमनी मेधास्मृतिकरी परा
।
वक्ष्यामि योगयुक्तिञ्च रोगे रोगे पृथक्
पृथक् ॥
वाते घृतगुडोपेता पित्ते समधुशर्करा
।
श्लेष्मणि त्रिकटूपेता मेहे
समधुवारिणा ॥
कुष्ठे च घृतसंयुक्ता
सैन्धवेनाग्निमान्द्यहा ।
चक्षुर्धावनके क्वाथो
नेत्ररोगनिवारणः ॥
घृतेन हरते कण्डूं भातुलुङ्गरसैर्वमिम्
।
गुल्मार्शः शूरणगुडैः सद्यः
स्याद्गुणकारकः ॥
क्षीरेण राजयक्ष्माणं पाण्डुरोगं गुडेन
च ।
भृङ्गराजरसेनापि घृतेन सह योजितः
॥
बलीपलितहन्ता च तथा मेधाकरः
स्मृतः ।
सक्षीरः सगुडः क्वाथो
विषमज्वरनाशनः ॥
सशर्कराघृतक्वाथः
सर्व्वजीर्णज्वरापहः ॥
एषा नराणां हितकारिणी च
सर्व्वप्रयोगे त्रिफला स्मृता च ।
सर्व्वामयानां शमनी त्त सद्यः
सतेजकान्तिं प्रतिमां करोति ॥
शोथे तथा कामलपाण्डुरोगे
तथोदरे मूत्रयुता हिता च ।
हितातिसारे ग्रहणीविकारे

“तावत्त्रिभुवनं सद्यः
कल्पान्तैधितसिन्धवः ।
प्लावयन्त्युत्कटाटोपचण्डवातेरितोर्म्मयः
॥”)

**त्रिमदः**, पुं, (त्रयानां मदानां ससाहारः । अभि-

धानात् पुंस्त्वम् ।) मुस्ताचित्रकविडङ्गानि
।
इति वैद्यकम् ॥ (यथा, वैद्यकपरिभाषायाम्
।
विडङ्गमुस्तचित्रञ्च त्रिमदः समुदाहृतः ॥”
त्रिगुणितो मदः । विद्याधनाभिजनोत्पन्नं
गर्व्व-
त्रयम् । यथा, भागवते । ३ । १ । ४३ ।
“नूनं नृपाणां त्रिमदोत्पथानां
महीं मुहुश्चालयतां चमूभिः ।
वधात् प्रपन्नार्त्तिजिहीर्षयेशो
व्युपैक्षताघं भगवान् कुरूणाम् ॥”)

**त्रिमधु**, क्ली, (त्रयाणां मधूनां मधुराणां समा-

हारः ।) मिलितसितामाक्षिकसर्पींषि ।
तत्-
पर्य्यायः । मधुरत्रयम् २ मधुत्रयम् ३ । इति
राजनिर्घण्टः ॥

**त्रिमधुः**, पुं, (मधुवाता इत्यादयस्त्रयो मधुशब्दा

यत्र ।) ऋग्वेदैकदेशः । (यथा, ऋग्वेदे ।
१ । ९० । ६ -- ८ ।
“मघुवाता ऋतायते मधु क्षरन्ति सिन्धवः
।
माध्वीर्नः सन्तोषधीः ॥
मधुनक्तमुतोषसो मधुमत् पार्थिवं रजः ।
मधु द्यौरस्तुनः पिता ॥
मधुमान्नो वनस्पतिर्म्मधुमाँ अस्तु सूर्य्यः ।
माध्वीर्गावो भवन्तु नः ॥”)

| | | |
|---|---|---|
| | हिता च तक्रेण फलत्रिका च ॥<br>क्षीणेन्द्रिये यक्ष्मणि जीर्णरोगे<br>क्षीरेण यक्ता त्रिफला हिता च ।<br>स्यान्नेत्ररोगे च शिरोगदे च<br>कुष्ठे च कण्डूव्रणपीडिते च ।<br>मूत्रग्रहे कामलकेऽग्निमान्द्ये<br>हिता जलेन त्रिफला हि कल्कः ॥ | |

मधुवातादिऋक्त्रयवेत्ता । यथा, --
“त्रिनाचिकेतस्त्रिमधुस्त्रिसुवर्णः षडङ्गवित् ॥”
इति पङ्क्तिपावनवर्णने मार्कण्डेयपुराणम् ।
३१ । २३ ॥ तद्व्रतञ्च । तद्व्रताचरणेन यस्तद-
ध्यायी सोऽपि । इति विज्ञानेश्वरः ॥ * ॥ श्राद्धे
त्रिवारमधुशब्दोच्चारणविधिर्य्यथा, --
“गायत्त्रीं त्रिः सकृद्वापि जपेद्व्याहृति-पूर्ब्बिकाम् ।
मधुवाता इति त्र्यृचं मध्वित्येतत् त्रिकं जपेत् ॥”
इति श्राद्धतत्त्वे
मिताक्षराधृतपारस्करवचनम्॥)

**त्रिमार्गी**, स्त्री, त्रयाणां मार्गानां समाहारः ।
त्रिपथम् । इति व्याकरणम् ॥

**त्रिमुकुटः**, पुं, (त्रीणि मुकुटानीव शृङ्गान्यस्य ।)
त्रिकूटपर्व्वतः । इति हेमचन्द्रः । ४ । ९६ ॥

**त्रिमुखः**, पुं, (त्रीणि मुखानि यस्य ।) बुद्ध-
विशेषः । इति हेमचन्द्रः । १ । ४१ ॥

**त्रिमुखा**, स्त्री, (त्रीणि मुखानि यस्याः ।) बुद्ध-
देवताभेदः । सा मायादेवी । तत्पर्य्यायः ।
मारीची २ वज्रकालिका ३ विकटा ४ वज्र-
वाराही ५ गौरी ६ पात्रिरथा ७ । इति त्रिकाण्डशेषः ॥

**त्रिमूर्त्तिः**, पुं, (तिस्रो मूर्त्तयो यस्य ।) बुद्धः ।
इति त्रिकाण्डशेषः ॥ त्रि, ब्रह्मविष्णुशिवाख्य-
मूर्त्तित्रयवान् । यथा, --
“त्रिमूर्त्तिर्यः सर्गस्थितिविलयकर्म्माणि तनुते ।”
इति गङ्गेशोपाध्यायः ॥
धर्म्मं महापुरुष ! पासि युगानुवृत्तं
छन्नः कलौ यदभवस्त्रियुगोऽथ स त्वम् ॥”
“एकस्तमेव इत्यादिभिरष्टभिः श्लोकैर्य्यदुक्तं पक्ष-
पातेन रक्षणं तद्विपक्षवधश्च सत्त्वोपाधितो न
स्वत इति तदुपसंहरति इत्थमिति विभावयसि
पालयसि हंसि घातयसि । कलौ तु तन्न करोषि
यतस्तदा त्वं छन्नोऽभवः यतस्त्रिष्वेव युगेष्वावि-
र्भावात् स एवम्भूतस्त्वं त्रियुग इति प्रसिद्धः ।”
इति तट्टीकायां श्रीधरस्वामी ॥ (तथा च तत्रैव ।
३ । २४ । २६ ।
“स चावतीर्णं त्रियुगमाज्ञाय विबुधर्षभम् ।
विविक्त उपसंगम्य प्रणम्य समभाषत ॥”
वसन्तप्रावृट्शरद्रूपकालत्रये, क्ली । यथा, वाज-
सनेयसंहितायाम् । १२ । ७५ ।
“या ओषधीः पूर्ब्बा जाता देवेभ्यस्त्रियुगं पुरा ॥”
“युगशब्दः कालवाची । त्रयाणां युगानां समा-
हारस्त्रियुगं त्रिकालं वसन्ते प्रावृषि शरदि
च ।” इति तद्भाष्ये महीधरः ॥ कृतत्रेताद्वापर-
रूपयुगत्रयम् । इति ऋग्वेदस्य । १० । ९७ । १ ।
भाष्ये सायनः ॥ षडैश्वर्य्यशालिनि, त्रि । यथा,
महाभारते । ३ । ८६ । ५ ।
“त्वं पर्य्यटन्नर्क इव त्रिलोकी-
मन्तश्चरो वायुरिवात्मसाक्षी ॥”)

**त्रिलोकेशः**, पुं, (त्रयाणां लोकानामीशः ।) सूर्य्यः ।
इति शब्दचन्द्रिका ॥ (विष्णुः । यथा, महा-
भारते । १३ । १४९ । ८२ ।
“त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥”
“त्रयो लोकास्तदाज्ञप्ताः स्वेषु स्वेषु कर्म्मसु
वर्त्तन्त इति त्रिलोकेशः ॥” इति शाङ्करभाष्यम् ॥
महादेवः । यथा, महाभारते । १४ । ८ । २७ ।
“त्रिपुरघ्नं त्रिनयनं त्रिलोकेशं महौजसम् ॥”
त्रिलोकाधिपतौ, त्रि । यथा, तत्रैव । ३ । ८४ । ११७ ।
“अभिगम्य त्रिलोकेशं वरदं विष्णुमव्ययम् ।
अश्वमेधमवाप्नोति विष्णु लोकञ्च गच्छति ॥”)

**त्रिलोचनः**, पुं, (त्रीणि चन्द्रसूर्य्याग्निरूपाणि
लोचनानि यस्य ।) शिवः । इत्यमरः । १ । १ । ३४ ॥
(यथा, कुमारे । ५ । ७२ ।
“वपुर्व्विरूपाक्षमलक्ष्यजन्मता
दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद् बालमृगाक्षि ! मृग्यते
तदस्ति किं व्यस्तमपि त्रिलोचने ॥”
लोचनत्रयविशिष्टे, त्रि । यथा, माघे । १ । ७० ।
“स बाल आसीद्वपुषा चतुर्भुजो
मुखेन पूर्णेन्दुनिभस्त्रिलोचनः ॥”)

**त्रिलोचना**, स्त्री, (त्रीणि लोचनानि यस्याः ।)
बुद्धदेवीभेदः । इति त्रिकाण्डशेषः । दुर्गा च ॥
(सा च गायत्त्रीस्वरूपिणी । यथा, देवीभाग-
वते । १२ । ६ । ६७ ।
“त्रिकालज्ञानसम्पन्ना त्रिवली च त्रिलोचना ॥”)

**त्रिलोचनाष्टमी**, स्त्री, (त्रिलोचनाय त्र्यम्बक-
पूजायै या अष्टमी ।) गौणचान्द्रज्यैष्ठकृष्णा-
ष्टमी । यथा, --

(यथाच कुमारे । २ । ४ ।
"नमस्त्रिमूर्त्तये तुभ्यं प्राक् सृष्टेः
केवलात्मने ॥")

**त्रियष्टिः**, पुं, (त्रिषु वातपित्तकफात्मकेषु दोषेषु

यष्टिरिव तन्नाशकत्वात् ।) क्षेत्रपर्पटी ।
इति
रत्नमाला ॥

**त्रियामकं**, क्ली, (त्रीन् धर्म्मार्थकामरूपान्

त्रिवर्गानपि यमयति नाशयतीति । यम +
णिच् + ण्वुल् ।) पापम् । इति शब्दमाला
॥

**त्रियामा**, स्त्री, (त्रयो यामाः प्रहरा यस्याः ।

"त्रियामां रजनीं
प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम् ॥"
इति वचनात्
आद्यन्तयोरर्द्धयामयोश्चेष्टाकाल-
त्वेन दिनप्रायत्वात् तथात्वम् ।) रात्रिः ।
(यथा,
हरिवंशे । १०२ । २९ ।
"स मत्तो बलिनां श्रेष्ठो रराजाघूर्णिताननः
।
शैशिरीषु त्रियामासु यथा खेदालसः शशी
॥"
त्रिप्रहरान्विते, त्रि । यथा, गोः रामायणे ।
२ । १० । १७ ।
"त्रियामापि भृशार्त्तस्य सा रात्रिरभवत्तदा
।
तथा विलपतस्तस्य राज्ञो वर्षशतोपमा
॥")
हरिद्रा । इत्यमरः । २ । ९ । ४१ ॥ यमुना
।
नीली । कृष्णत्रिवृत् । इत्युणादिकोषः ॥

**त्रियुगः**, पुं, (त्रीणि युगानि सत्यत्रेताद्वापर-

रूपाणि आविर्भावकालोऽस्य ।) विष्णुः ।
यथा,
भागवते । ७ । ९ । ३८ ।
"इत्थं नृतिर्य्यगृषिदेवझषावतारै-
र्लोकान् विभावयसि हंसि जगत्प्रतीपान् ।
"त्रियुगौ पुण्डरीकाक्षौ वासुदेवधनञ्जयौ
॥"
"त्रियुगौ धर्म्मस्य भार्य्यायां
मूर्त्तिसंज्ञायां कृत-
युगेऽवतीर्णौ नरनारायणौ तावेव
द्वापरान्ते
केशवार्ज्जुनौ इति पुराणपुरुषावेतौ
नास्मदादि-
वन्मानुषाविति भावः । यद्वा, त्रीणि
युगानि
युगलानि षडैश्वर्य्याणि भगसंज्ञानि वा
षड-
ङ्गानि वा ययोस्तौ त्रियुगौ ॥" इति
तट्टी-
कायां नीलकण्ठः ॥)

**त्रियूहः**, पुं, कपिलाश्वः । इति हेमचन्द्रः ॥
(यथा,

अश्ववैद्यके । ३ । १०२ ।
"नीलो नीलक एवाश्वस्त्रियूहः कपिलः
स्मृतः ॥")

**त्रिरात्रं**, क्ली, रात्रित्रयम् । तिसृणां रात्रीणां

समाहारः । इति लिङ्गादिसंग्रहटीकायां
भरतः ॥ (यथा, मनुः । ४ । ११९ ।
"उपाकर्म्मणि चोत्सर्गे त्रिरात्रं क्षेपणं
स्मृतम् ।
अष्टकासु त्वहोरात्रमृत्वन्तासु च रात्रिषु
॥")

**त्रिरेखः**, पुं, (तिस्रो रेखा यत्र ।) शङ्खः । इति

हेमचन्द्रः । ४ । २७२ ॥

**त्रिलवणं**, क्ली, (त्रयाणां लवणानां समाहारः ।

पात्रादित्वात् न ङीप् ।) सैन्धवं विडं
रुचकं
मिलितैतल्लवणत्रयम् । इति
राजनिर्घण्टः ॥
("सिन्धुसौवर्च्चलञ्चैव विडं
सामुद्रमौद्भिदम् ।
एक-द्वि-त्रि-चतुः-पञ्च लवणानि
क्रमादिह ॥"
इति वैद्यकपरिभाषा ॥)

"ज्यैष्ठे मासि नृपश्रेष्ठ ! कृष्णाष्टम्यां त्रिलोचनम्
।
यः पूजयति देवेशमीशलोकं स गच्छति ॥"
इति संवत्सरकौमुदीधृतभविष्यपुराणवचनम्॥
अपि च ।
"ज्यैष्ठे मास्यसिते पक्षे अष्टम्याञ्च महेश्वरि ! ।
शिवार्च्चने च तल्लोकं लभते नात्र संशयः ॥"
इत्युत्तरकामाख्यातन्त्रे ११ पटलः ॥

**त्रिलोचनी**, स्त्री, (त्रीणि लोचनानि यस्याः ।)

दुर्गा । इति पुराणम् ॥

**त्रिलोहकं**, क्ली, (त्रयाणां लोहकानां समाहारः ।)

सुवर्णं रजतं ताम्रं एतद्धातुत्रयम् । इति राज-
निर्घण्टः ॥

**त्रिलौही**, स्त्री, (त्रीणि लौहानि साधनत्वेना-

स्त्यस्याः । अच् । गौरादित्वात् ङीष् ।)
मुद्राविशेषः । यथा, अथ मन्त्रिणां हितर्थाय
त्रिलौही मुद्रा निरूप्यते ।
"सोमसूर्य्याग्निरूपाः स्युर्वेर्णा लौहत्रयं तथा ।
रौप्यमिन्दुः स्मृतो हेम सूर्य्यस्ताम्रो हुताशनः ॥
लौहभागाः समुद्दिष्टाः स्वराद्यक्षरसंख्यया ।

| | | | |
|---|---|---|---|
| | **त्रिलोकी**, स्त्री, त्रयाणां लोकानां समाहारः । (“द्विगोः ।” ४ । १ । २१ । इति ङीप् ।) लोकत्रयम् । यथा, भूर्लोकः भुवर्लोकः स्वर्लो- कश्च । इति लिङ्गादिसंग्रहटीकायां भरतः ॥ (यथा, भागवते । १ । ५ । ७ । | | |

तैलौहैः
कारयेन्मुद्रामसङ्कलितसङ्गताम् ॥
एषु स्वराः स्मृताः सौम्याः स्पर्शाः
सौराः
शुभोदयाः ।
आग्नेया व्यापकाः सर्व्वे
सोमसूर्य्याग्निदेवताः ॥
स्वराः षोडश विख्याताः स्पर्शास्ते
पञ्चविंशतिः ।
व्यापका दश ते
कामधनधर्म्मप्रदायिनः ॥
साष्टं सहस्रं संजप्य स्पृष्ट्वा तां
जुहुयात्ततः ।
तस्यां सम्पातयेन्मन्त्री सर्पिषा
पूर्ब्बसंख्यया ॥
निःक्षिप्य कुम्भे तां
मुद्रामभिषेकोक्तवर्त्मना ।
आवाह्य पूजयेद्देवीमुपचारैर्व्विधानतः
॥
अभिषिच्य विनीताय दद्यात्तां
मुद्रिकां गुरुः ।
इयं मुद्रा क्षुद्ररोगविषज्वरविनाशिनी
॥
व्यालचौरमृगादिभ्यो रक्षां
कुर्य्याद्विशेषतः ।
युद्धे विजयमाप्नोति धारयन्
मनुजेश्वरः ॥
मन्त्रसिद्धिकरी पुंसां
चतुर्व्वर्गफलप्रदा ।
धारयन्मनुजो नित्यं देवतुल्यो
भवेद्भुवि ॥”
इति तन्त्रसारः ॥

**त्रिवर्गः**, पुं, (त्रयानां वर्गः समूहः ।) धर्म्म-
कामार्थाः । इत्यमरः । २ । ७ । ५८
॥ (यथा,
महाभारते । १ । १८१ । ३ ।
“यो हि कारणतः क्रोधं संजातं
क्षन्तुमर्हति ।
न्यासो यस्य ।) विष्णुः । इत्यमरः । १ । १
। २० ॥
(यथा, महाभारते । १३ । १४९ । ६९ ।
“आनन्दो नन्दनो नन्दः
सत्यधर्म्मस्त्रिविक्रमः ॥”
“त्रयो विक्रमास्त्रिषु लोकेषु यस्य स
त्रिविक्रमः ।
‘त्रीणि पदानि विचक्रमे’ इति श्रुतेः ।
‘त्रिरित्येवं त्रयो लोकाः कीर्त्तिता
मुनिसत्तमैः ।
विक्रामंस्तु ततः सर्व्वांस्त्रिविक्रमोऽसि
जनार्द्दन ! ।’
इति हरिवंशे ॥” इति शाङ्करभाष्यम् ॥)

**त्रिविष्टपं**, क्ली, (तृतीयं विष्टपं भुवनम् ।) त्रिपि-
ष्टपम् । स्वर्गः । इत्यमरटीकायां स्वामी ॥
(यथा, रामायणे । २ । १०८ । ९ ।
“विहर त्वमयोध्यायां यथा शक्रस्त्रिविष्टपे
॥”)
त्रिभुवनञ्च ॥

**त्रिविष्टपसत्**, [द्] पुं, (त्रिविष्टपे स्वर्गे सीद-
तीति । सद् + क्विप् ।) त्रिपिष्टपसत् ।
(देवः ।)
इति हलायुधः ॥

**त्रिवीजः**, पुं, (त्रीणि त्रीणि वीजानि यस्य ।)
श्यामाकः । इति राजनिर्घण्टः ॥

**त्रिवृत्**, स्त्री, (त्रीनवयवान् वृणोतीति । वृ +
क्विप् तुक् च ।) लताविशेषः । तेउडी इति
भाषा । तत्पर्य्यायः । सर्व्वानुभूतिः २
सुवहा ३
त्रिपुटा ४ त्रिवृता ५ त्रिभण्डी ६ रेचनी ७ ।
इत्यमरः । २ । ४ । १०८ ॥ सवहा ८
सरणा ९
सरसा १० त्रिपुटी ११ रोचनी १२ । एते
त्रिवृता सामान्ये शुक्लत्रिवृतायामिति
केचित् ।
इति भरतः ॥ मालविका १३ मसूरी १४
कारित्वञ्च । इति भावप्रकाशः ॥ (त्रिभिर्युक्ते,
त्रि । यथा, ऋग्वेदे । १ । ३४ । ९ ।
“क्व त्री चक्रा त्रिवृतो रथस्य ॥”
यथा च मनुः । २ । ४२ ।
“मौञ्जी त्रिवृत् समा श्लक्ष्णा कार्य्या विप्रस्य
मेखला ॥”)

**त्रिवृत्करणं**, क्ली, (त्रिवृतस्त्र्यवयवस्य करणं
मिश्रीकरणम् ।) क्षित्यप्तेजसां मिश्रीकरणम् ।
यथा, “तेजोजलक्षितयः प्रत्येकं द्वेधा विभज्य
एकस्मिन्नर्द्धे स्वेतरयोरर्द्धार्द्धं प्रक्षिपेत् ।” इति
मोक्षधर्म्मटीकायां नीलकण्ठः ॥

**त्रिवृत्पर्णी**, स्त्री, (त्रीन् दोषान् नाश्यत्वेन वृणोति
प्राप्नोतीति त्रिवृत् त्रिदोषघ्नम् । त्रिवृत् पर्णं
यस्याः । ङीप् ।) हिलमोचिका । इति शब्द-
चन्द्रिका ॥ (हिलमोचिकाशब्दे विवृतिरस्या
ज्ञेया ॥)

**त्रिवृता**, स्त्री, (त्रिभिरवयवैर्वृता ।) त्रिवृत् ।
इत्यमरः । २ । ४ । १०८ ॥ (अस्याः पर्य्यायो
यथा, --
“त्रिभण्डी त्रिवृता श्यामा सुरभा कोटरा तथा ।
सर्व्वानुभूतिः सुवहा शब्दैः पर्य्यायवाचकैः ॥”
“त्र्यषणं त्रिफला हिङ्गु कार्षिकं त्रिवृतापलम् ।
सौवर्च्चलार्द्धकर्षञ्च पलार्द्धञ्चाम्लवेतसाम् ॥
तच्चूर्णं शर्करातुल्यं मद्येनाम्लेन वा पिबेत् ।
गुल्मपार्श्वार्त्तिनुत् सिद्धं जीर्णे चाद्याद्रसौदनम्
॥”
“तुल्याम्लं त्रिवृताकल्कं सिद्धं गुल्महरं घृतम् ।
मूलं श्यामात्रिवृतयोः पचेदामलकैः सह ।
जले तेन कषायेण पक्त्वा सर्पिः पिबेन्नरः ॥”
इति चरके कल्पस्थाने सप्तमेऽध्याये ॥)

**त्रिवेणी**, स्त्री, (तिस्रो वेण्यः वारिप्रवाहा
वियुक्ताः संयुक्ता वा यत्र ।) स्थानविशेषः ।
यत्र गङ्गया यमुनासरस्वत्योर्व्वियोगः । सा
दक्षिणप्रयागः । तस्य सीमनिर्णयः । यथा, --
“प्रद्युम्नस्य ह्रदात् याम्ये सरस्वत्यास्तथोत्तरे ।
तद्दक्षिणप्रयागस्तु गङ्गातो यमुना गता ॥”
इति प्रायश्चित्ततत्त्वम् ॥

नालं स मनुजः सम्यक् त्रिवर्गं परिरक्षितुम् ॥”)
त्रिफला । त्रिकटु । (यथा, सुश्रुते उत्तरतन्त्रे
४१ अध्याये ।
“भागान् दशैतान् विपचेद्विधिज्ञो दत्त्वा त्रिवर्गं मधुरञ्च कृत्स्नम् ॥”)
वृद्धिस्थानक्षयाः । (यथा, महाभारते । १२ ।
६९ । ६९ ।
“त्रिवर्गश्चापि यः प्रोक्तस्तमिहैकमनाः शृणु ।
क्षयः स्थानञ्च वृद्धिश्च त्रिवर्गः परमस्तथा ॥”)
सत्त्वरजस्तमांसि । इति मेदिनी । गे, ३७ ॥
सुनीतिः । इति शब्दरत्नावली ॥

**त्रिवर्णकं**, क्ली, (त्रयो वर्णाः सन्त्यवयवादौ यस्य ।

कप् ।) गोक्षुरकः । त्रिफला । (यथा, सुश्रुते । १ । ४४ ।
“त्रिवर्णकत्र्यूषणयुक्तमेतद् गुडेन लिह्यादनवेन चूर्णम् ॥”)
त्रिकटु । इति मेदिनी । के, १९२ ॥ (ब्राह्म
णादिवर्णत्रये, श्यामरक्तपीतात्मके वर्णत्रये च ॥)

**त्रिवर्षिका**, स्त्री, (त्रीणि वर्षाणि वयो यस्याः सा

त्रिवर्षा । ततः स्वार्थे कन् । टापि अत इत्वञ्च ।)
त्रिहायणी । त्रिवर्षा गौः । इति हेमचन्द्रः ।
४ । ३३८ ॥

**त्रिवलिः**, स्त्री, (त्रिगुणिता वलिस्त्वक्तरङ्गः ।) जठरा-

वयवविशेषः । (यथा, देवीभागवते । ५ । ८ । ७१ ।
“ऐन्द्रेणास्यास्तथा मध्यं जातं त्रिवलिसंयुतम् ॥”

श्यामा १५ अर्द्धचन्द्रा १६ विदला १७ सुषेणी
१८ कालिङ्गिकम् १९ कालमेषी २० काली २१
त्रिवेला २२ त्रिवृत्तिका २३ । इति राज-
निर्घण्टः ॥ श्वेता २४ सारा २५ । इति शब्द-
रत्नावली ॥
कृष्णायाः पर्य्यायः । श्यामा १ पालिन्दी २
मुषेणिका ३ काला ४ मसूरविदला ५ अर्द्ध-
चन्द्रा ६ कालमेषिका ७ । इत्यमरः । २ । ४ ।
१०८ ॥ पालिन्धी ८ कालमेशिका ९ । इति
भरतः ॥ श्वेतायाः पर्य्यायः । त्रिवृत् १ वृकाक्षी
२ सुवहा ३ त्रिभण्डी ४ त्रिपुटा ५ ॥ अरु-
णायाः पर्य्यायः । व्याघ्रादनी १ कुटरुणा २
निःसृता ३ त्रिवृता ४ अरुणा ५ । इति रत्न-
माला ॥ सामान्यत्रिवृतागुणाः । कटुत्वम् । उष्णत्वम् ।
कृमिश्लेष्मोदरार्त्तिकुष्ठकण्डुव्रणनाशि-
त्वम् । विरेचने प्रशस्तत्वञ्च । इति राज-
निर्घण्टः ॥ अरुणवर्णत्रिवृद्गुणाः । स्वादु-
त्वम् । कषायत्वम् । मृदुत्वम् । रेचनत्वम् ।
रूक्षत्वम् । कटुत्वम् । दोषपाके पित्तकफापह-
त्वञ्च ॥ अस्याश्चाल्पान्तरगुणा विज्ञेया त्रिवृता
सिता । इति राजवल्लभः ॥
श्वेतत्रिवृद्गुणाः । विरेचनत्वम् । स्वादुत्वम् ।
उष्णत्वम् । वायुकारित्वम् । रूक्षत्वम् । पित्त-
ज्वरश्लेष्मपित्तशोफोदरापहत्वञ्च॥ कृष्णत्रिवृता-
गुणाः । श्वेताद्धीनगुणत्वम् । तीव्रत्वम् । विरे-

इयं मुक्तवेणीति कथ्यते । प्रयागे युक्तवेणी ॥
(अत्र गङ्गया यमुनासरस्वत्योः सङ्गमात् ॥ * ॥
हठयोगोक्तेडापिङ्गलासुषुम्नारूपपारिभाषिक
नदीत्रयसङ्गमस्थानम् । यथा, हठयोगप्रदीपि-
कायाम् । ३ । २४ ।
“कालपाशमहाबन्धविमोचनविचक्षणः।
त्रिवेणीसङ्गमं धत्ते केदारं प्रापयेन्मनः ॥”
इदन्तत्वाद्वा ङीबिति त्रिवेणिरपि पाठः ॥)

**त्रिवेला**, स्त्री, (तिस्रो वेला अवयवसीमानो यस्याः ।)

त्रिवृत् । इति राजनिर्घण्टः ॥

**त्रिशङ्कुः**, पुं, (त्रीणि शङ्कूनि व्यतिक्रमाणि यस्य ।)

सूर्य्यवंशीयराजविशेषः । स तु इक्ष्वाकुवंशोद्भव-
पृथुराजपुत्त्रः । (अस्य नामनिरुक्तिर्यथा, हरि-
वंशे । १३ । १९ ।
“एवं त्रीण्यस्य शङ्कूनि तानि दृष्ट्वा महायशाः ।
त्रिशङ्कुरिति होवाच त्रिशङ्कुरिति स स्मृतः ॥”)

| | | |
|---|---|---|
| कृदिकारादिति पक्षे ङीपि त्रिवलीत्यपि ।) यथा, "त्रिवलीवलयोपेताम् ॥" इति जगद्धात्रीध्यानम् ॥<br>**त्रिविक्रमः**, पुं, (त्रीन् लोकान् विशेषेण क्रामति व्याप्नोतीति । वि + क्रमं + अच् । यद्वा, त्रिषु लोकेषु बलिवञ्चनार्थं भूव्योमस्वर्गेषु क्रमः पाद- | चनत्वम् ।<br>मूर्च्छादाहमदभ्रान्तिकण्ठोत्कर्षण- | |

एष वशिष्ठमाह अहं सशरीरेण स्वर्गं गन्तुं
यजेयं वशिष्ठ एतदशक्यमित्याह ततो राजा
तस्य पुत्त्रानुवाच सशरीरो यज्ञेन स्वर्गं
यथा-
प्नुयां तथा कुरुत यदि भवद्भिः
परित्यक्तस्तदान्यं
गुरुमुपासिष्ये वशिष्ठपुत्त्रास्तच्छ्रुत्वा
राजानमूचु-
र्वशिष्ठो भगवान् अशक्यमिति यत् प्राह
तद-
स्माभिः कथं शक्यम् । राजोवाच यष्मन्यां
गतिं
गमिष्यामि तच्छ्रुत्वा ऋषिपुत्त्रा राजानं
शेपुः
श्वश्चाण्डालो भविष्यसि । ततस्तस्यां
रात्र्यामती-
तायां स चाण्डालदर्शनो भूत्वा विश्वामित्रं
शरण-
माययौ विश्वामित्रस्तं स्वीयद्रव्येण
याजयामास
तस्मिन् यज्ञे देवा भागार्थं नागच्छन् ततो
विश्वामित्रः क्रोधात् राजानमब्रवीत् मया
बाल्यात् प्रभृति यत्तपः कृतं तेन त्वं दिवं
व्रज
तदा राजा सशरीरो दिवं ययौ । तदा
शक्रस्तमु-
वाच त्रिशङ्को ! त्वं भूमौ पत
ततोऽवाक्शिराः
पतन् राजा पाहीति विश्वामित्रमुवाच
विश्वा-
मित्रस्तिष्ठेति तमुक्त्वा
स्वर्गदक्षिणमार्गेऽपरान्
सप्तर्षीन् सृष्ट्वापरं नक्षत्रचक्रं स्रष्टुमुपचक्रमे
देवाः सम्भ्रान्ता ऋषिमूचुरयं सशरीरः स्वर्गं
गन्तुं
नार्हति विश्वामित्रस्तानुवाच अहमस्य
स्वर्गा-
रोहणं प्रतिज्ञाय कथमनृतं करिष्यामि अतो

शिखात्रययुक्ते, त्रि, । यथा, महाभारते ।
२ ।
४२ । ११ ।
"त्रिशिखां भ्रुकुटीञ्चास्य ददृशुः
सर्व्वपार्थिवाः ।
ललाटस्थां त्रिकूटस्थां गङ्गां त्रिपथगामिव
॥")

**त्रिशिखिदला**, स्त्री, (तिस्रः शिखाः सन्त्यस्येति
इनिः । त्रिशिखि दलं अस्याः ।)
मालाकन्दः ।
इति राजनिर्घण्टः ॥

**त्रिशिराः**, [स्] पुं, (त्रीणि शिरांसि मस्तकानि
यस्येति ।) कुवेरः । इति हेमचन्द्रः । २ ।
१०३ ॥
ज्वरः । यथा, --
"त्रिशिरास्ते प्रसन्नोऽहं व्येतु ते
मज्ज्वराद्भयम् ।"
इति श्रीभागवतम् ॥
रावणपुत्त्रविशेषः । (यथा, रामायणे । ६
।
१२५ । ९ ।
"अकम्पनश्च निहतो बलिनोऽन्ये च
राक्षसाः ।
त्रिशिराश्चातिकायश्च
देवान्तकनरान्तकौ ॥")
खरसेनापतिः । इति रामायणम् ॥ (यथा,
रघुवंशे । १२ । ४७ ।
"तं शरैःप्रतिजग्राह खरत्रिशिरसौ च सः
॥"
स्वनामख्यातस्त्वष्टुः प्रजापतेः पुत्त्रः ।
यथा,
महाभारते । ५ । ९ । २ ।
"त्वष्टा प्रजापतिर्ह्यासीद्देवश्रेष्ठो महातपाः
।
सपुत्त्रं वै त्रिशिरसमिन्द्रद्रोहात्
किलासृजत् ॥"
असुरविशेषः । यथा, तत्रैव । ९ । ३१ ।
१२ ।

**त्रिष्टुप्**, [भ्] स्त्री, (त्रिषु स्थानेषु स्तुभ्यते जडी-
क्रियते इति । स्तुभ जडीकरणे + क्विप् ।
षत्वम् ।)
छन्दोविशेषः । इति छन्दोमञ्जरी ॥ (यथा,
वाजसनेयसंहितायाम् । ९ । ३३ ।
"इन्द्र एकादशाक्षरेण त्रिष्टु
भमुदजयत्तामुज्जे-
षम् ॥") अस्य विवरणं छन्दस्शब्दे द्रष्टव्यम्
।
अस्योत्पत्तिविवरणं यथा, श्रीभागवते । ३
।
१२ । २९ ।
"तस्योष्णिगासील्लोमभ्योगायत्री च त्वचो
विभोः ।
त्रिष्टुप् मांसात् स्नुतोऽनुष्टुप् जगत्यस्थ्नः
प्रजा-
पतेः ॥
मज्जायाः पङ्क्तिरुत्पन्ना बृहती
प्राणतोऽभ-
वत् ॥"

**त्रिसन्धिः**, स्त्री, (त्रयः सन्धयो विकाशकाला यस्य
।)
पुष्पविशेषः । तत्पर्य्यायः । सान्ध्यकुसुमा
२
सन्धिवल्ली ३ सदाफला ४ त्रिसन्ध्यकुसुमा
५
कान्ता ६ सुकुमारा ७ सन्धिजा ८ । सा
त्रिविधा । रक्ता १ सिता २ असिता च ३ ।
अस्या गुणाः । कफकासहरत्वम् ।
रुच्यत्वम् ।
त्रिदोषशमनत्वञ्च । इति राजनिर्घण्टः ॥

**त्रिसन्ध्यं**, क्ली, (तिसृणां सन्ध्यानां समाहारः ।
आबन्तोवेति पाक्षिकी क्लीवता ।) पूर्ब्बाह्ण-
मध्याह्नापराह्णकालः । इत्यमरः । १ । ४ ।
३ ॥
अस्य रूपान्तरम् । त्रिसन्ध्यी ।
इत्यमरटीकायां

यावल्लोकाः स्थास्यन्ति तावदमूनि नक्षत्राण्य-
त्रैव तिष्ठन्तु त्रिशङ्कुरप्यवाक्शिरास्तिष्ठतु। इति
रामायणम् ॥ * ॥ विडालः । शलभः । इति
मेदिनी । के, १०१ ॥ चातकपक्षी । इति शब्द-
रत्नावली ॥ खद्योतः । इति शब्दमाला ॥ (महा-
देवः । यथा, महाभारते । १३ । १७ । १०२ ।
"अजैकपाच्च कापाली त्रिशङ्कुरजितः
शिवः ॥")

**त्रिशङ्कुजः**, पुं, (त्रिशङ्कोर्जायते इति । जन + डः ।)
हरिश्चन्द्रराजः । इति हेमचन्द्रः । ३ । ३६५ ॥

**त्रिशङ्कुयाजी**, [न्] पुं, (त्रिशङ्कुं सूर्य्यवंशीयराज-
विशेषं याजयतीति । यज + णिच् + णिनिः ।)
विश्वामित्रः । इति हेमचन्द्रः । ३ । ५१४ ॥

**त्रिशरणः**, पुं, (त्रीणि शरणान्यस्येति ।) जिनः ।
इति त्रिकाण्डशेषः ॥

**त्रिशर्करा**, स्त्री, (त्रिभिर्गुणिता शर्करा । शाक-
पार्थिवादित्वात् समासः ।) मिलितगुडोत्पन्ना
हिमोत्था मधुरा । इति राजनिर्घण्टः ॥

**त्रिशला**, स्त्री, (तिस्रः शाला यस्याः । पृषोदरा-
दित्वात् साधुः ।) वृत्तार्हन्मातृविशेषः । सा
वर्द्धमानमाता । इति हेमचन्द्रः । १ । ४१ ॥

**त्रिशाखपत्रः** पुं, (त्रिशाखं त्रिदलं पत्रमस्य ।)
विल्वः । इति राजनिर्घण्टः ॥

**त्रिशिखं**, क्ली, (तिस्रः शिखा यस्य ।) त्रिशूलम् ।
किरीटम् । इति हेमचन्द्रः ॥

**त्रिशिखः**, पुं, (तिस्रः शिखा अस्य ।) राक्षस-
विशेषः । स रावणपुत्त्रः । इति हेमचन्द्रः ॥
विल्वः । इति राजनिर्घण्टः ॥ (तामसमन्व-
"वातापिरिल्वलश्चैव त्रिशिराश्च तथा
विभो ! ॥"
शिखात्रयविशिष्टे, त्रि । यथा, तत्रैव । २३ ।
१४७ । ५४ ।
"त्रिशिरास्तस्य देवस्य शातकुम्भमयो
द्रुमः ।
ध्वजस्तृणेन्द्रो देवस्य भविष्यति
रथाश्रितः ॥")

**त्रिशीर्षकं**, क्ली, (त्रीणि शीर्षाणि यस्य । कप् ।)
त्रिशूलम् । इति हेमचन्द्रः । ३ । ४५१ ॥

**त्रिशूलं**, क्ली, (त्रीणि शूलानि इव अग्राणि यस्य ।)
अस्त्रविशेषः । तत्र्यायः । त्रिशिखम् २ । इति
मेदिनी । खे, ९ ॥ शूलम् ३ त्रिशीर्षकम् ४ ।
इति हेमचन्द्रः ॥ (यथा, महाभारते । २ ।
३० । ४९ ।
"चक्राणि परिघाश्चैव त्रिशूलानि
परश्वधान् ॥")

**त्रिशूली**, [न्] पुं, (त्रिशूलमस्त्रमस्त्यस्येति ।
त्रिशूल + इनिः ।) शिवः । यथा, --
"त्र्यक्षोऽभेद्यस्त्रिशूली च
वृषकेतुर्म्महाबलः ॥"
इति स्कन्दपुराणे नीलकण्ठस्तवः ॥
(त्रिशूलधारिणि, त्रि । स्त्रियां ङीप् । यथा,
हरिवंशे । १६४ । ११ ।
"त्रिशूलिनीं नमस्यामि
महिषासुरघातिनीम् ॥")

**त्रिशृङ्गः**, पुं, (त्रीणि शृङ्गाणि यस्य ।) त्रिकूट-
पर्व्वतः । इति शब्दरत्नावली ॥ (यथा, ब्रह्माण्डे ।
३९ । १२ ।
"त्रिशृङ्गो जरुथिश्चैव पर्व्वतावुत्तरौ वरौ ॥")
त्रिकोणः । यथा, कुरङ्गेण हीनस्त्रिशृङ्गस्तदन्त-
रिति सारसमुच्चयः ॥
भरतः ॥ (यथा, महाभारते । ३ । ८२ । २१ ।
"सान्निध्यं पुष्करे येषां त्रिसन्ध्यं
कुरुनन्दन ! ।
आदित्या वसवो रुद्राः साध्याश्च
समरुद्गणाः ।
गन्धर्व्वाप्सरसश्चैव नित्यं सन्निहिता
विभो ! ॥")

**त्रिसन्ध्यव्यापिनी**, स्त्री, (त्रिसन्ध्यं व्याप्नोतीति ।
वि + आप् + णिनि + ङीप् ।) त्रिसन्ध्यघटकी-
भूतयावत्क्षणव्यापिनीतिथिः । यथा, --
"त्रिसन्ध्यव्यापिनी या तु सैव पूज्या सदा
तिथिः ।
न तत्र युग्मादरणमन्यत्र हरिवासरात् ॥"
इति पराशरीयेण त्रिसन्ध्यव्यापित्वेन नियमाभि-
घानं तदपवादकम् । इति तिथ्यादितत्त्वम् ॥
तयोर्युग्मसांमुख्योरपवादकं तदपवादकम् । इति
तट्टीका ॥

**त्रिसमं**, क्ली, (त्रीणि हरीतकीनागरगुडानि
समानि यत्र ।) समत्रयम् । समहरीतुकीनागर-
गुडरूपम् । इति राजनिर्घण्टः ॥

**त्रिसरः**, पुं, (त्रिभिः स्रीयते इति । सृ + अप् ।)
कृशरः । इति हेमचन्द्रः । ३ । ६२ ॥

**त्रिसवनं**, क्ली, (त्रयाणां सवनानां कालानां समा-
हारः ।) त्रिकालम् । इति प्रायश्चित्ततत्त्वम् ॥

**त्रिसवनस्नायी**, [न्] पुं, (त्रिसवने त्रिकाले
स्नातीति । स्ना + णिनिः ।) त्रिकालस्नायी ।
इति स्मृतिः ॥

**त्रिसिता**, स्त्री, (त्रिगुणिता सिता शर्करा ।)
त्रिशर्करा । इति राजनिर्घण्टः ॥

न्तरस्य इन्द्रः । यथा, भागवते । ८ । १ । २८ ।

"सत्यका हरयो वीरा देवास्त्रिशिख ईश्वरः ।

ज्योतिर्धामादयः सप्त ऋषयस्तामसेऽन्तरे ॥"

**त्रिशृङ्गी**, [न्] पुं, (त्रीणि शृङ्गानीव सन्त्यस्येति । त्रिशृङ्ग + इनिः ।) रोहितमत्स्यः । इति शब्दार्थकल्पतरुः ॥

**त्रिसीत्यं**, क्ली, (त्रिवारं सीतया सहितम् । "नौ-वयोधर्म्मेति ।" ४ । ४ । ९१ । इति यत् ।) वार-त्रयकृष्टक्षेत्रम् । इत्यमरः । २ । ९ । ९ ॥

**त्रिसुगन्धि**, क्ली, (त्रयाणां सुगन्धिद्रव्यानां समा-
हारः ।) त्रिजातकम् । इति राजनिर्घण्टः ॥
(यथा, अश्ववैद्यके । १२ । ७३ ।
“त्वगेलापत्रसंयोगे त्रिसुगन्धि त्रिजातकम् ।
नागकेसरसंयुक्तं चतुर्जातकमुच्यते ॥”)

**त्रिसुपर्णः**, पुं, बह्वृचानां वेदभागः । तद्व्रतञ्च ।
तद्योगात् पुरुषोऽपि त्रिसुपर्णः । इति मनु-
टीकायां कुल्लूकभट्टः ॥ (यथा, मनुः । ३ । १८५ ।
“त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः षडङ्गवित् ॥”)

**त्रिस्रोताः**, [स्] स्त्री, (त्रीणि स्रोतांसि यस्याः ।
यद्वा, त्रिषु लोकेषु स्वर्गमर्त्त्यपातालेषु स्रोतांसि
यस्याः ।) गङ्गा । (यथा, माघे । ३ । १० ।
“अङ्गुष्ठनिष्ठ्यूतमिवोर्द्धमुच्चै-
स्त्रिस्रोतसः सन्ततधारमम्भः ॥”)
नदीभेदः । इति मेदिनी । से, ५४ ॥

**त्रिहल्यं**, त्रि, (त्रिवारं हलेन कृष्टम् । हल +
“मतजनहलात् करणजल्पकर्षेषु ।” ४ । ४ । ९७ ।
इति यत् ।) वारत्रयकृष्टक्षेत्रम् । तत्पर्य्यायः ।
त्रिगुणाकृतम् २ तृतीयाकृतम् ३ त्रिसीत्यम् ४ ।
इत्यमरः । २ । ९ । ९ ॥

**त्रिहायणी**, स्त्री, (त्रयो हायना यस्याः । “दाम-
हायनान्ताच्च ।” ४ । १ । २७ । इति ङीप् ।
“त्रिचतुर्भ्यां हायनस्य ।” इति णत्वम् ।)
त्रिवर्षा गौः । इत्यमरटीकायां रमानाथः ॥

अस्याः पर्य्यायो यथा, --
“वयस्था तीक्ष्णगन्धा च सूक्ष्मैला त्रिपुटा त्रुटिः ॥”
इति वैद्यकरत्नमालायाम् ॥)
अल्पम् । संशयः । कालभेदः । स च ह्रस्वा-
क्षरचतुर्भागग्रहणात्मकः । इत्यमरः । ३ । ३ । ३७ ॥
क्षणद्वयात्मकः । इति तट्टीकायां स्वामी ॥
यथा, भागवते । ३ । ११ । ५ ।
“अणुर्द्वौ परमाणू स्यात् त्रसरेणुस्त्रयः स्मृतः ।
जालार्करश्म्यवगतः खमेवानुपतन्नगात् ।
त्रसरेणुस्त्रिकं भुङ्क्ते यः कालः सा त्रुटिः स्मृता ॥”)

**त्रुटिवीजः**, पुं, (त्रुटिरल्पं वीजमस्य ।) कचुः ।
इति शब्दमाला ॥

**त्रुटी**, स्त्री, (त्रुटि + “कृदिकारादक्तिनः ।” इति
वा ङीष् ।) त्रुटिः । इत्यमरटीकायां भरतः ॥

**त्रुन्प**, वधे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-
सेट् ।) त्रुम्पति । इति दुर्गादासः ॥

**त्रुन्फ**, वधे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) त्रुम्फति । इति दुर्गादासः ॥

**त्रुप**, वधे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-
सेट् ।) त्रोपति । इति दुर्गादासः ॥

**त्रुफ**, वधे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-
सेट् ।) त्रोफति । इति दुर्गादासः ॥

कालवर्षी तडित्वांश्च स्त्रियः सर्व्वाः पतिव्रताः ।
वसुन्धरा च शस्याढ्या पुत्त्राश्च पितृसेविनः ॥”
इति पाद्मे क्रियायोगसारः ॥

**त्रेतायुगं**, क्ली, (त्रेतैव युगम् ।) द्वितीययुगम् ।
तस्योत्पत्त्यादि यथा, --
“कार्त्तिकशुक्लनवम्यां सोमवारे त्रेतायुगोत्पत्तिः ।
तत्र अवतारत्रयम् । वामनपरशुरामश्रीराम-
चन्द्राः । पुण्यं त्रिपादम् । पापमेकपादम् ।
पुष्करनामकं तीर्थम् । साग्निको ब्राह्मणः ।
अस्थिगताः प्राणाः । चतुर्द्दशहस्तपरिमितो
मानवदेहः । दशसहस्रवर्षं परमायुः । व्यव-
हार्य्यं रौप्यपात्रम् । तद्युगाब्दाः १२९६००० ।
तत्र राजानः सूर्य्यवंशीयबाहुकसगरांशुमदस-
मञ्जसदिलीपभगीरथाजदशरथश्रीरामचन्द्रकुशी-
लवा एते चक्रवर्त्तिनः । तल्लक्षणम् ।
दानधर्म्मरता नित्यं तपस्या तीर्थदर्शनम् ।
अग्निहोत्रपरा लोका राजानो यज्ञकारिणः ॥
तत्र तारकब्रह्मनाम ।
रामनारायणानन्त मुकुन्द मधुसूदन ।
कृष्ण केशव कंसारे हरे वैकुण्ठ वामन ! ॥”
इति मुद्राङ्कितपञ्जिकातः संगृहीतम् ॥

**त्रेतायुगाद्या**, स्त्री, (त्रेतायुगस्य आद्या प्रथमा
तिथिः ।) त्रेतायुगारम्भतिथिः । सा च
कार्त्तिकशुक्लनवमी । तत्प्रमाणं युगाद्याशब्दे
द्रष्टव्यम् ॥

**त्रेधा**, व्य, (त्रिप्रकारम् । “संख्याया विधार्थे धा ।”
५ । ३ । ४२ । इति धा । “एधाच्च ।” ५ । ३ ।
४६ । इति धा इत्येतस्य एधाच् ।) त्रिधा ॥
इति मुग्धबोधम् ॥ (यथा, ऋग्वेदे । १ । २२ । १७ ।
“इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।
समूळहमस्य पांसुरे ॥”)

**त्रै**, ङ पालने । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-
सकं-अनिट् ।) दन्त्यवर्गाद्यादिः । ङ, त्रायते ।
चक्रिस्त्राहीत्याद्यौ त्राहीति त्रायते त्रा विच्
पश्चात् त्रा इवाचरतीति क्वौ साध्याम् । कैश्चिद-
दादौ त्रा पठ्यते । इति क्रमदीश्वरः । इति

(यथा, कात्यायनश्रौतसूत्रे । २२ । ९ । १३ ।
“वत्सतर्य्यश्च त्रिहायण्योऽप्रीताः पञ्चवर्णा
राजीव पृश्नयो नवनीतपृश्नयोऽरुणाः पिशङ्ग्न्यः
सारङ्ग्न्यः ॥”) द्रौपदी । यथा, --
“कृते युगे वेदवती त्रेतायां जनकात्मजा ।
द्वापरे द्रौपदीच्छाया तेन कृष्णा त्रिहायणी ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डम् ॥
(त्रिवत्सरे, त्रि । यथा, महाभारते । ३ । २३९ । ६ ।
“अथ संस्मारणां कृत्वा लक्षयित्वा त्रिहायणान् ।
वृतो गोपालकैः प्रीतो व्यहरत् कुरुनन्दनः ॥”)

**त्रुट**, क ङ छिदि । इति कविकल्पद्रुमः ॥

(चुरां-आत्मं-दिवां-तुदां-परं-अवयव-
द्विधाभावमात्रे अकं-छेदनमात्रे सकं-सेट् ।)
द्वौ दन्त्यवर्गप्रथमादी । क ङ, त्रोटयते । य,
त्रुट्यति त्रोटिष्यति । तुदाद्यन्तर्गणस्यैव कुटा-
दित्वमिति । दिवादिपक्षे न कुटादित्वम् । शि,
त्रुटति अत्रुटीत् । शेषस्तु विदीर्णभावेऽपि ।
यथा, त्रुट्यद्भीमधनुःकठोरनिनदइति महा-
नाटकम् ।
मयूखनखरत्रुटत्तिमिरकुम्भिकुम्भ-
स्थले । क्वचिल्लूनीभावेऽपि यथा । आवृणुते
यदि वक्षस्त्रुट्यति वासस्तदा जघने
इत्युद्भटः ।
इति दुर्गादासः ॥

**त्रुट**, यशि छिदि । इति कविकल्पद्रुमः ॥

**त्रेता**, स्त्री, (त्रीन् भेदान् एति प्राप्नोतीति । यद्वा,

त्रित्वमिता । पृषोदरादित्वात् साधुः । एतन्नि-
रुक्तिर्यथा, हरिवंशे । २०५ । ५ ।
“त्रिधा प्रणीतो ज्वलनो मुनिभिर्व्वेदपारगैः ।
अतस्त्रेतात्वमापन्नो यदेकस्त्रिविधः कृतः ॥”)
दक्षिणाग्निः गार्हपत्यः आहवनीयः एकोक्त्या
इदमग्नित्रयम् । इत्यमरः । २ । ७ । २० ॥ (यथा,
हरिवंशे । २६ । ४५-४६ ।
“मथित्वाग्निं त्रिधा कृत्वा अयजत् स नराधिपः ।
इष्ट्वा यज्ञैर्ब्बहुविधैर्गतस्तेषां सलोकताम् ॥
गन्धर्व्वेभ्यो वरं लब्धा त्रेताग्निं समकारयत् ।
एकोऽग्निः पूर्ब्बमेवासीदैलस्त्रेतामकारयत् ॥”)
द्वितीययुगम् । तस्य परिमाणं यथा, --
“त्रिचत्वारिंशल्लक्षेण विंशत्सहस्राधिकेन च ।
चतुर्युगं परिमितं नरमानक्रमेण च ॥
द्विषट्लक्षपरिमितं षण्णवतिसहस्रकम् ।
त्रेतायुगं परिमितं कालविद्भिः प्रकीर्त्तितम् ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥ * ॥
तस्य धर्म्मा यथा, --
“त्रेतायुगे समायाते धर्म्मः पादोनतां गतः ।
अल्पक्लेशान्विता लोकाः केचित् केचित् दया-
शयाः ॥
विष्णुध्यानरता लोका यज्ञदानपरायणाः ।
वर्णाश्रमाचाररताः सुखिनः सुस्थचेतसः ॥
दुर्गादासः ॥

**त्रैगुण्यं**, क्ली, (त्रिगुणानां भावः कर्म्म वा ।

त्रिगुण + ष्यञ् ।) त्रिगुणधर्म्मः । सत्वरजस्त-
मस्त्वम् । यथा, --
“त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्ज्जुन ! ।”
इति श्रीभगवद्गीता ॥
शैत्यसौगन्ध्यमान्द्यम् । यथा, --
“त्रैगुण्यललितैश्चारुमरुद्भिरुपवीजिते ॥”
इति शिवरात्रिव्रतकथा ॥
त्रिभिः पूरणञ्च ॥

**त्रैधं**, व्य, (त्रिप्रकारमिति त्रिधा । ततः “द्वित्र्योश्च

धमुञ् ।” ५ । ३ । ४५ । इति धा इत्यस्य धमुञ् ।)
त्रिधा । इति मुग्धबोधम् ॥ (यथा, महा-
भारते । ३ । ३२ । ३२ ।
“सर्व्वमेव हठेनैके दैवेनैके वदन्त्युत ।
पुंसः प्रयत्नजं किञ्चित् त्रैधमेतन्निरुच्यते ॥”)

(चुरां-आत्मं-दिवां-तुदां-परं-अवयव-
द्विधाभावमात्रे अकं-छेदनमात्रे सकं-सेट्
।)
द्वौ दन्त्यवर्गप्रथमादी । क ङ, त्रोटयते ।
य,
त्रुट्यति त्रोटिष्यति । तुदाद्यन्तर्गणस्यैव
कुटा-
दित्वमिति । दिवादिपक्षे न कुटादित्वम्
। शि,
त्रुटति अत्रुटीत् । शेषस्तु
विदीर्णभावेऽपि ।
यथा, त्रुट्यद्भीमधनुःकठोरनिनदइति
महा-
नाटकम् ।
मयूखनखरत्रुटत्तिमिरकुम्भिकुम्भ-
स्थले । क्वचिल्लूनीभावेऽपि यथा ।
आवृणुते
यदि वक्षस्त्रुट्यति वासस्तदा जघने
इत्युद्भटः ।
इति दुर्गादासः ॥

**त्रुटिः**, स्त्री, (त्रुट्यते इति । त्रुट् + "इगुपघात्
कित् ।" उणां । ४ । २१८ । इति इन्
सच कित् ।)
न्नहैला । (यथा, सुश्रुते । उत्तरतन्त्रे ।
५२ ।
"उतुकारिकां सर्पिषि नागराढ्यां
पक्वा समूलैस्त्रुटिकोलपत्रैः ॥"

क्षत्त्रा भूमिस्पृशः शूद्राः सर्व्वे
ब्राह्मणसेविनः ।
ब्राह्मणाश्च महात्मानो
वेदवेदाङ्गपारगाः ॥
प्रतिग्रहनिवृत्ताश्च सत्यसन्धा
जितेन्द्रियाः ।
तपोव्रतरता नित्यं दातारो
विष्णुसेविनः ॥

**त्रैपुरः**, पुं, (त्रिपुर एव । स्वार्थे अण् ।) त्रिपुर-
देशः । तत्पर्य्यायः । डाहलः २ चैद्यः ३ चेदिः
४ । इति हेमचन्द्रः । ४ । २२ ॥ (देशोऽयं
कामरूपस्य सीमाप्रदेशः । यथा, कामाख्या-
तन्त्रे ।
"कालेश्वरं श्वेतगिरिं त्रैपुरं नीलपर्व्वतम् ।
कामरूपाभिधो देशो गणेशगिरिमूर्द्धनि ॥"
कालेश्वरं श्वेतगिरिं त्रैपुरं नीलपर्व्वतं यावत् ॥
त्रिपुरस्य राजा । यथा, महाभारते । २ । ३१ । ५८ ।
"माद्रीसुतस्ततः प्रायाद्विजयी दक्षिणां दिशम् ।
त्रैपुरं स्ववशे कृत्वा राजानममितौजसम् ।
निजग्राह महाबाहुस्तरसा पौरवेश्वरम् ॥"
तद्देशवासिनि, पुंभूम्नि । यथा, मात्स्ये ।
११३ । ५३ ।
"स्तोशलाः कोसलाश्चैव त्रैपुरा वैदिशास्तथा ॥"
त्रिपुराधिष्ठितासुरभेदे । यथा, हरिवंशे ।
१२९ । ५४ ।
"येनोद्धृतास्त्रैपुरा मायिनो वै
दग्धा घोरेण वितथान्ताः शरेण ॥")

**त्रैलोक्यं**, क्ली, (त्रिलोकी एव । चतुर्वर्णादित्वात्
स्वार्थे ष्यञ् ।) त्रिलोकी । यथा, मार्कण्डेये ।
"त्रैलोक्यमेतदखिलं रिपुनाशनेन
त्रातं त्वया समरमूर्द्धनि तेऽपि हत्वा ॥"

**त्रैलोक्यविजया**, स्त्री, (त्रैलोक्यस्य विजयो यस्याः ।

**त्रोत्रं**, क्ली, (त्रायते शिष्यते नियम्यतेऽनेनेति ।
त्रै पालने + "अशित्रादिभ्य इत्रोत्रौ ।" उणां ।
४ । १७२ । इति उत्रः ।) गवादिताडनदण्डः ।
पाँचनी इति ख्यातः । तत्पर्य्यायः । प्राजनम् २
तोदनम् ३ प्रवयणम् ४ । गजस्य तोदनदण्डः ।
तत्पर्य्यायः । वैणुकम् २ वेणुकम् ३ इत्यमर-
भरतौ ॥ अस्त्रम् । इति सिद्धान्तकौमुद्या-
मुणादिवृत्तिः ॥ आरूपक्रिया । व्याधिभेदः ।
इति संक्षिप्तसारे उणादिवृत्तिः ॥

**त्रौक**, ऋ ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-सकं-सेट् ।) चतुर्द्दशस्वरी । रेफमध्यः ।
ऋ, अतुत्रौकत् । ङ, त्रौकते । इति दुर्गादासः ॥

**त्र्यक्षः**, पुं, (त्रीणि अक्षीणि नेत्राणि यस्य ।
ततः समासान्तषप्रत्ययः ।) शिवः । इति
त्रिकाण्डशेषः ॥ (यथा, महाभारते । ३ । १०६ । ११ ।
"आससाद महात्मानं त्र्यक्षं त्रिपुरमर्द्दनम् ॥"
दैत्यविशेषः । यथा, भागवते । ७ । २ । ४ ।
"भो भो दानवदैतेया द्विमूर्द्धंस्त्र्यक्ष ! शम्बर ! ।
शतबाहो ! हयग्रीव ! नमुचे ! पाक ! इल्वल ! ॥"
नेत्रत्रयविशिष्टे, त्रि । यथा, महाभारते । २ ।
४३ । १ ।

तमः । यथा, मात्स्ये । ५ । २९ -- ३० ।
"अजैकपादहिव्रध्नो विरूपाक्षोऽथ रैवतः ।
हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः ॥
सावित्रश्च जयन्तश्च पिनाकी चापराजितः ।
एते रुद्राः समाख्याता एकादशगणेश्वराः ॥")
शिवांशचन्द्रशेखरनामकपौष्यराजपुत्त्रः । यथा,
"एवं तिसृणामम्बानां गर्भे जातो यतो हरः ।
अतस्त्यम्बकनामाभूत्प्रथितो लोकदेवयोः ॥
स राजपुत्त्रः कौमारावस्थां प्राप यदा तदा ।
सर्व्वशास्त्रार्थतत्त्वज्ञो जिष्णोस्तुल्यो बभूव ह ॥
बले वीर्य्ये प्रहरणे शास्त्रे शीले च तत्समः ।
नान्योऽभून्नृपशार्दूल ! नो वा भूमौ भविष्यति ॥
अभिषिच्याथ तं राजा कुमारं बलवत्तरम् ।
दशपञ्चैकवर्षीयं सर्व्वराजगुणैर्यतम् ॥
तिसृभिः सह भार्य्याभिर्व्वनं पौष्यो विवेश ह ।
वृद्धोचितक्रियां कर्त्तुं राजा परमधार्म्मिकः ॥
गते पितरि राजा स वनवासं महाबलः ।
सर्व्वां क्षितिं वशे चक्रेऽमात्यैः स चन्द्रशेखरः ॥
सार्व्वभौमो नृपो भूत्वा राजभिः परिषेवितः ।
अमरैरिव देवेन्द्रो विजहार श्रिया युतः ॥
एवं पौष्यसुतो भूत्वा त्र्यम्बकः प्राप्य निर्व्वृतिम् ।
ब्रह्मावर्त्ताह्वये रम्ये करवीराह्वये पुरे ॥
दृषद्वतीनदीतीरे राजा भूत्वा मुमोद ह ॥"
इति कालिकापुराणे ४६ अध्यायः ॥ * ॥
अन्यत् चन्द्रशेखरशब्दे द्रष्टव्यम् ॥

**त्र्यम्बकसखः**, पुं, (त्र्यम्बकस्य महादेवस्य सखा
बन्धुः । "राजाहःसखिभ्यष्टच् ।" ५ । ४ । ९१ ।
इति टच् ।) कुवेरः । इत्यमरः । १ । १ । ७१ ॥

**त्र्यम्बका**, स्त्री, (त्रीणि चन्द्रसूर्य्याग्निरूपाणि
अम्बकानि नेत्राणि यस्याः ।) दुर्गा । यथा, --
"सोमसूर्य्यानलास्त्रीणि यस्या नेत्राणि अम्बिका ।
तेन सा त्र्यम्बका देवी मुनिभिः परिकीर्त्तिता ॥")
इति देवीपुराणे ४५ अध्यायः ॥

**त्र्यहप्स्पर्शः**, पुं, (त्र्यहं चान्द्रदिनत्रयं स्पृशतीति ।
स्पृश + पचाद्यच् ।) त्रिदिनस्पृक् । तिथित्रय-

एतस्याः सेवनेन हि त्रैलोक्यमधीनमिव प्रति-
भातीति ज्ञानात् तथात्वम् ।) भङ्गा । इति
शब्दचन्द्रिका ॥ भाङ् इति ख्याता ॥

**त्रैविद्यः**, पुं, (ऋग्वेदयजुर्व्वेदसामवेदरूपास्त्रिस्रो
विद्या यस्येति त्रिविद्यस्ततः स्वार्थ अण् । यद्वा,
तिस्रो विद्या अधीते वेद वा । "तदधीते तद्वेद ।"
४ । २ । ५९ । इति अण् ।) त्रिवेदज्ञः । त्रिविद्या-
वेत्ता । यथा । मनुः । १२ । १११ ।
"त्रैविद्यो हेतुकस्तर्की नैरुक्तो धर्म्मपाठकः ।
त्रयश्चाश्रमिणः पूर्ब्बे परिषत् स्याद्दशावरा ॥"
(व्रतविशेषे, क्ली । यथा, मनुः । २ । २८ ।
"स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥"
"त्रैविद्याख्येन च व्रतेन ।" इति तट्टीकायां
कुल्लूकभट्टः ॥ वेदत्रयप्रतिपाद्ये, त्रि । यथा,
भागवते । ६ । २ । २४ ।
"धर्म्मं भागवतं शुद्धं त्रैवेद्यञ्च गुणाश्रयम् ॥"
"त्रैवेद्यं वेदत्रयप्रतिपाद्यं गुणाश्रयं यमदूतानां
धर्म्मम् ।" इति तट्टीकायां स्वामी ॥)

**त्रोटकी**, स्त्री, रागिणीविशेषः । इति हलायुधः ॥

**त्रोटिः**, स्त्री, (त्रोट्यते भिद्यतेऽनयेति । त्रोटि +
"अच इः ।" उणां । ४ । १३८ । इति इः ।)
चञ्चुः । कट्फलम् । पक्षी । मीनभेदः । इति
मेदिनी । टे, १८ ॥

"चेदिराजकुले जातस्त्र्यक्ष एष चतुर्भुजः ॥")

**त्र्यक्षरः**, पुं, (त्रीणि अक्षराणि यत्र ।) घटकः ।
इति त्रिकाण्डशेषः ॥ (त्रीणि अकारोकार-
मकारात्मकानि अक्षराणि यत्र । प्रणवादौ,
त्रि । यथा, मनुः । ११ । २६६ ।
"आद्यं यत्त्र्यक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता ।
स गुह्योऽन्यस्त्रिवृद्वेदो यस्तं वेद स वेदवित् ॥"
छन्दोभेदे, क्ली । यथा, वाजसनेयसंहिता
याम् । ९ । ३१ ।
"विष्णुस्त्र्यक्षरेण त्रीँल्लोकानुदजयत्तानुज्जेषम् ॥"
"विष्णु स्त्र्यक्षरेणाक्षरत्रयात्मकेन छन्दसा तान्
तादृशान् मनुष्यानुज्जेषमधिकं जयेयम् ।" इति
वेददीपे महीधरः ॥)

**त्र्यङ्गटं**, क्ली, (त्रिभिरङ्गैरट्यते गम्यते इति ।
त्र्यङ्ग + अट् + अप् ।
शकन्ध्वादित्वादलोपः ।)
शिक्यभेदः । धौताञ्जनी । इति मेदिनी ।
टे, ४४ ॥

**त्र्यङ्गटः**, पुं, (त्रिभिरङ्गैरटतीति । अट् + अच् ।)
धौताञ्जनी । शिक्यभेदः । ईश्वरः । इति हेम-
चन्द्रः ॥

**त्र्यञ्जनं**, क्ली, (त्रयाणां अञ्जनानां समाहारः ।)
अञ्जनत्रयम् । यथा, कालाञ्जनं पुष्पाञ्जनं रसा-
ञ्जनम् । इति राजनिर्घण्टः ॥

**त्र्यध्वगा**, स्त्री, (त्रिषु अध्वसु मार्गेषु गच्छतीति ।
गम + डः ।) गङ्गा । इति त्रिकाण्डशेषः ॥

स्पर्शयुक्तमहः । इति ज्योतिषम् ॥

**त्र्यहस्पृशं**, क्ली, (त्र्यहं स्पृशतीति । स्पृश +
"इगुपधज्ञेति ।" ३ । १ । १३५ । इति कः ।)
त्र्यहस्पर्शः । तथा च वशिष्ठः ।
"एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा ।
तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम् ॥
फलमिति वैदिककर्म्मपरम् ॥
अधिमासे दिनपाते धनुषि रवौ भानुलङ्घिते मासि ।
चक्रिणि सुप्ते कुर्य्यान्नो माङ्गल्यं विवाहञ्च ॥
इति भीमपराक्रमः ॥
दिनपाते दिनक्षये ।
त्र्यहस्पृशं नाम यदेतदुक्तं
तत्र प्रयत्नः कृतिभिर्व्विधेयः ॥
विवाहयात्राशुभपुष्टिकर्म्म
सर्व्वं न कार्य्यं त्रिदिनस्पृशे तु ॥"
इति ज्योतिस्तत्त्वम् ॥

| | | |
|---|---|---|
| **त्रोटिहस्तः**, पुं, (त्रोटिश्चञ्चुर्हस्त इव ग्रहणसाधनं यस्य ।) पक्षी । इति शब्दचन्द्रिका ॥<br>**त्रोटी**, स्त्री, (त्रोटि + कृदिकारादिति वा ङीष् ।) त्रोटिः । इति शब्दरत्नावली ॥ | **त्र्यम्बकः**, पुं, (त्रीणि चन्द्रसूर्य्याग्निरूपाणि अम्ब-कानि नेत्राणि यस्य । शिवः । इत्यमरः । १ ।<br>१ । ३५ ॥ (यथा, ऋग्वेदे । ७ । ५९ ।<br>१२ ।<br>“त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ॥”<br>“त्रयाणां ब्रह्मविष्णुरुद्राणामम्बकः पिता ।” इति<br>ऋग्वेदभाष्ये सायनः ।)<br>एकादशरुद्राणामन्य- | |

**त्र्यहैहिकः**, त्रि, (ईहायां चेष्टायां भवमैहिकं
घनम् । "तत्र भवः ।" ४ । ३ । ५३ । इति
ठञ् । त्र्यहे दिनत्रये पर्य्याप्तं ऐहिकं धनं
यस्य ।) दिनत्रयनिर्व्वाहोचितधनयुक्तः ।
यथा,
"कुशूलधान्यको वा स्यात् कुम्भीधान्यक
एव वा ।
त्र्यहैहिको षापि भवेदश्वस्तनिक एव वा ॥"
इति मानवे । ४ । ७ ॥
"कुशूलधान्यक इति । कुशूलो व्रीह्यागारं
स्यादित्याभिधानिकाः ।
इष्टकादिनिर्म्मितागार-
धान्यसञ्चयो भवेत् । अत्र
कालविशेषापेक्षायाम् ।
यस्य त्रैवार्षिकं भक्तं पर्य्याप्तं भृत्यवृत्तये ।
अधिकं वापि विद्येत स सोमं पातुमर्हति ॥
इति मनूक्त एव कालो ग्राह्यः । तेन नित्य-
नैमित्तिकधर्म्मकृत्यपोव्यवर्गसहितस्य
गृहिणो
यावता धान्यादिधनेन वर्षत्रयं समथिकं वा
निर्व्वाहो भवति तावद्धनः कुशूलधान्यक
उच्यते । वषनिर्व्वाहोचितधान्यादिधनः
कुम्भी-
धान्यः । प्राक् सौमिकीः क्रियाः कुर्य्यात्
यस्यान्नं वार्षिकं भवेदिति याज्ञ्यवल्क्येन
गृह-
स्थस्य वार्षिकसञ्चयाभ्यनुज्ञानात् । मनुरपि
यदा वानप्रस्थस्यैव समानिचय एव वेत्यनेन
समासञ्चयं वक्ष्यति तदपेक्षया
बहुपोष्यवर्गस्य
गृहिणः समुचितः संवत्सरसञ्चयः । मेधा-
तिथिस्तु । यावता धान्यादिधनेन बहुभृत्य-
दारादिमतस्त्रिसंवत्सरस्थितिर्भवति तावत्
सुव-
र्णादिधनवानपि कुशूलधान्यक इत्यभिधाय
कुम्भी उष्ट्रिका षाण्माषिकधान्यादिनिचयः
कुम्भीधान्यक इति व्याख्यातवान् ।
गोविन्द-

**त्र्याहिकः**, त्रि, (त्र्यहे भवः । त्र्यह + ठञ् ।)
तृतीयेऽह्नि भवः । यथा, ऐकाहिकद्व्याहिक-
त्र्याहिकचातुर्थिकसततज्वरविषमज्वर
इत्याद्य-
पराजितास्तोत्रम् ॥
("ऐकाहिको द्व्याहिकश्च त्र्याहिकश्च
तथापरः ।
वेलाज्वरश्चतुर्थोऽपि विजानीयाद्विचक्षणः ॥"
इति हारीते चिकित्सितस्थाने द्वितीयेऽध्याये ॥
अस्यौषधं यथा, --
"रसेन गन्धं शङ्खञ्च शिखिग्रीवञ्च पादिकम् ।
गोजिह्वया जयन्त्या च तण्डुलीयैश्च भावयेत् ॥
प्रत्येकं सप्तसप्ताथ शुष्कं गुञ्जाचतुष्टयम् ।
जरणेन घृतेनाद्यात् त्र्याहिकज्वरशान्तये ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे ज्वराधिकारे ॥)

**त्र्युषणं**, क्ली, (त्रयाणां उषणानां समाहारः ।
पात्रादित्वात् स्त्रीत्वं न ।)
मिलितशुण्ठीपिप्पली-
मरिचम् । इत्यमरः । २ । १० । १११ । (यथा,
गारुडे १९८ अध्याये ।
"यमानी चित्रकं धान्यं त्र्युषणं जीरकं तथा ॥")

**त्र्यूषणं**, क्ली, (त्रयाणां ऊषणानां पिप्पलीमरिच-
शुण्ठीनां समाहारः ।) त्र्युषणम् । इत्यमर-
टीकायां भरतः ॥
("पिप्पलीमरिचं शुण्ठीत्रयमेतद्विमिश्रितम् ।
त्रिकटु त्र्यूषणं व्योषं कटुत्रयमथोच्यते ॥"
इति वैद्यकपरिभाषायाम् ॥
अस्य गुणा यथा, --
"त्र्यूषणं दीपनं हन्ति श्वासकासत्वगामयान् ।
गुल्ममेहकफस्थौल्यमेदश्लीपदपीनसान् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
(घृतविशेषः । यथा, चरके चिकित्सास्थाने
२२ अध्याधे ।
"त्र्यूषणं त्रिफलां द्राक्षां काश्मर्य्याणि परूषकम्
।
द्वे पाठे सरलं व्याघ्रीं स्वगुप्तां चित्रकं शटीम् ॥
ब्राह्मीं तामलकीं मेदां काकनासां शतावरीम् ।
त्रिकण्टकां विदारीञ्च पिष्ट्वा कर्षसमं घृतात् ॥
"त्वशब्द एकवाची । एकः ।
उतशब्दोऽप्यर्थे ।
पश्यन्नपि मनसा पर्य्यालोचयन्नपि
वायं न ददर्श ।
दर्शनफलाभावान्न पश्यति । त्व
एकः शृण्वन्न-
प्येनां वाचं न शृणोति
श्रवणफलाभावात् ।
इत्यनेनार्धेनाविद्वानभिहितः ॥" इति
तद्भाष्ये
सायनः ॥)

**त्वक्**, [च्] स्त्री, (त्वचति संवृणोति मेदशोणिता-
दिकमिति । त्वच संवरणे + क्विप् ।
यद्वा,
तनोति विस्तारयतीति । तन +
"तनोतेरनश्च
वः ।" उणां । २ । ६३ । इति चिक्
अनश्च
वः ।) इन्द्रियविशेषः । यथा, --
"पूर्ब्बवन्नित्यतायुक्तं देहव्यापि
त्वगिन्द्रियम् ।
प्राणादिस्तु महावायुपर्य्यन्तो विषयो
मतः ॥"
उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च
त्वचः ।
रूपान्यच्चक्षुषो योग्यं रूपमत्रापि
कारणम् ॥
द्रव्याध्यक्षे त्वचो योगो मनसा
ज्ञानकारणम् ॥"
इति भाषापरिच्छेदः ॥
वल्कलम् । (यथा, रघुः । २ । ३७ ।
"कण्डूयमानेन कटं कदाचित्
वन्यद्विपेनोन्मथिता त्वगस्य ॥")
गुडत्वक् । (यथा, बृहत्संहितायाम् ।
७७ । १२ ।
"त्वगुशीरपत्रभागैः सूक्ष्मैलार्धेन
संयुतैश्चूर्णः ।

राजस्तु कुशूलधान्यक इत्येतद्व्याचक्ष्य कोष्ठ-
प्रमाणधान्यसञ्चयो वा स्यात् द्वादशाह-
मात्रपर्य्याप्तधनः । कुम्भीधान्यक इत्येतद्व्याचष्टे
उष्ट्रिकाप्रमाणधान्यादिसञ्चयोवा षडहमात्र-
पर्य्याप्तधनः ।
द्वादशाहं कुशूलेन वृत्तिः कुम्भ्या दिनानि षट् ।
इमाममूलां गोविन्दराजोक्तिं नानुरुन्धहे ।
इहा चेष्टा तस्यां भवं ऐहिकं त्र्यहपर्य्याप्तमैहिकं
धनं यस्य स त्र्यहैहिकः तथा वा स्यात् दिन-
त्रयनिर्व्वाहोचितधन इत्यर्थः । श्वोभवं श्वस्तनं
भक्तं तदस्यास्तीति मत्वर्थीयमिकं कृत्वा नञ्
समासः तथा वा भवेत् ।” इति कुल्लूकभट्टः ॥

**त्र्यार्षेयाः**, पुं, (ऋषेरयं आर्षेयः । ऋषि + ढक् ।
त्रय आर्षेयाः ऋषिधर्म्मा नेत्रादीन्द्रियक्रिया-
भावरूपा येषाम् ।) अन्धवधिरमूकाः । यथा ।
“अत्रोक्तानि वचनानि सर्व्वाणि तिर्य्यगधिकरण-
न्यायमूलानि । तथा हि तिर्य्यगधिकरणे ।
तिर्य्यक्पङ्गुत्र्यार्षेयदेवतानामनधिकार इति
यागमात्रे उक्तम् । तत्र हेतवः तिरश्चां विशि-
ष्टान्तःकरणविरहात् पङ्गोः प्रचरणविरहात्
त्र्यार्षेयाणामन्धवधिरमूकानां अवेक्षणश्रवणो-
च्चारणविरहादिति श्रीचन्द्रशेखरवाचप्सतिकृत-
चन्दनधेनु-विधिधृततिर्य्यगधिकरणम् ॥ (त्रय
आर्षेया ऋषयो यत्र । त्रिप्रवरो गोत्रभेदः ॥)

प्रस्थं चतुर्गुणं क्षीरं सिद्धं कासहरं पिबेत् ।
ज्वरगुल्मारुचिप्लीहशिरोहृत्पार्श्वशूलनुत् ॥
कामलार्शोऽनिलाष्ठीलाक्षतशोषक्षयापहम् ।
त्र्यूषणं नाम विख्यातमेतद्धृतमनुत्तमम् ॥”)

**त्वं**, त्रि, (युष्मद् + सु । “त्वाहौ सौ ।” ७ । २ ।
९४ । इति त्वादेशः ।) भवान् । तुमि इति
भाषा । युष्मच्छब्दस्य प्रथमैकवचनान्तरूपोऽयं
लिङ्गत्रये समानः । इति व्याकरणम् ॥

**त्वः**, त्रि, (तनोति विस्तारयतीति । तन + “तनो-
तेरनश्च वः ।” उणां । २ । ६३ । इति चात्
क्विप् अनश्च वः । आगमानित्यत्वात् तुग्वै-
कल्पिकः ।) भिन्नः । अन्यः । इत्यमरः । ३ ।
१ । ८२ ॥ (एकः । इति निरुक्तिः । १ । ७ ॥
यथा, ऋग्वेदे । १० । ७१ । ४ ।
“उत त्वः पश्यन्न ददर्श वात्तमुत त्वः शृण्वन्न
शृणोत्येनाम् ।
उतो त्वस्मै तन्वं वि सस्रे जायेव पत्य उशती
सुवासाः ॥”

पटवासः प्रवरोऽयं मृगकर्पूरप्रबोधेन ॥”)
चर्म्म । इति मेदिनी । चे, ६ ॥ अस्य पर्य्यायः ।
असृग्धरा २ । इत्यमरः ॥ असृग्वरा ३ । इति
तट्टीका ॥ त्वचम् ४ त्वचा ५ चर्म्म ६ छली ७
छल्ली ८ । इति शब्दरत्नावली ॥ (यथा,
रघुः । ३ । ३१ ।
“त्वचं स मेध्यां परिधाय रौरवी
मशिक्षितास्त्रं पितुरेव मन्त्रवत् ।
न केवलं तद्गुरुरेकपार्थिवः
क्षितावभूदेकधनुर्द्धरोऽपि सः ॥”
कञ्चुकः । यथा, मनुः । २ । ७९ ।
“महतोऽप्येनसो मासात्
त्वचेवाहिर्विमुच्यते ॥”)
त्वचम् । इति राजनिर्घण्टः ॥ दारचिनी इति
भाषा ॥

**त्वक्कण्डुरः**, पुं, (कण्डुं रातीति । रा + कः । त्वचः
कण्डुरः ।) व्रणः । इति हारावली । १५६ ॥

**त्वक्क्षीरा**, स्त्री, (वंशत्वचः क्षीरमस्त्यत्र ।)
वंशरोचना । इत्यमरः । २ । ९ । १०९ ॥
(वंशरोक्षनाशब्दे विवृतिरस्या ज्ञातव्या ॥)

**त्वक्क्षीरी**, स्त्री, (वंशत्वचः क्षीरमत्र । गौरा-
दित्वात् ङीष् ।) त्वक्क्षीरा । इति राज-
निर्घण्टः ॥ (यथा, सुश्रुते । १ । ४४ ।
“सिताजगन्धा त्वक्क्षीरी विदारी त्रिवृतः
समाः ॥”
(पर्य्यायोऽस्या यथा, --

| | | “स्याद्वंशरोचना वांशी तुगाक्षीरी तुगा शुभा ।<br>त्वक्क्षीरी वंशला शुभ्रा वंशक्षीरी च वैणवी ॥”<br>इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)<br>**त्वक्छदः**, पुं, (त्वगेव छदो यस्य ।) क्षीरीशवृक्षः ।<br>इति रत्नमाला ॥ क्षीरकञ्चुकी इति भाषा ॥ |
|---|---|---|

**त्वक्पत्रं**, क्ली, (त्वगिव पत्राण्यस्य ।) गुडत्वक् ।
इत्यमरः । २ । ४ । १३४ ॥ तेजपत्रम् । इति केचित् ।
इति भरतः ॥ तत्पर्य्यायः । सूत्कटम् २ भृङ्गम् ३
त्वचम् ४ चोचम् ५ वराङ्गकम् ६ । इत्यमरः । २ ।
४ । १३४ ॥ (यथा, महाभारते । १२ । १७० । १८ ।
"चन्दनागुरुमुख्यानि त्वक्पत्राणां वनानि च ॥"
यथा, सुश्रुते । १ । ४४ ।
"रेचनं सुकुमाराणां त्वक्पत्रमरिचांशकम् ॥")

**त्वक्पत्री**, स्त्री, (त्वक्पत्र + गौरादित्वात् ङीष् ।)
हिङ्गुपत्री । तत्पर्य्यायः । कारवी २ पृथ्वी ३
वास्पीका ४ कवरी ५ पृथुः ६ । इत्यमरः । २ ।
९ । ४० ॥ तत्पत्री ७ । इति भरतः ॥

**त्वक्पुष्पं**, क्ली, (त्वचश्चर्म्मणः पुष्पमिव ।) रोमाञ्चः ।
इति त्रिकाण्डशेषः । किलासम् । इति हेम-
चन्द्रः । ३ । १३१ ॥

**त्वक्पुष्पिका**, स्त्री, (त्वक्पुष्पी + स्वार्थे कन् पूर्ब्ब-
ह्रस्वः ।) किलासम् । इति त्रिकाण्डशेषः ॥ छुली
इति भाषा ॥

**त्वक्पुष्पी**, स्त्री, (त्वक्पुष्प + गौरादित्वात् ङीष् ।)
किलासम् । इति जटाधरः ॥

**त्वक्ष**, त्वचोग्राहे । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-सकं-सेट् ।) त्वचो ग्राहश्चर्म्मणो ग्रहणम् ।
त्वक्ष त्वचने इति प्राञ्चः । त्वचनं संवरणमिति
रमानाथः । त्वक्षति कायं वर्म्मणा भटः । इति
दुर्गादासः ॥

**त्वक्ष**, ऊ कार्श्ये । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-सकं-वेट् ।) ऊ, त्वक्षिष्यति त्वक्ष्यति । कार्श्यं
कृशीकरणम् । त्वक्षति काष्ठं तक्षा । इति दुर्गा-
दासः ॥

**त्वक्सुगन्धा**, स्त्री, (त्वचि सुगन्धो यस्याः ।) एल-
बालुकनामगन्धद्रव्यम् । इति जटाधरः ॥

**त्वग**, इ कम्पे । गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-अकं-गतौ सकं-सेट् ॥)

**त्वगङ्कुरः**, पुं, (त्वचश्चर्म्मणः अङ्कुर इव ।) रोमाञ्चः ।
इति त्रिकाण्डशेषः ॥

**त्वगाक्षीरी**, स्त्री, (त्यक्क्षीरी । पृषोदरादित्वात्
साधुः ।) तुगाक्षीरी । वंशलोचना । इति
जटाधरः ॥

**त्वगन्धः**, पुं, (त्वचि गन्धो यस्य ।) नागरङ्गः ।
इति राजनिर्घण्टः ॥

**त्वग्जं**, क्ली, (त्वचः जायते इति । जन + डः ।)
रोम । रुधिरम् । इति राजनिर्घण्टः ॥

**त्वग्दोषः**, पुं, (त्वचो दोषो दूषणं यस्मात् ।)
कोठरोगः । इति राजनिर्घण्टः ॥ त्वग्जात-
रोगः । तस्यौषधं यथा, --
"मन्दोष्णलोध्रनीराम्लचूर्ण्न्तु कनकस्य च ।
तेनोद्वर्त्तितदेहस्य हरेद्ग्रीष्मप्रसारिकाम् ॥
त्वद्दोषश्चैव सेकश्च घर्म्मदोषश्च नश्यति ॥"
इति गारुडे १९४ अध्यायः ॥
स तु महारोगः । यथा, "महारोगिणः पाप-
रोगाष्टकान्यतमरोगवतः । ते च उन्मादस्त्वद्-
दोषो राजयक्ष्मा श्वासो मधुमेहो भगन्दरः

"विमुक्तः सर्व्वपापेभ्यो मुक्तत्वच इवोरगः ॥")
गुडत्वक् । इति धरणिः ॥

**त्वचा**, स्त्री, (त्वच् + पक्षे टाप् । यद्वा, त्वचति
संवृणोति सर्व्वशरीरमिति अच् ततष्टाप् ।)
त्वक् । इति शब्दरत्नावली ॥

**त्वचापत्रं**, क्ली, (त्वचा त्वक् पत्रमिव यस्य ।)
त्वक्पत्रम् । इति शब्दरत्नावली ॥

**त्वचिष्ठः**, त्रि, (अतिशयेन त्वग्वान् । त्वग्वत् +
इष्ठन् । "विन्मतोर्लुक् ।" ५ । ३ । ६४ । इति
मतुपो लुक् ।) त्वचीयान् । अतिशयत्वग्विशिष्टः ।
इति व्याकरणम् ॥

**त्वचिसारः**, पुं, (त्वचि सारो यस्य । "हलदन्तात्
सप्तम्याः संज्ञायाम् ।" ६ । ३ । ९ । इति सप्तम्या
अलुक् ।) वंशः । इत्यमरः । २ । ४ । १६० ॥

**त्वचिसुगन्धा**, स्त्री, (त्वचि सुगन्धो यस्याः ।
सप्तभ्या अलुक् ।) क्षुद्रैला । इति हारावली । ९७ ॥

**त्वत्**, त्रि, (तनोतीति । तन + "तनोतेरनश्च वः ।"
उणां २ । ६३ । इति चकारात् क्विप् तुक् अनश्च
वः ।) भिन्नः । इति जटाधरः ॥ (युष्मद्शब्दस्य
पञ्चम्येकवचनस्य रूपम् ।) भवतः । इति व्याक-
रणम् ॥ तोमा हैते इति भाषा ॥

**त्वन्च**, उ इतौ । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-सकं-सेट् । क्त्वावेट् ।) वकारयुक्तादिः । उ,
त्वञ्चित्वा त्वक्त्वा । इतिर्गतिः । इति दुर्गादासः ॥

**त्वक्सारः**, पुं, (त्वचि सारो यस्य ।) वंशः । इत्य-

मरः । २ । ४ । १६० ॥ (यथा, मनुः । १० । ३७ ।

"चण्डालात् पाण्डुसोपाकस्त्वक्सारव्यवहार-वान् ॥"

वंशस्य त्वगपि । चेँ चाडि इति भाषा ॥ यथा, सुश्रुते । १ । ८ ।

"अनुशस्त्राणि तु त्वक्सारस्फटिककाचकुरु-विन्दजलौकाग्निक्षारनखगोजीशोफालिका-शाकपत्रकरीरबालाङ्गुलय इति ॥") गुडत्वक् । इति शब्दचन्द्रिका ॥ शोणवृक्षः । रन्ध्रवंशः । इति राजनिर्घण्टः ॥ (तल्तावाँश इति भाषा ॥ यथा, माघः । ४ । ६१ ।

"त्यक्साररन्ध्रपरिपूरितलब्धगीति-रस्मिन्नसौ मृदितपक्ष्मलरल्लकाङ्गः ॥")

**त्वक्सारभेदिनी**, स्त्री, (त्वचः सारं भिनत्तीति । भिद् + णिनिः + ङीप् ।) क्षुद्रचञ्चुवृक्षः । इति राजनिर्घण्टः ॥

**त्वक्सारा**, स्त्री, (त्वक्सारो वंश उत्पत्तिकारण-त्वेनास्त्यस्याः अच् ततष्टाप् ।) वंशरोचना । इति राजनिर्घण्टः ॥ (वंशरोचनाशब्देऽस्या विवरणं ज्ञातव्यम् ॥)

**त्वक्सुगन्धः**, पुं, (त्वचि सुगन्धः सद्गन्धो यस्य ।) नारङ्गः । इति भावप्रकाशः ॥

उदरोऽश्मरी इत्यष्टौ पापरोगा नारदोक्ताः ।"

इति शुद्धितत्त्वम् ॥

**त्वग्दोषापहा**, स्त्री, (त्वग्दोषं रोगविशेषं अप-हन्तीति । हन + डः ।) वाकुची । इति राज-निर्घण्टः ॥

**तग्दोषारिः**, पुं, (तग्दोषस्य रोगविशेषस्य अरिः शत्रुः । तन्नाशकत्वात् तथात्वम् ।) हस्तिकन्दः । इति राजनिर्घण्टः ॥

**त्वच्**, श वृत्याम् । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-सेट् ।) वकारयुक्तः । दन्त्यवर्गाद्यादिः । श, त्वचती त्वचन्ती । वृतिः संवरणम् । त्वचति कवचेन देहं वीरः । इति दुर्गादासः ॥

**त्वचं**, क्ली, (प्रशस्ता त्वगस्त्यस्येति । अर्श आदि-त्वात् अच् ।) वृक्षविशेषः । दारचिनी इति भाषा ॥ (यथा, सुश्रुते कल्पस्थाने १ अध्याये ।

"सोमवल्ल्यमृता श्वेता पद्मं कालीयकं त्वचम् ॥")

तत्पर्य्यायः । त्वक् २ वल्कलम् ३ भृङ्गम् ४ वराङ्गम् ५ मुखशोधनम् ६ शकलम् ७ सिंह-लम् ८ वन्यम् ९ सुरसम् १० कामवल्लभम् ११ उत्कटम् १२ बहुगन्धम् १३ विज्जुलम् १४ वन-प्रियम् १५ नटपर्णम् १६ गन्धवल्कम् १७ वरम् १८ शीतम् १९ । अस्य गुणाः । कटुत्वम् । शीतलत्वम् । कफकासविनाशित्वम् । शुक्राम-

**त्वन्च**, उ ध सङ्कोचे । इति कविकल्पद्रुमः ॥ (रुधां-परं-सकं-सेट् । क्त्वावेट् ॥)

**त्वदीयं**, त्रि, (तव इदम् । युष्मद् + छः । "प्रत्य-योत्तरपदयोश्च ।" ७ । २ । ९८ । इति मप-र्य्यन्तस्य त्वादेशः ।) भवदीयम् । इति व्याक-रणम् ॥ (यथा, रघुः । ३ । ५० ।

"अतोऽयमश्वः कपिलानुकारिणा पितुस्त्वदीयस्य मयापहारितः ॥")

**त्वर**, ञि ष म ङ स्यदे । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-अकं-सेट् ।) ञि, त्वरितः तूर्णो-ऽस्ति । वा रुषामहृषत्वरसंघुषास्वनिभ्यो निष्ठायां वेमत्वेऽपि वेदेषूच्चारणभेदार्थमेतदनुबन्धमन्ये मन्यन्ते । ष, त्वरा । म, त्वरयति । ङ, त्वरते । स्यद इह शीघ्रमनुष्ठानम् । नानुनेतुमबलाः स तत्वरे । इति दुर्गादासः ॥

**त्वरणं**, क्ली, (त्वर + भावे ल्युट् ।) त्वरा । इति व्याकरणम् ॥ (त्वरते शीघ्रं गच्छतीति । त्वर + ल्युः । द्रुतगामिनि, त्रि । यथा, अथर्व्ववेदे । ११ । ८ । २८ ।

"आस्नेयीश्च वास्तेयीश्च त्वरणाः कृपणाश्च याः ॥")

**त्वरा**, स्त्री, (त्वरणमिति । त्वर + "घटादयः षितः ।" इति अङ् । ततः स्त्रीलिङ्गत्वात् टाप् ।) वेगः । तत्पर्य्यायः । सम्भ्रमः २ । इत्यमरः । ३ । २ । २६ ॥ आवेगः ३ त्वरिः ४ तूर्णिः ५ संवेगः ६ । इति हेमचन्द्रः । २ । २३६ ॥ (यथा, महा-

| | | |
|---|---|---|
| | शमनत्वम् । कण्ठशुद्धिकरत्वम् । लघुत्वम् । इति राजनिर्घण्टः ॥ वल्कलम् । चर्म्म । (यथा, हरिवंशे । १७७ । १३६ । “श्रीवत्साङ्कोऽरविन्दाक्षऊद्र्ध्वरोमा मृदुत्वचः ॥” कञ्चुकः । खोलस् इति भाषा ॥ यथा, महा- भारते । १२ । २४९ । ११ । | भारते । ३ । २७९ । २७ । “असकृत्त्वं मया पूर्ब्बं निर्ज्जितो जीवितप्रियः । मुक्तो ज्ञातिरिति ज्ञात्वा का त्वरा मरणे पुनः ॥”) |

**त्वरिः**, स्त्री, (त्वरणमिति । त्वर + भावे इन् ।)
त्वरा । इति हेमचन्द्रः । २ । २३६ ॥

**त्वरितं**, क्ली, (त्वर + क्तः ।) शीघ्रम् । (त्वरते
स्मेति । त्वर + गत्यार्थाकर्म्मकेति कर्त्तरि क्तः ।
यद्वा, त्वरा सञ्जातास्य । त्वरा + तारकादित्वात्
इतच् ।) तद्विशिष्टे, त्रि । इत्यमरः । १ । १ । ६८ ॥
(यथा, पञ्चतन्त्रे । ३ । १०२ ।
"बह्वन्तराययुक्तस्य धर्म्मस्य त्वरिता गतिः ॥")

**त्वरितोदितं**, त्रि, (त्वरितं शीघ्रं यथा तथा
उदितं कथितम् ।) शीघ्रोच्चारितवचः । तत्-
पर्य्यायः । निरस्तम् २ । इत्यमरः । १ । ६ । २० ॥

**त्वष्टः**, त्रि, (त्वक्ष्यते तनूक्रियते स्मेति । त्वक्ष तनू-
करणे + क्तः ।) तनूकृतः । चाँचा छोला इत्यादि
भाषा । तत्पर्य्यायः । तष्टः २ । इत्यमरः । ३ । ११ । ९९ ॥

**त्वष्टा**, [ऋ] पुं, (त्वेषति दीप्यतीति । त्विष
दीप्तौ + "नप्तृनेतृत्वष्टृहोत्रिति ।" उणां । २ । ९६ ।
इति तृच् इतोऽत्वञ्च ।) आदित्यविशेषः ।
(यथा, महाभारते । १ । ६५ । १४-१५ ।
"अदित्यां द्वादशादित्याः सम्भूता भुवनेश्वराः ।
ये राजन्नामतस्तांस्ते कीर्त्तयिष्यामि भारत ! ॥
धाता मित्रोऽर्य्यमा शक्रो वरुणस्त्वंश एव च ।
भगो विवस्वान् पूषा च सविता दशमस्तथा ।

**त्वाचप्रत्यक्षं**, क्ली, (त्वाचं त्वच्-सम्बन्धि प्रत्यक्षम् ।)
स्पर्शज्ञानम् । द्रव्यादेः स्पर्शद्वारा बोधः ।
यथा, "अथ ज्ञानमात्रे त्वङ्मनःसंयोगस्य यदि
कारणत्वं तदा रासनचाक्षुषादिकाले त्वाच-
प्रत्यक्षं स्यात् ।" इति सिद्धान्तमुक्तावली ॥

**त्वाष्टी**, स्त्री, दुर्गा । यथा, --
"तुष तुष्टौ स्मृतो धातुस्तस्य तुष्टी निपातने ।
सृजत्येषा प्रजास्तुष्टी त्वाष्टी तेन प्रकीर्त्तिता ॥"
इति देवीपुराणे ४५ अध्यायः ॥

**त्वाष्ट्रः**, पुं, (त्वष्टुरपत्यं पुमान् । अण् ।) वृत्रा-
सुरः । इति त्रिकाण्डशेषः ॥ (यथा, देवी-
भागवते । ५ । ५ । ४ ।
"उद्यमेन हतस्त्वाष्ट्रो नमुचिर्ब्बल एव च ॥"
विश्वरूपः । यथा, भागवते । ६ । ८ । ३ ।
"वृतः पुरोहितस्त्वाष्ट्रो महेन्द्रायानुपृच्छते ॥"
त्वष्टृसम्बन्धिनि, त्रि । यथा, मार्कण्डेये । २१ । ८५ ।
"ततोऽस्त्रं त्वाष्ट्रमादाय चिक्षेप प्रति दान-
वान् ॥"
तथा, भागवते । ६ । १४ । २७ ।
"श्रपयित्वा चरुं त्वाष्ट्रं त्वष्टारमजयद्विभुः ॥"
त्वष्टा अधिष्ठात्री देवतास्येति अण् । चित्रा-
नक्षत्रम् । यथा, बृहत्संहितायाम् । ७ । ११ ।
"घोरा श्रवणस्त्वाष्ट्रं वसुदेवं वारुणञ्चैव ॥")

**त्वाष्ट्री**, स्त्री, (त्वष्टा अधिष्ठात्री देवतास्याः ।

**त्विषा**, स्त्री, (त्विष् + हलन्तात् वा टाप् ।)
दीप्तिः । इति शब्दरत्नावली ॥

**त्विषाम्पतिः**, पुं, (त्विषां प्रभाणां पतिः । षष्ठ्या
अलुक् ।) सूर्य्यः । इत्यमरः । १ । ३ । ३० ॥

**त्विषिः**, स्त्री, (त्विष दीप्तौ + "इगुपधात् कित् ।"
उणां ४ । ११९ । इति इन् स च कित् ।)
किरणम् । इति हेमचन्द्रः । २ । १४ ॥ (यथा,
ऋग्वेदे । ९ । ७१ । ९ ।
"उक्षेव यूथा परियन्नरावीदधि
त्विषीरधित सूर्य्यस्य ॥")

**त्सर**, छद्मगतौ । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-अकं-सकं च-सेट् ।) दन्त्यवर्गाद्यस्याधो-
दन्त्यसकारः । त्सरति धूर्त्तः छलेन गच्छती-
त्यर्थः । इति दुर्गादासः ॥ (यथा, अथर्व्ववेदे ।
८ । ६ । ८ ।
"यस्त्वा स्वपन्तीं त्सरति यस्त्वा दिप्सति
जाग्रतीम् ॥")

**त्सरुः**, पुं, (त्सरति कौटिल्यं गच्छतीति । त्सर
+ "भृमृशीतृचरित्सरीति ।" उणां १ । ७ ।
इति उः ।) खड्गमुष्टिः । इत्यमरः । २ ।
८ । ९० ॥ तत्पर्य्यायः । मुष्टिः २ तालतलः ३ ।
इति शब्दरत्नावली ॥ (यथा, आर्य्यासप्त-
शत्याम् । २४३ ।
"ज्योत्स्नाभिसारसमुचितवेशे ! व्याकोष-
मल्लिकोत्तंसे ! ।
विशसि मनो निशितेव स्मरस्य कुमुदत्सरुच्छ-
रिका ॥"
सर्पः । यथा, ऋग्वेदे । ५ । ५० । १ ।
"मा मां पद्येन रपसा विदत्त्सरुः ।"

एकादशस्तथा त्वष्टा द्वादशो विष्णुरुच्यते
॥”
एते तु चाक्षुषस्य मनोरन्तरे तुषिता नाम
देवा
आसन् वैवस्वतेऽन्तरे तु द्वादश आदित्याः
।
इति विष्णुपुराणे । १ । १५ । १३१ --
१३३ ॥
तथा मात्स्ये च । ६ । ३ -- ५ ॥ त्वक्षति
तनू-
करोति काष्ठादिकं शिल्पकार्य्यत्वात् । तक्ष
+
तृच् ।) विश्वकर्म्मा । इति हेमचन्द्रः । ३ ।
५८१ ॥
(यथा, माघे । ३ । ३५ ।
“त्वष्टुः सदाभ्यासगृहीतशिल्प-
विज्ञानसम्पत्प्रसवस्य सीभा ॥”
अयन्तु माघमासे
सूर्य्यरथपरिभ्रमणाधिकारिणा-
मन्यतमः । यथा, विष्णुपुराणे । २ । १० ।
१५ ।
“त्वष्टाथ जमदग्निश्च कम्बलोऽथ
तिलोत्तमा ।
ब्रह्मापेतोऽथ ऋतजित् धृतराष्ट्रोऽथ सत्तमः
।
माघमासे वसन्त्येते सप्त मैत्रेय ! भास्करे
॥”
विश्वकर्म्मणः पुत्त्रविशेषः । यथा,
विष्णुपुराणे ।
१ । १५ । १२२ ।
“तस्य पुत्त्रास्तु चत्वारस्तेषां नामानि मे
शृणु ।
अजैकपादहिर्व्रध्नस्त्वष्टा रुद्रश्च बुद्धिमान्
॥”
प्रजापतिविशेषः । यथा, महाभारते । ५ ।
९ । ३ ।
“त्वष्टा प्रजापतिर्ह्यासीत् देवश्रेष्ठो महातपाः
।
स पुत्त्रं वै त्रिशिरसमिन्द्रद्रोहात्
किलासृजत् ॥”
महादेवः । यथा, महाभारते । १३ । १७ ।
१०३ ।
त्वष्टृ + अण् + ङीप् ।) चित्रानक्षत्रम् ।
इति
हेमचन्द्रः ॥ (त्वष्टुर्व्विश्वकर्म्मणोऽपत्यं
स्त्री ।)
संज्ञानामसूर्य्यपत्नी । इति
शब्दरत्नावली ॥
(यथा, महाभारते । १ । ६६ । ३५ ।
“त्वाष्ट्री तु सवितुर्भार्य्या वडवा
रूपधारिणी ।
असूयत महाभागा सान्तरीक्षेऽश्विनावुभौ
॥”)
रथिका । क्षुद्ररथः । इति त्रिकाण्डशेषः
॥

**त्विट्,** [ष्] स्त्री, (त्विष दीप्तौ + सम्पदादित्वात्
क्विप् ।) शोभा । (यथा, महाभारते । ३
।
२० । २ ।
“अपश्यं द्वारकाञ्चाहं महाराज !
हतत्विषम् ॥”)
प्रभा । (यथा, माघे । १ । ३ ।
“चयस्त्विषामित्यवधारितं पुर-
स्ततः शरीरीति विभाविताकृतिम् ॥”)
वाक् । इति मेदिनी । षे, १३ ॥
व्यवसायः ।
जिगीषा । इति विश्वः ॥ (दीप्यमाने, त्रि
।
यथा, ऋग्वेदे । ४ । १७ । २ ।
“तव त्विषो जनिमन्रेजत
द्यौरेजद्भूमिर्भियसा
स्वस्य मन्योः ॥”
“हे इन्द्र त्विषो दीप्यमानस्य तव त्वदीये
जनिमन् जन्मनि सति ।” इति तद्भाष्ये
सायनः ॥)

**त्विष,** औ ञ भासे । इति कविकल्पद्रुमः ॥ (भ्वां-
उभं-दाने-सकं-अन्यत्र अकं-अनिट् ।)
औ,
अत्विक्षत् । ञ, त्वेषति त्वेषते । भासो
दीप्तिः ।
अवान्निवासे दाने च त्विषौ ञ अनुवर्त्तते
। औ,
“तथा त्सरुश्छद्मगामी जिह्मगः सर्प इत्यर्थः
मां पद्येन पादभवेन रपसा । रपि शब्दकर्म्मा
।
शब्देन मा विदत् मा जानातु ।” इति
तद्भाष्ये सायनः ॥)

| | | |
|---|---|---|
| “धाता शक्रश्च विष्णु श्च मित्रस्त्वष्टा ध्रुवो धरः ॥”)<br>वर्णसङ्करजातिविशेषः । इत्यमरः । २ । १० । ९ ॥<br>अस्य पर्य्यायः । काष्ठतट्शब्दे उत्पत्तिश्च सूत्र-<br>धारशब्दे द्रष्टव्या ॥ (इन्द्रः । इति ऋग्वेद-भाष्ये सायनः । १ । ११७ । २२ ॥<br>असुरभेदः ।<br>इति तत्रैव सायनः । ३ । ४८ । ४ ॥) | अवात्विक्षत् । ञ, अवत्वेषति अवत्वेषते । जनो<br>निवसति ददाति दीप्यते वा इत्यर्थः ।<br>इति<br>दुर्गादासः ॥ | |

**थ**

**थ**, थकारः । स व्यञ्जनसप्तदशवर्णः । तवर्ग-

द्वितीयवर्णश्च । अस्योच्चारणस्थानं दन्तः ।
इति व्याकरणम् ॥ (यथा, शिक्षायाम् । १७ ।
"स्युर्मूर्द्धन्या ऋटुरसा दन्त्या ऌतुलसाः स्मृताः ॥")
अस्य स्वरूपं यथा, --
"थकारं चञ्चलापाङ्गि ! कुण्डली मोक्षरूपिणी ।
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा ॥
पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं सदा ।
अरुणादित्यसङ्काशं थकारं प्रणमाम्यहम् ॥"
इति कामधेनुतन्त्रम् ॥
(वङ्गीयवर्णमालायाम्) अस्य लेखनप्रकारो
यथा, --
"कुञ्चिता कुण्डली भूत्वा वामाद्दक्षिणतस्ततः ।
वामतः कुञ्चिता भूत्वा दक्षाधोदक्षतो गता ॥
ऊद्र्ध्व ऋज्वायता रेखा सुरा गङ्गादयः क्रमात् ।
वाणी भवानी लक्ष्मीश्च ध्यानमस्य प्रचक्षते ॥"
अस्य ध्यानादि यथा, --
"नीलवर्णां त्रिनयनां षड्भुजां वरदां पराम् ।
पीतवस्त्रपरीधानां सदा सिद्धिप्रदायिनीम् ॥
एवं ध्यात्वा थकारन्तु तन्मन्त्रं दशधा जपेत् ।
पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा ॥
तरुणादित्यसङ्काशं थकारं प्रणमाम्यहम् ॥"
इति वर्णोद्धारतन्त्रम् ॥ * ॥
अस्य नामानि यथा, --
"थः स्थिरामी महाग्रन्थिर्ग्रन्थिग्राहो भयानकः ।
शिली शिरसिजो दण्डी भद्रकाली शिलोच्चयः ॥
कृष्णो बुद्धिर्व्विकर्म्मा च दक्षनाशाधिपोऽमरः ।
वरदा भोगदा केशो वामजानुरसोऽनलः ॥
लोलौजज्जयिनी गुह्यः शरच्चन्द्रविदारकः ॥"
इति नानातन्त्रशास्त्रम् ॥

**थं**, क्ली, रक्षणम् । मङ्गलम् । साध्वसम् । इति

मेदिनी । थे, १ ॥

**थः**, पुं, (थुड संवृतौ + डः ।) पर्व्वतः । भय-

रक्षकः । इति मेदिनी । थे, १ ॥ व्याधिभेदः ।
भयचिह्नम् । भक्षणम् । इति शब्दरत्नावली ॥

**थुड**, शि संवृतौ । इति कविकल्पद्रुमः ॥ (तुदां-

परं-सकं-सेट् ।) शि, थुडति । अथुडीत्
तुथोड । इति दुर्गादासः ॥

**थुत्कारः**, पुं, (कृ + भावे घञ् । थुदित्यव्यक्त-
शब्दस्य कारः करणं यत्र ।) निष्ठीवनत्यागा-
नुकरणशब्दः ॥

**थुर्व्व**, ई वधे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) पञ्चमस्वरी । थूः थुरौ थुरः ।
ई, थूर्णः । इति दुर्गादासः ॥

**थुर्व्वणं**, क्ली, हननम् । थुर्व्वधातोर्भावे अनटि
(ल्युटि) निष्पन्नम् ॥

**थूथू**, व्य, निष्ठीवनत्यागानुकरणशब्दः। यथा, --
थूथूकृत्य वमद्भिरध्वगजनैरिति सूक्तिकणा-
मृतम् ॥

**थैथै**, व्य, वाद्यानुकरणशब्दविशेषः । इति सङ्गीत-
दामोदरः ॥

**थोडनं**, क्ली, संवरणम् । इति थुडधातोर्भावेऽनट्
प्रत्ययः (ल्युट्) ॥

**द**

**द**, दकारः । स व्यञ्जनाष्टादशवर्णः तवर्गतृतीय-

वर्णश्च । अस्योच्चारणस्थानं दन्तः । इति व्याक-
रणम् ॥ (यथा, शिक्षायाम् । १७ ।
"स्युर्मूर्द्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः ॥")
अस्य स्वरूपं यथा, --
"दकारं शृणु चार्व्वङ्गि ! चतुर्व्वर्गप्रदायकम् ।
पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा ॥
त्रिशक्तिसहितं देवि ! त्रिविन्दुसहितं सदा ।
आत्मादितत्त्वसंयुक्तं स्वयं परमकुण्डली ॥
रक्तविद्युल्लताकारं दकारं हृदि भावय ॥"
इति कामधेनुतन्त्रम् ॥
अस्य ध्यानादि यथा, --
"ध्यानमस्य दकारस्य वक्ष्यते शृणु पार्व्वति ! ।
चतुर्भुजां पीतवस्त्रां नवयौवनसंस्थिताम् ॥
अनेकरत्नघटितहारनूपुरशोभिताम्।
एवं ध्यात्वा दकारन्तु तन्मन्त्रं दशधा जपेत् ॥"
अस्य नामानि यथा, नानातन्त्रशास्त्रे ।
"दोऽद्रीशो धातकिर्धाता दाता दलं कलत्रकम् ।
दीनं ज्ञानञ्च दानञ्च भक्तिराहवनी धरा ॥
सुषुम्ना योगिनी सद्यः कुण्डलो वामगुल्फकः ।
कात्यायनी शिवा दुर्गा लङ्गना ना त्रिकण्डकी ॥
स्वस्तिकः कुटिलारूपः कृष्णश्चोमा जितेन्द्रियः ।
धर्म्महृद्वामदेवश्च भ्रमा बहुसुचञ्चला ॥
हरिद्रापुरमत्रौ च दक्षपाणिस्त्रिरेखकः ॥"

**दं**, क्ली, (ददाति आनन्दमिति । दा + बाहुल-

कात् कः ।) भार्य्या । इत्येकाक्षरकोषः ॥

**दः**, पुं, (दै प शुद्धौ वा दा दाने + बाहुलकात्

कः ।) अचलः । दत्तः । दाता । इति मेदिनी
दे, १ ॥ (दो च्छेदे + डः ।) खण्डनम् । इति
शब्दरत्नावली ॥ (यथा, माघे । १९ । ११४ ।
"दाददोदुद्दद्दुद्दादी दादादोदूददी ददोः ।
दुद्दादं दददे दुद्दे ददादद ददोऽददः ॥"
"दद्यते इति दादोदानम् । दददाने कर्म्मणि घञ् ।
दादं ददातीति दाददो दानप्रदः ।" इत्यादौ
मल्लिनाथकृतटीकायामर्थविशेषा बोद्धव्याः ॥)

**दंशः**, पुं, (दशतीति । दंश दंशने + पचाद्यच् ।)

प्लोतचर्म्मान्तवल्कानांमृदुनान्यतमेन च ।
न गच्छति विषं देहमरिष्टाभिर्न्निवारितम् ॥"
इति सुश्रुते कल्पस्थाने पञ्चमेऽध्याये ॥
असुरविशेषः । यथा, महाभारते । १२ । ३ । १९ ।
"सोऽब्रवीदहमांसं प्राक् दंशो नाम
महासुरः ॥"
अयन्तु भृगुभार्य्यामपहरन् तच्छापात् मांस-
शोणिताशी कीटो जातः । ततः कदाचित्
गुरोः परशुरामस्य निद्रां प्रतिपालयितुः कर्णस्य
ऊरुदेशं निर्भिद्य शोणितं पीतवान् । ततः
परशुरामेणायं शापात् निर्म्मोचितः ॥ एतद्-
विवरणन्तु तत्रैवाध्याये द्रष्टव्यम् ॥)

**दंशकः**, पुं, (दशतीति । दन्श + ण्वुल् ।) दंशः ।

इति हारावली । १२३ ॥ (नृपविशेषः । स तु
कम्पनादेशाधिपतिः । यथा, राजतरङ्गिण्याम् ।
१७८ ।
"दंशकः कम्पनाधीशः प्रवृद्धे तत्र सक्रुधि ।
विद्रुतो विषलाटायां निपत्य निहतः खशैः ॥")
दंशनकर्त्तरि, त्रि ॥

**दंशनं**, क्ली, (दशतीव शरीरमिति । दश +

ल्युः ।) वर्म्म । (यथा, महाभारते । ३ । २६८ । १८ ।
"संनह्यध्वं सर्व्व एवेन्द्रकल्पा
महान्ति चारूणि च दंशनानि ॥"
दन्श + भावे ल्युट् ।) दन्तादिना खण्डनम् ।
इति हेमचन्द्रः ॥ कामडान हुलफुटान इति
भाषा । (यथा, महाभारते । ८ । ८३ । ३४ ।
"दंशनञ्चाहिभिः कृष्णैर्दाहश्च जतुवेश्मनि ॥")

**दंशभीरुः**, पुं स्त्री, (दंशात् वनमक्षिकातः भीरु-

र्भयशीलः ।) महिषः । इति त्रिकाण्डशेषः ॥

**दंशमूलः**, पुं, (दंशवदुग्रं मूलमस्य ।) शिग्रुः ।

इति राजनिर्घण्टः ॥ (गुणादयोऽस्य शिग्रुशब्दे
ज्ञातव्याः ॥)

**दंशितः**, त्रि, (दंशो वर्म्म सञ्जातोऽस्य परिहित-

त्वादिति । दंश + तारकादित्वात् इतच् ।)
वर्म्मितः । (यथा, महाभारते । २ । २९ । २ ।
"महता बलचक्रेण परराष्ट्रावमर्द्दिना ।

कीटविशेषः । दाँश इति भाषा । तत्पर्य्यायः ।
वनमक्षिका २ । इत्यमरः । २ । ५ । २७ ॥
गोमक्षिका ३ अरण्यमक्षिका ४ भम्भरालिका
५ । इति शब्दरत्नावली ॥ पांशुरः ६ दंशकः
७ । इति हारावली ॥ दुष्टमुखः ८ क्रूरः ९
क्षुद्रिका १० । इति राजनिर्घण्टः ॥ (यथा,
मनुः । १ । ४५ ।
"स्वेदजं दंशमशकं यूकामक्षिकमत्कुणम् ।
उष्मणश्चोपजायन्ते यच्चान्यत् किञ्चिदीदृशम् ॥"
दशतीव शरीरमिति ।) वर्म्म । (यथा, भाग-
वते । ३ । १८ । ९ ।
"परानुषक्तं तपनीयोपकल्पं
महागदं काञ्चनचित्रद्‌ंशम् ॥"
दश + भावे धञ् ।) दंशनम् । इति मेदिनी ।
शे, ७ ॥
("सुप्तता जायते दंशे कृष्णञ्चातिस्रवत्यसृक् ॥"
इति सुश्रुते कल्पस्थाने वष्ठेऽध्याये ॥)
दन्तः । इति हेमचन्द्रः । ३ । २४८ ॥ खण्ड-
नम् । (दन्तक्षतम् । यथा, आर्य्यासप्त-
शत्याम् । ५११ ।
"वर्णह्वतिर्न ललाटे न लुलितमङ्गं न चाघरे
दंशः ।
उत्पलमहारि वारि च न स्पृष्टमुपायचतु-
रेण ॥")
दोषः । मर्म्म । सर्पक्षतम् । इति विश्वः ॥ (यथा,
"सर्व्वैरेवादितः सर्पैः शाखादष्टस्य देहिनः ।
दंशस्योपरिबध्नीयादरिष्टाश्चतुरङ्गुले ॥
हस्त्यश्वरथपूर्णेन दंशितेन प्रतापवान् ॥"
दंश्यते इति । दन्श + णिच् + भावे क्तः ।)
दष्टः । इति हेमचन्द्रः ॥ (भासमानः । यथा,
महाभारते । ४ । ४० । २ ।
"वारणा यत्र सौवर्णाः पृष्ठे भासन्ति दंशिताः ।
सुपार्श्वं सुग्रहञ्चैव कस्यैतद्धनुरुत्तमम् ॥"
"दंशिता भासमानाः ।" इति नीलकण्ठः ॥)

**दंशी**, स्त्री, (क्षुद्रो दंशः । स्वल्पार्थे ङीष् । यद्वा,
दशतीति । दंश + अच् । गौरादित्वात् ङीष् ।)
क्षुद्रदंशः । इत्यमरः । २ । ५ । २७ । छोट-
दाँश इति भाषा ॥

**दंष्ट्रा**, स्त्री, (दश्यतेऽनयेति । दन्श + "दाम्नी-
शसेति ।" ३ । २ । १८२ । इति करणे ष्ट्रन् ।
यद्वा, "सर्व्वधातुभ्यष्ट्रन् ।" उणां ४ । १५८ ।
इति ष्ट्रन् । गौरादिपाठे पितामहीशब्दस्य
पाठात् षितां ङीषोऽनित्यत्वात् टाप् ।) दन्त-

विशेषः । तत्पर्य्यायः । दाढा २ । इति
हेम-
चन्द्रः । ३ । २४७ ॥ (यथा,
साहित्यदर्पणे ।
१ । ३ ।
"यस्यालीयत शल्कसीम्नि जलधिः पृष्ठे
जगन्मण्डलम् ।
दंष्ट्रायां धरणी नखे दितिसुताधीशः पदे
रोदसी ॥")

**दंष्ट्रिका**, स्त्री, (दंष्ट्रा विद्यतेऽस्याः । दंष्ट्रा +
"ब्रोह्यादिभ्यश्च ।" ५ । २ । ११६ । इति
ठन् ।)
दाढिका । इति हेमचन्द्रः । ३ । २४७ ॥

**दंष्ट्री**, [न्] पुं स्त्री, (प्रशस्ता दंष्ट्रा अस्त्यस्येति ।
दंष्ट्रा + "ब्रीह्यादिभ्यश्च ।" ५ । २ । ११६
। इति
इनिः ।) शूकरः । इत्यमरः । २ । ५ । २
॥
सर्पः । इति शब्दरत्नावली ॥ (यथा, रामा-
यणे । २ । ३३ । २३ ।
"विलानि दंष्ट्रिणः सर्व्वे सानूनि मृगपक्षिणः
।
त्यजन्त्यस्मद्भयाद्भीतागजाः सिंहा
वनान्यपि ॥")
दंष्ट्राविशिष्टे, त्रि । यथा, --
"दंष्ट्रिभिः शृङ्गिभिर्व्वापि हता म्लेच्छैश्च
तस्करैः ।
ये स्वाम्यर्थे हता यान्ति राजन् ! स्वर्गं न
संशयः ॥"
इति शुद्धितत्त्वे अग्निपुराणम् ॥

**दकं**, क्ली, (उदक + पृषोदरादित्वात् साधुः ।)
जलम् । इति त्रिकाण्डशेषः ॥

**दक्ष**, ङ स्यदे । वृद्धौ । इति कविकल्पद्रुमः ॥
(भ्वां-आत्मं-सकं-सेट् ।) स्यद इह
शीघ्रकर-
णम् । ङ, दक्षते धनमुद्योगी । शीघ्रमुत्पाद-
यति इत्यर्थः । इति दुर्गादासः ॥ (सामर्थ्ये

अस्य भार्य्या स्वायम्भुवमनुकन्या प्रसूतिः ।
अस्य
षोडशकन्याः यथा, श्रद्धा १ मैत्री २ दया ३
शान्तिः ४ तुष्टिः ५ पुष्टिः ६ क्रिया ७ उन्नतिः
८ बुद्धिः ९ मेधा १० मूर्त्तिः ११ तितिक्षा
१२
ह्रीः १३ स्वाहा १४ स्वधा १५ सती १६ ।
तस्य त्रिसहस्रपुत्त्राः । दक्षप्रजापतिर्द्वितीय-
जन्मनि दशप्रचेतसः सुतो भूत्वा षष्ठमन्वन्तरे
प्रजासृष्टिञ्चकार । स असिक्न्यां पत्न्यां षष्टिं
कन्या जनयित्वा प्रजापतिभ्यो दत्तवान् ।
धर्म्माय दश । कश्यपाय सप्तदश । चन्द्राय
सप्तविंशतिः । कृशाश्वाय द्वे । भूताय द्वे ।
अङ्गिरसे द्वे । इति श्रीभागवतम् ॥ * ॥
ताम्रचूडः । (यथा, चरके सूत्रस्थाने २७
अध्याये ।
"धार्त्तराष्ट्रचकोराणां दक्षाणां शिखिनामपि ।
चटकानाञ्च यानि स्युरण्डानि च हितानि च
॥")
मुनिभेदः । (यथा, ब्रह्मवैवर्त्ते प्रकृतिखण्डे ।
४ । ६७ ।
"कणादो गौतमः कण्वः पाणिनिः
शाकटायनः ।
ग्रन्थञ्चकार यद्बुत्वा दक्षः कात्यायनः स्वयम्
॥"
अयं हि धर्म्मशास्त्रप्रयोजकानामन्यतमः ।
यथा,
याज्ञवल्क्ये । १ । ५ ।
"पराशरव्यासशङ्खलिखितादक्षगोतमौ ।
शातातपो वशिष्ठश्च धर्म्मशास्त्रप्रयोजकाः
॥")
हरवृषः । द्रुमभेदः । वह्निः । इति विश्वः ॥
महेशः । इति शब्दरत्नावली ॥ (यथा, महा-
भारते । १३ । १७ । ११३ ।
"धृतिमान् मतिमान् दक्षः सत्कृतश्च
युगाधिपः ॥"
विष्णोर्नामविशेषः । यथा, महाभारते । १३ ।
१४९ । १११ ।

समर्थः । यथा, ऋग्वेदे । १ । ५९ । ४ ।
"बृहती इव सूनवे रोदसी
गिरो होता मनुष्यो न दक्षः ॥"
प्रवृद्धः । यथा, तत्रैव । १ । १५ । ६ ।
"युवं दक्षं धृतव्रत मित्रावरुण दूळभम् ॥"
"दक्षं प्रवृद्धम् ।" इति तद्भाष्ये सायनः ॥
दक्षिणः । अपसव्यम् । यथा,
महानिर्व्वाणे ।
३ । ४४ ।
"प्राणायामं ततः कुर्य्यान् मूलेन प्रणवेन
वा ।
मध्यमानामिकाभ्याञ्च दक्षहस्तस्य
पार्व्वति ! ॥")

**दक्षकन्या**, स्त्री, (दक्षस्य प्रजापतेः कन्या ।)
दुर्गा । इति त्रिकाण्डशेषः ॥
दक्षप्रजापतेः
सुता । ताः पञ्चाशत्सङ्ख्यकाः । तासां
नामानि
यथा, --
"सती ज्योतिः स्मृतिः स्वाहा ह्यनुसूया
स्वधा
तथा ।
प्रीतिः क्षमा च संभूतिः सन्नतिश्च
अरुन्धती ॥
कीर्त्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धाक्रिया
मतिः ।
बुद्धिर्लज्जा वपुः शान्तिस्तुष्टिः
सिद्धिस्तथा रतिः ॥
अरुन्धाती वसुर्यामी लवा
भानुर्म्मरुत्वती ।
सङ्कल्पा च मुहूर्त्ता च साध्या विश्वा च
नामतः ॥
अदितिश्च दितिश्चैव दनुः काला
दनायुषा ।
सिंहिका सुरसा कद्रुर्विनता सुरभिः
स्वसा ॥
क्रोधा इरा च प्रोवा च दक्षकन्याः
प्रकीर्त्तिताः ।

अकर्म्मकोऽयम् । यथा, ऋग्वेदे । २ । १ । ११ ।
"तमिळा शतमिहासि दक्षसे ॥"
"दक्षसे दानाय समर्था भवसि ॥" इति तद्भाष्ये
सायनः ॥)

**दक्ष**, ष म ङ हन्त्यर्थे । इति कविकल्पद्रुमः ॥

(भ्वां-आत्मं-सकं-सेट् ।) म, अदक्षि अदाक्षि ।
दक्षं दक्षम् । दाक्षं दाक्षम् । मानुबन्धबला-दनुपधयोरपि दीर्घः । स्वमते तु दीर्घविधि-रुपधां नापेक्षते । ष, दक्षा । सेमक्तात् सरो-रित्यनेनैवेष्टसिद्धेऽस्य षानुबन्धस्त्वरपर्य्यन्तघटा-दिभ्यो ङ इति प्राचीनमतानुवादार्थः । ङ, दक्षते । हन्त्यर्थे गतिवधयोः । इति दुर्गादासः ॥

**दक्षः**, पुं, (दक्षते सृष्टिप्रवृद्धये समर्थो भवतीति ।

दक्ष + अच् ।) प्रजापतिविशेषः । स ब्रह्मणो
दक्षिणाङ्गुष्ठाज्जातः । ततः प्रभृति मैथुनेन प्रजा जाताः । यथा, --
"शरीरानथ वक्ष्यामि मातृहीनान् प्रजापतेः ।
अङ्गुष्ठाद्दक्षिणाद्दक्षः प्रजापतिरजायत ॥"
इति मत्स्यपुराणे । ३ । ९ ॥
"यथा ससर्ज चैवादौ तथैव शृणुत द्विजाः ! ।
यदा तु सृजतस्तस्य देवर्षिगणपन्नगान् ॥
न वृद्धिमगमल्लोकस्तदा मैथुनयोगतः ।
दक्षः पुत्त्रसहस्राणि पाञ्चजन्यामजीजनत् ॥"
इति च तत्रैव । ५ । ३ -- ४ ॥
"अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः ॥"
बलम् । इति निघण्टुः । २ । ९ । "दक्ष शैघ्र्ये चकारात् वृद्धौ । दक्ष गतिहिंसनयोः । दक्षतिरुत्साहार्थः । इति स्कन्दस्वामी । असुन् ।
शत्रुविजये क्षिप्रो भवत्यनेन हिंस्यन्ते वानेन शत्रवः प्रोत्साहितो वा भवति शत्रुविजये ।"
"दक्ष इति सकारान्तं बलनाम अकारान्त-मपि तस्यैवमर्थान्तरे द्रष्टव्यम् ॥" इति तट्टी-कायां देवराजयज्वा । यथा, ऋग्वेदे । १ । ९५ । ६ ।
"स दक्षाणां दक्षपतिर्बभूव ॥"
"सोऽग्निर्दक्षाणां सर्व्वेषां बलानां दक्षपति-र्बलाधिपतिर्बभूव ।" इति तद्भाष्ये सायनः ॥
गरुडस्य पुत्त्राणामन्यतमः । यथा, महा-भारते । ५ । १०१ । १२ ।
"मेघहृत् कुमुदो दक्षः सर्पान्तः सोमभोजनः ॥")
त्रि, पटुः । इति मेदिनी । षे, १४ ॥ अस्य पर्य्यायः चतुरशब्दे द्रष्टव्यः ॥ (यथा, महा-भारते । १ । ७४ । ३९ ।
"सा भार्य्या या गृहे दक्षा सा भार्य्या या प्रजा-वती ।
सा भार्य्या या पतिप्राणा सा भार्य्या या पतिव्रता ॥"
पञ्चाशत् सिद्धियोगिन्यः सर्व्वलोकस्य मातरः ॥"
इति वह्निपुराणे गणभेदनामाध्यायः ॥
(अयं द्बितीयजन्मनि प्राचेतसो भूत्वा षष्टिं कन्या
जनयामास । यथा, मत्स्यपुराणे । ५ । १२-१४ ।
"ततस्तेषु विनष्टेषु षष्टिं कन्याः प्रजापतिः ।
वैरिण्यां जनयामास दक्षः प्राचेतसस्तथा ॥
प्रादात् स दश धर्म्माय कश्यपाय त्रयोदश ।
सप्तविंशति सोमाय चतस्रोऽरिष्टनेमये ॥
द्वे चैव भृगुपुत्त्राय द्वे कृशाश्वाय धीमते ।
द्वे चैवाङ्गिरसे तद्वत्तासां नामानि विस्तरः ॥
शृणुध्वं देवमातॄणां प्रजाविस्तरमादितः ॥"
एतासां नामानि तत्रैव द्रष्टव्यानि ॥)

**दक्षजा**, स्त्री, (दक्षात् प्रजापतेर्जायते इति ।

जन + "पञ्चम्यामजातौ ।" ३ । २ । ९२ । इति
डः ।) दुर्गा । इति हेमचन्द्रः ॥ (अश्विन्यादि-
नक्षत्रे च ॥)

**दक्षजापतिः**, पुं, (दक्षजानां अश्विन्यादिदक्ष-

कन्यानां पतिः ।) चन्द्रः । इति हेमचन्द्रः ॥
(दक्षजायाः सत्याः पतिः इति विग्रहे शिवः ॥)

**दक्षसावर्णिः**, पुं, नवममनुः । अस्मिन् मन्वन्तरे

ऋषभनामा भगवदवतारः । श्रुतनामा इन्द्रः ।
पारमरीचिगर्भाद्या देवाः । द्युतिमदाद्याः सप्त-
र्षयः । भूकेतुदीप्तिकेतुप्रभृतयो मनुपुत्त्रा भवि-

| | | ष्यन्ति । इति श्रीभागवतम् ॥ (अस्य विशेष-<br>विवृतिस्तु मार्कण्डेयपुराणे ९४ अध्याये द्रष्टव्या ॥)<br>**दक्षा**, स्त्री, (दक्षते वर्द्धते भारधारणे समर्था<br>भवतीति वा । दक्ष + अच् । टाप् ।) पृथिवी ।<br>इति मेदिनी । षे, १५ ॥ |
|---|---|---|

**दक्षाध्वरध्वंसकृत्**, पुं, (दक्षाध्वरस्य दक्षयज्ञस्य
ध्वंसं नाशं करोतीति । कृ + क्विप् तुगागमश्च ।)
शिवः । इति हलायुधः ॥

**दक्षाय्यः**, पुं, (दक्षते कार्य्येषु समर्थो भवतीति ।
दक्ष + "श्रुदक्षिस्पृहिगृहिभ्य आय्यः ।" उणां ३ । ९६ । इति आय्यः ।) गरुडः । गृध्रः ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ (दक्ष वृद्धौ + आय्यः । त्रि, वर्द्धकः । यथा, ऋग्वेदे । १ । ९१ । ३ ।
"शुचिष्ट्वमसि प्रियो न मित्रो
दक्षाय्यो अर्य्यमेवासि सोम ! ॥"
"त्वमर्य्यमेवास्माभिर्दृश्यमानः सूर्य्य इव दक्षा-
य्योऽसि सर्व्वेषां वर्द्धकोऽसि ।" इति सायनः ॥
पूजनीयः । यथा, तत्रैव । ७ । १ । २ ।
"दक्षाय्यो यो दम आस नित्यः ॥"
"योऽग्निर्द्दमे गृहे दक्षाय्यः पूजनीयो हविभिः
समर्घनीयो वा ।" इति तद्भाष्ये सायनः ॥)

**दक्षिणः**, त्रि, (दक्षते इति । दक्ष वृद्धौ + "द्रु-
दक्षिभ्यामिनन् ।" उणां । २ । ५० । इति इनन् ।) दक्षिणोद्भूतः । (दक्षिणदिग्भवः ।
यथा, रघुः । ४ । ८ ।
"स हि सर्व्वस्य लोकस्य युक्तदण्डतया मनः ।
आददे नातिशीतोष्णो नभस्वानिव दक्षिणः ॥"
दक्षिणदिक्स्थितः । यथा, मनुः । ५ । ९२ ।
"दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत् ॥")
सरलः । (यथा, महाभारते । ४ । ५ । २७ ।
"दक्षिणां दक्षिणाचारो दिशं येनाजयत्
प्रभुः ॥")
परच्छन्दानुवर्त्ती । आरामः । इति मेदिनी
णे, ५० ॥
("दक्षिणः सरलावामपरच्छन्दानुवर्त्तिषु ।
वाच्यवद्दक्षिणावाटीयज्ञदानप्रतिष्ठयोः ॥"
इति विश्ववचनात् । णे, ४५ ॥)
दक्षः । अपसव्यम् । इति हेमचन्द्रः ॥ डाहिन
इति भाषा । (यथा, मनुः । २ । ६३ ।
"उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः ॥")
दक्षिणहस्ताप्रदाने दोषो यथा, --
अस्योदाहरणं यथा, --
"अन्तःपुरे स्फुरति पद्मदृशां सहस्र-
मक्षिद्वयं कथय कुत्र निवेशयामि ।
इत्याकलय्य नयनाम्बुरुहे निमील्य
रोमाञ्चितेन वपुषा स्थितमच्युतेन ॥"
इति रसमञ्जरी ॥ * ॥
(तन्तोक्ताचारविशेषे, क्ली । यथा, कुलार्णवे
५ खण्डे ।
"सर्व्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवं महत् ।
वैष्णवादुत्तमं शैवं शैवाद्दक्षिणमुत्तमम् ॥
दक्षिणादुत्तमं वामं वामात् सिद्धान्तमुत्तमम् ।
सिद्धान्तादुत्तमं कौलं कौलात् परतरं न हि ॥")

**दक्षिणकालिका**, स्त्री, (दक्षिणा अनुकूला का-
लिका ।) आद्याशक्तिः । यथा, --
"ऊद्र्ध्वं वामे कृपाणं करकमलतले छिन्नमुण्डं
तथाधो
दक्षे चाभीवरञ्च त्रिजगदघहरे दक्षिणे कालिके
च ।" इति तन्त्रसारः ॥

**दक्षिणतः**, व्य, (दक्षिण + "दक्षिणोत्तराभ्यामत-
सुच् ।" ५ । २ । २८ । इति अतसुच् ।) दक्षिणस्यां
दिशि । इत्यमरटीकायां रायमुकुटः ॥ (यथा,
मनुः । ३ । ९१ ।
"पृष्ठवास्तुनि कुर्व्वीत वलिं सर्व्वात्मभूतये ।
पितृभ्यो वलिशेषन्तु सर्व्वं दक्षिणतो हरेत् ॥"
दक्षिण + तसिल् । दक्षिणभागे । यथा, महा-
निर्व्वाणतन्त्रे । ३ । ४८ ।
हितवम् । अस्रमारुतकोपनत्वम् । गण्डूपदादि-
कीटानां जनकत्वञ्च । इति द्रव्यगुणः ॥ * ॥
अस्या दिशोऽधिपतयः वृषकन्यामकरराशयः ।
इति ज्योतिषम् ॥ यज्ञादिविधिदानम् । इति
मेदिनी ॥ प्रतिष्ठा । इति हेमचन्द्रः ॥ यज्ञादि-
सम्पादकतदन्तविहितदानम् । सा यज्ञपत्नी
श्रीकृष्णदक्षिणांशभूता । यथा, --
"कार्त्तिकीपूर्णिमायान्तु रासे राधामहोत्सवे ।
आविर्भूतादक्षिणांशात् कृष्णस्य तेन दक्षिणा ॥"
दक्षिणाया अदाने तस्या वृद्धिर्यथा, --
"यज्ञो दक्षिणया सार्द्धं पुत्त्रेण च फलेन च ।
कर्म्मिणां फलदाता चेत्येवं वेदविदो विदुः ॥
कृत्वा कर्म्म च तस्यैव तूर्णं दद्याच्च दक्षिणाम् ।
तत्कर्म्मफलमाप्नोति वेदैरुक्तमिदं मुने ! ॥
कर्त्ता कर्म्मणि पूर्णे च तत्क्षणं यदि दक्षिणाम् ।
न दद्याद्ब्राह्मणेभ्यश्च दैवेनाज्ञानतोऽथ वा ॥
मुहूर्त्ते समतीते तु द्विगुणा सा भवेद्ध्रुवम् ।
एकरात्रे व्यतीते तु भवेत् शतगुणा च सा ॥
त्रिरात्रे तद्दशगुणा सप्ताहे द्विगुणा ततः ।
मासे लक्षगुणा प्रोक्ता ब्राह्मणानाञ्च वर्द्धते ॥
संवत्सरे व्यतीते तु सा त्रिकोटिगुणा भवत् ॥

"दक्षहस्ताप्रदाता च सर्पश्च सप्तजन्मसु ।
ततो भवेद्धस्तहीनो मानवश्च ततः शुचिः ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥ * ॥
दक्षिणहस्ते प्रतिग्रहो यथा, --
"ओंकारमुच्चरन् प्राज्ञो द्रविणं शकुमोदकम् ।
गृह्णीयाद्दक्षिणे हस्ते तदन्ते स्वस्ति कीर्त्तयेत् ॥"
इत्यादित्यपुराणम् ॥
(प्रदक्षिणः । यथा, भागवते । १ । १४ । १३ ।
"शस्ताः कुर्व्वन्ति मां सव्यं दक्षिणं पशवोऽपरे ।
वाहांश्च पुरुषव्याघ्र ! लक्षये रुदतो मम ॥")
पुं, चतुर्धानायकान्तर्गतनायकविशेषः । तस्य
लक्षणम् । (यथा, साहित्यदर्पणे । ३ । ४० ।
"एषु त्वनेकमहिलासु समरागो दक्षिणः
कथितः ॥")
यथा च "सकलनायिकाविषयसमसहजानुरागः ।
"पुनर्दक्षिणतः कुर्य्यात् पूर्ब्बवत्
सुरपूजिते ॥")

**दक्षिणतारं**, क्ली, दक्षिणतीरम् । यथा, "दिक्-
शब्देभ्यस्तीरस्य तारभावो वा ।
दक्षिणतारं
दक्षिणतीरं उत्तरतारं उत्तरतीरम् ।"
इति
सिद्धान्तकौमुद्यां समासप्रकरणम् ॥

**दक्षिणपूर्व्वा**, स्त्री, (दक्षिणस्याः पूर्व्वस्याश्च दिशो-
ऽन्तरालम् । "दिङ्नामान्यन्तराले ।" २ ।
२ । २६ । इति समासः ।)
पूर्ब्बदक्षिणकोणः ।
इति व्याकरणम् ॥ (यथा, भागवते । ९ । १९ । २२ ।
"दिशि दक्षिणपूर्ब्बस्यां द्रुह्युं दक्षिणतो
यदुम् ॥"
तद्दिग्भागस्थे, त्रि । यथा,
आश्वलायनगृह्य-
सूत्रे । ४ । २ । ११ ।
"दक्षिणपूर्ब्ब उद्धृतान्त आहवनीयं
निदधाति ॥")

**दक्षिणस्थः**, पुं, (दक्षिणे भागे तिष्ठतीति । स्था +
कः ।) सारथिः । इत्यमरः । २ । ८ ।
६० ॥
दक्षिणस्थिते, त्रि ।

**दक्षिणा**, स्त्री, (दक्षते इति । दक्ष वृद्धौ + "द्रुदक्षि-
भ्यामिनन् ।" उणां । २ । ५० । इति
इनन् ।
ततष्टाप् ।) दक्षिणदिव् । तत्पर्य्यायः ।
अवाची
२ शामनी ३ यामी ४ वैवस्वती ५ ।
इति राज-
निर्घण्टः ॥ (यथा, कुमारे । ३ । २५ ।
"दिक् दक्षिणा गन्धवहं मुखेन
व्यलीकनिश्वासमिवोत्ससर्ज ॥")
दक्षिणवायुगुणाः । षड्रसयुक्तत्वम् ।
चक्षुर्हित-
कर्म्म तद्यजमानानां सर्व्वञ्च निष्फलं
भवेत् ।
स च ब्रह्मस्वापहारी न
कर्म्मार्होऽशुचिर्न्नरः ॥
दरिद्रो व्याधियुक्तश्च तेन पापेन पातकी
।
तद्‌गृहाद्याति लक्ष्मीश्च शापं दत्त्वा
सुदारुणम् ॥
पितरो नैव गृह्णन्ति तद्दत्तं श्राद्धतर्पणम् ।
एवं सुराश्च तत्पूजां तद्दत्तामग्निराहुतिम्
॥ * ॥
दाता न दीयते दानं ग्रहीता च न याचते ।
उभौ तौ नरकं यातश्छिन्नरज्जुर्यथा घटः
॥
नार्पयेद्यजमानश्चेद्याचितारञ्च दक्षिणाम् ।
भवेद्‌ब्रह्मस्वापहारी कुम्भीपाकं
व्रजेद्ध्रुवम् ॥
वर्षलक्षं वसेत्तत्र यमदूतेन ताडितः ।
ततो भवेत् स चाण्डालो व्याधियुक्तो
दरिद्रकः ॥
पातयेत् पुरुषान् सप्त पूर्ब्बांश्च
सप्तजन्मनः ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥ * ॥
नायिकाविशेषः । यथा, --
"या गौरवं भयं प्रेम सद्भावं पूर्ब्बनायके ।
न मुञ्चत्यन्यसक्तेऽपि सा ज्ञेया दक्षिणा
बुधैः ॥"
इति विष्णुपुराणटीकायां स्वामी ॥
(व्य, दक्षिणस्यां दिशि दक्षिणा दिग् वा ।
"दक्षिणादाच् ।" ५ । ३ । ३६ । इति
आच् ।
दक्षिणस्यां दिशि ॥)

**दक्षिणाग्निः**, पुं, (दक्षिणः अनुकूलोऽग्निः ।)
यज्ञाग्निविशेषः । इत्यमरः । २ । ७ ।
१९ ॥ दक्षि-
णस्या दिशोऽग्निर्दक्षिणाग्निः । इति भरतः
॥
अस्य नामकरणम् । यथा, --
"दत्तासु दक्षिणास्वादौ तृप्तिर्भूत्वा
यतोऽमरान् ।

| | | |
|---|---|---|
| | त्वम् । बलवर्द्धनत्वम् । रक्तपित्तप्रशमनत्वम् ॥ सौख्य-कान्तिमतिप्रदत्वम् । शस्यनाशित्वम् । विदा- | नयसे दक्षिणाभागं दक्षिणाग्निस्ततोऽभवत् ॥" इति वराहपुराणम् ॥<br>**दक्षिणाचलः**, पुं, (दक्षिणा दक्षिणस्यां दिशि दक्षिणे दक्षिणप्रदेशे वा स्थितोऽचलः पर्व्वतः ।) मलयपर्व्वतः । इति हेमचन्द्रः । ४ । ९५ ॥ |

**दक्षिणाचारः**, पुं, (दक्षिणोऽप्रतिकूल आचारः ।)
आचारविशेषः । यथा, --
"स्वधर्म्मनिरतो भूत्वा पञ्चतत्त्वेन पूजयेत् ।
स एव दक्षिणाचारः शिवोभूत्वा शिवां यजेत् ॥"
इत्याचारभेदतन्त्रम् ॥
(एतदाचारोक्तकर्म्मादिकंवामाचारवत् कठोर-
तरं न । तथाच काशीराजप्रणीतदक्षिणा-
चारतन्त्रे ।
"दक्षिणाचारतन्त्रोक्तं कर्म्म तच्छुद्धवैदिकम् ॥"
दक्षिणोऽनुकूलः साधुराचारो व्यवहारो यस्य ।
शिष्टाचारविशिष्टे, त्रि । यथा, महाभारते । ४ । ५ । २७ ।
"दक्षिणां दक्षिणाचारो दिशं येनाजयत् प्रभुः ॥")

**दक्षिणात्**, व्य, (वसत्यागतो रमणीयं वा । दक्षि-
णस्यां दिशि दक्षिणस्या दिशः दक्षिणा वा
दिक् इति । "उत्तराधरदक्षिणादातिः ।" ५ ।
३ । ३४ । इति आतिः ।) दक्षिणस्यां दिशि ।
इत्यमरटीकायां रायमुकुटः ॥

**दक्षिणापथजन्मा**, [न्] पुं, (दक्षिणा दक्षिणस्यां
दिशि यः पन्थाः तत्र जन्म यस्य ।) जाति-
विशेषः । यथा, महाभारते । १२ । २०७ । ४२-४५ ।
"दक्षिणापथजन्मानः सर्व्वे नरवरान्ध्रकाः ।
गुहाः पुलिन्दाः शवराः चुचुका मद्रकैः सह ॥
उत्तरापथजन्मानः कीर्त्तयिष्यामि तानपि ।
यौनकाम्बोजगान्धाराः किराता वर्व्वरैः सह ॥
एते पापकृतस्तात ! चरन्ति पृथिवीमिमाम् ।
कर्क्किसंक्रमणे तद्वदभिती दक्षिणायनम् ।
अयनांशक्रमेणैव विषुवारम्भणं तथा ॥"
इति च ज्योतिस्तत्त्वम् ॥
तत्र जातस्य फलं यथा, --
"याम्यायने यस्य भवेत् प्रसूतिः
शठः कठोरः पिशुनस्वभावः ।
चतुष्पदाढ्यः कृषिमानहंयु-
र्व्वाचामशान्तो मनुजः प्रतापी ॥"
इति कोष्ठीप्रदीपः ॥ * ॥
कर्क्कटसंक्रान्तिः । यथा, --
"मृगकर्क्कटसंक्रान्ती द्वे तूदग्दक्षिणायने ।
विषुवती तुलामेषे गोलमध्ये तथापराः ॥"
इति तिथ्यादितत्त्वम् ॥ * ॥
अयनचक्रं यथा, --
"चक्रं सारं विलिख्य ग्रहपतिरयने संक्रमञ्चेत् करोति
यस्मिन्नृक्षे तदृक्षं मरणभयकरं शूलमूले निदध्यात् ।
तत्पश्चादारशूले विविधभयकरं शूलपार्श्वे-ऽर्थलाभः
सौख्यं स्याच्चक्रगर्भे विविधमुनिमतं विद्धि वामक्रमेण ॥"
इति ज्योतिषम् ॥
("त एते शीतोष्णवर्षलक्षणाश्चन्द्रादित्ययोः काल-
विभागकरत्वादयने द्वे भवतो दक्षिणमुत्तरञ्च ।
तयोर्दक्षिणं वर्षाशरद्धेमन्तास्तेषु भगवाना-
प्याय्यते सोमोऽम्ललवणमधुराश्चरसा बलवन्तो

**दक्षिणेन**, व्य, (दक्षिण + "एनबन्यतरस्यामदूरे
ऽपञ्चम्याः ।" ५ । ३ । ३५ । इति एनप् ।)
दक्षिणदिशि । इति रायमुकुटः ॥ दक्षिणभागे ।
(अस्य योगेन द्वितीया भवति ।) यथा, --
"दक्षिणेन हरिं रुद्रो गोविन्दमतिनेश्वरः ।
येनेशं हरिरीशस्त्वं तेनेशमभितोऽर्च्चकाः ॥"
इति मुग्धबोधम् ॥
(क्वचित् द्वितीयाप्रयोगाभावोऽपि दृश्यते । यथा,
महाभारते । ३ । ८३ । ४ ।
"दक्षिणेन सरस्वत्या दृषद्वत्युत्तरेण च ।
ये वसन्ति कुरुक्षेत्रे ते वसन्ति त्रिपिष्टपे ॥")

**दक्षिणेर्म्मा**, [न्] पुं, (दक्षिणे ईर्म्मं व्रणं यस्य ।
"दक्षिणेर्म्मा लुब्धयोगे ।" ५ । ४ । १२६ । इति
अनिच् ।) व्याधशराघातात् दक्षिणाङ्गव्रण-
युक्तमृगः । तत्पर्य्यायः । दक्षिणारुः २ । इत्य-
मरः । १० । २४ ॥ (यथा, भट्टिः । ४ । ४४ ।
"मृगयुमिव मृगोऽथ दक्षिणेर्म्मा
दिशमिव दाहवतीं मरावुदन्यन् ॥")

**दक्षिण्यः**, त्रि, (दक्षिणामर्हतीति । "कडङ्कर-
दक्षिणाच्छ च ।" ५ । १ । ६९ । इति चका-
रात् यत् ।) दक्षिणार्हः । इत्यमरः । ३ । १ । ५ ॥
(यथा, भट्टिः । २ । २९ ।
"दक्षिण्यदिष्टां कृतमार्त्तिजीनै-
स्तद्यातुधानैश्चिचिते प्रसर्पत् ॥")

**दग्धं**, क्ली, कत्तृणम् । इति रत्नमाला ॥

**दग्धः**, त्रि, (दह्यते स्म इति । दह + क्तः ।)
भस्मीकृतः । पोडा इति भाषा । तत्पर्य्यायः ।
प्रुष्टः २ प्लुष्टः ३ उषितः ४ । इत्यमरः । ३ ।

श्वपाकवलगृध्रानां सधर्म्माणो नराधिप ! ॥
नैते कृतयुगे तात ! चरन्ति पृथिवीमिमाम् ।
त्रेताप्रभृति वर्द्धन्ते ते जना भरतर्षभ ! ॥”

**दक्षिणामुखः**, त्रि, (दक्षिणा दक्षिणस्यां दिशि मुखं यस्य ।) दक्षिणदिङ्मुखः । यथा, --
“अमास्नानं गयाश्राद्धं दक्षिणामुखभोजनम् ।
न जीवत्पितृकः कुर्य्यात् कृते च पितृहाभवेत् ॥”
इति तिथ्यादितत्त्वम् ॥

**दक्षिणायनं**, क्ली, (दक्षिणा दक्षिणस्यां दिशि दक्षिणे गोले वा अयनम् ।) सूर्य्यस्य दक्षिणा-
गतिः । सा श्रावणादिषट्सु मासेषु भवति । इत्यमरः ॥ * ॥ यथा, --
“कर्क्कटावस्थिते भानौ दक्षिणायनमुच्यते ।
उत्तरायणमप्युक्तं मकरस्थे दिवाकरे ॥
इति ।
अयनस्योत्तरस्यादौ मकरं याति भास्करः ।
राशिं कर्क्कटकं प्राप्य कुरुते दक्षिणायनम् ॥”
इति विष्णुपुराणोक्ताच्चूडादावयनपरिग्रहः सौरेण ।
दिनमानादिबोधे तु सिद्धान्तादयनपरिग्रहः ।
इति ॥
मृगसंक्रान्तितः पूर्ब्बं पश्चात्तारादिनान्तरे ।
एकवर्षे चतुःपञ्चपलमानक्रमेण तु ॥
षटषष्टिवत्मरानेकदिनं स्यादयनं रवेः ।
एवं चतुःपञ्चदिनमयनारम्भणंक्रमात् ॥
व्युत्क्रमेण च तद्वत् स्यादुदग्यानं रवेर्ध्रुवम् ॥
भवन्त्युत्तरोत्तरञ्च सर्व्वप्राणिनां वलमभिवर्द्धते ॥”
इति सुश्रुते सूत्रस्थाने षष्ठेऽध्याये ॥)

**दक्षिणारुः**, [स्] पुं, (दक्षिणे दक्षिणभागे अरुर्व्रण-भस्य ।) व्याधकर्त्तृकदक्षिणाङ्गव्रणितमृगः ।
इत्यमरः । २ । १० । २४ ॥

**दक्षिणार्हः**, त्रि, (दक्षिणामर्हतीति । अर्ह + “अर्हः ।” ३ । २ । १२ । इत्यच् ।) दक्षिणा-
योग्यः । ऋज्वाशये दक्षिणामर्हति यः । इति
भरतः ॥ तत्पर्य्यायः । दक्षिणीयः २ दक्षिण्यः
३ । इत्यमरः । ३ । १ । ५ ॥

**दक्षिणावर्त्तकी**, स्त्री, (दक्षिणे आवर्त्तते इति । आ + वृत् + ण्वुल् । गौरादित्वात् ङीष् ।)
वृश्चिकालिः । इति राजनिर्घण्टः ॥

**दक्षिणाशापतिः**, पुं, (दक्षिणाशाया दक्षिणस्या दिशः अधिपतिः ।) यमः । इति हेमचन्द्रः ।
२ । ९८ ॥

**दक्षिणीयः**, त्रि, (दक्षिणामर्हतीति । दक्षिणा + “कडङ्करदक्षिणाच्छच ।” ५ । १ । ६९ । इति
छः ।) दक्षिणार्हः । इत्यमरः । ३ । १ । ५ ।
(यथा, हरिवंशे । ४८ । ७९ ।
“क्रतवः संप्रवर्त्त्यन्तां दक्षिणीयैर्द्विजातिभिः ।
दक्षिणाश्चोपवर्त्तन्तां यथोक्ताः सर्व्वसत्रिणः ॥”
तथाच अथर्व्ववेदे । ८ । १० । ४ ।
“यज्ञर्तोदक्षिणीयो वासतेयो भवति य एवं वेद ॥”)
१ । ९९ ॥ (यथा, मनुः । ८ । १८९ ।
“चौरैर्हृतं जलेनोढमग्निना दग्धमेव वा ।
न दद्यात् यदि तस्मात् स न संहरति किञ्चन ॥”)
“पत्राणामामिषं पर्णम् ।
गोर्वर्ज्यमामिषं क्षीरं फले जम्बीरमामिषम् ।
आमिषं रक्तशाकञ्च सर्व्वञ्च दग्धमामिषम् ॥”
इति कर्म्मलोचनम् ॥
(म्लानम् । यथा, अमरुशतके । २४ ।
“रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते ॥”
चन्द्राश्रितराशिभूलकपारिभाषिकगृहम्। यथा,
ज्योतिषतत्त्वे ।
“मृगसिंहौ तृतीयायां प्रथमायां तुलामृगौ ।
पञ्चम्यां बुधराशी द्वौ सप्तम्यां चापयन्त्रभे ॥
नवम्यां सिंहकोटाख्यावेकादश्यां गुरोर्गृहे ।
वृषमीनौ त्रयोदश्यां दग्धसंज्ञास्त्वमी गृहाः ।
दग्धसद्मनि यत् कर्म्म कृतं सर्व्वं विनश्यति ॥”)

**दग्धकाकः**, पुं, (दग्ध इव कृष्णवर्णः काकः ।) द्रोणकाकः । इति हेमचन्द्रः । ४ । ३८९ ॥

**दग्धरथः**, पुं, (दग्धो रथोऽस्य ।) चित्ररथ-गन्धर्व्वः । इति महाभारतम् ॥ (यथा, महा-
भारते । १ । १७१ । ३९ ।
“अस्त्राग्निना विचित्रोऽयं दग्धो मे रथ उत्तमः ।
सोऽहंचित्ररथो भूत्वा नाम्ना दग्धरथोऽभवम् ॥”)

**दग्धरुहः**, पुं, (दग्धोऽपि रोहतीति । रुह + कः ।) तिलकवृक्षः । इति राजनिर्घण्टः ॥

**दग्धरुहा**, स्त्री, (दग्धापि रोहतीति । रुह + कः टाप् ।) दग्धावृक्षः । इति राजनिर्घण्टः ॥

**दग्धा**, स्त्री, (दह्यते स्म इव या । दह + क्तः । ततष्टाप् ।) स्थितार्का दिक् । इति मेदिनी । रे, ७ ॥ वृक्षविशेषः । कुरुह इति ख्यातः ॥ तत्पर्य्यायः । दग्धरुहा २ दग्धिका ३ स्थले-रुहा ४ रोमशा ५ कर्कशदला ६ भस्मरोहा ७ सुदग्धिका ८ । अस्या गुणाः । कटुत्वम् । कषायत्वम् । उष्णत्वम् । कफवातनाशित्वम् । पित्तप्रकोपनत्वम् । जठरानलदीपनत्वञ्च । इति राजनिर्घण्टः ॥ * ॥ मासदग्धा यथा, --

सौरचैत्रपौषयोर्द्वितीया एवं ज्यैष्ठफाल्गुनयोश्चतुर्थी वैशाखश्रावणयोः षष्ठी आषाढाश्विनयोरष्टमी भाद्राग्रहायणयोर्द्दशमी कार्त्तिकमाघयोर्द्वादशी । अस्याः प्रमाणं यथा,

"द्वितीया मीनधनुषोश्चतुर्थी वृषकुम्भयोः ।
मेषकर्कटयोः षष्ठी कन्यामिथुनकेऽष्टमी ॥
दशमी बृश्चिके सिंहे द्वादशी मकरे तुले ।
एभिर्यातो न जीवेत यदि शक्रसमो भवेत् ॥"

इति जौमराः पठन्ति । तेन तदर्थकल्पनमेवोचितम् । ततश्च घातनमिति हन्त्यर्थस्य पाक्षिक-चुरादित्वेन स्वार्थे ञौ रूपं हननमित्यर्थः । किञ्च हिंसनपाठेनैवेष्टसिद्धे घातनपाठो हिंसाप्रेरणार्थः स्यान्न वेति काकदन्तान्वेषणवद्विफलं त्रयाणामेव कातन्त्राद्यसम्मतत्वात् । इति दुर्गादासः ॥

**दण्ड**, त् क तत्पाते । इति कविकल्पद्रुमः ॥ (अदन्त-चुरां-परं-सकं-सेट् ।) तत्पातस्तद्दण्डपातनम् । क, दण्डयति दण्डापयति अपराधिनं राजा । इति दुर्गादासः ॥

**दण्डः**, पुं क्ली, (दण्डयति अनेनेति । दण्ड + घञ् । यद्वा, दाम्यत्यनेनेति । दम् + "ञमन्तात् डः ।" उणां १ । ११३ । इति डः ।) लगुडः । इत्यमरः । ३ । ३ । ४१ ॥ (यथा, हठयोगप्रदीपिकायाम् । ३ । ११ ।

"यथा दण्डहतः सर्पो दण्डाकारः प्रजायते ॥")

तस्य धारणगुणाः । स्खलतः संप्रतिष्ठानत्वम् । शत्रुनिषेधनत्वम् । अवष्टम्भनत्वम् । आयुष्यत्वम् । भयघ्नत्वञ्च । इति राजवल्लभः ॥ (यथा, चिकित्सितस्थाने चतुर्व्विंशेऽध्याये सुश्रुतेनोक्तम् ।

"पुनः सरीसृपव्यालविषाणिभ्यो भयापहम् ।
श्रमस्खलनदोषघ्नं स्थविरे च प्रशस्यते ॥
सत्त्वोत्साहबलस्थैर्य्यधैर्य्यवीर्य्यविवर्द्धनम् ।
अवष्टम्भकरञ्चापि भयघ्नं दण्डधारणम् ॥")

शरणागतरक्षणादि । यथा, --

"शरणागतसंत्राणं भूतानामप्यहिंसनम् ।
बहिर्वेदि च यद्दानं दण्डमित्यभिधीयते ॥"

इति मोक्षधर्म्मः ॥

(दण्डाकारत्वात् छत्रादीनामङ्गविशेषः । यथा, बृहत्संहितायाम् । ७३ । ४, ६ ।

"युवराजनृपतिपत्न्याः सेनापतिदण्डनायकानाञ्च ।
दण्डोऽर्धपञ्चहस्तः समपञ्चकृतार्द्धविस्तारः ॥"
"अन्येषाञ्च नराणां शीतातपवारणन्तु चतुर-

वर्णभेदेन तत्प्रमाणादिकमुक्तम् । यथा, मनौ । २ । ४५-४७ ।

"ब्राह्मणो वैल्वपालाशौ क्षत्त्रियो वटखादिरौ ।
पैलवौदुम्बरौ वैश्वो दण्डानर्हन्ति धर्म्मतः ॥
केशान्तिको ब्राह्मणस्य दण्डः कार्य्यः प्रमाणतः ।
ललाटसम्मितोराज्ञः स्यात्तु नासान्तिको विशः ॥
ऋजवस्ते तु सर्व्वे स्युरव्रणाः सौम्यदर्शनाः ।
अनुद्वेगकरा नृणां सत्वचो नाग्निदूषिताः ॥"

बाणनिक्षेपकालीन स्थानविशेषे, क्ली । यथा, आग्नेयधनुर्व्वेदे ।

"तिर्य्यग्भूतो भवेद्वामो दक्षिणेऽपि भवेदृजुः ।
गुल्फौ पार्ष्णिग्रहौ चैव स्थितौ पञ्चाङ्गुलान्तरौ ॥
स्थानं दण्डं भवेदेतत् द्वादशाङ्गुलमायतम् ॥")

**दण्डः**, पुं, (दण्डयत्यपराधिनमनेनेति । दण्ड + घञ् । यद्वा, दाम्यति शान्तं करोत्यनेन । दम + डः ।) राज्ञां चतुर्थोपायः । (यथा, देवीभागवते । १ । १७ । ३ ।

"विना दण्डं कथं राज्यं करोति जनकः किल ।
धर्म्मे न वर्त्तते लोको दण्डश्चेन्न भवेद् यदि ॥")

स च त्रिविधः । वधः अर्थग्रहणं बन्धनताडनादिश्च । इत्यमरटीकासारसुन्दरी ॥ तत्-पर्य्यायः । साहसम् २ दमः ३ । इत्यमरः । २ । ८ । २१ । (दण्ड + भावे घञ् । दमनम् । (यथा,

अस्याः प्रतिप्रसवो यथा, वैशाखे शुक्ला षष्ठी
ज्यैष्ठे कृष्णा चतुर्थी आषाढे शुक्लाष्टमी श्रावणे
कृष्णा षष्ठी भाद्रे शुक्ला दशमी आश्विने कृष्णा-
ष्टमी कार्त्तिके शुक्ला द्बादशी अग्रहायणे कृष्णा
दशमी पौषे शुक्ला द्बितीया माघे कृष्णा द्बादशी
फाल्गुने शुक्ला चतुर्थी चैत्रे कृष्णा द्बितीया ।
एतत्प्रमाणं यथा, --
"मेषे दिनेशे नृयुगे मृगेन्द्रे
यूके धनुःस्थे कलसे च शुक्ला ।
कुलीरकन्यालिमृगास्यमीन-
वृषेषु कृष्णास्तिथयः प्रदग्धाः ॥" * ॥
दिनदग्धा यथा, -- रविवारे द्बादशी सोमे एका-
दशी मङ्गले दशमी बुधे तृतीया बृहस्पतौ षष्ठी
शुक्रे पञ्चदशी शनौ सप्तमी ।
एतत्प्रमाणं यथा,
"मासा रुद्रा दिशो रामाः षट्पक्षमुनयस्तथा ।
दह्यन्ते तिथयः सप्त सूर्य्याद्यैः सप्तसप्तभिः ॥"
इति ज्योतिःसारसंग्रहः ॥

**दग्धिका**, स्त्री, (कुत्सिता दग्धा । "कुत्सिते ।"
५ । ३ । ७४ । इति कन् ।) दग्धान्नम् । पोडा
भात इति भाषा । चाँची इति ख्याता इति
केचिदिति भरतः ॥ तत्पर्य्यायः । भिस्सटा २ ।
इत्यमरः । २ । ९ । ४९ ॥ भिस्सिटा ३ भिष्मिटा ४
भिष्मिष्टा ५ भिष्मिका ६ । इति तट्टीकासार-
स्रम् ।
समवृत्तदण्डयुक्तं छत्त्रं कार्य्यं तु विप्राणाम् ॥"
चामरादीनामङ्गविशेषश्च । यथा, तत्रैव ।
७२ । ३-४ ।
"अध्यर्धहस्तप्रमितोऽस्य दण्डेः
हस्तोऽथवारत्निसमोऽथवान्यः ।
काष्ठाच्छुभात् काञ्चनरूप्यगुप्तात्
रत्नैर्विचित्रैश्च हिताय राज्ञाम् ॥
षष्ट्यातपत्राङ्कुशवेत्रचाप-
वितानकुन्तध्वजचामराणाम् ।
व्यापीततन्त्रीमधुकृष्णवर्णा
वर्णक्रमेणैव हिताय दण्डाः ॥"
ब्रह्मचारिधार्य्यलगुडाकारपदार्थः । यथा, देवी-
भागवते । १ । १९ । ३१ । शुकं प्रति जनक-
स्योक्तिः ।
"दण्डाजिनकृता चिन्ता यथा तव वनेऽपि च ।
तथैव राज्यचिन्ता मे चिन्तयानस्य वान वा ॥"
मनुः । १२ । १० ।
"वाग्दण्डोऽथ मनोदण्डः कायदण्डस्तथैव च ॥"
दण्ड इवाचरतीति । दण्ड + क्विप् । ततो भावे
घञ् ।) ऊद्‌र्ध्वस्थितिः । दाँडान इति भाषा ।
इति सारसुन्दरी ॥ व्यूहभेदः । (अस्य लक्षण-
भेदादिकं यथा, अग्निपुराणे २४१ अध्याये ।
"मण्डलासंहतौ भागौ दण्डास्ते बहुधा शृणु ।
तिर्य्यग्वृत्तिस्तु दण्डः स्यात् भोगोऽन्या वृत्ति-
रेव च ॥
मण्डलः सर्व्वतोवृत्तिः पृथग्वृत्तिरसंहतः ।
प्रदरो दृढकोऽसह्यश्चापो वैकुक्षिरेव च ॥
प्रतिष्ठः सुप्रतिष्ठश्च श्येनो विजयसञ्जयौ ।
विशालो विजयः सूची स्थूणा कर्णचमूमुखौ ॥
सर्पाख्यो वलयश्चैव दण्डभेदाश्च दुर्ज्जयाः ।
अतिक्रान्तः प्रतिक्रान्तः कक्ष्याभ्याञ्चैकपक्षतः ॥
अतिक्रान्तस्तु पक्षाभ्यां त्रयोऽन्ये तद्बिपर्य्यये ।
पक्षोरस्यैरतिक्रान्तः प्रतिष्ठोऽन्यो विपर्य्ययः ॥
स्थूणापक्षो धनुःपक्षो द्बिस्थूणो दण्ड ऊद्‌र्ध्वगः ।
द्बिगुणोऽयन्त्वतिक्रान्तपक्षोऽन्यस्य विपर्य्ययः ॥
द्बिचतुर्दण्ड इत्येते ज्ञेया लक्षणतः क्रमात् ।
गोमूत्रिका हि सञ्चारी शकटो मकरस्तथा ॥")
प्रकाण्डः । अश्वः । कोणः । मन्थानः । सैन्यम् ।
कालः । घडी इति भाषा । मानभेदः । काठा

सुन्दरी ॥ दग्धावृक्षः । इति राजनिर्घण्टः ॥

**दग्धेष्टका**, स्त्री, (दग्धा इष्टका ।) झामकम् ।

इति हारावली । २१४ ॥

**दघ**, इ त्यागे । अवने । इति कविकल्पद्रुमः ॥

(भ्वां-परं सकं-सेट् ।) इ, दङ्घ्यते । अवनं
रक्षणम् । इति दुर्गादासः ॥

**दघ**, न घातने । इति कविकल्पद्रुमः ॥ (स्वां-

परं-सकं-सेट् ।) न, दघ्नोति । दघ घाते ।

इति भाषा । ("हस्तैश्चतुर्भिर्भवतीह दण्डः ।"

इति लीलावती ॥) चण्डांशोः पारिपार्श्विकः ।

(यथा, महाभारते । ३ । ३ । ६८ ।

"ये च तेऽनुचराः सर्व्वे पादोपान्तं समाश्रिताः ।

माठरारुणदण्डाद्यास्तांस्तान् वन्देऽशनिक्षुभान् ॥")

यमः । अभिमानः । इति मेदिनी । डे, १६ ॥ ग्रह-

भेदः । इति हेमचन्द्रः ॥ इक्ष्वाकुराजपुत्त्रः । इति
रामायणम् ॥ (यथा, हरिवंशे । १० । २२ ।
"धृष्टकश्चाम्बरीषश्च दण्डश्चेति सुतास्त्रयः ।
यश्चकार महात्मा वै दण्डकारण्यमुत्तमम् ॥"
क्रोधहन्तुरसुरस्यांशेनावतीर्णः स्वनामख्यात-
नृपविशेषः । यथा, महाभारते । १ । ६७ । ४६ ।
"क्रोधहन्तेति यस्तस्य बभूवावरजोऽसुरः ।
दण्ड इत्यभिविख्यातः स आसीन्नृपतिः क्षितौ ॥"
विष्णुः । यथा, महाभारते । १३ । १४९ । १०५ ।
"धनुर्द्धरो धनुर्व्वेदो दण्डो दमयिता दमः ॥"
महादेवः । यथा तत्रैव । १२ । २८४ । १६ ।
"शत्रुन्दमाय दण्डाय पर्णचीरपटाय च ॥")
कालभेददण्डस्य प्रमाणं यथा, --
"षट्पलं पात्रनिर्म्माणं गभीरं चतुरङ्गुलम् ।
स्वर्णमाषैः कृतच्छिद्रं कुण्डैश्च चतुरङ्गुलैः ॥
यावज्जलप्लुतं पात्रं तत्कालं दण्डमेव च ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥ * ॥
ब्राह्मणं प्रति दण्डोद्यमे दण्डनिपातने च दोषो यथा, प्रायश्चित्ततत्त्वे ।
विप्रदण्डोद्यमे कृच्छ्रमतिकृच्छ्रं निपातने ॥"
"कौटसाक्ष्ये दण्डा यथा, --
लोभान्मोहाद्भयान्मैत्रात् कामात् क्रोधात्तथैव च ।
अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते ॥
एषामन्यतमे स्थाने यः साक्ष्यमनृतं वदेत् ।
तस्य दण्डविशेषांस्तु प्रवक्ष्याम्यनुपूर्ब्बशः ॥
लोभात् सहस्रं दण्ड्यस्तु मोहात् पूर्ब्बन्तु साह-
सम् ।

दण्डस्य भेदा यथा, --
पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः ।
मध्यमः पञ्च विज्ञेयः सहस्रन्त्वेव चोत्तमः ॥
ऋणे देये प्रतिज्ञाते पञ्चकं शतमर्हति ।
अपह्नवे तद्द्विगुणं तन्मनोरनुशासनम् ॥ * ॥
दोषविशिष्टकन्यादाने दण्डो यथा, --
यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति ।
तस्य कुर्य्यान्नृपो दण्डं स्वयं षण्णवतिं पणान् ॥
अकन्येति च यः कन्यां ब्रूयाद्द्वेषेण मानवः ।
स शतं प्राप्नुयाद्दण्डं तस्या दोषमदर्शयन् ॥ * ॥
गवादीनां शस्यभक्षणे दण्डो यथा, --
पथि क्षेत्रे परिवृते ग्रामान्तीयेऽथ वा पुनः ।
स पालः शतदण्डार्हो विपालान् वारयेत् पशून् ॥
क्षेत्रादिसीमाविवादे दण्डा यथा, --
क्षेत्रकूपतडागानामारामस्य गृहस्य च ।
सामन्तप्रत्ययो ज्ञेयः सीमासेतुविनिर्णयः ॥
सामन्ताश्चेन्मृषा ब्रूयुः सेतौ विवदतां नृणाम् ।
सर्व्वे पृथक् पृथग्दण्ड्या राज्ञा मध्यमसाहसम् ॥
गृहं तडागमारामं क्षेत्रं वा भीषया हरन् ।
शतानि पञ्च दण्ड्यः स्यादज्ञानाद्द्विशतो दमः ॥ * ॥
वाक्पारुष्ये दण्डा यथा, --
शतं ब्राह्मणमाक्रुश्य क्षत्त्रियो दण्डमर्हति ।
वैश्योऽध्यर्द्धशतं द्वे वा शूद्रस्तु वधमर्हति ॥
पञ्चाशद्ब्राह्मणो दण्ड्यः क्षत्त्रियस्याभिशंसने ।
वैश्य स्यादर्द्धपञ्चाशच्छूद्रे द्वादशको दमः ॥
समवर्णे द्विजातीनां द्वादशैव व्यतिक्रमे ।
वादेष्ववचनीयेषु तदेव द्विगुणं भवेत् ॥
एकजातिर्द्विजातींस्तु वाचा दारुणया क्षिपन् ।
जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः ॥
नामजातिग्रहन्त्वेषामभिद्रोहेण कुर्व्वतः ।

केशेषु गृह्णतो हस्तौ छेदयेदविचारयन् ।
पादयोर्द्दाढिकायान्तु ग्रीवायां वृषणेषु च ॥
त्वग्भेदकः शतं दण्ड्यो लोहितस्य तु दर्शकः ।
मांसभेत्ता तु षण्णिष्कान् प्रवास्यस्त्वस्थिभेदकः ॥
वनस्पतीनां सर्व्वेषामुपभोगो यथा यथा ।
तथा तथा दमः कार्य्यो हिंसायामिति धारणा ॥
मनुष्याणां पशूनाञ्च दुःखाय प्रहृते सति ।
यथा यथा महद्दुःखं दण्डं कुर्य्यात्तथा तथा ॥
अङ्गानां पीडनायाञ्च प्राणशोणितयोस्तथा ।
समुत्थानव्ययं दाप्यः सर्व्वं दण्डमथापि वा ॥
द्रव्याणि हिंस्याद्यो यस्य ज्ञानतोऽज्ञानतोऽपि वा ।
स तस्योत्पादयेत्तुष्टिं राज्ञो दद्याच्च तत्समम् ॥
चर्म्मचार्म्मिकभाण्डेषु काष्ठलोष्टमयेषु च ।
मूल्यात् पञ्चगुणो दण्डः पुष्पमूलफलेषु च ॥
यानस्यैव तु यातुश्च यानस्वामिन एव च ।
दशातिवर्त्तनान्याहुः शेषे दण्डो विधीयते ॥
छिन्ननास्ये भिन्नयुगे तिर्य्यक् प्रतिमुखागते ।
अक्षभङ्गे च यानस्य चक्रभङ्गे तथैव च ॥
छेदने चैव यन्त्राणां योक्त्ररश्म्योस्तथैव च ।

भयाद्द्वौ मध्यमौ दण्डौ मैत्रात् पूर्ब्बं
चतुर्गुणम् ॥
कामाद्दशगुणं पूर्ब्बं क्रोधात्तु त्रिगुणं परम् ।
अज्ञानात् द्वे शते पूर्णे चाशिष्याच्छतमेव तु
॥
एतानाहुः कौटसाक्ष्ये प्रोक्तान्
दण्डान्मनीषिभिः ।
धर्म्मस्याव्यभिचारार्थमधर्म्मनिधनाय च ॥
कौटसाक्ष्यन्तु कुर्व्वाणान् त्रीन् वर्णान्
धार्म्मिको
नृपः ।
प्रवासयेद्दण्डयित्वा ब्राह्मणन्तु विवासयेत् ॥
* ॥
दण्डस्य स्थानानि यथा, --
दशस्थानानि दण्डस्य मनुः
स्वायम्भुवोऽब्रवीत् ।
त्रिषु वर्णेषु यानि स्युरक्षतो ब्राह्मणो व्रजेत् ॥
उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम् ।
चक्षुर्नासा च कर्णौ च धनं देहन्तथैव च ॥
अनुबन्धं परिज्ञाय देशकालौ च तत्त्वतः ।
सारापराधौ चालोक्य दण्डं दण्ड्येषु
पातयेत् ॥ * ॥
अधर्म्म्यदण्डेषु दोषो यथा, --
अधर्म्मदण्डनं लोके यशोघ्नं कीर्त्तिनाशनम्
।
अस्वर्ग्यञ्च परत्रापि तस्मात्तत् परिवर्ज्जयेत्
॥
अदण्ड्यान् दण्डयन्राजा
दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशो महदाप्नोति नरकञ्चैव गच्छति ॥ *
॥
दण्डस्य पौर्व्वापर्य्येनियमो यथा, --
वाग्दण्डं प्रथमं कुर्य्यात् धिग्दण्डं तदनन्तरम्
॥
तृतीयं धनदण्डन्तु वधदण्डमतः परम् ।
वधेनापि यदा त्वेतान्निग्रहीतुं न शक्नुयात् ॥
तदैषु सर्व्वमेवैतत् प्रयुञ्जीत चतुष्टयम् ॥

निःक्षेप्योऽयोमयः शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः
॥
धर्म्मोपदेशं दर्पेण विप्राणामस्य कुर्व्वतः ।
तप्तमासे चयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः ॥
श्रुतं देशञ्च जातिञ्च कर्म्मशारीरमेव च ।
वितथेन ब्रुवन् दर्पाद्दाप्यः स्याद्द्विशतं दमम्
॥
काणं वाप्यथवा खञ्जमन्यं वापि तथाविधम् ।
तथ्येनापि ब्रुवन् दाप्यो दण्डं कार्षापणावरम्
॥
मातरं पितरं जायां भ्रातरं तनयं गुरुम् ।
आक्षारयन् शतं दाप्यः पन्थानं चाददद्गुरोः
॥
ब्राह्मणक्षत्त्रियाभ्यान्तु दण्डः कार्य्यो
विजानता ।
ब्राह्मणे साहसः पूर्ब्बः क्षत्त्रिये त्वेव मध्यमः ॥
विट्शूद्रयोरेखमेव स्वजातिं प्रतितत्त्वतः ।
छेदवर्ज्जं प्रणयनं दण्डस्येति विनिश्चयः ॥ *
॥
दण्डपारुष्ये दण्डा यथा, --
येन केनचिदङ्गेन हिंस्याच्चेत् श्रेष्ठमन्त्यजः ।
छेत्तव्यं तत्तदेवास्य तन्मनोरनुशासनम् ॥
पाणिमुद्यम्य दण्डं वा पाणिच्छेदनमर्हति ।
पादेन प्रहरन् कोपात् पादच्छेदनमर्हति ॥
सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः ।
कठ्यां कृताङ्को निर्व्वास्यः स्फिचं
वास्यावकर्त्तयेत् ॥
अवनिष्ठीवतो दर्पात् द्वावोष्ठौ छेदयेन्नृपः ।
अवमूत्रयतो मेढ्रमवशर्द्धयतो गुदम् ॥

आक्रन्दे चाप्यपेहीति न दण्डं
मनुरब्रवीत् ॥
यत्रापवर्त्तते युग्यं वैगुण्यात् प्राजकस्य
तु ।
तत्र स्वामी भवेद्दण्ड्यो हिंसायां द्विशतं
दमम् ॥
प्राजकश्चेद्भवेदाप्तः प्राजको
दण्डमर्हति ।
युग्यस्थाः प्राजकेनाप्ते सर्व्वे दण्ड्याः
शतं शतम् ॥
स चेत्तु पथि संरुद्धः पशुभिर्व्वा रथेन
वा ।
प्रमापयेत् प्राणभृतस्तत्र दण्डो
विचारितः ॥
मनुष्यमारणे क्षिप्रं चौरवत्किल्विषी
भवेत् ।
प्राणभृत्सु महत्स्वर्द्धं गोगजोष्ट्रहयादिषु
॥
क्षुद्रकाणां पशूनाञ्च हिंसायां द्विशतो
दमः ।
पञ्चाशत्तु भवेद्दण्डः शुभेषु मृगपक्षिषु ॥
गर्द्दभाजाविकानाञ्च दण्डः स्यात्
पञ्चमाषकः ।
माषकस्तु भवेद्दण्डः श्वशूकरनिपातने
॥
भार्य्या पुत्त्रश्च दासश्च शिष्यो भ्राता
च सोदरः ।
प्राप्तापराधास्ताड्याः स्यू रज्वा
वेणुदलेन वा ॥
पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथञ्चन
।
अतोऽन्यथा तु प्रहरन् प्राप्तः
स्याच्चौरकिल्विषम् ॥
चौरस्य दण्डविधिर्यथा, --
यस्तु रज्जुं घटं कूपाद्धरेद्भिन्द्याच्च यः
प्रपाम् ।
स दण्डं प्राप्नुयान्माषं तच्च तस्मिन्
समाहरेत् ॥
धान्यं दशभ्यः कुम्भेभ्यो
हरतोऽभ्यधिकं वधः ।

|  |  |  |  |
| --- | --- | --- | --- |
|  |  |  | शेषेऽप्येकादशगुणं दाप्यस्तस्य च तद्धनम् ॥<br>तथाधरिममेयानां शतादभ्यधिके वधः ।<br>सुवर्णरजतादीनामुत्तमानाञ्च वाससाम् ॥<br>पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते ।<br>शेषेऽप्येकादशगुणं मूल्याद्दण्डं प्रकल्पयेत् ॥<br>पुरुषाणां कुलीनानां नारीणाञ्च विशेषतः ।<br>मुख्यानां चैव रत्नानां हरणे वधमर्हति ॥<br>महापशूनां हरणे शास्त्राणामौषधस्य च ।<br>कालमासाद्य कार्य्यञ्च राजा दण्डं प्रकल्पयेत् ॥<br>गोसु ब्राह्मणसंस्थासु छूरिकायाश्च भेदने ।<br>पशूनां हरणे चैव सद्यः कार्य्योऽर्द्धपादिकः ॥<br>सूत्रकार्पासकिण्वानां गोमयस्य गुडस्य च । |

दघ्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च ॥
वेणुवैदलभाण्डानां लवणानान्तथैव च ।
मृण्मयानाञ्च हरणे मृदो भस्मन एव च ॥
मत्स्यानां पक्षिणाञ्चैव तैलस्य च घृतस्य च ।
मांसस्य मधुनश्चैव यच्चान्यत् पशुसम्भवम् ॥
अन्येषाञ्चैवमादीनां मद्यानामोदनस्य च ।
पक्वान्नानाञ्च सर्व्वेषां तन्मूल्याद्द्विगुणो दमः ॥
पुष्पेषु हरिते धान्ये गुल्मवल्लीनगेषु च ।
अन्येष्वपरिपूतेषु दण्डः स्यात् पञ्च कृष्णलः ।
परिपूतेषु धान्येषु शाकमूलफलेषु च ॥
निरन्वये शतं दण्डः सान्वयेऽर्द्धशतं दमः ।
स्यात् साहसं त्वन्वयवत् प्रसभं कर्म्म यत् कृतम् ॥
निरन्वयं भवेत् स्तेयं हृत्वापव्ययते च यत् ।
यस्त्वेतान्युपकॢप्तानि द्रव्याणि स्तेनयेन्नरः ॥
तमाद्यं दण्डयेद्राजा यश्चाग्निं चोरयेद्गृहात् ।
येन येन यथाङ्गेन स्तेनो नृषु विचेष्टते ।
तत्तदेव हरेत्तस्य प्रत्यादेशाय पार्थिवः ॥” * ॥
परदारहरणे दण्डा यथा, --
परदाराभिमर्षेषु प्रवृत्तान् नन्महीपतिः ।
उद्वेजनकरैर्द्दण्डैश्चिह्नयित्वा प्रवासयेत् ॥
परस्य पत्न्या पुरुषः संभाषां योजयन् रहः ।
पूर्ब्बमाक्षारितो दोषैः प्राप्नुयात् पूर्ब्बसाहसम् ॥
परस्त्रियं योऽभिवदेत् तीर्थेऽरण्ये वनेऽपि वा ।
नदीनामपि संभेदे स संग्रहणमाप्नुयात् ॥
उपचारक्रिया केलिः स्पर्शो भूषणवाससाम् ।
सहखट्वासनञ्चैव सर्व्वं संग्रहणं तथा ॥
स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत्तया ।
परस्परस्यानुमते सर्व्वं संग्रहणं स्मृतम् ।
अब्राह्मणः संग्रहणे प्राणान्तं दण्डमर्हति ॥
अभ्यादध्युश्च काष्ठानि तत्र दह्येत पापकृत् ॥
संवत्सराभिशस्तस्य दुष्टस्य द्विगुणो दमः ।
व्रात्यया सह संवासे चाण्डाल्या तावदेव तु ॥
शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमावसन् ।
अगुप्तमङ्ग सर्व्वस्वैर्गुप्तं सर्व्वेण हीयते ॥
वैश्यः सर्व्वस्वदण्ड्यः स्यात् संवत्सरनिरोधतः ।
सहस्रं क्षत्त्रियो दण्ड्यो मौण्ड्यं मूत्रेण चार्हति ।
ब्राह्मणीं यद्यगुप्तान्तु गच्छेतां वैश्यपार्थिवौ ।
वैश्यं पञ्चशतं कुर्य्यात् क्षत्त्रियन्तु सहस्रिणम् ॥
उभावपि तु तावेव ब्राह्मण्या गुप्तया सह ।
विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना ॥
सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद्व्रजन् ।
शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह सङ्गतः ॥
मौण्ड्यं प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते ।
इतरेषान्तु वर्णानां दण्डः प्राणान्तिको भवेत् ॥
वैश्यश्चेत् क्षत्त्रियां गुप्तां वैश्यां वा क्षत्त्रियो व्रजेत् ।
यो ब्राह्मण्यामगुप्तायां तावुभौ दण्डमर्हतः ॥
सहस्रं ब्राह्मणो दण्डं दाप्यो गुप्ते तु ते व्रजन् ।
शूद्रायां क्षत्त्रियविशोः साहस्रो वै भवेद्दमः ।
क्षत्त्रियायामगुप्तायां वैश्ये पञ्चशतं दमः ॥
मूत्रेण मौण्ड्यमृच्छेत्तु क्षत्त्रियो दण्डमेव वा ॥
“क्षुवतस्तु मनोर्जज्ञे इक्ष्वाकुर्घ्राणतः सुतः ।
तस्य पुत्त्रशतज्येष्ठा विकुक्षिनिमिदण्डकाः ॥”
एतन्नृपसन्निवेशस्थानं दण्डकारण्यमितिख्यातम्।
यथा, रामायणे । १ । १ । ४० ।
“रामस्तु पुनरालक्ष्य नागरस्य जनस्य च ।
तत्रागमनमेकाग्रो दण्डकान् प्रविवेश ह ॥”)

**दण्डकन्दकः**, पुं, (दण्डवत् कन्दो मूलं यस्य । कप् ।)
धरणीकन्दः । इति राजनिर्घण्टः ॥

**दण्डका**, स्त्री, (दण्डक + स्त्रीलिङ्गत्वादत्र टाप् ।)
जनस्थानम् । दण्डकारण्यम् । इति जटाधरः ॥
(यथा, रामायणे । २ । ३० । ३९ ।
“मम सन्ना मतिः सीते ! नेतुं त्वां दण्डकावनम् ।
वसिष्यामीति सा त्वं मामनुयातुं सुनिश्चिता ॥”)

**दण्डकाकः**, पुं, (दण्डो यमदण्ड इव काकः ।
अशुभसूचकत्वादस्य तथात्वम् ।)
द्रोणकाकः ।
इति हेमचन्द्रः ॥

**दण्डढक्का**, स्त्री, (दण्डताड्यमाना ढक्का ।) वाद्य-
विशेषः । दामामा इति नागरा इति च भाषा । तत्पर्य्यायः । नाली २ घटी ३ याम-
नाली ४ यमेरुका ५ यामघोषः ६ । इति त्रिकाण्डशेषः ॥ दम्ममः ७ दुन्दुभिः ८ दुन्दुः ९
गभीरिका १० । इति शब्दरत्नावली ॥

**दण्डताम्री**, स्त्री, (दण्डेन ताड्यमाना ताम्री ताम्र-
निर्म्मितवाद्यम् ।) ताम्रीवाद्यम् । इति शब्द-
रत्नावली ॥

**दण्डधरः**, पुं, (दण्डस्य धरः । दण्डं धारयति ।

न सम्भाषां परस्त्रीभिः प्रतिषिद्धः समाचरेत्
।
निषिद्धो भाषमाणस्तु सुवर्णं दण्डमर्हति ॥
नैष चारणदारेषु विधिर्नात्मोपजीविषु ।
सज्जयन्ति हि ते नारीर्निगूढाश्चारयन्ति च
॥
किञ्चिदेव तु दाप्यः स्यात् संभाषां
ताभिराचरन् ।
योऽकामां दूषयेत् कन्यां स सद्यो वधमर्हति
॥
सकामां दूषयंस्तुल्यो न वधं प्राप्नुयान्नरः ।
कन्यां भजन्तीमुत्कृष्टं न किञ्चिदपि दापयेत्
॥
जघन्यं सेवमानान्तु संयतां वासयेद्गृहे ।
उत्तमां सेवमानस्तु जघन्यो वधमर्हति ॥
शुल्कं दद्यात् सेवमानः समामिच्छेत् पिता
यदि ।
अभिषह्य तु यः कन्यां कुर्य्याद्दर्पेण मानवः
॥
तस्याशु कर्त्त्ये अङ्गुल्यौ दण्डञ्चार्हति
षट्शतम् ।
सकामां दूषयंस्तुल्यो
नाङ्गुलिच्छेदमाप्नुयात् ।
द्विशतन्तु दमं दाप्यः प्रसङ्गविनिवृत्तये ॥
कन्यैव कन्यां या कुर्य्यात् तस्याः
स्याद्द्विशतो दमः ।
शुल्कञ्च द्विगुणं दद्याच्छिफाश्चैवाप्नुयाद्दश
॥
या तु कन्यां प्रकुर्य्यात् स्त्री सा सद्यो
मौण्ड्य-
मर्हति ।
अङ्गुल्योरेव च च्छेदं खरेणोद्वहनं तथा ॥
भर्त्तारं लङ्घयेद्या तु स्त्री ज्ञातिगुणदर्पिता ।
तां श्वभिः खादयेद्राजा संस्थाने
बहुसंस्थिते ॥
पुमांसं दाहयेत् पापं शयने तप्त आयसे ।
अगुप्ते क्षत्त्रियावैश्ये शूद्रां वा ब्राह्मणो
व्रजन् ।
शतानि पञ्च दण्ड्यः स्यात्
सहस्रन्त्वन्त्यज-
स्त्रियम् ॥ * ॥
ऋत्विजं यस्त्यजेद्याज्यो याज्यञ्चर्त्विक्
त्यजेद्-
यदि ।
शक्तं कर्म्मण्यदुष्टञ्च तयोर्दण्डः शतं शतम्
॥
न माता न पिता न स्त्री न
पुत्त्रस्त्यागमर्हति ।
त्यजन्नपतितानेतान् राज्ञा दण्ड्यः
शतानि षट् ॥”
इति मनुः ॥ * ॥
दण्डस्य फलं यथा, युक्तिकल्पतरुः ।
“दण्डः संरक्षते धर्म्मं तथैवार्थं विधानतः
।
कामं संरक्षते यस्मात् त्रिवर्गो दण्ड
उच्यते ॥
राजदण्डभयाल्लोकाः पापाः पापं न
कुर्व्वते ।
यमदण्डभयादेके परलोकभयात्तथा ॥
दण्डश्चेन्न भवेल्लोके विभजन् साध्वसाधु
वा ।
शूले मत्स्यानि वा यक्षन् दुर्ब्बलान् बलव-
त्तराः ॥
अपराद्धेषु भूपालो दण्डं कुर्य्याद्यथाविधि
।
अन्यथाकरणात्तस्मात्राजा भवति
किल्विषी ॥
विरुद्धमपि जल्पन्तो दूता दण्ड्या न
भूभृता ।
दूतहन्ता तु नरकमाविशेत् सचिवैः सह
॥
विपक्षवचनादन्यो भृत्यो दण्डं न चार्हति
।
विपक्षवचनाद्दण्डः स्वामिनं नरकं नयेत्
॥”

**दण्डकः**, पुं क्ली, (दण्ड इव कायतीति । कै +
धृञ् धारणे + पचाद्यचि णिलुक् ।
इत्युज्ज्वल-
दत्तः । २ । २२ ।) यमः । इत्यमरः । १ ।
१ । ६२ ॥
(यथा, राजतरङ्गिण्याम् । ४ । ६५९ ।
“ब्रह्मदण्डकृतं दण्डं भुक्त्वा दण्डधराधिपः
।
अकाण्डदण्डस्रष्टाथ ययौ दण्डधरान्तिकम्
॥”)
राजा । इति जटाधरः ॥ (यथा, रघुः । ९ ।
३ ।
“बलनिषूदनमर्थपतिञ्च तं
श्रमनुदं मनुदण्डधरान्वयम् ॥”)
त्रि, लगुडधारकः ॥ (शासकः । यथा,
महा-
भारते । १२ । २३ । ४३ ।
“एवमेतन्मया कार्य्यं नाहं दण्डधरस्तव ॥”
चतुर्थोपाययुक्तः । यथा, भागवते । ४ ।
२१ । २२ ।
“अहं दण्डधरो राजा प्रजानामिव योजितः
॥”)

**दण्डधारः**, पुं, (दण्डं धरतीति । धृ + “कर्म्मण्यण् ।”
३ । २ । १ । इत्यण् ।) पृथ्वीनाथः ।
(यथा,
गोः रामायणे । २ । ८८ । ७ ।
“उदीच्याश्च प्रतीच्याश्च दाक्षिणात्याश्च
केरलाः ।
दण्डधाराश्च सामुद्रा रत्नान्युपहरन्तु ते
॥”)
प्रेताधिपः । इति मेदिनी । रे, २६६ ॥
(सनाम-
ख्यातनृपविशेषः । स तु
क्रोधवर्द्धनस्यासुर-
स्यांशेन जातः । यथा, महाभारते । १ ।
६७ । ४७ ।
“क्रोधवर्द्धन इत्येव यस्त्वन्यः परिकीर्त्तितः
।
दण्डधार इति ख्यातः सोऽभवन्मनुजेश्वरः
॥”
धृतराष्ट्रपुत्त्राणामेकतमः । यथा, तत्रैव
धृत-

| | | |
|---|---|---|
| | कः ।) श्लोकविशेषः । छन्दोभेदः । इत्यमर-<br>टीकासारसुन्दरी ॥ अस्य विवरणं छन्दः-<br>शब्दे द्रष्टव्यम् ॥ (ह्रस्वो दण्डः । “ह्रस्वे ।” ५ ।<br>३ । ८६ । इति कन् । क्षुद्रलगुडः । सौँटा इति भाषा ॥ पुं, इक्ष्वाकुपुत्त्रः । यथा, भाग-<br>वते । ९ । ६ । ४ । | राष्ट्रपुत्त्रनामकथने । १ । ६७ । १०२ ।<br>“निषङ्गी कवची पाशी दण्डधारो धनुर्ग्रहः ॥”) |

त्रि, दण्डधरः ॥ (शासकः । यथा, राज-
तरङ्गिण्याम् । ४ । १०९ ।
"दण्डधारे त्वयि क्षाप ! क्षितिमेतां
प्रशासति ।
को वैरस्नेहयोः पारमनासाद्यावसीदति
॥")

**दण्डनायकः**, पुं, (दण्डं राज्ञां चतुर्थोपायं नय-
तीति । नी + ण्वुल् ।) सेनानीः । स
चतुरङ्ग-
बलाध्यक्षः । इति हेमचन्द्रः । ३ । ३८९
॥
(यथा, राजतरङ्गिण्याम् । ७ । ९६९ ।
"कन्दर्पे कोटभृत्यानां भिन्नानां
सङ्ग्रहोद्यते ।
कुध्यन् राजपुरीं राजा
व्यसृजद्दण्डनायकम् ॥")

**दण्डनीतिः**, स्त्री, (दण्डेन नीयते या । यद्वा, दण्डो
नीयतेऽनयेति । नी + कर्म्मणि करणे वा
क्तिन् ।)
व्यर्थशास्त्रम् । इत्यमरः । १ । ६ । ५ ॥
तत्
चाणक्यादिप्रणीतं नीतिशास्त्रम् । इति
भरतः ।
तस्य निरुक्तिर्यथा, --
"दण्डेन नीयते चेदं दण्डं नयति वा पुनः
।
दण्डनीतिरिति ख्याता त्रीँल्लोकानतिवर्त्तते ॥
तच्च ब्रह्मकृतशतसहस्राध्यायपरिमितम्
।
तद्यथा, --
"ततोऽध्यायसहस्राणां शतञ्चक्रे
सुबुद्धिजम् ।
यत्र धर्म्मस्तथैवार्थः कामश्चैवाभिवर्णितः
॥
त्रिवर्ग इति विख्यातो गण एष स्वयम्भुवा
।
चतुर्थो भोक्ष इत्येव पृथगर्थः पृथग्गुणः ॥
व्यूहाश्च विविधाभिख्या विविधं
युद्धकौशलम् ॥
उत्पाताश्च निपाताश्च सुयुद्धं
सुपलायनम् ।
शस्त्राणां पालनं ज्ञानं तथैव भरतर्षभ ! ॥
बलव्यसननिर्य्युक्तं तथैव बलहर्षणम् ।
पीडा चापदकालश्च पत्तिज्ञानञ्च
पाण्डव ! ॥
तथा खातविधानञ्च योगसञ्चार एव च ।
चौरैराटविकैश्चोग्रैः परराष्ट्रस्य पीडनम् ॥
अग्निदैरसदैश्चैव प्रतिरूपककारकैः ।
श्रेणिमुख्योपजापेन वीरुधश्छेदनेन च ॥
दूषणेन च नागानां आशङ्काजननेन च ।
आराधनेन भक्तस्य प्रत्ययोपार्जनेन च ॥
सप्ताङ्गस्य च राज्यस्य ह्रासवृद्धी
समञ्जसम् ।
दूतसामर्थ्ययोगाश्च राष्ट्रस्य च विवर्द्धनम् ।
अरिमध्यस्थमित्राणां सम्यक् चोक्तं
प्रपञ्चनम् ॥
अवमर्द्दः प्रतीघातस्तथा चैव बलीयसाम् ।
व्यवहारः सुसूक्ष्मश्च तथा
कण्टकशोधनम् ॥
श्रमो व्यायामयोगश्च त्यागो द्रव्यस्य
संग्रहः ॥
अभृतानाञ्च भरणं भृतानाञ्चान्वेक्षणम् ।
अर्थस्य काले दानञ्च व्यसने चाप्रसङ्गिता
॥
तथा राजगुणाश्चैव सेनापतिगुणाश्च ह ।
कारणञ्च त्रिवर्गस्य गुणदोषास्तथैव च ॥
दुष्टेप्सितञ्च विविधं वृत्तिश्चैवानुजीविनाम्
।
शङ्कितत्वञ्च सर्व्वस्य प्रमादस्य च
वर्ज्जनम् ॥
अलब्धलाभो लब्धस्य तथैव च विवर्द्धनम्
।
प्रदानञ्च विवृद्धस्य पात्रेभ्यो विधिवत्तदा ॥
विसर्गोऽर्थस्य धर्म्मार्थं कामहेतुकमुच्यते ।
चतुर्थं व्यसनाघाते तच्चैवात्रानुवर्णितम् ॥
द्वासप्ततिविधा चैव शरीरस्य प्रतिक्रिया ।
देशजातिकुलानाञ्च धर्म्माः समनुवर्णिताः ॥
धर्म्मश्चार्थश्च कामश्च मोक्षश्चात्रानुवर्णितः
।
उपायश्चात्र लिप्सा च विविधा भूरिदक्षिण !
॥
मूलकर्म्मक्रिया चात्र मायायोगश्च वर्णितः ।
दूषणं स्रोतसाञ्चैव वर्णितञ्च स्थिराम्भसाम् ॥
यैर्यैरुपायैर्लोकस्तु न चलेदार्य्यवर्त्मनः ।
तत् सर्व्वं राजशार्दूल ! नीतिशास्त्रेषु वर्णितम्
॥
एतत् कृत्वा शुभं शास्त्रं ततः स भगवान्
प्रभुः ।
देवानुवाच संहृष्टः सर्व्वान् शक्रपुरोगमान् ॥
उपकाराय लोकस्य त्रिवर्गस्थापनाय च ।
नवनीतं सरस्वत्या बुद्धिरेषा प्रभाविता ॥
दण्डेन सहिता ह्येषा लोकरक्षणकारिका ।
निग्रहानुग्रहरता लोकाननुचरिष्यति ॥"
इति महाभारते राजधर्म्मः ॥
दुर्गा । यथा, --
"नयानयगतालोके विकल्प निलयामला ।
दण्डनाद्गमनाद्वापि दण्डनीतिरिति स्मृता
॥"
इति देवीपुराणे ४५ अध्यायः ॥

**दण्डपांशुलः**, पुं, (दण्डेन दण्डधारणेन पांशुलो
नीचः ।) द्वारपालः । इति शब्दरत्नावली ॥

**दण्डपाणिः**, पुं, (दण्डः पाणौ यस्य ।) यमः ।
(यथा, भागवते । १ । १७ । ३५ ।
"परीक्षितैवमादिष्टः स कलिर्जातवेपथुः ।
तमुद्यतासिमाहेदं दण्डपाणिमिवोद्यतम् ॥")
काशीस्थशिवगणविशेषः । स
पूर्णभद्रयक्षपुत्रः
हरिकेशनामा शिवमाराध्य शिववरेण काश्यां
दण्डनायकत्वमवाप्तवान् । यथा, --
"भक्तस्य धीरस्य तपोनिधेर्द्ददौ
हरो वराणां निकरं तदा मुदा ।
क्षेत्रस्य यक्षास्य मम प्रियस्य भो
भवाधुना दण्डधरो वरान्मम ॥

मोक्षस्यापि त्रिवर्गोऽन्यः प्रोक्तः सत्वं रजस्तमः ।
स्थानं वृद्धिः क्षयश्चैव त्रिवर्गश्चैव दण्डजः ॥
नात्मा देशश्च कालश्चाप्युपायाः कृत्यमेव च ।
सहायाः कारणञ्चैव षड्वर्गो नीतिजः स्मृतः ॥
त्रयी चान्वीक्षिकी चैव वार्त्ता च भरतर्षभ ! ।
दण्डनीतिश्च विपुला विद्यास्तत्र निदर्शिताः ॥
अमात्यरक्षा प्रणिधी राजपुत्रस्य लक्षणम् ।
चारश्च विविधोपायः प्रणिधेयः पृथग्विधः ॥
सामभेदप्रदानञ्च ततो दण्डश्च पार्थिव ।
उपेक्षा पञ्चमी चात्र कात्स्नर्येन समुदाहृता ॥
मलश्च वर्णितः कृत्स्नस्तथा भेदार्थ एव च ।
विभ्रमश्चैव मन्त्रस्य सिद्ध्यसिद्ध्योश्च यत् फलम् ॥
सन्धिश्च विविधाभिख्यो हीनो मध्यस्तथोत्तमः ।
भयं सत्कारवित्ताख्यं कात्स्नर्येन परिवर्णितम् ॥
यात्राकालश्च चत्वारस्त्रिवर्गस्य च विस्तरः ।
विजयो धर्म्मयुक्तश्च तथार्थविजयश्च ह ॥
आसुरश्चैव विजयस्तथा कात्स्नर्येन वर्णितः ।
लक्षणं पञ्चवर्गस्य त्रिविधञ्चात्र वर्णितम् ॥
प्रकागश्चाप्रकाशश्च दण्डीऽथ परिशब्दितः ।
प्रकाशोऽष्टविधस्तत्र गुह्यश्च बहुविस्तरः ॥
रया नागा हयाश्चैव पादाताश्चैव पाण्डव ! ।
क्रोधजानि तथोग्राणि कामजानि तथैव च ।
दशोक्तानि कुरुश्रेष्ठ ! व्यसनान्यत्र चैव ह ॥
मृगयाक्षास्तथा पानं स्त्रियश्च भरतर्षभ ! ।
कामजान्याहुराचार्य्याः प्रोक्तानीह स्वयम्भुवा ॥
वाक्पारुष्यं तथोग्रत्वं दण्डपारुष्यमेव च ।
निग्रहोऽथात्मनस्त्यागमर्थदूषणमेव च ॥
यन्त्राणि विविधान्येव क्रियास्तेषाञ्च वर्णिताः ।
अवमर्द्दः प्रतीघातः केतनानाञ्च भञ्जनम् ।
चैत्यद्रुमावमर्द्दश्च रोधः कर्म्मान्तनाशनम् ॥
उपस्कारोऽथ वसनं तथोपायाश्च वर्णिताः ।
पनवानकशङ्खानां भेरीणाञ्च युधिष्ठिर ! ॥
उपार्ज्जनञ्च द्रव्याणां परिमर्द्दश्च तानि षट् ।
लब्धस्य च प्रशमनं सताञ्चैवाभिपूजनम् ॥
विद्वद्भिरेकीभावश्च दानहोमविधिज्ञता ।
मङ्गलालभनञ्चैव शरीरस्य प्रतिक्रिया ॥
आहारयोजनञ्चैव नित्यमास्तिक्यमेव च ।
एकेन च पथोत्थेयं सत्यत्वं मधुरा गिरः ॥
उत्सवानां समाजानां क्रियाः केतनजास्तथा ।
प्रत्यक्षाश्च परोक्षाश्च सर्व्वाधिकरणेष्वथ ॥
वृत्तिर्भरतशार्दूल ! नित्यञ्चैवान्ववेक्षणम् ।
अदण्ड्यत्वं च विप्राणां युक्त्या दण्डनिपातनम् ॥
अनुजीविस्वजातिभ्योगुणेभ्यश्च समुद्भवः ।
रक्षणञ्चैव पौराणां राष्ट्रस्य त्त विवर्द्धनम् ॥
मण्डलस्था च या चिन्ता राजन् ! द्वादश-राजिका ॥
स्थिरस्त्वमद्यादि दुरात्मदण्डकः
सुपालकः पुण्यकृताञ्च मतुप्रियः ।
त्वं दण्डपाणिर्भव नामतोऽधुना
सर्व्वान् गणान् शाधि ममाज्ञयोत्कटान् ॥”
“त्वत्सात्कृतक्षेत्रवरेऽद्य यक्षराट्
कस्त्वामनाराध्य सुमुक्तिभाग्जनः ।
सभाजनं प्रागत एव ते चरेत्
ततः समर्च्चां मम भक्त आदरात् ॥
मद्भक्तियुक्तोऽपि विना त्वदीयां
भक्तिं न काशीवसतिं लभेत ।
गणेषु देवेषु हि मानवेषु
तदग्रमान्यो भव दण्डपाणे ! ॥”
इति काशीखण्डे ३ २ अध्यायः ।
(स्वनामख्यातश्चन्द्रवंशीयनृपविशेषः । यथा,
मात्स्ये । ५० । ८७ ।
“वहीनरात्मजश्चैव दण्डपाणिर्भविष्यति ॥”
अयन्तु मासत्रयाधिकचत्वारिंशद्वर्षपर्य्यन्तं राज्यं
चकार । यथा, राजावल्याम् १ परिच्छेदे ।
“चत्वारिंशत् समाश्चैव सोऽपि मासत्रयाधिकाः ।
बुभुजे पृथिवीमेतां दण्डपाणिर्महाबलः ॥”

| | | |
|---|---|---|
| विष्टिनांवश्चराश्चेह देशिका इति चाष्टमम् ॥<br>अङ्गान्येतानि कौरव्य ! प्रकाशानि बलस्य च ।<br>जङ्गमाजङ्गमाश्चोक्ताश्चूर्णयोगा विषादयः ॥<br>अर्गे चाभ्यवहार्य्ये वाप्युपांशुस्त्रिविधः स्मृतः ।<br>अस्तिर्म्मित्रमुदामीन इत्येतेऽप्यनुत्वर्णिताः ॥<br>कृतम्नो मार्गगुणश्चैय तथा भूमिगुणाश्च ह ।<br>आत्मरक्षणमाश्वासः सर्गाणां चान्ववेक्षणम् ॥<br>कल्पना विविधाश्चापि नृनागरथवाजिनाम्। | | |

दण्डधरे, त्रि । यथा, महाभारते । १ ।
१३९ । २८ ।
"भीमसेनो महाबाहुर्द्दण्डपाणिरिवान्तकः
।
प्रविवेश महासेनां मकरः सागरं यथा ॥")

**दण्डपारुष्यं**, क्ली, (दण्डेन यत् पारुष्यं परुषता ।
दण्ड्यतेऽनेनेति दण्डो देहस्तेन यत्
पारुष्यं
विरुद्धाचरणमिति मिताक्षरा ।) राज्ञां
सप्त-
व्यसनान्तर्गतव्यसनविशेषः । इति
हेमचन्द्रः ।
३ । ४०३ ॥
अष्टादशविवादान्तर्गतविवाद-
विशेषः । तत्तु ताडनादि । इति
मनुटीकायां
कुल्लूकभट्टः ॥ (यथा, मनुः । ८ । २७८
।
"अत ऊद्ध्व प्रवक्ष्यामि
दण्डपारुष्यनिर्ण्यम् ॥")

**दण्डपालः**, पुं, (दण्डं शरीरं पालयतीति । पालि
+ अण् ।) अर्द्धशफरमत्स्यः । दाँडिका
इति
भाषा । इति हारावली । १९० ॥ (दण्डेन
पालयतीति । पालि + अच् ।) द्वारपालः
॥

**दण्डपालकः**, पुं, (दण्डपालवत् कायतीति । कै +
कः ।) शकुलमत्स्यः । इति हारावली ।
१९१ ॥

**दण्डबालधिः**, पुं, (दण्ड इव बालधिर्य्यस्य ।) हस्ती
।
इति शब्दरत्नावली ॥

**दण्डभृत्**, पुं, (दण्डं चक्रभ्रामणार्थं लगुडादिकं
बिभर्त्तीति । भृ + क्विप् तुगागमश्च ।)
कुम्भ-
कारः । इति त्रिकाण्डशेषः ॥ (दण्डं दमनं
समाहारः । यतीनां दण्डं मृगचर्म्म च । यथा,
देवीभागवते । १ । १९ । ३१ ।
"दण्डाजिनकृता चिन्ता यथा तव वनेऽपि च
।
तथैव राज्यचिन्ता मे चिन्तयानस्य वा न वा
॥")

**दण्डादण्डि**, व्य, (दण्डैश्च दण्डैश्च प्रहृत्य प्रवृत्तं
युद्धम् ।
"इच् कर्म्मव्यतिहारे ।" ५ । ४ । १२७ ।
इति इच् ।) परस्परदण्डकरणकप्रहाररूप
युद्धम् । इति व्याकरणम् ॥ लाठालाठि इति
भाषा ॥

**दण्डारः**, पुं, (दण्डं ऋच्छतीति । ऋ + अण् ।)
वार्हनम् । मत्तहस्ती । शरयन्त्रकम् । कुम्भ-
कारस्य चक्रम् । इति मेदिनी । रे, १६८ ॥

**दण्डाहतं**, क्ली, (दण्डेन आहतम् ।) घोलम् ।
इत्यमरः । २ । ९ । ५३ ॥ (दण्डेन ताडिते,
त्रि ॥)

**दण्डिकः**, पुं, (दण्डोऽस्त्यस्येति । दण्ड + "अत इनि-
ठनौ ।" ५ । २ । ११५ । इति ठन् ।) दण्ड-
धारकः । छडिवरदार इति आसावरदार इति
च भाषा । मत्स्यविशेषः । डानिकणा माछ
इति भाषा । अस्य गुणाः । कफवायुपित्त-
नाशित्वम् । तिक्तत्वम् । लघुत्वञ्च । इति
राज-
वल्लभः ॥ (दण्डदातरि नियामके, त्रि । यथा,
महाभारते । ६ । ११ । ३६ ।
"न तत्र राजा राजेन्द्र ! न दण्डो न च
दण्डिकः ।
स्वधर्म्मेणैव धर्म्मज्ञ ! ते रक्षन्ति परस्परम्
॥")

**दण्डिका**, स्त्री, (दण्डवदाकृतिरस्त्यस्याः । दण्ड +
ठन् + टाप् ।) हारविशेषः । इति जटाधरः ॥
रज्जुः । यथा, अङ्गुल्योत्कर्षं दण्डिकां
छिनत्ति ।
इति सुपद्मव्याकरणम् ॥ दण्डिका रज्जुरिति

"आगारादभिनिष्क्रान्तः पवित्रोपचितो
मुनिः ।
समुपोढेषु कामेषु निरपेक्षः परिव्रजेत् ॥
एक एव चरेन्नित्यं सिद्ध्यर्थमसहायवान् ।
सिद्धिमेकस्य संपश्यन्न जहाति न हीयते
॥
अनग्निरनिकेतः स्याद् ग्राममन्नार्थमाश्रयेत्
।
उपेक्षकोऽसङ्कसुको मुनिर्भावसमाहितः ॥
कपालं वृक्षमूलानि कुचेलमसहायता ।
समता चैव सर्व्वस्मिन्नेतन्मुक्तस्य लक्षणम्
॥
नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।
कालमेव प्रतीक्षेत निर्द्देशं भृतको यथा ॥
दृष्टिपूतं न्यसेत् पादं वस्त्रपूतं पिबेज्जलम्
।
सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ॥
अतिवादांस्तितिक्षेत नावमन्येत कञ्चन ।
न चेमं देहमाश्रित्य वैरं कुर्व्वीत केनचित्
॥
क्रुध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत्
।
सप्तद्वारावकीर्णाञ्च न वाचमनृतां वदेत् ॥
अध्यात्मरतिरासीनो निरपेक्षो निरामिषः ।
आत्मनैव सहायेन सुखार्थी विचरेदिह ॥
न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया
।
नानुशासनवादाभ्यां भिक्षां लिप्सेत
कर्हिचित् ॥
न तापसैर्ब्राह्मणैर्व्वा वयोभिरपि वा श्वभिः
।
आकीर्णं भिक्षुकैर्व्वान्यैरागारमुपसंव्रजेत् ॥
कॢप्तकेशनखश्मश्रुः पात्री दण्डी
कुसुम्भवान् ।
विचरेन्नियतो नित्यं सर्व्वभूतान्यपीडयन्
॥
अतैजसानि पात्राणि तस्य स्युर्न्निर्व्रणानि
च ।

बिभर्त्तीति ।) दण्डधारके, त्रि ॥

**दण्डयात्रा**, स्त्री, (दण्डाय शत्रुदमनाय या यात्रा प्रयाणम् ।) दिग्विजयः । संयानम् । वर-यात्रा । इति मेदिनी । रे, २६५ ॥

**दण्डयामः**, पुं, (दण्डं यच्छतीति । यम + अण् ।) यमः । दिनम् । अगस्त्यः । इति मेदिनी । मे, ६० ॥

**दण्डरी**, स्त्री, डङ्गरीफलम् । इति राजनिर्घण्टः ॥

**दण्डवादी**, [न्] पुं, (दण्डेन वदतीति । वद + णिनिः ।) दर्व्वटः । द्वारपालः । इति हारा-वली । १२८ ॥ दण्डवक्तरि, त्रि ॥

**दण्डवासी**, [न्] पुं, (दण्डेन वसतीति । वस + णिनिः ।) द्वारपालः । इति त्रिकाण्डशेषः ॥ एकग्रामाधिकृतजनः । इति जटाधरः ॥

**दण्डविष्कम्भः**, पुं, (दण्डं मन्थानदण्डं विष्कभ्नाति निबध्नाति यत्र । वि + स्कम्भ + अधिकरणे घञ् । वेः स्कभ्नातेर्नित्यमिति षत्वम् ।) यत्र स्तम्भादौ आकर्षणार्थं रज्वा दण्डो निबध्यते सः । घोलमओया खुँटी इति भाषा । तत्-पर्य्यायः । कुठरः २ । इत्यमरः । २ । ९ । ७४ ॥

**दण्डवृक्षकः**, पुं, (पत्रविहीनत्वात् दण्ड इव वृक्षः । ततः स्वार्थे कन् ।) स्नुही । इति राज-निर्घण्टः ॥

**दण्डहस्तं**, क्ली, (दण्ड इव हस्तो वृन्तरूपो यस्य ।) तगरपुष्पम् । इति राजनिर्घण्टः ॥

**दण्डाजिनं**, क्ली, शाठ्यम् । इति शब्दार्थकल्प-तट्टीकाकारः ॥

**दण्डितः**, त्रि, (दण्डः सञ्जातोऽस्येति । दण्ड + "तदस्य सञ्जातं तारकादिभ्य इतच् ।" ५ । २ । ३६ । इति इतच् ।) कृतदण्डः । तत्पर्य्यायः । दापितः २ साधितः ३ । इति हेमचन्द्रः ॥

**दण्डी**, [न्] पुं, (दण्डोऽस्त्यस्येति । दण्ड + "अत-इनिठनौ ।" ५ । २ । ११५ । इति इनिः ।) जिनविशेषः । इति त्रिकाण्डशेषः ॥ (स तु कवी-नामन्यतमः काव्यादर्शदशकुमारचरितादिग्रन्थ-प्रणेता । शङ्कराचार्य्यसमकालीनोऽयम् । यथा, शङ्करविजये । १५ । १४० ।
"स कथाभिरवन्तिषु प्रसिद्धान्
विबुधान् बाणमयूरदण्डिमुख्यान् ।
शिथिलीकृतदुर्म्मताभिमानान्
निजभाष्यश्रवणोत्सुकांश्चकार ॥")
यथा, कालिदासः ।
"जाते जगति वाल्मीके कविरित्यभिधीयते ।
कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि ॥"
दमनकवृक्षः । इति राजनिर्घण्टः ॥ यमः । (यथा, महाभारते । १ । १९० । १७ ।
"तं वृक्षमादाय रिपुप्रमाथी
दण्डीव दण्डं पितृराज उग्रम् ॥")
द्वाःस्थः । चतुर्थाश्रमी । (अस्य व्यवहारादिकं यदुक्तं मनौ । ६ । ४१-५८ ।
तेषामद्भिः स्मृतं शौचं चमसानामिवाध्वरे ॥
अलावुं दारुपात्रञ्च मृण्मयं वैदलन्तथा ।
एतानि यतिपात्राणि मनुः स्वायम्भुवोऽब्रवीत् ॥
एककालञ्चरेद्भैक्षं न प्रसज्जेत विस्तरे ।
भैक्षे प्रसक्तो हि यतिर्विषयेष्वपि सज्जति ॥
विधूमे सन्नमुषले व्यङ्गारे भुक्तवज्जने ।
वृत्ते शरावसम्पाते भिक्षां नित्यं यतिश्चरेत् ॥
अलाभे न विषादी स्याल्लाभे चैव न हर्षयेत् ।
प्राणयात्रिकमात्रः स्यात् मात्रासङ्गाद्विनिर्गतः ॥
अभिपूजितलाभांस्तु जुगुप्सेतैव सर्व्वशः ।
अभिपूजितलाभैश्च यतिर्म्मुक्तोऽपि बध्यते ॥"
दण्डग्रहणादेव दण्डी । भार्य्यादिषु विद्यमानेषु दण्डग्रहणेन प्रत्यवायो जायते । यदुक्तं महा-निर्व्वाणतन्त्रे १३ पटले ।
"स्थितायां यौवनयुतकान्तायां परमेश्वरि ! ।
सर्व्वं हि विफलं तस्य यः कुर्य्याद्दण्डधारणम् ॥
विद्यते पितरौ देवि ! यः कुर्य्याद्दण्डधारणम् ।
सन्न्यासं विफलं तस्य रौरवाख्यं गमिष्यति ॥
विद्यते बालभावेन यस्य कान्ता सुतस्तथा ।
सन्न्यासधारणं तस्य वृथा हि परमेश्वरि ! ॥
सगुरुश्चापि शिष्यश्च रौरवाख्यं प्रपद्यते ॥"
अधुनातनदण्डिनस्तु प्रायशः शङ्कराचार्य्यसम्प्र-दायान्तर्गता अतस्तेषां निर्गुणब्रह्मोपासनैव

| तरुः ॥ (कपटिनां बहिर्दृश्यादिकं यतीनां दण्डाजिनवत् आर्य्यलिङ्गत्वेन प्रतीयमानत्वात् तदर्थोऽत्रोपचर्य्यते । दण्डञ्च अजिनञ्च द्वयोः | | परमो धर्म्मः । एते तु मुण्डिनः प्रायशः परि- हितरञ्जितवस्त्रा रुद्राक्षमालाधारिणश्च । दण्डिनस्तु द्वादशवर्षपर्य्यन्तं भिक्षापर्य्यटनादिकं विधाय दण्डान् परित्यज्य परमहंसाश्रममाश्र- |
|---|---|---|

येयुः इति साम्प्रदायिकाः ॥ एतेषां काशी एव प्रधानतमं वासस्थानम् ॥ * ॥
महादेवः ।
यथा, महाभारते । १३ । १७ । १२९ ।
"मुण्डोविरूपो विकृतो दण्डी कुण्डी विकुर्व्वणः ॥"
योगाचार्य्यविशेषः । यथा, शिवपुराणे वायु-संहितायाम् । उत्तरभागे । १० । ५ ।
श्रीकृष्ण उवाच ।
"युगावर्त्तेषु सर्व्वेषु योगाचार्य्यच्छलेन तु ।
अवताराणि शर्व्वस्य शिष्यांश्च भगवन् ! वद ॥"
उपमन्युरुवाच ।
"महाकालश्च शूली च दण्डी मुण्डी स एव च ॥"
धृतराष्ट्रपुत्त्राणामेकतमः । यथा, महाभारते धृतराष्ट्रपुत्त्रनामकथने । १ । ६७ । १०२ ।
"निषङ्गी कवची दण्डी दण्डधारो धनुर्ग्रहः ॥"
दण्डीत्यत्र पाशीति केचित् ॥) दण्डयुक्ते त्रि ।
इति हेमचन्द्रः । ३ । ३८५ ॥ (यथा, महा-भारते । १३ । १४ । ३७४ ।
"दण्डी मुण्डी कुशी चीरी घृताक्तोमेखलीकृतः ॥")

**दण्डोत्पलं**, क्ली, (दण्डयुक्तमुत्पलमिव ।) वृक्ष-विशेषः । डानिपोला इति डानकुनि इति च भाषा । अस्य गुणाः ।
क्षयश्वासकासनाशि-त्वम् । अग्निदीपनत्वञ्च । इति राजवल्लभः ॥
तत्तु पीतरक्तश्वेतपुष्पभेदेन त्रिविधम् । पीतस्य पर्य्यायः । गोवन्दनी २ गन्धवल्ली ३ सहदेवी ४
सहा ५ । रक्तस्य पर्य्यायः । विश्वदेवा १ । श्वेतस्य । दण्डोत्पला १ । इति रत्नमाला ॥

बालमूढास्वतन्त्रार्त्तमत्तोन्मत्तापवर्ज्जितम् ।
कर्त्ता ममेदं कर्म्मेति प्रतिलाभेच्छया च यत् ॥
अपात्रे पात्रमित्युक्ते कार्य्ये चाधर्म्मसंहिते ।
यद्दत्तं स्यादवज्ञानात् तददत्तमिति स्मृतम् ॥"
इति मिताक्षरा ॥

**दत्तः**, पुं, राजविशेषः । स अग्निसिंहनन्दनः । इति हेमचन्द्रः । ३ । ३६० ॥ (स तु जैनविशेषः ।
अपरः क्षत्त्रियवंशोत्पन्नो नृपविशेषः । यथा, महाभारते । १२ । २९६ । १५ ।
"आयुर्मतङ्गो दत्तश्च द्रुपदो मात्स्य एव च ॥"
यदुवंशीयस्य राजाधिदेवस्य पुत्त्रः । यथा, हरिवंशे । ३८ । २ ।
"राजाधिदेवपुत्त्रास्तु जज्ञिरे वीर्य्यवत्तराः ।
दत्तातिदत्तौ बलिनौ पानश्वः श्वेतवाहनः ॥")
वैश्यस्योपाधिविशेषः । यथा, --
"शर्म्मादिवश्च विप्रस्य वर्म्मा त्राता च भूभुजः ।
भूतिर्दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत् ॥"
इत्युद्वाहतत्त्वम् ॥
अधुना कायस्थादेरुपाधिश्च । (यथा, कुल-दीपिकायाम् ।
"गौडेऽष्टौ कीर्त्तिमन्तश्चिरवसतिकृता मौलिका ये हि सिद्धा स्ते दत्ताः सेनदासाः करगुहसहिताः पालिताः सिंहदेवाः ॥")
भगवदवतारविशेषः । स अत्रिपुत्त्रः दत्तात्रेय इति नाम्ना ख्यातः । इति श्रीभागवतम् ॥ (पुत्त्र-विशेषः । यथा, देवीभागवते । १ । ६ । ४८ ।
"कुण्डः सहोढः कानीनः क्रीतः प्राप्तस्तथा वने ।

पुत्त्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजनि निवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा प्रतिगृह्णीया-दिति ।" इति वशिष्ठः ॥ तस्य गोत्रधनप्राप्ति-र्यथा, --
"गोत्ररिक्थे जनयितुर्न हरेद्दत्त्रिमः सुतः ।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥
पितुर्गोत्रेण यः पुत्त्रः संस्कृतः पृथिवीपते ! ।
आचूडान्तं न पुत्त्रः स पुत्त्रतां याति चान्यतः ॥
चूडाद्या यदि संस्कारा निजगोत्रेण वै कृताः ।
दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते ॥
ऊर्द्ध्वन्तु पञ्चमाद्वर्षान्न दत्ताद्याः सुता नृप ! ।
गृहीत्वा पञ्चवर्षीयपुत्त्रेष्टिं प्रथमञ्चरेत् ॥"
इत्युद्वाहतत्त्वम् ॥
दत्तको द्विविधः । केवलदत्तकः द्व्यामुष्यायणदत्त-कश्च । केवलदत्तको जनकेन प्रतिग्रहीत्रर्थमेव दत्तः तस्यैव पुत्त्रः । द्व्यामुष्यायणस्तु जनकप्रति-ग्रहीतृभ्यामावयोरयमितिसंप्रतिपन्नः स उभयो-रपि पुत्त्रः ।" इति मिताक्षरा ॥

**दत्ताप्रदानिकं**, क्ली, (दत्तस्य आप्रदानं ग्रहण-मस्त्यस्य । दत्ताप्रदान + ठन् ।) अष्टादश-विवादपदान्तर्गतविवादपदविशेषः । दत्तस्य पुन-राहरणं यस्मिन् विवादपदे तत् । यथा, नारदः ।

**दण्डोत्पला**, स्त्री, (दण्डोत्पल + टाप् ।) श्वेत-
पुष्पदण्डोत्पलम् । इति रत्नमाला ॥

**दण्ड्यः**, त्रि, (दण्ड्यते इति । दण्ड + कर्म्मणि ण्यत् ।
यद्वा, दण्डमर्हतीति । दण्ड +
"दण्डादिभ्यो यत् ।"
५ । १ । ६६ । इति यत् ।) दण्डनीयः ।
दण्डि-
तव्यः । (यथा, मार्कण्डेये । २८ । ३४ ।
"यश्चोल्लङ्घ्य स्वकं धर्म्मं
स्ववर्णाश्रमसंज्ञितम् ।
नरोऽन्यथा प्रवर्त्तेत स दण्ड्यो भूभृतो
भवेत् ॥")
तत्पर्य्यायः । दण्डार्हः २ । इति जटाधरः
॥
(यथा, रघुः । १ । २५ ।
"स्थित्यै दण्डयतो दण्ड्यान् परिणेतुः
प्रसूतये ॥")

**दत्**, पुं, दन्तः । इति शब्दचन्द्रिका । अस्य बहु-
वचने दतः ॥

**दत्तं**, त्रि, (दीयते इति । दा + क्तः ।) रक्षितम् ।
कृतदानम् । तत्पर्य्यायः । विसृष्टम् २ ।
इति
त्रिकाण्डशेषः ॥ विश्राणितम् ३ । इति
शब्द-
रत्नावली ॥ (यथा, माघे । १ । १५ ।
"स्वहस्तदत्ते मुनिमासने मुनि-
श्चिरन्तनस्तावदभिन्यवीविशत्॥"
दा + भावे क्तः ।) दाने, क्ली । तत्
सप्तविधं
यथा, --
"दत्तं सप्तविधं प्रोक्तमदत्तं षोडशात्मकम् ।
पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात्
प्रत्युपकारतः ।
स्त्रीशुल्कानुग्रहार्थञ्च दत्तं दानविदो विदुः ॥
अदत्तन्तु भयक्रोधशोकावेशरुगन्वितैः ।
तथोत्कोचपरीहारव्यत्यासच्छलयोगतः॥
दत्तः केनापि चाशक्तौ धनग्राहिसुताः स्मृताः
॥"
तथा, महाभारते । १ । १२० । ३४ ।
"दत्तः क्रीत उपक्रीत उपगच्छेत् स्वयञ्च यः
॥")

**दत्तकः**, पुं, (दत्त एव । स्वार्थे कन् ।) द्वादश-
विधपुत्त्रान्तर्गतपुत्त्रविशेषः ।
सपिण्डदत्तकस्य
अशौचव्यवस्था । यथा, "सापिण्डस्य
पुत्त्रीकरणे
तु सपिण्डमरणादिनिमित्तंदत्तकस्य
तन्मरणा-
दिनिमित्तं सपिण्डाना दशरात्रमेव
निर्व्विवादम् ।
इति अनन्तभट्टकृतदत्तकदीधितिः ॥ * ॥
औरसपुत्त्रेण सह तस्य समभागित्वम् ।
यथा, --
"दत्तपुत्त्रे यथाजाते कदाचित्त्वौरसो भवेत् ।
पितुर्व्वित्तस्य सर्व्वस्य भवेतां समभागिनौ ॥
इत्यपि वचनं शूद्रविषयम् ।" इति
दत्तकचन्द्रिका ॥
अन्यत् पोष्यपुत्त्रशब्दे द्रष्टव्यम् ॥

**दत्तकपुत्त्रः**, पुं, (दत्तक एव पुत्त्रः ।) द्वादशविध-
पुत्त्रान्तर्गतपुत्त्रविशेषः । यथा, याज्ञवल्क्ये ।
"दद्यान्माता पितावा यं स पुत्त्रो दत्तको
भवेत् ॥"
तत्परिग्रहणस्य प्रकारो यथा, --
"शुक्रशोणितसम्भवः पुत्त्रो
मातापितृनिमित्तकः ।
तस्य प्रदानविक्रयत्यागेषु मातापितरौ
प्रभवतः ॥
नत्वेकं पुत्त्रं दद्यात् प्रतिगृह्णीयाद्वा स हि
सन्ता-
नाय पूर्ब्बेषाम् ।
स्त्री पुत्त्रं न दद्यात् प्रतिगृह्णीयाद्वा अन्यत्रानु-
ज्ञानाद्भर्त्तुः ॥
"दत्त्वा द्रव्यमसम्यग्यः
पुनरादातुमिच्छति ।
दत्ताप्रदानिकं नाम व्यवहारपदं हि तत्
॥"
"असम्यगविहितमार्गेण ।" इति
मिताक्षरा ॥

**दत्तात्मा**, [न्] पुं, (दत्तः आत्मा येन ।) पुत्त्र-
विशेषः । यथा, --
"दत्तात्मा तु स्वयं दत्तः ।" इति
कात्यायनः ॥ अस्य
विवरणम् । "दत्तात्मा तु पुत्त्रो यो
मातापितृ-
विहीनस्ताभ्यां त्यक्तो वातवाहं पुत्त्रो
भवामीति
स्वयं दत्तत्वमुपगतः ।" इति मिताक्षरा ।
२ । १३४ ॥
(विश्वदेवानामन्यतमः । यथा,
महाभारते ।
१३ । ९२ । ३४ ।
"सोमपः सूर्य्यसावित्रो दत्तात्मा
पुण्डरीयकः ॥")

**दत्तानपकर्म्म**, [न्] क्ली, (दत्तस्य अनपकर्म्म
आदानं यत्र ।) दत्ताप्रदानिकम् । इति
मनुः ॥

**दत्तिः**, स्त्री, (दा + भावे क्तिन् ।) दानम् । इति
शब्दरत्नावली ॥ (यथा, रघुः । ८ ।
८६ ।
"अपशोकमनाः कुटुम्बिनी-
मनुगृह्णीष्व निवापदत्तिभिः ॥")

**दत्तेयः**, पुं, (दत्ताया अपत्यं पुमान् । दत्ता + ढक् ।)
इन्द्रः । इति त्रिकाण्डशेषः ॥

**दद**, ङ दाने । धृतौ । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-सकं-सेट् ।) ङ, ददते । इति
दुर्गा-
दासः ॥

**ददनं**, क्ली, (दद + भावे ल्युट् ।) दानम् । इति

| | | |
|---|---|---|
| | | शब्दरत्नावली ॥<br>**दद्रुः**, पुं, कच्छपः । इति संक्षिप्तसारे उणादि-<br>वृत्तिः ॥ (ददाति कण्डूमिति । दद + बाहुल-<br>कात् रुः । यद्वा, दरिद्राति दुर्गच्छत्यनेनेति । दरिद्रा + मृगय्वादित्वात् कुप्रत्ययेन साधुः । इत्यु-<br>ज्ज्वलदत्तः । १ । ९२ ।) रोगविशेषः । दाद |

इति भाषा । तस्य रूपान्तराणि । दर्द्रुः २
दद्रूः ३ दर्द्रूः ४ । इति भरतधृतशब्दभेदः ॥
तस्य लक्षणं यथा, --
"सकण्डुरागपिडकं दद्रुमवणमुन्नतम् ॥"
इति माधवकरः ॥
तस्यौषधम् यथा, --
"विडङ्गैडगजाकुष्ठनिशासिन्धूत्थसर्षपैः ।
मूत्राम्बुपिष्टो लेपोऽयं दद्रकुष्ठविनाशनः ॥
प्रपुन्नाडस्य वीजानि धात्री सर्ज्जरसः स्नुही
।
सौवीरपिष्टं दद्रूणामेतदुद्वर्त्तनं परम् ॥
आरग्वधस्य पत्राणि आरनालेन पेषयेत् ।
दद्रुकिट्टिमकुष्ठानि हन्ति सिध्मानमेव च ॥"
इति गारुडे १७५ अध्यायः ॥ * ॥
"एकश्च त्रिफलाभागस्तथा भागद्वयं शिव !
।
सोमराजस्य वीजानां जग्धं पथ्या च दद्रुणुत्
॥
अम्बुतक्रं सगोमूत्रं क्वथितं लवणान्वितम् ।
कांस्यघृष्टं खरं लेपात कुष्ठदद्रुविनाशनम् ॥
हरिद्रा हरितालञ्च दूर्व्वा गोमूत्रसैन्धवम् ।
अयं लेपो हन्ति दद्रुं पामानं वै गरं तथा ॥"
इति गारुडे १९४ अध्यायः ॥ * ॥
"मरीचं त्रिवृतं कुष्ठं हरितालं मनःशिला ।
देवदारु हरिद्रे द्वे कुष्ठं मांसी च चन्दनम् ॥
विशाला करवीरञ्च अर्कक्षीरं शकृत्पलम् ।
एषाञ्च कार्षिको भागो विषस्यार्द्धपलं भवेत्
॥
प्रस्थं कटुकतैलस्य गोमूत्रेऽष्टगुणे पचेत् ।
मृत्पात्रे लौहपात्रे वा शनैर्मृद्वग्निना पचेत् ॥
पामा विचर्च्चिका चैव दद्रुविस्फोटकानि च
।
अभ्यङ्गेन प्रणश्यन्ति कोमलत्वञ्च जायते
॥"
इति च गारुडे १९८ अध्यायः ॥ * ॥
अथ दद्रुचिकित्सा ।
"कुष्ठकृमिघ्नो दद्रुघ्नो निशासैन्धवसर्षपाः
।
अम्लपिष्टः प्रलेपोऽयं दद्रुकुष्ठनिसूदनः ॥
हेमक्षीरी व्याधिघातः शिरीषो
निम्बः सर्ज्जो वत्सकः साजकर्णः ।
शीघ्रं तीव्रा नाशयन्तीह दद्रूः
स्नानालेपोद्वर्षणेषु प्रयुक्ताः ॥"
इति च सुश्रुते चिकित्सितस्थाने
नवमेऽध्याये ॥)

**दद्रुकः**, पुं, (दद्रुरेव । स्वार्थे कन् ।) दद्रुरोगः ।
इति शब्दरत्नावली ॥

**दद्रुघ्नः**, पुं, (दद्रुं दद्रुरोगं हन्तीति । हन + टक् ।)
चक्रमर्द्दकः । इत्यमरः । २ । ४ । १४७
॥ (यथा,
भावप्रकाशे क्षुद्रकुष्ठचिकित्सायाम् ।
"वाकुची चाथ दद्रुघ्नः पिचुमर्द्दो हरीतकी
॥"
अस्य गुणा यथा, --
"दद्रुघ्नपत्रं दोषघ्नमम्लं वातकफापहम् ।
कण्डूकासकृमिश्वासदद्रुकुष्ठप्रणुल्लघु ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**दद्रुणः**, त्रि, (दद्रुरस्त्यस्येति । दद्रु + "लोमादि-
पामादिपिच्छादिभ्यः शनेलचः ।" ५ । २
। १०० ।
इति नः ।) दद्रुरोगी । इत्यमरः । २ । ६ ।
५९ ॥

**दद्रुनाशिनी**, स्त्री, (दद्रुं नाशयतीति । नश +
णिच + णिनिः । ङीप् ।) तैलिनीकीटः ।
इति
राजनिर्घण्टः ॥

**दद्रुरोगी**, [न्] त्रि, (दद्रुरोगोऽस्त्यस्येति । दद्रु-
रोग + इनिः ।) दद्रुरोगविशिष्टः । देदुया
इति
भाषा । तत्पर्य्यायः । दद्रुणः २ । इत्यमरः
।
२ । ६ । ५९ ॥

**दद्रूः**, पुं, (दरिद्राति दुर्गच्छत्यङ्गमनेनेति । दरिद्रा +
त्वम् । दीपनत्वम् । स्निग्धत्वम् ।
कषायानुरस-
त्वम् । पाकेऽम्लत्वम् । पित्तमेदःप्रदत्वम् ।
मूत्र-
कृच्छ्रप्रतिश्यायातीसाररुचिकार्श्येषु
शस्तत्वञ्च ।
इति भावप्रकाशः ॥ स्वादुत्वम् । हृद्यत्वम्
।
रोचनत्वम् । मङ्गल्यत्वम् । इति
राजवल्लभः ॥ * ॥
अथ पक्वदुग्धदधिगुणाः । रुच्यत्वम् ।
स्निग्धत्वम् ।
उत्तमगुणत्वम् । पित्तानिलापहत्वम् ।
सर्व्व-
धात्वग्निबलवर्द्धनत्वञ्च ॥ * ॥

निःसारदुग्धदधिगुणाः ।
संग्राहित्वम् । शीतल-

त्वम् । वातलत्वम् । लघुत्वम् ।
विष्टम्भित्वम् ।
दीपनत्वम् । रुच्यत्वम् ।
ग्रहणीरोगनाशित्वञ्च ॥ * ॥

बद्धदधिगुणाः । सुस्निग्धत्वम् ।
मधुरत्वम् ।

नातिपित्तकरत्वञ्च ॥ * ॥

शर्करासहितदधिगुणाः ।
श्रेष्ठत्वम् । तृष्णा-

पित्तास्रदाहनाशित्वञ्च ॥ * ॥

गुडयुक्तदधिगुणाः ।
वातनाशित्वम् । वृष्यत्वम् ।

वृंहणत्वम् । तर्पणत्वम् । गुरुत्वञ्च । इति
भाव-
प्रकाशः ॥ * ॥

वातजतृष्णानाशित्वम् । इति
चक्रदत्तः ॥ * ॥

दूर्व्वाभयासैन्धवचक्रमर्द्द-
कुठेरकाः काञ्जिकतक्रपिष्टाः ।
त्रिभिः प्रलेपैरपि बद्धमूलां
दद्रुञ्च कुष्ठञ्च विनाशयन्ति ॥”
कुठेरकः ममरी इति लोके ।
लोके गण्डिलकाख्या सिद्धार्थकश्च
स्नुहीक्षीरम् ।
त्रयमिति समभागं स्यादेषां द्विगुणस्तु
दद्रुघ्नः ॥
अष्टगुणे गोतक्रे तानि प्रकृतानि संदध्यात् ।
दिवसत्रितयादूद्र्ध्वं सम्यक् निष्पेषयेत्तानि
॥
वन्योपलेन घृष्ट्वा दद्रूमालेपयेत्तेन ।
सप्ताहाल्लेपोऽयं दद्रुकण्डूमवश्यं विनाशयति
॥”
इति भावप्रकाशः ॥
(“लाक्षाकुष्ठं सर्षपाः श्रीनिकेतं
रात्रिर्व्योषं चक्रमर्द्दस्य वीजम्
कृत्वैकस्थं तक्रपिष्टः प्रलेपो
दद्रूयुक्तो मूलकाद्बीजयुक्तः ॥
सिन्धूद्भूतं चक्रमर्द्दस्य वीज-
मिक्षूद्भूतं केशरं तार्क्ष्यशैलम् ।
पिष्टो लेपोऽयङ्कपित्थाद्रसेन
दद्रून्तूर्णं नाशयत्येष योगः ॥

“दरिद्राते र्यालोपश्च ।” उणां १ । ९२ । इति
ऊः रकारेकाराकाराणां लोपश्च ।) दद्रुः । इत्य-
मरटीकायां भरतः ॥

**दद्रूघ्नः**, पुं, (दद्रूं हन्तीति । हन + टक् ।) दद्रुघ्नः ।
इति शब्दरत्नावली ॥

**दद्रूणः**, त्रि, (दद्रूरस्त्यस्येति । दद्रू + पामादित्वात्
नः ।) दद्रुणः । इत्यमरटीकायां रमानाथः ॥

**दध**, ङ ददे । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-
सकं-सेट् ।) ङ, दधते । ददे दानधृत्योः ।
आदध्यादन्धकारे रतिमतिशयिनीमिति मयूर-
भट्टोक्तम् । गणकृतानित्यात् अस्यैव ढीपरस्मैपद-
साध्यत्वमिति रमानाथः । वस्तुतस्तु डु धाञ्लि
धारणे इत्यस्यैव ख्यां साध्यम् । इति दुर्गादासः ॥

**दधि**, क्ली, (दधातीति । धा + “भाषायां धाञ्कृ-
सृगमिजनिनमिभ्यः ।” ३ । २ । १७१ । इत्यस्य
वार्त्तिकोक्त्या किः स च लिड्वत् ।) श्रीवासः ।
वसनम् । इति शब्दरत्नावली ॥ क्षीरोत्तरा-
वस्थाभावः । दै इति भाषा । तत्पर्य्यायः ।
क्षीरजम् २ मङ्गल्यम् ३ विरलम् ४ । इति
राजनिर्घण्टः ॥ पयस्यम् ५ । घनेतरत् दधि
द्रप्स्यम् । इत्यमरः ॥ अस्य गुणाः । अम्लत्वम् ।
गुरुत्वम् । वातदोषशमनत्वम् । संग्राहित्वम् ।
मूत्रावहत्वम् । बल्यत्वम् । शोफकफार्त्त्यरुच्य-
शमनत्वम् । वह्निशान्तिकारित्वम् । कासश्वास-

रात्रौ दधिसेवने विशेषो यथा, रात्रौ दधि न
भुञ्जीत किन्तु सघृतशर्करं समुद्गसूपं सक्षौद्रं
उष्णं सामलकं भुञ्जीत । रक्तपित्तकफोत्थेषु
विकारेषु च अम्बुघृतान्वितमपि दधि न हितम् ॥
ऋतुविशेषे विधिनिषेधौ । हेमन्तशिशिरवर्षासु
दधि शस्तं शरद्ग्रीष्मवसन्तेषु प्रायशो विगर्हि-
तम् ॥ * ॥

अविधिना दधिसेवने दोषः । ज्वरासृक्पित्त-
वीसर्पकुष्ठपाण्डुभ्रमकामलारोगप्राप्तिः ॥ * ॥

अथ गोदधिगुणाः । विशेषस्वादुत्वम् । बल्य-
त्वम् । रुचिप्रदत्वम् । पवित्रत्वम् । दीपनत्वम् ।
स्निग्धत्वम् । पुष्टिकारित्वम् । वायुनाशित्वम् ।
अशेषदधिमध्ये गुणाधिकत्वञ्च ॥ * ॥

माहिषदधिगुणाः । सुस्निग्धत्वम् । श्लेष्मलत्वम् ।
वातपित्तनाशित्वम् । स्वादुपाकित्वम् । अभि-
ष्यन्दित्वम् । गुरुत्वम् । रक्तकफदूषणत्वञ्च ॥ * ॥
छागीदधिगुणाः । उत्तमत्वम् । ग्राहित्वम् ।
त्रिदोषनाशित्वम् । श्वासकासार्शःक्षयकार्श्येषु
शस्तत्वम् । दीपनत्वञ्च । इति भावप्रकाशः ॥ * ॥

आविकदधिगुणः । दुर्नामकफव्याधिप्रकोपन-
त्वम् ॥ अश्वीदधिगुणाः । वातनाशित्वम् ।

| | | |
|---|---|---|
| | पीनसविषमज्वरशीतज्वरहितत्वम्। रक्तोद्रेक-<br>शुक्रवृद्धिकारित्वञ्च । इति राजनिर्घण्टः ॥ उष्ण- | दीपनत्वम् । चक्षुर्हितत्वञ्च ॥ * ॥<br>औष्ट्रकदधिगुणाः । क्षारत्वम् । अत्यम्लत्वम् ।<br>कटुपाकित्वञ्च ॥ * ॥<br>हस्तिनीदधिगुणाः । वीर्य्योष्णत्वम् । कषाय-<br>त्वम् । कफवातनाशित्वञ्च ॥ * ॥<br>मानुष्यदधिगुणाः । मधुरत्वम् । बल्यत्वम् ।<br>स्निग्धत्वम् । सन्तर्पणत्वञ्च । इति राजवल्लभः ॥ * ॥<br>अथ दधिभेदाः ।<br>“आदौ मन्दं ततः स्वादु स्वाद्वम्लञ्च ततः परम् ।<br>अम्लञ्चतुर्थमत्यम्लं पञ्चमं दधि पञ्चधा ॥” * ॥<br>मन्दादीनां लक्षणानि गुणाश्च ।<br>“मन्दं दुग्धवदव्यक्तरसं किञ्चिद्घनं भवेत् । |

मन्दं स्यात् सृष्टविण्मूत्रं
दोषत्रयविदाहकृत् ॥
यत् सम्यग् घनतां यातं व्यक्तं स्वादुरसं
भवेत् ।
स्वाद्वम्लस्य गुणा ज्ञेयाः
सामान्यदधिवज्जनैः ॥
यत्तिरोहितमाधुर्य्यं व्यक्ताम्लत्वं
तदम्लकम् ।
अम्लन्तु दीपनं
पित्तरक्तश्लेष्मविवर्द्धनम् ॥
तदत्यम्लं दन्तरोमहर्षकण्ठादिदाहकृत्
।
अत्यम्लं दीपनं रक्तपित्तपुष्टिकरं परम्
॥”
इति भावप्रकाशः ॥ * ॥
“लवणमधुरसर्पिःशर्करामुद्गधात्री-
कुसुमरसविहीनं नैतदश्नन्ति नित्यम् ।
न च शरदि वसन्ते नोष्णकाले न रात्रौ
न दधि कफविकारे पित्तदोषेऽपि नाद्यात्
॥
त्रिकटुकयुतमेतद्राजिकाचूर्णमिश्रं
कफहरमनिलघ्नं वह्निसन्धुक्षणञ्च ।
तुहिनशिशिरकाले सेवितञ्चातिपथ्यं
रचयति तनुदार्ढ्यं कान्तिसत्वञ्च नृणाम्
॥
दधिमधुरमीषदम्लं वाहितञ्च नात्युष्णम्
।
यावद् यावन्मधुरं दोषहरं तावदुष्णमिदम्
॥”
इति राजनिर्घण्टः ॥ * ॥
“दधि यत् स्वादु
तन्मेदःकफाभिष्यन्दकारणम् ।
दध्यम्लमतियद्रक्तवूष्णं कफपित्तकृत् ॥
विदाहि सृष्टविण्मूत्रं मन्दजातं त्रिदोषकृत्
।
दधि त्वसारं रूक्षन्तु ग्राहि विष्टम्भि
वातलम् ॥
पीनसे चातिसारे च शीतके विषमज्वरे ।
अरुचौ मूत्रकृच्छ्रे च कार्श्ये च दधि
शस्यते ॥”
“त्रिदोषं मन्दकं जातं वातघ्नं दधि
शुक्रलम् ॥”
इति चरके शूत्रस्थाने २७ अध्याये ॥
“दधि तु मधुरमम्लमत्यम्लञ्चेति
तत्कषायानुरसं
स्निग्धमुष्णं
पीनसविषमज्वरातिसारारोचक
मूत्रकृच्छ्रकार्श्यापहं वृष्यं प्राणकरं
माङ्गल्यञ्च ॥
महाभिष्यन्दि मधुरं
कफमेदोविवर्द्धनम् ।
कफपित्तकृदम्लं स्यादत्यम्लं
रक्तदूषणम् ॥
विदाहि सृष्टविण्मूत्रं मन्दजातं
त्रिदोषकृत् ।
स्निग्धं विपाके मधुरं दीपनं
बलवर्द्धनम् ॥
वातापहं पवित्रञ्च दधि गव्यं रुचिप्रदम्
।
दध्याजं कफपित्तघ्नं
लघुवातक्षयापहम् ॥
दुर्नामश्वासकासेषु हितमग्नेः प्रदीपनम्
।
विपाके मधुरं वृष्यं वातपित्तप्रसादनम्
॥
बलासवर्द्धनं स्निग्धं विशेषाद्दधि
माहिषम् ।
विपाके कटु सक्षारं गुरु भेद्योष्ट्रिकं
दधि ॥
वातमर्शांसि कुष्ठानि क्रिमीन्
हन्त्युदराणि च ।
कोपनं कफवातानां दुर्नाम्नाञ्चाधिकं
दधि ॥
रसे पाके च मधुरमत्यभिष्यन्दि
दोषलम् ।
दीपनीयमचक्षुष्यं वाडवं दधि वातलम्
॥

**दधिजं**, क्ली, (दध्नो जायते इति । जन + “पञ्च-
म्यामजातौ ।” ३ । २ । ९८ । इति डः ।) नवनीतम् । इति राजनिर्घण्टः ॥ (नवनीत-शब्देऽस्य विशेषो ज्ञातव्यः ॥)

**दधित्थः**, पुं, (दधिवर्णो द्रवस्तिष्ठत्यस्मिन्निति । स्था + “सुपिस्थः ।” ३ । २ । ४ । इति कः । पृषो-दरादित्वात् साधुः ।) कपित्थः । इत्यमरः । २ । ४ । २१ ॥ (यथा, --
“तद्वद्दधित्थविल्वाम्रं जम्बुमध्यैः प्रपञ्चयेत् ॥”
इति वाभटे चिकित्सास्थाने नवमेऽध्याये ॥
“दधित्थविल्वचाङ्गेरी तक्रदाडिमसाधिता ।
पाचनी ग्राहिणी पेया सवाते पाञ्चमूलिका ॥”
इति चरके सूत्रस्थाने द्वितीयेऽध्याये ॥)

**दधित्थाख्यः**, पुं, (दधित्थं आख्याति कपित्थद्रवं अनुकरोतीति । आ + ख्या + कः ।) शरल-द्रवः । इति रत्नमाला ॥ लोवान् इति भाषा ॥

**दधिधेनुः**, स्त्री, (दधिनिर्म्मिता धेनुः ।) दानार्थ-दध्यादिनिर्म्मिता धेनुः । यथा, वराहपुराणे ।
“दधिधेनोर्म्महाराज ! विधानं शृणु साम्प्रतम् ।
अनुलिप्ते महीभागे गोमयेन नराधिप ! ॥
गोचर्म्ममात्रे तु पुनः पुष्पप्रकरशोभिते ।
कुशैरास्तीर्य्य वसुधां कृष्णाजिनकुशोत्तराम् ॥
दधिकुम्भं सुसंस्थाप्य सदा धान्यचयोपरि ।
चतुर्थांशेन वत्सन्तु सौवर्णमुखमण्डितम् ॥
आच्छाद्य वस्त्रयुग्मेन पुष्पगन्धैस्तु पूजिताम् ।
ब्राह्मणाय कुलीनाय साधुवृत्ताय धीमते ॥
क्षमादिगुणयुक्ताय दद्यात्तां दधिधेनुकाम् ।
पुच्छदेशोपविष्टस्तु मुद्रिकाकर्णमात्रकैः ॥
पादुकोपानहौ छत्रं दत्त्वा मन्त्रमनुस्मरेत् ।
दधिक्रान्नेतिमन्त्रेण दधिधेनुं प्रदापयेत् ॥
एवं दधिमयां धेनुं दत्त्वा राजर्षिसत्तम ! ।
एकाहारो दिनं तिष्ठेद्दध्ना च नृपनन्दन ! ॥
यजमानो वसेद्राजन् त्रिरात्रञ्च द्विजोत्तम ! ।
दीयमानां प्रपश्यन्ति ते यान्ति परमां गतिम् ॥
यत्र क्षीरवहा नद्यो यत्र पायसकर्द्दमाः ।
मुनय ऋषयः सिद्धास्तत्र गच्छन्ति धेनुदाः ॥
य इदं श्रालयेद्भक्त्या शृणुयाद्वापि मानवः ।

अरुचौ मूत्रकृच्छ्रे च कार्श्ये च दधि शस्यते ॥”
इति राजवल्लभः ॥ * ॥
(ऋतुभेदे दधिविशेषगुणा यथा, --
“शारदं दधिगुर्व्वम्लं रक्तपित्तविवर्द्धनम् ।
शोफं तृष्णां ज्वरं शूलं करोति विषमज्वरम् ॥
इति शारददधिगुणाः ॥ * ॥
गुरु स्निग्धञ्च मधुरं कफकृद्बलवर्द्धनम् ।
वृष्यं मेध्यञ्च हैमन्तं पुष्टिदं तुष्टिवृद्धिदम् ॥
इति हैमन्तदधिगुणाः ॥ * ॥
शैशिरं सघनञ्चाम्लं मधुरं गुरु एव च ।
वृष्यं बलकरं पित्तश्रमापहरणं परम् ।
इति शैशिरदधिगुणाः ॥ * ॥
वासन्तं मधुरं स्निग्धं किञ्चिदम्लं कफात्मकम् ।
बलहृद्वीर्य्यहा प्रोक्तं वसन्ते न प्रशस्यते ।
इति वासन्तदधिगुणाः ॥ * ॥
लघु चाम्लं भवेद्ग्रीष्मे चात्युष्णं रक्तपित्तकृत् ।
शोषभ्रमपिपासाकृद्दधियुक्तं न ग्रीष्मके ॥
इति ग्रीष्मदधिगुणाः ॥ * ॥
वार्षिकं हितकृत् प्रोक्तं दधि शस्तं न दोषलम् ।
शोषवातभ्रमान् हन्ति श्रमातीसारनाशनम् ॥”
इति वार्षिकदधिगुणाः ॥ * ॥
“हिक्काश्वासप्लीहार्शानामतिसोरे भगन्दरे ।
शस्तं प्रोक्तं दधि ह्येषां लवणेन विमूर्च्छितम् ॥
इति दधिभोजनविधिः ॥” * ॥
इति हारीते प्रथमे स्थानेऽष्टमेऽध्याये ॥
“रोचनं दीपनं वृष्यं स्नेहनं बलवर्द्धनम् ।
पाकेऽम्लमुष्णं वातघ्नं मङ्गल्यं वृंहणं दधि ॥
पीनसे चातिसारे च शीतके विषमज्वरे ।
रूक्षमुष्णं कषायञ्च कफमात्रापहञ्च तत् ।
स्निग्धं विपाके मधुरं बल्यं सन्तर्पणं गुरु ॥
चक्षुष्यमग्र्यं दोषघ्नं दधि नार्य्या गुणोत्तरम् ।
लघु पाके बलासघ्नं वीर्य्योष्णं पित्तनाशनम् ॥
कषायानुरसं नाग्या दधि वर्च्चोविवर्द्धनम् ।
दधीन्युक्तानि यानीह गव्यादीनि पृथक् पृथक् ॥
विज्ञेयमेषु सर्व्वेषु गव्यमेव गुणोत्तरम् ।
वातघ्नं कफकृत् स्निग्धं वृंहणं न च पित्तकृत् ॥
कुर्य्याद्भक्ताभिलाषञ्च दधि यत् सुपरिश्रुतम् ।
शृतात् क्षीरात्तु यज्जातं गुणवद्दधि तत् स्मृतम् ॥
वातपित्तहरं रुच्यं धात्वग्निबलवर्द्धनम् ।
दघ्नः सरो गुरुर्वृष्यो विज्ञेयोऽनिलनाशनः ॥
वह्नेर्विधमनश्चापि कफशुक्रविवर्द्धनः ।
दधि त्वसारं रूक्षञ्च ग्राहि विष्टम्भि वातलम् ॥
दीपनीयं लघुतरं सकषायं रुचिप्रदम् ।
शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम् ॥
हेमन्ते शिशिरे चैव वर्षासु दधि शस्यते ॥”
इति सुश्रुते सूत्रस्थाने ४५ अध्याये ॥)
धारणकर्त्तरि, त्रि । इति मुग्धबोधम् ॥

**दधिकूर्च्चिका**, स्त्री, (दधिजाता कूर्च्चिका ।) अर्द्धो-
दकोष्णदुग्धे दध्यम्लसंयोगात् जाता । इति केचित् ॥ उष्णदुग्धे दध्यम्लसंयोगात् जाता

सोऽश्वमेधफलं प्राप्य विष्णुलोकं स गच्छति ॥”

**दधिपुष्पिका** स्त्री, (दधीव शुभ्रं पुष्पमस्याः । कप् । टापि अत इत्वम् ।) श्वेतापराजिता । इति राजनिघण्टः ॥

**दधिपुष्पी**, स्त्री, (दधीव पुष्पमस्याः । जातित्वात् ङीष् ।) कोलशिम्बी । इति राजनिर्घण्टः ॥

**दधिफलः**, पुं, (दधीव शुभ्रो द्रवः फले यस्य ।) कपित्थवृक्षः । इत्यमरः । २ । ४ । २१ ॥

**दधिमण्डः** पुं, (दध्नः मण्डः ।) मस्तु । इति रत्न-माला ॥ मात् इति भाषा ॥

**दधिमण्डोदः** पुं, (दधिमण्ड इव उदकं यत्र । उदकस्य उदादेशः ।) दधिसमुद्रः । (यथा, भागवते । ५ । १ । ३३ ।
“क्षीरोदेक्षुरसोदसुरोदघृतोदक्षीरोददधिमण्डोद शुद्धोदाः सप्त जलधयः ॥”)

| | इत्यन्ये ॥ छेना इति भाषा । अस्या गुणाः ।<br>वातनाशित्वम् । ग्राहित्वम् । रूक्षत्वम् ।<br>दुर्ज्जरत्वञ्च । इति राजवल्लभः ॥ (पर्य्यायोऽस्या<br>यथा, --<br>"दध्ना सह पयः पक्वं यत्<br>स्यात्तद्दधिकूर्च्चिका ॥"<br>इति वैद्यकरत्नमालायाम् ॥)<br>**दधिचारः**, पुं, (दधिं चालयति विलोडयतीति ।<br>दधि + चल + णिच् + अण् । लस्य रत्वम् ।)<br>दधिमथनदण्डः । तत्पर्य्यायः ।<br>वैशाखः २<br>तक्राटः ३ करघर्षणः ४ । इति हारावली । ३४ ॥ | |
|---|---|---|

**दधिमुखः** पुं, (दधिवत् शुभ्रं मुखं यस्य ।) वानर-
विशेषः । स सुग्रीवश्वशुरः तस्य मधुवनपाल-
कश्च । इति रामायणम् ॥ (यथा, महाभारते ।
३ । २८२ । ७ ।
“श्रीमान् दधिमुखो नाम हरिवृद्धोऽति
वीर्य्यवान् ॥”
नागविशेषः । यथा, महाभारते । १ । ३५ ।
८ ।
“सुरामुखो दधिसुखस्तथा विमलपिण्डकः ॥”
अयन्तु दर्व्वी कराणां सर्पाणामन्यतमः । इति
सुश्रुते कल्पस्थाने ४ अध्याये ॥)

**दधिशोणः**, पुं, वानरः । इति त्रिकाण्डशेषः ॥

**दधिस(श)क्तवः**, पुं, दध्युपसिक्ताः सक्तवः । करम्भः ।
इत्यमरः । २ । ९ । ४८ ॥ दैछातु इति भाषा ॥
नित्यबहुवचनान्तोऽयम् ॥ (यथा, महाभारते ।
१३ । १०४ । ९१ ।
“न पाणौ लवणं विद्वान् प्राशीयान्न च रात्रिषु ।
दधिसक्तून् न भुञ्जीत वृथामांसञ्च वर्जयेत् ॥”)

**दधिसारं**, क्ली, (दध्नः सारम् ।) नवनीतम् । इति
हेमचन्द्रः । ३ । ७२ ॥

**दधिस्नेहः**, पुं, (दध्नः स्नेहः ।) दधिसरः । तत्-
पर्य्यायः । सरः २ दध्युत्तरगम् ३ कद्वरम् ४ ।
इति रत्नमाला ॥

**दधिस्वेदः**, पुं, (दध्नः स्वेद इव ।) घोलम् । इति
जटाधरः ॥

**दधीचः**, पुं, दधीचिमुनिः । इति शब्दभेदप्रकाशः ॥

**दध्याकरः**, पुं, (दध्नः आकर इव ।) दधिसमुद्रः ।
इति शब्दार्थकल्पतरुः ॥

**दध्यानी**, स्त्री, (दधिवत् शुभ्रतां आनयतीति ।
आ + नी + क्विप् ।) सुदशना । इति रत्नमाला ॥
सुदर्शनगुलञ्च इति भाषा । दएखए इति
केचित् । पुराति इति केचित् । मदनमस्त इति
हिन्दी भाषा ॥

**दध्युत्तरं**, क्ली, (दध्नः उत्तरं शेषजातम् ।) दधि-
स्नेहः । इति शब्दचन्द्रिका ॥ (यथा, हरिवंशे ।
७८ । ९२ ।
“पयसः सर्पिषश्चैव दध्नो दध्युत्तरस्य च ।
यथाकामं प्रदानाय भोज्यादिश्रयणाय च ॥”)

**दध्युत्तरगं**, क्ली, (दध्न उत्तरं चरमावस्थां गच्छ-
तीति । गम + डः ।) दधिस्नेहः । इति रत्न-
माला ॥

**दध्युदः**, पुं, (दधिवदुदकं यस्य । उत्तरपदस्य च
इत्युदकस्योदादेशः ।) दधिसमुद्रः । इति जटा-
धरः ॥

**दनुः**, स्त्री, कश्यपपत्नी । सा दक्षकन्या दानवमाता
च । इति त्रिकाण्डशेषः ॥ (यथा, मत्स्यपुराणे
६ अध्याये ।
“कश्यपस्य प्रवक्ष्यामि पत्नीभ्यः पुत्त्रपौत्त्रकान् ।
अदितिर्दितिर्दनुश्चैव अरिष्टा सुरसा तथा ॥
सुरभिर्विनता तद्वत् ताम्रा क्रोधवशा इरा ।
कद्रूर्विश्वा मुनिस्तद्वत्तासां पुत्त्रान्निबोधत ॥”
“दनुः पुत्त्रशतं लेभे कश्यपाद् बलदर्पितम् ।

त्रिकाण्डशेषः ॥ चर्व्वणसाधनास्थि । दाँत इति
भाषा । गर्भस्थस्य षष्ठे मासि गुह्यदन्तपङ्क्ति-
र्भवति । इति सुखबोधः ॥ तत्पर्य्यायः । रदनः २
दशनः ३ रदः ४ । इत्यमरः । २ । ६ । ९१ ॥ द्विजः ५
खरुः ६ । इति शब्दरत्नावली ॥ * ॥ तत्शुक्ल-
कारकौषधं यथा, --
हरिरुवाच ।
“हरितालं यवक्षारं पत्राङ्गं रक्तचन्दनम् ।
जाती हिङ्गुलकं लाक्षा पक्वतैलेन पेषयेत् ॥
हरीतकीकषायेन मृष्ट्वा दन्तान् प्रलेपयेत् ।
दन्ताः स्युर्लोहिताः पुंसः श्वेता रुद्र ! न संशयः ॥”
इति गारुडे १८३ अध्यायः ॥ * ॥
“शङ्खमामलकीपत्रं धातक्याः कुसुमानि च ।
पिष्ट्वा तत् पयसा सार्द्धं सप्ताहं धारयेन्मुखे ॥
स्निग्धाः श्वेताश्च दन्ताश्च भवन्ति विमलप्रभाः ॥”
इति तत्रैव १८५ अध्यायः ॥ * ॥
“मूलं गोक्षुरकस्यैव चर्व्वित्वा नीललोहित ! ।
दन्तकीटव्यथां नश्येदन्धासुरविमर्द्दन ! ॥”
इति च गारुडे १९३ अध्यायः ॥ * ॥
सदन्तजातस्य शुभाशुभफलं यथा, --
अथ जातभद्रादि । तत्र दन्तजन्मचिन्ता ।
“जातः सदन्तः पितृमातृहन्ता
तातं विहन्यात् प्रथमे तु मासे ।
अम्बां द्वितीये सहजं तृतीये
मासे चतुर्थे शुभकारकः स्यात् ॥

(यथा, महाभारते । १ । १३८ । १२ ।
"दधीचस्यास्थितो वज्रं कृतं दानवसूदनम् ॥")

**दधीचिः**, पुं, मुनिविशेषः । स अथर्व्वमुनेरौरसात्
कर्द्दमकन्यायां शान्तिनाम्न्यां जातः । वृत्र-
वधार्थं देवैरस्यास्थ्ना वज्रं निर्म्मितम् । इति
श्रीभागवतम् ॥ यथा, --
"ऋतेऽस्थिभ्यो दधीचस्य निहन्तुं त्रिदशद्विषः ।
तस्मात् यत्नादृषिश्रेष्ठो याच्यतां सुरसत्तमाः ॥
दधीचेऽस्थीनि देहीति तैर्व्वधिष्यथ दानवान् ।
तत् श्रुत्वा सहसा देवैर्याचितो मुनिभिस्तथा ॥
ददौ चास्थीनिं देवेभ्यो दधीचिः सुमनास्तदा ।
प्राणायामं ततः कृत्वा देहं त्यक्त्वा सुभास्वरान् ॥
सर्व्वलोकान् क्षयान् प्राप्तो येभ्यो नावर्त्तनं पुनः ।
तस्यास्थिभिरथो शक्रः प्रहृष्टः सुमनास्तथा ॥
कारयामास दिव्यानि तानि प्रहरणान्युत ।
वज्रासिशूलचक्रञ्च परिघा विविधा गदाः ॥
विश्वकर्म्मा सुराणान्तु परिघाद्यायुधानि च ॥"
इति वह्निपुराणे दानावस्थानिर्णयनामाध्यायः ॥

**दधीच्यस्थि**, क्ली, (दधीचेरस्थि ।) वज्रम् । हीर-
कम् । इति त्रिकाण्डशेषः ॥

**दधृक्** [ष्] त्रि, (धृष्णोतीति । धृष प्रागल्भ्ये +
"ऋत्विग्दधृगिति ।" ३ । २ । ५९ । इति क्विन्
द्वित्वादिकञ्च निपात्यते ।) धृष्टः । इति त्रिकाण्ड-
शेषः ॥ (धर्षकः । यथा, ऋग्वेदे । ५ । ६६ । ३ ।
विप्रचित्तिः प्रधानोऽभूत् येषां मध्ये महाबलः ॥
द्विमूर्द्धा शकुनिश्चैव तथा शङ्कुशिरोधरः ।
अयोमुखः शम्बरश्च कपिलो वामनस्तथा ॥
मरीचिर्मेघवांश्चैव इरा गर्भशिरास्तथा ।
विद्रावणश्च केतुश्च केतुवीर्य्यः शतह्रदः ॥
इन्द्रजित् सत्यजिच्चैव वज्रनाभस्तथैव च ।
एकचक्रो महाबाहुर्वज्राक्षस्तारकस्तथा ॥
असिलोमा पुलोमा च बिन्दुर्बाणो महासुरः ।
स्वर्भानुर्वृषपर्व्वा च एवमाद्या दनोः सुताः ॥"
दानवविशेषे, पुं । यथा, गोः रामायणे कबन्ध-
स्योक्तौ । ३ । ७५ । २४ ।
"श्रियोमां मध्यमं पुत्त्रं दनुं नाम्ना च दानवम् ॥")

**दनुजः**, पुं, (दनोर्जायते इति । जन + डः ।) असुरः ।
इत्यमरः । १ । १ । १२ ॥ (यथा, भागवते ।
६ । ९ । ४० ।
"तवैव विभूतयो दितिदनुजादयश्चापि ॥")

**दनुजद्विट्**, [ष्] पुं, (दनुजानां असुराणां द्विट्
शत्रुः । यद्वा, दनुजान् द्वेष्टीति । द्विष् + क्विप् ।)
देवः । इति शब्दरत्नावली ॥ (दानवशत्रौ, त्रि ।
यथा, प्रयोगरत्नमालायां शब्दप्रकरणस्यादौ ।
"नमो नन्दकुमार पराय दनुजद्विषे ॥")

**दनुसूनुः**, पुं, (दनोः सूनुः पुत्त्रः ।) असुरः । इति
जटाधरः ॥

**दन्तः**, पुं, (दम + "हसिमृग्रिणिति ।" उणां ।
३ । ८६ । इति तन् ।) अद्रिकटकः । कुञ्जः ।
इति मेदिनी । ते, २३ ॥ शैलशृङ्गम् । इति
मिष्टान्नभोजी मुभगः सुताख्ये
षष्ठे सुखी पण्डितकल्पबुद्धिः ।
ततोऽधिकः स्यात् बलवान् द्युनाख्ये
मासेऽष्टमे वित्तसुखैर्विहीनः ॥
सुरप्रतापी नवमे मृत्युश्च दशमे तथा ।
एकादशे द्वादशे च सुखी च सुभगो भवेत् ॥
अष्टौ पुत्तलिकान् कृत्वा सुगन्धैर्गन्धकैस्तथा ।
स्रोतःसु संक्रमे चापि स्नापयेत् शुक्लपुष्पकैः ॥
स्नानं संक्रमणस्याधः शम्भोर्द्दर्शनमन्ततः ।
होमं विप्रार्च्चनञ्चैवमशुभे दन्तदर्शने ॥"
इति ज्योतिस्तत्त्वम् ॥
रतिक्रीडायां तस्याघातस्थानानि यथा, --
"स्तनयोर्गण्डयोश्चैव ओष्ठे चैव तथाधरे ।
दन्ताघातः प्रकर्त्तव्यः कामिनीनां सुखावहः ॥"
इति कामशास्त्रम् ॥ * ॥
अथ दन्तरोगाणां निदानादि यथा, --
"शोणितं दन्तवेष्टेभ्यो यस्याकस्मात् प्रवर्त्तते ।
दुर्गन्धीनि सकृष्णानि प्रक्लेदीनि मृदूनि च ॥
दन्तमांसानि शीर्य्यन्ते पचन्ति च परस्परम् ।
शीतादो नाम स व्याधिः कफशोणितसम्भवः ॥ १ ॥
दन्तयोस्त्रिषु वा यस्य श्वयथुर्जायते महान् ।
दन्तपुप्पुटको नाम स व्याधिः कफरक्तजः ॥ २ ॥
स्रवन्ति पूयरुधिरं चला दन्ता भवन्ति च ।
दन्तवंष्टः स विज्ञेयो दुष्टशोणितसम्भवः ॥ ३ ॥
श्वयथुर्द्दन्तमूलेषु रुजावान् कफरक्तजः ।

| | | |
|---|---|---|
| "रातहव्यस्य सुष्टुतिं दधृक्स्तोमैर्मनामहे ॥")<br>**दध्नः**, पुं, (दधते जीवेभ्यः पापपुण्यफलाफलं ददातीति । दध दाने + बाहुलकात् नः ।) यमः । इति शब्दरत्नावली ॥ | | लालास्रावी स विज्ञेयः शौषिरो नाम नामतः ॥<br>कण्डूमान् शैषिरो गदः । इति च पाठः ॥ ४ ॥ |

दन्ताश्चलन्ति वेष्टेभ्यस्तालु
चाप्यवदीर्य्यते ।
दन्तमांसानि पच्यन्ते मुखञ्च परितुद्यते ॥
यस्मिन् स सर्व्वजो
व्याधिर्महाशैशिरसंज्ञितः ॥ ५ ॥
दन्तमांसानि शीर्य्यन्ते यस्मिन् ष्ठीवति
चाप्यसृक् ।
पित्तासृक्कफजो व्याधिर्ज्ञेयः परिदरो हि
सः ॥ ६ ॥
वेष्टेषु दाहः पाकश्च ताभ्यां दन्ताश्चलन्ति
च ।
अभ्याहताः प्रस्रवन्ति शोणितं दन्तवेदना
॥
आध्मायन्ते स्रुते रक्ते मुखं पूति च जायते
।
यस्मिन् सोपकुशो नाम पित्तरक्तकृतो गदः
॥ ७ ॥
घृष्टेषु दन्तमांसेषु संरम्भो जायते महान् ।
भवन्ति दन्ताश्च चलाः स
वैदर्भोऽभिघातजः ॥ ८ ॥
मारुतेनाधिको दन्तो जायते तीव्रवेदनः ।
खलिवर्द्धनसंज्ञोऽसौ जाते रुक् च
प्रशाम्यति ॥ ९ ॥
शनैः शनैः प्रकुरुते वायुर्दन्तसमाश्रितः ।
करालान् विकृतान् दन्तान् करालो न स
सिध्यति ॥ १० ॥
हानव्ये पश्चिमे दन्ते महान् शोथो
महारुजः ।
लालास्रावी कफकृतो विज्ञेयः सोऽधिमां-
सकः ॥ ११ ॥
दन्तमूलगता नाड्यः पञ्च ज्ञया यथेरिताः
।
दीर्य्यमाणेष्विव रुजा यस्य दन्तेषु जायते
॥
दालनो नाम स व्याधिः
सदागतिनिमित्तजः ॥ १२ ॥
कृष्णच्छिद्रश्चलः स्रावी ससंरम्भो
महारुजः ।

निषिद्धकाष्ठानि यथा, --
“गुवाकतालहिन्तालास्तथाताडी च केतकी
।
खर्ज्जूरनारिकेलौ च सप्तैते तृणराजकाः ॥
तृणराजशिरापत्रैर्यः कुर्य्याद्दन्तघावनम् ।
तावद्भवति चाण्डालो यावद्गङ्गां न पश्यति
॥”
तस्य स्थौल्यं परिमाणञ्चाह विष्णुः ।
“कनिन्यग्रसमं स्थौल्यं सकूर्च्चं द्वादशाङ्गुलम्
।
प्रातर्भूत्वा च यतवाक् भक्षयेद्दन्तधावकम् ॥”
मरीचिः ।
“द्वादशाङ्गुलन्तु विप्राणां क्षत्रियाणां
नवाङ्गुलम् ।
अष्टाङ्गुलञ्च वैश्यानां शूद्राणान्तु षडङ्गुलम् ॥
चतुरङ्गुलमानेन नारीणां विधिरुच्यते ।
अन्तरप्रभवाणाञ्च षडङ्गुलमुदाहृतम् ॥”
इत्याह्निकतत्त्वम् ॥

**दन्तकाष्ठकं**, क्ली, (ह्रस्वं काष्ठं काष्ठकम् । दन्त-
धावनयोग्यं काष्ठकम् ।) आहुल्यवृक्षः । इति
राजनिर्घण्टः ॥

**दन्तच्छदः**, पुं, (दन्ताश्छाद्यन्तेऽनेनेति । छद संवरणे
+ णिच् + “पुंसि संज्ञायां घः प्रायेण ।” । ३ ।
३ ।
११८ । इति घः । “छादेर्घेऽद्व्युपसर्गस्य ।”
६ ।
४ । ९६ । इति ह्रस्वः ।) ओष्ठः । इति
हलायुधः ॥
(यथा, ऋतुसंहारे हेमन्तवर्णनायाम् । १२ ।
“दन्तच्छदैर्दन्तविधातचिह्नैः
स्तनैश्च पाण्यग्रकृताभिलेखैः ।
संसूच्यते निर्द्दयमङ्गनानां
रतोपभोगो नवयौवनानाम् ॥”)

**दन्तच्छदोपमा**, स्त्री, (दन्तच्छदस्य ओष्ठस्य उपमा
सादृश्यं यत्र । यद्वा, उपमीयतेऽनयेति उपमा
।

दन्तकाष्ठार्थमन्ये तु सर्व्वान्
कण्टकिनोऽभ्यधुः ॥
खदिरश्च कदम्बश्च करञ्जश्च
वटस्तथा ।
तिन्तिडी वेणुपृष्ठञ्च आम्रनिम्बौ तथैव च
॥
अपामार्गश्च विल्वश्च
अर्कश्चोडुम्बरस्तथा ।
एते प्रशस्ताः कथिता
दन्तधावनकर्म्मणि ॥” * ॥
तस्य निषिद्धकाष्ठानि यथा, --
“गुवाकतालहिन्तालखर्ज्जूरैः
केतकीयुतैः ।
नारिकेलेन ताड्या च न
कुर्य्याद्दन्तधावनम् ॥” * ॥
तस्य दिग्भेदेन शुभाशुभफलं यथा, --
“मृत्युः स्याद्दक्षिणास्येन पश्चिमास्येन
चामयः ।
पूर्ब्बास्येनोत्तरास्येन सम्पदो
दन्तधावनात् ॥” * ॥
तस्य तिथिविशेषे निषेधो यथा, --
“प्रतिपद्दर्शषष्ठीषु नवम्येकादशीषु च ।
दन्तानां काष्ठसंयोगो दहत्यासप्तमं
कुलम् ॥” * ॥
दन्तधर्षणानन्तरं चक्षुःसेचनं यथा, --
“दन्तानूद्‌र्ध्वमधो घृष्ट्वा प्रातः सिञ्चेच्च
लोचने ।
तोयपूर्णमुखस्तेन दृष्टिराशु प्रसीदति ॥”
* ॥
रोगविशेषे दन्तकाष्ठवर्ज्जनं यथा, --
“अर्द्दिती कर्णशूली च दन्तरोगी
नवज्वरी ।
शोषी कासी च मूर्च्छार्त्तो दन्तकाष्ठं
विवर्ज-
येत् ॥” * ॥
तस्य गुणा यथा, --
“निहन्ति वक्त्रवैरस्यं जिह्वादन्ताश्रितं
मलम् ।

अनिमित्तरुजो वातात् स ज्ञेयः
कृमिदन्तकः ॥ १३ ॥
वक्त्रं वक्रं भवेद्यस्य दन्तभङ्गश्च जायते ।
कफवातकृतो व्याधिः स भञ्जनकसंज्ञितः
॥ १४ ॥
शीतरूक्षप्रवाताम्लस्पर्शानामसहाद्विजाः
।
पित्तमारुतकोपेन दन्तहर्षः स नामतः ॥
१५ ॥
(दन्तमांसैर्मलस्रावैर्वाह्यान्त्रः श्वयथुर्गुरुः ।
सदाहरुक्स्रवेद्भिन्नः पूयास्रं दन्तविद्रधिः
॥)
मलो दन्तगतो यस्तु कफमारुतशोषितः ।
शर्करेव खरस्पर्शा सा ज्ञेया दन्तशर्करा ॥
१६ ॥
कपालेष्विव दीर्य्यत्सु दन्तानां सैव शर्करा
।
कपालिकेति पठिता सदा दन्तविनाशिनी
॥ १७ ॥
योऽसृङ्मिश्रेण पित्तेन दग्धो दन्तस्त्वशेषतः
।
श्यावतां नीलतां वापि गतः स
श्यावदन्तकः ॥" १८
इति माधवकरः ॥

**दन्तकः**, पुं, (दन्त एव । स्वार्थे कन् ।) पर्व्वत-

शृङ्गम् । नागदन्तः । इति हेमचन्द्रः । ४ ।
१०० ॥ (दन्तः । इति व्युत्पत्तिलब्धोऽर्थः
॥ त्रि,
दन्तेषु प्रसितः । दन्त + "स्वाङ्गेभ्यः
प्रसिते ।
५ । २ । ६६ । इति कन् ॥)

**दन्तकर्षणः**, पुं, (दन्तान्कर्षतीव यः । कृष् + ल्युः
।)

जम्बीरः । इति शब्दरत्नावली ॥

**दन्तकाष्ठं**, क्ली, (दन्तधावनार्थं यत् काष्ठम् ।)

विकङ्कतवृक्षः । इति राजनिर्घण्टः ॥
दन्तधाव-
नार्थकाष्ठम् । तद्यथा नरसिंहपुराणे ।
"दन्तकाष्ठस्य वक्ष्यामि समासेन
प्रशस्तताम् ।
दन्तच्छदस्य उपमा सादृश्यस्थलम् ।) विम्बी
।
इति राजनिर्घण्टः ॥

**दन्तधावनं**, क्ली, (दन्तानां धावनम् ।) दन्त-

मार्ज्जनम् । (दन्तानां धावनं यस्मात् ।)
दन्त-
काष्ठम् । यथा, गारुडे २१४ अध्याये ।
"उषःकाले तु सम्प्राप्ते शौचं कृत्वा यथार्थवत्
।
ततः स्नानं प्रकुर्व्वीत दन्तधावनपूर्ब्बकम् ॥
मुखे पर्य्युषिते नित्यं भवत्यप्रयतो नरः ।
तस्मात् सर्व्वप्रयत्नेन भक्षयेद्दन्तधावनम् ॥
कदम्बविल्वखदिरकरवीरवटार्ज्जुनाः ।
तगरं बृहती जातिकरञ्जार्कातिमुक्तकाः ॥
जम्बूमधूकापामार्गशिरीषोडुम्बराशनाः ।
क्षीरिकण्टकिवृक्षाद्याः प्रशस्ता दन्तधावने ॥
कटुतिक्तकषायाश्च धनारोग्यसुखप्रदाः ।
प्रक्षाल्य भुक्त्वा च शुचौ देशे त्यक्त्वा
तदाचमेत् ॥
अमावास्यां तथा षष्ठ्यां नवम्यां प्रतिपद्यपि ।
वर्ज्जयेद्दन्तकाष्ठन्तु तथैवार्कस्य वासरे ॥
अभावे दन्तकाष्ठस्य निषिद्धायां तथा तिथौ ।
अपां द्वादशगण्डूषैः कुर्व्वीत मुखशोधनम् ॥"
दन्तशुद्धिः । तस्य विधिर्यथा, --
"प्रातर्भुङ्क्त्वा च मृद्वग्रं कषायकटुतिक्तकम् ।
भक्षयेद्दन्तपवनं दन्तमांसान्यवाधयन् ॥" * ॥
तस्य काष्ठानि यथा, --
"केऽप्यत्र करवीराम्रकरञ्जवकुलाशनान् ।
आरोग्यं रुचिमाधत्ते सद्यो
दन्तविशोधनम् ॥"
इति राजवल्लभः ॥ * ॥
"कृतशौचस्ततः प्राज्ञः कुर्य्याद्दन्तस्य
धावनम् ।
जिह्वाया मार्जनञ्चापि
रसालच्छदनादिभिः ॥
दक्षिणाभिमुखो भूत्वा
पश्चिमाभिमुखस्तथा ।
न दन्तधावनं कुर्य्यात् कुर्य्याच्चेन्नारकी
भवेत् ॥
मध्यमानामिकाभ्याञ्च वृद्धाङ्गुष्ठेन च
द्विजः ।
दन्तस्य धावनं कुर्य्यात् तर्जन्या न
कदाचन ॥
अश्वत्थवटविल्वानां धात्र्याः
काष्ठिकया बुधः ।
न दन्तधावनं कुर्य्यात्तथेन्द्रसुरसस्य च
॥
नित्यक्रियाफलं प्रेप्सुस्त्वरया
दन्तधावनम् ।
प्रभाते कुरुते प्राज्ञः
सूर्य्योदयविवर्ज्जिते ॥
सूर्य्योदये द्विजश्रेष्ठ ! यः
कुर्य्याद्दन्तधावनम् ।
नित्यक्रियाफलं तस्य सर्व्वमेव
विनश्यति ॥
यः स्नानसमये कुर्य्यात् जैमिने !
दन्तधावनम् ।
निराशाः पितरो यान्ति तस्य देवाः
सुरर्षयः ॥
दन्तस्य धावनं कुर्य्याद्यो
मध्याह्नापराह्णयोः ।
तस्य पुष्पं न गृह्णन्ति देवताः पितरो
जलम् ॥
स्नानकाले पुष्करिण्यां यः कुर्य्याद्दन्त
धावनम् ।
तावज्ज्ञेयः स चण्डालो यावद्गङ्गां न
पश्यति ॥
भगवत्युदिते सूर्य्ये यः कुर्य्याद्दन्त
धावनम् ।

| | | |
|---|---|---|
| सर्व्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः ॥"<br>महाभारते ।<br>"तिक्तं कषायं कटुकं सुगन्धि कण्टकान्वितम् ।<br>क्षीरिणो वृक्षगुल्माद्या भक्षयेद्दन्तधावनम् ॥" | | तद्दन्तकाष्ठीं पितरो भुक्त्वा गच्छन्ति दुःखिनः ॥<br>उपवासदिने विप्र ! पितृश्राद्धदिने तथा ।<br>न ख तत्फलमाप्नोति दन्तधावनकृन्नरः ॥<br>प्रभाते मार्जयेद्दन्तान् वाससा रसनां तथा ।<br>कुर्य्याद्द्वादश विप्रेन्द्र ! कललानि जलैर्बधः ॥<br>उपवासे पितृश्राद्धे विधिनानेन जैमिने ! ।<br>दन्तधावनकृन्मर्त्यः संपूर्णं लभते फलम् ॥"<br>इति पाद्मे क्रियायोगसारः ॥ |

**दन्तधावनः**, पुं, (धावयत्यनेनेति । धावि + ल्युट् ।
दन्तानां धावनः ।) खदिरवृक्षः ।
गुच्छकरञ्जः ।
इति राजनिर्घण्टः ॥ वकुलः । इति शब्द-
चन्द्रिका ॥

**दन्तपत्रं**, क्ली, (दन्ता इव पत्राणि यस्य ।) कुण्ड-
लम् । इति शब्दरत्नावली ॥ (यथा कुमारे
।
७ । २३ ।
"कर्णावसक्तामलदन्तपत्रं
माता तदीयं मुखमुन्नमय्य ॥")

**दन्तपत्रकं**, क्ली, (दन्त इव शुभ्रं पत्रं दलं यस्य ।
कप् ।) कुन्दपुष्पम् । इति शब्दचन्द्रिका
॥

**दन्तपुष्पं**, क्ली, (दन्त इव शुभ्रं पुष्पमस्य ।) कतक-
फलम् । इति शब्दचन्द्रिका ॥

**दन्तफलं**, क्ली, (दन्त इव शुक्लं फलमस्य ।) कत-
कम् । इति शब्दचन्द्रिका ॥

**दन्तफलः**, पुं, (दन्त इव शुक्लं फलमस्य ।) कपित्थः ।
इति राजनिर्घण्टः ॥

**दन्तफला**, स्त्री, (दन्तवत् शुभ्रं फलं यस्याः ।
टाप् ।) पिप्पली । इति राजनिर्घण्टः ॥

**दन्तभागः**, पुं, (दन्तसहितो भागः । शाकपार्थि-
वादिवत् समासः ।) गजाग्रभागः । गजस्य
मुखतः स्कन्धपर्य्यन्तो योऽग्रभागः स
दन्त-
सहितः । इत्यमरभरतौ ॥

**दन्तमलं**, क्ली, (दन्तलग्नं दन्तस्य वा मलम् ।)
दन्तलग्नक्लेदः । तत्पर्य्यायः । पुष्पिका
२ । इति
हारावली । १९५ ॥

**दन्तमूलिका**, स्त्री, (दन्त इव शुक्लं मूलमस्याः ।

शीतादं पूतिवक्त्रञ्च विरुचिं विरसास्यताम् ॥
हन्यादाशु गदानेतान् कुर्य्याद्दन्तानपि स्थिरान् ।
लाक्षादिकमिदं तैलं दन्तरोगेषु पूजितम् ॥
इति लाक्षाद्यं तैलम् ।
जयेद्विस्रावणैः स्विन्नमबलं कृमिदन्तकम् ।
तथा च पीतैर्व्वातघ्नैः स्नेहगण्डूषधारणैः ॥
भद्रदार्व्वादिवर्षाभूलेपैः स्निग्धैश्च भोजनैः ।
कृमिदन्तापहं कोष्णं हिङ्गुदन्तान्तरे स्थितम् ॥
बृहतीभूमिकदम्बीपञ्चाङ्गुलकण्टकारिकाक्वाथः ।
गण्डूषस्तैलयुतः कृमिदन्तकवेदनाशमकः ॥
नीली वायसजङ्घा कटुतुम्बीमूलमेकैकम् ।
संचूर्ण्य दशनविधृतं दशनकृमिपातनं प्राहुः ॥
स्नेहानां कवलाः कोष्णाः सर्पिषस्त्रैवृतस्य च ।
निर्य्यूहाश्चानिलाघ्नानां दन्तहर्षप्रमर्दनाः ॥
त्रैवृतस्य सर्पिषः त्रिवृता पक्वस्य सर्पिषः कवल
इत्यर्थः ।
स्नैहिकोऽत्र हितो धूमो नस्यं स्नैहिकमेव च ।
पेया रसयवाग्वश्च क्षीरसन्तानिकाघृतम् ॥
शिरोवस्तिहितश्चापि क्रमो यश्चानिलापहः ।
अत्र दन्तहर्षे ।
अच्छिद्रदन्तमूलानि शर्करामुद्धरेद्भिषक् ।
लाक्षाचूर्णैर्म्मधुयुतैस्ततस्तान् प्रतिसारयेत् ॥
दन्तहर्षक्रियां चात्र कुर्य्यान्निरवशेषतः ।
कपालिका कृच्छ्रतमा तत्राप्येषा क्रिया हिता ॥
अत्र दन्तशर्करायाम् । एषा क्रिया दन्तहर्ष-
क्रिया ।
फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम् ।
तथातिकठिनं भक्ष्यं दन्तरोगी विवर्ज्जयेत् ॥"
इति भावप्रकाशः ॥

**दन्तवस्त्रं**, क्ली, (दन्तानां वस्त्रमिवाच्छादकत्वात् ।)
ओष्ठः । इति हेमचन्द्रः । ३ । २४५ ॥

**दन्तवासाः** [स्] पुं, (दन्तस्य वासो वस्त्रमिवा-
वरकत्वात् ।) ओष्ठः । इति त्रिकाण्डशेषः ॥
(यथा, कुमारे । ५ । ३४ ।
"अपि त्वदावर्ज्जितवारिसम्भृतं
प्रबालमासामनुवन्धि वीरुधाम् ।
चिरोज्झितालक्तकपाटलेन ते
तुलां यदारोहति दन्तवाससा ॥")

**दन्तशर्करा**, स्त्री, (दन्तस्य शर्करेव ।) दन्तरोग-
विशेषः ।
कफवायुशोषितदन्तगतमलम् ।
पाथुरि
इति भाषा ॥ (तस्य लक्षणं यथाह
माधवकरः ।
"मलो दन्तगतो यस्तु
कफमारुतशोषितः ।
शर्करेव खरस्पर्शा सा ज्ञेया
दन्तशर्करा ॥"
यथा च सुश्रुते निदानस्थाने १६
अध्याये ।
"शर्करेव स्थिरीभूतो मलो दन्तेषु
यस्य वै ।
सा दन्तानां गुणघ्नी तु विज्ञेया
दन्तशर्करा ॥")
तस्यौषधम् यथा, --
"गोरक्षकर्कटीमूलं पिष्टं वास्योदकेन
च ।
पीतं दिनत्रयेणैव नाशयेत्
दन्तशर्कराम् ॥"
इति गारुडे १९० अध्यायः ॥

**दन्तशाणः**, पुं, (दन्तानां शाण इव । चिक्कणता-
जनकत्वात् ।) निश्चुक्कणम् । इति
त्रिकाण्डशेषः ॥
मिषि इति भाषा ॥

**दन्तशिरा**, स्त्री, (दन्तानां शिरा यत्र ।) माढी
।
इति शब्दरत्नावली ॥

**दन्तशूलः**, पुं, (दन्तस्य शूल इव । शूलवेधनवद्-
वेदनादायकत्वात् ।) दशनवेदना ।
तस्यौषधम् ॥
यथा, --
"त्रिफलानिम्बयष्ट्याह्व
कटुकारग्वधैः शृतम् ।

कप् + टापि अत इत्वञ्च ।) दन्तीवृक्षः । इति
शब्दरत्नावली ॥

**दन्तरोगः**, पुं, (दन्तस्य रोगः ।) रदनामयः ।

तन्निदानादि दन्तशब्दे द्रष्टव्यम् ।
तस्यौषधं यथा,
"काकजङ्घाशिग्रुमूले मुखेन विधृते शिव ! ।
चर्व्वित्वा दन्तरोगाणां विनाशो हि भवेद्धर ! ॥"
दन्तरोगाणामित्यत्र दन्तकीटानामिति पुस्तका-
न्तरे पाठः ॥ इति गारुडे १८९ अध्यायः ॥
अपि च गारुडे १९८ अध्याये ।
"शुष्कमूलकशुण्ठीनां क्षारो हिङ्गुलनागरम् ।
शतपुष्पी वचा कुष्ठं दारु शिग्रु रसाञ्जनम् ॥
सौवर्च्चलं यवक्षारं सामुद्रं सैन्धवं तथा ।
भुजग्रन्थि विडं मुस्तं मधु शुक्रं चतुर्गुणम् ॥
मातुलुङ्गरसञ्चैव कदलीरसमेव च ।
तैलमेभिर्विपक्तव्यं कर्णशूलापहं परम् ।
वाधिर्य्यं कर्णनादश्च पूयस्रावश्च दारुणः ।
पूरणादस्य तैलस्य कृमयः कर्णयोः खिलाः ॥
क्षिप्रं विनाशमायान्ति शशाङ्ककृतशेखर ! ।
क्षारतैलमिदं श्रेष्ठं मुखदन्तामयापहम् ॥"
अन्यच्च ।
"तैलं लाक्षारसं क्षीरं पृथक् प्रस्थमितं पचेत् ।
द्रव्यैः पलमितैरेतैः क्वाथैश्चापि चतुर्गणैः ॥
लोध्रकट्फलमञ्जिष्ठापद्मकेशरपद्मकैः ।
चन्दनोत्पलयष्ट्याह्वैस्तत्तैलं वदने धृतम् ॥
दालनं दन्तचालञ्च दन्तमोक्षं कपालिकाम् ।

**दन्तवीजकः**, पुं, (दन्ता इव वीजानि यस्य । ततः

स्वार्थे कन् ।) दाडिमः । इति राजनिर्घण्टः ॥

**दन्तशटः**, पुं, (दन्तेषु शट इव म्लानिजनकत्वात् ।)

दन्तशठः । इत्यमरटीकायां मथुरानाथः ॥

**दन्तशठः**, पुं, (दन्तेषु शठ इव ग्लानिकारक-

त्वात् ।) जम्बीरः । कपित्थः । कर्म्मरङ्गकः ।
नागरङ्गकः । इति मेदिनी । ठे, १९ ॥ (यथा,
सुश्रुते । १ । ४६ ।
"ऐरावतं दन्तशठमम्लं शोणितपित्तकृत् ॥")
अम्लः । इति हेमचन्द्रः । ६ । २४ ॥

**दन्तशठा**, स्त्री, (दन्तेषु शठा ।) चाङ्गेरी । इति

मेदिनी । ठे, १९ ॥ (यथा, भावप्रकाशे ।
"चाङ्गेरी चुक्रिका दन्तशटाम्बष्ठाम्ललोणिका ॥")
क्षुद्राम्लिका । इति राजनिर्घण्टः ॥

पाययेन्मधुना मिश्रं
दन्तशूलोपशान्तये ॥"
इति गारुडे १७४ अध्यायः ॥

**दन्तहर्षः**, पुं, (दन्तानां हर्षो यस्मात् ।) दन्त-

रोगविशेषः । इति माधवकरः ॥
(अस्य लक्षणं
यथा, सुश्रुते निदानस्थाने १६ अध्याये ।
"दशनाः शीतमुष्णञ्च सहन्ते स्पर्शनं न च ।
यस्य तं दन्तहर्षन्तु व्याधिं विद्यात् समीरणात् ॥"
दन्तग्लानिः । यथा, --
"यस्य वै स्नातमात्रस्य हृदयं पीड्यते भृशम् ।
जायते दन्तहर्षश्च तं गतायुषमादिशेत् ॥"
इति वायुपुराणम् ॥)

**दन्तहर्षकः**, पुं, (दन्तान् हर्षयतीति । हृष +

णिच् + ण्वुल् ।) जम्बीरः । इति
जटाधरः ॥

**दन्तहर्षणः**, पुं, (दन्तान् हर्षयतीति । हृष +

णिच् + ल्युः ।) जम्बीरः । इति
त्रिकाण्डशेषः ॥

**दन्ताघातः**, पुं, (दन्तानाहन्तीति । आ + हन +

अण् ।) निम्बूकः । इति
राजनिर्घण्टः ॥ दशना-
घातः । (यथा, गणेशध्याने ।
"दन्ताघातविदारितारिरुधिरैः सिन्दूरशोभा-
करम् ॥")
रतिक्रीडायां तस्य स्थानानि
दन्तशब्दे द्रष्टव्यानि ॥

**दन्तार्ब्बुदं**, क्ली, पुं, (दन्तस्य अर्ब्बुदमिव ।) दन्त-

रोगभेदः । तत्पर्य्यायः । दन्तमूलम्
२ दन्त-

| | | |
|---|---|---|
| | | शोफः ३ द्विजव्रणः ४ । इति<br>राजनिर्घण्टः ॥<br><br>**दन्तायुधः**, पुं, (दन्त एव आयुधं यस्य ।) शूकरः ।<br><br>इति त्रिकाण्डशेषः ॥<br><br>**दन्तालिका**, स्त्री, (दन्तान् अलति पर्य्याप्नोतीति ।<br><br>अल + ण्वुल् । टापि अत इत्वम् ।)<br>वल्गा ।<br>इति त्रिकाण्डशेषः ॥<br><br>**दन्तावलः**, पुं, (अतिशयितौ दन्तौ अस्य ।<br><br>दन्त + “दन्तशिखात् संज्ञायाम् ।”<br>५ । २ । ११३ । |

इति वलच् । “वले ।” ६ । ३ । ११८ । इति दीर्घः ।) हस्ती । इत्यमरः । २ । ८ । ३४ ॥ (यथा, मनुटीकायां कुल्लूकभट्टः । ७ । १०६ । “सिंहः प्रबलमतिस्थूलमपि दन्तावलं हन्तुमाक्रमति ॥”)

**दन्तिका**, स्त्री, (दन्ती एव । स्वार्थे कन् टाप् पूर्ब्बह्रस्वश्च ।) दन्तीवृक्षः । इत्यमरः । २ । ४ । १४४ ॥

**दन्तिजा**, स्त्री, दन्तिका । इति शब्दरत्नावली ॥

**दन्तिनी**, स्त्री, (दन्तस्तदाकारो मूलेऽस्त्यस्याः । दन्त + इनिः + ङीप् ।) दन्तीवृक्षः । इति राज-
निर्घण्टः ॥

**दन्तिमदः**, पुं, (दन्तिनी मदः ।) हस्तिमदः । इति राजनिर्घण्टः ॥

**दन्ती**, स्त्री, (दाम्यत्यनयेति । दम + “हसिमृग्रिण्वेति ।” उणां । ३ । ८६ । इति तन् । ततो
गौरादित्वात् ङीष् ।) स्वनामख्यातवृक्षः । तत्पर्य्यायः । शीघ्रा २ श्येनघण्टा ३ निकुम्भी ४ नागस्फोता ५ दन्तिनी ६ उपचित्रा ७ भद्रा ८ रूक्षा ९ रेचनी १० अनुकूला ११ निःशल्या १२
चक्रदन्ती १३ विशल्या १४ मधुपुष्पा १५ एरण्ड-
फला १६ तरुणी १७ एरण्डपत्रिका १८ अनुरेवती १९ विशोधनी २० कुम्भी २१ उडुम्बरदला २२ । इति राजनिर्घण्टः ॥ निकुम्भः २३ ।
दन्तिका २४ प्रत्यक्पर्णी २५ उदूम्बरपर्णी २६ ।
इत्यमरः । २ । ८ । ३४ ॥ अस्या गुणाः । कटु-
त्वम् । उष्णत्वम् ।
शूलामत्वग्दोषार्शोव्रणाश्मरी-
शल्यशोधनत्वम् । दीपनत्वञ्च । इति राज-

**दन्तुरः**, त्रि, (उन्नता दन्ताः सन्त्यस्येति । “दन्त उन्नत उरच् ।” ५ । २ । १०६ । इति उरच् ।)
उन्नतदन्तः । दँतो इति भाषा ॥
“कदाचिद्दन्तुरो मूर्खः कदाचिल्लोमशः सुखी ।
कदाचित् तुन्दिलो दुःखी
कदाचिच्चञ्चलासती ॥”
इति सामुद्रकम् ॥
उन्नतानतः । इति मेदिनी । रे, १६६ ॥

**दन्तुरच्छदः**, पुं, (दन्तुर उन्नतानतश्छदो यस्य ।) बीजपूरः । इति राजनिर्घण्टः ॥

**दन्तोलूखलिकः**, त्रि, (दन्त एव उलूखलः । सोऽस्त्यस्येति । “अत इनिठनौ ।” ५ । २ । ११५ ।
इति ठन् ।) वानप्रस्थविशेषः । दन्तमात्रेण छित्त्वा
यो भक्षति सः । इति श्रीभागवतम् ॥ (यथा,
मनुः । ६ । १७ ।
“अश्मकुट्टो भवेद्वापि दन्तोलूखलिकोऽपि वा ॥”)

**दन्त्यः**, त्रि, (दन्तेषु भवः । दन्त + “शरीरावयवाच्च ।” ४ । ३ । ५५ । इति यत् ।) दन्तोद्भवः ।
इति व्याकरणम् ॥ (यथा, शिक्षायाम् । १७ ।
“स्युर्मूर्द्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः ॥”
दन्तेभ्योहितः । “शरीरावयवाद्यत् ।” ५ । १ । ६ ।
इति यत् । दन्तहितजनकः । यथा, सुश्रुते । १ । ४६ ।
“दन्त्योऽग्निमेधाजननोऽल्पमूत्र-
स्तन्योऽथ केश्योऽनिलहा गुरुश्च ॥”)

**दन्दशूकः**, पुं, (गर्हितं दशतीति । दन्श + यङ् +

**दभ**, इ क नोदे । इति कविकल्पद्रुमः ॥ (चुरां-परं-सकं-सेट् ।) इ क, दम्भयति । नोदः
प्रेरणम् । इति दुर्गादासः ॥

**दभ**, क नोदे । इति कविकल्पद्रुमः ॥ (चुरां-परं-सकं-सेट् ।) क, दाभयति । इति दुर्गादासः ॥

**दभ्रं**, त्रि, (दभ्नोतीति । दन्भ दम्भे + “स्फायितञ्चीति ।” उणां । २ । १३ । इति रक् ।) अल्पम् ।
इत्यमरः । ३ । १ । ६१ ॥ (यथा, निघण्टुः । ३ । २ ।
“ऋहन् । ह्रस्वः । निघृष्वः । मायुकः । प्रतिष्ठा ।
कृधु । वम्रकः । दभ्रम् । अभकः । क्षुल्लकः ।
अल्प इत्येकादशह्रस्वनामानि ॥”
यथा, ऋग्वेदे ।
१ । ८१ । २ ।
“असि दभ्रस्य चिद्वृधः ॥”)
समुद्रे, पुं । इत्युणादिकोषः ॥

**दम**, भ य उ इर् शमे । इति कविकल्पद्रुमः ॥ (दिवां-परं-अकं-सकञ्च-सेट् । उदित्वात् क्त्वावेट् ।)
भ य, दाम्यति । उ, दमित्वा दान्त्वा । इर्,
अदमत् अदमीत् । अस्मात् पुषादित्वात् नित्यं
ङ इत्यन्ये । शमः शान्तीभावः ।
दाम्यति मुनिः ।
शम इतिपदस्य ज्यन्तस्यापि सम्भवे शान्ती-
करणेऽप्ययमिति धातुप्रदीपः ।
दमित्वाप्यरि-
सङ्घातान् । इति दुर्गादासः ॥

**दमः**, पुं, (दमनमिति । दम + भावे घञ् । “नो-

निर्घण्टः ॥ अष्ठीलिकाध्मानगुल्मोदरनाशित्वम्
।
सारकत्वञ्च । इति राजवल्लभः ॥ अथ
लघुदन्ती ।
"लघ्वी दन्ती विशल्या च स्यादुडम्बरपर्ण्यपि
।
अथैरण्डफला शीघ्रा श्येनघण्टा घुणप्रिया ॥
वाराहाङ्गी च कथिता निकुम्भश्च मकूलकः ॥"
अथ बृहद्दन्ती ।
"एरण्डपत्रविठपा द्रवन्ती सम्बरी वृषा ।
चित्रोपचित्रा न्यग्रोधी प्रत्यक्पर्णाखुकर्ण्यपि ॥
* ॥
दन्तीद्वयं सरं पाके रसे च कटु दीपनम् ।
गुदाङ्कुराश्मशूलास्रकण्डूकुष्ठविदाहनुत् ॥
तीक्ष्णोष्णं हन्ति पित्तास्रकफशोथोदरक्रिमीन्
॥
लघुदन्तीफलगुणाः ।
क्षुद्रदन्तीफलं तु स्यान्मधुरं रसपाकयोः ।
शीतलं सृष्टविण्मूत्रगरशोथकफापहम् ॥"
इति भावप्रकाशः ॥

**दन्ती**, [न्] पुं, (प्रशस्तौ दन्तौ स्तः अस्येति ।

दन्त + इनिः ।) हस्ती । इत्यमरः । २ । ८ ।
३४ ॥
(यथा, देवीभागवते । २ । ९ । ४५ ।
"मन्त्रिपुत्त्रः स्थितस्तत्र स्थापयामास
दन्तिनः ॥"
स्त्रियां ङीप् । यथा, आर्य्यासप्तशत्याम् ।
६५२ ।
"स्नेहक्षतिर्जिगीषा समरः प्राणव्ययावधिः
करि-
णाम् ।
न वितनुते कमनर्थं दन्तिनि ! तव यौवनोद्भेदः
॥")

**दन्तीवीजं**, क्ली, (दन्त्या इव वीजमस्य ।) जय-

पालः । इति राजनिर्घण्टः ॥

"यजजपदशां यङः ।" ३ । २ । १६६ ।
इति
ऊकः ।) सर्पः । (यथा,
वैद्यकरत्नमालायाम् ।
"चक्षुःश्रवा दन्दशूको गूढपात् पन्नगोरगाः
॥")
राक्षसः । इति मेदिनी । के, १९३ ॥
(हिंस्रे, त्रि ।
यथा, भट्टिः । १ । २६ ।
"इषुमति रघुसिंहे दन्दशूकान् जिघांसौ
धनुररिभिरसह्यं मुष्टिपीडं दधाने ॥")

**दन्भ**, उ न दम्मे । इति कविकल्पद्रुमः ॥ (स्वां-

परं-अकं-सेट् । उदित्त्वात् क्त्वावेट् ।)
दम्भः
परवञ्चनहेतुव्यापारः । उ, दम्भित्वा
दब्ध्वा । न,
दभ्नोति खलश्छलयति इत्यर्थः । इति
दुर्गा-
दासः ॥

**दन्भ**, क ङ संघाते । इति कविकल्पद्रुमः ॥ (चुरां-

आत्मं-सकं-सेट् ।) क ङ, दम्भयते ।
सङ्घातो
राशीकरणम् । इति दुर्गादासः ॥

**दन्श**, औ दंशने । इति कविकल्पद्रमः ॥ (भ्वां-

परं-सकं-अनिट् ।) औ, अदाङ्क्षीत् । दशति
विम्बफलं शुकशावकः ।
दंशनमित्यनुस्वारहीनं
पठित्वा तन्निर्द्देशात् अनटि नकारलोप
इत्याहुः ।
अतएव दशनो दन्तः । नाहिर्द्दंशयते कश्चि-
द्विद्यया गरुडाख्यया । इति हलायुधः ।
भट्ट-
मल्लमते दंशनमिह सन्नाहः । तेन
अदंशयन्न-
वहितशौर्य्यदंशनास्तनूरयं नय इति
वृष्णिभू-
भृतः । इति माघः । तनूः
कवचवृताश्चक्रुरि-

दात्तोपदेशस्येति ।" ७ । ३ । ३४ ।
इति वृद्ध्य-
भावः ।) दण्डः । इत्यमरः । २ । ८ ।
२१ ॥
दण्डस्य लक्षणं यथा, --
"दमनाद्दण्डनाच्चैव तस्माद्दण्डं
विदुर्बुधाः ।
यत्र श्यामो लोहिताक्षो दण्डश्चरति
निर्भयः ।
प्रजास्तत्र न मुह्यन्ति नेता चेत् साधु
पश्यति ॥"
इति मत्स्यपुराणम् ॥
(यथा, मनुः । ८ । १९२ ।
"निक्षेपस्यापहर्त्तारं तत्समं दापयेत्
दमम् ॥")
तपःक्लेशसहिष्णुता । तत्पर्य्यायः ।
दान्तिः २
दमथः ३ । इत्यमरः । ३ । २ । ३ ॥
दमनम् ।
तत्तु वाह्येन्द्रियनिग्रहः । इति
वेदान्तसारः ॥
विषयाद्व्यावृत्तस्य मनसो
यथेष्टविनियोगयोग्यता ।
इति केचित् ॥ दमस्य लक्षणं यथा, --
"कुत्सितात् कर्म्मणो विप्र ! यच्च
चित्तनिवारणम् ।
स कीर्त्तितो दमः प्राज्ञैः
समस्ततत्त्वदर्शिभिः ॥"
इति पाद्मे क्रियायोगसारः ॥
(यथा, मनुः । ६ । ९२ ।
"धृतिःक्षमा दमोऽस्तेयं
शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्राधा दशकं
धर्म्मलक्षणम् ॥")
कर्द्दमः । इति मेदिनी । मे, १४ ॥
(गृहम् ।
इति निघण्टुः । ३ । ४ ॥ यथा, ऋग्वेदे
। १ । ७५ । ५ ।
"अग्ने यक्षि स्वं दमम् ॥"
महर्षिविशेषः । यथा, महाभारते । १३
। २६ । ५ ।

| | | |
|---|---|---|
| | त्यर्थः । अत्र परस्मैपदं चिन्त्यमिति वल्लभः । वस्तुतस्तु दंशं फरोतीति ञौ साध्यम् । इति दुर्गादासः ॥ | “विश्वामित्रः स्थूलशिराः सम्बर्त्तः प्रमतिर्द्दमः ॥” मरुत्तस्य राज्ञः पुत्त्रः । यथा, भागवते । ९ । २ । २९ । “मरुत्तस्य दमः पुत्त्रस्तस्यासीद्राजवर्द्धनः ॥” मरुत्तस्य पौत्त्रः । इति मार्कण्डेयपुराणम् । यथा तत्रैव । १३४ । १ -- ५ । |

"एवं स राजा धर्म्मात्मा नरिष्यन्तोऽभवत् पुरा ।
मरुत्ततनयो विप्र ! विख्यातबलपौरुषः ॥"
"नरिष्यन्तस्य तनयो दुष्टारिदमनो दमः ।
शक्रस्येव बलं तस्य दयाशीलं मुनेरिव ॥
वाभ्रव्यामिन्द्रसेनायां स जज्ञे तस्य भूभृतः ।
नववर्षाणि जठरे स्थित्वा मातुर्महायशाः ॥
यद्ग्राहयामास दमं मातरं जठरे स्थितः ।
दमशीलश्च भविता यतश्चायं नृपात्मजः ॥
ततस्त्रिकालविज्ञानः स हि तस्य पुरोहितः ।
दम इत्यकरोत् नाम नरिष्यन्तसुतस्य तु ॥
स दमो राजपुत्त्रस्तु धनुर्व्वेदमशेषतः ।
जगृहे नरराजस्य सकाशाद्वृषपर्व्वणः ॥"
अस्य विशेषविवरणन्तु तत्रैवाध्याये विशेषतो
द्रष्टव्यम् ॥ भीमस्य राज्ञः पुत्त्रविशेषः । यथा,
महाभारते । ३ । ५३ । ९ ।
"कन्यारत्नं कुमारांश्च त्रीनुदारान् महायशाः ।
दमयन्तीं दमं दान्तं दमनञ्च सुवर्च्चसम् ॥"
विष्णुः । यथा, तत्रैव । १३ । १४९ । १०५ ।
"धनुर्धरो धनुर्व्वेदो दान्तो दमयिता दमः ॥")

**दमकः**, त्रि, (दमयतीति । दम + णिच् + ण्वुल् ।)
दमनकर्त्ता । इति व्याकरणम् ॥ (यथा मनुः ।
३ । १६२ ।
"हस्तिगोऽश्वोष्ट्रदमको नक्षत्रैर्यश्च जीवति ॥")

**दमघोषः**, पु, चन्द्रवंशीयराजविशेषः । स चेदि-
देशपतिः शिशुपालपिता च । इति पुराणम् ॥
(यथा, भागवते । ९ । २४ । ३९ ।
"दमघोषश्चेदिराजः श्रुतश्रवसमग्रहीत् ॥")

**दमघोषसुतः**, पुं, (दमघोषस्य सुतः ।) शिशु-
पालः । इति त्रिकाण्डशेषः ॥

"स्वाधिकारात् प्रमाद्यन्तीः प्रजा दमयितुं शीलं
यस्य वैवस्वतादिरूपेण स दमनः ।" इति
तद्भाष्ये शङ्कराचार्य्यः ॥ महादेवः । यथा,
महाभारते । १३ । १७ । १३६ ।
"महाप्रसादो दमनः शत्रुहा श्वेतपिङ्गलः ॥")

**दमनकः**, पुं, (दमन एव । स्वार्थे कन् ।) वृक्ष-
विशेषः । दोना दति भाषा । तत्पर्य्यायः ।
दमनः २ दान्तः ३ गन्धोत्कटा ४ मुनिः ५
जटिला ६ दण्डी ७ पाण्डुरागः ८ ब्रह्मजटा ९
पुण्डरीकः १० तापसपत्री ११ पत्री १२ पवि-
त्रकः १३ देवशेखरः १४ कुलपत्रः १५ विनीतः १६
तपस्विपत्रः १७ । इति राजनिर्घण्टः ॥ मुनि-
पुत्त्रः १८ तपोधनः १९ गन्धोत्कटः २० ब्रह्म-
जटी २१ कुलपुत्त्रकः २२ । इति भावप्रकाशः ॥
अस्य गुणाः । शीतलत्वम् । तिक्तत्वम् । कषाय-
त्वम् । कटुत्वम् । कुष्ठदोषद्वन्द्वत्रिदोषविष-
विस्फोटविकारहरत्वञ्च । इति राजनिर्घण्टः ॥
हृद्यत्वम् । वृष्यत्वम् । सुगन्धित्वम् । ग्रहण्यस्र-
क्लेदकण्डूनाशित्वञ्च । इति भावप्रकाशः ॥ (क्ली,
षडक्षरच्छन्दोविशेषः । यथा, चिन्तामणिधृत-
वचनम् ।

अष्टोत्तरशतं कामगायत्र्या चाभिमन्त्र्य तत् ।
दत्त्वा पुष्पाञ्जलिं कामदेवं वन्देत मन्त्रवत् ॥
मन्त्रश्चायम् ।
नमोऽस्तु पुष्पबाणाय जगदाह्लादकारिणे ।
मन्मथाय जगन्नेत्रे रतिप्रीतिप्रदायिने ॥ इति ॥
आमन्त्रितोऽसि देवेश ! पुराणपुरुषोत्तम ! ।
प्रातस्त्वां पूजयिष्यामि सान्निध्यं कुरु केशव ! ॥
निवेदयाम्यहं तुभ्यं प्रातर्द्दमनकं शुभम् ।
सर्व्वथा सर्व्वदा विष्णो ! नमस्तेऽस्तु प्रसीद मे ॥
इत्थमामन्त्र्य देवेशं दत्त्वा पुष्पाञ्जलिं पुनः ।
गोतनृत्यादिना रात्रौ कुर्य्याज्जागरणं मुदा ॥ * ॥
अथ दमनकार्पणविधिः ।
प्रातःस्नानादि निर्व्वर्त्य नित्यपूजां विधाय च ।
दमनारोपणार्थञ्च महापूजां समाचरेत् ॥
ततो दमनकं भक्त्या पाणिभ्यां परिगृह्य च ।
घण्टादिवाद्यघोषेण श्रीकृष्णाय समर्पयेत् ॥
तत्र मन्त्रः ।
देवदेव जगन्नाथ वाञ्छितार्थप्रदायक ! ।
कृत्स्नान् पूरय मे कृष्ण कामान् कामेश्वरीप्रिय ! ॥
इदं दमनकं देव गृहाण मदनुग्रहात् ।
इमां सांवत्सरीं पूजां भगवन्निह पूरय ॥ इति ॥
ततो दामनकीं मालां गन्धादीनि समर्प्य च ।
गीतादिनोत्सवं कृत्वा श्रीकृष्णं प्रार्थयेदिदम् ॥
मणिविद्रुममालाभिर्म्मन्दारकुसुमादिभिः ।
इयं सांवत्सरी पूजा तवास्तु गरुडध्वज ! ॥
वनमालां यथा देव ! कौस्तुभं सततं हृदि ।
तद्वद्दामनकीं मालां पूजाञ्च हृदये वहेत्यादि ॥
भगवन्तं प्रणम्याथ गुरुं संपूज्य भक्तितः ।

**दमथः**, पुं, (दमु उपशमे + "बाहुलकात् दृशमि-
दमिभ्यश्च ।" ३ । ११४ । इति अथः ।
इत्युज्वल-
दत्तः ।) दमः । दण्डः । इत्युणादिकोषः ॥

**दमनं**, क्ली, (दम + भावे ल्युट् ।) दण्डः । यथा,
"अत्युच्छ्रितस्य दमनमुचितञ्च श्रुतौ श्रुतम्
॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डम् ॥

**दमनः**, पुं, (दाम्यतीति । दम + ल्युः ।) पुष्प-
विशेषः । दोना इति भाषा । तत्पर्य्यायः ।
पुष्पचामरः २ । इति त्रिकाण्डशेषः ॥
(यथा,
"दमनस्तु वरस्तिक्तो हृद्यो वृष्यः सुगन्धिकः
।
ग्रहणाद्विषकुष्ठास्रक्लेदकण्डूत्रिदोषजित् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)
वीरः । उपशान्तः । इति शब्दरत्नावली ॥
कुन्दवृक्षः । इति राजनिर्घण्टः ॥ (ऋषि-
विशेषः । यथा, महाभारते । ३ । ५३ । ६ ।
"तमभ्यच्छत् ब्रह्मर्षिर्दमनो नाम भारत ! ।
तं स भीमः प्रजाकामस्तोषयामास धर्म्मवित्
॥"
अस्य भीमस्य पुत्त्रविशेषः । यथा, तत्रैव ।
३ ।
५३ । ९ ।
"कन्यारत्नं कुमारांश्च त्रीनुदारात् महायशाः
।
दमयन्तीं दमं दान्तं दमनञ्च सुवर्च्चसम् ॥"
विष्णुः । यथा, महाभारते । १३ । १४९ ।
३४ ।
"मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः ॥"
"द्विगुणनगणमिह वितनु हि ।
दमनकमिति गदति शुचि हि ॥"
एकादशाक्षरच्छन्दोविशेषोऽपि । यथा,
तत्रैव ।
"द्विजवरगणयुगममलं तदनु च कलय
कर-
तलम् ।
फणिपतिवरपरिगदितं दमनकमिदमति-
ललितम् ॥")

**दमनकारोपणोत्सवः**, पुं, (दमनकस्य आरोप-
णार्थं य उत्सवः ।) श्रीकृष्णस्य
दमनकार्पणार्थ-
महापूजारूपोत्सवः । यथा, --
"चैत्रस्य शुक्लद्वादश्यां
दमनारोपणोत्सवम् ।
विदध्यात्तद्विधिर्बौधायनाद्युक्तोऽत्र
लिख्यते ॥
मधोः सितैकादश्याञ्च प्रातःकृत्यं
समाप्य च ।
गत्वा दमनकारामं तत्राशोकं स्मरं
यजेत् ॥
तत्र मन्त्रः ।
अशोकाय नमस्तुभ्यं
कामस्त्रीशोकनाशन ! ।
शीकार्त्तिं हर मे नित्यमानन्दं जनयस्व
मे ॥
नेष्यामि कृष्णपूजार्थं त्वां
कृष्णप्रीतिकारकम् ।
इति संप्रार्थ्य नत्वा च गृह्णीयाद्दमनं
शुभम् ॥
प्रोक्ष्य तत् पञ्चगव्येन प्रक्षाल्याद्भिः
प्रपूज्य च ।
वस्त्रेणाच्छाद्य वेदादिघोषेण गृहमानयेत्
॥ * ॥
अथ दमनकाधिवासविधिः ।
कृष्णस्याग्रे समुद्धृत्य
सर्व्वतोभद्रमण्डलम् ।
निधाय दमनं तत्र रात्रौ तदधिवासयेत्
॥
तत्र मन्त्रः ।
संपूज्य ब्राह्मणान् शक्त्या भूञ्जीत सह
बन्धुभिः ॥
पारणाहे न लभ्येत द्वादशी घटिकापि चेत् ।
तदा त्रयोदशी ग्राह्या पवित्रा दमनार्पणे ॥
न कृष्णे दमनारोपः स्यान्मधौ विघ्नतो यदि
।
वैशाख्यां श्रावणे मासि कर्त्तव्यं वा तदर्पणम्
॥
अतएवोक्तं ब्रह्मणा देवीपुराणे ।
चैत्रादौ कारयेत् पूजां सम्यग्वत्स !
यथाविधि ॥
गन्धधूपार्घ्यनैवेद्यैर्म्माल्यैर्द्दमनकोद्भवैः ।
सहोमं पूजयेद्देवं सर्व्वान् कामानवाप्नुयात् ॥
सर्व्वतीर्थाभिषेकस्य फलं प्राप्नोति मानवः
॥"
इति श्रीहरिभक्तिविलासे १४ विलासः ॥

**दमनी**, स्त्री, (दम्यतेऽग्निरनया । दम + ल्युट् ।
स्त्रियां ङीप् ।) अग्निदमनीवृक्षः । इति राज-
निर्घण्टः ॥

**दमयन्ती**, स्त्री, (दमयति नाशयति अमङ्गलादिक-
मिति । दम + णिच् + शतृ + ङीप् ।) भद्र-
मल्लिका । इति शब्दमाला ॥ नलराजपत्नी ।
सा विदर्भदेशीयभीमराजकन्या । (यथा,
महा-
भारते । ३ । ५३ । ५-९ ।
"तथैवासीद्विदर्भेषु भीमो भीमपराक्रमः ।
शूरः सर्व्वगुणैर्युक्तः प्रजाकामः स चाप्रजः ॥
स प्रजार्थे परं यत्नमकरोत् सुसमाहितः ।
तमभ्यगच्छद्ब्रह्मर्षिर्दमनो नाम भारत ! ॥
तं स भीमः प्रजाकामस्तोषयामास धर्म्मवित्
।

| | | |
|---|---|---|
| | पूजार्थं देवदेवस्य विष्णोर्लक्ष्मीपतेः प्रभोः ।<br>दमन ! त्वमिहागच्छ सान्निध्यं कुरुते नमः ॥ इति<br>सबीजं कामदेवञ्च तथा भस्मशरीरकम् ।<br>अनङ्गं मन्मथञ्चैव वसन्तसखमेव च ॥<br>स्मरं तथेक्षुचापञ्च पुष्पबाणञ्च पूजयेत् ।<br>प्रागादिदिक्षु रत्याढ्यं विधिवद्दमने क्रमात् ॥ | |

महिष्या सह राजेन्द्र ! सत्कारेण
सुवर्च्चसम् ॥
तस्मै प्रसन्नो दमनः सभार्य्याय वरं ददौ
।
कन्यारत्नं कुमारांश्च त्रीनुदारान्
महायशाः ॥
दमयन्तीं दमं दान्तं दमनञ्च सुवर्च्चसम्
।
उपपन्नान् गुणैः सर्व्वैर्भीमान्
भीमपराक्रमान् ॥
दमयन्ती तु रूपेण तेजसा यशसा श्रिया
।
सौभाग्येन च लोकेषु यशः प्राप
सुमध्यमा ॥"
अस्या विशेषविवरणन्तु
तमेवाध्यायमारभ्य
विस्तरशो द्रष्टव्यम् ॥)

**दमितः**, त्रि, (दम्यते स्म इति । दम + क्तः ।
"वा दान्तशान्तेति ।" ७ । २ । २७ ।
इति
पक्षे इट् ।) दान्तः । इत्यमरः । ३ । १ ।
९७ ॥
(यथा, हरिवंशे । ६७ । ५६ ।
"यथेयं सरिदम्भोदा भवेच्छिवजलाशया
।
व्रजोपभोग्या च यथा नागे वै दमिते मया
॥")
क्लेशसहमात्रम् । इति भरतः ॥
भारवाहनादि-
क्लेशसहः । इति सुभूतिः ॥

**दमी**, [न्] त्रि, (दमोऽस्यास्तीति । दम + इनिः ।)
दमनविशिष्टः । (तीर्थविशेषे, क्ली ।
तत्प्रव-
र्त्तक-ऋषिभेदे, पुं, । यथा, महाभारते ।
३ । ८२ ।
७१ -- ७४ ।
"प्रदक्षिणमुपावृत्य गच्छेत भरतर्षभ ! ।
अयन्तु अधर्म्मात् मृषागर्भे संजोतः ।
यथा,
भागवते । ४ । ८ । २ ।
"मृषाऽधर्म्मस्य भार्य्यासीद्दम्भं मायाञ्च
शत्रुहन् ! ।
असूत मिथुनं तत्तु निरृतिर्जगृहेऽप्रजाः
॥")
कल्कम् । शाटोपाहङ्कृतिः । इति
शब्दरत्ना-
वली ॥ (यथा, गीतायाम् । १६ । १७ ।
"आत्मसम्भाविता स्तब्धा
धनमानमदान्विताः ।
यजन्ते नाम यज्ञैस्ते
दम्भेनाविधिपूर्ब्बकम् ॥"
धर्म्मानुत्साहः । यथा, मनुः । ४ । १६३
।
"नास्तिक्यं वेदनिन्दाञ्च देवतानाञ्च
कुत्सनम् ।
द्वेषं दम्भञ्च मानञ्च क्रोधं तैक्ष्ण्यञ्च
वर्जयेत् ॥"
महादेवः । यथा, महाभारते । १३ । १७
। ७८ ।
"दम्भो ह्यदम्भो वैदम्भो वश्यो वशकरः
कलिः ॥")

**दम्भोलिः**, पुं, (दम्भ नोदे + भावे असुन् । दम्भसि
प्रेरणे अलति पर्य्याप्नोतीति । अल +
इन् ।)
वज्रम् । इत्यमरः । १ । १ । ५० ॥

**दम्यः**, पुं, (दम्यते इति । दम + यत् ।) वत्स-
तरः । स तु प्राप्तदमनकालो गौः ।
इत्यमरः ।
२ । ९ । ६२ ॥ अनड्वान् । इति
राजनिर्घण्टः ॥
(यथा, महाभारते । १३ । ६६ । ४ ।
"शकटं दम्यसंयुक्तं दत्तं भवति चैव हि
॥")
दमनीये, त्रि ॥

**दय**, ञि ङ ग्रहणे । गतौ । वधे । दाने । अवने ।

**दयितं** त्रि, (दय्यते स्मेति । दय + क्तः ।) प्रियम् ।
इत्यमरः । ३ । १ । ५३ ॥ (यथा, आर्य्यासप्त-
शत्याम् । २८८ ।
"दृष्टमदृष्टप्रायं दयितं कृत्वा प्रकाशितन्त्वनया
।
हृदयं करेण ताडितमथ मिथ्याव्यञ्जितत्रपया
॥"
यथा च पञ्चतन्त्रे । २ । १८९ ।
"दयितजनविप्रयोगो वित्तवियोगश्च केन
सह्याः
स्युः ।
यदि सुमहौषघकल्पो वयस्यजनसङ्गमो न
स्यात् ॥")

**दयितः**, पुं, (दय + क्तः ।) पतिः । इति जटा-
धरः ॥

**दयिता**, स्त्री, (दयित + टाप् ।) भार्य्या । इति
हलायुधः ॥ (यथा, रघुः । २ । ३ ।
"निवर्त्य राजा दयितां दयालु-
स्तां सौरभेयीं सुरभिर्यशोभिः ॥")

**दर**, व्य, (दीर्य्यते इति । दॄ + अप् ।) ईषदर्थः ।
इति मेदिनी । रे, ४७ ॥ (यथा, आर्य्यासप्त-
शत्याम् । ३०० ।
"दरतरलेऽक्षिणि वक्षसि दरोन्नते तव मुखे च
दरहसिते ।
आस्तां कुसुमं वीरः स्मरोऽधुना चित्रधनु-
षापि ॥"
"अक्षिणि नेत्रे ईषच्चञ्चले सति । तवेषदुन्नमिते
वक्षसि मुखे च किञ्चिद्धसितवति सति ।" इति
तट्टीका ॥)

**दरं**, क्ली, शङ्खः । यथा । विष्णुं वन्दे दरकमल-
कौमोदकीचक्रपाणिमितिक्रमदीपिका ॥

**दरः**, पुं क्ली, (दीर्य्यते वक्षोऽनेन । दॄ + "ग्रहवृदृ-
निश्चिगमश्च ।" ३ । ३ । ५८ । इति अप् ।)
भयम् । (यथा, आर्य्यासप्तशत्याम् । २९५ ।
"दरनिद्राणस्यापि स्मरस्य शिल्पेन निर्गता-
सून् मे ।

तीर्थं कुरुवरश्रेष्ठ ! त्रिषु लोकेषु विश्रुतम् ॥
दमीति नाम्ना विख्यातं सर्व्वपापप्रमोचनम् ।
यत्र ब्रह्मादयो देवा उपासन्ते महेश्वरम् ॥
तत्र स्नात्वार्च्चयित्वा च रुद्रं देवगणैर्वृतम् ।
जन्मप्रभृति यत् पापं तत् स्नातस्य प्रणश्यति ॥
दमी चात्र नरश्रेष्ठ ! सर्व्वदेवैरभिष्टुतः ।
तत्र स्नात्वा नरश्रेष्ठ ! हयमेधमवाप्नुयात् ॥”
दमीत्यत्र द्रिमीति क्वचित् पाठः ॥)

**दमुनाः**, [स्] पुं, (दाम्यतीति । अन्तर्भूतण्यर्थात् दमधातोः + “दमेरुनसिः ।” उणां । ४ । २३४ । इति उनसिः ।) अग्निः । इत्यमरः । १ । १ । ५९ ॥
शुक्राचार्य्यः । इत्युणादिकोषः ॥

**दमूनाः**, [स्] पुं, (दमुनस् + अन्येषामपि दृश्यते इति पत्रे दीर्घः । यद्वा, दमेरूनसिरिति पठित्वा ऊनसिप्रत्ययः ।) अग्निः । इति शब्दरत्नावली ॥
(त्रि, दमनीयः । यथा, ऋग्वेदे । १ । १४१ । ११ ।
“अस्मे रयिं न स्वर्थं दमूनसं भगं दक्षं न पपृचासि धर्णसिम् ॥”
दानमनाः । दान्तचित्तः । यथा, तत्रैव । ५ । ४ । ५ ।
“जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञ-मुपयाहि विद्वान् ॥”)

**दम्पती**, पुं, (जाया च पतिश्च । राजदन्तादिगणे पाठात् जायाया दम्भावो वा निपात्यते ।)
भार्य्यापती । इत्यमरः । २ । ६ । ३८ ॥ (यथा, मनुः । ३ । ११६ ।
इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-सकं-सेट् ।)
अवनं पालनम् । ञि, दयितोऽस्ति । ङ दयते
दीनं दयालुः । तेषां दयसे न कस्मात् । अत्र
कर्म्मणि षष्ठी । इति दुर्गादासः ॥

**दयः**, पुं, (दय + बाहुलकात् अप ।) दया । इति शब्दरत्नावली ॥

**दया**, स्त्री, (दय + भिदाद्यङ् । ततष्टाप् ।) करुणा ।
अस्या लक्षणं यथा, पाद्मे क्रियायोगसारे ।
“यत्नादपि परक्लेशं हर्त्तुं या हृदि जायते ।
इच्छा भूमिसुरश्रेष्ठ ! सा दया परिकीर्त्तिता ॥”
अपि च मत्स्यपुराणे ।
“आत्मवत् सर्ब्बभूतेषु यो हिताय शुभाय च ।
वर्त्तते सततं हृष्टः क्रिया ह्येषा दया स्मृता ॥” * ॥
“परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा ।
आत्मवद्वर्त्तितव्यं हि दयैषा परिकीर्त्तिता ॥”
इत्येकादशीतत्त्वम् ॥
(इयं हि शक्तीनामन्यतमा । यथा, देवीभाग-वते । १ । १५ । ६० ।
“श्रद्धा मेधा स्वधा स्वाहा क्षुधा निद्रा दया गतिः ।
“संस्थिताः सर्व्वतः पार्श्वे महादेव्याः पृथक् पृथक् ॥”)

**दयाकूर्च्चः**, पुं, (दयायां कूर्च्चः शीर्षमिव प्रधानम् ।)
बुद्धः । इति हेमचन्द्रः । २ । १४८ ॥

**दयालुः**, त्रि, (दयते इति । दय + “स्पृहिगृहीति ।” ३ । २ । १५८ । इति आलुच् ।) दयायुक्तः ।
मुग्धे ! तव दृष्टिरसावर्ज्जुनयन्त्रेषुरिव हन्ति ॥”)
गर्त्तः । इत्यमरः । ३ । ३ । १८४ ॥ (शङ्खः । यथा, भागवते । १ । ११ । २ ।
“स उच्चकाशे धवलोदरो दरो-ऽप्युरुक्रमस्याधरशोणशोणिमा ।
दाध्मायमानः करकञ्जसंपुटे यथाब्जषण्डे कलहंस उत्स्वनः ॥”)
कन्दरे, पुं स्त्री । इत्यमरटीकायां भरतः ॥
(स्त्रियां ङीप् । यथा, ऋतुसंहारे । १ । २५ ।
“ध्वनति पवनविद्धः पर्व्वतानां दरीषु स्फुटति पटुनिनादः शुष्कवंशस्थलीषु ॥”)

**दरकण्टिका**, स्त्री, (दर ईषत् कण्टो यस्याः कप् । टापि अत इत्वम् ।) शतावरी । इति राजनिर्घण्टः ॥

**दरणिः**, पुं, (दॄ विदारणे + “दृणातेरप्यनिः ।” २ । १०३ । इति उज्ज्वलदत्तोक्त्या अनिः ।) कूल-भङ्गः । भाङ्गन इति भाषा । तत्पर्य्यायः । कूलहण्डः २ । इति शब्दरत्नावली ॥ कूल-तण्डुलः ३ । इति भूरिप्रयोगः ॥

भुक्तवत्स्वथ विप्रेषु स्वेषु भृत्येषु चैव हि ।
भुञ्जोयातां ततः पश्चादवशिष्टन्तु दम्पती ॥”)

**दम्भः**, पुं, (दभ्यते इति । दम्भ दम्भे + घञ् ।)

कपटः । (यथा, पञ्चतन्त्रे । १ । २२२ ।
“सुगुप्तस्यापि दम्भस्य ब्रह्माप्यन्तं न गच्छति ॥”

तत्पर्य्यायः । कारुणिकः २ कृपालुः ३ सूरतः
४ । इत्यमरः । ३ । १ । १५ ॥ (यथा, रघुः । १० । १९ ।
“दयालुमनघस्पृष्टं पुराणमजरं विदुः ॥”)

**दरत्,** [द्] स्त्री, (दृणातीति । दॄ विदारणे +

“शॄदभसोऽदिः ।” उणां । १ । १२९ । इति
अदिः ।) प्रपातः । भयम् । पर्व्वतः । इति
मेदिनी । दे, ३० ॥ म्लेच्छजातिः । इति
लिङ्गादिसंग्रहे अमरः ॥ (देशविशेषः । यथा,
राजतरङ्गिण्याम् । १५७ ।
“दरत्तुरस्काधिपयोर्यः केशरिवराहयोः ।
हिमवद्विन्ध्ययोरासीदार्य्यावर्त्तइवान्तरे ॥”)
हृत् । तीरम् । इति सिद्धान्तकौमुद्यामुणादि-
वृत्तिः ॥

**दरदं**, क्ली, (दर ईषत् दायति शुध्यतीति । दै +

कः ।) हिङ्गुलम् । इति राजनिर्घण्टः ॥
(क्वचित्
पुंलिङ्गेऽपि दृश्यते । अस्य पर्य्यायो यथा, --
“रक्तं मर्कटशीर्षञ्च हिङ्गुलं दरदो रसः ॥”
इति वैद्यकरत्नमालायाम् ॥
पर्य्यायान्तरं यथा, --
“हिङ्गुलन्दरदं म्लेच्छं चित्राङ्गञ्चूणपारदम् ।
दरदस्त्रिविधः प्रोक्तश्चर्म्मारः शुकतुण्डकः ॥
हंसपादस्तृतीयः स्याद्गुणवानुत्तरोत्तरम् ।
चर्म्मारः शुक्लवर्णः स्यात् सपीतः
शुकतुण्डकः ॥
जवाकुसुमसङ्काशो हंसपादो महोत्तमः ॥”
इति भावप्रकाशस्य पूर्ब्बस्वण्डे प्रथमे भागे ॥
“दरदं तण्डुस्थूलं कृत्वा मृत्पात्रके त्रिदिनम् ।
भार्व्व जम्बीररसैश्चाङ्गेर्य्या वा रसैर्बहुधा ॥
ततश्च जम्बीरवारिणा चाङ्गेर्य्या रसेन
परिप्लुतम् ।
कृत्वा स्थालीमध्ये निधाय
तदुपरिकठिनीघृष्टम् ॥
चारु शरावं तत्र त्रिंशद्वारं जलं देयं उष्णे हेयं
तथैव तदूद्र्ध्वपातनेन निर्म्मलं शिवजः ॥”
“हिङ्गुले हिङ्गुलुर्याति दरदः शुकतुण्डकः ।
रसगन्धकसम्भूतो हिङ्गुलो दैत्यरक्तकः ॥
अम्लवर्गद्रवैः पिष्ट्वा दरदो माहिषेण च ।
दुग्धेन सप्तधा पिष्टः शुष्कीभूतो विशुध्यति ॥
अन्यच्च ।
मेषीदुग्धेन दरदमम्लवर्गैर्विभावितम् ।

**दरितः**, त्रि, (दरो भयमस्य सञ्जातः । दर +

तारकादित्वात् इतच् ।) भीतः । इति
हेम-
चन्द्रः । ३ । २९ ॥

**दरिद्रः**, पुं, (दरिद्राति दुर्गच्छतीति । दरिद्रा +

अच् ।) निर्धनः । तत्पर्य्यायः । निस्वः २
दुर्विधः ३ दीनः ४ दुर्गतः ५ । इत्यमरः ।
३ । १ ।
४९ ॥ कीकटः ६ दुस्थः ७ । इति
जटाधरः ॥
अस्तमितः ८ । इति दानधर्म्मः । तस्य
कारणं
यथा, --
“अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य
च ।
अदत्त्वा हेमधेनूश्च दरिद्रो जायते नरः ॥”
इति पाद्मे भूखण्डम् ॥
“दरिद्रो यस्त्वसन्तुष्टः कृपणो
योऽजितेन्द्रियः ॥”
इति श्रीभागवतम् ॥

**दरिद्रा**, क्ष लु दुर्गत्याम् । इति कविकल्पद्रुमः ॥

(अदां-परं-अकं-सेट् ।)
दुर्गतिरकिञ्चनीभावः ।
क्ष लु, उपर्य्युपरि पश्यन्तः सर्व्व एव
दरिद्रति ।
इति दुर्गादासः ॥

**दरिद्रायकः**, त्रि, (दरिद्रातीति । दरिद्रा + ण्वुल् ।)

दरिद्रः । इति मुग्धबोधम् ॥

**दरिद्रितः**, त्रि, (दरिद्रा + कर्त्तरि क्तः ।) दरिद्रः ।

दारिद्र्ययुक्तः ॥

**दरिद्रिता**, [ऋ] त्रि, (दरिद्रा + तृच् ।) दरि-

द्रायकः । दरिद्राधातोः कर्त्तरि तृन्प्रत्ययः
॥

**दरोदरं**, क्ली, (दरो भयं तज्जनकं उदरं यस्य ।

“भद्रं कृतं कृतं मौनं कोकिलैर्जलदागमे ।
दर्द्दुरा यत्र वक्तारस्तत्र मौनं हि शोभनम्
॥”
इत्युद्भटः ॥)
मेघः । वाद्यभाण्डभेदः । पर्व्वतविशेषः ।
इति
मेदिनी । रे, १६७ ॥ (यथा, रघौ । ४ ।
५१ ।
“स निर्विश्य यथाकामं
तटेष्वालीनचन्दनौ ।
स्तनाविव दिशस्तस्याः शैलौ मलयदर्द्दुरौ
॥”)
राक्षसः । इति संक्षिप्तसारे उणादिवृत्तिः ॥
(अभ्रकधातुभेदः । यथा, भावप्रकाशे ।
“पिनाकं दर्द्दुरं नागं वज्रञ्चेति चतुर्व्विधम्
॥”
“दर्द्दरं स्वग्निनिक्षिप्तं कुरुते दर्द्दुरध्वनिम् ।
गोलकान् बहुशः कृत्वा स
स्यान्मृत्युप्रदायकः ॥”)

**दर्द्दुरा**, स्त्री, (दृणाति दारयति वा असुरानिति ।

दॄ + उरच् प्रत्ययेन निपातनात् साधुः ।
तत-
ष्टाप् ।) चण्डिका । इति मेदिनी । रे,
१६७ ॥

**दर्द्रूः**, पुं, (दरिद्राति दुर्गच्छत्यङ्गमनेनेति । दरिद्रा +

“दरिद्राते र्यालोपः ।” उणां । १ । ९० ।
इति ऊः ।
रकारेकारयकाराणां लोपश्च ।) दद्रुरोगः ।
इति शब्दरत्नावली ॥

**दर्द्रुः**, पुं, (दरिद्रा + बाहुलकात् उः । र्यालोपश्च ।)

दद्रुरोगः । इत्युणादिकोषः ॥

**दर्द्रुघ्नः**, पुं, (दर्द्रुं हन्तीति । दर्द्रु + हन् + टक् ।)

चक्रमर्द्दकः । इति शब्दरत्नावली ॥

**दर्द्रुणः**, त्रि, (दर्द्रुरस्यास्तीति । दर्द्रु + “लोमादि-

पामादिपिच्छिलादिभ्यःशनेलचः ।” ५ ।
२ । १०० ।

सप्तवारं प्रयत्नेन शुद्धिमायाति निश्चितम् ॥
अन्यमतम् ।
दरदं दोलिकायन्त्रे पक्वं जम्बीरजैर्द्रवैः ।
सप्तवारमजामूत्रैर्भावितं शुद्धिमेति हि ॥”
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणाधि-
कारे ॥)

**दरदः**, पुं, (दरं भयं ददातीति । दा + कः ।) देश-
विशेषः । भयम् । म्लेच्छजातिभेदः । इति
शब्दरत्नावली ॥ (अयन्तु पूर्ब्बं क्षत्त्रिय
आसीत्
पश्चात् क्रमशः उपनयनादिक्रियालोपात्
शूद्र-
त्वादिकं प्राप्तः । यदुक्तं मनौ । १० ।
४३-४४ ।
“शनकैस्तु क्रियालोपादिमाः क्षत्त्रियजातयः
।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ॥
पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा जवनाः
शकाः ।
पारदा पह्लवाश्चीनाः किराता दरदाः खशाः
॥”)

**दरिः**, स्त्री, (दॄ + इन् ।) दरी । इति शब्द-
रत्नावली ॥ (तक्षककुलोत्पन्ने सर्पे, पुं । इति
महाभारतम् ॥)

प्रायशः सर्व्वग्रासकत्वाद्वेवास्य तथात्वम्
।)
दुरोदरम् । इत्यमरटीकायां भरतः ॥

**दरोदरः**, पुं, (दरजनकमुदरं यस्य ।) दुरोदरः ।
इत्यमरटीकायां भरतः ॥ (यथा, उणादि-
सूत्रटीकायां उज्ज्वलदत्तधृतगोवर्द्धनः । ५
। १९ ।
“आश्रित्य दुर्गं गिरिकंदरोदरं
क्रीडन्त्यमुस्मिन् सततं दरोदरम् ॥”)

**दर्द्दरः**, पुं, पर्व्वतः । (यथा, रामायणे । २ ।
९१ । २४ ।
“मलयं दर्द्दरञ्चैव ततः स्वेदनुदो निलः
॥”
क्वचित् दर्दुरोऽपि पाठः ॥)
ईषद्भग्नभाजने,
त्रि । इति मेदिनी । रे, १६६ ॥

**दर्द्दराम्रः**, पुं, व्यञ्जनविशेषः । तत्पर्य्यायः । मीना-
म्रीणः २ । इति शब्दमाला ॥

**दर्द्दरीकं**, क्ली, (दारयतीव कर्णौ । दॄ + णिच् +
“फर्फरीकादयश्च ।” उणां । ४ । २० ।
इति
ईकन्प्रत्ययेन साधुः ।) वाद्यम् ।
इत्युणादि-
कोषः ॥

**दर्द्दरीकः**, पुं, (दारयतीव कर्णौ इति । दॄ +
णिच् + “फर्फरीकादयश्च ।” उणां । ४ ।
२० ।
इति ईकन्प्रत्ययेन साधुः ।) मेघः ।
वाद्यभेदः ।
भेकः । इति संक्षिप्तसारे उणादिवृत्तिः ॥

**दर्द्दुरं**, क्ली, ग्रामजालम् । इति मेदिनी । रे, १६७
॥

**दर्द्दुरः**, पुं, (दृणाति कर्णौ शब्देनेति । दॄ +
“मकुरदर्द्दुरौ ।” उणां । १ । ४१ । इति
उरच्
प्रत्ययेन निपातनात् साधुः ।) भेकः ।
इत्यमरः ।
१ । १० । २४ ॥ (यथा, --

इति पामादिषु पाठात् नः । ततो णत्वञ्च
।)
दद्रुरोगी । इत्यमरटीकायां भरतः ॥

**दर्द्रूः**, पुं, (दरिद्रा + ऊः । यलोपश्च ।) दद्रुरोगः ।
इत्युणादिकोषः ॥

**दर्द्रूणः**, त्रि, (दर्द्रूरस्यास्तीति । दर्द्रू + नः ।) दद्रु-
रोगी । इत्यमरटीकायां भरतः ॥

**दर्द्रूरोगी**, [न्] त्रि, (दर्द्रूरोगोऽस्यास्तीति । दर्द्रू-
रोग + इनिः ।) दद्रुरोगी । इत्यमरटीकायां
भरतः ॥

**दर्पः**, पुं, (दृप्यते इति । दृप् + भावे घञ् ।)
उच्छृङ्खलत्वम् । इति नीलकण्ठः ।
कस्तूरी ।
इति मेदिनी । पे, ७ ॥ उष्मा । इति
त्रिकाण्ड-
शेषः ॥ अहङ्कृतिः । तत्पर्य्यायः । गर्व्वः
२ अह-
ङ्कारः ३ अवलिप्तता ४ अभिमानः ५
ममता ६
मानः ७ चित्तोन्नतिः ८ स्मयः ९ । इति
हेम-
चन्द्रः । २ । २३१ ॥ * ॥
“अहङ्कारश्च सर्व्वेषां पापबीजममङ्गलम् ।
ब्रह्माण्डेषु च सर्व्वेषां गर्व्वपर्य्यन्तमुन्नतिः
॥
येषां येषां भवेद्दर्पो ब्रह्माण्डेषु परात्परे ।
विज्ञाय सर्व्वं सर्व्वात्मा तेषां शास्ताहमेव
च ॥
क्षुद्राणां महताञ्चैव येषां गर्व्वो भवेत् प्रिये !
।
एवंविधमहं तेषां चूर्णीभूतं करोमि च ॥
चकार दर्पभङ्गञ्च महाविष्णोः पुरा विभुः ।
ब्रह्मणश्च तथा विष्णोः शेषस्य च शिवस्य
च ॥
धर्म्मस्य च यमस्यापि शाम्बस्य
चन्द्रसूर्य्ययोः ।
गरुडस्य च वह्नेश्च गुरोर्दूर्व्वाससस्तथा ॥
दौवारिकस्य भक्तस्य जयस्य विजयस्य
च ।

सुराणामसुराणाञ्च भवतः
कामशक्रयोः ॥
लक्ष्मणस्यार्ज्जुनस्यापि बाणस्य च
भृगोस्तथा ।
सुमेरोश्च समुद्राणां वायोश्च वरुणस्य
च ॥
सरस्वत्याश्च दुर्गायाः पद्मायाश्च
भुवस्तथा ।
सावित्र्याश्चैव गङ्गाया मनसायास्तथैव
च ॥
प्राणाधिष्ठातृदेव्याश्च प्रियायाः
प्राणतोऽपि च ।
प्राणाधिकाया राधाया अन्येषामपि का
कथा ।
हत्वा दर्पञ्च सर्व्वेषां प्रसादञ्च चकार
सः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डम् ॥

**दर्पकः**, पुं, (दर्पयति हर्षयति मोहयति वेति ।
दृप हर्षमोहनयोः + णिच् + ण्वुल् ।) काम-
देवः । इत्यमरः । १ । १ । २३ ॥

**दर्पणं**, क्ली, (दर्पयति सन्दीपयतीति । दृप् +
णिच् + ल्युः) चक्षुः । इति जटाधरः ॥ (भावे
ल्युट् ।) सन्दीपनम् । इति
दृपधात्वर्थदर्शनात् ॥

**दर्पणः**, पुं, क्ली, (दर्पयति सन्दीपयतीति । दृप् +
णिच् + "नन्दिग्रहीति ।" ३ । १ । १३४ । इति
ल्युः ।) रूपदर्शनाधारः । आर्शि इति भाषा ।
तत्पर्य्यायः । मुकुरः २ आदर्शः ३ । इत्यमरः ।
२ । ७ । १४० ॥ आत्मदर्शः ४ नन्दरः ५
दर्शनम् ६ प्रतिविम्बातम् ७ । इति शब्दरत्ना-

दर्भद्वयं त्रिदोषघ्नं मधुरन्तुवरं हिमम् ।
मूत्रकृच्छ्राश्मरीतृष्णावस्तिरुकप्रदरास्रजित् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
"हरिताः सपिञ्जलाश्चैव पुष्टाः स्निग्धाः समा-
हिताः ।
गोकर्णमात्रास्तु कुशाः सकृच्छिन्नाः समूलकाः ॥
पितृतीर्थेन देयाः स्युर्दूर्व्वाश्यामाकमेव च ।
काशाः कुशा बल्वजाश्च तथान्ये तीक्ष्णरोमशाः ।
मौञ्जाश्च शाद्वलाश्चैव षड्दर्भाः परिकीर्त्तिताः ॥
सपिञ्जलाः साग्राः तीक्ष्णरोमशा इति बल्व-
जानां विशेषणम् । शाद्वला इति सर्व्वेषां विशे-
षणम् । तेन तेषामभावे शूकतृणशरशीर्य्यबल्वज-
नलशुण्ठवर्जं सर्व्वतृणानीति गोभिलेन तद्ब्यति-
रिक्तवल्वजानां निषेधो बोद्धव्यः । शूकानि
फलपुष्पमञ्जर्य्यस्तानि येषां तृणानां सन्ति तानि
शूकतृणानि इति भट्टनारायणचरणाः ॥ गो-
कर्णमिता विस्तृताङ्गुष्ठानामिकापरिमाणाः ।
रत्निप्रमाणाः शस्ता वै पितृतीर्थेन संस्कृताः ।
उपमूले तथा लूनाः प्रस्तरार्थे कुशोत्तमाः ॥
इति वायुपुराणम् ॥ * ॥
वज्यप्रतिप्रसवमाह हारीतः ।
पथि दर्भाश्चितौ दर्भा ये दर्भा यज्ञभूमिषु ।
स्तरणासनपिण्डेषु षड्दर्भान् परिवर्जयेत् ॥
पिण्डार्थं ये स्तृता दर्भा यैः कृतं पितृतर्पणम् ।
मूत्रोच्छिष्टप्रलिप्ते च त्यागस्तेषां विधीयते ॥
धृतैः कृते च विण्मूत्रे त्यागस्तेषां विधीयते ।
धृतैरित्युपलक्षनेन तृतीया धृतैर्दर्भैरुपलक्षितेन
पुरुषेण ॥
नीवीमध्ये च ये दर्भा ब्रह्मसूत्रे च ये धृताः ।
पवित्रांस्तान् विजानीयाद्यथा कायस्तथा
कुशाः ॥
आचम्य प्रयतो नित्यं पवित्रेण द्विजोत्तमः ।
नोच्छिष्टन्तु भवेत्तत्तु भुक्तशेषं विवर्जयेत् ॥
कृतं समापितमित्यर्थः ॥ * ॥
दर्भवटुलक्षणमाह रत्नाकरे गृह्यसंग्रहः ।
ऊद्र्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः ।
दक्षिणावर्त्तको ब्रह्मा वामावर्त्तस्तु विष्टरः ॥
शान्तिदीपिकायाम् ।
सप्तभिर्नवभिर्वापि सार्द्धद्वितयवेष्टितम् ।

**दर्भाह्वयः**, पुं, (दर्भं आह्वयते स्पर्द्धते सदृशत्वात् ।
आ + ह्वे + अच् ।) मुञ्जः । इति
राजनिर्घण्टः ॥
(मुञ्जशब्देऽस्य विवरणं ज्ञातव्यम् ॥)

**दर्व्वः**, पुं, (दृणाति विदारयतीति । दॄ + "कॄगॄशॄदॄ-
भ्यो वः ।" उणां १ । १५५ । इति वः ।) राक्षमः ।
हिंस्रः । इति संक्षिप्तसारे उणादिवृत्तिः ॥
(जातिविशेषः । यथा, महाभारते । २ । ५१ । १३ ।
"कैरता दरदा दर्व्वाः शूरा वैयामकास्तथा ।
औदुम्बरा दुर्व्विभागाः पारदाः सह वाह्लिकैः ॥"
स्त्रियां टाप् । उशीनरपत्नीभेदः । यथा, हरि-
वंशे । ३१ । २२ ।
"उशीनरस्य पत्न्यस्तु पञ्च राजषिवंशजाः ।
नृगा कृमी नवा दर्व्वा पञ्चमी च दृषद्वती ॥")

**दर्व्वरीकः**, पुं, (दॄ विदारे + "फर्फरीकादयश्च ।"
उणां । ४ । २० । इति ईकन्प्रत्ययेन निपा-
नात् साधुः ।) इन्द्रः । वायुः । वाद्यभेदः ।
इति संक्षिप्तसारे उणादिवृत्तिः ॥

**दर्व्वटः**, पुं, (दर्व्वाय हिंसायै अटतीति । अट +
अच् । शकन्ध्वादित्वात् अलोपः ।) दण्डवादी ।
इति हारावली । १२८ ॥

**दर्व्विः**, स्त्री, (दृणाति विदारयत्यनेनेति । दॄ +
"वृदॄभ्यां विन् ।" उणां ४ । ५३ । इति विन् ।)

वली ॥ कर्कः ८ कर्करः ९ । दति जटाधरः ॥
(यथा, चाणक्ये । १०९ ।
"यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥")
अस्य गुणः । आयुःश्रीकारित्वम् । पापनाशि-
त्वञ्च । इति राजवल्लभः ॥ पुं, पर्व्वतभेदः । नद-
विशेषः । यथा, --
और्व्व उवाच ।
"ततः पूर्ब्बं महाराज ! दर्पणो नाम पर्व्वतः ।
कुवेरो यत्र वसति धनपालैः समं सदा ।
यस्मिन्नास्ते मध्यभागे रोहिणो रोहिताकृतिः ।
यस्मिँल्लोहादिकं स्पृष्टं स्वर्णतां याति तत्क्षणात् ॥
यन्नातिदूरे स्रवति दर्पणो नाम वै नदः ।
हिमाद्रिप्रभवो नित्यं लौहित्यसदृशः फले ॥
समुत्पन्नं हि लौहित्यं सर्व्वैर्देवगणैर्हरिः ।
सर्व्वतीर्थोदकैः सम्यक् स्नापयामास तं सुतम् ॥
तस्य स्नानसमुद्भूतः पापदर्पस्य पाटनः ।
तेनायं दर्पणो नाम पुरा देवगणैः कृतः ॥
तस्मिन् स्नात्वा नदवरे योऽर्च्चयेद्दर्पणाचले ।
कुवेरं प्रतिपत्तिथ्यां कार्त्तिके शुक्लपक्षतः ॥
स याति ब्रह्मसदनमिह भूतिशतैर्युतः ॥"
इति कालिकापुराणे ८१ अध्यायः ॥

**दर्पारम्भः**, पुं, (दर्पस्य आरम्भः) अहङ्कारा-
ॐकारेणैव मन्त्रेण द्विजः कुर्य्यात् कुशद्विजम् ॥
नवभिरित्यत्र पञ्चभिरिति कर्म्मोपदेशिन्यां पाठः । दर्भसंख्याविशेषाभिधानं छन्दोगेतर-
परम् ।
यज्ञवास्तुनि मुष्ट्याञ्च स्तम्भे ब्रह्मवटौ तथा ।
दर्भसंख्या न विहिता विष्टरास्तरणेष्वपि ॥
इति गोभिलपरिशिष्टीयवचनात् ।" इति श्राद्ध-
तत्त्वम् ॥

**दर्भटं**, क्ली, (दृभ्यते निभृतस्थाने विरच्यते इति ।
दृभ ग्रन्थने + बाहुलकात् अटन् ।) निभृत-
गृहम् । इति त्रिकाण्डशेषः ॥

**दर्भपत्रः**, पुं, (दर्भस्य कुशस्येव पत्राणि यस्य ।)
काशः । इति राजनिर्घण्टः ॥

व्यञ्जनादिदारकः । हाता इति भाषा । तत्-
पर्य्यायः । कम्बिः २ खजाका ३ । इत्यमरः ।
२ । ९ । ३४ ॥ दर्व्वी ४ कम्बी ५ स्वजाकजः ६ ।
फणा । इति शब्दरत्नावली ॥

**दर्व्विकः**, पुं, (दर्व्वि + स्वार्थे कन् । अभिधानात्
पुंस्त्वम् ।) दर्व्वी । इति द्विरूपकोषः ॥

**दर्व्विका**, स्त्री, (दर्व्वि + स्वार्थे कन् + टाप् ।)
दार्व्विका । इत्यमरटीकायां रायमुकुटः ॥
खजाका । इति द्विरूपकोषः ॥
कज्जलम् । यथा,
"सौवीरं जाम्बलं तुत्थं मयूरश्रीकरं तथा ।
दर्व्विका मेघनीलश्च अञ्जनानि भवन्ति षट् ॥"
तल्लक्षणम् यथा, कालिकापुराणे ६८ अध्याये ।
"स्रवद्रूपन्तु सौवीरं जाम्बलं प्रस्तरं तथा ।
मयूरश्रीकरं रत्नं मेघनीलन्तु तैजसम् ॥
घृष्ट्वा निष्पाद्य चैतानि शिलायां तैजसेऽथवा ।
प्रदद्यात् सर्व्वदेवेभ्यो देवीभ्यश्चापि पुत्त्रक ! ॥
धृततैलादियोगेन ताम्रादौ दीपवह्निना ।
यदञ्जनं जायते तु दर्व्विका परिकीर्त्तिता ॥

**दर्व्वी**, स्त्री, (दर्व्वि + वा ङीष् ।) दर्व्विः । इति
शब्दरत्नावली ॥ (यथा, उत्तरगीतायाम् ।
२ । ३७ ।
"आलोच्य चतुरो वेदान् धर्म्मशास्त्राणि सर्व्वदा ।
योऽहंब्रह्म न जानाति दर्व्वी पाकरसं यथा ॥")

रम्भः । तत्पर्य्यायः । मटस्फटिः २ । इति
जटाधरः ॥

**दर्भः**, पुं, (दृणाति विदारयतीति । “दृदलिभ्यां भः ।” उणां ३ । १५१ । इति भः ।) कुशः ।
इत्यमरः । २ । ४ । १६६ ॥
उलपतृणम् । इति रत्न-
माला ॥ काशः । इति शब्दरत्नावली ॥ * ॥
(“कुशो दर्भस्तथा बर्हिः सूच्यग्रो यज्ञभूषणः ।
ततोऽन्यो दोधेपत्रः स्यात्
चुरपत्रस्तथैव च ॥

**दर्व्वीकरः**, पुं, (दर्व्वीं फणां करोतीति कृ + “कृञो
हेतुताच्छील्यानुलोम्येषु ।” ३ । २ । २० । इति टः ।
यद्वा, दर्व्वी फणा कर इवास्य ।) सर्पः । इत्य-
मरः । १ । ८ । ८ ॥ (यथा, सुश्रुते कल्पस्थाने
चतुर्थाध्याये ।
“दर्व्वीकरा मण्डलिनो राजिमन्तश्च पन्नगाः ।
तेषु दर्व्वीकरा ज्ञेया विंशतिः षट् च पन्नगाः ॥”

"रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिणः ।
ज्ञेया दर्व्वीकराः सर्पाः फणिनः शीघ्रगामिनः ॥"
तत्र दर्व्वीकरभेदा यथा, --
"दर्व्वीकराः कृष्णसर्पो महाकृष्णः कृष्णोदरः श्वेत-
कपोतो महाकपोतो बलाहकी महासर्पः शङ्ख-
पाली लोहिताक्षो गवेधुकः परिसर्पः खण्डफणः
ककुदः पद्मो महापद्मो दर्भपुष्पो दधिमुखः पुण्ड-
रीको भ्रूकुटीमुखो विष्किराः पुष्पाभिकीर्णो
गिरिसर्प ऋजुसर्पः श्वेतोदरो महाशिरा अल-
गर्द्द आशीविष इति ॥"
एतद्विषजनितलक्षणादिकंयथा, --
"तत्र दर्व्वीकरविषेण त्वङ्नयननखदशनमूत्र-
पुरीषदंशकृष्णत्वं रौक्ष्यं शिरसो गौरवं सन्धि-
वेदना कटीपृष्ठग्रीवादौर्व्वल्यं जृम्भणं वेपथुः
स्वरावसादो घुर्घुरको जडता शुष्कोद्गारः कास-
श्वासौ हिक्का वायोरूर्द्ध्वगमनं शूलोद्वेष्टनं तृष्णा
लालास्रावः फेनागमनं स्रोतोऽवरोधस्तास्ताश्च
वातवेदना भवन्ति ॥" दर्व्वीकरदष्टानां विष-
वेगादिकमाह यथा, --
"तत्र सर्व्वेषां सर्पाणां विषस्य सप्तवेगा भवन्ति ।
तत्र दर्व्वीकराणां प्रथमे वेगे विषं शोणितं दूषयति
तत् प्रदुष्टं कृष्णतामुपैति तेन काष्र्ण्यपिपीलिका-
परिसर्पणमिव चाङ्गे भवति । द्वितीये मांसं
दूषयति तेनात्यर्थं कृष्णता शोफो ग्रन्थयश्चाङ्गे
भवन्ति तृतीये मेदो दूषयति तेन दंशक्लेदः
शिरोगौरवं स्वेदश्चक्षुर्ग्रहणञ्च । चतुर्थे कोष्ठमनु-
प्रविश्य कफप्रधानान् दोषान् दूषयति । तेन तन्द्रा
प्रसेकसन्धिविश्लेषा भवन्ति । पञ्चमे अस्थीन्यनु-
प्रविशति प्राणमग्निञ्च दूषयति तेन पर्व्वभेदो
हिक्कादाहश्च भवति । षष्ठे मज्जानमनुप्रवि-
शति ग्रहणीञ्चात्यर्थं दूषयति । तेन गात्राणां
गौरवमतिसारो हृत्पीडा मूर्च्छा च भवति ।

"अन्योऽन्यं चन्द्रसूर्य्यौ तु दर्शनाद्दर्श उच्यते ॥"
इति मत्स्यपुराणम् ॥
(अयं शिनीवाल्यां विधातृपत्न्यां तस्मात् जातः ।
यथा, भागवते । ६ । १८ । ३ ।
"धातुः कुहूः शिनीवाली राका चानुमतिस्तथा ।
सायं दर्शमथ प्रातः पूर्णमासमनुक्रमात् ॥"
दृश + भावे घञ् ।) अवलोकनम् । इति
मेदिनी । शे, ७ ॥ (यथा, महाभारते । १३ ।
१४४ । ४५ ।
"दुर्द्दर्शाः केचिदाभान्ति नराः काष्ठमया इव ।
प्रियदर्शास्तथा चान्ये दर्शनादेव मानवाः ॥")
पक्षान्तकृतयागविशेषः । स यागत्रयात्मकः ।
यथा ।
"आग्नेयाष्टाकपालैन्द्रदध्यैन्द्रपयोयागा-
स्त्रयोऽमावास्यायां स च यावज्जीवं कर्त्तव्यः
कौण्डपायिकर्त्तव्यो माससाध्यश्च ।" इति मल-
मासतत्त्वम् ॥

**दर्शकः**, पुं, (दर्शयति नृपादिसमीपगमनपथमिति ।
दृश् + णिच् + ण्वुल् ।) द्वारपालः । इत्य-
मरः । २ । ८ । ६ ॥ (जातिविशेषः । यथा,
महाभारते । ६ । ९ । ५३ ।
"काश्मीरा सिन्धुसौवीरा गान्धारा दर्शकास्तथा ॥")
त्रि, दर्शयिता । (यथा, कुमारे । ६ । ५२ ।
"विधिप्रयुक्तसत्कारैः स्वयं मार्गस्य दर्शकः ॥")
प्रवीणः । इति मेदिनी । के, १०३ ॥ (प्रका-
शकः । यथा, हितोपदेशे । १ । ११ ।
"अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम् ।
सर्व्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः ॥"
दृश + ण्वुल् । द्रष्टा । यथा, महाभारते ।

"आहूत इव मे शीघ्रं दर्शनं याति चेतसि ॥")
पुण्यदर्शनानि यथा, --
नन्द उवाच ।
"येषाञ्च दर्शने पुण्यं पापञ्च यस्य दर्शने ।
तत् सर्व्वं वद सर्व्वेश ! श्रोतुं कौतूहलं हि मे ॥
श्रीभगवानुवाच ।
सुब्राह्मणानां तीर्थानां वैष्णवानाञ्च दर्शने ।
देवताप्रतिमादर्शात् तीर्थस्नायी भवेन्नरः ॥
सूर्य्यस्य दर्शने भक्त्या सतीनां दर्शने तथा ।
सन्न्यासिनां यतीनाञ्च तथैव ब्रह्मचारिणाम् ॥
भक्त्या गवाञ्च वह्नीनां गुरूणाञ्च विशेषतः ।
गजेन्द्राणाञ्च सिंहानां श्वेताश्वानान्तथैव च ॥
शुकानाञ्च पिकानाञ्च खञ्जनानान्तथैव च ।
हंसानाञ्च मयूराणां चासानां शङ्खपक्षिणाम् ।
वत्सप्रयुक्तधेनूनामश्वत्थानां तथैव च ।
पतिपुत्त्रवतीनाञ्च नराणां तीर्थयायिनाम् ॥
प्रदीपानां सुवर्णानां मणीनाञ्च विशेषतः ।
मुक्तानां हीरकाणाञ्च माणिक्यानां महाशय ! ॥
तुलसीशुक्लपुष्पाणां दर्शनं पापनाशनम् ।
फलानि शुक्लधान्यानि घृतं दधि मधूनि च ॥
पूर्णकुम्भञ्च लाजाञ्च राजेन्द्रं दर्पणं जलम् ।

सप्तमे शुक्रमनुप्रविशति व्यानञ्चात्यथं कोपयति
।
कफञ्च सूक्ष्मस्रोतोभ्यः प्रच्यावयति तेन
श्लेष्मवर्त्ति-
प्रादुर्भावः कटिपृष्ठभङ्गश्च सर्व्वचेष्टाविघातो
लालास्वेदयोरतिप्रवृत्तिरुच्छासनिरोधश्च
भवति ॥”
अथ दर्व्वीकरदष्टस्य चिकित्सामाह तत्रैव ।
“फणिनां विषवेगे तु प्रथमे शोणितं हरेत् ।
द्वितीये मधुसर्पिर्भ्यां पाययेतागदं भिषक् ॥
नस्य कर्म्माञ्जने युञ्ज्यात् तृतीये विषनाशने ।
वान्तं चतुर्थे पूर्ब्बोक्तां यवागूमथ दापयेत् ॥
शीतोपचारं कृत्वादौ भिषक् पञ्चमषष्ठयोः ।
दापयेच्छोधनं तीक्ष्णं यवागूञ्चापि कीर्त्तिताम् ॥
सप्तमे त्ववपीडेन शीरस्तीक्षेण शोधयेत् ।
तीक्ष्णमेवाञ्जनं दद्यात् तीक्ष्णशस्त्रेण मूद्ध्र्न्नि च
॥
कुर्य्यात् काकपदं चर्म्म सासृग्वा पिशितं
क्षिपेत् ॥”)
खजाकाकारके, त्रि ॥

**दर्शः**, पुं, (दृश्येते उपर्य्यधोमावापन्नसमसूत्रपात-
न्यायेन राश्येकांशावच्छेदेन सहावस्थितौ
चन्द्र-
सूर्य्यौ यत्र । दृश् + अधिकरणे घञ् ।) अमा-
वस्या । इत्यमरः । १ । ४ । ८ ॥

१ । १४१ । १७ ।
“एकाग्रः स्यादविवृतो नित्यं विवरदर्शकः ।
राजन्राज्यं सपत्नेषु नित्योद्विग्नः समाचरेत्
॥”)

**दर्शतः**, पुं, (दृश्यते गगनमार्गे इति । दृश +
“भृमृदृशीति ।” उणां । ३ । ११० । इति
अतच् ।) सूर्य्यः । चन्द्रः । इति सिद्धान्त-
कौमुद्यामुणादिवृत्तिः ॥ (दर्शनीये, त्रि ।
यथा,
ऋग्वेदे । १ । १४४ । ७ ।
“यो विश्वतः प्रत्यङ्ङसि दर्शतो रण्वः
संदृष्टौ
पितु मा इव क्षयः ॥”)

**दर्शनं**, क्ली, (दृश्यतेऽनेनेति । दृश् + करणे ल्युट् ।)
नयनम् । स्वप्नः । बुद्धिः । धर्म्मः ।
उपलब्धिः ।
दर्पणः । (दृश्यते यथार्थतत्त्वमनेनेति ।)
शास्त्रम् । इति मेदिनी । ने, ७३ ॥ शास्त्रन्तु
षड्विधम् ।
वैशेषिकन्यायमीमांसासाङ्ख्यपात-
ञ्जलवेदान्तरूपम् । एतानि तत्त्वज्ञानार्थं
वेदान्
विचार्य्य
कणादगोतमजैमिनिकपिलपतञ्जलि-
वेदव्यासाख्यैर्मुनिषट्कैः कृतानि ॥ इज्या ।
इत्य-
जयः ॥ वर्णः । दति त्रिकाण्डशेषः ॥
चाक्षुष-
ज्ञानम् । देखा इति भाषा । तत्पर्य्यायः ।
निर्व्वर्णनम् २ निध्यानम् ३ आलोकनम् ४
ईक्ष-
णम् ५ । इत्यमरः । ३ । २ । ३१ ॥ निभा-
लनम् ६ । इति जटाधरः ॥ * ॥ (यथा,
भाग-
वते । १ । ६ । ३४ ।

मालाञ्च शुक्लपुष्पाणां दृष्ट्वा पुण्यं
लभेन्नरः ॥
गोरोचनाञ्च कर्पूरं रजतञ्च सरोवरम्
।
पुष्पोद्यानं पुष्पितञ्च दृष्ट्वा पुण्यं
लभेन्नरः ॥
देवाश्रितं देवघटं सुगन्धिपवनं तथा
।
शङ्खञ्च दुन्द्भिं दृष्ट्वा सद्यः पुण्यं
लभेन्नरः ॥
शुक्लपक्षस्य चन्द्रस्य पीयुषं चन्दनं
तथा ।
कस्तूरीं कुङ्कुमं दृष्ट्वा नन्द ! पुण्यं
लभेन्नरः ॥
पताकामक्षयवटं तरुं देवोत्थितं
शुभम् ।
देवालयं देवखातं दृष्ट्वा पुण्यं
लभेन्नरः ॥
शुक्तिं प्रवालं रजतं स्फाटिकं
कुशमूलकम् ।
गङ्गामृदं कुशं ताम्रं दृष्ट्वा पुण्यं
लभेन्नरः ॥
पुराणपुस्तकं शुद्धं सबीजं
विष्णुयन्त्रकम् ।
स्निग्धदूर्व्वाक्षतं रत्नं दृष्ट्वा पुण्यं
लभेन्नरः ॥
तपस्विनं सिद्धमन्त्रं समुद्रं
कृष्णसारकम् ।
यज्ञं महोत्सवं दृष्ट्वा सुपुण्यं लभते
नरः ॥
गोमूत्रं गोमयं दुग्धं गोधूलिं
गोष्ठगोस्पदम् ।
पक्वशस्यान्वितं क्षेत्रं दृष्ट्वा पुण्यं
लभेन्नरः ॥
रुचिरां पद्मिनीं श्यामां
न्यग्रोधपरिमण्डलाम् ।
सुवेशकां सुवसनां
दिव्यभूषणभूषिताम् ॥
वेश्यां क्षेमङ्करीं गन्धं
सदूर्व्वाक्षततण्डुलम् ॥

| | | | |
|---|---|---|---|
| | | | सिद्धान्नं परमान्नञ्च दृष्ट्वा पुण्यं लभेद्ध्रुवम् ॥<br>कार्त्तिकीपूर्णिमायाञ्च राधिकाप्रतिमां शुभाम् ।<br>संपूज्य दृष्ट्वा नत्वा च करोति जन्मखण्डनम् ॥<br>हिङ्गुलायां तथाष्टम्यामिषे मासि सिते शुभे ।<br>श्रीदुर्गाप्रतिमां दृष्ट्वा करोति जन्मखण्डनम् ॥<br>शिवरात्रौ च काश्याञ्च विश्वनाथस्य दर्शनम् ।<br>कृत्वोपवासं पूजाञ्च करोति जन्मखण्डनम् ॥<br>जन्माष्टमीदिने भक्तो दृष्ट्वा मां बिल्वमाधवम् ।<br>प्रणम्य पूजां कृत्वा च करोति जन्मखण्डनम् ॥<br>उपोष्य व्रजभूमौ च भाण्डीरे मालतीवने ।<br>संपूज्य राधां माञ्चैव करोति जन्मखण्डनम् ॥ |

पौषे मासि शुक्लरात्रौ यत्र तत्र स्थले
नरः ।
पद्मायाः प्रतिमां दृष्ट्वा करोति
जन्मखण्डनम् ॥
सप्तजन्म भवेत्तस्य पुत्त्रः पौत्रो
धनेश्वरः ॥
उपोष्यैकादशीं स्नात्वा प्रभाते
द्वादशीदिने ।
दृष्ट्वा काश्यामन्नपूर्णां करोति
जन्मखण्डनम् ॥
दत्त्वा विष्णुपदे पिण्डं विष्णुं यश्च
प्रपूजयेत् ।
पितॄणां स्वात्मनश्चैव करोति
जन्मखण्डनम् ॥
प्रयागे मुण्डनं कृत्वा यश्च पितॄन्
प्रतर्पयेत् ।
उपोष्य नैमिषारण्ये करोति
जन्मखण्डनम् ॥
उपोष्य पुष्करे स्नात्वा किंवा
वदरिकाश्रमे ।
संपूज्य दृष्ट्वा मामेव करोति
जन्मखण्डनम् ॥
सिद्धां कृत्वा च वदरीं भुङ्क्ते
वदरिकाश्रमे ।
दृष्ट्वा मत्प्रतिमां नन्द ! करोति
जन्मखण्डनम् ॥
दोलायमानं गोविन्दं दृष्ट्वा वृन्दावने च
माम् ।
दृष्ट्वा संपूज्य नत्वा च करोति
जन्मखण्डनम् ॥
भाद्रे दृष्ट्वा च मञ्चस्थं मामेव
मधुसूदनम् ।
संपूज्य नत्वा भक्तश्च करोति
जन्मखण्डनम् ॥
रथस्थञ्च जगन्नाथं यो द्रक्ष्यति कलौ
नरः ।
संपूज्ज भक्त्या नत्वा च करोति
जन्मखण्डनम् ॥

"प्रसादये त्वामतुलप्रभाव !
त्वं नो गतिर्दर्शयिता च धीरः ॥")
प्रतीहारः । इति भरतः ॥

**दर्शविपत्**, [द्] पुं, (दर्शे अमावस्यायां विपत्
प्रणाशोऽदर्शनं यस्य ।) चन्द्रः । इति हारा-
वली । १३ ॥

**दर्शितः**, त्रि, (दृश् + णिच् + क्तः ।) दर्शनं कारितः ।
तत्पर्य्यायः । प्रकाशितः २ आविष्कृतः ३
प्रक-
टितः ४ । इति हेमचन्द्रः ॥ (यथा, आर्य्या-
सप्तशत्याम् । २८९ ।
"दर्शितयमुनोच्छ्राये भ्रूविभ्रमभ्राजि वलति तव
नयने ।
क्षिप्तहले हलधर इव सर्व्वं पुरमर्ज्जितं सुतनु
॥")

**दल**, क भेदे । इति कविकल्पद्रुमः ॥ (चुरां-परं-
सकं-सेट् ।) क, दालयति गात्रं वाणः । इति
दुर्गादासः ॥

**दल**, मि भेदे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-अकं च सेट् ।) मि, दलयत्यष्टौ कुलक्ष्मा-
भृतः । इति मुरारिः । दालयति । भेदो विदा-
रणम् । दलति कुठारः काष्ठम् । क्वचिद्विदीर्णी-
भावे विकसने चायम् । श्रीमद्राघवबाहुदण्ड-
विदलत्कोदण्डचण्डध्वनिरितिमहानाटकम् ।
दरविदलितमल्लीवल्लिचञ्चत्परागेति जयदेवः ।
इति दुर्गादासः ॥

**दलं**, क्ली, (दलतीति । दल + अच् ।) उत्सेधः ।
खण्डम् । (यथा, मनुः । ८ । २९९ ।
"भार्य्या पुत्त्रश्च दासश्च शिष्यो भ्राता च
सोदरः ।
प्राप्तापराधास्ताड्याःस्यू रज्ज्वा वेणुदलेन वा
॥")
शस्त्रीच्छदः । अपद्रव्यम् । पत्रम् । इति मेदिनी
।
ले, २६ ॥ (यथा, आर्य्यासप्तशत्याम् । ६९२ ।
"हत्वा तटिनि ! तरङ्गैर्भ्रमितश्चक्रेषु नाशये

डेला इति भाषा ॥ (दलति विदारयतीति ।
दल +
कर्त्तरि ल्युः ङीप् च ।) भेदकर्त्तरि, त्रि ।
यथा, --
"सा दुर्गा भवभीतिरीतिशमनी लोकत्रय-
त्रायिणी
भूयाद्वः प्रतिपक्षपक्षदलनी वाञ्छाफलोल्ला-
सिनी ॥"
इति विद्वन्मोदतरङ्गिणी ॥

**दलपः**, पुं, (दल्यते असौ दल्यते अनेन वा ।
दल + "उषिकुटिदलिकटिखजिभ्यः कपन्
।"
उणां । ३ । १४३ । इति कपन् ।) स्वर्णम्
।
शस्त्रम् । इत्युणादिकोषः ॥ (दलं यूथं
पातीति ।
पा + कः । दलपतिः ॥)

**दलपुष्पा**, स्त्री, (दलानि पत्रानीव पुष्पाण्यस्याः ।)
केतकी । इति राजनिर्घण्टः ॥
(केतकीशब्देऽस्या
विवरणं विज्ञेयम् ॥)

**दलसारिणी**, स्त्री, (सारोऽस्त्यस्या इति । सार +
इनिः । ङीप् च । दले पत्रे सारिणी ।)
केमुकः ।
इति रत्नमाला ॥

**दलसूचिः**, पुं, (दलस्य सूचिरिव ।) कण्टकम् ।
इति हारावली । ९१ ॥

**दलस्नसा**, स्त्री, (दलस्य स्नसा स्नायुः ।) पत्र-
शिरा । तत्पर्य्यायः । माढिः २ । इति हेम-
चन्द्रः । ४ । १९० ॥

**दलाढकः**, पुं, (दलैराढक इव ।) स्वयं जात-
तिलः । पृश्नी । गैरिकम् । फेनः ।
खातकम् ।
नागकेशरः । महत्तरः । इति मेदिनी । के,

उत्तरायणसंक्रान्त्यां प्रयागे
स्नानमाचरेत् ।
संपूज्य नत्वा मामेव करोति
जन्मखण्डनम् ॥
कार्त्तिकीपूर्णिमायाञ्च दृष्ट्वा मत्प्रतिमां
शुभाम् ।
उपोष्य पूजां कृत्वा च करोति
जन्मखण्डनम् ॥
चन्द्रभागासमीपे च माघ्याञ्च मां नयेत्
शनैः ।
राधया सह मां दृष्ट्वा करोति जन्मनः
क्षयम् ॥
रामेश्वरं सेतुवन्धे आषाढीपूर्णिमादिने
॥
उपोष्य दृष्ट्वा संपूज्य करोति जन्मनः
क्षयम् ॥
दीननाथं दिनकरं लोलार्के चोत्तरायणे
।
उपोष्य दृष्ट्वा संपूज्य करोति जन्मनः
क्षयम् ॥
कृषिकोष्ठे सुवसने कलविङ्के सुगह्वरे ।
विस्यन्दके राजकोष्ठे नन्दके
पुष्पभद्रके ॥
पार्व्वतीप्रतिमां दृष्ट्वा कार्त्तिक्यं
गणेश्वरम् ।
नन्दिनं शङ्करं दृष्ट्वा करोति जन्मनः
क्षयम् ॥
त्रिकूटे मणिभद्रे च
पश्चिमोदधिसन्निधौ ।
समुपोष्य दधि प्राश्य मां दृष्ट्वा
मुक्तिमाप्नुयात् ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डम्
॥

**दर्शनीयः**, त्रि, (दृश्यते इति । दृश् + अनीयर् ।)
मनोज्ञः । इति धरणिः ॥ (यथा,
महाभारते ।
११ । १५ । ३०
“अङ्गुल्यग्राणि ददृशे देवी पटान्तरेण
सा ।
ततः स कुनखीभूतो दर्शनीयनखो
नृपः ॥”)

निहितः ।
फलदलवल्कलरहितस्त्वयान्तरीक्ष
तरुस्त्यक्तः ॥”)
घनम् । इति शब्दरत्नावली ॥ तमालपत्रम् ।
इति राजनिर्घण्टः ॥ अर्द्धम् । इति लीलावती
॥
(पुं, इक्ष्वाकुकुलोत्पन्नपरिक्षिन्नामराज्ञः पुत्त्रः ।
स च मण्डूकराजकन्यासम्भूतः । यथा, महा-
भारते । ३ । १९२ । ४४ ।
“अथ कस्यचित् कालस्य तस्यां कुमारास्त्रय-
स्तस्य राज्ञः सम्बभूवुः शलो दलो बलश्चेति
॥”
वृक्षविशेषः । तत्पर्य्याया यथा, --
“वातपोतः पलाशः स्याद्वानप्रस्थश्च किंशुकः
।
राजादनो ब्रह्मवृक्षो हस्तिकर्णो दलोऽपरः ॥”
इति वैद्यकरत्नमालायाम् ॥)

**दलकोषः**, पुं, (दलान्येव कोषा यस्य । तस्य पुष्पेषु
कोषाभावात् तथात्वम् ।) कुन्दपुष्पवृक्षः । इति
शब्दमाला ॥

**दलनिर्म्मोकः**, पुं, (दलति विदारयतीति दलं वल्क-
लम् । तदेव निर्म्मोक इवास्य ।) भूर्ज्जवृक्षः ।
इति शब्दमाला ॥

**दलनी**, स्त्री, (दल्यते अनेनेति । दल + करणे
ल्युट् । ङीप् ।) लोष्टम् । इति शब्दरत्नावली ॥

१८२ ॥ कुन्दः । करिकर्णः । शिरीषः ।
वात्या ।
इति हेमचन्द्रः ॥

**दलाढ्यः**, पुं, (दलेन भेदेन आढ्यः ।) पङ्ककर्व्वटः ।
इति त्रिकाण्डशेषः ॥ दलदलि इति भाषा ॥

**दलामलं**, क्ली, (दलेन अमलम् ।) मरुवकवृक्षः ।
दमनवृक्षः । इति मेदिनी । ले, १५५ ॥
मदन-
वृक्षः । इति शब्दरत्नावली ॥

**दलाम्लं**, क्ली, (दलेषु अम्लो रसो यस्य ।) चुक्रम् ।
इति राजनिर्घण्टः ॥

**दलिः**, स्त्री, पुं, (दल्यते इति । दल + “सर्व्वधातुभ्य
इन् ।” उणां । ४ । ११७ । इति इन् ।)
लोष्ट्रम् ।
इति शब्दरत्नावली ॥ दला इति डेला इति
च
भाषा ॥

**दलिकं**, क्ली, (दल्यत भिद्यते इति । दल + इन् +
संज्ञायां कन् ।) काष्ठम् । इति हेमचन्द्रः ।
४ । १८८ ॥

**दलितं**, त्रि, (दलमस्य जातम् । दल + तारका-
दित्वात् इतच् । प्रफुल्लम् । इति हेमचन्द्रः ।
४ ।
१९४ ॥ (दल + क्त ।) खण्डितम् । यथा, -
-
दलिताञ्जनमेघपुञ्जेत्यादि क्रमदीपिका ॥
(यथा च
प्रबोधचन्द्रोदये । २ । ३५ ।
“दलितकुचनखाङ्कमङ्गपालीं
रचय ममाङ्कमुपेत्य पीवरोरु ! ॥”
विक्षिप्तम् । यथा, आर्य्यासप्तशत्याम् ।
३०२ ।
“दलिते पलालपुञ्जे वृषभं परिभवति
गृहपतौ
कुपिते ॥”)

| | | |
|---|---|---|
| दर्शनयोग्यः । इति व्याकरणम् ॥ (यथा, पञ्च-तन्त्रे । ४ । ४० । "शूरोऽसि कृतविद्योऽसि दर्शनीयोऽसि पुत्रक ! । यस्मिन् कुले त्वमुत्पन्नो गजस्तत्र न हन्यते ॥")<br>**दर्शयामिनी**, स्त्री, (दर्शस्यामावास्याया इव यामिनी रात्रिः ।) तमिस्रा । अन्धकाररात्रिः । इति हेमचन्द्रः । २ । ५७ ॥ (दर्शस्य यामिनी इति विग्रहे । अमवास्यारात्रिश्च ॥)<br>**दर्शयिता**, [ऋ] त्रि, (दर्शयतीति । दृश + णिच् + "ण्वुल्तृचो ।" ३ । १ । १३३ । इति तृच् ।) दर्शकः । (यथा, महाभारते । ६ । ३ । ६१ । | | |

**दलेगन्धिः**, पुं, (दले गन्धो यस्य समासान्त इत् ।
सप्तम्या अलुक् च ।) सप्तपर्णवृक्षः । इति
त्रिकाण्डशेषः ॥

**दल्भः**, पुं, (दलति विशीर्णो भवत्यनेनेति । दल +
"दृदलिभ्यां भः ।" उणां । ३ । १५१ । इति
भः ।) प्रतारणा । पापम् । मुनिभेदः । इत्यु-
णादिकोषः ॥ चक्रम् । इति सिद्धान्तकौमुद्या-
मुणादिवृत्तिः ॥

**दल्मिः**, पुं, (दलति विदारयति असुरानिति ।
दल + "दल्मिः ।" उणां । ४ । ४७ । इति मिः ।)
इन्द्रः । इति हेमचन्द्रः । २ । ८६ ॥ (दल्यते
अनेनेति ।) वज्रम् । इति सिद्धान्तकौमुद्या-
मुणादिवृत्तिः ॥

**दव**, इ व्रजे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) इ, दन्व्यते । व्रजो गतिः । इति
दुर्गादासः ॥

**दवः**, पुं, (दुनोति पीडयतीति । दु + अच् ।)
वनम् । वनाग्निः । इत्यमरः । ३ । ३ । २०५ ॥
(यथा, भागवते । ८ । ६ । १३ ।
"दृष्ट्वा गता निर्वृतिमद्य सर्व्वे
गजा दवार्त्ता इव गाङ्ग्यमम्भः ॥")
अग्निः । इत्यमरटीकायां नीलकण्ठः ॥ (दु
उपतापे + "ऋदोरप् ।" ३ । ३ । ५७ । इत्यप् ।)
उपतापः । इति केचित् ॥

**दश**, इ क ङ दर्शे । दंशने । इति कविकल्पद्रुमः ॥
(चुरां-आत्मं-सकं-सेट् ।) इ क ङ, दंशयते ।
दर्शो दर्शनम् । इति दुर्गादासः ॥

**दश**, [न्] त्रि, (दंशयति दीप्यते इति । दन्शि
+ बाहुलकात् कनिन् । "दन्श दंशने । न
लोपः ।" इत्युज्ज्वलदत्तः । १ । १५६ ।) संख्या-
विशेषः । द्विगुणितपञ्च १० । (यथा, महाभारते ।
३ । १३४ । १७ ।
"दिशो दशोक्ताः पुरुषस्य लोके
सहस्रमाहुर्दशपूर्णं शतानि ।
दशैव मासान् बिभ्रति गर्भवत्यो
दशैरका दश दाशा दशार्हाः ॥")
दशवाचकानि यथा । हस्ताङ्गुलिः १ शम्भुवाहुः
२ रावणमस्तकम् ३ कृष्णावतारः ४ दिक् ५
विश्वदेवः ६ अवस्था ७ चन्द्राश्वः ८ पंक्तिः ९ ।
इति कविकल्पलता ॥ बहुवचनान्तोऽयं शब्दः ।
तत्संख्याविशिष्टः । इत्यमरः । २ । ६ । ९१ ॥

**दशकण्ठः**, पुं, (दश कण्ठा गला यस्य ।)
रावणः । इति शब्दरत्नावली ॥ (यथा, रघुः ।
८ । २९ ।
"दशपूर्ब्बरथं यमाख्यया
दशकण्ठारिरिपुं विदुर्बुधाः ॥")

**दशकन्धजित्**, पुं, (दशकन्धं रावणं जयतीति ।
जि + क्विप् तुक् च ।) रामः । इति त्रिकाण्ड-
शेषः ॥

**दशकन्धरः**, पुं, (दश कन्धरा ग्रीवा यस्य ।) रावणः ।
इति हेमचन्द्रः । ३ । ३७० ॥ (यथा, भागवते ।
२ । ७ । २३ ।
"अस्मत्प्रसादसुमुखः कलया कलेश
इक्ष्वाकुवंश अवतीर्य्य गुरोर्निदेशे ।
तिष्ठन् वनं सदयितानुज आविवेश
यस्मिन् विरुध्य दशकन्धर आर्त्तिमार्च्छत् ॥"

**दशग्रीवः**, पुं, (दश ग्रीवा यस्य ।) रावणः । इति

"दमघोषस्य पुत्त्रास्तु पञ्च भीमपराक्रमाः ।
भगिन्यां वासुदेवस्य श्रुतश्रवसि जज्ञिरे ।
शिशुपालो दशग्रीवोरैभ्योऽथोपदिशो
बली ॥")

**दशतिः**, स्त्री, (दशावृत्या दश । निपातनात्
साधुः ।) शतम् । इति महाभारते दानधर्म्मः ॥
(यथा, महाभारते । १ । १६ । १३ ।
"कालेन महता कद्रुरण्डानां दशतीर्दश ।
जनयामास विप्रेन्द्र ! द्वे चाण्डे विनता तथा ॥"
"यथा नव दशावृत्या नवतिस्तथा दश दशा-
वृत्या दशतिः शतमित्यर्थः । दश दशतीर्दश-
शतानीत्यर्थः ॥" इति तत्र नीलकण्ठः ॥)

**दशधा**, व्य, (दशानां प्रकारः । दश + "संख्याया
विधार्थे धा ।" ५ । ३ । ४२ । इति धा ।) दश
प्रकारम् । इति व्याकरणम् ॥ (यथा, मनुः ।
९ । १५२ ।
"सर्व्वं वा रिक्थजातन्तु दशधा परिकल्प्य च ।
धर्म्म्यं विभागं कुर्व्वीत विधिनानेन धर्म्म-
वित् ॥")

**दशनं**, क्ली, (दश्यते इव शरीरमनेनेति । दन्श +
करणे ल्युट् । दहदशेति निर्द्देशात् क्वचिद-
कित्यपि नलोपः ।) कवचम् । शिखरे, पुं ।
इति मेदिनी । ने, ७४ ॥

**दशनः**, पुं, क्ली, (दश्यतेऽनेनेति । दन्श--
ल्युट् । दहदशेति निर्द्देशात् अत्र अकित्यपि न-
लोपः ।) दन्तः । इत्यमरभरतौ ॥ (यथा,
रघुः । ५ । ५२ ।
"उवाच वाग्मी दशनप्रभाभिः
संवर्द्धितोरःस्थलतारहारः ॥")

**दशनवासः**, [स्] क्ली, (दशनानां वास इव आच्छा-

**दवथुः**, पुं, (दवनमिति । टु दु उपतापे + “द्वितो-
ऽथुच् ।” ३ । ३ । ८९ । इति भावे अथुच् ।) परि-
तापः । इति जटाधरः ॥ (यथा, काशीखण्डे ।
२९ । ८९ ।
“दुरोदरघ्नी दावार्च्चिर्द्दवद्रव्यैकशेवधिः ।
दीनसन्तापशमनी दात्री दवथुवैरिणी ॥”
दूयतेऽनेनेति । करणे अथुच् ।) चक्षुरादि-
दाहः । इति राजनिर्घण्टः ॥

**दवाग्निः**, पुं, (दवानां वनानां अग्निः । यद्वा, दव
एवाग्निः ।) दावानलः । इति द्विरूपकोषः ॥
(यथा, मेघदूते । ५५ ।
“तञ्चेद्वायौ सरति सवलस्कन्धसंघट्टजन्मा-
वाधेतोल्का क्षयितचमरी बालभारोदवाग्निः ॥”)

**दविष्ठः**, त्रि, (अयमेषामतिशयेन दूर इति । दूर +
इष्ठन् । “स्थूलदूरयुवेति ।” ६ । ४ । १५६ । इति
रस्य लुप् ऊकारस्य च गुणः ।) सुदूरः ।
अत्यन्तदूरवर्त्ती । इत्यमरः । ३ । १ । ६९ ॥

**दवीयान्**, [स्] त्रि, (इदमनयोरतिशयेन दूरम् ।
दूर + ईयसुन् । स्थूलदूरेत्यादिना साधुः ।)
सुदूरः । इत्यमरः । ३ । १ । ६९ ॥ (यथा,
प्रद्युम्नविजये । २ । १६ ।
“कोऽस्मिन् दवीयांसमपीन्दुविम्बं
न वेद चूडामणिमिन्दुमौलेः ।
पातालधामानमपि प्रवृद्धं
शब्दमाला ॥ (यथा, महाभारते । ३ । २७४ ।
१० ।
“दशग्रीवस्तु सर्व्वेषां श्रेष्ठो राक्षसपुङ्गवः ।
महोत्साहो महावीर्य्यो महासत्त्वपरा-
क्रमः ॥”)
एकादशमन्वन्तरीयवृषनामकेन्द्रशत्रुविशेषः ।
यथा, --
“रुद्रपुत्त्रस्य ते पुत्त्रान् वक्ष्याम्येकादशस्य तु ।
सर्व्वत्रगः सुशर्म्मा च देवानीकः पुरुर्गुरुः ॥
क्षत्त्रबद्धा दृढायुश्च आर्द्रकः पुत्त्रकस्तथा ।
हविष्मांश्च हविष्यश्च वरुणो विश्वविस्तरः ॥
विष्णुश्चैवाग्नितेजाश्च ऋषयः सप्त कीर्त्तिताः ।
विहङ्गमाः कामगमा निर्म्माणरुचयस्तथा ॥
एकैकस्त्रिंशकस्तेषां गणाश्चेन्द्रश्च वै वृषः ।
दशग्रीवो रिपुस्तस्य स्त्रीरूपी घातयिष्यति ॥”
इति गरुडे ८७ अध्यायः ॥
(असुरविशेषः । यथा महाभारते । २ । ९ । १४ ।
“दशग्रीवश्च बाली च मेघवासा दशारवः ॥”
दमघोषस्य पुत्त्रविशेषः । यथा, हरिवंशे ।
११६ । २२ ।
दकत्वात् ।) ओष्ठः । इत्यमरः । २ । ६ ।
९० ॥

**दशनाढ्या**, स्त्री, (दशनः आढ्यो यस्याः ।
एतत् सेवनेन हि दन्तस्य दाढर्यात् अस्य तथा-
त्वम् ।) चुक्रिका । इति शब्दचन्द्रिका ॥

**दशनोच्छिष्टः**, पुं, निश्वासः । (दशनेन उच्छिष्टः ।)
अधरचुम्बनम् । इति मेदिनी । टे, ६३ । दन्त-
त्यक्ते, त्रि ॥

**दशपारमिताधरः**, पुं, बुद्धः । इति हेमचन्द्रः । २ ।
१४७ ॥

**दशपुरं**, क्ली, (दश दिशः पिपर्त्तीति । पॄ +
कः ।) कैवर्त्तीमुस्तकम् । इत्यमरः । २ । ४ ।
१३१ ॥ (दश पुरो यत्र । “ऋक्पूरब्धूः
पथामानक्षे ।” ५ । ४ । ७४ । इति अः ।)
देशभेदः । स मालवदेशैकखण्डः । पुरभेदः ।
इति मेदिनी । रे, २६६ ॥ (यथा, मेघदूते ।
४९ ।
“कुन्दक्षेपानुगमधुकरश्रीयुषामात्मविम्बं
पात्रीकुर्व्वन् दशपुरबधूनेत्रकौतूहलानाम् ॥”)

**दशपूरम्** क्ली, (दश दिशः पूरयतीति । पूर +
अन् ।) दशपुरम् । इत्यमरटीकायां भरतः ॥

| | | |
|---|---|---|
| न वाडवं सुन्दरि ! वेद को वा ॥”)<br><br>**दश**, इ क त्विषि । इति कविकल्पद्रुमः ॥ (चुरां-<br><br>परं-अकं-सेट् । इ क, दंशयति ।<br><br>त्विषि दीप्तौ ।<br><br>इति दुर्गादासः ॥ | | |

**दशबलः**, पुं, (दशसु दिक्षु बलं यस्य । यद्वा,

“दानशीलक्षमावीर्य्यध्यानप्रज्ञा बलानिच ।
उपायः प्रनिधिर्ज्ञानं दशबुद्धबलानि च ॥”
इति वचनात् दश बलान्यस्य ।) बुद्धः ।
इत्यमरः । १ । १ । १४ ॥

**दशभुजा**, स्त्री, (दश भुजा बाहवो यस्याः ।)

दुर्गा । यथा, कालिकापुराणे ५९
अध्याये ।
“इतिवृत्तं पुराकल्पे मनोः
स्वायम्भुवेऽन्तरे ।
प्रादुर्भूता दशभुजा देवी देवहिताय वै ॥
नृणां त्रेतायुगस्यादौ जगतां हितकाम्यया ।
पुराकल्पे यथा वृत्तं प्रतिकल्पं तथा तथा ॥
प्रवर्त्तते स्वयं देवी दैत्यानां नाशनाय वै ।
प्रतिकल्पं भवेद्रामो रावणश्चापि राक्षसः ॥
तथैव जायते युद्धं तथा त्रिदशसङ्गमः ।
एवं रामसहस्राणि रावणानां सहस्रशः ॥
भवितव्यानि भूतानि तथा देवी प्रवर्त्तते ।
पूजयन्ति सुराः सर्व्वे बलं
वीराजयन्त्यपि ॥
तथैव च नराः सर्व्वे कुर्य्युः पूजां
यथाविधि ॥”
(दशबाहुविशिष्टे, त्रि । यथा, कात्यायनी-
तन्त्रे महाकाल्या ध्यानम् ।
“दशवक्त्रा दशभुजा दशपादाञ्जनप्रभा ।
विशालया राजमाना त्रिंशल्लोचनमालया ॥”)

**दशभूमिगः**, पुं, (दशसु भूमीषु दानादिबलेषु

गच्छतीति । गम + डः ।) बुद्धः । इति
हेम-
चन्द्रः । २ । १४७ ॥

**दशभूमीशः**, पुं, (दशसु भूमीषु दानाद्येषु ईष्टे

प्रभवतीति । ईश् + अच् ।) बुद्धः । इति
त्रिकाण्ड-

**दशमी**, [न्] त्रि, (दशम + “वयसि पूरणात् ।”

५ । २ । १३० । इति इनिः ।) अतिवृद्धः ।
नवतेरूर्द्ध्वं दशमोऽवस्थाविशेषः स विद्यते-
ऽस्येति । इत्यमरभरतौ ॥

**दशमीस्थः**, त्रि, (दशम्यामवस्थायां तिष्ठतीति ।

स्था + कः ।) क्षीणरागः । स नष्ठबीजः
मरणावस्थाप्राप्तश्च । वृद्धः । स च अति-
वृद्धो नवतेरुपरि वर्त्तमानः । इत्यमरभरतौ ॥
मृताशनम् । इति हेमचन्द्रः ॥

**दशमुखः**, पुं, (दश मुखानि यस्य ।) रावणः ।

इति त्रिकाण्डशेषः ॥ (यथा, गीतगोविन्दे ।
१ । ११ ।
“वितरसि दिक्षु रणे दिक्पतिकमनीयं
दशमुखमौलिवलिं रमणीयम् ॥”)

**दशमुखान्तकः**, पुं, (दशमुखस्य रावणस्य अन्तकः ।)

श्रीरामः । इति शब्दरत्नावली ॥

**दशमूत्रकं**, क्ली, (दशानां मूत्रकानां समाहारः ।)

हस्तिमहिषोष्ट्रगवाजमेषाश्वगर्द्दभमानुषमानु-
षीणां दशानां मूत्रम् । इति राजनिर्घण्टः ॥
(एतद्गुणा यथा, सुश्रुते । १ । ४५ ।
“गोमहिषाजाविगजहयखरोष्ट्राणां तीक्ष्णानि
कटून्युष्णानि तिक्तानि लवणानुरसानि लघूनि
शोधनानि कफवातकृमिमेदोविषगुल्मार्शोदर-
कुष्ठशोफारोचकपाण्डुरोगहराणि हृद्यानि
दीपनानि च सामान्यतः । भवन्ति चात्र ।
“तत् सर्व कटुतीक्ष्णोष्णं लवणानुरसं लघु ।
शोधनं कफवातघ्नं कृमिमेदोविषापहम् ॥
अर्शोजठरगुल्मघ्नं शोफारोचकनाशनम् ।
पाण्डरोगहरं भेदि हृद्यं दोपनपाचनम् ॥
गोमूत्रं कटु तीक्ष्णोष्णं सक्षारत्वान्न वातलम् ।
लघ्वग्निदीपनं मेध्यं पित्तलं कफवातजित् ॥
शूलगुल्मोदरानाहविरेकास्थापनादिषु ।
मूत्रप्रयोगसाध्येषु गव्यं मूत्रं प्रयोजयेत् ॥
दुर्नामोदरशूलेषु कुष्ठमेहाविशुद्धिषु ।
आनाहशोफगुल्मेषु पाण्डुरोगे च माहिषम् ॥
कासश्वासापहं शोषकामलापाण्डु रोगनुत् ।
कटुतिक्तान्वितं छागमीषन्मारुतकोपनम् ॥
कासप्लीहोदरश्वासशोषवर्च्चोग्रहेहितम् ।

वातपित्तहरं वृष्यं कनीयः पञ्चमूलकम् ॥
उभयं दशमूलन्तु सन्निपातज्वरापहम् ।
कासे श्वासे च तन्द्रायां पार्श्वशूले च
शस्यते ॥
पिप्पलीचूर्णसंयुक्तं कण्ठहृद्ग्रहनाशनम् ॥”
इति सुखबोधः ॥

**दशयोगभङ्गः**, पुं, (दशयोगस्य भङ्गः ।) संस्कार-

कर्म्मणि नक्षत्रबेधविशेषः । अयं
खर्ज्जुरवेधः ।
यथा, --
“तिथ्यङ्गवेदैकदशोनविंश-
भैकादशाष्टादशविंशसंख्याः ।
इष्टोडना सूर्य्ययुतोडना च
योगादमूश्चेद्दशयोगभङ्गः ॥
अस्यार्थः ।
कर्म्मकालीनविवाहाद्युक्तनक्षत्राङ्क-
रविभुक्तनक्षत्राङ्कयोर्योगेयदि एते अङ्काः
स्युः
तदा दशयोगभङ्गः स्यात् ॥ अस्य
प्रतिप्रसवो
यथा, --
आद्यपादे स्थिते सूर्य्ये तुरीयांशं
विवर्ज्जयेत् ।
द्वितीयस्थे तृतीयञ्च विपरीतमतोऽन्यथा ॥”
इति ज्योतिस्तत्त्वम् ॥

**दशरथः**, पुं, (दशसु दिक्षु गतो रथो यस्य ।)

इक्ष्वाकुवंशीयराजविशेषः । स
अयोध्याधिपतिः ।
अस्योत्पत्तिर्यथा, --
सौराष्ट्रदेशोद्भवभिक्षुनामद्विजपत्नीकलहा
भर्त्रा
सह सर्व्वदा कलहात् मृता प्रेतत्वं गता सा
कदाचित भ्रमन्ती धर्म्मदत्तसंज्ञकं द्विजं
दृष्ट्वा
तत्समीपमागत्य
तद्धस्तस्थतुलसीवारिसंसर्गात्
पापभावं परित्यज्य तमुवाच हे द्विज ! मयि
कृपां

शेषः ॥

**दशमः**, त्रि, (दशानां पूरणः । दशन् + “तस्य पूरणे डट् ।” ५ । २ । ४८ । इति डट् । “नान्तादससंख्यादेर्म्मट् ।” ५ । २ । ४९ । इति मट् ।) दशसंख्यायाः पूरणः । इति व्याकरणम् ॥ दशै इत्यादि भाषा । (यथा, ऋग्वेदे । १ । १५८ । ६ ।
“दीर्घतमा मामतेयो जुजुर्वान् दशमे युगे ॥”)

**दशमी**, स्त्री, (दशम + ङीप् ।) तिथिविशेषः । सा चन्द्रस्य दशमकलाक्रियारूपा तदुपलक्षित-कालपरा वा । इति तिथ्यादितत्त्वम् ॥ सा सर्व्वासां दिशामतिप्रिया । यथा, --
“दशमी च तिथिस्तासामतीव दयिताभवत् ।
तस्यां दघ्नाशनो यस्तु सुव्रती भवते नरः ॥
तस्य पापक्षयं तास्तु कुर्व्वन्त्यहरहर्नृप ! ॥”
इति वराहपुराणम् ॥ * ॥ तत्र जातस्य फलं यथा, कोष्ठीप्रदीपे ।
“विद्याविनोदी धनपुत्त्रयुक्तः प्रलम्बकण्ठो मदनाधिकश्रीः ।
उदारचित्तः सुमना दयालुः प्रसूतिकाले दशमी यदि स्यात् ॥”
विमुक्तावस्था । मरणावस्था । अतिशेषवयोऽ-वस्था । इति नानार्थटीकायां भरतः ॥ (दश-संख्यायाः पूरणी । यथा, मनुः । २ । ९० ।
“श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी ।
पायूपस्थं हस्तपादं वाक् चैव दशमी स्मृता ॥”)

सक्षारन्तिक्तकटुकमुष्णं वातघ्नमाविकम् ॥
दीपनं कटुतीक्ष्णोष्णं वातचेतोविकारनुत् ।
आश्वं कफहरं मूत्रं कृमिदद्रुषु शस्यते ॥
सतिक्तं लवणं भेदि वातघ्नं पित्तकोपनम् ।
तीक्ष्णं क्षारे किलासे च नागं मूत्रं प्रयोजयेत् ।
गरचेतोविकारघ्नं तीक्ष्णं ग्रहणिरोगनुत् ।
दीपनं गार्दभं मूत्रं कृमिवातकफापहम् ॥
शोफकुष्ठोदरोन्मादमारुतक्रिमिनाशनम् ।
अर्शोघ्नं कारभं मूत्रं मानुषन्तु विषापहम् ॥”)

**दशमूलं**, क्ली, (दशानां मूलानां समाहारः । पात्रादित्वात् न ङीप् ।) पाचनविशेषः । यथा, --
“विल्वश्योणाकगम्भारीपाटलागणिकारिकाः ।
दीपनं कफवातघ्नं पञ्चमूलमिदं महत् ॥
शालपर्णी पृश्निपर्णी बृहतीद्वयगोक्षुरम् ।

कुरु अहं कथं मुक्तिं प्रयास्यामि । धर्म्मदत्त-स्तामुवाच तीर्थदानव्रतादिभिः पापानि नश्यन्ति । तेषु ते नाधिकारः तस्मादाजन्मपर्य्यन्तं यन्मया कार्त्तिकव्रतं कृतं तस्यार्द्धं ददामि इत्युक्त्वा तुलसी मिश्रितजलेन तामसेचयत् द्वादशाक्षरमन्त्र-मश्रावयच्च । ततः सा दिव्यरूपा अभवत् । तदा सा दिव्यं विमानमपश्यत् विष्णुगणपुण्यशीलसुशी-लाभ्यां सा तद्विमाने आरोहिता । धर्म्मदत्तस्त-द्विमानं तौ गणौ च दृष्ट्वा अतिविस्मयेन भूमौ पपात पुण्यशीलसुशीलौ तमुत्थाप्य प्रशस्य ऊचतुः त्वमेतज्जन्मान्ते भार्य्याभ्यां सह वैकुण्ठं यास्यसि । तत्र बहुसहस्रवत्सराणि स्थित्वा पुण्यक्षये सूर्य्यवंशोद्भवदशरथनामा राजा भवि-ष्यसि अनया कलहया सह भार्य्यात्रययुतं त्वां विष्णुः पितृत्वेन स्वीकरिष्यति । इति पाद्मे उत्तरखण्डम् ॥

**दशरूपभृत्**, पुं, (दश मत्स्यकूर्म्मवराहादीनि रूपाणि बिभर्त्तीति । भृ + क्विप् तुगागमश्च ।) विष्णुः । इति शब्दार्थकल्पतरुः ॥ (दशावतार-शब्देऽस्य विशेषो द्रष्टव्यः ॥)

**दशवाजी**, [न्] पुं, (दश वाजिनो रथे यस्य ।) चन्द्रः । इति हेमचन्द्रः । २ । १८ ॥

**दशहरा**, स्त्री, (दश अदत्तोपादानहिंसादिदश-विधानि दशजन्मकृतानि वा पापानि हरतीति । हृ + “हरतेरनुद्यमनेऽच् ।” ३ । २ । ९ । इत्यच् ।

ततष्टाप् ।) ज्यैष्ठशुक्लदशमी । यथा, ब्रह्म-
पुराणब्रह्मवैवर्त्तयोः ।
"ज्यैष्ठस्य शुक्लदशमी संवत्सरमुखी स्मृता ।
तस्यां स्नानं प्रकुर्व्वीत दानञ्चैव विशेषतः ॥
यां काञ्चित् सरितं प्राप्य दद्याद्दर्भैस्तिलोदकम्
।
मुच्यते दशभिः पापैः सुमहापातकोपमैः ॥
अत्र केवलदशम्यां नदीमात्रे दर्भकरणकतिल-
तर्पणाङ्कस्नानाद्दशविधपापक्षयःफलम् ।
एवं दानादावपि । वस्तुतस्तु वक्ष्यमाणभविष्ये
जाह्नवीपदश्रवणात् हेतुमन्निगदस्वरसाच्च ब्रह्म-
वैवर्त्तेऽपि सरित्पदं जाह्नवीपरम् । अन्यथा
नानाविधिः स्यात् । यां काञ्चिदिति तु जाह्नवी-
स्तावकम् । अन्यथा कुल्यास्नानेऽपि दशविध-
पापक्षयः स्यात् । मन्त्रलिङ्गे जाह्नवीतिपदश्रव-
णाच्च । गङ्गामधिकृत्य ब्राह्म्ये ।
'शुक्लपक्षस्य दशमी ज्यैष्ठे मासि द्विजोत्तम ! ।
हरते दश पापानि तस्माद्दशहरा स्मृता ॥'
अत्र केवलदशम्यां दशविधपापक्षयः फलम् ।
भविष्ये ।
'ज्यैष्ठशुक्लदशम्यान्तु हस्तयोगेन जाह्नवी ।
हरते दश पापानि तस्माद्दशहरोच्यते ॥'
दशपापानीति दशजन्मकृतानीति । विशेषणीय-
माह पराशरभाष्ये यमः ।
'ज्यैष्ठे मासि सिते पक्षे दशम्यां हस्तयोगतः ।
दशजन्माघहा गङ्गा दशपापहरा स्मृता ॥'
अत्र दशजन्मकृतदशविधपापक्षयः फलम् ।
'प्राप्ते कर्म्मणि नानेको विधातुं शक्यते गुणः ।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥'
इति न्यायेन हस्तानक्षत्रगङ्गारूपगुणद्वयविशिष्ट
दशमीविधेर्यस्मिन्नहनि तल्लाभस्तत्र स्नानम् ।
उभयदिने तु तल्लाभे परदिन एव । अत्रापि
पूर्ब्बदिने वक्ष्यमाणकुजवारलाभे तत्रापि स्नानं
वारस्योभयत्रालाभात् । ततश्च पूर्ब्बदिने तथा-
विधस्नानं कृत्वा परदिने केवलदशम्यामपि
दश-
विधपापक्षयकामेण स्नातव्यम् । शङ्कः ।
'ज्यैष्ठे मासि क्षितिसुतदिने शुक्लपक्षे दशम्यां
हस्ते शैलान्निरगमदियं जाह्नवी मर्त्यलोकम् ।
पापान्यस्यां हरति च तिथौ सा दशेत्याहुरार्य्याः
पुण्यं दद्यादपि शतगुणं वाजिमेधायुतस्य ॥'

अत्र मन्त्रत्वेन प्रणवपूर्ब्बकाण्येतानि सामान्य-
स्नानमन्त्रान्ते मज्जनस्यादौ पाठ्यानि ।
आगन्तु-
कानामन्ते अभिनिवेश इति न्यायात् मन्त्रान्ते
कर्म्मसन्निपात इति न्यायात् मन्त्रान्ते कर्म्मा-
दीनि सन्निपातयेत् इत्यापस्तम्बीयाच्च ॥ * ॥
हिंसापैशुन्यादिभेदमाह कामधेनौ देवलः ।
'कायक्लेशं मनोदुःखं वधं वा प्राणिनां पुनः ।
यः प्रवर्त्तयति द्वेषात् सा हिंसेति समासतः ॥
यज्ञार्थं ब्राह्मणैर्व्वध्याः प्रशस्ता मृगपक्षिणः ।
भृत्यानाञ्चैव वृत्त्यर्थमगस्त्यो ह्याचरत् पुरा ॥'
यद्यपि परुषवचनमपवादः पैशुन्यमनृतं वृथा-
लापो निष्ठुरवचनमिति वाङ्मयानि षट् । परेषां
देशजातिकुलविद्याशिल्परूपवृत्त्याचारपरिच्छ
दशरीरकर्म्मजीविनां प्रत्यक्षदोषवचनं परुषम् ।
'यच्चान्यत् क्रोधसन्तापत्राससंजननं वचः ।
परुषं तच्च विज्ञेयं यच्चान्यच्च तथाविधम् ॥
चक्षुष्मन्निति लुप्ताक्षं चण्डालं ब्राह्मणेति च ।
प्रशंसानिन्दनं द्वेषात् परुषान्न विशिष्यते ॥' *
॥
तेषामेव परुषवचनानां परोक्षमुदाहरणमप-
वादः ॥ * ॥
गुरुनृपतिबन्धुभ्रातृमित्रसकाशेअर्थोपघातार्थं
दोषोपाख्यानं पैशुन्यम् ॥ * ॥
अनृतं द्विविधं असत्यमसंवादश्चेति ॥ * ॥
'देशराष्ट्रप्रसङ्गाच्च परार्थपरिकल्पनात् ।
नर्म्महासप्रसङ्गाच्च भाषणं व्यर्थभाषणम् ॥ *
॥
गुह्याङ्गामेध्यसंज्ञानां वचनं निष्ठुरं विदुः ।
यदन्यद्वा वचो नीचं स्त्रीपुंसोर्म्मिथुनाश्रयम् ॥
* ॥
इत्येवं षड्विकल्पस्य दुष्टवाक्यस्य भाषणात्
।
इह वासुत्र वा क्रूरमनर्थं प्रतिपद्यते ॥'
प्रशंसया निन्दनं प्रशंसानिन्दनम् । तथाप्यत्र
चतुर्व्विधषड्विधयोरविरोधः ।
समक्षत्वासमक्षत्व-
भेदानादरेण पारुष्यापवादयोरैक्यात् निष्ठुरस्य
परुषान्तर्भावाच्च ।
असम्बद्धप्रलापव्यर्थभाषणयोः
पर्य्यायत्वात् नार्थान्तरम् । अभिध्यानमपहर-

ज्यैष्ठे मलमासे सति तत्रैव दशहरा
कार्य्या न
तु शुद्धे ।
'दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु
।'
इति हेमाद्रौ ऋष्यशृङ्गोक्तेः ॥ * ॥
तथा स्कान्दे ।
'यां काञ्चित् सरितं प्राप्य दद्यादर्घ्यं
तिलोदकम् ।
मुच्यते दशभिः पापैः स महापातकोपमैः
॥'
अत्र विशेषः काशीखण्डे ।
'ज्यैष्ठे मासि सिते पक्षे प्राप्य प्रतिपदं
तिथिम् ।
दशाश्वमेधिके स्नात्वा मुच्यते
सर्व्वपातकैः ॥
एवं सर्व्वासु तिथिषु क्रमस्नायी नरोत्तमः
।
आशुक्लपक्षदशमीं
प्रतिजन्माघमुत्सृजेत् ॥'
तथा ।
'लिङ्गं दशाश्वमेधेशं दृष्ट्वा दशहरातिथौ
।
दशजन्मार्ज्जितैः पापैस्त्यज्यते नात्र
संशयः ॥'
तथा भविष्योत्तरकाशीखण्डयोः ।
'निशायां जागरं कृत्वा समुपोष्य च
भक्तितः ।
पुष्पैर्गन्धैश्च नैवेद्यैः फलैश्च
दशसङ्ख्यया ॥
तथा दीपैश्च ताम्बूलैः पूजयेत्
श्रद्धयान्वितः ।
स्नात्वा भक्त्या तु जाह्नव्यां दशकृत्वो
विधानतः ॥
दशप्रसृतिकृष्णांश्च तिलान् सर्पिश्च वै
जले ।
शक्तुपिण्डान् गुडपिण्डान् दद्याच्च
दशसङ्ख्यया ॥
ततो गङ्गातटे रम्ये हेम्ना रूप्येण वा
तथा ।

भौमवारहस्तानक्षत्रयुक्तदशम्यां गङ्गास्नाना-द्दशविधपापक्षयशतगुणवाजिमेधायुतजन्यपुण्य-समपुण्यं फलम् । राजमार्त्तण्डे वाल्मीकिः ।
‘अदत्तानामुपादानं हिंसा चैवाविधानतः ।
परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥
पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्व्वशः ।
असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्व्विधम् ॥
परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् ।
वितथाभिनिवेशश्च त्रिविधं कर्म्म मानसम् ॥
एतानि दश पापानि प्रशमं यान्तु जाह्नवि ! ।
स्नातस्य मम ते देवि ! जले विष्णुपदोद्भवे ! ॥
विष्णुपादार्घसम्भूते गङ्गे ! त्रिपथगामिनि ! ।
धर्म्मद्रवीतिविख्याते पापं मे हर जाह्नवि ! ॥’

णार्थमिति शेषः । वितथे असत्यभूते वस्तुनि अभिनिवेशः पुनः पुनः सङ्कल्पः ।” इति तिथ्यादितत्त्वम् ॥ * ॥ अपि च ।
“अथ ज्यैष्ठशुक्लदशमी दशहरा । तदुक्तं हेमाद्रौ ब्राह्मे ।
“ज्यैष्ठे मासि सिते पक्षे दशमी हस्तसंयुता ।
हरते दश पापानि तस्माद्दशहरा स्मृतेति ॥
वाराहेऽपि ।
‘दशमी शुक्लपक्षे तु ज्यैष्ठे मासि कुजेऽहनि ॥
अवतीर्णा यतः स्वर्गाद्धस्तर्क्षे च सरिद्वरा ॥
हरते दश पापानि तस्माद्दशहरा स्मृतेति ॥ * ॥
स्कान्दे तु दशयोगा उक्ताः । यथा, --
‘ज्यैष्ठे मासि सिते पक्षे दशम्यां बुधहस्तयोः ।
व्यतीपाते गरानन्दे कन्याचन्द्रे वृषे रवौ ॥
दशयोगे नरः स्नात्वा सर्व्वपापैः प्रमुच्यते ॥’ इति ।
अत्र बुधभौमयोः कल्पभेदेन व्यवस्था । इयञ्च यत्रैव योगबाहुल्यं सैव ग्राह्या । योगाधिक्ये फलाधिक्यात् ॥ * ॥

गङ्गायाः प्रतिमां कृत्वा वक्ष्यमाणस्वरूपिणीम् ॥
संस्थाप्य पूजयेद्देवीं तदलाभे मृदापि वा ।
अथ तत्राप्यशक्तश्चेत् लिखेत् पिष्टेन वै भुवि ॥
वक्ष्यमाणेन मन्त्रेण कुर्य्यात् पूजां विशेषतः ।
नारायणं महेशञ्च ब्रह्माणं भास्करं तथा ॥
भगीरथञ्च नृपतिं हिमवन्तं नगेश्वरम् ।
गन्धपुष्पादिभिः सम्यक् यथाशक्ति प्रपूजयेत् ॥
दशप्रस्थान् तिलान् दद्यात् दशविप्रेभ्य एव च ।
दशप्रस्थान् यवान् दद्यात् दशसङ्ख्यगवीस्तथा ॥’
प्रस्थाः षोडशपलानि । पलन्तु ।
मुष्टिमात्रं पस्वं स्मृतमिति महार्णवे उक्तम् ।
‘मत्स्यकच्छपमण्डूकमकरादिजलेचरान् ।
कारयित्वा यथाशक्ति स्वर्णेन रजतेन वा ॥
तदलाभे पिष्टमयानभ्यर्च्च्य कुसुमादिभिः ।
गङ्गायां प्रक्षिपेदाज्यदीपांश्चैव प्रवाहयेत् ॥
पुष्पाद्यैः पूजयेद् गङ्गां मन्त्रेणानेन भक्तितः ।
ॐ नमः शिवायै नारायण्यै दशहरायै गङ्गायै नमो नमः ।
इति मन्त्रन्तु यो मर्त्यो दिने तस्मिन् दिवानिशम् ।
जपेत् पञ्चसहस्राणि दशधर्म्मफलं लभेत् ॥’ * ॥
काशीखण्डे त्वन्यो मन्त्र उक्तः ।
‘नमः शिवायै प्रथमं नारायण्यै पदं ततः ।
दशहरायै पदमिति गङ्गायै मन्त्र एष वै ॥
स्वाहान्तः प्रणवादिश्च भवेद्विंशाक्षरो मनुः ।

| | | |
|---|---|---|
| | | पूजा दानं जपो होमस्तेनैव मनुना स्मृतः ॥' इति<br>अत्र गङ्गास्तोत्रपाठमपि दशवारं कुर्य्यात् ।<br>तदुक्तं भविष्ये ।<br>'तस्यां दशम्यामेतच्च स्तोत्रं गङ्गाजले स्थितः ।<br>यः पठेत् दशकृत्वस्तु दरिद्रो वापि वाक्षमः ॥ |

सोऽपि तत्फलमाप्नोति गङ्गां संपूज्य यत्नतः ।’
इति
स्तोत्रञ्च
प्रतिपदादिदशमीपर्य्यन्तदिनवृद्धिसंङ्ख्यया
पठनीयमिति शिष्टाः ॥ अत्र सर्व्वोऽपि विस्तरः
स्तोत्रादिश्च भट्टकृतत्रिस्थलीसेतोरवधेयः ।
विस्तरभीतेस्तु न लिख्यते ॥ * ॥ एवं कुर्व्वतः
फलमुक्तं काशीखण्डे ।
‘एवं कृत्वा विधानेन वित्तशाठ्यविवर्ज्जितः ।
उपवासी वक्ष्यमाणैर्दशपापैः प्रमुच्यते ॥
सर्व्वान् कामानवाप्नोति प्रेत्य ब्रह्मणि लीयते ॥’
इति ।
अस्यां सेतुबन्धरामेश्वरस्य प्रतिष्ठादिनत्वात्
विशे-
षेण पूजा कार्य्या । तदुक्तं स्कान्दे सेतुमाहात्म्ये
।
‘ज्यैष्ठे मासि सिते पक्षे दशम्यां बुधहस्तयोः ।
गरानन्दे व्यतीपाते कन्याचन्द्रे वृषे रवौ ॥
दशयोगे सेतुमध्ये लिङ्गरूपधरं हरम् ।
रामो वै स्थापयामास शिवलिङ्गमनुत्तममिति ॥”
इति निर्णयसिन्धुद्बितीयपरिच्छेदे संवत्सर-
कृत्यम् ॥ किञ्च ।
“अद्य हस्ते तु नक्षत्रे दशम्यां ज्यैष्ठके सिते ।
दशपापहरायाञ्च अदत्तादानकल्मषम् ॥
विरुद्धाचरणं हिंसा परदारोपसेवनम् ।
पारुष्यानृतपैशुन्यमसम्बद्धञ्च भाषणम् ॥
परद्रव्याभिध्यानञ्च मनसानिष्टचिन्तनम् ।
एतद्दशाघघाताय गङ्गास्नानं करोम्यहम् ॥”
इति गारुडे २१५ अध्यायः ॥ * ॥
अपरञ्च ।
“ज्यैष्ठे दशहरायान्तु विष्णोरिष्टिं नृप ! शृणु ।
वेन वा विधिना कार्य्या सेष्टिर्व्विष्णोर्नृपैः सदा ॥
प्रत्यब्दं पार्थिवः कुर्य्यात् प्रतिमां काञ्चनीं हरेः ।
अन्यतेजोमयीं वापि दारवीं वा शिलामयीम् ॥
प्रतिष्ठां विधिवत्तस्याः कुर्य्याद्विप्रः पुरोहितः ।
तां संस्थाप्य सुरागारे स्वयं वा यत्नतः कृते ॥
वासुदेवस्य वीजेन पूर्ब्बोक्तविधिना तथा ।
सर्व्वोपचारैर्भक्त्या तु वासुदेवं प्रपूजयेत् ॥
पूजान्ते संस्कृते वह्नौ कुण्डमध्ये स्थितो द्बिजः ।
आज्यैः सहस्रं जुहुयादाहुतीनां हरेः कृते ॥
संपूज्य वामुदेवन्तु होमं कृत्वा ततो द्बिजः ।
एभिर्म्मन्त्रैः प्रतिष्ठान्तु हृदयेऽपि समाचरेत्
॥
अस्मै प्राणाः प्रतिष्ठन्तु अस्मै प्राणाः क्षरन्तु
च ।
अस्मै देवत्वसङ्ख्यायै स्वाहेति
यजुरुच्चरन् ॥
अङ्गमन्त्रैरङ्गिमन्त्रैर्व्वैदिकैरित्यनेन च ।
प्राणप्रतिष्ठां सर्व्वत्र प्रतिमासु समाचरेत् ॥
प्रतिमापूजने कुर्य्यादात्मन्यपि च मन्त्रवित्
।
प्राणप्रतिष्ठां प्रथमं पूजाभागविशुद्धये ॥
अस्मित् प्राणप्रतिष्ठान्तु प्रतिमापूजनादृते ।
न क्वचित्तु बुधः कुर्य्यात् कृत्वा
मृत्युमवाप्नुयात् ॥
विष्णोरिष्टिमिमां कृत्वा दशम्यां
पार्थिवोत्तमः ।
तस्यामेव तु पूर्णायां प्रतिमां स्थापयेत्ततः ॥
एवं दशहरायान्तु कृत्वेष्टिं पार्थिवो हरेः ।
सर्व्वान् कामानवाप्नोति निर्व्विघ्नोऽपि स
जायते ॥”
इति कालिकापुराणे ८९ अध्यायः ॥

**दशा**, स्त्री, (दशतीव । दन्श + मूलविभुजादि-
त्वात् कः । जपजभदहदशेति निर्द्देशात्
अकि-
त्यपि नलोपः । यद्वा, दश्यते इति ।
गुरोश्चेत्यङ् ।
ततष्टाप् ।) अवस्था । (यथा, पञ्चतन्त्रे । १
। ३८१ ।
“आपदि येनोपकृतं येन च हसितं दशासु
विषमासु ।
उपकृत्य तयोरुभयोः पुनरपि जातं नरं
मन्ये ॥”)
दीपवर्त्तिः । (यथा, कुमारे । ४ । ३० ।
“अहमस्य दशेव पश्य मा-
मविषह्यव्यसनेन धूमिताम् ॥”)
वस्त्रान्ते बहुवचनान्तोऽयं शब्दः । इति
मेदिनी ।
शे, ८ ॥ (यथा, मनुः । ३ । ४४ ।
“वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने ॥”)
चेतः । इत्यजयपालः ॥ * ॥ शरीरस्य दश
सूर्य्योपप्लवभौमार्क्किदशातिकष्टदा नृणाम्
।
गुरुचन्द्रज्ञशुक्राणां यथेप्सितफलप्रदाः
॥”
दशाफलन्तु ।
“उद्विग्नचित्तपरिखेदितवित्तनाश-
क्लेशप्रवासगदभीतिमहाभिघातैः ।
संक्षोभितं स्वजनबन्धुवियोगदुःखै-
र्भानोर्द्दशा भवति कष्टकरी नराणाम् ॥ १
॥
सौख्यं बिभर्त्ति वरवाहनयानरत्न-
कीर्त्तिप्रतापबलवीर्य्यशुभान्वितश्च ।
मिष्टान्नपानशयनासनभोजनानि
चन्द्रो ददाति धनकाञ्चनभूमिसंघम् ॥ २
॥
शास्त्राभिघातवधबन्धनेन्द्रपीडां
चिन्ताज्वरं विकलताञ्च गृहे करोति ।
चौराग्निदाहभयभङ्गविपत्तिरोग-
कीर्त्तिप्रतापधनहा च दशा कुजस्य ॥ ३
॥
दिव्याङ्गनावदनपङ्कजषट्पदत्वं
लीलाविलासशयनासनभोजनञ्च ।
नानाप्रकारविभवागमकोषवृद्धिः
क्षिप्रं भवेद्बुधदशासु हितार्थसिद्धिः ॥ ४ ॥
मिथ्यापवादवधबन्धनकार्य्यहानि-
र्मात्सर्य्ययुक्प्रियसुखद्रविणैर्विहीनः ॥
मैत्रे च वैरमभिवाञ्छति वैरयुक्तः
कष्टासु पापददशासु शनैश्चरस्य ॥ ५ ॥
रम्यं गृहं विनयसञ्चयमानवृद्धिं
प्राप्नोति सौख्यधनधान्यविभूतियुक्तम् ।
धर्म्मार्थिकामसुखभोगबहुप्रयोगं
यावद्बृहस्पतिदशा पुरुषो हि तावत् ॥ ६
॥
बुद्ध्या विहीनमतिनाशवियोगदुःख-
नष्टार्थसिद्धिभयभङ्गविषार्त्तिरोगम् ।
सन्तापशोकपरदेशगतं करोति
राहोर्द्दशा भवति जीवनसं शयाय ॥ ७ ॥
मन्त्रप्रभावनिपुणः प्रमदाविलासः
श्वेतातपत्रनृपपूजितदेशलाभः ।
हस्त्यश्वलाभधनपूर्णमनोरथश्च

नृपस्यानुमते तान्तु प्रतिमां मण्डलं नयेत् ॥
प्रतिमायाः कपोलौ द्वौ स्पृष्ट्वा दक्षिणपाणिना ।
प्राणप्रतिष्ठां कुर्व्वीत तस्यां देवस्य वै हरेः ॥
कृतायान्तु प्रतिष्ठायां प्राणानां नृपसत्तम ! ।
विष्णोः प्राणास्तां प्रतिमामायान्ति नियतं स्वयम् ॥
प्राणेष्वथागतेषु स्याद्देवत्वं नियतं भवेत् ।
अकृतायां प्रतिष्टायां प्राणानां प्रतिमासु च ।
यथा पूर्ब्बं तथा भावः स्वर्णादीनां न विष्णुता ॥
अन्येषामपि देवानां प्रतिमास्वपि पार्थिव ! ।
प्राणप्रतिष्टा कर्त्तव्या तस्या देवत्वसिद्धये ॥
सुवर्णस्तु सुवर्णं स्यात् शिला दारु तथा शिला ।
अन्यथ शुद्धरूपं स्यात् प्राणस्थानमृते सदा ॥
वासुदेवस्य वीजेन तद्विष्णोरित्यनेन च ।
तथैवाङ्गाङ्गिमन्त्राभ्यां प्रतिष्ठामाचरेद्धरेः ॥
तथैव हृदयेऽङ्गुष्टं दत्त्वा शश्वच्च मन्त्रवित् ।

दशा यथा, --
गर्भवासः १ जन्म २ बाल्यम् ३ कौमारम् ४ पौगण्डम् ५ यौवनम् ६ स्थाविर्य्यम् ७ जरा ८
प्राणरोधः ९ नाशः १० । इति मोक्षधर्म्म-टीकायां नीलकण्ठः ॥ * ॥ कामजदशदशा यथा,
“चक्षूरागस्तदनु मनसः सङ्गतिर्भावना च व्यावृत्तिः स्यात्तदनु
विषयग्रामतश्चेतसोऽपि ।
निद्राच्छेदस्तदनु तनुता निस्त्रपत्वं ततोऽनून्मादो मूर्च्छा तदनु मरणं स्युर्दशाः प्रक्रमेण ॥”
इत्यलङ्कारशास्त्रम् ॥ * ॥
कलौ नराणां यथोक्तायुषः सूर्य्याद्यष्टग्रह-भोग्याष्टभागविशेषः । तत्र नाक्षत्रिकी दशा यथा, --
“षट् सूर्य्यस्य दशा ज्ञेयाः शशिनो दशपञ्च च ।
अष्टावङ्गारके प्रोक्ता बुधे सप्तदश स्मृताः ॥
शनैश्चरे दश प्रोक्ता गुरोरेकोनविंशतिः ।
राहोर्द्वादशवर्षाणि भृगोरप्येकविंशतिः ॥” * ॥
जन्मकालीननक्षत्रविशेषघटितग्रहाणां दशा-नियमो यथा, --
“कृत्तिकादित्रये सूर्य्यः शशी रौद्रचतुष्टये ।
मघादित्रितये भौमो बुधो हस्तचतुष्टये ॥
अनुराधात्रये शौरिर्गुरुः पूर्ब्बचतुष्टये ।
धनिष्ठात्रितये राहुः शेषे शुक्रश्चतुष्टये ॥ * ॥

शौक्रीदशा भवति निश्चितराजलक्ष्मीः ॥ ८ ॥
रवेरन्तर्द्दशा मासाः ४ तस्य फलम् ।
उद्विग्नचित्तपरिखेदितवित्तनाश-क्लेशप्रवासगदभीतिमहाभिघातान् ।
दुःखप्रयोगवधबन्धभयानिचैव
भानोर्द्दशा प्रकुरुते खलु राजपीडाम् ॥ १ ॥
सोमस्य मासाः १० फलम् ।
गदसङ्कटसंत्रासं स्वेच्छाहानिं मनःक्षतिम् ।
कुरुते रजनीनाथो भानोरन्तर्द्दशां गतः ॥ २ ॥
मङ्गलस्य मासाः ५ दिनम् १० फलम् ।
सर्व्वेषां तिलको भूत्वा मणिरत्नप्रधानकम् ।
प्राप्नोति घनधान्यानि रवेरन्तर्गते कुजे ॥ ३ ॥
बुधस्य मासाः ११ दिनम् १० फलम् ।
व्याधिः शत्रुभयं नित्यं सर्व्वगात्रे विचर्च्चिका ।
नश्यन्ति सर्व्वकार्य्याणि भानोरन्तर्गते बुधे ॥ ४ ॥
शनेर्मासाः ६ दिनम् २० फलम् ।
सन्तापं वित्तनाशञ्च बन्धुनाशं पराजयम् ।
सौरिः करोति वैकल्यं भानोरन्तर्द्दशां गतः ॥ ५ ॥

गुरोर्वर्षः १ दिनम् २० फलम् ।
धर्म्मार्थकामसौख्यानि ददाति विबुधार्च्चितः
।
कुष्ठादिव्याधिहन्ता च भानोः पाकदशां गतः
॥ ६ ॥
राहोर्मासाः ८ फलम् ।
अशुभानुभवं द्वेषं व्याधिभीतिसुतक्षयान् ।
कुरुते सिंहिकासूनू रविपाकदशां गतः ॥ ७ ॥
शुक्रस्य वर्षः १ मासौ २ फलम् ।
कोष्ठग्रीवाशिरोरोगज्वरान्शूलादिदारुणान् ।
शोकं करोति भृगुजः सूर्य्यस्यान्तर्द्दशां गतः ॥
८ ॥
एवं वर्षाः ६ ॥ * ॥ चन्द्रस्य स्थूलदशावर्षाः
१५
तस्यैवान्तर्द्दशावर्षौ २ मासः १ फलम् ।
कुर्य्याद्विभूतिवरवाहनमातपत्र
क्षेमप्रतापबलवीर्य्यसमन्वितानि ।
मिष्टान्नपानशयनासनभोजनानि
चान्द्री दशा प्रचुरकाञ्चनभूमिदात्री ॥
कुजस्य वर्षः १ भासः १ दिनानि १० फलम्
।
पित्तशोणितपीडाञ्च चौरादीनां भयन्तथा ।
मङ्गलः कुरुते नित्यं विधोरन्तर्द्दशां गतः ॥
बुघस्य वर्षौ २ मासाः ४ दिनानि १० फलम्
।
सर्व्वत्र द्रव्यलाभञ्च गजाश्वगोधनानि च ।
चन्द्रजः कुरुते सौख्यं विधोरन्तर्द्दशाङ्गतः ॥
शनेर्वर्षः १ मासाः ४ दिनानि २० फलम् ।
बन्धुक्लेशं नृपाद्भीतिं व्यसनं शोकसम्पदम् ।
विनाशं कुरुते सौरिश्चन्द्रस्यान्तर्द्दशाङ्गतः ॥
गुरोर्वर्षौ २ मासाः ७ दिनानि २० फलम् ।
दानसौख्यानि सम्भोगं वस्त्रालङ्कारभूषणम् ।
कुरुते विबुधाचार्य्यो विधोरन्तर्द्दशाङ्गतः ।
राहोर्व्वर्षः १ मासाः ८ फलम् ॥
वह्निशत्रुभयं दुःखं शोकं बन्धुधनक्षयम् ।
कुरुते राहुरत्यर्थं चन्द्रपाकदशाङ्गतः ॥
शुक्रस्य वर्षौ २ मासाः ११ फलम् ।
सेव्यते वरनारीभिर्न्नरो लक्ष्मीश्च वर्त्तते ।
मुक्ताहारमणिप्राप्तिर्व्विधोरन्तर्गते सिते ॥
रवेर्मासाः १० फलम् ।
ऐश्वर्य्यं बहुसौख्यञ्च व्याधिनाशमरिक्षयम् ।
आत्मकार्य्यार्थमुद्वेगं बन्धचौरादिसाध्वसम्
।
कुरुते सिंहिकापुत्त्रो भौमस्यान्तर्द्दशाङ्गतः
॥
शुक्रस्य वर्षः १ । ६ । २० । फलम् ।
धनवृद्धिं सुखादींश्च नानावस्त्रं वरस्त्रियः ।
प्राप्नोति विपुलां लक्ष्मीं कुजस्यान्तर्गते
भृगौ ॥
रवेर्मासाः ५ । १० । फलम् ।
नानारत्नञ्च सौख्यञ्च भूमिलाभमथापि वा ।
नृपपूजामवाप्नोति कुजस्यान्तर्गते रवौ ॥
सोमस्य वर्षः १ । १ । १० । फलम् ।
धनलाभं सुखं भोगं शरीरारोग्यमेव च ।
लोकानन्त्यमवाप्नोति क्षितिजान्तर्गते विधौ
॥
एवं वर्षाः ८ ॥ * ॥ बुधस्य स्थूलद्दशावर्षाः
१७ ।
तस्यान्तर्द्दशा २ । ८ । ३ । २० । फलम् ।
दिव्याङ्गनावदनपङ्कजषट्पदत्वं
लीलाविलासवरभोगसुखोदयञ्च ।
नानाप्रकारविभवागमकोषवृद्धिं
क्षिप्रं सृजेद्बुधदशा प्रबलाञ्च सिद्धिम् ॥
शनेर्वर्षः १ । ५ । २६ । ४० । फलम् ।
वातश्लेष्मकृता पीडा विरहो बन्धुभिः सह ।
विदेशगमनञ्चैव बुधस्यान्तर्गते शनौ ॥
गुरोर्वर्षौ २ । ११ । २६ । ४० । फलम् ।
व्याधिशत्रुभयत्यक्तो धनाढ्यो नृपवल्लभः ।
लभेद्भार्य्यां सुपुत्त्रञ्च बुधस्यान्तर्गते गुरौ ॥
राहोर्वर्षः १ । १० । २० । फलम् ।
बन्धुनाशं मनस्तापं देशत्यागञ्च बन्धनम् ।
करोति बहुदुःखानि बुधस्यान्तर्गतस्तमः ॥
शुक्रस्य वर्षाः ३ । ३ । २० । फलम् ।
घनाढ्यं बन्धुपुत्त्रञ्च धर्म्मवत्त्वं धनागमम् ।
कुरुते दानवाचार्य्यो बुधपाकदशाङ्गतः ॥
रवेर्मासाः ११ दिनानि १० । फलम् ।
श्रिया परमया युक्तो गजवाजिधनान्वितः ।
प्रभाकरः करोत्याशु बुधपाकदशाङ्गतः ॥
सोमस्य वर्षौ २ । ४ । १० । फलम् ।
कण्टकादिप्रवेशञ्च शृङ्गिभ्यो भयमेव च ।
निशाकरः करोत्याशु बुधपाकदशाङ्गतः ॥
कुजस्य वर्षः १ । ३ । ३ । २० । फलम् ।
स्वर्णं सुखञ्च लभते सौरस्यान्तर्गते सिते ॥
रवेर्मासाः ६ । २० । फलम् ।
परदाराभिगमनं करोति खरदीधितिः ।
जीवनस्य च सन्देहं शनेरन्तर्द्दशाङ्गतः ॥
सोमस्य वर्षः १ । ४ । २० । फलम् ।
स्त्रीनाशं कुक्षिरोगञ्च कफपित्तगदं शशी ।
बन्धुद्वेषञ्च कुरुते पङ्गोरन्तर्द्दशाङ्गतः ॥
कुजस्य मासाः ८ । २६ । ४० । फलम् ।
देहक्षैण्यं महारोगं नानादुःखानि भूमिजः ।
घननाशञ्च कुरुते शनेरन्तर्द्दशाङ्गतः ॥
बुधस्य वर्षः १ । ६ । २६ । ४० । फलम् ।
आरोग्यं विजयं राज्यं बहुवित्तानि सोमजः ।
करोति त्वादरं लोके शनेरन्तर्द्दशाङ्गतः ॥
एवं वर्षाः १० ॥ * ॥ गुरोः स्थूलदशावर्षाः
१९ ।
तस्यैवान्तर्द्दशावर्षाः ३ । ४ । ३ । २० ।
फलम् ।
राज्यास्पदं तनयवित्तविलासभोगान्
पर्य्याप्तसौख्यधनधान्यसमाश्रयञ्च ।
विद्याप्रसादवररत्नसुखार्थभोग-
सिद्धिं दशा सुरगुरोः कुरुते प्रियत्वम् ॥
राहोर्वर्षौ २ । १ । १० । फलग् ।
बन्धुर्द्वेषं मृषावादं स्थानभ्रंशं निराश्रयम् ।
कलहं कारयेद्राहुर्गुरोरन्तर्द्दशाङ्गतः ॥
शुक्रस्य वर्षाः ३ । ८ । १० । फलम् ।
कलहं बन्धुभिः सार्द्धं वित्तनाशं मनःक्षतिम् ।
स्त्रीवियोगञ्च कुरुते जीवस्यान्तर्गतः सितः ॥
रवेर्वर्षः १ । दिनानि २० । फलम् ।
बहुमित्रं बहुधनं सौभाग्यं राजवल्लभम् ।
कुरुते भास्करः शान्तिं गुरोरन्तर्द्दशाङ्गतः ॥
सोमस्य वर्षौ २ । ७ । २० । फलम् ।
भोगाढ्यो बहुभार्य्यः स्याद्रिपुरोगविवर्ज्जितः
।
नृपतुल्यो भवेच्चैव गुरोरन्तर्द्दशाङ्गतः ॥
कुजस्य वर्षः १ । ४ । २६ । ४० । फलम् ।
तीक्ष्णरोषो रिपोर्हन्ता गजवद्भीमदर्शनः ।
सुखसौभाग्यसंयुक्तः कुजे चान्तर्गते गुरोः ॥
बुधस्य वर्षौ २ । ११ । २६ । ४० । फलम् ।
सुस्थोऽसुस्थः सुखी दुःखी शत्रुवृद्धिः पुनः
पुनः ।
देवार्च्चनपरो नित्यं जीवस्यान्तर्गते बुधे ॥

नृपतेजो रविः कुर्य्याद्विधोः पाकदशाङ्गतः ॥
एवं वर्षाः १५ ॥ * ॥ कुजस्य स्थूलदशावर्षाः ८ ।
तस्यान्तर्दशामासाः ७ दिनानि ३ । २० ।
फलम् ।
क्रूराभिघातवधबन्धभयानिधत्ते
चिन्ताज्वरं विकलशून्यगृहाश्रमञ्च ।
चौराग्निभीतिधनहानिनिरेन्द्रपीडाः
कुर्य्याद्विनाशनिधनञ्चदशा कुजस्य ॥
बुघस्य वर्षः १ । ३ । ३ । २० । फलम् ।
परमैश्वर्य्यमतुलं नानाविधसुखाश्रयम् ।
करोति सोमपुत्त्रश्च क्षितिजान्तर्द्दशाङ्गतः ॥
शनेर्मासाः ८ । २६ । ४० । फलम् ।
रिपुचौराग्निभीतिञ्च रोगमन्तरसम्भवम् ।
महाजनकृतो द्वेषः कुजस्यान्तर्गते शनौ ॥
गुरोर्वर्षः १ । ४ । २३ । ४० । फलम् ।
पुष्पघूपान्नवस्त्राद्यैर्देवब्राह्मणपूजनम् ।
नृपतुल्यत्वमाप्नोति कुजस्यान्तर्गते गुरौ ॥
राहोर्मासाः १० । २० । फलम् ।
कफपित्तसमुद्भूतां शिरःपीडां भयावहाम् ।
माहेयः कुरुते शोकं बुधस्यान्तर्द्दशाङ्गतः ॥
एवं वर्षाः १७ ॥ * ॥ शनेः स्थूलदशावर्षाः १० ।
अस्यान्तर्द्दशामासाः ११ । ३ । २० ।
फलम् ।
मिथ्यापवादवधबन्धनिराश्रयत्वं
चौरादिभूपतिभुजङ्गमभीतिमुग्राम् ।
आशानिराशमथ चार्ज्जनकार्य्यहानिं
पङ्गोर्दशा प्रकुरुते तियतं नराणाम् ॥
गुरोर्वर्षः १ । ९ । ३ । २० । फलम् ।
देवतानुरतं शान्तं नानाप्राप्तिं करोति च ।
तुङ्गसौख्यसमायुक्तं पङ्गोरन्तर्गतो गुरुः ॥
राहोर्व्वर्षः १ । १ । १० । फलम् ।
नृपाद्भयं ज्वरं घोरं दुःखञ्च प्राणसंशयम् ।
घनक्षयञ्च कुरुते शनेरन्तर्गतस्तमः ॥
शुक्रस्य वर्षः १ । ११ । १० । फलम् ।
सुहृद्बन्धुधनैः पूर्णो भार्य्यावित्तसमन्वितः ।
शनेर्वर्षः १ । ९ । ३ । २० । फलम् ।
वेश्याजनाश्रयात् सौख्यं भवेद्वित्तविवर्ज्जितः ।
लुप्तनीतिमना नित्यं गुरोरन्तर्गते शनौ ॥
एवं वर्षाः १९ ॥ * ॥ राहोः स्थूलदशावर्षाः १२ । तस्यान्तर्द्दशावर्षः १ । ४ । फलम् ।
भार्य्यादिदूषण-निदानविवादबन्ध-
शस्त्राभिघातभयहीनपराक्रमश्च ।
अप्राप्तसौख्यधनकाञ्चनदीनदेहो
राहोर्द्दशा भवति जीवनसंशयाय ॥
शुक्रस्य वर्षौ २ । मासाः ४ । फलम् ।
शिरोरोगं कुदेहञ्च कुर्य्याद्भार्य्याञ्च चञ्चलाम् ।
बान्धवैः कलहो नित्यं राहोरन्तर्गते भृगौ ॥
रवेर्मासाः ८ । फलम् ।
शिरेरोगभयं घोरं मृत्युं शोकञ्च दारुणम् ।
बृहद्ग्निभयं कुर्य्याद्राहोरन्तर्गतो रविः ॥

सोमस्य वर्षः १ । ८ । फलम् ।
स्त्रीपुत्त्रकलहञ्चैव वित्तनाशं मनःक्षतिम् ।
करोति क्लेशमत्यर्थं राहोरन्तर्गतो विधुः ॥
कुजस्य मासाः १० । २० । फलम् ।
विषशस्त्राग्निचौरेभ्यो नियतं दारुणं भयम् ।
पातस्यान्तगतः कुर्य्यान्नराणां भूमिनन्दनः ॥
बुधस्य वर्षः १ । १० । २० । फलम् ।
ज्वरक्षुदग्निसंपीडा कलहं स्वजनैः सह ।
भृत्यापत्येषु विद्वेषं कुर्य्यात् पातान्तरे बुधः ॥
शनेर्वर्षः १ । १ । १० । फलम् ।
स्त्रीपुत्त्रैः कलहो नित्यं बान्धवैः सह वैरिता ।
भवेत्तु बहुधा दुःखं राहोरन्तर्गते शनौ ॥
गुरोर्वर्षौ २ । १ । १० । फलम् ।
व्याधिदुःखभयैस्त्यक्तो देवब्राह्मणपूजकः ।
कार्य्यसिद्धिर्भवेदिष्टा राहोरन्तर्गते गुरौ ॥
एवं वर्षाः १२ ॥ * ॥ शुक्रस्य
स्थूलदशावर्षाः २१ ।
तस्यान्तर्द्दशावर्षाः ४ । १ । फलम् ।
मन्त्रप्रचाररुचिरप्रमदाविलास-
सम्मानदाननृपपूजनकोषलाभान् ।
हस्त्यश्वयानपरिपूर्णमनोरथञ्च
शौक्री दशा सृजति निश्चलराजलक्ष्मीम् ॥
रवेर्वर्षः १ । फलम् ।
देहस्तीव्रव्रणाक्रान्तस्तीव्रतापोज्वरान्वितः ।
त्यक्तः स्याद्बान्धवैः सर्व्वैर्भार्गवान्तर्गते रवौ ॥
सोमस्य वर्षौ २ । ११ । फलम् ।
सम्माननाशो रोगश्च कार्य्यनाशश्च नित्यशः ।
शुक्रस्यान्तर्गते चन्द्रे स्त्रीनाशो नियतं भवेत् ॥
कुजस्य वर्षः १ । ६ । २० । फलम् ।
उत्साही धनधान्याढ्यः कल्यश्च सुमनाः सुधीः ।
भूमिलाभो भवेच्चैव शुक्रस्यान्तर्गते कुजे ॥
बुधस्य वर्षाः ३ । ३ । २० । फलम् ।
सर्व्वत्र लभते सौख्यं मानसञ्चयभूषणम् ।
भार्य्या सुशीलतामेति भार्गवान्तर्गते बुधे ॥

इति प्रत्यन्तर्द्दशा ॥” इति ज्योतिस्तत्त्वम् ॥ * ॥
युगभेदे दशाविशेषा यथा, --
“सत्ये लग्नदशा चैव त्रेतायां हरगौरिका ।
द्वापरे योगिनी चैव कलौ नाक्षत्रिकी दशा ॥”
इति समयामृतम् ॥ * ॥
दशधा दशा यथा, --
योगिनी १ वार्षिकी २ नाक्षत्रिकी ३ लाग्निकी ४ मुकुन्दा ५ विंशोत्तरा ६ त्रिंशोत्तरा ७ पताकी ८ हरगौरी ९ दिनदशा १० । इति जातरत्नम् ॥

**दशाकर्षः**, पुं, (दशया वर्त्त्या आकर्षति तैलादिकमिति । आ + कृष् + अच् ।) प्रदीपः । इति हेमचन्द्रः । ३ । ३५१ ॥

**दशाकर्षी**, [न्] पुं, (दशया आकर्षतीति । दशा + कृष् + णिनिः ।) प्रदीपः । इति हारावली । २४ ॥

**दशाङ्गुलं**, क्ली, (दश अङ्गुलय इव शिराचिह्नानि फलत्वगुपरि सन्त्यस्येति । अच् ।) स्वर्व्वूरम् । इति भावप्रकाशः ॥ (दश अङ्गुलयः परिमाणमस्येति तद्धितार्थद्विगोः ठञ् तस्य लुक् समासान्तः अच्प्रत्ययः । दशाङ्गुलपरिमिते, त्रि । यथा, मनुः । ८ । २७१ ।
“नामजातिग्रहं त्वेषामभिद्रोहेण कुर्व्वतः ।
निःक्षेपोऽयमयःशङ्कुर्ज्वलन्नास्ये दशाङ्गुलः ॥”
यथा च ऋग्वेदे । १० । ९० । १ ।
“सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥”
“विश्वतः सर्व्वतो वृत्वा परिवेष्ट्य दशाङ्गुलं दशा-
ङ्गुलपरिमितं देशमत्यतिष्ठत् ।” इति तद्भाष्ये सायनः ॥”)

**दशाननः**, पुं, (दश आननानि वदनानि यस्य ।) रावणः । इति शब्दरत्नावली ॥ (दश आननानि इति विग्रहे दशवदनेष्वपि, क्ली । यथा,
“युष्मत् कृते खञ्जनगञ्जनाक्षि !
शिरो मदीयं यदि याति यातु ।
लूनानि नूनं जनकात्मजार्थे
दशाननेनापि दशाननानि ॥”

तदस्याभिजनः तस्य राजा वा अण् । तद्देश-
वासिनि तन्नृपतौ च त्रि । यथा, महाभारते ।
१ । ११३ । २५ ।
“पूर्ब्बमागस्कृतो गत्वा दशार्णाः समरे जिताः ।
पाण्डुना नारसिंहेन कौरवाणां यशोमृता ॥”
दश अर्णांनि वर्णानि यत्र । दशाक्षरमन्त्र-
विशेषः । यथा, गोतमीयतन्त्रे । २ अध्याये ।
“दशानामपि तत्त्वानां साक्षी वेत्ता तथाक्षरम् ।
दशाक्षर इति ख्यातो मन्त्रराजः परात्परः ॥
लुप्तबीजस्वभावत्वात् दशार्ण इति कथ्यते ॥”)
नदीविशेषे, स्त्री । इति शब्दार्थकल्पतरुः ॥

**दशार्हः**, पुं, (दशसु दानादिबलेषु अर्हः ।) बुद्धः । यदुदेशः ।
(क्रोष्टृवंशीयराजपुत्त्रविशेषः ।
यथा, हरिवंशे । ३६ । २५ ।
“धृष्टस्य जज्ञिरे शूरास्त्रयः परमधार्म्मिकाः ।
आवन्तश्च दशार्हश्च बली विषहरश्च यः ॥”)
तद्देशस्थे, पुं, भूम्नि । इति त्रिकाण्डशेषः ॥ (यथा,
महाभारते । ३ । १९ । २० ।
“तमर्च्चितं सर्व्वदशार्हपूगै-
राशीविषाग्निज्वलनप्रकाशम् ॥”)

**दशावतारः**, पुं, (दश अवतारा यस्य ।) विष्णुः । इति त्रिकाण्डशेषः ॥ तस्य दशावतारा यथा, --
मत्स्यः १ कूर्म्मः २ वराहः ३ नृसिंहः ४ वामनः ५

शनेर्वर्षः १ । ११ । १० । फलम् ।
शत्रुक्षयमवाप्नोति मित्रवृद्धिश्च जायते ।
चौराद्वित्तस्य लाभः स्यात् शुक्रस्यान्तर्गते
शनौ ॥
गुरोर्वर्षाः ३ । ८ । १० । फलम् ।
राजपूजा सुखं प्रीतिः कन्याजननमेव च ।
भार्गवान्तर्गते जीवे चौरान्नष्टञ्च लभ्यते ॥
राहोर्वर्षौ २ । ४ । फलम् ।
बन्धनं बन्धुपुत्राद्यैर्बन्धुनाशो रिपोर्भयम् ।
शरीरं देन्यमाप्नोति भृगोरन्तर्गतस्तमः ॥
एवं वर्षाः २१ । इत्यन्तर्दशाकथनम् ॥ * ॥
अथ प्रत्यन्तर्द्दशा ।
ग्रहान्तरं दिनं कृत्वा षष्टिलब्धं ध्रुवं भवेत् ।
ध्रुवाणि गणयेद्धीमान् रव्यादेः क्रमतो यथा ॥
रवौ च वेदा वसवः सुधांशौ
कुजे च बाणाः शशिजे तथाङ्काः ।
शनावृतुर्दिक् च बृहस्पतौ स्या-
द्राहौ तुरङ्गा भृगुजे च रुद्राः ॥
ग्रहस्यान्तर्द्दशामासान् दिनीकृत्य गुणाहतान्
।
{??} विजानीयात् प्रत्यन्तर्ग्रहवासरान् ॥

इत्युद्भटः ॥)

**दशानिकः**, पुं, (अन्यते इति भावे घञ् आनो
जीवनम् । तस्मिन् हितः आनिकः । दशायां
अवस्थाविशेषे आनिकः ।) दन्तीवृक्षः । इति
शब्दचन्द्रिका ॥

**दशारुहा**, स्त्री, (दशसु दिक्षु आरोहति अङ्गै-
र्वाप्नोतीति । आ + रुह + कः ।) कैवर्त्तिका ।
इति राजनिर्घण्टः ॥

**दशार्णः**, पुं, (दश ऋणानि दुर्गभूमयो जलाधारा
वा यत्र । "एत्येधत्यूट्सु ।" ८ । ४ । ६५ ।
इत्यस्य
"प्रवत्सतरकम्बलवसनार्णदशानामृणे ।" इति
वार्त्तिकोक्त्या वृद्धिः ।) देशविशेषः । स बिन्ध्य-
पर्व्वतस्य पूर्ब्बदक्षिणस्यां दिशि वर्त्तते । (यथा,
बृहत्संहितायाम् । १४ । १० ।
"किष्किन्धकण्टकस्थलनिषादराष्ट्राणि पुरिक-
दशार्णाः ॥"

जामदग्न्यः ६ रामः ७ कृष्णः ८ बुद्धः ९
कल्की १० ।
इति वराहपुराणम् ॥ अपि च ।
"धर्म्मान्नारायणस्यांशः
संभूतश्चाक्षुषेऽन्तरे ।
यज्ञञ्च वर्त्तयामासुर्द्देवा वैवस्वतेऽन्तरे ॥
प्रादुर्भावे ततस्तस्य ब्रह्मा ह्यासीत्
पुरोहितः ।
युगाख्यायाञ्च तुर्य्यान्तु आपन्नेषु सुरेषु वै
॥
संभूतः स समुद्रान्ते हिरण्यकशिपोर्व्वधे ।
द्वितीये नरसिंहाख्ये रुद्रो ह्यासीत्
पुरोहितः ॥
बलिसंस्थेषु लोकेषु त्रेतायां सप्तमं प्रति ।
तृतीये वामनस्यार्थे धर्म्मेण तु पुरोधसा ॥
एतास्तिस्रः स्मृतास्तस्य दिव्याः
संभूतयो द्विजाः ।
मानुष्याः सप्त येऽन्ये तु
शापजास्तान्निबोधत ॥
त्रेतायुगे तु प्रथमे दत्तात्रेयो बभूव ह ।
नष्टे धर्म्मे चतुर्थांशे मार्कण्डेयपुरःसरः ॥
पञ्चमः पञ्चदश्यान्तु त्रेतायां सम्बभूव ह ।
मान्धाता चक्रवर्त्ती तु तस्यौतथ्यः
पुरःसरः ॥
एकोनविंश्यां त्रेतायां
सर्व्वक्षत्रान्तकृद्विभुः ।
जामदग्न्यस्तथा षष्ठो विश्वामित्रपुरःसरः
॥
चतुर्व्विंशे युगे रामो वशिष्ठेन पुरोधसा ।
सप्तमो रावणस्यार्थे जज्ञे दशरथात्मजः ॥
अष्टमे द्वापरे विष्णुरष्टाविंशे पराशरात् ।
वेदव्यासस्तथा जज्ञे जातूकर्णपुरःसरः ॥
कर्त्तुं धर्म्मव्यवस्थानमसुराणां प्रणाशनम्
।
बुद्धो नवमके जज्ञे तपसा पुष्करेक्षणः ॥
देवक्यां वसुदेवेन द्वैपायनपुरःसरः ।
तस्मिन्नेव युगे क्षीणे सन्ध्याशिष्टे
भविष्यति ॥
कल्की विष्णुयशा नाम
पाराशर्य्यपुरःसरः ।
दशमो भाव्यसंभूतो याज्ञवल्क्यपुरसरः
॥"
इति मत्स्यपुराणम् ॥

**दशाश्वः**, पुं, (दश अश्वा रथे यस्य ।) चन्द्रः । इति
शब्दरत्नावली ॥ (यथा, ग्रहयागतत्त्वे सोम-
ध्याने ।
"दशाश्वं श्वेतपद्मस्थं
विचिन्त्योमाधदवतम् ।
जलप्रत्यधिदैवञ्च सूर्य्याश्वमाह्वयेत्तथा ॥"
इक्ष्वाकोर्द्दशमपुत्त्रः । यथा, महाभारते । १३ ।
२ । ६ ।
"दशमस्तस्य पुत्त्रोऽभूद् दशाश्वो नाम
भारत ! ॥")

**दशास्यः**, पुं, (दश आस्यानि वदनानि यस्य ।)
रावणः । इति भूरिप्रयोगः ॥ (यथा, रसिक-
रञ्जने । ५ ।
"अकलियुगमखर्व्वमत्र हृद्यं
व्यचरदपापघनो यतः कुटुम्बी ।
मम रुचिरिह लक्ष्मणाग्रजेन
प्रभवति शर्म्म दशास्यमर्द्दनेन ॥")

**दशास्यजित्**, पुं, (दशास्यं जयतीति । दशास्य +
जि + क्विप् । तुगागमश्च ।) श्रीरामः । इति
भूरिप्रयोगः ॥

**दशेन्धनः**, पुं, (दशा वर्त्तिका इन्धनं काष्ठमिव
यस्य ।) प्रदीपः । इति त्रिकाण्डशेषः ॥

**दशेरः**, पुं, (दशतीति । दन्श + "पतिकठिकुठि-
गडिगुडिदंशिभ्य एरक् ।" उणां । १ । ५९ ।
इति एरक् ।) हिंस्रः । इत्युणादिकोषः ॥

**दशेरकः**, पुं, (दशति दुःखं ददातीति । दन्श +
एरक् । ततः कन् ।) मरुदेशः । तद्देशस्थे, पुं
भूम्नि । इति हेमचन्द्रः ॥ (यथा, महाभारते ।
"दस्म उपक्षपयितायमग्निः ।" इति तद्भाष्ये
सायनः ॥ दर्शनीयः । यथा, ऋग्वेदे । १ । ७७ ।
३ ।
"तं मेधेषु प्रथमं देवयन्तीर्विश उपब्रुवते दस्म-
मारीः ॥"
"दस्मं दर्शनीयं तमग्निमारीर्गच्छन्त्यः ।" इति
तद्भाष्ये सायनः ॥)

**दस्युः**, पुं, (दस्यति परस्वान् नाशयतीति । दस +
"यजिमनिशुन्धिदसिजनिभ्योयुच् ।" उणां । ३ ।
२० । इति युच् । बाहुलकादनादेशाभावः ।)
चौरः । (यथा, मनुः । ७ । १४३ ।
"विक्रोशन्त्यो यस्य राष्ट्राद्ध्रियन्ते दस्युभिः
प्रजाः ।
संपश्यतः सभृत्यस्य मृतः स न तु जीवति ॥")
रिपुः । (यथा, ऋग्वेदे । २ । १२ । १० ।
"यः शर्द्धते नानुददाति शृध्यां यो दस्योर्हन्ता-
स जनास इन्द्रः ॥"
"दस्योरुपक्षपयितुः शत्रोर्हन्ता घातकः ॥" इति
तद्भाष्ये सायनः ॥) महासाहसिकः । इति शब्द-
रत्नावली ॥ असुरः । यथा, तत्रैव । ९ । ४७ । २
।
"कृतानीदस्य कर्त्वा चेतंते दस्युतर्हणा ॥"
"दस्युतर्हणा दस्यूनामसुराणां तर्हणा ॥" इति
तद्भाष्ये सायनः ॥ कर्म्मवज्जिते, त्रि । यथा,
ऋग्वेदे । ६ । २४ । ८ ।
"न वीळवे नमते न स्थिराय न शर्धते दस्यु-
जूताय स्तवान् ॥"
"शर्धते उत्सहमानाय दस्युजूताय कर्म्म-
वर्ज्जितैः प्रेरिताय ।" इति तद्भाष्ये सायनः ॥)

**दस्रं**, क्ली, (दंसयते तृणादीन् दशतीति । दसि
दंशे + "स्फायितञ्चिवञ्चिशकीति ।" उणां । २ ।
१३ । इति रक् ।) शिशिरम् । इति संक्षिप्त-
सारे उणादिवृत्तिः ॥

**दस्रः**, पुं, (दस्यति उत्क्षिपति पांशूनिति । दस
उत्क्षेपे + "स्फायितञ्चीति ।" उणां । २ । १३ ।
इति रक् ।) खरः । (दस्यति रोगान् क्षिप-
तीति ।) अश्विनीसुतः । इति मेदिनी । रे, ४७ ॥
(यथा, हरिवंशे । ९ । ५३ ।
"नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनीसुतौ ॥"

**दस्रदेवता**, स्त्री, (द्रस्रौ अश्विनौ अधिष्ठातृ-
देवते यस्याः ।) अश्विनीनक्षत्रम् । इति हेम-
चन्द्रः । २ । २२ ॥

**दस्रसूः**, स्त्री, (द्रस्रौ अश्विनौ सूते इति । सू प्रसवे
+ क्विप् ।) संज्ञा । सा सूर्य्यपत्नी अश्विनी-
कुमारमाता च । इति त्रिकाण्डशेषः ॥

**दह**, औ दाहे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-अनिट् ।) औ, अधाक्षीत् । दाहो भस्मी-
करणम् । दहत्यग्निः काष्ठम् । इति दुर्गादासः
॥

**दह**, इ क दीप्तौ । दाहे । इति कविकल्पद्रुमः ॥
(चुरां-परं-दीप्तौ अकं-दाहे सकं-सेट् ।) इ क,
दंहयति । इति दुर्गादासः ॥

**दहनं**, क्ली, (दहौ दाहे + भावे ल्युट् ।) दाहः ।
भस्मीकरणम् । पोडान इति भाषा ॥ (यथा,
रघुः । ८ । २० ।
"इतरो दहने स्वकर्म्मणां
ववृते ज्ञानमयेन वह्निना ॥")

**दहनः**, पुं, (दहतीति । दह दाहे + ल्युः ।)
अग्निः । (यथा, आर्य्यासप्तशत्याम् । ३०४ ।
"धूमैरश्रु निपातय दह शिखया दहन ! मलि-
नयाङ्गारैः ।
जागरयिष्यति दुर्गतगृहिणी त्वां तदपि
शिशिरनिशि ॥"
तृतीयसंख्या । यथा, सूर्य्यसिद्धान्ते । १२ ।
८५ ।
"खत्रयाब्धिदहनाः कक्षा तु हिमदीधितेः ॥"
कृत्तिकानक्षत्रस्य अधिष्ठातृदेवत्वात् कृत्तिका-
नक्षत्रम् । यथा, ज्योतिस्तत्त्वे ।
"दहनविधिशताख्या मैत्रभं सौम्यवारे ॥")
चित्रकः । भल्लातकः । दुष्टचेतसि, त्रि । इति
मेदिनी । ने, ७५ ॥ (दह्यते कामाग्निना इति ।
दह + ल्युट् ।) कपोतः । इति राजनिर्घण्टः
॥

७ । ९ । १६ ।
“आवन्त्यान् दाक्षिणात्यांश्च
पार्व्वतीयान् दशेरकान् ॥”)

**दशेरुकः**, पुं, (दशतिदुःखानि ददातीति । दश + बाहुलकात् एरुक् ततः स्वार्थे कन् ।) मरु-
देशः । इति भूरिप्रयोगः ॥

**दस**, इ क भासि । इति कविकल्पद्रुमः ॥ (चुरां-परं-अकं-सेट् ।) इ क, दंसयति दंसति । भासि
दीप्तौ । इति दुर्गादासः ॥

**दस**, इ ङ क दृशौ । दंशे । इति कविकल्पद्रुमः ॥ (चुरां-आत्मं-सकं-सेट् ।) दृशिरिति पश्यतेरौ-
णादिककिप्रत्यये रूपम् । इ ङ क, दंसयते फलं
शिशुः पश्यति दशति वेत्यर्थः । भट्टमल्लमते दंश
इह सन्नाहः । इति दुर्गादासः ॥

**दस**, य उ इर् उत्क्षेपे । इति कविकल्पद्रुमः ॥ (दिवां-परं-सकं-सेट् । उदित्त्वात् क्त्वावेट् ।)
य, दस्यति धूलिं वायुः । उ, दसित्वा दस्त्वा ।
इर्, अदसत् अदासीत् । अस्मात् पुषादित्वात्
नित्यं ङ इत्यन्ये । इति दुर्गादासः ॥

**दस्मः**, पुं, (दस्यति उत्क्षिपति दक्षिणादिक-मिति । दस + “इषियुधीन्धिदसिश्येति ।” उणां ।
१ । १४४ । इति मक् ।) यजमानः । चौरः ।
हुताशनः । इति मेदिनी । मे, १५ ॥ खलः ।
इति शब्दरत्नावली ॥ (त्रि, उपक्षेपकः । यथा,
ऋग्वेदे । १ । १४८ । ४ ।
“पुरूणि दस्मो नि रिणाति
जम्भैराद्रोचते वन
आ विभावा ॥”
दर्शनीये, त्रि । यथा, ऋग्वेदे । ६ । ६९ । ७ ।
“इन्द्राविष्णू पिवतं मध्वो अस्य सोमस्य दस्रा
जठरं पृणेथाम् ॥”
“दस्रा हे दर्शनीयाविन्द्राविष्णू ॥” इति तद्भाष्ये
सायनः ॥)

**दस्रौ**, पुं, (दस्यतः क्षिपतो रोगानिति । दस + “स्फायितञ्चीति ।” उणां । २ । १३ । इति
रक् ।) अश्विनौ । इत्यमरः । १ । १ । ५४ ॥
द्विवचनान्तोऽयं शब्दः ॥ (यथा, भावप्रकाशस्य
पूर्ब्बखण्डे प्रथमे भागे ।
“दक्षादधीत्य दस्रौ वितनुतः संहितां स्वीयाम् ।
सकलचिकित्सकलोकप्रतिपत्तिविवृद्धयेधन्याम्
॥
“देवासुररणे देवा दैत्यैर्ये सक्षताः कृताः ।
अक्षतास्ते कृताः सद्यो दस्राभ्यामद्भुतं महत् ॥
वज्रिणोऽभूद्भुजस्तम्भः स दस्राभ्यां चिकित्सितः ।
सोमान्निपतितश्चन्द्रस्ताभ्याम्म सुखीकृतः ॥”)
(रुद्रविशेषः । यथा, महाभारते । १ । ६६ ।
३ ।
“दहनोऽथेश्वरश्चैव कपाली च महाद्युतिः ।
स्थाणुर्भगश्च भगवान् रुद्रा एकादश स्मृताः
॥”
स्कन्दस्यानुचरविशेषः । यथा तत्रैव । ९ ।
४५ । ३३ ।
“दहतिं दहनञ्चैव प्रचण्डौ वीर्य्यसम्मतौ ।
अंशोऽप्युपाचरन् पञ्च ददौ स्कन्दाय धीमते
॥”
दाहकमात्रे, त्रि । यथा, भागवते । ८ । ७ ।
२१ ।
“त्राहि नः शरणापन्नांस्त्रैलोक्यदहनाद्विषात्
॥”)

**दहनकेतनं**, क्ली, (दहनस्य केतनं ध्वज इव ।) धूमः । इति हेमचन्द्रः । ४ । १७ ॥

**दहनप्रिया**, स्त्री, (दहनस्याग्नेः प्रिया ।) स्वाहा । इति त्रिकाण्डशेषः ॥

**दहनागुरु**, क्ली, (दहनाय अगुरु ।) दाहागुरु । इति राजनिर्घण्टः ॥

**दहनारातिः** पुं, (दहनस्याग्नेः अरातिः शत्रुः ।) जलम् । इति राजनिर्घण्टः ॥

**दहनीयः**, त्रि, (दह्यते इति । दह + कर्म्मणि अनीयर् ।) दाह्यः । दहनार्हः ॥

**दहनोपलः**, पुं, (दहनाय वह्न्युत्पादनाय य उपलः प्रस्तरखण्डः ।) सूर्य्यकान्तमणिः । इति
हेमचन्द्रः । ४ । १३३ ॥ दहनोपमोऽपि पाठः ॥

**दहरं**, क्ली, (दह + बाहुलकात् अरः ।) सूक्ष्मम् ।
यथा, श्रीभागवते । १० । ८७ । १८ ।
“उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः ।
परिसरपद्धतिं हृदयमारुणयो दहरम् ॥”
“आरुणयस्तु साक्षात् हृदयस्थं दहरं सूक्ष्म-
मेवोपासते ।” इति तट्टीकायां श्रीधरस्वामी ॥

**दहरः**, पुं, (दहति गृहद्रव्यनाशनेन सन्तापय-
तीति । दह + अरः ।) मूषिका । स्वल्पम् ।
भ्राता । बालकः । इति विश्वमेदिन्यौ ॥

**दह्रः**, पुं, (दहतीति । दह + “स्फायितञ्चीति ।”
उणां २ । १३ । इति रक् ।) अग्निः । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ दावानलः ।
इत्युणादिकोषः ॥ नरकम् । वरुणः । इति
संक्षिप्तसारे उणादिवृत्तिः ॥ हृदयाकाशम् ।
यथा, श्रीभागवते । ३ । १२ । ४४ ।
“आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिस्तथैव
च ।
एवं व्याहृतयश्चासन् प्रणवो ह्यस्य दह्रतः ॥”
“दह्रतः हृदयाकाशात् ।” इति तट्टीकायां
श्रीधर-
स्वामी ॥ * ॥ जठरम् । यथा, तत्रैव । ४ । १
। ३६ ।
“पुलस्त्योऽजनयत् पत्न्यामगस्त्यञ्च
हविर्भुवि ।
सोऽन्यजन्मनि दह्राग्निर्विश्रवाश्च महातपाः
॥”
“दह्राग्निः जठराग्निः ।” इति श्रीधरस्वामी ॥

**दा**, दाने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-
अनिट् ।) दा तु दाने दान दाने प्रसिद्धोऽयम् ।
अस्यैव यच्छादेशः । यच्छति । इति
दुर्गादासः ॥

**दा**, डु ञ लि दाने । इति कविकल्पद्रुमः ॥ (ह्वां-
उभं-सकं-अनिट् ।) डु, दत्रिमम् । ञ लि,
ददाति दत्ते । इति दुर्गादासः ॥

**दा**, ल लूनौ । इति कविकल्पद्रुमः ॥ (अदां-
परं-सकं-अनिट् ।) ल, दाति । लूनिश्च्छेदः ।
केचित्तु दाप लवने इति पठित्वा पित्त्वाद्दा-

“बुद्धिर्लज्जा वपुः शान्तिः सिद्धिः
कीर्त्तिस्त्रयो-
दशी ।
पत्न्यर्थे प्रतिजग्राह धर्म्मो दाक्षायणीः प्रभुः
॥”
अदितिः । यथा, महाभारते । १ । ७५ । ९
।
“त्रयोदशानां पत्नीनां या तु दाक्षायणी वरा ।
मारीचः कश्यपस्तस्यामादित्यान्
समजीजनत् ॥”
कद्रुः । विनता । यथा, तत्रैव । १ । २२ । ५
।
“जग्मतुः परया प्रीत्या परं पारं महोदधेः ।
कद्रुश्च विनता चैव दाक्षायण्यौ विहायसा
॥”)
“दक्षञ्च तेषामारभ्य प्रजाः सम्यग्विवर्द्धिताः
।
तत्र दाक्षायणीपुत्त्राः सर्व्वे देवाः सवासवाः
॥
वसवोऽष्टौ च रुद्राश्च आदित्या मरुतस्तथा
।
सापि दक्षाय सुश्रोणी गौरी दत्ताथ ब्रह्मणा ॥
दुहितृत्वे पुरा याहि रुद्रेणोढा महात्मना ।
सा च दाक्षायणी देवी पुनर्भूत्वा नृपोत्तम !
॥”
इति वराहपुराणम् ॥
दन्तीवृक्षः । इति रत्नमाला ॥ * ॥

**दाक्षायणीपतिः**, पुं, (दाक्षायणीनां अश्विन्यादि-
नक्षत्राणां पतिः ।) चन्द्रः । इति त्रिकाण्ड-
शेषः ॥

**दाक्षायणीरमणः**, पुं, (रमयतीति । रम + ल्युः ।
दाक्षायणीनां रमणः ।) चन्द्रः । इति हला-
युधः ॥

**दाक्षाय्यः**, पुं, (दक्षाय्य एव । स्वार्थे अण् ।)
गृध्रः । इत्यमरः । २ । ५ । २१ ॥

**दाक्षिकन्था**, स्त्री, (दाक्षीणां कन्था । “संज्ञायां
कन्थोशीनरेषु ।” २ । ४ । २० । इति उशी-

विधिवत् स्नानदानाभ्यां कुर्व्वन्
यद्विधिपूजनम् ।
क्रियते सरहस्यन्तु तद्दाक्षिण्यमिहोच्यते ॥
सर्व्वत्र पितृदेवादौ यस्माद्भवति दक्षिणः ।
देवी च दक्षिणा यस्मात्तस्माद्दाक्षिण्यमुच्यते
॥”
इति कालिकापुराणे ७७ अध्यायः ॥
दाक्षिणार्हे, त्रि । इत्यमरः । ३ । १ । ५ ॥
(दक्षिणे
भवम् । दक्षिण + ष्यञ् । दक्षिणभवे ।
दक्षिण-
दिक्सम्बन्धिनि च । यथा,
आर्य्यासप्तशत्याम् ।
२८२ ।
“दाक्षिण्यात् प्रदिमानं दधतं सा भानुमेन-
मवमंस्थाः ॥”)

**दाक्षीपुत्त्रः**, पुं, (दाक्ष्याः पुत्त्रः ।) पाणिनिमुनिः ।
इति त्रिकाण्डशेषः ॥ (यथा, नैषधे । १९ ।
६१ ।
“दाक्षीपुत्त्रस्य तन्त्रे ध्रुवमयमभवत्
कोऽप्यधीती
कपोतः ॥”)

**दाक्षेयः**, पुं, (दाक्ष्या अपत्यं पुमान् । दाक्षी +
“स्त्रीभ्यो ढक् ।” ४ । १ । १२० । इति ढक्
।)
पाणिनिमुनिः । इति हेमचन्द्रः । ३ । ५१५
॥

**दाक्ष्यं**, क्ली, (दक्षस्य भावः कर्म्म वा । दक्ष +
ष्यञ् ।) दक्षता । निपुणता । दक्षशब्दात्
भावे
ष्यप्रत्ययः ॥ (यथा, महाभारते । २ । ३८
। २० ।
“दानं दाक्ष्यं श्रुतं शौर्य्यं ह्रीः
कीर्त्तिर्बुद्धिरुत्तमा ।
सन्नतिः श्रीर्धृतिस्तुष्टिः पुष्टिश्च नियताच्युते
॥”)

**दाडकः**, पुं, (दालयति मुखाभ्यन्तरस्थद्रव्यं विचूर्णी-

संज्ञाभावे यगादौ दायते इत्यादि मन्यन्ते । स्वमते तु पित्त्वाभावाद्दासंज्ञायां दीयते इत्येव । इति दुर्गादासः ॥

**दा**, स्त्री, (दा + क्विप् ।) शोधनम् । दानम् । छेदः । उपतापः । रक्षा । इति मेदिनी । दे, १ ॥

**दाकः**, पुं, (ददाति दक्षिणामिति । दा + “कृदाधा-वार्चिकलिभ्यः कः ।” उणां ३ । ४० । इति कः) यजमानः । इत्युणादिकोषः ॥ दाता । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**दाक्षकं**, क्ली, (दक्ष + वुञ् ।) दक्षाणां समूहः । इत्यमरटीकायां रायमुकुटः ॥ (दाक्षीणां विषयो-देशः । दाक्षि + “राजन्यादिभ्यो वुञ् ।” ४ । २ । ५३ । इति वुञ् । दाक्षेर्विषये । इति व्याकरणम् ॥)

**दाक्षायणी**, स्त्री, (दक्षस्यापत्यं स्त्री । दक्ष + फिञ् । गौरादित्वात् ङीष् ।) अश्विन्यादयो रेवत्यन्ताः सप्तविंशतिस्ताराः । इत्यमरः । १ । ३ । २१ ॥ दुर्गा । इति मेदिनी । णे, ९६ ॥ रोहिणीनक्षत्रम् । इति हेमचन्द्रः ॥ (दक्ष-कन्यामात्रम् । यथा, मार्कण्डेये । ५० । २१ । नरत्वाभावात् न क्लीवता ।) वाह्लीकेषु ग्राम-संज्ञा । इति नपुंसकलिङ्गसंग्रहटीकायां भरतः ॥

**दाक्षिणात्यः**, त्रि, (दक्षिणा दक्षिणस्यां दिशि भवः । दक्षिणा + “दक्षिणापश्चात्पुरसस्त्यक् ।” ४ । २ । ९८ । इति त्यक् ।) दक्षिणदेशोद्भवः । इति शब्दार्थकल्पतरुः ॥ (यथा, महाभारते । ३ । २३६ । ३ ।
“प्राच्याश्च दाक्षिणात्याश्च प्रतीच्योदीच्य-वासिनः ॥”)
नारिकेलः । इति राजनिर्घण्टः ॥

**दाक्षिण्यं**, क्ली, (दक्षिणस्य भावः । दक्षिण + ष्यञ् ।) अनुकूलता । इति हेमचन्द्रः । ६ । १३ ॥ (सरलता । यथा, आर्य्यासप्तशत्याम् । ६०१ ।
“सौभाग्यं दाक्षिण्यान्नेत्युपदिष्टं हरेण तरुणी-नाम् ।
वामार्द्धमेव देव्याः स्ववपुःशिल्पे निवेशयता ॥”
परच्छन्दानुवर्त्तनम् । यथा, रघुः । १ । ३१ ।
“तस्य दाक्षिण्यरूढेन नाम्ना मगधवंशजा ।
पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा ॥”)
भावविशेषः । तत्तु दक्षिणाचाररूपम् । यथा,
“बालान्तु वामदाक्षिण्यभावाभ्यामपि पूजयेत् ।
श्मशानभैरवीं देवीमुग्रतारां तथैव च ॥”
अपि च ।
“ऋषीन् देवान् पितॄंश्चैव मनुष्यान् भूतसञ्चयान् ।
यो यजन् पञ्चभिर्यज्ञैरृणानि परिशोधयन् ॥
करोतीति । दल + णिच् + ण्वुल् । लस्य डः ।)
दन्तः । इति शब्दार्थकल्पतरुः ॥

**दाडिमः**, त्रि, (दलनमिति दालः । तेन निर्वृत्तः । भावप्रत्ययन्तादिमप् । डलयोरेकत्वम् ।) एला । इति मेदिनी मे, ४४ ॥ फलवृक्षविशेषः । (यथा, देवीभागवते । १ । १२ । ८ ।
“दाडिमैर्नारिकेलैश्च माधवीमण्डपावृतम् ॥”)
तत्पर्य्यायः । करकः २ । इत्यमरः । २ । ४ । ६५ ॥ पिण्डपुष्पः ३ दाडिम्बः ४ पर्व्वरुक् ५ स्वाद्बम्लः ६ पिण्डीरः ७ फलशाडवः ८ शुकवल्लभः ९ । इति त्रिकाण्डशेषः ॥ रक्तपुष्पः १० । इति रत्नमाला ॥ दाडिमीसारः ११ कुट्टिमः १२ फलसाडवः १३ मूर्द्धन्यषमध्योऽपि । रक्तबीजः १४ सुफलः १५ दन्तबीजकः १६ मधुबीजः १७ कुचफलः १८ रोचनः १९ मणिबीजः २० कल्कफलः २१ वृत्तफलः २२ सुनीलः २३ नीलपत्रः २४ । अस्य गुणाः । मधुराम्लत्वम् । कषायत्वम् । कासवात-कफश्रमपित्तविनाशित्वम् । ग्राहित्वम् । दीप-नत्वम् । लघुत्वम् । उष्णत्वम् । शीतलत्वम् । रुचिदातृत्वञ्च । इति राजनिर्घण्टः ॥ हृद्यत्वम् । अम्लत्वम् । श्वासारुचितृष्णानाशित्वम् । कण्ठ-शोघनत्वम् । कफपित्ताविरोधित्वञ्च ॥ * ॥
“द्विविधं तत्तु विज्ञेयं मधुरञ्चाम्लमेव च ।
मधुरं तत् त्रिदोषघ्नमम्लं वातकफापहम् ॥”
इति राजवल्लभः ॥

|  |  |  |
| --- | --- | --- |
|  |  | तापहारि मधुरं लघु पथ्यम् । इति राज-<br>निर्घण्टः ॥<br>“तत्फलं त्रिविधं स्वादु स्वाद्वम्लं<br>केवलाम्लकम् । |

तत्तु स्वादु त्रिदोषघ्नं तृड्दाहज्वरनाशनम् ॥
हृत्कण्ठमुखरोगघ्नं तर्पणं शुक्रलं लघु ।
कषायानुरसं ग्राहि स्निग्धं मेदोबलावहम् ॥
स्वाद्वम्लं दीपनं रुच्यं किञ्चित् पित्तकरं लघु ।
अम्लन्तु पित्तजनकमम्लं वातकफापहम् ॥”
इति भावप्रकाशः ॥

**दाडिमपुष्पकः**, पुं, (दाडिमस्य पुष्पमिव पुष्पं
यस्य । कन् ।) रोहितकवृक्षः । इत्यमरः । २ ।
४ । ४९ ॥ रोहडा इति ख्यातः ॥ (अस्य
पर्य्याया
यथा, वैद्यकरत्नमालायाम् ।
“रोही रोहितकः प्लीहशत्रुर्दाडिमपुष्पकः ॥”)

**दाडिमप्रियः**, पुं, (दाडिमफलं प्रियं यस्य ।)
शुकपक्षी । इति शब्दरत्नावली ॥

**दाडिमभक्षणः**, पुं, (भक्षयतीति । भक्षि +
ल्युः । भक्षणो भक्षकः । दाडिमस्य भक्षणः ।)
कीरपक्षी । इति शब्दचन्द्रिका ॥ (दाडिम-
भक्षके, त्रि ॥)

**दाडिमीसारः**, पुं, (दाडिमीं दाडिमीशब्दं सरति
प्राप्नोतीति । दाडिमी + सृ + अण् ।) दाडिमः
।
इति राजनिर्घण्टः ॥

**दाडिम्बः**, पुं, दाडिमः । इति त्रिकाण्डशेषः ॥
(दाडिमशब्देऽस्य विशेषो ज्ञातव्यः ॥)

**दाढा**, स्त्री, (दैप शोधने, दा दाने वा + क्विंप् । दे
शुद्ध्यै दानाय वा ढौकते इति । ढौक + डः ।)
दन्तविशेषः । तत्पर्य्यायः । दंष्ट्रा २ जम्भः ३ ।
इति हेमचन्द्रः । ३ । २४७ ॥ प्रार्थना । समूहः
।
इति शब्दार्थकल्पतरुः ॥

**दाढिका**, स्त्री, (दाढायै केशसमूहाय प्रभवतीति ।
ठक् ततष्टाप् ।) मुखावयवविशेषः । दाडि
इति भाषा । (यथा, मनुः । ८ । २८३ ।
“पादयोर्दाढिकायाञ्च ग्रीवायां वृषणेषु च ॥”
“दाढिकायां श्मश्रुणि ॥” इति तट्टीकायां
कुल्लूकभट्टः ॥ दाढा + स्वार्थे कप् कापि अत
७ । ३ । १ । इति आत्वम् ।) पक्षिविशेषः
। डाउक
इति भाषा । तत्पर्य्यायः । कालकण्ठकः
२ ।
इत्यमरः । २ । ५ । २१ ॥ अत्यूहः ३
दात्यौहः ४
कालकण्ठः ५ मासङ्गः ६ शितिकण्ठः ७
कचा-
टुरः ८ । इति शब्दरत्नावली ॥
काकमद्गुः ९ ।
इति त्रिकाण्डशेषः ॥ (यथा, मनुः । ५ ।
१२ ।
“सारसं रज्जुबालञ्च दात्यूहं शुकसारिके
॥”
(अस्य गुणा यथा, --
“दात्यूहो मरुतश्च नाशनकरो
वृष्योऽतिशुक्रप्रदः
श्रेष्ठः सर्व्वगुणः श्रमीपशमनः तुष्टिप्रदो
वातहा ॥”
इति हारीते प्रथमेस्थाने एकादशेऽध्याये
॥)
“प्रावृट्काले सुखी भूत्वा को वा कुत्र न
गच्छति ।
इति वदति दात्यूहः को वा को वा क्व वा
क्व वा ॥”
इत्युद्भटः ॥)
जलकाकः । इति राजनिर्घण्टः ॥ चातकः
।
इति मेदिनी । हे, १७ ॥ मेघः । इति शब्द-
रत्नावली ॥

**दात्यौहः**, पुं, स्त्री, (दित्यौह + स्वार्थे अण् ।
देविकाशिंशपेत्यादिना आत्वम् ।) दात्यूहः
।
इति शब्दरत्नावली ॥

**दात्रं**, क्ली, (द्यति दाति वानेनेति । दो अवखण्डने
दा लवने वा + “दाम्नीशसेति ।” ३ । २ ।
१८२ ।
इति ष्ट्रन् । दादिभ्यश्छन्दसीति त्रन् वा ।)
आर्ज्जवं ऋजुकरणम् । ञ, दीदांसति दीदां-
सते काष्टं वर्द्धकिः ऋजु करोतीत्यर्थः ।
ऋजु-
भावः इति विद्यानिवासः । दीदांसति साधुः
।
ऋजुः स्यादित्यर्थः । छेदे दानति दानते ।
इति
वोपदेवः । तत्र तिबादयो न स्युरिति
रमानाथः ।
इति दुर्गादासः ॥

**दानं**, क्ली, (दा दाने दो अवखण्डने दैप शोधने
भावादौ ल्युट् ।) गजमदः । (यथा, माघे ।
५ । ३७ ।
“दानं ददत्यपि जलः सहसाधिरूढे
को विद्यमानगतिरासितुमुत्सहेत ॥”
“दीयते इति दानं धनं गजमदश्च ।” इति
तट्टीकायां मल्लिनाथः ॥) पालनम् । छेद-
नम् । शुद्धिः । इति मेदिनी । ने, १० ॥ वृक्ष-
कोटरकीटजमधु । अस्य गुणाः । रूक्षत्वम् ।
दीपनत्वम् । कफच्छर्दिमेहनाशित्वञ्च । इति
राजवल्लभः ॥
देवब्राह्मणादिसम्प्रदानकद्रव्यमो-
चनम् । तत्पर्य्यायः । त्यागः २ विहापितम्
३
उत्सर्जनम् ४ विसर्जनम् ५ विश्राणनम् ६
वितर-
णम् ७ स्पर्शनम् ८ प्रतिपादनम् ९ प्रादेशनम्
१०
निर्व्वपणम् ११ अपवर्जनम् १२ अंहतिः १३
।
इत्यमरः । २ । ७ । २९ ॥ दायः १४ । इति
त्रिकाण्ड-
शेषः ॥ प्रदानम् १५ ददनम् १६ विश्रणनम्
१७
दत्तिः १८ अंहती १९ उत्सर्गः २० अति-
सर्जनम् २१ स्पर्शः २२ विसर्गः २३
क्षणनम् २४
प्रदेशनम् २५ । इति शब्दरत्नावली ॥ * ॥
तस्य लक्षणादि यथा, --
“अर्थानामुदिते पात्रे श्रद्धया प्रतिपादनम् ।

इत्वञ्च ।) दंष्ट्रिका । इति हेमचन्द्रः । ३ ।
२४७ ॥

**दाण्डाजिनिकः**, त्रि, (दण्डाजिनेन शाठ्येन दम्भेन
वा अर्थानन्विच्छतीति । दण्डाजिन + “अयः-
शूलदण्डाजिनाभ्यां ठक्ठञौ ।” ५ । २ । ७६
। इति
ठञ् ।) कुहकः । इति हेमचन्द्रः । ३ । ४१ ॥

**दातं**, त्रि, (दायते स्म इति । दा लवने + क्तः)
छिन्नम् । इत्यमरः । ३ । १ । १०३ ॥ (दैप्
शोधने
कर्त्तरि क्तः । शुद्धम् ॥)

**दाता**, [ऋ] त्रि, (ददातीति । दा दाने +
“ण्वुल्तृचौ ।” ३ । १ । १३३ । इति तृच् ।)
दान-
कर्त्ता । तत्पर्य्यायः । दारुः २ मुचिरः ३ ।
इति त्रिकाण्डशेषः ॥ (यथा, ऋग्वेदे । ७ । २०
। २ ।
“कर्त्ता सुदासे अह वा उ लोकं
दाता वसु मुहुरादाशुषे भूत् ॥”)

**दात्यूहः**, पुं स्त्री, (दाप् लवने + क्तिन् । दातिं मारणं
ऊहते इति । दाति + ऊह + अण् । यद्वा, दो
अवखण्डने क्तिन् । दितिं वहतीति । वह + क
+ ऊट् । दित्यूहः । ततः स्वार्थे अण् । ततः
“देविका शिंशपादित्यवाहदीर्घसत्रश्रेयसामात्
॥”
अस्त्रविशेषः । इति भरतः ॥ दा इति
कास्त्या
इति च भाषा । तत्पर्य्यायः । लवित्रम् २ ।
इत्यमरः । २ । ९ । १३ ॥ खड्गीकम् ३ ।
इति शब्द-
रत्नावली ॥ (यथा, महाभारते । ५ ।
१५४ । ७ ।
“सशूर्पपिटकाः सर्व्वे सदात्राङ्कुशतोमराः
॥”
भावे त्रन् । दानम् । यथा, ऋग्वेदे । १ ।
११६ । ६ ।
“तद् वां दात्रं महिकीर्त्तेन्यम्” ।
“तद्दात्रं दानम् महि महदतिगम्भीरम् ।”
इति
तदभाष्ये सायनः ॥ दानकर्त्तरि, त्रि ।
यथा,
वाजसनेयसंहितायाम् । १० । ६ ।
“सोमस्य दात्रमसि ॥”)

**दात्री**, स्त्री, (ददातीति । दा + तृच् + ङीप् ।)
दानकर्त्री । इति व्याकरणम् ॥ (गङ्गा ।
यथा,
काशीखण्डे । २९ । ८९ । तस्याः
सहस्रनामकीर्त्तने ।
“दीनसन्तापशमनी दात्री दवथुवैरिणी ॥”)

**दात्वः**, पुं, (ददातीति । दा + “जनिदाच्युसिति ।”
उणां ४ । १०४ । इति त्वन् ।) दाता ।
इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ (क्ली,
यज्ञ-
कर्म्म । इत्युज्ज्वलदत्तः ॥)

**दाधिकं**, त्रि, (दध्नि दध्ना वा संस्कृतं दध्ना चरति
दधि + “चरति ।” ४ । ४ । ८ । इति ठक्
। (दध्ना
उपषिक्तम् । “व्यञ्जनैरुपसिक्ते ।” ४ । ४ ।
२६ ।
इति ठक् वा ।) दधिसंस्कृतवस्तु । इति
हेम-
चन्द्रः । ३ । ७४ ॥ (औषधविशेषे, क्ली ।
यथा,
सुश्रुते उत्तरतन्त्रे । ४२ ।
“बीजपूररसोपेतं सर्पिर्दधिचतुर्गुणम् ।
दानमित्यभिनिर्द्दिष्टं व्याख्यानं तस्य वक्ष्यते
॥
सम्प्रदानस्वत्वापादकद्रव्यत्यागोदानमिति
॥ * ॥
दाता प्रतिग्रहीता च श्रद्धादेयञ्च धर्म्मयुक् ।
देशकालौ च दानानामङ्गान्येतानि षड्विदुः
॥
मनसा पात्रमुद्दिश्य भूमौ तोयं विनिःक्षिपेत् ।
विद्यते सागरस्यान्तो दानस्यान्तो न विद्यते
॥
परोक्षे कल्पितं दानं पात्राभावे कथं भवेत् ।
गोत्रजेभ्यस्तथा दद्यात् तदभावेऽस्य बन्धुषु
॥
यदा तु न सकुल्यः स्यान्न च
सम्बन्धिबान्धवाः ।
दद्यात् स्वजातिशिष्येभ्यस्तदभावेऽप्सु
निःक्षि-
पेत् ॥
स्नात्वा शुद्धे समे देशे गोमयेनोपलेपिते ।
वसित्वा वसनं शुद्धं दानं दद्यात् सदक्षिणम् ॥
* ॥
एकां गां दशगुर्द्दद्यात् दश दद्याच्च गोशती ।
शतं सहस्रगुर्द्दद्यात् सहस्रं बहुगोधनः ॥
ग्रासादर्द्धमपि ग्रासमर्थिभ्यः किन्न दीयते ।
इच्छानुरूपो विभवः कदा कस्य भविष्यति ॥
अपरावाधमक्लेशं प्रयत्नेनार्जितं धनम् ।
स्वल्पं वा विपुलं वापि देयमित्यभिधीयते ॥
* ॥
विक्रयञ्चैव दानञ्च न नेयाः स्युरनिच्छवः ।
दाराः पुत्राश्च सर्व्वस्वमात्मन्येव च
योजयेत् ॥
आपत्काले च कर्त्तव्यं दानं विक्रय एव च ।
अन्यथा न प्रवर्त्तेत इति शास्त्रार्थनिश्चयः ॥
* ॥
यज्ञो दानं तपो जाप्यं श्राद्धञ्च सुरपूजनम् ।

| | | |
|---|---|---|
| | साधितं दाधिकं नाम गुल्महृत् प्लीहशूलजित् ॥”)<br>**दान**, ञ आर्जवे । छिदि । इति कविकल्पद्रुमः ॥<br>(भ्वां-उभं-सकं-सेट् ।) ऋजुरवक्रस्तस्य भाव | |

यद्गङ्गायां कृतं सर्व्वं कोटि कोटि
गुणम्भवेत् ॥
शिवस्य विष्णोरग्नेश्च सन्निधौ दत्तमक्षयम्
।
शालग्रामशिला यत्र तत्तीर्थं योजनद्वयम् ।
तत्र दानञ्च होमश्च कोटिकोटिगुणम्भवेत्
॥
यद्यत्र दुर्लभं द्रव्यं यस्मिन् कालेऽपि वा
पुनः ।
दानार्हौ देशकालौ तौ स्यातां श्रेष्ठौ न
चान्यथा ॥
पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम् ।
केवलं धर्म्मबुद्ध्या यद्धर्म्मदानं प्रचक्ष्यते
॥
सहस्रगुणितं दानं भवेद्दत्तं युगादिषु ।
कर्म्मश्राद्धादिकञ्चैव तथा मन्वन्तरादिषु ॥
* ॥
आहारं मैथुनं निद्रां सन्ध्याकाले
विवर्जयेत् ।
कर्म्म चाध्ययनञ्चैव तथा दानप्रतिग्रहौ ॥
* ॥
तामसेन तु यज्ञेन दानेन तपसा तथा ।
देवलोके ध्रुवं वासो देवसायुज्यमेव च ॥ *
॥
गत्वा यद्दीयते दानं तदनन्तफलं स्मृतम् ।
सहस्रगुणमाहूय याचिते च तदर्द्धकम् ॥
आशां दत्त्वा ह्यदातारं दानकाले निषेधकम्
।
दत्त्वा सन्तप्यते यस्तु तमाहुर्ब्रह्मघातकम्
॥
योऽसद्भ्यः प्रतिगृह्यापि पुनः सद्भ्यः
प्रयच्छति ।
आत्मानं संक्रमं कृत्वा परांस्तारयते हि
सः ॥ * ॥
यस्य यद्दीयते वस्त्रमलङ्कारादि किञ्चन ।
तेषां दैवतमुच्चार्य्य कृत्वा प्रोक्षणपूजने ।
उत्सृज्य मूलमन्त्रेण प्रतिनाम्ना निवेदयेत्
॥
योऽर्च्चितः प्रतिगृह्णाति दद्यादर्च्चितमेव
वा ।
चेतसा धर्म्मयुक्तेन दानं तद्विमलं शिवम्
॥”
इति कूर्म्मपुराणम् ॥
रोगोपशमनाय दानविधिर्यथा, --
“गोदानं भूमिदानञ्च स्वर्णदानं सुरार्च्चनम्
।
कृत्वा पश्चात् प्रतीकारं कुर्य्यात्
पाण्डूपशान्तये ॥
महापापेषु सर्व्वेषु तदर्द्धं मुख्यदोषजे ।
अथवापि षडष्टांशात् कल्प्यं
व्याधिबलाबलात् ॥
कुर्य्यात् सर्व्वं कृतं कर्म्म
कुष्ठरोगोपशान्तये ।
गोभूहिरण्यदानञ्च तथामिष्टान्नभोजनम् ॥
चतुर्व्विधं दानमिदं दत्त्वा कुर्य्यात्
प्रतिक्रियाम् ।
कदाचिदपि सिध्येत आयुषश्च बलक्रिया
॥
मेहे सुवर्णदानञ्च शूले श्वासे भगन्दरे ।
अर्शोभ्यस्त्वन्नदानेन श्वासात्
कासाद्विमुच्यते ॥
ज्वरेचेश्वरपूजा च रुद्रजाप्यं समाचरेत् ।
मतिदानान्नदानञ्च शास्त्रदानं भ्रमातुरे ॥
अग्निहोमञ्चाग्निमान्द्ये कन्यादानञ्च गुल्मके
।
मेहाश्मरीविनाशाय लवणञ्च प्रदापयेत् ॥
बहुभोजनदानेन शूलरोगाद्विमुच्यते ।
घृतमधुप्रदानेन रक्तपित्तं प्रशाम्यति ॥
चतुर्व्विधेन दानेन साध्यः स्याद्
ग्रहणीगदः ।
सुवर्णदानात् कुनखी श्यावदन्तः सुखी
भवेत् ॥
रौप्यदानाच्छ्वित्रकुष्ठं साध्यं वापि प्रदृश्यते
।
सिध्मले त्रपुदानञ्च वर्व्वरे लोहदानकम् ॥
मुखव्रणे ददेन्नागं गोदानं बहुमूत्रके ।
नेत्ररोगे घृतं दद्यात् सुगन्धं नासिकागदे ॥
तैलदानं कण्डुरोगे रसदानञ्च जिह्वके ।
उष्ट्रं दद्यात् पित्तरोगे लूतारोगे च देवदः ॥”
इति हारीते द्वितीयस्थाने प्रथमेऽध्याये ॥)

**दानकर्म्म**, क्ली, (दानमेव कर्म्म ।) दानक्रिया ।
चेतसा सत्त्वयुक्तेन दानं तत् विमलं स्मृतम् ॥
इक्षुभिः सन्ततां भूमिं यवगोधूमशालिनीम् ।
ददाति वेदविदुषे स न भूयोऽभिजायते ।
भूमिदानात् परं दानं न भूतं न भविष्यति ॥
विद्यां दत्त्वा ब्राह्मणाय ब्रह्मलोके महीयते ।
दद्यादहरहस्तान्तु श्रद्धया ब्रह्मचारिणे ।
सर्व्वपापविनिर्म्मुक्तो ब्रह्मस्थानमवाप्नुयात् ॥
वैशाख्यां पौर्णमास्यान्तु ब्राह्मणान् सप्त पञ्च च ।
उपोष्याभ्यर्च्चयेद्विद्वान् मधुना तिलकृष्णकैः ॥
गन्धादिभिः समभ्यर्च्च्य वाचयेद्वा स्वयं वदेत् ।
प्रीयतां धर्म्मराजेति यथा मनसि वर्त्तते ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥
कृष्णाजिने तिलान् कृत्वा हिरण्यमधुसर्पिषा ।
ददाति यस्तु विप्राय सर्व्वं तरति दुष्कृतम् ॥
कृतान्नमुदकुम्भञ्च वैशाख्याञ्च विशेषतः ।
निर्द्दिश्य धर्म्मराजाय विप्रेभ्यो मुच्यते भयात् ॥
द्वादश्यामर्च्चयेद्विष्णुमुपोष्याघप्रणाशिनीम् ।
सर्व्वपापविनिर्म्मुक्तो नरो भवति निश्चितम् ॥
यो हि यां देवतामिच्छेत् समाराधयितुं नरः ।
ब्राह्मणान् भोजयेद्यत्नाद्योगाय तोषिताः
सुराः ॥
सन्ततिकामः सततं पूजयेद्वै पुरन्दरम् ।
ब्रह्मवर्च्चसकामस्तु ब्राह्मणान् ब्रह्मनिश्चयात् ॥
आरोग्यकामोऽथ रविं घनकामो हुताशनम् ।
कर्म्मणां सिद्धिकामन्तु पूजयेद्वै विनायकम् ॥
भोगकामो हि शशिनं धनकामः समीरणम् ।
मुमुक्षुः सर्व्वसंसारात् प्रयत्नेनार्च्चयेद्धरिम् ॥
अकामः सर्व्वकामो वा पूजयेत्तु गदाधरम् ।
वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः ॥
तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ।
भूमिदः सर्व्वमाप्नोति दीर्घमायुर्हिरण्यदः ॥
गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम् ।
वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः॥
अनडुद्धः श्रियं पुष्टां गोदो व्रध्नस्य पिष्टपम् ।
यानशय्याप्रदो भार्य्यामैश्वर्य्यमभयप्रदः ।
धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्म शाश्वतम् ।
वेदवित्सु ददद्दानं स्वर्गलोके महीयते ॥
गवां घासप्रदानेन सर्व्वपापैः प्रमुच्यते ।
इन्धनानां प्रदानेन दीप्ताग्निर्जायते नरः ॥
औषधं स्नेहमाहारं रोगिणो रोगशान्तये ।
ददानो रोगरहितः सुखी दीर्घायुरेव च ॥

तावुभौ गच्छतः स्वर्गं नरकञ्च विपर्य्यये ॥”
इति शुद्धितत्त्वम् ॥ * ॥
दानं त्रिविधं सात्त्विकं राजसं तामसञ्च ।
सात्त्विकं यथा, --
“दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥
राजसं यथा, --
“यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं विदुः ॥”
तामसं यथा, --
“आदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥”
इति श्रीभगवद्गीता ॥ * ॥
“हस्त्यश्वं गामनड्वाहं मणिमुक्तादिकाञ्चनम् ।
परोक्षं हरते यस्तु पश्चाद्दानं प्रयच्छति ॥
न स गच्छति वै स्वर्गं दातारो यत्र भागिनः ।
अनेन कर्म्मणा युक्ताः पच्यन्ते नरकेऽधमाः ॥”
इति मत्स्यपुराणम् ॥ * ॥
नित्यनैमित्तिकादिभेदेन तच्चतुर्व्विधं यथा, --
“नित्यं नैमित्तिकं काम्यं त्रिविधं दानमुच्यते ।
चतुर्थं विमलं प्रोक्तं सर्व्वदानोत्तमोत्तमम् ॥
अहन्यहनि यत् किञ्चिद्दीयतेऽनुपकारिणे ।
अनुद्दिश्य फलन्तत् स्याद्ब्राह्मणाय च नित्यकम् ॥
यत्तु पापोपशान्त्यर्थं दीयते विदुषां करे ।
नैमित्तिकं तदुद्दिष्टं दानं सद्भिरनुत्तमम् ॥
अपत्यविजतैश्वर्य्यस्वर्गार्थं यत् प्रदीयते ।
दानन्तत् काम्यमाख्यातमृषिभिर्धर्म्मचिन्तकैः ॥
पदीश्वरप्रीणनार्थं ब्रह्मवित्सु प्रदीयते ।
तत्पर्य्यायः । दाति १ दाशति २ दासति ३
राति ४ रासति ५ पृणक्षि ६ पृणाति ७ शिक्षति ८ तुञ्जति ९ महतः १० । इति दश
दानकर्म्मणः । इति देवनिघण्टौ ३ अध्यायः ॥

**दानधर्म्मः**, पुं, (दानाख्यो धर्म्मः दानरूपो धर्म्मो वा मध्यलोपिसमासः ।) दानस्य फलम् । यथा,
ब्रह्मोवाच ।
“अथातः संप्रवक्ष्यामि दानधर्म्ममनुत्तमम् ।
अर्थानामुचिते पात्रे श्रद्धया प्रतिपादनम् ॥
दानन्तु कथितं तज्ज्ञैर्भुक्तिमुक्तिफलप्रदम् ।
न्यायेनोपार्ज्जयेद्वित्तं दानभोगफलञ्च तत् ॥
अध्यापनं याजनञ्च वृत्तमाहुः प्रतिग्रहम् ।
कुसीदं कृषिबाणिज्यं क्षत्त्रवृत्तोऽथ चार्ज्जयेत् ॥
यद्दीयते च पात्रेभ्यस्तद्दानं परिकीर्त्तितम् ।
नित्यं नैमित्तिकं काम्यं विमलं दानमीरितम् ॥
अहन्यहनि यत् किञ्चिद्दीयतेऽनुपकारिणे ।
अनुद्दिश्य फलं तत् स्यात् ब्राह्मणाय तु नित्य-
कम् ॥
यत्तु पापोपशान्त्यै च दीयते विदुषां करे ।
नैमित्तिकं तदुद्दिष्टं दानं सद्भिरनुष्ठितम् ॥
अपत्यविजयैश्वर्य्यस्वर्गार्थं यत् प्रदीयते ।
दानं तत् काम्यमाख्यातमृषिभिर्धर्म्मचिन्तकैः ॥
ईश्वरप्रीणनार्थाय ब्रह्मवित्सु प्रदीयते ।
असिपत्रवनं मार्गं क्षुरधारासमन्वितम् ।
तीक्ष्णातपञ्च तरति छत्रोपानत्प्रदानतः ॥
यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे ।
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ॥
अयने विषुवे चैव ग्रहणे चन्द्रसूर्य्ययोः ।
संक्रान्त्यादिषु कालेषु दत्तं भवति चाक्षयम् ॥
प्रयागादिषु तीर्थेषु गयायाञ्च विशेषतः ।
दानधर्म्मात् परो धर्म्मो भूतानां नेह विद्यते ॥
स्वर्गायुर्भूतिकामेन देयं पापोपशान्तये ।
दीयमानन्तु यो मोहात् गोविप्राग्निसुरेषु च ।
निवारयति पापात्मा तिर्य्यग्योनिं व्रजेन्नरः ॥

यस्तु दुर्भिक्षवेलायामन्नाद्यं न प्रयच्छति ।
म्रियमाणेषु विप्रेषु ब्रह्महा स तु गर्हितः ॥”
इति गारुडे दानघर्म्मनाम ५१ अध्यायः ॥ * ॥
अन्यत् महाभारते शान्तिपर्व्वणि द्रष्टव्यम् ॥

**दानपतिः**, पुं, (दाने पतिः श्रेष्ठः ।) सततदाता ।
इति जटाधरः ॥ (यथा, महाभारते । ५ । ११९ । २२ ।
“जातो दानपतिः पुत्त्रस्त्वया शूरस्तथापरः ॥”)
अक्रूरः । इति श्रीभागवतम् ॥ (यथा, हरि-
वंशे । ७८ । ८४ ।
“गच्छ दानपते ! क्षिप्रं ताविहानयितुं व्रजात् ।
नन्दगोपञ्च गोपांश्च करदान् मम शासनात् ॥”
दैत्यभेदः । यथा, हरिवंशे । २३२ । ७ ।
“सहस्रपादः सुमुखः कृष्णश्चैव महासुरः ।
रणोत्कटो दानपतिः शैलकम्पी कुलाकुलः ॥”)

**दानफलं**, क्ली, (दानस्य फलम्) दानजन्यफलम् ।
तद्विवरणं यथा, --
“गत्वा यद्दीयते दानं भक्त्या पात्रे विधानतः ।
तदनन्तफलं विद्धि अवस्थात्रितये नृप ! ॥
तमोवृतस्तु यो दद्यात् भयात् क्रोधात्तथैव च ।
नृप ! दानन्तु तत् सर्व्वं भुङ्क्ते गर्भस्थ एव तु ॥
ईर्षामन्युमनाश्चैव दम्भार्थं चार्थकारणात् ।
भारते चत्वारिंशत्दनोः पुत्त्रा उक्ताः । यथा,
तत्रैव । १ । ६५ । २१ -- २२ ।
“चत्वारिंशद्दनोः पुत्त्राः ख्याताः सर्व्वत्र भारत ! ।
तेषां प्रथमजो राजा विप्रचित्तिर्महायशाः ॥
शम्बरो नमुचिश्चैव पुलोमा चेतिविश्रुतः ।
असिलोमा च केशी च दुर्ज्जयश्चैव दानवः ॥”
इत्यारभ्य तत्रैवाध्याये विस्तरशो द्रष्टव्यम् ॥)

**दानवज्रः**, पुं, (दाने वज्र इव ।) वैश्यः । इति पुरा-
णम् ॥ (वैश्वजातिको गान्धर्व्वो दैवश्च अश्व-
विशेषः । यथा, महाभारते । १ । १७१ । ५१ ।
“वज्रपाणिर्ब्राह्मणः स्यात् क्षत्त्रं वज्ररथं स्मृतम् ।
वैश्या वै दानवज्राश्च कर्म्मवज्रा यवीयसः ॥”)

**दानवारिः**, पुं, (दानवानामरिः ।) देवता । इत्य-
मरः । १ । १ । ९ ॥ (विष्णुः । यथा, काशी-
खण्डे । २९ । ८० ।
“दर्शितानेककुतुका दुष्टदुर्ज्जयदुःखहृत् ।
दैन्यहृद्दुरितघ्नी च दानवारिपदाब्जजा ॥”
“दानवारिपदाब्जजा विष्णुपादार्थ्यसम्भूतेति स्मृतेः ।” इति तट्टीका ॥ दानमेव वारि इति विग्रहे गजमदजले, क्ली ॥)

**दानविधिः**, पुं, (दानस्य विधिः ।) दानस्य विधा-
नम् । यथा, --
“अथ दानविधिं वक्ष्ये तं मे शृणुत सुव्रताः ।
अन्येभ्यो ब्राह्मणाः श्रेष्ठास्तेभ्यश्चैव क्रियापराः ॥
ब्रह्मवेत्ता च तेभ्योऽपि पात्रं विद्यातपोऽन्वितः ।
गोभूघान्यहिरण्यादि पात्रे दातव्यमर्च्चितम् ॥
विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः ।
गृह्णन् प्रदातारमधो नयत्यात्मानमेव च ॥
दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः ।
याचितेनापि दातव्यं श्रद्धापूतन्तु शक्तितः ॥
हेमशृङ्गी शफै रौप्यैः सुशीला वस्त्रसंयुता ।
सकांस्यपात्रा दातव्या क्षीरिणी गौः सदक्षिणा ॥
दशसौवर्णिकं शृङ्गं शफं सप्तपलैः कृतम् ।
पञ्चाशत्पलिकं पात्रं कांस्यं वत्सश्च कीर्त्त्यते ॥
स्वर्णपिप्पलपात्रेण वत्सो वा वत्सिकापि वा ।
तस्यामपि च दातव्यं अपत्यं रोगवर्ज्जितम् ॥
दाता स्वर्गमवाप्नोति वत्सरान् रोमसम्मितान् ।
कपिला चेत्तारयते भूयश्चासप्तमं कुलम् ॥
यावद्वत्सस्य द्वौ पादौ मुखं योन्यां प्रदृश्यते ।
तस्मात् सर्व्वप्रयत्नेन कार्य्यो वेदार्थसंग्रहः ॥
इतिहासं पुराणं वा लिखित्वा यः प्रयच्छति
ब्रह्मदानसमं पुण्यं प्राप्नोति द्विगुणोन्नतिम् ।
लोकायतं कुतर्कश्च प्राकृतं म्लेच्छभाषितम् ।
न श्रोतव्यं द्विजेनैव तदधो नयति द्विजम् ॥
समर्थो यो न गृह्णीयात् दातृलोकमवाप्नुयात् ॥
कुशाः शाकं पयो गन्धाः प्रत्याख्येयं न वारि च ।
अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्म्मणः ॥
अन्यत्र कुलटाषण्ढपतितेभ्यो द्विषस्तथा ।
देवातिथ्यर्च्चनकृते पितृभृत्यर्थमेव च ।
सर्व्वतः प्रतिगृह्णीयादात्मतृप्त्यर्थमेव च ॥”
इति गारुडे ९८ अध्यायः ॥

**दानशीलः**, त्रि, (दाने शीलं स्वभावो यस्य । यद्वा,
दानस्य शीलं सन्ततमनुष्ठानं यस्य ।) दाता ।
तत्पर्य्यायः । वदान्यः २ वदन्यः ३ । इति हेम-
चन्द्रः । ३ । १५ ॥ (यथा, महाभारते । ५ । १२२ । ५ ।
“यत् फलं दानशीलस्य क्षमाशीलस्य यत् फलम् ।
यच्च मे फलमाधाने तेन संयुज्यतां भवान् ॥”)

**दानशौण्डः**, त्रि, (दानेषु शौण्डः अतिदक्षः ।
“सप्तमी शौण्डैः ।” २ । १ । ४० । इति समासः ।)
बहुप्रदः । इत्यमरः । ३ । १ । ६ ॥ (यथा, माघे । १४ । ४६ ।
“निर्गुणोऽपि विमुखो न भूपते-
र्दानशौण्डमनसः पुरोऽभवत् ॥”)

**दानसागरः**, पुं, (दानानां सागर इव ।) षोडश-
सङ्ख्यकषोडशः । यथा, --

यो ददाति द्विजातिभ्यः स बाल्ये तु तदश्नुते ॥
वैश्यदेवविहीनञ्च
सन्ध्योपासनवर्ज्जितम् ।
यद्दानं दीयते तस्मै वृद्धकाले तदश्नुते ॥
वृथा जन्मानि चत्वारि वृथा दानानि षोडश ।
तान्यहं संप्रवक्ष्यामि यथावदनुपूर्ब्बशः ॥
अपुत्त्रस्य वृथा जन्म धर्म्मवाह्या नराः सदा ।
परपाकं सदाश्नन्ति परतापरताश्च ये ॥
देवपितृविहीनं यत् ईश्वरेभ्यः सदोषतः ।
दत्त्वानुकीर्त्तनाच्चैव वेदाग्निव्रतत्यागिने ॥
अन्यायोपार्ज्जितं दानं व्यर्थं ब्रह्महणे तथा ।
गुरवेऽनृतवक्त्रे च स्तेनाय पतिताय च ॥
कृतघ्नाय च यद्दत्तं सर्व्वदा ब्रह्मविद्विषे ।
याचकाय च सर्व्वस्य वृषल्याः पतये तथा ॥
परिचारकाय भृत्याय सर्व्वत्र पिशुनाय च ।
इत्येतानि तु राजेन्द्र ! वृथादानानि षोडश ॥”
इत्याद्ये वह्निपुराणे
दानावस्थानिर्णयनामा-
ध्यायः ॥

**दानवः**, पुं, (दनोरपत्यम् । दनु + “तस्यापत्यम् ।”
४ । १ । ९२ । इति अण् ।) असुरः । इत्य-
मरः । १ । १ । १२ ॥ (यथा, ऋग्वेदे । २ । ११ । १० ।
“नि मायिनो दानवस्य माया
अपादयत् पपिवान्त्सुतस्य ॥”)
स दक्षकन्यादनुगर्भे कश्यपाज्जात एकषष्टि-

तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति ॥
यथाकथञ्चिद्दत्त्वा गां धेनुं वाधेनुमेव वा ।
अरोगामपरिक्लिष्टां दाता स्वर्गे महीयते ॥
श्रान्तसंवाहनं रोगिपरिचर्य्या सुरार्च्चनम् ।
पादशौचं द्विजोच्छिष्टमार्ज्जनं गोप्रदानवत् ॥
द्विजाय यदभीष्टन्तु दत्त्वा स्वर्गमवाप्नुयात् ।
भूदीपाश्वान्नवस्त्राम्भस्तिलसर्पिःप्रतिश्रयान् ॥
गृहधान्यच्छत्रमालायानवृक्षघृतंजलम् ।
शय्यानुलेपनं दत्त्वा स्वर्गलोके महीयते ॥
ब्रह्मदाता ब्रह्मलोकं प्राप्नोति सुरदुर्ल्लभम् ॥
वेदार्थयज्ञशास्त्राणि धर्म्मशास्त्राणि चैव हि ।
मूल्येनापि लिखित्वापि ब्रह्मलोकमवाप्नुयात् ॥
एतन्मूलं जगत् यस्मादसृजत् पूर्ब्बमीश्वरः ।

“यः कश्चित् कुरुते देवि ! ग्रहणे दानसागरम् ।
वृषोत्सर्गं महादानं यत्किञ्चित् पृथिवीतले ।
पुरश्चरणं तथा होमं यः
कुर्य्याद्विधिबोधितम् ।
सर्व्वं तस्य वृथा देवि ! श्रीगुरोरर्च्चनं विना ॥”
इति श्रीकामधेनुतन्त्रे आगमसन्दर्भे ज्ञानदर्पणे
देवदेवीसंवादे २५ पटलः ॥

**दानीयः**, त्रि, (दीयतेऽस्मै इति । दा दाने +
“कृत्यल्युटो बहुलम् ।” ३ । ३ । ११३ । इति
सम्प्रदाने अनीयर् ।) सम्प्रदानम् । इति मुग्ध-
बोधम् ॥ (यथा, तत्रैव कारकप्रकरणे ।
“सर्व्वोऽर्च्यो जीवनः पाता दानीयः प्रभवो लयः ॥”)

**दानुः**, त्रि, (ददाताति । दा + “दाभाभ्यां नुः ।”
उणां । ३ । ३२ । इति नुः ।) दाता । विक्रान्तः ।
इति मेदिनी । ने, १० ॥ शर्म्म । वायुः । इति
संक्षिप्तसारे उणादिवृत्तिः ॥ (पुं, दानवः ।
यथा, ऋग्वेदे । २ । १२ । ११ ।
“ओजायमानं यो अहिं जघान दानुं शयानं स
जनास इन्द्रः ॥”
दीयते इति कर्म्मणि नुः । देयः । यथा, ऋग्-
वेदे । ८ । २५ । ६ ।
“सं या दानूनि येमथुर्दिव्याः पार्थिवीरिषः ॥”)

**दान्तः**, त्रि, (दाम्यतीति । दम + कर्त्तरि क्तः ।)
तपःक्लेशसहः । (यथा, मनुः । ४ । ३५ ।
“कॢप्तकेशनखश्मश्रुर्दान्तः शुक्लाम्बरः शुचिः ॥”)

| संख्यकस्तेष्वष्टादश प्रधानास्तेषां नामानि यथा,<br>द्विमूर्द्धा १ शम्बरः २ अरिष्टः ३ हयग्रीवः ४<br>विभावसुः ५ अयोमुखः ६ शङ्कुशिराः ७<br>स्वर्भानुः ८ कपिलः ९ अरुणः १० पुलोमा ११<br>वृषपर्व्वा १२ एकचक्रः १३ तापनः १४ धूम्र-<br>केशः १५ विरूपाक्षः १६ विप्रचित्तिः १७<br>दुर्ज्जयः १८ । इति श्रीभागवतम् ॥ (महा- | | |
|---|---|---|

दमितः । इत्यमरः । २ । ७ । ४३ ॥ (यथा, महाभारते । १ । २२२ । ४६ ।
"तथैवाश्वतरीणाञ्च दान्तानां वातरं हसाम् ॥"
दन्तेन निर्वृत्तम् । दन्त + "तेन निर्वृत्तम् ।" ४ । २ । ६८ । इति अण् । दन्तनिर्म्मितम् । यथा, महाभारते । ५ । ४६ । ५ ।
"रुचिरैरासनैस्तीर्णां काञ्चनैर्दारवैरपि ।
अश्मसारमयैर्दान्तैः स्वास्तीर्णैःसोत्तरच्छदैः ॥")
दाता । इति संक्षिप्तसारे उणादिवृत्तिः ॥
पुं, दमनकवृक्षः । शिक्षितवृक्षः । इति राज-निर्घण्टः ॥ (विदर्भराजपुत्रविशेषः । यथा, महाभारते । ३ । ५३ । ८ -- ९ ।
"तस्मै प्रसन्नो दमनः सभार्य्याय वरं ददौ ।
कन्यारत्नं कुमारांश्च त्रीनुदारान् महायशाः ॥
दमयन्तीं दमं दान्तं दमनञ्च सुवर्च्चसम् ॥"
स्त्री, अप्सरोविशेषः । यथा, महाभारते । १३ । १९ । ४५ ।
"विद्युता प्रशमी दान्ता विद्योता रतिरेव च ॥")

**दान्तिः**, स्त्री, (दम + क्तिन् । "अनुनासिकस्येति ।" ६ । ४ । १५ । इति दीर्घः ।) तपःक्लेशसहि-ष्णुता । तत्पर्य्यायः । दमथुः २ दमः ३ । इत्यमरः । ३ । २ । ३ ॥

**दापितः**, त्रि, (दाप्यते स्म इति । दा + णिच् + कर्म्मणि क्तः ।) साधितः । इत्यमरः । ३ । १ । ४० ॥
धनादिना आयत्तीकृतः । इति भरतः ॥ ध्रुती इति ख्यातं यस्मै दत्तं स इति रमानाथः ॥
दण्डितः । इति विद्याविनोदः ॥
शोधितद्रव्यम् ।
इति नयनानन्दः ॥ दायित इति पाठोऽपि । इति कालिङ्गपुरुषोत्तमौ ॥

**दाम**, [न्] क्ली स्त्री, (दीयते इति । दा दाने दो अवखण्डने वा + "सर्व्वधातुभ्यो मनिन् ।"

**दामनी**, स्त्री, (दामैव । दामन् + स्वार्थे प्रज्ञा-दित्वात् अण् । "अन् ।" ६ । ४ । १६७ । इति प्रकृतिभावः । "टिड्ढेति ।" ४ । १ । १५ । इति ङीप् ।) पशुबन्धनरज्जुः । तत्पर्य्यायः । पशु-रज्जुः २ । इत्यमरः । २ । ९ । ७३ ॥ (यथा, हरिवंशे । ६५ । २४ ।
"कीलैरारोप्यमाणैश्च दामनीपाशपाशितैः ॥")

**दामलिप्तं**, क्ली, तमोलिप्तदेशः । इति हेमचन्द्रः । ४ । ४५ ॥

**दामा**, स्त्री, (दामन् + "डाबुभाभ्यामन्यतर-स्याम् ।" ४ । १ । १३ । इति पक्षे डाप् ।) दाम । इति भरतः ॥

**दामाञ्चनं**, क्ली, (दामाञ्चलम् । पृषोदरादित्वात् लस्य नः ।) अश्वादेः पादबन्षनरज्जुः । इति हेमचन्द्रः । ४ । ३१७ ॥

**दामाञ्चलं**, क्ली, (दाम्नः अञ्चलमिव ।) एक-शफाङ्घ्रिबन्धः । अश्वादिपादबन्धनरज्जुः । इति हारावली । ६१ ॥ (यथा, माघे । ५ । ६१ ।
"सस्रुः सरोषपरिचारकवार्य्यमाणा दामाञ्चलस्खलितलोलपदंतुरङ्गाः ॥")

**दामोदरः**, पुं, ("दमादिसाधनेनोदारा उत्कृष्टा मतिर्या तया गम्यते इति दामोदरः । 'दाम्ना-दामोदरं विदुः ।' इति भगवद्वचनात् । यशो-दया दाम्नोदरे बद्ध इति वा दामोदरः । 'दामानि लोकनामानि तानि यस्योदरान्तरे ।

पक्षी । इति राजनिर्घण्टः ॥ दम्भयुक्ते, त्रि ॥ (यथा, मनुः । ३ । १५९ ।
"पापरोग्यभिशस्तश्च दाम्भिको रसविक्रयी ॥")

**दाय**, ऋ ङ दाने । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-सकं-सेट् ।) ऋ, अददायत् । ङ, दायते । इति दुर्गादासः ॥

**दायः**, पुं, (दीयते इति । दा दाने + घञ् । "आतो युक्चिण्कृतोः ।" ७ । ३ । ३३ । इति युक् ।) यौतुकादिदेयधनम् । (यथा, महाभारते । २ । ५१ । १ ।
"दायन्तु विविधं तस्मै शृणु मे गदतोऽनघ ! ।
यज्ञार्थं राजभिर्दत्तं महान्तं घनसञ्चयम् ॥")
कन्यादानकाले जामात्रादिभ्यो व्रतभिक्षादौ ब्राह्मणादिभ्यश्च यद्द्रव्यं दीयते तत् । इति भरतः ॥ तत्पर्य्यायः । हरणम् २ । इत्यमरः । २ । ८ । २८ ॥ सोल्लुण्ठभाषणम् । विभक्तव्य-पितृद्रव्यम् । (यथा, मनुः । ९ । १६४ ।
"औरसो विभजन् दायं पित्र्यं पञ्चममेव वा ॥"
विभागार्हधनमात्रम् । यथा, तत्रैव । ९ । ७७ ।
"संवत्सरं प्रतीक्षेत द्विषन्तीं योषितं पतिः ।
ऊद्र्ध्वं संवत्सरात्त्वेनां दायं हृत्वा न संवसेत् ॥"
दा दाने + भावे घञ् ।) दानम् । इति मेदिनी । ये, ३० ॥ (यथा, मनुः । ८ । १९९ ।
"अस्वामिना कृतो यस्तु दायो विक्रय एव वा ।
अकृतः स तु विज्ञेयो व्यवहारे यथा स्थितिः ॥")
स्थानम् । (दो छेदे + घञ् ।) खण्डनम् । इति शब्दरत्नावली ॥ लयः । इत्यजयपालः ॥ (ददा-तीति । दा + "श्याद्व्यधेति ।" ३ । १ । १४१ । इति णः । दातरि, त्रि । इति व्याकरणम् ॥)

**दायकः**, त्रि, (ददातीति । दा + ण्वुल् ।) दाता । यथा । हतारिगतिदायक इति भक्तिरसामृत-सिन्धुः ॥ (यथाच महाभारते । ३ । १९३ । ३३ ।

उणां । ४ । १४५ । इति मनिन् ।)
यत्रैकस्मिन्
बहुप्रग्रहयुक्ते अनेकगावो बध्यन्ते तत् ।
दाङनि
इति दाँका इति च भाषा । तत्पर्य्यायः ।
सन्दानम् २ । इत्यमरः । २ । ९ । ७३ ॥
रज्जुः । इति दामोदरदर्शनात् ॥ (यथा,
भाग-
वते । १ । ८ । ३१ ।
"गोप्याददे त्वयि कृतागसि दाम तावत्
या ते दशाश्रुकलिलाञ्जनसम्भ्रमाक्षम्।
वक्त्रं निलीय भयभावनयास्थितस्य
सा मां विमोहयति भीरपि यद्बिभेति ॥"
माला । यथा, माघे । ४ । ५० ।
"क्षणमलघुविलम्बिपिच्छदाम्नः
शिखरशिखाः शिखिशेखरानमुष्य ॥"
दातरि, त्रि । यथा, ऋग्वेदे । ६ । ४४ । २ ।
"यः शग्मस्तुविशग्म ते रायो दामा मतीनाम्
॥"
"रायो धनस्य दामा दाता भवति ।" इति
तद्भाष्ये सायनः ॥)

**दामनपर्व्व**, [न्] क्ली, (दमनो दमनवृक्षस्तस्ये-
दमित्यणप्रत्यये दामनं तद्भञ्जनसम्बन्धि पर्व्व
यस्मिन् ।) द्मनभञ्जनतिथिः । सा
चैत्रशुक्लचतु-
र्द्दशी । इति तिथ्यादितत्त्वम् ॥

तेन दामोदरो देवः श्रीधरस्तु रमाश्रितः
॥'
इति वा ।" इति विष्णुसहस्रनामभाष्ये
शङ्करः ॥
५३ ॥ तथा, महाभारते । ५ । ७० । ८ ।
"देवानां स्वप्रकाशत्वात् दमाद्दामोदरो
विभुः ॥")
विष्णुः । इत्यमरः । १ । १ । १८ ॥ (दाम
रज्जु-
रुदरे यस्य । श्रीकृष्णः । यथा, महाभारते
।
१ । १९० । १९ ।
"दामोदरो भ्रातरमुग्रवीर्य्यं
हलायुधं वाक्यमिदं बभाषे ॥"
यशोदयासौ उदरदेशे दाम्ना बद्ध आसीत्
अतो-
ऽस्य तथा नाम । यथा, हरिवंशे । ६३ ।
१४, २६ ।
"दाम्ना चैवोदरे बद्ध्वा प्रत्यबन्धदुदूखले
।
यदिशक्तोऽसि गच्छेति तमुक्त्रा कर्म्म
साकरोत् ॥"
"स च तेनैव नाम्ना तु कृष्णो वै
दामबन्धनात्।
गोष्ठे दामोदर इति गोपीभिः परिगीयते
॥")
भूतार्हद्विशेषः । इति हेमचन्द्रः । २ ।
१३० ॥
(शालग्राममूर्त्तिविशेषः । तल्लक्षणं यथा,
पद्म-
पुराणे ।
"स्थूलो दामोदरो ज्ञेयः सूक्ष्मचक्रो भवेत्तु
सः ।
चक्रे तु मध्यदेशेऽस्य पूजितः सुखदः
सदा ॥"
अस्य अन्यद्विवरणन्तु शालग्रामशब्दे द्रष्ट-
व्यम् ॥ * ॥ काश्मीरस्य नृपविशेषः ।
यथा, राज-
तरङ्गिण्याम् । १ । ६४ ।
"गतिं प्रवीरसुलभां तस्मिन् सुक्षत्त्रिये गते
।
श्रीमान् दामोदरो नाम तत्सूनुरभृत
क्षितिम् ॥")

"तावतां गोसहस्राणां फलं प्राप्नोति दायकः
॥")

**दायबन्धुः**, पुं, (दाये बन्धुः ।) भ्राता । इति शब्द-
रत्नावली ॥

**दायभागः**, पुं, (दायस्य भागः ।) सम्बन्धिमात्रेण
सम्बन्धिधनविभागः ।
पूर्ब्बद्रव्यस्वामिसम्बन्धा-
धीनं तत्स्वाम्युपरमे यत्र द्रव्ये स्वत्वं तत्र
निरूढो
दायशब्दस्तस्य विभागः । एकदेशगतस्यैव
भूहिरण्यादाबुत्पन्नस्य स्वत्वस्य विनिगमना-
प्रमाणाभावेन वैशेषिकव्यवहारानर्हतयाव्यव-
स्थितस्य गुटिकापातादिना व्यञ्जनम् । अथवा
विशेषेण भजनं स्वत्वज्ञापनं वा । यत्र चैकं
दासीगवादिकं बहुसाधारणं तत्रापि तत्तत्-
कालविशेषवहनदोहनफलेन स्वत्वं व्यज्यते ॥
* ॥
अथ दायाधिकारक्रमे पुंधनाधिकारिणः ।
तत्रादौ मृतधने औरसपुत्त्रस्याधिकारः । तद-
भावे पौत्त्रस्य । तदभावे प्रपौत्त्रस्य । मृत-
पतृकपौत्त्रमृतपितामहकप्रपौत्त्रयोःपुत्त्रेण
सह तुल्याधिकारः । एषामभावे पत्नी धनाधि-
कारिणी । तत्रायं विशेषः पत्नी धनं भुञ्जीत

एव न तु तस्य दानाधमनविक्रयान्
कर्त्तुमर्हति ।
किन्तु भर्त्तुरौद्ध्र्वदेहिकक्रियार्थं
दानादिकमप्यनु-
मतम् । वर्त्तनाशक्तौ आधमनमप्यनुमतं
तदशक्तौ
विक्रयणमपि ।
भर्त्तुरौद्ध्र्वदेहिकक्रियार्थमर्थानु-
रूपं
भर्त्तृसपिण्डभर्त्तृगुरुभर्त्तृदौहित्रसन्तान
भर्त्तृभागिनेयभर्त्तृमातुलेभ्यो दद्यात् ।
एतेषा-
मभावे स्वपितृकुले दद्यात् ॥
पत्न्यभावे दुहिता ।
तत्रापि प्रथमं कुमारी । अत्रायं विशेषः
कन्या
जाताधिकारा पश्चात् परिणीता सती
अविद्य-
मानपुत्रा यदि मृता तदा तत्पितृदाये
सपु-
त्रायाः सम्भावितपुत्राया
भगिन्यास्तुल्याधिकारः ।
कुमार्य्यभावे चोढायाः पुत्रवत्याः
सम्भावित-
पुत्रायाश्च तुल्याधिकारः ।
एतयोरेकतराभावे
अन्याधिकारिणी । एतयोरभावेऽपि
बन्ध्यापुत्र-
हीनविधवयोर्नाधिकारः ।
सर्व्वदुहित्रभावे
दौहित्रस्याधिकारः । तदभावे
पितुरधिकारः ।
तदभावे मातुरधिकारः । तदभावे
सोदरस्याधि-
कारः । सोदराभावे
सजातीयवैमात्रेयाधिकारः ।
तदभावे सोदरभ्रातृपुत्त्राणामधिकारः ।
संसर्ग्य-
संसर्गिसोदरभ्रातृपुत्त्रेषु
संसर्गिभ्रातृपुत्त्रस्याधि-

तदभावे ग्रामस्थाः सगोत्राः । तदभावे तथा-
विधाः समानप्रवराः । उक्तपर्य्यन्ताभावे तद्-
ग्रामस्थास्त्रैविद्यत्वादिगुणयुक्ता ब्राह्मणा धनाधि-
कारिणः । एतेषामभावे ब्राह्मणधनवर्ज्जं
राजाधिकारी । ब्राह्मणधनस्य तु गुणवद्ब्राह्मण-
पर्य्यन्ताभावे ब्राह्मणान्तरस्य
ग्रामान्तरस्थस्यापि
अधिकारः । वानप्रस्थयतिब्रह्मचारिणांधनं
धर्म्मभ्रातृसच्छिष्याचार्य्या गृह्णीयुः । तदभावे
चैकत्रवासी एकाश्रमी वा गृह्णीयात् । ब्रह्म-
चारी च द्विविधः नैष्ठिक उपकुर्व्वाणश्च । तत्र
नैष्ठिकधने आचार्य्यस्याधिकारः ।
उपकुर्व्वाणस्य
तु धनं पित्रादिभिरेव ग्राह्यम् । इति पुंधनाधि-
कारिणः ॥ * ॥
अथ स्त्रीधनाधिकारक्रमः ।
तत्र कुमारीधने प्रथमं सोदरभ्राताधिकारी ।
तदभावे माता तदभावे पिता । वरदत्तधने
वरोऽधिकारी ॥ * ॥

अथोढास्त्रीधनाधिकारक्रमनिरूपणार्थं
तद्धनं

निरूप्यते । विवाहकाले लब्धं यौतुकं धनम् १
भर्त्तृनीयमाना पितृमातृकुलात् यद्धनं लभते तत्
२ भर्त्तृदत्तम् ३ भ्रातृदत्तम् ४ पितृदत्तम् ५
मातृ-
दत्तम् ६ द्वितीयविवाहार्थिना पूर्ब्बस्त्रियै पारि-
तोषिकं यद्दत्तं तत् ७ अन्नाच्छादनम् ८ अल-
ङ्करणम् ९ गृहादिकर्म्मिरूपशिल्पिस्वभर्त्तृद्वारे-
णान्येषां गृहादिनिष्पादनाकुकोचविधयान्येभ्यो
यद्धनं लब्धं तत् १० पुत्त्रदत्तम् ११
मातुलादि-
दत्तम् १२ विवाहात् परतः पित्रादिना भर्त्रा-
दिना च यद्दत्तम् १३ । भर्त्तृदत्तस्थावराति-
रिक्तानामेतेषां धनानां स्त्री दानादिकं कर्त्तु-
मर्हति ॥ * ॥

तदेवं स्त्रीधने निरूपिते तस्यां मृतायां

तद्धनाधिकारो निरूप्यते । तत्र यौतुकधने-
कुमार्य्याः प्रथममधिकारः । तदभावे वाग्-
दत्तायाः तदभावे चोढायाः पुत्रवत्याः सम्भा-

पूर्ब्बापरकालपितृदत्तयौतुकाभ्यामतिरिक्तस्त्री
धने कन्यापुत्त्रयोर्युगपदधिकारः । तयोरेकतरा-
भावे अन्यतरस्य तद्धनं तयोर्द्वयोरभावे
ऊढायाः
पुत्त्रवत्याः सम्भावितपुत्त्रायाश्च
तुल्यवदधिकारः ।
एतयोरेकतराभावे अन्यस्या अधिकारः । एत-
योर्द्वयोरभावे पौत्त्रः । पौत्त्राभावे दौहित्रः । तद-
भावे प्रपौत्त्रः । तदभावे सपत्नीपुत्त्रः तदभावे
सपत्नीपौत्त्रः । तदभावे
सपत्नीप्रपौत्त्रोऽधिकारी ।
ततो बन्ध्या विधवा च तुल्यवदधिकारिण्यौ ।
एतयोरेकतराभावे चान्यतरस्याः ।
बन्ध्याविधवा-
पर्य्यन्ताभावे यौतुकवत् ब्राह्मादिविवाहपञ्चक-
विवाहिताया धने भर्त्तृ भ्रातृमातृपितृणां क्रमशो-
ऽधिकारः । विवाहकाले तत्पूर्ब्बापरकाले वा
स्त्रियै यद्धनं पित्रा दत्तं तत्र धने प्रथमं कुमार्य्याः
।
तदनन्तरमूढयोः पुत्त्रवतीसम्भावितपुत्त्रयोः ।
तदनन्तरं बन्ध्याविधवयोश्चाधिकारः । सर्व्व-
दुहित्रभावे पुत्त्रादेर्यौतुकधनान्तरवत् क्रमेणाधि-
कारः । ततो ब्राह्मादिविवाहपञ्चकलब्धयौतुक
धनेषु पितृपर्य्यन्ताभावे आसुरादिविवाहत्रिक-
लब्धयौतुकधनेषुं च भर्त्तृ पर्य्यन्ताभावे देवरादे-
रधिकारः । तदभावे देवरभ्रातृश्वशुरयोः सुतानां
युगपदधिकारः । एतेषामभावे असपिण्डोऽपि
भगिनीपुत्त्रः । तदभावे भर्त्तृ भागिनेयः । तद-
भावे भ्रातृसुतः । तदभावे जामाता । जामातृ-
पर्य्यन्ताभावे सपिण्डानन्तर्य्यक्रमेण
शुश्वरभ्रातृ-
श्वशुरादीनां सपिण्डानामधिकारः । सपिण्डा-
भावे सकुल्याः समानोदकाः सगोत्राः समान-
प्रवराश्च पुंधनवत् क्रमेणाधिकारिणः । एतत्-
सर्व्वाभावे ब्राह्मणीधने स्वग्रामश्रोत्रियादेरधि-
कारः । क्षत्त्रियादिधने राज्ञ एवाधिकारः ।
इति स्त्रीधनाधिकारिणः ॥ * ॥
अथ विभागानधिकारिणः ।
क्लीवपतितजात्यन्धजन्मवधिरउन्मत्तजड-
मूकपङ्गुपितृद्विट्निरिन्द्रियौपपातिकाचिकित्स्य
रोगार्त्ताः । पतितवर्ज्जं एते भरणीयाः । पतित-

कारः । एवं
संसर्ग्यसंसर्गिवैमात्रेयभ्रातृपुत्रे
सति
संसर्गिवैमात्रेयभ्रातृपुत्रस्याधिकारः।
यदा त्वसंसर्गी सोदरभ्रातृपुत्रः संसर्गी
चा-
सोदरभ्रातृपुत्रस्तदा
तयोर्युगपदधिकारः । यदा
पुनः सोदरवैमात्रेयभ्रातृपुत्रौ
संसर्गिणावसंस-
र्गिणौ वा तदा उभयथैव
सोदरभ्रातृपुत्र-
स्याधिकारः । भ्रातृपुत्राभावे
भ्रातृपौत्रस्याधि-
कारः । अत्रापि
सोदरवैमात्रेयभ्रातृपुत्रवत्
क्रमो बोध्यः । भ्रातृपौत्राभावे
पितृदौहित्र-
स्याधिकारः । अत्र
सोदरभगिनीपुत्रवैमात्रेय-
भगिनीपुत्रयोस्तुल्यवदधिकारः।
पितुर्दौहित्रा-
भावे पितामहस्याधिकारः।
पितामहाभावे
पितामह्या अधिकारः । पितामह्यभावे
पितृव्य-
स्याधिकारः । तदभावे
पितृव्यपुत्रस्याधिकारः।
तदभावे पितृव्यपौत्रस्याधिकारः।
पितृव्यपौत्रा-
भावे पितामहदौहित्रस्याधिकारः।
पिता-
महदौहित्राभावे
पितृव्यदौहित्रस्याधिकारः।
तदभावे प्रपितामहस्याधिकारः।
तदभावे
प्रपितामह्या अधिकारः । ततः
पितामहभ्राता-
धिकारी । तदभावे पितामहभ्रातृपुत्रः
। तद-
भावे पितामहभ्रातृपौत्रः । ततः
प्रपितामह-

वितपुत्रायाश्च युगपदधिकारः । तदभावे
बन्ध्या-
विधवयोस्तुल्यवदधिकारः। तत्र कुमारी वाग्-
दत्ता जाताधिकारानन्तरं परिणीता सती
पश्चाद्बन्ध्यात्वेनावधृता पुत्रमनुत्पाद्यैव विधवा
भूता वा तदा तस्यां मृतायां तत्संक्रान्तमातृ-
घने तद्भगिन्योः पुत्रवतीसम्भावितपुत्रयोरभावे
बन्ध्याविधवयोरप्यधिकारः। सर्व्वदुहित्रभावे
पुत्रस्याधिकारः । पुत्राभावे दौहित्रोऽधिकारी
दौहित्राभावे पौत्रः । तदभावे प्रपौत्रः । तद-
भावे सपत्नीपुत्रः । तदभावे सपत्नीपौत्रः ।
तदभावे सपत्नीप्रपौत्रः । एतत्पर्य्यन्ताभावे
ब्राह्म-
दैवार्षगान्धर्व्वप्राजापत्याख्यविवाहपञ्चकलब्ध
यौतुकधने भर्त्रधिकारः । भर्त्तुरभावे भ्रातुः ।
तदभावे माताधिकारिणी । तदभावे पिता ।
सपत्नीप्रपौत्रपर्य्यन्ताभावे आसुरराक्षसपैशा-
चाख्यविवाहत्रिकलब्धयौतुकधनेतु प्रथमं
मातु-
रधिकारः । तदभावे पितुः । पितुरभावे भर्त्तुः ॥
अथायौतुकस्त्रीधनाधिकारिक्रमः। तत्र विवाह-

पुत्रवर्ज्जमेतेषां पुत्रा यदि निर्दोषाः तदांश-
भाभिनः । क्लीवादीनां अपुत्रा भार्य्याः यदि
सद्वृत्तास्तदा भर्त्तव्याः । एषां दुहितरो विवाह-
पर्य्यन्तं भरणीयाः ॥ * ॥
अथ विभाज्याविभाज्यधननिर्ण्यः ।
तत्र पैतामहं पित्रर्ज्जितं साधारणधनोपघाते-
नार्ज्जितञ्चेति त्रिविधं धनं सर्व्वैरेव विभाज्यम् ।
किन्तु तत्रार्ज्जकस्य द्वावंशौ अन्येषामेकैकांशः
साधारणधनानुपघातेन शौर्य्यप्राप्तं धनं एवं
साधारणधनानुपघातेनार्ज्जितविद्याधनं पितृ-
पितृव्यादिप्रसादादिना लब्धं धनं भार्य्याप्राप्ति-
काले लब्धं धनं मित्रताप्राप्तं धनं आर्त्तिज्यलब्धं
एतान्यविभाज्यानि । विद्याधनन्तु समविद्या-
धिकविद्येभ्यो देयं एवं यदि विद्यामभ्यस्यतो
भ्रातुः कुटुम्बमपरो भ्राता स्वधनव्ययशरीराया-
साभ्यां बिभर्त्ति तदा तद्विद्यार्ज्जितधने
मूर्खस्यापि
अपरभ्रातुरंशित्वम् । स्वकुलात् पित्रादितो

| | | |
|---|---|---|
| दौहित्रोऽधिकारी। ततः<br>पितामहभ्रातृदौहित्रो-<br>ऽधिकारी। तदभावे मातामहः।<br>तदभावे<br>मातुलः। तदभावे मातृष्वस्रीयः।<br>तदभावे<br>मातुलपुत्रः। तदभावे मातुलपौत्रः।<br>एषाम-<br>भावे सकुल्यः। सकुल्योऽपि द्विविधः<br>अधस्तन<br>ऊद्ध्र्वतनश्च तत्र<br>प्रपौत्रपुत्रावधयोऽधस्तनास्त्रयः<br>वृद्धप्रपितामहाद्रित्रय<br>ऊद्ध्र्वतनास्तत्राप्यादावध-<br>स्तनानां सकुल्यानां क्रमेणाधिकारः।<br>तेषामभावे<br>ऊद्ध्र्वतनानां क्रमेणाधिकारः।<br>एवंविधसकुल्या-<br>भावे समानोदकाः। तदभावे<br>आचार्य्यः। तद-<br>भावे शिष्यः तदभावे<br>सहवेदाध्यायिब्रह्मचारिणः। | | |

लब्धविद्यार्ज्जितधने तु सर्व्वेषां
मूर्खामूर्खाणामं-
शित्वम् । विद्याधनं यघा, यदि भवान् भद्र-
मुपन्यस्यति तदा भवते एतावद्धनं दातव्यं
इति
पणितं तत्र भद्रोपन्यासेन यत् पणितं धनं
लब्धं
तत् । अध्यापितशिष्याद्यल्लब्धम् ।
ऋत्विक्कर्म्म-
करणेन यजमानाद्दक्षिणादिरूपंलब्धं धनम् ।
यत्किञ्चित् विद्यायाः प्रश्ने कृते तत्र सम्यगुत्त-
रेण परितोषादपणितमेव किञ्चिद्धनं ददाति
तत् । यो ह्यस्मिन् शास्त्रार्थे मम संशयमपन-
यति तस्मै सुवर्णादिकमिदं दास्यामीत्युक्ते
तस्य
संशयमपनीय यल्लब्धम् । वादिनोः
कुत्रचिद्वाद-
विषयसन्देहे न्यायकरणार्थमागतयोः
सम्यङ्नि-
रूपणेनयल्लब्धम् । शास्त्रादिषु स्वज्ञानं
प्रकाश्य
प्रतिग्रहादिना यल्लब्धम् । तथात्यर्थंवादाद्वाद-
विचारे वा परं निर्जित्य यल्लब्धम् । एकस्मिन्
देये वस्तुनि बहूनां ब्राह्मणानां समुत्थाने येन
प्रकृष्टं वेदमधीत्य यल्लब्धम् । चित्रकरसुवर्ण-
कारादिभिः शिल्पिभिर्मूल्यादधिकं यल्लब्धम् ।
द्यूतेनापि परं निर्जित्य यल्लब्धम् । एतानि
अविभाज्यानि ॥ * ॥

क्रमादभ्यागतं द्रव्यमन्येन हृतं यदि
दायादा-

नामनुमत्या तेषामेकतरेण साधारणधनानुप-
घातेन इतरव्यापारनैरपेक्षेण च घनमुद्धरति
तदा तद्धनमुद्धारकर्त्तुरेव । भूमिस्तु यदि
अन्यै-
र्हृता एकेनोद्धृता तदा स तुरीयांशं गृहीत्वा
अवशिष्टभागत्रयं अन्यैः सह समं विभजेत् ।
अयं निष्कर्षः विभक्तेनाविभक्तेन वा
साधारण-
धनानुपघातेनापरव्यापारनैरपेक्षेण येन यद-
र्ज्जितं तदर्जकस्यैव न तु तद्विभाज्यमितरैः ।
संसर्गिणामिति क्रमः ॥ * ॥ एवं यदा पिता
पुत्रान्
विभज्य यथाशास्त्रं भागं गृहीत्वा पुत्रैः
सहा-
संसृष्ट एव पुत्रान्तरमुत्पाद्य मृतस्तदा
विभागा-
नन्तरजात एव तद्धनाधिकारी न
पूर्ब्बविभक्तः
एवं पूर्ब्बभ्रातृविभागेऽपि विभक्तजस्य
नांशित्वम् ।
यदि तु येन केनचित् पुत्रेण संसृष्टः सन्
पिता
मृतः तदा तद्धनं संसृष्टविभक्तजाभ्यां समं
विभाज्यं यथा धने तथर्णेऽपि ।
यद्यविज्ञात-
गर्भायामेव स्त्रियां पुत्रा
विभक्तास्तद्गर्भजातो
विभक्तद्रव्याण्येकीकृत्य पुनर्विभज्य स्वांशं
गृह्णी-
यात् न तु विभक्तजेन सह
पितृद्रव्येऽंशित्वम् ॥ * ॥
अथ पितृकृतविभागो निरूप्यते ।
यत्र पितृकृतविभागस्तत्र स्वोपार्जितधने
पितुरि-
च्छैव नियामिका । पितामहधने तु
मातृरजो-
निवृत्तिसहकृता तदिच्छा नियामिका ।
स्वोपा-
र्जितधने पिता इच्छया धनं ग्रहीतुं
शक्नोति
कस्मैचिदधिकं कस्मैचिन्न्यूनं दातुमर्हति
। पैता-
महधनविभागे तु पिता स्वयमंशद्वयं
गृहीत्वा
पुत्रेभ्य एकैकांशं दद्यात् । किन्तु
पैतामहमणि-
मुक्ताप्रवालादिषु पितुः स्वाच्छन्द्यं
भूमिनिबन्ध-
द्विपदान्यतमे न स्वाच्छन्द्यम् ।
स्वार्जितधनविभागे
एषा व्यवस्था विदेशागतविषयिणी
देशस्थविषये
तु धनिनश्चतुर्थपर्य्यन्त एव तद्धनविभागार्हता
।
साधारणधनेऽपि स्वांशदानं कर्त्तव्यम् । इति
श्रीकृष्णतर्कालङ्कारकृतक्रमसंग्रहः ॥ * ॥
"देशस्य जातेः संघस्य धर्म्मो ग्रामस्य यो
भृगुः ।
उदितः स्यात् स तेनैव दायभागं प्रकल्पयेत्
॥"
इति दायतत्त्वम् ॥

**दायविभागः**, पुं, (दायस्य विभागः ।) दायभागः ।

यथा । "किं दायस्य विभागो विभक्तावयवत्वं
किंवा दायेन सह विभागोऽसंयुक्तत्वम् ।" इति
जीमूतवाहनः ॥

**दायादः**, पुं, (आदत्ते इति । आ + दा + "आत-

श्चोपसर्गे ।" ३ । १ । १३६ । इति कः ।
दायस्य
आदः ग्राहकः ।) सपिण्डः । पुत्त्रः । इत्यमरः
।
३ । ३ । ८८ ॥ (यथा, महाभारते । १ । ८५
। २ ।
"पुरुणा तु कृतं वाक्यं मानितश्च विशेषतः ।
कनीयान् मम दायादो धृता येन जरा मम ॥")

**दायादी** स्त्री, (दायं अत्तीति । अद् + अण् ।

स्त्रियां ङीष् ।) कन्या । इति
शब्दार्थकल्पतरुः ॥

**दायितः**, त्री, (दाय दाने + णिच् + क्तः ।) दापितः ।

इत्यमरटीकायां भरतः ॥

**दारकः**, पुं, (दारयति नाशयति जनकस्य पितॄण-

मिति । दॄ + णिच् + ण्वुल् ।) पुत्त्रः । इति
हेम-
चन्द्रः । ३ । २०६ ॥ (यथा, महाभारते । १ ।
८३ । १३ ।
"कस्यैते दारका राजन् देवपुत्त्रोपमाः शुभाः ।
वर्च्चसा रूपतश्चैव सदृशा मे मतास्तव ॥")
बालकः । इति मेदिनी । के, १०३ ॥ (यथा,

किन्तु विद्यालब्धधनमात्रे विशेषः स च प्रागे-
वाभिहितः । अङ्गयोजितं वस्त्रालङ्कारं
अश्वादि-
वाहनं लड्डुकादिकूपवाप्यादिगतं पित्रादि-
सम्बन्धिजलं दासीव्यतिरिक्ता स्त्री गोप्रचारः
रथ्या एतानि नान्यधनवद्विभाज्यानि किन्तु
स्व-
व्यापारेण तद्ग्रहीतव्यं एवं
स्वस्वव्यापारोपयुक्त-
शयनभोजनपात्रादि न विभजनीयं येन यद्-
गृहीतं तत्तस्यैव । पुस्तकन्तु मूर्खैर्न ग्राह्यं
किन्तु
पण्डितेन तदन्तर्गतस्वांशतुल्यद्रव्यान्तरं
मूल्यमेव
वा दत्त्वा ग्रहीतव्यं एवं शिल्पिनां
शिल्पोपयुक्त-
द्रव्यं नाशिल्पिनां तत्रापि पुस्तकवद्व्यवस्था
।
पितरि जीवति यस्मिन् वास्तौ येन गृहोद्या-
नादिकं कृतं तस्य न विभागः यद्यपरेणापि
वास्त्वन्तरे तथा कृतम् ॥ * ॥

अथ संसृष्टविभागक्रमार्थमादौ
संसर्गो निरू-

प्यते ।
पितृभ्रातृपितृव्याणामन्यतमेन सह विभक्तः
सन्
पुनरन्योन्येच्छया पूर्ब्बकृतविभागमपेक्ष्य
यत्तव
धनं तन्मम धनं यन्मम तत्तवापीति
व्यवस्थया
एकगृहिरूपतयावस्थानंसंसर्गः ॥ अथ
संसृष्ट-
विभागः । अत्र भ्रातॄणां अन्येषां
तुल्यसम्बन्धिनां
वा संसर्ग्यसंसर्गिणां मध्ये संसर्गिणामेव प्रथमं
मृतसंसर्गधनेऽधिकारः । तदभावे तथाविधा

पित्रा अपुत्रपत्नीभ्यः पुत्रतुल्यांशो देयः
यदि
ताभ्यः स्त्रीधनं न दत्तं स्त्रीधने दत्ते सति
अर्द्धं
देयम् । पुत्रकर्त्तृकविभागे तु विमातुरंशा-
भावः ॥ * ॥ शूद्रस्य दासीपुत्रोऽपि
पितुरिच्छया
परिणीतस्त्रीजातपुत्रेण सह तुल्याधिकारी
मृते
पितरि तदंशार्द्धाधिकारी ।
तथाविधभ्रात्रभावे
दौहित्रे चासति पितुः सर्व्वधनाधिकारी
सति
दौहित्रे तेन सह तुल्याधिकारी ॥ * ॥
पितरि
मृते मातरि जीवन्त्यां पुत्राणां विभागो न
धर्म्म्यः यदि जीवन्त्यां मातरि विभागं
कुर्व्वन्ति
तदा मातापि पुत्रतुल्यांशभागिनी ।
विमातुरं-
शाभावः किन्तु सा ग्रासाच्छादनादिना
भर्त्तव्या ।
एवं पितामहधने पौत्रैर्विभाज्यमाने पिता-
मह्यः पौत्रतुल्यांशभागिन्यः ॥ * ॥
औरसेन
दत्तकादीनां विभागे औरसस्य द्व्यंशित्वं
सवर्णदत्तकादेरेकैकांशित्वम् । विभागस्तु
पित्रा-
देर्धनिनः ऋणं परिशोध्य तदवशिष्ठधनस्य
करणीयः । उत्तमर्णेच्छया विभज्य वा
तदृणं
परिशोधनीयम् । एकेन भ्रात्रादिना
बहुपोष्य-
तया यत्राधिकं भुक्तं तत्र न विभुक्तांशो
विभागमध्ये प्रवेशनीयः । किन्तु
भुक्तावशिष्टस्य
विद्यमानधनस्यैव विभागः कार्य्यः ॥ * ॥
असंस्कृत-
भ्रातृभगिनीनां पैतृकधनेन संस्कारः
कर्त्तव्यः ।
विभागकाले केनचिन्निह्नुतस्य पश्चात्
प्राप्तस्य

महाभारते । १ । ८३ । १६ ।
"शर्म्मिष्ठां मातरञ्चैव तथा चख्युश्च दारकाः
॥")
दारुकः । इति शब्दार्थकल्पतरुः ॥ ग्राम्य-
शूकरः । इति राजनिर्घण्टः ॥

**दारकः**, त्रि, (दारयतीति । दॄ + णिच् + ण्वुल् ।)
भेदकः । इति मेदिनी । के, १०३ ॥ (यथा, --
"अशेषदुर्नामकरोगदारकं
करोति वृद्धं सहसैव दारकम् ॥"
इति वैद्यकचक्रपाणिसंग्रहेऽर्शोऽधिकारे ॥")

**दारकर्म्म**, क्ली, (दारार्थं पन्त्यर्थं यत् कर्म्म ।) विवाहः
।
इति त्रिकाण्डशेषः ॥ (यथा, देवीभागवते । १
।
१४ । २६ ।
"दारकर्म्म ततो व्यासः शुकस्य पर्य्यचिन्तयत्
॥")

**दारणं**, क्ली, (दारयति नाशयति जलमलमने-
नेति । दॄ + णिच् + करणे ल्युट् ।) कतकम् ।
इति शब्दचन्द्रिका ॥ (दॄ + णिच् + भावे ल्युट्
।)
विदारणम् । यथा, "दारुदारणपथैः"
समाहतम् ।
इति लीलावती ॥ (व्रणादिस्फोटनसम्पादक
औषधविशेषः । यथा, सुश्रुते । १ । ३६ ।
"चिरविल्वोऽग्निको दन्ती चित्रको हयमारकः ।
कपोतगृध्रकङ्कानां पुरीषाणि च दारणम् ॥
क्षारद्रव्याणि वा यानि क्षारो वा दारणं परम् ॥"
दारयतीति । दॄ + णिच् + कर्त्तरि ल्युः ।
विदा-
रके, त्रि । यथा, महाभारते । ८ । ४९ । १७ ।
"समाधत्तशितं वाणं गिरीणामपि दारणम् ॥"

|  |  |  |
| --- | --- | --- |
|  | समभागः कर्त्तव्यः । भ्रमादिना<br>कृताशास्त्रीय-<br>विभागधनस्य पुनः शास्त्रीयविभागः<br>कार्य्यः ॥ * ॥<br>अथ विदेशागतस्य विभागः ।<br>विभक्ततादशायां देशान्तरगतस्य<br>चिरकाला-<br>नन्तरागतस्य सप्तमपुरुषपर्य्यन्तं<br>तत्सन्ततेरपि<br>मौलसामन्तादिना वा स्वज्ञापनपूर्ब्बकं<br>क्रमा-<br>गतधनात यथाशास्त्रमंशभागित्वमिति<br>स्थितं |  |

**दारदः**, पुं, (दरदे देशविशेषे भवः । दरद +
अण् ।) दरददेशोद्भवविषभेदः । इत्यमरः । १ ।
८ । ११ ॥ पारदः । हिङ्गुलम् । इति मेदिनी ।
दे, ३१ ॥ समुद्रः । इति हारावली । ५६ ॥

**दारबलिभुक्**, पुं, (दारेण चञ्च्वाघातजन्यविदारणेन
बलिं भुङ्क्ते इति । भुज + क्विप् ।) वकपक्षी ।
इति त्रिकाण्डशेषः ॥

**दाराः**, पुं, (दारयन्ति भ्रातृबन्धूनिति । दॄ + "दार-
जारौ कर्त्तरि णिलुक् च ।" ३ । ३ । २० ।
इत्यस्य वार्त्तिकोक्त्या घञ् णिलुक् च ।) भार्य्या ।
बहुवचनान्तोऽयम् । इत्यमरः । २ । ६ । ६ ॥
(यथा, महाभारते । १ । १५९ । २७ ।
"आपदर्थे धनं रक्षेत् दारान् रक्षेत् धनैरपि ।
आत्मानं सततं रक्षेत् दारैरपि धनैरपि ॥")

**दारा**, स्त्री, (दारयति ज्ञातिबन्धूनिति । दॄ +
णिच् + अच् + टाप् ।) दाराः । इत्यमर-
टीकावां भरतः ॥ (यथा, भागवते । ७ ।
१४ । ११ ।
"अप्येकामात्मनो दारां नृणां स्वत्वगहो
यतः ॥")

**दारिः**, स्त्री, (दारयतीति । दॄ + णिच् + इन् ।)
विदारकः । इति शब्दार्थकल्पतरुः ॥

**दारिका**, स्त्री, (दारक + टापि अत इत्वम् ।)
कन्या । इति जटाधरः ॥ (यथा, हरिवंशे ।
४१ । १५९ ।
"अरिष्टं वृषभं केशिं पूतनां दैत्यदारिकाम्
॥")

**दारितः**, त्रि, (दार्य्यते स्मेति । दॄ + णिच् + क्तः ।)
कृतदारणः । तत्पर्य्यायः । भिन्नः २
भेदितः ३ ।
क्षारो यवक्षारः ।
सर्ज्जाह्वसिन्धूद्भवयोश्चूर्णमधुघृतप्लुतैः ।
निर्म्मथ्य कटुतैलाक्तं हितं पादप्रमार्ज्जने ॥
मधुसिक्थकगैरिकघृतगुडमहिषाक्षसाल-
निर्यासैः ।
गैरिकसहितैर्लेपः पादस्फुटनापहः सिद्धः ॥
मधुसिक्थक मोम । प्रथमं गैरिकं शिलाजतु ।
द्बितीयं गैरिकं गेरु इति लोके । सालनिर्यास
रालः ।
उन्मत्तकस्य बीजेन माणकक्षारवारिणा ।
विपक्वं कटुतैलन्तु हन्याद्दारीं न संशयः ॥
इति घत्तूरतैलम् ॥" इति भावप्रकाशः ॥

**दारु**, क्ली, पुं, (दीर्य्यते इति । दॄ + "दॄसनिजनीति ।"
उणां । १ । ३ । इति ञुण् ।) काष्ठम् । इत्य-
मरभरतौ ॥ (यथा, महाभारते । १ । १४५ ।
११ ।
"शणं तैलं घृतञ्चैव जतु दारूणि चैव हि ।
तस्मिन् वेश्मनि सर्व्वानि निक्षिपेथाः समन्ततः
॥")

**दारु**, क्ली, (दॄ + ञुण् ।) देवदारु । (यथा, सुश्रुते
उत्तरतन्त्रे । १७ ।
"दारुपद्मकशुण्ठीभिस्तमेव कृतोऽपि वा ॥"
अस्य पर्य्यायो यथा, वैद्यकरत्नमालायाम् ।
"सुरदारु द्रुकिलिमं सुराह्वं भद्रदारु च ।
देवकाष्ठं पीतदारु देवदारु च दारु च ॥")
पित्तलम् । इति मेदिनी । रे, ४७ ॥

**दारुः**, क्षि, (दॄ + ञुण् ।) शिल्पी । दारकः ।
इति धरणी ॥ (यथा, ऋग्वेदे । ७ । ६ । १ ।
"इन्द्रस्येवप्र तवसस्कृतानि वन्देदारुं वन्दमानो
विवविभ ॥"
"दारुं पुरां भेत्तारं वन्दे ।" इति तत्र सायनः ॥)
दाता । इति त्रिकाण्डशेषः ॥

**दारुकं**, क्ली, (दारु + स्वार्थे कन् ।) देवदारु ।
इति राजनिर्घण्टः ॥

**दारुकः**, पुं, श्रीकृष्णसारथिः । इति त्रिकाण्डशेषः ॥
(यथा, महाभारते । २ । २ । २८ ।
"दारुकेण च सूतेन सहितो देवकीसुतः ॥"

**दारुजः**, पुं, (दारुणो जायते इति । जन + डः ।)
मर्द्दलः । इति शब्दरत्नावली ॥
काष्ठनिर्म्मिते,
त्रि ॥ (यथा, कालिकापुराणे । ६७ अध्याये ।
"आसनं प्रथमं दद्यात् पौष्पं दारुजमेव वा ॥")

**दारुणः**, पुं, (दारयतीति । दॄ + णिच् + "कॄवृ
दारिभ्य उनन् ।" उणां ३ । ५३ । इति उनन्- ।
चित्रकः । इति राजनिर्घण्टः ॥
भयानकरसः ।
(विष्णुः । यथा, महाभारते । १३ । १४९ । ७४
"सुघन्वा खण्डपरशुर्द्दारुणो द्रविणप्रदः ॥"
"सन्मार्गविरोधिनां दारुणत्वात्
(खण्डकत्वात)
दारुणः ।" इति तद्भाष्ये शङ्करः ॥) भयहेतौ,
त्रि । इत्यमरः । १ । ७ । २० ॥ (यथा,
देवीभागवते ।
५ । ४ । २७ ।
"हाहाकारो महानासीत् सम्प्रहाराश्च
दारुणः
उत्पपात ततः सिंहो नृपस्योपरि दारुणः
॥"
कठोरः । यथा, तत्रैव । १ । ४ । ५२ ।
"दारुणं देहदमनं सर्व्वलोकभयङ्करम् ॥")

**दारुणकं**, क्ली, (दारुणवत् कायतीति । कै + कः ।)
मस्तकजातक्षुद्ररोगविशेषः । लोके रूसी
इति
ख्यातः । तस्य लक्षणमाह ।
"दारुणा कण्डुरा रूक्षा केशभूमिः प्रजायते
।
मारुतश्लेष्मकोपेन विद्याद्दारुणकन्तु तत् ॥
दारुणा कर्क्कशा ॥"
तस्य चिकित्सा यथा, --
"कार्य्यो दारुणके मूर्द्ध्नि प्रलेपो
मधुसंयुतः ।
पियालबीजमधुककुष्ठमाषैः ससैन्धवैः ॥

इत्यमरः । ३ । १ । १०० ॥ विदारितः ४ । इति
शब्दरत्नावली ॥ (यथा, महाभारते । ३ । १०७ । ४९ ।
"अंशुमानेवमुक्तस्तु सगरेण महात्मना ।
जगाम दुःखात् तं देशं यत्र वै दारिता मही ॥"
ताडितः । यथा, कालिकापुराणे ९० अध्याये ।
"ततः सुदर्शनो राजा गदया दारितोऽपतत् ॥")

**दारिद्र्यं**, क्ली, (दरिद्रस्य भावः । दरिद्र + ष्यञ् ।)

दरिद्रता । यथा, --
"प्रणीय दारिद्र्यदरिद्रतां नृपः ।"
इति नैषधे । १ । १५ ॥
(यथा, मृच्छकटिके १ अङ्के ।
"दारिद्र्यान्मरणाद्वा मरणं मम रोचते न दारि-
द्र्यम् ।
अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ॥")
निर्यकारान्तोऽप्ययम् ॥

**दारी**, स्त्री, (दारयति पदतलमिति । दॄ + णिच् +

"सर्व्वधातुभ्य इन् ।" उणां ४ । ११८ । इति
इन् । कृदिकरादिति पक्षे ङीष् ।) क्षुद्ररोग-
विशेषः । विवाई इति लोके । तल्लक्षणम् यथा, --
"परिक्रमणशीलस्य वायुरत्यर्थरूक्षणैः ।
पादयोः कुरुते दारीं सरुजां तलसंश्रिताम् ॥"
तच्चिकित्सा यथा, --
"पाददार्य्यां शिरां प्राज्ञो मोक्षयेत्तलशोधिनीम् ।
स्नेहस्वेदोपपन्नौ च पादौ वा लेपयेन्मुहुः ॥
मधूच्छिष्टवसामज्जाघृतैः क्षारविमिश्रितैः ॥

योगाचार्य्यविशेषः । स तु महादेवस्य अव-
तारविशेषः । यथा, शिवपुराणे वायुसंहि-
तायाम् । २ । १० । ४ ।
"जटामाली चाट्टहासो दारुको लाङ्गली तथा ॥")

**दारुकदली**, स्त्री, (दारुवत् कठिना कदली ।)

वनकदली । इति राजनिर्घण्टः ॥

**दारुका**, स्त्री, (दारुणा काष्ठेन कायतीति ।

कै + कः । टाप् ।) काष्ठमयस्त्री । काठेर पुतुल
इति भाषा । तत्पर्य्यायः । पुत्त्रिका २ दारुस्त्री
३ शालभञ्जिका ४ शालभञ्जी ५ शालाङ्की ६ ।
इति शब्दरत्नावली ॥ दारुपुत्त्रिका ७ कुरुण्टी ८
दारुगर्भा ९ । इति हारावली । ७१ ॥

**दारुगन्धा**, स्त्री, (दारुणि गन्धो यस्याः ।)

चीडानामगन्धद्रव्यम् । इति राजनिर्घण्टः ॥

**दारुगर्भा**, स्त्री, (दारुमयो गर्भो यस्याः ।) दारु-

मयस्त्री । इति हारावली । ७१ ॥

आम्रबीजं तथा यथ्या द्वयं स्यात् मात्रया समम् ।
दुग्धेन पिष्टं तल्लेपो दारुणं हन्ति दारुणम् ॥
दुग्धेन खाखसं बीजं प्रलेपाद्दारुणं हरेत् ।
गुञ्जाफलैः शृतं तैलं भृङ्गराजरसेन च ॥
कण्डुदारुणहृत् कुष्ठकपालव्याधिनाशनम् ॥"
इति गुञ्जातैलम् ।" इति भावप्रकाशः ॥
(अथ भृङ्गराजतैलम् ।
"भृङ्गराजत्रिफलोत्पलशारि
लौहपुरीषसमन्वितकारि ।
तैलमिदं पच दारुणहारि
कुञ्चितकेशघनस्थितकारि ॥"
इति वैद्यकचक्रपाणिसंग्रहे क्षुद्ररोगाधिकारे ॥)

**दारुनिशा**, स्त्री, (दारुबहुला निशा हरिद्रा ।)

दारुहरिद्रा । इति रत्नमाला ॥ (अस्या गुणा यथा, --
"दार्व्वीनिशागुणा किन्तु नेत्रकर्णास्यरोगनुत् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**दारुपत्री**, स्त्वी, (दारुणः पत्रमिव पत्रमस्याः ।

ङीष् ।) हिङ्गुपत्री । इति राजनिर्घण्टः ॥

**दारुपीता**, स्त्री, (दारुणा पीतेव । काष्ठप्रधानत्वात्

तथात्वम् ।) दारुहरिद्रा । इति राजनिर्घण्टः ॥

**दारुपुत्त्रिका**, स्त्री, (दारुमयी पुत्त्रिका ।) दारुका ।

इति हारावली । ७१ ॥

**दारुमुख्याह्वया**, स्त्री, (दारुमुख्यमाह्वयते स्पर्द्धते

इति । आ + ह्वे + अच् ।) गोधा । इति राज-
निर्घण्टः ॥

**दारुसिता**, स्त्री, (दारुणि सिता शर्करेव ।)

त्वक् । दारुचिनि इति भाषा । तन्नामगुणाः ।
"त्वक्स्वाद्वी तु तनुत्वक् स्यात् तथा दारुसिता मता ।
उक्ता दारुसिता स्वाद्वी तिक्ता चानिलपित्तहृत् ॥
सुरभिः शुक्रला बल्या मुखशोषतृषापहा ॥"
इति भावप्रकाशः ॥

**दारुस्त्री**, स्त्री, (दारुमयी स्त्री ।) दारुका ।

इति त्रिकाण्डशेषः ॥

**दारुहरिद्रा**, स्त्री, (दारुप्रधाना हरिद्रा ।)

स्वनामख्यातवृक्षविशेषः । तत्पर्य्यायः । पीतद्रुः २ कालेयकः ३ हरिद्रुः ४ दार्व्वी ५ पचम्पचा ३ पर्ज्जनी ७ । इत्यमरः । २ । ४ । १०२ ॥ पीतिका ८ पीतदारु ९ स्थिररागा १० कामिनी ११ कटङ्कटेरी १२ पर्ज्जन्या १३ पीता १४ दारु-निशा १५ कालीयकम् १६ कामवती १७ दारु-पीता १८ कर्कटिनी १९ दारु २० निशा २१ हरिद्रा २२ । इति शब्दरत्नावली ॥ अस्या गुणाः । तिक्तत्वम् । कटुत्वम् । उष्णत्वम् । व्रणमेहकण्डुविसर्पत्वद्गांषविषकर्णाक्षिदोषनाशित्वञ्च । इति राजनिर्घण्टः ॥ कफपित्तशोथ-नाशित्वम् । विशेषेण कफाभिष्यन्दनाशित्वञ्च । इति राजवल्लभः ॥

**दारुहस्तकः**, पुं, (हस्त दव प्रतिकृतिः । "इवे

प्रतिकृतौ ।" ५ । ३ । ९६ । इति कन् । दारुणो हस्तकः ।) काष्ठनिर्म्मितहस्तः । काठेर हाता इति भाषा । तत्पर्य्यायः । तर्द्दूः २ । इत्यमरः । ९ । २ । ३४ ॥

**दार्घसत्रः**, त्रि, (दीर्घसत्रे भवः । दीर्घसत्र + अण् ।

"देविकाशिंशपेति ।" ७ । ३ । १ । इति आद्यच आत् ।) दीर्घसत्रयागे भवः । इति सिद्धान्त-कौमुदी ॥

**दार्ढ्यं**, क्ली, (दृढस्य भावः । दृढ + "वणदृढादिभ्यः

ष्यञ् च ।" ५ । १ । १२३ । इति ष्यञ् ।) दृढता ।
(यथा, पञ्चदश्याम् । ६ । १०४ ।
"वाक्यान्यपि यथाप्रज्ञं दार्ढ्यायोदाहरन्ति हि ॥")

**दार्द्दुरं**, क्ली, दक्षिणावर्त्तशङ्खः । जतु । जलम् ।

स्वार्थे कन् टाप् पूर्ब्बह्रस्वश्च ।)
क्वाथोद्भव-
तुत्थम् । गोजिह्वा । इत्यमरः । २ । ४ । ११९ ॥

**दार्व्विपत्रिका**, स्त्री, (दार्व्व्याः पत्रमिव पत्र-

मस्याः । दार्व्विपत्रा ततः स्वार्थे कन् टापि अत
इत्वञ्च ।) गोजिह्वा । इति रत्नमाला ॥

**दार्व्वी**, स्त्री, (दारयति । दृ + "उल्वादयश्च ।"

उणां ४ । ९७ । इति निपातनात् साधुः ।)
दारुहरिद्रा । (अस्याः पर्य्यायो यथा, वैद्यक-
रत्नमालायाम् ।
"कटङ्कटेरी दार्व्वी स्यात्तथा दारुनिशेति च ।
ख्याता दारुहरिद्रा च पर्ज्जनी च पचम्पचा ॥"
अस्या गुणा यथा, --
"दार्व्वी निशागुणा किन्तु नेत्रकर्णास्यरोगनुत् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
गोजिह्वा । इति मेदिनी । वे, ११ ॥
देवदारु ।
हरिद्रा । इति विश्वः ॥

**दार्व्वीक्वाथोद्भवं**, क्ली, (दार्व्व्या दारुहरिद्रायाः

क्वाथादुद्भवो यस्य ।) रसाञ्जनम् । इति राज-
निर्घण्टः ॥ कृत्रिमरसाञ्जनम् । इति रत्नमाला ॥

**दार्षदः**, त्रि, (दृषदि पिष्ठः । दृषद् + "शेषे ।"

४ । २ । ९२ । इत्यण् ।) दृषद्भवः । इति
सिद्धान्तकौमुदी ॥

**दालं**, क्ली, (दलेभ्यः सञ्चितम् । दल + अण् ।

यदुक्तम्, --

**दावः**, पुं, (दुनोति उपतापयतीति । दु + "दुन्यो-

रनुपसर्गे ।" ३ । १ । १४२ । इति णः ।) वनम् ।
(यथा, महाभारते । १ । २२४ । ६ ।
"इदमिन्द्रः सदा दावं खाण्डवं परिरक्षति ॥")
वनवह्निः । इत्यमरः । ३ । ३ । २०५ ॥ (यथा,
महाभारते । ३ । ६६ । १ ।
"उत्सृज्य दमयन्ती तु नलो राजा विशांपते ! ।
ददर्श दावं दह्यन्तं महान्तं गहने वने ॥")
अग्निः । इत्यमरटीकायां नीलकण्ठः ॥ उप-
तापः । इति भरतकृतद्विरूपकोषः ॥

**दावाग्निः**, पुं, (दावोद्भवोऽग्निः । शाकपार्थिवादि-

वत्समासः ।) वनोद्भवाग्निः । तत्पर्य्यायः ।
दवाग्निः २ दावानलः ३ । इति शब्दरत्नावली ॥
दवः ४ दावः ५ । इत्यमरः । ३ । ३ । २०५ ॥
(यथा, महाभारते । १ । १५५ । १५ ।
"दावाग्निधूमसदृशं चक्रतुः पार्थिवं रजः ॥")

**दावानलः**, पुं, (दावोद्भवः अनलः । दाव एवानलो

वा ।) दावाग्निः । इति शब्दरत्नावली ॥ (यथा,
कथासरित्सागरे । २६ । ६९ ।
"यद्दावानलतप्तस्य सुधाह्रदनिमज्जने ॥")

**दाविकः**, त्रि, (देविकायां भवः । अण् । "देविका-

शिंशपेति ।" ७ । ३ । १ । इति आद्यच आत् ।)
देविकानदीसम्भवः । इत्यमरः । १ । १० । ३६ ॥

**दाश**, ऋ ङ क दाने । इति कविकल्पद्रुमः ॥ (चुरा-

इति शब्दार्थकल्पतरुः ॥ दर्द्दुरधर्म्मश्च ॥

**दार्व्वटं**, क्ली, चिन्तावेश्म । इति हारावली । १६८ ॥

**दार्व्वण्डः**, पुं, (दारुवत् कठिनमण्डं यस्य ।) मयूरः । इति शब्दकल्पतरुः ॥

**दार्व्वाघाटः**, पुं, (दारु काष्ठं आहन्तीति । आ + हन् + "दारावाहनोऽणन्तस्य च टः संज्ञा- याम् ।" ३ । २ । ४९ । इत्यस्य वार्त्तिकोक्त्या अण टश्चान्तादेशः ।) शतपत्रकपक्षी । इत्यमरः । २ । ५ । १७ ॥ काष्ठोक्रा इति भाषा । (यथा, महाभारते । १० । ७ । १८ । "दार्व्वाघाटमुखाश्चापि चासवक्त्राश्च भारत ! ॥")

**दार्व्वाघातः**, पुं, (दारुणि आघातो यस्मात् ।) दार्व्वाघाटपक्षी । इति शब्दरत्नावली ॥

**दार्व्विका**, स्त्री, (दारयतीति । दॄ + उल्वादित्वात् माधुः । दार्व्वी दारुहरिद्राविकारः । ततः "संस्रुत्य पतितं पुष्पात् यत्तु पत्रोपरि स्थितम् । मधुराम्लकषायञ्च तद्दालं मधु कीर्त्तितम् ॥") वत्यमधु । इति शब्दार्थकल्पतरुः ॥ इन्द्रनील- दलाकारसूक्ष्ममक्षिकोत्पन्नं वृक्षकोटरान्तर- भवं मधु । अस्य गुणाः । कटुत्वम् । कषाय- त्वम् । अम्लत्वम् । मधुरत्वम् । पित्तदोषकारि- त्वञ्च । इति राजनिर्घण्टः ॥

**दालः**, पुं, (दले जातम् । दल + अण् ।) कोद्रवः । इति हेमचन्द्रः ॥

**दालवः**, पुं, स्थावरविषभेदः । इति हेमचन्द्रः । ४ । २६६ ॥

**दाला**, स्त्री, (दल्यते स्थूलमतिभिरिति । दल + घञ् + टाप् ।) महाकालः । इति भावप्रकाशः ॥

**दालिका**, स्त्री, (दालैव । स्वार्थे कन् टाप् अत इत्वञ्च ।) महाकालः । इति भावप्रकाशः ॥

**दालिमः**, पुं, (दाडिमः । डस्य लः ।) दाडिमः । इत्यमरटीकायां भरतः ॥

**दाली**, स्त्री, (दाल्यते इति । दल + णिच् + इन् । कृदिकारादिति ङीष् ।) देवदाली लता । इति राजनिर्घण्टः ॥

**दाल्भ्यः**, पुं, (दल्भस्य मुनेर्गोत्रापत्यम् । "गर्गा- दिभ्यो यञ् ।" ४ । १ । १०५ । इति यञ् ।) मुनिविशेषः । (यथा, महाभारते । २ । ४ । ११ । "वको दाल्भ्यः स्थूलशिराः कृष्णद्वैपायनः शुकः ॥")

**दाल्मिः**, पुं, (दालयति असुरानिति । दल + आत्मं-सकं-सेट् ।) द्बितीयस्वरी । ऋ, अद- दाशत् । क ङ, दाशयते । इति दुर्गादासः ॥

**दाश**, ऋ ञ दाने । इति कविकल्पद्रुमः ॥ (भ्वां- उभं-सकं-सेट् ।) ऋ, अददाशत् । ञ, दाशति दाशते । इति दुर्गादासः ॥

**दाश**, न र हिंसने । इति कविकल्पद्रुमः ॥ (स्वां- परं-सकं-सेट् ।) द्बितीयस्वरी । न, दाश्नोति । र वैदिकः । इति दुर्गादासः ॥

**दाशः**, पुं, (दाश्यते दीयते भृतिमूल्यमस्मै । दाश दाने + सम्प्रदाने घञ् ।) भृत्यः । इत्यमर- टीकायां रमानाथः ॥ (दशति हिनस्ति मत्- स्यानिति । दन्श + "दंशेश्च ।" उणां ५ । ११ । इति टः नस्य आच्च । धीवरः । यथा, देवी- भागवते । २ । १ । ३९ । "मत्स्यगन्धेति वाम्ना वै गुणेन समजायत । विवर्द्धमाना दाशस्य गृहे सा वासवी शुभा ॥")

**दाशपुरं**, क्ली, (दाशान् कैवर्त्तान् पिपर्त्ति पालय- तीति । पृ + कः । "उदोष्ठ्यपूर्ब्बस्य ।" ७ । १ । १०२ । इति उत्वम् ।) दशपुरम् । इत्यमरटी- कायां स्वामी ॥

**दाशरथः**, पुं, (दशरथस्य अयम् । तस्येदमिति पितापुत्रत्वरूपसम्बन्धार्थे अण् ।) श्रीरामः । इति शब्दरत्नावली ॥ (यथा, महानाटके । "प्रदीयतां दाशरथाय मैथिली ॥" दशरथसम्बन्धिनि, त्रि । यथा, भट्टिः । २ । ५३ । "अजीगणद्दाशरथं न वाक्यम् ॥")

| | | |
|---|---|---|
| | णिच् + बाहुलकात् मिः ।) इन्द्रः । इति त्रिकाण्डशेषः ॥ | **दाशरथिः**, पुं, (दशरथस्य अपत्यं पुमान् । "अत इञ् ।" ४ । १ । ९५ । इतीञ् ।) श्रीरामः |

इति हेमचन्द्रः ॥ (यथा, रामायणे । २ । ४५ । ११ ।
"यथा यथा दाशरथिर्धर्म्ममेवाश्रितोऽभवत् ।
तथा तथा प्रकृतयो रामं पतिमकामयन् ॥")

**दाशार्हः**, पुं, (दाश दाने + भावे घञ् । दाशं दान-
मर्हतीति । अर्ह + अच् ।) विष्णुः । इति हेम-
चन्द्रः ॥ (यथा, महाभारते । १३ । १४९ । ६७ ।
"विजयो जयः सत्यसन्धो दाशार्हः सात्वतां
पतिः ॥")
दशाहदेशजश्च ॥

**दाशेरकः**, पुं, मालवदेशः । इति त्रिकाण्डशेषः ॥

**दाश्वः**, त्रि, (दाशति ददातीति । दाश + बाहुल-
कात् वन् ।) दाता । इति जटाधरः ॥

**दाश्वान्**, [स्] त्रि, (दाशृ दाने + "दाश्वान् सा-
ह्वान् मीढ्वांश्च ।" ६ । १ । १२ । इति क्वसुप्रत्ययेन
निपातनात् साधुः ।) दत्तवान् । इति मुग्धबो-
धम् ॥ (यथा, रघुः । १४ । ७१ ।
"तस्मै सुनिर्दोहदलिङ्गदर्शी
दाश्वान् सुपुत्त्राशिषमित्युवाच ॥")

**दास**, ऋ ञ दाने । इति कविकल्पद्रुमः ॥ (भ्वां-
उभं-सकं-सेट् ।) ऋ, अददासत् । ञ, दासति
दासते । इति दुर्गादासः ॥

**दास**, र न वधे । इति कविकल्पद्रुमः ॥ (स्वां-परं-
सकं सेट् ।) र वैदिकः । न, दास्नोति । इति
दुर्गादासः ॥

**दासः**, पुं, (दसतीति । दसि + "दंसेष्टटनौ न
आत् ।" उणां ५ । १० । इति टः नकारस्य
तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥
भक्तदासश्च विज्ञेयस्तथैव वडवाकृतः ।
विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः ॥"
अस्यार्थः । गृहजातो दास्यामुत्पन्नः । दाया-
दुपागतः क्रमागतः । अन्नाकालभृतः दुर्भिक्ष-
पोषितः । स्वामिना आहितो बन्धकीकृतः ।
मोक्षितः ऋणमोचनेनाङ्गीकृतदास्यः । तवाह-
मित्युपगतः कस्याप्यदासः सन् स्वयं दासत्वेन
दत्तरूपः । प्रव्रज्यावसितः सन्न्यासभ्रष्टः । कृतः
केनचिन्निमित्तेन एतावत्कालपर्य्यन्तं तवाहं
दास इति कृतसमयः । भक्तदासः सुभिक्षेऽपि
भक्तार्थमङ्गीकृतदास्यः । वडवाकृतः वडवा दासी
तल्लोभादङ्गीकृतदास्यः । इति श्रीकृष्णतर्का-
लङ्कारकृतक्रमसंग्रहः ॥ तस्य कर्म्म यथा, --
"कर्म्मापि द्विविधं ज्ञेयमशुभं शुभमेव च ।
अशुभं दासकर्म्मोक्तं शुभं कर्म्मकृतां स्मृतम् ॥
गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम्।
गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम्॥
अशुभं कर्म्म विज्ञेयं शुभमन्यदतः परम् ॥"
इति मिताक्षरायां नारदः ॥
"विप्रस्य किङ्करा भूपो वैश्यो भूपस्य भूमिप ! ।
सर्व्वेषां किङ्कराः शूद्रा ब्राह्मणस्य विशेषतः ॥"
इति ब्रह्मवैवर्त्ते गणेशखण्डम् ॥

**दासनन्दिनी**, स्त्री, (दासस्य धीवरस्य नन्दिनी ।)
सत्यवती । इति शब्दरत्नावली ॥

**दासपूरं**, क्ली, (दासान् धीवरान् पूरयतीति ।
पूर + "कर्म्मण्यण् ।" ३ । २ । १ । इत्यण् ।)
केवर्त्तीमुस्तकम् । इति शब्दरत्नावली ॥

**दासिका**, स्त्री, (दासति ददाति आत्मानमिति ।
दास दाने + ण्वुल् । टाप् अत इत्वञ्च ।) दासी ।
इत्यमरटीकायां भरतः ॥

**दासी**, स्त्री, (दासति ददात्यत्मानमिति । दास +
अच् । गौरादित्वात् ङीष् ।) भुजिष्या । इति
मेदिनी । से, ४ ॥ तत्पर्य्यायः । कर्म्मकरी २ ।
इति मुग्धबोधम् ॥ दासपर्य्यायशब्दाः स्त्रीलिङ्गे
अस्याः पर्य्यायशब्दा भवन्ति ॥ (यथा, देवी-
भागवते । १ । २० । ७२ ।
"न गता च बधूस्तत्र प्रेष्या संप्रेषिता तया ।
दासीधटमपां पूर्णं पर्य्यस्येत् प्रेतवत् पदा ।
अहोरात्रमुपासीरन्नशौचं वान्धवैः सह ॥
निवर्त्तेरंश्च तस्मात्तु सम्भाषणसहासने ।
दायाद्यस्य प्रदानञ्च यात्रा चैव हि लौकिली ॥"
"पतितस्येति । महापातकिनो जीवत एव प्रेत-
स्योदकक्रिया वक्ष्यमाणरीत्या सपिण्डैः समानो-
दकैश्च ग्रामाद्बहिर्गत्वा ज्ञात्युत्विग्गुरुसन्निधाने
रिक्तायां नवम्यां तिथौ दिनान्त कर्त्तव्या ॥
दासीति । सपिण्डसमानोदकानियुक्ता दासी
उदकपूर्णं घटं प्रेतवदिति दक्षिणाभिमुखीभूय
पादेन क्षिपेत् । यथा स निरुदको भवति तदनु
ते सपिण्डाः समानोदकैः सहाहोरात्रमशौच-
माचरेयुः ॥ निवर्त्तेरन्निति । तस्मात् पति-
तात् सपिण्डादीनां सम्भाषणमेकासनोपवेशनञ्च
तस्मै ऋक्थप्रदानं सांवत्सरिकादौ निम-
न्त्रणादिरूपो लोकव्यवहार एतानि निवर्त्ते-
रन् ॥" इति कुल्लूकभट्टः ॥

**दासीसभं**, क्ली, (दासीनां सभा । "अशाला
च ।" २ । ४ । २४ । इति क्लीवत्वम् ।) दास्याः
सभा । इत्यमरः । ३ । ५ । २७ ॥

**दासेयः**, पुं, (दास + स्वार्थे ढक् ।) दासः । इत्य-
मरः । २ । १० । १७ ॥ कैवर्त्तः । इति शब्द-
रत्नावली ॥ (दासस्य अपत्यमिति ।) दासोत्-
पन्ने, त्रि ॥

चारारः ।) शूद्रः । (यथा, ऋग्वेदे । २ । १२ । ४ ।
"यो दासं वर्णमधरं गुहाकः ॥"
अधुना कायस्थानां उपाधिभेदः । स तु अष्टसिद्ध-
मौलिकानामन्यतमः । यथा, कुलदीपिकायाम् ।
"गौडेऽष्टौ कीर्त्तिमन्तश्चिरवसतिकृता मौलिका
ये हि सिद्धा-
स्ते दत्ता सेनदासाः करगुहसहिताः पालिताः
सिंहदेवाः ॥")
ज्ञातात्मा । धीवरः । इति मेदिनी । से, ४ ॥
दानपात्रम् । इति विश्वः ॥ शूद्राणां नामान्त-
प्रयोज्यपद्धतिविशेषः । यथा, --
"शर्म्मान्तं ब्राह्मणस्यस्यात् वर्म्मान्तं क्षत्रियस्यच ।
गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥"
इत्युद्वाहतत्त्वम् ॥ * ॥
दास्यते दीयते भूतिमूल्यादिकं यस्मै सः । चा-
कर इति भाषा । तत्पर्य्यायः । भृत्यः २ दासेरः
३ दासेयः ४ गोप्यकः ५ चेटकः ६ नियोज्यः ७
किङ्करः ८ प्रैष्यः ९ भुजिष्यः १० परिचारकः
११ । इत्यमरः । २ । १० । १७ ॥ प्रेष्यः १२
प्रेषः १२ प्रैषः १४ । इति भरतः ॥ परिकर्म्मा
१५ परिचरः १६ सहायः १७ उपस्थाता १८
सेवकः १९ अभिसरः २० अनुगः २१ । स
पञ्चदशविधः । यथा नारदः ।
"गृहजातस्तथा क्रीतो लब्धो दायादुपागतः ।
तस्याञ्च विदुरो जातो दास्यां धर्म्मांशतः शुभः ॥")
काकजङ्घा । नीलाम्लानः । नीलझिण्टी । इति
राजनिर्घण्टः ॥ पीतझिण्टी । इति रत्नमाला ॥
वेदी । इति विश्वः ॥ (दास + ङीप् ।) शूद्र-
पत्नी कैवर्त्तपत्नी च ॥ (नदीभेदः । यथा, महा-
भारते । ६ । ९ । ३१ ।
"सुरसां तमसांदासीं सामान्यां वरणामसीम् ॥")

**दासीघटः**, पुं, (दासीपादनिक्षेप्यो घटः । मध्य-
पदलोपिसमासः ।) नवम्यां महापातकिनः
परित्यागार्थं सपिण्डसमानोदकनियुक्तदक्षिणा-
भिमुखदासीपादनिःक्षेप्यजलपूर्णकलसः । तदनु-
ष्ठानं यथा, मनुः । ११ । १८३ -- १८५ ।
"पतितस्योदकं कार्य्यं सपिण्डैर्बान्धवैर्बहिः ।
निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधौ ॥

**दासेयी**, स्त्री, (दासेय + स्त्रियां ङीप् ।) सत्यवती ।
इति त्रिकाण्डशेषः ॥ (यथा, महाभारते । १ ।
१०० । ४९ ।
"समीक्ष्य राजा दासेयीं कामयामास
शान्तनुः ॥")

**दासेरः**, पुं, (दास्या अपत्यम् । ढ्रक् ।) दासः ।
इत्यमरः । २ । १० । १७ ॥ कैवर्त्तः ।
इति शब्द-
रत्नावली ॥ (दास + बाहुलकात् एरच् ।)
उष्ट्रः ।
दासिकापत्ये, त्रि । इति मेदिनी । रे, १६९ ॥

**दासेरकः**, पुं, (दासेर + स्वार्थे कन् ।) उष्ट्रः ।
इति राजनिर्घण्टः ॥ (यथा, माघे । ५ । ६६ ।
"दासेरकः सपदि संवलितं निषादै-
र्विप्रं पुरा पतगराडिव निर्जगार ॥")
दासीसुतः । इति हारावली । २४८ ॥ (जाति-
भेदः । यथा, महाभारते । ६ । ४७ । ४६ ।
"दशार्णकाः प्रयागाश्च दासेरकगणैः सह ॥")

**दास्यं**, क्ली, दासस्य भावः । (दास + ष्यञ् ।)
दासत्वम् । यथा, --
"अर्च्चनं वन्दनं मन्त्रजपः सेवनमेव च ।
स्मरणं कीत्तनं शश्वद्गुणश्रवणमीप्सितम् ॥
निवेदनं स्वस्य दास्यं नवधा भक्तिलक्षणम् ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥

**दास्यमानः**, त्रि, दाधातोः कर्म्मणि स्यमान-
प्रत्ययेन निष्पन्नः ।
भविष्यद्दानसम्बन्धिवस्तु। इति
व्याकरणम् ॥ "अपि च ऊनविंशतिदास्यमान
पिण्डस्थानानि यथा ।" इति तिथ्यादितत्त्वम् ॥

**दाहः**, पुं, (दह + भावे घञ् ।) दहनम् । भस्मी

| अन्नाकालभृतस्तद्वदाहितःस्वामिना च यः ॥<br>मोक्षितो महतश्चर्णात् युद्धे प्राप्तः पणे जितः । | | करणम् । (यथा, मार्कण्डेये । ३० । २३ ।<br>“तदभावे च नृपतिः कारयेत् स्वकुटुम्बिना । |
|---|---|---|

तज्जातीयैर्नरैःसम्यक्दाहाद्याःसकलाःक्रियाः
॥”)
अथ शवदाहविधिर्यथा, --
“गतप्राणं ज्ञात्वा पुत्रादिः स्नात्वा अन्नं कृत्वा
स्थापयेत् । ततो गतप्राणं स्नापयित्वा वाससा
सर्व्वं शरीरमाच्छाद्यास्तीर्णकुशायां भूमौ दक्षि-
णाशिरसं स्थापयेत् । ततो घृतेनाभ्यज्य,
ॐ गयादीनि च तीर्थानि ये च पुण्याः शिलो-
च्चयाः ।
कुरुक्षेत्रञ्च गङ्गाञ्च यमुनाञ्च सरिद्वराम् ॥
कौशिकीं चन्द्रभागाञ्च सर्व्वपापप्रणाशिनीम् ।
भद्रावकाशां गण्डक्यां सरयूं पनसां तथा ॥
वैणवञ्च वराहञ्च तीर्थं पिण्डारकं तथा ।
पृथिव्यां यानि तीर्थानि सरितः सागरांस्तथा ॥
इति चिन्तयित्वा पुनः स्नापयेत् । वस्त्रान्तरं
परिधाप्य उपवीतमुत्तरीयञ्च दत्त्वा चन्दना-
दिनोपलिप्य कर्णनासिकानेत्रद्वयमुखात्मकेषु
सप्तच्छिद्रेषु सुप्तसुवर्णखण्डिकास्तदभावे कांस्या-
दिखण्डिका निःक्षिपेत् ततो वस्त्रान्तरेणा-
च्छाद्य वहेयुः । वहनकाले आमपात्रस्थं तद-
न्नार्द्धं वर्त्मार्द्धे त्यजेत् अर्द्धं पिण्डार्थमवशेषयेत् ।
ततोऽग्निदाता पुत्रादिश्चिताभूमौ गत्वा तद-
न्नार्द्धं तिलसहितं पिण्डदानेतिकर्त्तव्यतया उत्-
सृजेत् । सा यथा, -- गोमयेनोपलिप्तायां भूमौ
पातितवामजानुः प्राचीनावीती कुशमूलेन ॐ
अपहता सुरा रक्षांसि वेदिसद इत्यनेन दक्षि-
णाग्ररेखां कुर्य्यात् तदुपरि कुशानास्तीर्य्य ॐ
एहि प्रत सौम्य गम्भीरेभिः पथिभिः पूर्व्विणेभि-
र्देह्यस्मभ्यं द्रविणेह भद्रं रयिञ्च नः सर्व्ववीरं
नियच्छ इत्यावाह्य सतिलजलपात्रं वामहस्ता-
द्दक्षिणहस्तेन गृहीत्वा ॐ अद्यामुकगोत्र प्रेता-
मुकदेवशर्म्मन्नवने निक्ष्व इत्यवनेजयेत् । ॐ
अद्यामुकगोत्र प्रेतामुकदेवशर्म्मन्नेतत्तेऽन्नमुप-
तिष्ठतां इति वामहस्तगृहीतामपात्रादन्नंसतिलं
दक्षिणहस्तेन गृहीत्वा कुशोपरि दद्यात् । पिण्ड-
पात्रप्रक्षालनजलेन तदुपरि प्रत्यवनेजनं तूष्णां
गन्धादिदानं सामगेतरेषान्तु नावाहनमिति
विशेषः । ततः पुत्रादिः स्नात्वा चितां रचयित्वा
तत्र दारुचयं कुर्य्यात् । तदुपरि वस्त्रद्वयसहितं
दक्षिणाशिरसं सामगमधोमुखं पुमांसं न्यसेत् ।
नार्य्यास्तृत्तानदेहत्वं सामगेतरेषां उत्तराशिर-
क्रमेण चिताग्नौ प्रक्षिपेत् । ततः कुठारेण
क्रव्या-
दाय नमस्तुभ्यमिति मन्त्रं सकृत् पठित्वा
चितास्थज्वलद्दारुपरि सप्तप्रहारा देयाः
तमग्नि-
मपश्यद्भिर्व्वामावर्त्तेन स्नातुं नदी गन्तव्या ।
नग्नं शवं न दहेत् शवसम्बन्धिवस्त्रादि
श्मशान-
वासिचाण्डालादिभ्यो दद्यात् । सूतिकां
रज-
स्वलाञ्च वस्त्रान्तरावृतां सतिलपञ्चगव्यं
जल-
पूर्णकुम्भं
आपोहिष्ठीयवामदेव्यादिभिरभिमन्त्र्य
स्नापयित्वा दहेदिति विशेषः ।
गर्भवत्यास्तु गर्भं
निःसार्य्य स्थानान्तरे निःक्षिप्य तस्या
दाहः
कार्य्यः । ततो जलसमीपं गत्वा पुत्रादयः
प्रयोगदानाभिज्ञं श्यालकादिकं प्रार्थयेयुः ।
उदकं
करिष्याम इति तेन च कुरुध्वं मा चैवं पुन-
रित्यशतवर्षे प्रेते कुरुध्वमेवेतरस्मिन्
इत्युक्तरे
दत्ते वृद्धपुरःसरमवतरणं जले । ततः
परिहित-
वस्त्रं प्रक्षाल्य तदेव परिधाय
प्राचीनावीतिनो
दक्षिणासुखाः ॐ अपनः
शोशुचदथमित्यनेन
मन्त्रेण वामहस्तानामिकया अप आलोड्य
एकवस्त्राः सकृन्निमज्योन्मज्याचम्य
दक्षिणा-
मुखास्तर्पयेयुः । ततः ॐ अमुकगोत्रं
प्रेतममुक-
देवशर्म्माणं तर्पयामीति सामगानां प्रयोगः
यजुर्व्वेदिनान्तु अमुकगोत्र
प्रेतामुकदेवशर्म्मन्ने-
तत्ते तिलोदकं तृप्यस्वेति
एकाञ्जलिदानमाव-

**दाहज्वरः**, पुं, (दाहप्रधानो ज्वरः ।) गात्रज्वाला-
युक्तज्वररोगः । तस्यौषधम् । यथा, --
“पीतं वृश्चिकमूलन्तु पर्य्युषितजलेन वै
।
सार्द्धं विनाशयेद्दाहज्वरञ्च परमेश्वर ! ॥”
इति गारुडे १९३ अध्यायः ॥

**दाहनं**, क्ली, (दह + णिच् + भावे ल्युट् ।) भस्मी-
करणप्रेरणम् । दाहकरान इति भाषा ॥
(यथा,
ब्रह्मवैवर्त्ते प्रकृतिखण्डे । १ । ६२ ।
“कलौ कलुषशुष्केध्मदाहनायाग्निरूपिणी
॥”)

**दाहसरः**, पुं, (दाहार्थं सियते गभ्यतेऽस्मिन्निति ।
सृ + अप् ।) श्मशानम् । इति
त्रिकाण्डशेषः ॥

**दाहहरणं**, क्ली, (दाहस्य हरणं यस्मात् ।)
वीरणमूलम् । इति शब्दचन्द्रिका ॥

**दाहागुरु**, क्ली, (दाहाय यदगुरु ।) सुगन्धिद्रव्य-
विशेषः । तत्पर्य्यायः । दाहनागुरु २
दाह-
काष्ठम् ३ धूपागुरु ४ तैलागुरु ५ पूरम् ६
वनवल्लभम् ७ । अस्य गुणाः । कटुत्वम् ।
उष्ण-
त्वम् । केशवर्द्धनत्वम् । वर्ण्यत्वम् ।
केशदोषना-
शित्वम् ।
सततसौगन्ध्यविस्तारकारित्वञ्च। इति
राजनिर्घण्टः ॥

**दिक्**, [श्] स्त्री, (दिशति अवकाशं ददाति या ।
दिश + “ऋत्विग्दधृगिति ।” ३ । २ ।
५९ ।
इति क्विन्-प्रत्ययेन साधुः ।)
पूर्व्वपश्चिमदक्षि-
णोत्तरादिरूपा । तत्पर्य्यायः । ककुप् २
काष्ठा
३ आशा ४ हरित् ५ । इत्यमरः । १ । ३
। ८ ॥

स्त्वम् । ततो देवाश्चाग्निमुखाः सर्व्वे हुताशनं
गृहीत्वा एनं दहन्तु इति मनसा ध्यात्वाग्निं
गृहीत्वा,
ॐ कृत्वा तु दुष्करं कर्म्म जानतावाप्यजानता।
मृत्युकालवशं प्राप्य नरं पञ्चत्वमागतम्॥
धर्म्माधर्म्मसमायुक्तं लोभमोहसमावृतम्।
दहेयं सर्व्वगात्राणि दिव्यान् लोकान् स गच्छतु॥
इति पठित्वा त्रिः प्रदक्षिणीकृत्य दक्षिणामुखः
शिरः स्थाने दद्यात्। स्त्रीदाहे नरमित्येव पाठः
न नारीमित्यूहः। ततो दाहे वृत्ते प्रादेश-
प्रमाणाः सप्तकाष्ठिका गृहीत्वा चिताग्निं सप्त-
वारान् प्रदक्षिणीकृत्य सप्तकाष्ठिका एकैक-

श्यकं अञ्जलित्रयदाने फलातिशयः। ततः
पुनः
स्नात्वा जलादुत्थानं बालपुरःसरं कार्य्यम्
।
ततः साद्वले उपविश्य,
मानुष्ये कदलीस्तम्भनिःसारे सारमार्गणम्
।
यः करोति स संमूढो जलबुद्बुदसन्निभे॥
पञ्चधा सम्भृतः कायो यदि पञ्चत्वमागतः।
कर्म्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना
॥
गन्त्री वसुमती नाशमुदधिर्द्दैवतानि च।
फेनप्रख्यः कथं नाशं मर्त्यलोको न
यास्यति॥
श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते
यतोऽवशः।
अतो न रोदितव्यं हि क्रिया कार्य्या
विधानतः॥
इति चिन्तयित्वा गृहद्वारं समागत्य निम्ब-
पत्राणि दन्तैः खण्डयित्वा शमी पापं शमय-
त्विति शमीं स्पृष्ट्वा अश्मेव स्थिरो भूयासं
इत्य-
श्मानं पदा स्पृष्ट्वा अग्निर्नः शर्म्म यच्छतु
इति
अग्निं स्पृष्ट्वा वृषभच्छागयोर्म्मध्ये स्थित्वा
ह्योगि-
तिमन्त्रेण द्वावपि स्पृष्ट्वा गोमयमुदकं
गौरसर्ष-
पांश्च स्पृष्ट्वा बालपुरःसरा गृहं विशेयुः।
दिवा
चेद्दाहस्तदा रात्रौ ग्रामप्रवेशः रात्रौ चेत्तदा
दिवसे। अशक्तौ ब्राह्मणानुमतिं गृहीत्वा
काल-
प्रतीक्षणं विना प्रवेष्टव्यम्।" इति
शुद्धितत्त्वम्॥

**दाहकः**, पुं, (दहतीति। दह + ण्वुल्।) चित्रकः।
रक्तचित्रकः। इति राजनिर्घण्टः॥ दाह-
कर्त्तरि, त्रि॥ (यथा, याज्ञवल्क्ये। २।
२८५।
"क्षेत्रवेश्मवनग्रामविवीतखलदाहकाः।
राजपत्नाभिगामी च दग्धव्यास्तु कटाग्निना
॥"

निदेशिनी ६ दिशा ७ ककुभः ८ हरितः
९
गौः १०। इति शब्दरत्नावली॥ अपि च
।
आताः १ आशाः २ उपराः ३ आष्ठाः ४
काष्ठाः ५ व्योमः ६ ककुभः ७ हरितः ८
इत्यष्टौ दिङ्नामानि। इति वेदनिघण्टौ १
अध्यायः॥ अस्या व्युत्पत्तिर्यथा, --
"कृत्वैवमवधिं तस्मादिदं पूर्ब्बञ्च
पश्चिमम्।
इति देशो निदिश्येत यया सा दिगिति
स्मृता॥"
तस्या वायोर्गुणाः।
"विश्वग्वायुरनायुष्यः
प्राणिनांनैकदोषकृत्।
सर्व्वर्त्तुनिन्दको हन्ता
कृत्योत्पातपुरःसरः॥"
इति राजवल्लभः॥ *॥
सा दशधा यथा। पूर्ब्बा १ आग्नेयी २
दक्षिणा
३ नैरृती ४ पश्चिमा ५ वायवी ६ उत्तरा
७
ऐशानी ८ ऊर्द्ध्वम् ९ अधः १०॥ *॥
तासां
उत्पत्तिर्यथा, --
महातपा उवाच।
"शृणु राजन्नवहितः प्रजापाल!
कथामिमाम्।
यथा दिशः समुत्पन्नाः श्रोत्रेभ्यः
पृथिवीपते!॥
ब्रह्मणः सृजतः सृष्टिमादिसर्गे समुत्थिते।
चिन्ताभून्महती को मे प्रजाः सृष्टा
धरिष्यति॥
एवं चिन्तयतस्तस्य अवकाशं व्रजत्विह
।
प्रादुर्ब्बभूवुः श्रोत्रेभ्यो दश कन्या
महाप्रभाः॥
पूर्ब्बा च दक्षिणा चैव प्रतीची चोत्तरा
तथा।
ऊर्द्ध्वाध एव षण्मुख्याः कन्या
ह्यासंस्तदा नृप!॥
तासां मध्ये चतस्रस्तु कन्याः
परमशोभनाः।

|  |  |  |
| --- | --- | --- |
|  | उष्णगुणः । यथा, राजनिर्घण्टे ।<br>“काञ्जिकं दधितैलन्तु वलीपलितनाशनम् ।<br>दाहकं गात्रशैथिल्यं बल्यं सन्तर्पणं परम्<br>॥”) | याःपश्यन्त्यो महाभागा गाम्भीर्य्येण समन्विताः ॥ |

ता ऊचुः प्रणयाद्देवं प्रजापतिमकल्मषम् ।
अवकाशन्तु नो देहि देवदेव प्रजापते ! ॥
यत्र तिष्ठामहे सर्व्वा भर्त्तृभिः सहिताः
सुखम् ।
पतयश्च महाभाग ! देहि नोऽव्यक्तसम्भव !
॥
ब्रह्मोवाच ।
ब्रह्माण्डमेतत् सुश्रोण्यः
शतकोटिप्रविस्तरम् ।
तस्यान्ते स्वेच्छया तुष्टा उष्यतां मा
विलम्बथ ॥
भर्त्तॄंश्च वः प्रयच्छामि सृष्ट्वा
रूपस्विनोऽनघाः ।
यथेष्टं गम्यतां देशो यस्या यो रोचतेऽधुना
॥
एवमुक्ताश्च ताः सर्व्वा यथेष्टं प्रययुस्तदा ।
ब्रह्मा ससर्ज तूर्णं तान् लोकपालान् महा-
बलान् ॥
दृष्ट्वा तु लोकपालांस्तु ताः कन्याः
पुनराह्वयन् ।
विवाहं कारयामास ब्रह्मा लोकपितामहः ॥
एकामिन्द्राय स प्रादादग्नयेऽन्यां यमाय च ।
निरृ ताय च देवाय वरुणाय महात्मने ॥
वायवे धनदेशाय ईशानाय च सुव्रत ! ।
ऊर्द्ध्वं स्वयमधिष्ठाय
शेषायाधोव्यवस्थिताम् ॥
एवं दत्त्वा पुनर्ब्रह्मा तिथिं प्रादात् दिशां पुनः
।
दशमीं भत्तृनाम्नस्तु अर्द्धनाम्नोदनः प्रभुः
॥
ततःप्रभृति ताः देव्यः सेन्द्र्याद्याः परि-
कीर्त्तिताः ॥”
इति वराहपुराणम् ॥ * ॥
न्यायमते अस्याः सर्व्वगतत्वम् ।
परममहत्त्व-
परिमाणम् । दूरान्तिकादिधीर्हेतुत्वम् ।
नित्य-
त्वम् । एकत्वेऽपि उपाधिभेदात्
प्राच्यादिव्यप-
देशभाक्त्वम् । अस्या गुणाः । संख्या १
परि-

अवतीर्णं प्रयात्येव दक्षिणं सागरं प्रति ।
तस्य पश्चिमभागे तु नदी दिक्करिकाह्वया ॥
दिग्गजक्षेत्रसंजाता तेन दिक्करिका स्मृता ॥”
इति कालिकापुराणे ८२ अध्यायः ॥

**दिक्करी**, स्त्री, (दिक्कर + ङीष् ।) युवती । इति
हेमचन्द्रः । ३ । १७५ ॥

**दिक्पतिः**, पुं, (दिशां पतिः ।) दिगधीश्वरः ।
तद्यथा । प्राच्यधिपो रविः । अग्निकोणाधिपः
शुक्रः । दक्षिणाधिपः कुजः । नैरृतकोणाधिपो
राहुः । प्रतीच्यधिपः शनिः । वायुकोणाधिप-
श्चन्द्रः । उत्तराधिपो बुधः । ईशानकोणाधिपो
गुरुः । तस्य प्रमाणं यथा, --
“सूर्य्यः शुक्रः क्षमापुत्त्रः सैंहिकेयः शनिः शशी
।
सौम्यस्त्रिदशमन्त्री च प्राच्यादिदिगधीश्वराः ॥”
इति ज्योतिस्तत्त्वम् ॥

**दिक्पालः**, पुं, (दिशः पालयतीति । दिश् + पालि
+ अण् ।) पूर्ब्बादिदशदिशां पालकः । यथा ।
पूर्ब्बस्यां दिशि इन्द्रः । अग्निकोणे वह्निः ।
दक्षिणस्यां दिशि यमः । नैरृतकोणे निरृतः ।
पश्चिमस्यां दिशि वरुणः । वायुकोणे मरुत् ।
उत्तरस्यां दिशि कुवेरः । ईशानकोणे ईशः ।
ऊद्‌र्ध्वदिशि ब्रह्मा । अघोदिशि अनन्तः । इति
पुराणम् ॥ यथा, पद्मपुराणे ।
“यत्रार्च्चयन्ति विधिना दिक्पालादींस्तु
कर्म्मिणः ।
तत्र प्रपूजयेदेनं विधिं भागवतं शुकम् ॥”

**दिक्शूलं**, क्ली, (दिशि शूलमिव ।) दिग्विशेष-
गमने निषिद्धवाराः । यथा, --
पश्चिमायां शुक्ररवी । उत्तरस्यां बुधमङ्गलौ ।
पूर्ब्बस्यां शनिसोमौ । दक्षिणस्यां बृहस्पतिः ।
तथा च ।
“शुक्रादित्यदिने न वारुणदिशं न ज्ञे कुजे
चोत्तरां
मन्देन्दोश्च दिने न शक्रककुभं याम्यां गुरौ न
व्रजेत् ।
शूलानीति विलङ्घ्य यान्ति मनुजा ये वित्त-
लाभाशया

**दिगम्बरी**, स्त्री, (दिगम्बर + ङीष् ।) दुर्गा ।
दिगम्बरस्य पत्नी । इति कुलार्णवः ॥ नग्ने,
त्रि ।
इत्यमरः । ३ । १ । ३९ ॥ (यथा,
कालोध्याने ।
“महामेघप्रभां श्यामां तथा चैव दिगम्बरीम्
॥”)

**दिग्गजः**, पुं, (दिशो गजः ।) दिघस्ती । यथा, --
“ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ।
पुष्पदन्तः सार्व्वभौमः सुप्रतीकश्च
दिग्गजाः ॥”
इत्यमरः । १ । ३ । ४ ॥
एते क्रमेण पूर्ब्बाद्यष्टदिशां हस्तिनः ॥

**दिग्धः**, पुं, (दिह्यते लिप्यते स्म विषादिना इति ।
दिह + क्तः ।) विषाक्तबाणः । तत्पर्यायः ।
लिप्तकः २ । इत्यमरः । २ । ८ । ८८ ॥
(यथा,
रामायणे । २ । ३० । २३ ।
“सा विद्धा बहुभिर्वाक्यै र्दिग्धैरिव गजाङ्गना
॥”)
स्नेहः । अग्निः । इति हेमचन्द्रः ॥ प्रवन्धः ।
इत्यजयपालः ॥

**दिग्धः**, त्रि, (दिह + क्तः ।) लिप्तः । इति मेदिनी ।
धे, ७ ॥ (यथा, भट्टिः । ३ । २१ ।
“सचन्दनोशीरमृणालदिग्धः
शोकाग्निनागाद् द्युनिवासभूयम् ॥”)

**दिग्वासाः**, [स्] पुं, (दिगेव वासो वस्त्रं यस्य ।)
शिवः । इति हेमचन्द्रः । २ । ११२ ॥
(यथा,
महाभारते । १३ । १७ । ४१ ।
“गणकर्त्ता गणपतिर्दिग्वासाः काम एव च
॥”)
नग्ने, त्रि ॥ (यथा, मनुः । ११ । २०२ ।
“स्नात्वातुविप्रोदिग्वासाःप्राणायामेन
शुध्यति ॥”)

**दिग्विजयः**, पुं, (दिशां दिक्स्थितलोकानां विजयः ।)

मितिः २ पृथक्त्वम् ३ संयोगः ४ विभागः ५ ।
इति भाषापरिच्छेदः ॥ (सामान्यम् । यथा, सुश्रुते । १ । ४३ ।
“वमवद्रव्ययोगानां दिगियं सम्प्रकीर्त्तिता ॥”)

**दिक्वः**, पुं, (दिशि कायते शब्दायते इति । कै + कः ।) करभः । इति शब्दरत्नावली ॥

**दिक्वरः**, पुं, (दिशं आदेशं करोति उत्साहान्वितत्वात् । कृ + टः ।) युवा । इति माघटीका-
धृतकोषः ॥ (महादेवः । यथा, कलिकापुराणे ।
८२ अध्वाये ।
“दिक्करस्तरुणः प्रोक्तस्तथा शम्भुश्च दिक्करः ॥”)

**दिक्करवासिनी**, स्त्री, (दिक्करे शम्भौ वसतीति । वस + णिनिः + ङीप् ।) देवीविशेषः । यथा,
“एवं दिक्करवासिन्याः कथितः पूर्ब्बवत् क्रमः ।
यं श्रुत्वा नाशुभं किञ्चिदाप्नोति श्रवणे रतः ॥
दिक्करस्त्वरुणः प्रोक्तस्तथा शम्भुश्च दिक्करः ।
तस्मिन्नध्युषिता देवी तस्माद्दिक्करवासिनी ॥”
इति कालिकापुराणे ८२ अध्यायः ॥

**दिक्करिका**, स्त्री, (दिक्करिणो दिग्गजस्य सकाशात् कायते शोभते इति । दिक्करिन् + कै + कः । ततष्टाप् ।) नदीविशेषः । यथा, --
“अस्ति ताटकशैले तु सरो मानससन्निभम् ।
यत्र सार्द्धं शैलपुत्त्र्या जलक्रीडां सदा हरः ॥
कुरुते नरशार्द्दूल ! स्वर्णपङ्कजशोभिते ।
तस्य पश्चान्मध्यपूर्ब्बभागेभ्यश्च सरित्त्रयम् ॥
भ्रष्टाशाः पुनरापतन्ति यदि ते शक्रेण तुल्या अपि ॥”
इति ज्योतिःसारसंग्रहः ॥
केषाञ्चिन्मते ।
„-- बौधे गुरौ दक्षिणाम् ।
ईशाने ज्वलने चैव नैरृते मारुते तथा ।
न गन्तव्यं सुराचार्य्ये प्रतीच्यां रविशुक्रयोः ॥”
इति सुखबोधः ॥

**दिगम्बरः**, पुं, (दिगेव अम्बरं वस्त्रं यस्य । उलङ्गत्वात् तथात्वम् ।) शिवः । क्षपणः । (स तु जैनविशेषः । यथा, पञ्चदश्याम् । ६ । ८२ ।
“दिगम्बरा मध्वमत्वमाहुरापादमस्तकम् ।
चैतन्यव्याप्तिसंदृष्टेरानखाग्रश्रुतेरपि ॥”)
तमः । इति मेदिनी । रे, २६७ ॥ (नग्ने, त्रि । यथा, पञ्चतन्त्रे । ५ । १४ ।
“एकाकी गृहसन्त्यक्तः पाणिपात्रो दिगम्बरः ।
सोऽपि संवाह्यते लोके तृष्णया पश्य कौतुकम् ॥”)
विद्यया युद्धेन वा दिशां विजयः । यथा शङ्कर-
दिग्विजयः पाण्डवदिग्विजय इत्यादि ॥

**दिङ्कः**, पुं, (स्फोटनकाले दिङ् इति कृत्वा कायति शब्दायते इति । कै + कः ।) उत्कुणडिम्भः ।
इति शब्दार्थकल्पतरुः ॥

**दितं**, त्रि, (दीयते स्मेति । दो अवखण्डने + क्तः “द्यतिस्यतीति ।” ७ । ४ । ४० । इति इत्वम् ।)
छिन्नम् । इत्यमरः । ३ । १ । १०३ ॥

**दितिः**, स्त्री, दैत्यमाता । सा दक्षकन्या (यथा, महाभारते । १ । ६५ । १२ ।
“अदितिर्दितिर्दनुः काला दनायुः सिंहिका तथा ॥”)
इयं कश्यपपत्नी च । (दो + भावे क्तिन् ।) खण्डनम् । इति मेदिनी । ते, २४ ॥ राजविशेषे,
पुं । इति शब्दार्थकल्पतरुः ॥ (दातरि, त्रि । यथा, ऋग्वेदे । ४ । २ । ११ ।
“राये च नः स्वपत्याय देव दितिं च रास्वा-दितिसुरुष्य ॥”
“दितिं दातारं च रास्व देहि ।” इति तद्भाष्ये सायनः ॥)

**दितिजः**, पुं, (दितेर्जायते इति । दिति + लन + डः ।) दैत्यः । इति हेमचन्द्रः । २ । १५२ ॥
(यथा, महाभारते । १ । २३१ । १७ ।
“ऋतस्य कर्त्ता दितिजान्तकस्त्वं
जेता रिपूणां प्रवरः सुराणाम् ॥”)

**दितिसुतः**, पुं, (दितेः सुतः ।) दैत्यः । इत्यमरः । १ । १ । १२ ॥ (यया, नैषधे । १९ । १५ ।
"दितिसुतगुरुः प्राणैर्योक्तुं न किं कचवत्तमः ॥")

**दित्यः**, पुं, (दितौ भवः । दिति + यत् ।) दैत्यः । इति शब्दार्थकल्पतरुः ॥ (छेदनार्हे धान्यादौ, क्ली । यथा, वाजसनेयसंहितायाम् । १४ । १० ।
"दित्यवाड्वयो विराट् छन्दः ॥"
"दोऽवखण्डने क्तिन्प्रत्ययः । दितिं खण्डन-मर्हति दित्यं धान्यं वहति दित्यवाट् ।" इति तद्भाष्ये महीधरः ॥)

**दिद्युत्**, त्रि, (द्योतते दीप्यतीति । द्युत् + "द्युति-गामिजुहोतीनां द्वे च ।" ३ । २ । १७८ । इत्यस्य वार्त्तिकोक्त्या क्विपि द्वित्वे "द्युतिस्वाप्योः सम्प्रसारणम् ।" ७ । ४ । ६७ । इत्यभ्यासस्य सम्पसारणम् ।) दीप्तिविशिष्टः । इति मुग्ध-बोधम् ॥ (स्त्री, दीप्तिः । यथा, ऋवेदे । २ । १३ । ७ ।
"यश्चास्मा अजनो दिद्युतो दिवः ।"
"असमा विषमा नानाप्रकारा दिद्युतः दीप्तीर-जनः अजनयः ।" इति तद्भाष्ये सायनः ॥
वज्रम् । इति निघण्टुः । २ । २० ॥ यथा, ऋग्वेदे । १ । ६६ । ७ ।
"अस्तुर्न दिद्युत्त्वेषप्रतीका ॥")

**दिधिषाय्यः**, पुं, (दधाति आनन्दमिति । धा +

**दिधिषूः**, स्त्री, (दधाति पापं यद्वा दिधिं धैर्य्यं इन्द्रियदौर्ब्बल्यात् स्यति त्यजतीति । दा वा सो + "अन्ददृन्फूजम्ब्विति ।" उणां । १ । ९५ । इति कूप्रत्ययेन साधुः ।) द्विरूढा । वारद्वयविवा-हिता स्त्री । तत्पर्य्यायः । दिधीषूः २ पुनर्भूः ३ दिधिषुः ४ । इति शब्दरत्नावली ॥ विवाहि-हितायां कनिष्ठायां सत्यां अविवाहिता ज्येष्ठा भगिनी । यथा, उद्वाहतत्त्वे ।
"ज्येष्ठायां विद्यमानायां कन्यायामुह्यतेऽनुजा ।
सा चाग्रेदिधिषूर्ज्ञेया पूर्ब्बा च दिधिषूः स्मृता ॥"
(धारके, त्रि । यथा, ऋग्वेदे । १ । ७१ । ३ ।
"दधन्नृतं धनयन्नस्य धीतिमादिदर्य्यो दिधिष्वो विभृत्राः ॥")

**दिधिषूपतिः**, पुं, दिधिषूर्द्विरूढा तस्याः पतिः स्वामी । द्विरूढापतिः । (यथा, मनुः । ३ । १७३ ।
"भ्रातुर्मृतस्य भार्य्यायां योऽनुरज्येत कामतः ।
धर्म्मेणापि नियुक्तायां स ज्ञेयो दिधिषूपतिः ॥")

**दिनं**, क्ली, (द्यति खण्डयति महाकालमिति । दो छेदे + "बहुलमन्यत्रापि ।" उणां २ । ४९ । इति इनच् ।) कालविशेषः । तत्पर्य्यायः । घसः २ अहः ३ दिवसः ४ वासरः ५ । इत्य-मरः । १ । ४ । २ ॥ भास्वरः ६ दिवा ७ । इति राज-निर्घण्टः ॥ वारः ८ अंशकः ९ द्यु १० अंशकम् ११ । इति शब्दरत्नावली ॥ (यथा, रघुः । ३ । ८ ।

"दिनकरपरितापात्क्षीणतोयाः समन्तात्
विदधति भयमुच्चैर्वीक्षमाणा वनान्ताः ॥")

**दिनकरात्मजा**, स्त्री, (दिनकरस्य सूर्य्यस्य आत्मजा ।) यमुना । इति हलायुधः ॥

**दिनकेशरः**, पुं, (दिनस्य केशर इव ।) अन्धकारः । इति शब्दरत्नावली ॥

**दिनज्योतिः**, [स्] क्ली, (दिनस्य ज्योतिः ।) आतपः । इति राजनिर्घण्टः ॥

**दिनदुःखितः**, पुं, स्त्री, (दिने दिवसे दुःखितः । दिवाभागे वियोगित्वात्तथात्वम् ।) चक्रवाकः । इति शब्दरत्नावली ॥

**दिनप्रणीः**, पुं, (दिनं प्रणयतीति । प्र + नी + क्विप् ।) सूर्य्यः । इति त्रिकाण्डशेषः ॥ (अर्क-वृक्षः । सूर्य्यपर्य्यायत्वात् ॥)

**दिनबलः**, पुं, (दिने बलं यस्य ।) पञ्चमषष्ठसप्त-माष्टमैकादशद्वादशराशयः । इति ज्योतिषम् ॥
(सूर्य्यगुरुशुक्रग्रहाः । इति बृहज्जातकम् ॥)

**दिनमणिः**, पुं, (दिनस्य मणिरिव ।) सूर्य्यः । इति त्रिकाण्डशेषः ॥ (यथा, गीतगोविन्दे । १ । १८ ।
"दिनमणिमण्डलमण्डन! भवखण्डन
मुनिजनमानसहंस ! जय जय देव हरे ! ॥"
अर्कवृक्षः । सूर्य्यपर्य्यायत्वात् ॥)

**दिनमूर्द्धा**, [न्] पुं, (दिनस्य मूर्द्धा मस्तकमिव । दिनस्य आदिस्थानत्वादस्य तथात्वम् ।) पूर्व्वाद्रिः । उदयाचलः । इति त्रिकाण्डशेषः ॥

**दिनांशः**, पुं, (दिनस्य अंशः ।) प्राह्णमध्याह्ना-पराह्णसायाह्नादिः । इति राजनिर्घण्टः ॥

"दिधिषाय्यः ।" उणां ३ । ९७ । इति आय्यः
धातोर्द्वित्वं इत्वं षुक् च ।)
आरोपितबन्धुः ॥
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥ (धारके,
त्रि । यथा, ऋग्वेदे । २ । ४ । १ ।
"मित्र इव यो दिधिषाय्यो भूद्देव आदेवे जने
जातवेदाः ॥"
"दिधिषाय्यो धारयिता भूत् ।" इति तद्भाष्ये
सायनः ॥ उज्ज्वलदत्तस्तु "दधिषाय्यः" इति
उणादिसूत्रं कस्त्ययित्वा दधिपूर्ब्बात् स्यतेराय्यः
षत्वञ्च इति व्याख्याय दधिषाय्यो घृतम् इत्युक्त-
वान् ॥)

**दिधिषुः**, पुं, (दिधिं धैर्य्यं स्यतीति । सो + बाहुल-
कात् कुः । यद्वा, दिधिषूं आत्मन इच्छतीति ।
सुप आत्मनः क्यच् । क्विप् ।
बाहुलकात् ह्रस्वः ।)
दिरूढापतिः । इत्यमरः । २ । ६ । २३ ॥ (गर्भा-
धानकर्त्ता । यथा, ऋग्वेदे । १० । १८ । ८ ।
"हस्तग्राभस्य दिधिषोस्तवेदं पत्युर्जनित्वमभि
सं बभूथ ॥"
"दिधिषोर्गर्भस्य निघातुः ।" इति तद्भाष्ये
मायनः ॥ यथा च भागवते । ९ । ९ । ३५ ।
"ब्राजणी वीक्ष्य दिधिषुं पु रुषादेन भक्षितम् ।
शोचन्त्यात्मानमुर्व्वीशमशपत्कुपिता सती ॥"
"दिनेसु गच्छत्सु नितान्तपीवरं
तदीयमालीनमुखं स्तनद्वयम् ॥")
तत्तु मनुष्यमाने षष्टिदण्डात्मकम् । पितृमाने
गौणचान्द्रमासात्मकम् । देवासुरमाने वत्सरा-
त्मकम् । ब्रह्ममाने दिव्यद्विसहस्रयुगात्मकम् ।
मनुष्यमाने ब्रह्मणो दिनस्य संख्या । ८,६४०,०००,
००० । इति पुराणम् ॥ तदेव मनुष्याणां सौर-
सावनचान्द्रनाक्षत्रभेदेन चतुर्व्विधम् । यथा, --
सावनं दण्डाः षष्टिरहः स्वलग्नखगुणांशाढ्या-
स्तदैनं भवेत् । १ ।
उदयादोदयाद्भानोर्भौमसावनवासराः । २ ।
तिथिनैकेन दिवसश्चान्द्रमाने प्रकीर्त्तितः । ३ ।
आयुर्द्दाये स्मृतं प्राज्ञैर्नाक्षत्रं षष्टिनाडिकम् ॥ ४ ॥
जीमूतवाहनमते तु सूर्य्यकिरणावच्छिन्नदतु-
र्यामयुक्तम् ॥

**दिनं**, क्ली, (दो छेदे + इनच् ।) सूर्य्यकिरणा-
वच्छिन्नकालः । तद्वैदिकपर्य्यायः । वस्तोः १
द्युः २ भाबुः ३ वासरम् ४ स्वसराणि ५ घ्रंसः ६
घर्म्मः ७ घृणः ८ दिनम् ९ दिवा १० दिवे-
दिवे ११ द्यविद्यवि १२ । इति द्वादशाहर्नामानि ।
इति वेदनिघण्टौ १ अध्यायः ॥ * ॥ सिंह-
कन्यातुलावृश्चिककुम्भमीनलग्नानि । यथा, --
"अजगोपतियुग्मञ्च कर्किधन्विमृगास्तथा ।
निशासंज्ञाः स्मृताश्चैते शेषाश्चान्ये दिनात्मकाः ॥"
इति ज्योतिस्तत्त्वम् ॥

**दिनकरः**, पुं, (करोतीति । कृ + द्यच् । दिनस्य
करः ।) सूर्य्यः । इति हेमचन्द्रः । २ । ११ ॥
(यथा, ऋतुसंहारे । १ । २२ ।

**दिनादिः**, पुं, (दिनस्य आदिः ।) प्रभातम् । इति
राजनिर्घण्टः ॥

**दिनान्तः**, पुं, (दिनस्य अन्तः ।) सायम् । दिवाव-
सानम् । इत्यमरः । १ । ४ । ३ । (यथा, ऋतु-
संहारे । १ । १ ।
"दिनान्तरम्योऽभ्युपशान्तमन्मथो
निदाघकालः समुपागतः प्रिये ! ॥")

**दिनान्तकः**, पुं, (दिनस्य अन्तकः नाशकः ।) अन्ध-
कारः । इति त्रिकाण्डशेषः ॥

**दिनावसानं**, क्ली, (दिनस्य अवसानं यत्र ।)
दिनान्तः । इति हेमचन्द्रः । २ । ५४ ॥ (यथा,
रघुः । २ । ४५ ।
"दिनावसानोत्सुकबालवत्सा
विसृज्यतां धेनुरियं महर्षेः ॥")

**दिनिका**, स्त्री, (दिनं कृत्यहेतुतया अस्त्यत्रेति ।
दिन + ठन् ।) एकदिनकृतकर्म्ममूल्यम् । इति
शब्दमाला ॥

**दिन्भ**, क ङ संघाते । इति कविकल्पद्रुमः ॥ (चुरां-
आत्मं-सकं-सेट् ।) क ङ, दिम्भयते । सङ्घातो
राशीकरणम् । इति दुर्गादासः ॥

**दिभ**, इ क नोदे । इति कविकल्पद्रुमः ॥ (चुरां-
परं-सकं-सेट् ।) इ क, दिम्भयति । नोदः प्रेर-
णम् । इति दुर्गादासः ॥

**दिम्प**, ञ क संघाते । इति कविकल्पद्रुमः ॥ (चुरां-
उभं-सकं-सेट् ।) ओष्ठ्यवर्गशेषोपधः । तृतीय-

| “दिधिषुं गर्भाधानकर्त्तारम् ।” इति श्रीधरः ॥)<br>दिरूढायाम्, स्त्री । इति शब्दरत्नावली ॥<br>(धारके, त्रि । यथा, ऋग्वेदे । १० । ७८ । ५ ।<br>“अश्वासो न ये ज्येष्ठास आशवो दिधिषवो न<br>रथ्यः सुदानवः ।”<br>“तथा दिधिषवो न वसूनां धारका इव ।”<br>इति तद्भाष्ये सायनः ॥) | | |
|---|---|---|

स्वरी । ञ क, दिम्पयति दिम्पयते । सङ्घातो राशीकरणम् । एषः कैश्चिन्न मन्यते । इति दुर्गादासः ॥

**दिलीपः**, पुं, सूर्य्यवंशीयराजविशेषः । सूर्य्यवंशे दिलीपनामानौ द्वौ नृपौ जातौ एकः अंशुमतः पुत्त्रः भगीरथपिता अपरः दशरथप्रपितामहश्च । इति रामायणम् ॥ (यथा च हरिवंशे । १५ । १२-१४, २३-२५ ।
"सुतः पञ्चजनस्यासीदंशुमान्नाम वीर्य्यवान् ।
दिलीपस्तनयस्तस्य खट्टाङ्ग इति विश्रुतः ॥
येन स्वर्गादिहागत्य मुहूर्त्तं प्राप्य जीवितम् ।
त्रयोऽनुसन्धिता लोका बुद्ध्या सत्येन चानघ ! ॥
दिलीपस्य तु दायादो महाराजो भगीरथः ।
यः स गङ्गां सरिच्छ्रेष्ठामवातारयत प्रभुः ॥"
"अनमित्रस्य धर्म्मात्मा विद्वान् दुलिदुहोऽभवत् ।
दिलीपस्तनयस्तस्य रामस्य प्रपितामहः ॥
दीर्घबाहुर्द्दिलीपस्य रघुर्नाम्नाभवत् सुतः ।
अयोध्यायां महाराजो रघुश्चासीत् महाबलः ॥
अजस्तु रघुतो जज्ञे अजाद्दशरथोऽभवत् ।
रामो दशरथात् जज्ञे धर्म्मात्मां सुमहायशाः ॥")

**दिलीपराट्**, [ज्] पुं, (दिलीप एव राट् राजा ।)

**दिवं**, क्ली, (दीव्यन्त्यस्मिन्निति । दिव्यु क्रीडायाम् + घञर्थे अधिकरणे कः ।) स्वर्गः । (यथा, देवीभागवते । ५ । ३ । १० ।
"गच्छ वीर । महाबाहो दूतत्वं कुरु मेऽनघ ! ।
ब्रूहि शक्रं दिवं गत्वा निःशङ्कः सुरसन्निधौ ॥")
आकाशम् । इति मेदिनी । वे, ११ ॥ वनम् । दिवा । इति हेमचन्द्रः । २ । ५२ ॥

**दिवसः**, पुं, क्ली, दीव्यन्त्यत्रेति । दिव + "दिवः कित् ।" उणां । ३ । १२१ । इति असच् स च कित् ।) दिनम् । इत्यमरः । १ । ४ । २ ॥ (यथा, आर्य्यासप्तशत्याम् । २७८ ।
"द्राघयता दिवसानि त्वदीयविरहेण तीव्रतापेन ।
ग्रीष्मेणेव नलिन्या जीवनमल्पीकृतं तस्याः ॥")

**दिवसकरः**, पुं, (करोतीति । कृ + अच् । दिवसस्य करः ।) सूर्य्यः । इति हेमचन्द्रः । २ । ११ ॥ (यथा, आर्य्यासप्तशत्याम् । ६३९ ।
"सुन्दर सखी दिवसकरविम्बे तुहिनांशरेखेव ॥")

**दिवसमुखं**, क्ली, (दिवसस्य भुखम् ।) प्रभातम् । इति हलायुघः ॥

**दिवस्पतिः**, पुं, (दिवः पतिः । अलुक्समासः ।) इन्द्रः । इत्यमरः । १ । १ । ४५ ॥ (यथा, महाभारते । ५ । १२ । ९ ।
"इन्द्राणीमानयिष्यामो यथेच्छसि दिवस्पते ! ॥")

"दीक्षितो वा दिवाकीर्त्तिः पण्डितो वापपण्डितः ।
तुल्यो मे मोक्षदीक्षायां संप्राप्य मणिकर्णिकाम् ॥")
उलूकः । इति हेमचन्द्रः । ३ । ५९७ ॥

**दिवाटनः**, पुं, (दिवा अटतीति । अट गतौ + ल्युः ।) काकः । इति शब्दार्थकल्पतरुः ॥ (चाण्डालः । "दिघाचरेयुः कार्य्यार्थं चिह्निता राजशासनैः ।" १० । ५४ । इति मनुशासनात् ॥)

**दिवातनः**, त्रि, (दिवा भवः । दिवा + "सायंचिरंप्राह्णेप्रगेव्ययेभ्यष्ट्युट्युलौ तुट् च ।" ४ । ३ । २३ । इति ट्युः तुट् च ।) दिनभवः । यथा, भट्टिः । ५ । ६५ ।
"सायन्तनीं तिथिप्रण्यः पङ्कजानां दिवातनीम् ।
कान्तिं कान्त्या सदातन्या ह्रेपयन्ती शुचिस्मिता ॥"

**दिवान्धः**, पुं, (दिवा दिवसे अन्धः ।) पेचकः । इति त्रिकाण्डशेषः ॥ (यथा, पञ्चतन्त्रे । ३ । ७५ ।
"यत् मयूरहंसकोकिलचक्रवाकशुककारण्डवहारीतकसारसादिषु पक्षिप्रधानेषु विद्यमानेषु तस्य दिवान्धस्य करालवक्त्रस्याभिषेकः क्रियते नैतत् मम मतम् ॥") दिनान्धे, त्रि । यथा, --
"दिवान्धाः प्राणिनः केचिद्रात्रावन्धास्तथापरे ।
केचिद्दिवा तथा रात्रौ प्राणिनस्तुल्यदृष्टयः ॥"
इति चण्डी ॥

**दिवान्धा**, स्त्री, (दिवा दिवसे अन्धा ।) वल्गुला पक्षी । इति राजनिर्घण्टः ॥

**दिवान्धकी**, स्त्री, (दिवा अन्धकी दर्शनक्रियावर्जिता ।) छुछुन्दरी । इति पुराणम् ॥

**दिवाभीतः**, पुं, (दिवा दिवसे भीतः ।) उलूकः । कुमुदाकरः । चौरः । इति मेदिनी । ते, १९७ ॥ (दिवसभीते, त्रि । यथा, कुमारे । १ । १२ ।

दिलीपराजः । इति त्रिकाण्डशेषः ॥

**दिलीरं**, क्ली, शिलीन्ध्रकम् । इति हारावली । २५ ॥

**दिव**, इ प्रीतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) इ, दिन्व्यते । प्रीतिरिह प्रीती-
करणम् । दिन्वति लोकः पितरम् । इति दुर्गा-
दासः ॥

**दिव**, क अर्द्दे । इति कविकल्पद्रुमः ॥ (चुरां-परं-
सकं-सेट् ।) क, देवयति । अर्द्द इह पीडन-
मिति मैत्रेयः । यातनं गमनं वेति रमानाथः ।
इति दुर्गादासः ॥

**दिव**, क ङ परिकूजने । इति कविकल्पद्रुमः ॥
(चुरां-आत्मं-अकं-सेट् ।) क ङ, परिदेवयते
कश्चित्तस्य राष्ट्रे न दुःखितः । इति हलायुधः ।
इति दुर्गादासः ॥

**दिव**, य उ जिगीषेच्छयोः । पणौ । द्युतौ । क्रीडा-
याम् । गतौ । इति कविकल्पद्रुमः ॥ (दिवां-
परं-अकं-सकं-च सेट् । उदित्त्वात् क्त्वावेट् ।)
य, दीव्यति । उ, देवित्वा द्युत्वा । दीव्यमानं
शितान् वाणान् । इति भट्टौ ताच्छील्ये शतुः-
शानः । पणिर्व्यवहारः स्तुतिश्च । व्यवहारस्तु
क्रयविक्रयरूपः । द्युतावेवाकर्म्मकः । क्रीडा-
यान्तु दीव्यतेः करणस्य नित्यं कर्म्मत्वम् । तत्र
तृतीयाविभक्तिरेव विभाष्यते । इति साम्प्र-

**दिवस्पृथिव्यौ**, स्त्री, (द्यौश्च पृथिवी च । “दिवसश्च
पृथिव्याम् ।” ६ । ३ । ३० । इति दिवो दिवसादेशः ।)
रोदसी । स्वर्गभूम्यौ । इति हेमचन्द्रः । ४ । ४ ॥
द्विवचनान्तोऽयम् । (यथा, ऋग्वेदे । २ । २ । ३ ।
“तं देवा बुध्ने रजसः सुदंस संदिवस्पृथिव्यो-
ररतिं न्येरिरे ॥”)

**दिवा**, व्य, दिनम् । इत्यमरः । ३ । ४ । ६ ॥ (यथा,
महाभारते । २ । ११ । ३४ ।
“क्षणा लवा मुहूर्त्ताश्च दिवा रात्रिस्तथैव च ॥”)

**दिवा**, [न्] पुं, (दिव्यत्यस्मिन्निति । दिव + “कनिन्
युवृषीति ।” उणां । १ । १५६ । इति सूत्रे
“बहुलवचनात् केवलादपि कनिन् ।” इति
उज्ज्वलदत्तोक्त्या कनिन् ।) दिनम् । इत्युणादि-
कोषः ॥

**दिवाकरः**, पुं, (दिवा दिनं करोतीति । कृ +
“दिवाविभेति ।” ३ । २ । २१ । इति टः ।)
सूर्य्यः । (यथा, देवीभागवते । २ । ६ । १८ ।
“उदितश्च तदा भानुस्तया दृष्टो दिवाकरः ॥”)
अर्कवृक्षः । इत्यमरः ॥ काकः । पुष्पविशेषः ।
इति शब्दचन्द्रिका ॥

**दिवाकीर्त्तिः**, पुं, (दिवा दिवसे एव कीर्त्तिर्यस्य ।
रात्रौ क्षौरकर्म्मनिषेधात् ।) नापितः । चण्डालः ।
(“रात्रौ न विचरेयुस्ते ग्रामेषु नगरेषु च ।
“दिवाकराद्रक्षति यो गुहासु
लीनं दिवाभीतमिवान्धकारम् ॥”)

**दिवाभीतिः**, स्त्री, (दिवा दिवसे भीतिर्भयं यस्य ।)
पेचकः । इति शब्दरत्नावली ॥

**दिवामणिः**, पुं, (दिवा दिनस्य मणिरिव ।)
सूर्य्यः । इति शब्दरत्नावली ॥

**दिवामध्यं**, क्ली, (दिवा दिवसस्य मध्यम् ।)
मध्याह्नः । इति हेमचन्द्रः । २ । ५३ ॥

**दिवास्वापा**, स्त्री, (दिवा दिवसे स्वापो निद्रा
यस्याः ।) वल्गुला पक्षी । इति राज-
निर्घण्टः ॥

**दिविः**, पुं, (दीव्यतीति । दिव्यु क्रीडायाम् +
“इगुपधात् कित् ।” उणां ४ । ११९ । इति इन्
स च कित् ।) चाषपक्षी । इति शब्दमाला ॥

**दिविजः**, त्रि, (दिवि स्वर्गे जायते इति । दिवि +
जन + डः । “प्रावृट्शरत्कालदिवां जे ।” ६ ।
३ । १५ । इति सप्तम्या अलुक् ।) स्वर्गीयः ।
इति संक्षिप्तसारः ॥

**दिविषत्**, [द्] पुं, (दिवि सीदतीति । सद् +
क्विप् । सप्तम्या अलुक् । षत्वञ्च ।) देवः ।

| | | |
|---|---|---|
| दायिकम् । तेन अक्षा दीव्यन्ते छात्रेण इति<br>कर्म्मणि प्रत्ययः स्यात् । अक्षैर्दीव्यते छात्रे-<br>णेति भावे प्रत्ययो न स्यात् अक्षैर्देवयति छात्रेण<br>गुरुरित्यत्राप्यञ्यन्तस्य कर्त्तुः कर्म्मत्वं न स्यात् ।<br>तेनादुद्यू षयद्रामं मृगेण मृगलोचना । इति<br>भट्टौ तु तेनेतिकरणं दुद्यूषेरेव न तु दीव्यतेः ।<br>तेनाकर्म्मकत्वात् राममित्यञ्यन्तकर्त्तुः कर्म्म-<br>त्वम् । इति दुर्गादासः ॥ | दिवा चरेयुः कार्य्यार्थं चिह्निता राजशासनैः ॥”<br>१० । ५४ । इति मनुवचनात् अस्य दिवाचर-<br>त्वात् तथात्वम् ॥ यथा, मनुः । ५ । ८५ ।<br>“दिवाकीर्त्तिमुदक्याञ्च पतितं सूतिकन्तथा ।<br>शवन्तत् स्पृष्टिनञ्चैव स्पृष्ट्वा स्नानेन शुध्यति ॥”<br>तथाच काशीखण्डे । ७९ । ८७ । | |

इत्यमरः । १ । १ । ८ ॥ (यथा, गीतगोविन्दे । ९ । ११ ।
“सान्द्रानन्दपुरन्दरादिदिविषद्वृन्दैरमन्दादरा-
दानम्रैर्मुकुटेन्द्रनीलमणिभिः सन्दर्शितेन्दी-
वरम् ॥”
स्वर्गवासिनि, त्रि । यथा, अथर्व्ववेदे । १८ । ४ । ८० ।
“स्वधा पितृभ्यो दिविषद्भ्यः ॥”)

**दिविष्ठः**, त्रि, (दिवि स्वर्गे तिष्ठतीति । स्था + कः ।
अलुक् । “अम्बाम्बगोभूमीति ।” ८ । ३ । ९७ ।
इति षत्वम् ।) स्वर्गस्थः । इति संक्षिप्तसारः ॥)
(यथा, महाभारते । ३ । १०० । २४ ।
“ततो हतारिः सगणं सुखं वै
प्रशाधि कृत्स्नं त्रिदिवं दिविष्ठः ॥”
क्वचित् अकृतषत्वोऽपि दृश्यते । यथा, भाग-
वते । ४ । २३ । २२ ।
“नत्वा दिविस्थांस्त्रिदशांस्त्रिः परीत्य
विवेश वह्निं ध्यायती भर्त्तृपादम् ॥”)

**दिवी**, स्त्री, (दिव + इन् । कृदिकारादिति वा
ङीष् ।) उपजिह्विकाकीटः । इति हारा-
वली । १९० ॥

**दिवोकाः**, [स्] पुं, (द्यौः स्वर्ग आकाशो वा
ओको यस्य ।) देवः । चातकः । इति मेदिनी ।
से, ५४ ॥

**दिवोदासः**, पुं, (दिवः स्वर्गात् दासो दानं यस्मै ।)
काशीराजः । स चन्द्रवंशीयभीमरथराजपुत्त्रः ।
इति पद्मपुराणम् ॥
(“अधीत्य चायुषो वेदमिन्द्राद्धन्वन्तरिः पुरा ।
आगत्य पृथिवीं काश्याञ्जातो बाहुजवेश्मनि ॥
नाम्ना तु सोऽभवत् ख्यातो दिवोदास इति
क्षितौ ॥”
“वत्स ! वाराणसीं गच्छत्वं विश्वेश्वरवल्लभाम् ॥
तत्र नाम्ना दिवोदासः काशिराजोऽस्ति
बाहुजः ।
स हि धन्वन्तरिः साक्षादायुर्व्वेदविदांवरः ॥”
“अथ धन्वन्तरिं सर्व्वे वानप्रस्थाश्रमे स्थितम् ।
भगवन्तं सुरश्रेष्ठं मुनिभिर्बहुभिः स्तुतम् ॥
चातकः । इति मेदिनी । से, ५४ ॥
स्वर्ग-
वासिनि, त्रि । यथा, महाभारते । १ । ९६ । ९ ।
“सा तु विध्वस्तवपुषः
कश्मलाभिहतान्नृप ! ।
ददर्श पथि गच्छन्ती वसून् देवान्
दिवौकसः ॥”)

**दिव्यं**, क्ली, (दिवे वने भवम् । दिव + यत् ।)
लवङ्गम् । इति मेदिनी । ये, ३१ ॥
हरिचन्द-
नम् । इति राजनिर्घण्टः ॥ शपथः ।
तद्भेदा
यथा, दिव्यतत्त्वे बृहस्पतिः ।
“धटोऽग्निरुदकञ्चैव विषं कोषश्च
पञ्चमम् ।
षष्ठञ्च तण्डुलाः प्रोक्ताः सप्तमं
सप्तमाषकम् ॥
अष्टमं फलमित्युक्तं नवमं धर्म्मजं
स्मृतम् ।
दिव्यान्येतानि सर्व्वाणि निर्द्दिष्टानि
स्वयम्भुवा ॥”
एषां विवरणं तत्तच्छब्दे केषाञ्चित्
परीक्षाशब्दे
च द्रष्टव्यम् ॥ * ॥
गङ्गाजलस्पर्शपूर्ब्बकशपथस्त्त्र
मिथ्याकथने दोषश्च यथा, --
“ब्रह्मणो वचनं श्रुत्वा ज्ञानेशो
ज्ञानिनांवरः ।
गङ्गातोयं करे कृत्वा स्वीकारञ्च
चकार सः ॥
गङ्गातोयमुपस्पृश्य मिथ्या यदि
वदेज्जनः ।
स याति कालसूत्रञ्च यावद्वै ब्रह्मणो
वयः ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥ * ॥
गङ्गाजलादिस्पर्शपूर्ब्बकशपथे दोषो
यथा ।
भेदात् जातिभेदेन भेदस्वीकारे
अनन्तनायिका-
नामिव नायकानामप्यानन्त्यं स्यात् ।
तथा हि
इन्द्रादयो दिव्याः । अदिव्या
माधवादयः ।
दिव्यादिव्या अर्ज्जुनादयः ।” इति
रसमञ्जरी ॥
(सात्वतस्य पुत्त्राणामन्यतमः । यथा,
भागवते ।
९ । २४ । ६ ।
“भजमानो भजिर्द्दिव्यो
वृष्टिर्देवावृधोऽन्धकः ।
सात्वतस्य सुताः सप्त महाभोजश्च
मारिष ! ॥”)

**दिव्यकुण्डं**, क्ली, (दिव्यं पुण्यप्रदत्वादत्युत्कृष्टं कुण्ड-
मिति कर्म्मधारयः ।) कामरूपे
क्षोभकशैल-
पूर्ब्बभागस्थपुष्करिणीविशेषः । यथा, --
“तद्दक्षिणे महाशैलः क्षोभको नाम
नामतः ।
तस्मिन् गिरौ शिलापृष्ठे वक्त्रे देवी
व्यवस्थिता ॥
पञ्चपुष्करिणी नाम्ना
पञ्चयोनिस्वरूपिणी ।
एकत्र पञ्चभिर्दुर्गायोनिभिः पञ्चवक्त्रकम्
॥
स्थिता रमयितुं तत्र नित्यमेव
हिमाद्रिजा ।
तच्छैलपूर्ब्बभागात्तु कान्ता नाम
महानदी ॥
दक्षिणं सागरं याति प्रथमा चोत्तरस्रवा ।
दिव्यकुण्डं महाकुण्डं तच्छैलोपत्यकां
गता ।
संस्थितस्तत्र स्नात्वा तु तां देवीं
परिपूजयेत् ।
दिव्यकुण्डे नरः स्नात्वा पञ्चपुष्करिणीं
शिवाम् ॥

काशिराजं दिवोदासं तेऽपश्यन् विनयान्विताः ।
स्वागतञ्च इति स्माह दिवोदासो यशोधनः ॥
कुशलं परिपप्रच्छ तथागमनकारणम् ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
“अथ खलु भगवन्तममरवरमृषिगणवरिवृत-
माश्रमस्थं काशिराजं दिवोदासं धन्वन्तरि-
मौपधेनववैतरणौरभ्रपौष्कलावतकरवीर्य्यगोपुर-
रक्षितसुश्रुतप्रभृतय ऊचुः ।”
इति सुश्रुते सूत्रस्थाने प्रथमेऽध्याये ॥)

**दिवोद्भवा**, स्त्री, (दिवे वने उद्भवो यस्याः ।)

एला । इति शब्दार्थकल्पतरुः ॥ (दिवे स्वर्गे
उद्भवो यस्य ।) दिविजाते, त्रि ॥

**दिवौकाः**, [स्] पुं, (दिवं स्वर्गं आकाशो वा

ओको यस्य ।) देवः । इत्यमरः । १ । १ । ७ ॥
(यथा, महाभारते । ३ । ८४ । १११ ।
“दिवौकसां पुष्करिणीं समासाद्य नराधिप ! ।
न दुर्गतिमवाप्नोति वाजिमेधञ्च विन्दति ॥”)

“तथा गङ्गोदकं ताम्रं गोमयं
गोरजस्तथा ।
सत्यं वा यदि वासत्यं यदि दिव्यं
करोति यः ॥
कर्त्ता च रौरवं याति तथा कारयिता
प्रिये ! ।
उभयोः पुनरावृत्तिर्न्नरयोनिषु नास्ति
वै ॥
तस्यास्ति
पुनरावृत्तिर्व्याघ्रशूकरयोनिषु।
दिव्यं कर्त्तुः कारयितुर्जपपूजा वृथा
यथा ॥
गायत्रीरहितस्यापि
नरकञ्चोत्तरोत्तरम् ॥”
इति गायत्रीतन्त्रे पञ्चमपटलः ॥

**दिव्यः**, त्रि, (दिवि भवः । यत् ।) मनोज्ञः । दिवि

भवः । इति मेदिनी । ये, ३१ ॥
(यथा, विष्णु-
पुराणे । १ । ९ । १०४ ।
“दिव्यमालाम्बरधरा स्नाता
भूषणभूषिता ।
पश्यतां सर्व्वदेवानां ययौ वक्षःस्यलं
हरेः ॥”)

**दिव्यः**, पुं, (दिवे वने भवः । दिव + यत् ।) यवः ।

गुग्गुलुः । इति राजनिर्घण्टः ॥
भावविशेषः ।
यथा, --
“शृणु भावत्रयं देवि !
दिव्यवीरपशुक्रमात्।
दिव्यस्तु देववत् प्रायो
वीरश्चोद्धतमानसः ॥
सत्यत्रेतार्द्धपर्य्यन्तं
दिव्यभावविनिर्णयः ।
त्रेताद्वापरपर्य्यन्तं वीरभाव इतीरितम्
॥
मद्यं मत्स्यं तथा मांसं मुद्रां मैथुनमेव
च ।
श्मशानसाधनं भद्रे ! चितासाधनमेव
च ॥

यः पूजयेन्महाभागः स योनौ न हि
जायते ॥”
इति कालिकापुराणे ८१ अध्यायः ॥

**दिव्यगन्धं**, क्ली, (दिव्यो मनोहरो गन्धोऽस्य ।)

लवङ्गम् । इति राजनिर्घण्टः ॥
(लवङ्गशब्देऽस्य-
विवरणं ज्ञातव्यम् ॥)

**दिव्यगन्धः**, पुं, (दिव्यः गन्धो यस्य ।) गन्धकः ।

इति राजनिर्घण्टः ॥ (गन्धकशब्देऽस्य
विवृति-
र्विज्ञेया ॥)

**दिव्यगन्धा**, स्त्री, (दिव्यो गन्धोऽस्याः ।) स्थूलैला ।

महाचञ्चशाकः । इति राजनिर्घण्टः ॥

**दिव्यगायनः**, पुं, (दिव्यः स्वर्गीयः गायनः ।)

गन्धर्व्वः । स्वर्गगायकः । इति
शब्दरत्नावली ॥

**दिव्यचक्षुः**, [स्] त्रि, (दिव्यमलौकिकं चक्षुर्यस्य ।)

ज्ञानचक्षुः । यथा, नीलकण्ठस्तोत्रे ।
“नमस्तुभ्यं विरूपाक्ष ! नमस्ते
दिव्यचक्षुषे ।”
क्ली, ज्ञानात्मकचक्षुः । यथा, --
“न तु मां शक्यते द्रष्टुमनेनैव स्वचक्षुषा
।
दिव्यं ददामि ते चक्षुः पश्य मे
योगमैश्वरम् ॥”
इति श्रीभगवद्गीतायाम् । ११ । ८ ॥
“अतो
दिव्यमलौकिकं ज्ञानात्मकं चक्षुस्तुभ्यं
ददामि ।”
इति तट्टीकायां श्रीधरस्वामी ॥ * ॥
(दिव्यं
स्वर्गीयं मनोज्ञं वा चक्षुः ।) स्वर्गीयचक्षुः
।
सुन्दरलोचनम् । उपचक्षुः । चस्मा इति
भाषा । इति लोकप्रसिद्धम् ॥ (पुं, दिव्यं
मनोज्ञं

| | | |
|---|---|---|
| | एतत्ते कथितं सर्व्वं दिव्यवीरमतं प्रिये ! । दिव्यवीरमतं नास्ति कलिकाले सुलोचने ! ॥” इति कालीविलासतन्त्रम् ॥ नायकभेदः । यथा, -- “यत्तु तासां दिव्या अदिव्या दिव्यादिव्याभेदेन गणनया द्विपञ्चाशदधिकशतयुक्तसहस्रं भेदा भवन्ति । दिव्या इन्द्राण्यादयः । अदिव्या मालत्यादयः । दिव्यादिव्या द्रौपद्यादय इति वदन्ति तन्न तत्र अवस्थाभेदेनैव नायिकानां | चक्षुर्यस्य । यद्वा, दिव्यं चक्षुर्ज्ञाननेत्रं यस्मात् । ऊर्णनाभस्य सूत्रसर्ज्जनग्रहणमवलोक्येश्वरस्य सर्ज्जनसं हरणपरिज्ञानात् तथात्वम् ।) मर्कटः । इति शब्दमाला ॥ सुगन्धभेदः । त्रि, (दिव्ये आकाशभूते चक्षुषा यस्य ।) अन्धः । (दिव्ये सुन्दर चक्षुषी यस्य ।) सुलोचनः । इति मेदिनी । से, ६८ ॥ |

**दिव्यतेजाः**, [स्] स्त्री, (दिव्यं स्वर्गीयं देवतुल्यं
तेजो यस्याः । अस्याः सेवनेन दिव्यतेजोवत्तेज-
आधायकत्वात् तथात्वम् ।) ब्राह्मी । इति राज-
निर्घण्टः ॥ (दिव्यं तेजोयस्य । अलौकिकतेजस्के,
त्रि ॥)

**दिव्यदोहदं**, त्रि, (दिव्यं स्वर्गीयं दोहदम् अभि-
लाषो यत्र ।) उपयाचितम् । देवदेयवस्तु ।
इति त्रिकाण्डशेषः ॥ यथा, हारावली । २१ ॥
"यद्दीयते तु देवेभ्यो मनोराज्यस्य सिद्धये ।
उपयाचितकं दिव्यदोहदं तद्विदुर्बुधाः ॥

**दिव्यपञ्चामृतं**, क्ली, (पञ्चानां अमृतानां तत्तुल्य-
स्वादुगुणवद्द्रव्यानां समाहारः पञ्चामृतम् ।
दिव्यं पञ्चामृतमिति कर्म्मधारयः ।) मिलित-
गव्याज्यगव्यदधिगव्यक्षीरमाक्षिकशर्क्करारूपम् ।
इति राजनिर्घण्टः ॥

**दिव्यपुष्पः**, पुं, (दिव्यं मनोरमं पुष्पं यस्य ।) कर-
वीरः । इति राजनिर्घण्टः ॥

**दिव्यपुष्पा**, स्त्री, (दिव्यानि मनोज्ञानि पुष्पा-
ण्यस्याः ।) महाद्रोणा । इति राजनिर्घण्टः ॥

**दिव्यपुष्पिका**, स्त्री, (दिव्यपुष्प + संज्ञायां कन् टाप्
अत इत्वञ्च ।) लोहितवर्णार्क्कवृक्षः । इति
रत्नमाला ॥

**दिव्ययमुना**, स्त्री, (दिव्या यमुना तत्तुल्यफल-
प्रदत्वात् ।) कामरूपे दमनिकाया नद्याः पूर्ब्ब-
भागस्थसरिद्विशेषः । यथा, --
"तस्या नद्याः पूर्ब्बभागे गङ्गेव फलदायिनी ।
माघन्तु सकलं मासं तस्यां स्नात्वा नरोत्तमः ॥
तथा दमनिकायाञ्च परं निर्व्वाणमाप्नुयात् ।
ततः पूर्ब्बे परा देवी नाम्ना सा सरिदुत्तमा ॥
महती दिव्ययमुना यमुनावत् फलप्रदा ।
दक्षिणाद्रिसमुद्भूता दक्षिणोदधिगामिनी ॥
तस्थान्तु कार्त्तिकं मासं स्नात्वा मोक्षमवाप्नु-
यात् ॥"
इति कालिकापुराणे ८१ अध्यायः ॥

**दिव्यरत्नं**, क्ली, (दिव्यं चिन्तामात्रं तदर्थप्रदायक-

**दिव्या**, स्त्री, (दिवि भवा । मनोज्ञत्वगुणवत्त्वात्
दिव्येवेत्यर्थः ।) धात्री । इति मेदिनी ।
ये,
३१ ॥ बन्ध्या कर्कोटकी । शतावरी ।
महामेदा ।
ब्राह्मी । स्यूलजीरकः । श्वेतदूर्व्वा ।
हरीतकी ।
पुरा । इति राजनिर्घण्टः ॥

**दिव्या**, स्त्री, (दिवि भवा । यत् । ततष्टाप् ।)
नायिकाभेदः ॥ (सा च इन्द्राण्यादिः ॥)

**दिव्यादिव्यः**, पुं, (दिव्यः स्वर्गीयः अदिव्यश्च ।)
नायकभेदः ॥ (स च अर्ज्जुनादिः ॥)

**दिव्यादिव्या**, स्त्री, (दिव्या अदिव्या च ।)
नायिकाभेदः । अस्याः प्रमाणं
दिव्यशब्दे
द्रष्टव्यम् ॥ उपदेवीविशेषः । इति
शब्दार्थ-
कल्पतरुः ॥

**दिव्योदकं**, क्ली, (दिव्यमान्तरीक्ष्यमुदकम् ।)
आकाशजलम् । तत्पर्य्यायः । खवारि
२ आकाश-
सलिलम् ३ व्योमोदकम् ४
अन्तरीक्षजलम् ५ ।
अस्य गुणाः । त्रिदोषनाशित्वम् ।
मधुरत्वम् ।
पथ्यदत्वम् । परमरुच्यत्वम् ।
अग्निदत्वम् ।
तृष्णाश्रममेहापहारकत्वम् ।
पात्रापेक्षिगुण-
त्वञ्च ॥ अनार्त्तवस्य तस्य गुणः ।
सर्व्वेषां देहिनां
त्रिदोषजनकत्वम् । सद्योभूमिष्ठस्य
तस्य गुणः ।
कलुषत्वम् । दोषदायकत्वञ्च ।
चिरस्थितस्य

नेकार्थत्वादोच इह दानमाज्ञापनं वा
। दिदेश
कौत्साय समस्तमेवेति रघुः ।
कथनेऽप्ययम् ।
धर्म्मं दिशति देशिकः । इति
दुर्गादासः ॥

**दिशा**, स्त्री, (दिश् + टाप् ।) दिक् । इति
व्याकर-
णम् ॥ (यथा महाभारते । ४ । ५३
। १९ ।
"अत्र मध्ये यथार्कस्य
रश्मयस्तिग्मतेजसः ।
दिशासु च तथा राजन् ! न
संख्याताः शरा-
स्तदा ॥")

**दिशाः**, [स्] स्त्री, (दिशतीति । दिश + बाहु-
लकात् कसुन् ।) दिक् ।
इत्यमरटीकायां
मथुरानाथः ॥

**दिश्यं**, त्रि, (दिशि भवमिति । दिश् +
"दिगादिभ्यो
यत्" । ४ । ३ । ५४ । इति यत् ।)
दिग्भववस्तु ।
इत्यमरः । १ । ३ । २ ॥

**दिष्टं**, क्ली, (दिशति इष्टानिष्टफलं ददातीति ।
दिश + "क्तिच्क्तौ च संज्ञायाम् ।" ३
। ३ । १७४ ।
इति क्तः ।) भाग्यम् । इत्यमरः । १
। ४ । २८ ॥
(यथा, महाभारते । १४ । ५३ ।
१६ ।
"ततस्ते निघनं प्राप्ताः सर्व्वे
ससुतबान्धवाः ।
न दिष्टमत्यतिक्रान्तुं शक्यं बुद्ध्या
बलेन वा ॥"
दिश + कर्म्मणि क्तः ।) उपदिष्टे, त्रि
। इति

त्वादलौकिकं रत्नम् ।) चिन्तामणिः । इति शब्दार्थकल्पतरुः ॥

**दिव्यरथः**, पुं, (दिव्यः स्वर्गीयः अन्तरीक्षचरो वा रथः ।) व्योमयानम् । देवविमानः । इति शब्दरत्नावली ॥

**दिव्यरसः**, पुं, (दिव्यो रस इति नित्यकर्म्मधारयः ।) पारदः । इति राजनिर्घण्टः ॥

**दिव्यलता**, स्त्री, (दिव्या वनभवा लता ।) मूर्व्वा-लता । इति राजनिर्घण्टः ॥

**दिव्यवस्त्रः**, पुं, (दिव्यं वस्त्रमिव । अभिधानात् पुंस्त्वम् ।) सूर्य्यशोभा । इति शब्दरत्नावली ॥ (दिव्यं सुन्दरं वस्त्रमस्य ।) सुन्दरवस्त्रयुक्ते, त्रि । (दिव्यं सुन्दरं वस्त्रम् ।) क्ली, सुन्दर-वस्त्रम् । (दिविं भवम् । यत् । दिव्यं वस्त्रमिति कर्म्मधारयः ।) दिविभववस्त्रम् ॥

**दिव्यसारः**, पुं, (दिव्यो मनोज्ञः सारो यस्य ।) शालवृक्षः । इति राजनिर्घण्टः ॥

गुणाः । लघुत्वम् । स्वच्छत्वम् । पथ्यत्वम् । स्वादुत्वम् । सुखावहत्वञ्च । इति राजनिर्घण्टः ॥

**दिव्योपपादुकः**, त्रि, (दिवि भवः । दिव + "द्युप्रागपागुदक्प्रतीचोयत् ।" ४ । २ । १०१ । इति यत् । उपपद्यते इति । उप + पद + "लष-पतपदस्थेति ।" ३ । २ । १५४ । इति उकञ् । ततो दिव्यश्चासौ उपपादुकश्चेति ।) देवता । इत्य-मरः । ३ । १ । ५० ॥ ("मातृपित्रादिदृष्टकारण-निरपेक्षा अदृष्टसहकृतेभ्यो जाता ये देवास्ते दिव्योपपादुका उच्यन्ते ।" इति शब्दार्थ-चिन्तामणिः ॥)

**दिव्यौघः**, पुं, (दिव्यानां स्वर्गीयगुणानामोघः समूहो यत्र ।) गुरुविशेषः । यथा, शक्तिरत्नाकरतन्त्रे ।

"महादेवो महाकालस्त्रिपुरश्चैव भैरवः ।
दिव्यौघा गुरवः प्रोक्ताः सिद्धौघान् कथयामि ते ॥"

अपि च ।

"अथ तारागुरून् वक्ष्ये दृष्टादृष्टफलप्रदान् ।
ऊर्द्धकेशो व्योमकेशो नीलकण्ठो वृषध्वजः ॥
दिव्यौघान् सिद्धिदान् वत्स ! शृणुष्वावहितो मुदा ॥"

अपिच ।

"शृणु वत्स ! महादेव ! गुरून् दुर्गामिनूद्भवान् ।
परमात्मा परानन्दः परमेष्ठी शुभोदयः ॥

त्रिकाण्डशेषः ॥ (कथिते च । यथा, भट्टौ । २ । ३२ ।

"गाधेयदिष्टं विरसं रसन्तं रामोऽपि मायाचनमस्त्रचुञ्चुः ॥")

**दिष्ठः**, पुं, (दिशतीति । दिश + संज्ञायां क्तः ।) कालः । इत्यमरः । १ । ४ । १ ॥ (वैवस्वतमनोः पुत्त्रविशेषः । यथा, भागवते । ८ । १३ । २ ।

"नरिष्यन्तोऽथ नाभागः सप्तमो दिष्टौच्यते ॥")

दारुहरिद्रा । इति शब्दमाला ॥

**दिष्टान्तः**, पुं, (दिष्टस्य भाग्यस्य अन्तो यत्र ।) मरणम् । इत्यमरः । २ । ८ । ११६ ॥ (यथा, महा-भारते । १ । ५८ । २७ ।

"मोक्षयित्वा तु भुजगान् सर्पसत्राद्द्विजोत्तमः ।
जगाम काले धर्म्मात्मा दिष्टान्तं पुत्त्रपौत्त्रवान् ॥")

**दिष्टिः**, स्त्री, (दिश + क्तिन् संज्ञायां क्तिच् वा ।) हर्षः । परिमाणम् । इति मेदिनी । टे, १८ ॥

**दिष्ट्या**, व्य, (दिशतीति सम्पदादित्वात् भावे क्विप् दिशम् । देशनं स्त्यायति । स्त्यै + क्विप् । ष्टुत्वम् । संज्ञापूर्ब्बकत्वात् जश्त्वं न । यद्वा, दिशतीति । दिश + "अघ्न्यादिभ्यश्चेति ।" यक्प्रत्ययेन साधुः ।) आनन्दः । इत्यमरः । ३ । ४ । १० ॥ भाग्येन । यथा, --

"दिष्ट्याम्ब ! ते कुक्षिगतः परः पुमान् ॥"

इति श्रीभागवतम् ॥

**दिष्णुः**, त्रि, (ददातीति । दा + बाहुलकात् गिष्णु ।)

| | | |
|---|---|---|
| | कृष्णः कालः कलानाथो दिव्यौघा भैरवा- दिकाः ॥”<br>इति तन्त्रसारः ॥<br><br>**दिश**, औ ञ श ओचे । इति कविकल्पद्रुमः ॥<br><br>(तुदां-उभं-सकं-अनिट् ।) औ, अदिक्षत् ।<br>ञ श, दिशति दिशते । ओच इति उचिर्य्य<br>समवायने इत्यस्य अलि रूपम् । धातूनाम- | दाता । इत्युणादिकोषः ॥<br><br>**दिह**, ल ञ औ लिपि । इति कविकल्पद्रुमः ॥<br><br>(अदां-उभं-अकं-सकं च-अनिट् ।) दिह उप-<br>चये इति प्राञ्चः । उपचयो वृद्धिस्तत्करणञ्च ।<br>ल ञ, देग्धि दिग्धे देहः प्रतिदिनमुपचितः<br>स्यादित्यर्थः । देग्धि सौधं सुधया लेपकः ।<br>उपचितं करोतीत्यर्थः । औ, अधिक्षत् इति<br>दुर्गादासः ॥ |

**दी**, ओ ङ य क्षये । इति कविकल्पद्रुमः ॥ (दिवां-
आत्मं-अकं-सेट् ।) ओ, दीनः । ङ
य, दीयते ।
इति दुर्गादासः ॥

**दीक्ष**, ङ मौण्ड्ये । इज्यायाम् । ह्योऽर्थे । इति कवि-
कल्पद्रुमः ॥ (भ्वां-आत्मं-अकं-
ह्योऽर्थे अकं-सकं
च-सेट् ।) मौण्ड्यं
मुण्डितमस्तकीभावः । इज्या
यजनम् । ह्योऽर्थो
नियमव्रतादेशोपनीतयः ।
ङ, दीक्षते वटुर्मुण्डितमस्तकः
स्यादित्यर्थः ।
दीक्षते जनो यजतीत्यर्थः । दीक्षते
याज्ञिको
नियमी स्यादित्यर्थः । दीक्षते
पण्डितो जनं
व्रतमुपदिशतीत्यर्थः । दीक्षते पुत्त्रं
विप्रः उप-
नयतीत्यर्थः । इति दुर्गादासः ॥

**दीक्षणीयेष्टिः**, स्त्री, (दीक्षणीया इष्टिः ।) यज्ञ-
विशेषः । तत्पर्य्यायः । सौमिको २
। इति
हेमचन्द्रः । ३ । ४८७ ॥

**दीक्षा**, स्त्री, (दीक्ष + भावे अ । स्त्रियां टाप् ।)
यजनम् । पूजनम् । इत्यजयपालः
॥ व्रतसंग्रहः ।
इति हेमचन्द्रः । ३ । ४८७ ॥
गुरुमुखात् स्वेष्टदेव-
मन्त्रग्रहणम् । (एतन्निरुक्तिर्यथा,
गौतमीय-
तन्त्रे । ७ । २ ।
"ददाति दिव्यतां तावत् क्षिणुयात्
पापसन्ततिः ।
तेन दीक्षेति विख्याता
मुनिभिस्तन्त्रपारगैः ॥")

पितुरित्युपलक्षणम् । मातामहादीनामपि ।
प्रायश्चित्तन्तु अयुतसावित्रीजपः । सर्व्वत्र
तथा
दर्शनात् । तथा च शङ्खः ।
"दशसाहस्रजप्तेन सर्व्वकल्मषनाशिनी ।"
श्रीक्रमेऽपि ।
"मनुर्विमृष्य दातव्यो ज्येष्ठपुत्त्राय धीमते ॥"
मत्स्यसूक्ते ।
निर्व्वीर्य्यञ्च पितुर्म्मन्त्रं शैवे शाक्ते न दुष्यति
॥"
इति कौलिकमन्त्रदीक्षापरम् । योगिनीतन्त्रे
शक्त्यादिविद्यामधिकृत्य दीक्षानिषेधात् ।
यद्वा
शाक्ते तारादिविद्यायां मत्स्यसूक्ते तथा प्रति-
पादनात् । तथा च ।
"कृतसुकृतसहस्रानेकजन्मप्रभावै-
र्भवति यदि मनुष्यो गुर्व्वधीनश्चिराय ।
कथमपि मनुमेनं प्राप्य शिष्यः परस्मै
निजकुलतिलकाय ज्येष्ठपुत्त्राय दद्यात् ॥"
इति ॥
महातीर्थे उपरागे सति सर्व्वत्र न दोषः । तथा
च विष्णुमन्त्रमधिकृत्य ।
"साधु पृष्टं त्वया ब्रह्मन् ! वक्ष्यामि सकलं तव
।
ब्रह्मणा कथितं पूर्ब्बं वशिष्ठाय महात्मने ॥
वशिष्ठोऽपि स्वपौत्त्राय मत्पित्रे दत्तवान्
स्वयम् ।
प्रसन्नहृदयः स्वच्छः पिता मे करुणानिधिः ॥
कुरुक्षेत्रे महातीर्थे सूर्य्यपर्व्वणि दत्तवान् ॥"
इत्यादि वैशम्पायनसंहितायां शौनकं प्रति
व्यासवाक्यम् ॥ * ॥ योगिनीतन्त्रे ।
"निर्व्वीर्य्यञ्च पितुर्म्मन्त्रं तथा मातामहस्य च ।
स्वप्नलब्धं स्त्रिया दत्तं संस्कारेणैव शुध्यति
॥"
यत्तु ।
"साध्वी चैव सदाचारा गुरुभक्ता जितेन्द्रिया
।
सर्व्वमन्त्रार्थतत्त्वज्ञा सुशीला पूजने रता ॥
गुरुयोग्या भवेत् सा हि विधवापरिवर्ज्जिता ।

गौडाः शाल्वोद्भवाः सौरा मागधाः केरला-
स्तथा ।
कोषलाश्च दशार्णाश्च गुरवः सप्त मध्यमाः ॥
कर्णाटनर्म्मदारेवाकच्छातीरोद्भवास्तथा ।
कालिङ्गाश्च कलम्बाश्च काम्बोजाश्चाधमा
मताः ॥" * ॥
तथा ।
"वैष्णवे वैष्णवो ग्राह्यः शैवे शैवश्च शाक्तिके ।
शैवः शाक्तोऽपि सर्व्वत्र दीक्षास्वामी न संशयः
॥"
दीक्षां विना जपस्य दुष्टत्वात् प्रथमं सा
निरूप्यते ।
"दिव्यं ज्ञानं यतो दद्यात् कुर्य्यात् पापस्य
सङ्-
क्षयम् ।
तस्माद्दीक्षेति सा प्रोक्ता मुनिभिस्तन्त्रवेदिभिः
॥"
मन्त्रलक्षणमाह । पिङ्गलामते ।
"मननं विश्वविज्ञानं त्राणं संसारबन्धनात् ।
यतः करोति संसिद्ध्यै मन्त्र इत्यच्यते ततः
॥"
अन्यच्च ।
"मननात्त्रायते यस्मात्तस्मान्मन्त्रः प्रकीर्त्तितः
॥"
सर्व्वाश्रमेषु दीक्षाया आवश्यकत्वम् । तथा च
।
"दीक्षामूलं जपं सर्व्वं दीक्षामूलं परं तपः ।
दीक्षामाश्रित्य निवसेत् यत्र कुत्राश्रमे वसन् ॥
अदीक्षिता ये कुर्व्वन्ति जपपूजादिकाः क्रियाः
।
न भवन्ति प्रिये ! तेषां शिलायामुप्तबीजवत् ॥
देवि ! दीक्षाविहीनस्य न सिद्धिर्न च सद्गतिः
।
तस्मात् सर्व्वप्रयत्नेन गुरुणा दीक्षितो भवेत् ॥
अदीक्षितोऽपि मरणे रौरवं नरकं व्रजेत् ।
तस्माद्दीक्षां प्रयत्नेन सदा कुर्य्याच्च
तान्त्रिकात् ॥
ग्रन्थे दृष्ट्वा तु मन्त्रं वै यो गृह्णाति नराधमः ।
मन्वन्तरसहस्रेषु निष्कृतिर्नैव जायते ॥

यथाच, --
“दीयते ज्ञानमत्यन्तं क्षीयते
पापसञ्चयः ।
तस्माद्दीक्षेति सा प्रोक्ता
मुनिभिस्तत्त्वदर्शिभिः ॥
दिव्यं ज्ञानं यतो दद्यात् कुर्य्यात्
पापस्य संक्षयम् ।
तस्माद्दीक्षेति सा प्रोक्ता
मुनिभिस्तन्त्रवेदिभिः ॥
उच्यते प्रथमं तत्र लक्षणं
गुरुशिष्ययोः ॥”
इत्यत्र गुरुशिष्ययोर्लक्षणं तत्तच्छब्दे
द्रष्टव्यम् ॥
योगिनीतन्त्रे ।
“पितुर्म्मन्त्रं न गृह्णीयात् तथा
मातामहस्य च ।
सोदरस्य कनिष्ठस्य
वैरिपक्षाश्रितस्य च ॥”
रुद्रयामले ।
“न पत्नीं दीक्षयेद्भर्त्ता न पिता
दीक्षयेत् सुताम् ।
न पुत्त्रञ्च तथा भ्राता भ्रातरं न च
दीक्षयेत् ॥
सिद्धमन्त्रो यदि पतिस्तदा पत्नीं स
दीक्षयेत् ।
शक्तित्वेन वरारोहे ! न च सा
कन्यका भवेत् ॥”
तथा गणेशविमर्षिण्याम् ।
“यतेर्दीक्षा पितुर्दीक्षा दीक्षा च
वनवासिनः ।
विविक्त्राश्रमिणां दीक्षा न सा
कल्याणदायिका ॥”
इत्यादिनिषेधवचनादेभ्यो मन्त्रं न
गृह्णीयादि-
त्यर्थः । इति तु सिद्धेतरविषयम् ।
सिद्धमन्त्रो न
दुष्यतीति वचनात् ॥ * ॥
शक्तियामले ।
“तीर्थाचारव्रतो मन्त्री ज्ञानवान्
सुसमाहितः ।
स्त्रिया दीक्षा शुभा प्रोक्ता मातुश्चाष्टगुणा
स्मृता ॥”
इदन्तु गुरोरुपासितमन्त्रपरम् । तथा च
भैरवी-
तन्त्रे ।
“स्वीयमन्त्रोपदेशे तु न कुर्य्याद्गुरुचिन्तनम्
।”
मातुरित्युपासितेऽष्टगुणं अनुपासिते
शुभफलद-
मित्यर्थः । सिद्धमन्त्रविषयं वा । वस्तुतस्तु
योगिनी-
तन्त्रे स्त्रीपदं विधवापरम् ।
एकवाक्यताबलात् ॥
दीक्षायां विधवादीनामधिकारं विशेषयति
कुलार्णवे ।
“विधवायाः सुतादेशात् कन्यायाः
पितुराज्ञया ।
नाधिकारः स्वतो नार्य्या भार्य्याया
भर्त्तुराज्ञया ॥”
योगिनीतन्त्रे ।
“स्वप्नलब्धे तु कलसे गुरोः प्राणं निवेशयेत्
।
वटपत्रे कुङ्कुमेन लिखित्वा ग्रहणं शुभम् ॥
ततः शुद्धिमवाप्नोति चान्यथा विफलं भवेत्
॥”
इदन्तु सद्गुरोरभावे तत्सत्ते तस्मादेव
गृह्णीयात्
स्वप्ने तु नियमो न हीति नारदवचनात् ॥ *
॥
तथा विद्याधराचार्य्यधृतजावालवचनम् ।
“मध्यदेशकुरुक्षेत्रनाटकोङ्कणसम्भवाः ।
अन्तर्व्वेदिप्रतिष्ठाना आवान्त्याश्च गुरूत्तमाः
॥
नादीक्षितस्य कार्य्यं स्यात्तपोभिर्न्नियमव्रतैः ।
न तीर्थगमनेनापि न च शारीरयन्त्रणैः ॥”
मत्स्यसूक्ते ।
“अदीक्षितानां मर्त्यानां दोषं शृणु वरानने ! ।
अन्नं विष्ठासमं तस्य जलं मूत्रसमं स्मृतम् ॥
तत्कृतं तस्य वा श्राद्धं सर्व्वं याति ह्यधोगतिम्
॥”
शूद्रस्य मन्त्रविशेषनिषेधमाह ।
“प्रणवाद्यं न दातव्यं मन्त्रं शूद्राय सर्व्वथा ।
आत्ममन्त्रं गुरोर्म्मन्त्रं मन्त्रं चाजपसंज्ञकम् ॥
स्वाहाप्रणवसंयुक्तं शूद्रे मन्त्रं ददद्द्विजः ।
शूद्रो निरयमाप्नोति ब्राह्मणो यात्यधोगतिम् ॥”
श्रुतिरपि । “सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रो
यदि जानीयात् स मृतोऽधो गच्छति ।” इति ॥
* ॥
विशेषमाह वाराहीये ।
“गोपालस्य मनुर्देयो महेशस्यापि पादजे ।
तत्पत्न्याश्चापि सूर्य्यस्य गणेशस्य मनुस्तथा
॥
एषां दीक्षाधिकारी स्यादन्यथा पापभाग्भवेत्
॥”
इति ॥ * ॥ गोविन्दवृन्दावने ।
“अदीक्षितस्य मरणे प्रेतत्वं न च मुञ्चति ॥”
नवरत्नेश्वरे ।
“सर्व्वासामपि दीक्षाणां मुक्तिः फलमखण्डितम्
।
अविरोधात् भवन्त्येव प्रासङ्गिक्यस्तु भक्तयः
॥”

| | | |
|---|---|---|
| नित्यनिष्ठो यतिः ख्यातो गुरुः स्याद्भौतिको-<br>ऽपि च ॥"<br>सिद्धयामले ।<br>"यदि भाग्यवशेनैव सिद्धविद्यां लभेत् प्रिये ! ।<br>तदेव तान्तु दीक्षेत त्यक्त्वा गुरुविचारणम् ॥"<br>गणेशविमर्षिण्याम् ।<br>"प्रमादाच्च तथाज्ञानात् पितुर्दीक्षां समाचरन् ।<br>प्रायःश्चित्तं ततः कृत्वा पुनर्दीक्षां समाचरेत् ॥" | | |

तथा ।
"उपपातकलक्षाणि महापातककोटयः
।
क्षणात् दहति देवेशि दीक्षा हि विधिना
कृता ॥"
यामले ।
"आगमोक्तविधानेन कलौ देवान् यजेत्
सुधीः ।
न हि देवाः प्रसीदन्ति कलौ
चान्यविधानतः ॥"
अतः सद्गुरोराहितदीक्षः
सर्व्वकर्म्माणि
साधयेत् । * । तत्राप्यनुकूलमन्त्रं
दीक्षेत । तथा च
सारदायाम् ।
"स्वताराराशिकोष्ठानामनुकूलान्
भजेन्मनून् ॥"
तथा वाराहीये ।
"ताराचक्रं राशिचक्रं नामचक्रं तथैव च
।
अत्र चेत् सगुणो मन्त्रो नान्यच्चक्रं
विचारयेत् ॥"
इति तु प्रधानतया बोद्धव्यम् । तथा च
।
"धनिमन्त्रं न गृह्णीयात् अकुलञ्च तथैव
च ।"
इत्यादिदर्शनात् तत्तच्चक्रविचारस्य
आवश्यक-
त्वात् प्रथमं तन्निरूप्यते ॥ * ॥ तत्र
सिद्धसार-
स्वते ।
"नृसिंहार्कवराहाणां प्रासादप्रणवस्य च
।
संपिण्डाक्षरमन्त्राणां सिद्धादीन्नैव
शोधयेत् ॥
स्वप्नलब्धे स्त्रिया दत्ते मालामन्त्रे च
त्र्यक्षरे ।
वैदिकेषु च मन्त्रेषु सिद्धादीन्नैव
शोधयेत् ॥" * ॥

इत्यादिवचनादेषु विचारो नास्ति ।
वस्तुतस्तु
इदं प्रशंसापरम् । सर्व्वत्र
विचारस्यावश्यक-
त्वम् । दुरदृष्टवशात्
कदाचिद्वैरिमन्त्रस्य स्वप्नादौ
प्राप्त्या तत्तद्दोषस्य दृष्टत्वात् ।" इति
तु साम्प्र-
दायिकाः ॥ * ॥ अत्र कुलाकुलचक्रम्
। राशि-
चक्रम् । नक्षत्रचक्रम् । अकथहचक्रम्
। अक-
डमचक्रम् । ऋणिधनिचक्रम् । एतानि
चक्रशब्दे
तत्तच्छब्दे च द्रष्टव्यानि ॥ * ॥
अथ दीक्षाकालनियमः ।
"मन्त्रारम्भस्तु चैत्रे स्यात्
समस्तपुरुषार्थदः ।
वैशाखे रत्नलाभः स्यात् ज्यैष्ठे तु
मरणं भवेत् ।
आषाढे बन्धुनाशः स्यात् पूर्णार्थः
श्रावणे भवेत् ।
प्रजानाशो भवेद्भाद्रे आश्विने
रत्नसञ्चयः ॥
कार्त्तिके मन्त्रसिद्धिः स्यात् मार्गशीर्षे
तु तद्भवेत् ।
पौषे तु शत्रुपीडा स्यात् माघे
मेधाविवर्द्धनम् ॥
फाल्गुने सर्व्वकामाः स्युर्म्मलमासं
विवर्ज्जयेत् ॥"
चैत्र इति गोपालविषयम् ।
गौतम्युक्तत्वात् ।
मधुमासे भवेद्दीक्षा दुःखाय मरणाय
चेति-
वचनान्नान्यत्र । तथा, --
"ज्यैष्ठे मृत्युप्रदा विद्या आषाढे
सुखसम्पदः ।"
इति योगिनीहृदयादाषाढे श्रीविद्यायां
न दोषः ।

सन्ध्यागर्ज्जितनिर्घोषभूकम्पोल्कानिपातने॥
एतान्यन्यांश्च दिवसान् श्रुत्युक्तान् परिवर्ज्जयेत् ।
द्वितीया पञ्चमी चैव षष्ठी चैव विशेषतः ॥
द्वादश्यामपि कर्त्तव्यं त्रयोदश्यामथापि वा ॥"
इति यत् त्रयोदशी विधानं तद्विष्णुविषयं
रामार्च्चनचन्द्रिकाधृतत्वात्।
"पञ्चमी सप्तमी षष्ठी द्वितीया पूर्णिमा सिता ।
त्रयोदशी तु दशमी प्रशस्ता सर्व्वकामदा ॥"
इति सनत्कुमारवचनाच्च ॥ * ॥
शिवविषये सप्तम्योर्निषेधमाह ।
"शुक्लपक्षस्य दशमी सप्तमी च विशेषतः ।
निन्द्या सदैव षष्ठी स्यादिति शैवागमान्तरे ॥"
अथ नक्षत्रनिर्णयः ।
"अश्विन्यां सुखमाप्नोति भरण्यां मरणं ध्रुवम् ।
कृत्तिकायां भवेद्दुःखी रोहिण्यां वाक्पति-
र्भवेत् ॥
मृगशीर्षे सुखावाप्तिरार्द्रायां बन्धुनाशनम् ।
पुनर्व्वसौ धनाढ्यः स्यात् पुष्ये शत्रुविनाशनम् ॥
अश्लेषायां भवेन्मृत्युर्मघायां दुःखमोचनम् ।
सौन्दर्य्यं पूर्ब्बफल्गुन्यां प्राप्नोति च न संशयः ॥
ज्ञानञ्चोत्तरफल्गुन्यां हस्तायाञ्च धनी भवेत् ।
चित्रायां ज्ञानसिद्धिः स्यात् स्वात्यां शत्रुविना-
शनम् ॥
विशाखायां सुखञ्चानुराधायां बन्धुवर्द्धनम् ।
ज्येष्ठायां सुतहानिः स्यात् मूलायां कीर्त्तिवर्द्धनम् ॥
पूर्ब्बाषाढोत्तराषाढे भवेतां कीर्त्तिदायिके ।
श्रवणायां भवेद्दुःखी धनिष्ठायां दरिद्रता ॥
बुद्धिः शतभिषायां स्यात् पूर्ब्बभाद्रे सुखी भवेत् ।
सौख्यं चोत्तरभाद्रे च रेवत्यां कीर्त्तिवर्द्धनम् ॥"
आर्द्राकृत्तिकयोर्निषेधस्तु शिववह्नीतरविषये ।
तथा च ।
"आर्द्रायां कृत्तिकायाञ्च मन्त्रारम्भः प्रशस्यते ।
यदीशस्य कृशानोर्वा मन्त्रारम्भो यथाक्रमम् ॥"
तन्त्रान्तरे ।
"अश्विनीभरणीस्वातीविशाखाहस्तभेषु च ।
ज्येष्ठोत्तरात्रयेष्वेवं कुर्य्यान्मन्त्राभिषेचनम् ॥"
इति ज्येष्ठाभरण्योर्यद्विधानं तद्रामविषयं
अगस्त्यसंहितोक्तत्वात् ॥ * ॥
अथ योगादिनिर्णयो विश्वसारे ।

मालामन्त्रस्तु वाराहीये ।
“विंशत्यर्णाधिका मन्त्रा मालामन्त्राः प्रकीर्त्तिताः ।
नपुंसकस्य मन्त्रस्य सिद्धादीन्नैव शोधयेत् ॥
हंसस्याष्टाक्षरस्यापि तथा पञ्चाक्षरस्य च ।
एकद्वित्र्यादिबीजस्य सिद्धादीन्नैव शोधयेत् ॥
तथा एकाक्षरस्य मन्त्रस्य मालामन्त्रस्य पार्व्वति ! ।
वैदिकस्य च मन्त्रस्य सिद्धादीन्नैव शोधयेत् ॥” * ॥
तथा मुण्डमालातन्त्रे ।
“काली तारा महाविद्या षोडशी भुवनेश्वरी ।
भैरवी छिन्नमस्ता च विद्या धूमावती तथा ॥
वगला सिद्धविद्या च मातङ्गी कमलात्मिका ।
एता दश महाविद्याः सिद्धविद्याः प्रकीर्त्तिताः ॥”
मालिनीविजये ।
“अथ वक्ष्याम्यहं या या महाविद्या महीतले ।
दोषजालैरसंस्पृष्टास्ताः सर्व्वा हि फलैः सह ॥
काली नीला महादुर्गा त्वरिता छिन्नमस्तका ।
वाग्वादिनी चान्नपूर्णा तथा प्रत्यङ्गिरा पुनः ॥
कामाख्यावासिनी बाला मातङ्गी शैलवासिनी ।
इत्याद्याः सकला विद्याः कलौ पूर्णफलप्रदाः ॥
सिद्धमन्त्रतया नात्र युगसेवापरिश्रमः ।
तथा चैता महाविद्याः कलिदोषान्न वाधिताः ॥”
चामुण्डातन्त्रे ।
“कलौ काली तथा तारा भैरवी छिन्नमस्तका ।

अत्र च मासः सौर एव । सौरे मासि शुभा
दीक्षा न चान्द्रे न च तारके । इति गौत-
मीयात् ५ अध्यायात् ॥
वैशम्पायनसंहितायाम् ।
“मन्त्रस्यारम्भणं मेषे धनधान्यप्रदं भवेत् ।
वृषे मरणमाप्नोति मिथुनेऽपत्यनाशनम् ॥
कर्क्कटे सर्व्वसिद्धिः स्यात् सिंहे मेधाविनाशनम् ।
कन्यालक्ष्मीप्रदा नित्यं तुलायां सर्व्वसिद्धयः ॥
वृश्चिके स्वर्णलाभः स्यात् धनुर्मानविनाशनम् ।
मकरः पुण्यदः प्रोक्तः कुम्भो धनसमृद्धिदः ॥
मीनो दुःखप्रदो नित्यं एवं मासविधिक्रमः ॥”
प्रतिप्रसवमाह । रुद्रयामले ।
“कार्त्तिकाश्विनवैशाखमाघेऽथ मार्गशीर्षके ।
फाल्गुने श्रावणे दीक्षा पुरश्चर्य्या प्रशस्यते ॥”
अथ वारनियमः ।
“रविवारे भवेद्वित्तं सोमे शान्तिर्भवेत् किल ।
आयुरङ्गारके हन्ति तत्र दीक्षां विवर्ज्जयेत् ॥
बुधे सौन्दर्य्यमाप्नोति ज्ञानं स्याच्च बृहस्पतौ ।
शुक्रे सौभाग्यमाप्नोति यशोहानिः शनैश्चरे ॥”
अथ तिथिनिर्णयः ।
आगमकल्पद्रुमे ।
“प्रतिपदि कृता दीक्षा ज्ञाननाशकरी मता ।
द्वितीयायां भवेज्ज्ञानं तृतीयायां शुचिर्भवेत् ॥

“शुभः सिद्धस्तथायुष्मान् ध्रुवयोगस्ततः परम् ।
प्रीतिः सौभाग्ययोगश्च वृद्धियोगस्ततः परम् ॥
हर्षणश्च तथा योगः सर्व्वमन्त्रशुभावहः ॥”
रत्नावल्याम् ।
“योगश्च प्रीतिरायुष्मान् सौभाग्यः शोभनो धृतिः ।
वृद्धिर्ध्रुवः सुकर्म्मा च साध्यः शुक्रश्च हर्षणः ॥
वरीयांश्च शिषः सिद्धो ब्रह्म इन्द्रश्च षोडश ॥”
अथ करणनिर्णयः ।
“ववबालवकौलवतैतिलगरबणिजस्तदनन्तरम् ।
करणानि शुभान्येव सर्व्वतन्त्रेषु भाविनि ! ॥”
अथ लग्ननिर्णयः ।
“वृषे सिंहे च कन्यायां धनुर्मीनाख्यलग्नके ।
चन्द्रतारानुकूले च कुर्य्याद्दीक्षाप्रवर्त्तनम् ॥”

| | | |
|---|---|---|
| त्रिकूटा त्रिपुटा दुर्गा तथा महिषमर्द्दिनी<br>॥<br>कात्यायनी च चामुण्डा महाविद्याः<br>प्रकी-<br>र्त्तिताः ।<br>नात्र सिद्धाद्यपेक्षास्ति न<br>नक्षत्रविचारणा ॥<br>कालादिशोधनं नास्ति न<br>चामित्रादिदूषणम् ।<br>सिद्धविद्यातया नात्र युगसेवापरिश्रमः<br>॥<br>नास्ति किञ्चिन्महादेवि ! दुःखसाध्यं<br>कथञ्चन ॥” | चतुर्थ्यां वित्तनाशः स्यात् पञ्चम्यां<br>बुद्धिवर्द्धनम् ॥<br>षष्ठ्यां ज्ञानक्षयं सौख्यं लभते<br>सप्तमीदिने ॥<br>अष्टम्यां बुद्धिनाशः स्यात् नवम्यां<br>वपुषः क्षयः ।<br>दशम्यां राजसौभाग्यमेकादश्यां<br>शुचिर्भवेत् ॥<br>द्वादश्यां सर्व्वसिद्धिः स्यात् त्रयोदश्यां<br>दरिद्रता ।<br>तिर्य्यग्योनिश्चतुर्द्दश्यां<br>हानिर्मासावसानके ॥<br>पक्षान्ते धर्म्मवृद्धिः स्यात् अस्वाध्यायं<br>विव-<br>र्ज्जयेत् । | |

तथा, --
“स्थिरलग्नं विष्णुमन्त्रे शिवमन्त्रे चरं शुभम् ।
द्विःस्वभावगतं लग्नं शक्तिमन्त्रे प्रशस्यते ॥”
अगस्त्यसंहितायाम् ।
“त्रिषष्ठायगताः पापाः शुभाः केन्द्रत्रिकोणगाः ।
दीक्षायान्तु शुभाः सर्व्वे बन्धुस्थाः सर्व्वनाशकाः ॥”
अथ पक्षनियमः ।
“शुक्लपक्षे भवेद्दीक्षा कृष्णेऽप्यापञ्चमाद्दिनात् ।
निषिद्धेष्वपि मासेषु विशेषो मुनिभेदतः ॥”
रत्नावल्याम् ।
“षष्ठी भाद्रपदे इषे तथा कृष्णचतुर्द्दशी ।
कार्त्तिके नवमी शुक्ला मार्गे शुक्ला तृतीयिका ॥
पौषे तु नवमी शुक्ला माघे शुक्ला चतुर्थिका ।
फाल्गुने नवमी शुक्ला चैत्रे कामचतुर्द्दशी ॥
वैशाखे चाक्षया चैव ज्यैष्ठे दशहरा तिथिः ।
आषाढे पञ्चमी शुक्ला श्रावणे कृष्णपञ्चमी ॥
एतानि देवपर्व्वाणि तीथकोटिफलं लभेत् ।
अत्र दीक्षा प्रकर्त्तव्या न मासञ्च परीक्षयेत् ॥
न वारं न च नक्षत्रं न तिथ्यादिकदूषणम् ।
न योगकरणञ्चैव शङ्करेण च भाषितम् ॥”
अन्यच्च मतम् ।
“चैत्रे त्रयोदशी शुक्ला वैशाखैकादशी सिता ।
ज्यैष्ठे चतुर्द्दशी कृष्णा आषाढे नागपञ्चमी ॥
श्रावणैकादशी भाद्रे रोहिणीसहिताष्टमी ।

तारादौ तु विशेषो यथा, --
“दीक्षाकालं प्रवक्ष्यामि नीलतन्त्रानुसारतः ।
कृष्णपक्षस्य चाष्टम्यां शुभे लग्ने शुभे क्षणे ॥
पूर्ब्बभाद्रपदा युक्ते मित्रतारादिसंयुते ।
अथवा अनुराधायां रेवत्यां वा प्रशस्यते ॥
जानीयाच्छोभनङ्कालं मन्त्रस्य ग्रहणं प्रति ।
इषे चैव विशेषेण कार्त्तिके च विशेषतः ॥”
यामले ।
“श्रीपरा कालीबीजानि लोपो दौर्गश्च यो मनुः ।
सूर्य्यस्योपग्रहे लब्धो नृणां मुक्तिफलप्रदः ॥
अमावास्या सोमवारे भौमवारे चतुर्द्दशी ।
सप्तमी रविवारे च सूर्य्यपर्व्वशतैः समा ॥”
कुलार्णवे ।
“सप्तमी रविवारे च सोमे दर्शस्तथैव च ।
चतुर्थी कुजवारे च अष्टमी च बृहस्पतौ ॥
देवपर्व्वसमा ज्ञेयास्तासु दीक्षां समाचरेत् ॥”
यामले ।
“पुण्यतीर्थे कुरुक्षेत्रे देवीपीठचतुष्टये ।
प्रयागे श्रीगिरौ काश्यां कालाकालं न शोधयेत् ॥”
विष्णुयामले ।
“देवीबोधं समारभ्य यावत् स्यान्नवमी तिथिः ।
कृता तासु बुधैर्द्दीक्षा सर्व्वाभीष्टफलप्रदा ॥
शुक्लपक्षे विशेषेण तत्रापि तिथिरष्टमी ।
तत्रापि शारदी दुर्गा यत्र देवी गृहे गृहे ॥

अथ पञ्चायतनीदीक्षा । यामले ।
“भवानीन्तु यदा मध्ये ऐशान्यामच्युतं यजेत् ।
आग्नेय्यां पार्व्वतीनाथं नैरृत्यां गणनायकम् ॥
वायव्यां तपनञ्चैव पूजाक्रम उदाहृतः ।
यदा तु मध्ये गोविन्दं ऐशान्यां शङ्करं यजेत् ॥
आग्नेय्यां गणनाथञ्च नैरृत्यां तपनं तथा ।
वायव्यामम्बिकाञ्चैव भोगमोक्षैकभूमिकाम् ॥
शङ्करञ्च यदा मध्ये ऐशान्यामच्युतं यजेत् ।
आग्नेय्यां तपनञ्चैव नैरृत्यां गणनायकम् ॥
वायव्यां पार्व्वतीञ्चैव स्वर्गमोक्षप्रदायिनीम् ।
आदित्यञ्च यदा मध्ये ऐशान्यां शङ्करं यजेत् ।
आग्नेय्यां गणनाथञ्च नैरृत्यां केशवं यजेत् ॥
वायव्यामम्बिकां देवीं स्वर्गसाधनभूमिकाम् ॥
गणनाथं यदा मध्ये ऐशान्यां केशवं यजेत् ।
आग्नेय्यामीश्वरञ्चैव नैरृत्यां तपनं तथा ॥
वायव्यामीश्वरीञ्चैव पूजयेन्मोक्षसाधनीम् ।
स्वस्थानवर्ज्जिता देवा दुःखशोकभयप्रदाः ॥”
तथा च गणेशविमर्षिण्याम् ।
“शम्भौ मध्यगते हरीनहरभूदेव्यो हरौ शङ्करे भास्ये नागसुता रवौ हरगणेशाजाम्बिकाः स्थापिताः ।
देव्यां विष्णुहरैकदन्तरवयो लम्बोदरेऽजेश्वरे नार्य्याः शङ्करभागतोऽतिसुखदाव्यस्तास्तु ते हानिदाः ॥”
रामार्च्चनचन्द्रिकायां गौतमीये च ।
“यदा तु मध्ये गोविन्दं आग्नेय्यां गणनायकम् ।
नैरृत्यां हंसमभ्यर्च्य वायव्यामर्च्चयेच्छिवाम् ॥
ऐशान्यां शङ्करं चैव भोगमोक्षफलाप्तये ॥” इति ।
यदङ्गदेवतायाः पूजने आग्नेय्यादौ गणेशादि-पूजनमुक्तं तद्रामगोपालविषयमिति केचित् । वस्तुतो वैकल्पिकमिति सम्प्रदायः ॥ एतेषां पूजनन्तु गौतमीये ।
“गन्धादिभिरथाभ्यर्च्य षडङ्गार्च्चनमेव च ।
विंशकृत्वो जपेन्मन्त्रं नमस्कृत्य समापयेत् ॥” * ॥
अङ्गदेवतापूजाकालस्तु पीठपूजानन्तरम् ।
तथा च सनत्कुमारतन्त्रे ।
“पीठस्यार्च्चनमङ्गदेवयजनं प्राणप्रतिष्ठा तथा

आश्विने च महापुण्या महाष्टम्यप्यभीष्टदा
॥
कार्त्तिके नवमी शुक्ला मार्गशीर्षे सिते
तथा ।
षष्ठी चतुर्द्दशी पौषे माघेऽप्येकादशी सिता
॥
फाल्गुने च सिता षष्ठी चेति
कालविनिर्णयः ॥”
योमिनीतन्त्रे ।
“अयने विषुवे चैव ग्रहणे चन्द्रसूर्य्ययाः ।
रविसंक्रान्तिदिवसे युगाद्यायां सुरेश्वरि !
॥
मन्वन्तरासु सर्व्वासु महापूजादिने तथा ।
चतुर्थी पञ्चमी चैव चतुर्दश्यष्टमी तथा ॥
तिथयः शुभदाः प्रोक्ता दीक्षाग्रहणकर्म्मणि
॥”
इत्यादिवचनात् चतुर्द्दश्यष्टमीति
शक्तिविषयम् ।
चतुर्थीति गणेशविषयम् ।
तत्तत्कल्पोक्तत्वात् ।
“निन्दितेष्वपि मासेषु दीक्षोक्ता ग्रहणे
शुभा ।
सूर्य्यग्रहणकालस्य समानो नास्ति भूतले
॥
विशेषतो महादेवि ! दीक्षाग्रहणकर्म्मणि ।
तत्र यद्यत् कृतं सर्व्वमनन्तफलदं भवेत् ॥
रविसंक्रमणे चैव सूर्य्यस्य ग्रहणे तथा ।
तत्र लग्नादिकं किञ्चिन्न विचार्य्यं कथञ्चन
॥
रविसंक्रमणे चैव नान्यदन्वेषितं भवेत् ।
न वारतिथिमासादिशोधनं सूर्य्यपर्व्वणि
॥”
एवं चन्द्रग्रहणेऽपि । तथा रुद्रयामले ।
“न कुर्य्याच्छाक्तिकीं दीक्षामुपरक्ते
विभावसौ ।
न कुर्य्याद्वैष्णवीं तान्तु यदि चन्द्रमसो
ग्रहः ॥”
एतच्च गोपालश्रीविद्येतरविषयम् ।
“अन्येषु पुण्ययोगेषु ग्रहणे चन्द्रसूर्य्ययोः
।”
इति गोतमीयात् ।

तत्र दीक्षा प्रकर्त्तव्या मासर्क्षादीन्न
शोधयेत् ॥”
तथा ।
“बोधने चैव दुर्गायाः कालाकालं न
शोधयेत् ॥
अशोकाख्याष्टमी यत्र रामाख्या नवमी
तथा ।
लग्ने वाप्यथवालग्ने यत्र स्यात्तिथिरष्टमी
॥
गुरोराज्ञानुरूपेण दीक्षा कार्य्या विशेषतः
॥”
समयाचारतन्त्रे ।
“युगाद्यायां जन्मदिने विवाहदिवसे तथा
।
विषुवायनयोर्द्वन्द्वे नैव किञ्चिद्विचारयेत्
॥”
तथा, --
“शिष्यानाहूय गुरुणा कृपया दीयते यदा
।
तदा लग्नादिकं किञ्चिन्न विचार्य्यं
कथञ्चन ॥
सर्व्वे वारा ग्रहाः सर्व्वे नक्षत्राणि च
राशयः ।
यस्मिन्नहनि सन्तुष्टो गुरुः सर्व्वे
शुभावहाः ॥”
सारसंग्रहे योगिनीतन्त्रे च ।
“ग्रहणे च महातीर्थे नास्ति कालस्य
निर्णयः ।
गयायां भास्करक्षेत्रे विरजे चन्द्रपर्व्वते ॥
चट्टले च मतङ्गे च तथा कन्याश्रमेषु च ।
न गृह्णीयात्ततो दीक्षां तीर्थेष्वेतेषु
पार्व्वति ! ॥”
वाराहीतन्त्रे ।
“शुक्रोऽस्तो यदि वा वृद्धो गुर्व्वादित्या
भवेद्यदि ।
मेषवृश्चिकसिंहेषु तदा दोषो न विद्यते
॥” * ॥
महाविद्यासु सर्व्वासु कालादिविचारो
नास्ति ।
तदुक्तं मुण्डमालातन्त्रे ।

आह्वानं निजमुद्रिकाविरचनं ध्यानं प्रभोः
पूजनम् ।”
यत्तु देवे पुष्पाञ्जलिं दत्त्वा अङ्गदेवान्
समर्च्चयेत् ।
तत्तु प्रतिष्ठितयन्त्रादिविषयम् ॥ * ॥
यन्त्रातिरिक्ताधारे पूजने तु कुलाबल्याम् ।
“एकपीठे पृथक्पूजां विना यन्त्रं करोति यः ।
अङ्गाङ्गित्वं परित्यज्य देवताशापमाप्नुयात् ॥”
एवञ्च ।
“आवाह्य देवतामन्यामर्च्चयंस्त्वन्यदेवताम् ।
उभाभ्यां लभते शापं मन्त्री तरलदुर्म्मतिः ॥”
तदेतदतिरिक्तविषयम् ॥ * ॥
सर्व्वेषामङ्गमन्त्राणां सिद्धादिविचारो नास्ति ।
तथा च,
“सिद्धादिशोधनं नैषां अङ्गत्ये सति राजवत्
॥”
श्यामादौ तु पञ्चायतनाभावः ।

| | | |
|---|---|---|
| “सूर्य्यग्रहणकाले च नान्यदन्येपितं भवेत् ।”<br>इति योगिनीहृदयाच्च ॥ * ॥ | “कालादिशोधनं नास्ति न चामित्रादिदूषणम् ।”<br>अत्र मालानिर्णयो मालाशब्दे द्रष्टव्यः ।<br>पुर-<br>श्चरणं तच्छब्देद्रष्टव्यम् ।<br>कलावतीदीक्षा कला-<br>वतीशब्दे द्रष्टव्या । | |

तथा च रुद्रयामले ।
"श्यामायां भैरवीताराच्छिन्नमस्तासु भैरवे ।
मञ्जघोषे तथा रौद्रे पञ्चाङ्गं नेष्यते बुधैः ॥
उपविद्यासु सर्व्वासु षट्कर्म्मादिषु साधने ।
नात्र दीक्षाद्यपेक्षास्ति नात्राङ्गादिप्रपूजनम् ॥"
तत्त्वसारे ।
"उपविद्यासु सर्व्वासु तथा प्रयोगसाधने ।
दीक्षां विनैव कर्त्तव्य उपदेशः सदैव हि ॥" * ॥
अथ सङ्क्षेपदीक्षा ।
"मुहूर्त्ते सर्व्वतोभद्रे नवं कुम्भं निधाय च ।
सोदकं गन्धपुष्पाभ्यामर्च्चितं वस्त्रसंयुतम् ॥
सर्व्वौषधिनवरत्नपञ्चपल्लवसंयुतम् ।
ततो देवार्च्चनं कृत्वा हुनेदष्टोत्तरं शतम् ॥"
पञ्चपल्लवमिति ।
पनसाम्राश्वत्थवटवकुलानि ।
तथा च वाशिष्ठे ।
"पनसाम्रं तथाश्वत्थं वटं वकुलमेव च ।
पञ्चपल्लवमित्युक्तं सुनिभिस्तन्त्रवेदिभिः ॥" * ॥
नवरत्नमिति ।
"मुक्तामाणिक्यवैदूर्य्यं गोमेदान् वज्रविद्रुमौ ।
पद्मरागं मरकतं नीलञ्चेति यथाक्रमात् ॥" * ॥
निबन्धे ।
"शिष्यं स्वलङ्कृतं वेद्यामुपाग्निमुपवेशयेत् ।
मन्त्रितं प्रोक्षणीतोयैः शान्तिकुम्भजलैस्तथा ॥
मूलमन्त्रेणाष्टशतं मन्त्रितैरभिषेचयेत् ॥"
अष्टशतम् अष्टोत्तरशतम् ।
"अथ सम्पादयेन्मन्त्रं हस्तं शिरसि घारयन् ।
समोऽस्त्वित्यक्षतान् दद्यात् ततः शिष्योऽर्च्चयेद्-
गुरुम् ॥"

**दीक्षितः**, त्रि, (दीक्ष + कर्त्तरि क्तः । यद्वा, दीक्षा सञ्जाता अस्येति । तारकादित्वात् इतच् ।) सोमपानविशिष्टयागकर्त्ता । यथा । स सोम-वति दीक्षितः । इत्यमरः । २ । ७ । ८ ॥ "स व्रती सोमपानवति अध्वरे यजमानः सन् दीक्षित उच्यते । अन्यत्राप्युपचारात् । दीक्ष मौण्ड्ये-ज्योपनयनव्रतादेशेषु क्तः दीक्षाशब्दादितो वा ।" इति तट्टीकायां भरतः ॥ * ॥ गुरुमुखाद्-गृहीतमन्त्रः । यथा, --
"अदीक्षिता ये कुर्व्वन्ति जपपूजादिकाः क्रियाः ।
न भवन्ति प्रिये ! तेषां शिलायामुप्तबीजवत् ॥
देवि ! दीक्षाविहीनस्य न सिद्धिर्न च सद्गतिः ।
तस्मात् सर्व्वप्रयत्नेन गुरुणा दीक्षितो भवेत् ॥
अदीक्षितोऽपि मरणे रौरवं नरकं व्रजेत् ॥"
इति तन्त्रसारः ॥ * ॥
काम्पिल्लनगरस्थयज्ञदत्तनामकब्राह्मणः । यथा,
"आसीत् काम्पिल्लनगरे सोमयाजिकुलोद्भवः ।
दीक्षितो यज्ञदत्ताख्यो यज्ञविद्याविशारदाः ॥
वेदवेदाङ्गवेदार्थवेदोक्ताचारचञ्चुरः ।
राजमान्यो बहुघनो वदान्यः कीर्त्तिभाजनः ॥
अग्निशुश्रूषणरतो वेदाध्ययनतत्परः ॥"
इति स्कान्दे काशीखण्डे गन्धवत्यलकावर्णनं नाम १३ अध्यायः ॥ * ॥ (स्वीकृतदीक्षः । यथा, महाभारते । २ । ७३ । १ ।
"ततः पराजिताः पार्था वनवासाय दीक्षिताः ।
अजिनान्युत्तरीयाणि जगृहुश्च यथाक्रमम् ॥")

**दीक्षिता**, [ऋ] पुं, (दीक्ष + "सूददीपदीक्षश्च ।" ३ । २ । १५३ । इति युचं बाधित्वा शीनार्थे तृच् ।) सोमयाजी । इति केचित् ॥ दीक्षाविशिष्टः । दीक्षधातोः कर्त्तरि तृण्प्रत्ययेन निष्पन्नः ॥

**दीक्षितायनी**, स्त्री, (दीक्षितः स्वनामख्यातब्राह्मण एव अयनं गतिर्यस्याः । स्त्रियां टित्वात् ङीप् ।) काम्पिल्लनगरस्थदीक्षितनामकब्राह्मणपत्नी। यथा, काशीखण्डे १३ अध्याये ।
"महापतिव्रतां सम्यक् पत्नीं प्रोवाच तामथ ।

**दीधितिः**, स्त्री, (दीधीते दीप्यते इति । दीधी + संज्ञायां क्तिच् । इट् । "अग्रहादीनाम् ।" इति वार्त्तिकसूत्रात् "यीवर्णयोर्दीधीवेव्योः ।" ३ । ४ । ५३ । इति अन्त्यस्य लोपः ।) किरणः । इत्यमरः । १ । ४ । ३३ ॥ (यथा, रघुः । ३ । २२ ।
"पुपोष वृद्धिं हरिदश्वदीधिते-
रनुप्रवेशादिव बालचन्द्रमाः ॥")

**दीधी**, र ङ लु क्ष देवने । दीप्तौ । इति कविकल्प-द्रुमः ॥ (अदां-आत्मं-अकं-सेट् ।) दीर्घमध्यः । र वैदिकः । ङ लु, दीधीते । क्ष, अदीधयुः । बहुलं ब्रह्मणीति परस्मैपदे अनुस्सिद्धेरिति अन् उस् णुरुस्यत्ह्यामिति गुणः । इति दुर्गादासः ॥

**दीनं**, क्ली, (दीयते स्म इति । दी + क्तः । ततः निष्ठा-तस्य नः ।) तगरपुष्पम् । इति राजनिर्घण्टः ।
(अस्य पर्य्यायो यथा, --
"कालानुसारिवा वक्रं तगरं कुटिलं शठम् ।
महोरगं नतं जिह्मं दीनं तगरपादिकम् ॥"
इति वैद्यकरत्नमालायाम् ॥)

**दीनः**, त्रि, (दीयते स्मेति । ओ दीङ् क्षये + "गत्यर्थाकर्म्मकेति ।" ३ । ४ । ७२ । इति कर्त्तरि क्तः । "ओदितश्च ।" ७ । २ । ४५ । इति निष्ठा-

यद्वा दीक्षान्तरम् । शङ्खमभ्यच्चर्य्य साक्षतं तदम्बु-
नादष्टवारं मूलेन शिरसि करं निधाय अष्टौ वारान् कर्णे जपेत् । तथा च ।
"तत्राप्यशक्तः कश्चिच्चेदब्जमभ्यच्चर्य्य साक्षतम् ।
तदम्बुनाभिषिच्याष्टवारंमूलेन केवलम् ॥
निधायाष्टौ जपेत् कर्णे उपदेशे त्वयं विधिः ॥"
इति सङ्क्षेपदीक्षा ॥
उपदेशान्तरमाह । विश्वसारे ।
"चन्द्रसूर्य्यग्रहे तीर्थे सिद्धक्षेत्रे शिवालये ।
मन्त्रमात्रप्रकथनमुपदेशः स उच्यते ॥"
विश्वसारे ।
"महादीक्षा तथा दीक्षा उपदेशस्ततः परम् ।
पुगे युगे च कर्त्तव्या उपदेशः कलौ युगे ॥"
इति कृष्णानन्दकृततन्त्रसारः ।

**दीक्षान्तः**, पुं, (दीक्षायाः प्रधानयज्ञस्य अन्तः

अन्तोपलक्षितो यज्ञः ।) अवभृथः । इत्यमरः ।
२ । ७ । २७ ॥ "प्रधानयागो दीक्षा तस्याः अन्तः
समापको योऽपरो यज्ञो न्यूनत्वादिदोषशान्त्यर्थं
प्रघानयागस्य पूरणार्थं प्रतिष्ठार्थं क्रियते सोऽ-
वभृथ उच्यते । अवहीनं बिभर्त्ति पोषयतीति
नाम्नीति थक् । यज्ञावशेषे स्नाने चावभृथः ।
यज्ञावशेषे स्नानं यत् तदेवावभृथं विदुरिति
त्रिकाण्डशेषः ॥ यज्ञान्ते तमवभृथाभिषेकपूत-
मति रघुः ।" इत्यमरटीकायां भरतः ॥

दीक्षितायनि ! कुत्रासि क्व ते गुणनिधिः सुतः ॥
अथ तिष्टतु किन्तेन क्व सा मम शुभोर्म्मिका ।
अङ्गोद्वर्त्तनकाले या त्वया मेऽङ्गुलिका कृता ॥
नवरत्नमयीं शीघ्रं तामानीय प्रयच्छ मे ।
इति श्रुत्वाथ तद्वाक्यं भीता सा दीक्षितायनी ॥"

**दीदिविः**, पुं क्ली, (दिव्यन्त्यनेनेति । दिव + "दिवो

द्वे दीर्घश्चाभ्यासस्य ।" उणां । ४ । ५५ । इति
क्विन् अभ्यासस्य दीर्घश्च ।) अन्नम् । इत्यमरः ।
२ । ९ । ४८ ॥ (दिव्यतीति क्विन् ।) बृहस्पतौ,
पुं । इति मेदिनी । वे, ३७ ॥ (स्वर्गे भक्ष्ये च ।
इत्युणादिवृत्तौ उज्ज्वलदत्तः ॥)

**दीदिविः**, त्रि, (दिव् + क्विन् ।) उदितः । इति

शब्दरत्नावली ॥ (पुनपुनर्द्योतकः । यथा, ऋग्-
वेदे । १ । १ । ८ ॥
"राजन्तमध्वराणां गोपामृतस्य दीदिविम् ॥"
"दीदिविं पौनःपुन्येन भृशं वा द्योतकम् ।"
इति तद्भाष्ये सायनः ॥)

तस्य नः । यद्वा, दी + "इण्षिञ्जिदीङुष्य-
विभ्यो नक् ।" उणां । ३ । २ । इति नक् ।)
दरिद्रः । इत्यमरः । ३ । १ । ४९ ॥ (यथा,
मनौ । ९ । २३८ ।
"चरेयुः पृथिवीं दीनाः सर्व्वधर्म्मवहिष्कृताः ॥")
भीतः । इति मेदिनी । ने, २१ ॥ (दुःखितः ।
यथा, रघुः । २ । २५ ।
"सप्त व्यतीयुस्त्रिगुणानि तस्य
दिनानि दीनोद्धरणोचितस्य ॥")

**दीना**, स्त्री, (दीन + टाप् । सततं भीतभीतेव

दृश्यत्वात् तथात्वम् ।) मूषिकस्त्री । इति
मेदिनी । ने १० ॥

**दीनारः**, पुं, (दीयते इति । दी + "दीङो नुट्च ।"

उणां । ३ । १४० । इति आरन् नुट् च ॥
स्वर्णभूषा । मुद्रा । इत्युणादिकोषः ॥ (यथा,
पञ्चतन्त्र ३ । १३६ ।
"अथ प्रातर्यावदेत्य पश्यति तावद्दीनारमेकं
शरावे दृष्टवान् ॥") निष्कपरिमाणम् । इत्य-
मरः । ३ । ३ । १४ ॥ सुवर्णकर्षद्वयम् । इति
तट्टीकासारसुन्दरी ॥ सम्यग्व्यवहारार्थं मान-
वस्तु । लौकिकः । द्वात्रिंशद्रत्तिकापरिमितं
काञ्चनम् । इति भरतः ॥

**दीप**, ई ङ य ऋ दीपने । इति कविकल्पद्रुमः ॥

(दिवां-आत्मं-अकं-सेट् ।) दीपनमुज्ज्वली-

| | | |
|---|---|---|
| | | भावः । ई, दीप्तः । ङ य, दीप्यते निशि चन्द्रमाः । ऋ, अदीदिपत् अदिदीपत् । इति दुर्गादासः ॥ |
| | | **दीपः**, पुं, (दीप्यते दीपयति वा स्वं परञ्चेति । दीप् दीपि वा + "इगुपधज्ञाप्रीकिरः कः ।" ३ । १ । १३५ । इति कः ।) वर्त्तिस्थज्वलदग्निशिखा। तत्पर्य्यायः । प्रदीपः २ स्नेहाशः ३ दीपकः ४ कज्जलध्वजः ५ शिखातरुः ६ गृहमणिः ७ |

ज्योत्स्नावृक्षः ८ दशेन्धनः ९
दोषातिलकः १०
दोषास्यः ११ नयनोत्सवः १२ ।
इति शब्द-
रत्नावली ॥ (यथा, मनौ । ४ ।
२२९ ।
"वारिदस्तृप्तिमाप्नोति
सुखमक्षय्यमन्नदः ।
तिलप्रदं प्रजामिष्टां
दीपदश्चक्षुरुत्तमम् ॥")
तदर्थं स्नेहादिनियमो यथा, --
"घृतं तैलञ्च दीपार्थे स्नेहान्यन्यानि
वर्ज्जयेत् ।"
इत्याद्ये वह्निपुराणे
आह्निकतपोनामाध्यायः ॥
अन्यच्च ।
"पुरश्चरणकृत्यञ्च दीपं शृण्विह
भैरव ! ।
दीपेन लोकान् जयति
दीपस्तेजोमयः स्मृतः ॥
चतुर्व्वर्गप्रदो दीपस्तस्माद्दीपैर्यजेत्
श्रिये ॥"
इत्युपक्रम्य, --
"घृतप्रदीपः
प्रथमस्तिलतैलोद्भवस्ततः ।
सार्षपः फलनिर्यासजातो वा
राजिकोद्भवः ॥
दधिजश्चाणुजश्चैव प्रदीपाः सप्त
कीर्त्तिताः ।
पद्मसूत्रभवा दर्भगर्भसूत्रभवाथवा ॥
शणजा वादरी वापि
फलकोषोद्भवाथवा ।
वर्त्तिका दीपकृत्येषु सदा पञ्चविधाः
स्मृताः ॥ * ॥
तैजसं दारवं लौहं मार्त्तिक्यं
नारिकेलजम् ।
तृणध्वजोद्भवं वापि दीपपात्रं
प्रशस्यते ॥ * ॥

सततं लक्षणोपेतं देवार्थमुपकल्पितम् ।
न हरेज्ज्ञानतो दीपं तथा लोभादिना नरः ॥
दीपहर्त्ता भवेदन्धः काणो निर्व्वापको भवेत् ।
उद्दीप्तदीपप्रतिमः काष्ठकाण्डसमुद्भवः ॥
विल्वेध्मोद्भवमेवाथ दीपालाभे निवेदयेत् ।
उल्मूकं नैव दीपार्थे कदाचिदति चोत्सृजेत् ॥
प्रसन्नार्थन्तु तं दद्यादुपचाराद्बहिःकृतम् ।
एवं वां कथितो दीपो धूपञ्च शृणुतं सुतौ ॥"
इति कालिकापुराणे ६८ अध्यायः ॥
श्राद्धे वस्त्रवर्त्तियुक्तदीपनिषेधो यथा, --
"दीपं वर्जेत् वस्त्रवर्त्त्या प्रत्यक्षं तैलमेव च ।"
इति योगिनीतन्त्रे प्रथमतमे २ भागे ५ पटलः
॥
कार्त्तिकमासे दीपदानस्य माहात्म्यं यथा, --
"शृणु दीपस्य माहात्म्यं कार्त्तिके च हरि-
प्रिय ! ।
यस्य श्रवणमात्रेण दीपदाने मतिर्भवेत् ॥
सूर्य्यग्रहे कुरुक्षेत्रे नर्म्मदायां शशिग्रहे ।
तुलादानस्य यत् पुण्यं तदूर्ज्जे दीपदानतः ॥
घृतेन दीपकं यस्तु तिलतैलेन वा पुनः ।
ज्वालयेन्मुनिशार्द्दूल ! अश्वमेधेन तस्य किम्
॥
तेनेष्टं क्रतुभिः सर्व्वं कृतं तीर्थावगाहनम् ।
दीपदानं कृतं येन कार्त्तिके केशवाग्रतः ॥
तावद्गर्ज्जन्ति पापानि देहेऽस्मिन् मुनि-
सत्तम ! ।
यावत् कार्त्तिकमासेन दीपदानं कृतं भवेत् ॥
तावद्गर्ज्जन्ति पुण्यानि स्वर्गे मर्त्ये रसातले
।
यावत्तु ज्वलते दीपः कार्त्तिके केशवाग्रतः ॥
श्रूयतेऽत्रापि पितृभिर्गाथा गीता महामुने ! ।
भविष्यन्ति कुलेऽस्माकं कदाचित्ते सुता भुवि
॥
कार्त्तिके दीपदानैर्ये तोषयिष्यन्ति केशवम् ।
अपि नस्ते भविष्यन्ति कुले सुचरिता गुणैः ।
दीपदानं कार्त्तिके ये दास्यन्ति हरितुष्टिदम् ॥
गयायां पिण्डदानेन कृतं न प्रीणनं सुतैः ।
यैश्चापि कार्त्तिके दत्तो दीपस्तुष्टिकरो हरेः ॥

दीपं स्पृष्ट्वा वैधकर्म्मकरणे दोषो यथा, --
"दीपं स्पृष्ट्वा तु यो देवि ! मम कर्म्माणि
कारयेत् ।
तस्यापराधाद्वै भूमे ! पापं प्राप्नोति मानवः ।
तच्छृणुष्व महाभागे ! कथ्यमानं मयानघे ! ॥
जायते षष्टिवर्षाणि कुष्ठी गात्रपरिप्लुतः ।
चाण्डालस्य गृहे तत्र एवमेव न संशयः ॥
एवं भूत्वा तु तत् कर्म्म मम क्षेत्रे मृतो यदि ।
मद्भक्तश्चैव जायेत शुद्धे भागवते गृहे ॥
प्रायश्चित्तं प्रवक्ष्यामि दीपस्य स्पर्शनाद्भुवि ।
तरन्ति मनुजा येन कष्टं चाण्डालयोनिषु ॥
यस्य कस्यापि मासस्य शुक्लपक्षे च द्वादशी ।
चतुर्थभक्तमाहारमाकाशशयनेस्वपेत् ॥
दीपं दत्त्वापराधाद्वै तरन्ति मनुजा भुवि ।
शुचिर्भूत्वा यथान्यायं मम कर्म्म पथे स्थितः
॥
एतत्ते कथितं देवि ! स्पर्शनात् दीपकस्य तु ।
संसारशोधनञ्चैव यत् कृत्वा लभते शुभम् ॥"
इति वराहपुराणम् ॥ * ॥
पुरुषस्य दीपनिर्व्वापणे दोषो यथा, --
"दीपनिर्व्वापणात् पुंसः कुष्माण्डच्छेदनात्
स्त्रियः ।
अचिरेणैव कालेन वंशनाशो भवेद्ध्रुवम् ॥ * ॥
देवार्थकल्पितदीपस्य निर्व्वापणे दोषो यथा, -
-
नैव निर्व्वापयेद्दीपं देवार्थमुकल्पितम् ।
दीपहर्त्ता भवेदन्धः काणो निर्व्वापको भवेत्
॥"
इत्येकादशीतत्त्वे कालिकापुराणम् ॥
कार्त्तिककृष्णचतुर्द्दश्यां मरकनिवृत्तये दीपदानं
यथा, --
"नरकाय प्रदातव्यो दीपः संपूज्य देवताः ।"
इति तिथितत्त्वधृतलिङ्गपुराणम् ॥ * ॥
पृथिव्यां दीपो न संस्थाप्यः । यथा, --
"सर्व्वंसहा वसुमती सहते न त्विदं द्वयम् ।
अकार्य्यपादघातञ्च दीपतापस्तथैव च ॥"
इत्येकादशीतत्त्वधृतकालिकापुराणम् ॥

**दीपकं**, क्ली, (दीपयतीति । दीप् + णिच् + ण्वुल् ।)

दीपवृक्षाश्च कर्त्तव्यास्तैजसाद्यैश्च भैरव ! ।
वृक्षेषु दीपो दातव्यो न तु भूमौ कदाचन ॥
सर्व्वसहा वसुमती सहते न त्विदं द्वयम् ।
अकार्य्यपादघातञ्च दीपतापं तथैव च ॥
तस्माद्यथा तु पृथिवी तापं नाप्नोति वै तथा ।
दीपं दद्यान्महादेव्यै अन्येभ्योऽपि च भैरव ! ॥
कुर्व्वन्तं पृथिवीतापं यो दीपमुत्सृजेन्नरः ।
स ताम्रतापं नरकमाप्नोत्येव शतं समाः ॥
सुवृत्तवर्त्तिसस्नेहपात्रेऽभग्ने सुदर्शने ।
मृण्मये वृक्षकोटौ तु दीपं दद्यात् प्रयत्नतः ॥
लभ्यते यस्य तापस्तु दीपस्य चतुरङ्गुलात् ।
न स दीप इति ख्यातो ह्योघवह्निस्तु स स्मृतः ॥
नेत्राह्लादकरः स्वर्च्चिर्दूरतापविवर्ज्जितः ।
सुशिखः शब्दरहितो निर्धूमो नातिह्रस्वकः ॥
दक्षिणावर्त्तवर्त्तिस्तु प्रदीपः श्रीविवृद्धये ।
दीपवृक्षस्थिते पात्रे शुद्धस्नेहप्रपूरिते ॥
दक्षिणावर्त्तवर्त्या तु चारुदीप्तः प्रदीपकः ।
उत्तमः प्रोच्यते पुत्र ! सर्व्वतुष्टिप्रदायकः ॥
वृक्षेण वर्ज्जितो दीपो मध्यमः परिकीर्त्तितः ।
विहीनः पात्रतैलाभ्यामधमः परिकीर्त्तितः ॥
दीपं दास्यन्ति ये पुत्रास्तुष्ट्यर्थं चक्रपाणिनः ।
कार्त्तिके तैर्मुनिश्रेष्ठ ! नरकादुद्धृता वयम् ॥
मन्त्रहीनं क्रियाहीनं शुद्धिहीनं जनार्द्दन ! ।
व्रतं संपूर्णतां यातु कार्त्तिके दीपदानतः ॥
अनेनैव हि मन्त्रेण दीपं संकल्पयेन्मुने ! ।
मधुसूदनतुष्ट्यर्थं कार्त्तिके मुनिपुङ्गवः ॥"
इति पाद्मे उत्तरखण्डः ॥
अपि च ।
"दास्यते देवदेवाय दीपपुष्पानुलेपनम् ।
अपि नः स कुले भूयादेकादश्यां तिथौ नरः ॥
करिष्यत्युपवासन्तु सर्व्वपातकहानिदम् ।
इत्थं पितॄणां वचनं श्रुत्वा नृपतिसत्तमः ॥
ददौ च दीपान् विधिवत् विष्णोरायतने बलिः ।
सुगन्धतैलसंपूर्णान् दीपान् सघृततौलकान् ॥
सर्षपस्य सुतैलेन मधुकातसिसम्भवैः ।
दीपप्रदानान्नरकानन्धतामिस्रसंज्ञकान् ।
तीर्त्वा सभार्य्यया ब्रह्मन् ।
विष्णुलोकमगात्ततः ॥"
इति वामनपुराणम् ॥
वाक्यालङ्कारः । दीप्तिकारके, त्रि । इति मेदिनी ।
के, १०४ ॥ कुङ्कुमम् । इति शब्दरत्नावली ॥ * ॥
वाक्यालङ्कारस्य लक्षणं यथा, --
"पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत् ।
एकधर्म्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता ॥
अप्रस्तुतप्रस्तुतयोर्दीपकन्तुनिगद्यते ।
अथ कारकमेकं स्यादनेकासु क्रियासु चेत् ॥
यथा, माघे ।
बलावलेपादधुनापि पूर्ब्बवत्
प्रसाध्यते तेन जगज्जिगीषुणा ।
सती च योषित् प्रकृतिश्च निश्चला
पुमांसमभ्येति भवान्तरेष्वपि ॥"
इति साहित्यदर्पणे । १० । ६७ ॥
अपि च काव्यचन्द्रिकायाम् ।
"जातिक्रियागुणद्रव्यवाचकेन पदेन तु ।
एकत्र वर्त्तिना सर्व्ववाक्यार्थो दीपकम्भवेत् ॥"
यथा, --
भ्रमद्भ्रमरझङ्कारपुंस्कोकिलकलध्वनिः ।
मन्दचन्दनवातोऽपि हरन्ति हृदयं नृणाम् ॥"

| | | |
|---|---|---|
| शाणं वा वादरं वास्त्रं जीर्णं मलिनमेव वा ।<br>उपयुक्तन्तु नो दद्यात् वर्त्तिकार्थन्तु साधकः ॥<br>उपादद्यान्मूलमेव सततं श्रीविवृद्धये ॥ * ॥<br>कोषजं रोमजं वस्त्रं वर्त्तिकार्थं न चाददेत् ।<br>न मिश्रीकृत्य दद्यात्तु दीपं स्नेहान् घृतादिकान् ॥<br>कृत्वा मिश्रीकृतं स्नेहं तामिस्रं नरकं व्रजेत् ।<br>वसामज्जास्थिनियर्सैः स्नेहैः प्राण्यङ्गसम्भवैः ॥<br>प्रदीपं नैव कुर्य्यात्तु कृत्वा पङ्के विषीदति ।<br>अस्थिपात्रेऽथवा गव्ये दुगन्धाद्युपवासिनि ॥<br>नैव दीपः प्रदातव्यो विबुधः श्रीविवृद्धये ।<br>नैव निर्व्वापयेद्दीपं कदाचिदपि यत्नतः ॥ | | |

**दीपकः**, पुं, (दीपयति जठराग्निमिति । दीपि + ण्वुल् ।) यमानी । इति रत्नमाला ॥ (गुणा-श्चास्य यमानीशब्दे ज्ञेयाः ॥) लोचमस्तकः । इति शब्दरत्नावली ॥ दीपः । (यथा, ब्रह्माण्ड-पुराणे ।
"विष्णुवेश्मनि यो दद्यात् कार्त्तिके मासि दीपकम् ।
अग्निष्टोमसहस्रस्य फलमाप्नोति मानवः ॥")
येन पक्षिणान्ये पक्षिणो गृह्यन्ते सः । इति हेमचन्द्रः । ४ । ४०८ ॥ वाज् इति शिकरा इति च भाषा । रागविशेषः । अयं हनूमन्मते षड्रागेषु द्वितीयरागः । सूर्य्यनेत्रान्निर्गतः । अस्य जातिः सम्पूर्णा । गृहन्तु षड्जस्वरः । गान-समयस्तु ग्रीष्मर्त्तौ मधाह्नः । अस्य रूपं यथा । वर्णो रक्तः । वस्त्रं पाटलवर्णम् । गलभूषणं बृहन्मुक्तामाल्यम् । मत्तहस्त्यारूढोऽयम् । बहु-स्त्रीपरिवृतश्च । कस्यचिन्मते । लज्जया दीप-निर्व्वापणेनान्धकारमयं गृहं कृत्वा स्त्रीभी रमते । अस्य रागिण्यः पञ्च यथा । देशी १ कामोद् २ नट् ३ केदारा ४ कानरा वा कर्णाटी ५ । पुत्राश्चाष्टौ यथा । कुन्तलः १ कमलः २ कलिङ्गः वा कलिन्द्रः ३ चम्पकः ४ कुसुम्भः वा कुसुमः ५ रामः ६ लहिलः ७ हिमालः ८ ।

**दीपनः**, पुं, (दीप्यते इति । दीप + ल्युः ।) मयूर-शिखा । (दीप + णिच् + ल्युः ।) शालिञ्चशाकः । इति शब्दचन्द्रिका ॥ कासमर्द्दः । पलाण्डुः । इति राजनिर्घण्टः ॥ दीपयितरि, त्रि ॥ (यथा, ऋतुसंहारे । १ । ३ ।
"सुवासितं हर्म्यतलं मनोरमं
प्रियामुखोच्छासविकल्पितंमघु ।
सुतन्त्रिगीतं मदनस्य दीपनं
शुचौ निशीथेऽनुभवन्ति कामिनः ॥")

**दीपनी**, स्त्री, (दीप्यते जठरवह्निरनया । दीप + णिच् + ल्युट् । स्त्रियां ङीप् ।) मेथिका । (अस्याः पर्य्यायाः यथा, --
"मेथिका मिथिनी मेथिर्दीपनी बहुपत्रिका ।
बोधिनी गन्धबीजा च ज्योतिर्गन्धफला तथा ॥
वल्लरी चन्द्रिका मन्था मित्रपुष्पा च कैरवी ।
कुञ्चिका बहुपर्णी च पीतबीजा मुनिच्छदा ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
पाठा । यवानी । इति राजनिर्घण्टः ॥

**दीपनीयः**, पुं, (दीप्यते जठरवह्निरनेनेति । दीप + णिच् + अनीयर् ।) यवानी । इति राज-निर्घण्टः ॥ दीपनयोग्ये, त्रि । (यथा सुश्रुते । १ । ४५ ।
"दीपनीयमचक्षुष्यं वाडवं दधि वातलम् ॥")
औषधवर्गविशेषः । यथा, --
"पिप्पली पिप्पलीमूलं चव्यचित्रकनागरम् ।
दीपनीयः स्मृतो वर्गः कफानिलगदापहः ॥"
शब्दार्थकल्पतरुः ॥ (दीपस्य शिखा ।) प्रदीप-ज्वाला ॥ (यथा, रघुः । ६ । ६७ ।
"सञ्चारिणी दीपशिखेव रात्रौ
यं यं व्यतीयाय पतिंवरा सा ॥")

**दीपशृङ्खला**, स्त्री, (दीपानां शृङ्खलेव ।) दीपाली । इति हारावली । १२४ ।

**दीपान्विता**, स्त्री, (दीपैरन्विता युक्ता ।) गौण-चान्द्रकार्त्तिकस्यामावास्या । यथा, भविष्य-पुराणम् ।
"येयं दीपान्विता राजन् ! ख्याता पञ्चदशी भुवि ।
तस्यां दद्यान्न चेद्दत्तं पितॄणां वै महालये ॥
पञ्चदशी अमावास्या । अमावास्यामधिकृत्य ।
दीपमालाश्च कर्त्तव्याः शक्त्या देवगृहेषु च ।
रथ्यापण्यश्मशानेषु नदीपर्व्वतसानुषु ॥
इति ब्रह्मपुराणोक्तनानास्थानदीपदानेन दीपा-न्विता ख्याता येयमिति विशेषणाच्च ।" इति श्राद्धतत्त्वम् ॥ * ॥ तत्र कर्म्माणि यथा, --
"प्रदोषसमये लक्ष्मीं पूजयित्वा यथाक्रमम् ।
दीपवृक्षास्तथा कार्य्या भक्त्या देवगृहेष्वपि ॥
चतुष्पथे श्मशानेषु नदीपर्व्वतसानुषु ।
वृक्षमूलेषु गोष्ठेषु चत्वरेषु गृहेषु च ॥
वस्त्रैः पुष्पैः शोभितव्याः क्रयविक्रयभूमयः ।
दीपमालापरिक्षिप्ते प्रदोषे तदनन्तरम् ॥
ब्राह्मणान् भोजयित्वादौ विभज्य च बुभुक्षि-तान् ।
अलङ्कृतेन भोक्तव्यं नववस्त्रोपशोभिना ॥
स्निग्धैर्मुग्धैर्विदग्धैश्च बान्धवैर्भृतकैः सह ॥"
इति तिथितत्त्वम् ॥
तत्र श्यामापूजाप्रमाणं यथा, --
"दीपान्विता पार्व्वणाय स्मृता काल्यर्च्चनाय च
महानिशि द्वितीयं स्यात् पूर्ब्बेद्युर्व्याप्त्यनाप्तयोः
महानिशि व्याप्त्यनाप्तयोः पूर्ब्बेद्युरेव द्वितीयं काल्यर्च्चनं स्यात् इत्यर्थः । प्रथमं पार्व्वणं द्वितीयं

भरतमते अस्य रागिण्यो यथा । केदारा १
गौरा २ गौण्ड ३ गुज्जरी ४ रुद्राणी ५ ।
तन्मते पुत्त्रा यथा । कुसुमः १ टङ्कः २ नट-
नारायणः ३ विहागराः ४ किरोदस्तः ५
रहसमङ्गला वा रभसमङ्गला ६ मङ्गलाष्टकः ७
अडानुः वा आडाना ८ । इति तहफतोल-
हिन्दाख्यसंगीतशास्त्रसंग्रहः ॥ (तालविशेषः ।
यथा, सङ्गीतदामोदरे ।
"प्लुतो लघुः प्लुतश्चैव ताले दीपकनामनि ॥")

**दीपकिट्टं**, क्ली, (दीपस्य किट्टम् ।) दीपजात-
कज्जलम् । इति शब्दार्थकल्पतरुः ॥

**दीपकूपी**, स्त्री, (दीपस्य कूपीव तैलधारकत्वात् ।)
दीपवर्त्तिः । शलिता इति भाषा । तत्पर्य्यायः ।
तैलमाली २ दीपखोरी ३ विदाहिका ४ ।
इति शब्दमाला ॥

**दीपखोरी**, स्त्री, (दीपं खोरयति गत्याधातं
करोति स्थिरीकरोतीति । खोर् गत्याघाते +
णिच् + अच् । गौरादित्वादित् ङीष् ।) दीप-
कूपी । इति शब्दमाला ॥

**दीपध्वजः**, पुं, क्ली, (दीपस्य ध्वज इव ।) कज्ज-
लम् । इति जटाधरः ॥

**दीपनं**, क्ली, (दीपयति वह्निमिति । दीप + णिच्
+ ल्युः ।) तगरमूलम् । इति रत्नमाला ॥
कुङ्कुमम् । इति त्रिकाण्डशेषः ॥ (मन्त्रसंस्कार-
विशेषः । यथा, शारदातिलके ।
"मन्त्राणां दश कथ्यन्ते संस्कारा सिद्धिदायिनः ।
जननं जीवनं पश्चात्ताडनं बोधनं तथा ॥
इति चक्रदत्तः ॥

**दीपपादपः**, पुं, (दीपस्य पादप इव ।) दीप-
वृक्षः । इति शब्दार्थकल्पतरुः ॥

**दीपपुष्पः**, पुं, (दीप इव पुष्पं यस्य ।) चम्पक-
वृक्षः । इति राजनिर्घण्टः ॥

**दीपवती**, स्त्री, (दीपवत् तेजस्वित्वं अस्त्यस्या
इति । दीप + मतुप् । मस्य वः ।) कामाख्यायां
नदीविशेषः । यथा, --
और्व्व उवाच ।
"शाश्वती कथिता या तुनदी मत्स्यध्वजा सिता ।
तस्याः पूर्ब्बे समाख्याता नदी दीपवती मता ॥
एषा च हिमवज्जाता छिन्दन्ती दीपवत्तमः ।
तेन देवमनुष्येषु नदी दीपवती स्मृता ॥
दीपवत्याः पूर्ब्बतस्तु शृङ्गाटो नाम पर्व्वतः ॥"
इति कालिकापुराणे ८२ अध्यायः ॥

**दीपवृक्षः**, पुं, (दीपस्य वृक्ष इव आधारः ।) दीपा-
धारः । पिल्सुज् इति देलुका इति च भाषा ।
तत्पर्य्यायः । दीपतरुः २ ज्योत्स्नावृक्षः ३ । इति
त्रिकाण्डशेषः ॥ दीपपादपः ४ । इति शब्दार्थ-
कल्पतरुः ॥ (यथा, महाभारते । १२ । २०२ । ९ ।
"यथा प्रदीप्तः पुरतः प्रदीपः प्रकाशमन्यस्य करोति दीप्यन् ।
तथेह पञ्चेन्द्रियदीपवृक्षा ज्ञानप्रदीप्ताः परवन्त एव ॥")

**दीपशिखा**, स्त्री, (दीपस्य शिखा कारणत्वेन
अस्त्यस्याः । अच् । टाप् ।) कज्जलम् । इति
काल्यर्च्चनमिति द्वितीयशब्दस्य तात्पर्य्यार्थः ।"
इति स्मृतिसारसंग्रहधृतव्योमकेशतन्त्रम् ॥ * ॥
अपरञ्च ।
"दीपोत्सर्गचतुर्द्दश्या संमिश्रा या भवेत् कुहूः ।
तस्यां या तामसी रात्रिः सोच्यते कालरात्रिका ॥
तस्यां पूजा प्रकर्त्तव्या काली तारा प्रियङ्करी ॥"
इति कालीकुलसद्भावः ॥

**दीपाली**, स्त्री, (दीपानां आली श्रेणी ।) दीप-
माला । तत्पर्य्यायः । दीपशृङ्खला २ । इति
हारावली । १२४ ॥ (दीपानां आली यत्र ।)
दीपान्वितामावास्या । तत्पर्य्यायः । यक्ष-
रात्रिः २ । इति त्रिकाण्डशेषः ॥

**दीपिका**, स्त्री, (दीपयति प्रकाशयति ग्रहादी-
निति । दीप + णिच् + ण्वुल् । टापि अत
इत्वम् ।) महिन्तापनीयश्रीनिवासकृतज्योति-
र्ग्रन्थविशेषः । यथा, अस्तं गतवति मिहिरेऽति-
मलिनदोषाकुले च गोविभवे । उद्वाहादिषु
शुद्धिग्रहणार्थं दीपिका क्रियते ॥ एतद्भिन्ना भुवन-
चण्डजातकशुद्ध्यादिदीपिकाःसन्ति ॥ रागिणी-

| | | |
|---|---|---|
| अथाभिषेको विमलीकरणाप्यायने तथा<br>।<br>तर्पणं दीपनं गुप्तिर्दशैता मन्त्रसंस्क्रियाः<br>॥”<br>“तारमायारमायोगो मनोर्दीपनमुच्यते<br>॥”) | | |

विशेषः । सा हिण्डोलरागस्य पत्नी । अस्या ध्यानं यथा, --
"प्रदोषकाले गृहसम्प्रविष्टा
प्रदीपहस्तारुणगात्रवस्त्रा।
सीमन्तसिन्दूरविराजमाना
सुरक्तमाल्या किल दीपिकेयम् ॥"
तस्या गानकालः सायाह्नः । इति सङ्गीत-दामोदरः ॥ (प्रदीपः । यथा, रघुः । ९ । ७० ।
"स ललितकुसुमप्रवालशय्यां
ज्वलितमहौषधिदीपिकासनाथाम्॥")
प्रकाशिकायाम्, त्रि ॥

**दीपिता**, [ऋ] त्रि, (दीपयतीति । दीप + णिच् + तृच् ।) दीप्तिकर्त्ता । इति व्याकरणम् ॥

**दीप्तं**, क्ली, (दीपी दीप्तौ + क्तः । "श्वीदितो निष्ठायाम् ।" ७ । २ । १४ । इति नेट् ।) स्वर्णम् । हिङ्गु । इति राजनिर्घण्टः ॥ (स्वर्ण-शब्दे हिङ्गुशब्दे च विवृतिरस्य ज्ञेया ॥)

**दीप्तः**, पुं, (दीप + क्तः ।) निम्बुकः । सिंहः । इति राजनिर्घण्टः ॥ (नासागतरोगविशेषः । यथा, सुश्रुते उत्तरतन्त्रे २२ अध्याये ।
"घ्राणे भृशं दाहसमन्विते तु
विनिःसरेद्धूम इवेह वायुः ।
नासा प्रदीप्तेव च यस्य जन्तो-
र्व्याधिस्तु तं दीप्तमुदाहरन्ति ॥"
अस्य प्रतिषेधमाह तत्रैव २३ अध्याये ।
"दीप्ते रोगे पैत्तिकं संविधानं
कुर्य्यात् सर्व्वं स्वादु यच्छीतलञ्च ॥")

**दीप्तः**, त्रि, (दीप + क्तः ।) निर्भासितः । दग्धः । ज्वलितः । इति मेदिनी । ते, २५ ॥ (यथा, हरिवंशे । १६८ । ३ ।
"ततः शकुनयो दीप्ता मृगाश्च क्रूरभाषिणः ।
यथा, महाभारते । १ । २२९ । ३७ ।
"दोप्ताक्षो दीप्तजिह्वश्च संप्रदीप्तमहाननः ॥")

**दीप्ताग्निः**, पुं, (दीप्तः अग्निर्जठराग्निर्यस्य ।) अगस्त्यः । इति त्रिकाण्डशेषः ॥ (प्रदीप्तो वह्निः । यथा, भट्टिः । २ । २ ।
"सधूमदीप्ताग्निरुचीनि रेजु-
स्ताम्रोत्पलान्याकुलषट्पदानि ॥")
तीक्ष्णजठरानलयुक्ते, त्रि ॥ (यथा, सुश्रुते । १ । २० ।
"सात्म्यतोऽल्पतया वापि
दीप्ताग्नेस्तरुणस्य च ॥")

**दीप्ताङ्गः**, पुं, (दीप्तं भासितमङ्गमस्य ।) मयूरः । इति शब्दरत्नावली ॥

**दीप्तिः**, स्त्री, (दीप + क्तिन् ।) दीपनम् । तत्-पर्य्यायः । प्रभा २ रुक् ३ रुचिः ४ त्विट् ५ भा ६ भाः ७ छविः ८ द्युतिः ९ रोचिः १० शोचिः ११ । इत्यमरः । १ । ४ । ३४ ॥ बाणवेगस्य तीव्रता । स्त्रिया अयत्नजगुणः । इति हेमचन्द्रः । २ । १३ ॥
"कान्तिरेव वयोभोगदेशकालगुणादिभिः ।
उद्दीपितातिविस्तारं प्राप्ता
चेद्दीप्तिरुच्यते ॥"
इत्युज्ज्वलनीलमणिः ॥
(यथा, साहित्यदर्पणे । ३ । १३१ ।
"कान्तिरेवातिविस्तीर्णा
दीप्तिरित्यभिधीयते ॥")
लाक्षा । कांस्यम् । इति राजनिर्घण्टः ॥

**दीप्तिकः**, पुं, (दीप्त्या कायतीति । कै + कः ।) दुग्धपाषाणवृक्षः । इति राजनिर्घण्टः ॥

**दीप्रः**, त्रि, (दीप्यते इति । दीप + "नमिकम्पि-स्म्यजसकमहिंसदीपो रः ।" ३ । २ । १६७ । इति रः ।) दीप्तिविशिष्टः । इति व्याकरणम् ॥ (यथा कथासरित्सागरे । २५ । १३५ ।
"क्वचित्
क्वचिच्चिताज्योतिर्दीप्रदीपप्रकाशितम्॥")

**दीयमानः**, त्रि, (दीयते इति । दा + कर्म्मणि शानच् ।) वर्त्तमानदानसम्बन्धिवस्तु । इति व्याकरणम् । यथा, कृत्यचिन्तामणौ ।
"विवाहोत्सवयज्ञेषु अन्तरा मृतसूतके ।
पूर्ब्बसङ्कल्पितं द्रव्यं दीयमानं न दुष्यति ॥"
इति तिथ्यादितत्त्वम् ।

**दीर्घं**, त्रि, (दृणातीति । दॄ विदारणे + बाहुल-कात् घङ् ।) आयतम् । इत्यमरः । ३ । १ । ६९ ।
(यथा मेघदूते । १०३ ।
"दीर्घोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्त्ती
सङ्कल्पैस्ते विशति विधिना वैरिणा रुद्ध-मार्गः ॥")

**दीर्घः**, पुं, (दॄ + बाहुलकात् घङ् ।) लताशाल-वृक्षः । (यथा, वैद्यकरत्नमालायाम् ।
"ताक्ष्योऽश्वकर्णः कुशिको बल्यो दीर्घो लता-द्रुमः ॥")
इत्कटः । इति रत्नमाला ॥ रामशरः । उष्ट्रः । इति राजनिर्घण्टः ॥
पञ्चमषष्ठसप्तमाष्टमराशयः ।
यथा । वृश्चिककन्यामृगपतिवणिजोदीर्घाः । इति ज्योतिषतत्त्वम् ॥ द्विमात्रवर्णः । तद्यथा । आ ई ऊ ॠ ए ऐ ओ औ । गुरुवर्णः । इति व्याकरणम् ॥ (दीर्घलक्षणं यथा, --
"एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ।
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनञ्चार्द्धमात्रकम् ॥")

**दीर्घकणा**, स्त्री, (दीर्घा कणेति नित्यकर्म्मधारयः ।) गौरजीरकः ॥ इति राजनिर्घण्टः ॥

दीप्तायां दिशि भाषन्तो भयमावेदयन्ति मे ॥”)

**दीप्तकं**, क्ली, (दीप्तमेव । स्वार्थे कन् ।) स्वर्णम् ।
इति राजनिर्घण्टः ॥

**दीप्तजिह्वा**, स्त्री पुं, (दीप्ता जिह्वा यस्याः ।)
उल्कामुखी शृगाली । इति हारावली । ७९ ॥
(प्रदीप्तजिह्वे, त्रि । यथा, महाभारते । १ । २२९ । ३७ ।
“दीप्ताक्षो दीप्तजिह्वश्च संप्रदीप्तमहाननः ॥”)

**दीप्तपिङ्गलः**, पुं, (दीप्तः पिङ्गलश्च । दीप्तं स्वर्णं
तद्वत् पिङ्गलो वा ।) सिंहः । इति राजनिर्घण्टः ॥

**दीप्तरसः**, पुं, (दीप्त उज्ज्वलो रसो यस्य ।) किञ्चु-
लुकः । इति शब्दचन्द्रिका ॥

**दीप्तलोचनः**, पुं, (दीप्ते लोचने नेत्रे यस्य ।)
विडालः । इति राजनिर्घण्टः ॥

**दीप्तलोहं**, क्ली, (दीप्तं लोहमिव ।) कांस्यम् ।
इति राजनिर्घण्टः ॥

**दीप्ता**, स्त्री, (दीप्त + टाप् ।) लाङ्गलिकावृक्षः ।
इति रत्नमाला ॥ ज्योतिष्मती । सातला । इति
राजनिर्घण्टः ॥

**दीप्ताक्षः**, पुं, (दीप्ते अक्षिणी यस्य ।) विडालः ।
इति शब्दरत्नावली ॥ (प्रदीप्तनेत्रे, त्रि ।

**दीप्तोपलः**, पुं, (दीप्तः सूर्य्यकिरणसम्पर्कात् ज्वलितः
उपलः ।) सूर्य्यकान्तमणिः । इति राज-
निर्घण्टः ॥

**दीप्यः**, पुं, (दीपाय अग्निदीपनाय हितमिति ।
दीप + “तस्मै हितम् ।” ५ । १ । ४ । इति
अपूपादित्वात् पक्षे यत् ।) यमानी । (अस्य
पर्य्यायो यथा, --
“यमानी दीप्यको दीप्यो भूतिकश्च यमानिका ॥”
इति वैद्यकरत्नभालायाम् ॥)
जीरकः । इति राजनिर्घण्टः ॥ (दीपाय साधु-
रिति । दीप + “तत्र साधुः ।” ४ । ४ । ९८ ।
इति यत् ।) मयूरशिखा । रुद्रजटा इति
ख्याता । इत्यमरः । २ । ४ । १११ ॥

**दीप्यकं**, क्ली, (दीपाय हितं साधुरिति वा ।
दीप + यत् । ततः स्वार्थे कन् ।) अजमोदा ।
यमानी । (यथा भावप्रकाशे क्षुद्ररोगाधिकारे ।
“सैन्धवं चन्दनं कुष्ठं दीपकञ्च फलं पृथक् ॥”)
बर्हिचूडा । इति मेदिनी । के, १०५ ॥

**दीप्यकः**, पुं, (दीप्य + संज्ञायां स्वार्थे वा कन् ।)
अलङ्कारः । यमानी । (अस्य पर्य्याया यथा, --
“यमानी दीप्यको दीप्यो भूतिकश्च यमानिका ॥”
इति वैद्यकरत्नमालायाम् ॥)
लोचमस्तकः । इति भरतधृतरभसः ॥ (अज-
मोदा । तत्पर्य्यायो यथा, --
“अजमोदा खराश्वा च मायूरो दीप्यकन्तथा ।
तथा ब्रह्मकुशा प्रोक्ता कारवी लोचमस्तका ॥”

**दीर्घकण्टकः**, पुं, (दीर्घः कण्टकोऽस्य ।) वर्व्वुरः ।
इति राजनिर्घण्टः ॥

**दीर्घकण्ठकः**, पुं, (दीर्घः कण्ठोऽस्य । कप् ।)
वकपक्षी । इति शब्दचन्द्रिका ॥

**दीर्घकन्दकं**, क्ली, (दीर्घः कन्दो यस्य । कप् ।)
मूलकम् । इति राजनिर्घण्टः ॥ (मूलकशब्दे-
ऽस्य गुणादयो विज्ञेयाः ॥)

**दीर्घकन्दिका**, स्त्री, (दीर्घकन्दक + टाप् अत
इत्वञ्च ।) मुषली । इति राजनिर्घण्टः ॥

**दीर्घकन्धरः**, पुं, (दीर्घः कन्धरो यस्य ।) वकः ।
इति राजनिर्घण्टः ॥

**दीर्घकाण्डः**, पुं, (दीर्घः काण्डो यस्य ।) गुण्डतृणम् ।
इति राजनिर्घण्टः ॥

**दीर्घकाण्डा**, स्त्री, (दीर्घः काण्डोऽस्याः ।) पाताल-
गडुरीलता । इति राजनिर्घण्टः ॥

**दीर्घकीलः**, पुं, (दीर्घः कीलः शाखादण्डो यत्र ।)
अङ्कोठवृक्षः । इति राजनिर्घण्टः ॥

**दीर्घकीलकः**, पुं, (दीर्घकील + स्वार्थे कन् ।) अङ्कोठ-
वृक्षः । इति जटाधरः ॥

**दीर्घकूरकं** क्ली, (दीर्घं कूरकमन्नम् ।) राजान्नम् ।
इति राजनिर्घण्टः ॥

**दीर्घकेशः**, पुं, (दीर्घाः केशा इव लोमान्यस्य ।)
भल्लूकः । इति राजनिर्घण्टः ॥ (देशभेदः ।
यथा, वृहत्संहितायाम् । १४ । २३ ।
“एकविलोचनशूलिकदीर्घग्रीवास्यकेशाश्च ॥”
दीर्घाः केशा यस्य ।) आयतकचे, त्रि ॥ (स्त्रियां
वा ङीष् स्वाङ्गत्वात् । यथा, महानाटके । १९१
।
“विम्बोष्ठी चारुनेत्रा गजपतिगमना दीर्घकेशी
सुमध्या ॥”)

**दीर्घकोशिका**, स्त्री, (दीर्घः कोशो यस्याः । ततः
संज्ञायां कन् टाप् अत इत्वञ्च ।) दीर्घको-
षिका । इत्यमरटीकायां भरतः ॥

**दीर्घकोषिका**, स्त्री, (दीर्घः कोषोऽस्याः । कापि
अत इत्वम् ।) झिणायिका । झिणुक् इति
ख्याता । तत्पर्य्यायः । दुर्नामा २ । इत्यमरः ।
१ । १० । २५ ॥

**दीर्घगतिः**, पुं, (दीर्घा आयतस्थानग्रहा गतिः
पादविक्षेपो यस्य ।) उष्ट्रः । इति राज-
निर्घण्टः ॥

**दीर्घग्रन्थिः**, पुं, (दीर्घो ग्रन्थिः पर्व्वास्य ।) गज-
पिप्पली । इति राजनिर्घण्टः ॥ (विवृतिरस्य
गज-
पिप्पलीशब्दे विज्ञेया ॥)

**दीर्घग्रीवः**, पुं, (दीर्घा ग्रीवास्य ।) उष्ट्रः । इति
हेमचन्द्रः । ४ । ३२९ ॥ नीलक्रौञ्चः । इति
राज-
निर्घण्टः ॥ (देशभेदः । यथा, बृहत्संहितायाम् ।
१४ । २३ ।
“एकविलोचनशूलिकदीर्घग्रीवास्यकेशाश्च ॥”)

**दीर्घघाटिकः**, पुं, (दीर्घा घाटास्यास्तीति । ठन् ।)
उष्ट्रः । इति शब्दरत्नावली ॥

**दीर्घजङ्गलः**, पुं, (दीर्घं यथा तथा जङ्गलो गति-
शीलः ।) भङ्गानमत्स्यः । इति शब्दमाला ॥

**दीर्घजङ्घः**, पुं, (दीर्घा जङ्घास्य ।) वकः । इति

**दीर्घदण्डकः**, पुं, (दीर्घदण्ड + स्वार्थे कन् ।)
एरण्ड-
वृक्षः । इति जटाधरः ॥

**दीर्घदण्डी**, स्त्री, (दीर्घदण्ड + गौरादित्वात् ङीष् ।)
गोरक्षी । इति राजनिर्घण्टः ॥

**दीर्घदर्शी**, [न्] पुं, (दीर्घं दीर्घात् वा पश्यतीति ।
णिनिः ।) पण्डितः । इत्यमरः । २ । ७ ।
६ ॥
गृध्रः । इति शब्दरत्नावली ॥ भल्लूकः ।
इति
राजनिर्घण्टः ॥ दूरदर्शके, त्रि ॥ (यथा,
महा-
भारते । २ । ४८ । ४३ ।
“स हि धर्म्मं पुरस्कृत्य दीर्घदर्शी परं
हितम् ॥”)

**दीर्घदृष्टिः**, पुं, (दीर्घा दृष्टिर्दर्शनमस्य ।) दीर्घ-
दर्शी । इति हलायुधः ॥

**दीर्घद्रुः**, पुं, (दीर्घश्चासौ द्रुश्चेति कर्म्मधारयः ।)
तालवृक्षः । इति शब्दचन्द्रिका ॥

**दीर्घद्रुमः**, पुं, (दीर्घो द्रुम इति नित्यकर्म्मधारयः ।)
शाल्मलिः । इति राजनिर्घण्टः ॥

**दीर्घनादः**, पुं, (दीर्घो दूरगो नादोऽस्य ।) शङ्खः ।
इति राजनिर्घण्टः ॥

**दीर्घनालं**, क्ली, (दीर्घं नालमस्य ।) दीर्घरोहि-
षकम् । इति राजनिर्घण्टः ॥

**दीर्घनालः**, पुं, (दीर्घं नालं यस्य ।) वृत्तगुण्डः ।
यावनालः । इति राजनिर्घण्टः ॥

**दीर्घनिद्रा**, स्त्री, (दीर्घा निद्रेति नित्यकर्म्मधारयः ।)
मृत्युः । इति हेमचन्द्रः । २ । २३८ ॥
(यथा,
मार्कण्डेये । ७ । १३ ।
“सोऽद्य मत्कार्मुकाक्षेपविदीपितदिगन्तरैः
।

केतकी । डोडीक्षुपः । इति
राजनिर्घण्टः ॥
(चिञ्चापरपर्य्याय उद्भिद्भेदः । यथा,
भाव-
प्रकाशे पूर्ब्बखण्डे प्रथमे भागे ।
“चिञ्चा चञ्चुश्चञ्चुकी च दीर्घपत्रा
सतिक्तका ॥”)

**दीर्घपत्रिका**, स्त्री, (दीर्घपत्र + संज्ञायां कन्
टाप्
अत इत्वञ्च ।) श्वेतवचा ।
घृतकुमारी । शाल-
पर्णी । इति राजनिर्घण्टः ॥

**दीर्घपत्री**, स्त्री, (दीर्घपत्र + गौरादित्वात् ङीष्
।)
पलाशीलता । महाचञ्चुशाकः । इति
राज-
निर्घण्टः ॥

**दीर्घपर्णी**, स्त्री, (दीर्घं पर्णमस्याः ।
गौरादित्वात्
ङीष् ।) पृश्निपर्णी । इति
राजनिर्घण्टः ॥ (पृश्नि-
पर्णीशब्देऽस्या विवरणं ज्ञातव्यम् ॥)

**दीर्घपल्लवः**, पुं, (दीर्घः पल्लवो यस्य ।)
शणवृक्षः ।
इति राजनिर्घण्टः । आयतच्छदे,
क्ली । तद्वति,
त्रि ॥

**दीर्घपात्**, पुं, (दीर्घौ पादावस्य । समासे
अन्त्य-
लोपः ।) कङ्कपक्षी । इति
शब्दरत्नावली ॥

**दीर्घपादः**, पुं, (दीर्घौ पादौ यस्य । समासान्त-
विधेरनित्यत्वात् अन्त्यलोपाभावश्च
।) कङ्क-
पक्षी । इति हेमचन्द्रः । ४ । ४०० ॥

**दीर्घपादपः**, पुं, (दीर्घश्चासौ पादपश्चेति
नित्य-

त्रिकाण्डशेषः ॥ उष्ट्रः । इति जटाधरः ॥ आयतजानुयुक्ते, त्रि ॥

**दीर्घजिह्वः**, पुं, (दीर्घा जिह्वा यस्य ।) सर्पः । इति हेमचन्द्रः । ४ । ३६९ ॥ (दानवविशेषः । यथा, महाभारते । १ । ६५ । ३० ।
"गरिष्ठश्च वनायुश्च दीर्घजिह्वश्च दानवः ॥"
स्त्रियां टाप् । राक्षसीविशेषः । यथा, महाभारते । ३ । २८९ । ४४ ।
"द्व्यक्षीं त्र्यक्षीं ललाटाक्षीं दीर्घजिह्वामजिह्विकाम् ॥")

**दीर्घतरुः**, पुं, (दीर्घश्चासौ तरुश्चेति कर्म्मधारयः ।) तालः । इति शब्दार्थकल्पतरुः ॥

**दीघतिमिषा**, स्त्री, (दीर्घस्तिमिषः । अभिधानात् स्त्रीत्वम् ।) कर्कटी । इति शब्दमाला ॥

**दीर्घतुण्डा**, स्त्री, (दीर्घं तुण्डं यस्याः ।) छुछुन्दरी । इति कोषान्तरम् ॥

**दीर्घतृणः**, पुं, (दीर्घं तृणमिति नित्यकर्म्मधारयः । अभिधानात् पुंस्त्वम् ।) पल्लिवाहः । इति राजनिर्घण्टः ॥

**दीर्घदण्डः**, पुं, (दीर्घो दण्ड इव काण्डावच्छेदेन ।) एरण्डवृक्षः । इति भावप्रकाशः ॥

शरैर्विभिन्नसर्व्वाङ्गो दीर्घनिद्रां प्रवेक्ष्यति ॥")

**दीर्घपटोलिका**, स्त्री, (दीर्घा पटोलिका ।) लताफलविशेषः । धुँदुल इति भाषा । अस्य गुणाः । स्निग्धत्वम् । कटुत्वम् । विष्टम्भित्वम् । गुरुत्वम् । वायुपित्तश्लेष्मरुचिभेदकारित्वम् । मधुरत्वम् । शीतलत्वञ्च । इति राजवल्लभः ॥

**दीर्घपत्रः**, पुं, (दीर्घं पत्रमस्य ।) राजपलाण्डुः । विष्णुकन्दः । हरिदर्भः । कुन्दरः । तालः । इति राजनिर्घण्टः ॥ कुपीलुः । इति भावप्रकाशः ॥ (इक्षुभेदः । यथा, सुश्रुते सूत्रस्थाने ४५ अः ।
"कान्तारस्तापसेक्षुश्च काष्ठेक्षुः सूचिपत्रकः ।
नैपालो दीर्घपत्रश्च नीलपोरोऽथ कोषकृत् ॥")

**दीर्घपत्रकः**, पुं, (दीर्घपत्र + संज्ञायां कन् ।) रक्तलशुनः । एरण्डः । हिज्जलः । वेतसः । इति राजनिर्घण्टः ॥ करीरवृक्षः । इति शब्दचन्द्रिका ॥ जलजमधूकः । इति जटाधरः ॥ लशुनः । इति हेमचन्द्रः । ४ । २५३ ॥ (इक्षुभेदः । यथा, सुश्रुते सूत्रस्थाने ४५ अः ।
"सूचिपत्रो नीलपोरो नैपालो दीर्घपत्रकः ।
वातलाः कफपित्तघ्नाः सकषाया विदाहिनः ॥")

**दीर्घपत्रा**, स्त्री, (दीर्घपत्र + टाप् ।) चित्रपर्णिका । चाकुलियाभेदः । (यथा, भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ।
"शालिपर्णी स्थिरा सौम्या त्रिपर्णी पीरवी गुहा ।

कर्म्मधारयः ।) तालः । पूगः । इति राजनिघण्टः ॥

**दीर्घपृष्ठः**, पुं, (दीर्घं पृष्ठं यस्य ।) सर्पः । इत्यमरः । १ । ८ । ८ ॥

**दीर्घफलः**, पुं, (दीर्घं फलं यस्य ।) आरग्वधवृक्षः । इति राजनिर्घण्टः ॥ (अस्य पर्य्यायो यथा, --
"आरग्वधो राजवृक्षः सम्पाकश्चतुरङ्गुलः ।
आरवेतो व्याधिघातः कृतमालः सुवर्णकः ॥
कणिकारो दीर्घफलः स्वर्णाङ्गः स्वर्णभूषणः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**दीर्घफलकः**, पुं, (दीर्घफल + संज्ञायां कन् ।) अगस्त्यवृक्षः । इति राजनिर्घण्टः ॥ (गुणादयोऽस्या-गस्त्यशब्दे व्याख्याताः ॥)

**दीर्घफला**, स्त्री, (दीर्घाणि फलानि यस्याः ।) कपिलद्राक्षा । जतुका । इति राजनिर्घण्टः ॥

**दीर्घबाला**, स्त्री, (दीर्घः बालो यस्याः ।) चमरी । इति राजनिर्घण्टः ॥

**दीर्घमारुतः**, पुं, (दीर्घः अधिकसमयव्यापी मारुतो निःश्वासवायुर्य्यस्य ।) हस्ती । इति त्रिकाण्डशेषः ॥

**दीर्घमूलं**, क्ली, (दीर्घं मूलं यस्य ।) लामज्जकम् । इति राजनिर्घण्टः ॥

**दीर्घमूलः**, पुं, (दीर्घं मूलं यस्य ।) मोरटलता । विल्वान्तरवृक्षः । इति राजनिर्घण्टः ॥

| | | |
|---|---|---|
| | विदारिगन्धा दीर्घाङ्गी दीर्घपत्रांशुमत्यपि ॥”)<br>ह्रस्वजम्बुः । इति रत्नमाला ॥ गन्धपत्रा । | **दीर्घमूलकं**, क्ली, (दीर्घमूल + संज्ञायां कन् ।)<br>मूलकम् । इति राजनिर्घण्टः ॥<br>**दीर्घमूला**, स्त्री, (दीर्घं मूलं यस्याः । टाप् ।)<br>श्यामालता । शालपर्णी । इति रत्नमाला ॥<br>(यथा, सुश्रुते । १ । ३८ ।<br>“प्रियङ्गु समङ्गधातकी पुन्नागरक्तचन्दनकुचन्दन- |

मोचरसरसाञ्जनकुम्भीकस्रोतोऽञ्जनपद्मकेसर-
योजनवल्ल्यो दीर्घमूला चेति ॥”)

**दीर्घमूली**, स्त्री, (दीर्घं मूलमस्याः । ङीप् ।) दुरा-
लभा । इति शब्दमाला ॥

**दीर्घरदः**, पुं, (दीर्घौ रदौ दन्तौ यस्य ।) शूकरः ।
इति त्रिकाण्डशेषः ॥ आयतदन्ते, त्रि ॥

**दीर्घरसनः**, पुं, (दीर्घा रसना जिह्वा यस्य ।)
सर्पः । इति शब्दचन्द्रिका ॥

**दीर्घरागा**, स्त्री, (दीर्घः अधिककालस्थायी रागो
यस्याः ।) हरिद्रा । इति राजनिर्घण्टः ॥

**दीर्घरात्रं**, क्ली, (दीर्घाः प्रचुरा रात्रयः सन्त्यत्र ।
अर्श आदित्वात् अच् ।) चिरकालम् । इति
त्रिकाण्डशेषः ॥ (पुं, दीर्घा चासौ रात्रिश्चेति
विग्रहे । “सर्व्वैकदेशसङ्ख्यातपुण्यवर्षादीर्घाद्रात्रेः
।”
इति मुग्धबोधसूत्रात् षः । पुंस्त्वमभिधानात् ।)
दीर्घा निशा च ॥

**दीर्घरोमा**, [न्] पुं, (दीर्घाणि रोमाणि यस्य ।) भल्लूकः ।
इति शब्दार्थकल्पतरुः ॥ (महादेवस्य भूताना-
मन्यतमः । यथा, हरिवंशे भविष्यपर्व्वणि । १४
। २ ।
“तस्याग्रे समपद्यन्त भूतसङ्घाः सहस्रशः ।”
“दीर्घरोमा दीर्घभुजो दीर्घबाहुर्निरञ्जनः ॥”)

**दीर्घरोहिषकं**, क्ली, (दीर्घं रोहिषम् । ततः स्वार्थे
संज्ञायां वा कन् ।) कत्तृणभेदः । सुगन्धितृण-
विशेषः । वड रोहिष इति भाषा । तत्पर्य्यायः ।
दृढकाण्डम् २ दृढच्छदम् ३ यज्ञेष्टम् ४ दीर्घ-
नालम् ५ तिक्तसारम् ६ । अस्य गुणाः । तिक्त-
त्वम् । कटुत्वम् । उष्णत्वम् । कफवातभूतग्रह-
विषनाशित्वम् । व्रणक्षतविरोपणत्वञ्च । इति
राजनिर्घण्टः ॥

**दीर्घवंशः**, पुं, (दीर्घो वंश इव ।) नलः । इति
राजनिर्घण्टः ॥ आयते तृणध्वजे कुले च ॥

**दीर्घवक्त्रः**, पुं, स्त्री, (दीर्घं वक्त्रं मुखं यस्य ।) हस्ती ।

**दीर्घशरः**, पुं, (दीर्घः शरः ।) यावनालः । इति
राजनिर्घण्टः ॥

**दीर्घशाखः**, पुं, (दीर्घा शाखा यस्य ।) शणवृक्षः ।
इति राजनिर्घण्टः ॥
शालवृक्षः । इति शब्द-
चन्द्रिका ॥

**दीर्घशाखिका**, स्त्री, (दीर्घा शाखा यस्याः । कापि
अत इत्वम् ।)
नीलाम्लीक्षुपः । इति राज-
निर्घण्टः ॥

**दीर्घशिम्बिकः**, पुं, (दीर्घा शिम्बिर्यस्य । कप् ।)
क्षवः । इति राजनिर्घण्टः ॥

**दीर्घशूककं**, क्ली, (दीर्घं शूकं यस्य । कप् ।) राजा-
न्नम् । इति राजनिर्घण्टः ॥

**दीर्घसक्थं**, त्रि, (दीर्घे सक्थिनी यस्य । “बहु-
व्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्
षच् ।” ५ । ४ ।
११३ । इति षच् ।) दीर्घोरु
। इति व्याकरणम् ॥

**दीर्घसक्थि**, क्ली, (दीर्घे सक्थिनी यस्य । स्वाङ्गादि-
त्युक्तेरत्र न षच् ।) शकटम् ।
इति व्याकरणम् ॥

**दीर्घसत्रं**, क्ली, (दीर्घं बहुकालसाध्यं सत्रम् ।)
यज्ञविशेषः । (यथा, भागवते
। १ । १ । २१ ।
“कलिमागतमाज्ञाय
क्षेत्रेऽस्मिन् वैष्णवे वयम् ।
आसीना दीर्घसत्रेण कथानां
सक्षणा हरेः ॥”)

दीर्घा शृगालविन्ना सा श्रीपर्णी सिंहपुच्छिका ।
दीर्घपत्रा त्वतिलुहा घृतिला चित्रपर्णिका ॥”
इति वैद्यकरत्नमालायाम् ॥)

**दीर्घाध्वगः**, त्रि, (दीर्घमध्वानं गच्छतीति । गम +
डः ।) लेखहारः । धाउडिया इति भाषा ।
उष्ट्रे, पुं । इति मेदिनी ॥ गे, ५७ ॥

**दीर्घायुः**, [स्] पुं, (दीर्घं आयुर्यस्य ।) शाल्मलि-
वृक्षः । काकः । जीवकवृक्षः । मार्कण्डेयः ।
चिरजीविनि, त्रि । इति मेदिनी । से, ५५ ॥
(यथा, महाभारते । ७ । ५७ । १४ ।
“दीर्घायुषः प्रजाः सर्व्वा युवा न म्रियते तदा ॥”)
“तत्र महापाणि-पाद-पार्श्वपृष्ठस्तनाग्रदशन-
वदनस्कन्धललाटं दीर्घाङ्गुलिपर्व्वोच्छ्वासप्रेक्षण-
बाहुं विस्तीर्णभ्रूस्तनान्तरोष्कं ह्रस्वजङ्घामेढ्रग्रीवं
गम्भीरसत्त्वस्वरनाभिमनुच्चैर्बद्धस्तनमुपचितमहा-
रोमशकर्णं पश्चान्मस्तिष्कं स्नातानुलिप्तं मूर्द्धानु-
पूर्ब्ब्यां विशुष्यमाणशरीरं पश्चाच्च विशुष्यमाण-
हृदयं पुरुषं जानीयाद्दीर्घायुः खल्वयमिति ।”
“गूढसन्धिसिरास्नायुः संहताङ्गः स्थिरेन्द्रियः ।
उत्तरोत्तरसुक्षेत्रो यः स दीर्घायुरुच्यते ॥
गर्भात् प्रभृत्यरोगो यः शनैः समुपचीयते ।
शरीरज्ञानविज्ञानैः स दीर्घायुः समासतः ॥”
इति सुश्रुते सूत्रस्थाने ३५ अध्याये ॥)

**दीर्घायुधः**, पुं, (दीर्घं आयुधः ।) कुन्तास्त्रम् ।
इति त्रिकाण्डशेषः ॥ (दीर्घौ आयुधौ इव दन्तौ
यस्य ।) शूकरः । इति शब्दमाला ॥

**दीर्घायुष्यः**, पुं, (दीर्घं आयुष्यं जीवनं यस्य ।)
श्वेतमन्दारकः । इति राजनिर्घण्टः ॥

**दीर्घालर्कः**, पुं, (दीर्घ अलर्क इव ।) श्वेतमन्दा-
रकः । इति राजनिर्घण्टः ॥

**दीर्घिका**, स्त्री, (दीर्घैव । दीर्घा + संज्ञायां कन् ।
टापि अत इत्वम् ।) त्रिशतधनुःपरिमितजला-
शयः । दीघि इति भाषा । तत्पर्य्यायः । वापी २ ।
इत्यमरः । १ । १० । २८ ॥ (यथा, रघुः । १६ ।
१३ ।

इति शब्दमाला ॥ (लम्बवदने, त्रि ॥)

**दीर्घवच्छिका**, स्त्री, कुम्भीरः । इति शब्दार्थकल्प-

तरुः ॥

**दीर्घवल्ली**, स्त्री, (दीर्घा वल्ली ।) महेन्द्रवारुणी ।

पातालगरुडी । पलाशी । इति राजनिर्घण्टः ॥
आयता लता च ॥

**दीर्घवृन्तः**, पुं, (दीर्घं वृन्तं यस्य ।) श्योणाक-

वृक्षः । इत्यमरः । २ । ४ । ५७ ॥ (अस्य
पर्य्यायो
यथा, वैद्यकरत्नमालायाम् ।
“श्योणाको भूतपुष्पश्च पूतिवृक्षो मुनिद्रुमः ।
दीर्घवृन्तश्च कट्वङ्गो भल्लूकष्टुण्टकोऽरुणुः ॥”)

**दीर्घवृन्तकः**, पुं, (दीर्घवृन्त + स्वार्थे कन् ।)

श्योणाकः । इति शब्दमाला ॥ श्योणाकप्रभेदः
।
इति राजनिर्घण्टः ॥ (श्योनाकशब्देऽस्य
विवरणं
ज्ञातव्यम् ॥)

**दीर्घवृन्ता**, स्त्री, (दीर्घं वृन्तं यस्याः ।) इन्द्र-

चिर्भिटी । इति राजनिर्घण्टः ॥

**दीर्घवृन्तिका**, स्त्री, (दीर्घं वृन्तं यस्याः । कप् ।

टापि अत इत्यम् ।) एलापर्णी । इति शब्द-
चन्द्रिका ॥

तीर्थविशेषः । इति
शब्दार्थकल्पतरुः ॥ (यथा,
महाभारते । ३ । ८२ ।
१०३ -- १०४ ।
“ततो गच्छेत राजेन्द्र !
दीर्घसत्रं यथाक्रमम् ।
तत्र ब्रह्मादयो देवाः
सिद्धाश्च परमर्षयः ।
दीघसत्रमुपासन्ते दीक्षिता
नियमव्रताः ॥
गमनादेव राजेन्द्र !
दीर्घसत्रमरिन्दम ! ।
राजसूयाश्वमेधाभ्यां फलं
प्राप्नोति मानवः ॥”)

**दीर्घसुरतः**, पुं, (दीर्घं बहुकालव्यापकं सुरतं

मैथुनं यस्य ।) कुक्कुरः ।
इति त्रिकाण्डशेषः ॥

**दीर्घसूत्रः**, त्रि, (दीर्घेण बहुकालेन सूत्रं कार्य्या-

रम्भो यस्य ।) चिरक्रियः ।
इत्यमरः । ३ । १ । १७ ॥
“अदीर्घसूत्रश्च भवेत्
सर्व्वकर्म्मसु पार्थिवः ।
दीर्घसूत्रस्य नृपतेः
कर्म्महानिर्ध्रुवं भवेत् ॥
रागे द्वेषे च कामे च द्रोहे पापे
च कर्म्मणि ।
अप्रिये चैव कर्त्तव्ये
दीर्घसूत्रश्च शस्यते ॥”
इति मत्स्यपुराणम् ॥
(आयततन्तुकम् । यथा,
माघे । १० । ६१ ।
“मेखलागुणविलग्नमसूयां
दीर्घसूत्रमकरोत् परिधानम्
॥”)
विस्तृते तन्तौ, क्ली ॥

**दीर्घसूत्री**, [न्] त्रि, (दीर्घसूत्रं बहुकालं व्याप्य

कर्म्मारम्भोऽस्त्यस्येति ।
दीर्घसूत्र + इनिः ।)

“वनैरिदानीं महिषैस्तदम्भः
शृङ्गाहतं क्रोशति दीर्घिकाणाम् ॥”)
तज्जलगुणाः । गुरुत्वम् । कटुत्वम् । क्षारत्वम् ।
पित्तलत्वम् । कफवातनाशित्वञ्च । हिङ्गुपत्री ।
इति राजनिर्घण्टः ॥

**दीर्घेर्व्वारुः**, पुं, (दीर्घा इर्व्वारुः ।) डङ्गरी । इति

राजनिर्घण्टः ॥

**दीर्णः**, त्रि, (दॄ विदारे + क्तः ।) विदारितः ।

(यथा, गोः रामायणे । २ । ३९ । २९ ।
“आयसं हृदयं नूनं राममातुः सुसंहतम् ।
यन्न दीर्णं प्रिये पुत्त्रे वनवासाय निर्गते ॥”)
भीतः । इति मेदिनी । णे, १६ ॥ (यथा, महा-
भारते । ६ । ३ । ७६ ।
“एको दीर्णो दारयति सेनां सुमहतीमपि ।
तां दीर्णामनु दीर्य्यन्ते योधाः शूरतरा अपि ॥”)

**दीविः**, पुं, किकीदिविः । इति शब्दमाला ॥

**दु**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-

अनिट् ।) दवति । इति दुर्गादासः ॥

दीर्घसूत्रः । इति हलायुधः ॥

(यथा, गीता-

याम् । १८ । २८ ।

“विषादी दीर्घसूत्री च कर्त्ता

तामस उच्यते ॥”)

**दीर्घस्कन्धः**, पुं, (दीर्घः स्कन्धो यस्य ।) तालवृक्षः ।

इति राजनिर्घण्टः ॥

**दीर्घा**, स्त्री, (दीर्घ + टाप् ।) पृश्निपर्णी । इति

राजनिर्घण्टः ॥ (अस्याः

पर्य्यार्या यथा, --

“पृश्निपर्णी पृथक्पर्णी

लाङ्गुली क्रोष्टुपुच्छिका ।

धामनिः कलशी तन्वी गूहा

क्रोष्टुकमेखला ॥

**दु**, टु ओ न उपतापे । इति कविकल्पद्रुमः ॥

(स्वां-परं-सकं-अकं च-अनिट् ।) टु, दवथुः । ओ, दूनः । न, दुनोति । उपताप इहोपतप्ती-भावः उपतप्तीकरणञ्च । मन्मथेन दुनोमीति जयदेवः । वर्णप्रकर्षे सति कर्णिकारं दुनोति निर्गन्धतया स्म चेतः । इति कालिदासः । इति दुर्गादासः ॥

**दुः**, [र्] व्य, निषेधः । दुःखम् । निन्दा । अव-क्षेपणम् । इति दुर्गादासधृतपुरुषोत्तमवेक्षः ॥

**दुः**, [स्] व्य, दुःखभावनम् । कोपः । इति दुर्गा-दासधृतमेदिनी ॥

**दुःकूलः**, पुं, (दुर्दुःखं तज्जनकं कूलं रोधो यस्मात् । एतदुत्पत्त्या तटस्य विघ्नत्वात् अस्य तथात्वम् ।) चोरनामगन्धद्रव्यम् । इति राजनिर्घण्टः ॥

**दुःख**, त् क तत्कृतौ । इति कविकल्पद्रुमः ॥

(अदन्त चुरां-परं-सकं-सेट् ।) विसर्गमध्यः ।
"काले तडिल्लताजाले घनपीनपयोधरे ।
कान्तः सर्व्वगुणोपेतो बालेन्दुः खे न लभ्यते ॥"
इति विन्दुच्युतकम् । अस्यार्थः । तडिल्लतासमूह-वति घनस्थूलमेघे काले कमनीयः सर्व्वगुणोपेतो बालेन्दुः खे आकाशे न लभ्यते पक्षे हे बाले सर्व्वगुणोपेतः कान्तः पतिर्दुःखेन लभ्यते । दुःख-यति दुःखापयति । मूर्द्धन्यषमध्यः । इति केचित् । तत्कृतिर्दुःखकरणम् । इति दुर्गादासः ॥

**दुःखं**, क्ली, (दुर् दुष्टं खनतीति । खन + डः । यद्वा, दुःखयतीति । दुःख + पचाद्यच् ।) संसारः । इति त्रिकाण्डशेषः ॥ (रोगः । यथा, भावप्रकाशे अर्शोरोगाधिकारे ।
"भेकाभः पीड्यते दुःखैः शोणितक्षयसम्भवैः ॥"
"दुःखै रोगैः ।" इति तट्टीका ॥) मनोधर्म्म-विशेषः । न्यायमते आत्मगुणभेदः । तत् अधर्म्म-जन्यं सचेतसां प्रतिकूलम् । इति भाषापरि-च्छेदः ॥ तत्पर्य्यायः । पीडा २ वाधा ३ व्यथा ४ द्वेधा आधिभौतिकमाधिदैविकञ्च । तत्र आधि-भौतिकं मानुषपशुपक्षिसरीसृपस्थावरनिमित्तम् । आधिदैविकं यक्षराक्षसविनायकग्रहाद्यावेश-निबन्धनम् । तदेतत्प्रत्यात्मवेदनीयं दुःखं रजः-परिणामभेदो न शक्यते प्रत्याख्यातुम् । तदनेन दुःखत्रिकेणान्तः करणवर्त्तिना चेतनाशक्तेः प्रति-कूलतयाभिसम्बन्धोऽभिघातःइति । एतावता प्रतिकूलवेदनीयत्वं जिहासाहेतुरुक्तः ॥")
"दुःखमेवं प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ! ।
उचितेनोपचारेण दुःखं मोक्षविनाशनम् ॥
अहङ्कारकृतो नित्यं नरो मोहेन चावृतः ।
ये मां नैव प्रपद्यन्ते ततो दुःखतरन्नु किम् ॥
सर्व्वाशी सर्व्वविक्रेता नमस्कारविवर्ज्जितः ।
ये च मां न प्रपद्यन्ते ततो दुःखतरन्नु किम् ॥
सर्व्वान्नानि तु सिद्धानि पाकभेदन्तु कारयेत् ।
अवैश्वदेवं नरोऽश्नन्ति तत्र दुःखतरन्नु किम् ॥
प्राप्तकाले वैश्वदेवे दृष्टमतिथिमागतम् ।
अदत्त्वा तस्य यो भुङ्क्ते तत्र दुःखतरन्नु किम् ॥
असन्तुष्टस्तु वैषम्ये परदाराभिमर्द्दकः ।
परोपतापी मन्दात्मा तत्र दुःखतरन्नु किम् ॥
अकृत्वायुर्ब्बलं कर्म्म गृहे संवसते नरः ।
मृत्युकालवशं प्राप्तस्तत्र दुःखतरन्नु किम् ॥
हस्त्यश्वरथयानानि गच्छमानानि पश्यति ।
न वै तस्याग्रतः पृष्ठे तत्र दुःखतरन्नु किम् ॥
अश्नन्ति पिशितं केचित् घृतशालिसमन्वितम् ।
शुष्कान्नं केचिदश्नन्ति तत्र दुःखतरन्नु किम् ॥
दुर्द्दोहगवी । तत्पर्य्यायः । करटा २ । इति हेमचन्द्रः । ४ । ३३५ ॥

**दुःखितः**, त्रि, (दुःखं सञ्जातमस्येति तारकादि-त्वादितच् ।) यद्वा, दुःखधातोः कर्त्तरि क्तप्रत्ययः । दुःखी । (यथा, मनौ । ९ । २८८ ।
"बन्धनानि च सर्व्वाणि राजमार्गे निवेशयेत् ।
दुःखिता यत्र दृश्येरन् विकृताः पापकारिणः ॥")
भावे क्ते, दुःखम् । तत्र क्ली ॥

**दुःखी**, [न्] त्रि, (दुःखमस्यास्तीति इनिः ।) दुःखान्वितः । दुःखितः । यथा, --
"दुःखिनोऽदुःखिनो वापि प्राणिनो लब्धचक्षुषः ।
आत्मवत् परिपश्यन्ति ते यान्ति परमां गतिम् ॥
त्यक्त्वात्मसुखभोगेच्छां सर्व्वसत्त्वसुखैषिणः ।
भवन्ति परदुःखेन साधवो नित्यदुःखिताः ॥"
इति वह्निपुराणे शिवेरुपाख्याननामाध्यायः ॥)

**दुःषमम्**, व्य, (दुर्दुष्टं समं यत्र । "तिष्ठद्गुप्रभृतीनि च ।" इत्यव्ययीभावः । "सुविनिर्दुर्भ्यः सुपि ।" ८ । ३ । ८८ । इति षत्वम् ।) निन्दनीयम् । तत्पर्य्यायः । निःषमम् २ गर्ह्यम् ३ । इत्यमरः । ३ । ४ । १४ ॥

**दुःसमम्**, त्रि, (दुःषमम् । बाहुलकात् षत्वा-

अमानस्यम् ५ प्रसूतिजम् ६ कष्टम् ६ कृच्छ्रम् ८
आभीलम् ९ । इत्यमरः । १ । १० । ३ ॥ अर्त्तिः
१०
आर्त्तिः ११ पीडनम् १२ अवाधा १३ वाध-
नम् १४ आमनस्यम् १५ आमानस्यम् १६
विवा-
धनम् १७ पीडितम् १८ विहेठनम् १९ । इति
शब्दरत्नावली ॥ * ॥
“सुखं दुःखञ्च हर्षञ्च शोकञ्च मङ्गलालयम् ।
मया दत्तञ्च तत्त्वञ्च योगिनामपि दुर्लभम् ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डम् ॥ * ॥
(दुःखन्तु
आध्यात्मिकाधिदैविकाधिभौतिकभेदात्
त्रिविधम् । यदुक्तं तत्त्वकौमुद्याम् । “दुःख-
त्रयाभिघातात् ।” इति ।
“दुःखानां त्रयं दुःखत्रयं तत् खलु त्रिविधं
आध्यात्मिकमाधिभौतिकमाधिदैविकञ्च । तत्र
आध्यात्मिकं द्विविधं शारीरं मानसञ्च । शारीरं
वातपित्तश्लेष्मणां वैषम्यनिमित्तम् । मानसं
कामक्रोधलोभमोहभयेर्षाविषादविषयाविशेषा-
दर्शननिबन्धनम् । सर्व्वं
चैतदान्तरोपायसाध्यत्वा-
दाध्यात्मिकं दुःखम् । वाह्योपायसाध्यञ्च दुःखं

वरवस्त्रावृतां शय्यां समासेवन्ति भूषिताः ॥
केचित् तृणेषु शेरन्ते ततो दुःखतरन्नु किम्
॥
विद्वान् कृती गुणज्ञश्च सर्व्वशास्त्रविशारदः
।
केचिन्मूकात्र दृश्यन्ते तत्र दुःखतरन्नु किम्
॥
विद्यमाने वने केचित् कृपणा भोगवर्जिताः ।
दरिद्रो जायते दाता तत्र दुःखतरन्नु किम् ॥
पुरुषस्य द्वये भार्य्ये तयोरेकां प्रशंसयेत् ।
एकापि दुर्भगा तत्र ततो दुःखतरन्नु किम् ॥
लब्ध्वा तु मानुषीं संज्ञां पञ्चभूतसमन्विताम्
।
मामेव न प्रपद्यन्ते ततो दुःखतरन्नु किम् ॥
लब्ध्वा ब्राह्मणभावन्तु त्रयो वर्णाः
सुमध्यमे ! ।
पापकर्म्मरता ह्यासंस्ततो दुःखतरन्नु किम्
॥
एतत्ते कथितं भद्रे ! दुःखकर्म्म विनिश्चयम्
।
सर्व्वभूतहितार्थाय यत्त्वया परिपृच्छ्यते ॥”
इति वराहपुराणम् ॥ * ॥
दुःखदानि यथा, --
पारतन्त्र्यम् १ आधिः २ व्याधिः ३
मानच्युतिः
४ शत्रुः ५ कुभार्य्या ६ नैःस्वम् ७
कुग्रामवासः ८
कुस्वामिसेवनम् ९ बहुकन्या १० वृद्धत्वम्
११
परगृहवासः १२ वर्षाप्रवासः १३
भार्य्याद्वयम्
१४ कुभृत्यः १५ दुर्हलकरणककृषिः १६ ।
इति
कविकल्पलता ॥ (तद्विशिष्टे, त्रि । इत्यमरः
।
१ । ४ । २६ ॥ यथा, हरिवंशे । २२३ ।
४९ ।
“सुसुखा न च दुःखा सा न शीता नच
घर्म्मदा ॥”)

**दुःखदोह्यां**, स्त्री, (दुःखेन दुह्यते इति । दुह +

भावः ।) असमञ्जसम् । इति
त्रिकाण्डशेषः ॥

**दुःसहा**, स्त्री, (दुःखेन सह्यतेऽसौ । दुः +
सह +
अच् । टाप् च ।) नागदमनी । इति
राज-
निर्घण्टः ॥ (दुःसह्ये, त्रि । यथा,
रघुः । ११ । २० ।
“राममन्मथशरेण ताडिता
दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता
जीवितेशवसतिं जगाम सा ॥”)

**दुःसाधी**, [न्] पुं, (दुर्दुष्टं कर्म्म साधयतीति ।
दुः +
साधि + णिनिः ।) दौवारिकः ।
इति शब्द-
रत्नमाला ॥

**दुःसाध्यः**, त्रि, (दुःखेन साध्यते इति । दुः
+
साध + ण्यत् ।) दुःखनिष्पाद्यः ।
दुःखेन साध्यते
निष्पाद्यते यः ॥ (यथा, पञ्चतन्त्रे ।
१ । २५८ ।
“ततो दुर्गस्थो दुःसाध्यो
रिपुर्भवति ॥”)

**दुःस्थः**, त्रि, (दुर्दुःखेण दुष्टं वा तिष्ठतीति ।
स्था +
कः ।) दुर्गतः । मूर्खः । दुःखेन
तिष्ठति यः ।
इति मेदिनी । थे, ८ ॥ (यथा,
भागवते । १ ।
१६ । ३४ ।
“त्वां दुःस्थमूनपदमात्मनि
पौरुषेण
सम्पादयन् यदुषु रम्यमबिभ्रदङ्गम्
॥”)
लुब्धः । इति शब्दार्थकल्पतरुः ॥

**दुःस्पर्शः**, पुं, (दुःखेन स्पृश्यते इति । दुः +
स्पृश् +

| | | |
|---|---|---|
| | "ऋहलोर्ण्यत् ।" ३ । ४ । १२४ । इति ण्यत् ।) | "ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ।" ३ । ३ । १२६ । इति कर्म्मणि खल् ।) दुरालभा । इत्यमरः । २ । ४ । ९१ ॥ (अस्य पर्य्याया यथा, -- "यासो यवासो दुःस्पर्शो धनुर्यासो दुरालभा ॥" इति वैद्यकरत्नमालायाम् ॥) लताकरञ्जः । इति राजनिर्घण्टः ॥ खरस्पर्शे, त्रि । इति मेदिनी । से, २१ ॥ (यथा, भाग- वते । ३ । १७ । ५ । |

“रवौ वायुः सुदुःस्पर्शः फूत्कारानीरयन् मुहुः ।
उन्मूलयन्नगपतीन् वात्यानीको रथध्वजः ॥”)

**दुःस्पर्शा**, स्त्री, (दुःखेन स्पृश्यते इति । स्पृश् + खल् + टाप् च ।) कपिकच्छुः । आकाशवल्ली ।
कण्टकारी । (अस्याः पर्य्याया यथा, --
“कण्टकारी तु दुःस्पर्शा क्षुद्रा व्याघ्री निदिग्धिका ।
कण्ठालिका कण्टिकिनी धावनी बृहती तथा ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
दुरालभा । इति राजनिर्घण्टः ॥

**दुःस्फोटः**, पुं, (दुर्दुष्टं स्फोटयतीति । स्फोटि + अच् ।) शस्त्रभेदः । इति हेमचन्द्रः । ३ । ४५१ ॥

**दुकूलं**, क्ली, (दुष्टं कूलति आवृणोतीति । कूल + “इगुपधज्ञाप्रीकिरः कः ।” ३ । १ । १३५ । इति
कः । पृषोदरात् साधुः । यद्वा, दु + “खजिपि-
ञ्जादिभ्य उरोलोचौ ।” उणां । ४ । ९० । इति
ऊलच् । धातोः कुक् च ।) क्षौमवस्त्रम् । (यथा,
रघौ । ७ । १९ ।
“दुकूलवासाः स वधूसमीपं
निन्ये विनीतैरवरोधरक्षैः ॥”)
सूक्ष्मवस्त्रम् । इति मेदिनी । ले, ९९ ॥

**दुगूलम्**, क्ली, (दुकूलं पृषोदरात् कस्य गः ।) दुकू-
लम् । पट्टवस्त्रम् । इति हेमचन्द्रः । ३ । ३३३ ॥

**दुग्धम्**, क्ली, (दुह्यते स्मेति । दुह + कर्म्मणि क्तः ।)
वर्णवत्सगोर्दुग्धं श्वेतवर्णकृष्णवर्णगोदुग्धञ्च प्रश-
स्तम् ॥ * ॥
इक्षुभक्षकमाषपर्णभक्षकोद्‌र्ध्वशृङ्ग-
गोदुग्धं पक्वमपक्वंवा हितकारकम् ॥ * ॥ पर्य्यु-
षितदुग्धगुणाः । गुरुत्वम् । विष्टम्भित्वम् । दुर्ज्ज-
रत्वञ्च ॥ * ॥ अपक्वदुग्धगुणः । प्रायोऽभिष्य-
न्दित्वम् । गुरुत्वञ्च ॥ * ॥ शृतोष्णं कफवात-
नाशनम् । शृतशीतं पित्तनाशनम् । धारोष्ण-
दुग्धं अमृततुल्यम् । स्त्रीस्तन्यदुग्धं विना सर्व्व-
मपक्वं दुग्धं त्याज्यम् । सलवणदुग्धं विग्रथितं
नट इति ख्यातं दुग्धञ्च त्याज्यम् ॥ * ॥ दुग्धान्न-
गुणाः । चक्षुर्हिततत्वम् । बलकारित्वम् । पित्त-
नाशित्वम् । रसायनत्वञ्च ॥ * ॥
“शाकाम्लपलपिण्याककुलत्थलवणामिषैः ।
करीरदधिमाषैश्च प्रायः क्षीरं विरुध्यते ॥”
इति राजवल्लभः ।
अथ चतुर्व्विधक्षीरगुणः ।
“केऽप्याविकं पथ्यतमं शृतोष्णं
क्षीरं त्वजानां शृतशीतमाहुः ।
दोहान्तशीतं महिषीपयस्यं
गव्यन्तु धारोष्णमिदं प्रशस्तम् ॥
वृष्यं बृंहणमग्निवर्द्धनकरं पूर्ब्बाह्णपीतं पयो
मध्याह्ने बलदायकं रतिकरं कृच्छ्रस्य विच्छेदनम् ।
बाल्ये वह्निकरं ततो बलकरं वीर्य्यप्रदं बार्द्धके
रात्रौ क्षीरमनेकदोषशमनं सेव्यं ततः सर्व्वदा ॥
क्षीरं मुहूर्त्तत्रितयोषितं य-
दतप्तमेतद्विकृतिं प्रयाति ।
षण्णान्तु दोषं कुरुते तदूद्र्ध्वं
विषोपमं स्यादुषितं दशानाम् ॥
जीर्णज्वरे कफे क्षीणे क्षीरं स्यादमृतोपमम् ।
तदेव तरुणे पीतं विषवद्धन्ति मानुषम् ॥
क्षीरक्वाथगुणः ।
चतुर्थभागं सलिलं निधाय
यत्नाद्यदावर्त्तितमुत्तमं तत् ।
मधुरं त्रिदोषशमनं क्षीरं मध्यप्रसूतानाम् ।
लवणंमधुरं क्षीरं विदाहजननं चिरप्रसूतानाम् ॥
गुणहीनं निःसारं क्षीरं प्रथमप्रसूतानाम् ।
मध्यमवयसां रसायनमुक्तमिदं दुर्ब्बलन्तु वृद्धा-
नाम् ॥
तासां मासत्रयादूद्र्ध्वं गुर्व्विणीनाञ्च यत् पयः ।
तद्वाहि लवणं क्षीरं मधुरं पित्तशोषकृत् ॥ * ॥
दुग्धाम्रं शीतलं स्वादु वृष्यं वर्णकरं गुरु ।
वातपित्तापहं रुच्यं बृंहणं बलवर्द्धनम् ॥”
इति राजनिर्घण्टः ॥ * ॥
अथ भावप्रकाशोक्तसामान्यदुग्धगुणाः ।
“दुग्धं सुमधुरं स्निग्धं वातपित्तहरं सरम् ।
सद्यःशुक्रकरं शीतं सात्म्यं सर्व्वशरीरिणाम् ॥
जीवनं बृंहणं बल्यं मेध्यं वाजीकरं परम् ।
वयःस्थापकमायुष्यं सन्धिकारि रसायनम् ॥
विरेकवान्तिवस्तीनां तुल्यमोजोविवर्द्धनम् ।
जीर्णज्वरे मनोरोगे शोषमूर्च्छाभ्रमेषु च ॥
ग्रहण्यां पाण्डुरोगे च दाहे तृषि हृदामये ।
शूलोदावर्त्तगुल्मेषु वस्तिरोगे गुदाङ्कुरे ॥
रक्तपित्तातिसारे च योनिरोगे श्रमे क्लमे ।
गर्भस्रावे च सततं हितं मुनिवरैः स्मृतम् ॥

स्त्रीजातिस्तननिःसृतद्रवद्रव्यविशेषः । दुघ इति
भाषा । तत्पर्य्यायः । क्षीरम् २ पीयूषम् ३ उधस्यम् ४ स्तन्यम् ५ पयः ६ अमृतम् ७ ।
इति राजनिर्घण्टः ॥ बालजीवनम् ८ । इति
भावप्रकाशः ॥ अस्य सामान्यगुणाः । स्वादु-
रसत्वम् । स्निग्धत्वम् । ओजःकारित्वम् । धातु-
वर्द्धनत्वम् । वातपित्तहरत्वम् । वृष्यत्वम् । श्लेष्म-
लत्वम् । गुरुत्वम् । शीतलत्वम् । पिष्टकादष्ट-
गुणगुरुत्वञ्च ॥ * ॥ गोदुग्धगुणाः । प्राणधर-
कत्वम् । बलायुःपुरुषत्वशुक्रकारित्वम् । मेध्यत्वम् ।
रक्तपित्तरोगवायुनाशित्वम् । रसायनत्वञ्च ॥ * ॥
छागीदुग्धगुणाः । मधुरत्वम् । शीतत्वम् । मल-
बन्धाग्निकारित्वम् । रक्तपित्तविकारश्वासकास-
सर्व्वदोषनाशित्वञ्च ॥ * ॥ मेषीदुग्धगुणाः ।
गुरुत्वम् । स्वादुत्वम् । स्निग्धत्वम् । उष्णत्वम् ।
कफपित्तनाशित्वञ्च ॥ * ॥ माहिषदुग्धगुणाः ।
अतिस्निग्धत्वम् । निद्राकारित्वम् । अग्निना-
शित्वञ्च ॥ * ॥ उष्ट्रीदुग्धगुणाः । रूक्षत्वम् ।
उष्णत्वम् । शोथवातकफनाशित्वम् ॥ * ॥
अश्वीदुग्धगुणाः । सलवणत्वम् । मधुराम्लरस-
त्वम् । लघुत्वञ्च ॥ * ॥ हस्तिनीदुग्धगुणाः ।

सर्व्वामयघ्नं बलपुष्टिकारि
वीर्य्यप्रदं क्षीरमतिप्रशस्तम् ॥
गव्यं पूर्ब्बाह्णकाले स्यादपराह्णे तु माहिषम् ।
क्षीरं सशर्करं पथ्यं यद्वा सात्म्यञ्च सर्व्वदा ॥
क्षीरं न भुञ्जीत कदाप्यतप्तं
तप्तञ्च नैतल्लवणेन सार्द्धम् ।
पिष्टान्नसन्धानकमाषमुद्ग-
कोशातकीकन्दफलादिकैश्च ॥
तथा च,
मत्स्यमांसगुडमुद्गमूलकैः
कुष्ठमावहति सेवितं पयः ।
शाकजाम्बवरसादिसेवितं
मारयत्यबुधमाशु सर्पवत् ॥ * ॥
स्निग्धं शीतं गुरु क्षीरं सर्व्वकालं न सेवयेत् ।
दीप्ताग्निं कुरुते मन्दं मन्दाग्निं नष्टमेव च ॥
नित्यन्तीव्राग्निना सेव्यं सुपक्वं माहिषं पयः ।
पुष्यन्ति धातवः सर्व्वे बलपुष्टिविवर्द्धनम् ॥
क्षीरं गवाजकादेर्म्मधुरं क्षारं नवप्रसूतानाम् ।
रूक्षञ्च पित्तदाहं करोति रक्तामयं कुरुते ॥ * ॥

बालवृद्धक्षतक्षीणाः क्षुद्व्यवायकृशाश्च ये ।
तेभ्यः सदातिशयितं हितमेतदुदाहृतम् ॥”
इति भावप्रकाशः ॥
(दुग्धोत्पत्तिविवृतिर्य्यथा, --
“यद् यदाहारजातन्तु रसं क्षीरशिरानुगम् ।
सरं जलञ्च भुक्तञ्च तथा पित्तेन संयुतम् ॥
पाचितं जाठरे वह्नौ पित्तेन सह मूर्च्छितम् ।
पच्यमानं शिराप्राप्तं क्षीरं तद्विद्धि पुत्रक ! ॥
तेन क्षीरमिति ख्यातमग्निसोमात्मकं पयः ।
अमृतं सर्व्वभूतानां जीवनं बलकृन्मतम् ॥
हारीतः संशयापन्नः पप्रच्छ पितरं पुनः ।
कथं रसस्य सम्पत्तिः कथं सञ्चीयते विभो ! ॥
कथं रक्तस्य संस्थाने क्षीरं पाण्डुत्वमीयते ।
कथं तत्र कुमारीणां बन्ध्यानां न कथं भवेत् ॥
एवं पृष्टो महाचार्य्यः प्रोवाच मुनिपुङ्गवः ।
अति हर्षप्रदं पुत्र ! परिपृष्टं भिषग्वर ! ॥
सितास्निग्धं तथा रक्तं पित्तेन पाकतां गतम् ।
रक्तं श्वेतत्वमायाति तथा क्षीरं सितं भवेत् ॥
क्षीरनाड्यः कुमारीणां बन्ध्यानां न कथं भवेत् ।
अल्पधातुबलं यस्मात्तस्मात् क्षीरं न जायते ॥
बन्ध्यानां क्षीरनाड्यस्तु वातेन परिपूरिताः ।

| | | |
|---|---|---|
| मधुरत्वम् । शुक्रकारित्वम् ।<br>कषायानुरसत्वम् ।<br>गुरुत्वञ्च ॥ * ॥ मानुष्यदुग्धगुणाः ।<br>प्राणधार-<br>कत्वम् । शरीरहितकारित्वम् । बृंहणत्वम्<br>।<br>तृप्तिजनकत्वञ्च ॥ * ॥ प्रत्यूषकाले<br>गोदुग्धपान-<br>गुणाः । गुरुत्वम् । विष्टम्भित्वम् ।<br>दुर्जरत्वम् ।<br>तस्मात् सूर्य्योदयात् परं यामं यामार्द्धमेव<br>वा<br>उत्तार्य्य पयो ग्राह्यम् । तत्पथ्यं दीपनं लघु<br>॥ *<br>विवत्साबालवत्सानां पयः दोषलम् । एक- | | क्षीरञ्च न भवेत्तस्मादार्त्तवञ्चाधिकं यतः<br>॥<br>प्रसूतासु च नारीषु बलेन सह सूयते ।<br>तेन स्रोतो विशुद्धिः स्यात् क्षीरमाशु<br>प्रवर्त्तते ॥<br>तस्मात् सद्यः प्रसूतायां जायते<br>श्लैष्मिकं पयः ।<br>तेन काठिन्यमायाति तस्मात्तत्<br>परिवर्ज्जयेत् ॥<br>पयश्चाविकृतं नार्य्या<br>बलकृद्दोषनाशनम् ॥”<br>इति हारीते प्रथमे स्थाने अष्टमेऽध्याये<br>॥)<br>(कत्तृणम् । तत्पर्य्यायाश्च यथा, --<br>“कत्तृणं ध्यामकं दुग्धम् ।” इति च<br>वैद्यकरत्न-<br>मालायाम् ॥ |

**दुग्धः**, त्रि, (दुह + क्तः ।) प्रपूरितः । इति मेदिनी ।

धे, ८ ॥ कृतदोहः । (यथा, हरिवंशे । २ ।
२५ ।
“तेनेयं गौर्म्महाराज ! दुग्धा शस्यानि
भारत ! ॥”
दुह + भावे क्तः ।) दोहने, क्ली ॥

**दुग्धकूपिका**, स्त्री, (दुग्धकूपः साधनत्वेनास्त्यस्या

इति । दुग्धकूप + ठन् । टाप् ।)
पिष्टकविशेषः ।
यथा, --
“तण्डुलचूर्णविमिश्रितनष्टक्षीरेण सान्द्रपिष्टेन
।
दृढकूपिकां विदध्यात्ताञ्च पचेत् सर्पिषा
सम्यक् ॥
अथ तां कौरितमध्यां घनपयसा पूर्णगर्भाञ्च
।
शट्टकमुद्रितवदनां तप्तघृतेन पक्ववदनाञ्च ।
अतिपाण्डुखण्डपाके स्नपयेत् कर्पूरवासिते
कुशलः ॥”
अस्या गुणाः ।
“अथ दुग्धकूपिका सा बल्या पित्तानिलापहा
।
वृष्या शीता गुर्व्वी शुक्रकरी तर्पणी रुच्या ।
विदधाति कायपुष्टिं दृष्टिं दूरप्रसारिणीरम् ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे २ भागे ॥

**दुग्धतालीयं**, क्ली, (दुग्धस्य तालाय प्रतिष्ठायै

हितम् । दुग्धताल + छः ।) दुग्धाग्रम् । क्षीर-
फेनः । इति मेदिनी । ये, १३३ ॥ दुग्धाग्रम्
।
इति हेमचन्द्रः ॥

**दुग्धपाचनं**, क्ली, (पच्यतेऽस्मिन्निति । पच +

अधिकरणे ल्युट् । दुग्धस्य पाचनं पात्रम् ।)
दुग्धपाकपात्रम् । तत्पर्य्यायः । वज्रकम् २ ।
इति हारावली । २२० ॥

**दुग्धपाषाणः**, पुं, (दुग्धं क्षीरं पाषाण इव कठिनं

यस्य ।) वृक्षविशेषः । शिरगोला इति भाषा ।

**दुग्धाक्षः**, पुं, (दुग्धवत् शुभ्रं अक्षं नेत्रं चिह्नविशेषो

यस्य ।) उपलविशेषः । इति
शब्दार्थकल्पतरुः ॥

**दुग्धाब्धितनया**, स्त्री, (दुग्धाब्देः क्षीरसमुद्रस्य

तनया ।) लक्ष्मीः । इति कविकल्पलता
॥

**दुग्धाश्मा**, [न्] पुं, (दुग्धं क्षीरं अश्मा प्रस्तर

इव कठिनं यस्य ।) दुग्धपाषाणः । इति
राज-
निर्घण्टः ॥

**दुग्धिका**, स्त्री, (दुग्धं निर्य्यासो बहुलतया विद्यते

यस्याः । दुग्ध + ठन् । टाप् च ।)
वृक्षविशेषः ।
दुधी इति दुध्याक्षीर इति च भाषा ।
तत्-
पर्य्यायः । स्वादुपर्णी २ क्षीरावी ३
क्षीरिणी ४
दुग्धी ५ क्षीरी ६ क्षीरात्मिका ७ । इति
शब्द-
रत्नावली ॥ अस्या गुणाः । उष्णत्वम् ।
गुरुत्वम् ।
रूक्षत्वम् । वातलत्वम् । गर्भकारित्वम्
। स्वादु-
क्षीरत्वम् । कटुत्वम् । तिक्तत्वम् ।
मलमूत्रोप-
सर्गकारित्वम् । पटुत्वम् । स्वादुत्वम् ।
विष्टम्भि-
त्वम् । वृष्यत्वम् ।
कफकुष्ठकृमिनाशित्वञ्च । इति
भावप्रकाशः ॥ वृक्षभेदः । गन्धिका
इति ख्याता ।
तत्पर्य्यायः । उत्तमा २ युग्मफला ३
उत्तम-
फलिनी ४ । इति रत्नमाला ॥

**दुग्धिनिका**, स्त्री, रक्तापामार्गः । इति राज-

निर्घण्टः ॥

पर्य्यायः । भेरी २ आनकः ३ । इत्यमरः ।
१ ।
७ । ६ ॥ (यथा, महाभारते । १ । १२३ ।
४६ ।
“आकाशे दुन्दुभीनाञ्च बभूव तुमुलः स्वनः
॥”)
वरुणः । दैत्यभेदः । इति मेदिनो । भे, १६
।
(दानवविशेषः । यथा, हरिवंशे । ३ । ८१ ।
“अभवन् दनुपुत्त्राश्च शतं तीव्रपराक्रमाः ।”
“शङ्कुकर्णो विदारश्च गवेष्ठो दुन्दुभिस्तथा
॥”)
रक्षोभेदः । वाद्यभेदः । इति शब्दरत्नावली
॥
विषम् । इति हेमचन्द्रः । २ । २०७ ॥
(कुकुर-
वंशीयस्य अन्धकस्य पुत्त्रः । यथा, भागवते
।
९ । २४ । २० ।
“अन्धकाद्दुन्दुभिस्तस्मादविद्योतः पुनर्व्वसुः
॥”
क्रौञ्चद्वीपाधिपतेर्द्युतिमतः पुत्त्राणामन्यतमः
।
क्रौञ्चद्वीपस्य देशभेदश्च यथा, ब्रह्माण्डे ३६
अध्याये ।
“मुनिश्च दुन्दुभिश्चैव सुता द्युतिमतस्तु वै ।
तेषाञ्च नामभिर्देशाः क्रौञ्चद्वीपाश्रयाः स्मृताः
॥”
“मुनेस्तु मुनिर्देशो वै दुन्दुभेर्दुन्दुभिः स्मृतः
॥”
पर्व्वतविशेषः । यथा, मत्स्यपुराणे । १२१ ।
१३ ।
“स एव दुन्दुभिर्नाम श्यामपर्व्वतसन्निभः ।
शब्दमृत्यः पुरा तस्मिन् दुन्दुभिस्ताडितः
सुरैः ॥”
असुरविशेषः । यथा, रामायणे । ४ । ९ । ४
।
“मायावी नाम तेजस्वी पूर्ब्बजो दुन्दुभेः
सुतः ।

तत्पर्य्यायः । दुग्धपाषाणकः २ दुग्धाश्मा ३ क्षीरी ४ गोमेदसन्निभः ५ वज्राभः ६ दीप्तिकः ७ दुग्धी ८ क्षीरक्षवः ९ । अस्य गुणाः । रुच्यत्वम् । ईषदुष्णत्वम् । ज्वरपित्तहृद्रोगशूलकासाध्मान- विनाशित्वञ्च । इति राजनिर्घण्टः ॥

**दुग्धपुच्छी**, स्त्री, (दुग्धवत् शुभ्रं पुच्छं मूलदेशो यस्याः । गौरादित्वात् ङीष् ।) वृक्षविशेषः । दुग्धपेया इति ख्याता । तत्पर्य्यायः । सेव- कालुः २ निशा ३ भङ्गा ४ नसङ्करी ५ । इति शब्दचन्द्रिका ॥

**दुग्धफेनः**, पुं, (दुग्धस्य फेन इव फेनो यत्र ।) क्षीर- हिण्डीरः । तत्पर्य्यायः । शार्करः २ । इति राजनिर्घण्टः ॥

**दुग्धफेनी**, स्त्री, (दुग्धवत् शुभ्रः फेनो यस्याः । गौरादित्वात् ङीष् ।) क्षुद्रक्षुपविशेषः । तत्- पर्य्यायः । पयःफेनी २ फेनदुग्धा ३ पयस्विनी ४ लूतारिः ५ व्रणकेतुघ्नी ६ गोजापर्णी ७ । अस्या गुणाः । कटुत्वत् । तिक्तत्वम् । शिशिरत्वम् । विषव्रणनाशित्वम् । रुच्यत्वम् । युक्त्या रसायन- त्वञ्च । इति राजनिर्घण्टः ॥

**दुग्धबीजा**, स्त्री, (दुग्धवत् शुभ्रं बीजं यस्याः ।) यावनालाद्यकृतातप्ततण्डुलचिपिटः । अस्या गुणाः । सुमधुरत्वम् । दुर्जरत्वम् । वीर्य्यपुष्टि- दातृत्वञ्च । इति राजनिर्घण्टः ॥

**दुग्धी**, स्त्री, (दुग्धं क्षीरं बहुलतया अस्त्यस्या इति । अर्श आद्यच् । ततो गौरादित्वात् ङीष् ।) क्षीरावी । इति मेदिनी । धे, ८ ॥ (पर्य्यायोऽस्या यथा, वैद्यकरत्नमालायाम् । "उत्तमादुग्धिका दुग्धी फलोत्तमा फलिन्यपि ॥") दुग्धपाषाणः । इति राजनिर्घण्टः ॥

**दुच्छकः**, पुं, (दु उपतापे + भावे क्विप् तुक् च । दुत् उपतापः । तन्निराकरणे शक्नोतीति । शक + पचाद्यच् ।) मुरानामगन्धद्रव्यम् । विहा- राद्यवकाशकः । इति मेदिनी । के, १०५ ॥

**दुडिः**, स्त्री, (दुलिः + लस्य डः ।) दुलिः । कच्छपी । इत्यमरटीकायां रायमुकुटः ॥

**दुण्डुकः**, त्रि, दुष्टचित्तः । इति शब्दार्थकल्पतरुः ॥

**दुण्डुभः**, पुं, (द्रोडति मज्जतीति । द्रुड मज्जने + "उभः कित् कुकिद्रडिभ्यां कन्णुनौ रलोपश्च ।" १ । ४४० । इति उणादिकोषटीकाधृतसूत्रात् उभः णुन् रलोपश्च ।) डुण्डुभसर्पः । इत्यु- णादिकोषः ॥ (यथा, महाभारते । ६ । १५४ । १७० ।
"शरमीनां महारौद्रां प्रासशक्त्युग्रदुण्डुभाम् ।"
"शोणितौघवहां घोरां द्रोणिःप्रावर्त्तयन्नदीम् ॥")

**दुद्रुमः**, पुं, (दुर् दुष्टो द्रुमः । पृषोदरादित्वात् रलोपः ।) हरित्पलाण्डुः । इत्यमरः ॥ २ । ४ । १४८ ॥

**दुन्दमः**, पुं, (दुन्द इत्यव्यक्तशब्देन मणति शब्दा- तेन तस्य महद्वैरं बलिनः स्त्रीकृतं पुरा ॥")

**दुन्दुभिः**, स्त्री, अक्षः । पाशकः । इत्यमरः । ३ । ३ । १३५ ॥ अक्षे पाशकविषये दानविशेषो वित्ति इति ख्यातः । इति केचित् ॥ अक्षविन्दु- त्रिकद्वयम् । इति रभसः ॥ विन्द्वन्वितचतुष्पार्श्व- स्वर्णशृङ्गादिमयद्यूतोपकरणं पाशटी इति ख्याता । इति केचित् ॥ इति तट्टीकायां भरतः ॥

**दुन्दुमारः**, पुं, धुन्धुमारः । इति शब्दार्थकल्पतरुः ॥

**दुरदृष्टं**, क्ली, (दुर्दुष्टमदृष्टम् ।) दुर्भाग्यम् । इति स्मृतितन्त्रे ॥

**दुरध्वः**, पुं, (दुर्दुष्टोऽध्वा । "उपसर्गादध्वनः ।" ५ । ४ । ८५ । इति अच् ।) कुपथः । इत्य- मरः । २ । १ । १६ ॥

**दुरभिग्रहः**, पुं, (दुर्दुःखेन आभिमुख्येन गृह्यतेऽसौ इति । दुर् + अभि + ग्रह + खल् ।) अपा- मार्गः । इति राजनिर्घण्टः ॥ (दुरभि + ग्रह + कर्म्मणि खल् ।) दुःखग्राह्ये, त्रि ॥

**दुरभिग्रहा**, स्त्री, (दुरभिग्रह + टाप् ।) कपि- कच्छुः । दुरालभा । इति राजनिर्घण्टः ॥

**दुराकः**, पुं, (दुनोतीति । दु न उपतापे + "आकः । खजादेः स तु कित् ।" १ । २१९ । इति उणादि- कोषटीकाधृतसूत्रात् आकप्रत्ययेन निपातनात् साधुः ।) म्लेच्छभेदः । इत्युणादिकोषः

**दुराचारः**, पुं, (आचर्य्यते इति भावे घञ् । दुर्दुष्ट आचारः इति प्रादिसमासः ।) विरुद्धा- चरणम् । यथा, अध्यात्मरामायणे ।
"प्राप्ते कलियुगे घोरे नराः पुण्यविवर्ज्जिताः ।
दुराचाररताः सर्व्वे सत्यवार्त्तापराङ्मुखाः ॥"

| | यते इति । मण शब्दे + डः ।) दुन्दुभिः । इति शब्दरत्नावली ॥<br>**दुन्दुः**, पुं, वसुदेवः । इति त्रिकाण्डशेषः ॥ दुन्दुभि-वाद्यम् । इति शब्दरत्नावली ॥<br>**दुन्दुभिः**, पुं, (दुन्दु इत्यव्यक्तशब्देन भातीति । भा + बाहुलकात् किः ।) बृहड्ढक्का । तत्- | |
|---|---|---|

(दुष्ट आचारो यस्य ।)
निन्दिताचारवति,
त्रि ॥ (यथा, देवीभागवते । १ ।
११ । १६ ।
"महापातकयुक्तस्त्वं
दुराचारोऽतिगर्हितः ॥")

**दुराधर्षः**, पुं, (दुष्टान् यज्ञविघ्नकारिराक्षसादीन्
आधर्षति दूरीकरोतीति । धृष् +
अच् ।) गौर-
सर्षपः । इति राजनिर्घण्टः ॥
(विष्णुः । यथा,
महाभारते । १३ । १४९ । २२ ।
"अनुत्तमो दुराधर्षः कृतज्ञः
कृतिरात्मवान् ।"
"दैत्यादिभिर्धर्षयितुं न शक्यते इति
दुराधर्षः ।"
इति तद्भाष्ये शङ्करः ॥ दुःखेन आ
ईषदपि
धर्षयितुमशक्यः इति । धृष् +
"ईषद्दुःसु-
ष्विति । ३ । ३ । १२६ । इति
खल् ।) अधर्ष-
णीये, त्रि ॥ (यथा, महाभारते । ६ ।
१९ ।
३२ ।
"भीमसेनो गदां भीमां प्रवार्षन्
परिघोपमाम् ।
प्रचकर्ष महासैन्यं दुराधर्षो
महामनाः ॥")

**दुराधर्षा**, स्त्री, (दुराधर्ष + स्त्रियां टाप् ।) कुटु-
म्बिनीवृक्षः । इति राजनिर्घण्टः ॥

**दुरारुहः**, पुं, (दुःखेन आरुह्यते इति । दुर् +
आ + रुह + घञर्थे कर्म्मणि कः ।)
विल्वः ।
नारिकेलः । इति राजनिर्घण्टः ॥
(दुःखा-
दत्वम् ।
ज्वरच्छर्द्दिश्लेष्मपित्तविसर्पवेदनानाशि-
त्वञ्च । इति राजवल्लभः ॥ कटुत्वम् ।
तिक्तत्वम् ।
उष्णत्वम् । क्षारत्वम् । अम्लत्वम् । मधुरत्वम्
।
वातगुल्मप्रमेहनाशित्वञ्च । इति राजनिर्घण्टः
॥
"यवासस्य गुणैस्तुल्या बुधैरुक्ता दुरालभा ॥"
इति भावप्रकाशः ॥
(गङ्गा । यथा, काशीखण्डे । २९ । ८८ ।
"दीर्घव्रता दीर्घदृष्टिर्दीप्ततोया दुरालभा ॥")
दुरालभनीये, त्रि ॥

**दुरालम्भा**, स्त्री, (दुःखेन आलभ्यते इति । दुर +
आ + लभ + खल् + नुम् च ।) दुरालभा ।
इति
राजनिर्घण्टः ॥ (यथा, महाभारते । १३ ।
९८ । ३१ ।
"तीक्ष्णवीर्य्यास्तु भूतानां दुरालम्भाः सक-
ण्टकाः ।
रक्तभूयिष्ठवर्णाश्च कृष्णाश्चैवोपहारयेत् ॥")

**दुरालापः**, पुं, (दुर्दुष्ट आलापः इति प्रादिसमासः ।
गालिः । इति शब्दार्थकल्पतरुः ॥

**दुरासदः**, त्रि, (दुःखेन आसद्यते इति । दुर् +
आ + सद् + "ईषद्दुःसुष्विति ।" ३ । ३ ।
१२६ ।
इति खल् ।) दुष्प्राप्यः । यथा, --
"दुरासदो दुर्विषहो भूतानां स बभूव ह ॥"
इति श्रीभागवतम् ॥
(यथा च, देवीभागवते । १ । १० । ३२ ।
"धर्म्मस्य पुरतः प्राप्ते कामभावे दुरासदे ॥"
(दुष्प्रवेशः । यथा, माघे । १६ । १० ।
"घनजालनिभैर्दुरासदाः
परितो नागकदम्बकैस्तव ।
नगरेषु भवन्तु वीथयः
परिकीर्णा वनजैर्मृगादिभिः ॥")

**दुरितं**, क्ली, (इण भावे + क्तः । दुष्टमितं गमनं

**दुरूहः**, त्रि, (दुःखेन ऊह्यते इति । दुर् + ऊह +
कर्म्मणि खल् ।) दुर्विज्ञेयः । यथा, --
"काव्यप्रकाशस्य दुरूहपङ्क्ती-
र्गदाधरो व्याकरुते प्रयत्नात् ।"
इति गदाधरभट्टाचार्य्यकृतकाव्यप्रकाशटीका
॥

**दुरोदरं**, क्ली, (दुर्दुष्टमासमन्तादुदरं यस्य । दुष्ट-
मुदरमस्य वा । पृषोदरादित्वात् साधुः ।)
द्यूत-
भेदः । पाशकक्रीडा । इत्यमरः । ३ । ३ ।
१७१ ॥
(यथा, वक्रोक्तिपञ्चाशिकायाम् । २६ ।
"व्यर्थं किं तनुषे दुरोदरमिदं न स्वापतेयं तव
॥")

**दुरोदरः**, पुं, (दुष्टं आ समस्तात् उदरं यस्य ।)
द्यूतकृत् । (यथा, महाभारते । २ । ५६ । ९ ।
"दुरोदरा विहिता ये तु तत्र
महात्मना धृतराष्ट्रेण राज्ञा ॥")
पणः । इति मेदिनी । रे, २६७ ॥

**दुर्गं**, क्ली, (दुःखेन गच्छत्यत्र । दुर् + गम +
"सुदुरोरधिकरणे ।" ३ । २ । ४८ । इतस्य
वार्त्तिकोक्त्या डः ।) पर्व्वतादिभिर्दुर्गमं पुरम् ।
इत्यमरः । २ । ८ । १७ ॥ गड इति केल्ला
इति
च भाषा ॥ तत्पर्य्यायः । कोट्टम् २ । यथा, --
"स्कन्धावारो राजधानी कोट्टदुर्गे पुनः समे ॥"
इति हेमचन्द्रः ॥
"अथ कोट्टो राजधानी राजधानकमित्यपि ।"
इति शब्दरत्नावली ।
"पुरं दुर्गमधिष्ठानं कोट्टोऽस्त्री राजधान्यपि ।"
इति जटाधरः ॥
तत्तु षड्विधम् । यथा, --
"तत्र दुर्गं नृपः कुर्य्यात् षण्णामेकतमं बुधः ।
धन्वदुर्गं महीदुर्गं नरदुर्गं तथैव च ॥
वार्क्षञ्चैवाम्बुदुर्गञ्च गिरिदुर्गञ्च पार्थिव ! ।
सर्व्वेषाञ्चैव दुर्गाणां गिरिदुर्गं प्रशस्यते ॥
दुर्गञ्च परिखोपेतं वप्राट्टालकसंयुतम् ।

रोहणीये, त्रि । यथा, महाभारते । ३ ।
१४७ । ९१ ।
"क्व वा त्वयाद्य गन्तव्यं प्रब्रूहि पुरुषर्षभ ! ।
अतःपरमगम्योऽयं पर्व्वतः सुदुरारुहः ॥")

**दुरारुहा**, स्त्री, (दुरारुह + टाप् ।) खर्ज्जुरी ।
इति राजनिर्घण्टः ॥

**दुरारोहः**, पुं स्त्री, (दुःखेन आरुह्यते इति ।
रुह + कर्म्मणि खल् ।) शरटः । इति राज-
निर्घण्टः ॥ दुःखारोहणीये, त्रि ॥ (यथा, महा-
भारते । ४ । ५ । १४ ।
"इयं कूटे मनुष्येन्द्र ! गहने महती शमी ।
भीमशाखा दुरारोहा श्मशानस्य समीपतः ॥")

**दुरारोहा**, स्त्री, (दुरारोह + टाप् ।) शाल्मलि-
वृक्षः । इति त्रिकाण्डशेषः ॥ श्रीवल्ली । इति
राजनिर्घण्टः ॥

**दुरालभा**, स्त्री, (दुःखेन आलभ्यते गृह्यते स्पृश्यते
वासौ । दुर् + आ + लभ + खल् + टाप् ।
आगमविधेरनित्यत्वात् न नुम् ।) स्वनामख्यात-
कण्टकयुक्तक्षुद्रवृक्षविशेषः । स यवासप्रभेदः ।
हिङ्गुया इति ख्याता । तत्पर्य्यायः । दुरालम्भा २
धन्वयासः ३ ताम्रमूला ४ कच्छुरा ५ दुस्पर्शा ६
धन्वी ७ धन्वयवासकः ८ प्रबोधनी ९ सूक्ष्म-
दला १० विरूपा ११ दुरभिग्रहा १२ दुर्लभा

नरकादिदुर्गतिप्राप्तिर्यस्मात् ।) पापम् । इत्य-
मरः । १ । ४ । २३ ॥ (यथा, रघौ । ८ । २ ।
"दुरितैरपि कर्त्तुमात्मसात्
प्रयतन्ते नृपसूनवो हि यत् ॥")
तद्वति, त्रि ॥

**दुरितदमनी**, स्त्री, (दुरितं पापं दम्यते यया इति ।
दम + करणे ल्युट् । ङीप् च ।) शमी । इति
राजनिर्घण्टः ॥ (दम + ल्युः ।) पापनाशिनी च ॥

**दुरिष्टकृत्**, पुं, (दुरिष्टम् अभिचारयज्ञं करोतीति ।
दुरिष्ट + कृ + क्विप् तुगागमश्च ।) अभिचार-
कर्त्ता । तस्य नरकं यथा, --
"देवद्विजपितॄन् द्वेष्टा रत्नदूषयिता च यः ।
स याति कृमिभक्षे वै कृमीशे च दुरिष्टकृत् ॥"
इति विष्णुपुराणे । २ । ६ । १४ ॥
"दुरिष्टकृत् अभिचारकर्त्ता ।" इति तट्टीका ॥

**दुरिष्ठः** त्रि (दुर् + इष्ठन् ।) अतिमन्दः । अयम-
नयोरेषां वा अतिशयेन दुः निन्दितः । इति
व्याकरणम् ॥

**दुरीषणा**, स्त्री, (दुर्दुष्टा ईषणा इच्छाभिशंसनम् ।
प्रादिसमासः ।) शापः । इति शब्दार्थकल्प-
तरुः ॥

शतघ्नीयन्त्रमुख्यैश्च शतशश्च समावृतम् ॥"
इति मात्स्ये १९१ अध्यायः ॥
राज्ञस्तत्करणावश्यकत्वंतच्छुभाशुभलक्षणञ्च यथा, --
"दुर्गांस्तु सततं कुर्य्यात् प्राकाराट्टालतोरणैः ।
दूषितान्नगराद्राजा दुर्गे दुर्गाश्रयं चरेत् ॥
दुर्गं बलं नृपाणान्तु नित्यं दुर्गं प्रशस्यते ।
शतमेको योधयति दुर्गस्थो यो धनुर्धरः ॥
शतं दश सहस्राणि तस्मात् दुर्गं प्रशस्यते ।
जलदुर्गं भूमिदुर्गं वृक्षदुर्गं तथैव च ॥
अरण्यवनदुर्गञ्च शैलजं परिखोद्भवम् ।
दुर्गं कार्य्यं नृपतिना यथायोग्यं स्वदेशतः ॥
दुर्गं कुर्व्वन् पुरं कुर्य्यात् त्रिकोणं धनुराकृति ॥
वर्त्तुलं वा चतुष्कोणं नान्यथा नगरं चरेत् ।
मृदङ्गाकृति दुर्गञ्च सततं कुलनाशनम् ॥
यथा राक्षसराजस्य लङ्कादुर्गा जिता पुरा ॥
बलेः पुरी शोणिताख्यं तेजो दुर्गे प्रतिष्ठितम् ।
यतस्तत् व्यजनाकारमतो भ्रष्टश्रियो बलिः ॥
सौभाग्यं शाल्वराजस्य नगरं पञ्चकोणकम् ।
दिवि यद्वर्त्तते राजंस्तच्च भ्रष्टं भविष्यति ॥

| | | |
|---|---|---|
| १३ दुःप्रधर्षा १४ । इति राजनिर्घण्टः ॥ यासः १५ यवासः १६ दुस्पर्शः १७ कुनाशकः १८ रोदनी १९ अनन्ता २० समुद्रान्ता २१ । इत्य- मरः । २ । ४ । ९२ ॥ गान्धारी २२ काषाया २३ । इति भावप्रकाशः ॥ धनुर्यासः २४ युवसः २५ कच्छरा २६ । इति शब्दरत्नावली ॥ विक- ण्ठकः २७ । इति जटाधरः ॥ (पद्ममुखी २८ । इति शब्दचन्द्रिका ॥) अस्या गुणाः । सार- | | |

यच्चायोध्याह्वयं भूप ! पुरमिक्ष्वाकुभूभुजाम् ।
धनुराकृति तच्चापि ततोऽभूद्विजयप्रदम् ॥
दुर्गभूमौ यजेद्दुर्गां दिक्पालांश्चैव द्वारतः ।
पूजयित्वा विधानेन जयं भूपः समाप्नुयात् ॥
अतो दुर्गं नृपः कुर्य्यात् सततं जयवृद्धये ॥”
इति कालिकापुराणे राजनीतिविशेषः ८५ अः ॥
(शैलभेदः । यथा, कालिकापुराणे । ७४ अः ।
“यत्र दुर्गाह्वयं शैलं शिवस्यास्ते महत्तरम् ॥”)

**दुर्गः**, पुं, असुरभेदः । यं हत्वा चण्डिकाया दुर्गेति नामाभूत् । इति काशीखण्डम् ॥ (यथा, हरि-
वंशे । १६४ । ९ ।
“बिन्ध्यवासिनीं दुर्गघ्नीं रणदुर्गां रणप्रियाम् ॥”
विष्णुः । यथा, महाभारते । १३ । १४९ । ९६ ।
“दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ॥”)
गुग्गुलुः । इति राजनिर्घण्टः ॥ (दुःखेन गम्यते
अत्रेति । दुर् + गम् + अधिकरणे डः ।) दुर्गे,
त्रि । इति मेदिनी । गे, ९ ॥

**दुर्गकारकं**, क्ली, (निजकृतवेष्टनेन दुर्गं करोतीति । कृ + “ण्वुल्तृचौ ।” ३ । १ । ३३ । इति ण्वुल् ।)
वृक्षविशेषः । इति शब्दमाला । दुर्गकर्त्तरि, त्रि ॥

**दुर्गतः**, त्रि, (दुर् दुरवस्थां गच्छति स्मेति । दुर् + गम् + “गत्यर्थाकर्म्मकश्लिषेति ।” ३ । ४ । ७२ ।
इति कर्त्तरि क्तः ।) दरिद्रः । इत्यमरः । ३ ।
“अथाजगाम त्वरितो धर्म्मश्चाण्डालरूपधृक् ।
दुर्गन्धो विकृतो रूक्षः श्मश्रुलो दुन्तुरो घृणी ॥”)

**दुर्गन्धी**, [न्] त्रि, (दुर्गन्धोऽस्त्यस्येति । दुर्गन्ध + इनिः ।) दुर्गन्धयुक्तः । इत्यमरटीकायां रायमुकुटः ॥ (यथा, मनुः । ६ । ७६ ।
“अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम् ।
चर्म्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः ॥”)

**दुर्गपुष्पी**, स्त्री, (दुर्गं दुष्प्राप्यं पुष्पं यस्याः । जाति-त्वात् ङीष् ।) वृक्षविशेषः । केशपुष्टा इति ख्याता । तत्पर्य्यायः । मानसी २ बालाक्षी ३
केशधारिणी ४ । इति शब्दचन्द्रिका ॥

**दुर्गमः**, त्रि, (दुर्दुःखेन गम्यते इति । दुर् + गम + “ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ।” ३ ।
३ । १२६ । इति खल् ।) दुर्गः । दुःखेन गमनीयस्थानादि । इति शब्दमाला ॥ (यथा,
महाभारते । ६ । १४ । ३५ ।
“पार्श्वतःकेऽभ्यरक्षन्त गच्छन्तो दुर्गमां गतिम् ॥”
दुर्दुःखेन गम्यते ज्ञायते इति । दुर्ज्ञेयः । यथा,
गहाभारते । १३ । १४ । २९५ ।
“नमो वृषभवाहाय गजेन्द्रगमनाय च ।
दुर्गमाय नमस्तुभ्यमगम्यगमनायच ॥”
पुं, विष्णुः । यथा, तत्रैव । १३ । १४९ । ९६ ।
विष्णुसहस्रनामकीर्त्तने ।
“दुर्ल्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ॥”
असुरविशेषः । यथा, मार्कण्डेये । ९१ । ४४ ।
“तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरन् ॥”
अस्याः पूजामन्त्रं यथा, तत्रैव । ३ । २६ । ६० ।
“दुर्गा त्रायति भक्तं या सदा दुर्गार्त्तिनाशिनी ।
दुर्ज्ञेया सर्व्वदेवानां तां दुर्गां पूजयाम्यहम् ॥”)
हिमालयकन्या । सा शिवभार्य्या गणेशकार्त्ति-
कयोर्माता च । तत्पर्य्यायः ।
उमा २ कत्यायनी ३ गौरी ४ काली ५ हैम-
वती ६ ईश्वरा ७ शिवा ८ भवानी ९ रुद्राणी १०
सर्व्वाणी ११ सर्व्वमङ्गला १२ अपर्णा १३ पार्व्वती
१४ मृडानी १५ चण्डिका १६ अम्बिका १७ । इत्य-
मरः । १ । १ । ३८ ॥ शारदा १८ चण्डी १९ चण्ड-
वती २० चण्डा २१ चण्डनायिका २२ गिरिजा
२३ मङ्गला २४ नारायणी २५ महामाया २६
वैष्णवी २७ महेश्वरी २८ महादेवी २९ हिण्डी
३० ईश्वरी ३१ कोट्टवी ३२ षष्ठी ३३ माधवी
३४ नगनन्दिनी ३५ जयन्ती ३६ भार्गवी ३७
रम्भा ३८ सिंहरथा ३९ सती ४० भ्रामरी ४१
दक्षकन्या ४२ महिषमर्द्दिनी ४३ हेरम्बजननी
४४ सावित्री ४५ कृष्णपिङ्गला ४६ वृषाकपायी
४७ लम्बा ४८ हिमशैलजा ४९ कार्त्तिकेयप्रसूः
५० आद्या ५१ नित्या ५२ विद्या ५३ शुभङ्करी

१ । ४९ ॥ (यथा आर्य्यासप्तशत्याम् ।
२९६ ।
"दुर्गतगृहिणी तनये करुणार्द्रा प्रियतमे च
रागमयी ।
मुग्धा रताभियोगं न मन्यते न प्रतिक्षिपति
॥")

**दुर्गतिः**, स्त्री, (दुष्टा क्लेशदायिनी गतिः ।) नरकः ।

इत्यमरः । १ । ९ । १ ॥ (यथा,
देवीभागवते ।
३ । १२ । ६८ ।
"कृत्वा यज्ञं विधानेन दत्त्वा पुण्यं
मखार्ज्जितम् ।
समुद्धर महाराज ! पितरं दुर्गतिं गतम् ॥")
दारिद्रम् । इति मेदिनी । ते, ११५ ॥
(यथा,
महाभारते । १३ । ७० । ८ ।
"कथं भवान् दुर्गतिमीदृशीं गतो
नरेन्द्र तद्ब्रूहि किमेतदीदृशम् ॥")

**दुर्गतिनाशिनी**, स्त्री, (दुर्गतिं नाशयतीति । नश +

णिच् + णिनिः + ङीप् ।) दुर्गा । यथा, --
"ब्रह्माण्डविजयस्यास्य कवचस्य
प्रजापतिः ।
ऋषिश्छन्दश्च गायत्री देवी दुर्गतिनाशिनी
॥"
इति ब्रह्मवैवर्त्ते गणेशखण्डम् ॥

**दुर्गन्धं**, क्ली, (दुर्दुष्टो गन्धो यस्य ।) सौवर्च्चल-

लवणम् । इति हेमचन्द्रः । ६ । २७ ॥

**दुर्गन्धः**, पुं, (दुष्टो गन्धः ।) दुष्टगन्धः । तत्-

पर्य्यायः । पूतिगन्धिः २ । इत्यमरः । १ ।
५ । १२ ॥
(यथा, सुश्रुते । १ । ३० ।
"सुगन्धं वेत्ति दुर्गन्धं दुर्गन्धस्य
सुगन्धिताम् ।
यो वा गन्धान्न जानाति गतासुं तं विनिर्द्दि-
शेत् ॥")
आम्रवृक्षः । इति शब्दचन्द्रिका ॥ पलाण्डुः
।
इति भावप्रकाशः ॥ (दुर्दुष्टो गन्धो यत्र ।)

क्ली, वनम् । सङ्कटस्थलम् । यथा,
महाभारते ।
१ । ८१ । ३० ।
"राजायं नाहुषस्तात दुर्गमे पाणिमग्रहीत्
॥")

**दुर्गलङ्घनः**, पुं, (दुर्गं दुर्गमस्थानं मरुभूम्यादिं

लङ्घ्यतेऽनेनेति । लङ्घि + करणे ल्युट् ।)
उष्ट्रः ।
इति हेमचन्द्रः । ४ । ३२० ॥

**दुर्गसञ्चरः**, पुं, (दुर्गं दुर्गमस्थानं नद्यादिपरपारं

सञ्चर्य्यतेऽनेनेति । सम् + चर + पुंसीति
घः ।)
संक्रमः । इत्यमरः । ३ । २ । २५ ॥ साँको
इति भाषा ॥

**दुर्गसञ्चारः**, पुं, (दुर्गं नद्यादिपारदुर्गमस्थानं

सञ्चर्य्यते गम्यतेऽनेनेति । सम् + चर +
घञ् ।)
दुर्गसञ्चरः । इत्यमरटीकायां स्वामी ॥

**दुर्गा**, स्त्री, (दुर्दुःखेन गम्यते प्राप्यतेऽसौ । गम +

अन्यत्रापि दृश्यते । इति डः । दुर्दुःखेन
गम्यते-
ऽस्यामिति । दुर् + गम + "सुदुरोरधिकरणे
।"
३ । २ । ४८ । इत्यस्य वार्त्तिकोक्त्या डः
। ततष्टाप् ।)
नीली । इति मेदिनी । गे, ९ ॥ अपराजिता
।
इति शब्दचन्द्रिका ॥ श्यामापक्षी । इति
राज-
निर्घण्टः ॥ (नववर्षा कुमारी । यथा, देवी-
भागवते । ३ । २६ । ४३ ।
"नववर्षा भवेद्दुर्गा सुभद्रा दशवार्षिकी ॥"
अस्याः पूजाफलमाह । तत्रैव । ३ । २६ ।
५० ।
"दुःखदारिद्र्यनाशाय संग्रामे विजयाय च ।
क्रूरशत्रुविनाशार्थं तथोग्रकर्म्मसाधने ॥
दुर्गाञ्च पूजयेद्भक्त्या परलोकसुखाय च ॥"

५४ सात्त्विकी ५५ राजसी ५६ तामसी
५७
भीमा ५८ नन्दनन्दिनी ५९ महामायी
६०
शूलधरा ६१ सुनन्दा ६२ शुम्भघातिनी
६३ ।
इति शब्दरत्नावली ॥ ह्रीः ६४
पर्व्वतराजतनया
६५ हिमालयसुता ६६ महेश्वरवनिता
६७ । इति
कविकल्पलता ॥ सत्या ६८ भगवती
६९ ईशाना
७० सनातनी ७१ महाकाली ७२
शिवानी
७३ हरवल्लभा ७४ उग्रचण्डा ७५
चामुण्डा ७६
विधात्री ७७ आनन्दा ७८ महामात्रा ७९
महामुद्रा ८० माकरी ८१ भौमी ८२
कल्याणी
८३ कृष्णा ८४ मानदात्री ८५ मदालसा
८६
मानिनी ८७ चार्व्वङ्गी ८८ वाणी ८९
ईशा ९०
वलेशी ९१ भ्रमरी ९२ भूष्या ९३
फाल्गुनी
९४ यती ९५ ब्रह्ममयी ९६ भाविनी ९७
देवी
९८ अचिन्ता ९९ त्रिनेत्रा १०० त्रिशूला
१०१
चर्चिका १०२ तीव्रा १०३ नन्दिनी
१०४ नन्दा
१०५ घरित्रिणी १०६ मातृका १०७
चिदानन्द-
स्वरूपिणी १०८ मनस्विनी १०९
महादेवी ११०
निद्रारूपा १११ भवानिका ११२ तारा
११३
नीलसरस्वती ११४ कालिका ११५
उग्रतारा
११६ कामेश्वरी ११७ सुन्दरी ११८
भैरवी ११९

| | | |
|---|---|---|
| दुष्टगन्धयुक्ते, त्रि ॥ (यथा, मार्कण्डेये । ८ । ८१ । | | राजराजेश्वरी १२० भुवनेशी १२१ त्वरिता<br>१२२ महालक्ष्मीः १२३ राजीवलोचनी १२४<br>धनदा १२५ वागीश्वरी १२६ त्रिपुरा १२७<br>ज्वालामुखी १२८ वगलामुखी १२९ सिद्धविद्या<br>१३० अन्नपूर्णा १३१ विशालाक्षी १३२ सुभगा<br>१३३ संगुणा १३४ निर्गुणा १३५ धवला १३६<br>गीतिः १३७ गीतवाद्यप्रिया १३८ अट्टालवासिनी<br>१३९ अट्टट्टहासिनी १४० घोरा १४१ प्रेमा<br>१४२ वटेश्वरी १४३ कीर्त्तिदा १४४ बुद्धिदा १४५<br>अवीरा १४६ पण्डितालयवासिनी १४७ मण्डिता<br>१४८ संवत्सरा १४९ कृष्णरूपा १५० वलि- |

प्रिया १५१ तुमुला १५२ कामिनी
१५३ काम-
रूपा १५४ पुण्यदा १५५
विष्णुचक्रधरा १५६
पञ्चमा १५७ वृन्दावनस्वरूपिणी
१५८ अयोध्या-
रूपिणी १५९ मायावती १६०
जीमूतवसना
१६१ जगन्नाथस्वरूपिणी १६२
कृत्तिवसना १६३
त्रियामा १६४ जमलार्ज्जुनी १६५
यामिनी १६६
यशोदा १६७ यादवी १६८ जगती
१६९ कृष्ण-
जाया १७० सत्यभामा १७१
सुभद्रिका १७२
लक्ष्मणा १७३ दिगम्बरी १७४ पृथुका
१७५
तीक्ष्णा १७६ आचारा १७७ अक्रूरा
१७८
जाह्नवी १७९ गण्डकी १८० ध्येया
१८१ जृम्भणी
१८२ मोहनी १८३ विकारा १८४
अक्षरवासिनी
१८५ अंशका १८६ पत्रिका १८७
पवित्रिका
१८८ तुलसी १८९ अतुला १९०
जानकी १९१
वन्द्या १९२ कामना १९३ नारसिंही
१९४
गिरीशा १९५ साध्वी १९६ कल्याणी
१९७
कमला १९८ कान्ता १९९ शान्ता
२०० कुला
२०१ वेदमाता २०२ कर्म्मदा २०३
सन्ध्या २०४
त्रिपुरसुन्दरी २०५ रासेशी २०६
दक्षयज्ञ-

सा बाणी सा च सावित्री
विप्राधिष्ठातृदेवता ।
वह्नौ सा दाहिका शक्तिः
प्रभाशक्तिश्च भास्करे ॥
शोभा शक्तिः पूर्णचन्द्रे जले
शक्तिश्च शीतला ।
शस्यप्रसूतिशक्तिश्च धारणा च
धरासु सा ॥
ब्राह्मण्यशक्तिर्विप्रेषु देवशक्तिः सुरेषु
सा ।
तपस्विनां तपस्या सा गृहिणां
गृहदेवता ॥
मुक्तिशक्तिश्च मुक्तानां माया
सांसारिकस्य सा ।
गद्भक्तानां भक्तिशक्तिर्मयि भक्तिप्रदा
सदा ॥
नृपाणां राज्यलक्ष्मीश्च बणिजां
लभ्यरूपिणी ।
पारे सांसारसिन्धूनां त्रयी
दुस्तरतारिणी ॥
सत्सु सद्बुद्धिरूपा च
मेधाशक्तिस्वरूपिणी ।
व्याख्याशक्तिः श्रुतौ शास्त्रे
दातृशक्तिश्च दातृषु ॥
क्षत्त्रादीनां विप्रभक्तिः पतिभक्तिः
सतीषु च ।
एवंरूपा च या शक्तिर्मया दत्ता
शिवाय सा ॥”
अपि च, शङ्करं प्रति पार्व्वतीवाक्यम्
।
“वैकुण्ठेऽहं महालक्ष्मीर्गोलोके
राधिका स्वयम् ॥
शिवाहं शिवलोकेऽपि ब्रह्मलोके
सरस्वती ।
अहं निहत्य दैत्यांश्च दक्षकन्या
सती पुरा ।
तन्निन्दया पुरा त्यक्त्वा सा चाहं
शैलकन्यका ।

चतुर्थे पूजिता देवी भक्त्या भगवती सदा ॥
तदा मुनीन्द्रैः सिद्धेन्द्रैर्देवैश्च मनुमानवैः ।
पूजिता सर्व्वविश्वेषु बभुव सर्व्वतः सदा ॥
तेजःसु सर्व्वदेवानामाविर्भूता पुरा मुने ! ।
सर्व्वे देवा ददुस्तस्यै शस्त्राणि भूषणानि च ॥
दुर्गादयश्च दैत्याश्च निहता दुर्गया तया ।
दत्तं स्वाराज्यं देवेभ्यो वरञ्च यदभीप्सितम् ॥
कालान्तरे पूजिता सा सुरथेन महात्मना ।
राज्ञा मेधसशिष्येण मृण्मय्याञ्च सरित्तटे ॥
मेषादिभिश्च महिषैः कृष्णसारैश्च गण्डकैः ।
छागैर्मीनैश्च कुष्माण्डैः पक्षिभिर्बलिभिर्मुने ॥
वेदोक्तानि च दत्त्वैवमुपचाराणि षोडश ।
धृत्वा च कवचं ध्यात्वा संपूज्य च विधानतः ॥
राजा कृत्वा परीहारं वरं प्राप यथेप्सितम् ।
मुक्तिं सम्प्राप वैश्यश्च संपूज्य च सरित्तटे ॥
तुष्टाव राजा वैश्यश्च साश्रुनेत्रः पुटाञ्जलिः ।
विससर्ज मृण्मयीन्तां गभीरे निर्म्मले जले ॥
मृन्मयीं तृणमयीं दृष्ट्वा जलधौतां नराधिपः ।
रुरोद तत्र वैश्यश्च ततः स्थानान्तरं ययौ ॥
त्यक्त्रा देहञ्च वैश्यश्च पुष्करे दुष्करं तपः ।
कृत्वा जगाम गोलोकं दुर्गादेवीवरेण च ॥
राजा ययौ स्वराज्यञ्च पूज्यो निष्कण्टकं बली ।
भोगञ्च बुभुजे भूपः षष्टिवर्षसहस्रकम् ॥
भार्य्यां स्वबालं संन्यस्य पुत्त्रे स कालयोगतः ।
मनुर्ब्बभूव सावर्णिस्तप्त्वा च पुष्करे तपः ॥
इत्येवं कथितं वत्स ! समासेन यथागमम् ।
दुर्गाख्यानं मुनिश्रेष्ठ ! किं भूयः श्रोतुमिच्छसि ॥”
इति ब्रह्मवैवर्त्तपुराणम् ॥
अथ दुर्गापूजाविधिः ।
“शरत्काले महापूजा क्रियते या च वार्षिकी ।
शारदीया महापूजा चतुःकर्म्ममयी शुभा ॥
तां तिथित्रयमासाद्य कुर्य्याद्भक्त्या विधानतः ॥
चतुःकर्म्ममयी स्नपनपूजनबलिदानहोमरूपासा
च प्रतिवर्षं कर्त्तव्या ।
‘द्विशरीरे चरे चैव लग्ने केन्द्रगते रवौ ।
वर्षे वर्षे विधातव्यं स्थापनञ्च विसर्ज्जनम् ॥
यो मोहादथवालस्याद्देवीं दुर्गां महोत्सवे ।
न पूजयति दम्भाद्वा द्वेषाद्वाप्यथ भैरव ! ॥
क्रुद्धा भगवती तस्य कामानिष्टान् निहन्ति वै ॥’

विनाशिनी २०७ अनन्ता २०८
धर्म्मेश्वरी २०९
चक्रेश्वरी २१० स्वञ्जना २११
विदग्धा २१२
कुब्जिका २१३ चित्रा २१४ सुलेखा
२१५ चतु-
र्भुजा २१६ राका २१७ प्रज्ञा २१८
ऋद्धिदा
२१९ तापिनी २२० तपा २२१
सुमन्त्रा २२२
दूती २२३ । इति तस्याः
सहस्रनामान्तर्गतः ॥
अथ दुर्गानाम्नो व्युत्पत्तिर्यथा, --
“दुर्गो दैत्ये महाविघ्ने भवबन्धे
कुकर्म्मणि ।
शोके दुःखे च नरके यमदण्डे च
जन्मनि ॥
महाभयेऽतिरोगे चाप्याशब्दो
हन्तृवाचकः ।
एतान् हन्त्येव या देवी सा दुर्गा
परिकीर्त्तिता ॥”
अपि च ।
“दैत्यनाशार्थवचनो दकारः
परिकीर्त्तितः ।
उकारो विघ्ननाशस्य वाचको
वेदसम्मतः ॥
रेफो रोगघ्नवचनो गश्च
पापघ्नवाचकः ।
भयशत्रुघ्नवचनश्चाकारःपरिकीर्त्तितः
॥
स्मृत्युक्तिश्रवणाद्यस्या एते नश्यन्ति
निश्चितम् ।
ततो दुर्गा हरेः शक्तिर्हरिणा
परिकीर्त्तिता ॥
दुर्गेति दैत्यवचनोऽप्याकारो
नाशवाचकः ।
दुर्गं नाशयति या नित्यं सा दुर्गा वा
प्रकीर्त्तिता ॥
विपत्तिवाचको दुर्गश्चाकारो
नाशवाचकः ।

रक्तबीजस्य युद्धे च काली च
मूर्त्तिभेदतः ॥
सावित्री वेदमाताहं सीता
जनककन्यका ।
रुक्मिणी द्वारवत्याञ्च भारते
भीष्मकन्यका ॥
सुदाम्नः शापतो दैवात्
वृषभानुसुताधुना ॥
धर्म्मपत्नी च कृष्णस्य पुण्ये
वृन्दावने वने ॥” * ॥
अपरञ्च, कृष्णं प्रति पार्व्वतीवाक्यम्
।
“एकाहं राधिकारूपा गोलोके
रासमण्डले ।
रासशून्यञ्च गोलोकं परिपूर्णं कुरु
प्रभो ! ॥
परिपूर्णतमाहञ्च तव
वक्षःस्थलस्थिता ।
तवाज्ञया महालक्ष्मीरहं
वैकुण्ठवासिनी ।
सरस्वती च तत्रैव वामपार्श्वे हरेरपि
॥
तवाहं मनसा जाता सिन्धुकन्या
तवाज्ञया ।
सावित्री वेदमाताहं कलया
विधिसन्निधौ ॥
तेजःसु सर्व्वदेवानां पुरा सत्ये
तवाज्ञया ।
अधिष्ठानं कृतं तत्र धृतं दिव्यं
शरीरकम् ॥
शुम्भादयश्च दैत्याश्च
निहताश्चावलीलया ।
दुर्गं निहत्य दुर्गाहं त्रिपुरा त्रिपुरे वधे
॥
निहत्य रक्तबीजञ्च
रक्तबीजविनाशिनी ।
तवाज्ञया दक्षकन्या सती
सत्यस्वरूपिणी ॥
योगेन त्यक्त्वा देहञ्च शैलजाहं
तवाज्ञया ।

वीप्सा अकरणे प्रत्यवायश्रुतेश्च सा पूजा नित्या
विधिसमभिव्याहृतफलश्रुतेः काम्या च ।
यथा, --
‘कृत्वैवं परमामापुर्निर्वृतिं त्रिदिवौकसः ।
एवमन्यैरपि सदा देव्याः कार्य्यं प्रपूजनम् ॥
विभूतिमतुलां लब्धुं चतुर्व्वर्गप्रदायकम् ।’
काम्यतया पूजने कृते प्रसङ्गान्नित्यपूजासिद्धिः ।
तत्तद्वचनात् कृष्णनवम्यादिप्रतिपदादिषष्ठ्यादि
सप्तम्यादिमहाष्टम्यादिकेवलमहाष्टमीकेवलमहा-
नवमीपूजारूपाः कल्पा उन्नेयाः । तदनन्तर-
मशौचमपि न प्रतिबन्धकम् ॥ * ॥ सा पूजा
त्रिविधा । यथा, --
‘शारदी चण्डिकापूजा त्रिविधा परिगीयते ।

तं ननाश पुरा तेन बुधैर्दुर्गा प्रकीर्त्तिता ॥” * ॥
अस्याः स्वरूपं यथा, नन्दं प्रति श्रीकृष्णवाक्यम् ।
“आद्या नारायणी शक्तिः सृष्टिस्थित्यन्तकारिणी।
करोमि च यया सृष्टिं यया ब्रह्मादिदेवताः ॥
यया जयति विश्वञ्च यया सृष्टिः प्रजायते ।
यया विना जगन्नास्ति मया दत्ता शिवाय सा ॥
दया निद्रा च क्षुत्तृप्तिस्तृष्णा श्रद्धा क्षमा धृतिः ।
तुष्टिः पुष्टिस्तथा शान्तिर्लज्जाधिदेवता हि सा ॥
वैकुण्टे सा महासाध्वी गोलोके राधिका सती ।
मर्त्ये लक्ष्मीश्च क्षीरोदे दक्षकन्या सती च सा ॥
सा दुर्गा मेनकाकन्या दैन्यदुर्गतिनाशिनी ।
स्वर्गलक्ष्मीश्च दुर्गा सा शक्रादीनां गृहे गृहे ॥
त्वया दत्ता शङ्कराय गोलोके रासमण्डले ॥
विष्णुभक्तिरहं तेन विष्णुमाया च वैष्णवी ।
नारायणस्य मायाहं तेन नारायणी स्मृता ॥
कृष्णप्राणाधिकाहञ्च प्राणाधिष्ठातृदेवता ।
महद्विष्णोश्च रासे स्वे जननी राधिका स्वयम् ॥
तवाज्ञया पञ्चधाहं पञ्चप्रकृतिरूपिणी ।
कलाकलांशयाहञ्च देवपत्न्यो गृहे गृहे ॥” * ॥
अथ तस्याः पूजाप्रकाशः ।
“प्रथमे पूजिता सा च कृष्णेन परमात्मना ।
वृन्दावने च सृष्ट्यादौ गोलोके रासमण्डले ॥
मधुकैटभभीतेन ब्रह्मणा सा द्वितीयतः ।
त्रिपुरप्रेषितेनैव तृतीये त्रिपुरारिणा ॥
भ्रष्टश्रिया महेन्द्रेण शापाद्दुर्व्वाससः पुरा ।

सात्त्विकी राजसी चैव तामसी चेति
विश्रुतिः ॥
सात्त्विकी जपयज्ञाद्यैर्नैवेद्यैश्च निरामिषैः ।
माहात्म्यं भगवत्याश्च पुराणादिषु
कीर्त्तितम् ॥
पाठस्तस्य जपः प्रोक्तः पठेद्देवीमनास्तथा
।
देवीसूक्तजपश्चैव यज्ञो वह्निषु तर्पणम् ॥
राजसी वलिदानैश्च नैवेद्यैः सामिषैस्तथा
।
सुरामांसाद्युपाहारैर्जपयज्ञैर्विना तु या ॥
विना मन्त्रैस्तामसी स्यात् किरातानान्तु
सम्मता ।
ब्राह्मणैः क्षत्त्रियैर्वश्यैः शूद्रैरन्यैश्च सेवकैः
॥
एवं नानाम्लेच्छगणैः पूज्यते
सर्व्वदस्युभिः ।
स्वयं वाप्यन्यतो वापि पूजयेत् पूजयेत वा
॥
अर्च्चकस्य
तपोयोगादर्च्चनस्यातिशायनात् ।
आभिरूप्याच्च विम्बानां देवः
सान्निध्यमृच्छति ॥'
अथ नवम्यादिकल्पः ।
'इषे मास्यसिते पक्षे कन्याराशिगते रवौ ।
नवम्यां बोधयेद्देवीं क्रीडाकौतुकमङ्गलैः ॥
ज्येष्ठानक्षत्रयुक्तायां षष्ठ्यां
विल्वाभिमन्त्रणम् ।
सप्तम्यां मूलयुक्तायां पत्रिकायाः प्रवेशनम्
॥
पूर्ब्बाषाढयुताष्टम्यां पूजाहोमाद्युपोषणम् ।
उत्तरेण नवम्यान्तु वलिभिः पूजयेच्छिवाम्
॥
श्रवणेन दशम्यान्तु प्रणिपत्य विसर्जयेत्
॥'
प्रतिवर्षं कन्यार्के कर्त्तव्यत्वानुपपत्तेः
सिंहार्केऽपि
बोधनं तुलार्केऽपि स्थापनादिकं क्रियते
चान्द्र-

'केशसंस्कारद्रव्याणि प्रदद्यात् प्रतिपद्दिने ।
पट्टडोरं द्वितीयायां केशसंयमहेतवे ।
दर्पणञ्च तृतीयायां सिन्दूरालक्तकं तथा ॥
मधुपर्कं चतुर्थ्यान्तु तिलकं नेत्रमण्डनम् ।
पञ्चम्यामङ्गरागञ्च शक्त्यालङ्करणानि च ॥
षष्ठ्यां विल्वतरौ बोधं सायं सन्ध्यासु
कारयेत् ।
सप्तम्यां प्रातरानीय गृहमध्ये प्रपूजयेत् ॥
उपोषणमथाष्टम्यामष्टशक्तेः प्रपूजनम् ।
नवम्यामुग्रचण्डायास्तद्वद्देवार्च्चनं दिवा ॥
पूजा च वलिदानञ्च तद्वन्मातृः प्रपूजयेत् ।
कुमारी पूजनीया च भूषणीया च भूषणैः ॥
संपूज्य प्रेषणं कुर्य्यात् दशम्यां शावरोत्सवैः
।
अनेन विधिना यस्तु देवीं प्रीणयते नरः ॥
स्कन्दवत् पालयेत्तन्तु देवी सर्व्वापदि
स्थितम् ।
पुत्त्रदारधनर्द्धीनां संख्या तस्य न विद्यते ।
भुक्त्वेह परमान् भोगान् प्रेत्य देवीगणो
भवेत् ॥'
अथ षष्ठ्यादिकल्पः ।
'बोधयेद्बिल्वशाखायां षष्ठ्यां देवीं फलेषु
च ।
सप्तम्यां विल्वशाखान्तामाहृत्य प्रतिपूजयेत्
॥
पुनः पूजां तथाष्टम्यां विशेषेण समाचरेत् ।
जागरञ्च स्वयं कुर्य्यात् वलिदानं महानिशि
॥
प्रभूतवलिदानञ्च नवम्यां विधिवच्चरेत् ।
ध्यायेद्दशभुजां देवीं दुर्गामन्त्रेण पूजयेत् ॥
विसजनं दशम्यान्तु कुर्य्याद्वै शावरोत्सवैः ।
धूलिकर्द्दमविक्षेपैः क्रीडाकौतुकमङ्गलैः ॥
भगलिङ्गाभिधानैश्च भगलिङ्गप्रगीतकैः ।
भगलिङ्गक्रियाभिश्च कुर्य्याच्च दशमीदिने
॥' * ॥
नवमीबोधनासामर्थ्ये षष्ठ्यां सायं बोधनं
यथा,
'षष्ठ्यां विल्वतरौ बोधं सायंसन्ध्यासु
कारयेत् ॥'

ओषधीभिश्च सर्व्वाभिर्भृङ्गारैः
कलसैस्तथा
पुष्परत्नादितोयैश्च गन्धैर्मलयजैस्तथा ॥
गीतवादित्रनाट्येन स्नापयेन्माञ्च भक्तितः
।
पूजा सदुपहारैश्च नैवेद्यैश्च मनोहरैः ॥
विल्वपत्रैर्घृताक्तैश्च तिलघान्यादिसंयुतैः ।
जुहुयाज्ज्वलिते वह्नौ तस्य पुण्यफलं शृणु ॥
संसारे यानि सौख्यानि काम्यानि
नरपुङ्गव ! ।
दीर्घमायुर्यशः पुत्त्रं विपुलं धनधान्यकम् ॥
लभते मत्प्रसादेन अन्ते मम पुरं व्रजेत् ।
वलिस्तत्र विशेषेण देयो मत्प्रीतये नरैः ॥
अनेन विधिना यस्तु नवमीमतिवाहयेत् ।
भुङ्क्ते च विपुलान् भोगानन्ते शिवपुरं
व्रजेत् ॥
ततः सप्तम्यां मूलयुक्तायां केवलायां वा
पूर्ब्बाह्णे
पत्रीप्रवेश उभयत्र पूर्ब्बाह्णे सप्तमीलाभे
परत्र
'युगाद्या वर्षवृद्धिश्च सप्तमी पार्व्वतीप्रिया
।
रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता ॥'
पूर्ब्बाह्णे नवपत्रिका शुभकरी
सर्व्वार्थसिद्धिप्रदा
आरोग्यं धनदा करोति विजयं चण्डीप्रवेशे
शुभा ।
मध्याह्ने जनपीडनक्षयकरी संग्रामघोरावहा
सायाह्ने वधबन्धनानि कलहं सर्पक्षतं
सर्व्वदा ॥
सप्तम्यामस्तगायां यदि विशति गृहं पत्रिका
श्रीफलाढ्या
राज्ञः सप्ताङ्गराज्यं जनसुखमखिलं हन्ति
मूलानुरोधात् ।
तस्मात् सूर्य्योदयस्थां नरपतिशुभदां
सप्तमीं प्राप्य
देवीं
भूपालो वेशयेत्तां सकलजनहितां राक्षसर्क्षं
विहाय ॥

कृत्यत्वात् कन्यार्के मलमासे न
तदारभ्यते यदि
पूर्ब्बमारब्धं तदा मलमासेऽपि पूजादेवी-
माहात्म्यपाठादिकं प्रत्यहं कर्त्तव्यमेव ।
‘यावद्भूर्वायुराकाशं जलं वह्निशशिग्रहाः ।
तावच्च चण्डिकापूजा भविष्यति सदा
भुवि ॥’
तत्र कृष्णनवम्यां देवकृत्यत्वेन पूर्ब्बाह्णे
बोधनम् ।
उभयदिने पूर्ब्बाह्णे नवमीलाभे पूर्ब्बदिने
आर्द्रानु-
रोधे तु पूर्ब्बाह्णं विना दिवामात्रे युग्मादरं
विनापि परदिने बोधनं उभयदिने पूर्ब्बाह्णे
नव-
म्यार्द्रालाभे पूर्ब्बदिने बोधनं युग्मात् ।
‘कन्यादिमीनपर्य्यन्तं यत्र संप्राप्यते शिवः
।
तत्र बोधः प्रकर्त्तव्यो देव्या राज्ञां शुभप्रदः
॥’
बोधनमन्त्रो यथा, --
‘इषे मास्यसिते पक्षे नवम्यामार्द्रयोगतः ।
श्रीवृक्षे बोधयामि त्वां यावत् पूजां
करोम्यहम् ॥
ऐँ रावणस्य वधार्थाय रामस्यानुग्रहाय च ।
अकाले ब्रह्मणा बोधो देव्यास्त्वयि कृतः
पुरा ॥
अहमप्याश्विने तद्वद्बोधयामि सुरेश्वरीम् ।
शक्रेणापि च सम्बोध्य प्राप्तं राज्यं सुरालये
॥
तस्मादहं त्वां प्रतिबोधयामि
विभूतिराज्यप्रतिपात्तहेतोः ॥
यथैव रामेण हतो दशास्य-
स्तथैव शत्रून् विनिपातयामि ॥
षष्ठीबोधने तु अहमप्याश्विने षष्ठ्यां
सायाह्ने
बोधयाम्यत इति पठनीयम् ॥ * ॥
अथ प्रतिपदादिकल्पः ।
‘आश्विने शुक्लपक्षे तु कर्त्तव्यं नवरात्रकम्
।
प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत्
॥’

षष्ठ्यां बोधनामन्त्रणकरणेऽपि
पत्रीप्रवेशपूर्ब्बदिने
सायं षष्ठीलाभे एकादैवोभयकरणं यदा तु
पूर्ब्ब-
दिने सायं षष्ठीलाभः परदिने सायं विना
षष्ठी-
लाभस्तदा पूर्ब्बेद्युर्बोधनं परदिने
सायमामन्त्र-
णम् । यदा तूभयदिने सायं षष्ठीलाभस्तदा
परे-
ऽह्नि षष्ठ्यां बोधनम् । उभयदिने सायं
षष्ठ्य-
भावे पूर्ब्बाह्णेऽपि षष्ठ्यां बोधनम् ।
आमन्त्रण-
मन्त्रस्तु ।
‘मेरुमन्दरकैलासहिमवच्छिखरे गिरौ ।
जातः श्रीफलवृक्ष त्वमम्बिकायाः सदा
प्रियः ॥
श्रीशैलशिखरे जातः श्रीफलः श्रीनिकेतनः
।
नेतव्योऽसि मया गच्छ पूज्यो
दुर्गास्वरूपतः ॥
सायं षष्ठ्यान्तु कर्त्तव्यं पार्व्वत्या
अधिवासनम् ।
षष्ठ्यभावेऽपि कर्त्तव्यं सप्तम्यामपि नारद !
॥’ * ॥
अथ सप्तम्यादिकल्पः ।
आश्विने शुक्लपक्षे तु सप्तम्यादिदिनत्रये ।
तत्र पूजा विशेषेण कर्त्तव्या मम मानवैः ॥
विशेषं तत्र वक्ष्यामि शृणु पुत्त्रक ! मन्मतम्
।
सप्तम्यां पत्रिकापूजा रम्भादिनवभिर्युता ॥
महीमयी च मूर्त्तिर्मे पुत्त्रायुर्धनवृद्धये ।
अष्टमी सा महापुण्या तिथिः प्रीतिकरी मम
॥
कुर्य्यात्तत्र महास्नानं पञ्चगव्ययुतैस्तथा ।
गायत्त्रीभिः कषायैश्च
गन्धाद्यैस्तीर्थवारिभिः ॥

लिङ्गस्थां पूजयेद्देवीं मण्डलस्थां तथैव च
।
पुस्तकस्थां महादेवीं पावके प्रतिमासु च ।
चित्रे चविशिखे खड्गे जलस्थाञ्चापि
पूजयेत् ॥’
स्नात्वा यथाविधि
विधौतकराननाङ्घ्रिराचम्य
सम्यगमलाम्बरयज्ञसूत्रः प्रागाननो
धनददिग्व-
दनोऽथवापि बद्धासनो गणपतिञ्च गुरुञ्च
नत्वा ।
‘कन्यासंस्थे रवावीशे शुक्लाष्टम्यां
प्रपूजयेत् ।
सोपवासो निशार्द्धे तु महाविभवविस्तरैः ॥
पूजां समारभेद्देव्या नक्षत्रे वारुणेऽपि वा ।
पशुधातश्च कर्त्तव्यो गवलाजवधस्तथा
॥’
उक्तवचने पशुघातश्च कर्त्तव्य इति श्रुतेः ।
‘अष्टम्यां रुधिरैर्मांसैः कुसुमैश्च
सुगन्धिभिः ।
पूजयेद्बहुजातीयैर्बलिभिर्भोजनैः शिवाम्
॥’
इति कालिकापुराणाच्च ॥
‘अष्टम्यां वलिदानेन पुत्त्रनाशो भवेद्ध्रुवम्
।’
इति देवीपुराणीयं सन्धिपूजावलिदानपरम्
॥
तत्पूजाया उभयतिथिकर्त्तव्यत्वेन
तद्वलिदानस्य
नवम्यां सावकाशत्वात् ।
तत्पूजाविधानन्तु
कालिकापुराणे वचनान्तरम् ।
‘अष्टमीनवमीसन्धौ तृतीया खलु कथ्यते
।
तत्र पूज्या त्वहं पुत्त्र ! योगिनीगणसंयुता
॥
उपवासं महाष्टम्यां पुत्त्रवान्न समाचरेत् ।
यथा तथैव पूतात्मा व्रती देवीं प्रपूजयेत् ॥

मूलेन प्रतिपूजयेद्भगवतीं चण्डीं प्रचण्डाकृति-
ञ्चाष्टम्यामुपवाससंयतधिया भक्त्या समा-
राध्य च ।
नानापाशुकमज्जमांसरुधिरैः कृत्वा नवम्यां वलिं
नक्षत्रं श्रवणं तिथिञ्च दशमीं संप्राप्य संप्रेषयेत् ॥
भगवत्याः प्रवेशादिविसर्गान्ताश्च याः क्रियाः ।
तिथावुदयगामिन्यां सर्व्वास्ताः कारयेद्बुधः ॥'
अत्रोदयकालीनघटिकामात्रतिथौसम्यक्पूज-
नासामर्थ्ये कालिकापुराणम् ।
'सम्यक् कल्पोदितां पूजां यदि कर्त्तुं न शक्यते ।
उपचारांस्तदा दातुं पञ्चैतान् वितरेत्तदा ॥
गन्धं पुष्पञ्च धूपञ्च दीपं नैवेद्यमेव च ।
अभावे गन्धपुष्पाभ्यां तदभावे च भक्तितः ॥
संक्षेपपूजा कथिता तथा वस्त्रादिकं पुनः ॥
प्रातरावाहयेद्देवीं प्रातरेव प्रवेशयेत् ।
प्रातः प्रातश्च संपूज्य प्रातरेव विसर्जयेत् ॥'
अत्र प्रातःपदं पूर्ब्बाह्णपरम् ।
'व्रती प्रपूजयेद्देवीं सप्तम्यादिदिनत्रये ।
द्वाभ्यां चतुरहोभिर्व्वा ह्रासवृद्धिवशात्तिथेः ॥'
अष्टम्यामुपवासः पुत्रवतो गृहस्थस्य निषिद्धः ।
यथा कालिकापुराणम् ।
'उपवासं महाष्टम्यां पुत्त्रवान्न समाचरेत् ।
यथा तथैव पूतात्मा व्रती देवीं प्रपूजयेत् ॥
नवम्यां वलिदानन्तु कर्त्तव्यं वै यथाविधि ।
जपं होमञ्च विधिवत् कुर्य्यात्तत्र विभूतये ॥'
अत्र नवम्यां होमश्रुतेः पूर्ब्बाषाढायुताष्टम्यां
पूजाहोमाद्युपोषणं इति श्रुतेश्च उभयत्र एक-
तरस्मिन् वा होमः शारद्याः पूजाया नवम्यामेव
दक्षिणा देवा ॥ * ॥
अथाष्टम्यादिकेवलमहाष्टमी केवलमहानवमी-
कल्पा यथा, --
'भद्रकालीं पटे कृत्वा तत्र संपूजयेद् द्विजः ।
शिरश्छेदोद्भवं तद्वद्दानवं खड्गपाणिनम् ।
हृदि शूलेन निर्भिन्नं निर्यदन्त्रविभूषितम् ॥
रक्तरक्तीकृताङ्गञ्च रक्तविस्फुरितेक्षणम् ।
वेष्टितं नागपाशेन भ्रुकुटीभीषणाननम् ॥
सपाशवामहस्तेन धृतकेशञ्च दुर्गया ।
वमद्रुधिरवक्त्रञ्च देव्याः सिंहं प्रदर्शयेत् ॥
देव्यास्तु दक्षिणं पादं समं सिंहोपरिस्थितम् ।
किञ्चिदूर्द्ध्वं तथा वाममङ्गुष्ठं महिषोपरि ॥
शत्रुक्षयकरीं देवीं दैत्यदानवदर्पहाम् ।
प्रसन्नवदनां देवीं सर्व्वकामफलप्रदाम् ।
स्तूयमानञ्च तद्रूपममरैः सन्निवेशयेत् ॥
उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका ।
चण्डा चण्डवती चैव चण्डरूपातिचण्डिका ॥
आभिः शक्तिभिरष्टाभिः सततं परिवेष्टिताम् ।
चिन्तयेत् सततं दुर्गां धर्म्मकामार्थमोक्षदाम् ॥'
इति ध्यात्वा
महास्नानपूर्ब्बकषोडशोपचारा-
दिना बलिदानादिभिः पूजयित्वा आवरणं
पूजयेत् ॥ * ॥
अथ दशमीकृत्यम् ।
'संपूज्य प्रेषणं कुर्य्याद्दशम्यां शावरोत्सवैः ।'
देवीयात्राकाले निर्म्मञ्छनविधिमाह पूजारत्ना-
करे देवीपुराणम् ।
'भक्त्या
पिष्टप्रदीपाद्यैश्चूताश्वत्थादिपल्लवैः ।
ओषधीभिश्च मेध्याभिः
सर्व्वबीजैर्यवादिभिः ॥
नवम्यां पर्व्वकाले तु यात्राकाले विशेषतः ।
यः कुर्य्यात् श्रद्धया वीर ! देव्या नीराजनं नरः ॥
शङ्खभेर्य्यादिनिनदैर्ज्जयशब्दैश्च पुष्कलैः ।
अथ विसर्ज्जनम् ।
'नौयानैर्नरयानैर्व्वा नीत्वा भगवतीं शिवाम् ।
स्रोतोजले प्रक्षिपेयुः
क्रीडाकौतुकमङ्गलैः ॥
परैर्नाक्षिप्यते यस्तु परं नाक्षिपते तु यः ।
तस्य रुष्टा भगवती शापं दद्यात्
सुदारुणम् ॥''
इति तिथ्यादितत्त्वदुर्गार्च्चातत्त्वे ॥
विसर्ज्जनमन्त्रो यथा, --
"दुर्गे देवि जगन्मातः ! स्वस्थानं गच्छ पूजिते ।
संवत्सरव्यतीते तु पुनरागमनाय वै ॥
निमज्जाम्भसि देवि त्वं
चण्डिकाप्रतिमा शुभा ।
पुत्त्रायुर्धनवृद्ध्यर्थं स्थापितासि जले मया ॥" * ॥
विसर्ज्जनानन्तरं गृहमागत्य
अच्छिद्रावधारणं
कृत्वा घटस्थजलेन
एभिर्म्मन्त्रैर्यजमानमभि-
षिञ्चेत् । यथा, --
"ॐ उत्तिष्ठ ब्रह्मणस्पते देवा
यजन्तस्त्वेमहे उप-
प्रयन्तु मरुतः सुदानवे
इन्द्रप्रायुर्भवासचा ॥
ॐ सुरास्त्वामभिषिञ्चन्तु
ब्रह्मविष्णुमहेश्वराः ।
वासुदेवो जगन्नाथस्तथा सङ्कर्षणः प्रभुः ॥
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ।
आखण्डलोऽग्निर्भगवान् यमो वै
नैरृतस्तथा ।
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ॥
ब्रह्मणा सहितो शेषो दिक्पालाः पान्तु ते सदा ।

आश्विने शुक्लपक्षस्य चाष्टम्यां नियतस्ततः ॥
उपोषितो द्वितीयेऽह्नि पूजयेत् पुनरेव ताम् ॥’
इति विष्णुधर्म्मोत्तरम् ॥
‘यस्त्वेकस्यामथाष्टम्यां नवम्यां वाथ साधकः ।
पूजयेद्वरदां देवीं शुद्धभावेन चेतसा ॥’
इति कालिकापुराणम् ॥ * ॥
दुर्गाया ध्यानं यथा, --
‘जटाजूटसमायुक्तामर्द्धेन्दुकृतशेखराम् ।
लोचनत्रयसंयुक्तां पूर्णेन्दुसदृशाननाम् ॥
अतसीपुष्पवर्णाभां सुप्रतिष्ठां सुलोचनाम् ।
नवयौवनसम्पन्नां सर्व्वाभरणभूषिताम् ॥
सुचारुदशनां तद्वत् पीनोन्नतपयोधराम् ॥
त्रिभङ्गस्थानसंस्थानां महिषासुरमर्द्दिनीम् ॥
मृणालायतसंस्पर्शदशबाहुसमन्विताम् ।
त्रिशूलं दक्षिणे पाणौ खड्गं चक्रं क्रमादधः ॥
तीक्ष्णबाणं तथा शक्तिं दक्षिणे सन्निवेशयेत् ।
खेटकं पूर्णचापञ्च पाशमङ्कुशमेव च ॥
घण्टां वा परशुं वापि वामतः सन्निवेशयेत् ।
अधस्तान्महिषं तद्वद्विशिरस्कं प्रदर्शयेत् ॥

यावतो दिवसान् वीर ! देव्यै नीराजनं कृतम् ॥
तावत्कालसहस्राणि दुर्गालोके महीयते ।
यस्तु कुर्य्यात् प्रदीपेन सूर्य्यलोके महीयते ॥’ * ॥
तद्दिने अपराजितापूजनम् । यथा, --
‘आश्विने शुक्लपक्षस्य दशम्यां पूजयेत्तथा ।
एकादश्यां न कुर्व्वीत पूजनञ्चापराजितम् ॥’
तद्दिने राजा यात्रां कुर्य्यात् । यथा, --
‘दशमीं यः समुल्लङ्घ्य प्रस्थानं कुरुते नृपः ।
तस्य संवत्सरं राज्ये न क्वापि विजयो भवेत् ॥’
स्वयमशक्तौ खड्गादियात्रा कर्त्तव्या ।
यथा, --
‘कार्य्यवशात्स्वयमगमे भूभर्त्तुः
केचिदाहुरा-
चार्य्याः ।
छत्रायुधाद्यमिष्टं वैजयिकं निर्गमे कुर्य्यात् ॥’ * ॥
खञ्जनदर्शनफलादिर्यथा, --
‘हस्तागते तु मित्रे यया दिशा खञ्जनं यान्तं नृपः पश्येत् ।
तया प्रयातस्य क्षिप्रमरातिर्व्वशमुपैति ॥
कृत्वा नीराजनं राजा बलवृद्ध्यै यथाबलम् ।
शोभनं खञ्जनं पश्येत् जलगोगोष्ठसन्निधौ ॥
अब्जेषु गोषु गजवाजिमहोरगेषु
राज्यप्रदः कुशलदः शुचिशाद्वलेषु ।
भस्मास्थिकेशनखलोमतुषेषु दृष्टो
दुःखं ददाति बहुशः खलु खञ्जरीटः ॥
अशुभं खञ्जनं दृष्ट्वा देवब्राह्मणपूजनम् ।
दानं कुर्व्वीत कुर्य्याच्च स्नानं
सर्व्वौषधीजलैः ॥’

कीर्त्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्षमा मतिः ।
बुद्धिर्लज्जा वपुः शान्तिस्तुष्टिः
कान्तिश्च मातरः ॥
एतास्त्वामभिषिञ्चन्तु धर्म्मपालाः
सुसंयताः ।
आदित्यश्चन्द्रमा भौमो
बुधजीवसितार्कजाः ॥
ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च
तर्पिताः ।
ऋषयो मुनयो गावो देवमातर एव च ॥
देवपत्न्योऽध्वरा नागा
दैत्याश्चाप्सरसां गणाः ।
अस्त्राणि सर्व्वशस्त्राणि राजानो
वाहनानि च ॥
औषधानि च रत्नानि
कालस्यावयवाश्च ये ।
सरितः सागराः शैलास्तीर्थानि जलदा ह्रदाः ॥
देवदानवगन्धर्व्वा यक्षराक्षसपन्नगाः ।
एते त्वामभिषिञ्चन्तु
धर्म्मकामार्थसिद्धये ॥”
इति बृहन्नन्दिकेश्वरपुराणपद्धतिः ॥ * ॥
अथ दुर्गानाममाहात्म्यम् ।
“तवर्गस्य तृतीयोऽर्णः
पञ्चमस्वरसंयुतः ।
कवर्गस्य तृतीयोऽर्णो वह्निस्तस्योपरि स्थितः ॥
द्वितोयस्वरसंयुक्तं नामेदं परिकीर्त्तितम् ।
आरोग्यस्य च सम्पत्तेर्ज्ञानस्य च
महोदये ॥
नामेदं परमो हेतुर्मुक्तये भवसङ्गिनाम् ।
कलिकाले विशेषेण महापातकिनामपि ॥
निस्तारबीजं विज्ञेयं नामसंस्मरणं
प्रिये ! ॥
परदाररतोऽपि स्यात् परद्रव्यापहारकः ।

| | | |
|---|---|---|
| | | सोऽपि पापात् प्रमुच्येत यदि स्यादतिपातकी ॥<br>ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः ।<br>एतेभ्योऽपि विमुच्येत यदि नाम स्मरेत् सुधीः ॥”<br>इति रुद्रयामलः ॥<br>“दुर्गा दुर्गेति दुर्गेति दुर्गानाम परं मनुम् ।<br>यो जपेत् सततं चण्डि ! जीवन्मुक्तः स मानवः ॥<br>महोत्पाते महारोगे महाविपदि सङ्कटे ।<br>महादुःखे महाशोके महाभयससुत्थिते ।<br>यः स्मरेत् सततं दुर्गां जपेत् यः परमं मनुम् ।<br>स जीवलोको देवेशि ! नीलकण्ठत्वमवाप्नुयात् ॥”<br>इति मुण्डमालातन्त्रम् । |

**दुर्गाध्यक्षः**, पुं, (दुर्गस्य अध्यक्षः ।) दुर्गरक्षकः ।

तस्य लक्षणं यथा, --

"अनाहार्य्यश्च शूरश्च तथा प्राज्ञः कुलोद्गतः ।

दुर्गाध्यक्षः स्मृतो राज्ञस्तद्युक्तः सर्व्वकर्म्मसु ॥"

इति मत्स्यपुराणम् ॥

**दुर्गानवमी**, स्त्री, (दुर्गायाः पूजोपलक्षिता नवमी ।)

कार्त्तिकशुक्लनवमी । सा त्रेतायुगाद्या । तत्र

जगद्धात्रीपूजा कर्त्तव्या । यथा, योगिनीतन्त्रे ।

"कार्त्तिकेऽमलपक्षे तु नवम्याञ्च विशेषतः ।

प्रगल्भाञ्च जगद्धात्रीं पूजयेद्दीपमालया ॥

तन्त्रान्तरे ।

'त्रिकालं पूजयेद्दुर्गां मनुनैकाक्षरेण च ।

नानाबलिविधानेन गीतवाद्यपुरःसरम् ॥

कार्त्तिकस्य सिते पक्षे नवम्याञ्च विशेषतः ।

कृत्वैवं साधकश्रेष्ठो लभेद्राज्यमकण्टकम् ॥'

कुब्जिकातन्त्रे ।

'कार्त्तिके शुक्लपक्षे तु नवम्यां जगदम्बिकाम् ।

दुर्गां प्रपूजयेद्भक्त्या धर्म्मकामार्थसिद्धये ॥'

शक्तिसङ्गमतन्त्रे ।

'कार्त्तिकस्य सिते पक्षे नवम्यां जगदीश्वरीम् ।

त्रिकालमेककालं वा वर्षे वर्षे प्रपूजयेत् ॥

निर्म्माय प्रतिमां शक्त्या जगद्धात्र्या विधानतः ।

पूजयित्वा परदिने प्रतिमां तां विसर्जयेत् ॥

दानवविशेषः । यथा, महाभारते । १ । ६५ । २२ ।

"असिलोमा च केशी च दुर्ज्जयश्चैव दानवः ॥"

राक्षसविशेषः । यथा, रामायणे । ३ । २९ । ३० ।

"तं दृष्ट्वा निःसृतं पूर्ब्बं राक्षसा अपि निःसृताः ।

दुर्जयः कालकाख्यश्च परुषः कालिकामुखः ॥")

त्रि, दुर्जेयः । (यथा, देवीभागवते । ५ । ८ । २२ ।

"वरदानेन धातुः स दुर्ज्जयो मधुसूदन ! ॥")

**दुर्जरा**, स्त्री, (दुर्दुःखेन जीर्य्यतीति । दुर् + जॄ + अङ् । ततष्टाप् ।) ज्योतिष्मती लता । इति राज-

निर्घण्टः ॥ त्रि, दुर्जरः ॥ (यथा, सुश्रुते । १ । ४६ ।

"स्वादु पाकरसं शाकं दुर्जरं हरिमन्थजम् ॥"

दुर्जयः । यथा, देवीभागवते । १ । १८ । २६ ।

"दुर्जरं तासनाजालं न शान्तिमुपजाति वै ॥")

**दुर्जातं**, क्ली, (दुर्दुष्टं यथा तथा जातम् । प्रादि-

समासः ।) व्यसनम् । (यथा, रघुः । १३ । ७२ ।

"दुर्जातबन्धुरयमृक्षहरीश्वरोमे

पौलस्त एष समरेषु पुरः प्रहर्त्ता ॥")

असमञ्जसम् । इति त्रिकाण्डशेषः ॥ असम्यग्-

जाते, त्रि । इति मेदिनी । ते, ११४ ॥ (यथा,

महाभारते । १२ । २२४ । ३३ ।

"दौष्कुलेयस्तथा मूढो दुर्जातः शक्र दृश्यते ॥")

**दुर्दान्तः**, पुं, (दुर्दुःखेन दान्तो दमितः ।) कलहः ।

**दुर्दुरूटः**, पुं, (दोलयति उत्क्षिपति आस्तिकता-

मिति । दोलि + बाहुलकात् कूटप्रत्ययेन

साधुः ।) नास्तिकः । इति जटाधरः ॥

**दुर्द्रिता**, स्त्री, लताविशेषः । इति जटाधरः ॥

**दुर्द्रुमः**, पुं, (दुर्दुष्टो द्रुमः ।) हरित्पलाण्डुः । इति

राजनिर्घण्टः ॥

**दुर्ध(र्द्ध)रः**, पुं, (दुर्दुःखेन ध्रियते इति । दुर् + धृ +

"ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ।" ३ । ३ ।

१२६ । इति खल् ।) नरकविशेषः । ऋषभौ-

षधिः । इति मेदिनी । रे, १६९ ॥ पारदः । भल्ला-

तकः । इति राजनिर्घण्टः ॥ महिषासुरस्य

सेनापतिविशेषः । यथा, मार्कण्डेये । ८३ । १९ ।

"दुर्द्धरं दुर्म्मुखञ्चोभौ शरैर्निन्ये यमक्षयम् ॥"

(धृतराष्ट्रपुत्त्रभेदः । यथा, महाभारते । ७ । १३३ । ३० ।

"नामृष्यन्त महेश्वासाः सोदर्य्याः पञ्च भारत ! ।

दुर्म्मर्षणो दुःसहश्च दुर्म्मदो दुर्धरो जयः ।

पाण्डवं चित्रसन्नाहास्तं प्रतीपमुपाद्रवन् ॥"

शम्बरासुरस्य मन्त्रिविशेषः । यथा, हरिवंशे । १६२ । १८ ।

"दुर्धरः केतुमाली च णत्रुहन्ता प्रमर्द्दनः ।

एतैः परिवृतोऽमात्यैर्युयुत्सुः प्रस्थितो रणे ॥"

विष्णुः । यथा, महाभारते । १३ । १४९ । ८९ ।

तस्य सहस्रनामकथने ।

"दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः ॥"

"न शक्या धारणा यस्य प्रणिधानादिषु

सर्व्वोपाधिविनिर्म्मुक्तत्वात्तथापि तत्प्रसादादतः

किञ्चिद्दुःखेन धार्य्यते जन्मान्तरसहस्रेषु भाव-

नात् तस्मात् दुर्धरः ।

'क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।

अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥'

इति भगवद्वचनात् ॥" इति तद्भाष्ये शङ्करः ॥

तथा तत्रैव । ४२ श्लोके ।

"सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः ॥"

एवं कृत्वा चक्रवर्त्ती भवेत्
साधकसत्तमः ।
पुत्त्रपौत्त्रधनैश्वर्य्यसंयुतास्य भवेत्
पुरी ॥
दासदासीगणैर्य्युक्तो मुक्तः स्यात्
पापसङ्कटात् ।
विशेषतो षसुयुतां नवमीं प्राप्य
साधकः ।
पूजयित्वा मृण्मयीं तां लभते वाच्छितं
फलम् ॥'
भविष्ये ।
'मासैश्चतुर्भिर्यत् पुण्यं विधिना पूज्य
चण्डिकाम् ।
तत् फलं लभते वीर ! नवम्यां
कार्त्तिकस्य च ॥"
इति तिथितत्त्वम् ॥

**दुर्गाह्वः**, पुं, (दुर्गाया आह्वा आख्या आह्वा
यस्य ।) भूमिजगुग्गुलुः । इति
राजनिर्घण्टः ॥

**दुर्घोषः**, पुं, (दुर्दुष्टः घोषो निनादो यस्य ।) भल्लूकः ।
इति राजनिर्घण्टः ॥ निन्दितरवः ।
तद्वति, त्रि ॥

**दुर्जनः**, त्रि, (दुर्दुष्टो जनः । "कुगतिप्रादयः ।"
२ । २ । १८ । इति समासः ।) खलः
। इत्य-
मरः । ३ । १ । ४७ ॥ (यथा,
चाणक्यशतके ।
२४ -- २५ ।
"दुर्जनः प्रियवादी च
नैतद्विश्वासकारणम् ।
मधु तिष्ठति जिह्वाग्रे हृदये तु हलाहलम्
॥
दुर्जनः परिहर्त्तव्यो विद्ययालङ्कृतोऽपि
सः ।
मणिना भूषितः सर्पः किमसौ न
भयङ्करः ॥")

**दुर्जयः**, पुं, (दुःखेन जीयतेऽसौ । जि जये + खल् ।)
वत्सतरः । इति राजनिर्घण्टः ॥ अशान्ते,
त्रि ।
(यथा, माघे । १२ । २२ ।
"दुर्द्दान्तमुत्प्लुत्य निरस्तसादिनं
सहासहाकारमलोकयज्जनः ॥")

**दुर्द्दिनं**, क्ली, (दुर्दुष्टं दिनम् ।) मेघाच्छन्नदिनम् ।
इत्यमरः । १ । ३ । १२ ॥ (यथा,
हरिवंशे ।
१६७ । १८ ।
"तुमुलं दुर्द्दिनञ्चासीत्
सविद्युत्स्तनयित्नुमत् ।
तद्दुर्द्दिनतलं भित्त्वा नारदः प्रत्यदृश्यत ॥"
घनान्धकारः । यथा, कुमारे । ६ । ४३ ।
"यत्रौषधिप्रकाशेन नक्तं दर्शितसञ्चराः ।
अनभिज्ञास्तमिस्राणां
दुर्दिनेष्वभिसारिकाः ॥")
वृष्टिः । यथाह साञ्जः ।
"घनान्धकारे वृष्टौ च दुर्द्दिनं कवयो विदुः
॥"
(यथा, रघुः । ४ । ४१ ।
"द्विषां विषह्य काकुत्स्थस्तत्र
नाराचदुर्द्दिनम् ।
सन्मङ्गलस्नात इव प्रतिपेदे जयश्रियम्
॥"
कुत्सितदिनम् ।)
"सुदिनं दुर्द्दिनञ्चैव सर्व्वं कर्म्मोद्भवे भव ।
तत् कर्म्म तपसां साध्यं कर्म्मणाञ्च
शुभाशुभम् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डम् ॥
"यदच्युतकथालापरसपीयूषवर्जितम् ।
तद्दिनं दुर्द्दिनं मन्ये मेघाच्छन्नं न दुर्दिनम्
॥"
इत्युद्भटः ॥
(दुर्द्दिनं वर्षः घनान्धकारो वा
अस्त्यस्येति ।
अच् । वर्षयुक्ते घनान्धकारविशिष्टे च, त्रि
।
यथा, हरिवंशे । ६७ । ६६ ।
"सम्प्राप्ते दुर्द्दिने काले दुर्द्दिनं भाति वै
नभः ॥"
तथा, महाभारते । ८ । ९१ । २३ ।
"पृथिव्यादीनि धारकाण्यन्येन धारयितुमशक्य-
त्वात् न केनापि धारयितुं शक्यते इति दुर्धरः ।
दुःखेन ध्यानसमये मुमुक्षुभिर्हृदयेन धार्य्यते
इति दुर्धरः ।" इति तद्भाष्यम् ॥ एतेन व्युत्पत्ति-
भेदात् नामभेदोत्पत्त्या न द्विरुक्तिः सहस्रनाम-
पूर्त्तिश्च जाता ॥) दुःखधार्य्ये, त्रि । इति हेम-
चन्द्रः ॥ (यथा, महाभारते । १ । १३४ । ९८
।
"अथाब्रवीन्महात्मानं भारद्वाजो महारथम् ।
गृहाणेदं महाबाहो ! विशिष्टमिति दुर्धरम् ॥
अस्त्रं ब्रह्मशिरो नाम सप्रयोगनिवर्त्तनम् ॥"
दुर्जये च । यथा, महाभारते । ७ । ११७ । ६ ।
"निर्जित्य दुर्धरं द्रोणं सपदानुगमाहवे ।
हार्द्दिक्यं योधवर्य्यञ्च प्राप्तं मन्ये धनञ्जयम् ॥")

**दुर्ध(र्द्ध)र्षा**, स्त्री, (दुर्दुःखेन धृष्यतेऽसौ । दुर् +
धृष + खल् ।) नागदमनी । कन्थारीवृक्षः ।
इति राजनिर्घण्टः ॥ (पुं, धृतराष्ट्रपुत्त्रविशेषः ।
यथा, महाभारते । १ । ११७ । ३ ।
"विन्दानुविन्दौ दुर्धर्षः सुबाहुर्दुष्प्रधर्षणः ॥")

| | | |
|---|---|---|
| कार्त्तवीर्य्यराजवंशोद्भवानन्तपुत्रः । इति कूर्म्म-<br>पुराणम् ॥ (विष्णुः । यथा, महाभारते । १३ ।<br>१४९ । ९६ ।<br>“समावर्त्तो निवृत्तात्मा दुर्ज्जयो दुरतिक्रमः ॥” | “जीमूतैश्च दिशः सर्व्वाश्चक्रे तिमिरदुर्द्दिनाः ॥”) | |

दुःखधर्षणीये, त्रि ॥ (यथा, महाभारते । ६ । १२ । ९ ।
"सुनामा नाम दुर्घर्षो द्बितीयो हेमपर्व्वतः ॥"
दुर्ज्जेयः । तथा, तत्रैव । १ । १३४ । ८७ ।
"ततः प्रीतमना द्रोणो मुहूर्त्तादिव तं पुनः ।
प्रत्यभाषत दुर्धर्षः पाण्डवानां महारथम् ॥")

**दुर्द्धुरूटः**, पुं, (दोलयति उत्क्षिपति युक्त्यादिक-
मिति । दुल क उत्क्षेपे + बाहुलकात् कूट-
प्रत्ययेन साधुः लस्य रः ।) युक्तिं विना गुरु-
वाक्यममन्यमानः । इति तत्त्वबोधनी ॥

**दुर्नाम**, [न्] क्ली, (दुर्दुष्टं नाम यस्य ।) अर्शो-
रोगः । इति राजनिर्घण्टः ॥ (यथा, सुश्रुते । १ । ४५ ।
"दध्याजं कफपित्तघ्नं लघु वातक्षयापहम् ।
दुर्नामश्वासकासेषु हितमग्नेः प्रदीपनम् ॥"
पित्तजश्लेष्मजयोरनयोर्हेतुर्यथा, --
"कट्वम्ललवणोष्णानि विदाहीनि भुरूणि च ।
सेवनानिलतोयेन श्रमाद्व्ययामपीडया ।
यानव्यायामदोषाद्वा दुर्नाम पित्तसम्भवम् ॥
अव्यायामात्तस्य शीलादजस्रं
शीताद्वान्यद्वातसंसेवनाच्च ।
गौण्यात्यम्लात्तैलसम्पिच्छिलेन
दुर्नामा सञ्जायते श्लेष्मदोषात् ॥"
इति हारीते चिकित्सितस्थाने द्वादशेऽध्याये ॥
चिकित्सास्य यथा, --
"व्योषाण्यरुष्करविडङ्गतिलाभयानां
चूर्णं गुडेन सहितन्तु सदोपयोज्यम् ।
दुर्नामकुष्ठगरशोथशकृद्विवन्धा-
नग्नेर्जयत्यबलतां क्रिमिपाण्डुताञ्च ॥"
इति व्योषाद्यचूर्णम् ॥
पचेद्वारिचतुर्द्रोणे कण्टकार्य्यमृताशतम् ।
तत्राग्नित्रिफलाव्योषपूतिकत्वक्कलिङ्गकैः ॥
स काश्मर्य्यविडङ्गैस्तु सिद्धं दुर्नाममेहनुत् ।
घृतं सिंह्यमृतं नाम बोधिसत्त्वेन भाषितम् ॥
इति सिंह्यमृतं घृतम् ॥"
इति वैद्यकचक्रपाणि संग्रहे अर्शोऽधिकारे ॥
"मृल्लिप्तं शौरणं कन्दं पक्त्वाग्नौ पुटपाकवत् ।

**दुर्नामकं**, क्ली, (दुर्नाम + स्वार्थे संज्ञायां वा कन् ।)
अर्शोरोगः । इत्यमरः । २ । ६ । ५४ ॥ (यथा, --
"सनागरारुष्करवृद्धदारकं
गुडेन यो मोदकमत्युदारकम् ।
अशेषदुर्नामकरोगदारकं
करोति वृद्धं सहसैव दारकम् ॥"
इति वैद्यकचक्रपाणिसंग्रहेऽर्शोऽधिकारे ॥)

**दुर्नामा**, [न्] पुं, स्त्री, (दुर्निन्दितं नाम यस्य ।)
दीर्घकोषिका । इत्यमरः । १ । १० । २५ ॥ झिणुक्
इति भाषा ॥

**दुर्नामारिः**, पुं, (दुर्नाम्नि अर्शोरोगस्य अरिः शत्रुः ।)
शूरणः । इति राजनिर्घण्टः ॥

**दुर्नाम्नी**, स्त्री, (दुर्निन्दितं नाम यस्याः । ङीप् ।)
दुर्नामा । इति शब्दरत्नावली ॥

**दुर्ब्बलः**, त्रि, (दुर्निन्दितं बलं यस्य ।) कृशः । तत्-
पर्य्यायः । अमांरः २ छातः ३ । इत्यमरः । २ । ६ । ४४ ॥ क्षान्तः ४ शातः ५ शितः ६ अबलः
७ । इति शब्दरत्नावली ॥ (यथा, देवीभाग-
वते । १ । ९ । ५६ ।
"सबलो जयमाप्नोति दैवाज्जयति दुर्ब्बलः ॥"
शिथिलः । यथा, रघुः । ५ । १२ ।
"स्वार्थोपपत्तिं प्रति दुर्ब्बलाश-
स्तमित्यवोचद् वरतन्तुशिष्यः ॥"
दुश्चर्म्मा । यथा, मनुः । ३ । १५१ ।
"जटिलञ्चानधीयानं दुर्व्वलं कितवन्तथा ।
याजयन्ति च ये पूगांस्तांश्च श्राद्धेन भोजयेत् ॥")

दुर्भिक्षं जायते घोरं धान्यौषधिप्रपीडनम् ।
अनले च समाख्याता नात्र कार्य्याविचारणा ॥ ५०
देशभङ्गः सुदुर्भिक्षं समासात् कथयाम्यहम् ।
पिङ्गले चारुपद्माक्षि ! दुर्भिक्षं नर्म्मदातटे ॥ ५१ ॥
दुर्भिक्षं मध्यमं प्रोक्तं व्यवहारो न वर्त्तते ।
भवेद्वै मध्यमा वृष्टिर्दुर्म्मतौ समुपस्थिते ॥ ५५ ॥
दुर्भिक्षं मरणं घोरं धान्यौषधिप्रपीडनम् ।
पापरोगो भवेद्देवि ! रक्ताख्येऽमरवन्दिनि ! ॥ ५८ ॥
रोगो मरणदुर्भिक्षं विरोधोपद्रवाकुलम् ।
क्रोधे तु विषमं सर्व्वं समाख्यातं हरप्रिये ! ॥ ५९ ॥
मेदिनी चलते देवि ! सर्व्वभूतं चराचरम् ।
देशभङ्गश्च दुर्भिक्षं क्षये सङ्कीयते प्रजा ॥
सौराष्ट्रे मालवे देशे दक्षिणे कोङ्कणे तथा ।
दुर्भिक्षं जायते घोरं क्षये संवत्सरे प्रिये ! ॥" ५० ॥
इति ज्योतिस्तत्त्वधृतषष्टिवर्षान्तर्गतवर्षविशेष-
फलबोधकभविष्यपुराणीयवचनानि॥ * ॥
अद्भुतेऽपि दुर्भिक्षं भवति यथा, --
"मांसास्थिनी समादाय श्मशानाद्गृध्रवायसाः ।
श्वा शृगालोऽथवा मध्ये पुरस्य प्रविशन्ति चेत् ॥
विकिरन्ति गृहादौ च श्मशानं सा मही भवेत् ।
चौरेण हन्यते लोकः परचक्रसमागमः ॥
संग्रामश्च महाघोरो दुर्भिक्षं मरकन्तथा ।
अद्भुतानि प्रसूयन्ते तत्र देशस्य विद्रवः ॥
अकाले फलपुष्पाणि देशविद्रवकारणम् ॥"
इति ज्योतिस्तत्त्वम् ॥ * ॥
"तत्राशौचिभिक्षाग्रहणे दोषाभाव इति हार-
लताप्रभृतयः ॥ कौर्म्मे ।
सद्यःशौचं समाख्यातं दुर्भिक्षे चाप्युपप्लवे ।
डिम्बाहवे हतानाञ्च विद्युता पार्थिवैर्द्विजैः ॥

अद्यात् सतैललवणं दुर्नामविनिवृत्तये ॥”
“चूर्णीकृताः षोडश शूरणस्य
भागास्ततोऽर्द्धेन च चित्रकस्य ।
महौषधाद्द्वौ मरिचस्य चैको
गुडेन दुर्नामजयाय पिण्डी ॥”
इति शूरणपिण्डी ॥
इति वाभटे चिकित्सास्थाने अष्टमेऽध्याये ॥
“माणशूरणभल्लातत्रिवृद्दन्तीसमन्वितम्।
त्रिकत्रयसमायुक्तं लौहं दुर्नामनाशनम् ॥
इति माणाद्यं लौहम् ॥”
इति वैद्यकरसेन्द्रसारसंग्रहे अर्शोऽधिकारे ॥
“सर्व्वाः स्युर्वलयो येषां दुर्नामभिरुपद्रुताः ।
तैस्तु प्रतिहतो वायुरपानः सन्निवर्त्तते ॥
ततो व्यानेन सङ्गम्य ज्योतिमृद्नाति
देहिनाम् ॥”
इति सुश्रुते निदानस्थाने तृतीयेऽध्याये ॥)

**दुर्ब्बला**, स्त्री, (दुर्दुष्टं स्वल्पमित्यर्थः बलं यस्याः ।)
अम्बुशिरीषिका । इति भावप्रकाशः ॥

**दुर्भगा**, स्त्री, (दुर्दुष्टं भगं भाग्यं यस्याः ।) पति-
स्नेहरहिता । दुया इति भाषा ।
तत्पर्य्यायः ।
विरक्ता २ । इति त्रिकाण्डशेषः ॥
विवृक्ता ३
निस्वा ४ सौभाग्यरहिता ५ । इति
शब्दरत्ना-
वली ॥ (यथा, भागवते । १ । १७ ।
२६ ।
“शोचत्यश्रुकला साध्वी
दुर्भगेवोज्झितासती ॥”
भाग्यहीने, त्रि । यथा, महाभारते । १ ।
१७० । ७ ।
“कर्म्मभिः स्वकृतैः सा तु दुर्भगा
समपद्यत ॥”)

**दुर्भिक्षं**, क्ली, (भिक्षाया अभावः ।) भिक्षाया
अप्राप्तिकालः । अकाल इति भाषा ।
यथा,
“दुर्भिक्षमल्पं स्मरणं चिराय ।”
इत्युद्भटः ॥
भिक्षायाः प्रायो
निष्फलत्वमित्यव्ययीभावसमासः।
यद्देशे यत्काले
तद्देशतत्कालयोग्यशस्यादिकं
न जायते तद्देशे तदा
याच्यमानद्रव्यालाभात्
दुर्भिक्षं जातमिति व्यवह्रियते सद्भिरिति
। तत्-
कारकवर्षाणि यथा, --
“राष्ट्रभङ्गश्च दुर्भिक्षं तस्करैरुपपीडनम्
।
जानीयाद्विग्रहं घोरं प्रमाथिनि वरानने !
॥ १३ ॥
दुर्भिक्षं जायते घोरं सर्व्वोपद्रवसंयुतम्
।
अनावृष्टिः समाख्याता व्यये संवत्सरे
प्रिये ! ॥ २० ॥
सद्यःशौचं समाख्यातं शापादिमरणे तथा ॥”
इति शुद्धितत्त्वम् ॥
अपि च गारुडे २२६ अध्याये ।
“दुर्भिक्षयुक्तराष्ट्रे च मृतके सूतकेऽपि वा ।
नियमाश्च न दुष्यन्ति दानधर्म्मरतास्तथा ॥
दीक्षिताश्चाभिषिक्ताश्चव्रततीर्थपरास्तथा ।
दीक्षाकाले विवाहादौ देवद्रोण्यां निमन्त्रिते ॥
पूर्ब्बसङ्कल्पिते चापि नाशौचं मृतसूतके ॥”

**दुर्म्मनाः**, [स्] त्रि, (दुर्दुष्टं मनो यस्य ।) चिन्ता-
दिव्याकुलचित्तः । तत्पर्य्यायः । विमनाः २
अन्तर्म्मनाः ३ । इत्यमरः । ३ । १ । ८ ॥
(यथा,
भागवते । १ । ६ । १९ ।
“रूपं भगवतो यत्तत्मनः कान्तं शुचापहम् ।
अपश्यन् सहसोत्तस्थे वैक्लव्याद्दुर्म्मना इव
॥”
शतावर्य्याम्, स्त्री । इति राजनिर्घण्टः ॥
(दुर्दुष्टं
मनः इति विग्रहे । दुष्टचित्ते, क्ली । यथा,
रामायणे । २ । ३१ । २० ।
“यदि दुःस्थो न रक्षेत भरतो राज्यमुत्तमम् ।
प्राप्य दुर्मनसा वीर गर्व्वेण च विशेषतः ॥”)

**दुर्म्मरा**, स्त्री, (मृ + भावे अप् । दुर्दुःखेन मर
मृत्युर्यस्याः । छिन्नायामपि पुनरुत्पत्तेरस्या-
स्तथात्वम् ।) दूर्व्वा । इति जटाधरः ॥ श्वेत-
दूर्व्वा । इति राजनिर्घण्टः ॥

| | क्वचिद्वर्षति पर्ज्जन्यो देशे संछिन्नमण्डलः ।<br>दुर्भिक्षं सर्व्वरीवर्षे व्यवहारो विपर्य्ययः ॥ ३४ ।<br>दुर्भिक्षं जायते सर्व्वा मेदिनी दुष्यति प्रिये ! ।<br>प्लवे प्लवन्ति तोयानि पीडिता मानवा भुवि ॥ ३५ ॥ | |
|---|---|---|

**दुर्म्मुखः**, पुं, (दुर्निन्दितं मुखं यस्य ।) वानर-

विशेषः । (यथा, रामायणे । ४ । ३९ । ३३ ।
"अयुतेन वृतश्चैव सहस्रेण शतेन च ।
ततो यूथपतिर्वीरो दुर्म्मुखो नाम वानरः ॥")
नागभेदः । इति मेदिनी । खे, १० ॥ (यथा,
हरिवंशे । ३ । ११४ ।
"कुहरः पुष्पदंष्ट्रश्च दुर्म्मुखः सुमुखस्तथा ॥")
अश्वः । इति हेमचन्द्रः । ३ । १५ ॥ (सर्पः ।
इति
त्रिकाण्डशेषः । ३ । ३ । ५९ ॥) महिषासुर-
सेनापतिविशेषः । यथा, मार्कण्डेये । ८३ ।
१९ ।
"दुर्द्धरं दुर्म्मुखञ्चोभौ शरैर्निन्ये यमक्षयम् ॥"
(नृपविशेषः । यथा, महाभारते । २ । ४ । २१
।
"संग्रामजिर्द्दुर्म्मुखश्च उग्रसेनश्च वीर्य्यवान् ॥"
धृतराष्ट्रस्य पुत्त्रविशेषः । यथा, तत्रैव । १ ।
११७ । ३ ।
"दुर्म्मर्षणो दुर्म्मुखश्च दुष्कर्णः कर्ण एव च ॥"
राक्षसविशेषः । यथा, भागवते । ९ । १० । १८
।
"रक्षःपतिस्तदवलोक्य निकुम्भकुम्भ-
धूम्राक्षदुर्म्मुखसुरान्तनरान्तकादीन् ॥"
यक्षविशेषः । इति ब्रह्मपुराणम् ॥ गणपते-
र्गणानामन्यतमः । यथा, महागणपति-
स्तोत्रे । ११ ।
"षट्कोणाश्रिषु षट्सु षड्गजमुखाः पाशा-
ङ्कुशाभीरवान्-
बिभ्राणाः प्रमदासखाः पृथुमहाशोणाश्ममुञ्ज-
त्विषः ।
आमोद्रः पुरतः प्रमोदसुमुखौ तं चाभितो
दुर्म्मुखः
पश्चात्पार्श्वगतोऽस्य विघ्न इति यो यो विघ्न-
कर्त्तेति च ॥"
वर्षविशेषः । यथा, ज्योतिषतत्त्वधृतभविष्य-
पुराणवचनम् ।
"तुषधान्यक्षयो देवि ! सर्व्वशस्यमहार्षता ।
व्यवहाराश्च नश्यन्ति दुर्मुखे दुर्मुखाः प्रजाः
॥")

पुत्त्रः कुरुपाण्डवयुद्धे भीमेन हतः ।
तत्पर्य्यायः ।
कुरुराट् २ गान्धारेयः ३ सुयोधनः ४ ।
इति
त्रिकाण्डशेषः ॥ (अयं कलेरंशेन
पृथिव्या-
मवतीर्णः । यथा, महाभारते । १ । ६७ ।
८८-८९ ।
"कलेरंशस्तु संजज्ञे भुवि दुर्य्योधनो नृपः
।
दुर्ब्बुद्धिर्दुर्म्मतिश्चैव कुरूणामयशस्करः
॥
जगतो यस्तु सर्व्वस्य विद्विष्टः
कलिपुरुषः ।
यः सर्व्वां घातयामास पृथिवीं
पृथिवीपते ! ॥")

**दुर्लभः**, त्रि, (दुर्दुःखेन लभ्यते इति । दुर् + लभ +

"ईषद्दुःसुष्विति ।" ३ । ३ । १२६ ।
इति खल् ।)
दुष्प्रापः । इति मेदिनी । भे, १६ ॥ यथा,
--
"दुर्लभं प्राकृतं वाक्यं दुर्लभः क्षेमकृत्
सुतः ।
दुर्लभा सदृशी भार्य्या दुर्लभः स्वजनः
प्रियः ॥"
इति चाणक्ये । ५४ ॥
अतिप्रशस्तः । इति शब्दरत्नावली ॥
"सर्व्वत्र सुलभा गङ्गा त्रिषु स्थानेषु
दुर्लभा ।
हरिद्वारे प्रयागे च गङ्गासागरसङ्गमे ॥"
इति कूर्म्मपुराणम् ॥
प्रियः । इति हेमचन्द्रः ॥

**दुर्लभः**, पुं, (दुर् + लभ + खल् ।) कच्चुरः । इति

मेदिनी । भे, १६ ॥ कर्च्चूरः । इति
राजनिर्घण्टः ॥
(विष्णुः । यथा, महाभारते । १३ ।
१४९ । ९६ ।

**दुर्व्वाक्**, [च्] त्रि, (दुर्दुष्टा वाक् यस्य ।) कद्वदः ।

इति हेमचन्द्रः । ३ । ११ ॥ (यथा,
अथर्व्व-
वेदे । ४ । १७ । ५ ।
"दुर्णाम्नीः सर्व्वा दुर्व्वाचस्ता
अस्मन्ताशया-
मसि ॥")
दुर्दुष्टा वाक् ।) दुष्टवाक्ये, स्त्री ॥ (यथा,
महा-
भारते । २ । ७४ । ८८ ॥
"अतीव जल्पन् दुर्व्वाचो भवतीह
विहेठकः ॥")

**दुर्व्वादः**, पुं, (दुर्दुष्टो वादः ।)
स्तुतिपूर्ब्बकदुर्व्वाक्यम् ।

इति जटाधरः ॥ निन्दितवाक्यञ्च ॥

**दुर्व्वासाः**, [स्] पुं, (दुर्दुष्टं निगूढमित्यर्थः वास इव

धर्म्मावरणत्वं यस्य । तथा च
महाभारतवच-
नम्- ।
"निगूढनिश्चयं धर्म्म यं तं दुर्व्वाससं
विदुः ॥")
मुनिविशेषः । स अत्रिमुनिपुत्त्रः
शङ्करांश-
जातः । इति श्रीभागवतम् ॥ (यथा,
विष्णु-
पुराणे । १ । ९ । २ ।
"दुर्व्वासाः शङ्करस्यांशश्चचार
पृथिवीमिमाम् ॥")
तत्पर्य्यायः । कुशारणिः २ । इति
त्रिकाण्ड-
शेषः ॥ तस्य भार्य्या और्व्वमुनिकन्या
कन्दली ।
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डम् ॥
(महा-
देवः । यथा, महाभारते । १३ । १७ ।
६२ ।
तस्य सहस्रनामकीर्त्तने ।

**दुर्म्मुखः**, त्रि, (दुर्दुःखजनकं मुखं मुखनिःसृत-

वचनादिकं यस्य ।) अप्रियवादी । तत्पर्य्यायः । मुखरः २ अबद्धमुखः ३ । इत्यमरः । ३ । १ । ३६ ॥
(अप्रियदर्शनम् । यथा, कथासरित्सागरे । १२ । ५२ ।
"चक्रे वसन्तकस्यापि रूपं दन्तुरदुर्मुखम् ॥")

**दुर्म्मूल्यं**, क्ली, (दुर्दुःस्थितं मूल्यम् । प्रादिसमासः ।)

महार्घम् । इति लोकप्रसिद्धम् ॥

**दुर्म्मेधाः**, त्रि, (दुर्निन्दिता मेधा धारणावती बुद्धि-

र्यस्य । "नित्यमसिच् प्रजामेधयोः ।" ५ । ४ । १२२ । इति असिच् ।) मन्दमेधाः । इति व्याकरणम् । (यथा, महाभारते । ३ । १० । २९ ।
"न किञ्चिदुक्त्वा दुर्म्मेधास्तस्थौ किञ्चिदवाङ्-मुखः ॥")

**दुर्म्मोहः**, पुं, (दुर्निन्दितो मोहो यस्मात् ।) काक-

तुण्डी । इति राजनिर्घण्टः ॥

**दुर्य्योधनः**, पुं, (दुर्दुःखेन युध्यतेऽसा । युध +

"भाषायां शासियुधीति ।" युच् ।) स्वनाम-ख्यातकुरुवंशभवराजविशेषः । स धृतराष्ट्रज्येष्ठ-

"दुर्ल्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ॥"
"दुर्ल्लभतया दुर्ल्लभः ।
'जन्मान्तरसहस्रेषु तपोदानसमाधिभिः ।
नराणां क्षीणपापानां कृष्णभक्तिः प्रजायते ।'
इति वचनात् भक्त्या लभ्य इति भगवद्वचनाच्च ।"
इति तत्र शाङ्करभाष्यम् ॥)

**दुर्लभा**, स्त्री, (दुर्लभ + टाप् ।) श्वेतकण्टकारी ।

दुरालभा । इति राजनिर्घण्टः ॥

**दुर्व्व**, ई वधे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-

सेट् । ईदित्त्वात् निष्ठायामनिट् ।) पञ्चम-स्वरी । दूः दुरौ दुरः । ई, दूर्णः । इति दुर्गा-दासः ॥

**दुर्व्वचं**, त्रि, (दुर्दुःखेन उच्यते । दुर् + वच् +

खल् ।) दुःखकथ्यम् । यथा, भारविः । २ । २ ।
"अपि वागधिपस्य दुर्वचं वचनन्तद्विदधीत विस्मयम् ॥"

**दुर्व्वचः**, [स्] क्ली, (दुर्निन्दितं वचः ।) मन्द-

वाक्यम् । यथा, --
"असह्यं दुर्व्वचो ज्ञातेर्मेघान्तरितरौद्रवत् ॥"
इत्युद्भटः ॥
(दुष्टवक्तरि, त्रि ॥)

**दुर्व्वर्णं**, क्ली, (दुर्निन्दितं सुवर्णाद्यपेक्षयेत्यर्थः वर्णं

यस्य ।) रजतम् । इत्यमरः । २ । ९ । ९६ ॥
(यथा, माघे । ४ । २८ ।
"दुर्वर्णभित्तिरिह सान्द्रसुधासवर्णा ॥")
एलबालुकम् । इति मेदिनी । णे, ५२ ॥ मन्द-वर्णे, त्रि ॥ (यथा, भागवते । ३ । १४ । ४४ ।

"साङ्ख्यप्रसादो दुर्व्वासाः सर्व्वसाधुनिषेवितः ॥"
दुर्निन्दितं वासो वस्त्रं यस्य ।) मन्दवस्त्रयुक्ते, त्रि ॥ (यथा, ऋग्वेदे । ७ । १ । १९ ।
"मा नो अग्नेऽवीरते परा दा दुर्वाससेऽमतये मा नो अस्यै ॥")

**दुर्व्विधः**, त्रि, (दुर्दुष्टा विधा यस्य ।) दरिद्रः ।

इत्यमरः । ३ । १ । ४९ ॥ खलः । इति मेदिनी । धे, ३१ ॥ मूर्खः । इति शब्दरत्नावली ॥ (यथा, गोः रामायणे । २ । १०९ । ३० ।
"शास्त्रेष्वन्येषु मुख्येषु विद्यमानेषु पुर्व्विधाः ।
बुद्धिमान्वीक्षिकीं प्राप्य निरर्थान् प्रवदन्ति ते ॥")

**दुर्व्विनीतः**, पुं, (वि + नी + भावे क्तः । दुर्दुष्टं

विनीतं विनयो यस्य । यद्वा, दुर् + वि + नी + क्तः ।) अविनीताश्वः । तत्पर्य्यायः । शूकलः २ । इति हेमचन्द्रः । ४ । ३०१ । अविनीतमात्रे, त्रि ॥ (यथा, पञ्चतन्त्रे । ५ । १७ ।
"कुपुत्त्रोऽपि भवेत् पुंसां हृदयानन्दकारकः ।
दुर्व्विनीतः कुरूपोऽपि मूर्खोऽपि व्यसनी खलः ॥")

**दुर्व्वृत्तः**, त्रि, (दुर्दुष्टं वृत्तं चरित्रं यस्य ।) दुर्जनः ।

यथा, --
"दुर्व्वृत्तवृत्तशमनं तव देवि ! शीलम् ॥"
इतिचण्डी ॥
दुश्चरित्रे, क्ली । (यथा, महाभारते । १ । १ । १०० ।
"दुर्व्वृत्तं धार्त्तराष्ट्राणामुक्तवान् मगवानृषिः ॥")

**दुर्हृत्**, [द्] त्रि, (दुर्दुष्टं हृदयं यस्य । "सुहृ-

| | “योगैर्हेमेव दुर्व्वर्णं भावयिष्यन्ति साधवः ॥”)<br>**दुर्व्वर्णकं**, क्ली, (दुर्व्वर्ण + स्यार्थे संज्ञायां वा कन् ।)<br>रजतम् । इति हेमचन्द्रः ॥ | द्वुर्हृदौ मित्रामित्रयोः ।” ५ । ४ । १५०<br>। इति निपा-<br>तनात् हृदयस्य हृद्भावः ।) शत्रुः ।<br>इत्यमरः ।<br>२ । ८ । १० ॥ (यथा, मार्कण्डेये ।<br>२६ । ३४ । |
|---|---|---|

"मित्राणामुपकाराय दुर्हृदां नाशनाय च ॥")
दुष्टचित्ते, त्रि । (यथा, महाभारते । ३ । ३१२ । १२ ।
"अश्मसारमयं नूनं ह्यदयं मम दुर्हृदः ।
यमौ यदेनौ दृष्ट्वाद्य पतितौ नावदीर्य्यते ॥")

**दुर्हृदयः**, त्रि, (दुर्दुष्टं हृदयं यस्य । अशत्रुत्वेन न हृद्भावः ।) दुष्टान्तःकरणः । इति शब्दार्थ-कल्पतरुः ॥

**दुल**, क उत्क्षेपे । इति कविकल्पद्रुमः ॥ (चुरां-परं-सकं-सेट् ।) क, दोलयति धूलिं वायुः । इति दुर्गादासः ॥

**दुलिः**, पुं, (दोलतीति । दुल + "इगुपधात् कित् ।" उणां ४ । ११९ । इति इन् ।) मुनिविशेषः । कमठ्याम् स्त्री । इति मेदिनी । ले, २६ ॥

**दुली**, स्त्री, (दुल + इन् । वा ङीष् ।) दुलिः । इत्य-मरटीकायां भरतः ॥

**दुश्चरः**, पुं, (दुर्दुःखेन चरतीति । दुर् + चर + अच् ।) शम्बूकः । इति हारावली । ११२ ॥
भल्लूकः । इति राजनिर्घण्टः ॥ (दुर्दुःखेन चर्य्यते इति । खल् ।) दुर्गमे, त्रि । (यथा, रामायणे । ३ । २६ । ७ ।
"प्रविष्टो सीतया सार्द्धं दुश्चरं दण्डकं वनम् ॥"
खल् ।) दुःखेन करणम् । (कर्म्मणि खल् ।) दुष्खेण क्रिययाणे, त्रि । इति मुग्धबोधम् ॥ (यथा, देवीभागवते । ५ । १ । ३ ।
"वने गत्वा तपस्तप्तं वासुदेवेन दुष्करम् ।
विष्णोरंशावतारेण शिवस्याराधनं कृतम् ॥")

**दुष्कर्म्म**, [न्] क्ली, (दुष्टं कर्म्म ।) पापम् । यथा,
"दुष्कर्म्मजा नृणां रोगा यान्ति चैव कमाच्छमम् ।
जपैः सुरार्च्चनैर्होमैदर्नैस्तेषां शमो भवेत् ॥"
इति शातातपीयकर्म्मविपाकः ॥
(निन्दितकर्म्म ॥ * ॥ दुष्टं कर्म्म अस्येति विग्रहे । दुष्कर्म्मकारके, त्रि । यथा, महाभारते । ५ । १३२ । २० ।
"ततो वसति दुष्कर्म्मा नरके शाश्वतीः समाः ॥")

**दुष्कुलीनः**, पुं, चोरनामगन्धद्रव्यम् । इति शब्द-रत्नावली ॥ (दुष्कुले भवः । दुष्कुल + पक्षे खः । दुष्कुलोद्भवे, त्रि । इति शब्दार्थकल्पतरुः ॥ (यथा, महाभारते । ५ । ३९ । ४६ ।
"दुष्कुलीनः कुलीनो वा मर्य्यादां यो न लङ्घयेत् ॥")

**दुष्कृतं**, क्ली, (दुष्टं कृतम् ।) पापम् । इत्यमरः । १ । ४ । २३ ॥ तत्तु तत्कर्त्तुर्मरणानन्तरं तेन सह गच्छति । यथा, --
"गृहादर्था निवर्त्तन्ते श्मशानादपि बान्धवाः ।
सुकृतं दुष्कृतं लोके गच्छन्तमनुगच्छति ॥
तस्माद्वित्तं समासाद्य दैवाद्वा पौरुषादथ ।
दद्यात् सम्यक् द्विजातिभ्यः कीर्त्तनानि च कार-येत् ॥"
इति वह्निपुराणे यमानुशासननामाध्यायः ॥
(दुष्टकृते, त्रि । यथा, महाभारते । ९ । ४३ । २० ।
"युष्माकञ्चाप्रसादेन दुष्कृतेन च कर्म्मणा ।
यत् पापं वर्द्धतेऽस्माकं यतः स्मो ब्रह्मराक्षसाः ॥")

**दुष्क्रीतं** त्रि, (दुर्दुःखेन क्रीयते स्म इति । दुर् + क्री + क्तः ।) महार्घम् । यथा, --
"महाकुलीनाभिरपापिकाभिः
स्त्रीभिः सतीभिस्तव सख्यमस्तु ।
चण्डाश्च शौण्डाश्च महाशनाश्च
चौराश्च दुष्टाश्च पलाश्च वर्ज्याः ॥)

**दुष्टवृषः**, पुं, (दुष्टो वृष इति कर्म्मधारयः ।) शक्तोऽप्यधुर्व्वहः । गड्या गरु इति भाषा । तत्-पर्य्यायः । गलिः २ । इति हेमचन्द्रः । ४ । ३२९ ॥

**दुष्टा**, स्त्री, (दुष्यति स्म योनिदोषेणेति । दुष् + क्त + टाप् ।) पुंश्चली । इति शब्दरत्नावली ॥

**दुष्ठु**, व्य, (दुर् निन्दितं तिष्ठतीति + दुर् + स्था + "अपदुःसुषु स्थः ।" उणां । १ । २६ । इति कुः ।
"सुषमादिषु च ।" ८ । ३ । ९८ । इति सुषमादि-त्वात् षत्वम् ।) निन्दा । इत्यमरः । ३ । ४ । १९ ।

**दुष्ठुः**, त्रि, (दुर्निन्दितस्तिष्ठतीति + दुर + स्था + कुः षत्वञ्च ।) अविनीतः । इत्युणादिकोषः ॥

**दुष्पत्रः**, पुं, (दुष्टानि पत्रानि यस्य ।) चोरनाम-गन्धद्रव्यम् । इत्यमरः । २ । ४ । १२८ ॥

**दुष्प्रधर्षणी**, स्त्री, (दुर्दुःखेन प्रधृष्यते इति । धृष् + कर्म्मणि ल्युट् स्त्रियां ङीप् । यद्वा, भाषायां दुष्प्रधर्षतीति युच् ।) वार्त्ताकी । इत्यमरः । २ । ४ । ११४ ॥ (पुं, धृतराष्ट्रपुत्रभेदः । यथा, महाभारते । १ । ६७ । ९४ ।
"विन्दानुविन्दौ दुर्द्धर्षः सुबाहुर्दुष्प्रधर्षणः ॥"
दुःखेन धर्षणीये, त्रि । यथा, रामायणे । ३ । १८ । ९ ।
"प्रविश्य चाग्निशरणं तमृषिं दुष्प्रधषणम् ।

दुश्चरणीये, त्रि । यथा, महाभारते । १२ । २३ । ६ ।
"त्वञ्चराद्य विधिं पार्थ ! दुश्चरं दुर्ब्बलेन्द्रियैः ॥")

**दुश्चर्म्मा**, [न्] पुं, (दुष्टं चर्म्म यस्य ।) अप्रावृत-मेढ्रः । "यथा, दुश्चर्म्मा गुरुतल्पगः ।" इति स्मृतिः ॥ तत्पर्य्यायः । द्विनग्नकः २ चण्डः ३ शिपिविष्टः ४ । इति हेमचन्द्रः । ३ । ११८ ॥ कोठरोगः । इति राजनिर्घण्टः ॥

**दुश्चिक्यं**, क्ली, लग्नात् तृतीयलग्नम् । यथा, --
"खं मेषूरणमास्पदं मदनभे यामित्रमस्तद्युने
द्यूनञ्चापि सुहृद्गृहे तु हिवुकं पातालमम्भोऽपि च ।
दुश्चिक्यं सहजे वदन्ति मुनयो रिप्फं ततो द्वादशे
षट्कोणं रिपुमन्दिरे नवमभे त्र्याद्यं त्रिकोणं पुनः ॥"
इति दीपिका ॥

**दुश्च्यवनः**, पुं, (दुर्दुःखेन च्यवनं बहुकालानन्तरं पतनं यस्य । दुर्दुष्टश्च्यवनः शिवो यस्य । शिवेन अभिभूतत्वात् तथात्वम् । यद्वा, दुर्दुःखेन श्चूयते इति । श्चु ङ गतौ + "छन्दसि गत्यर्थेभ्यः ।" ३ । ३ । १२९ । इति युच् ।) इन्द्रः । इत्यमरः । १ । १ । ४७ ॥ (अविचाल्ये, त्रि । यथा, ऋग-वेदे । १० । १०३ । २ ।
"युत्कारेण दुश्च्यवनेन धृष्णुना ॥")

"क्रीत्वा मूल्येन यो द्रव्यं दुष्क्रीतं मन्यते क्रयी ।
विक्रेतुः प्रतिदेयन्तत् तस्मिन्नेवाह्न्यविक्षतम् ॥"
इति प्रायश्चित्ततत्त्वे नारदः ॥

**दुष्खं** क्ली, (दुष्टं खनति आविष्करोतीति । खन + डः । "इणः षः ।" ८ । ३ । ३९ । इति विसर्गस्य षः ।) दुःखम् । इत्यमरटीकायां भरतः ॥

**दुष्खदिरः** पुं, (दुष्टः खदिर इति प्रादिसमासः ।) खदिरवृक्षभेदः । तत्पर्य्यायः । काम्बोजी २ ।) कालस्कन्धः ३ गोरटः ४ अमरजः ५ पत्रतरुः ६ बहुसारः ७ सारखदिरः ८ महासारः ९ क्षुद्रखदिरः १० । अस्य गुणाः । कटुत्वम् । उष्णत्वम् । तिक्तत्वम् । रक्तव्रणोत्थदोषकण्डूति-विषवीसर्पज्वरकुष्ठोन्मादभूतनाशित्वञ्च । इति राजनिर्घण्टः ॥

**दुष्टं**, क्ली, (दुष् + क्तः ।) कुष्ठम् । इति शब्द चन्द्रिका ॥ कुड इति ख्यातम् ॥

**दुष्टः**, त्रि, (दुष्यतीति + दुष् + कर्त्तरि क्तः ।) दुर्ब्बलः । अधमः । इति विश्वः ॥ (यथा, महा-भारते । ३ । २३३ । ११ ।

तथेत्युक्त्वाश्रमपदं प्रविवेश निवेदितुम् ॥")

**दुष्प्रधर्षा**, स्त्री, (दुःखेन प्रधृष्यते इति । प्र + धृष + अच् + टाप् ।) दुरालभा । खर्ज्जूरी । इति राजनिर्घण्टः ॥ (पुं, धृतराष्ट्रपुत्त्रभेदः । यथा, महाभारते । ६ । ६१ । २५ ।
"उग्रो भीमरथो भीमो वीरबाहुरलोलुपः ।
दुर्म्मुखो दुष्प्रधर्षश्च विवित्सुर्विकटः समः ॥"
(दुःखेन पराभवनीये, त्रि । यथा, महाभारते । ५ । १५१ । ४६ ।
"सारवद्बलमस्माकं दुष्प्रधर्षं दुरासदम् ॥")

**दुष्प्रधर्षिणी**, स्त्री, (पौनःपुन्येन दुःखेन धृष्यते इति । धृष् + आभीक्ष्ण्ये णिनिः ।) दुष्प्रधर्षणी । इत्यमरटीकायां भरतः ॥ कण्टकारी । इति राजनिर्घण्टः ॥ बृहती । इति भावप्रकाशः ॥

**दुष्प्रवेशा**, स्त्री, (दुःखेन प्रविश्यते इति । प्र + विश् + कर्म्मणि अच् । टाप् च ।) कन्थारी-वृक्षः । इति राजनिर्घण्टः ॥ (दुष्प्रवेशनीये, त्रि । यथा, रामायणे । ३ । ६ । २ ।
"कुशचीरपरिक्षिप्तं ब्राह्म्या लक्ष्म्या समावृतम् ।
दुष्प्रवेशं दुरालक्ष्यं सूर्य्यमण्डलवर्च्चसम् ॥")

**दुष्मन्तः**, पुं, (दुष् दोषवतीं मन्यते शकुन्तलामिति । दुष् + मन् + क्तः । निपातनात् साधुः ।) चन्द्र-वंशीयराजविशेषः । स ऐतिपुत्त्रः । तस्य पुत्त्रो भरतराजचक्रवर्त्ती । पत्नी शकुन्तला । इति श्रीभागवतम् ॥ (यथा, महाभारते । १ । ६८ । ३ ।

| | | |
|---|---|---|
| **दुष**, ईर् य औ वैकृते । इति कविकल्पद्रुमः ॥<br>(दिवां-परं-अकं-अनिट् ।)<br>वैकृतमशुद्धीभावः ॥<br>इर्, अदुषत् अदुक्षत् । अस्मात्<br>पुषादित्वान्नित्यं<br>ङ इत्यन्ये । य, दुष्यति लोकः<br>पापात् । औ,<br>दोष्टा । इति दुर्गादासः ॥<br>**दुष्करं**, क्ली, (दुर्दुःखेन क्रियते इति । कृ + खल् ।)<br>आकाशम् । इति शब्दार्थकल्करुः ॥<br>(भावे | | "पौरवानां वंशकरो दुष्मन्तो नाम<br>वीर्य्यवान् । |

पृथिव्याश्चतुरन्तायागोप्ता भरतसत्तम् !
॥”
विवरणमस्य तदध्यायात् विस्तरशो
द्रष्टव्यम् ।
दुष्यन्त इत्यपि पाठः ॥)

**दुस्पर्शः**, पुं, (दुःखेन स्पृश्यते इति । दुर् + स्पृश +
कर्म्मणि खल् । विसर्गस्य वा लोपः ।)
दरालभा ।
इत्यमरटीकायां भरतः ॥ (पर्य्यायोऽस्य
यथा,
“यासो यवासो दुस्पर्शो धन्वयासः
कुनाशकः ।
दुरालभा दुरालम्भा समुद्रान्ता च रोदिनी
॥
गान्धारी कच्छुरानन्ता कषाया हरविग्रहा
॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)
दुःखस्पृश्ये, त्रि ॥

**दुस्स्थः**, पुं, (दुःखेन तिष्ठतीति । दुः + स्था +
कः ।) कुक्कुरः । कुक्कुटः । इति
शब्दार्थकल्प-
तरुः ॥ (दुःस्थिते, त्रि । यथा, भट्टौ । २ ।
३९ ।
“बलिर्ब्बबन्धे जलधिर्म्ममन्थे
जह्रेऽमृतं दैत्यकुलं विजिग्ये ।
कल्पान्तदुस्स्था वसुधा तथोहे
येनैष भारोऽति गुरुर्न तस्य ॥”)

**दुह**, इर् अर्द्दने । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-सकं-सेट् ।) इर्, अदुहत् अदोहीत ।
अर्द्दन-
मिह वधः । इति दुर्गादासः ॥

**दुह**, ल ञ औ दुहि । इति कविकल्पद्रुमः ॥ (अदां-
उभं-सकं-अनिट् ।) धुक् दोहनम् । तच्च
व्यक्तीकरणमिति धातुपारायणिकाः । ञ
ल,

कन्यामूत्रपुरीषञ्च तत्र भक्षति पातकी ।
कृमिभिर्द्दंशितः काकैर्य्यावदिन्द्राश्चतुर्द्दश ॥
मृतश्च व्याधयोनौ च स लभेज्जन्म
निश्चितम् ।
विक्रीणीते मांसभारं वहत्येवं दिवानिशम्
॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥
कन्यादानफलं यथा, --
“दशवापीसमा कन्या दीयते ब्राह्मणाय तत्
।
वेदज्ञाय पवित्राय चाप्रतिग्रहशालिने ॥
सन्ध्यायज्ञवेदपाठकारिणे सत्यवादिने ।
अस्मै प्रदत्ता कन्या च दशवापीफलप्रदा ॥
त्रिसन्ध्याकारिणे सत्यवादिने गृहशालिने ।
वेदज्ञाय च विप्राय दत्तार्द्धफलदायिनी ॥
प्रतिग्रहगृहीताय सन्ध्याहीनाय नित्यशः ।
मूर्खाय दत्ता कन्या च सा चतुःफलदायिनी
॥
परदारगृहीताय याजकाय द्विजाय च ।
शठाय सन्ध्याहीनाय वाप्येकफलदा सुता
॥
सर्व्वसन्ध्यास्वगायत्रीविहीनायशठाय च
।
विप्रोद्भवाय दत्ता या वाप्यर्द्धफलदा सुता ॥
पापिने शूद्रजाताय विप्रक्षेत्रोद्भवाय च ।
दत्ता चाण्डालतुल्याय कन्या सा नरकप्रदा
॥
विष्णुभक्ताय विदुषे विप्राय सत्यवादिने ।
जितेन्द्रियाय दत्ता या विंशद्वापीफलप्रदा ॥
षष्टिवर्षसहस्राणि दिव्यरूपं विधाय च ।
एवम्भूताय दत्ता च मोदते विष्णुमन्दिरे ॥
दत्त्वा कन्यां सुशीलाञ्च हराय हरयेऽथवा ।
नारायणस्वरूपञ्च भवेदेव श्रुतौ श्रुतम् ॥
विष्णुभक्तो यदा कन्यां ददाति विष्णुप्रीतये
।
स लभेद्धरिदास्यञ्च ध्रुवं विप्रोद्भवाय च ॥”
* ॥
विवाहानन्तरं कन्याया भर्त्तृगृहगभनसमये

क्योक्त्या ऊत्वं भस्य डत्वञ्च ।)
व्यसनप्राप्तः ।
विपद्युक्तः । इति संक्षिप्तसारः ॥ (दुर्दहः ।
यथा, ऋग्वेदे । १ । १५ । ६ ।
“युवं दक्षं धृतव्रतमित्रावरुणदूळभम् ॥”
“दूडभं दुर्दहं शत्रुभिर्दग्धुं
विनाशयितुमशक्य-
मित्यर्थः ।” “दूडभं दह भस्मीकरणे दुःखेन
दह्यते इति दुर्दहं
ईषद्दुःसुष्वित्यादिनाखुरित्युप-
पदे दग्धेः खल् व्यत्ययो बहुलमित्युकारस्य
ऊकारो रेफस्य लोपः दकारस्य डकारो
हका-
रस्य च भकारः ॥” इति तद्भाष्ये सायनः
॥)

**दूडाशः**, त्रि, (दुःखेन दाश्यते यः । दुर् + दाशि
+ खल् । “पृषोदराणि यथोपदिष्टम् ।” ६ ।
३ । १०९ । इत्यस्य “दुरो दाशनाशेति ।”
वार्त्तिकोक्त्या ऊत्वं डत्वञ्च ।) पीडायुक्तः ।
इति
सिद्धान्तकौमुदी ॥ (यथा, अथर्व्ववेदे । १ ।
१३ । १ ।
“नमस्ते अस्त्वश्मने येना दूडाशे अस्यसि
॥”)
दन्त्यसान्तोऽपि ॥

**दूढ्यः**, त्रि, (दुःस्वेन ध्यायतीति । दुर् + ध्यै +
खल् । “दुरो
दाशनाशदमध्येषूत्तरमुत्तरपपादेः
ष्टुत्वञ्च ।” ६ । ३ । १०९ । इत्यस्य
वार्त्तिकोक्त्या
ऊत्वं ढत्वञ्च ।) अधमः । इति सिद्धान्त-
कौमुदी ॥

**दूणाशः**, त्रि, (दुःखेन नाश्यते ऽसौ । दुर् +
नाशि + खल् । “दुरो दाशनाशेति ।” । ६ ।
३ । १०९
इत्यस्य वार्त्तिकक्त्या ऊत्वं णत्वञ्च ।)
दुःखेन

दोग्धि दुग्धे गां दुग्धं गोपः । स्वयं
प्रदुग्धास्य
गुणैरुपस्नुता वसूपमानस्य वसूनि
मेदिनीति
किराते वसूनीति कर्म्मणो विद्यमानतया
कर्म्म-
कर्त्तृत्वाभावात् स्खलितमित्येके ।
दुहादेरप्रधान-
कर्म्मविषये कर्म्मकर्त्तृत्वे
प्रधानकर्म्मप्रयोगो दुर्नि
वारः । इति कुलचन्द्रः ॥ स्वमते तु
अतएवा-
नयोर्ढेऽपि ढवत्त्वमिति वचनात् पचदुहोः
कर्म्मणि
विद्यमानेऽपि कर्म्मकर्त्तृत्वम् । इति
दुर्गादासः ॥

**दुहिता**, [ऋ] स्त्री, (दोग्धि विवाहादिकाले
धनादिकमाकृष्य गृह्णातीति । यद्वा, दोग्धि
गा
इति । आर्षकाले कन्यासु एव
गोदोहनभार-
स्थितेस्तथात्वम् । दुह +
"नप्तृनेष्टृत्वष्टृहोतृ-
पातृभ्रातृजामातृमातृपितृदुहितृ ।" उणां ।
२ । ९६ । इति तृच् । निपातनात्
गुणाभावः ।)
कन्या । इत्यमरः । २ । ६ । २८ ॥
कन्यादान-
पात्रापात्रं यथा, --
"कृत्वा परीक्षां कान्तस्य वृणोति कामिनी
वरम् ।
वराय गुणहीनाय वृद्धायाज्ञानिने तथा ॥
दरिद्राय च मूढाय योगिने कुत्सिताय च ।
अत्यन्तकोपयुक्ताय चात्यन्तदुर्मुखाय च
॥
चापलायाङ्गहीनाय चान्धाय बधिराय च ।
जडाय चैव मूर्खाय क्लीवतुल्याय पापिने
॥
ब्रह्महत्यां लभेत् सोऽपि यः स्वकन्यां
ददाति च ।
पित्रादीनां रोदनं शास्त्रसिद्धम् । यथा
दुर्व्वा-
ससा सह और्व्वकन्यायाः कन्दल्या विवाहे
।
"कन्यासमर्पणं कृत्वा मोहादुच्चै रुरोद च ।
मूर्च्छामवाप स मुनिः स्वकन्याविरहातुरः
॥
अपत्यभेदशोकौघः स्वात्मारामं न मुञ्चति ।
क्षणेन चेतनां प्राप्य बोधयामास कन्यकाम्
॥
मूर्च्छितां तातविच्छेदाद्रुदन्तीं
शोकसंयुताम् ॥"
इति ब्रह्मवैवर्त्ते
प्रकृतिखण्डश्रीकृष्णजन्मखण्डे ॥

**दुहितुःपतिः**, पुं, (दुहितुः सुतायाः पतिः । "विभाषा-
स्वसृपत्योः ।" ६ । ३ । २४ । इति
विभक्ते-
रलुक् ।) जामाता ।
इत्यमरटीकासारसुन्दरी ॥

**दुह्यं**, क्ली, (दुह्यते इति । दुह + "एतिस्तु शास्-
वृदृजुषः क्यप् ।" ३ । १ । १०९ । इत्यत्र
"शंसि
दुहिगुहिभ्यो वा ।" इति काशिकोक्तेः क्यप्
।)
दोहनयोग्यम् । दोह्यम् । इति व्याकरणम् ॥

**दू**, ओ ङ य खेदे । इति कविकल्पद्रुमः ॥ (दिवां-
आत्मं-अकं-सकं च-सेट् ।) खेद इह उप-
तप्तीकरणमुपतप्तीभावश्च । ओ, दूनः । ङ
य,
दूयते दैन्यं जनम् । इति चतुर्भुजः । मां
कथं
पश्यन्न दूयसे इति रघुः । इति दुर्गादासः ॥

**दूडभः**, त्रि, (दुर्दुःखेन दभ्यते इति । दुर् + दभ +
खल् । "दुरो
दाशनाशदभध्येषूत्वमुत्तरपदादेः
ष्टुत्वञ्च ।" ६ । ३ । १०९ । इत्यस्येति
वार्त्ति-
नष्टः । इति सिद्धान्तकौमुदी ॥
(नाशयित्तुम-
शक्यः । यथा, ऋग्वेदे । ९ । ६३ । ११ ।
"यो दूणाशो वनुष्यता ॥")

**दूतः**, पुं, (दूयते वार्त्तावहनादिनेति । दू + "दूत-
निभ्यां दीर्घश्च ।" उणां । ३ । ९० । इति
क्तः
दीर्घश्च ।) वार्त्ताहरः । तत्पर्य्यायः ।
सन्देश-
हरः २ । इत्यमरः । २ । ८ । १६ ॥
सन्दिष्ट-
कथकः ३ । इति शब्दरत्नावली ॥ तस्य
लक्षणं
यथा, --
"यथोक्तवादी दूतः स्याद्देशभाषाविशारदः ।
शक्तः क्लेशसहो वाग्मी
देशकालविभागवित् ॥
विज्ञातदेशकालश्च दूतः स्यात् स
महीक्षितः ।
वक्ता नयस्य यः काले स दूतो नृपतेर्भवेत्
॥"
इति मत्स्यपुराणम् ॥
अपि च ।
"मेधावी वाक्पटुः प्राज्ञः परचित्तोपलक्षकः
।
धीरो यथोक्तवादी च एष दूतो विधीयते ॥"
इति चाणक्ये । १०६ ॥
अन्यच्च ।
"परेङ्गितज्ञः परवाग्व्यङ्ग्यार्थस्यापि
तत्त्ववित् ।
सदोत्पन्नमतिर्धीरो दूतः स्यात् पृथिवीपतेः
॥
दूतञ्चैव प्रकुर्व्वीत सर्व्वशास्त्रविशारदम् ।
इङ्गितज्ञं तथा सभ्यं दक्षं सत्कुलसम्भवम्
॥
अनुरक्तः शुचिर्द्दक्षः स्मृतिमान्देशकालवित्
।
वपुष्मान् वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते
॥
दूत एव हि सम्मत्तो भिनत्त्येव हि सङ्गतान् ।

| | | |
|---|---|---|
| शान्ताय गुणिने चैव यूने च विदुषेऽपि च ॥<br>वैष्णवाय सुतां दत्त्वा दशवापीफलं लभेत् ॥” * ॥<br>कन्याविक्रये दोषो यथा, --<br>“यः कन्यापालनं कृत्वा करोति विक्रयं यदि ।<br>विपदा धनलोभेन कुम्भीपाकं स गच्छति ॥ | | विमृष्यार्थो मितार्थश्च तथा शासनहारकः ॥ |

दूतास्त्रयोऽमात्यगुणैः समैः
पादार्द्धवर्जितैः ।
विमृष्यार्थं कार्य्यवशात् शासनं न करोति
यः ॥
मितार्थः कार्य्यमात्रोक्तौ न
कुर्य्यादुत्तरोत्तरम् ।
यथोक्तवादी सन्देशहारको लेखहारकः ॥
तत्र दूतो व्रजन्नेव चिन्तयेदुत्तरोत्तरम् ।
वार्त्ताविशेषं भूपाय झटिचित्यङ्गवेश्मनि ॥
दूतो हि न लिखेत् किञ्चित् निर्णेता विनि-
संशयम् ।
पृच्छयमानोऽपि न ब्रूयात् स्वामिनः
क्वापि
वैशसम् ॥”
इति युक्तिकल्पतरुः ॥ * ॥
अथ दूते वर्णनीयानि । निजप्रभुतेजः
श्रीविक्रमौ-
न्नत्यकरवाक्यम् १ शत्रुक्षोभकरचेष्टा २
अधर्ष-
णीयता ३ दक्षता ४ निर्भयत्वम् ४ । इति
कवि-
कल्पलता ॥ (वैद्यकोक्तदूतो यथा, --
“आतुरोपक्रमार्थन्तु दूतो याति भिषग्गृहे
।
तस्य परीक्षणं कार्य्यं येन संलक्ष्यते गदः
॥
खञ्जान्धमूकं वधिरञ्च वामनं
स्त्रियञ्च कुब्जं तृषितञ्च जीर्णम् ।
श्रान्तं क्षुधार्त्तं श्रमितञ्च दीनं
शस्तं न वै वेदविदो वदन्ति ॥”
“यः कर्कशः क्रोधनपाशपाणि-
र्भिषग्विगर्हीकृतशौवृतश्च ।
एते न शस्ताः प्रवदन्ति धीरा
दूता विकारं प्रतिवर्द्धयन्ति ॥
यः काष्ठहस्तोद्धतपाशपाणि-
स्तथातुरो दीनवचाहि रोदितः ।
प्रक्लिन्ननेत्रोगमनोत्सुकोऽपि
वर्ज्यो रुजार्त्तोऽशुभकारिदूतः ॥”
“नकूटहस्तोऽवष्टभ्य वक्रपादेन तिष्ठति ।
वदते शान्तया वाचा वैद्यलाभश्च शान्तये ॥
योऽभिवाद्यापि वैद्यस्य क्षेमं संपृच्छते पुनः ।
फलं ददाति पुष्पं वा रोगिणाञ्च सुखावहम् ॥
तस्य सौख्यं रुजां शान्तिर्यस्य दूता इदं
विदुः ।
किमत्र बहुनोक्तेन रम्यो दूतः सुखावहः ॥”
इति हारीते द्बितीयस्थाने षष्ठेऽध्याये ॥)

**दूतघ्नी**, स्त्री, (दु उपतापे + भावे औणादिकक्तः
दीर्घश्च । दूतं उपतापं हन्तीति । हन + टक्
।
ङीप् ।) कदम्बपुष्पी । इति शब्दचन्द्रिका ॥

**दूतिः**, स्त्री, (दूयते नायकादिवार्त्ताहरणा-
दिनेति । दु + बाहुलकात् तिः दीर्घश्च ।
इत्यु-
ज्ज्वलदत्तः । ४ । १७९ ।) दूती । इति
शब्दरत्ना-
वली ॥ (यथा, रघुः । १८ । ५३ ।
“प्रतिकृतिरचनाभ्यो दूतिसन्दर्शिताभ्यः
समधिकतररूपाः शुद्धसन्तानकामैः ॥”)

**दूतिका**, स्त्री, (दूतिरेव । स्वार्थे कन् । ततष्टाप् ।)
दूती । इति शब्दरत्नावली ॥ (यथा, पञ्च-
तन्त्रे । १ । १७८ ।
“जम्बुको हुडुयुद्धेन वयं आषाढभूतिना ।
दूतिका परकार्य्येण त्रयो दोषाः स्वयं कृताः
॥”)

**दूती**, स्त्री, (दूतिः । कृदिकादिति वा ङीष् ।)
सारिका । इति राजनिर्घण्टः ॥
दौत्यकर्म्मणि-
नियुक्ता स्त्री । स्त्रीपुंसोः सन्देशप्रापिका ।
तत्-
पर्य्यायः । सञ्चारिका २ । इत्यमरः । २ । ६
।
१७ ॥ दूतिः ३ दूतीका ४ दूतिका ५ । इति
शब्दरत्नावली ॥ (यथा, आर्य्यासप्तशत्याम्
। २८० ।
“दयितप्रहितां दूतीमालम्ब्य करेण तमसि
गच्छन्ती ।
वार्त्तिकोक्त्या तस्य नः दीर्घश्च ।)
अध्वादिना
श्रान्तः । इत्यमरः । ३ । १ । १०२ ॥
उपतप्तः ।
यथा, नैषधे । ३ । ९४ ।
“पित्तेन दूने रसने सितापि
तिक्तायते हंसकुलावतंस ! ॥”

**दूरं**, त्रि, (दुर्दुःखेनेयते प्राप्यते इति । दुर् +
इन् + “दुरीणी लोपश्च ।” उणां २ । २०
। रक्
धातोर्लोपश्च ।) अनिकटम् ।
असन्निकृष्टम् ।
तत्पर्य्यायः । विप्रकृष्टम् २ । इत्यमरः । ३
। १ ।
६८ ॥ अनासन्नम् ३ । इति
शब्दरत्नावली ॥
(यथा, हितोपदेशे । १ । ४३ ।
“शरीरस्य गुणानाञ्च दूरमत्यन्तमन्तरम् ।
शरीरं क्षणविंध्वसि कल्पान्तस्थायिनो
गुणाः ॥”)
आके १ पराके २ पराचैः ३ आरे ४ परा-
वतः ५ । इति पञ्च दूरनामानि । इति वेद-
निघण्ठौ ३ अध्यायः ॥

**दूरदर्शनः**, पुं, (दूरेऽपि दर्शनं दृष्टिर्यस्य ।) गृध्रः ।
इति राजनिर्घण्टः ॥ (दुर्ल्लभे, त्रि । यथा,
भाग-
वते । १ । ११ । ८ ।
“अहो सनाथा भवता स्म यद्वयं
त्रैपिष्टपानामपि दूरदर्शनम् ।
प्रेमस्मितस्निग्धनिरीक्षणाननं
पश्येम रूपं तव सर्व्वसौभगम् ॥”)

**दूरदर्शी**, [न्] पुं, (दूरात् दूरमपि वा पश्यतीति ।
दृश + णिनिः ।) पण्डितः । इत्यमरः । २
। ७ । ६ ॥
गृध्रः । इति त्रिकाण्डशेषः ॥ दीर्घदर्शके,
त्रि ॥

**दूरदृक्**, [श्] पुं, (दूरं दूराद्वा पश्यतीति । दृश् +

तस्मादाकुण्ठवादी यो न शस्तो
वैद्यकर्म्मणि ॥
यथा गच्छति शीघ्रेण आविश्योत्थाय
मुह्यति ।
पादौ प्रसार्य्य विशति मस्तके विन्यसेत्
करम् ॥
भिनत्ति लोष्ट्रकाष्ठञ्च तृणं स्फोटयते
क्वचित् ।
अथवा स्पृशते नाशां स्तनं वा स्पृशते
पुनः ॥
भूमिं लिखति पादेन रेखां वापि करोति
यः ।
निद्रां वा कुरुते यस्तु स दूतोऽरिष्टकारकः
॥
यः श्वेतवस्त्रावृतपूर्णपाणिः
सम्पूणताम्बूलमुखः प्रशस्तः ।
द्विजस्तथा माणवकः सुशीलः
प्रज्ञाधिकश्चाह्वयते सुखाय ॥"
"आगत्योदीच्यपूर्ब्बामथ
वरुणदिशमैशमाश्रित्य
शान्तो
दृष्ट्वा वैद्यं प्रहस्य प्रवदति निपुणं
नातिनीचं
न चोच्चम् ।
उत्तिष्ठेति प्रसादं कुरु वचनमिदं
सौख्यवार्त्तां
तनोति
प्राज्ञैः स्वार्थं प्रकृष्टं मुखमगदहरं रोगिणां
वैद्यलाभम् ॥
पर्ब्बां दिशं समासाद्य प्रशान्तः शान्तया
गिरा ।
वदन्ति वैद्यलाभाय रोगिणाञ्च सुखावहम्
॥
ग्रश्चागत्योपविष्टोऽपि श्लोकं वाथ
सुभाषितम् ।
स्वेदच्युतमृगनाभिर्दूराद्गौराङ्गि ! दृश्यासि
॥")
दौत्यव्यापारपारङ्गमा । तस्याः
संघट्टनविरह-
निवेदनादीनि कर्म्माणि । इति रसमञ्जरी ॥
(तद्भेदगुणा यथा, साहित्यदर्पणे । ३ ।
१२६-
१२७ ।
"दूत्यः सखी नटी दासी धात्रेयी प्रतिवेशिनी
।
बाला प्रव्रजिता कारूः शिल्पिन्याद्याः स्वयं
तथा ॥
कलाकौशलमुत्साहो भक्तिश्चित्तज्ञता
स्मृतिः ।
माधुर्य्यं नर्म्मविज्ञानं वाग्मिता चेति तद्गुणाः
।
एता अपि यथौचित्यादुत्तमाधममध्यमाः ॥")

**दूतीका**, स्त्री, दूती । इति शब्दरत्नावली ॥

**दूत्यं**, क्ली, (दूतस्य भावः कर्म्म वा । दूत + "दूत-
बणिग्भ्याञ्च ।" ५ । १ । १२६ । इत्यस्येति
वार्त्ति-
कोक्त्या यः । वैदिके तु "दूतस्य
भागकर्म्मणी ।"
४ । ४ । १२० । इति यः ।) दूतकर्म्म ।
(यथा,
हरिवंशे । १०९ । ४१ ।
"वचनञ्च यथास्माभिर्दूत्ये नः कृष्णविग्रहे ॥"
तथा च ऋग्वेदे । १ । १६१ । १ ।
"किमीयते दूत्यम् ॥") दूतस्य भावः ।
इत्यमरः ।
२ । ८ । १६ ॥ दूतस्वभावः । इति मेदिनी ।
ये, ३२ ॥

**दूनः**, त्रि, (ओ दू ङ य खेदे + क्तः । "ओदि-
तश्च ।" ८ । २ । ४५ । इति निष्टातस्य नः
।
यद्वा, दु गतौ + क्तः । "दुग्वोर्दीर्घश्च ।" इति
क्विप् ।) पण्डितः । इति शब्दरत्नावली
॥ गृध्रः ।
इति हेमचन्द्रः । ४ । ४०१ ॥ दीर्घदर्शके,
त्रि ॥

**दूरमूलः**, पुं, (दूरे असन्निकटे मूलं यस्य ।) मुञ्ज-
तृणम् । इति राजनिर्घण्टः ॥

**दूरवेधी**, [न्] त्रि, (वेधोऽस्त्यस्येति । इनिः ।
दूरात् वेधी ।) दूरात् लक्ष्यभेदकः ।
तत्पर्य्यायः ।
दूरापाती २ । इति हेमचन्द्रः । ३ । ४ ।
३७ ॥

**दूरेरितेक्षणः**, त्रि, (दूरे ईरिते ईक्षणे यस्य ।)
केकरः । इति शब्दमाला ॥

**दूर्य्यं**, क्ली, (दूरे परित्याज्यम् । दूर + यत् ।) विष्ठा
।
इति शब्दरत्नावली ॥ (दूराय रोगदूरीकर-
णाय साधु इति यत् ।) शटी । इति राज-
निर्घण्टः ॥

**दूर्व्वा**, स्त्री, (दुर्व्वते दुर्व्व्यते वा । दुर्व्व हिंसायाम् +
अच् घञ् वा । "उपधायाञ्च ।" ८ । २ ।
७८ ।
इति दीर्घः ।) स्वनामख्यातघासः ।
तत्पर्य्यायः ।
शतपर्व्विका २ सहस्रवीर्य्या ३ भार्गवी ४
रुहा ५
अनन्ता ६ । इत्यमरः । २ । ४ । ५५८ ॥
तिक्तपर्व्वा ७
दुर्म्मरा ८ । बहुवीर्य्या ९ हरिता १० हरि-
ताली ११ कच्छरुहा १२ ॥ शुक्लायाः
पर्य्यायः ।
शतवीर्य्या १ गण्डाली २ शकुलाक्षकः ३
गोलोमी ४ । इति जठाधरः ॥ शतपर्व्वा ५
सितदूर्व्वा ६ सिता ७ । इति रत्नमाला ॥
नन्दा ८
महावरा ९ । इति शब्दरत्नावली ॥ (यथा,
महाभारते । ३ । ११० । १७ ।

"कुशाकारेव दूर्व्वेयं संस्तीर्णेव च भूरियम् ॥")
अस्या गुणः । रक्तपित्तकण्डुत्वग्दोषनाशित्वम् ।
इति राजवल्लभः ॥

**दूर्व्वाष्टमी**, स्त्री, (दूर्व्वा तद्रूपा गौरी तत्प्रिया अष्टमी ।) भाद्रशुक्लाष्टमी । तत्र कर्त्तव्यव्रतविधिर्यथा, --
"ब्रह्मन् भाद्रपदे मासि शुक्लाष्टम्यामुपोषितः ।
दूर्व्वां गौरीं गणेशञ्च फलाकारं शिवं यजेत् ॥
फलव्रीह्यादिभिः सर्व्वैः शम्भुं नमः शिवाय च ।
अनग्निपक्वमश्नीयान्मुच्यतेब्रह्महत्यया ॥"
इति संवत्सरकौमुदीधृतगरुडपुराणवचनम्॥ *
तद्व्रतप्रयोगविधिर्य्यथा, --
पूर्ब्बदिने संयमं विधाय तद्दिने प्रातः कृत-स्नानादिः आसने चोपविश्याचम्य ब्राह्मणान् स्वस्तिवाच्य सूर्य्यार्घ्यं दत्त्वा सङ्कल्पं कुर्य्यात् । विष्णुर्नमोऽद्य भाद्रे मासि शुक्ले पक्षे अष्टम्यां तिथावारभ्यामुकगोत्रा श्रीअमुकी मर्त्यलोकाधि-करणकसुखसौभाग्याविच्छिन्नपुत्त्रपौत्रादिलाभ पूर्ब्बकब्रह्मलोकप्राप्तिकामा श्रीविष्णुप्रीतिकामा वा भविष्यपुराणोक्ताष्टावर्षनिष्पादितदूर्व्वाष्टमी-व्रतमहं करिष्ये । इति सङ्कल्प्य सूक्तं पठित्वा-सनशुद्ध्यादिकं विधाय गणेशादिदेवताः संपूज्य ध्यानं कुर्य्यात् । * । यथा, --
"नीलोत्पलदलश्यामं चतुर्ब्बाहुं किरीटिनम् ।
शङ्खचक्रगदापद्मधारिणं वनमालिनम् ॥
श्रीवत्सलक्षणोपेतं श्रिया वाण्या समन्वितम् ॥"
इति ध्यात्वा स्वशिरसि पुष्पं दत्त्वा मानसैरुप-चारैः संपूज्यार्घस्थापनं कृत्वा पुनर्ध्यात्वावाह्य पाद्यादिभिः पूजयेत् । एतत् पाद्यं ॐ कृष्णाय नमः । एवं क्रमेण संपूज्य आवरण-देवताः पूजयेत् । यथा ॐ शच्यै नमः । एवं दुर्गायै गौर्य्यै श्रियै सरस्वत्यै गङ्गायै दित्यै अदित्यै सुषेणायै अरुन्धत्यै मन्दोदर्य्यै सुभ-द्रायै शाण्डिल्यै जयायै विजयायै रमायै दीक्षायै रेवत्यै दमयन्त्यै शीलायै सुकेशायै रम्भायै वासुदेवाय देवक्यै विष्णवे महादेवाय सर्व्वेभ्यो देवेभ्यः सर्व्वाभ्यो देवीभ्यः । ततो दूर्व्वां ध्यायेत् । * ।
ॐ नीलोत्पलदलश्यामां सर्व्वदेवशिरोधृताम् ।
अथ कथा ।
युधिष्ठिर उवाच ।
"व्रतमेकं समाचक्ष्व विचार्य्य मधुसूदन ! ।
येन सन्ततिविच्छेदो जायते न कदाचन ॥
श्रीकृष्ण उवाच ।
मासि भाद्रपदेऽष्टम्यां शुक्लपक्षे युधिष्ठिर ! ।
दूर्व्वाष्टमीव्रतं नाम या करोति पतिव्रता ॥
न तस्याः क्षयमाप्नोति सन्तानं साप्तपौरुषम् ।
नन्दते वर्द्धते नित्यं यथा दूर्व्वा तथा कुलम् ॥
युधिष्ठिर उवाच ।
कथमेषा समुत्पन्ना कस्माद्दूर्व्वा चिरायुषी ।
कस्माद्वन्द्या पवित्रा च लोके धन्या महीतले ॥
केन वा तद्व्रतं देव ! चरितं केन हेतुना ॥
श्रीकृष्ण उवाच ।
क्षीरोदसागरे पूर्ब्बं मथ्यमानेऽमृतार्थिना ।
विष्णुना बाहुजङ्घाभ्यां विधृतो मन्दरो गिरिः ॥
भ्रमता तेन वेगेन लोमान्याघर्षितानि वै ।
ऊर्म्मिभिस्तानि रोमाणि चोत्क्षिप्तानि तटा-न्तरे ॥
अजायत शुभा दूर्व्वा रम्या हरितशाद्वला ।
एवमेषा समुत्पन्ना दूर्व्वा विष्णुतनूद्भवा ॥
तस्या उपरि विन्यस्तं मथितामृतमुत्तमम् ।
सर्व्वतः सुखसौभाग्यपुत्त्रपौत्त्रादिभिर्युता ॥
मर्त्यलोके चिरं स्थित्वा चतुर्व्वर्गं गता पुनः ।
वसते रमया सार्द्धं यावच्चन्द्रदिवाकरौ ॥
मेघावृतेऽम्बरतले विशदे च पक्षे
याश्चाष्टमीव्रतमदो नभसीह कुर्य्युः ।
दूर्व्वां तदक्षततिलैः प्रतिपूजयेयु-
स्ताः प्राप्नुयुः सकलसिद्धिसमृद्धिमृद्धिम् ॥"
इति भविष्योत्तरे दूर्व्वाष्टमीव्रतकथा समाप्ता ॥

**दूलिका**, स्त्री, (दूली + स्वार्थे कन् । टाप् पूर्ब्ब-ह्रस्वश्च ।) नीली । इति शब्दरत्नावली ॥

**दूली**, स्त्री, (दूरं दूरत्वमस्या अस्तीति । दूर + अच् । रस्य लः । गौरादित्वात् ङीष् ।) नीली ।
इति शब्दरत्नावली ॥

**दूश्यं**, क्ली, (दूयते इति । भावे क्विप् । दूः स्वेदस्तां श्यायते अन्तर्भूतण्यर्थाद्गमयतीति । दू + श्यै + कः ।) दूष्यम् । वस्त्रगृहम् । इत्यमरटीका-सारसुन्दरी ॥

**दूषकः**, त्रि, (दूषयतीति । दुष् + णिच् + "ण्वुल्-तृचौ ।" ३ । १ । १३३ । इति ण्वुल् ।) दोषोत्पादकः । तत्पर्य्यायः । पांसनः २ । इति त्रिकाण्डशेषः ॥ (यथा, मनौ । ९ । २३२ ।
"कूटशासनकर्त्तॄंश्च प्रकृतीनाञ्च दूषकान् ।
स्त्रीबालब्राह्मणघ्नांश्च हन्याद्विट्सेविनस्तथा ॥")

**दूषणः**, पुं, (दूषयतीति । दूषि + ल्युः ।) रावण-भ्रातृखरसेनापतिः । इति रामायणम् ॥ (यथा, रघुः । १२ । ४६ ।

विष्णुदेहोद्भवां पुण्याममृतैरभिषिञ्चिताम् ॥
सर्व्वदैवाजरां दूर्व्वाममरां विष्णुरूपिणीम् ।
दिव्यसन्तानसंदात्रीं धर्म्मार्थकाममोक्षदाम् ॥
एवं ध्यात्वा षोडशोपचारैः पूजयेत् ।
इदमासनं ॐ दूर्व्वायै नमः । एवं क्रमेण
संपूज्य अष्टग्रन्थियुक्तडोरकं फलानि यज्ञोप-
वीतादिकं दत्त्वा प्रणमेत् ।
"त्वं दूर्व्वेऽमृतनामासि पूजितासि सुरासुरैः ।
सौभाग्यसन्ततिं दत्त्वा सर्व्वकार्य्यकरी भव ॥
यथा शाखाप्रशाखाभिर्व्विस्तृतासि महीतले ।
तथा ममापि सन्तानं देहि त्वमजरामरम् ॥"
ततो भोज्यमुत्सृजेत् । डोरकं वामहस्ते बद्ध्वा
कथां शृणुयात् ॥ * ॥

देवदानवगन्धर्व्वयक्षविद्याधरोरगैः
॥
तत्र येऽमृतकुम्भस्य
निपेतुर्व्वारिबिन्दवः ।
तैरियं स्पर्शमासाद्य दूर्व्वा
चैवाजरामरा ॥
वन्द्या पवित्रा देवैस्तु
सर्व्वदाभ्यर्च्चिता तथा ।
पूजयेत्तां प्रयत्नेन
द्रव्यैर्नानाविधैरपि ॥
अष्टम्यां फलपुष्पैस्तु
गुवाकैर्नारिकेलकैः ।
द्राक्षाहरीतकीभिश्च
मोचकैर्जायकैस्तथा ॥
नागरङ्गैश्च जम्बीरैर्बीजपूरैश्च
शोभनैः ।
दध्यक्षतैः पयोभिश्च
धूपनैवेद्यदीपकैः ॥
मन्त्रेणानेन राजेन्द्र ! शृणुष्व
कथितं मया ।
त्वं दूर्व्वेऽमृतनामासि वन्दितासि
सुरासुरैः ॥
सौभाग्यं सन्ततिं दत्त्वा
सर्व्वकार्य्यकरी भव ।
यथा शाखाप्रशाखाभिर्व्विस्तृतासि
महीतले ॥
तथा ममापि सन्तानं देहि
त्वमजरामरम् ।
एवमेव पुरा पार्थ ! पूजिता
त्रिदशोत्तमैः ॥
तेषां पत्नीभिरनिशं
भगिनीभिस्तथैव च ।
पूजिता च तथा गौर्य्या देव्या रत्या
श्रिया तथा ॥
सरस्वत्या गङ्गया च दित्यादित्या
सुशीलया ।
बिन्दुमत्या वेशवत्या इन्दुमत्या
सुशीलया ॥
मन्दोदर्य्या चण्डिकया मायया
दीक्षया तथा ।

"असज्जनेन काकुस्थः प्रयुक्तमथ दूषणम्
।
न चक्षमे शुभाचारः स दूषणमिवात्मनः ॥"
दूषि + भावे ल्युट् ।) दोषे, क्ली ॥ (यथा,
देवी-
भागवते । १ । १७ । २४ ।
"वञ्चितोऽहं स्वयं पित्रा दूषणं कस्य दीयत
॥")

**दूषणारिः**, पुं, (दूषणस्य राक्षसस्य अरिः ।)
श्रीरामः । इति शब्दरत्नावली ॥

**दूषिः**, स्त्री, (दूषयतीति । दुष + णिच् + "सर्व्व-
धातुभ्य इन् ।" उणां । ४ । ११७ । इति
इन् ।)
दूषिका । इति शब्दरत्नावली ॥

**दूषिका**, स्त्री, (दूषि + स्वार्थे कन् । टाप् । यद्वा,
दूषि + ण्वुल् + टाप् अत इत्वञ्च ।)
नेत्रमलम् ।
इत्यमरः । २ । ६ । ६७ ॥ पिचुटि इति
भाषा ॥
तत्पर्य्यायः । पिञ्चोडकम् २ दूषिः ३ दूषी
४ ।
इत्यमरटीकायां भरतः ॥ दूषीका ५
पिञ्चेटः ६
पिज्जटः ७ । इति शब्दरत्नावली ॥
(यथा,
मनौ । ५ । १३५ ।
"वसाशुक्रमसृङ्मज्जामूत्रविट्घ्राणकर्णविट्
।
श्लेषाश्रुदूषिकास्वेदो द्वादशैते नृणां मलाः
॥")
तूलिका । इति मेदिनी । के, १०५ ॥
(दूषण-
कर्त्री स्त्री । यथा, महाभारते । १२ । ३५ ।
३० ।
"स्त्रियास्तथापचारिण्या निष्कृतिः स्याद-
दूषिका ।
अपि सा पूयते तेन न तु भर्त्ता प्रदुष्यति
॥")

**दूषितः**, त्रि, (दुष् + णिच् + क्तः ।) प्राप्तदोषः ।

| | | |
|---|---|---|
| | मर्त्यलोके च रेवत्या दमयन्त्या सुशीलया ॥<br>सुकेशया घृताच्या च रम्भया मिश्रकेशया ।<br>मज्जनन्या मेनकया तथैव मानिकादिभिः ॥<br>स्त्रीभिरभ्यर्च्चिता दूर्व्वा सौभाग्यसुखदायिनी ।<br>स्नाताभिः शुचिवस्त्राभिर्दूर्व्वा संपूजिता जनैः ॥<br>दत्त्वा पिष्टानि विप्रेभ्यः फलानि विविधानि च ।<br>तिलपिष्टानि गोधूमधान्यपिष्टानि पायसम् ॥<br>भोजयित्वा सहृन्मित्रं सम्बन्धिस्वजनं तथा ।<br>ततो भुञ्जीत तच्छेषं स्वयं भक्त्या समाहिता ॥<br>नारी चैव प्रकुर्व्वीत चाष्टमीव्रतमुत्तमम् । | (यथा, महाभारते । १ । १४० । २६ । |

"ततो बलमिति ख्यातं विज्ञाय दृढध्वन्विनाम्
।
दूषितः सहसा भावो धृतराष्ट्रस्य पाण्डुषु ॥")
मैथुनापवादयुक्तः । तत्पर्य्यायः । अभिशस्तः
२
वाच्यः ३ क्षारितः ४ । इति हेमचन्द्रः । ३ ।
१०० ॥
आक्षारितः ५ । इति शब्दरत्नावली ॥

**दूषिता**, स्त्री, (दूषित + टाप् ।) दूषणप्राप्ता
कन्या । तत्पर्य्यायः । सस्वेदा २ धर्षकारिणी
३
प्रमादिका ४ । इति शब्दरत्नावली ॥

**दूषी**, स्त्री, (दूषि + "कृदिकारादिति ।" वा ङीष् ।)
दूषिका । इत्यमरटीकायां भरतः ॥

**दूषीका**, स्त्री, (दूषयतीति + दूषि + "कषिदूषि-
भ्यामीकन् ।" उणां ४ । १६ । इति । ईकन्
ततष्टाप् ।) दूषिका । इति शब्दरत्नावली ॥

**दूषीविषं**, क्ली, (दूषयतीति । दूषि + बाहुलकात्
ईः । ततः कर्म्मधारयः ।) औषधादिभिरवीर्य्यं
विषम् । इति हेमचन्द्रः । ४ । ३८० ॥ आदि-
पदात्दावाग्निवायुरौद्रशोषितविषम् । स्वभावतो
गुणहीनं विषम् । अस्य गुणः । उदररोग-
प्लीहगुल्मकुष्ठप्रमेहनाशित्वम् । इति राज-
वल्लभः ॥ यथा, --
"जीर्णं विषघ्नौषधिभिर्हतं वा
दावाग्निवातातपशोषितंवा ।
स्वभावतो वा गुणविप्रहीनं
विषं हि दूषीविषतामुपैति ॥"
इति माधवकरः ॥

**दूष्यं**, क्ली, (दूष्यते इति । दुष् + णिच् + "अचो-
यत् ।" ३ । १ । ९७ । इति यत् । "दोषो णौ
।"
६ । ४ । ९० । इति उपधाया ऊत्वम् ।)
वस्त्रम् । वस्त्रगृहम् । इति मेदिनी । ये, ३१ ॥
पूयम् । इति हेमचन्द्रः । ३ । २८८ ॥

**दूष्यः**, त्रि, (दुष + णिच् + यत् ।) दूषणीयः । इति
भावे क्विप् ।) दर्शनम् । बुद्धिः । इति
मेदिनी ।
शे, ८ ॥ (यथा, भागवते । २ । ९ । ५ ।
"तां नाध्यगच्छद्दृशमत्र सम्मतां
प्रपञ्चनिर्म्माणविधिर्य्यया भवेत् ॥")

**दृक्**, [श्] त्रि, (पश्यतीति । दृश + कर्त्तरि क्विन् ।)
वीक्षकः । इति मेदिनी । शे, ८ ॥ (यथा,
भाग-
वते । ४ । २२ । ९ ।
"यथा सर्व्वदृशं सर्व्व आत्मानं येऽस्य
हेतवः ॥"
ज्ञाता । इति शब्दरत्नावली ॥

**दृकं**, क्ली, (दीर्य्यते इति । दॄ विदारे + बाहु-
लकात् कक् ह्रस्वश्च ।) छिद्रम् । इति
संक्षिप्तसारे उणादिवृत्तिः ॥

**दृकाणः**, पुं, द्रेक्काणः । इति जातकः ॥

**दृक्कर्णः**, पुं, (दृशौ नेत्रावेव कर्णौ यस्य ।) सर्पः ।
इति हेमचन्द्रः । ४ । ३६९ ॥ यदाह
कश्चित् ।
"दृक्कर्णो मशकः शिला सरसिजं बाणो
जलौकाः
शुकः
शुभ्रांशुर्गणको कुलोत्तमबली पान्थो
नभश्चातकः ।
वादी चक्रचरो वको मधुलिहो लालाटिको
लम्पटः
श्रीमद्भोज ! भवन्तु विंशतिरमी त्वद्वैरिणां
सेवकाः ॥")

**दृक्काणः**, पुं, द्रेक्काणः । इति ज्योतिषम् ॥

**दृक्प्रसादा**, स्त्री, (दृशौ नेत्रौ प्रसादयतीति ।
दृश् + प्र + सद् + णिच् + अण् ।)
कुलत्था ।
कुलत्थाञ्जनम् । इति राजनिर्घण्टः ॥

**दृक्प्रिया**, स्त्री, (दृशोर्नेत्रयोः प्रिया ।) शोभा ।
इति राजनिर्घण्टः ॥

**दृढं**, क्ली, (दृह वृद्धौ + क्तप्रत्ययेन निपातनात्
साधुः ।) लौहम् । इति शब्दचन्द्रिका ॥
अति-
शयः । इत्यमरः । ३ । १ । ७६ ॥

**दृढः**, त्रि, (दृह + क्तः । निपातनात् साधुः ।)
स्थूलः । अतिशयः । प्रगाढः । (यथा,
देवी-
भागवते । १ । ६ । ३१ ।
"तदाकाशे श्रुतं ताभ्यां वाग्वीजं
सुमनोहरम् ।
गृहीतञ्च ततस्ताभ्यां तस्याभ्यासो
दृढः कृतः ॥")
बलवान् । इति मेदिनी । ढे, २ ॥
कठिनः ।
इत्यमरः । ३ । ३ । ४४ ॥

**दृढः**, पुं, रूपकभेदः । यथा, --
"दृढः प्रौढोऽथ खचरो
विभवश्चतुरक्रमः ।
निशारुकः प्रतितालः कथिताः सप्त
रूपकाः ॥"
तल्लक्षणं यथा, --
"दृढाख्यः स्याल्लघुद्वन्द्वं ताले च
हंसलीलके ।
चतुर्द्दशाक्षरैर्युक्तः शृङ्गारे परिकीर्त्तितः
॥"
इति सङ्गीतदामोदरः ॥
(त्रयोदशमनो रौच्यस्य पुत्त्रविशेषः ।
यथा, हरि-
वंशे । ७ । ८३ ।
"सुनेत्रः क्षत्त्रवृद्धिश्च सुतपा निर्भयो
दृढः ।
रौच्यस्यैते मनोः पुत्त्रा अन्तरे तु
त्रयोदशे ॥")

**दृढकण्टकः**, पुं, (दृढानि कठिनानि कण्टकानि
यस्य ।) क्षुद्रफलकवृक्षः । इति
शब्दचन्द्रिका ॥
धलआँकडा इति भाषा ॥

मेदिनी । ये, ३१ ॥ (यथा, महाभारते । १२ । १६५ । ३२ ।
“स्त्रीरत्नं दुष्कुलाच्चापि विषादप्यमृतं पिबेत् ।
अदूष्या हि स्त्रियो रत्नमाप इत्येव धर्म्मतः ॥”
निन्द्यः । इति त्रिकाण्डशेषः । ३ । ३ । ३१३ ॥
यथा, कामन्दकीयनीतिसारे । ६ । ९ ।
“राज्योपघातं कुर्व्वाणा ये पापा राजवल्लभाः ।
एकैकशः संहता वा दूष्यांस्तान् परिचक्षते ॥”)

**दूष्या**, स्त्री, (दूष्यते इति । दुष + णिच् + यत् + टाप् ।) हस्तिकक्षरज्जुः । काचदडि इति भाषा ॥
तत्पर्य्यायः । कक्षा २ वरत्रा ३ । इति हेम-चन्द्रः । ४ । २९८ ॥ चूषा ४ । इत्यमरः । २ । ८ । ४२ ॥

**दृ**, ङ श आदरे । इति कविकल्पद्रुमः । (तुदां-आत्मं-सकं-अनिट् ।) आदरः प्रीत्या सम्भ्रमः । ङ श, द्रियते गुरुं लोकः । मानुबन्धोऽयमि-त्येके । इति दुर्गादासः ॥

**दृक्**, [श्] स्त्री, (पश्यत्यनेनेति । दृश् + करणे क्विप् ।) चक्षुः । इत्यमरः । २ । ६ । ९४ ।
(यथा, साहित्यदर्पणे ।
“दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः ॥”

**दृक्श्रुतिः**, पुं, (दृशौ एव श्रुती कर्णौ यस्य ।) सर्पः । इति हलायुधः ॥

**दृगध्यक्षः**, पुं, (दृशोर्नेत्रयोरध्यक्षः अधिष्ठातृदेवः ।) सूर्य्यः । इति शब्दार्थकल्पतरुः ॥

**दृग्गोलः**, पुं, खगोलान्तर्गतगोलविशेषः । यथा,
“खस्वस्तिके चाधः स्वस्तिके चान्तःकीलकौ कृत्वा
तयोः प्रोतं श्लथं दृङ्मण्डलं कार्य्यं तत् पूर्ब्ब-
वृत्तभ्यः किञ्चिन्न्यूनं कार्य्यं यथा खगोलान्तर्भ्रमति
यद्येक एव ग्रहगोलस्तदैकमेव दृङ्मण्डलम् । यो
यो ग्रहो यत्र यत्र वर्त्तते तस्य तस्योपरि परि-
भ्राम्येदमेव विन्यस्य दृग्ज्याशङ्कादिकं दर्श-
नीयम् । अथवा पृथक् पृथगष्टौ दृङ्मण्डलानि
रचयेत् । तत्राष्टमं वित्रिभलग्नस्य तच्च दृक्क्षेप-
मण्डलं तस्मिन् खगोले ध्रुवचिह्नयोर्नलिकाद्वयं
बद्ध्वा तन्नलिकाधारमेव खगोलाद्बहिरङ्गुलत्रया-
न्तरे दृग्गोलं रचयेत् । कथितैः खगोलवृत्तै-
र्व्वक्ष्यमाणैर्भगोलवृत्तैः क्रान्तिमण्डलाद्यैर्यो निब-
ध्यते स दृग्गोलः । यतोऽग्रा कुज्यासमशङ्क्वा-
द्यक्षक्षेत्राणि द्विगोलजातानि भगोलवृत्तानि
खगोलवृत्तमिलितानि उत्पद्यन्ते गोलबन्धे
सम्यङ्नोपलक्ष्यत इति दृग्गोलः कृतः ।” इति
सिद्धान्तशिरोमणिः ॥

**दृग्विषः** पुं, (दृशि नेत्रे विषं यस्य ।) नागः ।
इति हेमचन्द्रः । ४ । ३७८ ॥

**दृढकाण्डं**, क्ली, (दृढं काण्डं यस्य ।) दीर्घरोहि-षकम् । इति राजनिर्घण्टः ॥

**दृढकाण्डः**, पुं, (दृढः कठिनः काण्डो यस्य ।) वंशः । इति राजनिर्घण्टः ॥

**दृढकाण्डा**, स्त्री, (दृढः कठिनः काण्डो यस्याः ।) पातालगरुडीलता । इति राजनिर्घण्टः ॥

**दृढक्षुरा**, स्त्री, (दृढः क्षुर इवाग्रभागो यस्याः । यद्वा, दृढः क्षुर इव फलमस्त्यस्या इति अर्श-आदिभ्योऽच् ततष्टाप् ।) वल्वजा । इति राज-निर्घण्टः ॥

**दृढगात्रिका**, स्त्री, (दृढं गात्रमस्याः । कप् । तत-ष्टापि अत इत्वम् ।) मत्स्यण्डी । इति शब्द-चन्द्रिका ॥

**दृढग्रन्थिः**, पुं, (दृढो ग्रन्थिर्यस्य ।) वंशः । इति राजनिर्घण्टः ॥

**दृढच्छदं**, क्ली, (दृढश्छदो यस्य ।) दीर्घरोहिषकम् । इति राजनिर्घण्टः ॥

**दृढतरुः**, पुं, (दृढस्तरुर्वृक्षः ।) धववृक्षः । इति राजनिर्घण्टः ॥

**दृढतृणः**, पुं, (दृढं कठिनं तृणं यस्य ।) मुञ्ज-तृणम् । इति राजनिर्घण्टः ॥

**दृढतृणा**, स्त्री, (दृढं तृणं यस्याः ।) वल्वजा । इति राजनिर्घण्टः ॥

**दृढत्वक्**, [च्] पुं, (दृढा त्वक् अस्य ।) यावनाल-शरः । इति राजनिर्घण्टः ॥

**दृढदंशकः**, पुं, (दृढं यथा तथा दशतीति । दन्श +

**दृढनीरः**, पुं, (दृढं प्रचुरं नीरं यस्मिन्निति ।) नारिकेलवृक्षः । इति राजनिर्घण्टः ॥

**दृढपत्रः**, पुं, (दृढानि कठिनानि पत्राणि यस्य ।) वंशः । इति राजनिर्घण्टः ॥

**दृढपत्री**, स्त्री, (दृढानि पत्राणि यस्याः । गौरादित्वात् ङीष् ।) वल्वजा । इति राजनिर्घण्टः ॥

**दृढपादा**, स्त्री, (दृढः पादो मूलं यस्याः ।) यवतिक्ता । इति राजनिर्घण्टः ॥

**दृढपादी**, स्त्री, (दृढः कठिनः पादो मूलं यस्याः ।) गौरादित्वात् ङीष् ।) भूम्यामली । इति राजनिर्घण्टः ॥

**दृढप्ररोहः**, पुं, (दृढः प्ररोहोऽङ्कुरो यस्य ।) प्लक्षवृक्षः । इति राजनिर्घण्टः ॥

**दृढफलः**, पुं, (दृढं कठिनं फलं यस्य ।) नारिकेलवृक्षः । इति राजनिर्घण्टः ॥

**दृढबन्धिनी**, स्त्री, (दृढं यथा तथा बध्नातीति । बन्ध + णिनिः । ङीप् ।) श्यामालता । इति शब्दचन्द्रिका ॥

**दृढमुष्टिः**, पुं, (दृढा मुष्टिर्धारणाय यस्य ।) खड्गादिः । (दृढा दानाद्यभावात् कठिना मुष्टिर्यस्य ।) कृपणे, त्रि । इति विश्वः । टे, ६५ ॥
(दृढमुष्टिधारकः । यथा, हरिवंशे । २० । ९८ ।
“निगृहीतः कन्धरायां शिशुना दृढमुष्टिना ॥”)

**दृढमूलः**, पुं, (दृढं मूलं यस्य ।) मुञ्जतृणम् ।

**दृता**, स्त्री, (द्रियते स्मेति । दृ + कर्म्मणि क्तः । टाप् । भिषग्भिर्बहुव्याधिप्रयोगेषु कृतादरत्वादस्याः तथात्वम् ।) जीरकः । इति शब्दचन्द्रिका ॥

**दृतिः**, पुं, (दृणातीति । द विदारे + “दृणातेर्ह्रस्वश्च ।” उणां । ४ । १८३ । इति तिः ह्रस्वश्च ।)
चर्म्मपुटकः । अस्य पर्य्यायः । स्वल्लः २ । इति हेमचन्द्रः । ४ । ९१ ॥ (यथा, मनुः । २ । ९९ ।
“इन्द्रियाणान्तु सर्व्वेषां यद्येकं क्षरतीन्द्रियम् ।
तेनास्य क्षरति प्रज्ञा दृतेः पात्रादिवोदकम् ॥”)
मत्स्यः । इति मेदिनी । ते, २६ ॥
(गलकम्बलः ।
यथा, महाभारते । १३ । ७९ । १८ ।
“सवतसां पीवरीं दत्त्वा दृतिकण्ठामलङ्कृताम् ।
वैश्वदेवमसंवाधं स्थानं श्रेष्ठं प्रपद्यते ॥”
“दृतिकण्ठां प्रलम्बगलकम्बलाम् ।” इति तट्टीकायां नीलकण्ठः ॥ मेघः । इति निघण्टुः । १ । १० ॥
यथा, ऋग्वेदे । ७ । १०३ । २ ।
“दिव्या आपो अभि यदेनमायन्
दृतिं न शुष्कं सरसी शयानम् ॥”)

**दृतिधारकः**, पुं, (दृतिश्चर्म्मपुटकस्तदाकारं धारयतीति । धारि + “ण्वुल् तृचौ ।” ३ । १ । १३३ । इति ण्वुल् ।) वृक्षविशेषः । आकनपाता इति भाषा । तत्पर्य्यायः । आनन्दी २ मूषिकारावूः ३ वामनः ४ । इति शब्दचन्द्रिका ॥

**दृतिहरिः**, पुं, (दृतिं चर्म्ममयद्रव्यं हरतीति । दृति + हृ + “हरतेर्दृतिनाथयोः पशौ ।” ३ । २ । २५ । इति इन् ।) कुक्कुरः । इति मुग्धबोधव्याकरणम् ॥

**दृप**, श वाधने । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-सेट् ।) श, दृपति दर्पिता । वाधनं विहतिः । इति दुर्गादासः ॥

**दृप्तः**, त्रि, (दृप्यतीति । दृप् + वर्त्तमाने कर्त्तरि क्तः ।) गर्व्वितः । इति धरणिः ॥ (यथा, महाभारते । १ । १ । १६२ ।
“यदाश्रौषं कालकेयास्ततस्ते
पौलोमानो वरदानाच्च दृप्ताः ।
दैवैरजेया निर्ज्जिताश्चार्ज्जुनेन
तदा नाशंसे विजयाय सञ्जय ! ॥”)

**दृप्रः**, त्रि, (दृपति वाधते इति । दृप् + “स्फायितञ्चीति ।” उणां । २ । १३ । इति रक् ।) दृप्तः । इत्युणादिकोषः ॥ (बलवान् । इत्युज्ज्वलदत्तः ॥)

**दृफ**, प श उत्क्लेशे । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं--सेट् ।) प श, दृम्फति । श, दृफति चौरं राजा क्लिश्नातीत्यर्थः । ददर्फ । इति दुर्गादासः ॥

**दृब्धः**, त्रि, (दृभ्यते ग्रथ्यते इति । दृभ + कर्म्मणि क्तः ।) ग्रथितः । इत्यमरः । ३ । १ । ८६ ॥ (दृभ + कर्त्तरि क्तः ।) भीतः । इति भयाथदृभधातुदर्शनात् ॥

**दृभ**, ई कि भये । इति कविकल्पद्रुमः ॥ (चुरां-पक्षे भ्वां-अकं-सेट् ।) कि, दर्भयति दर्भति । ई, दृब्धः । रमानाथस्तु दृ भी इति धातुद्वयं मत्वा दारयति दरति भाययति भयति इत्याह । इति दुर्गादासः ।

**दृभ**, श ई कि गुम्फने । इति कविकल्पद्रुमः ॥ (तुदां-चुरां पक्षे भ्वां-सकं-सेट् ।) श, दृभति ।

मन्थानकतृणम् । इति राजनिर्घण्टः ॥ नारि-
केलः । इति शब्दार्थकल्पतरुः ॥

**दृढरङ्गा**, स्त्री, (दृढः स्थिरः रङ्गो रागो यस्याः ।)
स्फटी । इति राजनिर्घण्टः ॥

**दृढलता**, स्त्री, (दृढा कठिना लता ।) पाताल-
गरुडी । इति राजनिर्घण्टः ॥

**दृढलोमा**, [न्] पुं, (दृढानि लोमानि यस्य ।)
शूकरः । इति शब्दचन्द्रिका ॥ कठिनलोमयुक्ते,
त्रि ॥

**दृढवल्कलः**, पुं, (दृढं वल्कलं त्वग् यस्य ।) लकुचः ।
पूगः । इति राजनिर्घण्टः ॥

**दृढवल्का**, स्त्री, (दृढं वल्कं यस्याः ।) अम्बष्ठा ।
इति राजनिर्घण्टः ॥

**दृढवीजः**, पुं, (दृढं वीजमस्य ।) चक्रमर्द्दः । वदरः ।
वर्व्वूरः । इति राजनिर्घण्टः ॥

**दृढसन्धिः**, त्रि, (दृढः स्थूलः सन्धिर्यस्य ।) निश्छिद्रः ।
तत्पर्य्यायः । संहतः २ । इत्यमरः । ३ । १ । ७५ ॥

**दृढसूत्रिका**, स्त्री, (सूत्रमस्त्यस्या इति । सूत्र +
ठन् । दृढा कठिना सूत्रिका चेति कर्म्मधारयः ।)
मूर्व्वा । इति शब्दचन्द्रिका ॥

**दृढस्कन्धः**, पुं, (दृढः स्कन्धो यस्य ।) क्षीरिका-
वृक्षः । इति जटाधरः ॥ (दृढस्कन्धविशिष्टे,
त्रि ॥)

**दृढाङ्गं**, क्ली, (दृढं अङ्गं यस्य । तदितरपदा-
र्थादस्य कठिनत्वात् तथात्वम् ।) हीरकम् ।

**दृन्**, व्य, हिंसा । इति मुग्धबोधटीकायां दुर्गा-
दासः ॥

**दृन्फ**, प श उत्क्लेशे । इति कविकल्पद्रुमः ॥
(तुदां-परं-सकं-सेट् ।) दन्त्यवर्गतृतीयादिः ।
सप्तमस्वरी । प श, दृम्फति । श, दृफति चौरं
राजा क्लिश्नातीत्यर्थः । ददृम्फ ददर्फ । इति
दुर्गादासः ॥

**दृन्भूः**, स्त्री, (दृम्फतीति । दृन्फ + "अन्दूदृन्भू-
जम्बूकम्बूकफेल्लूकर्कन्धूदिधिषूः ।" उणां । १ । ९५ ।
इति कूप्रत्ययान्तो निपातितः ।) सर्पः । चक्रम् ।
इति मेदिनी । भे, ५ ॥ (क्वचित् दृन्फूरिति
पाठोपि दृश्यते ॥)

**दृन्भूः**, पुं, (दृन्फ + कूः । निपातनात् साधुः ।)
वज्रम् । सूर्य्यः । इति हेमचन्द्रः ॥ राजा । इति
शब्दरत्नावली ॥ अन्तकः । इति संक्षिप्तसारे
उणादिवृत्तिः ॥

**दृप**, कि सन्दीपने । इति कविकल्पद्रुमः ॥ (चुरां-
पक्षे-भ्वां-परं-सकं-सेट् ।) कि, दर्पयति दर्पति ।
इति दुर्गादासः ॥

**दृप**, ञ य ऊ इर् हर्षे । गर्व्वे । इति कविकल्प-
द्रुमः ॥ (दिवां-उभं-अकं-वेट् ।) ञ, दृप्तो-
ऽस्ति । य, दृप्यति । ऊ, दर्पिष्यति दप्स्र्यति ।
इर्, अदृपत् अद्राप्सीत् अद्राप्र्सीत् अदर्पीत् ।
इति दुर्गादासः ॥

ई, दृब्धः । कि, दर्भयति दर्भति । गुम्फनं ग्रन्थ-
नम् । इति दुर्गादासः ॥

**दृम्प**, ञ क ङ संघाते । इति कविकल्पद्रुमः ॥
(चुरां-उभं-आत्मं च-सकं-सेट् ।) ओष्ठ्य-
वर्गशेषोपधः । सप्तमस्वरी । ञ क, दृम्पयति
दृम्पयते । ङ, दृम्पयते । संघातो राशीकर-
णम् । एषः कैश्चिन्न मन्यते । इति दुर्गादासः
॥

**दृम्फूः**, स्त्री, (दृम्फति क्लिश्नातीति । दृन्फ +
"अन्दूदृम्फूजम्ब्विति ।" उणां । १ । ९५ । इति
कूः । निपातनात् साधुः ।) सर्पः । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

**दृम्भूः**, स्त्री, (दृम्फतीति + दृन्फ + कूः । निपात-
नात् साधुः ।) दृन्भूः । इति सिद्धान्तकौमुद्या-
मुणादिवृत्तिः ॥

**दृश**, इर् औ प्रेक्षे । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-सकं-अनिट् ।) इर्, अदर्शत् अद्राक्षीत् ।
औ, द्रष्टा । प्रेक्षश्चाक्षुषज्ञानम् । पश्यति चन्द्रं
लोकः । ततः स ददृशे च तौ इति व्यतीहारे
आत्मनेपदम् । कदा द्रक्ष्येऽहं परमेश्वरि त्रिपथगे
भागरथि ! स्वं वपुरिति गणकृतानित्यत्वात् ।
इति दुर्गादासः ॥

**दृशत्**, [द्] स्त्री, (दृषत् । पृषोदरादित्वात्
साधुः ।) पाषाणः । इत्यमरः । २ । ३ । ४ ॥
निष्पेषणशिलापट्टम् । इति मेदिनी । दे, ३२
॥

| | | |
|---|---|---|
| इति राजनिर्घण्टः ॥<br>(कठिनाङ्गविशिष्टे, त्रि ॥)<br>**दृतः**, त्रि, (दृ + क्तः ।) आदृतः । आदरार्थ-<br>दृधातोः कर्म्मणि क्तप्रत्ययेन निष्पन्नः ॥ | | |

**दृशद्वती**, स्त्री, (दृशत् पाषाणोऽस्त्यस्यामिति।
दृशत् + मतुप् मस्य वः ।) नदीविशेषः । सा
आर्य्यावर्त्तस्य पूर्ब्बसीमा । (यथा, महा-
भारते । ३ । ८३ । ४ ।
"दक्षिणेन सरस्वत्या दृषद्वत्युत्तरेण च ।
ये वसन्ति कुरुक्षेत्रे ते वसन्ति त्रिपिष्टपे ॥")
कात्यायनी । इति मेदिनी । ते, १९८ ॥

**दृशा**, स्त्री, (दृश् + पाक्षिकटाप् ।) चक्षुः । इति
शब्दचन्द्रिका ॥

**दृशाकाङ्क्ष्यं**, क्ली, (दृशा दृशया वा आकाक्ष्यं
अभिलषणीयम् ।) पद्मम् । इति
शब्दचन्द्रिका ॥

**दृशानं**, क्ली, (दृश्यते अनेनेति । दृश् + आ-
नच् ।) ज्योतिः । इति मेदिनी । ने, ७५ ॥

**दृशानः**, पुं, (पश्यतीति । दृश् + "युधिबुधिदृशः
किच्च ।" उणां । २ । ९० । इति आनच् ।
स च कित् ।) आचार्य्यः । इत्युणादिकोषः ॥
लोकपालः । ब्राह्मणः । उपाध्यायः । इति
संक्षिप्तसारे उणादिवृत्तिः ॥ विरोचनः । इति
मेदिनी । ने, ७५ ॥ (दृश्यते इति । कर्म्मणि
आनच् । दृश्यमाने, त्रि । यथा, ऋग्वेदे । १० ।
४५ । ८ ।
"दृशानो रुक्म उर्विया व्यद्यौद्दुर्म्मर्षमायुः श्रिये
रुचानः ॥")

**दृशिः**, स्त्री, (दृश्यतेऽनयेति । दृश् + इन् । स च
कित् । वा ङीष् ।) चक्षुः । इति शब्द-
रत्नावली ॥ (यथा, --

**दृशी**, स्त्री, (दृश्यतेऽनयेति । दृश् + इन् । स च

**दृषत्**, [द्] स्त्री, (दीर्य्यते असाविति । द +
"दृणातेः षुग् ह्रस्वश्च ।" उणां १ । १३१ । इति
अदिः षुक् ह्रस्वश्च ।) पाषाणः । (यथा, मेघ-
दूते । ५७ ।
"तत्र व्यक्तं दृषदि चरणन्यासमर्द्धेन्दुमौलेः
शश्वत्सिद्धैरुपचितबलिभक्तिनम्रः परीयाः ॥")
निष्पेषणशिला । इति मेदिनी । दे, ३२ ॥
("मांसं निरस्थि सुस्विन्नं पुनर्दृ षदि चूर्णितम् ॥"
इति सुश्रुते सूत्रस्थाने ४६ अः ॥)

**दृषत्सारं**, क्ली, (दृषदः पाषाणस्य सार इव सारो
यत्र ।) मुण्डायसम् । इति राजनिर्घण्टः ॥

**दृष्टं**, क्ली, (दृष् + कर्म्मणि क्तः ।) स्वपरचक्रज-
भयम् । इत्यमरः । २ । ८ । ३० ॥ ईक्षिते, त्रि ।
यथा, मार्कण्डेये ।
"दृष्टदोषेऽपि विषये ममत्वाकृष्टचेतनः ॥"

**दृष्टरजाः**, [स्] स्त्री, (दृष्टं रजो यस्याः ।) प्राप्त-
रजस्का । तत्पर्य्यायः । मध्यमा २ । इत्यमरः ।
२ । ६ । ८ ॥ प्रौढा । इति राजनिर्घण्टः ॥

**दृष्टान्तः**, पुं, (दृष्टः अन्तो निश्चयो यस्मिन् ।)
उदाहरणम् । (यथा, माघे । २ । ३१ ।
"तृप्तियोगः परेणापि महिम्ना न महात्मनाम् ।
पूर्णश्चन्द्रोदयाकाङ्क्षी दृष्टान्तोऽत्र महार्णवः ॥")
शास्त्रम् । मरणम् । इति मेदिनी । ते, ११५ ॥
(अलङ्कारविशेषः । यथा, साहित्यदर्पणे । १० । ६९८ ।
"दृष्टान्तस्तु सधर्म्मस्य वस्तुनः प्रतिविम्बनम् ॥"

चान्येषां दृष्ट्यभावः ॥ * ॥ एषां प्रमाणं यथा, --
"तृतीये दशमे चैव पाददृष्टिरुदाहृता ।
अर्द्धदृष्टिश्च नवमे पञ्चमे च प्रकीर्त्तिता ॥
चतुर्थे चाष्टमे चैव पादोना परिकीर्त्तिता ।
सप्तमे परिपूर्णा च फलमेवं प्रकल्प्यते ॥
तृतीयदशमावार्किः पश्यन् पूर्णफलप्रदः ।
त्रिकोणगान् गुरुश्चैव चतुर्थाष्टमगान् कुजः ॥
सुतमदननवान्त्ये पूर्णदृष्टिः सुरारे-
र्युगलदशमराशौ दृष्टिमात्रात्रयार्द्धः ।
सहजरिपुचतुर्थेष्वष्टमे चार्द्धदृष्टिः
स्थितिभवनमुपान्त्यं नैव दृश्यं हि राहोः ॥
स्वस्थानञ्च द्वितीयञ्च षष्ठमेकादशन्तथा ।
द्वादशाख्यं न पश्यन्ति शेषं पश्यन्ति ते ग्रहाः ॥"
इति ज्योतिषतत्त्वम् ॥

**दृष्टिकृत्**, क्ली, (दृष्टिं दृष्टिप्रसादं करोतीति । कृ +
क्विप् तुगागमश्च । अतीवशोभया लोकानां
नेत्राकर्षकत्वादस्य तथात्वम् ।) स्थलपद्मम् ।
इति शब्दचन्द्रिका ॥ (दर्शनकारके, त्रि ॥)

**दृष्टिकृतं**, क्ली, (दृष्ट्यै दर्शनाय कृतमिव । अतीव-
शोभाकरत्वात् तथात्वम् ।) स्थलपद्मम् । इति
शब्दरत्नावली ॥

**दृष्टिगुणः**, पुं, (दृष्ट्या गुण्यते अभ्यस्यते यत्र ।
गुणत् क अभ्यासे + घञ् ।) बाणादिलक्ष्यम् ।
इति शब्दमाला ॥

**दृष्टिबन्धुः**, पुं, (दृष्टेश्चक्षुषो बन्धुरिव ।) खद्योतः ।
इति शब्दरत्नावली ॥

**दृष्टिविक्षेपः**, पुं, (दृष्टेर्विक्षेपः ।) कटाक्षः । इति
हलायुधः ॥

**दृह**, वृद्धौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-

कित् । वा ङीष् ।) चक्षुः । इति शब्द-
रत्नावली ॥ (यथा, --
“किं सम्भूतं रुचिरयोर्द्विजशृङ्गयोस्ते
मध्ये कृशो वहसि यत्र दृशिः श्रिता मे ॥”
इति भागवते । ५ । २ । १२ ।
चेतनः पुरुषः । यथा, पातञ्जलसूत्रम् । २
। २५ ।
“तदभावात् संयोगाभावो हानं तद्दृशेः
कैव-
ल्यम् ।”
“तस्या अविद्याया अभावात् नाशात्
संयोगा-
भावः संयोगस्य नाशो भवतीति शेषः ।
तच्च हानं
संयोगविगमः । दृशेः पुरुषस्य कैवल्यं
मुक्तिरिति
चोच्यते ॥” दृक्शक्तिः । यथा, तत्रैव । २ ।
२० ।
“द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः
।”
दृशिमात्र इति दृक्शक्तिरेव विशेषेण परामृ-
ष्टेत्यथः ।” इति भाष्यम् ॥ दर्शनम् । यथा,
ऋग्वेदे । ५ । ८० । ५ ।
“एषा शुद्रा न तन्वो विदानोर्द्ध्वेव स्नाती
दृशये
नो अस्थात् ॥”
“दृशये दर्शनाय” इति तद्भाष्ये सायनः
॥”)

**दृशोपमं**, क्ली, (दृशाया नेत्रस्य उपमा यत्र ।)
श्वेतपद्मम् । इति शब्दचन्द्रिका ॥

**दृश्यं**, त्रि, (दृश्यते इति । दृश् + कर्म्मणि क्यप् ।)
दर्शनीयम् । द्रष्टव्यम् । इति व्याकरणम् ॥
(यथा,
महाभारते । ३ । १३० । ५ ।
“एष वै चममोद्भेदो यत्र दृश्या सरस्वती ॥”
काशविशेषे, क्ली । यथा, साहित्यदर्पणे ।
६ । १ ।
“दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा
मतम् ।
दृश्यं तत्रामिनेयं तद्रूपारोपात्तु रूपकम् ॥”)

सधर्म्मस्येति प्रतिवस्तूपमाव्यवच्छेदः ।
अयमपि
साधर्म्म्यवैधर्म्याभ्यां द्विधा । क्रमेणोदाहरणं
यथा, --
अविदितगुणापि सत्कविभणितिः कर्णेषु
वमति
मधुधाराम् ।
अनधिगतपरिमलापि हि हरति दृशं
मालती-
माला ॥”)

**दृष्टिः**, स्त्री, (पश्यत्यनेनेति । दृश् + करणे क्तिन् ।)
चक्षुः । इत्यमरः । २ । ६ । ९३ ॥ (यथा,
साहित्य-
दर्पणे । ३ । ६८ ।
“दृष्टा दृष्टिमधोददाति कुरुते नालापमाभा-
षिता ॥”)
बुद्धिः । (दृश् + भावे + क्तिन् ।) दर्शनम् ।
इति मेदिनी । टे, १० ॥ (यथा, मनुः । ६ ।
४६ ।
“दृष्टिपूतं क्षिपेत् पादं वस्त्रपूतं जलं पिबेत्
॥”)
ग्रहाणां दृष्टिकथनम् । यथा,
तृतीयगृहे दशमगृहे च शनेः पूर्णदृष्टिरन्येषां
पाददृष्टिः । पञ्चमगृहे नवमगृहे च गुरोः पूर्ण-
दृष्टिरन्येषामर्द्धदृष्टिः । चतुर्थगृहे अष्टमगृहे च
कुजस्य पूर्णदृष्टिरन्येषां त्रिपाददृष्टिः ।
सप्तम-
गृहे सर्व्वेषां पूर्णदृष्टिः । पञ्चमगृहे सप्तमे
नवमे
द्वादशे च राहोः पूर्णदृष्टिः । द्वितीये दशमे च
त्रिपाददृष्टिः । तृतीये षष्ठे चतुर्थे अष्टमे
चार्द्ध-
दृष्टिः ॥ * ॥ ग्रहाणां दृष्ट्यभावनिर्णयो
यथा, --
स्थितिभवने एकादशे च राहोर्दृष्ट्यभावः ।
स्थितिभवने द्वितीये षष्ठे एकादशे द्वादशे

सेट् ।) सप्तमस्वरी दर्हति । इति दुर्गादासः
॥

**दृह**, इ वृद्धौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
अकं-सेट् ।) सप्तमस्वरी । इ, दृंह्यते । इति
दुर्गादासः ॥

**दृहितः**, त्रि, दृहधातोः कर्त्तरि क्तेन निष्पन्नः । वृद्धि-
प्राप्तः ॥

**दॄ**, गि भियि । इति कविकल्पद्रुमः ॥ (क्र्यां-परं-
अकं-सेट् ।) गि, दृणाति दीर्णः दीर्णिः ।
भियि
भये । इति दुर्गादासः ॥

**दॄ**, म भियि । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-
सेट् ।) म, दरयति । भियि भये । इति
दुर्गा-
दासः ॥

**दॄ**, य गि विदारे । इति कविकल्पद्रुमः ॥ (दिवां-
क्र्यां च-परं-सकं-सेट् ।) य, दीर्य्यति । गि,
दृणाति दीर्णः दीर्णिः । इति दुर्गादासः ॥

**दे**, ङ पालने । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-
सकं-अनिट् ।) ङ, दीनान् यो दयते
नित्यम् ।
इति हलायुधः । इति दुर्गादासः ॥

**देदीप्यमानः**, त्रि, पुनःपुनरतिशयेन वा दीप्यते
यः । (दीप + यङ् + शानच् ।) अतिशय-
दीप्तिविशिष्टः । इति व्याकरणम् ॥

**देयं**, त्रि, (दा + “अचो यत् ।” ३ । १ । ९७ ।
इति यत् । “ईद्यति ।” ६ । ४ । ६५ ।
इति

ईत् ।) दातव्यम् । दानीयम् । इति
व्याकरणम् ॥
यथा, हितोपदेशे । १ । ३६ ।
"उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
र्दैवेन देयमिति कापुरुषा वदन्ति ॥")

**देव**, ऋ ङ देवने । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-अकं-सेट् ।) देवनमिह क्रीडा । ऋ,
अदिदेवत् । ङ, देवते बालः
कन्दुकैर्नित्यमिति
हलायुधः । देवनमिह रोदनमिति भट्टमल्लः ।
इति दुर्गादासः ॥

**देवं**, क्ली, (दीव्यत्यनेनेति । दिव + करणे घञ् ।)
इन्द्रियम् । इति मेदिनी । वे, १२ ॥ (यथा,
मुण्डकोपनिषदि । ३ । १ । ८ ।
"न चक्षुषा गृह्यते नापि वाचा
नान्यैर्देवैस्तपसा कर्म्मणा वा ।
ज्ञानप्रसादेन विशुद्धसत्त्व-
स्ततस्तु तं पश्यते निष्कलं ध्यायमानः ॥")

**देवः**, पुं, (दीव्यति आनन्देन क्रीडतीति । दिव +
अच् ।) देवता । (यथा, मनुः । ३ । ११७ ।
"देवानृषीन् मनुष्यांश्च पितन् गृह्याश्च
देवताः ।
पूजयित्वा ततः पश्चात् गृहस्थः शेषभुग्
भवेत् ॥")
नाठ्योक्तौ राजा । इत्यमरः । १ । ७ । १३
॥
राजा । (यथा, कादम्बरी । १८ ।
"सकलभूतलरत्नभूतोऽयंवैशम्पायनो नाम
शुकः । सर्व्वरत्नानामुदधिरिव देवो भाजन-
मिति कृत्वैनमादायास्मत्स्वामिदुहिता
देवपाद-
मूलमायाता तदयमात्मीयः क्रियतामिति
॥")
मेघः । इति मेदिनी । वे, १२ ॥ (यथा, महा-
भारते । ३ । २३५ । २३ ।
"क्षेत्रे सुकृष्टे ह्युपिते च बीजे
देवे च वर्षत्यृतुकालयुक्तम् ॥"
महादेवः । यथा, महाभारते । १३ । १७ ।
९८ ।
"परश्वधायुधो देवः अनुकारी सुबान्धवः
॥")

**देवकः**, पुं, यदुवंशीयराजविशेषः । स श्रीकृष्णस्य
मातामहः । इति श्रीभागवतम् ॥ (अयन्तु
गन्धर्व्वपतेरंशावतारः । यथा, महाभारते ।
१ । ६७ । ६९ ।
"यस्त्वासीद्देवको नाम देवराजसमद्युतिः ।
स गन्धर्व्वपतिर्मुख्यः क्षितौ जज्ञे नराधिपः
॥")

**देवकर्द्दमः**, पुं, (देवप्रियः कर्द्दम इव ।) सुगन्धि-
द्रव्यविशेषः । स
श्रीखण्डागुरुकर्पूरकुङ्कुमसंमि-
श्रितैर्भवति । इति राजनिर्घण्टः ॥

**देवकात्मजा**, स्त्री, (देवकस्य आत्मजा कन्या ।)
देवकी । इति शब्दरत्नावली ॥

**देवकाष्ठं**, क्ली, (देवप्रियं काष्ठम् ।) देवदारु ।
इति रत्नमाला ॥ देवदारुप्रभेदः ।
तत्पर्य्यायः ।
पूतिकाष्ठम् २ भद्रकाष्ठम् ३ सुकाष्ठकम् ४
स्निग्ध-
दारुकम् ५ काष्ठदारु ६ । अस्य गुणाः ।
तिक्त-
त्वम् । उष्णत्वम् । रूक्षत्वम् ।
श्लेष्मानिलापह-
त्वञ्च । इति राजनिर्घण्टः ॥

**देवकिरी**, स्त्री, (देवं मेघं किरतीति । कृ + "इगुप-
धज्ञेति ।" ३ । १ । १३५ । इति कः ।
गौरादि-
त्वात् ङीष् ।) मेघरागस्य भार्य्या । यथा, -
-
"ललिता मालसी गौरी नाटी देवकिरी
तथा ।
मेघरागस्य रागिण्यो भवन्तीमाः सुमध्यमाः
॥"

**देवकुलं**, क्ली, (देवाय कोलतीति । कुल सङ्घाते
+
कः ।) विनामुखम् । इति हारावली ।
१९८ ॥
देउल इति भाषा ॥ (यथा, कथासरित्-
सागरे । १२ । १२७ ।
"सोऽहं दारिद्रसन्तप्तस्तत्र नारायणाग्रतः
।
निराहारः स्थितोऽकार्षं गत्वा देवकुलं
तपः ॥")
अस्य विवरणं चैत्यशब्दे द्रष्टव्यम् ॥

**देवकुसुमं**, क्ली, (देवप्रियं कुसुमं पुष्पं यस्य ।)
लवङ्गम् । इत्यमरः । २ । ६ । १२५ ॥

**देवखातं**, क्ली, (देवेन खातम् । अकृत्रिमत्वादस्य
तथात्वम् ।) देवखातकम् ।
इत्यमरटीकायां
भरतः ॥ (यथा, मनुः । ४ । २०३ ।
"नदीषु देवखातेषु तडागेषु सरःसु च ।
स्नानं समाचरेन्नित्यं गर्भप्रस्रवणेषु च
॥")

**देवखातकं**, क्ली, पुं, (देवखातमेव । स्वार्थे कन्
।)
अकृत्रिमजलाशयः । अपौरुषेयं
देवकुण्ड-
मित्यन्ये । इति सुभूतिः ॥
नागादिकुण्डमकृत्रिम-
मिति स्वामी ॥ तत्पर्य्यायः । आखातम्
२ ।
इति भरतः ॥ अखातम् । इत्यमरः । १
। १० ।
२७ ॥ दैवविनिर्म्मितम् ४ । इति
शब्दरत्नावली ॥
गुहा । इत्यमरटीकायां भरतः ॥

**देवखातविलं**, क्ली, (देवखातं अकृत्रिमं विलम् ।
नित्यकर्म्मधारयः ।) गुहा । इत्यमरः । २
। ३ । ६ ॥

**देवगन्धा**, स्त्री, (देवप्रियो गन्धो यस्याः ।) महा-

केचित्तु देवशब्देन इन्द्र इति व्याचक्षते ॥)
पारदः । इति राजनिर्घण्टः ॥ ब्राह्मणाना-
मुपाधिभेदः । यथा, स्मृतिः ।
"देवपूर्ब्बं नराख्यं स्यात्
शर्म्मवर्म्मादिसंयुतम् ॥"
(ऋत्विक् । यथा, ऋग्वेदे । ९ । ९६ । ६ ।
"ब्रह्मा देवानां पदवीः कवीना-
मृषिर्विप्राणां महिषो मृगाणाम् ॥"
"देवानां स्तोत्रकारिणामृत्विजां ब्रह्मा ब्रह्मा-
ख्यर्त्विक्स्थानीयो भवति ।" इति तद्भाष्ये
सायनः ॥) कायस्थादीनां पद्धतिविशेषः ।
तस्य
विवरणं कायस्थशब्दे द्रष्टव्यम् ॥ (त्रि, दाता
।
द्योतयिता । दीपयिता । यथा, ऋग्वेदे । १ ।
१ । १ ।
"अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ॥"
"देवशब्दो दानदीपनद्योतनानामन्यतममर्थं
माचष्टे । यज्ञस्य दाता दीपयिता द्योतयिता
यमग्निरित्युक्तं भवति ।" इति तद्भाष्ये सायनः
॥
विष्णुः । यथा, महाभारते । १३ । १४९ ।
५४ ।
"उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः ॥"
"दीव्यति यत् क्रीडति सर्गादिति
विजिगीषति
असुरान् व्यवहरति सर्व्वभूतेष्वात्मतया
द्योतते
स्तूयते स्तुत्यैः सर्व्वत्र गच्छति तस्माद्देवः ।
एको-
देव इति मन्त्रवर्णात् ॥" इति तद्भाष्ये शङ्करः
॥

अस्याः स्वरूपं यथा, --
"भ्रमन्ती नन्दने श्यामा पुष्पप्रचयतत्परा ।
ख्याता देवकिरी ह्येषा करार्पितसखीकरा
॥"
इति सङ्गीतदामोदरः ॥

**देवकी**, स्त्री, (देवक + ङीष् ।) देवकराजकन्या ।

सा वसुदेवपत्नी श्रीकृष्णमाता ।
तत्पर्य्यायः ।
दैवकी २ कृष्णजननी ३ देवकात्मजा ४ ।
इति
शब्दरत्नावली ॥ इयं कश्यपपत्नी
अदित्यंश-
जाता । यथा, --
"देवकी रोहिणी चेमे वसुदेवस्य धीमतः ।
रोहिणी सुरभिर्देवी अदितिर्देवकी ह्यभूत्
॥"
अपि च ।
"कश्यपो वसुदेवश्च देवमाता च देवकी ।
पूर्ब्बपुण्यफलेनैव संप्राप श्रीहरिं सुतम् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डम् ॥

**देवकीनन्दनः**, पुं, (देवक्या नन्दनः ।) श्रीकृष्णः ।

इति शब्दरत्नावली ॥ (यथा, भागवते । १
।
८ । २१ ।
"कृष्णाय वासुदेवाय देवकीनन्दनाय च ।
नन्दगोपकुमाराय गोविन्दाय नमो नमः ॥"
क्वचिदीकारस्य ह्रस्वोऽपि दृश्यते । यथा,
महा-
भारते । २ । २४ । ३१ ।
"नैतच्चित्रं महाबाहो ! त्वयि देवकिनन्दने
॥")

**देवकीसूनुः**, पुं, (देवक्याः सूनुः पुत्त्रः ।) श्रीकृष्णः ।

इति हेमचन्द्रः । २ । १३२ ॥ (यथा,
भविष्ये ।
"तुष्ट्यर्थं देवकीसूनोर्जयन्ती संज्ञकं व्रतम्
।
कर्त्तव्यं चिन्त्यमानेन भक्त्या भक्तजनैः
सह ॥")

**देवकुरुम्बा**, स्त्री, महाद्रोणा । इति राजनिर्घण्टः ॥

मेदा । इति राजनिर्घण्टः ॥

**देवगान्धारी**, स्त्री, श्रीरागस्य भार्य्या । यथा, --

"गान्धारी देवगान्धारी मालवश्रीश्च
सारवी ।
रामकिर्य्यपि रागिण्यः श्रीरागस्य प्रिया
इमाः ॥"
इति सङ्गीतदामोदरः ॥
अस्या गानसमयः शिशिर ऋतौ
तृतीयप्रहरा-
वधिरात्र्यर्द्धपर्य्यन्तम् ॥

**देवगायनः**, पुं, (देवानां गायनः ।) गन्धर्व्वः ।

इति हेमचन्द्रः । २ । ९७ ॥

**देवगिरी**, स्त्री, रागिणीविशेषः । इति हलायुधः ॥

सा सोमेश्वरमते वसन्तरागस्य भार्य्या
वसन्त-
ऋतौ सदा गेया । भरतमते
हिन्दोलरागपुत्त्र-
नागध्वनिभार्य्या । सङ्गीतदर्पणमते तु
नटकल्याण-
भार्य्या । अस्याः स्वरूपं यथा,
अत्यभिरामघन-
श्यामतनुः उत्तुङ्गपीनस्तनी
हारकण्ठभूषणा
स्त्रीपङ्क्तिमध्यस्था मत्तचकोरनयना
सुभङ्ग्यङ्गी
च । अस्या गानसमयः हेमन्ते
दिवाचतुर्थ-
प्रहरावधिरात्र्यर्द्धपर्य्यन्तम् ॥

**देवगुरुः**, पुं, (देवानां गुरुः ।) बृहस्पतिः । इति

पुराणम् ॥ (देवानां गुरुः पिता । कश्यपः
।
यथा, हरिवंशे । २४९ । ८ ।
"अपश्यन् कश्यपं तत्र मुनिं
दीप्ततपोनिधिम् ।
आद्यं देवगुरुं दिव्यं क्लिन्नं
त्रिषवणाम्बुभिः ॥")

**देवगृहं** क्ली, (देवानां सूर्य्यादीनां गृहमिव ।)

| | | सूर्य्यचन्द्रादीनां ज्योतिर्म्मण्डलानि ।<br>यथा, --<br>“मन्वन्तरेषु सर्व्वेषु ऋक्षे सूर्य्यग्रहाश्रयात् ।<br>तानि देवगृहाणि स्युः स्थानाख्यानि भवन्ति हि ॥”<br>इति मत्स्यपुराणम् ॥ |
|---|---|---|

देवालयः ॥ (यथा, कथासरित्सागरे । ४ । १०२ ।
"शून्ये देवगृहे देहमिन्द्रदत्तस्य रक्षितुम् ॥")

**देवचिकित्सकौ**, पुं, (देवानां चिकित्सकौ ।) अश्विनीकुमारौ । इति हलायुधः ॥ द्विवचनान्तोऽयम् ॥

**देवच्छन्दः**, पुं, (देवैश्छन्द्यते आकाङ्क्ष्यते इति । छन्द + घञ् ।) हारविशेषः । स शतयष्टिकः । इत्यमरः । २ । ६ । १०५ ॥ अष्टोत्तरशतयष्टिकोऽयमिति केचित् । इति भरतः ॥ (यथा, बृहत्संहितायाम् । ८१ । ३२ ।
"शतमष्टयुतं हारो देवच्छन्दो ह्यशीतिरेकयुता ।
अष्टाष्टकोऽर्द्धहारो रश्मिकलापश्च नवषट्कः ॥")

**देवजग्धं**, क्ली, (देवैरद्यते इति । अद् + क्तः । "अदोजग्धिर्ल्यप्तिकिति ।" २ । ४ । ३६ । इति जग्ध्यादेशः ।) देवजग्धकम् । इति हेमचन्द्रः । ४ । २५७ ॥

**देवजग्धकं**, क्ली, (देवजग्ध + स्वार्थे कन् ।) कत्तृणम् । इत्यमरः । २ । ४ । १६६ ।

रुद्रा एकादश प्रोक्ता वसवोऽष्टौ समीरिताः ॥"
इति शब्दरत्नावली ॥ * ॥
तेषां चत्वारो वर्णा यथा, --
"आदित्याः क्षत्त्रियास्तेषां विशश्च मरुतस्तथा ।
अश्विनौ च स्मृतौ शूद्रौ तपस्युग्रे समास्थितौ ॥
स्मृतास्त्वाङ्गिरसा देवा ब्राह्मणा इति निश्चयः ।
इत्येतत् सर्व्वदेवानां चातुर्व्वर्ण्यं प्रकीर्त्तितम् ॥"
इति महाभारते मोक्षधर्म्मः ॥ * ॥
वैष्णवानां पञ्चदेवता यथा, --
"यत्र यत्र सुराः पूज्या गणेशाद्यास्तु कर्म्मिणाम् ।
विष्णवर्च्चने तत्र तत्र वैष्णवानां हि वैष्णवाः ॥
विश्वक्सेनं ससनकं सनातनमतःपरम् ।
सनन्दं सनत्कुमारञ्च पञ्चैवं पूजयेत्ततः ॥"
इति पाद्मे उत्तरखण्डम् ॥ * ॥
देवषट्कं यथा, --
"गणेशञ्च दिनेशञ्च वह्निं विष्णुं शिवं शिवाम् ।
देवषट्कञ्च संपूज्य नमस्कृत्य विचक्षणः ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥
अपि च ।
"आदित्यं गणनाथञ्च देवीं रुद्रं यथाक्रमम् ।
नारायणं विशुद्धाख्यमन्ते च कुलदेवताः ॥"
इत्याह्निकतत्त्वम् ॥ * ॥
व्यक्तिविशेषस्य उपास्यदेवता यथा, --
"या यस्याभिमता पुंसः सा हि तस्यैव देवता ।
किन्तु कार्य्यविशेषेण पूजिता चेष्टदा नृणाम् ॥
विशेषात् सर्व्वदा नायं नियमो ह्यन्यथा नृपाः ।
नृपाणां दैवतं विष्णुस्तथैव च पुरन्दरः ॥
विप्राणामग्निरादित्यो ब्रह्मा चैव पिनाकधृक् ।
देवानां दैवतं विष्णुर्दानवानां त्रिशूलभृत् ॥
गन्धर्व्वाणां तथा सामो यक्षाणामपि कथ्यते ।
विद्याधराणां वाग्देवी साध्यानां भगवान् हरिः ॥
रक्षसां शङ्करो रुद्रः किन्नराणाञ्च पार्व्वती ।
ऋषीणां दैवतं ब्रह्मा महादेवश्च शूलभृत् ॥
मनूनां स्यादुमा देवी तथा विष्णुः सभास्करः ।
गृहस्थानाञ्च सर्व्वे स्युर्ब्रह्मा वै ब्रह्मचारिणाम् ॥
वैखानसामम्बिका स्याद्यतीनाञ्च महेश्वरः ।
भूतानां भगवान् रुद्रः कुष्माण्डानां विनायकः ॥
सर्व्वेषां भगवान् ब्रह्मा देवदेवः प्रजापतिः ।
इत्येवं भगवान् ब्रह्मा स्वयं देवोऽभ्यभाषत ॥"

शोभनः । लग्नापेक्षया बृहस्पतिः केन्द्रस्थः शोभनः लग्नापेक्षया शुक्रस्तृतीयषष्ठैकादशस्थः शोभनः । इति ज्योतिषम् ॥
(देव + भावे तल् । देवत्वम् । यथा, ऋगवेदे । १० । २४ । ६ ।
"मधुमन्मे परायणं मधुमत् पुनरायनम् ।
ता नो देवा देवतया युवं मधुमतस्कृतम् ॥"
"हे देवा देवौ द्योतमानौ ता तौ युवं युवां नोऽस्मान् मधुमतः प्रीतियुक्तान् कृतम् कुरुतम् । केनेति उच्यते । देवतया देवत्वेन अणिमादिदेवतश्वर्य्ययोगेनेत्यर्थः ।" इति तद्भाष्ये सायनः ॥)

**देवताडः**, पुं, (देवो दीप्तस्ताल इति । लस्य डः ।) वृक्षविशेषः । देताडा इति ख्यातः । तत्पर्य्यायः । वेणी २ खरा ३ गरी ४ जीमूतः ५ । इत्यमरः । २ । ४ । ६९ ॥ अगरी ६ खरागरी ७ गरागरी ८ । इति तट्टीकायां भरतः ॥ देवताडी ९ आखुविषहा १० । इति जटाधरः ॥ आखुः ११ विषजिह्वः १२ महाच्छदः १३ कदम्बः १४ खुज्जाकः १५ देवताडकः १६ । इति रत्नमाला ॥ (देवौ चन्द्रार्कौ ताडयतीति । ताडि + कर्म्मणि अण् ।) राहुः । अग्निः । इति मेदिनी । डे, ३९ ॥ घोषकलता । इति विश्वः ॥

**देवताडकः**, पुं, (देवताड + स्वार्थे कन् ।) देवताडः । इति रत्नमाला ॥

**देवताधिपः**, पुं, (देवतानां अधिपः ।) इन्द्रः । इति शब्दरत्नावली ॥

**देवत्वं**, क्ली, (देवस्य भावः कर्म्म वा । "तस्य भावस्त्वतलौ ।" ५ । १ । ११९ । इति त्वप्रत्ययः ।) देवभूयम् । देवसायुज्यम् । इत्यमरः । २ । ७ । ५२ ॥ देवस्य भावः कर्म्म वा । इति संक्षिप्तसारव्याकरणम् ॥

**देवदण्डा**, स्त्री, (देवात् मेघाद्दण्डोऽस्याः ।) नाग-

**देवटः**, त्रि, (दिव्यतीति । दिव + “शकादिभ्यो-
ऽटन् ।” उणां । ४ । ८१ ।
इति अटन् ।)
शिल्पी । इत्युणादिकोषः ॥

**देवट्टी**, स्त्री, (देवं देवशब्दं अट्टते अतिक्राम-
तीति । अट्ट + अण् ।
शकन्ध्वादित्वादलोपः ।
गौरादित्वात् ङीष् ।)
गङ्गाचिल्ली । इति
हारावली । ८५ ॥

**देवतरुः**, पुं, (देवानां तरुः ।) मन्दारः । पारि-
जातः । सन्तानः ।
कल्पवृक्षः । हरिचन्दनम् ।
इत्यमरः । १ । १ । ५३ ॥
चैत्यवृक्षः । इति
त्रिकाण्डशेषः ॥

**देवता**, स्त्री, (देव एव । स्वार्थे तल् ।) देवं द्युतिं
क्रीडां वा तनोति या ।
तत्पर्य्यायः । अमरः २
निर्ज्जरः ३ देवः ४ त्रिदशः
५ विबुधः ६ सुरः ७
सुपर्व्वा ८ सुमनाः ९
त्रिदिवेशः १० दिवौकाः ११
आदितेयः १२ दिविषत् १३
लेखः १४ अदिति-
नन्दनः १५ आदित्यः १६
ऋभुः १७ अस्वप्नः १८
अमर्त्यः १९ अमृतान्धाः
२० बर्हिर्मुखः २१
क्रतुभुक् २२ गीर्व्वाणः २३
दानवारिः २४
वृन्दारकः २५ दैवतम् २६ ।
इत्यमरः । १ । १ । ९ ॥
स्वाहाभुक् २७ दनुजद्विट्
२८ द्युषत् २९ दौषत्
३० स्वर्गी ३१ शौभः ३२
निलिम्पः ३३ सुचि-

इति कूर्म्मपुराणम् ॥ * ॥
सामान्यदेवघट्टनदिनं यथा, --
तत्रोक्तनक्षत्रानि । उत्तरफल्गुन्युत्तराषाढोत्तर-
भाद्रपद्रोहिणी चित्रानुराधा मृगशिरो रेवती
पुष्योऽश्विनी हस्ता शतभिषा श्रवणा स्वाती पुन-
र्व्वसुर्धनिष्ठा । तत्र तिथयः शुभाः । तत्र चन्द्र-
स्तृतीयदशमसप्तमजन्मैकादशस्थः शोभनः ॥
अथ
सामान्यदेवप्रतिष्ठादिनम् । तत्र मासाः । माघ-
फाल्गुनचैत्रवैशाखज्यैष्ठाः हरिशयनात् पूर्ब्ब-
माषाढश्च । तत्र नक्षत्राणि धनिष्ठाशतभिषा-
श्लेषामधापुनर्व्वस्वश्विनीभरणीकृत्तिकाविशाखा-
भिन्नानि । तत्र तिथयः शुभाः । तत्र लग्नानि
वृषमिथुनकन्याधनुर्मीनसंज्ञकानि । तत्र चन्द्रः

बला । इति राजनिर्घण्टः ॥

**देवदत्तः**, पुं, बुद्धानुजः । इति त्रिकाण्डशेषः ।
अर्ज्जनशङ्खः । (यथा, महाभारते । ६ । २४ ।
१५ ।
“पाञ्चजन्यं हृषीकेशो देवदत्तं घनञ्जयः ।
पौण्ड्रं दघ्मौ महाशङ्खं भीमकर्म्मा वृकोदरः ॥”)
शरीरवाह्यपञ्चवाय्वन्तर्गतवायुविशेषः । इति
शब्दार्थकल्पतरुः ॥ विजृम्भणे देवदत्तः शुद्ध-
स्फटिकसन्निभः । इति सारदातिलकटीका ॥
(देवा एनं देयासुरिति । “क्तिच्क्तौ च संज्ञा-
याम् ।” ३ । ३ । १७४ । इति आशिषि क्तः ।
“दो दद्धोः ।” ७ । ४ । ४६ । इति ददादेशश्च ।)
संज्ञाविशेषः । यथा, देवदत्तादिसंज्ञाशब्दस्य
सर्व्वलिङ्गभाजित्वाभावात् जातित्वमायाति ।
इति दुर्गादासः ॥ (नागभेदः । यथा, भाग-
वते । ५ । २४ । ३१ । “ततोऽधस्तात् पाताले
नागलोकपतयो वासुकिप्रमुखाः शङ्खकुलिक-
महाशङ्खश्वेतधनञ्जयधृतराष्ट्रशङ्खचूडकम्बलाश्व-
तरदेवदत्तादयो महाभोगिनो महामर्षाः
निवसन्ति ॥” देवेन दत्ते, त्रि । यथा,
“अश्वमाशुगमारुह्य देवदत्तं जगत्पतिः ।

| रायुः ३४ स्थिरः ३५ । इति शब्दरत्नावली ॥<br>तस्याः संख्या त्रयस्त्रिंशत्कोटयः । यथा, --<br>“सदारा विबुधाः सर्व्वे स्वानां स्वानां गणैः सह ।<br>त्रैलोक्ये तत्त्रयस्त्रिंशत्कोटीसंख्या यथा भव ॥”<br>इति पाद्मोत्तरखण्डम् ॥ *<br>गणदेवता यथा, --<br>“आदित्यास्तुषिता विश्वसाध्याभास्वरमारुताः ।<br>महाराजिकरुद्राश्च वसवो गणदेवताः ॥<br>आदित्या द्वादश प्रोक्तास्तुषितास्त्रिंशदेव हि ।<br>विश्वेदेवा दश प्रोक्ताः साध्या द्वादश कीर्त्तिताः ॥<br>आभास्वराश्चतुःषष्टिर्वाताः पञ्चाशदूनकाः ।<br>महाराजिकनामानो द्वे शते विंशतिस्तथा । | | |
|---|---|---|

असिनासाधुदमनमष्टैश्वर्य्यगुणान्वितः ॥”
इति कल्किपुराणेऽनुभागवते भविष्ये कल्कि-
जन्मोपनयने २ अध्यायः ॥)

**देवदत्ताग्रजः**, पुं, (देवदत्तस्य अग्रजो ज्येष्ठः ।)

बुद्धः । इति हेमचन्द्रः । २ । १५१ ।

**देवदानी**, स्त्री, (दैप शोधने + भावे ल्युट् । देव-

स्येव दानं शुद्धिर्य्यस्याः । गौरादित्वात् ङीष् ।)
घोषकाकृतिः । हस्तिघोषा इति भाषा । इति
रत्नमाला ॥

**देवदारु**, क्ली, (देवानां दारु । तेषां प्रियत्वात् ।)

वृक्षविशेषः । (यथा, महाभारते । ३ ।
१७८ । १० ।
“वनानि देवदारूणां मेघानामिव वागुराः ॥”)
तत्पर्य्यायः । शक्रपादपः २ परिभद्रकः ३ भद्र-
दारु ४ द्रुकिलिमम् ५ पीतदारु ६ दारु ७
पूतिकाष्ठम् ८ । इत्यमरः । २ । ४ । ५४ ॥ सुर-
दारु ९ दारुकम् १० स्निग्धदारु ११ अमरदारु
१२ शिवदारु १३ शाम्भवम् १४ भूतहारि १५
भवदारु १६ भद्रवत् १७ इन्द्रदारु १८ मस्तदारु
१९
सुरभूरुहः २० । इति भावप्रकाशः ॥ सुराह्वम्
२१ देवकाष्ठम् २२ । इति रत्नमाला ॥ अस्य
गुणाः । तिक्तत्वम् । रूक्षत्वम् । श्लेष्मानिलभूत-
दोषनाशित्वञ्च । इति राजनिर्घण्टः ॥ लघुत्वम् ।
स्निग्धत्वम् । उष्णत्वम् । कटुपाकित्वम् । विब-
न्धाध्मानशोथामतन्द्राहिक्काज्वरास्रप्रमेहपीनस-
श्लेष्मश्वासकासकण्डूसमीरनाशित्वञ्च । इति
भाव-
प्रकाशः ॥ तस्य लेपनगुणः । कान्तिदत्वम् ।
आमदोषविबन्धार्शःप्रमेहज्वरनाशित्वञ्च । इति
राजनिर्घण्टः ॥ ज्वररूक्षतालक्ष्मीरक्षोविघ्न-
नाशित्वन् । इति राजवल्लभः ॥

**देवदारुः**, पुं, (देवप्रियं दारु यत्र ।) स्वनामख्यात-

वृक्षः । स च पार्व्वतीप्रियः । यथा, --
“अमुं पुरः पश्यसि देवदारुं
पुत्त्रीकृतोऽयं वृषभध्वजेन ।
यो हेमकुम्भस्तननिःसृतानां
सुतर्कारी १९ देवताडः २० ॥ अस्या
गुणाः ।
तिक्तत्वम् । उष्णत्वम् । कटुत्वम् ।
पाण्डुकफ-
दुर्नामश्वासकासकामलाभूतनाशित्वञ्च ।
तस्याः
फलस्य गुणाः । तिक्तत्वम् ।
कृमिश्लेष्मगुल्मशूला-
र्शोवातनाशित्वम् । स्रंसनत्वञ्च ।
“पीता गरा खरस्पर्शा विषघ्नी गरनाशिनी
॥”
इति राजनिर्घण्टः ॥
तन्नामगुणाः । यथा, भावप्रकाशे ।
“देवदाली तु वेणी स्यात् कर्कटी च
गरागरी ।
देवताडो वृन्तकोशस्तथा जीमूत इत्यपि
॥
पीतापरा खरस्पर्शा विषघ्नी गरनाशिनी ।
देवदाली रसे तिक्ता
कफार्शःशोथपाण्डुताः ॥
नाशयेद्वामनी तिक्ता
क्षयहिक्काकृमिज्वरान् ।
देवदालीफलं तिक्तं कृमिश्लेष्मविनाशनम्
॥
संसनं गुल्मशूलघ्नमर्शोघ्नं वातजित् परम्
॥”

**देवदासी**, स्त्री, (देवं इन्द्रियं दास्नोति हन्तीति ।

देव + दास् + अण् । गौरादित्वात् ङीष् ।)
वन-
बीजपूरकः । इति राजनिर्घण्टः । (देवाय
क्रीडायै दासी इव ।) वेश्या । इति
शब्दार्थ-
कल्पतरुः ॥ (देवपरिचारिका च ॥)

**देवदीपः**, पुं, (देवं दीप्तिशीलं दीपयति प्रकाश-

यति बुद्धिस्थं करोतीति । दीप् + णिच् +
अण् ।
यद्वा, देवेषु इन्द्रियेषु दीपः प्रकाशकः ।)
लोच-
“देवद्रोणी
स्वयम्भूलिङ्गाद्यवस्थानगह्वरम् ।”
इति रघुनन्दनः ॥)

**देवद्र्यङ्**, [ञ्] त्रि, (देवानञ्चति पूजयतीति
।

अञ्चु गतिपूजनयोः +
“ऋत्विग्दधृक् इति ।”
३ । २ । ५९ । इति क्विन् ।
“विष्वग्देवयोश्च
टेरद्र्यञ्चतावप्रत्यये ।” ६ । ३ ।
९२ । इति
अद्र्यादेशः ।) देवपूजकः ।
देवसमीपगन्ता ।
इत्यमरः । ३ । १ । ३४ ॥

**देवधान्यं**, क्ली, (देवयोग्यं धान्यमिति
मध्यलोपी

समासः ।) धान्यविशेषः । देधान
इति भाषा ।
जोयार इति हिन्दीभाषा ।
तत्पर्य्यायः । यव-
नालः २ योनलः ३ जूर्णाह्वयः ४
जोन्ताला ५
बीजपुष्पिका ६ । इति हेमचन्द्रः ।
४ । २४४ ॥

**देवधूपः**, पुं, (देवप्रियो धूप इति मध्यलोपी

समासः ।) गुग्गुलुः । इति
रत्नमाला ॥

**देवनं**, क्ली, (दिव् + भावे ल्युट् ।)
व्यवहारः ।

जिगीषा । क्रीडा । इति मेदिनी ।
ने, ७६ ॥
(दीव्यति अस्मिन्निति अधिकरणे
ल्युट् ।) लीलो-
द्यानम् । इति त्रिकाण्डशेषः ॥
(दीव्यति अने-
नेति । दिव + करणे ल्युट् ।)
पद्मम् । इति

स्कन्दस्य मातुः पयसां रसज्ञः ॥”
इति रघौ । २ । ३६ ॥

**देवदालिका**, स्त्री, (देवदालीव कायतीति । कै +
कः । टाप् पूर्ब्बह्रस्वः ।) महाकालः । इति
राजनिर्घण्टः ॥

**देवदाली**, स्त्री, (देवेन मेघोदयेन दालो दलनं
यस्याः । गौरादित्वात् ङीष् ।) लताविशेषः ।
घघरवेल इति सोनैया इति च हिन्दीभाषा ।
खखसावत्पुष्पवृन्ता । (यथा, सुश्रुते, सूत्रस्थाने ।
४९ अध्याये ।
“कोशातकी सप्तला शङ्खिनी देवदालीकार-
वेल्लिका चेत्युभयतो भागहराणि ॥”)
तत्पर्य्यायः । जीमूतकः २ कण्टफला ३ गरा ४
गरी ५ वेणी ६ महाकोषफला ७ कट्फला ८
घोरा ९ कदम्बी १० विषहा ११ कर्कटी १२
सारमूषिका १३ वृन्तकोषा १४ आखुविषहा
१५ दाली १६ रोमशपत्रिका १७ कुरङ्गिका १८
नम् । इति शब्दरत्नावली ॥

**देवदुन्दुभिः**, पुं, (देवानां दुन्दुभिरिव हर्षजनक-
त्वात् ।) गन्धपर्णासः । स रक्ततुलसी ।
इति
रत्नमाला ॥ देवानां दुन्दुभिवाद्यञ्च ॥

**देवदूती**, स्त्री, (देवानिन्द्रियाणि दूयन्ते अवसाद-
यन्तीति । दू ङ उपतापे + “क्तिच्क्तौ च
संज्ञा-
याम् ।” ३ । ३ । १७४ । इति क्तिच् ततो
ङीष् ।) वनबीजपूरकः । इति
राजनिर्घण्टः ॥

**देवदेवः**, पुं, (दीव्यतीति । दिव् + अच् । देवानां
देवेषु वा देवः श्रेष्ठत्वात् ।) शिवः । (यथा,
महाभारते । १ । १ । १६० ।
“यदाश्रौषमर्ज्जुनं देवदेवं
किरातरूपं त्र्यम्बकं तोष्य युद्धे ॥”)
ब्रह्मा । इति शब्दरत्नावली ॥ (यथा, देवी-
भागवते । १ । ५ । १८ ।
“स वम्रीं सन्दिदेशाथ देवदेवः सनातनः
॥”
“देवदेवो ब्रह्मेति ।” तट्टीका ॥ विष्णुः ।
यथा,
देवीभागवते । १ । ४ । ३५ ।
“कारणं सर्व्वलोकानां देवदेवं जगद्गुरुम्
।
वासुदेवं जगन्नाथं तप्यमानं महत्तपः ॥”
गणेशः । यथा, कथासरित्सागरे । २० ।
५५ ।
“अस्तीह प्रमदोद्याने तरुमण्डपमध्यगः ।
दृष्टप्रभावो वरदः देवदेवो विनायकः ॥”)

**देवद्रोणी**, स्त्री, देवयात्रा । इति हारावली । १२९ ॥
(देवानां द्रोणी द्रोण्याकारत्वात्
अवस्थान-
गह्वरम् । शिवलिङ्गादीनामवस्थानगह्वरम्।
यथा, प्रायश्चित्ततत्त्वे
रघुनन्दनधृतसम्बर्त्तवचनम्।
“देवद्रोण्यां विहारे च कूपेष्वायतनेषु च ।
एषु गोषु विपन्नासु प्रायश्चित्तं न विद्यते
॥”
शब्दचन्द्रिका ॥ परिदेवनम् ।
इत्यमरटीकायां
भरतः ॥ द्युतिः । स्तुतिः ।
कान्तिः । गतिः ।
शोकः । इत्यमरटीकायां मथुरेशः
॥ द्यूतम् ।
इति स्वामी ॥ (यथा, मनौ । ९ ।
२२२ ।
“प्रकाशमेतत् तास्कर्य्यं
यद्देवनसमाह्वयौ ।
तयोर्नित्यं प्रतिघाते
नृपतिर्यत्नवान् भवेत् ॥”)

**देवनः**, पुं, (दीव्यत्यनेनेति । दिव + करणे
ल्युट् ।)
पाशकः । इत्यमरः । २ । १० ।
४५ ॥

**देवनन्दी**, [न्] पुं, (देवमिन्द्रं नन्दयतीति ।
नन्दि + णिनिः ।) इन्द्रद्वारपालः ।
इति हेम-
चन्द्रः । २ । ९० ॥

**देवनलः**, पुं, (देवः आकारवर्णोत्कर्षेण श्रेष्ठो
नलः ।) नलभेदः । तत्पर्य्यायः ।
देवनालः २
महानलः ३ वन्यः ४ नलोत्तमः ५
स्थूलनालः ६
स्थूलदण्डः ७ सुरनालः ८
सुरद्रुमः ९ । अस्य
गुणाः । अतिमधुरत्वम् । वृष्यत्वम्
। ईषत्-
कषायत्वम् ।
नलादधिकवीर्य्यत्वम् ।
रसकर्म्मणि
शस्तत्वञ्च । इति राजनिर्घण्टः ॥

**देवना**, स्त्री, (दिव् + भावे युच् टाप् च ।)
क्रीडा ।
सेवा । इति शब्दरत्नावली ॥

**देवनालः**, पुं, (देवो दीप्तिशीलः श्रेष्ठो वा
नालः ।)
देवनलः । इति राजनिर्घण्टः ॥

**देवपतिः**, पुं, (देवानां पतिः ।) इन्द्रः । इति

हेमचन्द्रः । २ । ८७ ॥ (यथा,

महाभारते ।

४ । २१ । ३३ ।

“सत्यं भ्रातंश्च धर्म्मञ्च पुरस्कृत्य

ब्रवीमि ते ।

कीचकं निहनिष्यामि वृत्रं

देवपतिर्य्यथा ॥”)

**देवपत्नी**, स्त्री, (देवानां पत्नीव प्रियदर्शनादित्वात् ।)

मध्वालुकम् । इति त्रिकाण्डशेषः ।

(देवानां

पत्नी ।) देवभार्य्या ॥ (यथा,

महाभारते ।

१३ । १४ । ३९३ ।

“देवानां मातरः सर्व्वा देवपत्न्यः

सकन्यकाः ॥”)

**देवपथः**, पुं, (देवानां पन्थाः । "ऋक्पूरब्धूः पथा-
मानक्षे । ५ । ४ । ७४ । इति अः ।) देवानां
पन्थाः । तत्पर्य्यायः । छायापथः २ सोमधारा
३ नभःसरित् ४ । इति त्रिकाण्डशेषः ॥ (यथा,
महाभारते । ३ । १४८ । २० ।
"दिव्यो देवपथो ह्येष नात्र गच्छन्ति मानुषाः ॥"
तीर्थविशेषः । यथा, महाभारते । ३ । ८५ ।
४५ ।
"ततो देवपथं गत्वा नियतो नियतासनः ।
देवसत्रस्य यत् पुण्यं तदवाप्नोति मानवः ॥")

**देवपर्णं** क्ली, (देवानां प्रियं पर्णमस्य ।) सुर-
पर्णम् । इति राजनिर्घण्टः ॥

**देवपुत्त्रिका**, स्त्री, (देवानां पुत्त्रिकेव प्रियत्वात् ।)
पृक्का । इति राजनिर्घण्टः ॥

**देवपुत्त्री**, स्त्री, (देवानां पुत्त्रीव प्रियत्वात् ।)
पृक्का । इति जटाधरः ॥

**देवपूः**, [र्] स्त्री, (देवानां पूः पुरी ।) अमरा-
वती । इति जटाधरः ॥

**देवप्रश्नः**, पुं, (देवानां ग्रहदेवतानां प्रश्नः ।) ग्रह-
नक्षत्रादिघटितजिज्ञासा । तत्पर्य्यायः । उप-
श्रुतिः २ । इति हेमचन्द्रः । २ । १७७ ॥

**देवप्रियः**, पुं, (देवानां प्रियः ।) पीतभृङ्गराजः ।
वकपुष्पः । इति राजनिर्घण्टः ॥

**देवबला**, स्त्री, (देवप्रिया बला ।) सहदेवी ।
त्रायमाणा । इति राजनिर्घण्टः ॥

**देवब्रह्मा**, [न्] पुं, (देवेषु ब्रह्मा इव । देवर्षित्वा-
दस्य तथात्वम् ।) नारदमुनिः । इति हेम-

"कच्चिच्छिवं देवकभोजपुत्त्र्या
विष्णुप्रजाया इव देवमातुः ॥"
देवमातृमात्रम् । यथा, महाभारते । १३ ।
१४ । ३८ ।
"देवपत्न्यो देवकन्या देवमातर एव च ॥")

**देवमातृकः**, त्रि, (देवो वृष्टिर्मातेव शस्योत्पाद-
नेन पालकत्वात् जननीव यस्य । कप् ।) वृष्ट्यम्बु-
सम्पन्नव्रीहिपालितद्देशः । इत्यमरः । २ ।
१ । १२ ॥
(यथा, महाभारते । २ । ५ । ७८ ।
"कच्चिद्राष्ट्रे तडागानि पूर्णानि च बृहन्ति च ।
भागशो विनिविष्टानि न कृषिर्देवमातृका ॥")

**देवमानकः**, पुं, (देवेषु मानो यस्य । कप् ।
संज्ञायां कन् वा ।) कौस्तुभमणिः । इति शब्द-
रत्नावली ॥

**देवमासः**, पुं, (देवाय भ्रूणस्य क्रीडनाय यो मासः ।
अत्र हि स्मृतेरोजसश्च प्रादुर्भावात् गर्भस्य
क्रीडनादित्वात् तथात्वम् ।) गर्भस्याष्टममासः ।
तत्पर्य्यायः । गर्भाष्टमः २ । इति त्रिकाण्डशेषः ॥
देवानां मासः । स मनुष्यमाने त्रिंशद्वर्षात्मकः ॥

**देवयजिः**, पुं, (देवान् यजते इति । यज + "सर्व्व-
धातुभ्य इन् ।" उणां ४ । ११७ । इति इन् ।)
देवपूजकः । मुनिः । यथा, भट्टिः । २ ।
३४ ।
"अद्धो द्विजान् देवयजीन् निहन्मः ॥"

**देवयज्ञः**, पुं, (देवानां यज्ञः ।) होमः । इति हेम-

अथ कदाचित् क्रीडन्तीनां कन्यानां वस्त्र-
वैपरीत्यं जातम् । देवयानी स्वीयवस्त्रग्रह-
णेन वृषपर्ब्बणोऽसुरराजस्य सुतां शर्म्मिष्ठां
चुक्रोश । शर्म्मिष्ठा तु तदसहमाना तां कूप-
मध्ये प्राक्षिपत् । अथ गच्छति काले ययाति-
र्मृगयां गतस्तृषार्तो जलमन्विष्यन् तत्रैव
कूपसमीपमागत्य देवयानीं तन्मध्यस्थां दृष्ट्वा
तस्या दक्षिणं पाणिं गृहीत्वा उत्थापयामास ।
अथ देवयानी कूपात् मुक्ता पितृसमीप-
मागत्य सर्व्वं विज्ञापितवती । अथ शुक्रे क्रोधा-
दसुरराज्यात् गन्तुमुद्यते वृषपर्व्वासुरराजः
स्वीयकन्यां शर्म्मिष्ठां कन्यासहस्रपरिवृतां परि-
चारकत्वेन प्रदाय स्वगुरुन्तं देवयानीञ्च प्रसा-
दयामास । अथ कदाचित् देवयानी पित्र-
नुज्ञया नाहुषं ययातिं पतित्वेन स्वीकृत्य तेन
सह विजहार । अस्याः पुत्त्रौ द्वौ यदुस्तुर्व्वसुश्च ।
गच्छति काले देवयानी राज्ञा सह वनं गत्वा
त्रीनपरान् कुमारान् क्रीडतस्तत्र दृष्ट्वा नृपौ-
रसात् शर्म्मिष्ठागर्भे जातांश्च तान् विज्ञाय क्रोध-
परवशा पितृसमीपं प्रस्थितवती । शुक्रस्तु दुहि-
तरमवमानितां विदित्य राजानं जरया योजया-
मास ॥ एतद्विशेषविवरणविस्तृतिस्तु महा-
भारते । १ । ७६-८३ । अध्यायेषु ज्ञातव्या ॥ * ॥)

**देवयुः**, त्रि, (देवं याति उपास्यत्वेन प्राप्नोतीति ।

चन्द्रः । ३ । ५१३ ॥

**देवभवनं**, क्ली, (देवानां भवनं गृहमिव । देवानां
आश्रयत्वादस्य तथात्वम् ।) अश्वत्थः । इति
शब्दचन्द्रिका ॥ स्वर्गः ॥ (देवप्रतिमा-निके-
तनञ्च ॥)

**देवभूः**, पुं, (देवं देवत्वं भवते प्राप्नोतीति । भूप्राप्तौ
+ क्विप् ।) देवः । इति शब्दरत्नावली ॥ (देवानां
भूर्निवासभूमिरुत्पत्तिर्वा यत्र ।) स्वर्गश्च ॥

**देवभूतिः**, स्त्री, (देवात् देवलोकात् भूतिरुत्पत्ति-
र्यस्याः ।) मन्दाकिनी । इति शब्दरत्नावली ॥
(देवानां भूतिरिति विग्रहे । देवैश्वर्य्यम् ॥)

**देवभूयं**, क्ली, (देवस्य भावः । भू + "भुवो भावे ।"
३ । १ । १०७ । इति क्यप् ।) देवत्वम् । देव-
सायुज्यम् । इत्यमरः । २ । ७ । ५२ ॥

**देवमणिः**, पुं, (देवेषु मणिरिव ।) भर्गः । (देवो-
द्योतनशीलो मणिः ।) कौस्तुभः । अश्वरोमा-
वर्त्तः । इति मेदिनी । णे, ९७ ॥ (यथा,
शिशुपालवधे । ५ । ४ ।
"आवर्त्तिनः शुभफलप्रदशुक्तियुक्ताः
सम्पन्नदेवमणयो भृतरन्ध्रभागाः ।
अश्वाः प्यधुर्वसुमतीमतिरोचमाना-
स्तूर्णं पयोधय इवोर्म्मिभिरापतन्तः ॥")
महामेदा । इति राजनिर्घण्टः ॥

**देवमाता**, [ऋ] स्त्री, (देवानां माता ।) अदितिः ।
इति त्रिकाण्डशेषः ॥ (यथा, भागवते । ३ ।
१ । ३३ ।
चन्द्रः । ३ । ४८५ ॥ (यथा, मनुः । ४ ।
२१ ।
"ऋषियज्ञं देवयज्ञं भूतयज्ञञ्च सर्व्वदा ॥")

**देवयात्रा**, स्त्री, (देवानां यात्रा ।) देवगमनम् ।
तत्पर्य्यायः । देवद्रोणी २ । इति हारावली ।
१२९ ॥ देवोत्सवादि ॥ (यथा, कथासरित्-
सागरे । २५ । १२१ ।
"एकदा देवयात्रायां तत्र मल्लसमागमे ।
अगादेको महामल्लः ख्यातिमान् दक्षिणा-
पथात् ॥")

**देवयानं**, क्ली, (देवानां यानम् ।) देवविमानम् ।
देवरथः । इति शब्दार्थकल्पतरुः ॥ (त्रि, देव-
प्रापनीयम् । यथा, ऋग्वेदे । १ । १६२ । ४ ।
"यद्धविष्यमृतुशो देवयानं
त्रिर्मानुषा पर्य्यश्वं नयन्ति ॥"
देवप्रापकम् । यथा, तत्रैव । ७ । ७६ । २ ।
"प्र मे पन्था देवयाना अदृश्र-
न्नमर्द्धन्तो वसुभिरिष्कृतासः ॥")

**देवयानी**, स्त्री, शुक्राचार्य्यकन्या । सा ययातिराज-
पत्नी । इति श्रीभागवतम् ॥ (पुरा किल
बृहस्पतिपुत्त्रः कचो देवकार्य्यार्थं सञ्जीवन-
विद्यार्थी असुरगुरुमुपागमत् । देवयानीयं तं
युवानं मनोहरञ्चावलोक्य तेन सङ्गता भवितुमि-
येष । कचस्तु गुरुकन्यामेनां ज्ञात्वा पाणिमस्या
ग्रहीतुं न स्वीचकार । अस्मादेवासौ देवयानी
प्राप्तविद्यं तं "न ते विद्या सिद्धिमेषा गमिष्यति"
या + "मृगयादयश्च ।" उणां । १ । ३८
इति कुः ।)
धार्म्मिकः । (यथा, ऋग्वेदे । १ । १५४ । ५ ।
"तदस्य प्रियमभिपाथो अश्यां नरो यत्र देव-
यवो मदन्ति ॥"
"देवयवो देवं द्योतेनस्वभावं विष्णुमात्मन
इच्छन्तो यज्ञदानादिभिः प्राप्तुमिच्छन्तो नरः ।"
इति तद्भाष्ये सायनः ॥) लोकयात्रिकः । इति
मेदिनी । ये, ८६ ॥ देवे, पुं । इति शब्दरत्नावली ॥

**देवयोनिः**, पुं, स्त्री, देव एव योनिर्निदानभूतो यस्य
सः । तद्यथा, विद्याधराः १ अप्सरसः २ यक्षाः ३
राक्षसाः ४ गन्धर्व्वाः ५ किन्नराः ६ पिशाचाः
७ गुह्यकाः ८ सिद्धाः ९ भूतगणः १० । इत्य-
मरः । १ । १ । ११ ॥ (देवानां योनिः । देव-
स्थानम् । यथा, महाभारते । ३ । ११४ । २८ ।
"अन्यथा हि कुरुश्रेष्ठ ! देवयोनिरपांपतिः ।
कुशाग्रेणापि कौन्तेय ! न प्रष्टव्यो महोदधिः ॥")

**देवरः**, पुं, (दीव्यत्यनेनेति । दिव्यु क्रीडायाम् +
"अर्त्तिकमिभ्रमीति ।" उणां ३ । १३२ । इति
अरः ।) पत्युः कनिष्ठभ्राता । देओर इति
भाषा । ("देवरः कस्मात् द्वितीयो वर उच्यते ।"
इति निरुक्तेः । ३ । १५ ॥) तत्पर्य्यायः । देवा
२ । इत्यमरः । २ । ६ । ३२ ॥ देवृः ३ देवारः ४
देवानः ५ । इति जटाधरः ॥ तुरागावः ६
देवल्ली ७ । इति शब्दरत्नावली ॥ (यथा,
मनुः । ९ । ५९ ।

| | | |
|---|---|---|
| | इति शशाप । कचस्तु निरपराधोऽपि शापाहतः<br>क्रुद्धश्च "ऋषिपुत्रो न ते कश्चिज्जातु पाणिं<br>ग्रहीष्यति" इत्येनां शप्तवान् । अयमेवास्या<br>ब्राह्मणकन्याया अपि क्षत्त्रियपत्नीत्वे हेतुः । | "देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया ।<br>प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये ॥")<br>पत्युर्ज्येष्ठो भ्राता तु श्वशुरः । इति भरतः ॥ |

**देवरथः**, पुं, (देवानां रथः ।) देवानां विमानः ।
इति हलायुधः ॥ स च पुष्पकादिः ॥

**देवराजः**, पुं, (देवानां राजा । “राजाहःसखि-
भ्यष्टच् ।” ५ । ४ । ९१ । इति टच् ।)
इन्द्रः । इति
त्रिकाण्डशेषः ॥ (यथा, महाभारते । १ ।
८६ । ७ ।
“देवराजसमो ह्यासीत् ययातिः पृथिवीपतिः
॥”)
तस्य नामानि यथा, --
“इन्द्रः सुरपतिः शक्रो दितिजः पवनाग्रजः
।
सहस्राक्षो भगाङ्कश्च कश्यपाङ्गज एव च ॥
विडोजाश्च सुनासीरो मरुत्वान्
पाकशासनः ।
जयन्तजनकः श्रीमान् शचीशो दैत्यसूदनः
॥
वज्रहस्तः कामसखा गौतमीव्रतनाशनः ।
वृत्रहा वासवश्चैव दधीचिदेहभिक्षुकः ॥
जिष्णुश्च वामनभ्राता पुरुहूतः पुरन्दरः ।
दिवस्पतिः शतमखः सूत्रामा गोत्रजिद्विभुः
॥
लेखर्षभो बलारातिर्जम्भभेदी सुराश्रयः ।
संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः ॥
आखण्डलो हरिहयो नमुचिप्राणनाशनः ।
वृद्धश्रवा वृषश्चैव दैत्यदर्पनिसूदनः ॥
षट्चत्वारिंशन्नामानि पापघ्नानि
विनिश्चितम् ॥”
इति ब्रह्मवैवर्त्ते जन्मखण्डम् ॥

**देवरातः**, पुं, (रै + क्तः । देवेन श्रीकृष्णेन रातः
रक्षितः ।) परिक्षित् राजा । इति श्रीभाग-
वतम् ॥ सारसपक्षिविशेषः । इति शब्दार्थ-
कल्पतरुः ॥ (विश्वामित्रपुत्त्रः । यथा, हरि-
वंशे । २७ । ४७ ।
“विश्वामित्रस्य पुत्त्रास्तु देवरातादयः
स्मृताः ॥”
एतन्निरुक्तिर्यथा भागवते । ९ । १६ । ३२
।
“देवोपजीवजीवी च देवलश्च
प्रकीर्त्तितः ॥”
इति ब्रह्मवैवर्त्तपुराणम् ॥
“चिकित्सकान् देवलकान्
मांसविक्रयिणस्तथा ।
विपणेन च जीवन्तो वर्ज्याः
स्युर्हव्यकव्ययोः ॥”
इति मनुः । ३ । १५१ ॥
“देवलः प्रतिमापरिचारकः
वर्त्तनार्थत्वेनैतत्
कर्म्म कुर्व्वतोऽयं निषेधः न तु
धर्म्मार्थम् । देवको-
षोपजीवी च नाम्ना देवलोको भवेदिति
देवल-
वचनात् ।” इति तट्टीकायां कुल्लूकभट्टः
॥ * ॥
(दीव्यति आनन्देनेति । दिव +
“वृषादिभ्य-
श्चित् ।” उणां १ । १०८ । इति
कलच् ।)
धार्म्मिकः । इत्युणादिकोषः ॥
नारदमुनिः ।
इति त्रिकाण्डशेषः ॥ (रलयोरैक्यात् ।)
देवरः ।
इति शब्दरत्नावली ॥ धर्म्मशास्त्रवक्ता
मुनि-
विशेषः । इति भगवद्गीता ॥ स
असितमुनिपुत्त्रः
रम्भाशापेनाष्टावक्रो बभूव । इति
ब्रह्मवैवर्त्ते
श्रीकृष्णजन्मखण्डम् ॥ (अयन्तु
वेदव्यासस्य
शिष्यः । यथा, देवीभागवते । १ । २०
। ३ ।
“असितो देवलश्चैव वैशम्पायन एव च
।
जैमिनिश्च सुमन्तुश्च गताः सर्व्वे
तपोधनाः ॥”
“चित्राङ्गदं ततो राज्ये स्थापयामास
वीर्य्यवान् ।
स्वयं न कृतवान् राज्यं तस्माद्देवव्रतोऽभवत्
॥”)
देवानां व्रतञ्च ॥

**देवशेखरः**, पुं, (देवः क्रीडाप्रदः शेखरो यस्य ।)
दमनकः । इति राजनिर्घण्टः ॥ देवानां मस्त-
कञ्च ॥

**देवश्रुतः**, पुं, (देवेषु श्रुतः विख्यातः ।) ईश्वरः ।
शास्त्रम् । नारदः । इति शब्दार्थकल्पतरुः ॥
(शुकस्य पुत्त्रविशेषः । यथा, देवीभागवते ।
१ । १९ । ४१ ।
“स तस्याञ्जनयामास पुत्त्रांश्चतुर एव हि ।
कृष्णं गौरप्रभञ्चैव भूरिं देवश्रुतं तथा ॥”)

**देवश्रेणी**, स्त्री, (देवानां श्रेणीव ।) मूर्व्वा । इति
राजनिर्घण्टः ।

**देवसभा**, स्त्री, (देवानां सभा ।) देवानां समाजः ।
तत्पर्य्यायः । सुधर्म्मा २ । इत्यमरः । १ । १
।
५१ ॥ शुभा ३ । सुधर्म्मा [न्] ४ । इति
शब्द-
रत्नावली ॥ सुधर्म्मी ५ । इत्यमरटीकायां
भरतः ॥

**देवसभ्यः**, त्रि, (देवस्य क्रीडायाः सभा तस्यां
सीदतीति । यत् ।) क्रीडासभास्थः ।
तत्पर्य्यायः ।
सभिकः २ । इति त्रिकाण्डशेषः ॥ देवसामा-
जिकश्च ॥

**देवसर्षपः**, पुं, (देवप्रियः सर्षपः ।) वृक्षप्रभेदः ।
तत्पर्य्यायः । अश्वाक्षः २ वदरः ३
रक्तमूलकः
४ सुरसर्षपकः ५ सूक्ष्मदलः ६
निर्ज्जरसर्षपः ७
कुरराङ्घ्रिः ८ । अस्य गुणाः । कटुत्वम् ।
उष्ण-

"यो रातो देवयजने देवैर्गाधिषु तापसः ।
देवरात इति ख्यातः शुनःशेफस्तु भार्गवः
॥"
निमेर्ज्येष्ठः पुत्रः । यथा, रामायणे । १ ।
६६ । ८ ।
"देवरात इति ख्यातो निमेर्ज्येष्ठो महीपतिः
॥"
युधिष्ठिरस्य सभास्थक्षत्रियाणामन्यतमः ।
यथा,
महाभारते । २ । ४ । २६ ।
"चानूरो देवरातच्च भोजो भामरथश्च यः
॥")

**देवर्षिः**, पुं, (देव ऋषिश्च । देवानां ऋषिर्वा ।)

सुरर्षिः । तद्यथा । नारदः १ अत्रिः २
मरीचिः
३ भरद्वाजः ४ पुलस्त्यः ५ पुलहः ६ क्रतुः
७
भृगुः ८ वशिष्ठः ९ प्रचेताः १० ।
इत्यमरटीका-
सारसुन्दरी ॥ (यथा, महाभारते । १२ ।
२१० । २१ ।
"देवर्षिचरितं गार्ग्यः
कृष्णात्रेयश्चिकित्सितम् ॥"
तुम्बुरुभरतादिः । इति तट्टीकायां भरतः ॥
कणादादिः । इति त्रिकाण्डशेषः ॥
(महादेवः ।
यथा, महाभारते । १३ । १७ । १४४ ।
"देवादिदेवो देवर्षिर्देवासुरवरप्रदः ॥")

**देवलः**, पुं, (देवं लाति गृह्णाति निजजीविकार्थ-

मिति । देव + ला आदाने + "आतोऽनुपेति
।"
३ । २ । ३ । इति कः ।) देवाजीवः ।
जीविकार्थं
यो देवान् गृहीतवान् । इत्यमरः । २ । १०
। ११ ॥
पूजारि वामन इति भाषा ॥ देवोपजीवजीवी
।
यथा, --
प्रत्यूषस्य ऋषेः पुत्रः । यथा,
विष्णुपुराणे । १ ।
१५ । ११५ ।
"प्रत्यूषस्य विदुः पुत्रं ऋषिं नाम्नाथ
देवलम् ॥")

**देवलकः**, पुं, (देवल एव । स्वार्थे कन् ।) देवलः
।

इति जटाधरः ॥ (यथा, महाभारते ।
१२ । ७६ । ६ ।
"आह्वायका देवलका
नक्षत्रग्रामयाजकाः ।
एते ब्राह्मणचाण्डाला
महापथिकपञ्चमाः ॥")

**देवलता**, स्त्री, (देवप्रिया लता ।) नवमल्लिका ।

इति शब्दचन्द्रिका ॥

**देवलाङ्गुलिका**, स्त्री, (देवयति परिदेवयत्यनेनेति
।

देव + णिच् + घञ् । देवः लाङ्गुलिकः
शूको
यस्याः ।) वृश्चिकालिः । इति
राजनिर्घण्टः ॥

**देवलोकः**, पुं, (देवानां लोकः ।) स्वर्गः । इति

त्रिकाण्डशेषः ॥ (यथा, देवीभागवते ।
५ । ३ । ४६ ।
"तस्मात् सज्जा भवन्त्वद्य
देवलोकजयाय वै ॥")
अपि च । मत्स्यपुराणे ।
"भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोऽथ
महर्जनः ।
तपः सत्यञ्च सप्तैते देवलोकाः
प्रकीर्त्तिताः ॥")

**देववक्त्रं**, क्ली, (देवानां वक्त्रम् । तद्द्वारेणैव

यज्ञादौ हव्यादिभोजनात् तथात्वम् ।)
अग्निः ।
इति शब्दचन्द्रिका ॥ देवानां मुखञ्च ॥

**देववर्द्धकिः**, पुं, (देवानां वर्द्धकिस्त्वष्टा ।) विश्व-

कर्म्मा । इति हेमचन्द्रः । २ । ९६ ॥

**देववल्लभः**, पुं, (देवानां वल्लभः प्रियः ।) पुन्नाग-

त्वम् । कफजन्तुदोषरक्तामयनाशित्वम् ।
रुच्य-
त्वञ्च । इति राजनिर्घण्टः ॥

**देवसहा**, स्त्री, (सहते या । सह + अच् + टाप् ।

देवस्य सहा ।) दण्डोत्पलौषधिः ।
भिक्षासूत्रम् ।
इति विश्वः ॥

**देवसात्**, व्य, (देवाय देयं देवाधीनं वा करोतीति ।

देव + सात् ।) सकलजना देवभावाश्रयाः ।
देवाधीनम् । देवदेयम् । यथा, --
"साकल्याधीनत्वद्व्यार्थेषु असस्संपूर्ब्बपदकृभू-
धातुषु परेषु चसात्प्रत्ययो भवति । देयेऽर्थे
पूर्ब्बोक्तधातुषु परेषु त्राच्प्रत्ययोऽपि । यथा
देवाय देयं करोति देवत्राकरोति ।" इति
मुग्धबोधव्याकरणम् ॥ (यथा, महाभारते ।
७ । १८७ । ५८ ।
"जित्वा वा बहुभिर्यज्ञैर्यजध्वं भूरिदक्षिणः ।
हता वा देवसाद्भूत्वा लोकान् प्राप्यथ पुष्क-
लान् ॥")

**देवसायुज्यं**, क्ली, (देवेन सायुज्यं संमिलनम् ।)

देवत्वम् । इत्यमरः । २ । ७ । ५२ ॥

**देवसृष्टा**, स्त्री, (देवाय क्रीडार्थं सृष्टा ।) मद्यम् ।

इति हेमचन्द्रः । ३ । ५६७ ॥

**देवसेना**, स्त्री, इन्द्रकन्या । इति मेदिनी । न,

१८७ ॥ (प्रजापतेः कन्या । इति महाभारतम्
।
३ । २२३ । १ ॥) सा षष्ठी । (यथा,
ब्रह्मवैवर्त्त-
पुराणे प्रकृतिखण्डे । १ । ७३ -- ७४ ।

| | | |
|---|---|---|
| | वृक्षः । इत्यमरः । २ । ४ । २५ ॥<br>**देववृक्षः**, पुं, (देवप्रियो वृक्षः ।) सप्तपर्णवृक्षः ।<br>मन्दारवृक्षः । गुग्गुलुः । इति मेदिनी । षे,<br>५२ ॥ अवशिष्टा देवतरुशब्दे पुं द्रष्टव्याः ॥<br>**देवव्रतः**, पुं, (देवं अपरिग्रहादिरूपत्वात्द्योतन-<br>शीलं व्रतं यस्य । यद्वा, देवस्येव व्रतं स्थिर-<br>प्रतिज्ञा यस्य ।) भीष्मः । इति त्रिकाण्डशेषः ॥<br>(यथा, देवीभागवते । १ । २० । १९ । | |

"प्रधानांशस्वरूपा या देवसेना च नारद ! ।
मातृकासु पूज्यतमा सा च षष्ठी प्रकीर्त्तिता ॥
शिशूनां प्रतिविश्वेषु प्रतिपालनकारिणी ।
तपस्विनी विष्णुभक्ता कार्त्तिकेयस्य कामिनी ॥"
इयं हि यथा यथा कार्त्तिकेयस्य पत्नी जाता
तद्विवरणं महाभारते । ३ । २२३ अध्यायमारभ्य
विस्तरशो द्रष्टव्यम् ॥) देवानां सेना । इति हेम-
चन्द्रः ॥ (यथा, महाभारते । ३ । २२२ । ५ ।
"देवसेनां दानवैर्यो भग्नां दृष्ट्वा महाबलः ।
पालयेद्वीर्य्यमाश्रित्य स ज्ञेयः पुरुषो मया ॥")

**देवसेनापतिः**, पुं, (देवसेनायाः पतिः ।) कार्त्ति-
केयः । इति शब्दरत्नावली ॥

**देवस्वं**, क्ली, (देवस्य स्वं धनम् ।) देवस्वत्तास्पदि-
धनम् । यथा, --
"ब्रह्मस्वञ्च गुरोर्द्रव्यं देवस्वञ्च हरेत्तु यः ।
कन्यां ददाति शुल्केन स प्रेतो जायते मृतः ॥"
इति महाभारते पञ्चप्रेतोपाख्यानम् ॥
(यथा च मनुः । ११ । २६ ।
"देवस्वं ब्राह्मणस्वं वा लोभेनोपहिनस्ति यः ।
स पापात्मा परे लोके गृध्रोच्छिष्टेन जीवति ॥"
यज्ञशीलधनम् । यथा, मनुः । ११ । २० ।
"यदा नन्दी शूलपाणिर्गोधनेन पुरस्कृतः ।
स्थितवान् तद्दिनादेव क्षेत्रं हरिहरात्मकम् ॥
देवानामटनाच्चैव देवाट इतिसंज्ञितम् ॥"
इति वराहपुराणम् ॥

**देवात्मा**, [न्] पुं, (देव आत्मा अधिष्ठातृदेवता
यस्य ।) अश्वत्थः । इति शब्दचन्द्रिका ॥

**देवानाम्प्रियः**, पुं स्त्री, (देवानां प्रियः । "देवानां
प्रिय इति च मूर्खे ।" ६ । ३ । २१ । इत्यस्येति
वर्त्तिकोक्त्या षष्ठ्या अलुक् । छागस्य पशुत्वादेव
मूर्खत्वं बोध्यम् ।) छागः । इति त्रिकाण्डशेषः ॥
त्रि, जाल्मः । इति हेमचन्द्रः । ३ । १७ ॥

**देवापिः**, पुं, प्रतीपराज्ञः पुत्त्रः । स सुमेरुसमीपे
कलापग्रामे योगी भूत्वा आस्ते स कलौ लुप्तं
चन्द्रवंशं पुनः सत्ययुगे भावयिष्यति । इति
श्रीभागवतम् ॥ स च कुष्ठी प्रजाभिरपध्यातः ।
इति मत्स्यपुराणम् ॥ (यथा, महाभारते । १ ।
९५ । ४४--४५ ।
"प्रतिश्रवसः प्रतीपः प्रतीपः खलु शैव्यामुपयेमे
सुनन्दां नाम तस्यां पुत्त्रानुत्पादयामास देवापिं
शान्तनुं बाह्लीकञ्चेति । देवापिः खलु बाल एवा-
रण्यं विवेश शान्तनुस्तु महीपालो बभूव ॥"
"क्षेत्रं वाटी भग्नदेवालयो दूतीगृहं वनम् ॥")

**देवाला**, स्त्री, (देवानपि आलाति स्वायत्तीकरो-
तीति । आ + ला + कः ।) रागिणीविशेषः ।
इति हलायुधः ॥

**देवावासः**, पुं, (देवानां आवासो वासस्थानम् ।)
अश्वत्थवृक्षः । इति त्रिकाण्डशेषः ॥

**देवाश्वः**, पुं, (देवस्य इन्द्रस्य अश्वः ।) इन्द्रघोटकः ।
उच्चैःश्रवाः । इति हलायुधः ॥

**देविका**, स्त्री, (दीव्यतीति । दिव + ण्वुल् । टापि
अत इत्वम् ।) नदीविशेषः । इति शब्दरत्ना-
वली ॥ तस्याः परिमाणं यथा, --
"अर्द्धयोजनविस्तारां पञ्चयोजनमायताम् ।
एतावद्देविकामार्द्धेर्दैवर्षिपरिसेविताम् ॥"
इति पाद्मे भूमिखण्डम् ॥
(इयं हिमवत्पादनिःसृता । इति मत्स्यपुरा-
णम् । ११३ । २१ ॥ अनया सह सरयूः सङ्गता ।
इति कालिकापुराणम् । २३ अः ॥ इयन्तु
तीर्थस्थानानामन्यतमा । अत्र नरः स्नात्वा
महादेवं समभ्यर्च्च्य यथाशक्ति चरुं निवेद्य च
सर्व्वकामसमृद्धस्य यज्ञस्य फलं लभते । इति
महाभारतम् । ३ । ८२ । ९९ ॥ इयं हि पीठ-
स्थानानाम् अन्यतमा । अत्र भगवती नन्दिनी-
रूपेण विराजते । यथा, देवीभागवते । ७ ।
३० । ६९ ।
"शिवकुण्डे शुभानन्दा नन्दिनी देविकातटे ॥"
युधिष्ठिरस्य पत्नीविशेषः । यथा, महाभारते ।
१ । ९५ । ७६ ।
"युधिष्ठिरस्तु गोवासनस्य शैव्यस्य देविकां नाम
कन्यां स्वयंवरां लेभे । तस्यां पुत्त्रं जनयामास
यौधेयं नाम ॥") धुस्तूरः । इति भावप्रकाशः ॥
देवसम्बन्धिनि, त्रि ॥

**देविलः**, त्रि, (दीव्यति आनन्देनेति । दिव +
"गुपादिभ्यः कित् ।" उणा १ । ५७ । इति
इलच् ।) धार्म्मिकः । इत्युणादिकोषः ॥

**देवी**, स्त्री, (दीव्यतीति । दिव + अच् ततो ङीप् ।)

"यद्धनं यज्ञशीलानां देवस्वं तद्विदुर्बुधाः ॥")

**देवहूः**, पुं, (ह्वे + भावे क्विप् । देवानां हूराह्वान-

मनेनेति ।) वामकर्णः । यथा,
"आपणो व्यवहारोऽत्र चित्रमन्धो बहूदनम् ।
पितृहूर्द्दक्षिणः कर्ण उत्तरो देवहूः स्मृतः ॥"
इति श्रीभागवते । ४ । २९ । १२ ॥
(त्रि, देवानाह्वयतीति । ह्वे + कर्त्तरि क्विप् ।
देवानां आह्वाता । यथा, वाजसनेयसंहि-
तायाम् । १७ । ६२ ।
"देवहूर्यज्ञ आ च वक्षत्सुम्नहूर्यज्ञ आ च वक्षत् ॥")

**देवा**, [ऋ] पुं, (दीव्यत्यनेनेति । दिव + "दिवेरृः ।"

उणां २ । १०० । इति ऋः ।) देवरः । इत्य-
मरः । २ । ६ । ३२ ॥ (यथा, ऋग्वेदे । १० ।
८५ । ४६ ।
"ननान्दरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु ॥")
रण्डापतिः । इति संक्षिप्तसारे उणादिवृत्तिः ॥

**देवा**, स्त्री, (दिव्यते ऽनया । दिव + घञ् । तत-

ष्टाप् ।) पद्मचारिणी । अशनपर्णी । इति
शब्दचन्द्रिका ॥ (मूर्व्वा । अस्याः पर्य्याया यथा,
वैद्यकरत्नमालायाम् ।
"तेजनी पिलुनी देवा तिक्तवल्ली पृथक्त्वचा ।
धनुःश्रेणी मधुरसा मूर्व्वा निर्द्दहनीति च ॥")

**देवाजीवः**, त्रि, (देवेन देवप्रतिमासेवनेन

आजीवतीति । आ + जीव + अच् ।) देवलः ।
वैदिकमते तु अयं ऋष्टिषेणस्य पुत्त्रः । यथा,
निरुक्ते । २ । १० ।
"देवापिश्चार्ष्टिषेणः शन्तनुश्च कौरव्यौ भ्रातरौ
बभूवतुः । स शन्तनुः कनीयानभिषेचयाञ्चक्रे
देवापिस्तपः प्रतिपेदे । ततः शन्तनो राज्ये
द्वादशं वर्षाणि देवो न ववर्ष । तमूचुः ब्राह्मणा
अधर्म्मस्त्वया चरितो ज्येष्ठं भ्रातरमन्तरित्याभि-
षेचितं तस्मात् ते देवो न वर्षतीति । स शन्तनु-
र्देवापिं शिशिक्ष राज्येन । तमुवाच देवापिः
पुरोहितस्तेऽसानि याजयानि च त्वेति । तस्यै
तद्वर्षकामसूक्तम् ॥" तथा च ऋग्वेदे । १० ।
९८ । ५ ।
"आर्ष्टिषेणो होत्रमृषिर्निषीदन् देवापिर्देव-
सुमतिं चिकित्वान् ॥")

**देवाभीष्टा**, स्त्री, (देवानामभीष्टा प्रिया ।)

ताम्बूली । इति शब्दचन्द्रिका ॥

**देवायतनं**, क्ली, (देवानामायतनं गृहम् ।) देवा-

लयः । यथा, कूर्म्मपुराणे ।
"न देवायतनं गच्छेत् कदाचिद्वाप्रदक्षिणम् ।
न पीडयेद्वा वस्त्राणि न देवायतनेष्वपि ॥")

**देवायुधं**, क्ली, (देवस्य इन्द्रस्य आयुधम् ।) शक्र-

धनुः । इति हेमचन्द्रः । २ । ९३ ॥
देवानामस्त्रञ्च ॥

**देवार्हं**, क्ली, (देवमर्हतीति । अर्ह + अण् ।)

सुरपर्णम् । इति राजनिर्घण्टः ॥

**देवार्हा**, स्त्री, (देवार्ह + टाप् ।) सहदेवी लता ।
दुर्गा । इति धरणी ॥ (यथा, मार्कण्डेये । ८४ । २ ।
"देव्या यया ततमिदं जगदात्मशक्त्या
निःशेषदेवगणशक्तिसमूहमूर्त्त्या ॥")
नाट्योक्तौ कृताभिषेका राजपत्नी । इत्यमरः ।
१ । ७ । १३ ॥ मूर्व्वा । (यथा, भावप्रकाशे । १ । १ ।
"मूर्व्वा मधुरसा देवी मोरटा तेजनी स्रुवा ॥")
पृक्का । इति मेदिनी । वे, १२ ॥ (देवानां पत्नी ।
ङीष् ।) सामान्यदेवपत्नी । यथा, देवीनां
दक्षिणायने इति स्मृतिः ॥ ब्राह्मणस्त्रीनामोप-
पदम् । यथा, देव्यन्ता हि स्त्रियो मताः । इत्यु-
द्वाहतत्त्वम् ॥ अपि च, कर्म्मविपाके ।
"देव्यन्ताश्च स्त्रियः सर्व्वा दास्यन्ताः शूद्र-
योनयः ॥"
आदित्यभक्ता । लिङ्गिनी । बन्ध्याकर्कोटकी ।
शालिपर्णी । महाद्रोणी । पाठा । नागरसुस्ता ।
मृगेर्व्वारुः । हरीतकी । अतसी । श्यामानाम-
पक्षिजातिः । इति राजनिर्घण्टः ॥ (उपनिष-

इत्यमरः । २ । १० । ११ ॥

**देवजीवी**, [न्] त्रि, (देवेन आजीवतीति । आ + जीव + णिनिः ।) देवलः । इत्यमरटीकायां रमानाथः ॥

**देवाटः**, पुं, (अट गतौ + भावे घञ् । देवानां आटो गमनं यत्र ।) हरिहरक्षेत्रम् । यथा,

इति राजनिर्घण्टः ॥

**देवालयः**, पुं, (देवानामालय आवासः ।) स्वर्गः । (यथा, देवीभागवते । ५ । ४ । ४ ।
“त्यज देवालयं शक्र ! यथेष्टं व्रज
वासव ! ॥”)
देवगृहम् । इति शब्दार्थकल्पतरुः ॥
(यथा,
साहित्यदर्पणे । ३ । ८६ ।

द्विशेषः । स तु अथर्व्ववेदान्तर्गतः । यथा, मुक्तिकोपनिषदि ।
"त्रिपुरातापनं देवी त्रिपुराकटभावना ॥")

**देवीकोटः**, पुं, (देव्याः कोटो दुर्गमिव ।) बाण-
पुरम् । इति त्रिकाण्डशेषः ॥

**देवेज्यः**, पुं, (देवानामिज्यः पूज्यः ।) बृहस्पतिः ।
इति शब्दरत्नावली ॥

**देवेष्टः**, पुं, (देवानामिष्टः प्रियः ।) महामेदा ।
गुग्गुलुः । इति राजनिर्घण्टः ॥
देववाञ्छिते, त्रि ॥

**देवेष्टा**, स्त्री, (देवानामिष्टा ।) वनबीजपूरकः ।
इति राजनिर्घण्टः ॥

**देवोद्यानं**, क्ली, (देवानां उद्यानं वनम् ।) देवानां
वनम् । तद्यथा । वैभ्राजम् । मिश्रकम् । शिध्र-
कारणम् । चैत्ररथम् । इति त्रिकाण्डशेषः ॥

**देशः**, पुं, (दिश्यते निर्द्दिश्यते इति । दिश
निर्द्देशे + कर्म्मणि घञ् ।)
भूगोलभागविशेषः ।
इति सिद्धान्तमञ्जरी ॥ जनपदे
जनपदसमुदाये
जनपदैकदेशे सजलनिर्जलस्थानमात्रे च । इत्य-
मरटीकायां भरतः ॥ स त्रिविधः ।
जाङ्गलः
अनूपः साधारणश्च । तत्पर्य्यायः ।
जनपदः १
नीवृत् २ विषयः ३ उपवर्त्तनम् ४ । इति राज-
निर्घण्टः ॥ प्रदेशः ५ राष्ट्रम् ६ । इति शब्द-
रत्नावली ॥ * ॥ अथ देशे वर्णनीयानि ।
रत्नम्

शाल्वा मागधगोनर्द्दाप्राच्या जनपदाः स्मृताः ॥"
अथ दक्षिणापथदेशा यथा, --
"तथापरे जनपदा दक्षिणापथवासिनः ।
पाण्ड्याश्च केरलाश्चैव चोलाः
कुल्यास्तथैव च ॥
सेतुका मुख्यकाश्चैव कुपथाचारवासिकाः ।
नवराष्ट्रा माहिषका कलिङ्गाश्चैव सर्व्वशः ॥
कावेराश्च सहैषीकैराटव्याः शवरास्तथा ।
पुलिङ्गा बिन्ध्यमूषीका वैदर्भा दण्डकैः सह ॥
कुलीयाश्च शिरालाश्च रूपसास्तापसैः सह ।
तथा तैत्तिरकाश्चैव सर्व्वे कारस्करास्तथा ॥
नासिकाद्याश्च ये चान्ये ये चैवान्तरनर्म्मदाः ।
भानुकच्छाः समाहेयाः सह सारस्वतैस्तथा ॥
कच्छीयाश्च सुराष्ट्राश्च आनर्त्ताश्चार्व्वुदैः सह ।
इत्येते अपरान्ताश्च शृणु ये बिन्ध्यवासिनः ॥"
अथ बिन्ध्यवासिदेशा यथा, --
"मालवाश्च करूषाश्च मेकलाश्चोत्कलैः सह ।
उत्तमासा दशार्णाश्च भोजाः किष्किन्धिकैः सह ॥
तोषलाः कोशलाश्चैव त्रैपुरा वेदिकास्तथा ।
तुमुरास्तुम्बुराश्चैव पटुमान्निषधैः सह ॥
अनूपास्तुण्डिकेराश्च वीतिहोत्रा अवन्तयः ॥
एते जनपदाः ख्याता बिन्ध्यपृष्ठनिवासिनः ॥"
पर्व्वताश्रयिदेशा यथा, --
"अतो देशान् प्रवक्ष्यामि पर्व्वताश्रयिणश्च ये ।
निद्दर्व्वारा हंसवर्णाश्च कुपथा अपथाः खशाः ॥

तावदन्ध्राभिधो देशः सौराष्ट्रं शृणु सादरम् ॥
कोङ्कणात् पश्चिमं तीर्थं
समुद्रप्रान्तगोचरम् ।
हिङ्गुलाजान्तको देवि ! दशयोजनदेशतः ॥
सौराष्ट्रदेशो देवेशि ! तस्मात्तु
गुर्ज्जराभिधः ।
श्रीशैलन्तु समारभ्य
चोलेशान्मध्यभागतः ॥
तैलङ्गदेशो देवेशि ! ध्यानाध्ययनतत्परः ।
सुराम्बिकां समारभ्य मलयाद्र्यन्तगं
शिवे ! ॥
मलयालाभिधो देशो मन्त्रसिद्धिप्रवर्त्तकः ।
रामनाथं समारभ्य श्रीरङ्गान्तं विलेश्वरि ! ॥
कर्णाटदेशो देवेशि ! साम्राज्यभोगदायकः ।
ताम्रपर्णीं समासाद्य
शैलार्द्धशिखरोर्द्ध्वतः ॥
अवन्तीसंज्ञको देशः कालिका तत्र
तिष्ठति ।
भद्रकालीमहापूर्ब्बे रामदुर्गाच्च पश्चिमे ।
श्रीविदर्भाभिधो देशो वैदर्भी तत्र तिष्ठति ॥
गुर्ज्जरात् पूर्ब्बभागे तु द्वारकातो हि
दक्षिणे ।
मरुदेशो महेशानि ! उष्ट्रोत्पत्तिपरायणः ॥
श्रीकोङ्कणादधोभागे तापीतः पश्चिमे परे ।
आभीरदेशो देवेशि ! बिन्ध्यशैले
व्यवस्थितः ॥
अवन्तीतः पूर्ब्बभागे गोदावर्य्यास्तथोत्तरे ।
मालवाख्यो महादेशो धनधान्यपरायणः ॥
द्रविडतैलङ्गयोर्म्मध्ये चोलदेशः
प्रकीर्त्तितः ।

१ खनिः २ द्रव्यम् ३ पण्यम् ४ धान्यम्
५
करोद्भवः ६ दुर्गग्रामः ७ जनाधिक्यम् ८
नदी-
मातृकतादि ॥ * ॥ अथ ग्रामे वर्णनीयानि
।
धान्यम् १ लता २ वृक्षः ३ सरः ४
पशुपुष्टिः ५
क्षेत्रम् ६ अरघट्टः ७ केदारः ८
ग्रामेयीसुखम्
९ विभ्रमः १० । इति कविकल्पलता ॥ *
॥
अथ मध्यदेशीयजनपदा यथा, --
"तास्विमे कुरुपाञ्चालाः शाल्वाश्चैव
सजाङ्गलाः ।
शूरसेना भद्रकारा बोधकाः सपटच्चराः ॥
मत्स्याः किराताः कुल्याश्च कुन्तयः
कान्ति-
कोशलाः ।
आवन्ताश्च भुलिङ्गाश्च
लोकाश्चैवान्धकैः सह ॥
मध्यदेश्या जनपदाः प्रायशः
परिकीर्त्तिताः ॥"
अथ उदीच्या देशा यथा, --
"बाह्लीका वाटधानाश्च आभीराः
कालतोयकाः ।
परन्ध्राश्चैव शूद्राश्च
पह्लवाश्चात्मखण्डिकाः ॥
गान्धारा जवनाश्चैव सिन्धुसौवीरमद्रकाः
।
शका द्रुह्याः पुलिन्दाश्च पारदा
हारमूर्त्तिकाः ॥
रामठाः कण्ठकाराश्च केकया
देशमानिकाः ।
क्षत्त्रियोपनिवेशाश्च वैश्यशूद्रकुलानि च ॥
आत्रेयोऽथ भरद्वाजः प्रस्थलाः
सदशेरकाः ।
लम्पकास्तलगानाश्च सैनिकाः सह
साङ्गजैः ॥
एते देशा उदीच्यास्तु
प्राच्यान्देशान्निबोधत ॥"

कुथप्रावरणाश्चैव ऊर्णा दर्भाः समूहकाः ।
त्रिगर्त्ता मण्डलाश्चैव किराताश्चामरैः सह
॥"
इति मत्स्यपुराणम् ॥
अपि च ।
"देशव्यवस्था देवेशि ! कथ्यते शृणु तत्परा
।
वैद्यनाथं समारभ्य भुवनेशान्तगं शिवे ! ॥
तावदङ्गाभिधो देशो यात्रायां न हि दुष्यति ।
रत्नाकरं समारभ्य ब्रह्मपुत्त्रान्तगं शिवे ! ।
वङ्गदेशो मया प्रोक्तः सर्व्वसिद्धिप्रदर्शकः ॥
जगन्नाथात् पूर्ब्बभागात् कृष्णतीरान्तगं शिवे
।
कलिङ्गदेशः संप्रोक्तो वाममार्गपरायणः ॥
कलिङ्गदेशमारभ्य पञ्चाष्टयोजनं शिवे ! ।
दक्षिणस्यां महेशानि ! कालिङ्गः
परिकीर्त्तितः ॥
सुब्रह्मण्यं समारभ्य यावद्देवो जनार्द्दनः ।
तावत् केरलदेशः स्यात् तन्मध्ये
सिद्धकेरलः ॥
रामेश्वरात् व्यङ्कटेशात् हंसकेरलनामकः ।
अनन्तशैलमारभ्य यावत् स्यादव्ययं परे ॥
तावत् सर्व्वेशनामा तु केरलः परिकीर्त्तितः ।
शारदामठमारभ्य कुङ्कुमाद्रितटान्तकम् ॥
तावत् काश्मीरदेशः स्यात् पञ्चाशद्योजना-
न्तकम् ॥
कालेश्वरं श्वेतगिरिं त्रैपुरं नीलपर्व्वतम् ॥
कामरूपाभिधो देशो गणेशगिरिमूर्द्धनि ।
त्रिपञ्चकं समारभ्य मध्ये चोज्जयिनी शिवे !
॥
मार्ज्जारतीर्थं राजेन्द्र ! कोलापुरनिवासिनी
।
तावद्देशो महाराष्ट्रः कर्णाटस्वामिगोचरः ॥
जगन्नाथादूर्द्ध्वभागमर्व्वाक्
श्रीभ्रमरात्मिकात् ।

लम्बकर्णाश्च ते प्रोक्तास्तद्भेदो वान्तरे
भवेत् ॥
कुरुक्षेत्रात् पश्चिमे तु तथा चोत्तरभागतः
।
इन्द्रप्रस्थान्महेशानि ! दशयोजनकद्वये ॥
पाञ्चालदेशो देवेशि ! सौन्दर्य्यगर्व्वभूषितः
।
पाञ्चालदेशमारभ्य म्लेच्छाद्दक्षिणपूर्ब्बतः
॥
काम्बोजदेशो देवेशि ! वाजिराशिपरायणः
।
वैदर्भदेशादूर्द्ध्वञ्च इन्द्रप्रस्थाच्च दक्षिणे
॥
मरुदेशात् पूर्ब्बभागे वैराटः परिकीर्त्तितः ।
काम्बोजाद्दक्षभागे तु इन्द्रप्रस्थाच्च
पश्चिमे ॥
पाण्ड्यदेशो महेशानि ! महाशूरत्वकारकः
।
गण्डकीतीरमारभ्य चम्पारण्यान्तकं
शिवे ! ॥
विदेहभूः समाख्याता तैरभुक्ताभिधः स तु
।
काम्बोजदेशमारभ्य महाम्लेच्छात्तु पूर्ब्बके
।
बाह्लीकदेशो देवेशि ! अश्वोत्पत्तिपरायणः
॥
तप्तकुण्डं समारभ्य रामक्षेत्रान्तकं शिवे !
।
किरातदेशो देवेशि ! बिन्ध्यशैलेऽवतिष्ठते
॥
करतोयां समारभ्य हिङ्गुलाजान्तकं
शिवे ! ।
मुल्तानदेशो देवेशि ! महाम्लेच्छपरायणः
॥
हिङ्गुपीठं समारभ्य मक्केशान्तं महेश्वरि !
।
खुरासानाभिधो देशो म्लेच्छमार्गपरायणः
॥
तन्मध्ये चोत्तरे देवि ! ऐराकः
परिकीर्त्तितः ।

<table>
<tr>
<td>अथ प्राच्या देशा यथा, --<br>“अङ्गवङ्गा मद्‌गुरका अन्तर्गिरिबहिर्गिराः ।<br>ततः प्रवङ्गा मातङ्गा मलया मलवर्त्तकाः ॥<br>सुह्मोत्तराः प्रविजया भार्गवाङ्गेयमालवाः ।<br>प्राग्ज्योतिषाश्च पुण्ड्राश्च<br>विदेहास्ताम्रलि-<br>प्तकाः ॥</td>
<td></td>
<td>काश्मीरन्तु समारभ्य कामरूपात्तु पश्चिमे<br>।<br>भोटान्तदेशो देवेशि ! मानसेशाच्च<br>दक्षिणे ॥<br>मानसेशाद्दक्षपूर्ब्बे चीनदेशः प्रकीर्त्तितः ।<br>कैलानीरं समारभ्य सरयूं परितः परे ॥<br>अमरगां महेशानि महाचीनाभिधो भवेत् ।<br>जटेश्वरं समारभ्य योगिन्यन्तं महेश्वरि !<br>॥<br>नेपालदेशो देवेशि ! शिलहट्टं शृणु प्रिये !<br>।<br>गणेश्वरं समारभ्य महोदध्यन्तगं शिवे ! ॥<br>शिलहट्टाभिधो देशः पर्व्वते तिष्ठति प्रिये !<br>।<br>वङ्गदेशं समारभ्य भुवनेशान्तगं शिवे ! ॥</td>
</tr>
</table>

गौडदेशः समाख्यातः
सर्व्वविद्याविशारदः ।
गोकर्णेशात् पूर्ब्बभागे आर्य्यावर्त्ताचु
चोत्तरे ॥
तैरभुक्तात् पश्चिमे तु महापूर्य्याश्च
सर्व्वतः ।
महाकोशलदेशश्च सूर्य्यवंशपरायणः
॥
व्यासेश्वरं समारभ्य तप्तकुण्डान्तकं
शिवे ।
मगधाख्यो महादेशो यात्रायां न हि
दुष्यति ॥
दक्षोत्तरक्रमेणैव क्रमात् कीकटमागधौ
।
चरणाद्रिं समारभ्य गृध्रकूटान्तकं
शिवे ! ॥
तावत् कीकटदेशः स्यात्तदन्तर्मागधो
भवेत् ।
जगन्नाथप्रान्तदेशश्चोत्कलः
परिकीर्त्तितः ॥
कामगिरिं समारभ्य द्वारकान्तं
महेश्वरि ! ।
श्रीकुन्तलाभिधो देशो हूनं शृणु
महेश्वरि ! ॥
कामगिरेर्द्दक्षभागे मरुदेशात्तथोत्तरे ।
हूनदेशः समाख्यातः शूरास्तत्र
रमन्ति च ॥
अथाभ्यङ्गं समारभ्य कोटिदेशस्य
मध्यगे ।
समुद्रप्रान्तदेशो हि कोङ्कण
परिकीर्त्तितः ॥
ब्रह्मपुत्रात् कामरूपात् मध्यभागे तु
कैकयः ।
मागधाद्दक्षभागे तु बिन्ध्यात्
पश्चिमतः शिवे ! ॥
सौरसेनाभिधो देशः
सूर्य्यवंशप्रकाशकः ।
हस्तिनापुरमारभ्य कुरुक्षेत्राच्च
दक्षिणे ॥

**देशकारी**, स्त्री, रागिणीविशेषः । हनूमन्मते
मेघरागस्य भार्य्या । अस्या जातिः
संपूर्णः
गृहं षड्जस्वरः गानसमयः वर्षर्त्तौ
निशान्तः ।
अस्याः स्वरूपं सुन्दरस्त्री
तिलयुक्तानना कमल-
पत्राक्षी दाडिमस्तनी गौराङ्गी विम्बोष्ठी
मुक्ताहारकण्ठी कर्परचन्दनलिप्ताङ्गी
साल-
ङ्कारा नायकेन सहोपविश्य
हावभावकटाक्षान्
कुर्व्वती । सङ्गीतदर्पणमते अस्या
गानसमयः
प्रातर्वैराटीरागिण्या सह । अस्याः
स्वरूपं
नायकेन सह केलिकौतुकरता
श्यामकेशभारा
जितशरत्पूर्णचन्द्रानना
अनङ्गराजिताङ्गी
काञ्चनकलसद्युतिहारिकुचा
कमलनयना मृदु-
भाषिणी । इति सङ्गीतशास्त्रम् ॥

**देशरूपं**, क्ली, (दिश्यते इति । दिश् + कर्म्मणि
घञ् । देशस्य
हेतुयुक्तिदेशकालपात्रादिभिर्दि-
श्यमानस्य रूपम् । यद्वा, देशस्य
देशानुरूपा-
चारस्य रूपम् ।) उचितम् । इत्यमरः ।
२ । ८ ।
२४ ॥ (यथा, महाभारते । १२ ।
१०७ । ५ ।
“क्षीणग्रहणवृत्तिश्च यथा धर्म्मं
प्रकीर्त्तितम् ।
लघुना देशरूपेण ग्रन्थयोगेन भारत !
॥”)

**देशाखी**, स्त्री, रागिणीविशेषः । हनूमन्मते
देशनामनदीभेदान्निकटोऽपि भवेद्यदि ।
तत्तु देशान्तरं प्रोक्तं स्वयमेव स्वयम्भुवा ॥
दशरात्रेण या वार्त्ता यत्र न श्रूयतेऽथवा ॥
बृहस्पतिः ।
देशान्तरं वदन्त्येके षष्टियोजनमायतम् ।
चत्वारिंशद्वदन्त्येके त्रिंशदेके तथैव च ॥”
इत्युद्वाहतत्त्वम् ॥
“मुनिद्वयवचनोक्तवागादियोजनादिभेदसामञ्ज-
स्यार्थम् एवं व्याख्यायते त्रितयवैशिष्ट्ये त्रिंशद्-
योजनाभ्यन्तरे द्वितयवैशिष्ट्ये तदुपरि एक-
वैशिष्ट्ये चत्वारिंशद्योजनोपरि वाणीगिरि-
महानद्यन्तरितत्वभेदाभावेऽपिषष्टियोजनोपरि
वैदेश्यम् ।” इति शुद्धिचिन्तामणिः ॥

**देशिकः**, पुं, (देशे प्रसितः इति । देश + ठक् ।)
पथिकः । इति हेमचन्द्रः । ३ । १५७ ॥ (यथा,
महाभारते । ७ । ५ । १० ।
“अदेशिको यथा सार्थः सर्व्वं कृच्छ्रं समृच्छति ।
अनायका तथा सेना सर्व्वान्दोषान् समृच्छति ॥”)
गुरुः । यथा देशिको मूलमन्त्रेण इत्यागमः ॥
(यथा, महाभारते । १३ । १४७ । ४२ ।
“धर्म्माणां देशिकः साक्षात् स भविष्यति धर्म्म-
भाक् ।
धर्म्मविद्भिः सदैवेशो नमस्कार्य्यः सदोद्यतैः ॥”)

**देशिनी**, स्त्री, (दिशतीति । दिश् आदेशे +
णिनिः । स्त्रियां ङीप् ।) तर्ज्जनी । इति शब्द-
रत्नावली ॥ (यथा, याज्ञवल्क्यसंहितायाम् ।
१ । १९ ।
“कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥”)

**देशी**, स्त्री, रागिणीविशेषः । हनूमन्मते दीपक-
रागस्य भार्य्या । अस्या जातिः षाडवः गृहं
ऋषभस्वरः गानसमयः ग्रीष्मर्त्तौ मध्याह्नः ।
अस्याः स्वरूपं सुरूपा नारी हरिद्वसना अल-
ङ्कृता यौवनमदेन कामासक्ता सती नायकशय-
नागारमागत्य निधुवनरता च । भरतमते तु
मेघरागस्य पत्नी । सङ्गीतदर्पणमते हिन्दोल-
रागस्य भार्य्या । तस्या गानसमयः यामयुग-

पाञ्चालपूर्ब्बभागे तु कुरुदेशः
प्रकीर्त्तितः ।
मरुदेशात् पूर्ब्बभागे कामाद्रेर्दक्षिणे
शिवे ! ॥
सिंहलाख्यो महादेशः
सर्व्वदेशोत्तमोत्तमः ।
शिलहट्टात् पूर्ब्बभागे
कामरूपात्तथोत्तरे ॥
पुलन्धिदेशो देवेशि ! नरनारायणः
परः ।
गणेश्वरात् पूर्ब्बभागे समुद्रादुत्तरे
शिवे ! ॥
कच्छदेशः समाख्यातः सुदेशं शृणु
सादरम् ।
पुलिन्दादुत्तरे भागे कच्छाच्च पश्चिमे
शिवे ! ॥
मत्स्यदेशः समाख्यातो
मत्स्यबाहुल्य-
कारकः ।
वैराटपाण्ड्ययोर्म्मध्ये पूर्ब्बदक्षक्रमेण
तु ॥
मद्रदेशः समाख्यातो माद्रीहा तत्र
तिष्ठति ।
शूरसेनात् पूर्ब्बभागे गण्डक्याः
पश्चिमे शिवे ! ॥
सौवीरदेशो देवेशि !
सर्व्वदेशाधमाधमः ।
अवन्तीतः पश्चिमे तु
वैदर्भाद्दक्षिणोत्तरे ॥
नाटदेशः समाख्यातो वर्व्वरं शृणु
पार्व्वति ! ।
मायापुरं समारभ्य सप्तशृङ्गात्तथोत्तरे
॥
वर्व्वराख्यो महादेशः सैन्धवं शृणु
सादरम् ।
लङ्काप्रदेशमारभ्य मक्कान्तं
परमेश्वरि ! ॥
सैन्धवाख्यो महादेशः पर्व्वते तिष्ठति
प्रिये ! ।
एते षट्पञ्चाशद्देशा मया प्रोक्ता
महेश्वरि ! ॥

हिन्दोलरागस्य द्वितीयरागिणी । तस्या
जातिः
षाडषः गृहं गान्धारस्वरः गानसमयः
वस-
न्तर्त्तौ पूर्ब्बाह्णः । अस्याः स्वरूपम् ।
सुरूपा
नारी चन्द्रवदना क्रोधना कलहप्रिया
रोमहर्षा
निष्कोषकरबालकरा मल्लवत्
धूल्यवगुण्ठित-
बाहुवक्षाः
बलमर्द्दितकक्षस्थापितशत्रुपक्षा
सर्व्वदा स्वसमीपस्थापितनायकाच ।
राग-
मालामते तु तस्याः स्वरूपं मल्लबत्
परस्पर-
मल्लक्रीडायां नियुक्ता । सा
क्रीडामल्लकाष्ठो-
त्क्षेपणप्रस्तराद्यु
त्तोलनभूमिलुण्ठनादिरूपा।
कल्लिनाथमते वसन्तरागस्य भार्य्या ।
सङ्गीत-
दर्पणमते अस्या जातिः संपूर्णः ।
अस्याः
स्वरूपं कर्पूरादपि कमनीयाङ्गी
कमलराजित-
नयना हर्षयुक्ता रसिका अतिधीरा
किञ्चित्-
सङ्कुचिता दीर्घभुजा मल्लद्युतिमोचिनी च
।
इति सङ्गीतशास्त्रम् ॥

**देशान्तरं**, क्ली, (अन्यो देशः । मयूरव्यंसकादि-
वत् समासः ।)
सुमेरुलङ्कयोर्मध्यरेखास्वरूप-
देशस्वदेशयोरन्तरयोजनम् । इति
सिद्धान्तरह-
स्यम् ॥ ये उदयान्तरकर्म्मणा
लङ्कायामौद-
यिका ग्रहा जातास्ते देशान्तरकर्म्मणा
स्वपुरो-

लम् । तस्याः स्वरूपम् । निद्रायुक्तनयना
आलस्ययुक्ता प्रियाभिमुखी नायकस्य निद्रा-
भञ्जनार्थं मनोरञ्जनतानं गायन्ती रमणेच्छया
रचितवेशा । भूषणगणशोभिता गौराङ्गी परि-
हितहरिद्वर्णशाटिका । इति सङ्गीतशास्त्रम् ॥
(सङ्गीतभेदः । यथा, सङ्गीतदर्पणे । १ । ३ -- ६ ।
“गीतं वाद्यं नर्त्तनञ्च त्रयं सङ्गीतमुच्यते ।
मार्गदेशी विभागेन सङ्गीतं द्विविधं मतम् ॥
द्रुहिणेन यदन्विष्टं प्रयुक्तं भरतेन च ।
महादेवस्य पुरतस्तन्मार्गाख्यं विमुक्तिदम् ॥
तत्तद्देशस्थया रीत्या यत् स्याल्लोकानुरञ्जनम् ।
देशे देशे तु सङ्गीतं तद्देशीत्यभिधीयते ॥”)

एतन्मध्येऽपि देवेशि ! देशभेदा ह्यनेकशः ।
कोटिशः सन्ति देवेशि ! एते मुख्याः प्रकीर्त्तिताः ॥
रहस्यातिरहस्यञ्च गोप्तव्यं पशुसङ्कटे ।
इति संक्षेपतः प्रोक्तं किमन्यत् श्रोतुमिच्छसि ॥”
इति शक्तिसङ्गमतन्त्रे ७ पटलः ॥

**देशकः**, त्रि, (दिशतीति । दिश आदेशे + “ण्वुल्

तृचौ ।” ३ । १ । १३३ । इति ण्वुल् ।) शास्ता ।
इति हेमचन्द्रः । ३ । १५२ ॥
“तथोन्मार्गप्रवृत्तस्य चास्तु सन्मार्गदेशकः ।
सन्तु मेऽतिथयः श्लाध्या वित्तदाने तथाक्षये ॥”
इति मार्कण्डेये । १९ । १७ ॥

दयिकाः स्युः । तच्च द्विविधं एकं पूर्ब्बापरं
द्वितीयं याम्योत्तरं तच्चरसंज्ञमुक्तम् ।
यथा, --
“येऽनेन लङ्कोदयकालिकास्ते देशान्तरेण सुपुरोदये स्युः ।
देशान्तरं प्रागपरं तथान्यत् याम्योत्तरं तच्चरसंज्ञमुक्तम् ॥”
इति सिद्धान्तशिरोमणिः ॥ * ॥
देशान्तरपरिभाषायां वृद्धमनुः ।
“वाचो यत्र विभिद्यन्ते गिरिर्व्वा व्यवधायकः ।
महानद्यन्तरं यच्च तद्देशान्तरमुच्यते ॥

**देश्यं**, क्ली, (दिश्यते इति । दिश् + कर्म्मणि ण्यत् ।)

पूर्ब्बपक्षः । इति शब्दरत्नावली ॥ देशार्हे, त्रि ॥
(देशे भवः । देश + "दिगादिभ्यो यत् ।" ४ ।
३ । ५४ । इति यत् ।) देशभवे । यथा, राज-
तरङ्गिण्याम् । ३ । ९ ।
"भोगाय देश्यभिक्षूणां वल्लभास्यामृतप्रभा ॥")

**देष्णुः**, त्रि, (ददातीति । दा + -"गादाभ्यामि-

ष्णुच् ।" उणां ३ । १६ । इति इष्णुच् ।) दाता
।
दुर्द्दमः । इति हेमचन्द्रः ॥ रजकः । इति
संक्षिप्तसारे उणादिवृत्तिः ॥

**देहः**, पुं क्ली, (देग्धि प्रतिदिनम् । दिह् वृद्धौ +

अच् ।) शरीरम् । इत्यमरः । २ । ६ । ७१ ।
न्यायमते पृथिव्या देहं योनिजम् अयोनिजञ्च ।
योनिजं जरायुजमण्डजञ्च । अयोनिजं
स्वेदजो-
द्भिदादिकम् । नारकिणां शरीरमप्ययोनिजम् ।
जलीयं देहमयोनिजं वरुणलोके प्रसिद्धम् ।
तैजसं देहमयोनिजं सूर्य्यलोके प्रसिद्धम् ।
वायो-
र्देहमयोनिजं तदेव पिशाचादीनाम् । इति
सिद्धान्तमुक्तावली ॥ * ॥
अथ नरकभोगदेहविवरणम् । तत्र यमं प्रति
सावित्रीप्रश्नः ।
"स्वदेहे भस्मसाद्भूते यान्ति लोकान्तरं नराः ।
केन देहेन वा भोगं भुञ्जते च शुभाशुभम् ॥
सुचिरं क्लेशभोगेन कथं देहो विनश्यति ।
देहो वा किंविधो ब्रह्मन् ! तन्मे
व्याख्यातुमर्हसि ॥"
यमस्योत्तरम् ।
"शृणु देहविवरणं कथयामि यथागमम् ।
पृथिवी वायुराकाशस्तेजस्तोयमिति स्फुटम् ॥
देहिनां देहबीजञ्च स्रष्टुः सृष्टिविधौ परम् ।
पृथिव्यादिपञ्चभूतैर्यो देहो निर्म्मितो भवेत् ॥
स कृत्रिमो नश्वरश्च भस्मसाच्च भवेदिह ॥
वृद्धाङ्गुष्ठप्रमाणञ्च यो जीवपुरुषः कृतः ।
बिभर्त्ति सूक्ष्मदेहन्तं तद्रूपं भोगहेतवे ॥
स देहो न भवेद्भस्म ज्वलदग्नौ यमालये ।
"अर्ज्जुनस्य च पुष्पाणि जम्बुपत्रयुतानि
च ।
सलोध्राणि च तल्लेपो देहदुर्गन्धतां हरेत्
॥"
इति गारुडे १९४ अध्यायः ॥

**देहधारकं**, क्ली स्त्री, (देहं धारयतीति । धारि +

"ण्वुल्तृचौ ।" १ । ३ । १३३ । इति
ण्वुल् ।)
अस्थि । इति हेमचन्द्रः । ३ । २९० ॥

**देहधिः**, पुं, (देहो धीयते अस्मिन्निति । देह +

धा + आधारे किः ।) पक्षः । इति शब्द-
चन्द्रिका ॥ पाखा इति भाषा ॥

**देहधृक्**, [ज्] पुं, (देहे धर्ज्जति सञ्चरतीति ।

धृज् + क्विप् ।) वायुः । इति
शब्दचन्द्रिका ॥
(यथा, सुश्रुते । २ । १ ।
"वायुर्यो वक्त्रसञ्चारी स प्राणो नाम
देहधृक् ॥")

**देहभृत्**, पुं, (देहं बिभर्त्तीति । देह + भृ +

क्विप् तुगागमश्च ।) जीवः । इति
हेमचन्द्रः ।
६ । २ ॥ (यथा, रघौ । ८ । ५१ ।
"धिगिमां देहभृतामसारताम् ॥")

**देहयात्रा**, स्त्री, (देहस्य यात्रा लोकान्तरगम-

नम् ।) यमपुरीगमनम् । मरणम् । (देहाय
देहरक्षणाय या यात्रा उद्यमादिः ।)
भोजनम् ।
इति मेदिनी । रे, २६८ ॥ (यथा, भागवते
।
४ । २३ । २० ।
"अतीव भर्त्तुर्व्रतधर्म्मनिष्ठया
शुश्रूषया चारषदेहयात्रया ।
नाविन्दतार्त्तिं परिकर्शितापि सा
प्रेयस्करस्पर्शनमाननिर्वृतिः ॥")

**देहला**, स्त्री, (देहं लाति देहस्य पुष्टिं ददातीति ।
अपि च ।
"आत्मास्ति देहाद्व्यतिरिक्तमूर्त्ति-
र्भोक्ता स लोकान्तरितः फलानाम् ।
आशेयमाकाशतरोः प्रसूनात्
प्रथीयसः स्वादुफलप्रसूतौ ॥"
इति प्रबोधचन्द्रोदयः ॥

**देहिका**, स्त्री, (देग्धीति । दिह वृद्धौ + ण्वुल् ।

टापि अत इत्वम् ।) कीटविशेषः । तत्-
पर्य्यायः । वटिः २ उपादिकः ३ । इति
त्रिकाण्डशेषः ॥ उपजिह्विका ४
उत्पादिका ५
उद्देहिका ६ दिवी ७ । इति हारावली ॥

**देही**, [न्] (देहोऽस्त्यस्येति । देह + इनिः ।)

शरीरी । प्राणी । अस्य गुणा यथा, --
"बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना
तथा ।
धर्म्माधर्म्मौ गुणा एते आत्मनः
स्युश्चतुर्द्दश ॥"
अयं इन्द्रियाद्यधिष्ठाता पुण्यपापाश्रयः ।
ज्ञान-
सुखादियोगतो मानसप्रत्यक्षविषयः ।
पर-
देहादौ प्रवृत्त्यादिनानुमेयः ।
अहमित्याकार-
प्रत्ययाश्रयः । मनोमात्रस्य गोचरः ।
विभुः
परममहत्त्ववान् । इति भाषापरिच्छेदः ॥
तथा च । श्रीभगवद्गीतायाम् ।
"देही नित्यमवध्योऽयं देहे सर्व्वस्य
भारत ! ।
तस्मात् युद्धाय युज्यस्व नैनं
पापमवाप्स्यसि ॥"
अपि च ।
"देहिनोऽस्मिन् यथा देहे कौमारं यौवनं
जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति
॥"

**दै**, प शोधने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-

जले न नष्टो देही वा प्रहारे सुचिरे कृते ॥
न शस्त्रे च न चास्त्रे च न तीक्ष्णकण्टके तथा ।
तप्तद्रवे तप्तलौहे तप्तपाषाण एव च ॥
प्रतप्तप्रतिमाश्लेषेऽप्यत्यूद्र्ध्वपतनेऽपि च ।
न च दग्धो न भग्नश्च भुङ्क्त सन्तापमेव च ॥
कथितं देहवृत्तान्तकारणञ्च यथागमम् ॥"
इति ब्रह्मवैवर्त्तपुराणम् ॥
ईश्वरदेहस्य प्रमाणं यथा, --
"यन्मे गुह्यतमं देहं सर्व्वगं तत्त्वदर्शिनः ।
प्रविष्टा मम सायुज्यं लभन्ते योगिनोऽव्ययम् ॥"
इति कूर्म्मपुराणम् ॥

**देहकोषः**, पुं, (देहस्य कोष इव आवरकत्वात् ।) पक्षः । इति शब्दचन्द्रिका ॥ पाखा इति भाषा ॥

**देहक्षयः**, पुं, (देहस्य क्षयो हानिर्यस्मात् ।) रोगः । इति शब्दचन्द्रिका ॥

**देहदः**, पुं, (देहं ददाति यद्वा दायति क्षतादेः शोधयतीति । दा दाने दैप शोधने वा + "आतोऽनुपसर्गे कः ।" ३ । २ । ३ । इति कः ।) पारदः । इति राजनिर्घण्टः ॥ (देहदातरि, त्रि ॥)

**देहदुर्गन्धता**, स्त्री, (देहस्य दुर्गन्धता) शरीरदौर्गन्ध्यम् । तन्नाशकौषधं यथा, --
देह + ला + कः टाप् । सेवनेन प्रथमं पुष्टि-वर्णादिप्रदानादस्यास्तथात्वम् ।) मद्यम । इति शब्दचन्द्रिका ॥

**देहलिः**, पुं, (दिह + भावे घञ् । देहो लेपस्तं लाति गृह्णातीति । देह + ला + बाहुलकात् किः ।) देहली । इति शब्दरत्नावली ॥

**देहली**, स्त्री, (देहं लेपं लातीति । देह + ला + "आतीऽनुपसर्ग कः ।" ३ । २ । ३ । इति कः । गौरादित्वात् ङीष् ।) गृहावग्रहणी । इत्यमरः । २ । २ । १३ ॥ द्वारपिण्डिका । द्वाराग्रस्थानम् । इति केचित् ॥ हातिना इति ख्याता इति केचित् ॥ अध उडुम्बरम् । तत्शिलाया अधोदारुपाषाणो वा । इति स्वामी ॥ इत्यमरटीकायां भरतः ॥ (यथा, मेघदूते । ८७ ।
"शेषान् मासान् गमनदिवसस्थापितस्यावधेर्व्वा
विन्यस्यन्ती भुवि गणनया देहलीमुक्तपुष्पैः ॥")

**देहसारः**, पुं, (देहस्य सारः ।) मज्जा । इति राजनिर्घण्टः ॥

**देहात्मवादी**, [न्] त्रि, (देहमेवात्मानं परब्रह्म वदतीति । वद् + णिनिः ।) चार्व्वाकः । तस्येदं मतम् । शरीरमेवात्मा प्रज्वलितगृहात् स्वपुत्त्रं परित्यज्यापि स्वस्य निर्गमदर्शनात् स्थूलोऽहं कृशोऽहमित्यनुभवाच्च । अत्र प्रमाणम् । देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृताः । सकं-अनिट् ।) पित्त्वाद्दासंज्ञाभावे यगादौ दायते इत्यादि । शोधनमिह शुद्धीकरणम् । दायति ताम्रमम्लेन लोकः । अवपूर्ब्बः शुक्ली भावे (अत्र अकर्म्मकः ।) श्विन्दते श्वेतते त्रीणि स्युः शुक्लत्वेऽवदायति । इति भट्टमलः । इति दुर्गादासः ।

**दैतेयः**, पुं, (दितेरपत्यं पुमान् । दिति + "स्त्रीभ्यो ढक् ।" ४ । १ । १२० । इति ढक् ।) दैत्यः । इत्यमरः । १ । १ । १२ ॥ (यथा, हरिवंशे । १८२ । ७६ ।
"जय बाणं महाबाहो ! दैतेयं देवपूजित ! ।
यदर्थमवतीर्णोऽसि तत् कर्म्म सफलीकुरु ॥")

**दैत्यः**, पुं, दितेरपत्यं ("दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ।" ४ । १ । ८५ । इति ण्यः ।) असुरः । इत्यमरः । १ । १ । १२ ॥ (यथा, मनुः । १२ । ४८ ।
"तापसा यतयो विप्रा ये च वैमानिका गणाः ।
नक्षत्राणि च दैत्याश्च प्रथमा सात्त्विकी गतिः ॥")
दितिसम्बन्धिनि, त्रि ॥

**दैत्यगुरुः**, पुं, (दैत्यानां गुरुः ।) शुक्रः । इत्यमरः । १ । ३ । २५ ॥ (यथा, बृहत्संहितायाम् । १०४ । ३४ ।
"आज्ञार्थमानास्पदभूतिवस्त्र-
शत्रुक्षयान् दैत्यगुरुस्तृतीये ॥")

**दैत्यदेवः**, पुं, (दैत्यानां देवः ।) वरुणः । इति त्रिकाण्डशेषः ॥ वायुः । इति हेमचन्द्रः । ४ । १७३ ॥

**दैत्यनिसूदनः**, पुं, (निसूदयतीति । नि + सूदि + ल्युः । दैत्यानां निसूदनः नाशकः ।) विष्णुः । इति पुराणम् ॥

**दैत्यपुरोधाः**, [स्] पुं, (दैत्यानां पुरोधाः पुरोहितः ।) शुक्रः । इति हारावली । ३६ ॥

**दैत्यमाता**, [ऋ] स्त्री, (दैत्यानां माता ।) दितिः । इति त्रिकाण्डशेषः ॥
(दैत्यमातृमात्रम् ।
यथा, हरिवंशे । १६६ । १२ ।
"अदितिर्दितिर्दनुश्चैव सिंहिका दैत्यमातरः ॥")
दैत्यपरिमाणकर्त्तरि, त्रि ॥

**दैत्यमेदजः**, पुं, (दैत्यमेदात् जायते इति । दैत्यमेद + जन् + डः ।) भूमिजगुग्गुलुः । इति राजनिर्घण्टः ॥ पृथिव्याम्, स्त्री । मधुकैटभमेदजातत्वात् ॥

**दैत्ययुगं**, क्ली, (दैत्यानां युगम् ।) दैत्यानां युगविशेषः । तत् देवपरिमाणेन द्वादशसहस्रवर्षाणि । मनुष्यमानेन चतुर्युगसंख्यम् । इति शब्दार्थकल्पतरुः ॥

**दैत्या**, स्त्री, (दितेरियमिति ण्यः । ततष्टाप् ।) मुरानामगन्धद्रव्यम् । इत्यमरः । २ । ४ । १२३ ॥
चण्डौषधिः । इति मेदिनी । ये, ३२ ॥ मद्यम् । इति त्रिकाण्डशेषः ॥ दैत्यभार्य्या च ॥

**दैत्यारिः**, पुं, (दैत्यानामरिः ।) विष्णुः । इत्यमरः । १ । १ । १९ ॥ (यथा, प्रबोधचन्द्रोदये । २ । २८ ।
"दैत्यारिः कमलाकपोलमकरीलेखाङ्कितोरःस्थलः ।
शेतेऽब्धावितरेषु जन्तुषु पुनः का नाम शान्तेः
तस्य ब्राह्मीनिशायाञ्च क्षुद्रप्रलय उच्यते ।
देवाश्च मुनयश्चैव तत्र दग्धा नरादयः ॥
एवं त्रिंशद्दिवारात्रैर्ब्रह्मणो मास एव च ।
वर्षं द्वादशमासैश्च ब्रह्मसम्बन्धि चैव हि ॥
एवं पञ्चदशाब्दे च गते च ब्रह्मणो नृप ! ।
दैनन्दिनस्तु प्रलयो वेदेषु परिकीर्त्तितः ॥
अहो रात्रिश्च सा प्रोक्ता वेदविद्भिः पुरातनैः ।
तत्र सर्व्वे प्रनष्टाश्च चन्द्रार्कादिदिगीश्वराः ॥
आदित्या वसवो रुद्रा मन्विन्द्रा मानवादयः ॥
ऋषयो मुनयश्चैव गन्धर्व्वा राक्षसादयः ॥
मार्कण्डेयो लोमशश्च पेचकश्चिरजीविनः ।
इन्द्रद्युम्नश्च नृपतिश्चाकूपारश्च कच्छपः ।
नाडीजङ्घो वकश्चैव सर्व्वे नष्टाश्च तत्र वै ॥
ब्रह्मलोकादधः सर्व्वे लोका नागालयास्तथा ।
ब्रह्मलोकं ययुः सर्व्वे ब्रह्मलोकादयस्तथा ॥
गते दैनन्दिने ब्रह्मा लोकांश्च ससृजे पुनः ।
एवं शतायुःपर्य्यन्तं परमायुश्च ब्रह्मणः ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥

**दैनारं**, त्रि, दीनारमितस्वर्णजातवस्तु । दीनारे भवं दीनारस्येदं वेति (अण्) ष्णप्रत्ययः ॥

**दैनिकी**, स्त्री, (दिने भवः । दिन + "कालात् ठञ् ।" ४ । ३ । ११ । इति ठञ् । गौरादित्वात् ङीष् ।) दिनभृतिः । एकदिनकर्म्ममूल्यम् । इति शब्दमाला ॥ (दिनभवे, त्रि ॥)

**दैन्यं**, क्ली, (दीनस्य भावः । दीन + ष्यञ् ।) कार्पण्यम् । इति हेमचन्द्रः । २ । २३३ ॥
दीनता । यथा,
"याच्ञादैन्यपराञ्चि यस्य कलाहायन्ते मिथस्त्वं वृणु
देवसम्बन्धिनि, त्रि । यथा, --
"प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत् ।
नापि दैवं न वा पित्र्यं यावत् पूर्णो न वत्सरः ॥"
इति शुद्धितत्त्वम् ॥
विवाहविशेषे, पुं । इत्युद्वाहतत्त्वम् ॥ अस्य विवरणं उद्वाहशब्दे द्रष्टव्यम् । (दिवि भवः । दिव् + अण् ।) दिविभवे, त्रि ॥

**दैवं**, क्ली, पुं, (देवात् नियतादागतम् । देव + अण् ।) भाग्यम् । इत्यमरः । १ । १ । २८ ॥
"दैवाधीनं जगत् सर्व्वं जन्मकर्म्मशुभाशुभम् ।
संयोगाश्च वियोगाश्च न च दैवात् परं बलम् ॥
कृष्णायात्तञ्च तद्दैवं स देवात् परतस्ततः ।
भजन्ति सततं सन्तः परमात्मानमीश्वरम् ॥
दैवं वर्द्धयितुं शक्तः क्षयं कर्त्तुं स्वलीलया ।
न दैवबद्धस्तद्भक्तश्चाविनाशीच निर्गुणः ॥"
इति ब्रह्मवैवर्त्ते गणेशखण्डम् ॥ * ॥
मनुरुवाच ।
"दैवे पुरुषकारे च किं ज्यायस्तद्ब्रवीतु मे ।
अत्र मे संशयो देव ! छेत्तुमर्हस्यशेषतः ॥
मत्स्य उवाच ।
स्वमेव कर्म्म दैवाख्यं विद्धि देहान्तरार्ज्जितम् ।
तस्मात् पौरुषमेवेह श्रेष्ठमाहुर्मनीषिणः ॥
प्रतिकूलं यथा दैवं पौरुषेण विहन्यते ।
मङ्गलाचारयुक्तानां नित्यमुत्थानशीलिनाम् ॥

कथा ॥”)
देवता । इति मेदिनी । रे, १७० ॥

**दैत्याहोरात्रः**, पुं, (दैत्यानामहोरात्रः ।) दैत्यानां

दिवानिशम् । स मनुष्यमानेन वर्षैकसंख्यः ।
इति शब्दार्थकल्पतरुः ॥

**दैनं**, क्ली, (दीनस्य भावः । अण् ।) दीनता ।

(दिनस्य दिवसस्य इदम् । दिन + “तस्येदम् ।”
४ । ३ । १२० । इत्यण् ।) दिनसम्बन्धिनि, त्रि ॥

**दैनन्दिनं**, त्रि, (दिनं दिनं भवं इत्यण् निपातनात्

साधुः ।) दिनेदिने भवम् । (यथा, भागवते । ३ । ११ । २६ ।
“एष दैनन्दिनः सर्गो ब्राह्मस्त्रैलोक्यवर्त्तनः ।
तिर्य्यङ्नृपितृदेवानां सम्भवो यत्र कर्म्मभिः ॥”)
स्वार्थष्णे प्रतिदिनम् । इति निपातनसाध्यम् ॥

**दैनन्दिनप्रलयः**, पुं, (दैनन्दिनश्चासौ प्रलयश्चेति

कर्म्मधारयः ।) प्रलयविशेषः । यथा, --
“चतुर्द्दशेन्द्रावच्छिन्ने ब्रह्मणो दिनमुच्यते ।
तावती ब्रह्मणो रात्रिः सा च ब्राह्मी निशा नृप ! ॥
कालरात्रिश्च सा ज्ञेया वेदेषु परिकोर्त्तिता ।
एवं सप्तकल्पजीवी मार्कण्डेयो महातपाः ॥
ब्रह्मलोकादधः सर्व्वे लोका दग्धाश्च तत्र वै ।
उत्थितेनैव सहसा सङ्कर्षणमुखाग्निना ॥
चन्द्रयकेब्रह्मपुत्राश्च ब्रह्मलोकं गता द्रुतम् ।
ब्रह्मरात्रे व्यतीते तु पुनश्च ससृजे विधिः ॥
त्वं वृण्वित्यभितो मुखानि स दशग्रीवः कथं कथ्य-
ताम् ॥”
इति मुरारिमिश्रः ॥
(अलङ्कारोक्तव्यभिचारिगुणभेदः । यथा, साहित्यदर्पणे । ३ । १४१ ।
“दौर्गत्याद्यैरनौजस्यं दैन्यं मलिनतादिकृत् ॥”)

**दैपं**, त्रि, दीपसम्बन्धि । दीपस्येदमित्यर्थे (अण्)

ष्णप्रत्ययः ॥

**दैर्घ्यं**, क्ली, (दीर्घस्य भावः । दीर्घ + ष्यञ् ।)

दीर्घत्वम् । तत्पर्य्यायः । आयामः २ । आरोहः
३ । इत्यमरः । २ । ६ । ११४ ॥ आरोहस्थाने
आनाह इति भरतः ॥ (यथा, बृहत्संहिता-याम् । ११ । ३३ ।
“अपरस्यां चलकेतुः
शिखया याम्यग्रयाङ्गुलोच्छ्रितया ।
गच्छेद्यथा यथोदक्
तथा तथा दैर्घ्यमायाति ॥”)

**दैलीपिः**, पुं, दिलीपराजपुत्रो रघुः । दिलीपस्या-

पत्यमिति ष्णिप्रत्ययः (इञ्) ॥

**दैवं**, क्ली, (देवस्येदम् । देव + “तस्येदम् ।” ४ ।

३ । १२० । इत्यण् ।) देवतीर्थम् । तत् दक्षिण-
हस्ताङ्गुल्यग्रवर्त्ति । इत्यमरः । २ । ७ । ५१ ॥
(यथा, मनुः । २ । ५९ ।
“काथमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः ॥”)
येषां पूर्ब्बकृतं कर्म्म सात्त्विकं मनुजोत्तम् ! ।
पौरुषेण विना तेषां केशाञ्चिद्दृश्यते फलम् ॥
कर्म्मणा प्राप्यते लोके राजसस्य तथा फलम् ।
कृच्छ्रेण कर्म्मणा विद्धि तामसस्य तथा फलम् ॥
पौरुषेणाप्यते राजन् ! मार्गितव्यं फलं नरैः ।
दैवमेव विजानन्ति नराः पौरुषवर्ज्जिताः ॥
तस्मात्त्रिकालसंयुक्तं दैवेन सफलं भवेत् ।
पौरुषं दैवसम्पत्त्या काले फलति पार्थिव ! ॥
दैवं पुरुषकारश्च कालश्च मनुजोत्तम ! ।
त्रयमेव मनुष्यस्य पिण्डितं स्यात् फलावहम् ।
कृषेर्वृष्टिसमायोगात् दृश्यन्ते फलसिद्धयः ।
तास्तु काले प्रदृश्यन्ते नैवाकाले कथञ्चन ॥
तस्मात् सदैव कर्त्तव्यं सधर्म्मं पौरुषं नृभिः ।
एवन्ते प्राप्नुवन्तीह परलोके फलं ध्रुवम् ॥
नालसाः प्राप्नुवन्त्यर्थान्न च दैवपरायणाः ।
तस्मात् सदैव यत्नेन पौरुषे यत्नमाचरेत् ॥
त्यक्तालसान्दैवपरान् मनुष्या-
नुत्थानयुक्तान् पुरुषान् हि लक्ष्मीः ।
अन्विष्य यत्नाद्वृणुते नृपेन्द्र !
तस्मात् सदोत्थानवता हि भाव्यम् ॥”
इति मत्स्यपुराणे १९५ अध्यायः ॥

**दैवकी**, स्त्री, (देवकी एव । स्वार्थे अण् । ततो

ङीष् ।) कृष्णमाता । वसुदेवपत्नी । इति
श्रीभागवतम् ॥

| | | **दैवकीनन्दनः**, पुं, (दैवक्याः नन्दनः पुत्रः ।)<br>श्रीकृष्णः । इत्यमरः । १ । १ । २१ ॥<br>(यथा,<br>पाद्मोत्तरखण्डे १११ अध्याये ।<br>“दैवकीनन्दनः श्यामः<br>श्रीश्यामाप्राणवल्लभः ॥”) |
|---|---|---|

**दैवकोविदा**, स्त्री, (दैवे देवनिमित्तशुभाशुभज्ञाने कोविदा विज्ञा ।) दैवज्ञा । इति शब्दरत्नावली ॥ दैवपण्डिते, त्रि ॥

**दैवज्ञः**, त्रि, (दैवं जानातीति । ज्ञा + कः ।) गणकः । इत्यमरः । २ । ८ । १४ ॥ (यथा, देवीभागवते । १ । २० । ३४ ।
"दैवज्ञान् वेदविदुषः पर्य्यपृच्छच्छभं दिनम् ॥")
अस्योत्पत्तिर्यथा, देवब्राह्मणधनापहारी धूमान्धनरकं भुक्त्वा शतजन्ममूषिक-नानाविधपक्षिकृमिवृक्षभार्य्याविंशहीनव्याधियुतशवरस्वर्णकारसुवर्णबणिग्यवनसेविविप्रब्राह्मणगणका भूत्वा दैवज्ञो गणनोपजीविविप्रो भवति ॥ * ॥
अपि च ।
"लाक्षालोहादिव्यापारी रसादिविक्रयी च यः ।
स याति नागवेष्टञ्च नागैर्वेष्टित एव च ॥
वसेत् स्वलोममानाब्दं तत्रैव नागदंशितः ।
ततो भवेत् स गणको वैद्यश्च सप्तजन्मसु ॥
गोपश्च चर्म्मकारश्च रङ्गकारस्ततः शुचिः ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥

**दैवज्ञा**, स्त्री, (दैवं जानातीति । ज्ञा + कः । ततष्टाप् ।) दैवज्ञभार्य्या । प्रश्नादिना शुभाशुभज्ञा । लक्षणादिना शुभाशुभनिरूपिणी । तत्पर्य्यायः । विप्रश्निका २ ईक्षणिका ३ । इत्यमरः । २ । ६ । २० ॥

**दैवतः**, पुं, क्ली, (देवता एव । स्वार्थे अण् ।) देवता । इत्यमरः । १ । १ । ९ ॥ (यथा, रामायणे । २ । ५० । २ ।
"आपृच्छेत्वां पुरिश्रेष्ठे ! काकुत्स्थपरिपालिते ! ।
दैवतानि च यानि त्वां पालयन्त्यावसन्ति च ॥"
देवतानां समूहः । देवता + अण् ।) देवतासमूहे, क्ली । (देवताया इदम् । अण् ।) देवसम्बन्धिनि, त्रि ॥

**दैवदीपः**, पुं, (दैवः सूर्य्याधिष्ठातृको दीपः । दर्शनेन्द्रियस्य सूर्य्याधिष्ठातृत्वात्तथात्वम् ।) चक्षुः । इति त्रिकाण्डशेषः । देवसम्बन्धिप्रदीपश्च ॥

**दैवपरः**, त्रि, (दैवमेव परं प्रधानं यस्य ।) दैवसिद्धम् । सम्बन्धविशेषः । यथा । कालभावयोः
सप्तमीति सूत्रं भावः सत्त्वं तच्च द्विविधं कालिकं दैशिकञ्चेति कारकचक्रे भवानन्दसिद्धान्तवागीशः ॥ देशनिष्ठविशेषणता । इति नैयायिकाः ॥

**दैवलकः**, पुं, (देवल इव कायतीति । कै + कः । ततः स्वार्थे अण् ।) भौतः । भूतसेवकः । इति हारावली । १५० ॥ देवलसम्बन्धिनि, त्रि ॥

**दैवलेखकः**, पुं, (दैवं देवनिमित्तशुभाशुभं लिखतीति । लिख + ण्वुल् ।) मौहूर्त्तः । गणकः । इति त्रिकाण्डशेषः ॥

**दैववाणी**, स्त्री, (दैवी आकाशसम्बन्धिनी वाणी ।) आकाशवाणी । अमानुषी वाक् । तत्पर्य्यायः । चित्तोक्तिः २ पुष्पशकटी ३ दैवप्रश्नः ४ उपश्रुतिः ५ । इति त्रिकाण्डशेषः ॥ संस्कृतवाक्यम् । यथा, दण्डी ।
"संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः ॥"
"गीर्वाणवाणीधदनं मुकुन्दसंकीर्त्तनञ्चेत्युभयं हि लोके ।
सुदुर्लभं तच्च न मुग्धबोधान्न लभ्यतेऽतः पठनीयमेतत् ॥"
इति वोपदेवः ॥

**दैवाकरिः**, पुं, (दिवाकरस्य अपत्यं पुमान् । दिवाकर + इञ् ।) शनिः । यमः । यमुनायां, स्त्री । एतेषामुदाहरणं यथा, --
"सम्प्रति दैवाकरितः पारमिताद्धरितारुणकरितः ।
नायं कोऽपि विशेषः स्वाहितराशिवशात्तनुशेषः ॥"
इति काव्योदयधृतसङ्गीतकम् ॥

**दैष्टिकः**, पुं, दिष्टेन भवः । (दिष्ट + ठक् ।) भाग्याधीनजातः । कालेन जातः । इति व्याकरणम् ॥ (दिष्टं भागधेयमिति मतिर्यस्य ।
"अस्ति नास्ति दिष्टं मतिः ।" । ४ । ४ । ६० ।
इति ठक् । दैवपरः । इति सिद्धान्तकौमुदी ॥)

**दैहिकं**, त्रि, (देहस्य इदं देहे भवं वा । देह + ठञ् ।) देहसम्बन्धि । यथा, --
"भीरूणां भैरवाणां भवति सुविहिता दैहिकी गोपिताच्चर्चा ।"
इति कूर्च्चिकातन्त्रेऽन्तर्यागः ॥

**दो**, य छेदे । इति कविकल्पद्रुमः ॥ (दिवां-परं-सकं-सेट् ।) य, शिरोऽवद्यति विद्विषां यः । इति दुर्गादासः ॥

**दोः**, [स्] पुं, (दाम्यत्यनेनेति । दमु उपशमे + "दमेर्डोसिः ।" उणां २ । ६९ । इति डोसिः ।) बाहुः । इत्यमरः । २ । ६ । ८० ॥ (यथा, अनर्घराघवे । २ । ४४ ।
"दातव्येयमवश्यमेव दुहिता कस्मैचिदेनामसौ

निष्ठः । तत्पर्य्यायः । यद्भविष्यः २ । इति हेम-
चन्द्रः । ३ । ४७ ॥ (यथा, मार्कण्डेये । ४३ । ८९ ।
“सार्द्धं न बलिभिः कुर्य्यान्न च न्यूनैर्न निन्दितैः ।
न सर्व्वशङ्किभिर्नित्यं न च दैवपरैर्नरैः ।
कुर्व्वीत साधुभिर्मैत्रीं सदाचारावलम्बिभिः ॥”)

**दैवप्रश्नः**, पुं, (दैवे देवनिमित्तशुभाशुभविषये
यः प्रश्नः ।) प्राक्तनशुभाशुभकर्म्मजिज्ञासा । तत्-
पर्य्यायः । उपश्रुतिः २ । इति त्रिकाण्डशेषः ॥
(दैववाणी । यदुक्तं हारावल्याम् । २२ ।
“नक्तं निर्गत्य यत्किञ्चित् शुभाशुभकरं वचः ।
श्रूयते तद्विदुर्धीरा दैवप्रश्नमुपश्रुतिम् ॥”)

**दैवयुगं**, क्ली, (दैवं देवसम्बन्धि युगम् ।) देवानां
युगम् । तच्च देवमानेन द्वादशसहस्रवर्षम् ।
मनुष्यपरिमाणेन चतुर्युगमानम् । इति शब्दार्थ-
कल्पतरुः ॥ (यदुक्तं मनौ । १ । ७१ ।
“थदेतत् परिसंख्यातमादावेव चतुर्युगम् ।
एतद्द्वादशसाहस्रं देवानां युगमुच्यते ॥”)

**दैवात्**, व्य, हठात् । यथा, “दैवादपाङ्गबलनं किल
मानवत्याः ।” इति काव्योदयः ॥

**दैवाहोरात्रः**, पुं, (दैवः देवसम्बन्धी अहोरात्रः ।)
देवानामेकदिवसः । स मनुष्याणां संवत्सरः ।
इति शब्दार्थकल्पतरुः ॥

**दैविकः**, त्रि, (दैवस्य अयं दैवे भवो वा । दैव +
ठक् ।) देवसम्बन्धी । (यथा, मनुः । १ । ६५ ।
“अहोरात्रे विभजते सूर्य्यो मानुषदैविके ।
रात्रिः स्वप्नाय भूतानां चेष्टायै कर्म्मणामहः ॥”)
दैवे भवः । इति व्याकरणम् ॥

**दैवी**, स्त्री, (देवस्य इयम् । देव + अण् अञ् वा ।
ततो ङीप् ।) देवसम्बन्धिनी । यथा, --
“ब्रह्मोपास्यमिति स्फुरत्यपि हृदि व्यावर्त्तिका वासना
का नामेयमतर्क्यसेतुगहना दैवीसतां यातना ।”
इति शान्तिशतके । ७ ॥
चिकित्साविशेषः । यथा, वैद्यके ।
“आसुरी मानुषी दैवी चिकित्सा त्रिविधा मता ॥”

**दैव्यं**, क्ली, (देवस्य इदम् । “देवाद्यञञौ ।” ४ ।
१ । ८५ । इत्यस्य वार्त्तिकोक्त्या यञ् ।) दैवम् ।
भाग्यम् । इत्यमरटीकायां भरतः ॥ (देव-
सम्बद्धे, त्रि । यथा, ऋग्वेदे । २ । ३० । ११ ।
“तं वः शर्धं मारुतं सुम्नयुर्गिरोप ब्रुवे नमसा
दोर्लीलामसृणीकृतत्रिभुवनो लङ्कापति-
र्याचते ॥”)

**दोःशिखरं**, क्ली, (दोष्णः शिखरम् ।) स्कन्धः ।
इति राजनिर्घण्टः ॥

**दोःसहस्रभृत्**, पुं, (दोःसहस्रं बाहुसहस्रं बिभ-
र्त्तीति । भृ + क्विप् ।) कार्त्तवीर्य्यार्ज्जुनः । इति
हेमचन्द्रः । ३ । ३६६ । बाणराजा च ॥

**दोग्धा**, [ऋ] पुं, (दोग्धीति । दुह + तृच् ।) अर्थोप-
जीविकविः । वत्सः । गोपालः । इति मेदिनी ।
धे, ८ ॥ दोहनकर्त्तरि, त्रि ॥ (यथा, कुमारे । १ । २ ।
“यं सर्व्वशैलाः परिकल्प्य वत्सं
मोरौ स्थिते दोग्धरि दोहदक्षे ॥”)

**दोग्ध्री**, स्त्री, (दोग्धृ + ङीप् ।) गौः । इति राज-
निर्घण्टः ॥ (यथा, रघुः । २ । २३ ।
“दोहावसाने पुनरेव दोग्ध्रीं
भेजे भुजोच्छिन्नरिपुर्निषण्णाम् ॥”)

**दोदुल्यमानः**, त्रि, (दुल + यङ् + शानच् ।) पुनः-
पुनरतिशयेन वा दोलनविशिष्टः । इति व्याक-
रणम् ॥

**दोधः**, पुं, (दोग्धीति । दुह + अच् । निपातनात्
साधुः ।) गोवत्सः । यथा, --
“देव सदोधकदम्बतलस्थ-
श्रीधर तारकनामपदं मे ।
कण्ठतलेऽसुविनिर्गमकाले
स्वल्पमपि क्षणमेष्यति योगम् ॥”
इति छन्दोमञ्जरी ॥

**दोधकः**, पुं, छन्दोविशेषः । यथा, श्रुतबोधे ।
“आद्यचतुर्थमहीननितम्बे
सप्तमकं दशमञ्च तथान्त्यम् ।

| | | |
|---|---|---|
| | दैव्यं जनम् ॥”)<br>**दैशिकं**, त्रि, (देशे भवं देशस्य इदं वा । देश + ठञ् ।) देशसम्बन्धि । भवार्थे ष्णिकप्रत्ययेन | |

यत्र गुरु प्रकटस्मररागे
तत् कथितं तव दोधकवृत्तम् ॥”

**दोधूयमानः** त्रि, (पुनः पुनरतिशयेन वा धूयते । धु
कम्पने + “धातोरेकाचो हलादेः
क्रियासमभि-
हारे यङ् ।” ३ । १ । २२ । इति
यङ् । “गुणो यङ्-
लुकोः ।” ७ । ४ । ८२ । इति
अभ्यासस्य गुणः ।
ततः अभ्याससूत्राद्यनुसारेण
दोधूयधातुः ।
यङन्तत्वादात्मनेपदम् । ततः
शानच् ।) पुनः-
पुनरतिशयेन वा कम्पविशिष्टः ।
यथा, --
“नभस्वदासङ्गभयेव साध्वी
दोधयमाना वडभीपताका ।”
इति कृन्मञ्जरी ॥
“प्रलयेऽपि दोधूयमानाः परमाणवः
तिष्ठन्ति ।”
इति शिरोमणिः ॥

**दोरकः** पुं, (डोरक + निपातनात् डस्य दः ।)
बीणातन्तुबन्धनरज्जुः । इति
शब्दार्थकल्पतरुः ॥

**दोर्गडुः**, पुं, (दोषा बाहुना गडुः कुण्ठितः ।)
कुण्ठितहस्तः । तत्पर्य्यायः ।
कुम्पः २ बाहु-
कुण्ठः ३ । इति जटाधरः ॥

**दोर्ग्रहः**, त्रि, (दोर्गृह्यते अनेनेति । ग्रह + करणे
वञ् ।) बलवान् । तत्पर्य्यायः ।
कैरातः २
क्षामः ३ । इति हारावली । १२७
॥ (दोष्णो
ग्रहः ।) भुजस्य ग्रहणं तस्य व्यथा
च ॥

चतुरस्रं चतुर्द्वारं मण्डपं वेदिकान्वितम् ।
चारुचन्द्रातपं माल्यचामरध्वजशोभितम् ॥
भद्रासनं वेदिकायां श्रीपर्णीकाष्ठनिर्म्मितम् ।
फल्गूत्सवं प्रकुर्व्वीत पञ्चाहानि त्र्यहाणि वा ॥
फाल्गुन्याः पूर्ब्बतो विप्राश्चतुर्द्दश्यां निशामुखे
।
वह्न्युत्सवं प्रकुर्व्वीत दोलमण्डपपूर्ब्बतः ॥
एतत् सर्व्वं प्रकुर्व्वीत दोलमण्डपपूर्ब्बतः ।
गोविन्दानुगृहीतन्तु यात्राङ्गं तत् प्रकीर्त्तितम् ॥
आचार्य्यवरणं कृत्वा वह्निं निर्म्मथनोद्भवम् ।
भूमिं संस्कृत्य विधिवत् तृणराशिं महोच्छ्रितम्
॥
सपशुं कारयित्वा तु वह्निं तत्र विनिक्षिपेत् ।
पूजयित्वा विधानेन कुष्माण्डविधिना हुनेत् ॥
गोविन्दं पूजयित्वा तु भ्रामयेत् सप्त तं विभुम् ।
तस्मिन् काले हरिं दृष्ट्वा सर्व्वपापैः प्रमुच्यते ॥
यत्नात्तं रक्षयेद्वह्निं यावद्यात्रा समाप्यते ॥ * ॥
प्रान्तयामे चतुर्द्दश्यां गोविन्दप्रतिमां शुभाम् ॥
वासयित्वा हरेरग्रे पूजयेत् पुरुषोत्तमम् ।
उपचारावशिष्टैस्तु प्रत्यर्च्चामपि पूजयेत् ॥
ततो वरञ्च वसनं मालाञ्च द्विजसत्तमाः ।
अर्च्चायां विन्यसेन्मन्त्रं परं ज्योतिर्विभावयन्
॥
ततश्च प्नतिमा साक्षात् जायते पुरुषोत्तमः ।
रत्नान्दोलिकया तां वै नयेत् स्नानस्य
मण्डपम् ॥
नानातूर्य्यनिनादैश्च शङ्खध्वनिपुरःसरम् ।
जयशब्दैस्तथा स्तोत्रैः पुष्पवृष्टिभिरेव च ॥
छत्रध्वजपताकाभिश्चामरव्यजनैस्तथा ।
निरन्तरं दीपिकाभिस्तथा कुर्य्यान्महोत्सवम्
॥
आगच्छन्ति तदा देवाः पितामहपुरोगमाः ।
द्रष्टुमृषिगणैः सार्द्धं गोविन्दस्य महोत्सवम् ॥
भद्रासनेऽधिवास्यैनं पूजयेदुपचारकैः ॥
महास्नानस्य विधिना स्नपनं तस्य कारयेत् ।
पञ्चामृतैश्च सर्व्वैर्वे तेषामन्यतमेन वा ।
स्नानान्ते गन्धतोयेन श्रीसूक्तेनाभिषेचयेत् ॥
संप्रोक्ष्य भूषयेद्देवं वस्त्रालङ्कारमाल्यकैः ।
नीराजयित्वा संपूज्य प्रासादं परिवेष्टयेत् ॥

विकचाम्बुजमध्यस्थं विश्वधात्र्या श्रिया युतम्
।
शङ्खचक्रगदापद्मधारिणं वनमालिनम् ॥
सुप्रसन्नं सुनासाभ्रपीनवक्षःस्थलोज्ज्वलम् ।
पुरो व्योमस्थितैर्द्देवैर्ब्रह्माद्यैर्नतकन्धरैः ॥
कृताञ्जलिपुटैर्भक्त्या जयशब्दैरभिष्टुतम् ।
गन्धर्व्वैरप्सरोभिश्च किन्नरैः सिद्धचारणैः ॥
हाहाहूहूप्रभृतिभिः सत्वरं दिव्यगायनैः ।
अहंपूर्ब्बिकया नृत्यगीतवादित्रकारिभिः ॥
नेत्राम्बुजसहस्रैश्च पूज्यमानं मुदान्वितैः ।
विकिरद्भिः सर्व्वदिक्षु गन्धचन्दनजं रजः ॥
उपवेश्याथ गोविन्दं पूजयेदुपचारकैः ।
वल्लवीवृन्दमध्यस्थं कदम्बतरुमूलगम् ॥
हावहास्यविलासैश्च क्रीडमानं वनान्तरे ।
गोपीभिश्चैव गोपालैर्लीलान्दोलिकया नगम् ॥
चिन्तयित्वा जगन्नाथं विकिरेद्गन्धचूर्णकैः ।
सकर्पूरै रक्तपीतशुक्लैर्दिक्षु समन्ततः ॥
दिव्यैर्वस्त्रैर्दिव्यमाल्यैर्दिव्यगन्धैः सुधूपकैः ।
चामरान्दोलनैर्गानैः स्तुतिभिश्च समर्च्चितम्
॥
आन्दोलयेत् दोलिकास्थं सप्तवारान् शनैः
शनैः ।
तदा पश्यन्ति ये कृष्णं मुक्तिस्तेषां न संशयः ॥
ब्रह्महत्यादिपापानां पञ्चानां संक्षयो भवेत् ।
त्रिवारं दोलयेद्देवं सर्व्वपापापनोदनम् ॥
भक्तानुग्राहकं पुंसां भुक्तिमुक्त्येककारणम् ।
लीलाविचेष्टितं यस्य कृत्रिमं सहजं यथा ॥
अंहःसंघक्षयकरं मूलाविद्यानिवर्त्तकम् ।
पश्यन् द्वितीयं हरति गोहत्याद्युपपातकम् ॥
क्षिणोत्यशेषपापानि तृतीयं नात्र संशयः ।
दृष्ट्वा दोलास्थितं देवं सर्व्वपापैः प्रमुच्यते ॥
आध्यात्मिकैराधिदैवैराधिभूतैर्व्विमुच्यते ।
इमां यात्रां कारयित्वा चक्रवर्त्ती भवेन्नृपः ॥
ब्राह्मणस्तु चतुर्वेदी ज्ञानवान् जायते ध्रुवम् ॥”
इति स्कान्दे उत्कलखण्डे ४२ अध्यायः ॥ *
॥
तस्य संक्षेपव्यवस्था यथा, -- यदा अरुणो-
दयकाले पौर्णमासीलाभस्तत्रैव दोलयात्रा ।

**दोर्दण्डः**, पुं, (दोर्दण्ड इव ।) बाहुरूपदण्डः ।

यथा । “दोर्दण्डेन समो न चास्ति भुवने प्रत्यक्ष-
विष्णुः स्वयम् ।” इत्युद्भटः ॥

**दोर्मध्यं**, क्ली, (दोष्णो मध्यम् ।) बाहुमध्यभागः ।

इति शब्दार्थकल्पतरुः ॥ वाजु इति भाषा ॥

**दोर्मूलं**, क्ली, (दोषो मूलम् ।) कक्षः । वगल इति

भाषा । तत्पर्य्यायः । भुजकोटरः २ खण्डिकः
३ कक्षा ४ । इति हेमचन्द्रः । ३ । २५३ ॥

**दोलः**, पुं, दोलनम् । दुलधातोर्भावि घञ्प्रत्य-

येन निष्पन्नः । (दोल्यते अस्मिन् कृष्णेनेति ।
दोलि + अधिकरणे घञ् ।) श्रीकृष्णस्य यात्रा-
विशेषः । अस्य प्रमाणं यथा, पाद्मे पातालखण्डे ।
“विशेषतः कलियुगे दोलोत्सवो विधीयते ।
फाल्गुने च चतुर्द्दश्यामष्टमे यामसंज्ञके ॥
अथवा पौर्णमास्यान्तु प्रतिपत्सन्धिसम्मितौ ।
पूजयेद्विधिवद्भक्त्या फल्गुचूर्णैश्चतुर्विधैः ॥
सितरक्तैर्गौरपीतैः कर्पूरादिविमिश्रितैः ।
हरिद्राक्षारयोगाच्च रङ्गरम्यैर्मनोहरैः ॥
अन्यैर्व्वा रङ्गरम्यैश्च प्रीणयेत् परमेश्वरम् ।
एकादश्यां समारभ्य पञ्चम्यन्तं समापयेत् ॥
पञ्चाहानि त्र्यहाणि स्युर्दोलोत्सवो विधीयते ।
सप्तकृत्वस्ततो देवं दोलमण्डपमानयेत् ।
सुसंस्कृतायां रथ्यायां पताकातोरणादिभिः ॥
अधोदेशे मण्डपं तं सप्तशो भ्रामयेत्ततः ।
ऊद्र्ध्वदेशे पुनः सप्तस्तम्भवेद्यान्तु सप्त वै ॥
यात्रावसाने च पुनर्भ्रामयेदेकविंशतिम् ।
इयं लीला भगवतः पितामहमुखेरिता ॥
राजर्षिणेन्द्रद्युम्ने न कारिता पूर्ब्बमेव हि ।
फलपुष्पावनम्रैश्च शाखाभिः परिकल्पिते ॥
वृन्दावनान्तरे रम्ये मत्तसारसवारिणि ।
कोकिलारावमधुरे नानापक्षिगणाकुले ॥
नानोपशोभारचिते कालागुरुसुधूपिते ।
प्रफुल्लकेतकीषण्डगन्धामोदि-दिगन्तरे ॥
मल्लिकाशोकपुन्नागचम्पकैरुपशोभिते ।
तत्काननान्तर्घटिते मण्डपे चारुतोरणे ॥
भूषिते माल्यवसनचामरैरुपशोभिते ।
रत्नखट्वान्दोलिकायां तन्मध्ये वासयेत् प्रभुम् ॥
अनर्घ्यरत्नघटितकुण्डलोद्भासितश्रुतिम् ।
यथास्थानं यथाशोभं दिव्यालङ्काररञ्जनम् ॥
उभयदिने अरुणोदयकाले पौर्णमासीलाभे पूर्ब्ब-
दिने । सङ्गवमध्याह्नकालव्यापित्वात् त्रिसन्ध्य-
व्यापित्वेन तिथेर्ब्बलवत्त्वाच्च । यदा तिथिक्षय-
वशादरुणोदयकाले न पौर्णमासीलाभस्तदा
कदाचित् सहायभावेन चतुर्द्दश्यादरः । एतेन
पूर्ब्बदिने अरुणोदयं विना पूर्ब्बाह्णे पौर्णमासी-
लाभः परदिने मुहूर्त्तान्यूनतिथिलाभस्तदा फल्-
गूत्सवः पूर्ब्बदिने युग्मवचनानुरोधादिति निर-
स्तम् । उभयदिने कर्म्मयोग्यप्रशस्तकालप्राप्त-
तिथिसन्देह एव युग्मवचनप्रवृत्तेः । एवं पञ्चमी-
पर्य्यन्तासु तिथिषु तत्करणे अनयैव दिशा
व्यवस्थोन्नेयेति । इति दोलयात्रातत्त्वम् ॥ * ॥
चैत्रे मासि दोलस्य प्रमाणं गारुडे ।
“चैत्रे मासि सिते पक्षे दक्षिणाभिमुखं हरिम् ।
दोलारूढं समभ्यर्च्य मासमान्दोलयेत् कलौ ॥”
तन्नित्यता च पद्मपुराणे ।
“ऊर्ज्जे रथं मधौ दोलां श्रावणे तन्तु पर्व्व च ।
चैत्रे मदनकारोपमकुर्व्वाणो व्रजत्यधः ॥

| | | |
|---|---|---|
| दक्षिणाभिमुखं कृष्णं दालयानं सकृन्नराः ॥<br>दृष्ट्वापराधनिचयैर्मुक्तास्ते नात्र संशयः ॥”<br>अपि च ।<br>जैमिनिरुवाच ।<br>“फाल्गुने मासि कुर्व्वीत दोलारोहणमुत्तमम् ।<br>यत्र क्रीडति गोविन्दो लोकानुग्रहणाय वै ॥<br>प्रत्यर्च्चां देवदेवस्य गोविन्दाख्यान्तु कारयेत् ।<br>प्रासादं पुरतः कुर्य्यात् षोडशस्तम्भमुच्छ्रितम् ॥ | | |

विष्णुं दोलास्थितं दृष्ट्वा
त्रैलोक्यस्योत्सवो भवेत् ।
तस्मात् कार्य्यशतं त्यक्त्वा दोलाहे
उत्सवं कुरु ॥”
अथ दोलोत्सवविधिः ।
“चैत्रस्य शुक्लद्वादश्यां प्रातःकृत्यं
समाप्य च ।
नित्यपूजां विधायाथ
कुर्य्याद्दोलोत्सवं व्रती ॥
तदर्थञ्च विशेषेण नैवेद्यादिकमर्पयेत्
।
संमान्य वैष्णवांस्तैश्च गीतनृत्यादि
कारयेत् ॥
महानीराजनं कृत्वा
प्रक्षिपेदच्युतोपरि ।
गन्धानुलेपचूर्णानि विचित्राणि
विभागशः ॥
सन्तोष्य वैष्णवांस्तैश्च
गीतनृत्यादिभिः प्रभुम् ।
नत्वाभ्यर्थ्याप्रमत्तः सन्
दोलामारोहयेच्छुभाम् ॥
नीत्वा वहिर्व्वेदिकायामुत्तुङ्गायां
यथाविधि ।
अभ्यर्च्यान्दोलयेत् कृष्णं
सर्व्वलोकावलोकितम् ॥
एवमभ्यर्च्चयन् यामे यामे
त्वान्दोलयन् प्रभुम् ।
महोत्सवेन गमयेद्दिनं रात्रिञ्च
यत्नतः ॥
एवं जागरणं कृत्वा वैष्णवैः सह
वैष्णवः ।
प्रणम्य प्रार्थ्य निर्म्मञ्छ्य कृष्णं
स्वालयमानयेत् ॥
चैत्रे मासि सिते पक्षे तृतीयायां
रमापतिम् ।
दोलारूढं समभ्यर्च्य
मासमान्दोलयेत् कलौ ॥
यत् फाल्गुनस्य
राकादावुत्तराफाल्गुनीयदा ।

(दुष्यत्यनेनेति करणे घञ् ।) पापम् । इति
मेदिनी । षे, ४ ॥ वातपित्तकफाः । इति शब्द-
चन्द्रिका ॥ (यथा, --
“नास्ति रोगो विना दोषैर्यस्मात्तस्माद्विचक्षणः ।
अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत् ॥”
इति सुश्रुते । १ । ३५ अध्यायः ॥)
गोवत्सः । इति शब्दरत्नावली ॥ (दुष्यतेऽन्ध-
कारेणेति । दुष् + घञ् । प्रदोषः । यथा, भाग-
वते । ६ । ८ । १९ ।
“देवोऽपराह्णे मघुहोग्रधन्वा
सायं त्रिधामावतु माधवो माम् ।
दोषे हृषीकेश उतार्द्धरात्रे
निशीथ एकोऽवतु पद्मनाभः ॥”)
काव्यगुणेतरः । स च रसाद्यपकर्षकः । यथा,
“मुख्यार्थहतिर्द्दोषो रसश्च मुख्यस्तदाश्रया-
द्वाच्यः ।”
तत्र पददोषा यथा, --
“दुष्टं पदं श्रुतिकटु च्युतसंस्कृत्यप्रयुक्तमसमर्थम् ।
निहताथमनुचितार्थं निरर्थकमवाचकं त्रिधा-
श्लीलम् ॥
सन्दिग्धमप्रतीतं ग्राम्यं नेयार्थमथ भवेत् क्लिष्टम् ।
अविमृष्टविधेयांशं विरुद्धमतिकृत् समासगत-
मेव ॥”
वाक्यदोषो यथा, --
“प्रतिकूलवर्णमुपहतलुप्तविसर्गं विसन्धि हत-
वृत्तम् ।
न्यूनाधिककथितपदं पतत्प्रकर्षं समाप्तपुनरात्तम् ॥
अर्द्धान्तरैकवाचकमभवन्मतयोगमनभिहित-
वाच्यम् ।
अपदस्थपदसमासं सङ्कीर्णगर्भितं प्रसिद्धिहतम् ॥
भग्नप्रक्रमममतपरार्थञ्च वाक्यमेवं तथा ॥”
अर्थदोषा यथा, --
“अर्थोऽपुष्टः कष्टो व्याहतपुनरुक्तदुष्करग्राम्याः ।
सन्दिग्धो निर्हेतुः प्रसिद्धिविद्याविरुद्धश्च ॥
अनवीकृतः सनियमानियमविशेषाविशेषपरिवृत्तः ।
साकाङ्क्षोऽपदयुक्तः सहचरभिन्नः प्रकाशित-
विरुद्धः ॥
घिध्यनुबादायुक्तस्त्यक्तपुनःस्वीकृतोऽश्लीलः ॥”
रसदोषा यथा, --

आचमनं विना भक्षणे दोषाभावो यथा, --
“मधुपर्के च सोमे च ताम्बूलस्य च भक्षणे
।
फलमूले चेक्षुदण्डे न दोषं प्राह वै मनुः
॥”
इति कूर्म्मपुराणम् ॥ * ॥
द्वात्रिंशत्प्रकारा दोषा यथा, --
“यानैर्व्वा पादुकैर्व्वापि गमनं भगवत्गृहे ।
देवोतसवाद्यसेवा च अप्रणामस्तदग्रतः ॥
उच्छिष्टे चैव चाशौचे भगवद्वन्दनादिकम्
।
एकहस्तप्रणामस्तु तथा चैकं प्रदक्षिणम्
॥
पादप्रसारणञ्चाग्रे तथा पर्य्यङ्कबन्धनम् ।
शयनं भक्षणञ्चापि मिथ्याभाषणमेव च ॥
उच्चैर्भाषो मिथोजल्पो रोदनादि च
विग्रहः ।
निग्रहानुग्रहौ चैव स्त्रीयूथक्रूरभाषणम् ॥
कश्मलावरणञ्चैव परनिन्दा परस्तुतिः ।
गुरौ मौनं निजस्तोत्रं देवतानिन्दनं तथा
॥
अपराधास्तथा
विष्णोर्द्वात्रिंशत्परिकीर्त्तिताः ॥”
इति पाद्मे पातालखण्डम् ॥ * ॥
(आततायिमारणे अधर्म्मदण्डो दोषो न
भवति ।
यथा, मनुः । ८ । ३५१ ।
“नाततायिवधे दोषो हन्तुर्भवति कश्चन
।
प्रकाशं वाप्रकाशं वा
मन्युस्तन्मन्युमृच्छति ॥”
“न कश्चिदपि अधर्म्मदण्डः
प्रायश्चित्ताख्यो दोषो
वा भवति ।” इति तट्टीकायां कुल्लूकभट्टः
॥ अष्ट-
वसूनामन्यतमः स च षष्ठः । यथा,
भागवते ।
६ । ६ । ११ ।

तदा दोलोत्सवः कार्य्यस्तच्च श्रीपुरुषोत्तमे ॥”
इति हरिभक्तिविलासः ॥

**दोला**, स्त्री, नीलिनी । (दोल्यते अस्यामिति ।
दोलि + घञ् + टाप् ।) उद्यानादिषु क्रीडार्थं
काष्ठादिमयो हिन्दोलकः । हैँदला इति भाषा ।
वाह्यखट्वा । डुली इति भाषा । तत्पर्य्यायः ।
प्रेङ्खा २ । इत्यमरः । २ । ८ । ५३ ॥ दोली ३
खट्वाला ४ दोलिका ५ । इति शब्दरत्नावली ॥
प्रेङ्खः ६ । इति भरतधृतरत्नकोषः ॥ हिन्दोला
७ । इति हारावली । २१४ ॥ (यथा, महा-
भारते । ३ । ६२ । २७ ।
“द्विधेव हृदयं तस्य दुःखितस्याभवत् तदा ।
दोलेव मुहुरायाति याति चैव सभां प्रति ॥”)
दोलाद्वाराभ्रमणगुणः । वातकोपनत्वम् । अङ्ग-
स्थैर्य्यबलाग्निकारित्वञ्च । इति राजवल्लभः ॥
अस्य विवरणं चतुर्दोलशब्दे द्रष्टव्यम् ॥

**दोलायमानः**, त्रि, (दोलां करोतीति । दोला +
क्यङ् । ततः शानच् ।) दोलनविशिष्टः । यथा,
“दोलायमानं गोविन्दं मञ्चस्थं मधुसूदनम् ।
रथस्थं वामनं दृष्ट्वा पुनजन्म न विद्यते ॥”
इत्युतकलखण्डम् ॥

**दोलिका**, स्त्री, (दोला + स्वार्थे कन् । टापि
“व्यभिचारिरसस्थायिभावानांशब्दवाच्यता ।
कष्टकल्पनया व्यक्तिरनुभावविभावयोः ॥
प्रतिकूलविभावादिग्रहो दीप्तिः पुनः पुनः ।
अकाण्डे प्रथनच्छेदावङ्गस्याप्यतिविस्तृतिः ॥
अङ्गिनोऽननुसन्धानं प्रकृतीनां विपर्य्ययः ।
अनङ्गस्याभिधानञ्च रसे दोषाः स्युरीदृशाः ॥”
उक्तपदादिदोषाः स्थानविशेषे क्वचित् गुणा
भवन्ति । इति काव्यप्रकाशः ॥ * ॥ दोषविशेषा
यथा, राजधर्म्मे ।
“यतः प्रभवति क्रोधः कामो वा भरतर्षभ ! ।
शोकमोहौ विधित्सा च परासुत्वञ्च तद्वद ॥
लोभो मात्सर्य्यमीर्ष्या च कुत्सासूया कृपा भयम् ॥”

“द्रोणःप्राणो ध्रुवोऽर्कोऽग्निर्दोषो वसुर्विभावसुः ॥”)

**दोषकः**, पुं, (दोष एव । स्वार्थे कन् ।) गोवत्सः ।
इति शब्दरत्नावली ॥

**दोषग्राही**, [न्] त्रि, (दोषं गृह्णातीति । ग्रह +
णिनिः ।) दोषग्रहणकर्त्ता । तत्पर्य्यायः ।
खलः २ पुरोभागी ३ द्विजिह्वः ४ मत्सरी ५ ।
इति हलायुधः ॥
“विसृज्य शूर्पवद्दोषान् गुणान् गृह्णन्ति साधवः ।
दोषग्राही गुणत्यागी चालनीव हि दुर्ज्जनः ॥”
इत्युद्भटः ॥

**दोषज्ञः**, त्रि, (दोषं जानातीति । दोष + ज्ञा +
“आतोऽनुपसर्गे कः ।” ३ । २ । ३ । इति कः ।)
पण्डितः । इत्यमरः । २ । ७ । ५ ॥ (यथा,
रघुः । १ । ९३ ।
“अथ प्रदोषे दोषज्ञः संवेशाय विशांपतिम् ।
सूनुः सूनृतवाक् स्रष्टुः विससर्जोदितश्रियम् ॥”
दोषान् वातपित्तकफान् जानातीति । कः ।)
चिकित्सकः । इति हेमचन्द्रः । ३ । ५ ॥ दोष-
विषयकज्ञानयुक्तश्च ॥

**दोषत्रयं**, क्ली, (दोषानां वातपित्तकफानां त्रयम् ।)
वातपित्तकफाः । इति राजनिर्घण्टः ॥ (दोषाणां
त्रयम् । यथाह व्यासः ।
“रूपं रूपविवर्ज्जितस्य भवतो ध्यानेन यद्वर्णितं
स्तुत्या निर्व्वचनीयताखिलगुरोर्दूरीकृतं यन्मया ।
व्यापित्वञ्च विनाशितं भगवतो यत्तीर्थयात्रादिना

अत इत्वम् ।) हिन्दोला । इति
हारावली ।
१८१ ॥

**दोली**, स्त्री, (दोल्यते अनयेति । दोलि + इन् ।
कृदिकारादिति वा ङीष् ।) दोला । इति
शब्दरत्नावली ॥ डुली इति भाषा ॥

**दोषः**, पुं, (दूष्यते इति । दुष वैकृत्ये + णिच् +
भावे घञ् ।) दूषणम् । यथा, --
“अदाता वंशदोषेण
कर्म्मदोषाद्दरिद्रता ।
उन्मादो मातृदोषेण पितृदोषेण
मूर्खता ॥”
इति चानक्यम् । ४८ ॥

क्षन्तव्यं जगदीश ! तत् विकलतादोषत्रयं
मामकम् ॥”)

**दोषा**, स्त्री, (दुष्यतेऽन्धकारेणेति । दुष् + घञ् + टाप् ।) रात्रिः । (यथा, आर्य्यासप्तशत्याम् । २९८ ।
"दोपदशा कुलयुवतिर्वैदग्ध्येनैव मलिनतामेति ।
दोषा अपि भूषायै गणिकायाः शशिकलायाश्च ॥"
दाम्यत्यनेनेति । दम् + "दमेर्डोसिः ।" उणां । २ । ६९ । इति डोसिः । भागुरिमते टाप् ।) भुजः । इति मेदिनी । षे, १५ ॥

**दोषा**, व्य, (दुष्यत्यत्रेति । दुष् + "आः समिण्-निकषिभ्याम् ।" उणां । ४ । १७४ । इत्यत्र ।
"वाहुलकात् दिविदुषिभ्याञ्च ।" इत्युज्ज्वलदत्तोक्तेः आः ।) "स्वरादिनिपातमव्ययम् ।" १ । १ । ३७ । इति स्वरादिपाठात् अव्ययत्वम् ।) नक्तम् । रजन्याम् इत्यथः । इत्यमरः । ३ । ४ । ६ ॥
(यथा, माघे । ४ । ४६ ।
"दोषापि नूनमहिमांशुरसौ किलेति व्याकोशकोकनदतां दधते नलिन्यः ॥")
निशामुखम् । इति हेमचन्द्रः ॥

**दोषाकरः**, पुं, (दोषा रात्रौ करो यस्य । यद्वा, दोषां करोतीति । दोषा + कृ + बाहुलकात् टः ।) चन्द्रः । यथा, ज्योतिषतत्त्वे ।
"मूलत्रिकोणनिजमन्दिरगोऽथपूर्णो मित्रर्क्षसौम्यगृहगोऽथ तदीक्षितो वा ।
यामित्रवेधविहितानपहृत्य दोषान् दोषाकरः सुखमनेकविधं विधत्ते ॥"
(यथा च, प्रद्युम्नविजये । ६ । ३ ।
"दोषाकराङ्कमलिनामृतरश्मिताते पञ्चप्रसूनशरता च मनोभवस्य ।
प्राणत्वमस्य जगताञ्च समीरणस्य मन्येऽद्य पुण्यजनतेव निशाचराणाम् ॥")
दोषाणामाकरश्च ॥

**दोषाक्लेशी**, स्त्री, (दोषां भुजं क्लिश्नातीति । दर्शी । यो गुणं त्यक्त्वा केवलं दोषमेव पश्यति सः । दोषे एकस्मिन्नेव ज्ञानं यस्य सः । इति भरतः ॥ तत्पर्य्यायः । पुरोभागी २ । इत्यमरः । ३ । १ । ४६ ॥

**दोस्थः**, पुं, (दोषि हस्ते लक्षणया दोर्व्यापारे वा तिष्ठतीति । स्था + कः ।) क्रीडा । क्रीडकः । सेवा । सेवकः । इति त्रिकाण्डशेषः ॥ दोःस्थिते, त्रि ॥

**दोहः**, पुं, (दोग्धि अस्मिन्निति । दुह + आधारे घञ् ।) दोहनपात्रम् । इति शब्दचन्द्रिका ॥
(यथा, भागवते । ४ । १८ । २७ ।
"एवं पृथ्वादयः पृथ्वीमन्नादाः स्वन्नमात्मनः ।
दोहवत्सादिभेदन क्षीरभेदं कुरूद्वह ! ॥"
दुह्यते इति । दुह् + कर्म्मणि घञ् ।) दुग्धम् ।
("दुह्यते इति दोहः क्षीरं ह्यो गोदोहस्य विकारः हैयङ्गवीनम् ।" इति सिद्धान्तकौमुदी ॥
दुह् + भावे घञ् ।) दोहनम् ॥ (यथा, रघुः । २ । २३ ।
"दोहावसाने पुनरेव दोग्ध्रीं भेजे भुजोच्छिन्नरिपुर्निषण्णाम् ॥")

**दोहजं**, क्ली, (दोहात् दोहनाज्जायते इति । दोह + जन् + डः ।) दुग्धम् । इति शब्दार्थकल्पतरुः ॥

**दोहडिका**, स्त्री, छन्दोविशेषः । इति छन्दो-पादाघातादशोकस्तिलककुरुवकौ वीक्षणालिङ्ग-नाभ्याम् ।
मन्दारो नर्म्मवाक्यात् पटुमृदुहसनात् चम्पको वक्त्रवातात्
चूतो गीतान्नमेरुर्विकसति च पुरो नर्त्तनात् कर्णि-कारः ॥")

**दोहदलक्षणं**, क्ली, (दोहदस्य गर्भस्य लक्षणं यत्र ।) वयःसन्धिः । गर्भः । इति मेदिनी । णे, ११७ ॥

**दोहदवती**, स्त्री, (दोहदो गर्भिण्यभिलाषोऽस्त्यस्या इति । दोहद + मतुप् मस्य वः । ङीप् च ।) अन्नपानादिद्रव्यविशेषाभिलाषवती गर्भवती । इति भरतः ॥ तत्पर्य्यायः । श्रद्धालुः २ । इत्यमरः । २ । ६ । २१ ॥ * ॥ गर्भिणीकर्त्तव्याकर्त्तव्यं यथा, --
"दित्यां गर्भमथाधत्त कश्यपः प्राह तां पुनः ।
त्वया यत्नो विधातव्यः अस्मिन् गर्भे वरानने ! ॥
संवत्सरशतन्त्वेकमस्मिन्नेव तपोवने ।
सन्ध्यायां नैव भोक्तव्यं गर्भिण्या वरवर्णिनि ! ॥
न स्थातव्यं न गन्तव्यं वृक्षमूलेषु सर्व्वदा ।
नोपस्करेषूपविशेन्मुषलोलूखलादिषु ॥
जलञ्च नावगाहेत शून्यागारञ्च वर्ज्जयेत् ।
वल्मीकेषु न तिष्ठेत न चोद्विग्नमना भवेत् ॥
विलिखेन्न नखैर्भूमिं नाङ्गारेण न भस्मना ।
न शयालुः सदा तिष्ठेद्व्यायामञ्च विवर्ज्जयेत् ॥
न तुषाङ्गारभस्मास्थिकपालेषु समाविशेत् ।
वर्ज्जयेत् कलहं लोके गात्रभङ्गञ्च वर्ज्जयेत् ॥

क्लिश् + अण् । गौरादित्वात् ङीष् ।) वनवर्व्व-
रिका । इति राजनिर्घण्टः ॥

**दोषातनः**, त्रि, (दोषा रात्रौ भवः इति । दोषा +
"सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्यु लौ तुट्च ।"
४ । ३ । २३ । इति ट्युः तुट् च ।) रात्रिभवः ।
इति व्याकरणम् ॥

**दोषातिलकः**, पुं, (दोषाया रजन्यास्तिलक इव ।)
प्रदीपः । इति त्रिकाण्डशेषः ॥

**दोषास्यः**, पुं, (दोषा रात्रिरास्यमिव यस्य ।
दोषातिलकत्वादस्य तथात्वम् ।) प्रदीपः । इति
शब्दचन्द्रिका ॥

**दोषिकः**, पुं, (दोषाः वातपित्तकफाः कारणत्वेन
सन्त्यस्येति । ठन् ।) रोगः । इति
शब्दचन्द्रिका ॥

**दोषी**, [न्] त्रि, (दुष्यतीति । दुष् + "संपृचा-
नुरुधाङ्यमाङ्यसपरिसृसंसृजेति ।" ३ । २ ।
१४२ । इति घिनुण् ।) दोषयुक्तः । अपराधी ।
दोषशब्दादस्त्यर्थे इनिप्रत्ययेन निष्पन्नः
इति वा ॥

**दोषैकदृक्**, [श्] त्रि, (दोषे एवैकस्मिन् न तु
गुणसंघे दृक् ज्ञानमस्येति । यद्वा, दोषमेव एकं
केवलं पश्यतीति । दृश + क्विप् ।) दोषमात्र-
मञ्जरी ॥ दोहा इति भाषा । अस्य विवरणं
छन्दःशब्दे द्रष्टव्यम् ॥

**दोहदं**, क्ली, (दोहमाकर्षणं ददातीति । दोह +
दा + "आतोऽनुपसर्गे कः ।" ३ । २ । ३ । इति
कः ।) इच्छा । इत्यमरः । १ । ७ । २७ ॥

**दोहदः**, पुं, क्ली, (दोहमाकर्षं ददातीति । दा +
कः ।) गर्भिण्यभिलाषः । साद इति भाषा ।
तत्पर्य्यायः । दौर्हृदम् २ श्रद्धा ३ लालसा ४ ।
इति हेमचन्द्रः । ३ । २०५ ॥ जातुजः ५ । इति
रत्नकोषः ॥ (यथा, याज्ञवल्क्यसंहितायाम् ।
३ । ७९ ।
"दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ।
वैरूप्यं मरणं वापि तस्मात् कार्य्यं प्रियं स्त्रियाः ॥")
गर्भचिह्नम् । इति भरतधृतकोषान्तरम् ॥
(पुष्पोद्गमकौषधम् । यथा, रघौ । ८ । ६२ ।
"कुसुमं कृतदोहदस्त्वया यदशोकोऽयमुदीरयिष्यति ।
अलकाभरणं कथं नु तत् तव नेष्यामि निवापमाल्यताम् ॥"
यथा च, मेघदूते । ७८ ।
"रक्ताशोकश्चलकिशलयः केशरस्तत्र कान्तः
प्रत्यासन्नः कुरुवकवृतेर्माधवीमण्डपस्य ।
एकः सख्यास्तव सह मया वामपादाभिलाषी
काङ्क्षत्यन्यो वदनमदिरां दोहदच्छद्मनास्याः ॥"
न मुक्तकेशा तिष्ठेत नाशुचिः स्यात् कदाचन ।
न शयीतोत्तरशीरा न चापरशिराः क्वचित् ॥
न वस्त्रहीना नोद्विग्ना न चार्द्रचरणा सती ।
नामाङ्गल्यां वदेद्वाचं न च हास्याधिकाभवेत् ॥
कुर्य्याच्च गुरुशुश्रूषां नित्यमङ्गलतत्परा ।
सर्व्वौषधीभिः कोष्णेन वारिणा स्नानमाचरेत् ॥
कृतरक्षा सुभूषा च वास्तुपूजनतत्परा ।
तिष्ठेत् प्रसन्नवदना भर्त्तुः प्रियहिते रता ॥
दानशीला तृतीयायां पार्व्वत्या नक्तमाचरेत् ।
इतिवृत्ता भवेन्नारी विशेषेण तु गर्भिणी ॥
यस्तु तस्या भवेत् पुत्त्रः शंतायुर्बुद्धिसंयुतः ।
अन्यथा गर्भपतनमवाप्नोति न संशयः ॥
तस्मात्त्वमनया वृत्त्या गर्भेऽस्मिन् यत्नमाचर ॥"
इति मत्स्यपुराणम् ॥

**दोहदान्विता**, स्त्री, (दोहदेन गर्भजनिताभि-
लाषेण अन्विता ।) दोहदवती । इति हेम-
चन्द्रः । ३ । २०३ ॥

**दोहनं**, क्ली, (दुह + भावे ल्युट् ।) स्तनाद्दुग्ध-
निःसारणम् । दोया इति भाषा । दुहधातो-
र्भावेऽनट्प्रत्ययेन निष्पन्नम् ॥ (दुह्यतेऽस्मि-
न्निति । दुह + आधारे ल्युट् । दोहानपात्रम् ।
यथा, महाभारते । १३ । ९४ । ४१ ।
"बालजेन निदानेन कांस्यं भवतु दोहनम् ।
दुह्येत परवत्सेन यस्ते हरति पुष्करम् ॥")

**दोहनी**, स्त्री, (दुह्यते अस्यामिति । दुह् + आधारे
ल्युट् । ङीप् ।) दोहनपात्रम् । ततपर्य्यायः ।

|  | अत्र यस्य यो दोहदः स धृतो<br>मल्लिनाथेन<br>यथा, --<br>“स्त्रीणां स्पर्शात् प्रियङ्गर्विकसति<br>वकुलः शीधु-<br>गण्डूषसेकात् |  |
|---|---|---|

लेपनम् २ पारी ३ दोहः ४ दोहनम् ५ । इति शब्दरत्नावली ।

**दोहलः**, पुं, (दोहमाकर्षं लातीति । ला + "आतो ऽनुपसर्गे कः ।" ३ । २ । ३ । इति कः ।) दोहदः । इच्छा । इति शब्दार्थकल्पतरुः ॥ (यथा, मालविकाग्निमित्रनाटके । ८ । ४७ ।
"अशोक ! यदि सद्य एव मुकुलैर्न सम्पत्स्यते
मुधा वहसि दोहलं ललितकामिसाधारणम् ॥")

**दोहलवती**, स्त्री, (दोहलोऽस्त्यस्या इति मतुप् । मस्य वः । ङीप् ।) दोहदवती । इति शब्दार्थ-कल्पतरुः ॥

**दोहली**, स्त्री, (दोहं लातीति । ला + कः । गौरा-दित्वात् ङीष् ।) अशोकवृक्षः । इति राज-निर्घण्टः ॥ (अशोकशब्देऽस्या विवरणं ज्ञेयम् ॥)

**दोहापनयः**, पुं, (दोहं दोहनमपनयति स्वनिः-सरणेनेति । अप + नी + अच् ।) दुग्धम् । इति त्रिकाण्डशेषः ॥

**दोहीयान्**, [स्] त्रि, (अयमनयोरतिशयेन दोग्धा । "तुश्छन्दसि ।" ५ । ४ । ५९ । इति ईयसुन् । "तुरिष्ठेमेयःसु ।" ६ । ४ । १५४ । इति तृशब्दस्य
लोपः ।) अतिशयदोहकः ॥

**दोह्यं**, त्रि, (दुह्यते इति । दुह् + ण्यत् ।) दोह-नीयम् । दुह्यम् । दोग्धव्यम् । इति व्याकरणम् ॥
(दुह्यतेऽस्या इति । गोमहिष्यादि । इति मिताक्षरा ॥ यथा, याज्ञवल्क्ये । २ । १८० ।
"दशैकपञ्चसप्ताहमासत्र्यहार्द्धमासिकम् ।
बीजायोवाह्यरत्नस्त्रीदोह्यपुंसां परीक्षणम् ॥")

**दौःसाधिकः**, पुं, (दुर्दुष्टः साधः कर्म्म तत्र नियुक्तः । ठक् ।) द्वाःस्थितः । द्वारपालः । इति
त्रिकाण्डशेषः ॥

अगुरूशीरकाश्मर्य्यः कुष्ठं तगरनालिका ।
गोरोचना प्रियङ्गुश्च चोलं मदनकं नखम् ॥
सरलः सप्तपर्णश्च लाक्षा चामलकी तथा ।
कर्च्चूरकः पद्मकञ्च एतैस्तैलं प्रसाधितम् ॥
प्रस्वेदमलदौर्गन्ध्यकण्डुकुष्ठहरं परम् ॥"
इति गारुडे १९८ अध्यायः ॥

**दौर्ग्यं**, क्ली, दुर्गवृत्तिधर्म्मः । दुर्गसम्बन्धि । दुर्गस्य भावः दुर्गस्येदं वेत्यर्थे ष्यप्रत्ययः (ष्यञ्) ॥

**दौर्ज्जन्यं**, क्ली, दुर्ज्जनस्य भाव इदं वेत्यर्थे ष्य-प्रत्ययः (ष्यञ् ।) दुर्ज्जनत्वम् । (यथा, महा-
भारते । ६ । १८ । ७६ ।
"तदिदं मम दौर्ज्जन्यं बालिशस्य महीयसि ।
क्षन्तुमर्हति मातस्त्वं दिष्ट्या गर्भो मृतोत्थितः ॥")

**दौर्ब्बल्यं**, क्ली, दुर्ब्बलस्य भाव इत्यर्थे ष्यप्रत्ययः (ष्यञ्) । दुर्ब्बलता । अल्पबलत्वम् । (यथा,
मनुः । ८ । १७१ ।
"अनादेयस्य चादानाद्देयस्य च विवर्ज्जनात् ।
दौर्ब्बल्यं ख्याप्यते राज्ञः स प्रेत्येह च नश्यति ॥")

**दौर्भागिनेयः**, पुं, (दुर्भगाया अपत्यं पुमान् । दुर्भगा + "कल्याण्यादीनामिनङ्च ।" ४ । १ ।
१२६ । इति ढक् इनङादेशश्च ।) दुर्भगापुत्त्रः ।
इति शब्दरत्नावली ॥ दुर्भगायाः कन्या दौर्भागि-
नेयी ॥

**दौर्भाग्यं**, क्ली, दुर्भगस्य दुर्भगाया वा भावः ।

द्वाररक्षकः । (यथा, राजतरङ्गिण्याम् । ५ । २८ ।
"राजदौवारिकः
श्रीमाञ्छूरस्यासीन्महोदयः ॥")
तत्पर्य्यायः । द्वाःस्थः २ क्षत्ता ३ दण्डी ४ वेत्र-
धरः ५ । इति हलायुधः ॥ प्रतीहारः ६ प्रतिहारः ७ दर्शकः ८ द्वारी ९ वेतालः १०
द्वारपालकः ११ दौःसाधिकः १२ वर्त्तरूढः १३
गर्व्वाटः १४ दण्डपांशुलः १५ । इति शब्द-
रत्नावली ॥ द्वाःस्थितः १६ वेत्रधारकः १७ वर्त्त-
रूकः १८ दण्डवासी १९ । इति त्रिकाण्डशेषः ॥
तस्य लक्षणं यथा, --
"प्रांशुः सुरूपो दक्षश्च प्रियवादी न चोद्धतः ।
चित्तग्राहश्च सर्व्वेषां प्रतीहारो विधीयते ॥"
इति मत्स्यपुराणम् ॥
"इङ्गिताकारतत्त्वज्ञो बलवान् प्रियदर्शनः ।
अप्रमादी सदा दक्षः प्रतीहारः स उच्यते ॥"
इति चाणक्यम् । १०८ ॥

**दौष्कुलेयः**, त्रि, (दुष्कुलस्यापत्यम् । "दुष्कुलात् ढक् ।" ४ । १ । १४२ । इति ढक् ।) दुष्कुलो-
द्भवः । निन्दितवंशजातः । दुष्कुलशब्दात्
भवार्थे वा ष्णेयप्रत्ययः ॥ (यथा, महाभारते ।
३ । १९३ । २३ ।
"कुले जाताश्च क्लिश्यन्ते
दौष्कुलेयवशानुगाः ॥")

**दौकूलं**, त्रि, (दुकूलेन परिवृतो रथ इति ।
"परिवृतो रथः ।" ४ । २ । १० । इति अण् ।)
दुकूलेनावृतरथादि । इत्यमरटीकायां भरतः ॥

**दौत्यं**, क्ली, (दूतस्य भावः कर्म्म वा । ष्यञ् ।)
दूत्यम् । दूतस्य भावः । दूतस्य कर्म्म । इत्यमर-
टीकायां भरतः ॥ (यथा, हरिवंशे । १७२ । १८ ।
"दौत्यञ्च तत् कृतं घोरे विग्रहे जनमेजय ! ॥")

**दौरात्म्यं**, क्ली, दुर्निन्दित आत्मा यत्नः धृतिः बुद्धिः
स्वभावः शरीरं वा यस्य स दुरात्मा । तस्य
भावकर्म्मार्थे ष्ण्यप्रत्ययः । (ष्यञ् ।) दुरा-
त्मनो भावः । दुरात्मनः कर्म्म । (यथा, महा-
भारते । २ । १५ । ७ ।
"शङ्किताः स्म महाभाग ! दौरात्मात् तस्य
चानघ ! ॥")

**दौर्गन्ध्यं**, क्ली, (दुर्दुष्टो गन्धोऽस्य दुर्गन्धः । ततो
भावे ष्यञ् ।) दुर्गन्धता । (यथा, महाभारते ।
३ । २६० । १३ ।
"न संस्वेदो न दौर्गन्ध्यं पुरीषं मूत्रमेव वा ॥")
तन्नाशकतैलं यथा, --
"चन्दनं कुङ्कुमं मांसी कर्पूरो जातिपत्रिका ।
जातीकक्कोलपूगानां लवङ्गस्य फलानि च ॥
(ष्यञ् । "हृद्भगसिन्ध्वन्ते पूर्ब्बपदस्य च ।"
७ । ३ । १९ । इत्युभयपदबृद्धिः ।)
दुर्भगत्वम् ।
यथा, ज्योतिस्तत्त्वे ।
"भुक्त्रा पितृगृहे नारी भुङ्क्ते स्वामिगृहे यदि ।
दौर्भाग्यं जायते तस्याः शपन्ति कुलदेवताः ॥"
दुर्भाग्यमेव दौर्भाग्यम् । इति स्वार्थे
ष्ण्यप्रत्ययः ॥

**दौर्म्मनस्यं**, क्ली, दुर्म्मनसो भावः (ष्यञ्) । दुःख-
निबन्धनचित्तावसादः । इति चण्डीटीकायां
नागोजीभट्टः ॥ (यथा, मार्कण्डेये । ८१ । २६ ।
"तेषां कृते मे निःश्वासा दौर्म्मनस्यञ्च
जायते ॥")

**दौर्व्वीणं**, क्ली, (दूर्व्वाया इदम् । दूर्व्वा + खञ् ।)
इष्टपर्णम् । दूर्व्वारसः । इति मेदिनी । णे,
५३ ॥

**दौर्हृदं**, क्ली, (दुर्हृदो भावः । युवादित्वात् अण् ।
बाहुलकात् न द्विपदवृद्धिः ।) इच्छा । दोहदम् ।
इति हेमचन्द्रः । ३ । २०५ ॥
("लब्धदौर्हृदा हि वीर्य्य-
वन्तं चिरायुषञ्च पुत्त्रं जनयति ।" इति
सुश्रुते ॥
दूषितहृदयत्वम् । यथा, महाभारते । ५ ।
२६ । १४ ।
"दुर्भाषिणो मन्युवशानुगस्य
कामात्मनो दौर्हृदे भावितस्य ॥")

**दौलेयः**, पुं, (दुलेरपत्यमिति । "इतश्चानिञः ।"
४ । १ । १२२ । इति ढक् ।) कच्छपः । इति
हेमचन्द्रः । ४ । ४१५ ॥

**दौल्मिः**, पुं, (दुल्मस्यापत्यम् । दुल्म + इञ् ।)
इन्द्रः । इति शब्दार्थकल्पतरुः ॥

**दौष्मन्तिः**, पुं, (दुष्मन्तस्यापत्यं पुमान् । दुष्मन्त +
"अत इञ् ।" ४ । १ । ९५ । इति इञ् ।)
दुष्मन्तराजपुत्त्रः । स तु भरतराजः । इति
त्रिकाण्डशेषः ॥ (यथा, महाभारते । १ । ७४ । २ ।
"रूपौदार्य्यगुणोपेतं दौष्मन्तिं जनमेजय ! ॥")

**दौहित्रः**, पुं, स्त्री, (दुहितृ + "अनृष्यानन्तर्य्ये विदा-
दिभ्योऽञ् ।" ४ । १ । १०४ । इति अञ् ।)
दुहितुरपत्यम् । इति हेमचन्द्रः । ३ । २०८ ॥
तत्पर्य्यायः । कुतुपः २ । इति शब्दरत्नावली ॥
"त्रीणि श्राद्धे पवित्राणि दौहित्रं कुतुपस्तिलाः ।
दौहित्रं खड्गमित्याहुरपत्यं दुहितुस्तिलाः ॥
कपिलाया घृतञ्चैव दौहित्रमिति चोच्यते ॥"
इति मार्कण्डेयपुराणम् ॥
"पौत्त्रदौहित्रयोर्लोके विशेषो नास्ति कश्चन ।
तयोर्हि मातापितरौ सम्भूतौ तस्य देहतः ॥"
इति दायभागः ॥
दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति पौत्त्रवदिति
मनुः ॥ तदुतपत्तौ कन्यागृहे पितुर्भोजने दोषा-
भावो यथा, --
"कन्यायां ब्रह्मदेयायामभुञ्जन् सुखमश्नुते ।
अथ भुञ्जति यो मोहात् भुक्त्वा स नरकं व्रजेत् ॥
अप्रजायाञ्च कन्यायां न भुञ्जीयात् कदाचन ।

| | | |
|---|---|---|
| | **दौवारिकः**, पुं, (द्वारि नियुक्तः । "तत्र नियुक्तः ।" ४ । ४ । ६९ । इति ठक् । ततः "द्वारादीनाञ्च ।" ७ । ३ । ४ । इति न बृद्धिः औ-आगमश्च ।) | दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचसि ॥ महासत्त्वसमाकीर्णात् नास्ति ते नरकाद्भयम् ॥ तीर्णस्त्वं सर्व्वदुःखेभ्यः परं स्वर्गमवाप्स्यसि । दौहित्रस्य तु दानेन नन्दन्ति पितरः सदा ॥ यत्किञ्चित् कुरुते दानं तदानन्त्याय कल्प्यते ॥ मातुः पितुश्च विज्ञेयं तच्छुभस्याभिगामिनः । मातुः पितुर्हिरण्यस्य दौहित्रोऽर्द्धमवाप्नुते ॥" इत्याद्ये वह्निपुराणे कन्यादाननामाध्यायः ॥ * ॥ |

शूद्रमात्रस्य दौहित्रो दत्तको भवति ।
यथा, --
“दौहित्रो भागिनेयश्च शूद्रैस्तु क्रियते सुतः ।
ब्राह्मणादित्रये नास्ति भागिनेयसुतः क्वचित्
॥”
इति दत्तकमीमांसाधृतशौनकवचनम्॥
तस्य मातामहधनाधिकारित्वम्। यथा, --
“दुहित्रभावे दौहित्रः ।
‘पौत्रदौहित्रयोर्ल्लोके विशेषो नास्ति धर्म्मतः ।
तयोर्हि मातापितरौ सम्भूतौ तस्य देहतः ॥’
इति मनुवचने पौत्रतुल्यत्वाभिधानेन यथा
पुत्राभावे पौत्रस्तथा दुहित्रभावे दौहित्रः ।
अतएव गोविन्दराजधृतो विष्णुः ।
अपुत्रपौत्रे संसारे दौहित्रा धनमाप्नुयुः ।
पूर्ब्बेषां हि स्वधाकारे पौत्रदौहित्रकाः समाः
॥”
इति दायतत्त्वम् ॥
अपि च, सर्व्वदुहित्रभावे दौहित्रस्य अधिकारः
।
दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत् ।
स एव दद्यात् द्वौ पिण्डौ पित्रे मातामहाय च ॥
इत्यादिवचनात्। अपुत्रस्य इति
दुहितृपर्य्यन्ता-
भावोपलक्षणम्॥ १ ॥ भ्रातृपौत्रस्याभावे
पितु-
र्द्दौहित्रस्याधिकारः। धनिपित्रादित्रयपिण्ड-
दातृत्वात्॥ २ ॥ पितुर्द्दौहित्राभावे
भ्रातृदौहित्रो-
ऽधिकारी। धनिभोग्यपितृपितामहपिण्डदातृ
त्वात्॥ ३ ॥ पितृव्यपौत्राभावे
पितामहदौहित्रस्य
अधिकारः धनिभोग्यपितामहप्रपितामहपिण्ड
दातृत्वात्॥ ४ ॥ पितामहदौहित्र स्याभावे
पितृव्य-
दौहित्रस्याधिकारः। धनिभोग्यतत्पितामह-
प्रपितामहपिण्डद्वयदातृत्वात्॥ ५ ॥ तदभावे
पितामहभ्राता तदभावे पितामहभ्रातृपुत्त्रः
तदभावे पितामहभ्रातृपौत्रः। तेषां धनिभोग्य-

कुतपञ्चासने दद्यात्तिलैश्च विकिरेन्महीम्
॥”
इति मानवे। ३। २३४ ॥

**द्यावाक्षमे**, स्त्री, (द्यौश्च क्षमा च। “दिवो द्यावा।”
६। ३। २९। इति द्यावादेशः।)
स्वर्गपृथिव्यौ।
इति हेमचन्द्रः। ४। ४ ॥
द्विवचनान्तोऽयम्॥

**द्यावापृथिव्यौ**, स्त्री, (द्यौश्च पृथिवी च। “दिव-
सश्च पृथिव्याम्।” ६। ३। ३०। इति
चात् दिवो
द्यावा।) स्वर्गपृथीव्यौ। इति हेमचन्द्रः।
४। ४ ॥
(यथा, मनुः। ३। ८६।
“कुह्वै चैवानुमत्यै च प्रजापतय एव च।
सह द्यावापृथिव्योश्च तथा
स्विष्टकृतेऽन्ततः ॥”)
तद्वैदिकपर्य्यायः। स्वधे १ पुरन्धी २
धिषणे ३
रोदसी ४ क्षोणी ५ अम्भसी ६ नभसी ७
रजसी
८ सदसी ९ सद्मनी १० घृतवती ११
बहुले १२
गभीरे १३ गम्भीरे १४ ओम्ण्यौ १५
चम्बौ १६
पार्श्वौ १७ मही १८ ऊर्व्वी १९ पृथ्वी
२०
अदिती २१ अही २२ दूरे २३ अन्ते
२४ अणारे
२५ अरे २६ पारे २७। इति
सप्तविंशतिर्द्यावा-
पृथिव्योर्न्नामधेयानि। इति वेदनिघण्टौ
३ अः।

**द्यावाभूमी**, स्त्री, (द्यौश्च भूमिश्च। “दिवो द्यावा।”
६। ३। २९। इति द्यावादेशः।) स्वर्ग-
पृथिव्यौ। इति हेमचन्द्रः। ४। ४ ॥
(यथा,

**द्युत**, पुं, (द्युत् दीप्तौ + क्विप्।) किरणः। इति
हेमचन्द्रः। २। १४ ॥ (द्योतमाने, त्रि।
यथा,
ऋग्वेदे। १०। ९९। २।
“स हि द्युता विद्युता वेति साम ॥”
द्यु ल अभिसर्पणे + क्विप् तुगामश्च।
अभिगा-
मिनि। यथा, भट्टिः। ५। ४७।
“हरामि रामसौमित्री मृगो भूत्वा मृगद्युतौ
॥”)

**द्युतिः**, स्त्री, (द्योततेऽनयेति। द्युत् दीप्तौ +
“इगुपधात् कित्।” उणां ४। ११९।
इति इन्
स च कित्।) दीप्तिः। शोभा। इत्यमरः
। १।
३। १७ ॥ (यथा, भागवते। ८। ५।
४२।
“लोभोऽधरात् प्रीतिरुपर्य्यभूद्द्युति-
र्नस्तः पशव्यः स्पर्शेन कामः ॥”)
रश्मिः। इति मेदिनी। ते, २५ ॥ (पुं,
चतु-
र्थस्य मनोः ऋषिविशेषः। यथा, हरिवंशे
।
७। ७५।
“चतुर्थस्य तु सावर्णेरृषीन् सप्त निबोध मे
।
द्युतिर्वशिष्ठपुत्त्रश्च आत्रेयः सुतपास्तथा
॥”
तामसस्य मनोः पुत्त्रविशेषः। यथा,
तत्रैव।
७। २३।
“पुत्त्रांश्चैव प्रवक्ष्यामि तामसस्य
मनोर्नृपः।
द्युतिस्तपस्यः
सुतपास्तपोमूलस्तपोशनः॥”)

**द्युतिकरः**, पुं, (करोतीति। कृ + अच्। द्युतेः
करः।) ध्रुवः। इति भूरिप्रयोगः। दीप्ति-
कारके, त्रि ॥

तत्प्रपितामहपिण्डदातृत्वात्। ततः प्रपितामह-
दौहित्रोऽधिकारी। धनिभोग्यप्रपितामहपिण्ड-
दातृत्वात्॥ ६ ॥ प्रपितामहदौहित्राभावे पिता-
महभ्रातृदौहित्रोऽधिकारी। धनिभोग्यप्रपिता-
महपिण्डदातृत्वात्॥ ७ ॥ पितामहभ्रातृदौहित्रा-
भावे मातामहः। तदभावे मातुलः। तदभावे
मातुलपुत्त्रः। तदभावे मातुलपौत्त्रः। तदभावे
मातामहदौहित्रोऽधिकारी॥ ८ ॥ मातामह-
दौहित्राभावे प्रमातामहः। तदभावे प्रमाता-
महपुत्त्रः। तदभावे प्रमातामहपौत्त्रः। तदभावे
प्रमातामहप्रपौत्त्रः। तदभावे प्रमातामह-
दौहित्रोऽधिकारी॥ ९ ॥ प्रमातामहदौहित्रा-
भावे वृद्धप्रमातामहोऽधिकारी। तदभावे वृद्ध-
प्रमातामहपुत्त्रः। तदभावे वृद्धप्रमातामह-
पौत्त्रः। तदभावेवृद्धप्रमातामहप्रपौत्त्रः। तदभावे
वृद्धप्रमातामहदौहित्रोऽधिकारी॥ १० ॥ स्त्रीधने
तु पुत्त्राभावे दौहित्रोऽधिकारी। पुत्त्राधिका-
रात् प्राक् दुहित्रधिकारश्रुतेः। तद्बाधिकाया
दुहितुः पुत्त्रेण वाध्यपुत्त्रबाधस्यैवन्याय्यत्वात्
॥ ११ ॥
इति श्रीकृष्णतर्कालङ्कारकृतदायक्रमसंग्रहः॥
श्राद्धे दौहित्रभोजनप्राशस्त्यम्। यथा, --
"व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन भोजयेत्।
ऋग्वेदे। ४। ५५। १।
"को वस्त्राता वसवः को वरूता
द्यावःभूमी अदिते त्रासीथां नः॥")

**द्यु**, ल अभिसर्पणे। इति कविकल्पद्रुमः॥ (अदां-
परं-सकं-अनिट्।) अभिसर्पणं आभिमुख्येन
गमनम्। ल, द्यौति सिंहो मृगानिव। इति
दुर्गादासः॥

**द्यु**, क्ली, (द्यौतीति। द्यु + क्विप्।) दिनम्।
गगणम्। स्वर्गः। इति विश्वः॥

**द्युः**, पुं, (द्यु + क्विप्।) अग्निः। इति मेदिनी। ये,
२ ॥

**द्युगः**, पुं, (द्युनि गगने गच्छतीति। गम + डः।)
पक्षी। इति राजनिर्घण्टः॥

**द्युगणः** पुं, (द्यूनां दिनानां गणः।) अहर्गणः।
तस्यानयनमाह।
"कथितकल्पगतोऽर्कसमा गणा
रविगुणो गतमाससमन्वितः।
खदहनैर्गुणितस्तिथिसंयुतः
पृथगतोऽधिकमाससमाहतात्॥
रविदिनाप्तगताधिकमासकै-
कृतदिबैः सहितो द्युगणो विधोः।
पृथगतः पठितावमसंगुणा-
द्विधुदिनाप्तगतावमवर्ज्जितः॥
भवति भास्करवासरपूर्ब्बको
दिनगणो रविमध्यमसावनः।
अधिकमासदिनक्षयशेषतो
द्युघटकादिकमत्र न गृह्यते॥"
इति सिद्धान्तशिरोमणिः॥

**द्युत्**, लृ ङ दीप्तौ। इति कविकल्पद्रुमः॥ (भ्वां-
आत्मं-अकं-सेट्।) लृ, अद्युतत्। ङ, द्योतते
दिद्युते। इति दुर्गादासः॥

**द्युतितं**, त्रि, (द्युत + क्तः। बाहुलकात् न गुणः।)
दीप्तिविशिष्टम्। द्योतितम्। इति मुग्धबोध-
व्याकरणम्॥

**द्युनं**, क्ली, लग्नात् सप्तमराशिः। इति ज्योतिष-
तत्त्वम्॥

**द्युनिशं**, क्ली, (द्यु च निशा च द्वयोः समाहारः।)
अहोरात्रः। इति व्याकरणम्॥ यथा, --
"भवति किं द्युनिशं द्युनिवासिनाम्।"
इति सिद्धान्तशिरोमणिः॥

**द्युनिवासी**, [न्] पुं, (द्युनि स्वर्गे निवसतीति।
नि + वस + णिनिः।) देवता। स्वर्गवासी।
इति सिद्धान्तशिरोमणिः॥

**द्युपतिः**, पुं, (द्युनो दिनस्य पतिः।) सूर्य्यः।
इति हेमचन्द्रः। २। ११॥ (द्युनो स्वर्गस्य
पतिः।) इन्द्रः॥

**द्युमणिः**, पुं, (द्युनो गगनस्य मणिरिव।) सूर्य्यः।
(यथा, भागवते। ८। १०। ३८।
"रेणुर्दिशः खं द्युमणिञ्च छादयन्
न्यवर्त्ततासृक्सुतिभिः परिप्लुतात्॥")
अर्कवृक्षः। इत्यमरः॥
(परिशोधितताम्रम्। यथा, --
"विषमहौषघभागमधिकोषणा
द्युमणिरक्तकमार्द्रकमर्द्दितम्॥
द्युमणिः मारितं ताम्रम्॥" इति भावप्रकाशस्य
मध्यखण्डे १ भागे वातज्वराधिकारे॥)

**द्युमयी**, स्त्री, विश्वकर्म्मकन्या। सा सूर्य्यपत्नी।
इति त्रिकाण्डशेषः॥

**द्युम्नं**, क्ली, (द्युमग्निं मनति अभ्यसत्यस्मै इति । म्ना + कः । "धनमिच्छेत् हुताशनात् ।" इति वचनात् धनफामानां अग्न्याराधनादस्य तथा-त्वम् ।) धनम् । इत्यमरः । २ । ९ । ९० ॥ (यथा, ऋग्वेदे । २ । २ । १० । "अस्माकं द्युम्नमधि पञ्च कृष्टिषूच्चा स्वर्ण शुशु-चीत दुष्टरम् ॥" द्युं तेजो मनतीति ।) बलम् । इति मेदिनी । ने, ११ ॥ (बलाधायकत्वात् अन्नम् । यथा, ऋग्वेदे । ९ । ८ । ८ । "वृष्टिं दिवः परि स्रव द्युम्नं पृथिव्या अधि ॥")

**द्युवा**, [न्] पुं, (द्यौतीति । द्यु + "कनिन् युवृ-षीति ।" उणां १ । १५६ । इति कनिन् ।) सूर्य्यः । इत्युणादिकोषः ॥ द्यौः । इति संक्षिप्त-सारे उणादिवृत्तिः ॥

**द्युष(स)त्**, [द्] पुं, (दिवि स्वर्गे सीदतीति । सद् + क्विप् । छन्दसि षत्वम् । लोकेऽषत्वम् ।) देवः । इति त्रिकाण्डशेषः ॥ (यथा, माघे । १ । ४३ । "भयस्य पूर्ब्बावतरन्तरस्विना मनःसु येन द्युसदां न्यधीयत ॥") ग्रहः । इति गोलाध्यायः ॥

**द्यूतः**, पुं, क्ली, (देवनमिति । दिव्यु क्रीडायाम् + भावे + क्तः । ऊट् च ।) पाशकादिक्रिया ।

**द्यूतकारः**, त्रि, (द्यूतं कारयतीति । कृ + णिच् + अच् ।) द्यूतकारयिता । सहियार इति ख्यातः । इति भरतः ॥ तत्पर्य्यायः । सभिकः २ । इत्य-मरः । २ । १० । ४४ ॥ सभीकः ३ । इति शब्द-रत्नावली ॥ (यथा, पञ्चतन्त्रे । १ । ४३१ । "मुहुर्व्विघ्नितकर्म्माणं द्यूतकारं पराजितम् ॥")

**द्यूतकारकः**, त्रि, (द्यूतं कारयतीति । द्यूत + कृ + णिच् + ण्वुल् ।) द्यूतकारयिता ॥

**द्यूतकृत्**, त्रि, (द्यूतं करोतीति । कृ + क्विप् तुगा-गमश्च ।) द्यूतकरः । अक्षक्रीडकः । इत्यमरः । २ । १० । ४४ ॥

**द्यूतपूर्णिमा**, स्त्री, (द्यूताय या पूर्णिमा ।) कोजा-गरपूर्णिमा । इति त्रिकाण्डशेषः ॥

**द्यूतपौर्णमासी**, स्त्री, (द्यूताय या पौर्णमासी ।) द्यूतपूर्णिमा । इति भूरिप्रयोगः ॥

**द्यूतप्रतिपत्**, [द्] स्त्री, (द्यूताय क्रीडार्थं या प्रतिपत् ।) कार्त्तिकशुक्लप्रतिपत् । सा च कौमुदी । यथा, --
"तुष्ट्यर्थं कार्त्तिके तस्य शुक्ला या प्रतिपत्तिथिः ।
विष्णोर्दत्ता मही तत्र कौमुदी सा स्मृता बुधैः ॥
कुशब्देन मही ज्ञेया मुदा हर्षे च वै द्बिज ! ।
धातुज्ञैः सर्व्वशब्दज्ञैः सा च वै कौमुदी स्मृता ॥"
इति पाद्मोत्तरखण्डम् ॥ * ॥
अत्र तिथौ बलिदैत्यपूजादि कार्य्यम् । तद्यथा,
"वामनपुराणे कार्त्तिकशुक्लपक्षमधिकृत्य बलि-

**द्यूनं**, क्ली, लग्नात् सप्तमराशिः । यथा, --
"धीस्थानं पञ्चमं ज्ञेयं यामित्रं सप्तमं स्मृतम् ।
द्युनं द्यूनं तथास्ताख्यं षट्कोणं रिपुमन्दिरम् ॥"
इति ज्योतिस्तत्त्वम् ॥
(दिव् + क्तः । "दिवोऽविजिगीषायाम् ।" ८ । २ । ४९ । इति निष्ठातस्य नः । च्छ्वोरित्यूट् । क्षीणे, त्रि ॥)

**द्यै**, न्यक्करणे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-अनिट् ।) अन्त्यस्थाद्ययुक्तः । द्यायति दुष्टं लोकः । इति दुर्गादासः ॥

**द्योतः**, पुं, (द्युत् + भावे घञ् ।) प्रकाशः । (यथा, हरिवंशे । २३३ । २४ । "विद्युद्द्योतनिकाशेन मुकुटेनार्कवर्च्चसा ॥") आतपः । इत्यमरः । १ । ४ । ३४ ॥

**द्योतनं**, क्ली, (द्युत् + भावे ल्युट् ।) दर्शनम् । इति हेमचन्द्रः । ३ । २४१ ॥ प्रकाशनम् ॥ (द्यूत् + युच् । द्योतमाने, त्रि । यथा, भट्टिः । ७ । १५ । "विलोक्य द्योतनं चन्द्रं लक्षणं शोचनोऽवदत् ॥")

**द्योतनः**, पुं, (द्योततीति । द्युत + "बहुलमन्य-त्रापि ।" उणां २ । ७८ । इति युच् ।) दीपः । इत्युणादिकोषः ॥

**द्योतितं**, त्रि, (द्युत + क्तः ।) द्युतितम् । दीप्तम् । इति मुग्धबोधव्याकरणम् ॥ (यथा, रामायणे । २ । ८२ । २ । "वस्त्राङ्गरागप्रभया द्योतिता सा सभोत्तमा ॥")

**द्योभूमिः**, पुं, (द्यौराकाशं भूमिरिव यस्य ।) पक्षी । इति शब्दचन्द्रिका ॥ स्वर्गपृथिव्योः स्त्री । तत्र द्विवचनान्तः ॥

अप्राणिकरणकक्रीडा । जुया इति भाषा । तत्-
पर्य्यायः । अक्षवती २ कैतवम् ३ पणः ४ ।
इत्यमरः । २ । १० । ४५ ॥ (यथा, देवीभाग-
वते । १ । १८ । ५१ ।
“द्यूतक्रीडा तथा प्रोक्ता व्रतानि विविधानि च ॥”)
“द्यूतं समाह्वयञ्चैव राजा राष्ट्रान्निवर्त्तयेत् ।
राजान्तकरणावेतौ द्वौ दोषौ पृथिवीक्षिताम् ॥
प्रकाशमेतत्तास्कर्य्यं यद्देवनसमाह्वयौ ।
तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान् भवेत् ॥
अप्राणिभिर्यत् क्रियते तल्लोके द्यूतमुच्यते ।
प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः ॥
द्यूतं समाह्वयञ्चैव्र यः कुर्य्यात् कारयेत वा ।
तान् सर्व्वान् घातयेद्राजा शूद्रांश्च द्बिजलिङ्गिनः ॥
द्यूतमेतत् पुराकल्पे सृष्टं वैरकरं महत् ।
तस्माद्द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ॥”
इति मनुः । ९ । २२१-२२७ ॥
कङ्क उवाच ।
“किन्ते द्यूतेन राजेन्द्र ! बहुदोषेण मानद ! ।
देवने बहवो दोषास्तस्मात्तत् परिवर्ज्जयेत् ॥
श्रुतस्ते यदि वा दृष्टः पाण्डवो हि युधिष्ठिरः ।
स राज्यं सुमहत् स्फीतं भ्रातॄंश्च त्रिदशो-
पमान् ॥
द्यूते हारितवान् सर्व्वं तस्माद्द्यूतं न रोचये ॥”
म्प्रति भगवद्वाक्यम् ।
वीरप्रतिपदा नाम तव भावी महोत्सवः ।
अत्र त्वां नरशार्द्दूल ! हृष्टाः पुष्टाः स्वलङ्कृताः ॥
पुष्पदीपप्रदानेन पूजयिष्यन्ति मानवाः ॥
अत्र मन्त्रः ।
बलिराज ! नमस्तुभ्यं विरोचनसुत ! प्रभो ।
भविष्येन्द्र सुराराते ! पूजेयं प्रतिगृह्यताम् ॥
ब्रह्मपुराणे तु बलिराजेतिमन्त्रस्य पूर्ब्बम् ।
मन्त्रेणानेन राजेन्द्र ! समन्त्री सपुरोहितः ॥
इत्यर्द्धम् । पश्चादपि ।
एवं पूजां नृपः कृत्वा रात्रौ जागरणं चरेत् ।
इत्युक्तम् ॥ पुनर्ब्रह्मपुराणे ।
शङ्करश्च पुरा द्यूतं ससर्ज्ज सुमनोहरम् ।
कार्त्तिके शुक्लपक्षे तु प्रथमेऽहनि भूपते ! ॥
जितश्च शङ्करस्तत्र जयं लेभे च पार्व्वती ।
अतोऽर्थाच्छङ्करो दुःखी गौरी नित्यं सुखोषिता ॥
तस्मात् द्यूतं प्रकर्त्तव्यं प्रभाते तत्र मानवैः ।
तस्मिन् द्यूते जयो यस्य तस्य संवत्सरः शुभः ॥
पराजयो विरुद्धश्च लब्धनाशकरो भवेत् ॥
भविष्योत्तरे ।
यो यो यादृशभावेन तिष्ठत्यस्यां युधिष्ठिर ! ।
हर्षदैन्यादिना तेन तस्य वर्षं प्रयाति हि ॥
महापुण्या तिथिरियं बलिराज्यप्रवर्द्धिनी ।
स्नानं दानं शतगुणं कार्त्तिकेऽस्यां तिथौ भवेत् ॥”
इति तिथितत्त्वम् ॥

**द्यूतबीजं**, क्ली, (द्यूतस्य बीजं कारणम् ।) कप-
र्द्दकः । इति त्रिकाण्डशेषः ॥ द्यूतस्य कारणञ्च ॥

**द्योषत्**, [द्] पुं, (द्यवि स्वर्गे सीदतीति । सद् +
क्विप् ।) देवः । इति शब्दरत्नावली ॥

**द्यौः**, [ओ] स्त्री, (द्योतन्ते देवा यत्र । द्युत् +
बाहुलकात् डोः ।) स्वर्गः । (यथा, महा-
भारते । १ । ७४ । २८ ।
“आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये
धर्म्मश्च जानाति नरस्य वृत्तम् ॥”)
आकाशम् । इत्यमरः । १ । १ । ६ ॥ (पुं, अष्ट-
वसूनामन्यतमः । यथा, देवीभागवते । २ । ३ । ३५ ।
“पृथ्वादीनां वसूनाञ्च गध्ये कोऽपि वसूत्तमः ।
द्यौर्नामा तस्य भार्य्या या नन्दिनीं गां ददर्श ह ॥”
अयमेव वशिष्ठशापात् पृथिव्यां जन्म परि-
गृह्णन् भीष्म इति नाम्ना विख्यात आसीत् ॥
अस्य विवरणन्तु देवीभागवते २ स्कन्धे ३ अध्याये
तथा महाभारते । १ । ९९ अध्याये द्रष्टव्यम् ॥)

**द्यौत्रं**, क्ली, (दीव्यत्यस्मिन्निति । दिव + “दिवे
र्द्युच्च ।” उणां ४ । १६० । इति ष्ट्रन् द्युदा-
देशो वृद्धिश्च ।) ज्योतिः । इति संक्षिप्तसारे
उणादिवृत्तिः ॥

**द्रगडः**, पुं, वाद्यविशेषः । दगड इति भाषा । तत्-
पर्य्यायः । प्रतिपत्तूर्य्यम् २ । इति त्रिकाण्ड-
शेषः ॥

इति महाभारते । ४ । ६६ । ३३-३५ ॥

**द्यूतकरः**, त्रि, (करोतीति । कृ + अच् । द्यूतस्य करः ।)

द्यूतकर्त्ता । जुयारी इति भाषा ।

तत्पर्य्यायः ।

धार्त्तः २ धूर्त्तः ३ अक्षधूर्त्तः ४ अक्षदेवी ५

दुरोदरः ६ द्यूतकृत् ७ कितवः ८ कृष्णको-

हलः ९ । इति शब्दरत्नावली ॥

**द्रङ्क्षणं**, क्ली, (द्राङ्क्षत्यनेनेति । द्राङ्क्ष आकाङ्क्षायाम्
+ ल्युट् । पृषोदरादित्वात् ह्रस्वः ।) तोलकम् ।
इति शब्दमाला ॥ तत्पर्य्यायः । कोलम् २
वटकम् ३ कर्षार्द्धम् ४ । इति वैद्यकपरिभाषा ॥
(पुंलिङ्गेऽपि । यथा, --
" -- तद्द्वयं कोल उच्यते ।
क्षुद्रको वटकश्चैव द्रङ्क्षणः स निगद्यते ॥"
इति पूर्ब्बखण्डे प्रथमेऽध्याये शार्ङ्गधरेणोक्तम् ॥)

**द्रङ्गः**, त्रि, पुरी । इति हेमचन्द्रः । ४ । ३७ ॥ (यथा,
राजतरङ्गिण्याम् । ८ । २०११ ।
"तेन स्वनाम्ना भाण्डेषु द्रङ्गे
सिन्धुरमुद्रणा ॥")

**द्रढिमा**, [न्] पुं, (दृढस्य भावः । दृढ + "पृथ्वा-
दिभ्य इमनिज्वा ।" ५ । १ । १२२ । इति इम-
निच् । "र ऋतो हलादेर्लघोः ।" ६ । ४ । १६१ ।
इति ऋकारस्य रकारः ।) दृढता ॥ (यथा,
शिवशतके । ४३ ।
"लघुगुरुतुलनातुलाप्रकाण्ड-
द्रढिमगुणः स भवद्गुणत्रयस्य ॥")

**द्रढिष्ठः**, त्रि, अयमनयोरेषां वा अतिशयेन दृढः ।
इत्यर्थे इष्ठप्रत्ययेन साध्यः । द्रढीयान् ॥

**द्रप्स्यं**, क्ली, (तृप्यन्त्यनेनेति । तृप + अघ्न्यादयश्च ।
इति निपातनात् साधुः ।) घनेतरदधि । वया
दै इति भाषा । इत्यमरः । २ । ९ । ५१ ॥
अस्य रूपान्तराणि । द्रप्सम् २ द्राप्सम् ३

**द्रवत्वं**, क्ली, (द्रव + त्व ।) द्रवस्य भावः । तद्द्वि-
विधम् । यथा, --
"सांसिद्धिकं द्रवत्वं स्यात्
नैमित्तिकमुदाहृतम् ।
सांसिद्धिकन्तु सलिले द्वितीयं
क्षितितेजसोः ॥
परमाणौ जले नित्यमन्यतोऽनित्यमुच्यते ।
नैमित्तिकं वह्नियोगात्तपनीयघृतादिषु ॥
द्रवत्वं स्यन्दने हेतुर्निमित्तं संग्रहे तु तत् ॥"
इति भाषापरिच्छेदः ॥

**द्रवत्पत्री**, स्त्री, (द्रवत् पत्रं यस्याः । ङीष् ।)
शिमृडीवृक्षः । इति राजनिर्घण्टः ॥

**द्रवन्ती**, स्त्री, (द्रवतीति । द्रु + शतृ + ङीप् ।)
नदी । इति शब्दरत्नावली ॥ मूषिकपर्णी ।
मूषाकाणी छोटा इति भोयनी इति च हिन्दी
भाषा । तत्पर्य्यायः । शम्बरी २ चित्रा ३
न्यग्रोधी ४ शतमूलिका ५ प्रत्यक्श्रेणी ६ वृषा
७ चण्डा ८ पत्रश्रेणी ९ आखुकर्णिका १०
मूषिककर्णी ११ प्रतिपर्णशिफा १२ सहस्र-
मूली १३ विक्रान्ता १४ । अस्य गुणाः । मधुर-
त्वम् । शीतत्वम् । रसबन्धकारित्वम् । ज्वरक्रिमि-
नाशित्वम् । शूलशमनत्वम् । रसायनत्वञ्च ।
इति राजनिर्घण्टः ॥

**द्रवरसा**, स्त्री, (द्रवो रसो यस्याः ।) लाक्षा । इति
राजनिर्घण्टः ॥

**द्रवाधारः**, पुं, (द्रवाणां द्रव्याणामाधारः ।) चुलुकः ।
इति शब्दार्थकल्पतरुः ॥
द्रवद्रव्यरक्षापात्रञ्च ॥

**द्रविडी;** स्त्री, रागिणीविशेषः । इति हलायुधः ॥

अस्य तथात्वम् ।) शोभाञ्जनवृक्षः । इति शब्द-
रत्नावली ॥

**द्रविणोदाः**, [स्] पुं, अग्निः । अस्य निरुक्ति-
र्यथा, --
"द्रविणं बलमित्युक्तं धनञ्च द्रविणं ततः ।
ददाति तद्भवानेन द्रविणोदास्ततो भव ॥"
इति वराहपुराणम् ॥
(धनप्रदे, त्रि । यथा, ऋग्वेदे । १ । १५ । ७ ।
"द्रविणोदा द्रविणसो ग्रावहस्तासो अध्वरे ॥"
"कीदृशं देवं द्रविणोदाः धनप्रदम् । यद्वा, धन-
प्रदोऽग्निः सोमं पिबत्विति शेषः । तमेतं मन्त्रं
यास्क एवं निर्वक्ति, -- द्रविणोदाः कस्मात् धनं
द्रविणमुच्यते यदेनदभिद्रवन्ति बलं वा द्रविणं
यदेनेनाभिद्रवन्ति तस्य दाता द्रविणोदास्तस्यैषा
भवति द्रविणोदा द्रविण स इत्यादि सोऽयं
यास्कोक्तो निर्व्वचनप्रपञ्चः तस्मिन्नेव ग्रन्थेऽव
गन्तव्यः । द्रविणोदाः द्रुदक्षिभ्यामिनन् नित्त्वा-
दाद्युदात्तोद्रविणशब्दः तद्ददातीति द्रविणोदाः ।
क्विप्चेति क्विप् । पूर्ब्बपदस्य सकारोपजनश्छान्दसः ।
रुत्वोत्वे । कृदुत्तरपदप्रकृतिस्वरत्वम् । देवविशे-
षणत्वेनैकवाक्यतापक्षे द्वितीयायाः सुस्वादेशः ।
अथवा द्रविणमात्मन इच्छन्ति द्रविणस्यन्ति । सुप
आत्मनः क्यच् सर्व्वप्रातिपदिकेभ्यो लालसायां

त्रप्स्यम् ४ । इति तट्टीकायां भरतः ॥

(शुक्रम् ।

इति विरुक्तम् । ५ । १४ ॥ त्रि,

द्रुतगमनशीलः ।

द्रुतहननशीलः । यथा, ऋग्वेदे । ९ । ६९

। २ ।

"पवमानः सन्तनिः प्रघ्नतामिव

मधुमान् दप्स्यः परिवारमर्षति ॥")

**द्रम**, गतौ । इति कविकल्पद्रुमः । (भ्वां-परं-सकं-

सेट् ।) दन्त्यवर्गतृतीयादिः । द्रमति ।

इति

दुर्गादासः ॥

**द्रवः**, पुं, (द्रु + "ऋदोरप् ।" ३ । ३ । ५७ । इति भावे

अप् ।) परीहासः । पलायनम् । इत्यमरः

।

१ । ७ । ३२ ॥ (यथा, हरिवंशे । २११ ।

१० ।

"ततो दैत्यद्रवकरं पौराणं शङ्खमुत्तमम्

॥")

रसः । गतिः । इति विश्वः ॥ वेगः । इति

शब्द-

रत्नावली ॥ (यथा, हरिवंशे । १९३ । ५

।

"तत्र शब्दगतिर्भूत्वा मारुतद्रवसम्भवः

॥"

द्रवत्वरूपो गुणविशेषः । यथा, भाषापरि-

च्छेदे । २८ ।

"गुरुणी द्वे रसवती द्रवयोर्नैमित्तिको द्रवः

॥"

आर्द्रे, त्रि । यथा, रघुः । ७ । ७ ।

"प्रसाधिकालम्बितमग्रपाद-

माक्षिप्य काचित् द्रवरागमेव ॥")

**द्रवजः**, पुं, (द्रवात् जायते इति । जन् + डः ।) गुडः ।

इति राजनिर्घण्टः ॥ द्रवजातवस्तुमात्रञ्च

॥

**द्रवणं**, क्ली, (द्रु + भावे ल्युट् ।) गमनम् । (यथा,

हरिवंशे । १९६ । ३९ ।

**द्रविणं**, क्ली, (द्रवति गच्छति द्रूयते प्राप्यते वेति ।

द्रु + "द्रुदक्षिभ्यामिनन् ।" उणां । २ । ५०

। इति

इनन् ।) धनम् । (यथाह कश्चित् ।

"द्रविणं परिमितममितव्ययिनं

जनमाकुली-

कुरुते ।

क्षीणाञ्चलमिव

पीनस्तनजधजायाःकुलीनायाः ॥")

काञ्चनम् । बलम् । इत्यमरमेदिनीकरौ ॥

(यथा,

महाभारते । १ । १०३ । १९ ।

"एवमुक्ता तु पुत्रेण भूरिद्रविणतेजसा ।

माता सत्यवती भीष्ममुवाच तदनन्तरम्

॥"

पुं, धरनाम्नो वसोः पुत्त्रविशेषः । यथा,

महा-

भारते । १ । ६६ । २१ ।

"धरस्य पुत्त्रो द्रविणो हुतहव्यवहस्तथा

॥"

पृथोः पुत्त्रविशेषश्च । यथा, भागवते । ४ ।

२२ । ५४ ।

"पुत्त्रानुत्पादयामास

पञ्चार्च्चिष्यात्मसम्मतान् ।

विजिताश्वं धूम्रकेशं हर्य्यक्षं द्रविणं वृकम्

॥"

कुशद्वीपस्थितसीमागिरिभेदः । यथा,

भाग-

वते । ५ । २० । १५ ।

"तेषां वर्षेषु सीमागिरयो नद्यश्चाभिज्ञाताः

सप्तसप्तैव वभ्रुश्चतुः शृङ्गः

कपिलश्चित्रकूटो देवा-

नीक ऊर्द्ध्वरोमा द्रविण इति ॥"

क्रौञ्चद्वीपस्थ-

वर्षपुरुषविशेषः । यथा, भागवते । ५ ।

२० । २२ ।

"यासामम्भः पवित्रममलमुपयुञ्जानाः

पुरुषर्षभ-

द्रविणदेवकसंज्ञा वर्षपुरुषाः ॥")

**द्रविणनाशनः**, पुं, (नाशयतीति । नाशि + ल्युः ।

सुग्वक्तव्य इति क्यचि परतः सुगागमः

द्रविण-

स्यतेः सम्पदादित्वाद्भावे क्विप् । अतो

लोपः ।

क्वौलुप्तं न स्थानिवद्भवतीति तस्य

स्यानिवत्त्व-

प्रतिषेधाद्यलोपः एवंद्रविणस् शब्दो

धनेच्छा-

वचनः । द्रविणेच्छान्दस्यति

यथेष्टधनप्रदाने-

नोपक्षयतीत्यर्थे तसु उपक्षये

इत्यस्मादन्तर्भावि-

तण्यर्थात् क्विप्चेति क्विप् । एवं

द्रविणोदःशब्दः

सकारान्तो भवति । तथा द्राविणोदसाः

प्रवादा

भवन्तीतिनैरुक्तो व्यवहार उपपद्यते अतो-

द्रविणोदस्शब्दः भिन्नवाक्यत्वे स्वार्थे प्रथमा

।

एकवाक्यत्वे तु व्यत्ययेन द्वितीयार्थो भवति

द्रविणस इत्यत्रापि वाक्यभेदपक्षे द्रविणसः

सोम-

स्येत्यर्थे सकारोपजनश्छान्दसः ।

आद्युदात्तत्वन्तु

नियमेन स्थितम् ।

ऋत्विग्विशेषणत्वेनैकवाक्यत्व-

पक्षेतु क्यजन्तात् क्विप् । अतो

लोपादिपूर्ब्बवत् ।

अत्र तु पक्षे क्यचश्चित्त्वेनान्तोदात्तत्वे प्राप्ते

व्यत्ययेनाद्युदात्तम् ॥" इति सायनः ॥)

**द्रवीकरणं**, क्ली, अद्रवस्य द्रवकरणम् । इति च्विप्र-

त्ययेन साध्यम् ॥ गलान इति भाषा ॥

**द्रव्यं**, क्ली, (द्रोरिव । द्रु + "द्रव्यञ्च भव्ये ।" ५ ।

३ । १०४ । इति यत्प्रत्ययेन निपातनात्

साधुः ।) वस्तु । (यथा, मनुः । ७ । ९ ।

"एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम् ।

कुलं दहति राजाग्निः सपशुद्रव्यसञ्चयम् ॥")

तस्य क्रियाविशेषे नवपुराणभेदेन प्रशस्तत्वं

यथा, --

| | | |
|---|---|---|
| “ते रुदन्तो द्रवन्तश्च भगवन्तं पितामहम् ।<br>रोदनाद्द्रवणात् चैव ततो रुद्रा इति स्मृताः ॥”)<br>क्षरणम् । अनुतापः ॥ द्रुधातोभविꣷनट् ॥ | द्रविणानां नाशनः । तत्सेवनेन धनविनाशात् | “द्रव्याण्यभिनवान्येव प्रशस्तानि क्रियाविधौ ।<br>ऋते गुडघृतक्षौद्रधान्यकृष्णाविडङ्गतः ॥”<br>इति नारायणदासकृत्तपरिभाषा ॥ |

("केचिदाचार्य्या ब्रुवते द्रव्यं प्रधानं कस्माद्-
व्यवस्थितत्वादिह खलु द्रव्यं व्यवस्थितम् । न
रसादयो यथा ये फले ये रसादयस्ते पक्वे न
सन्ति । नित्यत्वाच्च नित्यं हि द्रव्यमनित्या गुणा
यथा कल्कादिप्रविभागः स एव सम्पन्नरसगन्धो
व्यापन्नरसगन्धो वा भवति ।
स्वजात्यवस्थानाच्च
यथा हि पार्थिवं द्रव्यमन्यभावं न गच्छत्येवं
शेषाणि । पञ्चेन्द्रियग्रहणाच्च पञ्चभिरिन्द्रियै-
र्गृह्यते द्रव्यं न रसादयः । आश्रयत्वाच्च द्रव्य-
माश्रिता रसादयो भवन्ति ।
आरम्भसामर्थ्याच्च
द्रव्याश्रित आरम्भो यथा
विदारिगन्धादिमाहृत्य
सङ्क्षुद्य विपचेदित्येवमादिषु न रसादिष्वारम्भः ।
शास्त्रप्रामाण्याच्च शास्त्रे हि द्रव्यं प्रधानमुप-
देशे हि योगानां यथा मातुलुङ्गाग्निमन्थौ चेति
न रसादय उपदिश्यन्ते ।
क्रमापेक्षितत्वाच्च
रसादीनां रसादयो हि द्रव्यक्रममपेक्षन्ते यथा
तरुणे तरुणाः सम्पूर्णे सम्पूर्णा इति । एकदेश-
साध्यत्वाच्च द्रव्याणामेकदेशेनापि व्याधयःसाध्यन्ते
यथा महावृक्षक्षीरेणेति तस्माद्द्रव्यं प्रधानं द्रव्य-

तैजसं वै समादाय यद्युच्छिष्टो भवेद्द्विजः ।
भूमौ निःक्षिप्य तद्द्रव्यमाचम्याभ्युक्षयेत्तु तत् ॥
यद्यद्द्रव्यं समादाय भवेदुच्छेषणान्वितः ।
अनिधायेतरद्द्रव्यमाचान्तः शुचितामियात् ॥
वस्त्रादिषु विकल्पः स्यात्तत् स्पृष्ट्वा चाचमेदिह ।
अरण्येऽनुदके रात्रौ चौरव्याघ्राकुले पथि ।
कृत्वा मूत्रपुरीषं वा द्रव्यहस्तो न दुष्यति ॥"
इति कूर्म्मपुराणम् ॥

**द्रा**, ल स्वप्ने । पलायने । इति कविकल्पद्रुमः ॥
(अदां-परं-अकं-अनिट् ।) स्वप्नो निद्रा । निपूर्ब्ब
एव निद्रायामिति रमानाथः । ल, निद्राति
निद्रालुः । द्राति चौरः पलायते इत्यर्थः । इति
दुर्गादासः ॥

**द्राक्**, व्य, (द्रातीति । द्रा + बाहुलकात् कुः ।)
द्रुतम् । शीघ्रम् । इत्यमरः । ३ । ४ । २ ॥
(यथा, नैषधे । ३ । २ ।
"आकस्मिकः पक्षपुटाहतायाः
क्षितेस्तदा यः स्वन उच्चचार ।
द्रागन्यविन्यस्तदृशः स तस्याः
सम्भ्रान्तमन्तःकरणं चकार ॥")

**द्राक्ष**, इ काङ्क्षे । घोररुते । इति कविकल्पद्रुमः ॥
(भ्वां-परं-सकं-अकंच-सेट् ।) रेफयुक्तः । घोर-
रुतमिह तिरश्चामेव घोरशब्दः । इ, द्राङ्क्षति
काकः । नमध्यपाठेनैवेष्टसिद्धे एतस्य इदनुबन्धो
वेदेषूच्चारणभेदार्थः । इति दुर्गादासः ॥

**द्राक्षा**, स्त्री, (द्राङ्क्ष्यते काङ्क्यते इति । द्राक्षि
काङ्क्षे + घञ् । आगमशासनस्यानित्यत्वात् न
लोपः ।) फलविशेषः । दाख इति किश्मिश्
इति च भाषा । आङ्गूर इति यवनभाषा ।
तत्पर्य्यायः । मृद्वीका २ गोस्तनी ३ स्वाद्वी ४
मधुरसा ५ । इत्यमरः । २ । ४ । १०७ ॥ चारु-
फला ६ कृष्णा ७ प्रियाला ८ तापसप्रिया ९
गुच्छफला १० रसाला ११ अमृतफला १२

**द्राघिमा**, [न्] पुं, दीर्घस्य भावः । (दीर्घ + इम-
निच् । "प्रियस्थिरस्फिरोरुबहुलेति ।" ६ । ४ ।
१५७ । इति द्राघादेशः ।) दीर्घत्वम् । इति
व्याकरणम् ॥ भूगोलस्य दीर्घता । इत्याधुनिक-
ज्योतिषिकाः ॥

**द्राघिष्ठः**, त्रि, (अतिशयेन दीर्घः इति । दीर्घ +
इष्ठन् । दीर्घस्य द्राघादेशः ।) अतिदीर्घः ।
इत्यमरः । ३ । १ । ११२ ॥

**द्राड**, ऋ ङ शीर्णौ । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-सकं-सेट् ।) रेफयुक्तः । ऋ, अदद्राडत ।
ङ, द्राडते । शीर्णौ विभेदे । इति दुर्गादासः ॥

**द्राणः**, त्रि, (द्रा + कर्त्तरि क्तः । निष्ठातस्य नः ।
णत्वञ्च ।) सुप्तः । पलायितः ॥

**द्रापः**, पुं, (द्रापयतीति । द्रा + णिच् । पुगागमे
द्रापि + अच् ।) पङ्कः । आकाशः । कपर्दी ।
भूर्खः । इति शब्दार्थकल्पतरुः ॥

**द्रामिलः**, पुं, (द्रमिलाख्यो देशोऽभिजनोऽस्येति ।
अण् ।) चाणक्यमुनिः । इति हेमचन्द्रः । ३ । ५१७ ॥

**द्रावः**, पुं, द्रुधातोभवि घञ् प्रत्ययः । गमनम् ।
स्रवणम् । अनुतापः ॥

**द्रावकं**, क्ली, (द्रवति द्रावयति वा । द्रु द्रावि
वा + ण्वु ल् ।) सिक्थकम् । इति राजनिर्घण्टः ॥
प्लीहरोगस्य औषधविशेषः । (यथा, --

लक्षणन्तु
क्रियागुणवत्समवायिकारणमिति।”
“पाको नास्ति विना वीर्य्याद्वीर्य्यं नास्ति विना
रसात् ।
रसो नास्ति विना द्रव्याद्द्रव्यं श्रेष्ठमतः स्मृतम् ॥”
“वीर्य्यसंज्ञा गुणा येऽष्टौ तेऽपि द्रव्याश्रयाः स्मृताः ।
रसेषु न वसन्त्येते निर्गुणास्तु गुणाः स्मृताः ॥
द्रव्ये द्रव्याणि यस्माद्धि विपच्यन्ते न षड्रसाः ।
श्रेष्ठं द्रव्यमतो ज्ञेयं शेषा भावास्तदाश्रयाः ॥”
इति सुश्रुते । १ । ४० ॥)
पित्तलम् । वित्तम् । पृथिव्यादि । विलेपनम् ।
क्लीवम् । भेषजम् । भव्यम् । (द्रोर्विकारः ।
“द्रोश्च ।” ४ । ३ । १६१ । इति यत् ।) द्रुम-
विकारे, त्रि । इति मेदिनी । ये, २९ ॥ (द्रुमा-
वयवः । इति सिद्धान्तकौमुदी ॥) जतु । विनयः ।
इति हेमचन्द्रः ॥ मद्यम् । यथा, --
“सशब्दं न पिबेद्द्रव्यम् ।” इति कुलार्णवतन्त्रम् ॥
न्यायमते तन्नवविधं यथा, --
“क्षित्यप्तेजोमरुद्व्योमकालादिग्देहिनौ मनः ।”
तेषां साधर्म्म्यादि यथा, --
“क्षित्यादीनां नवानान्तु द्रव्यत्वगुणयोगिता ।
क्षितिर्जलं तथा तेजः पवनो मन एव च ॥
परापरत्वमूर्त्तत्वक्रियावेगाश्रया अमी ।
कालखात्मदिशां सर्व्वगतत्वं परमं महत् ॥
क्षित्यादिपञ्चभूतानि चत्वारि स्पर्शवन्ति हि ।

कृष्ण १३ चारुफला १४ । इति जटाधरः ॥
रसा १५ । इति शब्दरत्नावली ॥ अस्य
गुणाः । अतिमधुरत्वम् । अम्लत्वम् । शीत-
पित्तार्त्तिदाहमूत्रदोषनाशित्वम् । रुच्यत्वम् ।
वृष्यत्वम् । सन्तर्पणत्वञ्च । इति राजनिर्घण्टः ॥
स्निग्धत्वम् । शीतबलकारित्वम् । हृद्यत्वम् ।
तृष्णावायुरक्तपित्तक्षतक्षीणतानाशित्वञ्च । इति
राजवल्लभः ॥

**द्राख**, ऋ ओखार्थे । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-अकं-सेट् ।) दन्त्यवर्गतृतीयादिः । रेफ-
युक्तः । ऋ, अदद्राखत् । ओखार्थे शोषाल-
मर्थयोः । इति दुर्गादासः ॥

**द्राघ**, ऋ ङ श्रमायामशक्तिषु । इति कविकल्प-
द्रुमः ॥ (भ्वां-परं-अकं-दीर्घीकरणे सकं-सेट् ।)
श्रमः खेदः । आयामो दीर्घीकरणम् । शक्तिः
सामर्थ्यम् । ऋ, अदद्राघत् । ङ, द्राघते जनः
खेद्यते इत्यर्थः । द्राघते वस्त्रं जनो दीर्घं करोति
इत्यर्थः । द्राघते घावितुं वाजी समर्थः स्यादि-
त्यर्थः । इति दुर्गादासः ॥

“स्फटिकारीद्वयञ्चैव पलं द्विपलिकन्तथा ।
नरसारं पलं देयं टङ्गणञ्च पलार्द्धकम् ॥
कासीशं शाणयुग्मञ्च प्रत्येकं श्लक्ष्णचूर्णितम् ।
सपञ्चलवणक्षारं कर्षमानं पृथक् पृथक् ॥
अपामार्गवृषस्यापि तथा कुष्माण्डकस्य च ।
रम्भावल्कलजं क्षारं प्रत्येकञ्चार्द्धशाणकम् ॥
श्लक्ष्णचूर्णीकृतञ्चैतत् लिम्पाकस्वरसे भुवि ।
सर्व्वमेतत् सुपिष्याथ रौद्रे दद्याद्विचक्षणः ॥
आनीय काचपात्रन्तु तत्र तत् पाचयेत् भिषक्
प्रहरार्द्धं ददौ ज्वालां सालकाष्ठाग्निना मृदु ।
सुतप्ते काचकुम्भे च ततो ज्वालां निवारयेत् ॥
शीतं गते तदुद्धृत्य प्रक्षिपेच्च वराटकम् ।
वराटे द्रवतां याते ततः कर्म्मसु योजयेत् ॥
द्रावकस्य परीक्षेयं नान्यथा च भवत्यलम् ।
गुञ्जैकं स्याद्द्वयञ्चापि चूर्णेन मागधेन च ॥
शरपुष्पेण वा देयं तोयमुष्णं पिबेदनु ॥
पथ्यमेतद्द्रुतं देयं दुष्टशीताम्बुवर्ज्जितम् ॥”
इति वैद्यककषायणसंग्रहे प्लीहसर्व्वोदरयकृ-
दधिकारे ॥) अस्य अन्यद् विवरणं महाद्रावक-
शब्दे द्रष्टव्यम् ॥

**द्रावकः**, पुं, (द्रवति चन्द्रांशुसम्पर्कादिति । द्रु +
ण्वुल् ।) प्रस्तरभेदः । (द्रावयतीति + द्रु +

द्रव्यारम्भश्चतुर्षु स्यादथाकाशशरीरिणाम्
॥
अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते
।
रुपद्रवत्वप्रत्यक्षयोगि स्यात् प्रथमं त्रिकम्
॥
गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः ।
आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः
॥”
इति भाषापरिच्छेदः ॥
द्रव्यहस्तभक्षणादिदोषादोषौयथा, --
“उच्चावचान्नपानेषु द्रव्यहस्तो भवेन्नरः ।
भूमौ निःक्षिप्य तद्द्रव्यमाचम्याभ्युक्षयेत्तु
तत् ॥

णिच् + ण्वुल् ।) विदग्धः । (द्रवति
पलायते
इति । द्रु + ण्वुल् ।) मोषकः । इति
मेदिनी ।
के, १०४ ॥ शिङ्गः । इति शब्दमाला
॥ रस-
भेदः । इति शब्दरत्नावली ॥ (द्रावि +
ण्वुल् ।)
हृदयग्राही । द्रवकारकः । इति धरणिः
॥

**द्रावककन्दः**, पुं, (द्रावकः कन्दो यस्य ।)
तैलकन्दः ।

इति राजनिर्घण्टः ॥

**द्रावकरं**, क्ली, (द्रावं सुवर्णादिर्द्रवं करोति
स्वसंयोगेनेति । द्राव + कृ + टः ।)
श्वेतटङ्कणम् ।
इति राजनिर्घण्टः ॥

**द्रावणं**, क्ली, (द्रावयति जलमलं स्वसम्पर्केणेति ।
द्रु + णिच् + युच् ।) कतकफलम् ।
इति रत्न-
माला ॥ निर्म्मली इति भाषा ॥ (द्रावि
+ ल्युट् ।)
विद्रावणञ्च ॥ (द्रावयतीति । द्रावि +
ल्युः ।
पलायनकारयितरि, त्रि । यथा,
महाभारते ।
८ । ३४ । ६८ ।
"स देवयुक्तो रथसत्तमो नो
दुराधरो द्रावणः शात्रवाणाम् ॥")

**द्राविका**, स्त्री, (द्रावक + टाप् । अत इत्वञ्च ।)
लाला । इति शब्दरत्नावली ॥

**द्राविडः**, त्रि, (द्राविडो देशोऽभिजनोऽस्येति ।
अण् ।) देशविशेषजातः । (यथा,
महाभारते ।
८ । १२ । १४ ।
"सात्यकिश्चेकितानश्च द्राविडैः
सेनिकैः सह ॥")
पञ्चद्राविडाः । यथा, द्रविडः १
कर्णाटः २
गुचराटः ३ महाराष्ट्रः ४ तैलङ्गः ५ ।
यथा,
स्कन्दपुराणे ।
"कार्णाटाश्चैव तैलङ्गा गुज्जरा
राष्ट्रवासिनः ।
आन्ध्राश्च द्राविडाः पञ्च
बिन्ध्यदक्षिणवासिनः ॥"
संख्याभेदः । वेधमुख्यः । इति मेदिनी
। डे, ३० ॥
कर्च्चूरः । इति राजनिर्गण्टः ॥

(यथा, मनुः । ७ । १३१ ।
"आददीताथ षड्भागं द्रुमांसमधुसर्पिषाम्
॥")
गतौ, स्त्री । इति शब्दरत्नावली ॥

**द्रुकिलिमं**, क्ली, (किल्यतेऽनेनेति । किल श्वैत्यक्रीड-
नयोः + बाहुलकात् किमच् । द्रुषु वृक्षेषु
किलि-
मम् ।) देवदारुवृक्षः । इत्यमरः । २ । ४ ।
५३ ॥
(अस्य पर्य्यायो यथा वैद्यकरत्नमालायाम्
।
"देवदारुद्रुकिलिमं सुराह्वं भद्रदारु च ।
देवकाष्ठं पीतदारु देवदारु च दारु च ॥")

**द्रुघणः**, पुं, (द्रुर्वृक्षः हन्यतेऽनेनेति । हन + "करणे-
ऽयोविद्रुषु ।" ३ । ३ । ८२ । इति अप्
घना-
देशश्च । "पूर्ब्बपदात् संज्ञायामगः ।" ८ ।
४ ।
३ । इति णत्वम् । द्रुममयो घनः इति वा ।)
मुद्गरः । इत्यमरः । २ । ८ । ९१ ॥
सूत्रधारा-
दिमुद्गराकारलौहमयास्त्रभेदः । इति
भरतः ॥
(वैशम्पायनोक्तधनुर्व्वेदमतेऽयं
परशुवल्लौहा-
स्त्रम् । यदुक्तम् ।
"द्रुघणस्त्वायसाङ्गः स्यात् वक्रग्रीवो
बृहच्छिराः ।
पञ्चाशदङ्गुलोत्सेधो मुष्टिसम्मितमण्डलः
॥"
अस्य चतस्रः क्रियाः । यथा, --
"उन्नामनं प्रपातश्च स्फोटनं दारणं तथा ।
चत्वार्य्येतानि द्रुघणे वल्गितानि श्रितानि वै
॥"
द्रुः संसारवृक्षो हन्यतेऽनेनेति ।) ब्रह्मा ।
कुठारः ।

**द्रुणा**, स्त्री, (द्रुणं धनुराश्रयत्वेनास्त्यस्याः । अच् ।
टाप् ।) ज्या । इति हेमचन्द्रः । ३ । ४३९ ॥

**द्रुणिः**, स्त्री, (द्रुणति जलादिकमिति । द्रुण गतौ +
"इगुपधात् कित् ।" उणां । ४ । ११८ । इति
इन् ।) द्रोणी । इत्यमरटीकायां भरतः ॥

**द्रुणी**, स्त्री, (द्रुण + इन् । वा ङीष् ।) कर्ण-
जलौकाः । कच्छपी । इति लिङ्गादिसंग्रहे
अमरभरतौ ॥ काष्ठाम्बुवाहिनी । इति द्रोणी-
शब्दटीकायां भरतः ॥

**द्रुतं**, त्रि, (द्रवति स्मेति । द्रु + गत्यर्थेति कर्त्तरि
क्तः ।) जातद्रवीभावघृतसुवर्णादि । तत्-
पर्य्यायः । अवदीर्णम् २ विलीनम् ३ विद्रुतम्
४ ।
इत्यमरः । ३ । १ । १०० ॥ शीघ्रम् । (यथा,
महाभारते । १३ । २६ । ८१ ।
"वाप्वीरिताभिः सुमनोहराभि-
र्द्रुताभिरत्यर्थसमुत्थिताभिः ।
गङ्गोर्म्मिभिर्भानुमतीभिरिद्धाः
सहस्ररश्मिप्रतिमा भवन्ति ॥")
विद्रावम् । पलायितम् । इति मेदिनी । ते, २५
॥
(यथा, रघुः । ९ । ५९ ।
"जग्राह स द्रुतवराहकुलस्य मार्गं
सुव्यक्तमार्द्रपदपङ्क्तिभिरायताभिः ॥")

**द्रुतं**, क्ली, (द्रु + क्तः ।) नृत्यविषयकशीघ्रगमनम् ।
तत्पर्य्यायः । ओघः २ । इत्यमरः १ । २ ।
६८ ॥ शीघ्रलयः । इति मधुः ॥ नृत्यगीतादौ
द्रवन्ति गच्छन्ति समुदायगतिप्रदर्शनार्थं करा-
दयोऽत्र । इति भरतः ॥ साञ्जे ।
"द्रुतामध्ययने वृत्तिं प्रयोगार्थे तु मध्यमाम् ।
शिष्याणामुपरोधार्थे विलम्बितां समाचरेत् ॥"
इति वेदव्यवस्था ॥
(क्षिप्रम् । यथा, मनुः । ९ । १७२ ।
"अभ्याधातेषु मध्यस्थान् शिष्याच्चौरानिव
द्रुतम् ॥"
क्रियाविशेषणत्वादस्य क्लीवता ॥)

**द्राविडकं**, क्ली, (द्रविडे देशे भवः । अण् ततः संज्ञायां कन् ।) विड्लवणम् । इति राजनिर्घण्टः ॥

**द्राविडकः**, पुं, (द्राविड एव । स्वार्थे कन् ।) वेधमुख्यकः । इत्यमरः । २ । ४ । १३५ । जिँयच षष्ठी इति भाषा ॥

**द्राविडभूतिकः**, पुं, (द्राविड एव भूतिरुत्पत्ति-स्थानं यस्य । कप् ।) द्राविडकः । इति शब्द-रत्नावली ॥

**द्राविडी**, स्त्री, (द्रविडे भवा । द्रविड + अण् । ङीप् ।) एला । इति राजनिर्घण्टः ॥ (इयं एला तु गुजराती इति ख्याता ॥ अस्याः पर्य्यायो यथा, भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ।
"सूक्ष्मोपकुञ्चिका तुच्छा कोरङ्गी द्राविडी गुटिः ॥")

**द्राव्यं**, त्रि, (द्रु + ण्यत् ।) अवश्यगमनीयम् । अवश्यक्षरणीयम् । अवश्यानुतपनीयम् । इति द्रुधातोरवश्यम्भावार्थे घ्यणप्रत्ययः ॥

**द्राह**, ऋ ङ जागरे । निक्षेपे । इति कविकल्प-द्रुमः ॥ (भ्वां-आत्मं-अकं-सेट् ।) ऋ, अद-द्राहत् । ङ, द्राहते । इति दुर्गादासः ॥

**द्रु**, स्रुतौ । गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-अनिट् ।) द्रवति । इति दुर्गादासः ॥

**द्रु**, र न उपतापे । इति कविकल्पद्रुमः ॥ (स्वां-परं-अकं सकं च-अनिट् ।) र, वैदिकः । न, इति मेदिनी । णे, ५३ ॥ भूमिचम्पकः । इति शब्दचन्द्रिका ॥ दन्त्यनान्तोऽपि ॥

**द्रुड**, मज्जने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) रेफयुक्तः । मज्जनमिति मस्जधातो रूपम् । द्रोडति प्रस्तरो जले । दुद्रोडिषति । इति दुर्गादासः ॥

**द्रुड**, शि मज्जने । इति कविकल्पद्रुमः ॥ (तुदां-परं-अकं-सेट् ।) शि, द्रुडति अद्रुडीत् दुद्रोड । एषः कैश्चिन्न मन्यते । क्रमदीश्वरस्तु कुटादिमेव मन्यते । इति दुर्गादासः ॥

**द्रुण**, श जैह्म्ये । गतौ । वधे । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-सेट् ।) दन्त्यवर्गतृतीयादिः । श, द्रुणति दुद्रोणिषति । जैह्म्यं कुटिलीकर-णम् । इति दुर्गादासः ॥

**द्रुणं**, क्ली, (द्रुणति हिनस्तीति । द्रुण + "इगु-पधेति ।" ३ । १ । १३५ । इति कः ।) धनुः । खड्गः । इति हेमचन्द्रः ॥ ४ । २७७ ॥

**द्रुणः**, पुं, (द्रुणति हिनस्तीति । द्रुण + कः ।) वृश्चिकः । भृङ्गः । इति हेमचन्द्रः । ४ । २७७ ॥
त्रि, पिशुनः । इति शब्दमाला ॥

**द्रुणसः**, त्रि, (द्रुरिव दीर्घा नासिका यस्य । "अञ्ना-सिकायाः संज्ञायां नसं चास्थूलात् ।" ४ । ४ । ११८ । इति अच् । नसादेशश्च । "पूर्ब्बपदात् संज्ञायामगः ।" ८ । ४ । ३ । इति णत्वम् ।) दीर्घनासिकायुक्तः । इति सक्षिप्तसारव्याकर-

**द्रुतः**, पुं, (द्रवति स्म उद्‌र्ध्वमिति । द्रु + क्तः ।) द्रुमः । इति धरणिः ॥

**द्रुनखः**, पुं, (द्रोर्वृक्षस्य नख इव । असंज्ञात्वात् अत्र णत्वाभावः ।) कण्टकम् । इति त्रिकाण्डशेषः ॥

**द्रुपदः**, पुं, पञ्चालदेशीयचन्द्रवंशीयराजविशेषः । तस्य कन्या द्रौपदी । पुत्त्रौ शिखण्डिधृष्टद्युम्नौ । इति महाभारतम् ॥ (क्ली, यूपैकदेशः । यथा, ऋग्वेदे । १ । २४ । १३ ।
"शुनःशेपो ह्यह्वद्गृभीतस्त्रिषु आदित्यं द्रुप-देषु बद्धः ।"
"द्रुपदेषु द्रोः काष्ठस्य यूपस्य पदेषु प्रदेशविशे-षेषु बद्धः ।" इति तद्भाष्ये सायनः ॥ काष्ठ-पादुका । यथा, वाजसनेयसंहितायाम् । २० । २० ।
"द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव ॥"
"द्रुस्तरुस्तन्मयं पदं द्रुपदं पादुका तस्मान्मुमु-चानः पृथग् भवन् ।" इति वेददीपः ॥)

**द्रुपदा**, स्त्री, ऋक् । सा च वैदिकमन्त्रविशेषः । यथा, उच्छिष्टस्य चाण्डालादिस्पर्शे आपस्तम्बः ।

द्रुणोति । उपताप इह उपतप्तीभावः उपतप्ती-

करणञ्च । इति दुर्गादासः ॥

**द्रुः**, पुं, (द्रवति ऊद्‌र्ध्वं गच्छतीति । द्रु + मितद्र्वादि-

त्वात् डुः ।) वृक्षः । इत्यमरः । २ । ४ । ५ ॥

णम् ॥

**द्रुणहः**, पुं, (द्रुणं खड्गं हन्ति गच्छतीति । हन्

गतौ + डः ।) खड्गपिधानम् । इति हारा-

वली । १२५ ॥

"भुक्तोच्छिष्टस्त्वनाचान्तश्चाण्डालैः
श्वपचेन वा ।
प्रमादात् स्पर्शनं गच्छेत् तत्र
कुर्य्याद्विशोधनम् ॥
गायत्र्यष्टसहस्रन्तु द्रुपदां वा शतं जपेत् ॥"
इत्याह्निकाचारतत्त्वम् ॥

**द्रुमः**, पुं, (समुदाये वृत्ताः शब्दा अवयवेष्वपि
वर्त्तन्ते इति न्यायात् द्रुः शाखा विद्यतेऽस्य ।
"द्युद्रुभ्यां मः ।" ५ । २ । १०८ । इति मः ।)
वृक्षः । इत्यमरः । २ । ४ । ५ ॥ (यथा, मनुः
।
९ । २५५ ।
"निर्भयन्तु भवेद्यस्य राष्ट्रं बाहुबलाश्रितम् ।
तस्य तद्वर्द्धते नित्यं सिच्यमान इव द्रुमः ॥")
पारिजातः । कुवेरः । इति मेदिनी । मे, १५
॥
(स्वनामख्यातः किम्पुरुषेश्वरः । यथा,
महा-
भारते । २ । १० । २८ ।
"द्रुमः किम्पुरुषेशश्च उपास्ते धनदेश्वरम्
॥"
सनामख्यातनृपविशेषः । स तु
शिविनामदैत्य-
स्यांशात् जातः । यथा, तत्रैव । १ । ६७ ।
८ ।
"यस्तु राजन् ! शिविर्नाम दैतेयः
परिकीर्त्तितः ।
द्रुम इत्यभिविख्यातः स आसीद्भुवि पार्थिवः
॥"
रुक्मिणीगर्भजातः कृष्णस्य पुत्त्रविशेषः ।
यथा,
हरिवंशे । १६० । ६ ।
"चारुभद्रश्चारुगर्भः सुदंष्ट्रो द्रुम एव च ॥")

**द्रुमनखः**, पुं, (द्रुमस्य नख इव ।) कण्टकम् ।
इति हारावली ॥

**द्रुमरः**, पुं, (द्रुर्म्रियतेऽनेनेति । मृ + करणे अप् ।)
कण्टकम् । इति हारावली । ९१ ॥

**द्रुसल्लकः**, पुं, (द्रुषु सल्लक इव ।) पियालवृक्षः ।
इति शब्दरत्नावली ॥

**द्रुह**, लृ य ऊ जिघांसे । इति कविकल्पद्रुमः ॥
(दिवां-परं-अकं-वेट् ।) जिघांस
इहानिष्टा-
चरणमिति विद्यानिवासः । लृ, अद्रुहत्
। य,
द्रुह्यति खलः साधवे । ऊ, द्रोहिष्यति
ध्रोक्ष्यति ।
इति दुर्गादासः ॥

**द्रुहः**, पुं, (द्रुह्यति धनादिलाभाशया पितृविनाशं
चिन्तयतीति । द्रुह + "इगुपधज्ञेति ।"
३ । १ ।
१३५ । इति कः ।) पुत्त्रः । इति
शब्दार्थकल्प-
तरुः ॥ (द्रोहकारके, त्रि । यथा, ऋग्वेदे
। ७ ।
१०४ । १७ ।
"नक्तमप द्रुहा तन्वं गूहमाना ।"
"या राक्षसी नक्तं रात्रौ द्रुहा द्रोहेन युक्ता
।"
इति तद्भाष्ये सायनः ॥)

**द्रुहणः**, पुं, (द्रुं संसारगतिँहन्तीति । हन् + अच् ।
"पूर्ब्बपदात् संज्ञायामगः ।" ८ । ४ । ३
। इति
णत्वम् ।) ब्रह्मा । इति भरतद्विरूपकोषः
॥

**द्रुहिणः**, पुं, (द्रुह्यति दुष्टेभ्य इति । द्रुह + "बहु-
लमन्यत्रापि ।" उणां २ । ४९ । इति
इनन् ।
गुणाभावश्च ।) ब्रह्मा । इत्यमरः । १ ।
१ । १७ ॥
(यथा, देवीभागवते । १ । ८ । २८ ।
"द्रुहिणे सृष्टिशक्तिश्च हरौ
पालनशक्तिता ॥")

**द्रुही**, स्त्री, (द्रुह्यति पित्रे विवाहकालीन-
इति शब्दरत्नावली ॥ ३२ शेर इति
लाकिक-
मानम् । तत्पर्य्यायः । घटः २ कलसः ३
उन्मा-
नम् ४ लल्वणः ५ अर्म्मणः ६ । इति
वैद्यकपरि-
भाषा ॥ "द्रोणस्तु खार्य्याः खलु षोडशांशः
।"
इति लीलावती ॥ (अरणीकाष्ठम् । यथा,
ऋग्वेदे । ६ । २ । ८ ।
"क्रत्वा हि द्रोणे अज्यसेऽग्ने वाजी न
कृत्व्यः ।"
"हे अग्ने क्रत्वा कर्म्मणा मन्थनरूपेण द्रोणे
द्रुमे
काष्ठेऽरण्यां विद्यमानस्तमज्यसे हि ।" इति
तद्भाष्ये सायनः ॥ काष्ठनिर्म्मितकलशः ।
यथा,
तत्रैव । ६ । ३७ । २ ।
"प्रो द्रोणे हरयः कर्म्माग्मन् पुनानास
ऋज्यन्तो
अभूवन् ॥"
"द्रोणे द्रोणकलश ऋज्यन्त ऋजु
गच्छन्तोऽभू-
वन् ।" इति सायनः ॥ द्रुममयरथः । इति
निरुक्तम् । ५ । २६ ॥ यथा, ऋग्वेदे । ६ ।
४४ । २० ।
"आ ते वृषन् वृषणो द्रोणमस्थुः ।"
"द्रोणं द्रुममयं रथमस्थुः ।" इति सायनः
॥)

**द्रोणः**, पुं, (द्रोणः कलस उत्पत्तिस्थानत्वेनास्त्यस्य
।
द्रोण + अच् ।) द्रोणाचार्य्यः । (अयं कुरु-
पाण्डवानां आचार्य्यः । अस्य पिता
भरद्वाजः ।
अस्य जन्मवृत्तान्तं यदुक्तं महाभारते । १ ।
१३१ । ९-१६ ।
"गङ्गाद्वारं प्रति महान् बभूव भगवानृषिः ।
भरद्वाज इति ख्यातः सततं संशितव्रतः ॥
सोऽभिषेक्तुं ततो गङ्गां पूर्ब्बमेवागमन्नदीम् ।

**द्रुमव्याधिः**, पुं, (द्रुमस्य व्याधिरिव ।) लाक्षा ।

इति राजनिर्घण्टः ॥

**द्रुमशीर्षं**, क्ली, (द्रुमस्य शीर्षमिव शीर्षं यस्य ।)

कुट्टिमभेदः । यथा, --
"कपिशीर्षं द्रुमशीर्षं तथा चाखोटशीर्षकम् ।
इति कुट्टिमभेदाः स्युः शाब्दिकैः समुदाहृताः ॥"
इति शब्दरत्नावली ॥
(द्रुमस्य शीर्षम् इति विग्रहे वृक्षाग्रम् ॥)

**द्रुमश्रेष्ठः**, पुं, (द्रुमेषु तृणवृक्षेषु श्रेष्ठः ।) ताल-

वृक्षः । इति शब्दार्थकल्पतरुः ॥ वृक्षश्रेष्ठश्च ॥

**द्रुमामयः**, पुं, (द्रुमस्य आमयो व्याधिः ।) लाक्षा ।

इत्यमरः । २ । ६ । १२५ ॥

**द्रुमारिः**, पुं, (द्रुमस्य अरिः । वृक्षनाशकत्वात्

तथात्त्वम् ।) हस्ती । इति राजनिर्घण्टः ॥

**द्रुमाश्रयः**, पुं, (द्रुमः आश्रयो यस्य ।) सरटः ।

इति राजनिर्घण्टः ॥ वृक्षाश्रितमात्रेषु, त्रि ॥

**द्रुमेश्वरः**, पुं, (द्रुमेषु ईश्वरः श्रेष्ठः ।) तालवृक्षः ।

इति शब्दार्थकल्पतरुः ॥ (द्रुमाणां ओषधी-
नामीश्वरः ।) चन्द्रः । इति हरिवंशः ॥

**द्रुमोत्पलः**, पुं, (द्रुमे उत्पलमिव पुष्पं यस्य ।)

कर्णिकारवृक्षः । इत्यमरः । २ । ४ । ६० ॥

**द्रुवयं**, क्ली, (द्रोर्वृक्षस्य विकारभूत प्रस्थादि-

परिमाणम् । द्रु + "माने वयः ।" ४ । ३ । १६२ ।
इति वयः ।) परिमाणम् । इत्यमरः । २ । ९ । ८५ ॥
(पुंलिङ्गेऽपि । यथा, अथर्व्ववेदे । ५ । २० । २ ।
"सिंह इवास्तानीद्द्रुवयो विबद्धः ॥")

धनाग्रहणादिना । द्रुह + कः । ततो ङीष् ।)
दुहिता । इति शब्दार्थकल्पतरुः ॥

**द्रू**, न ग ञ वधे गतौ । इति कविकल्पद्रुमः ॥

(स्वां-क्र्यां च-उभं-सकं-सेट् ।) न ञ, द्रूणोति
द्रूणुते । ग ञ, द्रूणाति द्रूणीते । इति दुर्गादासः ॥

**द्रूः**, पुं, (द्रवति स्रवतीति । द्रु + "क्विप् वचि-

प्रच्छीति ।" उणां २ । ५७ । इति क्विप् दीर्घश्च ।)
स्वर्णम् । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

**द्रूघणः**, पुं, (द्रुघणः । पृषोदरादित्वात् दीर्घः ।)

द्रुघणः । इति भरतद्विरूपकोषः संक्षिप्तसारश्च ॥

**द्रूणः**, पुं, (द्रुणः । पृषोदरादित्वात् दीर्घः ।)

द्रुणः । वृश्चिकः । इति शब्दार्थकल्पतरुः ॥

**द्रेक**, ऋ ङ स्वनोत्साहे । इति कविकल्पद्रुमः ॥

(भ्वां-आत्मं-अकं-सेट् ।) तवर्गतृतीयादिः । रेफ-
युक्तः । द्वावर्थौ । उत्साहो वृद्धिरिति चन्द्रः ।
औन्नत्यमिति क्षीरस्वामी । ऋ, अदिद्रेकत् ।
ङ, द्रेकते लोकः शब्दायते उत्सहते वेत्यर्थः ।
स्वनेनोत्साहः स्वनोत्साहः । इति केचित् ।
तन्मते शब्देनोत्सहते इत्यर्थः । इति दुर्गादासः ॥

**द्रेक्कः** पुं, लग्नतृतीयभागैकभागः । यथा,

ज्योतिस्तत्त्वे ।

**द्रेक्काणः** पुं, लग्नतृतीयभागैकभागः । यथा,

ज्योतिस्तत्त्वे ।

महर्षिभिर्भरद्वाजो हविर्द्धानि चरन् पुरा ॥
ददर्शाप्सिरसं साक्षात् घृताचीमाप्लुतामृषिः ।
रूपयौवनसम्पन्नां मददृप्तां मदालसाम् ॥
तस्याः पुनर्नदीतीरे वसनं पर्य्यवर्त्तत ।
व्यपकृष्टाम्बरां दृष्ट्वा तामृषिश्चकमे ततः ॥
तत्र संसक्तमनसो भरद्वाजस्य धीमतः ।
ततोऽस्य रेतश्चस्कन्द तदृषिर्द्रोण आदधे ॥
ततः समभवद्द्रोणः कलसे तस्य धीमतः ।
अध्यगीष्ट स वेदांश्च वेदाङ्गानि च सर्व्वशः ॥
अग्निवेशं महाभागं भरद्वाजः प्रतापवान् ।
प्रत्यपादयदाग्नेयमस्त्रमस्त्रविदांवरः॥
अग्नेस्तु जातः स मुनिस्ततो भरतसत्तम ! ।
भारद्वाजं तदाग्नेयं महास्त्रं प्रत्यपादयत् ॥"
अस्य पत्नी कृपाचार्य्यभगिनी कृपी पुत्रस्तु
अश्वत्थामा । अयं हि भारतयुद्धे दुर्य्योधनस्य
पक्षमवलम्ब्य पञ्चदशदिनं यावत् युद्धमकरोत् ।
तत्र पूर्ब्बं दशदिनं भीष्मदेवस्याधीनत्वेन स्थित्वा
पश्चादस्य शरशय्याग्रहणानन्तरं एकादश-
दिनात् स्वयं सेनापतिरभवत् । तत एनं अधर्म्म-
युद्धनिरतं दृष्ट्वा ऋषयः समागत्य सम्प्राप्तं मृत्यु-
कालं विज्ञापयामास । यथा, महाभारते ।
७ । १८९ । ४६-५२ ।
"त एनमब्रुवन् सर्व्वे द्रोणमाहवशोभिनम् ।
अधर्म्मतः कृतं युद्धं समयो निधनस्य ते ॥
न्यस्यायुधं रणे द्रोण ! समीक्ष्यास्मानवस्थितान् ।
नातः क्रूरतरं कर्म्म पुनः कर्त्तुमिहार्हसि ॥

| | | |
|---|---|---|
| | "स्वपञ्चनवमानां ये राशीनामधिपा ग्रहाः ।<br>ते द्रेक्काणाधिपा ज्ञेया द्रेक्काणास्त्रय एव हि ॥"<br>**द्रै**, स्वप्ने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-<br>अनिट् ।) द्रायति । इति दुर्गादासः ॥<br>**द्रोणः**, पुं, क्ली, (द्रवतीति । द्रुगतौ + "कॄवृजॄषि-<br>द्रुपन्यनिस्वपिभ्यो नित् ।" उणां ३ । १० । इति<br>नः ।) आढकपरिमाणम् ।<br>आढकचतुष्टयम् । | |

वेदवेदाङ्गविदुषः सत्यधर्म्मरतस्य ते ।
ब्राह्मणस्य विशेषेण तवैतन्नोपपद्यते ॥
त्यजायुधममोधेषो ! तिष्ठ वत्मनि शाश्वते ।
परिपूर्णश्च कालस्ते वस्तुं लोके ह्यमानुषे ॥
ब्रह्मास्त्रेण त्वया दग्धा अनस्त्रज्ञा नरा युधि ।
यदेतदीदृशं विप्र ! कृतं कर्म्म न साधु तत् ॥
नास्यायुधं रणे क्षिप्रं द्रोण ! मा त्वं चिरं कृथाः ।
मा पापिष्ठतरं कर्म्म करिष्यसि पुनर्द्विज ! ॥”
अयं हि जमदग्निप्रभृतिभिरुक्तो न्यस्तशस्त्रश्च
द्रुपदपुत्त्रेण धृष्टद्युम्नेन निहतः । यथा, तत्रैव ।
७ । १९० । २२ -- ४० ।
“तस्य तच्छिद्रमाज्ञाय धृष्टद्युम्नः प्रतापवान् ।
सशरं तद्धनुर्घोरं संन्यस्याथ रथे ततः ।
खड्गी रथादवप्लुत्य सहसा द्रोणमभ्ययात् ॥
हाहाकृतानि भूतानि मानुषानीतराणि च ।
द्रोणं तयागतं दृष्ट्वा धृष्टद्युम्नवशं गतम् ॥
हाहाकारं भृशञ्चक्रुरहो धिगिति चाब्रुवन् ।
द्रोणोऽपि शस्त्राण्युत्सृज्य परमं शाम्यमास्थितः ॥
तथोक्त्रा योगमास्थाय ज्योतिर्भूतो महातपाः ।
पुराणं पुरुषं विष्णुं जगाम मनसा परम् ॥
मुखं किञ्चित्समुन्नाम्य विष्टभ्य उरमग्रतः ।
रुदन्ति पाण्डवाः सर्व्वे हाहा के शव के शव ॥”)
वृश्चिकः । इति राजनिर्घण्टः ॥
चतुःशतधनुः-परिमितजलाशयः । यथा, शतेन धनुर्भिः पुष्क-रिणी । त्रिभिः शतैर्दीघिका ।
चतुर्भिर्द्रोणः ।
पञ्चभिस्तडागः । द्रोणाद्दशगुणा वापी । इति
जलाशयतत्त्वम् ॥ मेघनायकः । यथा, --
“त्रियुते शाकवर्षे तु चतुर्भिः शेषितः क्रमात् ।
आवर्त्तं विद्धि सम्बर्त्तं पुष्करं द्रोणमम्बुदम् ॥
आवर्त्तो निर्जलो मेघः सम्बर्त्तश्च बहूदकः ।
पुष्करो दुष्करजलो द्रोणः शस्यप्रपूरकः ॥”
इति ज्योतिस्तत्त्वम् ॥
श्वेतवर्णक्षुद्रपुष्पवृक्षविशेषः । घलघसिया इति
हलकसिया इति च भाषा ॥ यथा, --
“ब्रह्मविष्णुशिवादीनां द्रोणपुष्पं सदा प्रियम् ।
तत्ते दुर्गे ! प्रयच्छामि पवित्रन्ते सुरेश्वरि ! ॥”
इति स्मार्त्तकृतदुर्गार्च्चाप्रयोगः ॥
(शाकद्वीपान्तर्गतपर्व्वतविशेषः । यथा, मात्स्ये ।
१२१ । ५६ ।
“चतुर्थः पर्व्वतो द्रोणो यत्रौषध्यो महागिरौ ।
विशल्यकरणी चैव मृतसञ्जीवनी तथा ॥”
वसुपुत्रविशेषः । यथा भागवते । ६ । ६ । ११ ।
“वसवोऽष्टौ वसोः पुत्त्रास्तेषां नामानि मे शृणु ।
स्वादुत्वम् । रूक्षत्वम् । वातपित्तकारित्वम् ।
सक्षारलवणत्वम् । स्वादुपाकित्वम् । भेदकत्वम् ।
आमकामलाशोथतमकश्वासजन्तुनाशित्वञ्च ।
इति भावप्रकाशः ॥ गोशीर्षकवृक्षः । इति
रत्नमाला ॥ घलघसिया इति भाषा । अस्य
गुणः । कफार्शःकामलाक्रिमिशोथनाशित्वम् ।
इति राजवल्लभः ॥

**द्रोणमाना**, स्त्री, (द्रोणो मानं दुग्धस्य यस्याः ।)
द्रोणदुघा । इति शब्दचन्द्रिका ॥

**द्रोणमुखं**, क्ली, चतुःशतग्राममध्ये मनोहरग्रामः ।
इति हारावली । १२० ॥

**द्रोणम्पचः**, त्रि, (द्रोणं द्रोणपरिमितं पचतीति ।
द्रोण + पच + “परिमाणे पचः ।” ३ । २ । ३३ ।
इति खश् ।) द्रोणपरिमितवस्तुपाककर्त्ता ।
इति मुग्धबोधव्याकरणम् ॥

**द्रोणा**, स्त्री, (द्रोण + टाप् ।) द्रोणपुष्पी । इति
भावप्रकाशः ॥

**द्रोणाचार्य्यः**, पुं, (द्रोण एव आचार्य्यः ।) भरद्वाज-
पुत्त्रः । सः अश्वत्थामपिता कृपीपतिः । पाण्ड-
वानामस्त्रशिक्षागुरुश्च । तत्पर्य्यायः । द्रोणः २
गुरुः ३ आचार्य्यः ४ कीर्त्तिभाक् ५ भारद्वाजः
६ कुम्भयोनिः ७ द्रोणाचार्य्यकः ८ । इति शब्द-
रत्नावली ॥ (विशेषविवरणमस्य द्रोणशब्दे
द्रष्टव्यम् ॥)

**द्रोणिः**, स्त्री, (द्रवतीति । द्रु गतौ + “वहिश्रिश्रुयु-
द्रुग्लेति ।” उणां ४ । ५१ । इति निः स च नित् ।)
द्रोणी । इत्यमरटीकायां भरतः ॥ (पुं, अश्व-
त्थामा । स तु अष्टममन्वन्तरगतानां ऋषीणा-
मन्यतमः । यथा, मार्कण्डेये । ८० । ४ ।
“ऋष्यशृङ्गस्तथा द्रोणिस्तत्र सप्तर्षयोऽभवन् ॥”)

**द्रोणिका**, स्त्री, (द्रोणिरिव कायति प्रकाशते इति ।
कै + क + टाप् ।) नीलीवृक्षः । इति शब्द-
रत्नावली ॥

निमीलिताक्षः सत्त्वस्थो निक्षिप्य हृदि धारणाम् ॥
ओम् इत्येकाक्षरं ब्रह्म ज्योतिर्भूतो महातपाः ।
स्मरित्वा देवदेवेशमक्षरं परमं विभुम् ॥
दिवमाक्रामदाचार्य्यः सद्भिः सह दुराक्रमम् ।
द्वौ सूर्य्याविव नो बुद्धिरासीत्तस्मिंस्तथागते ॥
एकाग्रमिव चासीच्च ज्योतिर्भिः पूरितं नभः ।
समपद्यदथार्काभं द्रोणस्य निधने तथा ॥
निमेषमात्रेण च तज्ज्योतिरन्तरधीयत ।
आसीत् किलकिलाशब्दः प्रहृष्टानां दिवौ-
कसाम् ।
ब्रह्मलोकं गते द्रोणे धृष्टद्युम्ने च मोहिते ॥
वयमेव तदाद्राक्ष्म पञ्च मानुषयोनयः ।
योगयुक्तं महात्मानं गच्छन्तं परमां गतिम् ॥
अहं धनञ्जयः पार्थः कृपः शारद्वतस्तथा ।
वासुदेवश्च वार्ष्णेयो धर्म्मपुत्त्रश्च पाण्डवः ॥
अन्ये तु सर्व्वे नापश्यन् भारद्वाजस्य धीमतः ।
महिमानं महाराज ! योगयुक्तस्य गच्छतः ॥
ब्रह्मलोकं महद्दिव्यं देवगुह्यं हि तत्परम् ॥
गतिं परमिकां प्राप्तमजानन्तो नृयोनयः ।
नापश्यन् गच्छमानं हि तं सार्द्धमृषिपुङ्गवैः ।
आचार्य्यं योगमास्थाय ब्रह्मलोकमरिन्दमम् ॥
वितुन्नाङ्गं शरव्रातैर्न्यस्तायुधमसृक्क्षरम् ।
द्रोणः प्राणो ध्रुवोऽर्कोऽग्निर्दोषो वास्तुर्विभा-
वसुः ॥”)

**द्रोणकाकः**, पुं, (द्रोण एव काकः ।) वनकाकः । दाँडकाक इति भाषा । तत्पर्य्यायः । काकोलः २ । इत्यमरः । २ । ५ । २१ ॥ द्रोणः ३ अरण्य-
वायसः ४ वनवासी ५ महाप्राणः ६ क्रूररावी ७ पलप्रियः ८ । इति राजनिर्घण्टः ॥ काकलः ९ । इति शब्दरत्नावली ॥

**द्रोणगन्धिका**, स्त्री, (द्रोणस्य द्रोणपुष्पस्य गन्ध इव गन्धो यस्याः । कप् । टापि अत इत्वम् ।) रास्ना । इति जटाधरः ॥

**द्रोणधा**, स्त्री, (द्रोणदुधा । पृषोदरादित्वात् दुलोपः ।) द्रोणदुधा । इति शब्दचन्द्रिका ॥

**द्रोणदुग्धा**, स्त्री, (द्रोणपरिमितं दुग्धं यस्याः ।) द्रोणक्षीरा । इति हेमचन्द्रः । ४ । ३३५ ॥

**द्रोणदुधा**, स्त्री, (द्रोणं दोग्धीति । दुह + “दुहः कप् घश्च ।” ३ । २ । ७० । इति कप् घश्चान्तादेशः ।) द्रोणपरिमितदुग्धदात्री गवी । तत्पर्य्यायः । द्रोणक्षीरा २ । इत्यमरः । २ । ९ । ७२ ॥ द्रोणमाना ३ द्रोणधा ४ पयस्विनी ५ । इति शब्दचन्द्रिका ॥ द्रोणदुग्धा ६ । इति हेमचन्द्रः । ४ । ३३५ ॥ द्रोणमानपयस्विनी ७ । इति शब्दरत्नावली ॥

**द्रोणपुष्पी**, स्त्री, (द्रोणवत् पुष्पं यस्याः ङीष् ।) क्षुद्र-

**द्रोणी**, स्त्री, (द्रोणि + कृदिकारादिति वा ङीष् ।) देशविशेषः । काष्ठाम्बुवाहिनी । गवादनी । इति मेदिनी । णे, १७ ॥ (कलशाकारपात्र-
विशेषः । यथा, महाभारते । १ । ६३ । १०३ ।
“भरद्वाजस्य च स्कन्नं द्रोण्यां शुक्रमवर्द्धत ॥”) नीलीवृक्षः । इति शब्दरत्नावली ॥ शैलभेदः । शैलयोः सन्धिः । इति हेमचन्द्रः । ४ । १०० ॥ इन्द्रचिर्भिटी । द्रोणीलवणम् । इति राज-
निर्घण्टः ॥ नदीविशेषः ॥ इत्युणादिकोषः ॥ द्विसूर्पपरिमाणम् । १२८ शेर इति भाषा । तत्पर्य्यायः । वाहः २ गोणी ३ । इति वैद्यक-
परिभाषा ॥

**द्रोणीदलः**, पुं, (द्रोण्या इव दलं यस्य ।) केतकी-
पुष्पः । इति हारावली । ९२ ॥

**द्रोणीमुखं**, क्ली, (द्रोणीव मुखं यस्य ।) द्रोण-
मुखम् । इति भूरिप्रयोगः ॥

**द्रोणीलवणं**, क्ली, (द्रोणीसम्भूतं लवणम् ।) उप-
कर्णाटदेशप्रसिद्धलवणविशेषः । तत्पर्य्यायः । द्रोणेयम् २ वार्द्धेयम् ३ द्रोणीजम् ४ वारिजम्

| | | |
|---|---|---|
| धिक्कृतः पाषैतस्तन्तु सर्व्वभूतैः परामृशत् ॥<br>तस्य मूर्द्धानमालम्ब्य गतसत्त्वस्य देहिनः ।<br>किञ्चिदब्ववतः कायाद्विचकर्त्तासिना शिरः ॥"<br>"क्रोशमानेऽर्ज्जुने चैव पार्थिवेषु च सर्व्वशः ।<br>धृष्टद्युम्नोऽवधीद्द्रोणं रथतल्पे नरर्षभम् ॥<br>शोणितेन परिक्लिन्नो रथाद्भूमिमरिन्दमः ।<br>लोहिताङ्ग इवादित्यो दुर्द्धर्षः समपद्यत ॥" * ॥)<br>दग्धकाकः । इति मेदिनी । णे, १७ ॥<br>(यदुक्तम् ।<br>"के शवं पतितं दृष्ट्वा द्रोणो हर्षमुपागतः । | क्षुपविशेषः । गूमा इति ख्याता ।<br>तत्पर्य्यायः ।<br>खर्व्वपत्रा २ कुम्भयोनिः ३ कुरुम्बिका ४ चित्रा-<br>क्षुपः ५ कुरुम्बा ६ सुपुष्पा ७ चित्रपत्रिका ८ ।<br>इति राजनिर्घण्टः ॥ द्रोणा ९ फलेपुष्पा १० ।<br>इति भावप्रकाशः ॥ अस्या गुणाः ।<br>कटुत्वम् ।<br>उष्णत्वम् । रुच्यत्वम् ।<br>वातकफाग्निमान्द्यपक्ष-<br>वातनाशित्वञ्च । इति राजनिर्घण्टः ॥<br>गुरुत्वम् । | |

५ वार्द्धिभवम् ६ द्रोणी ७
त्रिकूटलवणम् ८ ।
अस्य गुणाः । पाकेनात्युष्णत्वम् ।
अविदाहि-
त्वम् । भेदनत्वम् । स्निग्धत्वम् ।
शूलनाशित्वम् ।
अल्पपित्तलत्वञ्च । इति
राजनिर्घण्टः ॥

**द्रोहः**, पुं, (द्रुह् + भावे घञ् ।) जिघांसा ।

अनिष्टचिन्तनम् । तत्पर्य्यायः ।
अपक्रिया २ ।
इति हेमचन्द्रः । ६ । १५१ ॥ यथा,
कूर्म्मपुराणे ।
"देवद्रोहाद्गुरोर्द्रोहः
कोटिकोटिगुणाधिकः ॥"
(छद्मवधः । यथा, मनौ । ७ । ४८ ।
"पैशुन्यं साहसं द्रोह
ईर्षासूयार्थदूषणम् ।
वाग्दण्डश्चापि पारुष्यं क्रोधजोऽपि
गणोऽष्टकः ॥"
"द्रोहश्छद्मवधः ।" इति तट्टीकायां
कुल्लूकभट्टः ॥)

**द्रोहचिन्तनं**, क्ली, (द्रोहस्य चिन्तनम् ।) परा-

निष्टचिन्ता । तत्पर्य्यायः । व्यापादः
२ । इत्य-
मरः । १ । ५ । ४ ॥

**द्रोहाटः**, पुं, (द्रोहाय अटतीति । अट् + अच्
।)

गाथाप्रभेदः । मृगलुब्धकः ।
वैडालव्रतिकः ।
इति मेदिनी । टे, ४६ ॥

**द्रोही**, [न्] पुं, (द्रोहोऽस्त्यस्येति इनिः । यद्वा,

द्रुह्यतीति णिनिः ।) द्रोहकः ।
परानिष्ट-
चिन्तकः । यथा, --
"मित्रद्रोही कृतघ्नश्च ये च
विश्वासघातकाः ।

राम उवाच ।
सीतां गृहीत्वा त्वं गच्छ छायात्रैव तु तिष्ठतु ।
कलत्रवर्ज्जनं कर्म्म सर्व्वेषाञ्च जुगुप्सितम् ॥
सीतां गृहीत्वा प्रययौ रुदन्तीञ्च हुताशनः ।
सीतायाः सदृशी छाया तस्थौ श्रीरामसन्निधौ
॥
सा च छाया हृता पूर्ब्बं रावणेन बलीयसा ।
समुद्दधार तां रामो निहत्य तं सबान्धवम् ॥
वह्नौ परीक्षाकाले च छाया वह्नौ विवेश ह ।
अग्निश्छायाञ्च संरक्ष्य ददौ रामाय जानकीम्
॥
सा च छाया तपश्चक्रे नारायणसरोवरे ।
तपश्चकार दिव्यञ्च शतवर्षञ्च शूलिनः ॥
वरं वृणुष्व भद्रे ! तमुवाच शङ्करश्च ताम् ।
उवाच सा शिवं व्यग्रा भर्त्तुर्दुःखेन दुःखिता ॥
पतिन्देहि पञ्चधा सा वरं वव्रे त्रिलोचनम् ।
सर्व्वसम्पत्प्रदस्तुष्टस्तस्यै शर्व्वो वरं ददौ ॥
महादेव उवाच ।
साध्वि ! त्वं पञ्चधा ब्रूहि पतिन्देहीति
व्याकुला ।
पञ्चेन्द्राश्च हरेरंशा भविष्यन्ति प्रियास्तव ॥
ते च सर्व्वे च पञ्चेन्द्राश्चाधुना पञ्च पाण्डवाः
।
सा च छाया द्रौपदी च यज्ञकुण्डसमुद्भवा ॥
कृते युगे वेदवती त्रेतायां जनकात्मजा ।
द्वापेरे द्रौपदी छाया तेन कृष्णा त्रिहायणी ॥
वैष्णवी कृष्णभक्ता च तेन कृष्णा प्रकीर्त्तिता ।
स्वर्गलक्ष्मीर्महेन्द्राणां सा च पश्चाद्भविष्यति
॥
राजा ददौ फाल्गुनाय कन्यायाश्च स्वयंवरे ।
पप्रच्छ मातरं वीरो वस्तु प्राप्तं मयाधुना ॥
तमुवाच स्वयं माता गृहाण भ्रातृभिः सह ।
शम्भोर्वरेण पूर्ब्बञ्च परत्र मातुराज्ञया ॥
द्रौपद्याः स्वामिनस्तेन हेतुना पञ्चपाण्डवाः ।
चतुर्द्दशानामिन्द्राणां पञ्चेन्द्राः पञ्चपाण्डवाः
॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ११५
अध्यायः ॥

**द्वन्दं** क्ली, (द्वन्द्वं पृषोदरादित्वात् वस्य लोपः ।)

"राज्ञो बलं न हि बलं द्वन्द्वमेव बलं बलम् ।
अप्यल्पबलवान् राजा स्थिरो द्वन्द्वबलाद्भवेत्
॥"
तथा च ।
"एकः शतं योधयति प्राकारस्थो धनुर्धरः ।
शतं दशसहस्राणि तस्माद्दुर्गं विशिष्यते ॥
अकृत्रिमं कृत्रिमञ्च तत् पुनर्द्विविधं भवेत् ।
यद्दैवसूचितं द्वन्द्वं गिरिनद्यादिसंश्रितम् ।
अकृत्रिममिदं ज्ञेयं दुर्लङ्घ्यमरिभूभुजाम् ॥
प्राकारपरिखारण्यसंश्रयं यद्भवेदिह ।
कृत्रिमं नाम विज्ञेयं लङ्घ्यालङ्घ्यन्तु
वैरिणाम् ॥"
तत्राकृत्रिमद्वन्द्वयुक्तिर्यथा, --
"अत्युच्चविस्तीर्णशिरा दुरारोहः सकाननः ।
सजलाशयसम्भारभोज्यद्रव्यसमाश्रयः ॥
सुखनिःसरणो द्वन्द्वः पर्व्वताख्यो महीभुजाम्
।
नद्यो गभीरविस्तीर्णाश्चतुर्द्दिक्षुव्यवस्थिताः ॥
तन्मध्ये भूप्रदेशो यो नदीद्वन्द्वः स उच्यते ।
यदन्यच्चिरकालीनं दुर्लङ्घ्यविपिनादिकम्
॥
तन्मध्यरचिता भूमिर्द्वन्द्वत्वेनोपतिष्ठते ।
वनद्वन्द्वमिति ख्यातं यथापूर्ब्बं महत्तरम् ॥" *
॥
कृत्रिमद्वन्द्वयुक्तिर्यथा, --
"यस्मिन् राज्ये गिरिर्नास्ति नद्यो वा गहनो-
दकाः ।
तस्य मध्ये महीपालः कृत्रिमं द्वन्द्वमारभेत् ॥
गजैरलङ्घ्या विस्तीर्णा गम्भीराः पूर्णवारयः ।
द्वन्द्वत्वेन समादिष्टाः परिखा बहुयादसः ॥
विशालशालं सुधनं बहुकण्टकिसङ्कटम् ।
द्वन्द्वत्वेन समादिष्टं विस्तीर्णं विषमं बलम् ॥
अधोऽधोवध्यमानोऽपि कन्दरोऽल्पजलं
स्रवन् ।
द्वन्द्वत्वेन समुद्दिष्टः स दुर्लङ्घ्यो हि भूभुजाम्
॥
सर्व्वतः परिखां कृत्वा निबन्धोपरि कन्दरम् ।
तज्जलप्लुतदेशत्वात् जलद्वन्द्वं तदुच्यते ॥
एषामभावे निम्नस्य भूप्रदेशस्य बन्धनात् ।

ते नरा नरके यान्ति
यावच्चन्द्रदिवाकरौ ॥”
इति ससेमिरोपाख्यानम् ॥
(यथा च, कथासरित्सागरे । ५ ।
६३ ॥
“तच्छ्रुत्वाचिन्तयद्राजा नूनं द्रोही स
एव मे ॥”)

**द्रोणायनः**, पुं, (द्रोणस्यापत्यम् । द्रोण + फक् ।)
अश्वत्थामा । इति त्रिकाण्डशेषः ॥

**द्रौणिः**, पुं, (द्रोणस्यापत्यम् । द्रोण + इञ् ।)
अश्वत्थामा । इति शब्दरत्नावली ॥
(यथा,
महाभारते । ४ । ५६ । ७४ ।
“आवृत्य तु महाबाहुर्यतो द्रौणिस्ततो
हयान् ॥”
अय हि एकोनत्रिंशद्द्वापरयुगस्य
व्यासः ।
यथा, देवीभागवते । १ । ३ । २३ ।
“एकोनत्रिंशत् संप्राप्ते द्रौणिर्व्यासो
भविष्यति ॥”)

**द्रौणिकः**, त्रि, (द्रोणस्य द्रोणपरिमितबीजस्य
वापः इति । द्रोण + “तस्य वापः ।”
५ । १ ।
४५ । इति ठक् ।)
द्रोणपरिमितबीजवपनयोग्य-
क्षेत्रम् । इत्यमरः । २ । ९ । १० ॥
(द्रोणेन क्रीतः ।
निष्कादित्वात् ठक् । द्रोणक्रीतः ॥
द्रोणं द्रोण-
परिमितद्रव्यं पचतीति । द्रोण +
“संभवत्यव-
हरति पचति ।” ५ । १ । ५२ । इति
ठञ् ।
द्रोणपाचकः । इति सिद्धान्तकौमुदी
॥)

**द्रौपदी**, स्त्री, (द्रुपदस्यापत्यं स्त्री । द्रुपद + अण् ।

मिथुनम् । इति शब्दरत्नावली ॥

**द्वन्द्वं**, क्ली, (द्वौ द्वौ सहाभिव्यक्तौ । “द्वन्द्वं रहस्य-
मर्य्यादावचन-व्युत्क्रमण-यज्ञपात्रप्रयोगाभि-
व्यक्तिषु ।” ८ । १ । १५ । इति द्विशब्दस्य
द्विर्व-
चनं पूर्ब्बपदस्याम्भावोऽत्वञ्चोत्तरपदस्य
नपुंस-
कत्वञ्च निपात्यते ।) रहस्यम् । कलहः ।
(यथा, हितोपतेशे । ३ । ३२ ।
“शतं दद्यान्न विवदेदिति प्राज्ञस्य लक्षणम् ।
विना हेतुमपि द्वन्द्वमेतन्मूर्खस्य लक्षणम् ॥”)
मिथुनम् । (यथा, रघुः । १ । ४० ।
“परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु ।
मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु ॥”)
युग्मम् । इति मेदिनी । वे, १० ॥ (यथा,
महा-
भारते । १ । १३७ । १५ ।
“द्वन्द्वयुद्धञ्च पार्थेन कर्त्तुमिच्छान्यहं प्रभो !
॥”
शीतोष्णादि । यथा, माघे । ४ । ६४ ।
“सर्व्वर्त्तुनिर्वृतिकरे निवसन्नुपैति
न द्वन्द्वदुःखमिह किञ्चिदकिञ्चनोऽपि ॥”)
दुर्गम् । (अत्र पुंस्त्वमपि ।) अथ द्वन्द्वयुक्तिः ।
वर्षासु प्लवते वारि जलद्वन्द्वं ततो भवेत् ॥
एतयोरपि संमिश्रात् संमिश्रं द्वन्द्वमाचरेत् ।
आश्रित्य कृत्रिमं द्वन्द्वं बलवद्वैरिणो दिशि ॥
अन्यत्र कृत्रिमं द्वन्द्वं कृत्वा नरपतिर्वसेत् ।
रथपतिर्यदा वैरी स्थलद्वन्द्वं तदाचरेत् ॥
गजाश्वनाथश्चेद्वैरी जलद्वन्द्वं तदाचरेत् ।
गिरिद्वन्द्वं नृपः सेवेत् यस्य स्याद्द्विविधो
रिपुः ॥
सर्व्वो हि त्रिविधो युद्धः समासादुपदिक्ष्यते ।
प्रतिराजस्य राज्यान्ते प्रकटे गुप्त एव च ॥
राज्यान्ते सैनिकान् रक्षेत् प्रकटे निवसेत्
स्वयम् ।
गुप्ते स्त्रीकोषसम्भारं संरक्षेदिति निश्चयः ॥”
अथ सामान्यतो गुणाः ।
तथा हि । नीतिशास्त्रम् ।
“सप्रवेशापसरणं द्वन्द्वमुत्तममुच्यते ।
अन्यत्र वन्दिशालेव न तादृग्बद्धमाश्रयेत् ॥
धनुर्द्वन्द्वं महीद्वन्द्वं गिरिद्वन्द्वं तथैव च ।
मनुष्यद्वन्द्वसंसर्गं वरद्वन्द्वञ्च तानि षट् ॥”
अन्ये तु ।
“न द्वन्द्वं द्वन्द्वमित्याहुर्योद्धृद्वन्द्वं प्रकीर्त्तितम् ।
योद्धशून्यं हि यत् द्वन्द्वं मृतकायसमं हि तत्
॥”

| | | |
|---|---|---|
| ङीप् ।) द्रुपदराजकन्या । तत्पर्य्यायः । पाञ्चाली<br>२ कृष्णा ३ सैरिन्ध्री ४ नित्ययौवना ५ वेदिजा<br>६ याज्ञसेनी ७ । इति हेमचन्द्रः । ३ । ३७४ ॥<br>अस्याः पञ्चस्वामिकारणं यथा, --<br>वह्निरुवाच ।<br>“शृणु राम ! महाभाग ! सीतासंगोपनं कुरु ।<br>सप्ताहाभ्यन्तरे चैव रावणो दुष्टराक्षसः ।<br>दुर्न्निवार्य्यः प्राक्तनेन जानकीञ्च हरिष्यति ॥ | | |

अथान्यत्रापि ।
"यावत् प्रमाणं नगरं हि राज्ञां
ततो भवेदुत्तममध्यमान्त्यम् ।
त्रिंशत्तदर्द्धाष्टगुणोत्तरेण
त्रिदेशजानां धरणीपतीनाम् ॥"
गर्गस्तु ।
"यदन्यद्द्विविधं द्वन्द्वं प्रोच्यते
धरणीभुजाम् ।
ताभ्यामेवातिरिच्येत मन्त्रद्वन्द्वं विशेषतः
॥
अन्येषु दैवाद् भिन्नेषु मन्त्रद्वन्द्वात्
जयेन्नृपः ।
मन्त्रद्वन्द्वे हि भिन्ने हि न चान्यत्
कार्य्यकार-
कम् ॥"
भोजस्तु ।
"यदैष वैरिदुर्लङ्घ्यं विस्तीर्णं विषमञ्च
तत् ।
सप्रवेशापसरणं तद्द्वन्द्वमुत्तमं विदुः ॥"
इति भोजराजकृतयुक्तिकल्पतरुः ॥

**द्वन्द्वः**, पुं, (द्वौ द्वौ सहाभिव्यक्तौ इति । निपा-
तनात् साधुः । चार्थे द्वन्द्व इति निर्द्देशात्
पुंस्त्वभ् ।) रोगविशेषः । समासभेदः ।
इति
शब्दरत्नावली ॥ स तु भिन्नार्थानां
पदानां
समासः । वोपदेवेनास्य चसंज्ञा कृता ।
स
इतरेतरयोगसमाहारभ्देन द्विधा भवति ।
इत-
रेतरद्वन्द्वो यथा । हरिश्च हरश्च हरिहरौ
।
अत्र प्रत्येकपदप्राधान्यात् द्वित्वं बहुत्वं
शेष-
शब्दलिङ्गभाजित्वञ्च भवति ।
समाहारद्वन्द्वो
यथा । वाक् च त्वक् च द्वयोः समाहारः
वाक्-

**द्वयातिगः**, त्रि, (द्वयं अतिगच्छति अतिक्राम-
तीति । अति + गम + डः ।) रजस्तमोगुण-
शून्यः । सत्त्वगुणयुक्तः । इत्यमरः । २ । ७ ।
४५ ॥

**द्वाः**, [र्] स्त्री, (द्वारयतीति । द्वृ वरणे + णिच् +
बाहुलकात् क्विप् ।) द्वारम् । इत्यमरः । २ ।
२ ।
१३ ॥ (यथा, भागवते । ३ । ५ । १ ।
"द्वारि द्युनद्या-ऋषभः कुरूणां
मैत्रेयमासीनमगाधबोधम् ॥")
उपायः । यथा, ज्ञानद्वारा भवेन्मुक्तिरिति
ज्ञानशास्त्रम् ॥

**द्वाःस्थः**, पुं, (द्वारि तिष्ठतीति । स्था + कः ।)
द्वारपालः । इति शब्दरत्नावली ॥ (यथा,
भागवते । १ । १८ । ३४ ।
"ब्राह्मणैः क्षत्त्रबन्धुर्हि द्वारपालो निरूपितः ।
स कथं तद्गृहे द्वाःस्थः सभाण्डं भोक्तमर्हति
॥")
नन्दिकेश्वरः । इति भूरिप्रयोगः ॥

**द्वाःस्थितः**, त्रि, (द्वारि स्थितः ।) द्वारपालः ।
इत्यमरकोषशब्दरत्नावल्यौ ॥

**द्वाःस्थितदर्शकः**, त्रि, (द्वाःस्थितः सन् पश्यतीति ।
दृश् + ण्वुल् ।) द्वारपालः । इत्यमरटीकायां
भरतः ॥

**द्वाःस्थितदर्शी**, [न्] त्रि, (द्वारि स्थितः सन्
पश्यतीति । दृश् + णिनिः ।) द्वारपालः ।
इति
भरतधृतरभसः रमानाथश्च ॥

**द्वाचत्वारिंशत्**, स्त्री, (द्व्यधिका चत्वारिंशत् ।
द्विशब्दस्य वा आत्वम् ।) द्विचत्वारिंशत् ।
इति
व्याकरणम् ॥ ४२ वेयाल्लिश इति भाषा ॥

**द्वात्रिंशत्**, स्त्री, (द्व्यधिका त्रिंशत् । "द्व्यष्टनः

पुनस्त्रिषु ग्रीवाजङ्घामेहनेषु । पुनस्त्रिषु
नाभि-
स्वरसत्वेषु । पञ्चसु
नासाभुजनेत्रहनूजानुषु ।
पुनः पञ्चसु त्वक्केशरोमदन्ताङ्गुलिपर्व्वसु
।
तथैव महापुरुषलक्षणे
सामुद्रकग्रन्थप्रसिद्धेः ।
द्वात्रिंशद्वराणि तत्तल्लक्षणेभ्यः
अन्येभ्योऽपि
श्रेष्ठानि लक्षणानि यस्य सः गोपेषु
कथमिति
भगवदवतारादिषु
अप्येतादृशत्वाश्रवणादिति
भावः ।" इति श्रीजीवगोस्वामिविरचिता
दुर्गम-
सङ्गमनीनाम्नी टीका ॥

**द्वादश**, [न्] त्रि, (द्व्यधिका दश । "द्व्यष्टन इति
।"
६ । ३ । ४७ । इति आत्वम् ।)
द्व्यधिका दश । १२
वार इति भाषा । द्वादशसंख्या
तत्संख्येयाश्च ।
अयं नित्यबहुवचनान्तः । त्रिलिङ्गे
समानरूपः ।
इति व्याकरणम् ॥ द्वादशवाचकानि यथा
।
सूर्य्यः १ मासः २ राशिः ३ संक्रान्तिः ४
गुह-
बाहुः ५ सारिकोष्ठः ६ गुहनेत्रम् ७ राज-
मण्डलम् ८ । इति कविकल्पलता ॥

**द्वादशः**, त्रि, (द्वादशानां पूरणः । "तस्य पूरणे
डट् ।" ५ । २ । ४८ । इति डट् ।)
द्वादशानां पूरणः ।
इति व्याकरणम् ॥ वारै इति भाषा ।
(यथा,
मनुः ।

त्वचम् । अत्र संहतेरेकत्वादेकवचनं
नित्य-
क्लीवलिङ्गत्वञ्च भवति । इति
मुग्धबोधम् ॥
(यदुक्तं, --
"द्वन्द्वो द्विगुरपि चाहं मद्गृहे
नित्यमव्ययीभावः ॥")

**द्वन्द्वचरः**, पुं, (द्वन्द्वेन चरतीति । चर + अच् ।)

चक्रवाकः । इति हेमचन्द्रः । ४ । ३९६
॥
(यथा, रघुः । १६ । ६३ ।
आवर्त्तशोभा नतनाभिकान्ते-
र्भङ्गो भ्रुवां द्वन्द्वचराः स्तनानाम् ।
जातानि रूपावयवोपमाना-
न्यदूरवर्त्तीनि विलासिनीनाम् ॥")

**द्वन्द्वचारी**, [न्] पुं, (द्वन्द्वेन चरतीति । चर +

णिनिः ।) चक्रवाकः । इति त्रिकाण्डशेषः
॥

**द्वन्द्वजः**, पुं, (द्वन्द्वात् जायते इति । जन + डः ।)

द्विदोषजरोगः । इति निदानम् ॥ कलहा-
ज्जाते, त्रि ॥

**द्वयं**, क्ली, (द्वौ अवयवौ यस्य । द्वि + "संख्याया

अवयवे तयप् ।" ५ । २ । ४२ । इति
तयप् ।
"द्वित्रिभ्यान्तयस्यायज्वा ।" ५ । २ ।
४३ ।
इति तयस्यायच् ।) द्व्यात्मकम् । दुइ
इति
भाषा । तत्पर्य्यायः । उभौ २ द्वौ ३
युगलम् ४
द्वितयम् ५ युगम् ६ द्वैतम् ७ यमम् ८
द्वन्द्वम्
९ यग्मम् १० यमलम् ११ यामलम् १२
। इति
हेमचन्द्रः । ६ । ५९ ॥

**द्वयाग्निः**, पुं, (द्वयो द्विरूपोऽग्निर्यत्र ।) वृक्षभेदः ।

रांचिता इति भाषा । तत्पर्य्यायः । पाठी
२

संख्यायामिति ।" ६ । ३ । ४७ । इति
आत्वम् ।)
द्व्यधिकत्रिंशत् संख्या । तत्संख्येयाश्च ।
३२
वत्रिश इति भाषा । यथा, द्वात्रिंशत्प्रसवे
नार्य्या-
श्चतुस्त्रिंशद्गमे नृणामित्यादि ज्योतिस्तत्त्वम्
॥

**द्वात्रिंशदक्षरी**, [न्] पुं, (द्वात्रिंशदक्षराणि सन्ति

अत्र । बाहुलकात् इनिः ।) ग्रन्थः । इति
त्रिकाण्डशेषः ॥

**द्वात्रिंशल्लक्षणोपेतः**, पुं, (द्वात्रिंशल्लक्षणैरुपेतः ।)

महापुरुषः । इति शब्दार्थकल्पतरुः ॥
तल्लक्ष-
णानि यथा, --
"रागः सप्तसु हन्त षट्स्वपि शिशोरङ्गेष्वलं
तुङ्गता
विस्तारस्त्रिषु खर्व्वता त्रिषु तथा गम्भीरता
च त्रिषु ।
दैर्घ्यं पञ्चसु किञ्च पञ्चसु सखे ! संप्रेक्ष्यते
सूक्ष्मता
द्वात्रिंशद्वरल णः कथमसौ गोपेषु सम्भा-
व्यते ॥"
इति श्रीहरिभक्तिरसामृतसिन्धुः॥
"राग इति । श्रीमद्व्रजेश्वरं प्रति कस्यचित्
सव-
यसो गोपस्य वाक्यमिदम् । सप्तसु नेत्रान्त-
पादकरतलताल्वधरौष्ठजिह्वानखेषु षट्सु
वक्षः-
स्कन्धनखनासिकाकटिमुखेषु । त्रिषु
कटिललाट-
वक्षःसु । केचित् कटिस्थाने शिरः पठन्ति ।

"गर्भाष्टमेऽब्दे कुर्व्वीत
ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राज्ञो गर्भाच्च द्वादशे विशः
॥"
महादेवः । यथा, महाभारते । १३ । १७
। ९३ ।
"द्वादशस्त्राशनश्चाद्यो यज्ञो यज्ञसमाहितः
॥")

**द्वादशकरः**, पुं, (द्वादश करा भुजा यस्य ।) बृह-

स्पतिः । इति त्रिकाण्डशेषः ॥
कार्त्तिकेयश्च ॥

**द्वादशपत्रकं**, क्ली, (द्वादश अक्षराणि पत्राणि इव

यस्य ।) योगविशेषः । यथा, --
"पितामहोऽपि तं पुत्त्रं साध्यं सद्विनये
रतम् ।
सनत्कुमारं प्रोवाच योगं द्वादशपत्रकम् ॥
शिखासंस्थन्तु ॐकारं मेषोऽस्य शिरसि
स्थितः ।
मासो वैशाखनामा च प्रथमं पत्रकं स्मृतम्
॥
नकारः शिरसि प्रोक्तो वृषोऽस्य शिरसि
स्थितः ।
ज्यैष्ठमासश्च तत् पत्रं द्वितीयं
परिकीर्त्तितम् ॥
मोकारो भुजयोर्युग्मं मिथुनं तत्र
संस्थितःम्
मास आषाढनामा च तृतीयं पत्रकं स्मृतम्
॥
भकारो नेत्रयुगलं कर्क्कटस्तत्र संस्थितः
।
मासः श्रावण इत्युक्तश्चतुर्थं पत्रकं स्मृतम्
॥
गकारो हृदयं प्रोक्तं सिंहो वसति तत्र च ।
मासो भाद्रस्तथा प्रोक्तः पञ्चमं पत्रकं
स्मृतम् ।
वकारं कवचं विद्यात् कन्या तत्र प्रतिष्ठिता
।
मासश्चाश्वयुजो नाम षष्ठं तत्पत्रकं
स्मृतम् ॥
तेकारमन्त्रग्रामश्च तुलाराशिकृताश्रयः ।

| | | |
|---|---|---|
| हस्वाग्निः ३ । इति शब्दचन्द्रिका ॥ | | मासश्च कार्त्तिको नाम सप्तमं पत्रकं स्मृतम् ॥<br>वाकारो नाभिसंयुक्तः स्थितस्तत्र च वृश्चिकः ।<br>मासो मार्गशिरो नाम त्वष्टकं पत्रकं स्मृतम् ॥<br>सुकारो जघनः प्रोक्तस्तत्रस्थश्च धनुर्धरः ।<br>पुष्येति गदितो मासो नवमं परिकीर्त्तितम् ॥<br>देकारश्चोरुयुगलं मकरोऽप्यत्र संस्थितः ।<br>माघो निगदितो मासः पत्रकं दशमं स्मृतम् ॥<br>वाकारो जानुयुगलं कुम्भस्तत्रापि संस्थितः । |

पत्रकं फाल्गुनः प्रोक्तं तदेकादशमुत्तमम् ॥
पादौ यकारो मीनो हि स चैत्रे वसते मुने ! ।
इदन्तु द्वादशं प्रोक्तं पत्रं वै केशवस्य हि ॥
द्वादशारन्तथा चक्रं यन्नाभिद्विभुजन्तथा ।
त्रिव्यूहन्त्वेकमूर्त्तिश्च तथोक्तः परमेश्वरः ॥
एतत्तवोक्तं देवस्य रूपं द्वादशपत्रकम् ।
यस्मिन् ज्ञाते मुनिश्रेष्ठ ! न भूयो मरणं भवेत् ॥”
इति वामनपुराणेऽष्टपञ्चाशत्तमोऽध्यायः ॥

**द्वादशलोचनः**, पुं, (द्वादश लोचनानि नेत्राणि यस्य । षडाननत्वाद्वास्य तथात्वम् ।) कार्त्तिकेयः । इति त्रिकाण्डशेषः ॥

**द्वादशांशुः**, पुं, (द्वादश अंशवः किरणानि यस्य ।) बृहस्पतिः । इति भूरिप्रयोगः ॥ (यदुक्तं मात्स्ये । १२७ । ५५ ।
“लोहितो नवरश्मिस्तु स्थानमापन्तु तस्य वै ।
बृहत् द्वादशरश्मीकं हरिद्राभन्तु वेधसः ॥”)

**द्वादशाक्षः**, पुं, (द्वादश अक्षीणि यस्य ।) कार्त्तिकेयः । (द्वादशविषयेषु अक्षिणी यस्य ।) बुद्धः । इति हेमचन्द्रः । २ । १४८ ॥ (कार्त्तिकेयस्य अनुचरविशेषः । यथा, महाभारते । ९ । ४५ । ५६ ।
“एकाक्षो द्वादशाक्षश्च तथैवैकजटः प्रभुः ॥”)

**द्वादशाक्षरमन्त्रः**, पुं, (द्वादश अक्षराणि अस्य । तादृशो मन्त्रः ।) द्वादशवर्णात्मकविष्णुविषयकमन्त्रविशेषः । यथा, --
“नमो भगवते वासुदेवायोङ्कारपूर्ब्बकम् ।
महामन्त्रमिमं प्राहुस्तत्त्वज्ञा द्वादशाक्षरम् ॥”
इति पाद्मे क्रियायोगसारः ॥

**द्वादशाख्यः**, पुं, (द्वादश ज्ञानकर्म्मादिविषयान्

पौषी कूर्म्मद्वादशी २ माघी वराहद्वादशी ३ फाल्गुनी नृसिंहद्वादशी ४ चैत्री वामनद्वादशी ५ वैशाखी जामदग्न्यद्वादशी ६ ज्यैष्ठी रामद्वादशी ७ आषाढी कृष्णद्वादशी ८ श्रावणी बुद्धद्वादशी ९ भाद्री कल्किद्वादशी १० आश्विनी पद्मनाभद्वादशी ११ कार्त्तिकी नारायणद्वादशी १२ । एतासां नाम धरणीव्रतम् । एतत्करणे महाफलम् । इति वराहपुराणम् ॥
अथ पिपीतकद्वादशी । नारदीये ।
“वैशाखे शुक्लपक्षे तु द्वादशी वैष्णवी तिथिः ।
तस्यां शीतलतोयेन स्नापयेत् केशयं शुचिः ॥”
इयं पिपीतकद्वादशी । अत्र ।
“षष्ठीसमेता कर्त्तव्या सप्तमी नाष्टमीयुता ।
पतङ्गोपासनायेह षष्ठ्यामाहुरुपोषणम् ॥
एकादश्यां प्रकुर्व्वन्ति उपवासं मनीषिणः ।
उपासनाय द्वादश्यां विष्णोर्यद्वदियं तथा ॥”
इति भविष्यपुराणेन एकादश्युपवासानन्तरं द्वादश्यां विष्णूपासनाया उक्तत्वात् । अत्रापि तथा व्यवहरन्तीति नात्र युग्मादरः । द्वादशीक्षये तूपवासानन्तर्य्यं विनापि पूजेति । इयं पूर्ब्बवचनोक्ता षष्ठीयुता सप्तमी ॥ आषाढादि-

समाप्तावुपवासान्तरारम्भे विधिलोपो न भवेदित्यर्थः हेतुमाह उभयोरित्यादि । उभयोरुपवासासामर्थ्ये तु श्रवसद्वादश्येवोपोष्या । तथा च स्मृतिः ।
‘वरमेकादशीं भुक्त्वा द्वादशीं समुपोषयेत् ।
पूर्ब्बोपवासजं पुण्यं सर्व्वं प्राप्नोत्यसंशयम् ॥
उपोष्य द्वादशीं पुण्यां विष्णुऋक्षेण संयुताम् ।
एकादश्युद्भवं पुण्यं नरः प्राप्नोत्यसंशयम् ॥’
द्वादश्युपवासः काम्यः । तथा च मार्कण्डेयपुराणम् ।
‘द्वादश्यामुपवासेन शुद्धात्मा नृप ! सर्व्वशः ।
चक्रवर्त्तित्वमतुलं संप्राप्नोत्यतुलां श्रियम् ॥”
कार्त्तिकशुक्लद्वादशी मन्वन्तरा । “तथा च भविष्यमत्स्ययोः ।
‘अश्वयुक्शुक्लनवमी द्वादशी कार्त्तिकी तथा ।’
इत्यादिवचनात् ।” इति तिथितत्त्वम् ॥ * ॥
“अग्रहायणशुक्लद्वादशी अखण्डद्वादशी । तत्रोपोष्य विष्णुपदप्राप्तिकामोऽखण्डद्वादश्यां विष्णुं पूजयिष्ये इति संकल्प्य पञ्चगव्येन स्नापयित्वा यथाशक्त्युपचारेण संपूज्य यवब्रीहिपूर्णपात्रं गृहीत्वा ।
‘ॐ सप्तजन्मसु यत्किञ्चिन्मया खण्डव्रतं कृतम् ।
भगवंस्त्वत्प्रसादेन तदखण्डमिहास्तु मे ॥
यथा खण्डं जगत् सर्व्वं त्वमेव पुरुषोत्तम ! ।
ततोऽखिलान्यखण्डानिव्रतानि मम सन्तु वै ॥’
इति प्रार्थ्य दक्षिणां दद्यात् ।” इति कृत्यचन्द्रिका ॥
भैमीपरद्वादश्यां षट्तिलाचरणम् । यथा विष्णुधर्म्मोत्तरे ।
“मृगशीर्षे शशधरे माघे मासि प्रजापते ! ।

आख्यातीति । ख्या कथने + कः ।) बुद्धः । इति
त्रिकाण्डशेषः ॥

**द्वादशाङ्गुलः**, पुं, (द्वादश अङ्गुलयः परिमाण-

मस्य । "तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ।" ५ ।
४ । ८६ । इति अच् ।) वितस्तिः । इत्यमरः ।
२ । ६ । ८४ ॥

**द्वादशात्मा**, [न्] पुं, (द्वादश आत्मानो मूर्त्तयो

यस्य ।) सूर्य्यः । (यथा, महाभारते । ३ । ३ । २६ ।
"द्वादशात्मारविन्दाक्षः पिता माता पिता-
महः ॥")
अर्कवृक्षः । इत्यभरः ॥

**द्वादशायुः**, [स्] पुं, (द्वादशवर्षपर्य्यन्तं आयु-

र्यस्य ।) कुक्कुरः । इति शब्दमाला ॥

**द्वादशार्च्चिः**, [स्] पुं, (द्वादश अर्च्चींषि किर-

णानि यस्य ।) बृहस्पतिः । इति हेमचन्द्रः ।
२ । ३२ ॥

**द्वादशी**, स्त्री, (द्वादश + टित्त्वात् ङीष् ।) तिथि-

विशेषः । सा चन्द्रस्य द्वादशकलाक्रियारूपा ।
सा च विष्णुतिथिः । यथा, --
"त्रैलोक्यगामिनी देवी लक्ष्मीस्तेऽस्तु सदा प्रिया ।
द्वादशी च तिथिस्तेऽस्तु कामरूपी च जायते ॥
घृताशनो भवेद्यस्तु द्वादश्यां तत्परायणः ।
स्वर्गवासी स भवतु पुमान् स्त्री वा विशेषतः ॥"
मार्गशीर्षीया शुक्लद्वादशी मत्स्यद्वादशी १
द्वादशीषु शयनादिकम् ॥ * ॥
अथ श्रवणद्वादशी ।
सा भाद्रशुक्लद्वादश्यामेव सम्भवति ।
"भविष्योत्तरे ।
'द्वादशी श्रवणोपेता सर्व्वपापहरा तिथिः ।
बुधवारसमायुक्ता ततः शतगुणा भवेत् ।
तामुपोष्य समाप्नोति
द्वादशद्वादशीफलम् ॥'
उभयदिने तल्लाभे तु एकादशीयुतैव ग्राह्या ।
'द्वादशी च प्रकर्त्तव्या एकादश्यन्विता विभो ।
सदा कार्य्या च विद्वद्भिर्विष्णुभक्तैश्च मानवैः ॥'
इति स्कान्दात् ॥
यदा त्वेकादश्यामेव श्रवणा तदा
तामुपवसेत् ।
तथा च नारदः ।
'याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्र-
योगतः ।
तास्वेव तद्व्रतं कुर्य्यात् श्रवणद्वादशीं विना ॥'
भविष्योत्तरेऽपि ।
'एकादशी यदा तु स्यात् श्रवणेन समन्विता ।
विजया सा तदा प्रोक्ता भक्तानां विजयप्रदा ॥
तिथिनक्षत्रसंयोगे उपवासो यदा भवेत् ।
तावदेव न भोक्तव्यं यावन्नैकस्य संक्षयः ॥
विशेषेण महीपाल ! श्रवणं वर्द्धते यदि ।
तिथिक्षयेण भोक्तव्यं द्वादशीं नैव लङ्घयेत् ॥'
तिथिक्षयेण एकादशीतिथिक्षयेण
भोक्तव्यं
एकादश्यां सिते पक्षे सोपवासो जितेन्द्रियः ।
द्वादश्यां षट्तिलाचारं कृत्वा पापात् प्रमुच्यते ॥
तिलस्नायी तिलोद्वर्त्ती तिलहोमी तिलोदकी ।
तिलस्य दाता भोक्ता च षट्तिली नावसीदति ॥
सकृत्तु षट्तिली भूत्वा सर्व्वपापैः प्रमुच्यते ।
त्रिंशद्वर्षसहस्राणि स्वर्गलोके महीयते ॥"
अथ गोविन्दद्वादशी ।
"फाल्गुने शुक्लपक्षस्य पुष्यर्क्षे द्वादशी यदि ।
गोविन्दद्वादशी नाम महापातकनाशिनी ॥"
अत्र गङ्गायां पद्मपुराणीयो मन्त्रः ।
"महापातकसंज्ञानि यानि पापानि सन्ति मे ।
गोविन्दद्वादशीं प्राप्य तानि मे हर जाह्नवि ! ॥"
इति तिथ्यादितत्त्वम् ॥
अथ द्वादशीजातफलम् ।
"बहुप्रजः सर्व्वजनानुरागी
भूपालमान्यस्त्वतिथिप्रियःस्यात् ।
चेत् द्वादशी यस्य जनस्य सूतौ
प्रवासहीनो व्यवहारदक्षः ॥"
इति कोष्ठीप्रदीपः ॥

**द्वापरः**, पुं, (द्वयोर्विषययोः परस्तत्पर आसक्तः

इत्यर्थः । पृषोदरादित्वात् साधुः ।) सन्देहः ।
(द्वौ सत्यत्रेतायुगौ परौ श्रेष्ठौ यस्मात् ।) युग-
विशेषः । इत्यमरः । ३ । ३ । १६१ ॥
तद्युग-
परिमाणं यथा, --

|  |  |  |
| --- | --- | --- |
|  | द्वादश्यां पारयेदित्यर्थः । अत्र<br>हेतुर्द्वादशी-<br>मित्यादि । यदा त्वेकादश्युपवासदिने<br>श्रवणं<br>नास्ति परदिने द्वादश्यां श्रवणं<br>तदोपवासद्वय-<br>माह ब्रह्मवैवर्त्तः ।<br>‘एकादशीमुपोष्यैव द्वादशीं<br>समुपोषयेत् ।<br>न चात्र विधिलोपः स्यादुभयोर्द्देवता<br>हरिः ॥’<br>अत्र असमाप्ते व्रते पूर्ब्बे नैव<br>कुर्य्याद्व्रतान्तर-<br>मिति स्मृतेः ॥ पारणस्याकरणेन<br>पूर्ब्बोपवासा- |  |

"अंष्टौ शतसहस्राणि वर्षाणां मानुषाणि तु ।
चतुःषष्टिसहस्राणि वर्षाणां द्वापरं युगम् ॥"
८६४, ००० ॥ तस्य धर्म्मो यथा, --
"अत ऊद्ध्वं प्रवक्ष्यामि द्वापरस्य विधिं पुनः ।
तत्र त्रेतायुगे क्षीणे द्वापरं प्रतिपद्यते ॥
द्वापरादौ प्रजानान्तु सिद्धिस्त्रेतायुगे तु या ।
परिवृत्ते युगे तस्मिंस्ततः सा विप्रणश्यति ॥
ततः प्रवर्त्तते तासां प्रजानां द्वापरे पुनः ।
लोभो भृतिर्बणिग्युद्धं तत्त्वानामविनिश्चयः ॥
प्रध्वंसश्चव वर्णानां कर्म्मणाञ्च विपर्य्ययः ।
यज्ञे वधः पशोर्दण्डो मानो दर्पः क्षमा बलम् ॥
तथा रजस्तमो भूयः प्रवृत्ते द्वापरे पुनः ।
आद्ये कृते न धर्म्मोऽस्ति स त्रेतायां प्रवर्त्तितः ॥
द्वापरे व्याकुलो भूत्वा प्रणश्यति कलौ पुनः ।
वर्णानां द्वापरे ध्वंसः संक्षीतन्ते तथाश्रमाः ॥
द्वैधमुत्पद्यते चैव युगे तस्मिन् श्रुतौ स्मृतौ ।
द्विधा श्रुतिः स्मृतिश्चैव निश्चयो नाधिगम्यते ॥
अनिश्चयोऽधिगमनाद्धर्म्मतत्त्वं न विद्यते ।
धर्म्मतत्त्वे ह्यविज्ञाते मतिभेदस्तु जायते ॥
परस्परविभिन्नैस्तैर्दृ ष्टीनां विभ्रमेण तु ।
लोभो भृतिर्बणिग्युद्धन्तत्त्वानामविनिश्चयः ॥
वेदशास्त्रप्रणयनं धर्म्माणां सङ्करस्तथा ।
वर्णाश्रमपरिध्वंसः कामद्वेषौ तथैव च ॥
पूर्णे वर्षसहस्रे द्वे परमायुस्तदा नृणाम् ।
निःशेषे द्वापरे तस्मिन् तस्य सन्ध्या तु पादतः ॥
गुणहीनाश्च तिष्ठन्ति धर्म्मस्य द्वापरस्य तु ।
तथैव सन्ध्यापादेव अंशस्तस्य प्रतिष्ठितः ॥"
इति मत्स्यपुराणे १२० अध्यायः ॥

**द्वापरयुगं**, क्ली, (द्वापर एव युगम् ।) तृतीय-युगम् । तस्योत्पत्त्यादि यथा । "भाद्रकृष्णत्रयो-दश्यां गुरुवासरे द्वापरयुगोत्पत्तिः । तत्र अव-तारद्वयम् । कृष्णबुद्धौ । पुण्यमर्द्धम् । पापमर्द्धम् । नैमिषारण्यं तीर्थम् । नाडीक्षो ब्राह्मणः । रक्तगताः प्राणाः । सप्तहस्तपरिमितो मानव-देहः । सहस्राब्दमायुः । ताम्रपात्रे भोजनम् । इति द्वापरयुगस्य लक्षणम् । द्वापरयुगाब्दाः ८६४,००० । द्वापरयुगस्य राजानः शाल्व-विराटहंसध्वजकंसध्वजमेयूरव्वजवज्रवाहन-रुक्माङ्गदजरासन्धदुर्य्योधनयुधिष्ठिराः ।
धर्म्माधर्म्मरतो लोकः प्रलापी चपलः सदा ।
ज्ञाननिष्ठः कपटवाक् द्वापरे राजविस्तरः ॥
तत्र तारकब्रह्मनाम ।
हरे ! मुरारे मधुकैटभारे
गोपाल गोविन्द मुकुन्द शौरे ।
यज्ञेश नारायण कृष्ण विष्णो !
निराश्र मां जगदीश ! रक्ष ॥"
इति मुद्राङ्कितपञ्जिकातः संगृहीतम् ॥

**द्वापरयुगाद्या**, स्त्री, (द्वापरयुगस्य आद्या आर-म्भिका तिथिः ।) द्वापरयुगारम्भतिथिः । सा च गौणभाद्रकृष्णत्रयोदशी । तत्प्रमाणं युगाद्या-शब्दे द्रष्टव्यम् ॥

**द्वारं**, क्ली, (द्वरति निर्गच्छति गृहाभ्यन्तरादने-नेति । द्वृ + घञ् ।) निर्गमनम् । अभ्युपायः । इति मेदिनी । रे, ४८ ॥ आद्यस्य पर्य्यायः । द्वाः २ प्रतीहारः ३ । इत्यमरः । २ । ३ । १६ ॥ वारकम् ४ । इति शब्दरत्नावली ॥
"गृहिणां शुभदं द्वारं प्राकारस्य गृहस्य च ।
श्रीकृष्ण उवाच ।
"हे समुद्र महाभाग ! स्थलञ्च शतयोजनम् ।
देहि मे नगरार्थञ्च पश्चाद्दास्यामि निश्चितम् ॥
नगरं कुरु हे कारो त्रिषु लोकेषु दुर्लभम् ।
रमणीयञ्च सर्व्वेषां कमनीयञ्च योषिताम् ॥
वाञ्छितञ्चापि भक्तानां वैकुण्ठसदृशं परम् ।
सर्व्वेषामपि स्वर्गाणां परं परमभीप्सितम् ॥
दिवानिशं खगश्रेष्ठ ! सन्निधौ विश्वकर्म्मणः ।
स्थितिं कुरु महाभाग ! यावन्निर्म्माति द्वारकाम् ॥
विश्वकारुरुवाच ।
द्वारकाञ्च किमाकारां करोमि जगतां विभो ! ।
कथयस्व महाभाग ! निर्म्माणक्रममीश्वर ! ॥
भगवानुवाच ।
शतयोजनपर्य्यन्तं नगरं मुमनोहरम् ।
पद्मरागैर्मरकतैरिन्द्रनीलैरनुत्तमैः ॥
रुचकैः पारिभद्रैश्च पालङ्कैश्च स्यमन्तकैः ।
गन्धकैर्गालिमैश्चैव चन्द्रकान्तादिभिस्तथा ॥
सूर्य्यकान्तादिभिश्चैव पुत्रैश्च स्फटिकाकृतैः ।
हरिद्वर्णैश्च मणिभिः श्यामैर्गौरमुखैश्च वै ॥
गोरोचनाभैः पीतैश्च दाडिम्बबीजरूपकैः ।
पद्मबीजनिभैश्चैव नीलैः कमलवर्णकैः ॥
मणिभिः कज्जलाकारैरुज्वलैश्च परिष्कृतैः ।
श्वेतचम्पकवर्णाभैस्तप्तकाञ्चनसन्निभैः ॥
स्वर्णमूल्यशतगुणैरीषद्रक्तैश्च रूपकैः ।
गरिष्ठैश्च वरिष्ठैश्च मणिश्रेष्ठैश्च पूजितैः ॥
यथाविधानं यद्योग्यं यत्र यद्युक्तमीप्सितम् ।
मणीनां हरणञ्चैव यक्षसंघा हिमालयात् ॥

ततो दृष्टिविभिन्नैस्तैः कृतं शास्त्राकुलं त्विदम् ॥
एकं वेदं हि वै व्यासः संहृत्य तु पुनः पुनः ।
संक्षेपादायुषश्चैव दृश्यते द्वापरे त्विह ।
वेदश्चैकश्चतुर्द्धा तु व्यस्यते द्वापरादिषु ॥
ऋषिपुत्त्रैः पुनर्भेदाद्भिद्यन्ते दृष्टिविभ्रमैः ।
मन्त्रब्राह्मणविन्यासैः स्वरक्रमविपर्य्ययैः ॥
संहिता ऋग्यजुःसाम्नां सहितास्तैः श्रुतर्षिभिः ।
सामान्याद्वैकृताच्चैव दृष्टिभिन्नैः क्वचित् क्वचित् ॥
ब्राह्मणं कल्पसूत्राणि भाष्यविद्यास्तथैव च ।
अन्ये तु प्रस्थितास्ते वै केचिन्न प्रत्यवस्थिताः ॥
द्वापरेषु प्रवर्त्तन्ते भिन्नार्थैस्तैः सुदर्शनैः ।
एवमाध्वर्य्यवं पूर्ब्बमासीद्‌द्वैधं ततः पुनः ॥
सामान्यविपरीतार्थैः कृतं शास्त्राकुलं त्विदम् ।
आध्वर्य्यवस्य प्रस्थानैर्बहुधा व्याकुलीकृतम् ॥
तथैवाथर्व्वणां साम्नां विकलैः स्वस्य संक्षयैः ।
व्याकुलो द्वापरेष्वर्थः क्रियते भिन्नदर्शनैः ॥
द्वापरे सन्निवृत्तास्ते वेदा नश्यन्ति वै कलौ ।
तेषां विपर्य्ययोत्पन्ना भवन्ति द्वापरे पुनः ॥
अवृष्टिमरणञ्चैव तथैव व्याध्युपद्रवाः ।
वाङ्मनःकर्म्मभिर्दुःखैर्निर्वेदो जायते ततः ।
न मध्यदेशे कर्त्तव्यं किञ्चिन्न्यूनाधिकं शुभम् ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डम् ॥

**द्वारकः**, पुं, (द्वारेण प्रशस्तप्रतीहारेण कायति शोभते इति । कै + कः) द्वारका । इति शब्द-रत्नावली ॥

**द्वारकण्टकः**, पुं, (द्वारस्य कण्टक इव ।) कवा-टम् । इति शब्दरत्नावली ॥

**द्वारका**, स्त्री, (द्वारेण बहुना प्रशस्तेन च प्रती-हारेण कायतीति । कै + कः । स्त्रियां टाप् ।) स्वनामख्यातपुरी । तत्पर्य्यायः । द्वारावती २ द्वारवती ३ वनमालिनी ४ द्वारिका ५ अब्धि-नगरी ६ द्वारकः ७ । इति शब्दरत्नावली ॥ (यथा, हरिवंशे । १३२ । ४६ ।
“सत्यकं प्रेषयामास द्वारकां द्वारमालिनीम् ॥”)
तस्या निर्म्माणप्रकारो यथा, --
दिवानिशं करिष्यन्ति यावन्निर्म्माणपूर्ब्बकम् ।
यक्षैश्च सप्तभिर्लक्षैः कुवेरप्रेरितैरपि ॥
वेताललक्षैः कुष्माण्डलक्षैः शङ्करयोजितैः ।
दानवैर्ब्रह्मरक्षोभिः शैलकन्यानियोजितैः ॥
कुरु दिव्यञ्च पत्नीनां सहस्राणाञ्च षोडश ।
अन्यपत्नीजनस्यापि चाष्टाधिकशतस्य च ॥
शिविरं परिखायुक्तमुच्चैः प्राकारवेष्टितम् ।
युक्तं द्वादशसारञ्च सिंहद्वारपुरस्कृतम् ॥
युक्तं चित्रैर्विचित्रैश्च कृत्रिमैश्च कवाटकैः ।
निषिद्धवृक्षरहितं प्रसिद्धैश्च पुरस्कृतम् ॥
सुलक्षणं चन्द्रवेधं प्राङ्गनञ्च तथैव च ।
यदूनामाश्रमं दिव्यं किङ्कराणान्तथैव च ॥
सर्व्वप्रसिद्धं निलयमुग्रसेनस्य भूभृतः ।
आश्रमं सर्व्वतोभद्रं वसुदेवस्य मत्पितुः ॥
कथितः लोकशिक्षार्थं कुरु काष्ठं विना पुरीम् ।
शुभक्षणञ्चाप्यधुना गच्छ वत्स ! यथासुखम् ॥
विश्वकर्म्मा हरिं नत्वा जगाम पक्षिणा सह ।
सुमुद्रस्य समीपञ्च वटमूलं मनोहरम् ॥
सुष्वाप्र तत्र नक्तञ्च कारुश्च पक्षिणा सह ।
स्वप्ने द्वारवतीं रम्यां ददर्श गरुडस्तथा ॥
यत्किञ्चित् कथितः कारुः कृष्णेन परमात्मना ।
तदेव लक्षणं सर्व्वं ददर्श नगरे मुने ! ॥
कारुं हसन्ति स्वप्ने च सर्व्वे ते शिल्पकारिणः ।
गरुडं गरुडाश्चान्ये बलवन्तश्च पक्षिणः ॥
बुद्‌ध्वा ददर्श मरुडो विश्वकर्म्मा च लज्जितः ।

| | | |
|---|---|---|
| निर्व्वेदाज्जायते तेषां दुःखं मोक्षविचारणा। विचारणायां वैराग्यं दैराग्याद्दोषदर्शनम् ॥ दोषाणां दर्शनाच्चैव ज्ञानोत्पत्तिश्च जायते । तेषां मेधाविनां पूर्ब्बमाद्ये स्वायम्भुवेऽन्तरे । उत्पद्यन्तीह शास्त्राणां द्वापरे परिपन्थिनः ॥ आयुर्व्वेदविकल्पाश्च अङ्गानां ज्योतिषस्य च । अर्थशास्तविकल्पाश्च हेतुशास्त्रविकल्पनम्॥ प्रक्रियाकल्पसूत्राणां भाष्यविद्याविकल्पनम्। स्मृतिशास्त्रप्रभेदाश्च प्रस्थानानि पृथक् पृथक् ॥ द्वापरेष्वभिवर्त्तन्ते मतिभेदास्तथा नृणाम् । मनका कर्म्मणा वाचा कृच्छ्राद्वार्त्ता प्रसिध्यति ॥ द्वापरः सर्व्वभूतानां कायक्लेशपुरस्कृतः । | | |

अतीव द्वारकां रम्यां
शतयोजनविस्तृताम् ॥
ब्रह्मादीनाञ्च नगरं विजित्य च
विराजिताम् ।
तेजसाच्छादितां सूर्य्यं रत्नानाञ्च
परिष्कृताम् ॥
वासुदेव उवाच ।
पैतृकीतीर्थतुल्या सा किं तीर्थं
द्वारकापरम् ।
सर्व्वतीर्थपरा श्रेष्ठा द्वारका बहुपुण्यदा ॥
यस्याः प्रवेशमात्रेण नराणां
जन्मखण्डनम् ॥
दानञ्च द्वारकायाञ्च श्राद्धञ्च देवपूजनम् ।
चतुर्गुणञ्च तीर्थानां गङ्गादीनाञ्च भूमिप !
॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डम् ॥

**द्वारकेशः**, पुं, (द्वारकाया नगर्य्या ईशः ।) श्रीकृष्णः ।

इति शब्दरत्नावली ॥

**द्वारदातुः**, पुं, (द्वारं ददातीति । दा + तुन् ।)

वरदातुः । भूमीसहवृक्षः । इति
भावप्रकाशः ॥

**द्वारपालः**, त्रि, (द्वारं पालयतीति । पालि +

"कर्म्मण्यन् ।" ३ । २ । १ । इत्यण् ।)
द्वार-
रक्षकः । दरवान् । इति पारस्य भाषा ।
तत्-
पर्य्यायः । प्रतीहारः २ द्वाःस्थः ३
द्वाःस्थितः ४
दर्शकः ५ । इत्यमरः । २ । ८ । ६ ॥
वेत्रधारकः
६ द्वौःसाधिकः ७ वर्त्तरूकः ८ गर्व्वाटः
९
दण्डवासी १० । इति त्रिकाण्डशेषः ॥
द्वारस्थः
११ क्षत्ता १२ द्वारपालकः १३
दौवारिकः १४

**द्वारावती**, स्त्री, (द्वाराणि प्रशस्तबहुलप्रतीहाराः

सन्त्यत्र । द्वार + मतुप् मस्य वः ।
निपातनात्
पूर्ब्बदीर्घश्च ।) द्वारका । इति हेमचन्द्रः ।
४ । ४६ ॥
"अयोध्या मथुरा माया काशी काञ्ची अव-
न्तिका ।
पुरी द्वारावती चैव सप्तैता मोक्षदायिकाः ॥
एतास्तु पृथिवीमध्ये न गण्यन्ते कदाचन ।
पुरी द्वारावती विष्णोः
पाञ्चजन्योपरिस्थिता ॥
मुक्तिदा एताः सर्व्वाश्च एकत्र गणिताः सुरैः
।
यानि यानि च क्षेत्राणि काशीप्राप्तिकराणि
षट् ॥"
इति भूतशुद्धितन्त्रम् ॥

**द्वारिकः**, पुं, (द्वारं पाल्यत्वेनास्त्यस्येति ठन् ।)

द्वारपालः । इत्यमरटीकासारसुन्दरी ॥
(यथा,
पञ्चतन्त्रे । ३ । ८५ ।
"यो मूर्खं लौल्यसम्पन्नं राजद्वारिकमाचरेत्
।
मिथ्यावादं विशेषेण तस्य कार्य्यं न
सिध्यति ॥")

**द्वारिका**, स्त्री, (प्रशस्तानि द्वाराणि सन्त्यास्या-

मिति । ठन् टाप् च ।) द्वारकापुरी । इति
शब्दरत्नावली ॥

**द्वारी**, [न्] त्रि, (द्वारं पाल्यतयास्त्यस्येति इनिः ।)

द्वारपालः । इति शब्दरत्नावली ॥ (यथा,
महाभारते । १ । १२६ । १० ।
"द्वारिणं तापसा ऊचू राजानञ्च प्रकाशय
॥")

**द्वाविंशतिः**, स्त्री, (द्व्यधिका विंशतिरिति । "द्व्यष्टनः

संख्यायामबहुब्रीह्यशीत्योः ।" ६ । ३ ।
४७ ।

अश्विनीकुमारौ ३ भार्य्यायती ४ । इति
महा-
भारते वनपर्व्व ॥

**द्विकं**, क्ली, (द्वाभ्यां कायतीति । कै + कः ।)

द्वयम् । यथा, --
"अशीतिभागं गृह्णीयान्मासाद्वार्द्धुषिकः
शतात ।
द्विकं शतं वा गृह्णानो न भवेदर्थकिल्विषी ॥"
इत्याह्निकतत्त्वम् ॥
(द्वितीयेन रूपेण ग्रहणमिति । "तावतिथं
ग्रहणमिति लुग्वा ।" ५ । २ । ७७ । इति
कन्
पूरणप्रत्ययस्य च लुक् । द्वितीयके, त्रि । इति
सिद्धान्तकौमुदी ॥)

**द्विकः**, पुं, (द्वौ कौ ककारवर्णौ यत्र ।) काकः ।

कोकः । इति मेदिनी । के, २६ ॥

**द्विककारः**, पुं, (द्वौ ककारौ यत्र ।) काकः । इति

शब्दरत्नावली ॥

**द्विककुत्**, [द्] पुं, (द्वे ककुदौ यस्य ।) उष्ट्रः ।

इति हेमचन्द्रः । ४ । ३२० ॥

**द्विगुः**, पुं, षट्समासान्तर्गतसमासविशेषः । स तु

संख्यापूर्ब्बपदानां समासः । वोपदेवेनास्य
ग-
संज्ञा कृता । स च त्रिविधः । तद्धितार्थः १
समाहारः २ उत्तरपदपरश्च ३ । तद्धितार्था-
ऽपि द्विविधः । तद्धितप्रत्ययमात्रस्य अजादे-
र्हसादेर्व्वा अर्थे विषये इत्येकः ।
अपत्यार्थष्ण्या-
दिकं त्यक्त्रा अजादेस्तद्धितस्यार्थे वाच्ये
इत्यपरः ।
तद्धितार्थविषयो यथा, द्वयोर्मात्रोरपत्यं द्वैमा-
तुरः । पञ्चानां नापितानामपत्यं पाञ्चनापितिः
॥
तद्धितार्थवाच्यो यथा, पञ्चभिर्गोभिः क्रीतः
पञ्चगुः ॥ समहारो यथा, त्रयाणां सखीनां
समा

वेत्री १५ उत्सारकः १६ दण्डी १७ । इति
हेमचन्द्रः ॥ अस्य विवरणं दौवारिकशब्दे
द्रष्टव्यम् ॥

**द्वारपालकः**, पुं, (पालयतीति ण्वुल् । द्वाराणां
पालकः । यद्वा, द्वारपाल + स्वार्थे कन् ।) द्वार-
पालः । इति शब्दरत्नावली ॥

**द्वारपिण्डी**, स्त्री, (द्वारस्य पिण्डी पिण्डिकेव ।)
देहली । इति जटाधरः ॥

**द्वारबलिभुक्**, [ज्] पुं, (द्वारदत्तं बलिं भुङ्क्ते इति ।
भुज् + क्विप् ।) वकः । इति त्रिकाण्डशेषः ॥

**द्वारयन्त्रं**, स्त्री, (द्वारबन्धकं यन्त्रं मध्यलोपी
समासः ।) तालकम् । इति हेमचन्द्रः । ४ । ७१ ॥
ताला इति कुलुपं इति च भाषा ॥

**द्वारवती**, स्त्री, (द्वाराणि सन्त्यत्र । यद्वा, चतु-
र्वर्णानां मोक्षद्वाराणि सन्ति अत्रेति । द्वार +
मतुप् । मस्य वः ।) द्वारका । इति त्रिकाण्ड-
शेषः ॥ (यथा, हरिवंशे । १० । ३४ ।
"कृतां द्वारवतीं नाम बहुद्वारां मनोरमाम् ॥"
तथा च तत्रैव, --
"चतुर्णामपि वर्णानां यत्र द्वाराणि सर्व्वतः ।
अतो द्वारवतीत्युक्ता विद्वद्भिस्तत्त्ववेदिभिः ॥"
इयं हि पीठस्थानानामन्यतमा। अत्र भगवती
रुक्मिणीरूपेण विराजते । यथा, देवीभावते ।
७ । ३० । ६९ ।
"रुक्मिणी द्वारवत्यान्तु राधा वृन्दावने वने ॥")

इति आत्प्रत्ययः ।) द्व्यधिकविंशतिः । इति
व्याकरणम् ॥ वाइश इति भाषा । (यथा,
महाभारते । ७ । ४६ । १८ ।
"कर्णो द्वाविंशतिं भल्लान् कृतवर्म्मा चतुर्द्दश ॥")

**द्वासप्ततिः**, स्त्री, (द्व्यधिका सप्ततिरिति । "विभाषा
चत्वारिंशत्प्रभृतौ सर्व्वेषाम् ।" ६ । ३ । ४९ ।
इति पाक्षिक आत्प्रत्ययः ।) द्विसप्ततिः । यथा,
द्वासप्ततिश्च बन्ध्यायामिति ज्योतिस्तत्त्वम् ॥

**द्वास्थः**, पुं, (द्वारि तिष्ठतीति । स्था + "सुपिस्थः ।
३ । २ । ४ । इति कः । "खर्परे शरि वा विसर्ग-
लोपो वक्तव्यः ।" ८ । ३ । ३६ । इत्यस्य वार्त्ति-
कोक्त्या विसर्गस्य पाक्षिकलोपः ।) द्वारपालः ।
इत्यमरटीकायां भरतः ॥

**द्वास्थितः**, पुं, (द्वारि स्थितः । विसर्गस्य पाक्षिक-
लोपः ।) द्वारपालः । इत्यमरटीकायां भरतः ॥

**द्वास्थितदर्शकः**, पुं, (पश्यतीति । दृश् + ण्वुल् ।
द्वास्थितः सन् दर्शकः ।) दौवारिकः । इत्यमर-
टीकायां भरतः ॥

**द्विः**, व्य, द्वौ वारौ, इति सुच्प्रत्ययेत साध्यम् ।
(यथा, रामायणे । २ । १८ । ३०
"करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते ॥")
सर्व्वनामान्तर्गतद्विशब्दस्य पुंसि रूपं द्वौ । स्त्रियां
क्लीवे च द्वे । तद्वाचकानि यथा, पक्षः १ नदी-
कूलम् २ असिधारा ३ रामपुत्त्रः ४ चक्षुः ५

हारः त्रिसखम् । समाहारे अदन्तानां स्त्रीत्वं
पात्रादेस्तु क्लीवत्वम् ॥ उत्तरपदपरो यथा, --
पञ्च गावो धनं यस्य स पञ्चगवधन इत्यादि ।
इति मुग्धबोधटीकायां दुर्गादासः ॥ (द्वौ द्वे
वा गावौ यस्य इति विग्रहे गौणत्वे गोशब्दस्य
ह्रस्वः । द्विगवस्वामिके, त्रि । यथा, --
"द्वन्दो द्विगुरपि चाहं मद्गेहे नित्यमव्ययीभावः ।
तत् पुरुष कर्म्म धारय येनाहं स्यां बहुव्रीहिः ॥"
इत्युद्भटः ॥)

**द्विगुणं**, त्रि, द्वाभ्यां पूरणम् । अङ्कद्वयाभ्यां घातः ।
इति लीलावती ॥ (यथा, आर्य्यासप्तशत्याम् ।
४९१ ।
"रुद्धस्वरसप्रसवस्यालिभिरग्रेनतं प्रियं प्रति मे ।
स्रोतस इव निम्नं प्रतिरागस्य द्विगुण आवेगः ॥")

**द्विगुणाकृतं**, त्रि, (द्विगुणं कर्षणं कृतम् । "संख्या-
याश्च गुणान्तायाः ।" ५ । ४ । ५९ । इति डाच् ।)
वारद्वयकृष्टक्षेत्रम् । इत्यमरः । २ । ९ । ९ ॥
दोचसा भूँइ इति भाषा ॥

**द्विजः**, पुं, (द्विर्जायते इति । जन + "अन्येष्वपि
दृश्यते ।" ३ । २ । १०१ । इति डः ।) संस्कृत-
ब्राह्मणः । यथा, --
"जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते ।"
इति स्मृतिः ॥
सद्वृत्तब्राह्मणः । तल्लक्षणं यथा, --

| | | |
|---|---|---|
| **द्वारस्थः**, पुं, (द्वारे तिष्ठतीति । स्था + कः ।) द्वार-<br>पालः । इति हेमचन्द्रः । ३ । ३८५ ॥<br>(द्वार-<br>स्थिते, त्रि । यथा, कथासरित्सागरे ।<br>१८ । ११६ ।<br>"सुप्ते च तस्मिन् द्वारस्थो जागरामास स<br>द्विजः ॥") | हस्तः ६ स्तनः ७ । इति कविकल्पलता<br>॥<br>सहचरौ यथा, इन्द्राग्नी १ नारदपर्व्वतौ २ | |

अम्बरीष उवाच ।
"कीदृशाय प्रदातव्यं महादानं द्विजातये ।
विदुषे वा निराधारे साचारेऽविदुषे मुने ! ॥
एतन्मे सर्व्वमाख्याहि यथातथ्यं द्विजोत्तम ! ।
उत्तारयति संगृह्य दातारं दानमेव हि ॥
वशिष्ठ उवाच ।
जात्या कुलेन वृत्तेन स्वाध्यायेन शुतेन च ।
एभिर्युक्तो हि यस्तिष्ठेत् नित्यं स द्विज उच्यते ॥
न जातिर्न कुलं राजन् ! न स्वाध्यायः श्रुतं न च ।
कारणानि द्विजत्वस्य वृत्तमेव तु कारणम् ॥"
इति वह्निपुराणे प्रेतोपाख्याननामाध्यायः ॥
क्षत्त्रियः । वैश्यः । इति मेदिनी । जे, १० ॥
(यथा, याज्ञवल्क्ये । १ । ३९ ।
"मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात् ।
ब्राह्मणक्षत्त्रियविशस्तस्मादेते द्विजाः स्मृताः ॥"
दन्तः । (यथा, --
"न च्छित्वा द्विजैर्भक्षयेत् ॥" इति चरके सूत्र-
स्थानेऽष्टमेऽध्याये ॥) अण्डजः । स पक्षिसर्पमत्-
स्यादिः । इत्यमरः । ३ । ३ । ३० ॥ (यथा,
रघुः । १२ । २२ ।
"ऐन्द्रिः किल नखैस्तस्या विददार स्तनौद्विजः ॥")
तुम्बुरुवृक्षः । इति राजनिर्घण्टः ॥ द्विर्जाति, त्रि ॥

**द्विजकुत्सितः**, पुं, (द्विजानां द्विजेषु वा कुत्सितः ।
द्विजानां तद्भक्षणनिषेधात् तथात्वम् ।) श्लेष्मा-
न्तकवृक्षः । इति राजनिर्घण्टः शब्दमाला च ॥

**द्विजदासः**, पुं, (द्विजानां दासः ।) शूद्रः । इति

**द्विजब्रुवः**, पुं, (आत्मानं द्विजं ब्रूते इति । ब्रू + कः ।'
ब्राह्मणब्रुवः । स च जातिमात्रोपजीवी ब्राह्मणः ।
इति हेमचन्द्रः । ३ । ५१९ ॥ यथा, --
"सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
अधीते शतसाहस्रमनन्तं वेदपारगे ॥"
इति स्मृतिः ॥

**द्विजराजः**, पुं, (द्विजानां राजा । "राजाहः-
सखिभ्यष्टच् ।" ५ । ४ । ९ । इति टच् ।) चन्द्रः ।
(यथा, देवीभागवते । १ । ११ । ७२ ।
"द्विजराजस्तु तच्छ्रुत्वा भृगोर्व्वचनमद्भुतम् ।
ददावतत्प्रियां भार्य्यां गुरोर्गर्भवतीं शुभाम् ॥")
कर्पूरः । इत्यमरः ॥ अनन्तः । गरुडः । इति
मेदिनी । जे, ३२ ॥

**द्विजलिङ्गी**, [न्] पुं, (द्विजस्यलिङ्गं चिह्नमस्त्य-
स्येति । इनिः ।) क्षत्त्रियः । इति त्रिकाण्ड-
शेषः ॥ ब्राह्मणवेशधारिणि, त्रि ॥ (यथा,
मनुः । ९ । २२४ ।
"द्यूतं समाह्वयञ्चैव यः कुर्य्यात् कारयेत वा ।
तान् सर्व्वान् घातयेद्राजा शूद्रांश्च द्विज-
लिङ्गिनः ॥")

**द्विजव्रणः**, पुं, (द्विजस्य दन्तस्य व्रणः ।) दन्तार्वुदः ।
इति राजनिर्घण्टः ॥

**द्विजशप्तः**, पुं, (द्विजैः शप्तः ।) राजमाषः । इति
शब्दचन्द्रिका ॥ वरवटी इति भाषा ॥

**द्विजसेवकः**, पुं, (द्विजानां सेवकः ।) शूद्रः । इति
शब्दरत्नावली ॥ त्रिवर्णसेवाकर्त्तरि, त्रि ॥

**द्विजिह्वः**, पुं, (द्वे जिह्वे यस्य ।) सर्पः । (अस्य
पर्य्यायो यथा वैद्यकरत्नमालायाम् ।
"व्याडश्चाशीविषः सर्पोद्विजिह्वोऽहिः सरीसृपः ।
चक्षुःश्रवा दन्दशूको गूढपात्पन्नगोरगाः ॥")
सूचकः । इत्यमरः । ३ । ३ । १३३ ॥ (यथा,
माघे । १ । ६३ ।
"परस्य मर्म्माविधमुज्झतां निजं
द्विजिह्वतादोषमजिह्मगामिभिः ॥")
खलः । इति मेदिनी । वे, १२ ॥ चौरः ।
दुःसाध्यः । इति शब्दरत्नावली ॥ (रोग-
विशेषः । यथा, सुश्रुते निदानस्थाने १४ अध्याये ।
"ज्ञेयो द्विजिह्वः खलु रोग एष
विवर्ज्जयेदागतपाकमेनम् ॥"
त्रि, द्विजिह्वाविशिष्टः । यथा, महाभारते ।
१ । ३४ । २४ ।
"द्विजिह्वाश्च कृताः सर्पा गरुडेन महात्मना ॥")

**द्विजोत्तमः**, पुं, (द्विजेषु उत्तमः ।) ब्राह्मणः ।
इति हलायुधः ॥ (यथा, मनुः । २ । ४९ ।
"भवत्पूर्ब्बं चरेद्भैक्षमुपनीतो द्विजोत्तमः ॥")

**द्विट्**, [ष्] पुं, (द्वेष्टीति । द्विष् + क्विप् ।) शत्रुः ।
इत्यमरः । २ । ८ । ११ ॥ (यथा, महाभारते ।
४ । १६ । ७ ।
"तस्मिन् जीवति पापिष्ठे सेनावाहे मम द्विषि ।
तत् कर्म्म कृतवत्यद्य कथं निद्रां निषेवसे ॥")
द्वेष्टरि, त्रि । (यथा, रघौ । ३ । ४५ ।
"त्रिलोकनाथेन सदा मखद्विष-
स्त्वया नियम्या ननु दिव्यचक्षुषा ॥")

**द्विठः**, पुं, वह्निजाया । स्वाहा । विसर्गः । इति
फेत्कारीयतन्त्रम् ॥ ठकारद्वयम् ॥

**द्वितयं**, क्ली, (द्वौ अवयवौ अस्य । द्वि + "संख्याया

राजनिर्घण्टः ॥ द्विजानां दासे, त्रि ॥

**द्विजन्मा**, [न्] पुं, (द्वे जन्मनी यस्य ।) ब्राह्मणः ।

(यथा, देवीभागवते । ५ । ५ । ३ ।
"यतीनां भूषणं ज्ञानं सन्तोषो हि
द्विजन्मनाम् ॥")
दन्तः । पक्षी । इति शब्दरत्नावली ॥
क्षत्त्रियः ।
वैश्यश्च । त्रि, द्विवारजन्मयुक्तः । (द्वाभ्यां
जाय-
मानः । यथा, ऋग्वेदे । १ । १४० । २ ।
"अभिद्विजन्मा त्रिवृदन्नमृज्यते ।
संवत्सरे वावृधे जन्धमी पुनः ॥"
"द्वाभ्यामरणीभ्यां जायमानत्वात् यद्वा
मथने-
नाघानसंस्कारेण चोत्पन्नत्वात् द्विजन्मत्वम्
।"
इति तद्भाष्ये सायनः ॥)

**द्विजपतिः**, पुं, (द्विजानां पतिः ।) चन्द्रः । इति

त्रिकाण्डशेषः ॥ (यथा, देवीभागते । १ ।
११ । २९ ।
"क्रूराणि चैवमादीनि भाषणानि बृहस्पतेः ।
श्रुत्वाद्विजपतिः शीघ्रं निर्गतं सदनाद्बहिः
॥")

**द्विजप्रपा**, स्त्री, (द्विजानां पक्षिणां प्रपा ।)

आलबालम् । तत्पर्य्यायः । तल्लम् २ विल्लम्
३
तलम् ४ । इति त्रिकाण्डशेषः ॥

**द्विजप्रिया**, स्त्री, (द्विजानां याज्ञिकब्राह्मणादीनां

प्रिया ।) सोमलता । इति राजनिर्घण्टः ॥
द्विजस्य प्रियवस्तुनि, त्रि ॥

**द्विजबन्धुः**, पुं, (द्विजस्य बन्धुरिव ।) अब्राह्मणः

स भट्टदैवज्ञादिः । यथा, --
"स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।"
इति स्मृतिः ॥

**द्विजा**, स्त्री, (द्विर्जायते इति । जन् + डः । टाप्
।)

रेणुकानामगन्धद्रव्यम् । इत्यमरः । २ ।
४ । १२० ॥
(अस्याः पर्य्यायो यथा, --
"रेणुका राजपुत्त्री च नन्दिनी कपिला
द्विजा ।
भस्मगन्धा पाण्डुपत्री स्मृता कौन्ती
हरेणुका ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)
भार्गी । इति मेदिनी । जे, १० ॥
पालङ्क्षी । इति
शब्दचन्द्रिका ॥

**द्विजाङ्गी**, स्त्री, (द्विजस्य पक्षिणोऽङ्गमिव अङ्गं

यस्याः । ङीप् ।) कटुका । इति
राजनिर्घण्टः ॥

**द्विजातिः**, पुं, (द्वे जाती यस्य ।) ब्राह्मणः । इत्य-

मरः । २ । ७ । ४ ॥ (यथा, महाभारते
। १ ।
७४ । ६१ ।
"वेदेष्वपि वदन्तीमं मन्त्रजातं
द्विजातयः ॥")
अण्डजः । इति मेदिनी । ते, ११४ ॥
क्षत्त्रियः ।
वैश्यः । यथा, --
"शूद्रो द्विजातिभिर्जातो न
भूमेर्भागमर्हति ।"
इति स्मृतिः ॥
(यथा च मनुः । १० । ४ ।
"ब्राह्मणः क्षत्त्रियो वैश्यस्त्रयो वर्णा
द्विजातयः ।
चतुर्थ एकजातिस्तु शूद्रो नास्ति तु
पञ्चमः ॥")

**द्विजायनी**, स्त्री, (द्विजः अय्यते ज्ञायतेऽनयेति ।

अय + करणे ल्युट् । स्त्रियां ङीप् ।)
यज्ञोप-
वीतम् । इति शब्दरत्नावली ॥

**द्विजालयः**, पुं, (द्विजानां पक्षिणामालयः ।) कोट-

अवयवे तयप् ।" ५ । २ । ४२ । इति तयप्
।)
द्वयम् । इति हेमचन्द्रः । २ । ५० । १२ ॥
(यथा, भागवते । ५ । २२ । ४ ।
"अत ऊद्र्ध्वमङ्गारकोऽपि योजनलक्षद्वितय
उप-
लभ्यमानस्त्रिभिस्त्रिभिः पक्षैरेकैकशो राशीन्
द्वादशानुभुङ्क्ते ॥" द्वित्वसंख्याविशिष्टे, त्रि ।
यथा, रघुः । ८ । ९० ।
"द्रुमसानुमतां किमन्तरं
यदि वायौ द्वितयेऽपि तेऽचलाः ॥")

**द्वितीयं**, त्रि, (द्वयोः पूरणम् । द्वि + "द्वेस्तीयः ।"

५ । २ । ५४ । इति तीयः ।) द्वयम् । इति
हेमचन्द्रः । ३ । १७७ ॥ (यथा, रघुः । २ ।
४९ ।
"तथा विदुर्मो मुनयः शतक्रतुं
द्वितीयगामी न हि शब्द एष नः ॥")

**द्वितीयः**, पुं, (द्वयोः पूरणः । आत्मनो द्वितीयत्वादे-

वास्य तथात्वम् ।) पुत्त्रः । इति
त्रिकाण्डशेषः ॥

**द्वितीया**, स्त्री, (द्वितीय + टाप् ।) गेहिनी ।

भार्य्या । इत्यमरः । २ । ६ । ५ ॥
तिथिविशेषः ।
सा चन्द्रस्य द्वितीयकलाक्रियारूपा ।
शुक्लपक्षे २
कृष्णपक्षे १७ एतदङ्कबोधिता । इति
ज्योति-
षम् ॥ * ॥ सा च
अश्विनीकुमारयोर्जन्मतिथिः ।
यथा, --

ब्रह्मोवाच ।
"रूपं कान्तिरनौपम्यं भिषक्त्वं सर्व्ववस्तुषु ।
सोमपत्वञ्च लोकेषु सर्व्वमेतद्भविष्यति ॥
महातपा उवाच ।
एतत् सर्व्वं द्वितीयायामश्विभ्यां ब्रह्मणा पुरा ।
दत्तं यस्मात्ततस्तेषां तिथीनामुत्तमा तिथिः ॥
एतस्यां रूपकामस्तु पुष्पाहारो भवेन्नरः ।
संवत्सरं शुचिर्नित्यं सुखरूपी भवेन्नरः ॥
अश्विभ्यां ये गुणाः प्रोक्तास्ते तस्यापि भवन्ति च ॥"
इति वराहपुराणम् ॥
अत्र जातफलम् ।
"निखिलगुणगभीरो दानशीलो दयालुः
स्वकुलकुमुदचन्द्रः स्वच्छचित्तोऽतिशूरः ।
निजभुजबलगर्व्वाच्छादितारातिवर्गो
भवति विपुलकीर्त्तिर्यो द्वितीयाप्रसूतः ॥"
इति कोष्ठीप्रदीपः ॥
अथ रथद्वितीया । स्कन्दपुराणे ।
"आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता ।
तस्यां रथे समारोप्य रामं मां भद्रया सह ॥
यात्रोत्सवं प्रवृत्याथ प्रीणयेच्च द्विजान् बहून् ।
ऋक्षाभावे तिथौ कार्य्या सदा सा प्रीतये मम ॥
सा यात्रा । मां जगन्नाथम् ॥
अथ मनोरथद्वितीया ।
सा श्रावणशुक्लद्वितीया ।
'मतोरथद्वितीयायां
दिवा वासुदेवार्च्चनं रात्रौ चन्द्रोदयेऽर्घ्यदानं नक्तञ्च भोजनादिकम् ॥' यथा
विष्णुधर्म्मोत्तरे ।
'देवमभ्यर्च्य पुष्पैस्तु धूपदीपानुलेपनैः ।
उद्गच्छतश्च बालेन्दोर्दद्यादर्घ्यं समाहितः ॥
नक्तं भुञ्जीत च नरो यावत्तिष्ठति चन्द्रमाः ।
वरदा भव मे नित्यं सूर्य्यपुत्त्रि ! नमोऽस्तु ते ॥
अन्नं दत्त्वा पठति ।
भ्रातस्तवानुजाताहं भुङ्क्ष्व भक्तमिदं शुभम् ।
प्रीतये यमराजस्य यमुनाया विशेषतः ॥
ज्येष्ठा तवाग्रजाताहमिति वदेत् ।
तथा यमद्वितीयायां यात्रायां मरणं भवेत् ॥
अनध्यायद्वितीया यथा ।
प्रे-को-चै-चाद्वितीयास्ताः प्रेतपक्षे गते तु या ।
या च कोजागरे जाते चैत्रावल्याः परेऽपि या ॥
चातुर्मास्ये समाप्ते च द्वितीया या भवेत्तिथिः ।
परास्वेतास्वनध्यायः पुराणैः परिकीर्त्तितः ॥"
इति तिथितत्त्वम् ॥
"पक्षयोर्माघमासस्य द्वितीयां परिवर्ज्जयेत् ॥"
इति विष्णुपुराणम् ॥

**द्वितीयाकृतं**, त्रि, (द्वितीयं कर्षणं कृतमिति ।
"कृञो द्वितीयतृतीयशम्बबीजात् कृषौ । ५ ।
४ । ५८ । इति डाच् ।)
वारद्वयकृष्टक्षेत्रम् ।
इत्यमरः । २ । ९ । ९ ॥ दोचसा भूँइ इति भाषा ॥

**द्वितीयाभा**, स्त्री, (द्वितीया हरिद्रावत् आभा-
तीति । आ + भा + कः ।)
दारुहरिद्रा । इति
शब्दचन्द्रिका ॥

**द्वित्राः**, त्रि, (द्वौ वा त्रयो वा । "संख्ययाव्यया-
सन्नादूराधिकसंख्याः संख्येये ।" २ । २ । २५ ।

**द्विधालेख्यः**, पुं, (द्विधा लिख्यते यत्र । लिख +
आधारे ण्यत् ।) हिन्तालवृक्षः । इति राज-
निर्घण्टः ॥ द्विप्रकारलेखनीये, त्रि ॥

**द्विनग्नकः**, पुं, (द्विर्द्वितीयो नग्नक इव ।) दुश्चर्म्मा ।
इति हेमचन्द्रः ॥

**द्विपः**, पुं, (द्वाभ्यां शुण्डमुखाभ्यां पिबतीति ।)
पा + कः ।) हस्ती । इत्यमरः । २ । ८ । ३४ ॥
(यथा, माघे । ३ । ६७ ।
"तेजोमहद्भिस्तमसेव दीपै-
र्द्विपैरसम्बाधमयाम्बभूवे ॥")
पुं, नाशकेशरः । इति रत्नमाला ॥

**द्विपथं**, क्ली, (द्वयोः पथोः समाहारः । तद्धिता-
र्थेत्यादिना समासः । "ऋक्पूरब्धूः पथामानक्षे ।"
५ । ४ । ७४ । इति अः ।) पथद्वयम् । दोमाता
पथ इति भाषा । तत्पर्य्यायः । चारुपथः २ ।
इति हेमचन्द्रः । ४ । ५२ ॥ द्वौ पन्थानौ यत्रे-
त्यर्थे, त्रि ॥

**द्विपदः**, पुं, (द्वे पदे यस्य ।) मनुष्यः । (यथा,
महाभारते । १ । ७४ । ५६ ।
"ब्राह्मणो द्विपदां श्रेष्ठो गौर्वरिष्ठश्चतुस्पदाम् ॥")
देवः । पक्षी । राक्षसः । यथा, प्रश्नसारे ।
"द्विपदेऽपि चतुर्भेदा नृदेवपक्षिराक्षसाः ॥"

**द्विपदराशिः**, पुं, (द्वे पदे यस्य । स चासौ राशि-
श्चेति ।) मिथुनम् । तुला । कुम्भः । कन्या ।
धनुषः पूर्ब्बार्द्धम् । यथा, ज्योतिस्तत्त्वे ।
"मिथुनतुलाघटकन्याद्विपदाख्याश्चापपूर्ब्ब
भागश्च ॥"

**द्विपमदः**, पुं, (द्विपस्य हस्तिनो मदः ।) हस्ति-
मदः । इति राजनिर्घण्टः ॥

**द्विपर्णी**, स्त्री, (द्वे द्वे पर्णे यस्याः । ङीप्) वन-
कोली । इति रत्नमाला ॥ पर्णद्वययुक्ते, त्रि ॥

**द्विपात्**, [द्] त्रि, द्वौ पादौ यस्य सः । (पादस्य
पाद्भावः ।) पादद्वययुक्तः । इति मुग्धबोध-
व्याकरणम् ॥

अस्तं गते न भुञ्जीत व्रतभङ्गभयान्नरः ॥'
अथ भ्रातृद्वितीया । लिङ्गपुराणे ।
'कार्त्तिके तु द्वितीयायां शुक्लायां
भ्रातृपूजनम् ।
या न कुर्य्याद्विनश्यन्ति भ्रातरः सप्तजन्मनि
॥'
तस्या इति शेषः ॥ महाभारते ।
'कार्त्तिके शुक्लपक्षे तु द्वितीयायां
युधिष्ठिर ! ।
यमो यमुनया पूर्ब्बं भोजितः स्वगृहे स्वयम्
॥
तस्यां निजगृहे पार्थ ! न भोक्तव्यमतो बुधैः
।
यत्नेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम् ॥
दानानि च प्रदेयानि भगिनीभ्यो विशेषतः
॥'
तथा ।
'यमञ्च चित्रगुप्तञ्च यमदूतांश्च पूजयेत् ।
अर्घ्यश्चात्र प्रदातव्यो यमाय सहजद्वयैः ॥'
सहजद्वयैर्भगिनीभ्रातृभिः । अर्घ्यमन्त्रः ।
ॐ एह्येहि मार्त्तण्डज पाशहस्त
यमान्तकालोकधरामरेश ! ।
भ्रातृद्वितीयाकृतदेवपूजां
गृहाण चार्घ्यं भगवन्नमस्ते ॥
प्रणाममन्त्रः ।
ॐ धर्म्मराज नमस्तुभ्यं नमस्ते यमुनाग्रज
।
पाहि मां किङ्करैः सार्द्धं सूर्य्यपुत्त्र नमोऽस्तु
ते ॥
यमुनाञ्च संपूज्य नमस्कुर्य्यात् ।
ॐ यमस्वसर्नमस्तेऽस्तु यमुने लोकपूजिते
।

इति समासः । "बहुब्रीहौ संख्येये
डजबहु-
गणात् ।" ५ । ४ । ७३ । इति डच्
।) द्वौ वा
त्रयो वा इमे । इति संक्षिप्तसारः ।
नित्यबहु-
वचनान्तोऽयम् ॥ (यथा, रघुः । ५
। २५ ।
"द्वित्राण्यहान्यर्हसि सोढुमर्हन्
यावद् यते साधयितुं तदर्थम् ॥")

**द्विदन्**, [त्] त्रि, (द्वौ दन्तौ यस्य । "वयसि
दन्तस्य
दतृ ।" ५ । ४ । १४१ । इति
दन्तस्य दतृ-आदेशः ।)
दन्तद्वययुक्तवृषादिः । इति
हेमचन्द्रः । ४ । ३२९ ॥

**द्विदाम्नी**, स्त्री, (द्वे दामनी बन्धनरज्जू
यस्याः ।
"दामहायनान्ताच्च ।" ४ । १ ।
२७ । इति ङीप् ।)
रज्जुद्वययुक्तागौः । इति
मुग्धबोधव्याकरणम् ॥

**द्विदेहः**, पुं, (द्वाभ्यां देहोऽस्येति ।
गजाननत्वा-
देवास्य तथात्वम् ।) गणेशः । इति
त्रिकाण्ड-
शेषः ॥ (द्व्यात्मकराशिः । इति
ज्योतिषम् ॥)

**द्विधा**, व्य, (द्वि + "संख्याया विधार्थे धा ।"
५ । ३ ।
४२ । इति धा ।) द्विप्रकारम् । इति
मुग्ध-
बोधम् ॥ (यथा, देवीभागवते । ३ ।
६ । ५ ।
"यथा दीपस्तथोपाधेर्योगात्
सञ्जायते द्विधा ।
छायेवादर्शमध्ये वा प्रतिविम्बं
तथावयोः ॥")

**द्विधागतिः**, पुं, (द्विधा द्विप्रकारा गतिर्यस्य ।)

**द्विपाद्यं**, क्ली, (द्वौ पादौ परिमाणमस्य । "पण-
पादमाषशताद् यत् ।" ५ । १ । ३४ । इति यत्
।)
द्विगुणदण्डः । इत्यमरः । २ । ८ । २७ ॥

**द्विपायी**, [न्] पुं, (द्वाभ्यां मुखशुण्डाभ्यां पिब-
तीति । पा + णिनिः ।) हस्ती । इति हारा-
वली । १४ ॥

**द्विपृष्ठः**, पुं, (द्वौ पृष्ठौ यस्य ।) राजभेदः । तत्-
पर्य्यायः । ब्रह्मसम्भवः २ । इति हेमचन्द्रः ।
३ । ३५९ ॥

**द्विबिन्दुः**, पुं, (द्वौ बिन्दू यत्र ।) विसर्गवर्णः । यथा,
बिन्दुर्द्विबिन्दुमात्रौ वर्णौ क्रमान्नुवी संज्ञौ स्तः ।
इति मुग्धबोधव्याकरणम् ॥ शून्यद्वयञ्च ॥

**द्विमातृजः**, पुं, (द्वाभ्यां मातृभ्यां जायते इति ।
जन + डः ।) गणेशः । इति हेमचन्द्रः । ३ ।
२१० ॥

**द्विमुखः**, पुं, (द्वे मुखे यस्य ।) राजसर्पः । इति
हलायुधः ॥ मुखद्वययुक्ते, त्रि ॥

**द्विमुखा**, स्त्री, (द्वे मुखे यस्याः ।) कर्करी । इति
शब्दचन्द्रिका ॥ गाडु इति भाषा । जलौकाः ।

| | | |
|---|---|---|
| | कुम्भीरः । इति हेमचन्द्रः । ४ । ४१८ ॥ द्विप्रकार-गतियुक्ते, त्रि ॥<br>**द्विधातुः**, पुं, (द्वौ धातू यस्य । देवगजदेहवत्त्वा-देवास्य तथात्वम् ।) गणेशः । इति शब्दरत्ना-वली ॥ (द्वौ धातू ताम्रादिधातुद्रव्ये यत्र ।) धातुद्वये, क्ली ॥<br>**द्विधात्मकं**, क्ली, (द्विधा आत्मा यस्य । कप् ।) जातीकोषम् । इति शब्दचन्द्रिका ॥ | |

इति हलायुधः ॥ जाँक इति भाषा ॥
(यथा,
सुश्रुते उत्तरतन्त्रे । ५४ अध्याये ।
“चूरवो द्विमुखाश्चैव सप्तैवेते पुरीषजाः ॥”)

**द्विमुखाहिः**, पुं, (द्विमुखः अहिः सर्पः ।) सर्प-
विशेषः । शाँखिनी इति भाषा ।
तत्पर्य्यायः ।
अहीरलिः २ राजाहिः ३ राजसर्पः ४
द्विमुखः
५ सर्पभुक् ६ । इति हलायुधः ॥

**द्विमुखोरगः**, पुं, (द्विमुखः उरगः सर्पः ।) राज-
सर्पः । इति जटाधरः ॥

**द्विमूर्द्धः**, त्रि, (द्वौ मूर्द्धानौ यस्य । “द्वित्रिभ्यां ष
मूद्दर्ध्नः ।” ५ । ४ । ११५ । इति ष ।)
मस्तक-
द्वययुक्तः । इति मुग्धबोधव्याकरणम् ॥
(यथा,
भट्टिः । ४ । ४१ ।
“बहुमूद्दर्ध्नो द्विमूर्द्धांश्च त्रिमूर्द्धांश्चाहतां मृधे ॥”)

**द्विरदः**, पुं स्त्री, (द्वौ रदौ दन्तौ प्रधानतया यस्य ।
हस्ती । इत्यमरः । २ । ८ । ३४ ॥
(यथा,
महाभारते । ७ । २६ । २७ ।
“क्षोभयन्तं तथा सेनां द्विरदं नलिनीमिव
।
धनञ्जयं भूतगणाः साधु साध्वित्यपूजयन् ॥”)

**द्विरदान्तकः**, पुं, (द्विरदानां हस्तिनां अन्तकः ।)
सिंहः । इति राजनिर्घण्टः ॥

**द्विरशनं**, क्ली, (द्विर्वारमशनं भोजनम् ।) वार-
द्वयभोजनम् । यथा, --
“मुनिभिर्द्विरशनं प्रोक्तं विप्राणां
मर्त्यवासिनां
तथा, --
“काश्यपेषु वशिष्ठषु भृग्वादित्याङ्गिरःसु च ।
भारद्वाजेषु वात्स्येषु प्रतिशुक्रो न दोषभाक् ॥”
श्रीपतिसंहितायां प्रचेताः ।
“पुष्यादित्यसमीरणादितिवसुष्वप्युत्तरारेवती-
तारानायकरोहिणीषु शुभदे मेषालिकुम्भेरवौ ।
वारेष्विज्यसितेन्दुवित्सु शुभदे तारे प्रशस्ते विधौ
कन्यामन्मथमीनतौलिमृगभेस्यादङ्गना-
द्व्यागमः ॥”
ज्योतिःसारसंग्रहे ।
“विवाहमासि प्रथमं बध्वा नागमनं यदि ।
तदा सर्व्वमिदं चिन्त्यं युग्माद्यब्दं विचक्षणैः ॥”
कृत्यचिन्तामणौ ।
“श्वश्रूं हन्त्यष्टमे वर्षे श्वशुरञ्च दशाब्दिके ।
सम्प्राप्ते द्वादशे वर्षे पतिं हन्ति द्विरागमे ॥”
मत्स्यसूक्ते ।
“भुक्त्वा पितृगृहे कन्या भुङ्क्ते स्वामिगृहे यदि ।
दौर्भग्यं जायते तस्याः शपन्ति कुलनायिकाः ॥”
इति ज्योतिस्तत्त्वम् ॥
निष्कर्षस्तु ।
“विवाहमासि प्रथममनागताया बध्वा अष्टम-
दशमद्वादशेतरवर्षे कालशुद्धौ वैशाखमार्गशीर्ष-
फाल्गुनान्यतममासे रविशुद्धौ सोमबुधगुरु-
शुक्रान्यतमवारे चन्द्रतारानुकूले रोहिणीपुन-
र्व्वसुमृगशिरःपुष्योत्तरात्रयहस्तस्वातीधनिष्ठा
रेवतीषु विष्टिभिन्नकरणेषु निषिद्धेतरयोगेषु
कन्यामिथुनतुलामीनलग्नेषुद्विरागमनम् ।
कस्यचिन्मते बुधवारोऽपि निषिद्धः ।
दक्षिणदिङ्मुखगमनं गमनमभिनवनारीणाम् ।
व्ययमपि धान्यादीनां न बुधो बुधवासरे कुर्य्यात् ॥”
इति सत्कृत्यमुक्तावली ॥

**द्विरापः**, पुं, (द्विर्द्विवारं मुखशुण्डाभ्यामित्यर्थः ।
आ सम्यक् पिबतीति । पा + कः ।) हस्ती ।
इति शब्दमाला ॥

**द्विराषाढः**, पुं, (द्विः आषाढः ।) मिथुनस्थरव्या-
रब्धशुक्लप्रतिपदादिदर्शान्तिमासद्वयम् । स च
आषाढमलमासे भवति । यथा, ज्योतिषे ।
“मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत् ।

**द्विरूढः**, स्त्री, (उह्यते इति । वह + कर्म्मणि क्तः ।
द्विः ऊढा विवाहिता ।)
द्विवारविवाहिता ।
तत्पर्य्यायः । दिधिषूः २ पुनर्भूः ३ ।
इति हेम-
चन्द्रः । ३ । १८९ ॥

**द्विरूपः**, पुं, (द्वौ रूपौ आकारौ यत्र ।) द्व्याकार-
शब्दादिः । यथा । द्विरूपकोषादिः ।
द्विवार-
ग्रन्थावृत्तिः । यथा ।
द्विरूपचण्ड्यादिपाठः ।
रूपद्वययुक्ते, त्रि ॥

**द्विरेफः**, पुं स्त्री, (द्वौ रेफौ रकारवर्णौ यस्य भ्रमर-
नाम्नि ।) भ्रमरः । (यथा, कुमारे ।
३ । २७ ।
“निवेशयामास मधुर्द्विरेफान्
नामाक्षराणीव मनोभवस्य ॥”)
वर्व्वरे, त्रि । इत्यमरः ॥

**द्विवर्षा**, स्त्री, (द्वौ वर्षौ वयःपरिमाणमस्याः ।
द्विवर्ष + आर्हीयष्ठक् तस्य लुक् च ।) द्विहा-
यनी । द्विवर्षवयस्का गौः । इत्यमरः
। २ । ९ । ६८ ॥

**द्विवर्षिका**, स्त्री, (द्विवर्षैव । स्वार्थे कन् । टापि
“प्रत्ययस्थादिति ।” ७ । ३ । ४४
। इति अत
इत्वम् ।) द्विवर्षा गौः । इति
हेमचन्द्रः । ४ । ३३८ ॥

**द्विवर्षीणः**, त्रि, (द्वौ वर्षौ वयःपरिमाणमस्य ।
द्विवर्ष + खः ।) द्विवार्षिकः ।
द्विवर्षवयस्कः ।
इति पाणिनीयव्याकरणम् ॥

**द्विवार्षिकः**, त्रि, (द्विवर्षे भवः । ठक् ।) द्विवर्ष-

नित्यम् ।
अहनि च तमस्विन्यां सार्द्धप्रहरयामान्तः ॥”
इति तिथ्यादितत्त्वम् ॥

**द्विरसनः**, पुं, (द्वे रसने जिह्वे यस्य ।) सर्पः ।

इति हारावली । १५ ॥

**द्विरागमनं**, क्ली, (द्विर्वारं विवाहात् परं आग-

मनं स्वामिगृहे इत्यर्थः ।) विवाहानन्तरं बध्वाः
पितृगेहात् पतिगृहे पुनरागमनम् । यथा, नारायणपद्धतौ ।
“वृत्ते पाणिग्रहे गेहात् पितुः पतिगृहं प्रति ।
पुनरागमनं बध्वास्तद्द्विरागमनं विदुः ॥”
तस्य शुभकालदिनादि यथा । दीपिकायाम् ।
“स्त्रीशुद्ध्यालिघटाजसंस्थुतरवौ काले विशुद्धे भृगुं
संत्यज्य प्रतिलोमगं शुभदिने यात्राप्रवेशोचिते ।
त्यक्त्राहस्तु निरंशकं नवबधूयात्राप्रवेशौ पतिः
कुर्य्यादिकपुरादिषु प्रतिभृगोर्नेच्छन्ति दोषं बुधाः ॥
पैत्रागारे कुचकुसुमयोः सम्भवो वा यदि स्यात्
कालः शुद्धो न भवति यदा संमुखो वापि शुक्रः ।
मेषे कुम्भेऽलिनि च न भवेत् भास्करश्चेत्तथापि
स्वामी भद्रेऽहनि नवबधूं वेशयेन्मन्दिरं स्वम् ॥
भर्त्तर्गोचरशोभने दिनपतौ नास्तं गते भार्गवे
सूर्य्ये कीटघटाजगे शुभदिने पक्षे च कृष्णेतरे ।
हित्वा च प्रतिलोमगौ बुधसितौ जीवस्य शुद्धौ
तथा
द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥”
मिहिरश्च ।
“माधवादिषु षट्केषु मासि दर्शद्वयं यदा ।
द्विराषाढः स विज्ञेयः शेते तु श्रावणेऽच्युतः ॥”
इति मलमासतत्त्वम् ॥
अन्यच्च ।
“पौर्णमास्या द्वयं यत्र पूर्ब्बाषाढाद्वयं भवेत् ।
द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥”
इति गारुडे ६० अध्यायः ॥

**द्विरुक्तः**, त्रि, (द्विर्द्विवारं यथा तथा उक्तः ।)

द्विवारकथितः । यथा । द्विरुक्तयक्षादी द्विः ।
इति मुग्धबोधलक्षणम् ॥

**द्विरुक्तिः**, स्त्री, (वच + क्तिन् । द्विर्द्विवारं उक्तिः ।)

द्विवारकथनम् । इति संक्षिप्तसारः ॥

भवः । वत्सरद्वयजातः । इति व्याकरणम् ॥

**द्विवाहिका**, स्त्री, (द्वाभ्यां पार्श्वाभ्यां वाहयतीति ।

वह + णिच् + ण्वुल् । टापि अत इत्वम् ।)
दोला । इति शब्दमाला ॥

**द्विविदः**, पुं, वानरविशेषः । इति हेमचन्द्रः ॥

(अयं हि नरकासुरस्य मित्रम् । यथा, विष्णु-
पुराणे । ५ । ३६ । २ ।
“नरकस्यासुरेन्द्रस्य देवपक्षविरोधिनः ।
सखाभवन्महावीर्य्यो द्विविदो नाम वानरः ॥”
स तु बलरामेण हतः । यथा, तत्रैव । ५ । ३६ । २० ।
“ततो बलेन कोपेन मुष्ठिना मूर्द्ध्नि ताडितः ।
पपात रुधिरोद्गारी द्विविदः क्षीणजीवितः ॥”
श्रीरामस्य सचिववानराणामन्यतमः । यथा,
महाभारते । ३ । २७९ । २३ ।
“मैन्दश्च द्विविदश्चैव हनूमांश्चानिलात्मजः ।
जाम्बवानृक्षराजश्च सुग्रीवः सचिवाः स्मृताः ॥”)
“समुद्रस्योत्तरे तीरे द्विविदो नाम वानरः ।
ऐकाहिकज्वरं हन्ति तस्य नामानुकीर्त्तनात् ॥”
इति ज्योतिषम् ॥

**द्विवेशरा**, स्त्री, (द्वौ वेशौ गमनावस्थानरूपौ

राति ददातीति । रा दाने + कः ।) लघुरथः ।
तत्पर्य्यायः । गन्त्री २ लघ्वी ३ । इति हारा-
वली । १६२ ॥

| | | |
|---|---|---|
| चानीता गुणशालिनी नवबधूर्नित्योत्सवा मोदते ॥<br>एकग्रामे चतुःशाले दुर्भिक्षे राष्ट्रविप्लवे ।<br>पतिना नीयमानायाः पुरः शुक्रो न दुष्यति ॥” | | **द्विशः**, [स्] व्य, (द्वि + “संख्यैकवचनाच्च वीप्सा-<br>याम् ।” ५ । ४ । ४३ । इति वीप्सायां शस् ।)<br>द्वौ द्वौ । इति वीप्सार्थे चशस्प्रत्ययः ॥ (यथा,<br>सुश्रुते । १ । ४१ ।<br>“द्विशो वा बहुशो वापि ज्ञात्वा दोषेऽवचा-<br>रयेत् ॥”) |

**द्विशफः**, पुं, (द्वौ द्वौ शफौ यस्य ।) द्विखुरपशुः ।

यथा, श्रीभागवते । ३ । १० । २२ ।

“गौरजो महिषः कृष्णः शूकरो गवयो रुरुः ।

द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सप्तमः ॥”

**द्विष**, ल ञ औ वैरे । इति कविकल्पद्रुमः ॥ (अदां-

उभं-सकं-अनिट् ।) ल ञ, द्वेष्टि द्विष्टे । औ,

अद्विक्षत् । द्विषन्ति मन्दाश्चरितं महात्मनाम् ।

इति कुमारः । इति दुर्गादासः ॥

**द्विषतीतापः**, त्रि, (द्विषतीं तपति तापयतीति

वा । द्विषती + तप + अण् । तप + णिच् +

अच् वा ।) स्त्रीशत्रुतापकः । इति संक्षिप्त-

सारव्याकरणम् ॥

**द्विषन्**, [त्] त्रि, (द्वेष्टीति । द्विष + “द्विषो-

ऽमित्रे ।” ३ । २ । १३१ । इति शतृ ।) शत्रुः ।

इत्यमरः । २ । ८ । १० ॥ (यथा, माघे । २ । १ ।

“यियक्षमाणेनाहूतः पार्थेनाथ द्विषन् मुरम् ॥”)

**द्विषन्तपः**, त्रि, (द्विषन्तं तापयतीति । तप + णिच् +

“द्विषत्परयोस्तापेः ।” ३ । २ । ३९ । इति

खच् । “खचि ह्रस्वः ।” ६ । ४ । ९४ । इति

ह्रस्वः । “अरुर्द्विषदजन्तस्य मुम् ।” ६ । ३ । ६७ ।

इति मुम् । ततः संयोगान्ततकारलोपः ।)

अभक्ष्यञ्च यतीनाञ्च विधवाब्रह्मचारिणाम् ।

ताम्बूलञ्च यथा ब्रह्मन् ! तथैते वस्तुनी ध्रुवम् ॥”

इति ब्रह्मवैवर्त्ते ब्रह्मखण्डम् ॥

**द्विहल्यं**, त्रि, (द्विवारं हलेन कृष्टम् । द्विहल +

“मतजनहलादिति ।” ४ । ४ । ९७ । इति यत् ।)

द्विधाकृष्टक्षेत्रम् । इत्यमरः । २ । ९ । ९ ॥

**द्विहा**, [न्] पुं, (द्वाभ्यां शुण्डदन्ताभ्यां हन्तीति ।

हन + क्विप् ।) हस्ती । इति शब्दरत्नावली ॥

**द्विहायनी**, स्त्री, (द्वौ हायनौ वत्सरौ वयःक्रमौ

यस्याः । “दामहायनान्ताच्च ।” ४ । १ । २७ । इति

ङीप् ।) द्विवर्षा गौः । इत्यमरः । २ । ९ । ६८ ॥

(द्विवर्षवयस्के,, त्रि । यथा, मनुः । ११ । १३४ ।

“शुके द्विहायनं वत्सं क्रौञ्चं हत्वा त्रिहायनम् ॥”)

**द्वीन्द्रियग्राह्यः**, पुं, (द्वाभ्यामिन्द्रियाभ्यां ग्राह्यः ।)

इन्द्रियद्वयग्रहणीयगुणः । स तु संख्यादिसप्त-

द्रव्यत्वस्नेहस्वरूपः । यथा, --

“संख्यादिरपरत्वान्तो द्रवत्वं स्नेह एव च ।

एते तु द्वीन्द्रियग्राह्या अथ स्पर्शान्तशब्दकाः ॥”

इति भाषापरिच्छेदः ॥

**द्वीपं**, क्ली, (द्वौ वर्णौ ईयते इति । इ गतौ + बाहु-

लकात् पः ।) व्याघ्रचर्म्म । इति द्वीपिशब्द-

टीकायां भरतः ॥

**द्वीपः**, पुं क्ली, (द्विर्गता द्वयोर्दिशोर्वा गता आपो

यत्र । काकाक्षिगोलकन्यायेन द्वयोरित्युक्तेऽपि

चतुर्द्दिक्षु इति सिद्धिः । “ऋक्पूरब्धूरिति ।” ५ । ४ ।

७४ । इति यत् । “द्व्यन्तरुपसर्गेभ्योऽप ईत् ।”

६ । ३ । ९७ । इति ईत् ।) वारिमध्यतटम् । जल-

वेष्टितभूमिः । तत्पर्य्यायः । अन्तरीपम् २ । इत्य-

मरः । १ । १० । ८ ॥ द्वीपोत्पत्तिर्यथा । सूर्य्यः सुमेरुं

प्रदक्षिणीकुर्व्वन् अर्द्धां पृथ्वीं प्रकाशयति अर्द्धां

तमसा आवृणोति । तदा भगवदुपासनोपचि-

सायम्भुवेऽन्तरे पूर्ब्बमाद्ये त्रेतायुगे तदा ॥

प्रियव्रतस्य पुत्त्रैस्तैः पौत्त्रैः स्वायम्भुवस्य तु ।

प्रियव्रतात् प्रजावन्तो वीरात् काम्याभ्यजायत ॥

कन्या सा तु महाभागा कर्द्दमस्य प्रजापतेः ।

कन्ये द्वे दशपुत्त्राश्च सम्राट् कुक्षिश्च ते उभे ॥

मेधाग्निबाहुमित्रास्तु त्रयो योगपरायणाः ।

जातिस्मरा महाभागा न राज्याय मनो दधुः ॥

प्रियव्रतोऽभ्यषिञ्चत्तान् सप्त सप्तसु पार्थिवान् ।

द्वीपेषु तेषु धर्म्मेण द्वीपांस्तांश्च निबोध मे ॥

जम्बुद्वीपे तथाग्नीध्रं राजानं कृतवान् पिता ।

प्लक्षद्वीपेश्वरश्चापि तेन मेधातिथिः कृतः ॥

शाल्मले तु वपुष्मन्तं ज्योतिष्मन्तं कुशाह्वये ।

क्रौञ्चद्वीपे द्युतिमन्तं हव्यं शाकाह्वये सुतम् ॥

पुष्कराधिपतिञ्चैव सवनं कृतवान् सुतम् ॥”

इति मार्कण्डेयपुराणम् ॥

“भूमेरर्द्धं क्षारसिन्धोरुदक्स्थं

जम्बुद्वीपं प्राहुराचार्य्यवर्य्याः ।

अर्द्धेऽन्यस्मित् द्वीपषटक्स्य याम्ये

क्षारक्षीराद्यम्बुधीनां निवेशः ॥

शाकं ततः शाल्भलमत्र कौशं

क्रौञ्चञ्च गोमेदकपुष्करे च ।

द्वयोर्द्वयोरन्तरमेकमेकं

समुद्रयोर्द्वीपमुदाहरन्ति ॥”

इति सिद्धान्तशिरोमणिः ॥

**द्वीपकर्पूरजः**, पुं, (द्वीपकर्पूरवत् जायते इति ।

जन + डः ।) चीनकर्पूरः । इति राजनिर्घण्टः ॥

शत्रुन्तपः । शत्रुतापजनकः । इति संक्षिप्तसार-
व्याकरणम् ॥

**द्विष्टं**, क्ली, (द्विष + क्तः ।) द्ब्यष्टम् । ताम्रम् ।
इत्यमरटीकासारसुन्दरी ॥
द्वेषविषये, त्रि ।
(यथा, भाषापरिच्छेदे । १५१ ।
"निवृत्तिस्तु भवेद्द्वेषात् द्विष्टसाधनताधियः ॥"
तथाच ।
"अचोक्षं दुष्टमुच्छिष्टं पाषाणतृणलोष्ट्रवत् ।
द्विष्टं व्युषितमस्वादु पूति चान्नं विवर्ज्जयेत् ॥"
इति सुश्रुते सूत्रस्थाने ४६ अः ॥

**द्विष्ठः**, त्रि, द्वयोस्तिष्ठति यः । (द्वि + स्था + कः ।)
उभयस्थः । यथा । संयोगस्य द्विष्ठतयेति जग-
दीशः ॥

**द्विसप्ततिः**, स्त्री, (द्व्यधिका सप्ततिः । "विभाषा
चत्वारिंशत्प्रभृतौ सर्व्वेषाम् ।" ६ । ३ । ४९ ।
इति पक्षे न आत्वम् ।) द्व्यधिकसप्ततिः । इति
ज्योतिषम् ॥ ७२ वाओयात्तर इति भाषा ॥
(यथा, मनुसंहितायाम् । ७ । १५७ ।
"प्रत्येकं कथिता ह्येताः संक्षेपेण द्विसप्ततिः ॥")

**द्विसहस्राक्षः**, पुं, (द्विसहस्रं अक्षीणि यस्य । षच्
समासे ।) अनन्तदेवः । इति हेमचन्द्रः ॥

**द्विसीत्यं**, त्रि, (द्विवारं सीतया सहितम् । द्विसीता

तातिक्रान्तपुरुषप्रभावः प्रियव्रतो राजा सूर्य्य-
रथसमवेगेन ज्योतिर्मयरथेन रजनीमपि दिनं
करिष्यामीति प्रतिज्ञां कृत्वा सप्तवारं द्वितीय-
सूर्य्य इव सूर्य्यमनुपर्य्यक्रामत् । अस्य रथचरण-
नेमिपरिखाताः सप्तसिन्धव आसन् । यैरेव
सिन्धुभिः पृथिव्याः सा द्वीपाः कृताः । ते जम्बु
१ प्लक्ष २ शाल्मलि ३ कुश ४ क्रौञ्च ५ शाक ६
पुष्कर ७ संज्ञकाः । तेषां पूर्ब्बस्य यद्विस्तार-
मानं उत्तरतस्ततो द्विगुणेन विस्तारमानेन
परिमाणम् । ते सिन्धुभ्यो बहिःसमं रचिताः ।
यथा सिन्धुभ्यो बहिरेकैकशो द्वीपाः एवं द्वीपा-
नामपि बहिःसिन्धवः । स प्रियव्रतः बर्हिष्मती-
गर्भजाननुगतानात्मजान् आग्निध्रेध्मजिह्वयज्ञ-
बाहुहिरण्यरेतोघृतपृष्टमेधातिथिवीतिहोत्रसं-
ज्ञकान् यथासंख्येन एकैकस्मिन् द्वीपे एकैक-
मधिपतिं विदधे । इति श्रीभागवतीयपञ्चम-
स्कन्धात् संगृहीतम् ॥ * ॥
अपि च ।
"मनोः स्वायम्भुवस्यासन् दश पुत्रास्तु तत्समाः ।
यैरियं पृथिवी सर्व्वा सप्तद्वीपा सपत्तना ॥
ससमुद्राकरवती प्रतिवर्षं निवेशिता ।

**द्वीपखर्ज्जूरं**, क्ली, (द्वीपजातम् खर्ज्जूरम् ।) महा-
पारेवतम् । इति राजनिर्घण्टः ॥

**द्वीपजं**, क्ली, (द्वीपात् जायते इति । जन + डः ।)
महापारेवतम् । इति राजनिर्घण्टः ॥

**द्वीपवती**, स्त्री, (द्वीपः अस्त्यस्या इति । द्वीप +
मतुप् मस्य वः । ङीप् ।) नदी । (यथा, महा-
भारते । १ । ७० । २८ ।
"अलङ्कृतं द्वीपवत्या मालिन्या रम्यतीरया ॥")
भूमिः । इति मेदिनी । ते, १९८ ॥

**द्वीपवान्**, [त्] पुं, (द्वीपोऽस्त्यस्य इति । द्वीप +
मतुप् मस्य वः ।) समुद्रः । नदः । इति मेदिनी ।
ते, १९८ ॥

**द्वीपशत्रुः**, पुं, (द्वीपस्य द्वीपिनः शत्रुः ।) शतावरी ।
इति राजनिर्घण्टः ॥ (शतमूलीशब्देऽस्य विव-
रणं ज्ञातव्यम् ॥)

**द्वीपिका**, स्त्री, (द्वीपो द्वीपी नाश्यतया अस्त्यस्या
इति । द्वीप + ठन् ।) शतावरी । इति राज-
निर्घण्टः ॥

**द्वीपिनखः**, पुं, (द्वीपिनो व्याघ्रस्य नखः ।) व्यालनखः ।
इति राजनिर्घण्टः ॥ (स तु बालानां कण्ठभूषण-
विशेषः । यथा, अध्यात्मरामायणे । १ । ३ । ४८ ।
"कण्ठे लग्नमणिव्रातमध्यद्वीपिनखाञ्चितम् ॥")

**द्वीपिशत्रुः**, पुं, (द्वीपिनो व्याघ्रस्य शत्रुः ।) शत-
मूली । इति जटाधरः ॥

**द्वीपी**, [न्] पुं, (द्वीपं चर्म्म अस्त्यस्येति । द्वीप +
"अत इति ठनौ ।" ५ । २ । ११५ । इति ठन् ।)

| | | |
|---|---|---|
| + "नौ वयोधर्म्मति ।" ४ । ४ । ९१ । इति यत् ।) वारद्वयकृष्टक्षेत्रम् । दोचसा भूँइ इति भाषा । तत्पर्य्यायः । द्विगुणाकृतम् २ द्वितीयाकृतम् ३ शम्बाकृतम् ४ सम्बाकृतम् ५ द्विहल्यम् ६ । इत्यमरभरतौ ॥ | | |
| **द्विस्विन्नान्नं**, क्ली, (द्विस्सिन्नं द्विःपक्वं अन्नं तण्डुलम् ।) द्विःसिद्धतण्डुलम् । यथा, -- "द्विस्विन्नमन्नं पृथुकं शुद्धं देशविशेषके । नात्यन्तशस्तं विप्राणां भक्षणे च निवेदने ॥ | | |

चित्रकः । व्याघ्रः । इति राजनिर्घण्टः ॥
(यथा,
रामायणे । २ । ९४ । ७ ।
“नानामृगगणैर्द्वीपितरक्षवृक्षगणैर्वृतः ॥”)

**द्वीप्यः**, त्रि, द्वीपे भव इत्यर्थे ष्ण्यप्रत्ययः ॥ (“तत्र

भवः ।” ४ । ३ । ५३ । इति यत् ।) द्वैप्यः ।
(यथा, वाजसनेयसंहितायाम् । १६ । ३१ ।
“नमो नादेयाय च दीप्याय च ॥”)

**द्वृ**, स्थगने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-

अनिट् ।) वकारोपधः । द्वरति । स्थगनं
संवर-
णम् । वरणे इति प्राञ्चः । वरणं स्वीकारः
स्थगनञ्चेति गोविन्दभट्टः । इति दुर्गादासः ॥

**द्वेधा**, व्य, (द्वि + “संख्याया विधार्थे धा ।” ५ ।

३ । ४२ । इति धा । “एधाच्च ।” ५ । ३ ।
४५ ।
इति तस्य एधाच् ।) द्विप्रकारम् । इति
व्याक-
रणम् ॥

**द्वेषः**, पुं, (द्विष + भावे घञ् ।) शत्रुता । तत्-

पर्य्यायः । वैरम् २ विरोधः ३ विद्वेषः ४
द्वेषणम्
५ । इति शब्दरत्नावली ॥ (यथा, मनुः । ४
।
१६३ ।
“नास्तिक्यं वेदनिन्दाञ्च देवतानाञ्च
कुत्सनम् ।
द्वेषं दम्भञ्च मानञ्च क्रोधं तैक्ष्णञ्च वर्ज्जयेत्
॥”)
अस्य कारणं द्विष्टसाधनताज्ञानम् । इति
भाषापरिच्छेदः ॥ स च आत्मनो विशेषगुणः
।
इति सिद्धान्तमुक्तावली ॥
तद्वशवर्त्तित्वनिषेधो
यथा, श्रीभगवद्गीतायाम् । ३ । ३४ ।
“इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्यितौ
।

“मुखं वा यदि वा दुःखं द्वेष्यं वा यदि वा
प्रियम् ।
यथावत् सर्व्वमाचक्ष्व श्रुत्वा धास्याभि यत्-
क्षमम् ॥”
द्विष्यतेऽसाविति । द्विष + ण्यत् । शत्रुः । यथा,
रघुः । १ । २८ ।
“द्वेष्योऽपि सम्मतः शिष्टस्तस्यार्त्तस्य
यथौषधम् ।
त्याज्यो दुष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता
॥”)

**द्वैगुणिकः**, त्रि, (द्विगुणार्थं द्रव्यं द्विगुणम् । तत्-

प्रयच्छति द्विगुणं ग्रहीतुमेकगुणं ददातीत्यर्थः ।
द्विगुण + “प्रयच्छति गर्ह्यम् ।” ४ । ४ । ३० ।
इति ठक् ।) वृद्ध्याजीवः । इति हेमचन्द्रः ।
३ । ५४४ ॥ द्विगुणं गृह्णाति यः इत्यर्थे ष्णिक-
प्रत्ययः ॥

**द्वैतं**, क्ली, (द्विधा इतं द्वीतम् । तस्य भावः । युवादि-

त्वात् अण् । स्वार्थे अण् वा ।) द्वयम् । इति
हेमचन्द्रः । ६ । ६० ॥ (यथा, भागवते । १ ।
१५ । ३० ।
“विशोको ब्रह्मसम्पत्त्या संछिन्नद्वैतसंशयः ।
लीनप्रकृतिनैर्गुण्यादलिङ्गत्वादसम्भवः ॥”)
लोकादिरूपम् । एकायनोऽसावितिश्लोक-
व्याख्यायां श्रीधरस्वामी ॥ (वनविशेषः ॥ गत-
द्विके, त्रि । यथा, किराते । १ । १ ।
“सवर्णिलिङ्गी विदितः समाययौ
युधिष्ठिरं द्वैतवने वनेचरः ॥”
“द्वैतवने द्वैताख्ये तपोवने । यद्वा, द्वे इते गते
यस्मात् तत् द्वीतम् । द्वीतव द्वैतं तच्च तद्वन-
ञ्चेति तस्मिन् । शोकमोहादिरहिते इत्यर्थः ॥”
इति तट्टीकायां मल्लिनाथः ॥)

**द्वैतवादी**, [न्] त्रि, (द्वैतं जीव ईश्वरश्चेति द्वयं

वदतीति । वद + णिनिः ।) जीवेश्वरयोर्भेद-
वादी । ईश्वरातिरिक्तजीववक्ता । तस्य मतं
यथा, परमात्मनो जीवात्मा पृथक् तन्मध्ये
केषाञ्चिन्मते प्रकृतिरतिरिक्ता केषाञ्चिन्मते
प्रकृ-

“द्वैतीयीकतया मितोऽयमगमत्तस्य
प्रबन्धे महा-
काव्ये चारुणि नैषधीयचरिते सर्गो
निसर्गो-
ज्ज्वलः ॥”
इति नैषधम् । २ । ११० ॥

**द्वैधं**, व्य, (द्वि + “संख्याया विधार्थे धा ।” ५ ।
३ ।

४२ । इति धा । “द्वित्र्योश्च धमुञ्
।” ५ । ३ ।
४५ । इति धा इत्यस्य धमुञ् ।)
द्विप्रकारम् ।
इति व्याकरणम् ॥ (यथा, हरिवंशे ।
१ । ३० ।
“तदण्डमकरोद्द्वैधं दिवं भुवमथापि
च ॥”
क्ली, “धमुञन्तात् स्वार्थे डदर्शनम्
।” इति वार्त्ति-
कोक्त्या डः । राज्ञां
षड्गुणानामन्यतमः । इत्य-
मरः । २ । ८ । १८ ॥) एकेन
सन्धिरपरेण
विग्रहः इति द्वौ प्रकारौ द्वैधं
निपातितम् ।
इत्यमरटीकायां भरतः ॥ (तच्च
द्विविधम् ।
यथा, मनुः । ७ । १६७ ।
“बलस्य स्वामिनश्चैव स्थितिः
कार्य्यार्थसिद्धये ।
द्विविधं कीर्त्तते द्वैधं
षाड्गुण्यगुणवेदिभिः ॥”)
विवादः । इति त्रिकाण्डशेषः ॥
(द्विप्रकारम् ।
यथा, मनुः । ८ । ७३ ।
“बहुत्वं परिगृह्णीयात् साक्षिद्वैधे
नराधिपः ।
समेषु तु गुणोत्कृष्टान् गुणद्वैधे
द्विजोत्तमान् ॥”

तयोर्न वशमागच्छेत् तौ ह्यस्य परिपन्थिनौ ॥"
"इन्द्रियस्येन्द्रिस्येति वीप्सया सर्व्वेषामिन्द्रियाणां
प्रत्येकमित्युक्तम् । अर्थे स्वस्वविषये अनुकूले
रागः प्रतिकूले द्वेषः इत्येवं रागद्वेषौ व्यवस्थितौ
अवश्यम्भाविनौ ।" इति तट्टीकायां श्रीधर-स्वामी ॥

**द्वेषणं**, क्ली, (द्विष + भावे ल्युट् ।) द्वेषः । इति

शब्दरत्नावली ॥ (यथा, महाभारते । ५ । ९१ । २७ ।
"अकस्माच्चैव पार्थानां द्वेषणं नोपपद्यते ॥")

**द्वेषणः**, त्रि, (द्विष + "क्रुधमण्डार्थेभ्यश्च ।" ३ ।

२ । १५१ । इति युच् ।) शत्रुः । इत्यमरः । २ । ८ । १० ॥ (यथा, महाभारते । १२ । १६८ । १५ ।
"पानपो द्वेषणः क्रोधी निर्घृणः परुषस्तथा ॥")

**द्वेषी**, [न्] त्रि, (द्वेष्टि तच्छीलः । द्विष + "संपृचा-

नुरुधेति ।" ३ । २ । १४२ । इति घिनुण् ।) शत्रुः । इति हेमचन्द्रः । ३ । ३९३ ॥ (यथा, रघुः । १७ । ७३ ।
"तथापि ववृधे तस्य तत्कारिद्वेषिणो यशः ॥")

**द्वेष्टा**, [ऋ] त्रि, (द्वेष्टीति । द्विष + तृच् ।)

विद्वेषकर्त्ता । इति द्विषधातोस्तृन्प्रत्ययेन साध्यः ॥ (यथा, महाभारते । १ । ४९ । ९ ।
"द्वेष्टारस्तस्य नैवासन् स च द्वेष्टि न कञ्चन ॥")

**द्वेष्यः**, त्रि, (द्वेष्टुमर्हः । यत् ।) द्वेषविषयः ।

विद्वेषार्हः । तत्पर्य्यायः । अक्षिगतः २ । इत्य-
मरः । ३ । १ । ४५ ॥ (यथा, महाभारते । ४ । १६ । १८ ।
तिरदृष्टमात्रे पर्य्यवसिता एवं जीवश्च पृथक् । अत्र प्रमाणम् ।
जन्मकर्म्ममरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च ।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्य्ययाच्चैव ॥
इति साङ्ख्यमतम् ॥
तत्रेश्वरः सर्व्वज्ञः परमात्मा एक एव । जीवः प्रतिशरीरं भिन्नः विभुर्नित्यश्च । इति गोतम-मतम् ॥
इह ब्रह्मणो जीवेतरत्वप्रतिपादनात् तयोरद्वैतं नाभिमतम् । नेतरोऽनुपपत्तेर्भेदव्यपदेशाच्च मुक्तोऽप्युपसृप्य
व्यपदेशादाकाशोऽर्थान्तरत्वादि-व्यपदेशाद्भोगमात्रसाम्यलिङ्गाच्चेति सूत्रैर्मोक्षेऽपि तयोर्द्वैतनिरूपणाच्च । इति गोविन्दभाष्य-मतम् ॥
यतो द्वैतमते युक्तिरेव प्रमाणं युक्त्या यत् फलति
तदेव सर्व्वाध्यात्मविद्याप्रतिपादकश्रुतीनां तात्-
पर्य्यम् । इति रामानुजमतञ्च ॥

**द्वैतीयीकः**, त्रि, (द्वितीय + तीयादीकक् । स्वार्थे

वा ईकक् ।) द्वितीयः । यथा, --
त्रि । यथा, "पथि द्वैधानि तृणानि ।" इति
सिद्धान्तकौमुदी ॥)

**द्वैपः**, पुं, (द्वीपिनो विकारः द्वैपम् । द्वीप + "प्राणि-

रजतादिभ्योऽञ् ।" ४ । ३ । १५४ । इति अञ् ।
तेन परिवृतः । "द्वैपवैयाघ्रादञ् ।" ४ । २ ।
१२ । इत्यञ् ।) द्वीपिचर्म्मावृतरथः । इत्यमरः ।
२ । ८ । ५३ ॥ द्वीपसम्बन्धिनि व्याघ्रचर्म्मसम्ब-
न्धिनि च त्रि ॥ (यथा, सुश्रुते चिकित्सित-
स्थाने ९ अध्याये ।
"द्वैपं दग्धं चर्म्म मातङ्गजं वा
भिन्ने स्फोटे तैलयुक्तं प्रलेपः ॥")

**द्वैपायनः**, पुं, (द्वीपं अयनं उत्पत्तिस्थानं यस्य ।

स एव । स्वार्थे प्रज्ञादित्वात् वा अण् ।) व्यासः ।
इति हेमचन्द्रः । ३ । ५११ ॥ (सनिरुक्तिरस्य
जन्मकथा यथा महाभारते । १ । ६३ । ८३ -- ८५ ।
"इति सत्यवती हृष्टा लब्ध्वा वरमनुत्तम् ।
पराशरेण संयुक्ता सद्यो गर्भं सुषाव सा ॥
जज्ञे च यमुनाद्वीपे पाराशर्य्यः स वीर्य्यवान् ।
स मातरमनुज्ञाप्य तपस्येव मनो दधे ॥
स्मृतोऽहं दर्शयिष्यामि कृत्येष्विति च सोऽब्रवीत् ॥
एवं द्वैपायनो जज्ञे सत्यवत्यां पराशरात् ।
न्यस्तो द्वीपे स यद्बालस्तस्माद्द्वैपायनः स्मृतः ॥"

| | | ह्रदविशेषः । अत्र दुर्य्योधनः पाण्डवभयात् आत्मानं स्तम्भयित्वा स्थितः । यथा, महा- भारते । ९ । ३१ । २ ।<br>“आसाद्य च कुरुश्रेष्ठ ! तदा द्वैपायनं ह्रदम् ।<br>स्तम्भितं धार्त्तराष्ट्रेण दृष्ट्वा तं सलिलाशयम् ।<br>वासुदेवमिदं वाक्यमब्रवीत् कुरुनन्दनः ॥”)<br>**द्वैप्यं**, त्रि, (द्वीपे भवम् द्वीपस्य इदम् वा । द्वीप +<br>“द्वीपादनुसमुद्रं यञ् ।” ४ । ३ । १० । इति<br>यञ् ।) द्वीपसम्बन्धि । द्वीपशब्दात् इदमर्थे |
|---|---|---|

ष्ण्यप्रत्ययेन साध्यम् । इति व्याकरणम् ॥ (यथा, माघे । ३ । ७६ ।
“विक्रीय दिश्यानि धनान्युरूणि
द्वैप्यानसावुत्तमलाभभाजः ।
तरीषु तत्रत्यमफल्गुभाण्डं
सांयात्रिकानावपतोऽभ्यनन्दत् ॥”)

**द्वैमातुरः**, पुं, (द्वयोर्मात्रोरपत्यम् । द्विमातृ +
“मातुरुत्संख्यासंभद्रपूर्ब्बायाः ।” ४ । १ । ११५ । इति अण् उत्त्वञ्च ।) गणेशः । इत्यमरः । १ । १ । ४० ॥ (अस्य द्विमातृत्वकथा स्कन्दपुराणे गणेशखण्डे उक्ता यथा, --
“आविर्भविष्ये सदने वरेण्यस्य महीपतेः ।
त्रैलोक्यरक्षणार्थाय विघ्नस्यास्य प्रशान्तये ।
पालनाय स्वभक्तानां साधुत्राणाय भूसुराः ॥
शिव उवाच ।
इत्युक्त्रा पुष्पकागर्भं प्रविवेश तदैव सः ।
आगते नवमे मासि प्रासूत पुष्पका शिशुम् ॥
चतुर्बाहुमिभास्यञ्च दन्तुरं सुन्दरेक्षणम् ।
आयुधानि च चत्वारि बिभ्रतं तेजसान्वितम् ॥
दृष्ट्वा सा क्रन्दनं चक्रेऽरिष्टमेतत् किमागतम् ।
श्रुत्वा चाक्रन्दनं तस्या वरेण्यः सगणो ययौ ॥
ददर्श बालकं सोऽपि विस्मितः सह तैर्गणैः ।
उवाच सेवकान् राजा त्यजतैनं सरोवरे ॥
शिशुमादाय ते याताः पार्श्वस्यैवाश्रमे शुभे ।
कासारे तं शिशुं त्यक्त्रा ययुः सर्वे निजं पुरम् ॥
अपरस्मिन् दिने पार्श्वमुनिः स्नानाय चागतः ।
तदैव ददृशे तेन बालकोऽद्भुतदर्शनः ॥
आश्चर्यमकरोत्तत्र भयभीतस्तथाभवत् ।
आश्रमे केन मे त्यक्तमरिष्टसुखदायिनीम् ॥
तपसा नु फलं दातुमीदृशीं धृतवांस्तनुम् ।
रक्षितुं सर्व्वलोकानां परमात्मा निजेच्छया ॥
सुन्दरो बालकः केन त्यक्तोऽयमीदृशो बहिः ।
नीत्वा स्वमाश्रमं चैनं पालयिष्ये प्रयत्नतः ॥
इत्युक्त्रा जगृहे बालमालिलिङ्ग मुदा मुनिः ।
तमानीतं मुनेः पत्नी ददर्श दीपवत्सला ।
उवाच निजभर्त्तारं सुप्रसन्नाननाम्बुजा ॥
दीपवत्सलोवाच ।
किमानीतं महत् स्वामिन् भृशमाश्चर्यकारकम् ।
इदं वैनायकं रूपं ममाभाति द्विजर्षभ ! ॥

**द्वैमातृकः**, पुं, (द्वे मातृके इव यस्यासौ द्विमातृकः । स एव स्वार्थे अण् ।) नदीवृष्टिजलोद्भूतधान्यभृतो देशः । इति राजनिर्घण्टः ॥

**द्वैषणीया**, स्त्री, (द्वेषणं द्वेषमर्हतीति । छः ।) नागवल्लीभेदः । इति राजनिर्घण्टः ॥

**द्व्यक्षरं**, क्ली, (द्वयोरक्षरयोः समाहारः ।) वर्णद्वयम् । द्वयोरक्षरम् । (द्वे अक्षरेयत्र ।) अक्षरद्वययुक्तशब्दादौ, त्रि ॥ (यथा, भागवते । २ । ९ । ६ ।
“स चिन्तयन् द्व्यक्षरमेकदाम्भस्युपाशृणोत् द्विर्गदितं वचो विभुः ॥”)

**द्व्यङ्गुलं**, त्रि, (द्वे अङ्गुली प्रमाणमस्य । “तत्पुरुषस्याङ्गुलेरिति ।” ५ । ४ । ८६ । इति अच् ।) अङ्गुलिद्वयपरिमितम् । यथा, ज्योतिषतत्त्वे ।
“अकाङ्गुलाथ सूच्यग्रा काष्ठी द्व्यङ्गुलमूलिका ।
शङ्कुच्छाया भवेत्तत्र तच्छायां परिकल्पयेत् ॥”
द्वयोरङ्गुल्योः समाहारः इति वाक्ये अङ्गुलिद्वयमात्रे, क्ली । इति मुग्धबोधम् ॥ (द्वे अङ्गुली यस्य इति विग्रहे । “अङ्गुलेर्दारुणि ।” ५ । ४ । ११४ । इति षच् । द्व्यङ्गुलं दारु ॥ इति व्याकरणम् ॥)

**द्व्यञ्जलं**, त्रि, (द्वावञ्जली परिमाणमस्य (“द्वित्रिभ्यामञ्जलेः ।” ५ । ४ । १०२ । इति टच् ।) अञ्जलिद्वयपरिमितम् । द्वयोरञ्जल्योः समाहारः इति वाक्ये अञ्जलिद्वयमात्रे, क्ली । इति मुग्धबोधम् ॥

**द्व्यणुकं**, क्ली, (द्वौ अणू कारणे यस्य । कप् ।) परमाणुसमवेतद्रव्यम् । परमाणुद्वयात्मकम् । तच्च प्रत्यक्षादिविषयम् । यथा, भाषापरिच्छेदे । ३८ ।
“विषयो द्व्यणुकादिस्तु ब्रह्माण्डान्त उदाहृतः ॥”
तस्य परिमाणमनित्यम् । यथा, --
“अनित्यं द्व्यणुकादौ तु संख्याजन्यमुदाहृतम् ॥”
इति भाषापरिच्छेदे । १११ ॥

**द्व्यन्यः**, त्रि, द्वाभ्यामन्यः इति पञ्चमीतत्पुरुषे कृते । द्विभिन्नः ॥ द्वे अन्येयस्य । इति बहुव्रीहौ । द्विभिन्नकः । द्वयोरन्ययोः समाहारः ।

इदमेव श्रियः स्थानं इदमेव तपःफलम् ।
इदमेव परं ब्रह्म योगिध्येयं सनातनम् ।
इदमेव परं तेज आदित्ये यदधिष्ठितम् ।
इदमेव हि वेदान्ता नेति नेति प्रचक्षते ॥
शिव उवाच ।
इत्युक्त्रा हर्षसम्पन्ना भर्तुरादाय बालकम् ।
स्तनपानं ददौ तस्मै ततः सा दीपवत्सला ।
द्वितीयाचन्द्रवद्बालो वृद्धिं यातो दिने दिने ॥”)
जरासन्धः । इति मेदिनी । रे, २६८ ॥ (अस्य
द्विमातृत्वकारणं जरासन्धशब्दे द्रष्टव्यम् ॥)
द्विमातृजे, त्रि । इति हेमचन्द्रः । ३ । २१० ॥
(यथा, राजतरङ्गिण्याम् । ४ । ३५५ ।
“भिन्नशीला तयोर्भात्रोर्धीर्द्वैमातुरयोःपुनः ॥”)

इति वाक्ये, क्ली ॥

**द्व्यर्थः**, त्रि, (द्वौ अर्थौ यस्य ।) अर्थद्वययुक्त-

शब्दादिः । अस्य प्रमाणं राघवपाण्डवीयादि-
ग्रन्थे द्रष्टव्यम् ॥

**द्व्यष्टं**, क्ली, (हेमरूप्ये द्वे अश्नुते इति । अश +

गत्यर्थेति क्तः । इडभावः ।) ताम्रम् । इत्यमरः ।
२ । ९ । ९७ ॥

**द्व्यहः**, पुं, अहर्द्वयम् । द्व अहनी समाहृते । इति

पुंलिङ्गसंग्रहे भरतः ॥

**द्व्यात्मकः**, पुं, (द्वौ रूपौ आत्मानौ यस्य ।) मिथुन-

कन्याधनुर्मीनराशयः । यथा, ज्योतिस्तत्त्वे ।
“चरस्थिरद्व्यात्मकनामधेया
मेषादयोऽमी क्रमशः प्रदिष्टाः ॥”

**द्व्याहिकः**, त्रि, (द्व्यहे भवः । ठञ् । बाहुलकात्

न ऐच् ।) दिनद्वयभवः । द्व्यहे भव इत्यर्थे
ष्णिकप्रत्ययः ॥

**ध**

**ध**, धकारः । स तवर्गचतुर्थो वर्णो व्यञ्जनोनविंशश्च ।

अस्योच्चारणस्थानं दन्तः । इति व्याकरणम् ॥
(यथा, शिक्षायाम् । १७ ।
“दन्त्या लृतुलसाः स्मृताः ।” इति ॥) अस्य
स्वरूपं यथा, --
“धकारं परमेशानि ! कुण्डली मोक्षरूपिणी ।
आत्मादितत्त्वसंयुक्तं पञ्चदेवमयं सदा ॥
पञ्चप्राणमयं देवि ! त्रिशक्तिसहितं सदा ।
त्रिबिन्दुसहितं वर्णं धकारं हृदि भावय ॥
पीतविद्युल्लताकारं चतुर्व्वर्गप्रदायकम् ॥”
इति कामधेनुतन्त्रम् ॥
“त्रिकोणरूपरेखायां त्रयो देवा वसन्ति च ।
विश्वेश्वरी विश्वमाता वामतः स्कन्धतः स्थिता ॥”
इति वर्णोद्धारतन्त्रम् ॥
अस्य ध्यानं यथा, --
“षड्भुजां मेघवर्णाञ्च रक्ताम्बरधरां पराम् ।
वरदां शोभनां रम्यां चतुर्व्वर्गप्रदायिनीम् ॥
एवं ध्यात्वा धकारन्तु तन्मन्त्रं दशधा जपेत् ॥”
अस्य नामानि यथा --
“धो धनार्थो रुचिः स्थाणुः सात्वतो योगिनीप्रियः ।
मीनेशः शङ्खिनी तोयं नागेशो विश्वपाबनी ॥
धिषणा धरणा चिन्ता नेत्रयुग्मं प्रियो मतिः ।
पीतवासा त्रिवर्णा च धाता धर्म्मप्लवङ्गमः ॥
सन्दर्शो मोहनो लज्जा वज्रतुण्डाधरं धरा ।
वामपादाङ्गुलेर्म्मूलं ज्येष्ठा सुरपुरं भवः ॥
स्पर्शात्मा दीर्घजङ्घा च धनेशो धनमञ्चयः ॥”
इति नानातन्त्रशास्त्रम् ॥

**धं**, क्ली, (दधाति सुखमिति । धा + डः ।) धनम् ।

इति मेदिनी । धे, १ ॥

**धः**, पुं, (दधाति धरति विश्वमिति । धा + डः ।)

ब्रह्मा । (दधाति निधिमिति ।) कुवेरः । (दधाति
जीवानां शुभाशुभमिति ।) धर्म्मः । इति
मेदिनी । धे, १ ॥

**धक्क**, क नाशने । इति कविकल्पद्रुमः ॥ (चुरां-

परं-सकं-सेट् ।) कोपधः । नाशनं नष्टीकर-
णम् । क, घक्कयति पापं गङ्गा । इति दुर्गादासः ॥

**धटः**, पुं, (धं धनं अटति गच्छति प्राप्नोति तोल्य-

त्वेनेति । ध + अट् + अच् । शकन्ध्वादित्वात्

साधुः ।) तुला । इत्यमरः । ३ । ५ । १७ ॥

तराजु इति धाडा इति च भाषा । (एत-

न्निरुक्तिर्यथा, --

“धकाराद्धर्म्ममुद्दिष्टं टकारात् कुटिलं नरम् ।

धृतो धारयसे यस्माद्धटस्तेनाभिधीयते ॥”

इति दिव्यतत्त्वधृतवचनम् ॥)

तुलाराशिः । यथा, च्योतिस्तत्त्वे ।

“सिंहो वृपश्च मषश्च कन्या धन्वी धटो घटः ।

अर्कादीनां त्रिकोणानि मूलानि राशयः

क्रमात् ॥”

तुलापराक्षा । इति परीक्षातत्त्वम् ॥

अस्य विवरणं तुलाशब्दे द्रष्टव्यम् ॥ (धर्म्मः ।
इति विष्णुनारदौ ॥ यथा, --
"अर्च्चयेत्तु धटं पूर्ब्बं ततः शिष्टांश्च पूजयेत्
॥"
इति दिव्यतत्त्वधृतवचनम् ॥)

**धटकः**, पुं, (धटेन तुलया कायतीति । कै + कः ।)

चतुर्द्दशवल्लपरिमाणम् । द्विचत्वारिंशद्रक्तिका ।
इति लीलावती ॥ नन्दिवृक्षः । तत्पर्य्यायो
यथा,
भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ।
"धवो धटो नन्दितरुः स्थिरो गौरो धुरन्धरः
॥"

**धटपरीक्षा**, स्त्री, (धटस्य तुलायाः परीक्षा ।)

तुलापरीक्षा । तत्र धटोत्पत्तिविधिर्य्यथा ।
"पितामहः ।
'छित्वा तु यज्ञियं वृक्षं यूपवन्मन्त्रपूर्ब्बकम् ।
प्रणम्य लोकपालेभ्यस्तुला कार्य्या मनीषिभिः
॥'
यूपवदिति
यूपच्छेदनविहितसर्व्वेतिकर्त्तव्यतातिदेशः । सा च ॐ स्वधिते मैनं हिंसीरितिच्छेदनमन्त्रविशेषादिरूपा इति व्यवहारप्रदीपः ॥
'मन्त्रः सौम्यो वानस्पत्यच्छेदने जप्य एव च
।
चतुरस्रा तुला कार्य्या दृढा ऋज्वी तयैव च ॥
कटकानि च देयानि त्रिषु स्थानेषु चार्थवत् ॥'
कटकानि बलयानि ।
'चतुर्हस्ता तुला कार्य्या पादौ चोपरि तत्समौ
॥'
अत्र साधारणत्वेन शारदातिलकोक्तो हस्तो
ग्राह्यः । यथा, --
'चतुर्विंशत्यङ्गुलाढ्यं हस्तं तन्त्रविदो विदुः ।
यवानामष्टभिः कॢप्तं मानाङ्गुलमितीरितम् ॥'
यवानां तण्डुलीकृतानाम् ।
'यवानां तण्डुलैरेकमङ्गुलं चाष्टभिर्भवेत् ।
अदीर्घयोजितैर्हस्तश्चतुर्व्विंशतिरङ्गुलैः ॥'
इति कालिकापुराणात् ॥
'हस्तद्वयं निखेयन्तु पादयोरुभयोरपि ।'
अत्र हस्तद्वयं मृत्तिकाभ्यन्तरे ।
हस्तचतुष्टयं
मृत्तिकोपरि । तथा, --
'तोरणे च तथा कार्य्ये पार्श्वयोरुभयोरपि
॥
धटादुच्चतरे स्यातां नित्यं दशभिरङ्गुलैः
।
अवलम्बौ च कर्त्तव्यौ
तोरणाभ्यामधोमुखौ ॥
मृण्मयौ सूत्रसम्बद्धौ धटमस्तकचुम्बिनौ
।
प्राङ्मुखो निश्चलः कार्य्यः शुचौ देशे
धटस्तथा ॥'
नारदः ।
'शिक्यद्वयं समासाद्य धटकर्कटयोर्दृढम्
।
एकत्र शिक्ये पुरुषमन्यत्र तुलयेच्छिलाम्
॥'
पितामहः ।
'प्राङ्मुखान् कल्पयेत् दर्भान्
शिक्ययोरुभयोरपि ।
पश्चिमे तोलयेत् कर्त्तृनन्यस्मिन्
मृत्तिकां शुभाम् ॥
पिटकं पूरयेत्तस्मिन् इष्टकाग्रावपांशुभिः
॥'
अत्र मृत्तिकेष्टकाग्रावपांशूनां विकल्पः ।
'परीक्षका
नियोक्तव्यास्तुलामानविशारदाः ।
बणिजो हेमकाराश्च कांस्यकारास्तथैव
च ।
कार्य्यः परीक्षकैर्नित्यमवलम्बसमो धटः
॥
उदकञ्च प्रदातव्यं धटस्योपरि पण्डितैः
।
यस्मिन्न प्लवते तोयं स विज्ञयः समो
धटः ॥
तोलयित्वा नरं पूर्ब्बं पश्चात्तमवतार्य्य तु
।
तथैव निरृतिः श्यामो वायुर्धूम्रः प्रशस्यते ।
ईशानस्तु भवेत् शुक्ल अनन्तः शुक्ल एव
च ॥
ब्रह्मा चैव भवेद्रक्त एवं ध्यायेत् क्रमादिमान्
॥
इन्द्रस्य दक्षिणे पार्श्वे वसूनावाहयेद्बुधः ।
धरो ध्रुवस्तथा सोम आपश्चैवानिलोऽनलः
॥
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः
॥ * ॥
देवेशेशानयोर्मध्ये आदित्यानां तथायनम् ।
धातार्य्यमा च मित्रश्च वरुणोंऽशुर्भगस्तथा
॥
इन्द्रो विवस्वान् पूषा च पर्ज्जन्यो दशमः
स्मृतः ।
ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः
॥
इत्येते द्वादशादित्या मनुना परिकीर्त्तिताः
॥'
अजघन्यो जघन्यजः । इति
विष्णोर्विशेषणम् । * ।
'अग्नेः पश्चिमभागे तु रुद्राणामयनं विदुः ।
वीरभद्रश्च शम्भुश्च गिरिशश्च महायशाः ॥
अजैकपादहिर्ब्रध्नः पिनाकी चापराजितः ।
भुवनाधीश्वरश्चैव कपाली च विशांपतिः ॥
स्थाणुर्भवश्च भगवान् रुद्राश्चैकादश
स्मृताः ॥'
महायशाः विशांपतिर्भगवांश्चेति
विशेषणानि ॥
'प्रेतेशरक्षसोर्मध्ये मातृस्थानं प्रकल्पयेत् ।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही चैव माहेन्द्री चामुण्डा गणसंयुता ॥'
गणसंयुतेति विशेषणम् ॥ * ॥
'निरृतेरुत्तरे भागे गणेशायतनं विदुः ।
वरुणस्योत्तरे भागे मरुतां स्थानमुच्यते ॥
श्वसनः स्पर्शनो वायुरनिलो मारुतस्तथा ।
प्राणः प्राणेशजीवौ च मरुतोऽष्टौ
प्रकीर्त्तिताः ॥
धटस्योत्तरभागे तु दुर्गामावाहयेद्बुधः ।

प्रमाणन्तु पार्श्वेन यवानाम् । 'षड्यवाः पार्श्व-
सन्मिताः ।' इति कात्यायनवचनात् ॥ * ॥
अनयोर्व्यवस्थामाह कापिलपञ्चरात्रम् ।
'अष्टभिस्तैर्भवेज्ज्येष्ठं मध्यमं सप्तभिर्यवैः ।
कन्यसं षड्भिरुद्दिष्टमङ्गुलं मुनिसत्तम ! ॥'
कन्यसं कनिष्ठम् । पादौ स्तम्भौ । उपरि मृत्ति-
कोपरि । तत्समौ चतुर्हस्तावित्यर्थः । वस्तुतस्तु
उपरितत्समौ उपरि तत्समं काष्ठान्तरं ययोः
पादयोस्तौ ॥ * ॥ स्तम्भप्रमाणमाह व्यासः ।
'हस्तद्वयं निखेयन्तु प्रोक्तं मुण्डकयोर्द्वयोः ।
षढस्तन्तु तयोः प्रोक्तं प्रमाणं परिमाणतः ॥'
मुण्डकयोः स्तम्भयोः । षढस्तं निखातहस्त-
द्वयेन समं अर्थान्मृत्तिकोपरि हस्तचतुष्टय-
मित्यर्थः ।
'अन्तरन्तु तयोर्हस्तौ भवेदध्यर्द्धमेव वा ।'
तयोः स्तम्भयोः । हस्तावन्तरं हस्तद्वयपरि-
मितमध्यमित्यर्थः । अध्यर्द्धं सार्द्धहस्तद्वयम् ।
एतत्तु शालवृक्षोद्भवा कार्य्या पञ्चहस्तायता
तुला । इति विष्णूक्तपञ्चहस्तायततुलाविषयम् ।
व्यवहारदीपिकाप्येवम् ॥ * ॥
अथ धटारोपणविधिः । पितामहः ।

धटस्तु कारयेन्नित्यं
पताकाध्वजशोभितम् ॥
तत आवाहयेद्देवान् विधिनानेन मन्त्रवित् ।
वादित्रतूर्य्यघोषैश्च गन्धमाल्यानुलेपनैः ॥
प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततो
वदेत् ॥'
प्राड्विवाकसमाख्या तु पृच्छतीति प्राट् विवेचय-
तीति विवाकः । इति व्यवहारमातृका ॥ * ॥
तथा च बृहस्पतिः ।
'विवादे पृच्छति प्रश्नं प्रतिपन्नं तथैव च ।
प्रियपूर्ब्बं प्राग्वदति प्राड्विवाकस्ततः
स्मृतः ॥'
वस्तुतस्तु प्राड्विवाकसमाख्यामाह
कात्यायनः ।
'व्यवहाराश्रितं प्रश्नं पृच्छति प्राडिति
स्थितिः ।
विवेचयति यस्तस्मिन् प्राड्विवाक इति
स्मृतः ॥'
अभिशस्तं पृच्छतीति प्राट् तदनुरूपं दिव्यं
विविनक्ति इति विवाकः । प्राट् चासौ विवाक-
श्चेति कर्म्मधारयः ॥ * ॥
अस्य काम्यत्वेन नवग्रहपूजामाह
मत्स्यपुराणम् ।
'नवग्रहमखं कृत्वा ततः कर्म्म समारभेत् ।
अन्यथा फलदं पुंसां न काम्यं जायते
क्वचित् ॥'
ततश्च प्राड्विवाकः पूर्ब्बं कार्य्यं पृच्छेत् निवेदि-
तञ्च विवेचयेत् । ततोऽभियुक्तं तोलयित्वा अव-
तार्य्य धर्म्मावाहनादि कुर्य्यात् ।
पितामहः ।
'एह्येहि भगवन् धर्म्म दिव्ये ह्यस्मिन्
समाविश ।

एतासां देवतानाञ्च स्वनाम्ना पूजनं विदुः ॥'
विशेषमाह ब्रह्मपुराणम् ।
'ओङ्कारादिसमायुक्तं
नमस्कारान्तकीर्त्तितम् ।
स्वनाम सर्व्वसत्त्वानां मन्त्र इत्यभिधीयते ॥
अनेनैव विधानेन गन्धपुष्पे निवेदयेत् ।
एकैकस्य प्रकर्त्तव्यं यथोद्दिष्टं क्रमेण तु ॥'
मन्त्र इत्यभिधानादनेनैवेत्येवकारश्रुतेश्च इदं
द्रव्यं ओममुकाय नमः इति योज्यं न तु धर्म्मा-
यार्घ्यं प्रकल्पयामि नमः इति मिताक्षरोक्तम् ।
प्रमाणाभावादनन्वयाच्च । पितामहः ।
'भूषावसानं धर्म्माय दत्त्वा चार्घ्यादिकं
क्रमात् ।
अर्घ्यादि पश्चादङ्गानां भूषान्तमुपकल्पयेत् ॥
गन्धादिकां नैवेद्यान्तां परिचर्य्यां प्रकल्पयेत् ।'
एतत् सर्व्वं प्राड्विवाकः कुर्य्यात् । यथा, --
'प्राड्विवाकस्ततो विप्रो वेदवेदाङ्गपारगः ।
श्रुतव्रतोपपन्नश्च शान्तचित्तो विमत्सरः ॥
सत्यसन्धः शुचिर्दक्षः सर्व्वप्राणिहिते रतः ।
उपोषितः शुद्धवासाः कृतदन्तादिधावनः ॥
सर्व्वासां देवतानाञ्च पूजां कुर्य्याद्यथाविधि ॥'
रक्तगन्धपुष्पादीनाह नारदः ।
'रक्तैर्गन्धैश्च माल्यैश्च धूपदीपाक्षतादिभिः ।
अर्च्चयेत्तु धटं पूर्ब्बं ततः शिष्टांश्च पूजयेत् ॥'
धटं धर्म्मम् । तथा च विष्णुनारदौ ।
'धर्म्मपर्य्यायवचनं धट इत्यभिधीयते ।'
शिष्टानिन्द्रादीन् । अविशेषात् सर्व्वत्र रक्ता-

| | | |
|---|---|---|
| | सहितो लोकपालैश्च<br>वस्वादित्यमरुद्गणैः ॥<br>आवाह्य च धटे धर्म्मं पश्चादङ्गानि विन्यसेत् ॥'<br>अङ्गानि परिवारदेवताः ।<br>'इन्द्रं पूर्ब्बे तु संस्थाप्य प्रेतेशं दक्षिणे तथा ।<br>वरुणं पश्चिमे भागे कुवेरं उत्तरे तथा ॥<br>अग्न्यादिलोकपालांश्चकोणभागेषु विन्यसेत् ॥ * ॥<br>इन्द्रः पीतो यमः श्यामो वरुणः स्फाटिकप्रभः ।<br>कुवेरश्च सुवर्णाभो वह्निश्चापि सुवर्णभः ॥ | |

न्वयः । मिताक्षरायान्तु धर्म्मपूजन एव रक्तत्व-
नियमः । तथा, --
‘चतुर्द्दिक्षु ततो होमः कर्त्तव्यो वेदपारगैः ।
आज्येन हविषा चैव समिद्भिर्होमसाधनैः ॥
सावित्र्या प्रणवेनैव स्वाहान्तेनैव होमयेत् ॥’
सावित्र्या गायत्र्या । तेन प्रणवादिकां गायित्री-
मुच्चार्य्य पुनः स्वाहाकारान्तं प्रणवमुच्चार्य्य
समिदाज्यचरून् प्रत्येकमष्टोत्तरशतं जुहुयादिति
मिताक्षरा । वस्तुतस्तु गायत्रीहोमे योगियाज्ञ-
वष्क्यः ।
‘प्रणवव्याहृतिभ्याञ्च स्वाहान्ते होमकर्म्मणि ।
तेन प्रणवादिकां सव्याहृतिकां गायत्रीमुच्चार्य्य
स्वाहाकारान्तं पुनः प्रणवमुच्चार्य्य आज्य-
पायससमिधो मिलित्वा अष्टोत्तरशतं जुहुयात्
लाघवात् । अतएव दैवतैक्ये हि दधिपयसो-
स्तन्त्रेणानुष्ठानम् । ऐन्द्रं दध्यमावास्यायामैन्द्रं
पयोऽमावास्यायामिति श्राद्धविवेकः ॥ * ॥
यत्तु पञ्चलाङ्गलमहादाने ।
‘पर्ज्जन्यादित्यरुद्रेभ्यः पायसं निर्व्वपेच्चरुम् ।
एकस्मिन्नेव कुण्डे च गुरुर्यस्मै निवेदयेत् ॥
पलाशसमिधस्तद्वदाज्यं कृष्णतिलांस्तथा ॥’
इति मत्स्यपुराणात् ॥
चतुर्णां होतॄणां मध्ये यस्मै गुरुः पर्ज्जन्यादिभ्यो
होमं कुर्व्विति आज्ञां करोति स एव पर्ज्जन्याय
अविप्लुतब्रह्मचर्य्यो गृहस्थाश्रममाचरेत् ॥’ इति ।
प्रायश्चित्तहोमस्तु सामगानां महाव्याहृतिभिः ।
‘यत्र व्याहृतिभिर्होमः प्रायश्चित्तात्मको भवेत् ।
चतस्रस्तत्र कर्त्तव्याः स्त्रीपाणिग्रहणे यथा ॥
अपि वाज्ञातमित्येषा प्राजापत्यापि वाहुतिः ।
होतव्या त्रिर्विकल्पोऽयं प्रायश्चित्तविधिः स्मृतः ॥’
इति छन्दोगपरिशिष्टात् ॥
न तु शाट्यायनहोमो भवदेवभट्टोक्तः । त्रिर्वि-
कल्प इत्यनेन तस्य निरासात् । भट्टनारायणा-
दिभिरप्रमाणीकृतत्वाच्च ॥ * ॥ पितामहः ।
‘तोलयित्वा नरं पूर्ब्बं तस्मात्तमवतार्य्य च ।
प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततो वदेत् ॥
एह्येहि भगवन् धर्म्म ! दिव्ये ह्यस्मिन् समाविश ।
सहितो लोकपालैस्त्वं वस्वादित्यमरुद्गणैः ॥
तच्चार्थमभियुक्तस्य लेखयित्वा तु पत्रके ।
मन्त्रेणानेन सहितं कुर्य्यात्तस्य शिरोगतम् ॥
आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये
धर्म्मोऽपि जानाति नरस्य वृत्तम् ॥
इमं मन्त्रविधिं कृत्स्नं सर्व्वदिव्येषु योजयेत् ।
आवाहनञ्च देवानां तथैव परिकल्पयेत् ॥ * ॥
धटमामन्त्रयेच्चैवं विधिनानेन मन्त्रवित् ।
तदेनं संशयादस्माद्धर्म्मतस्त्रातुमर्हसि ॥
ब्रह्मघ्ना ये स्मृता लोका ये लोकाः कूटसाक्षिणः ।
तुलाधारस्य ते लोकास्तुलां धारयतो मृषा ॥’
समयेन त्वमेव धट इत्यादिनियमेन । धटं गृह्णी-
यात् योजयेत् । तुलाधारकञ्च ब्रह्मघ्ना ये इत्या-
दिना नियमेनेत्यर्थः । अत्र नानामुनिप्रणीत-
मन्त्राणाम् एकतरपाठ्यानां समानप्रयोजनानां
यवब्रीहिवद्विकल्प इति ग्रन्थगौरवात्ते न लिखिताः ।
अभिशस्तप्राड्विवाकपाठ्यानान्तु
दृष्टार्थानां समुच्चयः । पितामहः ।
‘नित्यं देयानि दिव्यानि शुचये चार्द्रवाससे ।’
शुचये जननमरणाशौचरहिताय । क्षतिनं
प्रति याज्ञवल्क्यदीपकलिकायांनारदः ।
‘हस्तक्षतेषु सर्व्वेषु कुर्य्याद्धंसपदानि च ।
तान्येव पुनरालक्षेद्धस्तौ बिन्दुविचित्रितौ ॥’
इत्यग्निविधौ हस्तक्षतिनौ हस्तक्षतमलक्तादिना
चिह्नितं कृत्वा क्षतान्तरं जातं न वा इति
ज्ञातव्यमिति सुतरां क्षतिनो दिव्याधिकारः ।
नारदः ।
‘अहोरात्रीषिते स्नाते आर्द्रवाससि मानवे ।
पूर्ब्बह्णि सर्व्वदिव्यानां प्रदानमनुकीर्त्तितम् ॥’ * ॥
धटानुमन्त्रणात् प्रागपि पुनस्तोल्नमाह कालिकापुराणम् ।
‘उपोषितं तथा स्नातं मृत्समं प्रथमं तुलाम् ।
सन्तोल्य कारयेद्रेखामवतार्य्यानुमन्त्रयेत् ॥’
याज्ञवल्क्यः ।
‘तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः ।
प्रतिमानसमीभूतो रेखां कृत्वावतारितः ॥
त्वं तुले सत्यधामासि पुरा देवैर्विनिर्म्मिता ।

आदित्याय रुद्रेभ्यस्तत्तन्मन्त्रैः पायसं पलाश-
समिदाज्यकृष्णतिलांश्च प्रत्येकं जुहुयादिति
भूपालप्रभृतिभिरुक्तम् । तद्युक्तं तद्वदिति
तथेत्याभ्यां प्रत्येकद्रव्येण होमविधानात् । अत-
एव रत्नाकरकृद्भिश्चरुं जुहुयादित्युक्त्रा तद्वदिति
पलाशादि जुहुयादित्युक्तम् । अतएव वृषोत्-
सर्गे
वाचस्पतिमिश्रप्रभृतिभिरग्न्यादिहोमशेष-
पायसपूषहोमशेषपिष्टकाभ्यां मिलिताभ्यां सकृत्
स्विष्टिकृद्धोमो विहितः । अशक्तौ तु ।
'होमो ग्रहादिपूजायां शतमष्टाधिकं भवेत् ।
अष्टाविंशतिरष्टौ वा शक्त्यपेक्ष्यमथापि वा ॥'
इति देवीपुराणीयादिपददर्शनात् अत्राप्यन्या
सङ्ख्या उन्नेया । एवं मत्स्यपुराणे ।
'शृणु राजन् महाबाहो तडागादिषु यो विधिः ।
वेद्यास्तु परितो गर्त्तारत्निमात्रास्त्रिमेखलाः ॥
नव सप्ताथवा पञ्च योनिवक्त्रा नृपात्मज ।
इति नवादिकुण्डानुक्त्रा, --
'स्वल्पेऽप्येकाग्निमत्कार्य्यो वित्तशाठ्यादृते नृभिः ॥'
इति दर्शनादत्रापि अशक्तावेकाग्निविधिरिति
वदन्ति । अत्र प्राड्विवाकगृह्येणैव होमः ।
'दिव्येषु सर्व्वकार्य्याणि प्राड्विवाकः समाचरेत् ।
अध्वरेषु यथाध्वर्य्युः सोपवासो नृपाज्ञया ॥'
इति मिताक्षराधृतपितामहवचनात्। अध्वर्य्यु-
र्यजमानमात्रम् । न चात्र भिन्नशाखिनामृ-
त्विजां रथकारवद्विद्याप्रयुक्तिकल्पनेति वाच्यम् ।
ब्राह्मणमात्रस्य नानाशाखापाठविधानेन कल्प-

त्वं धटो ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम् ॥
धकाराद्धर्म्ममुद्दिष्टं टकारात् कुटिलं नरम् ।
धृतो धारयसे यस्माद्धटस्तेनाभिधीयते ॥
त्वं वेत्सि सर्व्वभूतानां पापानि सुकृतानि च ।
त्वमेव देव ! जानीषे न विदुर्यानि मानवाः ॥
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ।
तदेनं संशयादस्माद्धर्म्मतस्त्रातुमर्हसि ॥'
* ॥
लेखनप्रकारमाह नन्दिपुराणम् ।
'शुभे नक्षत्रदिवसे शुभे राशिदिनग्रहे ।
लेखयेत् पूज्यदेवेशान् रुद्रब्रह्मजनार्द्दनान् ॥
पूर्ब्बदिग्वदनो भूत्वा लिपिज्ञो लेखकोत्तमः ।
निरोधो हस्तबाह्वोश्च मसीपत्रविधारणे ॥
मत्स्यपुराणञ्च ॥
'शीर्षोपेतान् सुसम्पन्नान् समश्रेणिगतान् समान् ।
अक्षरान् लेखयेद्यस्तु स नरो लेखकः स्मृतः ॥'
इति दानसागरः ॥
धारयसे इत्यत्र भावयसे इति पाठोऽनुपयुक्तः ।
तथा हि । कुटिलं पापिनं संशयोपपन्नं वा ।
आद्ये
पापिनमित्येतावन्मात्राभिधानमनुपपन्नं
ऊद्‌र्ध्वगत्या शुद्धस्यापि ज्ञापनात् द्वितीये पूर्ब्ब-
सिद्धत्वेन ज्ञापनानुपपत्तिः । तस्मात् कुटिलं
व्यवहाराभिशस्तं धारयसे इत्येवार्थः । अतएव
उपसंहारे संशयादस्मादित्युक्तम् । अतएव
कालिकापुराणेऽपि । मानुषस्तोल्यते त्वयीत्युक्त-

तत् सत्यं वद कल्याणि ! संशयान्मां विमोचय ॥
यद्यस्मिन् पापकृन्मातस्ततो मां त्वमधो नय ।
शुद्धश्चेत् गमयोद्‌र्ध्वं मां तुलामित्यभिमन्त्रयेत् ॥'
तुलाधारणाभिज्ञैर्ब्बणिगादिभिः पाषाणादि-
प्रतिमानसमीकृतस्तुलाधिरूढः अभिशस्तो
दिव्याधिकारी । येन सन्निवेशेन प्रतिमानसमी-
करणदशायां यत्र पादादयो व्यवस्थिताः शिक्य-
रज्जवश्च तत्र पाण्डुलेखेनाङ्कयित्वा पिटकादव-
तारितः त्वन्तुलेति मन्त्रेण तुलां प्रार्थयेत् । सत्यं
सन्दिग्धार्थस्य स्वरूपं वद दर्शय । पापकृद-
सत्यवादी शुद्धश्च सत्यवादी । मन्त्रश्चायं स्मार्त्तः
पौराणिकत्वात् शूद्रैरपि पाठ्यः । वेदमन्त्रवर्ज्जं
शूद्रस्येति छन्दोगाह्निकधृतस्मृतौ वेदेति विशे-
षणात् श्राद्धविश्वदेवादौ तु विशेषतो नमस्कार-
मन्त्रविधानात् स्मार्त्तमन्त्रोऽपि निषिद्धः । प्रप-
ञ्चस्तु तिथितत्त्वेऽनुसन्धेयः । स्त्रीपरीक्षायामपि
अविकृत एव प्रयोज्यः । दिव्यानीह विशुद्धये इत्यनेन
सन्दिग्धार्थसन्देहनिवृत्तिफलकतयाविशे-
षेण स्त्रीपुंकर्त्तृकदिव्यविधानेन मानुषः शुद्धि-
मिच्छतीत्यनेन च प्रकृतावूहायोगात् । अतएव
पत्नीं सन्नह्याज्यं नो धेहीति मन्त्रे द्विबहुपत्नीक-
यजमानकर्त्तृकप्रयोगेऽपि न द्विबहुवचनोह
इत्युक्तम् ॥ * ॥ पत्रस्थप्रतिज्ञेयार्थस्य शोध्याय

| | | |
|---|---|---|
| नानुपपत्तेः । तथा च मनुः ।<br>'वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् । | मिति ॥ * ॥<br>स्मृतिसमुच्चयव्यवहारदीपिकयो<br>र्विष्णुः । धटञ्चसमयेन गृह्णीयात्<br>तुलाधारकञ्च ।<br>'धर्म्मपर्य्यायवचनं धट इत्यभिधीयते ।<br>त्वमेव धट जानीषे न विदुर्य्यानि मानवाः ॥<br>व्यवहाराभिशस्तोऽयं मानुषः<br>शुद्धिमिच्छति । | |

तस्य स्वस्य बोधाय श्रावणमाह नारदः
।
‘असुमर्थञ्च पत्रस्थमभियुक्तं यथार्हतः ।
संश्राव्य मूर्द्ध्नि तस्यैव न्यस्य देयो
यथाक्रमम् ॥’
देयो दिव्यविशेषः प्राड्विवाकेनेति शेषः
॥ * ॥
ततः शिरोऽवस्थितपत्रकं शोध्यं नरं धटे
पुन-
रारोपयेत् । पुनरारोपयेत्तस्मिन्
शिरोऽव-
स्थितपत्रकमिति स्मरणात् ।
तुलारोपितञ्च
नरं विनाडीपञ्चककालं
शतत्रयगुर्व्वक्षरोच्चा-
रणयोग्यम् ।
‘मा कान्ते पक्षस्यान्ते पर्य्याकाशे देशे
स्वाप्सीः ।
कान्तं वक्त्रं वृत्तं पूर्णं चन्द्रं मत्वा रात्रौ
चेत् ।
क्षुत्क्षामः प्राटंश्चेतश्चेतो राहुः क्रूरः
प्राद्या-
त्तस्माद्ध्वान्ते हर्म्यस्यान्ते शय्यैकान्ते
कर्त्तव्या ॥’
इति श्लोकस्य पञ्चधा पाठयोग्यकालं
पञ्चपला-
त्मकं यावत् तावत् स्थापयेत् ॥ यथा,
स्मृतिः ।
‘ज्योतिर्विद्ब्राह्मणः श्रेष्ठः कुर्य्यात्
कालपरीक्ष-
णम् ।
विनाड्यः पञ्च विज्ञेयाः
परीक्षाकालकोविदैः ॥’
तत्कालश्च ज्योतिषे ।
‘दशगुर्व्वक्षराः प्राणःषट् प्राणाः
स्याद्विनाडिका ।
तासां षष्ट्या घटी ज्ञेयाहोरात्रं
घटिकास्तथा ॥’
तथा षष्ट्या ॥ * ॥ पितामहः ।

तदयं सङ्क्षेपः । प्राड्विवाको लोकपालादिनम-
स्कारपूर्ब्बकं यथोक्तलक्षणां तुलां कुर्य्यात् ।
ततः षढस्तौ सुदृढौ स्तम्भौ कृत्वा हस्तद्वय-
व्यवधानेन
दक्षिणोत्तरयोर्द्दिशोर्हस्तद्वयनिखननं
कृत्वा पट्टधारकीलकाग्रस्तम्भयोरुपरिमध्ये
पार्श्व-
द्वये च विहितच्छिद्रं मध्यच्छिद्रनिवेशितलोहा-
ङ्कुशपट्टकं निधाय उपरि कीलकस्य
तत्पट्टकस्य
मध्यस्थिताङ्कुशेन
तुलामध्यवलयस्थलौहाङ्कुशं
संयुञ्ज्यात् । एवञ्च मध्ये स्तम्भयोरन्तरा
तिर्य्यक्
तुलादण्डस्तिष्ठति
तुलाग्रस्थिताभ्यामायसकील-
काभ्यां शिक्यद्वयरज्जुबन्धनं कुर्य्यात् ।
तुलायाः
पार्श्वयोः प्राक्प्रत्यक्दिशोस्तोरणस्तम्भौ
तुलातो
दशाङ्गुलोच्छ्रायौ कार्य्यौ तोरणयोरुपरि सूत्र-
सम्बद्धौ मृण्मयावधोमुखौ धटमस्तकचुम्बितौ
अवलम्बौ कार्य्यौ । यथावलम्बविश्लेषाभ्यां
तुला-
यामवनतिरुन्नतिश्च ज्ञेया तथा जलद्वारापि ।”
इति दिव्यतत्त्वम् ॥ * ॥ अस्य
प्रयोगस्तुलाशब्दे
द्रष्टव्यः ॥

**धटी**, स्त्री, (धन + अच् । निपातनात् नस्य टः ।

गौरादित्वात् ङीष् ।) चीरवस्त्रम् । इति मेदिनी
।
टे, १९ ॥ कौपीनम् । इति त्रिकाण्डशेषः ॥

**धटीदानं**, क्ली, (धट्या चीरवस्त्रस्य दानम् ।)

गर्भाधानानन्तरस्त्रीसम्प्रदानकचीरवस्त्रदानम्
।
यथा, ज्योतिःसारसंग्रहे ।
“मूलश्रवणहस्तेषु पुष्यादित्युत्तरासु च ।
मृगपौष्णे धटी देया सौम्यवारे शुभे तिथौ ॥”

तत्पर्य्यायः । द्रव्यम् २ वित्तम् ३
स्वापतेयम् ४
रिक्थम् ५ ऋक्थम् ६ वसु ७ हिरण्यम् ८
द्रविणम् ९ द्युम्नम् १० अर्थः ११ राः १२
विभवः
१३ । इत्यमरः । २ । ९ । ९० ॥ काञ्चनम्
१४
लक्ष्मीः १५ भोग्यम् १६ सम्पत् १७ वृद्धिः
१८
श्रीः १९ व्यवहार्य्यम् २० । इति
राजनिर्घण्टः ॥
रैः २१ भोगः २२ । इति जटाधरः ॥ स्वम्
२३ ।
इति शब्दरत्नावली ॥ तस्य
वैदिकपर्य्यायाः ।
मघम् १ रेक्णः २ रिक्थम् ३ वेदः ४
वरिवः ५
श्वात्रम् ६ रत्नम् ७ रयिः ८ क्षत्रम् ९ भगः
१०
मीलुम् ११ गयः १२ द्युम्नम् १३ इन्द्रियम्
१४
वसु १५ रायः १६ राधः १७ भोजनम्
१८
तना १९ नृम्णम् २० बन्धुः २१ मेधाः
२२ यशः
२३ ब्रह्म २४ द्रविणम् २५ श्रवः २६ वृत्रम्
२७
वृतम् २८ । इत्यष्टाविंशतिरेव धननामानि ।
इति वेदनिघण्टौ २ अध्यायः ॥ * ॥
तत्त्रिविधं यथा, --
“धनन्तु त्रिविधं ज्ञेयं शुक्लं शवलमेव च ।
कृष्णञ्च तस्य विज्ञेयो विभागः सप्तधा
पृथक् ॥
क्रमायत्तं प्रीतिदायं प्राप्तञ्च सह भार्य्यया ।
अविशेषेण सर्व्वेषां वर्णानां त्रिविधं धनम् ॥
वैशेषिकं धनं दृष्टं ब्राह्मणस्य त्रिलक्षणम् ।
याजनाध्यापने नित्यं विशुद्धाच्च प्रतिग्रहः
॥
त्रिविधं क्षत्त्रियस्यापि प्राहुर्व्वैशेषिकं धनम्
।

'साक्षिणो ब्राह्मणाः श्रेष्ठा
यथादृष्टार्थवादिनः ।
ज्ञानिनः शुचयोऽलुब्धा नियोक्तव्या
नृपेण तु ॥
शंसन्ति साक्षिणः सर्व्वे शुद्ध्यशुद्धी नृपे
तथा ।
तुलितो यदि वर्द्धेत स शुद्धः स्यान्न
संशयः ॥
समो वा हीयमानो वा न विशुद्धो
भवेन्नरः ।
अल्पदोषः समो ज्ञेयो बहुदोषस्तु हीयते
॥'
अल्पत्वं व्यभिचारे आलिङ्गनादिना ।
चौर्य्ये
तद्देशगमनादिना ॥ * ॥ तत्र
पुनस्तोलनमाह
बृहस्पतिः ।
'धटेऽभियुक्तस्तुलितो
हीनश्चेद्धानिमाप्नुयात् ।
तत्समस्तु पुनस्तोल्यो वर्द्धितो विजयी
भवेत् ॥'
शोध्यः स्वल्पदोषाङ्गीकारेऽपि
प्रधानदोषनिर्ण-
यार्थं तत्रैव पुनस्तोलनीयः ।
अङ्गवैगुण्यसम्भा-
वनायान्तु प्रयोगान्तरमिति । यदा
चानुपलभ्य-
मानदृष्टकारणक एव कक्षादीनां
छेदनादि-
स्तदाप्यशुद्धिः ।
'कक्षच्छेदे तुलाभङ्गे धटकर्कट्योस्तथा
।
रज्जुच्छेदेऽक्षभङ्गे च
तथैवाशुद्धिमादिशेत् ॥'
इति बृहस्पतिवचनात् ॥
कक्षं शिक्यतलम् । धटकर्कटौ
तुलान्तयोः शिक्या-
धारावीषद्वक्रावायसकीलकौ
कर्कटशृङ्गनिभौ ।
अक्षः पादः ।
स्तम्भयोरुपरिनिविष्टस्तुलाधारः

**धण**, ध्वाने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
अकं-सेट् ।) धणति मृदङ्गः । इति दुर्गादासः ॥

**धत्तूरः**, पुं, (धयति पिबतीव प्रकृतिम् । धे + बाहुल-
कात् उरच् । पृषोदरादित्वात् साधुः ।)
धुस्तूरः ।
इति हेमचन्द्रः । ४ । २१७ ॥ (यथा, काशी-
खण्डे । २९ । ९४ ।
"धर्म्माधर्म्मगुणच्छेत्री धत्तूरकुसुमप्रिया ॥")

**धन**, रवे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-
सेट् ।) धनति मृदङ्गः । इति दुर्गादासः ॥

**धन**, लि र धान्ये । इति कविकल्पद्रुमः ॥ (ह्वां-
परं-अकं-सेट् ।) धान्यमिह धान्यक्रिया । र,
वैदिकः । लि, दधन्ति भूमिर्धान्यमुत्पादयति
इत्यर्थः । इति दुर्गादासः ॥

**धनं**, क्ली, (धनति रौतीति । धन रवे + पचाद्यच् ।)
स्नेहपात्रम् । इति शब्दरत्नावली ॥ गोधनम् ।
इति मेदिमेदीनी । ने, १२ ॥ (यथा, हरिवंशे ।
७३ । ३३ ।
"अनुजग्मुश्च गोपालाः कालयन्तो धनानि च
॥")
जीवनोपायः । (दधन्ति धान्यादिकमुत्पादय-
तीति । धन + अच् । यद्वा, दधाति सुखमिति
।
धा + "कृपृवृजिमन्दिनिधाञः क्युः ।" उणां २
। ८१ ।
इत्यत्र "बाहुलकात् केवलादपि क्युः ।"
इत्युज्ज्वल-
दत्तोक्तेः क्युः ।) द्रविणम् । (यथा, उद्भटे ।
"धनैर्निष्कुलीनाः कुलीना भवन्ति
धनैरापदं मानवा निस्तरन्ति ।
धनेभ्यः परो नास्ति बन्धुर्हि लोके
धनान्यर्जयध्वं धनान्यर्ज्जयध्वम् ॥")

युद्धार्थलब्धं करजं दण्ड्यवध्यापहारतः ॥
वैशेषिकं धनं दृष्टं वैश्यस्यापि त्रिलक्षणम् ।
कृषिगोरक्षबाणिज्यं शूद्रस्यैभ्यस्त्वनुग्रहात्
॥
कुषीदकृषिबाणिज्यं प्रकुर्व्वीत स्वयं कृतम्
।
आपत्काले स्वयं कुर्व्वन्नैनसा युज्यते
द्विजः ॥"
इति गारुडे २१६ कुत्रचित् २१०
अध्यायः ॥ * ॥
धनभागिनो दायशब्दे द्रष्टव्याः ।
धनाभागिनो
यथा, --
"कुब्जवामनखञ्जानां क्लीवानां
श्वित्रिणामपि ।
उन्मत्तानां तथान्धानां धनभागो न विद्यते
॥
शय्यासनस्थानमात्रञ्छायाचान्नं
भुजिक्रिया ।
एतावद्दीयते दैत्य नार्थभागहरा हि ते ॥"
इति वामनपुराणे ७५ अध्यायः ॥ * ॥
अधना यथा, --
"त्रय एवाधना राजन् ! भार्य्या दासस्तथा
सुतः ।
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम्
॥"
इति मात्स्ये ३१ अध्यायः ॥ * ॥
धनस्य प्राणतुल्यत्वमुक्तं यथा, --
"यदेतद्द्रविणं नाम प्राणा एते बहिश्चराः ।
स तस्य हरते प्राणान् यो यस्य हरते धनम्
॥"
इति कूर्म्मे २९ अध्यायः ॥ * ॥
"अपरावाधमक्लेशं प्रयत्नेनार्जितं धनम् ।
स्वल्पं वा वहुलं वापि देयमित्यभिधीयते
॥"
अपरावाधं परपीडारहितम् । अक्लेशं पात्र-
क्लेशाजनकम् ॥ * ॥ तामसधनं यथा, --
"पार्श्विकद्यूतचौर्य्यार्त्तिप्रतिरूपकसाहसैः ।
व्याजेनोपार्जितं यत्तु तत् कृष्णं समुदाहृतम्
॥"
पार्श्विकः पात्रतया योऽर्जयति । आर्त्त्या
पर-

| | | |
|---|---|---|
| पट्ट इति मिताक्षरा ॥ दार्ढ्यप्रयोजकः कीलकः । इति हलायुधः ॥ मध्यकटकमिति पारिजातः ॥ यदा तु दृश्यमानकारणक एवैषां भङ्गस्तदा पुनरारोपयेत् । शिक्यादिच्छेद्भङ्गेषु पुनरा-रोपयेन्नरमिति स्मृतेः । ततश्च । 'ऋत्विक्पुरोहिताचार्य्यान्दक्षिणाभिश्च तोषयेत् । एवं कारयिता राजा भुक्त्वा भोगान् मनोरमान् । महतीं कीर्त्तिमाप्नोति ब्रह्मभूयाय कल्पते ॥' * ॥ | | |

पीडया । प्रतिरूपेण कृत्रिमरत्नादिना । साह-
सेन समुद्रयानगिर्य्यारोहणादिना। व्याजेन
ब्राह्मणवेशेन शूद्रादिना । कृष्णं तामसम् ॥ * ॥
राजसधनं यथा, --
'कुसीदकृषिबाणिज्यशुल्कगानानुवृत्तिभिः।
कृतोपकारादाप्तञ्च राजसं समुदाहृतम् ॥'
अनुवृत्त्या सेवया ॥ * ॥ सात्त्विकधनं यथा, --
'श्रुतशौर्य्यतपःकन्याशिष्ययाज्यान्वयागतम्।
धनं सप्तविधं शुद्धं मुनिभिः समुदाहृतम् ॥'
श्रुतेनाध्ययनेन । शौर्य्येण जयादिना । तपसा
जप-
होमदेवार्च्चादिना । कन्यागतं कन्यया सहागतं
श्वशुरादेर्लब्धम् । शिष्यागतं गुरुदक्षिणादिना ।
याज्यागतं आर्त्विज्यलब्धम् । अन्वयागतं दाया-
देभ्यो लब्धम् । शुद्धं सात्त्विकम् ।" इति शुद्धितत्त्वे
देवलनारदौ ॥ * ॥ धनप्रयोगनक्षत्राणि यथा,
अश्विनी । पुनर्व्वसुः । पुष्यः । उत्तरफल्गुनी ।
हस्ता । पूर्ब्बाषाढा । उत्तराषाढा । श्रवणा ।
धनिष्ठा । शतभिषा । उत्तरभाद्रपत् । रोहिणी ।
इति ज्योतिषम् ॥ * ॥ धनप्रयोगनिषेधो यथा,
"आजं यमद्वन्द्वमहित्रयञ्च
शत्रुद्वयं वातयुगं महेशः ।
कार्य्यो न चैतेषु धनप्रयोगो
मृदौ गणे ग्राह्यमृणं न देयम् ॥"
इति समयप्रदीपः ॥
अर्थप्रशंसा यथा, --
"अर्थेभ्योऽथ प्रवृद्धेभ्यः संवृत्तेभ्यस्त तस्ततः ।
क्रियाः सर्व्वाः प्रवर्त्तन्ते पर्व्वतेभ्य इवापगाः ॥
अर्थेन हि विमुक्तस्य पुरुषस्याल्पचेतसः ।
विच्छिद्यन्ते क्रियाः सर्व्वा ग्रीष्मे कुसरिती यथा ॥
सोऽयमर्थं परित्यज्य सुखकामः सुखैधितः ।
पापमाचरते कर्त्तुं तदा दोषः प्रवर्त्तते ॥
यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः
।
यस्यार्थाः स पुमान् लोके यस्यार्थाः स च
पण्डितः ॥
यस्यार्थाः स च विक्रान्तो यस्यार्थाः स च
बुद्धिमान् ।
यस्यार्थाः स महाबाहुर्यस्यार्थाः स गुणाधिकः ॥
अर्थस्यैते परित्यागे दोषाः प्रव्याहृता मया ।

अनुग्रहार्थं भगवता धनहरणम् । यथा, --
"राजन् यमनुगृह्णामि हरिस्ये तद्धनं शनैः
।
ततोऽधनं त्यजन्त्यस्य स्वजना
दुःखदुःखितम् ॥"
इति श्रीभागवतम् ॥

**धनकेलिः**, पुं, (धनैः केलिः क्रीडा यस्य ।)
कुबेरः । इति त्रिकाण्डशेषः ॥

**धनच्छूः**, स्त्री, (धनं छ्यति नाशयतीति । छो
य लूनौ + बाहुलकात् ऊः ।) करेटुपक्षी
।
इति त्रिकाण्डशेषः ॥

**धनञ्जयः**, पुं, (धनं जयति सम्पादयतीति । जि +
खच् + मुम् । "धनमिच्छेत् हुताशनात्
।"
इत्युक्तेरस्य तथात्वम् ।) अग्निः ।
चित्रकवृक्षः ।
इत्यमरः । १ । १ । ५६ ॥ (धनं जयति
अरीन्
निर्जित्य अर्ज्जयतीति । जि + खच् +
मुम् च ।)
अर्ज्जुनः । (अस्य निरुक्तिर्यथा,
महाभारते ।
४ । ४२ । १३ ।
"सर्व्वान् जनपदान् जित्वा वित्तमाश्रित्य
केवलम् ।
मध्ये धनस्य तिष्ठामि तेनाहुर्मां धनञ्जयम्
॥")
नागभेदः । स तु जलाशयाधिपतिः ।
(यथा,
महाभारते । २ । ९ । ९ ।
"कम्बलाश्वतरौ नागौ धृतराष्ट्रबलाहकौ
।
मणिमान् कुण्डधारश्च कर्कोटकधनञ्जयौ
॥")
देहमारुतः । स च
शरीरवाह्यपञ्चवाय्वन्तर्गतः

आश्रयित्वेनास्त्यस्येति अच् ।
हिमवत एक-
देशः । यथा, महाभारते । १३ । १९ ।
१६ ।
"धनदं समतिक्रम्य हिमवन्तञ्च
पर्व्वतम् ॥"
धनं ददातीति । दा + कः ।) दातरि,
त्रि ।
इति मेदिनी । दे, ३२ ॥ (यथा,
कामन्दकीय-
नीतिसारे । ३ । २३ ।
"उद्वेजयति भूतानिक्रूरवाक् धनदोऽपि
सन् ॥")

**धनदाक्षी**, स्त्री, (धनदस्य कुबेरस्य अक्षि इव
पिङ्गलं पुष्पं यस्याः । षच् समासे ।
स्त्रियां
ङीप् ।) लताकरञ्जः । इति
राजनिर्घण्टः ॥

**धनदानुजः**, पुं, (धनदस्य कुबेरस्य अनुजः
कनिष्ठः ।)
रावणः । इति शब्दरत्नावली ॥ (यथा,
रघुः ।
१२ । ५३ ।
"निग्रहात् स्वसुराप्तानां वधाच्च
धनदानुजः ।
रामेण निहितं मेने पदं दशसु मूर्द्धसु
॥")

**धनदायी**, [न्] पुं, (धनं ददाति उपासकायेति ।
दा + णिनिः । "धनमिच्छेत्
हुताशनात् ।" इति
वचनादेवास्य तथात्वम् ।) अग्निः ।
इति शब्द-
रत्नावली ॥ धनदातरि, त्रि ॥

**धनन्ददा**, स्त्री, (धेन धनेन नन्दं आनन्दं ददा-
तीति । दा + कः ।) बुद्धशक्तिभेदः ।
इति
त्रिकाण्डशेषः ॥

राज्यमुत्सृजता धीर ! येन बुद्धिस्त्वया कृता ॥
यस्यार्था धर्म्मकामार्थास्तस्य सर्व्वं प्रदक्षिणम् ।
अधनेनार्थकामेन नार्थः शक्यो विचिन्वता ॥
हर्षः कामश्च दर्पश्च धर्म्मः क्रोधः शमो दमः ।
अर्थदितानि सर्व्वाणि प्रवर्त्तन्ते नराधिपे ॥
येषां नश्यत्ययं लोकश्चरतां धर्म्मचारिणाम् ।
तेऽर्थास्त्वयि न दृश्यन्ते दुर्दिनेषु यथा ग्रहाः ॥
इति रामायणेयुद्धकाण्डे श्रीरामं प्रति श्रीलक्ष्मण-
वाक्यम् ॥ * ॥
अर्थनिन्दा यथा, --
"अर्थमनर्थं भावय नित्यं
नास्ति ततः सुखलेशः सत्यम् ।
पुत्त्रादपि धनभाजां भीतिः
सर्व्वत्रैषा विहिता नीतिः ॥"
इत्यादि मोहमुद्गरे द्रष्टव्यम् ॥ * ॥

इति मेदिनी । ये, १२० ॥ ("धनञ्जयः
पोषण-
करः ।" इति वेदान्तसारः । ३३ ॥
"न जहाति मृतञ्चापि सर्व्वव्यापी
धनञ्जयः ॥"
इति सुबोधिनी ॥)
"धनञ्जयस्तथा घोषे महारजतवर्णकः ।
ललाटे चोरसि स्कन्धे हृदि नाभौ
त्वगस्थिषु ॥"
इति शारदातिलकटीकायां राघवभट्टः ॥
अर्ज्जुनवृक्षः । इति रत्नमाला ॥ * ॥
(गोत्र-
विशेषः । तद्वंशीये, त्रि । यथा, महाभारते
।
२ । ३३ । ३४ ।
"धनञ्जयानामृषभः सुसामा
सामगोऽभवत् ॥"
विष्णुः । यथा, महाभारते । १३ । १४९
। ८३ ।
"अनिर्द्देश्यवपुर्व्विष्णुर्वीरोऽनन्तो धनञ्जयः
॥"
"यत् दिग्विजये धनं प्रभूतं अजयत्तेन
धनञ्जयः ।
'पाण्डवानां धनञ्जयः ।' इति
भगवद्वचनात् ।"
इति शाङ्करभाष्यम् ॥ षोडशद्वापरस्य
व्यासः ।
यथा, देवीभागवते । १ । ३ । ३० ।
"त्र्य्यारुणिः पञ्चदशे षोडशे तु धनञ्जयः
॥")

**धनदः**, पुं, (धनं दयते पालयतीति । दे ङ पालने
+
"आतोऽनुपसर्गे कः ।" ३ । २ । ३ ।
इति कः ।)
कुबेरः । इत्यमरः । १ । १ । ७२ ॥
(यथा,
देवीभागवते । ५ । ३ । ४० ।
"त्रिविष्टपं ग्रहीष्यामि जित्वेन्द्रं वरुणं
यमम् ।
धनदं पावकञ्चैव चन्द्रसूर्य्यौ विजित्य च
॥"

**धनपतिः**, पुं, (धनानां पतिः ।) कुवेरः । इति
धनञ्जयः ॥ (यथा, महाभारते । २ ।
१२ । ३ ।
"तथा धनपतेर्यक्षा गुह्यका
राक्षसास्तथा ॥")
अस्य उत्पत्तिर्यथा, --
महातपा उवाच ।
"शृणु चान्यां वसुपतेरुत्पत्तिं
पापनाशिनीम् ।
यथा वायुः शरीरस्थो धनदः सम्बभूव
ह ॥
आद्यं शरीरं यत्तस्मिन्
वायुरन्तस्थितोऽभवत् ।
प्रयोजनान्मूर्त्तिमत्त्वमादिशन्
क्षेत्रदेवताः ॥
तत्रामूर्त्तस्य वायोस्तु उत्पत्तिः कीर्त्त्यते
मया ।
तां शृणुष्व महाभाग ! कथ्यमानां
मयानघ ! ॥
ब्रह्मणः सृजतः सृष्टिं
मुखाद्वायुर्विनिर्य्ययौ ।
प्रचण्डशर्करावर्षी तं ब्रह्मा प्रत्यषेधयत्
॥
मूर्त्तो भवस्व शान्तश्च तत्रोक्तो
मूर्त्तिमान् भवन् ।
सर्व्वेषाञ्चैव देवानां यद्वित्तं फलमेव च
॥
तत् सर्व्वं पाहि नोक्तं
तस्माद्धनपतिर्भवेत् ।
तस्य ब्रह्मा ददौ तुष्टस्तिथिमेकादशीं
प्रभुः ॥
तस्यामनग्निपक्वाशीयो भवेन्नियतः
शुचिः ।
तस्यास्तु धनदो देवस्तुष्टः सर्व्वं
प्रयच्छति ॥
एषा धनपतेर्मूर्त्तिः
सर्व्वकिल्विषनाशिनी ।
य एतां शृणुयाद्भक्त्या पुरुषः पठतेऽपि
वा ॥
सर्व्वकाममवाप्नोति स्वर्गलोकञ्च
गच्छति ॥"
इति वराहपुराणम् ॥

| | | |
|---|---|---|
| | ब्रह्मा अस्य तपसा सन्तुष्ट एनं धनेशं चकार ।<br>यथा, अध्यात्मरामायणे । ७ । १ । ३८ ।<br>"ददौ तत्तपसा तुष्टो ब्रह्मा तस्मै वरं शुभम् ।<br>मनोऽभिलषितं तस्य धनेशत्वमखण्डितम् ॥")<br>हिज्जलवृक्षः । इति राजनिर्घण्टः ॥ (धनदः | **धनपिशाचिका**, स्त्री, (धने पिशाचिकेव ।)<br>धनाशा । तत्पर्य्यायः । तृष्णा २ । इति हारा-<br>वली । १२५ ॥<br>**धनपिशाची**, स्त्री, (धने पिशाचीव ।) तृष्णा ।<br>धनलोभः । इति त्रिकाण्डशेषः ॥<br>**धनप्रिया**, स्त्री, (धनवत् प्रिया ।) काकजम्बूः ।<br>इति राजनिर्घण्टः ॥ |

**धनफलं**, क्ली, (धनानां फलम् ।) दानभोगादि ।

यथा, अग्निरुवाच ।
"अग्निहोत्रफला वेदा दत्तभुक्तफलं धनम् ।
रतिपुत्त्रफला दाराः शीलवृत्तफलं श्रुतम् ॥"
इति वह्निपुराणे दानविधिनामाध्यायः ॥

**धनवती**, स्त्री, (धनमस्या अस्तीति । धन + मतुप् ।

मस्य वः । स्त्रियां ङीप् ।)
धनिष्ठानक्षत्रम् ।
इति जटाधरः ॥

**धनवान्**, [त्] त्रि, (धनमस्त्यस्येति । धन +

मतुप् । मस्य वः ।) धनविशिष्टः । धनी । इति
हलायुधः ॥ (यथा, रामायणे । २ । ६७ । १८ ।
"नाराजके जनपदे धनवन्तः सुरक्षिताः ।
शेरते विवृतद्वाराः कृषिगोरक्षजीविनः ॥")

**धनस्यकः**, पुं, गोक्षुरः । इति शब्दचन्द्रिका ॥

(लालसया धनमिच्छतीति । धन + क्यच् ।
"सर्व्वप्रातिपदिकानां क्यचि लालसायां सुग-
मुकौ ।" ३ । १ । ५१ । इत्यस्य वार्त्तिकोक्त्या
सुक् । ततो धनस्य इति नामधातुः + ण्वुल् ।
लालसया धनेच्छौ, त्रि ॥)

**धनहरी**, स्त्री, (धनं हरतीति । हृ + "हरतेर-

नुद्यमनेऽच् ।" ३ । २ । ९ । इति अच् । गौरा-
दित्वात् ङीष् ।) चोरनामगन्धद्रव्यम् । तत्-
आयद्वारेषु सर्व्वेषु धनाध्यक्षसमा नराः ।
व्ययद्वारेषु च तथा कर्त्तव्याः पृथिवीक्षिता ॥"
इति मत्स्यपुराणे १८९ अः ॥

**धनाशा**, स्त्री, (धनानां आशा ।) धनलोभः ।

यथा, विष्णुपुराणे तथा हरिवंशे । ३० । ४६ ।
"जीर्य्यन्ति जीर्य्यतः केशा दन्ता जीर्य्यन्ति जीर्य्यतः ।
धनाशा जीविताशा च जीर्य्यतोऽपि न जीर्य्यति ॥"

**धनाश्रीः**, स्त्री, रागिणीविशेषः । धानसी इति

भाषा । हनूमन्मते श्रीरागस्य तृतीयभार्य्या ।
अस्याजातिः षाडवः । गृहं षड्जस्वरः । गान-
समयः हिमर्त्तौ द्वितीयप्रहरः कस्यचिन्मते
दिवावसानम् । रागमालायामस्या रूपं वियो-
गिनी रमणी रक्तवसना विच्छेदवेदनया दुर्ब्बला
कृशा च एकाकिनी वकुलवृक्षतलोपविष्टा
रुदन्ती । कल्लिनाथमते मेघरागस्य चतुर्थ-
भार्य्या । भरतमते मालकोषपुत्त्रगान्धाररागस्य
पत्नी । इति सङ्गीतशास्त्रम् ॥

**धनिकः**, पुं, (धनिना कायतीति । कै + कः ।)

धन्याकम् । इति मेदिनी । के, १०६ ॥ अस्मि-
न्नर्थे क्लीवमिति राजनिर्घण्टः ॥ (धनमस्त्य-
स्येति । ठन् ।) धवः । इति हेमचन्द्रः ॥

**धनिकः**, त्रि, (धनं अस्त्यस्येति । "अत इनिठनौ ।"

५ । २ । ११५ । इति ठन् ।) साधुः । धनी । इति
मेदिनी । के, १०६ ॥ (यथा, कलाविलासे । १ । १८ ।
"धूर्त्तकरकन्दुकानां वारबधूचरणनूपुरमणीनाम् ।
धनिकगृहोत्पन्नानां मुक्तिर्नास्त्येव मुग्धानाम् ॥"
उत्तमर्णः । यथा, मनुः । ८ । ४७ ।
"अधमर्णार्थसिद्ध्यर्थमुत्तमर्णेन चोदितः ।
दापयेद्धनिकस्यार्थमधमर्णाद्विभावितम् ॥")

**धनिका**, स्त्री, (धनिक + टाप् ।) साधुनारी ।

इति मेदिनी । के, १०६ ॥ बधूः । इति हेम-
चन्द्रः ॥ युवती । इति शब्दरत्नावली ॥ प्रियङ्गु-

**धनी**, [न्] त्रि, (धनमस्त्यस्येति । धन + इनिः ।)

धनवान् । (यथा, देवीभागवते । १ । १५ । १३ ।
"गत्वा च धनिनां कार्य्या स्तुतिः सर्व्वात्मना बुधैः ॥")
तत्पर्य्यायः । इभ्यः २ आढ्यः ३ । इत्यमरः ।
३ । १ । १० ॥ यथा, कूर्म्मपुराणे १२० अः ।
"आढ्यो वा दीक्षितो नाम्ना यवीयानपि यो भवेत् ।
भो भवत्पूर्ब्बकन्त्वेनमभिभाषेत धर्म्मवित् ॥"
"गृहं शरीरं मानुष्यं गुणाढ्यो ह्याढ्य उच्यते ॥"
इति श्रीभागवतम् ॥
(उत्तमर्णः । यथा, मनुः । ८ । ६१ ।
"यादृशा धनिभिः कार्य्या व्यवहारेषु साक्षिणः ।
तादृशान् सम्प्रवक्ष्यामि यथावाच्यमृतञ्च तैः ॥")

**धनीका**, स्त्री, युवती । इति शब्दरत्नावली ॥

**धनीयकं**, क्ली, (धनाय हितम् । धन + छः । संज्ञायां

कन् ।) धन्याकम् । इति शब्दरत्नावली ॥

**धनुः**, पुं, (धनतीति । धन + "भृमृशीतृचरीति ।"

उणां । १ । ७ । इति उः ।) चापः । (यथा,
हितोपदेशे ।
"धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यति ॥")
राशिविशेषः । पियालवृक्षः । इति सिद्धान्त-
कौमुद्यामुणादिवृत्तिः ॥

**धनुः**, [स्] पुं, (धन + "अर्त्तिपृवपीति ।" उणां

पर्य्यायः । राक्षसी २ चण्डा ३ क्षेमः ४ दुष्पत्रः
५ गणहासकः ६ । इत्यमरः । २ । ४ । १२८ ॥
दुष्कुलीनः ७ विरोधः ८ क्रोधमूर्च्छितः ९ ।
इति शब्दरत्नावली ॥ क्षेमकः १० कितवः ११
कोरकः १२ । इति जटाधरः ॥ धनहारके
इनन्तः, त्रि ॥

**धनाधिपः**, पुं, (धनानामधिपः ।) कुवेरः । इत्य-
मरः । १ । १ । ७२ ॥ (यथा, देवीभागवते ।
५ । ७ । १८ ।
"सङ्गरं सम्परित्यज्य गते शक्रे शचीपतौ ।
यमो धनाधिपः पाशी जग्मुः सर्व्वे भयातुराः ॥")
अस्य ध्यानं यथा, --
"कुबेरञ्च प्रवक्ष्यामि कुण्डलाभ्यामलङ्कृतम् ।
हारकेयूररचितं सिताम्बरधरं शुभम् ॥
गदाधरञ्च कर्त्तव्यं वरदं मुकुटान्वितम् ।
वरयुक्तविमानस्थं मेषस्थं वापि कारयेत् ॥
वर्णेन पीतवर्णेन गुह्यकैः परिवारितम् ।
महोदरं महाकायं ऋद्‌ध्यष्टकसमन्वितम् ॥
गुह्यकैर्व्वहुभिर्युक्तं धनव्यग्रकरैस्तथा ॥"
इति मत्स्यपुराणम् ॥

**धनाध्यक्षः**, पुं, (धनानामध्यक्षः ।) कुवेरः । इति
हलायुधः ॥ (यथा, अध्यात्मरामायणे । ७ ।
२ । ४७ ।
"ततः क्रुद्धो दशग्रीवो जगाम धनदालयम् ।
विनिर्जित्य धनाध्यक्षं जहारोत्तमपुष्पकम् ॥")
वृक्षः । इति शब्दचन्द्रिका ॥

**धनिष्ठा**, स्त्री, (अतिशयेन धनवती । धन + इष्ठन्
+ टाप् ।) अश्विन्यादिसप्तविंशतिनक्षत्रान्तर्गत-
त्रयोविंशनक्षत्रम् । तत्पर्य्यायः । श्रविष्ठा २ ।
इत्यमरः । १ । ३ । २२ ॥ वसुदैवता ३ । इति
ज्योतिषम् ॥ भूतिः ४ निधानम् ५ धनवती ६ ।
इति जटाधरः ॥ अस्याः स्वरूपं यथा, --
"मस्तकोपरि समागते धने
मर्द्दलाकृतिनि पञ्चतारके ।
यान्ति कान्तिमति मेषलग्नतः
सारसाक्षिरसघस्रलिप्तिकाः ॥"
इति कालिदासकृतरात्रिलग्ननिरूपणम् ॥
तत्र जातस्य फलम् ।
"आचारजातादरचारुशीलो
धनाधिशाली बलवान् दयालुः ।
यस्य प्रसूतौ च भवेद्धनिष्ठा
महत्प्रतिष्ठासहितो नरः स्यात् ॥"
इति कोष्ठीप्रदीपः ॥
२ । ११८ । इति उसिः स च नित् ।) पियाल-
वृक्षः । धनुर्द्धरे, त्रि । इति मेदिनी । से, २६ ॥

**धनुः**, [स्] क्ली, (धनतीति । धन शब्दे + "अर्त्ति-
पृवपीति ।" उणां २ । ११८ । इनि उसिः स च
नित् ।) शरनिःक्षेपयन्त्रम् । धनुक इति भाषा ।
तत्पर्य्यायः । चापः २ धन्व ३ शरासनम् ४
कोदण्डम् ५ कार्मुकम् ६ इष्वासः ७ । इत्यमरः ।
२ । ८ । ८३ ॥ स्थावरम् ८ गुणी ९ शरावापः
१० तृणता ११ त्रिणता १२ । इति त्रिकाण्ड-
शेषः । अस्त्रम् १३ धनूः १४ । इति जटाधरः ॥
तारकम् १५ काण्डम् १६ । इति शब्दरत्ना-
वली ॥ तस्य लक्षणं यथा, --
"धनुस्तु द्विविधं प्रोक्तं शार्ङ्गं वांशं तथैव च ।
कोमलं वर्णवृढता तयोर्गुण उदाहृतः ॥
सुखसम्पत्तिकरणं सममुष्ट्यायतं धनुः ।
विपदो मुष्टिवैषम्ये तदङ्गे भङ्गमावहेत् ॥"
इति युक्तिकल्पतरुः ॥
धनुर्विद्यारम्भदिनं यथा, --
"शनिभौमबुधान्येषु वारेषु सुतिथौ हरौ ।
प्रबुद्धे चापविद्याया आरम्भः शुभदो मतः ॥"
इति ज्योतिःसारसंग्रहः ॥
विद्यारम्भोक्तनक्षत्राणि तत्र शुभानि ॥
(एतदस्त्रविद्यां ब्रह्मा पृथुनाम्ने महीपतये
प्रथमं दत्तवान् । असौ एव लोकेषु अस्याः
प्रचारमकरोत् । यदुक्तम् वैशम्यायनेन ।
"असिः पूर्ब्बं मया सृष्टो दुष्टनिग्रहकारणात् ।
भवादृशसमीपस्थो लोकान् शिक्षन् चरत्यसौ ॥

| धनाधिकृतः । तहविलदार इति खाजाञ्चि इति<br>च भाषा । तस्य लक्षणं यथा, --<br>“लोहवस्त्राजिनादीनां रत्नानाञ्च विधानवित् ।<br>विज्ञाता फलगुसाराणामनाहार्य्यः शुचिः सदा ।<br>निपुणश्चाप्रमत्तश्च धनाध्यक्षः प्रकीर्त्तितः ॥ | | धनुराद्यायुधव्यक्तौ त्वमेवादिः स्मृतो मया<br>। |
|---|---|---|

तस्मात् शस्त्राणि चास्त्राणि ददानि तव पुत्त्रक ! ॥”
अस्य प्रमाणं यथा, बृहच्छार्ङ्गधरे ।
“चतुर्विंशाङ्गुलो हस्तश्चतुर्हस्तं धनुः स्मृतम् ।
तद्भवेन्मानवं चापं सर्व्वलक्षणसंयुतम् ॥”
तथा आग्नेयधनुर्व्वेदे ।
“चतुर्हस्तं धनुः श्रेष्ठं त्रिभिः सार्द्धैस्तु मध्यमम् ।
कनिष्ठन्तु त्रिभिः प्रोक्तं नित्यमेव पदातिनः ॥”
धनुस्तु शार्ङ्गवांशभेदेन द्विविधम् । यथा, युक्ति-कल्पतरौ ।
“धनुस्तु द्विविधं प्रोक्तं शार्ङ्गं वांशं तथैव च ॥”
एतयोः प्रकारमाह धनुर्व्वेदे ।
“शार्ङ्गिकं त्रिणतं प्रोक्तं वैणवं सर्व्वनामितम् ॥”
शार्ङ्गधनुषः प्रमाणमाह बृहत्-शार्ङ्गधरे ।
“शार्ङ्गं पुनर्धनुर्दिव्यं तद्विष्णोः परमायुधम् ॥
वितस्तिसप्तमं मानं निर्म्मितं विश्वकर्म्मणा ॥
न स्वर्गे न च पाताले न भूमौ कस्यचित् करे ।
तद्धनुर्वशमायाति त्यक्त्वैकं पुरुषोत्तम् ॥
पौरुषेयन्तु यच्छार्ङ्गं बहुवत्सरशोभितम् ।
वितस्तिभिः सार्द्धषड् भिर्निमित्तं धनुषोऽधमम् ॥
प्रायो योज्यं धनुः शार्ङ्गं गजयोधाश्वसादिनाम् ।
रथिनाञ्च पदातीनां वांशं चापं प्रकीर्त्तितम् ॥”
वांशधनुषः प्रमाणमाह तत्रैव ।
“त्रिपर्व्वं पञ्चपर्व्वं वा सप्तपर्व्वं प्रकीर्त्तितम् ।
नवपर्व्वञ्च कोदण्डं चतुर्द्धा शुभकारणम् ॥
चतुष्पर्व्वञ्च षट्पर्व्वं अष्टपर्व्वं विवर्ज्जयेत् ॥”
“अतिजीर्णमपक्वञ्च ज्ञातिघृष्टं तथैव च ।
दग्धं छिद्रं न कर्त्तव्यं वाह्याभ्यन्तरहस्तकम् ॥
गुणहीनं गुणाक्रान्तं वास्तुदोषसमन्वितम् ।
गलग्रन्थिर्न कर्त्तव्या तलमध्ये तथैव च ॥”
“अपक्वं भङ्गमायाति अतिजीर्णन्तु कर्कशम् ।
ज्ञातिघृष्टन्तु सोद्वेगं कलहो बान्धवैः सह ॥
दग्धेन दह्यते वेश्म छिद्रं युद्धविनाशनम् ।
बाह्ये लक्ष्यं न लभ्येत तथैवाभ्यरेऽपि च ॥
हीने तु सन्धिते बाणे संग्रामे भङ्गकारकम् ।
आक्रान्ते च पुनः क्वापि न लक्ष्यं प्राप्यते दृढम् ॥”
“गलग्रन्थितलग्रन्थिधनहानिकरंधनुः ।
एभिर्दोषैर्विनिर्मुक्तं सर्व्वकार्य्यकरं स्मृतम् ॥”
पीतः स्वर्णवर्णो वा पर्व्वतचरः महाशब्दकरः पूर्ब्बदिक्स्वामी दृढाङ्गः रूक्षः क्षत्त्रियवर्णः उष्मः पित्तप्रकृतिरित्यर्थः अल्पसन्तानः अल्प-स्त्रीसङ्गः अग्निराशिः ॥ * ॥ एतद्राशिजात-फलं यथा, “क्रोधी द्रुतवाक् पुण्यमतिः शुचिः प्राज्ञः सुखी सर्व्वलोकालापी च ॥” इति जातकचन्द्रिकादयः ॥ * ॥ अपि च ।
“बहुकलाकुशलः प्रबलो महान्
विमलताकलितः सरलोक्तिभाक् ।
शशधरे हि धनुर्धरगे नरो
धनकरो न करोति धनव्ययम् ॥”
तल्लग्नजातफलं यथा, --
“धनुर्लग्ने समुत्पन्नो नीतिमान् धनवान् सुखी ।
कुलमध्ये प्रधानश्च प्राज्ञः सर्व्वस्य पोषकः ॥”
इति कोष्ठीप्रदीपः ॥

**धनुःपटः**, पुं, (धनुष इव पटो विस्तारो यस्य ।) पियालवृक्षः । इति शब्दचन्द्रिका ॥ (पर्य्यायोऽस्य यथा, --
“पियालस्तु खरस्कन्धश्चारो बहुलवल्कलः ।
राजादनस्तापसेष्टः सन्नकद्रुर्धनुःपटः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**धनुःशाखा**, स्त्री, (धनुरिव शाखा यस्याः ।) मूर्व्वा । इति शब्दचन्द्रिका ॥

**धनुःश्रेणी**, स्त्री, (धनुषः श्रेणीव ।) मूर्व्वा ।
“अवनिमेकरथेन वरूथिना
जितवतः किल तस्य धनुर्भृतः ॥”)

**धनुर्मध्यं**, क्ली, (धनुषो मध्यम् ।) चापमध्यभागः । तत्पर्य्यायः । लस्तकः २ । इत्यमरः । २ । ८ । ८५ ॥

**धनुर्माला**, स्त्री, (धनुषो माला श्रेणीव ।) मूर्व्वा । इति शब्दचन्द्रिका ॥

**धनुर्य्यासः**, पुं, (धनुरिव यासः ।) धन्वयासः । दुरालभा । इत्यमरटीकायां रायमुकुटः ॥ (पर्य्यायोऽस्य यथा, वैद्यकरत्नमालायाम् ।
“यासो यवासो दुस्पर्शो धनुर्य्यासो दुरालभा ॥”)

**धनुर्लता**, स्त्री, (धनुषो लतेव ।) सोमवल्ली । इति राजनिर्घण्टः ॥

**धनुर्वृक्षः**, पुं, (धनुषो वृक्षः ।) धन्वनवृक्षः । (अस्य पर्य्यायो यथा, वैद्यकरत्नमालायाम् ।
“धन्वनः पिच्छिलत्वक् च धनुर्वृक्षश्च धर्म्मणः ॥”)
वंशः । भल्लातकः । अश्वत्थः । इति राज-निर्घण्टः ॥

**धनुर्व्वेदः**, पुं, (धनूंषि उपलक्षणेन धनुरादीन्य-स्त्राणि विद्यन्ते ज्ञायन्तेऽनेनेति । विद + करणे घञ् ।) धनुर्व्विद्याबोधकशास्त्रम् । तत्तु यजु-र्व्वेदस्योपवेदः । इति चरणव्यूहः ॥ (यथा, मधुसूदनप्सरस्वतीकृतप्रस्थानभेदे ।
“यजुर्व्वेदस्योपवेदो धनुर्व्वेदः पादचतुष्टयात्मको विश्वामित्रप्रणीतः । तत्र प्रथमो दीक्षापादः । द्वितीयः संग्रहपादः । तृतीयः सिद्धिपादः । चतुर्थः प्रयोगपादः । तत्र प्रथमे पादे धनुर्लक्षण-मधिकारिनिरूपणञ्च कृतम् । तत्र धनुःशब्दश्चापे रूढोऽपि चतुर्विधायुधवाचको वर्त्तते । तच्च चतु-र्विधम् । मुक्तममुक्तं मुक्तामुक्तं यन्त्रमुक्तञ्च । तत्र

उपलक्षेपकधनुषः प्रकारमाह तत्रैव ।
“उपलक्षेपकं चापं वैणवं तद्द्विरज्जुकम् ।
त्रिहस्तोत्सेधसहितं द्ब्यङ्गुलीविस्तृतं तु तत्
॥”
आसनविशेषः । यथा, हठयोगप्रदीपिका-
याम् । १ । २५ ।
“पादाङ्गुष्ठौ तु पाणिभ्यां गृहीत्वा श्रवणावधि ।
धनुराकर्षणं कुर्य्याद्धनुरासनमुच्यते ॥” * ॥
चतुर्हस्तपरिमाणम् । काठा इति भाषा । यथा,
“चतुर्विंशाङ्गुलो हस्तस्तच्चतुष्कं धनुः स्मृतम्
॥”
इति जलाशयतत्त्वम् ॥
मेषादिद्वादशराश्यन्तर्गतनवमराशिः । तत्-
पर्य्यायः । तौक्षिकः २ । इति दीपिका । अस्य
देवता पूर्ब्बार्द्धमनुष्याकारश्चेषार्द्धाश्वाकारधनु-
र्धारी पुरुषः । स मूलापूर्ब्बाषाढासमुदायोत्त-
राषाढप्रथमपादेन भवति । स च शीर्षोदयः

महेन्द्रवारुणी । इति राजनिर्घण्टः
॥ (यथास्याः
पर्य्यायो वैद्यकरत्नमालायाम् ।
“तेजनी पिलुनी देवा तिक्तवल्ली
पृथक्त्वचा ।
धनुःश्रेणी मधुरसा मूर्व्वा
निर्दहनीति च ॥”)

**धनुर्गुणा**, स्त्री, (धनुषो गुणो यस्याः ।) मूर्व्वा
।

इति शब्दचन्द्रिका ॥
(मूर्व्वाशब्देऽस्या गुणादयो
ज्ञातव्याः ॥)

**धनुर्द्रुमः**, पुं, (धनुषो द्रुमः ।) वंशः । इति
राज-

निर्घण्टः ॥

**धनुर्धरः**, पुं, (धरतीति । धृ + अच् । धनुषो

धरः ।) धनुर्धारी । तिरन्दाज इति
भाषा ।
तत्पर्य्यायः । धन्वी २ धनुष्मान् ३
धानुष्कः ४
निषङ्गी ५ अस्त्री ६ तूणी ७
धनुर्भृत् ८ । इति
हेमचन्द्रः । ३ । ४३५ ॥ (यथा,
महाभारते ।
१ । १३४ । २७ ।
“प्रयतिष्ये तथा कर्त्तुं यथा नान्यो
धनुर्धरः ।
तत्समो भविता लोके सत्यमेतत्
ब्रवीमि ते ॥”
स्वनामख्यातो धृतराष्ट्रस्य
पुत्त्रविशेषः । यथा,
महाभारते । १ । ११७ । ११ ।
“कवची निषङ्गी कुण्डी च
कुण्डधारो धनुर्धरः ॥”)

**धनुर्धारी**, [न्] त्रि, (धनुर्धरतीति । धृ +
णिनिः ।)

धनुर्धरः । तस्य लक्षणं यथा, --
“शूरश्च बलयुक्तश्च
गजाश्वरथकोविदः ।

मुक्तं चक्रादि । अमुक्तं खड्गादि । मुक्तामुक्तं
शल्यावान्तरभेदादि । यन्त्रमुक्तं शरादि । तत्र-
मुक्तमस्त्रमित्युच्यते । अमुक्तं शस्त्रमित्युच्यते ।
तदपि ब्राह्मवैष्णवपाशुपतप्राजापत्याग्नेयादि
भेदादनेकविधम् । एवं साधिदैवतेषु समग्रेषु
चतु-
र्विधायुधेषु येषामधिकारः क्षत्त्रियकुमाराणां
तदनुयायिनाञ्च ते सर्व्वे चतुर्विधाः ।
पदातिरथ-
गजतुरगारूढाः । एवं
दीक्षाभिषेकशाकुनमङ्गल-
करणादिकञ्च सर्व्वमपि प्रथमे पादे निरूपितम्
।
सर्व्वेषामस्त्रशस्त्रविशेषाणां आचार्य्यस्य
लक्षण-
पूर्ब्बकं संग्रहणं संग्रहपादे द्बितीये दर्शितम् ।
गुरुसम्प्रदायसिद्धानां शास्त्रविशेषाणां पुनः
पुन-
रभ्यासो मन्त्रदेवतासिद्धिकरणादिकं तृतीये
पादे ।
एवं देवतार्च्चनाभ्यासादिभिः सिद्धानां अस्त्र-
शस्त्रविशेषाणां प्रयोगश्चतुर्थे पादे निरूपितः
॥”)

**धनुष्करः**, पुं, (धनुः करोतीति । धनुस् + कृ +

“दिवाविभेति ।” ३ । २ । २१ । इति टः ।)
धनुः करे यस्य इति
व्यधिकरणबहुब्रीहिसमासो
वा । धानुष्कः ॥

**धनुष्पटः**, पुं, (धनुष इव पटो विस्तारो यस्य ।)

पियालवृक्षः । इत्यमरः । २ । ४ । ३५ ॥

**धनुष्मान्**, [त्] पुं, (धनुर्विद्यते यस्य । धनुस् +

मतुप् ।) धनुर्धरः । इत्यमरः । २ । ८ । ६९ ॥

| | धनुर्धारी भवेद्राज्ञः सर्व्वक्लेशसहः शुचिः ॥”<br>इति मत्स्यपुराणे १८९ अः ॥<br>**धनुर्भृत्,** पुं, (धनुर्बिभर्त्तीति । भृ + क्विप् ।) धनु-<br>र्धरः । इति हेमचन्द्रः । ३ । ४३५ ॥ (यथा,<br>रघुः । ९ । ११ । | |
|---|---|---|

(यथा, रघुः । ७ । ५६ ।
"रथी निषङ्गी कवची धनुष्मान्
दृप्तः स राजन्यकमेकवीरः ॥")

**धनूः**, स्त्री, (धन धान्ये शब्दे वा + "कृषिचमितनि-
धनीति ।" उणां १ । ८२ । इति ऊः
।) धनुः ।
इति जटाधरः ॥ धान्यसञ्चये धनुषि
च पुं ।
इति संक्षिप्तसारोणादिवृत्तिः ॥

**धनेयकं**, क्ली, धन्याकम् । इत्यमरटीकायां भरतः ॥

**धनेश्वरः**, पुं, (धनानामीश्वरः ।) कुबेरः । इति
हेमचन्द्रः । २ । १०४ ॥ (यथा,
महाभारते ।
१ । २२८ । ३२ ।
"जगृहुः सर्व्वशस्त्राणि स्वानि स्वानि
सुरास्तथा ।
कालदण्डं यमो राजन् ! गदाञ्चैव
धनेश्वरः ॥"
विष्णुः । यथा, तत्रैव । १३ । १४९
। ६३ ।
"वत्सरो वत्सलो वत्सी रत्नगर्भो
धनेश्वरः ॥"
मुग्धबोधप्रणेतुर्वोपदेवस्य गुरुः ।
यदुक्तम् ।
"विद्वद्धनेश्वरच्छात्रो
भिषक्केशवनन्दनः ।
वोपदेवश्चकारेदं विप्रो वेदपदास्पदम्
॥")

**धन्यः**, पुं, (धनाय हितः । धन + यत् ।) अश्वकर्ण-
वृक्षः । इति राजनिर्घण्टः ॥

**धन्यः**, त्रि, (धनाय हितः । धन + यत् ।) पुण्य-
वान् । सुकृती । इत्यमरः । ३ । १ ।
३ ॥
शुभकर्म्मासि धन्यं त्वं नाहं धन्यमुवाच तत् ।
श्रीकृष्णः परमात्मा च धन्यो मान्यश्च
निश्चितम् ॥
धन्योऽसीति मयोक्तश्च दक्षिणाभिः सहेति च ।
इत्युक्तो भगवताप्यत्र कथितं सर्व्वकारणम् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ८७ अः ॥
(धनं लब्धा । धन + "धनगणं लब्धा ।" ४ । ४
।
८४ । इति यत् । धनलब्धा ॥ पुं, धनस्य
निमित्तं
संयोगो उत्पातो वा । "गोद्व्यचोऽसंख्या परि-
माणाश्वादेर्यत् ।" ५ । १ । ३९ । इति यत् ॥)

**धन्यव्रतं**, क्ली, (धन्यं धनजनकं व्रतम् ।) धन-
जनकव्रतविशेषः । कुवेरः पूर्ब्बं शूद्र आसीत्
एतद्व्रतं कृत्वा धनपतिरभूत् । इति वराह-
पुराणम् ॥

**धन्या**, स्त्री, (धन्य + टाप् ।) आमलकी । इति
मेदिनी । ये, ३३ ॥ धन्याकम् । इति हेमचन्द्रः
।
३ । ८३ ॥ मनोः कन्या । इयमेव ध्रुवस्य पत्नी
।
यथा, मत्स्यराणे । ४ । ३८ ।
"धन्या नाम मनोः कन्या ध्रुवाच्छिष्टमजीजनत्
॥")

**धन्याकं**, क्ली, (धन्यते भक्षार्थिभिरिति । धन +
"पिनाकादयश्च ।" उणां ४ । १५ ।
इत्याकप्रत्ययेन
निपातनात् साधुः ।) धनिया इति ख्यातं
शस्यम् ।
तत्पर्य्यायः । छत्रा २ वितुन्नकम् ३ कुस्तुम्बुरु
४ ।
इत्यमरः । २ । ९ । ३८ ॥ धान्यकम् ५
धन्यम् ५
धनिकम् ७ धनीयकम् ८ कुस्तुम्बुरी ९ धान्या-
कम् १० तुम्बुरु ११ धन्या १२ तुम्बुरी १३
धने-
यकम् १४ । इति भरतधृतकोषान्तरम् ॥ धान-
लघुभक्ष्यास्तु लघवो धन्वजा धन्वचारिणः
॥"
इति चरके सूत्रस्थाने २७ अः ॥)

**धन्वं**, क्ली, (धनतीति । धन शब्दे + "उल्वादयश्च ।"
उणां ४ । ९५ । इति वनप्रत्ययेन निपातनात्
साधुः ।) धनुः । इत्यमरटीकायां भरतः ॥
(यथा, महाभारते । ७ । २०० । ४३ ।
"धनुर्धराय देवाय प्रियधन्वाय धन्विने ।
धन्वन्तराय धनुषे धन्वाचार्य्याय ते नमः ॥")

**धन्वङ्गः**, पुं, (धनोर्धनुष इव अङ्गं यस्य ।) धन्वन-
वृक्षः । इति भावप्रकाशः ॥ धामिनी इति
हिन्दी भाषा । तत्पर्य्यायगुणाः ।
"धन्वङ्गस्तु धनुर्वृक्षो गोत्रवृक्षः सुतेजनः ।
धन्वङ्गः कफपित्तास्रकासहृत्तुवरोलघुः ।
वृंहणो बलकृद्रूक्षसन्धिकृद्व्रणरोपणः ॥"
इति भावप्रकाशः ॥
पुस्तकान्तरे धन्वगोऽपि पाठः ॥

**धन्वदुर्गं**, क्ली, (धन्वना निर्जलस्थलेन वेष्टितं
दुर्गम् ।) चतुर्द्दिशं मरुवेष्टितपञ्चयोजनपरि-
मितमनुदकस्थलम् । निर्जलदेशः । इति
महा-
भारते राजधर्म्मः ॥ (यथा, मनुः । ७ । ७० ।
"धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा ।
नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत् पुरम् ॥")

**धन्वनः**, पुं, (धन्वति दृढत्वं गच्छतीति । धन्व गतौ
सौत्रधातुः + ल्युः ।) वृक्षविशेषः । इति रत्न-
माला ॥ धामनि इति भाषा । (यथा, रामा-
यणे । २ । ९४ । ९ ।
"वदर्य्यामलकैर्नीपैर्वेत्रधन्वनबीजकैः ॥")
तत्पर्य्यायः । रक्तकुसुमः २ धनुवृक्षः ३ महा-
बलः ४ रुजासहः ५ पिच्छिलकः ६
रुक्षस्वादु-
फलः ७ । अस्य गुणाः । कटुत्वम् ।
उष्णत्वम् ।
कषायत्वम् । कफनाशित्वम् ।
दाहशोषकरत्वम् ।
ग्राहित्वम् । कण्ठामयशमनत्वञ्च । इति राज-

"स्वनामा पुरुषो धन्यः पितृनामा च मध्यमः ।
अधमो भ्रातृनामा च मातृनामाधमाधमः ॥"
इति गोयीचन्द्रधृतपद्यम् ॥
धन्यत्वकथनं यथा, --
सनत्कुमार उवाच ।
"विस्तीर्णबालुकामध्ये कच्छपः शतयोजनः ।
भीतश्च कम्पितस्तत्र दृष्टो दुःखी च शुष्कितः ॥
निःसारितो राघवेण मीनेन च महात्मना ।
धन्योऽसीति मयोक्तश्च नाहं धन्य उवाच सः ॥
क्षीरोदसागरो धन्यो जन्तवो यत्र मद्विधाः ।
भवान् धन्योऽसि क्षीरोद ! तेनोक्तो नाहमेव च ॥
धन्या वसुन्धरा देवी यत्रैव सप्त सागराः ।
धन्यासि वसुधेत्युक्ता नाहमेवेत्युवाच सा ॥
धन्योऽनन्तो ममाधारः कृष्णांशो नागराड्विभुः ।
धन्योऽसीत्युक्तः परमो धन्यो नाहमुवाच सः ॥
धन्यश्च भगवान् ब्रह्मा विधाता जगतामपि ।
धन्योऽसि तत्र धाता च धन्यो नाहमुवाच सः ॥
धन्यो महेश्वरो देवो योगीन्द्राणां गुरोर्गुरुः ।
धन्योऽसीत्युक्तः शम्भुश्च धन्यो नाहमुवाच सः ॥
धन्यो गणेश्वरो देवो देवानां प्रवरः परः ।
देवेषु धन्यो मान्योऽसीत्युक्तो गणपतिर्मया ॥
नाहं धन्यो मुनिश्रेष्ठ ! सस्मितश्चेत्युवाच सः ।

कम् १५ धान्यम् १६ धानेयम् १७ धनिका १८
छत्राधान्यम् १९ सुगन्धि २० शाकयोग्यम् २१ सूक्ष्मपत्रम् २२ जनप्रियम् २३ धान्यबीजम् २४
वीजधान्यम् २५ वेधकम् २६ । इति राज-निर्घण्टः ॥ कुलटी २७ धेनिका २८ धन्यकम् २९ धाना ३० धानेयकम् ३१ । इति भावप्रकाशः ॥
अस्य गुणाः । मधुरत्वम् । शीतत्वम् । कषा-यत्वम् ।
पित्तज्वरकासतृषाच्छर्द्दिकफनाशित्वम् ।
दीपनत्वञ्च । इति राजनिर्घण्टः ॥ स्निग्धत्वम् ।
वृष्यत्वम् । मूत्रलत्वम् । लघुत्वम् । तिक्तत्वम् । कटुत्वम् । वीर्य्यकारित्वम् । पाचनत्वन् । रोच-नत्वम् । ग्राहित्वम् । स्वादुपाकित्वम् । त्रिदोष-दाहश्वासामार्शःकृमिनाशित्वञ्च ॥
"आर्द्रन्तु तद्गुणं स्वादु विशेषात् पित्तनाशनम् ॥"
इति भावप्रकाशः ॥
"शिलायां साधु संपिष्टं धान्यकं वस्त्रगालितम् ।
शर्करोदकसंमिश्रं कर्पूरादिसुसंस्कृतम् ॥
नवीने मृण्मये पात्रे स्थितं पित्तहरं परम् ॥"
राजनिर्घण्टः ॥

**धन्व**, [न्] क्ली, (धन्व्यते गम्यते दुर्गमादिस्थले-ऽनेनेति । धन्व गतौ सौत्रो धातुः + कनिन् ।) धनुः । (धन्व्यते गम्यतेऽत्र इति ।) स्थलम् । इति मेदिनी । ने, ७८ ॥ (यथा, --
"चरोऽनूपजलाकाशधन्वाद्योभक्षसंविधिः ।
जलजानूपजाश्चैव जलानूपचराश्च ये ॥
गुरुभक्ष्याश्च ये सत्त्वाः सर्व्वे ते गुरवः स्मृताः ।
निर्घण्टः ॥ (फले, क्ली । यथा, महाभारते । ३ । १११ । १३ ।
"करूषकाणीङ्गुदधन्वनानि
पिप्पलानां कामकारं कुरुष्व ॥")

**धन्वन्तरिः**, पुं, (धनुरुपलक्षणत्वात् शल्यादि-चिकित्साशास्त्रं तस्य अन्तं ऋच्छतीति । ऋ गतौ + "अच इः ।" उणां ४ । १३८ । इति
इः ।) देववैद्यः । स भगवदवतारः । यथा, --
"धन्वन्तरिश्च भगवान् स्वयमेव कीर्त्ति-र्नाम्ना नृणां पुरुरुजां रुज आशु हन्ति ।
यज्ञे च भागममृतायुरवावरुन्ध
आयुष्यवेदमनुशास्त्यवतीर्य्य लोके ॥
स वै भगवतः साक्षात् विष्णोरंशांशसम्भवः ।
धन्वन्तरिरिति ख्यात आयुर्व्वेददृगिज्यभाक् ॥"
इति श्रीभागवतम् ॥ * ॥
"नारायणांशो भगवान् स्वयं धन्वन्तरिर्महान् ।
पुरा समुद्रमथने समुत्तस्थौ महोदधेः ॥
सर्व्ववेदेषु निष्णातो मन्त्रतन्त्रविशारदः ।
शिष्यो हि वैनतेयस्य शङ्करस्योपशिष्यकः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ५१ अध्यायः ॥

| | | |
|---|---|---|
| धन्या वेदाश्च चत्वारः कर्म्माणि यद्व्यवस्थया ॥<br>तस्माद्धन्याश्च ते वेदा गच्छ तत्र मनीषिणः ।<br>यूयं धन्याश्च मान्याश्चेत्युक्ता वेदा मया ततः ॥<br>ऊचुस्ते न वयं धन्या यज्ञसंघश्च साम्प्रतम् ।<br>वयं व्यवस्थाकर्त्तारो यज्ञौघः फलदः स्वयम् ।<br>तस्माद्धन्यः स एवापि गच्छ गच्छ महामुने ! ॥<br>धन्योऽमि यज्ञसं घोऽसीत्युक्तस्तत्र मया विभो ! ।<br>ऊचुस्ते न वयं धत्या घन्यं कर्म्म शुभं मुने ! ॥ | | |

अन्यच्च । “काशस्य काशिराजः तस्य दीर्घ-
तमाः पुत्त्रोऽभूत् । धन्वन्तरिस्तु दीर्घतमसोऽ-
भूत् । न हि संसिद्धकार्य्यकारणः सकल-
सम्भूतिष्वशेषज्ञानवित् । भगवता नारायणेन
चातीतसम्भूतौ तस्मै वरो दत्तः । काशिराज-
गोत्रेऽवतीर्य्य त्वमष्टधा सम्यगायुर्व्वेदं
करिष्यसि ।
यज्ञभाक् त्वं भविष्यसीति । तस्य च
धन्वन्तरेः
पुत्त्रः केतुमान् केतुमतो भीमरथः । तस्यापि
दिवोदासः ।” इति विष्णुपुराणम् । ४ । ८ ।
२-५ ॥ * ॥
अस्यार्थः । “संसिद्धकार्य्यकारणः
जरादिरहित-
देहेन्द्रियः । संयतदेहेन्द्रिय इति वा । सकल-
सम्भूतिषु सर्व्वेष्वपि जन्मसु । अशेषज्ञानवित्
सर्व्व-
शास्त्रवित् । अतीतसम्भूतौ क्षीराब्धौ जन्मनि
।
अष्टधा अष्टाङ्गमायुर्व्वेदम् तदुक्तं लघुवाग्भटे ।
कायबालग्रहोद्ध्वाङ्गशल्यदंष्ट्राजराविषम् ।
अष्टावङ्गानि तस्याहुश्चिकित्सा येषु
संस्थितेति ।”
इति तट्टीकायां स्वामी ॥ * ॥ दिवोदासः ।
इति त्रिकाण्डशेषः ॥ (धन्वन्तरिप्रादुर्भावो
यथा,
“एकदा देवराजस्य दृष्टिर्निपतिता भुवि ।
तत्र तेन नरा दृष्टा व्याधिभिर्भृशपीडिताः ॥
तान् दृष्ट्वा हृदयन्तस्य दयया परिपीडितम् ।
दयार्द्रहृदयः शक्रो धन्वन्तरिमुवाच ह ॥
धन्वन्तरे ! सुरश्रेष्ठ ! भगवन् ! किञ्चिदुच्यते ।
योग्यो भवसि भूतानामुपकारपरो भव ॥
उपकाराय लोकानां केन किन्न कृतं पुरा ।
त्रैलोक्याधिपतिर्व्विष्णुरभून्मत्स्यादिरूपवान् ॥
तस्मात्त्वं पृथिवीं याहि काशीमध्ये नृपो भव ।
प्रतीकाराय रोगाणामायुर्व्वेदं प्रकाशय ॥
इत्युक्त्वा सुरशाद्‌र्दूलः सर्व्वभूतहितेप्सया ।
समस्तमायुषो वेदं धन्वन्तरिमुपादिशत् ॥
अधीत्य चायुषो वेदमिन्द्राद्धन्वन्तरिः पुरा ।
आगत्य पृथिवीं काश्याञ्जातो बाहुजवेश्मनि ।

**धन्वयवासः**, पुं, (धन्वदेशोद्भवो यवासः ।) दुरा-

लभा । इत्यमरटीकायां भरतः
॥ (दुरालभा-
शब्देऽस्य विवरणं ज्ञातव्यम् ॥)

**धन्वयवासकः**, पुं, (धन्वयवास + स्वार्थे कन् ।)

दुरालभा । इति राजनिर्घण्टः ॥

**धन्वयासः**, पुं, (धन्वदेशोद्भवो यासः यवासः ।)

दुरालभा । इत्यमरः । २ । ४ ।
९१ ॥

**धन्वा**, [न्] पुं, (धन्वति जलाभावं गच्छतीति ।

धन्व + “कनिन् युवृषीति ।”
उणां १ । १५६ ।
इति कनिन् ।) मरुदेशः ।
इत्यमरः । २ । १ । ५ ॥
(यथा, ऋग्वेदे । ६ । ३४ । ४ ।
“जनं न धन्वन्नभि सं यदापः
सत्रा वावृधुर्हव-
नानि यज्ञैः ॥”
अन्तरिक्षम् । लक्षणात्
उदकमपि । यथा,
ऋग्वेदे । १ । १६८ । ५ ।
“धन्वच्युत इषां न यामनि
पुरुप्रैषा अहन्यो-
नैतशः ॥”
“धन्वच्युतो न
धन्वन्शब्दोऽन्तरिक्षस्यवचनः
तेन तत्स्थमुदकं लक्ष्यते
उदकस्राविणो मेघा
इव ।” इति तद्भाष्ये सायनः ॥)

**धन्वी**, [न्] त्रि, (धनुश्चापोऽस्त्यस्येति । व्रीह्या-

दित्वात् इनिः ।) धनुर्धरः ।
इत्यमरः । २ ।
८ । ६९ ॥ (यथा, कुमारे । ३ ।
१० ।
(अस्य पर्य्यायो यथा, --
“नलः पोटगलः शून्यमध्यश्च धमनस्तथा ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
धमतीति । धम + ल्युः ।) भस्त्राध्मापके क्रूरे
च त्रि । इति मेदिनी । ने, ७८ ॥

**धमनिः**, स्त्री, (धम्यते इति । धम + “अर्त्ति-

शृधृधमीति ।” उणां २ । १०३ । इति अनिः ।)
धमनी । इति शब्दरत्नावली ॥ (यथा, अथर्व्व-
वेदे । ६ । ९० । २ ।
“यास्ते शतं धमनयोऽङ्गान्यनु विष्ठिताः ॥”
प्रह्लादभ्रातुर्ह्लादस्य पत्नी । सा तु वातापे-
रिल्वलस्य च जननी । यथा, भागवते । ६ ।
१८ । १५ ।
“ह्रादस्य धमनिर्भार्य्यासूत वातापिरिल्वलम् ॥”
धमतिर्गतिकर्म्मा । गत्यर्था बुद्ध्यर्थाः । गम्यते
ज्ञायतेऽर्थोऽनया । ज्ञायते वा विद्वद्भिः साध्व-
साधुविभागेन । यद्वा, ‘धमति’ इति वधकर्म्म-
स्वपि पठ्यते धमति हन्त्यनया शापाक्रोशादि-
रूपयेति । वाक् । शब्दः । इति निघण्टुः ।
१ । ११ ॥ यथा, ऋग्वेदे । २ । ११ । ८ ।
“दूरे पारे वाणीं वर्धयन्त
इन्द्रेषितां धमनिं पप्रथन्नि ॥”)

**धमनी**, स्त्री, (धमनि + वा ङीष् ।) नाडी ।

(यथा, महाभारते । १२ । २१४ । १७ ।
“दश विद्यात् धमन्योऽत्र पञ्चेन्द्रियगुणावहाः ।
याभिः सूक्ष्माः प्रजायन्ते धमन्योऽन्याः सह-
स्रशः ॥”
यथा, --
“ओजोवहाः शरीरे वा विधम्यन्ते समन्ततः ।
येनौजसा वर्त्तयन्ति प्रीणिताः सर्व्वदेहिनः ॥
यदृते सर्व्वभूतानां जीवितं नावतिष्ठते ।
यत्सारमादौ गर्भस्य यौऽसौ गर्भरसाद्रसः ॥
संवर्त्तमानं हृदयं समाविशति यत् पुरा ।
यस्य नाशान्न नाशोऽस्ति धारि यद्धृदयाश्रितम् ॥
यच्छरीरबलं देहः प्राणा यत्र प्रतिष्ठिताः ।
तत्फला विविधा वाताः फलन्तीति महाफलाः ॥
ध्मानाद्धमन्यः स्रवणात् स्रोतांसि सरणात्
सिराः ॥”

नाम्ना तु सोऽभवत् ख्यातो दिवोदास इति क्षितौ ।
बाल एव विरक्तोऽभूच्चचार सुमहत्तपः ॥
यत्नेन महता ब्रह्मा तं काश्यामकरोन्नृपम् ।
ततो धन्वन्तरिर्लोकैः काशीराजोऽभिधीयते ॥
हिताय देहिनां स्वीया संहिता विहितामुना ।
अयं विद्यार्थिनो लोकान् संहितान्ताम-
पाठयत् ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
विक्रमादित्यराजस्य
नवरत्नान्तर्गतरत्नविशेषः ।
यथा, --
“धन्वन्तरिक्षपणकामरसिंहशङ्कु-
वेतालभट्टघटकर्प्परकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य ॥”
इति नवरत्नम् ॥
(धनोर्धनुर्वेदस्य अन्तमृच्छतीति । महादेवः ।
यथा, महाभारते । १३ । १७ । १०३ ।
“धन्वन्तरिर्धूमकेतुः स्कन्दो वैश्रवणस्तथा ॥”)

**धन्वन्तरिग्रस्ता**, स्त्री, (धन्वन्तरिणा ग्रस्ता ।)

कटुकी । इति शब्दचन्द्रिका ॥

“कुर्य्यां हरस्यापि पिनाकपाणे-
र्धैर्य्यच्युतिं के मम धन्विनोऽन्ये ॥”)
विदग्धः । इति विश्वः ॥

**धन्वी**, [न्] पुं, (धन्वमस्त्यस्येति । धन्व + इनिः ।)

दुरालभा । अर्ज्जुनवृक्षः ।
(अस्य पर्य्यायो
यथा, --
“धन्वी धनञ्जयः पार्थो नदीजः
ककुभोऽर्ज्जुनः ।”
इति वैद्यकरत्नमालायाम् ॥)
वकुलः । इति राजनिर्घण्टः ॥
पार्थः । इति
विश्वः ॥ (विष्णुः । यथा,
महाभारते । १३ ।
१४९ । २२ ।
“ईश्वरो विक्रमो धन्वी मेधावी
विक्रमः क्रमः ॥”
महादेवः । यथा, तत्रैव । १३ ।
१७ । ४२ ।
“कमण्डलुधरो धन्वी
बाणहस्तः कपालवान् ॥”
तामसमनोः पुत्त्रविशेषः ।
यथा, हरिवंशे ।
७ । २४ ।
“तपोरतिरकल्माषस्तन्वी
धन्वी परन्तपः ।
तामसस्य मनोरेते दश पुत्त्रा
महाबलाः ॥”)

**धम**, ध्माने । ध्वाने । इति कविकल्पद्रुमः ॥ (भ्वां-

परं-अकं-सेट् ।) धमति ।
सौत्रधातुरयम् ।
इति दुर्गादासः ॥

**धमः**, त्रि, (धमतीति । धम + अच् ।) अग्नि-

संयोगकर्त्ता । शब्दकर्त्ता । इति
धमधातोः
पचादित्वादन्प्रत्ययेन साध्यः
॥

इति चरके सूत्रस्थाने त्रिंशेऽध्याये ॥
“चतुर्व्विंशतिर्धमन्यो नाभिप्रभवा अभिहिताः ।
तत्र केचिदाहुः सिरा धमनी स्रोतसामविभागः
सिराषिकारा एव धमन्यः स्रोतांसि चेति ।
तत्तु न सम्यक् । अन्या एव हि धमन्यः स्रोतांसि
च सिराभ्यः कस्याद्‌व्यञ्जनान्यत्वान्मूलसन्नियमात्
कर्म्मवैशेष्यादागमाच्च केवलन्तु परस्परसन्नि-
कर्षात् सदृशागमकर्म्मत्वात् सौक्ष्म्याच्च विभक्त-
कर्म्मणामप्यविभाग इव कर्म्मसु भवति ॥
तासान्तु नाभिप्रभवानां धमनीनामूर्द्ध्वगा दश-
दश चाधोगामिन्यश्चतस्रस्तिर्य्यग्गाः । ऊर्द्ध्वगाः
शब्दस्पर्शरूपरसगन्धप्रश्वासोच्छ्वासजृम्भितक्षुद्ध
सितक्षुधितरुदितादीन्विशेषानभिवहन्त्यः शरीरं
धारयन्ति । तास्तु हृदयमभिप्रपन्नास्त्रिधा

| | | |
|---|---|---|
| | **धमकः**, पुं, (धमतीति । ध्मा शब्दाग्निसंयोगयोः + "घ्मो धम च ।" उणां २ । ३५ । इति क्वुन् धमादेशश्च ।) कर्म्मकारः । इत्युणादिकोषः ॥<br>**धमनः**, पुं, (धम्यतेऽग्निरनेनेति । धम + करणे ल्युट् ।) नलः । इत्यमरः । २ । ४ । १६२ ॥ | |

जायन्ते तास्त्रिंशत् । तासान्तु वातपित्तकफ-
शोणितरसान् द्वे द्वे वहतस्ता दश शब्दरूपरस-
गन्धानष्टाभिर्गृह्णीते । द्वाभ्यां भाषते च द्वाभ्यां
घोषं करोति द्वाभ्यां स्वपिति द्वाभ्यां प्रतिबुध्यते
द्वे चाश्रुवाहिन्यौ । द्वे स्तन्यं स्त्रिया वहतः
स्तनसंश्रिते । ते एव शुक्रं नरस्य स्तनाभ्यामभि-
वहतः । तास्त्वेतास्त्रिंशत् सविभागा व्याख्याता
एताभिरूर्द्ध्वं नामेरुदरपार्श्वपृष्ठोरःस्कन्धग्रीवा-
बाहवो धार्य्यन्ते याप्यन्ते च ॥”
“अधोगमास्तु वातमूत्रपुरीषशुक्रार्त्तवादीन्यधो
वहन्ति । तास्तु पित्ताशयमभिप्रतिपन्नास्तत्रस्थ-
मेवान्नपानरसं विपक्वमौष्ण्याद्विवेचयन्त्योऽभि-
वहन्त्यः शरीरं तर्पयन्त्यर्पयन्ति चोद्‌र्ध्वगतानां
तिर्य्यग्गतानां रसस्थानञ्चाभिपूरयन्तिमूत्रपुरीष-
स्वेदांश्च विरेचयन्त्यामपक्वाशयान्तरेच त्रिधा
जायन्ते तास्त्रिंशत् । तासान्तु वातपित्तकफ-
शोणितरसान् द्वे द्वे वहतस्ता दश द्वे अन्न-
वाहिन्यावन्त्राश्रिते तोयवहे द्वे मूत्रवस्तिमभि-
प्रपन्ने मूत्रवहे द्वे शुक्रवहे द्वे शुक्रप्रादुर्भावाय
द्वे विसर्गाय ते एव रक्तमभिवहतो नारीणा-
मार्त्तवसंज्ञम् । द्वेवर्च्चो निरसन्यौ स्थूलान्त्रप्रति-
बद्धे । अष्टावन्यास्तिर्य्यग्गानां धमनीनां स्वेदमर्प-
यन्ति । तास्त्वेतास्त्रिंशत् स विभागा व्याख्याता
एताभिरधोनाभेः पक्वाशयकटीमूत्रपुरीषगुद-
वस्तिमेढ्रसक्थीनि धार्य्यन्ते याप्यन्ते च ॥”
“तिर्य्यग्गानान्तु चतसृणां धमनीनामेकैका शतधा
सहस्रधा चोत्तरोत्तरं विभन्वन्ते तास्त्वसंख्येया-
स्ताभिरिदं शरीरं गवाक्षितं विबद्धमाततञ्च ।
तासां मुखानि रोमकूपप्रतिबद्धानि यैः स्वेद-
मभिवहन्ति रसञ्चापि सन्तर्पयन्त्यन्तर्बहिश्च
तैरेव चाभ्यङ्गपरिषेकावगाहालेपनवीर्य्याण्यन्तः
शरीरमभिप्रतिपद्यन्ते त्वचि विपक्वानि तैरेव
स्पर्शसुखमसुखं वा गृह्णाति । तास्त्वेताश्चतस्रो
धमन्यः सर्व्वाङ्गगताः सविभागा व्याख्याताः ॥”
इति सुश्रुते शरीरस्थाने नवमेऽध्याये ॥ * ॥)
हट्टविलासिनी । इत्यमरः ॥ हरिद्रा । ग्रीवा ।
इति हेमचन्द्रः । ३ । २९५ ॥ पृश्निपर्णी । इति
राजनिर्घण्टः ॥ नलिका । इति भावप्रकाशः ॥

**धम्मिल्लः**, पुं, (धमतीति । धम + विच् । मिल-
मेदिनी । रे, ४८ ॥ (यथा, हरिवंशे । ३
। ३९ ।
“आपो ध्रुवश्च सोमश्च
धरश्चैवानिलानलौ ।
प्रत्यूषश्च प्रभासश्च वसवो नामभिः
स्मृताः ॥”
महादेवः । यथा, महाभारते । १३ ।
१७ । १०३ ।
“धाता शक्रश्च विष्णुश्च मित्रस्त्वष्टा
ध्रुवो धरः ॥”
विष्णुः । श्रीकृष्णः । यथा, तत्रैव । ६ ।
६३ । ३३ ।
“सर्व्वशोकमयो नित्यः शास्ता धाता
धरो ध्रुवः ॥”
धारके, त्रि ॥ यथा, काकपक्षधरः ॥)

**धरणं**, क्ली, (धरतीति । धृ + ल्युः ।) मानभेदः
।
स तु चतुर्विंशतिरक्तिकारूपः । इति
लीला-
वती ॥ पलदशमांशः । इति वैद्यकम् ॥
(“अथ
मध्यमनिष्पावा वा
एकोनविंशतिर्धरणम् ॥”
इति सुश्रुते चिकित्सितस्थाने ३१ अः
॥
धृ + ल्युट् ।) धारणम् । इति मेदिनी ।
णे, ५४ ॥
(यथा, कुमारे । १ । १७ ।
“यज्ञाङ्गयोनित्वमवेक्ष्य यस्य
सारं धरित्रीधरणक्षमञ्च ॥”)

**धरणः**, पुं, (धृ + ल्युः ।) अद्रिपतिः । लोकः ।
स्तनः । धान्यम् । दिवाकरः । इति
हेमचन्द्रः ॥
सेतुः । इति त्रिकाण्डशेषः ॥
(वैद्यकमानविशेषः ।
यथा, पूर्ब्बखण्डे प्रथमेऽध्याये
शार्ङ्गधरेणोक्तम् ।
“माषैश्चतुर्भिः शाणः स्याद्धरणः
सनिगद्यते ॥”)

“देवानचोदयद् ब्रह्मा निग्रहार्थं सुरद्विषाम्
।
नरञ्चैव पुराणर्षिं शेषञ्च धरणीधरम् ॥”)

**धरणीपूरः**, पुं, (धरणीं पूरयति प्लावयतीति ।
पूर + अण् ।) समुद्रः । इति
शब्दरत्नावली ॥

**धरणीप्लवः**, पुं, (प्लु + भावे अप् । धरण्याः
पृथिव्याः प्लवः प्लावो यस्मात् ।) समुद्रः
। इति
त्रिकाण्डशेषः ॥

**धरणीश्वरः**, पुं, (धरण्या ईश्वरः ।) शिवः । इति
शब्दरत्नावली ॥

**धरणीसुता**, स्त्री, (धरण्याः सुता ।) सीता ।
इति हेमचन्द्रः । ३ । ३६७ ॥
(एतदुत्पत्तिकथा
यथा, कालिकापुराणे ३७ अध्याये ।
“नारदस्योपदेशेन यज्ञभूमिं ततो नृपः ।
हलेन दारयामास यज्ञवाटावधि स्वयम् ॥
तद्भूमिजातसीतायां शुभां कन्यां
समुत्थिताम् ।
लेभे राजा मुदा युक्तः सर्व्वलक्षणसंयुताम्
॥
तस्यान्तु जातमात्रायां पृथिव्यन्तर्हिता
स्वयम् ।
जगाद वचनञ्चेदं गौतमं नारदं नृपम् ॥
पृथिव्युवाच ।
एषा सुता मया दत्ता तव राजन् ! मनोहरा
।
एनां गृहाण सुभगां कुलद्वयशुभावहाम् ॥”)

**धरा**, स्त्री, (धरति जीवसंधानिति । धृ + अच् ।
यद्वा, ध्रियते शेषेण इति । धृ + अप् । टाप्
।)
पृथिवी । इत्यमरः । २ । १ । २ ॥ (यथा,
देवी-
भागवते । ३ । १३ । ८ ।

तीति । मिल + कः । पृषोदरादित्वात् साधुः ।
ततः कर्म्मधारयः ।) संयताः कचाः । इत्य-
मरः । २ । ६ । ९७ ॥ खोपा इति भाषा ।
कुसुम-
गर्भो मौक्तिकपद्मरागलतिकादिनाबहिःसंयतो
बद्धः केशकलापः । इति भरतः ॥ (यथा, गीत-
गोविन्दे । २ । २१ ।
"साकूतस्मितमाकुलाकुलगलद्धम्मिल्लमुल्लासित-
भ्रूवल्लीकमलीकदर्शितभुजाबालार्द्धहस्तस्तनम्
॥")

**धरः**, पुं, (धरति पृथिवीमिति । धृ + अच् ।)
पर्व्वतः । (यथा, माघे । ४ । १८ ।
"उत्कं धरं द्रष्टुमवेक्ष्य शौरिम्
उत्कन्धरंदारुक इत्युवाच ॥")
कार्पासतूलकः । कूर्म्मराजः । वसुभेदः । इति

**धरणिः**, स्त्री, (धरति जीवादीनिति । धृ + "अर्त्ति-
सृधृधमीति ।" उणां २ । १०३ । इति
इनिः ।)
पृथिवी । इत्यमरः । २ । १ । २ ॥
(यथा,
महाभारते । १२ । ३४२ । ४ ।
"ज्योतिधरणिवायुरहिते अन्धे
जलैकार्णवेलोके ॥")

**धरणिधरः**, पुं, (धरतीति । धृ + अच् । धरण्याः
धरः ।) विष्णुः । इति हलायुधः ॥
(कच्छपः ।
पर्व्वतः । शेषः । इति
व्युत्पत्तिलब्धोऽर्थः ॥)

**धरणी**, स्त्री, (धरणि + वा ङीष् ।) पृथिवी ।
इति मेदिनी । णे, ५४ ॥ (यथा,
विष्णुपुराणे ।
१ । ९ । १४१ ।
"यदा तु भार्गवो
रामस्तदाभूद्धरणीत्वियम् ॥")
शाल्मलिवृक्षः । इति शब्दचन्द्रिका ॥
नाडी ।
कन्दविशेषः । तत्पर्य्यायः । धारणीया
२ धीर-
पत्री ३ सुकन्दकः ४ कन्दालुः ५
वनकन्दः ६
कन्दाढ्यः ७ दण्डकन्दकः ८ । अस्या
गुणः ।
मधुरत्वम् ।
कफपित्तामयरक्तदोषकुष्ठकण्डूति-
नाशित्वञ्च । इति राजनिर्घण्टः ॥

**धरणीकन्दः**, पुं, (धरणी एव कन्दः ।) धरणी-
नाममूलविशेषः । इति राजनिर्घण्टः ॥

**धरणीकीलकः**, पुं, (धरण्याः पृथिव्याः कीलकः
इव ।) पर्व्वतः । इति शब्दरत्नावली ॥

**धरणीधरः**, पुं, (धरण्या धरः ।) विष्णुः । इति
हेमचन्द्रः । २ । १३१ ॥ (यथा,
महाभारते ।
१३ । १४९ । ३८ ।
"धारणाच्च धरा प्रोक्ता पृथ्वी
विस्तारयोगतः ॥")
गर्भाशयः । मेदः । इति मेदिनी । रे, ४९
॥
नाडी । इति राजनिर्घण्टः ॥
महादानविशेषः ।
तद्यथा, --
"अथातः संप्रवक्ष्यामि धरादानमनुत्तमम्
।
पापक्षयकरं नृणाममङ्गल्यविनाशनम् ॥
कारयेत् पृथिवीं हैमीं
जम्बुद्वीपानुकारिणीम् ।
मर्य्यादापर्व्वतवतीं मध्ये मेरुसमन्विताम्
॥
लोकपालाष्टकोपेतां नववर्षसमाचिताम् ।
नदीनदशतीपेतां सप्तसागरवेष्टिताम् ॥
महारत्नसमाकीर्णां वसुरुद्रार्कसंयुताम् ।
हेम्नः पलसहस्रेण तदर्द्धेनाथ शक्तितः ।
शतत्रयेण वा कुर्य्यात् द्विशतेन शतेन वा ।
कुर्य्यात् पञ्चपलादूर्द्ध्वमशक्तोऽपि
विचक्षणः ॥
तुलापुरुषवत् कुर्य्याल्लोकेशावाहनं बुधः ।
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम्
॥
वेद्यां कृष्णाजिनं कृत्वा तिलानुपरि
विन्यसेत् ।
तथाष्टादशधान्यनि रसाश्च लवणादयः ॥
तथाष्टौ पूर्णकलसान् समन्तात्
परिकल्पयेत् ।
वितानकञ्च कौशेयं फलानि विविधानि च
॥
तथांशुकानि रम्याणि श्रीखण्डशकलानि
च ।
इत्येवं रचयित्वा तामधिवासनपूर्ब्बकम् ॥
शुक्लमाल्याम्बरधरः शुक्लाभरणभूषितः
।
प्रदक्षिणं ततः कृत्वा गृहीतकुसुमाञ्जलिः
॥
पुण्यं कालमथासाद्य मन्त्रान्ते तानुदीरयेत्
।
नमस्ते सर्व्वदेवानां त्वमेव भवनं यतः ॥

|  | “अहः सम्बर्त्तको वह्निरनिलो धरणीधरः ॥”) कच्छपः । इति राजनिर्घण्टः ॥ पर्व्वतः । यथा, “यो जातो धरणीधरेन्द्रतनयानाथाङ्घ्रिपाथोरुहासक्तः ।” इत्यादिगोपीनाथतर्काचार्य्यः ॥ (पृथिवी-धारके, त्रि । यथा, हरिवंशे । ५३ । ६८ । | धात्री च सर्व्वभूतानामतः पाहि वसुन्धरे ! । |
|---|---|---|

वसून् धारयसे यस्माद्वसुधातीव निर्म्मला ॥
वसुन्धरा ततो जाता तस्मात् पाहि भवार्णवात् ।
चतुर्मुखोऽपि नागच्छेत्तस्माद्यत्र तवाचले ॥
अनन्तायै नमस्तस्मात् पाहि संसारकर्द्दमात् ।
त्वमेव लक्ष्मीर्गोविन्दे शिवे गौरीति संस्थिता ॥
गायत्री ब्रह्मणः पार्श्वे ज्योत्स्ना चन्द्रे रवौ प्रभा ।
बुद्धिर्बृहस्पतौ ख्याता मेधा मुनिषु संस्थिता ॥
विश्वं व्याप्य स्थिता यस्मात्ततो विश्वम्भरा स्थिता ।
धृतिः क्षमा स्थिरा क्षौणी पृथ्वी वसुमती रसा ॥
एताभिर्मर्त्तिभिः पाहि देवि ! संसारकर्द्दमात् ।
एवमुच्चार्य्य तां देवीं ब्राह्मणेभ्यो निवेदयेत् ॥
धरार्द्धं वा चतुर्भागं गुरवे प्रतिपादयेत् ।
शेषञ्चैवाथ ऋत्विग्भ्यः प्रणिपत्य विसर्ज्जयेत् ॥
अनेन विधिना यस्तु दद्याद्देवीं धरां बुधः ।
पुण्यकाले तु संप्राप्ते स पदं याति वैष्णवम् ॥
विमानेनार्कवर्णेन किङ्किणीजालमालिना ।
नारायणपुरं गत्वा कल्पत्रयमथो वसेत् ॥
पितृपुत्त्रप्रपौत्रांश्च तारयेदेकविंशतिम् ॥
इति पठति य इत्थं यः शृणोतीह नित्यं
गतकलुषविमानैर्मुक्तदेहः समन्तात् ।
दिवममरबधूभिर्याति संप्रार्थ्यमानः
पुरममरसहस्रैः सेवितं चन्द्रमौलेः ॥”
इति मत्स्यपुराणे २५८ अः ॥

“स्वमूर्त्तिलाभप्रकृतिं धरित्रीं
लतेव सीता सहसा जगाम ॥”)

**धरिमा**, [न्] पुं, (ध्रियते दर्शनेन्द्रियेणेति । धृ +

“हृभृधृसृस्तृशृभ्य इमनिच् ।” उणां ४ । १४७ ।
इति इमनिच् ।) रूपम् । इत्युणादिकोषः ॥
तुला । यथा, मनुः । ८ । ३२१ ।
“तथा धरिममेयानां शतादभ्यधिके वधः ॥”

**धरुणः**, पुं, (धरतीति । धृ + बाहुलकात् उनन् ।

“धृञ् धारणे । हेतुमति च इति णिच् । धारे-
र्णिलुक् क्युन्प्रत्ययः । धारयति जगत् ।” इति
देवराजयज्वा । १ । १२ । २४ ।) ब्रह्मा । स्वर्गः ।
नीरम् । (निघण्टुमते, क्ली । यथा, ऋग्वेदे ।
१० । ५ । ६ ।
“पथां विसर्गे धरुणेषु तस्थौ ॥”)
सम्मतम् । इति मेदिनी । णे, ५५ ॥
(अग्निः ।
यथा, वाजसनेयसंहितायाम् । ८ । ५१ ।
“उपसृजन्धरुणं मात्रे धरुणो मातरं धयन् ॥”
धारके, त्रि । यथा, ऋग्वेदे । १० । १११ । ४ ।
“दाधार यो धरुणं सत्यताता ॥”
“सत्ये द्युलोके धरुणं धारकं बलं दाधार अधार-
यत् ।” इति तद्भाष्ये सायनः ॥)

**धर्त्तव्यं**, त्रि, धृधातोःकर्म्मणि तव्यप्रत्ययेन साध्यम् ।

धारणीयम् । स्थातव्यम् । पतनीयम् ।
भावे, क्ली ॥

**धर्त्रं**, क्ली, (धरति ध्रियते वा । धृ + “गृधृवी-

“अङ्गुष्ठाद्दक्षिणाद्दक्षः प्रजापतिरजायत् ।
धर्म्मस्तनान्तादभवत् हृदयात् कुसुमायुधः ॥”)
तस्य भार्य्या दक्षस्य त्रयोदशकन्याः । तस्य
चतुर्द्दशापत्यानि यथा । पत्न्यां श्रद्धायां ऋतम्
१ मैत्र्यां प्रसादः २ दयायां अभयम् ३ शान्त्यां
सुखम् ४ तुष्ट्यां मुत् ५ पुष्ट्यां गर्व्वः ६ क्रियायां
योगः ७ उन्नतौ दर्पः ८ बुद्ध्यां अर्थः ९ मेधायां
स्मृतिः १० मूर्त्यां नरनारायणौ ११ । १२
तितिक्षायां क्षेमम् १३ ह्रीसंज्ञायां प्रच्छ्रयः १४ ।
इति श्रीभागवतम् ॥ * ॥ अपि च ।
“श्रद्धा लक्ष्मीर्धृतिस्तुष्टिः पुष्टिर्मेधा तथा क्रिया ।
बुद्धिर्लज्जा वपुः शान्तिः सिद्धिः कीर्त्तिस्त्रयोदशी ।
पत्न्यर्थं प्रतिजग्राह धर्म्मो दाक्षायणीः प्रभुः ॥”
विष्णुपुराणमते सिद्धिस्थाने ऋद्धिरन्यत् तुल्यम् ॥
तासामपत्यानि यथा, --
“श्रद्धा कामञ्च श्रीर्दर्पं नियमं धृतिरात्मजम् ।
सन्तोषञ्च तथा तुष्टिर्लोभं पुष्टिरसूयत ॥
मेधा श्रुतं क्रिया दण्डं नयं विनयमेव च ।
बोधं बुद्धिस्तथा लज्जा विनयं वपुरात्मजम् ॥
व्यवसायं प्रजज्ञे वै क्षेमं शान्तिरसूयत ।
सुखं सिद्धिर्यशः कीर्त्तिरित्येते धर्म्मसूनवः ॥
कामो नन्दी सुतं हर्षं धर्म्मपौत्त्रमसूयत ॥” * ॥
अधर्म्मवंशो यथा, मार्कण्डेयपुराणे ।
“हिंसा भार्य्या त्वधर्म्मस्य तस्यां जज्ञे तथानृतम् ।
कन्या च निकृतिस्ताभ्यां सुतौ द्वौ नरकं भयम् ॥
माया च वेदना चैव मिथुनं द्वयमेतयोः ।
भयाज्जज्ञेऽथ वै माया मृत्युं भूतापहारिणम् ॥
वेदना स्वसुतञ्चापि दुःखं जज्ञेऽथ रौरवात् ।
मृत्योर्व्याधिर्जराशोकतृष्णाः क्रोधश्च जज्ञिरे ॥
दुःखोत्तराः स्मृता ह्येते सर्व्वे चाधर्म्मलक्षणाः ।
नैषां भार्य्यास्ति पुत्त्रो वा सर्व्वे ते ह्यूर्द्ध्वरेतसः ॥”
धर्म्मोत्पत्तिर्यथा, वराहपुराणे ।
“अथोत्पत्तिं प्रवक्ष्यामि धर्म्मस्य महतो नृप ! ।
माहात्म्यञ्च तिथिञ्चैव तन्निबोध नराधिप ! ।
सर्व्वं ब्रह्माव्ययः शुद्धपरादपरसंज्ञितः ।

**धराकदम्बः**, पुं, (धरायां वर्षाकाले जातः कदम्बः ।)

धाराकदम्बवृक्षः । इति हारावली ।
१७७ ॥

**धरात्मजः**, पुं, (धराया आत्मजः ।) मङ्गलग्रहः ।

इति हेमचन्द्रः ॥ (नरकासुरः । इति
कालिका-
पुराणे ३७ अध्यायः ॥ स्त्रियां टाप् ।
सीता ॥)

**धराधरः**, पुं, (धरायाः धरो धारकः ।) विष्णुः ।

(यथा, महाभारते । १३ । १४९ । ९३
।
"सुमेधा मेधजो धन्यः सत्यमेधा
धराधरः ॥"
"अङ्गैरशेषैः शेषाद्यैरशेषां धरां धरतीति
धरा-
धरः ।" इति शाङ्करभाष्यम् ॥) पर्व्वतः ।
इति
मेदिनी । रे, २६९ ॥ (यथा, हरिवंशे ।
२०४ ।
२१ ।
"चराचराश्च वसुधा धातारश्च
धराधराः ॥"
धराया उद्धारकर्त्तरि, त्रि । यथा,
भागवते ।
४ । १७ । ३५ ।
"स वीरमूर्त्तिः समभूद्धराधरो
यो मां पयस्युग्रशरो जिघांससि ॥")

**धरामरः**, पुं, (धरायाः पृथिव्या अमरो देवः ।)

ब्राह्मणः । यथा, --
"यैर्न श्रुतं भागवतं पुराणं
नाराधितो यैः पुरुषः पुराणः ।
मुखे हुतं यैर्न धरामराणां
तेषां वृथा जन्म नराधमानाम् ॥"
इति पौराणिकाः ॥

**धरित्री**, स्त्री, (धरति जीवजातमिति ध्रियते

शेषेण वा । धृ + "अशित्रादिभ्य इत्रोत्रौ
।"
पचीति ।" उणां ४ । १६६ । इति त्रः ।)
गृहम् ।
इत्युणादिकोषः ॥ क्रतुः । धर्म्मः । इति
संक्षिप्त-
सारोणादिवृत्तिः ॥ (धारके, त्रि । यथा,
वाज-
सनेयसंहितायाम् । १ । १८ ।
"धर्त्रमसिदिवं दृंहब्रह्मवनि वधाय ।"
"हे कपाल ! त्वं धर्त्रं धारकमसि ।" इति
वेद-
दीपः ॥)

**धर्म्मः**, पुं क्ली, (धरति लोकान् ध्रियते पुण्यात्मभि-

रिति वा । धृ + "अर्त्तिस्तुहुस्रिति ।"
उणां
१ । १३९ । इति मन् ।) शुभादृष्टम् ।
(यथा,
हितोदेशे । १ । ५९ ।
"एक एव सुहृद्धर्म्मो निधनेऽप्यनुयाति यः
।
शरीरेण समं नाशं सर्व्वमन्यत्तु गच्छति
॥")
तत्पर्य्यायः । पुण्यम् २ श्रेयः ३ सुकृतम्
४ वृषः ५ ।
इत्यमरः । १ । ४ । २४ ॥ न्यायः ।
स्वभावः । आचारः ।
उपमा । क्रतुः । (यथा, महाभारते । १४
। ८८ । २१ ।
"कृत्वा प्रवर्ग्यं धर्म्माख्यं यथावत्
द्विजसत्तमाः ।
चक्रुस्ते विधिवद्राजंस्तथैवाभिषवं द्विजाः
॥")
अहिंसा । उपनिषत् । इति मेदिनी । से,
१६ ।
दानादिके, क्ली । इति हेमचन्द्रः ॥
(यथा,
योगसारे ।
"प्राणायामस्तथा ध्यानं प्रत्याहारोऽथ
धारणा ।
स्मरणञ्चैव योगेऽस्मिन् पञ्च धर्म्माः प्रकी-
र्त्तिताः ॥")

स सिसृक्षुः प्रजास्त्वादौ पालनञ्च व्यचिन्तयत् ॥
तस्य चिन्तयतस्त्वङ्गाद्दक्षिणाच्छ्वेतकुण्डलः ।
प्रादुर्बभूव पुरुषः श्वेतमाल्यानुलेपनः ।
तं दृष्ट्वोवाच भगवांश्चतुष्पात् स्यात् कृते युगे ।
त्रेतायां त्रिपदश्चासौ द्विपदो द्वापरेऽभवत् ॥
कलावेकेन पादेन प्रजाः पालयते प्रभुः ।
षड्गेहो ब्राह्मणानां स त्रिधा क्षत्त्रे व्यवस्थितः ॥
द्विधा विश्येकधा शूद्रे स्थितः सर्व्वगतः प्रभुः ।
गुणद्रव्यक्रियाजातिचतुष्पादःप्रकीर्त्तितः ॥
त्रिशृङ्गोऽसौ स्मतो वेदे ससंहितपदक्रमः ।
तथा आद्यन्त ओङ्कारद्विशिराः सप्तहस्तवान्
उदात्तादित्रिभिर्बद्ध एवं धर्म्मो व्यवस्थितः ॥
ब्रह्मोवाच ।
अद्यप्रभृति ते धर्म्म । तिथिरस्तु त्रयोदशी ॥
यस्तामुपोष्य पुरुषो भवन्तं समुपार्ज्जयेत् ।
कृत्वा पापसमाचारं तस्मान्मुञ्चति मानवः ॥"
तस्य पुत्त्रा यथा, वामनपुराणे ।

| | | |
|---|---|---|
| उणां ४ । १७२ । इति इत्र ।<br>गौरादित्वात् ङीष् ।)<br>पृथिवी । इत्यमरः । २ । १ । २ ॥<br>(यथा,<br>रघुः । १४ । ५४ । | **धर्म्मः**, पुं, (धृ + मन् ।) धनुः । यमः । सोमपः ।<br>इति मेदिनी । मे, १६ ॥ सत्सङ्गः ।<br>अर्हन् । इति<br>हेमचन्द्रः । ६ । १५ ॥ देवताविशेषः ।<br>स ब्रह्मणो<br>दक्षिणस्तनाज्जातः । (यथा,<br>मत्स्यपुराणे । ३ । १० । | |

"धर्म्मस्य भार्य्या हिंसाख्या तस्यां पुत्त्रचतुष्टयम् ।
सम्प्राप्तं मुनिशार्द्दूल ! योगशास्त्रविचारकम् ॥
ज्येष्ठः सनत्कुमारोऽभूद्द्वितीयश्च सनातनः ।
तृतीयः सनको नाम चतुर्थश्च सनन्दनः ॥
साङ्ख्यवेत्तारमपरं कपिलं वोढुमासुरिम् ।
दृष्ट्वा पञ्चशिखं श्रेष्ठं योगयुक्तं तपोनिधिम् ॥
ज्ञानयोगं न ते दद्युर्ज्यायांसोऽपि कनीयसाम् ॥"
(चतुर्द्दशद्वापरे वेदव्यसनादयमेव व्यास आसीत् ।
यथा, देवीभागवते । १ । ३ । २९ ।
"त्रयोदशे चान्तरिक्षो धर्म्मश्चापि चतुर्द्दशे ॥"
यथा, च ब्रह्माण्डे । २७ अध्याये ।
"धर्म्मो नारायणो नाम व्यासस्तु भविता यदा ।
तदाप्यहं भविष्यामि भविष्यामि महामुनिः ॥
बालखिल्याश्रमे पुण्यपर्व्वते गन्धमादने ।
तत्रापि मम ते पुत्त्रा भविष्यति तपोधनाः ॥
सुधामा कव्यपश्चैव कनिष्ठा विरजास्तथा ।
मम योगबलोपेता विमना ह्यूर्द्धरेतसः ॥
प्राप्य माहेश्वरं तेजो रुद्रलोकाय संस्थिताः ॥"
क्वचित् युगस्य वैपरीत्यकथनन्तु कल्पभेदादवि-
रुद्धमित्यधिगन्तव्यम् ॥) धर्म्मलक्षणं यथा, --
"पात्रे दानं मतिः कृष्णे मातापित्रोश्च पूजनम् ।
श्रद्धा वलिर्गवां ग्रासः षड्विधं धर्म्मलक्षणम् ॥"

श्रीकृष्णगुणनामोक्तश्रुतिगीतस्थलेषु च ।
व्रतपूजातपोन्याययज्ञसाक्षिस्थलेषु च ॥
दीक्षापरीक्षाशपथगोष्ठगोष्पदभूमिषु ।
गवां गृहेषु गोष्ठेषु विद्यमानो हि पश्यसि ॥
कृशता ते न भविता धर्म्मैतेषु स्थलेषु च ॥
धर्म्मागम्यस्थानानि यथा, --
"एतदन्येषु कृशता यदगम्यञ्च तत् शृणु ।
पुंश्चलीषु तद्गृहेषु गृहेषु नरघातिनाम् ॥
नरघातिषु नीचेषु मूर्खेषु च खलेषु च ।
देवतागुरुविप्रेषु पाल्यानां धनहारिषु ॥
असन्नरेषु धूर्त्तेषु चौरेषु रतिभूमिषु ।
दुरोदरसुरापानकलहानांस्थलेषु च ॥
शालग्रामसाधुतीर्थपुराणरहितेषु च ।
दस्युग्रस्तेषु देवेषु तालच्छायासु गर्व्विषु ॥
असिजीविमसीजीविक्षेत्रलग्रामयाजिषु ।
वृषवाहस्वर्णकारजीवहिंसोपजीविषु ॥
भर्तृनिन्दितनारीषु स्त्रीजितेषु च पुंसु च ।
दीक्षासन्धिविष्णुभक्तिविहीनेषु द्विजेषु च ॥
स्वाङ्गकन्याविक्रयिषु स्वयोषिद्विक्रयिष्वथ ।
शालग्रामसुरग्रन्थभूमिविक्रयिषुप्रभो ! ॥
मित्रद्रोहिकृतघ्नेषु सत्यविश्वासघातिषु ।
शरणागतहीनेषु आश्रितघ्नेषु तेषु च ॥
शश्वन्मिथ्योक्तिशीलेषु तथा सीमापहारिषु ।
कामात्क्रोधात्तथा लोभान्मिथ्यासाक्षिप्रवादिषु ॥
पुण्यकर्म्मविहीनेषु पुण्यकर्म्मविरोधिषु ।
स्थातुमेतेषु निन्द्येषु नाधिकारस्तव प्रभो ! ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ४२ अध्यायः ॥
देवादीनां धर्म्मो यथा, --
सुकेशिरुवाच ।
"किंलक्षणो भवेद्धर्म्मः किमाचरणसत्क्रियः ।
यमाश्रित्य न सीदन्ति देवाद्यास्तु तदुच्यताम् ॥
ऋषय ऊचुः ।
देवानां परमो धर्म्मः सदा यज्ञादिकाः क्रियाः ।
स्वाध्यायवेदवेत्तृत्वं विष्णुपूजारतिः स्मृतिः ॥
दैत्यानां बाहुशालित्वं मात्सर्य्यं युद्धसत्क्रिया ।
विन्दनं नीतिशास्त्राणां हरशक्तिरुदाहृता ॥
सिद्धानासुदितो धर्म्मो योगयुक्तिरनुत्तमा ।
स्वाध्यायं ब्रह्मविज्ञानं भक्तिर्द्वाभ्यामपि स्थिरा ॥

धनाधिपत्यं भोगानि स्वाध्यायं शङ्कराच्चर्नम् ।
अहङ्कारमशौचञ्च धर्म्मोऽयं गुह्यकेष्विति ॥
परदाराभिमर्षित्वं परार्थेऽपि च लोलुपा ।
स्वाध्यायस्त्र्यम्बके भक्तिर्धर्म्मोऽयं राक्षसः स्मृतः ॥
अविवेकताथाज्ञानं शौचहानिरसत्यता ।
पिशाचानामयं धर्म्मः सदा चामिषगृध्नुता ॥
योनयस्तु द्वादशैताः सह धर्म्माश्च राक्षस ! ।
ब्रह्मणा कथिताः पुण्या द्वादशैव गतिप्रदाः ॥"
इति वामनपुराणे ११ अध्यायः ॥
धर्म्माधर्म्मलक्षणम् । यथा, --
"अहिंसालक्षणो धर्म्मो हिंसा चाधर्म्मलक्षणा ॥"
इति महाभारतम् ॥
"वेदप्रणिहितो धर्म्मो ह्यधर्म्मस्तद्विर्य्ययः ॥"
इति श्रीभागवतम् ॥
"विहितक्रियया साध्यो धर्म्मः पुंसां गुणो मतः ।
प्रतिषिद्धक्रियासाध्यः स गुणोऽधर्म्म उच्यते ॥"
इति धर्म्मदीपिका ॥
(द्रुह्यवंशीयनृपविशेषः । यथा, भागवते । ९ । २३ । १४ ।
"द्रुह्योस्तु तनयो वभ्रुः सेतुस्तस्यात्मजस्ततः ।
आरब्दस्तस्य गान्धारस्तस्य धर्म्मस्ततो धृतः ॥")

**धर्म्मकर्म्म**, [न्] क्ली, (धर्म्माय धर्म्मस्य वा कर्म्म कार्य्यम् ।) धर्म्मकार्य्यम् । शुभादृष्टप्रतिपादक-क्रिया । यथा, --
"वेदप्रणिहितं धर्म्मकर्म्म तन्मङ्गलं परम् ॥"

इति पाद्मोत्तरखण्डम् ॥ * ॥
धर्म्माङ्गानि यथा, पाद्मभूमिखण्डे ।
“ब्रह्मचर्य्येण सत्येन तपसा च प्रवर्त्तते ।
दानेन नियमेनापि क्षमाशौचेन वल्लभ ! ॥
अहिंसया सुशान्त्या च अस्तेयेनापि
वर्त्तते ।
एतैर्द्दशभिरङ्गैस्तु धर्म्ममेव प्रसूचयेत् ॥”
धर्म्ममूलं यथा, मत्स्यपुराणे ।
“अद्रोहश्चाप्यलोभश्च दमो
भूतदयातपः ।
ब्रह्मचर्य्यं ततः सत्यमनुक्रोशः क्षमा
धृतिः ।
सनातनस्य धर्म्मस्य मूलमेतद्दुरासदम्
॥”
कलेर्दशसहस्रवर्षान्ते धर्म्मादयो हरेः पदं
गमि-
ष्यन्ति । यथा, --
“शालग्रामो हरेर्मूर्त्तिर्जगन्नाथश्च भारतम्
।
कलेर्दशसहस्रान्ते ययौ त्यक्त्रा हरेः
पदम् ॥
सत्त्वञ्च धर्म्मं सत्यञ्च वेदाश्च ग्रामदेवताः
।
व्रतं तपश्चानशनं ययुस्तैः सार्द्धमेव च
॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥ * ॥
धर्म्माधारस्थानानि यथा, --
“यत्र स्थानं तवाधारो वदामि श्रूयतां
विभो ! ।
वैष्णवेषु च सर्व्वेषु यतिषु ब्रह्मचारिषु ॥
पतिव्रतासु प्राज्ञेषु वानप्रस्थेषु भिक्षुषु ।
नृपेषु धर्म्मशीलेषु सत्सु सद्वैश्यजातिषु ॥
द्विजसेविषु शूद्रेषु सत्संसर्गस्थितेषु च ।
एषु त्वं सन्ततं पूर्णो धर्म्मराज ! विराजसे
॥
युगे युगे तवाधारा एते पुण्यतमा जनाः
॥”
अपि च ।
“अश्वत्थवटविल्वेषु तुलसीचन्दनेषु च ।
देवार्हेषु च पुष्पेषु विद्यमानोऽसि शाखिषु
॥
देवालयेषु तीर्थेषु सतां शश्वद्गृहेषु च ।
उत्कृष्टोपासनं ज्ञेयं नृत्यवाद्येषु वादिता ।
सरस्वत्यां स्थिरा भक्तिर्गान्धिर्व्वो धर्म्म उच्यते
॥
विद्याधरत्वमतुलं विज्ञानं पौरुषे मतिः ।
विद्याधराणां धर्म्मोऽथ भवान्यां भक्तिरेव च ॥
गान्धर्व्वविद्यावेदित्वं भक्तिः स्थाणौ तथा
स्थिरा ।
कौशल्यं सर्व्वशिल्पेषु धर्म्मः कैम्पुरुषः स्मृतः
॥
ब्रह्मचर्य्यममानित्वं योगाभ्यासरतिर्दृढा ।
सर्व्वत्र कामचारित्वं धर्म्मोऽयं पैतृकः स्मृतः ॥
ब्रह्मचर्य्यं यताशित्वं जप्यज्ञानञ्च राक्षस ! ।
नियमा धर्म्मवेदित्वमार्षं धर्म्मं प्रचक्षते ॥
स्वाध्यायं ब्रह्मचर्य्यञ्च दानं यजनमेव च ।
अकार्पण्यमनायासं दयाहिंसाक्षमादयः ॥
जितेन्द्रियत्वं शौचञ्च माङ्गल्यं भक्तिरुच्यते ।
शङ्करे भास्करे देव्यां धर्म्मोऽयं मानवः स्मृतः ॥
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥

**धर्म्मकायः**, पुं, (धर्म्माय कायो देहो यस्य ।)

बुद्धः । इति त्रिकाण्डशेषः ॥

**धर्म्मकीलः**, पुं, (धर्म्मस्य कील इव ।) शासनम् ।

राजशासनम् । इति पुरवर्गे त्रिकाण्डशेषः
॥

**धर्म्मकीलकः**, पुं, (धर्म्मकील + संज्ञायां कन् ।)

ब्रह्मशासनम् । इति पुरवर्गे शब्दरत्नावली
॥

**धर्म्मकेतुः**, पुं, (अहिंसारूपो धर्म्मः केतुरिव यस्य
।)

बुद्धः । इति शब्दरत्नावली ॥

**धर्म्मक्षेत्रं**, क्ली, (धर्म्मस्य क्षेत्रम् ।) कुरुक्षेत्रम् ।

यथा, --
“ब्रह्मवेदिः कुरुक्षेत्रे पञ्चरामहृदान्तरम् ।
धर्म्मक्षेत्रं कुरुक्षेत्रं द्वादशयोजनावधि ॥”
इति हेमचन्द्रः ॥
अपि च ।
“तरस्तकारन्तुकयोर्य्यदन्तरं
रामह्रदानाञ्च मचक्रुकस्य च ।
एतत् कुरुक्षेत्रसमन्तपञ्चकं
प्रजापतेरुत्तरवेदिरुच्यते ॥”
इति भारतपाद्मे ॥
धर्म्माधारे, त्रि ॥

**धर्म्मघटः**, पुं, (धर्म्माय घटः सुगङ्गोदकपरिपूर्ण-

कलसः ।) सौरवैशाखे
प्रत्यहदातव्यसुगन्धोदक-
पूरितकलसः । यथा, काशीखण्डे १२
अध्याये ।
“दद्युर्धर्म्मघटांश्चापि सुगन्धोदकपूरितान्
॥”
तद्विधिर्यथा । अथ धर्म्मघटव्रतम् ।
तत्र प्रथमं स्वस्तिवाचनं कृत्वा सूर्य्यः
सोम इति
पठित्वा सङ्कल्पं कुर्य्यात । यथा, --

अद्येत्यादि वैशाखे मासि अमुकपक्षे अमुक-
तिथौ महाविषुवसंक्रान्त्यां अमुकगोत्रा श्री-
अमुकी देवी यमालयगमननिवारणपूर्ब्बकश्री-
विष्णुप्रीतिकामा अद्यारभ्य वर्षचतुष्टयं यावत्
प्रतिवर्षीयमेषस्थरवौ प्रत्यहं गणपत्यादिनाना-
देवतापूजापूर्ब्बक-श्रीविष्णुपूजा-सभोज्यघटदान-
कथाश्रवण-ब्राह्मणभोजनरूपधर्म्मघटव्रतमहं
करिष्ये ॥ * ॥ वारान्तरे अद्येत्यादि महा-
विषुवसंक्रान्त्यां मत्संकल्पितधर्म्मघटव्रतकर्म्मणि
यथाविधिकगणपत्यादिनानादेवतापूजापूर्ब्बकं श्री-
विष्णुपूजासभोज्यघटदानकथाश्रवणमहंकरिष्ये ।
इति सङ्कल्प्य तत्सूक्तं पाठयेत् । ततो ब्राह्मणः
प्रतिनिधीभूतः सामान्यार्घ्यासनशुद्धिभूतशुद्ध्या-
दिकं विधाय शालग्रामादौ घटे वा गणेशा-
दीन् नवग्रहान् दिक्पालांश्च संपूज्य वां
हृदयाय नमः इत्याद्यङ्गन्यासकरन्यासौ कृत्वा
ॐ ध्येयः सदा इत्यादिना विष्णुं ध्यात्वा स्वशि-
रसि पुष्पं दत्त्वा मानसोपचारैः संपूज्यार्घ्यं
संस्थाप्य पुनर्ध्यात्वावाह्य षोडशोपचारैः ॐ
भगवते विष्णवे नम इति मन्त्रेण संपूज्य यथा-
शक्ति ॐ विष्णवे नम इति मन्त्रं जप्त्वा जपं
समर्प्य ॐ नमो ब्रह्मण्यदेवायेत्यादिना प्रणम्य
लक्ष्मीं सरस्वतीं आवरणदेवताश्च पूजयेत् ।
ततः एते गन्धपुष्पे ॐ सभोज्यवारिपूर्णघटाय
नमः । इति त्रिरभ्यर्च्च्य --
"ॐ घटत्वं धर्म्मरूपोऽसि ब्रह्मणा निर्म्मितः पुरा ।
त्वयि लिप्ते सन्तु लिप्ताश्चन्दनैः सर्व्वदेवताः ॥"
इति चन्दनेनानुलिप्य अद्येत्यादि अमुकगोत्रा
श्रीअमुकी देवी श्रीविष्णुप्रीतिकामा धर्म्मघट-
व्रतकर्म्मणि इमं सभोज्यवारिपूर्णघटमर्च्चितं
श्रीविष्णुदैवतं यथासम्भवगोत्रनाम्ने ब्राह्म णायाहं
ददे । इत्युत्सृज्य कृताञ्जलिः पठेत् ।
"ॐ धर्म्म त्वं धटरूपेण ब्रह्मणा निर्म्मितः पुरा ।
त्वयि दत्तेऽक्षया लोका मम सन्तु निरामयाः ॥
यथा त्वं शीतलो नित्यं संपूर्णः शीतवारिणा ।
तथा मां सुरशार्द्दूल ! शीतलं कुरु धर्म्मराट् ॥
एष धर्म्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः ।
अस्य प्रदानात् सफला मम सन्तु मनोरथाः ॥
पानीयं प्राणिनां प्राणाः पानीयं पावनं महत् ।
पानीयस्य प्रदानेन तृप्तिर्भवतु शाश्वती ॥"

समाख्याहि व्रतं देव ! सफलं
पापनाशनम् ॥
लोमश उवाच ।
शृणु राज्ञि ! महाभागे ! येन तत्र न
गच्छति ।
तदुपायं प्रवक्ष्यामि शृणु त्वं हि
समाहिता ॥
जन्मजन्मकृतात् पापान्मुच्यते नात्र
संशयः ।
विष्णुस्मरणमात्रेण हन्ति पापं
पुराकृतम् ॥
येन धर्म्मप्रसादेन तुष्टो देवो जनार्द्दनः
।
पूजयेद्देवदेवेशं सर्व्वकामफलप्रदम् ॥
समारोप्य ततो देवं चन्दनेन
विलेपितम् ।
पूजयेत् परया भक्त्या
गन्धपुष्पादिभिस्तथा ॥
अयने कोटिगुणितं लक्षं विष्णुपदीषु
च ।
षडशीतिसहस्रन्तु
षडशीत्यामुदाहृतम् ॥
विषुवे शतसाहस्रं व्रतं तत्र समाचरेत्
॥
मालावत्युवाच ।
ममैतत् कथितं सर्व्वं यद्व्रतञ्च त्वया
प्रभो ! ।
किं विधानं फलं किं वा कैश्च लोके
कृतं पुरा ॥
लोमश उवाच ।
शृणु देवि ! महाभागे ! पूर्ब्बकालस्य
या कथा ।
विनिष्क्रान्ते ततश्चैत्रे यदा मेषगतो
रविः ॥
दोषादिरहिते काले चतुर्व्वर्षं
समाचरेत् ।
तत्र नित्यं घटं दद्यात् मासमेकं
सभोज्यकम् ॥
चन्दनेन समालिप्तं
दक्षिणादिभिरन्वितम् ।

यम उवाच ।
व्रतं धर्म्मघटं देवि ! कुरु गत्वा
निजालयम् ।
नागन्तव्यं त्वया देवि ! पुनर्म्मम पुरीं
शुभे ! ॥
ततो गता च सा चैव
तुष्टोऽभूदन्तकस्तदा ।
भूयो भूमिगृहं प्राप्य तदेव च तथा सती
॥
सा तत्र तद्व्रतञ्चक्रे दानं होमं
यथाविधि ।
संपूर्णे तु व्रते तत्र प्रतिष्ठामाचरत् सती
॥
ददौ द्वादशविप्रेभ्यो दानानि द्वादशानि
च ।
चत्वारि जलपात्राणि वस्त्रेण सहितानि
च ॥
दानानि च ततो दत्त्वा
तत्सङ्ख्यकघटास्तथा ।
आसनानि च चत्वारि पादुकासहितानि
च ॥
दक्षिणान्तु ततो दत्त्वा वस्त्राणि
विविधानि च ।
तद्व्रतञ्च सुसम्पन्नं
विष्णुहस्तेऽन्यसत्ततः ॥
एवं कृत्वा व्रतं साध्वी द्रौपदी
सुसमाहिता ।
अन्तकालं समासाद्य सा गता वैष्णवं
पुरम् ॥
इत्युक्ता लोमशेनाथ कन्या मालावती
तथा ।
कृत्वा चैव व्रतं साध्वी
देवाराधनपूर्ब्बकम् ॥
सा नित्यं गर्गरीं दत्त्वा
सभोज्यदक्षिणान्विताम् ।
देवोद्देशेन विप्राय श्रद्धया प्रत्यपादयत्
॥
एवं या कुरुते नारी पुत्रपौत्रसमन्विता
॥
पुस्तकान्तरे ।

इति पठित्वा दक्षिणां दत्त्वाच्छिद्रावधारणं
कृत्वा कथां शृणुयात् ॥ * ॥
अथ कथा । श्रीकृष्ण उवाच ।
“शृणु राजत् ! प्रवक्ष्यामि व्रतानां व्रतमुत्तमम् ।
चन्द्रकेतुरिति ख्यातो राजासीद्धार्म्मिकः सुधीः ॥
सुशीला तस्य भार्य्यासीत् मालावत्यतिविश्रुता ।
सा सर्व्वगुणसंयुक्ता साध्वीयं द्रौपदी यथा ॥
एकस्मिन् समये राजन् ! लोमशस्य च सन्निधौ ।
सैषा पुटाञ्जलिर्भूत्वा लोमशं परिपृच्छति ॥
मालावत्युवाच ।
शृणु त्वं मुनिशार्द्दूल ! सर्व्वधर्म्मपरायण ! ।
यमालयं न गच्छामि तदुपायं ब्रवीहि मे ॥
व्रतमेतत् समाकुर्य्यात् यावत्
वर्षचतुष्टयम् ॥
अनेनैव विधानेन या व्रतञ्च समाचरेत्
।
सर्व्वं कुलं समुद्धृत्य स्वर्गलोके
महीयते ॥
द्रौपद्याचरितं यत्तत् शृणु त्वं
ध्यानतत्परा ।
द्रौपद्या तदिदं पूर्ब्बं न कृतं व्रतमुत्तमम्
॥
मृता गता च सा साध्वी न लभेत दिवं
पुनः ।
अथ शीघ्रं समागत्य
तामूचुर्यमकिङ्कराः ॥
विषुवे च त्वया साध्वि ! न कृतं
तद्व्रतं किल ।
ततो मरणकाले स्यात् स्वर्गद्वारं
विरोधितम् ॥
यमदूतैः समासाद्य गले पाशो
निवेशितः ॥
द्रौपद्युवाच ।
के यूयमिति तद्ब्रूत कुत्र वा
नीयतेऽधुना ।
कथं पाशो गले दत्तः कथयस्व मम
ध्रुवम् ॥
यमदूता ऊचुः ।
मा भैषीर्नीयते देवि ! धर्म्मराजस्य
सन्निधौ ।
पृथिव्यां यानि तीर्थानि व्रतानि
विविधानि च ॥
यज्ञदानविधानञ्च त्वया सर्व्वं
प्रतिष्ठितम् ।
किन्त्वत्र न कृतं पूर्ब्बं माधवे मासि
सुव्रते ! ॥
व्रतं धर्म्मघटं नाम तेन यासि
यमालयम् ॥
द्रौपद्युवाच ।
यमदूता महात्मानो नयन्तु मां
यमालयम् ।
तत्प्रसादेन मे शीघ्रं गले पाशो
विमुञ्चतु ॥
‘एवं करोति या नारी नरो वा
व्रतमुत्तमम् ।’
इति वा पाठः ।
आयुरारोग्यमैश्वर्य्यं श्रियञ्च लभते
सुखम् ।
अन्ते याति परं स्थानं यत्र देवो
निरञ्जनः ॥”
इति भविष्यपुराणोक्ता
धर्म्मघटव्रतकथा
समाप्ता ॥
क्वचित् क्वचित् पद्धतौ
विष्णुधर्म्मोत्तरयमपुरा-
णोक्ता च लिखिता ॥

**धर्म्मचक्रः**, पुं, (धर्म्मस्य चक्रं समूहो यत्र ।)
बुद्धः । इति शब्दरत्नावली (धर्म्मस्य
चक्रं
समूहः । धर्म्मसमूहे, क्ली । यथा, महा-
भारते । १ । १०९ । १४ ।
“भीष्मेण विहितं राष्ट्रे धर्म्मचक्रमवर्त्तत
॥”
अस्त्रविशेषः । यथा, हरिवंशे । २२६ ।
७ ।
“धर्म्मचक्रं महाचक्रमजितं नाम नामतः
॥”)

**धर्म्मचक्रभृत्**, पुं, (धर्म्मचक्रं धर्म्मसङ्घं बिभर्त्तीति
।
भृ + क्विप् । तुगागमश्च ।) जिनः ।
इति
धरणिः ॥

**धर्म्मचारिणी**, स्त्री, (धर्म्मं चरतीति । चर +
णिनि + ङीप् ।) जाया । इति
शब्दरत्नावली ॥

**धर्म्मचिन्तनं**, क्ली, (धर्म्मस्य चिन्तनं भावना ।)
धर्म्मचिन्ता । इति हेमचन्द्रः । ६ । १७
॥

**धर्म्मचिन्ता**, स्त्री, (धर्म्मस्य चिन्ता भावना ।)
पुण्यभावना । तत्पर्य्यायः । उपाधिः २
। इत्य-
मरः । १ । ७ । २८ ॥

| | | |
|---|---|---|
| | ततो विधृत्य स्वकरे समानीता यमान्तिकम् ॥<br>यम उवाच ।<br>शृणु त्वं द्रौपदी साध्वि ! सर्व्वं त्वया प्रतिष्ठितम् ।<br>न कृतो देवदेवस्य व्रतं धर्म्मघटस्त्वया ॥<br>तथापि तुष्टो भद्रेऽहं वरं वृणु यथेप्सितम् ॥<br>द्रौपद्युवाच ।<br>वरं ददस्व मे नाथ ! गच्छामि पुनरालयम् ।<br>कर्त्तव्यं तद्विधानेन व्रतं तव प्रसादतः ॥ | **धर्म्मज्ञः**, त्रि, (धर्म्मं जानातीति । ज्ञा + कः ।) धर्म्मज्ञानविशिष्टः । यथा, --<br>"धर्म्मज्ञश्च कृतज्ञश्च ह्रीनिषेवी दृढव्रतः ॥"<br>इति विराटपर्व्व ॥<br>**धर्म्मणः**, पुं, (धर्म्मेणेव धार्म्मिकवदित्यर्थः नमतीति । नम + अन्येष्वपीति डः ।) वृक्षभेदः । |

धामिनिया इति भाषा । (यथास्य पर्य्यायः ।
“धन्वनः पिच्छिलत्वक्च धनुर्वृक्षश्च धर्म्मणः ॥”
इति वैद्यकरत्नमालायाम् ॥)
सर्पविशेषः । इति मेदिनी । णे, ५३ ॥ ढेमना ।
इति भाषा ॥

**धर्म्मत्वं**, क्ली, (धर्म्मस्य भावः । धर्म्म + त्व ।)
वृत्तिमत्त्वम् । आधेयत्वमिति यावत् । यथा,
गगनादेर्वृत्तिमत्त्वलक्षणधर्म्मत्वाभावादिति जग-
दीशः ॥

**धर्म्मदानं**, क्ली, (धर्म्माय दानम् ।) प्रयोजनमन-
पेक्ष्य केवलधर्म्मबुद्‌ध्या पात्रेभ्यो दानम् । यथा,
देवलः ।
“पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम् ।
केवलं धर्म्मबुद्‌ध्या यत् धर्म्मदानं प्रचक्षते ॥”
इति शुद्धितत्त्वम् ॥

**धर्म्मद्रवी**, स्त्री, (धर्म्मजनको द्रवो वारिरूपो
यस्याः । गौरादित्वात् ङीष् ।) गङ्गा । इति
त्रिकाण्डशेषः ॥ (यदुक्तं गङ्गास्तोत्रे ।
“विष्णुपादाग्रसम्भूते गङ्गे त्रिपथगामिनि ! ।
धर्म्मद्रवीति विख्याते पापं मे हर जाह्नवि ! ॥”)

**धर्म्मधातुः**, पुं, (अहिंसारूपो धर्म्म एव धातुः
प्रकृतिर्यस्य ।) बुद्धः । इति त्रिकाण्डशेषः ॥

**धर्म्मध्वजी**, [न्] त्रि, (धर्म्मो ध्वजश्चिह्नम् ।
स एवास्त्यस्येति । धर्म्मध्वज + इनिः ।)
जीवि-
कार्थजटादिधारी न तु परमार्थतो धर्म्मानुष्ठान-
कारी । तत्पर्य्यायः । लिङ्गवृत्तिः २ । इत्यमरः ।
२ । ७ । ५४ ॥ (यथा, मनुः । ४ । १९५ ।
“धर्म्मध्वजी सदालुब्धश्छाद्मिको लोकदम्भकः ।
वैडालव्रतिको ज्ञेयो हिंस्रः सर्व्वाभिसन्धकः ॥”)

**धर्म्मपत्तनं**, क्ली, (धर्म्मपत्तने जातम् । “तत्र
जातः ।” ४ । ३ । २५ । इत्यण् । संज्ञापूर्ब्बक-

त्रैलोक्याभयदानदक्षिणभुजावष्टम्भदिव्योदयो
देवोऽयं दिनकृत्कुलैकतिलको न प्राभविष्यद्
यदि ॥”
इति महानाटके । २ । २५ ॥

**धर्म्मबाणिजिकः**, पुं, (धर्म्मे बाणिजिक इव । फल-
कामनया धर्म्माचरणादेवास्य तथात्वम् ।)
पुण्यकर्म्मफलकामी । यथा, --
“धर्म्मबाणिजिका मूढाः फलकामा नराधमाः ।
अर्च्चयन्ति जगन्नाथं ते कामानाप्नुवन्त्युत ॥”
इति मलमासतत्त्वधृतविष्णुधर्म्मोत्तरतृतीय-
काण्डीयवचनम् ॥

**धर्म्मभाणकः**, पुं, (धर्म्मार्थं भणतीति । भण +
ण्वुल् ।) भारतादिपाठकः । इति त्रिकाण्डशेषः ॥

**धर्म्ममूलं**, क्ली, (धर्म्मस्य मूलम् ।) शुभादृष्टकार-
णम् । पुण्यहेतुः । यथा, --
“इत्थं मूलं फलं शाकमुदपात्रं तपोधनाः ।
दानं विभवतो दत्त्वा नराः स्वर्य्यान्ति धर्म्मिणः ॥
एष धर्म्मो महांस्त्यागो दानं भूतदया तथा ।
ब्रह्मचर्य्यं सदा सत्यं अनुक्रोशो धृतिः क्षमा ॥
सनातनस्य धर्म्मस्य मूलमेतत् समासतः ॥”
इति वह्निपुराणे स्नानविधिनामाध्यायः ॥
(यथा च मनुः । २ । ६ ।
“वेदोऽखिलो धर्म्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥”)

**धर्म्मयुः**, त्रि, (धर्म्मं याति गच्छतीति । या +
मृगय्वादित्वात् कुः ।) धर्म्मविशिष्टः । धार्म्मिकः ।
धर्म्मशब्दादस्त्यर्थे युप्रत्ययेन निष्पन्नः इति
मुग्धबोधः ॥

**धर्म्मयुक्**, [ज्] त्रि, (धर्म्मं युनक्तीति । युज् + क्विप् ।)
धर्म्मयुक्तः । धार्म्मिकः । (यथाह देवलः ।
“दाता प्रतिगृहीता च श्रद्धादेयञ्च धर्म्मयुक् ।
देशकालौ च दानानामङ्गान्येतानि षड्‌विदुः ॥”)

घर्म्मे गृहीते शुद्धः स्यात्
संपूज्यश्च परीक्षकैः ॥
जीवदानमन्त्रस्तु शारदायाम् ।
‘पाशाङ्कुशपुटा
शक्तिर्व्वायुर्व्विन्दुविभूषितः ।
याद्याः सप्तसकारान्ता
व्योमसत्येन्दुसंयुतम् ॥
तदन्ते हंसमन्त्रः स्यात् ततोऽमुष्य
पदं वदेत् ।
प्राणा इति वदेत् पश्चादिह
प्राणास्ततःपरम् ॥
अमुष्य जीव इह
स्थितस्ततोऽमुष्य पदं वदेत् ।
सर्व्वेन्द्रियाण्यमुष्यान्ते
वाङ्मनश्चक्षुरन्ततः ॥
श्रोत्रघ्राणपदे प्राणा इहागत्य सुखं
चिरम् ।
तिष्ठन्त्वग्निबधूरन्ते
प्राणमन्त्रोऽयमीरितः ॥
प्रत्यमुष्य पदात् पूर्ब्बं पाशाद्यानि
प्रयोजयेत् ।
प्रयोगेषु समाख्यातः प्राणमन्त्रो
मनीषिभिः ॥’
पाशाङ्कुशपुटा शक्तिरित्यनेन प्रथमं
पाशबीजं
आम् । ततः शक्तिबीजं ह्रीँ ।
ततोऽङ्कुशबीजं
क्रोम् । वायुर्यकारो बिन्दुविभूषितः
। तेन यं ।
याद्याः सप्तसकारान्ता
उद्धृतयकारमादाय
सप्त । अङ्कुशवाय्वनलावनी
वरुणबीजानीत्यन्य-
त्रोक्तेः । अत्र वायोरेकस्य पूर्ब्बं
पृथगुपन्यासः
सप्तानां सबिन्दुत्वार्थः ।
अतएवान्यत्र बीजानी-
त्युक्तम् । व्योमसत्येन्दुसंयुतम् ।
व्योम हकारः ।

त्वात् न वृद्धिः ।) मरिचम् । इत्यमरः । १ । ९ । ३६ ॥ (पर्य्यायोऽस्य यथा, --
"रेणुकं मरिचं कृष्णमुषणं धर्म्मपत्तनम् ॥"
इति वैद्यकरत्नमालायाम् ॥
धर्म्मस्य पत्तनम् ।) धर्म्मपुरी । तत्पर्य्यायः । श्रावन्ती २ । इति त्रिकाण्डशेषः ॥

**धर्म्मपत्रं**, क्ली, (धर्म्माय यज्ञादिकार्य्यार्थं पत्रं यस्य ।) यज्ञोडुम्बरः । इति शब्दचन्द्रिका ॥

**धर्म्मपुत्त्रः**, पुं, (धर्म्मस्य पुत्त्रः ।) युधिष्ठिरराजः । इति त्रिकाण्डशेषः ॥ (यथा, महाभारते । ३ । २३५ । १८ ।
"न पापकं धास्यति धर्म्मपुत्त्रो
धनञ्जयश्चाप्यनुवर्त्स्यते तम् ॥")
नरनारायणावृषी । इति पुराणम् ॥ (यथा, देवीभागवते । ४ । ७ । १९ ।
"तापसौ धर्म्मपुत्त्रौ द्वौ सुशान्तमनसावुभौ ॥")
धर्म्मतः कृतपुत्त्रः । धरम्वेटा इति भाषा ॥ यथा, --
"यावद्धुर्जटिधर्म्मपुत्त्रपरशुक्षुण्णाखिलक्षत्त्रिय-
श्रेणीशोणितपिच्छिला वसुमती कोऽस्यामधा-
स्यत् पदम् ।

**धर्म्मराजः**, पुं, (धर्म्मेण राजते इति । राज + अच् ।) जिनः । (धर्म्मश्चासौ राजा चेति । समासे टच् ।) यमः । इत्यमरः । ३ । ३ । ३१ ॥
(यथा, महाभारते । ३ । २९६ । ५४ ।
"धर्म्मराजः प्रहृष्टात्मा सावित्रीमिदमब्रवीत् ॥")
नरपतिः । युधिष्ठिरः । इति शब्दरत्नावली ॥
(यथा, हरिवंशे । १६ । ८ ।
"अपृच्छत् धर्म्मराजो हि शरतल्पगतं पुरा ॥"
धर्म्मप्रधाने, त्रि । यथा, महाभारते । १ । ५५ । ११ ।
"धृत्या च ते प्रीतमनाः सदाहं
त्वं वा वरुणो धर्म्म राजो यमो वा ॥")

**धर्म्मराजपरीक्षा**, स्त्री, (धर्म्मराजस्य परीक्षा ।) धर्म्माधर्म्म परीक्षणम् । यथा,
अथ धर्म्मराजविधिः । बृहस्पतिः ।
"पत्रद्वये लेखनीयौ धर्म्माधर्म्मौ सितासितौ ।
जीवदानादिकैर्मन्त्रैर्गायत्र्याद्यैश्च सामभिः ॥
आमन्त्र्य पूजयेद्गन्धैः कुसुमैश्च सितासितैः ।
अभ्युक्ष्य पञ्चगव्येन मृत्पिण्डान्तरितौ ततः ॥
समौ कृत्वा नवे कुम्भे स्थाप्यौ चानुपलक्षितौ ।
ततः कुम्भात् पिण्डमेकं गृह्णीयादविलम्बितः ॥

सत्यं ओकारः । इन्दुर्व्विन्दुः । तेन हों । अमुष्य इति षष्ठ्यन्तदेवतानामोपलक्षणम् ।
'अदः पदं हि यद्रूपं यत्र मन्त्रे प्रदृश्यते ।
साध्याभिधानं तद्रूपं तत्र स्थाने नियोजयेत् ॥'
इति नारायणीयात् । अग्निबधूः स्वाहा ॥ * ॥
गायत्र्यादिसामाज्ञाने तु सप्रणवव्याहृति गायत्रीमात्रं पठितव्यम् ।
जपहोमादि यत्-
किञ्चित् कृत्स्नोक्तं सम्भवेन्न चेत् सर्व्वं व्याहृतिभिः
कुर्य्यात् गायत्र्या प्रणवेन च ॥
इति मिताक्षरा-
धृतषट्त्रिंशन्मतवचनदर्शनात् अत्रापि तथा
कल्प्यते ॥ * ॥ पितामहः ।
'अधुना संप्रवक्ष्यामि धर्म्माधर्म्मपरीक्षणम् ।
हन्तॄणां याचमानानां प्रायश्चित्तार्थिनां नृणाम् ।
राजतं कारयेद्धर्म्ममधर्म्मं सीसकायसम् ।
लिखेद्भूर्ज्जे पटे वापि धर्म्माधर्म्मौ सितासितौ ॥
अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्च्चयेत् ।
सितपुष्पस्तु धर्म्मः स्यात् अधर्म्मोऽसितपुष्पकः ॥
एवं विधायोपलिख्य पिण्डयोस्तौ निधापयेत् ।
गोमयेन मृदा वापि पिण्डौ कार्य्यौ समौ ततः ॥
मृद्भाण्डकेऽनुपहते स्थाप्यौ चानुपलक्षितौ ।
उपलिप्ते शुचौ देशे देवब्राह्मणसन्निधौ ॥

| | | |
|---|---|---|
| | | आवाहयेत्ततो देवान् लोकपालांश्च पूर्ब्बवत् । धर्म्मावाहनपूर्ब्बन्तु प्रतिज्ञापत्रकं लिखेत् ॥ यदि पापवियुक्तोऽहं धर्म्मस्त्रायाच्च मे करम् । अभियुक्तस्तयोश्चैकं प्रगृह्णीताविलम्बितः ॥ धर्म्मे गृहीते शुद्धः स्यादधर्म्मे स तु हीयते । एवं समासतः प्रोक्तं धर्म्माधर्म्मपरीक्षणम् ॥' हन्तृणामिति साहसाभियोगेषु । याचमाना-नामिति अत्यन्तार्थाभियोगेषु । प्रायश्चित्ता-र्थिनामिति पातकाभियोगेषु ॥ * ॥ तत्र प्रयोगः । पत्रद्वये शुक्लं धर्म्मं कृष्णमधर्म्मं पुत्तलकद्वयरूपं निधाय ओम आं हीं क्रों यं |

रं लं वं शं षं सं हों हंसः धर्म्मस्य प्राणा इह
प्राणाः । पुनः आमित्यादि धर्म्मस्य जीव इह
स्थितः । पुनः आमित्यादि धर्म्मस्य सर्व्वेन्द्रि-
याणि । पुनः आमित्यादि धर्म्मस्य वाङ्मनश्चक्षुः-
श्रोत्रघ्राणप्राणाः इहागत्य सुखं चिरं तिष्ठन्तु
स्वाहा । इत्यनेन जीवदानं धर्म्मप्रतिमायां
एवमधर्म्म प्रतिमायां कृत्वा गायत्र्यादिसामज्ञाने
तेनैव नो चेत् सप्रवणव्याहृतिगायत्रीं पठित्वा
धर्म्मस्यावाहनादि कृत्वा यथाक्रमं शुक्लकृष्ण-
पुष्पाभ्यां धर्म्माधर्म्मौ संपूज्य प्रणवेन पञ्चगव्य-
मुपादायाभ्युक्ष्य शुक्लपुष्पयुक्तं धर्म्मं कृष्णपुष्प-
युक्तमधर्म्मं मृत्पिण्डद्वये कृत्वा नवे कुम्भे स्थाप-
येत् । प्राड्विवाकस्ततो देवब्राह्मणसन्निधौ धर्म्मा-
वाहनादिहवनान्तं कर्म्म कृत्वा दक्षिणां दत्त्वा
समन्त्रकप्रतिज्ञापत्रं लिखित्वा शोध्यसिरसि
दद्यात् । शोध्यस्तु ओम् यदि पापवियुक्तोऽहं
धर्म्मस्त्रायाच्च मे करं इत्युच्चार्य्य कुम्भात्तयोरेकं
गृह्णीयात् । धर्म्मे गृहीते शुद्धः अन्यथा अशुद्धः ।”
इति दिव्यतत्त्वम् ॥

**धर्म्मवान्** [त्] त्रि, (धर्म्मोऽस्त्यस्येति । धर्म्म +

अतितीव्रेण तपसा स्वशरीरमशोषयत् ॥
पुण्डरीकाक्षपारं तु स्तवं भक्त्या जपन् बुधः ।
नमस्ते पुण्डरीकाक्ष नमस्ते मधुसूदन ! ।
नमस्ते सर्व्वलोकेश ! नमस्ते तिग्मचक्रिणे ॥”
इत्यादि ।
“एवन्तु वदतस्तस्य मूर्त्तिमान् पुरुषः किल ।
निर्गत्य देहान्नीलाभो घनचण्डो भयङ्करः ॥
उवाच प्राञ्जलिर्भूत्वा किं करोमि नराधिप ! ॥
राजोवाच ।
कोऽसि किं कार्य्यमिह ते कस्मादागतवानसि ।
एतन्मे कथय व्याध ! एतदिच्छामि वेदितुम् ॥
व्याध उवाच ।
पूर्ब्बं कलियुगे राजन् ! राजा त्वं दक्षिणामुखे ।
अरण्यमागतो हन्तुं श्वापदानि विशेषतः ॥
तत्र त्वयान्यकाम्येन मृगवेशधरो मुनिः ।
दण्डयुग्मेन दूरे तु पातितो धरणीतले ॥
ततस्त्वया महाराज ! सकृन्नारायणं प्रभुम् ।
संचिन्त्य द्वादशी शुद्धात्वया राजन् ! उपोषिता ॥
गौर्दत्ता विधिना सद्यो मृतोऽस्युदरशूलतः ।
अहञ्च तव देहस्थः सर्व्वं जानामि चाक्षयम् ॥
स्वगस्थस्यापिराजेन्द्र ! स्थितोऽहं स्वेन तेजसा ।
इदानीमादिसृष्टौ तु कृते नृपतिसत्तम ! ॥
सम्भूतस्त्वं महाराज ! राज्ञः सुमनसो गृहे ।
इदानीं यत् त्वया स्तोत्रं पुण्डरीकाक्षपारगम् ॥
पठितं तत्प्रभावेण विहायाङ्गरुहाण्यहम् ।
एकीभूतः पुनर्ज्जातो व्याधरूपो नृपोत्तम ! ॥
एतत् श्रुत्वा वचो राजा परं विस्मयमागतः ।
वरेण छन्दयामास तं व्याधं राजसत्तमः ॥
राजोवाच ।
स्मारितोऽस्मि महाव्याध ! त्वया जन्मान्तरं गतम् ।
तथा त्वं मत्प्रसादेन धर्म्मव्याधो भविष्यसि ॥”
इति वाराहे आदिकृतवृत्तान्तनामाध्यायः ॥
(अपरो धार्म्मिको व्याधविशेषः । अस्य विव-
रणन्तु महाभारते । ३ । २०६ अध्यायमारभ्य
विशेषतो द्रष्टव्यम् ॥)

**धर्म्मशास्त्रं**, क्ली, (धर्म्मस्य धर्म्माय वा शास्त्रम् ।)
मन्वादिप्रणीतशास्त्रम् । तत्पर्य्यायः । स्मृतिः २

इत्यष्टाविंशतिस्थाने तत्त्वं वक्ष्यामि यत्नतः ॥”
इति रघुनन्दनभट्टाचार्य्यः ॥

**धर्म्मशीलः**, त्रि, (धर्म्मे धर्म्माचरणे शीलं स्वभावो
यस्य ।) धार्म्मिकः । यथा, विराटपर्व्वणि ।
“धर्म्मशीलो वदान्यश्च वृद्धश्च सुमहाधनः ॥”

**धर्म्मसंहिता**, स्त्री, (धर्म्मस्य संहिता ।) स्मृति-
शास्त्रम् । इत्यमरः । १ । ६ । ६ ॥

**धर्म्मसावर्णिः**, पुं, (धर्म्म एव सावर्णिः सूर्य्यपुत्री
मनुः ।) एकादशो मनुः । अस्मिन्मन्वन्तरे
धर्म्मसेतुरवतारः । वैधृत इन्द्रः । विहङ्गमकाम-
गमाद्या देवाः । अरुणादयः सप्तर्षयः । सत्य-
धर्म्मादयो मनुपुत्त्रा भविष्यन्ति । इति श्रीभाग-
वतम् ॥ * ॥
“भविष्यधर्म्मपुत्त्रस्य सावर्णस्यान्तरं शृणु ।
विहङ्गमाः कामगमा निर्म्माणरतयस्तथा ॥
त्रिप्रकारा भविष्यन्ति एकैकस्त्रिंशको गणः ।
मासर्त्तुदिवसा ये तु निर्म्माणरतयस्तु ते ॥
विहङ्गमा रात्रयोऽथ मुहूर्त्ताः कामगो गणः ।
इन्द्रो वृषाख्यो भविता तेषां प्रख्यातविक्रमाः ॥
हविष्मांश्च धनिष्ठश्च ऋषिरन्यस्तथारुणिः ।
निश्चरश्चानघश्चैव वृष्णिश्चान्यो महामुनिः ॥
सप्तर्षयोऽन्तरे तस्मिन्नग्नितेजाश्च सप्तमः ॥

मतुप् । मस्य वः ।) धर्म्मविशिष्टः ।
पुण्यवान् ।
इति शब्दरत्नावली ॥ (यथा, रामायणे ।
२ ।
१०४ । २९ ।
"जनेन धर्म्मज्ञतमेन धर्म्मवा-
नुपोपविष्टो भरतस्तदाग्रजम् ॥")

**धर्म्मवासरः**, पुं, (धर्म्मस्य धर्म्माचरणस्य वासरः ।
पौर्णमासी । इति त्रिकाण्डशेषः ॥

**धर्म्मवाहनः**, पुं, (धर्म्मं वाहयतीति । वह + णिच्
+ ल्युः । यद्वा, धर्म्मोवृषो वाहनं यस्य ।
धर्म्मस्य
वृषरूपत्वाद्वेव तथात्वम् ।) शिवः । इति
त्रिकाण्डशेषः ॥ धर्म्मस्य याने, क्ली ॥

**धर्म्मवैतंसिकः**, पुं, (धर्म्मे वैतंसिक इव । आत्मनो
धार्म्मिकत्वविज्ञापनाय पाशिकः
कपटाचारी
वेत्यर्थः ।) पांपकर्म्मणा
धनमासाद्यात्मनो
धार्म्मिकत्वख्यापनाय दानकर्त्ता ।
तत्पापफलं
यथा, --
"धर्म्मवैतंसिको यस्तु पापात्मा
पुरुषस्तथा ।
ददाति दानं विप्रेभ्यो
लोकविश्वासकारणम् ॥
पापेन कर्म्मणा विप्रो धनं लब्ध्वा
निरङ्कुशः ।
रागमोहान्वितोऽशान्तः कलुषीं
योनिमाप्नु-
यात् ॥"
इति वह्निपुराणे स्नानविधिनामाध्यायः ॥

**धर्म्मव्याधः**, पुं, (धर्म्मप्रधानो व्याधः । शाकपार्थि-
वादिवत् मध्यपदलोपिसमासः ।)
पापपुरुष-
विशेषः । स तु
काश्मीरदेशाधिपवसुनामनृप-
देहनिर्गतव्याधरूपिब्रह्महत्यात्मकः ।
तस्य राज्ञो
धर्म्मसंहिता ३ । इति हेमचन्द्रः ॥ धर्म्मशास्त्र-
प्रयोजका यथा, याज्ञवल्क्ये । १ । ५-६ ।
"मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः ।
यमापस्तम्बसम्बर्त्ताः कात्यायनवृहस्पती ॥
पराशरव्यासशङ्खलिखितादक्षगोतमौ ।
शातातपो वशिष्ठश्च धर्म्मशास्त्रप्रयोजकाः ॥"
एते प्रधानानि अन्येऽपि सन्ति ॥ रघुनन्दन-
धृतधर्म्मशास्त्राणि यथा, --
"मलिम्लुचे दायभागे संस्कारे शुद्धिनिर्णये ।
प्रायश्चित्ते विवाहे च तिथौ जन्माष्टमीव्रते ॥
दुर्गोत्सवे व्यवहृतावेकादश्यादिनिर्ण्ये ।
तडागभवनोत्सर्गे वृषोत्सर्गत्रये व्रते ॥
प्रतिष्ठायां परीक्षायां ज्योतिषे वास्तुसंज्ञके ।
दीक्षायामाह्निके कृत्ये क्षेत्रे श्रीपुरुषोत्तमे ॥
सामश्राद्धे यजुःश्राद्धे शूद्रकृत्यविचारणे ।
सर्व्वानुगः सुशर्म्मा च देवानीकः
पुरूद्वहः ॥
हेमधन्वा दृढायुश्च विभानुस्तत्सुता
नृपाः ॥"
इति मार्कण्डेयपुराणम् ॥

**धर्म्मसारः**, पुं, (धर्म्मस्य सारः ।) श्रेष्ठपुण्यकर्म्म
।
यथा । ब्रह्मोवाच ।
"धर्म्मसारमहं वक्ष्ये सङ्क्षेपाच्छृणु
शङ्कर ! ।
भुक्तिमुक्तिप्रदं सूक्ष्मं सर्व्वपापविनाशनम्
॥
श्रुतं ब्रह्म बलं धैर्य्यं सुखमुत्साहम्वेव च ।
शीको हरति वै नृणां तस्माच्छोकं
परित्यजेत् ॥
कर्म्मदेवाः कर्म्मलोकाः
कर्म्मसम्बन्धिबान्धवाः ।
कर्म्माणि प्रेरयन्तीह पुरुषं सुखदुःखयोः
॥
दानमेव परो धर्म्मो दानात्
सर्व्वमवाप्यते ।
दानान्मुक्तिञ्च राज्यञ्च दद्याद्दानं ततो
नरः ॥
एकतः क्रतवः सर्व्वे समग्रवरदक्षिणाः ।
एकतो भयभीतस्य प्राणिनः
प्राणरक्षणम् ॥
तपसा ब्रह्मचर्य्येण यज्ञैस्त्यागेन वा पुनः
।
गतिन्तु लभते जन्तुर्गङ्गां संसेव्य यां
लभेत् ॥
अश्रद्धा परमं पापं श्रद्धा पापप्रणाशिनी
।
जहाति पापं श्रद्धावान् जीर्णां
त्वचमिवोरगः ॥
न पुराकृतपुण्यानां नराणामिह शङ्कर ! ।
त्रीण्येतानि प्रपद्यन्ते
श्रद्धादातव्यमर्थिनः ॥
दूरादतिथयो यस्य गृहमायान्त्यवारिताः
।
स गृहस्थ इति प्रोक्तः शेषास्तु
गृहरक्षकाः ॥

| | | |
|---|---|---|
| वरेण तस्य धर्म्मव्याध इति संज्ञाभूत् ।<br>यथा, --<br>“ततः पुत्त्रं विवस्वन्तं श्रेष्ठं भ्रातृशतस्य ह ।<br>अभिषिच्य स्वके राज्ये तपोवनमुपागमत् ॥<br>पुष्करं नाम तीर्थानां प्रवरं यत्र केशवः ।<br>पुण्डरीकाक्षनामा तु पूज्यते तत्परायणैः ॥<br>तत्र गत्वा स राजर्षिः काश्मीराधि पतिर्व्वसुः । | | न चिन्तयन्ति ये विष्णुं नार्च्चयन्ति च ये नराः ।<br>धर्म्मस्य नाशका ये च ते वै निरयगामिनः ॥<br>ये च होमजपस्नानद्देवतार्च्चनतत्पराः ।<br>सत्यक्षान्तिदयायुक्तास्ते नराः स्वर्गगामिनः ॥<br>न दाता सुखदुःखानां न च हर्त्तास्ति कश्चन ।<br>स्वकृतान्येव भुज्यन्ते दुःखानि च सुखानि च ॥<br>धर्म्मार्थं जीवितं येषां सन्तानार्थञ्च मैथुनम् । |

देवार्थं तर्पणं येषां दुर्गाण्यभितरन्ति ते ॥
सन्तुष्टः को न शक्नोति फलमूलैश्च जीवितुम् ।
सर्व्व एव हि साम्येन शङ्कटान्यवगाहते ॥
लोभात् क्रोधः प्रभवति लोभाद्द्रोहः प्रवर्त्तते ।
लोभान्मोहश्च माया च मानो मत्सर एव च ॥
रागद्वे षानृतक्रोधलोभमोहमदोज्झितः।
यः स शान्तः परं लोकं याति पापविवर्ज्जितः ॥
देवता मुनयो नागा गन्धर्व्वा गुह्यका नराः ।
धार्म्मिकं पूजयन्तीह न धनाढ्यं न कामिनम् ॥
न मन्त्रबलवीर्य्येण प्रज्ञया पौरुषेण वा ।
अलभ्यं लभते मर्त्यस्तत्र का परिदेवना ॥
यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदर्भवि ।
आकाशे पक्षिभिर्न्नित्यं तथा सर्व्वत्र वित्तवान् ॥
सर्व्वसत्त्वदयालुत्वं सर्व्वेन्द्रियविनिग्रहः ।
सर्व्वत्रानित्यबुद्धित्वं श्रेयः परमिदं स्मृतम् ॥
पश्यन्निवाग्रतो मृत्युं यो धर्म्मं नाचरेन्नरः ।
अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥
भ्रणहा ब्रह्महा गोघ्नः पितृहा गुरुतल्पगः ।
भूमिं सर्व्वगुणोपेतां दत्त्वा पापैः प्रमुच्यते ॥
न गोदानात् परं दानं किञ्चिदस्तीति मे मतिः ।
सा गौर्न्यायार्ज्जिता दत्त्वा कृत्स्नं तारयते कुलम् ॥
नान्नदानात् परं दानं किञ्चिदस्ति वृषध्वज ! ।
अन्नेन धार्य्यते सर्व्वं चराचरमिदं जगत् ॥
कन्यादानं वृषोत्सर्गं जपस्तीर्थं श्रुतं तथा ।
हस्त्यश्वरथदानानि मणिरत्नवसुन्धराः ॥
अन्नदानस्य सर्व्वाणि कलां नार्हन्ति षोडशीम् ।
अन्नात् प्राणो बलं तेजश्चान्नाद्वीर्य्यं धृतिः स्मृतिः ॥
कूपवापीतडागादि आरामाणि च कारयेत् ।
त्रिःसप्तकुलमुद्धृत्य विष्णुलोके महीयते ॥
साधूनां दर्शनं पुण्यं तीर्थादपि विशिष्यते ।

**धर्म्माधर्म्मपरीक्षणं**, क्ली, (धर्म्मश्च अधर्म्मश्च तयोः परीक्षणम् ।) परीक्षाविशेषः । यथा, --
“अधुना संप्रवक्ष्यामि धर्माधर्म्मपरीक्षणम् ।
हन्तॄणां याचमानानां प्रायश्चित्तार्थिनां नृणाम् ॥
राजतं कारयेत् धर्म्ममधर्म्मं सीसकायसम् ।
लिखेत् भूर्जे पटे वापि धर्म्माधर्म्मौ सितासितौ ॥
अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्च्चयेत् ।
सितपुष्पस्तु धर्म्मः स्यादधर्म्मोऽसितपुष्पधृक्॥
एवं विधायोपलिख्य पिण्डयोस्तौ निधापयेत् ।
गोमयेन मृदा वापि पिण्डौ कार्य्यौ समन्ततः ॥
मृद्भाण्डक उपहृते स्थाप्यौ चानुपलक्षितौ ।
उपलिप्ते शुचौ देशे देवब्राह्मणसन्निधौ ॥
आवाहयेत् ततो देवान् लोकपालांश्च पूर्ब्बवत् ॥
धर्म्मावाहनपूर्ब्बन्तु प्रतिज्ञापत्रकं लिखेत् ।
यदि पापविमुक्तोऽहं धर्म्मस्त्वायातु मे करे ॥
अशुद्धश्चेन्मम करे पापमायातु धर्म्मतः ।
अभियुक्तस्तयोश्चैकं प्रगृह्णीताविलम्बितः ॥
धर्म्मे गृहीते शुद्धः स्यादधर्म्मे तु स हीयते ।
एवं समासतः प्रोक्तं धर्म्माधर्म्मपरीक्षणम् ॥”
इति मिताक्षरा ॥

**धर्म्माधिकरणं**, क्ली, (अधिक्रियते अस्मिन्निति । अधि + कृ + अधिकरणे ल्युट् । धर्म्मस्य अधि-
तारां जिघृक्षता पत्नीं भ्रातुराङ्गिरसस्य च ॥
सोऽप्ययाद्भीषितस्तेन बलिना क्रूरकर्म्मणा ।
अरण्यं गहनं घोरं प्रविवेश तदा प्रभुः ॥
ब्रह्मोवाच ।
यच्चारण्यमिदं धर्म्म ! त्वया व्याप्तं चिरं विभो ! ।
नाम्ना भविष्यति ह्येतद्धर्म्मारण्यमिति प्रभो ! ॥”
इति वराहपुराणम् ॥
(गयास्थतीर्थविशेषः । यथा, वायुपुराणे गया-माहात्म्ये ।
“प्रथमेऽह्नि विधिः प्रोक्तो द्वितीयदिवसे व्रजेत् ।
धर्म्मारण्यं तत्र धर्म्मो यस्माद्यज्ञमकारयत् ॥”)

**धर्म्मासनं**, क्ली, (धर्म्माय व्यवहारकार्य्यसाधनाय यदासनम् ।) विचारासनम् । वेञ्च् इति इंराजी-भाषा । यथा, --
“धर्म्मासनमधिष्ठाय संवीताङ्गः समाहितः ।
प्रणम्य लोकपालेभ्यः कार्य्यदर्शनमारभेत् ॥”
इति मनुः । ८ । २३ ॥

**धर्म्मिणी**, स्त्री, (धर्म्मोऽस्या अस्तीति । इनिः । ङीप् ।) रेणुका । इति राजनिर्घण्टः ॥

**धर्म्मी**, [न्] (त्रि, धर्म्मोऽस्यास्तीति । धर्म्म + “अत इनिठनौ ।” ५ । २ । ११५ । इति इनिः ।) धर्म्मवान् । पुण्यशीलः । इति शब्दरत्नावली ॥
(पुं, विष्णुः । यथा, महाभारते । १३ । १४९ । ६४ ।
“धर्म्मगुप् धर्म्मकृद्धर्म्मी सदसत्क्षरमक्षरम् ॥”
“धर्म्माधारतया धर्म्मी ।” इति शाङ्करभाष्यम् ॥)

कालेन फलते तीर्थं सद्यः साधुसमागमः ॥
सत्यं दमस्तपः शौचं सन्तोषः
क्षान्तिरार्ज्जवम् ।
ज्ञानं शमो दया दानमेष धर्म्मः सनातनः ॥”
इति गारुडे २२५ अध्यायः ॥

**धर्म्मसुतः**, पुं, (धर्म्मस्य सुतः ।) युधिष्ठिरराजः ।

इति शब्दरत्नावली ॥ (यथा, देवीभाग-
वते । २ । ७ । १९ ।
“एकान्ते विदुरेणोक्तो राजा धर्म्मसुतः शुचिः
॥”
नरनारायणमुनी । यथा, देवीभागवते । ४ ।
७ । १२ ।
“इति सञ्चिन्त्यमानं तं भ्रातरं दीनमानसम् ।
उवाच वचनं तथ्यं नरो धर्म्मसुतोऽनुजः ॥”)

**धर्म्मसूः**, पुं, (धर्म्मं सूते इति । सू + क्विप् ।)

धृम्याटपक्षी । इति शब्दरत्नावली ॥ (धर्म्म-
प्रेरके, त्रि । यथा, तैत्तिरीयब्राह्मणे । १ । ७ ।
८ । ३ ।
“सोमो राजा वरुणः । देवा धर्म्मसुवश्च ये
॥”)

**धर्म्मात्मा**, [न्] पुं, (धर्म्मे आत्मा स्वभावो यस्य ।

कुमारपालः । स तु आर्हतविशेषः । इति
हेम-
चन्द्रः । ३ । ३७७ ॥) त्रि, धर्म्मशीलः ।
यथा, --
“महर्षिर्भगवान् व्यामः कृत्वेमां संहितां पुरा ।
श्लोकैश्चतुर्भिर्धर्म्मात्मा पुत्त्रमध्यापयत्
शुकम् ॥”
इति महाभारतम् ॥

करणम् ।) राज्ञो विचारस्थानम् । यथा, -
-
“धर्म्मशास्त्रानुसारेण अर्थशास्त्रनिरूपणम्
।
यत्राधिक्रियते स्थाने धर्म्माधिकरणं हि
तत् ॥”
इति वीरमित्रोदये कात्यायनवचनम् ॥ *
॥
“पुरुषान्तरतत्त्वज्ञाः
प्रांशवश्चाप्यलोलुपाः ।
धर्म्माधिकरणे कार्य्या जनाह्वानकरा नराः
॥”
इति मत्स्यपुराणे १८९ अध्यायः ॥

**धर्म्माधिकरणः**, पुं, (धर्म्माधिकरणं आश्रयत्वेनास्त्य-

स्येति । अच् ।) धर्म्माध्यक्षः । तस्य
लक्षणम् ।
यथा, मत्स्यपुराणे १८९ अध्याये ।
“समः शत्रौ च मित्रे च
सर्व्वशास्त्रविशारदः ।
विप्रमुख्यः कुलीनश्च धर्म्माधिकरणो
भवेत् ॥”

**धर्म्माधिकरणी**, [न्] पुं, (धर्म्माधिकरणं विचार्य्य-

स्थानत्वेनास्त्यस्येति । धर्म्माधिकरण +
इनिः ।)
धर्म्माधिकरणविशिष्टः । जज् इति इंराजी
भाषा । तत्पर्य्यायः । धर्म्माध्यक्षः २
धार्म्मिकः ३ ।
इति हेमचन्द्रः । ३ । ३८९ ॥
प्राड्विवाकः ४
अक्षदर्शकः ५ । इत्यमरः । २ । ८ । ५ ॥

**धर्म्माध्यक्षः**, पुं, (धर्म्मे धर्म्माधिकरणे अध्यक्षः ।)

धर्म्माधिकरणी । इति हेमचन्द्रः । ३ ।
३८८ ॥
“कुलशीलगुणोपेतः सर्व्वधर्म्मपरायणः ।
प्रवीणः प्रेषणाध्यक्षो धर्म्माध्यक्षो
विधीयते ॥”
इति चाणक्ये । १०२ ॥
(विष्णुः यथा, महाभारते । १३ । १४९ ।
२८ ।

**धर्म्मोपदेशकः**, पुं, (धर्म्ममुपदिशतीति । उप +

दिश + ण्वुल् ।) गुरुः । इति हेमचन्द्रः । १
। ७७ ॥

**धर्म्म्यः**, त्रि, (धर्म्म + “धर्म्मपथ्यर्थन्यायादनपेते ।”

४ । ४ । ९२ । इति यत् ।) धर्म्मादनपेतः ।
धर्म्मयुक्तः । यथा, श्रीभगवद्गीतायाम् ।
“धर्म्म्याद्धि युद्धात् श्रेयोऽन्यत् क्षत्त्रियस्य
न
विद्यते ॥”
“न्यूनाधिकविभक्तानां धर्म्म्यः पितृकृतः
स्मृतः ॥”
इति दायभागः ॥
(धर्म्मेण प्राप्यः । “नौवयोधर्म्मेति ।” ४ ।
४ । ९१ ।
इति यत् धर्म्मलभ्यः । इति
सिद्धान्तकौमुदी ॥)

**धर्म्म्यविवाहः**, पुं, (धर्म्म्यः धर्म्मार्हो विवाहः ।)

विवाहविशेषः । स च पञ्चविधः । ब्राह्म-
दैवार्षगान्धर्व्वप्राजापत्यरूपः ।
अधर्म्म्यविवाह-
स्त्रिविधः । असुरराक्षसपैशाचरूपः । यथा,
“धर्म्म्येष्वेव विवाहेषु कालपरीक्षणं
नाधर्म्म्येषु ॥”
इत्युद्वाहतत्त्वम् ॥ (यस्य वर्णस्य यो विवाहो
धर्म्म्यः स उक्तो यथा, मनौ । ३ । २१ --
२६ ।
“ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः
।
गान्धर्व्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः
॥
यो यस्य धर्म्म्यो वर्णस्य गुणदोषौ च यस्य
यौ ।
तद्वः सर्व्वं प्रवक्ष्यामि प्रसवे च गुणागुणान्
॥
षडानुपूर्ब्ब्या विप्रस्य क्षत्त्रस्य चतुरोऽरवान्
।
विट्शूद्रयोस्तु तानेव विद्याद्धर्म्म्यान्न
राक्षसान् ॥
चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो
विदुः ।

| | | |
|---|---|---|
| | “लोकाध्यक्षः सुराध्यक्षो धर्म्माध्यक्षः कृताकृतः ॥”<br>“धर्म्माधर्म्मौ साक्षादीक्षते अनुरूपं फलं दातुम् ।<br>तस्माद्धर्म्माध्यक्षः ।” इति शाङ्करभाष्यम् ॥)<br>**धर्म्मारण्यं**, क्ली, (धर्म्माय धर्म्मस्य वा यदरण्यम् ।)<br>पुण्यवनविशेषः । तस्य नामकारणं यथा, --<br>“स धर्म्मः पीडितः सर्व्वं<br>सोमेनाद्भुतकर्म्मणा । | राक्षसं क्षत्त्रियस्यैकमासुरं वैश्यशूद्रयोः ॥<br>पञ्चानान्तु त्रयो धर्म्म्या द्वावधर्म्मौ<br>स्मृताविह । |

पैशाचश्चासुरश्चैव न कर्त्तव्यौ कदाचन ॥
पृथक् पृथग्वा मिश्रौ वा विवाहौ पूर्ब्बचोदितौ ।
गान्धर्व्वोराक्षसश्चैव धर्म्म्यौ क्षत्त्रस्य तौ स्मृतौ ॥”)

**धर्षः**, पुं, (धर्षणमिति । धृष् + भावे घञ् ।) प्रागल्भ्यम् । (यथा, महाभारते । १ । १८९ । ७ ।
“यद्येष दर्पाद् धर्षाद्वाप्यथ ब्राह्मणचापलात् ।
प्रस्थितो धनुरायन्तुं वार्य्यतां साधु मागमत् ॥”)
अमर्षः । शक्तिबन्धनम् । संहतिः । हिंसा ।
इति धृषधातोभर्विल्प्रत्ययेन साध्यः ॥

**धर्षकः**, पुं, (धृष्णोति प्रगल्भो भवतीति । धृष् + ण्वुल् ।) नटः । इति शब्दरत्नावली ॥
(अभिभवकर्त्तरि, त्रि । यथा, हरिवंशे । १५३ । २४ ।
“विधार्य्य सर्व्वे गृह्यन्तां ममैते गृहधर्षकाः ॥”)

**धर्षकारिणी**, स्त्री, (धर्षं कुलदूषणं करोतीति । कृ + णिनि + ङीप् ।) दूषिता कन्या । इति शब्दरत्नावली ॥

**धर्षणं**, क्ली, (धृष् + ल्युट् ।) परिभवः । (यथा, महाभारते । १ । २१४ । १९ ।
“सर्व्वमन्यत् परिहृतं धर्षणन्तु महीपतेः ॥”)
रतिः । इति मेदिनी । णे, ५४ ॥ धर्षशब्दार्थो- ऽप्यत्र ॥

**धर्षणिः**, स्त्री, (कर्षतीति । कृष + “कृषेरादेश्च नरः । इत्यमरः । ३ । ३ । २०५ ॥ (यथा, -- पञ्चतन्त्रे । २ । १०९ ।
“शौचविशिष्टयाप्यस्ति किञ्चित् कार्य्यं क्वचि- न्मृदा ।
निर्धनेन धवेनेह न तु किञ्चित् प्रयोजनम् ॥”)
धूर्त्तः । इति मेदिनी । वे, १३ ॥ स्वनामख्यात- वृक्षः । (यथा, महाभारते । १ । ६९ । १७ ।
“विल्वार्कखदिराकीर्णं कपित्थधवसङ्कुलम् ॥”)
तत्पर्य्यायः । धुरन्धरः २ शाकटाख्यः ३ । इति रत्नमाला ॥ दृढतरुः ४ गौरः ५ कषायः ६ मधुरत्वक् ७ शुष्कवृक्षः ८ पाण्डुतरुः ९ धवलः १० पाण्डुरः ११ । अस्य गुणाः । कषायत्वम् । कटुत्वम् । कफानिलनाशित्वम् । पित्तप्रकोपण- त्वम् । रुच्यत्वम् । दीपनत्वञ्च । अन्यच्च । शीत- त्वम् । प्रमेहार्शःपाण्डुपित्तकफापहत्वम् । मधु- रत्वम् । तुवरत्वम् । तिक्तत्वञ्च । तन्नामगुणाः ।
“धवो घटो नन्दितरुः स्थिरो धौरो धुरन्धरः ।
धवः शीतप्रमेहार्शःपाण्डुपित्तकफापहः ॥
मधुरस्तुवरस्तस्य फलञ्च मधुरं मनाक् ॥”
इति भावप्रकाशः ॥
तत्फलं ईषन्मधुरम् । इति राजनिर्घण्टः ॥
(धु कम्पने + “ऋदोरप् ।” ३ । ३ । ५७ । इति भावे अप् । कम्पनम् ॥)

**धवलः**, पुं, (धावतीति । धाव ञ् जवमृजोः + “धावतेर्बाहुलकात् ह्रस्वत्वञ्च ।” १ । १०८ । इत्युज्ज्वलदत्तोक्त्या कलः ह्रस्वश्च ।) धववृक्षः । चीनकर्पूरः । इति राजनिर्घण्टः ॥ राग- विशेषः । भरतमते हिन्दोलरागस्याष्टमपुत्त्रः । इति सङ्गीतशास्त्रम् ॥ वृषश्रेष्ठः । शुक्लः । सुन्दरे, त्रि । इत्युणादिकोषः ॥ श्वेतगुणयुक्ते, त्रि । इत्यमरः । १ । ५ । १३ ॥ (यथा, आर्य्या- सप्तसत्याम् । ३०६ ।
“धवलनखलक्ष्म दुर्ब्बलमकलितनेपथ्यमलकपिहिताक्ष्याः ॥”)
श्वेतमरिचे, क्ली । इति राजनिर्घण्टः ॥

**धवलपक्षः**, पुं, (धवलौ शुक्लौ पक्षौ यस्य ।) हंसः ।

**धवली**, स्त्री, (धवल + गौरादित्वात् ङीष् ।) शुक्ला गौः ॥ इत्यमरः । २ । ९ । ६७ ॥

**धवलोत्पलं**, क्ली, (धवलमुत्पलम् ।) कुमुदम् । इति राजनिर्घण्टः ॥

**धवाणकः**, पुं, (धुनाति कम्पयति वृक्षादीनीति । धू + “आणको लूधूशिन्धिधाञ्भ्यः ।” उणां ३ । ८३ । इति आणकः ।) वायुः । इत्युणादि- कोषः ॥

**धवित्रं**, क्ली, (धूयतेऽनेनेति । धू + “अर्त्तिलूधू- सूखनसहचर इत्रः ।” ३ । २ । १८४ । इति इत्रः ।) मृगचर्म्मरचितव्यजनम् । इत्यमरः । २ । ७ । २३ ॥

**धा**, डु ञ लि धारणे । पुष्टौ । दाने । इति कवि- कल्पद्रुमः ॥ (ह्वां-उभं-सकं-अनिट् ।) डु, हित्रि- मम् । ञ लि, दधाति धत्ते । धारणं धरणम् । दाने, द्विषता विहितं त्वयाथवेति किराते विहितं दत्तमित्यर्थः । इति दुर्गादासः ॥

**धाः**, पुं, (दधातीति । धा + क्विप् ।) ब्रह्मा । धारकः । इति मेदिनी । धे, १ ॥ बृहस्पतिः । इत्येकाक्षरकोषः ॥

**धाकः**, पुं, (दधातीति । धा + “कृदाधारार्चि- कलिभ्यः कः ।” उणां ३ । ४० । इति कः ।) वृषः । आहारः । इत्युणादिकोषः ॥ अन्नम् । स्तम्भः । इति संक्षिप्तसारे उणादिवृत्तिः ॥ (आधारः । इत्युज्ज्वलदत्तः ॥)

**धाटी**, स्त्री, शत्रुसम्मुखगमनम् । तत्पर्य्यायः । प्रपातः २ अभ्यवस्कन्दः ३ अभ्यासादनम् ४ । इति हेमचन्द्रः । ३ । ४६४ ॥

**धाणकः**, पुं, (दधातीति । धा + “आणको लूधू- शिन्धिधाञ्भ्यः ।” उणां ३ । ८३ । इति आणकः ।) दीनारभागः । इत्युणादिकोषः ॥

धः ।” उणां । २ । १०५ । इति अनिः आदेश्च धः ।) बन्धकी । वृषलः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**धर्षणी**, स्त्री, (धर्षणि + कृदिकारादिति वा ङीष् ।) धर्षिणी । असती । इत्यमरटीकायां भरतः ॥

**धर्षिणी**, स्त्री, (धर्षति हिनस्ति कुलमिति । धृष + णिनि + ङीप् ।) पुंश्चली । इत्यमरः । २ । ६ । १० ॥

**धर्षितं**, क्ली, (धृष्यतेऽनेनेति । धृष + क्तः ।) रतिः । मैथुनम् । इति त्रिकाण्डशेषः ॥ (धृष + कर्म्मणि क्तः ।) कृतधर्षणे, त्रि ॥ (अभिभूतः । यथा, महाभारते । ३ । ५५ । १५ । “आसनेभ्यः समुत्पेतुस्तेजसा तस्य धर्षिताः ॥”)

**धर्षिता**, स्त्री, (धृष्यतेऽसौ । धृष + क्तः । टाप् ।) असती । इति शब्दरत्नावली ॥

**धलण्डः**, पुं, (दधातीति । धा + डः । धं धारकं लण्डति उत्क्षिपतीति । लण्ड उत्क्षेपे + अच् । कण्टकान्वितत्वादस्य तथात्वम् ।) दृढकण्टकवृक्षः । इति शब्दचन्द्रिका ॥ धलआँक्डा इति भाषा ॥

**धव**, इ व्रजे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) इ, धन्व्यते । व्रजो गतिः । इति दुर्गादासः ॥

**धवः**, पुं, (धुनोति धवतीति वा । धु धू वा + इति राजनिर्घण्टः ॥ (धवलः शुक्लः पक्षः ।) शुक्लपक्षश्च ॥ (शुक्लपक्षविशिष्टे, त्रि । यथा, माघे ।
“धवलपक्षविहङ्गमकूजितैः ॥”)

**धवलपाटली**, स्त्री, (धवला पाटली ।) सित-पाटलिका । इति राजनिर्घण्टः ॥

**धवलमृत्तिका**, स्त्री, (धवला मृत्तिका ।) खटिनी । इति राजनिर्घण्टः ॥

**धवलयावनालः**, पुं, (धवलो यावनालः ।) याव-नालविशेषः । तत्पर्य्यायः । पाण्डुरः २ तार-तण्डुलः ३ नक्षत्रकान्तिविस्तारः ४ वृत्तः ५ मौक्तिकतण्डुलः ६ । अस्य गुणाः । गौल्यत्वम् । बल्यत्वम् । वृष्यत्वम् । रुच्यप्रदत्वम् । पथ्यत्वम् । त्रिदोषार्शोगुल्मव्रणनाशित्वञ्च । इति राज-निर्घण्टः ॥

**धवला**, स्त्री, (धावतीति । धाव + कलः ह्रस्वश्च । अनुदात्तत्वाभावात् न ङीष् ।) शुक्ला गौः । इत्यमरः । २ । ९ । ६७ ॥

**धातकी**, स्त्री, (धातुं करोतीति । धा + तत्करो-तीति णिच् । टिलोपः । ततः क्वुन् । ततः पिप्पल्यादित्वात् ङीष् ।) पुष्पविशेषः । धाइ-फुल् इति भाषा । तत्पर्य्यायः । वह्निपुष्पी २ ताम्रपुष्पी ३ धावनी ४ अग्निज्वाला ५ सुभिक्षा ६ पार्व्वती ७ बहुपुष्पिका ८ कुमुदा ९ सीधु-पुष्पी १० कुञ्जरा ११ मद्यवासिनी १२ गुच्छ-पुष्पी १३ संधपुष्पी १४ रोध्रपुष्पिणी १५ तीव्र-ज्वाला १६ वह्निशिखा १७ मद्यपुष्पा १८ । इति राजनिर्घण्टः ॥ धातृपुष्पी १९ धातुपुष्पी २० धातृपुष्पिका २१ धात्री २२ धातुपुष्पिका २३ । इति शब्दरत्नावली ॥ अस्या गुणाः । कटुत्वम् । उष्णत्वम् । मदकारित्वम् । विष-प्रवाहिकातिसारविसर्पव्रणनाशित्वञ्च । इति राजनिर्घण्टः ॥ शीतत्वम् । रक्तपित्तनाशि-त्वञ्च । इति राजवल्लभः ॥

**धाता**, [ऋ] पुं, (दधातीति । धा + तृच् ।) ब्रह्मा । इत्यमरः । १ । १ । १७ ॥ (यथा, रघुः । १० । ४३ ।
“धातारं तपसा प्रीतं ययाचे स हि राक्षसः ।
दैवात् सर्गादवध्यत्वं मर्त्त्येष्वास्थापराङ्मुखः ॥”)

| अच् ।) पतिः । (यथा, हरिवंशे भविष्य- पर्व्वणि । १६ । ४५ । "मा विद्या च हरेः प्रोक्ता तस्या ईशो यतो भवान् । तस्मान्माधवनामासि धवः स्वामीति शब्दितः ॥") | | |
|---|---|---|

विष्णुः । इति हलायुधः ॥ (यथा,
महाभारते ।
१३ । १४९ । ११५ ।
"आधारनिलयो धाता पुष्पहासः प्रजागरः
॥"
"संहारसमये सर्व्वाः प्रजा धयति पिबतीति
वा
धाता । धेट् पाने इति धातुः ।" इति
शाङ्कर-
भाष्यम् ॥ महादेवः । यथा, तत्रैव । ३३ ।
१७ । १०३ ।
"धाता शक्रश्च विष्णुश्च मित्रस्त्वष्टा ध्रुवो
धरः ॥")
भृगुमुनिपुत्त्रः । तस्य भार्य्या मेरुकन्या
आयतिः ।
तस्य सुतः मृकण्डुः तस्य च मार्कण्डेयः ।
इति
श्रीभागवतम् ॥
ऊनपञ्चाशद्वाय्वन्तर्गतवायुवि-
शेषः । यथा, वह्निपुराणे गणभेदनामाध्याये
।
"धाता दुर्गो
धितिर्भीमस्त्वभियुक्तस्त्वपात्सहः ।
द्युतिर्घपुरनाप्योथवासः कामो जयो विराट्
॥
इत्येकोनाश्च षञ्चाशन्मरुतः पूर्ब्बसम्भवाः
॥"
(आदित्यविशेषः । यथा, महाभारते । १ ।
६५ । १४-१५ ।
"अदित्यां द्वादशादित्याः सम्भूता
भुवनेश्वराः ।
ये राजन् ! नामतस्तांस्ते कीर्त्तयिष्यामि
भारत ! ॥
धाता मित्रोऽर्य्यमा शक्रो वरुणस्त्वंश एव
च ॥"
ब्रह्मणः पुत्त्रविशेषः । यथा, महाभारते । १
।
६६ । ५१ ।
"द्वौ पुत्त्रौ ब्रह्मणस्त्वन्यौ ययोस्तिष्ठति
लक्षणम् ।

अथ धातूनां कर्म्माण्याह ।
"प्रीणनं जीवनं लेपः स्नेहो धारणपूरणे ।
गर्भोत्पादश्च कर्म्माणि धातूनां कथितानि हि
॥"
इति च भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)
रसः । रक्तम् । मांसम् । मेदः । अस्थि ।
मज्जा ।
शुक्रम् । महाभूतानि । तद्यथा । पृथिवी ।
जलम् । तेजः । वायुः । आकाशः । तद्गुणाः
यथा । गन्धः । रसः । रूपम् । स्पर्शः । शब्दः
।
इन्द्रियाणि यथा । चक्षुः । श्रोत्रम् । घ्राणम् ।
जिह्वा । त्वक् ॥ अश्मविकृतिः । सा तु गैरिक-
मनःशिलादि । (यथा, कुमारे । १ । ४ ।
"अकालसन्ध्यामिव धातुमत्ताम् ॥")
शब्दयोनिः । सा च साधुशब्दप्रकृतिः । भूपच-
पठप्रभृतिः । स्वर्णादिः । इत्यमरभरतौ ॥ * ॥
यथा, शब्दमालायाम् ।
"सुवर्णरूप्यमाणिक्यहरितालमनःशिलाः।
गैरिकाञ्जनकासीससीसलोहाःसहिङ्गुलाः ॥
गन्धकोऽभ्रकमित्याद्या धातवो गिरिसम्भवाः
॥"
नव धातवो यथा, सुखबोधे ।
"हेमताराननागाश्च ताम्रवङ्गे च तीक्ष्णकम् ।
कांस्यकं कान्तलौहश्च धातवो नव कीर्त्तिताः
॥"
अष्टधातवो यथा, दानसागरे ।
"हिरण्यं रजतं कांस्यं ताम्रं सीसकमेव च ।
रङ्गमायसरैत्यञ्च धातवोऽष्टौ प्रकीर्त्तिताः ॥"
अपि च वैद्यके ।
"सुवर्णं रजतं ताम्रं लौहं कुप्यञ्च पारदम् ।
वङ्गञ्च सीसकञ्चैव इत्यष्टौ देवसम्भवाः ॥"
सप्तधातवो यथा, भावप्रकाशे ।
"स्वर्णं रूप्यञ्च ताम्रञ्च रङ्गं यशोदमेव च ।
सीसं लौहञ्च सप्तैते धातवो गिरिसम्भवाः ॥"
ताम्राद्युत्पत्तिर्यथा, --
"शृणु तत्त्वेन मे भूमे ! कथ्यमानं मयानघे ! ।
एकाग्रं चित्तमाधाय येन ताम्रं मम प्रियम् ॥
पूर्ब्बं कमलपत्राक्षि ! गुडाकेशो महासुरः ।

सप्तोपधातवो यथा, --
"माक्षिकं तुत्थिकाभ्रे च
नीलाञ्जनशिलालकाः ।
रसकश्चेति विज्ञेया एते सप्तोपधातवः
॥" * ॥
शरीरस्थसप्तधातुभवसप्तोपधातवोयथा,
--
"स्तन्यं रजश्च नारीणां काले भवति
गच्छति ।
शुद्धमांसभवः स्नेहो यः सा संकीर्त्त्यते
वसा ॥
स्वेदो दन्तास्तथा केशास्तथैवोजश्च
सप्तमम् ।
इति धातुभवा ज्ञेया एते सप्तोपधातवः
॥"
इति सुखबोधः ॥

**धातुकासीसं**, क्ली, (धातुरूपं कासीसम् ।) कासी-
सम् । इति हेमचन्द्रः । ४ । १२२ ॥
(पर्य्यायो-
ऽस्य यथा, वैद्यकरत्नमालायाम् ।
"कासीसं धातुकासीसं हरितं तच्च
लोहितम् ॥")

**धातुघ्नं**, क्ली, (धातुं स्वर्णादिकं हन्तीति । हन +
टक् ।) काञ्जिकम् । इति हेमचन्द्रः । ३ ।
९० ॥

**धातुनाशनं**, क्ली, (धातुं स्वर्णादिकं नाशयतीति ।
नश् + णिच् + ल्युः ।) काञ्जिकम् । इति
त्रिकाण्ड-
शेषः ॥

**धातुपः**, पुं, (धातुं अस्थिमज्जामांसोत्पादक-
पदार्थविशेषं पाति रक्षतीति । पा + कः
।)
शरीरस्थप्रथमधातुः । रस इति ख्यातः
। इति
शब्दचन्द्रिका ॥

**धातुपुष्पिका**, स्त्री, (धातुरिव पुष्पं यस्याः । जातौ

लोके धाता विधाता च यौ स्थितौ मनुना सह ॥”)
पालके, त्रि । इति मेदिनी । ते, २७ ॥ धारकः ।
इति धरणिः ॥

**धातुः**, पुं, (धीयते सर्व्वमस्मिन्निति । धा + “सितनि-
गमीति ।” उणां १ । ७० । इति तुन् ।) शरीर-
धारकवस्तूनि । तद्यथा । कफः । वातः । पित्तम् ।
“शरीरदूषणाद्दोषा मलिनीकरणान्मलाः ।
धारणाद्धातवस्ते स्युर्वातपित्तकफास्त्रयः ॥”
इति वैद्यकम् ॥
(“रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः ।
सप्त दूष्याः मलामूत्रशकृत्स्वेदादयोऽपि च ॥”
इति वाभटे सूत्रस्थाने प्रथमेऽध्याये ॥
धातुशब्देनात्र शुक्रार्त्तवे अप्युच्येते तद् यथा ।
“तथाहि पुष्पमुकुलस्थो गन्धो न शक्यमिहा-
स्तीति वक्तुं नैव नास्तीत्यथवास्ति सतां भावानां
अभिव्यक्तिरिति कृत्वा केवलं सौक्ष्म्यान्नाभि-
व्यज्यते स एव गन्धो विवृतपत्रकेशरैः कालान्त-
रेणाभिव्यक्तिं गच्छत्येवं बालानामपि वयः
परिणामात् शुक्रप्रादुर्भावो भवति रोमराज्या-
दयोथार्त्तवादयश्च विशेषा नारीणां रजसि
चोपचीयमाने शनैः शनैः स्तनगर्भाशययोन्य-
भिवृद्धिर्भवति । स एवान्नरसो वृद्धानां जरा-
पक्वशरीरत्वान्न प्रीणनो भवति । त एते शरीर-
ताम्ररूपं समादाय ममैवाराधने रतः ॥
तच्च दृष्ट्वा मया प्रोक्तं प्रसन्नेनान्तरात्मना ।
गुडाकेश ! महाभाग ब्रूहि किं करवाणि ते ॥
चक्रेण वधमिच्छामि त्वया मुक्तेन केशव ! ।
वैशाखस्य तु मासस्य शुक्लपक्षे तु द्वादशीम् ॥
मम तेजोमयं चक्रं वाधयिष्यत्यसंशयम् ।
तदेव चक्रेण विपाटितोऽसौ
प्राप्तोऽपि मां भागवतप्रधानः ॥
ताम्रन्तु तन्मांससमसृक्सुवर्ण-
मस्थीनि रूप्यं बहुधातवश्च ।
रङ्गञ्च सीसं त्रपुधातुसंस्थं
कांस्यञ्च रीतिश्च मलस्तु तेषाम् ॥
एतद्भागवतैः कार्य्यं मम प्रियकरैः सदा ।
एवं ताम्रं समुत्पन्नमिति मे रोचते हि तत् ॥”
इति वराहपुराणम् ॥ * ॥
“हरितालं हरेर्वीर्य्यं लक्ष्मीवीर्य्यं मनःशिला ।
पारदं शिववीर्य्यं स्यात् गन्धकं पार्व्वतीरजः ॥”
इति वैद्यकम् ॥ * ॥
ङीष् । स्वार्थे कन् पूर्ब्बह्रस्वः । यद्वा कप् । टापि
अत इत्वम् ।) धातृपुष्पिका । इति शब्दरत्ना-
वली । धाइफुल् इति भाषा ॥

**धातुपुष्पी**, स्त्री, (धातुरिव पुष्पमस्याः । जाति-
त्वात् ङीष् ।) धातकी । इति भावप्रकाशः ॥

**धातुभृत्**, पुं, (धातुं गैरिकादिकं बिभर्त्तीति । भृ +
क्विप् । तुगागमश्च ।) पर्व्वतः । इति शब्द-
रत्नावली ॥ धातुपोषके, त्रि ॥

**धातुमाक्षिकं**, क्ली, (धातुरूपं माक्षिकम् ।) माक्षि-
कम् । इति राजनिर्घण्टः ॥
(पर्य्यायोऽस्य यथा, वैद्यकरत्नमालायाम् ।
“माक्षिकंधातुमाक्षिकं ताप्यं ताप्युत्थसंज्ञकम् ॥”)

**धातुमारिणी**, स्त्री, (धातुं सुवर्णादिकं मारयतीति ।
मृ + णिच् + णिनि + ङीप् ।) सर्ज्जिका । इति
शब्दचन्द्रिका । सोहागा इति भाषा ॥

**धातुराजकं**, क्ली, (धातुषु राजते इति । राज +
ण्वुल् । यद्वा, धातूनां राजा इति समामान्त टच् ।
ततः स्वार्थे कन् ।) रेतः । इति शब्दचन्द्रिका ॥

**धातुवल्लभं**, क्ली, (धातुषु वल्लभम् ।) टङ्कणम् ।
इति राजनिर्घण्टः ॥ (टङ्कणशब्देऽस्य गुणा-
दिकं ज्ञेयम् ॥)

**धातुवादी**, [न्] पुं, (धातुं वदति उपायान्तरेण
कर्त्तुं कथयतीति । वद + णिनिः ।) कारन्धमी ।
इति हारावली । १९५ ॥

**धातुवैरी**, [न्] पुं, (धातूनां वैरीव दूषकत्वात् ।)

| | | |
|---|---|---|
| धारणाद्धातव इत्युच्यन्ते ॥” इति सुश्रुते सूत्र-<br>स्थाने १४ अध्यायः ॥<br>अथ धातुशब्दस्य निरुक्तिमाह ।<br>“एते सप्त स्वयं स्थित्वा देहन्दधति यन्नृणाम् ।<br>रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः ॥” | | गन्धकः । इति शब्दचन्द्रिका ॥<br>**धातुशेखरं**, क्ली, (धातूनामुपधातूनां शेखरमिव श्रेष्ठत्वात् ।) कासीसम् । इति हेमचन्द्रः । ४ ।<br>१२२ ॥ |

**धातूपलः**, पुं, (धातुः उपधातुरूप उपलः पाषाणः ।) कठिनिका । इति हारावली । २१२ ॥

**धातृपुत्त्रः**, पुं, (धातुर्ब्रह्मणः पुत्त्रः ।) सनत्कुमारः । इति शब्दरत्नावली ॥ ब्रह्मणः सुतमात्रञ्च ॥

**धातृपुष्पिका**, स्त्री, (धातृपुष्पी । स्वार्थे कन् पूर्ब्ब-ह्रस्वः । यद्वा, कप् । टापि अत इत्वम् ।) धातकी । इत्यमरः । २ । ४ । १२४ ॥

**धातृपुष्पी**, स्त्री, (धातृ पुष्टिकर्त्तृ पुष्पमस्याः । ङीप् ।) धातकी । इति शब्दरत्नावली ॥

**धात्रं**, क्ली, (धीयते अन्नाद्यत्रेति । धा + आधारे ष्ट्रन् ।) भाजनम् । इति संक्षिप्तसारोणादिवृत्तिः ॥

**धात्रिका**, स्त्री, (धात्री । स्वार्थे कन् टाप् पूर्ब्ब-ह्रस्वश्च ।) आमलकी । इति राजनिर्घण्टः ॥

**धात्री**, स्त्री, (धीयते पीयते इति । धेट पाने + "सर्व्वधातुभ्यः ष्ट्रन् ।" उणां ४ । १५८ । इति कर्म्मणि ष्ट्रन् । षित्वात् ङीष् । अस्या स्तनदुग्ध-पानात्तथात्वम् । यद्वा, दधाति धरतीति । धा + तृच् + ङीप् ।) माता । (यथा, याज्ञवल्क्य-सहितायाम् । ३ । ८२ ।
"पुनर्धात्रीं पुनर्गर्भमोजस्तस्य प्रधावति ।
अष्टमे मास्यतो गर्भो जातः प्राणैर्विमुच्यते ॥")
उपमाता । (यथा, रघुः । १० । ७८ ।
"कुमाराः कृतसंस्कारास्ते धात्रीस्तनपायिनः ।
आन्दनेनाग्रजेनेव समं ववृधिरे पितुः ॥"
(कुमाररक्षाकर्त्री । धाइ इति भाषा ॥ तस्या परीक्षा यथा, "अतो धात्रीपरीक्षामुपदेक्ष्यामः । अथ ब्रूयात् धात्रीमानयेति समानवर्णां यौव-नस्थां निभृतामनातुरामव्यङ्गामव्यसनामवि रूपामजुगुप्सितां देशजातीयामक्षुद्रां अक्षुद्र-कर्म्मिणीं कुले जातां वत्सलां जीववत्सां पुंवत्सां दोग्ध्रीमप्रमत्तामशायिनीमनुच्चारशायिनीमन न्तावशायिनीं कुशलोपचारां शुचिमशुचि-द्वेषिणीं स्तन्यसम्पदुपेतामिति ।"
"धात्री तु यदा स्वादुबहुलशुद्धदुग्धा स्यात्तदा स्नातानुलिप्ता शुक्लवस्त्रं परिधायैन्द्रीं ब्राह्मीं

"अहमेतत्त्रिधा भिन्ना तिष्ठामि त्रिविधैर्गुणैः ।
गौरी लक्ष्मीः स्वधा चेति रजःसत्त्वतमोगुणैः ॥
तत्र गत्वा तथा कार्य्यं विधास्यन्ते च ताः सुराः ।
तास्तथा तान् सुरान् दृष्ट्वा प्रणतान् भक्तवत्-सलाः ॥
बीजानि प्रददुस्तेभ्यो वाक्यानि जगदुस्तदा ।
इमानि देवा बीजानि विष्णुर्यत्रावतिष्ठते ॥
निर्वपध्वं ततः कार्य्यं भवतां सिद्धिमेष्यति ।
क्षिप्तेभ्यस्तत्र बीजेभ्यो वनस्पत्यः स्त्रियोऽभवन् ॥
धात्री च मालती चैव तुलसी च नृपोत्तम ! ।
धात्र्युद्भवा स्मृता धात्री माभवा मालती स्मृता ॥
गौरीभवा च तुलसी तमःसत्त्वरजोगुणाः ।
स्त्रीरूपिण्यो वनस्पत्यो दृष्ट्वा विष्णुस्तदा नृप ! ॥
उत्तस्थौ सम्भ्रमाद्वृन्दारूपातिशयविभ्रमात् ॥"
अस्या माहात्म्यं यथा, --
"शृणुष्व धात्रीमाहात्म्यं सर्व्वपापहरं शुभम् ।
यत् पुरा हरिणा प्रोक्तं वशिष्ठं प्रति नारद ! ॥
धात्री वत्स ! नृणां धात्री मातृवत् कुरुते कृपाम् ।
दद्यादायुः पयः पानं स्नानाद्वै धर्म्मसञ्चयम् ॥
अलक्ष्मीनाशनं सद्योऽप्यन्ते निर्व्वाणमेवच ।
विघ्नानि नैव जायन्ते धात्रीस्नानेन वै नृणाम् ॥
तस्मात् त्वं कुरु विप्रेन्द्र ! धात्रीस्नानं हि यत्नतः ।
प्रयास्यसि हरेर्धाम देवत्वं प्राप्य नारद ! ॥
यत्र यत्र मुनिश्रेष्ठ ! धात्रीस्नानं समाचरेत् ।
तीर्थे वापि गृहे वापि तत्र तत्र श्रियः स्थिताः ॥
धात्रीस्नातानि दिवसे यस्यास्थीनि कलेवरे ।
धात्रीफलविलिप्ताङ्गो धात्रीफलविभूषितः ।
धात्रीफलकृताहारो नरो नारायणो भवेत् ॥
यः कश्चिद्वैष्णवो लोके धत्ते धात्रीफलं मुने ! ।
प्रियो भवति विष्णोः स मनुष्याणाञ्च का कथा ॥
धात्रीफलानि यो नित्यं वहते करसंपुटे ।
तस्य नारायणो देवो वरमेकं प्रयच्छति ॥
धात्रीफलं न मोक्तव्यं कदाचित् करसंपुटात् ।
य इच्छेद्विपुलान् भोगानन्ते यो मुक्तिमिच्छति ॥
धात्रीफलकृतां मालां कण्ठस्थां यो वहेन्न हि ।
स वैष्णवो न विज्ञेयो विष्णुभक्तिपरोऽपि च ॥
न त्याज्या तुलसीमाला धात्रीमाला विशेषतः ।
तथा रुद्राक्षमालापि धर्म्मकामार्थमिच्छता ॥
यावल्लुठति कण्ठस्था धात्रीमाला नरस्य हि ।
तावन्मनसि हृत्स्थोऽपि सदा लुठति केशवः ॥
यावद्दिनानि वहते धात्रीमालां करे नरः ।
तावद्युगसहस्राणि वैकुण्ठे वसतिर्भवेत् ॥
सर्व्वदेवमयी धात्री वासुदेवमनःप्रिया ।
आरोपणीया सेव्या च सेचनीया सदा बुधैः ॥
एतत्ते सर्व्वमाख्यातं धात्र्या माहात्म्यमुत्तमम् ।
श्रोतव्यञ्च सदा सद्भिश्चतुर्व्वर्गफलप्रदम् ॥"

शतवीर्य्या सहस्रवीर्य्यां मोघामव्यथां शिवा-
मरिष्टां वाट्यपुष्पीं विष्वक्सेनकान्तामिति बिभ्र-
त्यौषधीः कुमारं प्राङ्मुखं प्रथमं दक्षिणं स्तनं
पाययेदिति धात्रीकर्म्म ।” इति चरके शारीर-
स्थानेऽष्टमेऽध्याये ॥ * ॥ (दधाति धारयति सर्व्व-
मिति । धा + तृच् + ङीप् ।) क्षितिः । (गायत्री-
स्वरूपिणी भगवती । यथा, देवीभागवते । १२ ।
६ । ७८ ।
“धात्रीधनुर्धरा धेनुधारिणी धर्म्मचारिणी ॥”
गङ्गा । यथा, काशीखण्डे । २९ । ९२ ।
“धर्म्मोर्म्मिवाहिनी धुर्य्या धात्री धात्रीविभूषणम्
॥”)
आमलकीवृक्षः । इति मेदिनी । रे, ४९ ॥
(अस्याः पर्य्याया यथा, वैद्यकरत्नमालायाम् ।
“धात्री कर्षफला तिष्या वयस्थामलकी शिवा ॥”)
अथ धात्र्याद्युत्पत्तिकारणम् ।
वृन्दामरणान्मुग्धस्य विष्णोर्मोहापनोदाय रुद्र-
वाक्यादाद्यां शक्तिं स्तुवतो देवान् प्रति सा आह ।

प्रक्षालितानि विप्रेन्द्र ! न स
स्याद्गर्भसम्भवः ॥
धात्रीफलेन विप्रेन्द्र ! येषां केशाश्च रञ्जिताः
।
ते नराः केशवं यान्ति नाशयित्वा कलेर्मलम्
॥
धात्रीफलं महापुण्यं स्नाने पुण्यतरं स्मृतम् ।
पुण्यात् पुण्यतरं वत्स ! भक्षणे मुनिपुङ्गव !
॥
न गङ्गा न गया पुण्या न काशी न च पुष्करम्
।
एकैव च यथा पुण्या धात्री माधववासरे ॥
कार्त्तिके मासि विप्रेन्द्र ! धात्रीस्नानं
समाचरेत् ।
यश्च तज्जलमश्नीयात्
सोऽश्वमेधमवाप्नुयात् ॥
धात्रीफलं स्मरेद्यस्तु सदैव मुनिसत्तम ! ।
प्राग्जन्मनि कृतात् पापात् मुच्यते नात्र
संशयः ।
संस्मरेद्यस्तु धात्रीं तामहन्यहनि मानवः ॥
मुच्यते पातकैः सर्व्वैर्मनोवाक्कायसम्भवैः ॥
धात्रीफलान्यमावास्यामष्टमीनवमीषुच ।
रविवारे च संक्रान्तौ संस्मरेन्मुनिपुङ्गव ! ॥
यस्य गेहे मुनिश्रेष्ठ ! धात्री तिष्ठति सर्व्वदा ।
तस्य गेहं न गच्छन्ति प्रेतकुष्माण्डराक्षसाः
॥
धात्रीस्नाने हरेर्नाम्नि जागरे हरिवासरे ।
जन्मबन्धो विनश्येत हयमेधायुतं फलम् ॥
स्नायादामलकैर्य्यस्तु कार्त्तिके हरिवत्सल !
।
परितोषं समायाति तस्य वै माधवः स्वयम्
॥
धात्रीच्छायां समासाद्य कुर्य्यात् श्राद्धस्तु यो
मुने ! ।
मुक्तिं प्रयान्ति पितरः प्रसादात्तस्य वै हरेः ॥
मूर्द्ध्नि पाणौ मुखे कण्ठे देहे च मुनिसत्तम !
।
धत्ते धात्रीफलं यस्तु स महात्मा स
पुण्यभाक् ॥

इति पाद्मोत्तरखण्डे १२७
अध्यायः ॥
अपि च ।
“तुलसीवृक्षमाश्रित्य या
यास्तिष्ठन्ति देवताः ।
आमलक्या अपि प्राज्ञ ! तास्ता
एव वसन्ति च ॥
अशुभं वा शुभं वापि यत्
कर्म्मामलकीतले ।
क्रियते मानवैर्विप्र ! भवेत्तत्
सर्व्वमक्षयम् ॥
पवित्रैर्नूतनैः पत्रैर्धात्र्या यः
पूजयेद्धरिम् ।
स मुक्तः पापजालेन सायुज्यं
लभते हरेः ॥
धात्री च तुलसी देवी न तिष्ठेद्यत्र
जैमिने ! ।
स्थानं तदपवित्रं स्यान्न च
पुण्यक्रिया फलेत् ॥
धात्र्या हीनं तुलस्या च निलयं
यस्य भूसुर ! ।
अलक्ष्मीः पातकं सर्व्वं कलिश्च
तेन तोषितः ॥
धात्रीकाष्ठस्य मालाञ्च यो
वहेन्मतिमान्नरः ।
तत् सर्व्वमक्षयं प्रोक्तं शुभं
वाशुभमेव वा ॥
यस्तु धात्रीफलं भुङ्क्ते
मानवोऽखिलतत्त्व-
वित् ।
तद्देहाभ्यन्तरस्थायि सर्व्वं पापं
विनश्यति ॥
धात्रीफलमयीं मालां वहते
द्विजसत्तमः ।
ब्रवीमि शृणु माहात्म्यं सर्व्वपापहरं
शुभम् ॥
श्मशानेऽपि यदा मृत्युस्तस्य
स्याद्दैवयोगतः ।
गङ्गामरणजं पुण्यं स प्राप्नोति न
संशयः ॥
नित्यं गृह्णाति यो
धात्रीतुलसीमूलकर्द्दमम् ।

| | | |
|---|---|---|
| | | दिने दिने लभेत् पुण्यं<br>सोऽश्वमेधशतोद्भवम् ॥<br>धात्रीतरुञ्च यो हन्ति<br>सर्व्वदेवगणाश्रयम् ।<br>स ददाति हरेरङ्गे धातं नास्त्यत्र संशयः ॥<br>सर्व्वदेवमयी धात्री विशेषात् केशवप्रिया ।<br>सम्यग्वक्तुं गुणं तस्या ब्रह्मणापि न शक्यते ॥”<br>इति क्रियायोगसारे २३ अध्यायः ॥<br>यथा स्कान्दे ।<br>“न धात्री सफला यत्र न विष्णोस्तुलसीदलम् ।<br>तं म्लेच्छदेशं जानीयात् यत्र नायान्ति वैष्णवाः ॥”)<br>इत्येकादशीतत्त्वम् ॥ |

अय धात्रीसेचनफलम् ।
"पिता पितामहाश्चान्ये अपुत्रा ये च गोत्रिणः ।
वृक्षयोनिं गता ये च ये च कीटत्वमागताः ॥
रौरवे नरके ये च महारौरवसंज्ञके ।
वियोनिञ्च गता ये च ये च ब्रह्माण्डमध्यगाः ॥
पिशाचत्वं गता ये च ये च प्रेतत्वमागताः ॥
ते पिबन्तु मया दत्तं धात्रीमूले सदा पयः ॥
ते सर्व्वे तृप्तिमायान्तु धात्रीमूलनिषेचनात् ॥
इति धात्रीं चाभिषिच्य वारानष्टोत्तरं शतम् ।
ताञ्च प्रदक्षिणीकृत्य कुर्य्याज्जागरणं व्रती ॥
जागरणन्तु प्रक्रान्तव्रतविषयम् ।" इति श्रीहरि-
भक्तिविलासे १३ विलासः ॥

**धात्रीपत्रं**, क्ली, (धात्रीपत्रमिव पत्रमस्य ।) तालीश-
पत्रम् । इति राजनिर्घण्टः ॥ (अस्य पर्य्यायो
यथा, भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ।
"तालीशं मुत्तम्पत्राढ्यं धात्रीपत्रञ्च तत् स्मृतम् ॥"
धात्र्याः पत्रम् ।) आमलकीदलञ्च ॥

**धात्रीपुत्त्रः**, पुं, (धात्र्या उपमातुः पुत्त्रः ।) नटः ।
इति हेमचन्द्रः । २ । २४२ ।
उपमातृसुतश्च ॥

**धात्रीफलं**, क्ली, (धात्र्या आमलक्याः फलम् ।)
आमलकी । इति जटाधरः ॥ (विवरणमाम-
लकीशब्देऽस्य ज्ञातव्यम् ॥)

**धात्रेयिका**, स्त्री, (धात्रेयी + स्वार्थे कन् टाप् ।
"ग्रसेतामश्वा वि मुचेह शोणा दिवे दिवेस दृशी-
रद्धि धानाः ॥"
"त्वन्तु सदृशीरेकरूपान् धाना भृष्टयवान् दिवे
दिवे प्रतिदिवसमद्धि भक्षय ।" इति तद्भाष्ये
मुयिनः ।)
"यवास्तु निस्तुषा भृष्टाः स्मृता धाना इति
स्त्रियाम् ।
धानाः स्युर्दुर्ज्जरा रूक्षास्तृट्प्रदा गुरवश्च ताः ॥
तथा मेदःकफच्छर्द्दिनाशन्यः संप्रकीर्त्तिताः ॥"
इति राजनिर्घण्टः ॥
("धानासंज्ञास्तु मे भक्ष्याः प्रायस्ते लेखनात्मकाः ।
शुष्कत्वात्तर्षणा चैव विष्टम्बित्वाच्च दुर्ज्जराः ॥
विरूढधानाः शष्कुल्यो मधुक्रोडाः सपिण्डकाः ।
सूपाः पूपुलिकाद्याश्च गुरवः पैष्टिकाः परम् ॥"
"धाना पर्पटपूपाद्यास्तान् बुद्ध्वा निर्द्दिशेत्तथा ॥"
इति चरके सूत्रस्थाने २७ अध्यायः ॥)

**धानाकाः**, स्त्री, (धाना + स्वार्थे कन् टाप् ।)
धानाः । नित्यबहुवचनान्तोऽयं शब्दः । इति
शब्दरत्नावली ॥

**धानाचूर्णं**, क्ली, (धानानां चूर्णम् ।) भृष्टयव-
चूर्णम् । सक्तवः । इति हेमचन्द्रः । ३ । ६५ ॥

**धानी**, स्त्री, (धीयते धार्य्यतेऽत्र । धा + आधारे
यद्वा, दधातीति । धा + "दधातेर्यन् नुट् च ।"
उणां । ५ । ४८ । इति यन् नुट् च ।) सतुष-
तण्डुलादि । धान इति भाषा ॥ तत्पर्य्यायः ।
भोग्यम् २ भोगार्हम् ३ अन्नम् ४ अद्यम् ५
जीवसाधनम् ६ स्तम्बकरिः ७ ब्रीहिः ८ ।
(यथा, ऋग्वेदे । ६ । १३ । ४ ।
"विश्वं स देव प्रति वारमग्ने धत्ते धान्यं पत्यते
वसव्यैः ॥")
तत्र शूकधान्यगुणः । त्रिदोषशमनत्वम् । तेजो-
वलातिशयवीर्य्यवृद्धिदातृत्वञ्च ॥ * ॥ शमीधान्य-
गुणाः । गुरुत्वम् । हिमत्वम् । विबन्धदातृ-
त्वञ्च ॥ * ॥ तृणधान्यगुणः । वातात्मकत्वम् । शिशि-
रत्वञ्च । इति राजनिर्घण्टः ॥ * ॥ धान्यं त्रिवि-
धम् । हेमन्तोद्भवः शालिः १ ग्रीष्मजः षष्टिकः २
प्रावृट् कालभव आशुः ३ । एतेषां गुणास्तत्तत्
शब्दे द्रष्टव्याः ॥ * ॥ वापितधान्यगुणः । गुरुत्वम् ॥
अवापितधान्यगुणः । वापितधान्यगुणात् किञ्चि-
द्धीनः ॥ * ॥ रोप्यातिरोप्यधान्यगुणाः । लघु-
त्वम् । शीघ्रपाकित्वम् । गुणोत्तरत्वम् । अदा-
हित्वम् । दोषहरत्वम् । बल्यत्वम् । मूत्रविव-
र्द्धनत्वञ्च ॥ * ॥ नवं धान्यं अभिष्यन्दि । संवत्-
सरोत्थितं धान्यं लघु । संवत्सरद्वयादूर्द्ध्वं
धान्यं वातप्रकोपणं रूक्षं लघुतरं पुंस्त्वघाति ।
शूकधान्यं शमीधान्यञ्च वत्सरादूर्द्ध्वं प्रश-
स्तम् । शमीधान्यं वर्षादतीतं वातकृत्
रूक्षम् । अभिनवं तत्प्रायेण गुरु । नवा यव-
गोधूममाषतिला हिताः । पुराणा विरसा
रूक्षा न तथार्थकराः ॥ अनार्त्तवं व्याधिहतं
अपर्य्यागतं अभूमिजं नवञ्च धान्यं न गुणवत् ॥
अकालजातं धान्यं विरसं सर्व्वधातुप्रदूषणञ्च ।
इति राजवल्लभः ॥ * ॥ व्रतादौ अन्नत्यागे
वर्जनीयधान्यानि यथा, --
"एकादश्यां विशेषेण ह्यन्नमात्रं परित्यजेत् ।
फलं मूलं जलादीनि किञ्चिद्भक्ष्यं प्रकल्पयेत् ॥
अन्नन्तु धान्यसम्भूतं गिरिजे यदि जायते ।
धान्यानि विविधानीह जगत्यां शृणु यत्नतः ॥
श्याममाषमसूराश्च धान्यकोद्रवसर्षपाः ।
मुष्टको राजमाषाश्च तुमुरो जुमरस्तथा ॥
यवगोधूममुद्गाश्च तिलकङ्गुकुलत्थकाः ।

पूर्ब्बह्रस्वश्च ।) धात्री । धाइ इति भाषा ।
यथा, तिथितत्त्वे चतुर्थीप्रकरणे ।
"पठेद्धात्रेयिकावाक्यं प्राङ्‌ग्मुखो
वाप्युदङ्मुखः ॥"

**धात्रेयी**, स्त्री, धात्रीशब्दात् ष्णेये (ढक्) ईप् (ङीप्)-
प्रत्ययेन निष्पन्ना ॥ धात्रेयिका । (यथा, देवी-
भागवते । २ । ६ । ३२ ।
"करे धृत्वाथ धात्रेयी तामुवाच सुलज्जिताम् ।
कां चिन्तां करभोरु ! त्वमाधत्सेऽद्य स्थितास्म्य-
हम् ॥")

**धानकं**, क्ली, (धन्याकं पृषोदरादित्वात् साधुः ।)
धन्याकम् । इति राजनिर्घण्टः ॥ (अस्य विषयो
यथा वाभटे चिकित्सास्थाने नवमेऽध्याये ।
"श्लेष्मातिसारवातोक्तं विशेषादामपाचनम् ।
कर्त्तव्यमनुबन्धस्य पिबेत् पक्त्वाग्निदीपनम् ॥
विल्वककटिकामुस्तप्राणदाविश्वभेषजम् ।
वचाविडङ्गभूतीकधानकामरदारुवा ॥")

**धाना**, स्त्री, (धीयते इति । धा + "धापवस्य-
ज्यतिभ्यो नः ।" उणां । ३ । ६ । इति नः टाप्
च ।) भृष्टयवः । धान्यकम् । (पर्य्याया यथा,
"धान्यकं धानकं धान्यं धाना धानेयकन्तथा ।
कुनटी धेनुकाच्छत्रा कुस्तुम्बुरु वितुन्नकम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
अनिभवः । अङ्कुरः । भिन्नः । चूर्णसक्तवः ।
इति मेदिनीहेमचन्द्रौ ॥

**धानाः**, स्त्री, (धीयन्ते इति । या + "धापवस्य-
ल्युट् । टित्वात्ङीप् ।) आधारः । यथा, मत्स्य-
धानी राजधानी । इत्यादि भरतः ॥ पीलु-
वृक्षः । इति राजनिर्घण्टः ॥

**धानुष्कः**, त्रि, (धनुः प्रहरणमस्येति । धनुः +
तदस्य इत्यधिकृत्य "प्रहरणम् ।" ४ । ४ । ५७ ।
इति ठक् । यद्वा, धनुषा जीवतीति । "वेत-
नादिभ्यो जीवति ।" ४ । ४ । १२ । इति ठक् ।
"इसुसुक्तान्तात् कः ।" ७ । ३ । ५१ । इति ठस्य
कः ।) धनुर्द्धरः । इत्यमरः । २ । ८ । ६९ ॥
(यथा, महाभारते । ६ । २० । १७ ।
"अश्वेऽश्वे दश धानुष्का धानुष्के दश चर्म्मिणः ।
एवं व्यूढान्यनीकानि भीष्मेण तव भारत ! ॥")

**धानुष्का**, स्त्री, (धनुरिव अवयवोऽस्या इति ठक्
टाप् च ।) अपामार्गवृक्षः । इति शब्दचन्द्रिका ।
(अपामार्गशब्देऽस्या विवरणं व्याख्यातम् ॥)

**धानुष्यः**, पुं, (धनुषि साधुरिति । धनुष् + ष्यञ् ।)
वंशः । इति राजनिर्घण्टः ॥

**धानेयं**, क्ली, (धाना एव । स्वार्थे ढक् ।) धन्या-
कम् । इति राजनिर्घण्टः ॥

**धानेयकं**, क्ली, (धानेय + स्वार्थे कन् ।) धन्याकम् ।
इति जटाधरः ॥

**धान्धा**, स्त्री, पृथ्वीका । इति शब्दचन्द्रिका ॥

गवेधुकाश्च नीवारा आतकश्च कलायकाः ॥
माण्डुको वज्रकोरङ्कः कीचको वडकस्तथा ।
तिलकाश्चणकाद्याश्च धान्यानि कथितानि वै ॥
एडकान्यसमुद्भूतमन्नं भवति शोभने ! ।
अन्नत्यागे व्रते भक्ष्यमेतदेव विवर्ज्जयेत् ॥"
इति पाद्मोत्तरखण्डम् ॥ * ॥
अथ धान्यच्छेदनदिनम् । तत्र तिथयः रिक्ता-
तिरिक्ताः । वाराः रविशुक्रसोमबुधबृहस्पती-
नाम् । नक्षत्राणि कृत्तिका भरणी अश्लेषा
पूर्ब्बभाद्रपत् धनिष्ठा पूर्ब्बाषाढा ज्येष्ठा चित्रा
उत्तरफल्गुनी उत्तराषाढा उत्तरभाद्रपत्
एतानि । तत्र चन्द्रः शोभनः । लग्नानि वृष-
सिंहवृश्चिककुम्भमिथुनतुलाकन्याधनुःपूर्ब्बार्द्ध

| ज्यतिभ्यो नः ।” उणां । ३ । ६ । इति नः<br>टाप् च ।) भृष्टयवः । बहुवचनान्तोऽयं<br>शब्दः । इत्यमरः । २ । ९ । ४७ ॥<br>(यथा,<br>ऋग्वेदे । ३ । ३५ । ३ । | एलाइच इति भाषा ॥<br><br>**धान्यं**, क्ली, चतुस्तिलपरिमाणम् । इति शुभङ्करः ।<br><br>धन्याकम् । धनीया इति यस्य भाषा । तत्-<br>पर्य्यायो यथा, वैद्यकरत्नमालायाम् ।<br>“धन्याकं धान्यकं धान्यं<br>कुस्तुम्बुरुधनीयकम् ।<br>धन्या कुस्तुम्बुरी चान्या वेषलोग्रा<br>वितुन्नकम् ॥”)<br>परिपेलम् । (धाने पोषणे साधु इति । धान<br>+ “तत्र साधुः ।” ४ । ४ । १८ ।<br>इति यत् । | |
|---|---|---|

स्वकीयजन्मलग्नमकरसंज्ञकानि ॥ * ॥ अथ धान्य-
स्थापनदिनम् । तत्र नक्षत्राणि । भरण्यश्लेषार्द्रा-
कृत्तिकाविशाखापूर्ब्बफल्गुनीपूर्ब्बाषाढापूर्ब्ब-
भाद्रपज्ज्येष्ठामघाभिन्नानि । तत्र वाराः शुभ-
ग्रहाणाम् । लग्नानि मकरवृषसिंहवृश्चिककुम्भ-
मिथुनकन्याधनुर्मीनसंज्ञकानि ॥ * ॥ अथ धान्या-
दिवृद्धिदानदिनम् । तत्र नक्षत्राणि श्रवणा
धनिष्ठा शतभिषा विशाखा उत्तरफल्गुनी
उत्तराषाढा उत्तरभाद्रपत् रोहिणी रेवती
पुनर्व्वसुः पुष्यः अश्विनी ज्येष्ठा एतानि । वाराः
बुधभिन्नाः । इति ज्योतिषम् ॥

**धान्यकं**, क्ली, (धान्यमिव प्रतिकृतिः । "इवे प्रति-
कृतौ ।" ५ । ३ । ९६ । इति कन् ।) धान्या-
कम् । इति राजनिर्घण्टः ॥ (यथा, सुश्रुते
चिकित्सितस्थाने ५ अध्याये । "लङ्घनानन्तरं
चान्नकाले धान्यकजीरकादिदीपनसिद्धान्य
न्नानि ॥" अस्य गुणा यथा, --
"धान्यकञ्चाजगन्धा च सुमुखाश्चेति रोचनाः ।
सुगन्धा नातिकटुका दोषानुत्क्लेशयन्ति तु ॥"
इति चरके सूत्रस्थाने सप्तविंशेऽध्याये ॥
धान्यमेव स्वार्थे कन् । धान्यम् । पुं, क्षत्त्रियनृपति-
विशेषः । यथा, राजतरङ्गिण्याम् । ८ । १०८५ ।
"राजन्याविच्छिटकुलोद्भूतावुदयधान्यकौ ॥")

**धान्यकोष्ठकं**, क्ली, (धान्याय धान्यरक्षणाय यत्
कोष्ठकं गृहम् ।) धान्यरक्षार्थगृहम् । इति
हलायुधः ॥ गोला इति भाषा ॥

**धान्यचमसः**, पुं, (चम्यते भक्ष्यते इति । चम +
असन् । धान्यं स्विन्नधान्यमेव चमसः ।) चिपि-
टकः । इति त्रिकाण्डशेषः ॥

**धान्यधेनुः**, स्त्री, (धान्यनिर्म्मिता धेनुः ।) दानार्थ-
धान्यनिर्म्मितधेनुः । यथा, --
"विषुवे चायने वापि कार्त्तिक्यान्तु विशेषतः ।
तदिदानीं प्रवक्ष्यामि धान्यधेनुविधिं परम् ॥
यां दत्त्वा सर्व्वपापेभ्यः शशाङ्क इव राहुतः ॥
तव विप्र ! महाभाग !
वेदवेदाङ्गपारग ! ।
यामेताञ्च मया दत्तां गृह्णीष्व त्वं द्विजोत्तम ! ।
प्रीयतां मम देवेशो भगवान्मधुसूदनः ॥
त्वमेका लक्ष्मीर्गोविन्दे स्वाहा या च विभावसौ ।
शक्रे शचीति विख्याता मेधा मुनिषु सत्तम ! ॥
तस्मात् सर्व्वमयी देवी धान्यरूपेण संस्थिता ।
एवमुच्चार्य्य तां धेनुं ब्राह्मणाय निवेदयेत् ॥
दत्त्वा प्रदक्षिणं कृत्वा तं समाप्य द्विजोत्तमम् ।
यावच्च पृथिवी सर्व्वा वसुरत्नानि भूपते ! ।
तावत् पुण्यं समाधिक्यं व्रीहिधेनोश्च तत् फलम् ॥
तस्मान्नरेन्द्र ! दातव्या भुक्तिमुक्तिफलप्रदा ।
इह लोके च सौभाग्यमायुरारोग्यवर्द्धनम् ॥
विमानेनार्कवर्णेन किङ्किणीरत्नमालिना ।
स्तूयमानोऽप्सरोभिश्च प्रयाति शिवमन्दिरम् ॥
यावच्च स्मरते जन्म तावत् स्वर्गे महीयते ।
ततः स्वर्गात् परिभ्रष्टो जम्बुद्वीपपतिर्भवेत् ॥
एवं हरेण चोद्गीर्णं श्रुत्वा वाक्यं नरोत्तम ।
सर्व्वपापविशुद्धात्मा रुद्रलोके महीयते ॥"
इति वराहपुराणम् ॥

**धान्यबीजं**, क्ली, (धान्यस्य बीजमिव बीजं यस्य ।)
धान्यशैलादयो येऽपि देयाः शास्त्रं विजानता ।
तीर्थे वायतने वापि गोष्ठे वा भवनाङ्गने ॥
मण्डपं कारयेद्भक्त्या चतुरस्रमुदङ्मुखम् ।
प्रागुदक्प्लवनं तद्वत् प्राङ्मुखञ्च विधानतः ॥
गोमयेनानुलिप्तायां भूमावास्तीर्य्य वै कुशान् ।
तन्मध्ये पर्व्वतं कुर्य्याद्विष्कम्भपर्व्वतान्वितम् ॥
धान्यद्रोणसहस्रेण भवेद्गिरिरिहोत्तमः ।
मध्यमः पञ्चशतिकः कनिष्ठः स्यात्त्रिभिः शतैः ॥
मेरुर्महाव्रीहिमयस्तु मध्ये
सुवर्णवृक्षत्रयसंयुतः स्यात् ।
पूर्ब्बेण मुक्ताफलवज्रयुक्तो
याम्ये च गोमेदकपुष्परागैः ॥
पश्चाच्च गारुत्मतनीलरत्नैः
सौम्येन वैदूर्य्यसरोजरागैः ।
श्रीखण्डखण्डैरभितः प्रवाल-
लतान्वितः शुक्तिशिलातलः स्यात् ॥
ब्रह्माथ विष्णुर्भगवान् पुरारि-
र्दिवाकरोऽप्यत्र हिरण्मयः स्यात् ।
मूर्द्धव्यवस्थागतमत्सरेण
कार्य्यास्त्वनेके च पुनर्द्विजौघाः ॥
चत्वारि शृङ्गाणि च राजतानि
नितम्बभागेष्वपि राजतः स्यात् ।
तथेक्षुवंशावृतकन्दरस्तु
घृतोदकप्रस्रवणश्च दिक्षु ॥
शुक्लाम्बराण्यम्बुधरावलीस्यात्
पूर्ब्बेण नीलानि च दक्षिणेन ।
वासांसि पश्चादथ कर्ब्बुराणि
रक्तानि चैवोत्तरतो घनाली ॥
रौप्यान्महेन्द्रप्रमुखानथाष्टौ
संस्थाप्य लोकाधिपतीन् क्रमेण ।
नानाफलाली च समन्ततः स्या
न्मनोरमं माल्यविलेपनञ्च ॥
वितानकञ्चोपरि पञ्चवर्ण-
मम्लानपुष्पाभरणं सितञ्च ।
इत्थं निवेश्यामरशैलमग्र्यं

दशधेनुप्रदानेन यत् फलं राजसत्तम ! ।
तत् सर्व्वमेवमाप्नोति व्रीहिधेनुप्रदो नरः ॥
कृष्णाजिनं ततः कृत्वा प्राग्वद्वत् संन्यसेद्बुधः ।
गोमयेनानुलिप्तायां शोभनां वस्त्रसंयुताम् ॥
पूजयेद्वेदिमध्ये तु वेदनिर्घोषमङ्गलैः ॥
उत्तमा धान्यधेनुः स्याद्द्रोणश्चापि चतुष्टयैः ।
मध्यमा च तदर्द्धेन वित्तशाठ्यं न कारयेत् ॥
चतुर्थांशेन धेन्वा वै वत्सन्तु परिकल्पयेत् ।
कर्त्तव्ये रुक्मशृङ्गे तु राजतक्षुरसंयुता ॥
गोरुधः पूर्ब्बवद्घ्राणमगुरुञ्चन्दनन्तथा ।
मुक्ताफलमया दन्ता घृतक्षौद्रमयं मुखम् ॥
प्रशस्तपत्रश्रवणा कांस्यदोहनकान्विता ।
इक्षुयष्टिमयाः पादाः क्षौमपुच्छसमन्विता ॥
नानाफलसमोपेता रत्नगर्भसमन्विता ।
पादुकोपानहौ छत्रे भाजनं तर्पणं तथा ॥
इत्येवं रचयित्वा तां कृत्वा दीपार्च्चनादिकम् ।
पुण्यकालञ्च संप्राप्य स्नातः शुक्लाम्बरो गृही ।
त्रिः प्रदक्षिणमावृत्य मन्त्रेणानेन कीर्त्तयेत् ॥

धन्याकम् । इति राजनिर्घण्टः ॥

**धान्यमायः**, पुं, (धान्यं मातीति । मा + “ह्वा-
वामश्च ।” ३ । २ । २ । इति अण् ।) धान्य-
विक्रयी । इति संक्षिप्तसारव्याकरणम् ॥

**धान्यराजः**, पुं, (धान्यानां राजा । टच् समासे ।
यद्वा, धान्येषु राजते इति । राज दीप्तौ +
अच् ।) यवः । इति राजनिर्घण्टः ॥ (गुणादयो-
ऽस्य यवशब्दे ज्ञातव्याः ॥)

**धान्यवर्द्धनं**, क्ली, (धान्यस्य वद्धनं वृद्धिर्यस्मात् ।)
वार्द्धुष्यम् । इति त्रिकाण्डशेषः ॥ धानेर वाडी
इति भाषा ॥

**धान्यवीरः**, पुं, (धान्येषु वीर इव बलाधायक-
त्वात् ।) माषः । इति राजनिर्घण्टः ॥

**धान्यशीर्षकं**, क्ली, (धान्यस्य शीर्षकं अग्रभागः ।)
धान्यमञ्जरी । इति जटाधरः ॥ धानेर शीष
इति भाषा ॥

**धान्याकं**, क्ली, (धान्यमकति सादृश्यत्वेन प्राप्नो-
तीति । अक गतौ + अण् ।) धन्याकम् ।
इति हेमचन्द्रः । ३ । ८३ ॥

**धान्याचलः**, पुं, (धान्यनिर्म्मितोऽचलः पर्व्वतः ।)
दानार्थधान्यनिर्म्मितपर्व्वतः । तस्य विधानं
यथा, --
“प्रथमो धान्यशैलः स्याद्द्वितीयो लवणाचलः ।
गुडाचलस्तृतीयस्तु चतुर्थो हेमपर्व्वतः ॥

मेरोस्तु विष्कम्भगिरीन् क्रमेण ॥
तुरीयभागेन चतुर्द्दिशञ्च
संस्थापयेत् पुष्पविलेपनाढ्यान् ॥
पूर्ब्बेण मन्दरमनेकफलावलीभि-
र्युक्तं यवैः कनकभद्रकदम्बचिह्नैः ।
कामेन काञ्चनमयेन विराजमान-
माकारयेत् कुसुमवस्त्रविलेपनाढ्यम् ॥
क्षीरारुणोदसरसाथ वनेन चैव
रौप्येण शक्तिघटितेन विराजमानम् ।
याम्येन गन्धमदनश्च निवेशनीयो
गोधूमसञ्चयमयः कलधौतजो वा ॥
हैमेन यक्षपतिनाहृतमासनेन
वस्त्रैश्च राजतवनेन च संयुतः स्यात् ॥
पश्चात्तिलाचलमनेकसुगन्धिपुष्पं
सौवर्णपिप्पलहिरण्मयहंसयुक्तम् ।
आकारयेद्रजतपुष्पवनेन तद्व-
द्वस्त्रान्वितं दधिसितोदसरस्तथाग्रे ॥

| | | |
|---|---|---|
| | पञ्चमस्तिलशैलः स्यात् षष्ठः कार्पासपर्व्वतः ।<br>सप्तमो घृतशैलश्च रत्नशैलस्तथाष्टमः ॥<br>राजतो नवमस्तद्वद्दशमः शर्कराचलः ।<br>वक्ष्ये विधानमेतेषां यथावदनुपूर्ब्बशः ॥<br>अयने विषुवे पुण्ये व्यतीपाते दिनक्षये ।<br>शुक्लपक्षे तृतीयायामुपरागे शशिक्षये ॥<br>विवाहोत्सवयज्ञेषु द्वादश्यामथवा पुनः ।<br>शुक्लायां पञ्चदश्यां वा पुण्यर्क्षे वा विधानतः ॥ | |

संस्थाप्य तं विपुलशैलमथोत्तरेण
शैलं सुपार्श्वमपि माषमयं सुवस्त्रम्
पुष्पैश्च हेमवटपादपशेखरन्त-
माकारयेत् कनकधेनुविराजमानम् ॥
माक्षीकभद्रसरसा च वनेन तद्व-
द्रौप्येण भास्वरवता च युतं विधाय ।
होमश्चतुर्भिरथ वेदपुराणविद्भि-
र्दान्तैरनिन्द्यचरिताकृतिभिर्द्विजेन्द्रैः ॥
पूर्ब्बेण हस्तमितमत्र विधाय कुण्डं
कार्य्यस्तिलैर्यवघृतेन समित्कुशैश्च ।
रात्रौ च जागरमनुद्धतगीततूर्य्यै-
रावाहनञ्च कथयामि शिलोच्चयानाम् ॥
त्वं सर्व्वदेवगणधामनिधे ! विरुद्ध-
मस्मद्गृहेष्वमरपर्व्वत नाशयाशु ।
क्षेमं विधत्स्व कुरु शान्तिमनुत्तमां नः
संपूजितः परमभक्तिमता मया हि ॥
त्वमेव भगवानीशो ब्रह्मा विष्णुर्द्दिवाकरः ।
मूर्त्तामूर्त्तजगद्बीज ! त्वं नः पाहि सनातनः ॥
यस्मात्त्वं लोकपालानां विश्वमूर्त्तेश्च मन्दिरम्
।
रुद्रादित्यवसूनाञ्च तस्माच्छान्तिं प्रयच्छ मे
॥
यस्मादशून्य ममरैर्नारीभिश्च शिवस्तव ।
तस्मान्मामुद्धराशेषदुःखसंसारसागरात् ॥
एवमभ्यर्च्च्य तं मेरुं मन्दरञ्चाभिपूजयेत् ।
यस्माच्चैत्ररथेन त्वं भद्राश्वेन विशेषतः ॥
शोभसे मन्दर ! क्षिप्रमतस्तुष्टिकरो भव ॥
यस्माच्चूडामणिर्जम्बुद्वीपे त्वं गन्धमादन ! ।
गन्धर्व्ववनशोभादानतः कीर्त्तिर्दृढास्तु मे ॥
यस्मात्त्वं केतुमालेन वैभ्राजेन वनेन वा ।
हिरण्मयाश्वत्थशिरस्तस्मात्पुष्टिर्ध्रुवास्तु मे
॥
उत्तरैः कुरुभिर्यस्मात् सावित्रेण वनेन च ।
सुपार्श्व ! राजसे नित्यमतः श्रीरक्षयास्तु मे ॥
एवमामन्त्र्य तान् सर्व्वान् प्रभाते विमले पुनः
।
स्नात्वाथ गुरवे दद्यान्मध्यमं पर्व्वतोत्तमम् ॥
विष्कम्भपर्व्वतान् दद्यादृत्विग्भ्यः क्रमशो
मुने ! ॥
गाश्च दद्याच्चतुर्विंशदथवा दश नारद ! ।

ततः कर्म्मक्षये राज्यमाप्नोतीह न
संशयः ॥”
इति मत्स्यपुराणम् ॥

**धान्याम्लं**, क्ली, (धान्यात् धान्यविकारात् जातं
अम्लम् ।) काञ्जिकम् । इत्यमरः ।
२ । ९ । ३९ ॥
“धान्याम्लं शालिचूर्णानां
कोद्रवादिकृतं भवेत् ।
धान्याम्लं धान्ययोनित्वात् प्रीणनं
लघु दीपनम् ॥
अरुचौ वातरोगेषु सर्व्वेष्वास्थापने
हितम् ॥”
इति भावप्रकाशः ॥
(“धान्याम्लं भेदि तीक्ष्णोष्णं
पित्तकृत् स्पर्श-
शीतलम् ।
भ्रमक्लमहरं रुच्यं दीपनं
वस्तिशूलनुत् ।
शस्तमास्थापने हृद्यं
लघुवातकफापहम् ॥”
इति वाभटे सूत्रस्थाने पञ्चमेऽध्याये
॥)

**धान्यारिः**, पुं, (धान्यस्य अरिः ।) मूषिकः । इति
राजनिर्घण्टः ॥ त्रि, धान्यस्य
शत्रुश्च ॥

**धान्योत्तमः**, पुं, (धान्येषु उत्तमः ।) शालिधान्यम् ।
इति राजनिर्घण्टः ॥

**धाम**, [न्] क्ली, (दधाति गृहस्थादिकं धीयते
द्रव्यजातमस्मिन्निति वा । धा +
“सर्व्वधातुभ्यो
मनिन् ।” उणां ४ । १४४ । इति
मनिन् ।)
गृहम् । (यथा, मेघदूते । ३५ ।
“भर्त्तुः कण्ठच्छविरिति गणैः सादरं
वीक्ष्यमाणः

घोषकः । इति मेदिनी । वे, ५९ ॥ (अस्य
पर्य्यायो यथा, --
“महाकोषातकी प्रोक्ता हस्तिघोषा महाफला ।
धामार्गवो घोषकश्च हस्तिपर्णश्च स स्मृतः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
पीतघोषा । इति रत्नमाला ॥

**धायः**, त्रि, (दधाति धारयतीति । धा + “श्याद्व्य-
धेति ।” ३ । १ । १४१ । इति णः ।) धारण-
कर्त्ता । इति मुग्धबोधव्याकरणम् ॥ (यथा,
भट्टिः । ६ । ७९ ।
“ददै र्दुःखस्य मादृग्भ्यो धायैरामोदमुत्तमम् ॥”)

**धायाः**, [स्] त्रि, (दधातीति । धा + “वहि-
हाधाञ्भ्यश्छन्दसि ।” उणां ४ । २२० । इत्य-
सुन् बाहुलकात् युक् ।) धारणकर्त्ता । पोषण-
कर्त्ता । यथा, वाजसनेयसंहितायाम् । १३ ।
१८ ।
“भूरसि भूमिरस्यदितिरसि विश्वस्य धायाः ॥”

**धाय्यः**, पुं, (धीयते आश्रियते मङ्गलार्थमिति ।
धा + कर्म्मणि ण्यत् ततो युक् ।) पुरोहितः
इति मुग्धबोधव्याकरणम् ॥

**धाय्या**, स्त्री, (धीयतेऽनया समित् । धा + करणे
ण्यत् ।) अग्निसमिन्धनार्थं ऋक् । अग्निप्रज्वा-
लनमन्त्रः । इत्यमरः । २ । ७ । २२ ॥

**धारं**, क्ली, (धाराया इदम् । धारा + “तस्येदम् ।”
४ । ३ । १२० । इत्यण् ।) वर्षोद्भवं जलम् ।
तद्द्विविधम् । गाङ्गम् १ सामुद्रञ्च २ । यथा, --
“यदा स्यादाश्विने मासि सूर्य्यः
स्वातीविशाखयोः ।
तदाम्बु जलदैर्मुक्तं गाङ्गमुक्तं मनीषिभिः ॥
अन्यदा मृगशीर्षादिनक्षत्रेषु यदम्बुदैः ।
अभिवृष्टमिदं तोयं सामुद्रमिति संज्ञितम् ॥”
तयोर्गुणाः । यथा, --
“गाङ्गं जलं स्वादु सुशीतलञ्च
रुचिप्रदं पित्तकफापहञ्च ।
निर्दोषमिष्टं लघु तच्च नित्यं
गुणाधिकं व्योम्नि गृहीतमाहुः ॥

शक्तितः सप्त वाष्टौ वा पञ्च दद्यादशक्तिमान् ॥
एकापि गुरवे देया कपिलाथ पयस्विनी ।
पर्व्वतानामशेषाणामेष एव विधिः स्मृतः ॥
त एव पूजने मन्त्रास्त एवोपस्करा मताः ।
ग्रहाणां लोकपालानां ब्रह्मादीनाञ्च सर्व्वदा ॥
स्वमन्त्रेणैव सर्व्वेषु होमः शैलेषु पठ्यते ॥
उपवासी भवेन्नित्यमशक्तौ नक्तमिष्यते ।
विधानं सर्व्वशैलानां क्रमशः शृणु नारद ! ॥
दानकाले च ये मन्त्राः पर्व्वतेषु च यत्फलम् ।
अन्नं ब्रह्म यतः प्रोक्तमन्नं प्राणाः प्रकीर्त्तिताः ॥
अन्नाद्भवन्ति भूतानि जगदन्नन वर्त्तते ।
अन्नमेव ततो लक्ष्मीरन्नमेव जनार्द्दनः ॥
धान्यपर्व्वतरूपेण पाहि तस्मान्नगोत्तम ! ।
अनेन विधिना यस्तु दद्याद्धान्यमयं गिरिम् ॥
मन्वन्तरशतं साग्रं देवलोके महीयते ।
अमरोगणगन्धर्व्वैराकीर्णेन विराजता ॥
विमानेन दिवः पृष्ठमायाति सुरसेवितः ।

पुण्यं यायास्त्रिभुवनगुरोर्धाम
चण्डेश्वरस्य ॥”)
देहः । त्विट् । प्रभावः । इत्यमरः ।
३ । ३ ।
१२३ ॥ (यथा, किराते । २ । ४७
।
“सहते न जनोऽप्यधःक्रियां
किमु लोकाधिकधाम राजकम् ॥”)
रश्मिः । (यथा, माघे । १ । २ ।
“पतत्यधो धाम विसारि सर्व्वतः
किमेतदित्याकुलमीक्षितं जनैः ॥”)
स्थानम् । (यथा, पञ्चदश्याम् । ७ ।
२१४ ।
“त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च
यद्भवेत् ।
तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं
सदा-
शिवः ॥”)
जन्म । इति मेदिनी । ने, ८० ॥
(विष्णुः ।
यथा, महाभारते । १३ । १४९ ।
३६ ।
“गुरुर्गुरुतरो धाम सत्यः
सत्यपराक्रमः ॥”
“धाम ज्योतिः नारायणः परं
ज्योतिरिति मन्त्र-
वर्णात् । सर्व्वलोकानामास्पदत्वात्
वा धाम । परं
ब्रह्म परं धाम इति श्रुतेः ॥” इति
तद्भाष्यम् ॥

**धामकः**, पुं, माषकपरिमाणम् । इति
वैद्यकपरि-

भाषा ॥

**धामनिधिः**, पुं, (धामानि किरणानि
निधीयन्ते

ऽत्र । नि + धा + किः ।) सूर्य्यः ।
इति जटाधरः ॥

**धामनी**, स्त्री, (धमन्येव । धमनी + स्वार्थे
अण् ।

ततो ङीष् ।) धमनी । इति
शब्दचन्द्रिका ॥

सामुद्रसलिलं शीतं कफवातकरं गुरु ।
चित्रायामाश्विने तच्च गुणाढ्यं गाङ्गवद्भवेत् ॥
पतितं भुवि तत्तोयं गाङ्गं सामुद्रमेव वा ।
स्वस्वाश्रयवशाद्गच्छेदन्यदन्यद्रसादिकम् ॥
इति राजनिर्घण्टः ॥

**धारः**, पुं, (धार्य्यते इति । धृ + णिच् + घञ् ।)

ग्रावान्तरम् । ऋणम् । इति मेदिनी । रे, ५१ ॥
जलधरासारवर्षणम् । इति हेमचन्द्रः ॥ प्रान्तः ।
गम्भीरः । इति शब्दरत्नावली ॥

**धारकः**, पुं, (धरति जलादिकमिति । धृ + ण्वुल् ।)

कलसः । तस्योत्पत्त्यादि यथा, --
ब्रह्मोवाच ।
“उत्पत्तिं लक्षणं मानं कथयामि महामुने ! ।
धारकाः कलसाश्चैव येन लोके प्रकीर्त्तिताः ॥
अमृते मथ्यमाने तु सर्व्वदेवैः सदानवैः ।
मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम् ॥
उत्पन्नममृतं तत्र महावीर्य्यपराक्रमम् ।
तस्यायं धारणार्थाय कलसः परिकीर्त्तितः ॥

| | | |
|---|---|---|
| | **धामार्गवः** पुं, (धाम्नो मार्गं पन्थानं वातीति । वा<br>गतौ + कः ।) अपामार्गः । इत्यमरः<br>। २ । ४ । ८८ ॥<br>(रक्तापामार्गोऽयम् । अस्य पर्य्यायो<br>यथा, --<br>"रक्तोऽन्यो वसिरो वृत्तफलो<br>धामार्गवोऽपि च ।<br>प्रत्यक्पर्णी केशपर्णी कथिता<br>कपिपिप्पली ॥"<br>इति भावप्रकाशस्य पूर्ब्बखण्डे<br>प्रथमे भागे ॥) | |

कलां कलां गृहीत्वा वै देवानां विश्वकर्म्मणा ।
निर्म्मितोऽयं सुरैर्यस्मात् कलसस्तेन उच्यते ॥
कलसस्य मुखे ब्रह्मा ग्रीवायान्तु महेश्वरः ।
मूले तु संस्थितो विष्णुर्मध्ये मातृगणाः स्थिताः ॥
शेषास्तु देवताः सर्व्वा वेष्टयन्ति चतुर्द्दिशम् ।
कुक्षौ तु सागराः सप्त सप्त द्वीपास्तु संश्रिताः ॥
नक्षत्राणि ग्रहाः सर्व्वे तथैव कुलपर्व्वताः ।
हिमवान् हेमकूटश्च निषधो मेरुरेव च ॥
रोहितो माल्यवन्तश्च सूर्य्यकान्तिश्च पर्व्वताः ।
गङ्गा सरस्वती सिन्धुः सुभगा यमुना नदी ॥
ऐरावती शतह्रदा तथा वैतरणी नदी ।
गोदावरी नर्म्मदा च मही नाम महानदी ॥
कुरुक्षेत्रं प्रयागश्च एकहंसं पृथूदकम् ।
अमरेश्वरः पुण्डरीकं गङ्गासागर एव च ॥
पृथिव्यां यानि तीर्थानि कलसे निवसन्ति ते ।
ग्रहाः शान्तिश्च पुष्टिश्च प्रीतिर्गायत्त्रिरेव च ॥
ऋग्वेदोऽथ यजुर्व्वेदः सामवेदस्तथैव च ।
अथर्व्ववेदसहिताः सर्व्वे कलससंस्थिताः ॥
नवैव कलसाः पुण्याः शम्भुमूर्त्तिसमुद्भवाः ।
गोभ्योपगोभ्यो मरुतः स्वस्वदश्च तथा परः ॥
मनोहरः खलुर्भद्रः पञ्चमः परिकीर्त्तितः ।
एकैकान्तु कलां मूर्त्तौ क्षित्यादीनां यथाक्रमम् ।
संहृत्य संस्थिता यस्मात्तेन ते कलसाः स्मृताः ॥
हैमराजतताम्रा वा मृण्मया लक्षणान्विताः ।
पञ्चमाङ्गुलवैपुल्यमुत्सेधः षोडशाङ्गुलः ॥
कलसानां प्रमाणन्तु मुखमष्टाङ्गुलं भवेत् ॥"
इति देवीपुराणम् ॥
धारणकर्त्तरि, त्रि ॥ (यथा, पञ्चतन्त्रे । २ । १७५ ।
"अप्रियाण्यपि पथ्यानि ये वदन्ति नृणामिह ।
त एव सुहृदः प्रोक्ता अन्ये स्युर्नामधारकाः ॥")

**धारणं**, क्ली, (धृ + णिच् + भावे ल्युट् ।) विधारणम् । इति मेदिनी । णे, ५६ ॥ धरण इति भाषा ॥ (यथा, सुश्रुते । १ । ४६ ।
"तैक्ष्ण्याच्च निर्हरेदाशु कफं गण्डूषधारणात् ॥"
पुं, कश्यपपुत्त्रो नागविशेषः । यथा, महाभारते । ५ । १०३ । १६ ।
"विरजा धारणश्चैव सुबाहुर्मुखरो जयः ॥"
धारयतीति । धृ + णिच् + ल्युः । धारके, त्रि । यथा, महाभारते । १२ । ३३५ । ५४ ।
"जग्मुर्यथेप्सितं देशं तपसे कृतनिश्चयाः ।
धारणाः सर्व्वलोकानां सर्व्वधर्म्मप्रवर्त्तकाः ॥")

**धारणा**, स्त्री, (धार्य्यते या सा । धृ + णिच् + युच् । टाप् ।) बुद्धिः । इति राजनिर्घण्टः ॥ (यथा, याज्ञवल्क्ये । ३ । ७३ ।
"इन्द्रियाणि मनः प्राणो ज्ञानमायुः सुखं धृतिः ।
धारणा प्रेरणं दुःखमिच्छाहङ्कार एव च ॥")
न्याय्यपथस्थितिः । तत्पर्य्यायः । संस्था २ मर्य्यादा ३ स्थितिः ४ । इत्यमरः । २ । ८ । २६ ॥
(यथा, मनुः । ४ । ३८ ।
"न लङ्घ्ययेत् वत्सतन्त्रीं न प्रधावेच्च वर्षति ।
न चोदके निरीक्षेत स्वं रूपमिति धारणा ॥")
योगाङ्गविशेषः । इति मेदिनी । णे, ५६ ॥
यस्तावत्कालपर्य्यन्तं मनो ब्रह्मणि धारयेत् ।
तस्यैव ब्रह्मणा प्रोक्तं ध्यानं द्वादशधारणाः ॥
द्वादशध्यानपर्य्यन्तं मनो ब्रह्मणि यो नरः ।
तुष्टे तु स यतो मुक्तः समाधिः सोऽभिधीयते ॥
ध्येयान्न चलते यस्य मनोऽभिध्यायतो भृशम् ।
प्राप्यावधि कृतं कालं यावत् सा धारणा स्मृता ॥"
इति च गारुडे २४० अध्यायः ॥

**धारणी**, स्त्री, (धार्य्यते शरीरमनया । धृ + णिच् + ल्युट् । स्त्रियां ङीप् ।) नाडिका । बुद्धोक्तमन्त्रभेदः । इति मेदिनी । णे, ५५ ॥ श्रेणी । इति हेमचन्द्रः ॥

**धारणीया**, स्त्री, (धार्य्यतेऽसाविति । धृ + णिच् + अनीयर् ।) धरणीकन्दः । इति राजनिर्घण्टः ॥
धार्य्ये, त्रि ॥

**धारयित्री**, स्त्री, (धारयति सर्व्वमिति । धृ + णिच् + तृच् । स्त्रियां ङीप् ।) पृथिवी । इति शब्दरत्नावली ॥ (धारके, त्रि । यथा, महाभारते । ५ । ९५ । ८ ।
"त्वं हि धारयिता श्रेष्ठः कुरूणां कुरुसत्तम ! ॥")

**धारा**, स्त्री, (धार्य्यन्ते अश्वा यया । धृ + णिच् + अङ् । स्त्रियां टाप् ।) अश्वानां पञ्चधागतिः ।
तद्यथा । आस्कन्दितम् १ धौरितकम् २ रेचितम् ३ वल्गितम् ४ प्लुतम् ५ । इत्यमरः । २ । ८ । ४९ ॥ (यथा, माघे । ५ । ६० ।
"अव्याकुलं प्रकृतमुत्तरधेयकर्म्म
धाराः प्रसाधयितुमव्यतिकीर्णरूपाः ।
सिद्धं मुखे नवसु वीथिषु कश्चिदश्वं
वल्गाविभागकुशलो गमयाम्बभूव ॥"

विरजस्तनुदूषश्च षष्ठसप्तमकावुभौ ॥
अष्टमस्त्विन्द्रियोपेतो नवमो विजयः स्मृतः ।
नवैव कलसाः ख्याता अधिदेवं निबोधत ॥
शृणु वत्स ! यथा तेषां दिशां न्यासो व्यवस्थितः ।
नवमो यः समाख्यातो विजयो नाम नामतः ॥
शिवस्तत्र स्थितः साक्षात् सर्व्वपापहरः शुभः ।
क्षितीन्द्रो ज्येष्ठकलसो द्वितीयो जलसम्भवः ॥
तृतीयः पवनश्चैव चतुर्थस्तु हुताशनः ।
पञ्चमो यजमानस्तु षष्ठस्त्वाकाशसम्भवः ॥
सोमस्तु सप्तमः प्रोक्त आदित्यश्च तथाष्टमः ।
एते चोत्पादिता देव्या शिवेनाधिष्ठिताः पुरा ॥
इन्द्रस्य मूर्त्तयश्चाष्टौ सूर्य्यान्ता नवमः शिवः ।
क्षितीन्द्रः पूर्ब्बतो न्यास्यः पश्चिमे जलसम्भवः ॥
वायव्ये वायवो न्यास्य आग्नेये अग्निसम्भवः ।
नैरृते यजमानस्तु ऐशान्याकाशसम्भवः ॥
सौम्यमुत्तरतो योज्यं सौरं दक्षिणतो न्यसेत् ।
न्यस्यैवं कलसानान्तु पूर्ब्बरूपं विचिन्तयेत् ॥
कलसानां मुखे ब्रह्मा ग्रीवायां विष्णुरेव हि ।
मध्ये मातृगणाः सर्व्वे सेन्द्रा देवाश्च पन्नगाः ॥
कुक्षौ तु सागरास्तेषां सप्तद्वीपा च मेदिनी ।
श्रिया चैव तथोमा च गन्धर्व्वा ऋषयस्तथा ॥

"स तु अद्बितीयवस्तुन्यन्तरेन्द्रियधारणम् ।" इति
वेदान्तसारः ॥ ध्येये चित्तस्य स्थिरबन्धनम् ।
इति हेमचन्द्रः ॥
"तस्मात् समस्तशक्तीनामाधारे तत्र चेतसः ।
कुर्व्वीत संस्थितिं सा तु विज्ञेया शुद्धधारणा ॥"
इति विष्णुपुराणे । ६ । ७ । ७४ ॥
ब्रह्मणि मनोधारणम् । यथा, --
"ब्रह्मात्मचिन्ता ध्यानं स्यात् धारणा मनसो धृतिः ।
अहं ब्रह्मेत्यवस्थानं समाधिर्ब्रह्मणः स्थितिः ॥"
इति गारुडे ४९ अध्यायः ॥
अष्टादशप्राणायामादिरूपधारणायथा, --
"प्राणायामा दशाष्टौ च धारणा साभिधीयते ।
द्वे धारणे स्मृतो योगो मुनिभिस्तत्त्वदर्शिभिः ॥
प्राङ्नाभ्यां हृदये चात्र तृतीया च तथोरसि ।
कण्ठे मुखे नासिकाग्रे नेत्रभ्रूमध्यमुर्द्धसु ।
किञ्चित्तस्मात् परस्मिंश्च धारणाः परमाः स्मृताः ।
दशैता धारणाः प्राप्य प्राप्नोत्यक्षरसाम्यताम् ॥"
इति गारुडे २३० अध्यायः ॥
अपि च ।
"प्राणायामैर्द्वादशभिर्यावत्कालो हृतो भवेत् ।

"अव्यतिकीर्णरूपा असंकीर्णरूपा धारा गति-
भेदाः ।
'अश्वानान्तु गतिर्धारा विभिन्ना सा च पञ्चधा ।
आस्कन्दितं धोरितकं रेचितं वल्गितं प्लुतम् ॥'
इति वैजयन्ती ॥
'गतयोऽमूः पञ्च धाराः ।' इत्यमरश्च ॥ अश्व-
शास्त्रे तु संज्ञान्तरेणोक्ताः ।
'गतिः पुला चतुष्का च तद्वन्मध्यजघा परा ।
पूर्णवेगा तथा चान्या पञ्च धाराः प्रकीर्त्तिताः ॥
एकैका त्रिविधा धारा हयशिक्षाविधौ मता ।
लध्वी मध्या तथा दीर्घा ज्ञात्वैता योजयेत् क्रमात् ॥'
तथा च पश्चदशावभेदा भवन्ति । ताः पञ्च
धाराः प्रसाधयितुं परिचेतुं नवसु वीथिषु
सञ्चारस्थानेषु गमयाम्बभूव ॥" इति तट्टी-
कायां मल्लिनाथः ॥) सैन्याग्रिमस्कन्धः । घटादि-
च्छिद्रम् । सन्ततिः । (यथा, महाभारते । ६ । ११८ । २४ ।
"उत्पपात ततो धारा वारिणो विमला शुभा ॥")
द्रवस्य प्रपातः । (यथा, महाभारते । १ । २२४ । ५९ ।
"त्वया द्बादश वर्षाणि वसोर्द्धाराहुतं हविः ।
उपयुक्तं महाभाग ! तेन त्वां ग्लानिराविशत् ॥")
खड्गादेर्न्निशितमुखम् । इति मेदिनी । रे, ५० ॥

| पञ्चभूतास्तथा धारास्तेषामवकृताः स्थिताः ।<br>पूर्णाः पूतेन तोयेन सिद्धास्त्वेकान्ततो मुने ! ॥<br>सरित्सरःसखातेन तडागेन जलेन वा ।<br>वापीकूपोढदिव्येन सामुद्रेण सुखावहाः ॥<br>सर्व्वमङ्गलमाङ्गल्याः सर्व्वकिल्विषनाशकाः ।<br>अभिषेके सदा ग्राह्याः कलसा ईदृशाः शुभाः ॥<br>यात्राविवाहकाले वा प्रतिष्ठायज्ञकर्म्मणि ।<br>योजनीया विशेषेण सर्व्वकामप्रसाधकाः ॥<br>ग्रहान् धारयते यस्मान्मातरा विविधास्तथा ।<br>दुरितांश्च महाधोरांस्तेन ते धारकाः स्मृताः ॥ | | |
|---|---|---|

(यथा, शाकुन्तले १ अङ्के ।
"ध्रुवं स नीलोत्पलपत्रधारया
शमीलतां छेत्तुमृषिर्व्यवस्यति ॥")
उत्कर्षः । रथचक्रम् । इति हेमचन्द्रः । ३
। ४१९ ॥
(यथा, रघुः । १३ । १५ ।
"आभाति वेला लवणाम्बुराशे-
र्धारानिबद्धेव कलङ्करेखा ॥")
यशः । अतिवृष्टिः । (यथा, पञ्चतन्त्रे । २
। ६२ ।
"पर्ज्जन्यस्य यथा धारा यथा च दिवि
तारकाः ।
सिकतारेणवो यद्वत् संख्यया
परिवर्ज्जिताः ।
गुणाः संख्यापरित्यक्तास्तद्वदस्य
महात्मनः ॥")
समूहः । इति शब्दरत्नावली ॥
घनासारवर्ष-
णम् । सदृशः । इति विश्वः ॥ (प्रवाहः ।
यथा,
याज्ञवल्क्ये । १ । २८० ।
"सहस्राक्षं शतधारमृषिभिः पावनं कृतम्
।
तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते
॥")
दक्षिणदेशस्थपुरीविशेषः । इति
विक्रमचरि-
तम् ॥ * ॥ (तीर्थविशेषः । यथा, महा-
भारते । ३ । ८४ । २३ ।
"प्रदक्षिणमुपावृत्य गच्छेत भरतर्षभ ! ।
धारां नाम महाप्राज्ञ ! सर्व्वपापप्रमोचनीम्
।
तत्र स्नात्वा नरव्याघ्र ! न शोचति
नराधिप ! ॥")
अथ ज्वरादिशान्त्यर्थं
श्रीनरसिंहादिमूर्द्धि्न जल-
धारापातनविधिः । यथा, नृसिंहपुराणे ।
"तथा महाज्वरग्रस्ते धारां देवस्य मूर्द्धनि
।

**धाराफलः**, पुं, (धारा फले यस्य ।) मदनवृक्षः ।
इति राजनिर्घण्टः ॥ (मदनशब्देऽस्य
गुण-
पर्य्याया ज्ञातव्याः ॥)

**धारावनिः**, पुं, (धाराया वृष्टेः अवनिः पृथ्वीव ।
अभिधानात् पुंस्त्वम् ।) वायुः । इति
त्रिकाण्डशेषः ॥

**धाराविषः**, पुं, (धारा एव विषमिव यस्य प्राण-
नाशकत्वात् ।) खड्गः । इति
त्रिकाण्डशेषः ॥

**धारासम्पातः**, पुं, (धाराणां सम् सम्यक् पातो यत्र
।)
महावृष्टिः । तत्पर्य्यायः । धारा १
सम्पातः २
आसारः ३ । यथा, --
"धारा सम्पात आसारस्त्रितयञ्चापि
कुत्रचित् ॥"
इति शब्दरत्नावली ॥
(यथा, प्रबोधचन्द्रोदये ५ अङ्के ।
"ततो देवि ! परस्परं
करितुरगरथपदातीनां
निरन्तर-शर कर-
धारासम्पातोपदर्शितदुर्द्दि-
नानां तेषामस्माकं च योधानां तुमुलः
सम्प्र-
हारः प्रावर्त्तत ॥")

**धारास्नुही**, स्त्री, (धारान्विता स्नुही ।) त्रिधार-
स्नुही । इति राजनिर्घण्टः ॥
तेकाँटासिज
इति भाषा ॥

**धारिणी**, स्त्री (धरतीति । धृ + णिनिः + ङीप् ।)
धरणी । इति शब्दरत्नावली ॥
शाल्मलिवृक्षः ।
इति शब्दचन्द्रिका ॥
चतुर्द्दशदेवयोषिद्गणः ।
यथा, --

"धारोष्णन्त्वमृतं पयो भ्रमहरं निद्राकरं
कान्तिदं
वृष्यं बृंहणमग्निवर्द्धनमतिस्वादु त्रिदोषापहम् ॥"
इति राजनिर्घण्टः ॥
("धारोष्णं गोपयो बल्यं लघु शीतं सुधासमम् ।
दीपनञ्च त्रिदोषघ्नं तद्धाराशिशिरं त्यजेत् ॥
धारोष्णं शस्यते गव्यं धाराशीतन्तु माहिषम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥)

**धार्त्तराष्ट्रः**, पुं, कृष्णवर्णचञ्चुचरणयुक्तहंसः । गेडि
हाँस इति भाषा ॥ इत्यमरः । २ । ५ । २४ ॥
(यथा, वेणीसंहारे १ अङ्के सूत्रधारस्य शर-
द्वर्णनायाम् ।
"सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धता-
रम्भाः ।
निपतन्ति धार्त्तराष्ट्राः कालवशान्मेदिनीपृष्ठे
॥")
सर्पविशेषः । धृतराष्ट्रपुत्त्रः । इति मेदिनी ।
रे, २७० ॥ (यथा, वेणीसंहारे १ अङ्के ।
"लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिवहेषु च नः प्रहृत्य ।
आकृष्टपाण्डवबधूपरिधानकेशाः
स्वस्था भवन्ति मयि जीवति धार्त्तराष्ट्राः ॥")

**धार्त्तराष्ट्रपदी**, स्त्री, (धार्त्तराष्ट्रस्य पाद इव पादो
मूलं यस्याः । ङीष् पद्भावः ।) हंसपदी । इति
राजनिर्घण्टः ॥ (विवृतिविशेषो हंसपदीशब्दे
ज्ञातव्यः ॥)

**धार्म्मिकः**, त्रि, (धर्म्मं चरतीति । धर्म्म + "धर्म्मं
चरति ।" ४ । ४ । ४१ । इति ठक् । यद्वा,
धर्म्ममधीते वेद वा । "क्रतूक्थादिसूत्रान्तात्
ठक् ।" ४ । २ । ६० । इति ठक् ।)
धर्म्मशीलः ।
तत्पर्य्यायः । देवयुः २ । इति जटाधरः ॥
(यथा, महाभारते । १ । १२२ । ४१ ।
"धार्म्मिकश्च कुरूणां स भविष्यति न संशयः
॥")

**धार्य्यं**, त्रि, (ध्रियते इति । धृ + ण्यत् ।) धारणी-
यम् । यथा, --

सन्ततां नारसिंहस्य कुर्य्याद्वा कारयेत् द्विजैः ॥
होमञ्च भोजनञ्चैव तस्य दोषः प्रशाम्यति ॥”

**धाराकदम्बः**, पुं, (धारा कालोपलक्षितः कदम्बः । वर्षाकाले जायमानत्वादस्य तथात्वम् ।) कदम्ब-वृक्षप्रभेदः । केलिकदम् इति भाषा ॥ तत्-पर्य्यायः । प्रावृष्यः २ पुलकी ३ भृङ्गवल्लभः ४ मेधाभः ५ प्रियकः ६ नीपः ७ प्रावृषेण्यः ८ कलम्बकः ९ । इति राजनिर्घण्टः ॥ धाराकद-म्बकः १० । इति त्रिकाण्डशेषः ॥

**धाराङ्कुरः**, पुं, (धाराया वृष्टेः अङ्कुर इव ।) शीकरः । घनोपलः । नाशीरः । इति मेदिनी । रे, २६९ ॥

**धाराङ्गः**, पुं, (धारा उत्कर्ष एव अङ्गं यस्य । श्रेष्ठत्वादस्य तथात्वम् ।) तीर्थम् । (धारा-न्वितमङ्गमस्य ।) खड्गः । इति हेमचन्द्रः ॥

**धाराटः**, पुं, (धारायै वृष्ट्यर्थं अटतीति । अट + अच् ।) चातकः । (धारामटति वर्षणीयत्वेन प्राप्नोतीति ।) मेघः । (धारां गतिं अटतीति ।) तुरङ्गः । मत्तहस्ती । इति शब्दरत्नावली ॥

**धाराधरः**, पुं, (धरतीति । धृ + अच् । धाराया धरः ।) मेघः । (यथा, उत्तरचातकाष्टके । ४ ।
“रे धाराधर ! धीरनीरनिकरैरेषा रसा नीरसा
“शची वनस्पती गार्गी धूम्रोर्णा रुचिराकृतिः ।
सिनीवाली कुहू राका तथा चानुमतिः शुभा ॥
आयतिर्न्नियतिः प्रज्ञा सेला वेला च नामतः ।
एताश्चतुर्द्दश प्रोक्ता धारिण्यो देवयोषितः ॥”
इति वह्निपुराणे गणभेदनामाध्यायः ॥
(धारणकर्त्री । यथा, विष्णुपुराणे । १ । १३ । ८८ ।
“प्राणप्रदानात् स पृथुर्यस्मात् भूमेरभूत् पिता ।
ततस्तु पृथिवीसं ज्ञामवापाखिलधारिणी ॥”
आधारस्वरूपा । यथा, तत्रैव । १ । १३ । ९१ ।
“सैषा धात्री विधात्री च धारिणी पोषणी तथा ।
सर्व्वस्य जगतः पृथ्वी विष्णुपादतलोद्भवा ॥”
“धात्री माता विधात्री कर्त्री धारिणी आधारः पोषणी पोषणकर्त्री ।” इति तट्टीकायां श्रीधर-स्वामी ॥)

**धारी**, [न्] पुं, (धरतीति । धृ + णिनिः ।) पीलु-वृक्षः । इति जटाधरः ॥ त्रि, धारविशिष्टः ॥
(धारकः । यथा, महाभारते । ५ । ३१ । ११ ।
“तथैव विदुरं ब्रूयाः कुरूणां मन्त्रधारिणम् ॥”
ग्रन्थतात्पर्य्यज्ञः । यथा, मनुः । १२ । १०३ ।
“अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः ।
धारिभ्यो ज्ञानिनः श्रेष्ठा ज्ञानिभ्यो व्यवसायिनः ॥”)

**धारुः**, त्रि, (धयति पिबतीति । धे ट पाने +
“धातानुराधवसुपुष्यविशाखहस्ता-
चित्रोत्तराश्विपवनादितिरेवतीषु ।
जन्मर्क्षजीवबुधशुक्रदिनोत्सवादौ
धार्य्यं नवं वसनमीश्वरविप्रतुष्टौ ॥”
इति समयप्रदीपः ॥
(ध्रियते परिधीयते इति । वस्त्रे, क्ली । यथा, भागवते । ९ । १८ । १४ ।
“वयं तत्रापि भृगवः शिष्योऽस्या नः पितासुरः ।
अस्मद्धार्य्यं धृतवती शूद्रो वेदमिवासती ॥”)

**धाव**, उ ञ जवे । मृजि । इति कविकल्पद्रुमः ॥ (भ्वां-उभं-अकं-शुद्धीकरणे सकं-सेट् । उदि-त्वात् क्तावेट् ।) उ, धावित्वा धौत्वा । ञ, धावति धावते । जवः शीघ्रगतिः । पाशपाणिः पुनस्तत्र यमदूतोऽपि धावतीति हलायुधः । मृट् शुद्धिभावः शुद्धीकरणञ्च । धावति ताम्र-मम्लेन शुध्यतीत्यर्थः ।
‘दधावद्भिस्ततश्चक्षुः सुग्रीवस्य विभीषणः ।’
अस्य जवे निष्ठाया अप्रयोगः । धौतं वासः । इति दुर्गादासः ॥

| | | |
|---|---|---|
| शेषा पूषकरोत्करैरतिखरैरापूरि भूरि त्वया ।<br>एकान्तेन भवन्तमन्तरगतं स्वान्तेन सञ्चिन्तयन्<br>आश्चर्य्यं परिपीडितोऽभिरमते यच्चातक-<br>स्तृष्णया ॥”<br>खडगः । इति मेदिनी । रे, २६९ ॥ | “दाधेट्सिशदसदो रुः ।” ३ । २ । १५९ । इति<br>रुः ।) पानकर्त्ता । इति जटाधरः ॥ (यथा,<br>अथर्व्ववेदे । ४ । १८ । २ ।<br>“वत्सो धारुरिव मातरं तं प्रत्पगुपपद्यताम् ॥”)<br>**धारोष्णं**, क्ली, (धारायां दोहनप्रपाते उष्णम् ।)<br>दोहनेनोष्णधारया पतितदुग्धम् । तस्य गुणाः । | |

"https://sa.wikisource.org/w/index.php?title=शब्दकल्पद्रुमः/ध&oldid=43980" इत्यस्माद् पुनः प्राप्तिः

**धावकः**, त्रि, (धावति शीघ्रं गच्छतीति । धाव + ण्वुल् ।) धावनकर्त्ता । शीघ्रगमनकर्त्ता । धाउ-
डिया इति भाषा । धावधातोर्णकप्रत्ययेन निष्पन्नः ॥ (यथा, गोः रामायणे । २ । ३२ । २२ ।
"संवाहकाः सलिलदाः पुरतो धावकाश्च ये ।
तेषां निष्कसहस्रं त्वं वृत्त्यर्थमुपकल्पय ॥")

**धावनं**, क्ली, (धाव + भावे ल्युट् ।) गमनम् । (यथा, राजतरङ्गिण्याम् । १ । ११४ ।
"ग्रामे ग्रामे स्थितैरश्वैर्धावनं प्रतिषिद्धवान् ॥")
शुद्धिः । इति मेदिनी । ने, ७९ ॥ (यथा, सुश्रुते चिकित्सितस्थाने । २२ ।
"पटोलत्रिफलानिम्बकषायाश्चात्रधावने ॥"
"पाकं गते व्रणे वापि गम्भीरे सरुजेऽथवा ।
सरन्ध्रे शोधनं कार्य्यं धावनन्तु भिषग्वरैः ॥"
इति हारीते चिकित्सितस्थाने ३५ अध्यायः ॥)

**धावनिः**, स्त्री, (धाव + बाहुलकात् अनिः ।) पृश्नि-पर्णी । इत्यमरः । २ । ४ । ९३ ॥ (पर्य्यायोऽस्या यथा,
"पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यहिपर्ण्यपि ।
क्रोष्टुविन्ना सिंहपुच्छी कलशी धावनिर्गुहा ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥ कण्टकारी । इति राजनिर्घण्टः ॥)

**धावनिका**, स्त्री, (धावनिरिव प्रतिकृतिः । "इवे प्रतिकृतौ ।" ५ । ३ । ९६ । इति कन् । यद्वा, स्वार्थे कन् ।) कण्टकारिका । इति रत्नमाला ॥

**धावनी**, स्त्री, (धावनि + कृदिकारादिति वा ङीष् ।) पृश्निपर्णी । इति मेदिनी । ने, ७९ ॥ कण्टकारी । धातकी । इति राजनिर्घण्टः ॥

**धावितः**, त्रि, (धाव + क्तः ।) गतः । (यथा, कथासरित्सागरे । ३ । ५२ ।
प्राणिवर्गे अमरः । ३ । १ । ३९ ॥ (यथा, भागवते । ७ । ८ । ५३ ।
"वयं किम्पुरुषास्त्वन्तु महापुरुष ईश्वरः ।
अयं कुपुरुषो नष्टो धिक्कृतः साधुभिः सदा ॥")
निन्दितमात्रम् । कृतधिक्कारस्य प्राणिवर्गोक्तस्य पर्य्यायान्तरमिदम् अप्राणिविषयार्थम् । धिगस्तु त्वां इति कृतः शब्दितो धिक्कृतः । इति भरतः ॥ तत्पर्य्यायः । अवरीणः २ । इति विशेष्यनिघ्नवर्गे अमरः । ३ । १ । ९४ ॥

**धिक्क्रिया**, स्त्री, (धिगित्युच्चारणमेव क्रिया ।) निन्दा । इति हेमचन्द्रः । २ । १८५ ॥

**धिक्ष**, ङ सन्दीपे । क्लेशे । जीवे । इति कविकल्प-द्रुमः ॥ (भ्वां-आत्मं-अकं-सेट् ।) तृतीयस्वरी । ङ, धिक्षते वह्निः सन्दीप्यते इत्यर्थः । जनः क्लिश्यति जीवतीति वा अर्थः । इति दुर्गा-दासः ॥

**धिग्वणः**, पुं, वर्णसङ्करविशेषः । तस्य चर्म्मकार्य्यं वृत्तिः । स तु ब्राह्मणादायोगव्यां जातः । इति मनुः ॥

**धियाम्पतिः**, पुं, (धियां बुद्धीनां पतिः । अलुक् समासः ।) पूर्ब्बजिनविशेषः । मञ्जघोष इति
धारयित्री । द्यावापृथिव्योः द्विवचनान्तः । यथा, ऋग्वेदे । ३ । ४९ । १ ।
"यं सुक्रतं धिषणे विभ्वतष्टं घनं वृत्रानां जन-यन्त देवाः ॥"
"धिषणे देवमनुष्यादीनां धारयित्र्यौ । यद्वा प्रगल्भ्ये समर्थे स्वाश्रितान् रक्षितुमिति धिषणे द्यावापृथिव्यौ ॥" इति तद्भाष्ये सायनः ॥ * ॥ हविर्द्धानस्य पत्नी । यथा, मात्स्ये । ४ । ४५ ।
"हविर्द्धानात् षडाग्रेयी धिषणा जनयत् सुतान् ।
प्राचीनवर्हिषं साङ्गं यमं शुक्रं बलं शुभम् ॥"
क्ली । स्थानम् । यथा, भागवते । ३ । १६ । ३२ ।
"तदा विकुण्ठधिषणात् तयोर्निपतमानयोः ।
हाहाकारो महानासीद्विमानाग्रेषुपुत्रकाः ॥"
"विकुण्ठस्य धिषणात् स्थानात् ।" इति तट्टी-कायां श्रीधरस्वामी ॥)

**धिष्ट्यं**, क्ली, (धिष्ण्य + निपातनात् णस्य टः ।) स्थानम् । गृहम् । नक्षत्रम् । अग्निः । इत्यमरः । ३ । ३ । १५४ ॥ शक्तिः । इति मेदिनी ॥

**धिष्ट्यः**, पुं, (धृष्णोति प्रगल्भो भवतीति । धृष + ण्यः । निपातनात् साधुः ।) अग्निः । शुक्रा-चार्य्यः । इति पुंस्काण्डेऽमरदत्तः ॥

**धिष्ण्यं**, क्ली, (धृष्णोति प्रगल्भो भवतीति । धृष् + "सानसिवर्णसिपर्णसीति ।" उणां । ४ । १०७ । इति ण्यप्रत्ययः निपातनात् ऋकारस्य च इकारः । स्थानम् । (यथा, भागवते । २ । १ । ३० ।
"द्यौरक्षिणी चक्षुरभूत् पतङ्गः
पक्ष्माणि विष्णोरहनी उभे च ।
तद्भ्रूविजृम्भः परमेष्ठिधिष्ण्य-
मापोऽस्य तालू रस एव जिह्वा ॥"
"परमेष्ठिधिष्ण्यं ब्रह्मपदम् ॥" इति तट्टीकायां

“एवमस्त्विति तौ मूढौ धावितौ सोऽपि पादुके ।
अध्यास्योदपतद्व्योमगृहीत्वा यष्टिभाजने ॥”)
मार्ज्जितः ॥

**धासाः**, [स्] पुं, (दधाति पृथिवीमिति । धा +
“वहिहाधाञश्छन्दसि ।” उणां । ४ । २२० ।
इति असुन् तस्य सुट् च ।) पर्व्वतः । इति
वैदिकप्रयोगः ॥

**धि**, श धृतौ । इति कविकल्पद्रुमः ॥ (तुदां-परं-
सकं-अनिट् ।) श, धियति । इति दुर्गादासः ॥

**धिक्**, व्य, निर्भर्त्सनम् । निन्दा । इत्यमरः । ३ ।
३ । २३९ ॥ (यथा, विष्णुपुराणे । १ । १५ ।
३५ ।
“धिङ्मां धिङ्मामतीवेत्थं निनिन्दात्मान-
मात्मना ॥”)

**धिक्कारः**, पुं, (धिक् इत्यस्य कारः करणम् ।)
धिक् । तत्पर्य्यायः । नीकारः २ अवहेलम् ३
अमाननम् ४ क्षेपः ५ निकारः ६ अनादरः ७
।
इति शब्दरत्नावली ॥ (यथा, भागवते । ४ ।
१४ । १३ ।
“लोकधिक्कारसन्दग्धं दहिष्यामः स्वतेजसा
॥”)

**धिक्कृतः**, त्रि, (धिक् + कृ + कर्म्मणि क्तः ।)
निर्भर्तसितः । असत्करणादिना धिगित्यस्य
करणं धिक्कारो निन्दा धिगितः धिक्कृतः
धिक्
त्वां इति भर्त्सितो धिक्कृत इति यावत् ।
इति भरतः ॥ तत्पर्य्यायः । अपध्वस्तः २ ।
इति
ख्यातः । इति त्रिकाण्डशेषः ।
आत्मा । ध्यात
एव धियाम्पतिरिति प्रयोगदर्शनात् ॥

**धिव**, इ न प्रीतौ । गतौ । इति कविकल्पद्रुमः
॥
(स्वां-परं-सकं-सेट् ।) प्रीतिरिह
प्रीतीकर-
णम् । इ, धिन्व्यते । न, धिनोति
हव्येन हिरण्य-
रेतसमिति किराते । गतिः कैश्चिन्न
मन्यते ।
इति दुर्गादासः ॥

**धिष**, र लि रवे । इति कविकल्पद्रुमः ॥ (ह्वां-
परं-अकं-सेट् ।) र, वैदिकः । लि,
दिधेष्टि ।
रवः शब्दः । इति दुर्गादासः ॥

**धिषणः**, पुं, (धृष्णोति प्रागल्भ्यं ददातीति ।
धृष् +
“धृषेधिष च संज्ञायाम् ।” उणां २ ।
८२ । इति
क्युः ।) बृहस्पतिः । इत्यमरः । १ ।
३ । २४ ॥

**धिषणा**, स्त्री, (धृष्णोत्यनयेति । धृष प्रागल्भ्ये
+
क्युः । धिषादेशश्च ।) बुद्धिः ।
इत्यमरः । १ ।
५ । १ ॥ (यथा, ऋग्वेदे । ३ । ३२
। १४ ।
“विवेष यन्मा धिषणा जजान स्तवैः
पुरा पार्य्या-
दिन्द्रमह्नः ॥”
स्तुतिः । यथा, ऋग्वेदे । ८ । १५ ।
७ ।
“तव त्यदिन्द्रियं बृहत्तव शुष्ममुत
क्रतुम् ।
वज्रं शिशाति धिषणा वरेण्यम् ॥”
“धिषणा स्तुतिः ।” इति तद्भाष्ये
सायनः ॥
वाक् । यथा, ऋग्वेदे । ३ । ४९ । ४
।
स्वामी ॥ गृहम् । (यथा, महाभारते । १७ । ३
। १० ।
“स्वर्गे लोके श्ववतां नास्ति धिष्ण्य-
मिष्टापूर्त्तं क्रोधवशा हरन्ति ॥”)
नक्षत्रम् । (यथा, सूर्य्यसिद्धान्ते । ११ । २१
।
“सार्पेन्द्रपौष्ण्यधिष्ण्यानामन्त्याःपादाः भस-
न्धयः ॥”)
अग्निः । इत्यमरः । ३ । ३ । १५४ ॥ (यथा
अथर्व्व-
वेदे । २ । ३५ । १ ।
“ये भक्षयन्तो न वसून्यानृधुर्य्यानग्नयो
अन्वतप्यन्त
धिष्ण्याः ॥”)
शक्तिः । इति मेदिनी । ये, ३४ ॥ (उल्का-
भेदः । यथा, बृहत्संहितायाम् । ३३ । १ ।
“दिविभुक्तशुभफलानां
पततां रूपाणि यानि तान्युल्काः ।
धिष्ण्योल्काशनिविद्युत्तारा
इति पञ्चधा भिन्नाः ॥”
प्राणाभिमानी देवः । यथा, ऋग्वेदे । ३ । २२
। ३ ।
“अग्ने ! दिवो अर्णमच्छा जिगास्यच्छा देवा
ऊचिषे धिष्ण्या ये ॥”
“धियं बुद्ध्युपहितं देहं उष्णन्ति उष्णीकुर्व्व-
न्तीति धिष्ण्याः प्राणाभिमानिनो देवाः ।”
इति तद्भाष्ये सायनः ॥)

| | | |
|---|---|---|
| | “क्षपां वस्ता जनिता सूर्य्यस्य विभक्ता भागं भागं धिषणेव वाजम् ॥” “धिषणेव । यथाढ्यानां वाक् अस्येदमिति विभागं करोति तद्वत् ।” इति तद्भाष्ये सायनः ॥ प्रस्तरः । यथा, ऋग्वेदे । ९ । ५९ । २ । “पवस्व धिषणाभ्यः ।” “किञ्च धिषणाभ्यो ग्रावभ्यः पवस्व क्षर ॥” इति तद्भाष्ये सायनः ॥ | |

**धी**, ओ ङ य आराधे । नादरे । इति कविकल्प-

द्रुमः ॥ (दिवां-आत्मं-सकं-अनिट् ।) अनादर

इति कातन्त्रादौ । ओ, धीनः । ङ य, धीयते

खलं लोकः । इति दुर्गादासः ॥

**धीः**, स्त्री, (ध्यै चिन्तने + भावे क्विप् । सम्प्रसार-

णञ्च ।) बुद्धिः । इत्यमरः । १ । ५ । १ ॥ (यथा,

मनौ । ६ । ९२ ।

"धृतिः क्षमा दमोऽस्तेयं

शौचमिन्द्रियनिग्रहः ।

धीर्व्विद्या सत्यमक्रोधो दशकं

धर्म्मलक्षणम् ॥")

**धीतः**, त्रि, पीतः । इति धेधातोः क्तप्रत्ययेन

निष्पन्नः ॥

**धीतिः**, स्त्री, (धेट पाने + क्तिन् ।) पिपासा । इति

हेमचन्द्रः । ३ । ५८ ॥

**धीदा**, स्त्री, (धियं ददातीति । दा + कः । स्त्रियां

टाप् ।) कन्या । मनीषा । इति

हेमचन्द्रः ॥

**धीन्द्रियं**, क्ली, (धीजनकमिन्द्रियम् ।) ज्ञानेन्द्रि-

यम् । तद्यथा । मनः १ नेत्रम् २

श्रोत्रम् ३

त्वक् ४ रसना ५ घ्राणम् ६ ।

इत्यमरः । १ ।

५ । ८ ॥

**धीमान्**, [त्] पुं, (धीरस्यास्तीति । धी + मतुप् ।)

बृहस्पतिः । पण्डिते, त्रि । इति

मेदिनी । ते,

"देहे समीहे भवतो विधातुं

धीरं समीरं नलिनीदलेन ॥"

इति रसमञ्जर्य्याम् ।)

विनीतः । इति संक्षिप्तसारोणादिवृत्तिः ॥

(गम्भीरः । यथा, रघुः । ३ । ४४ ।

"अवोचदेनं गगनस्पृशा रघुः

स्वरेण धीरेण निवर्त्तयन्निव ॥")

**धीरत्वं**, क्ली, (धीरस्य भावः । धीर + त्व ।)

धीरता । यथा, --

"प्रागल्भ्यौदार्य्यमाधुर्य्यशोभाधीरत्वकान्तयः ।

दीप्तिश्चायत्नजा भावहावहेलाः स्त्रियोऽङ्गजाः ॥"

इति हेमचन्द्रः । ३ । १७३ ॥

**धीरपत्री**, स्त्री, (धीरं मनोहरं पत्रमस्याः ।

स्त्रियां ङीष् ।) धरणीकन्दः । इति राज-

निर्घण्टः ॥

**धीरस्कन्धः**, पुं, (धीरः अचञ्चलः भारसह इति

यावत् स्कन्धो यस्य ।) महिषः । इति

हेमचन्द्रः ।

४ । ३४८ ॥

**धीरा**, स्त्री, (धीर + टाप् ।) काकोली । महा-

ज्योतिष्मती । इति राजनिर्घण्टः ॥ (गुडूची ।

अस्याः पर्य्याया यथा, --

"गुडूची मधुपर्णी स्यादमृतामृतवल्लरी ।

छिन्ना छिन्नरुहा छिन्नोद्भवा वत्सादनीति च ॥

जीवन्ती तन्त्रिका सोमा सोमवल्ली च कुण्डली ।

चक्रलक्षणिका धीरा विशल्या च रसायनी ॥

चन्द्रहासी वयस्था च मण्डली देवनिर्म्मिता ॥"

इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

मानावस्थायां मध्याप्रगल्भानायिकाभेदः ।

अस्या लक्षणम् । व्यङ्ग्यकोपप्रकाशा धीरा ।

मध्याया धीरायाः कोपव्यञ्जिका गीः । प्रौढा-

धीरायास्तु रतावौदास्यम् । सा द्विविधा ।

ज्येष्ठा कनिष्ठा च । मध्या धीरा यथा, --

"लोलालिपुञ्जे व्रजतो निकुञ्जे

स्फारा बभूवुः श्रमवारिधारा ।

"कान्तानुरागचतुरोऽसि मनोहरोऽसि

नाथोऽसि किञ्च नवयौवनभूषितोऽसि ।

इत्थं निगद्य सुदृशा वदने प्रियस्य

निःश्वस्य वास्पलुलिता निहिता दृगन्ताः ॥

प्रौढाधीराधीरा यथा, --

"तल्पोपान्तमुपेयुषि प्रियतमे साचीकृतग्रीवया

काकुव्याकुलवाचिसाचिहसितस्फुर्जत्कपोल-

श्रिया ।

हस्तन्यस्तकरे पुनर्मृगदृशा लाक्षारसक्षालित-

प्रौष्ठी प्रेष्ठमयूखमांसलरुचो विस्फारिता

दृष्टयः ॥"

इति रसमञ्जरी ॥

**धीलटिः**, स्त्री, (धिया बुद्ध्या लटति बालोक्त्या

मोहयतीति । लट् + "सर्व्वधातुभ्य इन् ।" उणां

४ । ११७ । इति इन् ।) दुहिता । इति हारा-

वली ॥ २१९ ॥

**धीवा**, [न्] पुं, स्त्री, (ध्यायतीति । ध्यै + "ध्याप्योः

संप्रसारणञ्च ।" उणां । ४ । ११५ । इति

क्वनिप् । संप्रसारणञ्च ।) धीवरः । यथा, बहु-

धीवरी बहुधीवा । इति मुग्धबोधम् ॥

**धीवरः**, पुं, (दधाति मत्स्यानिति । धा + "छित्वर-

च्छत्वरधीवरपीवरेति ।" उणां । ३ । १ । इति

ष्वरच् प्रत्ययेन निपातनात् साधुः ।) कैवर्त्तः ।

इत्यमरः । १ । १० । १५ ॥ (यथा, महाभारते ।

२ । २० । १७ ।

"यतो हि निम्नं भवति नयन्ति हि ततो जलम् ।

यतश्छिद्रं ततश्चापि नयन्ते धीवरा जलम् ॥")

**धीवरी**, स्त्री, (धीवर + ङीष् ।) धीवरपत्नी ।

कैवर्त्ती । इति मुग्धबोधम् ॥ मत्स्यवेधिनी ।

इत्युणादिकोषः ॥

**धीशक्तिः**, स्त्री, (धियः शक्तिः ।) बुद्धिसामर्थ्यम् ।

तत्पर्य्यायः । निष्क्रमः २ । इत्यमरः । ३ । २ । २५ ॥

सा चाष्टधा । यथा, --

११५ ॥ (यथा, मनुः । १ ।
१०२ ।
"तस्य कर्म्मविवेकार्थं
शेषाणामनुपूर्ब्बशः ।
स्वायम्भुवो मनुर्धीमानिदं
शास्त्रमकल्पयत् ॥"
नरपुत्त्रस्य विराजः पुत्त्रः । यथा,
--
"नरो गयस्य तनयः तत्पुत्त्रोऽभूत्
विराट् ततः ।
तस्य पुत्त्रो महावीर्य्यो
धीमांस्तस्मादजायत ॥"
इति विष्णुपुराणे । २ । ३९ ।
पुरूरवसः उर्व्वशीगर्भजातः
पुत्त्रविशेषः ।
यथा, महाभारते । १ । ७५ ।
२४ ।
"षट्सुता
जज्ञिरेऽथैलादायुर्धीमानमावसुः ।
दृढायुश्च वनायुश्च
शतायुश्चोर्व्वशीसुताः ॥")

**धीमती**, स्त्री, (धीमत् + स्त्रियां ङीप् ।) बुद्धि-
मती । इत्यमरः । २ । ६ । १२ ॥

**धीरं**, क्ली, (धियं रातीति । रा + कः ।) कुङ्कु-
मम् । इति मेदिनी । रे, ५१ ॥
(पर्य्यायोऽस्य यथा
भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ।
"कुङ्कुमं घुसृणं रक्तं काश्मीरं
पीतकं वरम् ।
सङ्कोचं पिशुनन्धीरं बाह्लीकं
शोणिताभिधम् ॥")

**धीरः**, पुं, (धियं राति ददाति गृह्लातीति वा ।
रा + कः ।) ऋषभौषधिः । इति
राजनिर्घण्टः ॥
वलिराजः । इति शब्दरत्नावली
॥

देहे समीहे भवतो विधातुं
धीरं समीरं नलिनीदलेन ॥
प्रौढा धीरा यथा, --
"नो तल्पं भजसे न जल्पसि सुधाधारानुकारा
गिरो
दृक्पातं कुरुषे न वा परिजने कोपप्रकाश-
च्छलात् ।
इत्थं केतकगर्भगौरि ! दयिते कोपस्य संगोपनं
किं स्यादेव न चेत् पुनः सहचरी कुर्व्वीत
साचिस्मितम् ॥"
इति रसमञ्जरी ॥

**धीराधीरा**, स्त्री, (धीरा अधीरा च ।) मानाव-
स्थायां मध्याप्रगल्भा नायिकाभेदः । अस्या
लक्षणम् । व्यङ्ग्याव्यङ्ग्यकोपप्रकाशा।
मध्याया
धीराधीरायाः कोपव्यञ्जिके वचनरुदिते ।
प्रौढाधीराधीराया रतावौदास्यं तर्ज्जनताड-
नादि च कोपस्य प्रकाशकम् । सा द्विविधा ।
ज्येष्ठा कनिष्ठा च । मध्याधीराधीरा यथा, --

"शुश्रूषा श्रवणञ्चैव ग्रहणं धारणं तथा ।
ऊहापोहार्थविज्ञानं तत्त्वज्ञानञ्च धीगुणाः ॥"
इति भरतः ॥

**धीसखः**, पुं, (धियः सखा सहायः । "राजाहः-
सखिभ्यष्टच् । इति टच् ।) मन्त्री । इति हेम-
चन्द्रः । ३ । ३८३ ॥

**धीसचिवः**, पुं, (धियि बुद्धौ मन्त्रणादौ सचिवः
सहायः ।) मन्त्री । इत्यमरः । २ । ८ । ४ ॥

**धु**, ञ न कम्पे । इति कविकल्पद्रुमः ॥ (स्वां-उभं-
सकं-अनिट् ।) ञ न, धुनोति धुनुते । कम्प
इह ज्यन्तस्य रूपम् । धुनोति चम्पकवनानि
धुनोत्यशोकं वायुरिति हलायुधः । इति दुर्गा-
दासः ॥

**धुः**, स्त्री, (धवनमिति । धु कम्पने + भावे डुः ।)
कम्पनम् । इत्येकाक्षरकोषः ॥

**धुक्ष**, ङ सन्दीपने । क्लेशे । जीवे । इति कविकल्प-
द्रुमः ॥ (भ्वां-आत्मं-अकं-सेट् ।) पञ्चमस्वरी ।
ङ, धुक्षते वह्निः सन्दीप्यते इत्यर्थः । धुक्षते
जनः
क्लिश्यति जीवति वेत्यर्थः । इति दुर्गादासः ॥

**धीरः**, त्रि, (धियं ईरयतीति । ईर + अण् । यद्वा,

धियं रातीति । रा + कः ।)

धैर्य्यान्वितः ।

स्वैरः । पण्डितः । इति मेदिनी ।

रे, ५१ ॥

(यथा, भागवते । ३ । ६ । ४५ ।

"तथापरे चात्मसमाधियोग-

बलेन जित्वा प्रकृतिं बलिष्ठाम् ।

त्वामेव धीराः पुरुषं विशन्ति

तेषां श्रमः स्यान्न तु सेवया ते ॥"

बलयुतः । इति शब्दरत्नावली ॥

मन्दः । इति

त्रिकाण्डशेषः ॥ (यथा, --

**धुतः**, त्रि, (धु + क्तः ।) त्यक्तः । विधूतः । इति
मेदिनी । ते, २८ ॥ (यथा, रघुः । ११ ।
१६ ।
"तीव्रवेगधुतमार्गवृक्षया
प्रेतचीवरवसा स्वनोग्रया ।
अभ्यभावि भरताग्रजस्तया
वात्ययेव पितृकाननोत्थया ॥")

**धुनिः**, स्त्री, (धुनोति वेतसादिनदीजातवृक्षा-
निति । धु कम्पने + वहुलवचनात् निः
स च
कित् ।) नदी । इत्यमरटीकायां भरतः
॥
(यथा, ऋग्वेदे । २ । ३० । २ ।
"पथोदरन्तीरनुजोषमस्मै
दिवे दिवे धुनयो यन्त्यर्थम् ॥"
पुं, जलप्रतिरोधकोऽसुरविशेषः । यथा,
तत्रैव ।
१ । १७४ । ९ ।
"त्वं धुनिरिन्द्रधुनिमतीरृणोरपःसीरान-
स्रवन्तीः ॥"
"हे इन्द्र त्वं धुनिः कम्पयिता
शत्रूणामसि अतो
धुनिमतीः कम्पनोपेततरङ्गवतीः अथवा
धुनि-
र्नामजलप्रतिरोधकार्य्यसुरः स एव
प्रतिबन्धक-
तया यासां तादृशीरपः ॥" इति तद्भाष्ये
सायनः । धूनयति कम्पयति शत्रूनिति ।
मरु-
द्विशेषः । यथा, वाजसनेयसंहितायाम् ।
३९ । ७ ।
"उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च ॥"
कम्पयितरि, त्रि । यथा, ऋग्वेदे । १ ।
७९ । १ ।
"हिरण्यकेशो रजसोविसारेहिर्धुनिर्वात
इव
ध्रजीमान् ॥")

**धुनी**, स्त्री, (धुनि + कृदिकारादिति वा ङीष् ।)
स गत्वा जयतां श्रेष्ठस्तनयैः सह
वीर्य्यवान् ।
समुद्रं खानयामास बालुकार्णवमव्ययम् ॥
नारायणेन कौरव्य ! तेजसाप्यायितः स वै
।
बभूव सुमहातेजा भूयो बलसमन्वितः ॥
तस्य पुत्त्रैः खनद्भिस्तु
बालुकान्तर्हितस्तदा ।
धुन्धुरासादितो राजन् ! दिशमाश्रित्य
पश्चिमाम् ॥
मुखजेनाग्निना क्रोधाल्लोकानुद्वर्त्तयन्निव ।
वारि सुस्राव वेगेन महोदधिरिवोदये ॥
सोमस्य भरतश्रेष्ठ ! धारोर्म्मिकलिलं महत्
।
तस्य पुत्त्रशतं दग्धं त्रिभिरूणन्तु रक्षसा ॥
ततः स राजा कौरव्य ! राक्षसं तं
महाबलम् ।
आससाद महादेजा धुन्धुं धुन्धुनिवर्हणः ॥
तस्य वारिमयं वेगमापीय स नराधिपः ।
योगी योगेन वह्निञ्च शमयामास वारिणा ॥
निहत्य तं महाकायं बलेनोदकराक्षसम् ।
उतङ्कं दर्शयामास कृतकर्म्मा महायशाः ॥
उतङ्कस्तु वरं प्रादात् तस्मै राज्ञे महात्मने
।
अददाच्चाक्षयं वित्तं शत्रुभिश्चापराजयम्
॥
धर्म्मे रतिञ्च सततं स्वर्गे वासं तथाक्षयम् ।
पुत्त्राणाञ्चाक्षयाल्लोँकान् स्वर्गे ये राक्षसा
हताः ॥" * ॥)
शक्रगोपः । गृहधूमः । पदालिकः । इति
मेदिनी । रे, २७० ॥

**धुरन्धरः**, पुं, धववृक्षः । इति रत्नमाला ॥
(पर्य्यायोऽस्य यथा, --
"धवो धटो नन्दितरुः स्थिरो गौरो
धुरन्धरः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥
धुरं धरतीति । धृ + खच् + मुम् ।) रथ-
धुर्व्वाहकमात्रे, त्रि ॥ (यथा, महाभारते । ३
१८६ । १० ।
"अनड्वाहं सुव्रतं यो ददाति
हलस्य वोढारमनन्तवीर्य्यम् ।
धुरन्धरं बलवन्तं युवानं
प्राप्नोति लोकान् दशधेनुदस्य ॥"
श्रेष्ठः । यथा, तत्रैव । १३ । १३७ । ३१ ।
"दत्त्वा तु सततं तैस्तु कौरवानां धुरन्धर ! ।
दानयज्ञक्रियायुक्ता बुद्धिर्धर्म्मोपचायिनी ॥")

**धुरा**, स्त्री, (धुर् + पक्षे टाप् ।) धूः । भारः ।
इत्यमरटीकायां भरतः ॥

**धुरीणः**, त्रि, (धुरं वहतीति । "खः सर्व्वधुरात् ।"
४ । ४ । ७८ । इत्यत्र योगविभागवत् खः ।)
भारवाहः । इत्यमरः । २ । ९ । ६५ ॥ (श्रेष्ठः
।
यथा, पञ्चतन्त्रे । ३ । २०७ ।
"हे ब्रह्मव्रतधराणां धुरीण ! त्वयापि मय्युप-
कृतमित्याद्युक्त्रा स्कन्धादुत्तार्य्य यत्र यत्र
स्वजन-
गृहद्वारादिषु बभ्राम ॥")

**धुरीयः**, पुं, (धुरमर्हतीति । छः ।) अनड्वान् ।
इति राजनिर्घण्टः ॥ भारयोग्ये, त्रि ॥

**धुर्य्यः**, त्रि, (धुरं वहतीति । धुर् + "धुरो यड्-
ढकौ ।" ४ । ४ । ७७ । इति यत् । "न भकु-
र्च्छुराम् ।" ८ । २ । ७९ । इति न दीर्घः ।)
धुरन्धरः । इत्यमरः । २ । ९ । ६५ ॥ (यथा,
रघुः । ५ । ६६ ।
"तामेकतस्तव बिभर्त्ति गुरुर्विनिद्र-
स्तस्या भवानपरधुर्य्यपदावलम्बी ॥"
श्रेष्ठः । यथा, भागवते । ४ । २२ । ४९ ।
"वण्यस्तु धुर्य्यो महतां
संस्थित्याध्यात्मशिक्षया ॥"
ऋषभौषधौ अनडुहि च पुं । इति राजनिर्घण्टः
॥
(अश्वादिरपि । यथा, महाभारते । ३ ।
१९७ । १२ । "पुनरपि चान्योऽप्यश्वार्थी
ब्राह्मण

नदी । इत्यमरः । १ । १० । ३० ॥
(यथा,
भागवते । ४ । २९ । ५५ ।
"सत्वं विचक्ष्य मृगचेष्टितमात्मनोऽन्त-
श्चित्तं नियच्छ हृदि कर्णधुनीञ्च चित्ते
॥")

**धुनीनाथः**, पुं, (धुनीनां नदीनां नाथः ।) समुद्रः ।
इति राजनिर्घण्टः ॥

**धुन्धुमारः**, पुं, (धुन्धुं तन्नामकं राक्षसं मारय-
तीति । मारि + अण् ।)
कुवलयाश्वराजः । स
तु बृहदश्वपुत्त्रः । इति पद्मपुराणम् ॥
(अस्य
धन्धुमारणकथा यथा, हरिवंशे । ११ ।
३९ -- ५५ ।
"स एवमुक्तो राजर्षिरुतङ्केन महात्मना ।
कुवलाश्वं सुतं प्रादात् तस्मै
धुन्धुनिवारणे ॥
बृहदश्व उवाच ।
भगवन् ! न्यस्तशस्त्रोऽहमयन्तु तनयो
मम ।
भविष्यति द्विजश्रेष्ठ ! धुन्धुमारो न
संशयः ॥
स तं व्यादिश्य तनयं राजर्षिर्धुन्धुमारणे
।
जगाम पर्व्वतायैव तपसे संशितव्रतः ॥
कुवलाश्वस्तु पुत्त्राणां शतेन सह
पार्थिव ! ।
प्रायादुतङ्कसहितो धुन्धोस्तस्य परिग्रहे
॥
तमाविशचदा विष्णुर्भगवांस्तेजसा विभुः
।
उतङ्कस्य नियोगाद्वै लोकानां
हितकाम्यया ॥
तस्मिन प्रयाते दुर्द्धर्षे दिवि शब्दो
महानभूत् ।
एष श्रीमान्नृपसुतो धुन्धुमारो भविष्यति
॥
दिव्यैर्म्माल्यैश्च तं देवाः समन्तात्
समवाकिरन् ।
लाङ्गलादिभारवोढा । तत्पर्य्यायः ।
धुर्व्वहः
२ धुर्य्यः ३ धौरेयः ४ धुरीणः ५ ।
इत्यमरः । २ ।
९ । ६५ ॥ यथा, --
"धुरन्धरो धुरीणश्च धौरेयधुर्य्यधुर्व्वहाः ।
यत्र काम्यरथस्यापि लाङ्गलस्यापि वा
धुरम् ॥
वहत्येकधुरीणः स्यात्तथा चैकधुरोऽपि च
।
स तु सर्व्वधुरीणः स्यात् सर्व्वा वहति यो
धुरः ॥"
इति शब्दरत्नावली ॥
(आदित्यनृपस्य मन्त्री । स तु कौशलेन
राजानं
हत्वा स्वययेव राज्यमकरोत् ॥ यथा,
राजा-
वल्याम् २ परिच्छेदे ।
"आदित्यस्य तदा मन्त्री
अदूरान्वयसम्भवः ।
धुरन्धराभिधो धीरो बलबुद्धिनिकेतनः ॥
सेनापतीन् वशीचक्रे धनमानप्रदानतः ।
एकदा स तमादित्यमादित्यसमवर्च्चसम्
॥
एकान्ते नृपमासीनं हत्वा हतमतिस्तदा ।
तदासनं समारुह्य राज्यं प्राशाद्धुरन्धरः ॥
भूमिवेदमितान्वर्षान्भुक्त्वा भोगाननुत्तमान्
।
सेनोद्धतं सुतं राज्ये स्थापयित्वा लयं
गतः ॥"
राक्षसविशेषः । स तु प्रहस्तस्य
सचिवविशेषः ।
यथा, गोः रामायणे । ६ । ३२ । १५ ।
"एतस्मिन्नन्तरे शूराः प्रहस्तस्य वशानुगाः
।
धुरन्धरः कुम्भहनुर्महानादः समुन्नदः ।
एते प्रहस्तसचिवाः सर्व्वे जग्मुर्वनौकसः
॥")
आगच्छत् । त्वरितोऽथ तस्मै अपनह्य वामं
धुर्य्यमददत् अथ प्रायात् ॥")

**धुर्व**, ई हिंसे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) ह्रस्वी । धूः धुरौ धुरः । ई, धूर्णः
।
कितवे वाच्य धूर्त्तः । इति
मनीषादित्वान्निपात्यः ।
इति दुर्गादासः ॥

**धुवका**, स्त्री, (धवति पुनः पुनरुच्चारणेन गीतं
कम्पयतीवेति । धू कम्पने + "क्वुन् शिल्पि
संज्ञयो-
रपूर्ब्बस्यापि ।" उणां २ । ३२ । इति क्वुन् ।
ततष्टाप् ।) ध्रुवका । इत्युणादिकोषः ॥ धूया
इति भाषा ॥

**धुवनः**, पुं, (धवतीति । धू + "भूसूधूभ्रस्जिभ्य-
श्छन्दसि ।" उणां २ । ८० । इति क्युन् ।)
अग्निः । इति सिद्धान्तकौमुदी ॥ (यथा, शत-
पथब्राह्मणे । १३ । २ । ८ । ५ ।
"ये यज्ञे धुवनं तन्वते ॥")

**धुवित्रं**, क्ली, (धूयतेऽनेनेति । धू + इत्र ।) यज्ञा-
ग्निज्वालनार्थमृगचर्म्मरचितव्यजनम् । इत्य-
मरः । २ । ७ । २३ ॥

**धुस्तुरः**, पुं, धुस्तूरः । इत्यमरटीकायां भरतः ॥

**धुस्तूरः**, पुं, (धुनोति कम्पयति चित्तं सेवनेन ।

धु कम्पने + "खर्जिपिञ्जादिभ्य उरोलचौ ।"
उणां ४ । ९० । इति ऊरः । "धुनोतेः स्तुट्
च ।" इत्युज्ज्वलदत्तोक्त्या स्तुट् ।)
क्षुपविशेषः ।
धुतुरा । इति भाषा । तत्पर्य्यायः ।
उन्मत्तः २
कितवः ३ धूर्त्तः ४ कनकाह्वयः ५
मातुलः ६
मदनः ७ । इत्यमरः । २ । ४ । ७७ ॥ धत्तूरः
८ । इति हेमचन्द्रः ॥ शठः ९
मातुलकः १०
श्यामः ११ शिवशेखरः १२
खर्ज्जूघ्नः १३ काह-
लापुष्पः १४ खलः १५ कण्टफलः १६ मोहनः
१७ कृलभः १८ मत्तः १९ शैवः २० । इति
राजनिर्घण्टः ॥ देविका २१ तूरी २२ महा-
मोही २३ शिवप्रियः २४ धुस्तुरः २५ धुत्तुरः
२६ । इति शब्दरत्नावली ॥ अस्य गुणाः ॥
मदवर्णाग्निवातकारित्वम् ।
ज्वरकुष्ठयूकालिक्षा-
व्रणश्लेष्मकण्डूकृमिविषनाशित्वम् ।
कषायत्वम् ।
मधुरत्वम् । तिक्तत्वम् । उष्णत्वम् ।
गुरुत्वञ्च ।
इति भावप्रकाशः ॥ कटुत्वम् ।
कान्तिकारि-
त्वम् । त्वग्दोषखर्ज्जूभ्रमनाशित्वञ्च ।
इति राज-
निर्घण्टः ॥ मूर्च्छाकारित्वम् ।
वह्निपित्तनाशि-

**धूः**, [र्] स्त्री, (धुर्व्वतीति । धुर्व्व + क्विप् ।)

यानमुखम् । रथादेरग्रभागः । इत्यमरः । २ ।
८ । ५५ ॥ (यथा, महाभारते । १ । १३६ ।
२१ ।
"क्षणात् प्रांशुः क्षणाद्ध्रस्वः क्षणाच्च
रथधूर्गतः ॥")
भारः । (यथा, रघुः । १ । ३४ ।
"तेन धूर्जगतो गुर्व्वी सचिवेषु निचिक्षिपे ॥")
चिन्ता । इत्येकाक्षरकोषः ॥ (अग्रम् । यथा,
रघुः । २ । २ ।
"अपांशुलानां धुरि कीर्त्तनीया ॥"
हिंसके, त्रि । यथा, ऋग्वेदे । १० । ९४ । ७
।
"दशधुरो दशयुक्ता वहद्भ्यः ॥"
"दशभिर्धुरो धूर्भिर्हिंसितृभिः । तृतीयार्थे
प्रथमा ।" इति तद्भाष्ये सायनः ॥)

**धूकः**, पुं, (धूनोति कम्पयतीति । धू + "अजियु-

धूनीभ्यो दीर्घश्च ।" उणां ३ । ४७ । इति
कन् ।) वायुः । इत्युणादिकोषः ॥ धूर्त्तः ।
कालः ।
इति संक्षिप्तसारोणादिवृत्तिः ॥

**धूतः**, त्रि, (धू + क्तः ।) कम्पितः । (यथा, मेघ-

दूते । ३५ ।
"धूतोद्यानं कुवलयरजोगन्धिभिर्गन्धवत्या-
स्तोयक्रीडाविरतयुवतिस्नानतिक्तैर्मरुद्भिः
॥")
भर्त्सितः । इति मेदिनी । ते, २८ ॥ त्यक्तः ।
इत्यमरः । ३ । १ । १०७ ॥ तर्कितः । इति
धरणिः ॥

**धूनः**, त्रि, (धू + "ल्वादिभ्यः ।" ८ । २ । ४४ ।

इति निष्ठातस्य नः ।) कम्पितः । धूधातोः क्तः
ल्वादित्वात्तस्य नादेशः । इति संक्षिप्तसार-
व्याकरणम् ॥

**धूनकः**, पुं, (धूनयति संधुक्षयति अग्निमिति ।

परागस्याथवा धूमो निस्तापो यस्य जायते ॥
स धूप इति विज्ञेयो देवानां तुष्टिदायकः ।
राशीकृतैर्न चैकत्र तैर्द्रव्यैः परिधूपयेत् ॥
ओधाग्निवत्तथा कृत्वा न तत्फलमवाप्नुयात्
।
श्रीचन्दनञ्च सरलः सालः कालागुरुस्तथा ॥
उदयः सुरथः कन्दी रक्तविद्रुम एव च ।
पीतसालः परिमलो विमर्द्दीकासनस्तथा ॥
नमेरुर्द्देवदारुश्च विल्वसारोऽथ खादिरः ।
सन्तानः पारिजातश्च हरिचन्दनवल्लभौ ॥
वृक्षेषु धूपाः सर्व्वेषां प्रीतिदाः परिकीर्त्तिताः ।
अरालः सह सूत्रेण श्रीवासः पटवासकः ॥
कर्पूरः श्रीकरश्चैव परागः श्रीहरामलौ ।
सर्व्वौषधिरजोजातो वाराहश्चूर्ण उत्कलः ॥
जातीकोषस्व चूर्णञ्च गन्धः कस्तूरिका तथा
।
क्षोदे वृत्ते च गदिता धूपा एते उदाहृताः ॥
यक्षधूपो वृकधूपः श्रीपिष्टोऽगुरुझर्झरः ।
पत्रिवाहः पिण्डधूपः सुगोलः कण्ठ एव च ॥
अन्योन्ययोगनिर्य्यासा धूपा एते प्रकीर्त्तिताः
।
एतैर्विधूपयेद्देवान् धूमिभिः कृष्णवर्त्मना ॥
येषां धूपोद्भवैर्घ्राणैस्तुष्टिं गच्छन्ति जन्तवः ।
निर्य्यासश्च परागश्च काष्ठं गन्धं तथैव च ॥
कृत्रिमश्चेति पञ्चैते धूपाः प्रीतिकरा मताः ।
न यक्षधूमं वितरेत् माधवाय कदाचन ॥
न रक्तविद्रुमं मह्यं सुरथं स्कन्दिनं तथा ।
यक्षधूपः पत्रिवाहः पिण्डधूपः सुगोलकः ॥
कृष्णागुरुः सकर्पूरो महामायाप्रियः स्मृतः ।
यक्षधूपेन वा देवीं महामायां प्रपूजयेत् ॥
यक्षधूपेनेत्यत्र वृकधूपेनेति च पाठः ॥
मेदोमज्जासमायुक्तान् न धूपान् विनिवेदयेत्
।
परकीयांस्तथा घ्रातान्
स्तेनीकृत्याभिमर्द्दितान् ॥
पुष्पं धूपञ्च गन्धञ्च उपचारांस्तथापरान् ।
घ्रातान्निवेद्य देवेभ्यो नरो नरकमाप्नुयात् ॥
न भूमौ वितरेत् धूपं नासने न घटे तथा ।
यथा तथाधारगतं कृत्वा तद्विनिवेदयेत् ॥

त्वञ्च । इति राजवल्लभः ॥
(उपविषविशेषो-
ऽयम् । तद्यथा, --
“अर्कक्षीरं स्नुहीक्षीरं तथैव
कालहारिका ।
करवीरकधुस्तूरौ पञ्च चोपविषाणि
तत् ॥
अर्कक्षीरं स्नुहीक्षीरं
लाङ्गलीकरवीरकम् ।
गुञ्जाहिफेनधुस्तूरौ सप्तोपविषजातयः
॥”
इति वैद्यकभैषज्यधन्वन्तरिग्रन्थे
विषाधिकारे ॥)

**धू,** ञ कम्पे । इति कविकल्पद्रुमः ॥ (भ्वां-उभं-

सकं-वेट् ।) स चेहापि कम्पप्रेरणमेव ।
ञ,
धवति धवते । धवति
चन्दनमञ्जरीश्चेति हला-
युधः । इति दुर्गादासः ॥

**धू,** न ञ गि कम्पे । इति कविकल्पद्रुमः ॥

(स्वां-क्र्यां च-उभं-सकं-वेट् ।) स
चेहापि
कम्पप्रेरणम् । न ञ, धूनोति धूनुते ।
गि ञ,
धुनाति धुनीते । धूनः धूनिः । धूनोति
चम्पक-
वनानीति हलायुधः । धुनाति
वायुरश्वत्थम् ।
धुनीते बन्धूकं तिलकुसुमजन्मा हि
पवनः ।
इति दुर्गादासः ॥

**धू,** शि क कम्पे । इति कविकल्पद्रुमः ॥ (तुदां-

चुरां-च-सकं-सेट् ।) कम्प इह
ञ्यन्तस्य रूपम् ।
शि, धुवति मारुतो मालतीलताम् ।
अधुवीत् ।
क, धावयति । वायुर्विधूनयति
केशरपुष्परेणू-

धू + णिच् + ण्वुल् ।) वह्निवल्लभः । इति
त्रिकाण्ड-
शेषः ॥ धूना इति भाषा ॥

**धूननं** क्ली, (धू + णिच् + ल्युट् ।) कम्पनम् ।

काँपान । इति भाषा । इति
ञ्यन्तधूधातोरनटा
साध्यम् ॥ (यथा, राजतरङ्गिण्याम् । ६ ।
१२ ।
“कुर्व्वाणा भक्तिशीलश्रीनिषेधं मूर्धधूननैः
॥”)

**धूनिः**, स्त्री, कम्पनम् । धूधातोः क्तिस्थाने ल्वादि-

त्वान्निः । इति कविकल्पद्रुमटीकायां
दुर्गादासः ॥

**धूप**, तापे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-

सेट् ।) षष्ठस्वरी । धूपायति धूपायते । आय-
न्तत्वादुभयपदमिति वोपदेवः । अरे तु आय-
स्याप्राप्तिपक्षे परस्मैपदमेव । अधूपीत् दुधूप
इत्यादि । तापः सन्तप्तीकरणम् । इति दुर्गा-
दासः ॥

**धूप**, क दीप्तौ । इति कविकल्पद्रुमः ॥ (चुरां-परं-

अकं-सेट् ।) क, धूपयति । इति दुर्गादासः ॥

**धूपः**, पुं, (धूपयति स्वगन्धेन प्रीणयित्वादीप्यतीति ।

धूप + अच् ।)
गन्धद्रव्यविशेषोत्थधूमस्तद्वर्त्तिश्च ।
तत्पर्य्यायः । गन्धपिशाचिका २ । इति हेम-
चन्द्रः । ३ । ३१३ ॥ * ॥ यथा, --
“एवं वां कथितो दीपो धूपञ्च शृणुतं सुतौ ।
नासाक्षिरन्ध्रसुखदः सुगन्धोऽतिमनोहरः ॥
दह्यमानस्य काष्ठस्य प्रयतस्येतरस्य वा ।
रक्तविद्रुमशालौ च सुरथः सरलस्तथा ।
सन्तानको नमेरुश्च कालागुरुसमन्वितः ॥
जातीकोषाद्यसंयुक्तो धूपः कामेश्वरीप्रियः ।
त्रिपुरायास्तथैवायं मातृणामपि नित्यशः ॥
सर्व्वेषां पीठदेवानां कान्तादीनाञ्च पुत्रक ! ।
एष वां कथितो धूपः शृणु तं नेत्ररञ्जनम् ॥”
इति कालिकापुराणे ६८ अध्यायः ॥
अपि च ।
“पुष्पाणि च सुगन्धीनि धूपञ्च घृतसंयुतम् ।
गुग्गुलुं कुन्दुरुं चैव देवदारु तुरुष्ककम् ॥
सिह्लकं चन्दनं काष्ठं श्रीवासं चागुरुं तथा ।
सर्ज्जरसं नखं चैव दैवे पैत्रे च कर्म्मणि ॥”
इति वह्निपुराणे भोजनविधाननामाध्यायः ॥
* ॥
रोगनाशकधूपो यथा, --
“कूर्म्ममत्स्याखुमहिषगोशृगालाश्ववानराः ।
विडालबर्हिकाकाश्च वराहोलूककुक्कुटाः ॥
हंस एषाञ्च विण्मूत्रं मांसं वा रोम शोणितम्
धूपं दद्याज्ज्वरार्त्तस्य उन्मत्तेभ्यश्च शान्तये ॥

| | | |
|---|---|---|
| निति चुरादौ हलायुधः । प्रीघूञोर्नन्<br>वा इत्यत्र<br>धूञग्रहणादस्य कथं नन्निति चेन्न ।<br>स्वार्थविहि-<br>तस्य ञेर्ञकारेण सम्बन्धस्य<br>वाच्यत्वात् । अन्यथा<br>कम्पप्रेरणे धूनयति इत्यादिप्रयोगा न<br>स्युः ।<br>धूनोतीत्यादीनां साध्या इति चेत्<br>स्वभावात्<br>कम्पप्रेरणार्थाणां तेषां ञौ कृते<br>कम्पप्रेरणस्य<br>प्रेरणमेवार्थः स्यात् । किञ्च कम्पनायां<br>धूनय-<br>तीत्यादीनामावश्यकत्वात्तत्सूत्रे<br>ञकारः<br>प्राचीनमतानुवादार्थ एव । इति दुर्गा-<br>दासः ॥ | | |

एतान्यौषधजातानि धूपितानि महेश्वर ! ।
निघ्नन्ति रोगजातानि वृक्षमिन्द्राशनिर्यथा ॥”
इति गारुडे १९९ अध्यायः ॥
(यथा, --
“पुरध्यामवचासर्ज्जनिम्बार्कागुरुदारुभिः ।
सर्व्वज्वरहरो धूपः कार्य्योऽयमपराजितः ॥”
इति वैद्यकचक्रपाणिसंग्रहे ज्वराधिकारे ॥)
षडङ्गधूपो यथा, --
“गुग्गुल्वगुरुउशीरशर्करामधुचन्दनैः ।
धूपयेदाज्यसंमिश्रैर्नीचैर्देवस्य देशिकः ॥”
अन्यश्च ।
“सिताज्यमधुसंमिश्रं गुग्गुल्वगुरुचन्दनम् ।
षडङ्गधूपमेतत्तु सर्व्वदेवप्रियं सदा ॥”
दशाङ्गो यथा, --
“रोगरोगहरोरोगदक्रेशाः
सुरतरुजतुलघुपत्रविशेषाः ।
वक्रविवर्ज्जितवारिजमुद्रा
धूपवर्त्तिरिह सुन्दरि ! भद्रा ॥”
अन्यश्च ।
“मधु मुस्तं घृतं गन्धो गुग्गुलागुरुशैलजम् ।
सरलं सिह्लसिद्धार्थं दशाङ्गो धूप उच्यते ॥”
षोडशाङ्गो यथा, --
“गुल्गुलुं सरलं दारु पत्रं मलयसम्भवम् ।
ह्रीवेरमगुरुं कुष्ठं गुडं सर्ज्जरसं घनम् ॥
हरीतकीं नखीं लाक्षां जटामांसीञ्च शैलजम् ।
षोडशाङ्गं विदुर्धूपं दैवे पित्र्ये च कर्म्मणि ॥”
इति तन्त्रसारः ॥ * ॥
केशवार्च्चायां षोडशाङ्गधूपो यथा, --
“सुस्तकं गुग्गुलुः कुष्ठं कर्पूरं मलयोद्भवम् ।
देवदारु जटामांसी जातीकोषञ्च वालकम् ॥
सुरा मांसी ह्यगुरुकं त्वगुशीरञ्च केशरम् ।
एला तथा तेजपत्रं सर्व्वमेतद्धृताक्तकम् ॥
धूपोऽयं षोडशाङ्गः स्याद्गोविन्दप्रीतिकारकः
॥”
द्वादशाङ्गो यथा, --
“गुग्गुलुश्चन्दनं पत्रं कुष्ठञ्चागुरु कुङ्कुमम् ।
जातीकोषञ्च कर्पूरं जटामांसी च वालकम् ।
त्वगुशीरञ्च धूपोऽसौ द्वादशाङ्गः प्रकीर्त्तितः ॥”
दशाङ्गो यथा, --
कक्कोलमूषरं दार्व्वी गन्धमाद्री
रसाञ्जनम् ॥
अष्टवर्गः शटी मेथी
शिलाजिद्गन्धचन्दनम् ।
कुन्दुरु रेणुकं रास्नाजमोदा
शतपुष्पिका ॥
हरिद्रा जीरकं वृक्षक्षीरञ्च रक्तचन्दनम्
।
कर्च्चूरकं मरुवकं यवानी ग्रन्थिकन्तथा
॥
शैलजं धातकीपुष्पं नखी
मोचरसादिकम् ।
मुकुन्दधूपे देवर्षे !
सर्व्वमेतद्विवर्ज्जयेत् ॥”
इति पाद्मोत्तरस्वण्डम् ॥
धूपदानविधिर्यथा, --
“मध्यमानामिकाभ्यान्तु मध्यपर्व्वणि
देशिकः ।
अङ्गुष्ठाग्रेण देवेशि ! धृत्वा धूपं
निवेदयेत् ॥
धूपस्थानं समभ्यर्च्च्य तर्ज्जन्या
वामयास्पृशन् ।
धूपभाजनमन्त्रेण प्रोक्ष्याभ्यर्च्च्य
हृदाणुना
उत्तीर्य्य दृष्टिपर्य्यन्तं घण्टां वामदिशि
स्थिताम् ॥
वादयन् वामहस्तेन दक्षहस्तेन
चार्पयेत् ॥”
इति तन्त्रसारः ॥
गन्धमाल्यमदत्त्वा धूपदाने दोषो यथा,
--
“अदत्त्वा गन्धमाल्यानि यो मे धूपं
प्रयच्छति ।
कूणपो जायते भूमे यातुधानो न
संशयः ॥
वर्षाणि चैकविंशानि
अयस्कारनिवासकः ।
तिष्ठतेऽत्र महाभागे ! एवमेतन्न संशयः
॥”
इति वराहपुराणम् ॥ * ॥

**धूपायितः**, त्रि, (धूप्यते स्मेति । धूप सन्तापे +
“आयादय आधधातुके वा ।” ३ । १ ।
३१ ।
इति आयः । ततः क्तः ।) सन्तप्तः ।
अध्वा-
दिना श्रान्तः । इत्यमरभरतौ ॥
दत्तधूपगृहादि ।
यथा, तन्त्रप्रमोदे ।
“प्रदीपपरिदीपिते विविधधूपधूपायिते ॥”

**धूपार्हं**, क्ली, (धूपाय अर्ह्यते पूज्यते इति । अर्ह
पूजायाम् + घञ् ।) कृष्णागुरु । इति
राज-
निर्घण्टः ॥ धूपयोग्ये, त्रि ॥

**धूपितः**, त्रि, (धूप्यते स्मेति । धूप + क्तः ।) सन्ता-
पितः । (यथा, हरिभक्तिविलासे ।
“ततो गन्धपवित्रञ्च गृहीत्वा धूपितं बुधः ।
भगवन्तं नमस्कृत्य भक्त्या
संप्रार्थयेदिदम् ॥”)
अध्वादिना श्रान्तः । इत्यमरभरतौ ॥
दत्त-
धूपः । यथा, --
“यवादिना दोहदधूपितो द्रुमः ।”
इति वृक्षायुर्वेदः ॥

**धूमः**, पुं, (धूनोति धूयते वां । धू न कम्पे + “इषि-
युधीन्धीति ।” उणां १ । १४४ । इति
मक् ।)
आर्द्रेन्धनप्रभवः । धूँया इति भाषा । तत्-
पर्य्यायः । भम्भः २ मरुद्वाहः ३
खतमालः ४
शिखिध्वजः ५ अग्निवाहः ६ तरी ७ ।
इति
त्रिकाण्डशेषः ॥ (यथा, रघुः । ७ । २६ ।
“हविःशमीपल्लवलाजगन्धी
पुण्यः कृशानोरुदियाय धूमः ॥”)
अस्य गुणः । वातपित्तवृद्धिकारित्वम् ।
इति

"कर्पूरं कुष्ठमगुरु गुग्गुलुर्मलयोद्भवम् ।
केशरं वालकं पत्रं त्वग्जातीकोषमुत्तमम् ॥
सर्व्वमेतद्घृतयुतं दशाङ्गो धूप ईरितः ॥"
अष्टाङ्गो यथा, --
"गुग्गुल्वगुरुकं तेजपत्रं मलयसम्भवम् ।
कर्पूरं वालकं कुष्ठं नूतनं कुङ्कुमं तथा ॥
अष्टाङ्गः कथितो धूपो गोविन्दप्रीतिदः शुभः ॥"
पञ्चाङ्गो यथा, --
"चन्दनं कुङ्कुमं नूत्नं कर्पूरं गुग्गुलोऽगुरु ।
धूपोऽयं घृतसंयुक्तः पञ्चाङ्गः समुदाहृतः ॥"
मुकुन्दधूपे वर्ज्जनीयद्रव्यम् । यथा, --
"ऐक्षवं शालनिर्य्यासं पद्मकं सरलञ्च तु ।
वचा मधुरिका तैलं गन्धकाष्ठं कलम्बकम् ॥
गन्धकं टङ्कणं तालं हिङ्गुलञ्च मनःशिला ।
विषघ्नधूपो यथा, --
"सक्तुः सर्ज्जरसोपेतः सर्षपा
एलबालुकैः ।
सुवर्णा तस्करतरोः कुसुमैरर्ज्जुनस्य
तु ॥
धूपो वासगृहे हन्ति विषं
स्थावरजङ्गमम् ।
न तत्र कीटा न विषं न दर्दुरसरीसृपाः
॥
न कृत्या कर्म्मणस्तत्र धूपोऽयं यत्र
दह्यते ॥" * ॥
सर्पनिर्म्मोचनधूपो यथा, --
"कार्पासास्थिभुजङ्गस्य यथा
निर्म्मोचनं भवेत् ।
सर्पनिर्म्मोचनो धूपः प्रशस्तः सततं
गृहे ॥"
इति मत्स्यपुराणे १९२ अध्यायः ॥

**धूपनः**, पुं, (धूपयति संधुक्षयति वह्निमिति ।
धूप + ल्युः ।) शालवृक्षनिर्यासः ।
धूना इति
भाषा । तत्पर्य्यायः । शालवेष्टः २
सर्जरसः ३
वह्निवल्लभः ४ । इति शब्दमाला ॥
(यथा,
मनुः । ७ । २१९ ।
"परीक्षिताः स्त्रियश्चैनं
व्यजनोदकधूपनैः ।
वेषारम्भनसंशुद्धाः स्पृशेयुः
सुसमाहिताः ॥"
क्ली, धूप + ल्युट् । धूपादिना
सन्धुक्षणम् । यथा,
महाभारते । १३ । ९९ । ७ ।
"अग्निकार्य्याणि समिधः कुशाः
सुमनसस्तथा ।
बलयश्चान्नलाजाभिर्धूपनं दीपकर्म्म
च ॥")

**धूपवृक्षः**, पुं, (धूपोत्पादको वृक्षः ।) सरलवृक्षः ।
इति त्रिकाण्डशेषः ॥ (सरलशब्देऽस्य
विवरणं
ज्ञातव्यम् ॥)
राजवल्लभः ॥ स च मेघाञ्जनयोर्जनकः ॥
(यथा,
मेघदूते । ५ ।
"धूमज्योतिःसलिलमरुतांसन्निपातः
क्व सेघः ॥"
भीमादिवदुत्तरपदलोपे धूमकेतुः । यथा,
गर्गः ।
"उल्कापाते च त्रिदिनं धूमे पञ्चदिनानि च
॥"
उद्गारजवायुविशेषः । चौँया ढेँकुर इति
भाषा ॥ यथा, आह्निकतत्त्वधृतवचनम् ।
"धूमोद्गारे तथा वान्ते क्षुरकर्म्मणि मैथुने
॥"
चिकित्साविशेषः । यथा, --
"श्वेता ज्योतिष्मती चैव हरितालं
मनःशिला ।
गन्धाश्चागुरुपत्राद्या धूमो मूर्द्धविरेचनम् ॥
गौरवं शिरसः शूलं पीनसार्द्धावभेदकौ ।
कर्णाक्षिशूलं कासश्च हिक्काश्वासौ
गलग्रहः ॥
दन्तदौर्ब्बल्यमास्रावः
स्रोतोघ्राणाक्षिदोषजः ।
पूतिघ्राणास्यगन्धश्च दन्तशूलमरोचकः
॥
हनुमन्याग्रहः कण्डूः क्रिमयः पाण्डुता
मुखे ।
श्लेष्मप्रसेको वैस्वर्य्यं
गलशुण्ठ्युपजिह्विका ॥
खालित्यं पिञ्जरत्वञ्च केशानां पतनन्तथा
।
क्षवथुश्चातितन्द्रा च बुद्धेर्मोहोऽतिनिद्रता
॥
धूमपानात् प्रशाम्यन्ति बलं भवति
चाधिकम् ।
शिरोरुहकपालानामिन्द्रियाणांस्वरस्य च
॥"
"स्नात्वा भुक्त्वा समुल्लिख्य क्षुत्त्वा
दन्तान्
विघृष्य च ।
नावनाञ्जननिद्रान्ते चात्मवान् धूमपो
भवेत् ॥

| | | |
|---|---|---|
| | **धूपवृक्षकः**, पुं, (धूपवृक्ष + स्वार्थे कन् ।) सरल-<br>वृक्षः । इति शब्दरत्नावली ॥<br>**धूपागुरु**, क्ली, (धूपाय सन्धुक्षणाय यदगरु ।)<br>दाहागुरु । इति राजनिर्घण्टः ॥<br>**धूपाङ्गः**, पुं, (धूपसाधनमङ्गं यस्य ।) श्रीवेष्टः । इति<br>राजनिर्घण्टः ॥ | तथा वातकफात्मानो न<br>भवन्त्यूद्र्ध्वजत्रुजाः ।<br>रोगास्तस्य तु पेयाः<br>स्युरापानास्त्रिस्त्रयस्त्रयः ॥ |

परं द्विकालपायी स्यादह्नः कालेषु बुद्धिमान् ।
प्रयोगे स्नैहिके त्वेकं वैरेच्यं त्रिश्चतुःपिबेत् ॥
हृत्कण्ठेन्द्रियसंशुद्धिर्लघुत्वं शिरसः शमः ।
यथेरितानां दोषाणां सम्यक् पीतस्य लक्षणम् ॥
व्याधिर्यमान्द्यं मूकत्वं रक्तपित्तं शिरोभ्रमम् ।
अकाले चातिपीतश्च धूमः कुर्य्यादुपद्रवान् ॥”
“न विरिक्तः पिबेद्धूमं न कृते वस्तिकर्म्मणि ।
न रक्ती न विषेणार्त्तो न शोची न च गर्भिणी ॥
न श्रमे न मदे नामे न पित्ते न प्रजागरे ।
न मूर्च्छा भ्रमतृष्णासु न क्षीणे नापि च क्षते ॥
न मद्यदुग्धे पीत्वा च न स्नेहं नच माक्षिकम् ।
धूमं न भुक्त्वा दध्ना च न रुक्षः क्रुद्ध एव च ॥
न तालुशोषे तिमिरे शिरस्यभिहते न च ।
न शङ्खके न रोहिण्यां न मेहे न मदात्यये ॥
एषु धूममकालेषु मोहात् पिबति यो नरः ।
रोगास्तस्य प्रवर्द्धन्ते दारुणा धूमविभ्रमात् ॥”
इति चरके सूत्रस्थाने पञ्चमेऽध्याये ॥
“धूमः पञ्चविधो भवति तद्यथा, प्रायोगिकः
स्नेहनो वैरेचनः कासघ्नो वामनीयश्चेति ।
तत्रैलादिना कुष्ठतगरवर्गेण श्लक्ष्णपिष्टेन
द्वादशाङ्गुलं शरकाण्डं क्षौमेणाष्टाङ्गुलं वेष्ट-
यित्वा लेपयेदेषा वर्त्तिः प्रायोगिके । स्नेहफल-
सारमधूच्छिष्टसर्ज्जरसगुग्गुलुप्रभृतिभिः स्नेह-
मिश्रैः स्नेहने । शिरोविरेचनद्रव्यैर्वैरेचने । बृहती-
कण्टकारिकात्रिकटुकासमर्द्दहिङ्गिवङ्गुदीत्वङ्-
मनःशिलाच्छिन्नरुहार्कर्कटशृङ्गीप्रभृतिभिः कास-
हरैश्च कासघ्ने । स्नायुचर्म्मखुरशृङ्गकर्कट-
कास्थिशुष्कमत्स्यवल्लूरकृमिप्रभृतिभिर्वामनीयैश्च
वामनीये ॥”
“मुखेन तं पिबेत् पूर्ब्बं नासिकाभ्यां ततः पिबेत् ।
मुखपीतं मुखेनैव वमेत् पीतञ्च नासया ॥
मुखेन धूममादाय नासिकाभ्यां न निर्हरेत् ।
तेन हि प्रतिलोमेन दृष्टिस्तत्र विहन्यते ॥”
“अकालपीतः कुरुते भ्रममूर्च्छाशिरोरुजः ।
घ्राणश्रोत्राक्षिजिह्वानामुपघातञ्चदारुणम् ॥”
“तत्र स्नेहनो वातं शमयति स्नेहादुपलेपाच्च ।
वैरेचनः श्लेष्माणमुत्क्लेश्यापकर्षति रौक्ष्यात्तै-
क्ष्णादौष्ण्याद्वैषद्याच्च । प्रायोगिकः श्लेष्माण-
मुत्क्लेशयत्युत्क्लिष्टं चापकर्षति साधारणत्वात्
केतुग्रहः । इति मेदिनी । ने, २३८ ॥
(महा-
देवः । यथा, महाभारते । १३ । १७
। ८२ ।
“वृषणः शङ्करो नित्यं वर्च्चस्वी
धूमकेतनः ॥”)

**धूमकेतुः**, पुं, (धूमः केतुश्चिह्नं यस्य ।) अग्निः ।

(यथा, महाभारते । १ । १०३ । १७
।
“प्रभां समुत्सृजेदर्को
धूमकेतुस्तथोष्मताम् ॥”)
उत्पातविशेषः । स धूमाभा तारका ।
इत्यमर-
भरतौ ॥ (यथा, कुमारे । २ । ३२ ।
“भवल्लब्धवरोदीर्णस्तारकाक्षो
महासुरः ।
उपप्लवाय लोकानां
धूमकेतुरिवोत्थितः ॥”)
ग्रहभेदः । इति विश्वः ॥ * ॥
केतवश्च शिखा-
वन्ति ज्योतींषि
स्थिराण्युत्पातरूपाणि । तदु-
दये कालाशुद्धिर्यथा, --
“धूमकेतौ समुत्पन्ने ग्रहणे
चन्द्रसूर्य्ययोः ।
ग्रहाणां सङ्गरे चैव न
कुर्य्यान्मङ्गलक्रियाम् ॥
उल्कापाते च त्रिदिनं धूमे पञ्च
दिनानि च ।
वज्रपाते दिनञ्चैकं वर्ज्जयेत्
सर्व्वकर्म्मसु ॥”
इति गर्गवचनम् ॥
भोजराजः ।
“ग्रहे रवीन्दोर्द्धरणीप्रकम्पे
केतूद्गमोल्कापतनादिदोषे।
व्रते दशाहानि वदन्ति तज्ज्ञा-
स्त्रयोदशाहानि वदन्ति केचित् ॥”
स च न शुभकरः पापं करोतीत्यर्थः
इन्द्रधनुः-
सदृशो न शुभकर एव तथा
द्विशिखस्त्रि-
शिखश्च विशेषतः पापफलदः । तथा
च समय-
संहितायाम् ।
अचिरस्थितोऽतिवृष्टस्त्वस्तमितः
स्निग्धमूर्त्तिरुदगुदितः । ह्रस्वतनुः
प्रसन्नः केतु-
र्लोकस्याभावाय न शुभो विपरीतोः
विशेषतः
शक्रचापसङ्काशः । द्वित्रिचतुश्चूलो वा
दक्षिण-
संस्थश्च मृत्युकरः ।” इति
भट्टोत्पलकृतवराह-
संहिताटीका ॥ (अश्वविशेषः । यथा,
नकुल-
कृताश्ववैद्यके । ४ । २६ ।
“पुच्छदेशे यदावर्त्तो वाजिनः
संप्रदृश्यते ।
धूमकेतुरिति ख्यातः स त्याज्यो दूरतो
नृपैः ॥”
तथाच युक्तिकल्पतरौ ।
“पृष्ठवंशे यदावर्त्त एकः संपरिलक्ष्यते ।
धूमकेतुरिति ख्यातः स त्याज्यो दूरतो
नृपैः ॥”
महादेवः । यथा, महाभारते । १३ ।
१७ । १०३ ।
“धन्वन्तरिर्धूमकेतुस्कन्दो
वैश्रवणस्तथा ॥”)

**धूमगन्धिकं**, क्ली, (धूमस्येव गन्धो यस्य । समासे

इत् । ततः स्वार्थे कन् ।) रोहिषतृणम्
। इति
भावप्रकाशः ॥

**धूमजाङ्गजं**, क्ली, (धूमजस्य मेघस्य अङ्गम् धूम-

पूर्ब्बाभ्यामिति ॥”
“नरो धूमोपयोगाच्च प्रसन्नेन्द्रियवाङ्मनाः ।
दृढकेशद्विजश्मश्रुसुगन्धिविशदाननः ॥”
“प्रायोगिकं त्रींस्त्रीनुच्छ्वासानाददीत । मुख-
नासिकाभ्याञ्च पर्य्यायांस्त्रींश्चतुरो वेति ॥
स्नैहिकं यावदश्रुप्रवृत्तिः वैरेचनिकमादोषदर्श-
नात् । तिलतण्डुलयवागू पीतेन पातव्यो वाम-
नीयः ग्रासान्तरेषु कासघ्न इति ।” इति सुश्रुते
चिकित्सितस्थाने ४० अध्यायः ॥

**धूमकेतनः**, पुं, (धूमः केतनं ध्वजश्चिह्नं यस्य ।)

अग्निः । (यथा, रघुः । ११ । ८१ ।
“निष्प्रभश्च रिपुरास भूभृतां
धूमशेष इव धूमकेतनः ॥”)

वज्रकेतूद्गमोत्पाते ग्रहणे
चन्द्रसूर्य्ययोः ।
प्रयाणन्तु त्यजेत् क्षत्त्रः
सप्तरात्रमतःपरम् ॥
ब्राह्मणः क्षत्त्रियो वैश्यस्त्यजेत् कर्म्म
त्रिरात्रकम् ।
शूद्रस्त्यक्त्वा चैकरात्रं सर्व्वकर्म्म
समाचरेत् ॥”
इति मलमासतत्त्वम् ॥
अथ केतूनां संस्थानम् ।
“शतमेकाधिकमेके सहसमपरे
वदन्ति केतूनाम् ।
बहुरूपमेकमेव प्राह मुनिर्नारदः केतुम्
॥”
तथा च पराशरः । “शतमेकोत्तरं
केतूनां भवन्ति
तेषां षोडश मृत्युनिश्वासजाः ।
द्वादशादित्य-
सम्भवाः । दश दक्षमखविलयने
रुद्रक्रोधजाः ।
सप्त पैतामहाः । पञ्चदश वर्षे
वौद्दालिकस्य
पुत्त्राः । सप्तदश
मरीचिकश्यपललाटजाः ।
पञ्च च प्राजापतिसहजाः । त्रयो
विभाव-
सुजाः । धूमोद्भवश्चैकः । चतुर्द्दश
मथ्यमाने-
ऽमृते सोमेन सह सम्भूताः । एकस्तु
ब्रह्म-
कोपजः ॥” * ॥ गर्गादयः सहस्रं
वदन्ति । तथा
च गर्गः ।
“अमित्योदयचाराणामशुभानाञ्च
दर्शनम् ।
आगन्तॄणां सहस्रं स्याद्ग्रहाणां
संनिबोध मे ॥”
नारदाख्यो मुनिरेकमेव केतुं बहुरूपं
प्राह ।
यथा, --

जाड्यं वज्रं तस्माज्जायते इति । जन +
डः ।)
वज्रक्षारम् । इति राजनिर्घण्टः ॥

**धूमध्वजः**, पुं, (धूमः ध्वजश्चिह्नं यस्य ।) अग्निः
।

इति हेमचन्द्रः । ४ । १६३ ॥ (यथा,
सर्व्व-
दर्शनसंग्रहे चार्व्वाकदर्शने ।
“कथमत्यथा धूमोपलम्भानन्तरं
धूमध्वजे प्रेक्षा-
वतां प्रवृत्तिरुपपद्येत ॥”)

**धूमप्रभा**, स्त्री, (धूमस्य प्रभा इव प्रभा यस्याः ।)

धूमान्धकारनरकः । इति हेमचन्द्रः ।
५ । ३ ॥

**धूममहिषी**, स्त्री, (धूमस्य महिषीव ।) कुज्-

झटी । इति त्रिकाण्डशेषः ॥

**धूमयोनिः**, पुं, (धूम एव योनिरुत्पत्तिकारणं

यस्य ।) मेघः ।
(धूमविशेषोद्भवमेघफलं यथोक्तं
चिन्तामणिधृतवचने ।
“यज्ञधूमोद्भवं त्वभ्रं द्विजानाञ्च हितं
स्मृतम् ।
दावाग्निधूमसम्भूतमभ्रं वनहितं स्मृतम्
॥
मृतधूमोद्भवं त्वभ्रमशुभाय भविष्यति ।
अभिचाराग्निधूमोत्थं भूतनाशाय वै
द्विजाः ॥”)
सुस्तकः । इत्यमरः ॥

**धूमलः**, पुं, (धूमवद्वर्णं लातीति । ला + कः ।)

कृष्णलोहितवर्णः । (यथा, नैषधे । १९
। ५ ।
“अपि मधुकरी कालिंमन्या विराजति
धूमल-
च्छविरिव रवेर्लाक्षालक्ष्मीं
करैरतिपातुकैः ॥”)
तद्युक्ते, त्रि । इत्यमरः । १ । ५ । १६
॥

**धूमसंहतिः**, स्त्री, (धूमस्य संहतिः समूहः ।)

| | | |
|---|---|---|
| | "दिव्यान्तरीक्षभौमस्थएकः केतुः<br>प्रकीर्त्तितः ।<br>शुभाशुभफलं लोके<br>ददात्यस्तमयोदये ॥"<br>तत्र धूमकेतुलक्षणम् ।<br>"उक्तविपरीतरूपो न शुभकरो<br>धूमकेतुरुत्पन्नः ।<br>इन्द्रायुधानुकारी विशेषतो द्वित्रिचूलो<br>वा ॥"<br>"ह्रस्वतनुः प्रसन्न इत्यस्मादुक्तात् यो<br>विपरीतो<br>विशेषतः शक्रचापरूपकेतुरुत्पन्नः स<br>धूमकेतुः | धूमसमूहः । इति हलायुधः ॥<br><br>**धूमसी**, स्त्री, रोटिकाविशेषः । यथा, भावप्रकाशे ।<br><br>"मायानां दालयस्तोये<br>स्थापितास्त्यक्तकञ्चुका ।<br>आतपे शोषिताः पात्रे पिष्टास्ता धूमसी<br>स्मृता ॥<br>धूमसी रचिता सैव प्रोक्ता भुर्भुरिका<br>बुधैः ।<br>भुर्भुरी कफपित्तघ्नी किञ्चिद्वातकरी<br>स्मृता ॥" |

**धूमाभः**, पुं, (धूमस्य आभा इव आभा यस्य ।)
धूम्रवर्णः । इति शब्दमाला ॥ तद्वति, त्रि ॥

**धूमावती**, स्त्री, दशमहाविद्यान्तर्गतविद्याविशेषः ।
अस्या ध्यानं यथा, --
“विवर्णा चञ्चला दुष्टा दीर्घा च मलिनाम्बरा ।
विमुक्तकुन्तला रुक्षा विधवा विरलद्विजा ।
काकध्वजरथारूढा विलम्बितपयोधरा ॥
सूर्पहस्तातिरुक्षाक्षा धूतहस्तवरान्विता ।
प्रवृद्धघोणा तु भृशं कुटिला कुटिलेक्षणा ॥
क्षुत्पिपासार्द्दिता नित्यं भयदा कलहास्पदा ।
जपेत् कृष्णत्रतुर्द्दश्यां पुरश्चरणसिद्धये ॥”
इति तन्त्रसारः ॥
(अस्या मन्त्रो यथा, मन्त्रकोषे ।
“दान्तावर्घीशबिन्द्वन्तौ ततो धूमावताद्विठः ।
धूमावती मनुः प्रोक्तो वैरिनिग्रहकारकः ॥”
धूँ धूँ धूमावती स्वाहा ॥)

**धूमिका**, स्त्री, (धूम इव जलीयपदार्थोऽस्त्यस्या
इति । धूम + ठन् । स्त्रियां टाप् ।) कुज्-
झटिका । इति त्रिकाण्डशेषः ॥
(पक्षिविशेषः ।
फिङ्गा इति ख्याता । तद्यथा, --
“शशघ्नी भासकुररगृध्रोलूककुलिङ्गकाः ।
धूमिका मधुहा चेति प्रसहा मृगपक्षिणः ॥”
इति वाभटे सूत्रस्थाने षष्ठेऽध्याये ॥)

**धूमोत्थं**, क्ली, (धूमादुत्तिष्ठति परम्परासम्बन्धेनेति ।
धूम + स्था + कः ।
धूमयोनिमेघोत्पन्नवज्रजात-
त्वाद् परम्परासम्बन्धत्वम् ।) वज्रक्षारम् ।
इति
राजनिर्घण्टः ॥ (धूमोत्थिते, त्रि ॥)

**धूमोर्णा**, स्त्री, यमपत्नी । इति त्रिकाण्डशेषः ॥
(यथा, महाभारते । १३ । १६५ । ११ ।
“शक्रः शचीपतिर्द्देवो यमो धूमोर्णया सह ।

**धूम्रकः**, पुं, (धूभ्रवर्णेन कायतीति । कैः + कः ।)
उष्ट्रः । इति जटाधरः ॥

**धूम्रपत्रा**, स्त्री, (धूम्रं धूम्रवर्णं पत्रं यस्याः ।
अजादेराकृतिगणत्वात् टाप् ।)
क्षुपविशेषः ।
तत्पर्य्यायः । धूम्राह्वा २ सुलभा ३
स्वयम्भुवा ४
गृध्रपत्रा ५ गृध्राणी ६ कृमिघ्नी ७
श्रीमला-
पहा ८ । अस्या गुणाः । रसे तिक्तत्वम् ।
शोफकृमिकासनाशित्वम् । उष्णत्वम् ।
रुच्य-
त्वम् । अग्निदीपनकारित्वञ्च । इति राज-
निर्घण्टः ॥

**धूम्रमूलिका**, स्त्री, (धूम्रं मूलमस्याः । कप् । टापि
अत इत्वम् ।) शूलीतृणम् । इति
राजनिर्घण्टः ॥

**धूम्रलोचनः**, पुं, (धूम्रे लोचने यस्य) कपोतः ।
इति राजनिर्घण्टः ॥ शुम्भासुरसेनापतिः ।
यथा, मार्कण्डेयपुराणे । ८६ । ३ ।
“हे धूम्रलोचनाशु त्वं स्वसैन्यपरिवारितः ।
तामानय बलाद्दष्टां केशाकर्षणविह्वलाम् ॥”

**धूम्रवर्णः**, पुं, (धूम्रं वर्णमस्य ।) तुरुष्कः । इति
राजनिर्घण्टः ॥ (पर्व्वतविशेषः । यथा,
हरि-
वंशे । २२८ । ७३ ।
“देवावृत्पर्व्वतश्चैव तथा वै वालुको गिरिः ।
क्रौञ्चः सप्तर्षिशैलश्च धूम्रवर्णश्च पर्व्वतः ॥”)
कृष्णलोहितवर्णयुक्ते, त्रि ॥ (यथा, महा-
भारते । ३ । २८३ । २६ ।

**धूर्त्तः**, पुं, (धूर्व्वति हन्तीति । धूर्व्व + तन् ।) धुस्तूर-
वृक्षः । इति मेदिनी । ते, २८ ॥ चोरकः ।
इति राजनिर्घण्टः ॥ (खण्डलवणम् । इति
विश्वः । ते, २२ ॥)

**धूर्त्तः**, त्रि, (धूर्व्वति हिनस्तीति । धूर्व्व + “हसि-
मृग्रिण्वामिदमिलूपूधूर्व्विभ्यस्तन् ।” उणां ।
३ ।
८६ । इति तन् ।) द्यूतकृत् । वञ्चकः ।
शेषस्य
पर्य्यायः । मायी २ । इति हेमचन्द्रः । ३ ।
१४९ ॥ विटः ३ । इति मेदिनी । ते, २८ ॥
(यथा, महाभारते । ४ । ६ । १२ ।
“प्रिया हि धूर्त्ता मम देविनः सदा
भवांश्च देवोपम ! राज्यमर्हति ॥”
यथा च पञ्चतन्त्रे । ३ । ७३ ।
“नराणां नापितो धूर्त्तः पक्षिणां चैव वायसः ।
दंष्ट्रिणाञ्च शृगालश्च श्वेतभिक्षुस्तपस्विनाम् ॥”

**धूर्त्तकः**, पुं, (धूर्त्त + कन् स्वार्थे ।) शृगालः ।
इति शब्दरत्नावली ॥ धूर्त्तश्च ॥ (नागभेदः ।
यथा, महाभारते । १ । ५७ । १३ ।
“बाहुकः शृङ्गवेरश्च धूर्त्तकः प्रातरातकौ ।
कौरव्यकुलजास्त्वेते प्रविष्टा हव्यवाहनम् ॥”)

**धूर्त्तकृत्**, पुं, (धूर्व्व + भावे तन् । धूर्व्वनं हिंसनं
करोतीति । कृ + क्विप् । तुगागमश्च ।
धुस्तूरः ।
इति शब्दमाला ॥ वञ्चकंकारके, त्रि ॥

**धूर्त्तजन्तुः**, पुं, (धूर्त्तश्चासौ जन्तुश्चेति ।) मानुषः ।
इति शब्दचन्द्रिका ॥

**धूर्त्तमानुषा**, स्त्री, (धूर्त्तो हिंसितो मानुषोऽन-
येति ।) रास्ना । इति शब्दचन्द्रिका ॥

**धूर्द्धरः**, पुं, (धरतीति । धृ + अच् । धुरां धरः ।

वरुणः सह गौर्य्या च सहद्‌र्ध्या च धनेश्वरः ॥”)

**धूमोर्णापतिः**, पुं, (धूमोर्णायाः पतिः ।) यमः । इति हारावली । ५७ ॥

**धूम्या**, स्त्री, (धूमानां समूहः इति । धूम + पाशादित्वात् यः ।) धूमसमूहः । इत्यमरः । ३ । ३ । ४३ ॥

**धूम्याटः**, पुं, (धूम्या इव अटतीति । अट + अच् ।) पक्षिविशेषः । फिङ्गा इति भाषा । तत्पर्य्यायः । कलिङ्गः २ भृङ्गः २ । इत्यमरः । २ । ५ । १६ ॥

**धूम्रः**, पुं, (धूमं धूमवर्णं रातीति । रा + कः । पृषोदरादित्वात् साधुः ।) श्यामरक्तमिश्रित- वर्णः । तत्पर्य्यायः । धूमलः २ कृष्णलोहितः ३ । तद्वति, त्रि । इत्यमरः । १ । ५ । १६ ॥ (यथा, रघौ । १५ । १६ । “धमधम्रो वसागन्धो ज्वालावभ्रुशिरोरुहः । क्रव्याद्‌गणपरीवारश्चिताग्निरिवजङ्गमः ॥”) तुरुस्कः । इति राजनिर्घण्टः ॥ (असुरविशेषः । यथा हरिवंशे । २३२ । ८ । “समुद्रो रभसश्चण्डो धूम्रश्चैव महासुरः ॥” स्कन्दस्य सैनिकविशेषः । यथा, महाभारते । ९ । ४५ । ६२ । “शृणु नामानि वाप्येषां येऽम्ये स्कन्दस्य सैनिकाः ।” “धूम्नः श्वेतकलिङ्गश्च सिद्धार्थो वरदस्तथा ॥”)

“ऋक्षाणां धूम्रवर्णानां तिस्रः कोट्यो व्यव- स्थिताः ॥”)

**धूम्रवर्णा**, स्त्री, (धूम्रं वर्णमस्याः टाप् ।) अग्नेः सप्तजिह्वान्तर्गतजिह्वाविशेषः । इति जटाधरः ॥ (यदुक्तं मुण्डकोपनिषदि । २ । ४ । “काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरूपी च देवी लेलायमाना इति सप्त जिह्वाः ॥”)

**धूम्रा**, स्त्री, (धूम्र + टाप् ।) शशाण्डुली । इति राजनिर्घण्टः ॥ (धरनामवसोर्माता यथा, महाभारते । १ । ६६ । १९ । “धूम्रायास्तु धरः पुत्त्रो ब्रह्मविद्यो ध्रुवस्तथा ॥”)

**धूम्रिका**, स्त्री, शिंशपावृक्षः । इति राजनिर्घण्टः ॥

**धूर**, ई ङ य वधे । गतौ । इति कविकल्पद्रुमः ॥ (दिवां-आत्मं-सकं-सेट् ।) दीर्घी । ई, धूर्णः । ङ य, धूर्य्यते । इति दुर्गादासः ॥

**धूर्जटिः**, पुं, (धूर् भारभूता जटिर्यस्य । यद्वा, जट संधाते + इन् । धूर्गङ्गा जटिष्वस्येति । धुर- स्त्रैलोक्यचिन्ताया जटिः संघातो यत्र वा ।) शिवः । इत्यमरः । १ । १ । ३५ ॥ (यथा, भाग- वते । ४ । ५ । २ । “क्रुद्धः सुदष्टौष्ठपुटः स धूर्जटि- र्जटां तडिद्वह्निसटोग्ररोचिषम् ॥”)

**धूर्त्तं**, क्ली, (धूर्व्वतीति । धूर्व्व + “हसिमृग्रिति ।” उणां ३ । ८६ । इति तन् ।) विड्‌लवणम् । इति राजनिर्घण्टः ॥ लौहकिट्टम् । इति हेम- चन्द्रः । ३ । ४० ॥

पृषोदरादित्वात् दीर्घः ।) धुरन्धरः । इत्यमर- टीकायां रमानाथः ॥

**धूर्व्वहः**, त्रि, (वहतीति । वह् + अच् । धुरां वहः । पृषोदरादित्वात् दीर्घः ।) धुरन्धरः । इत्यमरः । २ । ९ । ६५ ॥

**धूर्व्वी**, स्त्री, (धुरं अजतीति । अज + क्विप् । ततः अजो वीभावः ।) रथाग्रभागः । तत्पर्य्यायः । यानमुखम् २ वधूः ३ । इति हेमचन्द्रः । ३ । ४२१ ॥

**धूलकं**, क्ली, (धू + बाहुलकात् लकः ।) विषम् । इति शब्दचन्द्रिका ॥

**धूलिः**, स्त्री, (धुवति धूयते वेति । धू + बाहुल- कात् लिः ।) पार्थिवचूर्णम् । धूला इति भाषा ॥ (यथा, भागवते । ३ । १४ । २४ । “श्मशानचक्रानिलधूलिधूम्र- विकीर्णविद्योतजटाकलापः । भस्मावगुण्ठामलरुक्मदेहो देवस्त्रिभिः पश्यति देवरस्ते ॥”) तत्पर्य्यायः । रेणुः २ पांशुः ३ रजः ४ । इत्य- मरः । २ । ८ । ९८ ॥ धूली ५ पांसुः ६ । इति भरतः ॥ क्षितिकणः ७ क्षौद्रः ८ चूर्णम् ९ तूस्तम् १० महीद्रवः ११ वातकेतुः १२ नभः- केतुः १३ कणा १४ क्षितिकणा १५ । इति शब्दरत्नाबली ॥ * ॥

दीपखड्गातनुच्छायाछिन्नकेशनखादिकम् ।
अजमार्जाररेणुश्च हन्ति पुण्यं पुराकृतम् ॥”
इति कर्म्मलोचनः ॥
“अजरजः स्वररजस्तथा सम्मार्ज्जनीरजः ।
स्त्रियः पादरजो राजन् ! शक्रादपि हरेत् श्रियम् ॥”
इति लक्ष्मीचरित्रम् ॥

**धूलिका**, स्त्री, (धूलिरिव प्रतिकृतिः । “इवे प्रति-
कृतौ ।” ५ । ३ । ९६ । इति कन् । टाप् ।) कुज्-
झटिका । इति शब्दरत्नावली ॥ (नीहारः ।
यथा, नीहारे बाणशब्दे चेति इत्यत्र नीहारे
धूलिकायामिति मनुटीकायां कुल्लुकभट्टः ॥)

**धूलिकेदारः**, पुं, (धूलिप्रधानः केदारः । इति
मध्यलोपिसमासः ।) वप्रः । क्षेत्रम् । इति
त्रिकाण्डशेषः ॥

**धूलिगुच्छकः**, पुं, (धूलीनां गुच्छक इव । इवार्थे
कन् ।) पटवासकः । फल्गुचूर्णम् । इति
त्रिकाण्डशेषः ॥

**धूलिध्वजः**, पुं, (धूलिरेव ध्वजो यस्य ।) पवनः ।
इति त्रिकाण्डशेषः ॥

**धूलिपुष्पिका**, स्त्री, (धूलिः परागस्तत्प्रचुरं पुष्पं
यस्याः । कापि अत इत्वम् ।) केतकी । इति
राजनिर्घण्टः ॥

**धूलीकदम्बः**, पुं, (धूलीनां कदम्बमत्र ।) नीपः ।
तिनिशः । वरुणवृक्षः । इति मेदिनी । बे,
१७ ॥ (धूलिसमूहे, क्ली ॥)

**धूलीकदम्बकः**, पुं, (धूलीकन्दम्ब + स्वार्थे कन् ।)
नीपः । इति जटाधरः ॥

**धूलीपटलः**, पुं, (धूलीनां पटलं यत्र ।) उड्डीय-
मानधूलीसमूहः । यथा, धूलीपटले धूमत्व-
भ्रमे तत्रासता धूमत्वेन । इत्यादि सामान्यलक्ष-
नायां शिरोमणिः ॥ (धूलीसमूहे, क्ली ॥)

**धूश**, क कान्तिकृतौ । इति कविकल्पद्रुमः ॥ (चुरां-
धूसरवस्तूनि यथा । धूलिः १ लूता
२ करभः ३
गृहगोधिका ४ कपोतः ५ धूषिकः ६
रङ्गम् ७
काककण्ठः ८ खरादिः ९ । इति
कविकल्प-
लता ॥

**धूसरच्छदा**, स्त्री, (धूसर ईषत् पाण्डुवर्णश्छदो
यस्याः ।) श्वेतवुह्नग्ना । इति
रत्नमाला ॥

**धूसरपत्रिका**, स्त्री, (धूसरं पत्रमस्याः । ङीप् ।
स्वार्थे कन् । टापि पूर्ब्बह्रस्वः ।)
हस्तिशुण्डी-
क्षुपः । इति राजनिर्घण्टः ॥

**धूसरा**, स्त्री, (धूसर + टाप् ।)
पाण्डुरफलीक्षुपः ।
इति राजनिर्घण्टः ॥

**धूसरी**, स्त्री, (धूसर + ङीप् ।) किन्नरीभेदः ।
इति मेदिनी । रे, १७० ॥

**धूस्तूरः**, पुं, (धूस् कान्तिकरणे + भावे क्विप् ।
त
तूर्य्यते हिनस्तीति । तूर हिंसे +
“इगुपधज्ञेति ।”
३ । १ । ३५ । इति कः ।)
धूस्तूरवृक्षः ।
इत्यमरटीकायां भरतः ॥

**धृ**, क घृत्याम् । इति कविकल्पद्रुमः ॥ (चुरां-
परं-
सकं-अनिट् ।) क, धारयति । इति
दुर्गा-
दासः ॥

**धृ**, ङ अवध्वंसे । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-अकं-अनिट् ।) अवध्वंसः
पतनम् । ङ,
धरते पत्रं वृक्षात् । गोविन्दभट्टस्तु
अविध्वंसने
“द्रुह्योश्च तनयो वभ्रुः
सेतुस्तस्यात्मजस्ततः ।
आरब्धस्तस्य गान्धारस्तस्य
धर्म्मस्ततो धृतः ॥”)

**धृतराष्ट्रः**, पुं, (धृतं राष्ट्रं येन ।) दुर्य्योधनपिता ।
स जन्मान्धः शान्तनुपुत्त्रः
विचित्रवीर्य्यक्षेत्रे
व्यासाज्जातः । इति महाभारते । १ ।
९५ । ५५ ॥
(अयं हि गन्धर्व्वपतेर्हंसस्य अंशावतारः
।
यथा, महाभारते । १ । ६७ । ८४ ।
“अरिष्टायास्तु यः पुत्त्रो हंस
इत्यभिविश्रुतः ।
स गन्धर्व्वपतिर्जज्ञे कुरुवंशविवर्द्धनः
॥”)
सुराजा । नागभेदः । इति मेदिनी । रे,
२७१ ॥
(यथा, महाभारते । २ । ९ । ९ ।
“कम्बलाश्वतरौ नागौ धृतराष्ट्रबलाहकौ
॥”)
पक्षिभेदः । इति विश्वहेमचन्द्रौ ॥
(गन्धर्व्व-
विशेषः । यथा, विष्णुपुराणे । २ । १० ।
१५ ।
“ब्रह्मापेतोऽथ ऋतजित् धृतराष्ट्रोऽथ
सप्तमः ॥”
बलिराजस्य पुत्त्रविशेषः । यथा, हरिवंशे
। ३ ।
७४ ।
“बलेः पुत्त्रशतञ्चासीद्बाणज्येष्ठं
नराधिप ! ।
धृतराष्ट्रश्च सूर्य्यश्च
चन्द्रमाश्चेन्द्रतापनः ॥”
जनमेजयस्य ज्येष्ठपुत्त्रः । यथा,
महाभारते ।
१ । ९४ । ५४ ।
“जनमेजयस्य तनया भुवि ख्याता
महाबलाः ।

परं-सकं-सेट ।) षष्ठस्वरी । कान्तिकृतिः शोभितकरणम् । चन्दनो धूशयत्यङ्गम् । इति दुर्गादासः ॥

**धूष**, क धूशे । इति कविकल्पद्रुमः ॥ (चुरां-परं-सकं-सेट् ।) षष्ठस्वरी । धूशः कान्तिकृतिः । चन्दनो धूषयत्यङ्गम् । इति दुर्गादासः ॥

**धूस**, क धूशे । इति कविकल्पद्रुमः ॥ (चुरां-परं-सकं-सेट् ।) षष्ठस्वरी । धूशः कान्तिकृतिः । क, धूसयत्यङ्गं चन्दनः । महिषधूसरितः सरित-स्तटमिति जानकीहरणयमकाद्दन्त्यान्तएवाय-मिति रमानाथः । स्वमते तालव्यमूर्द्धन्यान्तो-ऽप्ययम् । इति दुर्गादासः ॥

**धूसरः**, पुं, (धुनातीति । धू + “कृधूमदिभ्यः कित् ।” उणां ३ । ७३ । इति सरन् । स च कित् ।) ईषत्पाण्डुवर्णः । तद्वति, त्रि । इत्यमरः । १ । ५ । १३ ॥ (यथा, रघौ । ११ । ६० ।
“श्येनपक्षिपरिधूसरालकाः
सान्ध्यमेघरुधिरार्द्रवाससः ॥”)
उष्टः । गर्द्दभः । कपोतः । इति राजनिर्घण्टः ॥ तेलकारः । इति हेमचन्द्रः । ६ । २९ ॥ * ॥ इति पठित्वा विध्वंसनं ध्वंसनं तस्याभावोऽवि-ध्वंसनं स्थापनमिति व्याख्याति । इति दुर्गा-दासः ॥

**धृ**, ङ श स्थितौ । धृतौ । इति कविकल्पद्रुमः ॥ (तुदां-आत्मं-स्थितौ अकं-धृतौ सकं-अनिट् ।) ङ श, ध्रियते । इति दुर्गादासः ॥

**धृ**, ञ धृत्याम् । इति कविकल्पद्रुमः ॥ (भ्वां-उभं-सकं-अनिट् ।) ञ, धरति धरते । इति दुर्गादासः ॥

**धृज**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) धर्ज्जति । इति दुर्गादासः ॥

**धृज**, इ गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् । इदित् ।) सप्तमस्वरी । इ, धृञ्ज्यते । इति दुर्गादासः ॥

**धृतः**, त्रि, धृधातोः कर्म्मणि कर्त्तरि च क्तप्रत्ययेन निष्पन्नः ॥ धारणविशिष्टः । धरा इति भाषा । (यथा, महाभारते । १ । ७४ । १०३ ।
“अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥”)
अवध्वस्तः । पतित इति यावत् । स्थितः । (स्थिरीकृतः । निश्चितः । यथा, महाभारते । ७ । १६ । २८ ।
“धृतां धनञ्जयवधे प्रतिज्ञाञ्चापि चक्रिरे ॥”
धृतराष्ट्रः प्रथमजः पाण्डुर्व्वाह्लीक एव च ॥”)

**धृतराष्ट्री**, स्त्री, (धृतराष्ट्रस्य पत्नी । ङीष् ।) हंस-पत्नी । इति मेदिनी । रे, २७२ ॥ (यथा, महा-भारते । १ । ६६ । ५७, ५९ ।
“काकीं श्येनीं तथा भासीं धृतराष्ट्रीं तथा श्रुकीम् ।
ताम्रा तु सुषुवे देवी पञ्चैता लोकविश्रुताः ॥”
“धृतराष्ट्री तु हंसांश्च कलहंसाश्च सर्व्वशः ।
चक्रवाकांश्च भद्रं ते जनयामास सैव तु ॥”
हंसपदीलता । इति हेमचन्द्रः ॥)

**धृतिः**, पुं, (ध्रियते इति । धृ + क्तिन् । अभिधा-नात् पुंस्त्वम् ।) इष्टिः । इति मेदिनी । ते, २९ ॥ (विश्वेदेवविशेषः । यथा, महाभारते । १३ । ९१ । ३० ।
“वलं धृतिर्व्विपाप्मा च पुण्यकृत् पावनस्तथा ॥”
चन्द्रवंशीयनृपविशेषस्य विजयस्य पुत्त्रः । यथा, हरिवंशे । ३१ । ५५ ।
“विजयस्य धृतिः पुत्त्रस्तस्य पुत्त्रो धृतव्रतः ॥”
निमिवंशीयानामेकतमः । यथा, भागवते । ९ । १३ । २६ ।
“शुनकस्तत्सुतो जज्ञे वीतहव्यो धृतिस्ततः ॥”
यदुवंशीयवभ्रोः पुत्त्रः । इति विष्णुपुराणे । ४ । १२ । १५ । “रोमपादाद्वभ्रुः वभ्रोः पुत्त्रो धृतिः ॥”)

**धृतिः**, स्त्री, (धृ + क्तिन् ।) तुष्टिः । (यथा, मनुः ।

| | | |
|---|---|---|
| | पुं, त्रयोदशमनो रौच्यस्य पुत्त्रविशेषः । यथा,<br>हरिवंशे । ७ । ८२ ।<br>"चित्रसेनो विचित्रश्च नयो घर्म्मभृतो धृतः ।<br>सुनेत्रः क्षत्त्रवृद्धिश्च सुतपा निर्भयो दृढः ।<br>रौच्यस्यैते मनोः पुत्त्रा अन्तरे तु त्रयोदशे ॥"<br>द्रुह्युवंशीयधर्म्मस्य पुत्त्रः । यथा,<br>भागवते ।<br>९ । २३ । १४ । | ६ । ९२ ।<br>"धृतिः क्षमा दमोऽस्तेयं<br>शौचमिन्द्रियनिग्रहः ।<br>धीर्व्विद्या सत्यमक्रोधो दशकं<br>धर्म्मलक्षणम् ॥")<br>योगभेदः । धैर्य्यम् । (यथा,<br>वाजसनेयसंहिता-<br>याम् । ३४ । ३ । |

"यत्प्रज्ञानमुत चेतो धृतिश्च
यज्ज्योतिरन्तरमृतं
प्रजासु ॥")
धारणम् । इति मेदिनी । ते, २९ ॥ सुखम् ।
इति हेमचन्द्रः । २ । २२२ ॥ (क्रतुः । यथा,
कात्यायनश्रौतसूत्रे । २० । २ । ८ ।
"राजन्यो धृतिषु युद्धजपयुक्ताः ॥")
षोडशमातृकान्तर्गतत्रयोदशमातृका । इति
भवदेवः ॥ अष्टादशाक्षरावृत्तिच्छन्दोमात्रम् ।
इति छन्दोमञ्जरी ॥ * ॥ धृतियोगजातफलं
यथा, --
"धृतियोगसमुत्पन्नः प्राज्ञः संहृष्टमानसः ।
वावदूकः सभायाञ्च सुशीलो विनयान्वितः
॥"
इति कोष्ठीप्रदीपः ॥
धारणा । सा त्रिधा । यथा, --
"धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ
सात्त्विकी ॥
यया तु धर्म्मकामार्थान् धृत्या
धारयतेऽर्ज्जुन ! ।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ ! राजसी
॥
यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्म्मेधा धृतिः सा तामसी मता
॥"
इति श्रीभगवद्गीतायाम् । १८ । ३३-३५ ॥

**धृत्वरी**, स्त्री, (धृत्वन् + "वनो रच ।" ४ । १ । ७७ ।
इति ङीप् रश्चान्तादेशः ।) भूमिः । इति
संक्षिप्तसारोणादिवृत्तिः ॥

**धृत्वा**, [न्] पुं, (धरतीति । धृ + "शीङ्क्रुशि-
रुहिजिक्षीति ।" उणां ४ । ११३ । इति
क्वनिप् ।)
धर्म्मः । विप्रः । समुद्रः । अन्तरीक्षम् ।
मेधावी ।
विष्णुः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**धृष**, आ कि अमर्षे । क्रोध इति यावत् । इति
"जनस्य गोप्तासि विकत्थमानो
न शोभसे वृद्धसभासु धृष्टः ॥")
निर्लज्जः । तत्पर्य्यायः । धृष्णक् २
वियातः ३ ।
इत्यमरः । ३ । १ । २५ ॥ धृष्णुः ४
दधृक् ५ ।
इति त्रिकाण्डशेषः । धर्षितः ६ । इति
शब्द-
रत्नावली ॥
चतुर्विधपत्यन्तर्गतपतिविशेषे, पुं ।
तस्य लक्षणं यथा, "भूयो निःशङ्कः
कृतदोषो-
ऽपि भूयो निवारितोऽपि भूयः
प्रश्रयपरायणः ।"
इति रसमञ्जरी ॥ (चेदिवंशीयकुन्तेः पुत्त्रः
।
यथा, हरिवंशे । ३६ । २४ ।
"कुन्तेर्धृष्टः सुतो जज्ञे रणधृष्टः प्रतापवान्
॥"
सप्तममनोः पुत्त्रविशेषः । यथा, भागवते ।
८ ।
१३ । २ ।
"मनुर्व्विवस्वतः पुत्त्रः श्राद्धदेव इति श्रुतः
।
सप्तमो वर्त्तमानो यस्तदपत्यानि मे शृणु ॥
इक्ष्वाकुर्नभगश्चैव धृष्टः शर्य्यातिरेव च ॥"
धृष्णुरिति कुत्रापि दृश्यते ॥)

**धृष्टा**, स्त्री, (धृष्यते स्मेति । धृष् शक्तिबन्धे + क्तः ।
टाप् ।) असती । इति शब्दरत्नावली ॥

**धृष्णक्**, [ज्] त्रि, (धृष्णोतीति । धृष प्रागल्भ्ये
+ "स्वपितृषोर्नजिङ् ।" ३ । २ । १७२ ।
इत्यत्र
"धृषेश्च ।" इति काशिकोक्तेर्नं जिङ् ।)
निर्लज्जः ।
इत्यमरः । ३ । १ । २५ ॥

**धृष्णिः**, पुं, (धर्षति अभिभवति अन्धकारमिति ।

**धेनः**, पुं, (धीयते इति धयत्यस्मादिति वा । धेट
पाने + "धेट इच्च ।" उणां ३ । ११ ।
इति न
इश्चान्तादेशः ।) समुद्रः । इति हेमचन्द्रः
॥
नदः । इति मेदिनी ॥

**धेना**, स्त्री, (धेन + टाप् । "टित्त्वेऽपि खच्येव ङीप्
।
इति हरदत्तोक्तेर्न ङीप् ।" इति केचित् ।)
नदी । (दधातेर्लटः शानचि व्यत्य येन
एत्वा-
भ्यासलोपौ दधाना स्वमभिधेयं
वर्षप्रदानेन
लौकिकाय वा । यद्वा, धेट पाने 'धेट
इच्च' इति
नप्रत्ययः इकाराश्चान्तादेशः गुणः ।
धयन्ति
तामिति धेना । पानमत्र स्वीकारः ।
यद्वा,
आस्वादः । धीयते पीयते आस्वाद्यते
वानेन
धयन्ति प्राणमिति धेना ।" इति
देवराजयज्वा ।
१ । ११ । ३९ ।) भारतीभेदः । इति
हेमचन्द्रः ॥
(यथा, ऋग्वेदे । ३ । १ । ९ ।
"व्यस्य धारा असृजद्वि धेनाः ।"
"धेना माध्यमिका वाचश्च विसृजति ।"
इति
तद्भाष्ये सायनः ॥)

**धेनिका**, स्त्री, (धेनो नदः । लक्षणया जलसमीप-
स्थानम् । स
उत्पत्तिस्थानत्वेनास्त्यस्या इति ।
धेन + ठन् । टाप् ।) धन्याकम् । इति
भाव-
प्रकाशः ॥

**धेनुः**, स्त्री, (धयति लेढि सुतान् धीयते वत्सैरिति

कविकल्पद्रुमः ॥ (चुरां-पक्षे भ्वां-परं-सकं-सेट् ।)
आ, धर्षितं धृष्टं तेन । कि, धर्षयति धर्षति । अमर्ष इह अभिभवः । इति भट्टमल्लः । न धर्षति निजाः प्रजाः । तमेव धर्षयत्येकं यस्तासु
प्रतिकूलतीति हलायुधः । इति दुर्गादासः ॥

**धृष**, उ संहतौ । हिंसे । इति कविकल्पद्रुमः ॥

(भ्वां-परं-संहतौ अकं-हिंसे सकं-सेट् । उदित्वात् क्त्रावेट् ।) उ, धर्षित्वा धृष्ट्वा । संहतिः ।
समूहः । इति दुर्गादासः ॥

**धृष**, क ङ शक्तिबन्धे । इति कविकल्पद्रुमः ॥

(चुरां-आत्मं-सकं-सेट् ।) शक्तेर्ब्बन्धनं शक्तिबन्धः । क ङ, धर्षयते वह्निं पयः । इति दुर्गादासः ॥

**धृष**, ञि आ न प्रागल्भ्ये । इति कविकल्पद्रुमः ॥

(स्वां-परं-अकं-सेट् ।) ञि, धृष्टोऽस्ति । आ, धर्षितं धृष्टं तेन । न, धृष्णोति गुरोरग्रे यः । इति हलायुधः । इति दुर्गादासः ॥

**धृषुः**, पुं, (धृष्णोतीति । धृष् + "पॄभिदिव्यधीति ।"

उणां १ । २४ । इति कुः ।) दक्षः । इत्युणादि-
कोषः ॥ संघातः । प्रगल्भः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**धृष्टः**, त्रि, (धृष + क्तः ।) प्रगल्भः । इति मुग्धबोधव्याकरणम् ॥ (यथा, भागवते । ५ । १२ । ७ ।
धृष् अमर्षे + बाहुलकात् निः । स च कित् ।)
किरणः । इत्यमरः । १ । ४ । ३३ ॥

**धृष्णुः**, त्रि, (धृष्णोतीति । धृष् + "त्रसिगृधिधृषिक्षिपेः क्नुः ।" ३ । २ । १४० । इति क्नुः ।) धृष्टः ।
इति त्रिकाण्डशेषः ॥ (यथा, ऋग्वेदे । ६ । २५ । ५ ।
"न हि त्वा शूरो न तुरो न धृष्णु-
र्न त्वा योधो मन्यमानो युयोध ॥")
पुं, कञ्चिका । इति शब्दचन्द्रिका ॥ (वैवस्वत-
मनुपुत्त्रः । यथा, हरिवंशे । १० । १ ।
"मनोर्वैवस्वतस्यासन् पुत्त्रा वै नव तत्समाः ।
इक्ष्वाकुश्चैव नाभागो धृष्णुः शर्य्यातिरेव च ॥"
सावर्णस्य मनोः पुत्त्रविशेषः । यथा, तत्रैव । ७ । ६० ।
"वरिष्णुराय्यों धृष्णुश्च राजः सुमतिरेव च ।
सावर्णस्य मनोः पुत्त्रा भविष्या दश भारत ! ॥"
चन्द्रवंशोद्भवकुकुरराजस्य सुतः । यथा, तत्रैव
३७ । १८ ।
"कुकुरस्य सुतो धृष्णुर्धृष्णोस्तु तनयस्तथा ।
कपोतरोमा तस्याथ तैत्तिरिस्तनयोऽभवत् ॥"
कवेः पुत्त्रविशेषः । यथा, महाभारते । १३ ।
८५ । १३३ ।
"कविः काव्यश्च धृष्णुश्च बुद्धिमानुशनास्तथा ।
भृगुश्च विरजाश्चैव काशी चोग्रश्च धर्म्मवित् ॥
अष्टौ कविसुता ह्येते सर्व्वमेभिर्जगत्ततम् ॥")

**धे**, ट पाने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-
वा । धेट पाने + "धेट इच्च ।" उणां ३ । ३४ ।
इति नुः इश्चान्तादेशः ।) नवप्रसूता गौः । तत्-
पर्य्यायः । नवसूतिका २ । इत्यमरः । २ । ९ ।
७१ ॥ नवप्रसूतिका ३ । इति शब्दरत्नावली ॥
दानीयदशधेनवो यथा, --
"यास्तु पापविनाशिन्यः पठ्यन्ते दशधेनवः ।
तासां स्वरूपं वक्ष्यामि नामानि च धनाधिप ! ॥
प्रथमा गुडधेनुः स्याद्घृतधेनुरथापि वा ।
तिलधेनुस्तृतीया च चतुर्थी जलसंज्ञिका ॥
क्षीरधेनुश्च विख्याता मधुधेनुरथापि वा ।
सप्तमी शर्करधेनुर्दधिधेनुरथाष्टमी ॥
रसधेनुश्च नवमी दशमी स्यात् स्वरूपतः ॥
कुम्भाः स्युर्द्रवधेनूनामितरासान्तु राशयः ।
सुवर्णधेनुमप्यत्र केचिदिच्छन्ति मानवाः ॥
नवनीतेन तैलेन तथान्ये तु महर्षयः ।
एतदेव विधानं स्यात्त एवोपस्कराः स्मृताः ॥
मन्त्रावाहनसंयुक्ताः सदा पर्व्वणि पर्व्वणि ।
यथाश्राद्धं प्रदातव्या भुक्तिमुक्तिफलप्रदाः ॥
गुडधेनुप्रसङ्गेन सर्व्वास्तव मयोदिताः ।
अशेषयज्ञफलदाः सर्व्वपापहराः शुभाः ॥
व्रतानामुत्तमा यस्माद्विशोकद्वादशीव्रतम् ।
तदङ्गत्वेन चैषात्र गुडधेनुः प्रशस्यते ॥
अयने विषुवे पुण्ये व्यतीपातेऽथवा पुनः ।
गुडधेन्वादयो देयास्तूपरागादिपर्व्वसु ॥"

| | | |
|---|---|---|
| | अनिट् ।) धयति । टः स्त्रियामीबर्थः । स्तन-<br>न्धयी । इति दुर्गादासः ॥ | इति मत्स्यपुराणे ७६ अध्यायः ॥<br>पूर्ब्बोक्तधेनूनां दानविधयस्तत्तच्छब्दे द्रष्टव्याः ॥ * ॥<br>अथ कपिलाधेनुदानादिफलम् ।<br>होतोवाच ।<br>“अथातः संप्रवक्ष्यामि<br>कपिलाधेनुमुत्तमाम् । |

यत्प्रदानान्नरो याति विष्णुलोकमनुत्तमम् ॥
पूर्ब्बोक्तेन विधानेन दद्याद्धेनुं सवत्सकाम् ।
सर्व्वालङ्कारसंयुक्तां सर्व्वरत्नसमन्विताम् ॥
कपिलायाः शिरोग्रीवे सर्व्वतीर्थानि भामिनि ! ।
पितामहनियोगाच्च निवसन्ति हि नित्यशः ॥
प्रातरुत्थाय यो मर्त्यः कपिलागलमस्तकात् ।
च्युतन्तु भक्त्या पानीयं शिरसा वन्दते शुचिः ॥
स तेन पुण्यतोयेन तत्क्षणाद्दग्धकिल्विषः ।
त्रिंशद्बर्षकृतं पापं दहत्यग्निरिवेन्धनम् ॥
कल्यमुत्थाय यो मर्त्यः कुर्य्यात्तासां प्रदक्षिणम् ।
प्रदक्षिणीकृता तेन पृथिवी स्यात् वसुन्धरे ! ॥
प्रदक्षिणेन चैकेन श्रद्धायुक्तेन तत्क्षणात् ।
दशजन्मकृतं पापं तस्य नश्यत्यसंशयम् ॥
कपिलायास्तु मूत्रेण स्नात्वा चैव शुचिव्रतः ।
स गङ्गादिषु तीर्थेषु स्नातो भवति मानवः ॥
तेन स्नानेन चैकेन भावयुक्तेन वै नरः ।
यावज्जीवकृतात् पापात् मुच्यते नात्र संशयः ॥
गोसहस्रन्तु यो दद्यादेकाञ्च कपिलां नरः ।
सममेतत् पुरा प्राह ब्रह्मा लोकपितामहः ॥
गवामस्थि न लङ्घेत मृते गन्धे न दूषयेत् ।
यावज्जिघ्रति तं गन्धं तावत् पुण्यैस्तु पूर्य्यते ॥
गवां कण्डूयनं श्रेष्ठं तथा च परिपालनम् ।
तुल्यं गोशतदानस्य भयरोगादिपालने ॥
तृणोदकानि यो दद्यात् क्षुधितानां गवाह्निकम् ।
सोऽश्वमेधफलं दिव्यं लभते मानवोत्तमः ॥
विमानैर्विविधैर्द्दिव्यैः कन्याभिरभिरर्च्चितैः ।
सेव्यमानस्तु गन्धर्व्वैर्दीप्यमानो यथाग्नयः ॥" * ॥

कपिला अग्निहोत्रार्थे यज्ञार्थे च वरानने ! ।
उद्धृत्य सर्व्वतेजांसि ब्रह्मणा निर्म्मिता पुरा ॥
पवित्राणां पवित्रञ्च मङ्गलानाञ्च मङ्गलम् ।
पुण्यानां परमं पुण्यं कपिला च वसुन्धरे ! ॥
तपसस्तप एवाग्र्यं व्रतानां व्रतमुत्तमम् ।
दानानामुत्तमं दानं निधीनां ह्यतदक्षयम् ॥
पृथिव्यां यानि तीर्थानि गुह्यान्यायतनानि च ।
पवित्राणाञ्च पुण्यानि सर्व्वलोकेषु सुन्दरि ! ॥
होतव्यान्यग्निहोत्राणि सायं प्रातर्द्विजातिभिः ।
कपिलाया घृतेनेह दध्ना क्षीरेण वा पुनः ॥
जुहुते ह्यग्निहोत्राणि मन्त्रैश्च विविधैः सदा ।
पूजयन्नतिथींश्चैव परां भक्तिमुपागताः ॥
ते यान्त्यादित्यवर्णैश्च विमानैर्द्विजसत्तमाः ।
सूर्य्यमण्डलमध्ये च ब्रह्मणा निर्म्मिता पुरा ॥
कपिला या पिङ्गलाक्षी सर्व्वसौख्यप्रदायिनी ।
सिद्धिबुद्धिकरी देवी कपिलानन्तरूपिणी ॥
पूर्ब्बोक्ता यास्तु कपिलाः सर्व्वलक्षणलक्षिताः ।
एतादृश्यः समाख्याताः कपिलास्ते वरानने ! ॥
सर्व्वा ह्येता महाभागास्तारयन्ति न संशयः ।
सङ्गमेषु प्रशस्ता च सर्व्वपापप्रणाशिनी ॥
अग्निपुच्छा अग्निमुखी अग्निलोमानलप्रभा ।
तथाग्नेयी सदा देवी सुवर्णाख्या प्रवर्त्तते ॥" * ॥

शूद्रात् कपिलाप्रतिग्रहे दोषो यथा, --
"गृहीत्वा कपिलां शूद्रात् कामतः सदृशो भवेत् ।
पतितः स द्विजातीनां चाण्डालसदृशो हि सः ॥
न तस्मात् प्रतिगृह्णीयात् शूद्राद्विप्रः प्रतिग्रहम् ।

जायमानस्य वत्सस्य मुखं योन्या प्रदृश्यते ।
तावत् सा पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति ॥
धेन्वा यावन्ति रोमाणि सवत्साया वसुन्धरे ! ॥
तावत्यो वर्षकोट्यस्तु ब्रह्मवादिभिरर्च्चिताः ।
वसन्ति ब्रह्मलोके वै ये च वै कपिलाप्रदाः ॥
सुवर्णशृङ्गीं यः कृत्वा रौप्यमुक्ताखुरान्तथा ।
ब्राह्मणस्य करे दत्त्वा सुवर्णं रौप्यमेव च ॥
कपिलायास्तदा पुच्छं ब्राह्मणस्य करे न्यसेत् ।
उदकञ्च करे दद्याद्वाचया शुद्धयादिते ॥
ससमुद्रावृता तेन सशैलवनकानना ।
रत्नपूर्णा भवेद्दत्ता पृथिवी नात्र संशयः ॥
पृथिवीदानतुल्येन दानेनैतेन वै नरः ।
नन्दितो याति पितृभिर्विष्णवाख्यं परमं पदम् ॥
ब्रह्मस्वहारी गोघ्नश्च भ्रुणहा पापदेहकः ।
महापातकयुक्तोऽपि वञ्चको ब्रह्मदूषकः ॥
निन्दको ब्राह्मणानाञ्च तथा कर्म्मोपदूषकः ।
एतैः पातकयुक्तोऽपि गवां दानेन शुध्यति ॥
यश्चोभयमुखीं दद्यात् प्रभूतकनकान्विताम् ।
तद्दिनं पयसाहारः पायसेनापि वा भवेत् ॥
सुवर्णस्य सहस्रेण तदर्द्धेनापि भामिनि ! ।
तस्याप्यर्द्धशतेनापि पञ्चाशच्च तदर्द्धकम् ॥
यथाशक्ति प्रदातव्या वित्तशाठ्यं विवर्ज्जयेत् ॥
इमां गृह्णोभयमुखीमुभयत्र शमोऽस्तु वै ।

एकादशप्रकारकपिलालक्षणंयथा, --
“सुवर्णकपिला पूर्ब्बं द्वितीया गौरपिङ्गला ।
तृतीया चैव रक्ताक्षी चतुर्थी गुडपिङ्गला ॥
पञ्चमी बहुवर्णा स्यात् षष्ठी च श्वेतपिङ्गला
।
सप्तमी श्वेतपिङ्गाक्षी अष्टमी कृष्णपिङ्गला ॥
नवमी पाटला ज्ञेया दशमी पुच्छपिङ्गला ।
एकादशी खुरश्वेता एतासां सर्व्वलक्षणा ॥
सर्व्वलक्षणसंयुक्ता सर्व्वालङ्कारसुन्दरी ।
ब्राह्मणाय च दातव्या सर्व्वमुक्तिप्रदायिनी ।
भुक्तिमुक्तिप्रदा तेषां विष्णुमार्गप्रदायिनी ॥”
इति कपिलामाहात्म्यम् ॥ * ॥
अथोभयमुखीधेनुदानादिविधानम् ।
होता उवाच ।
“अतःपरं महाराजोभयमुख्याः समासतः ।
विधानं यद्वरारोहे ! धरण्याः कथितं पुरा ।
तदहं संप्रवक्ष्यामि तव पुण्यफलञ्च यत् ॥
धरण्युवाच ।
यत्त्वया कपिला नाम पूर्ब्बमुत्पादिता प्रभो !
।
होमधेनुः सदा पुण्या सा ज्ञेया कतिलक्षणा
।
कियन्त्यः कपिलाः प्रोक्ताः स्वयमेव
स्वयम्भुवा ॥
प्रसूयमाना दानेन किं पुण्यं स्याच्च
माधव ! ।
एतदिच्छाम्यहं श्रोतुं विस्तरेण जगद्गुरो !
॥
श्रीवराह उवाच ।
शृणुष्व भद्रे ! तत्त्वेन पवित्रं पापनाशनम् ।
यं श्रुत्वा सर्व्वपापेभ्यो मुच्यते नात्र संशयः
॥

दूरात्ते प्रतिहर्त्तव्याः श्वभिस्तुल्या इवाध्वरे
॥
सर्व्वकाले हि सर्व्वे वै वर्ज्जिताः पितृदैवतैः
।
असम्भाष्याप्रतिग्राह्याः शूद्रास्ते
पापकर्म्मिणः ॥
पिबन्ति यावत् कपिलां तावत्तेषां पितामहाः
।
भूमेर्म्मलं समश्नन्ति जायन्ते
विड्भुजश्चिरम् ॥” *
शूद्रस्य कपिलाक्षीरादिपाने दोषो यथा, --
“तासां क्षीरं घृतं वापि नवनीतमथापि वा ।
उपजीवन्ति ये शूद्रास्तेषां गतिमथो शृणु ॥
कपिलाजीविनः शूद्राः क्रूरा गच्छन्ति
रौरवम् ।
रौरवे तु महारौद्रे वर्षकोटिशतं धरे ! ॥
ततोऽपि मुक्ताः कालेन श्वानयोन्यां व्रजन्ति
ते ।
श्वानयोन्या विमुक्तस्तु विष्ठायां जायते
क्रिमिः ॥
विष्ठास्थानेषु पापिष्ठा दुर्गन्धिषु च नित्यशः
।
भूयो भूयो जायमानास्तत्रोत्तारं न विन्दति
॥
ब्राह्मणश्चैव यो विद्वान् कुर्य्यात्तेषां प्रतिग्रहम्
।
ततःप्रभृत्यमेध्यान्तः पितरस्तस्य शेरते ॥
न तं विप्रन्तु सम्भाषेन्न चैवैकासनं विशेत् ।
स नित्यं वर्ज्जनीयो हि दूरात्तु ब्राह्मणोऽध्वरे
॥
यस्तेन सह संभाषेत्तथा चैकासनं व्रजेत् ॥
प्राजापत्यं चरेत् कृच्छ्रं तेन शुध्यति स
द्विजः ॥”
अथासन्नप्रसवकपिलादानफलादि ।
“एकस्य गोप्रदानस्य सहस्रेण तु पूर्य्यते ॥
किमन्यैर्बहुभिर्दानैः कोटिसंख्यातविस्तरैः ।
श्रोत्रियाय दरिद्राय सुवृत्तायाहिताग्नये ॥
आसन्नप्रसवां धेनुं दानार्थं प्रतिपालयेत् ।
कपिलार्द्धप्रसूता वै दातव्या च द्विजन्मने ॥

मम वंशविवृद्ध्यर्थं सदा स्वस्तिकरी भव
॥”
गोशरीरे देवतानिवेशो यथा, --
“दन्तेषु मरुतो देवा जिह्वायान्तु
सरस्वती ।
खुरमध्ये तु गन्धर्व्वाः खुराग्रेषु तु पन्नगाः
॥
सर्व्वसन्धिषु साध्याश्च चन्द्रादित्यौ तु
लोचने ।
ककुदि सर्व्वनक्षत्रं लाङ्गूले धर्म्म आश्रितः
॥
अपाने सर्व्वतीर्थानि प्रस्रावे जाह्नवी नदी
।
नानाद्वीपसमाकीर्णाश्चत्वारः
सागरास्तथा ॥
ऋषयो रोमकूपेषु गोमये पद्मधारिणी ।
रोमसु सन्ति विद्याश्च
त्वक्केशेष्वयनद्वयम् ॥
धैर्य्यं धृतिश्च क्षान्तिश्च पुष्टिर्वृद्धिस्तथैव
च ।
स्मृतिर्मेधा तथा लज्जा वपुः
कीर्त्तिस्तथैव च ॥
विद्या शान्तिर्म्मतिश्चैव सन्ततिः परमा
तथा ।
गच्छन्तीमनुगच्छन्ति एता गां वै न
संशयः ॥
यत्र गावो जगत्तत्र देवदेवपुरोगमाः ।
यत्र गावस्तत्र लक्ष्मीः सांख्यधर्म्मश्च
शाश्वतः ॥
सर्व्वरूपेषु ता गावस्तिष्ठन्त्यभिमताः
सदा ॥
गावः पवित्रा मङ्गल्या देवानामपि देवताः
।
यस्ताः शुश्रूषते भक्त्या स पापेभ्यः
प्रमुच्यते ॥”
इति वराहपुराणम् ॥

**धेनुकः**, पुं, (धेनुरिव प्रतिकृतिः । “इवे प्रति-
कृतौ ।” ५ । ३ । ९६ । इति कन् ।)
असुर-
विशेषः । स बलरामेण हतः । इति
श्रीभागवते

| | | |
|---|---|---|
| | | १५ अध्यायः ॥ (अयन्तु गर्द्दभरूपी गोवर्द्धन<br>स्योत्तरपार्श्वस्थतालवनवासी। यथा, हरिवंशे।<br>६९। २ -- २३।<br>"आजग्मतुस्तौ सहितौ गोधनैः सहगामिनौ।<br>गिरिं गोवर्द्धनं रम्यं वसुदेवसुतायुभौ ॥<br>गोवर्द्धनस्योत्तरतो यमुनातीरमाश्रितम्। |

ददृशातेऽथ तौ वीरौ रम्यं तालवनं महत् ॥
तौ तालपर्णप्रकरे रम्ये तालवने रतौ ।
चेरतुः परमप्रीतौ वृक्षपोताविवोद्गतौ ॥
स तु देशः समः स्निग्धः सुमहान्
कृष्णमृत्तिकः ।
दर्भप्रायस्थलीभूतो लोष्टपाषाणवर्ज्जितः ॥
तालैस्तैर्व्विपुलस्कन्धैरुच्छ्रितैः श्यामपर्व्वभिः
।
फलाग्रशाखिभिर्भाति नागहस्तरिवोच्छ्रितैः ॥
तत्र दामोदरो वाक्यमुवाच वदतांवरः ।
अहो तालफलैः पक्वैर्व्वासितेयं वनस्थली ॥
स्वादून्यार्य्य ! सुगन्धीनि श्यामानि रसवन्ति
च ।
पक्वतालानि सहितौ पातयामो लघुक्रमौ ॥
यद्येषामीदृशो गन्धो माधुर्य्यघ्राणतर्पणः ।
रसेनामृतकल्पेन भवितव्यञ्च मे मतिः ॥
दामोदरवचः श्रुत्वा रौहिणेयो हसन्निव ।
पातयन् पक्वतालानि चालयामास तांस्तरून्
॥
तत्तु तालवनं नणामसेव्यं दुरतिक्रमम् ।
निर्म्माणभूतमीरिणं पुरुषादालयोपमम् ॥
दारुणो धेनुको नाम दैत्यो गद्दभरूपधृक् ।
खरयूथेन महता वृतः समनुवर्त्तते ॥
स तत्तालवनं घोरं गर्द्दभः परिरक्षति ।
नृपक्षिश्वापदगणांस्त्रासयानःसुदुर्म्मतिः ॥
तालशब्दं स तं श्रुत्वा संघुष्टं फलपातनात् ।
नामर्षयत संक्रद्धस्तालस्वनमिव द्विपः ॥
शब्दानुसारी संक्रुद्धो दर्पाविद्धसटाननः ।
स्तब्धाक्षो हेषितपटुः खुरैर्न्निर्द्दारयन्महीम् ॥
आविद्धपुच्छो हृषितो व्यात्तानन इवान्तकः ।
आपतन्नेव ददृशे रौहिणेयमुपस्थितम् ॥
तालानां तमधो दृष्ट्वा सध्वजाकारमव्ययम् ।
रौहिणेयं खरो दुष्टः सोऽदशद्दशनायुधः ॥
पद्भ्यामुभाभ्याञ्च पुनः पश्चिमाभ्यां पराङ्मुखः
।
जघानोरसि दैत्येन्द्रो रौहिणेयं निरायुधम् ॥
ताभ्यामेव स जग्राह पद्भ्यां तं दैत्यगर्द्दभम् ।
आवर्ज्जितमुखस्कन्धं प्रेरयंस्तालमूर्द्धनि ॥
स भग्नोरुकटिग्रीवो भग्नपृष्ठो दुराकृतिः ।

"सुप्तां स्त्रियं समालिङ्ग्य स्वयं सुप्तो रमेत्
पुनः ।
लघुलिङ्ग चालयेद्यो बन्धोऽयं धेनुकः स्मृतः
॥"
इति रतिमञ्जरी ॥
(अपरविधलक्षणं यथा, --
"न्यस्तहस्तयुगला निजे पदे
योषिदेति कटिरूढवल्लभा ।
अग्रतो यदि शनैरधोमुखी
धेनुकं वृषवदुन्नते प्रिये ! ॥")

**धेनुकसूदनः**, पुं, (धेनुकं गोवर्द्धनोत्तरपार्श्वस्थ-
तालवनवासिनमसुरं निसूदयति बलराम-
द्वारेति । सूद + णिच् + ल्युः ।) श्रीकृष्णः ।
इति
त्रिकाण्डशेषः ॥ (बलरामः । इति पुरा-
णम् ॥)

**धेनुका**, स्त्री, (धेनुरिव प्रतिकृतिः । धेनु +
कन् । टाप् ।) हस्तिनी । (धेनुरेव । स्वार्थे
कन् ।) गौः । इति मेदिनी । के, १०६ ॥
(यथा,
महाभारते । ७ । ७६ । १८ ।
"इमां ते तरणीं भार्य्यां
त्वदाधिभिरभिप्लुताम् ।
कथं सन्धारयिष्यामि विवत्सामिव धेनुकाम्
॥")

**धेनुदुग्धं**, क्ली, (धेनोर्दुग्धमिव शुभ्रं फलमस्य ।)
चिर्भिटः । इति राजनिर्घण्टः ॥ (धेनोर्दुग्धम्
।)
गोक्षीरम् ॥

**धेनुदुग्धकरः**, पुं, (करोति वर्द्धयतीति । कृ +
अच् । धेनोर्दुग्धन्तस्य करः । एतल्लक्षणेन
धेनु-
दुग्धवर्द्धनादस्य तथात्वम् ।) गर्ज्जरः । इति
राजनिर्घण्टः ॥

**धेनुष्या**, स्त्री, (धेनु + "संज्ञायां धेनुष्या ।" ४ ।

**धैवतः**, पुं, (धीमतामयम् । धीमत् + अण् । पृषो
दरादित्वात् मस्य वत्वम् ।)
सप्तस्वरान्तर्गत-
षष्ठस्वरः । स तु नारदमते
अश्वस्वरतुल्यः ।
(अश्वस्तु धैवतं रौतीति वचनात् ॥)
तानसेन-
मते भेकस्वरतुल्यः ।
अस्याच्चारणस्थानं लला-
टम् । व्याकरणमते दन्तः । अयं
क्षत्रियवर्णः ।
अस्य जातिः षाडवः । अस्य तानम्
७२०
प्रत्येकतानम् ४८ समुदायेन
३४,५६० भवन्ति ।
इति संगीतशास्त्रम् ॥
"गत्वा नाभेरधोभागं वस्तिं
प्राप्योद्र्ध्वगः पुनः ।
धावन्निव च यो याति कण्टदेशं स
धैवतः ॥"
अस्य श्रुतयस्तिस्रः । इति
संगीतदामोदरः ॥
(यथा च सङ्गीतदर्पणे । १ । ५५ ।
"मदन्ती रोहिणी रम्येत्येता
धैवतसंश्रयाः ॥"
अस्य ऋषिकुले उद्भवः । क्षत्रियो
जातिः । पीतो
वर्णः । श्वेतद्वीपे जन्म ।
ऋषिस्तुम्बुरुः । गणेशो
देवता । उष्णिक् छन्दः ।
वीभत्सभयानक-
रसयोरुपयोगित्वम् । इति
सङ्गीतदर्पणम् ॥)

**धोडः**, पुं, (धोरति चातुर्य्येण गच्छतीति । धोर
गतिचातुर्य्ये + अच् । रस्य डत्वम् ।)
सर्प-
विशेषः । धोडा इति भाषा ।
तत्पर्य्यायः ।

खरस्तालफलैः सार्द्धं पपात धरणीतले ॥
तं गतासुं गतश्रीकं पतितं वीक्ष्य गर्द्दभम् ।
ज्ञातींस्तथापरांस्तस्य तृणराजनि सोऽक्षिपत् ॥
सा भूर्गर्द्दभदेहैश्च तालैः पक्वैश्च पातितैः ।
वभासे छन्नजलदा द्यौरिवाव्यक्तशारदी ॥
तस्मिन् गर्दभदैत्ये तु सानुगे विनिपातिते ।
रम्यं तालवनं तद्धि भूयो रम्यतरं बभौ ॥”
तीर्थविशेषः । यथा, महाभारते । ३ । ८४ । ८१ -- ८३ ।
“ततो गच्छेत राजेन्द्र ! धेनुकं लाकविश्रुतम् ।
एकरात्रोषितो राजन् ! प्रयच्छेत्तिलधेनुकाम् ॥
सर्व्वपापविशुद्धात्मा सोमलोकं व्रजेद्ध्रुवम् ।
तत्र चिह्नं महाराज ! अद्यापि हि न संशयः ।
कपिला सह वत्सा वै पर्व्वते विचरत्युत ॥
सवत्सायाः पदान्यस्या दृश्यन्तेऽद्यापि भारत ! ।
तेषूपस्पृश्य राजेन्द्र ! पदेषु नृपसत्तम ! ।
यत् किञ्चिदशुभं पापं तत् प्रणश्यति भारत ! ॥”)
षोडशरतिबन्धान्तर्गतद्वादशबन्धः । यथा, --
४ । ८९ । इति षुगागमो यत्प्रत्ययश्च निपा-
त्यते ।) बन्धके स्थिता गौः । इत्यमरः । २ ।
९ । ७२ ॥ यां बन्धकेन दत्त्वा अर्थं नीतवान्
सा । गौर्म्महिषी वा या दुग्धबन्धके स्थिता सा
धेनुष्यति बृद्धाः । इति भरतः ॥

**धैनुकं**, क्ली, (धेनूनां समूहः । “अचित्तहस्तिधेनो-
ष्ठक् ।” ४ । २ । ४७ । इति ठक् ।) धेनु-
समूहः । इत्यमरः । २ । ९ । ६० ॥ (स्त्रीणां
करणभेदः । इति मेदिनी । के, १०६ ॥)

**धैर्य्यं**, क्ली, (धीरस्य भावः कर्म्म वा । धीर +
व्यञ् ।) धीरता । धीरस्य भाव इत्यर्थे ष्ण्य-
प्रत्ययः ॥ तस्य लक्षणं यथा, --
“स्थिरचित्तोन्नतिर्या तु तद्धैर्य्यमिति कीर्त्त्यते ॥”
इत्युज्ज्वलनीलमणिः ॥
(इदं नायकसत्त्वजगुणानामन्यतमः। यथा,
साहित्यदर्पणे । ३ । ५८ ।
“शोभा विलासो माधुर्य्यं गाम्भीर्य्यं धैर्य्यतेजसी ।
ललितौदार्य्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः ॥”
तल्लक्षणं यथा, तत्रैव । ३ । ६३ ।
“व्यवसायादचलनं धैर्य्यं विघ्ने महत्यपि ॥”
उदाहरणं यथा, --
“श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्
हरः प्रसङ्ख्यानपरो बभूव ।
व्यात्मे श्वराणां न हि जातु विघ्नाः
समाधिभेदप्रभवो भवन्ति ॥”)
राजिलः २ डुण्डुभः ३ दुण्डुभः ४ । इति शब्द-
रत्नावली ॥

**धोर**, ऋ गतिचातुर्य्ये । इति कविकल्पद्रुमः ॥ (भ्वां
परं-सकं-सेट् ।) ऋ, अदुधोरत् । गतौ चातुर्य्यं
गतिचातुर्य्यम् । धोरन्त्या धोरणाक्रान्ता विनीता
यस्य वारणाः । इति दुर्गादासः ॥

**धोरणं**, क्ली, (धोरति गच्छत्यनेनेति । धोर +
करणे ल्युट् ।) सर्व्ववाहनम् । हस्त्यश्वरथ-
दोलादि । इत्यमरः । २ । ८ । ५८ ॥ (धोर +
भावे ल्युट् ।) अश्वप्रथमगतिः । तत्पर्य्यायः ।
धौरितकम् २ धौर्य्यम् ३ धोरितम् ४ । इति
हेमचन्द्रः । ४ । ३१२ ॥

**धोरणिः**, स्त्री, (धोरति क्रमशः प्राप्नोतीति ।
धोर + अनिः ।) परम्परा । इति जटाधरः ॥

**धोरितं**, क्ली, (धोर + क्तः ।) धोरणम् । अश्व-
प्रथमगतिः । इति हेमचन्द्रः । ४ । ३१२ ॥

**धोरितकं**, क्ली, (धोरितमश्वप्रथमगतिस्तेन काय-
तीति । कै + कः ।) धौरितकम् । इत्यमर-
टीकायां रमानाथः ॥

**धौतं**, त्रि, (धाव्यते स्मेति । धाव + कर्म्मणि क्तः ।)
मार्ज्जितम् । धोया इति भाषा । तत्पर्य्यायः ।
निर्णिक्तम् २ शोधितम् ३ मृष्टम् ४ क्षालितम् ५ ।
इति हेमचन्द्रः । ६ । ७३ ॥ * ॥

| | | |
|---|---|---|
| | | "ईषद्धौतं स्त्रिया धौतं यद्धौतं रजकेन च ।<br>अधौतं तद्विजानीयाद्दशा दक्षिणपश्चिमे ॥"<br>इति कर्म्मलोचनम् ॥<br>**धौतं**, क्ली, (धाव + क्तः ।) रूप्यम् । इति राज-<br>निर्घण्टः ॥<br>**धौतकटः**, पुं, (धौतः कटः । नित्यकर्म्मधारयः ।)<br>सूत्ररचितभाण्डम् । धोकडा इति ख्यातः । तत<br>पर्य्यायः । स्योनः २ स्यूतः ३ प्रसेवकः ४ । इति |

जटाधरः ॥ स्यूनः ५ स्यातः ६ । इति भरत-
धृतकोषान्तरम् ॥

**धौतकोषजं**, क्ली, (कोषाज्जायते इति । कोष +
जन + डः । धौतं कोषजम् ।) पत्रोर्णम् । इति
शब्दरत्नावली ॥

**धौतकौषे(शे)यं**, क्ली, (धौतं क्षालितं कौषेयम् ।)
पत्रोर्णम् । इत्यमरः । २ । ६ । ११३ ॥ कौषेय-
मेव धौतं प्रक्षालितं पत्रोर्णाख्यं वटलकुचादि-
पत्रेषु क्रिमिभिरूर्णायाः कृतत्वात् पत्रसम्बन्धिनी
ऊर्णा अत्रेति पत्रोर्णम् । इति भरतः ॥

**धौतशिलं**, क्ली, (धौतेव शिला यस्य ।) स्फाटि-
कम् । इति त्रिकाण्डशेषः ॥

**धौमकः**, पुं, (धूमे धूमप्रधानदेशे भवः । धूम +
"धूमादिभ्यश्च ।" ४ । २ । १२७ । इति वुञ् ।)
देशविशेषः । इति केचित् ॥

**धौरः**, पुं, धववृक्षः । इति भावप्रकाशः ॥

**धौरितकं**, क्ली, (धोरितक + प्रज्ञादित्वादण् ।)
अश्वानां पञ्चविधगत्यन्तर्गतगतिविशेषः । इत्य-
मरः । २ । ८ । ४८ ॥ तत्र सम्यक् गतिरा-
स्कन्दितं गाम इति ख्यातं ततोऽधिका चतुरा
गतिः । इति भरतः ॥

धारणाविषये एकप्रत्ययसन्ततिः । इति हेम-
चन्द्रः । २ । २३४ ॥ अद्वितीयवस्तुनि विच्छिद्य
विच्छिद्यान्तरेन्द्रियवृत्तिप्रवाहः । इति वेदान्त-
सारः ॥ * ॥ यथा, विष्णुपुराणे ।
"तद्रूपप्रत्ययैवैकसन्ततिश्चान्यनिस्पृहा ।
तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप ! ॥"
अस्यार्थः । "तद्रूपस्य धारणासिद्धस्य वस्तुनः
प्रत्यया यस्यां सन्ततौ सा एकावच्छिन्ना
सन्ततिः । अन्यनिस्पृहा विषयान्तरेणाव्यव-
धीयमाना । विजातीयप्रत्ययान्तरितः सजातीय-
प्रत्ययप्रवाहो ध्यानमित्यर्थः । तच्च प्रथमैर्यमा-
दिभिर्धारणान्तैः षड्भिरङ्गैर्निष्पाद्यते ।" इति
तट्टीका ॥ * ॥
श्रीकृष्ण उवाच ।
"सर्व्वे देवाः प्राकृतिका यावन्तो मूर्त्तिधारिणः ।
अहमात्मा नित्यदेही भक्तध्यानानुरोधतः ॥"
इति ब्रह्मवैवर्त्ते जन्मखण्डम् ॥
ब्रह्मचिन्ता । यथा, गारुडे ४९ अध्याये ।
"ब्रह्मात्मचिन्ता ध्यानं स्यात् धारणा मनसो धृतिः ।
अहं ब्रह्मेत्यवस्थानं समाधिर्ब्रह्मणः स्थितिः ॥"
अपि च ।
"प्राणायामैर्द्वादशभिर्यावत्कालो हृतो भवेत् ।
यस्तावत्कालपर्य्यन्तं मनो ब्रह्मणि धारयेत् ।
तस्यैव ब्रह्मणा प्रोक्तं ध्यानं द्वादश धारणाः ॥
द्वाद्शध्यानपर्य्यन्तं मनो ब्रह्मणि यो नरः ।
तुष्टे तु स यतो मुक्तः समाधिः सोऽभिधीयते ॥
ध्येयान्न चलते यस्य मनोऽभिध्यायतो भृशम् ।
प्राप्यावधिकृतं कालं यावत् सा धारणा स्मृता ॥

श्रीवेष्टकचोचचोरकवालकगुग्गुलुसर्ज्जरसतु-
रष्ककुन्दुरुकागुरुस्पृक्कोशीरभद्रदारुकुङ्कुमानि
पुन्नागकेशरञ्चेति ॥")

**ध्यामा**, [न्] पुं, (ध्यै + "नामन्सोमन्निति ।"
उणां ४ । १५० । इति मनिन्प्रत्ययेन निपा-
तनात् साधुः ।) परिणामः । चिन्तायाम्, क्ली ।
इत्युणादिकोषः ॥

**ध्येयः**, त्रि, (ध्यायते इति । ध्ये + यत् ।) ध्यातव्यः ।
ध्यानीयः । चिन्तनीयः । यथा, --
"ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः ॥"
इति श्रीनारायणध्यानम् ॥

**ध्यै**, चिन्तने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-अनिट् ।) ध्यायति विष्णुं वैष्णवः । इति
दुर्गादासः ॥

**ध्रज**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-
सेट् ।) ध्रजति । इति दुर्गादासः ॥

**ध्रज**, इ गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् । इदित् ।) इ, ध्रञ्ज्यते । इति दुर्गा-
दासः ॥

**ध्रण**, ध्वाने । इति कविकल्पद्रुमः । (भ्वां-परं-
अकं-सेट् ।) ध्रणति मृदङ्गः । इति दुर्गा-
दासः ॥

**ध्रस**, क उत्क्षेपे । उञ्छे । इति कविकल्पद्रुमः ॥
(चुरां-परं-सकं-सेट् ।) क, ध्रासयति । इति
दुर्गादासः ॥

**ध्रस**, ग उ उञ्छे । इति कविकल्पद्रुमः ॥ (क्र्यां-
परं-सकं-सेट् । उदित्त्वात् क्त्रावेट् ।) ग,
ध्रस्नाति शस्यं दीनः । उ, ध्रसित्वा ध्रस्त्वा । इति
दुर्गादासः ॥

**ध्राक्ष**, इ काङ्क्षे । घोररुते । इति कविकल्पद्रुमः ॥
(भ्वां-परं-अकं-सेट् ।) रेफयुक्तः । घोररुतमिह

**धौरेयः**, त्रि, (धुरं वहतीति । "धुरो यड्ढकौ ।"
४ । ४ । ७७ । इति ढक् ।) रथलाङ्गलादि-
भारवोढा । इत्यमरः । २ । ९ ।
६५ ॥ अनडुहि,
पुं । इति राजनिर्घण्टः ॥

**धौर्त्तिकं**, त्रि, धूर्त्तस्येदम् । धूर्त्तस्य भावः । इति
धूर्त्तशब्दात् ष्णिकप्रत्ययेन
निष्पन्नम् ॥

**धौर्य्यं**, क्ली, (धुर्य्यस्य कर्म्म । धुर्य्य + ष्यञ् ।)
अश्वस्य प्रथमगतिः । इति
हेमचन्द्रः । ४ ।
३१२ ॥

**ध्मा**, अग्नियुतौ । ध्वनौ । इति कविकल्पद्रुमः ॥
(भ्वां-परं-सकं-अनिट् ।)
युतिरिति वाहुल्यान्न
दीर्घः । अग्नियुतिरग्निसंयोगः ।
ध्वनिः शब्दोत्-
पत्तिहेतुभावः । धमति सुवर्णं
बणिक् अग्नि-
संयुक्तं करोतीत्यर्थः । धमति
शङ्खं जनः सशब्दं
करोतीत्यथः । अग्निफुत्कृतौ च
। मुखेनैव धमे-
दग्निम् । इति दुर्गादासः ॥

**ध्माकारः**, पुं, (ध्मा अग्निसंयोगस्तं करोतीति ।
कृ + अण् ।) लोहकारकः । इति
हलायुधः ॥

**ध्मामा**, [न्] पुं, (ध्मा + "नामन्सोमन्निति ।"
उणां ४ । १५० । इति
मनिन्प्रत्ययेन निपा-
तनात् साधुः । उज्ज्वलदत्तस्तु
ध्यायतेर्मनिन्
ध्येये सक्तं मनो यस्य ध्येयमेवानुपश्यति ।
नान्यं पदार्थं जानाति ध्यानमेतत् प्रकीर्त्तितम्
॥
ध्येये मनोनिश्चलतां याति ध्येयं विचिन्तयन्
।
यत्तद्ध्यानं परं प्रोक्तं मुनिभिर्ध्यानचिन्तकैः ॥
ध्येयमेव हि सर्व्वत्र ध्याता तन्मयतां गतः ।
पश्यति द्वैतरहितं समाधिः सोऽभिधीयते ॥"
इति गारुडे २४० अध्यायः ॥

**ध्यानयोगः**, पुं, (ध्यानमेव योगः ।) ध्यानरूप-
योगः । यथा, --
"विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥"
इति श्रीभगवद्गीतायां १८ अध्यायः ॥

**ध्यामं**, क्ली, (ध्यायते पशुभिरिति । ध्यै चिन्तने +
बाहुलकात् मक् ।) दमनकवृक्षः । गन्धतृणम् ।
(यथा, सुश्रुते । १ । २८ ।
"ध्यामकुङ्कुमकङ्कुष्ठसवर्णाः पित्तकोपतः ॥")
श्यामले, त्रि । इति मेदिनी । मे, १७ ॥

**ध्यामकं**, क्ली, (ध्याममिव प्रतिकृतिः । ध्याम +
"इवे प्रतिक्रतौ ।" ५ । ३ । ९६ । इति कन् ।)
रोहिषतृणम् । इति राजनिर्घण्टः ॥ (यथा,
सुश्रुते । १ । ३८ ।
"एलातगरकुष्ठमांसीध्यामकत्वग्पत्रनागपुष्प
प्रियङ्गुहरेणुका-व्याघ्रनख-
शुक्तिचण्डास्थौणेयक-
तिरश्चामेव घोरशब्दः । इ, ध्राङ्क्षति पक्षी ।
नमध्यपाठेनैवेष्टसिद्धे अस्य इदनुबन्धो वेदेष-
च्चारणभेदार्थः । इति दुर्गादासः ॥

**ध्राख**, ऋ ओखार्थे । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-सकं सेट् ।) रेफयुक्तः । ऋ, अदद्राखत् ।
ओखार्थे शोषालमर्थयोः । इति दुर्गादासः ॥

**ध्राघ**, ङ ऋ शक्तौ । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-अकं-सेट् ।) ङ, ध्राघते । ऋ, अद-
ध्राघत् । इति दुर्गादासः ॥

**ध्राजिः**, स्त्री, (ध्राजयतीति । ध्रज गतौ + णिच् +
इन् ।) वातालिः । इत्युणादिकोषः ॥ घूरण
वातास
इति भाषा ॥ (ध्राजि + भावे इन् । गतिः ।
यथा, ऋग्वेदे । १० । १३६ । २ ।
"मुनयो वातरशनाः पिशङ्गा वसते मला ।
वातस्यानु ध्राजिं यन्ति यद्देवासो अविक्षत ॥"
"वातस्य वायोर्ध्राजिं गतिमनुयन्ति अनु-
गच्छन्ति ॥" इति तद्भाष्ये सायनः ॥)

**ध्राड**, ऋ ङ शीर्णौ । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-सकं-सेट् ।) रेफयुक्तः । ऋ, अदध्राडत्
ङ, ध्राडते । शीर्णिः विभेदः । इति दुर्गादासः

| | | |
|---|---|---|
| इत्युक्त्वा ध्यामन् इति शब्दमिच्छति ।) परिमाणम् । आलोकः । ध्यानम् । इति सिद्धान्तकौमुद्यासुणादिवृत्तिः ॥<br><br>**ध्यातं**, त्रि, (ध्यै चिन्तने + क्तः ।) चिन्तितम् ।<br><br>यथा, शान्तिशतके । ९ ।<br>“ध्यातं वित्तमहर्निशं न च पुनर्विष्णोः पदं शाश्वतम् ॥”<br><br>**ध्यानं**, क्ली, (ध्यै + भावे ल्युट् ।) चिन्तनम् । (यथा,<br><br>मनुः । १ । १२ ।<br>“तस्मिन्नण्डे स भगवानुषित्वा परिवत्सरम् ।<br>स्वयमेवात्मनो ध्यानात्तदण्डमकरोद्द्विधा ॥”) | | |

**ध्राडिः**, पुं, (ध्राडते शीर्णो भवतीति । ध्राड +
"सर्व्वधातुभ्य इन् ।" उणां । ४ । १८ । इति इन् ।)
पुव्यचयः । इत्युणादिकोषः ॥

**ध्रिज**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) ध्रेजति । इति दुर्गादासः ॥

**ध्रु**, ञि स्थैर्य्ये । सर्पणे । इति कविकल्पद्रुमः ॥
(भ्वां-तुदां च-स्थैर्य्ये अकं-सर्पणे सकं-परं-अनिट् ।) द्वौ रेफयुक्तौ । आद्यो दीर्घान्ति
इति कश्चित् । ञि, ध्रुतोऽस्ति । शि, ध्रुवति
अध्रुवीत् । ध्रुवति शैलः । इति दुर्गादासः ॥

**ध्रु**, शि स्थिर्य्ये । सर्पणे । इति कविकल्पद्रुमः ॥
(भ्वां-तुदां च-स्थैर्य्ये अकं-सर्पणे सकं-परं-अनिट् ।) द्वौ रेफयुक्तौ । आद्यो दीर्घान्ति
इति कश्चित् । ञि, ध्रुतोऽस्ति । शि, ध्रुवति
अध्रुवीत् । ध्रुवति शैलः । इति दुर्गादासः ॥

**ध्रुवं**, क्ली, (ध्रुवति स्थिरीभवतीति । ध्रु + "स्रुवः कः ।" उणां । २ । ६१ । इत्यत्र । "बाहुलकात्
ध्रु स्थैर्य्ये अतोऽपि कः ।" इत्युज्ज्वलदत्तोक्त्या
कः ।) निश्चितम् । (यथा, शाकुन्तले १ अङ्के ।
"ध्रुवं स नीलोत्पलपत्रधारया
शमीलतां च्छेत्तुमृषिर्व्यवस्यति ॥")
तर्कः । इति मेदिनी । वे, १३ ॥
आकाशम् ।
इति हेमचन्द्रः ॥

**ध्रुवं**, त्रि, (ध्रु गतिस्थैर्य्ये + बाहुलकात् कः ।)

"ऋतेयो रन्तिनावोऽभूत् त्रयस्तस्यात्मजा नृप ! ।
सुमतिर्ध्रुवोऽप्रतिरथः कण्वोऽप्रतिरथात्मजः ॥"
रोमावर्त्तविशेषः । यथा, शब्दार्थचिन्तामणौ ।
"आवर्त्तसाम्यादावर्त्तो
रोमसंस्थानमङ्गिनाम् ॥"
ते च दशधा यथा, --
"द्वावुरस्यौ शिरस्यौ द्वौ द्वौ द्वौ रन्ध्रोप-रन्ध्रयोः ।
एको भाले ह्यपाने च दशावर्त्ता ध्रुवाः स्मृताः ॥"
यज्ञीयग्रहपात्रविशेषः । यथा, कात्यायनश्रौत-
सूत्रे । ९ । ५ । १७ ।
"यजमानस्ततो ग्रहग्रहणमा ध्रुवात् ॥")
नासाग्रम् । तत्तु आसन्नमृत्युर्न पश्यति । यथा,
"अरुन्धतीं ध्रुवञ्चैव विष्णोस्त्रीणि पदानि च ।
आसन्नमृत्युर्नो पश्येच्चतुर्थं मातृमण्डलम् ॥
अरुन्धती भवेज्जिह्वा ध्रुवो नासाग्रमुच्यते ।
विष्णोः पदानि भ्रूमध्ये नेत्रयोर्म्मातृमण्डलम् ॥"
इति काशीखण्डे । १२ । १३ -- १४ ॥
ध्रुवलोकोत्पत्तिर्यथा, --
"प्रियव्रतोत्तानपादौ मनोः स्वायम्भुवस्य तु ।
द्वौ पुत्त्रौ सुमहावीर्य्यौ धर्म्मज्ञौ कथितौ तव ॥
तयोरुत्तानपादस्य सुरुच्यामुत्तमः सुतः ।
अभीष्टायामभूद्ब्रह्मन्! पितुरत्यन्तवल्लभः ॥
सुनीतिर्नाम या राज्ञस्तस्याभून्महिषी द्विज ! ।
स नातिप्रीतिमांस्तस्यां तस्याश्चाभूद्ध्रुवः सुतः ॥
राजासनस्थितस्याङ्कं पितुर्भ्रातरमाश्रितम् ।

पदाङ्गुष्ठेन संपीड्य यदा च वसुधां स्थितः ।
तदा समस्तवसुधा चचाल सह पर्व्वतैः ॥
भगवानपि सर्व्वात्मा तन्मयत्वेन तोषितः ।
गत्वा ध्रुवमुवाचेदं चतुर्भुजवपुर्हरिः ॥
औत्तानपादे भद्रन्ते तपसा परितोषितः ।
वरदोऽहमनुप्राप्तो वरं वरय सुव्रत ! ॥
ध्रुव उवाच ।
भगवन् सर्व्वभूतेश ! सर्व्वस्यास्ते भवान् हृदि ।
किमज्ञातं तव स्वामिन् ! मनसा यन्मयेप्सितम् ॥
नैतद्राजासनं योग्यमजातस्य ममोदरात् ।
इति गर्व्वादवोचन्मां सपत्नी मातुरुच्चकैः ॥
आधारभूतं जगतः सर्व्वेषामुत्तमोत्तमम् ।
प्रार्थयामि प्रभो ! स्थानं त्वत्प्रसादादतोऽव्ययम्॥
श्रीभगवानुवाच ।
त्रैलोक्यादधिके स्थाने सर्व्वताराग्रहाश्रयः ।
भविष्यति न सन्देहो मत्प्रसादाद्भवान् ध्रुव ! ॥
सूर्य्यात् सोमात् तथा भौमात् सोमपुत्त्राद्बृह-
स्पतेः ।
सितार्कतनयादीनां सर्व्वर्क्षाणां तथा ध्रुवम् ॥
सप्तर्षीणामशेषाणां ये च वैमानिकाः सुराः ।
सर्व्वेषामुपरि स्थानं तव दत्तं मया ध्रुव ! ॥"
इति विष्णुपुराणे १ अंशे ११ अध्यायः ॥ * ॥
ध्रुवयोगजातफलं यथा, --
"नरीनर्त्ति वाणी सदा वक्त्रपद्मे
चरीकर्त्ति काव्यं बरीभर्त्ति बन्धून् ।
ध्रुवाख्ये प्रसूतिर्ध्रुवा तस्य कीर्त्ति-
र्दिगन्ते नितान्तं भवेच्चारुमूर्त्तिः ॥"
इति कोष्ठीप्रदीपः ॥ * ॥

सन्ततम् । शाश्वतम् । इति मेदिनी । वे, १३ ॥
स्थिरम् । निश्चितम् । इति हेमचन्द्रः । ६ । ८९ ॥
(यथा, चाणक्यशतके । ६३ ।
"यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव हि ॥")

**ध्रुवः**, पुं, (ध्रुवति स्थिरीभवतीति । ध्रु + बाहुलकात्
कः ।) शङ्कुः । हरः । (यथा, महाभारते । १३ । १७ । १०३ ।
"घाता शक्रश्च विष्णुश्च मित्रस्त्वष्टा ध्रुवो धरः ॥")
विष्णुः । (यथा, महाभारते । १३ । १४९ । १९ ।
"विश्वकर्म्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ॥")
वटः । उत्तानपादजः । (अस्य विवरणन्तु पश्चात् द्रष्टव्यम् ॥) वसुभेदः । (यथा, मात्स्ये ।
५ । २१ ।
"आपो ध्रुवश्च सोमश्च धरश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः ॥")
योगभेदः । इति मेदिनी । वे, १३ ॥ (यथा,
ज्योतिषे ।
"गण्डो वृद्धिर्ध्रुवश्चैव व्याघातो हर्षणस्तथा ॥")
स्थाणुः । इत्यमरः । २ । ४ । ८ ॥ शरारि-
पक्षी । इति त्रिकाण्डशेषः ॥ ध्रुवकः । इति
सङ्गीतदामोदरः ॥ * ॥ (रोहिणीगर्भे वसुदेवा-
ज्जातः पुत्त्रविशेषः । यथा, भागवते । ९ । २४ । ४६ ।
"बलं गदं सारणञ्च दुर्म्मदं विपुलं ध्रुवम् ।
दृष्ट्वोत्तमं ध्रुवश्चक्रे तमारोढुं मनोरथम् ॥
सपत्नीतनयं दृष्ट्वा तमङ्कारोहणोत्सुकम् ।
पुत्त्रं पितुस्तथारूढं सुरुचिर्वाक्यमब्रवीत् ॥
एतद्राजासनं सर्व्वभूभृत्संश्रयकेतनम् ।
योग्यं ममैव पुत्त्रस्य किमात्मा क्लिश्यते त्वया ॥
उत्सृज्य पितरं बालस्तत् श्रुत्वा मातृभाषितम् ।
जगाम कुपितो मातुर्निजाया द्विज ! मन्दिरम् ॥
तं दृष्ट्वा कुपितं पुत्त्रमीषत्प्रस्फुरिताधरम् ।
सुनीतिरङ्कमारोप्य मैत्रेयेदमभाषत ॥
वत्स ! कः कोपहेतुस्ते कश्च त्वां नाभिनन्दति ।
कोऽवजानाति पितरं तव यस्तेऽपराध्यति ॥
इत्युक्तः सकलं मात्रे कथयामास तद्यथा ।
सुरुचिः प्राह भूपालप्रत्यक्षमतिगर्व्विता ॥
सुनीतिरुवाच ।
सुरुचिः सत्यमाहेदं स्वल्पभाग्योऽसि पुत्त्रक ! ।
न हि पुण्यवतां वत्स ! सपत्नैरेवमुच्यते ॥
यदि चेद्दुःखमत्यर्थं सुरुच्या वचनात्तव ।
तत् पुण्योपचये यत्नं कुरु सर्व्वफलप्रदे ॥
पराशर उवाच ।
निर्जगाम गृहान्मातुरित्युक्त्रा मातरं ध्रुवः ।
पुराच्च निर्गम्य ततस्तद्बाह्योपवनं ययौ ॥
स ददर्श मुनींस्तत्र सप्त पूर्ब्बागतान् ध्रुवः ।
निर्जगाम वनात्तस्मात् प्रणिपत्य स तानृषीन् ॥
मधुसंज्ञं महापुण्यं जगाम यमुनातटम् ।
यत्रैव देवदेवस्य सान्निध्यं हरिमेधसः ॥
सर्व्वपापहरे तस्मिन् तपस्तीर्थे चकार सः ।
ध्रुवगणो यथा । उत्तरफल्गुनी १ उत्तराषाढा
२ उत्तरभाद्रपद् ३ रोहिणी ४ । इति ज्योति-
षम् ॥ * ॥ ताराविशेषः । यथा, --
"मेरोरुभयतो मध्ये ध्रुवतारे नभःस्थिते ।
निरक्षदेशसंस्थानामुभये क्षितिजाश्रिते ॥
भचक्रं ध्रुवयोर्बद्धमाक्षिप्तं प्रवहानिलैः ।
पर्य्येत्यजस्रं तन्नद्धा ग्रहकक्षा यथाक्रमम् ॥"
इति सूर्य्यसिद्धान्ते १२ अध्यायः ॥

**ध्रुवकः**, पुं, (ध्रुव + स्वार्थे कन् ।) स्थाणुः । इति
हेमचन्द्रः । ४ । १८८ ॥ गीताङ्गविशेषः । धया
इति भाषा । तस्य लक्षणं यथा, --
"उत्तमः षट्पदः प्रोक्तो मध्यमः पश्चमः स्मृतः ।
कनिष्ठश्च चतुर्भिः स्याद्ध्रुवकोऽयं मयोदितः ॥
उक्तं द्विखण्डमुद्ग्राहे द्विखण्डं ध्रुवके मतम् ।
ततो द्विखण्डमाभोगे तालमानरसैः सह ॥
आभोगे कविनाम स्यात्तथा नायकनाम च ।
उद्ग्राहं प्रथमं गीत्वा ध्रवं गायेत्ततः परम् ॥
ततोऽन्तरा ध्रुवस्तस्मादाभोगध्रुवकौ ततः ।
उद्ग्राहः प्रथमः पादः कथितः पूर्ब्बसूरिभिः ॥
गीत्वा पूर्ब्बपदं न्यासो यत्र स ध्रुवको मतः ।
यत्रैव कविनाम स्यात् स आभोग इतीरितः ॥
ध्रुवकादिपु सर्व्वेषु भवेदेवंविधः क्रमः ॥"
स तु षोडशविधः । यथा, --
"जयन्तः शेखरोत्साहौ मधुरो निर्म्मलस्तथा ।

| | | |
|---|---|---|
| वसुदेवस्तु रोहिण्यां कृतादीनुदपादयत् ॥” पाण्डवपक्षीयः कश्चित् क्षत्त्रियवीरः । इति महाभारते । ७ । १५६ । ३७ ॥ नहुषस्य पुत्त्र- विशेषः । यथा, महाभारते । १ । ७५ । ३० । “यतिं ययातिं संयातिमायातिमयतिं ध्रुवम् । नहुषो जनयामास षट् सुतान् प्रियवाससि ॥” पुरुवंशीयरन्तिनावस्य पुत्त्रविशेषः । यथा, भागवते । ९ । २० । ६ । | | |

कुन्तलः कमलश्चैव सानन्दश्चन्द्रशेखरः ॥
सुखदः कुमुदो जायी कन्दर्पो जयमङ्गलः ।
तिलको ललितश्चेति ध्रुवकाः षोडश स्मृताः ॥
एकादशाक्षरपदाव्कैकाक्षरवर्द्धितैः ।
खण्डैर्ध्रुवाः षोडश स्युः षड्विंशत्यक्षरावधि ॥
द्विगुणैरक्षरैरेव पदमेकमिहेष्यते ।
उद्ग्राहध्रुवकाभोगैरित्थं षट्पदनिर्णयः ॥
पञ्चपादे तु ध्रुवके पदेनैकेन तद्ध्रुवः ।
चतुष्पादे तु ध्रुवके पृथङ्नास्त्येव तद्ध्रुवः ॥”
इति सङ्गीतदामोदरः ॥

**ध्रुवका**, स्त्री, (ध्रुवक + टाप् ।) ध्रुवका । धुया इति
भाषा । संज्ञा । इत्युणादिकोषः ॥

**ध्रुवा**, स्त्री, (ध्रुवत्यनयेति । ध्रु स्थैर्य्ये + बाहुलकात्
कः । ततष्टाप् ।) जुहूः । वटपत्राकृतियज्ञ-
पात्रम् । इत्यमरः । २ । ७ । २५ ॥ मूर्व्वा । आढी ।
शालपर्णी । गीतभेदः । इति मेदिनी । वे, १४ ॥
धुया इति भाषा ॥ साध्वी स्त्री । इति शब्द-
रत्नावली ॥

**ध्रेक**, ऋ ङ स्वने । उत्साहे । इति कविकल्पद्रुमः ॥
(भ्वां-आत्मं-अकं-सेट् ।) रेफमध्यः । द्वावर्थौ ।
उत्साहो वृद्धिरिति चन्द्रः । औन्नत्यमिति
क्षीरस्वामी । ऋ, अदिध्रेकत् । ङ, ध्रेकते लोकः
शब्दायते उत्सहते वेत्यर्थः । स्वनेनोत्साहः
स्वनोत्साहः । इति केचित् । तन्मते स्वनेनोत्-
सहते इत्यर्थः । इति दुर्गादासः ॥

**ध्रै**, तृप्तौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-
अनिट् ।) रेफोपधः । ध्रायति लाभाल्लोकः प्रीतः
स्यादित्यर्थः । इति दुर्गादासः ॥

**ध्वंसः**, पुं, (ध्वन्स + भावे घञ् ।) नाशः । यथा, --
जन्याभावत्वं ध्वंसत्वमिति सिद्धान्तमुक्तावली ॥
(यथा, पञ्चतन्त्रे । १ । ११७ ।
“दर्शितभयेऽपि धातरि
धैर्य्यध्वंसो भवेन्न वीराणाम् ।
शोषितसरसि निदाघे
नितरामेवोद्धतः सिन्धुः ॥”)

**ध्वंसनं**, क्ली, (ध्वंस + भावे ल्युट् ।) ध्वंसः । (यथा,

**ध्वज**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) वकारयुक्तः । ध्वजति ।
इति दुर्गा-
दासः ॥

**ध्वज**, इ गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं
सकं-सेट् । इदित् ।) वकारयुक्तः । इ,
ध्वञ्ज्यते ।
इति दुर्गादासः ॥

**ध्वजः**, पुं, (ध्वजोऽस्त्यस्येति । ध्वज + अर्शआदि-
त्वादच् ।) शौण्डिकः । इति मेदिनी । जे,
१० ॥
(यथा, मनुः । ४ । ८५ ।
“दशसूनासमं चक्रं दशचक्रसमो ध्वजः ।
दशध्वजसमो वेशो दशवेशसमो नृपः
॥”)

**ध्वजः**, पुं क्ली, (ध्वजति उच्छ्रितो भवतीति । ध्वज +
पचाद्यच् ।) पतका । (यथा, पञ्चतन्त्रे ।
१ । ३२ ।
“किं तेन जातु जातेन मातुर्यौवनहारिणा
।
आरोहति नयः स्वस्य वंशस्याग्रे ध्वजो
यथा ॥”)
खट्वाङ्गम् । मेढ्रम् । (यथा, सुश्रुते
चिकित्सित-
स्थाने १९ अध्याये ।
“विदग्धैस्तु सिरास्नायुत्वङ्मांसैः
क्षीयते ध्वजः ॥”)
चिह्नम् । इति मेदिनी । जे, ११ ॥ (यथा,
महाभारते । १ । ३३ । १७ ।
“तं वव्रे वाहनं विष्णुर्गरुत्मन्तं महाबलम्
।
ध्वजञ्च चक्रे भगवानुपरि स्थास्यतीति
तम् ॥”)
गर्व्वः । दर्पः । इति शब्दरत्नावली ॥
पूर्ब्बदिशो

हंसादियुक्ता विज्ञेया राज्ञां
सैवाष्टमङ्गला ।
हंसः केकी शुकश्चासो ब्रह्मादीनां
यथाक्रमम् ॥
चामरादिसमायुक्ता सा ज्ञेया
सर्व्वबुद्धिदा ।
चामरश्चासपक्षाणि चित्रवस्त्रं तथा
सितम् ॥
चतुर्णां वेदनयनपक्षेन्दुगणितक्रमात्
।
तदग्रे यदि विन्यस्तं पताकाद्वितयं
भवेत् ॥
इयं हि सर्व्वतो भद्रा पताका
चक्रवर्त्तिनः ।
तद्वर्णः पूर्ब्बवज्ज्ञेयः प्रमाणं
विधिबोधितम् ॥
कानकं राजतं ताम्रं नानाधातुमयं
क्रमात् ।
कुम्भादिकं प्रशंसन्ति पताकाग्रे
महीभुजाम् ॥
तत्रापि रत्नविन्यासो विधेयो
राजतक्रमः ।
चतुर्भिर्म्मकरास्याद्यैर्युक्ता चेत्
सर्व्वसिद्धिदा ।
तदा श्रेयस्करी नाम सा पताका
विजायते ॥
मकरोऽथ गजः सिंहो व्याघ्रो वाजी
मृगः शुकः ।
शुचिश्चेति समुद्दिष्टमादित्यादिदशा
भुवाम् ॥
इति प्रोक्तः पताकानां निर्णयः
पृथिवीभुजाम् ॥”
अथ निष्पताकध्वजः ।
“पूर्ब्बवद्दण्डनियमस्तत्र दैर्घ्ये
विशेषणम् ।
दण्डः पक्षाणि पद्मञ्च कुम्भश्च
विहगो मणिः ॥
निष्पताको ध्वजो राज्ञां षड्भिरेतैः
सुसंस्थितैः ।

भागवते । ५ । १ । २३ ।
"इति ह वाव स जगतीपतिरीश्वरेच्छयाधिनिवेशितकर्म्माधिकारोऽखिलजगद्बन्धध्वंसनापरानुभावस्य भगवतः इति ॥") गमनम् । अधःपतनम् । इति ध्वन्सधातोभविऽनट्प्रत्ययः ॥ (ध्वंसयतीति । ध्वंस + णिच् + ल्युः । ध्वंसके, त्रि ।
यथा, महाभारते । ५ । १५६ । ३ ।
"प्रजापतिमिवौदार्य्ये तेजसा भास्करोपमम् ।
महेन्द्रमिव शत्रूणां ध्वंसनं शरवृष्टिभिः ॥")

**ध्वंसी**, [न्] पुं, (ध्वंसते विनश्यतीति । ध्वन्स + णिनिः ।) पर्व्वतसम्भवपीलुवृक्षः । इति शब्दरत्नावली ॥ (ध्वंसोऽस्यास्तीति । ध्वंस + इनिः ।) ध्वंसविशिष्टे, त्रि ॥ यथा, --
"जालान्तरगते सूर्य्यकरे ध्वंसी विलोक्यते ।
त्रसरेणुस्तु विज्ञेयस्त्रिंशता परमाणुभिः ॥" ।
इति वैद्यकपरिभाषा ॥

गृहम् । इति हेमचन्द्रः ॥ पताकादण्डः । तत्-
पर्य्यायः । केतनम् २ । इत्यमरटीकायां भरतः ॥
(यथा, महाभारते । ७ । २७ । ६ ।
"ततोऽर्ज्जुनः सुशर्म्माणं विद्ध्वा सप्तभिराशुगैः ।
ध्वजं धनुश्चास्य तथा क्षुराभ्यां समकृन्तत ॥")
ध्वजयुक्तिर्यथा, --
"सेनाचिह्नं क्षितीशानां दण्डो ध्वज इति स्मृतः ।
सपताको निष्पताकः स ज्ञेयो द्विविधो बुधैः ॥
पताका सार्द्धदैर्घ्येण दण्डस्तु पृथिवीभुजाम् ।
सपताकध्वजस्याग्रे यदा हस्तं परिन्यसेत् ॥
जयहस्तो ध्वजो नाम नैनं सामान्यमर्हति ।
वंशोऽथ वाकुलः शालः पालाशश्चाम्पकस्तथा ॥
नैपो नैम्बोऽथवा दण्डस्तथा वैराजवारणः ।
अवद्धादिकसंज्ञानां वर्णरूपप्रकाशितः ॥
सर्व्वेषाञ्चैव वंशस्तु दण्डः सम्पत्तिकारकः ॥"
अ क च ट त प य शाः ॥
"प्रतापाय पताकास्तु अष्टावेव प्रकाशिताः ।
पञ्चहस्तायता हस्तपरिणाहा जयाभिधा ॥
जया च विजया भीमा चपला वैजयन्तिका ।
दीर्घा विशाला लोला च ज्ञेया हस्तैकवृद्धितः ॥
परिणाहे पादवृद्धिरथ वर्णस्य निर्णयः ।
रक्तः श्वेतोऽरुणः पीतश्चित्रो नीलोऽथ कर्व्वुरः ॥
कृष्णश्चेति पताकानां वर्णरूपप्रकाशितः ।
जयः कपालो विजयः क्षेत्रन्तत्र शिवः क्रमात् ॥
राज्ञः पुरुषमानेन दण्डमानं प्रकीर्त्तितम् ।
ऊद्‌र्ध्वाधःक्रमयोगेन तद्दण्डादिकमुच्यते ॥
केकी चासो मत्स्यरङ्कस्त्रिविधानां महीभुजाम् ।
ध्वजाग्रेषु विधेयानि पक्षाणि श्रियमिच्छताम् ॥
पद्मः कुम्भश्च विहगो मणिश्चव यथाक्रमात् ।
उपर्य्युपरितो धेयो निष्पताके महीभुजाम् ॥
अष्ट षोडश द्वात्रिंशच्चतुःषष्टिदलाम्बुजम् ।
वृत्ताष्टदिग्दलैश्चाढ्यः कुम्भः सम्पत्तिकारकः ॥
हंसश्चासः शुकः केकी पक्षिणश्च यथाक्रमम् ।
वज्रञ्च पद्मरागच्च नीलो वैदूर्य्यमेव च ॥
ब्रह्मक्षत्त्रियविट्शूद्रजातीनांस्यात् यथाक्रमम् ।
कनकं रजतं युग्मं द्विविधानां महीभुजाम् ॥
निष्पताकध्वजाब्जादिनिम्मणियोग इष्यते ।
पताका यदिहास्त्येका सर्व्वाग्रे योग्यवर्णिनी ॥
अयं ध्वजो विशालाख्यो विज्ञेयश्चक्रवर्त्तिनः ।
तत्रैव चामरे योग्ये विज्ञेयाः सर्व्वसम्पदः ॥
इति राज्ञां समुद्दिष्टमन्येषां ध्वज उच्यते ।
नोद्‌र्ध्वं विंशतिहस्तेभ्यो न चार्व्वाक् दशहस्तकात् ॥
हस्तहस्तैकसंवृद्‌ध्या ध्वजो दशविधो मतः ।

| | | |
|---|---|---|
| | अवद्धादिकसंज्ञानामष्टानामष्टकत्रयम् ॥<br>कलसो दर्पणश्चन्द्रः पद्मकोषो यथाक्रमम् ।<br>ब्रह्मक्षत्त्रियविट्शूद्रजातीनांसंप्रकाशितः ॥<br>गजादियुक्ता सा प्रोक्ता जयन्ती सर्व्वमङ्गला ।<br>गजः सिंहो हयो द्वीपी चतुर्णां पृथिवी-भुजाम् ॥ | सहस्राधिपमारभ्य यावत् स्यादयुताधिपः ॥<br>न सहस्राधिपान्न्यूनो ध्वजधारणमर्हति ।<br>अपि कोटिपतेर्ज्ञेयो ध्वजो विंशतिहस्तकः ॥<br>तत्रापि वस्त्रवर्णादिनिर्णयः पूर्ब्बवन्मतः ।<br>स्थिरता चित्रता चेति निष्पताकध्वजे गुणौ ॥<br>यदेतदुभयं चिह्नमुभयोः संप्रकाशितम् ।<br>तत्प्रमाणध्वजे ज्ञेयमप्रधाने न निर्णयः ॥<br>निष्पताकध्वजोद्देशः प्रोक्तोऽयं भोजभूभुजा ।<br>एतद्विमृष्य मतिमान् चिरं सुखमवाप्नुयात् ॥<br>यो दम्भादथवाज्ञानाद्विलङ्घयति मानवः ।<br>स विषीदति नश्येत तस्य कीर्त्तिः कुलं बलम् ॥”<br>इति युक्तिकल्पतरुः ॥ * ॥ |

मात्स्ये ।
“घण्टावितानवरतोरणचित्रयुक्तं
नित्योत्सवप्रमुदितेन जनेन सार्द्धम् ।
यः कारयेत् सुरगृहं विधिवद्ध्वजाङ्कं
श्रीस्तं न मुञ्चति सदा दिवि पूज्यते च
॥”
ध्वजयष्ट्यादिमानमाह
हयशीर्षपञ्चरात्रम् ।
“ध्वजवंशः प्रकर्त्तव्यो निर्व्रणः सगुणो
दृढः ।
तदूर्द्ध्वं ताम्रजं चक्रं सूक्ष्मं
कुर्य्याद्द्विजोत्तम ! ॥
प्रासादस्य च विस्तारो मानं दण्डस्य
कीर्त्तितम् ।
ध्वजयष्टिर्देवगृहे ऐशान्यां दिशि देशिकैः
॥
स्थापनीयाथ वायव्ये साम्प्रतं
ध्वजमुच्यते ।
पट्टकार्पासक्षौमाद्यैर्ध्वजं कुर्य्यात्
सुशोभनम् ॥
एकवर्णं विचित्रं वा घण्टाचामरभूषितम् ।
किङ्किणीजालकोपेतं वर्हिपत्रविभूषितम्
।
शुक्लादिवर्णैर्विप्रादिः क्रमाद्वा कारयेत्
ध्वजम् ॥
दण्डाग्राद्धरणीं यावत् हस्तैकं विस्तरेण
तु ।
महाध्वजन्तु विख्यातं सर्व्वकामप्रदं
शुभम् ॥
ध्वजेन रहितो विप्र प्रासादस्तु वृथा
भवेत् ।
पूजाहोमादिकं सर्व्वं जपाद्यं यत् कृतं
नरैः ॥”
शिवसर्व्वस्वे ।
“देवेभ्यश्च गृहं दद्याद्
वाहनैरुपशोभितम् ।
तुरङ्गमेण सूर्य्यस्य हरस्य वृषचिह्नितम्
॥
ध्वजं समुच्छ्रयिष्यामि वसोर्धारां सुखावहाम्
॥”
अथ ध्वजदानविधिः ।
विश्वेश्वर उवाच ।
“यद्येवं सा महाभागा ब्रह्मविष्णुपरापरा ।
तदहं श्रोतुमिच्छामि ध्वजदानं विधानतः ॥
अगस्त्य उवाच ।
यथा त्वं पृच्छसे वत्स ! तथा शुक्रेण ब्रह्मणि
।
पृष्टः पूर्ब्बं तथा तेन शम्भुगीतं प्रकाशितम् ॥
शुक्रस्य भावयुक्तस्य तदहन्ते महात्मनः ।
कथयामि यथान्यायं ध्वजदानं महाफलम् ॥
शुक्र उवाच ।
देव्या ध्वजप्रमाणन्तु विधिदत्तस्य लाञ्छनम्
।
दीयते च यथा नाथ ! तदशेषं ब्रवीहि नः ॥
ईश्वर उवाच ।
अण्डजं कृमिजं वापि ध्वजं केशविवर्ज्जितम्
।
नवं समञ्च श्लक्ष्णञ्च प्रासादाद्दण्डवर्द्धितम् ॥
समं श्लक्ष्णं मृदुं शुभ्रं शैलं वा धातुजं हि वा
॥
तस्मिन् पटे लिखेत् सिंहं
सर्व्वलक्षणलक्षितम् ।
रोचना सह चन्द्रेण हेमलेखाद्यदूर्व्वया ॥
प्रासादाद्दोलमानन्तु क्षितिं विस्तरतः करम् ।
ध्वजापादेन कर्त्तव्या दर्शयेद्दिक्षु देवताः ॥
सर्व्वा वाहनलाञ्छेन लाञ्छिताः सहजेन च
।
किङ्किणीचामरोपेता घण्टादर्पणशोभिताः ॥
हुतहोमो महाप्राज्ञः सहकारदलान्वितान् ।
महामङ्गलशब्देन देव्याः कुम्भान् प्रपूजयेत्
॥
सुगन्धपुष्पनैवेद्ययथाविभवविस्तरैः ।
कन्यका ब्राह्मणान् भोज्य दधिपायसशर्करैः
॥
भूतानान्तु वलिं दत्त्वा तथा तमुपरोहयेत् ॥
सर्व्वकामानवाप्नोति विद्याधरपतिर्भवेत् ।
ब्रह्मविष्णिवन्द्ररुद्राणां सोमसूर्य्यदिवौकसाम्
।
ध्वजदानं महादानं सर्व्वदानोत्तमं मतम् ॥
यावन्नो दीयते शुक्र ! ध्वजः प्रासादमूर्द्धनि
।
तावत्तु न भवेद्वत्स ! प्रासादो देववाञ्छितः
॥
शून्यध्वजं सदा भूता नानागन्धर्व्वराक्षसाः
।
विद्रवन्ति महात्मानो नानावाधाञ्च कुर्व्वते
॥
तस्माद्देवगृहद्वारपुरपर्ष्वत्तपत्तने ।
उच्छ्रिताः शान्तिकामाय ध्वजाः शुक्र !
सदा
हिताः ॥
न हि चान्यद्ध्वजदानादुत्तमं भारते
क्वचित् ।
दानमिष्टञ्च पुष्टञ्च देव्या दीपन्तथैव च ॥
अनेन विधिना यस्तु ध्वजं शुक्र ! निवेदयेत्
।
सर्व्वकामानवाप्नोति स नरः शिवतां व्रजेत्
॥
तस्य दर्शनसम्भाषादपि पापरता नराः ।
विमुक्ताः सर्व्वपापेभ्यो दिवं यान्ति न
संशयः ॥
राज्ञा चानेन विधिना देवीलाञ्छनरञ्जिताम्
।
शङ्खचक्रवृषभार्क्षहंसवर्हिणवारणैः ।
साचारो भक्तिमास्थाय ध्वजयष्टिं
समुच्छ्रयेत् ।
न तस्य सङ्गरे शुक्र ! व्याधयो न च वैरिणः
।
नैव शस्त्रव्रणपीडा भवेच्छां स समुच्छ्रयेत्
॥”
इति देवीपुराणम् ॥

**ध्वजद्रुमः**, पुं, (ध्वज इव उन्नतो द्रुमः । दीर्घत्वात् तथात्वम् ।) तालवृक्षः । माडवृक्षः । इति राजनिर्घण्टः ॥

विष्णवे गरुडाङ्कन्तु दुर्गायै सिंहचिह्नितम्
।
कार्य्यं ध्वजपताकाढ्यमन्यथान
कथञ्चन ॥”
गरुडलक्षणमाह नारदपञ्चरात्रे ।
“उपेन्द्रस्याग्रतः पक्षी गुडाकेशः
कृताञ्जलिः ।
सव्यजानुगतो भूमौ मूर्द्धादौ
मणिमण्डितः ॥
पक्षिजङ्घो नराङ्घ्रिश्च तुङ्गनासो
नराङ्ककः ।
द्विबाहुः पक्षयुक्तश्च कर्त्तव्यो
विनतासुतः ॥”
विष्णुधर्म्मोत्तरे ।
“प्रतिपाद्य द्विजो दद्यात् ध्वजं
त्रिदशवेश्मनः ।
निर्द्दहत्याशु पापानि महापातकजान्यपि
॥”
इति प्रतिष्ठातत्त्वम् ॥ * ॥
अथ ध्वजचिह्नविधिः ।
“सिंहारूढा ध्वजे यस्य नृपस्य रिपुहा
उमा ।
द्वारस्था पूज्यते वत्स ! न तस्य रिपुजं
भयम् ॥
कपिसंस्था महामाया
सर्व्वशत्रुविनाशिनी ।
वृषे यथेप्सितं दद्यात् कलसे श्रेय
उत्तमम् ॥
हंसे विद्यार्थकामन्तु वर्हिणे सुतमिष्टदा ।
गरुत्मगा महामाया सर्व्वरोगविनाशिनी
॥
महिषस्था महामारीः शमयेत्
ध्वजसंस्थिता ।
करिगा सर्व्वकार्य्येषु नृपैः कार्य्या
त्रिशूलिनी ॥
पद्मस्था चर्च्चिका रौप्या
धर्म्मकामार्थमोक्षदा ।
प्रेतस्था सर्व्वभयहा नित्यं
पशुनिपातनात् ॥
पूजिता देवराजेन्द्रनीलोत्पलकरावरा ।
मोदते विविधान् भोगान् सर्व्वविद्यार्थपारगः
॥
अथवा हैमं रौप्यं वा वार्क्षं पार्थिवशैलजम् ।
कारयेन्मृगराजन्तु महाकरिमदापहम् ॥
महानखकरोत्खातमुक्ताफलपदप्रदम् ।
एवंविधं ततः कृत्वा नवम्यां पूजयेच्छिवाम्
॥
सोपवासः शुचिर्दक्षः सर्व्वसङ्गविवर्ज्जितः ।
कन्यकाः पूजयित्वा तु विप्रान् वेदविदस्ततः
॥
देव्या भक्ताः सदाचारास्त्रिकालहवने रताः ।
ते यथाशक्तितस्तोष्पा ध्वजारोहणकर्म्मणि
॥
कन्या देव्या स्वयं प्रोक्ताः कन्यारूपा
तुशूलिनी ।
यावदक्षतयोनिः स्यात्तावद्देवी सुरारिहा ॥
द्विजो ब्रह्मा शिवो विष्णुः स्वकीयव्रतपालकः
।
पूजितैस्तैः सदा शुक्र सर्व्वदेवास्तु पूजिताः
॥
दीनान्धकृपणानान्तु अन्नं देयन्तु शक्तितः ।
यथा सर्व्वगता देवी तदुद्दिश्याक्षयं भवेत् ॥
नानाभक्ताक्षतदधिकूर्वातत्कणिकान्वितम् ।
वलिं वै सर्व्वभूतेभ्यो दशदिक्षु निवेदयेत् ॥
वज्रघोणा तथा जप्त्वा अष्टविंशाक्षरापि वा ।
सिंहं स्तम्भे समारोप्य सर्व्वमङ्गलशब्दितम्
॥
वेदध्वनिमहामन्त्रकालिकाचण्डिकापरम् ।
न्यस्य सिंहं परं ध्यायेद्यादृशं पूर्ब्बकल्पितम्
॥
एवन्तु वस्त्रसंवीतं सर्व्वाभरणभूषितम् ।
देव्या महाध्वजं न्यस्य शेषाणामपि
विन्यसेत् ॥

**ध्वजप्रहरणः**, पुं, (ध्वजं प्रहरति नाशयति भन-
क्तीति । प्र + हृ + ल्युः । ध्वजस्य प्रहरणो
वा ।)
वायुः । इति शब्दरत्नावली ॥

**ध्वजभङ्गः**, पुं, (ध्वजस्य मेढ्रस्य भङ्गः ।) क्लीवत्व-
जनकरोगविशेषः । तस्य निदानं यथा, --
“अत्यम्ललवणक्षारविरुद्धाशनभोजनात् ।
तथाम्बुपानाद्विषमात् पिष्टान्नगुरुभोजनात्
॥
दधिक्षीरानूपमांससेवनाद्व्याधिकर्षणात् ।
कल्याणीगमनाच्चापि वियोनिगमनादपि ॥
दीर्घरोम्नीं चिरोत्सृष्टां तथैव च रजस्वलाम्
।
दुर्गन्धां दुष्टयोनिञ्च तथैव च परिसुताम् ॥
ईदृशीं प्रमदां मोहात् यदि गच्छति मानवः
चतुःपदाभिगमनाच्छेफसश्चाभिघाततः ।
अधावनाच्च मेढ्रस्य शस्त्रदन्तनखक्षतात् ॥
काष्ठप्रहारनिष्पेषशूकानाञ्च निषेवणात् ।
रेतसश्च प्रतीघातात् ध्वजभङ्गः प्रवर्त्तते
॥”
इति चरकः ॥ * ॥
तस्य चिह्नं यथा, --
“शुक्रे चिरात् प्रसिच्येत शुक्रं शोणितमेव वा
।
तोदोऽत्यर्थं वृषणयोर्मेढ्रं धूपायतीव च ॥”
इति वाभटः ॥ * ॥
अपि च ।
“तैस्तैर्भावैरहृद्यैश्च रिरंसोर्मनसि क्षते ।
ध्वजः पतत्यधो नृणां क्लैव्यं सद्यः
प्रजायते ॥
भक्ष्यैरम्लोष्णलवणैरतिमात्रोपसेवितैः ।
सौम्यधातुक्षयाद्दुष्टः क्लैव्यं तदपरं स्मृतम्
॥
अतिव्यवायशीलो यो न च वाजिक्रियारतः
।
ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुकम् ॥

| | | |
|---|---|---|
| भवते सिद्धकामस्य चिह्नाग्रे संव्यवस्थिता ॥<br>गन्धपुष्पार्च्चितं कृत्वा वस्त्रहेमसुचर्च्चितम् ।<br>फलशालियवसूचिबर्द्धमानषिभूषितम्॥<br>शोभने उच्छ्र्येल्लग्ने पताकां वा मनोरमाम् ॥<br>चामरं कलसं शङ्कमातपत्रं वितानकम् ।<br>भवते सिद्धकामस्य नृपस्य फलदायकम् ॥<br>नमो विश्वेश्वरि दुर्गे ! चामुण्डे चण्डहारिणि ! । | | |

असाध्यं सहजं क्लैव्यं मर्म्मच्छेदोद्भवञ्च यत् ।
असाध्यानां विशिष्टानां कार्य्यो वाजिकरो विधिः ॥
तस्य चिकित्सा यथा, वैद्यके ।
“सुवर्णासुवत्साशुभाधेनुधन्या-
घृतं योगयोगे प्रशस्तं सप्रस्थम् ।
मृदौ वा दराग्नौ पचेत् पाकशूर-
स्तदा तेजपत्रं हरिद्रासुपिष्टम् ॥
विधौ शुद्धिहेतौ समुस्तं सुपिष्टं
विधेयं सुगन्धाय वृद्धोपदेशात् ।
समूलाश्वगन्धासप्रस्थं विचूर्णं
शुभं वारि दत्त्वा गुणं वेदयुक्तम् ॥
यदा शेषभूतं तदा योगयोगे
पचेत् पाकविज्ञो भृशं दर्व्विचालात् ।
पचेद्गाविदुग्धं घृतस्यापि तुल्यं
विदारीं सप्रस्थां तथा तेन वैद्यः ॥
तथा शाल्मलीतोयदत्तं सप्रस्थं
वितार्य्यावतिष्ठेद्धृतं योगराजः ॥”

**ध्वजवान्,** [त्] त्रि, (ध्वजोऽस्यास्तीति । ध्वज + मतुप् । मस्य वः ।) केतनयुक्तः । ब्राह्मणो ब्राह्मणं घातयित्वा तस्यैव शिरःकपालमादाय तीर्थान्यनुसञ्चरेत् । यथा, --
“शिरःकपाली ध्वजवान् भिक्षार्थी कर्म्म वेदयन् ।
ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात् ॥
ध्वजवान् कृत्वा शवशिरोध्वजमिति मनुस्मर-
णात्
अन्यच्छिरःकपालन्दण्डाग्रसमारोपितं ध्वजशब्दवाच्यं गृह्णीयात् ॥” इति मिताक्षरा ॥
(ध्वजः शौण्डिकविपणिपताका विद्यतेऽस्येति ।
शौण्डिकः । यथा, मनुः । ४ । ८४ ।
“न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः ।

**ध्वण**, ध्वाने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) वकारयुक्तः । ध्वणति मृदङ्गः ।
इति दुर्गादासः ॥

**ध्वन**, त् क शब्दे । इति कविकल्पद्रुमः ॥ (अदन्त-चुरां परं-अकं-सेट् ।) दन्त्योपधः । भाषवचा-
दीनां प्रयोगादन्यत्र शब्दे ध्वनावित्यादि यत्र
श्रूयते प्रायेण तत्राव्यक्तशब्दे इति बोध्यम् ।
ध्वनयति मृदङ्गः । इति दुर्गादासः ॥

**ध्वन**, मि रवे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) वकारयुक्तः । मि, ध्वनयति ध्वानयति मृदङ्गः । इति दुर्गादासः ॥

**ध्वनः**, पुं, (ध्वन ध्वाने + भावे बाहुलकात् अप् ।) शब्दः । इति भरतद्विरूपकोषः ॥

**ध्वनमोदी**, [न्] पुं, (ध्वनेन शब्देन मोदयतीति । मुद + णिनिः ।) भ्रमरः । इति शब्दरत्नावली ॥

**ध्वनिः**, पुं, (ध्वननमिति । ध्वन + “खनिकष्यज्य-सीति ।” उणां ४ । १३९ । इति इः ।) शब्दः ।
इत्यमरः । १ । ७ । २२ ॥
मृदङ्गादिशब्दः ।
यथा, --
“शब्दो ध्वनिश्च वर्णश्च
मृदङ्गादिभवध्वनिः ।
कण्ठसंयोगजन्मानो वर्णास्ते कादयो मताः ॥”
इति भाषापरिच्छेदः ॥
(धन्यतेऽस्मिन्निति । ध्वन + अधिकरणे इः ।)
उत्तमकाव्यम् । यथा, --

**ध्वनिनाला**, स्त्री, (ध्वन्युत्पादकं नालं यस्याः ।) वीणा । वेणुः । काहलः । इति मेदिनी । ले, १५५ ॥

**ध्वनिविकारः**, पुं, (ध्वनेर्विकारः ।) काकुः । शोकभयादिना शब्दविकृतिः । इति हेमचन्द्रः ।
६ । ४६ ॥

**ध्वन्स**, उ ऌ ङ गतौ । भ्रंशे । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-गतौ सकं-भ्रंशे अकं-सेट् । उदित्वात् क्त्रावेट् ।) उ, ध्वंसित्वा ध्वस्त्वा । ऌ, अध्वसत् । ङ, ध्वंसते । भ्रंशः अधःपतनम् । इति दुर्गादासः ॥

**ध्वस्तं**, त्रि, (धस्यते स्मेति । धन्स भ्रंशे + क्तः ।) च्युतम् । गलितम् । इत्यमरः । ३ । १ । १०४ ॥
(यथा, भागवते । ७ । २ । ३० ।
“प्रकीर्णकेशं ध्वस्ताक्षं रभसा दष्टदच्छदम् ॥”)
नष्टम् । (यथा, पञ्चदश्याम् । ७ । १४१ ।
“क्षुधया पीड्यमानोऽपि न विषं ह्यत्तुमिच्छति ।
मिष्टान्नध्वस्ततृड्जानन्नामूढस्तज्जिघत्सति ॥”)

**ध्वा(ध्मा)क्ष**, इ काङ्क्षे । घोररुते । इति कविकल्प-द्रुमः ॥ (भ्वां-परं-सकं-अकं-च सेट् ।) घोररुत-
मिह तिरश्चामेव घोरशब्दः । इ, ध्वा(ध्मा)ङ्क्षति
काकः । नमध्यपाठेनैव सिद्धे अस्येदनुबन्धो वेदे-
षूच्चारणभेदार्थः । इति दुर्गादासः ॥

**ध्वा(ध्मा)ङ्क्षः**, पुं, (ध्वा(ध्मा)ङ्क्षति उच्चैः रौतीति । ध्वा(ध्मा)क्षि घोररुते + अच् ।) काकः । (यथा,
मृच्छकटिके ९ अङ्के ।

सूनाचक्रध्वजवतां वेशेनैव च जीवताम् ॥”)

**ध्वजिनी**, स्त्री, (ध्वजोऽस्त्यस्याः । ध्वज + इनिः ।
डीप् ।) सेना । इत्यमरः । २ । ८ । ७८ ॥
(यथा, रघुः । ७ । ४० ।
“मत्स्यध्वजा वायुवशाद्विदीर्णै-
र्मुखैः प्रवृद्धध्वजिनीरजांसि ।
बभुः पिबन्तः परमार्थमत्स्याः
पर्य्याविलानीव नवोदकानि ॥”)

**ध्वजी**, [न्] पुं, (ध्वजोऽस्त्यस्येति । ध्वज + “अत
इनिठनौ ।” ५ । २ । ११५ ॥ इति इनिः ।) ब्राह्मणः ।
पर्व्वतः । रथः । सर्पः । घोटकः । इति मेदिनी ।
ने, ७७ ॥ मयूरः । इति राजनिर्घण्टः ॥ शौण्डिकः ।
इति हेमचन्द्रः ॥ (यथा, याज्ञवल्क्ये । १ । १४१ ।
“प्रतिग्रहे सूनिचक्रिध्वजिवेश्यानराधिपाः ॥”
ध्वजविशिष्टे, त्रि । यथा, महाभारते । १ । २२६ । २८ ।
“कृतास्त्रौ शस्त्रसम्पन्नौ रथिनौ ध्वजिनावपि ॥”
चिह्नयुक्ते च । यथा, मनुः । ११ । ९३ ।
“सुरापानापनुत्यर्थं बालवासा जटी ध्वजी ॥”)

**ध्वजोत्थानं**, क्ली, (ध्वजस्य इन्द्रध्वजस्य उत्-
थानम् ।) शक्रोत्सवः । इति त्रिकाण्डशेषः ॥
एतव् भाद्रशुक्लद्वादश्यां भवति । इति स्मृतिः ॥

“इदमुत्तममतिशयिनि व्यङ्ग्ये
वाच्याद्ध्वनिर्बुधैः
कथितः ॥”
इति काव्यप्रकाशः ॥
(यथाच साहित्यदर्पणे । ४ । २ -- ३ ।
“वाच्यातिशयिनि व्यङ्ग्ये ध्वनिस्तत् काव्यमुत्तमम् ।
वाच्यादधिकचमत्कारिणिव्यङ्ग्यार्थे ध्वन्यतेऽस्मि-
न्निति व्युत्पत्त्या ध्वनिर्नामोत्तमं काव्यम् ॥
भेदौ ध्वनेरपि द्वावुदीरितौ लक्षणाभिधामूलौ ।
अविवक्षितवाच्योऽन्यो विवक्षितान्यपरवाच्यश्च ॥
तत्राविवक्षितवाच्यो नाम लक्षणामूलो ध्वनिः ।
लक्षणामूलत्वादेवात्र वाच्यमविवक्षितं वाधित-
स्वरूपम् ।
विवक्षितान्यपरवाच्यस्त्वभिधामूलः।
अतएवात्र वाच्यं विवक्षितम् । अन्यपरं व्यङ्ग्य-
निष्ठम् । अत्र हि वाच्योऽर्थः स्वरूपं प्रकाशयन्नव
व्यङ्ग्यार्थस्य प्रकाशकः । यथा प्रदीपो घटस्य ।
अभिधामूलस्य बहुविषयतया पश्चान्निर्द्देशः ॥”
अस्य बहवो भेदाः सन्ति । ते तु तत्रैव चतुर्थ-
परिच्छेदे विस्तरशो द्रष्टव्याः ॥)

**ध्वनिग्रहः**, पुं, (ग्रह + भावे अप् । ध्वनेः शब्दस्य
ग्रहो ग्रहणं यस्मात् ।) श्रोत्रम् । इति त्रिकाण्ड-
शेषः ॥ शब्दज्ञानञ्च ॥

**ध्वनितः**, त्रि, (ध्वन्यते स्मेति । ध्वन + क्तः ।)
शब्दितः । कृतस्वनमृदङ्गादिः । इति भरतः ॥

“शुष्कवृक्षस्थितो ध्वा(ध्मा)ङ्क्ष आदित्याभिमुख-
स्तथा ।
मयि चोदयते वामं चक्षुर्घोरमशंशयम् ॥”)
मत्स्यभक्षकपक्षी । इत्यमरः । ३ । ३ । २१८ ॥
तक्षकः । भिक्षुकः । इति मेदिनी । षे, १६ ॥

**ध्वाङ्क्षजङ्घा**, स्त्री, (ध्वाङ्क्षस्य जङ्घेव आकृति-
र्यस्याः ।) काकजङ्घा । इति राजनिर्घण्टः ॥

**ध्वाङ्क्षजम्बूः**, स्त्री, (ध्वाङ्क्षः काकस्तद्वत् कृष्णवर्णा
जम्बूः । यद्वा, ध्वाङ्क्षप्रिया जम्बूः ।) काकजम्बूः ।
इति राजनिर्घण्टः ॥

**ध्वाङ्क्षतुण्डी**, स्त्री, (ध्वाङ्क्षस्य तुण्डमिवाकृतिः फले-
ऽस्त्यस्याः । ध्वाङ्क्षतुण्ड + अच् । ततो ङीष् ।)
काकनासालता । इति राजनिर्घण्टः ॥

**ध्वाङ्क्षदन्ती**, स्त्री, (ध्वाङ्क्षस्य दन्त इवाकृतिरस्त्यस्याः ।
अच् । ङीष् ।) काकतुण्डी । इति राज-
निर्घण्टः ॥

**ध्वाङ्क्षनखी**, स्त्री, (ध्वाङ्क्षस्य नखमिवाकृति-
रस्त्यस्याः । अच् । ङीष् ।) काकतुण्डी । इति
राजनिर्घण्टः ॥

**ध्वाङ्क्षनाम्नी**, स्त्री, (ध्वाङ्क्षस्य नाम नाम यस्याः ।)
काकोदुम्बरिका । इति राजनिर्घण्टः ॥

**ध्वाङ्क्षनाशिनी**, स्त्री, (ध्वाङ्क्षं नाशयतीति । नश +
णिनि । ङीप् ।) हपुषा । इति भावप्रकाशः ॥

**ध्वाङ्क्षनासा**, स्त्री, (ध्वाङ्क्षस्य नासा इव फल-
मस्याः ।) काकनासालता । इति राज-
निर्घण्टः ॥

|  | तत्पर्य्यायः । स्वनितः २ । इत्यमरः । ३ । १ । ९४ ॥ (यथा, राजतरङ्गिण्याम् । २ । ८९ । “समीरणसमाकीर्णमुण्डरन्ध्राग्रनिर्गतैः । ध्वनितैरनुशोचन्तमिवावस्थां तथाविधाम् ॥”) ध्वनिकाव्ययुक्तवाक्यादिश्च ॥ |  |
|---|---|---|

**ध्वाङ्क्षनासिका**, स्त्री, (ध्वाङ्क्षस्य नासिका इव फल-
मस्याः ।) काकनासालता । इति राज-
निर्घण्टः ॥

**ध्वाङ्क्षपुष्टः**, पुं, (ध्वाङ्क्षेण काकेन पुष्टः प्रति-
पालितः ।) कोकिलः । इति हारावली । ४४ ॥

**ध्वाङ्क्षमाची**, स्त्री, (ध्वाङ्क्षान् काकान् मञ्चते
पूजयति फलदानेनेति । मञ्च पूजायाम् +
अण् । गौरादित्वात् ङीष् ।) काकमाची ।
इति राजनिर्घण्टः ॥

**ध्वाङ्क्षवल्ली**, स्त्री, (ध्वाङ्क्षवत् वल्ली लता ।) काक-
नासा । इति राजनिर्घण्टः ॥

**ध्वाङ्क्षादनी**, स्त्री, (अद्यते भक्ष्यते या सा । अद
+ ल्युट् । स्त्रियां ङीप् । ध्वाङ्क्षाणां काकानाम-
दनी ।) काकतुण्डी । इति राजनिर्घण्टः ॥

**ध्वाङ्क्षारातिः**, पुं, (ध्वाङ्क्षाणामरातिः शत्रुः ।)
पेचकः । इति हलायुधः ॥

**ध्वाङ्क्षी**, स्त्री, (ध्वाङ्क्षवदाकृतिरस्त्यस्याः । अच् ।
ङीष् ।) कक्कोलिका । इति मेदिनी । षे, १६ ॥

**ध्वाङ्क्षोली**, स्त्री, काकोली । इति राजनिर्घण्टः ॥

**ध्वानः**, पुं, (ध्वन + भावे धञ् ।) शब्दः । इत्य-
मरः । १ । ७ । २२ ॥ (यथा, राजतरङ्गि-
ण्याम् । ३ । १८ ।
“शशामाक्रन्दितध्वानो न च चौरो व्यभाव्यत ॥”)

**ध्वान्तं**, क्ली, (ध्वन + “क्षुब्धस्वान्तध्वान्तेति ।” ७ ।
२ । १८ । इति क्तप्रत्ययेन निपातनात् साधुः ।)
अन्धकारः । इत्यमरः । १ । ८ । ३ ॥ (यथा,
भागवते । ३ । ८ । २४ ।
“फणातपत्रायुतमूर्द्धरत्न-
द्युभिर्हतध्वान्तयुगान्ततोये ॥”)

**ध्वान्तवित्तः**, पुं, (ध्वान्ते अन्धकारे वित्तः प्रथितः ।)
खद्योतः । इति शब्दरत्नारली ॥

**ध्वान्तशात्रवः**, पुं, (ध्वान्तस्य शात्रवः ।) श्योणाक-

वृक्षः । इति शब्दचन्द्रिका ॥ सूर्य्यचन्द्राग्नयश्च ॥

**ध्वान्ताराति**ः, पुं, (ध्वान्तस्य अरातिः ।) सूर्य्यः ।

इति हेमचन्द्रः । २ । १० ॥ चन्द्राग्नी च ॥

**ध्वान्तोन्मेषः**, पुं, (ध्वान्ते उन्मेषः प्रकाशो यस्य ।)

खद्योतः । इति त्रिकाण्डशेषः ॥

**ध्वृ**, कौटिल्ये । इति कविकल्पद्रुमः ॥ (भ्वां-परं-

सकं-अनिट् ।) वकारोपधः । कौटिल्यमिह
कुटिलीकरणम् । ध्वरति तृणं वायुः । इति
दुर्गादासः ॥

**न**

**न**, नकारः । तवर्गपञ्चमवर्णः व्यञ्जनविंशवर्णश्च ।

अस्योच्चारणस्थानं दन्तः । इति व्याकरणम् ॥
(यथा, शिक्षायाम् । १७ । “दन्त्या ऌतुलसाः
स्मृताः ॥”) तत्पर्य्यायः । मेषः २ दीर्घी ३
सौरिः ४ । इति बीजाभिधानम् ॥ तत्स्वरूपम् ।
यथा, --
“नकारं शृणु चार्व्वङ्गि ! कोटिविद्युल्लताकृतिम् ।
पञ्चदेवमयं वर्णं स्वयं परमकुण्डली ॥
पञ्चप्राणात्मकं वर्णं हृदि भावय पार्व्वति ! ॥”
इति कामधेनुतन्त्रम् ॥
“वामतः कुण्डली रेखा ऊद्‌र्ध्वाधःक्रमतः स्थिता ।
चन्द्रसूर्य्याग्निरूपा सा मात्रा वाणी प्रकीर्त्तिता ॥”
तस्य ध्यानं यथा, वर्णोद्धारतन्त्रे ।
“ध्यानमस्य नकारस्य वक्ष्यते शृणु भाविनि ! ।
दलिताञ्जनवर्णाभां ललज्जिह्वां सुलोचनाम् ॥
चतुर्भुजां कोटराक्षीं चारुचन्दनचर्च्चिताम् ।
कृष्णाम्बरपरीधानामीषद्धास्यमुखींसदा ॥
एवं ध्यात्वा नकारन्तु तन्मन्त्रं दशधा जपेत् ॥”
अस्य नामानि यथा, --
“नो गर्ज्जिनी क्षमा सौरिर्व्वारुणी विश्वपावनी ।
मेषश्च सविता नेत्रं दन्तुरो नारदोऽञ्जनः ॥
ऊद्‌र्ध्वचामी द्विरण्डश्च वामपादाङ्गुलेर्मुखम् ।
वैनतेयस्तुतिर्व्वर्त्मस्तरणिर्व्वालिरागमः ॥
वामनो ज्वालिनी दीर्घो निरीहः सुगतिर्व्वियत् ।
शब्दात्मा दीर्घघोणा च हस्तिनापुरमेचकौ ॥
गिरिनायकनीलौ च शिवोऽनादिर्म्महामतिः ॥”
इति नानातन्त्रशास्त्रम् ॥
(अनुबन्धविशेषः । यथा, कविकल्पद्रुमे ।
“नः स्वादिः पो मुचादिः ।” इति ॥ काव्यादौ
अस्य प्रथमप्रयोगे फलं यथा, वृत्ररत्नाकर-
टीकायाम् ।
“दो धः सौख्यं मुदं नः सुखभयमरणक्लेशदुःखं
पवर्गः ॥”)

**न**, व्य, निषेधः । (यथा, मनुः । ६ । ४७ ।

“अतिवादांस्तितिक्षेत नावमन्येत कञ्चन ।
नचेमं देहमाश्रित्य वैरं कुर्व्वीत केनचित् ॥”)
उपमा । इति मेदिनी । ने १ ॥ आद्यस्य पर्य्यायः ।
जन्तुविशेषः । नेउल । इति वेजी इति च
भाषा । तत्पर्य्यायः । पिङ्गलः २ सर्पहा ३ बभ्रुः
४ । इति हेमचन्द्रः । ४ । ३६८ ॥ सूचीवदनः ५
सर्पारिः ६ लोहिताननः ७ । (यथा, महा-
भारते । १२ । १५ । २० ।
“सत्त्वैः सत्त्वा हि जीवन्ति दुर्ब्बलैर्ब्बलवत्तराः ।
नकुलो मूषिकानत्ति विडालो नकुलन्तथा ।
विडालमत्ति श्वा राजन् ! श्वानं व्यालमृग-
स्तथा ॥”)
तस्य मांसगुणाः । पिच्छिलत्वम् । वातनाशि-
त्वम् । श्लेष्मपित्तकारित्वञ्च । इति राजनि-
र्घण्टः ॥ पाण्डुराजस्य चतुर्थपुत्त्रः स माद्री-
गर्भे अश्विनीकुमाराभ्यां जातः । इति महा-
भारतम् ॥ पुत्त्रः । इति शब्दमाला ॥ शिवः ।
थथा, विदग्धमुखमण्डने ।
“युधिष्ठिरस्य या कन्या नकुलेन विवाहिता ।
पूजिता सहदेवेन सा कन्या वरदा भवेत् ॥”
कुलरहिते, त्रि ॥

**नकुलाढ्या**, स्त्री, (नकुलेन नकुलगन्धेन आढ्या

प्रचुरा ।) गन्धनाकुली । इति राजनिर्घण्टः ॥

**नकुली**, स्त्री, (नकुल + ङीष् ।) कुक्कुटी । मांसी ।

इति मेदिनी । ले, १०० ॥ शङ्खिनी । इति
धरणिः ॥ कुङ्कुमम् । इति हेमचन्द्रः ॥ हकारः ।
इति बीजाभिधानम् ॥ नकुलस्य भार्य्या च ॥

**नकुलीशः**, पुं, (नकुल्या ईशः ।) भैरवविशेषः ।

यथा, पीठमालायाम् ।
“नकुलीशः कालिपीठे दक्षपादाङ्गुली मम ॥”
हकारः । यथा, --
“हकारो नकुलीशोऽपि हंसः प्राणोऽङ्कुशः
प्रिये ! ।
महेशो नकुली चैव वराहो गगनं रविः ॥
लिङ्गं शून्यो महाशून्यः प्राणश्च परमेश्वरि ! ॥”
इति हकारपर्य्याये बीजाभिधानम् ॥

**नकुलेष्टा**, स्त्री, (नकुलानामिष्टा प्रिया ।) रास्ना ।

इत्यमरः । २ । ४ । ११५ ॥ भेदनार्ह इति भाषा ।
एतत्पर्य्यायो यथा, --
“नाकुली सुरसा नागसुगन्धा गन्धनाकुली ।

नहि २ अ ३ नो ४ अभावः ५ । इत्यमरः ।
३ । ४ । ११ ॥ अना ६ ना ७ । इति भरतः ॥
नञर्थश्च ॥

**नंशुकः**, त्रि, (नश्यतीति । नश + "पचिनश्यो-

र्णुकन्कनुमौ च ।" उणां २ । ३० । इति णुकन्
नुमागमश्च ।) नाशकः । इति सिद्धान्तकौमु-
द्यामुणादिवृत्तिः ॥

**नंष्टा**, [ऋ] त्रि, (नश + तृच् । "मस्जिनशो-

र्झलि ।" ७ । १ । ६० । इति नुम् ।) नाशा-
श्रयः । इति नशधातोस्तृणि नुनागमनिष्पन्नः ॥

**नः**, पुं, (नमतीति । नम + अन्येष्वपीति डः ।)

सुगतः । बन्धः । द्विरण्डः । स्तुतः । इति मेदिनी ।
ने, १ ॥ रत्नम् । इत्येकाक्षरकोषः ॥ द्वितीया-
चतुर्थीषष्ठीबहुवचनान्तस्यास्मच्छब्दस्यसान्त-
रूपोऽयञ्च ॥ (यथा, मुग्धबोधे ।
"पुष्णातु वो नोऽपि हरिर्घनं वो
ददातु नो हन्त्वशुभानि वो नः ॥")

**नःक्षुद्रः**, त्रि, (नसा नासिकया क्षुद्रः ।) क्षुद्र-

नासिकः । इति हेमचन्द्रः । ३ । ११५ ॥

**नकुटं**, क्ली, नासिका । इति शब्दमाला ॥

**नकुलः**, पुं, (नास्ति कुलं यस्य । "नभ्राण्नपा-

दिति ।" ६ । ३ । ७५ । इति नञो न लोपादि ।)

नकुलेष्टा भुजङ्गाक्षी सर्पाङ्गी विषनाशिनी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**नक्क**, क नाशने । इति कविकल्पद्रुमः ॥ (चुरां-

परं-सकं-सेट् ।) कोपधः । नाशनं नष्टीकर-
णम् । क, नक्कयति पापं गङ्गा । इति दुर्गा-
दासः ॥

**नक्तं**, [म्] व्य, रजनौ । इत्यमरः । ३ । ४ । ६ ॥

(यथा, माघे । १ । २१ ।
"रथाङ्गपाणेः पटलेन रोचिषा-
मृषित्विषः संवलिता विरेजिरे ।
चलत्पलाशान्तरगोचरास्तरो-
स्तुषारमूर्त्तेरिव नक्तमंशवः ॥")

**नक्तं**, क्ली, (नज + क्तः ।) रात्रिः । लक्षणया

नक्तव्रतम् । यथा, --
"उपवासात् परं भैक्षं भैक्षात् परमयाचितम् ।

अयाचितात् परं नक्तं तस्मान्नक्तेन वर्त्तयेत्
॥
देवैस्तु भुक्तं पूर्ब्बाह्णे मध्याह्ने
ऋषिभिस्तथा ।
अपराह्णे पितृभिर्भुक्तं सन्ध्यायां
गुह्यकादिभिः ॥
सर्व्ववेलामतिक्रम्य नक्ते भुक्तमभोजनम् ।
वामाचारो महादेवो नक्तेनैवोद्धरेन्नृणाम् ॥”
इति देवीपुराणम् ॥
व्रतविशेषः । यथा, --
“दशम्याञ्चैकभक्तन्तु शुद्धचित्तो दृढव्रतः ।
नक्तं वापि तथा कृत्वा दशम्यां नियतः
सदा ॥
क्रियते चासमर्थेन नक्तमेकादशीदिने ।
नक्ते चापि विधिः प्रोक्तः फलाहारे तथैव च
॥
दिवसस्याष्टमे भागे मन्दीभूते दिवाकरे ।
नक्तं तच्च विजानीयात् न नक्तं निशि
भोजनम् ॥
नक्षत्रदर्शनान्नक्तं गृहस्थेन विधीयते ।
यतेर्दिनाष्टमे भागे रात्रौ तस्य निषेधनम् ॥”
इति मात्स्ये एकादशीमाहात्म्यम् ॥ * ॥
अथ नक्तव्रतम् ।
“तथा च स्कन्दपुराणे ।
‘प्रदोषव्यापिनी ग्राह्या सदा नक्तव्रते तिथिः
।
उदयात्तु तदा पूज्या हरेर्नक्तव्रते तिथिः ॥’
नियमश्च सामान्यव्रतधर्म्मत्वेनोक्तः ।
‘ब्रह्मचर्य्यं तथा शौचं सत्यमामिषवर्ज्जनम्
॥’
इत्यादिर्ग्राह्यः ॥
नक्तलक्षणञ्च भविष्यदेवीपुराणयोः ।
‘हविष्यभोजनं स्नानं सत्यमाहारलाघवम्
।
अग्निकार्य्यमधःशय्यां नक्तभोजी सदाचरेत्
॥’
एवं नक्तव्रतस्य गुरुत्वेन प्रागुक्तवायुपुराण-
वचने नक्तमिति हविष्यान्नादिभोजनस्य
काल-

कर्पटः । इत्यमरटीकायां भरतः ॥ न्याक्डा
इति भाषा ॥

**नक्तचारी**, [न्] पुं, (नक्ते रात्रौ चरतीति ।
चर + णिनिः ।) विडालः । पेचकः । इति
त्रिकाण्डशेषः ॥ राक्षसः ॥ रात्रिचरमात्रे, त्रि
॥

**नक्तञ्चरः**, पुं, (नक्तं चरतीति । चर + “चरेष्टः ।”
३ । २ । १६ । इति टः ।) राक्षसः । इति
हलायुधः ॥ गुग्गुलुः । इति जटाधरः ॥ चौरः
।
पेचकः । (रात्रिचरमात्रे, त्रि । यथा, मार्क-
ण्डेयपुराणे । २९ । २० ।
“नक्तञ्चरेभ्यो भूतेभ्यो बलिमाकाशतो हरेत्
॥”)

**नक्तमालः**, पुं, (नक्तं रात्रौ आ सम्यक्प्रकारेण
अलति पर्य्याप्नोतीति । आ + अल + अच्
।)
करञ्जवृक्षः । इत्यमरः । २ । ४ । ४७ ॥
(यथा,
रघुः । ५ । ४२ ।
“स नर्म्मदारोधसि सीकरार्द्रै-
र्मरुद्भिरानर्त्तितनक्तमाले ॥”)

**नक्तमुखा**, स्त्री, (नक्तं नक्तव्रताङ्गं मुखं आदि-
भागो यस्याः ।) रात्रिः । इति हलायुधः ॥

**नक्तव्रतं**, क्ली, (नक्ते रात्रौ भोजनरूपं यद्व्रतम् ।)
दिवाभोजनाभावविशिष्टरात्रिभोजनम् । यथा,
“हविष्यभोजनं स्नानं सत्यमाहारलाघवम् ।
अग्निकार्य्यमधःशय्यां नक्तभोजी षडाचरेत्
॥”
इति भविष्यपुराणम् ॥

**नक्ता**, स्त्री, (अनिष्टकारित्वात् नक्तवत् मलिन-
त्वमस्त्यस्येति । अच् । टाप् ।) कलिकारी ।
इति राजनिर्घण्टः ॥ ईशलाङ्गला इति भाषा
॥
(कलिकारीशब्देऽस्या विवरणं ज्ञातव्यम् ॥)

नक्षियजिवधिपतिभ्योऽत्रन् ।” उणां । ३
। १०५ ।
इति अत्रन् ।) मुक्ता । इति राजनिर्घण्टः
। तारा ।
तत्पर्य्यायः । ऋक्षम् २ भम् ३ तारा ४
तारका ५
उडु ६ । इत्यमरः । १ । ३ । २१ ।
तारकम् ७ ।
इति शाश्वतः ॥ तारः ८ । इति व्याडिः
॥
दाक्षायण्यः । तास्तु अश्विनी १ भरणी
२
कृत्तिका ३ रोहिणी ४ मृगशिरः ५ आर्द्रा
६
पुनर्व्वसुः ७ पुष्यः ८ अश्लेषा ९ मघा
१० पूर्ब्बफल्-
गुनी ११ उत्तरफल्गुनी १२ हस्ता १३
चित्रा १४
स्वातिः १५ विशाखा १६ अनुराधा १७
ज्येष्ठा १८
मूला १९ पूर्ब्बाषाढा २० उत्तराषाढा
२१
श्रवणा २२ धनिष्ठा २३ शतभिषा २४
पूर्ब्ब-
भाद्रपदा २५ उत्तरभाद्रपदा २६ रेवती
२७
इत्यमरः ज्योतिषश्च ॥ एता अभिजिता
सह
अष्टाविंशतिनक्षत्राणि भवन्ति ॥ * ॥
आसां
क्रमेणाधिदेवता यथा । अश्वि-१ यम-२
दहन-३
कमलज-४ शशि-५ शूलभृत्-६
अदिति-७ जीव-८
फणि-९ पितरः-१० । योन्य-११
र्य्यम-१२
दिनकृत्-१३ त्वष्टृ-१४ पवन-१५
शक्राग्नि-१६

परं न तु नक्तव्रतपरं तथात्वे उत्तरोत्तरगुरु-
व्रतोपदेशप्रस्तावे तदनन्तरं केवलं
हविष्यान्नोप-
देशानुपपत्तेः । स्मृतिः ।
'नक्तं निशायां कुर्व्वीत गृहस्थो
विधिसंयुतः ।
यतिश्च विधवा चैव कुर्य्यात्तत्
सदिवाकरम् ॥
सदिवाकरन्तु तत् प्रोक्तमन्तिमे घटिकाद्वये
।
निशानक्तन्तु विज्ञेयं यामार्द्धे प्रथमे सदा
॥'
मार्कण्डेयः ।
'एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन दानेन नैवाद्वादशिको भवेत् ॥'
अत्र विष्णुपूजापारणयोरङ्गान्तरापेक्षया
प्राधा-
न्यमवगम्यते । आनुकल्पिकेऽपि
आवश्यक-
त्वात् ।" इत्येकादशीतत्त्वम् ॥ * ॥
सौरनक्तकालो
यथा, --
"कुशमूलं यवमात्रं स्वच्छायाद्विगुणे क्षणे ।
भक्ष्यं मितौदनं नक्तं शुद्धोपवसनं तथा ॥"
इति विधानसप्तमीप्रकरणे तिथ्यादितत्त्वम्
॥
(महादेवः । यथा, महाभारते । १३ । १७
। ९३ ।
"नक्तं कलिश्च कालश्च मकरः
कालपूजितः ॥"
पुं, पृथोः पुत्त्रः । यथा, ब्रह्माण्डे । ३६ ।
"पृथोश्चापि सुतो नक्तो नक्तस्यापि गयः
स्मृतः ॥")

**नक्तकः**, पुं, (नक्तमिव कायति मलिनतयेति ।

कै + कः । यद्वा, नज + क्त । ततः स्वार्थे
कन् ।)

**नक्रं**, क्ली, (नक्रवत् आकृतिरस्त्यस्येति । अच् ।)

अग्रदारु । झाणकाठ इति भाषा । नासिका ।
इति मेदिनी । रे, ५२ ॥

**नक्रः**, पुं, (न क्रामति दूरस्थलमिति । क्रम +

अन्येष्वपीति डः । नभ्राडिति नलोपो न ।)
कुम्भीरः । इत्यमरः । १ । १० । २१ ॥
(यथा,
पञ्चतन्त्रे । ३ । ४३ ।
"नक्रः स्वस्थानमासाद्य गजेन्द्रमपि कर्षति ।
स एव प्रच्युतः स्थानात् शुनापि परिभूयते
॥"
मकरः । थया, कादम्बर्य्याम् । "तथा
चेन्नाचरेयं
नयेत नक्रकेतनः क्षणेनैकेनाकीर्त्तनीयां दशां
जनं चैनम् ॥" ग्राहः । यथा, रघुः । १६ ।
५५ ।
"स तीरभूमौ विहितोपकार्य्या-
मानायिभिस्तामपकृष्टनक्राम् ॥")

**नक्रराजः**, पुं, (नक्राणां कुम्भीरादीनां राजा

श्रेष्ठत्वात् । "राजाहःसखिभ्यष्टच् ।" ५ ।
४ । ९१ । इति टच् ।) जलजन्तुविशेषः ।
हाङ्गर इति भाषा । तत्पर्य्यायः । ग्राहः २
जलकिराटः ३ जलाटकः ४ । इति हारा-
वली । ७७ ॥

**नक्रा**, स्त्री, (नक्रवदाकृतिरस्त्यस्या इति अच् ।

टाप् ।) नासिका । इति शब्दरत्नावली ॥

**नक्षत्रं**, क्ली, (नक्षति शोभां गच्छति स्थानात्

स्थानान्तरं गच्छति वा । नक्ष गतौ + "अमि-

मित्राश्च १७ ॥ शक्रो १८ निरृति १९
स्तोयम् २०
विश्वविरिञ्ची २१ हरि-२२ र्व्वसु-२३
र्व्वरुणः-२४ ।
अजपदो २५ ऽहिर्ब्रध्नः २६ पूषा २७
चेतीश्वरा
भानाम् ॥ * ॥ आसां गणा यथा ।
"उग्रः पूर्ब्बमघान्तकाः ११ । २० । २५
। १० ।
२ । ध्रुवगणस्त्रीण्युत्तराणि स्वभू-१२ ।
२१ । २६ ।
४ । र्व्वातादित्यहरित्रयं चरगणः १५ । ७
। १२ ।
२३ । २४ । पुष्याश्विहस्ता ८ । १ ।
१३ । लघुः ।
चित्रामित्रमृगान्त्यभम् १४ । १७ । ५ ।
२७ ।
मृदुगणस्तीक्ष्णोऽहिरुद्रेन्द्रयुक् ९ । ६ ।
१८ । १९ ।
मिश्रोऽग्निः सविशाखभः । ३ । १६ ।
शुभफलाः
सर्व्वे स्वकृत्ये गणाः ॥" * ॥
अधोमुखनक्षत्राणि यथा ।
"अश्लेष-९ वह्नि-३ यम-२ पित्र्य-१०
विशाख-१६
युक्तम्
पूर्ब्बात्रयम् ११ । २० । २५ शतभिषा
२४ च
नवाप्युडूनि ।
एतान्यधोमुखगणानि शिवानि नित्यं
विद्यार्घ्यभूमिखननेषु च भूषितानि ॥" *
॥
स्वनक्षत्रावधिनक्षत्राणां
जन्मसम्पदादिकथनं
यथा, --
"जन्म सम्पद्विपत् क्षेमः प्रत्यरिः साधको
वधः ।
मित्रं परममित्रञ्च जन्मभाच्च पुनः पुनः ॥
सर्व्वमङ्गलकार्य्याणि त्रिषु जन्मसु
कारयेत् ।

|  |  |  |
| --- | --- | --- |
|  |  | विवादश्राद्धभैषज्ययात्राक्षौराणि<br>वर्ज्जयेत् ॥<br>यात्रायां पथि बन्धनं कृषि विधौ<br>सर्व्वार्थनाशो<br>भवेत्<br>भैषज्ये मरणं तथा सुनियतं दाहो<br>गृहारम्भणे ।<br>क्षौरे रोगसमागमो बहुविधः<br>श्राद्धेऽर्थनाश-<br>स्तथा<br>वादे बुद्धिविनाशनन्त्वरिभयंप्राप्नोत्यसौ<br>जन्मभे ॥<br>नक्षत्रोत्पन्नरोगेषु भोगादि यथा, -- |

"जन्माधाने निधनभे प्रत्यरौ च विपत्करे ।
यदि व्याधिः समुत्पन्नः क्लेशाय मरणाय वा ॥
कृत्तिकासु यदा व्याधिर्नृणाञ्च प्रतिपद्यते ।
नवरात्रं भवेत् पीडा त्रिरात्रं रोहिणीषु च ॥
मृगशीर्षे पञ्चरात्रमार्द्रायां मुच्यतेऽसुभिः ॥
पुनर्व्वसौ तथा पुष्ये सप्तरात्रं विधीयते ।
नवरात्रं तथाश्लेषे मासमेकं मघासु च ॥
द्वौ मासौ पूर्ब्बफल्गुन्यामुत्तरासु त्रिपञ्चकम् ।
हस्तेषु सप्तमे मोक्षश्चित्रायामर्द्धमासकम्॥
मासद्वयं तथा स्वात्यां विशाखे दिनविंशतिम् ।
मैत्रे चैव दशाहानि ज्येष्ठायामर्द्धमासकम्॥
मूले न जायते मोक्षः पूर्ब्बाषाढे त्रिपञ्चकम् ।
उत्तरा दिनविंशत्या श्रवणे द्वौ च मासकौ ॥
धनिष्ठायामर्द्धमासं वारुण्याञ्च दशाहकम् ।
न च भाद्रपदे मोक्ष उत्तरासु त्रिपञ्चकम् ॥
रेवत्यां दिनविंशत्या चाहोरात्रं तथाश्विनी ।
प्राणैर्व्विमुच्यते नित्यं भरण्यां नात्र संशयः ॥
कौशिकेन सदादिष्टा नक्षत्रव्याधिसम्भवाः ।
नक्षत्रे प्रतिकर्त्तव्यं नक्षत्रपथजानता ॥"
नक्षत्रचतुर्भागबोधकानिचत्वारि नामाद्यक्ष-
राणि यथा । अ इ उ ए ३ । ओ व वि वु ४ ।
वे वो क कि ५ । कु घ ङ छ ६ । के को ह हि
७ ।
हु हे हो ड ८ । डि डु डे डो ९ । म मि
मु मे १० । मो ट टि टु ११ । टे टो प पि १२
।
पु ष ण ठ १३ । पे पो र रि १४ । रु रे रो
त १५ । ति तु ते तो १६ । न नि नु ने १७ ।
नो य यि यु १८ । ये यो भ भि १९ । भु ध फ
ढ २० । भे भो ज जि २१ । जु जे जो ख । ०
अभिजित् । खि खु खे खो २२ । ग गि गु
गे २३ । गो श शि शु २४ । शे शो द दि २५ ।
दु थ झ ञ २६ । दे दो च चि २७ । चु चे
चो ल १ । लि लु ले लो २ । ऋ लृ युक्त-
श्चाकारयुक्तेन ज्ञेयः । ह्रस्वेन दीर्घो ज्ञेयः ।
तालव्यशकारेण दन्त्यसकारो ज्ञेयः ।" इति
ज्योतिस्तत्त्वम् ॥

**नक्षत्रकान्तिविस्तारः,** पुं, (नक्षत्राणां कान्ति-

ज्येष्ठा शतभिषामूलाधनिष्ठाश्लेषकृत्तिकाः ।
चित्रामघाविशाखाः स्युस्तारा राक्षसदेवताः
॥
अश्विनी रेवती पुष्यः स्वाती हस्तः
पुनर्व्वसुः ।
अनुराधा मृगशिरः श्रवणा देवतारकाः ॥"
तथा ।
"स्वजातौ परमा प्रीतिर्म्मध्यमा भिन्नजातिषु
।
रक्षोमानुषयोर्न्नाशो वैरं दानवदेवयोः ॥"
गणापवादमाह गवाक्षतन्त्रे ।
"प्रणवस्त्र्यक्षरी माया व्योमव्यापी षडक्षरः ।
प्रासादो बहुरूपी च सप्त साधारणाः स्मृताः
॥"
शारदायाम् ।
"जन्म सम्पत् विपत् क्षेमः प्रत्यरिः साधको
वधः ।
मित्रं परममित्रञ्च जन्मादीनि पुनः पुनः ॥"
जन्मत्रिपञ्चसप्तानि वर्ज्जनीयानि नक्षत्राणि ।
तथा च राघवभट्टः ।
"रसाष्टनवभद्राणि युगयुग्मगतान्यपि ।
इतराणि न भद्राणि नक्षत्राणि ॥"
स्वनक्षत्रादेव-
नक्षत्रं गणनीयम् । तदज्ञाने स्वनामाद्यक्षर-
सम्बन्धिनक्षत्राद्गणनीयम् । तथा च ।
"प्रादक्षिण्येन गणयेत् साधकाद्यक्षरात्
सुधीः ॥"
इति तन्त्रसारः ॥

**नक्षत्रनेमिः** पुं, (नक्षत्रस्य नक्षत्रचक्रस्य नेमि-
रिव ।) विष्णुः । यथा, (महाभारते । १३ ।
१४९ । ६० ।
"नक्षत्रनेमिर्न्नक्षत्री क्षमः क्षामः समीहनः ॥"
"नक्षत्रैस्तारकैः सार्द्धं चन्द्रसूर्य्यादयो ग्रहाः
।
वाय्वाकाशमयैर्बद्धैर्न्निबद्धा ध्रुवसंज्ञितैः ॥
स ज्योतिषां चक्रं भ्रामयंस्तारामयस्य शिशु-
मारस्य पुच्छदेशे ध्रुवस्तस्य शिशुमारस्य
हृदये

विधानं संप्रवक्ष्यामि यथायोगेन
नारद ! ॥
संपूजितो हरिः कामान् विदधाति
यथेप्सितान् ।
चैत्रे मास्यसिताष्टम्यां यदा मूलगतः
शशी ॥
भगवन्तं सह लक्ष्म्या पूजयेच्च
विधानतः ।
नक्षत्रसन्निधौ दद्याद्विप्रेन्द्राय च
भोजनम् ॥
जानुनी चाश्विनीयोगे पूजयेदथ
भक्तितः ।
दोहदे च हविष्यान्नं
पूर्ब्बवद्द्विजभोजनम् ॥
आषाढाभ्यां तथा द्वाभ्यां द्वावूरू
पूजयेद्बुधः ।
सलिलं शिशिरं तत्र दोहदे च
प्रकीर्त्तितम् ॥
फल्गुनीद्वितये गुह्यं पूजनीयं
विचक्षणः ।
दोहदे च पयो गव्यं देयञ्च
द्विजभोजनम् ॥
कृत्तिकासु कटिः पूज्या
सोपहारैर्ज्जितेन्द्रियैः ।
देयञ्च दोहदे विष्णोः
सुगन्धिकुसुमोदकम् ॥
पार्श्वे भाद्रपदायुग्मे पूजयित्वा
विधानतः ।
गुडं सशालिकं दद्याद्दोहदे
देवप्रीतिदम् ॥
द्वे कुक्षी रेवतीयोगे दोहदे शुद्धमोदकम्
।
अनुराधासु जठरं कुलत्थांस्तत्र दोहदे
॥
श्रविष्ठायां तथा पृष्ठं शालिभक्तञ्च
दोहदे ।
पुष्ये मुखं पूजयेत दोहदे घृतपायसम्
॥

स्तस्या विस्तारो यत्र ।) धवलयावनालः । इति
राजनिर्घण्टः ॥

**नक्षत्रचक्रं**, क्ली, (नक्षत्राणां चक्रं यत्र ।) मन्त्र-
ग्रहणोक्तषट्चक्रान्तर्गतचक्रविशेषः । तथा च बृहच्छ्रीक्रमे ।
“उत्तराद्दक्षिणाग्रान्तु रेखां कुर्य्याच्चतुष्टयीम् ।
दश रेखाः पश्चिमाग्राः कर्त्तव्या वीरवन्दिते ! ॥
अकारादिक्षकारान्तान् द्विचन्द्रवह्निवेदकान् ।
भूमीन्दुनेत्रचन्द्रांश्च अश्लेषान्तं खगौ प्रिये ! ॥
द्विभूनेत्रनेत्रयुग्मांश्चेन्दुनेत्राग्निचन्द्रकान् ।
मघादिज्येष्ठपर्य्यन्तं द्वितीयं नवतारकम् ॥
वह्निभूमीन्दुचन्द्रांश्च युग्मेन्दुनेत्रवह्निकान् ।
वेदेन भेदिता वर्णा रेवत्यंशगताः क्रमात् ॥”
निबन्धे ।
“पूर्ब्बोत्तरात्रयञ्चैव भरण्यार्द्रा च रोहिणी ।
इमानि मानुषाण्याहुर्नक्षत्राणि मनीषिणः ॥

ज्योतिश्चक्रस्य नेमिवत् प्रवर्त्तकः स्थितो विष्णु-
रिति नक्षत्रनेमिः शिशुमारवर्णने विष्णुहृदय-
मिति श्रुतेः ॥” इति शाङ्करभाष्यम् ॥) चन्द्रः ।
ध्रुवः । रेवत्यां स्त्री । इति मेदिनी । मे, ६३ ॥

**नक्षत्रपः**, पुं, उडुपः । चन्द्रः । नक्षत्रं पातीति
व्युत्पत्त्या । (नक्षत्र + पा + कः ॥)

**नक्षत्रपुरुषः**, पुं, (नक्षत्रैः पुरुष इव ।) व्रत-
विशेषः । यथा, --
“श्रूयतां कथयिष्यामि नक्षत्रपुरुषव्रतम् ।
नक्षत्राङ्गाणि देवस्य यानि यानीह नारद ! ॥
मूलर्क्षं चरणौ विष्णोर्जङ्घे द्वे रोहिणी स्थिता ।
द्वे जानुनी तथाश्विन्यौ संस्थिते रूपधारिणः ॥
आषाढे द्वे तथा चोरू गुह्यस्थं फल्गुनीद्वयम् ।
कटिस्थाः कृत्तिकाश्चैव वासुदेवस्य संस्थिताः ॥
प्रोष्ठपद्यद्वयं पार्श्वं कुक्षिभ्यां रेवती स्थिता ।
उरःसंस्था त्वनुराधा श्रविष्ठा पृष्ठसंस्थिता ॥
विशाखा भुजयोर्हस्तः करद्वयमुदाहृतम् ।
पुनर्व्वसुरथाङ्गुल्यो नखाः सर्व्वं तथोच्यते ॥
ग्रीवास्थिता तथा ज्येष्ठा श्रवणः कर्णयोः स्थितः ।
मुखसंस्थस्तथा पुष्यः स्वातिर्द्दन्ताः प्रकीर्त्तिताः ॥
हनू द्वे वारुणश्चोक्तो नासा पैत्र्यमुदाहृतम् ।
प्राजापत्यञ्च नेत्राभ्यां रूपद्याम्नः प्रतिष्ठितम् ॥
शिरो रौद्रस्तथा चैव नक्षत्राङ्गमिदं हरेः ।
स्वातियोगे च दशनान् दोहदे तिलशष्कुली ।
भुजयुग्मं विशाखासु दोहदे परमोदनम् ॥
हस्ते हस्तौ तथा पूज्यौ यावकं दोहदे स्मृतम् ।
पुनर्व्वसावङ्गुलीश्च पटोलं तत्र दोहदे ॥
दातव्यं केशवप्रीत्यै ब्राह्मणस्य च भोजनम् ।
हनू शतभिषायां वै पूजयेत्तु प्रयत्नतः ॥
प्रियङ्गुरक्तशाल्यन्नं दोहदञ्च मधुद्विषः ।
मघासु नासिका पूज्या मधु दद्याच्च भोजनम्
मृगोत्तमाङ्गे नयने मृगमांसञ्च दोहदे ।
चित्रायोगे ललाटञ्च दोहदे चारु भोजनम् ॥
भरणीषु शिरः पूज्यं चारु भक्तञ्च दोहदे ।
सम्पूजनीया विद्वद्भिरार्द्रायोगे शिरोरुहाः ॥
विप्रांश्च भोजयेद्भक्त्या दोहदे च गुडार्द्रकम् ।
नक्षत्रयोगेष्वेतेषु संपूज्य जगतः पतिम् ॥
ततस्तु दक्षिणां दद्यात् स्त्रीपुंसोश्चारु वाससम्
छत्रोपानद्युगञ्चैव सप्त धान्यानि काञ्चनम् ॥
घृतपात्रञ्च गां दोग्ध्रीं ब्राह्मणाय निवेदयेत् ।
प्रतिनक्षत्रयोगेन पूजनीया द्विजातयः ॥
नक्षत्रज्ञाय विप्राय पृथग्दद्याच्च दक्षिणाम् ।
नक्षत्रपुरुषाख्यं हि व्रतानां व्रतमुत्तमम् ॥
एवं विधानतो ब्रह्मन् ! नक्षत्राङ्गो जनार्द्दनः ।

| | | पूजितो रूपधारी यैस्तैः प्राप्ता च सुकामिता ॥<br>एतत्तवोक्तं परमं पवित्रं धन्यं यशस्यं शुभरूपदायि ।<br>नक्षत्रपुंसः परमं विधानं शृणुष्व पुण्यामिह तीर्थयात्राम् ॥”<br>इति वामनपुराणे ७७ अध्यायः ॥<br>**नक्षत्रमाला**, स्त्री, (नक्षत्रसंख्यिका माला ।) सप्त-<br>विंशतिमौक्तिककृतहारः । इत्यमरः । २ । ६ । १०६ ।<br>“सप्तविंशतिरूपाढ्यै रूपकै रूपरूपकैः ।<br>नृत्ये नक्षत्रमाला स्यान्मुक्तावलिरिवोज्वला ॥”<br>इति सङ्गीतदामोदरः ॥<br>(नक्षत्राणां माला समूहः ।) नक्षत्रश्रेणी । |
|---|---|---|

(यथा, बृहत्संहितायाम् । १०५ । १३ ।
“यावन्नक्षत्रमाला विचरति गगने
भूषयन्तीह
भासा
तावन्नक्षत्रभूतो विचरति सह तैर्ब्रह्मणो
ऽह्नो-
ऽवशेषम् ॥”)

**नक्षत्रेशः**, पुं, (नक्षत्राणामीशः ।) चन्द्रः । (यथा,
साहित्यदर्पणे । २ । २० ।
“नक्षत्रेशकृतेक्षणो गिरिगुरोर्गाढां रुचिं
धारयन्
गामाक्रम्य विभूतिभूषिततनू राजत्युमा-
वल्लभः ॥”)
कर्पूरः । इत्यमरः । २ । ६ । १३० ॥

**नख**, सर्पणे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) प्रणखति । इति दुर्गादासः
॥

**नखं**, क्ली, पुं, (नह्यते इव शरीरे । नह बन्धे +
“नहेर्हलोपश्च ।” उणां ५ । २३ । इति
खः
हलोपश्च ।) अङ्गुलीकण्टकः । नह इति
हिन्दी भाषा । तत्तु उपधातुविशेषः
गर्भस्थ-
बालकस्य षष्ठमासे भवति । इति
सुखबोधः ॥
तत्पर्य्यायः । पुनर्भवः २ कररुहः ३
नखरः ४
इत्यमरः । २ । ६ । ८३ ॥ कामाङ्कुशः
५ करजः
६ पाणिजः ७ अङ्गुलीसम्भूतः ८
पुनर्नवः ९ ।
इति राजनिर्घण्टः ॥ कराग्रजः १०
करकण्टकः
११ स्मराङ्कुशः १२ रतिरथः १३
करचन्द्रः १४
कराङ्कुशः १५ । इति शब्दरत्नावली ॥
* ॥
नखं स्वल्पं नखी प्रीक्ता हनुर्हट्टविलासिनी ॥
नखद्वयं ग्रहश्लेष्मवातास्रज्वरकुष्ठहृत् ।
लघूष्णं शुक्रलं वर्ण्यं स्वादुव्रणविषापहम् ॥
अलक्ष्मीमुखदौर्गन्ध्यं हृत्पाकरसयोः कटुः
॥”
इति भावप्रकाशः ॥
स्वल्पनखस्य पर्य्यायः । नखी १ हनुः २
हट्ट-
विलासिनी ३ । तयोर्गुणाः ।
ग्रहश्लेष्मवातास्र-
ज्वरकुष्ठनाशित्वम् । लघुत्वम् । उष्णत्वम् ।
शुक्र-
लत्वम् । वर्ण्यत्वम् । स्वादुत्वम् ।
व्रणविषालक्ष्मी-
मुखदौर्गन्ध्यनाशित्वम् । पाकरसयोः
कटुत्वञ्च ।
इति भावप्रकाशः ॥ कण्डुभूतविनाशित्वम् ।
इति राजनिर्घण्टः ॥ रक्षोघ्नत्वम् । इति राज-
वल्लभः ॥ * ॥
“शैलरुहं व्याघ्रनखं हनुहट्टविलासिनी ।
शुषिराञ्जनकेशी च कपोताङ्घ्रिर्नली खुरः ॥
स्वल्पपत्रस्त्वसौ शुक्तिर्नखरी वदरीच्छदा ।
महांस्त्वसौ शङ्खनखः शङ्खाख्यो गन्धसारणः
॥”
इति भरतधृतवाचस्पतिः ॥

**नखः**, पुं, (नह्यतेऽनेनेति । नह + खः । हस्य
लोपः ।) खण्डम् । इति हेमचन्द्रः । ३ ।
२५८ ॥
(नखीनामगन्धद्रव्यम् । इति राजनिर्घण्टः ॥)

**नखकुट्टः**, पुं, (नखं कुट्टयति छिनत्तीति । कुट्ट +
अण् ।) नापितः । इति त्रिकाण्डशेषः ॥

**नखनिष्पावः**, पुं, (नखं निष्पवते फलसादृश्येन
अनुकरोतीति । निर् + पू + अण् । यद्वा,
नख-
वत् निष्पावः शिम्बी यस्य ।) निष्पावीभेदः ।
तत्पर्य्यायः । अङ्गुलिफला २ वृत्तनिष्पाविका
३
पुनर्भवच्छेदकरी गङ्गेव नखरञ्जनी ॥”
इति द्रब्यर्थोद्गटः ॥

**नखरायुधः**, पुं, (नखरमेव आयुधं यस्य ।)
सिंहः । व्याघ्रः । कुक्कुटः । इति
राजनिर्घण्टः ॥

**नखराह्वः**, पुं, (नखरं आह्वयते स्पर्द्धते इति ।
आ + ह्वे + कः ।) करवीरवृक्षः । इति
राज-
निर्घण्टः ॥

**नखरी**, स्त्री, (नखरः आकृतिसादृश्येनास्त्यस्या
इति । अच् । गौरादित्वात् ङीष् ।) नखी ।
इति
शब्दमाला ॥ क्षुद्रनखी । इति
काचिद्रत्नमाला ॥

**नखवृक्षः**, पुं, (नख सर्पणे + अच् । नखो वृक्षः ।
इति नित्यकर्म्मधारयः ।) नीलवृक्षः । इति
राजनिर्घण्टः ॥ (नीलवृक्षशब्देऽस्य
विवरणं
ज्ञातव्यम् ॥)

**नखशङ्खः**, पुं, (नख इव शङ्खः ।) क्षुद्रशङ्खः । इति
शब्दरत्नावली ॥

**नखाङ्कं**, क्ली, (नखमिव अङ्कं यस्य ।) व्याघ्रनखी ।
इति शब्दरत्नावली ॥

**नखाङ्गं**, क्ली, (नखस्य अङ्गमिव अङ्गं यस्य ।)
नखी । इति काचिद्रत्नमाला ॥

**नखायुधः**, पुं, (नखमेव आयुधं यस्य ।) व्याघ्रः ।
इति राजनिर्घण्टः ॥ सिंहकुक्कुटौ च ॥

**नखालिः**, पुं, (नखमिव अलतीति । अल पर्य्याप्तौ +
इन् ।) क्षुद्रशङ्खः । इति शब्दचन्द्रिका ॥
(नखस्य
आलिः ।) नखश्रेणी च ॥

**नखालुः**, पुं, (नखतीति । नख सर्पणे + आलुच् ।)
नीलवृक्षः । इति राजनिर्घण्टः ॥

रतिक्रीडायां नखाघातस्थानानि यथा, --
“नखाघातः प्रदातव्यो यथास्थानानि कर्म्मसु ।
पार्श्वयोः स्तनयोश्चैव ऊरौ चैव नितम्बके ॥
कक्षस्थले च कर्णान्ते कपाले बाहुमूलके ।
ग्रीवायां कण्ठदेशे च नखाघातं समाचरेत् ॥
तथा सर्व्वशरीरेषु नखं दद्यात् शनैः शनैः ॥”
इति कामशास्त्रम् ॥
“न नखैर्व्विलिखेद्भूमिं गाञ्च सद्वेशयेन्नहि ।
न स्वाङ्गे नखवाद्यं वै कुर्य्यान्नाञ्जलिना पिबेत् ॥”
इति कूर्म्मे उपविभागे १५ अध्यायः ॥

**नखं**, क्ली, स्त्री, (नखमिव आकृतिरस्त्यस्येति । अच् ।) नखीनामगन्धद्रव्यम् । नखी इति ख्यातः । तत्पर्य्यायः । शुक्तिः २ शङ्खः ३ खुरः ४ कोलदलम् ५ । इत्यमरः । २ । ४ । १३० ॥
करजाख्यः ६ अश्वखुरः ७ नखः ८ व्याघ्रनखः ९ नखी १० ।
“द्विधा शङ्खनखाख्योऽन्यः शुक्त्याख्यो वदरीच्छदः ।”
इति रत्नमालायाम् । १४४ ॥
कररुहः ११ सिम्बी १२ शफः १३ चलः १४ कोशी १५ करजः १६ हनुः १७ नागहनुः १८ पाणिजः १९ वदरीपत्रः २० रूप्यः २१ पण्यविलासिनी २२ सन्धिनालः २३ पाणिरुहः २४ ।
इति राजनिर्घण्ठः ॥ व्याघ्रायुधम् २५ चक्रकारग्राम्या ४ नखगुच्छफला ५ ग्रामजनिष्पावी ६ नखफलिनी ७ । अस्या गुणाः । कषायत्वम् । मधुरत्वम् । कण्ठशुद्धिकरत्वम् । मेध्यत्वम् । दीपनत्वम् । रुचिकारित्वञ्च । इति राजनिर्घण्टः ॥

**नखपर्णी**, स्त्री, (नख इव पर्णमस्याः । ङीष् ।) वृश्चिकाक्षुपः । इति राजनिर्घण्टः ॥

**नखपुष्पी**, स्त्री, (नख इव पुष्पमस्याः । ङीष् ।) पृक्का । इति राजनिर्घण्टः ॥

**नखमुचं**, क्ली, (नखं मुञ्चतीति । मुच + “कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम् ।” ३ । २ । ५ । इत्यस्य वार्त्तिकोक्त्या कः ।) धनुः । इति संक्षिप्तसारव्याकरणम् ॥ नखस्य मोचके, त्रि ॥

**नखरः**, पुं, क्ली, (नखं रातीति । रा + कः ।) नखः । इत्यमरः । २ । ६ । ८३ ॥ (यथा, साहित्यदर्पणे ।
“किं पुनरलङ्कृतस्त्वं सम्प्रति नखरक्षतैस्तस्याः ॥”
अस्त्रविशेषः । यथा, महाभारते । ७ । २९ । १७ ।
“सकम्पनर्ष्टिनखरा मुषलानि परश्वधाः ॥”
तथा, तत्रैव । ६ । १८ । १७ ।
“पादाताश्चाग्रतोऽगच्छन् धनुश्चर्म्मासिपाणयः ।
अनेकशतसाहस्रा नखरप्रासयोधिनः ॥”)

**नखरञ्जनी**, स्त्री, (रज्यतेऽनयेति । रञ्ज + ल्युट् । ङीप् । नखस्य रञ्जनी ।) नखच्छेदनास्त्रविशेषः । नरुण इति भाषा । यथा, --
“अनन्तचरणोपान्तचारिणीमलहारिणी ।

**नखाशी**, [न्] पुं, (नखमश्नातीति । अश भोजने + णिनिः ।) पेचकः । इति त्रिकाण्डशेषः ॥ नखभक्षकमात्रे, त्रि ॥

**नखी**, स्त्री, (नख + गौरादित्वात् ङीष् ।) नखनामगन्धद्रव्यम् । इत्यमरः । २ । ४ । १३० ॥
(अस्याः पर्य्यायो यथा, वैद्यकरत्नमालायाम् ।
“करजाख्यश्चाश्वखुरो नखो व्याघ्रनखो नखी ॥”)

**नखी**, [न्] पुं, (नखमस्त्यस्येति । नख + इनिः ।) सिंहः । इति राजनिर्घण्टः ॥ विदारणक्षमनखयुक्तपशुमात्रम् । यथा, चाणक्ये । २७ ।
“नखिनाञ्च नदीनाञ्च शृङ्गिणां शस्त्रपाणिनाम् ।
विश्वासो नैव कर्त्तव्यः स्त्रीषु राजकुलेषु च ॥”

**नगः**, पुं, (न गच्छतीति । न + गम् + डः । यद्वा, दह्यते इति । दह + “दहेर्गो लोपो दश्च नः ।” उणां । ५ । ६१ । इति गः । धातोरन्तलोपः । दस्य च नः ।) पर्व्वतः । (यथा, कुमारे । ७ । ७२ ।
“नवे दुकूले च नगोपनीतं प्रत्यग्रहीत् सर्व्वममन्त्रवर्ज्जम् ॥”)
वृक्षः । इत्यमरः । ३ । ३ । १९ ॥ (यथा, महाभारते । १ । ४३ । ६ ।
“तं दग्ध्वा स नगं नागः कश्यपं पुनरब्रवीत् ।
कुरु यत्नं द्विजश्रेष्ठ ! जीवयैनं वनस्पतिम् ॥”
स्थावरमात्रम् । यथा, विष्णुपुराणे । १ । ५ । ६ ।
“मुख्या नगा यतश्चोक्ता मुख्यसर्गस्ततस्त्वयम् ।”

| कम् २६ शङ्खनखः २७ नखरी २८ । इति शब्द-<br>रत्नावली ॥ अपि च । अथ नखनखीगन्ध-<br>द्रव्यम् ।<br>“नखं व्याघ्रनखं व्याघ्रायुधं तञ्चक्रकारकम् । | | “नगाः स्थावराः ।” इति तट्टीकायां स्वामी ॥) |
|---|---|---|

**नगजः**, पुं, (नगे पर्व्वते जायते इति । जन +
डः ।) हस्ती ।
इत्यमरटीकासारसुन्दरी ॥
पर्व्वतजातवस्तुमात्रे, त्रि ॥

**नगजा**, स्त्री, (नगे जायते या । जन + डः । टाप् ।)
क्षुद्रपाषाणभेदा । इति राजनिर्घण्टः ॥

**नगणा**, स्त्री, (नास्ति गणो यस्याः ।) लता-
विशेषः । नयाफट्की इति भाषा ।
तत्पर्य्यायः ।
पारावतपदी २ पिण्या ३ स्फुटबन्धनी ४ ज्योति-
ष्मती ५ पूतितैला ६ इङ्गुदी ७ । इति
रत्नमाला ॥

**नगनन्दिनी**, स्त्री, (नगस्य हिमालयस्य नन्दिनी ।
दुर्गा । इति शब्दरत्नावली ॥

**नगपतिः**, पुं, (नगानां पतिः ।) हिमालयपर्व्वतः ।
इति त्रिकाण्डशेषः ॥ (नगानां
ओषधीनां
पतिः ।) चन्द्रः ॥

**नगभित्**, पुं, (नगं भिनत्तीति । भिद् + क्विप् ।)
पाषाणभेदनः । इति राजनिर्घण्टः ॥
इन्द्रश्च ॥

**नगभूः**, पुं, (नगे भूरुत्पत्तिर्यस्य ।) क्षुद्रपाषाण-
भेदा । इति राजनिर्घण्टः ॥
पर्व्वतजाते, त्रि ॥

**नगरं**, क्ली, नगा इव प्रासादादयः सन्ति यत्र ।
("नगपांसुपाण्डुभ्यश्च ।" ५ । २ ।
१०७ । इत्यस्य
वार्त्तिकोक्त्या रः ।)
बहुलोकवासस्थानम् ।
शहर इति भाषा । तत्पर्य्यायः । पूः २
पुरी ३

राजधानी दशगुणा राजक्षेत्रमुदाहृतम् ॥
सप्तैव परिमाणानि प्रोक्तानि पुरपत्तने ।
भयत्राभोगसम्पत्तिमर्त्त्यकीर्त्तिसुखार्थिनाम् ।
राजक्षेत्रेण नृपतिः पूरपत्तनमारभेत् ॥
लक्ष्मीर्जयः क्षमा सौख्यं पञ्चत्वं भङ्ग एकता ।
समृद्धिर्वित्तं नाशश्च मङ्गलञ्च बलं क्षयः ।
साम्राज्यं भोगसम्पत्तिरिति षोडश कीर्त्तिताः ॥
यथार्थसंज्ञा नगरा मुनिना तत्त्ववेदिना ॥"
इति युक्तिकल्पतरुः ॥ * ॥
अपि च ।
"नृपावासः पुरी प्रोक्ता विशाम्पुरमपीष्यते ।
एकतो यत्र तु ग्रामो नगरञ्चैकतः स्थितम् ॥
मिश्रन्तु खर्व्वटं नाम नदीगिरिसमाश्रयम् ।
विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति हि ॥
स तु ग्राम इति प्रोक्तः शूद्राणां वास एव च ।
पण्यक्रियादिनिपुणैश्चातुर्वर्ण्यजनैर्युतम् ॥
अनेकजातिसम्बन्धं नैकशिल्पसमाकुलम् ।
सर्व्वदैवतसम्बन्धं नगरन्त्वभिधीयते ॥"
इति विष्णुपुराणटीकायां श्रीधरस्वामिधृतभृगु-
वचनम् ॥ * ॥
अन्यच्च ।
"नगरं सर्व्वतोभद्रं कर्त्तव्यं रोधकं हि वा ।
स्वस्तिकं मध्यगं कार्य्यं कुमारीपुरमेव वा ॥
चतुष्पथचतुर्युक्तं सर्व्वकामसुखावहम् ।
छिन्नकर्णं विनासञ्च दुःस्थितं कृशदुर्ब्बलम् ॥
नगरं न प्रशंसन्ति गर्त्तविद्धं विभेदितम् ।
अग्रतः स्वल्पप्रासादं छिन्नघ्राणं विदुर्बुधाः ॥
द्विमुखं कर्णहीनन्तु कृशमध्यं कृशं विदुः ।
दुःस्थितं निम्नयाम्यन्तु नैरृतं धनदुर्ब्बलम् ॥
सौम्यं सर्व्वसुखाह्लादपूरितं वारुणं वशम् ।
याम्यमायुःप्रदं पूर्णनगरं प्रीतिवर्द्धनम् ॥
ईशवासवसंपूर्णं सर्व्वारोग्यसुखप्रदम् ।
मध्यञ्चतुष्पथोपेतं न च तं पीडयेत् क्वचित् ॥
ब्रह्मस्थानं हि तं विप्र शिवस्तत्र सदा स्थितः ।
चतुर्व्विंशतिनाड्यस्तु हस्तान्यष्टशतं परम् ॥
अत्र मध्यं प्रशंसन्ति ह्रस्वोत्कृष्टविवर्ज्जितम् ।
अथ किष्कुशतान्यष्टौ प्राहुर्मुख्यं निवेशनम् ॥
नगरार्द्धञ्च विष्कम्भं खेटं ग्रामं ततोऽर्द्धतः ।
नगराद्योजनं खेटं खेटाद्ग्रामोऽर्द्धयोजनः ॥

"नाचारो नाधिकारी च न
स्थाननियमस्तथा ।
ग्रामे वा नगरे साधुर्व्वने वा
कीर्त्तयेद्धरिम् ॥"
इति हरिनाममाहात्म्यम् ॥

**नगरघातः**, पुं, (नगरं हन्तीति । हन + अण् ।)
हस्ती । इति संक्षिप्तसारव्याकरणम् ॥

**नगरी**, स्त्री क्ली, (नगर + ङीष् ।) नगरम् ।
इत्यमरः । २ । १ । १ ॥ (यथा, महा-
भारते । १२ । ५ । ६ ।
"प्रीत्या ददौ स कर्णाय मालिनीं
नगरीमथ ।
अङ्गेषु नरशार्द्दूल ! स राजासीत्
सपत्नजित् ॥")

**नगरीवकः**, पुं, (नगर्य्यां वक इव ।) काकः । इति
त्रिकाण्डशेषः ॥

**नगरोत्था**, स्त्री, (नगरादुत्तिष्ठतीति । उत् + स्था
+ कः । टाप् ।) नगरमुस्ता । इति
राज-
निर्घण्टः ॥

**नगरौषधिः**, स्त्री, (नगरजाता ओषधिः फल-
पाकान्तवृक्षः ।) कदली । इति
शब्दचन्द्रिका ॥

**नगाटनः**, पुं, (नगे वृक्षे अटति भ्रमतीति । अट +
ल्युः ।) वानरः । इति त्रिकाण्डशेषः ॥
(पर्व्वत-
चारिणि, त्रि ॥)

**नगाधिपः**, पुं, (नगानां पर्व्वतानामधिपः ।)
हिमालयपर्व्वतः । इति जटाधरः ॥

**नगाश्रयः**, पुं, (नगः पर्व्वतः आश्रय उत्पत्ति-
स्थानं यस्य ।) हस्तिकन्दः । इति
राजनिर्घण्टः ॥
नगवासिनि, त्रि ॥

**नगौकाः**, [स्] पुं, (नगो वृक्षः पर्व्वतो वा ओक

पुरिः ४ पुरम् ५ नगरी ६ पत्तनम् ७ पट्टनम् ८
पट्टनी ९ पुटभेदनम् १० पटभेदनम् ११ स्थानी-
यम् १२ निगमः १३ इत्यमरभरतौ ॥ कट-
कम् १४ पट्टम् १५ । इति शब्दरत्नावली ॥
केचित्तु नगरपत्तनस्थानीयानां भेदमाहुः । तत्र
पुरादित्रयं पुरे । पत्तनादिद्वयं पत्तने । स्थानी-
यादिद्वयं स्थानीये । इति मन्यन्ते । यत्राष्टशत-
ग्रामीयव्यवहारस्थानं मध्यवर्त्ति तत् नगरम् ।
यत्र राजा तत्परिचारकाश्च तिष्ठन्ति तत् पत्त-
नम् । प्राकारादिना दुर्गं योजनविस्तीर्णं नगरं
स्थानीयम् । केचित्तु पुरनगरयोरपि भेदमाहुः ।
बहुग्रामीयव्यवहारस्थानं पुरम् । तत्र प्रधान-
भूतं नगरम् । इति भरतः ॥ * ॥
अथ नगरनिर्म्माणकालः ।
"स्थिरराशिगते भानौ चन्द्रे च स्थिरभोदये ।
शुद्धे काले दिने चैव नगरं कारयेन्नृपः ॥" * ॥
तस्य लक्षणं भविष्योत्तरे ।
"दीर्घं वा चतुरस्रं वा नगरं कारयेन्नृपः ।
तत्त्र्यस्रं वर्त्तुलं वापि कदाचिदपि कारयेत् ॥
दीर्घं पादैकप्रसरञ्चतुरस्रं समोचितम् ।
त्रिभिः पादैः समं त्र्यस्रं वर्त्तुलं बलयाकृति ॥
दीर्घं स्याद्दीर्घकालाय सुखसम्पत्तिहेतवे ।
चतुरस्रं चतुर्वर्गफलाय पृथिवीभुजः ॥
द्विक्रोशं परमा सीमा क्षेत्रसीमा चतुर्धनुः ।
त्रिंशद्धनूंषि विस्तीर्णो देशो मार्गस्तु तैः कृतः ॥
विंशद्धनुर्ग्राममार्गः सीमामार्गो दशैव तु ।
धनूंषि दश विस्तीर्णः श्रीमान्राजपथः कृतः ॥
नृवाजिरथनागानामसम्बाधःसुसञ्चरः ।
धनूंषि चैव चत्वारि शाखारथ्यास्तु निर्म्मिताः ॥
त्रिकराश्चोपरथ्यास्तु द्विकराप्युपरथ्यिका ।
जङ्घापथश्चतुष्पादस्त्रिपादस्यगृहान्तरम् ॥
वृतीपादस्त्वर्द्धपादः प्राग्वंशपादकः स्मृतः ॥"
इति देवीपुराणम् ॥

**नगरकीर्त्तनं**, पुं, (नगरे कीर्त्तनं नगरपरिभ्रमणेन हरिनामसंघोषणम् ।) नगरादिभ्रमणकरणक-
हरिसङ्कीर्त्तनम् । यथा, --

आश्रयस्थानं यस्य ।) पक्षी । इत्यमरः । २ ।
५ । ३३ ॥ सरभः । सिंहः । इति मेदिनी । से,
५६ ॥ काकः । इति शब्दचन्द्रिका ॥ नगर-
वासिनि, त्रि ॥

**नग्नः**, त्रि, (नजते स्मेति । ओ नज ह्रियि + अक-
र्म्मकत्वात् कर्त्तरि क्तः । "ओदितश्च ।" ८ । २ ।
४५ । इति निष्ठातस्य नः ।) विवस्त्रः । नेंटो
इति भाषा ॥ तत्पर्य्यायः । अवासाः २ दिगम्बरः
३ । इत्यमरः । ३ । १ । ३९ ॥ तथा च भृगुः ।
"विकक्षाऽनुत्तरीयश्च नग्नश्चावस्त्र एव वा ।
श्रौतं स्मार्त्तं तथा कर्म्म न नग्नश्चिन्तयेदपि ॥
विकक्षः परिधानासंवृतकच्छः । तथा च योगि-
याज्ञवल्क्यः ।
"परिधानाद्बहिःकक्षा निबद्धा ह्यासुरी भवेत् ॥"
स्मृतिः ।
"वामे पृष्ठे तथा नाभौ कक्षत्रयमुदाहृतम् ।
एभिः कक्षैः परीधत्ते यो विप्रः स शुचिःस्मृतः ॥"
बौधायनः ।
"नाभौ धृतञ्च यद्वस्त्रमाच्छादयति जानुनी ।
अन्तरीयं प्रशस्तं तदाच्छन्नमुभयोस्तयोः ॥"
आचारचन्द्रिकायाम् ।
"द्विकच्छः कच्छशेषश्च मुक्तकच्छस्तथैव च ।
एकवासा अवासाश्च नग्नः पञ्चविधः स्मृतः ॥"

| | | |
|---|---|---|
| त्र्यस्रं त्रिशक्तिनाशाय वर्त्तुलं बहुरोगकृत् ।<br>राज्ञः स्वहस्तैर्दशभी राजहस्त उदाहृतः ॥<br>राजहस्तैश्च दशभी राजदण्ड उदाहृतः ।<br>राजदण्डैश्च दशभी राजच्छत्रमुदाहृतम् ॥<br>राजच्छत्रैश्च दशभी राजकाण्ड उदाहृतः ।<br>राजकाण्डैश्च दशभी राजपूरुष उच्यते ॥<br>राजधानी तु कथिता दशभी राजपूरुषैः । | | इत्याह्निकतत्त्वम् ॥<br>“न नग्नां स्त्रियमीक्षेत पुरुषं वा कदाचन ।<br>न च मूत्रं पुरीषं वा न वै संस्पृष्टमैथुनम् ॥ |

नोच्छिष्टः संविशेन्नित्यं न नग्नः स्नानमाचरेत् ।
न गच्छेन्न पठेद्वापि न चैव स्वशिरः स्पृशेत् ॥”
इति कूर्म्मपुराणे उपरिभागे १५ अध्यायः ॥
पारिभाषिकनग्ना यथा, --
“येषां कुले न वेदोऽस्ति न शास्त्रं नैव च व्रतम् ।
ते नग्नाः कीर्त्तिताः सद्भिस्तेषामन्नं विगर्हितम् ॥”
इति मार्कण्डेयपुराणे सदाचाराध्यायः ॥
“ऋग्यजुःसामसंज्ञेयं त्रयी वर्णावृतिर्द्विज ! ।
एतामुजझति यो मोहात् स नग्नः पातकी स्मृतः ॥
यस्तु संत्यज्य गार्हस्थ्यं वानप्रस्थो न जायते ।
परिव्राडपि मैत्रेय ! स नग्नः पापकृन्नरः ॥”
इति विष्णुपुराणे १८ अध्यायः ॥

**नग्नः**, पुं, (नज + क्तः । निष्ठातस्य नः ।) वन्दी ।

(यथा, नैषधे । १९ । २१ ।
“रतिरतिपतिद्वैतश्रीकौ धुरं बिभृमस्तरां
प्रियवचसि यन्नग्नाचार्य्या वदामतमां ततः ॥”)
क्षपणकः । इति विश्वमेदिन्यौ ॥ शेषस्य पर्य्यायः ।
नग्नाटकः २ निर्ग्रन्थकः ३ भदन्तः ४ दिगम्ब-
रकः ५ । इति हारावली । ११५ ॥

**नग्नकः** पुं, (नग्न एव । स्वार्थे कन् ।) नग्नः । नजते

लज्जते इति नग्नकः ओ नज डी ह्रियि इत्य-
स्मात् क्तः सुल्वाद्योदिदिति नः मनीषादित्वात्
जस्य गः स्वार्थे कः । इति व्याकरणम् ॥

**नग्नजित्**, पुं, राजविशेषः । स च श्रीकृष्णपत्न्या

नाग्नजित्या जनकः । यथा, श्रीभागवते । १० ।
५८ । २३ ।
“नग्नजिन्नाम कौशल्य आसीद्राजातिधार्म्मिकः ।
तस्य सत्याभवत् कन्या देवी नाग्नजिती नृप ! ॥”

**नग्नहु**, [ऊ] क्ली, (नग्नं ह्वयति स्पर्द्धते अनेनेति । ह्वे

+ करणे क्विप् ।) नग्नहूः । इति भरतधृतामर-
माला ॥ (बाहुलकात्कुप्रत्यये कृते पुंलिङ्गेऽपि
दृश्यते । यथा, वाजसनेयसंहितायाम् । १९ । १४ ।
“आतिथ्यरूपं मासरं महावीरस्य नग्नहुः ॥”
“सर्जत्वक्त्रिफलाशुण्ठीपुनर्न्नवाचतुर्जातकपिप्पली-
गजपिप्पलीवंशावकाबृहच्छत्राचित्रकेन्द्रवारुण्य-
श्वगन्धाधान्यकयवानीजीरकद्वयहरिद्राद्वयबि

**नग्नाटकः**, पुं, (नग्नाट एव । स्वार्थे कन् ।) दिग-

म्बरयोगी । इति हारावली ।
११५ ॥

**नग्निका**, स्त्री, (नग्नैव । स्वार्थे कन् । टापि अत

इत्वम् ।) विवस्त्रा । तत्पर्य्यायः
। कोट्टवी २
कोटवी ३ कोटरी ४ ।
अप्राप्तरजस्का । तत्-
पर्य्यायः । गौरी २
अनागतार्त्तवा ३ । इत्यमर-
स्तट्टीका च । गौरिका ४ ।
इति शब्दरत्नावली ॥
(अजातकुचा कन्या । यथा,
पञ्चतन्त्रे । ३ ।
२१३ ।
“अव्यञ्जना भवेत् कन्या
कुचहीना तु नग्निका ॥”)

**नङ्गः**, पुं, (नं नतिं गच्छतीति । गम + डः ।

बाहुलकात् मुम् ।) जारः । इति
जटधरः ॥
नां इति भाषा ॥

**नज**, ओ ई ङ ह्रियि । इति कविकल्पद्रुमः ॥

(भ्वां-आत्मं-अकं-सेट् ।
ईदित्वात् निष्ठाया-
मनिट् ।) ओ ई, नग्नः । ङ,
नजते । ह्रियि
लज्जायाम् । इति दुर्गादासः ॥

**नञ्**, व्य, अभावसंज्ञकम् । समासे स्थितस्यास्य

स्थाने स्वरे परेऽन् व्यञ्जने परे
अकारो विकल्पेन
भवति । यथा । अनन्तः
नान्तः । अच्युतः

तत्पर्य्यायो यथा, --
“मदनश्छर्द्दनः पिण्डी नटः
पिण्डीतकस्तथा ।
करहाटो मरुवकः शल्यको विषपुष्पकः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥
अशोकः । अस्य पर्य्यायो यथा, --
“अशोको हेमपुष्पश्च वञ्जुलस्ताम्रपल्लवः ।
कङ्केलिः पिण्डपुष्पश्च गन्धपुष्पो नटस्तथा
॥”)
वर्णसङ्करजातिविशेषः । यथा,
पराशरपद्धतौ ।
“शौचिक्यां शौण्डिकाज्जातो नटो वरुड
एव च ।”
व्रात्यायां क्षत्त्रियाज्जातः । (यथा, मनुः ।
१० । २२ ।
“झल्लो मल्लश्च राजन्यात्
व्रात्यान्निच्छिविर्ख च ।
नटश्च करणश्चैव खसो द्रविड एव च ॥”
हनूमन्मते दीपकरागस्य रागिणी । अस्या
जातिः संपूर्णा । गृहं षड्जस्वरः । ग्रीष्मर्त्तौ
दिवसान्तो गानसमयः । रागमालायामस्याः
स्वरूपं रक्तवर्णा नारी नवयौवना सालङ्कृता
अश्वारूढा पुरुषवत् परिहितवस्त्रना
निष्कोष-
करवालं धृत्वा शत्रूनाक्रममाणा । इति
सङ्गीत-
शास्त्रम् ॥ नारदपुराणमते श्रीरागस्य पुत्त्रः
॥

**नटनं**, क्ली, (नट + भावे ल्युट् ।) नृत्यम् । इत्य

मरः । १ । ७ । १० ॥ (यथा, पञ्चतन्त्रे । ३
। २३७ ।
“किं
गाण्डीवस्फुरगुरुघनास्फालनक्रूरपाणि-
र्नासील्लीलानटनविलसन्मेखली सव्यसाची
॥”)

**नटनारायणः**, पुं, (नटानां नारायण इव ।)

रागविशेषः । हनूमन्मते मेघरागस्य तृतीय-

रूढयवव्रीहय एकीकृता नग्नहुः ॥” इति । १९ । १ । मन्त्रटीकायां वेददीपः ॥)

**नग्नहूः**, पुं, (नग्नं ह्वयति स्पर्द्धते येनेति । ह्वे + क्विप् ।) नानाद्रव्यकृतसुराबीजम् । वाखर इति ख्यातम् । इति भरतः ॥ तत्पर्य्यायः । क्विण्वम् २ इत्यमरः । २ । १० । ४२ ॥ कण्वम् ३ नग्नहु ४ इति तट्टीका ॥

**नग्ना**, स्त्री, (नग्न + टाप् ।) विवस्त्रा नारी । तत्-पर्य्यायः । कोट्टवी २ कोटवी ३ नग्निका ४ नग्न-योषित् ५ । इति शब्दरत्नावली ॥ (अनुद्भिन्न-कुचा कन्या । यथा, पञ्चतन्त्रे । ३ । २१७ ।
“ऋतुमत्यान्तु तिष्ठन्त्यां स्वेच्छादानन्तु दीयते ।
तस्मादुद्वाहयेत् नग्नां मनुः स्वायम्भुवोऽब्रवीत् ॥”)

**नग्नाटः**, पुं, (नग्नः सन् अटतीति । अट् + अच् ।) दिगम्बरः । इति हलायुधः ॥

नच्युतः । अस्यार्थाः षट् । सादृश्यम् १ यथा अब्राह्मणः ॥ अभावः २ यथा अपापम् ॥ अन्यत्वम् ३ यथा अघटः पटः ॥ अल्पत्वम् ४ यथा अनुदरी कन्या ॥ अप्राशस्त्यम् ५ यथा अकेशी ॥ विरोधः ६ यथा असुरः । इति मुग्ध-बोधटीकायां दुर्गादासः ॥ यथा, मेदिनी ।
“नञभावे निषेधे च स्वरूपार्थेऽप्यतिक्रमे ।
ईषदर्थे च सादृश्ये तद्विरुद्धतदन्ययोः ॥”
नकारश्च ॥

**नट**, नृत्ये । हिंसे ! इति कविकल्पद्रुमः ॥ (भ्वां-परं-नृत्ये अकं-हिंसे सकं-सेट् ।) नटति । इति दुर्गादासः ॥

**नट**, क भ्रंशे । त्विषि । इति कविकल्पद्रुमः ॥ (चुरां-परं-अकं-सेट् ।) भ्रंशोऽधःपतनम् । स्पन्दनार्थोऽयमिति रामः । क, नाटयति । इति दुर्गादासः ॥

**नट**, म नृतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) म, प्रणटयति । इति दुर्गादासः ॥

**नटः**, पुं, (नमतीति । नम + “जनिदाच्युस्रिति ।” उणां ४ । १०४ । इति डटः ।) श्योणाक-वृक्षः । (नटति नृत्यतीति । नट + अच् । यद्वा, पुत्रः । भरतमते दीपकरागस्य तृतीयपुत्रः । सोमेश्वरमते कल्लिनाथमते च षड्रागाणां शेषरागः । तस्य भार्य्याः षट् । यथा, त्रोटकी १ त्रिभङ्गी २ पूर्ब्बी ३ गान्धारी ४ वराभा ५ स्निन्धुमल्लारी ६ । सोमेश्वरमते तस्य रागिण्यो यथा । कामदा १ कल्याणी २ आभीरी ३ नाटकी ४ सारङ्गी ५ नटहमीरी ६ । रागि-णीभिः सहास्य हिमर्त्तौ गानसमयः । इति सङ्गीतशास्त्रम् ॥

**नटभूषणं**, क्ली, (नटानां भूषणं मण्डनं यस्मात् ।) हरितालम् । इति रत्नमाला ॥

**नटमण्डनं**, क्ली, (नटानां मण्डनं यस्मात् ।) हरि-तालम् । इति हेमचन्द्रः । ४ । १२५ ॥

**नटवरः**, पुं, (नटेषु वरः श्रेष्ठः ।) नटश्रेष्ठः । यथा,
“वर्हापीडं नटवरवपुः कर्णयोः कर्णिकारम् ॥”
इति श्रीभागवतम् ॥

**नटसंज्ञकः**, पुं, (नटस्य संज्ञा संज्ञा यस्य । कप् ।) गोदन्ताख्यहरितालम् । इति त्रिकाण्डशेषः ॥ (स्वार्थे कन्) नटश्च ॥

**नटान्तिका**, स्त्री, (अन्तयति नाशयतीति । अन्त + ण्वुल् + टापि अत इत्वम् । नटस्य नटकार्य्यस्य अन्तिका ।) लज्जा । इति हारावली । १५३ ॥

**नटी**, स्त्री, (नटति शोभते इति । नट् + अच् । ङीष् ।) नलीनामगन्धद्रव्यम् । इत्यमरः । २ । ४ । १२९ ॥ (नटति नृत्यतीति । नट् + अच् । ङीष् ।) वेश्या । इति शब्दरत्नावली ॥ नटपत्नी च ॥

| | | |
|---|---|---|
| | नमतीति । नम + डटः)<br>नर्त्तकः । नेटुया इति<br>भाषा । (यथा, देवीभागवते ।<br>१ । ७ । ४२ ।<br>“तं क्रीडसे<br>निजविनिर्म्मितमोहजाले<br>नाट्यो यथा विहरते स्वकृते<br>नटो वै ॥”)<br>तत्पर्य्यायः । शैलाली २<br>शैलूषः ३ जाया-<br>जीवः ४ कृशाश्वी ५ भरतः ६<br>। इत्यमरः । २ ।<br>१० । १२ ॥ सर्व्ववेशी ७<br>भरतपुत्त्रकः ८ धात्री-<br>पुत्त्रः ९ रङ्गजीबः १०<br>रङ्गावतारकः ११ ।<br>इति हेमचन्द्रः । २ । २४२ ॥<br>अशोकवृक्षः ।<br>इति मेदिनी । टे, २० ॥<br>किष्कुपर्व्वा । इति<br>जटाधरः ॥ नल इति भाषा ॥<br>(मदनफलम् । | (यथा भागवते । ८ । ८ । १२ । |

"जगुर्भद्राणि गन्धर्व्वा नट्यश्च ननृतुर्जगुः ॥"
इयं हि पञ्चमकारपूज्यकुलनायिकान्तर्गता ।
यथा, तन्त्रसारे ।
"नटी कापालिनी वेश्या रजकी नापिताङ्गना ।
ब्राह्मणी शूद्रकन्या च तथा गोपालकन्यका ।
मालाकारस्य कन्या च नव कन्याः प्रकी-र्त्तिताः ॥")

**नटेश्वरः**, पुं, (नटानामीश्वरः । नृत्यप्रियत्वात् तथात्वम् ।) शिवः । इति हेमचन्द्रः । २ । ११२ ॥

**नड**, क भ्रंशे । इति कविकल्पद्रुमः ॥ (चुरां-परं-अकं-सेट् ।) क, नाडयति ।
भ्रंशोऽधःपतनम् ।
इति दुर्गादासः ॥

**नडः**, पुं, (नलतीति । नल + अच् । लस्य डत्वम् ।) नलतृणम् । इत्यमरः । २ । ४ । १६५ ॥ (यथा,
वेदे । ६ । १३८ । ५ ।
"यथा नडं कशिपुने स्त्रियो भिन्दन्त्यश्मना ॥")
जातिभेदः । इति पुंनपुंसकसंग्रहटीकायां मथु-
अथर्व्वेशः ॥

**नडकीयः**, त्रि, (नडाः सन्त्यत्र । नड + "नडा-दीनां कुक् च ।" ४ । २ । ९१ । इति छः कुगागमश्च ।) नलसमूहदेशः । इति हेम-चन्द्रः । ४ । २० ॥

**नडप्रायः**, त्रि, (नडः प्रायेण यत्र ।) नलबहुल-देशः । तत्पर्य्यायः । नडकीयः २ नड्वान् ३
नड्वलः ४ । इति हेमचन्द्रः । ४ । २० ॥

**नडमीनः**, पुं, (नलस्थितो मीनः । लस्य डत्वम् ।)
"कालानुशारिवावक्रं तगरं कुटिलं शठम् ।
महोरगं नतं जिह्मं दीनं तगरपादिकम् ॥"
इति वैद्यकरत्नमालायाम् ॥)

**नतः**, पुं, (नमति स्मेति । नम + क्तः ।) जन्म-नाडिकाविशेषः । तद्यथा, --
"असकृत्कर्म्मणा येन यान्ति दृक्कुल्यतां दिवि ।
नतोन्नतौ ततः साध्यौ भावाः खेटबलानि षट् ॥
दिनार्द्धान्तरिता जन्मनाडिका नतनाडिका ।
पूर्ब्बापरार्द्धे जातस्य प्राक्पराख्या दिने भवेत् ॥
रात्रेर्गतघटीशेषघटीदिनार्द्धसंयुता ।
परपूर्ब्बाभिधा ज्ञेया रजन्यां नतनाडिका ॥"
इति कोष्ठीप्रदीपः ॥

**नतः**, त्रि, (नम + क्तः ।) कुटिलः । नम्रः ।
इति मेदिनी । ते, २९ ॥ (यथा, हरिवंशे । २०१ । ३९ ।
"पतन्ति युगपत् सर्व्वे पादयोर्मूर्द्धभिर्नताः ॥")

**नतद्रुमः**, पुं, (नतो द्रुमः ।) लताशालः । इति रत्नमाला ॥

**नतनासिकः**, त्रि, (नता नासिका यस्य ।) अल्प-नासिकायुक्तः । खाँदा इति भाषा । तत्-पर्य्यायः । अवटीटः २ अवनाटः ३ अवभ्रटः ४ ।
इत्यमरः । २ । ६ । ४५ ॥

**नताङ्गी**, स्त्री, (नतमङ्गमस्याः । ङीष् ।) नारी ।
इति राजनिर्घण्टः ॥

**नतिः**, स्त्री, (नम + भावे क्तिन् ।) नमनम् ।
नम्रता । यथा, --
"नीतिर्भूमिभुजां नतिर्गुणवतां ह्रीरङ्गनानां धृति-
णादिकोषः ॥ (यथा ऋग्वेदे । ८ । २१ । १४ ।
"यदा कृणोषि नदनं समूहस्यादित् पितेव हूयसे ॥")
सिंहः । इति शब्दमाला ॥ (नद + भावे अनुङ् ।
शब्दः । यथा, ऋग्वेदे । ६ । १८ । २
"स युध्मः सत्वा खजकृत्समद्वा तुविम्रक्षो नदनुमाँ ऋजीषी ॥")

**नदी**, स्त्री, (नदतीति । नद + अच । पचादिगणे नदट् इति निर्द्देशात् टिड्ढेडि ङीप् ।) अष्ट-सहस्रधनुरन्यूनव्याप्ततोया । सा च गङ्गायमुना-सरस्वतीकावेरीगोदावरीप्रभृतिः । तस्या लक्ष-णमाह छन्दोगपरिशिष्टम् ।
"धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते ।
न ता नदीशब्दवहा गर्त्तास्ताः परिकीर्त्तिताः ॥"
इति तिथितत्त्वम् ॥
तत्पर्य्यायः । सरित् २ तरङ्गिणी ३ शैवलिनी ४
तटिनी ५ ह्रदिनी ६ धुनी ७ स्रोतस्वती ८
द्वीपवती ९ स्रवन्ती १० निम्नगा ११ आपगा १२ ।
इत्यमरः । १ । १० । ३० ॥ ह्रादिनी १३ धुनिः १४
स्रोतस्विनी १५ स्रोतोवहा १६ सागरगामिनी १७
अपगा १८ । इति भरतः ॥ निर्झरिणी १९
सरस्वती २० समुद्रगा २१ कूलङ्कषा २२ कूल-वती २३ शैवालिनी २४ सिन्धुः २५ समुद्र-कान्ता २६ सागरगा २७ कृष्णा २८ रोधो-वती २९ वाहिनी ३० । तज्जलगुणाः । स्वच्छ-

चिलिचिममत्स्यः । नलमीन
इत्यमरदर्शनात्
डलयोरैक्यम् ॥

**नडसंहतिः**, स्त्री, (नडानां संहतिः समूहः ।)

नडसमूहः । तत्पर्य्यायः । नड्या २ ।
इत्य-
मरः । २ । ५ । १६८ ॥ नडसञ्चयः ३ ।
इति
शब्दरत्नावली ॥

**नडहः**, त्रि, (नडं अपरिस्कृतस्थानं हन्तीति ।

हन + डः ।) कान्तः । ललितः । इति
भूरि-
प्रयोगः ॥

**नड्या**, स्त्री, (नडानां समूहः । "पाशादिभ्यो

यः ।" ४ । २ । ४९ । इति यः ।)
नडसमूहः ।
इत्यमरः । २ । ५ । १६८ ॥

**नड्वलः**, त्रि, (नडाः सन्त्यत्र । नड + "नड-

शादात् ड्वलच् ।" ४ । २ । ८८ । इति
ड्वलच् ।)
नलबहुलदेशः । इत्यमरः । २ । १ । ९ ॥
(यथा,
रघुः । १८ । ५ ।
"यो नड्वलानीव गजः परेषां
बलान्यमृद्नान्नलिनाभबक्त्रः ॥")

**नड्वान्**, [त्] त्रि, (नडाः सन्त्यत्र । नड + "कुमुद-

नडवेतसेभ्यो ड्मतुप् ।" ४ । २ । ८७ ।
इति
ड्मतुप् । डित्त्वात् टिलोपः । मस्य वः ।)
नल-
बहुलदेशः । इत्यमरः । २ । १ । ९ ॥

**नड्वाभूः**, स्त्री, कुट्टिमः । इति भूरिप्रयोगः ॥

**नतं**, क्ली, (नम + क्तः ।) तगरपादी । तगर-

मूलम् । इति मेदिनी । ते, २९ ॥
(पर्य्यायो-
ऽस्य यथा, --
र्दम्प्यत्योः शिशवो गृहस्य कविता बुद्धेः
प्रसादो
गिराम् ।
लावण्यं वपुषः स्मृतिः सुमनसः
शान्तिर्द्विजस्य
क्षमा
शक्तस्य द्रविणं गृहाश्रमवतां स्वास्थं सतां
मण्ड-
नम् ॥"
इति नवरत्नम् ॥
(नतिलक्षणादिकन्तु नमस्कारशब्दे द्रष्टव्यम्
॥)

**नद**, टु इ संवृधि । इति कविकल्पद्रुमः ॥ (भ्वां-

परं-अकं-सेट् ।) टु, नन्दथुः । इ, नन्द्यते ।
संवृधि आनन्दयुक्तभावे । ननन्द पारिप्लव-
नेत्रया नृपः । नन्दते च कुलं पुंसाम् । इति
गणकृतानित्यत्वात् । इति दुर्गादासः ॥

**नदः**, पुं, (नदति प्रवाहवेगेन शब्दायते इति ।

नद + अच ।)
पुंवाचकाकृत्रिमखातावच्छिन्न-
जलप्रवाहः । (यथा, मनुः । ६ । ९० ।
"यथा नदीनदाः सर्व्वे सागरे यान्ति
संस्थितिम् ।
तथैवाश्रमिनः सर्व्वे गृहस्थे यान्ति
संस्थितिम् ॥")
स च सिन्धुभैरवशोणदामोदरब्रह्मपुत्रादिः ।
तत्पर्य्यायः । पुनर्व्वहः २ भिद्यः ३ उद्यः ४
सरस्वान् ५ । इति हेमचन्द्रः । ४ । १५६
॥
"अष्टषष्टिस्तु तीर्थानि नदाश्च दशकोटयः
॥"
इति पाद्मे भूखण्डे ८५ अध्यायः ॥

**नदनुः**, पुं, (नदतीति । नद + "अनुङ् नदेश्च ।"

उणां ३ । ५२ । इति अनुङ् ।) मेघः ।
इत्यु-
त्वम् । लघुत्वम् । दीपनत्वम् । पाचनत्वम्
।
रुच्यत्वम् । तृष्णापहत्वम् । पथ्यत्वम् ।
मधु-
रत्वम् । ईषदुष्णत्वञ्च ॥ * ॥
"सर्व्वा गुर्व्वी प्राङ्मुखी वाहिनी स्या-
ल्लघ्वी पश्चाद्वाहिनी निश्चयेन ।
देशे देशे तद्गुणा सा विशेषा-
न्नैषा धत्ते गौरवं लाघवञ्च ॥
प्रायो मृदुवहा गुर्व्वो लघ्व्यः शीघ्रवहाः
स्मृताः ।
नद्यः पाषाणसिकतावाहिन्यो विमलोदकाः
॥
हिमवत्प्रभवा याश्च जलं तास्वमृतोपमम्
॥
विन्ध्यात् प्राची प्राच्यवाची प्रतीची
या चोदीची स्यान्नदी सा क्रमेण ।
वातारोग्यं श्लेष्मपित्तार्त्तिलोपं
पित्तोद्रेकं पथ्यपाकञ्च धत्ते ॥
पारिपात्रभवा याश्च विन्ध्याख्यप्रभवाश्च
याः ।
शिरोहृद्रोगकुष्ठानां ता हेतुः श्लीपदस्य च
॥"
इति राजनिर्घण्टः ॥
(यथा च ।
"तथा प्राच्यां गमाश्चान्याः
पश्चिमानुगमास्तथा ।"
"ससैकता सपाषाणा द्विविधा
चाम्बुवाहिनी ।
एवं चतुर्व्विधा नद्यो वातपित्तकफात्मिकाः
॥
सदावहायास्त्वनवद्यमुष्णं
मरुत्कफानां शमनञ्च तस्याः ।
नीरं वसन्ते हितकृद्विशेषात्
नदीभवं नैव हिमागमे च ॥
घनविमलशिलानां स्फालनाज्जातफेनं
बहुलसजलवीचिच्छन्नसंक्षोभदृप्तम् ।

ननु लघु च सुशीतं नैव चोष्णं घनञ्च
हरति पवनपित्तं श्लेष्मकृद्वारि सम्यक् ॥
इति पाषाणनदीवारिगुणाः ॥ * ॥
सुघनविमलतोयं सैकतायाः प्रवाहं
न च भवति लघुत्वं श्लेष्मकृद्धन्ति पित्तम् ।
भवति मधुरमेवं किञ्चिदुष्णं कषायं
भवति च सुखकृत्तच्छोषमूर्च्छा निहन्ति ॥
इति सबातुकानदीवारिगुणाः ॥ * ॥
हिमवत्प्रभवा नद्यः पुण्या देवर्षिसेविताः ।
घनपाषाणसिकतावाहिन्योविमलोदकाः ॥
हन्ति वातकफं तोयं श्रमशोषविनाशनम् ।
किञ्चित् करोति वा पित्तं त्रिदोषशमनञ्जलम्
॥
मलयप्रभवा नद्यः शीततोयामृतोपमाः ।
हन्ति वातञ्च पित्तञ्च भ्रमशोषश्रमापहम् ॥
गङ्गा सरस्वती शोनं यमुना सरयूः सची ।
वेणा इरावती नीला उत्तरात् पूर्ब्बवाहिनी ॥
हिमवत्प्रभवा ह्येता हिमसम्भवशीतलाः ।
समाः सर्व्वगुणैर्नद्यो वातश्लेष्महरा नृणाम् ॥
आसां नवशतैर्युक्ता गङ्गा पूर्ब्बसमुद्रगा ।
तथा चर्म्मन्वती वेत्रवती पारावती तथा ॥
सिप्रा महाप्रदीप्ता च ऋषिकुल्या पयस्विनी ।
शेवन्ती शैवलिन्यश्च सिन्धुयुक्ताः समुद्रगाः
॥
वातपित्तहरं नीरं त्रिदोषघ्नमतःपरम् ।
श्रमम्लानिहरं वृष्यं उत्तराशानुगामिनी ॥
इति नद्य उत्तरानुगाः ॥ * ॥
तापी तापा च गोलोमी गोमती शालिता मही
।
सरस्वतीयुता नद्यो नर्म्मदा पश्चिमानुगाः ॥
आसां जलं घनं शीतं पित्तघ्नं कफकृत्तथा ।
वातदोषहरं हृद्यं कण्डूकुष्ठविनाशनम् ॥
पश्चिमाद्रिसमुद्भूता गौतमी पुण्यभावना ।
अस्याः शीतं जलं वापि कफवातविकारकृत्
॥
पित्तप्रशमनं बल्यं मूत्रदोषविकारकृत् ।
पुण्या पयस्विनी वेता प्रणीता च वरानना ॥
द्रोणा गोवर्द्धनी चान्या गौतम्यानुगता इमाः ।

बलपौरुषकारिण्यः -- ॥”
इति वाभटे सूत्रस्थाने पञ्चमेऽध्याये ॥
“तत्र नद्यः पश्चिमाभिमुखाः पथ्या
लघूदकत्वात् ।
पूर्ब्बाभिमुखास्तु न प्रशस्यन्ते गुरूदकत्वात्
।
दक्षिणाभिमुखा नातिदोषलाः साधारणत्वात्
।”
“प्रायेण नद्यो मरुषु सतिक्ता लवणान्विताः ।
ईषत्कषाया मधुरा लघुपाका बले हिताः ॥”
इति सुश्रुते सूत्रस्थाने ४५ अध्याये ॥
“वसुधा कीटसर्पाखुमलसन्दूषितोदकाः ।
वर्षाजलवहा नद्यः सर्व्वदोषसमीरणाः ॥”
इति चरके सूत्रस्थाने २७ अध्याये ॥)
भारतवर्षे नद्यो यथा । गङ्गा सिन्धुः सरस्वती
शतद्रुः वितस्ता विपाशा चन्द्रभागा सरयूः
यमुना रावती देविका कुहूः गोमती धूत-
पापा बाहुदा दृषद्वती कौशिकी निस्वीरा
गण्डकी चक्षुष्मती लोहिता । इत्येता
हिमवत्-
पादनिर्गताः ॥ वेदस्मृती वेदवती सिन्धुः
अपर्णा
चन्दना सदाचरा रोहिपारा चर्म्मण्वती
विदिशा वेत्रवती वयन्ती । इत्येताः
पारिपात्रो-
द्भवाः ॥ शोणा ज्योतीरथा नर्म्मदा सुरसा
मन्दाकिनी दशार्णा चित्रकूटा तमसा पिप्पला
करतोया पिशाचिका चित्रोत्पला विशाला
वञ्जुका बालुका वाहिनी भुक्तिमती विरजा
पङ्किनी रिवी । इत्येता ऋक्षप्रसूताः ॥ मणि-
जाला शुभा तापी पयोष्णी शीघ्रोदा वेष्णा
पाशा वैतरणी वेदी पाला कुमुद्वती तोया दुर्गा
अन्त्या गिरा । एता विन्ध्यपादोद्भवाः ॥
गोदा-
वरी भीमरथी कृष्णा वेणा वञ्जुला तुङ्गभद्रा
सुप्रयोगा ब्रह्मकावेरी शतमाला ताम्रपर्णी
पुष्यावती उत्पलावती । इत्येता मलयजाः ॥
त्रियामा ऋषिकुल्या इक्षुरा त्रिविदाला
मूलिनी

तस्य पादे महद्दिव्यं लोहितं सुमहत्
सरः ॥
तस्मात् प्रभवते पुण्यो लोहितश्च नदो
महान् ।
देवारण्यं विशोकञ्च तस्य तीरे महद्वनम्
॥
तस्मिन् गिरौ निवसति यक्षो मणिधरो
बली ।
सौम्यैः सधार्म्मिकैश्चैव गुह्यकैः
परिवारितः ॥
कैलासात् पश्चिमोदीच्यां
ककुद्मानोषधीगिरिः ।
ककुद्मति च रुद्रस्य
उत्पत्तिस्त्रिककुद्मतः ॥
तदञ्जनन्त्रैककुदं शैलं त्रिककुदं प्रति ।
सर्व्वधातुमयस्तत्र सुमहद्वैद्युतो गिरिः
॥
तस्य पादे महद्दिव्यं मानसं
सिद्धसेवितम् ।
यस्मात् प्रभवते पुण्या
सरयूर्लोकपावनी ॥
कैलासात् पश्चिमामाशां दिव्यः
सर्व्वौषधिर्गिरिः ।
अरुणः पर्व्वतश्रेष्ठो
रुक्मधातुविभूषितः ॥
भवस्य दयितः श्रीमान् पर्व्वतो
हेमसन्निभः ।
तस्य पादे महद्दिव्यं सरः
काञ्चनबालुकम् ॥
तस्य पादात् प्रभवति शैलोदं नाम तत्
सरः ।
तस्मात् प्रभवते पुण्या नदी शैलोदका
शुभा ॥
सा वङ्क्षुशीतयोर्म्मध्ये प्रविष्टा
पश्चिमोदधिम् ।
अभ्युत्तरेण कैलासं शिवं सर्व्वौषधिं
गिरिम् ॥
गौरन्तु पर्व्वतश्रेष्ठं हरितालमयं प्रति ।

आसां जलं घनं नातिवातश्लेष्मविकारकृत्
॥
पूर्ब्बसागरगाश्चैव नद्यो नवशतैर्युताः ॥
कावेरी वीरकान्ता च भीमा चैव पयोष्णिका
।
विभावरी विशाला च गौरीदा मदनस्वसा ॥
पार्व्वती चापरा नद्यो दक्षिणाद्रिगमा हिमाः ।
प्रत्येकशो न सेवेत युक्तायाश्च पृथक् पृथक्
॥
सर्व्वासां परिसङ्ख्या च
शतानाञ्चैकविंशतिः ।
क्रोशं क्रोशं भवेत् कुल्या योजने योजने नदी
॥
योजनद्वयतो ज्ञेया महानीरा बुधैर्नदी ॥"
इति हारीते प्रथमे स्थाने सप्तमेऽध्याये ॥
"पश्चिमोदधिगाः शीघ्रवहा याश्चामलोदकाः
।
पथ्याः समासात्ता नद्यो
विपरीतास्त्वतोऽन्यथा।
उपलास्फालनाक्षेपविच्छेदैः खेदितोदकाः ॥
हिमवन्मलयोद्भूताः पथ्यास्ता एव च स्थिराः
।
कृमिश्लीपदहृत्कण्ठशिरोरोगान्प्रकुर्व्वते ॥
प्रच्यावन्त्या परान्तोत्था
दुर्नामानिमतेन्द्रजाः ।
उदरश्लीपदातङ्कान् सह्यविन्ध्योद्भवाः पुनः
॥
कुष्ठपाण्डुशिरोरोगान् दोषघ्नाः पारिपात्रजाः
।

वंशवरा महेन्द्रतनया ऋषिका लुषती मन्द-
गामिनी पलाशिनी । इत्येताः
शुक्तिमत्प्रभवाः ।
एताः प्राधान्येन कुलपर्व्वतनद्यः । शेषाः
क्षुद्र-
नद्यः । इति वराहपुराणम् ॥ * ॥
"कैलासपादसम्भूतं पुण्यं शीतजलं शुभम् ।
मन्दोदकं नाम सरः पयस्तु दधिसन्निभम् ॥
तस्मात् प्रभवते दिव्या नदी मन्दाकिनी शुभा
।
दिव्यञ्च चन्दनन्तत्र तस्यास्तीरे महद्वनम् ॥
प्रागुत्तरेण कैलासात् दिव्यं सौगन्धिकं गिरिम्
।
सर्व्वधातुमयं दिव्यं शवलं पर्व्वतं प्रति ॥
चन्द्रप्रभो नाम गिरिः सशुक्रो रत्नसन्निभः ।
तत्समीपे सरो दिव्यमच्छोदन्नाम विश्रुतम् ॥
तस्मात् प्रभवते दिव्या नदी ह्यच्छोदका
शुभा ।
तस्यास्तीरे वनं दिव्यं महच्चैत्ररथं शुभम् ॥
तस्मिन् गिरौ निवसति मणिभद्रः सहानुगः ।
यक्षः सेनापति क्रूरैर्गुह्यकैः परिवारितः ॥
पुण्या मन्दाकिनी चैव नदी ह्यच्छोदका शुभा
।
महीमण्डलमध्ये तु प्रविष्टे ते महोदधिम् ॥
कैलासाद्दक्षिणप्राच्यां शिवं सर्व्वौषधिं गिरिम्
मनःशिलामयं दिव्यं शवलं पर्व्वतं प्रति ॥
लोहितो हेमशृङ्गस्तु गिरिः सूर्य्यप्रभो महान् ।

हिरण्यशृङ्गः सुमहान् दिव्यौषधिमयो
गिरिः ॥
तस्य पादे महद्दिव्यं सरः
काञ्चनबालुकम् ।
रम्यं बिन्दुसरो नाम यत्र राजा
भगीरथः ॥
गङ्गार्थे स तु राजर्षिरुवास बहुलाः
समाः ।
तत्र त्रिपथगा देवी प्रथमन्तु प्रतिष्ठिता
॥
सोमपादात् प्रसूता सा सप्तधा
प्रतिभज्यते ।
भवस्य साङ्गे पतिता संरुद्धा
योगमायया ॥
ततो विसर्ज्जयामास सप्त स्रोतांसि
गङ्गया ।
त्रीणि प्राचीमभिमुखं प्रतीचीं त्रीण्यथैव
च ॥
स्रोतांसि त्रिपथायास्तु प्रत्यपद्यन्त
सप्तधा ।
नलिनी ह्लादिनी चैव पावनी चैव
प्राच्यगा ॥
शीता वङ्क्षुश्च सिन्धुश्च तिस्रस्ता वै
प्रतीच्यगा ।
सप्तमी त्वनुगा तासां दक्षिणेन
भगीरथम् ॥
तस्माद्भागीरथी सापि प्रविष्टा
दक्षिणोदधिम् ।
सप्तैताः प्लावयन्ति स्म
वर्षन्तद्धिममाह्वयम् ॥
प्रसूताः सप्त नद्यस्तु शुभा
बिन्दुसरोद्भवाः ।
तान् देशान् प्लावयन्ति स्म
म्लेच्छप्रायांश्च सर्व्वशः ॥
सलिलान् कुस्तुरांश्चीनान् वर्व्वरान्
यवनान्
खशान् ।
सूत्कुलांश्च कुलत्थांश्च
अङ्गलौक्यावरांश्च यान् ॥
कृत्वा द्विधा हिमवन्तं प्रविष्टा
दक्षिणीदधिम् ।

| | | |
|---|---|---|
| | | अथ चीनमरूंश्चैव कालकांश्चैव चूलकान् ॥<br>तुषारान् वर्व्वरान् कारान् पह्लवान् पारदान्<br>शकान् ।<br>एतान् जनपदान् वङ्क्षः प्लावयन्त्युदधिं गता ॥<br>वरदान् कूटजांश्चैव गान्धारानौरसान् कुहून् ।<br>शिवसौरानिन्द्रमरून् वसातीन् समतेजसा ॥<br>सैन्धवारट्टकाकेरान् कुपथान् भीमरौरुकान् ।<br>शुनामुखांश्चोर्द्धमरून् सिन्धुरेतान्निषेवते ॥<br>गन्धर्व्वान् किन्नरान् यक्षान् रक्षोविद्याधरो-<br>रगान् ।<br>कलापग्रामकांश्चैव तथा किंपुरुषान्नरान् ॥ |

किरातांश्च पुलिन्दांश्च कुरून् वै
भरतानपि ।
पाञ्चालकौशिकान्
मत्स्यान्मागधाङ्गांस्तथैव च ॥
ब्रह्मोत्तरांश्च वङ्गांश्च तामलिप्तांस्तथैव च ।
एतान् जनपदानार्य्यान् गङ्गा तारयते शुभा
॥
ततः प्रतिहता विन्ध्ये प्रविष्टा दक्षिणोदधिम्
।
ततस्तु ह्रादिनी पुण्या प्राचीमभिमुखा ययौ
॥
प्लावयन्त्यपकांश्चैव निषादानपि सर्व्वशः
।
धीवरानृषिकांश्चैव तथा लीनमुखानपि ॥
केकरानेकवर्णांश्च किरातानपि चैव हि ।
कालन्दरान् विवर्णांश्च कुशिकान्
स्वर्गभूमिकान् ॥
सा मण्डले समुद्रस्य तिरोभूत्वा तु सर्व्वशः
।
ततस्तु पावनी चैव प्राचीमेव दिशं ययौ ॥
कुपथान् प्लावयन्ती सा
इन्द्रद्युम्नसरांस्यपि ।
तथा खरपदान् देशान् वेत्रशङ्कुपथानपि ॥
मध्ये चोज्जानकमरून् कुथप्रावरणानपि ।
इन्द्रद्वीपात् समुद्रं सा प्रविष्टा लवणोदधिम्
॥
ततस्तु पावनी प्रायात् प्राचीमाशां जवेन तु
।
तोमरान् प्लावयन्ती सा हंसमार्गान्
समृद्धकान् ॥
पूर्णान् दर्भांश्च सेवन्ती भित्त्वा सा बहुधा
गिरिम् ।
कर्णप्रावरणान् प्राप्य गता साश्वमुखानपि
॥
सिकतापर्व्वतमरून् गत्वा विद्याधरान् ययौ
।
वामिमण्डलकोष्ठन्तु सा प्रविष्टा महत् सरः
॥
तासां नद्युपनद्यश्च शतशोऽथ सहस्रशः ।

कौषिकी नाम सा जाता
विश्वामित्रावतारिता ।
उमाक्षेत्रे यत् षतितं तोयं तेन महानदी ॥
कावेरी नाम सा जाता तदा कावेरसंसृता
।
महाकाले सरःश्रेष्ठे पतितं तज्जलं गिरेः
॥
हिमाद्रेः पार्श्वभागे तु दक्षिणे
शम्भुसन्निधौ ।
गोमन्ति नाम तैर्ज्जाता नदी
गोमत्युदीरिता ॥
मैनाको नाम यः पुत्त्रः शैलराजस्य च
प्रियः ।
यस्तु तस्मिन् समुत्पन्नो मेनकोदरतः
पुरा ॥
तत्तत्र पतितं तोयं तस्माज्जाता
महानदी ।
देविकाख्या महादेवप्रेरिता सागरं प्रति ॥
तत्तोयं सङ्गतं कुर्य्याद्धंसा वडवसन्निधौ
।
तेनाभूत् सरयूर्न्नाम्ना नदी पुण्यतमा
शुभा ॥
यान्यम्भांसि महापार्श्वे
खाण्डवारण्यसन्निधौ ।
हिमवत्कन्दरे याम्ये इरावद्ध्रदमन्यतः ।
इरावती नाम नदी तैस्तु जाता सरिद्वरा
॥
एताः सर्व्वाः स्नानपानात्
स्मरणैर्ज्जाह्नवी
यथा ।
फलं ददति मर्त्यानां दक्षिणोदधिगाः
सदा ॥
धर्म्मार्थकाममोक्षाणां बीजभूताः
सनातनाः ।
महानद्यस्तु सप्तैताः सर्व्वदा देवभोगदाः
॥
एवं नद्यः सप्त जाताः सदा
पुण्यतमोदकाः ।

**नदीकदम्बः**, पुं, (नदीनां कदम्बं समूहो यत्र ।)
महाश्रावणिका । इति राजनिर्घण्टः ॥
(नदीनां
कदम्बम् ।) नदीसमूहे, क्ली ॥

**नदीकान्तः**, पुं, (नदीनां कान्तः पतिः ।) समुद्रः ।
(नदी कान्ता प्रिया यस्य ।) हिज्जलवृक्षः ।
सिन्धुवारकः । इति मेदिनी । ते, २०० ॥

**नदीकान्ता**, स्त्री, (नदी कान्ता यस्याः ।) जम्बु-
वृक्षः । काकजङ्घौषधिः । इति मेदिनी । ते,
२०१ ॥ (अस्याः पर्य्यायो यथा, --
"काकजङ्घा नदीकान्ता काकतिक्ता
सुलोमशा ।
पारावतपदी दासी काका चापि प्रकीर्त्तिता
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)
लता । इति हेमचन्द्रः ॥

**नदीकूलप्रियः**, पुं, (नदीकूलं प्रियं यस्य । नदी-
कूलजातत्वादस्य तथात्वम् ।) जलबेतसः ।
इति
जटाधरः ॥

**नदीजं**, क्ली, (नद्या जायते इति । जन + डः ।)
स्रोतोऽञ्जनम् । इति हेमचन्द्रः ॥ (अस्य
पर्य्यायो यथा, वैद्यकरत्नमालायाम् ।
"स्रोतोऽञ्जनं नदीजञ्च कृष्णं
स्रोतोजलाञ्जनम् ॥")

**नदीजः**, पुं, (नद्या जायते इति । जन + डः ।)
अर्ज्जुनवृक्षः । इति रत्नमाला ॥ (अस्य
पर्य्यायो
यथा, वैद्यकरत्नमालायाम् ।
"धन्वी धनञ्जयः पार्थो नदीजः
ककुभोऽर्ज्जुनः ॥")
यावनालशरः । हिज्जलवृक्षः । इति राज-
निर्घण्टः ॥ (विटमाक्षिकः । इति हेमचन्द्रः ।
४ । १२१ ॥ यथा, सुश्रुते उत्तरतन्त्रे । १७
।

उपगच्छन्ति ता नद्यो यतो वर्षति वासवः
॥
हेमकूटस्य पृष्ठे तु सर्पाणामुत्सवः स्मृतः ।
सरस्वती प्रभवति तस्मात् ज्योतिष्मती तु
या ॥
अवगाहेतोभयतः समुद्रौ पूर्ब्बपश्चिमौ ।
सरो विष्णुपदं नाम निषधे पर्व्वतोत्तमे ॥
तस्मात् द्वयं प्रभवति गन्धर्व्वी नकुला च तें
।
मेरोः पार्श्वात् प्रभवति ह्रदश्चन्द्रप्रभो
महान् ॥
जम्बुश्चैव नदी पुण्या यस्यां जाम्बुनदं
स्मृतम् ।
पयोदस्तु ह्रदो नीलः स शुभः पुण्डरीकवान्
॥
पुण्डरीका पयोदा च तस्माद्वै संप्रसूयते ।
सरस्तु सरसश्चैव स्मृतमुत्तरमानसम् ॥
मृग्या च मृगकान्ता च तस्माद्व संप्रसूयते ।
ह्रदाः कुरुषु विख्याताः पद्ममीनकुलाकुलाः
॥
नाम्ना ते विजया नाम द्वादशोदधिसन्निभाः
।
तेभ्यः शान्ता च माध्वी च द्वे नद्यौ संप्रसू-
यतः ॥”
इति मत्स्यपुराणे १०१ अध्यायः ॥ * ॥
अथ सिप्रादिसप्तनद्युत्पत्तिकारणम्।
“एवं विवाह्य विधिवत् सौवर्णे मानसाचले ।
अरुन्धती वशिष्ठस्तु मोदमाप तया सह ॥
तत्र यत् पतितं तोयं मानसाचलकन्दरे ।
विवाहावभृथार्थाय शान्त्यर्थं वसुधाकृतम्
॥
ब्रह्मविष्णुमहादेवपाणिभिः समुदीरितम् ।
तत्तोयं सप्तधा भूत्वा पतितं मानसाचलात्
॥
हेमाद्रेः कन्दरे सानौ सरस्याञ्च पृथक्
पृथक् ।
तत्तोयं पतितं सिप्रे देवभोग्ये सरोवरे ॥
तेन सिप्रा नदी जाता विष्णुना प्रेरिता
क्षितिम् ।
महाकोषीप्रपाते च यद्वारि पतितन्तु तैः ॥
अरुन्धत्या वशिष्ठस्य विवाहे देवसन्निधौ
॥”
इति कालिकापुराणे २३ अध्यायः ॥ *
॥
नद्यादीनां रूपद्वयं यथा, --
“नद्यश्च पर्व्वताः सर्व्वे द्विरूपाश्च
स्वभावतः ।
तोयं नदीनां रूपन्तु शरीरमपरन्तथा ॥
स्थावरं पर्व्वतानान्तु रूपं
कायस्तथापरः ।
शुक्तीनामथ कम्बूनां तथैवान्तर्गता तनूः
॥
बहिरस्थिस्वरूपन्तु सर्व्वदैव प्रवर्त्तते ।
एवं जलं स्थावरश्च नदीपर्व्वतयोस्तथा
॥
अन्तर्व्वसति कायस्तु सततं नोपपद्यते ।
आप्याय्यते स्थावरेण शरीरं पर्व्वतस्य
तु ॥
तथा नदीनां कायस्तु तोयेनाप्याय्यते
सदा ।
नदीनां कामरूपित्वं पर्व्वतानान्तथैव च
।
जगत्स्थित्य पुरा विष्णुः कल्पयामास
यत्नतः ॥
तोयहानौ नदीदुःखं जायते सततं द्विजाः
।
विशीर्णे स्थावरे दुःखं जायते
गिरिकायगम् ॥”
इति कालिकापुराणे २२ अध्यायः ॥
तस्या वैदिकपर्य्यायः । अवनयः १
यह्व्य २
खाः ३ सीराः ४ स्रोत्याः ५ एन्यः ६
धुनयः ७
रुजानाः ८ वक्षणाः ९ स्वादोअर्णाः १०
रोध-
चक्राः ११ हरितः १२ सरितः १३
अग्रुवः १४
नभन्वः १५ वध्वः १६ हिरण्यवर्णाः
१७
रोहितः १८ ससुतः १९ अर्णाः २०
सिन्धवः २१
“नदीजशिम्बीकटुक्रान्यथाञ्जनं
मनःशिला द्वे च निशे यकृद्रसे ॥”
नृपतिविशेषः । यथा, महाभारते । ५ । ४ ।
१९ ।
“सुरारिश्च नदीजश्च कर्णवेष्टश्च पार्थिवः
॥”
भीष्मः । गङ्गागर्भजातत्वात् तथात्वम् ।
यथा,
तत्रैव । ५ । १४८ । ३२ ।
“अयन्तु धर्म्मज्ञतया महात्मा
न राज्यकामो नृवरो नदीजः ॥”)
नदीजाते, त्रि ॥ (यथा, महाभारते । ७ ।
१०२ । ८ ।
“पार्व्वतीयैर्नदीजैश्च सैन्धवैश्च महाहयैः
॥”)

**नदीजा**, स्त्री, (नद्या जायते या सा । जन +
डः + टाप् ।) अग्निमन्थवृक्षः । इति राज-
निर्घण्टः ॥

**नदीतरस्थानं**, क्ली, (नद्यास्तरस्थानमवतरण-
स्थलम् ।) घट्टः । इति भूरिप्रयोगः ॥ (नद्या
इतरस्थानम् ।) नदीभिन्नस्थानम् ॥

**नदीनः**, पुं, (नदीनां इनः पतिः ।) समुद्रः ।
इति त्रिकाण्डशेषः ॥ वरुणः । यथा । अयं
नदीन इत्याद्युत्तरनैषधः ॥ (अनेनोवंशीयस्य
सहदेवस्य पुत्त्रः । यथा, हरिवंशे । २९ । ४
।
“सहदेवस्य धर्म्मात्मा नदीन इति विश्रुतः ।
नदीनस्य जयत्सेनो जयत्सेनस्य सत्कृतिः
॥”
न दीनः इति नञ्समासे दरिद्रभिन्ने, त्रि ॥)

**नदीनिष्पावः**, पुं, (नदीसम्मुखजातो निष्पावः ।)
धान्यभेदः । तत्पर्य्यायः । कटनिष्पावः २
कर्व्वुरः ३

| | कुल्याः २२ वर्य्यः २३ उर्व्व्यः २४<br>इरावत्यः २५<br>पार्वत्यः २६ स्रवन्त्यः २७<br>ऊर्ज्जस्वत्यः २८<br>पयस्वत्यः २९ सरस्वत्यः ३०<br>तरस्वत्यः ३१ हर-<br>स्वत्यः ३२ रोधस्वत्यः ३३ भास्वत्यः<br>३४ अजिराः ३५<br>मातरः ३६ नद्यः ३७ । इति<br>सप्तत्रिंशन्नदी-<br>नामानि । इति वेदनिघण्टौ । १ । १३ ॥<br>(चतुर्द्दशाक्षरवृत्तिविशेषः । तल्लक्षणं<br>यथा, --<br>“ननतजगुरुगैः सप्तयतिर्न्नदी स्यात् ॥”) | |
|---|---|---|

नदीजः ४ । अस्य गुणाः । तिक्तत्वम् । कटु-
त्वम् । अस्रप्रदत्वम् । गुरुत्वम् । वातलत्वम् ।
कफदत्वम् । रूक्षत्वम् । काषायत्वम् ।
विषदोष-
नाशित्वञ्च । इति राजनिर्घण्टः ॥

**नदीमातृकः**, त्रि, (नदी मातेव पोषिका यस्य ।

कप् ।) नद्यम्बुसम्पन्नव्रीहिपालितदेशः । इत्य-
मरः । २ । १ । १२ ॥

**नदीवङ्कः**, पुं, (नद्या वङ्कः ।) वङ्कुरः । इति शब्द

माला ॥ वाँक इति भाषा ॥

**नदीवटः**, पुं, (नदीसमीपजातो वटः ।) वटी-

वृक्षः । इति राजनिर्घण्टः ॥

**नदीष्णः**, त्रि, (नद्यां स्नातीति । स्ना + "सुपि

स्थः ।" ३ । २ । ४ । इति कः । "निनदीभ्यां
स्नातेः
कौशले ।" ८ । ३ । ८९ । इति षत्वम् ।) नद्य-
वगाहनदक्षः । नदीस्नानकुशलः । इति भट्टि-
टीकायां पुण्डरीकाक्षः ॥ नदीज्ञः । इति
पुरुषोत्तमः ॥ यथा, --
"ततो नदीष्णान् पथिकान् गिरिज्ञान् ॥"
इति भट्टिः ॥

**नदीसर्ज्जः**, पुं, (नद्याः सर्ज्ज इव । नदीतीरजात-

त्वादस्य तथात्वम् ।) अर्ज्जुनवृक्षः । इत्यमरः
।
२ । ४ । ४५ ॥ (पर्य्यायोऽस्य यथा, --
"ककुभोऽर्ज्जुननामाख्यो नदीसर्ज्जश्च
कीर्त्तितः ।
इन्द्रद्रुर्नीरवृक्षश्च वीरश्च घवलः स्मृतः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**नदेयी**, स्त्री, (नद्यां भवा । "नद्यादिभ्यो ढक् ।"

४ । २ । ९७ । इति ढक् । पृषोदरादित्वात्
ह्रस्वः ।)
नादेयी । भूमिजम्बुः । इति शब्दचन्द्रिका ॥

**नद्धः**, त्रि, (नह्यते स्मेति । नह + क्तः ।) बद्धः ।

(यथा, हरिवंशे । २३२ । १७ ।
भावः ।) भर्तृभगिबी । ननद इति भाषा
॥
तत्पर्य्यायः । ननान्दा २ नन्दिनी ३
नन्दा ४
पतिस्वसा ५ । इति शब्दरत्नावली ॥

**ननान्दा**, [ऋ] स्त्री, (न नन्दति सवयापि ।

नन्द + "नञि च नन्देः ।" उणां २ ।
९९ । इति
ऋन् वृद्धिश्च ।) ननन्दा । इति
शब्दरत्नावली ॥
(यथा, ऋग्वेदे । १० । ८५ । ४६ ।
"सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्वां भव
।
ननान्दरि सम्राज्ञी भव सम्राज्ञी अधि
देवृषु ॥")

**ननु**, व्य, (न नुदति प्रेरयतीति । नुद् +
मितद्र्वादि-

त्वात् डुः ।) प्रश्नः । पृच्छा ।
अवधारणम् ।
(यथा, रघुः । १ । ६० ।
"उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।
दैवीनां मानुषीणाञ्च प्रतिहर्त्ता
त्वमापदाम् ॥")
निश्चयः । (यथा, महाभारते । १३ । ६
। १९ ।
"लोको दैवं समालोक्य उदासीनो
भवेन्ननु ॥")
अनुज्ञा । (यथा, शिशुपालवधे । ९ ।
६१ ।
"ननु सन्दिशेति सुदृशोदितया
त्रपया न किञ्चन किलाभिदधे ॥")
अनुमतिः । अनुनयः । सान्त्वनम् ।
आमन्त्र-
णम् । सम्बोधनम् । (यथा, कुमारे । ४
। ३२ ।
"विधुरां ज्वलनातिसर्ज्जनात्
ननु मां प्रापय पत्युरन्तिकम् ॥")
एषामुदाहरणानि यथा, --
आनन्दः । निधिविशेषः । इति
पुराणशब्द-
रत्नावल्यौ ॥ गोपभेदः । स च
श्रीकृष्णपिता ।
नन्दः पुरा द्रोणनामा वसुरासीत् । यथा,
--
"द्रोणो वसूनां प्रवरो धरया सह भार्य्यया
।
करिष्यमाण आदेशान् ब्रह्मणस्तमुवाच ह
॥
जातयोर्नौ महादेवे भुवि विश्वेश्वरे हरौ ।
भक्तिः स्यात् परमा लोको ययाञ्जो
दुर्गतिन्तरेत् ॥
स्वस्तीत्युक्तः स भगवान् व्रजे द्रोणो
महायशाः ।
जज्ञे नन्द इति ख्यातो यशोदा सा
धराभवत् ॥"
इति श्रीभागवते । १० । ८ । ४८-५० ॥
वेणुविशेषः । यथा, --
"महानन्दस्तथा नन्दो विजयोऽथ
जयस्तथा ।
चत्वार उत्तमा वंशा मातङ्गमुनिसम्मताः
॥
दशाङ्गुलो महानन्दो नन्द एकादशाङ्गुलः
॥"
इति सङ्गीतदामोदरः ॥
(मृदङ्गविशेषः । यथा, महाभारते । ७ ।
२२ । ८५ ।
"मृदङ्गौ चात्र विपुलौ दिव्यौ
नन्दोपनन्दकौ ॥"
स्कन्दस्यानुचरविशेषः । इति महाभारते
। ९ ।
४५ । ६१ ॥ नागविशेषः । इति
महाभारते ।
५ । १०३ । १२ ॥
यज्ञेश्वरस्यानुचरविशेषः ।
यथा, भागवते । ४ । ७ । २२ ।
"दक्षो गृहीतार्हणसादनोत्तमं
यज्ञेश्वरं विश्वसृजां परं गुरुम् ।
सुनन्दनन्दाद्यनुगैर्वृतं मुदा

"दिव्यैश्च कवचैर्नद्धा दिव्यैश्चैवोच्छ्रितैर्ध्वजैः ॥")
उद्वृत्तः । इति मेदिनी । धे, ९ ॥

**नद्ध्री**, स्त्री, (नह्यतेऽनया । नह + दाम्नीति ष्ट्रन् । ततो ङीप् ।) चर्म्मरज्जुः । इत्यमरः । २ । १० । ३२ ॥
(यथा, प्रद्युम्नविजये चतुर्थाङ्के ।
"अत्रापि धिग्जनुषि पुत्त्रकलत्रमित्र-
नद्ध्यावनद्धहृदयो न च तं स्मरामि ॥")

**नद्याम्रः**, पुं, (नद्या आम्र इव ।) समष्ठिला-वृक्षः । इति राजनिर्घण्टः ॥

**नद्युत्सृष्टः**, त्रि, (नद्या उत्सृष्टः ।) नदीकर्त्तृक-त्यक्तवस्तु । तद्रूपभूखण्डस्य चर इति चडा इति च भाषा ॥ नद्युत्सृष्टा भूमिस्तु यस्याधि-कारे जाता तस्यैव भवति । यथा, --
"नद्युत्सृष्टा राजदत्ता यस्य तस्यैव सा मही ।
अन्यथा न भवेल्लाभो नराणां राजदैविकः ॥
क्षयोदयौ जीवनञ्च दैवराजवशान्नृणाम् ।
तस्मात् सर्व्वेषु कार्य्येषु तत्कृतं न विचालयेत् ॥"
इति विवादचिन्तामणिविवादरत्नाकरवीर मित्रोदयप्रभृतिग्रन्थधृतवचनम्॥

**ननन्दा**, [ऋ] स्त्री, (न नन्दति तुष्यति सेव यापि । नञ् + नन्द + "नञि च नन्देः ।" उणां २ । ९९ । इति ऋन् । केषाञ्चिन्मतेन वृद्ध्य-

"प्रश्ने नन्वध्येष्यामहे । अवधारणे ननु गच्छामः ।
अनुज्ञायां सर्व्वैर्ननु ज्ञायताम् । अनुनये ननु
चण्डि ! प्रसीद । आमन्त्रणे ननु चैत्र । विरो-
धोक्तिः । इत्यमरभरतौ ॥ विनिग्रहः । अनु-
प्रश्नः । परकृतिः । अधिकारः । सम्भ्रमः । इति
मेदिनी । ने, ४४ ॥ आक्षेपः । प्रत्युक्तिः । वाक्या-
रम्भः । इति हेमचन्द्रः । ६ । १७८ ॥ उत्-
प्रेक्षालङ्कारव्यञ्जकम् । यथा, --
"मन्ये शङ्के ध्रुवं नूनं किंवा प्रायोऽनुवेद्मि च ।
ननु नाम हि जानामि उत्प्रेक्षाव्यञ्जकानि च ॥"
इति काव्यचन्द्रिका ॥

**ननुच**, व्य, विरोधोक्तिः । इत्यमरः । ३ । ४ । १४ ॥
ननुचेति समुदितं विरोधवचने ननुशब्दो विरो-
धोक्तौ चकारात् ननुचेति वा । इति भरतः ॥

**नन्दः**, पुं, (नन्दतीति । नन्द + पचाद्यच् ।)
विष्णुः । यथा । "आनन्दो नन्दनो नन्दः ।" इति
महाभारते । १३ । १४९ । ६९ ॥ नरपतिभेदः ।
स तु महानन्दिसुतः क्षत्त्रियवंशान्तः । (यथा,
भागवते । १२ । १ । ७ -- ११ ।
"महानन्दिसुतो राजन् ! शूद्रागर्भोद्भवो बली ।
महापद्मपतिः कश्चिन्नन्दः क्षत्त्रविनाशकृत् ।
ततो नृपा भविष्यन्ति शूद्रप्रायास्त्वधार्म्मिकाः ॥

गृणन् प्रपेदे प्रयतः कृताञ्जलिः ॥"
धृतराष्ट्रस्य पुत्त्राणामन्यतमः । इति महा-
भारतम् । १ । ६७ । ९६ । मदिरागर्भजातो
वसुदेवस्य पुत्त्रविशेषः । इति भागवतम् । ९ ।
२४ । ४८ ॥ क्रौञ्चद्वीपस्य वर्षपर्व्वतविशेषः ।
इति भागवतम् । ५ । २० । २१ ॥ स्वनाम-
ख्यातो दत्तकमीमांसाग्रन्थप्रणेता । यथा, --
"अभिवन्द्य जगद्वन्द्यपदद्वन्द्वविनायकम् ।
पुत्त्रीकरणमीमांसां कुरुते नन्दपण्डितः ॥")

**नन्दकः**, पुं, (नन्दयतीति । नन्द + ण्वुल् ।) विष्णु-
खड्गः । इत्यमरः । १ । १ । ३० ॥ (यथा,
हरिवंशे । १२७ । ४४ ।
"रथाङ्गेनाथ शार्ङ्गेण गदया नन्दकेन च ।
प्रहरारुह्य गरुडं दृढो भूत्वा जनार्द्दन ! ॥")
भेकः । इति त्रिकाण्डशेषः ॥ हर्षके कुलपालके
च त्रि । इति मेदिनी । के, १०९ ॥ कृष्णपिता
आनन्दः । आनन्दकारकश्च ॥ (नागविशेषः
इति महाभारतम् । ५ । १०३ । ११ ॥ स्कन्द-
स्यानुचरविशेषः । इति महाभारतम् । ९ ।
४५ । ६६ ॥ धृतराष्ट्रस्य पुत्त्रविशेषः । इति
महाभारतम् । १ । १८७ । ३ ॥)

**नन्दकिः**, स्त्री, पिप्पली । इति शब्दचन्द्रिका ॥

**नन्दकी**, [न्] पुं, (नन्द्रकः खड्गोऽस्त्यस्येति ।
नन्दक + इनिः ।) विष्णुः । यथा, --

| | | |
|---|---|---|
| | स एकच्छत्रां पृथिवीमनुल्लङ्घितशासनः ।<br>शासिष्यति महापद्मो द्वितीय इव भार्गवः ॥<br>तस्य चाष्टौ भविष्यन्ति सुमाल्यप्रमुखाः सुताः ।<br>य इमां भोक्ष्यन्ति महीं राजानश्च शतं समाः ॥<br>नव नन्दान् द्विजः कश्चित् प्रपन्नाबुद्धरिष्यति ।<br>तेषामभावे जगतीं मौर्य्या भक्ष्यन्ति वै कलौ ॥”) | “शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः ॥”<br>इति महाभारते शान्तिपर्व्व ॥<br>**नन्दगोपिता**, स्त्री, (नन्दाय हर्षाय गोपिता रक्षिता ।) रास्ना । इति शब्दचन्द्रिका ॥ |

(नन्दगोपः अस्या जातः । तारकादित्वात्

इतच् ।) नन्दगोपजन्मभूम्यादिः ॥

**नन्दथुः**, पुं, (नन्दनमिति । नन्द + “द्वितोऽथुच् ।”

३ । ३ । ८९ । इति अथुच् ।) आनन्दः । इति

शब्दरत्नावली ॥

**नन्दनं**, क्ली, (नन्दयतीति । नन्द + “नन्दिग्रहि-

पचादिभ्यो ल्यणिन्यचः ।” ३ । १ । १३४ । इति

ल्युः ।) इन्द्रवनम् । इत्यमरः । १ । १ । ४८ ॥

(यथा, कुमारे । २ । ४१ ।

“अभिज्ञाश्छेदपातानां क्रियन्ते नन्दनद्रुमाः ॥”

अष्टादशाक्षरवृत्तिविशेषः । अस्य विवरणन्तु

छन्दःशब्दे द्रष्टव्यम् ॥ आनन्दः । यथा, महा-

भारते । २ । २५ । ६ ।

“स्वस्तिवाच्यार्हतो विप्रान् प्रयाहि भरतर्षभ ! ।

दुर्हृदामप्रहर्षाय सुहृदां नन्दनाय च ॥”)

हर्षके, त्रि । इति मेदिनी । ने, ८० ॥ (यथा,

महाभारते । ३ । १४६ । ५ ।

“पश्य दिव्यं सुरुचिरं भीम पुष्पमनुत्तमम् ।

गन्धसंस्थानसम्पन्नं मनसो मम नन्दनम् ॥”)

**नन्दनः**, पुं, (नन्दयतीति । नन्द + ल्युः ।) पर्व्वत-

भेदः । यथा, कालिकापुराणे ७५ अध्याये ।

“तीरे तु चन्द्रकुण्डस्य नन्दनो नाम वै गिरिः

तस्मिन् वसति शक्रस्तु कामाख्यासेवने रतः ॥

मर्त्यभावं समासाद्य सर्व्वदेवेश्वरो हरिः ।

सेवितुं त्रिदशेशानीं सततं वर्त्तते नतः ॥

चन्द्रकूटस्य तु गिरेर्नन्दनस्य तथा गिरेः ।

प्रतिदर्शं तथा चन्द्रं प्रदक्षिणयति त्रिधा ॥

चन्द्रकुण्डजले स्नात्वा समारुह्य च नन्दनम् ।

आराध्य शक्रं लोकेशं महाफलमवाप्नुयात् ॥”

(विषविशेषः । इति हेमचन्द्रः । ४ । २६३ ॥

अत्रार्थे, पुं, क्ली, इति वाचस्पतिः ॥ यथा, सुश्रुते

कल्पस्थाने २ अध्याये ।

“अन्त्रपाचककर्त्तरीयसौरीयककरघाटकरम्भ

नन्दनवराटकानि सप्त त्वक्सारनिर्य्यासविषाणि

॥”

स्कन्दस्यानुचरविशेषः । यथा, महाभारते ।

९ । ४५ । ३६ ।

“अतीन्द्रियेष्वप्युपपन्नदर्शनो

बभूव भावेषु दिलीपनन्दनः ॥”)

भेकः । इति शब्दरत्नावली ॥

**नन्दनजं**, क्ली, (नन्दने जायते इति । जन +
डः ।)

हरिचन्दनम् । इति राजनिर्घण्टः ॥

(नन्दनात्

आनन्दाज्जायते इति ।) हर्षजाते, त्रि

॥ (पौत्रश्च ॥)

**नन्दनन्दनः**, पुं, (नन्दस्य नन्दनः सुतः
आनन्द-

जनको वा ।) श्रीकृष्णः । इति

शब्दरत्नावली ॥

तस्य लीलासंवरणान्ते तन्महिषीणां

दस्यु-

हस्तगतत्वकारणं यथा, --

व्यास उवाच ।

“कः श्रद्दध्यात् सगाङ्गेयान् हन्यास्त्वं

सर्व्वकौर-

वान् ।

आभीरेभ्यश्च भवतः कः श्रद्दध्यात्

पराभवम् ॥

पार्थैतत् सर्व्वभूतस्य

हरेर्लीलाविचेष्टितम् ।

त्वया यत् कौरवा ध्वस्ता

यदाभीरैर्भवान् जितः ॥

गृहीता दस्युभिर्याश्च भवता शोचिताः

स्त्रियः ।

तदप्यहं यथावृत्तं कथयामि

तवार्ज्जुन ! ॥

अष्टावक्रः पुरा विप्रो

जलवासरतोऽभवत् ।

बहूनब्दगणान् पार्थ ! गृणन् ब्रह्म

सनातनम् ॥

जितेष्वसुरसंघेषु मेरुपृष्ठे महोत्सवः ।

बभुव तत्र गच्छन्त्यो ददृशुस्तं

वरस्त्रियः ॥

रम्भातिलोत्तमाद्यास्तु शतशोऽथ

सहस्रशः ।

**नन्दनन्दिनी**, स्त्री, (नन्दस्य नन्दिनी कन्या ।)

“नन्दगोपगृहे जाता यशोदागर्भसम्भवा

।” इति

मार्कण्डेयपुराणोक्तदेवीवचनात्

तथात्वम् ।)

दुर्गा । इति शब्दरत्नावली ॥

**नन्दनमाला**, स्त्री, (नन्दना आनन्दजनिका

माला ।) कृष्णप्रीतिकृन्मालिकाविशेषः

। यथा,

“भूप नन्दनमालान्तु कुरुते

कृष्णवेश्मनि ।

देवकन्यावृतैर्लक्षैः सेव्यते सुरनायकैः

॥”

इति द्वारकामाहात्म्ये

हरिभक्तिविलासधृत-

विष्णुधर्म्मोत्तरम् ॥

**नन्दना**, स्त्री, (नन्दयतीति । नन्दि + ल्युः । टाप्
।)

दुहिता । इति जटाधरः ॥

**नन्दन्तः**, पुं, (नन्दत्यनेनेति । नन्द +
“रुहिनन्दि-

जीविप्राणिभ्यः षिदाशिषि ।” उणां ३ ।

१२७ ।

इति झच् सच षित् ।) पुत्त्रः । राजा ।

मित्रम् ।

इति संक्षिप्तसारोणादिवृत्तिः ॥

**नन्दपालः**, पुं, (नन्दं आनन्दं निधिविशेषं वा

पालयतीति । पालि + अच् ।) वरुणः ।

इति

शब्दरत्नावली ॥

**नन्दपुत्त्री**, स्त्री, (नन्दस्य पुत्त्री ।) दुर्गा । इति

त्रिकाण्डशेषः ॥

**नन्दयन्तः**, त्रि, (नन्दयतीति । नन्दि + “तॄभू-

वहीति ।” उणां ३ । १२८ । इति झच्

सच

"बर्द्धनं नन्दनञ्चैव सर्व्वविद्याविशारदौ ।
स्कन्दाय ददतुः प्रीतावश्विनौ भरतर्षभ ! ॥"
सिद्धपुरुषविशेषः । यथा, भागवते । ४ । ६ । ३३ ।
"स नन्दनाद्यैर्म्महासिद्धैः शान्तैः संशान्त-
विग्रहम् ।
उपास्यमानं सख्या च भर्त्रा गुह्यकरक्षसाम् ॥"
जिनबलविशेषः । इति हेमचन्द्रः । ३ । ३६२ ॥ वत्-
सरविशेषः । यथा, बृहत्संहितायाम् । ८ । ३८ ।
"नन्दनोऽथ विजयो जयस्तथा
मन्मथोऽथ परतश्च दुर्म्मुखः ॥"
महादेवः । यथा, महाभारते । १३ । १७ । ७५ ।
"नन्दीश्वरश्च नन्दी च नन्दनो नन्दिवर्द्धनः ॥")
विष्णुः । यथा, "आनन्दो नन्दनो नन्दः ।" इति
महाभारते । १३ । १४९ । ६९ ॥

**नन्दनः**, पुं, स्त्री, (नन्दयतीति । नन्द + ल्युः ।) सुतः ।

इति मेदिनी । ने, ८० ॥ (यथा, रघुः । ३ । ४१ ।
तुष्टुवुस्तं महात्मानं प्रशशंसुश्च
पाण्डव ! ॥
आकण्ठमग्नं सलिले जटाभारधरं
मुनिम् ।
विनयावनताश्चैनं प्रणेमुः
स्तोत्रतत्पराः ॥
यथा यथा प्रसन्नोऽसौ तुष्टुवुस्तं तथा
तथा ।
सर्व्वास्ताः कौरवश्रेष्ठ ! वरिष्ठन्तं
द्विजन्मनाम् ॥
श्रीअष्टावक्र उवाच ।
प्रसन्नोऽहं महाभागा भवतीनां
यदीस्यते ।
मत्तस्तद्व्रियतां सर्व्वं
प्रदास्याम्यतिदुर्ल्लभम् ॥
श्रीपराशर उवाच ।
रम्भातिलोत्तमाद्यास्तं
वैदिक्योऽप्सरसोऽब्रुवन् ।
प्रसन्ने त्वय्यसंप्राप्तं किमस्माकमिति
द्विज ! ॥
इतरास्त्वब्रुवन् विप्र ! प्रसन्नो भगवान्
यदि ।
तदिच्छामः पतिं प्राप्तुं विप्रेन्द्र !
पुरुषोत्तमम् ॥
श्रीव्यास उवाच ।
एवं भविष्यतीत्युक्त्वा प्रोत्ततार
जलान्मुनिः ।
तमुत्तीर्णञ्च ददृशुर्व्विरूपं वक्रमष्टधा ॥
तब्दृष्ट्वा गूहमानानां यासां हासः
स्फुटोऽभवत् ।
ताः शशाप मुनिः कोपमवाप्य
कुरुनन्दन ! ॥
श्रीअष्टावक्र उवाच ।
यस्माद्विरूपरूपं मां मत्वा
हासावमानना ।
भवतीभिः कृता तस्मादेष शापं
ददामि वः ॥
मत्प्रसादेन भर्त्तारं लब्ध्वा तु
पुरुषोत्तमम् ।
मच्छापोपहताः सर्व्वा दस्युहस्तं
गमिष्यथ ॥"
षित् ।) आनन्दजनकः । इति
सिद्धान्तकौमु-
द्यामुणादिवृत्तिः ॥

**नन्दा**, स्त्री, (नन्दयतीति । नन्दि + अच् + टाप् ।)

गौरी । अलिञ्जरः । नादा इति भाषा ।
तिथि-
विशेषः । ताश्च उभयपक्षयोः
प्रतिपत्षष्ठ्येका-
दश्यः । इति मेदिनी । दे, ६ ॥ (यथा, --
"नन्दा भद्रा जया रिक्तापूर्णा प्रतिपदः
क्रमात् ॥"
इति ज्योतिषम् ॥)
ननान्दा । इति शब्दरत्नावली ॥
सम्पत् । इति
हेमचन्द्रः ॥ * ॥ दुर्गाया
नन्दानामकारणं
यथा, --
"एवमुक्त्वा भवं ब्रह्मा पुनर्द्देवीं स
चाब्रवीत् ।
त्वया देवि ! महत् कार्य्यं
कर्त्तव्यञ्चान्यदस्ति नः ॥
भविष्यं महिषाख्यस्य असुरस्य
विनाशनम् ।
एवमुक्त्वा ततो ब्रह्मा सर्व्वे देवाश्च
पार्थिव ! ॥
यथागतास्ततो जग्मुर्द्देवीं स्थाप्य हिमे
गिरौ ।
संस्थाप्य नन्दिता यस्मात्तस्मान्नन्दा तु
सा भवेत् ॥"
इति वराहपुराणम् ॥ * ॥
अपि च ।
"नन्दते सुरलोकेषु नन्दने वसतेऽथवा ।
हिमाचले महापुण्ये नन्दा देवी ततः
स्मृता ॥"
तस्या माहात्म्यादि यथा, --
"यथा गङ्गा नदीनान्तु उत्तमत्वे
व्यवस्थिता ।

| | | |
|---|---|---|
| | “एवन्तस्य मुनेः शापादष्टावक्रस्य केशवम् ।<br>भर्त्तारं प्राप्य ता याता दस्युहस्तं वराङ्गनाः ॥<br>तत्त्वया नात्र कर्त्तव्यः शोकोऽल्पोऽपि हि<br>पाण्डव ! ।<br>तेनैवाखिलनाथेन सर्व्वन्तदुपसंहृतम्<br>इति विष्णुपुराणे । ५ । ३८ । ६८ -- ८५ ॥ | तद्वद्भगवती नन्दा उत्तमत्वेन संस्थिता ॥<br>मासे भाद्रपदे देवि ! शुक्लपक्षे व्रजेत् सदा ।<br>तस्येच्छा श्रावणाषाढे अन्यथा न कदाचन ॥<br>तेषाञ्च चन्द्रनागस्तु पीडां कुर्य्यात् सुलोचने ।<br>न गच्छन्ति सुराः सिद्धाः किं पुनर्म्मानुषादयः ॥<br>विषवातहताः केचित्<br>विषवातप्रपीडिताः । |

विमुह्यन्ते नरा देवि यान्ति देव्याः
प्रसादतः ॥”
इति देवीपुराणम् ॥
(कामधेनुविशेषः । यथा, वह्निपुराणे
कामधेनु-
प्रदाननामाध्याये ।
“नन्दा सुनन्दा सुरभी सुशीला
सुमनास्तथा ।
निर्गता मथ्यमानेऽब्धौ उषःस्नानं
शुभप्रदम् ॥”
अस्या दानविधिस्तु कामधेनुशब्दे द्रष्टव्यः
॥
धर्म्मपुत्त्रस्य हर्षस्य पत्नी ।
आनन्दस्वरूपतया
एवास्यास्तथात्वम् । यथा, महाभारते । १
।
६६ । ३३ ।
“नन्दा तु भार्य्या हर्षस्य यासु लोकाः
प्रति-
ष्ठिताः ॥”
शाकद्वीपान्तर्गतनदीविशेषः । यथा,
मात्स्ये ।
१२१ । ३१ ।
“नन्दा च पावनी चैव तृतीया परिकीर्त्तिता
॥”
“एताः सप्तमहाभागाः प्रतिवर्षं शिवोदकम्
।
भावयन्ति जनं सर्व्वं शाकद्वीपनिवासिनम्
॥”
द्विशालगृहविशेषः । यथा,
विश्वकर्म्मप्रकाशे
२ अध्याये ।
नन्दाख्यं तद्द्विशालञ्च धनदं शोभनं
स्मृतम् ॥”)

**नन्दात्मजः**, पुं, (नन्दस्य आत्मजः ।) श्रीकृष्णः ।
इति शब्दरत्नावली ॥ (यथा,
पाद्मोत्तरखण्डे
१११ अध्याये ।

**नन्दिकेश्वरः**, पुं, (नन्दिक ईश्वरश्च ।) शिवद्वार-
पालः । तत्पर्य्यायः । नन्दी २ शालङ्कायनः ३
ताण्डवतालिकः ४ । इति त्रिकाण्डशेषः ॥
नन्दी-
श्वरः ५ तण्डुः ६ । इति हेमचन्द्रः ॥ (यथा,
हरिवंशे । १८२ । ८६ ।
“ततो नन्दिं महादेवः प्राह गम्भीरया गिरा ।
नन्दिकेश्वर ! संयाहि यतो वाणो रणे स्थितः
॥”)
उपपुराणविशेषश्च ॥

**नन्दिघोषः**, पुं, (नन्दिरानन्दजनको घोषो यस्य ।)
अर्ज्जुनस्य रथघोषः । वन्दिजनघोषः । इति
मेदिनी । षे, ५३ ॥ मङ्गलघोषणा च ॥ (हर्ष-
घोषयुक्ते, त्रि । यथा, महाभारते । १३ ।
१०७ । १०५ -- १०८ ।
“पञ्चविंशे तु दिवसे यः प्राशेदेकभोजनम् ।
सदा द्वादशमासांस्तु पुस्कलं यानमारुहेत् ॥
सिंहव्याघ्रप्रयुक्तैस्तु मेघनिश्वननादितैः ।
स रथैर्नन्दिघोषैश्च पृष्ठतोऽह्यनुगम्यते ॥
देवकन्यासमारूढैः काञ्चनैर्व्विमलैः शुभैः ।
विमानमुत्तमं दिव्यमास्थाय सुमनोहरम् ॥
तत्र कल्पसहस्रं वै वसते स्त्रीशतावृते ।
सुधारसञ्चोपजीवन्नमृतोपममुत्तमम् ॥”)

**नन्दितरुः**, पुं, (नन्दिरानन्दजनकस्तरुः ।) धव-
वृक्षः । इति भावप्रकाशः ॥

**नन्दिनी**, स्त्री, (नन्दयतीति । नन्दि + णिनिः ।
ङीप् ।) रेणुका । इति राजनिर्घण्टः ॥ (अस्य
पर्य्यायो यथा, भावप्रकाशे ।
“रेणुका राजपुत्त्री च नन्दिनी कपिला द्विजा
॥”
जटामांसी । तत्पर्य्यायो यथा, वैद्यकरत्न-
मालायाम् ।
“नलदं नन्दिनी पेषी मांसी कृष्णजटा जटी ।
किरातिनी च जटिला लोमशा तु तपस्विनी
॥”)
उमा । गङ्गा । ननान्दा । वशिष्ठधेनुः । इति
मेदिनी । ने, ८१ ॥ सा च धेनुः सुरभिकन्या ।
तत्रैकस्याथ भार्य्या तु
वसोर्वासवविक्रम ! ।
सञ्चरन्ती वने तस्मिन् गां ददर्श
सुमध्यमा ॥
नन्दिनीं नाम राजेन्द्र !
सर्व्वकामधुगुत्तमाम् ॥
सा विस्मयसमाविष्टा
शीलद्रविणसम्पदा ।
द्यवे वै दर्शयामास तां गां
गोवृषभेक्षणाम् ॥
स्वापीनाञ्च सुदोग्ध्रीञ्च सुबालधिखुरां
शुभाम् ।
उपपन्नां गुणैः सर्व्वैः शीलेनानुत्तमेन च
॥
एवं गुणसमायुक्तां वसवे वसुनन्दिनी ।
दर्शयामास राजेन्द्र पुरा पौरवनन्दन !
॥
द्यौस्तदा तां तु दृष्ट्वैव गां
गजेन्द्रेन्द्रविक्रम ! ।
उवाच राजंस्तां देवीं तस्या रूपगुणान्
वदन् ॥
एषा गौरुत्तमा देवी वारुणेरसितेक्षणा ।
ऋषेस्तस्य वरारोहे ! यस्येदं
वनमुत्तमम् ॥
अस्याः क्षीरं पिबेन्मर्त्यः स्वादु यो वै
सुमध्यमे ! ।
दशवर्षसहस्राणि स जीवेत्
स्थिरयौवनः ॥
एतत् श्रुत्वा तु सा देवी नृपोत्तम !
सुमध्यमा ।
तमुवाचानवद्याङ्गी भर्त्तारं दीप्ततेजसम्
॥
अस्ति मे मानुषे लोके नरदेवात्मजा
सखी ।
नाम्ना जितवती नाम
रूपयौवनशालिनी ॥
उशीनरस्य राजर्षेः सत्यसन्धस्य
धीमतः ।

"पुराणपुरुषो नन्दात्मजः
श्रीवत्सलाञ्छनः ॥")
दुर्गायाम्, स्त्री ॥

**नन्दिः**, पुं, क्ली, (नन्दयतीति । नन्दि + "सर्व्व-
धातुभ्य इन् ।" उणां ४ । ११७ । इति इन् ।)
द्यूताङ्गम् । (भावे इन् ।) आनन्दः । (यथा, महाभारते । २ । १८ । ११ ।
"सोऽवर्द्धत महातेजा मगधाधिपतेः सुतः ।
मातापित्रोर्नन्दिकरः शुक्लपक्षे यथा शशी ॥"
एतदर्थे स्त्रीलिङ्गेऽपि दृश्यते । यथा, तत्रैव ।
५ । १३५ । २० ।
"अतो मे भूयसी नन्दिर्यदेवमनुपश्यसि ॥")
नन्दिकेश्वरे, पुं । इति मेदिनी । दे, ६ ॥ (यथा,
महाभारते । १३ । १४ । २७५ ।
"पुरस्ताच्चैव देवस्य नन्दिं पश्याम्यवस्थितम् ।
शूलं विष्टभ्य तिष्ठन्तं द्वितीयमिव शङ्करम् ॥")
विष्णुः । यथा, महाभारते । १३ । १४९ । ७९ ।
"स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः ॥"
(महादेवः । यथा, तत्रैव । १३ । १७ । ७४ ।
"निमित्तस्थो निमित्तञ्च नन्दिर्नन्दिकरो हरिः ॥")

**नन्दिकः**, पुं, (नन्द आनन्दः हेतुतयास्त्यस्येति ।
नन्द + ठन् ।) नन्दीवृक्षः । इति शब्दरत्ना-
वली ॥ (नन्दिरेव । स्वार्थे कन् ।) आनन्दः ॥

**नन्दिका**, स्त्री (नन्द आनन्द अस्त्यस्यामिति ।
ठन् ।) इन्द्रक्रीडास्थानम् । इति शब्दमाला ॥
यथा, दिलीपं प्रति वशिष्ठवाक्यम् ।
"पुरा शक्रमुपस्थाय तवोर्व्वीं प्रति यास्यतः ।
आसीत् कल्पतरुच्छायामाश्रिता सुरभिः पथि ॥
इमां देवीमृतुस्नातां श्रुत्वा सपदि सत्वरः ।
प्रदक्षिणक्रियार्हायां तस्यां त्वं साधुनाचरः ॥
अवजानासि मां यस्मादतस्ते न भविष्यति ।
मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा ॥"
"इति वादिन एवास्य होतुराहुतिसाधनम् ।
अनिन्द्या नन्दिनी नाम धेनुराववृते वनात् ॥"
इति रघुः । १ । ७५-८२ ॥
इमामेवाराध्य लब्धवरो दिलीपो रघुनामानं
वंशतिलकं पुत्त्रं लब्धवान् ॥ * ॥
द्योनामा वसुः पत्नीवाक्यात् एनां हृत्वा वशिष्ठ-
शापतः पृथिव्यां भीष्मनाम्ना विख्यात आसीत् ।
एतत्कथा यथा, महाभारते । १ । ९९ । ११-३९ ।
"अथ तद्वनमाजग्मुः कदाचिद्भरतर्षभ ! ।
पृथ्वाद्या वसवः सर्व्वे देवा देवर्षिसेवितम् ॥
ते सदारा वनं तच्च सञ्चरन्तः समन्ततः ।
रेमिरे रमणीयेषु पर्व्वतेषु वनेषु च ॥
दुहिता प्रथिता लोके मानुषे रूपसम्पदा ॥
तस्या हेतोर्महाभाग ! सवत्सां गां ममेप्सिताम् ।
आनयस्वामरश्रेष्ठ ! त्वरितं पूण्यवर्द्धन ! ॥
यावदस्याः पयः पीत्वा सा सखी मम मानद ! ।
मानुषेषु भवत्वेका जरारोगविवर्ज्जिता ॥
एतन्मम महाभाग कर्त्तुमर्हस्यनिन्दित ।
प्रियं प्रियतरं ह्यस्मान्नास्ति मेऽन्यत् कथश्चन ॥
एतत् श्रुत्वा वचस्तस्या देव्याः प्रियचिकीर्षया ।
पृथ्वाद्यैर्भ्रातृभिः सार्द्धं द्यौस्तदा तां जहार गाम् ॥
तया कमलपत्राक्ष्या नियुक्तो द्यौस्तदा नृप ! ।
ऋषेस्तस्य तपस्तीव्रं न शशाक निरीक्षितुम् ।
हृता गौः सा तदा तेन प्रपातस्तु न तर्कितः ॥
अथाश्रमपदं प्राप्तः फलान्यादाय वारुणिः ।
न चापश्यत् स गां तत्र सवत्सां काननोत्तमे ॥
ततः स मृगयामास वने तस्मिंस्तपोधनः ।
नाध्यगच्छच्च मृगयंस्तां गां मुनिरुदारधीः ॥
ज्ञात्वा तथापनीतां तां वसुभिर्दिव्यदर्शनः ।
ययौ क्रोधवशं सद्यः शशाप च वसूंस्तदा ॥
यस्मान्मे वसवो जह्रुर्गां वै दोग्ध्रीं सुबालधिम् ।
तस्मात् सर्व्वे जनिष्यन्ति मानुषेषु न संशयः ॥

| | | |
|---|---|---|
| (नन्दा + स्वार्थ कन् । टापि अत इत्वम् ।)<br>अलिञ्जरः । इति शब्दरत्नावली ॥<br>षष्ठीतिथिः ।<br>यथा, तिथितत्त्वे ।<br>“कन्यासंस्थे रवौ शक्र शुक्लामारभ्य नन्दिकाम् ॥”<br>प्रतिपदेकादश्यौ च ॥ | | एवं शशाप भगवान् वसूंस्तान् भरतर्षभ ! ।<br>वशं क्रोधस्य संप्राप्त आपवो मुनिसत्तमः ।<br>शप्त्वा च तान् महाभागस्तपस्येव मनो दधे ॥<br>एवं स शप्तवान् राजन् ! वसूनष्टौ तपोधनः ।<br>महाप्रभावो ब्रह्मर्षिर्देवान् क्रोधसमन्वितः ॥<br>अथाश्रमपदं प्राप्तास्ते वै भूयो महात्मनः ।<br>शप्ताः स्म इति जानन्त ऋषिं तमुपचक्रमुः ॥<br>प्रसादयन्तस्तमृषिं वसवः पार्थिवर्षभ ! ।<br>लेभिरे न च तस्मात्ते प्रसादमृषिसत्तमात् ।<br>आपवात् पुरुषव्याघ्र ! सर्व्वधर्म्मविशारदात् ॥<br>उवाच च स धर्म्मात्मा शप्ता यूयं धरादयः ।<br>अनुसंवत्सरात् सर्व्वे शापमोक्षमवाप्स्यथ ॥ |

अयन्तु यत्कृते यूयं मया शप्ताः स वत्स्यति ।
द्यौस्ततो मानुषे लोके दीर्घकालं स्वकर्म्मणा ॥
नानृतं तच्चिकीर्षामि युष्मान् क्रुद्धो यदब्रुवम् ।
न प्रजास्यति चाप्येष मानुषेषु महामनाः ॥
भविष्यति च धर्म्मात्मा सर्व्वशास्त्रविशारदः ।
पितुः प्रियहिते युक्तः स्त्रीभोगान् वर्ज्जयिष्यति ॥”)
तस्याः प्रभावो यथा, --
“वशिष्ठस्याश्रमपदं ब्रह्मस्थानमनुत्तमम् ।
अपश्यज्जयतां श्रेष्ठो विश्वामित्रो महामनाः ॥
ततो वशिष्ठो भगवान् कथान्ते मुनिसत्तमः ।
विश्वामित्रमिदं वाक्यमुवाच प्रहसन्निव ॥
आतिथ्यं कर्त्तमिच्छामि बलस्यास्य महाबलः ।
तव चैवाप्रमेयस्य यथार्हं प्रतिगृह्यताम् ॥
वाढमित्येव गाधेयो वशिष्ठं प्रत्युवाच ह ।
एवमुक्तो महातेजा वशिष्ठो जपतां वरः ॥
आजुहाव ततः प्रीतः कल्माषीं धुतकल्मषाम् ।
भोजनेन महार्हेण सत्कारं तद्विधत्स्व मे ॥
एवमुक्ता वशिष्ठेन शबला शत्रुसूदन ! ।
विदधे विविधान् कामान् यस्य यस्य यथेप्सितान् ॥
सान्तःपुरजनो राजा सब्राह्मणपुरोहितः ।
युक्तः परमहर्षेण वशिष्ठमिदवब्रवीत् ॥
व्याडिमुनिमाता । इति हेमचन्द्रः । ३ । ५१६ ॥
त्रयोदशाक्षरवृत्तिविशेषः । अस्य विवरणं छन्दः-
शब्दे द्रष्टव्यम् । दुर्गा । इयन्तु देविकातटे पीठ-
स्थाने विराजते । यथा, देवीभागवते । ७ ।
३३ । ६९ ।
“शिवकुण्डे शुभा नन्दा नन्दिनी देविकातटे ॥”)

**नन्दिनीतनयः**, पुं, (नन्दिन्यास्तनयः ।) व्याडि-
मुनिः । स च अभिधानकारकः । इति हेम-
चन्द्रः । ३ । ५१६ ॥

**नन्दिनीसुतः**, पुं, (नन्दिन्याः सुतः ।) व्याडिमुनिः ।
इति जटाधरः ॥

**नन्दिवर्द्धनः**, पुं, (नन्दिं वर्द्धयतीति । वृध् + णिच् +
ल्युः ।) शिवः । (नन्दिं आनन्दं वर्द्धयतीति ।)
पक्षान्तः । पुत्त्रः । इति मेदिनी । ने, २३८ ॥
(यथा, गोः रामायणे । २ । ९९ । १४ ।
“सुषुवे यममित्रघ्नं कौशल्या नन्दिवर्द्धनम् ॥”)
मित्रम् । इति शब्दरत्नावली ॥ (विमानविशेषः ।
यथा, विश्वकर्म्मप्रकाशे । ६ अध्याये ।
“विमानं छन्दकं तद्वदनेकशिखराततः ।
स चाष्टभूमिकस्तद्वत् सप्ततिर्नन्दिवर्द्धनः ॥”
प्राप्नोति तं न जानाति दक्षिणं पार्श्वमास्थितः ॥
मायायोगबलोपेतस्त्र्यक्षो वै शूलपाणिधृक् ।
रूपवान् गुणवांश्चैव वपुषादित्यसन्निभः ॥
स तं न ज्ञायते जातं ममैवाराधने स्थितः ।
अथ नन्दी प्रहस्याह महादेवाज्ञया मुनिम् ॥
उत्तिष्ठ मुनिशार्द्दूल ! सफलस्ते मनोरथः ।
त्वद्दक्षिणाङ्गाज्जातोऽस्मि पुत्त्रस्ते शाधि मां प्रभो ! ॥
त्वया तपः समारब्धमीश्वरेण समं सुतम् ।
प्राप्स्यामीति ततो मह्यं सदृशोऽन्यो न कश्चन ॥
विचार्य्येति तदाहं वै जातोऽस्मि स्वयमेव हि ॥”
इति षराहपुराणम् ॥
स एव कल्पान्तरे शिवांशजशिलादमुनेः पुत्त्रः ।
यथा, --
“जजाप रुद्रमनिशं यत्र नन्दी महागणः ।
प्रीतस्तस्य महादेवो देव्या सह पिनाकधृक् ॥
दत्त्वा चात्मसमानत्वं मृत्युवञ्चनमेव च ।
अभूदृषिः स धर्म्मात्मा शिलादो नाम धर्म्मवित् ॥
आराधयन् महादेवं पुत्त्रार्थं वृषभध्वजम् ।
तस्य वर्षसहस्रान्ते तप्यमानस्य विश्वकृत् ॥
शर्व्वः सोमौघविधृतो वरदोऽस्मीत्यभाषत ।
स वव्रे वरमीशानं वरेण्यं गिरिजापतिम् ॥
अयोनिजं मृत्युभीतं तया चैवोमया समम् ।
तथास्त्वित्याह भगवान् देव्या सह महेश्वरः ॥
पश्यतस्तस्य विप्रर्षेरन्तर्धानं गतो विभुः ।
ततो यियक्षुः स्वां भूमिं शिलादो धर्म्मवित्तमः ॥
चकर्ष लाङ्गलेनोर्व्वीं भित्त्वादृश्यत शोभनः ।
सम्बर्त्तकानलप्रख्यः कुमारः प्रहसन्निव ॥
रूपलावण्यसम्पन्नस्तेजसा भासयन् दिशम् ।
कुमारतुल्योऽप्रतिमो मेघगम्भीरया गिरा ॥
शिलादं तात तातेति प्राह नन्दी पुनः पुनः ।
तं दृष्ट्वा नन्दिनं जातं शिलादः परिषस्वजे ॥
मुनिभ्यो दर्शयामास ये तदाश्रमवासिनः ॥”
इति कूर्म्मे ४० अध्यायः ॥
(द्विसप्ततिसाध्यमौलिककायस्थानामन्यतमः। यथा, घटककारिकायाम् ।
“गुइः कीर्त्तिर्यशः कुण्डुर्नन्दी शीलो धनुर्गुणः ॥”)

**नन्दीमुखी**, स्त्री, (नन्दी मुखे यस्याः । ङीष् ।)
तन्द्रा । इति हेमचन्द्रः । २ । २२७ ॥

गवां शतसहस्रेण दीयतां शबला मम ।
एवमुक्तस्तु भगवान् वशिष्ठो मुनिसत्तमः ॥
विश्वामित्रेण धर्म्मात्मा प्रत्युवाच महीपतिम् ।
कारणैर्बहुभी राजन्न दास्ये नन्दिनीं तव ॥
कामधेनुं वशिष्ठोऽसौ न तत्याज यदा मुनिः ।
ततोऽस्य शबलां राजा विश्वामित्रस्तदाहरत् ॥
तस्या हम्बारवाज्जाताः काम्बोजा रविसन्निभाः ।
ऊधसश्चाभिसंजाताः पह्लवाः शस्त्रपाणयः ॥
योनिदेशाच्च यवनाः शकृद्देशाच्छकास्तथा ।
रोमकूपेषु च म्लेच्छास्तथा रामकिरातकाः ॥
तैस्तन्निसूदितं सैन्यं विश्वामित्रस्य तत्क्षणात् ।
सपदातिगजं साश्वं सरथं रघुनन्दन ! ॥"
इति रामायणे आदिकाण्डम् ॥
(एतद्विवरणं महाभारते । १ । १७७ । अध्याये च
विस्तरशो द्रष्टव्यम् ॥ कन्या यथा, हरिवंशे ।
१७६ । ७ ।
"मेध्यां गोकुलसम्भूतां नन्दगोपस्य नन्दिनीम् ॥"
आनन्दजननात् पत्न्यपि । यथा, महाभारते ।
१ । ९९ । १६ ।
"एवं गुणसमायुक्तां वसवे वसुनन्दिनी ।
दर्शयामास राजेन्द्र ! पुरा पौरवनन्दनः ॥"
"वसुनन्दिनी वसुप्रिया ।" इति नीलकण्ठः ॥
स्कन्दानुचरमातृगणविशेषः । यथा, महा-
निमिवंशीयविशेषः । इति भागवतम् । ९ ।
१३ । १४ ॥) आनन्दवर्द्धके, त्रि ॥ (यथा,
हरिवंशे । ६८ । २९ ।
"कृष्ण कृष्ण महाबाहो गोपानां नन्दिवर्द्धन ! ।
दम्यतामेष वै क्षिप्रं सर्पराजो विषायुधः ॥")

**नन्दिवृक्षः**, पुं, (नन्दिरानन्दस्तज्जनकोवृक्षः ।
यद्वा, नन्द + इन् । तस्याः वृक्षः ।) नन्दीवृक्षः ।
इति शब्दरत्नावली ॥ (पर्य्यायोऽस्य यथा, वैद्यक-
रत्नमालायाम् ।
"नन्दिवृक्षो मेषशृङ्गी तथा मेषविधानिका ।
चक्षुर्व्वहनचक्षुश्च मेढशृङ्गी ग्रहद्रुमा ॥")

**नन्दी**, स्त्री, दुर्गा । यथा, देवीपुराणे ।
"सुराः स्युस्त्रिदशा देवा नन्दिनी दुन्दुभिर्मता ।
तेषाञ्च वादिनी नन्दी ईशात्वात् त्रिदशेश्वरी ॥"

**नन्दी**, [न्] पुं, (नन्द आनन्दोऽस्यास्तीति ।
इनिः ।) गर्द्दभाण्डवृक्षः । (यथा, --
"करीरं कुलकं नन्दी कुत्तेला शकुलादनी ।
कठिल्लं केम्बुकं शीतं सकोशातककर्क्कशम् ॥
तिक्तं पाके कटुग्राही वातलं कफपित्तजित् ॥"
इति वाभटे । १ । ६ अध्याये ॥)
वटवृक्षः । इतिं मेदिनी । ने, ८१ ॥ शिवगण-
विशेषः । स च त्रिविधः । यथा, --
"आद्यः कनकनन्दी च गिरिकाख्यो द्वितीयकः ।

**नन्दीवृक्षः**, पुं, (नन्दि + वा ङीष् । नन्द्याः वृक्षः ।
नन्दीजनको वृक्षोवा ।) कोङ्कणदेशप्रसिद्धसुगन्धि-
वृक्षविशेषः । तत्पर्य्यायः । तूणीकः २ तूणिकः ३
तूणी ४ पीतकः ५ कच्छपः ६ नन्दी ७ कुठे-
रकः ८ कान्तः ९ । अस्य गुणाः । कटुत्वम् ।
तिक्तत्वम् । शीतत्वम् । पित्तरक्तदाहशिरोऽर्त्ति-
स्वेदकुष्ठनाशित्वम् । सुगन्धित्वम् । पुष्टिवीर्य्यदातृ-
त्वञ्च । इति राजनिर्घण्टः ॥ * ॥ अश्वत्थाकारः
क्षीरवान् स्वनामप्रसिद्धो वृक्षः । इति भरतः ॥
तुँद् इति ख्यातो वृक्ष इति केचित् ॥ तत्पर्य्यायः ।
तुन्नः २ कुवेरकः ३ कुणिः ४ कच्छः ५ कान्त-
लकः ६ । इत्यमरः । २ । ४ । १२८ ॥ तुणिः ७ ।
इति भरतः ॥ नन्दिवृक्षः ८ कूणिः ९ तुन्दः १०

| | | |
|---|---|---|
| भारते । ९ । ४६ । ५ ।<br>"शृणु मातृगणान् राजन् !<br>कुमारानुचरानि-<br>मान् ॥"<br>"वसुदामा सुदामा च विशोका नन्दिनी<br>तथा ॥"<br>तीर्थविशेषः । यथा, महाभारते । ३ ।<br>८४ ।<br>१४५ ।<br>"नन्दिन्याञ्च समासाद्य कूपं<br>देवनिषेवितम् ।<br>नरमेधस्य यत् पुण्यं तदाप्नोति<br>नराधिप ! ॥" | सोमनन्दी तृतीयस्तु विज्ञेया<br>नन्दिनस्त्रयः ॥"<br>इति वह्निपुराणे गणभेदनामाध्यायः ॥<br>शिवद्वारपालः । स शिवांशः<br>शालङ्कायनमुनि-<br>पुत्रः । यथा, --<br>"अन्यच्च ते प्रवक्ष्यामि परं गुह्यं<br>वसुन्धरे ! ।<br>तप्यतस्तस्य तु मुनेरीश्वरेण समं<br>सुतम् ॥<br>तं प्राप्स्यामि परं भावं ज्ञात्वा देवो<br>महेश्वरः ।<br>सुन्दरन्त्वपरं रूपं घृत्वा<br>दृष्टिसुखावहम् ॥<br>शालङ्कायनपुत्रत्वं<br>योगमायामुपाश्रितः । | |

नन्दिकः ११ नन्दिवृक्षकः १२ । इति शब्द-
रत्नावली ॥ * ॥ मेषशृङ्गीवृक्षः । इति रत्नमाला
॥
स्थालीवृक्षः । इति भावप्रकाशः ॥

**नन्दीशः**, पुं, (नन्दी ईशश्च ।) नन्दी । इति हेम-

चन्द्रः । २ । १२४ ॥ भरतोक्ततालप्रभेदः ।
यथा, --
"सिंहनन्दननन्दीशचन्द्रविम्बद्वितीयकाः॥"
तस्य लक्षणं यथा, --
"गो लघुर्गौर्लघुः प्लुतस्ताले नन्दीश्वरे मताः ।"
इति सङ्गीतदामोदरः ॥
(नन्दिनो नन्दिगणस्य ईशः । इति विग्रहे
शिवः ॥)

**नन्दीश्वरः**, पुं, (नन्दिनो गणविशेषस्य ईश्वरः ।)

शिवः । इति शब्दरत्नावली ॥ नन्दीशतालः ।
इति सङ्गीतदामोदरः ॥ (नन्दी ईश्वरश्च ।)
शिवद्वारपालः । तस्य शिवपार्श्वदत्वकारणं
यथा, --
"ततस्त्रेतायुगे काले नन्दी नाम महामुनिः ।
आरिराधयिषुः शर्व्वं तपस्तेपे सुदारुणम् ॥
ततस्तु भगवान् प्रीतस्तस्मै विप्राय शङ्करः ।
उवाच च वचः साक्षात्तमृषिं वरदः प्रभुः ॥
वरान् वृणीष्व विप्रेन्द्र ! यानिच्छसि महामुने ! ।
तांस्ते सर्व्वान् प्रयच्छामि दुर्लभानपि मारिष ॥
इत्युक्तोऽसौ भगवता शर्व्वेण सुनिपुङ्गव ।
प्रोवाच वरदं देवं प्रहृष्टेनान्तरात्मना ॥
यदि प्रीतोऽसि भगवन् ! अनुक्रोशतया मम ।
अनुग्राह्यो ह्यहं देव त्वयावश्यं सुराधिपं ! ॥
यथा नान्ये भवेद्भक्तिस्त्वयि नित्यं महेश्वर ! ।
तथाहं भक्तिमिच्छामि सर्व्वभूताशये त्वयि ॥
एतत्तु वचनं श्रुत्वा नन्दिनः स महेश्वरः ।
प्रहस्योवाच तं प्रीत्या ततो मधुरया गिरा ॥
मद्रूपधारी मत्तेजास्त्र्यक्षः सर्व्वगुणोत्तमः ।
भविष्यसि न सन्देहो देवदानवपूजितः ॥
अनेनैव शरीरेण जरामरणवर्ज्जितः ।
दुष्प्राप्येयमवाप्या ते देवैर्गाणेश्वरी गतिः ॥
पार्श्वदानां वरिष्ठश्च मामकानां द्विजोत्तम ! ।
नन्दीश्वर इति ख्यातो भविष्यसि न संशयः ॥
पूजनीयोत्तरच्छ्रायं नन्द्यावर्त्तं वदन्ति
तत् ॥"
इति भरतधृतसाङ्गः ॥
तगरद्रुमः । इति विश्वः ॥ मत्स्यभेदः
। तस्य
गुणः । संग्राहित्वम् ।
कफपित्तविनाशित्वञ्च ।
इति राजवल्लभः ॥

**नपुंसकं**, क्ली, (न स्त्री न पुमान् । "नभ्राण्नपा-

दिति ।" ६ । ३ । ७५ । इति
निपातनात्
स्त्रीपुंसयोः पुंसक-आदेशः ।) क्लीवम्
। इत्यमरः ।
२ । ६ । ३९ ॥ हिजिडा इति भाषा ॥
तस्य
कारणं यथा, --
"उभयोर्ब्बीजसामान्ये जायते वै
नपुंसकम् ॥"
इति सुखबोधः ॥ * ॥
(नपुंसको भवेदिति भाष्यप्रयोगात्
पुंलिङ्गोऽपि
भवति । तथा, च पञ्चतन्त्रे । १ ।
३६४ ।
"परदेशभयाद्भिता बहुमाया नपुंसकाः
।
स्वदेशे निधनं यान्ति काकाः
कापुरुषा
मृगाः ॥")
नपुंसकगर्भस्य चिह्नं यथा, --
"नपुंसकं यदा गर्भो
भवेद्गर्भोऽर्व्वुदाकृतिः ।
उन्नते भवतः पार्श्वे पुरस्तदुदरं महत्
॥" * ॥
नपुंसकविशेषानाह ।
"आसेक्यश्च सुगन्धिश्च
कुम्भीकश्चेर्षकस्तथा ।
अमी सशुक्रा बोद्धव्या अशुक्रो
भ्रूणसंज्ञकः ॥"
तेषां लक्षणान्याह ।
इरि रभसः ॥ सुतस्य
सुतायाश्चात्मजायां नप्त्री
पुत्रस्य पुत्र्याश्चापत्यं पौत्री अतएव
पौत्रोऽपि
नप्ता । इत्यमरटीकायां भरतः ॥

**नभः**, पुं, (नभति हिनस्ति कीटादीनिति । नभ

हिंसायाम् + पचाद्यच् ।) श्रावणमासः ।
इति
शब्दरत्नावली ॥ (द्वितीयमनोः
स्वारोचिषस्य
पुत्रविशेषः । इति हरिवंशे । ७ । १४ ॥
तृतीय-
मन्वन्तरदेवविशेषः । इति च तत्रैव । ७ ।
१९ ॥
कुशप्रपौत्रनलस्य पुत्रं । इति च हरिवंशे
।
१५ । २७ ॥)

**नभः**, [स्] क्ली, (नह्यते मेघैरिति । नह बन्धने +

"नहेर्दिवि भश्च ।" उणां ४ । २१० ।
इति असुन्
भश्चान्तादेशः ।) आकाशम् । इत्यमरः ।
१ ।
२ । १ ॥ (यथा, मनुः । ४ । ३७ ।
"नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं
कदाचन ।
नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम्
॥")

**नभःक्रान्ती**, [न्] पुं, (नभःक्रान्तं गगनाक्रमण-

मस्त्यस्येति । इनिः ।) सिंहः । इति
शब्द-
माला ॥

**नभःप्राणः**, पुं, (नभसः प्राण इव ।) पवनः ।

इति त्रिकाण्डशेषः ॥

**नभःसत्**, [द्] पुं, (नभसि सीदतीति । सद् +

क्विप् ।) देवः । इति त्रिकाण्डशेषः ॥

**नभःसरित्**, स्त्री, (नभसः सरित् नदी ।) स्वर्गङ्गा ।

अद्यप्रभृति देवाग्र्य ! देवकार्य्येषु सर्व्वतः ।
त्वं प्रभुर्भविता लोके मत्प्रसादान्मुनीश्वर ! ॥
त्वामेवाभ्यर्च्चयिष्यन्ति सर्व्वभूतानि सर्व्वतः ।
मत्तः समभिवाञ्छन्तः प्रसादं पार्श्वदाधिप ! ॥
यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामनु ।
नावयोरन्तरं किञ्चिदम्बरानिलयोरिव ॥
द्वारे तु दक्षिणे नित्यं त्वया स्थेयं गणाधिप ! ।
वामेन विभुना वापि महाकालेन सर्व्वदा ॥”
इति वराहपुराणम् ॥

**नन्दीसरः**, [स्] क्ली, (नन्द + इन् + वा ङीष् ।

नन्द्यै आनन्दार्थं यत् सरः ।) इन्द्रसरोवरः ।
इति शब्दमाला ॥

**नन्द्यावर्त्तः**, पुं, (नन्दिजनक आवर्त्तो यत्र ।)

ईश्वरसद्मविशेषः । इत्यमरः । २ । २ । १० ॥
तस्य
लक्षणं यथा, --
“दक्षिणांनुगतालिन्दत्रयंयत् पश्चिमामुखम् ।
“पित्रोस्तु स्वल्पवीर्य्यत्वादासेक्यः
पुरुषो भवेत् ।
स शुक्रं प्राश्य लभते
ध्वजोन्नतिमसंशयम् ॥
यः पूतियोनौ जायेत स हि
सौगन्धिको भवेत् ।
स्वे गुदेऽब्रह्मचर्य्याद्यः स्त्रीषु पुंवत्
प्रवर्त्तते ।
स कुम्भीक इति ज्ञेयो गुदयोनिस्तु स
स्मृतः ॥
दृष्ट्वा व्यवायमन्येषां व्यवाये यः
प्रवर्त्तते ।
ईर्षकः स तु विज्ञेयो दृष्टियोनिश्च स
स्मृतः ॥
यो भार्य्यायामृतौ मोहादङ्गनेव प्रवर्त्तते
।
तत्र स्त्रीचेष्टिताकारो जायते
षण्ढसंज्ञकः ॥”
इति भावप्रकाशः ॥
(अस्य विवृतिर्यथा, --
“समवीर्य्यरजस्त्वेन नरः
स्त्रीप्रकृतिर्भवेत् ।
नपुंसकमिति ख्यातं न स्त्री न पुरुषो
वदेत् ॥”
“समदोषबलेनापि प्रकृत्या विकृतेरपि
।
समो भवेदसृक् शुक्रो नपुंसकसमुद्भवः
॥”
इति हारीते शारीरस्थाने प्रथमेऽध्याये
॥)

**नप्ता**, [ऋ] पुं, (न पतन्ति पितरो येनेति । पत +

“नप्तृनेष्टृत्वष्ट्रिति ।” उणां २ । ९६ ।
इति
तृच्प्रत्ययेन निपातनात् साधुः ।)
पुत्त्रकन्ययोः
पुत्त्रः । नाति इति भाषा । तत्पर्य्यायः
। पौत्त्रः
२ सुतस्य सुतः ३ । इति हेमचन्द्रः ॥
(यथा,
महाभारते । १ । ८५ । २० ।
इति त्रिकाण्डशेषः ॥

**नभःस्थितः**, पुं, (नभसि स्थितः ।) नरकविशेषः ।

इति हेमचन्द्रः । ५ । २ ॥ आकाशस्थिते,
त्रि ॥

**नभश्चक्षुः**, पुं, (नभसश्चक्षुरिव ।) सूर्य्यः । इति

शब्दमाला ॥

**नभश्चमसः**, पुं, (नभसश्चमस इव ।) चन्द्रः ।

चित्रापूपः । इन्द्रजालम् । इति मेदिनी ।
से,
३८ ॥

**नभश्चरः**, पुं, (नभसि चरतीति । चर + टः ।)

पक्षी । विद्याधरः । (गन्धर्व्वादिः । यथा,
रघुः । १८ । ६ ।
“नभश्चरैर्गीतयशाः स लेभे
नभस्तलश्यामतनुं तनूजम् ॥”)
मेघः । वायुः । इति मेदिनी । रे, २७२ ॥
(आकाशचारिणि, त्रि । यथा, कुमारे । ५
।
२३ ।
“निकामतप्ता विविधेन वह्निना
नभश्चरेणेन्धनसम्भृतेन सा ॥”)

**नभसं**, क्ली, (नभते व्याप्नोतीति । नभ +
“अत्यवि-

चमितमीति ।” उणां । ३ । ११७ । इति
असच् ।) आकाशम् । यथा । नभसं खं
मेघ-
वर्त्म विहायसमिति निगमः ॥ (पुं, दशम-
मन्वन्तरीयसप्तर्षीणामन्यतमः । यथा,
हरि-
वंशे । ७ । ६७ ।
“अङ्गिरा नभसः सत्यं सप्तैव परमर्षयः
॥”)

**नभसङ्गमः**, पुं, (नभसं गच्छतीति । गम + गमेः

सुपीति खच् । ततो मुम् ।) पक्षी ।
इत्यमरः ।
२ । ४ । ३४ ॥

| | | |
|---|---|---|
| | "कथं शुक्रस्य नप्तारं देवयान्याः सुतं प्रभो ! । ज्येष्ठं यदुमतिक्रम्य राज्यं पूरोः प्रदास्यति ॥")<br><br>**नप्त्री**, स्त्री, (नप्तृ + "ऋन्नेभ्यो ङीप् ।" ४ । १ । ५ ।<br><br>इति ङीप् ।) पुत्त्रकन्ययोः पुत्त्री । नातिनी इति भाषा । तत्पर्य्यायः । पौत्त्री २ सुतात्मजा ३ । इत्यमरः । २ । ६ । २९ ॥ नप्ता ४ पौत्त्रिका ५ । | |

**नभस्तलं**, पुं क्ली, (नभसस्तलम् ।) गगनमण्डलम् ।
यथा, नैषधे । २ । ६९ ।
“तनुदीधितिधारया रयाद्-
गतया लोकविलोकनामसौ ।
छदहेमकषन्निवालसत्
कषपाषाणनिभे नभस्तले ॥”

**नभस्यः**, पुं, (नभसे मेघाय साधुः । नभस् + “तत्र
साधुः ।” ४ । ४ । ९८ । इति यत् ।) भाद्र-
मासः । इत्यमरः । १ । ४ । १७ ॥ (यथा,
हरिवंशे । १५२ । १ ।
“नभो नभस्येऽथ निरीक्ष्य मासि
कामस्तदा तोयदवृन्दकीर्णम् ॥”)

**नभस्वान्**, [त्] पुं, (आकाशाद्वायुरिति श्रुतेः
नभः उत्पत्तिकारणत्वेनास्त्यस्येति । नभस् +
मतुप् मस्य वः ।) वायुः । इत्यमरः । १ ।
१ । ६६ ॥ (यथा, रघुः । ४ । ८ ।
“स हि सर्व्वस्य लोकस्य युक्तदण्डतया मनः ।
आददे नातिशीतोष्णो नभस्वानिव दक्षिणः ॥”)

**नभाः**, [स्] पुं, (नभति हिनस्ति कीटादी-
निति । नभ + “सर्व्वधातुभ्योऽसुन् ।” उणां ४ ।
१८८ । इति असुन् ।) श्रावणमासः । (यथा,
रघुः । १२ । २९ ।
“स जहार तयोर्म्मध्ये मैथिलीं लोकशोषणः ।
नभोनभस्ययोर्वृष्टिमवग्रह इवान्तरे ॥”)
मेघः । घ्राणम् । वर्षाः । विसतन्तुः । पतद्ग्रहः ।
इति मेदिनी । से, २६ ॥ पलितशीर्षम् ।
इति धरणी ॥

**नभाकं**, क्ली, (नभ्नाति व्याप्नोतीति । नभ +

**नभोरजः**, [स्] क्ली, (नभसो रज इव ।)
अन्धकारः । इति शब्दमाला ॥

**नभोरेणुः**, स्त्री, (नभसि रेणुरिव ।) कुज्-
झटिका । इति त्रिकाण्डशेषः ॥

**नभोलयः**, पुं, (नभसि लयो यस्य ।) धूमः । इति
शब्दरत्नावली ॥

**नभ्यं**, त्रि, नभस्येदमित्यर्थे ष्यञ्प्रत्ययः । नभसम्बन्धि ।
(नाभये हितम् । नाभि + “उगवादिभ्यो यत् ।”
५ । १ । २ । इति यत् । “नाभि नभञ्च ।” इति
नभादेशः । रथाङ्गम् । “नभ्योऽक्षः । नभ्य-
मञ्जनम् । रथनाभावेवेदम् ॥” इति सिद्धान्त-
कौमुदी ॥)

**नभ्राट्**, [ज्] पुं, (न भ्राजते इति । भ्राज दीप्तौ
+ क्विप् ।) मेघः । इति हेमचन्द्रः । २ ।
७८ ॥

**नमः**, [स्] व्य, (नम शब्दनत्योः + भावे
असुन् ।) नतिः । इत्यमरः । ३ । ४ । १८ ॥
(यथा, मार्कण्डेये ।
“नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥”
क्लीवलिङ्गेऽपि दृश्यते । यथा, भागवते । ३ ।
१३ । ४२ ।
“विधेम चास्यै नमसा सह त्वया
यस्यां स्वतेजोऽग्निमिवारणावधाः ॥”)
त्यागः । रुतम् । इत्युणादिकोषः ॥ (क्ली,
अन्नम् । इति निघण्टुः । २ । ७ ॥ वज्रम् । इति

क्रियते यो नमस्कारो मध्यमः कायिकस्तु सः ॥
पुटीकृत्य करौ शीर्षे दीयते यद्यथा तथा ।
अस्पृष्ट्वा जानुशीर्षाभ्यां क्षितिं सोऽधम उच्यते ॥
या स्वयं गद्यपद्याभ्यां घटिताभ्यां नमस्कृतिः ।
क्रियते भक्तियुक्तैर्व्वा वाचिकस्तूत्तभः स्मृतः ॥
पौराणिकैर्व्वैदिकैर्व्वा मन्त्रैर्या क्रियते नतिः ।
मध्यमोऽसौ नमस्कारो भवेद्वाचनिकः सदा ॥
यत्तु मानुषवाक्येन नमनं क्रियते सदा ।
स वाचिकोऽधमो ज्ञेयो नमस्कारेषु पुत्रकौ ॥
इष्टमध्यानिष्टगतैर्म्मनोभिस्त्रिविधं पुनः ।
नमनं मानसं प्रोक्तसुत्तमाधममध्यमम् ॥
त्रिविधे चं नमस्कारे कायिकश्चोत्तमः स्मृतः ।
कायिकैस्तु नमस्कारैर्देवास्तुष्यन्ति नित्यशः ॥
अयमेव नमस्कारो दण्डादिप्रतिपत्तिभिः ।
प्रणाम इति विज्ञेयः स पूर्ब्बप्रतिपादितः ॥”
इति कालिकापुराणे ७० अध्यायः ॥ * ॥
रात्रौ तन्निषेधो यथा, --
“रात्रौ नैव नमस्कुर्य्यात्तेनाशीरभिचारिका ।
अतः प्रातःपदं दत्त्वा प्रयोक्तव्ये च ते उभे ॥”
इति महाभारतमिति केचित् ॥
नतिकरणम् । तत्तु करशिरःसंयोगादि । स्वाप-
कर्षबोधकव्यापारविशेषः । इति मुग्धबोध-
टीकायां दुर्गादासः ॥
“सर्व्वे चापि नमस्कुर्य्युः सर्व्वावस्थासु सर्व्वदा ॥”
अभिवादयेदित्यनुवृत्तौ शङ्खः । नाप्रयताया-
प्रयतश्च । इति शुद्धितत्त्वम् ॥
“स्त्रियो नमस्या वृद्धाश्च वयसा पत्युरेव ताः ॥”
इति स्मृत्यर्थसारः ॥ * ॥
“देवं विप्रं गुरुं दृष्ट्वा न नमेद्यस्तु सम्भ्रमात् ।
स कालसूत्रं व्रजति यावच्चन्द्रदिवाकरौ ॥

"पिनाकादयश्च ।" उणां । ४ । १५ । इति आकः ।) तमः । इत्युणादिकोषः ॥

**नभोगजः**, पुं, (नभसि आकाशे गज इव ।) मेघः । इति त्रिकाण्डशेषः ॥

**नभोगतिः**, स्त्री, (नभसि गतिर्गमनम् ।) आकाशगमनम् । यथा, --
"प्रडीनोड्डीनसण्डीनडयनानिनभोगतौ ॥"
इति हेमचन्द्रः । ४ । ३८४ ॥

**नभोदुहः**, पुं, (नभसः दोग्धि प्रपूरयति नद्यादिकमिति । दुह प्रपूरणे + कः ।) मेघः । इति शब्दमाला ॥

**नभोद्वीपः**, पुं, (नभसि द्वीप इव ।) मेघः । इति शब्दमाला ॥

**नभोधूमः**, पुं, (नभसि धूम इव ।) मेघः । इति शब्दमाला ॥

**नभोनदी**, स्त्री, (नभसो नदी ।) स्वर्गङ्गा । इति भूरिप्रयोगः ॥

**नभोमणिः**, पुं, (नभसो मणिरिव ।) सूर्य्यः । इति हेमचन्द्रः । २ । ८ ॥

**नभोमण्डलदीपः**, पुं, (नभोमण्डले दीप इव ।) चन्द्रः । यथा, तिथ्यादितत्त्वे ।
"नभोमण्डलदीपाय शिरोरत्नाय धूर्ज्जटे ।
कलाभिर्व्वर्द्धमानाय नमश्चन्द्राय चारवे ॥"

**नभोऽम्बुपः**, पुं, (नभसः अम्बु जलं पिबतीति । पा + कः ।) चातकपक्षी । इति हेमचन्द्रः । ४ । ३९५ ॥

निघण्टुः । २ । २० ॥ स्तोत्रम् । यथा, ऋग्वेदे ।
७ । १६ । १ ।
"एना वो अग्निं नमसोर्जो नपातमा हुवे ॥")

**नमतः**, पुं, (नम्यते इति । नम + "भृमृदृशियजीति ।" उणां । ३ । ११० । इति अतच् ।)
प्रभुः । धूमः । नटः । इत्युणादिकोषः ॥

**नमसः**, पुं, (नमतीति । नम + "अत्यविचमितमीति ।" उणां । ३ । ११७ । इति असच् ।)
अनुकूलः । इत्युणादिकोषः ॥

**नमसितः**, त्रि, (नमः कृतमिति । नमस् + "नमोवरिवः ।" ३ । १ । १९ । इति क्यच् । क्तः ।
"क्यस्य विभाषा ।" ६ । ४ । ५० । इति वा
यलोपः ।) कृतनमस्कारः । पूजितः । तत्-
पर्य्यायः । नमस्यितः २ अर्हितः ३ अप-
चायितः ४ अर्च्चितः ५ अपचितः ६ । इत्यमरः ।
३ । १ । १०१ ॥

**नमस्कारः**, पुं, (नमः शब्दस्य कारः करणं यत्र ।) विषभेदः । इति शब्दचन्द्रिका ॥ (नमः करः
णम् । नमस् + कृ + घञ् ।) नतिः । स च
त्रिविधः । कायिकः वाचिकः मानसिकश्च ।
यथा, --
"कायिको वाग्भवश्चैव मानसस्त्रिविधः स्मृतः ।
नमस्कारस्तु तत्त्वज्ञैरुत्तमाधममध्यमः ॥"
कायिकादिरपि त्रिविधो यथा, --

ब्राह्मणञ्च गुरुं दृष्ट्वा न नमेद्यो नराधमः ।
यावज्जीवनपर्य्यन्तमशुचिर्य्यवनो भवेत् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डम् ॥
"देवतायतनं दृष्ट्वा दृष्ट्वा तु दण्डिनन्तथा ।
नमस्कारं न कुर्य्याद्यः प्रायश्चित्ती भवेन्नरः ॥
सभायां यज्ञशालायां देवतायतनेषु च ।
प्रत्येकन्तु नमस्कारो हन्ति पुण्यं पुराकृतम् ॥
उपविश्य नमेत् शूद्रो दीर्घायुर्ब्राह्मणो वदेत् ।
स शूद्रो नरकं याति ब्राह्मणो यात्यधोगतिम् ॥
दूरस्थं जलमध्यस्थं धावन्तं मदगर्व्वितम् ।
क्रोधवन्तं विजानीयात् नमस्कारञ्च वर्ज्जयेत् ॥
पुष्पहस्तो वारिहस्तस्तैलाभ्यङ्गो जलस्थितः ।
आशीःकर्त्ता नमस्कर्त्ता उभयोर्नरकं भवेत् ॥"
इति कर्म्मलोचनम् ॥ * ॥
"मातुः पितुः कनीयांसं न नमेद्वयसाधिकः ।
नमस्कुर्य्याद्गुरोः पत्नीं भ्रातृजायां विमातरम् ॥"
यमः ।
"अभिवादयतः पूर्ब्बमाशिषं न प्रयच्छति ।
यद्दुष्कृतं भवेत्तस्य तस्माद्भागं प्रपद्यते ॥
स्वस्तीति ब्राह्मणे ब्रूयात् आयुष्मानिति राजनि ।
वर्द्धतामिति वैश्येषु शूद्रे त्वारोग्यमेव च ॥"
इति मलमासतत्त्वम् ॥ * ॥

|  | “प्रसार्य्य पादौ हस्तौ च पतित्वा दण्डवत् क्षितौ ।<br>जानुभ्यां धरणीं गत्वा शिरसा स्पृश्य मेदिनीम् ॥<br>क्रियते यो नमस्कार उत्तमः कायिकस्तु सः ॥<br>जानुभ्याञ्च क्षितिं स्पृष्ट्वा शिरसा स्पृश्य मेदिनीम् । |  |
|---|---|---|

"गुरुपत्नीन्तु युवतीं नाभिवाद्येत पादयोः ।
कुर्व्वीत वन्दनं भूयो भगो वोऽहमिति ब्रुवन्
॥
विप्रोष्य पादग्रहणमन्वहञ्चाभिवादनम्।
गुरुदारेषु कुर्व्वीत सतां धर्म्मनुस्मरन् ॥
अभिवादनशीलः स्यान्नित्यं वृद्धेषु धर्म्मतः
।
असावहम्भो नामेति सम्यक्
प्रणतिपूर्ब्बकम् ॥
आयुरारोग्यसिद्ध्यर्थं
तन्द्रादिपरिवर्ज्जितः ।
आयुष्मान् भव सौम्येति वाच्यो
विप्रोऽभिवादने ॥
अकारश्चास्य नाम्नोऽन्ते वाच्यः
पूर्ब्बाक्षरः प्लुतः ।
यो न वेत्त्यभिवादस्य द्विजः प्रत्यभिवादनम्
।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः
॥
सव्यस्तपाणिना कार्य्यमुपसंग्रहणं गुरोः ।
सव्येन सव्यः प्रष्टव्यो दक्षिणेन तु दक्षिणः
॥
लौकिकं वैदिकञ्चापि तथाध्यात्मिकम्ेव वा
।
आददीत यतो ज्ञानं तं पूर्ब्बमभिवादयेत् ॥
ब्राह्मणं कुशलं पृच्छेत् क्षत्त्रबन्धुमनामयम्
।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव तु ॥" *
॥
अभिवादनीया गुरवो यथा, --
"उपाध्यायः पिता ज्येष्ठो भ्राता चैव
महीपतिः ।
मातुलः श्वशुरस्त्राता मातामहपितामहौ ।
वन्धुज्येष्ठः पितृव्यश्च पुंस्येते गुरवः
स्मृताः ॥
माता मातामही गुर्ब्बी पितुर्मातुश्च सोदराः
।
श्वश्रूः पितामही ज्येष्ठा धात्री च गुरवः
स्त्रियाम् ।
पूर्ब्बवद्दण्डवद्भूमौ निपत्य हृदयेन तु ।
चिवुकेन मुखेनाथ नासया त्वलिकेन च ॥
ब्रह्मरन्ध्रेण कर्णाभ्यां यद्भूमिस्पर्शनं क्रमात् ।
तदष्टाङ्ग इति प्रोक्तो नमस्कारो मनीषिभिः ॥
६ ॥
प्रदक्षिणत्रयं कृत्वा साधको वर्त्तुलाकृतिः ।
ब्रह्मरन्ध्रेण संस्पर्शः क्षितेर्यः स्यान्नमस्कृतौ ।
स उग्र इति देवीघैरुच्यते विष्णुतुष्टिदः ॥ ७ ॥
नदानां सागरो यादृग्द्विपदां ब्राह्मणो यथा ।
नदीनां जाह्नवी यादृग्देवानामिव चक्रधृक् ।
नमस्कारेषु सर्व्वेषु तथैवोग्रः प्रशस्यते ॥
त्रिकोणाद्यैर्नमस्कारैः कृतैरेव तु भक्तितः ।
चतुर्वर्गं लभेद्भक्तो न चिरादेव साधकः ॥
नमस्कारो महायज्ञः प्रीतिदः सर्व्वतः सदा ।
सर्व्वेषामपि देवानामन्येषामपि भैरव ! ॥
योऽसावुग्रो नमस्कारः प्रीतिदः सततं हरेः ।
महामायाप्रीतिकरः स नमस्करणोत्तमः ॥"
इति कालीपुराणम् ॥

**नमस्कारी**, स्त्री, (नमस्कारस्तदञ्जलिरिव पत्र-
सङ्कोचोऽस्त्यस्या इति । अच् । गौरादित्वात्
ङीष् ।) खदिरिकाशाकः । लाजालु इति
ख्यात इति केचित् ॥ किन्तु रभसेन वराह-
क्रान्ता लज्जालुः समङ्गा जलकारिकेति
खदिरि-
कायाम् । सङ्कोचपत्री लज्जालुरिति लज्जा-
लुकायां पठितम् । अञ्जलिरूपपत्रत्वादञ्जले-
र्नमस्कारव्यञ्जकत्वात् नमस्कारशीलेव
नमस्कारी ।
इत्यमरटीकायां भरतः ॥ (यथास्याः पर्य्यायो
वैद्यकरत्नमालायाम् ।
"गण्डकालीनमस्कारी समङ्गा खदिरी क्वचित्
॥")

**नमस्यः**, त्रि, (नमस्य नामधातुः + कर्म्मणि यत् ।)
नमस्कारयोग्यः । यथा, --
"स्त्रियो नमस्या वृद्धाश्च वयसा पत्युरेव ताः
॥"
इति मलमासतत्त्वम् ॥

**नमस्या**, स्त्री, (नमस्य + भावे अः । स्त्रियां टाप् ।)

"नमुचिर्वासवाद्भीतः सूर्य्यरश्मिं
समाविशत् ।
तेनेन्द्रः सख्यमकरोत्
समयञ्चेदमब्रवीत् ॥
न चार्द्रेण न शुष्केण न रात्रौ नापि
चाहनि ।
वधिष्याम्यसुरश्रेष्ठ ! सखे ! सत्येन ते
शपे ॥
एवं स समयं कृत्वा दृष्ट्वा
नीहारमीश्वरः ।
चिच्छेदास्य शिरो राजन्नपां फेनेन
वासवः ॥
तच्छिरो नमुचेश्छिन्नं पृष्ठतः
शक्रमन्वयात् ।
भो मित्रहन ! पापेति ब्रुवाणं
शक्रमन्तिकात् ॥")

**नमुचिद्विट्**, [ष्] पुं, (नमुचिं द्वेष्टीति । द्विष् +
"सत्सूद्विषेति ।" ३ । २ । ६१ । इति
क्विप् ।)
इन्द्रः । यथा, माघे । १ । ५१ ।
"विगृह्य चक्रे नमुचिद्विषा बली
य इत्थमस्वास्थ्यमहर्द्दिवं दिवः ॥"

**नमुचिसूदनः**, पुं, (नमुचिं दैत्यविशेषं सूदयतीति
।
सूदि + ल्युः ।) इन्द्रः । इत्यमरः । १ ।
१ । ४६ ॥

**नमेरुः**, पुं, (नम्यते इति । नम + बाहुलकात्
एरुः ।) रुद्राक्षः । इति भूरिप्रयोगः ॥
सुर-
पुन्नागः । इति राजनिर्घण्टः ॥ (यथा,
रघुः ।
४ । ७४ ।
"विशश्रमुर्नमेरुणां छायास्वध्यास्य
सैनिकाः ॥")

**नमोगुरुः**, पुं, (नमस्करणीयो गुरुः ।) नमस्कारै-
र्गुरुः । ब्राह्मणः । इति काचित्
शब्दरत्नावली ॥

इत्युक्तो गुरुवर्गोऽयं मातृतः पितृतो द्विजाः ॥
अनुवर्त्तनमेतेषां मनोवाक्कायकर्म्मभिः ।
गुरून् दृष्ट्वा समुत्तिष्ठेदभिवाद्य कृताञ्जलिः ॥”
इति कूर्म्मपुराणे ११ अध्यायः ॥ * ॥
अथ सप्तधा नतिलक्षणानि ।
“त्रिकोणमथ षट्कोणमर्द्धचन्द्रं प्रदक्षिणम् ।
दण्डमष्टाङ्गमुग्रञ्च सप्तधा नतिलक्षणम् ॥
ऐशानी वाथ कौवेरी दिक् कामाख्याप्रपूजने ।
प्रशस्ता स्थण्डिलादौ च सर्व्वमूर्त्तेस्तु सर्व्वतः ॥
त्रिकोणादिव्यवस्थाञ्च यदि पूर्ब्बमुखो यजेत् ।
पश्चिमात् शाम्भवीं गत्वा व्यवस्थां निर्द्दिशेत्तदा ॥
यदोत्तरामुखः कुर्य्यात् साधको देवपूजनम् ।
तदा याम्यात्तु वायव्यां गत्वा कुर्य्याच्तु संस्थितिम् ॥
दक्षिणाद्वायवीं गत्वा दिशं तस्माच्च शाम्भवीम् ।
ततोऽपि दक्षिणं गत्वा नमस्कारस्त्रिकोणवत् ।
त्रिकोणो यो नमस्कारस्त्रिपुराप्रीतिदायकः ॥ १ ॥
दक्षिणाद्वायवीं गत्वा वायव्यात् शाम्भवीं ततः ।
ततोऽपि दक्षिणं गत्वा तां त्यक्त्वाग्नौ प्रविश्य च ॥
अग्नितो राक्षसीं गत्वा ततश्चाप्युत्तरां दिशम् ।
उत्तराच्च तथाग्नेयीं भ्रमणं द्विस्त्रिकोणवत् ।
षट्कोणो यो नमस्कारः प्रीतिदः शिवदुर्गयोः ॥ २ ॥
दक्षिणाद्वायवीं गत्वा तस्माद्‌व्यावृत्य दक्षिणम् ।
गत्वा योऽसौ नमस्कारः सोऽर्द्धचन्द्रः प्रकी-
र्त्तितः ॥ ३ ॥
पूजा । इत्यमरः । २ । ७ । ३५ ॥

**नमस्यितः**, त्रि, (नमःकृतमिति । नमस् + “नमो-
वरिवः इति ।” ३ । १ । १९ । इति क्यच् ।) पूजितः । इत्यमरः । ३ । १ । १०१ ॥

**नमितः**, त्रि, नमोऽस्य जात इत्यर्थे इतच्प्रत्यय-
निष्पन्नः । जातनमस्कारः । नामितः । यथा, --
“अपः शालग्रामाप्लवनगरिमोद्‌गारसरसाः
सुधीः को वा कौपीरपि नमितमूर्द्धा न पिबति ॥”
इति विदग्धमाधवनाटकम् ॥

**नमुचिः**, पुं, (न मुञ्चतीति । मुच + इन् । स च
कित् ।) कन्दर्पः । दैत्यभेदः । इति मेदिनी । चे, १४ ॥ यथा, --
“कश्यपस्य दनुर्नाम भार्य्यासीद्द्विजसत्तम! ।
तस्यान्तु द्वौ सुतावास्तां सहस्राक्षाद्बलाधिकौ ॥
ज्येष्ठः शुम्भ इति ख्यातो निशुम्भश्चापरोऽसुरः ।
तृतीयो नमुचिर्नाम महाबलसमन्वितः ॥”
इति वामने ५२ अध्यायः ॥
(इन्द्र एनं निहतवान् । यथा, महाभारते । ९ । ४३ । ३३ -- ३६ ।

**नम्ब**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-
सेट् ।) ओष्ठ्यवर्गशेषोपधः । नम्बति । इति दुर्गादासः ॥

**नम्रः**, त्रि, (नमतीति । नम + “नमिकम्पीति ।”
३ । २ । १६७ । इति रः ।) नतः । इति हलायुधः ॥
(यथा, पञ्चतन्त्रे । २ । १८९ ।
“यन्नम्रं सरलञ्चापि तच्चापत्सु न सीदति ।
धनुर्मित्रं कलत्रञ्च दुर्लभं शुद्धवंशजम् ॥”)

**नम्रकः**, पुं, (नम्र इव प्रतिकृतिः । “इवे प्रति-
कृतौ ।” ५ । ३ । ९६ । इति कन् ।) वेतसः ।
इति भावप्रकाशः ॥ (नम्र एव । स्वार्थे कन् ।
नते, त्रि ॥)

**नय**, ङ गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-
सकं-सेट् ।) ङ, नयते । इति दुर्गादासः ॥

**नयः**, पुं, (नीयतेऽनेनेति । नी + “एरच् ।” ३ । ३ ।
५६ । इत्यच् ।) नीतिः । तत्पर्य्यायः । नायः २
इत्यमरः । ३ । २ । ९ ॥ (यथा, पञ्चतन्त्रे । १ । ३८५ ।
“कथञ्चिन्न विकल्पन्ते विद्वद्भिश्चिन्तिता नयाः ॥”)
द्यूतविशेषः । इति मेदिनी । ये, ३४ ॥ नैगमादिः ।
इति हेमचन्द्रः ॥ न्याय्ये नेतरि च त्रि । इति
शब्दरत्नावली ॥

**नयनं**, क्ली, (नीयते दृष्टिविषयोऽनेनेति । नी +
करणे ल्युट् ।) चक्षुः । इत्यमरः । २ । ६ । ९३ ॥

| | | |
|---|---|---|
| सकृत् प्रदक्षिणं कृत्वा वर्त्तुलाकृतिसाधकः ।<br>नमस्कारः कथ्यतेऽसौ प्रदक्षिण इति द्विजैः ॥ ४ ॥<br>त्यक्त्रा स्वमाननस्थानं पश्चाद्गत्या नमस्कृतिः ।<br>प्रदक्षिणं विना या तु निपत्य भुवि दण्डवत् ।<br>दण्ड इत्यच्यते देवैः सर्व्वदेवौघमोददः ॥ ५ ॥ | | (यथा, मार्कण्डेये । १८ । ४० ।<br>"नीलोत्पलाभनयनां पीनश्रोणिपयोधराम् ॥")<br>नी ञ प्रापणे इत्यस्माद्भावे ल्युट्प्रत्ययः ॥<br>प्रापणम् । (आनयनम् । यथा, हरिवंशे ।<br>१२७ । ११ ।<br>"तत्त्वं हितञ्च देवेश ! श्रूयतां वदतो मम ।<br>नयनं पारिजातस्य द्वारकां मम रोचते ॥") |

**नयनी**, स्त्री, (नीयतेऽनयेति । नी + करणे ल्युट् +

ङीप् ।) कनीनी । इति शब्दचन्द्रिका ॥

**नयनोत्सवः**, पुं, (नयनयोरुत्सवो यस्मात् ।)

प्रदीपः । इति शब्दरत्नावली ॥

चक्षुरुत्सवश्च ॥

**नयनोपान्तः**, पुं, (नयनयोरुपान्तः प्रान्तभागः ।)

अपाङ्गः । इति राजनिर्घण्टः ॥

**नयनौषधं**, क्ली, (नयनयोरौषधम् ।) पुष्पकासी-

सम् । इति हेमचन्द्रः । ४ । १२३ ॥

**नयपीठी**, स्त्री, (नयस्य पीठीव ।) अष्टकाङ्गम् ।

इति त्रिकाण्डशेषः ॥ छक् इति भाषा ॥

**नयविशारदः**, पुं, (नये नीतौ विशारदो विज्ञः ।)

नीतिशास्त्रज्ञः । यथा, --
"षाड्गुण्यविधितत्त्वज्ञो
देशभाषाविशारदः ।
सान्धिविग्रहिकः कार्य्यो राज्ञा
नयविशारदः ॥"
इति मात्स्ये ८९ अध्यायः ॥

**नरं**, क्ली, (नृणाति प्रापयति आनन्दमिति । नॄ

प्रापणे + अच् ।) रामकर्पूरतृणम् । इति
मेदिनी । रे, ५२ ॥

**नरः**, पुं, (नृणातीति । नॄ + अच् ।) मनुष्यः ।

इत्यमरः । २ । ६ । १ ॥ (यथा, मनुः ।
१ । ९६ ।
"बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः
स्मृताः ॥")
पुरुषः । इति राजनिर्घण्टः ॥ (यथा,
देवी-
भागवते । ५ । २ । १४ ।
"यदा कदापि दैत्येन्द्र ! नार्य्यास्ते मरणं
ध्रुवम् ।
न नरेभ्यो महाभाग ! मृतिस्ते
महिषासुर ! ॥")
विष्णुः । (महादेवः । यथा, महाभारते ।

तस्य नामकारणं यथा, --
"मानुषस्य शिरस्तत्र मृतस्य प्राप्य बालकः ।
स्वशिरस्तत्र विन्यस्य रुदंस्तस्थौ क्षणं तदा ॥
नरस्य शीर्षे स्वशिरो निधाय स्थितवान् यतः ।
तस्मात्तस्य मुनिश्रेष्ठो नरकं नाम वै व्यधात् ॥"
तस्य राज्यं यथा, --
श्रीभगवानुवाच ।
"करतोया सत्यगङ्गा पूर्ब्बभागावधिश्रिता ।
यावल्ललितकान्तास्ति तावद्देशं पुरं तदा ॥
अत्र देवी महामाया योगनिद्रा जगत्प्रसूः ।
कामाख्यारूपमादाय सदा तिष्ठति शोभना ॥
अत्रास्ति नदराजोऽयं लौहित्यो ब्रह्मणः सुतः ।
अत्रैव दशदिक्पालाः स्वे स्वे पीठे व्यवस्थिताः ॥
अत्र स्वयं महादेवो ब्रह्मा चाहञ्च सर्व्वदा ।
चन्द्रः सूर्य्यश्च सततं वसतेऽत्रैव पुत्त्रक ! ॥
सर्व्वे क्रीडार्थमायाता रहस्यं देशमुत्तमम् ।
अत्र श्रीः सर्व्वतोभद्रा भोग्यमत्र सदा बहु ॥
अत्रैव हि स्थितो ब्रह्मा प्राङ्नक्षत्रं ससर्ज्ज ह ।
ततः प्राग्ज्योतिषाख्येयं पुरी शक्रपुरीसमा ॥
अत्र त्वं वस भद्रन्ते ह्यभिषिक्तो मया स्वयम् ।
कृतदारः सहामात्यै राजा भूत्वा महाबल ! ॥"
तस्य महिषी माया यथा, --
"ततो विदर्भराजस्य पुत्त्रीं मायाह्वयां हरिः ।
पुत्त्रार्थे वरयामास नरकस्य समां गुणैः ॥
तामुद्वाह्य हृषीकेशस्तस्मिन् पुरवरे स्वयम् ।
तया समं स्वतनयं राजत्वेनाभ्यषेचयत् ॥"
तस्य पुत्त्रा यथा, --
"ऋतुमत्याञ्च जायायां कालेन नरकः क्रमात् ।
भगदत्तं महाशीर्षं मदवन्तं सुमालिनम् ॥
चतुरो जनयामास पुत्त्रांस्तांश्च क्षितेः सुतः ।
महासत्त्वान् महावीर्य्यान् देवैरन्यैर्दुरासदान् ॥"
इति कालीपुराणे ३९ अध्यायः ॥
पापिनां यातनास्थानम् । तत्सङ्ख्या यथा, --
"पातालानाञ्च सप्तानां लोकानाञ्च यदन्तरम् ।
सुचिरं तानि कथ्यन्ते भुवनानि चतुर्द्दश ॥
अष्टाविंशति विख्यातास्ततो नरककोटयः ।
नरकाणामधस्तात्तु धूमः कालाग्निसम्भवः ॥
तस्याधस्तादनन्ताख्यो रुद्रः सर्व्वमयो महान् ।
तदधो धर्म्मचक्रन्तु येनेदं धार्य्यते जगत् ॥"

कुम्भीपाकः क्षुरस्येव्यः
सञ्जीवनसुतापनम् ॥
कालसूत्रं महापङ्कं शीतोष्णं क्षुरमेव च ।
अम्बरीषं तथा घोरं महारौरवसंज्ञकः ॥
सूचीमुखेक्षुयन्त्रश्च तैलं तप्तत्रपुस्तथा
।
असिपत्रं तथा शास्त्रं भूमिर्वागपहारिका
॥"
इति देवीपुराणम् ॥
नरकागामिनो यथा, --
यम उवाच ।
"न गच्छन्ति नरा घोरान्
बहवोऽधर्म्मनिर्म्मि-
तान् ।
वधांश्च सुबहूंस्तत्र प्राप्नुवन्ति
तपोधन ! ॥
विस्तरेण तु तत् सर्व्वं ब्रवीमि
मुनिसत्तम ! ।
श्रूयतां तन्महाभाग ! श्रुत्वा
चैवोपधारय ॥
नाग्निचिन्नरकं याति न सत्पुत्त्री न
भूमिदः ।
शूरश्च शतवर्षी च वेदानाञ्चैव पारगः ॥
पतिव्रता न गच्छन्ति सत्यवाक्याश्च ये
नराः ।
अजिताश्चाशठाश्चैव स्वामिभक्ताश्च
ये नराः ॥
तिलं गाश्च हिरण्यञ्च पृथिवीञ्चापि
शाश्वतीम् ।
ब्राह्मणेभ्यः प्रयच्छन्ति न गच्छन्ति न
संशयः ॥
स्वदारनिरता दान्ताः
परदारविवर्ज्जकाः ।
सर्व्वभूतात्मभूताश्च
सर्व्वभूतानुकम्पकः ॥
न गच्छन्ति तु तं देशं पापिष्ठं
तमसावृतम् ।
यातनास्थानसंपूर्णं हाहाप्रतिभयस्वनम्
॥

१३ । १७ । ११५ ।
"गान्धारश्च सुवासश्च तपःसक्तो रतिर्न्नरः ॥")
अर्ज्जुनः । इति मेदिनी । रे, ५२ ॥ (नर-
मुनेरंशजातत्वादस्य तथात्वम् ॥) शङ्कः । इति
लीलावती ॥ * ॥ अथ नरजन्मकारणम् । "पितुः
शुक्रोत्तरो नरः ॥" अन्यच्च । सुखबोधे ।
"विषमायां तिथौ क्षिप्तं कुर्य्याद्बीजन्तु कन्यकाम् ।
समायां पुरुषं नूनं केचिदाहुर्म्मनीषिणः ॥
चतुरशीतिलक्षान्ते गोजन्मा तत्परं नरः ।
ततस्तु ब्राह्मणश्च स्यादभयं नात्र संशयः ॥"
इति पाद्मोत्तरखण्डे १५ अध्यायः ॥
(स्वनामख्यातो हरेरंशभूतो धर्म्मपुत्त्रःऋषिः ।
यथा, देवीभागवते । ४ । ५ । १५ ।
"हरेरंशौ स्थितौ तत्र नरनारायणावृषी ।
पूर्णं वर्षसहस्रन्तु चक्राते तप उत्तमम् ॥"
अस्य विवरणन्तु तत्रैव विशेषतो द्रष्टव्यम् ॥ * ॥
देवयोनिविशेषः । यथा, विष्णुपुराणे । १ । ५ । ५८ ।
"नरकिन्नररक्षांसि वयःपशुमृगोरगान् ॥")

**नरकः**, पुं, (नृणाति क्लेशं प्रापयतीति । नृ + "कृञादिभ्यः संज्ञायां वुन् ।" उणां । ५ । ३५ ।
इति वुन् ।) देवरात्रिप्रभेदः ।
इत्युणादिकोषः ॥
(नरस्य मनुष्यस्य कं शिरो यत्र ।) दैत्यविशेषः ।
स पृथिव्या गर्भे वराहदेवाज्जातः ।
यथा, --
इति वह्निपुराणे गणभेदनामाध्यायः ॥
तत्पर्य्यायः । नारकः २ निरयः ३ दुर्गतिः ४ ।
इत्यमरः । १ । ९ । १ ॥ * ॥ नरकसंख्या यथा, --
"उष्मोर्द्ध्वं नरकाः शक्र ! कोट्यः पञ्चाशमानतः ।
चत्वारिंशन्मितं तेषां प्रधानं तन्निबोधत ॥"
उष्मोर्द्धे पाताले कालाग्निरुद्रस्य पुरोर्द्ध्वं ।
"अवीचिः कृमिभक्ष्यश्च तथा वैतरणी महान् ।
कूटशाल्मलिरुच्छ्वासयुग्मपर्व्वतरौरवम् ॥
निरुच्छ्वासः पूतिमांसस्तप्तलाक्षास्थितंजलम् ।
क्रकचच्छेदस्तथा पङ्कं कण्ठायसमुतापिबम् ॥
पूतिपूर्णस्तथा मेदस्तम्भश्च रुधिरं वसा ।
तामिस्रस्त्वपतुण्डश्च तीक्ष्णासिश्च नपुंसकः ।
लौहतप्तस्त्रियो भीमा अङ्गारराशिकोपरि ।
ज्ञानवन्तो द्विजा ये च ये च विद्यापरं गताः ।
उदासीना न गच्छन्ति स्वाम्यर्थे च हता नराः ॥
न गच्छन्त्यत्र दातारः सर्व्वभूतहिते रताः ।
शुश्रूषका मातृपित्रोर्न गच्छन्ति न संशयः ॥
अहिंसका न गच्छन्ति ब्रह्मचर्य्यव्यवस्थिताः ।
पतिव्रता दानवन्तो द्विजभक्ताश्च ये नराः ॥
यथोक्तं यजमानाश्च सत्रयाजिन एव च ।
चातुर्म्मास्यकरा ये च ये द्विजा आहिताग्नय
गुरुचित्तानुपालाश्च कृतिनो मौनयन्त्रिताः ।
नित्यस्वाध्यायिनो दान्ताः सदा सभ्याश्च ये नराः
मानवान् पूजयन्तो वै आत्मभावेन भाविताः ।
अपर्व्वमैथुना ये च न गच्छन्ति द्विजोत्तमाः ॥
ब्राह्मणा अमरत्वञ्च प्राप्नुवन्ति न संशयः ॥
निराशाः सर्व्वकामेभ्यो निराशाः सुजितेन्द्रियाः ।
न गच्छन्ति हि तं घोरं यत्र ते पापकर्म्मिणः ॥"
इति वराहपुराणम् ॥ * ॥
नरकगामिनो यथा, --
नारद उवाच ।
"दुष्कर्म्माण्यपि वक्ष्यामि नरकंयैः प्रयान्ति हि ।
सर्व्वेष्वेव तु कार्य्येषु देवपूर्ब्बेषु भूमिप ! ॥
हन्ति पुत्त्रान् पशून् कृत्स्नान् ब्राह्मणातिक्रमः
कृतः ।

| “रजस्वलाया गोत्राया गर्भे वीर्य्येण पोत्रिणः ।<br>यतो जातस्ततो भूतो देव्पुत्त्रोऽपि सोऽसुरः ॥” | | गुर्व्वर्थं वा भयार्त्तं वा वर्ज्जयित्वा महीपते ! ।<br>येऽनृतं कथयन्ति स्म ते वै निरयगामिनः ॥<br>प्रपाणाञ्च सभानाञ्च संक्रमाणाञ्च मारिष ।<br>आगाराणाञ्च भेत्तारो नरा निरयगामिनः ॥<br>ये परस्वापहर्त्तारः परस्वानाञ्च नाशकाः ।<br>सूचकाश्च परेषां हि ते नरा नरकानुगाः ॥<br>सूचकाः सन्धिभेत्तारः परवृत्त्युपजीविनः । |
|---|---|---|

अकृतज्ञाश्च मित्राणां ते वै निरयगामिनः ॥
पाषण्डा दूषकाश्चैव समयानाञ्च दूषकाः ।
ये प्रत्यवस्थिताश्चैव ते वै निरयगामिनः ॥
वृत्तिच्छेदं गृहच्छेदं दानच्छेदञ्च पार्थिव ! ।
मित्रच्छदं तथाशायाः कृत्वा नरकगामिनः ॥
विषमव्यवहाराश्च विषमाश्चैव बुद्धिषु ।
लाभेषु विषमाश्चैव नरा निरयगामिनः ॥
कृताशं कृतनिर्व्वेशं कृतभक्तं कृतश्रमम् ।
भेदैर्ये व्यवकर्षन्ति ते वै निरयगामिनः ॥
द्यूतसंव्यवहाराश्च निष्परीक्षाश्च मानवाः ।
प्राणिहिंसाप्रवृत्ताश्च ते वै निरयगामिनः ॥
वेदविक्रयिणश्चैव वेदानाञ्चैव दूषकाः ।
वेदानां लेखकाश्चैव ते वै निरयगामिनः ॥
केशविक्रायका राजन् ! विषविक्रायकाश्च ये ।
क्षीरविक्रायकाश्चैव ते वै निरयगामिनः ॥
चातुराश्रम्यवाह्याश्च श्रुतिवाह्याश्च ये नराः ।
विकर्म्मभिश्च जीवन्ति ते वै निरयगामिनः ॥
ब्राह्मणानां गवाञ्चैव कन्यानाञ्च महामते ! ।
येऽन्तरं यान्ति कार्य्येषु ते वै निरयगामिनः ॥
शास्त्रविक्रायकाश्चैव कर्त्तारश्च महीपते ! ।
शल्यानां धनुषाञ्चैव ते वै निरयगामिनः ॥
शिलाभिः शङ्कुभिर्व्वापि श्वभ्रैर्व्वा मनुजर्षभ ! ।
ये मार्गमनुरुन्धन्ति ते वै निरयगामिनः ॥
अगोप्तारश्च राजानो बलिषड्भागतस्कराः ।
समर्थाश्चाप्यदातारस्ते वै निरयगामिनः ॥

पितृदेवातिथीन् यस्तु पर्य्यश्नाति नराधमः ।
लालाभक्षे स यात्युग्रे शरकर्त्ता च रोधके ॥”
‘पर्य्यश्नाति परित्यज्य आदौ भुङ्क्ते ।’
करोति कर्णिनो यस्तु यस्तु खड्गादिकृन्नरः ॥
प्रयान्ति ते विशसने नरके भृशदारुणे ।
असत्प्रतिग्रहीतारो नरके यान्त्यधोमुखे ॥
अयाज्ययाजकस्तत्र तथा नक्षत्रसूचकः ।
वेगी पूयवहञ्चैको याति मिष्टान्नभुङ्नरः ॥
‘वेगी साहसकारी । पुत्त्रादीन् वर्ज्जयित्वा एक एव मिष्टान्नभुक् ।’
लाक्षामांसरसानाञ्च तिलानां लवणस्य च ।
विक्रेता ब्राह्मणो याति तमेव नरकं द्विज ! ॥
मार्ज्जारकुक्कुटच्छागान् श्ववराहविहङ्गमान् ।
पालयन्नरकं याति तमेव द्विजसत्तम ! ॥
रङ्गोपजीवी कैवर्त्तः कुण्डाशी गरदस्तथा ।
सूची माहिषकश्चैव पर्व्वकारी च यो द्विजः ॥
‘पत्यौ जीवति जाराज्जातः कुण्डः तदन्नभोजी माहिषो महिषोपजीवी । यद्वा, --
महिषीत्युच्यते भार्य्या भगेनोपार्ज्जितं धनम् ।
उपजीवति यस्तस्याः स वै माहिषकः स्मृतः ॥
इति स्मृतिः ॥
पर्व्वकारी धनादिलोभेनापर्व्वसु अमावास्यादिक्रियाप्रवर्त्तकः ।’
अगारदाही मित्रघ्नः शाकुनिर्ग्रामयाजकः ।
रुधिरान्धे पतन्त्येते सोमं विक्रीणते च ये ॥
मधुहा ग्रामहन्ता च याति वैतरणीं नरः ।
रेतःपानादिकर्त्तारो मर्य्यादाभेदिनश्च ये ॥
ते कृष्ण यान्त्यशौचाश्च कुहकाजाविनश्च ये ।
असिपत्रवनं याति वनच्छेदी वृथैव यः ॥
औरभ्रिको मृगव्याधो वह्निज्वाले पतन्ति वै ।
यान्त्येते द्विज ! तत्रैव यश्चापाकेषु वह्निदः ॥
व्रतेषु लोपको यश्च स्वाश्रमाद्विच्यतश्च यः ।
सन्दंशयातनामध्ये पततस्तावुभावपि ॥
दिवास्वप्नेषु स्कन्दन्ति ये नरा ब्रह्मचारिणः ।
पुत्त्रैरध्यापिता ये च ते पतन्ति श्वभोजने ॥
एते चान्ये च नरकाः शतशोऽथ सहस्रशः ।
येषु दुष्कृतकर्म्माणः पच्यन्ते यातनागताः ॥
तथैव पापान्येतानि तथान्यानि सहस्रशः ।
भुज्यन्ते यानि पुरुषैर्नरकान्तरगोचरैः ॥

ताः शृणुष्व महाराज ! याः श्रुत्वा मोक्षमाप्नुयात् ॥
परवित्तं परापत्यं कलत्रं पारकञ्च यः ।
हरते बुद्धिमोहेन सोऽन्ते मृत्युवशं गतः ॥
कालपाशेन संबद्धो यमदूतैर्म्महाबलैः ।
तामिस्रे पात्यते तावत् यावद्वर्षसहस्रकम् ॥
तत्र ताडनमुद्भूताः कुर्व्वन्ति यमकिङ्कराः ।
पापभोगेन सम्मत्तस्ततो योनिन्तु शौकरीम् ॥
तत्र भुक्त्वा महादुःखं मानुषत्वं गमिष्यति ।
रोगादिचिह्नितं तत्र दुर्यशोज्ञापकं स्वकम् ॥
भूतद्रोहं विधायैवं केवलं सकुटुम्बकम् ।
पुष्णाति षापनिरतः सोऽन्धतामिस्रके पतेत् ॥
ये नरा इह जन्तूनां वधं कुर्व्वन्ति वै मृषा ।
ते रौरवे निपात्यन्ते खाद्यन्ते रुरुभिर्यतः ॥
यः स्वादरार्थं भूतानां वधमाचरति स्फुटम् ।
महारौरवसंज्ञे तु पात्यते स यमाज्ञया ॥
यो वै निजन्तु जनकं ब्राह्मणं द्वेष्टि पापकृत् ।
कालसूत्रे महादुष्टे योजनायतविस्तृते ॥
यावन्ति पशुरोमाणि गवां द्वेषं करोति यः ।
तावद्वषसहस्राणि पच्यते यमकिङ्करैः ॥
यो भूमौ भूपतिर्भूत्वा दण्डायोग्यन्तु दण्डयेत् ।
करोति ब्राह्मणस्यापि देहदण्डं विलोलुपः ।

शान्तान् दान्तानथ प्रज्ञान्
दीर्घकालसहोषि-
तान् ।
त्यजन्ति कृतकृत्या ये ते वै निरयगामिनः
॥
बालानामथ वृद्धानां दासानाञ्चैव ये नराः
।
अदत्त्वा भक्षयन्त्यग्रे ते वै निरयगामिनः ॥
इत्येतत् कथितं राजन् !
धर्म्माधर्म्मविनिर्णयम् ।
विमृष्य पुरुषः कर्म्म धर्म्ममेव समाचरेत्
॥”
इति पाद्मे स्वर्गखण्डे ३४ अध्यायः ॥
नरकविशेषगामिपापिनो यथा, --
“कूटसाक्षी तथा सम्यक् पक्षपातेन यो
वदेत् ।
यश्चान्यदनृतं वक्ति स नरो याति रौरवम्
॥
भ्रूणहा पुरहर्त्ता च गोघ्नश्च मुनिसत्तम ! ।
यान्ति ते नरके रोधे
यश्चोच्छ्वासनिरोधकः ॥
सुरापो ब्रह्महा हर्त्ता सुवर्णस्य च शूकरे ।
प्रयाति नरके यश्च तैः संसर्गमुपैति वै ॥
राजन्यवैश्यहा ताले तथैव गुरुतल्पगः ।
तप्तकुम्भे स्वसृगामी हन्ति राजभटांश्च
यः ॥
साध्वीविक्रयकृद्बध्यपालः केशरिविक्रयी
।
तप्तलौहे तु पच्यन्ते यश्च भक्तं परित्यजेत्
॥
‘केशरी अश्वः ।’
स्नुषां सुताञ्चापि गत्वा महाज्वाले
निपात्यते ।
अवमन्ता गुरूणां यो यश्चाक्रोष्टा नराधमः
॥
वेददूषयिता यश्च वेदविक्रायकश्च यः ।
अगभ्यागामी यश्च स्यात्ते यान्ति लवणं
द्विज ! ॥
चौरो विमोहे पतति मर्य्यादादूषकस्तथा ।
देवद्विजपितॄन् द्वेष्टा रत्नदूषयिता च यः ॥

वर्णाश्रमविरुद्धञ्च कर्म्म कुर्व्वन्ति ये नराः ।
कर्म्मणा मनसा वाचा निरयेषु पतन्ति वै ॥
अधःशिरोभिर्दृश्यन्ते नारकैर्द्दिवि देवताः ।
देवाश्चाधोमुखान् सर्व्वानधःपश्यन्ति नारकान्
॥
स्थावराः कृमयोऽब्जाश्च पक्षिणः पशवो नराः
।
धार्म्मिकास्त्रिदशास्तद्वन्मोक्षिणश्चयथाक्रमम्
॥
सहस्रभागाः प्रथमा द्वितीयानुक्रमास्तथा ।
सर्व्वे ह्येते महाभाग ! यावन्मुक्तिसमाश्रयाः ॥
यावन्तो जन्तवः स्वर्गे तावन्तो नरकौकसः ।
पापकृद्याति नरकं प्रायश्चित्तपराङ्मुखः ॥”
इति विष्णुपुराणे । २ । ६ । ७ -- ३२ ॥
अपि च ।
“कथयामि विचित्राणां कर्म्मणां विविधा गतीः ।

स शूकरमुखैर्द्दुष्टैः पीड्यते यमकिङ्करैः
॥
पश्चाद्दष्टासु योनीषु जायते पापभुक्तये
।
ब्राह्मणानां गवां ये तु द्रव्यं वित्तं
तथाल्पकम् ॥
वृत्तिं वा गृह्णते मोहाल्लम्पन्ति
स्वबलान्नराः ।
ते परत्रान्धकूपे च पात्यन्ते च
महार्द्दिताः ॥
योऽर्थं स्वयमुपाहृत्य मधुरञ्चात्ति
लोलुपः ।
न देवाय न सुहृदे ददाति रसनातुरः ॥
स पतत्येव नरके कृमिभोजनसंज्ञके ।
अनापदि नरो यस्तु हिरण्यादीनपाहरेत्
॥
ब्रह्मस्वं वा महादुष्टः स दंशे नरके पचेत्
।
यः स्वदेहं प्रपुष्णाति नान्यं जानातिं
मूढधीः ॥
मनसा कल्पितं द्रव्यं विदुषे यो ददाति
न ।
स पुमान्नरकं याति यावदिन्द्राश्चतुर्द्दश
॥
पश्चाद्दष्टासु योनीषु जायते वर्णसङ्करः
।
दानानि वाडवे दत्त्वा पुनः शुद्धो
भविष्यति ॥
वाचा दत्तं मनोदत्तमिति साहं वदेद्यदि
।
कम्पन्ते पितरस्तस्य नरकाय
समुत्सुकाः ॥
वाचा दत्तं मनोदत्तं दत्तं
पाणिकुशोदकम् ।
एतद्दत्तमदत्तं स्यात् जिह्वामुत्पाटयेद्यमः
॥
स यात्यते तैलतप्ते
कुम्भीपाकेऽतिदारुणे ॥
यो नगम्यां स्त्रियं मोहाद्योषिद्वावाच्च
काम-
येत् ।

| | | |
|---|---|---|
| स याति कृमिभक्षे वै कृमीशे च दुरिष्टकृत् ॥ | | तं तया किङ्कराः शूर्म्या परिबद्धञ्च कुर्व्वते ॥<br>ये बलाद्वेदमर्य्यादां लुम्पन्ति स्वबलोद्धताः ।<br>ते वैतरण्यां पतिता मांसशोणितभक्षकाः ॥<br>वृषलीं यः स्त्रियं कृत्वा तया गार्हस्थ्यमाचरेत् ।<br>पूयोदे निपतत्येव महादुःखसमन्वितः ॥<br>ये दम्भानाश्रयन्ते वै धूर्त्ता लोकस्य वञ्चने ।<br>वैशसे नरके मूढाः पतन्ति यमताडिताः ॥<br>ये सवर्णां स्त्रियं मूढाः पाययन्ति स्वरेतसम् । |

रेतःकुल्यासु ते पात्या रेतःपानेषु तत्पराः ॥
ये चौरा वह्निना दुष्टा गरदा ग्रामलुण्ठकाः ।
सारमेयादने ते वै पात्यन्ते पातकान्विताः ॥
कूटसाक्ष्यं वदत्यद्धा पुरुषः पापसम्भृतः ।
पारकीयन्तु द्रव्यं यो रक्षति प्रसभं बली ॥
स वीचिनरके पापे ह्यवाग्वक्त्रः पतत्यधः ।
तत्र दुःखं महद्भुक्त्वा पापिष्ठां योनिमाव्रजेत्
॥
यो नरो रसनास्वादात् सुरां पिबति मूढधीः
।
तम्पाययति लोहस्य रसं धर्म्मस्य किङ्कराः
॥
यो गुरूनवमन्येत स्वविद्याचारदर्पितः ।
स मृतः पात्यते क्षारसंज्ञकेऽधोमुखः पुमान्
॥
विश्वासघातं कुर्व्वन्ति ये नरा
धर्म्मनिष्कृताः ।
शूलप्रोते तु नरके पात्यन्ते बहुयातनाः ॥
यैर्न श्रुता रामकथा न परोपकृतिः कृता ।
तेषां सर्व्वाणि दुःखानि भवन्ति नरकान्तरे
॥
अत्र यस्य सुखं भूयस्तस्य स्वर्ग इतीर्य्यते ।
ये दुःखिनो रोगयुता नरकादागतास्तु ते ॥”
इति पाद्मे पातालखण्डे ४८ अध्यायः ॥
(अथ महारौरवादिनरकाख्यानम्। यथा,
मार्कण्डेये । १२ । ३-३९ ।
पुत्त्र उवाच ।
“रौरवस्ते समाख्यातः प्रथमं नरको मया ।
महारौरवसञ्ज्ञन्तु शृणुष्व नरकं पितः ! ॥
योजनानां सहस्राणि सप्त पञ्च समन्ततः ।
तत्र ताम्रमयी भूमिरधस्तस्य हुताशनः ॥
तत्तापतप्ता सर्व्वाशा प्रोद्यदिन्दुसमप्रभा ।
विभात्यति महारौद्रा दर्शनस्पर्शनादिषु ॥
तस्यां बद्धः कराभ्याञ्च पद्भ्याञ्चैव
यमानुगैः ।
मुच्यते पापकृन्मध्ये लुठमानः स गच्छति ॥
काकैर्व्वकैर्वृकोलूकैर्वृश्चिकैर्म्मशकैस्तथा ।
भक्ष्यमाणस्तथा गृध्रैर्द्रुतं मार्गे विकृष्यते ॥
दह्यमानः पितर्मातर्भ्रातस्तातेति चाकुलः ।
वदत्यसकृदुद्विग्नो न शान्तिमधिगच्छति ॥
एवं तस्मान्नरैर्मोक्षो ह्यतिक्रान्तैरवाप्यते ।
वर्षायुतायुतैः पापं यैः कृतं दुष्टबुद्धिभिः ॥
तथान्यस्तु तमो नाम सोऽतिशीतः
स्वभावतः ।
महारौरववद्दीर्घस्तथा स तमसा वृतः ॥
शीतार्त्तास्तत्र धावन्तो नरास्तमसि दारुणे
।
परस्परं समासाद्य परिरभ्याश्रयन्ति च ॥
दन्तास्तेषाञ्च भज्यन्ते
शीतार्त्तिपरिकम्पिताः ।
क्षुत्तृष्णा प्रबला तत्र तथैवान्येऽप्युपद्रवाः ॥
हिमखण्डवहो वायुर्भिनत्त्यस्थीनि दारुणः ।
मज्जासृग्गलितन्तस्मादश्नुवन्ति
क्षुधान्विताः ॥
लेलिह्यमाना भ्राम्यन्ते परस्परसमागमे ।
एवं तत्रापि सुमहान् क्लेशस्तमसि मानवैः
॥
प्राप्यते ब्राह्मणश्रेष्ठ ! यावद्दुष्कृतसंक्षयः ॥
निकृन्तन इति ख्यातस्ततोऽन्यो
नरकोत्तमः ।
तस्मिन् कुलालचक्राणि भ्राम्यन्त्यविरतं
पितः ! ।
तेष्वारोप्य निकृत्यन्ते कालसूत्रेण मानवाः
॥
यमानुगाङ्गुलिस्थेन आपादतलमस्तकम् ।
नचैषां जीवितभ्रंशो जायते द्विजसत्तम ! ॥
छिन्नानि तेषां शतशः खण्डान्यैक्यं व्रजन्ति
च ।
एवं वर्षसहस्राणि छिद्यन्ते पापकर्म्मिणः ॥
तावद्यावदशेषं वै तत्पापं हि क्षयं गतम् ।
अप्रतिष्ठञ्च नरकं शृणुष्व गदतो मम ॥
यत्रस्थैर्न्नारकैर्दुःखमसह्यमनुभूयते ।
तान्येव तत्र चक्राणि घटीयन्त्राणि चान्यतः
॥
दुःखस्य हेतुभूतानि पापकर्म्मकृतां नृणाम् ।
चक्रेष्वारोपिताः केचिद्भ्राम्यन्ते तत्र
मानवाः ॥
यावद्वर्षसहस्राणि न तेषां स्थितिरन्तरा ।
असिपत्त्रवनं नाम नरकं शृणु चापरम् ।
योजनानां सहस्रं यो
ज्वलदग्न्यास्तृतावनिः ॥
तप्ताः सूर्य्यकरैश्चण्डैर्य्यत्रातीव सुदारुणैः
।
प्रपतन्ति सदा तत्र प्राणिनो नरकौकसः
॥
तन्मध्ये च वनं रम्यं स्निग्धपत्रं
विभाव्यते ।
पत्राणि तत्र खड्गानां फलानि
द्विजसत्तम ! ॥
श्वानश्च तत्र सबलाः
स्वनन्त्ययुतशोभिताः ।
महावक्त्रा महादंष्ट्रा व्याघ्रा इव भयानकाः
॥
ततस्तद्वनमालोक्य शिशिरच्छायमग्रतः
।
प्रयान्ति प्राणिनस्तत्र
तीव्रतृट्परिपीडिताः ॥
हा मातर्हा तात ! इति क्रन्दन्तोऽतीव
दुःखिताः ।
दह्यमानाङ्घ्रियुगला धरणीस्थेन वह्निना
॥
तेषां गतानां तत्रासिपत्रपातीसमीरणः ।
प्रवाति तेन पात्यन्ते तेषां
खड्गान्यथोपरि ॥
ततः पतन्ति ते भूमौ ज्वलत्पावकसञ्चये
।
लेलिह्यमाने चान्यत्र व्याप्ताशेषमहीतले ॥
सारमेयास्ततः शीघ्रं घातयन्ति शरीरतः
।
तेषामङ्गानि रुदतामनेकान्यतिभीषणाः ॥
असिपत्रवनं तात ! मयैतत् कीर्त्तितं तव
।
अतः परं भीमतरं तप्तकुम्भं निबोध मे ॥
समन्ततस्तप्तकुम्भा
वह्निज्वालासमावृताः ।
ज्वलदग्निचयोद्वृत्ततैलायश्चूर्णपूरिताः ।

| | | |
|---|---|---|
| | घटीयन्त्रेषु चैवान्यो बद्धस्तोये यथा घटी ॥<br>भ्राम्यन्ते मानवा रक्तमुद्गिरन्तः पुनः पुनः<br>।<br>अस्रैर्मुखविनिष्क्रान्तैर्नेत्रैरस्नुविलम्बिभिः ॥<br>दुःखानि ते प्राप्नुवन्ति यान्यसह्यानि<br>जन्तुभिः ॥ | तेषु दुष्कृतकर्म्माणो याम्यैः क्षिप्ता<br>ह्यधोमुखाः ॥<br>क्वाथ्यन्ते<br>विस्फुटद्गात्रगलन्मज्जजलाविलाः।<br>स्फुटत्कपालनेत्रास्थिछिद्यमाना<br>विभीषणैः ॥<br>गृध्रैरुत्पाट्य मुच्यन्ते पुनस्तेष्वेव वेगितैः<br>।<br>पुनःसिमसिमायन्त्रे तैलेनैक्यं व्रजन्ति च<br>॥<br>द्रवीभूतैः<br>शिरोगात्रस्नायुमांसत्वगस्थिभिः।<br>ततो याम्यैर्नरैराशु दर्व्व्या घट्टनघट्टिताः<br>॥<br>कृतावर्त्ते महातैले मथ्यन्ते पापकर्म्मिणः<br>।<br>एष ते विस्तरेणोक्तस्तप्तकुम्भो मया<br>पितः ! ॥”) |

**नरककुण्डं**, क्ली, (नरकस्य कुण्डम् ।) यातनास्थानम् । तद्यथा, यम उवाच । “नरकाणाञ्च कुण्डानि सन्ति नानाविधानि च । नानापुराणभेदेन

नामभेदानि तानि च ॥ विस्तृतानि गभीराणि क्लेशदानि च जीविनाम् । भयङ्कराणि घोराणि हे वत्से ! कुत्सितानि च ॥ षडशीतिश्च कुण्डानि

संयमन्याञ्च सन्ति च । निबोध तेषां नामानि प्रसिद्ध्वानि श्रुतौ सति ॥” इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे । २७ । २८ अध्यायौ ॥

| तत्र नरककुण्डनामानि | पापभेदात् कुण्डविशेषगामिनः |
|---|---|
| वह्निकुण्डम् १ | कटुवाचा बान्धवदग्धकृत् १ |
| तप्तकुण्डम् २ | ब्राह्मणातिथिभोजनाप्रदः २ |
| क्षारकुण्डम् ३ | निषिद्धदिने वस्त्रे क्षारसंयोजकः ३ |
| विट्कुण्डम् ४ | ब्रह्मवृत्त्यपहारकः ४ |
| मूत्रकुण्डम् ५ | परतडागं खनित्वोत्सर्ज्जकः ५ |
| श्लेष्मकुण्डम् ६ | एकाकी मिष्टभोजी ६ |
| गरकुण्डम् ७ | पितृमातृगुरुभार्य्याद्यपोषकः ७ |
| दूषिकाकुण्डम् ८ | अतिथिं दृष्ट्वा वक्रचक्षुःकारी ८ |
| वसाकुण्डम् ९ | विप्राय दत्त्वा तद्द्रव्यमन्यस्मै दाता ९ |
| शुक्रकुण्डम् १० | परस्त्रीगामी परपुंगामिनी च १० |
| असृक्कुण्डम् ११ | गुर्व्वादिताडकस्तद्रक्तपातकारकश्च११ |
| अश्रुकुण्डम् १२ | हरिसङ्गीतरुदद्गायद्गद्गदभक्तोपहासकृत् १२ |
| गात्रमलकुण्डम् १३ | शश्वदशुद्धचित्तः खलताकारी च १३ |
| कर्णविट्कुण्डम् १४ | वधिरोपहासकृत् १४ |
| मज्जकुण्डम् १५ | लोभात् स्वभोजनार्थं जीवहन्ता १५ |
| मांसकुण्डम् १६ | अर्थलोभात् कन्याविक्रायकः १६ |
| नखकुण्डम् १७ | श्राद्धोपवासादिषु संयमत्यागी १७ |
| लोमकुण्डम् १८ | श्राद्धोपवासादिषु संयमत्यागी १८ |
| केशकुण्डम् १९ | सकेशपार्थिवशिवलिङ्गार्च्चकः १९ |
| अस्थिकुण्डम् २० | विष्णुपदे पितृपिण्डादाता २० |
| ताम्रकुण्डम् २१ | गुर्व्विणीगामी २१ |
| लौहकुण्डम् २२ | ऋतुस्नातावीरयोरन्नभुक् २२ |
| तीक्ष्णकण्टककुण्डम् २३ | कटुवाचा स्वामिताडिका २३ |
| विषकुण्डम् २४ | विषेण जीवनहन्ता २४ |
| घर्म्मकुण्डम् २५ | सघर्म्महस्तेन देवद्रव्यस्पर्शकृत् २५ |
| तप्तसुराकुण्डम् २६ | शूद्रानुज्ञातः शूद्रान्नभोजी २६ |
| प्रतप्ततैलकुण्डम् २७ | दण्डेन वृषताडकः २७ |
| कुन्तकुण्डम् २८ | कुन्तलौहवडिशैर्जीवहन्ता २८ |

| | |
|---|---|
| कृमिकुण्डम् २९ | मत्स्याभुग्विप्रो वृथामांसभुक् हरिनैवेद्याभुक् च २९ |
| पूयकुण्डम् ३० | शूद्रयाजी तत्श्राद्धभुक् तच्छवदाही च ब्राह्मणः ३० |
| सर्पकुण्डम् ३१ | श्रीकृष्णपदचिह्नमस्तकस्य सर्पस्य हन्ता ३१ |
| मशकुण्डम् ३२ | विधिं दत्त्वा क्षुद्रजन्तुहन्ता ३२ |
| दंशकुण्डम् ३३ | विधिं दत्त्वा जीवहन्ता ३३ |
| गरलकुण्डम् ३४ | मक्षिकां हत्वा मधुग्राही ३४ |
| वज्रदंष्ट्रकुण्डम् ३५ | अदण्डविप्रयोर्द्दण्डकृत् ३५ |
| वृश्चिककुण्डम् ३६ | अर्थलोभात् प्रजादण्डकृत् ३६ |
| शरकुण्डम् ३७ | शस्त्रधारी धावकः सन्ध्याहरिभक्तिहीनश्च ब्राह्मणः ३७ |
| शूलकुण्डम् ३८ | शस्त्रधारी धावकः सन्ध्याहरिभक्तिहीनश्च ब्राह्मणः ३८ |
| खड्गकुण्डम् ३९ | शस्त्रधारी धावकः सन्ध्याहरिभक्तिहीनश्च ब्राह्मणः ३९ |
| गोलकुण्डम् ४० | अल्पदोषेण कारायां प्रजाबन्धनकृत् ४० |
| नक्रकुण्डम् ४१ | जलादुत्थितनक्रादि हन्ता ४१ |
| काककुण्डम् ४२ | कामेन परस्त्रीवक्षःश्रोण्यास्यद्रष्टा ४२ |
| सञ्चानकुण्डम् ४३ | स्वर्णचौरः ४३ |
| वाजकुण्डम् ४४ | ताम्रलौहचौरः ४४ |
| वज्रकुण्डम् ४५ | देव-देवद्रव्ययोश्चौरः ४५ |
| तप्तपाषाणकुण्डम् ४६ | देव-द्विजयो रौप्य-गो-वस्त्राणां चौरः ४६ |
| तीक्ष्णपाषाणकुण्डम् ४७ | देव-द्विजयोः पित्तल-कांस्यपात्रचौरः ४७ |
| लालाकुण्डम् ४८ | वेश्यान्नभुक् तद्वृत्तिजीवी च ४८ |
| मसीकुण्डम् ४९ | म्लेच्छसेवी मसीजीवी च ब्राह्मणः ४९ |
| चूर्णकुण्डम् ५० | देव-द्विजयोः शस्यताम्बूलासनचौरः ५० |
| चक्रकुण्डम् ५१ | विप्रद्रव्यं हृत्वा चक्रकारी ५१ |
| वक्रकुण्डम् ५२ | विप्र-बान्धवयोर्व्वक्रताकारी ५२ |
| कूर्म्मकुण्डम् ५३ | हरिशयने कूर्म्ममांसभुक् ब्राह्मणः ५३ |
| ज्वालाकुण्डम् ५४ | देवद्विजयोर्घृततैलादिहृत् ५४ |
| भस्मकुण्डम् ५५ | देवद्विजयोर्घृततैलादिहृत् ५५ |
| दग्धकुण्डम् ५६ | देवद्विजयोर्द्धात्रीगन्धतैलद्रव्याणामपहर्त्ता ५६ |
| तप्तशूर्म्मीकुण्डम् ५७ | बलखलत्वादिना परभूमिहरः ५७ |

| | |
|---|---|
| असिपत्रकुण्डम् ५८ | अर्थलोभात् खड्गेन जीविच्छेदी नरघाती च ५८ |
| क्षुरधारकुण्डम् ५९ | ग्रामनगरादिदाहकृत् ५९ |
| सूचीमुखकुण्डम् ६० | परकर्णे मुखं दत्त्वा परनिन्दकः परदोषश्लाघी वेदब्राह्मणनिन्दकश्च ६० |
| गोधामुखकुण्डम् ६१ | गृहं भित्त्वा वस्तुगोच्छागमेषचौरः ६१ |
| नक्रमुखकुण्डम् ६२ | सामान्यद्रव्यचौरः ६२ |
| गजदंशकुण्डम् ६३ | गजतुरगनरचौरः ६३ |
| गोमुखकुण्डम् ६४ | जलपिबद्गोवारकः ६४ |
| कुम्भीपाककुण्डम् ६५ | गो-स्त्री-भिक्षु-भ्रूण-ब्रह्महा अगम्यागामी दीक्षासन्ध्याहीनस्तीर्थप्रतिग्राही ग्रामयाजी देवलः शूद्रसूपकारो वृषलीपतिश्च ६५ |
| कालसूत्रकुण्डम् ६६ | वेश्यान्नभुक् तत्संसर्गी च ६६ |
| अवटोदकुण्डम् ६७ | कुलटादिषड्वेश्यागामी द्विजः ६७ |
| अरुन्तुदकुण्डम् ६८ | चन्द्रसूर्य्यग्रहणे निषिद्धकालभोजी ६८ |
| पांशुभोजकुण्डम् ६९ | एकस्मै वाक्प्रदत्तकन्याया अन्यस्मै दाता ६९ |
| पाशवेष्टकुण्डम् ७० | दत्तापहारी ७० |
| शूलपोतकुण्डम् ७१ | अभक्त्या शिवलिङ्गपूजकः ७१ |
| प्रकम्पनकुण्डम् ७२ | विप्रदण्डकृत् तत्कम्पकृद्भयदायी च ७२ |
| उल्कामुखकुण्डम् ७३ | सकोपवदना स्वामिनि कटुवादिनी ७३ |
| अकूपकुण्डम् ७४ | शूद्रभोग्या ब्राह्मणी ७४ |
| वेधनकुण्डम् ७५ | वेश्या । सा च पञ्चषट्पुंगमनाद्भवति ७५ |
| दण्डताडनकुण्डम् ७६ | युङ्गी । सा च सप्ताष्टपुंगमनाद्भवति ७६ |
| जालबद्धकुण्डम् ७७ | महावेश्या । साचाष्टाधिकपुंगमनाद्भवति ७७ |
| देहचूर्णकुण्डम् ७८ | कुलटा । सा च पुंद्वयगमनाद्भवति ७८ |
| दलनकुण्डम् ७९ | स्वैरिणी । वृषली । सा चतुःपुंगमनाद्भवति ७९ |
| शोषणकुण्डम् ८० | धृष्टा । पुंश्चली । सा च त्रिपुंगमनाद्भवति ८० |
| कषकुण्डम् ८१ | सवर्णपरदारी ८१ |
| सूर्पकुण्डम् ८२ | ब्राह्मणीगामी क्षत्त्रियो वैश्यश्च ८२ |
| ज्वालामुखकुण्डम् ८३ | करे तुलसीगङ्गाजलद्वेशिलाश्च कृत्वा प्रतिज्ञाकृत्तदपालको मिथ्याशपथी मित्रद्रोही विश्वासघाती मिथ्यासाक्ष्यदश्च ८३ |
| जिह्मकुण्डम् ८४ | नित्यक्रियाहीनो देववागनास्तिको मन्दोपहासी च ८४ |
| | |

| धूमान्धकुण्डम् ८५ | देवविप्रयोर्द्धनहारी ८५ |
|---|---|
| नागवेष्टनकुण्डम् ८६ | वैद्यदैवज्ञवृत्तिकारी लाक्षालोहव्यापारी रसादिविक्रयी च ब्राह्मणः ८६ |

**नागवारिकः**, पुं, (नागानां हस्तिनां वारो वार-
णम् । स कार्य्यत्वेनास्त्यस्येति । नागवार + ठन् ।)
राजकुञ्जरः । हस्तिपः । गणस्थराजः । (नागानां
सर्पाणां वारो वारणमस्त्यस्येति ।) गरुडः ।
मयूरः । इति मेदिनी । के, २३० ॥

**नागवीटः**, पुं, (नाग इव विशेषेण एटति इत-
स्ततो भ्रमतीति । वि + इट गतौ + "इगुपध-
ज्ञेति ।" ३ । १ । १३५ । इति कः ।) टाङ्करः ।
इति त्रिकाण्डशेषः ॥ ड्याकरा इति ख्यातः ॥

**नागवीथी**, स्त्री, (नागस्येव वीथी पन्थाः ।) अश्वि-
न्यादिनक्षत्रत्रयघटितग्रहस्थानत्रयान्तर्गतोत्तर-
स्थानस्थपथविशेषः । यथा, --
"सर्व्वग्रहाणां त्रीण्येव स्थानानि द्विजसत्तमाः ।
स्थानं जारद्गवं मध्यं तथैरावतमुत्तरम् ।
वैश्वानरं दक्षिणतो निर्द्दिष्टमिह तत्त्वतः ॥
तदेव मध्यमोत्तरदक्षिणमार्गत्रयं प्रत्येकं वीथी-
त्रयेण त्रिधा भिद्यते । तथाहि त्रिभिस्त्रिभि-
रश्विन्यादिनक्षत्रैर्नागवीथीगजवीथी ऐरा-
वती चेत्युत्तरमार्गे वीथीत्रयम् । तथाचोक्तम् ।
अश्विनी कृत्तिका याम्या नागवीथीति
शब्दिता ॥"
इति विष्णुपुराणे । २ । ८ । ७९ श्लोकटीकायां
श्रीधरस्वामी ॥ कश्यपापत्यविशेषः । यथा, --
"नागवीथी च यामिन्याम् ।" इति ब्रह्मपुराणे
द्वितीयोऽध्यायः ॥ (धर्म्मस्य यामिपत्नीगर्भजाता
कन्या । यथा, मत्स्यपुराणे । ५ । १८ ।
"लम्बायां घोषनामानो नागवीथी तु यामिजा ॥")

**नागशुण्डी**, स्त्री, (नागस्य शुण्डवत् आकृतिरस्त्य-
स्येति । अच् । ततो गौरादित्वात् ङीष् ।)
डङ्गरीफलम् । इति राजनिर्घण्टः ॥

**नागसम्भवं**, क्ली, (नागात् सीसकात् सम्भवो यस्य ।)
सिन्दूरम् । इत्यमरः । २ । ९ । १०५ ॥

**नागसुगन्धा**, स्त्री, (नागस्येव सु शोभनो गन्धो
यस्याः ।) भुजङ्गाक्षी । सर्पसुगन्धा । इति
भरतधृतस्वामी ॥ (रास्नाभेदः । तत्पर्य्यायो

**नागहनुः**, पुं, (नागस्य हस्तिनो हनुरिव ।) नख-
नामगन्धद्रव्यम् । इति राजनिर्घण्टः ॥

**नागहन्त्री**, स्त्री, (नागान् हन्तीति । हन + तृच् +
ङीप् ।) वन्ध्याकर्कोटकी । इति
राजनिर्घण्टः ॥

**नागाख्यः**, पुं, (नाग एव आख्या यस्य ।) नाग-
केशरः । इति त्रिकाण्डशेषः ॥

**नागाञ्चला**, स्त्री, नागयष्टिः । इति जटाधरः ॥

**नागाञ्जना**, स्त्री, हस्तिनी । (नागस्येव अञ्जनं
कृष्णवर्णत्वं यस्याः ।) नागयष्टिः । इति
मेदिनी ।
ने, १८८ ॥

**नागाधिपः**, पुं, (नागानां अधिपः ।) अनन्तः ।
इति हेमचन्द्रः । ४ । ३७३ ॥

**नागान्तकः**, पुं, (नागानां अन्तको विनाशकः ।)
गरुडः । इत्यमरः । १ । १ । ३१ ॥

**नागारातिः**, पुं, (नागानां अरातिः शत्रुः ।)
वन्ध्याकर्कोटकी । इति राजनिर्घण्टः ॥

**नागालावुः**, स्त्री, (नाग इव अलावुः ।) कुम्भ-
तुम्बी । इति राजनिर्घण्टः ॥

**नागाशनः**, पुं, (अश्नातीति । अश + ल्युः । नागानां
अशनो भक्षकः ।) गरुडः । इति
हारावली । १० ॥

**नागाह्वं**, क्ली, (नागस्य आह्वा नाम आह्वा
यस्य ।) हस्तिनापुरम् । इति
त्रिकाण्डशेषः ॥

**नागाह्वा**, स्त्री, (नागं नागकेशरं आह्वयते स्पर्द्धते
इति । आ + ह्वे + अच् । टाप् ।)
लक्ष्मणा-
कन्दः । इति राजनिर्घण्टः ॥

**नागी**, स्त्री, (नागस्य स्थूला पत्नी । नाग + जान-

लोकादिमग्निं तमुवाच तस्मै
या इष्टका यावतीर्व्वा यथा वा ।
स चापि तत्प्रत्यवदद्यथोक्त-
मथास्य मृत्युः पुनराह तुष्टः ।
तमब्रवीत् प्रीयमाणो महात्मा
वरं तवेहाद्य ददामि भूयः ।
तवैव नाम्ना भवितायमग्निः
सृङ्कां चेमामनेकरूपां गृहाण ॥
त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं
त्रिकर्म्मकृत्तरति जन्ममृत्यू ।
ब्रह्मयज्ञं देवमीड्यं विदित्वा
निचाय्येमां£ शान्तिमत्यन्तमेति ॥
त्रिणाचिकेतस्त्रयमेतद्विदित्वा
य एवं विद्वां£श्चिनुते नाचिकेतम् ।
स मृत्युपाशान् पुरतः प्रणोद्य
शोकातिगो मोदते स्वर्गलोके ॥"
इति कठोपनिषदि प्रथमा वल्ली ।
१३-१८ ॥
(ऋषिविशेषः । अस्य विवरणं यथा, महा-
भारते । १३ । ७१ । २ -- २१ ।
"अत्राप्युदाहरन्तीममितिहासं
पुरातनम् ।
ऋषेरुद्दालकेर्व्वाक्यं नाचिकेतस्य
चोभयोः ॥
ऋषिरुद्दालकिर्धीमानुपगम्यततः
सुतम् ।
त्वं मामुपचरस्वेति नाचिकेतमभाषत
॥
समाप्ते नियमे तस्मिन् महर्षिः
पुत्त्रमब्रवीत् ।
उपस्पर्शनशक्तस्य
स्वाध्यायाभिरतस्य च ॥
इध्मा दर्भाः सुमनसः
कलसश्चातिभोजनम् ।
विस्मृतं मे तदादाय नदीतीरादिहाव्रज
॥
गत्वानवाप्य तत् सर्व्वं
नदीवेगसमाप्लुतम् ।

यथा, --

"नाकुली सरसा नागसुगन्धा गन्धनाकुली ।

बकुलेष्टा भुजङ्गाक्षी सर्पाङ्गी विषनाशिनी ॥"

इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**नागस्तोककं**, क्ली, (नागस्य नागविषस्य स्तोकः

स्वल्पता यत्र । कप् । स्थावरविषत्वाद्वास्य तथात्वम् ।) वत्सनाभः । इति राजनिर्घण्टः ॥

**नागस्फोता**, स्त्री, (नाग इव स्फोता ।) दन्ती ।

नागदन्ती । इति राजनिर्घण्टः ॥

पदेति स्थौल्यार्थे ङीष् ।) नागपत्नी । इति

मुग्धबोधम् ॥ (अस्याः दधिगुणा यथा, --

"लघु पाके बलासघ्नं वीर्य्योष्णं पक्तिनाशनम् ।

कषायानुरसं नाग्या दधि वर्च्चो विवर्द्धनम् ॥"

इति सुश्रुते सूत्रस्थाने ४५ अध्याये ॥)

**नागोदं**, क्ली, (नागवदुदरं यस्मात् । पृषोदरादि-

त्वात् रलोपः ।) उदरत्राणम् । इति हेम-

चन्द्रः । ३ । ४३२ ॥

**नागोदरं**, क्ली, (नागवत् बृहदुदरं यस्मात् ।)

उरस्त्राणम् । इति हारावली । १९८ ॥ (गर्भिण्या

गर्भोपद्रवविशेषः । यथा, सुश्रुते शरीरस्थाने ।

१० अध्याये ।

"शुक्रशोणितं वायुनाभिप्रपन्नमवक्रान्तजीवमा-

ध्मापयत्युदरं तत् कदादित् यदृच्छया उपशान्तं

नैगमेषापहृतमिति भाषन्ते । तमेव कदाचित्

प्रलीयमानं नागोदरमित्याहुः । तत्रापि लीन-

वत् प्रतीकारः ॥")

**नाचिकेतः**, पुं, नचिकताः । अग्निः । यथा, --

"स त्वमग्निँ स्वर्ग्यमध्येषि मृत्यो

प्रब्रूहि तँ श्रद्दधानाय मह्यम् ।

स्वर्गलोका अमृतत्वं भजन्त

एतद्द्वितीयेन वृणे वरेण ॥

प्र ते ब्रवीमि तदु मे निबोध

स्वर्ग्यमग्निं नचिकेतः प्रजानन् ।

अनन्तलोकाप्तिमथो प्रतिष्ठां

विद्धि त्वमेनं निहितं गुहायाम् ॥

न पश्यामि तदित्येव पितरं सोऽब्रवीन्मुनिः ॥

क्षुत्पिपासाश्रमाविष्ट ऋषिरुद्दालकिस्तदा ।

यमं पश्येति तं पुत्त्रमशपत् स महातपाः ॥

तथा स पित्राभिहितो वाग्वज्रेण कृताञ्जलिः ।

प्रसीदेति ब्रुवन्नेव गतसत्त्वोऽपतद्भुवि ॥

नाचिकेतं पिता दृष्ट्वा पतितं दुःखमूर्च्छितः ।

किं मया कृतमित्युक्त्वा निपतात महीतले ॥

तस्य दुःखपरीतस्य स्वं पुत्त्रमनुशोचतः ।

व्यतीतं तदहःशेषं सा चोग्रा तत्र शर्व्वरी ॥

पित्रेनाश्रुप्रपातेन नाचिकेतः कुरूद्वह ।

प्रास्पन्दच्छयने कौश्ये वृष्ट्या शस्यमिवाप्लुतम् ॥

स पर्य्यपृच्छत्तं पुत्त्रं क्षीणं पर्य्यागतं पुनः ।

दिव्यैर्गन्धैः समादिग्धं क्षीणस्वप्नमिवोत्थितम् ॥

अपि पुत्त्र जिता लोकाः शुभास्ते स्वेन कर्म्मणा ।

दिष्ट्या चासि पुनः प्राप्तो नहि ते मानुषं वपुः ॥

प्रत्यक्षदर्शी सर्व्वस्य पित्रा पृष्टो महात्मना ।

स तां वार्त्तां पितुर्म्मध्ये महर्षीणां न्यवेदयत् ॥

कुर्व्वन् भवच्छासनमाशु यातो ह्यहं विशालां रुचिरप्रभावाम् ।

वैवस्वतीं प्राप्य सभामपश्यं सहस्रशो योजनहेममभासम् ॥

दृष्ट्वै व मामभिमुखमापतन्तं देहीति स ह्यासनमादिदेश ।

वैवस्वतोऽर्घ्यादिभिरर्हणैश्च
भवत्कृते पूजयामास मां सः ॥
ततस्त्वहं तं शनकैरवोचं
वृतः सदस्यैरभिपूज्यमानः ।
प्राप्तोऽस्मि ते विषयं धर्म्मराज !
लोकानर्हेयानहं तान् विधत्स्व ॥
यमोऽब्रवीन्मां न मतोऽसि सौम्य
यमं पश्येत्याह स त्वान्तपस्वी ।
पिता प्रदीप्ताग्निसमानतेजा
न तच्छक्यमनृतं विप्रकर्त्तुम् ॥
दृष्टस्तेऽहं प्रतिगच्छस्व तात
शोचत्यसौ तव देहस्य कर्त्ता ।
ददानि किञ्चापि मनःप्रणीतं
प्रियातिथेस्तव कामान् वृणीष्व ॥
तेनैवमुक्तस्तमहं प्रत्यवोचं
प्राप्तोऽस्मि ते विषयं दुर्निवर्त्त्यम् ।
इच्छाम्यहं पुण्यकृतां समृद्धान्
लोकान् द्रष्टुं यदि तेऽहं वरार्हः ॥
यानं समारोप्य तु मां स देवो
वाहैर्युक्तं सुप्रभं भानुमत्तत् ।
सन्दर्शयामास तदात्मलोकान्
सर्व्वांस्तथा पुण्यकृतां द्विजेन्द्र ! ॥”)

**नाचिकेतुः**, पुं, अग्निः । इति त्रिकाण्डशेषः ॥

**नाटः**, पुं, (नट + भावे घञ् ।) नृत्यम् । देश-
विशेषः । कर्णाटक इति ख्यातः । इति
शब्द-
रत्नावली ॥ (तद्देशवासिनि, त्रि । यथा,
राज-
तरङ्गिण्याम् । १ । ३०२ ।
“व्यावृत्य चोलकर्णाटनाटादींश्च
नरेश्वरान् ॥”)

**नाटकं**, क्ली, (नाटयतीति । नट + णिच् + ण्वुल्
।)
गद्यपद्यप्राकृतभाषादिमयग्रन्थविशेषः ।
तत्-
पर्य्यायः । महारूपकम् २ । इति
त्रिकाण्ड-
शेषः ॥ तस्य लक्षणं यथा, --
प्रख्यातोत्तमनायकं रसमयं राजर्षिवंशोद्भवं
साङ्कं भङ्गजयान्वितं लयमयं
तत्तत्पुराणाश्रयम् ।
भाषावैभवसुन्दरं प्रविलसन्नानाविलासं
बलद्-
वृत्तिव्याप्तमशेषसन्धिसहितं
सप्ताङ्गवन्नाटकम् ॥”
अन्ये तु ।
“देवतानां मनुष्याणां राज्ञां लोके
महात्मनाम् ।
पूर्व्ववृत्तानुचरितं प्रख्यातोदात्तनायकम् ॥
प्रवेशकविविष्कम्भादिभिः
सन्धिभिरन्वितम् ।
इतिहासकथोद्भूतं सुखदुःखोदयैर्युतम् ॥
षट्पञ्चदशसप्ताष्टनवाङ्कैरनुभूषितम् ।
नानाविलासलीलाभिः
सर्व्वसिद्धिभिरन्वितम् ॥
नानाभावरसैराढ्यं नाटकं सूरयो विदुः ।
किञ्चिदङ्गविहीनन्तु न त्याज्यं नाटकं
क्वचित् ॥
आरम्भश्च प्रयत्नश्च प्राप्तिः सम्भव एव च
।
नियता च फलप्राप्तिः फलयोगस्तथापरः
॥
इत्यवस्थाप कं स्यात् नाटके
कार्य्यवस्तुनः ।
संस्कृतं प्राकृतं भूतभाषाप्रभ्रंशिका गिरः ।
नाटके नियताः शस्ता एषा भाषा रसावहा
॥
भाषाविभाषाभेदेन प्राकृतन्तु चतुर्द्दश ॥
मागध्यावन्तिका प्राच्या शौरसेन्यर्द्धमागधी
।
वाह्लीका दाक्षिणात्याश्च भाषाः सप्त च
प्राकृते ॥
शकाराभीरचाण्डालशवरद्रविडौड्रजाः ।
वनौकसीविज्ञातीनां विभाषाः सप्त
कीर्त्तिताः ॥
कैकेयी शौरसेनी च काञ्ची पाञ्चालमागधी
।
“कैशिकीवृत्तिसंयुक्ता नारीपरिजनोज्वला ।
चतुर्थसन्धिहीना च नाटिका नृपनायिका ॥
इयं शृङ्गारबहुला ततः स्यात् कैशिकीमयी
।
मृद्वीयं कैशिकीवृत्तिर्न स्यादन्यरसाश्रया ॥
न कुञ्जरकराघातमात्रं शक्नोति कन्दली ।
लास्यां विटः पीठमर्द्दः सञ्चयो वाद्यसञ्चयः
॥
अन्तःपुरचरो राज्ञ ईषद्विद्यो विदूषकः ।
अत्र भार्य्याजितो राजा निभृतः
काममाचरेत् ॥
अन्तःपुरगतां कन्यां देवीगुप्तां यियासति ।
मन्त्रिणि न्यस्तराज्यस्तु सुखसंस्थापितः
प्रभुः ॥
युवा भूमिपतिः प्रायो निभृतः काममाचरेत्
॥
कन्यामिह परिणयविषयां देवीगुप्तां महिषीं
ज्ञानविरहेण ॥ एके तु ।
चतुर्भिरङ्कैरुत्पाद्यन्तिसृभिर्नृ पनायकम् ।
यत् कैशिकीरसप्रायं नाटकं सैव नाटिका
॥
पूर्ब्बक्रमान्नाटकक्रमाद्रत्नावलीनाटिका ।
एवमन्यश्चेद्बोद्धव्यः ।” इति
सङ्गीतदामोदरः ॥
(अस्या लक्षणं यथा, साहित्यदर्पणे । ६ ।
५३९ ।
“नाटिका कॢप्तवृत्ता स्यात् स्त्रीप्राया चतु-
रङ्किका ।
प्रख्यातो धीरललितस्तत्र स्यान्नायको
नृपः ॥
स्यादन्तःपुरसम्बन्धा सङ्गीतव्यापृताथवा
।
नवानुरागा कन्यात्र नायिका नृपवंशजा ॥
सम्प्रवर्त्तेत नेतास्यां देव्यास्त्रासेन शङ्कितः
।
देवी पुनर्भवेज्ज्येष्ठा प्रगल्भा नृपवंशजा ॥
पदे पदे मानवती तद्वशः सङ्गमो द्वयोः ।
वृत्तिः स्यात् कौशिकी स्वल्पविमर्षाः
सन्धयः

"नाटकं ख्यातवृत्तं स्यात्
पञ्चसन्धिसमन्वितम्।
विलासद्‌र्ध्यादिगुणवत्‌युक्तं
नानाविभूतिभिः ॥
सुखदुःखसमुद्भूतिनानारससमन्वितम्।
पञ्चादिका दशपरास्तत्राङ्काः परिकीर्त्तिताः
॥
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान्
।
दिव्योऽथ दिव्यादिव्यो वा गणवान्नायको
मतः ॥
एक एव भवेदङ्गी शृङ्गारो वीर एव वा ।
अङ्गमन्ये रसाः सर्व्वे कार्य्यं
निर्व्वहणेऽद्भुतम् ॥
चत्वारः पञ्च वा मुख्याः
कार्य्यव्यापृतपूरुषाः ।
गोपुच्छाग्रसमाग्रन्तु बन्धनं तस्य
कीर्त्तितम् ॥"
इति साहित्यदर्पणे । ६ । २७७ ॥
अपि च ।
"नाटकं स्यात् प्रकरणं व्यायोगोऽङ्कस्तथा
डिमः ।
ईहामृगः प्रहसनं भानः समरकारकः ॥
वीथीति भरतः प्राह नाट्येषु दशरूपकम्।
नाटिका प्रेक्षणञ्चैव त्रोटकं शाकटं तथा ॥
गोष्टीसंलापशिल्पानि भानीहल्लीशरासकौ
।
उल्लापकं श्रीगदितं प्रस्थानं नाट्यरासकम्
॥
दुर्म्मल्लिका लासिका च
काव्यञ्चेत्युपरूपकम्।
स्यात सप्तदश संख्यन्तु लक्षणस्तत्र
कथ्यते ॥
द्राविडी पाण्डुदेशी च भूतभाषा
प्रकीर्त्तिताः ॥
वैदर्भी मागधी नाटी काम्बोजी चोपनागरी।
पाञ्चाली षडपभ्रंशभाषा स्युर्द्देशभेदतः ॥
देवतादर्शनान्तञ्च कर्त्तव्यं नाटकं बुधैः ।
राजर्षिदर्शनान्तं या तेऽपि देवैः समा मताः
॥
उदाहरणम्। मुरारिकवेरनर्घराघवं
भवभूते-
रुत्तररामचरितं
कालिदासस्याभिज्ञानशकु-
न्तलञ्चेत्यादि। इति नाटकलक्षणम्।"
इति
सङ्गीतदामोदरः ॥

**नाटकः**, पुं, (नट्यते नृत्यते देवयोनिभिरत्र। नट + घञ्। ततः स्वार्थे कन्। यद्वा, नाटयतीति नट + णिच् + ण्वुल्।)
कामाख्यास्थपर्व्वतभेदः ।
यथा, --
"ऐशान्यां नाटके शैले शङ्करस्य महाश्रमम्
।
नित्यं वसति तत्रेशस्तदधीना तु पार्व्वती
॥"
इति कालिकापुराणम्॥
(नाटकशाला। यथा, रामायणे। १। ५।
१२।
"बधूनाटकसङ्घैश्च संयुक्तां सर्व्वतः पुरीम्
॥"
नटतीति। नट + ण्वुल्।) नर्त्तकि, त्रि।
इति
व्याकरणम्॥

**नाटाम्रः**, पुं, तरम्बुजः। तत्पर्य्यायः। चेलालः २ चित्रफलः ३ सुखाशः ४ राजतेमिषः ५ लता-
पनसः ६ सेदुः ७। इति त्रिकाण्डशेषः ॥

**नाटारः**, पुं, (नट्या नटस्य वा अपत्यम्। "आर-गुदीचाम्।" ४। १। १३०। इति आरक्
।)
पुनः ॥")

**नाटेयः**, पुं, (नट्या अपत्यम्। नटी + ढक्।)
नटीसुतः ! इति मुग्धबोधव्याकरणम्॥

**नाटेरः**, पुं, (नट्या अपत्यमिति। नटी + द्रक्।)
नटीसुतः। इति हेमचन्द्रः। ३। २१२ ॥

**नाट्यं**, क्ली, (नटानां कार्य्यम्। नट + "छन्दोगौक्-थिकयाज्ञिकबह्वृचनटात् ञ्यः।" ४। ३।
१२९।
इति ञ्यः।) नृत्यगीतवाद्यम्। तत्पर्य्यायः
।
तौर्य्यत्रिकम् २। इत्यमरः। १। ७। १०
॥
(यथा, देवीभागवते। १। ७। ३०।
"नाट्यं तनोषि सगुणा विविधप्रकारं
नो वेत्ति कोऽपि तव कृत्यविधानयोगम्
॥")
नटानां समूहः। इति व्याकरणम्॥
नाट्या-
रम्भनक्षत्राणि यथा। अनुराधा १७ धनिष्ठा
२३ पुष्यः ८ हस्ता १३ चित्रा १४ स्वाती
१५
ज्येष्ठा १८ शतभिषा २४ रेवती २७ ॥
इति
ज्योतिषम्॥ * ॥ नाट्यफलं यथा, --
"देवर्षिक्षितिपालपूर्ब्बचरितान्यालोक्य
धर्म्मादय-
स्तत्स्तावाश्रितभूमिकाभिनयेन
स्यादर्थसिद्धिः
परा।
संगीतायुतचित्तवृत्तिभरणा वश्या
भवन्त्यङ्गना
ज्ञानं शङ्कर सेवयेति कथितं नाट्यं
चतुर्व्वर्ग-
दम्॥
यो यस्य दयितो भावः स तं नाट्ये
निरीक्षते।
अतः सर्व्वमनोहारि नाट्यं कस्य न
रञ्जकम्॥"

| | | |
|---|---|---|
| | नट्या अपव्यम् । इति मुग्धबोधव्याकरणम् ॥<br>**नाटिका**, स्त्री, (नाटक + टापि अत इत्वम् ।)<br>नाटकविशेषः । यथा, -- | |

नाट्योत्पत्तिर्यथा, --
"इहानुश्रूयते ब्रह्मा शक्रेणाभ्यर्थितः पुरा ।
चकाराकृष्य वेदेभ्यो नाट्यवेदन्तु पञ्चमम् ॥
उपवेदोऽथ वेदाश्च चत्वारः कथिताः स्मृतौ ।
तत्रोपवेदो गान्धर्व्वः शिवेनोक्तः स्वयम्भुवे ॥
तेनापि भरतायोक्तस्तेन मर्त्ये प्रचारितः ।
शिवाब्जयोनिभरतास्तस्मादस्यप्रयोजकाः ॥"
इति सङ्गीतदामोदरः ॥

**नाट्यधर्म्मिका**, स्त्री, (नाट्यधर्म्मोऽस्त्यस्याः क्रियाया इति ठन् ।) दर्शनार्थशास्त्रोक्तनाट्यम् ।
यथा, हेमचन्द्रः ।
"गीतवाद्यनृत्यत्रयं नाट्यं तौर्य्यत्रिकञ्च तत् ।
संगीतं प्रेक्षणार्थेऽस्मिन् शास्त्रोक्ते नाट्य-धर्म्मिका ॥"

**नाट्यप्रियः**, पुं, (नाट्यं प्रियं यस्य ।) शिवः । इति हेमचन्द्रः । २ । ११२ ॥

**नाट्यशाला**, स्त्री, (नाट्यस्य नृत्यगीतादेः शाला गृहम् ।) प्रासादद्वारसमीपगृहम् । नाट-मन्दिर इति भाषा । यथा, --
"नाट्यशाला च कर्त्तव्या द्वारदेशसमाश्रया ॥"
इति गरुडपुराणम् ॥

**नाट्यालङ्कारः**, पुं, (नाट्यस्य अलङ्कारः ।) नाट्य-भूषणहेतुः । स तु अष्टषष्ठिप्रकारः । यथा, --
"सिद्धिर्म्मनोरथोऽभ्रेशो निरुक्तिश्च विशेषणम् ।
गुणाभिपात उद्दिष्टविचारप्राप्तिनीतयः ॥
अभिप्रायः परीहारो गर्हणानुनयौ तथा ।
अर्थापत्तिः प्रसिद्धिश्च दाक्षिण्यं प्रियभाषणम् ॥
अभिमानाख्यानगर्व्वा हर्षक्षोभोद्यमाश्रयाः ।
पश्चात्तापः स्पृहाक्रन्दौ कपटञ्च प्रवर्त्तनम् ॥
उत्तेजनञ्च दृष्टान्तः शोभोदाहरणे अपि ।
संशयोऽक्षरसंघातो विमलोक्तिः पदोच्चयः ॥
परीवादोऽनुक्तसिद्धिरक्षमाध्यवसायकौ ।
प्रोत्साहनं तुल्यतर्क उपपत्त्यनुतर्क्कणे ॥
निवेदनञ्च साहाय्यं याच्ञा पृच्छा विशोषणम् ।
अभिज्ञानञ्च स्वारूप्यं गुणकीर्त्तनमुक्तयः ॥
अक्षमा सा परिभवः स्वल्पोऽपि नाभिसह्यते ।
गर्व्वोऽवलेपजं वाक्यं कार्य्यस्यारम्भ उद्यमः ॥
ग्रहणं गुणवत्कार्य्यहेतोराश्रय उच्यते ।
उत्प्रासनन्तूपहासो योऽसाधौ साधुमानिनि ॥
आकाङ्क्षा रमणीयत्वाद्वस्तुनो या स्पृहा तु सा ।
अधिक्षेपवचःकारी क्षोभः प्रोक्तः स एव तु ॥
मोहावधीरितार्थस्य पश्चात्तापः स एव तु ।
उपपत्तिर्मता हेतोरुपन्यासोऽर्थसिद्धये ॥
आशसनं स्यादाशंसा प्रतिज्ञाध्यवसायकः ।
विसर्पी यत्समारब्धं कर्म्मानिष्टफलप्रदम् ॥
कार्य्यग्रहणमुल्लेख उत्तेजनमितीष्यते ।
स्वकार्य्यसिद्धयेऽन्यस्य प्रेरणाय कठोरवाक् ॥
भर्त्सना तु परीवादो नीतिः शास्त्रेण वर्त्तनम् ॥
उक्तस्यार्थस्य यत्तु स्यादुत्कीर्त्तनमनेकधा ।
उपालम्भस्वरूपेण तत् स्यादथविशेषणम् ॥
प्रोत्साहनं स्यादुत्साहगिरा कस्यापि योजनम् ।
साहाय्यं सङ्कटे यत् स्यात् सानुकूल्यं परस्य च ॥
अभिमानः स एव स्यात् प्रश्रयादनुवत्तनम् ।
अनुवृत्तिर्भूतकार्य्याख्यानमुत्कीर्त्तनंमतम् ॥
याच्ञा तु क्वापि याच्ञायाः स्वयं दूतमुखेन वा ।
परीहार इति प्रोक्तः कृतानुचितमार्ज्जनम् ॥
अवधीरितकर्त्तव्यकथनन्तु निवेदनम् ।
प्रवर्त्तनन्तु कार्य्यस्य यत् स्यात् साधुप्रवर्त्तनम् ॥
आख्यानं पूर्ब्बवृत्तोक्तिः युक्तिरर्थावधारणम् ।
प्रहर्षः प्रमदाधिक्यं शिक्षा स्यादुपदेशनम् ॥"
एतेषामुदाहरणन्तु तत्रैव द्रष्टव्यम् ॥)

**नाट्योक्तिः**, स्त्री, (नाट्ये नृत्यगीतादौ या उक्तिः ।) नाटकविषयकवचः । नटानां कर्म्म नाट्यं दत्तां सिद्धाञ्च सेनाञ्च वेश्यानां नाम दर्शयेत् ।
दत्तप्रायाणि बणिजां
चेटचेट्योस्तथा पुनः ॥
वसन्तादिषु वर्ण्यस्य वस्तुनो नाम यद्भवेत् ॥
नाम कार्य्यं नाटकस्य
गर्भितार्थप्रकाशकम् ।
नायिकानायकाख्यानां
संज्ञाप्रकरणादिषु ॥
नाटिकासट्टकादीनां
नायिकाभिर्विशेषणम् ।
प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते ॥
राजा स्वामीति देवेति भृत्यैर्भट्टेति चाधमैः ।
राजर्षिभिर्वयस्येति तथा विदूषकेण च ॥
राजन्नित्यृषिभिर्वाच्यः
सोऽपत्यप्रत्ययेन च ।
स्वेच्छया नामभिर्षिप्रैर्षिप्र आर्य्येति चेतरैः ॥
वयस्येत्यथवा नाम्ना वाच्यो राज्ञा विदूषकः ।
वाच्यौ नटीसूत्रधारावार्य्यनाम्ना परस्परम् ॥
सूत्रधारं वदेद्भाव इति वै पारिपार्श्विकः ।
सूत्रधारो मारिषेति हण्डे इत्यधमैः समाः ॥
वयस्येत्युत्तमैर्हंहो मध्यैरार्य्येति चाग्रजः ।
भगवन्निति वक्तव्याः
सर्व्वैर्देवर्षिलिङ्गिनः ॥
वदेद्राज्ञीञ्च चेटीञ्च भवतीति विदूषकः ।
आयुष्मन्रथिनं सूतो वृद्ध तातेति चेतरैः ॥

विपर्य्ययश्चातिशयो भूषाहेतुनिदर्शनम् ।
मानालेशश्च संक्षेपसमीहाश्रीविसर्प्पकाः ॥
उल्लेख उपदिष्टी चेत्यष्टषष्टिमिता अमी ।
अलङ्कारा मता नित्यं नाटकादिषु सूरिभिः ॥”
इति सङ्गीतदामोदरः ॥
(साहित्यदर्पणमते त्रयस्त्रिंशत् नाट्यालङ्काराः
।
यथा, तत्रैव । ६ । २०० -- २३२ ।
“आशीराक्रन्दकपटाक्षमागर्वोद्यमाश्रयाः।
उत्प्रासनं स्पृहाक्षोभपश्चात्तापोपपत्तयः॥
आशंसाध्यवसायौ च विसर्पोल्लेखसञ्ज्ञितौ।
उत्तेजनं परीवादो नीतिरर्थविशेषणम् ॥
प्रोत्साहनञ्च साहाय्यमभिमानोऽनुवर्त्तनम्।
उत्कीर्त्तनं तथा याच्ञा परीहारो निवेदनम् ॥
प्रवर्त्तनाख्यानयुक्तिप्रहर्षाश्चोपदेशनम् ।
इति नाट्यालङ्कृतयो नाट्यभूषणहेतवः ॥
आशीरिष्टजनाशंसाक्रन्दः प्रलपितं शुचा ।
कपटं मायया यत्र रूपमन्यद्विभाव्यते ॥

तत्रोक्तिः नाट्योक्तिः । इति भरतः ॥ तद्यथा
।
आर्य्येति ब्राह्मणम् । क्षत्त्रियं महाराजेति ।
सखीं हलेति । नीचं हण्डे इति । चेटीं हञ्जे
इति । स्वामिनमार्य्यपुत्रेति । राजश्यालं
राष्ट्रि-
येति । समानं हंहो इति । राजानं देवेति ।
सार्व्वभौमं भट्टेति । भगिनीपतिमावुत्तेति
सम्बो-
धयेत् । इति सङ्गीतदामोदरः ॥ गणिकायां
अज्जुका । विद्वति भावः । जनके आवुकः ।
कुमारे युषराजभर्त्तृदारकौ ॥ राज्ञि देवभट्टा-
रकौ । राजसुतायां भर्त्तृदारिका । कृताभिषे-
कायां राज्ञ्यां देवी । इतरासु राज्ञीषु भट्टिनी ।
अवध्योक्तौ अब्रह्मण्यम् । मातरि अम्बा ।
बालायां वासूः । आर्य्ये मारिषः । ज्येष्ठा-
भगिन्यां अत्तिका । निष्ठायां निर्व्वहणम् ।
इत्यमरः । १ । ७ । ११ -- १५ ॥ (यथाच
साहित्य-
दर्पणे । ६ । १५४ -- १६० ।
“अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम् ।
सर्व्वश्राव्यं प्रकाशं स्यात्तद्भवेदपवारितम् ॥
रहस्यन्तु यदन्यस्य परावृत्य प्रकाश्यते ।
त्रिपताककरेणान्यानपवार्य्यान्तरा कथाम् ॥
अन्योन्यामन्त्रणं यत्स्याज्जनान्ते
तज्जनान्तिकम्।
किं ब्रवीषीति यत् नाट्ये विना पात्रं प्रयुज्यते
॥
श्रुत्वेवानुक्तमप्यर्थं तत् स्यादाकाशभाषितम्
॥

वत्स पुत्त्रक तातेति नाम्ना गोत्रेण
वा सुतः ।
शिष्योऽनुजश्च वक्तव्योऽमात्य
आर्य्येति चाधमैः ॥
विप्रैरयममात्येति सचिवेति च
भण्यते ।
साधो इति तपस्वी च
प्रशान्तश्चोच्यते बुधैः ॥
अगृहीताभिधः पूज्यः
शिष्याद्यैर्विनिगद्यते ।
उपाध्यायेति चाचार्य्यो महाराजेति
भूपतिः ॥
स्वामीति युवराजस्तु कुमारो
भर्त्तृदारकः ।
सौम्य भद्रमुखेत्येवमधमैस्तु
कुमारकः ॥
वाच्या प्रकृतिभी राज्ञः कुमारी
भर्त्तृदारिका ॥
पतिर्यथा तथा वाच्या
ज्येष्ठमध्याधमैस्त्रियः ।
हलेति सदृशी प्रेष्या हञ्जे
वेश्याऽज्ञका तथा ॥
कुट्टिन्यम्बेत्यनुगतैः पूज्या च
जरतीजनैः ।
आमन्त्रणैश्च पाषण्डा वाच्याः
स्वसमयागतैः ॥
शकादयश्च सम्भाष्या
भद्रदत्तादिनामभिः ।
यस्य यत् कर्म्म शिल्पं वा विद्या वा
जातिरेव वा ॥
तेनैव नाम्ना वाच्योऽसौ ज्ञेयाश्चान्ये
यथोचि-
तम् ॥”)

**नाडिः**, स्त्री, (नाडयतीति । नड भ्रंशे + णिच्
+
इन् ।) नाडी । इत्यमरटीकायां
भरतः ॥

**नाडिकं**, क्ली, (नाडिरिव प्रतिकृतिः । नाडि
+
“इवे प्रतिकृतौ ।” ५ । ३ । ९६ ।
इति कन् ।)

कालशाकम् । इति भावप्रकाशः ॥

**नाडिका**, स्त्री, (नाडी एव । स्वार्थे कन् ।) षट्-

क्षणः । घडि इति भाषा ।

तत्पर्य्यायः । साधा-

रिका २ घटिका ३ । इति हेमचन्द्रः

। २ । ५१ ॥

घटिकाज्ञानोपायो यथा, --

"निमेषो मानुषो योऽयं

मात्रामात्रप्रमाणकः ।

तैः पञ्चदशभिः काष्ठा त्रिंशत्

काष्ठास्तथा कला ॥

नाडिका तु प्रमाणेन कला दश च

पञ्च च ।

उन्मानेनाम्भसः सा तु

पलान्यर्द्धत्रयोदश ॥

हेममाषैः कृतच्छिद्रा

चतुर्भिश्चतुरङ्गुलैः ।

मागधेन प्रमाणेन यक्षप्रस्थस्तु

संस्मृतः ॥"

इति विष्णुपुराणम् ॥

"नैमित्तिकलयं
प्रपञ्चयिष्यन्निमेषादिक्रमेण प्रथमां-
शोक्तमेव कल्पप्रमाणमनुस्मारयति
निमेष इति
सप्तभिः । मात्रैव मात्रं प्रमाणं यस्य ।
एक-
मात्रलघ्वक्षरोच्चारणकालसंमितो हि
निमेषः ।
निमेषकालतुल्या हि मात्रा लघ्वक्षरञ्च
यदिति
ब्रह्माण्डोक्तेः । नाडिकाज्ञानोपायमाह।
उन्मानेनेति सार्द्धेन । अम्भस
उन्मानेन उन्मी-
यते अनेनेत्युन्मानं पात्रम् । अर्द्धेन योगे
त्रयो-
दशसार्द्धद्वादशेत्यर्थः । उन्मानरूपेण
घटितानि
सार्द्धद्वादशपलानि सा नाडिका ।
सार्द्धद्वादश-
पलताम्रनिर्म्मितपात्रेण सा नाडिका
ज्ञातव्ये-
त्यर्थः । किं प्रमाणं तत् पात्रं कार्य्यं
तदाह
मागधेन प्रमाणेन जलप्रस्थस्तु संस्मृत
इति ।
सार्द्धद्वादशपलजलेन हि
भागधदेशप्रस्थः पूर्य्यते ।
तत्प्रमाणं पात्रं कार्य्यमित्यर्थात् सिद्धम्
। ननु
तथापि पात्रेण कथं नाडिकाज्ञानं
क्रियापरि-
च्छेद्यत्वात् कालस्येत्याशङ्क्य
क्रियासिद्धये ॥
प्रस्थादि विशिनष्टि हेमेति । माषः
पञ्चगुञ्जः ।
हेम्नो माषैश्चतुर्भिश्चतुरङ्गुलेन
शलाकारूपेण
रचितैः कृतच्छिद्रा । एतदुक्तं भवति
सार्द्ध-

"खित्यनव्ययस्य ।" ६ । ३ । ६६ । इति ह्रस्वः ।)
नाडीपानकर्त्ता । इति मुग्धबोधव्याकरणम् ॥

**नाडिपत्रं**, क्ली, (नाडिरिव पत्रं यस्य ।) नाडी-
चम् । इति शब्दमाला ॥

**नाडी**, स्त्री, (नाडि + "कृदिकारादक्तिनः ।"
इति वा ङीष् ।) नालम् । व्रणान्तरम् । (नाली
घा इति भाषा । यथा, सुश्रुते निदानस्थाने १०
अध्याये ।
"तस्यातिमात्रगमनाद्गतिरित्यतश्च
नाडीव यद्वहति तेन मता तु नाडी ॥"
दन्तमूलगता नाल्यो यथा, तत्रैव १६ अध्याये ।
"नालास्रावी कफकृतो विज्ञेयः सोऽधिमांसकः ।
दन्तमूलगता नाड्यः पञ्च ज्ञेया यथेरिताः ॥")
शिरा । गण्डदूर्व्वा । कुहनचर्य्या । षट्क्षण-
कालः । इति मेदिनी । डे, १६ ॥ शिरार्थे
पर्य्यायः । धमनिः २ सिरा ३ । इत्यमरः । २ ।
६ । ६५ ॥ नाडिः ४ नालिः ५ नाली ६ धमनी
७ शिरा ८ । इति भरतः ॥ धरणी ९ धरा १०
तन्तुकी ११ जीवितज्ञा १२ सिंहा १३ । इति
राजनिर्घण्टः ॥ * ॥ कायनाडी त्रिविधा ।
एका वायुवहा । अपरा मूत्रविडस्थिरस-
वाहिनी । अपरा आहारवाहिनी । इति
भरतः ॥ "सा तु गर्भस्थबालकस्य सप्तभिर्मासै-
र्भवति ।" इति सुखबोधः ॥ (यथा, तोडलतन्त्रे
८ उल्लासे ।
श्रीदेव्युवाच ।
"सार्द्धत्रिकोटिनाडीनामालयञ्चकलेतरम् ।
क्रमेण श्रोतुमिच्छामि तद्वदस्व मयि प्रभो ! ॥
श्रीशिव उवाच ।
लोम्नि कूपे सपादार्द्धकोटयश्चैव सुन्दरि ! ।
हस्तास्ये च तथा पादेऽग्निलक्षनाडयः स्थिताः ॥
उदरे च तथा पायौ पञ्चलक्षाः प्रकीर्त्तिताः ।
हृदादिसर्व्वगात्रेषु नवलक्षाः प्रकीर्त्तिताः ॥
अथ पार्श्वे तथा चर्म्मे तथैव सर्व्वसन्धिषु ।
रुद्रान्यूनं स्थितं लक्षं शरीरे नाडयः प्रिये ! ॥
ईडा च पिङ्गला चैव सुषुम्ना चित्रिणी तथा ।
ब्रह्मनाडी च यन्मध्ये पञ्च नाड्यः प्रकीर्त्तिताः ॥
कुहूश्च शङ्खिनी चैव गान्धारी हस्तिजिह्विका ।

एतन्मृदङ्ग इव चर्म्मचयेन नद्धं
कायं नृणामिह शिराशतसप्तकेन ॥
सप्तशतानां मध्ये चतुरधिका विंशतिः
स्फुटा
तासां एका परीक्षणीया या
दक्षिणकरचरण-
विन्यस्ता । चतुरधिकेति तदुक्तम् ।
तिर्य्यक् कूर्म्मो देहिनां नाभिदेशे
वामे वक्त्रं तस्य पुच्छञ्च याम्ये ।
ऊर्द्ध्वे भागे हस्तपादौ च वामौ
तस्याधस्तात् संस्थितौ दक्षिणौ तौ ॥
वक्त्रे नाडीद्वयं तस्य पुच्छे
नाडीद्वयन्तथा ।
पञ्च पञ्च करे पादे वामदक्षिणभागयोः
॥
तासां मध्ये एकेति एकस्या एव
पादादूर्द्ध्वगम-
नात् दक्षिणेति प्राधान्ये पुरुषाश्रया ।
यदुक्तम् ।
वामे भागे स्त्रिया योज्या नाडी पुंसस्तु
दक्षिणे ।
इति प्रोक्तो मया देवि ! सर्व्वदेहेषु
देहिनाम् ॥"
नपुंसकस्य तु
स्त्रीपुंसयोरन्यतराकारप्रकटता-
मपेक्ष्य परीक्षा । साम्यन्तु न स्यादेव
। कृत्रि-
मस्य तु प्रकृतिस्थता । चरणेति
वामस्य तु
दक्षिणग्रन्थिपश्चात् पार्श्वस्था
दक्षिणस्य तु वाम-
ग्रन्थिपश्चात् पार्श्वस्थैव सदुपदेशात्
। करस्था
तु वक्ष्यते ॥ * ॥
परीक्षाप्रकारमाह ।
सव्येन रोगधृतिकूर्परभागभाजा
पीड्याथ दक्षिणकराङ्गुलिकात्रयेण ।
अङ्गुष्ठमूलमधिपश्चिमभागमध्ये
नाडीं प्रभञ्जनगतिं सततं परीक्षेत् ॥

द्वादशपलताम्रमयं
मागधप्रस्थसंमितमूर्द्धायतं
पात्रं चतुर्म्माषचतुरङ्गुलहेमशलाकया
कृताध-
श्छिद्रं जले स्थापितं तेन छिद्रेण
यावता कालेन
पूर्य्यते तावान् कालो नाडिकेति । तथा
च शुकः ।
द्वादशार्द्धपलोन्मानं चतुर्भिश्चतुरङ्गुलैः
।
स्वर्णमाषैः कृतच्छिद्रं यावत्
प्रस्थजलप्लुतमिति ॥”)
इति तट्टीकायां श्रीधरस्वामी ॥ (यथा,
सूर्य्य-
सिद्धान्ते । १ । ११ ।
“षड्भिः प्राणैर्विनाडी स्यात् तत्
षष्ट्या नाडिका
स्मृता ॥”
“षड्भिरिति । षट्प्रमाणैरनुभिः
पानीयपलं
भवति पलानां षष्ट्या घटिकोक्ता
कालतत्त्वज्ञैः ॥”
इति तट्टीका ॥)

**नाडिकेलः**, क्ली, (नारिकेलः । रस्य डत्वम् ।)

नारिकेलः । इत्यमरटीकायां भरतः ॥

**नाडिचीरं**, क्ली, (नाडिरिव चीरं यत्र ।) निर्व्वे-

ष्टनम् । इति हारावली । २१४ ॥ नली
इति
भाषा ॥

**नाडिन्धमः**, पुं, (नाडीं वंशनलीं धमतीति । ध्मा

शब्दाग्निसंयोगयोः + “नाडीमुष्ट्योश्च
।” ३ ।
२ । ३० । इति खश् ।
“पाघ्राध्मास्थेति ।” ७ ।
३ । ७८ । इति धमादेशः ।
“खित्यनव्ययस्य ।”
६ । ३ । ६६ । इति पूर्व्वपदस्य ह्रस्वः
।) स्वर्ण-

नर्द्दिनी च तथा निद्रा रुद्रसंख्या व्यवस्थिता ॥
एता नाड्यः परेशानि ! सुषुम्नायाः प्रजायते ॥”)
नाडीक्रममाह ।
“सार्द्धत्रिकोट्यो नाड्यो हि स्थूलाः सूक्ष्माश्च
देहिनाम् ।
नाभिकन्दनिबद्धास्तास्तिर्य्यगूर्द्ध्वमधःस्थिताः ॥
द्विसप्ततिसहस्रन्तु तासां स्थूलाः प्रकीर्त्तिताः ।
देहे धमन्यो धन्यास्ताः पञ्चेन्द्रियगुणावहाः ॥
तासाञ्च सूक्ष्मशुषिराणि शतानि सप्त
स्युस्तानि यैरसकृदन्नरसं वहद्भिः ।
आप्याय्यते वपुरिदं हि नृणाममीषा-
मम्भःस्रवद्भिरिव सिन्धुशतैः समुद्रः ॥
आपादतः प्रततगात्रमशेषमेषा-
मामस्तकादपि च नातिपुरःस्थितेन ।

सव्येन करेण ।
रोगधृतिर्गदधारणमित्यापीडने
हेतुः । रोगाणां वातादिपिशुनवायूनां
धारणं
यथा स्यात्तथा पीड्येति कश्चित् ।
भाग इति
समुदितकफोणिपरं भाजेति
परीक्षाकालेऽपि
तत्र हस्तस्थितये ।
आपीड्येत्यर्थान्नाडीं एतच्चा-
पीडनं वातादिपौर्ब्बापर्य्यबोधनाय ।
अथेत्या-
पीडनानन्तरं न तु
परीक्षाकालेऽप्यापीडन-
स्थितिः । दक्षिणेति प्रायिकं
स्वपरीक्षाया-
मन्यथात्वात् । त्रयेति योग्यतया
तर्ज्जनीमध्यमा-
नामिकाग्रहणम् ।
पश्चिमेत्यङ्गुष्ठस्याधोभागः ।
मूलेति तदुक्तम् ।
अङ्गुष्ठस्य तु मूले या धमनी
जीवसाक्षिणी ।
तस्या गतिवशाद्विद्यात् सुखं दुःखञ्च
देहिनाम् ॥
प्रभञ्जनगतिर्य्यत्रेति नाड्यन्तरनिरासः
। सतत-
मिति सुस्थदशायामपि । तदुक्तम् ।
भावि-
रोगाभिबोधाय
सुस्थनाडीपरीक्षणमिति ॥ * ॥
परीक्षणीयमाह ।
वातं पित्तं कफं द्वन्द्वं सन्निपातन्तथैव
च ।
साध्यासाध्यविवेकञ्च सर्व्वं नाडी
प्रकाशयेत् ॥
सन्निपातमिति सामान्यतः ।
साध्यासाध्यमिति
विशेषतश्चेत्यर्थः ।
सर्व्वमित्येतदन्यञ्च रोगादिक-

कारः । इत्यमरः । २ । १० । ८ ॥
(उच्चनीचा-
धिरोहणात् मुहुर्मुहुर्निश्वासैर्नाडीं धमति
उप-
तापयतीति । श्वासकारके, त्रि । यथा,
भट्टिः ।
६ । ९४ ।
“सत्वमेजयसिंहाढ्यान्
स्तनन्धवसमत्विषौ ।
कथं नाडिन्धमान् मार्गानागतौ विषमो-
पलान् ॥”)

**नाडिन्धयः**, त्रि, (नाडीं घयतीति । धेट पाने +

“नाडीमुष्ट्योश्च ।” ३ । २ । ३० ।
इति खश् ।

मित्युपसंहारः ।” इति नाडीप्रकाशे
प्रथमो-
द्योतः ॥ * ॥ अथ
नाडीज्ञानसमयमाह ।
“प्रातः कृतसमाचारः
कृताचारपरिग्रहम् ।
सुखाशीनः सुखासीनं
परीक्षार्थमुपाचरेत् ॥
प्रातरिति प्रायिकं मध्याह्ने उष्णता
इत्युक्तेः ॥ * ॥

निषिद्धकालमाह।
सद्यः स्नातस्य भुक्तस्य
क्षुत्तृष्णातपसेविनः ।
व्यायामाक्रान्तदेहस्य सम्यङ्नाडी न
बुध्यते ॥
तैलाभ्यङ्गे च सुप्ते च तथा च
भोजनान्तरे ।
तथा न ज्ञायते नाडी यथा दुर्गतरा
नदी ॥
सुप्ते निद्राकाले भोजनान्तरे
भोजनमध्ये भोज-
नावसानमात्रे च ।
वातमूर्च्छादिक्षणिकरोगे
नायं विधिः ॥ * ॥
अथ वातादिस्वभावक्रममाह।
आदौ च वहते वातो मध्ये पित्तं तथैव
च ।
अन्ते च वहते श्लेष्मा
नाडिकात्रयलक्षणम्॥
आदाविति कफोणिपीडितद्वितीयक्षणे
। न तु
तर्ज्जनीनिवेशस्थले स्थानभेदस्य
कुत्राप्यवक्ष्य-
माणत्वात् ॥ * ॥
सुस्थताज्ञानार्थमाह ।
भूलतागमनप्राया स्वच्छा
स्वास्थ्यमयी शिरा ।
प्रायेति बाहुल्येन । स्वच्छा परितो
जाड्य-
रहिता । स्वास्थ्यमयी
सुस्थताव्यञ्जिका च ।
तथा ।
प्रातः स्निग्धमयी नाडी मध्याह्ने
चोष्णतान्विता ।
सायाह्ने धावमाना च
चिराद्रोगविवर्ज्जिता ॥
चिरादिति
अतीतानागतयोर्द्वयोरप्युक्तिः पथ्या-
शितानामेव ॥ * ॥

सममिति न्यूनाधिकतानिरासः ॥ क्रमगत्या
तु
नासाध्यत्वम् । तथा, --
लावतित्तिरिवार्त्ताकगमनंसन्निपाततः ।
कदाचिन्मन्दगा नाडी कदाचिच्छीघ्रगा
भवेत् ॥
त्रिदोषप्रभवे रोगे विज्ञेया हि भिषग्वरैः ।
पित्तक्रमतया कृच्छ्रसाध्यत्वमसाध्यत्वञ्च ॥
* ॥
सामान्यतः सुखसाध्यत्वमाह।
यदायं धातुमाप्नोति तदा नाडी तथा गतिः
।
तथाहि सुखसाध्यत्वं नाडीज्ञानेन बुध्यते ॥
अयमर्थः । अपराह्णादौ नाडी वातोल्वणा
प्रथमं वातगत्यैव वहति ततो यथायथं
पित्तादि-
गत्या न तु पित्तोल्वणत्वे वातादिगत्या तदा
सुखसाध्यत्वं व्यतिरेकेण व्यतिरेकः ।
तदुक्तमन्यैः ।
नाडी यथाकालगतिस्त्रयाणां
प्रकोपशान्त्यादिभिरेव भूयः ॥ * ॥
तथासाध्यरूपमाह।
मन्दं मन्दं शिथिलशिथिलं व्याकुलं व्याकुलं
वा
स्थित्वा स्थित्वा वहति धमनी याति नाशञ्च
सूक्ष्मा ।
नित्यं स्थानात् स्खलति पुनरप्यङ्गुलिं
संस्पृशेद्वा
भावैरेवं बहुविधविधैः सन्निपातादसाध्या ॥
मन्दं मन्दं मुहुरनुद्भटं अप्रखरमिति यावत् ।
शिथिलेति स्खलद्गतिरूपम् । व्याकुलेति
त्रस्त-
वदितस्ततः । वाशब्दः समुच्चये । स्थित्वा
स्थित्वेत्यावृत्त्या च तद्रूपैव गतिः ।
नाशमदर्श-
नम् । गच्छति कदाचिन्नाडीस्पन्दोऽपि न
सम्भा-
व्यते इत्यर्थः । सूक्ष्मेति यदि लभ्यते तदा
तथैवा-

या च सूक्ष्मा च वक्रा च तामसाध्यां विदु-
र्बुधाः ॥
अत्युच्चा सहजतोऽप्युच्चतरा पृथगिवोद्गता
वा
कदाचिदिति स्थिरा प्रणिधानेनैव गम्यमान-
स्पन्दा च । मांसवाहिनी मांसाहार इव गति-
मती लगुडप्रायेति । तदुक्तं मांसेन लगुडा-
कृतिः । मांसेन समं वहतीति न युक्तं तद्रूप-
परिज्ञापकप्रकारस्यानुक्तत्वात्। इयमपि
विशिष्टबोधनाय। या च सूक्ष्मा च वक्रा चेति
पृथगिव वाक्यान्तरमिति ॥ * ॥
असाध्यत्वापवादमाह।
भारप्रवाहमूर्च्छाभयशोकप्रमुखकारणान्नाडी।
संमूर्च्छितापि गाडं पुनरपि सा जीवितं धत्ते ॥
चिरतरबहुलभारोद्वहनेन वा विषवेगधारा-
वाहिरुधिरदर्शनादिजनितमूर्च्छया वा राक्ष-
सादिसन्दर्शनादिभयेन वा पुत्रादिविरह-
जनितशोकातिरेकेण वा संमूर्च्छितापि अति-
निस्पन्दापि । गाढमिति सुतरां कार्श्यादियोगे-
ऽपीत्यर्थः । पुनरिति साध्यतां यातीत्यर्थः ।
भावानां रत्यादीनां प्रवाह इति न युक्तं भय-
शोकयोः पृथग्विधानात्। प्रमुखेत्यनेन हेत्व-
न्तराभिधानम्। तदुक्तम्।
पतितः सन्धितो भेदी नष्टशुक्रश्च यो नरः ।
शाम्यते विस्मयस्तस्य न किञ्चिन्मृत्युकारणम्
॥
पतितः उच्चादितः सन्धितः
अस्थ्यादिसन्धानेन
संहितः भेदी अतीसारवान् नष्टशुक्रो यक्ष्मा-
दिनातिरमणेन वा शुक्रक्षयवान्। विस्मयो-
ऽसाध्यत्वानुमानं शाम्यति नावतरति । कारणं
प्रागुक्तं तत्तदेव । अन्यत्रापि ।
तथा भूताभिसङ्गेऽपि त्रिदोषवदुपस्थिता ।
समाङ्गा वहते नाडी तथा च न क्रमं गता ॥
अपमृत्युन रोगाङ्गा नाडी तत्सन्निपातवत्।
भूताभिषङ्गे तथा भूतसामान्याभिषङ्गे च देव-
जुष्टादां नाडी सन्निपातधर्म्मशालिनी उप-
स्थिता । आपातत एव भवति न तु तत्फल-
प्रदा । भेदमाह । समेति वातपित्तकफस्वभाव-

वातादीनां क्रमेण गतिमाह ।
वाताद्वक्रगता नाडी चपला
पित्तवाहिनी ।
स्थिरा श्लेष्मवती ज्ञेया मिश्रिते
मिश्रिता भवेत् ॥
वक्रेति वायोस्तिर्य्यग्गमनात्तिरो
वहन्तीति ।
एवं तत्प्रकोपादिना वार्त्तादिगतिरपि
ज्ञातव्या ।
चपलेति
वह्नेरुद्ध्र्वज्वलनादूद्ध्र्वचञ्चला ।
स्थिरेति
जलस्य नीचगमनादनुल्वणा ।
मिश्रिते मिश्र-
चिह्ना भवति । तेन द्विदोषजे
उभयचिह्ना ।
सर्व्वजे सर्व्वचिह्नेति । चपलता
स्थिरतयोः समय-
भेदेनाविरोधः ॥ * ॥
उक्तवक्रादिसामान्यस्य क्रमेण
विशेषमाह ।
सर्पजलौकादिगतिं वदन्ति विबुधाः
प्रभञ्जनेन
नाडीम् ।
पित्ते च काकलावकभेकादिगतिं
विदुः सुधियः ॥
राजहंसमयूराणां पारावतकपोतयोः ।
कुक्कुटादिगतिं धत्ते धमनी
कफसंवृता ॥
आदिना वाते वृश्चिकगतिर्दोलायिता
। आदि-
शब्देन पित्ते कलिङ्गकलविङ्कादिगतिः
। कफे
गजवराङ्गनादिगतिः ॥ * ॥
द्वन्द्वजस्यापि क्रमेणैव भेदानाह ।
मुहुः सर्पगतिं नाडीं मुहुर्भेकगतिं तथा
।
वातपित्तद्वयोद्भूतां प्रवदन्ति
विचक्षणाः ॥
भुजगादिगतिञ्चैव राजहंसगतिं धराम्
।

नित्यं प्रायः स्थानमङ्गुष्ठमूलं तस्मात्
स्खलति
कदापि तत्र न स्पन्दत इत्यर्थः । तदुक्तम् ।
हन्ति
च स्थानविच्युतेति किञ्चित् स्फुरती कुत्रापि
।
पुनरपीति कियद्विलम्बन
अङ्गुलीमङ्गुलीमूल-
मेवमित्यवंरूपर्बहुभिर्भविर्धर्म्मैः ।
उक्तञ्चान्यत्र ।
महातापेऽपि शीतत्वं शीतत्वे तापिता शिरा
।
नानाविधगतिर्यस्य तस्य मृत्युर्न संशयः ॥
महेत्याशयाकृष्टपित्तादिकृततापनिरासः
शीतत्व
इत्यत्रापि महेति सम्बध्यते । तथा, --
त्रिदोषे स्पन्दते नाडी मृत्युकालेऽपि
निश्चला ।
निश्चला स्पन्दसामान्याभाववती ।
अतीसारादौ
हस्तपादादिस्वेदादिना स्पन्दोपलम्भात् ।
तथा ।
पूर्ब्बं पित्तगतिं प्रभञ्जनगतिं
श्लेष्माणमाबिभ्रतीं
सन्तानभ्रमणं मुहुर्व्विदधतीं
चक्राधिरूढामिव ।
तीव्रत्वं दधतीं कलापि गतिकां
सूक्ष्मत्वमात-
न्वतीं
नोऽसाध्यां धमनीं वदन्ति सुधियो
नाडीगति-
ज्ञानिनः ॥
अयमर्थः । पूर्ब्बमिति क्रमविपर्य्यये
पित्तादिगति-
मतीं वारं वारमेवं क्रमेण
चक्रोपरिभ्राम्यमाणा-
मिव । तथा तीव्रत्वमतिशयवेगं एवञ्च
कदाचि-
न्मयूरवद्गमनाम् । तथोत्तरोत्तरं
कृशतामापा-
दयन्तीति विशिष्टो हेतुः । तथा चान्यत्र ।

क्रमवती तथाक्रमं व्यतिक्रमं न गता । तस्मा-
देव अपमृत्युः अपगतो मृत्युर्यस्याः सा तथा ।
परमार्थतः सन्निपातवदपि सन्निपातजन्या न
स्यात् इति । तदुक्तम् ।
स्वस्थानहीने शोके च हिमाक्रान्ते च निर्गदाः ।
भवन्ति निश्चला नाड्यो न किञ्चित्तत्र दूषण-
मिति ॥
स्वस्थानहीन उच्चादितः पतने । अङ्गुष्ठमूलत-
श्चरण इति तुल्यार्थः । निर्गदा इत्यसङ्गतिः
निर्गदा अपि निश्चला भवन्ति ।
दूषणमसाध्यत्व-
भ्रमः । अन्ये त्वाहुः ।
स्तोकं वातकफं दुष्टं पित्तं वहति दारुणम् ।
पित्तस्थानं विजानीयात् भेषजं तस्य कारये-
दिति ॥
अयमर्थः । वातकफाभ्यां नाडी किञ्चिद्वहति
दुष्टं क्षीणत्वाधिकत्वाभ्यामपि विशेषादुल्वणं

| | | |
|---|---|---|
| वातश्लेष्मसमुद्भूतां भाषन्ते तद्विदो जनाः ॥<br>मण्डूकादिगतिं नाडीं मयूरादिगतिं तथा ।<br>पित्तश्लेष्मसमुद्भूतां प्रवदन्ति महाधियः ॥<br>त्रिदोषजामप्याह ।<br>उरगादिलावकादिहंसादीनाञ्च बिभ्रती गमनम् ।<br>वातादीनाञ्च समं धमनीसम्बन्धमाधत्ते ॥ | “यात्युच्चा च स्थिरात्यन्ता या चेयं मांस-वाहिनी । | |

पित्तं विषमवेगेन वहति तदा
तत्प्रतिकारार्थं
भेषजं कुर्य्यात् । असाध्यता न स्यादिति
यावत् ।
अत्र कश्चित् ।
स्वस्थानच्यवनं यावद्धमन्या नोपजायते
।
तावच्चिकित्सासत्त्वेऽपि नासाध्यत्वमिति
स्थिति-
रिति ।
तच्च प्रायिकं बहुधा व्यभिचारदर्शनात् ।
हन्ति
च स्थानविच्युतेत्यत्र
चकारस्यायोगव्यवच्छेदकत्व-
मित्यर्थः ॥ * ॥ प्रसङ्गात् कालनिर्णयमाह
।
भूलताभुजगाकारा नाडी देहस्य संक्रमात्
।
विशीर्णा क्षीणतां याति मासान्ते मरणं
भवेत् ॥
कदाचित् महीलतावत् कृशा
तद्गतिवदति-
मसृणवक्रगमना च । कदाचित् सर्पवत्
परि-
पुष्टा तद्गतिवद्बलवत्तरवक्रगमनाच इति
वैशि-
ष्ट्येन सुस्थदशातो भेदः । इत्थञ्च
कदाचिद-
लक्ष्यतामतिकृशताञ्च यदा गच्छति ।
देहेऽति-
देहक्रममपेक्ष्य तेन देहोऽपि यदा स्थूलः
शोथा-
दिना कदाचिच्च कृशः स्यात् तदा
द्वितीये
मासि म्रियत इति । तथा, --
क्षणाद्गच्छति वेगेन शान्ततां लभते
क्षणात् ।
सप्ताहान्मरणं तस्य यद्यङ्गे शोथवर्ज्जितः
॥

न वेति स्थित्वा स्थित्वेत्यर्थः । इत्थञ्च
यदसाध्य-
लक्षणमुक्तमवस्थानादपवादविरहेसति
तस्यार्थ-
प्रवेशो यथायथमार्य्यमतिभिरवगन्तव्य इति
नेह
प्रतन्यते ग्रन्थगौरवभयात् । मन्दं मन्दमिति
अनेन न च भूलतागमनाकारेति विरुध्यते
तस्य तात्कालिकमरणविषयत्वात्।
सर्व्वमिदं
सर्व्वरोग एव वेदितव्यं ज्वरमात्रे तु भ्रम
एवेति ।”
इति नाडीप्रकाशे द्वितीयोद्योतः ॥ * ॥
अथ रोगेषु निरूपणीयेषु प्रधानतया प्रथमं
ज्वरनिरूपणमाह । तत्र ज्वरपूर्ब्बरूपे ।
“अङ्गग्रहेण नाडीनां भवन्ति मन्थराः प्लवाः
।
प्लवः प्रबलतां याति ज्वरदाहोऽभिभूतये ॥
सान्निपातिकरूपेण भवन्ति सर्व्ववेदनाः ॥
ज्वररूपमाह ।
ज्वरकोपे च धमनी सोष्णा वेगवती भवेत् ।
उष्णा पित्तादृते नास्ति ज्वरो नास्त्युष्मणा
विना ॥
उष्णा वेगधरा नाडी ज्वरकोपे प्रजायते ॥
अन्यत्र च ।
ज्वरे च वक्रा धावन्ती तथा च मरुतः प्लवे
।
रमणान्ते निशि प्रातस्तप्ता दीपशिखा यथा
॥
तत्रापि विशेषमाह ।
सौम्या सूक्ष्मा स्थिरा मन्दा नाडी सहज-
वातजा ।
स्थूला च कठिना शीघ्रा स्पन्दते तीव्रमारुते
॥
द्रुता च सरला शीघ्रा दीर्घा पित्तज्वरे भवेत्
।
शीघ्रमाहननं नाड्याः काठिन्याच्च चला
तथा ॥
मलाजीर्णेनातितरां स्पन्दनञ्च प्रकीर्त्तितम् ।

अजीर्णरूपमाह ।
अजीर्णे तु भवेन्नाडी कठिना परितो जडा ।
प्रसन्ना च द्रुता शुद्धा त्वरिता च प्रवर्त्तते ॥
तत्र विशेषमाह ।
पक्वाजीर्णे पुष्टिहीना मन्दं मन्दं वहेज्जडा
।
असृक्पूर्णा भवेत् कोष्णा गुर्व्वी सामा
गरीयसी ॥
प्रसङ्गाद्भक्षणज्ञानमाह।
पुष्टिस्तैलगुडाहारे मांसे च लगुडाकृतिः ।
क्षीरे च स्तिमिता वेगा मधुरे भेकवद्गतिः
॥
रम्भागुडवटाहारे रूक्षशुष्कादिभोजने।
वातपित्तार्त्तिरूपेण नाडी वहति निष्क्रमम्
॥
अथ रसज्ञानम् ।
मधुरे वर्हिगमना तिक्ते स्याद्भूलतागतिः ।
अम्ले कोष्णा प्लवगतिः कटुके
भृङ्गसन्निभा ॥
कषाये कठिना म्लाना लवणे सरला द्रुता ।
एवं द्वित्रिचतुर्योगे नानाधर्म्मवती धरा ॥
तथा, --
द्रवेऽतिकठिना नाडी कोमला कठिनाशने
।
द्रवद्रव्यस्य काठिन्ये कोमला कठिनापि च
॥
क्षौद्रे पृथग्ग्रन्थिलेव पिष्टे पुष्टैव जायते ॥
अग्निमान्द्यधातुक्षयलक्षणमाह।
मन्दाग्नेः क्षीणधातोश्च नाडी मन्दतरा
भवेत् ॥
तदुक्तम् ।
क्षीणधातौ च मन्दाग्नौ नाडी क्षीणतमा
ध्रुवम् ॥
तथा, --
मन्देऽग्नौ क्षीणतां याति नाडी हंसाकृति-
स्तथेति ॥
अन्ये तु ।
आमाश्रये पुष्टिविवर्द्धनेन
भवन्ति नाड्योऽग्रभुजाभिवृत्ताः।

क्षणादिति द्रुतंद्रुतं न तु कदाचिदिति ।
शान्तता-
मनुपलभ्यमानत्वम् । शोथेति
तन्मात्रसम्बन्धे
तु नाचिरं मरणाय चिरमेवेत्यर्थः । तथा, -
-
हिमवद्विशदा नाडी ज्वरदाहेन तापिनाम् ।
त्रिदोषस्पर्शभजतां तदा मृत्युर्दिनत्रयात् ॥
यदा निरन्तरं ज्वरदाहतापौ शैत्यञ्च
नाड्याः ।
त्रिदोषेति । सन्निपातलक्षणसत्त्व एव
भवति ॥
तदा, --
निरीक्ष्या दक्षिणे पादे तदा चैषा विशेषतः
।
मुखे नाडी वहेन्नित्यं ततस्तु दिनतूर्य्यकम्
॥
गतिन्तु भ्रमरस्येव वहेदेकदिनेन तु ।
कन्देन स्पन्दते नित्यं पुनर्लगति चाङ्गुलौ
॥
मध्ये द्वादशयामानां मृत्युर्भवति
निश्चितम् ।
दक्षिण इति पुसः । स्त्रियास्तु वाम एव
तथेति
करस्थैव विशेषतो विशेषज्ञानार्थम् । यदि
चोभयनाड्यपि मुखे पुरोभागे नित्यं सदा
वहति
तदा दिनचतुष्टयं प्राप्य भ्रमरस्य
परिभ्रमण-
रूपं गमनमिव मुख एव यदि वहति तदैक-
दिनेन । कन्दे मूले स्पन्दनस्थाने
कदाचित् न
स्पन्दते स्वल्पं स्पन्दत इति सम्भाव्यते
। नित्यं
प्रायः पुनश्चाङ्गुलौ तन्मूले कदापि लगति
तदा
तस्मादारभ्य द्वादशप्रहरमध्य एव
मृत्युरिति ।
तथा, --
स्थित्वा नाडी मुखे यस्य
विद्युद्द्योतिरिवेक्ष्यते ।

नाडी तन्तुसमा मन्दा शीतला श्लेष्मदोषजा
॥
द्वन्द्वजमाह ।
चञ्चला तरला स्थूला कठिना वातपित्तजा ।
ईषच्च दृश्यते तूष्णा मन्दा स्यात्
श्लेष्मवातजा ॥
निरन्तरं खरं रूक्षं मन्दश्लेष्मातिवातलम् ।
रूक्षवातभवे तस्य नाडी स्यात् पित्तसन्निभा
॥
सूक्ष्मा शीता स्थिरा नाडी
पित्तश्लेष्मसमुद्भवा ॥
प्रसङ्गादाह ।
मध्ये करे वहेन्नाडी यदि सन्तापिता ध्रुवम् ।
तदा नूनं मनुष्यस्य रुधिरापूरिता मलाः ॥
आगन्तुकरूपभेदमाह ।
भूतज्वरे सेक इवातिवेगा
धावन्ति नाड्यो हि यथाब्धिगामाः ।
तथा, --
ऐकाहिकेन क्वचन प्रदूरे
क्षणान्तगामा विषमज्वरेण ।
द्वितीयके वापि तृतीयतूर्य्ये
गच्छन्ति तप्ता भ्रमिवत् क्रमेण ॥
अन्यत्रापि ।
उष्णा वेगधरा नाडी ज्वरकोपे प्रजायते ।
उद्वेगक्रोधकामेषु भयचिन्ताश्रमेषु च ॥
भवेत् क्षीणगतिर्नाडी ज्ञातव्या वैद्यसत्तमैः ॥
प्रसङ्गादाह ।
व्यायामे भ्रमणे चैव चिन्तायां श्रमशोकतः ।
नानाप्रभावगमना शिरा गच्छति विज्वरे ॥

आहारमान्द्यादुपवासतो वा
तथैव नाड्यो भुजगाग्रमानाः ॥
प्रसङ्गाद्दीप्ताग्निज्ञानमाह ।
लघ्वी भवति दीप्ताग्नेस्तथा वेगवती मता ।
प्रसङ्गाद्ग्रहणीमप्याह ।
पादे च हंसगमना करे मण्डुकसंप्लवा ।
तस्याग्नेर्मन्दता देहे त्वथवा ग्रहणीगदे ॥
तथा, --
भेदेन शान्ता ग्रहणीगदेन
निवीर्य्यरूपा त्वतिसारभेदे ।
विलम्बिकायां प्लवगा कदाचि-
दामातिसारे पृथुता जडा च ॥ * ॥
अथ विसूचिकाज्ञानम् ।
निरोधे मूत्रशकृतोर्विड्ग्रहे त्वितराश्रिताः ।
विसूचिकाभिभूते च भवन्ति भेकवत्
क्रमाः ॥ * ॥
प्रसङ्गादानाहमूत्रकृच्छ्रज्ञानमाह ।
आनाहे मूत्रकृच्छ्रे च भवेन्नाडी गरिष्ठता ॥
* ॥
शूलज्ञानमाह ।
वातेन शूलेन मरुत्प्लवेन
सदैव वक्रा हि शिरा वहन्ती ।
ज्वालामयी पित्तविचेष्टितेन
साध्या न शूले न च पुष्टरूपा ॥ * ॥

| | | |
|---|---|---|
| दिनैकं जीवितं तस्य द्वितीये म्रियते ध्रुवम् ॥<br>स्थित्वेत्यावृत्त्या स्थित्वा स्थित्वा विद्युत्स्फुरण-<br>मिव लक्ष्यते द्वितीय इत्यष्टप्रहराद्दूर्ध्वमित्यर्थः ।<br>तथा, --<br>स्वस्थानविच्युता नाडी यदा वहति वान वा ।<br>ज्वाला च हृदये तीव्रा तदा ज्वालावधि-स्थितिः ॥ | | |

अथ प्रमेहज्ञानम् ।
प्रमेहे ग्रन्थिरूपा सा सुतप्ता
त्वामदूषणे ॥ * ॥
विषविष्टम्भगुल्मज्ञानमाह।
उत्पित्सुरूपा विषरिष्टिकायां
विष्टम्भगुल्मेन च वक्ररूपा ।
अत्यर्थवातेन अधः स्फुरन्ती
उत्तानभेदिन्यसमाप्तिकाले ॥ * ॥
गुल्मे विशेषमाह कश्चित् ।
गुल्मेन कम्पोऽथ पराक्रमेण
पारावतस्येव गतिं करोति ॥ * ॥
अथ भगन्दरज्ञानम् ।
व्रणार्थं कठिने देहे प्रयाति पैत्तिकं
क्रमम् ।
भगन्दरानुरूपेण नाडीव्रणनिवेदने ।
प्रयाति वातिकं रूपं नाडी
पावकरूपिणी ॥
अथ वान्तादिज्ञानम् ।
वान्तस्य शल्याभिहतस्य जन्तो-
र्वेगावरोधाकुलितस्य भूयः ।
गतिं विधत्ते धमनी गजेन्द्र-
मरालमानेव कफोल्वणेन ॥
स्त्रीरोगादिकमपि रक्तादिज्ञानक्रमेण
ज्ञातव्यम् ।
क्वचित्प्रकरणोल्लेखात्
क्वचिदौचित्यमात्रतः ।
क्वचिद्देशात् क्वचित् कालात्
सङ्कीर्णगदनिर्णयः ॥
नाडीपरिचयज्ञानं प्रायशो नैव
दृश्यते ।
तेन धाष्टर्या मयोक्तं यत्तत्
समाधेयमुत्तमैः ॥”
इति श्रीशङ्करसेनकविराजकृते
नाडीप्रकाशे
तृतीयोद्योतः ॥

**नाडीकः**, पुं, (नाडीव कायतीति । कै + कः ।)

शाकविशेषः । पाट्शाक इति
नालिताशाक
षकविशेषः । यथा, महाभारते । १२ ।
१६९ ।
१९ -- २० ।
“ततोऽस्तं भास्करे याते सन्ध्याकाल
उपस्थिते ।
आजगाम स्वभवनं ब्रह्मलोकात् खगोत्तमः ॥
नाडीजङ्घ इति ख्यातो दयितो ब्रह्मणः
सखा ।
वकराजो महाप्राज्ञः कश्यपस्यात्मसम्भवः
॥”

**नाडीतरङ्गः**, पुं, (नाड्यां नालायां तरङ्गो यत्र ।)

काकोलः । हिण्डकः । रतहिण्डकः । इति
मेदिनी । गे, ५९ ॥

**नाडीतिक्तः**, पुं, (नाड्या तिक्तः ।) नेपालनिम्बः ।

इति राजनिर्घण्टः ॥ (नेपालनिम्बशब्देऽस्य
विशेषो ज्ञेयः ॥)

**नाडीदेहः**, पुं, (नाडीसारो देहो यस्य । कृश-

त्वात् तथात्वम् ।) भृङ्गी । इति त्रिकाण्ड-
शेषः ॥

**नाडीनक्षत्रं**, क्ली, (नाडीस्थितं नक्षत्रम् ।)

नरस्य जन्मदशमषोडशाष्टादशत्रयोश्विपञ्च-
विंशनक्षत्राणि । राज्ञः पूर्ब्बोक्तानि जाति-
देशाभिषेकनक्षत्राणि च । यथा, --
“जन्माद्यं कर्म्म ततोऽपि दशमं साङ्घातिकं
षोडशभम् ।
समुदयमष्टादशभं विनाशसंज्ञं त्रयोविंशम् ॥
आद्यात्तु पञ्चविंशं मानसमेवं नरः षड्क्षः
स्यात् ।
नवनक्षत्रो नृपतिः स्वजातिदेशाभिषेकर्क्षैः ॥”
* ॥
जात्यृक्षन्तु ।
“पूर्ब्बात्रयं सानलमग्रजानां
राज्ञान्तु पौष्णेन सहोत्तराणि ।
सपौष्णमित्रं पितृदैवतञ्च
प्रजापतेर्भञ्च कृषीबलानाम् ॥
आदित्यहस्ताभिजिदश्विभानि
तान्यन्त्यजातेः प्रभविष्णुतायाम् ।

**नाडीव्रणः**, पुं, (नाडीसंलग्नो व्रणः ।) सर्व्वदा-

गलद्व्रणः । नाली घा इति भाषा । इत्यमरः ।
२ । ६ । ५४ ॥ तस्य निदानं यथा, --
“यः शोथमामभिति पक्वमुपेक्षतेऽज्ञो
यो वा व्रणं प्रचुरपूयमसाधुवृत्तः ।
अभ्यन्तरं प्रविशति प्रविदार्य्य तस्य
स्थानानि पूर्ब्बविहितानि ततः सपूयः ॥
तस्यातिमात्रगमनाद्गतिरिष्यतेतु
नाडीव यद्वहति तेन मता तु नाडी ॥” * ॥
वातादिदोषभेदेन तस्य रूपाणि यथा, --
“दोषैस्त्रिभिर्भवति सा पृथगेकशश्च
संमूर्च्छितैरपि च शल्यनिमित्ततोऽन्या ।
तत्रानिलात् परुषसूक्ष्ममुखी सशूला
फेनानुविद्धमधिकं स्रवति क्षपासु ॥
पित्तात्तृषाज्वरकरी परिदाहयुक्ता
पीतं स्रवत्यधिकमुष्णमहःसुचापि ।
ज्ञेया कफाद्बहुघनार्ज्जुनपिच्छिलास्रा
स्तब्धा सकण्डुररुजा रजनीप्रवृद्धा ॥
दाहज्वरश्वसनमूर्च्छनवक्त्रशोषा
यस्यां भवन्त्यभिहितानि च लक्षणानि ।
तामादिशेत् पवनपित्तकफप्रकोपात्
घोरामसुक्षयकरीमिव कालरात्रिम् ॥
दोषद्वयाभिहतलक्षणदर्शनेन
तिस्रो गतीर्व्यतिकरप्रभवास्तु विद्यात् ॥”
शल्यनिमित्तलक्षणं यथा, --
“नष्टं कथञ्चिदनुमार्गमुदीरितेषु
स्थानेषु शल्यमचिरेण गतिं करोति ।
सा फेनिलं मथितमच्छमसृग्विमिश्र-
मुष्णं करोति सहसा सरुजञ्च नित्यम् ॥”
असाध्यकृच्छ्रसाध्ययोर्लक्षणं यथा, --
“नाडी त्रिदोषप्रभवा न सिध्येत्
शेषाश्चतस्रः खलु यत्नसाध्याः ॥”
इति माधवकरः ॥ * ॥
“विडङ्गत्रिफला कृष्णाचूर्णं लीढं समाक्षिकम् ।
हन्ति कुष्ठं कृमीन्मेहनाडीव्रणभगन्दरान् ॥”
इति गरुडपुराणम् ॥
(अस्य चिकित्सान्तरं यथा, --
“नाडीनां गतिमन्विष्य शस्त्रेणापाट्य कर्म्मवित्
।

इति च भाषा ॥ तत्पर्य्यायः ।
पट्टशाकः २
नाडीशाकः ३ । अस्य गुणाः ।
रक्तपित्तनाशि-
त्वम् । विष्टम्भित्वम् ।
वातकोपनत्वञ्च । इति
भावप्रकाशः ॥

**नाडीकलापकः**, पुं, (नाडीनां नाडीवन्नालानां
कलापः समूहो यत्र । कप् ।)
सर्पाक्षी । इति
भावप्रकाशः ॥

**नाडीकेलः**, पुं, (नारिकेलः । पृषोदरादित्वात्
साधुः ।) नारिकेलः । इति
शब्दरत्नावली ॥

**नाडीचः**, पुं, (नाड्या चीयते इति । चि + बाहु-
लकात् डः ।) शाकविशेषः ।
नालिता इति
भाषा । तत्पर्य्यायः । केचुकम् २
पेचुली ३
पेचुः ४ विश्वरोचनः ५ । इति
त्रिकाण्डशेषः ॥
“नाडीचशाकं द्विविधं तिक्तं मधुरमेव
च ।
रक्तपित्तहरं तिक्तं
क्रिमिकुष्ठविनाशनम् ।
मधुरं पिच्छिलं शीतं विष्टम्भि
कफवातकृत् ॥”
इति राजवल्लभः ॥

**नाडीचरणः**, पुं, (नाडीवच्चरणौ यस्य ।) पक्षी ।
इति त्रिकाण्डशेषः ॥

**नाडीजङ्घः**, पुं, (नाडीवत् जङ्घा यस्य ।) काकः ।
इति त्रिकाण्डशेषः ॥ मुनिविशेषः ।
यथा ।
“नाडीजङ्घः सुरगुरुमुनिर्व्वक्ति
वृष्टेरकालौ

देशभं देशनामर्क्षम् । नाडीनक्षत्राणि ॥ * ॥
ईहा देहार्थहानिः स्याज्जन्मर्क्ष उपतापिते ।
कर्म्मर्क्षे कर्म्मणां हानिः पीडा मनसि मानसे
॥
मूर्त्तिद्रविणवन्धूनां हानिः साङ्घातिके तथा ।
सन्तप्ते सामुदायिके मित्रभृत्यार्थसङ्क्षयः ।
वैनाशिके विनाशः स्याद्देहद्रविणसम्पदाम् ॥
नाडीनक्षत्रफलम् ॥ * ॥
जातिभे कुलनाशः स्याद्वन्धनञ्चाभिषेकभे ।
देशभे देशभङ्गः स्यात् क्रूरैरेवं शुभैः शुभम् ॥
यस्मिन् राजाभिषेको भवति
तदाभिषेचनिक-
भम् । अ इ उ ए कृत्तिका । ओ व वि वु
रोहिणीत्यादि देशभम् ।
सर्व्वेषां पीडायां दिनमेवमुपोषितोऽनलं जुहु-
यात् ।
सावित्र्या क्षीरतरोः समिद्भिरमरद्बिजानुरतः
॥”
इति ज्योतिस्तत्त्वम् ॥

**नाडीविग्रहः**, पुं, (नाडीसारो विग्रहो यस्य ।
अतिकृशत्वात् तथात्वम् ।) भृङ्गी । इति हेम-
चन्द्रः । २ । १२४ ॥

सर्व्वव्रणक्रमं कुर्य्यात् शोधनं रोपणादिकम् ॥
नाडीं वातकृतां साधु पाटितां लेपयेद्भिषक् ।
प्रत्यक् पुष्पीफलयुतैस्तिलैः पिष्टैः प्रलेपयेत् ॥
पैत्तिकीं तिलमञ्जिष्ठानागदन्तीनिशायुगैः ।
श्लैष्मिकीं तिलयष्ट्याह्वनिकुम्भारिष्टसैन्धवैः
॥
शल्यजां तिलमध्वाज्यैर्लेपयेच्छिन्नशोधिताम् ।
आरग्वधनिशाकालाच्चूर्णाज्यक्षौद्रसंयुता ।
सूत्रवर्त्तिर्व्रणे योज्या शोधनी गतिनाशनी ॥
घोण्टाफलत्वङ्गदनात् फलानि
पूगस्य च त्वक् लवणञ्च मुख्यम् ।
स्नुह्यर्कदुग्धेन सहैष कल्को
वर्त्तीकृतो हन्त्यचिरेण नाडीम् ॥
वर्त्तीकृतं माक्षिकसंप्रयुक्तं
नाडीघ्नमुक्तं लवणोत्तमं वा ।

| | | |
|---|---|---|
| मासावेतौ न शुभफलदौ पौषमाघौ न शेषान् ।"<br>इति मलमासतत्त्वम् ॥ | | |

दुष्टव्रणे यद्विहितञ्च तैलं
तत् सेव्यमानं गतिमाशु हन्ति ॥
जात्यर्कसम्पाककरञ्जदन्ती-
सिन्धूत्थसौवर्च्चलयावशूकैः ।
वर्त्तिः कृता हन्त्यचिरेण नाडीं
स्नुक्क्षीरपिष्टा सह चित्रकेण ॥
महिषदधिकोद्रवान्नमिश्रं हरति
चिरविरूढाञ्च ।
भुक्तं कङ्कुनिकामूलचूर्णमतिदारुणां हन्ति
॥
कृशदुर्ब्बलभीरूणां गतिर्म्मर्म्माश्रिता च या
।
क्षारसूत्रेण तां भिन्द्यान्न शस्त्रेण कदाचन ॥
एषण्या गतिमन्विष्य क्षारसूत्रानुसारिणीम्
।
सूचीं विदध्याद्गत्यन्ते चोन्नम्याशु च
निर्हरेत् ॥
सूत्रस्यान्तं समानीय गाढबन्धनमाचरेत् ।
ततः क्षारबलं वीक्ष्य सूत्रमन्यत् प्रवेशयेत्
॥
क्षाराक्तं मतिमान् वैद्यो यावन्न च्छिद्यते
गतिः ।
भगन्दरेऽप्येष विधिः कार्य्यो वैद्येन जानता
॥
गुग्गुलुस्त्रिफलाव्योषैः
समांशैराज्ययोजितः ।
नाडीदुष्टव्रणं शूल-भगन्दरविनाशनः ॥
इति सप्ताङ्गगुग्गुलुः ॥
स्वर्ज्जिका
सिन्धुदन्त्यग्निरूपिकानलनीलिका।
खरमञ्जरीबीजेषु तैलं गोमूत्रपाचितम् ॥
दुष्टव्रणप्रशमनं कफनाडीव्रणापहम् ॥
इति स्वर्ज्जिकाद्यं तैलम् ॥
समूलपत्रां निर्गुण्डीं पीडयित्वा रसेन तु ।
तेन सिद्धं समं तैलं नाडीदुष्टव्रणापहम् ॥
हितं पामापचीनान्तु पानाभ्यञ्जननावनैः ।
विविधेषु च स्फोटेषु तथा सर्व्वव्रणेषु च ॥
इति निर्गुण्डीतैलम् ।
हंसपाद्यरिष्टपत्रं जातीपत्रं ततो रसैः ।

इति मिताक्षरायां
साहसप्रकरणीययाज्ञवल्क्य-
वचनम् ॥

**नात्रं**, क्ली, (नम्यते आख्यायते प्रशस्यते सर्व्वै-
रिति । नम + ष्ट्रन् । बाहुलकात्
अन्तलोप
आत्वञ्च ।) विचित्रम् । प्रज्ञः । शिवः ।
इति
संक्षिप्तसारोणादिवृत्तिः ॥

**नाथ**, ऋ ङ आशिषि । दवैश्येऽर्थे । इति कवि-
कल्पद्रुमः ॥ (भ्वां-परं-आत्मं च-सकं-
ऐश्ये अकं-
सेट् ।) दन्त्यादिरयम् । ऋ, अननाथत्
। ङ,
प्रणाथते प्रनाथते । दव उपतापः ।
आशी-
रिष्टार्थाशंसनम् । ङित्त्वेऽपि
शपथाशीर्गत्यनु-
कारे इति नियमादाभ्यामाशिषोऽन्यत्र
परस्मै-
पदम् । नाथति शत्रुं बली
उपतापयतीत्यर्थः ।
नाथते श्रियं लोकः आशंसते इत्यर्थः
। नाथति
धनी ईश्वरः स्यादित्यर्थः । नाथति
भूपं भूमिं
विप्रः प्रार्थयतीत्यर्थः । मार्गणैरथ तव
प्रयो-
जनं नाथसे किमु न भूभृतः पतिमिति
भारवौ
याचनमप्याशंसाविशेषः । आशिषि
नित्य-
मात्मनेपदमन्यत्र विभाषयेति केचित् ।
इति
दुर्गादासः ॥

**नाथः**, पुं, (नाथति ईश्वरो भवतीति । नाथ

"सच्चिदानन्दविभवात् सकलात् परमेश्वरात् ।
आसीच्छक्तिस्ततो नादस्तस्माद्बिन्दुसमुद्भवः ॥
नादो बिन्दुश्च बीजञ्च स एव त्रिविधो मतः ।
भिद्यमानात् पराद्बिन्दोरुभयात्मा रवोऽभवत् ॥
स रवः श्रुतिसम्पन्नः शब्दो ब्रह्माभवत् परम् ॥
सकलादिति मूर्त्तात् । नादो घोषः । बिन्दुः
प्रणवः स च बीजञ्च सर्व्ववर्णप्रभवत्वात् । तथा
च ।
समाहितात्मनो ब्रह्मन् ! ब्रह्मणः परमेष्ठिनः ॥
हृद्याकाशादभून्नादो वृत्तिरोधाद्विभाव्यते ॥
ततोऽभूत्त्रिविदोङ्कारो योऽव्यक्तः प्रभवः स्वराट्
।
इत्यारभ्य ततोऽक्षरसमाम्नायमसृजद्भगवानजः
॥
इति श्रीभागवतम् ॥"
इत्यलङ्कारकौस्तुभस्य द्वितीयस्तवकः ॥ * ॥
"नाभेरूर्द्ध्वं हृदि स्थानान्मारुतः प्राणसंज्ञकः
।
नदति ब्रह्मरन्ध्रान्ते तेन नादः प्रकीर्त्तितः ॥
अपि च ।
आकाशाग्निमरुज्जातो नाभेरूर्द्ध्वं समुच्चरन्
।
मुखेऽतिव्यक्तमायाति यः स नाद इतीरितः ॥
स च प्राणिभवोऽप्राणिभवश्चोभयसम्भवः॥
आद्यः कायभवो वीणादिभवस्तु द्वितीयकः ।
तृतीयोऽपि च वंशादिभव इत्थं त्रिधा मतः ॥
यदुक्तं ब्रह्मणः स्थानं ब्रह्मग्रन्थिश्च यो मतः ।
तन्मध्ये संस्थितः प्राणः प्राणाद्वह्निसमुद्भवः ।
वह्निमारुतसंयोगान्नादः समुपजायते ॥
न नादेन विना गीतं न नादेन विना स्वरः ।
न नादेन विना रागस्तस्मान्नादात्मकं जगत् ॥
न नादेन विना ज्ञानं न नादेन विना शिवः ।
नादरूपं परं ज्योतिर्नादरूपी परं हरिः ॥"
इति सङ्गीतदामोदरः ॥
(यथा च सङ्गीतदर्पणे ।
"गीतं नादात्मकं वाद्यं नादव्यक्त्या प्रशस्यते ।
तद्द्वयानुगतं नृत्यं नादाधीनमतस्त्रयम् ॥
नादेन व्यज्यते वर्णः पदं वर्णात् पदाद्वचः ।
वचसो व्यवहारोऽयं नादाधीनमतो जगत् ॥

तत्कल्कैश्च पचेत्तैलं नाडीव्रणविशोधनम्
॥
इति हंसपादादितैलम् ॥"
इति वैद्यकचक्रपाणिसंग्रहे नाडीव्रणाधि-
कारः ॥)

**नाडीशाकः**, पुं, (नाडीप्रधानः शाकः ।) नाडीकः ।

इति भावप्रकाशः ॥ पाट्शाक इति भाषा
॥

**नाडीस्नेहः**, पुं, (नाड्यामेव स्नेहो यस्य । नाडी-

सारत्वादेवास्य तथात्वम् ।) भृङ्गी । इति
शब्दरत्नावली ॥

**नाडीहिङ्गु**, क्ली, (नाडीप्रधानं हिङ्गु ।) हिङ्गु-

भेदः । कलःपतिहिङ्गु इति हिन्दीभाषा ।
तत्-
पर्य्यायः । पलाशाक्षः २ जन्तुका ३
रामठी ४
वंशपत्री ५ पिण्डाह्वा ६ सुवीर्य्या ७ हिङ्गु-
नाडिका ८ । (यथाच वैद्यकरत्नमालायाम्
।
"हिङ्गुपर्णी वेणुपत्री नाडीहिङ्गु शिवाटिका
॥")
अस्य गुणाः । कटुत्वम् । उष्णत्वम् ।
कफ-
वातार्त्तिशान्तिकारित्वम् ।
विष्ठाविबन्धदोषा-
नाहामयनाशित्वञ्च । इति राजनिर्घण्टः ॥

**नाणकं**, क्ली, (अणति शब्दायते इति । अण

शब्दे + ण्वुल् । न आणकम् ।)
मुद्राचिह्नित-
निष्कादि । यथा, --
"तुलाशासनमानानां कूटकृन्नाणकस्य च ।
एभिश्च व्यवहर्त्ता यः स दाप्यो
दण्डमुत्तमम् ॥"

ऐश्ये + अच् ।) ऐश्ययुक्तः ।
तत्पर्य्यायः ।
अधिपः २ ईशः ३ नेता ४ परिवृढः ५
अधिभूः
६ पतिः ७ इन्द्रः ८ स्वामी ९ आर्य्यः
१० प्रभुः
११ भर्त्ता १२ ईश्वरः १३ विभुः १४
ईशिता १५
इनः १६ नायकः १७ । इति
हेमचन्द्रः । ३ । २३ ॥
(यथा, रामायणे । २ । ४८ । १७ ।
"स हि नाथो जनस्यास्य स गतिः स
परायणम् ॥")

**नाथवान्**, [त्] त्रि, (नाथो विद्यतेऽस्येति । नाथ
+

मतुप् । मस्य वः ।) पराधीनः ।
इत्यमरः । ३ ।
१ । १६ ॥ प्रभुविशिष्टः ॥ (रक्षकवान्
। यथा,
रामायणे । १ । ६२ । १२ ।
"नाथवांश्च शुनःशेफो
यज्ञश्चाविघ्नतो भवेत् ॥"
स्त्रियां ङीप् । यथा, रामायणे । २ ।
३८ । १ ।
"तस्यां चीरं वसानायां
नाथवत्यामनाथवत् ।
प्रचुक्रोश जनः सर्व्वो धिक् त्वां
दशरथन्त्विति ॥")

**नाथहरिः**, पुं, (नाथं हरति स्थानात् स्थानान्तरं

नयतीति । नाथ + हृ + "हरतेर्दृ
तिनाथयोः
पशौ ।" ३ । २ । २५ । इति इन् ।)
पशुः ।
इति मुग्धबोधव्याकरणम् ॥

**नादः**, पुं, (नद शब्दे + भावे घञ् ।) शब्दः ।

इत्यमरः । १ । ७ । २३ ॥ (यथा,
हरिवंशे ।
२३५ । ५६ ।
"विभान्ति ते देववराः ससाध्याः
प्रध्मातशङ्खस्वनसिंहनादाः ॥")

आहतोऽनाहतश्चेति द्विधा नादो निगद्यते ॥
सोऽयं प्रकाशते पिण्डे तस्मात्
पिण्डोऽभिधीयते ॥
तत्रानाहतनादन्तु मुनयः समुपासते ।
गुरूपदिष्टमार्गेण मुक्तिदं न तु रञ्जकम् ॥
स नादस्त्वाहतो लोके रञ्जको भवभञ्जकः ।
श्रुत्यादिद्वारतस्तस्मात्तदुत्पत्तिर्निरूप्यते ॥"
किञ्च, --
"धर्म्मार्थकाममोक्षाणामिदमेवैकसाधनम् ॥
नादविद्यां परां लब्धा सरस्वत्याः प्रसादतः ।
कम्बलाश्वतरौ नागौ शम्भोः कुण्डलतां गतौ ॥
पशुः शिशुर्मृगो वापि नादेन परितुष्यति ।
अतो नादस्य माहात्म्यं व्याख्यातुं केन शक्यते
॥"
आञ्जनेयः ।
"नादाब्देस्तु परं पारं न जानाति सरस्वती ।
अद्यापि मज्जनभयात्तुम्बं वहति वक्षसि ॥"
अथ नादोत्पत्तिप्रकारः ।
"आत्मना प्रेरितं चित्तं वह्निमाहन्ति देहजम् ।
ब्रह्मग्रन्थिस्थितं प्राणं स प्रेरयति पावकः ॥

| | | |
|---|---|---|
| | अर्द्धचन्द्राकृतिवर्णः । स चानुस्वारवदुच्चार्य्यः । यथा अर्द्धचन्द्रोऽनुस्वारः । इति भुवनेश्वरीमन्त्रे कृष्णानन्दः ॥ तत्पर्य्यायः । अर्द्धेन्दुः २ अर्द्ध-मात्रा ३ कलाराशी ४ सदाशिवः ५ अनुच्चार्य्या ६ तुरीया ७ विश्वमातृकला ८ परा ९ । इति बीजवर्णाभिधानम् ॥ ब्रह्मस्वरूपघोषविशेषः । यथा, -- | |

पावकप्रेरितः सोऽथ क्रमादूद्र्ध्वपथे चरन् ।
अतिसूक्ष्मध्वनिं नाभौ हृदि सूक्ष्मं गले पुनः ॥
पुष्टं शीर्षे त्वपुष्टञ्च कृत्रिमं वदने तथा ।
आविर्भावयतीत्येवं पञ्चधा कीर्त्त्यते बुधैः ॥”
“नकारं प्राणनामानं दकारमनलं विदुः ।
जातः प्राणाग्निसंयोगात्तेन नादोऽभिधीयते ॥”
अयन्तु योगिसंवेद्य एव । अस्य अवस्थादिकं
यदुक्तं हठयोगप्रदीपिकायाम् । ४ ।
६५-१०७ ।
“अशक्यतत्त्वबोधानां मूढानामपि संमतम् ।
प्रोक्तं गोरक्षनाथेन नादोपासनमुच्यते ॥
श्रीआदिनाथेन सपादकोटि-
लयप्रकाराः कथिता जयन्ति ।
नादानुसन्धानकम्केमेव
मन्यामहे मुख्यतमं लयानाम् ॥
मुक्तासने स्थितो योगी मुद्रां सन्धाय
शाम्भवीम् ।
शृणुयाद्दक्षिणे कर्णे नादमन्तःस्थमेकधीः ॥
श्रवणपुटनयनयुगलघ्राणमुखानां निरोधनं
कार्य्यम् ।
शुद्धसुषुम्नासरणौ स्फुटममलः श्रूयते नादः ॥
आरम्मश्च घटश्चैव तथा परिचयोऽपि च ॥
निष्पत्तिः सर्व्वयोगेषु स्यादावस्थाचतुष्टयम् ।
अथारम्भावस्था ।
ब्रह्मग्रन्थेर्भवेद्भेदो ह्यानन्दः शून्यसम्भवः ।
विचित्रः क्वणको देहेऽनाहतः श्रूयते ध्वनिः ॥
दिव्यदेहश्च तेजस्वी दिव्यगन्धस्त्वरोगवान् ।
संपूर्णहृदयः शून्य आरम्भो योगवान् भवेत् ॥
अथ घटावस्था ।
द्वितीयायां घटीकृत्य वायुर्भवति मध्यगः ।
दृढासनो भवेद्योगी ज्ञानी देवसमस्तदा ॥
विष्णुग्रन्थेस्ततो भेदात् परमानन्दसूचकः ।
अतिशून्ये विमर्दश्च भेरीशब्दस्तथा भवेत् ॥
तृतीयायां तु विज्ञेयो विहायोमर्दलध्वनिः ।
महाशून्यं तदा याति सर्व्वसिद्धिसमाश्रयम् ॥
चित्तानन्दं तदा जित्वा सहजानन्दसम्मवः ।
दोषदुःखजराव्याधिक्षुधानिद्राविवर्ज्जितः ॥
रुद्रग्रन्थिं यदा भित्वा शर्व्वपीठगतोऽनिलः ।
अभ्यस्यमानो नादोऽयं बाह्यमावृणुते ध्वनिम् ।
पक्षाद्विक्षेपमखिलं जित्वा योगी सुखी भवेत् ॥
श्रूयते प्रथमाभ्यासे नादो नानाविधो महान् ।
ततोऽभ्यासे वर्धमाने श्रूयते सूक्ष्मसूक्ष्मकः ॥
आदौ जलधिजीमूतभेरीझर्झरसम्भवाः ।
मध्ये मर्दलशङ्खोत्था घण्टाकाहलजास्तथा ॥
अन्ते तु किङ्किणीवंशवीणाभ्रमरनिःस्वनाः ।
इति नानाविधा नादाः श्रूयन्ते देहमध्यगाः ॥
महति श्रूयमाणेऽपि मेघभेर्य्यादिके ध्वनौ ।
तत्र सूक्ष्मात् सूक्ष्मतरं नादमेव परामृशेत् ॥
घनमुत्सृज्य वा सूक्ष्मे सूक्ष्ममुत्सृज्य वा घने ।
रममाणमपि क्षिप्तं मनो नान्यत्र चालयेत् ॥
यत्र कुत्रापि वा नादे लगति प्रथमं मनः ।
तत्रैव सुस्थिरीभूय तेन सार्द्धं विलीयते ॥
मकरन्दं पिबन् भृङ्गो गन्धं नापेक्षते यथा ।
नादासक्तं तथा चित्तं विषयान्न हि काङ्क्षते ॥
मनोमत्तगजेन्द्रस्य विषयोद्यानचारिणः ।
नियमने समर्थोऽयं निनादनिशिताङ्कुशः ॥
बद्धं तु नादबन्धेन मनः संत्यक्तचापलम् ।
प्रयाति सुतरां स्थैर्य्यं छिन्नपक्षः खगो यथा ॥
सर्व्वचिन्तां परित्यज्य सावधानेन चेतसा ।
नाद एवानुसन्धेयो योगसाम्राज्यमिच्छता ॥
नादोऽन्तरङ्गसारङ्गबन्धनेवागुरायते ।
अन्तरङ्गकुरङ्गस्य वधे व्याधायतेऽपि च ॥
अन्तरङ्गस्य यमिनो वाजिनः परिघायते ।
नादोपास्तिरतो नित्यमवधार्य्या हि योगिना ॥
बद्धं विमुक्तचाञ्चल्यं नादगन्धकजारणात् ।
मनः पारदमाप्नोति निरालम्बाख्यखेऽटनम् ॥
नादश्रवणतः क्षिप्रमन्तरङ्गभुजङ्गमः ।
विस्मृत्य सर्व्वमेकाग्रः कुत्रचिन्नहि धावति ॥
काष्ठे प्रवर्त्तितो वह्निः काष्टेन सह शाम्यति ।
नादे प्रवर्त्तितं चित्तं नादेन सह लीयते ॥
घण्टादिनादसक्तस्तब्धान्तःकरणहरिणस्य ।
प्रहरणमपि सुकरं शरसन्धानप्रवीणश्चेत् ॥
अनाहतस्य शब्दस्य ध्वनिर्य उपलभ्यते ।
ध्वनेरन्तर्गतं ज्ञेयं ज्ञेयस्यान्तर्गतं मनः ।
मनस्तत्र लयं याति तद्विष्णोः परमं पदम् ॥
तावदाकाशसङ्कल्पो यावच्छब्दः प्रवर्त्तते ।
निःशब्दं तत्परं ब्रह्म परमात्मेति गीयते ॥
पुत्त्रः । न्यायतत्त्वयोगरहस्ययोः
प्रणेता । अस्य
वासस्थानं दाक्षिणात्यप्रदेशः ॥)

**नादेयं**, क्ली, (नद्या नदस्य वा इदं तत्र भवं वा ।
नदी वा नद + ढक् ।)
सैन्धवलवणम् । इति
रत्नमाला ॥ सौवीराञ्जनम् । इति
राजनिर्घण्टः ॥
नदीनदसम्बन्धिजलादौ, त्रि ।
यथा, --
(“नादेयं नादेयं शरदि वसन्ते च
नादेयम् ।
पानीयं पानीयं शरदि वसन्ते च
पानीयम् ॥”
इति वैद्यकराजवल्लभीयद्रव्यगुणे
॥)
“नद्या नदस्य वा नीरं नादेयमिति
कीर्त्तितम् ॥”
अस्य गुणाः । यथा, भावप्रकाशे ।
“नादेयमुदकं रुक्षं वातलं लघु
दीपनम् ।
अनभिष्यन्दि विशदं कटुकं
कफपित्तनुत् ॥”
(न आदेयमिति विग्रहे अग्राह्ये, त्रि
। यथा, --
“सौगन्ध्यहीनं नादेयं पुष्पं
कान्तमपि क्वचित् ॥”)

**नादेयः**, पुं, (नद्यां भवः । नदी + ढक् ।) काश-
तृणम् । वानीरवृक्षः । इति
राजनिर्घण्टः ॥

**नादेयी**, स्त्री, (नद्यां भवा । “नद्यादिभ्यो ढक् ॥”
४ । २ । ९७ । इति ढक् ततो
ङीष् ।) अम्बुवेतसः ।
भूमिजम्बुका । वैजयन्तिका ।
इत्यमरः । २ । ४ ।

निष्पत्तौ वैणवः शब्दः क्वणद्वीणाक्वणो भवेत्
॥
एकीभूतं तदा चित्तं राजयोगाभिधानकम् ।
सृष्टिसंहारकर्त्तासौ योगीश्वरसमो भवेत् ॥
अस्तु वा मास्तु वा मुक्तिरत्रैवाखण्डितं सुखम्
।
लयोद्भवमिदं सौख्यं राजयोगादवाप्यते ॥
राजयोगमजानन्तः केवलं हठकर्म्मिणः ।
एतानभ्यासिनो मन्ये प्रयासफलवर्ज्जितान् ॥
उन्मन्यवाप्तये शीघ्रं भ्रूध्यानं मम संमतम् ।
राजयोगपदं प्राप्तं सुखोपायोऽल्पचेतसाम् ॥
सद्यः प्रत्ययसन्धायी जायते नादजो लयः ॥
नादानुसन्धानसमाधिभाजां
योगीश्वराणां हृदि वर्द्धमानम् ।
आनन्दमेकं वचसामगम्यं
जानाति तं श्रीगुरुनाथ एकः ॥
कर्णौ पिधाय हस्ताभ्यां यं शृणोति ध्वनिं
मुनिः ।
तत्र चित्तं स्थिरीकुर्य्याद्यावत्स्थिरपदं व्रजेत्
॥

यत्किञ्चिन्नादरूपेण श्रूयते शक्तिरेव सा ।
यस्तत्त्वान्तो निराकारः स एव परमेश्वरः ॥
सर्व्वे हठलयोपाया राजयोगस्य सिद्धये ।
राजयोगसमारूढः पुरुषः कालवञ्चकः ॥
तत्त्वं बीजं हठः क्षेत्रमौदासीन्यं जलं त्रिभिः ।
उन्मनी कल्पलतिका सद्य एव प्रवर्त्तते ॥
सदा नादानुसन्धानात् क्षीयन्ते पापसञ्चयाः ।
निरञ्जने विलीयेते निश्चितं चित्तमारुतौ ॥
शङ्खदुन्दुभिनादञ्च न शृणोति कदाचन ।
काष्ठवज्जायते देह उन्मन्यावस्थया ध्रुवम् ॥
सर्व्वावस्थाविनिर्मुक्तः सर्व्वचिन्ताविवर्ज्जितः ।
मृतवत्तिष्ठते योगी स मुक्तो नात्र संशयः ॥” * ॥
स्वनामख्यातमुनिविशेषः । अयन्तु ईश्वरमुनेः

६५ ॥ नागरङ्गः । जवा । द्यङ्गुष्ठः ।
इति मेदिनी ।
ये, ८६ ॥ अग्निमन्थः । (अस्याः
पर्य्यायो यथा,
“अग्निमन्थो जयः स स्याच्छ्रीपर्णी
गणिकारिका ।
जया जयन्ती तर्कारी नादेयी
वैजयन्तिका ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ॥)
काकजम्बूः । इति राजनिर्घण्टः ॥

**नाध**, ऋ ङ नाथे । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-सकं ऐश्ये अकं-सेट् ।) ऋ,
अननाधत् ।
ङ, नाधते । नाथो
दवाशीरैश्यार्थनानि । इति
दुर्गादासः ॥

**नाना**, व्य, (न + “विनञ्भ्यां नानाञौ न सह ।”
५ । २ । २७ । इति नाञ्प्रत्ययः
।) अने-
कार्थम् । (यथा, मनुः । ९ । १४८
।
“बह्वीषु चैकजातानां नानास्त्रीषु
निबोधत ॥”)
उभयार्थम् । विनार्थम् । इति
मेदिनी । ने, ४५ ॥
(यथा, मुग्धबोधे ।
“न नाना शम्भुना रामात्
वर्षेणाघोऽक्षजोवरः ॥”)

**नानाकन्दः**, पुं, (नाना बहवो कन्दा यस्य ।)
पिण्डालुः । इति राजनिर्घण्टः ॥
बहुमूलञ्च ॥
(बहुमूलयुक्ते, त्रि ॥)

**नानाध्वनिः**, पुं, (नाना ध्वनिर्यत्र । नानाविधो
ध्वनिर्वा ।)
काहलावेणुवीणादिशब्दः । इति
हारावली । २४९ ॥

| | | |
|---|---|---|
| | | **नानारूपः**, त्रि, (नाना रूपाणि यस्य ।) अनेक-<br>प्रकारः । तत्पर्य्याय । विविधः २<br>बहुविधः ३<br>पृथग्विधः ४ । इत्यमरः । ३ । १ ।<br>९३ ॥ (यथा,<br>मनुः । ९ । ३८ ।<br>“भूमावप्येककेदारे कालोप्तानि<br>कृषीबलैः ।<br>नानारूपाणि जायन्ते बीजानीह<br>स्वभावतः ॥”<br>नाना रूपाणि इति विग्रहे ।<br>वहुविधरूपे क्ली ।<br>यथा, गोः रामायणे । ३ । १ । २१<br>।<br>“नानारूपैर्विरूपास्ते<br>रुक्षैरणुभदर्शनाः ॥”) |

**नानावर्णः**, पुं, (नानाविधो वर्णः ।) बहुविध-
शुक्लादिवर्णः । इति भरतः ॥ तत्पर्य्यायः ।
चित्रम् २ किर्म्मीरः ३ कल्माषः ४ शवलः ५
एतः ६ कर्व्वुरः ७ । इत्यमरः । १ । ५ । १७
॥ विचि-
त्रम् ८ शारङ्गम् ९ कम्बरः १० कर्म्मारः ११
चित्रलः १२ । इति शब्दरत्नावली ॥
ब्राह्मण-
क्षत्रियादिश्च ॥ (नानाविधो वर्णो यस्येति ।
विचित्रवर्णयुक्ते, त्रि । यथा, सुश्रुते । १ । ३८
।
"नानावर्णा लघ्वश्मवती
प्रविरलाल्पपाण्डवृक्ष-
प्रोहाग्निगुणभूयिष्ठा ॥")

**नानाविधः**, त्रि, (नाना विधाः प्रकारा यस्य ।)
अनेकप्रकारः । विविधः । यथा, --
"तथा नानाविधैः पुष्पैर्द्रव्यैर्वीरक्रयाहृतैः ॥"
इति हरिभक्तिविलासे १६ विलासः ॥

**नानुष्ठेयं**, त्रि, (न अनुष्ठेयप् ।) अननुष्ठेयम् ।
अकर्त्तव्यम् । इति व्याकरणम् ॥

**नान्त्रं**, क्ली, (नमत्यनेनेति । नम + "भ्रस्जिगमि-
नमिहनिविश्यशां वृद्धिश्च ।" उणां । ४ ।
१५९ ।
इति ष्ट्रन् वृद्धिश्च ।) स्तोत्रम् ।
इत्युणादिकोषः ॥

**नान्दिकरः**, पुं, (करोतीति । कृ + अच् । नान्द्याः
नान्दीश्लोकस्य करः पाठकः । "ङ्यापोः
संज्ञा-
छन्दसोर्बहुलम् ।" ६ । ३ । ६३ । इति
ह्रस्वः ।)
नान्दीकरः । इत्यमरटीकायां रमानाथः ॥

**नान्दी**, स्त्री, (नन्दन्त्यनयेति । नन्द + घञ् । निपा-
तनात् दीर्घः । ततो ङीप् ।) नाटकाद्यादौ
मङ्गलार्था देवद्विजादीनामाशीः । यथा, --
"आशीर्व्वचनसंयुक्ता स्तुतिर्यस्मात् प्रवर्त्तते
।
इत्यमरः । ३ । १ । ३८ ॥
"केचित्तु भेरीप्राया
नान्दी तद्वादनशीलः अत्र
वदिकृञौ वाद-
नार्थावित्याहुः ।" इति भरतः ॥

**नान्दीपटः**, पुं, (नान्द्यै वृद्ध्यर्थं पटो यत्र ।)
कूपादिमुखबन्धनम् । तत्पर्य्यायः
। नान्दीमुखः २
वीनाहः ३ । इति हेमचन्द्रः । ४ ।
१५८ ॥

**नान्दीमुखः**, पुं, (नान्द्यै वृद्ध्यर्थं मुखं यस्य ।)
कूपादिमुखबन्धनम् । इति
हेमचन्द्रः । ४ । १५८ ॥
वृद्धिश्राद्धभुक् पितृगणः । यथा, --
"नान्दीमुखं पितृगणं पूजयेत्
प्रयतो गृही ॥"
इति विष्णुपुराणम् ॥
स च पित्रादित्रिकं
मातामहादित्रिकञ्च । इति
गोभिलसूत्रम् ॥ (नान्द्या
वृद्धेर्मुखम् ।) वृद्धिश्राद्धे,
क्ली । यथा, --
"नान्दीमुखे विवाहे च
प्रपितामहपूर्ब्बकम् ।
अत्र नान्दीमुखपदस्य श्राद्धपरत्वे
इत्युद्वाह-
तत्त्वलेखनादन्यत्र श्राद्धपरत्वम्
।" तदितिकर्त्त-
व्यता यथा । "तत्र गोभिलः ।
अथाभ्युदायक-
श्राद्धे युग्मानासादयेत्
प्रदक्षिणमुपचारः ऋजवो
दर्भाः यवैस्तिलार्थः सम्पन्नमिति
तृप्तिप्रश्नः
दधिवदराक्षताज्यमिश्राः पिण्डाः
नान्दीमुखाः
अन्य एव जपः कार्य्यः सोमसामादिकः शुभः ॥
यस्तत्र प्रकरोन्नस्य तिलवद्यववत्तथा ।
उच्छिष्टसन्निधौ सोऽत्र तृप्तेषु विपरीतकः ॥
सम्पन्नमिति तृप्ताः स्थ प्रश्नस्थाने विधीयते ।
सुसम्पन्नमिति प्रोक्ते शेषमन्नं निवेदयेत् ॥
प्रागग्रेष्वथ दर्भेषु आद्यमामन्त्र्य पूर्ब्बवत् ।
अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति निस्तिलाः ॥
द्वितीयञ्च तृतीयञ्च मध्यदेशाग्रदेशयोः ।
मातामहप्रभृतींस्तु एतेषामेव वामतः ॥
सर्व्वस्मादन्नमुद्धृत्य व्यञ्जनैरुपसिच्य च ।
संयोज्य यवकर्कन्धुदधिभिः प्राङ्मुखस्ततः ॥
अवनेजनवत् पिण्डान् दत्वा विल्वप्रमाणकान् ।
तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेत् ॥
उत्तरोत्तरदानेन पित्तानामुत्तरोत्तरम् ।
भवेदधश्चाचरणादधोऽधः श्राद्धकर्म्मसु ॥
तस्मात् श्राद्धेषु सर्व्वेषु वृद्धिमत्स्वितरेषु च ।
मूलमध्याग्रदेशेषु ईषत्सक्तांश्च निर्व्वपेत् ॥
गन्धादीन्निक्षिपेत्तूर्ष्णीं तत आचामयेत्
द्विजान् ॥"
"अथाग्रभूमिमासिञ्चेत् सु सुप्रोक्षितमस्त्विति ।
शिवा आपः सन्त्विति च युग्मानेवोदकेन च ।
सौमनस्यमस्त्विति च पुष्पादानमनन्तरम् ॥
अक्षतञ्चारिष्टञ्चास्त्वित्यक्षतानपिदापयेत् ।
अक्षय्योदकदानन्तु अर्घ्यदानघदिष्यते ॥
षष्ठ्यैव नित्यं तत् कुर्य्यान्न चतुर्थ्या कदाचन ।
प्रार्थनासु प्रतिप्रोक्ते सर्व्वास्वेव द्विजोत्तमैः ॥
पवित्रान्तर्हितान् पिण्डान् सिञ्चेदुत्तानपात्रकृत् ।
युग्मानेव स्वस्तिवाच्यानङ्गुष्ठग्रहणं सदा ॥
कृत्वा धूर्य्यस्य विप्रस्य प्रणम्यानुव्रजेत्ततः ॥" *
॥
तन्निमित्तानि यथा, विष्णुपुराणे ।
"कन्यापुत्त्रविवाहे च प्रवेशे नववेश्मनः ।
नामकर्म्मणि बालानां चूडाकर्म्मादिके तथा ॥
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने ।
नान्दीमुखं पितृगणं पूजयेत् प्रयतो गृही ॥"
मत्स्यपुराणे ।
"अन्नप्राशे च सीमन्ते पुत्रोत्पत्तिनिमित्तके ।
पुंसवने निषेके च नववेश्मप्रवेशने ॥
देववृक्षजलादीनां प्रतिष्ठायां विशेषतः ।

देवद्विजनृपादीनां तस्मान्नान्दीति सा स्मृता ॥
केचित्तु । भेरीप्राया नान्दी ।”
इत्यमरटीकायां
भरतः ॥ * ॥ नाटके विघ्नविघातायादौ नान्दी
कार्य्या । यदाह भरतः ।
“यद्यप्यङ्गानि भूयांसि पूर्ब्बरङ्गस्य नाटके ।
तथाप्यवश्यं कर्त्तव्या नान्दी विघ्नप्रशान्तये ॥
देवद्विजनृपादीनामाशीर्व्वादपरायणा।
नन्दन्ति देवता यस्मात्तस्मान्नान्दी प्रकीर्त्तिता ॥”
अन्यच्च ।
“देवद्विजनृपादीनामाशीर्व्वन्दनपूर्ब्बिका ।
नान्दी कार्य्या बुधैर्यत्नान्नमस्कारेण संयुता ॥
गङ्गा नागपतिः सोमः सुधा नन्दा जयाशिषः ।
एभिर्नामपदैः कार्य्या नान्दी धाराभिरङ्किता ॥
प्रशस्तपदविन्यासा चन्द्रसंकीर्त्तनान्विता ।
आशीर्व्वादपरा नान्दी योज्येयं मङ्गलात्मिका ॥
काचिद्दशपदा नान्दी काचिदष्टपद्रा तथा ।
सूत्रधारः पठेन्नान्दी मध्यमस्वरमाश्रितः ॥”
इति मालतीमाधवटीका ॥
समृद्धिः । यथा । “नान्दी समृद्धिरिति कथ्यते ।”
इत्युद्वाहतत्त्वे ब्रह्मपुराणम् ॥

**नान्दीकः**, पुं, (नान्द्यै नान्द्यर्थं कायतीति । कै + कः ।) तोरणस्तम्भः । इति त्रिकाण्डशेषः ॥

**नान्दीकरः**, त्रि, (नान्दीं करोतीति । कृ + “दिवा-विभेति ।” ३ । २ । २१ । इति टः ।)
नान्दी-
श्लोकपाठकारी । तत्पर्य्यायः । नान्दीवादी २ ।
पितरः प्रीयन्तामिति दैवे
वाचयित्वा नान्दी-
मुखेभ्यः पितृभ्यः पितामहेभ्यः
प्रपितामहेभ्यः
मातामहेभ्यः प्रमातामहेभ्यो
वृद्धप्रमातामहेभ्यश्च
प्रीयन्तामिति न स्वधाञ्च
प्रयुञ्जीतेति ॥ अपि च ।
स्वधयेतिपदस्थाने पुष्ट्याशब्दं
वदेदिह ।
पितृनितिपदात् पूर्ब्बं
वदेन्नान्दीमुखानिति ॥
कर्म्मादिषु च सर्व्वेषु मातरः
स्वगणाधिपाः ।
पूजनीयाः प्रयत्नेन पूजिताः
पूजयन्ति ताः ॥
प्रतिमासु च शुभ्रासु लिखिता वा
पटादिषु ।
अपि वाक्षतपुञ्जेषु नैवेद्यैश्च
पृथग्विधैः ॥
कुड्यलग्नां वसोर्धारां सप्तवारान्
घृतेन तु ।
कारयेत् पञ्च वारान् वा नातिनीचां
न चोच्छ्रि-
ताम् ॥
आयुष्याणि च शान्त्यर्थं जप्त्वा
तत्र समाहितः ।
षड्भ्यः पितृभ्यस्तदनु
श्राद्धदानमुपक्रमेत् ॥
वशिष्ठोक्तो विधिः कृत्स्नो
द्रष्टव्योऽत्र निरा-
मिषः ।
अतः परं प्रवक्ष्यामि विशेष इह यो
भवेत् ॥
प्रातरामन्त्रितान् विप्रान्
युग्मानुभयतस्तथा ।
उपवेश्य कुशान् दद्यादृजुनैव हि
पाणिना ॥
निपातो न हि सव्यस्य जानुनो
विद्यते क्वचित् ।
तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्त्तितम् ॥”
कूर्म्मपुराणे ।
“तीर्थयात्रासमारम्भे तीर्थप्रत्यागमेषु च ।
वृद्धिश्राद्धं प्रकुर्व्वीत बहुसर्पिःसमन्वितम् ॥”
इति श्राद्धतत्त्वम् ॥

**नान्दीमुखी**, स्त्री, (नान्द्यै वृद्ध्यर्थं मुखं यस्याः । ङीप् ।) सामगेतरवृद्धिश्राद्धभुङ्गातृगणः । इति यजुर्व्वेदीयवृद्धिश्राद्धपद्धतिः ॥ (कुधान्यविशेषः । यथा, सुश्रुते सूत्रस्थाने ४६ अध्याये ।
“कोरदूषकश्यामाकनीवारशान्तनुतुवरकोद्दा-लकप्रियङ्गुमधुलिकानान्दीमुखीकुरुविन्दगवे-धुकवरुतकोदपर्णीमुकुन्दकरेणुयवप्रभृतयः कुधा-न्यविशेषाः ॥” चतुर्द्दशाक्षरवृत्तिविशेषः । अस्य लक्षणादिकन्तु छन्दःशब्दे द्रष्टव्यम् ॥ * ॥
नान्दी-

| | | |
|---|---|---|
| | सदा परिचरेद्भक्त्या पितृनप्यत्र देववत् ॥<br>पितृभ्य इति दत्तेषु उपवेश्य कुशेषु तान् ।<br>गोत्रनामभिरामन्त्र्य पितृनर्घ्यं प्रदापयेत् ॥<br>नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते ।<br>पात्राणां पूरणादीनि दैवे नैव तु कारयेत् ॥<br>ज्येष्ठोत्तरकरान् युग्मान् कराग्राग्रपविचकान् ।<br>कृत्वार्घ्यं सम्प्रदातव्यं नैकैकस्यात्र दीयते ॥<br>मधु मध्विति यस्तत्र त्रिर्ज्जपोऽशितुमिच्छताम् ।<br>गायत्र्यनन्तरं सोऽत्र मधुमन्त्रविवर्ज्जितः ॥<br>न चाश्नत्सु जपेदत्र कदाचित् पितृसंहिताम् । | |

मुखं करिष्यमाणत्वेनास्त्यस्येति । अच् । अभ्यु-
दयप्रारम्भयुक्ते, त्रि । यथा, रामायणे । २ । ८१ । १ ।
"ततो नान्दीमुखीं रात्रिं भरतं सूतमागधाः ।
तुष्टुवुः सविशेषज्ञास्तवैर्मङ्गलसंस्तवैः ॥")

**नान्दीवादी**, [न्] त्रि, (नान्दीं वदतीति । वद +
णिनिः ।) नान्दीश्लोकपाठकारी। नान्दीवदन-
शीलः । भेरीवादनशीलः । इत्यमरटीकायां भरतः ॥

**नापितः**, पुं, (न आप्नोति सरलतामिति । न +
आप् + "नञ्याप इट् च ।" उणां ३ । ८७ ।
इति तन् इट् च ।) वर्णसङ्करजातिविशेषः ।
स तु पट्टिकार्य्यां कुवेरिणो जातः । इति परा-
शरपद्धतिः ॥ शूद्रायां क्षत्त्रियाज्जातः । इति
विवादार्णवसेतुः ॥ तस्य क्षौरं कर्म्म । तत्-
पर्य्यायः । क्षुरी २ मुण्डी ३ दिवाकीर्त्तिः ४
अन्तावसायी ५ । इत्यमरः । २ । १० । १० ॥ छत्री ६
वात्सीसुतः ७ नखकुट्टः ८ ग्रामणीः ९ । इति
शब्दरत्नावली ॥ चन्द्रिलः १० मुण्डः ११ भाण्ड-
पुटः १२ । इति जटाधरः ॥ (यथा, पञ्चतन्त्रे ।
३ । ७३ ।
"नराणां नापितो धूर्त्तः पक्षिणाञ्चैव वायसः ।
दंष्ट्रिणाञ्च शृगालस्तु श्वेतभिक्षुस्तपस्विनाम् ॥")

**नापितशालिका**, स्त्री, (नापितस्य शालिका
गृहम् ।) नापितशाला ॥ नापितगृहम् । तत्-
पर्य्यायः । खरकूटी २ । इति त्रिकाण्डशेषः ॥

"स च गर्भस्थस्य सप्तभिर्म्मासैर्भवति ।" इति
सुखबोधः ॥ ("तस्य चेन्नाभिः पच्येत तां लोध्र-
मधुकप्रियङ्गुदारुहरिद्राकल्कसिद्धेन तैलेनाभ्य-
ज्यादेषामेवतैलौषधानां चूर्णेनावचूर्णयेदेषनाडी-
कल्पनविधिरुक्तः सम्यक् ॥" इति चरके शरीर-
स्थाने अष्टमेऽध्याये ॥) अस्मिन् स्थाने मणि-
पुरनामदशदलपद्ममस्ति। यथा, --
"तदूद्र्ध्वे नाभिदेशे तु मणिपूरं महत्प्रभम् ।
मेघाभं विद्युदाभञ्च बहुतेजोमयं ततः ॥
मणिवद्भिन्नं तत् पद्मं मणिपूरं तथोच्यते ।
दशभिश्च दलैर्युक्तं डादिफान्ताक्षरान्वितम्।
शिवेनाधिष्ठितं पद्मं विश्वालोकनकारणम्॥"
इति तन्त्रम् ॥
कस्तूरिकामदे, स्त्री । इति मेदिनी । भे, ६ ॥

**नाभिकण्टकः**, पुं, (नाभेः कण्टक इव ।) आवर्त्तः ।
इति शब्दरत्नावली ॥ गाँड इति भाषा ॥

**नाभिका**, स्त्री, (नाभिरिव कायतीति । कै + कः ।)
कटभीवृक्षः । इति राजनिर्घण्टः ॥

**नाभिगुडकः**, पुं, (नाभौ गुडको गोलः ।) स्फीत-
नाभिः । गाँड इति भाषा । तत्पर्य्यायः ।
गर्भण्डः २ । इति त्रिकाण्डशेषः ॥ नाभिकण्टकः
३ आवर्त्तः ४ । इति शब्दरत्नावली । गोण्डः ५
नाभिगोलकः ६ । इति जटाधरः ॥

**नाभिगोलकः**, पुं, (नाभौ गोलकः ।) नाभिगुडकः ।
इति जटाधरः ॥

**नाभिजः**, पुं, (नाभौ जायते इति । जन् + डः ।)
ब्रह्मा । इति धरणिः ॥

**नाभिजन्मा**, [न्] पुं, (नाभौ जन्म यस्य ।)
ब्रह्मा । इति त्रिकाण्डशेषः ॥

"सनखपदमधिकगौरं नाभीमूलं निरंशुकं
कृत्वा ।
अनया सेवित पवन त्वं किं
कृतमलयभृगुपातः ॥")

**नाभीलं**, क्ली, (नाभीं लातीति । ला + कः ।)
नार्य्या वङ्क्षणः । कृच्छ्रम् । गर्भाण्डम् । इति
मेदिनी । ले, १०१ ॥
नाभिगाम्भीर्य्यम् । इति हेमचन्द्रः ॥

**नाभ्यं**, त्रि, (नाभेरिदमिति । नाभि + यत् ।)
नाभिसम्बन्धि । इति व्याकरणम् ॥ (यथा,
भागवते । ३ । ४ । १३ ।
"पुरा मया प्रोक्तमजाय नाभ्ये
पद्मे निषण्णाय ममादिसर्गे ॥"
नाभये हितम् । "शरीरावयवात् यत् ।" ५ । १ । ६ ।
इति यत् । "नाभि नभश्च ।" ५ । १ । २ ।
इत्यस्य वार्त्तिकोक्त्या नाभेर्नभादेशस्तु न भवति ।
अस्य गवादितया सन्नियोगशिष्टत्वात् रथनाभा-
वेव प्रवृत्तेः । नामिहिते च ॥ महादेवे, पुं ।
यथा, महाभारते । १२ । १८४ । १९ ।
"नमो नाभाय नाभ्याय नमः
कटकटाय च ॥")

**नाम**, व्य, (नामयतीति नाम्यतेऽनेन वा । नम + णिच्
+ बाहुलकात् डः ।) प्राकाश्यम् । सम्भावना ।
क्रोधः । उपगमः । कुत्सनम् । इत्यमरः । ३ । ३ ।

**नाभिः**, पुं, (नह्यते बध्नाति विपक्षादीनिति ।

नह बन्धे + "नहो भश्च ।" उणां ४ । १२५ ।
इति इञ् भश्चान्तादेशः ।) मुख्यनृपः । चक्र-
मध्यम् । (यथा, पञ्चतन्त्रे । १ । ९३ ।
"अरैः सन्धार्य्यते नाभिर्नाभौ चाराः प्रतिष्ठिताः ।
स्वामिसेवकयोरेवं वृत्तिचक्रं प्रवर्त्तते ॥")
क्षत्त्रियः । इति मेदिनी । भे, ५ ॥ प्रियव्रतराज-
पौत्रः । (अग्नीध्रस्य पुत्त्रः । यथा, ब्रह्माण्डे ।
३५ अध्याये ।
"तस्य पुत्त्रा बभूबुस्तु प्रजापतिसमा नव ।
ज्येष्ठो नाभिरिति ख्यातस्तस्य किंपुरुषोऽनुजः ॥"
"नाभये दक्षिणं वर्षं हिमवन्तं पिता ददौ ॥")
गोत्रम् । इति संक्षिप्तसारोणादिवृत्तिः ॥ (प्रधा-
नम् । इति विश्वः ॥ यथा, रघुः । १८ । २० ।
"सुतोऽभवत् पङ्कजनाभकल्पं
कृत्स्नस्य नाभिर्नृ पमण्डलस्य ॥"
महादेवः । यथा, महाभारते । १३ । १७ । ९२ ।
"नाभिर्नन्दिकरो भावः पुष्करः स्थपतिः स्थिरः ॥")

**नाभिः**, पुं स्त्री, (नह बन्धे + इञ् भश्चान्तादेशः ।)

प्राण्यङ्गम् । इति मेदिनी । भे, ६ ॥ नाइ इति
भाषा । तत्पर्य्यायः । नाभी २ तुन्दकूपी ३ । इति
शब्दरत्नावली ॥ उदरावर्त्तः ४ । इति राज-
निर्घण्टः ॥ (यथा, पञ्चदश्याम् । ६ । ११७ ।
"विष्णुर्नाभेः समुद्भूतो वेधाः कमलजस्ततः ।

**नाभिनाला**, स्त्री, (नाभिस्थिता नाला नाडी ।)

नाभिसम्बन्धिनी नाडी । तत्पर्य्यायः । अमला
२ । इति त्रिकाण्डशेषः ॥ (यथा, रघुः । ५ । ७ ।
"तदङ्कशय्याच्युतनाभिनाला
कच्चित् मृगीनामनघा प्रसूतिः ॥")

**नाभिभूः**, पुं, (नाभौ भूरुत्पत्तिर्यस्य ।) ब्रह्मा ।

इति हेमचन्द्रः । १ । १२७ ॥

**नाभिवर्षः**, पुं, (नाभेरग्नीध्रपुत्त्रस्य वर्षः ।) भारत-

वर्षः । यथा, "योऽसौ मनुपुत्त्रः प्रियव्रतो नाम
सप्तद्वीपाधिपतिर्बभूव तस्य चाग्नीध्रादयो दश
पुत्त्रा बभूवुः त्रयः प्रव्रजिताः शिष्टानां सप्तानां
सप्त द्वीपाः पित्रा दत्ताः । तत्र जम्बद्वीपाधिपते-
श्चाग्नीध्रस्य नव पुत्त्रा बभूवुः ।
नाभिः किंपुरुषश्चैव हरिवर्ष इलावृतः ।
रम्यो हिरण्मयश्चैव कुरुर्भद्राश्वकेतुमान् ॥
नव वर्षाणि तेभ्यः पित्रा दत्तानि वनं प्रविशता
चाग्नीध्रेण । हिमालयस्याधिपतेर्नाभिरृषभः
पुत्त्रो बभूव ऋषभाद्भरतः भरतेन चिरकालं
धर्म्मेण शासितत्वादिदं भारतं वर्षमभूत ।" इति
नारसिंहे ३० अध्यायः ॥

**नाभी**, स्त्री, (नाभि + वा ङीष् ।) नाभिः । इति

शब्दरत्नावली ॥ (यथा, आर्य्यासप्तशत्याम् ।
६०८ ।

२५० ॥ प्रकाश्ये यथा । हिमालयो नाम नगाधि-
राजः । हिमालयः प्रकाशोऽतिप्रसिद्ध इत्यर्थः ॥
सम्भाव्ये सम्भावनानाम् इह नाम सीता भवि-
ष्यति ॥ क्रोधे ममापि नाम दशाननस्य परैरभि-
भवः ॥ उपगमः सासूयोऽङ्गीकारः एवं नामास्तु ॥
कुत्सने को नामायं सवितुरुदये स्वापमेवं
विधत्ते ॥ विस्मये च । अन्धो नाम गिरिमारो-
हति ॥" इति तट्टीकायां भरतः ॥ स्मरणम् ।
विकल्पः । इति मेदिनी । मे, ५३ ॥

**नाम**, [न्] क्ली, म्नायते अभ्यस्यते यत् तत् ।

(म्ना अभ्यासे + "नामन् सोमन् व्योमन्निति ।"
उणां ४ । १५० । इति मनिन्प्रत्ययेन निपात-
नात् साधुः ।) संज्ञा । तत्पर्य्यायः । आख्या २
आह्वा २ अभिधानम् ४ नामधेयम् ५ । इत्य-
मरः । १ । ६ । ८ ॥ आह्वानम् ६ लक्षणम् ७ व्यप-
देशः ८ आह्वयः ९ संज्ञा १० गोत्रम् ११
अभिख्या १२ । इति शब्दरत्नावली ॥ लिङ्गम् ।
तच्च स्यादिविमक्यर्हः शब्दः । तत्तु पञ्चविधं
यथा, --
"उणाद्यन्तं कृदन्तञ्च तद्धितान्तं समासजम् ।
शब्दानुकरणञ्चैव नाम पञ्चविधं स्मृतम् ॥"
इति गोयीचन्द्रः ॥
अवक्तव्यनामानि यथा, --

| | | |
|---|---|---|
| विष्णुरेवेश इत्याहुर्लोके भागवता जनाः ॥") | | "आत्मनाम गुरोर्नाम नामानि कृपणस्य च ।<br>प्राणान्तेऽपि न वक्तव्यं ज्येष्ठपुत्त्रकलत्रयोः ॥"<br>इति कर्म्मलोचनम् ॥<br>**नामकरणं**, क्ली, (नाम्नः करणं यत्र ।) संस्कार-विशेषः । तत्रोक्तनक्षत्राणि यथा । अश्विनी १ रोहिणी ४ मृगशिराः ५ पुनर्व्वसुः ७ उत्तर-फल्गुनी १२ स्वाती १५ अनुराधा १७ उत्तरा- |

षाढा २१ श्रवणा २२ धनिष्ठा २३ शतभिषा २४
उत्तरभाद्रपदा २६ रेवती २७ ॥ तत्र लग्नं यथा । यल्लग्नस्य प्रथमचतुर्थसप्तमदशमस्थाने शुभग्रहा स्तिष्ठन्ति तल्लग्ने नामकरणं कार्य्यम् ॥ तत्र दिननियमः । दश १० एकादश ११ द्बादश १२ शत १०० दिनानि । इति ज्योतिःसारसंग्रहः ॥ संवत्सरे वेति गोभिलः ॥ एतच्च प्रशस्ततरतम-परपरकालकर्म्मेतरपरम् । एकादशाह इति मुख्यः कल्प इति रघुनन्दनमतम् ॥ * ॥ तदनु-ष्ठानं यथा । “जन्मगृहाभ्यन्तरे चन्द्रदर्शनात् प्राक् माता शुचिना वस्त्रेण कुमारमाच्छाद्य भर्त्तुर्दक्षिणतः स्थित्वा प्रयच्छत्युदक्शिरसं पश्चिमदेशं गत्वा उत्तरत उदग्रेषु कुशेषु उपविशति अतः पितैवाधिकारी । अथ जुहोति प्रजापतये कुमारस्य तिथये नक्षत्राय । तिथि-नक्षत्रयोर्देवतायै ताश्च ब्रह्मत्वष्टृविष्णुयमसोम-कुमारमुनिवसुपिशाचधर्म्मरुद्रवायुमन्मथयक्ष-पितरः पौर्णमास्यां विश्वेदेवाः । एषां होमे विशेषमाह छन्दोगपरिशिष्टम् ।
‘नामधेये मुनिवसुपिशाचा बहुवत् सदा ।
यक्षाश्च पितरो देवा यष्टव्यास्तिथिद्वेताः ॥’
तेन मुन्यादयो बहुवचनान्ता होतव्याः । शेषा एकवचनान्ता होतव्याः । नक्षत्राणि अश्वि-न्यादीनि । तद्देवताश्च ज्योतिषे । अश्वियमेत्या-दयः । नक्षत्रहोमे छन्दोगपरि शिष्टम् ।
‘आग्नेयाद्बेऽथ सर्पाद्बे विशाखाद्बे तथैव च ।
आषाढाद्बे धनिष्ठाद्बे अश्विन्याद्बे तथैव च ॥
द्बन्द्बान्यतानि बहुवदृक्षाणां जुहुयात् सदा ।
द्बन्द्बद्बयं द्बिवच्छेषमवशिष्टान्यथैकवत् ॥’
तद्देवताहोमे विशेषः ।
‘देवता अपि हूयन्ते बहुवत् सर्पवस्वपः ।
देवाश्च पितरश्चैव द्बिवद्बध्नाश्विनौ तथा ॥’
देवाः विश्वेदेवाः । कवर्गादिपञ्चतृतीयादि-वर्णान्यतमवर्णाद्यन्तरस्थंयरलवाद्यन्यतमवर्ण-मध्यं विश्वम्भरादवत् कृदन्तं सम्बोधनान्तं दीर्घ-
विसर्गान्तं च नाम कुर्य्यात् । एतच्च स्वगृह्योक्त-त्वात् प्रशस्तपरम् । कुलदेवतानक्षत्राभि-
नातिदीर्घं नातिह्रस्वं
नातिगुर्व्वक्षरान्वितम् ।
सुखोच्चार्य्याक्षरं नाम कुर्य्याच्च
प्रवणाक्षरम् ॥’
इति विष्णुपुराणे ३ अंशे १० अध्यायः ॥
प्रवणाक्षरं लघूत्तराक्षरम् । इति तट्टीकाकारः ॥
गोभिलः । ‘अयुग्मकदान्तं तथा
स्त्रीणाम् ।’
अयुग्मकम् अयुगक्षरम् । दान्तं
दकारान्तम् ।
यथा यशोदेत्यादि ॥ * ॥ तस्य
श्रीपूर्ब्बकत्वं
यथा, --
‘देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम् ।
सिद्धं सिद्धाधिकारांश्च श्रीपूर्ब्बं
समुदीरयेत् ॥’
इति राघवभट्टधृतप्रयोगदर्शनात् स्वर्गकामि-
त्वादिना सिद्धोऽधिकारो येषां
नराणामित्यनेन
जीवतां श्रीशब्दादित्वं नाम्नो न मृतानां तथेति
शिष्टाचारः ॥ * ॥ गोभिलः । मात्रे चैनं
प्रथमं
नामधेयमाख्याय यथार्थमुदीच्यं
वामदेव्यगानान्तं
कुर्य्यात् गौर्दक्षिणा ।” इति
संस्कारतत्त्वम् ॥

**नामद्बादशी**, स्त्री, (नाम्नः द्बादशी ।) व्रतविशेषः ।

यथा, --
“गौरी काली उमा भद्रा दुर्गा कान्तिः सर-
स्वती ।
मङ्गला वैष्णवी लक्ष्मीः शिवा नारायणी
क्रमात् ।
सनत्कुमार उवाच ।
सतां निन्दा नाम्नः परममपराधं वितनुते
यतः ख्यातिं यातस्तमुपहसते गर्हयति च ।
तथा विष्णोरिष्टं य इह गुणनामादि
सकलं
धिया भिन्नं पश्येत् स खलु
हरिनामाहितकरः ॥
गुरोरवज्ञा श्रुतिशास्त्रनिन्दनं
तथार्थवादो हरिनाम्नि कल्पनम् ।
नाम्नां बलाद्यस्य हि पापबुद्धि-
र्न विद्यते तस्य शठस्य शुद्धिः ॥
दिवौकसां गुरोः पित्रोर्भूसुराणाञ्च गर्हनम् ।
नामापराधं यत्तत् स्याद्वैष्णवानां तथा
नृणाम् ॥
गोऽश्वत्थतुलसीधात्रीर्नृपान्निन्दन्ति
नारद ! ।
नामापराधी स भवेन्नाम गोविन्दवैष्णवान् ॥
सर्व्वतीर्थानि क्षेत्राणि चावमन्यति
निन्दति ।
गङ्गासरस्वतीयामीश्चापराधीभवेन्नरः ॥
श्रीमद्भागवतं महाभारतं ब्राह्मणान् गुरुम् ।
मन्त्रं महाप्रसादञ्च योऽवमन्यति नारकी ॥
अवतारान् हरेस्तत्तन्नामभक्तांश्च
निन्दति ।
अवमन्यति देवर्षे नारकी स जनोऽधमः ॥
गोविन्दस्यार्च्चनं कुर्य्यादवमन्यति
वैष्णवान् ।
निन्दतीह च नामानि स
नाम्नोऽप्यपराधकृत् ॥
वर्णाश्रमानन्त्यजांश्च
जातिबुद्ध्यावमन्यति ।
वैष्णवान् कुरुते निन्दामपराधी नराधमः ॥

सम्बन्धं च नाम कुर्य्यात् । तत्र शङ्खलिखितवच-
नान्नामान्तरकरणव्यवहारः । अत्र नक्षत्र-
सम्बन्धेन नामकरणं शतपदचक्रानुरोधात्
स्वनक्षत्रपादानुसारेण । ततश्च कुमारस्य मुख-
भवान् प्राणनिर्गमोपायभूतान् छिद्रविशेषान्
सप्त मुखमक्षिणी नासिके कर्णाविति आभि-
मुख्येन स्पृशन् कोऽसि कतमोऽसीति मन्त्रं
जपेत् ॥
तच्च नाम शर्म्मवर्म्माद्युपपदान्तत्वेन कर्त्तव्यम् ।
यथा, --
‘ततस्तु नाम कुर्व्वीत पितैव दशमेऽहनि ।
देवपूर्ब्बं नराख्यं हि शर्म्मवर्म्मादिसंयुतम् ॥
शर्म्मेति ब्राह्मणस्योक्तं वर्म्मेति क्षत्त्रसंश्रयम् ।
गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥
नार्य्यहोनं न चाशस्तं नापशब्दयुतं तथा ।
नामाङ्गल्यं जुगुप्स्यं वा नाम कुर्य्यात् समाक्षरम्
॥

मार्गतृतीयामारभ्य पूर्ब्बोक्तं लभते
फलम् ॥
पूर्ब्बोक्तं फलं मार्गादिद्वादशमासे
कृष्णाष्टमी-
व्रतफलम् ।
अर्द्धनारीश्वरं रुद्रमथवा उमशङ्करम् ॥
पूजयेद्विधिवन्नारी न वियोगमवाप्नुयात्
।
अथवा विष्णुरूपेण पूजयेच्चेश्वरं सदा
॥
शङ्करं वामभागस्थं
सर्व्वकाममवाप्नुयात् ।
मार्गशिराद्ये केशवनारायणमाधवान्
पूजयेत् ।
धूपस्रग्दीपाद्यैरुपोष्य संपूज्य
दक्षिणाभिश्च
नामभिः ।
अश्वमेधनृपसूयवाजपेयमतिरात्र-
नक्तमथाग्निष्टोमोपवासम्बै ।
पुरुषमेवसौत्रा-
मणिं पञ्चयज्ञहोमगोलक्षं
सर्व्वमथास्थाप्यान्ते
नित्यं स्तरणार्च्चनात्तन्नाम्ना । इत्याद्ये
नाम-
द्वादशी ।” इति देवीपुराणम् ॥

**नामधेयं**, क्ली, (नामैव । नाम + “भागरूप-
नामभ्यो धेयः ।” ५ । ४ । २५ ।
इत्यस्य वार्त्ति-
कोक्त्या धेयः ।) नाम । इत्यमरः । १
। ६ । ८ ॥
(यथा, मनुः । २ । ३० ।
“नामधेयं दशम्यान्तु द्वादश्यां वास्य
कारयेत् ।
पुण्ये तिथौ मुहूर्त्ते वा नक्षत्रे वा
गुणान्विते ॥”)

**नामशेषः**, त्रि, (नाम्नः शेषो यस्य । नाम आख्या
एव शेषो यस्येति वा ।) मृतः । इति
हेम-
चन्द्रः । ३ । ३८ ॥ मरणे, पुं ।

द्विजबन्धुं स्त्रियं शूद्रं जातिभेदेन वैष्णवम्
।
येऽवमन्यन्ति निन्दन्ति ते वै
निरयगामिनः ॥
अर्च्चे विष्णोः शिलाधीर्गुरुषु
नरमतिर्वैष्णवे जाति-
बुद्धि-
र्विष्णोर्व्वा वैष्णवानां कलिमलमथने
पादतीर्थे-
ऽम्बुबुद्धिः ।
विष्णोर्न्निर्म्माल्यनाम्नोः
कलुषदहनयोरन्य-
सामान्यबुद्धि-
र्व्विष्णौ सर्व्वेश्वरेशे तदितरसमधीर्य्यस्य
वा
नारकी सः ॥
पूज्यते देवसामान्यं कृत्वा नारायणं नरः
।
नामापराधी स भवेद्वैष्णवान् यो न सेवते
॥
नारद उवाच ।
नामापराधा ह्यपराः कति सन्ति
तपोधन ! ।
तत् कथ्यतां मे सकलं यदि योग्यो
भवामि ते ॥
सनत्कुमार उवाच ।
वैष्णवे शठतां विष्णौ गुरौ पित्रोश्च भूसुरे
।
निन्दां यः कुरुते मोहादपराधी स नारकी
॥”
इति पाद्मोत्तरखण्डे । १०२ -- १०३
अध्यायौ ॥
अपि च ।
“धर्म्मव्रतत्यागहुतादिसर्व्व-
शुभक्रियासाम्यमपि प्रमादः ।
अश्रद्दधाने विसुखेऽप्यश्रृण्वति
यश्चोपदेशः शिवनामापराधः ॥
श्रुत्वापि नाममाहात्म्यं यः प्रीतिरहितो
नरः ।
अहं ममादि परमो नाम्नि
सोऽप्यपराधकृत् ॥”

| | | |
|---|---|---|
| | **नामापराधः**, पुं, (नाम्नि नामविषये अपराधः । नाम्नः सकाशात् अपराधो वा ।) साधुनिन्दा-दिरूपदुरदृष्टजनकव्यापारविशेषः । यथा, -- श्रीनारद उवाच । "के तेऽपराधा विप्रेन्द्र ! नाम्नो भगवतः कृताः । विविन्दन्ति नृणां कृत्यं प्राकृतं ह्यानयन्ति च ॥ तत् कथ्यतां महाभागापराधं नाम्नि केशवे । केन केन प्रकारेण भवेद्वै तज्जनादिषु ॥ | अपराधभञ्जनमाह । "जाते नामापराधेऽपि प्रमादेन कथञ्चन । सदा संकीर्त्तयेन्नाम तदेकशरणो भवेत् ॥ |

नामापराधयुक्तानां नामान्येव हरन्त्यघम्
।
अविश्रान्तप्रयुक्तानि तान्येवार्थकराणि च
॥
नामैकं यस्य वाचि स्मरणपथगतं
श्रोत्रमूलं
गतं वा
शुद्धं वाशुद्धवर्णं व्यवहितरहितं तारयत्येव
सत्यम् ।
तच्चेद्देहद्रविणजनतालोभपाषण्डमध्ये
निक्षिप्तं स्यान्न फलजनकं शीघ्रमेवात्र
विप्र ! ॥”
इति श्रीहरिभक्तिविलासः ॥

**नामापराधी**, [न्] त्रि, (नामापराधोऽस्त्य-
स्येति । इनिः ।) नामापराधकृत् । यथा,
--
“नाम्नो जनार्द्दनस्यापराधान् यः
कुरुतेऽनिशम् ।
नामापराधकृल्लोको याति सत्यमधोगतिम्
॥
विनाशयति नामस्थोऽपराधं नामतो जनः
।
नामापराधी कृष्णे स्यादात्मनश्चेति
नारकी ॥
पाषण्डो दुर्ज्जनः पापी भवेन्नाम्नो हरेः
खलः ।
नामापराधी मनुजो मुने ! भवति नारकी
॥
अपराधान्मुकुन्दस्य विदूरयति नामभिः ।
नाम्नीह लोकः
कुर्व्वंस्तान्महापाप्यधमाधमः ॥”
इति पाद्मोत्तरखण्डे १०२ अध्यायः ॥

**नायः**, पुं, (नीयतेऽनेनेति । नी + “श्रिणीभुवो
ऽनुपसर्गे ।” ३ । ३ । २४ । इति करणे
घञ् ।)
नयः । नीतिः । इत्यमरः । ३ । २ । ९ ॥
(यथा,
भट्टिः । ७ । ३६ ।
हानिहेतुः पतिरुपपतिः । बहुलवेश्याभोगोप-
रसिको वैशिकः । वैशिकस्तूत्तममध्यमाधम-
भेदात् त्रिविधः । दयिताश्रमप्रकोपेऽपि उप-
चारपरायण उत्तमः । प्रियायाः प्रकोपे यः
प्रकोपमनुरागं वा न प्रकटयति चेष्टया मनो-
भावं गृह्णाति स मध्यमः ।
भयकृपालज्जाशून्यः
कामक्रीडायामकृतकृत्याकृत्यविचारोऽधमः ॥
* ॥
मानी चतुरश्च शठ एवान्तर्भवति । वाक्चेष्टा-
व्यङ्ग्यसमागमश्चतुरः ।
प्रोषितपतिरुपपतिर्वैशि-
कश्च भवति । अनभिज्ञनायको नायकाभास
एव । तेषाञ्च नर्म्मसचिवपीठमर्द्दविटचेटक-
विदूषकभेदाच्चतुर्धा । कुपितस्त्रीप्रसादकः
पीठ-
मर्द्दः । नर्म्मसचिवोऽप्ययमेव ।
कामतन्त्रकला-
कोविदो विटः । सन्धानचतुरश्चेटकः ।
अङ्गादि-
वैकृत्यैर्हासकारी विदूषकः ॥ * ॥ तेषामष्ट-
सात्त्विकगुणाः । यथा, --
“स्वेदः स्तम्भोऽथ रोमाञ्चः स्वरभङ्गोऽथ
वेपथुः ।
वैवर्ण्यमश्रुप्रणयावित्यष्टौ सात्त्विका गुणाः ॥”
* ॥
तेषां दशावस्था यथा, --
“अभिलाषस्तथा चिन्ता स्मृतिश्च
गुणकीर्त्तनम् ।
उद्वेगश्च प्रलापश्च उन्मादो व्याधिरेव च ।
जडता निधनान्येव दशावस्थाः प्रकीर्त्तिताः
॥”
इति रसमञ्जरी ॥
(अस्य लक्षणभेदादिकं यथा, साहित्यदर्पणे ।
३ । ३३ -- ३८ ।
“त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्-
साही ।
दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान् नेता
॥

**नायिका**, स्त्री, (नयति या । नी + ण्वुल् । टाप्
अत इत्वञ्च ।) दुर्गाशक्तिः । सा अष्टधा ।
यथा, --
“ततोऽष्टनायिका देव्या यत्नतः
परिपूजयेत् ॥
उग्रचण्डां प्रचण्डाञ्च चण्डोग्रां
चण्डनायिकाम् ।
अतिचण्डाञ्च चामुण्डां चण्डां
चण्डवतीन्तथा ॥
पद्मे चाष्टदले चैताः प्रागादिक्रमतस्तथा ।
पञ्चोपचारैः संपूज्य भैरवान्मध्यदेशतः
॥”
इति प्रकृतिखण्डे ६१ अध्यायः ॥
शृङ्गाररसालम्बनविभावरूपानारी । सा
च
त्रिविधा । स्वीया परकीया
सामान्यवनिता
चेति । तत्र स्वामिन्येवानुरक्ता स्वीया ।
स्वीयापि
त्रिविधा । मुग्धा मध्या प्रगल्भा च । तथा
अङ्कुरितयौवना मुग्धा । सा च
ज्ञातयौवना
अज्ञातयौवना च । सैव क्रमशो
लज्जाभय-
पराधीनरतिर्नवोढा । सैव क्रमशो जात-
प्रश्रया विश्रब्धनवोढा ।
समानलज्जामदना
मध्या । एषैव
चातिप्रश्रयादतिविश्रब्धनवोढा ।
पतिमात्रविषयकेलिकलापकोविदा
प्रगल्भा ।
मध्याप्रगल्भे मानावस्थायां प्रत्येकं
त्रिविधे ।
धीरा अधीरा धीराधीरा चेति । व्यङ्ग्य-
कोपप्रकाशा धीरा ।
अव्यङ्ग्यकोपप्रकाशा
अधीरा । व्यङ्ग्याव्यङ्ग्यकोपप्रकाशा
धीराधीरा ।

"यात यूयं यमश्रायं दिशं नायेन दक्षिणाम् ॥"
नी + भावे घञ् ।) प्रापणम् । इति नीधातु-
दर्शनात् ॥ (नयति प्रापयतीति । नी + "दुन्योर-
नुपसर्गे ।" ३ । १ । १४२ । इति णः ।
उपायः ।
यथा, भट्टिः । ६ । ८२ ।
"नायः कोऽत्र स येन स्यां वताहं विगतज्वरः ॥"
नेतरि, त्रि । यथा, ऋग्वेदे । ६ । २४ । १० ।
"सचस्व नायमवसे अभीक इतो वा तमिन्द्र
पाहि रिषः ॥")

**नायकः**, पुं, (नयति प्रापयतीति । नी + ण्वुल् ।)
नेता । (यथा, गीतायाम् । १ । ७ ।
"नायका मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि ते ॥")
श्रेष्ठः । (यथा, भागवते । ४ । ७ । १९ ।
"तमुपागतमालक्ष्य सर्व्वे सुरगणादयः ।
प्रणेमुः सहसोत्थाय ब्रह्मेन्द्रत्र्यक्षनायकाः ॥")
हारमध्यमणिः । इति मेदिनी । के, ११० ॥
अग्रे सरिकः । सेनापतिः । इति त्रिकाण्ड-
शेषः ॥ (यथा, महाभारते । ३ । २२२ । ४ ।
"वध्यमानं बलं दृष्ट्वा बहुशस्तैः पुरन्दरः ।
स्वसैन्यनायकार्थाय चिन्तामाप भृशं तदा ॥")
शृङ्गारसाधकः । स च त्रिविधः । पतिरुपपति-
वैंशिकश्चेति । विधिवत् पाणिग्राहकः पतिः ।
अनुकूलदक्षिणधृष्टशठभेदात् पतिश्चतुर्द्धा । सार्व्व-
धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च ।
धीरप्रशान्त इत्ययमुक्तः प्रथमश्चतुर्भेदः ॥
अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः ।
स्थेयान् निगूढमानो धीरोदात्तोदृढव्रतः कथितः ॥
मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः ।
आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः ॥
निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात् ।
सामान्यगुणैर्भूयान् द्विजादिको धीरप्रशान्तः स्यात् ॥"
एषाञ्च शृङ्गारिरूपत्वे भेदानाह तत्रैव । ३ । ३९ -- ४४ ।
"एभिर्दक्षिणधृष्टानुकूलशठरूपिभिस्तु षोडशधा ।
एषु त्वनेकमहिलासु समरागो दक्षिणः कथितः ॥
कृतागा अपि निःशङ्कस्तर्जितोऽपि न लज्जितः ।
दृष्टदोषोऽपि मिथ्यावाक् कथितो धृष्टनायकः ॥
अनुकूल एकनिरतः शठोऽयमेकत्र वद्धभावो यः ।
दर्शितवहिरनुरागो विप्रियमन्यत्र गूढमाचरति ॥
एषाञ्च त्रैविध्यात् सर्व्वेषामुत्तममध्याधमत्वेन ।
उक्ता नायकभेदाश्चत्वारिंशत्तथाऽष्टौ च ॥"
एषामुदाहरणादिकं तत्रैव द्रष्टव्यम् ॥)

**नायकाधिपः**, पुं, (नायकानां नेतृणां सेनापतीनां
वा अधिपः ।) नरेन्द्रः । राजा । इति शब्द-
रत्नावली ॥

एते धीरादयस्त्रयो भेदा द्विधा भवन्ति । ज्येष्ठा
कनिष्ठा च । परिणीतत्वे सति भर्त्तुरधिकस्नेहा
ज्येष्ठा । परिणीतत्वे सति भर्त्तुर्न्यूनस्नेहा कनिष्ठा ॥
अप्रकटपरपुरुषानुरागा परकीया । सा च
द्विविधा । परोढा कन्यका च । गुप्ता विदग्धा
लक्षिता कुलटा अनुशयानामुदिताप्रभृतीनां
परकीयायामेवान्तर्भावः । गुप्ता त्रिविधा । वृत्त-
सुरतगोपना च । वर्त्तिष्यमाणसुरतगोपना । वर्त्त-
मानसुरतगोपना च । विदग्धा द्विविधा । वाग्वि-
दग्धा क्रियाविदग्धा चेति । अनुशयाना त्रिविधा ।
वर्त्तमानस्थानविघट्टनेन भाविस्यानाभावशङ्कया
स्वानधिष्ठितसङ्केतस्थले भर्तुर्गमनानुमानेन ॥ * ॥
वित्तमात्रोपाधिकसकलपुरुषाभिलाषा सामान्य-
वनिता । एता अन्यसम्भोगदुःखिता । वक्रोक्ति-
गर्व्विता मानवत्यश्च तिस्रो भवन्ति । वक्रोक्ति-
गर्व्विता द्विविधा । प्रेमगर्व्विता सौन्दर्य्यगर्व्विता
च । मानवती यथा । प्रियापराधसूचिका चेष्टा
मानः । स च लघुर्मध्यमो गुरुश्चेति । अल्पा-
पनेयो लघुः । कष्टापनेयो मध्यमः । कष्टतमा-
पनेयो गुरुः ॥ * ॥ एताः षोडश अष्टाभिरव-
स्थाभिः प्रत्येकमष्टविधा । प्रोषितभर्त्तृका

| | | |
|---|---|---|
| कालिकपराङ्गनापराङ्मुखत्वे सति सर्व्वकाल-<br>मनुरक्तोऽनुकूलः ।<br>सकलनायिकाविषयसमसह-<br>जानुरागो दक्षिणः । भूयो निःशङ्कः कृतदोषो-<br>ऽपि भूयो निवारितोऽपि भूयः प्रश्रयपरायणो<br>धृष्टः । कामिनीविषयकपटपटुः शठः । आचार- | | खण्डिता उत्कण्ठिता कलहान्तरिता विप्र-<br>लब्धा वासकसज्जा स्वाधीनपतिका अभिसा-<br>रिका चेति गणनादष्टाविंशत्यधिकं शतं भेदा<br>भवन्ति । तासामुत्तममध्यमाधमगणनया चतु-<br>रधिकाशीतिशतत्रयं भेदा भवन्ति । तत्रासां<br>दिव्य-अदिव्य-दिव्यादिव्यभेदेन गणनया द्विपञ्चा-<br>शदधिकशतयुतसहस्रं भेदा भवन्ति । इति रस-<br>मञ्जरी ॥ * ॥ |

(यथा च साहित्यदर्पणे । ३ । ६५ -- ९३
।
“अथ नायिका त्रिविधा स्वाऽन्या
साधारणस्त्रीति ।
नायकसामान्यगुणैर्भवति
यथासम्भवैर्युक्ता ॥
विनयार्जवादियुक्ता गृहकर्मपरा पतिव्रता
स्वीया ।
सापि कथिता त्रिविधा मुग्धा मध्या
प्रगल्भेति ॥
प्रथमावतीर्णयौवनमदनविकारा रतौ
वामा ।
कथिता मृदुश्च माने समधिकलज्जावती
मुग्धा ॥
मध्या विचित्रसुरता प्ररूढस्मरयौवना ।
इषत्प्रगल्भवचना मध्यमव्रीडिता मता ॥
स्मरान्धा गाढतारुण्या
समस्तरतकोविदा ।
भावोन्नता दरव्रीडा प्रगल्भाक्रान्तनायका
॥
ते धीरा चाप्यधीरा च धीराधीरेति
षड्विधे ।
प्रियं सोत्प्रासवक्रोक्त्या मध्याधीरा
दहेद्रुषा ॥
धीराधीरा तु रुदितैरधीरा परुषोक्तिभिः ।
प्रगल्भा यदि धीरा
स्याच्छन्नकोपाकृतिस्तदा ॥
उदास्ते सुरते तत्र दर्शयन्त्यादरान् बहिः
।
धीराधीरा तु सोल्लुण्ठभाषितैः खेदयेदमुम्
॥
तर्जयेत्ताडयेदन्या प्रत्येकं ता अपि द्विधा
।
कनिष्ठज्येष्ठरूपत्वान्नायकप्रणयं प्रति ॥
मध्याप्रगल्भयोर्भेदास्तस्माद् द्वादश
कीर्त्तिताः ।
मुग्धा त्वेकैव तेन स्युः
स्वीयाभेदास्त्रयोदश ॥

एवं कृताभिसाराणां पुंश्चलीनां विनोदने ।
स्थानान्यष्टौ तथा ध्वान्तच्छन्नेषु क्वचिदाश्रयः ॥
* ॥
चाटुकारमपि प्राणनाथं रोषादपास्य या ।
पश्चात्तापमवाप्नोति कलहान्तरिता तु सा ॥
प्रियः कृत्वापि सङ्केतं यस्या नायाति सन्निधिम् ।
विप्रलब्धा तु सा ज्ञेया नितान्तमवमानिता ॥
नानाकार्य्यवशाद् यस्या दूरदेशं गतः पतिः ।
सा मनोभवदुःखार्त्ता भवेत् प्रोषितभर्तृका ॥
कुरुते मण्डनं यस्याः सज्जिते वासवेश्मनि ।
सा तु वासकसज्जा स्याद्विदितप्रियसङ्गमा ॥
आगन्तुं कृतचित्तोऽपि दैवान्नायाति यत्प्रियः ।
तदनागमदुःखार्त्ता विरहोत्कण्ठिता तु सा ॥
इति साष्टाविंशतिशतमुत्तममध्यमाधमस्वरूपतः
।
चतुरधिकाशीतियुतं शतत्रयं नायिकाभेदानां
स्यात् ॥
क्वचिदन्योन्यसाङ्क्यर्य्यमासां लक्ष्येषु दृश्यते ।
इतरा अप्यसंख्यास्ता नोक्ता विस्तरशङ्कया ॥”
एतासामुदाहरणानि तत्रैव विस्तरशो द्रष्टव्यानि ॥
अथासामलङ्काराः । यथा, तत्रैव । ३ । ९४ ।
“यौवने सत्त्वजास्तासामष्टाविंशतिसंख्यकाः ।
अलङ्कारास्तत्र भावहावहेलास्त्रयोऽङ्गजाः ॥
शोभा कांन्तिश्च दीप्तिश्च माधुर्य्यञ्च प्रगल्भता ।
औदार्य्यं धैर्य्यमित्येते सप्तैव स्युरयत्नजाः ॥
लीलाविलासौ विच्छित्तिर्व्विव्वोकः किलकिञ्चितम्
।
मोट्टायितं कुट्टमितं विभ्रमो ललितं मदः ॥
विकृतं तपनं मौग्ध्यं विक्षेपश्च कुतूहलम् ।
हसितं चकितं केलिरित्यष्टादशसंख्यकाः ।
स्वभावजाश्च भावाद्या दश पुंसां भवन्त्यपि ॥”
अथ मुग्धाकन्ययोरनुरागेङ्गितानि । यथा,
तत्रैव । ३ । १२३ ।
“दृष्टा दर्शयति व्रीडां सम्मुखं नैव पश्यति ।
प्रच्छन्नं वा भ्रमन्तं वा तिर्य्यक् तं पश्यति प्रियम् ॥
बहुधा पृच्छ्यमानापि मन्दमन्दमधोमुखी ।
सगद्गदस्वरं किञ्चित् प्रियं प्रायेण भाषते ॥
अन्यैः प्रवर्त्तितां शश्वत् सावधाना च तत्कथाम् ।
शृणोत्यन्यत्र दत्ताक्षी प्रिये बालानुरागिणी ॥”

अङ्गुष्ठाग्रेण लिखति सकटाक्षं
निरीक्षते ।
दशति स्वाधरं चापि ब्रूते
प्रियमधोमुखी ॥
न मुञ्चति च तं देशं नायको यत्र
दृश्यते ।
आगच्छति गृहं चास्य कार्य्यव्याजेन
केनचित् ॥
दत्तं किमपि कान्तेन धृत्वाङ्गे
मुहुरीक्षते ।
नित्यं हृष्यति तद्योगे वियोगे मलिना
कृशा ॥
मन्यते बहु तच्छीलं तत्प्रियं मन्यते
प्रियम् ।
प्रार्थयतेऽल्पमूल्यानि सुप्ता न
परिवर्त्तते ॥
विकारान् सात्त्विकानस्य सम्मुखी
नाधिगच्छति ।
भाषते सूनृतं स्निग्धमनुरक्ता
नितम्बिनी ॥
एतेष्वधिकलज्जानि चेष्टितानि
नवस्त्रियाः ।
मध्यव्रीडानि मध्यायाः
स्रंसमानत्रपाणि तु ॥
अन्यस्त्रियाः प्रगल्भायास्तथा
स्युर्वारयोषितः ॥
लेख्यप्रस्थापनैः
स्निग्धैर्वीक्षितैर्मृदुभाषितैः ।
दूतीसम्प्रेषणैर्नार्य्या
भावाभिव्यक्तिरिष्यते ॥” * ॥)
कस्तूरीविशेषः । यथा, राजनिर्घण्टे ।
“चूर्णाकृतिस्तु खरिका तिलका
तिलाभा
कौलत्थवीजसदृशी च
कुलत्थिकाख्या ।
स्थूला यतः कियदियं किल
पिण्डिका स्या-
त्तस्याश्च किञ्चिदधिकापि च
नायिकैषा ॥”

परकीया द्विधा प्रोक्ता परोढा कन्यका तथा ।
यात्रादिनिरताऽन्योढा कुलटा गलितत्रपा ॥
कन्या त्वजातोपयमा सलज्जा नवयौवना ।
धीरा कलाप्रगल्भा स्याद्वेश्या सामान्यनायिका ॥
निर्गुणानपि न द्वेष्टि न रज्यति गुणिष्वपि ।
वित्तमात्रं समालोक्य सा रागं दर्शयेद् बहिः ॥
काममङ्गीकृतमपि परिक्षीणधनं नरम् ।
मात्रा निष्क्रामयेदेषा पुनः सन्धानकाङ्क्षया ॥
तस्कराः पण्ड्रका मूर्खाः सुखप्राप्तधनास्तथा ।
लिङ्गिनश्छन्नकामाद्या आसां प्रायेण वल्लभाः ॥
एषापि मदनायत्ता क्वापि सत्यानुरागिणी ।
रक्तायां वा विरक्तायां रतमस्यां सुदुर्लभम् ।
अवस्थाभिर्भवन्त्यष्टावेताः षोडषभेदिताः ।
स्वाधीनभर्तृका तद्वत् खण्डिताऽथाभिसारिका ॥
कलहान्तरिता विप्रलब्धा प्रोषितभर्तृका ।
अन्या वासकसज्जा स्याद्विरहोत्कण्ठिता तथा ॥
कान्तो रतिगुणाकृष्टो न जहाति यदन्तिकम् ।
विचित्रविभ्रमासक्ता सा स्यात् स्वाधीनभर्तृका ॥
पार्श्वमेति प्रियो यस्या अन्यमम्भोगचिह्नितः ।
सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता ॥
अभिसारयते कान्तं या मन्मथवशंवदा ।
स्वयं वाऽभिसरत्येषा धीरैरुक्ताऽभिसारिका ॥

अथ सकलानामपि नायिकानामनुरागेङ्गितानि ।
यथा, तत्रैव । ३ । १२४ -- १२५ ।
“चिराय सविधे स्थानं प्रियस्य बहु मन्यते ।
विलोचनपथञ्चास्य न गच्छत्यनलङ्कृता ॥
कापि कुन्तलसंव्यानसंयमव्यपदेशतः ।
बाहुमूलं स्तनौ नाभिपङ्कजं दर्शयेत् स्फुटम् ॥
आच्छादयति वागाद्यैः प्रियस्य परिचारकान् ।
विश्वसित्यस्य मित्रेषु बहुमानं करोति च ॥
सखीमध्ये गुणान् ब्रूते स्वधनं प्रददाति च ।
सुप्ते स्वपिति दुःखस्य दुःखं धत्ते सुखे सुखम् ॥
स्थिता दृष्टिपथे शश्वत् प्रिये पश्यति दूरतः ।
आभाषते परिजनं सम्मुखे स्मरविक्रियम् ॥
यत् किञ्चिदपि संवीक्ष्य कुरुते हसितं मुधा ।
कर्णकण्डूयनं तद्वत् कवरीमोक्षसंयमौ ॥
जृम्मते स्फोटयत्यङ्गं बालमाश्लिष्य चुम्बति ।
भाले तथा वयस्याया आरभेत् तिलकक्रियाम् ॥

**नारं**, क्ली, (नराणां समूहः । नर + समूहे अण् ।) नरसमूहः । इति व्याकरणम् ॥ (नरस्येदमिति । नर + “तस्येदम् ।” ४ । ३ । १२० । इत्यण् ।) नरसम्बन्धिनि, त्रि । यथा, --
“मलमूत्रपुरीषास्थिनिर्गतं ह्यशुचि स्मृतम् ।
नारं स्पृष्ट्वा तु सस्नेहं सचेलो जलमाविशेत् ॥”
इति सामान्यनिरुक्तौ जगदीशधृतस्मृतिवचनम् ॥

**नारः**, पुं, (नरस्यायमिति । ब्रर + अण् ।) तर्णकः । जलम् । इति मेदिनी । रे, ५३ ॥

**नारकः**, पुं, (नरक एव । प्रज्ञाद्यण् ।) नरकः । (नरके भवः । “तत्र भवः ।” ४ । ३ । ५३ । इत्यण् ।) नरकस्थप्राणिनि, त्रि । इत्यमरः । १ । ९ । १ ॥ (यथा, मार्कण्डेये । १५ । ७३ ।
“अनुकम्पामिमामद्य नारकेष्विह कुर्व्वतः ।
तदेव शतसाहस्रं संख्यामुपगतं तव ॥”)

**नारकी**, [न्] त्रि, (नरको भोग्यतया अस्त्यस्येति । नरक + इनिः ।) नरकस्थः । यथा, --
“परेण विहितं कर्म्म स्वकर्म्मेति वदेच्च यः ।
स उच्यते ब्रह्मघाती महानारकिनारकी ॥”
इति बृहद्धर्म्मपुराणे उत्तरखण्डे ७८ अध्यायः ॥

**नारकीटः**, पुं, अश्मकीटः । (नारेषु नरसमूहेषु कीट इव घृणार्हत्वात् ।) स्वदत्ताशाविहन्ता । इति मेदिनी । टे, ६३ ॥

संलीना स्वेषु गात्रेषु मूकीकृतविभूषणा ।
अवगुण्ठनसंवीता कुलजाऽभिसरेत् यदि ॥
विचित्रोज्ज्वलवेशा तु बलन्नूपुरनिस्वना ।
प्रमोदस्मेरवदना स्याद् वेश्याऽभिसरेत् यदि ॥
मदस्खलितसंलापा विभ्रमत्फुल्ललोचना ।
आविद्धगतिसञ्चारा स्यात् प्रेष्याभिसरेद् यदि ॥ *
प्रसङ्गादभिसारस्थानानि कथ्यन्ते ।
क्षेत्रं वाटी भग्नदेवालयो दूतीगृहं वनम् ।
मालयञ्च श्मशानञ्च नद्यादीनां तटी तथा ॥

**नारङ्गं**, क्ली, (नृणातीति । नॄ नये + बाहुलकात्

अङ्गच् धातोर्वृद्धिश्च ।
इत्युज्जलदत्तः । १ । १२१ ।)
गर्जरम् । इति राजनिर्घण्टः ॥

**नारङ्गः**, पुं, (नॄ नये + अङ्गच् । वृद्धिश्च ।) पिप्पली-

रसः । यमजप्राणी । विटः । इति मेदिनी । मे,
३९ ॥ फलवृक्षविशेषः । नारङ्गी इति भाषा ॥
तत्पर्य्यायः । नागरङ्गः २ सुरङ्गः ३ त्वग्गन्धः ४
ऐरावतः ५ वक्त्रवासः ६ योगारङ्गः ७ योग-
रङ्गः ८ सरङ्गः ९ गन्धाढ्यः १० गन्धपत्रः ११

वरिष्ठः १२ । अस्य गुणाः । मधुरत्वम् । अम्ल-
त्वम् । गुरुत्वम् । उष्णत्वम् । रोचनत्वम् ।
वातामकृमिशूलश्रमनाशित्वम् । बल्यत्वम् । रुच्य-
त्वञ्च । इति राजनिर्घण्टः ॥
तत्केशरगुणाः ।
"अत्यम्लमीषन्मधुरं वृष्यं वातविनाशनम् ।
रुच्यं वातहरञ्चैव नागरङ्गस्य केशरम् ॥"
इति राजवल्लभः ॥

**नारदः**, पुं, (नारं परमात्मविषयकं ज्ञानं ददा-
तीति । दा + कः । यद्वा, नारं नरसमूहं द्यति
खण्डयति कलहेनेति । दो + कः । नारं जलं
ददाति पितृभ्य इति वा । तदुक्तम्, --
"नारं पानीयमित्युक्तं तत् पितृभ्यः सदा भवान् ।
ददाति तेन ते नाम नारदेति भविष्यति ॥")
देवर्षिविशेषः । स तु भोगाशी ब्रह्मशापादुप-
वर्हणनामा गन्धर्व्वो भूत्वा पुनर्ब्रह्मवीर्य्यात् शूद्र-
पत्न्यां जातः । यथा, --
शौनक उवाच ।
"ब्रह्मवीर्य्याच्छूद्रपत्न्यां गन्धर्व्वश्चोपवर्हणः ।
जातः केन प्रकारेण तद्भवान् वक्तुमर्हति ॥
सौतिरुवाच ।
कान्यकुब्जे च देशे च द्रुमिलो गोपराजकः ।
कलावती तस्य पत्नी बन्ध्या चापि पतिव्रता ॥
स्वामिदोषेण सा बन्ध्या काले च भर्त्तुराज्ञया ।
महाज्ञानी शिशुस्तस्थौ गङ्गातीरे मनोहरे ।
तत्र स्नात्वा विप्रदत्तं विष्णुमन्त्रं जजाप सः ॥
दिव्यं वर्षसहस्रञ्च निराहारः कृशोदरः ।
ददर्श बालको ध्याने दिव्यं लोकञ्च बालकम् ॥
द्विभुजं मुरलीहस्तञ्चन्दनेन विचर्च्चितम् ।
विरराम च शोकार्त्तो यदा यद्द्रष्टुमक्षमः ॥
रुरोदाश्वत्थमूले च न दृष्ट्वा बालकं शिशुः ।
बभूवाकाशवाणीति रुदन्तं बालकं प्रति ॥
सकृद्यद्दर्शितं रूपं तदेव नाधुना पुनः ।
पुनर्द्रक्षसि गोविन्दं जन्ममृत्युहरं हरिम् ॥
इति श्रुत्वा बालकश्च विरराम मुदान्वितः ।
काले तत्याज तीर्थे च तनुं कृष्णं हृदि स्मरन् ॥
बभूव शापमुक्तिश्च नारदस्य महामुने ! ।
तनुं त्यक्त्वा स जीवश्च विलीनो ब्रह्मविग्रहे ॥
कतिकल्पान्तरेऽतीते स्रष्टुं सृष्टिविधौ पुनः ।
मरीचिमिश्रैर्मुनिभिः सार्द्धं कण्टाद्बभूव सः ॥
नारदश्चेति विख्यातो मुनीन्द्रस्तेन हेतुना ॥"
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे २१ -- २२ अध्यायौ ॥
तस्य सर्व्वदा भ्रमणकारणं यथा, --
"तांश्चापि नष्टान् विज्ञाय पुत्त्रान् दक्षप्रजापतिः ।
क्रोधञ्चक्रे महाभाग ! नारदं स शशाप च ॥"
नारदशापश्च श्रीभागवतोक्तः ।
"तस्माल्लोकेषु ते मूढ न भवेद्भ्रमतः पदम् ।"
इति विष्णुपुराणे १ अंशे १५ अध्याय-
नालः ३ । इति शब्दरत्नावली ॥ (यथा,
बृहत्शार्ङ्गधरे ।
"सर्व्वलौहास्तु ये बाणा नाराचास्ते प्रकीर्त्तिताः ।
पञ्चभिः पृथुलैः पक्षैर्युक्ताः सिध्यन्ति कस्य-
चित् ॥")
दुर्द्दिनम् । इति शब्दमाला ॥ (अष्टादशाक्षर-
वृत्तिविशेषः । इति छन्दोमञ्जरी ॥ अस्य लक्ष-
णादिकं छन्दःशब्दे द्रष्टव्यम् ॥ वैद्यकोक्तघृत-
विशेषः । यथा, भावप्रकाशे उदररोगाधिकारे ।
"स्नुक्क्षीरदन्तीत्रिफलाविडङ्ग
सिंहीत्रिवृच्चित्रकसूर्य्यकल्कैः ।
घृतं विपक्वं कुडवप्रमाणं
तोयेन तस्याक्षसमेन कर्षम् ॥
पीतोष्णमम्भोऽनुपिबेद्विरेफे
पेयं रसं वा प्रपिबेद्विधिज्ञः ।
नाराचमेनं जठरामयाना-
मुक्तं प्रयुक्तं प्रवदन्ति सन्तः ॥"
इति नाराचघृतम् ॥ * ॥)

**नाराचिका**, स्त्री, (नाराचस्तदाकारोऽस्त्यस्या
इति । नाराच + ठन् । टाप् ।) नाराची ।
इति शब्दरत्नावली ॥ (अष्टाक्षरवृत्तिविशेषः ।
तल्लक्षणं यथा, --
"नाराचिका तरौ लगौ ॥")

**नाराची**, स्त्री, (नाराचवदाकृतिरस्त्यस्या इति ।
अच् । गौरादित्वात् ङीष् ।) स्वर्णकारादीनां
नाराचाकृतिलौहतुला । निक्ति इति भाषा ।
तत्पर्य्यायः । नाराचिका २ एषणिका ३ एषणी
४ । इति शब्दरत्नावली ॥

**नारायणः**, पुं, (नारा जलं अयनं स्थानं यस्य ।
अय गतौ + भावे ल्युट् । सर्व्वे गत्यर्थाः प्राप्त्य-
र्थाश्च इति नियमात् नारस्य ज्ञानस्य मुक्तेर्वा
अयनं प्राप्तिर्यस्मात् इति वा । "नराणां समूहो

उपस्थितं वने घोरे नारदं काश्यपं मुनिम्
॥
क्रोशमानञ्च श्रीकृष्णं ज्वलन्तं
ब्रह्मवर्च्चसा ।
तस्थौ सुवेशं कृत्वा सा ध्यानान्तञ्च मुनेः
पुरः ॥
उवाच विनयेनैव कृत्वा च श्रीहरिं हृदि ।
गोपिकाहं द्विजश्रेष्ठ ! द्रुमिलस्य च
कामिनी ।
पुत्त्रार्थिनी चागताहं तन्मूलं भर्त्तुराज्ञया
॥
वीर्य्याधानं कुरु मयि ! स्त्री नोपेक्ष्या
ह्युपस्थिता ।
तेजीयसां न दोषाय वह्नेः सर्व्वभुजो यथा
॥
वृषलीवचनं श्रुत्वा चुकोप मुनिपुङ्गवः ।
वृषली तत्पुरस्तस्थौ
शुष्ककण्ठौष्ठतालुका ॥
एतस्मिन्नन्तरे तेन पथा यास्यति मेनका
।
तस्या ऊरुस्थलं दृष्ट्वा मुनिवीर्य्यं पपात
ह ॥
ऋतुस्नाता च वृषली कृत्वा तद्भक्षणं मुदा
।
सा विप्र ! गेहे साध्वी च सुषुवे तनयं
वरम् ॥
तप्तकाञ्चनवर्णाभं ज्वलन्तं ब्रह्मतेजसा ।
अनावृष्ट्यवशेषे च काले बालो बभुव ह
॥
नारं ददौ जन्मकाले तेनायं नारदाभिधः
॥
ददाति नारं ज्ञानञ्च बालकेभ्यश्च
बालकः ।
जातिस्मरो महाज्ञानी तेनायं नारदाभिधः
॥
वीर्य्येण नारदस्यैव बभूव बालको मुने ! ।
मुनीन्द्रस्य वरेणैव तेनायं नारदाभिधः ॥
कल्पान्तरे ब्रह्मकण्ठाद्बभूवुर्ब्बहवो नराः ।
नरान्ददौ तत्कण्ठञ्च तेन तन्नारदः स्मृतः
॥

स्तट्टीका च ॥
(पञ्चविंशतिसहस्रश्लोकात्मक
उपपुराणविशेषः । यथा, देवीभागवते । १
।
३ । ९ ।
“षोडशैव सहस्राणि पुराणञ्चाग्निसंज्ञितम्
।
पञ्चविंशतिसाहस्रं नारदं परमं मतम् ॥”
शाकद्बीपस्य पर्व्वतविशेषः । यथा,
मात्स्ये ।
१२१ । ११ ।
“नारदो नाम चैवोक्तो दुर्गशैलो महाचितः
।
तत्राचले समुत्पन्नौ पूर्ब्बं नारदपर्व्वतौ ॥”
विश्वामित्रपुत्त्रविशेषः । यथा, महाभारते
।
१३ । ४ । ५८ ।
“उर्ज्जयोनिरुदापेक्षी नारदश्च महानृषिः
।
विश्वामित्रात्मजाः सर्व्वे मुनयो
ब्रह्मवादिनः ॥”)

**नारा;** स्त्री, (नरस्य मुनेरियम् । नर + “तस्ये-
दम् ।” ४ । ३ । १२० । इति अण् ।
ततष्टाप् ।
“यद्यपि अणि कृते ङीप्प्रत्ययः
प्राप्तस्तथापि
छान्दसलक्षणैरपि स्मृतिषु व्यवहारात्
सर्व्वे
विधयश्छन्दसि विकल्पन्ते इति पाक्षिको
ङीप्
प्रत्ययः । तस्याभावपक्षे
सामान्यलक्षणप्राप्ते
टापि कृते नारा इति रूपसिद्धिः ।” इति
मनु-
संहिताटीकायां कुल्लूकभट्टः । १ । १० ।)
जलम् ।
इति शब्दरत्नावली ॥ (यथा, मनुः । १ ।
१० ।
“आपो नारा इति प्रोक्ता आपो वै
नरसूनवः ।
नारं तत्रायनं स्थानं यस्य नारायणः रेफात्
परनकारस्य णत्वविधानात् सर्व्वप्राणिबुद्धि-
गुहानिवासाच्छुद्धचैतन्यमित्यर्थः ।” इति
शङ्कर-
विजये नवमप्रकरणम् ।) विष्णुः । तस्य
चत्वारो
व्यूहाः । वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाख्याः
।
इति महाभारतम् ॥ वेदान्तमते । शुद्धान्त-
र्य्यामिसूत्रविराडाख्याः ॥ तन्नामव्युत्पत्तिर्यथा,
--
“सारूप्यमुक्तिवचनो नारेति च विदुर्बुधाः ।
यो देवोऽप्ययनं तस्य स च नारायणः स्मृतः
॥
नाराश्च कृतपापाश्चाप्ययनं गमनं स्मृतम् ।
यतो हि गमनं तेषां सोऽयं नारायणः स्मृतः ॥
नारञ्च मोक्षणं पुण्यमयनं ज्ञानमीप्सितम् ।
तयोर्ज्ञानं भवेद्यस्मात् सोऽयं नारायणः स्मृतः
॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १०९ अः
॥
“आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्ब्बं तेन नारायणः स्मृतः
॥”
इति विष्णुपुराणम् ॥
यद्वा ।
“नाराजातानि तत्त्वानि नाराणीति विदुबुधाः ।
तान्येव चायनं तस्य तेन नारायणः स्मृतः ॥”

ततो बभूव कालश्च नारदात्
कण्ठदेशतः ।
ततो ब्रह्मा नाम चक्रे नारदश्चेति मङ्गलम्
॥
एतस्मिन्नन्तरे विप्रा आययुर्व्विप्र मन्दिरम्
।
शिशवः पञ्चवर्षीया महातेजस्विनो यथा
॥
चतुर्ष्वेको मुनिस्तस्मै ब्राह्मणाश्च
कृपालवः ।
ब्रह्मपुत्त्रं शिशुं ज्ञात्वा विष्णुमन्त्रं ददौ
मुदा ॥

ता यदस्यायनं पूर्ब्बं तेन नारायणः स्मृतः
॥”)

**नाराचः**, पुं, (नारं नरसमूहं आचामतीति ।

चमु अदने + “अन्येष्वपि दृश्यते ।” ३ ।
२ । १०१ ।
इति डः ।) समुदायलौहमयबाणः ।
तत्पर्य्यायः ।
प्रक्ष्वेडनः २ । इत्यमरः । २ । ८ । ८७
॥ लोह-

तथा ।
“यच्च किञ्चिज्जगत् सर्व्वं दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत् सर्व्वं व्याप्य नारायणः स्थितः ॥”
तथा ।
“प्रकृतेः पर एवान्यः स नरः पञ्चविंशकः ।
तस्येमानि च भूतानि नाराणीति प्रचक्षते ॥
तेषामप्ययनं यस्मात्तस्मान्नारायणः स्मृतः ॥”
क्वचिन्मन्वन्तरे नरनामऋषेरपत्यतां गतः इति
नारायणः ॥ इत्यमरटीकायां भरतः ॥ * ॥
(“नराणामयनाच्चापि ततो नारायणः स्मृतः ॥”
इति महाभारते । ५ । ७० । १० ॥)
अस्य स्वरूपो यथा, --
“श्रीकृष्णश्च द्विधारूपो द्विभुजश्च चतुर्भुजः ।
चतुर्भुजश्च वैकुण्ठे गोलोके द्विभुजः स्वयम् ॥
चतुर्भुजस्य पत्नी च महालक्ष्मीः सरस्वती ।
गङ्गा च तुलसी चैव देवी नारायणप्रिया ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ६४ अध्यायः ॥
तस्य ध्यानं यथा, --
“ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् कनककुण्डणवान् किरिटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥”
इत्यादित्यहृदयम् ॥
अपि च ।
“शङ्खचक्रगदापद्मधरं कमललोचनम् ।
मिष्टं वस्तु समासाद्य दत्त्वा मे योऽत्ति मानवः ।
मानापमानसदृशस्तस्य तुष्टोऽस्म्यहं सदा ॥
सर्व्वभूतशरीरस्थं यो मां जानाति मानवः ।
परहिंसाविहीनो यस्तस्य तुष्टोऽस्म्यहं सदा ॥
कर्म्माणि कुरुते यस्तु सुविचार्य्य पुनः पुनः ।
गोब्राह्मणहितैषी च तस्य तुष्टोस्म्यहं सदा ॥
स्वयं निरुक्तं वचनं यत्नाद् यः परिपालयेत् ।
प्रपन्नं पाति यत्नाद्यस्तस्य तुष्टोस्म्यहं सदा ॥
दानान्यनुपकारिभ्यो यो ददाति द्विजोत्तम ! ।
मयि चित्तं सदा यस्य तस्य तुष्टोऽस्म्यहं सदा ॥
कर्म्मणा येन तुष्टोऽस्मि निरुक्तं तत् समासतः ॥”
तस्य रोषजनककर्म्माणि यथा, --
“रुष्टोऽस्मि कर्म्मणा येन विप्र ! वच्मि शृणुष्व तत् ॥
परहिंसारतो यस्तु निर्द्दयः सर्व्वजन्तुषु ।
अहंयुः सर्व्वदा क्रुद्धः स मां नयति शत्रुताम् ॥
असत्यभाषी क्रूरश्च परनिन्दापरस्तु यः ।
परवर्त्तनविध्वंसी स मां नयति शत्रुताम् ॥
अदृष्टदोषौ पितरौ स्त्रीभ्रातृभगिनीस्तथा ।
मोहात्त्यजति मूढो यः स मां नयति शत्रुताम् ॥
अजामिलपुत्त्रः । यथा, --
“कान्यकुब्जे द्विजः कश्चिद्दासीपतिरजामिलः ।
नाम्ना नष्टसदाचारो दास्याः संसर्गदूषितः ॥
तस्य प्रवयसः पुत्त्रा दश तेषान्तु योऽवमः ।
बालो नारायणो नाम्ना पित्रोश्च दयितो भृशम् ॥
दूरे क्रीडनकासक्तं पुत्त्रं नारायणाह्वयम् ।
प्लावितेन स्वरेणोच्चैराजुहावाकुलेन्द्रियः ॥
निशम्य म्रियमाणस्य मुखतो हरिकीर्त्तनम् ।
भर्त्तुर्नाम महाराज ! पार्श्वदाः सहसापतन् ॥
विकर्षतोऽन्तर्हृदयाद्दासीपतिमजामिलम् ।
यमप्रेष्यान् विष्णुदूता वारयामासुरोजसा ॥”
इति श्रीभागवते षष्ठस्कन्धे प्रथमाध्यायः ॥
सैन्यविशेषः । यथा, --
“मत्संहननतुल्यानां गोपानामर्व्वुदं महत् ।
नारायणा इति ख्याताः सर्व्वे संग्रामयोधिनः ॥”
“दुर्य्योधनश्च तत् सैन्यं सर्व्वमावारयत्ततः ।
सहस्राणां सहस्रञ्च योधानां प्राप्य भारत ! ॥”
इति महाभारते । ५ । ७ अध्यायः ॥
धर्म्मपुत्त्रर्षिविशेषः । यथा, --
“धर्म्मस्य दक्षदुहितर्य्यजनिष्ट मूर्त्त्यां
नारायणो नर इति स्वतपःप्रभावः ॥”
इति श्रीभागवते । २ । ७ । ६ ॥
“दण्डग्रहणमात्रेण नरो नारायणो भवेत् ॥”
इति यतिधर्म्मः ॥
(कृष्णयजुर्व्वेदान्तर्गतोपनिषद्विशेषः । यथा, मुक्तिकोपनिषदि ।
“गर्भो नारायणो हंसो बिन्दुर्नादशिरःशिखा ॥”
चूर्णौषधिविशेषः । यथा, भावप्रकाशे उदर-रोगाधिकारे ।
“यवानी हपुषा धान्यं त्रिफला चोपकुञ्चिका ।
कारवी पिप्पलीमूलमजगन्धा शटी वचा ॥
शताह्वा जीरको व्योषं स्वर्णक्षीरी च चित्रकम् ।
द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपञ्चकम् ॥
विडङ्गञ्च समांसानि दण्ड्या भागत्रयं भवेत् ।
त्रिवृद्विशाले द्विगुणे सातला स्याच्चतुर्गुणा ॥
एष नारायणो नाम्ना चूर्णो रोग गणापहः ।
एनं प्राप्य निवर्त्तन्ते रोगा विष्णुमिवासुराः ॥
तक्रेणोदरभिः पेयो गुल्मिभिर्व्वादराम्बुना ।
आनद्धवाते सुरया वातरोगे प्रसन्नया ॥

शुद्धस्फटिकसङ्काशं
क्वचिन्नीलाम्बुजच्छविम् ॥
गरुडोपरिशुक्लाब्जपद्मासनगतंहरिम् ।
श्रीवत्सवक्षसं शान्तं वनमालाधरं परम् ॥
केयूरकुण्डलधरं किरीटमुकुटोज्ज्वलम् ।
निराकारं ज्ञानगम्यं साकारं देहधारिणम्
॥
नित्यानन्दं निरानन्दं
सूर्य्यमण्डलमध्यगम् ।
मन्त्रेणानेन देवेशं विष्णुं भज शुभानने !
॥"
इति कालिकापुराणे २२ अध्यायः ॥
तन्नाममाहात्म्यं यथा, --
"नारायणाच्युतानन्तवासुदेवेति यो नरः
।
सततं कीर्त्तयेत् भूमे ! याति मल्लयतां
प्रिये ! ॥"
इति वराहपुराणम् ॥
"सकृन्नारायणेत्युक्त्वा पुमान्
कल्पशतत्रयम् ।
गङ्गादिसर्व्वतीर्थेषु स्नातो भवति
निश्चितम् ॥"
इति श्रीकृष्णजन्मखण्डे १०९ अध्यायः
॥
"नारायणेति शब्दोऽस्ति वागस्ति
वशवर्त्तिनी ।
तथापि नरके मूढाः पतन्तीह किमद्भुतम्
॥"
इति महाभारतम् ॥
तस्य तुष्टिजनककर्म्माणि यथा, --
श्रीकृष्ण उवाच ।
"कर्म्मणा येन विप्रेन्द्र ! तुष्टिर्म्मे हृदि
जायते ।
क्रोधश्च तत् समस्तं ते कथयामि
समासतः ॥
यो दयालुर्द्विजश्रेष्ट ! सर्व्वभूतेषु सर्व्वदा ।
अहङ्कारेण हीनश्च तस्य तुष्टोऽस्म्यहं
सदा ॥
कर्म्म कुर्य्यान्मदर्थं यो धर्म्मं
भक्तिसमन्वितः ।
पितृनिर्भर्त्सनं यस्तु कुरुते
मूढधीर्नरः ।
गुर्व्वज्ञाञ्च विप्रेन्द्र ! स मां नयति
शत्रुताम् ॥
दम्पत्योर्भेदनं यस्तु हेतुमात्रेण
केनचित् ।
कुरुते ब्राह्मणश्रेष्ठ ! स मां नयति
शत्रुताम् ॥
विप्रस्वं देवताद्रव्यं परद्रव्यञ्च
मानवः ।
हरते यस्तु विप्रेन्द्र ! स मां नयति
शत्रुताम् ।
आरामच्छेदिनो ये च
जलाशयविलोपिनः ।
ग्रामनाशकरा ये च तेषां
रुष्टोऽस्म्यहं सदा ॥
परस्त्रियं समालोक्य विषादं यान्ति
ये जनाः ।
शृण्वन्ति पापचर्च्चां ये तेषां
रुष्टोऽस्म्यहं सदा ॥
द्विषन्त्यनाथं ये मूढा अनाथस्वं
हरन्ति ये ।
विश्वासघातिनो ये च तेषां
रुष्टोऽस्म्यहं सदा ॥
ये च गोवीर्य्यहन्तारो
वृषलीपतयश्च ये ।
अश्वत्थघातिनो ये च तेषां
रुष्टोऽस्म्यहं सदा ॥
ब्रह्मविष्णुमहेशानां मध्ये ये
भेदकारिणः ।
वेदनिन्दाकरा ये च तेषां
रुष्टोऽस्म्यहं सदा ॥
एकादश्यां भुञ्जते ये मोहात्
पापधियो नराः ।
परदारानुरक्ता ये तेषां रुष्टोऽस्म्यहं
सदा ॥
पापबुद्धिप्रदा ये च ये च मित्रद्रुहो
द्विज ! ।
धात्रीतरुञ्च ये घ्नन्ति तेषां
रुष्टोऽस्म्यहं सदा ॥
दधिमण्डेन विड्बन्धे दाडिमाम्बुभिरर्शसे ।
परिकर्त्तेषु वृक्षाम्लैरुष्णाम्बुभिरजीर्णके ॥
भगन्दरे पाण्डुरोगे कासे श्वासे गलग्रहे ।
हृद्रोगे ग्रहणीरोगे कुष्ठे मन्देऽनले ज्वरे ॥
दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे ।
यथार्हं स्निग्धकोष्णेन पेयमेतद्विरेचनम् ॥")

**नारायणक्षेत्रं**, क्ली, (नारायणस्य क्षेत्रं स्थानम् ।)

गङ्गाप्रवाहावधिहस्तचतुष्टयमितनारायणस्वा
मिकस्थानम् । यथा, ब्रह्मपुराणे ।
"प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् ।
अत्र नारायणः स्वामी नान्यः स्वामी कदाचन ॥"
"अत्र किञ्चिन्न दद्याच्च साक्षात् पात्राय पुण्य-
वान् ।

| | | |
|---|---|---|
| व्रते यथार्थं पृच्छन्तं तस्य तुष्टोऽस्म्यहं सदा ॥ | दिवसे मैथुनं ये च कुर्व्वते काममोहिताः ।<br>रजस्वलां स्त्रियं यान्ति तेषां रुष्टोऽस्म्यहं सदा ॥<br>ये च दृष्ट्वातुरां नारीं मोहाद्गच्छन्ति सत्तम ! ।<br>व्रतख्याञ्च सदा ते मां नयन्ति शत्रुतां भुवि ॥<br>अमावास्यातिथौ ये च कुर्व्वते निशिभोजनम् ।<br>भोजनद्वयमेकार्के तेषां रुष्टोऽस्म्यहं सदा ॥<br>आमिषं मैथुनं तैलममावास्यादिने द्विजाः ।<br>न ये त्यजन्ति विप्रेन्द्र ! तेषां रुष्टोऽस्म्यहं सदा ॥<br>बहुनात्र किमुक्तेन संक्षेपात्ते वदाम्यहम् ।<br>निन्दन्ति वैष्णवान् ये च तेषां रुष्टोऽस्म्यहं<br>सदा ॥”<br>इति क्रियायोगसारे १८ अध्यायः ॥ | |

अत्र प्रतिग्रहे राजन्! विक्रीता जाह्नवी भवेत् ॥
विक्रीतायाञ्च जाह्नव्यां विक्रीतोऽभूज्जनार्द्दनः ।
जनार्द्दने च विक्रीते विक्रीतं भुवनत्रयम् ॥
कोऽपि न त्राणकर्त्तास्य निःसम्बन्धप्रसङ्गतः ॥”
तत्र कर्त्तव्यानि यथा, --
“दीक्षाञ्च देवपूजाञ्च जपं गङ्गातटे चरेत् ।
शुष्कवासः पिधायापि सावित्रीजपमाचरेत् ॥
श्राद्धञ्च तर्पणञ्चैव परोपकारकर्म्म च ।
परोद्देशञ्च मनसा त्यक्तद्रव्यस्य दापने ।
स्तवपाठञ्च मौनञ्च नीचालापविवर्ज्जनम् ॥
केवलं वारिपानञ्च कर्त्तव्यं ब्रह्मभावतः ।
एतानि किल कर्म्माणि क्षेत्रे नारायणे चरेत् ॥”
इति बृहद्धर्म्मपुराणे ४५ अध्यायः ॥
अवशिष्टं गङ्गाशब्दे द्रष्टव्यम् ॥

**नारायणतैलं**, क्ली, (नारायणाख्यं तैलम् ।) औषध-

पक्वतैलप्रभेदः । तत्त्रिविधम् । स्वल्पं बृहत्
महच्च । यथा, --
“विल्वाग्निमन्थश्योनाकपाटलापारिभद्रकाः।
प्रसारण्यश्वगन्धा च बृहती कण्टकारिका ॥
बला चातिबला चैव श्वदंष्ट्रा सपुनर्नवा ।
एषां दशपलान् भागान् चतुर्द्रोणेऽम्भसः पचेत् ॥
पादशेषं परिस्राव्य तैलपात्रं प्रदापयेत् ।
शतपुष्पा देवदारु मांसी शैलेयकं वचा ॥
चन्दनं तगतं कुष्ठं एलापर्णी चतुष्टयम् ।
रास्ना तुरगगन्धा च सैन्धवं सपुनर्नवम् ॥
एषां द्विपलिकान् भागान् पेषयित्वा विनिः-
क्षिपेत् ।
शतावरी रसञ्चैव तैलतुल्यं प्रदापयेत् ॥
आजं वा यदि वा गव्यं क्षीरं दत्ता चतुर्गुणम् ॥
पाने वस्तौ तथाभ्यङ्गे भोज्ये चैव प्रशस्यते ।
अश्वो वा वातसंभग्नो गजो वा यदि वा नरः ॥
पङ्गुलः पीठसर्पी च तैलेनानेन सिध्यति ।
अधोभागे च ये वाताः शिरोमध्यगताश्च ये ।
दन्तशूले हनुस्तम्भे मन्यास्तम्भे गलग्रहे ॥
यस्य शुष्यति चैकाङ्गं गतिर्यस्य च विह्वला ।
क्षीणेन्द्रिया नष्टशुक्रा ज्वरक्षीणाश्च ये नराः ॥
वधिरा लल्लजिह्वाश्च मन्दमेधस एव च ।
अल्पप्रजा च या नारी या च गर्भं न विन्दति ॥
वातार्त्तौ वृषणौ येषामन्त्रवृद्धिश्च दारुणा ।
अश्वानां वातभग्नानां कुञ्जराणां तथा
नृणाम् ।
तैलमेतत् प्रयोक्तव्यं सर्व्ववातनिवारणम्
॥
आयुष्मांश्च नरः पीत्वा निश्चयेन दृढो
भवेत् ।
गर्भमश्वतरी विन्द्यात् किं पुनर्मानुषी
तथा ॥
हृच्छूलं पार्श्वशूलञ्च तथैवार्द्धावभेदकम्
।
अपचीं गण्डमालाञ्च वातरक्तं हनुग्रहम्
॥
कामलां पाण्डुरोगञ्च अश्मरीञ्चापि
नाशयेत् ।
तैलमेतद्भगवता विष्णुना परिकीर्त्तितम्
।
नारायणमिति ख्यातं वातान्तकरणं
शुभम् ॥”
इति बृहन्नारायणतैलम् ॥ २ ॥ * ॥
“विल्वाश्वगन्धा बृहती श्वदंष्ट्रा
श्योनाकवाट्यालकपारिभद्रम्।
क्षुद्रा कठिन्यातिबलाग्निमन्थं
मूलानि चैषां सरलीयुतानाम् ॥
मूलं विदद्यादथ पाटलीनां
प्रत्येकमेषां प्रवदन्ति तज्ज्ञाः ।
सपादप्रस्थं विधिनोद्धृताञ्च
द्रोणैरपामष्टभिरेव पक्त्वा ॥
पादावशेषेण रसेन तेन
तैलाढकाभ्यां सममेव दुग्धम् ।
छागस्य मांसद्रवमेव तुल्य-
मेकत्र सम्यग्विवचेत् सुबुद्धिः ॥
दद्याद्रसञ्चैव शतावरीणां
तैलेन तुल्यं पुनरेव तत्र ।
रास्नाश्वगन्धा द्रुमदारु कुष्ठं
पर्णी चतुष्कागुरुकेशराणि ॥
सिन्धूत्थमांसी रजनीद्वयञ्च
शैलेयकं चन्दनपुष्कराणि ।
एला सयष्टी तगराब्दपत्रं
भृङ्गाष्टवर्गास्तु वचा पलाशम् ॥
प्राप्नोति लक्ष्मीं प्रमदाप्रियत्वं
जीवेच्चिरं चापि भवेद्युवेव ॥
देवासुरे युद्धवरे समीक्ष्य
स्नाय्वस्थिभग्नानसुरैः सुरांश्च ।
नारायणेनापि स्वबृंहणार्थं
स्वनामतैलं विहितन्तु तेषाम् ॥”
इति महानारायणतैलम् ॥ ३ ॥ इति
सुखबोधः ॥

**नारायणप्रियः**, पुं, (नारायणस्य प्रियः ।
नारायणः

प्रियो यस्य इति वा ।) शिवः । यथा, --
“नारायणप्रियमनङ्गमदापहारं
वाराणसीपुरपतिं भज विश्वनाथम् ॥”
इति शिवस्त्रोत्रम् ॥

**नारायणबलिः**, पुं, (नारायणाय नारायणमुद्दिश्य

देयो बलिः ।) मृतपतितादीनां
प्रायश्चित्ता-
त्मककर्म्मविशेषः । यथा ।
“नारायणबलिस्तु
हेमाद्र्याद्यनुसारेणोच्यते । तत्रादौ
क्रियानिबन्धे
गारुडे तर्पणमुक्तम् ।
‘कार्य्यं पुरुषसूक्तेन मन्त्रैर्व्वा वैष्णवैरपि
।
दक्षिणाभिमुखो भूत्वा प्रेतं विष्णुमिति
स्मरन् ॥
अनादिनिधनो देवः शङ्खचक्रगदाधरः ।
अक्षयः पुण्डरीकाक्षः प्रेतमोक्षप्रदो भव
॥’
इति शुक्लैकादश्यां देशकालौ सङ्कीर्त्त्य
अमुक-
गोत्रस्यामुकस्य
दुर्म्मरणात्मघातजदोषनाशार्थं
औद्र्ध्वदेहिके
संप्रदानत्वयोग्यतासिद्ध्यर्थंनारा-
यणबलिं करिष्ये । इति सङ्कल्प्य
ब्रह्माणं विष्णुं
शिवं यमं प्रेतं पञ्चकुम्भेषु स्थापयेत् ।

एतत्तैलवरं तेषां नाम्ना नारायणं स्मृतम् ॥”
इति स्वल्पनारायणतैलम् ॥ १ ॥ * ॥
“शतावरी चांशुमती पृश्निपर्णी शटी बला ।
एरण्डस्य च मूलानि बृहत्योः पूतिकस्य च ॥
गवेधुकस्य मूलानि तथा सहचरस्य च ।
एषां दशपलान् भागान् जलद्रोणे विपाचयेत् ॥
पादशेषे रसे पूते गर्भं चैनं समावपेत् ।
पुनर्नवा वचा दारु शताह्वा नन्दनागुरु ॥
शैलेयं तगरं कुष्टं एला मांसी स्थिरा बला ।
अश्वाह्वा सैन्धवं रास्ना पलार्द्धानि च पेषयेत् ।
गव्याजपयसः प्रस्थौ द्वौ द्वावत्र प्रदापयेत् ॥
शतावरीरसप्रस्थं तैलप्रस्थं विपाचयेत् ।
अस्य तैलस्य सिद्धस्य शृणु वीर्य्यमतःपरम् ॥

स्थौणेयवृश्चीरकचोरकाख्य-
मेभिः समस्तैर्द्विपलप्रमाणैः ।
कर्पूरकाश्मीरमृगाण्डजानां
दद्यात् सुगन्धाय वदन्ति केचित् ॥
प्रस्वेददौर्गन्ध्यनिवारणार्थं
चूर्णीकृतानां द्विपलप्रमाणम् ।
आलोड्य सम्यग्विधिवद्विपक्वं
नारायणं नाम महच्च तैलम् ॥ * ॥
सर्व्वैः प्रकारैर्विधिवत् प्रयोज्य-
मश्वस्य पुंसां पवनार्द्दितानाम् ।
ये पङ्गवः पीठविसर्पणाश्च
एकाङ्गहीनार्द्दितवेपमानाः ।
वाधिर्य्यशुक्रक्षयपीडिताश्च
मन्याहनुस्तम्भशिरोगदार्त्ताः ।
मुक्ता नरास्ते बलवर्णयुक्ताः
संसेव्य तैलं सहसा भवन्ति ॥
बन्ध्या च नारी लभते च पुत्त्रं
वीरोपमं सर्व्वगुणोपपन्नम् ।
शाखाश्रिते कोष्ठगते च वाते
वृद्धौ विधेयं पवनार्द्दितानाम् ॥
जिह्वानिले दन्तगते च शूले
औन्मादकौब्जे ज्वरकर्षितानाम् ।

‘विष्णुः स्वर्णमयः कार्य्यो
रुद्रस्ताम्रमयस्तथा ।
ब्रह्मा रौप्यमयस्तत्र यमो लौहमयो
भवेत् ॥
प्रेतो दर्भमयः कार्य्यः ।’ इति
गारुडोक्तासु सर्व्वासु
हैमीषु वा प्रतिमासु षोडशोपचारैः
पुरुष-
सूक्तेनाभ्यर्च्च्याग्निं प्रतिष्ठाप्य चरुं
पुरुषसूक्तेन
प्रत्यृचं नारायणायेदमिति हुत्वा
देवानामग्रे
दक्षिणाग्रदर्भेषु विष्णुरूपं प्रेतं स्मरन्
नाम-
गोत्राभ्यां मधुघृततिलयुतान्
दशपिण्डान् यज्ञो-
पवीत्येव अमुकगोत्र अमुकशर्म्मन् प्रेत
विष्णु-
रूपाय ते पिण्ड उपतिष्ठतामिति दत्त्वा
कुशैः
पुरुषसूक्तेनाभिमन्त्र्य यत्ते यममिति
सूक्तेन
पिण्डाननुमन्त्र्य शङ्खोदकेन
चाभिषिच्याभ्यर्च्च्या-
मुकशर्म्माणममुकगोत्रं विष्णुरूपं प्रेतं
तर्पया
मीति पुरुषसूक्तेन प्रत्यृचं तर्पयित्वा
एक-
मामान्नं ब्रह्मादिपञ्चभ्यो दद्यात् ।
मन्त्रस्तु ।
‘ब्रह्मविष्णुमहादेवा यमश्चैव सकिङ्करः
।
बलिं गृहीत्वा कुर्व्वन्तु प्रेतस्य च शुभां
गति-
मिति ॥’
मिताक्षरायान्तु होमबल्यादिना उक्तम् ।
ततः
प्रतिदैवतं त्रिविधं फलं
शर्करामधुगुडघृतानि
च निवेद्य पिण्डानभ्यर्च्च्य नद्यां क्षिप्त्वा
रात्रौ नव

| | | |
|---|---|---|
| | | सप्त पञ्च वा विप्रान्निमन्त्र्योपोषितेन जागरणं कृत्वा श्वोभूते पुनर्विष्णुं यमं संपूज्यैकोद्दिष्ट-विधिना श्राद्धपञ्चकं करिष्ये इत्युक्त्वा ब्रह्मविष्णु-शिवयमप्रेतान् स्मरन् विप्रान् उपविश्य प्रेत-स्थाने चैकं विष्णुं स्मरन् आवाहनाद्यर्घ्ययुतं |

तृप्तिप्रश्नान्तं कृत्वोल्लेखनादि कृत्वान्नशेषेण ब्रह्मणे विष्णवे शिवाय यमाय सपरिवाराय चतुरः पिण्डान् दत्त्वा प्रेतनामगोत्रे स्मृत्वा विष्णु-नाम्ना पञ्चमं दत्त्वाभ्यच्चर्य्याचान्तेभ्यो दक्षिणां दत्त्वैकं प्रेतं स्मृत्वा विशेषतः संतोष्य विप्रैः प्रेतायेदं तिलोदकमुपतिष्ठतामितिसतिलमुदकं दापयित्वा भुञ्जीतेति । अत्र विशेषान्तरं भट्ट-कृतान्त्येष्टिपद्धतौ ज्ञेयम् ॥ * ॥ सर्पहते तु वर्ष-पर्य्यन्तं पूर्ब्बे ह्येकभक्तपूर्ब्बं शुक्लपञ्चम्यामुपवासं नक्तं वा कृत्वा पिष्टमयं नागमनन्तवासुकिशङ्ख-पद्मकम्बलकर्क्कोटकाश्वतरधृतराष्ट्रशङ्खपालका-लियतक्षककपिलेति नामभिः प्रतिमासं संपूज्य पायसेन विप्रान् संभोज्य वत्सरान्ते हैमं नागं गाञ्च प्रत्यक्षाञ्च दत्त्वा नारायणबलिं कुर्य्यात् । मूलन्तु हेमाद्रौ ज्ञेयम् ॥ * ॥ बौधायनसूत्रे सर्पमृतानां नमोऽस्तु सर्पेभ्य इति तिस्र आहु-तीर्हुत्वोदके मृतानां समुद्राय वरुणाय हुत्वेति क्रियां कुर्य्यादिति शेषः । व्यासः ।

सौवर्णभारनिष्पन्नं नागं कृत्वा तथैव गाम् ।
व्यासाय दत्त्वा विधिवत् पितुरानृण्यमाप्तवान् ॥'

हेमाद्रौ भविष्ये ।

'पञ्चम्यां पन्नगं हैमं स्वर्णैनैकेन कारयेत् ।
क्षीराज्यपात्रमध्यस्थं पूज्यविप्राय दापयेत् ॥
प्रायश्चित्तमिदं प्रोक्तं नागदष्टस्य शम्भुनेति ॥'

अपरार्कस्मृत्यन्तरे ।

'तदैव शुध्यति प्रेतो नारायणबलौ कृते ।
यो ददाति क्रियापिण्डं तस्मै प्रेताय वै सुतः ।
तस्यैवाशौचमुद्दिष्टं त्र्यहमेव न संशयः ॥
विष्णुश्राद्धसमाप्तौ तु त्रयोदश्यां दिनत्रयम् ।
अशौचं पिण्डदः कुर्य्यान्न तु तद्बन्धुगोत्रजाः ॥
यस्य वै मृत्युकाले तु व्युच्छिन्ना सन्ततिर्भवेत् ।
स वसेन्नरके नित्यं पङ्कमग्नः करी यथा ॥'

इत्युपक्रम्य, --

'बलिं नारायणं कुर्य्यात्तस्योद्देशेन भक्तिमान् ॥'

इति गारुडोक्तेरपुत्रस्यापि पत्न्याद्यैः कार्य्य इत्युक्तं देवयाज्ञिकेन ।" इति निर्णयसिन्धौ ५ परिच्छेदः ॥

**नारायणास्त्रं**, क्ली, (नारायणस्यास्त्रम् ।) विष्णो-रस्त्रभेदः । तत्स्वरूपं यथा, देवीपुराणे ।

एकं गदां भ्रामयन्तं द्वितीयं दण्डमेव च ।
एकः शोभति कण्ठस्थैर्मणिभिस्त्वस्थिभिः परः ।
एकं पीताम्बरं तत्र द्वितीयं सर्पमेखलम् ॥
एवन्तौ स्पर्द्धिनावस्त्रौ रुद्रनारायणात्मकौ ।
अन्योन्यातिशयोपेतौ तदा लोकपितामहः ॥
उवाच शाम्यतामस्त्रे स्वस्वभावेन सुव्रते ।
एवन्ते ब्रह्मणा चोक्ते शान्तभावं प्रजग्मतुः ॥
तथा विष्णुहरौ ब्रह्मा वाक्यमेतदुवाच ह ।
उभौ हरिहरौ देवौ लोके ख्यातिं गमिष्यतः ॥"

इति वराहपुराणम् ॥

**नारायणी**, स्त्री, (नारायणस्येयमिति । नारायण + अण् + ङीप् ।) दुर्गा । (यथा, मार्कण्डेये । ९१ । ९ ।

"सर्व्वमङ्गलमङ्गल्ये शिवे सर्व्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि ! नमोऽस्तु ते ॥"

इयं सुपार्श्वाख्यपीठस्थाने एतम्मूर्त्या विराजते । यथा, देवीभागवते । ७ । ३० । ६६ ।

"नारायणी सुपार्श्वे तु त्रिकूटे रुद्रसुन्दरी ॥")

लक्ष्मीः । शतावरी । इति हेमचन्द्रः ॥ * ॥ तस्या निरुक्तिर्यथा, --

फलः ३० करकाम्भाः ३१ पयोधरः ३२ मत्-कुणः ३३ कौषिकफलः ३४ फलमुण्डः ३५ चटा-फलः ३६ मुण्डफलः ३७ विश्वामित्रप्रियः ३८ । इति शब्दरत्नावली ॥ नारकेरः ३९ सुभङ्गः ४० फलकेसरः ४१ । इति जटाधरः ॥ अस्य गुणाः । गुरुत्वम् । स्निग्धत्वम् । शीतत्वम् । पित्तनाशित्वञ्च ॥ * ॥ अर्द्धपक्वस्य तस्य गुणौ । तृषाशोषशमनत्वम् । दुर्ज्जरत्वञ्च ॥ * ॥ बाल-नारिकेलजलगुणाः । लघुत्वम् । शीतलत्वम् । रसपाके मधुरत्वम् । पित्तपीनसतृषास्रविदाह-भ्रान्तिशोषशमनत्वम् । सुखदायित्वञ्च ॥ * ॥ पक्वनारिकेलजलगुणाः । किञ्चित्पित्तकारित्वम् । रुचिदत्वम् । मधुरत्वम् । दीपनत्वम् । बल-करत्वम् । गुरुत्वम् । वृष्यत्वम् । वीर्य्यवर्द्धन-त्वञ्च । इति राजनिर्घण्टः ॥ * ॥

"नारिकेलफलं शीतं दुर्ज्जरं वस्तिशोधनम् ।
विष्टम्भि वृंहणं बल्यं वातपित्तास्रदाहनुत् ॥
विशेषतः कोमलनारिकेलं निहन्ति पित्तज्वरमूत्रदोषान् ।
तदेव जीर्णं गुरु पित्तकारि विदाहि विष्टम्भि मतं भिषग्भिः ॥
तस्याम्भः शीतलं हृद्यं दीपनं शुक्रलं लघु ।
पिपासापित्तजित् स्वादु वस्तिशुद्धिकरं परम् ॥"

तस्य मस्तिष्कगुणाः ।

"नारिकेलस्य तालस्य खर्ज्जूरस्य शिरांसि तु ।
कषायस्निग्धमधुरवृंहणानि गुरूणि च ॥"

इति भावप्रकाशः ॥ * ॥

"बालस्य नारिकेलस्य जलं प्रायो विरेचनम् ॥"

इति राजवल्लभः ॥ * ॥

कांस्यपात्रे तज्जलं मद्यतुल्यम् । यथा, --

"नारिकेलोदकं कांस्ये ताम्रपात्रे स्थितं मधु ।
गव्यञ्च ताम्रपात्रस्थं मद्यतुल्यं घृतं विना ॥"

इति कर्म्मलोचनम् ॥

**नारिकेलक्षीरी**, स्त्री, (नारिकेलोद्भवा क्षीरी ।) सितागव्याज्यसंयुक्तगोदुग्धपक्वसूक्ष्मीकृतनारि-केलखण्डम् । यथा, --

"तदा दानवनाथेन युक्तं नारायणं शरम् ।
शङ्खचक्रगदाहस्तं खड्गपृष्ठव्यवस्थितम् ॥"
अपि च ।
"ततो हरिहरं युद्धमभवद्रोमहर्षणम् ।
रुद्रः पाशुपतास्त्रेण विव्याध हरिमोजसा ॥
हरिर्नारायणास्त्रेण रुद्रं विव्याध कोपवान् ।
नारायणं पाशुपतमुभेऽस्त्रे व्योम्नि रोषिते ॥
पुयुधाते भृशं दिव्यं परस्परजिघांसया ।
दिव्यं वर्षसहस्रन्तु तयोर्युद्धमभूत्तदा ॥
तत्रैकं मुकुटोद्बद्धं मूर्द्धन्यजटजालकम् ।
एकं प्रध्मापयच्छङ्खमन्यं डमरुकं शुभम् ॥
एकं खड्गधरं तत्र तथान्यं दण्डधारिणम् ।
एकं कौस्तभभीमाङ्गमन्यं भूतिविभूतिकम् ॥

"यशसा तेजसा
रूपैर्नारायणसमा गुणैः ।
शक्तिर्नारायणस्येयं तेन
नारायणी स्मृता ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे
४५ अध्यायः ॥
अपि च ।
"नारायणार्द्धाङ्गभूता तेन
तुल्या च तेजसा ।
तदा तस्य शरीरस्था तेन
नारायणी स्मृता ॥"
इति तत्रैव श्रीकृष्णजन्मखण्डे
२७ अध्यायः ॥ * ॥
गङ्गा । यथा, तन्मन्त्रे ।
"गङ्गायै विश्व मुख्यायै
शिवामृतायै नारायण्यै
नमः ॥"
(यथा च काशीखण्डे । २९ ।
९७ ।
"नभोऽङ्गनचरी नूतिर्नम्या
नारायणी नुता ॥")
मुद्गलमुनिपत्नी । इति
पुराणम् ॥ (स्वनाम-
ख्याता श्रीकृष्णसम्बन्धिनी
सेना । इयं हि
भारतयुद्धे
दुर्य्योधनपक्षमाश्रितवती ॥)

**नारिकेरः**, पुं, (नारिकेलः + लस्य रः ।) नारि-

केलः । इति शब्दरत्नावली ॥

**नारिकेलः**, पुं, (किल श्वैत्ये क्रीडने च + भावे

घञ् । नार्य्या रमण्याः केल
इव सुखदायी
केलो यस्य । पृषोदरादित्वात्
ह्रस्वः ।) स्वनाम-
प्रसिद्धफलवृक्षविशेषः ।
तत्पर्य्यायः । लाङ्गली २ ।
इत्यमरः । २ । ४ । १६८ ॥
नारिकेरः ३ नाडि-

"नारिकेलं तनूकृत्य छिन्नं पयसि गोः क्षिपेत् ।
सितागव्याज्यसंयुक्तं तत्पचेन्मृदुनाग्निना ॥"
तस्या गुणाः ।
"नारिकेलोद्भवा क्षीरी स्निग्धा शीतातिपुष्टिदा ।
गुर्व्वी सुमधुरा वृष्या रक्तपित्तानिलापहा ॥"
इति भावप्रकाशः ॥

**नारी**, स्त्री, (नुर्नरस्य वा धर्म्म्या । नृ + "ऋतो-

ऽञ् ।" ४ । ४ । ४९ । इति अञ् । नर + "नरा-
च्चेति वक्तव्यम् ।" इति वार्त्तिकोक्त्या अञ् ।
"शार्ङ्गरवाद्यञो ङीन् ।" ४ । १ । ७३ । इति
ङीन् ।) नुर्नरस्य वा धर्म्माचारोऽस्याम् । नु-
र्नरस्य वेयम् । नरधर्म्माचारयुक्ता । तत्पर्य्यायः ॥
स्त्री २ योषित् ३ अबला ४ योषा ५ सीम-
न्तिनी ६ वधूः ७ प्रतीपदर्शिनी ८ वामा ९
वनिता १० महिला ११ । इत्यमरः । २ । ६ ।
२ ॥
प्रिया १२ रामा १३ जनिः १४ जनी १५

| | | |
|---|---|---|
| | केलः ४ नारीकेलः ५ नारीकेली ६ नारि-केरी ७ । इत्यादि भरतः । नारिकेलिः ८ सदापुष्पः ९ शिरःफलः १० । इति शब्दमाला ॥ नालिकेरः ११ रसफलः १२ सुतुङ्गः १३ कूर्च्च-शेखरः १४ दृढनीलः १५ नीलतरुः १६ मङ्गल्यः १७ उच्चतरुः १८ तृणराजः १९ स्कन्धतरुः २० दाक्षिणात्यः २१ दुरारुहः २२ त्र्यम्बकफलः २३ दृढफलः २४ । इति राजनिर्घण्टः ॥ कूर्च्च-शीर्षकः २५ तुङ्गः २६ स्कन्धफलः २७ उच्चः २८ सदाफलः २९ । इति भावप्रकाशः ॥ शिरा- | |

योषिता १६ जोषित् १७ जोषा १८
जोषिता
१९ धनिका २० महेलिका २१ महेला
२२ ।
इति शब्दरत्नावली ॥ शर्व्वरी २३
योषीत् २४
सिन्दूरतिलका २५ सुभ्रूः २६ । इति
जटाधरः ॥
अस्या उत्पत्तिकारणं यथा, --
“मातृरक्तोत्तरा नारी ।” अन्यच्च ।
“विषमायां तिथौ क्षिप्तं कुर्य्याद्बीजन्तु
कन्य-
काम् ॥”
इति सुखबोधः ॥
तस्याश्चतस्रो जातयः । यथा, --
“पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी
तथा ।
चतस्रो जातयो नार्य्या रतौ ज्ञेया
विशेषतः ॥”
इति रसमञ्जरी ॥
(आसां लक्षणादिकं यदुक्तं
रतिमञ्जर्य्याम् ।
४ -- १३ ।
“भवति कमलनेत्रा नासिका क्षुद्ररन्ध्रा
अविरलकुचयुग्मा चारुकेशी केशाङ्गी ।
मृदुवचनशुशीला गीतवाद्यानुरक्ता
सकलतनुसुवेशा पद्मिनी पद्मगन्धा ॥
भवति रतिरसज्ञा नातिखर्व्वा न दीर्घा
तिलकुसुमसुनासा
स्निग्धनीलोत्पलाक्षी ।
घनकठिनकुचाढ्या सुन्दरी बद्धशीला
सकलगुणसमेता चित्रिणी चित्रवक्त्रा ॥
दीर्घातिदीर्घनयना वरसुन्दरी या
कामोपभोगरसिका गुणशीलयुक्ता ।
रेखात्रयेण च विभूषितकण्ठदेशा
सम्भोगकेलिरसिका किल शङ्खिनी सा
॥
स्थूलाधरा स्थूलनितम्बभागा
स्थूलाङ्गुली स्थूलकुचा सुशीला ।

वस्त्रालङ्कारसम्भोगं सुस्निग्धाहारमुत्तमम्
।
यावत् प्राप्नोति सा भोग्या तावच्च वशगा
प्रिया ॥ २ ॥
कुलाङ्गारसमा नारी कुलटा कुलकामिनी ।
कपटात् कुरुते सेवां स्वामिनो न च
भक्तितः ॥
सदा पुंयोगमाशंसुर्मनसा मदनातुरा ।
आहारादधिकं जारं प्रार्थयन्ती नवं नवम्
॥
जारार्थे स्वपतिं तात ! हन्तुमिच्छति
पुंश्चली ।
तस्यां यो विश्वसेन्मूढो जीवनन्तस्य
निष्फलम् ॥
कथिता योषितः सर्व्वा उत्तमाधममध्यमाः
।
स्वात्मारामा विजानन्ति मनसा तां न
पण्डिताः ॥” ३ ॥
तस्याः स्वभावो यथा, --
“हृदयं क्षुरधाराभं शरत्पद्मोत्सवं मुखम् ।
सुधोपमं सुमधुरं वचनं स्वार्थसिद्धये ॥
प्रकोपे विषतुल्यं तदनूहं शीलकुत्सितम् ।
दुर्ज्ञेयं तदभिप्रायं निगूढं कर्म्म केवलम् ॥
तदा तासामविनयं प्रबलं साहसं परम् ।
ददौ कार्य्यच्छलात् कार्य्यं शश्वन्माया
दूरत्यया ॥
पुंसश्चाष्टगुणः कामः शश्वत्कामो
जगद्गुरो ! ।
आहारो द्विगुणो नित्यं नैष्ठुर्य्यञ्च चतुर्गुणम्
।
कोपः पुंसः षड्गुणश्च व्यवसायश्च
निश्चितम् ॥
यत्रेमे दोषनिवहाः कास्था तत्र पितामह !
।
का क्रीडा किं सुखं पुंसो
विण्मूत्राश्रयवेश्मनि ॥
तेजः प्रनष्टं सम्भोगे दिवालापे यशःक्षयः ।
धनक्षयस्त्वतिप्रीतौ रत्यासक्तौ वपुःक्षयः
॥

जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः ।
तानि कृत्याहतानीव विनश्यन्ति समन्ततः ॥
तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः ।
भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च ।
सन्तुष्टो भार्य्यया भर्त्ता भर्त्रा भार्य्या तथैव च ।
यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम्
॥”)
अगम्या नार्य्यो यथा, --
“माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा ।
पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी तथा ॥
भागिनेयी तथा चैव राजपत्नी तथैव च ।
तथा प्रव्रजिता नारी वर्णोत्कृष्टा तथैव च ॥
इत्यगम्यास्तु निर्द्दिष्टास्तासान्तु गमने नरः ।
शिश्नस्योत्कर्त्तनं कृत्वा ततस्तु वधमर्हति ॥”
इति मत्स्यपुराणे २०१ अध्यायः ॥
तस्याः शुभलक्षणं यथा, --
“निगूढगुल्फौ पतितौ पद्मकान्तितलौ शुभौ ।
अस्वेदिनौ मृदुतलौ मत्स्याङ्कमकरान्वितौ ॥
वज्राब्जहलचिह्नौ च दास्याः पादौ ततोऽन्यथा
।
जङ्घे त्त रोमरहिते सुवृत्ते विशिरे शुभे ॥
अनुल्वणं सन्धिदेशं समं जानुद्वयं शुभम् ।
ऊरू करिकराकारावरोमौ च समौ शुभौ ॥
अश्वत्थपत्रसदृशं विपुलं गुह्यमुत्तमम् ।
श्रोणीललाटकं स्त्रीणामुरु कूर्म्मोन्नतं शुभम् ॥
गूढो मणिश्च शुभदो नितम्बश्च गुरुः शुभः ।
विस्तीर्णमांसोपचिता गम्भीरा विपुला शुभा ॥
नाभिः प्रदक्षिणावर्त्ता मध्यं त्रिवलिशोभनम् ।
अरोमशौ स्तनौ पीनौ घनावविषमौ शुभौ ॥
कठिनावरोम उरो मृदुग्रीवा च कम्बुता ।
आरक्तावधरौ श्रेष्ठौ मांसलं वर्त्तुलं मुखम् ॥
कुन्दपुष्पसमा दन्ता भाषितं कोकिलासमम् ।
दाक्षिण्ययुक्तमशठं हंसशब्दसुखावहम् ॥
नासा समा समपुटा स्त्रीणान्तु रुचिरा शुभा ।
नीलोत्पलनिभं चक्षुर्नासिलग्नौ न लम्बकौ ॥
न पृथू बालेन्दुनिभे भ्रुवौ चाथ ललाटकम् ।
शुभमर्द्धेन्दुसंस्थानमतुङ्गं स्यादलोमशम् ॥
अमांसलं कर्णयुगं समं मृदु समाहितम् ।

कामोत्सुका गाढरतिप्रिया या
नितान्तभोक्त्री करिणी मता सा ॥
शशके पद्मिनी तुष्टा चित्रिणी रमते
मृगम् ।
वृषभे शङ्खिनी तुष्टा हस्तिनी रमते हयम्
॥
पद्मिनी पद्मगन्धा च मीनगन्धा च
चित्रिणी ।
शङ्खिनी क्षारगन्धा च मदगन्धा च
हस्तिनी ॥
बाला च तरुणी प्रौढा वृद्धा भवति
नायिका ।
गुणयोगेन रन्तव्या नारी वश्या भवेत्तदा
॥
आ षोडशाद् भवेद्बाला तरुणी त्रिंशका
मता ।
पञ्चपञ्चाशका प्रौढा भवेद्वृद्धा ततः परम्
॥
फलमूलादिभिर्बाला तरुणी रतियोगतः
।
प्रेमदानादिभिः प्रौढा वृद्धा च
दृढताडनात् ॥
बाला तु प्राणदा प्रोक्ता तरुणी
प्राणहारिणी ।
प्रौढा करोति वृद्धत्वं वृद्धा
मरणमादिशेत् ॥")
सा त्रिविधा यथा, --
"योषितस्त्रिविधा ब्रह्मन् ! गृहिणां
मूढचेतसाम् ।
साध्वी भोग्या च कुलटा ताः सर्व्वाः
स्वार्थतत्-
पराः ।
परलोकभयात् साध्वी तथेह
यशसात्मनः ।
कामस्नेहाच्च कुरुते भर्त्तुः सेवाञ्च
सन्ततम् ॥ १ ॥
भोग्या भोग्यार्थिनी शश्वत्
कामस्नेहेऽथ केव-
लम् ।
कुरुते पतिसेवाञ्च न च भोग्या
दृढेक्षणम् ॥

साहित्ये पौरुषं नष्टं कलहे माननाशनम् ।
सर्व्वनाशश्च विश्वासे ब्रह्मन्नारीषु किं
सुखम् ॥
यावद्धनी च तेजस्वी सश्रीको योग्यतापरः
।
पुमान्नारीं वशीकर्त्तुं समर्थस्तावदेव हि ॥
रोगिणं निर्गुणं वृद्धं योषिन्नापेक्षते प्रियम् ।
लोकाचारतया तस्मै ददात्याहारमल्पकम्
॥"
इति ब्रह्मवैवर्त्तपुराणे ब्रह्मखण्डे २३
अध्यायः ॥
(नारीचरित्रदूषणकारणानि यथा, हितोप-
देशे । १ । १३१ -- १३२ ।
"स्वातन्त्र्यं पितृमन्दिरे निवसतिर्यात्रीत्सवे
सङ्गतिः
गोष्ठी पूरुषसन्निधावनियमो वासो विदेशे
तथा ।
संसर्गः सह पुंश्चलीभिरसकृत्
वृत्तेर्निजायाः
क्षतिः
पत्युर्वार्द्धकमीर्षितं प्रवसनं नाशस्य हेतुः
स्त्रियाः ॥"
अपरञ्च, --
"पानं दुर्ज्जनसंसर्गः पत्या च
विरहोऽटनम् ।
स्वप्नश्चान्यगृहे वासो नारीर्णां दूषणानि
षट् ॥"
इयन्तु यथानियमं प्रतिपालिता
कल्याणकरी
श्रीवृद्धिकारिणी च । यदुक्तं मनौ । ३ ।
५५ -- ६० ।
"पितृभिर्भ्रातृभिश्चैताः पतिभिर्द्देवरैस्तथा
।
पूज्या भूषयितव्याश्च
बहुकल्याणमीप्सुभिः ॥
यत्र नार्य्यस्तु पूज्यन्ते रमन्ते तत्र देवताः
।
यत्रैतास्तु न पूज्यन्ते सर्व्वास्तत्राफलाः
क्रियाः ॥
शोचन्ति जामयो यत्र विनश्यत्याशु तत्
कुलम् ।

स्निग्धा नीलाश्च मृदवो मूर्द्धजाः कुञ्चितैकजाः
॥
स्त्रीणां समं शिरः श्रेष्ठं पादे पाणितले तथा ।
वाजिकुञ्जरश्रीवृक्षयूपेषु यवतोमरैः ॥
ध्वजचामरमालाभिः शैलकुण्डलवेदिभिः ।
शङ्खातपत्रपद्मैश्च मत्स्यस्वस्तिकसद्रथैः ।
लक्षणैरङ्कुशाद्यैश्च स्त्रियः स्यू राजवल्लभाः ॥
निगूढमणिवन्धौ च पद्मगर्भोपमौ करौ ।
न निम्नं नोन्नतं स्त्रीणां भवेत् करतलं शुभम् ॥
रेखान्वितान्त्वविधवां कुर्य्यात् सम्भोगिनीं
स्त्रियम् ।
रेखा या मणिबन्धोत्था गता मध्याङ्गुलीं करे ॥
गता पाणितले या च योर्द्ध्वा पादतले स्थिता
।
स्त्रीणां पुंसां तथा सा स्याद्राज्याय च सुस्वाय
च ॥
कनिष्ठिका मूलरेखा कुर्य्याच्चैव शतायुषम् ।
प्रदेशिनीमध्यमाभ्यामन्तरालगतासती ॥
ऊना ऊनायुषं कुर्य्याद्रेखा चाङ्गुष्ठमूलगा ।

बृहत्यः पुत्रास्तन्व्यस्तु प्रमदाः परिकीर्त्तिताः ॥
अल्पायुषे लघु छिन्ना दीर्घा छिन्ना महायुषे ।
शुभन्तु लक्षणं स्त्रीणां प्रोक्तं त्वशुभमन्यथा ॥” * ॥
तस्या अशुभलक्षणं यथा, --
“कनिष्ठिकानामिका वा यस्या न स्पृशते महीम् ।
अङ्गुष्ठं वा गतौ यस्यास्तर्ज्जनी कुलटा च सा ॥
ऊद्‌र्ध्वद्वाभ्यां पिण्डिकाभ्यां जङ्घे चातिशिरालके ।
रोमशे चातिमांसे च कुम्भाकारं तथोदरम् ॥
वामावर्त्तं निम्नमल्पं दुःखितानाञ्च गुह्यकम् ।
ग्रीवया ह्रस्वया निस्वा दीर्घया च कुलक्षयः ॥
पृथुलया प्रचण्डाश्च स्त्रियः स्युर्नात्र संशयः ।
केकरे पिङ्गले नेत्रे श्यावे लोलेक्षणासती ॥
सिते कूपे गण्डयोश्च सा ध्रुवं व्यभिचारिणी ।
प्रलम्बिनि ललाटे च देवरं हन्ति चाङ्गना ॥
उदरे श्वशुरं हन्ति पतिं हन्ति स्फिचोद्‌र्ध्वयोः ।
या तु रोमोत्तरौष्ठी स्यान्न शुभा भर्त्तुरिव हि ॥
स्तनौ सरोमावशुभौ कर्णौ च विषमौ तथा ।
करालविषमा दन्ताः क्लेशाय च भयाय च ॥
चौर्य्याय कृष्टमांसाश्च दीर्घा भर्त्तुश्च मृत्यवे ।
क्रव्यादरूपैर्हस्तैश्च वृककाकादिसन्निभैः ॥

**नार्य्यङ्गः**, पुं, (नारीणामङ्गमिव शोभनं अङ्गं यस्य ।) नागरङ्गः । इति शब्दरत्नावली ॥ (नार्य्या अङ्गे, क्ली ॥)

**नालं**, क्ली, (नलतीति । नल बन्धे + “ज्वलिति-कसन्तेभ्यो णः ।” ३ । १ । १४० । इति णः ।)
उत्पलादिदण्डः । तत्पर्य्यायः । नाला २ ।
इत्यमरः । २ । ९ । २२ ॥ नाली ३ नालिका
४ । इति भरतः ॥ (यथा, रघुः । ६ । १३ ।
“कश्चित् कराभ्यामुपगूढनाल-
मालोलपत्राभिहतद्विरेफम् ।
रजोभिरन्तःपरिवेषबन्धि
लीलारविन्दं भ्रमयाञ्चकार ॥”
अर्द्धर्च्चादित्वात् पुंलिङ्गोऽपि ॥)
हरितालम् ।
इति स्वामी ॥ नले, पुं । इति राजनिर्घण्टः ॥

**नालवंशः**, पुं, (नालो वंश इव ।) नलः । इति राजनिर्घण्टः ॥

**नाला**, स्त्री, (नल बन्धे + णः । ततष्टाप् ।) नालम् । इत्यमरभरतौ ॥ डाँटा इति नाडा इति च भाषा । (नलति जलादिर्निर्गच्छत्यनयेति । नल
+ करणे घञ् । जलनिर्गममार्गः । यथा, मार्कण्डेये । ३ । ४३ ।
“यथा तोयार्थिनस्तोयं यन्त्रनालादिभिः शनैः ।
आपिबेयुस्तथा वायुं पिबेद्योगी जितश्रमः ॥”)

**नालिः**, स्त्री, (नालयतीति । नल + णिच् + इन् ।) नाडी ! सिरा । इति द्विरूपकोषः ॥

**नालिकः**, पुं, (नल एव नालस्तृणविशेषः । स यन्त्रचूर्णाग्निदानेन गोलं लक्ष्ये निपातयेत् ॥
लक्ष्यभेदो यथा बाणो धनुर्ज्याविनियोगतः ।
भवेत्तथा तु सन्धाय -- ॥”)

**नालिका**, स्त्री, (नाला एव । स्वार्थे कन् । टापि अत इत्वम् ।) नाला । इति शब्दरत्नावली ॥
नालिताशाकः । इति शब्दमाला ॥ (यथा, सुश्रुते । १ । ४६ ।
“वातलं नालिकाशाकं पित्तघ्नं मधुरञ्च तत् ॥”)
चर्म्मकषा । इति जटाधरः ॥
हस्तिकर्णवेधनिका ।
इति हारावली । ३० ॥ (यथा, माघे । १७ । ३५ ।
“गजाः सकृत्करतललोलनालिका
हता मुहुः प्रणदितघण्टमाययुः ॥”)

**नालिकेरः**, पुं, (नारिकेलः । रलयोरैक्यात् रस्य लः । लस्य रश्च ।) नारिकेलः ।
इत्यमरटीकायां
रमानाथः ॥ (क्वचित् क्लीवेऽपि दृश्यते । यथास्य
गुणाः ।
“नालिकेरं सुमधुरं गुरुस्निग्धञ्च शीतलम् ।
हृद्यं संबृंहणं वस्तिशोधनं रक्तपित्तनुत् ॥
विष्टम्भि पक्वं मतिमन्नपक्वं कफवातलम् ।
बृंहणं शीतलं वृष्यं नालिकेरफलं विदुः ॥”
इति हारीते प्रथमे स्थाने दशमेऽध्याये ॥
अस्य तोयगुणा यथा, --
“नालिकेरोदकं स्निग्धं स्वादु वृष्यं हिमं लघु ।
तृष्णापित्तानिलहरं दीपनं वस्तिशोधनम् ॥”
इति वाभटे सूत्रस्थाने पञ्चमेऽध्याये ॥)

**नालिजङ्घः**, पुं, द्रोणकारकः । इति हारावली । ८४ ॥

**नालिता**, स्त्री, (नालमिता प्राप्ता ।) स्वनाम-ख्यातशाकः । यथा, --
“नालिता पट्टशाकञ्च मिष्टपत्रे तु नालिका ॥”
इति शब्दमाला ॥
अस्य गुणाः नारीचशब्दे द्रष्टव्याः ॥

**नाली**, स्त्री, (नालि + वा ङीष् ।) शाककड-

सिरालैर्विषमैः शुष्कैर्वित्तहीना भवन्ति हि ।
समुन्नतोत्तरोष्ठी या कलहे रूक्षकेशिनी ॥
स्त्रीषु दोषा विरूपाक्ष ! यत्राकारो गुणस्ततः ॥”
इति गरुडपुराणम् ॥
(त्र्यक्षरवृत्तिविशेषः । इति छन्दोमञ्जरी ॥)

**नारीकवचः**, पुं, (नार्य्यः कवचः सन्नाह इव यस्य ।) सूर्य्यवंशीयमूलकराजः । स च अश्मक-पुत्त्रः । सौदासपौत्त्रश्च । “योऽसौ निःक्षत्त्रे क्ष्मातलेऽस्मिन् क्रियमाणे स्त्रीभिर्विवस्त्राभिः परिवार्य्य रक्षितः । ततस्तं नारीकवचमुदा-हरन्ति ।” इति विष्णुपुराणे । ४ । ४ । ३८ ॥

**नारीकेलः**, पुं, (किल क्रीडने + भावे घञ् । नार्य्या केल इव केलो सम्मोदो यत्र ।) नारिकेलः । इति शब्दरत्नावली ॥

**नारीकेली**, स्त्री, (नारीकेल + गौरादित्वात् ङीष् ।) नारिकेलः । इति शब्दरत्नावली ॥

**नारीचं**, क्ली, (नाडीच + डस्य रत्वम् ।) शाक-विशेषः । नालिता इति भाषा ॥ तद्द्विविधं तिक्तं मधुरञ्च । तिक्तस्य गुणः । रक्तपित्तहर-त्वम् । कृमिकुष्ठविनाशित्वञ्च । मधुरस्य गुणाः । पिच्छिलत्वम् । शीतत्वम् । विष्टम्भिकफवात-कारित्वञ्च । इति राजवल्लभः ॥

**नारीतरङ्गकः**, पुं, (नारीं तरङ्गयति चञ्चलचित्तां भोक्तव्यत्वेनास्त्यस्येति ठन् ।) महिषः । इति त्रिकाण्डशेषः ॥ क्ली, (नालमस्त्यस्येति ।) पद्मम् । इति शब्दरत्नावली ॥ (नालः कार्य्यसाधनत्वे-नास्त्यस्येति । नाल + “अत इनिठनौ ।” ५ । २ । ११५ । इति ठन् । अस्त्रविशेषः । तत्तु आकृतिकार्य्यादिना अधुनातनस्य ‘वन्दुक’ इति ख्यातस्य अस्त्रस्य सादृश्यं लभते । अस्य आकृ-त्यादिकन्तु शुक्रनीतौ उक्तम् । तद्यथा, --
“अस्त्रन्तु द्विविधं ज्ञेयं नालिकं मान्त्रिकं तथा ।
यदा तु मान्त्रिकं नास्ति नालिकं तत्र धारयेत् ॥
नालिकं द्विविधं ज्ञेयं बृहत्क्षुद्रप्रभेदतः ।
तिर्य्यगूर्द्ध्वच्छिद्रमूलं नालं पञ्चवितस्तिकम् ॥
मूलाग्रयोर्लक्ष्यभेदि तिलबिन्दुयुतं सदा ।
यन्त्राघाताग्निकृत् ग्रावचूर्णधृक् कर्णमूलकम् ॥
सुकाष्ठोपाङ्गयुध्नञ्च मध्याङ्गुलविलान्तरम् ।
स्वाग्रेऽग्निचूर्णसन्धातृ शलाकासंयुतं दृढम् ॥
लघुनालिकमप्येतत् प्रधार्य्यं पत्तिसादिभिः ।
यथा यथा तु त्वक्सारं यथा स्थूलविलान्तरम् ॥
यथा दीर्घं बृहत् गोलं दूरभेदि तथा तथा ।
मूलकीलभ्रमात् लक्ष्यसमसन्धानभाजि यत् ॥
बृहन्नालिकसंज्ञन्तत् काष्ठबुध्नविवर्ज्जितम् ।
प्रवाह्यं शकटाद्यैस्तु सुयुक्तं विजयप्रदम् ॥”
अस्य कार्य्यं यथा, --
म्बकः । डाँटा इति माषा । इति मेदिनी । ले, २८ ॥ हस्तिकर्णवेधनी । घटी । इति त्रिकाण्ड-शेषः ॥ नाडी । इत्यमरटीकायां भरतः ॥ (यथा, --
“रसवाहिनीश्च नालीर्जिह्वामूलगलतालुक्लाम्नः ।
संशोष्य नृणां देहे कुरुतस्तृष्णां महाबलावेतौ ।
पीतं पीतं हि जलं शोधयतस्तमतो न याति शमम् ॥”
इति चरके चिकित्सास्थाने चतुर्व्विंशेऽध्याये ॥)
पद्मम् । इति शब्दरत्न्यवली ॥

**नालीकः**, पुं, (नाल्या नलयन्त्रात् कायति शब्दायते इति । कै + कः । घोरशब्देन निर्गमनादेवास्य तथात्वम् ।) शरः । (यथा, महाभारते । ३ । ३१० । १७ ।
“कर्णिनालीकनाराचानुत्सृजन्तोमहारथाः ।
नाविध्यन् पाण्डवास्तत्र पश्यन्तो मृगमन्ति-कात् ॥”
तथा च शार्ङ्गधरसंगृहीतधनुर्व्वेदे ।
“नालीका लघवो बाणा नलयन्त्रेण नोदिताः ।
अत्युच्चदरपातेषु दुर्गयुद्धेषु ते मताः ॥”)
शल्याङ्गम् । अब्जषण्डे, क्ली । इति मेदिनी । के, ११० ॥ (न अलीकमिति । सत्यम् । यथा, वक्रोक्तिपञ्चाशिकायाम् । ४२ ।
“नालीकाश्रयमेतदत्र वचनं बाणाश्रयं किं वचः ॥”)

करोतीति । तरङ्ग + कृतौ णिच् + ण्वुल्
।)
षिड्गः । इति शब्दमाला ॥

**नारीदूषणं**, क्ली, (नारीणां दूषणम् ।) स्त्रीणां

दोषः । स च षड्विधः । यथा, --
“पानं दुर्ज्जनसंसर्गः पत्या च
विरहोऽटनम् ।
स्वप्नोऽन्यगेहवासश्च नारीणां दूषणानि
षट् ॥”
इति मनुः ॥

**नारीष्टा**, स्त्री, (नारीणां इष्टा प्रिया ।) मल्लिका ।

इति राजनिर्घण्टः ॥

“नालास्त्रं शोधयेदादौ दद्यात्तत्राग्निचूर्णकम्
।
निवेशयेत्तु दण्डेन नालमूले यथादृढम् ॥
ततः सुगोलकं दद्यात् ततः
कर्णेऽग्निचूर्णकम् ।

**नालीकिनी**, स्त्री, (नालीकमस्त्यस्या इति ।
नालीक + इनिः । ङीप् ।) पद्मसमूहः । इति
शब्दरत्नावली ॥

**नालीव्रणः**, पुं, (नालीगतो व्रणः ।) नाडीव्रणः ।
इति शब्दरत्नावली ॥

**नाविकः**, पुं, (नावा तरतीति । नौ + "नौद्व्यच-
ष्ठन् ।" ४ । ४ । ७ । इति ठन् । नौरस्त्यस्येति ।
"व्रीह्यादिभ्यश्च ।" ५ । २ । ११६ । इति ठन्
वा ।) कर्णधारः । इत्यमरः । १ । १० । १२ ॥
(यथा, महाभारते । ८ । ७७ । ७५ ।
"भिन्ननौका यथा राजन् ! द्वीपमासाद्य निर्वृताः ।
भजन्ति पुरुषव्याघ्र ! नाविकाः कालपर्य्यये ॥")

**नाव्यं**, त्रि, (नावा तार्य्यम् । नौ + "नौवयो-
धर्म्मेति ।" ४ । ४ । ९१ । इति यत् ।) नौका-
गम्यदेशादि । इत्यमरः । १ । १० । १० ॥ (यथा,
रघुः । ४ । ३१ ।
"मरुपृष्ठान्युदम्भांसि नाव्याः सुप्रतरा नदीः ।
विपिनानि प्रकाशानि शक्तिमत्त्वाच्चकार सः ॥"
नवस्य भावः । नव + ष्यञ् ।) नवत्वञ्च ॥

**नाशः**, पुं, (नश + भावे घञ् ।) पलायनम् ।
निधनम् । (यथा, महाभारते । १ । १२० । १६ ।
"पित्र्यादृणादनिर्मुक्तस्तेन तप्ये तपोधनाः ।
देहनाशे ध्रुवो नाशः पितॄणामेष निश्चयः ॥")
गन्धर्व्वनगरञ्चैव वृष्टिश्च विकृता च या ।
एवमादीनि लोकेऽस्मिन् नाकेशानां विनिर्द्दिशेत् ॥
चरः स्थिरस्तु भूमौ च भूकम्पश्चापि भूमिजः ।
जलाशयानां वैकृत्यं भौमं तदपि कीर्त्तितम् ॥"
इति मात्स्ये २०३ अध्यायः ॥

**नाशी**, [न्] त्रि, (नाशोऽस्त्यस्येति । नाश +
इनिः ।) नाशविशिष्टः । नाशशब्दादस्त्यर्थे
इन्प्रत्ययनिष्पन्नः ॥

**नासत्यौ**, पुं, (नास्ति असत्यं ययोस्तौ । "नभ्राण्-
नपादिति ।" ६ । ३ । ७५ । इति नञः प्रकृति-
भावः ।) अश्विनीकुमारौ । नित्यद्विवचनान्तो-
ऽयम् । इत्यमरः । १ । १ । ५४ ॥ एतौ
शूद्रौ । यथा,
"आदित्याः क्षत्त्रियास्तेषां विशश्च मरुतस्तथा ।
अश्विनौ च स्मृतौ शूद्रौ तपस्युग्रे समास्थितौ ॥
स्मृतास्त्वाङ्गिरसा देवा ब्राह्मणा इति निश्चयः ॥"
इति महाभारते मोक्षधर्म्मः ॥
("सन्दृश्य दस्रयोरिन्द्रः कर्म्माण्येतानि यत्नवान् ।
आयुर्व्वेदं निरुद्वेगं तौ ययाचे शचीपतिः ॥
नासत्यौ सत्यसन्धेन शक्रेण किल याचितौ ।
आयुर्व्वेदं यथाधीतं ददतुः शतमन्यवे ॥
नासत्याभ्यामधीत्यैष आयुर्व्वेदं शतक्रतुः ।
अध्यापयामास बहूनात्रेयप्रमुखान् मुनीन् ॥"
चत्वार्य्यर्शांसि चत्वारः शोथाश्चत्वारितानि च ।
रक्तपित्तानि नासायां चतुस्त्रिंशद्गदाः स्मृताः ॥
तेषु पीनसस्य लक्षणमाह ।
आनह्यते शुष्यति यस्य नासा
प्रक्लेदमायाति च धूप्यते च ।
न वेत्ति यो गन्धरसांश्च जन्तु-
र्ज्जुष्टं व्यवस्येदिह पीनसेन ॥
आनह्यते श्वासंशोषितकफेनावध्यते अवरुद्धत
इति यावत् । प्रक्लेदं आर्द्रताम् । धूप्यते सन्ता-
प्यते । गन्धरसान् गन्धान् सुरभीनसुरभींश्च न
वेत्ति । नासाया आनद्धत्वं तत्र हेतुः । तथा
रसान् मधुरादींश्च न वेत्ति । नासारोगा-
रम्भकदोषेण रसनाया अपि दुष्टेः । व्यवस्येत्
जानीयात् । अपीनसपीनसौ द्वावपि शब्दौ
स्तः ॥ * ॥ अनुक्तसंग्रहार्थमाह ।
तञ्चानिलश्लेष्मभवं विकारं
ब्रूयात् प्रतिश्यायसमानलिङ्गम् ।
तं विकारं पीनसं प्रतिश्यायसमानलिङ्गं वात-
श्लेष्मकप्रतिश्यायतुल्यलक्षणम् ॥
पूतिनस्यमाह ।
दोषैर्व्विदग्धैर्गलतालुमूले
सन्दूषितो यस्य समीरणस्तु ।
निरेति पूतिर्म्मुखनासिकाभ्यां
तं पूतिनस्यं प्रवदन्ति रोगम् ॥
दोषैः पित्तकफरक्तैः । अत्र रक्तस्यापि दोषत्वं
दोषसाहचर्य्यात् । विदग्धैर्द्दुष्टैः । संदूषितः
पूतिभावं नीतः । पूतिनस्यं नासायां भवो नस्यो
वायुः पूतिर्नस्यो यत्र स पूतिनस्यस्तम् ॥ * ॥
नासापाकमाह ।
घ्राणाश्रितं पित्तमरूंषि कुर्य्यात्
यस्मिन् विकारे बलवांश्च पाकः ।
तं नासिकापाकमिति व्यवस्येत्
विक्लेदकोथावथवापि यत्र ॥

अनुपलम्भः । अदर्शनम् । इति मेदिनी । शे,
९ ॥ परिध्वस्तिः । इति हेमचन्द्रः । २ । २३८ ॥
जीवानां नाशहेतुर्यथा, --
"सङ्गात् संजायते कामः कामात् क्रोधोऽभि-
जायते ।
क्रोधाद्भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः ॥
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ॥"
इति श्रीभगवद्गीता ॥
कुलनाशकारणं यथा, --
"अनृतात् पारदार्य्याच्च तथाभक्ष्यस्य भक्षणात् ।
अश्रौतधर्म्माचरणात् क्षिप्रं नश्यति वै कुलम् ॥
अश्रोत्रिये वेददानात् वृषलेषु तथैव च ।
विहिताचारहीनेषु क्षिप्रं नश्यति वै कुलम् ॥"
इति कौर्म्मे उपविभागे १५ अध्यायः ॥
नश्यतां पूर्ब्बरूपाणि यथा, --
अत्रिरुवाच ।
"नश्यतां पूर्ब्बरूपाणि जनानां कथयस्व मे ।
नगराणां तथा राज्ञां त्वं हि सर्व्वं वदिष्यसि ॥
गर्ग उवाच ।
पुरुषाचारनियमात् परित्यजति देवता ।
ततोऽपरागाद्देवानामुपसर्गः प्रवर्त्तते ॥
दिव्यान्तरीक्षे भौमञ्च त्रिविधं परिकीर्त्तितम् ।
ग्रहर्क्षवैकृतं दिव्यमन्तरीक्षं निबोध मे ॥
उल्कापातो दिशां दाहः परिवेशस्तथैव च ।

इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**नासा**, स्त्री, (नासते शब्दायते इति । नास शब्दे + "गुरोश्च हलः ।" ३ । ३ । १०३ । इति अः । ततष्टाप् । नास्यतेऽनयेति । नास + करणे घञ् वा ।) नासिका । नाक् इति भाषा । सा च गर्भस्थबालकस्य पञ्चभिर्मासैर्भवति । इति सुखबोधः ॥ तस्याः शुभाशुभलक्षणं यथा, --
"शुकनासः सुखी स्याच्च शुष्कनासेऽतिजीवनम् ।
छिन्नाग्ररूपनासः स्यादगम्यागमने रतः ॥
दीर्घनासे च सौभाग्यं चौर आकुञ्चितेन्द्रियः ।
स्त्रीमृत्युश्चिपिटनास ऋजुर्भाग्यवतां भवेत् ॥
अल्पच्छिद्रा सुपुटा च अवक्रा च नृपेश्वरे ।
क्रूरे दक्षिणवक्रा स्याद्धनिनाञ्च क्षुतं सकृत् ॥"
इति गरुडपुराणम् ॥
द्वारोपरिस्थितदारु । झान् काठ इति कपालि इति च भाषा । इत्यमरः । २ । २ । १३ ॥ वासक-
वृक्षः । इति रजनिर्घण्टः ॥

**नासाच्छिन्नी**, स्त्री, (छिद + भावे क्तः । नासायां छिन्नं छेदो यस्याः । ङीष् ।) पूर्णिकापक्षी । इति त्रिकाण्डशेषः ॥

**नासादारु**, क्ली, (नासायै यद्दारु । नासैव दारु इति वा ।) द्वारोद्र्ध्वस्थितकाष्ठम् । इत्यमर-
टीकायां स्वामी ॥ कपालि इति भाषा ॥

विक्लेद आर्द्रता । कोथः पूतिभावः ॥ * ॥
पूयरक्तमाह ।
दोषैर्व्विदग्धैरथवापि जन्तो-
र्ललाटदेशेऽभिहतस्य तैस्तैः ।
नासा स्रवेत् पूयमसृग्विमिश्रं
तं पूयरक्तं प्रवदन्ति रोगम् ॥
क्षवथुमाह ।
घ्राणाश्रिते मर्म्मणि संप्रदुष्टो
यस्यानिलो नासिकया निरेति
कफानुजातो बहुशोऽतिशब्द-
स्तं रोगमाहुः क्षवथुं गदज्ञाः ॥
घ्राणाश्रिते मर्म्मणि शृङ्गाटके ॥ * ॥
दोषजं क्षवथुमभिधायागन्तुजं क्षवथुमाह ।
तीक्ष्णोपयोगादतिजिघ्रतो वा
भावान् कटूनर्कनिरीक्षणाद्वा ।
सूत्रादिभिर्व्वा तरुणास्थिमर्म्म-
ण्युद्घट्टितेऽन्यः क्षवथुर्न्निरेति ॥
तीक्ष्णोपयोगात् राजिकादिभक्षणात् । अर्क-
निरीक्षणात् सूर्य्यदर्शनात् तेन कफविलेपनात् ।

| | | |
|---|---|---|
| | **नासारोगः**, पुं, (नासाया रोगः ।) नासिका-<br>व्याधिः । “अथ नासारोगाधिकारः ।<br>तत्र नासा-<br>रोगाणां नामानि संख्याञ्चाह ।<br>आदौ च पीनसः प्रोक्तः पूतिनस्यस्ततः<br>परम् ।<br>नासापाकोऽत्र गणितः पूयशोणितमेव च<br>॥<br>क्षवथुर्भ्रंशथुर्दीप्तिः प्रतीनाहः परिस्रवः ।<br>नासाशोषः प्रतिश्यायाः पञ्च<br>सप्तार्व्वुदानि च ॥ | |

तरुणास्थि नासावंशास्थि । मर्म्मणि शृङ्गाटके ।
द्वन्द्रेनैकत्वम् । अन्यः आगन्तुजः ॥ * ॥
भ्रंशथुमाह ।
प्रभ्रंशते नासिकया तु यस्य
सान्द्रो विदग्धो लवणः कफस्तु ।
प्राक् सञ्चितो मूर्द्धनि पित्ततप्ते
तं भ्रंशथुं व्याधिमुदाहरन्ति ॥
दीप्तिमाह ।
घ्राणे भृशं दाहसमन्विते तु
विनिःसरेत् धूम इवेह वायुः ।
नासाप्रदीप्तेव च यस्य जन्तो-
र्व्याधिन्तु दीप्तिं तमुदाहरन्ति ॥
प्रदीप्तेव प्रज्वलितेव ॥ * ॥
प्रतीनाहमाह ।
उच्छ्वासमार्गन्तु कफः सवातो
रुन्ध्यात् प्रतीनाहमुदाहरेत्तम् ॥
स्रावमाह ।
घ्राणाद्धनः पीतसितस्तनुर्व्वा
दोषः स्रवेत् स्रावमुदाहरेत्तम् ॥
नासाशोषमाह ।
घ्राणाश्रिते श्लेष्मणि मारुतेन
पित्तेन गाढं परिशोषिते च ।
कृच्छ्राच्छ्वसित्यूद्र्ध्वमधश्च जन्तु-
र्यस्मिन् स नासापरिशोष उक्तः ॥
प्रतिश्यायमाह । तस्य निदानं द्विविधम् । एकं
सद्योजनकं तद्बल वत्त्वेन चयं नापेक्षते । यत
उक्तम् ।
न केवलं चयं प्राप्य दोषाः कुप्यन्ति देहिनाम् ।
अन्यदापि हि कुप्यन्ति
हेतुबाहुल्यतोरणात् ॥
हेतूनां बाहुल्येन त्वराकरणात् । अपरं चयादि-
क्रमेण जनकम् । चयादिक्रमो यथा । निदा-
पूर्ब्बरूपमाह ।
क्षवप्रवृत्तिः शिरसोऽभिपूर्णता
स्तम्भोऽङ्गमर्दः परिहृष्टरोमता ।
उपद्रवाश्चाप्यपरे पृथग्विधा
नृणां प्रतिश्यायपुरःसराः स्मृताः ॥
शिरसोऽभिपूर्णता शिरसो भारेणेव व्याप्तिः ।
अपरे पृथग्विधाः
घ्राणधूमायनतालुविदारण-
नासामुखस्रावादयो विदेहोक्ता बोद्धव्याः ॥ * ॥
वातिकस्य प्रतिश्यायस्य लक्षणमाह ।
आनद्धापिहिता नासा तनुस्रावप्रसेकिनी ।
गलताल्वोष्ठशोषश्च निस्तोदः शङ्खयोस्तथा ॥
क्षवप्रवृत्तिरत्यर्थं वक्त्रवैरश्यमेव च ।
भवेत् स्वरोपघातश्च
प्रतिश्यायेऽनिलात्मके ॥
आनद्धास्तब्धा । अपिहिता न पिहिता । अत-
एव तनुस्रावप्रसेकिनी ॥ * ॥
पैत्तिकमाह ।
उष्णः सपीतकः स्रावो घ्राणात् स्रवति पैत्तिके ।
कृशोऽतिपाण्डुः सन्तप्तो
भवेदुष्माभिपीडितः ।
नासया तु सधूमाग्निं वमतीव स मानवः ॥
सपीतकः ईषत्पीतकः ॥ * ॥
श्लैष्मिकमाह ॥
घ्राणात् कफकृते श्वेतः कफः शीतः स्रवेद्बहुः ।
शुक्लावभासः सूनाक्षो भवेद्गुरुशिरा नरः ॥
गलताल्वोष्ठशिरसां कण्डूभिरतिपीडितः ॥ * ॥
सान्निपातिकमाह ।
मूर्च्छन्ति कृमयश्चात्र श्वेताः स्निग्धास्तथाणवः ।
कृमितो यः शिरोरोगस्तुल्यं तेनात्र लक्षणम् ॥
अत्र एषु प्रतिश्यायेषु कफस्य प्राधान्यात्
सर्व्वेषु प्रतिश्यायेषु कफजा एव कृमयो भव-
न्तीति ॥ * ॥ श्वेताः स्निग्धाश्च वृद्धाः प्रति-
श्याया अपरानपि विकारान् कुर्व्वन्ति तानाह ।
वाधिर्य्यमान्ध्यमघ्रत्वं घोरांश्च नयनामयान् ।
शोषाग्निमान्द्यकासांश्च वृद्धाः कुर्व्वन्ति पीनसम् ॥
घोरांश्च नयनामयान् इति वचनेऽप्यान्ध्यग्रहणं
विशेषार्थम् । अघ्रत्वं न जिघ्रतीत्यघ्रस्तस्य भावः
अघ्रत्वम् ॥ * ॥ चतुस्त्रिंशत्संख्यापूरणायाह ।
अर्व्वुदं सप्तधा शोथाश्चत्वारोऽर्शश्चतुर्व्विधम् ।
चतुर्व्विधं रक्तपित्तमुक्तं घ्राणेऽपि तद्विदुः ॥
अर्व्वुदानि सप्त वातपित्तकफसन्निपातरक्तमांस-
मेदोजानि । शोथाश्चत्वारो वातपित्तश्लेष्मसन्नि-
पातजाः । अर्शांसि चत्वारि वातपित्तश्लेष्मसन्नि-
पातजानि । रक्तपित्तानि चत्वारि वातपित्त-
श्लेष्मसन्निपातजानि । एतानि यथोक्तलिङ्गानि
घ्राणेऽपि सम्भवन्ति ॥ * ॥ चिकित्साभेदात्
पीनसस्यामस्य लक्षणमाह ।
शिरोगुरुत्वमरुचिर्नासास्रावस्तनुस्वरः।
क्षामः ष्ठीवति चाभीक्ष्णमामपीनसलक्षणम्॥
नासास्रावस्तनुस्वरः क्षाम इत्यन्वयः ॥ * ॥
अथ पक्वस्य पीनसस्य लक्षणमाह ।
आमलिङ्गान्वितः श्लेष्मा घनः खेषु निमज्जति ।
स्वरवर्णविशुद्धिश्च पक्वपीनसलक्षणम्॥
आमलिङ्गान्वितः श्लेष्मा आमलिङ्गैः शिरोगुरु-
त्वादिभिर्युक्तः पश्चात् घनः निविडः अथच
खेषु नासारन्ध्रेषु निमज्जति सक्तो भवति ।
वर्णविशुद्धिः श्लेष्मणः प्रकृतिवर्णता ॥ * ॥
अथ नासारोगाणां चिकित्सा ।
सर्व्वेषु सर्व्वकालं पीनसरोगेषु जातमात्रेषु ।
मरिचं गुडेन दध्ना भुञ्जीत नरः सुखं लभते ॥ १ ॥
कट्फलं पौष्करं शृङ्गी व्योषं यासश्च कारवी ।
एषां चूर्णं कषायं वा दद्यादार्द्रकजै रसैः ॥
पीनसे स्वरभेदे च नासास्रावे हलीमके ।

नात् सञ्चयः सञ्चयात् प्रकोपः
प्रकोपात् प्रसरः
प्रसरात् स्थानसंश्रयः । ततो व्यक्तिः ।
ततो भेद
इति ॥ * ॥ तत्र प्रतिश्यायस्य
सद्योजनक-
निदानपूर्ब्बिकां संप्राप्तिमाह ।
संधारणा जीर्णरजोऽति भावात्
क्रोधर्त्तुवैषम्यशिरोऽभितापैः ।
संजागरातिस्वपनाम्बुशीता-
वश्यायकैर्म्मैथुनवास्पसेकैः ॥
संस्यातदोषैः शिरसि प्रवृद्धो
वायुः प्रतिश्यायमुदीरयेत्तु ।
सन्धारणा मूत्रपुरीषधारणा । रजो
धूलिः ।
तच्च नासाप्रविष्टं हेतुः । ऋतुवैषम्यं
ऋतुचर्य्या-
विपरीताचरणम् । शिरोऽभितापः
शिरसो-
ऽभितापो येन धूमादिना सः ।
अवश्याय-
स्तुषारः । वास्पसेको रोदनम् ।
संस्त्यानदोषैः
शिरसि संहतकफैः ॥ * ॥
चयादिक्रमजनक-
निदानपूर्ब्बिकां संप्राप्तिमाह ।
चयं गता मूर्द्धनि मारुतादयः
पृथक् समस्ताश्च तथैव शोणितम् ।
प्रकोप्यमाणा विविधैः प्रकोपणै-
स्ततः प्रतिश्यायकरा भवन्ति ह ॥

भूत्वा भूत्वा प्रतिश्यायो योऽकस्मात्
सन्निवर्त्तते ।
संपक्वो वाप्यपक्वो वा स सर्व्वप्रभवः
स्मृतः ॥
अत्र यद्यपि दोषत्रयलिङ्गानि नोक्तानि
तथापि
तानि ज्ञेयानि त्रिदोषजत्वात् ।
अयमसाध्यः ।
अतएवाह ।
नृणां दुष्टः प्रतिश्यायः सर्व्वजश्च न
सिध्यति ॥
दुष्टप्रतिश्यायलिङ्गमाह।
प्रक्लिद्यति मुहुर्नासा पुनश्च परिशुष्यति
।
पुनरानह्यते वापि पुनर्विव्रियते तथा ॥
निःश्वासो वाति दुर्गन्धो नरो गन्धान् न
वेत्ति च ।
एवं दुष्टं प्रतिश्यायं जानीयात्
कृच्छ्रसाधनम् ॥
आनह्यते विबद्धा भवति । विव्रियत
अविवद्धा
स्यात् । क्लेदशोषविवन्धा नैककालं
भवन्ति
किन्तु यदा यदा यद्यत् दोषाधिक्यं
भवति तदा
तदा तत्तद्दोषकृतः स स बोद्धव्यः इति
न
विरोधः । कृच्छ्रसाधनं असाध्यं
कष्टसाध्यञ्च ॥ * ॥
रक्तजमाह ।
रक्तजे तु प्रतिश्याये रक्तस्रावः प्रवर्त्तते ।
पित्तप्रतिश्यायकृतैर्लिङ्गैश्चापि
समन्वितः ॥
ताम्राक्षश्च भवेत्
जन्तुरुरोघातप्रपीडितः।
दुर्गन्धोच्छ्वासवक्त्रश्च गन्धानपि न वेत्ति
सः ॥
ऊरोघातप्रपीडितः ऊरोघातेनेव
प्रपीडितः ॥
अप्रतीकारेण कालान्तरे सर्व्व एव
प्रतिश्याया

सन्निपाते कफे वाते कासे श्वासे च शस्यते ॥ २
॥
कलिङ्गहिङ्गुमरिचलाक्षास्वरसकट्फलैः ।
कुष्ठोग्राशिग्रुजन्तुघ्नैरवपीडः प्रशस्यते ॥
पीनसादिषु ॥ ३ ॥
व्योषचित्रकतालीशतिन्तिडीकाम्लवेतसम् ।
सचव्याजाजितुल्यांशमेलात्वक्पत्रपादिकम् ॥
व्योषादिकमिदं चूर्णं पुराणगुडमिश्रितम्।
पीनसश्वासकासघ्नं रुचिस्वरकरं परम् ॥
इति व्योषादिवटी ॥ ४ ॥
व्याघ्रीदन्तीवचाशिग्रुसुरसाव्योपसिन्धुजैः ।
सिद्धं तैलं नसि क्षिप्तं पूतिनस्यगदापहम् ॥
इति व्याघ्रीतैलम् ॥ ५ ॥
शिग्रुसिंहीनिकुम्भानां बीजैः सव्योषसैन्धवैः ।
विल्वपत्ररसैः सिद्धं तैलं स्यात् पूतिनस्यनुत् ॥
निकुम्भा दन्ती । पूतिनस्यनुत् नस्यात् । इति
शिग्रुतैलम् ॥ ६ ॥

|  | असाध्या भवन्तीत्याह ।<br>सर्व्वे एव प्रतिश्याया<br>नरस्याप्रतिकारिणः ।<br>दुष्टतां यान्ति कालेन तदासाध्या<br>भवन्ति हि ॥<br>प्रतिश्यायेषु कृमयोऽपि भवन्तीत्याह । |  |
|---|---|---|

घृतगुग्गुलुमिश्रस्य सिक्थकस्य प्रयत्नतः ।
धूमं क्षवथुरोगघ्नं भ्रंशथुघ्नञ्च निर्द्दिशेत् ॥ ७ ॥
शुण्ठीकुष्ठकणाविल्वद्राक्षाकल्ककषायवत्।
तैलं पक्वमथाज्यं वा न स्यात् क्षवथुनाशनम्
॥ ८ ॥
नस्यं हितं निम्बरसाञ्जनाभ्यां
दीप्ते शिरःस्वेदनमल्पशस्तु ।
नस्ये कृते क्षीरजलावसेकान्
शंसन्ति भुञ्जीत च मुद्गयूषैः ॥ * ॥
नासास्रावे घ्राणयोश्चूर्णमुक्तं
नाड्या देयं ये च पीडाश्च पथ्याः ।
तीक्ष्णा धूमा देवदार्व्वग्निकाभ्यां
मांसं त्वाजं पथ्यमत्रादिशन्ति ॥ १० ॥
प्रतिश्यायेषु सर्व्वेषु गृहं वातविवर्ज्जितम् ।
वस्त्रण वारुणोत्थेन शिरसो वेष्टनं हितम् ॥ ११
॥
विडङ्गं सैन्धवं हिङ्गुगुग्गुलुः समनःशिला ।
वचैतच्चूर्णमाघ्रातं प्रतिश्यायं विनाशयेत् ॥
१२ ॥
घृततैलसमायुक्तं शक्तुधूमं पिबेन्नरः ।
सधूमः स्यात्प्रतिश्यायकासहिक्काहरःपरः ॥
१३ ॥
प्रतिश्यायेषु सर्व्वेषु शीतलं परमौषधम् ।
प्रतिश्याये पिबेद्धूमं सर्व्वगन्धसमायुतम् ॥ १४
॥
चातुर्यातकचर्णं वा घ्रेयं वा कृष्णजीरकम् ।
कृष्णजीरकमत्र कलौजी ॥ १५ ॥
पुटपक्वं जयापत्रं तैलसैन्धवसंयुतम् ।
प्रतिश्यायेषु सर्व्वेषु शीलितं परमौषधम् ॥
जयात्र विजया भङ्गेति यावत् । शिलितं
भुक्तम् ॥ १६ ॥
पिप्पल्यः शिग्रुबीजानि विडङ्गमरिचानि च ।
अवपीडः प्रशस्तोऽयं प्रतिश्यायनिवारणे ॥
१७ ॥
शिरसोऽभ्यञ्जनैः स्वेदैर्नस्यैर्म्मन्दोष्णभोजनैः ।
वमनैर्घृतपानैश्च नान्यथा समुपाचरेत् ॥ १८ ॥
कृमिघ्ना ये क्रमाः प्रोक्तास्तान् वै कृमिषु योज-
येत् ।

कफात् कासोऽरुचिः श्वासो वमथुर्गात्रगौरवम्
॥
माधुर्य्यं वदने कण्डूः स्निग्धशुक्लघना स्रुतिः
।
सर्व्वजो लक्षणैः सर्व्वैरकस्माद्वृद्धिशान्तिमान्
॥
दुष्टं नासा शिराः प्राप्य प्रतिश्यायं करोत्यसृक्
।
उरसः सुप्तता ताम्रनेत्रत्वं श्वासपूतिता ॥
कण्डूः श्रोत्राक्षिनासासु पित्तोक्तश्चात्र लक्षणम्
।
सर्व्व एव प्रतिश्याया दुष्टतां यान्त्युपेक्षिताः ॥
यथोक्तोपद्रवाधिक्यात् ससर्व्वेन्द्रियतापनः ।
साग्निसादज्वरश्वासकासोरःपार्श्ववेदनः ॥
कुप्यत्यकस्माद्बहुशो मुखदौर्गन्ध्यशोफकृत् ।
नासिकाक्लेदसंशोषशुद्धिरोधकरो मुहुः ॥
पूयोपमा सितारक्तग्रथिता श्लेष्मसंस्रुतिः ।
मूर्च्छन्ति चात्र कृमयो दीर्घस्निग्धसिताणवः
॥
पक्वलिङ्गानि तेष्वङ्गलाघवं क्षवथोः शमः ।
श्लेष्मा सचिक्वणः पीतो ज्ञानञ्च रसगन्धयोः
॥
तीक्ष्णघ्राणोपयोगार्करश्मिसूत्रतृणादिभिः ।
वातकोपिभिरन्यैर्व्वा नासिका तरुणास्थनि ॥
विघट्टितेऽनिलः क्रुद्धो रुद्धः शृङ्गाटकं व्रजेत् ।
निवृत्तः कुरुतेऽत्यर्थं क्षवथुं स भृशं क्षवः ॥
शोषयन्नासिकास्रोतः कफञ्च कुरुतेऽनिलः ।
शूकपूर्णाभनासात्वं कृच्छ्रादुच्छ्वसनन्ततः ॥
स्मृतोऽसौ नासिकाशोषो नासानाहे तु जायते
।
नद्धत्वमिव नासायाः श्लेष्मरुद्धेन वायुना ॥
निःश्वासोच्छ्वाससंरोधात् स्रोतसी संवृते इव
।
पचेन्नासापुटे पित्तं त्वङ्मांसं दाहशूलवत् ॥
सघ्राणपाकः स्रावस्तु तत्संज्ञः श्लेष्मसम्भवः
।
अच्छोजलोपमोऽजस्रं विशेषान्निशि जायते ॥
कफः प्रवृद्धो नासायां रुद्ध्वा स्रोतांस्यपीनसम्
।

नीडीव्रणे ज्वरे चैव
नखदन्तविघातके ।
पञ्चामृतरसो योज्यः
सर्व्वरोगप्रशान्तये ॥
इति पञ्चामृतो रसः ॥”
इति वैद्यकरसेन्द्रसारसंग्रहे
नासारोगाधि-
कारः ॥)

**नासालुः**, पुं, (नासायै अलतीति । अल + उण् ।)

कट्फलवृक्षः । इति शब्दचन्द्रिका
॥ (कट्फल-
शब्दे विवरणमस्य ज्ञातव्यम् ॥)

**नासासंवेदनः**, पुं, (संविद्यतेऽनेनेति । सं + विद् +

ल्युट् । नासायाः संवेदनः
पीडादायकः ।)
काण्डीरलता । इति राजनिर्घण्टः
॥

**नासिकन्धमः**, त्रि, (नासिकां धमति शब्दायमानां

करोतीति । नासिका + ध्मा +
“नासिका-
स्तनयोर्ध्माधेटोः ।” ३ । २ । २९
। इति खश् ।
“खित्यनव्ययस्य ।” ६ । ३ । ६६
। इति पूर्ब्ब-
पदस्य ह्रस्वः । ततो मुम् ।)
नासिकां शब्दाय-
मानां करोति यः । नासिकया
शब्दकर्त्ता च ।
नासिकोपपदात् ध्माधातोः
खश्प्रत्यये धमा-
देशनिष्पन्नः । इति व्याकरणम् ॥

**नासिकन्धयः**, त्रि, (नासिकां नासास्थजलं धयति

पिबतीति । नासिका + धे ट पाने
+ “नासिका-

लावणानि कृमिघ्नानि भेषजानि च बुद्धिमान् ॥
१९ ॥
रक्तपित्तानि शोथाश्च तथार्शांस्यर्व्वुदानि च ।
नासिकायां स्युरेतेषां स्वं स्वं कुर्य्यात् चिकित्-
सितम् ॥
गृहधूमकणादारुक्षीरनक्ताह्वसैन्धवैः ।
सिद्धं शिखरिबीजैश्च तैलं नासार्शसां हितम्
॥"
इति भावप्रकाशे मध्यखण्डे चतुर्थभागः ॥
(अथातो नासारोगविज्ञानीयमध्यायं
व्याख्यामः ।
"अवश्यायानिलरजो भाष्यातिस्वप्नजागरैः ।
नीचात्युच्चोपधानेन पीतेनान्येन वारिणा ॥
अत्यम्बुपानरमणच्छर्द्दिवाष्पग्रहादिभिः।
क्रुद्धा वातोल्वणा दोषा नासायां स्त्यानतां
गताः ॥
जनयन्ति प्रतिश्यायं वर्द्धमानं क्षयप्रदम् ।
तत्र वातात् प्रतिश्याये मुखशोषो भृशं क्षवः ॥
घ्राणोपरोधनिस्तोददन्तशङ्खशिरोव्यथाः।
कीटका इव सर्पन्ति मन्यते परितो भ्रुवौ ॥
स्वरसादश्चिरात् पाकः शिशिराच्छकफस्रुतिः
।
पित्तात्तृष्णाज्वरघ्राणपिटिकासम्भवभ्रमाः॥
नासाग्रपाको रुक्षोष्णस्ताम्रपीतकफस्रुतिः।

कुर्य्यात् सघुर्घुरं श्वासं पीनसाधिकवेदनम् ॥
अवेरिव स्रवत्यस्य प्रक्लिन्ना तेन नासिका ।
अजस्रं पिच्छलं पीतं पक्वं सिङ्घाणकं घनम् ॥
रक्तेन नासादग्धेन वाह्यान्तःस्पर्शनासहा ।
भवेद्ध्वूमोपमोच्छ्वासा सा दीप्तिर्द्दहतीव च ॥
तालुमूले मलैदुष्टैर्मारुतो मुखनासिकात् ।
श्लेष्मा च पूतिर्निर्गच्छेत् पूतिनासं वदन्ति
तम् ॥
निचयादभिघाताद्वा पूयासृङ्नासिका स्रवेत् ।
तत् पूयरक्तमाख्यातं शिरोदाहरुजाकरम् ॥
पित्तश्लेष्मावरुद्धोऽन्तर्नासायां शोषयेन्मरुत्
।
कफं स शुष्कपुटतां प्राप्नोति पुटकन्तु तत् ॥
अर्शोऽर्व्वुदानि विभजेत् दोषलिङ्गैर्यथायथम् ।
सर्व्वेषु कृच्छ्राच्छ्वसनं पीनसः प्रततं क्षवः ॥
सानुनासिकवादित्वं पूतिनासः शिरीव्यथा ।
अष्टादशानामित्येषां यापयेद्दुष्टपीनसम् ॥"
इत्युत्तरस्थाने एकोनविंशेऽध्याये
वाभटेनोक्तम् ॥
"शुद्धसूतं समादाय गन्धभागद्वयं ततः ।
त्रिभागं टङ्गणञ्चापि विधभागचतुष्टयम् ॥
पञ्चभागं यथा देयं मरिचस्य प्रयत्नतः ।
शृङ्गवेररसैः पिष्ट्वा गुडिका पञ्चरक्तिका ॥
अनुपानं हितं योज्यं सर्व्वरोगप्रशान्तये ।
जलदोषोद्भवे रोगे महत्युग्रे जलोदरे ॥
सन्निपातेषु रोगेषु नासाव्याधौ सपीनसे ।
व्रणशोथे व्रणे चैव उपदंशे भगन्दरे ॥

स्तनयोर्ध्माधेटोः ।" ३ । २ । २९
। इति खश् ।
ततो पूर्ब्बपदस्य ह्रस्वस्ततो मुम् च
।) नासिकया
पिबति यः । नासिकया पानकर्त्ता ।
नासिकोप-
पदाद्धेटधातोः खश्प्रत्ययेन
निष्पन्नः । इति
व्याकरणम् ॥

**नासिका**, स्त्री, (नासते शब्दायते इति । नास
शब्दे + "ण्वुल्तृचौ ।" ३ । १ ।
१३३ । इति
ण्वुल् । टापि अत इत्वम् ।)
घ्राणेन्द्रियम् ।
नाक् इति भाषा । तत्पर्य्यायः ।
घ्राणम् २
गन्धवहा ३ घोणा ४ नासा ५ ।
इत्यमरः । २ ।
६ । ८९ ॥ शिङ्घिणी ६ । इति
राजनिर्घण्टः ॥
नासिक्यम् ७ नस्या ८ गन्धनाली
९ गन्धवन्धा १०
नक्रा ११ । इति शब्दरत्नावली ॥
(यथा,
मनुः । २ । ९० ।
"श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका
चैव
पञ्चमी ।
पायूपस्थं हस्तपादं वाक् चैव
दशमी स्मृता ॥")
तस्याः शब्दो घोत्कारः । यथा, --
"शयानं रावणं दृष्ट्वा तल्पे महति
वानरः ।
नासायूथैस्तु
घोत्कारैर्विशङ्किर्वायुसेवकैः ॥"
इति नारसिंहे ४५ अध्यायः ॥

**नासिकामलं**, क्ली, (नासिकाया मलम् ।) नासा-
स्थितमलम् । शिक्नि इति भाषा ।
तत्पर्य्यायः ।

| | | |
|---|---|---|
| | | शिङ्घाणकम् २ शिङ्घाणम् ३ शिङ्घणम् ४ । इति शब्दरत्नावली ॥ सिंहानम् ५ । इति भरतः ॥<br><br>**नासिक्यं**, क्ली, (नासिका एव । नासिका + स्वार्थे ष्यञ् ।) नासिका । इति त्रिकाण्डशेषः ॥ (त्रि, नासिका + "वुञ्छण्केति ।" ४ । २ । ८० । इति संकाशादित्वात्ण्यः । नासिकानिवृत्तादौ । नासिकायां भवम् । "शरीरावयवात् यत् ।" ५ । १ । ६ । इति यत् । नासाभवे च ॥) |

**नासिक्यकं**, क्ली, (नासिक्यमेव । नासिक्य + स्वार्थे कन् ।) नासिका । इति शब्दमाला ॥

**नासिक्यौ**, पुं, (नासिकायां भवौ । नासिका + "शरीरावयवात् यत् ।" ५ । १ । ६ । इति यत् ।)
अश्विनीकुमारौ । द्विवचनान्तोऽयम् । इति हेमचन्द्रः । २ । ९६ ॥

**नासीरं**, क्ली, (नास् शब्दे + भावे क्विप् । नासा शब्देन ईर्त्ते गच्छतीति । ईर गतौ + कः । जयशब्दाद्युच्चारणेन गमनादेवास्य तथात्वम् ।)
नायकस्याग्रेसारिका सेना । (यथा, श्रीकण्ठ-चरिते । २१ । ४४ ।
"नासीरपार्षदभटेषु ततः प्रतोलीं
लोलीकृतासिषु हठादधिरूढवत्सु ।
वामभ्रुवः पुरपुरेष्वभवन्नकाण्डे
मग्ना भियेव निजवाष्पजलह्रदेषु ॥"
तथा च, राजेन्द्रकर्णपूरे । ३९ ।
"नासीरप्रसरन्ति दिक्परिसरे भूमण्डले मौक्तिक-
प्रस्तारन्ति सुधाकरन्ति गगनोत्सङ्गे भवत्-कीर्त्तयः ॥")
अग्रसरे, पुं । इति शब्दरत्नावली ॥

**नास्ति**, व्य, अस्तित्वाभाववत् । अविद्यमानता । इति नास्तिकताशब्दटीकायांभरतः ॥ नाइ इति भाषा । यथा, चाणक्ये ।
"अतिथिर्बालकश्चैव राजा भार्य्या तथैव च ।
अस्ति नास्ति न जानन्ति देहि देहि पुनः पुनः ॥"

**नास्तिकः**, पुं, (नास्ति परलोक ईश्वरो वेति मति-र्यस्य । "अस्तिनास्तिदिष्टंमतिः ।" ४ । ४ । ६० ।
इति ठक् । यद्वा, नास्ति परलोको यज्ञादिफलं ईश्वरो वेत्यादिवाक्येन कायति शब्दायते इति ।
कै शब्दे + डः ।) पाषण्डः । ईश्वरनास्तित्व-
नास्तिकः । सदसत्त्वे अस्ति
नास्तीत्यव्ययं कै शब्दे
डः । नास्तीति मन्यते इति ष्णिको वा तस्य
भावो नास्तिकता त्वतौ भावे इति तः । नास्ति
सुकृतं नास्ति परलोक इति
बुद्धिर्नास्तिकता ।"
इति भरतः ॥ (यथा, महाभारते । १२ । १२३ । १५ ।
"प्रज्ञानाशात्मको मोहस्तथा
धर्म्मार्थनाशकः ।
तस्मान्नास्तिकता चैव दुराचारश्च जायते ॥")

**नास्तिदः**, पुं, आम्रवृक्षः । इति शब्दचन्द्रिका ॥

**नास्यं**, त्रि, नासायां भवम् । (नासा + "शरीरा-वयवात् यत् ।" ५ । १ । ६ । इति यत् ।) नासा-
भवम् । यथा, मनुः । ८ । २९१ ।
"छिन्ननास्ये भिन्नयुगे
तिर्य्यक्प्रातमुखागते ।
अक्षभङ्गे च यानस्य चक्रभङ्गे तथैव च ॥"

**नाहः**, पुं, (नह बन्धने + भावे घञ् ।) बन्ध-नम् । कूटम् । इति मेदिनी । हे, ५ ॥

**नाहलः**, पुं, (नाहं पर्व्वतशिखरादिकं लाति आश्रयत्वन गृह्णातीति । ला + कः ।) म्लेच्छ-
जातिविशेषः । इति हेमचन्द्रः । ३ । ५९८ ॥

**नाहुषिः**, पुं, (नहुषस्य अपत्यं पुमानिति । नहुष + "अत इञ् ।" ४ । १ । ९५ । इति इञ् ।)
ययातिराजः । इति भूरिप्रयोगः ॥

**नि**, व्य, उपसर्गविशेषः । अस्यार्था यथा । निषेधः ।

**निःशब्दः**, त्रि, (निर्गतः शब्दो यस्मात् ।) शब्द-रहितः । चुप् इति भाषा ॥ यथा, मार्कण्डेय-
पुराणे ।
"निःशब्दं कारयित्वा तत्सदःप्राह महामुने ! ॥"
(यथा च हठयोगप्रदीपिकायाम् । ४ । १०१ ।
"तावदाकाशसंकल्पो यावच्छब्दः प्रवर्त्तते ।
निःशब्दं तत् परं ब्रह्म परमात्मेति गीयते ॥")

**निःशलाकः**, त्रि, (निर्गता शलाका यस्मात् शला-काया निर्गतो वा ।) रहः । निर्ज्जनम् । इत्य-
मरः । २ । ८ । २२ ॥

**निःशल्या**, स्त्री, (निर्गतं शल्यं यस्याः ।) दन्ती-वृक्षः । इति राजनिर्घण्टः ॥

**निःशूकः**, पुं, (निर्नास्ति शूको यस्य ।) मुण्ड-शालिः । इति राजनिर्घण्टः ॥

**निःशेषं**, त्रि, (निर्गतः शेषो यस्मात् ।) समस्तम् । सम्पूर्णम् । इत्यमरः । ३ । १ । ६५ ॥ (यथा,
हठयोगप्रदीपिकायाम् । ४ । ३२ ।
"उच्छिन्नसर्व्वसङ्कल्पो
निःशेषाशेषचेष्टितः ।
स्वावगम्यो लयः कोऽपि जायते
वागगोचरः ॥")
शेषरहितञ्च ॥

**निःशोध्यं**, त्रि, (निर्गतं शोध्यं यस्मात् । शोध्या-न्निर्गतमिति वा । निरादय इति समासः ।)
शोधितम् । मृष्टम् । इत्यमरः । ३ । ० । ५६ ॥

**निःश्रयणी**, स्त्री, (निर्निश्चितं श्रीयते आश्रीयते

वादी । वेदाप्रामाण्यवादी । (यथा, मनुः । २ । ११ ।
"योऽवमन्यत ते मूले हेतुशास्त्राश्रयाद्द्विजः ।
स साधुभिर्बहिष्कार्य्यो नास्तिको वेदनिन्दकः ॥"
तथा च तत्रैव । ३ । १५० ।
"ये स्तेनपतितक्लीवा ये च नास्तिकवृत्तयः ।
तान् हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीत् ॥"
तथाच तत्रैव । ८ । २२, ३०९ ।
"यद्राष्टं शूद्रभूयिष्टं नास्तिकाक्रान्तमद्विजम् ।
विनश्यत्याशु तत् कृत्स्नं दुर्भिक्षव्याधिपीडितम् ॥"
"अनपेक्षितमर्य्यादं नास्तिकं विप्रलुम्पकम् ।
अरक्षितारमत्तारं नृपं विद्यादधोगतिम् ॥")
तत्पर्य्यायः । बार्हस्पत्यः २ चार्व्वाकः ३ लौकाय-
तिकः ४ । इति हेमचन्द्रः । ३ । ५२६ ॥ स च
षड्विधः । माध्यमिकः १ योगाचारः २ सौत्रा-
न्तिकः ३ वैभाषिकः ४ चार्व्वाकः ५ दिग-
म्बरः ६ ॥

**नास्तिकता**, स्त्री, (नास्तिकस्य भावः । नास्तिक + तल् ।) कर्म्मफलापवादकज्ञानम् । तत्पर्य्यायः ।
मिथ्यादृष्टिः २ । इत्यमरः । १ । ५ । ४ ॥ "नास्ति
यज्ञफथं नास्ति परलोक इत्यादिकं कायति
निश्चयः । इति मुग्धबोधटीकायां दुर्गादासः ॥
निवेशः । भृशार्थः । नित्यार्थः । संशयः । क्षेपः ।
कौशलम् । उपरमः । सामीप्यम् । आश्रयः ।
दानम् । मोक्षः । अन्तर्भावः । बन्धनम् । राश्यधो-
भावः । विन्यासः । इति मेदिनी । ने, ४० ॥

**निः**, [र्] व्य, (नृणातीति । नॄ नये + क्विप् ।
"ऋत इद्धातोः ।" ७ । १ । १०० । इति धातो-
रङ्गस्य इत् ।) निर्णयः । निषेधः । इति मेदिनी ।
रे, ६६ ॥ (अभावः । यथा, हरिवंशे । भविष्य-
पर्व्वणि । ८ । ८७ ।
"नासिकाग्रं समालोक्य पठन् ब्रह्म सनातनम् ।
निर्व्वातस्थो यथा दीपः प्रोच्चरेत् प्रणवं सदा ॥")

**निः**, [स्] व्य, निश्चयः । निषेधः । साकल्यम् ।
अतीतम् । इति मेदिनी । से, ८० ॥

**निःकासितः**, त्रि, (निर् वा निस् + कस् + णिच्
+ क्तः ।) निष्कासितः । बहिष्कृतः । से तु
कखपफे वेति विभाषया विसर्गस्य सकारा-
भावः । इति व्याकरणम् ॥

**निःक्रामितः**, त्रि, (निर् वा निस् + क्रम + णिच्
+ क्तः ।) निष्क्रामितः । इत्यमरटीकासार-
सुन्दरी ॥

**निःक्षत्त्रः**, त्रि, (निर्नास्ति क्षत्त्रः क्षत्त्रियो यत्र ।)
क्षत्त्रियशून्यदेशादि । यथा, --
"अवतारे षोडशमे पश्यन् ब्रह्मद्रुहो नृपान् ।
ऽनयेति । श्रि + करणे ल्युट् । टित्त्वात् ङीप् ।)
काष्ठघटितसोपानम् । काठेर सिंडी इति
भाषा । तत्पर्य्यायः । निःश्रेणिः २ अधि-
रोहिणी ३ निःश्रेणी ४ निःश्रयिणी ५ । इति
शब्दरत्नावली ॥

**निःश्रयिणी**, स्त्री, (निःश्रयति आश्रयति प्राङ्ग-
नादिस्थानमिति । श्रि + णिनि + ङीप् ।) निःश्र-
यणी । इति शब्दरत्नावली ॥

**निःश्रेणिः**, स्त्री, (निर्निश्चिता श्रेणिः सोपान-
पङ्क्तिः यत्र ।) अधिरोहिणी । (यथा, रघुः । १५ । १०० ।
"चक्रे त्रिदिवनिःश्रेणिः सरयूरनुयायिनाम् ॥")
खर्ज्जुरीवृक्षः । इति मेदिनी । णे, ५७ ॥ (पुं,
घोटकविशेषः । यथा, नकुलकृताश्वचिकित्-
सिते ४ अध्याये ।
"उपर्य्युपरि यस्य स्युरावर्त्ता अलिके त्रयः ।
निःश्रेणिः स तु विज्ञेयो राष्ट्रवृद्धिकरः परः ॥")

**निःश्रेणिका**, स्त्री, (निःश्रेणिरिव कायतीति ।
कै + कः । टाप् ।) तृणविशेषः । निःश्रेणी इति
कोकणे प्रसिद्धा । तत्पर्य्यायः । श्रेणिबला २
निरसा ३ वनवल्लरी ४ । अस्या गुणाः । नीर-
सत्वम् । उष्णत्वम् । पशूनामबलप्रदत्वञ्च । इति
राजनिर्घण्टः ॥ (निश्रेणिरेव । स्वार्थे कन् ।
अधिरोहिणी । यथा, देवीभागवते । ४ । १३ । ४० ।

| | | |
|---|---|---|
| | त्रिःसप्तकृत्वः कुपितो<br>निःक्षत्त्रामकरोन्महीम् ॥”<br>इति श्रीभागवतप्रथमस्कन्धः ॥<br>**निःप्रभः**, त्रि, निष्प्रभः । निर्नास्ति प्रभा यस्येति<br>समासे से तु कखपफे वेति विभाषया<br>विसर्गस्य<br>सकाराभावः । इति व्याकरणम् ॥ | “मानुष्यं दुर्ल्लभं प्राप्य सेविता न<br>महेश्वरी ।<br>निःश्रेणिकाग्रात् पतिता अध इत्येव<br>विद्महे ॥”)<br>**निःश्रेणी**, स्त्री, (निःश्रेणि + कृदिकारादिति वा<br>ङीष् ।) निःश्रयणी । इति शब्दरत्नावती<br>॥ |

**निःश्रेयसं**, क्ली, (निर्निश्चितं श्रेयः । “अचतुर-

विचतुरेति ।” ५ । ४ । ७७ । इति निपातनात्

साधुः ।) शुभम् । (यथा, भागवते । १ । ३ ।

४० ।

“इदं भागवतं नाम पुराणं ब्रह्मसम्मितम् ।

उत्तमःश्लोकचरितं चकार भगवानृषिः ।

निःश्रेयसाय लोकस्य धन्यं स्वस्त्ययनं परम्

॥”)

मोक्षः । (यथा, मनुः । १२ । ८३ ।

“वेदाभ्यासस्तपोज्ञानमिन्द्रियाणाञ्चसंयमः ।

अहिंसा गुरुसेवा च निःश्रेयसकरं परम् ॥”)

विद्या । अनुभावः । भक्तिः । इति शब्दरत्ना-

वली ॥

**निःश्रेयसः**, पुं, (निर्निश्चितं श्रेयो मङ्गलं यस्मात् ।)

शङ्करः । इति मेदिनी । से, ५६ ॥

**निःषमं**, व्य, (निर्गतं समं यत्र । “तिष्ठद्गुप्रभृ-

तीनि च ।” २ । १ । १७ ।

इत्यव्ययीभावत्वम् ।

सुविनिर्दुर्भ्यः इति षत्वम् ।) निन्दा । तत्-

पर्य्यायः । गर्ह्यम् । दुःषमम् ३ । इत्यमरः । ३

।

४ । १४ ॥ शोकः । इति शब्दरत्नावली ॥

**निःसङ्गः**, त्रि, (निर्नास्ति सङ्गो यत्र ।) मेलन-

रहितः । यथा, विष्णुपुराणे । ४ । २ । ५१ ।

“मत्स्यस्य सङ्गादभवच्च यो मे

सुतादिरोगो मुषितोऽस्मि तेन ।

निःसङ्गता मुक्तिपदं यतीनां

सङ्गादशेषाः प्रभवन्ति दोषाः ॥”

फलानभिनिवेशवान् । यथा, --

“वेदोक्तमेव कुर्व्वाणो निःसङ्गोऽर्पितमीश्वरे ।

नैष्कम्यसिद्धिं लभते रोचनार्था फलश्रुतिः ॥”

इति मलमासतत्त्वे

श्रीभागवतैकादशस्कन्धवच-

नम् ॥

**निःसन्धिः**, त्रि, (निर्नास्ति सन्धिर्यत्र ।) दृढः ।

इति त्रिकाण्डशेषः ॥ सन्धिरहितश्च ॥

यथैवोत्पद्यते सारान्निःसारं जगदञ्जसा

।

पुनस्तस्मिन् निलीयन्ते

महाप्रलयसङ्गमे ॥

उत्पत्तिप्रलयाभ्यान्तु जगन्निःसारतां

हरिः ।

शम्भवे दर्शयामास भावेन जगतां पतिः

॥”

इति कालिकापुराणे २७ अध्यायः ॥

**निःसारणं**, क्ली, (निर् + सृ + णिच् + भावे
ल्युट् ।)

निःसरणम् । (निःसार्य्यतेऽनेनेति ।

निर् + सृ

+ णिच् + करणे ल्यट् ।) गृहादीनां

प्रवेशनिर्ग-

मादिपथः । इति शब्दरत्नावली ॥

**निःसारा**, स्त्री, (निर्नास्ति सारो यस्याः ।)

कदलीवृक्षः । इति राजनिर्घण्टः ॥

**निःसारितः**, त्रि, (निर् + सृ + णिच् + कर्म्मणि

क्तः ।) बहिष्कृतः । तत्पर्य्यायः ।

अवकृष्टः २

निष्कासितः ३ । इति जटाधरः ॥

साराभाव-

वांश्च ॥

**निःस्नेहः**, त्रि, (निर्नास्ति स्नेहो यस्य ।) स्नेह-

शून्यः । यथा । निःस्नेहं

कीटदूषितमित्यादि

स्मृतिः ॥ (यथा, रामायणे । २ । ४९

। ७ ।

“अहो दशरथो राजा निःस्नेहः स्वसुतं

प्रति ॥”

रसहीनः । यथा, मनुः । ५ । ८७ ।

“नारं स्पृष्ट्वास्थि सस्नेहं स्नात्वा

विप्रो विशुध्यति ।

आचम्यैव तु निःस्नेहं

गामालभ्यार्कमीक्ष्य वा ॥”

इह हि पततां नास्त्यालम्बो न चापि

निवर्त्तनं

तदिह महतां कोयं मोहो यदेष मदाविलः

॥”

तद्वैदिकपर्य्यायः । तलित् १ आसात् २

अम्ब-

रम् ३ ओर्व्वसे ४ अस्तमीके ५ आके ६

उपाके ७

अर्व्वाकि ८ अन्तमानाम् ९ अवमे १० उपमे

११ ।

इत्येकादशान्तिकनामानि । इति

वेदनिघण्टौ २

अध्यायः ॥

**निकरः**, पुं, (निकरोति व्याप्नोतीति । नि +

कृ + अच् ।) समूहः । इत्यमरः । २ । ५ ।

३९ ॥

(यथा, कलाविलासे । २ । १६ ।

“इत्यादिमुग्धबुद्धेरसमञ्जसवर्णनं रहः कृत्वा

।

गृह्णाति कनकनिकरं नृत्यंस्तत्तन्मनोरथैः

पापः ॥”)

सारः । न्यायदेयधनम् । निधिः । इति

मेदिनी ।

रे, १७२ ॥

**निकर्षणं**, क्ली, (निर्नास्ति कर्षणं यत्र ।) सन्नि-

वेशः । इत्यमरः । २ । ३ । १९ ॥

पत्तनादिषु

दिगादिपरिच्छिन्नप्रदेशः । इति भरतः ॥

पूर्ब्ब-

दिगाद्यवच्छिन्नगृहाणामपीतिकलिङ्गः ॥

पुरा-

देर्ब्बहिर्व्विहरणभूमिः । इति स्वाम्यादयः ॥

प्राङ्गणादिसन्निवेशः । इति सारसुन्दरी ॥

**निकषः**, पुं, (निकषति पिनष्टि स्वर्णादिकं यत्रेति ।

नि + कष + “गोचरसञ्चरेति ।” ३ । ३ ।

११९ ।

इति चकारात् घः ।) शाणः । इत्यमरः ।

**निःसम्पातः**, पुं, (निर्नास्ति सम्पातो गमनागमनं

यत्र ।) निशीथः । इति त्रिकाण्डशेषः ॥
(गमना-
गमनपरिशून्ये, त्रि । यथा, हरिवंशे । ८० ।
१३ -- १४ ।
"तेन दुष्टप्रचारेण दूषितं तद्वनं महत् ।
न नृभिर्गोधनैर्वापि सेव्यते वनवृत्तिभिः ।
निःसम्पातः कृतः पन्थास्तेन तद्विषयाश्रयः
॥")

**निःसरणं**, क्ली, (निर् + सृ + ल्युट् ।) मरणम् ।

उपायः । गेहादिमुखम् । निर्व्वाणम् । निर्गमः ।
इति हेमचन्द्रः ॥ (यथा, देवीभागवते । ४ ।
२ । २८
"गर्भवासे महद्दुःखं दशमास्रंनिवासनम् ।
तथा निःसरणे दुःखं योनियन्त्रेऽतिदारुणे ॥")

**निःसारः**, पुं, (निर्गतः सारो यस्मात् ।) शाखोट-

वृक्षः । इति शब्दचन्द्रिका ॥ श्योनाकप्रभेदः ।
इति राजनिर्घण्टः ॥ साररहिते, त्रि । यथा, --
"मानुष्ये कदलीस्तम्बनिःसारे सारमार्गणम् ।
यः करोति स संमूढो जलबुद्बुदसन्निभे ॥"
इति शुद्धितत्त्वम् ॥
"जगत् सर्व्वन्तु निःसारमनित्यं दुःखभाजनम्
।
उत्पद्यते क्षणादेतत् क्षणादेतद्विपद्यते ॥
तैलविहीनः । यथा, पञ्चतन्त्रे । १ ।
९४ ।
"शिरसा विधृता नित्यं स्नेहेन
परिपालिताः ।
केशा अपि विरज्यन्ते निःस्नेहाः किं
न
सेवकाः ॥")

**निःस्नेहा**, स्त्री, (निर्गतः स्नेहः रसो यस्याः ।)

अतसी । इति त्रिकाण्डशेषः ॥
(अनुरागरहिते,
त्रि । यथा, पञ्चतन्त्रे । ४ । ४७ ।
"यदर्थे स्वकुलं त्यक्तं जीवितार्द्धञ्च
हारितम् ।
सा मां त्यजति निःस्नेहा कः स्त्रीणां
विश्वसे-
न्नरः ॥")

**निःस्रावः**, पुं, (निःस्रवतीति । निर् + स्रु + णः
।)

भक्तरसः । भक्तसमुद्भवमण्डः । माड्
इति फेन्
इति च भाषा ॥ तत्पर्य्यायः । आचामः
२
मासरः ३ । इत्यमरहेमचन्द्रौ ॥

**निःस्वः**, त्रि, (निर्नास्ति स्वं धनं यस्य ।) दरिद्रः
।

इत्यमरः । ३ । १ । ४९ ॥ तस्य
लक्षणं यथा, --
"सूर्पाकारौ विरूक्षौ च वक्रौ
पादौशिरालकौ ।
संशुष्कौ पाण्डरनखौ निःस्वस्य
विरलाङ्गुली ॥"
इति गारुडे सामुद्रकम् ॥
ज्ञातिरहितश्च ॥

**निकटं**, त्रि, (नि समीपे कटतीति । नि + कट +

अच् ।) अदूरम् । तत्पर्य्यायः ।
समीपम् २
आसन्नम् ३ सन्निकृष्टम् ४ सनीडम् ५
। इत्य-
२ । १० । ३२ ॥ कष्टिपातर इति भाषा)
(यथा, रघुः । १७ । ४६ ।
"निकषे हेमरेखेव श्रीरासीदनपायिनी ॥") ।

**निकषा**, स्त्री, (निकषति हिनस्तीति । कष हिंसे +

पदाद्यच् । ततष्टाप् ।) राक्षसमाता । इत्य-
मरः ॥ सा सुमालिकन्या विश्रवसो भार्य्या
च । इति रामायणम् ॥

**निकषा**, व्य, (नि + कष गतौ + "आः समिन्-

निकषिभ्याम् ।" उणां । ४ । १७४ । इति
आः ।) निकटम् । इत्यमरः । ३ । ४ । १९
॥
(यथा, माघे । १ । ६८ ।
"पयोधिमाबद्धचलज्जलाविलां
विलङ्घ्य लङ्कां निकषा हनिष्यति ॥")
मध्यम् । इति मेदिनी । षे, ७९ ॥

**निकषात्मजः**, पुं, (निकषाया आत्मजः ।) राक्षसः ।

इत्यमरः । १ । १ । ६३ ॥

**निकसः**, पुं, (निकसति पिनष्टि स्वर्णादिकं यत्र ।

नि + कस + घः ।) निकषः ।
इत्यमरटीकायां
भरतः ॥

**निकामं**, क्ली, (नि + कम इच्छायाम् + घञ् ।)

इष्टम् । यथेप्सितम् । इत्यमरः । २ । ९ ।
५७ ॥
(यथा, देवीभागवते । १ । ७ । ४० ।
"कुर्व्वन्ति देवि ! भजनं सकलं निकामं
ज्ञात्वा समस्तजननीं किल कामधेनुम् ॥")

**निकायः**, पुं, (निचीयते इति । नि + चि + "सङ्घे

चानौत्तराधर्य्ये ।" ३ । ३ । ४२ । इति घञ्
।
आदेश्च कः ।) लक्ष्यम् ।
सधर्म्मिप्राणिसंहतिः ।
(यथा, महाभारते । १ । १२३ । ४५ ।
"तथा देवनिकायानां सेन्द्राणाञ्च
दिवौकसाम् ॥")

| | | |
|---|---|---|
| | मरः । ३ । १ । ६६ ॥ अभ्यासः ६ सवेशः ७ अन्तः ८ अन्तिकः ९ समर्य्यादः १० सदेशः ११ अभ्यस्रः १२ अभ्यर्णः १३ सविधा १४ उप-कण्ठः १५ अभितः १६ । इति शब्दरत्नावली ॥ (यथा, शान्तिशतके । ३ । २ । “दिवसरजनीकूलच्छेदैः पतद्भिरनारतं वहति निकटे कालः स्रोतःसमस्तभयावहम् । | |

संहतानां समुच्चयः । (यथा,
श्रीकण्ठचरिते ।
६ । १८ ।
“नीरन्ध्रनिर्यत्सुमनोनिकाय-
काषायपट्टप्रणयादशोकः ॥”)
निलयः । (यथा, मनुः । १ । ३६ ।
“एते मनूंस्तु सप्तान्यानसृजन्
भूरितेजसः ।
देवान् देवनिकायांश्च महर्षीं
श्चामितौजसः ॥”)
परमात्मा । इति मेदिनी । ये, ८७
॥

**निकाय्यः**, पुं, (निचीयतऽस्मिन् धान्यादिकमिति ।
नि + चि +
“पाय्यसांनाय्यनिकाय्येति ।” ३ ।
१ ।
१२९ । इति ण्यत्प्रत्ययेन
निपातनात्
साधुः ।) गृहम् । इत्यमरः । २ । २
। ५ ॥
(यथा, भट्टिः । ६ । ६६ ।
“न प्रणाय्यो जनः कच्चिन्निकाय्यं
तेऽधितिष्ठति ।
देवकार्य्यविघाताय धर्म्मद्रोही
महोदये ॥”)

**निकारः**, पुं, (नि + कृ + घञ् ।) विप्रकारः ।
अपकारः । उत्कारः ।
धान्यस्योद्‌र्ध्वक्षेपणम् ।
इत्यमरभरतौ ॥ खलीकारः । इति
स्वामी ॥
धिक्कारः । इति शब्दमाला ॥

**निकारणं**, क्ली, (निकारयति क्लिश्नात्यनेनेति ।
नि + कृ + णिच् + ल्युट् ।)
मारणम् । वधः ।
इत्यमरः । २ । ८ । ११२ ॥

**निकासः**, त्रि, (निकासते शोभतेऽनेन इति ।
“स कुम्भञ्च निकुम्भञ्च
कुम्भकर्णात्मजावुभौ ।
प्रेषयामास संक्रुव्वो राक्षसैर्बहुभिः सह ॥”)
दन्तिकावृक्षः । इति मेदिनी । भे, १७ ॥
(अस्य पर्य्यायो यथा, --
“चित्रादन्ती निफुम्भः स्यादुपचित्रा
मुकूलकः ।
दाक्षायणी विशल्या च तथोडुम्बरपर्ण्यपि
॥”
इति वैद्यकरत्नमालायाम् ॥)
(प्रह्लादस्य पुत्त्रविशेषः । यथा, महाभारते ।
१ । ६५ । १९ ।
“प्रह्लादस्य त्रयः पुत्त्राः ख्याताः सर्व्वत्र
भारत ! ।
विरोचनश्च कुम्भश्च निकुम्भश्चेति भारत !
॥”
दनोः पुत्त्राणामन्यतमः । यथा, तत्रैव । १ ।
६५ । २५ ।
“निचन्द्रश्च निकुम्भश्च कुपटः कपटस्तथा
।
शरभः शलभश्चैव सूर्य्याचन्द्रमसौ तथा ।
एते ख्याता दनोर्व्वंशे दानवाः परिकीर्त्तिताः
॥”
स्वनामख्यातः क्षत्त्रियविशेषः । इति
सह्याद्रि-
खण्डे । ३४ । ४४ ॥ महादेवस्य
पार्श्वानुचर-
विशेषः । यथा, हरिवंशे । २९ । ४५ ।
“पार्श्वे तिष्ठन्तमाहूय निकुम्भमिदमब्रवीत् ।
गणेश्वरपुरीं गत्वा शून्यां वाराणसों कुरु ॥”
तथा च रघुः । २ । ३५ ।
“अवेहि मां किङ्करमष्टमूर्त्तेः
कुम्भोदरं नाम निकुम्भमित्रम् ॥”
स्कन्दस्य सैनिकविशेषः । यथा, महाभारते
।
९ । ४५ । ५३ ।
“शृणु नामानि चाप्येषां येऽन्ये स्कन्दस्य
सैनिकाः ।
विविधायुधसम्पन्नाश्चित्राभरणवर्म्मिणः ।

**निकृतः**, त्रि, (नि + कृ + क्तः ।) प्रत्याख्यातः ।
शठः । इत्यमरः । ३ । १ । ४६ ॥ वञ्चितः ।
नीचः । इति मेदिनी । ते, ११६ ॥

**निकृतिः**, स्त्री, (नि + कृ + क्तिन् ।) भर्त्सनम् ।
क्षेपः । शठः । शाठ्यम् । इति मेदिनी । ते,
११९ ॥ (यथा, किराते । १ । ४५ ।
“न समयपरिरक्षणं क्षमन्ते
निकृतिपरेषु परेषु भूरिधाम्नः ॥”)
दैन्यम् । इति शब्दरत्नावली ॥

**निकृष्टः**, त्रि, (नि + कृष + क्तः ।) अधमः ।
इत्यमरः । ३ । १ । ५४ ॥ जात्याचारादि-
निन्दितः । इति भरतः ॥

**निकेतः**, पुं, (निकेतति निवसत्यस्मिन्निति । नि +
कित निवासे + अधिकरणे घञ् ।) निकेतनम् ।
इत्यमरटीकायां भरतः ॥ (यथा, देवीभाग-
वते । ४ । ११ । १२ ।
“तदद्य विनयं कृत्वा सामपूर्ब्बं छलेन वै ।
तिष्ठध्वं स्वनिकेतेषु मदागमनकाङ्क्षया ॥”)

**निकेतनं**, क्ली, (निकेतति निवसत्य स्मिन्निति । नि
+ कित + अधिकरणे ल्युट् ।) गृहम् । इत्य-
मरः । २ । २ । ४ ॥ (यथा, देवीभागवते ।
१ । २० । ४२ ।
“विसर्ज्जिताथ सा तेन गता शाल्वनिकेतनम् ।
उवाच तं वरारोहा राजानं मनसेप्सितम् ॥”)
पलाण्डौ, पुं । इति शब्दचन्द्रिका ॥

**निकोचकः**, पुं, (निकोचति शब्दायते । नि + कुच
शब्दे + वुन् ।) अङ्कोठवृक्षः । इत्यमरः । २ ।
४ । २९ ॥ (यथा, सुश्रुते । १ । ४६ ।
“वातामाक्षोडाभिषुकनिचुलपिचुनिकोचकोरु
माणप्रभृतीनि ॥” क्वचित् क्लीवलिङ्गेऽपि दृश्यते
।
यथा, --
“बातामाक्षोडाभिषुकं मुकूलकनिकोचकम् ।
उरुमाणं प्रियालञ्च बृंहणं गुरुशीतलम् ॥”
इति वाभटे सूत्रस्थाने षष्ठेऽध्याये ॥)

**निकोठकः**, पुं, (निकोचकः + पृषोदरादित्वात्

कास दीप्तौ + करणे ल्युट् ।)
नीकाशः । इत्य-
मरटीका ॥
(तालव्यशकारान्तोऽपि दृश्यते ॥)

**निकुञ्चकः**, पुं, (निकुञ्चतीति । नि + कुन्च
कौटिल्ये + ण्वुल् ।)
परिमाणविशेषः । कुडव-
पादः । स च प्रसृत इति ख्यातः ।
इति भरत-
धृतसर्व्वस्वम् ॥ वानीरवृक्षः । इति
भावप्रकाशः ॥
(जलवेतसः । तत्पर्य्यायो यथा, --
"निकुञ्चकः परिव्याधो नादेयो
जलवेतसः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ॥)

**निकुञ्चितं**, क्ली, (नि + कुञ्च + क्तः ।) अङ्ग-
हारान्तर्गतशिरोविशेषः । यथा, --
"आकम्पितं कम्पितञ्च धुतं
विधुतमेव च ।
परिवाहितमाधूतमवधूतं
तथाञ्चितम् ॥
आकुञ्चितं
परावृत्तमुत्क्षिप्तञ्चाप्यधोगतम्।
लोलितं प्रकृतञ्चेति चतुर्द्दशविधं
शिरः ॥"
इति सङ्गीतदामोदरः ॥

**निकुञ्जं**, पुं क्ली, (नितरां कौ पृथिव्यां
जायते इति ।
जन् + डः । पृषोदरादित्वात्
मुमागमे साधुः ।)
कुञ्जम् । इत्यमरः । २ । ३ । ८ ॥
(यथा,
आर्य्यासप्तशत्याम् । ४९३ ।
"रचिते निकुञ्जपत्रैर्भिक्षुकपात्रे
ददाति साव-
ज्ञम् ।
पर्य्युसितमपि सुतीक्ष्णश्वासकवुष्णं
वधूरन्नम् ॥")

**निकुञ्जिकाम्ला**, स्त्री, (निकुञ्जिका कुञ्जोद्भवा
शङ्कुकर्णो निकुम्भश्च पद्मः कुमुद एव च ॥"
हर्य्यश्वपुत्त्रविशेषः । यथा, हरिवंशे । १२ ।
२ ।
"धौन्धुमारिर्दृढाश्वस्तु हर्य्यश्वस्तस्य
चात्मजः ।
हर्य्यश्वस्य निकुम्भोऽभूत् क्षत्त्रधर्म्मरतः
सदा ॥")

**निकुम्भाख्यवीजं**, क्ली, (निकुम्भाख्यस्य दन्तिका-
वृक्षस्य बीजवत् बीजं यस्य ।) जयपालः ।
इति राजनिर्घण्टः ॥ (जयपालशब्देऽस्य
गुणादिकं ज्ञेयम् ॥)

**निकुम्भितं**, क्ली, नृत्यविषयकाष्टोत्तरशतकरणान्त-
र्गतकरणविशेषः । यथा, सङ्गीतदामोदरे ।
"करणानान्तु सर्व्वेषां सामान्यं
लक्षणन्त्विदम् ।
प्रायो वामकरो वक्षःस्थितोऽन्यः पुरतोऽनुगः
॥
पादाभ्यां करणं ज्ञेयं तदिहाष्टोत्तरं शतम् ।
निकुम्भितं पार्श्वक्रान्तमतिक्रान्तं
विवर्त्तकम् ॥
विद्युद्भ्रान्तं गजक्रीडं क्रान्तञ्च गरुडप्लुतम्
॥"

**निकुम्भी**, स्त्री, (निकुम्भ + गौरादित्वात् ङीष् ।)
दन्तीवृक्षः । इति राजनिर्घण्टः ॥

**निकुरम्बं**, क्ली, (निकुरतीति । नि + कुर + बाहु-
लकात् अम्बच् ।) समूहः । इत्यमरः । २ ।
। ४० ॥ (पुंलिङ्गेऽपि दृश्यते । यथा,
श्रीकण्ठ-
चरिते । १८ । ४० ।
"आरक्तगण्डरुचिविद्रुमदण्डभाजो
यस्यास्ति फेननिकुरम्ब इवाट्टहासः ॥")
चस्य ठः ।) निकोचकः । इत्यमरटीकायां
भरतः ॥ (यथा, --
"तिलः पियालाभिषुकौ विभीतका-
श्चित्राभयैरण्डमधूकसर्षपाः ।
कुसुम्भविल्वारुकमूलकातसी-
निकोठकाक्षोडकरञ्जशिग्रुजाः॥
स्नेहाशयास्थावरसंज्ञितास्तथा-
स्युर्ज्जङ्गमा मत्स्यमृगाः सपक्षिणः ॥"
इति चरके सूत्रस्थाने त्रयोदशेऽध्याये ॥)

**निक्वणः**, पुं, (नि + क्वण शब्दे + "क्वणो वीणायाञ्च ।"
३ । ३ । ६५ । इति अप् ।) वीणाया अन्यस्य
च किन्नरादेः शब्दः । तत्पर्य्यायः । निक्वाणः २
क्वाणः ३ क्वणः ४ क्वणनम् ५ । इत्यमरः । १
। ७ ।
२४ ॥ प्रादेरप्युपसर्गादुत्तरस्य क्वणधातोः
प्रक्वाणः ६ प्रक्वणः ७ इत्यादयः प्रयोगा भवन्ति
।
आदिना सुक्वाणः सुक्वणः उपक्वाणः
उपक्वणः
इत्यादयः । इति भरतः ॥

| | | |
|---|---|---|
| अम्ला ।) कुञ्जिकावृक्षप्रभेदः ।<br>तत्पर्य्यायः ।<br>कुञ्जिका २ कुञ्जवल्लरी ३ । इयं<br>गुणैः श्रीवल्ली-<br>सदृशी । इति राजनिर्घण्टः ॥<br>**निकुम्भः**, पुं, कुम्भकर्णपुत्त्रः । (यथा, रामायणे ।<br>६ । ७५ । ४६ । | | |

**निक्वाणः**, पुं, (नि + क्वण शब्दे + पक्षे घञ् ।)
निक्वणः । इत्यमरः । १ । ७ । २४ ॥

**निखर्ब्बं**, क्ली, (निखर्ब्बति बहुलसंख्यां गच्छतीति ।
नि + खर्ब्ब गतौ + पचाद्यच् ।)
दशखर्ब्बसंख्या ।
दशसहस्रकोटयः । इति लीलावती हेम-
चन्द्रश्च ॥ (यथा, महाभारते । २ । ६१ ।
३ ।
“शङ्खञ्चैव महापद्मं निखर्ब्बं कोटिरेव च ॥”)
पुंलिङ्गोऽप्ययम् । यथा । वृन्दः खर्ब्बो
निखर्ब्ब-
श्चेत्यादि ॥

**निखर्ब्बः**, त्रि, (नितरां खर्ब्बः ।) वामनः । इति
हेमचन्द्रः । ३ । ११८ ॥

**निखिलं**, त्रि, (निवृत्तं खिलं शेषो यस्मात् ।)
समस्तम् । इत्यमरः । ३ । १ । ६५ ॥
(यथा,
देवीभागवते । १ । २ । ४० ।
“निखिलमलगणानां नाशकृत् कामकन्दं
प्रकटय भगवत्या नामयुक्तं पुराणम् ॥”)

**निगडः**, पुं क्ली, (निगलति बध्नातीति । नि +
गल + अच् । लस्य डत्वम् ।) हस्तिनां
लोह-
मयपादबन्धोपकरणम् । इति भरतः ॥ आँदु
इति दाँडुका इति च ख्यातः ॥ तत्पर्य्यायः
।
शृङ्खलः २ अन्दुकः ३ । इत्यमरः । २ । ८ ।
४१ ॥
हिञ्जीरः ४ अन्धुः ५ । इति शब्दरत्नावली
॥
(यथा, माघे । ५ । ४८ ।
“बद्धापराणि परितो निगडान्यलावीत्
स्वातन्त्र्यमुजज्वलमवापकरेणुराजः ॥”)

**निगडितः**, त्रि, (नि + गल + क्तः । लस्य डत्वम् ।
यद्वा, निगडो जातोऽस्येति । तारकादित्यात्
अध्वा । इति हेमचन्द्रः । ४ । ३८ ॥
(उपदेशः ।
यथा, भागवते । १ । ५ । ३९ ।
“इमं स्वनिगमं ब्रह्मन्नवेत्य मदनुष्ठितम् ।
अदान्मे ज्ञानमैश्वर्य्यं स्वस्मिन् भावञ्च
केशवः ॥”)

**निगरः**, पुं, (नि + गॄ + “ऋदोरप् ।” ३ । ३ । ५७ ।
इति भावे अप् ।) भोजनम् । इति राज-
निर्घण्टः ॥

**निगरणं**, क्ली, (नि + गॄ भक्षणे + भावे ल्युट् ।)
भक्षणम् । इति मेदिनी । णे, ९८ ॥

**निगरणः**, पुं, (निगीर्य्यते भक्ष्यतेऽनेनेति । नि +
गॄ + करणे ल्युट् ।) गलः । इति मेदिनी ।
णे,
९८ ॥ होमधूमः । इति शब्दरत्नावली ॥

**निगादः**, पुं, (नि + गद भाषे + पत्ते घञ् ।)
कथनम् । इत्यमरः । ३ । २ । १२ ॥

**निगारः**, पुं, (नि + गॄ भक्षणे + भावे घञ् ।)
निगरणम् । भक्षणम् । इत्यमरः । ३ । २ ।
३७ ॥

**निगालः**, पुं, (निगलति भक्षयत्यनेनेति । नि + गल
भक्षणे + करणे घञ् ।) अश्वगलोद्देशः ।
इत्य-
गरः । २ । ८ । ४८ ॥ (यथा, अश्ववैद्यके
। २ । १४ ।
“घण्टाबन्धसमीपस्थो निगालः
परिकीर्त्तितः ।
अधस्ताच्च निगालस्य गलमाहुर्मणीषिणः
॥”)

**निगालवान्**, पुं, (निगालोऽस्त्यस्येति । निगाल +
मतुप् मस्य वः ।) अश्वः । इति
शब्दचन्द्रिका ॥

**निगुः**, पुं, (निगम्यते विद्यतेऽनेनेति । नि + गम +
सामदानविधिभेद्दनिग्रहाः
सिद्धिमन्त इव तस्य भूपतेः ॥”)
चिकित्सा । इति राजनिर्घण्टः ॥ विष्णुः ।
यथा, महाभारते । १३ । १४९ । ९४ ।
“प्रग्रहो निग्रहो व्यग्रो नैकशृङ्गो गदाग्रजः
॥”
(“सर्व्वं प्रलये निगृह्णातीति निग्रहः ।”
इति
शाङ्करभाष्यम् ॥ महादेवः । इति महाभार-
तम् । १३ । १७ । ६४ ॥)

**निग्राहः**, पुं, (नि + ग्रह + “आक्रोशेऽवन्योर्ग्रहः ।”
३ । ३ । ४५ । इति घञ् ।) निग्रहः ।
आक्रोशः ।
यथा । निग्राहस्ते भूयात् । इति
संक्षिप्तसार-
व्याकरणम् ॥ (यथा च भट्टिः । ७ । ४३ ।
“संदृष्टायान्तु वैदेह्यां निग्राहो वोऽर्थवानरेः
॥”)

**निघः**, पुं, (नियमितं निर्व्विशेषेण वा हन्यते
ज्ञायते इति । नि + हन + “निघो
निमितम् ।”
३ । ३ । ८७ । निपातनात् साधुः ।)
विष्वक्-
समः । समन्तात् तुल्यारोहपरिणाहः ।
इत्यमर-
भरतौ ॥

**निघण्टिका**, स्त्री, गुलञ्चकन्दः । इति राज-
निर्घण्टः ॥

**निघण्टुः**, पुं, (निघण्टति शोभते इति । घण्ट-
दीप्तौ + “मृगय्वादयश्च ।” उणां । १ ।
३८ ।
इति कुप्रत्ययेन साधुः ।) नामसंग्रहः ।
इति
हेमचन्द्रः । २ । १७२ ॥

**निघसः**, पुं, (न्यदनमिति । नि + अद् भक्षणे +
“नौ ण च ।” ३ । ३ । ६० । इति अप् ।

इतच् ।) बद्धः । इति हेमचन्द्रः । ३ । १०३ ॥

**निगणः**, पुं, होमधूमः । इति त्रिकाण्डशेषः ॥

**निगदः**, पुं, (नि + गद भाषे + "नौ गदनदपठ-
स्वनः ।" ३ । ३ । ६४ । इति अप् ।) भाष-
णम् । कथनम् । तत्पर्य्यायः । निगादः २ ।
इत्यमरः । ३ । २ । १२ ॥ (यथा, भागवते ।
५ । ३ । १६ ।
"इति निगदेनाभिष्टूयमानो भगवाननिमिष-
र्षभो वर्षधवाभिवादिताभिवन्दितचरणः सदय-
मिदमाह ॥") उच्चैर्ज्जपः । यथा । निगदस्तु
जनैर्वेद्य इत्यागमः ॥

**निगमः**, पुं, (निगमे पुर्य्यां भवः । निगम + "तत्र
भवः ।" ४ । ३ । ५३ । इत्यण् । संज्ञापूर्ब्बकत्वात्
वृद्ध्यभावः ।) बाणिजः । (निगभ्यतेऽत्रेति ।
नि + गम + "गोचरसञ्चरेति ।" ३ । ३ । ११९ । इति
धप्रत्ययेन साधुः ।) पुरी । कटः । (निगम्यते
ज्ञायतेऽनेनेति ।) वेदः । (यथा, देवीभाग-
वते । १ । ५ । ६१ ।
"कथङ्कारं वाच्यः सकलनिगमागोचरगुण-
प्रभावः स्वं यस्मात् स्वयमपि न जानासि परमम् ॥")
बणिक्पथः । हट्ट इति यावत् । इति मेदिनी ।
मे, ४५ ॥ निश्चयः । (यथा, "तस्या एव प्रति-
ज्ञाया हेतुभिर्दृष्टान्तोपनयनिगमैः स्थापना ॥"
इति चरके विमानस्थानेऽष्टमेऽध्याये ॥)

बाहुलकात् ङुः ।) मनः । इति
त्रिकाण्डशेषः ॥
मलम् । मूलम् । मनोज्ञम् । चित्रकर्म्म । इति
संक्षिप्तसारोणादिवृत्तिः ॥

**निगूढः**, पुं, (निगुह्यते संव्रियते इति । नि +
गुह + क्तः । "यस्य विभाषा ।" ७ । २ । १५ ।
इति । नेट् ।) वनमुद्गः । इति हेमचन्द्रः ।
४ । २३९ ॥ गुप्ते, त्रि । यथा, --
"आस्ते विधुः परमनिर्वृत एव मौलौ
शम्भोरिति त्रिजगतीजनचित्तवृत्तिः ।
अन्तर्न्निगूढनयनानलदाहदुःखं
जानाति कः स्वयमृते वत शीतरश्मेः ॥"
इत्युद्भटः ॥

**निग्रहः**, पुं, (नियमेन ग्रहणमिति । नि + ग्रह +
"ग्रहवृद्रिति ।" ३ । ३ । ५८ । इति अप् ।)
अनुग्रहाभावः । इत्यमरः । ३ । २ । ३१ ॥
(यथा, मनुः । ७ । १७५ ।
"निग्रहं प्रकृतीनाञ्च कुर्य्याद् योऽरिबलस्य च ।
उपसेवेत तं नित्यं सर्व्वयत्नैर्गुरुं यथा ॥")
बन्धनम् । (यथा, महाभारते । १ । १ । १७४ ।
"यदाश्रौषं कर्णदुर्य्योधनाभ्यां
बुद्धिं कृतां निग्रहे केशवस्य ॥")
भर्त्सनम् । सीमा । इति
मेदिनीकरहेमचन्द्रौ ॥
(निराकरणम् । यथा, रघुः । ९ । २५ ।
"दिनमुखानि रविर्हिमनिग्रहै-
र्व्विमलयन् मलयन्नगमत्यजत् ॥"
दण्डः । यथा, रघुः । ११ । ५५ ।
"ते चतुर्थसहितास्त्रयो बभुः
सूनवो नवबधपरिग्रहात् ।

"घञपोश्च ।" २ । ४ । ३८ । इति
घस्लादेशः ।)
आहारः । इत्यमरः । २ । ९ । ५६ ॥

**निघातिः**, स्त्री, (निहन्यतेऽनयेति । नि + "वसि-
वपियजीति ।" उणां । ४ । १२४ । इति इञ्
ततः कुत्वम् ।) लोहघानी । लौहमयदण्डः ।
इत्युणादिकोषः ॥

**निघुष्टं**, क्ली, (निघुष्यते स्मेति । नि + घुष् +
भावे क्तः ।) घुष्टम् । घोषणम् । इति शब्द-
रत्नावली ॥

**निघृष्वः**, पुं, (नि + घृषु संघर्षे + "सर्व्वनिघृष्व-
रिष्वेति ।" उणां । १ । १५३ । इति वन्प्रत्ययेन
निपातनात् साधुः ।) खुरः । इत्युणदिकोषः ॥
वायुः । खरः । मार्गः । वराहः । इति संक्षिप्त-
सारोणादिवृत्तिः ॥ (ह्रस्वः । इति निघण्टुः ।
३ । २ ॥)

**निघ्नः**, त्रि, (निहन्यते निगृह्यते इति । नि + हन +
घञर्थे कः । नियम्यत्वादेवास्य तथात्वम् ।)
अधीनः । इत्यमरः । ३ । १ । १६ ॥ (यथा,
रघुवंशे । १४ । ५८ ।
"आश्वास्य रामावरजः सतीं ता-
माख्यातवाल्मीकिनिकेतमार्गः ।
निघ्नस्य मे भर्त्तृनिदेशरौक्ष्यं
देवि ! क्षमस्वेति बभूव नम्रः ॥")
अङ्कपूरणम् । इति लीलावती ॥ (यथा, सूर्य्य-
सिद्धान्ते । ३ । २९ ।
"पुनर्द्वादशनिघ्नाच्च लभ्यते यत् फलं बुधैः ॥"

पुं । सूर्य्यवंशीयनृपभेदः । यथा, हरिवंशे १५ । २२ ।
"अनरण्यसुतो निघ्नो निघ्नपुत्त्रौ बभूवतुः ॥")

**निचयः** पुं, (नि + चि + "एरच् ।" ३ । ३ । ५६ ।
इत्यच् ।) समूहः । (यथा, महाभारते । ४ । २ । ३ ।
"आहरिष्यामि दारूणां निचयान् महतो-
ऽपि च ॥")
निश्चयः । इति शब्दरत्नावली ॥

**निचिकी**, स्त्री, (निचिना कायति शोभते इति ।
कै + क । गौरादित्वात् ङीष् ।) नैचिकी ।
उत्तमा गौः । इत्यमरटीकायां भरतः ॥

**निचितं**, त्रि, (निचीयते स्मेति । नि + चि +
क्त ।) पूरितम् । व्याप्तम् । इति हेमचन्द्रः ।
६ । १०९ ॥ (यथा, महाभारते । ३ । १२९ । ४ ।
"पश्य नानाविधाकारैरग्निभिर्निचितां महीम् ॥"
सञ्चितम् । यथा, भावप्रकाशे अतिसाराधिकारे ।
"वायुः प्रवृद्धो निचितं बनाशं
नुदत्यधस्तादहिताशनस्य ॥"
नदीभेदे, स्त्री । यथा, महाभारते । ६ । ९ । १८ ।
"कौशिकीं त्रिदिवां कृत्यां निचितां रोहिता-
रणीम् ॥")

**निचुलः**, पुं, (निचोलति समुच्छ्र्यतीति । नि +
चुल + "इगुपधज्ञेति ।" ३ । १ । १३५ । इति
कः ।) इज्जलवृक्षः । इत्यमरः । २ । ४ । ६१ ॥
(पर्य्यायोऽस्य यथा, --
"इज्जलो हिज्जलश्चापि निचुलश्चाम्बुजस्तथा ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
वेतसवृक्षः । इति राजनिर्घण्टः ॥ निचोलः ।
इति हेमचन्द्रः । ४ । २११ ॥

**निचुलकं**, क्ली, (निचुल इव प्रतिकृतिः । "इवे

**निजं**, त्रि, (निश्चयेन जायत इति । नि + जन +
डः ।) स्वकीयम् । (यथा, हितोपदेशे ।
"अयं निजः परो वेति गणना
लघुचेतसाम् ॥")
नित्यम् । इत्यमरः । ३ । ३ । ३२ ॥

**निट्**, [श्] स्त्री, (नितरां श्यति तनूकरोति
व्यापारानिति । शो + कः ।
पृषोदरादित्वात्
साधुः ।) निशा । यथा, --
"वास्तवोषा निशाख्या च वासतेयी तमा-
निशौ ॥"
इति रात्रिपर्य्याये त्रिकाण्डशेषः ॥
(यथा, मनुः । ९ । ६० ।
"विधवायां नियुक्तस्तु घृताक्तो
वाग्यतो निशि ।
एकमुत्पादयेत् पुत्त्रं न द्बितीयं
कथञ्चन ॥")

**निडीनं**, क्ली, (नीचैर्डीनं पतनमस्त्यस्मिन् ।) पक्षि-
गतिविशेषः । (यथा, महाभारते । ८ । ४१ । २६ ।
"निडीनमथ संडीनं
तिर्य्यग्डीनगतानि च ॥")
शनैर्यानम् । इति जटाधरः ॥

**निण्डिका**, स्त्री, कलायविशेषः । तेओडा इति
भाषा ॥ तत्पर्य्यायः । सतीला २
तिण्टी ३ ।
इति शब्दचन्द्रिका ॥

**नितम्बः**, पुं, (निभृतं तम्यते आकाङ्क्ष्यते कामुकै-
रिति । तमु आकाङ्क्षायाम् +
उल्वादयश्चेति
साधुः । यद्वा, नितम्बति पीडयति
नायक-

**नितरां**, [म्] व्य, (नि + तरप् + "किमेत्तिङव्य-
येति ।" ५ । ४ । ११ । अमुप्रत्ययः ।)
सुतराम् ।
यथा, --
"नागोद्भवो नागधनाभिलाषी
वक्रोक्तिजालो नितरां कुशीलः ॥"
इति कोष्टीप्रदीपः ॥

**नितलं**, क्ली, (नितरां तलमधोभागो यस्मिन् ।)
सप्तपातालान्तर्गतपातालविशेषः । इति शब्द-
रत्नावली ॥

**नितान्तं**, क्ली, (नितान्यतीति । तम + कर्त्तरि क्तः ।
"अनुनासिकस्येति ।" ६ । ४ । १५ ।
इति दीर्घः ।)
अतिशयः । (यथा, कुमारसम्भवे । ३ । ४ ।
"केनाभ्यसूया पदकाङ्क्षिणा ते
नितान्तदीर्घैर्ज्जनिता तपोभिः ॥")
तद्वति, त्रि । इत्यमरः । १ । १ । ७० ॥

**नित्यं**, क्ली, (नियमेन भवम् । नि + "अव्ययात्
त्यप् ।" ४ । २ । १०४ । इति त्यप् ।)
निरन्तरक्रिया-
वचनम् । तत्पर्य्यायः । सततम् २
अनारतम् ३
अश्रान्तम् ४ सन्ततम् ५ अविरतम् ६ अनि-
शम् ७ अनवरतम् ८ अजस्रम् ९ ।
इत्यमरः ।
१ । १ । ६९ ॥ प्रसक्तम् १० आसक्तम् ११ अल-
द्धम् १२ । इति जटाधरः ॥ तद्वति, त्रि ।
इत्य-
मरः ॥ प्रत्यवायजनकीभूताभावप्रतियोगि ।
यथा एकादश्यामुपोषणं नित्यम् ।
ध्वंसप्राग-

प्रतिकृतौ ।” ५ । ३ । ९६ । इति कन् ।) निचोल-
कम् । इति हारावली । १९२ ॥

**निचोलः**, पुं, (निचोल्यत इति । नि + चुल + घञ् ।)

येन स्युतेनास्युतेन वा वस्त्रान्तरमाच्छाद्यते । इत्यमरभरतौ ॥ पाछुडि इति ख्यातः । तत्-पर्य्यायः । निचुलः २ । उत्तरच्छदः ३ प्रच्छद-पटः ४ ॥ इति हेमचन्द्रः । ३ । ३४० ॥ (यथा, राजतरङ्गिण्याम् । ३ । १६९ ।
“सन्तमध्वान्तमिषतस्तीव्रशीतवशीकृताः ।
आशाश्चकाशिरे नीलनिचोलाच्छादिताइव ॥”)

**निचोलकः**, पुं, (निचोल इव कायतीति । कै + क ।)

भटातश्चोलाकृतिसन्नाहः । तत्पर्य्यायः । कुर्पासः
२ वारवाणः ३ कञ्चुकः ४ । इति हेमचन्द्रः । ३ । ४३१ ॥

**निच्छविः**, स्त्री, (निकृष्टा छविः सादृश्य यत्र ।)

तीरभुक्तिदेशः । इति त्रिकाण्डशेषः ॥ त्रिहुत इति भाषा ॥

**निच्छिविः**, पुं, वर्णसङ्करजातिभेदः । इति जटा-

धरः ॥ यथा, --
“झलो मल्लश्च राजन्याद्व्रात्यात् निच्छिविरेव च ।
नटश्च करणश्चैव खसो द्रविड एव च ॥”
इति मनुः । १० । २२ ॥

चित्तमिति । नि + तम्ब हिंसायाम् + अच् ।)
स्त्रीकट्याः पश्चाद्भागः । इत्यमरः । २ । ६ । ७४ ॥
पाछा इति भाषा ॥ (यथा, माघे । ११ । ५ ।
“विपुलतरनितम्बाभोगरुद्धेरमण्याः
शयितुमनधिगच्छन्
जीवितेशोऽवकाशम् ॥”)
स्कन्धः । रोधः । कटकः । (यथा, भट्टीकाव्ये ।
२ । ८ ।
“गिरेर्नितम्ब मरुता विभिन्नं
तोयावशेषेण हिमाभमभ्रम् ॥”)
कटिमात्रम् । इति मेदिनी । बे, १२ ॥ (यथा,
विदग्धमुखमण्डने ।
“तरुण्यालिङ्गितः कण्ठे
नितम्बस्थानमाश्रितः ।
गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुः ॥”)

**नितम्बिनी**, स्त्री, (अतिशयितो नितम्बोऽस्त्यस्या

इति । नितम्ब + “अत इनिठनौ ।” ५ । २ । ११५ ।
इति इनिः स्त्रियां ङीप् ।) प्रशस्तनितम्ब-
विशिष्टा । इत्यमरः । २ । ६ । ३ ॥ (यथा, आर्य्या-
सप्तशत्याम् । ५५४ ।
“वैगुण्येऽपि महता विनिर्म्मितं भवति कर्म्म
शोभायै ।
दुर्वहनितम्बमन्थरमपि हरति नितम्बिनी-
नृत्यम् ॥”)
स्त्रीमात्रम् । इति राजनिर्घण्टः ॥ (यथा,
कुमारसम्भवे । ३ । ७ ।
“नितम्बिनीमिच्छसि मुक्तलज्जां
कण्ठे स्वयं ग्राहनिषिक्तबाहुम् ॥”

भावाप्रतियोगि । यथा, गगनं नित्यम् । अह-
रहर्ज्जायमानम् । यथा, नित्यं क्रीडन्ति
कुमाराः । अहरहःक्रियमाणत्वेन विधिबोधि-
तम् । यथा, स्नानतर्पणादिकं नित्यम् । अन-
वच्छिन्नपरम्पराकः । यथा, वर्णा नित्याः
॥

**नित्यः**, त्रि, (नियमेन भवः । नि + “अव्ययात्

त्यप् ।” ४ । २ । १०४ । इत्यत्र “त्यप् नेर्ध्रुव
इति वक्तव्यम् ।” इति वार्त्तिकोक्त्या त्यप् ।) काल-
त्रयव्यापी । तत्पर्य्यायः । शाश्वतः २ ध्रुवः ३
सदातनः ४ सनातनः ५ । इत्यमरः । ३ । १ । ७२ ॥
(यथा, महाभारते । १ । १०० । २ ।
“दमो दानं क्षमा बुद्धिर्ह्रीर्धृतिस्तेज उत्तमम् ।
नित्यान्यासन् महासत्त्वे शान्तनौ पुरुषर्षभे ॥”)
समुद्रे, पुं । इति राजनिर्घण्टः ॥

**नित्यकर्म्म**, [न्] क्ली, (नित्यं कर्म्म ।) प्रत्यवाय-

जनकाभावप्रतियोगिकार्य्यम् । इति स्मृतिः ॥
तद्यथा, --
“नित्यं नैमित्तिकञ्चैव नित्यनैमित्तिकन्तथा ।
गृहस्थस्य त्रिधा कर्म्म तन्निशामय पुत्त्रक ! ॥
पञ्चयज्ञाश्रितं नित्यं यदेतत् कथितं तव ।
नैमित्तिकं तथा चान्यत् पुत्त्रजन्मक्रियादिकम् ॥
नित्यनैमित्तिकं ज्ञेयं पर्व्वश्राद्धादि पण्डितैः ॥”
इति मार्कण्डेयपुराणम् ॥ * ॥
तत्त्यागे दोषो यथा, --

|  |  |  |
| --- | --- | --- |
|  | नितम्बविशिष्टे, त्रि । यथा, रघुः । १९ । २६ ।<br>“लोभ्यमाननयनः श्लथांशुकै-र्मेखलागुणपदैर्नितम्बिभिः ॥”) | “नित्यानां कर्म्मणां विप्र ! तस्य हानिरहर्न्निशम् ।<br>अकुर्व्वन् विहितं कर्म्म शक्तः पतति तद्दिने ॥<br>प्रायश्चित्तेन महता शुद्धिमाप्नोत्यनापदि ।<br>पक्षं नित्यक्रियाहानेः कर्त्ता मैत्रेय ! मानवः ॥ |

संवत्सरं क्रियाहानिर्यस्य पुंसोऽभिजायते
।
तस्यावलोकनात् सूर्य्यो निरीक्ष्यः
साधुभिः सदा ॥
स्पृष्टे स्नानं सचेलस्य शुद्धिहेतुर्म्महामुने !
।
पुंसो भवति तस्योक्ता न शुद्धिः
पापकर्म्मणः ॥"
इति विष्णुपुराणे ३ अंशे १८ अध्यायः ॥
* ॥
क्षतादौ नित्यकर्म्मकरणनिषेधो यथा, --
"जानूद्ध्र्वे क्षतजे जाते नित्यकर्म्म न
चाचरेत् ।
नैमित्तिकञ्च तदधःस्रवद्रक्तो न चाचरेत् ॥
सूतके च समुत्पन्ने क्षुरकर्म्मणि मैथुने ।
घूमोद्गारे तथा वान्तौ नित्यकर्म्माणि
संत्यजेत् ॥
द्रव्ये भुक्ते त्वजीर्णे च नैव भुक्त्वा च
किञ्चन ।
कर्म्म कुर्य्यान्नरो नित्यं सूतके मृतके तथा
॥
पत्रं पुष्पञ्च ताम्बूलं भेषजत्वेन कल्पितम्
।
कणादिपिप्पल्यन्तञ्च फलं भुक्त्वा न
चाचरेत् ॥
जलस्यापि नरश्रेष्ठ ! भोजनाद्भेषजादृते ।
नित्यक्रिया निवर्त्तेत सह नैमित्तिकैः सदा
॥
जलौकां गूढपादञ्च कृमिगण्डूपदादिकम् ।
कामाद्दम्भेन संस्पृश्य नित्यकर्म्माणि
संत्यजेत् ॥
विशेषतः शिवापूजां प्रमीतपितृकी द्विजः ।
यावद्वत्सरवपर्य्यन्तं मनसापि न चाचरेत्
॥
महागुरुनिपाते तु काम्यं किञ्चिन्न चाचरेत्
।
आर्त्विज्यं ब्रह्मयज्ञञ्च श्राद्धं देवयुतञ्च यत्
॥
गुरुमाक्षिप्य विप्रञ्च प्रकृत्यैव च पाणिना ।

**नित्यगतिः**, पुं, (नित्यं गतिरस्येति ।) वायुः । इति
हेमचन्द्रः । ४ । १७२ ॥ (यथा, महाभारते ।
७ । ४५ । २२ ।
"यथा वायुर्नित्यगतिर्जलदान् शतशोऽम्बरे
॥")

**नित्यदा**, व्य, (नित्य + दाच् ।) सर्व्वदा । यथा, --
"पुण्यं मधुवनं तत्र सान्निध्यं नित्यदा हरेः ॥"
इति श्रीभागवते ४ स्कन्धः ॥

**नित्यदानं**, क्ली, (नित्यं दैनन्दिनं दानम् ।) प्रति-
दिनकर्त्तव्यदानम् । यथा, गरुडपुराणे ।
"नित्यं नैमित्तिकं काम्यं विमलं दानमीरितम्
।
अहन्यहनि यत् किञ्चिद्दीयतेऽनुपकारिणे ॥
अनुद्दिश्य फलं तत् स्याद्ब्राह्मणाय तु नित्य-
कम् ॥"

**नित्यप्रलयः**, पुं, (नित्यः प्रलयः ।) चतुर्व्विध-
प्रलयान्तर्गतप्रलयविशेषः । यथा, --
"नित्यः सदैव जातानां यो विनाशो
दिवानिशम् ॥"
इति विष्णुपुराणे १ अंशे ७ अध्यायः ॥
"सदैव दीपज्वालावत् सातत्येन जातानां
दिवा-
निशं यो विनाशः स नित्यः ॥" इति
तट्टीकायां
स्वामी ॥

**नित्ययौवना**, स्त्री, (नित्यं स्थिरं यौवनं यस्याः ।)
द्रौपदी । इति हेमचन्द्रः । ३ । ३७४ ॥ (नित्यं
यौवनं यस्येति ।) स्थिरयौवने, त्रि ॥

**नित्यवैकुण्ठः**, पुं, (नित्यः सनातनो वैकुण्ठः ।)
विष्णाः स्थानविशेषः । यथा, --
"ऊर्द्ध्वं नभसि संविष्ठो नित्यवैकुण्ठ एव च ।
आत्माकाशसमो नित्यो
विस्ततश्चन्द्रविम्बवत् ॥
ईश्वरेच्छासमुद्भूतो निलक्ष्यश्च निराश्रयः ।
आकाशवत् सुविस्तारश्चामूल्यरत्ननिर्म्मितः
॥

"इमान्नित्यमनध्यायानधीयानो
विवज्जयेत् ।
अध्यापनञ्च कुर्व्वाणः शिष्यानां
विधिपूर्ब्बकम् ॥
कर्णस्रवेऽनिले रात्रौ दिवा पांशुसमूहने ।
एतौ वर्षास्वनध्यायावध्यायज्ञाः प्रचक्षते
॥
विद्युत्स्तनितवर्षेषु महोल्कानाञ्च संप्लवे
।
आकालिकमनध्यायमेतेषु मनुरब्रवीत् ॥
एतांस्त्वभ्युदितान् विद्यात् यदा
प्रादुष्कृतामिषु ।
तदा विद्यादनध्यायमनृतौ चाभ्रदर्शने ॥
निर्घाते भूमिचलने
ज्योतिषाञ्चोपसर्ज्जने ।
एतानाकालिकान्
विद्यादनध्यायानृतावपि ॥
प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिस्वने
।
सज्योतिः स्यादनध्यायः शेषे रात्रौ यथा
दिवा ॥
नित्यानध्याय एव स्याद्ग्रामेषु नगरेषु च
।
धर्म्मनैपुण्यकामानां पूतिगन्धे च सर्व्वदा
॥
अन्तर्गतशवे ग्रामे वृषलस्य च सन्निधौ ।
अनध्यायो रुद्यमाने समवाये जनस्य च
॥
उदके मध्यारात्रे च विण्मूत्रस्य
विसर्ज्जने ।
उच्छिष्टः श्राद्धभुक् चैव मनसापि न
चिन्तयेत् ॥
प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य
केतनम् ।
त्र्यहं न कीर्त्तयेद्ब्रह्म राज्ञो राहोश्च
सूतके ॥
यावदेकानुदिष्टस्य गन्धो लेपश्च तिष्ठति
।

न कुर्य्यान्नित्यकर्म्माणि रेतःपाते च भैरव ! ॥”
इति कालिकापुराणे ५४ अध्यायः ॥

**नित्यक्षौरं**, क्ली, (नित्यं कालाकालाभावतो राग-
प्राप्तत्वात् सदातनं क्षौरम् ।) वैधेतरक्षौरम् । रागप्राप्तकेशच्छेदनम् । यथा, --
“चूडोदिते तिथावृक्षे बुधेन्द्वोर्द्दिवसे नरः ।
नित्यक्षौरं प्रकुर्व्वीत जन्ममासे न तु क्वचित् ॥”
इति ज्योतिःसागरसारः ॥ * ॥
राजमार्त्तण्डे तु ।
“न स्नानमात्रगमनोत्सुकभूषितानाम्
अभ्यक्तभुक्तरणकालनिवासनानाम्।
सन्ध्या निशाशनिकुजार्कदिनेषु रिक्ते
क्षौरं हितं प्रतिपदह्नि न चापि विष्ट्याम् ॥”
इति ज्योतिस्तत्त्वम् ॥ * ॥
तत्र मासाः सौराः भाद्रपौषचैत्रा निषिद्धाः जन्ममासोऽपि निषिद्धः तदितरे विहिताः ।
वारस्तु बुधसोमयोर्व्विहितः । सामगानां मङ्गल-
वारोऽपि । तिथयस्तु नन्दारिक्तापूर्णिमामा-
वास्याष्टमीभिन्ना विहिताः । नक्षत्राणि रेवत्य-
श्विनी पुष्यः धनिष्ठा ज्येष्ठा श्रवणा स्वाती हस्ता
मृगशिरः शतभिषा पुनर्व्वसुः चित्रा । राजा-
देशे द्विजादेशे विवाहे मृतसूतकाशौचे बन्ध-
मोक्षे यज्ञकर्म्मणि परीक्षायां निसिद्धमासादि-
ष्वपि कार्य्यम् । अशक्तश्चेन्निषिद्धेऽपि दिने ।
“केशवमानर्त्तपुरं पाटलिपुत्त्रं पुरीमहीच्छ-
त्राम् ।
दितिमदितिञ्च स्मरतां क्षौरविधौ भवति कल्याणम् ॥”
तत्र नारायणः श्रीमान् वनमाली चतुर्भुजः ।
लक्ष्मीसरस्वतीगङ्गातुलसीपतिरीश्वरः॥
सुनन्दनन्दकुमुदपार्श्वदादिभिरन्वितः ।
सर्व्वेशः सर्व्वसिद्धेशो भक्तानुग्रहकारकः ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे १५ अध्यायः ॥

**नित्या**, स्त्री, (नित्य + टाप् ।) पार्व्वती (यथा,
मार्कण्डेये । ८५ । ८ ।
“रौद्रायै नमो नित्यायै गौर्य्यै धात्रै नमो नमः ॥”)
मनसा देवी । इति शब्दरत्नावली ॥ शक्ति-
विशेषः । अस्या मन्त्रो यथा, --
“वाग्भवं कामवीजञ्च नित्यक्लिन्ने मदौ पुनः ।
द्रवे वह्निवधूर्म्मन्त्रो द्वादशार्णोऽयमीरितः ॥”
ध्यानं यथा, --
“अर्द्धेन्दुमौलिमरुणाममराभिबन्द्याम्
अम्भोजपाशसृणिपूर्णकपालहस्ताम् ।
रक्ताङ्गरागरसनाभरणां त्रिनेत्रां
ध्यायेच्छिवस्य वनितां मदविह्वलाङ्गीम् ॥”
इति तन्त्रसारः ॥
(तन्त्रविशेषः । यथा, महासिद्धसारस्वते ।
“गणेशविवर्षिणीतन्त्रं नित्यातन्त्रं शिवागमम् ॥”)

**नित्यानध्यायः**, पुं, (नित्यं सर्व्वथा यथा तथा अन-
ध्यायः अध्ययनाभावः ।) सर्व्वथा वर्ज्जनीयवेद-
पाठकालादिः । यथा, --
विप्रस्य विदुषो देहे तावद्ब्रह्म न कीर्त्तयेत् ॥
शयानः प्रौढपादश्च कृत्वा चैवावसक्थिकाम् ।
नाधीयीतामिषं जग्ध्वा सूतकान्नाद्यमेव च ॥
नीहारे बाणशब्दे च सन्ध्ययोरेव चोभयोः ।
अमावास्याचतुर्द्दश्योः पौर्णमास्यष्टकासु च ॥
अमावास्या गुरुं हन्ति शिष्यं हन्ति चतुर्द्दशी ।
ब्रह्माष्टकापौर्णमास्यौ तस्मात्ताः परिवर्ज्जयेत् ॥
पांशुवर्षे दिशां दाहे गोमायुविरुते तथा ।
श्वखरोष्ट्रे च रुवति पङ्क्तौ च न पठेद्द्विजः ॥
नाधीयीत श्मशानान्ते ग्रामान्ते गोव्रजेऽपि वा ।
वसित्वा मैथुनं वासः श्राद्धिकं प्रतिगृह्य च ॥
प्राणि वा यदि वाप्राणि यत् किञ्चित् श्राद्धिकं भवेत् ।
तदालभ्याप्यनध्यायः पाण्यास्यो हि द्विजः स्मृतः ॥
चौरैरुपप्लुते ग्रामे सम्भ्रमे चाग्निकारिते ।
आकालिकमनध्यायं विद्यात् सर्व्वाद्भुतेषु च ॥
उपाकर्म्मणि चोत्सर्गे त्रिरात्रं क्षेपणं स्मृतम् ।
अष्टकासु त्वहोरात्रमृत्वन्तासु च रात्रिषु ॥
नाधीयीताश्वमारूढो न वृक्षं न च हस्तिनम् ।
न नावं न खरं नोष्ट्रं नेरिणस्थो न यानगः ॥
न विवादे न कलहे न सेनायां न सङ्गरे ।
न भुक्तमात्रे नाजीर्णे न वमित्वा न सूतके ॥

| | | |
|---|---|---|
| इत्युच्चार्य्य कार्य्यम् । इति ज्योतिषम् ॥ | | अतिथिश्चाननुज्ञाप्य मारुते वाति वा भृशम् ।<br>रुधिरे च स्रुते गात्राच्छस्त्रेण च परिक्षते ॥<br>सामध्वनावृग्यजुषी नाधीयीत कदाचन ।<br>वेदस्याधीत्य वाप्यन्तमारण्यकमधीत्य च ॥<br>ऋग्वेदो देवदैवत्यो यजुर्व्वेदस्तु मानुषः । सामवेदः स्मृतः पित्र्यस्तस्मात्तस्याशुचिर्ध्वनिः ॥<br>एतद्विदन्तो विद्वांसस्त्रयीनिष्कर्षमन्वहम् ।<br>क्रमतः पूर्ब्बमभ्यस्य पश्चाद्वेदमधीयते ॥ |

पशुमण्डूकमार्ज्जारश्वसर्पनकुलाखुभिः ।
अन्तरागमने विद्यादनध्यायमहर्न्निशम् ॥
द्वावेव वर्ज्जयेन्नित्यमनध्यायौ प्रयत्नतः ।
स्वाध्यायभूमिञ्चाशुद्धामात्मानञ्चाशुचि
द्विजः ॥”
इति मानवे । ४ । १०१ -- १२७ ॥

**नित्यानित्यवस्तुविवेकः**, पुं, (नित्यानित्ये वस्तुनी
तयोर्व्विवेकः विवेचनम् ।) ब्रह्मैव नित्यं
वस्तु
ततोऽन्यदखिलमनित्यमितिविवेचनम् ।
इति
वेदान्तसारः ॥

**नित्याभैरवी**, स्त्री, (नित्या तदाख्यया प्रसिद्धा
भैरवी ।) भैरवीविशेषः । अस्या
ध्यानादिकं
षट्कूटाभैरवीध्यानादिवत् ॥ ध्यानं यथा,
--
“बालसूर्य्यप्रभां देवीं जवाकुसुमसन्निभाम्
।
मुण्डमालावलीरम्यां बालसूर्य्यसमांशुकाम्
॥
सुवर्णकलसाकारपीनोन्नतपयोधराम्।
पाशाङ्कुशौ पुस्तकञ्च तथा च
जपमालिकाम् ॥”
दधतीमिति शेषः । इति तन्त्रसारः ॥
(अस्या
बीजं यथा, ‘हसकलरडैं’ ‘हसकलरडीँ’
‘हसकलरडौँ ॥’)

**निदं**, क्ली, (नेदतीति । निद कुत्सायाम् +
“इगुपधज्ञेति ।” ३ । १ । १३५ । इति
कः ।)
विषम् । इति शब्दचन्द्रिका ॥

**निदद्रुः**, पुं, (निदात् विषात् द्राति पलायते इति ।
द्रा + मृगय्वादित्वात् कुप्रत्ययेन साधुः ।)
मनुष्यः । इति शब्दचन्द्रिका ॥ (निर्नास्ति
दद्रु-
र्यस्येति विग्रहे । दद्रुरोगरहिते, त्रि ॥)

रूपधर्म्मवत्त्वात् । स च रवेरस्ताचलगमनस्य
परतापिनां विपत्प्राप्तेश्च विम्बप्रतिविम्बभावं
बोधयति । असम्भवद्वस्तुसम्बन्धनिदर्शना त्वेक-
वाक्यानेकवाक्यगतत्वेन द्विविधा ।
तत्रैकवाक्यगा
यथा, --
‘कलयति कुवलयमाला-
ललितं कुटिलः कटाक्षविक्षेपः ।
अधरः किसलयलीला-
माननमस्याः कलानिधेर्व्विलासम् ॥’
अत्रान्यस्य धर्म्मं कथमन्यो वहत्विति कटाक्ष-
विक्षेपादीनां कुवलयमालादिगतललितादीनां
कलनमसम्भवत् तल्ललितादिसदृशं ललितादिक-
मवगमयत् कटाक्षविक्षेपादेः कुवलयमालादेश्च
विम्बप्रतिविम्बभावं बोधयति । यथा वा ।
‘प्रयाणे तव राजेन्द्र ! मुक्ता वैरीमृगीदृशाम् ।
राजहंसगतिः पद्भ्यामाननेन शशिद्युतिः ॥’

अत्र
पादाभ्यामसम्बद्धराजहंसगतेस्त्यागो-
ऽनुपपन्न इति तयोस्तत्सम्बन्धः कल्प्यते । स
चासम्भवन् राजहंसगतिमिव गतिं बोधयति ।
अनेकवाक्यगा यथा, --
‘इदं किलाव्याजमनोहरं वपु-
स्तपः क्षमं साधयितुं य इच्छति ।
ध्रुवं स नीनोत्पलपत्रधारया
शमीलतां छेत्तुमृषिर्व्यवस्यति ॥’
अत्र यत्तच्छब्दनिर्द्दिष्टवाक्यार्थयोरभेदेनान्वयो-
ऽनुपपद्यमानस्तादृशवपुषस्तपः
क्षमत्वसाधनेच्छा
नीलोत्पलपत्रधारया शमीलताछेदनेच्छेवेति
विम्बप्रतिविम्बभावे पर्य्यवस्यति । यथा वा ।
‘जन्मेदं बन्ध्यतां नीतं भवभोगोपलिप्सया ।
काचमूल्येन विक्रीतो हन्त चिन्तामणिर्म्मया ॥’

अत्र भवभोगलोभेन जन्मनो
व्यर्थतानयनं

काचमूल्येन चिन्तामणिविक्रय इवेति पर्य्यव-
सानम् । एवम् ।

**निदाघः**, पुं, (नितरां दह्यतेऽत्र अनेन वा । नि
+
दह + घञ् । न्यङ्क्वादित्वात्
कुत्वम् ।) ग्रीष्म-
कालः । (यथा, रघुः । १० । ८३ ।
“ते प्रजानां प्रजानाथास्तेजसा
प्रश्रयेण च ।
मनो जह्रुर्निदाघान्ते श्यामाभ्रा
दिवसा इव ॥”)
उष्णः । घर्म्मः । इत्यमरमेदिनीकरौ
॥ (यथा,
रघुः । १२ । ३२ ।
“रावणावरजा तत्र राघवं मदनातुरा
।
अभिपेदे निदाघार्त्ता व्यालीव
मलयद्रुमम् ॥”)
निदाघे वर्णनीयानि यथा ।
पाटलपुष्पम् १
मल्लिकापुष्पम् २ तापः ३ सरः ४
पथिकशोषः ५
वायुः ६ सेकः ७ शक्तुः ८ प्रपा ९
स्त्री १० मृग-
तृष्णा ११ आम्रादिफलपाकः १२ ।
इति कवि-
कल्पलता ॥
(“ता एवौषधयो निदाघे निःसारा
रुक्षा अति-
मात्रं लघ्व्यो भवन्त्यापश्च ता
उपयुज्यमानाः
सूर्य्यप्रतापोपशोषितदेहानां देहिनां
रौक्ष्या-
ल्लघुत्वाद्वैशद्याच्च वायोः
सञ्चयमापादयन्ति
स सञ्चयः प्रावृषि चात्यर्थं
जलोपक्लिन्नायां भूमौ
क्लिन्नदेहानां प्राणिनां
शीतवातवर्षेरितो वाति-
कान् व्याधीन् जनयति ॥” इति
सुश्रुते सूत्र-

**निदर्शनं**, क्ली, (निदृश्यतेऽनेनेति । नि + दृश् + ल्युट् ।) दृष्टान्तः । उदाहरणम् । यथा, --
"व्यक्तः प्राज्ञेऽपि दृष्टान्तावुभे शास्त्रनिदर्शने ॥"
इति नानार्थटीकायां भरतः ॥
("दृष्टान्तेनार्थः प्रसाध्यते यत्र तन्निदर्शनम् ॥
यथाग्निर्वायुनासहितः कोष्ठे वृद्धिङ्गच्छति तथा
वातपित्तकफदुष्टो व्रण इति ॥"
इत्युत्तरतन्त्रे पञ्च-
षष्टितमेऽध्याये सुश्रुतेनोक्तम् ॥)

**निदर्शना**, स्त्री, (निदर्शयतीति । नि + दृश् + णिच् + ल्युः । टाप् ।) काव्यालङ्कारविशेषः । तस्य
लक्षणम् ।
"अर्थान्तरप्रवृत्तेन किञ्चित्तत्सदृशं फलम् ।
सदसत्त्वान्निदर्श्येत यदि सा स्यान्निदर्शना ॥"
उदाहरणं यथा, दण्डी ।
"उदयन्नेव सविता पद्मेष्वर्पयति श्रियम् ।
विभावयितुमृद्धीनां फलं मुहृदनुग्रहम् ॥"
(यथा च साहित्यदर्पणे । १० । ७० ।
"सम्भवन् वस्तुसम्बन्धोऽसम्भवन्वापि कुत्रचित् ।
यत्र विम्बानुविम्बत्वं वोधयेत् सा निदर्शना ॥
अत्र सम्भवद्वस्तुसम्बन्धनिदर्शना । यथा, --
'कोऽत्र भूमिबलये जनान् मुधा
तापयन् मुचिरमेति सम्पदम् ।
वेदयन्निति दिनेन भानुभा-
नाममाद चरमाचलं ततः ॥'
अत्र रवेरीदृशार्थवेदनक्रियायां कर्त्तृत्वेनान्वयः
सम्भतत्येव
देदृशायंजाओअबसनर्त्यरमाचसप्राप्ति-
'क्व सूर्य्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥'

अत्र मन्मत्या सूर्य्यवंशवर्णनमुडुपेन सागर-

तरणमिवेति पर्य्यवसानम् । इयं क्वचिदुपमेय-
वृत्तस्योपमानेऽसम्भवेऽपि भवति । यथा, --
'योऽनुभूतः कुरङ्गाक्ष्यास्तस्या मधुरिमाधरे ।
समास्वादि स मृद्वीकारसे रसविशारदैः ॥'
अत्र प्रकृतस्याधरस्य मधुरिमधर्म्मस्य द्राक्षा-
रसेऽसम्भवात् । पूर्ब्बवत् साम्ये पर्य्यवसानम् ।
मालारूपापि यथा मम ।
'क्षिपसि शुकं वृषदंशकवदने
मृगमर्पयसि मृगादनरदने ।
वितरसि तुरगं महिषविषाणे
निदधच्चेतो भोगविताने ॥'
इह विम्बप्रतिविम्बताक्षेपं विना वाक्यार्थापर्य्य-
वसानम् । दृष्टान्ते तु पर्य्यवसितेन वाक्यार्थेन
सामर्थ्याद्विम्बप्रतिविम्बताप्रत्यायनम्। नापीय-
मर्थापत्तिस्तत्र 'हारोऽयं हरिणाक्षीणाम् ।'
इत्यादौ सादृश्यपर्य्यवसानाभावात् ॥)
स्थाने षष्ठेऽध्याये ॥
"निदाघोपचितञ्चैव प्रकुप्यन्तं समीरणम् ।
निहन्यादनिलघ्नेन विधिना विधिकोविदः ।
नदीजलं रुक्षमुष्णमुदमन्थं तथातपम् ॥
व्यायामञ्च दिवास्वप्नं व्यवायञ्चात्र वर्ज्जयेत् ॥"
इति चोत्तरतन्त्रे चतुःषष्टितमेऽध्याये सुश्रुते
नोक्तम् ॥)

**निदाघकरः**, पुं, (निदाघा उष्णाः करा किरणानि यस्य । निदाघस्य उष्णस्य करो वा ।) सूर्य्यः ।
इति हारावली । ११ ॥

**निदाघकालः**, पुं, (निदाघ एव कालः । निदा-घस्य कालो वा ।) ग्रीष्मर्त्तुः । स तु ज्यैष्ठा-
षाढमासौ । यथा, --
"प्रचण्डसूर्य्यः स्पृहणीयचन्द्रमाः
सदावगाहक्षतवारिसञ्चयः ।
दिनान्तरम्योऽभ्युपशान्तमन्मथो
निदाघकालः समुपागतः प्रिये ! ॥"
इति ऋतुसंहारे । १ । १ ॥

**निदानं**, क्ली, (नि निश्चयं दीयतेऽनेनेति । नि + दा + करणे ल्युट् ।) आदिकारणम् । इत्य-
मरः । १ । ४ । २८ ॥ (यथा, रघुः । ३ । १ ।
"निदानमिक्ष्वाकुकुलस्य सन्ततेः
सुदक्षिणा दोर्हृदलक्षणं दधौ ॥")
कारणम् । वत्सदामादि । (यथा, ऋग्वेदे ।
६ । ३२ । २ ।
"उदुस्रियाणामसृजन्निदानम् ॥"
नि + दो छेदे + भावे ल्युट् ।) कारणक्षयः ।

| | | |
|---|---|---|
| | | इति मेदिनी । ने, ८३ ॥ (नि + दै प शोधने + भावे ल्युट् ।) शुद्धिः । तपःफलयाचनम् । अवसा- नम् । इति हेमचन्द्रः । ६ । १५० ॥ रोग- निर्णयः । इति विश्वः ॥ तत्पर्य्यायः । रोग- |

लक्षणम् २ आदानम् ३ रोगहेतुः ४ । इति राजनिर्घण्टः ॥ * ॥
"निदानं पूर्ब्बरूपाणि रूपाण्युपशयस्तथा ।
सम्प्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम् ॥
निमित्तहेत्वायतनप्रत्ययोत्थानकारणैः ।
निदानमाहुः पर्य्यायैः प्राग्रूपं येन लक्ष्यते ॥"
इति माधवकरः ॥
("सेति कर्त्तव्यताको रोगोत्पादकहेतुर्निदानम् ।"
इति रुग्विनिश्चयव्याख्याने विजयेनोक्तम् ॥
"इह खलु हेतुर्निमित्तमायतनं कर्त्ता कारणं प्रत्ययः समुत्थानं निदानमित्यनर्थान्तरम् । तत्त्रि-
विधं असात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधः परि-
णामश्चेत्यतस्त्रिविधविकल्पा व्याधयः प्रादुर्भव-
न्त्याग्नेयसौम्यवायव्याः ।" इति निदानस्थाने प्रथमेऽध्याये चरकेणोक्तम् ॥ पैलमुनिकृत-
चिकित्साग्रन्थविशेषः । यथा, ब्रह्मवैवर्त्ते । १ । १६ । २१ ।
"पैलो निदानं करथस्तन्त्रं सर्व्वधरं परम् ।
द्वैधनिर्णयतन्त्रञ्च चकार कुम्भसम्भवः ॥")

**निदिग्धं**, त्रि, (निदिह्यते स्मेति । दिह उपचये + क्तः ।) लेपादिना वर्द्धितम् । तत्पर्य्यायः । उप-चितम् २ । इत्यमरः । ३ । १ । ८९ ॥

**निदिग्धा**, स्त्री, (निदिग्ध + टाप् ।) एला । इति शब्दचन्द्रिका ॥ (विवृतिरस्या एलाशब्दे ज्ञातव्या ॥)

**निदिग्धिका**, स्त्री, (निदिग्धा + स्वार्थे संज्ञायां वा कन् । कापि अत इत्वम् ।) एला । इति शब्दचन्द्रिका ॥ (यथा, सुश्रुते । ३ । १७ ।
"कपित्थबृहतीविल्वपटोलेषु निदिग्धिकाः ॥")
कण्टकारिका । इत्यमरः । २ । ४ । ९३ ॥
(अस्याः पर्य्यायो यथा, --
"अनाक्रान्ता स्पृही व्याघ्री भण्डाकी च निदि-

**निदेष्टा**, [ऋ] त्रि, (निदिशतीति । नि + दिश + तृच् ।) निदेशकर्त्ता । निदिशति इति व्युत्-पत्त्या तृणा निष्पन्नः । इति मुग्धबोधमतम् ॥

**निद्रा**, स्त्री, (निन्द्यते इति । निदि कुत्सायाम् + "निन्देर्नलोपश्च ।" उणां । २ । १७ । इति रक्
नलोपश्च ।) मेध्यामनःसंयोगः । इति जग-दीशः ॥ सुषुप्त्यवस्थास्वन्यावस्था। इति चण्डी-
टीकायां नागभट्टः । घुम इति भाषा ॥ तत्-पर्य्यायः । शयनम् २ स्वापः ३ स्वप्नः ४ संवेशः ५ ।
इत्यमरः । २ । ७ । ३६ ॥ सुप्तिः ६ स्वपनम् ७ ।
इति शब्दरत्नावली ॥ यथाकाले सेवितनिद्रा-
गुणाः । धातुसाम्यत्वम् । अतन्द्रितत्वम् । पुष्टि-
वर्णबलोत्साहाग्निदीप्तिकारित्वञ्च ॥ * ॥ दिवा-
स्वप्नगुणः । स्निग्धत्वम् । तृट्शूलहिक्काजीर्णाति-
सारिणां हितत्वञ्च ॥ * ॥ आसीनप्रचलायि-
तस्य उपविश्य निद्रावशाद्दोलायमानस्य गुणः ।
अरूक्षत्वम् । अनभिष्यन्दित्वञ्च ॥ * ॥ निद्रा
सात्म्यीकृतानां दिवा रात्रौ च स्वपतां जाग्रतां
वा दोषो न भवति । इति राजवल्लभः ॥ * ॥
निद्रारहिता यथा, --
"कुतो निद्रा दरिद्रस्य परप्रेष्यकरस्य च ।
परनारीप्रसक्तस्य परद्रव्यहरस्य च ॥" * ॥
सुखसुप्ता यथा, --

पूर्ब्बदेहानुभूतांस्तु भूतात्मा स्वपतः प्रभुः ।
रजोयुक्तेन मनसा गृह्णात्यर्थान् शुभाशुभान् ॥
करणानान्तु वैकल्ये तमसाभिप्रवर्द्धिते ।
अस्वपन्नपि भूतात्मा प्रसुप्त इव चोच्यते ॥
सर्व्वर्त्तुषु दिवास्वापः प्रतिषिद्धोऽन्यत्र ग्रीष्मात् ॥"
इति सुश्रुते शारीरस्थाने चतुर्थेऽध्याये ॥)

**निद्राणः**, त्रि, (नि + द्रा + क्तः । "संयोगादेरातो धातोर्य्यण्वतः ।" ८ । २ । ४३ । इति तस्य नः ।)
निद्रागतः । तत्पर्य्यायः । शयितः २ । इत्यमरः ।
३ । १ । ३३ ॥ (यथा, आर्य्यासप्तशत्याम् । ५२६ ।
"विहितविविधानुबन्धो मानोन्नतयावधीरितो मानी ।
लभते कुतः प्रबोधं स जागरित्वैव निद्राणः ॥")

**निद्रालुः**, त्रि, (निद्रातीति । नि + द्रा + "स्पृहि-गृहीति ।" ३ । २ । १५८ । इति आलुच् ।)
निद्राशीलः । निद्रा विद्यते अस्य गोतृणेत्या-
दिना आलुः । इत्यमरटीकायां भरतः ॥ तत्-
पर्य्यायः । स्वप्नक् २ शयालुः ३ । इत्यमरः । ३ ।
१ । ३३ ॥ तन्द्रालुः ४ । इति जटाधरः ॥ (यथा, पञ्चतन्त्रे । ५ । ४१ ।
"काशी विवर्ज्जयेच्चौर्य्यं निद्रालुश्चर्म्मचौरिकाम् ।

ग्धिका ।
सिंही धामनिका क्षुद्रा बृहती कण्टकारिका ॥”
इति वैद्यकरत्नमालायाम् ॥)

**निदिध्यासनं**, क्ली, (पुनः पुनरतिशयेन वा निध्याय-
तीति । नि + ध्यै + सन् । ततो भावे ल्युट् ।)
पुनःपुनःस्मरणम् ॥ अद्बितीयवस्तनि
तदाकारा-
कारिताया बुद्धेः स्वजातीयप्रवाहः । इति
वेदान्तसारः ॥

**निदेशः**, पुं, (नि + दिश + घञ् ।) आज्ञा ।
इत्यमरः । २ । ८ । २५ ॥ (यथा, देवीभाग-
वते । २ । १० । ४९ ।
“प्रत्यूचुस्तान् द्विजान् भत्वा निदेशं भूपतेर्यथा
॥”)
कथनम् । उपान्तम् । इति मेदिनी । शे, २३ ॥
(यथा, मनुः । २ । १९७ ।
“पराङ्मुखस्याभिमुखो दूरस्थस्येत्य चान्ति-
कम् ।
प्रणम्य तु शयानस्य निदेशे चैव तिष्ठतः ॥”)
भाजनम् । इति धरणिः ॥

**निदेशिनी**, स्त्री, (निदिशतीति । नि + दिश +
णिनि ङीप् ।) दिक् । इति राजनिर्घण्टः ॥

“सुखं स्वपित्यनृणवान् व्याधिमुक्तश्च यो
नरः ।
सावकाशस्तु यो भुङ्क्ते यस्तु दारैर्न
शङ्कितः ॥”
इति गारुडे नीतिसारः ॥
(“सत्त्वाच्च तम एव स्यात् जाग्रते स्वपते
प्रभुः ।
तमसा प्रावृतो देही व्योम्ना च शून्यताङ्गतः
॥
देहं विश्रमते यस्मात्तस्मान्निद्रा प्रकीर्त्तिता ।
नासार्द्धे च भ्रुवोर्म्मध्ये लीयते चान्तरात्मना
॥
तस्माच्चेतो भवेत्तत्र निद्राव्यालीयते नृणाम्
॥”
इति शारीरस्थाने प्रथमेऽध्याये
हारीतेनोक्तम् ॥
“निद्रायत्तं सुखं दुःखं पुष्टिः कार्श्यं
बलाबलम् ।
वृषता क्लीवता ज्ञानमज्ञानं जीवितं न च ॥
अकालेऽतिप्रसङ्गाच्च न च निद्रा निषेविता
।
सुखायुषी पराकुर्य्यात् कालरात्रिरिवापरा
॥”
इति वाभटे सूत्रस्थाने सप्तमेऽध्याये ॥
“पुण्डरीकेण सदृशं हृदयं स्यादधोमुखम् ।
जाग्रतस्तद्विकशति स्वपतश्च निमीलति ॥
निद्रान्तु वैष्णवीं पाप्मानमुपदिशन्ति सा
स्वभा-
वत एव सर्व्वप्राणिनोऽभिस्पृशति ॥ तत्र
यदा
संज्ञावहानि स्रोतांसि तमो भूयिष्ठः श्लेष्मा
प्रति-
पद्यते तदा तामसी नाम निद्रा
सम्भवत्यनव-
बोधिनी सा प्रलयकाले ।
तमोभूयिष्ठानामहःसु
निशासु च भवति । रजो भूयिष्ठानामनिमि-
त्तम् । सत्त्वभूयिष्ठानामर्द्धरात्रे ।
क्षीणश्लेष्मणाम-
निलबहुलानां मनःशरीराभितापवताञ्चनैव
सा वैकारिकी भवति ॥

जिह्वालौल्यञ्च रोगाढ्यो जीवितं
योऽत्र
वाञ्छति ॥”)

**निद्रालुः**, स्त्री, (निद्रा देयत्वेनास्त्यस्या इति ।
निद्रा + बाहुलकात् आलुः ।)
वार्त्ताकी । वन-
वर्व्वरिका । इति राजनिर्घण्टः ॥
नलीनाम-
गन्धद्रव्यम् । इति शब्दचन्द्रिका ॥

**निद्रावृक्षः**, पुं, (निद्राया वृक्ष इव ।) अन्धकारः
।
इति शब्दमाला ॥

**निद्रासंजननं**, क्ली, (निद्रां संजनयतीति । सं
+
जन + णिच् + ल्युः ।) श्लेष्मा । इति
शब्दमाला ॥

**निधनं**, क्ली, (नि + धा + “कृपृवृजिमन्दिनि
धाञः
क्युः ।” उणां । २ । ८१ । इति क्युः
।) नाशः ।
तत् तु अदर्शनं मरणञ्च । (यथा,
विष्णु-
पुराणे । १ । १३ । ७३ ।
“एकस्मिन् यत्र निधनं प्रापिते
दुष्टकारिणि ! ।
बहूनां भवति क्षेमं तस्य पुण्यप्रदो
वधः ॥”)
कुलम् । तत्तु कुलस्थानं
कुलमुख्यश्च । इत्यमर-
भरतौ ॥

**निधनं**, पुं क्ली, (नि + धा + क्युः ।) मरणम् ।
इत्यमरः । २ । ८ । ११६ ॥ वधतारा ।
सा तु
जन्मनक्षत्रत्वात् सप्तमी तारा । यथा,
जन्म
सम्पद्विपत् क्षेमः प्रत्यरिः साधको वष
इत्यादि ।
प्रत्यरौ लवणं दद्यान्निधने
तिलकाञ्चनम् । इति

| | | |
|---|---|---|
| | हृदयञ्चेतनास्थानमुक्तं सुश्रुत ! देहिनाम् ।<br>तमोऽभिभूते तस्मिंस्तु निद्रा विशति देहिनाम् ॥<br>निद्राहेतुस्तमः सत्त्वं बोधने हेतुरुच्यते ।<br>स्वभाव एव वा हेतुर्गरीयान् परिकीर्त्तते ॥ | ज्योतिस्तत्त्वस् ॥ (निवृत्तं धनं यस्य ।) धन-<br>हीने, त्रि ॥<br>**निधानं**, क्ली, (निधीयतेऽत्रेति । नि + धा +<br>आधारे ल्युट् ।) निधिः । इति हेमचन्द्रः ।<br>२ । १०६ ॥ (यथा, पञ्चतन्त्रे । २ । १६४ ।<br>“कन्दैः फलैर्मुनिवरा गमयन्ति कालं<br>सन्तोष एव पुरुषस्य परं निधानम् ॥”)<br>आधारः । यथा, -- |

"निधानभगतं सद्यः सर्व्वं समधिगच्छति ।"
इत्यागमः ॥
(यथा, देवीभागवते । १ । १६ । ३४ ।
"ब्रह्मविद्यानिधानन्तु संसारार्णवतारकम् ॥")
कार्य्यावसाने प्रवेशस्थानम् । यथा, --
"एतन्नानावताराणां निधानं बीजमव्ययम् ॥"
इति श्रीभागवतम् ॥

**निधिः**, पुं, (निधीयतेऽत्रेति । नि + धा + किः ।)
नलिकानामगन्धद्रव्यम् । समुद्रः । इति राज-
निर्घण्टः ॥ (यथा, देवीभागवते । ३ । २२ । १० ।
"कन्यां सुकेशीं निधिकन्यकासमां
मेने तदात्मानमनुत्तमञ्च ॥")
जीवकौषधिः । इति शब्दचन्द्रिका ॥
आधारः ।
यथा । गुणनिधिः । जलनिधिः । इत्यादयः ॥
चिरप्रनष्टस्वामिकभूजातधनविशेषः । इति प्राञ्चः ॥
अज्ञातस्वामिकचिरनिखातस्वर्णादि।
यथा । अधुना भूमौ चिरनिखातस्य सुवर्णा-
देर्निधिशब्दवाच्यस्याधिगमे विधिमाह ।
"राजा लब्ध्वा निधिं दद्यात् द्विजेभ्योऽर्द्धं द्विजः
पुनः ।
विद्वानशेषमादद्यात् सर्व्वस्यासौ प्रभुर्यतः ॥
इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत् ।
अनिवेदितविज्ञातो दाप्यस्तं दण्डमेव च ॥"
"उक्तलक्षणं निधिं राजा लब्धार्द्धं ब्राह्मणेभ्यो
दत्त्वा शेषं कोषे निवेशयेत् । ब्राह्मणस्तु विद्वान्

मार्कण्डेयपुराणे तु वर्च्च इति हित्वा अष्टावेव
उक्ताः । इति भरतः ॥ * ॥ तल्लक्षणं यथा, --
"पद्मिनी नाम या विद्या लक्ष्मीस्तस्याधिदेवता ।
तदाधाराश्च निधयस्तान्मे निगदतः शृणु ॥
तत्र पद्ममहापद्मौ तथा मकरकच्छपौ ।
मुकुन्दनीलौ नन्दश्च शङ्खश्चैवाष्टमो निधिः ॥
सत्यामृद्ध्यां भवन्त्येते सद्भिः सह भवन्त्यमी ।
एते ह्यष्टौ समाख्याता निधयस्तव क्रोष्टुके ! ॥
एभिरालोकितं चित्तं मनुष्यस्य महामते ! ।
यादृक् स्वरूपं भवति तन्मे निगदतः शृणु ॥
पद्मो नाम निधिः पूर्ब्बः स यस्य भवति द्विज ! ।
स तस्य तत्सुतानाञ्च तत्पौत्त्राणाञ्च नान्यगः ॥
दाक्षिण्यसारः पुरुषस्तेन चाधिष्ठितो भवेत् ।
सत्त्वाधारो महाभागो यतोऽसौ सात्त्विको निधिः ॥
सुवर्णरौप्यताम्रादिधातूनाञ्च परिग्रहम् ।
करोत्यतितरां सोऽथ तेषाञ्च क्रयविक्रयम् ॥
करोति च यथा यज्ञान् यज्विनाञ्च प्रयच्छति ।
सम्पादयति कामांश्च सर्व्वानिव यथाक्रमम् ॥
सभादेवनिकेतांश्च स कारयति तन्मनाः । * ।
सत्त्वाधारो निधिश्चान्यो महापद्म इति श्रुतः ॥

प्रयाति सङ्गमेकञ्च स निधिर्भजते नरम् ॥ * ॥
रजःसत्त्वमयश्चान्यो नन्दो नाम महानिधिः ।
उपैति स्तम्भमधिकं नरस्तेनावलोकितः ॥
समस्तधातुरत्नानां पण्यवाद्यादिकस्य च ।
प्रतिग्रहं करोत्येष तथैव क्रयविक्रयम् ॥
आधारः स्वजनानाञ्च आगताभ्यागतस्य च ।
सहते नावमानोक्तिं स्वल्पामपि महामुने ! ॥
स्तूयमानश्च महतीं प्रीतिं वध्नाति यच्छति ।
यं यमिच्छति वै कामं मृदुत्वमुपयाति च ॥
बह्व्यो भार्य्या भवन्त्यस्य सूतिमत्योऽतिशोभनाः ।
सन्ततौ सप्त च नरान्निधिर्नन्दोऽनुवर्त्तते ॥
प्रबर्द्धमानोऽनु नरमष्टभागेन सत्तम ! ।
दीर्घायुष्यञ्च सर्व्वेषां पुरुषाणां प्रयच्छति ॥
बन्धूनामेव भ्रमणं ये च दूरादुपागताः ।
तेषां करोति वै नन्दः परलोके न चादृतः ॥ * ॥
भवत्यस्य न च स्नेहः सहवासिषु जायते ।
पूर्ब्बमित्रेषु शैथिल्यं प्रीतिमन्यैः करोति च ॥
तथैव सत्त्वरजसी यो बिभर्त्ति महानिधिः ।
स नीलसंज्ञस्तत्सङ्गी नरस्तच्छीलभाग्भवेत् ॥
वस्त्रकार्पासधान्यादिफलपुष्पपरिग्रहम्।
मुक्ताविद्रुमशङ्खानां शुक्त्यादीनां महामुने ! ॥
काष्ठादीनां करोत्येष यच्चान्यज्जलसम्भवम्।
क्रयविक्रयमप्येषां नान्यत्र रमते मनः ॥
तडागान् पुष्करिण्यश्च तथारामान् करोति च ।
बन्धञ्च सरितां वृक्षांस्तथा रोपयते नरः ॥
अनुलेपनपुष्पादिभोगभुक् वापि जायते ।
त्रिपौरुषश्चापि निधिर्नीलो नामेति विश्रुतः ॥

श्रुताध्ययनसम्पन्नः सदाचारो यदि निधिं
लभेत
तदा सर्व्वमेव गृह्णीयात् । यस्मादसौ
सर्व्वस्य
जगतः प्रभुः । इतरेण तु राजविद्वद्ब्राह्मण-
व्यतिरिक्तेनाविद्वद्ब्राह्मणक्षत्त्रियादिना
निधौ
लब्धे राजा षष्ठांशमधिगन्त्रे दत्त्वा शेषं निधिं
स्वयमाहरेत् । यथाह वशिष्ठः ।
अप्रज्ञायमानं
वित्तं योऽधिगच्छेत् राजा तद्धरेदधिगन्त्रे
षष्ठ-
मांशं प्रदद्यात् इति । गौतमोऽपि
निध्यधिगमो
राजधनं न
ब्राह्मणस्याभिरुपस्याब्रह्मणोऽप्या-
ख्याता षष्ठं अंशं लभेतेत्येक इति ।
अनिवेदित
इति कर्त्तरि निष्ठा । अनिवेदितश्चासौ
विज्ञा-
तश्च राजा इत्यनिवेदितविज्ञातः । यः
कश्चि-
न्निधिं लब्ध्वा राज्ञे न निवेदितवान्
विज्ञातश्च
राजा स सर्व्वं निधिं दाप्यो रण्ड्यश्च
शक्त्यपेक्षया ।
अथ निधेरपि
स्वाम्यागत्यरूपसङ्ख्यादिभिःस्वत्वं
भावयति तदा तस्मै राजा निधिं दत्त्वा षष्ठं
द्वादशं वांशं स्वयमाहरेत् । यथाह मनुः ।
"ममायमिति यो ब्रूयान्निधिं सत्येन मानवः
।
तस्याददीत षड्भागं राजा द्वादशमेव वेति
॥
अंशविकल्पस्तु वर्णकालाद्यपेक्षया
वेदितव्यः ।"
इति मिताक्षरायां व्यवहाराध्यायः ॥
कुवेरस्य नवधा रत्नविशेषः । तत्पर्य्यायः ।
शेवधिः २ । इत्यमरः । १ । १ । ७४ ॥
सेवधिः ३ ।
इति भरतः ॥ तद्भेदा यथा, --

सत्त्वप्रधानो भवति तेन चाधिष्ठितो नरः
।
करोति पद्मरागादिरत्नानाञ्च परिग्रहम् ॥
समौक्तिकप्रबालानां तेषाञ्च क्रयविक्रयम्
।
ददाति योगशीलेभ्यस्तेषामावसथांस्तथा
॥
स कारयति तच्छीलः स्वयमेव च जायते
।
तत्प्रसूतास्तथाशीलाः पुत्त्रपौत्त्रक्रमेण
च ॥
पूर्ब्बर्द्धिमात्रः सप्तासौ पुरुषांश्च न मुञ्चति
।
महापद्मस्तु विप्राणां यज्ञे समुपजायते ॥
* ॥
तामसो मकरो नाम
निधिस्तेनावलोकितः ।
पुरुषोऽथ तमःप्रायः सुशीलोऽपि हि
जायते ॥
बाणखड्गर्ष्टिधनुषां चर्म्मणाञ्च परिग्रहम् ।
दंशनानाञ्च कुरुते याति मैत्रीञ्च राजभिः
॥
ददाति शौर्य्यवृत्तीनां भूभुजां ये च
तत्प्रियाः ।
क्रयविक्रयञ्च शस्त्राणां नान्यत्र प्रीतिमेति
च ॥
एकस्यैव भवत्येष नरस्य न सुतानुगः ।
द्रव्यार्थं दस्युतो नाशं संग्रामे वापि
संव्रजेत् ॥ * ॥
कच्छपाख्यो निधिर्योऽन्यो
नरस्तेनाभिवीक्षितः ।
तमःप्रधानो भवति यतोऽसौ तामसो
निधिः ॥
व्यवहारा न शिष्टैश्च पण्यजातं करोति च
।
कर्म्मान्तानखिलांश्चैव न विश्वसिति
कस्यचित् ॥
समस्तानि यथाङ्गानि निगृह्यान्ते हि
कच्छपः ।
तथावष्टभ्य रत्नानि तिष्ठत्याकुलमानसः
॥

रजस्तमोमयश्चान्यः शङ्खसंज्ञो हि यो
निधिः ।
तेनापि नीयते विप्र ! तद्गुणत्वं निधीश्वरः
॥
एकस्यैव भवत्येष नरं नान्यमुपैति च ।
यस्य शङ्खो निधिस्तस्य स्वरूपं क्रोष्टुके !
शृणु ॥
एक एवात्मना सृष्टमन्नं भुङ्क्ते तथाम्बरम् ।
कदन्नभुक् परिजनो न च शोभनवस्त्रभृत् ॥
न ददाति सुहृद्भार्य्यासुतपौत्त्रस्नुषादिषु ।
स्वपोषणपरः शङ्खी नरो भवति सर्व्वदा ॥
इत्येते निधयः ख्याता नराणामर्थदेवताः ॥
मिश्रावलोकिनो मिश्रस्वभावफलदायिनः ।
यथाख्यातः स्वभावस्तु
भवत्येकविलोकनात् ।
सर्व्वेषामाधिपत्ये च श्रीरेषां द्विज पद्मिनी
॥"
इति मार्कण्डेयपुराणे ६८ अध्याये
निधिलक्षणम् ॥
(पौरववंशीयनृपविशेषः । अयं हि दण्डपाणेः
पुत्त्रः । मत्स्यपुराणादिमते निरामित्रनाम्ना
विख्यातः । ५० । ८७ ॥ यथा, राजावल्यां
प्रथम-
परिच्छेदे ।
"बुभुजे पृथिवीमेनां दण्डपाणिर्महाबलः ।
राजासने ततः सोऽपि स्थापयित्वा निधिं
सुतम् ॥
स्मरन्नारायणं देवं तपसे स वनं ययौ ।
निधिस्तु विधिवद्राज्यं चकार नीतिपण्डितः
॥"
विष्णुः । यथा, महाभारते । १३ । १४९ ।
१७ ।
"सर्व्वः शर्व्वः शिवः
स्थाणुर्भूतादिर्निधिरव्ययः ॥"
"प्रलयकालेऽस्मिन् सर्व्वं निधीयते इति
निधिः ।"
इति तद्भाष्ये शङ्करः ॥

| | | |
|---|---|---|
| "पद्मोऽस्त्रियां महापद्मः शङ्खो मकरकच्छपौ ।<br>मुकुन्दकुन्दनीलाश्च वर्च्चोऽपि निधयो नव ॥"<br>इति हारावली ॥ | न ददाति न वा भुङ्क्ते<br>तद्विनाशभयाकुलः ।<br>निधानमुर्व्वां कुरुते निधिः<br>सोऽप्येकपुरुषः ॥ * ॥<br>रजोगुणमयश्चान्यो मुकुन्दो नाम यो<br>निधिः ।<br>नरोऽवलोकितस्तेन तद्गुणो भवति<br>द्विज ! ॥<br>वीणावेणुमृदङ्गादिगीतवाद्यपरिग्रहम्।<br>करोति वाद्यतां वित्तं नृत्यताञ्च प्रयच्छति<br>॥<br>वन्दिमागधसूतानां विटानां<br>लास्यपाठिनाम्।<br>ददात्यहर्निशं भोगान् भुङ्क्ते तैस्तु समं<br>द्विज ! ॥<br>कुलटासु रतिश्चास्य भवत्यन्यैश्च<br>तद्विधैः । | |

महादेवः । यथा, महाभारते । १३ । १७ । ४३ ।
"श्रुवहस्तः सुरूपश्च तेजस्तेजस्करो निधिः ॥")

**निधिनाथः**, पुं, (निधीनां नाथः ।) कुवेरः । इति त्रिकाण्डशेषः ॥ निधीशः । निधीश्वरः । निधि-
प्रभुः । इत्यादयः ॥

**निधुवनं**, क्ली, (नितरां धुवनं हस्तपदादिकम्पनं यत्र ।) मैथुनम् । इत्यमरः । २ । ७ । ५७ ॥
(यथा, शिशुपालवधे । ११ । १८ ।
"अनिमिषमविरामारागिणांसर्व्वरात्रं
नवनिधुवनलीलाः कौतुकेनातिवीक्ष्य ।
इदमुदवसितानामस्फुटालोकसम्पत्
नयनमिव सनिद्रं धूर्णते दैपमर्च्चिः ॥")
नर्म्म । केलिः । इति शब्दरत्नावली ॥ (नितरां धुवनं कम्पनम् ।) कम्पः । इति मेदिनी । ने, १८८ ॥

**निध्यानं**, क्ली, (नि + ध्यै + ल्युट् ।) दर्शनम् । इत्यमरः । ३ । २ । ३१ ॥

**निध्वानः**, पुं, (नि + ध्वन शब्दे + घञ् ।) शब्दः । इति शब्दरत्नावली ॥

**निनदः**, पुं, (नि + नद + "नौ गदनदपठस्वनः ।" ३ । ३ । ६४ । इति अप् ।) शब्दः । इत्यमरः । १ । ६ । २२ ॥ (यथा, देवीभागवते । ३ । २२ । ३७ ।
"शृण्वन्तु तूर्य्यनिनदान् किल वाद्यमानान् ॥")

**निनादः**, पुं, (नि + नद + पक्षे घञ् ।) शब्दः । इत्यमरः । १ । ६ । २२ ॥ (यथा, रामायणे । २ । ३४ । १९ ।
"स्त्रीसहस्रनिनादश्च संजज्ञे राजवेश्मनि ॥")

**निन्दकः**, त्रि, (निन्दति तच्छीलः । निदि कुत्-
सायाम् + "निदिहिंसेति ।" ३ । २ । १४६ । इति वुञ् ।) निन्दाकारकः । यथा, --
यतिभिक्षुकब्रह्मचारिसृष्टिबीजान्सुरांस्तथा ।
पच्यन्ते कालसूत्रे ते यावच्चन्द्रदिवाकरौ ॥
श्लेष्ममूत्रपुरीषेषु शेरते ते दिवानिशम् ।
भक्षिताः कीटनिकरैः शब्दं कुर्व्वन्ति कातराः ॥
ये निन्दन्ति च ब्रह्माणं स्रष्टारं जगतां गुरुम् ।
शिवं सुराणां प्रवरं दुर्गां लक्ष्मीं सरस्वतीम् ॥
सीताञ्च तुलसीं गङ्गां वेदांश्च वेदमातरम् ।
व्रतं तपस्यां पूजाञ्च मन्त्रं मन्त्रप्रदं गुरुम् ॥
ते पच्यन्तेऽन्धकूपे वै चायुषोऽर्द्धं विधेरहो ।
भक्षिताः सर्पसंघैश्च शब्दं कुर्व्वन्ति सन्ततम् ॥
यो निन्दन्ति हृषीकेशं देवसाम्यं विधाय च ।
विष्णुभक्तिप्रदञ्चैव पुराणञ्च श्रुतेः परम् ॥
राधां तदङ्गजा गोपीर्ब्राह्मणांश्च सदाच्चितान् ।
ते पच्यन्तेऽवटे देव ! विधातुरायुषा समम् ॥
अधोमुखा ऊद्‌र्ध्वजङ्घा सर्पसंघैश्च वेष्टिताः ।
भक्षिता विकृताकारैः कीटैः सर्पैः समाहृतैः ॥
अतीवकातरा भीताः शब्दं कुर्व्वन्ति सन्ततम् ।
श्लेष्ममूत्रपुरीषाणि ध्रुवं भक्षन्ति क्षोभिताः ॥
उल्कां ददति रुष्टाश्च तन्मुखे यमकिङ्कराः ।
त्रिसन्ध्यं तर्जनं कृत्वा कुर्व्वन्ति दण्डताडनम् ॥
कुर्व्वन्ति मूत्रपानञ्च प्रहारैस्तृषिता भिया ।
तदा कल्पान्तरे स्रष्टुं सृष्टेश्च प्रथमे पुनः ॥
तेषां भवेत् प्रतीकार इत्याह कमलोद्भवः ।
परनिन्दा विनाशाय स्वनिन्दा यशसे परम् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । ४० । ४१ अः ॥
"वेदनिन्दारतान् मर्त्यान्
देवनिन्दारतांस्तथा ।
"कथमवनिप ! दर्पो
यन्निशातासिधारा-
दलनगलितमूद्‌र्ध्ना विद्विषां स्वीकृता श्रीः ।
ननु तव निहतारेरप्यसौ किन्न नीता
त्रिदिवमपगताङ्गैर्वल्लभा कीर्त्तिरिभिः ॥
इत्यादौ निन्दास्तुतिवपुषा स्वरूपस्य ।" इति
काव्यप्रकाशः ॥

**निन्दितः**, त्रि, (निन्दास्य जातेति । निन्दा +
"तदस्य सञ्जातं तारकादिभ्य इतच् ।" ५ । २ ।
६ । इति इतच् ।) निन्दायुक्तः । तत्पर्य्यायः ।
धिक्कृतः २ अपध्वस्तः ३ निर्भर्त्सितः ४ ।
इति जटाधरः ॥ (यथा, देवीभागवते । ४ ।
७ । ४९ ।
"मधु पश्यति मूढात्मा प्रपातं नैव पश्यति ।
करोति निन्दितं कर्म्म नरकान्न बिभेति च ॥")

**निन्दुः**, स्त्री, निन्द्यतेऽप्रजस्त्वेनासौ । निदि कुत्साया-
मित्यादौ औणादिक उप्रत्ययः । मृतवत्सा ।
इति हेमचन्द्रः । ३ । १९५ ॥

**निपः**, पुं क्ली, (नियतं पिबत्यनेनेति । नि + पा +
घञर्थे कः ।) कलसः । इत्यमरः । २ । ९ । ३२ ॥
कदम्बवृक्षे, पुं । इति शब्दचन्द्रिका ॥

**निपठः**, पुं, (निपठनमिति । नि + पठ + "नौ
गदनदपठस्वनः ।" ३ । ३ । ६४ । इति अप् ।)
पाठः । इत्यमरः । ३ । २ । २९ ॥

"न भाराः पर्व्वता भारा न भाराः सप्तसागराः ।
निन्दका हि महाभारा भारा विश्वासघातकाः ॥"
इति कर्म्मलोचनम् ॥

**निन्दतलः**, त्रि, (निन्दं निन्दार्हं तलं हस्ततलं यस्य ।) निन्दितहस्तः । इति शब्दरत्नावली ॥

**निन्दनं**, क्ली, (निदि कुत्सायाम् + भावे ल्युट् ।) निन्दा । इति शब्दरत्नावली ॥

**निन्दा**, स्त्री, (निन्दनमिति । निदि + "गुरोश्च हलः ।" ३ । ३ । १०३ । इति स्त्रियां अः ।) अपवादः । दुष्कृतिः । इति शब्दरत्नावली ॥ निन्दनम् । तत्पर्य्यायः । अवर्णः २ आक्षेपः ३ निर्व्वादः ४ परीवादः ५ अपवादः ६ उपक्रोशः ७ जुगुप्सा ८ कुत्सा ९ गर्हणम् १० । इत्यमरः ॥
गर्हा ११ कुत्सनम् १२ परिवादः १३ जुगुप्सनम् १४ अपक्रोशः १५ भर्त्सनम् १६ अववादः १७ । इति शब्दरत्नावली ॥ गर्हणा १८ धिक्क्रिया १९ । इति हेमचन्द्रः ॥ (यथा, मनुः । २ । २०० ।
"गुरोर्यत्र परीवादो निन्दा वापि प्रवर्त्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥")
हरकेशवभक्तादिनिन्दायां दोषो यथा, --
"हरकेशवयोर्भक्तं ये च निन्दन्ति पापिनः ।
भूदेवान् ब्राह्मणांश्चैव स्वगुरूंश्च पतिव्रताः ॥
द्विजनिन्दारतांश्चैव मनसापि न चिन्तयेत् ॥
न चात्मानं प्रशंसेद्वा परनिन्दाञ्च वर्ज्जयेत् ।
वेदनिन्दां देवनिन्दां प्रयत्नेन विवर्ज्जयेत् ॥
यस्तु देवानृषींश्चैव वेदं या निन्दति द्विजः ।
न तस्य निष्कृतिर्दृष्टा शास्त्रेष्विह मुनीश्वराः ! ॥
निन्दयेद्वै गुरुं देवं वेदं वा सोपबृंहणम् ।
कल्पकोटिशतं साग्रं रौरवे पच्यते नरः ॥
तूष्णीमासीत निन्दायां न ब्रूयात् किञ्चिदुत्तरम् ।
कर्णौ पिधाय गन्तव्यं न चैनानवलोकयेत् ॥
वर्ज्जयेद्वै परेषान्तु गृहेषु गर्हणां बुधः ।
न निन्देद्योगिनः सिद्धान् व्रतिनो वा यतीं-स्तथा ॥
देवतायतनं प्राज्ञो देवानामाकृतिन्तथा ॥"
इति कौर्म्मे उपविभागे १५ अध्यायः ॥

**निन्दास्तुतिः**, स्त्री, (निन्दया स्तुतिः ।) व्याजस्तुतिः । यथा, --
"निन्दास्तुतिभ्यां वाच्याभ्यां गम्यत्वे स्तुतिनिन्दयोः ।"
निन्दया स्तुतिर्गम्यत्वे व्याजेन स्तुतिरिति च व्युत्पत्त्या व्याजस्तुतिः । इति साहित्यदर्पणः ।
अपि च ।
"यदि निन्दन्निव स्तौति व्याजस्तुतिरसौ मता ।"
उदाहरणम् ।
"तापसेनापि रामेण जितेयं भूतधारिणी ।
त्वया राज्ञापि सैवेयं जिता माभून्मदस्तव ॥"
इति दण्डी ॥

**निपत्या**, स्त्री, (निपतत्यस्यामिति । नि + पत + "संज्ञायां समजनिषदनिपतेति ।" ३ । ३ । ९९ । इति क्यप् । ततष्टाप् ।) युद्धभूमिः । इति मुग्धबोधटीकायां दुर्गादासः ॥ (पिच्छिला भूमिः । इति सिद्धान्तकौमुदी ॥)

**निपाकः**, पुं, (नियमेन पचनमिति । नि + पच + घञ् ।) पाकः । इति शब्दरत्नावली ॥

**निपाठः**, पुं, (नि + पठ + पक्षे घञ् ।) पठनम् । इत्यमरः । ३ । २ । २९ ॥

**निपातः**, पुं, (नितरां पतनमिति । नि + पत + घञ् ।) मृत्युः । इति त्रिकाण्डशेषः ॥ (यथा, महाभारते । ५ । १२२ । ९ ।
"सङ्गरेषु निपातेषु तथापद्व्यसनेषु च ॥")
पतनम् । यथा, आनन्दलहर्य्याम् । ५७ ।
"वने वा हर्म्म्ये बा समकरनिपातो हिमकरः ॥"

**निपातनं**, क्ली, (निपात्यतेऽनेनेति । नि + पत + णिच् + करणे ल्युट् ।) खलीकारः । इति भरतः ॥
अधोनयनम् । इति सर्व्वस्वम् । तत्पर्य्यायः । अवनायः २ । इत्यमरः । ३ । २ । २९ ॥ नियातनम् ३ । इति नयनानन्दः ॥
व्याकरणलक्षणानुत्पन्नपदसाधनम् । यथा, निपातनादिष्टसिद्धिः । यल्लक्षणेनानुत्पन्नं तत् सर्व्वं निपातनात् सिद्धमिति भाष्यम् ॥
निपातलक्षणं यथा,

| | | |
|---|---|---|
| | | "वर्णागमो वर्णविपर्य्ययश्च<br>द्वौ चापरौ वर्णविकारनाशौ ।<br>धातोस्तदर्थातिशयेन योग-<br>स्तदुच्यते पञ्चविधं निरुक्तम् ॥<br>इति प्राञ्चः ।" इति दुर्गादासः ॥<br>तद्यथा, --<br>"वर्णागमो गवेन्द्रादौ सिंहे<br>वर्णविपर्य्ययः । |

षोडशादौ विकारः स्यात् वर्णनाशः
पृषोदरे ॥”
इति कलापपञ्जी ॥

**निपानं**, क्ली, (निपीयते अस्मिन्निति । नि + पा +
आधारे ल्युट् ।)
कूपसमीपशिलादिनिबद्धपशु-
पानार्थकृतकूपोद्धृताम्बुस्थानम् । इति
भरतः ॥
तत्पर्य्यायः । आहावः । इत्यमरः । १ ।
१० । २६ ॥
निपानकम् ३ । इति शब्दरत्नावली ॥
गोदोहन-
पात्रम् । इति त्रिकाण्डशेषः ॥ (जलाशय-
मात्रम् । यथा, विष्णुसंहितायाम् । ६४ ।
१ ।
“परनिपानेषु न स्नानमाचरेत् ॥”)

**निपुणः**, त्रि, (नि + पुणं राशीकरणे + क ।) कार्य्य-
क्षमः । (यथा, नागानन्दे सूत्रधारोक्तिः ।
“श्रीहर्षो निपुणः कविः परिषदप्येषा गुण-
ग्राहिणी ॥”
अन्यच्च, देवीभागवते । १ । ५ । ५९ ।
“न ते रूपं वेत्तुं सकलभुवने कोऽपि
निपुणो
न नाम्नां संख्यां ते कथितुमिह
योग्योऽस्ति
पुरुषः ॥”)
तत्पर्य्यायः । प्रवीणः २ अभिज्ञः ३ विज्ञः
४
निष्णातः ५ शिक्षितः ६ वैज्ञानिकः ७
कृत-
मुखः ८ कृती ९ कुशलः १० । इत्यमरः ।
३ । १ । ४ ॥
संख्यावान् ११ मतिमान् १२
कुशाग्रीयमतिः
१३ कृष्टिः १४ विदुरः १५ बुधः १६
दक्षः १७
नेदिष्ठः १८ कृतधीः १९ सुधीः २०
विद्वान् २१

**निबन्धा**, [ऋ] पुं, निबन्धकर्त्ता । ग्रन्थकर्त्ता । इति
व्याकरणम् ॥

**निबन्धितः**, त्रि, बद्धः । निबन्धोऽस्य जातः इत्यथ
इतत्प्रत्ययनिष्पन्नः ॥

**निबर्हणं**, क्ली, (निबर्हते इति । नि + बर्ह +
ल्युट् ।) मारणम् । इत्यमरः । २ । ८
। ११२ ॥
(यथा, माकण्डयपुराणे । ९२ । २२
।
“युद्धेषु चरितं यन्मे दुष्टदैत्यनिबर्हणम्
॥”)

**निभः**, त्रि, (नियतं भातीति । नि + भा + क ।)
सदृशः । इत्यमरः । २ । १० । ३८
॥ (यथा,
रघुवंशे । १० । ९ ।
“प्रबुद्धपुण्डरीकाक्षं
बालातपनिभांशुकम् ।
दिवसं शारदमिव प्रारम्भसुखदर्शनम्
॥”)
प्रकाशः । व्याजे, पुं । इति
शब्दरत्नावली ॥

**निभालनं**, क्ली, (नि + भल + णिच् + भावे ल्युट् ।)
दर्शनम् । इति त्रिकाण्डशेषः ॥

**निभूतं**, त्रि, (नि + भू + क्त ।) अतीतम् । भूत-
कालः । इति राजनिर्घण्टः ॥

**निभृतः**, त्रि, (नि + भृ + क्त ।) विनीतः । निर्जनः ।
यथा, --
“निभृतनिकुञ्जगृहं गतया निशि रहसि
निलीय
वसन्तम् ।”
इति श्रीजयदेवः । २ । ११ ॥
(अस्तमयासन्नः । यथा, रघुवंशे । ८
। १५ ।

तत्रान्तरेऽभ्याजगाम वशिष्ठो ब्रह्मसम्भवः ॥
तस्य पूजामकुर्व्वन्तं शशाप स मुनिर्नृपम् ।
विरेतास्त्वं भवस्वेति शप्तस्तेनाप्यसौ पुनः ॥
अन्योन्यशापाच्च तयोर्विशरीरे विचेतसी ।
जग्मतुः शापनाशाय ब्रह्माणं जगतः पतिम् ॥
अथ ब्रह्मण आदेशाल्लोचनेषु वसन्निमिः ।
निमेषाः स्युश्च लोकानां तद्विश्रामाय नारद ॥”
इति मत्स्यपुराणे ५५ अध्यायः ॥ * ॥
मतान्तरं यथा, --
“निमिः सहस्रसंवत्सरं सत्रमारेभे । वशिष्ठञ्च
होतारं वरयामास । तमाह वशिष्ठः । अह-
मिन्द्रेण पञ्चवर्षशतं यागार्थं प्रथमतरं वृतः ।
आगतस्तवापि ऋत्विग् भविष्यामीत्युक्ते सोऽपि
तत्कालमेवान्यैर्गौतमादिभिर्यागमकरोत् । समाप्ते
चामरपतियागे त्वरावान् वशिष्ठ आजगाम ।
तत्कर्म्मकर्त्तृत्वं गोतमस्य दृष्ट्वा अयं विदेहो
भविष्यतीति शापं ददौ । निमेः शरीरं सद्यो
मृतमिव तस्थौ । यज्ञसमाप्तौ भागग्रहणाया-
गतान् देवान् ऋत्विज ऊचुः । यजमानाय वरो
दीयतामिति । देवैश्च छन्दितो निमिराह ।
नह्येतावति जगत्यन्यद्दुःखमस्ति
यच्छरीरात्मनो-
र्वियोगे भवति । तदहमिच्छामि सकललोचनेषु
वस्तुम् । न पुनः शरीरग्रहणं कर्त्तुमित्येवमुक्ते
देवैरसावशेषभूतानां नेत्रेष्वासां कारितः । ततो
भूतान्युन्मेषनिमेषं चक्रुः ।” इति विष्णुपुराणे ४
अंशे ५ अध्यायः ॥

**निमित्तं**, क्ली, (नि + मिद् + क्त । संज्ञापूर्ब्बकत्वान्न
नत्वम् ।) हेतुः । (यथा, देवीभागवते । १ । १८
। ५ ।
“किं निमित्तं महाभाग ! निःस्पृहस्य च मां
प्रति ।
जातं ह्यागमनं ब्रूहि कार्य्यं तन्मुनिसत्तम ! ॥”)
चिह्नम् । इत्यमरः । ३ । ३ । ७६ ॥ शकुनः ।
यथा,
“निमित्तानि च पश्यामि विपरीतानि केशव ! ।
इति श्रीभगवद्गीता ॥

**निमित्तकं**, क्ली, (निमित्त + संज्ञायां कन् ।)

कृतकर्म्मा २२ विचक्षणः २३ विदग्धः २४
चतुरः २५ प्रौढः २६ बोद्धा २७ विशारदः २८
सुमेधाः २९ सुमतिः ३० तीक्ष्णः ३१ प्रेक्षावान्
३२ विबुधः ३३ विदन् ३४ । इति राजनिर्घण्टः ॥
विज्ञानिकः ३५ कुशली ३६ । इति शब्द-रत्नावली ॥

**निफला**, स्त्री, (निवृत्तं फलं यस्याः ।) ज्योति-

ष्मती । इति भावप्रकाशः ॥
(ज्योतिष्मतीशब्देऽस्या गुणादयो व्याख्याताः ॥)

**निफेनं**, क्ली, (निवृत्तः फेनो यस्मादिति ।) अफेनम् ।

इति राजनिर्घण्टः ॥

**निबन्धं**, क्ली, (नितरां बन्धः तानलयादिसहित-

बन्धनं यत्र ।) गीतम् । इति शब्दरत्ना-वली ॥

**निबन्धः**, पुं, (निवध्नातीति । नि + बन्ध घञ् ।)

आनाहरोगः । ग्रन्थस्य वृत्तिः । इति हेम-चन्द्रः ॥ निम्बवृक्षः । इति जटाधरः ॥
बन्धनम् ।
यथा, --
"दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता ॥"
इति श्रीभगवद्गीता ॥
(यथा, भागवते । ६ । २ । ४६ ।
"नातःपरं कर्म्मनिबन्धकृन्तनं
मुमुक्षतां तीर्थपदानुकीर्त्तनात् ॥")

**निबन्धनं**, क्ली, (निवध्यतेऽनेनास्मिन् वा । नि + बन्ध

ल्युट् ।) हेतुः । इति हेमचन्द्रः ॥ उपनाहः ।
स तु वीणातन्त्रीनिबन्धनोर्द्ध्वभागः ।
इत्यमरः ।
१ । ७ । ७ ॥ (नि + बन्ध + भावे ल्युट् ।)
बन्धनञ्च ॥

"नभसा निभृतेन्दुना तुला-
मुदितार्केण समारुरोह तत् ॥")

**निमज्जथुः**, पुं, (नि + मस्ज + अथुच् ।) शयनम् ।

यथा, भट्टिः ।
"तल्पे कान्तान्तरैः सार्द्धं मन्येऽहं
धिङ्निमज्जथुम् ॥"

**निमज्जनं**, क्ली, (निमज्ज्यतेऽनेनेति । नि + मस्ज

+ भावे ल्युट् ।) स्नानम् ।
अवगाहनम् । यथा,
"नास्ति जन्यजनकव्यतिभेदः
सत्यमन्नजनितो जनदेहः ।
वीक्ष्य वः खलु तनुममृतादां
दृङ्निमज्वनमवैमि सुधायाम् ॥"
इति नैषधे पञ्चमसर्गः ॥

**निमन्त्रणं**, क्ली, (निमन्त्र्यते इति । नि + मन्त्र +

ल्युट् ।) नियोजनविशेषः । "अत्र यस्याकरणे
प्रत्यवायस्तन्निमन्त्रणम् । यथा, इह भुञ्जीत
भवान् । यस्याकरणे प्रत्यवायो न स्यात् तदा-
मन्त्रणम् । यथा, इह शयीत भवान् । इति
निमन्त्रणामन्त्रणयोर्भेदः ।" इति मुग्धबोध-
टीकायां दुर्गादासः ॥

**निमयः**, पुं, (निमीयतेऽनेनेति । नि + मि +

"एरच् ।" ३ । ३ । ५६ । इत्यच् ।)
विनिमयः ।
इत्यमरः । २ । १ । ९० ॥ (यथा, महाभारते ।
१२ । ७८ । ७ ।
"पक्वेनामस्य निमवं न प्रशंसन्ति साधवः ।
निमयेत् भक्वमामेन भोजनार्थाय
भारत ! ॥")

निमित्तनिश्चयादागतम् । चुम्बनम् । इति शब्द-
माला ॥ निमित्तञ्च ॥

**निमित्तकारणं**, क्ली, (निमित्तं कारणम् ।)

समवायिकारणासमवायिकारणाभ्यांभिन्नम् ।
तृतीयकारणम् । यथा । घटं प्रति कुलाल-
दण्डचक्रसलिलसूत्रादि । इति भाषापरिच्छेद-
सिद्धान्तमुक्तावल्यौ ॥

**निमित्तकृत्**, पुं, (निमित्तं स्वरुतेन शुभाशुभशकुनं

करोतीति । कृ + क्विप् ।) काकः । इति राज-
निर्घण्टः ॥

**निमित्तवित्**, [द्] पुं, (निमित्तं शुभाशुभलक्षणं

वेत्तीति । विद् + क्विप् ।) दैवज्ञः । गणकः ।
इति हेमचन्द्रः । ३ । १४६ ॥

**निमिषः**, पुं, विष्णुः । यथा, महाभारते । १ ।

१४९ । ३६ ।
"निमिषोऽनिमिषः श्रग्वी वाचस्पतिरुदारधीः ॥"
(निमिषतीति । नि + मिष + "इगुपधेति ।"

|  | **निमिः**, पुं, इक्ष्वाकुराजपुत्त्रः । तस्य निमेषे स्थिति-<br>कारणं यथा, --<br>“निमिर्नाम नृपः स्त्रीभिः पुरा<br>द्यूतमदीव्यत । |  |
| --- | --- | --- |

३ । १ । १३५ । इति कः ।)
कालविशेषः । चक्षु-
र्निमीलनम् । इति मेदिनी । षे,
३९ ॥ (यथा,
महाभारते । १ । १८९ । १९ ।
"सज्यञ्च चक्रे निमिषान्तरेण
शरांश्च जग्राह दशार्द्धसंङ्ख्यान्
॥"
वर्त्मगतरोगविशेषः । यथा, सुश्रुते
उत्तरतन्त्रे
३ अध्याये ।
"निमेषणीः सिरा वायुः प्रविष्टो
वर्त्मसंश्रयाः ।
चालयेदतिवर्त्मानि निमिषः स
गदो मतः ॥")

**निमीलनं**, क्ली, (निमीलत्यनेनेति । नि + मील +
करणे ल्युट् ।) मरणम् । (नि +
मील + भावे
ल्युट् ।) निमेषः । इति हेमचन्द्रः ।
३ । २४२ ॥
(यथा, कलाविलासे । १ । ४७ ।
"नयननिमीलनमूलः सुचिरं
स्नानार्द्रचूलजल-
सिक्तः ।
दम्भतरुः शुचिकुसुमः
सुखशतशाखाशतैः
फलितः ॥"
कालविशेषः । यथा,
सूर्य्यसिद्धान्ते । ४ । १७ ।
"तद्वदेव
विमर्दार्द्धनाडिकाहीनसंयुते ।
निमीलनोन्मीलनाख्ये भवेतां
सकलग्रहे ॥")

**निमीलिका**, स्त्री, (निमीलयतीति । नि + मील +
णिच् + ण्वुल् । टापि अत इत्वम्
।) व्याजः ।
यथा, महाभारते । १ । ३२ । १९ ।
"उलूकश्वसनाभ्याञ्च निमेषेण च पक्षिराट् ।
प्ररुजेन च संग्रामं चकार पुलिनेन च ॥")

**निमेषकृत्**, स्त्री, (निमेषं करोतीति । कृ + क्विप् ।
यद्वा, कृ + भावे क्विप् । निमेषे निमेषमात्रकाले
कृत् स्फुरणकार्य्यं यस्याः ।) विद्युत् । इति शब्द-
माला ॥

**निमेषरुक्**, [च्] पुं, (निमेषेण निमेषकालं व्याप्ये-
त्यर्थः रोचते दीप्यते इति । रुच् दीप्तौ +
क्विप् ।) खद्योतः । इति त्रिकाण्डशेषः ॥

**निम्नं**, त्रि, निकृष्टा म्ना अभ्यासः शीलमत्र ।
(यद्वा, निकृष्टं म्नातीति । म्ना + कः ।) नीचम् ।
निचु इति नावाल इति च भाषा ॥ तत्पर्य्यायः ।
गभीरम् २ गम्भीरम् ३ । इत्यमरः । १ । १० ।
१५ ॥
गभीरकम् ४ । इति शब्दरत्नावली ॥ (यथा,
कुमारे । ५ । ५ ।
"क ईप्सितार्थस्थिरनिश्चयं मनः
पयश्च निम्नाभिमुखं प्रतीपयेत् ॥"
पुं, अनमित्रपुत्त्रः । स तु सत्राजितप्रसेनयोः
पिता । यथा, भागवते । ९ । २४ । १२ ।
"शिनिस्तस्यानमित्रश्च निम्नोऽभूदनमित्रतः ।
सत्राजितः प्रसेनश्च निम्नस्याथासतुः सुतौ ॥")

**निम्नगा**, स्त्री, (निम्नं गच्छतीति । गम + ड । टाप् ।)
नदी । इत्यमरः । १ । १० । ३० ॥ (यथा, मनुः
।
९ । २२ ।
"यादृग्गुणेन भर्त्रा स्त्री संयुज्येत यथाविधि ।
तादृग्गुणा सा भवति समुद्रेणेव निम्नगा ॥")
नीचगामिनि, त्रि ॥

**निम्बः**, पुं, (निम्बति स्वास्थ्यं ददातीति । निम्ब +
अच् ।) वृक्षविशेषः । निम् इति भाषा । तत्-
पर्य्यायः । अरिष्टः २ सर्व्वतोभद्रः ३ हिङ्गु-
निर्य्यासः ४ मालकः ५ पिचुमर्द्दः ६ । इत्य-
मरः । २ । ४ । ६२ ॥ अर्कपादपः ७ । इति
हेमचन्द्रः ॥
"निम्बः शीतो लघुर्ग्राही
कटुपाकोऽग्निवातनुत् ।
अहृद्यः श्रमतृट्कासज्वरारुचिकृमिप्रणुत् ॥
व्रणपित्तकफच्छर्द्दिकुष्ठहृल्लासमेहनुत् ।
निम्बपत्रं स्मृतं नेत्र्यं कृमिपित्तविषप्रणुत् ॥
वातलं कटुपाकञ्च सर्व्वारोचककुष्ठनुत् ।
नैम्बं फलं रसे तिक्तं पाके तु कटु भेदनम् ॥
स्निग्धं लघूष्णं कुष्टघ्नं गुल्मार्शःकृमिमेहनुत्
॥"
इति भावप्रकाशः ॥ * ॥
तत्तैलगुणाः । नात्युष्णत्वम् । कृमिकुष्ठकफ-
त्वग्दोषव्रणकण्डूतिशोफहारित्वम् ।
पित्तलत्वञ्च ।
इति राजनिर्घण्टः ॥ * ॥
"निम्बं पित्तकफच्छर्द्दिव्रणहृल्लासकुष्ठनुत् ।"
निम्बपत्रं इति वा पाठः ॥ * ॥
"करञ्जनिम्बजफलं कृमिकुष्ठप्रमेहजित् ।
निम्बतैलन्तु कुष्ठघ्नं तिक्तं कृमिहरं परम् ॥"
इति राजवल्लभः ॥
अथ महानिम्बः । वकाईन इति हिन्दीभाषा
॥
तत्पर्य्यायगुणाः । यथा, भावप्रकाशे ।
"महानिम्बः स्मृतो द्रेका रम्यको विषमुष्टिकः
।
केशमुष्टिर्निम्बरकः कामुकः क्षीर इत्यपि ॥
महानिम्बो हिमो रूक्षस्तिक्तो ग्राही कषायकः
।
कफपित्तकृमिच्छर्द्दिकुष्ठहृल्लासरक्तजित् ॥
प्रमेहश्वासगुल्मार्शोमूषिकाविषनाशनः ॥"
(षष्ठ्यां तिथौ तद्भक्षणे तिर्य्यक्योनित्वं
स्यात् ।
इति तिथितत्त्वम् ॥)

**निम्बकः**, पुं, (निम्ब एव । स्वार्थे कन् ।) निम्ब-
वृक्षः । इति भूरिप्रयोगः ॥ (षष्ठ्यां तद्भक्षण-
निषेधो यथा, तिथितत्त्वे ।
"कलङ्की जायते विल्वे तिर्य्यग्योनिश्च
निम्बके ॥")

**निम्बतरुः**, पुं, (निम्ब इव तरुर्वृक्षः ।) मन्दार-

इति शब्दरत्नावली ॥ (यथा, राजतरङ्गिण्याम् । ६ । ७३ ।
"नीतस्य मण्डलेशत्वं वेलावित्तस्य भूभुजा ।
देवीः कामयमानस्य चक्रे गजनिमीलिका ॥")
निमीलनञ्च ॥

**निमेयः**, पुं, (निमीयते परिमीयते इति । नि + मा माने + "अचो यत् ।" ३ । १ । ९७ । इति यत् । "ईत् यति ।" ६ । ४ । ६५ । इति ईत् ।) नैमेयः । परीवर्त्तः । इत्यमरटीकायां भरतः ॥ (परिवर्त्तनीये, त्रि । यथा, महाभारते । १३ । ५१ । ९ ।
"नाहं शतसहस्रेण निमेयः पार्थिवर्षभ ! ।
दीयतां सदृशं मूल्यममात्यैः सह चिन्तय ॥")

**निमेषः**, पुं, (नि + मिष + भावे घञ् ।) पक्ष्मस्पन्दनकालः । पलक् इति भाषा ॥ तत्पर्य्यायः । निमिषः २ दृष्टिनिमीनलम् ३ । इति शब्दरत्नावली ॥ पुंसो यावत्कालमकृत्रिमनेत्रविकाशानन्तरं पक्ष्माकुञ्चनं जायते स निमेषः । इत्यमरटीकायां भरतः ॥ * ॥
"अक्षिपक्ष्मपरिक्षेपो निमेषः परिकीर्त्तितः ।
द्वौ निमेषौ त्रुटिर्नाम द्वे त्रुटी तु लवः स्मृतः ॥'
इत्यग्निपुराणम् ॥ (पक्ष्मस्पन्दनम् । यथा, रघुः । २ । १९ ।

कैटर्य्यः ८ वरत्वचः ९ छर्द्दिघ्नः १० । इति रत्नमाला ॥ प्रभद्रः ११ पारिभद्रकः १२ काकफलः १३ कीरेष्टः १४ नेता १५ सुमनाः १६ विशीर्णपर्णः १७ यवनेष्टः १८ पीतसारकः १९ शीतः २० । इति राजनिर्घण्टः ॥ पिचुमन्दः २१ तिक्तकः २२ । इति भावप्रकाशः ॥ कोकटः २३ शूकमालकः २४ । इति जटाधरः ॥ अस्य गुणाः । शीतत्वम् । तिक्तत्वम् । कफव्रणक्रिमिवमिशोफशान्तिकारित्वम् । बलासबहुविधपित्तदोषहृदयविदाहनाशित्वञ्च । इति राजनिर्घण्टः ॥ लघुत्वम् । ग्राहित्वम् । कटुपाकित्वम् । अग्निवातकारित्वम् । अहृद्यत्वम् । भ्रमतृट्कासज्वरारुचिच्छर्द्दिकुष्ठहृल्लासमेहनाशित्वञ्च । तत्पत्रगुणाः । नेत्रहितकारित्वम् । कृमिपित्तविषसर्व्वारोचककुष्ठनाशित्वम् । वातलत्वम् । कटुपाकित्वञ्च । तत्फलगुणाः । रसे तिक्तत्वम् । पाके कटुत्वम् । भेदनत्वम् । स्निग्धत्वम् । लघुत्वम् । उष्णत्वम् । कुष्ठगुल्मार्शःकृमिमेहनाशित्वञ्च ।

वृक्षः । इत्यमरः । २ । ४ । २६ ॥

**निम्बबीजः**, पुं, (निम्बस्य बीजमिव बीजं यस्य ।) राजादनीवृक्षः । इति राजनिर्घण्टः ॥

**नि(म्बु)म्बूकं**, क्ली, (निम्बति सिञ्चतीव रसेनेति । निम्ब सेचने + बाहुलकात् ऊः पाक्षिको ह्रस्वश्च । ततः कन् ।) वृक्षविशेषः । कागजी लेवु इति भाषा ॥ तत्पर्य्यायः । अम्लजम्बीरः २ वह्निः ३ दीप्तः ४ वह्निबीजः ५ अम्लसारः ६ दन्ताघातः ७ शोधनः ८ जन्तुमारी ९ निम्बूः १० रोचनः ११ । (यथा, भावप्रकाशे पूर्ब्बखण्डे १ भागे ।
"निम्बः स्त्री निम्बकं क्लीवे निम्बूकमपि कीर्त्तितम् ॥")
तत्फलगुणाः । अम्लरसत्वम् । कटुत्वम् । उष्णत्वम् । गुल्मामवातकासकफार्त्तिकण्ठविच्छर्द्दिहरत्वम् । आग्नवृद्धिकारित्वम् । चक्षुष्यत्वम् । परिपक्वे अतीव रुच्यत्वञ्च । इति राजनिर्घण्टः ॥ पाचनत्वम् । लघुत्वम् । कृमिसमूहोदरग्रहनाशित्वम् । तीक्ष्णत्वम् । वातपित्तकफशूलिनो हितत्वम् । कष्टनष्टरुचिरोचनत्वम् । त्रिदोषवह्निक्षयवातरोगनिपीडितानांविषविह्वलानां मलग्रहे बद्धगुदे विसूचिकायाञ्च प्रदेयम् । इति भावप्रकाशः ॥ * ॥

|  |  |  |
| --- | --- | --- |
| “पपौ निमेषालसपक्ष्मपङ्क्ति-<br>रुपोषिताभ्यामिव लोचनाभ्याम्<br>॥”<br>रोगविशेषः । यथा, सुश्रुते<br>चिकित्सितस्थाने ।<br>३९ अध्याये ।<br>“नेत्रस्तम्भं निमेषं वा तृष्णां कासं<br>प्रजागरम् ।<br>लभते दन्तचालञ्च<br>तांस्तांश्चान्यानुपद्रवान् ॥”<br>स्वनामख्यातयक्षविशेषः । इति<br>नीलकण्ठः ॥ |  |  |

“भागैकं निम्बुजं तोयं षड्भागं शर्क्करोदकम् ।
लवङ्गमरिचोन्मिश्रं पानकं पानकोत्तमम् ॥
निम्बूफलभवं पानमत्यम्लं वातनाशनम् ।
वह्निदीप्तिकरं रुच्यं समस्ताहारपाचकम् ॥”
इति राजनिर्घण्टः ॥

**नियतः**, त्रि, (नि + यम + क्तः ।) संयतः । यथा,
“कार्त्तिके शुक्लपक्षस्य द्वितीयायां नराधिप ! ।
पुष्पाहारो वर्षमेकं तत्रैव नियतात्मवान् ॥”
इति भविष्यपुराणे द्वितीयकल्पः ॥
(सेवापरः । यथा, रामायणे । १ । २ । ७ ।
“प्रायच्छत मुनेस्तस्य वल्कलं नियतो गुरोः ॥”)
नित्यः । यथा, --
“अन्यथासिद्धिशून्यस्य नियता पूर्ब्बवर्त्तिता ।
कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्त्तितम् ॥”
इति भाषापरिच्छेदे । १६ ॥
(यथा च कश्चित् ।
“चन्द्रे लक्ष्मीः प्रभा सूर्य्ये गतिर्वायौ भुवि क्षमा ।
एतत्तु नियतं सर्व्वं त्वयि चानुत्तमं यशः ॥”
निपूर्ब्बयमधातोर्बद्धार्थकत्वात् बद्धोऽपि । यथा,
नियताञ्जलिः ॥ संयुक्तः । वासक्तः । यथा,
महाभारते । १ । १३४ । ५९ ।
“प्रतिज्ञामात्मनो रक्षन् सत्ये च नियतः सदा ॥”)

**नियतिः**, स्त्री, (नियम्यते आत्मा अनयेति । नि +

**नियमः**, पुं, (नियमनमिति । नि + यम + “यमः समुपनिविषु च ।” ३ । ३ । ६३ । इति अप् ।)
शौचं सन्तोषः तपः स्वाध्यायः ईश्वरप्रणिधानञ्च ।
इति वेदान्तसारः ॥ प्रतिज्ञा । अङ्गीकार इति यावत् । व्रतम् । तच्चोपवासादि ।
अनित्यमागन्तु-साधनं कर्म्म । इत्यमरः । २ । ७ । ३८ ॥
(सङ्कल्पः ।
यथा, देवीभागवते । ३ । २६ । २५ ।
“नियमं प्रथमं कृत्वा पश्चात् पूजां समाचरेत् ॥”
बन्धनम् । यथा, मनुः । ८ । १२२ ।
“धर्म्मस्याव्यभिचारार्थमधर्म्मनियमाय च ॥”)
मन्त्रणा । निश्चयः । इति मेदिनी । मे, ४६ ॥ * ॥
“नियमाः पञ्च सत्याद्या बाह्यमाभ्यन्तरं द्विधा ।
शौचं तुष्टिश्च सन्तोषस्तपश्चेन्द्रियनिग्रहः ॥
स्नानमौनोपवासेज्यास्वाध्यायोपस्थनिग्रहः ।
तपः क्रोधो गुरौ भक्तिः शौचञ्च नियमाः स्मृताः ॥
यमाः पञ्चाथ नियमाः शौचं द्विविधमीरितम् ।
सन्तोषस्तपसां जप्यं वासुदेवार्च्चनं दमः ॥”
इति गरुडपुराणम् ॥
“ब्रह्मचर्य्यमहिंसाञ्च सत्यास्तेयापरिग्रहान् ।
सेवेत योगी निष्कामो योग्यतां स्वं मनो नयन् ॥
स्वाध्यायशौचसन्तोषतपांसिनियतात्मवान् ।
कुर्व्वीत ब्रह्मणि तथा परस्मिन् प्रवणं मनः ।
एते यमाः सनियमाः पञ्च पञ्च प्रकीर्त्तिताः ॥”
इति विष्णुपुराणे ६ अंशे ७ अध्यायः ॥ * ॥
“तपः सन्तोष आस्तिक्यं दानं देवस्य पूजनम् ।
सिद्धान्तश्रवणञ्चैव ह्रीर्म्मतिश्च जपो हुतम् ।
दशैते नियमाः प्रोक्ता योगशास्त्रविशारदैः ॥”
इति तन्त्रसारे (हठयोगप्रदीपिकायाञ्च । १ । १७ ॥ कवितानियमाः । यथा, --
“वर्णयेन्न सदप्येतन्नियमोऽथ प्रदर्श्यते ।
भूर्जत्वग्धिमवत्येव मलये ह्येव चन्दनम् ॥
सामान्यवर्णने शौक्ल्यं छत्राम्भःपुष्पवाससाम् ।

काव्यप्रकाशे द्वितीयोल्लासः ॥ बन्धनम् । यथा ।
बलेर्न्नियमनमित्युद्भटः ॥ (निग्रहः । यथा,
रघुः । ९ । ६ ।
“समतया वसुवृष्टिविसर्ज्जनै-र्न्नियमनादसताञ्च नराधिपः ॥”
नियच्छतीति । नि + यम + ल्युः । नियामके,
त्रि । यथा, हरिवंशे । १८१ । ५३ ।
“दक्षयज्ञविनाशाय बलेर्न्नियमनाय च ॥”)

**नियमसेवा**, स्त्री, (नियमेन भगवतः सेवा ।)
कार्त्तिकमासे नियमपूर्ब्बकभगवदाराधना । यथा,
“अकृत्वा नियमं विष्णोः कार्त्तिकं यः क्षिपेन्नरः ।
जन्मार्ज्जितस्य पुण्यस्य फलं नाप्नोति नारद ! ॥”
किञ्च ।
“नियमेन विना चैव यो नयेत् कार्त्तिकं मुने ! ।
चातुर्म्मास्यं तथा चैव ब्रह्महा स कुलाधमः ॥”
तत्रोपक्रमकालश्चोक्तः श्रीकृष्णसत्यासंवादीय-कार्त्तिकमाहात्म्ये ।
“आश्विनस्य तु मासस्य या शुक्लैकादशी भवेत् ।
कार्त्तिकस्य व्रतानीह तस्यां कुर्य्यादतन्द्रितः ॥”
इति श्रीहरिभक्तिविलासे १६ विलासः ॥ अन्यत् कार्त्तिकशब्दे द्रष्टव्यम् ॥

**नियमितः**, त्रि, (नि + यम + णिच् + क्तः ।) कृत-नियमः । बद्धः । यथा, --
“क्षुद्राः सन्त्रासमेते विजहतु हरयः क्षुण्णशक्रेभ-

यम + करणे क्तिन् ।) भाग्यम् । दैवम् । इत्य-
मरः । १ । ४ । २८ ॥ (यथा, माघे । ४ । ३४ ।
"आसादितस्य तमसा नियतेर्नियोगा-
दाकाङ्क्षतः पुनरपक्रमणेन कालम् ॥")
नियमः । इति मेदिनी । ते, १२० ॥ (चतु-
र्द्दशधारिणीदेव्योयोषिद्गणानामन्यतमा । इति
वह्निपुराणे गणभेदनामाध्यायः ॥)

**नियती**, स्त्री, (नियम्यते कालो यया । नि + यम + क्तिच् । वा ङीष् ।) दुर्गा । यथा, --
"स्मृतिः संस्मरणाद्देवी नियती च नियामता ॥"
इति देवीपुराणे निरुक्ताध्यायः ॥

**नियतेन्द्रियः**, त्रि, (नियतानि संयतानि इन्द्रियाणि येन ।) संयतेन्द्रियः । इन्द्रियदमनशीलः । यथा,
मार्कण्डेये । ८४ । ८ ।
"अभ्यस्यसे सुनियतेन्द्रियतत्त्वसारैः ॥"

**नियन्ता**, [ऋ] पुं, (नियच्छति अश्वादीनिति । नि + यम + तृच् ।) सारथिः । इत्यमरः । २ ।
८ । ५९ ॥ (यथा, महाभारते । ७ । १३ । २२ ।
"स नियन्तृध्वजरथं विव्याध निशितैः शरैः ॥"
विष्णुः । यथा, महाभारते । १३ । १४९ । १०५ ।
"अपराजितः सर्व्वसहो नियन्ता नियमो यमः ॥")
त्रि, शास्ता । यथा, रघुः । १ । १७ ।
"रेखामात्रमपि क्षुण्णादामनोर्वर्त्म नः परम् ।
न व्यतीयः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः ॥"

**नियन्त्रितः**, त्रि, (नि + यन्त्रि + क्तः ।) अबाधः । अनर्गलः । इति हेमचन्द्रः ॥ (यथा, देवी-
कृष्णत्वं केशकाकाहिपयोनिधिपयोमुचाम्॥
रक्तत्वं रत्नबन्धूकविद्याम्भोजविषस्वताम्।
तथा वसन्त एवान्यपुष्टानां कलकूजितम् ॥
वर्षास्वेव मयूराणां रुतं नृत्यञ्च वर्णयेत् ।
नियमस्य विशेषोऽथ पुनः कश्चित् प्रकाश्यते ॥
कमलासम्पदोः कृष्णहरितोर्नागसर्पयोः ।
पीतलोहितयोः स्वर्णपरागाग्निशिखाद्रिषु ॥
चन्द्रेशशैलयोः कामध्वजे मकरमत्स्ययोः ।
दानवासुरदत्यानामैक्यमेवाभिसम्मतम् ॥
बहुकालजन्मनोऽपि शिवचन्द्रस्य बालता ।
भानवा मौलितो वर्ण्या देवाश्चरणतः पुनः ॥"
इति कविकल्पलतायाम् १ स्तवके वर्ण्यस्थिति-
र्नाम तृतीयं कुसुमम् ॥ (विष्णुः । यथा, महा-
भारते । १३ । १४९ । ३० ।
"अतीन्द्रः संग्रहः सर्गो धृतात्मा नियमो यमः ॥"
महादेवः । यथा, तत्रैव तस्य सहस्रनाम-
कीर्त्तने । १३ । १७ । ३५ ।
"पवित्रश्च महांश्चैव नियमो नियमाश्रितः ॥")

**नियमनं**, क्ली, (नि + यम + भावे ल्युट् ।) नियमः ।
यथा । "न तत्राभिधानियमनात्तस्याः ।" इति
कुम्भा
युष्मद्देहेषु लज्जां दधति परममी शायका निष्प-
तन्तः ।
सौमित्रे ! तिष्ठ पात्रं त्वमपि न हि रुषां नन्वहं मेघनादः
किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वे-
षयामि ॥"
इति महानाटकम् ॥

**नियातनं**, क्ली, (नि + यत + णिच् + ल्युट् ।)
निपातनम् । इत्यमरटीकायां नयनानन्दः ॥

**नियामः**, पुं, (नि + यम + पक्षे घञ् ।) नियमः ।
इति शब्दरत्नावली ॥

**नियामकः**, पुं, (नियामयतीति । नि + यम + णिच्
+ ण्वुल् ।) पोतवाहः । इत्यमरः । १ । १० । १२ ॥
त्रि, । नियन्ता । इति मेदिनी । के, १९४ ॥
(यथा, महाभारते । ३ । २७१ । ३४ ।
"ततोऽग्निं नाशयामासुः सम्बर्त्ताग्निनिया-
मकाः ॥")

**नियुक्तः**, त्रि, (नि + युज + क्तः ।) नियोगविशिष्टः ।
(यथा, मनुः । ९ । ६० ।
"विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि ।
एकमुत्पादयेत् पुत्त्रं न द्वितीयं कथञ्चन ॥")
अवधारितः । आज्ञप्तः । यथा, --
"जानामि धर्म्मं न च मे प्रवृत्ति-
र्ज्जानाम्यधर्म्मं न च मे निवृत्तिः ।
त्वया हृषीकेश ! हृदिस्थितेन
यथा नियुक्तोऽस्मि तथा करोमि ॥"
इत्याह्निकतत्त्वम् ॥

**नियुतं**, क्ली, (नियूयते बहुसंख्या प्राप्यतेऽनेनेति ।
नि + यु + क्त ।) लक्षम् । इत्यमरः । ३ ।
५ । २४ ॥
यथा । "धेनूनां नियुते प्रादादिति नियुते
लक्षे ।"
इति श्रीधरस्वामी ॥
"शतं महस्रमयुतं नियुतं प्रयुतं मतम् ।
स्त्री कोटिरर्व्वुदमिति क्रमाद्दशगुणोत्तरम्
॥
इति रत्नकोषः ।" इति भरतः ॥
दशलक्षम् ।
यथा, --
"एकं दश शतञ्चैव सहस्रमयुतन्तथा ।
लक्षञ्च नियुतञ्चैव कोटिरर्व्वुद एव च ॥
वृन्दः खर्ब्बो निखर्ब्बश्च शङ्खपद्मौ च
सागरः ।
अन्त्यं मध्यं परार्द्धञ्च दशवृद्ध्या
यथोत्तरम् ॥"
इति पुराणम् ॥

**नियुद्धं**, क्ली, (नि + युध् + क्त ।) बाहुयुद्धम् ।
इत्यमरः । २ । ८ । १०६ ॥ (यथा,
हरिवंशे ।
१४२ । ७१ ।
"नियुद्धकुशलान् मल्लान् देवो
मल्लप्रियस्तदा ।
योधयित्वा ददौ भूरि वित्तं वस्त्राणि
चात्म-
वान् ॥")

**नियोगः**, पुं, (नि + युज् + घञ् ।) अवधारणम् ।
इति दुर्गादासः ॥ (निश्चयः । यथा, रघुः
।
१७ । ४९ ।
"तत् सिषेवे नियोगेन स
विकल्पपराङ्मुखः ॥")
आज्ञा । इति हेमचन्द्रः । २ । १९० ॥
(यथा,
रामायणे । २ । २१ । ४९ ।
"निशम्य वैकुण्ठनियोज्यमुख्ययो-
र्म्मधुच्युतं वाचमुरुक्रमप्रियः ॥"
नियोजनीये, त्रि । यथा, महाभारते । १२
।
३२७ । ४६ ।
"न नियोज्याश्च वः शिष्या अनियोगे
महा-
भये ॥")

**नियोद्धा**, [ऋ] पुं, (नियुध्यते इति । नि + युध
+ तृच् ।) कुक्कुटः । इति राजनिर्घण्टः ॥
बाहु-
युद्धकारी च ॥

**निरक्षदेशः**, पुं, (निरक्षो देशः ।) व्यक्षदेशः ।
पलभाशून्यस्थानम् । स तु पूर्ब्बे
भद्राश्ववर्षे यम-
कोटिः । दक्षिणे भारतवर्षे लङ्का । पश्चिमे
केतु-
मालवर्षे रोमकः । उत्तरे कुरुवर्षे सिद्धपुरी
।
एताः भूवृत्तपादविवराः अन्योऽन्यं
प्रतिष्ठिताः ।
तासामुपरितो विषुवस्थो दिवाकरो याति
।
तासु विषुवच्छाया ध्रुवस्योन्नतिश्च न
दृश्यते ।
तत्र दिवामानं रात्रिमानञ्च त्रिंशन्नाडिकाः ।
इति सूर्य्यसिद्धान्तमतम् ॥ (यथा,
सिद्धान्त-
शिरोमणौ गोलाध्याये । १५ ।
"निरक्षदेशात् क्षितिषोडशांशे
भवेदवन्ती गणितेन यस्मात् ॥")

**निरङ्कुशः**, त्रि, (निर्नास्ति अङ्कुश इव प्रतिबन्धको
यस्य ।) अनिवार्य्यः । बाधाशून्यः । इति
जटा-
धरः ॥ (यथा, भागवते । १ । १७ । १५
।
"शिलाशयान्तामनिकेतवासिनीं
निरन्तरास्वन्तरवातवृष्टिषु ॥")
अविना । अबहिः । अनात्मीयम् । अनवसरः
।
अमध्यम् । अनन्तरात्मा । एते निरुपसर्ग-
पूर्ब्बकान्तरशब्दार्थाः ॥

**निरन्तराभ्यासः**, पुं, (निरन्तरः सततोऽभ्यासो
यत्र ।) स्वाध्यायः । इति त्रिकाण्डशेषः ।
सतता-
वृत्तिश्च ॥

**निरपत्रपः**, त्रि, (निर्गता अपत्रपा लज्जा
यस्येति ।) धृष्टः । निर्लज्जः । इति जटाधरः
॥
(यथा, भागवते । ३ । २० । २४ ।
"ततो हसन् स भगवानसुरैर्निरपत्रपैः ।
अन्वीयमानस्तरसा क्रद्धो भीतः परापतत्
॥")

**निरपेक्षः** त्रि, (निर्गता अपेक्षा यस्य ।) अन-
पेक्षः । यथा, मलमासतत्त्वे ।
"अभिधातुं पदेऽन्यस्मिन् निरपेक्षरवा श्रुतिः
॥"
(यथा, रामायणे । ६ । ९९ । ४२ ।
"कलत्रनिरपेक्षैश्च चेष्टितैरस्य दारुणैः ॥")

**निरयः**, पुं, (निकृष्टः अयो गमनं यत्र ।) नरकः ।
इत्यमरः । १ । ८ । १ ॥ (यथा, हरिवंशे ।
१६ । १६ ।
"कथञ्च शक्तास्ते दातुं निरयस्थाः फलं पुनः
॥")

**निरर्गलः**, त्रि, (निर्नास्ति अर्गलमिव प्रतिबन्धको
यत्र ।) अनर्गलः । अबाधः । इत्यमरः । ३ ।
१ । ८३ ॥ (यथा, महाभारते । ७ । ९ । ६२
।
"दशाश्वमेधानाजह्रे स्वन्नपानाप्तदक्षिणान् ।
निरर्गलान् सर्व्वमेधान् पुत्त्रवत् पालयन् प्रजाः
॥")

**निरर्थकं**, त्रि, (निर्गतोऽर्थो यस्मात् । कप् ।) निष्फ-

"त्वया मया च वैदेह्या लक्ष्मणेन
सुमित्रया ।
पितुर्नियोगे स्थातव्यमेष घर्म्मः सनातनः
॥"
अपुत्रभ्रातृपत्नीपुत्त्रार्थं नियोजनम् ।
यथा,
मनुः । ९ । ६२ ।
"विधवायां नियोगार्थे निर्व्वृत्ते तु
यथाविधि ।
गुरुवच्च स्नुषावच्च वर्त्तेयातां परस्परम्
॥")

**नियोगी**, [न्] त्रि, (नियोगोऽस्यास्तीति ।
नियोग + इनिः ।) नियोगविशिष्टः ।
नियुक्तः ।
तत्पर्य्यायः । कर्म्मसचिवः २ आयुक्तः
३
व्यापृतः ४ । इति हेमचन्द्रः । ३ । ३८३
॥ (यथा,
राजतरङ्गिण्याम् । ६ । ८ ।
"कृष्यध्यक्षत्वमुत्सृज्य कृत्यं
नान्यन्नियोगि-
नाम् ॥")

**नियोग्यः**, त्रि, (नियोक्तुमर्हः । नि + युज + ण्यत्
।)
नियोगार्हः । प्रभुः । इति
मुग्धबोधव्याकर-
णम् ॥ (यथा, प्रद्युम्नविजये । ५ अङ्के ।
"एते वयं नियोज्या नियोजयतु नियोग्यः
॥")

**नियोजनं**, क्ली, (नि + युज + ल्युट् ।) नियोगः ।
(यथा, महाभारते । १२ । ३६४ । २ ।
"स्मरणीयोऽस्मि भवता
संप्रेषणनियोजनैः ॥")
प्रेरणम् । यथा । त्वयैतत् क्रियतामिति
क्रियासु
नियोजनं प्रेरणम् । इति दुर्गादासः ॥

**नियोज्यः**, त्रि, (नियोक्तुं शक्यः । नि + युज +
"प्रयोज्यनियोज्यौ शक्यार्थे ।" ७ । ३ ।
६८ ।
"अनागःस्विह भूतेषु य आगस्कृन्निरङ्कुशः
।
आहर्त्तास्मि भुजं साक्षादमर्त्तस्यापि
साङ्ग-
दम् ॥")

**निरञ्जना**, स्त्री, (निर्नास्ति अञ्जनमिव अन्धकारो
यत्र ।) पूर्णिमा । इति शब्दमाला ॥
(निर्नास्ति
अञ्जनं यत्र ।) अञ्जनशून्ये, त्रि ॥ (निर्गतं
अञ्जनमिवाज्ञानं यत्र । अज्ञानरहिते च ।
यथा,
देवीभागवते । १ । १८ । ३६ ।
"स कथं वध्यते ब्रह्मन्निर्व्विकारो निरञ्जनः
॥"
पुं, योगिविशेषः । यथा, हठयोगप्रदीपि-
कायाम् । ७ ।
"कानेरी पूज्यपादश्च नित्यनाथो
निरञ्जनः ॥"
महादेवः । यथा, हरिवंशे भविष्यपर्व्वणि ।
१४ । २ ।
"दीर्घरोमा दीर्घभुजो दीर्घबाहुर्निरञ्जनः
॥")

**निरतं**, त्रि, (नि + रम + क्तः ।) नियुक्तम् । यथा ।
दानरत्नाकरे देवलः ।
"एकां शाखां सकल्पां वा
षड्भिरङ्गैरधीत्य च ।
षट्कर्म्मनिरतो विप्रः श्रोत्रियो नाम
धर्म्मवित् ॥"
इति व्यवहारतत्त्वम् ॥

**निरन्तरं**, त्रि, (निर्नास्ति अन्तरं यस्मिन् यस्माद्वा
।)
निविडम् । घनम् । इत्यमरः । ३ । १ ।
६६ ॥
अनवकाशः । (यथा, आर्य्यासप्तसत्याम्
। ४३८ ।
"सज्जनयोः स्तनयोरिव निरन्तरं सङ्गतं
भवति ॥")
अनवधिः । अपरिधानम् । अनन्तर्धानम्
।
लम् । तत्पर्य्यायः । मोघम् २ । इत्यमरः ।
३ । १ । ८१ ॥ विफलम् ३ । इति जटाधरः
॥
(यथा, भागवते । ४ । १६ । १९ ।
"अयन्तु साक्षाद्भगवांस्त्र्यधीशः
कूटस्थ आत्मा कलयावतीर्णः ।
यस्मिन्नविद्यारचितं निरर्थकं
पश्यन्ति नानात्वमपि प्रतीतम् ॥")

**निरवः**, पुं, (नि + रु + "ऋदोरप् ।" ३ । ३ । ५७ ।
इति भावे अप् ।) नीरवः । रवाभावः । इति
निपूर्ब्बरुधातोरलि निष्पन्नः । अपालनञ्च ॥
(निर्गतरक्षकः । यथा, ऋक्संहितायाम् । १ ।
१२२ । ११ ।
"नभो जुवो यन्निरवस्य राधः ।"
"निरवस्य निर्गतरक्षकस्य ।" इति तद्भाष्ये
सायनः ॥)

**निरवग्रहः**, पुं, (निर्गतोऽवग्रहः प्रतिबन्धो
यस्मात् ।) स्वतन्त्रः । इत्यमरः । ३ । १ ।
१५ ।
(यथा, हरिवंशे । ८० । ९ ।
"दुर्द्दमः कामचारी च स केशी निरवग्रहः ॥")
वृष्टिप्रतिबन्धाभावश्च ॥ (महादेवः । यथा,
महा-
भारते । १३ । १७ । ८२ ।
"नीलस्तथाङ्गलुब्धश्च शोभनो निरवग्रहः
॥")

**निरवहालिका**, स्त्री, (निर् + अव + हल + ण्वुल् ।
टापि अत इत्वम् ।) प्राचीरम् । इति शब्द-
माला ॥

| | | |
|---|---|---|
| इति ण्यत्प्रत्ययेन निपातनात् साधुः ।)<br>प्रेष्यः ।<br>किङ्करः । इत्यमरः । २ । १० । १७ ॥<br>(यथा,<br>भागवते । ४ । १२ । २८ । | अभेदः । अतादर्थ्यम् । अच्छिद्रम् ।<br>(यथा, कुमार-<br>सम्भवे । ५ । २५ । | |

**निरशनं**, क्ली, (निर् + अश + ल्युट् ।) भोजना-
भावः । अनशनम् । (निर्गतं अशनं भोजना-
दिकं यस्मात् । भोजनरहिते त्रि ॥)

**निरसः**, त्रि, (निवृत्तो रसो यस्मात् ।) नीरसः ।
पुं, रसाभांवः । रसस्य अभावः इति तत्पुरुष-
समासनिष्पन्नः ॥

**निरसनं**, क्ली, (निरस्यते क्षिप्यते इति । निर् +
अस + ल्युट् ।) प्रत्याख्यानम् । इत्यमरः । ३ । २ ।
३१ ॥ (यथा, महाभारते । १४ । ४ । १० ।
“स पितुर्विक्रियां दृष्ट्वा राज्यान्निरसनञ्च तत् ।
नियतो वर्त्तयामास प्रजाहितचिकीषया ॥”)
वधः । निष्ठीवनम् । इति मेदिनी । ने, १९१ ॥

**निरसा**, स्त्री, (निवृत्तो रसो यस्याः ।) निःश्रेणिका-
तृणम् । इति राजनिर्घण्टः ॥

**निरस्तः**, त्रि, (निर् + अस् + क्तः ।) प्रहित-
बाणः । त्यक्तशरः । त्वरितोदितम् । शीघ्रो-
च्चारितवचः । निराकरणविशिष्टः । तत्पर्य्यायः ।
प्रत्यादिष्टः २ प्रत्याख्यातः ३ निराकृतः ४
निकृतः ५ विप्रकृतः ६ । इत्यमरः । ३ । १ । ४० ॥
प्रतिक्षिप्तम् ७ अपविद्धम् ८ । इति हेमचन्द्रः ॥
निष्ठ्यूतः । प्रेषितः । संत्यक्तः । प्रतिहतः । इति
मेदिनी । ते, ११७ ॥ (यथा, हितोपदेशे । १ । ४८ ।
ध्यायन्ति योगिनो यत्तु कुतस्तेजस्विनं विना ॥”
अपि च ।
“योनिर्गुणः स निर्लिप्तः शक्तिभ्यो नहि संयुतः ।
सिसृक्षुराश्रितः शक्तौ निर्गुणः सगुणो भवेत् ॥
यावन्ति च शरीराणि भोगार्हाणि महामुने ! ।
प्राकृतानि च सर्व्वाणि श्रीकृष्णविग्रहं विना ॥
ध्यायन्ति योगिनस्तञ्च शुद्धं ज्योतिःस्वरूपिणम् ।
हस्तपादादिरहितं निर्गुणं प्रकृतेः परम् ॥
वैष्णवास्तं न मन्यन्ते तद्भक्ताः सूक्ष्मदर्शिनः ।
कुतो बभूव तज्ज्योतिरहो तेजस्विनं विना ॥
ज्योतिरभ्यन्तरे नित्यं शरीरं श्यामसुन्दरम् ।
अतीवामूल्यसद्रत्नभूषणेन विभूषितम् ॥
एवं भक्ताश्च ध्यायन्ति शश्वच्चरणसेविनः ।
योगिनो योगरूपञ्च काले भक्तिबिपाकतः ॥
ज्योतिरभ्यन्तरे मूर्त्तिं पश्यन्ति कृपया प्रभोः ॥”
इति ब्रह्मवैवर्त्ते गणपतिखण्डे । ३२ । ७ । ४२ अः ॥
तस्य द्विचत्वारिंशन्नामानि यथा, --
“जगद्योनिरयोनिस्त्वमनन्तोऽव्ययएव च ।
ज्योतिःस्वरूपो ह्यनघः सगुणो निर्गुणो महान् ॥
भक्तानुरोधात् साकारो निराकारो निरङ्कुशः ।
निर्व्यूहो निखिलाधारो निःशङ्को निरुपद्रवः ॥
निरुपाधिश्च निर्लिप्तो निरीहो निधनान्तकः ।
स्वात्मारामः पूर्णकामोऽनिमेषो नित्य एव च ॥

**निरातपा**, स्त्री, (निर्गत आतपो यस्याः ।)
रात्रिः । इति शब्दचन्द्रिका ॥ आतपशून्ये, त्रि ॥

**निराबाधः**, त्रि, (निर्गता आबाधा प्रतिबन्धो
यस्मात् ।) पक्षाभासविशेषः । यथा, --
“अप्रसिद्धं निराबाधं निरर्थं निष्प्रयोजनम् ।
असाध्यं वा विरुद्धं वा पक्षाभासं विवर्ज्जयेत् ॥
निरावाधं अस्मद्गृहप्रदीपप्रकाशेनायं स्वगृहे
व्यवहरति ।” इति मिताक्षरा ॥

**निरामयः**, त्रि, (निर्गत आमयो व्याधिर्यस्मात् ।)
रोगरहितः । तत्पर्य्यायः । वार्त्तः २ कल्यः ३ ।
इत्यमरः । २ । ६ । ५७ ॥ नीरुजः ४ पटुः ५
उल्लाघः ६ लघुः ७ अगदः ८ निरातङ्कः ९ ।
अनातङ्कोऽपि पाठः । इति राजनिर्घण्टः ॥
(यथा, सुश्रुते । १ । ४६ ।
“निरामयाणां चित्रन्तु भक्तमध्ये प्रकीर्त्तितम् ॥”
उपद्रवादिशून्यः । यथा, महाभारते । १ । १५७ । ११ ।
“इदं नगरमभ्यासे रमणीयं निरामयम् ।
वसतेह प्रतिच्छन्ना ममागमनकाङ्क्षिणः ॥”
रोगनाशकः । यथा, मुकुन्दमालायाम् । २१ ।
“किमौषधैः क्लिश्यसि मूढ दुर्म्मते !
निरामयं कृष्णरसायनं पिब ॥”)

**निरामयः**, पुं, (निर्गतः आमयो यस्मात् ।)
इडिक्कः । वनच्छगलः । इति मेदिनी । ये,
१२१ ॥ शूकरः । इति शब्दमाला ॥ (नृप-
विशेषः । यथा, महाभारते । १ । १ । २३४ ।
“धृष्टकेतुर्बृहत्केतुर्दीप्तकेतुर्निरामयः ॥”
महादेवः । इति महाभारतम् । १३ । १७ । १४८ ॥

"यत्र विद्वज्जनो नास्ति
श्लाघ्यस्तत्राल्पधीरपि।
निरस्तपादपे देशे एरण्डोऽपि द्रुमायते ॥"
यथाच मार्कण्डेयपुराणे । ८९ । २३ ।
"आयान्ती वह्निकूटाभा सा निरस्ता
महो-
ल्कया ॥")

**निराकरणं**, क्ली, (निर् + आ + कृ + ल्युट् ।)

निवारणम् । निरसनम् । इति
निराकरिष्णु-
शब्दटीकायां भरतः ॥

**निराकरिष्णुः**, त्रि, (निराकरोति तच्छीलः । निर

+ आ + कृ + "अलंकृञ्निराकृञिति ।"
३ । २ ।
१३६ । इति इष्णुच् ।) निराकरणशीलः
। तत्-
पर्य्यायः । क्षिप्नुः २ । इत्यमरः । ३ । १
। ३० ॥
(यथा, भट्टिकाव्ये । ५ । १ ।
"निराकरिष्णुर्वर्त्तिष्णुर्वर्द्धिष्णुः परितो
रणम् ॥")

**निराकारः**, पुं, (निर्गत आकारो देहादिदृश्य-

स्वरूपं यस्मादिति । निरादय इति
समासः ।)
परमेश्वरः । ब्रह्म । यथा, --
"साकारञ्च निराकरं सगुणं निर्गुणं प्रभुम् ।
सर्व्वाधारञ्च सर्व्वञ्च स्वेच्छारूपं
नमाम्यहम् ॥"
अपि च ।
"तेजःस्वरूपो भगवान् निराकारो
निराश्रयः ।
निलिप्तो निर्गुणः साक्षी स्वात्मारामः
परात्परः ॥
ध्यायन्ति
योगिनस्तेजस्त्वदीयमशरीरिणम्।
वैष्णवाश्चैव साकारं कमनीयं मनोहरम् ॥
केचिच्चतुर्भुजं शान्तं लक्ष्मीकान्तं
मनोहरम् ।
शप्त्रचक्रगदापद्मधरं पीताम्बरं परम् ॥
सुभगो दुर्भगो वाग्मी दुराराध्यो दुरत्ययः ।
वेदहेतुश्च वेदाश्च वेदाङ्गो वेदविद्विभुः ॥
द्विचत्वारिंशिन्नामानि प्रातरुत्थाय यः पठेत्
।
दृढां भक्तिं हरेर्दास्ये लभते वाञ्छितञ्च यत्
॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ७
अध्यायः ॥
आकारशून्ये, त्रि ॥

**निराकृतः**, त्रि, (निर् + आ + कृ + क्तः ।) प्रत्या-

ख्यातः । निरस्तः । इत्यमरः । ३ । १ ।
४० ॥

**निराकृतिः**, स्त्री, (निर् + आ + कृ + क्तिन् ।) निर-

सनम् । निराकरणम् । इत्यमरः । ३ । २ ।
३१ ॥
(निर्गता आकृतिर्यस्मादिति ।) अनाकारे
अस्वाध्याये च त्रि । इति मेदिनी । ते,
२०३ ॥
(पुं, पञ्चमहायज्ञानुष्ठानरहितः। यथा, मनुः
।
३ । १५४ ।
"यक्ष्मी च पशुपालश्च परिवेत्ता निराकृतिः
॥"
"निराकृतिः पञ्चमहायज्ञानुष्ठानरहितः।
तथा च छन्दोगपरिशिष्टम्।
निराकर्त्तामरादीनां स विज्ञेयो निराकृतिः
॥"
इति कुल्लूकभट्टः ॥
"निराकृतिः सत्यधिकारे महायज्ञानुष्ठान-
रहितः । अनद्धा निराकृतिरुच्यते । एवं हि
शतपथे । यो न देवानर्च्चति न पितॄन् न
मनुष्या-
निति । यैस्तु पठ्यते
अस्वाध्यायश्रुतधनैर्निरा-
कृतिरुदाहृतः ।" इति मेधातिथिः ॥ * ॥
रोहितमनुपुत्त्रः । यथा, हरिवंशे । ७ । ६३
।
"दक्षपुत्त्रस्य पुत्त्रास्ते रोहितस्य प्रजापतेः
।
क्ली, कुशलम् । यथा, तत्रैव । ५ । ७८ । ८
।
"कुरूणां पाण्डवानाञ्च प्रतिपत्स्व निरामयम्
॥")

**निरामालुः**, पुं, (नितरां रमतेऽनेनेति । नि + रम

+ बाहुलकात् आलु दीर्घश्च ।) कपित्थः ।
इति
शब्दचन्द्रिका ॥ (विवरणमस्य कपित्थशब्दे
ज्ञातव्यम् ॥)

**निरालम्बा**, स्त्री, (निर्नास्ति आलम्बो यस्याः ।)

आकाशमांसी । इति राजनिर्घण्टः ॥
(शुक्ल-
यजुर्व्वेदान्तर्गतोपनिषद्विशेषः । इति
मुक्तिको-
पनिषत् ॥ अवलम्बनशून्ये, त्रि । यथा, हठ-
योगप्रदीपिकायाम् । ३ । ५४ ।
"एको देवो निरालम्ब एकावस्था मनोन्मनी
॥")

**निराशः**, त्रि, (निर्गता आशा यस्मादिति ।)

आशाशून्यः । यथा, तिथितत्त्वे ।
"भूताहे ये प्रकुर्व्वन्ति उल्काग्रहमचेतसः ।
निराशाः पितरो यान्ति शापं दत्त्वा सुदा-
रुणम् ॥"

**निरासनं**, क्ली, (निर् + आस + ल्युट् ।) निर-

सनम् । (निर्गतं आसनं यस्मात् ।) आसना-
भावविशेष्टे, त्रि ॥

**निराहारः**, त्रि, (निर्गत आहारो यस्य ।)

आहाररहितः । यथा, --
"निराहाराश्च ये जीवाः पापे धर्म्मे रताश्च ये
।"
इति तर्पणप्रकरणीयाह्निकाचारधृतवचनम्॥

| द्विभुजं कमनीयञ्च किशोरं श्यामसुन्दरम् ।<br>शान्तं गोपाङ्गनाकान्तं रत्नभूयणभूषितम् ॥<br>एषं तेजस्विनं भक्त्या सेवन्ते सततं मुदा । | मनोः पुत्त्रो धृष्टकेतुः पञ्चहोत्रो निराकृतिः ॥”)<br>**निराचारः**, त्रि, निर्न विद्यते आचारो यस्य सः ।<br>अनाचारः । आचारशून्यः ॥ | |
|---|---|---|

**निरिङ्गिणी**, स्त्री, (निर्निभृतं जनं इङ्गति प्राप्नो-
तीति । निर् + इङ्ग + णिनिः ततो ङीप् ।) तिरष्करिणी । तत्पर्य्यायः । अवगुण्ठिका २ पटी ३ यवनिका ४ । इति त्रिकाण्डशेषः ॥

**निरिन्द्रियः**, त्रि, (निर्गतानि इन्द्रियाणि यस्मात् ।)
इन्द्रियशून्यः । यथा, मनुः । ९ । २०१ ।
"अनंशौ क्लीवपतितौ जात्यन्धवधिरौ तथा ।
उन्मत्तजडमूकाश्चये च केचिन्निरिन्द्रियाः ॥"

**निरीक्षणं**, क्ली, (निर् + ईक्ष + भावे ल्युट् ।)
दर्शनम् । यथा, --
"द्रवात्तथान्नान्निशि सेविताच्च विण्मूत्रघातक्रमनिग्रहाच्च । वास्पग्रहात् सूर्य्यनिरीक्षणाच्च नेत्रे विकारान् जनयन्ति दोषाः ॥"
इति माधवकरः ॥
(निरीक्षते इति । निर् + ईक्ष + ल्युः । दर्शके, त्रि । यथा, भागवते । ७ । १५ । ३२ ।
"प्राणापानौ संनिरुन्ध्यात् पूरकुम्भकरेचकैः । यावत् मनस्त्यजेत् कामान् स्वनासाग्रनिरीक्षणः ॥")

"अत उक्ताध्ययनविधेरुक्तच्छन्दःप्रविभागस्योक्तविनियोगस्योपलक्षितकर्म्माङ्गभूतकालस्योपदर्शितलक्षणस्यैतैरङ्गैर्वेदस्यार्थपरिज्ञानविषये निरुक्तं नामेदमङ्गमारभ्यते । प्रधानञ्चेदमितरेभ्योऽङ्गेभ्यः सर्व्वशास्त्रेभ्यश्चार्थपरिज्ञानाभिनिवेशात् । अर्थो हि प्रधानम् । तद्गुणः शब्दः । स चेतरेषु व्याकरणादिषु चिन्त्यते । कल्पे खल्वपि विनियोगश्चिन्त्यते । स च पुनरर्थाभिधानवशेन मन्त्राणाम् । यो यमर्थमभिधानेन संस्कर्त्तुं समर्थो मन्त्रः स तत्र विनियुज्यते । तदुक्तं अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात् इति । न च निरुक्तादृतेऽन्यदङ्गमन्यद्वा बाह्यं शास्त्रमस्ति तात्पर्य्येण यदशेषान् शब्दान् निर्ब्रूयात् । यदपि च क्वचित् क्वचिदन्यशास्त्रे शब्दनिर्व्वचनम् । अतएव तदित्युपलक्ष्यम् । यथा शब्दलक्षणपरिज्ञानं सर्व्वशास्त्रेषु व्याकरणात् एवं शब्दार्थनिर्व्वचनपरिज्ञानं निरुक्तात् । वस्तुमात्रमेव हि इतरेषु शास्त्रेषु स्वाभिमतबुद्धिविषयमेव किञ्चिच्चिन्त्यते ब्राह्मणमपि च विध्यर्थवादरूपमशेषमन्त्रार्थशेषभूतमेव । मन्त्रब्राह्मणार्थपरिज्ञानबद्धश्चाध्यात्माधिदैवाधिभूतपरिज्ञानद्वारेण धर्म्मार्थकाममोक्षाख्योऽखिलपुरुषार्थः । न चानिरुक्तो मन्त्रार्थो व्याख्यातव्य इति । तस्मादर्थपरिज्ञानाभिनिवेशादिदमेव प्रधानमित्युपपन्नम् । अथास्यैवमखिलपुरुषार्थोपकारवृत्तिसमर्थस्य संग्रहः । तद्यथा, --
नामाख्यातोपसर्गनिपातलक्षणम् । भावविकारलक्षणम् । नामान्याख्यातजानि सर्व्वाणि च यथोपन्यस्य पक्षप्रतिपक्षतो विचार्यावधारणम् । कार्थानवगतसंस्कारानुक्रमणम् । परोक्षकृताध्यात्मिकमन्त्रलक्षणम् । स्तुत्याशीःशपथाभिशापाभिख्यापरिदेवनानिन्दाप्रशंसादिभिर्मन्त्राभिव्यक्तिहेतूपदेशः । निदानपरिज्ञानव्याख्यापनायानादिष्टदेवतोपपरीक्षणायाध्यात्मोपदेशप्रकृतिभूमत्वम् । इतरेतरजन्मत्वम् । स्थानत्रयभेदतः तिसृणामेकैकस्या माहाभाग्यकृतोऽनेकनामधेयप्रतिलम्भः । पृथगभिधानन्तूत्पत्तिसम्बन्धाद्वा । देवतानामाकारचिन्तनम् । भक्तिसाहचर्यसंस्तवकर्म्मसूक्तभाक्त्वहविर्भाक्त्वव्यञ्जनभाक्त्वानि । पृथिव्यन्तरिक्षद्युस्थानदेवतानामभिधेयाभिधानव्युत्पत्तिप्राधान्यश्रुत्युदाहरणम् । तन्निर्व्वचनविचारोपपत्यवधारणानुक्रमेण व्याख्याय दैवतप्रकरणनिर्णयः । विद्यापारप्राप्त्युपायोपदेशः । मन्त्रार्थनिर्व्वचनद्वारेण देवताभिधाननिर्व्वचनफलं देवताताद्भाव्यम् । इत्येष समासतो निरुक्तशास्त्रचिन्ताविषयः ॥" * ॥
"वर्णागमो वर्णविपर्य्ययश्च इत्यादिना निश्चयेनोक्तं निरुक्तम् ।" इत्यमरटीकायां भरतः ॥
पदभञ्जनम् । यथा, --
"प्रस्तावस्तु प्रकरणं निरुक्तं पदभञ्जनम् ॥"
इति हेमचन्द्रः ॥
कथिते, त्रि । यथा । "निरुक्ता प्रकृतिर्द्वेधा ।"
इति जगदीशः ॥

**निरुद्धः**, त्रि, (नि + रुध + क्तः ।) संरुद्धः । रोधविशिष्टः । इति अनिरुद्धशब्दटीकायां भरतः ॥
(यथा, देवीभागवते । ३ । २९ । १५ ।
"मया निरुद्धः पापात्मा पतितोऽहं मृधे पुनः ॥")

**निरुद्धप्रक(का)शः**, पुं, मेढ्रजातक्षुद्ररोगविशेषः ।
तल्लक्षणमाह ।
"वातोपसृष्टे मेढ्रे तु चर्म्म संश्रयते मणिम् ।
मणिश्चर्म्मोपनद्धश्च मूत्रस्रोतो रुणद्धि च ॥
निरुद्धप्रकशे तस्मिन्मन्दधारमवेदनम् ।
मूत्रं प्रवर्त्तते जन्तोर्म्मणिर्व्विव्रियते न च ॥
निरुद्धप्रकशं विन्द्यात् सरुजं वातसम्भवम् ।
निरुद्धप्रकाश इत्यस्य स्थाने निरुद्धप्रकशपदमार्षत्वात् ॥ * ॥

**निरीक्षितं**, त्रि, (निर् + ईक्ष + क्तः ।) अवलो-

कितम् । यथा, --
"निरीक्षितं
चाङ्गमवीक्षितञ्च
दृशा पिबन्ती रभसेन
तस्य ।
समानमावन्दमियं दधाना
विवेद भेदं न विदर्भसुभ्रूः
॥"
इति नैषधः ॥

**निरीशं**, क्ली, (निर्गतां ईशा यस्मात् ।) फालः ।

इत्यमरः । २ । ९ । १३
॥ (निर्नास्ति ईश
ईश्वरो यस्य ।) ईशशून्ये
नास्तिके च त्रि ॥

**निरीषं**, क्ली, (निर्गता ईषा यस्मात् । निरादय

इति समासः ।) निरीशम्
। इत्यमरटीकायां
भरतः ॥

**निरीहः**, पुं, (निर्गता ईहा चेष्टा यस्मात् ।) विष्णुः ।

यथा, --
"निरुपाधिश्च निर्लिप्तो
निरीहो निधनान्तकः ॥"
इति ब्रह्मवैवर्त्ते
श्रीकृष्णजन्मखण्डे
चत्वारिंशन्ना-
मकथने ७ अध्यायः ॥
ईहाशून्ये, त्रि ॥ (यथा,
देवीभागवते । ४ । १० ।
११ ।
"निरीहः पुरुषः कस्मात्
प्रकुर्य्याद् युद्धमीदृ-
शम् ॥")

**निरुक्तं**, क्ली, (निर्निश्चयेन उक्तम् ।) वेदवेदाङ्ग-

शास्त्रविशेषः । यथा, --

सर्व्वाण्याख्यातजानि कानिचिदेवानेक-धातु-
जान्यपीति मन्त्राणामर्थवत्त्वानर्थवत्त्वे विचार्य्य
शास्त्रारम्भप्रयोजनद्वारेणार्थवत्तावधारणम् ।
पदविभागपरिज्ञानप्रतिज्ञानबोधावलम्बिप्रदर्श
नाय आदिमध्यान्तानेकदैवतलिङ्गसङ्कटेषु
मन्त्रेषु
याज्ञिकपरिज्ञानद्वारेण देवतापरिज्ञानप्रतिज्ञा ।
अर्थज्ञप्रशंसा । अनर्थज्ञावधारणम् । वेदवेदाङ्ग-
व्यूहः । सप्रयोजननिघण्टुसमाम्नायविरचनम् ।
प्रकरणत्रयविभागेन नैघण्टुकप्रधानदेवताभि-
धानप्रविभागलक्षणम् । निर्व्वचनलक्षणद्वारेण
शब्दवृत्तिविषयोपदेशः । अर्थप्राधान्यात् लोपो-
पधाविकारवर्णलोपविपर्य्ययोपदेशेन सामर्थ्योप-
प्रदर्शनायादिमध्यान्तलोपोपधाविकारवर्णलोप-
विपयायाद्यन्तवर्णव्यापत्तिवर्णोपजनोदाहरण-
चिन्ता । अन्तस्थान्तर्द्धातुनिमित्तेन
सम्प्रसार्या-
सम्प्रसार्य्योभयप्रकृतिधातुनिर्व्वचनोपदेशः ।
भा-
षिकप्रायोवृत्तिभ्यो नैगमशब्दार्थप्रसिद्धिः । नैग-
मप्रायोवृत्तिभ्यो भाषिकशब्दार्थप्रसिद्धिः । देश-
व्यवस्थया शब्दरूपव्यपदेशः ।
तद्धितसमासनाम-
निर्व्वचनलक्षणम् । शिष्यलक्षणम् । विशेषेण
व्याख्यया
तत्त्वपर्यायभेदसङ्ख्यासन्दिग्धोदाहरणा-
न्निर्व्वचनव्यवस्थया
नामाख्यातोपसर्गनिपातानां
विभागेन नैघण्टुकप्रकरणानुक्रमणम् । अने-

अथ तस्य चिकित्स्या ।
"निरुद्धप्रकशे नाडीं लौहीमुभयतोमुखीम् ।
दारवीं वा जतुकृतां घृताक्तां संप्रवेशयेत् ॥
परिषिञ्चेद्वसां मज्जां शिशुमारवराहयोः ।
चक्रतैलं तथा योज्यं वातघ्नद्रव्यसंयुतम् ॥
त्र्यहात् स्थूलतरां सम्यक् नाडीं गर्भे प्रवेशयेत् ।
स्रोतो विवर्द्धयेदेव स्निग्धमन्नञ्च भोजयेत् ॥
भित्त्वा वा सेवनीं मुक्त्वा सद्यः क्षतवदाचरेत् ॥"
इति भावप्रकाशः ॥

**निरुद्योगः**, त्रि, (निर्नास्ति उद्योगो यस्य ।)

निरुद्यमः । उद्योगाभावविशिष्टः । (यथा,
भागवते । ८ । ८ । २९ ।
"निःसत्त्वा लोलुपा राजन् ! निरुद्योगागत-
त्रपाः ।
यदा चोपेक्षिता लक्ष्म्या बभूवुर्दैत्यदानवाः ॥")

| “शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषन्तथा। छन्दश्चेति षडङ्गानि वेदानां वैदिका विदुः ॥” इति शब्दरत्नावली ॥ (तथाहि, -- “वर्णागमो वर्णविपर्य्ययश्च द्वौ चापरौ वर्णविकारनाशौ। धातोस्तदर्थातिशयेन योग- स्तदुच्यते पञ्चविधं निरुक्तम् ॥” यदुक्तं देवराजयज्वना निर्व्वचने, तद्यथा, -- | | |
|---|---|---|

**निरुपद्रवः**, त्रि, (निर्गत उपद्रवो यस्मादिति ।)

उत्पातरहितः । यथा, --
"जायन्ते सर्व्वशस्यानि सुभिक्षं निरुपद्रवम्
।
सौम्यदृष्टिर्भवेद्राजा विकले च शुभं वदेत् ॥"
इति ज्योतिस्तत्त्वम् ॥

**निरुपमः**, त्रि, (निर्गता उपमा सादृश्यं यस्मात् ।)

उपमारहितः । अनुपमः । यथा, --
"गौडं राष्ट्रमनुत्तमं निरुपमा तत्रापि राढा
पुरी ।"
इति प्रबोधचन्द्रोदयः ॥

**निरुपेक्षः**, त्रि, (निर्गता उपेक्षा यस्मात् ।) यद्वा

निर्नास्ति उपेक्षा यस्य सः । अनुपेक्षः ।
उपेक्षाशून्यः ॥

**निरूढः**, पुं, (नि + रुह + क्तः ।) निरूढलक्ष-

णाकः शब्दः । यथा, --
"पूर्ब्बस्वामिसम्बन्धाधीनं
तत्स्वाम्युपरमे यत्र द्रव्ये स्वत्वं तत्र निरूढो
दायशब्दः ।" इति दायभागः ॥

**निरूढलक्षणा**, स्त्री, (निरूढा लक्षणा ।) शक्ति-

तुल्यलक्षणा । यथा,
"निरूढलक्षणाःकाश्चित्काश्चिन्नैव
त्वशक्तितः ।"
इति काव्यप्रकाशटीकायां महेश्वरः ॥

**निरूढा**, स्त्री, (निरूढ + स्त्रियां टाप् ।) लक्षणा-

विशेषः । यथा । "काचित्
लक्षतावच्छेदकी-
भूततत्तद्रूपेण पूर्ब्बपूर्ब्बं प्रत्यायकत्वात्
निरूढा ।
यथा आरुण्यादिप्रकारेण
तदाश्रयद्रव्यानुभाव-
कत्वादरुणादिपदस्य ।" इति
शब्दशक्तिप्रका-
शिका ॥

**निरूपणं**, क्ली, (नि + रूप + णिच् + ल्युट् ।)

नातिचोष्णे च काले च न शीते नच
भोजिते ।
न निद्रादौ न मूत्रार्त्ते विष्ठार्त्ते नच वेदभाक्
॥
वस्तिकर्म्मनिरूहञ्च कारयेत्तं निरस्य च ।
आदौ मूत्रविष्ठोत्सर्गं कृत्वा गुदं प्रक्षाल्य
नातिशिथिलशय्यायां शाययित्वा वामाङ्गे
वाम-
पादं दक्षिणाङ्गे दक्षिणपादञ्च सङ्कोच्य
जङ्घो-
परि संस्थाप्य गुदाभ्यन्तरे द्व्यङ्गुलमात्रां
नाडीं
सुधीः सञ्चारयेत् । ततः शनैः शनैः वस्तिं
निष्पीड्य द्विपलपरिमिततैलेन निरूहं
कुर्य्यात् ।
निरूहानन्तरं शनैः शनैरुत्तानं
शाययित्वोर्द्ध्वी-
कृत्य च पश्चात् सङ्कोच्य पाणिभिः
पञ्चवारान्
स्फिक्पिण्डान् त्रोटयेत् । ततः स्वस्थं
कृत्वा
क्षणेनाप्यामाशयं मलस्थानं बोधयति ।
वस्त्यु-
दरवातान् दोषान् निवारयति ।
पण्डितास्तं
वस्तिनिरूहं तद्वस्तिकर्म्म च विदुः ।"
इति
हारीतोत्तरे सूत्रस्थाने तृतीयोऽध्यायः ॥
"नरो विरिक्तस्तु निरूहदानं
विवर्ज्जयेत् सप्तदिनान्यवश्यम् ।
शुद्धो विरेकेण निरूहदानं
तदध्यस्य शून्यं विकृषेच्छरीरम् ॥"
"विश्वक्स्थितं दोषचयं निरस्य
सर्व्वान् विकारान् शमयेन्निरूहः ।
देहे निरूहेण विशुद्धमार्गे
सस्नेहनं वर्णवलप्रदश्च ॥"
इति सिद्धिस्थाने प्रथमेऽध्याये ॥
"ससैन्धवक्षौद्रयुतः सतैलो
देयो निरूहो बलवर्णकारी ।

तस्माद्धर्म्मव्यतिक्रामं न कुर्य्या मधुसूदन !
॥
सूत उवाच ।
इति तद्वचनं श्रुत्वा स विष्णुर्लोकभावनः ।
उद्दालकाय मुनये मुदीर्घतपसे तदा ।
आप्तवाक्यानुरोधेन तामलक्ष्मीं ददौ किल ॥
स्थूलोष्ठीं शुष्कवदनां विरूपां बिभ्रतीं तनुम्
।
स्रवदारक्तनयनां रूक्षपिङ्गशिरोरुहाम् ॥
स मुनिर्विष्णुवाक्यात्तामङ्गीकृत्य
स्वमाश्रमम् ।
वेदध्वनिसमायुक्तमानयामास धर्म्मवित् ॥
होमधूपसुगन्धाढ्यं वेदघोषेण नादितम् ।
आश्रमं तं विलोक्याथ व्यथिता
साब्रवीदिदम् ॥
ज्येष्ठोवाच ।
नहि वासानुरूपोऽयं वेदध्वनियुतो मम ।
नात्रागमिष्ये भो ब्रह्मन् ! नयस्वान्यत्र मां
ध्रुवम् ॥
उद्दालक उवाच ।
कथं नायासि किञ्चात्र वर्त्तते स्वमतं तव ।
तव योग्या च वसतिः का भवेत् तद्वदस्व
माम् ॥
ज्येष्ठोवाच ।
वेदध्वनिर्भवेद्यस्मिन्नतिथीनाञ्च पूजनम् ।
यज्ञदानादिकं यत्र नैव तत्र वसाम्यहम् ॥
परस्परानुरागेण दाम्पत्यं यत्र विद्यते ।
पितृदेवार्च्चनं यत्र तत्र नैव वसाम्यहम् ॥
दानशौचे न विद्येते परद्रव्यापहारिणः ।
परदाररता यत्र तत्र स्थाने रतिर्म्मम ॥
वृद्धसज्जनविप्राणां यत्र स्यादपमाननम् ।
निष्ठुरं भाषणं यत्र तत्र सम्यग्वसाम्यहम् ॥
सूत उवाच ।
इति तद्वचनं श्रुत्वा विषण्णवदनोऽभवत् ।
उद्दालकस्ततो वाक्यं तामलक्ष्मीमुवाच ह ॥
उद्दालक उवाच ।
अश्वत्थवृक्षमूलेऽस्मिन्नलक्ष्मि श्रम्यतां
क्षणम् ।

आलोकः । विचारः । निदर्शनम् । इति मेदिनी ।
णे, ९९ ॥ (यथा, महाभारते । ३ । ७१ । ३१ ।
"प्रच्छन्ना हि महात्मानश्चरन्ति पृथिवीमिमाम् ।
दैवेन विधिना युक्ताः शास्त्रोक्तैश्च निरूपणैः ॥"
निरूपयतीति । नि + रूप + णिच् + ल्युः ।
निरूपके, त्रि । यथा, मार्कण्डेये । १६ । ६९ ।
"एते देवा सहेन्द्रेण मामुपागम्य दुःखिताः ।
तद्वाक्यापास्तसत्कर्म्मदिननक्तं निरूपणाः ॥
याचन्तेऽहर्निशं संस्थां यथावदविखण्डिताम् ॥")

**निरूपितः**, त्रि, (नि + रूप + णिच् + क्तः ।)

कृतनिरूपणः । नियुक्तः । इति श्रीधरस्वामी ॥
यथा, श्रीभागवते । १ । ५ । २३ ।
"निरूपितो बालक एव योगिनां
सुश्रूषणे प्रावृषि निर्विविक्षताम् ॥"

**निरूहः**, पुं, (निर् + ऊह शून्ये + घञ् ।) वस्ति-

भेदः । यथा, --
"वस्तिर्द्विधानुवासाख्यो निरूहश्चेतिसंज्ञितः ।
यः स्नेहैर्दीयते स स्यादनुवासननामकः ।
कषायक्षीरतैलैर्यो निरूहः स निगद्यते ॥"
इति सारकौमुदी ॥
अथ निरूहवस्तिकर्म्मविधिः ।
आत्रेय उवाच ।
"चतुरङ्गुलां वेणुमयीं नाडीं प्रतिलक्षणं कृत्वा
तथा वस्तिप्रतिकर्म्म कुर्य्यात् ।
आनाहपार्श्वामययोनिदोषान्
गुल्मानुदावर्त्तरुजञ्च हन्यात् ॥
यष्ट्याह्वमूलाष्टपलेन सिद्धं
पयः शताह्वाफलपिप्पलीभिः ।
युक्तं ससर्पिर्मधुवातरक्तः
वैस्वर्य्यवीसर्पहितो निरूहः ॥"
इति सिद्धिस्थाने तृतीयेऽध्याये चरकेणोक्तम् ॥)
ऊहशून्यः । निश्चितम् । इति मेदिनी । हे,
१८ ॥ निग्रहः । तर्कः । इति हेमचन्द्रः ॥

**निरृतिः**, स्त्री, (निर्नियता ऋतिर्घृणा अशुभं वा

यत्र ।) अलक्ष्मीः । इत्यमरः । १ । ८ । २ ॥
(यथा, महाभारते । १ । ८७ । ९ ।
"अरुन्तुदं परुषं तीक्ष्णवाचं
वाक्कण्टकैर्व्वितुदन्तं मनुष्यान् ।
विद्यादलक्ष्मीकतमं जनानां
सुखे निबद्धां निरृतिं वहन्तम् ॥")
अस्या उपाख्यानं यथा, --
"समुद्रमथनाद्यानि रत्नान्यापुः सुरोत्तमाः ।
श्रेष्ठञ्च कौस्तुभं तेषु विष्णवे प्रददुः सुराः ॥
यावदङ्गीचकारासौ लक्ष्मीं भार्य्यार्थमात्मनः ।
तावद्विज्ञापयामास लक्ष्मीस्तं चक्रपाणिनम् ॥
लक्ष्मीरुवाच ।
असंस्कृत्य कथं ज्येष्ठां कनिष्ठा परिणीयते ।
तस्मान्ममाग्रजामेतामलक्ष्मीं मधुसूदन ! ॥
विवाह्योद्वह मां पश्चादेष धर्म्मः सनातनः ।
आश्रमस्थानमालोक्य यावदायाम्यहं पुनः ॥
सूत उवाच ।
इति तां तत्र संस्थाप्य जगामोद्दालको मुनिः ।
प्रतीक्षन्ती चिरं तत्र यदा तं न ददर्श सा ॥
तदा रुरोद करुणं भर्त्तुस्त्यागेन दुःखिता ।
तत्तस्याः क्रन्दितं लक्ष्मीर्वैकुण्ठभवनेऽशृणोत् ॥
तदा विज्ञापयामास विष्णुमुद्विग्नमानसा ॥
लक्ष्मीरुवाच ।
स्वामिन्मद्भगिनी ज्येष्ठा स्वामित्यागेन दुःखिता ।
तामाश्वासयितुं याहि कृपालो ! यद्यहं प्रिया ॥
सूत उवाच ।
लक्ष्म्या सह ततो विष्णुस्तत्रागात् कृपयान्वितः ।
आश्वासयन्नलक्ष्मीं तामिदं वाक्यमथाब्रवीत् ॥
विष्णुरुवाच ।
अश्वत्थवृक्षमासाद्य सदालक्ष्मीः स्थिरा भव ।
ममांशसम्भवो ह्येष आवासस्ते मया कृतः ॥
मन्दवारे सदा नूनं लक्ष्मीरत्रागमिष्यति ।
अस्पृश्योऽसौ भवेत्तस्मान्मन्दवारं विना किल ॥
प्रत्यब्दमर्च्चयिष्यन्ति तां ज्येष्ठां गृहधर्म्मिणः ।
तेष्वियं श्रीः कनिष्ठा ते सदा तिष्ठत्वनामया ॥"
इति पाद्मोत्तरखण्डे १६१ अध्यायः ॥

(पापदेवता । यथा, ऋग्वेदे । १० । १६५ । १ ।
“दूतो निरृत्या इदमाजगाम ।”
“निरृत्याः पापदेवताया दूतोऽनुचरः ।” इति
तद्भाष्ये सायनः ॥)

**निरृतिः**, त्रि, (निर्गता ऋतिरशुभं यस्मात् ।)
निरुपद्रवः । इति धरणिः ॥
दिक्पालविशेषे,
पुं । इति मेदिनी । ते, ११६ ॥ स तु नैरृत-
कोणाधिपतिः । तस्य विवरणं यथा, --
“पूर्ब्बस्यान्तु सुकान्तस्य रक्षकूटाह्वयो गिरिः ।
यत्रास्ते सततं देवो निरृती राक्षसेश्वरः ॥
खड्गहस्तो महाकायो वामे चर्म्मधरस्तथा ।
जटाजूटसमायुक्तः प्रांशुकृष्णाचलोपमः ॥
द्विभुजः कृष्णवस्त्रस्तु गर्द्दभोपरिसंस्थितः ।
प्रान्तोपान्तौ विन्दुसर्गसहितौ वादिरेव च ॥
नैरृत्यं कथितं बीजं तेन तं परिपूजयेत् ।
रक्षकूटं समारुह्य निरृतिं राक्षसेश्वरम् ॥
यः पूजयेद्विधानेन चण्डिकां राक्षसेश्वरीम् ।
न तस्य राक्षसेभ्योऽस्ति भयं वापि कदात्तन ॥
राक्षसाश्च पिशाचाश्च वेताला गणनायकाः ।
तं दृष्ट्वा पुरुषं राजन् ! सर्व्वदैव प्रबिभ्यति ॥”
इति कालिकापुराणे ८१ अध्यायः ॥
(राक्षसः । यथा, ऋग्वेदे । ८ । २४ । २४ ।
“वेत्था हि निरृतीनां वज्रहस्तपरिवृजम् ॥”
मृत्युः । यथा, भागवते । १ । १९ । ४ ।
“स चिन्तयन्नित्थमथाशृणोद्यथा

**निर्गः**, पुं, (निरन्तरं गच्छत्यत्रेति । निर् + गम +
“अन्यत्रापि दृश्यते इति वक्तव्यम् ।” इति
डः ।) देशः । इति हेमचन्द्रः । ४ । १३ ॥

**निर्गतः**, त्रि, निःशेषेण गतः । बहिःप्राप्तः । यथा,
मार्कण्डेये । ८२ । १० ।
“निर्गतं सुमहत्तेजस्तच्चैक्यं समगच्छत ॥”

**निर्गन्धं**, त्रि, (निर्नास्ति गन्धो यत्र ।) गन्ध-
शून्यम् । यथा, चाणक्ये । ७ ।
“रूपयौवनसम्पन्ना विशालकुलसम्भवाः ।
विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः ॥”

**निर्गन्धनं**, क्ली, (निर् + गन्ध अर्द्दने + भावे ल्युट् ।)
निर्ग्रन्थनम् । मारणम् ।
इत्यमरटीकायां स्वामी ।

**निर्गन्धपुष्पी**, स्त्री, (निर्गन्धं गन्धशून्यं पुष्पं यस्याः ।
ङीष् ।) शाल्मलिवृक्षः । इति शब्दचन्द्रिका ॥
(शाल्मलिशब्देऽस्या विवृतिर्ज्ञातव्या ॥)

**निर्गुणः**, पुं, (निर्गता गुणा यस्मात् ।) सत्त्वरज-
स्तमोगुणातीतः । परमेश्वरः । यथा, --
“साकारञ्च निराकारं सगुणं निर्गुणं प्रभुम् ।
सर्व्वाधारञ्च सर्व्वञ्च स्वेच्छारूपं नमाम्यहम् ॥”
इति ब्रह्मवैवर्त्ते गणेशखण्डे १३ अध्यायः ॥
“गुणभृन्निर्गुणो महान् ।” इति महाभारते । १३ ।

“आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ॥”
(“निर्ग्रन्थाः ग्रन्थेभ्यो निर्गताः । तदुक्तंगीतासु ।
‘यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्व्वेदं श्रोतव्यस्य श्रुतस्य च ॥’
इति । “यद्वा, ग्रन्थिरेव ग्रन्थः निवृत्तः क्रोधा-
हङ्कारररूपो ग्रन्थिर्येषां ते निवृत्तहृदयग्रन्थय
इत्यर्थः ।” इति तट्टीकायां स्वामी ॥)

**निर्ग्रन्थकः**, पुं, (निर्ग्रन्थ एव । स्वार्थे कन् ।)
क्षपणः । निष्फलः । अपरिच्छदः । इति मेदिनी ॥ के, १९५ ॥

**निर्ग्रन्थनं**, क्ली, (निर् + ग्रथि कौटिल्ये + भावे
ल्युट् ।) मारणम् । इत्यमरः । २ । ८ । ११३ ॥

**निर्ग्रन्थिकः**, पुं, (निर्गतो ग्रन्थिर्हृदयग्रन्थिर्यस्य ।
कप् ।) क्षपणः । निपुणे हीने च त्रि । इति शब्दरत्नावली ॥

**निर्घटं**, क्ली, बहुमानुषसङ्कीर्णहट्टम् । इति हारा-
वली । ७० ॥ करशून्यहट्टम् । इति शब्दरत्ना-
वली ॥ धटशून्यञ्च ॥ (निर्गतो घटो यस्मादिति
विग्रहे । घटशून्यदेशादौ, त्रि ॥)

**निर्घण्टः**, पुं, (निर् + घण्ट दीप्तौ + घञ् ।) निर्घ-
ण्टनम् । निघण्टुः । गणसंग्रहः । ग्रन्थानां सूचीति
ख्यातः । यथा, --
“धन्वन्तरीयमदनादिहलायुधादीन्
विश्वप्रकाश्यमरकोषमशेषराजान् ।
आलोक्य लोकविदितांश्च विचिन्त्य शब्दान्
द्रव्याभिधानगणसंग्रह एष सृष्टः ॥
निर्द्दशलक्षणपरीक्षणनिर्णयेन
नानाविधौषधविचारपरायणोयः ।
सोऽधीत्य यत् सकलमेनमवैति सर्व्वं
तस्मादयं जगति भाति निघण्टुराजः ॥”
इति राजनिर्घण्टः ॥

**निर्घातः**, पुं, (निर् + हन + घञ् ।) वाय्वभिहत-
वायुप्रपतनजन्यशब्दविशेषः । यथा, --
“वायुनाभिहते वायौ गगनाच्च पतत्यधः ।
प्रचण्डघोरनिर्घोषो निर्घात इति कथ्यते ॥”

मुनेः सुतोक्तो निरृ तिस्तक्षकाख्यः ॥”)

**निरृथः**, पुं, (निरन्तरं ऋच्छतीति । निर् + ऋ

गतौ + “अर्त्तेर्निरि ।” उणां २ । ८ । इति थक् ।) सामवेदः । इत्युणादिकोषः । २ । १०८ ॥
(हिंसा । यथा, ऋग्वेदे । ७ । १०४ । १४ ।
“किमस्मभ्यं जातवेदो हृणीषे
द्रोघवाचस्ते निरृथं सचन्ताम् ।”
“द्रोघवाचोऽनृचवाचो राक्षसास्ते तव निरृ-
थम् । निःपूर्ब्बोऽर्त्तिर्हिंसायां वर्त्तते । निरृथं
निःशेषेणार्त्तिं हिंसां सचन्तां सेवन्ताम् ।” इति
तद्भाष्ये सायनः ॥)

**निरोद्धव्यं**, त्रि, (नि + रुध + तव्य ।) रक्षणीयम् ।

(यथा, महाभारते । १२ । ८६ । १५ ।
“आशयाश्चोपदानाश्च प्रभूतसलिलाकराः ।
निरोद्धव्याः सदाराज्ञा क्षीरिणश्च महीरुहाः ॥”

**निरोधः**, पुं, (नि + रुध + घञ् ।) नाशः । (यथा,

हरिवंशे । २ । ५४ ।
“उत्पत्तिश्च निरोधश्च नित्यं भूतेषु पार्थिव ! ।
ऋषयोऽत्र न मुह्यन्ति विद्वांसश्चैव ये नराः ॥”)
रोधः । इति मेदिनी । धे, ३२ ॥ (यथा, पञ्च-
तन्त्रे । २ । १६७ ।
“निरोधाच्चेतसोऽक्षाणि निरुद्धान्यखिलान्यपि ।
आच्छादिते वरौ मेघैराच्छन्नाः स्युर्गभस्तयः ॥”)
निग्रहः । इति हेमचन्द्रः । ६ । १४४ ॥ (यथा,
मनुः । ६ । ६० ।
“इन्द्रियाणां निरोधेन रागद्वेषक्षयेण च ।
१४९ । १०३ ॥ विद्यादिशून्ये, त्रि, । यथा, --
“सगुणो निर्गुणो वापि सहायो बलवत्तरः ।
तुषेणापि परिभ्रष्टस्तण्डुलो नाङ्कुरायते ॥”
इत्युद्भटः ॥
(ज्यारहिते । यथा, निर्गुणं धनुः ॥)

**निर्गुण्ठी**, स्त्री, (निर्गता गुण्ठात् गुण्डनात् ।

गौरादित्वात् ङीष् ।) निर्गुण्डी । इत्यमर-
टीकायां मधुः । २ । ४ । ६८ ॥

**निर्गुण्डी**, स्त्री, (निर्गतं गुण्डं वेष्टनं यस्याः । ङीष् ।)

नीलशेफालिका । तत्पर्य्यायः । शेफालिका २
शेफाली ३ नीलिका ४ मलिका ५ सुवहा ६
रजनीहासा ७ निशिपुष्पिका ८ । इति शब्द-
रत्नावली ॥ वृक्षविशेषः । निसिन्दा इति भाषा ॥
तत्पर्य्यायः । सिन्दुकः २ सिन्दुवारः ३ इन्द्र-
सुरिषः ४ इन्द्राणिका ५ । इत्यमरः । २ । ४ ।
६८ ॥ सिन्धुकः ६ सिन्धुवारः ७ इन्द्रसुरसः ८
निर्गुण्ठी ९ । इति भरतः ॥ इन्द्राणी १० । इति
साङ्गः ॥ पौलोमी ११ शक्राणी १२ कास-
नाशिनी १३ । इति रत्नकोषः ॥ विसुन्धकः १४
सिन्धकम् १५ सुरसः १६ सिन्धुवारितः १७
सुरसा १८ सिन्धुवारकः १९ । इति च शब्द-
रत्नावली ॥ करहाटः । इति विश्वः । ड, ३६ ॥
इति शब्दमाला ॥
अपि च ।
“यदान्तरीक्षे बलवान् मारुतो मरुताहतः ।
पतत्यधः स निर्घातो जायते वायुसम्भवः ॥”
इति ज्योतिषम् ॥
(एतस्य लक्षणादिकं यथा, बृहत्संहितायां ३९ अध्याये ।
“पवनः पवनाभिहतो गगनादवनौ यदा समा-
पतति ।
भवति तदा निर्घातः स च पापो दीप्तविहग-
रुतः ॥
अर्कोदयेऽधिकरणिकनृपधनियोधाङ्गना-
बणिग्वेश्याः ।
आप्रहरांशेऽजाविकमुपहन्याच्छूद्रपौरांश्च ॥
आमध्याह्नाद्राजोपसेविनो ब्राह्मणांश्च पीड-
यति ।
वैश्वजलदांस्तृतीये चौरान् प्रहरे चतुर्थे च ॥

| | | |
|---|---|---|
| अहिंसया च भूतानाममृतत्वाय कल्पते ॥”) | **निर्गूढः**, पुं, (निर्निश्चयेन गुह्यते संव्रियते आत्मा<br>अत्रेति । निर् + गुह + अधिकरणे क्तः ।) वृक्ष-<br>कोटरम् । इति शब्दरत्नावली ॥<br>(संवृते त्रि ॥)<br>**निर्ग्रन्थः**, पुं, (ग्रन्थेभ्यः श्रुत्यादिनियमभ्या<br>निर्गतः ।) नग्नकः । निस्वः । बालिशः । इति<br>मेदिनी । थे, २० ॥ मुनिः । इति हेमचन्द्रः ॥<br>१ । ७६ ॥ द्यूतकारः । इति जटाधरः ॥ त्रि,<br>ग्रन्थेभ्यो निर्गतः । निवृत्तहृदयग्रन्थिः । यथा,<br>भागवते । १ । ७ । १० । | |

अस्तं याते नीचान् प्रथमे यामे निहन्ति शस्यानि ।
रात्रौ द्वितीययामे पिशाचमङ्गान्निपीडयति ॥
तुरगकरिणस्तृतीये विनिहन्याद्यायिनश्चतुर्थे च ।
भैरवजर्जरशब्दे याति यतस्तां दिशं हन्ति ॥”)

**निर्घोषः**, पुं, (निर् + घुष शब्दे + घञ् ।) शब्दमात्रम् । इत्यमरः । १ । ६ । २३ ॥ (यथा, रघुः । १ । ३६ ।
“स्निग्धगम्भीरनिर्घोषम्कं स्यन्दनमास्थितौ ॥”
निर्नास्ति घोषो यत्रेति । शब्दशून्ये, त्रि । यथा, महाभारते । १४ । १९ । ३६ ।
“संनियम्येन्द्रियग्रामं निर्घोषे निर्ज्जने वगे ।
कायमभ्यन्तरं कृत्स्नमेवाग्रः परिचिन्तयेत् ॥”)

**निर्ज्जनः**, त्रि, (निर्गतो जनो यस्मात् ।) जनशून्यस्थानादिः । विजनः । इति विविक्तादिशब्दटीकायां सारसुन्दरी ॥ (यथा, देवीभागवते । २ । ६ । ५९ ।
“एकस्मिन् समये पाण्डुर्माद्रीं दृष्ट्वाथ निर्ज्जने ।
आश्रमे चातिकामार्त्तो जग्राहागतवैशसः ॥”)

**निर्ज्जरः**, पुं, (जराया निष्क्रान्तः । निरादयः झान्ताद्यर्थे पञ्चम्या इति सभासः ।) देवः । इत्यमरः । १ । १ । ७ ॥ (यथा, देवीभागवते । ५ । ८ । १८ ।
“विशन्त निर्ज्जराः सर्व्वे कुशलं कथयन्तु वः ॥”)
जरारहिते, त्रि । इति मेदिनी । रे, १७३ ॥
सुधायाम्, क्ली । इति शब्दरत्नावली ॥

**निर्ज्जरसर्षपः**, पुं, (निर्ज्जरप्रियः सर्षपः । शाकयार्थिववत् समासः ।) देवसषपवृक्षः । इति राजनिर्घण्टः ॥

**निर्ज्जरा**, स्त्री, (निर्ज्जर + टाप् ।) गुडूची । तालपर्णी । इति मेदिनी । रे, १७३ ॥

**निर्ज्जलः**, त्रि, (निर्गतं जलं यस्मात् ।) जलशून्यदेशादिः । इति मरुशब्दटीकायां भरतः । २ ।

अप्रयत्नादवाप्नोति द्वादशद्वादशीफलम् ॥
ततः प्रभाते विमले द्वादश्यां स्नानमाचरेत् ।
जलं सुवर्णं दत्त्वा तु द्विजातिभ्यो यथाविधि ॥
भुञ्जीत कृतकृत्यस्तु ब्राह्मणैः सहितो वशी ।
एवं कृते तु यत् पुण्यं भीमसेन ! शृणुष्व तत् ॥
संवत्सरस्य या मध्ये एकादश्यो भवन्ति हि ।
तासां फलमवाप्नोति पुत्त्र ! मे नात्र संशयः ॥
इति मां केशवः प्राह शङ्खचक्रगदाधरः ॥”
किञ्च ।
“धनधान्यवहा पुण्या पुत्त्रभाग्यसुखप्रदा ।
उपोषिता नरव्याघ्र ! इति सत्यं ब्रवीमि ते ॥
यमदूता महाकायाः करालाः कामरूपिणः ।
दण्डपाशधरा रौद्रा नोपसर्पन्ति तं नरम् ॥
पीताम्बरधराः शङ्खचक्रहस्ता मनोजवाः ।
अन्तकाले नयन्त्येनं वैष्णवा वैष्णवीं पुरीम् ॥”
किञ्च ।
“तोयस्य नियमं यस्तु कुरुते वैष्णवोत्तमः ।
पलकोटिसुवर्ण्णस्य यामे यामे स पुण्यभाक् ॥
स्नाग दानं जपं होमं यदस्यां कुरुते नरः ।
तत् सर्व्वञ्चाक्षयं प्राप्तमेतत् कृष्णस्य भाषितम् ॥

शक्त्या विप्रान् भोजयित्वा पीत्वा भ्रातृकराज्जलम् ।
स्वयं वानीय मौनी सन् भुञ्जीत सह बन्धुभिः ॥”
इति श्रीहरिभक्तिविलासे १५ विलासः ॥

**निर्ज्जितः**, त्रि, (निर् + जि जये + क्तः ।) प्राप्तपराजयः । तत्पर्य्यायः । पराजितः २ पराभूतः ३ विजितः ४ जितः ५ । इति शब्दरत्नावली ॥ वशीकृतः । यथा, --
“ध्यायतश्चरणाम्भोजं भावनिर्ज्जितचेतसा ।”
इति श्रीभागवते । १ । ६ । अध्यायटीकायां स्यामी ॥

**निर्ज्जितेन्द्रयग्रामः**, त्रि, (निर्ज्जितः पराजित इन्द्रियग्राम इन्द्रियसमूहो येन ।) यतिः । इत्यमरः । २ । ७ । ४४ ॥

**निर्ज्जीवः**, त्रि, (निर्गतो जीवो जीवात्मा यस्मात् ।) जीवात्मरहितः । प्राणिप्रून्यः । यथा, --
“चिता चिन्ता द्वयोर्म्मध्ये चिन्ता एव गरीयसी ।
चिता दहति निर्ज्जीवं चिन्दा दहति जीवितम् ॥”
इति प्राञ्चः ॥

**निर्झरः**, पुं, (निर्झृणाति जीर्णीभवति उच्चस्थानपतनादिति । निर् + झॄ + अच् ।) पर्व्वतावतीर्णजलप्रवाहः । इति भरतः ॥ रुत्वा अन्यथा वा गिरौ जलप्रवाहः । इति मधुः ॥ पर्व्वताद्वेगेन पतज्जलं झोरा इति ख्यातम् । इति कोक्कटः ॥ तत्पर्य्यायः । झरः २ । इत्यमरः । २ । ३ । ५ ॥ निर्झरी ३ । इति शब्दरत्नावली ॥ (यथा, महाभारते । ३ । ६४ । ८ ।
“सरितो निर्झरांश्चैव ददर्शाद्भुतदर्शनान् ॥”)

१ । ५ ॥ यदक्तम् ।
सम्पाप्ता दशमध्वजाद्यगतिना संमूर्च्छिता
निर्ज्जले
तुर्य्यद्वादशवद्द्वितीयमतिमन्नेकादशाभस्तनी।
सा षष्ठी नृपपञ्चमस्य नवमभ्रूः सप्तमीवर्ज्जिता
प्राप्नोत्यष्टमवेदनां प्रथम हे तस्यास्तृतीयो भव
॥”
इति वल्लालसेनः ॥

**निर्ज्जलैकादशी**, स्त्री, (निर्ज्जला एकादशी ।)

ज्यैष्ठमासीयशुक्लैकादशी । यथा, पाद्मे ।
श्रीभीमसेन उवाच ।
“पितामह ! ह्यशक्तोऽहमुपवासे करोमि किम् ।
अतो बहुफलं ब्रूहि व्रतमेकमपि प्रभो ! ॥
श्रीव्यास उवाच ।
वृषस्थे मिथुनस्थेऽर्के शुक्ला ह्येकादशी हि या ।
ज्येष्ठे मासि प्रयत्नेन सोपोष्या जलवर्ज्जिता ॥
स्नाने चाचमने चैव वर्ज्जयित्वोदकं बुधः ।
उपयुञ्जीत नैवान्यद्व्रतभङ्गोऽन्यथा भवेत् ॥
उद्यादद्यं यावद्वर्ज्जयित्वा जलं बुधः ।
किंवापरेण धर्म्मेण निर्ज्जलैकादशीं
नृप ! ।
उपोष्य सम्यग्विधिना वैष्णवं
पदमाप्नुयात् ॥”
किञ्च ।
“यैः कृता भीमसेनैषा
निर्ज्जलैकादशी शुभा ।
स्वकुलं तारितं सर्व्वं कुलातीतं
तथा शतम् ॥
आत्मना सह तैर्नीतं वासुदेवस्य
मन्दिरे ॥”
किञ्च ।
“आत्मद्रोहः कृतस्तस्तु यैरेषा
नह्युपोषिता ।
पापात्मानो दुराचारा दुष्टास्ते नात्र
संशयः ॥”
किञ्च ।
“यश्चेमां शृणुयाद्भक्त्या यश्चापि
परिकीर्त्तयेत् ।
उभौ तौ स्वर्गमाप्तौ हि नात्र कार्य्या
विचा-
रणा ॥”
अथ निर्ज्जलवतविधिः । यथा, --
“यथाप्राग्लिखितं कृत्वा
सङ्कल्पनियमं व्रते ।
जलमादाय गृह्णीयान्मन्त्रेणानेन
वैष्णवः ॥
एकादश्यां निराहारो वर्ज्जयिष्यामि
वै जलम् ।
केशवप्रीणनार्थाय प्रत्यन्तदमनेन
च ॥” इति ॥
“वर्ज्जयेच्चाम्ब्वहोरात्रं विना
चाचमनार्थकम् ।
विना च प्राशनं
पादोदकस्यात्यन्तपावनम्॥
एकादश्यां निशायान्तु नित्यपूजां
विधाय हि ।
हैमीं त्रैविक्रमीं मूर्त्तिं स्नापयेत्
पयआदिभिः ॥
वस्त्रादिकं समर्प्याथाभ्यर्च्च्य
गन्धादिभिश्च ताम् ।
तज्जलगुणाः । लघुत्वम् । पथ्यत्वम् ।
दीपन-
त्वम् । कफनाशित्वञ्च । इति राजवध्मभः ॥
* ॥
(यथा च ।
“शैलसानुसवद्वारि प्रवाहे निर्झरो झरः ।
स तु प्रस्रवणश्चापि तत्रत्यं नैर्झरं जलम् ॥
नैर्झरं रुचिकृन्नीरं कफघ्नं दीपनं लघु ।
मधुरं कटुपाकञ्च वातं स्याददतिपित्तलम् ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे
॥)
सूर्य्यघोटकः । तुपानलः । इति मेदिनी । रे,
१७ ॥

**निर्झरी**, स्त्री, (निर्झृणाति उच्चस्थानपातात्

जीर्णीभवतीति । निर् + झॄ + अन्त् ।
गौरादि-
त्वात् ङीष् ।) निर्झरः । इति शब्दरत्नावली
॥
(निर्झर उत्पत्तिकारणत्वेनास्त्यस्या इति ।
अच् ।
ङीष् ।) नदी । यथा, --
“जटाकटाहसम्भ्रमभ्रमन्निलिम्पनिर्झरी-
विलोलवीचिवल्लरीविराजमानर्द्धनि।
धगद्धगद्धगज् ज्वत्रल्ललाटपट्टपावके
कशोरचन्द्रशेखरे रतिः प्रतिक्षणं मम ॥”
इति रावणकृतशिवस्तोत्रम् ॥

**निर्झरी**, [न्] पुं (निर्झरोऽस्त्यस्येति । निर्झर

+ इनिः ।) पर्व्वतः । इति त्रिकाण्डशेषः ॥

**निर्झरिणी**, स्त्री, (निर्झर उत्पत्तिकारणत्वेना-

स्त्यस्या इति । इनिः । ङीप् ।) नदी । इति
त्रिकाण्डशेषः ॥ (यथा, कथासरित्सागरे ।
१७ । ७ ।

| | | |
|---|---|---|
| | प्रणम्य जागरं कुर्य्यात् तदग्रे नर्त्तनादिना ॥<br>प्रातःस्नानादि निर्व्वर्त्य तं त्रिविक्रममर्च्चयेत् ।<br>शक्त्याम्बुकुम्भान् विप्रेभ्यो दद्यात् गन्धाद्यल-ङ्कृतान् ॥”<br>तत्र मन्त्रः ।<br>“देवदेव हृषीकेश संसारार्णवतारक ! ।<br>जलकुम्भप्रदानेन यास्यामि परमाङ्गतिमिति ॥<br>दद्याच्च कनकं छत्रं वस्त्रयुग्ममुपानहौ ।<br>जलपात्राणि दिव्यानि विभवे सति वैष्णवः ॥ | |

"सोऽपि तां वीक्ष्य
लावण्यरसनिर्झरिणीं नृपः ।
यद्र प्राप परिष्वङ्गं तृषाक्रान्तो मुमूर्च्छ
तत् ॥")

**निर्णयः**, पुं, (निर्णयनमिति । निर् + नी +
"एरच् ।"
३ । ३ । ५६ । इति भावे अच् ।)
अवधार-
णम् । तत्पर्य्यायः । निश्चयः २ ।
इत्यमरः ।
१ । ५ । ३ ॥ निर्णयनम् ३ निचयः ४
। इति
शब्दरत्नावली ॥ (यथा, मनुः । १२ ।
२ ।
"स तानुवाच धर्म्मात्मा महर्षीन्
मानवो भृगुः ।
अस्य सर्व्वस्य शृणुत कर्म्मयोगस्य
निर्णयम् ॥")
विचारः । तत्पर्य्यायः । तर्कः २ गुञ्जा
३ चर्च्चा ४ ।
इति यिकाण्डशेषः ॥ विरोधपरिहारः
। इति
मिताक्षरा ॥
चतुष्पादव्यवहारान्तर्गतशेषपादः ।
फय्सला इति आरवीयभाषा ॥ डिक्री
इति
इङ्गरेजीयभाषा ॥ तद्विवरणं यथा ।
"अथ
निर्णयः । तत्र नारदः ।
यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स
जयी
भवेत् ।
अन्धथावादिनो यस्य ध्रुवस्तस्य
पराजयः ॥
स्वयमभ्युपपन्नोऽपि
स्वचर्य्यावसितोऽपि सन् ।
क्रियावसन्नोऽप्यर्हेत परं
सभ्यावधारणम् ॥
न्तरोपन्यासनिरासार्थम् । तदाह कात्यायनः
।
'क्रियां बलवतीं त्यक्त्वा दुर्ब्बलां
योऽवलम्बते ।
स जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात्
क्रियाम् ॥
निर्णीते व्यवहारे तु प्रमाणमफलं भवेत् ।
लिखितं साक्षिणो वापि पूर्ब्बमावेदितं न चेत्
॥
यथा पक्वेषु धान्येषु निष्फलाः प्रावृषो गुणाः
।
निर्णीतव्यवहाराणां प्रमाणमफलन्तथा ॥'
निर्णयोत्तरकृत्यमाह मनुः ।
'अर्थे त्वमन्यमानन्तु कारणेन विभावितम् ।
दापयेद्धनिकस्यार्थं दण्डलेशञ्च शक्तितः ॥'
अमन्यमानं अपलपन्तम् । कारणेन
साक्ष्यादि-
प्रमाणेन । याज्ञवल्क्यः ।
'ज्ञात्वापराधं देशञ्च कालं बलमयापि वा ।
वयः कर्म्म च वित्तञ्च दण्डं दण्ड्येषु दापयेत्
॥' * ॥
मनुः ।
'तीरितं चानुशिष्टञ्च यत्र क्वचन सम्भवेत् ।
कृतं तद्धर्म्मतो विद्यात् न तद्भूयो निवर्त्तयेत्
॥'
अनुशिष्टं साक्ष्यादिनिर्णीतम् । अतएव तीरितं
प्राड्विवाकादिभिः समापितम् । तद्विवादपदं
पुनर्न निवर्त्तयेदित्यर्थः ॥ यत्र तु
तीरितानुशिष्ट-
योरप्यधर्म्मकृतत्वम्मत्वा पराजयी पुनर्द्विगुण-
दण्डमङ्गीकृत्य प्रत्यवतिष्ठते तत्र
पुनर्न्यायदर्शन-
माह नारदः ।
'तीरितं चानुशिष्टञ्च यो मन्येत विधर्म्मतः ।
द्विगुणं दण्डमादाय तत् कार्य्यं पुनरुद्धरेत् ॥'
असद्विचारे तु विचारान्तरमाह स एव ।
'असाक्षिकन्तु यद्दृष्टं विमार्गेण च तीरितम् ।
असम्मतमतैर्द्दृष्टं पुनर्द्दर्शनमर्हति ॥'
असाक्षिकमित्यप्रमाणोपलक्षणम्॥ * ॥
दिना । व्यसनी द्यूताद्यासक्तः । असम्बन्धो
वादि-
तन्नियुक्तव्यतिरिक्त उदासीनः । आदिपदाद-
स्वतन्धदासपुत्राद्यैर्ग्रहणम् । तथा च नारदः ।
'स्वतन्त्रोऽपि हि यत्कार्य्यं कुर्य्याच्चाप्रकृतिं
गतः ।
तदप्यकृतमेवाहुरस्वातन्त्र्यस्य हेतुतः ॥
कामक्रोधाभिभूता ये भयव्यसनपीडिताः ।
रागद्वेषपरीताश्च ज्ञेयास्त्वप्रकृतिं गताः ॥
तथा दासकृतं कार्य्यमकृतं परिचक्षते ।
अन्यत्र स्वामिसन्देशान्न दासः प्रभुरातनः ॥
पुत्त्रेण च कृतं कार्य्यं यत् स्यादच्छन्दतः
पितुः ।
तदप्यकृतमेवाहुर्दासपुत्त्रौ च तौ समौ ॥'
एतच्च कुटुम्बभरणातिरिक्तविषयम् ।
'कुटुम्बार्थेऽध्यधीनोऽपि व्यवहारं यमाचरेत् ॥
स्वदेशे वा विदेशे वा तं ज्यायान्न विचालयेत्
॥'
इति मनुवचनात् ।
कुटुम्बमवश्यं भरणीयम् । अध्यधीनः
परतन्त्रः
पुत्रदासादिः । व्यवहारमृणादिकम् । ज्यायान्
स्वतन्त्रः । न विचालयेत् अनुमन्येतेत्यर्थः ।
तथा
च नारदः ।
'स्वातन्त्र्यन्तु स्मृतं ज्येष्ठे ज्यैष्ठं
गुणवयःकृतम् ।
अस्वतन्त्राः प्रजाः सर्व्वाः स्वतन्त्रः
पृथिवीपतिः ॥
अस्वतन्त्रः स्मृतः शिष्य आचार्य्यस्य
स्वतन्त्रता ।
अस्वतन्त्राः स्त्रियः सर्व्वाः पुत्रा दासाः परि-
ग्रहाः ॥
स्वतन्त्रस्तत्र तु गृही यस्य तत् स्यात्
क्रमागतम् ।
गर्भस्थैः सदृशो ज्ञेयः अष्टमाद्वत्सराच्छिशुः ॥
बाल आषोडशाद्वर्षात् पौगण्डोऽपि निगद्यते ।
परतो व्यवहारज्ञः स्वतन्त्र पितरावृते ॥
त्रीवतोर्न स्वतन्त्रः स्याज्जरयापि समन्वितः ।

सभ्यैरवधृतः पश्चात् राज्ञा शास्यः स शास्त्रतः ॥'
यस्य वादिनः प्रतिवादिनो वा साक्षिण इत्युप-
लक्षणम् । साक्षिलिखितभुक्तिशपथानांमध्ये-
ऽन्यतमप्रमाणं यस्य प्रतिज्ञायाः सत्यत्वप्रति-
पादकं स एव जयी अन्यथा पराजित इति
प्रत्येतव्यम् । स्वयमभ्युपपन्नः आत्मनैवाङ्गीकृत-
स्वपराजयः । स्वचर्य्यावसितः कम्पस्वेदवैवर्ण्या-
दिना पराजितत्वेनावधृतः । क्रियावसन्नः
साक्षादिना प्राप्तपराजयः । परमनन्तरम् ।
सभ्यावधारणं सभासदां मिलितानामयं परा-
जितः इति निर्णयं अर्हेत । स शास्त्रविधिना
शास्यः ॥ * ॥ निर्णयस्य फलमाह बृहस्पतिः ।
'प्रतिज्ञाभावनाद्वादी प्राड्विवाकादिपूजनात् ।
जयपत्रस्य चादानात् जयी लोके निगद्यते ॥'
जयपत्रस्य लेखनप्रकारमाह स एव ।
'यद्वृत्तं व्यवहारेषु पूर्ब्बपक्षोत्तरादिकम् ।
क्रियावधारणोपेतं जयपत्रेऽखिलं लिखेत् ॥
पूर्ब्बोत्तरक्रियायुक्तं निर्णयान्तं यदा नृपः ।
प्रदद्याज्जयिने पत्रं जयप्रत्रं तदुच्यते ॥'
कात्यायनः ।
'अर्थिप्रत्यर्थिवाक्यानि प्रतिसाक्षिवचस्तथा ।
निर्णयश्च तथा तस्य यथा चावधृतं स्वयम् ॥
याज्ञवल्क्यः ।
'दुर्द्दृष्टांस्तु पुनर्द्दृष्ट्वा व्यवहारान् नृपेण तु ।
सभ्याः सजयिनो दण्ड्या विवादाद्द्विगुणं दमम् ॥
साक्षिसभ्यावसन्नागां दूषणे दर्शनं पुनः ।
स्वचर्य्यावसितानान्तु नास्ति पौनर्भवो विधिः ॥'
साक्षिवचनेन सभ्यावधारितेन च प्राप्तावसादानां
दोवदर्शने पुनर्न्यायदर्शनम् । स्वव्यापारेण विरुद्ध-
भाषादिना प्राप्तावसादानान्तु नास्ति पुनर्न्यायः ॥
बृहस्पतिरपि ।
'पलायनानुत्तरत्वादन्यपक्षाश्रयेण च ।
हीनस्य गृह्यते वादो न स्ववाक्यजितस्य च ॥'
मनुः ।
'बलाद्दत्तं बलाद्भुक्तं बलाद्वा लिखितञ्च यत् ।
सर्व्वान् बलकृतानर्थानकृतान् मनुरब्रवीत् ॥'
याज्ञवल्क्यः ।
'बलोपाधिविनिर्वृत्तान् व्यवहारान्निवर्त्तयेत् ।
स्त्रीनक्तमन्तरागारबहिर्ग्रामिकृतांस्तथा ॥
मत्तोन्मत्तार्त्तव्यसनिबालभीतादियोजितः ।
असम्बन्धकृतश्चैव व्यवहारो न सिध्यति ॥'
उपाधिश्छलमिति शूलपाणिः । उपाधिर्भयादि-
रिति विज्ञानेश्वरः । तन्मते भीतादियोजितः
इत्युक्तवचनेनन पौनरुक्तम् । बहिर्ग्रामः बहि-
र्द्देशः । मत्तो मद्यादिना । उन्मत्तो वाता-
तयोरपि पिता श्रेयान् बीजप्राधान्यदर्शनात् ॥
अभावे बीजिनो माता तदभावे च पूर्ब्बजः ॥'
परिग्रहाः अनुजीविप्रभृतयः । तथा च वृह-
स्पतिः ।
'पितृव्यभ्रातृपुत्त्रस्त्रीदासशिष्यानुजीविभिः ।
यद्गृहीतं कुटुम्बार्थे तद्गृही दातुमर्हति ॥'
कात्यायनः ।
'कुटुम्बार्थमशक्तौ तु गृहीतं व्याधितेऽथवा ।
उपप्लवनिमित्तञ्च विद्यादापत्कृतन्तु तत् ॥
कन्यावैवाहिकञ्चैव प्रेतकार्य्ये च यत् कृतम् ।
एतत् सर्व्वं प्रदातव्यं कुटुम्बेन कृतं प्रभोः ॥'
प्रभोरिति कर्त्तरि षष्ठी तेन प्रभुणा दातव्य-
मिति रत्नाकरः ॥ बृहस्पतिः ।
'यः स्वामिना नियुक्तोऽपि धनाय व्ययपालने ।
कुषीदकृषिबाणिज्ये निसृष्टार्थस्तु सम्मतः ॥
प्रमाणं तत्कृतं सर्व्वं लाभालाभव्ययोदयम् ।
स्वदेशे वा विदेशे वा स्वामी तन्न दिसंवदेत् ॥'
सम्मतस्तस्य स्वामिन इत्यर्थः ।" इति व्यवहार-
तत्त्वम् ॥ अधिकरणविशेषः । यथा, --
"विषयी विषयश्चैव पूर्ब्बपक्षस्तथोत्तरम् ।
निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽद्यकरणं स्मृतम् ॥"
इति स्मृतिमीमांसा ॥
न्यायमते तदभावाप्रकारकत्वे सति तत्प्रकारक-

| | | |
|---|---|---|
| एतद्यथाक्षरं लेख्यं यथापूर्ब्बं निवेशयेत् ।<br>सभासदश्च ये तत्र घर्म्मशास्त्रविदस्तथा ॥'<br>तवश्च भारोत्तरे क्रिया च पत्रसाक्षादिकं<br>निर्णयो जयपराजयावधारणं निर्णयकालाव-<br>स्थितमध्यस्थाश्च इत्यादिकं सर्व्वं लेखनीयं निरू-<br>पणस्य सन्यक्त्वप्रदर्शनार्थम् । तथाहि भाषो-<br>त्रलेस्वनं हेत्वन्तरेण पुनर्न्यायप्रत्यवस्थान-<br>निषेधार्थम् । बहि न गृहीतमिति मिथ्योत्तरेण<br>पराजितस्य पुनः परिशोधितं मयेति प्रत्यव-<br>स्थानं सम्भवति । प्रमाणलेखनन्तु पुनः प्रमाणा- | | |

ज्ञानम् । यथा । वह्निमान् पर्व्वत इत्यादि-
बोधः । इति भाषापरिच्छेदः ॥ तद्धर्म्मावच्छिन्न-
प्रकारत्वान्यप्रकारत्वानिरूपितपक्षतावच्छेदका-
वच्छिन्नविशेष्यताशालिज्ञानम् । इति जग-
दीशः ॥

**निर्णयनं**, क्ली, (निर् + नी + भावे ल्युट् ।) निर्णयः ।
इति शब्दरत्नावली ॥

**निर्णयपादः**, पुं, (निर्णयात्मकः पादो भागविशेषः ।)
चतुष्पादव्यवहारान्तर्गतव्यवहारविशेषः । तस्य
रूपम् । मिलितानां सभासदां पराजितोऽय-
मित्यवधारणम् । इति व्यवहारतत्त्वम् ॥

**निर्णायनं**, क्ली, (निर् + नी + णिच् + ल्युट् ।)
मातङ्गापाङ्गदेशः । तत्पर्य्यायः । निर्याणम् २ ।
इति शब्दरत्नावली ॥

**निर्णिक्तं**, त्रि, (निर्णिज्यते शुध्यते स्मेति । निर् +
णिज् + क्तः ।) अपनीतमलम् । शोधितम् ।
इत्यमरः । ३ । १ । ५६ ॥ (यथा, चिन्तामणि-
धृतस्मृतिवचनम् ।
"जलदेवगृहञ्चैव श्मशानं गोद्विजालयम् ।
निर्णिक्तपादः प्रविशेन्नानिर्णिक्तः कदाचन ॥")

**निर्णीतं**, त्रि, (निर् + नी + क्तः ।) कृतनिर्णयः ।
निश्चयीकृतः । यथा, --
"निर्णीते व्यवहारे तु प्रमाणमफलं भवेत् ।
लिखितं साक्षिणो वापि पूर्ब्बमावेदितं न चेत् ॥
यथा पक्वेषु धान्येषु निष्फलाः प्रावृषो गुणाः ।
निर्णीतव्यवहाराणां प्रमाणमफलं तथा ॥"
इति व्यवहारतत्त्वम् ॥
तद्वैदिकपर्य्यायः । "निण्यम् १ सस्वः २ सनुतः
३ हिरुक् ४ प्रतीच्यम् ५ अपीच्यम् ६ । इति
षनिनर्णीतान्तर्हितनामधेयानि ।" इति वेद-
निघण्टौ । ३ । २५ ॥

**निर्णेजकः**, पुं, (निर्णेनेक्ति निर्म्मलीकरोति वस्त्र-
मिति । निर् + णिज शौचे + ण्वुल् ।) रजकः ।
इत्यमरः । २ । १० । १० ॥ (यथा, मनुः ।
४ । २१९ ।
(निर्दीर्य्यति विदीर्य्यति
पतनस्थलमिति । निर् +
दॄ विदारे + अच् । निर्झरः । इति
कश्चित् ॥
निर्नास्ति दरो भयो यस्येति
निर्भये, त्रि ॥)

**निर्द्दहनः**, पुं, (नितरां दहतीति । निर् + दह +
ल्युः ।) भल्लातकः । इति
राजनिर्घण्टः ॥
(भल्लातकशब्देऽस्य गुणादिकं
ज्ञातव्यम् ॥
निर्नास्ति दहनो वह्निर्यत्र ।)
अग्निशून्यश्च ॥

**निर्द्दहनी**, स्त्री, (निर्गतं दहनं यस्याः । स्त्रियां
ङीप् ।) मूर्व्वालता । इति
रत्नमाला ॥ (यथा,
"मुस्तं वचा तिक्तकरोहिणीञ्च
तथाभयां निर्द्दहनीञ्च तुल्याम् ।
पिबेच्च गोमूत्रयुतां कफोत्थे
शूले तथामस्य च पाचनार्थम् ॥"
इति वैद्यकचक्रपाणिसंग्रहे
शूलाधिकारे ॥)

**निर्द्दिग्धः**, त्रि, (निर् + दिह + क्तः ।) बली ।
मांसलः । इति हेमचन्द्रः । ३ ।
११३ ॥

**निर्द्दिष्टः**, त्रि, (निर् + दिश + क्तः ।) निश्चितः ।
यथा, --
"निर्द्दिष्टविषयं
किञ्चिदुपात्तविषयन्तथा ।
अपेक्षितक्रियञ्चैव
त्रिधापादानमिष्यते ॥"
इति रामतर्कवागीशः ॥
(आदिष्टः । यथा, रघुः । १ । ९५
।
"निर्द्दिष्टां कुलपतिना स पर्णशाला-
मध्यास्य प्रयतपरिग्रहद्वितीयः ॥"

**निर्धारः**, पुं, (निध्रियतेऽनेनेति । निर् + धृ +
घञ् ।) निश्चयः । "जातिगुणक्रियाणां
उत्कर्षे-
णापकर्षेण वा सजातीयात् पृथक्करणम् ।
यथा । मनुष्याणां ब्राह्मणः श्रेष्ठः । गवां
कृष्णा
बहुक्षीरा । अध्वगानां धावन्तः शीघ्रतमाः
।"
इति दुर्गादासः ॥ धाररहितश्च ॥

**निर्धारणं**, क्ली, (निर्धार्य्यते इति । निर् + धृ +
णिच् + भावे ल्युट् ।) निश्चयः । निर्धारः
। यथा,
निर्द्धारणे षष्ट्याः समासो न स्यादिति
दुर्गा-
दासः ॥

**निर्धारितं**, त्रि, (निर्धार्य्यते स्थिरीक्रियते इति ।
निर् + धृ + णिच् + कर्म्मणि क्तः ।) कृत-
निश्चयः । यथा ।
"किन्त्वनिर्धारितैकत्वानेकत्व-
विशेषस्य ।" इति विजयरक्षितः ॥

**निर्धार्य्यं**, त्रि, (निर्ध्रियते इति । निर् + धृ +
"ऋहलोर्ण्यत् ।" ३ । १ । १२४ । इति
ण्यत् ।
धारि + ण्यत् वा ।) निर्धारणीयम् ।
निर्धारि-
तव्यम् । निर्भयकर्म्मकर्त्ता । इति
विशेष्यनिघ्ने
निर्वार्य्यशब्दटीकायां रमानाथः ॥

**निर्धूतं**, त्रि, (निर् + धू + क्तः ।) स्वण्डितम् ।
(यथा, मार्कण्डेये । ८५ । ७४ ।
"केशाकर्षणनिर्धूतगौरवा मा गमिष्यसि
॥")
परित्यक्तम् । यथा, ज्योतिषतत्त्वे ।
"नित्यं निर्धूतबुद्धिं प्रबलरिपुभयं
वित्तनाशञ्च
जीवः ॥"

"कारुकान्नं प्रजां हन्ति बलं निर्णेजकस्य च ।
गणान्नं गणिकान्नञ्च लोकेभ्यः परिकृन्तति ॥")

**निर्द्दटः**, त्रि, परापवादरक्तः । दयाशून्यः । तीव्रः ।

मत्तः । निष्प्रयोजनः । इति शब्दरत्नावली ॥

**निर्द्दयः**, त्रि, (निर्गता दया यस्मात् ।) दयाशून्यः ।

इति जटाधरः ॥ (यथा, रघुः । ११ । ८४ ।
"न प्रहर्त्तुमलमस्मि निर्द्दयं
विप्र इत्यभिभवत्यपि त्वयि ॥"
निर्गता दया यस्म यमुद्दिश्य दया तिरोहिता
इत्यर्थः । अदयाहः । यथा, मनुः । ९ । २३९ ।
"ज्ञातिसम्बन्धिभिस्त्वेते त्यक्तव्याः कृतल क्षणाः ।
निर्द्दया बिन्नेमस्कारास्तन्मनोरनुशासनम्॥")

**निर्द्दरं**, क्ली, (निर् + दॄ + अप् ।) निर्भरम् ।

(निगतो दरश्छिद्रं यस्मात् ।) सारम् । त्रि, कठि-
मम् । (यथा, रामायणे । २ । ८५ । १९ ।
"ध्याननिर्द्दरशैलेन विनिःश्वसितधातुना॥")
अपत्रपे च त्रि । इति मेदिनी । रे, १७५ ॥

**निर्द्देशः**, पुं, (निर् + दिश + भावे घञ् ।) आज्ञा ।

इत्यमरः । २ । ८ । १५ ॥ (यथा,
भागवते ।
६ । १ । ३८ ॥
"यूयं वै धर्म्मराजस्य यदि
निर्द्देशकारिणः ।
ब्रूत धर्म्मस्य नस्तत्त्वं यच्च
धर्म्मस्य लक्षणम् ॥")
कथनम् । (यथा, गीतायाम् । १७
। २३ ।
"ॐ तत्सदिति निर्द्देशो
ब्रह्मणस्त्रिविधः स्मृतः ॥")
उपान्तः । इति मेदिनी । शे, २३
॥

**निर्द्देष्टा**, [ऋ] त्रि, (निर्द्दिशतीति । निर् + दिश +

तृच् ।) निर्द्देशकर्त्ता । यथा,
"तथाहि अर्थी
नाम साध्यस्य अर्थस्य निर्द्देष्टा
तत्प्रतिपक्ष-
स्तदभाववादी प्रत्यर्थी ।" इति
मिताक्षरायां
व्यवहाराध्याये साक्षीप्रकरणम् ॥

**निर्द्दोषः**, त्रि, (निर्गतो दोषो यस्मात् ।) दोष-

रहितः । यथा, --
"निर्द्दोषं दर्शयित्वा तु सदोषं यः
प्रयच्छति ।
स मूल्याद्द्विगुणं दाप्यो विनयं
तावदेव तु ॥"
इति मिताक्षरा ॥

**निर्धनः**, पुं, (निर्गतं धनं यस्मात् ।) जरद्गवः ।

इति शब्दचन्द्रिका ॥ धनशून्ये, त्रि
। यथा, --
"ब्रह्महापि नरः पूज्यो यस्यास्ति
विपुलं घनम् ।
शशिनस्तुल्यवंशोऽपि निर्धनः
परिभूयते ॥"
इति चाणक्ये । ८२ ॥

(निरस्तम् । यथा, अध्यात्मरामायणे । १
। ३ ।
"पठन्ति ये नित्यमनन्यचेतसः
शृण्वन्ति चाध्यात्मकसंज्ञितं शुभम् ।
रामायणं सर्व्वपुराणसम्मतं
निर्धूतपापा हरिमेव यान्ति ते ॥")
भर्त्सितम् । यथा, रमायणे । ४ । ८ । ३२
।
"पुराहं वालिना राम ! राज्यात् स्वाद-
वरोपितः ।
परुषाणि च संश्राव्य निर्धतोऽस्मि
बलीयसा ॥")

**निर्धौतं**, त्रि, (निर् + धाव + कर्म्मणि क्तः ।

"च्छ्वोः शूडनुनासिके च ।" ६ । ४ । १९
। इति
वकारस्योठादेशः । "एत्येधत्यूठ्सु ।" ६ ।
१ । ८९ ।
इति वृद्धिः ।) प्रक्षालितम् । यथा, --
"तस्याः
पाटलपाणिजाङ्कितमुरोनिद्राकषाये
दृशौ
निर्धौतोऽधरशोणिमा विलुलितस्रस्तसृजो
मूर्द्धजाः ॥"
इति श्रीजयदेवः ॥

**निर्बन्धः**, पुं, (निर् + बन्ध + भावे घञ् ।) अभि-

निवेशः । निबन्धोऽपि पाठः । इति
हेमचन्द्रः ।
६ । १३६ ॥ (यथा, भागवते । ३ । १४ ।
२९ ।
"स विदित्वाथ भार्य्यायास्तं निर्व्वन्धं
विकर्म्मणि ।
नत्वा दिष्टाय रहसि तयाथोपविवेश ह ॥")
अभिलषितप्राप्तौ भूयो यत्नः । (यथा, च
कुमारसम्भवे । ५ । ६६ ।
"अवस्तुनिर्ब्बन्धपरे कथं नु ते
करोऽयमामुक्तविवाहकौतुकः ॥")

| | **निर्धर्म्मः**, त्रि, (निर्गतो धर्म्मो यस्मात् ।) धर्म्म-<br>रहितः । यथा, --<br>"महापराधे निर्धर्म्मे कृतघ्ने<br>क्लीवकुत्सिते ।<br>नास्तिकव्रात्यदासेषु कोशपानं<br>विवर्ज्जयेत् ॥"<br>इति मिताक्षरा ॥ | |
|---|---|---|

यथा शिशुग्रहः । शिशूनां स्वेच्छाविशेषः ।
आखटि इति ख्यातः । इति केचित् । इति
ग्रहशब्दटीकायां भरतः ॥

**निर्ब्बर्हणं**, क्ली, (निर् + बर्ह + भावे ल्युट् ।)
निवर्हणम् । मारणम् । इत्यमरटीकायां नील-
कण्ठः ॥

**निर्भटः**, त्रि, (निर् + भट् + अच् ।) दृढः । इति
त्रिकाण्डशेषः ॥

**निर्भयः**, त्रि, (निर्गतं भयं यस्य यस्माद्वा ।) भय-
रहितः । तत्पर्य्यायः । अजानेयः २ । इति
त्रिकाण्डशेषः ॥ (यथा, हरिवंशे । ८३ । ११ ।
"रजकः स तु तौ प्राह युवां कस्य वनेचरौ ।
राज्ञो वासांसि यौ मौढ्याद्याचेते निर्भया-
वुभौ ॥"
पुं, रौच्यमनुपुत्त्रे । यथा, हरिवंशे । ७ । ८३ ।
"सुनेत्रः क्षत्त्रवृद्धिश्च सुतपा निर्भयो दृढः ।
रौच्यस्यैते मनोः पुत्त्रा अन्तरे तु त्रयोदशे ॥")

**निर्भरं**, क्ली, (निःशेषेण भरो भरणं यत्र ।)
अतिशयः । (यथा, गीतगोविन्दे । १ । ४९ ।
"रासोल्लासभरेण विभ्रमभृतामाभीरवामभ्रुवा-
मभ्यर्णे परिरभ्य निर्भरमुरः प्रेमान्धया राधया ।
साधु तद्वदनं सुधामयमिति व्याहृत्य गीतस्तुति-
व्याजादुद्भटचुम्बितः स्मितमनोहारी हरिः

**निर्म्मन्थ्यदारु**, क्ली, (निर्म्मन्थ्यं यज्ञार्थं घर्षणीयं
दारु ।) अरणिः । यज्ञे अग्न्युत्थापनार्थं घर्षणीय-
काष्ठम् । इत्यमरः । २ । ७ । १९ ॥

**निर्म्मलं**, क्ली, (निर्गतं मलमस्मात् ।) निर्म्माल्यम् ।
अभ्रकम् । त्रि, मलहीने । इति मेदिनी । ले,
१०२ ॥ (यथा, महाभारते । ३ । ६५ । ४ ।
"निर्म्मलस्वादुसलिलं मनोहारि सुशीतलम् ॥"
निष्पापे । यथा, मनुः । ८ । ३१८ ।
"राजनिर्द्धूतदण्डास्तु कृत्वा पापानि मानवाः ।
निर्म्मलाः स्वर्गमायान्ति सन्तःसुकृतिनो यथा ॥"
यथा, देवीभागवते । १ । १८ । ३७ ।
"मनस्तु सुखदुःखानां महतां कारणं द्विज ! ।
जाते तु निर्म्मले ह्यस्मिन् सर्व्वं भवति निर्म्मलम् ॥")

**निर्म्मलोपलः**, पुं, (निर्म्मलः विशुद्धः उपलः ।)
स्फटिकः । इति राजनिर्घण्टः ॥

**निर्म्माणं**, क्ली, (निर्मीयते इति । निर् + मा
ल्युट् ।) निर्म्मितिः । (यथा, भागवते । २ । ५ । ३२ ।
"यदैतेऽसङ्गता भावा भूतेन्द्रियमनोगुणाः ।
यदायतननिर्म्माणे न शेकुर्ब्रह्मवित्तम ! ॥")
सारः । समञ्जसम् । इति मेदिनी । णे, ५८ ॥

**निर्म्माल्यं**, क्ली, (निर् + मल + ण्यत् ।) देवो-
च्छिष्टद्रव्यम् । देवस्वत्वनिवृत्तिविशिष्टंदेवदत्तं
वस्तु । यथा, --
"अर्व्वाक् विसर्ज्जनाद्द्रव्यं नैवेद्यं सर्व्वमुच्यते ।
विसर्ज्जिते जगन्नाथे निर्म्माल्पं भवति क्षणात् ॥"
इति गरुडपुराणम् ॥ * ॥
तस्य स्थापनं क्षेपणञ्च यथा । "ऐशान्यां मण्डलं
कृत्वा निर्म्माल्यशेषं दद्यादिति । वैष्णवे तु ॐ
विश्वक्सेनाय नमः । शक्तौ तु ॐशेषिकायै
नमः । शिवे ॐचण्डेश्वराय नमः । सूर्य्ये ॐ
तेजश्चण्डाय नमः । गणेशे ॐउच्छिष्टगणेशाय
नमः । कालिकादौ ॐउच्छिष्टचाण्डालिन्यै
नमः । तथा च विद्यानन्दनिबन्धे ।
'सूर्य्ये गणपतावुग्रे शाक्ते शैवेऽथ वैष्णवे ।
तेजश्चण्डमथोच्छिष्टसोजमुच्छिष्टपूर्ब्बिकाम् ॥
पट्टवस्त्रं त्रिमासञ्च यज्ञसूत्रन्त्वहः स्मृतम्
यावदन्नं भवेदुष्णं परमान्नन्तथैव च ॥"
इत्येकादशीतत्त्वे योगिनीतन्त्रम् ॥
शिवनिर्म्माल्ये विशेषो यथा, स्कान्दे ।
"निर्म्माल्यं यो हि मे भक्त्या शिरसा धारयिष्यति ।
अशुचिर्भिन्नमर्य्यादो नरः पापसमन्वितः ।
नरके पच्यते घोरे तिर्य्यग्योनौ च जायते ॥
ब्रह्महापि शुचिर्भूत्वा निर्म्माल्यं यस्तु धारयेत् ।
तस्य पापं महच्छीघ्रं नाशयिष्ये महाव्रते ! ॥
शुचिः स्नानादिनेति शेषः । एवञ्च स्पृष्ट्वा
रुद्रस्य निर्म्माल्यं सवासा आप्लुतः शुचिरिति
कालिकापुराणं अशुचिविषयम् ॥ अनुपनीत-
विषयमिति श्रीदत्तः ।
बह्वृचगृह्यपरिशिष्टम् ।
अग्राह्यं शिवनैवेद्यं पत्रं पुष्पं फलं जलम् ।
शालग्रामशिलास्पर्शात् सर्व्वं याति पवित्रताम् ॥"
इति तिथितत्त्वम् ॥
तस्य उत्तारणकालो यथा, --
अथ निर्म्माल्योत्तारणम् । अत्रिस्मृतौ ।
"प्रातःकाले सदा कुर्य्यान्निर्म्माल्योत्तारणं बुधः ।
तृषिताः पशवो बद्धाः कन्यका च रजस्वला ॥
देवता च सनिर्म्माल्या हन्ति पुण्यं पुराकृतम् ॥

पातु वः ॥”)
तद्वति, त्रि । इत्यमरः । ३ । ४ । २ ॥ (यथा,
भागवते । ९ । १८ । २० ।
“तं वीरमाहौशनसी प्रेमनिर्भरया गिरा ॥”)

**निर्भर्त्सनं**, क्ली, (नितरां भर्त्सनम् । निर् + भर्त्स + ल्युट् ।) खलीकारः । अलक्तकम् । इति
मेदिनी । ने, १८९ ॥ भर्त्सनञ्च ॥ (यथा, महाभारते । ३ । ३०४ । ५ ।
“निर्भर्त्सनापवादैश्च तथैवाप्रियया गिरा ।
ब्राह्मणस्य पृथाराजन् ! न चकाराप्रियन्तदा ॥”)

**निर्भर्त्सितं**, त्रि, (निर् + भर्त्स + क्त ।) कृत-निर्भर्त्सनः । तत्पर्य्यायः । निन्दितः २ धिक्कृतः ३
अपध्वस्तः ४ । इति जटाधरः ॥ (यथा, कुमारसम्भवे । ३ । ५३ ।
“अशोकनिर्भर्त्सितपद्मरागम् ॥”)

**निर्भाग्यः**, त्रि, (निकृष्टं भाग्यं यस्य ।) भाग्य-रहितः । यथा, “मूढाल्पापटुनिर्भाग्या मन्दाः
स्युः ।” इत्यमरः । ३ । ३ । १४ ॥

**निर्म्मदः**, पुं, (निर्गतो मदो दानवारि गर्व्वो वा यस्मात् ।) कालवशान्निर्गलितमदहस्ती । तत्-
पर्य्यायः । उद्वान्तः २ । इत्यमरः । २ । ८ । ३६ ॥
मदशून्ये, त्रि ॥ (यथा, महाभारते । ३ । ९९ । ६६ ।
“ततः संवत्सरेऽतीते हृतौजसमवस्थितम् ।
निर्म्मदं दुःखितं दृष्ट्वा पितरो राममब्रुवन् ॥”)

**निर्म्मध्या**, स्त्री, (निर्गतं मध्यं यस्याः । शून्यमध्य-

चाण्डालीं शेषिकां चण्डं विश्वक्सेनं क्रमाद्-
यजेत् ॥’
सोजो गणेशः ।
‘हृदये च बहिर्द्देवीं समर्प्य विधिवत्ततः ।
निर्म्माल्यञ्च शुचौ देशे नैवेद्यं भक्षयेत् सुधीः ॥’
तन्त्रान्तरे ।
निर्म्माल्यं शिरसा धार्य्यं सर्व्वाङ्गे चानुलेपनम् ।
नैवेद्यञ्चोपभुञ्जीत दत्त्वा तद्भक्तशालिने ॥”
इति तन्त्रसारः ॥ * ॥
“उदके तरुमूले वा निर्म्माल्यं तत्र संत्यजेत् ॥”
इति कालिकापुराणे ५५ अध्यायः ॥
निर्म्माल्यकालो यथा, --
“मणिमुक्तासुवर्णानां देवदत्तानि यानि च ।
न निर्म्माल्यं द्वादशाब्दं ताम्रपात्रं तथैव च ॥
पटी शाटी च षण्मासं नैवेद्यं दत्तमात्रतः ।
मोदकं कृशरञ्चैव यामार्द्धेन महेश्वरि ! ॥

नारसिंहे श्रीयमोक्तौ ।
देवमाल्यापनयनं देवागारे समूहनम् ।
स्नापनं सर्व्वदेवानां गोप्रदानसमं स्मृतम् ॥
नारदपञ्चरात्रे ।
यः प्रातरुत्थाय विधाय नित्यं
निर्म्माल्यमीशस्य निराकरोति ।
न तस्य दुःखं न दरिद्रता च
नाकालमृत्युर्न च रोगमात्रम् ॥
अरुणोदयवेलायां निर्म्माल्यं शल्यतां व्रजेत् ।
प्रातस्तु स्यान्महाशल्यं घटिकामात्रयोगतः ॥
अतिशल्यं विजानीयात्ततो वज्रप्रहारवत् ।
अरुणोदयवेलायां शल्यं तत् क्षमते हरिः ॥
घटिकायामतिक्रान्तौ क्षुद्रं पातकमावहेत् ।
मुहूर्त्ते समतिक्रान्ते पूर्णं पातकमुच्यते ॥
अतिपातकमेव स्यात् घटिकानां चतुष्टये ।
मुहूर्त्तत्रितये पूर्णे महापातकमुच्यते ॥
ततः परं ब्रह्मवधो महापातकपञ्चकम् ।
प्रहरे पूर्णतां याते प्रायश्चित्तं ततो न हि ॥
निर्म्माल्यस्य विलम्बे तु प्रायश्चित्तमथोच्यते ।
अतिक्रान्ते मुहूर्त्तार्द्धे सहस्रं जपमाचरेत् ॥
पूर्णे मुहूर्त्ते सञ्जाते सहस्रं सार्द्धमुच्यते ॥
सहस्रद्वितयं कुर्य्यात् घटिकानां चतुष्टये ।
मुहूर्त्तत्रितयेऽतीते अयुतं जपमाचरेत् ॥
प्रहरे पूर्णतां याते पुरश्चरणमुच्यते ।
प्रहरे समतिक्रान्ते प्रायश्चित्तं न विद्यते ॥”

| | | |
|---|---|---|
| त्वादेवास्यास्तथात्वम् ।) नलिका । इति भाव-<br>प्रकाशः ॥ (नलिकाशब्देऽस्या विवृतिविशेषो<br>ज्ञातव्यः ॥) | | इति श्रीहरिभक्तिविलासे ३ विलासः ॥<br>**निर्म्माल्या**, स्त्री, (निर्म्मल्यते इति । निर् + मल् +<br>ण्यत् । ततष्टाप् ।) पृक्का । इति शब्दरत्नावली ॥<br>**निर्म्मितं**, त्रि, (निर् + मा + क्तः ।) कृतनिर्म्मा-<br>णम् । गठितम् । रचितम् । यथा, सिद्धान्त-<br>मुक्तावल्याम् । |

"निजनिर्म्मितकारिकावलीमतिसंक्षिप्तचिर-
न्तनोक्तिभिः ।
विशदीकरवाणि कौतुकात् ननु राजीवदया-
वशंवदः ॥"

**निर्म्मितिः**, स्त्री, (निर् + मा + क्तिन् ।) निर्म्मा-
णम् । गठनम् । रचनम् । यथा, --
"नियतिकृतनियमरहितां ह्लादैकमयीमनन्य-
परतन्त्राम् ।
नवरसरुचिरां निर्म्मितिमादधती भारती कवे-
र्ज्जयति ॥"
इति काव्यप्रकाशः ॥

**निर्मुक्तः**, पुं, (निर् + मुच् + क्तः ।) मुक्तकञ्चुकः ।
अचिरात् त्यक्तत्वक् सर्पः । इत्यमरः । १ । ८ ।
६ ॥
त्यक्तसंयोगे, त्रि । इति मेदिनी । ते, ११७ ॥
(यथा, देवीभागवते । ३ । ८ । २० ।
"रागद्वेषान्न निर्म्मुक्तः कामक्रोधसमावृतः ।
पुनरेव गृहं प्राप्तो यथा पूर्ब्बं तथा स्थितः ॥")

**निर्मुटं**, क्ली, (निर्मुटति आक्षिपतीति । निर् +
मुट आत्तेपे + कः ।) करशून्यहट्टः । तत्-
पर्य्यायः । पण्याजिरम् २ कचङ्गनम् ३ । इति
शब्दरत्नावलीत्रिकाण्डशेषौ ॥

**निर्मुटः**, पुं, (निर् + मुट + "इगुपधेति ।" ३ ।
१ । १३५ । इति कः ।) वनस्पतिः । अपुष्प-
वृक्षः । इति त्रिकाण्डशेषः ॥ सूर्य्यः । खर्परः ।
इति हारावली । २५५ ॥

**निर्म्मोकः**, पुं, (नितरां मुच्यते इति । निर् +
मुच् + घञ् ।) सर्पत्वक् । तत्पर्य्यायः । अहि-
कोषः २ निर्ल्व यनी ३ कञ्चुकः ४ । इति हेम-
चन्द्रः । ४ । ३८१ ॥ (यथा, आर्य्यासप्त-
शत्याम् । ३२८ ।
"निजगात्रनिर्व्विशेषस्थापितमपि सारमखिल-
मादाय ।
निर्म्मोकञ्च भुजङ्गी मुञ्चति पुरुषञ्च वारवधूः ॥"
त्वक्मात्रम् । यथा, महाभारते । १३ । १४१ ।
१०१ ।

**निर्याणं**, क्ली, (निर्याति निर्गच्छति मदोऽनेनेति ।)
निर् + या + करणे ल्युट् ।) गजापाङ्गदेशः ।
(यथा, माघे । ५ । ४१ ।
"प्रत्यन्यदन्तिनिशिताङ्कुशदूरभिन्न-
निर्य्याणनिर्यदसृजं चलितं निषादी ॥")
मोक्षः । अध्वनिर्गमः । इति मेदिनी । णे,
५७ ॥
(यथा, महाभारते । १३ । ५५ । ६ ।
"निर्य्याणञ्च रथेनाशु सहसा यत् कृतं त्वया
॥"
पशुपादबन्धनरज्जुः । इति वैजयन्ती ॥
यथा,
माघे । १२ । ४१ ।
"निर्याणहस्तस्य पुरो दुधुक्षतः ॥")

**निर्यातनं**, क्ली, (निर् + यत + णिच् + ल्युट् ।)
वैरशुद्धिः । शत्रुप्रतीकारः । (यथा, हरि-
वंशे । १७७ । ४७ ।
"तत्रानिरुद्धहरणं कृतं मघवता स्वयम् ।
न ह्यन्यस्य भवेच्छक्तिर्व्वैरनिर्यातनं प्रति
॥")
दानम् । त्यागः । न्यासार्पणम् ।
न्यस्तद्रव्यस्य
समर्पणम् । इत्यमरः । ३ । ३ । ११९ ॥
ऋणादि-
शुद्धिः । इति भरतः ॥ मारणम् । इति हेम-
चन्द्रः । ३ । ४६८ ॥

**निर्यामः**, पुं, (निर्यम्यतेऽनेनेति । निर् + यम +
घञ् ।) पोतवाहः । इति हेमचन्द्रः । ३ ।
५४० ॥

**निर्यासः**, पुं, (निर् + यस + घञ् ।) कषायः ।
क्वाथः । इति शब्दमाला ॥ वृक्षादिक्षीरम् ।
आटा इति भाषा ॥ तत्पर्य्यायः । वेष्टकः २
।
इति रत्नमाला ॥ (यथा, मनुः । ५ । ६ ।
"लोहितान् वृक्षनिर्यासान्
व्रश्चनप्रभवांस्तथा ।
शेलुं गव्यञ्च पेयूषं प्रयत्नेन विवर्ज्जयेत् ॥"
"निरुपाधिश्च निर्लिप्तो निरीहो
निधनान्तकः ॥"
लेपरहिते, त्रि ॥ (यथा, ब्रह्मवैवर्त्ते ।
२ । १ । ४६ ।
"निर्गुणा च निराकारा
निर्लिप्तात्मस्वरू-
पिणी ॥")

**निर्लेपः**, त्रि, (निर्गतो लेपो यस्मात् ।) लेप-
शून्यः । आसङ्गरहितः । यथा, --
"निर्लेपः कुचमण्डलो मृगदृशां
हारावली
निर्गुणा
नेत्राम्भोरुहमञ्जनेन रहितं
नीरागमोष्ठाधरम् ॥"
इत्यानन्दचन्पूग्रन्थे विंशतिस्तवकः
॥
पापशून्यः । यथा,
"लोकवेदविरुद्धैरपि निर्लेपः
स्वतन्त्रश्चेति महापाशुपताः ।"
इति कुसुमा-
ञ्जलिः ॥

**निर्ल्वयनी**, स्त्री, (नितरां लीयते संलीनो
भवति
अहिरस्यामिति । निर् + ली +
ल्युट् । पृषो-
दरादित्वात् वागमः ।) कञ्चुकः ।
सर्पत्वक् ।
इति हेमचन्द्रः । ४ । ३८१ ॥

**निर्वचनं**, क्ली, (निर् + वच + भावे ल्युट् ।)
निरुक्तिः । निश्चयकथनम् । यथा,
श्रीभागवते ।
९ । २० । ३७ ।
"नामनिर्व्वचनं तस्य श्लोकमेकं
सुरा जगुः ॥"
(प्रशंसा । यथा, महाभारते । १ ।
१०९ । २३ ।
"प्रनष्टं शान्तनोर्वंशं समीक्ष्य
पुनरुद्धृतम् ।

"मृगनिर्म्मोकवसनाश्चीरवल्कलवाससः।
निर्द्वन्द्वाः सत्पथं प्राप्ता वालिखिल्यास्तपोधनाः ॥"
भावे घञ् ।) मोचनम् । आकाशः । सन्नाहः । इति मेदिनी । के, १११ ॥ (सावर्णिमनोः पुत्त्रविशेषः । यथा, भागवते । ८ । १३ । ११ ।
"अष्टमेऽन्तर आयाते सावर्णिर्भविता मनुः ।
निर्म्मोकविरजस्काद्याः सावर्णितनया नृप ! ॥")

**निर्म्मोक्षः**, पुं, (नितरां मोक्षः ।) त्यागः । इति नानार्थसर्गशब्दार्थे अमरः ॥ (यथा, रघुः । १० । २ ।
"न चोपलेभे पूर्व्वेषामृणनिर्म्मोक्षसाधनम्।
सुताभिधानं स ज्योतिः सद्यः शोकतमोऽप-
हम् ॥")

**निर्यन्त्रणं**, त्रि, (निर् + यन्त्र + ल्युट् ।) अबाधम् । निरर्गलम् । उच्छद्खलम् । इति जटाधरः ॥ (यन्त्रणाशूयम् । यथा, सुश्रुते । १ । ४४ ।
"ततः स्वादेदुष्णतोयसेवी निर्यन्त्रणास्त्विमे ॥")
अर्द्धर्चादित्वात् क्लीवेऽपि दृश्यते ॥ * ॥ क्वचित् स्वरसोऽपि वाच्यः । यथा, वैद्यकचिकि-
त्सासंग्रहे दलीकन्दघृते ।
"कदलीकन्दनिर्यासे तत्प्रसूनतुलां पचेत् ।
चतुर्भागावशेषेऽस्मिन् घृतप्रस्थं विपाचयेत् ॥")

**निर्युक्तिकं**, त्रि, (निर्गता युक्तिर्यस्मात् । कप् ।) युक्तिरहितम् । यथा । "नहि क्रियारहितं वाक्य-
मस्तीति प्राचां प्रवादो
निर्युक्तिकत्वादश्रद्धेयः ।"
इति शब्दशक्तिप्रकाशिका ॥

**निर्यूषः**, पुं, (नितरां यूषः ।) निर्यासः । इति शब्दमाला ॥

**निर्यूहः**, पुं, शेखरम् । आपीडम् । द्वारम् । निर्यासः । क्वाथरसः । (यथास्य पर्य्यायो वैद्यक-
रत्नमालायाम् ॥ "क्वाथः कषायो निर्य्यूहः ॥")
नागदन्तः । अवलम्बनार्थं गेहादिभित्तिनिर्गतं काष्ठद्वयम् । इत्यमरमेदिनीकरौ ॥

**निर्लक्षणः**, त्रि, (निर्गतं लक्षणं यस्मात् ।) लक्षण-हीनः । तत्पर्य्यायः । पाण्डुरपृष्ठः २ । इति हेमचन्द्रः । ३ । १०१ ॥ (यथा, गोः रामा-
यणे । २ । ११८ । ५ ।
"निर्लक्षणो लक्षणवान् दुःशीलः शील-
वानपि ॥")

**निर्लिप्तः**, पुं, (निर् + लिप + क्तः ।) श्रीकृष्णः । यथा, ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ७ अध्याये ।
ततो निर्व्वचनं लोके
सर्व्वराष्ट्रेष्ववर्त्तत ॥"
निर्गतं वचनं यत्र । तूष्णीम् । यथा, कुमारे । ७ । १९ ।
"पत्युः शिरश्चन्द्रकलामनेन
स्पृशेति सख्या परिहासपूर्ब्बम् ।
सा रञ्जयित्वा चरणौ कृताशी-
र्माल्येन तां निर्वचनं जघान ॥"
वाक्यातीते, त्रि, । यथा, महाभारते । ३ । १९९ । ३६ ।
"येषां तडागानि महोदकानि
वाप्यश्च कूप्याश्च प्रतिश्रयाश्च ।
अन्नस्य दानं मधुरा च वाणी
यमस्य ते निर्व्वचना भवन्ति ॥")

**निर्व्वपणं**, क्ली, (निर् + वप + भावे ल्युट् ।) दानम् । इत्यमरः । २ । ७ । ३० ॥ (यथा, मनुः । ३ । २४८ ।
"अनयैवावृता कार्य्यं पिण्डनिर्व्वपणं सुतैः ॥"
पिण्डदानम् । यथा, तत्रैव । ३ । २६० ।
"एवं निर्व्वपणं कृत्वा
पिण्डांस्तांस्तदनन्तरम्।
गां विप्रमजमग्निं वा प्राशयेसु वा क्षिपेत् ॥"
यथा च गोः रामायणे । ६ । १०८ । ४२ ।
"एषा मन्दाकिनी पुण्या नदी
सुविमलोदका ।
पितुर्निर्व्वपणं यत्र मया मूलफलैः कृतम् ॥"
पिण्डः । यथा, महाभारते । १३ । ८४ । १४ ।
"तत् समाप्य यथोद्दिष्टं पूर्ब्बकर्म्म
समाहितः ।
दातुं निर्व्वपणं सम्यक्
यथावदहमारभम् ॥"
अन्नादिसंविभागः । इति श्रीधरस्वामी ॥ यथा,

| | | |
|---|---|---|
| | | भागवते । ५ । १२ । १२ ।<br>“रहूगणैतत् तपसा न याति<br>न चेज्यया निर्व्वपणाद् गृहाद् वा<br>॥”) |

**निर्व्वर्णनं**, क्ली, (निर् + वर्ण + "सत्यापपाशेति ।"
३ । १ । २५ । इति णिच् + भावे ल्युट् ।)
दर्शनम् । इत्यमरः । ३ । २ । ३१ ॥

**निर्व्वहणं**, क्ली स्त्री, (निर् + वह + भावे ल्युट् ।)
निष्ठा । इत्यमरः । १ । ७ । १५ ॥ तत्तु प्रक्रान्ता-
भिनयनिर्व्वाहः । किंवा नाटके पञ्च सन्धयो
भवन्ति । यथा, --
"मुख प्रतिमुखञ्चैव गर्भो विमर्ष एव च ।
तथा निर्व्वहणञ्चेति नाटके पञ्च सन्धयः ॥"
तत्र पञ्चमस्य सन्धेः संज्ञाद्बयमिदम् । इति
भरतः ॥ मुकुटस्त्वाह द्बे पञ्चमसन्धिसमाप्तौ ।
प्रस्तुतकथासमाप्तावितियावत् । यथैतदनुवृत्तौ
शब्दार्णवः । निर्व्वहणन्तु निष्ठा स्त्री संहारश्च
समापने । प्रक्रान्तकथानिर्व्वाहः । इति मधु-
माधवादयः ॥

**निर्व्वाणं**, क्ली, (निर् + वा गमने + क्तः । तस्य
नः ।) अस्तगमनम् । निर्वृतिः । गजमज्जनम् ।
(यथा, रघुः । १ । ७१ ।
"असह्यपीडं भगवन्नृणमन्त्यमवेहि मे ।
अरुन्तुदमिवालानमनिर्व्वाणस्य दन्तिनः ॥")
सङ्गमः । अपवर्गः । इति मेदिनी । णे, ५८ ॥
(यथा, भागवते । ३ । २८ । ३५ ।
"मुक्ताश्रयं यर्हि निर्व्विषयं विरक्तं
निर्व्वाणमृच्छति मनः सहसा यथार्च्चिः ॥")
"निर्व्वाणभूयिष्ठमथास्यवीर्य्यं
सन्धुक्षयन्तीव वपुर्गुणेन ॥")
निमग्नः । यथा । निर्व्वाणो हस्ती । इति
विशेष्यनिघ्ने अमरः । ३ । १ । ९६ ॥ वाण-
शून्यश्च ॥

**निर्व्वातः**, त्रि, (निर्गतो वातो वायुर्यस्मात् ।)
वायुरहितः । इत्यमरः । ३ । १ । ९६ । (यथा,
महाभारते । २ । ३६ । २८ ।
"असूर्य्यमिव सूर्य्येण निर्व्वातमिव वायुना ।
भासितं ह्लादितञ्चैव कृष्णेनेदं सदो हि नः ॥"
निर्व्वाति स्मेति । निर् + वा + गत्यर्थेति क्तः ।
"निर्व्वाणोऽवाते ।" ८ । २ । ५० । इति निष्ठा-
तस्य न नः ।) गते वायौ, पुं ॥

**निर्व्वादः**, पुं, (निर्व्वदनमिति । निर् + वद् + भावे
घञ् ।) परीवादः । जनवादः । इत्यमरः ।
३ । ३ । ८९ ॥ (यथा, रघुः । १४ । ३४ ।
"किमात्मनिर्व्वादकथामुपेक्षे
जायामदोषामुत सन्त्यजामि ॥")
अवज्ञा । (निर्निश्चितं वादः कथनम् ।) निश्चित-
वादः । वादाभावः । इति भरतः ॥

**निर्व्वापः**, पुं, (निर्व्वपणमिति । निर् + वप +
घञ् ।) निवापः । प्रेतभिन्नमृतपित्रुद्देश्यक-
दानम् । इत्यमरटीकायां तर्कवागीशः ॥ (यथा,
देवीभागवते । २ । ७ । १६ ।
णम् । इति मेदिनी । ने, १८९ ॥ (यथा, महा-
भारते । ५ । ९० । ५८ ।
"निर्व्वासनञ्च नगरात् प्रव्रज्या च परन्तप ! ।
नानाविधानां दुःखानामभिज्ञास्मि जनार्द्दन ! ॥")

**निर्व्वाहः**, पुं, (निर् + वह + घञ् ।) निष्पत्तिः ।
समाप्तिः । यथा । "स्वतिथ्या कर्म्मानिव्वहि
सहायभावेनान्यतिथ्यनुप्रवेशादुपवासाद्याचर-
णञ्च ।" इति तिथितत्त्वम् ॥ अपि च ।
"यावता स्यात् स्वनिर्व्वाहः स्वीकुर्य्यात्तावद-
र्थवित् ।
आधिक्ये न्यूनतायाञ्च च्यवते परमार्थतः ॥"
इति भक्तिरसामृतसिन्धौ नारदीयपुराणम् ॥

**निर्व्वाहणं**, क्ली, (निर् + वह + स्वार्थे णिच् +
ल्युट् ।) निर्व्वहणम् । नाट्योक्तौ प्रस्तुतकथा-
समाप्तिः । इत्यमरटीकायां भरतः ॥

**निर्व्विकल्पकं**, क्ली, (निर्गतो विकल्पो नानाविध-
कल्पना यस्मात् । कप् ।) प्रकारताविशेष्यता-
नापन्नसम्बन्धानवगाह्यतीन्द्रियज्ञानम्। यथा, --
"तत्प्रमाणाप्रमाणापि ज्ञानं यन्निर्व्विकल्पकम् ।
प्रकारतादिशून्यं हि सम्बन्धानवगाहि यत् ॥"
"ज्ञानं यन्निर्व्विकल्पाख्यं तदतीन्द्रियमिष्यते ॥"
इति च भाषापरिच्छेदः ॥

**निर्व्विकल्पसमाधिः**, पुं, (निर्व्विकल्पः समाधिः ।)
ज्ञातृज्ञानादिभेदलये अद्बितीयवस्तुनि तदा-
काराकारिताया बुद्धिवृत्तेरतितराभेकीभावेना-
वस्थानम् । इति वेदान्तसारः ॥

**निर्व्विकारः**, त्रि, (निर्गतो विकारो विकृतिर्यस्मात् ।)
विकारशून्यः । यथा, --
"रामं विद्धि परं ब्रह्म सच्चिदानन्दमद्बयम् ।
आनन्दं निर्म्मलं शान्तं निर्व्विकारं निरञ्जनम् ॥"
इत्यध्यात्मरामायणम् ॥

**निर्व्विण्णः**, त्रि, (निर् + विद + क्तः । निर्व्विण्ण-
स्योपसंख्यानात् परस्य णत्वम् पूर्ब्बस्य ष्टुत्वम् ।)
निर्वित्तिविशिष्टः । निर्वेदयुक्तः । यथा, --
"यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ।

विश्रान्तिः । इति हेमचन्द्रः ॥ (समाप्तिः ।
यथा भागवते । १ । ६ । २९ ।
"आरब्धकर्म्मनिर्व्वाणो न्यपतत् पाञ्चभौतिकः ॥")
निश्चलम् । शून्यम् । विद्योपदेशनम् । इति
शब्दरत्नावली ॥ नाभिदेशे जप्यप्रणवपुटित-
मातृकापुटितमूलमन्त्रम् । यथा, --
"कुल्लुकां मूर्द्ध्नि संजप्य हृदि सेतुं विचिन्तयेत् ।
महासेतुं विशुद्धे तु षोडशारे समुद्धरेत् ॥
म्रणिपुरे तु निर्व्वाणं महाकुण्ड लिनीमधः ।
स्वाधिष्ठाने कामबीजं राकिणी मूर्द्ध्नि संस्थितम् ।
विचिन्त्य विधिवद्देवि !
मूलाधारान्तिकाच्छिवे ! ॥
विशुद्धान्तं स्मरेद्देवि !
विशतन्तुतनीयसीम् ।
देवीस्थानं द्विजिह्वान्तं मन्त्रमूलावृतं मुहुः ॥"
निर्व्वाणं यथा, --
"अथ वक्ष्यामि निर्व्वाणं शृणु सावहितानघे ! ।
प्रणवं पूर्ब्बमुच्चार्य्य मातृकाद्यं समुच्चरेत् ॥
मातृकार्णां समस्ताञ्च पुनः प्रणवमुच्चरेत् ।
एवं पुटितमूलन्तु प्रजपेन्मणिपूरके ॥
एवं निर्व्वाणमीशानि ! यो न जानाति पामरः ।
कल्पकोटिसहस्रेषु तस्य सिद्धिर्न जायते ॥"
इत्यागमतत्त्वविलासः ॥
(विष्णुः । यथा, महाभारते । १३ । १४९ । ७५ ।
"त्रिसामा सामगः साम निर्व्वाणं भेषजं भिषक् ॥")

**निर्व्वाणः**, त्रि, (निर् + वा + क्तः । "निर्व्वाणो-

"पुत्त्रेभ्योऽहं ददाम्यद्य निर्व्वापं विधिपूर्ब्बकम् ॥"
भिक्षार्थदानम् । यथा, पञ्चतन्त्रे । ५ । २० ।
"एतस्मिन्नवसरे ब्राह्मणोऽपि कुतश्चित् गृहीत-
निर्व्वापः परिभ्रम्य यावदागतः पश्यति तावत्
पुत्त्रशोकाभिभूता ब्राह्मणी विलपति ॥" भक्ष-
णम् । इति रामानुजः ॥ यथा, रामायणे ।
२ । ९१ । ८० ।
नीलवैदूर्य्यवर्णांश्च मृदून् यवससञ्चयान् ।
निर्व्वापार्थं पशूनां ते ददृशुस्तत्र सर्व्वशः ॥")

**निर्व्वापणं**, क्ली, (निर् + वप + णिच् + ल्युट् ।)
वधः । इत्यमरः । २ । ८ । ११४ ॥ दानम् ।
इति हलायुधः । २ । ३२३ ॥ (निर्व्वाणता-
सम्पादनम् । निवान इति भाषा ॥ यथा, तिथि-
तत्त्वे ।
"दीपनिर्व्वापणात् पुंसः कुष्माण्डच्छेदनात् स्त्रियः ॥"
स्वार्थे णिच् । वपनम् । यथा, पञ्चतन्त्रे । १ ।
४०५ । "मया तावन्नीतिबीजनिर्व्वापणं कृतम् ।
परतस्तद्दैवपर्य्यायायत्तम् ॥")

**निर्व्वार्य्यः**, त्रि, (निश्चयेन व्रियते इति । निर् +
वृ + "ऋहलोर्ण्यत् ।" ३ । १ । १२४ । इति
ण्यत् ।) सत्वसम्पदा सम्पतन् कार्य्यकर्त्ता । इत्य-
मरः । ३ । १ । १३ ॥
"भयविक्रमव्यसनाभ्युद्दयादौ

न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ॥"
इति भक्तिरसामृतसिन्धुः ॥

**निर्व्विन्ध्या**, स्त्री, (निर्गता विन्ध्यादिति नित्यतत्-
पुरुषः ।) विन्ध्यपर्व्वतनिःसृतनदीविशेषः । इति
श्रीभागवते । ५ । १९ अः ॥ (यथा, मेघदूते । ३० ।
"निर्व्विन्ध्यायाः पथि भव रसाभ्यन्तरं सन्निपत्य ॥")

**निर्व्विषा**, स्त्री, (निर्गतं विषं यस्याः ।) तृण-
विशेषः । निर्विषी इति भाषा । तत्पर्य्यायः ।
अपविषा २ निर्विषी ३ विषहा ४ विषापहा
५ विषहन्त्री ६ विषाभावा ७ अविषा ८ विष-
वैरिणी ९ । अस्या गुणाः । कटुत्वम् । शीत-
त्वम् । कफवातास्रदोषनाशित्वम् । अनेकविष-
हन्तृत्वम् । व्रणनिर्मूलकारित्वञ्च । इति राज-
निर्घण्टः ॥

**निर्व्विष्टः**, त्रि, (निर् + विश + क्तः ।) कृतनिर्व्वेशः ।
प्राप्तः । यथा, श्रीभागवते ।
"यत्र निर्विष्टमरणं कृतान्तो नाभिमन्यते ॥"

| | | |
|---|---|---|
| ऽवाते ।” ८ । २ । ५० । इति<br>निष्ठातस्य नः ।)<br>मुक्तः । यथा । निर्व्वाणो मुनिः । नष्टः । यथा ।<br>निर्व्वाणो वह्निः । (यथा, कुमारे । ३ । ५२ । | निर्व्विकारं मनः सत्वं तत्सम्पदा<br>सम्पतन् उद्यमं<br>कुर्व्वन् यो निःशङ्को भूत्वा कर्म्म कुरुते स<br>निर्व्वार्य्य उच्यते ।” इति भरतः ॥<br>अवारणीयश्च ॥<br>**निर्व्वासनं**, क्ली, (निर् + वस + णिच् + ल्युट् ।) वधः ।<br>इत्यमरः । २ । ८ । ११३ ॥<br>नगरादेर्ब्बहिष्कर- | |

स्थितः । यथा, भागवते । १ । २ । ३३ ।
"स्वनिर्म्मितेषु निर्व्विष्टो भुङ्क्ते भूतेषु तद्-
गुणान् ॥"
विवाहितः । कृताग्निहोत्रः । यथा ।
"ज्येष्ठेऽ-
निर्व्विष्टे कनीयान् निर्व्विशन् परिवेत्ता भवति ।"
इत्युद्वाहतत्त्वम् ॥

**निर्व्वीजा**, स्त्री, (निर्गतं वीजं यस्याः ।) काकली-
द्राक्षा । इति राजनिर्घण्टः ॥

**निर्व्वीरं**, त्रि, (निर्गतो वीरो यस्मात् ।) वीर-
शून्यम् । यथा, --
"नाकृष्टं न च टङ्कितं न नमितं
नोत्थापितं
स्थानतः
केनापीदमहो महद्धनुरतो निर्व्वीरमुर्व्वी-
तलम् ॥"
इति महानाटकम् ॥

**निर्व्वीरा**, स्त्री, (निर्गतो वीरवत् पतिः पुत्त्रो वा
यस्याः ।) अवीरा । पतिपुत्त्रविहीना । इति
हेमचन्द्रः । ३ । १९४ ॥

**निर्वृतिः**, स्त्री, (निर् + वृ + क्तिन् ।) सुस्थितिः ।
अस्तङ्गमनम् । सुखम् । इति मेदिनी । ते,
१२० ॥ (यथा, देवीभागवते । १ । १९ । ३९ ।
"जनकस्य दशां दृष्ट्वा राज्यस्थस्य महात्मनः ।
स निर्वृतिं परां प्राप्य
पितुराश्रमसंस्थितः ॥")
मोक्षः । मृत्युः । इति हेमचन्द्रः । १ । ७५ ॥
(शान्तिः । यथा, सुश्रुते । १ । ४१ ।
तदुदाहरणम् । यथा, --
"मृत्पिण्डबालुकारन्ध्रपिधानरचनार्थिना ।
दक्षिणावर्त्तशङ्खोऽयं हन्त चूर्णीकृतो मया ॥"
इति साहित्यदर्पणम् ॥
परवैराग्यम् । यथा, --
"ततः कदाचिन्निर्व्वेदान्निराकाराश्रितेन च ।
लोकतन्त्रं परित्यक्तं दुःखार्त्तेन भृशं मया ॥"
इति मोक्षधर्म्मः ॥
वैराग्यम् । यथा, श्रीभगवद्गीतायाम् ।
"तदा गन्तासि निर्व्वेदं श्रोतव्यस्य श्रुतस्य च ॥"
(निर्गतो वेदो यस्मादिति ।) वेदरहिते, त्रि ॥

**निर्व्वेशः**, पुं, (निर् + विश् + भावे घञ् ।)
भृतिः । भोगः । इत्यमरः । ३ । ३ । २१४ ॥
"भृतिर्व्वेतनं भोगः सुखं पालनमभ्यवहारो वा ।"
इति भरतः ॥ (यथा, भागवते । ६ । २ । ७ ।
"अयं हि कृतनिर्व्वेशो जन्मकोट्यंहसामपि ।
यद्व्याजहार विवशो नाम स्वस्त्ययनं हरेः ॥")
मूर्च्छनम् । इति मेदिनी । शे, २२ ॥ विवाहः ।
निर्पूर्ब्बविशधातुर्व्विवाहार्थः । इति स्मृतिः ॥

**निर्व्वेष्टनं**, क्ली, (नितरां वेष्टनमत्र ।) नाडि-
चीरम् । इति हारावली । २१४ ॥ (निर्गतं
वेष्टनं यस्मात् ।) वेष्टनरहिते, त्रि ॥

**निर्व्यथनं**, क्ली, (निर् + व्यथ + भावे ल्युट् ।)
छिद्रम् । इत्यमरः । १ । ८ । २ ॥
व्यथाभावः ।
निश्चयेन व्यथनञ्च ॥

**निर्व्यूढं**, त्रि, (निर् + वि + वह + क्तः ।) त्यक्तम् ।
इति त्रिकाण्डशेषः ॥ समाप्तम् । यथा, --
"अवदानन्तु यत् कर्म्म निर्व्यूढमतिशोभनम् ॥"
इति जटाधरः ॥
(स्थिरम् । यथा, "स्त्रीणां पतिपुत्त्रादिधने न
यथेष्टविनियोगः । यथा, --
"न निर्हारं स्त्रियः कुर्य्युः कुटुम्बा बहुमध्यगात् ।
स्वकादपि च वृत्ताद्धि स्वस्य भर्त्तुरनाज्ञया ॥"
इति मनुः ॥

**निर्हारी**, [न्] त्रि, (निःशेषेण हरति दूरं गच्छ-
तीति । निर् + हृ + णिनि ।) दूरगामिगन्धः ।
इत्यमरः । १ । ५ । ११ ॥ (यथा, महाभारते ।
१२ । १८४ । २८ ।
"इष्टश्चानिष्टगन्धश्चं मधुरः कटुरेव च ।
निर्हारी संहतः स्निग्धो रूक्षो विषद एव वा ॥")

**निर्ह्रादः**, पुं, (निर् + ह्राद अव्यक्तशब्दे + घञ् ।)
ध्वनिः । इत्यमरः । १ । ३ । २३ ॥ (यथा, रघुवंशे । १ । ४१ ।
"श्रेणीबन्धाद्वितन्वद्भिः अस्तम्भां तोरणश्रजम् ।
सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिताननौ ॥")

**निलयः**, पुं, (निलीयते अस्मिन्निति । नि + ली +
"एरच् ।" ३ । ३ । ५६ । इति अधिकरणे अच् ।)
गृहम् । इत्यमरः । २ । २ । ५ ॥ (यथा, रघु-
वंशे । २ । १५ ।
"सञ्चारपूतानि दिगन्तराणि
कृत्वा दिनान्ते निलयाय गन्तुम् ॥"
आश्रयस्थानम् । यथा, भागवते । ८ । १ । ११ ।
"तं भूतनिलयं देवं सुपर्णमुपधावत ॥")

**निलिम्पः**, पुं, (निलिम्पतीति । नि + लिप् + "नौ
लिम्पेर्वाच्यः ।" ३ । १ । १३८ । इत्यस्य
वार्त्तिकोक्त्या

"भूतेजोवारिजैर्द्रव्यैः शमं याति समीरणः ।
भूम्यम्बुवायुजैः पित्तं क्षिप्रमाप्नोति निर्वृतिम् ॥"
विदर्भवंशीयवृष्णेः पुत्त्रे, पुं । यथा, भागवते ।
९ । २४ । ३ ।
"क्रथस्य कुन्तिः पुत्त्रोऽभूत् वृष्णिस्तस्याथ निर्वृतिः ॥")

**निर्वृत्तः**, त्रि, (निर् + वृत् + क्तः ।) निष्पन्नः । इत्य-
मरः । ३ । १ । १०० ॥ (यथा, रघुः । १७ । १८ ।
"सा तस्य कर्म्मनिर्वृत्तैर्दूरं पश्चात् कृता फलैः ॥")

**निर्वृत्तिः**, स्त्री, (निर् + वृत् + क्तिन् ।) निष्पादः ।
तथा च ।
"यथा दुष्टेन दोषेण यथा चानुविसर्पता ।
निर्वृत्तिरामयस्यासौ संप्राप्तिर्ज्जातिरागतिः ॥"
इति माधवकरः ॥
(निर्गता वृत्तिर्यस्मादिति ।) वृत्तिरहिते, त्रि ॥

**निर्व्वेदः**, पुं, (निर् + विद् + घञ् ।) स्वावमान-
नम् । इति हेमचन्द्रः ॥ (यथा, देवीभागवते ।
३ । १० । ३७ ।
"देवैर्युद्धं कृतं चोग्रं प्रह्लादस्तु पराजितः ।
निर्व्वेदं परमं प्राप्तो ज्ञात्वा धर्म्मं सनातनम् ॥")
स तु त्रयस्त्रिंशद्व्यभिचारिभावानामादिमः।
शान्तरसस्य स्थायिभावश्च । यथा, --
"निर्व्वेदःस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः ॥"
इति काव्यप्रकाशः ॥
तस्य लक्षणं यथा, --
निर्व्यूढं स्वत्वं पुंसान्तु तन्निर्व्यूढं अप्रतिबन्धकतया
यथेष्टविनियोगार्हत्वात् ॥" तथा, च राज-
तरङ्गिण्याम् । ३ । ४७२ ।
"स एव भूपतिर्भूत्वा भुवं वर्षशतत्रयम् ।
निर्व्वाणश्लाघ्यनिर्व्यूढपातालेश्वरमासदत् ॥")

**निर्हरणं**, क्ली, (निश्चयेन हरणम् । निर् + हृ +
ल्युट् ।) शवदाहः । यथा, शुद्धितत्त्वे ।
"तस्य निर्हरणादीनि सम्परेतस्य भार्गव ! ।
युधिष्ठिरः कारयित्वा मुहूर्त्तं दुःखितोऽभवत् ॥"
(दहनम् । यथा, भागवते । ७ । ७ । २८ ।
"बीजनिर्हरणं योगः प्रवाहोपरमो धियः ॥")
निःशेषेण हरणञ्च ॥

**निर्हारः**, पुं, (निर् + हृ + घञ् ।) शल्यादेरुत्-
पाटनम् । इति भरतः ॥ तत्पर्य्यायः । अभ्यव-
कर्षणम् २ । इत्यमरः । ३ । २ । १७ ॥ मल-
मूत्रादित्यागः । यथा, आह्निकतत्त्वे ।
"आहारनिर्हारविहारयोगाः
सुसंवृता धर्म्मविदा तु कार्य्या ॥"
दाहः । इति स्मृतिः ॥ (दाहार्थं नयनम् । इति
स्वामी ॥ यथा, भागवते । ७ । २ । ३५ ।
"एवं विलपतीनां वै परिगृह्य गृतं पतिम् ।
अनिच्छतीनां निर्हारमर्कोऽस्त संन्यवर्त्तत ॥")
शः । मुचादित्वान्नुम् ।) देवः । इति त्रिकाण्ड-
शेषः ॥

**निलिम्पनिर्झरी**, स्त्री, (निलिम्पानां देवानां निर्झरी
नदी ।) गङ्गा । यथा, --
"जटाकटाहसम्भ्रमद्भ्रमन्निलिम्पनिर्झरी ॥"
इत्यादिरावणकृतशिवस्तोत्रम् ॥

**निलिम्पा**, स्त्री, (नि + लिप + श । मुचादित्वा-
न्नुम् । स्त्रियां टाप् ।) स्त्रीगवी । इति त्रिकाण्डशेषः ॥

**निलिम्पिका**, स्त्री, (निलिम्पा एव । स्वार्थे कन्
टापि अत इत्वम् ।) सौरभेयी । इति हेम-
चन्द्रः । ४ । ३३२ ॥

**निलीनं**, त्रि, (निःशेषेण लीनं संलग्नम् । नि +
ली + क्तः ।) निःशेषेण लीनम् । संलग्नम् ।
(यथा, भट्टिः । २ । ५ ।
"वनानि तोयानि च नेत्रकल्पैः
पुष्पैः सरोजैश्च निलीनभृङ्गैः ।
परस्परं विस्मयवन्ति लक्ष्मी-
मालोकयाञ्चक्रुरिवादरेण ॥"

**निवपनं**, क्ली, (नि + वप + भावे ल्युट् ।) पितृ-
द्देश्यकदानम् । इति शब्दरत्नावली ॥ (यथा,
महाभारते । १३ । ९२ । २ ।
"ऋषयो धर्म्मनित्यास्तु कृत्वा निवपनान्युत ।
तर्पणञ्चाप्यकुर्व्वन्त तीर्थाम्भोभिर्यतव्रताः ॥")

**निवरा**, स्त्री, (नितरां व्रियत इति । नि + वृ +
"ग्रहवृदृनिश्चिगमश्च ।" ३ । ३ । ५८ । इति कर्म्म-
ण्यप् । ततष्टाप् ।) कुमारी । अविवाहिता ।
इति मिताक्षरा ॥

**निवसतिः**, स्त्री, (निवसत्यत्रेति । नि + वस् +
“वहिवस्यर्त्तिभ्यश्चित्।” उणां ४ । ६० । इति
अतिच् ।) गृहम् । इति शब्दरत्नावली ॥

**निवसथः**, पुं, (निवसत्यत्रेति । नि + वस् आधारे
अयच् ।) ग्रामः । इति हेमचन्द्रः । ४ । २३ ॥

**निवसनं**, क्ली, (न्युष्यतेऽत्र । नि + वस् + आधारे
ल्युट् ।) गृहम् । इति शब्दरत्नावली ॥ वस्त्रम् ।
इति हलायुधः ॥ (यथा, गोः रामायणे । २ । ३७ ।
“द्वितीयं च परीदधौ चीरमादाय मैथिली ।
चीरस्याकुशला देवी सम्यग्निवसने शुभा ॥”)

**निवहः**, पुं, (नितरामुह्यते इति । नि + वह +
पुंसीति घः ।) समूहः । इत्यमरः । २ । ५ । ३९ ॥
(यथा, पञ्चतन्त्रे । ५ । ८ ।
“मुकुलं कुशलं सुजनं
विहाय कुलकुशलशीलविकलेऽपि ।
आढ्ये कल्पतराविव
नित्यं रज्यन्ति जननिवहाः ॥”
नितरां वहतीति । नि + वह + पचाद्यच् ।)
सप्तवाय्वन्तर्गतवायुविशेषः । यथा, --
“निवहो यत्र वातेशः केषाञ्चिन्न सुखप्रदः ।
न प्रचण्डो न च मृदुः प्रमादी च प्रभञ्जनः ॥”
इति ज्योतिषम् ॥

**निवातः**, त्रि, (नितरां वाति गच्छत्यत्र । नि + वा
+ अधिकरणे क्तः ।) आश्रयः । निवासः ।
(निवृत्तो वातो यस्मिन् ।) अवातः । वातशून्यः ।
(यथा, रघुवंशे । ३ । १७ ।
“निवातपद्मस्तिमितेन चक्षुषा
नृपस्य कान्तं पिबतः सुताननम् ।
महोदधेः पूर इवेन्दुदर्शनात्
दानमात्रम् । यथा । “येभ्यो निवापाञ्जलयः
पितॄणाम् ।” इति भरतः ॥ (न्युप्यते वीज-
मस्मिनिति । क्षेत्रम् । इति नीलकण्ठः ॥ यथा,
महाभारते । ३ । ३०९ । ६ ।
“अवनिं प्रमदा गाश्च निवापं बहुवार्षिकम् ।
तत्ते विप्र ! प्रदास्यामि न तु वर्म्म सकुण्डलम् ॥”)

**निवारः**, पुं, निवारणम् । इति निपूर्ब्बवृधातो-
र्भवे घञ्प्रत्ययनिष्पन्नः ॥

**निवारणं**, क्ली, (नि + वृ + णिच् + करणे ल्युट् ।)
निश्चयेन वारणम् । निराकरणम् । यथा, --
“यद्वाक्यतो धर्म्म इतीतरस्थितो
न मन्यते तस्य निवारणं जनः ॥”
इति श्रीभागवते प्रथमस्कन्धः ॥

**निवारितः**, त्रि, (नि + वृ + णिच् + क्तः ।) कृत-
निवारणः । यथा, --
“निवारितास्तेन महीतलेऽखिले
निरीतिभावं गमितेऽतिवृष्टयः ॥”
इति नैषधे । १ । ११ ॥

**निवास**, त् क स्तृत्याम् । इति कविकल्पद्रुमः ॥
(अदन्त चुरां-परं-सकं-सेट् ।) अनिनिवासत् ।
स्तृतिराच्छादनम् । निवासयति यश्चित्रं चीनां-
शुकमिति हलायुधः । इति दुर्गादासः ॥

**निवासः**, पुं, (निवसति अस्मिन् । नि + वस् +
अधिकरणे घञ् ।) गृहम् । इति हेमचन्द्रः ।
४ । ५७ ॥ (यथा, विष्णुपुराणे । १ । १३ । ८४ ।
“तत्र तत्र प्रजानां हि निवासं समरोचयत् ॥”
टीटम् । “तद्योगात् नासिका निविडा ।” इति
सिद्धान्तकौमुदी ॥)

**निविरीसं**, त्रि, (नि नता नासिका यस्य । “नेर्वि-
डच्विरीसचौ ।” ५ । २ । ३२ । इति विरी-
सच् । अवटीटः । इति व्याकरणम् ॥) निवि-
डम् । इति जटाधरः ॥ (यथा, माघे । ७ । २० ।
“उरुनिविरीसनितम्बभारखेदि ॥”)

**निविष्टं**, त्रि, (नि + विश + क्तः ।) निवेशयुक्तम् ।
(यथा, कुमारसम्भवे । ५ । ३१ ।
“भवन्ति साम्येऽपि निविष्टचेतसां
वपुर्व्विशेषेष्वतिगौरवाः क्रियाः ॥”)
आविष्टम् । प्रविष्टम् । यथा, --
“उडुगणपरिवारो नायकोऽप्योषधीना-
ममृतमयशरीरः कान्तियुक्तोऽपि चन्द्रः ।
भवति विकलमूर्त्तिर्मण्डलं प्राप्य भानोः
परसदननिविष्टः को लघुत्वं न याति ॥”
इत्युद्भटः ॥
(आबद्धम् । यथा, देवीभागवते । १ । १५ । ४५ ।
“बद्धोऽहमिति मे बुद्धिर्नापसर्पति चित्ततः ।
संसारवासनाजाले निविष्टा वृद्धगामिनी ॥”
स्थितम् । यथा, रामायणे । १ । ५ । ५ ।
“कोशलो नाम मुदितः स्फीतो जनपदो महान् ।
निविष्टः सरयूतीरे प्रभूतधनधान्यवान् ॥”)

**निवीतं**, त्रि, (निवीयते स्मेति । नि + व्ये आच्छा-
दने + क्तः । सम्प्रसारणम् ।) आच्छादनवस्त्रम् ।
उडनी इति भाषा ॥ तत्पर्य्यायः । प्रावृतम् २ ।
कण्ठलम्बितयज्ञसूत्रे, क्ली । इत्यमरः । १ । ७ ।
५० ॥ यथा, --
“उपवीतं भवेन्नित्यं निवीतं कण्ठसज्जनम् ॥”
इति कुर्म्मपुराणम् ॥

गुरुः प्रहर्षः प्रबभूव नात्मनि ॥”)
शस्त्राभेद्यं वर्म्म । शस्त्रेण न भिद्यते यत्
वर्म्म
कवचम् । इत्यमरभरतौ । ३ । ३ । ८४ ॥

**निवातकवचः**, पुं, दैत्यविशेषः । स तु हिरण्य-

कसिपोः पौत्रः संह्लादपुत्त्रः ।
इत्यग्निपुराणम् ॥
(निवातं शस्त्राभेद्यं कवचं येषामिति ।
दानव-
विशेषे, पुंलिङ्गो बहुवचनान्तः । ते तु
इन्द्रादि-
ष्टेनार्ज्जुनेन निहताः । यथा, महाभारते ।
३ ।
१६८ । ७० -- ७२ ।
“ततो मामब्रवीद्राजन् ! प्रहस्य बलवृत्रहा ।
नाविषह्यन्तवास्तीति त्रिषु लोकेषु किञ्चन
॥
निवातकवचा नाम दानवा देवशत्रवः ।
समुद्रकुक्षिमाश्रित्य दुर्गे प्रतिवसत्युत ॥
तिस्रः कोट्यः समाख्याता
स्तुल्यरूपबलप्रभाः ।
तांस्तत्रजहि कौन्तेय ! गुर्व्वर्थस्ते
भविष्यति ॥”
एतद्विवरणविस्तृतिस्तु तत्रैव विशेषतो
द्रष्टव्या ॥)

**निवापः**, पुं, (नितरामुप्यते इति । नि + वप + घञ्
।)

मृतोद्देश्यकदानम् । तत्पर्य्यायः ।
पितृदानम् २ ।
इत्यमरः । २ । ७ । ३१ ॥ पितृतर्पणम् ३
। इति हेम-
चन्द्रः । ३ । ४० ॥ निवपनम् ४
पितृदानकम् ५ ।
इति शब्दरत्नावली ॥ (यथा, रघुवंशे । ८ ।
८६ ।
“अपशोकमनाः कुटुम्बिनीं
अनुगृह्णीष्व निवापदत्तिभिः ॥”)

आश्रयस्थानम् । यथा, भागवते । १ ।
११ । २७ ।
“श्रियो निवासो यस्योरः पानपात्रं मुखं
दृशाम् ।
बाहवो लोकपालानां सारङ्गाणां
पदाम्बुजम् ॥”
वस्त्रम् । यथा, हरिवंशे । १८१ । ४८ ।
“नमश्चर्म्मनिवासाय नमस्ते पीतवाससे
॥”
भावे घञ् । वासः । यथा, महाभारते ।
१ । १८६ । ६ ।
“कुम्भकारस्य शालायां निवासं चक्रिरे
तदा ॥”)

**निवासी**, [न्] त्रि, (निवसतीति । नि + वस् +

णिनि ।) निवासविशिष्टः । निवासकर्त्ता ।
यथा, --
“ते तु कासरमश्नन्ति देवरः पतिरुत्कले
।
धन्याः कालीनदीतीरे
कान्यकुब्जनिवासिनः ॥”
इति काव्योदयः ॥

**निविडं**, त्रि, (नितरां विडतीति । नि + विड

आक्रोशे + क ।) निरवकाशम् ।
तत्पर्य्यायः ।
निरन्तरम् २ निविरीषम् ३ घनम् ४ ।
सान्द्रम् ५
नीरन्ध्रम् ६ बहुलम् ७ दृढम् ८ गाढम् ९
अविरलम् १० । इति हेमचन्द्रः । ६ ।
८२ ॥
(यथा, आर्य्यासप्तशत्याम् । ३२० ।
“निविडघटितोरुयुगलां
श्वासोत्तब्धस्तनार्पित-
व्यजनाम् ॥”
यथा, च रघुवंशे । ९ । ५८ ।
“तस्यापरेष्वपि मृगेषु शरान् मुमुक्षोः
कर्णान्तमेत्य बिभिदे निविडोऽपि मुष्टिः
॥”
नासिकाया नतम् । नि + “नेर्बिडच्बिरी-
सचौ ।” ५ । २ । ३२ । इति विडच् ।
अव-

**निवीती**, [न्] पुं, (निवीतमस्यास्तीति ।)

निवीतयुक्तः । कण्ठलम्बितयज्ञसूत्रविशिष्टः ।
यथा, --
“कृतोपवीती देवेभ्यो निवीती च भवेत्ततः ।
मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्त्रानृषींस्तथा
॥”
इत्याह्निकतत्त्वम् ॥

**निवृतं**, त्रि, (निव्रियते आच्छाद्यते स्मेति । नि +

वृ + क्तः ।) निवीतम् । उडनी इति भाषा ॥
इत्यमरटीकायां स्वामी ॥ परिवेष्टितम् । इति
हेमचन्द्रः ॥

**निवृत्तः**, त्रि, (नि + वृत् + क्तः ।) निवृत्ति-

विशिष्टः । विरतः । यथा, श्रीभागवते । १० ।
१ । ४ ।
“निवृत्ततर्षैरुपगीयमाना-
द्भवौषधाच्छ्रोत्रमनोऽभिरामात् ।
क उत्तमश्लोकगुणानुवादात्
पुमान् विरज्येत विना पशुघ्नात् ॥”

**निवृत्तात्मा**, [न्] पुं, (शरीरबन्धनात् निवृत्त

आत्मा स्वरूपं यस्येति ।) विष्णुः । (यथा,
महाभारते । १३ । १४९ । ३८ ।
“आवर्त्तनो निवृत्तात्मा संवृतः संप्रतर्द्दनः
॥”)

**निवृत्तिः**, स्त्री, (नि + वृत् + क्तिन् ।) निर्वृत्तिः ।

अप्रवृत्तिः । तत्पर्य्यायः । उपरमः २ विरतिः
३

अपरतिः ४ उपरतिः ५ आरतिः ६ । इति हेम-
चन्द्रः ॥ (यथा, गरुडपुराणे १९६ अध्याये ।
"वास्योदकञ्च समधु पीतमन्तर्गतस्य वै ।
पापरोगस्य सन्तापनिवृत्तिं कुरुते शिवः ॥")
प्रवृत्तिप्रागभावः । यथा, "प्रवृत्त्युपाधिना
विनाशं प्राप्स्यन् प्रागभाव एव स्वनिवृत्तिनिरा-
करणात् साध्यमानो निवृत्तिरुच्यते ।" इत्येका-
दशीतत्त्वे कलञ्जाधिकरणविचारः ॥

**निवेदनं**, क्ली, (निविद्यते विज्ञाप्यतेऽनेनेति । नि +
विद् + ल्युट् ।) आवेदनम् । विज्ञापनम् ।
समर्पणम् । यथा, --
"श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्च्चनं वन्दनं दास्यं सख्यमात्मनिव्वेदनम् ॥
इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ॥"
इति श्रीभागवतम् । ७ । ५ । २३ ॥

**निवेदितं**, त्रि, (नि + विद् + कर्म्मणि क्तः ।)
कृतनिवेदनम् । यथा, नन्दिकेश्वरपुराणे ।
"मया निवेदितं भक्त्या गृहाण परमेश्वरि ! ॥"

**निवेशः**, पुं, (नि + विश् + घञ् ।) विन्यासः ।
(निविशत्यस्मिन्निति । अधिकरणे घञ् ।)
शिविरम् । (यथा, महाभारते । ५ । ८ । २ ।

**निवेश्यः**, त्रि, (नि + विश + ण्यत् ।) निवेशनीयः ।
यथा, वाधटीकायां गदाधरः । प्रतिबन्धक-
तायां निवेश्यत्वादिति शङ्क्यते ॥ (यथा, हरि-
वंशे । ११५ । २८ ।
"तदियं पूः प्रकाशार्थं निवेश्या मयि सुव्रत ! ॥"
शोधनीयः । यथा, महाभारते । ३ । ३६ । १६ ।
"अवश्यं राजपिण्डस्तैर्निवेश्य इति मे मतिः ॥"
"निवेश्यः आनृण्यार्थं शोधनीयः ।" इति तट्टी-
कायां नीलकण्ठः ॥ विवाहार्हः । यथा, महा-
भारते । १ । १९२ । ९ ।
"भवान्निवेश्यः प्रथमं ततोऽयं
भीमो महाबाहुरचिन्त्यकर्म्मा ॥"
"निवेश्यः विवाह्यः ।" इति तत्र नीलकण्ठः ॥)

**निशठः**, पुं, बलदेवपुत्त्रः । यथा, "बलदेवोऽपि
रेवत्यां निशठोल्मुकौ पुत्त्रावजनयत् ।" इति
विष्णुपुराणे । ४ अंशे १५ अध्यायः ॥

**निशमनं**, क्ली, (नि + शम + णिच् + ल्युट् ।)
दर्शनम् । श्रवणम् । इति मेदिनी । ने, १९० ॥

**निशा**, स्त्री, (नितरां श्यति तनूकरोति व्यापारा-
निति । नि + शो + कः । टाप् ।) रात्रिः ।
तत्पर्य्यायः । रात्री २ रक्षोजननी ३ शत्वरी ४
चक्रभेदिनी ५ घोरा ६ श्यामा ७ याम्या ८
दोषा ९ तुङ्गी १० भौती ११ शताक्षी १२
वास्तवा १३ उषा १४ वासतेयी १५ तमा १६
निट् १७ । इति त्रिकाण्डशेषः ॥ अवशिष्टो
रात्रिशब्दे द्रष्टव्यः ॥ (यथा, ऋतुसंहारे ।

**निशागणः**, पुं, (निशानां रात्रीनां गणः ।)
रात्रिसमूहः । तत्पर्य्यायः । गणरात्रम् २ ।
इति हेमचन्द्रः ॥

**निशाचरः**, पुं, (निशायां रात्रौ चरतीति ।
निशा + चर + "चरेष्टः ।" ३ । २ । १६ । इति
टः ।) राक्षसः । (यथा, रघुः । १० । ४५ ।
"अचिरात् यज्वभिर्भागं कल्पितं विधिवत् पुनः ।
मायाविभिरनालीढमादास्यध्वेनिशाचरैः ॥")
शृगालः । पेचकः । सर्पः । इति मेदिनी । रे,
२७२ ॥ चक्रवाकः । इति शब्दरत्नावली ॥
भूतः । इति धरणिः ॥ चोरकः । इति राज-
निर्घण्टः ॥ (अयन्तु ग्रन्थिपर्णस्य भेदः । भटे
उर इति नेपालदेशे भवति ।
"निशाचरो धनहरः कितवो गणहासकः ।
रोचको मधुरस्तिक्तः कटुपाके कटुर्लघुः ॥
तीक्ष्णो हृद्यो हिमो हन्ति कुष्ठकण्डूकफा-
निलान् ।
रक्षाश्रीस्वेदमेदोऽस्रज्वरगन्धविषव्रणान् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
महादेवः । यथा, महाभारते । १३ । १७ । ६७ ।
"वसुवेगो महावेगो मनोवेगो निशाचरः ॥")
रात्रिचरमात्रे, त्रि ॥

**निशाचरी**, स्त्री, (निशायां चरतीति । चर +
टः । स्त्रियां ङीप् ।) कुलटा । इति मेदिनी ।
रे, २७३ ॥ केशिनीनामगन्धद्रव्यम् । इति जटा-
धरः ॥ राक्षसी । यथा, --
"अनिर्वृतिनिशाचरी मम गृहान्तराले स्थिता
निहन्ति निगमागमस्मृतिपुराणशास्त्रोदिताम् ।
क्रियां तदनुगा सखी हृदय एव चिन्ताविश-
त्तयोर्द्दमनकारणं त्वमसि केवलं भूपते ॥"
इत्युद्भटः ॥
(यथा च रघुः । ११ । २० ।
"राममन्मथशरेण ताडिता
दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्द्रनोक्षिता

"तस्य सेनानिवेशोऽभूदध्यर्द्धमिव योजनम् ॥")
उद्वाहः । इति मेदिनी । शे, २१ ॥
(यथा,
महाभारते । १ । १४ । १ ।
"ततो निवेशाय तदा स विप्रः संशितव्रतः ।
महीञ्चचार दारार्थी न च दारानविन्दत ॥")
निवेशनम् । इति शब्दरत्नावली ॥
(यथा,
देवीभागवते । ३ । १९ । ४४ ।
"निवेशार्थं गृहं दत्तमन्नपानादिकं तथा ।
सेवकं समनुज्ञाप्य परिचर्य्यार्थमेव च ॥")

**निवेशनं**, क्ली, (निविशत्यस्मिन्निति । नि + विश् + अधिकरणे ल्युट् ।) गृहम् । इति जटाधरः ॥ (यथा, देवीभागवते । ३ । २४ । ४९ ।
"स्त्रियोपसंयुतः सोऽथ प्राप्यायोध्यां सुदर्शनः ।
सम्मान्य सर्व्वलोकांश्च ययौ राजा निवेशनम् ॥")
नगरम् । इति हेमचन्द्रः ॥ (यथा, रामायणे ।
७ । ७५ । १८ ।
"यो हि वंशं समुत्पाद्य पार्थिवस्य निवेशने ।
न विधत्ते नृपं तत्र नरकं स हि गच्छति ॥")
प्रवेशः । निवेशनमस्य व्याहृतिभिर्हुत्वेति
स्मृतिः ॥ (नि + विश + णिच् + भावे ल्युट् ।
स्थापनम् । यथा, रामायणे । ७ । ७५ । १७ ।
"निवेशय महाबाहो भरतं यद्यपेक्षसे ।
१ । ९ ।
"सितेषु हर्म्येषु निशासु योषितां
सुखप्रसुप्तानि मुखानि चन्द्रमाः ।
विलोक्य निर्य्यन्त्रणमुत्सुकश्चिरं
निशाक्षये याति ह्रियैव पाण्डुताम् ॥")
हरिद्रा । दारुहरिद्रा । इति मेदिनी । शे, ९ ॥
(अस्याः पर्य्यायो यथा, --
"हरिद्रा पीतिका गौरी काञ्चनी रजनी निशा ।
मेहघ्नी रञ्जनी पीता वर्णिनी रात्रिनामिका ॥"
इति वैद्यकरत्नमालायाम् ॥)
मेषवृषमिथुनकर्कटधनुर्मकरलग्नानि । यथा, --
"अजगोपतियुग्मञ्च कर्किधन्विमृगास्तथा ।
निशासंज्ञाः स्मृताश्चैते शेषाश्चान्ये दिनात्मकाः ॥"
इति ज्योतिस्तत्त्वम् ॥

**निशाकरः**, पुं, (निशां करोतीति । निशा + कृ + "दिवाविभानिशेति ।" ३ । २ । २१ । इति टः ।) चन्द्रः । इत्यमरटीका ॥ (यथा, पञ्चतन्त्रे । २ । २० ।
"रविनिशाकरयोर्ग्रहपीडनं
गजभुजङ्गविहङ्गमबन्धनम् ।
मतिमताञ्च निरीक्ष्य दरिद्रतां
विधिरहो बलवानिति मे मतिः ॥")
कुक्कुटः । इति शब्दरत्नावली ॥
(निशाकरश्चन्द्रः शिरोदेशेऽस्त्यस्येति । अच् । महादेवः । यथा,
महाभारते । १३ । १७ । ७७ ।
"इतिहासः सकल्पश्च गौतमोऽथ निशाकरः ॥")
जीतितेशवसतिं जगाम सा ॥"
"अत्र ताडकायाः अभिसारिकया समाधिरभिधीयते रामेति । निशासु चरतीति निशाचरी राक्षसी अभिसारिका च ।" इति तत्र मल्लिनाथः ॥)

**निशाचर्म्म**, [न्] क्ली, (निशायाश्चर्म्मेव आवरकत्वात् ।) अन्धकारः । इति त्रिकाण्डशेषः ॥

**निशाजलं**, क्ली, (निशोद्भवं जलम् । मध्यपदलोपिसमासः ।) हिमम् । इति त्रिकाण्डशेषः ॥

**निशाटः**, पुं, (निशायां रात्रौ अटतीति । अट + अच् ।) पेचकः । इति हेमचन्द्रः । ४ । ३९० ॥
निशाचरे, त्रि ॥

**निशाटकः**, पुं, (निशायां अटति निशावत् कृष्णत्वं अटतीति वा । अट् + ण्वुल् ।) गुग्गुलुः । इति राजनिर्घण्टः ॥ (रात्रिचरे, त्रि ॥)

**निशाटनः**, पुं, (निशायां अटतीति । अट गतौ + ल्युः ।) पेचकः । इति हलायुधः ॥ निशाचरे, त्रि ॥

| | | |
|---|---|---|
| शूरस्तं कृतविद्यश्च समर्थश्च निवेशने ॥"<br>प्रवेशके, त्रि ॥ यथा, हरिवंशे भविष्य-<br>पर्व्वणि । १८ । १३ ।<br>"आकाशेऽवस्थितः शब्दः<br>सर्व्वश्रोत्रनिवेशनः ।<br>नमस्ते भगवन् ! विष्णो तुभ्यं<br>शब्दात्मने नमः ॥")<br>**निवेशनीयः**, त्रि, (नि + विश + अनीयर् ।) निवेश-<br>नार्हः । यथा ।<br>तत्पुरुषीयसाधारण्यादिशरीर<br>निवेशनीय इति नायं दोषः । इति सव्यभि-<br>चारे गदाधरः ॥ | | |

**निशातः**, त्रि, (नि + शो निशाने + क्तः । “शाच्छो-
रन्यतरस्याम् ।” ७ । ४ । ४१ । इति पक्षे
इत्वाभावः ।) शाणितः । इति हेमचन्द्रः ॥

**निशादः**, पुं, (निशायां अत्तिभक्षयतीति । अद् +
अच् ।) निषादः । इत्यमरटीकायां रमानाथः ॥
त्रि, निशाभुक् ॥

**निशादिः**, स्त्री, (निशाया आदिर्यत्र ।) सन्ध्या ।
इति राजनिर्घण्टः ॥

**निशान्तं**, क्ली, (निशम्यते विश्रम्यतेऽस्मिन्निति ।
नि + शम + अधिकरणे क्तः ।) गृहम् । इत्य-
मरः । २ । २ । ५ ॥ (यथा, रघुः । १६ । ४०
।
“तस्याः स राजोपपदं निशान्तं
कामीव कान्ताहृदयं प्रविश्य ॥”
निशाया अन्तो यत्र ।) उषा । (यथा, मनुः । ४
। ९९ ।
“न निशान्ते परिश्रान्तो ब्रह्माधीत्य पुनः
स्वपेत् ॥”)
शान्ते, त्रि । इति मेदिनी । ते, ११९ ॥

**निशान्धा**, स्त्री, (निशायां अन्धयति उपसंहरति
आत्मानमिति । अन्ध उपसंहारे + अच् +
टाप् ।) जतुकालता । इति राजनिर्घण्टः ॥
(निशायां अन्धः ।) रात्र्यन्धे, त्रि ॥

**निशापतिः**, पुं, (निशायाः पतिः ।) चन्द्रः ।
(यथा, सूर्य्यसिद्धान्ते । २ । ४७ ।
“स्वमन्दभुक्तिसंशुद्धा मध्यमुक्तिर्निशापतेः ।
दोर्ज्यान्तरादिकं कृत्वा भुक्तावृणधनं भवेत्
॥”)
कर्पूरः । इत्यमरः ॥ (निशायामेव पतिरिति
विग्रहे क्वचित् व्यञ्जनाशक्त्या उपपतिरपि ।
यथा, आर्य्यासप्तशत्याम् । ३५२ ।
“प्राङ्गणकोणेऽपि निशापतिः स तापं सुधा-
मयो हरति ।
यदि मां रजनिज्वर इव सखि ! स न निरु-
णद्धि गेहपतिः ॥”)

**निशापुष्पं**, क्ली, (निशायां रात्रौ पुष्प्यति विक-

**निशारत्नं**, क्ली, (निशाय निशायां वा रत्नमिव ।)
चन्द्रः । इति हेमचन्द्रः । २ । १९ ॥

**निशारुकः**, पुं, रूपकभेदः । यथा, --
“दृढः प्रौढोऽथ खचरो
विभवश्चतुरक्रमः ।
निशारुकः प्रतितालः कथिताः सप्त
रूपकाः ॥”
तस्य लक्षणं यथा, --
“लघुद्वन्द्वं गुरुद्वन्द्वं तन्न्यासतालकः
स्मृतः ।
चतुर्विंशतिवर्णैस्तु रसे हास्ये निशारुकः
॥”
तालविशेषः । यथा, --
“प्रविश्य नर्त्तको रङ्गं विकीर्य्य
कुसुमादिकम् ।
निशारुकेण तालेन कोमलं नृत्यमाचरेत्
॥”
इति सङ्गीतदामोदरः ॥

**निशावनः**, पुं, (निशावत् अन्धकारजनकं वनं
यत्र ।) शणः । इति राजनिर्घण्टः ॥

**निशावृन्दं**, क्ली, (निशानां वृन्दं समूहः ।)
रात्रिगणः । बहुनिशाः । इति
शब्दरत्नावली ॥

**निशावेदी**, [न्] पुं, (निशां निशापरिमाणं वेत्ति
वेदयति वा । विद् वा वेदि + णिनिः ।)
कुक्कुटः ।
इति हेमचन्द्रः । ४ । ३९० ॥

**निशाहसः**, पुं, (निशायां रात्रौ हसो हासो
विकासो यस्य ।) कुमुदम् । इति
त्रिकाण्डशेषः ।

**निशाह्वा**, स्त्री, (निशाया आह्वा आख्या आह्वा
यस्याः ।) हरिद्रा । इत्यमरः । २ । ९ ।
४१ ॥

**निशितं**, क्ली, (नि + शो + क्तः । “शाच्छोरन्य-

**निशीथिनीनाथः**, पुं, (निशीथिन्या नाथः ।)
चन्द्रः । इति हलायुधः ॥

**निशीथ्या**, स्त्री, रात्रिः । इति भूरिप्रयोगः ॥

**निशुम्भः**, पुं, (नि + शुन्भ हिंसायाम् + भावे
घञ् ।) वधः । इति हेमचन्द्रः । ३ । ३६३
॥
दानवविशेषः । यथा, --
“कश्यपस्य दनुर्नाम
भार्य्यासीद्द्विजसत्तम! ।
तस्यास्त द्वौ सुतावास्तां
सहस्राक्षाद्बलाधिकौ ॥
ज्येष्ठः शुम्भ इति ख्यातो
निशुम्भश्चापरासुरः ।
तृतीयो नमुचिर्नाम महाबलसमन्वितः ॥”
इति वामनपुराणे ५२ अध्यायः ॥
(अयं हि भगवत्या निहतः । इति
मार्कण्डेय-
पुराणम् ॥ अपरोऽसुरविशेषः । यदुक्तं
मार्क-
ण्डेये । ९१ । ३६ -- ३७ ।
“वैवस्वतेऽन्तरे प्राप्तेऽष्टाविंशति मे युगे ।
शुम्भो निशुम्भश्चैवान्यावुत्पत्स्येते
महासुरौ ॥
नन्दगोपगृहे जाता यशोदागर्भसम्भवा ।
ततस्तौ नाशयिष्यामि
विन्ध्याचलनिवासिनी ॥”)

**निशुम्भनं**, क्ली, (नि + शुम्भ हिंसायाम् + भावे
ल्युट् ।) मारणम् । इति हलायुधः ॥

**निशुम्भमर्द्दिनी**, स्त्री, (निशुम्भं मर्द्दयतीति । मृद्
+ णिनिः । ङीप् ।) दुर्गा । इति हेमचन्द्रः ॥

**निशुम्भशुम्भमथनी**, स्त्री, (निशुम्भं शुम्भञ्च मथ्ना-
तीति । मन्थ विलोडने + ल्युः । नलोपः ।
ततो
ङीष् ।) दुर्गा । यथा, देवीपुराणे ।
“निशुम्भशुम्भमथनी देवी वेदेषु गीयते ॥”

**निशुम्भी**, [न्] पुं, (निशुम्भो मोहनाशोऽस्त्य-

सतीति । पुष्प विकासे + अच् ।) उत्पलम् ।
इति राजनिर्घण्टः ॥

**निशाबलः**, पुं, (निशायां रात्रौ बलं यस्य ।)

मेषवृषमिथुनकर्कटधनुर्मकरराशयः । इति
ज्योतिषम् ॥

**निशाभङ्गा**, स्त्री, (निशा हरिद्रा तद्वत् भङ्गो

यस्याः ।) दुग्धपुच्छी । इति शब्दचन्द्रिका ॥
दुग्धपेया इति भाषा ॥

**निशामणिः**, पुं, (निशाया मणिरिव ।) चन्द्रः ।

इति त्रिकाण्डशेषः ॥

**निशामनं**, क्ली, (नि + शम + णिच् + ल्युट् ।)

दर्शनम् । आलोचनम् । इति मेदिनी । ने,
१९० ॥ श्रवणम् । इति हेमचन्द्रः । ३ । २४०
॥

**निशामृगः**, पुं, (निशाचरो मृगः पशुः ।)

शृगालः । इति शब्दरत्नावली ॥

**निशारणं**, क्ली, (नि + शृ गि हिंसे + णिच् +

ल्युट् ।) मारणम् । इत्यमरः । २ । ८ । ११२
॥
(निशाया रणम् ।) रात्रियुद्धम् ॥ (निशाया
रणः शब्दः ।) रात्रिशब्दे, पुं ॥

तरस्याम् ।” ७ । ४ । ४१ । इति इत्वम्
।)
लौहम् । इति राजनिर्घण्टः ॥

**निशितः**, त्रि, (नि + शो + क्तः ।) शाणितः ।

इत्यमरः । ३ । १ । ९१ ॥ (यथा,
महाभारते ।
१ । १३४ । ९५ ।
“तद्वाक्यसमकालन्तु वीभसुनिशितैः
शरैः ।
अवार्य्यैः पञ्चभिर्ग्राहं
मग्नमम्भस्यताडयत् ॥”)

**निशिपुष्पा**, स्त्री, (निशि पुष्प्यति विकाशते इति ।

पुष्प + अच् । टाप् ।) शेफालिका । इति
त्रिकाण्डशेषः ॥

**निशिपुष्पिका**, स्त्री, (निशिपुष्पा + स्वार्थे कन् ।)

शेफालिका । इति शब्दरत्नावली ॥

**निशिपुष्पी**, स्त्री, शेफालिका । निशि रात्रौ विक-

शितं पुष्पमस्या इति व्युत्पत्त्या
मध्यपदलोपः
सप्तम्या अलुक् च ततो जातेरत इति
ईप् ॥

**निशीथः** (नितरां शेतेऽत्रेति । नि + शी +

“निशीथगोपीथावगथाः ।” उणां । २ ।
९ ।
इति थक्प्रत्ययेन निपातनात् साधुः ।)
अर्द्ध-
रात्रः । इत्यमरः । १ । ४ । ६ ॥ (यथा,
रघुः । ३ । १५ ।
“निशीथदीपाः सहसा हतत्विषा
बभूवुरालेख्यसमर्पिता इव ॥”)
रात्रिमात्रम् । इति मेदिनी । थे, २० ॥
(यथा,
ऋतुसंहारे । १ । ३ ।
“सुतन्त्रीगीतं मदनस्य दीपनं
शुचौ निशीथेऽनुभवन्ति कामिनः ॥”)

**निशीथिनी**, स्त्री, (निशीथोऽस्त्यस्या इति ।

इनिः । ङीप् ।) रात्रिः । इत्यमरः । १ ।
४ । ४ ॥

स्येति । इनिः ।) बुद्धविशेषः । तत्पर्य्यायः
।
हेरम्बः २ हेरुकः ३ चक्रसम्बरः ४ देवः ५
वज्र-
कपाली ६ शशिशेखरः ७ वज्रटीकः ८ ।
इति
त्रिकाण्डशेषः ॥

**निशैतः**, पुं, (निशायामपि एतं ईषद्गमनं यस्य ।)

वकः । इति त्रिकाण्डशेषः ॥

**निश्चयः**, पुं, (निश्चीयतेऽनेनेति । निर् + चि +

“ग्रहवृदृनिश्चिगमश्च ।” ३ । ३ । ५८ ।
इति
अप् ।) निःसंशयज्ञानम् । तत्पर्य्यायः ।
निर्णयः
२ । इत्यमरः । १ । ५ । ३ ॥ निर्णयनम् ३
निचयः ४ । इति शब्दरत्नावली ॥ (यथा,
देवी-
भागवते । १ । १९ । ३५ ।
“देहोऽयं मम बन्धोऽयं न ममेति च मुक्तता
।
तथा धनं गृहं राज्यं न ममेति च निश्चयः
॥”)
“तदभावा प्रकारा धीस्तत्प्रकारा तु
निर्णयः ॥”
इति भाषापरिच्छेदः ॥
(अर्थालङ्कारविशेषः । तल्लक्षणादिकं यथा,
साहित्यदर्पणे । १० । ५६ ।
“अन्यन्निषिध्य प्रकृतस्थापनं निश्चयः
पुनः ॥”
उदाहरणं यथा, --
“वदनमिदं न सरोजं नयने नेन्दीवरे एते ।
इह सविधे मुग्धदृशो मधुकर ! न मुधा
परि-
भ्राम्य ॥”)

**निश्चला**, स्त्री, (निश्चलतीति । निर् + चल +

अच् । टाप् ।) शालपर्णी । इति
राजनिर्घण्टः ॥

पृथिवी ॥ (नदीविशेषः । यथा, मात्स्ये । ११३ । २२ ।
"कौशिकी तु तृतीया च निश्चला गण्डकी तथा ।
इक्षुर्लौहितमित्येता हिमवत्पार्श्वनिः सृताः ॥")
अचले, त्रि । यथा, --
"निवसतु तव गेहे निश्चला सिन्धुपुत्त्री ॥"
इत्याद्युद्भटः ॥

**निश्चलाङ्गः**, पुं, (निश्चलवत् अङ्गं यस्य ।) वकः ।
इति राजनिर्घण्टः ॥ पर्व्वतादिः । स्पन्द-रहिते, त्रि ॥

**निश्चायकः**, त्रि, (निश्चिनोतीति । निर् + चि +
ण्वुल् ।) निश्चयकर्त्ता । निर्णायकः । यथा, अनुपाधित्वनिश्चायकदर्शनत्वे न हेतुत्वमिति
व्याप्तिग्रहमाथुरी ॥

**निश्चारकः**, पुं, (निश्चरतीति । निर् + चर +
ण्वुल् ।) पुरीषक्षयः । वायुः । स्वच्छन्दम् । इति मेदिनी । के, १९५ ॥

**निश्चिन्तः**, त्रि, (निर्गता चिन्ता यस्मात् ।)
चिन्तारहितः । यथाह कश्चित् ।
"मूर्खत्वं सुलभं भजस्व कुमते ! मूर्खस्य चाष्टौ
गुणा
निश्चिन्तो बहुभोजकोऽतिमुखरो रात्रिन्दिवा स्वप्नभाक् ।
कार्य्याकार्य्यविचारणादिरहितो मानापमाने समे
दत्त्वा सर्व्वजनस्य मूर्द्ध्नि चरणौ मूर्खश्चिरं जीवतु ॥"

**निश्चीयमानः**, त्रि, (निर् + चि + कर्म्मणि शानच् ।)
निश्चयविषयः । यथा । ननु तथापि एवकारस्य
निश्चीयमानस्यैव सार्थकत्वाभावात् कुतः प्रकृति-

**निषङ्गः**, पुं, (नितरां सजन्ति शरा यत्र । नि +
सन्ज + अधिकरणे घञ् ।) तूणीरः । इत्य-
मरः । २ । ८ । ८८ ॥ (यथा, रघुः । २ । ३० ।
"ततो मृगेन्द्रस्य मृगेन्द्रगामी
वधाय वध्यस्य शरं शरण्यः ।
जाताभिषङ्गो नृपतिर्निषङ्गा-
दुद्धर्त्तुमैच्छत् प्रसभोद्धृतारिः ॥")
सङ्गः । इति मेदिनी । गे, ४० ॥

**निषङ्गथिः**, पुं, (नि + सन्ज + "नौ षन्जेर्घथिन् ।"
उणां । ४ । ८७ । इति भावे घथिन् । घित्त्वात्
कुत्वम् । ततः षत्वम् ।) समालिङ्गः । आलि-
ङ्गनम् । इत्युणादिकोषः । १ । १६१ ॥ धन्वी ।
रथः । स्कन्धः । तृणम् । सारथिः । इति
संक्षिप्तसारोणादिवृत्तिः ॥ (आलिङ्गके, त्रि ।
इत्युज्ज्वलदत्तः ॥)

**निषङ्गी**, [न्] पुं क्ली, (निषङ्गोऽस्त्यस्येति ।
निषङ्ग + इनिः ।) धनुर्धरः । इत्यमरः । २ ।
८ । ६९ ॥ (यथा, रघुः । ७ । ५६ ।
"रथी निषङ्गी कवची धनुष्मान्
दृप्तः स राजन्यकमेकवीरः ॥"
स्वनामख्यातो धृतराष्ट्रपुत्त्रः । इति महा-
भारतम् । १ । ११७ । ११ ॥)

**निषण्णः**, त्रि, (निषीदति स्मेति । नि + सद् +
गत्यर्थेति क्तः । "रदाभ्यां निष्ठातो नः पूर्ब्बस्य
च दः ।" ८ । २ । ४२ । इति निष्ठातस्य धातो-
र्दकारस्य च नः ।) उपविष्टः । यथा, --

द्विसहस्रयोजनविस्तीर्णः । इति श्रीभागवते ५
स्कन्धे १६ अध्यायः ॥ कठिनम् । देशविशेषः ।
(यथा, महाभारते । ३ । ५३ । ३ ।
"ब्रह्मण्यो वेदवित् शूरो निषधेषु महीपतिः ॥")
तद्देशीयराजः । इति मेदिनी । धे, ३३ ॥
निषादस्वरः । इति हेमचन्द्रः । ६ । ३७ ॥
(रामप्रपौत्त्रे सूर्य्यवंशीयनृपभेदे । यथा, हरि-
वंशे । १५ । २६ ।
"रामस्य तनयो जज्ञे कुश इत्यभिविश्रुतः ।
अतिथिस्तु कुशाज्जज्ञे निषधस्तस्य चात्मजः ॥")

**निषादः**, पुं, (निषद्यते ग्रामशेषसीमायाम् ।
यद्वा, निषीदति पापमत्र । नि + सद् + कर्म्मणि
अधिकरणे वा घञ् ।) चण्डालः । इत्यमरः ।
२ । १० । २० ॥ वेणशरीरोद्भवजातिविशेषः ।
यथा, अग्निपुराणे ।
"मथ्यमाने ततो राज्ञस्तस्मिन्नूरौ प्रजज्ञिवान् ।
ह्रस्वोऽतिपरुषः कृष्णस्तद्भयात् प्राञ्जलिः स्थितः ॥
ते मन्त्रैर्व्विह्वलं दृष्ट्वा निषीदेत्यब्रुवंस्तदा ।
निषादवंशकर्त्ता स बभूव मुनिसत्तमाः ! ॥
धीवरानसृजन् वापि वेणकल्मषसम्भवान् ।
ये चान्ये विन्ध्यनिलयाः शवरा नाहलादयः ॥
अधर्म्मरुचयो ये च वित्तैनान् वेणसम्भवान् ॥"
पारिभाषिकचण्डालो यथा, मार्कण्डेयपुराणे ।
"आशाकर्त्तुस्त्वदाता च दातुश्च प्रतिषेधकः ।
शरणागतं यस्त्यजति स चण्डालोऽधमो नरः ॥"
धीवरविशेषः । इति मेदिनी । दे, ३४ ॥

त्वामिति शब्दशक्तिप्रकाशिकाटीकायांराम-
भद्रः ॥

**निश्चुक्कणं**, क्ली, (निःशेषेण चुक्कणम् ।) दन्त-
शाणम् । इति त्रिकाण्डशेषः ॥ मिसी इति
भाषा ॥

**निश्चेष्टः**, त्रि, (निर्गता चेष्टा यस्मात् ।) चेष्टा-
रहितः । निश्चेष्टितः । यथा, --
“गलग्रहणनिश्चेष्टो दैत्यो निर्गतलोचनः ।
अव्यक्तरावो न्यपतत् सहवालो व्यसुर्व्रजे ॥”
इति श्रीभागवते दशमः ॥

**निश्वासः**, पुं, (नि + श्वस + भावे घञ् ।) बहि-
र्मुखश्वासः । तत्पर्य्यायः । पानः २ एतनः
३ ।
इति हेमचन्द्रः ॥ (यथा, ब्रह्मवैवर्त्ते । २ । १
। ८९ ।
“संहर्त्तुं सर्व्वव्रह्माण्डं शक्ता निःश्वासमात्रतः
॥”)

**निश्वाससंहिता** स्त्री, (निश्वासाख्या संहिता ।)
शिवप्रणीतशास्त्रविशेषः । यथा, --
“एवमभ्यर्थितस्तैस्तु पुराहं द्विजसत्तमाः ।
वेदक्रियासमायुक्तां कृतवानस्मि संहिताम् ॥
निश्वासाख्यां ततस्तस्यां लीना
वाभ्रव्यशाण्डिलाः ।
निश्वामहंहितायां हि लक्षमात्रप्रमाणतः ॥
सैव पाशुपती दीक्षा योगः पाशुपतस्य हि ।
एतस्माद्वेदमार्गाद्धि यदन्यदिह जायते ॥
तत् क्षुद्रकर्म्म विज्ञेयं रौद्रं शौचविवर्ज्जितम्
॥”
इति वराहपुराणम् ॥

“पादावमुञ्चयन्ती
श्रीर्देवक्याश्चरणान्तिके ।
निषण्णा पङ्कजे पूज्या नमो देव्यै श्रिया
इति ॥”
इति तिथ्यादितत्त्वम् ॥

**निषण्णकं**, क्ली, (निषण्ण + संज्ञायां कन् ।) सुनि-
षण्णकम् । इति शब्दरत्नावली ॥

**निषदः**, पुं, (निषीदन्ति षड्जादयः स्वरा यत्र ।
नि + सद् + बाहुलकात् अप् ।)
निषादस्वरः ।
इत्यमरटीकायां स्वामी ॥
(स्वनामख्यातनृप-
विशेषः । यथा, महाभारते । २ । ९ ।
१५ ।
“भङ्गासुरिः सुनीथश्च निषदोऽथ
वहीनरः ॥”)

**निषद्या**, स्त्री, (निषीदत्यस्यामिति । नि + सद +
“संज्ञायां समजनिषदेति ।” ३ । ३ ।
९९ ।
इति अधिकरणे क्यप् ।)
पण्यविक्रयशाला ।
इत्यमरः । २ । २ । २ ॥ हट्टः । इत्यन्ये
। इति
भरतः ॥ क्षुद्रखट्वा । इति त्रिकाण्डशेषः
॥

**निषद्वरः**, पुं, (निषीदन्ति विषण्णा भवन्ति जना
अत्रेति । नि + सद विषादे गतौ + “नौ
सदेः ।”
उणां । २ । १२४ । इति ष्वरच् ।
“सदि-
रप्रतेः ।” ८ । ३ । ६६ । इति षत्वम् ।)
कर्द्दमः ।
इत्यमरः । १ । १० । ९ ॥

**निषद्वरी**, स्त्री, (नि + सद विषादे + अधिकरणे
ष्वरच् । षित्त्वात् ङीप् ।) रात्रिः । इति
मेदिनी । रे, २७३ ॥

**निषधः**, पुं, पर्व्वतविशेषः । इत्यमरः । २ । ३ । ३
॥

(निषीदन्ति षड्जादयः स्वरा यत्र । नि +
सद् +
घञ् ।) सप्तस्वरान्तर्गतशेषस्वरः । स तु
नारदमते
हस्तिस्वरतुल्यस्वरः । अस्योच्चारणस्थानं
लला-
टम् । व्याकरणमते दन्तः । अयं वैश्यवर्णः ।
सर्व्वस्वराणां मध्ये उच्चः । अस्य जातिः
सम्पूर्णा ।
अस्य कूटतानाः ५०४० । प्रत्येकतानम्
५६
समुदायेन २८२२४० भवन्ति । अस्य
स्वरूपः
गणेशतुल्यः । कृष्णश्वेतवर्णः । स्थानं
पुष्कर-
द्वीपः । देवता सूर्य्यः । वारः शनिः । समयः
निशान्ते ८ दण्ड -- ३४ पलानि । अस्य
श्रुतिः
उग्रा शोभिनी च । मूर्च्छना मन्दरस्थाने
सखा । मध्यस्थाने अहङ्कृता । तारस्थाने
लोचना
च । निषादवर्ज्जिता रागिणी आसावरी
मल्लारी
च । नादपुराणमते । निःसन्तानोऽयम्
बीणायां धैवतावधिषड्जस्थानपर्य्यन्तं
प्रथम-
सप्तकतृतीयांशस्य
शेषसमुदायबीणातन्त्रीनिषा-
दस्थानं भवति । इति सङ्गीतशास्त्रम् ॥ * ॥
“षड्जादयः षडेतेऽत्र स्वराः सर्व्वे मनोहराः
निषीदन्ति यतो लोके निषादस्तेन कथ्यते
॥
चतस्रः पञ्चमे षड्जे मध्यमे श्रुतयो मताः ।
ऋषभे धैवते तिस्रो द्वे गान्धारनिषादके ॥”
इति सङ्गीतदामोदरः ॥
(अस्य असुरवंशे उत्पत्तिः । वैश्यो जातिः ।
विचित्रो वर्णः । पुष्करद्वीपे जन्म । ऋषि-
स्तुम्बुरुः । सूर्य्यो देवता । जगती छन्दः ।
करुणे
उपयोगित्वम् ॥ इति सङ्गीतदर्पणम् ॥)

|  | स तु इलावृतस्य दक्षिणे हरिवर्षस्य सीमा-<br>पर्व्वतः । प्रागायतः ।<br>अयुतयोजनोत्सेधः । |  |
| --- | --- | --- |

**निषादी**, [न्] पुं, (निषीदत्यवश्यमिति । नि + सद् + आवश्यके णिनिः ।) हस्त्यारोहः । इत्यमरः । २ । ८ । ५१ ॥ माहुत् इति ख्यातः ॥ (यथा, माघे । ५ । ४१ ।
"प्रत्यन्यदन्तिनिशिताङ्कुशदूरभिन्न-
निर्य्याणनिर्य्यदसृजं चलितं निषादी ॥"
उपविष्टे, त्रि । यथा, रघुः । १ । ५२ ।
"आतपात्ययसंक्षिप्तनीवारासु निषादिभिः ।
मृगैर्व्वर्त्तितरोमन्थमुटजाङ्गनभूमिषु ॥")

**निषिद्धं**, त्रि, (निषिध्यते स्मेति । नि + सिध + क्तः ।) निषेधविषयम् । यथा, --
"तीर्थे तिथिविशेषे च गङ्गायां प्रेतपक्षके ।
निषिद्धेऽपि दिने कुर्य्यात्तर्पणं तिलमिश्रितम् ॥"
इति तिथितत्त्वम् ॥
निषिद्धकर्म्माणि यथा, --
मान्धातोवाच ।
"ब्रूहि कर्म्मान् सुखोपायान् मद्विधानां सुखावहान् ।
निषिद्धमपि यद्येषां तदेव प्रथमं वद ॥
नारद उवाच ।
ज्याकर्षणं शत्रुनिवर्हणञ्च
कृषिर्ब्बणिज्या पशुपालनञ्च ।
शुश्रूषणञ्चापि तथार्थहेतो-
रकार्य्यमेतत् परमं ब्राह्मणस्य ॥
राजप्रैष्यं कृषिधनं जीवनञ्च बणिज्यया ।
कौटिल्पं कौलटीयञ्च कुषीदञ्च विवर्ज्जयेत् ॥
शूद्रो राजन् ! स भवति धर्म्मपितो दुराचरः ।
वृषलीं रमते यस्तु पिशुनो नर्त्तनस्तथा ॥
ग्रामप्रेष्यो विकर्म्मा च यो द्विजश्चरिताच्च्युतः ।
वेदानपि जपन् शूद्रैः समः स परिकीर्त्तितः ।
कृत्येष वर्ज्जनीयोऽसौ वैदिके तान्त्रिकेऽपि च ॥
निर्म्मर्य्यादि चाशुचौ क्रूरवृत्ते
हिंसात्मके त्यक्तधर्म्मे श्ववृत्ते ।
हव्यञ्च कव्यञ्च न देयमेव
दानञ्च दत्तं विफलं नरेन्द्र ! ॥
अपि च ।
"यस्तु भागवतान् दृष्ट्वा भूत्वा भागवतः शुचिः ।
अभ्युत्थानं न कुर्व्वीत अहं तेनापि हिंसितः ॥
यश्च कन्यां पिता दत्त्वा न प्रयच्छति तां पुनः ।
अष्टौ पितृगणास्तेन हिंसिता नात्र संशयः ॥
भार्य्यां प्रियसखीं ये तु साध्वीं हिंसन्ति निर्घृणाः ।
न ते नृतां प्राप्नुवन्ति हिंसका दुष्टयोनिजाः ॥
ब्रह्मघ्नश्च कृतघ्नश्च गोघ्नश्च कृतपापकाः ।
एतान् शिष्यान् विवर्ज्जेत उक्ता ये चान्यपातकाः ॥
शालपत्रे न भोक्तव्यं न च्छेत्तव्यं कदाचन ।
अश्वत्थो वटवृक्षश्च न च्छेत्तव्यौ कदाचन ॥
न च्छेत्तव्यो विल्ववृक्ष उडुम्बरश्च कदाचन ।
कर्म्मण्याश्चैव ये वृक्षा न च्छेत्तव्याः कदाचन ॥
यदीच्छेत् परमां सिद्धिं मोक्षधर्म्मं सनातनम् ।
भक्ष्याभक्ष्यञ्च ते शिष्य वेदितव्यं तदन्तरे ॥
करीरस्य वधः शस्तः फलान्यौडुम्बरस्य च ।
सद्योभक्षी भवेत्तेन अभक्ष्याः पूतिवासिकाः ॥
न भक्षणीयं वाराहं मांसं मत्स्यस्य सर्व्वशः ।
अभक्ष्या ब्राह्मणैर्ह्येतैर्दीक्षितर्हि न संशयः ॥

**निषेकादिकृत्**, पुं, (निषेकादिं गर्भाधानादिकं करोतीति । निषेकादि + कृ + क्विप् ।) गर्भाधानादिकर्त्ता । आदिना सीमन्तोन्नयनादेर्म्मन्त्रविद्यादानादेश्च ग्रहणं तत्कर्त्ता पित्रादिर्गुरुः स्यात् । इत्यमरभरतौ ॥

**निषेधः**, पुं, (नि + सिध् + घञ् ।) प्रतिषेधः । निवृत्तिः । विधिविपरीतः । यथा, --
"तिथीनां पूज्यता नाम कर्म्मानुष्ठानतो मता ।
निषेधस्तु निवृत्तात्मा कालमात्रमपेक्षते ॥"
इति तिथितत्त्वम् ॥

**निषेवणं**, क्ली, (नि + सेव + भावे ल्युट ।) सेवा । यथा, भागवते । १ । २ । १६ ।
"शुश्रूषोः श्रद्दधानस्य वासुदेवकथारुचिः ।
स्यान्महत्सेवया विप्राः पुण्यतीर्थनिषेवणात् ॥"

**निषेव्यः**, त्रि, (नि + सेव + भावे ण्यत् ।) सेवनीयः । यथा, भागवते । १ । १२ । २२ ।
"मृगेन्द्र इव विक्रान्तो निषेव्यो हिमवानिव ॥"

**निष्क**, क ङ माने । इति कविकल्पद्रुमः ॥ (चुरांआत्मं-सकं-सेट् ।) मूर्द्धन्यषमध्यः । क ङ, निष्कयते स्वर्णं बणिक् । इति दुर्गादासः ॥

**निष्कः**, पुं क्ली, (निश्चयेन कायति शोभते इति । निस् + कै + आतश्चेति कः ।) चत्वारः सुवर्णाः । चारि मोहर इति भाषा ॥ यथा, मनुः । ८ । १३७ ।
"धरणानि दश ज्ञेयः शतमानस्तु राजतः ।
चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः ॥"
साष्टशतसुवर्णः । हेम । उरोभूषणम् । (यथा, रामायणे । १ । ६ । ११ ।

राजन्यानां करादानं विना वैवाहिकञ्च यः ।
प्रतिग्रहः स निन्द्योऽत्र परत्र चासुखप्रदः ॥
युद्धे पलायनञ्चैव तथा कातरतार्थिषु ।
अपालनं प्रजानाञ्च दाने धर्म्मे विरक्तता ॥
अनवेक्षा स्वराष्ट्रस्य ब्राह्मणानामनादरः ।
अमात्यानामसम्मानं तेषां कर्म्मानवेक्षणम् ॥
भृत्यानाञ्च परीहासो निषिद्धः क्षत्त्रजन्म-
नाम् ॥
वैश्यानां धनलोभेन मिथ्यामूल्यप्रकाशनम् ।
अपालनं पशूनाञ्च अनिज्या विभवे सति ॥
शूद्राणाञ्च महाराज ! वृथैव धनसञ्चयः ।
शुश्रूषोः कृतकार्य्यस्य कृतसन्तानकर्म्मणः ॥
अभ्यनुज्ञातराज्यस्य शूद्रस्य जगतीपते ! ।
अल्पान्तरगतस्यापि दशधर्म्मगतस्य च ॥
आश्रमा विहिताः सर्व्वे वर्ज्जयित्वा निरा-
शिषम् ॥”
इति पाद्मे स्वर्गखण्डे २७ अध्यायः ॥

परिवादं न कुर्व्वीत न हिंसा वा
कदाचन ।
पैशुन्यञ्च न कर्त्तव्यं स्तैन्यं वापि
कदाचन ॥
अतिथिञ्चागतं दृष्ट्वा दूराध्वानागमं
क्वचित् ।
संविभागस्तु कर्त्तव्यो येन केनापि
पुत्त्रक ! ॥
गुरुपत्नी राजपत्नी ब्राह्मणी वा
कदाचन ।
मनसापि न गन्तव्या एवं विष्णुः
प्रभाषते ॥
कनकादीनि रत्नानि यौवनस्था च
कामिनी ।
तत्र चित्तं न कर्त्तव्यमेवं विष्णुः प्रभाषते
॥
दृष्ट्वा परस्य भाग्यानि आत्मनो
व्यसनन्तथा ।
तत्र मन्युर्न कर्त्तव्य एवं धर्म्मः सनातनः
॥”
इति वराहपुराणम् ॥
(निवारितम् । यथा, देवीभागवते । २ ।
६ । ६० ।
“मा मा मा मेति बहुधानिषिद्धोऽपि
तथाभृशम् ।
आलिलिङ्ग प्रियां दैवात् पपात
धरणीतले ॥”)

**निषेकः**, पुं, (निषिच्यते प्रक्षिप्यत इति । नि +
सिच् + घञ् ।) गर्भाधानम् । इति
निषेकादि-
कृत्शब्दटीकायां भरतः ॥ * ॥
“निषेकाल्लभते पत्नी गुरुर्भर्त्ता
शुभाशुभम् ।
मन्त्रशिल्पमपत्यञ्च सर्व्वमेतन्न यत्नतः
॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ३३
अध्यायः ॥
(यथा, मनुः । २ । १६ ।
“निषेकादिश्मशानान्तो
मन्त्रैर्यस्योदितो विधिः ।

“नामृष्टभोजी नादाता नाप्यनङ्गदनिष्कधृक्
॥”)
पलम् । दीनारः । इत्यमरः । ३ । ३ । १४
॥ अस्य
टीका यथा । “शास्त्रीयषोडशमाषकपरिमितं
स्वर्णं सुवर्णं तेषां सुवर्णानां अष्टाधिकशतम्
।
हेम स्वर्णमात्रम् । उरोभूषणं वक्षोऽलङ्कारः ।
पलं शास्त्रीयमानविशेषः । उरोभूषणं पलञ्च
हेम्न एवेति केचित् । दीनारः
सम्यग्व्यवहारार्थं
मानवस्तु एषु निष्कः । केचित्तु दीनार इति
पल इत्यस्य विशेषणम् । दीनारे पले
लौकिक-
पले न तु शास्त्रीये इत्याहुः ॥ स्मार्त्तास्तु
द्वात्रिंशद्रक्तिकापरिमितं काञ्चनं दीनारः ।
तथाहि ।
‘दीनारो रोपकैरष्टाविंशत्या परिकीर्त्तितः ।
सुवर्णसप्ततितमो भागो रोपक उच्यते ॥’
इति विष्णुगुप्तः ॥
सुवर्णोऽशीतिरक्तिकापरिमितंकाञ्चनं तस्य
सप्ततितमो भागः
सप्तमांशाधिकहेमरक्तिकायां
रोपकः तदष्टाविंशत्या
द्वात्रिंशद्रक्तिकापरिमितं
हेम दीनार इति पर्य्यवस्यतीत्याहुः ।” इति
भरतः ॥ * ॥ स्वर्णकर्षः । स्वर्णपलम् ।
इति
हेमचन्द्रः ॥ कण्ठभूषा । इति जटाधरः ॥
माषकचतुष्टयम् । इति वैद्यकपरिभाषा ॥
(यथा,
“स्याच्चतुर्म्माषकैः शाणः स निष्कष्टङ्क एव
च ॥”
इति पूर्ब्बखण्डे प्रथमेऽध्याये
शार्ङ्गधरेणोक्तम् ॥)

| | | |
|---|---|---|
| | तस्य शास्त्रेऽधिकारोऽस्मिन्ज्ञेयो नान्यस्य कस्य-<br>चित् ॥”<br>क्ली, रेतः । यथा, मनुः । ४ । १५१ ।<br>“दूरादावसथान्मूत्रं दूरात् पादावसेचनम् ।<br>उच्छिष्टान्नं निषेकञ्च दूरादेव समाचरेत् ॥”<br>“निषिच्यत इति निषेकं रेतश्चोत्सृजेत् ।”<br>इति तट्टीकायां कुल्लूकभट्टः ॥ (क्षरणम् ।<br>यथा, रघुः । ८ । ३८ ।<br>“ननु तैलनिषेकविन्दुना<br>सह दीपार्च्चिरुपैति मेदिनीम् ॥”) | |

षोडशद्रम्यः । षोल काहन इति भाषा ॥ (यथा,
लीलावत्याम् । २ ।
"वराटकानां दशकद्वयं यत्
सा काकिनीं ताश्च पणश्चतस्रः ।
ते षोडशद्रम्य इहावगम्यो
द्रम्यैस्तथा षोडशभिश्च निष्कः ॥")

**निष्कण्ठः**, पुं, (निर्गतः कण्ठः स्कन्धो यस्य ।)
वरुणवृक्षः । इति शब्दचन्द्रिका ॥

**निष्कर्षः**, पुं, (निर् वा निस् + कृष् + भावे घञ् ।)
निश्चयः । यथा, अत्रायं निष्कर्ष इत्याद्यापरा-
ह्निकश्राद्धादिव्यवस्थायांमूर्खहा ॥ (करार्थं
प्रजापीडनम् । इति नीलकण्ठः ॥ यथा, महा-
भारते । २ । १३ । १३ ।
"अनुकषञ्च निष्कर्षं
व्याधिपावकमूर्च्छनम् ।
सर्व्वमेव न तत्रासीद्धर्म्मनित्ये
युधिष्ठिरे ॥")

**निष्कलं**, त्रि, (निर्गता कला यस्मात् ।) कला-
शून्यम् । (यथा, महाभारते । ३ । २०८ । ९ ।
"संयताश्चापि दक्षाश्च मतिमन्तश्च
मानवाः ।
दृश्यन्ते निष्कलाः सप्त प्रहीणाः
स्वस्वकर्म्मभिः ॥")
नष्टवीर्य्यम् । इति मेदिनी । ले, १०३ ॥ ब्रह्म ।
यथा, --
"चिन्मयस्याद्वितीयस्य
निष्कलस्याशरीरिणः ।
उपासकानां कार्य्यार्थं ब्रह्मणो
रूपकल्पना ॥"
इत्येकादशीतत्त्वे जामदग्न्यवचनम् ॥ आधारे,
"परिखाश्चैव कौरव्य !
प्रतोलीर्निष्कुटानि च ।
नजात्वन्यः प्रपश्येत
गुह्यमेतद्युधिष्ठिर ! ॥")
क्षेत्रम् । (यथा, महाभारते । २ । ५० । ९ ।
"इन्द्रकृष्टैर्वर्त्तयन्ति धान्यैर्ये च
नदीमुखैः ।
समुद्रनिष्कुटे जाताः पारेसिन्धु च
मानवाः ॥")
कपाटः । इति मेदिनी । टे, ४८ ॥
पत्न्याटः ।
इति हारावली ॥ जानानामहल इति पारस्य-
भाषा ॥

**निष्कुटिः**, स्त्री, (कुट कौटिल्ये + "इगुपधात्
कित् ।" उणां ४ । ११९ । इति इन् । निर्गता
कुटिः कौटिल्यं यस्याः ।) एला । इत्यमरः ।
२ । ४ । १२५ ॥ (पर्य्यायोऽस्या यथा, --
"एला स्थूला च बहुला पृथ्वीका
त्रिपुटापि च ।
भद्रैला बृहदेला च चन्द्रबाला च
निष्कुटिः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे
भागे ॥)

**निष्कुटी**, स्त्री, (निष्कुटि + कृदिकारादिति वा
ङीष् ।) निष्कुटिः । इत्यमरटीकायां भरतः ।
२ । ४ । १२५ ॥

**निष्कुम्भः**, पुं, (निस् + कुम्भ + अच् ।) दन्ती-
वृक्षः । इत्यमरटीकायां रायमुकुटः ॥ (निर्गतः
कुम्भो यस्मात् ।) कुम्भशून्ये, त्रि ॥

**निष्कुशितः**, त्रि, (निस् + कुश + क्तः ।) निष्का-
(क्रमरहिते, त्रि । यथा, पद्मपुराणे पाताल-
खण्डे ।
"निष्कलं निष्क्रमं शान्तं सच्चिदानन्दविग्र-
हम् ॥")

**निष्क्रमणं**, क्ली, (निस् + क्रम + भावे ल्युट् ।)
दशसंस्कारान्तर्गतसंस्कारविशेषः । तदनुष्ठानं
यथा, जाते कुमारे जन्मवासराद्यस्तृतीयः
शुक्लपक्षस्तस्य तृतीयायां तिथौ प्रातः कुमारं
स्नापयित्वा सायं सन्ध्यायामतीतायां चन्द्राभि-
मुखः कृताञ्जलिः पिता तिष्ठेत् । अथ माता
शुचिना वस्त्रेण कुमारमाच्छाद्य दक्षिणस्यां
दिशि भर्त्तुर्वामपार्श्वे पश्चिमाभिमुखीभूय उत्तर-
शिरसं कुमारं पित्रे समर्पयति । ततो माता
भर्त्तुः पृष्ठदेशेन उत्तरस्यां दिशि गत्वा चन्द्रा-
भिमुखीभूय भर्त्तुर्दक्षिणपार्श्वे तिष्ठति । अथ
पिता जपति प्रजापतिरृषिरनुष्टुप् छन्दश्चन्द्रो
देवता कुमारस्य चन्द्रदर्शने विनियोगः । ॐ
यत्ते सुषीमे हृदयं हितमन्तः प्रजापतौ वेदाहं
मन्ये तद्ब्रह्माहं पौत्रमघं निगाम् । ततः
प्रजापतिरृषिरनुष्टुप् छन्दश्चन्द्रो देवता कुमा-
रस्य चन्द्रदर्शने विनियोगः । ॐ यत् पृथिव्या
अनामृतं दिवि चन्द्रमसि श्रितं वेदमृतस्याहं
नाममाहं पोत्रमघं ऋषम् । ततः प्रजापति-
रृषिरनुष्टुप्छन्द इन्द्राग्नी देवते कुमारस्य
चन्द्रदर्शने विनियोगः । ॐ इन्द्राग्नी शर्म्म
यच्छतं प्रजायै मे प्रजापती यथायं न प्रमीयेत
पुत्रो अनित्र्या अधि । इति मन्त्रत्रयं जप्त्वा
कुमारं चन्द्रं दर्शयति । पिता चन्द्राय अर्घ्यं
ददाति च । ततः पिता तथाभूतमेव कुमार-
मुत्तरशिरसं मात्रे दत्त्वा वामदेव्यगानान्तं कर्म्म
कृत्वाच्छिद्रमवधार्य्य गृहं प्रविशेदिति । अत
ऊर्द्ध्वमपरशुक्लपक्षत्रयेऽपि तृतीयायां तिथौ
सायंसन्ध्यामतिक्रम्य चन्द्राभिमुखः पिता जला-
ञ्जलिं गृहीत्वा प्रजापतिरृषिरनुष्टुप्छन्दश्चन्द्रो
देवता कुमारस्य चन्द्रदर्शने विनियोगः । ॐ
यददश्चन्द्रमसि कृष्णं पृथिव्या हृदयं श्रितं तदहं
विद्वांस्तत् पश्यन्माहं पौत्रमघं रुदमिति
पठित्वा जलाञ्जलिं त्यजेत् । वारद्वयं तूष्णीम् ।
ततो वामदेव्यं गीत्वाच्छिद्रमवधार्य्य गृहं प्रविशे-

पुं । इति शब्दचन्द्रिका ॥

**निष्कला**, स्त्री, (निर्गता कला यस्याः ।) विगता-
र्त्तवा । इति शब्दरत्नावली ॥ बृद्धा । इति
राजनिर्घण्टः ॥

**निष्कली**, स्त्री, (निष्कल + ङीष् ।) ऋतुहीना ।
निवृत्तरजस्का । इति शब्दरत्नावली ॥

**निष्कालकः**, पुं, (निष्कालयतीति । निर् + कालि
+ ण्वुल् ।) मुण्डितलोमा घृताभ्यक्तः प्रायश्चि-
त्तार्हः । यथा । मुण्डितलोमकेशेन घृताभ्यक्तेन
च कर्त्तव्यम् । निष्कालको घृताभ्यक्तस्तप्तां
शूर्म्मीं परिष्वज्य मरणात् पूतो भवतीति
विज्ञायते । इति वशिष्ठस्मरणात् । इति मिता-
क्षरा ॥

**निष्काशः**, पुं, (नितरां काशते शोभते प्रासादा-
दाविति । निर् + काश + अच् ।) प्रासादाद्युप-
स्थानम् । इति महाभारते राजधर्म्मः ॥ साजा
इति वाराण्डा इति च भाषा ॥

**निष्काशितः**, त्रि, (विर् वा निस् + काश + णिच्
क्तः ।) निष्कासितः । इत्यमरटीकायां भरतः ॥

**निष्कासितः**, त्रि, (निस् + कस + णिच् + क्तः ।)
बहिष्कृतः । दूरीकृतः । तत्पर्य्यायः । अवकृष्टः
२ । इत्यमरः । ३ । १ । ३९ ॥ निःसारितः ३ ।
सितः । यथा, --
"काकैर्निष्कुशितं श्वभिः कवलितं वीचीभि-
रान्दोलितम् ॥"
इत्यादि वाल्मीकिकृतगङ्गास्तोत्रम् ॥

**निष्कुहः** पुं, (नितरां कुहयते इति । कुह विस्मा-
पने + पचाद्यच् ।) वृक्षकोटरम् । इत्यमरः ।
२ । ४ । १३ ॥

**निष्कृतिः**, स्त्री, (निर् + कृ + क्तिन् ।) निर्मुक्तिः ।
निस्तारः । यथा, --
"ब्रह्मघ्ने चैव मित्रघ्ने सुरापे गुरुतल्पगे ।
सर्व्वत्र विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥"
इति प्रायश्चित्ततत्त्वम् ॥
(अग्निविशेषे, पुं । यथा, महाभारते । ३ ।
२१८ । १४
"आक्रोशतान्तु भूतानां यः करोतीह निष्कृ-
तिम् ।
अग्निः स निष्कृतिर्नाम शोभयत्यभिसेवितः ॥")

**निष्क्रमः**, पुं, (निष्क्रम्यतेऽनेनेति । निस् + क्रम +
घञ् । "नोदात्तोपदेशस्येति ।" ७ । ३ । ३४ ।
इति न वृद्धिः ।) धीशक्तिः । इत्यमरः । ३ ।
२ । २५ ॥ निर्गमः । (यथा, कथासरित्सागरे ।
२५ । ४३ ।
"कञ्चित् कालं प्रतीक्षे च प्राणायामस्य निष्क्र-
मम् ।
तृतीयेऽहि गतेऽप्याद्य यान्त्यैतस्य हि नासवः ॥")

दिति । एतच्च निष्क्रमणकर्म्माङ्गभूतमुदीच्यंकर्म्म
पत्नी पुत्त्रोपादानविरहात् प्रवासिनापि कर्त्तव्य-
मेव । इति निष्क्रमणम् ॥ इति भवदेवभट्टः ॥ * ॥
तत्र विहितदिनं यथा । रिक्तातिरिक्तास्तिथयः ।
शनिमङ्गलवासरेतरे वाराः । आर्द्राश्लेष्मा-
कृत्तिकाभरणीमघाविशाखापूर्ब्बफल्गुनीपूर्ब्बा-
षाढापूर्ब्बभाद्रपत्शतभिषाभिन्नानिनक्षत्राणि ।
कन्यातुलाकुम्भसिंहसंज्ञकानि लग्नानि । बाल-
कस्य चतुर्थे मासि तृतीये वा चन्द्रादिशोभने
कर्त्तव्यम् । इति ज्योतिषम् ॥

| इति जटाधरः ॥ निर्गमितः । आहितः । अधिकृतः । इति मेदिनी । ते, २०२ ॥<br>**निष्कुटः**, पुं, (कुटात् गृहात् निष्क्रान्तः ।) गृह-समीपोपवनम् । इत्यमरः । २ । ३ । १ ॥ (क्वचित् क्लीवेऽपि दृश्यते । यथा, महाभारते । १२ । ६९ । ५५ । | दुष्कुलः । इति मेदिनी । मे, ४५ ॥ निष्क्रमण-संस्कारः । “अहन्येकादशे नाम चतुर्थे भासि निष्क्रमः ॥” इति याज्ञवल्क्यः । १ । १२ ॥ | |
|---|---|---|

**निष्क्रयः**, पुं, (निष्क्रीयते विनिमीयतेऽनेनेति । निर +
क्री + “एरच् ।” ३ । ३ । ५६ । इति करणे अच् ।)
भृतिः । वेतनम् । इति हेमचन्द्रः । ६ । २६ ॥
बुद्धियोगः । सामर्थ्यम् । निर्गतिः । इति माध-
टीकाधृतवैजयन्ती ॥ प्रत्युपकारः । विनिमयः ।
यथा, माघे । १ । ५० ।
“समुत्क्षिपन् यः पृथिवीभृताम्बरं
वरप्रदानस्य चकार शूलिनः ।
त्रसत्तुषाराद्रिसुतासस‌म्भ्रम-
स्वयंग्रहाश्लेषसुखेन निष्क्रयम् ॥”
(विक्रयः । यथा, मनुः । ९ । ४६ ।
“न निष्क्रयविसर्गाभ्यां भर्त्तुर्भार्य्या
विमुच्यते ॥”)

**निष्क्रान्तः**, त्रि, (निर् + क्रम + क्तः ।) निर्गतः ।
यथा, मार्कण्डेये । ८७ । ५ ।
“भ्रूकुटीकुटिलात्तस्या
ललाटफलकाद्द्रुतम् ।
काली करालवदना
विनिष्क्रान्तासिपाशिनी ॥”
(यथाच, महाभारते । १३ । २ । ४५ ।
“निष्क्रान्ते मयि कल्याणि तथा
सन्निहितेऽनघे ।
नातिथिस्तेऽवमन्तव्यः प्रमाणं यद्यहं
तव ॥”)

**निष्क्रियं**, क्ली, (निर्गता क्रिया यस्य ।) ब्रह्म ।
यथा, वेदान्तसूत्रभाष्यम् ।
“निष्क्रियं निर्गुणं शान्तं निरपेक्षं
निरञ्जनम् ॥”
क्रियाशून्ये, त्रि । यथाह कश्चित् ।
“बन्धनानि यदि सन्ति बहूनि
प्रेमरज्जुकृतबन्धनमन्यत् ।
दारुभेदनिपुणोऽपि षडङ्घ्रि-
अन्तः । निर्वहणम् । इत्यमरः । ३ । ६ । ४० ॥
याच्ञा । इति मेदिनी । ठे, ६ ॥ क्तक्तवतू
प्रत्ययौ । इति कविकल्पद्रुमटीकायां दुर्गादासः ॥
(यथा, “क्तक्तवतू निष्ठा । १ । १ । २६ । एतौ
निष्ठासंज्ञौ स्तः ।” इति सिद्धान्तकौमुदी ॥)
धर्म्मादौ श्रद्धा । यथा, --
“निष्ठया हि प्रतिष्ठा स्यादनिष्ठस्य कुतः कुलम् ।
शक्नोति नैष्ठिकः स्वीयं धर्म्मं त्रातुं न चेतरः ॥
एकस्य देवस्य विहाय मन्त्र-
मेकं परञ्चेद्व्रजतेऽपि तस्य ।
तदा भवेन्मृत्युरनैष्ठिकत्वा-
न्निष्ठाविहीनस्य न कापि सिद्धिः ॥”
इति वैद्यकुलतत्त्वे मरतमल्लिकः ॥
प्राप्यम् । यथा, --
“भगवन्तं हरिं प्रायो न भजन्त्यात्मवित्तमाः ।
तेषामशान्तकामानां का निष्ठा विजितात्म-
नाम् ॥”)
इति श्रीभागवतैकादशस्कन्धपञ्चमाध्यायश्लोक-
टीकाव्याख्यायां श्रीधरस्वामी ॥ (नि + स्था +
क्विप् । स्थितिः । यथा, ऋग्वेदे । ३ । ३१ । १० ।
“जाते निष्ठामदधुर्गोषु वीरान् ॥”
“निष्ठां पूर्ब्बं यथास्थितिम् ।” इति सायनः ॥)

**निष्ठानं**, क्ली, (नि + स्था + करणे ल्युट् ।) व्यञ्ज-
नम् । इत्यमरः । ३ । ३ । ११५ ॥ (यथा,
रामायणे । २ । ९१ । ६७ ।
“आजैश्चापि च वाराहैर्निष्ठानवरसञ्चयैः ।
फलनिर्य्यूहसंसिद्धैः सूपैर्गन्धरसान्वितैः ॥”)

**निष्ठितं**, त्रि, (नि + स्था + क्तः ।) नितरां स्थितम् ।
यथा, भागवते । २ । ७ । ३६ ।
“देवद्विषां निगमवर्त्मनि निष्ठितानां
पूर्भिर्मयेन विहिताभिरदृश्यतूर्भिः ।
लोकान् घ्नतां मतिविमोहमतिप्रलोभं
वेशं विधाय बहुभाष्यत औपधर्म्यम् ॥”
“देवद्विषां दैत्यानां निष्ठितानां नितरां स्थिता-
नाम् ।” इति श्रीधरस्वामी ॥ (निष्ठा जाता-
स्येति । तारकादित्वादितच् ।) निष्ठाविशिष्टः ।
निश्चयेन स्थितश्च ॥ (सम्यक्ज्ञाता । यथा,
“क्षुतेऽवलीढे वान्ते च तथा निष्ठीवनादिषु ।
कुर्य्यादाचमनं स्पर्शं गोपृष्ठस्यार्कदर्शनम् ॥”)

**निष्ठुरं**, त्रि, (नि + स्था + मद्गुरादयश्चेति उरच् ।)
परुषम् । कठिनम् । इत्यमरः । ३ । १ । ७६ ॥
(यथा, माघे । ५ । ४९ ।
“जज्ञे जनैर्मुकुलिताक्षमनाददाने
संरब्धहस्तिपकनिष्ठुरचोदनाभिः ॥”)

**निष्ठ्यूतं**, त्रि, (नि + ष्ठिव् + क्तः । “च्छ्वोः शूडिति ।”
६ । ४ । १९ । इत्यूठ् ।) क्षिप्तम् । इत्यमरः ।
३ । १ । ८७ ॥

**निष्ठ्यूतिः**, स्त्री, (नि + ष्ठिव् + क्तिन् । “च्छ्वोः
शूडिति ।” ६ । ४ । १९ । इत्यूठ् ।) निष्ठीवनम् ।
इत्यमरः । ३ । २ । ३८ ॥

**निष्ठेवः**, त्रि, (नि + ष्ठिव् + घञ् ।) निष्ठीवनम् ।
इत्यमरः । ३ । २ । ३८ ॥

**निष्ठेवनं**, क्ली, (नि + ष्ठिव् + भावे ल्युट् ।) निष्ठी-
वनम् । इत्यमरः । ३ । २ । ३८ ॥

**निष्णातः**, त्रि, (नितरां स्नाति स्मेति । नि +
स्ना + क्तः । “निनदीभ्यां स्नातेः कौशले ।”
८ । ३ । ८९ । इति षत्वम् ।) विज्ञः । निपुणः ।
इत्यमरः । ३ । १ । ४ ॥ (यथा, सुश्रुते सूत्रस्थाने
तृतीयेऽध्याये ।
“यस्तु कर्म्मसु निष्णातो
धाष्टर्याच्छात्रबहिष्कृतः ।
स सत्सु पूजां नाप्नोति वधञ्चार्हति
राजतः ॥”)
पारं गतः । यथा, भागवते १ । ४ । २१ ।

र्निष्क्रियो भवति पङ्कजबद्धः ॥”

**निष्क्वाथः**, पुं, (निःसृतः क्वाथो यत्र ।) मांसादि-
क्वाथः । झोल इति भाषा ।
तत्पर्य्यायः ।
रसकः २ । इति हेमचन्द्रः । ३ । ७७
॥

**निष्ट्यः**, पुं, (वर्णाश्रमादिभ्यो निर्गतः । निस् +
“अव्ययात् त्यप् ।” ४ । २ । १०४ ।
इत्यस्य
“निसो गते ।” इति वार्त्तिकोक्त्या
त्यप् ।
“ह्रस्वात्तादौ तद्धिते ।” ८ । ३ ।
१०१ । इति
षत्वम् ।) म्लेच्छजातिविशेषः । इति
हेमचन्द्रः ।
५ । ५९८ ॥ (पुत्त्रादिः । इति
महीधरः । यथा,
वाजसनेयसंहितायाम् । ५ । २३ ।
“यं मे निष्ट्यो यममात्यो निचखान
॥”
“ष्ट्यै स्त्यै शब्दसंघातयोः । नितरां
स्त्यायति
संघातरूपेण सह वर्त्तत इति
निष्ट्यः । यद्वा,
निर्गत्य शरीरात् स्त्यायति विस्तीर्णो
भवतीति
निष्ट्यः पुत्त्रादिः । यद्वा, निर्गतो
वर्णाश्रमेभ्यो
निष्ट्यश्चण्डालादिः । निसो गते
इति वार्त्तिकेन
निस उपसर्गाद्गतार्थे त्यप् इति
काशिका-
याम् ।” इति तत्र वेददीपः ॥)

**निष्ठः**, त्रि, (नितरां तिष्ठतीति । नि + स्था +
कः ।) स्थितः । नितिष्ठतीति
स्थाधातोर्डप्रत्यय-
निष्पन्नः ॥

**निष्ठा**, स्त्री, (नितरां तिष्ठतीति । नि + स्था +
रामायणे । १ । १ । १४ ।
“रक्षिता स्वस्य धर्म्मस्य स्वजनस्य च रक्षिता ।
वेदवेदाङ्गतत्त्वज्ञो धनुर्व्वेदे च निष्ठितः ॥”)

**निष्ठीवः**, पुं, (नि + ष्ठिव + भावे घञ् । पृषोदरा-
दित्वात् दीर्घः ।) निष्ठीवनम् । इति द्विरूप-
कोषः ॥ (यथाह वाभटः ।
“निष्ठीवः पाश्वतो यायादेकस्याक्ष्णो निमी-
लनम् ॥”)

**निष्ठीवनं**, क्ली, (नि + ष्ठिव + भावे ल्युट् । ष्ठिवु-
सिव्योर्ल्युटि दीर्घो वेति स्वामी । पृषोदरादि-
त्वादिति मुकुटः ।) श्लेष्मादीनां मुखेन वमनम् ।
छेप इति थुथु इति च भाषा ॥ तत्पर्य्यायः ।
निष्ठेवः २ निष्ठ्यूतिः ३ निष्ठेवनम् ४ । इत्यमरः ।
३ । २ । ६८ ॥ निष्ठेवा ५ । निष्ठेवम् ६ । इति
तट्टीका ॥ (यथा, मार्कण्डेयपुराणे । ३४ । ७० ।
“वैशम्पायन एवैको निष्णातो यजुषामुत
॥”

**निष्पक्वं**, त्रि, (नितरां पक्वम् ।) अतिपक्वव्यञ्जन-
दशमूलादि । इति भरतः ॥ तत्पर्य्यायः ।
क्वथितम् २ । इत्यमरः । ३ । १ । ९५
॥ पक्वता-
शून्यञ्च ॥

**निष्पताकध्वजः**, पुं स्त्री, राज्ञां पताकाशून्यदण्ड-
विशेषः । इति युक्तिकल्पतरुः ॥
तद्विवरणं ध्वज-
शब्दे द्रष्टव्यम् ॥

**निष्पत्तिः**, स्त्री, (निर् + पद + क्तिन् ।) समाप्तिः ।
सिद्धिः । यथा, --
“क्रियायाः
परिनिष्पत्तिर्य्यद्व्यापारादनन्तरम् ।
विवक्षते यदा तत्र करणत्वं तदा स्मृतम्
॥”
इति रामतर्कवागीशधृतकारिका ॥
(नादस्यावस्थाविशेषः । यथा,
हठयोगप्रदी-
पिकायाम् । ४ । ६९ ।
“आरम्भश्च घटश्चैव तथा परिचयोऽपि
च ।
निष्पत्तिः सर्व्वयोगेषु
स्यादवस्थाचतुष्टयम् ॥”
तथा, तत्रैव । ४ । ७६ ।
“रुद्रग्रन्थिं यदा भित्वा
सर्व्वपीठगतोऽनिलः ।
निष्पत्तौ वैणवः शब्दः क्वणद्वीणाक्वणो
भवेत् ॥”)

**निष्पत्राकृतिः**, स्त्री, (निष्पत्र + कृ + भावे क्तिन् +
डाच् ।) सपत्राकृतिः । अत्यन्तपीडा ।
इति
हेमचन्द्रः । ६ । ८ ॥

**निष्पत्रिका**, स्त्री, (निष्पत्रमस्या अस्तीति । ठन् ।)
करीरवृक्षः । इति राजनिर्घण्टः ॥

**निष्पदयानं**, क्ली, (निष्पदं पदरहितं यानम् ।)

| “आतश्चोपसर्गे ।” ३ । १ । १३५ ।<br>इति कः ।<br>“उपसर्गादिति ।” ८ । ३ । ६५ ।<br>इति षत्वम्<br>तसष्टाप् ।) निष्पत्तिः । नाशः ।<br>(यथा, भाग-<br>वते । ५ । १२ । ८ ।<br>“यदा क्षितावेव चराचरस्य<br>विदाम निष्ठां प्रभवञ्च नित्यम् ॥”) | | पदरहितवाहनम् । तच्च नौकादिकम् ।<br>इति |
|---|---|---|

युक्तिकल्पतरुः ॥ तल्लक्षणादि नौकाशब्दे द्रष्टव्यम् ॥

**निष्पन्नः**, त्रि, (निर् + पद् + क्तः ।) निष्पत्ति-

विशिष्टः । सम्पन्नः । तत्पर्य्यायः । सिद्धः २ निर्वृत्तः ३ । इत्यमरः । ३ । १ । १०० ॥ (यथा,
देवीभागवते । ३ । ८ । २२ ।
“निष्पापत्वं फलं विद्धि तीर्थस्य मुनिसत्तम् ! ।
कृषेः फलं यथा लोके निष्पन्नान्नस्य भक्षणम् ॥”)

**निष्पादनं**, क्ली, (निर् + पद् + णिच् + ल्युट् ।)

निष्पत्तिः । निष्पत्तिनियुक्तिः । यथा, धात्वर्थता-
वच्छेदकफलनिष्पादकतया ददस्वेत्यनुमतिप्रका-
शनेन कर्त्तुरिच्छामुत्पाद्य दाननिष्पादनेन वेति कारकचक्रे भवानन्दसिद्धान्तवागीशः ॥

**निष्पादना**, स्त्री, (निर् + पद + णिच् + युच् ।

स्त्रियां टाप् ।) निष्पत्तिप्रेरणम् । यथा, --
“यदा निष्पादनाथकृध्रुस्तदा चैत्रः कटं करोति ।
यदा निष्पत्त्यर्थस्तदा क्रियते कटः स्वयमेवेति ।”
इति रामतर्कवागीशः ॥

**निष्पादितं**, त्रि, (निर् + पद + णिच् + क्तः ।)

कृतनिष्पादनम् । यथा, --
“निष्पादितं दैवकृत्यमवशेषं प्रतीक्षते ॥”
इति भागवते । १ । १३ । ५० ॥

**निष्पाद्यं**, त्रि, (निर् निश्चयेन पाद्यते समाप्यते

इति । निर् + पद् + णिच् + ण्यत् ।) निष्पा-
दनीयम् । (यथा, राजतरङ्गिण्याम् । २ । १५८ ।
“कृत्ये बहूनि निष्पाद्ये श्रमात् कौसीद्यमाश्रयन् ।
प्रावृषीवाध्वगो दिष्ट्या मोहितोऽस्मि न निद्रया ॥”)

“क्षारातितीक्ष्णोष्णविदाहितैल-
निष्पावपिण्याककुलत्थयूषैः ॥”
इति माधवकृतरुग्विनिश्चये शूलाधिकारे ॥)

**निष्पावकः**, पुं, (निष्पाव एव । स्वार्थे कन् ।) श्वेत-

शिम्बी । अस्य भ्रष्टफलगुणः । मलबन्धकारि-
त्वम् । गुरुत्वञ्च । इति राजवल्लभः ॥ (अस्य
गुणा यथा, --
“निष्पावको वैषवलासशोफ-
शुक्रान्तको रूक्षगुणो विदाही ।
कषायकः स्यान्मधुरो गुरुश्च
स्तन्यास्रपित्तञ्च करोति वातम् ॥”
इति हारीते प्रथमस्थाने दशमेऽध्याये ॥)

**निष्पावी**, स्त्री, (निष्पाव + स्त्रियां ङीष् ।) शिम्बी-

विशेषः । वोडा इति भाषा ॥ सा द्विधा । तत्र
हरिद्वर्णायाः पर्य्यायः । ग्रामजा २ फलिनी ३
नखपूर्ब्बिका ४ मण्डपी ५ फलिका ६ शिम्बी ७
गुच्छफला ८ विशालफलिका ९ निष्पाविः १०
चिपिटा ११ ॥ शुभ्रायाः पर्य्यायः । अङ्गुलि-
फला १ नखनिष्पाविका २ वृन्तनिष्पाविका ३
ग्राम्या ४ नखपुञ्जफला ५ अशना ६ । एतयो-
र्गुणाः । कषायत्वम् । मधुररसत्वम् । कण्ठ-
शुद्धिकरत्वम् । मेध्यत्वम् । दीपनत्वम् । रुचि-
कारित्वञ्च । इति राजनिर्घण्टः ॥

**निष्प्रतिभः**, त्रि, (निर्नास्ति प्रतिभा बुद्धिर्यस्य ।)

अज्ञः । जडः । इति जटाधरः ॥ (निर्गता

अस्मादस्य वा । “निष्प्रवाणिश्च ।” ५ । ४ । १६० ।
इति कपोऽभावो निपात्यते ।)
नूतनवस्त्रम् ।
तत्पर्य्यायः । अनाहतम् २ तन्त्रकम् ३ नवाम्ब-
रम् ४ । इत्यमरः । २ । ६ । ११२ ॥ आह-
तम् ५ अहतम् ६ नववस्त्रम् ७ । इति शब्द-
रत्नावली ॥

**निष्फलः**, त्रि, (निर्गतं फलं यस्मात् ।) फलशून्यः ।

यथा, “पलालोऽस्त्री स निष्फलः ।” इत्यमरः ।
२ । ९ । २२ ॥ (यथा, देवीभागवते । ३ । ८ । २५
“कृते तीर्थे यदैतानि देहान्न निर्गतानि चेत् ।
निष्फलः श्रम एवैकः कर्षकस्य यथा तथा ॥”)

**निष्फला**, स्त्री, (निवृत्तं फलं यस्या इति ।) पञ्च-

पञ्चाशदब्देभ्य ऊर्द्ध्वं गतरजस्का । इत्यमरः ॥
तत्पर्य्यायः । निष्फली २ निष्कली ३ निष्कला ४
विकली ५ विकला ६ ऋतुहीना ७ । इति
शब्दरत्नावली ॥ विरजाः ८ विगतार्त्तवा ९ ।
इति जटाधरः ॥

**निष्फली**, स्त्री, (निवृत्तं फलं यस्याः । ङीष् ।)

निष्फला । इति शब्दरत्नावली ॥

**निसम्पातः**, पुं, (निवृत्तः सम्पातो यत्र ।) निशीथः ।

निःसम्पातः । इति शब्दरत्नावली ॥

**निसर्गः**, पुं, (नि + सृज् + घञ् ।) स्वभावः ।

साध्यम् । यथा, चेष्टाव्यापारेण छेदनादेर्निष्पाद्यत्वात् साधनत्वमिति रामतर्कवागीशः ॥

**निष्पावः**, पुं, (निष्पूयते तुषाद्यपनयनेन शोध्यते इति । निर् + पू + णिच् + घञ् ।) धान्यादीनां निस्तुषीकरणम् । बहुलीकरणम् । तत्पर्य्यायः । पवनम् २ पवः ३ । इत्यमरः । ३ । २ । २४ ॥ पूतीकरणम् ४ । यथा, --
"धान्यादिनिस्तुषीकार्य्यबहुलीकरणादिषु ।
तथा च पूतीकरणे निष्पावः पवनं पवः ॥"
इति शब्दरत्नावली ॥
राजशिम्बीबीजम् । भटवासु इति भृष्टवांसु इति वा हिन्दीभाषा ॥ तत्पर्य्यायगुणाः ।
"निष्पावो राजशिम्बी स्याद्वल्लकः श्वेतशिम्बिकः ।
निष्पावो मधुरो रूक्षो विपाकेऽम्लो गुरुः सरः ॥
कषायस्तन्यपित्तास्रमूतवातविबन्धकृत् ।
विदाह्युष्मो विषश्लेष्मशोथहृच्छुक्रनाशनः ॥"
इति भावप्रकाशः ॥
(निष्पूयतेऽनेनेति । करणे घञ् ।) सूर्पवायुः । राजमाषः । (यथा, मार्कण्डेयपुराणे । १५ । २४ ।
"मधु हृत्वा नरो दंशः पूपं हृत्वा पिपीलिकः ।
चोरयित्वा तु निष्पावान् जायते गृहगोलकः ॥")
कडङ्गरः । समीरणः । शिम्बिका । निर्व्विकल्पे, त्रि । इति मेदिनी । वे, ३८ ॥ श्वेतशिम्बी । इति रत्नमाला ॥ (यथा, --
प्रतिभा दीप्तिरस्येति । दीप्तिशून्यः । यथा,
हरिवंशे । ८२ । ३४ ।
"क्षीणाकारासु तारासु सुप्तनिष्प्रतिभासु च ।
नैशमन्तर्द्दधे रूपमुदगच्छद्दिवाकरः ॥")

**निष्प्रत्यूहः**, त्रि, (निर्गतः प्रत्यूहो बाधा अस्येति ।) निर्व्विघ्नः । यथा, --
"निष्प्रत्यूहमुपास्महे भगवतः कौमोदकीलक्ष्मणः ॥"
इति मुरारिः ॥
(स्त्री, गङ्गा । यथा, काशीखण्डे । २९ । १०३ ।
"निष्प्रत्थूहा नाकनदी निरयार्णवदीर्घनौः ॥")

**निष्प्रभः**, त्रि, (निर्गता प्रभा अस्येति ।) प्रभाशून्यः । दीप्तिरहितः । तत्पर्य्यायः । विगतः २ अरोकः ३ । इत्यमरः । ३ । १ । १०० ॥ (यथा,
रघुवंशे । ११ । ८१ ।
"निष्प्रभश्च रिपुरास भूभृतां
धूमशेष इव धूमकेतनः ॥")

**निष्प्रयोजनं**, त्रि, (निर्नास्ति प्रयोजनं यस्मिन्निति ।) प्रयोजनरहितम् ।
"अन्यथा हि महाबाहो लघूनामुपदेशतः ।
गुरूणामुपदेशो हि निष्प्रयोजनतां व्रजेत् ॥"
इति प्रायश्चित्ततत्त्वम् ॥
(यथा, हरिवंशे । ६४ । १५ ।
"निरानन्दं निरास्वादं
निष्प्रयोजनमारुतम् ॥")

**निष्प्रवाणं**, त्रि, (नितरां प्रकर्षेण ऊयते इति । निर् + प्र + वे + करणे ल्युट् ।) तन्त्रविमुक्तवासः । नूतनवस्त्रम् । इति हारावली । ६९ ॥

इत्यमरः । १ । ७ । ३८ ॥ (यथा, किराताजर्ज्जुनीये । १ । ६ ।
"निसर्गदुर्बोधमबोधविक्लवाः
क्व भूपतीनाञ्चरितं क्व जन्तवः ॥")
रूपम् । सर्गः । इति मेदिनी । गे, ४० ॥ (यथा,
महाभारते । १३ । ८५ । १२३ ।
"निसर्गाद्ब्रह्मणश्चापि वरुणो यादसां पतिः ॥"
दानम् ॥ यथा, मनुः । ८ । १४३ ।
"न त्वेवाधौ सोपक रे कौशीदीं वृद्धिमाप्नुयात् ।
न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः ॥")

**निसिन्धुः**, पुं, वृक्षविशेषः । निसिन्धा इति भाषा । तत्पर्य्यायः । सिन्धुकः २ सिन्धुः ३ तापिञ्जः ४ शुक्लपृष्ठकः ५ सिन्धुवारः ६ इन्द्रसुरिषः ७ निर्गुण्डी ८ इन्द्राणिका ९ । इति शब्दचन्द्रिका ॥

**निसूदनं**, क्ली, (नि + सूद् + भावे ल्युट् ।) निर्हिंसनम् । वधः । इत्यमरः । २ । ८ । ११३ ॥
(यथा, "प्रवासनं निसूदनं निहिंसनमिति वधपर्य्यायं प्रवासनशब्दं पठन्त्याभिधानिकाः ।"
इति । ९ । २४२ मनुश्लोकटीकायां कुल्लूकभट्टः ॥
त्रि, नि + सूद + ल्युः । विनाशकः । यथा,
रघुवंशे । ९ । ३ ।
"उभयमेव वदन्ति मनीषिणः
समयवर्षितया कृतकर्म्मणाम् ।
बलनिसूदनमर्थपतिञ्च तं
श्रमनुदं मनुदण्डधरान्वयम् ॥")

**निसृता**, स्त्री, (नितरां सृता । नि + सृ + क्तः ।)

| | | |
|---|---|---|
| | **निष्प्रवाणि**, त्रि, (निर्गता प्रवाणी तन्तुवायशलाका | त्रिवृता । इति रत्नमाला ॥ तेउडि इति भाषा ॥<br>(त्रिवृताशब्देऽस्या गुणादयो ज्ञातव्याः ॥)<br>**निसृष्टं**, त्रि, (नि + सृज् + क्तः ।) न्यस्तम् । इत्य-<br>मरः । ३ । १ । ८८ ॥ (यथा, मनुः । ८ । ४१४ । |

"न स्वामिना निसृष्टोऽपि शूद्रो
दास्याद्विमुच्यते ।
निसर्गजं हि तत्तस्य
कस्तस्मात्तदपोहति ॥")
मध्यस्थम् । इति त्रिकाण्डशेषः ॥

**निसृष्टार्थः**, पुं, (निसृष्टो न्यस्तोऽर्थः प्रयोजनं यस्मिन्निति ।) दूतविशेषः । यथा, --
"निसृष्टार्थो मितार्थश्च तथा
सन्देशहारकः ।
कार्य्यप्रेष्यस्त्रिधा दूतो दूत्यश्चापि
तथा त्रिधा ॥"
तल्लक्षणं यथा, --
"उभयोर्भावमुन्नीय स्वयं वदति
चोत्तरम् ।
सुश्लिष्टं कुरुते कर्म्म निसृष्टार्थस्तु
स स्मृतः ॥"
इति साहित्यदर्पणे ३ परिच्छेदः ॥
धनायव्ययपालनादौ नियुक्तः ।
यथा बृहस्पतिः ।
"यः स्वामिना नियुक्तोऽपि
धनायव्ययपालने ।
कषीदकृषिबाणिज्ये निसृष्टार्थस्तु
स स्मृतः ॥"
इति व्यवहारतत्त्वम् ॥
पुरुषविशेषः । तस्य लक्षणं यथा, --
"धीरः स्थिरमतिः शूरः
स्वामिकार्य्यविधायकः ।
स्वपौरुषप्रकाशी च निसृष्टार्थः स
उच्यते ॥"
इति सङ्गीतदामोदरः ॥

**निस्तनी**, स्त्री, (नितरां स्तनवदाकारोऽस्त्यस्या इति । अच् । गौरादित्वात् ङीष् ।) वटिका ।
इति शब्दचन्द्रिका ॥ वडि इति
भाषा ॥

उद्धारकारणमात्रम् । यथा, --
"जीर्णा तरिः सरिदतीवगभीरनीरा
वाला वयं सकलमित्थमनर्थहेतुः ।
निस्तारबीजमिदमेव कृशोदरीणां
यन्माधव त्वमसि सम्प्रति कर्णधारः ॥"
इत्युद्भटः ॥)

**निस्तितीर्षत्**, त्रि, (निर् + तॄ + सन् + शतृ ।) निस्तरितुमिच्छत् । यथा, --
"तन्नः सन्दर्शितो धात्रा दुस्तरं
निस्तितीर्ष-
ताम् ॥"
इति श्रीभागवते । १ । १ । २२ ॥

**निस्तुषक्षीरः**, पुं, (निस्तुषं परिष्कृतं क्षीरं यस्येति ।) गोधूमः । इति राजनिर्घण्टः ॥

**निस्तुषरत्नं**, क्ली, (निस्तुषं निर्म्मलं रत्नम् ।) स्फटिकः । इति राजनिर्घण्टः ॥

**निस्तुषितं**, त्रि, (निस्तुष + कृतौ णिच् + क्तः ।) त्वग्विहीनम् । त्यक्तम् । लघूकृतम् । इति मेदिनी । ते, २०२ ॥

**निस्तेजाः**, [स्] त्रि, (निर्गतं तेजो यस्मादिति ।) तेजोरहितः । यथा, --
"इदं कवचमज्ञात्वा कवचान्यं पठेत्तु यः
।
सर्व्वं तस्य वृथा देवि ! निस्तेजो न च
सिद्धिदम् ॥"
इति ब्रह्मजामलीयगायत्रीकवचधृतम्॥
(यथा च देवीभागवते । २ । ८ । ११ ।
"कृष्णपत्न्यस्तदा मार्गे चौराभीरैश्च
लुण्ठिताः ।
धनं सर्व्वं गृहीतञ्च
निस्तेजाश्चार्ज्जुनोऽभवत् ॥")

**निस्त्रिंशः**, पुं, (निर्गतस्त्रिंशद्भ्योऽङ्गुलिभ्य इति । निरादय इति समासः ।
"संख्यायास्ततपुरुषस्य

**निस्नेहफला**, स्त्री, (निस्नेहं तैलविहीनं फलं यस्याः ।) श्वेतकण्टकारी । इति राज-
निर्घण्टः ॥

**निस्पन्दः**, पुं, (नि + स्पन्द + भावे घञ् ।) स्पन्द-
नम् । इति त्रिकाण्डशेषः ॥ (यथा, महाभारते ।
१२ । ३३५ । ९ ।
"मेरोः सहस्रैः स हि योजनानां
द्वात्रिंशतोर्द्ध्वं कविभिर्निरुक्तः ।
अनिन्द्रियाश्चानशनाश्चतत्र
निस्पन्दहीनाः सुसुगन्धिनस्ते ॥")

**निस्पन्दः**, त्रि, (निवृत्तः स्पन्दश्चक्षुपलकादिस्पन्दनं यस्मात् ।) स्पन्दरहितः । ईषत्कम्पशून्यः । यथा,
"कावेरीतीरभूमीरुहभुजगवधूभुक्तमुक्तावशिष्टः
कार्णाटीचीनपीनस्तनवसनदशान्दोलनिस्पन्द
मन्दः ॥"
इति विक्रमादित्यराजसभायांराक्षसपद्यम् ॥

**निस्पन्दतरं**, त्रि, (निस्पन्द + तरप् ।) एकान्त-
स्पन्दरहितम् । यथा, नैषधे । ८ । १३ ।
"सूक्ष्मे घने नैषधकेशपाशे
निपत्य निस्पन्दतरी भवद्भ्याम् ।
तस्यानुबन्धं न विमोच्य गन्तु-
मपारि तल्लोचनखञ्जनाभ्याम् ॥"

**निस्पृहः**, त्रि, (निर्गता स्पृहा दृष्टादृष्टविषयवासना यस्येति ।) स्पृहाशून्यः । यथा, --
"निस्पृहः सर्व्वकामेभ्यो युक्त इत्युच्यते तदा ॥"
इति श्रीभगवद्गीतायाम् । ६ । १८ ॥

**निस्पृहा**, स्त्री, अग्निशिखावृक्षः । यथा, --
"अमूला निस्पृहा चापि मालिनी विष्णुवल्लभा ॥"
इति शब्दचन्द्रिका ॥
स्पृहाया अभावश्च ॥ (अत्राव्ययीभावः ॥)

**निस्य(ष्य)न्दः**, पुं, (नि + स्यन्दू ङ क्षरणे + भावे घञ् । "अनुविपर्य्यभिनिभ्यः स्यन्दतेरप्राणिषु ।"
८ । ३ । ७२ । इति वा षत्वम् ।) स्यन्दनम् ।
क्षरणम् । यथा, --
"माकन्दरसनिस्यन्दसुन्दरोद्गारकारिणौ।

(निर्गतौ स्तनौ यस्या इति ।)
स्तनहीना च ॥

**निस्तरणं**, क्ली, (निस्तीर्य्यतेऽनेनेति । निर् + तॄ +
करणे ल्युट् ।) उपायः । निस्तारः । तरणम् ।
इति मेदिनी । णे, ९९ ॥ निर्गमः । इति विश्वः ॥

**निस्तर्हणं**, क्ली, (निर् + तृह् हिंसायाम् + भावे
ल्युट् ।) मारणम् । इत्यमरः । २ । ८ । ११४ ॥

**निस्तलं**, त्रि, (निरस्तं तलं स्वरूपमस्येति ।)
वर्त्तुलम् । इत्यमरः । ३ । १ । ६९ ॥ (यथा,
कुमारसम्भवे । १ । ४२ ।
"कण्ठस्य तस्याः स्तनबन्धुरस्य
मुक्ताकलापस्य च निस्तलस्य ॥")
चलम् । इति मेदिनी । ले, १०३ ॥ (नितरां
तलम् ।) तलम् । इति हेमचन्द्रः ॥

**निस्तारः**, पुं, (निर् + तॄ + घञ् ।) निस्तरणम् ।
उद्धारः । (यथा, शृङ्गारशतके । ७१ ।
"संसार तव निस्तारपदवी न दवीयसी ।
अन्तरा दुस्तरा न स्युर्यदि रे मदिरेक्षणाः ॥")

**निस्तारबीजं**, क्ली, (निस्तारस्य संसारसमुद्र-
समुत्तरणस्य बीजम् ।) संसारतरणकारणम् ।
तद्यथा, --
"स्मरणं कीर्त्तनं विष्णोरर्च्चनं पादसेवनम् ।
वन्दनं स्तवनं नित्यं भक्त्या नैवेद्यभक्षणम् ॥
चरणोदकपानञ्च तन्मन्त्रजपनं तथा ।
श्रवणानन्दिनाक्तौ वन्दिनाविव राजतः ॥"
इति प्रसन्नराघवनाटके पक्षधरमिश्रः ॥
(यथा च रामायणे । २ । ९४ । १३ ।
"जलप्रपातैरुद्भेदैर्निष्यन्दैश्च क्वचित् क्वचित् ।
स्रवद्भिर्भात्ययं शैलः स्रवन्मद इव द्विपः ॥"
निस्यन्दते इति कर्त्तरि अच् । क्षरणशीले,
त्रि । यथा, रघुः । ३ । ४१ ।
"तदङ्गनिस्यन्दजलेन लोचने
प्रमृज्य पुण्येन पुरस्कृतः सताम् ।
अतीन्द्रियेष्वप्युपपन्नदर्शनो
बभूव भावेषु दिलीपनन्दनः ॥")

**निस्रावः**, पुं, (निस्राव्यते इति । नि + स्रु + णिच्
+ घञ् ।) भक्तसमुद्भवमण्डम् । फेन इति माड
इति च भाषा । तत्पर्य्यायः । मासरः २
आचामः ३ । इत्यमरः । २ । ९ । ४९ ॥ (नि + स्रु +
घञ् । द्रवः । यथा, हरिवंशे । ९६ । ९ ।
"धातुनिस्रावदिग्धाङ्गं सानुप्रस्रवभूषितम् ॥")

| | | |
|---|---|---|
| इदं निस्तारबीजञ्च सर्व्वेषामीप्सितं भवेत् ॥"<br>इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ३३ अध्यायः ॥<br>(अपि च । महानिर्व्वाणतन्त्रे ।<br>"कलौ पापयुगे घोरे तपोहीनेऽति दुस्तरे ।<br>निस्तारबीजमेतावद् ब्रह्ममन्त्रस्य साधनम् ॥<br>साधनानि बहूक्तानि नानातन्त्रागमादिषु ।<br>कलौ दुर्ब्बलजीवानामसाध्यानि महेश्वरि ! ॥" | | |

**निस्वनः**, पुं, (नि + स्वन + “नौ गदनदपठस्वनः ।”

३ । ३ । ६४ । इति अप् ।) शब्दः ।
इत्यमरः ।
१ । ६ । २३ ॥ (यथा, महाभारते ।
७ । २६ । ३ ।
“यथा प्राग्ज्योतिषो राजा गजेन
मधुसूदन ।
त्वरमाणोऽभिनिष्क्रान्तो ध्रुवं तस्यैष
निस्वनः ॥”)

**निस्वानः**, पुं, (नि + स्वन + पक्षे घञ् ।) शब्दः ।

इत्यमरः । १ । ६ । २३ ॥

**निहननं**, क्ली, (नि + हन + ल्युट् ।) मारणम् ।

वधः । इत्यमरः । २ । ८ । ११४ ॥

**निहन्ता**, [ऋ] त्रि, (नि + हन + तृच् ।) हनन-

कर्त्ता । यथा, भट्टिः ।
“निहन्ता वैरकाराणां सतां बहुकरः
सदा ।
पारश्वधिकरामस्य शक्तेरन्तकरो रणे
॥”
(महादेवे, पुं । यथा, महाभारते । १३
।
१७ । ७५ ।
“भगहारी निहन्ता च कालो ब्रह्मा
पितामहः ॥”)

**निहाका**, स्त्री, (नियतं जहाति भुवमिति ।

नि + हा त्यागे + “नौ हः ।” उणां ३
। ४४ ।
इति कन् ।) गोधिका । इत्यमरः । १
। १० । २२ ॥
(यथा, ऋग्वेदे । १० । ९७ । १३ ।
“साकं वातस्य ध्राज्या साकं नश्य
निहाकया ॥”)

**निहारः**, पुं, (नितरां ह्रियन्ते पदार्था येन । नि +

**निह्रादः**, पुं, (नि + ह्राद अव्यक्तशब्दे + घञ् ।)

शब्दः । इत्यमरः । १ । ६ । २३ ॥
(यथा, रघुः । १ । ४१ ।
“सारसैः कलनिह्रादैः
क्वचिदुन्नमिताननौ ॥”)

**निक्षणं**, क्ली, (निक्ष चुम्बने + भावे ल्युट् ।) चुम्बनम् ॥

**निक्षा**, स्त्री, (निक्षति चुम्बतीव भस्तकमिति ।

निक्ष + अच् + टाप् ।) लिख्या । यूकः ।
इत्यु-
णादिकोषः ॥ निकी इति भाषा ॥

**निक्षिप्तं**, त्रि, (निक्षिप्यते स्मेति । नि + क्षिप +

क्तः ।) त्यक्तम् । तत्पर्य्यायः । परिक्षिप्तम्
२
निवृतम् ३ परीतम् ४ परिवेष्टितम् ५
न्यस्तम् ६
निसृष्टम् ७ । इति जटाधरः ॥
स्थापितधनादि ।
यथा, --
“निक्षिप्तस्य धनस्यैवं प्रीत्योपनिहितस्य
च ।
राजा विनिर्णयं
कुर्य्यादक्षिण्वन्न्यासधारिणम् ॥”
इति मनुः । ८ । १९६ ॥

**निक्षेपः**, पुं, (नि + क्षिप् + घञ् ।) क्षेपणम् ।

त्यागः । समर्पितवस्तु । गच्छितद्रव्य
इति भाषा ।
तत्पर्य्यायः । उपनिधिः २ न्यासः ३ ।
इति
हेमचन्द्रः ॥ यथा, --
“स्वद्रव्यं यत्र
विश्रम्भान्निक्षिपत्यविशङ्कितः ।
निक्षेपो नाम तत् प्रोक्तं व्यवहारपदं बुधैः
॥
असंख्यातमविज्ञातं समुद्रं यन्निधीयते ।
तज्जानीयादुपनिधिं निक्षेपं गणितं विदुः
॥

जातिकर्म्मा । वर्व्वरः । इत्यमरटीकायां भरतः ॥
तत्पर्य्यायः । विवर्णः २ पामरः ३ प्राकृतः ४
पृथग्जनः ५ निहीनः ६ अपसदः ७ जाल्मः ८
क्षुल्लकः ९ इतरः १० । इत्यमरः । २ । १० ।
१६ ॥
अपशदः ११ खुल्लकः १२ । इति भरतः ॥ हीनः
१३ क्षुल्लः १४ क्षुण्णः १५ वेतकः १६ । इति
शब्दरत्नावली ॥ नीचसङ्गदोषो यथा, --
“न प्राप्नोति सुखं किञ्चिन्नीचसङ्गान्महानपि ।
प्रेतसङ्गान्महादेवो नग्नो भस्मविभूषितः ॥
प्रविश्य निलयं नीचः स्त्रीधनादिकमिष्यते ।
स्वयं नेतुं न शक्नोति तदा नाययति ध्रुवम् ॥
स्थिते गुणेऽपि नीचस्तु यत्नाद्दोषं प्रपद्यते ।
किञ्चित्तु सङ्गमासाद्य तदुक्तं स्यात् सनातनम् ॥
सतां श्रुत्वा गुणं नीचः श्रोतुमायाति बन्धुवत् ।
ततः समयमासाद्य प्रकाशयति तद्धसन् ॥
मनस्येकं वचस्येकं कर्म्मण्येकं महात्मनाम् ।
मनस्यन्यद्वचस्यन्यत् कर्म्मण्यन्यद्दुरात्मनाम् ॥”
इति पाद्मे क्रियायोगसारे ५ अध्यायः ॥
अपि च ।
“बुद्धिश्च हीयते पुंसां नीचैः सह समागमात् ।
मध्यमे मध्यतां याति श्रेष्ठतां याति वित्तमे ॥”
इति शान्तिपर्व्व ॥ * ॥
अनुच्चः । तत्पर्य्यायः । वामनः २ न्यङ् ३
खर्व्वः ४ ह्रस्वः ५ । इत्यमरः । ३ । १ । ७० ॥
(यथा, --
“नीचरोमनखश्मश्रुनिर्म्मलाङ्घ्रिमलायनः ।
स्नानशीलः ससुरभिः सुवेषोऽनुल्वणोज्ज्वलः ।
धारयेत् सततं रत्नसिद्धमन्त्रमहौषधीः ॥”
इति वाभटे सूत्रस्थाने द्वितीयेऽध्याये ॥)
निम्नः । यथा, --
“शैत्यं नाम गुणस्तवैव सहजः स्वाभाविकी
स्वच्छता
किं ब्रूमः शुचितां भवन्ति शुचयः स्पर्शेन
यस्यापरे ।
किञ्चान्यत् कथयामि ते स्तुतिपदं त्वं जीविनां
जीवनं
त्वञ्चेन्नीचपथेन गच्छसि पयः कस्त्वां निषेद्धुं
क्षमः ॥”

हृ + घञ् ।) नीहारः । इति शब्दरत्नावली ॥

**निहितं**, त्रि, (नि + धा + क्त । “दधातेर्हिः ।” ७ । ४ । ४२ । इति हिः ।) स्थापितम् । इति हलायुधः ॥ यथा, महाभारते । ३ । ३१२ । ११२ ।
“धर्म्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतः स पन्थाः ॥”

**निहिंसनं**, क्ली, (नि + हिन्स + भावे ल्युट् ।) मारणम् । इत्यमरः । २ । ८ । ११३ ॥

**निहीनः**, त्रि, (नितरां हीनः । कुगतीति समासः ।) नीचः । पामरः । इत्यमरः । २ । १० । १६ ॥
(यथा, महाभारते । ३ । १२ । ११९ ।
“त इमे सिंहविक्रान्ता
वीर्य्येणाभ्यधिकाः परैः ।
निहीनैः परिक्लिश्यन्तीं समुपेक्षन्ति मांकथम् ॥”)

**निह्नवः**, पुं, (निह्नूयते सत्यवाक्यमनेनेति । नि + ह्न + “ऋदोरप् ।” ३ । ३ । ५७ । इति अप् ।) अपलापः । येन वचनं निह्नूयते सः । यथा,
धारयन्नेव न धारयामीति ।
इत्यमरभरतौ ॥
तत्पर्य्यायः । निह्नुतिः २ अपह्नुतिः ३ अपह्नवः ४ ।
इति शब्दरत्नावली ॥ (यथा, याज्ञवल्के । २ । ११ ।
“निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम् ॥”)
निकृतिः । अविश्वासः । इति मेदिनी । वे, ३९ ॥
(यथा, महाभारते । ५ । ३७ । ३० ।
“न निह्नवं मन्त्रगतस्य गच्छेत्
निक्षेपं वृद्धिशेषञ्च क्रयं विक्रयमेव च ।
याच्यमानो न चेद्दद्याद्वर्द्धते पञ्चकं शतम् ॥”
इति मिताक्षरायां नारदः ॥ * ॥
“कुलजे वृत्तसम्पन्ने धर्म्मज्ञे सत्यवादिनि ।
गहापक्षे धनिन्यार्य्ये निक्षेपं निक्षिपेद्बुधः ॥
आधिः सीमा बालधनं निक्षेपोपनिधी स्त्रियः ।
राजस्वं श्रोत्रियस्वञ्च न भोगेन प्रणश्यति ॥
स्वयमेव तु यो दद्यान्मृतस्य प्रत्यनन्तरे ।
न स राज्ञाभियोक्तव्यो न निक्षेप्तुश्च बन्धुभिः ॥
यो निक्षेपं नार्पयति यश्चानिक्षिप्य याचते ।
तावुभौ चौरवच्छास्यौ दाप्यौ वा तत्समं दमम् ॥”
इति मनुः । ८ अध्याये ॥

**नीकः**, पुं, (नीयते इति । नी प्रापणे + “अजि-युधूनीभ्यो दीर्घश्च ।” उणां ३ । ४७ । इति कन् ।) वृक्षविशेषः । इत्युणादिकोषः ॥

**नीकारः**, पुं, (नि + कृ + घञ् । “उपसर्गस्य घञ्यमनुष्ये बहुलम् ।” ६ । ३ । १२२ । इति उपसर्गस्य दीर्घः ।) न्यक्कारः । इति शब्द-रत्नावली ॥

**नीकाशः**, त्रि, (नितरां काशते इति । नि + काश + अच् । “इकः काशे ।” ६ । ३ । १२३ ।
इति उपसर्गस्य दीर्घः ।) तुल्यः । उपमा ।
इत्यमरः । २ । १० । ३८ ॥ (यथा, महाभारते ।
३ । १८२ । १३ ।
“आकाशनीकाशतटां
तीरवानीरसङ्कुलाम् ।
इति लक्ष्मणसेनः ॥ * ॥
चोरकनामगन्धद्रव्ये, पुं । इति राजनिर्घण्टः ॥

**नीचकः**, त्रि, (नीच एव । नीच + स्वार्थे कन् ।) वामनः । खर्व्वः । इति शब्दरत्नावली ॥

**नीचका**, स्त्री, (निकृष्टामीं शोभां चकति प्रति-हन्तीति । चक प्रतिघाते + अच् । टाप् ।) नैचिकी । उत्तमगवी । इत्यमरटीकायां भरतः ॥

**नीचकी**, [न्] पुं, उच्चः । उपरिभागः । इति हलायुधः ॥ उत्तमगवीमांश्च ॥

**नीचकैः**, [स्] व्य, (नीचैस् + “अव्ययसर्व्व-नाम्नामकच् प्राक् टेः ।” ५ । ३ । ७१ । इति टेः प्रागकच् ।) नीचैः । नीचैः शब्दस्य टेः पूर्ब्बकृतेनाका निष्पन्नः । यथा, उच्चकैरित्यादि ॥

**नीचगं**, क्ली, (नीचं निम्नदेशं गच्छतीति । गम + डः ।) जलम् । इति कोषान्तरम् ॥ पामरे, त्रि ॥

संसृष्टमन्त्रस्य कुसङ्गतस्य ॥”)

गुप्तः । इति शब्दरत्नावली ॥ (शुद्धिः । यथा,

मनुः । ९ । २१ ।

“ध्यायत्यनिष्टं यत् किञ्चित्

प्राणिग्राहस्य चेतसा ।

तस्यैष व्यभिचारस्य निह्नवः

सम्यगुच्यते ॥”)

**निह्नुतिः**, स्त्री, (नि + ह्नु + क्तिन् ।) निह्नवः । इति

शब्दरत्नावली ॥

बभूव चरतां हर्षः पुण्यतीर्थां सरस्वतीम्

॥”)

निश्चये, पुं । इति मेदिनी । शे, २३ ॥

**नीचः**, त्रि, (निकृष्टामीं लक्ष्मीं शोभां चिनोतीति ।

चि + “अन्येभ्योऽपि दृश्यते ।” इति डः

।) हीन-

यथा, भूतडामरतन्त्रे ।
"नीचगामङ्गनां प्राप्य चन्दनैर्मण्डलं लिखेत् ॥"
(निम्नगे च । यथा, बृहत्संहितायाम् । १९ । २२ ।
"अणुरपटुमयूखो नीचगोऽन्यैर्जितो वा न सकलफलदाता पुष्टिदोऽतोऽन्यथा यः ॥")

**नीचगा**, स्त्री, (नीचं निम्नं गच्छतीति । गम + ड । टाप् ।) निम्नगा । नदी । यथा, --
"नीचगा तु नदी नीचो नीचगो नीचगं जले ।"
इति कोषः ॥
अपि च ।
"सङ्गमयति विद्यैव नीचगापि नरं सरित् ।
समद्रमिव दुर्द्धर्षं नृपं भाग्यमतः परम् ॥"
इति हितोपदेशः ॥

**नीचभोज्यः**, पुं, (नीचैर्यवनादिभिर्भोज्यः ।) पलाण्डुः । इति शब्दचन्द्रिका ॥
पामरभक्ष्ये, त्रि ॥

**नीचवज्रं**, क्ली, (नीचमनुत्कृष्टं वज्रम् ।) वैक्रान्तमणिः । इति राजनिर्घण्टः ॥

**नीचिकी**, स्त्री, नैचिकी । इत्यमरटीकायां भरतः ॥

**नीचैः**, [स्] व्य, (नि + चि + "नौ दीर्घश्च ।" उणां । ५ । १३ । इति डैसिः निशब्दस्य दीर्घश्च ।) अल्पम् । अनुच्चम् । इत्यमरः ॥
(यथा, मेघदूते । १०८ ।
"नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥")

**नीडः**, पुं क्ली, (नितरां ईड्यते स्तूयते सुदृश्यत्वादिति । नि + ईड स्तुतौ + घञ् ।) पक्षिवासस्थानम् । पाखीरवासा इति भाषा ॥ तत्पर्य्यायः । कुलायः २ । इत्यमरः । २ । ५ । ३७ ॥

अधिकरणे करणे वा क्तिन् ।) नयः । (नी + भावे क्तिन् ।) प्रापणम् । इति मेदिनी । ते, ३० ॥ अथ नीतिशास्त्रं लिख्यते ।
"नयस्य विनयो मूलं विनयः शास्त्रनिश्चयः ।
विनयो हीन्द्रियजयस्तद्युक्तशास्त्रमिच्छति॥
आत्मानं प्रथमं राजा विनयेनोपपादयेत् ।
ततोऽमात्यान् ततो भृत्यांस्ततः पुत्त्रांस्ततः प्रजाः ॥
सदानुरक्तप्रकृतिः प्रजापालनतत्परः ।
विनीतात्मा हि नृपतिर्भूयसीं श्रियमश्नुते ॥
एवंकरणसामर्थ्यात् संयम्यात्मानमात्मना ।
नयानयनविद्राजा कुर्व्वीत हितमात्मनः ॥
जितेन्द्रियस्य नृपतेर्नीतिशास्त्रानुसारिणः ।
भवन्त्युज्ज्वलिता लक्ष्म्यः कीर्त्तयश्च नभस्पृशः ॥"
इति नीतिमयूखद्वितीयप्रयागः ॥
सगर उवाच ।
"यया नीत्या प्रयोक्तव्यः सुत आत्मा प्रिया तथा ।
तेषां विशेषैः सहितं सदाचारं वदस्व मे ॥"
और्व्व उवाच ।
क्रमेण शृणु राजेन्द्र ! यया नीत्या नियुज्यते ।
आत्मा सुतो वा भार्य्या वा तद्विशेषं शृणुष्व मे ॥
ज्ञानवृद्धांस्तपोवृद्धान् वयोवृद्धान् सुदक्षिणान् ।
सेवेत प्रथमं विप्रानसूयापरिवर्ज्जितान् ॥
तेभ्यश्च शृणुयान्नित्यं वेदशास्त्रविनिर्णयम् ।
यदूचुस्ते च तत् कार्य्यं प्राज्ञैश्चैतन्नृपश्चरेत् ॥
पञ्चेन्द्रियाणि पञ्चाश्वाः शरीरं रथ उच्यते ।
आत्मा रथी कशा ज्ञानं सारथिर्म्मन उच्यते ॥
अश्वान् सुदान्तान् कुर्व्वीत सारथिं चात्मनो वशम् ।
कशा भूप ! दृढा कार्य्या शरीरस्थिरता तथा ॥
अदान्तांस्तु समारुह्य सैन्धवान् स्यन्दनी यथा ।

पराभिप्रायवेदित्वं चारित्वं धैर्य्यमापदि ॥
क्लेशधारणशक्तिश्च गुरुदेवद्विजार्च्चनम् ।
अनसूया ह्यकोपित्वं गुणानेतान्नृपोऽभ्यसेत् ॥
कार्य्याकार्य्यविभागञ्च धर्म्मार्थौ काममेव च ।
दानस्य विषये सामयोगमेवोपलक्षते ॥
सततं प्रतिबुध्येत कुर्य्यादवसरेऽपि तत् ।
साम दानञ्च भेदश्च दण्डश्चेति चतुष्टयम् ॥
ज्ञात्वोपायांस्तु तत्स्थाने तानुपायान् प्रयोजयेत् ।
साम्नस्तु विषये भेदो यध्यमः परिकीर्त्तितः ॥
दानस्य विषये दण्डो ह्यधमः परिकीर्त्तितः ।
दण्डस्य विषये दानं तदप्यधममुच्यते ॥
साम्नस्तु गोचरे दण्डो ह्यधमादधमः स्मृतः ।
सौजन्यं सततं ज्ञेयं भूभृतो भेददण्डयोः ॥
साम्नो दानस्य च तथा सौजन्यं याति गोचरे ॥
कामः क्रोधश्च लोभश्च हर्षो मानमदौ तथा ।
एतानतिशयान्राजा शत्रूनिव विशातयेत् ॥
सेव्याः कालेषु युक्त्यैते लोभगर्व्वौ विवर्ज्जयेत् ।
तेज एव नृपाणान्तु तीव्रं सूर्य्यस्य वै यथा ॥
तत्र गर्व्वं रोगयुक्तकायवत्तन्तु संत्यजेत् ।
आखेटकाक्षौ स्त्रीसेवा पानञ्चैवात्मदूषणम् ॥

(यथा, भागवते । ३ । ५ । ३९ ।
"मार्गन्ति यत्ते मुखपद्मनीडै-
श्छन्दःसुपर्ण्णैरृषयो विविक्ते ॥")
स्थानम् । इति मेदिनी । डे, १७ ॥
(रथ्यधि-
ष्ठानस्थानम् । यथा, रामायणे । ५ । ४८ ।
३२ ।
"स भग्ननीडः परिवृत्तकूवरः
पपात भूमौ हतवाजिरम्बरात् ॥")

**नीडजः**, पुं, (नीडे जायते इति । जन + डः ।)
पक्षी । इति हेमचन्द्रः । ४ । ३८३ ॥

**नीडजेन्द्रः**, पुं, (नीडजानां पक्षिणामिन्द्रः ।)
गरुडः । यथा, --
"अनडुहि जितनीडजेन्द्रवेगे
कृतनिविडासनमुज्झताघपीडे।
स्मरशमनतडित्कडारदृष्टिं
मृडमुडुराडिव शोभिचूडमीडे ॥"
इति प्राचीनशिवस्तुतिः ॥

**नीडोद्भवः**, पुं, (नीडे कुलाये उद्भव उत्पत्ति-
र्यस्य ।) पक्षी । इत्यमरः । २ । ५ । ३४ ॥

**नीतं**, त्रि, (नी + क्तः ।) प्राप्तम् । नेओया इति
भाषा ॥ यथा, --
"नीतं यदि नवनीतं नीतं नीतं किमेतेन ।
आतपतापितभूमौ माधव ! मा घाव मा
धाव ॥"
इत्युद्भटः ॥

**नीतिः**, स्त्री, (नीयन्ते संलभ्यन्ते उपायादय
ऐहिकामुष्मिकार्था वास्यामनया वा । नी +

अश्वानामिच्छया गच्छन्नुत्पथं प्रतिपद्यते ॥
यत्रावशः सारथिस्तु स्वेच्छया प्रेरयन् हयान्
।
नयेत् परवशं सम्यक् प्रथितं वीरमप्युत ॥
यथेन्द्रियाणि नृपतिर्व्विषयाणां परिग्रहे ।
स्ववश्यानि प्रकुर्व्वीत मनोज्ञानं दृढं तथा ॥
ज्ञाने दृढे कशायां वा दृढायां नृपसत्तम ! ।
सारथिः स्ववशो दान्तोऽनीशः प्रयितुं हयान्
॥
अतो नृपः स्वेन्द्रियाणि वशे कृत्वा मनस्तथा
।
ज्ञानमार्गमधिष्ठाय प्रकुर्व्वीतात्मनो हितम् ॥
भोक्तव्यं स्वेच्छया भूपो न कुर्य्यादुत्पथे रतिम्
।
द्रष्टव्यामाति द्रष्टव्यं न द्रष्टव्यञ्च स्वेच्छया ॥
श्रोतव्यमिति श्रोतव्यं नाधिकं श्रवणे चरेत् ।
शास्त्रतत्त्वमृते धीरः श्रुतिवश्यो भवेन्नहि ॥
एवं घ्राणं त्वचं वापि वशीकृत्येच्छया नृपः ।
स्वेच्छयैवोपभुञ्जीत नोद्दामं विषयं व्रजेत् ॥
एवं यदि भवेद्राजा तदा स स्याज्जितेन्द्रियः ।
जितेन्द्रियत्वे हेतुश्च शास्त्रवृद्धोपसेवनम् ॥
अवृद्धसेव्यशास्त्रज्ञो नृपः शत्रुवशो भवेत् ।
तस्माच्छास्त्रमधिष्ठाय भवेद्राजा जितेन्द्रियः
॥
धृतिः प्रागल्भ्यमुत्साहो वाक्पटुत्वं विवेचनम्
।
दक्षत्वं धारयिष्णुत्वं दानं मैत्री कृतज्ञता ॥
दृढशासनता सत्यं शौचं मतिविनिश्चयः ।

वाग्दण्डयोश्च पारुष्यं सप्तैतानि
विवर्ज्जयेत् ।
परस्त्रीषु विरक्तासु
सेवामेकान्ततस्त्यजेत् ॥
सतीषु निजनारीषु प्रेम्णा कुर्य्याच्च
सेवनम् ।
रतिपुत्त्रफला दारास्तांस्तु
नैकान्ततस्त्यजेत् ॥
तयोः सिद्ध्यै स्त्रियः सेव्या
वर्ज्जयित्वातिसक्तताम् ।
मृगयान्तु प्रमादानां स्थानं नित्यं
विवर्ज्जयेत् ॥
अक्षांस्तथा न कुर्व्वीत
सत्कार्य्यासक्तिनाशनान् ।
अन्यैः कृतं कदाचित्तु सेवेत
नात्मनाचरेत् ॥
अकार्य्यकरणे बीजं कृत्यानाञ्च
विवर्ज्जनम् ।
वर्जयेत् सततं पानं
शौचमाङ्गल्यनाशनम् ।
अर्थक्षयकरं नित्यं यजेच्चैवात्मदूषणम्
॥
अभिशस्तेषु चौरेषु घातकेष्वाततायिषु ।
सततं पृथिवीपालो दण्डपारुष्यमाचरेत्
॥
नान्यत्र दण्डपारुष्यं कुर्य्यान्नृपतिसत्तमः
।
वाक्पारुष्यन्तु सर्व्वत्र नैव कुर्य्यात्
कदाचन ॥
रक्षणीयं सदा सत्यं सत्यमेकं परायणम्
।
क्षमां तेजस्विताञ्चैव प्रस्तावान्नृप
आचरेत् ॥
यान्नासनाश्रयद्वैधसन्धयो विग्रहस्तथा ।
अभ्यसेत् षड्गुणानेतान तेषां स्थानञ्च
शाश्वतम् ॥
यः प्रमाणं न जानाति स्थाने वृद्धौ तथा
क्षये ।
कोषे जनपदे दण्डे न स राज्येऽवतिष्ठते
॥
कोषे जनपदे दण्डे चैकैकत्र त्रयं त्रयम् ।

|  |  |  |
| --- | --- | --- |
|  |  | प्रस्तावाद्विनियुञ्जीत<br>रक्षेन्नैकान्ततस्त्विमान् ॥<br>मित्रे शत्राबुदासीने प्रभावं त्रिष्वपीरयेत् ।<br>उतसाहो विजिगीषायां<br>धर्म्मकृत्येऽष्टवर्गके ॥<br>शरीरयात्रानिर्व्वाहि क्रियेत सततं नृपैः ।<br>मन्त्रनिश्चयसम्भूतां बुद्धिं सर्व्वत्र<br>योजयेत् ॥<br>अमात्ये शात्रवे राज्ये पुत्त्रेष्वन्तःपुरेषु च<br>॥ * ॥<br>कृषिदुर्गञ्च बाणिष्यं खल्यानां<br>करसाधनम् ।<br>आदानं सैन्यकरयोर्ब्बन्धनं<br>गजवाजिनोः ॥<br>शून्यसद्मम्मुखानाञ्च योजनं सततं जनैः<br>।<br>प्रपाणागारसेतूनां रक्षणञ्चेति चाष्टमम् ॥ |

एतदष्टासु वर्गेषु चारान् सम्यक्
प्रयोजयेत् ॥
कार्य्याकार्य्यविभागाय
चाष्टवर्गाधिकारिणाम् ।
अष्टौ चारान्नियुञ्जीयादष्टवर्गेषु पार्थिवः ॥
दशस्वन्येषु युञ्जीत क्रमतः शृणु तानि मे
।
स्वामिसचिवराष्ट्राणि मित्रं कोषो
बलन्तथा ॥
दुर्गन्तु सप्तमं ज्ञेयं राज्याङ्गं गुरुभाषितम्
।
दुर्गयुक्तञ्चाष्टवर्गे चारं नात्मनि योजयेत् ॥
तस्मादिमानि शेषाणि पञ्च चारपदानि तु
।
शुद्धान्तेष्वेव पुत्त्रेषु स्रक्पूपादौ महानसे
॥
शत्रूदासीनयोश्चैव बलाबलविनिश्चये ।
आदौ दशसु चैतेषु चारान्राजा प्रयोजयेत्
॥
न यत् प्रकाशं जानीयात् तत्तु
चारैर्निरूपयेत् ।
निरूप्य तत्प्रतीकारमवश्यं छिद्रतश्चरेत्
॥
यथा नियोगमेतेषां यो यो यत्रान्यथाचरेत्
।
ज्ञात्वा तत्र नृपश्चारैर्दण्डयेद्वा नियोजयेत्
॥
चारांस्तु मन्त्रिणा सार्द्धं रहस्ये संस्थितो
नृपः ।
प्रदोषसमये पृच्छेत्तदानीमेव साधयेत् ॥
स्वपुत्त्रे चाथ शुद्धान्ते ये तु चारा
महानसे ।
नियुक्तास्तान् मध्यरात्रौ पृच्छेद्यश्चापि
मन्त्रिणि ॥
एतान् चारान् स्वयं पश्येन्नृपतिर्मन्त्रिणा
विना ।
अन्यांश्च मन्त्रिणा सार्द्धं निरूप्य
प्रदिशेत् फलम् ॥

नृपतौ वाधिकं कुर्य्याद्धर्म्मं तं हीनतां नयेत्
॥
आभिचारिकमत्यर्थं कुर्व्वाणन्तु विघातयेत्
।
प्रवासयेद्ब्राह्मणन्तु पार्थिवो
ह्याभिचारिकम् ॥
एषां धर्म्मोपधा ज्ञेया तैरमात्यान् सदा चरेत्
।
एतादृशीं तथैवान्यामुपधां धर्म्मतश्चरेत् ॥
* ॥
कोषाध्यक्षान् समामन्त्र्य राजामात्यान्
प्रती-
रयेत् ।
पुत्त्रानन्यान् प्रति तथामन्त्र्य संवरणक्षमान्
॥
अयं हि प्रचुरः कोषो सदायत्तो नरोत्तम ।
आनये तव सम्मत्या तद्यदि त्वं प्रतीच्छसि
॥
तवान्नलब्धादस्माकं जीवनञ्च भविष्यति ।
त्वञ्चापि प्रचुरैः कोषैः किं किं नो वा
करिष्यसि ।
एवमन्यैः कोषगतैरुपायैनृपसत्तम ॥
पुत्त्रामात्यादिकान् सर्व्वान् सततं
परिशोधयेत् ।
कोषदोषकरान् हन्याद्वर्त्तुमिच्छून्निवारयेत्
॥
द्वैधचित्तान् विमन्येत कुर्य्याद्वै कोषरक्षणम्
॥ * ॥
दासीश्च शिल्पिनीर्वृद्धा मेधाधृतिमतीः
स्त्रियः ॥
अन्तर्ब्बहिश्च या यान्ति विदिता
सचिवादिभिः ।
ता राजा रहसि स्थित्वा
भार्य्यादिभिरलक्षितः ॥
अभिमन्त्र्याथ संमन्त्र्य प्रेरयेत् सचिवान्
प्रति ।
ता गत्वा हृदयं बुद्ध्वा स्त्रियो वै
ज्ञानतत्पराः ॥

न तच्छक्यं समाधातुं दक्षैर्नृपशतैरपि ।
दण्ड्यांस्तु दण्डयेद्दण्डैरदण्ड्यान्
दण्डयेन्नहि ॥
अदण्डयन्नृपो दण्ड्यानदण्ड्यांश्चापि
दण्डयन् ।
नृपतिर्वाच्यतां प्राप्य चौरकिल्विषमाप्नुयात्
॥ * ॥
दुर्गन्तु सततं कुर्य्यात् प्राकाराट्टालतोरणैः ।
दूषितान्नगराद्राजा दूरे दुर्गाश्रयं चरेत् ॥
दुर्गं बलं नृपाणान्तु नित्यं दुर्गं प्रशस्यते ।
शतमेको योधयति दुर्गस्थो यो धनुर्धरः ॥
शतं दशसहस्राणि तस्माद्दुर्गं प्रशस्यते ॥
जलदुर्गं भूमिदुर्गं वृक्षदुर्गं तथैव च ।
अरण्यवनदुर्गञ्च शैलजं परिखोद्भवम् ।
दुर्गं कार्य्यं नृपतिना यथायोग्यं स्वदेशतः ॥
दुर्गङ्कुर्व्वन् पुरङ्कुर्य्यात्त्रिकोणं धनुराकृति ।
वर्त्तुलं वा चतुष्कोणं नान्यथा नगरञ्चरेत् ॥
मृदङ्गाकृतिदुर्गञ्च सततं कुलनाशनम् ।
यथा राक्षसराजस्य लङ्का दुर्गा जिता पुरा ॥
बलेः पुरं शोणिताख्यं तेजो दुर्गे प्रतिष्ठितम् ।
यतस्तद्व्यजनाकारमतोभ्रष्टः श्रिया बलिः
॥
सौभाख्यं शाल्वराजस्य नगरं पञ्चकोणकम्
।
दिवि यद्वर्त्तते राजंस्तच्च भ्रष्टं भविष्यति ॥
यच्चायोध्याह्वयं भूप ! पुरमिक्ष्वाकुभूभुजाम्
।
धनुराकृति तच्चापि ततो भूरिजयप्रदम् ॥
दुर्गभूमौ यजेद्दुर्गां दिक्पालांश्चैव द्वारतः ।
पूजयित्वा विधानेन जयं भूपः समाप्नुयात् ।
ततो दुर्गं नृपः कुर्य्यात् सततं जयवृद्धये ॥ *
॥
न ब्राह्मणान् सदा राजा कदाचिदवमन्यते ।
अवमत्य नृपो विप्रान् प्रेत्येह दुःखमाग्भवेत्
॥
न विरोधस्तु तैः कार्य्यः स्वानि तेषां न
चाददेत् ।
कृत्यकालेषु सततं तानेव परिपूजयेत् ।

नैकवेशधरश्चारो नैको नोत्साहवर्ज्जितः
।
संस्तुतो नहि सर्व्वत्र नातिदीर्घो न
वामनः ॥
सततं न दिवाचारी न रोगी
नाप्यबुद्धिमान् ।
न वित्तविभवैर्हीनो न
भार्य्यापुत्रवर्ज्जितः ॥
कार्य्यश्चारो नृपतिना गुह्यतत्त्वविनिर्ण्णये
।
अनेकवेशग्रहणक्षमं भार्य्यासुतैर्य्युतम् ॥
बहुदेशवचोऽभिज्ञं पराभिप्रायवेदकम् ।
दृढभक्तं प्रकुर्व्वीत चारं शक्तमसाध्वसम्
॥
अधितिष्ठेत् स्वयं राजा
कृषिमात्मसमैस्तथा ।
बणिक्पथे च दुर्गादौ तेषु शक्तान्नियोजयेत्
॥
अन्तःपुरे पितुस्तुल्यान् धीमान्
वृद्धान्नियोजयेत् ।
षण्डान पण्डांस्तथा वृद्धान् स्त्रियो या
बुद्धितत्-
पराः ॥ * ॥
शुद्धान्तद्वारि युञ्जीयात् स्त्रियो वृद्धा
मनीषिणीः ।
नैकः स्वपेत् कदाचित्तु नैको भुञ्जीत
पार्थिवः ॥
नैकाकिनीन्तु महीषीं व्रजेन्मैत्राय नैककः
।
अमात्यानुपधाशुद्धान् भार्य्याः
पुत्रांस्तथैव च ॥
प्रकुर्य्यात् सततं भूपः स्वप्रसादं
समाचरन् ।
धर्म्मार्थकाममोक्षैश्च प्रत्येकपरिशोधनैः
॥
उपेत्य धीयते यस्मादुपधा परिकीर्त्तिता
।
अथ कामोपधाभ्यान्तु भार्य्याः पुत्रांस्तु
शोधयेत् ॥
धर्म्मापधाभिर्विप्रांस्तु सर्व्वाभिः सचिवान्
पुनः ।

महिषीप्रमुखा राज्ञस्त्वां वै कामयते शुभाः
।
तत्राहं योजयिष्यामि यदि ते वर्त्तते स्पृहा ॥
सचिवस्त्वां कामयते त्वद्योग्यो वरवर्णिनि !
।
तं सङ्गमयितुं शक्ता यदि श्रद्धा तवास्त्यहम्
॥
इत्यनेन प्रकारेण नानोपायैस्तथेतरैः ।
भार्य्याः पुत्रीर्दुहितॄश्च स्नुषाश्च
प्रस्नुषास्तथा ॥
शोधयेत् सचिवान् पुत्रान् पौत्रादीन्
सेवकां-
स्तथा ।
कामोपधाविशुद्धांस्तु घातयेदविचारयन् ॥
स्त्रियश्च दण्ड्या योग्येन ब्राह्मणांस्तु
प्रवासयेत् ।
मोक्षमार्गावसक्तन्तु हिंसापैशुन्यवर्ज्जितम् ।
क्षमैकसारं नृपतिः सचिवं परिवर्ज्जयेत् ॥
मोक्षमार्गावसक्तांस्तु दण्ड्यानपि न
दण्डयेत् ।
समबुद्धिस्तु सर्व्वत्र तस्मात्तं परिवर्ज्जयेत्
॥ * ॥
इति सूत्रं चोपधानामुपधां बहुधा पुनः ।
विवेचिता चोशनसा तच्छास्त्रे तत्र बोधयेत्
॥
विग्रहं सततं राजा परैर्न सम्यगाचरेत् ।
भूवित्तमित्रलाभेषु निश्चितेष्वेव विग्रहः ॥
सप्ताङ्गेष्वप्रमादश्च सदा कार्य्यो नृपोत्तमैः
।
कोषस्य सञ्चयं रक्षां सततं सम्यगाचरेत् ॥
* ॥
मन्त्रिणस्तु नृपः कुर्य्याद्विप्रान्
विद्याविशारदान् ।
विषयज्ञान् कुलीनांश्च
धर्म्मार्थकुलजानृजून् ॥
मन्त्रयेत्तैः समं काले नात्यर्थं बहुभिश्चरेत्
।
एकैकेनैव कर्त्तव्यं मन्त्रस्य तु विनिश्चयम्
॥
व्यस्तैश्चैव समस्तैश्च धान्यस्य
व्यपदेशतः ।

नैषां निन्दां प्रकुर्व्वीत नाभ्यसूयां तथाचरेत्
॥
एवं नृपो महाबुद्धिस्तद्भूमण्डलसंयतः ।
अप्रमादी चारचक्षुर्गुणवान् सुप्रियंवदः ॥
प्रेत्येह महतीं सिद्धिं प्राप्नोति सुखभोगवान्
।
यैर्गुणैर्योजितश्चात्मा तैः पुत्रानपि योजयेत्
॥
नृपस्य च स्वतन्त्रत्वं सततं स्वं विनाशयेत्
।
स्वतन्त्रो भूपतनयो विकारं याति निश्चयम्
॥
निर्व्विकाराय सततं तमुच्चैः परिपूजयेत् ।
भोजने शयने पाने पुरुषाणाञ्च वीक्षणे ॥
नियोजयेत् सदाचारान् भूपः कामविचेष्टने ।
अस्वतन्त्राः स्त्रियो नित्यं हानये संभवन्ति
हि ॥
तस्मात् कुमारं महिषीमुपधाभिर्म्मनोहरैः ॥
शोधयित्वा नियुञ्जीत यौवराज्यावरोधयोः
अन्तःपुरप्रवेशे तु स्वतन्त्रत्वं निषेधयेत् ॥
भूपपुत्रस्य भार्य्याया बहिःसारे तथैव च ।
अयं विशेषः संक्षेपान्नृपधर्म्मो मयोदितः ॥
पुत्राणां गुणविन्यासो भार्य्याणामपि भूपते ।
उशना राजनीतीनां तन्त्राणि च बृहस्पतिः ॥
चकारान्यान् विशेषांस्तु तयोस्तन्त्रेषु
शोधयेत् ।
एवं राजा महाभागो राजनीतौ विशेषताम् ।
कुर्व्वन्न सीदति सदा भूयसीं श्रियमश्नुते ॥”
इति कालिकापुराणे राजनीतिविशेषे ८५
अध्यायः ॥ * ॥

| | | |
|---|---|---|
| एभिर्यज्ञैस्तथा दानैरिहैव नृपता भवेत् ॥<br>* ॥<br>तस्माद्भवांस्तु राज्यार्थी धर्म्ममेवं समाचरेत् ।<br>अनेनैवाभिचारेण यज्ञैर्वा पार्थिवो ह्ययम् ।<br>प्राणांस्त्यक्ष्यति राजा त्वं भविष्यसि न संशयः ॥<br>इति धर्म्मो नृपस्यैव अश्वमेधादिकञ्च यत् ।<br>स्वयं न कुरुते भूपस्तस्मात्त्वं कुरु सत्तम ! ॥<br>एवं मन्त्रैर्मन्त्रयित्वा नृपः कार्त्तान्तिकान् द्विजान् ।<br>तैर्ज्ञातान् स्वयं ज्ञात्वा गृह्णीयात्तस्य तैर्म्मनः ॥<br>यदि राज्याभिलाषेण सचिवो धर्म्ममाचरेत् । | समुद्धृतं मन्त्रगृहं स्थलमारुह्य मन्त्रयेत् ॥<br>अरण्ये निःशलाके वा न यामिन्यां कदाचन ।<br>शिशून् शाखामृगान् पण्डान् शुकान् वै शारि-<br>कास्तथा ॥<br>वर्ज्जयेन्मन्त्रगेहेषु मनुष्यानुद्धतांस्तथा ।<br>दूषणं मन्त्रभेदेषु नृपाणां यत्र जायते ॥ | |

अन्यत्तु
औशनससूत्रकामन्दकपञ्चतन्त्रनीति-
मयूखहितोपदेशचाणक्यभारतीय-
राजधर्म्मादौ
द्रष्टव्यम् ॥

**नीतिघोषः**, पुं, (नीतिरेव नीत्यात्मको वा घोषो
रबो यस्येति ।) बृहस्पतिरथः । इति
त्रिकाण्ड-
शेषः ॥ (नीतेर्नयस्य घोषः ।) नयष्वनिश्च
॥

**नीतिसारः**, पुं, (नीतिरेव सारो यस्येति ।)
इन्द्रं प्रति बृहस्पत्युक्तनीतिशास्त्रविशेषः ।
अयं
चाणक्यसंग्रहमूलम् । गरुडपुराणे अष्टास्व-
ध्यायेष्वस्ति । बाहुल्यभिया तत् समुदायं न
लिखित्वा अष्टानामध्यायानां
प्राथमिकाष्टश्लोका
लिख्यन्ते । यथा, --
“सद्भिः सङ्गं प्रकुर्व्वीत सिद्धिकामः सदा
नरः ।
नासद्भिरिह लोकाय परलोकाय वा हितम् ॥
१ ॥
आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ २ ॥
यो ध्रुवाणि परित्यज्य अध्रुवाणि च सेवते ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥
३ ॥
राज्यं पालयते नित्यं सत्यधर्म्मपरायणः ।
निर्ज्जित्य परसैन्यानि क्षितिं धर्म्मेण
पालयेत् ॥ ४ ॥
भृत्या बहुविधा ज्ञेया उत्तमाधममध्यमाः ।
नियोक्तव्या यथार्थेषु त्रिविधेष्वेव कर्म्मसु ॥
५ ॥
गुणवन्तं नियुञ्जीत गुणहीनं विवर्ज्जयेत् ।
पण्डिते च गुणाः सर्व्वे मूर्खे दोषाश्च
केवलम् ॥ ६ ॥
न कश्चित् कस्यचिन्मित्रं न कश्चित्
कस्यचिद्रिपुः ।

कदम्बवृक्षः । इत्यमरः । २ । ४ । ४२ ॥
(यथा,
ऋतुसंहारे । ३ । १३ ।
“त्यक्त्वा कदम्बकूटजार्ज्जुनसर्जनीपान्
सप्तच्छदानुपगता कुसुमोद्गमश्रीः ॥”
क्वचित् क्ली । यथा, --
“नीपं सभार्गकं पीलु तृणशून्यं
विकङ्कतम् ।
प्राचीनामलकञ्चैव दोषघ्नङ्गरहारि च ॥”
इति चरके सूत्रस्थाने सप्तविंशेऽध्याये ॥
“गरदोषहरं नीपं प्राचीनामलकन्तथा ॥”
इति सुश्रुते सूत्रस्थाने ४६ अध्याये ॥)
धाराकदम्बः । इति राजनिर्घण्टः ॥
बन्धूक-
वृक्षः । नीलाशोकवृक्षः । इति मेदिनी ।
पे, ८ ॥

**नीयमानं**, त्रि, (नीयते इति । नी + कर्म्मणि
शानच् ।) प्राप्यमाणम् । यथा,
कालिकापुराणे ।
“नीयमानो न गच्छेच्चेन्महिषीमरणं तदा
॥”

**नीरं**, क्ली, (नयति प्रापयति स्थानात्
स्थानान्तर-
मिति । नी प्रापणे + “स्फारितञ्चीति ।”
उणां
२ । १३ । इति रक् । यद्वा, “अग्नेरापः
।”
इति श्रुतेः निर्गतं रादग्नेरिति,
“अद्भ्योऽग्नि-
र्ब्रह्मणः क्षत्रम् ।” इति स्मृतेः निर्गतो
रोऽग्नि-
र्यस्मादिति वा । “ढ्रलोपे पूर्ब्बस्य
दीर्घोऽणः ।”
६ । ३ । १११ । इति रलोपे पूर्ब्बदीर्घः
।) जलम् ।
इत्यमरः । १ । १० । ४ ॥ (यथा,
गीतगोविन्दे । १ । ९ ।
“छलयसि विक्रमणे वलिमद्भुतवामन

**नीरजः**, पुं, (नीरे जायते इति । जन + डः ।)
उद्रजन्तुः । इति शब्दरत्नावली ॥ उशीरी ।
इति राजनिर्घण्टः ॥ (महादेवः । यथा,
महा-
भारते । १३ । १७ । १४६ ।
“उद्भित्त्रिविक्रमो वैद्यो विरजो नीरजोऽमरः
॥”)

**नीरजः**, [स्] त्रि, (निर्नास्ति रजो धूलिः
कुसुमपरागादिर्वा यत्र ।) निर्धूलिदेशपूष्यादि
।
(यथा, महाभारते । १३ । ८१ । २० ।
“सर्व्वा मणिमयी भूमिः सर्व्वकाञ्चनवालुका
।
सर्व्वर्त्तुसुखसंस्पर्शा निष्पङ्का नीरजाः शुभा
॥”)
अरजस्कायाम् स्त्री ॥

**नीरतः**, स्त्रि, (निर्गतं रतं रमणं यस्मात् ।)
विरतः । रमणाभाववान् । यथा, --
“दिशि दिशि नीरतरङ्गो नीरतरङ्गो ममापि
हृदयेशः ।
आयाताः सखि वर्षा वर्षादपि यासु वासरो
दीर्घः ॥”
इत्युद्भटद्व्यर्थपद्यम् ॥

**नीरदः**, पुं, (नीरं जलं ददातीति । नीर + दा +
कः ।) मेघः । यथाह घटकर्परः ।
“निचितं खमुपेत्य नीरदैः प्रियहीना
हृदयाव-
नीरदैः ।”
मुस्तकम् । इति राजनिर्घण्टः ॥ (निर्नास्ति
रदो दन्तो यस्य ।) रदशून्ये, त्रि ॥ यथा, --
“आस्वाद्य निरवशेषं विरहिवधूनां मृदूनि
मांसानि ।
करकामिषेण मन्ये निष्ठीवति
नीरदोऽस्थीनि ॥”
इत्युद्भटः ॥

**नीरधिः**, पुं, (नीराणि धीयन्तेऽस्मिन्निति । नीर +

कारणादेव जायन्ते मित्राणि रिपवस्तथा ॥
७ ॥
कुभार्य्याञ्च कुमित्रञ्च कुराजानं कुसौहृदम् ।
कुबन्धुञ्च कुदेशञ्च दूरतः परिवर्ज्जयेत् ॥”
८ ॥
इति गारुडे ॥

**नीथः**, पुं, (नयति प्रापयतीति । नी + “हनि-
कुषिनीरमिकाशिभ्यः क्थन् ।” उणां २ । २ ।
इति क्थन् ।) नियन्ता । प्रापयिता । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ (नी + भावे
क्थन् । नयनम् । इति उज्ज्वलदत्तः ॥ यथा,
ऋग्वेदे । १ । १०० । १२ ।
“सहस्रचेताः शतनीथ ऋभ्वा ॥”
स्तोत्रम् । यथा, ऋग्वेदे । ३ । १२ । ५ ।
“नीथाविदो जरितारः ॥”
“नीथाविदस्तोत्राभिज्ञाः ।” इति तद्भाष्ये
सायनः ॥)
जले, क्ली । इति संक्षिप्तसारोणादिवृत्तिः ॥
(नीयतेऽनेनेति । करणे + क्थन् ।
प्रापणहेतु-
भूते, त्रि । यथा, ऋग्वेदे । १ । १०४ । ५ ।
“प्रति यत्स्या नीथादर्शि ॥”
“यद्यदा नीथा नयनहेतुभूता स्या सा पदवी
प्रत्यदर्श ।” इति तद्भाष्ये सायनः ॥)

**नीध्रं**, क्ली, (नितरां ध्रियत इति । नि + धृ + मूल-
विभुजादित्वात् कः ।) वलीकम् । वनम् ।
नेमिः । चन्द्रः । रेवतीनक्षत्रम् । इति हेम-
चन्द्रः ॥ नीव्रमपि पाठः ॥

**नीपः**, पुं, (नी + “पानीविषिभ्यः पः ।” उणां ३ ।
२३ । इति पः । बाहुलकात् गुणाभावः ।)
पदनखनीरजनितजनपावन।
केशव धृतवामनरूप
जय जगदीश हरे ॥”)
रसः । इत्युणादिकोषः ॥ नीरे
अक्षेपणीयानि
यथा, गरुडपुराणे ।
“निष्ठीवासृक्शकृन्मूत्रविषाण्यप्सु न
संक्षिपेत् ॥”
(अस्य पानविधेयता विधीयते यथा, --
“षाप्युद्भवन्तत् प्रवदन्ति धीरा
नीरं समासेन निगद्यतेऽत्र ।
यत् श्रीमताञ्चैव महायतीनां
बलप्रदं पथ्यतरं प्रदिष्टम् ॥”
“विण्मूत्रे तृणनीलिका विषयुतं तप्तं घनं
फेनिलं
दन्तग्राह्यमनार्त्तवं हि सलिलं दुर्गन्धि वै
गर्हितम् ।
नानाजीवविमिश्रितं गुरुतरं
वर्णौघपङ्काविल-
ञ्चन्द्रार्कांशुसुगोपितं न च पिबेन्नीरं
सुदोषा-
न्वितम् ॥”
इति हारीते प्रथमस्थाने सप्तमेऽध्याये ॥)

**नीरजं**, क्ली, (नीरे जले जायते इति । जन +
डः ।) कुष्ठौषधिः । (यथा, सुश्रुते
चिकित्सित-
ष्ठाने । २५ ।
“फलत्रयं लौहरजोऽञ्जनञ्च
यष्ट्याह्वयं नीरजसारिवे च ॥”)
पद्मम् । इति मेदिनी । जे, २४ ॥ (यथा,
भ्रम-
राष्टके । ४ ।
“नीतं जन्म नवीननीरजवने पीतं मधु
स्वेच्छया ॥”)
मुक्ता । इति राजनिर्घण्टः ॥ जलजाते,
त्रि ॥
धा + “कर्म्मण्यधिकरणे च ।” ३ । ३ ।
९३ ।
इति किः ।) समुद्रः । इति शब्दरत्नावली ॥

**नीरनिधिः**, पुं, (नीराणि निधीयन्तेऽत्रेति । नीर
+ नि + धा + किः ।) समुद्रः । इति शब्द-
रत्नावली ॥ (यथा, माघे । ३ । ७० ।
“पारे जलं नीरनिधेरपश्य-
न्मुरारिरानीलपलाशराशीः ॥”)

**नीरन्ध्रं**, त्रि, (निर्नास्ति रन्ध्रं छिद्रं यस्मिन् ।)
घनम् । इति हेमचन्द्रः । ६ । ८३ ॥ (यथा,
माघे । ८ । ३ ।
“नीरन्ध्रद्रुमशिशिरां भुवं व्रजन्तीः
साशङ्कं मुहुरिव कौतुकात् करैस्ताः ।
पस्पर्श क्षणमलिनाकुलीकृतानां
शाखानामतुहिनरश्मिरन्तरालैः ॥”)
छिद्ररहितम् । यथा, --
“श्रीमन्नाथ
तवार्जितोर्जितयशःसंशुद्धमुक्तावली-
मादायैव विधिर्व्विधित्सुरमलं हारं त्वदीयै-
र्गुणैः ।
नीरन्ध्रामवलीक्य तामपि ततो नान्तं
गुणानामहो
उत्पित्सुर्गगनान्तरे समकिरत्तास्तास्तत-
स्तारकाः ॥”
इति कालीदासः ॥

**नीरसः**, पुं, (नितरां रसो यत्र ।) दाडिमः ।

इति हारावली ॥ (निर्नास्ति रसो यत्र ।)
रसशून्ये, त्रि । यथा, --
"शृङ्गारी चेत् कविः काव्ये जातं रसमयं सगत्
।
स एव चेदशृङ्गारी नीरसं सर्व्वमेव तत् ॥"
इति प्राञ्चः ॥

**नीराखुः**, पुं, (नीरस्य आखुः ।) उद्रः । उद्बि-

डाल इति भाषा ॥ तत्पर्य्यायः । जलनकुलः
२
जलविडालः ३ जलप्लवः ४ । इति
हारावली ।
७६ ॥ उर्द्रः ५ जलाखुः ६ नीरजः ७ नकुलः
८ ।
इति शब्दरत्नावली ॥

**नीराजनं**, क्ली, (राज दीप्तौ + ल्युट् ।

नितरां राजनं यत्र ॥ निर्
+ राज् + णिच् + "ण्यासश्रन्थो युच् ।" ३ ।
३ । १०७ । इति भावे युच् ।) वाहनायुधादे-
र्निःशेषेण राजनं यत्र सा नीराजना । नीरस्य
शान्त्युदकस्य अजनं क्षेपो यत्र सा नीराजना
वा । इत्यमरटीकायां भरतः ॥ * ॥

**नीराजना**, स्त्री, (राज दीप्तौ + ल्युट् ।

नितरां राजनं यत्र ॥ निर्
+ राज् + णिच् + "ण्यासश्रन्थो युच् ।" ३ ।
३ । १०७ । इति भावे युच् ।) वाहनायुधादे-
र्निःशेषेण राजनं यत्र सा नीराजना । नीरस्य
शान्त्युदकस्य अजनं क्षेपो यत्र सा नीराजना
वा । इत्यमरटीकायां भरतः ॥ * ॥
तद्विधानं यथा, --
"शरत्काले महाष्टम्यां दुर्गायाः परिपूजनम् ।
नीराजनं दशम्यान्तु कुर्य्याद्वै बलवृद्धये ॥
विधिं नीराजनस्य त्वं शृणु पार्थिवसत्तम ! ।
कृतेन येन चाश्वानां गजानामपि चेष्टनम् ॥
आश्विने शुक्लपक्षे या तृतीया स्वातियोगिनी
।
कण्ठदेशे निबध्नीयात्
पुष्टिशान्त्यर्थमेव च ॥
वैष्णवं मण्डलं कृत्वा दिक्पालांश्च
नवग्रहान् ।
विश्वेदेवांस्तु मन्त्रेण विष्णुमुख्यान्
प्रपूजयेत् ॥
आज्यैस्तिलैश्च पुष्पैश्च मिश्रीकृत्य
पुरोहितः ।
रवेस्तु वरुणस्यैव प्रजेशस्य तथैव च
॥
पुरुहूतस्य विष्णोश्च होमं
सप्ताहमाचरेत् ।
एकैकस्य सहस्रं वा अष्टोत्तरशतञ्च वा
॥
कुर्य्यात्तु प्रत्यहं होमं चतुर्व्वर्गस्य
सिद्धये ।
समिधश्चापि होतव्याः पलाशं खदिरं
तथा ॥
औडुम्बरञ्च काश्मर्य्यमश्वत्थञ्च
पुरोहितः ।
सौवर्णान् राजतान् वापि मार्त्तिकान्
वा यथे-
च्छया ॥
कुर्य्यात्तु कलसानष्टौ
फलपल्लवयोजितान् ।
क्षिपेत्तेषु घटेष्वेव समङ्गां हरितालकम्
॥
चन्दनञ्च तथा कुष्ठं प्रियङ्गुञ्च
मनःशिलाम् ।
अञ्जनञ्च हरिद्राञ्च श्वेतां दन्तीं तथैव
च ॥
भल्लातकं पूर्णकोषं सहदेवां शतावरीम्
।
वचां सनागकुसुमां सोमराजीं
स्वगुप्तिकाम् ॥
तुत्थञ्च करवीरञ्च तुलसीदलमेव च ।
एतानि निःक्षिपेन्मध्ये कलसानां
पुरोहितः ॥
आप्लाव्याप्लाव्य तुरगान् गजान् भूपञ्च
सैनिकान् ।
रथांश्च संस्पृशेन्मन्त्रैः शान्तिकैः
पौष्टिकैस्तथा ॥
सेचयन् सहितैर्व्विप्रैश्चतुरङ्गं पुरोहितः ।
दिक्पालानां ग्रहाणाञ्च मन्त्रैश्चैव सवैष्णवैः ॥
बहुधा चाभिषिच्याथ ततः सौवर्णदर्पणम् ।
वीक्षयित्वा नृपञ्चर्त्विक् ततो मन्त्रिणमेव च ॥
राजपुत्त्रांस्तथामात्यानन्यानपिच पौरवान् ।
कल्पयन् द्विजशार्द्दूलः सर्व्वानिव तु दर्शयेत् ॥
* ॥
चतुरङ्गबलस्यापि कृत्वैवं शान्तिपौष्टिके ।
मृण्मयं शात्रवं कृत्वा ह्यभिचारकमन्त्रकैः ॥
हृदि शूलेन विद्ध्वा तं शिरः खड्गेन छेदयेत्
॥
आचार्य्यः कविकां पश्चादभिमन्त्र्य हयाय वै
॥
ऐन्द्रैः प्राभाकरैर्म्मन्त्रैर्दव्याद्वक्त्रे स्वयं पुनः ।
तमनेन तु मन्त्रेण समारुह्य नृपस्तदा ॥
गच्छेदुत्तरपूर्व्बान्तु दिशं सर्व्वबलैर्युतः ।
ऋत्विक्पुरोहिताचार्य्याःसर्व्व एव नृपन्तथा
॥
अनुगच्छेयुरव्यग्रा निमित्तानि व्यलोकयन् ।
वादित्रघौषैस्तुमुलैरातपत्रैर्वृतस्तथा ॥
गच्छेन्नीराजने राजा दारयन्निव मेदिनीम् ।
मणिविद्रुममुक्तादस्वर्णरत्नैरलङ्कृतः ।
क्रोशमात्रं ततो गत्वा पूर्व्बद्वारेण पार्थिवः ॥
स्वपुरं प्रविशेद्विप्रैर्यज्ञं यायात् पुरोहितः ।
तत्र गत्वा दक्षिणान्तु हिरण्यं गां तथा तिलम्
।
दत्वा पश्चाद्द्विजेभ्यस्तु दद्याद्दानानि
शक्तितः ॥
एवं नीराजनं कृत्वा बलानाञ्च महीक्षितः ।
प्रेत्येह च स्थितां लक्ष्मीं नृपतिः
प्राप्नुयात्तथा ॥
त्वमश्वामृतसंजात सागरोद्भव सैन्धव ।
येन सत्येन वहसे शक्रं तेनेह मां वह ॥
येन सत्येन रेमन्तं येन सत्येन भास्करम् ।
वहसं तेन सत्येन विजयाय वहस्व माम् ॥

ऐशान्यां स्वपुरस्यैव गृह्णीयात् स्थानमुत्तमम् ॥
नीराजनं ततः कुर्य्यात् संप्राप्ते दिवसेऽष्टमे ।
नीराजनस्य कालस्तु पूर्ब्बमुक्तस्तु ते मया ॥
विधानमत्र शृणु मे कृतकृत्यो भविष्यसि ।
एकं हयं महासत्वं सुमनोहरमेव वा ॥
पूजयेत् सप्तदिवसान् गन्धपुष्पादिकांशुभिः ।
तृतीयादौ पूजयित्वा नयेत्तं यज्ञमण्डपम् ॥
चेष्टां निरूपयंस्तस्य जानीयाच्च शुभाशुभम् ।
परराष्ट्रविमर्द्दः स्यादश्वो यदि पलायते ॥
म्रियते राजपुत्त्रस्तु यदि चाश्रूणि मुञ्चति ।
नीयमानो न गच्छेच्चेन्महिषीमरणं तदा ॥
तथैव मुखनासाक्षिशब्दं कुर्य्याद्धयो यदि ।
यत्काष्ठाभिमुखः कुर्य्यात्तत्काष्ठायां जयेद्रिपून् ॥
उत्क्षिप्य दक्षिणाग्रन्तु पदमश्वो भवेत् पुरा ।
तदा जयेत् समस्तांश्च नृपतिर्व्विजयेद्रिपून् ॥
प्रातर्न्नीराजनं कुर्य्याद्दशम्यां नृपसत्तम ! ।
तदप्राप्तौ तु द्वादश्यां तस्यामेव समाचरेत् ॥
कार्त्तिके पञ्चदश्यां वा तत्राभावे तु पार्थिवः ।
ऐशान्यां स्वपुरस्योच्चैर्हस्तमानेन षोडश ॥
दशहस्तन्तु विपुलं कुर्य्याद्वै तत्र तोरणम् ।
द्वात्रिंशद्धस्तमात्रन्तु हस्तषोडशविस्तृतम् ॥
यज्ञार्थं मण्डपं कुर्य्यात् मध्ये वेदिं विनिर्णयेत् ।
वेद्याश्चोत्तरतश्चाश्ववेदिं कुर्य्यादनुत्तमाम् ॥
यत्र संस्थाप्य चाश्वश्च पूजितव्यः पुरोहितैः ।
सज्जडिम्बरशाखानामर्ज्जुनस्याथवा नृपः ॥
मत्स्वशङ्खाङ्कितैश्चक्रैर्ध्वजैश्चापि विभूषयेत् ।
तोरणं कनकै रत्नैस्तथा नानाविधैर्म्मतैः ॥
भल्लातकं शालिकुष्ठं सिद्धार्थं सैन्धवस्य तु ।
कनकैरम्बुजैर्यज्ञदारुभिः स्रुक्स्रुवौ तथा ।
कर्त्तव्यौ शान्तिकामेन नीराजनविधौ नृप ! ॥
एवं सप्ताहपर्य्यन्तं पूजाभिर्हवनैस्तथा ।
पूर्ब्बोक्तान् पूजयित्वा तु नृपः सप्ताहमाचरेत् ॥
यावन्नीराजनं कुर्य्यात्तावद्राजा वसेद्गृहे ।
रात्रौ न यज्ञभूमौ तु निवसेच्छान्तिमिच्छुकः ॥
नारोहयेत्तु तुरगं गजं वा तत्र पार्थिवः ।
यावत् सप्ताहपर्य्यन्तं यानेनान्येन वै व्रजेत् ॥
भक्ष्यैर्नानाविधैश्चैव मधुपायसयावकैः ।
मोदकैर्व्वा बलिं कुर्य्याच्चान्नव्यञ्जनसम्भवैः ॥
पूर्ब्बोक्तानान्तु देवानां सप्ताहं यावदुत्तमम् ।
सप्तमेऽह्नि तु रेमन्तं पूजयेत्तोरणान्तरे ॥
सूर्य्यपुत्त्रं महाबाहुं द्विभुजं कवचोज्वलम् ।
ज्वलन्तं शुक्लवस्त्रेण केशानुद्ग्रथ्य वाससा ॥
कशां वामकरे बिभ्रद्दक्षिणन्तु करं पुनः ।
सखड्गं न्यस्य वल्गायां सितसैन्धवसंस्थितम् ॥
एवंविधन्तु रेमन्तं प्रतिमायां घटेऽपि वा ।
सूर्य्यपूजाविधानेन पूजयेत्तोरणान्तरे ॥ * ॥
पूजयित्वा तु रेमन्तं द्विरदं तुरगन्तथा ।
आहताम्बरसंवीतं स्रक्चन्दनसमन्विलम् ॥
आभ्यान्तु नृपमन्त्राभ्यामश्वारोहणमाचरेत् ।
आरुह्याग्रे महिष्यास्तु शुद्धान्ते लम्बयेत्ततः ॥
महिषी च ततो भूपं पर्य्यङ्कोपरिसंस्थितम् ।
दूर्व्वाक्षतः ससिद्धार्थैः स्त्रीभिः सह समर्च्चयेत् ॥
कृते तु भूमिग्रहणे तृतीयायां नीराजने ।
सूतकं यदि जायेत तन्न दुष्यति केवलम् ॥
सूतके मृतके वापि पार्थिवस्तु यथा तथा ।
बलं नीराजनं कुर्य्यात्तन्माचक्ष विशेषतः ॥
सद्यःशौचं भवेद्राज्ञां व्यवहारविलोकने ।
तथा विवासिते यज्ञे परराष्ट्रविमर्द्दने ।
अयन्ते कथितो राजन्नीराजनक्रमो मया ॥”
इति कालिकापुराणे ८६ अध्यायः ॥ * ॥
(निर् + राज + भावे ल्युट् ।) निर्म्मञ्छनम् ।
आरति इति भाषा ॥ तत्र पञ्चनीराजनं यथा,
“पञ्चनीराजनं कुर्य्यात् प्रथमं दीपमालया ।
द्वितीयं सोदकाब्जेन तृतीयं धौतवाससा ॥
चूताश्वत्थादिपत्रैश्च चतुर्थं परिकीर्त्तितम् ।
पञ्चमं प्रणिपातेन साष्टाङ्गेन यथाविधि ॥”
इति कालोत्तरतन्त्रम् ॥
तस्य वर्त्तिकादिप्रमाणं यथा, --
“कुङ्कुमागुरुकर्पूरघृतचन्दननिर्म्मिताः ।
वर्त्तिकाः सप्त वा पञ्च कृत्वा वन्दापनीयकम् ॥

|  | सुवर्णाबद्धनिस्त्रिंशं<br>विचित्रकवचादिभिः।<br>युक्तन्तु होमकुण्डस्य<br>ऐशान्यामश्ववेदिकाम् ॥<br>पूर्ब्ब कृत्वा नयेदश्वगजपालः पृथक्<br>पृथक् ।<br>नीयमाने गजे चाश्वे पूर्ब्बोक्तञ्च<br>निमित्तकम् ।<br>यत्नाद्वीक्षेत नृपतिः फलं<br>चैवावधारयेत् ।<br>होमकुण्डस्योत्तरस्यां वैयाघ्रे चर्म्मणि<br>स्थितः ॥<br>दैवविदा चाश्वविदा सहितो वीक्ष्य<br>सैन्धवम् ।<br>नीताय तुरगायाशु भक्तपिडीं<br>सुगन्धिनीम् ॥<br>दद्यात् पुरोहितस्तत्र संमन्त्र्य<br>शान्तिमन्त्रकैः ।<br>तत्क्षणाद्यदि जिघ्रेत्तदश्नीयाद्वा हयः<br>स च ॥<br>तदा स्यात् सर्व्वकल्याणं<br>विपरीतमतोऽन्यथा ॥<br>शाखामौडम्बरीमाभ्रीं सकुशाञ्च<br>घटोदके । |  |
|---|---|---|

कुर्य्यात् सप्तप्रदीपेन
शङ्खघण्टादिवाद्यकैः ।
हरेः पञ्चप्रदीपेन वहुशो भक्तितत्परः ॥”
इति पाद्मोत्तरखण्डे १०७ अध्यायः ॥
* ॥
अथ नीराजनमाहात्म्यम् ।
स्कान्दे ब्रह्मनारदसंवादे ।
“वहुवर्त्तिसमायुक्तं ज्वलन्तं केशवोपरि
।
कुर्य्यादारात्रिकं यस्तु कल्पकोटिं
वसेद्दिवि ॥
कर्पूरेण तु यः कुर्य्याद्भक्त्या
केशवमूर्द्धनि ।
आरात्रिकं मुनिश्रेष्ठ !
प्रविशेद्विष्णुमव्ययम् ॥”
तदेवान्यत्र ।
“दीप्तिमन्तं सकर्पूरं करोत्यारात्रिकं
नृप ! ।
कृष्णस्य वसते लोके सप्तकल्पानि
मानवः ॥”
तत्रैव शिवोमासंवादे ।
“मन्त्रहीनं क्रियाहीनं यत् कृतं पूजनं
हरेः ।
सर्व्वं सम्पूर्णतामेति कृते नीराजने
शिवे ! ॥”
हरिभक्तिसुधोदये ।
“कृत्वा नीरत्जनं विष्णोर्दीपावल्या
सुदृश्यया ।
तमोविकारं जयति जिते तस्मिंश्च को
भवः ॥”
अन्यत्र च ।
“कोटयो ब्रह्महत्यानामगम्यागमकोटयः
।
दहत्यालोकमात्रेण विष्णोः सारात्रिकं
मुखम् ॥
यच्च दीपस्य माहात्म्यं पूर्ब्बं
लिखितमस्ति तत् ।
द्रष्टव्यं सर्व्वमत्रापि प्रायेणाभेदतोऽनयोः
॥

**नीरूपं**, त्रि, (निर्नास्ति रूपमस्येति ।) रूपा-
भावविशिष्टम् । यथा । नीरूपस्यापि
कालस्य
इन्द्रियवेद्यत्वाभ्युपगमेनेति
वेदान्तपरिभाषा ॥

**नीरेणुकः**, त्रि, (निर्गतो रेणुः पांशुर्यस्मात् ।
कप् ।) धूलिशून्यभूम्यादिः । यथा ।
नीरेणुक-
भूरभूदिति सत्पद्यरत्नाकरः ॥

**नीलं**, क्ली, (नीलतीति । नील + अच् ।) नीली ।
इति मेदिनी । ले, ३३ ॥ काचलवणम् ।
तालीश-
पत्रम् । विषम् । सौवीराञ्जनम् ।
(पर्य्यायोऽस्य
यथा, वैद्यकरत्नमालायाम् ।
“सुवीरकं पार्व्वतेयं सौवीरं नीलमञ्जनम्
॥”)
तुत्थम् । इति राजनिर्घण्टः ॥
नृत्याङ्गाष्टोत्तर-
शतकरणान्तर्गतकरणविशेषः । इति
सङ्गीत-
दामोदरः ॥

**नीलः**, पुं, पर्व्वतविशेषः । स तु इलावृतस्योत्तरतो
रम्यकवर्षस्य सीमापर्व्वतः । प्रागायत
उभयतः
क्षीरोदावधि द्विसहस्रयोजनपृथुः । अयुत-
योजनोत्सेधः । इति श्रीभागवते ५ स्कन्धे
१६ अध्यायः ॥ (तथाच विष्णुपुराणे । २
। २ । १० ।
“नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्व्वताः
।
लक्षप्रमाणौ द्वौ मध्यौ दशहीनास्तथापरे
॥”
“लक्षप्रमाणौ द्वौ प्राक्पश्चिमतो दैर्घ्येण
निषध-
नीलौ । यद्यपि जम्बुद्वीपस्य
मण्डलाकारस्य

तत्रासिताब्जहलभृद्वसनासिभृङ्ग
शार्ङ्गायुधाभहरकण्ठकलायपुष्पैः ।
शुक्लेतरैश्च कुसुमैर्गिरिकर्णिकाया-
स्तस्मिन् भवन्ति मणयः सदृशावभासः ॥
अन्ये प्रसन्नपयसः पयसां निधातु-
रम्बुत्विषः शिखिगलप्रतिमास्तथान्ये ।
नीलीरसप्रभववुद्बुदभाश्च केचित्
केचित्तथा समदकोकिलकण्ठभासः ॥
एकप्रकारा विस्पष्टवर्णशोभावभासिनः ।
जायन्ते मणयस्तस्मिन् इन्द्रनीला महागुणाः
॥
मृत्पाषाणशिलावज्रकर्कराभाससंयुताः ।
अभ्रिकापटलच्छायावर्णद्दोषैश्च दूषिताः ॥
तत एव हि जायन्ते मणयस्तत्र भूरयः ।
शास्त्रसंबोधितधियस्तान् प्रशंसन्ति सूरयः ॥
धार्य्यमाणस्य ये दृष्टाः पद्मरागमणेर्गुणाः ।
धारणादिन्द्रनीलस्य तानेवाप्नोति मानबः ॥
यथा च पद्मरागाणां जातुकर्त्तृभयं भवेत् ।
इन्द्रनीलेष्वपि तथा द्रष्टव्यमविशेषतः ॥
परीक्षाप्रत्ययैर्येश्च पद्मरागः परीक्ष्यते ।
त एव प्रत्यया दृष्टा इन्द्रनीलमणेरपि ॥
यावन्तञ्च क्रमेदग्निं पद्मरागः पयोगतः ।
इन्द्रनीलमणिस्तस्मात्क्रमेत सुमहत्तरम् ॥
तथापि न परीक्षार्थं गुणानामतिवृद्धये ।
मणिरग्नौ समाधेयः कथञ्चिदपि कश्चन ॥
अग्निमात्रापरिज्ञाने दाहदोषैश्च दूषितः ।
सोऽनर्थाय भवेद्भर्त्तुः कर्त्तुः कारयितुस्तथा ॥
काचोत्पलकरवीरस्फटिकाद्याइह बुधैः सवै-
दूर्य्याः ।
कथिता विजातय इमे सदृशां मणिनेन्द्रनीलेन
॥
गुरुभावकठिनभावाक्तेषां नित्यमेव विज्ञेयौ ।
काचाद्यथावदुत्तरविवर्द्धमानौ विशेषेण ॥
इन्द्रनीलो यदा कश्चित् विभर्त्त्याताम्रवर्णताम्
।
रक्षणीयौ तथा ताम्रौ करवीरोत्पलावुभौ ।
यस्य मध्यगता भाति नीलस्येन्द्रायुधप्रभा ॥
तदिन्द्रनीलमित्याहुर्म्महार्घं भुवि दुर्लभम् ॥

अतः सादरमुत्थाय
महानीराजनन्त्विदम्।
द्रष्टव्यं दीपवत् सर्व्वैर्व्वन्द्यमारात्रिकञ्च
यत् ॥”
तदुक्तं श्रीपुलस्त्येन विष्णुधर्म्मे ।
“धूपं चारात्रिकं पश्येत् कराभ्याञ्च
प्रवन्दते ।
कुलकोटिं समुद्धृत्य याति विष्णोः परं
पदम् ॥”
मूलागमे च ।
“नीराजनञ्च यः पश्येत् देवदेवस्य
चक्रिणः ।
सप्तजन्मनि विप्रः स्यादन्ते च परमं
पदम् ॥”
इति हरिभक्तिविलासः ॥
अवशिष्टं आरात्रिकशब्दे द्रष्टव्यम् ॥

**नीरिन्दुः**, पुं, (नि + ईर् कम्पने + भावे क्विप् ।
नीरा नितरां कम्पनेन इन्दति सुभगेन
शोभते
इति । इति परमैश्वर्य्ये + उन् ।)
अश्वशाखोट-
वृक्षः । इति शब्दचन्द्रिका ॥
आश्वेओडा इति
भाषा ॥

**नीरुक्**, [ज्] पुं स्त्री, (निर् + रुज + भावे
क्विप् ।) रोगाभावः । तत्पर्य्यायः ।
स्वास्थ्यम्
२ वार्त्तम् ३ अनामयम् ४ आरोग्यम् ५
।
(रुज् + भावे क्विप् । निर्नास्ति रुक्
रोगो यस्य ।)
रोगशून्ये, त्रि । तत्पर्य्यायः । पटुः २
उल्लाघः
३ वार्त्तः ४ कल्यः ५ । इति हेमचन्द्रः
। १ । १३८ ॥
(यथा, सुश्रुते चिकित्सितस्थाने २५
अध्याये ।
“एतेन पाल्या वर्द्धन्ते नीरुजो
निरुपद्रवाः ॥”)

**नीरुजं**, क्ली, (निर्गता रुजा रोगो यस्मात् ।)

लक्षयोजनप्रमाणत्वात् तन्मध्ये रेखायामेव
मुख्य-
लक्षप्रमाणत्वं निषधनीलौ तु
तन्मध्यरेखातो
दक्षिणश्चोत्तरश्च
सलक्षयोजनसहस्रान्तरित-
त्वादीषन्न्यनौ तथापि स्थूलदृष्ट्या
लक्षप्रमाणावि-
त्युक्तम् ॥” इति तट्टीकायां स्वामी ॥ * ॥
(नीलासनवृक्षः । तत्पर्य्यायो यथा, --
“नीलः स्यान्नीलपत्रिका ॥”
इति वैद्यकरत्नमालायाम् ॥)
मणिविशेषः । नीलम् इति पारस्यभाषा ॥
अस्याधिष्ठातृद्देवता शनिः । यथा, --
“माणिक्यमुक्ताफलविद्रुमाणि
गारुत्मतं पुष्पकवज्रनीलम् ।
गोमेदवैदूर्य्यकमर्कतः स्यू
रत्नान्यथोऽज्ञस्य मुदे सुवर्णम् ॥”
इति मुहूर्त्तचिन्तामणिः ॥
तत्पर्य्यायः । सौरिरत्नम् २ नीलाश्मा ३
नीलोत्-
पलः ४ तृणग्राही ५ महानीलः ६ सुनी-
लकः ७ । अस्य गुणाः । तिक्तत्वम् ।
उष्ण-
त्वम् । कफपित्तानिलापहत्वम् । शरीरे
धृते
सौरिर्म्मङ्गलदो भवति । इति राजनिर्घण्टः
॥ *
अथ इन्द्रनीलमणेरुत्पत्तिपरीक्षादि यथा, -
-
“तत्रैव सिंहलवधूकरपल्लवाग्र-
व्यालूनबाललवनीकुसुमप्रवाले ।
देशे पपात दितिजस्य नितान्तकान्तं
प्रोत्फुल्लनीरजसमद्युतिनेत्रयुग्मम् ॥
तत्प्रत्ययादुभयशोभनवीचिभासा
विस्तारिणी जलनिधेरुपकच्छभूमिः ।
प्रोद्भिन्नकेतकवनप्रतिबद्धलेखा
सान्द्रेन्द्रनीलमणिरत्नवती विभाति ॥

यस्तु वर्णस्य भूयस्त्वात् क्षीरे शतगुणे स्थितः
।
नीलतां तन्नयेत् सर्व्वं महानीलः स उच्यते ॥
यत् पद्मरागस्य महागुणस्य
मूल्यं भवेन्माससमुत्थितस्य ।
तदिन्द्रनीलस्य महागुणस्य
सवर्णसंख्यातुलितस्य मूल्यम् ॥”
इति गरुडपुराणे इन्द्रनीलपरीक्षा ॥ * ॥
वानरान्तरः । इति मेदिनी । ने, २९ ॥ नील-
वर्णः । नीलौषधिः । निधिविशेषः । लाञ्छनम्
।
इति हेमचन्द्रः ॥ मञ्जुघोषः । इति त्रिकाण्ड-
शेषः ॥ वटवृक्षः । इति राजनिर्घण्टः ॥ नील-
वर्णयुक्ते, त्रि । इत्यमरः ॥ (यथा, देवीभाग-
वते । ५ । ८ । ३८ ।
“नीलं सत्त्वगुणोपेतं प्रादुरास महाद्युति ॥”)
नीलवर्णवस्तूनि यथा । शुकः १ शैवालम् २
दूर्व्वा ३ बालतृणम् ४ बुधः ५ वंशाङ्कुरः
मरकतः ७ इन्द्रनीलमणिः ८ सूर्य्याश्वादीनि
९

| | | |
|---|---|---|
| कुष्ठौपधिः । इति जटाधरः ॥<br>**नीरुजः**, त्रि, (निर्गता रुजा रोगो यस्य ।)<br>रोगाभाववान् । यथा, शाम्बपुराणे ।<br>"शाम्बोऽपि स्तवराजेन स्तुत्वा<br>सप्ताश्ववाहनम् ।<br>पूतात्मा नीरुजः<br>श्रीमांस्तस्माद्रोगाद्विमुक्तवान् ॥" | | |

इति कविकल्पलता ॥ अजमीढस्य राज्ञः
नीलिन्यां पत्न्यां जातः पुत्त्रः । यथा । “अजमी-
ढस्य नीलिनी नाम पत्नी तस्यां नीलसंज्ञः पुत्रो-
ऽभवत् ।” इति विष्णुपुराणे ४ अंशे १९ अध्यायः ॥
(माहिष्मतीवासी नृपतिविशेषः । अग्निस्तु
अस्य दुहितरमुपसंगृह्य वरेणैनं छन्दयामास
परनृपादभयञ्चास्मै दत्तवान् । गच्छति काले
पाण्डवः सहदेवस्तु दिग्विजयक्रमेण अस्य नगर-
मवरोध्य वैश्वानरात् महद्भयमवाप्तवान् । ततो
हव्यवाहनं स्तुत्वा शान्तिमलभत । एतद्विवरणं
महाभारते । २ । ३१ । अध्याये विस्तरतो द्रष्ट-
व्यम् ॥ * ॥ नागविशेषः । यथा, महाभारते ।
१ । ३५ । ७ ।
“नीलानीलौ तथा नागौ
कल्माषशवलौ तथा ॥”

**नीलकं**, क्ली, (नीलमेव । स्वार्थे कन् ।) काच-
लवणम् । वर्त्तलोहम् । असनवृक्षे, पुं, । इति
राजनिर्घण्टः ॥

**नीलकण्ठः**, पुं, (नीलः नीलवर्णः कण्ठो यस्य ।)
शिवः । (यथा, महाभारते । १ । १८ । ४३ -- ४४ ।
“त्रैलोक्यं मोहितं यस्य गन्धमाघ्राय तद्विषम् ।
“अशुभं खञ्जनं दृष्ट्वा देवब्राह्मणपूजनम् ।
दानं कुर्व्वीत कुर्य्याच्च स्नानं सर्व्वौषधीजलैः ॥”
इति तिथ्यादितत्त्वे दुर्गोत्सवतत्त्वम् ॥
(पीतशालवृक्षः । अस्य पर्य्यायो यथा, --
“नीलकण्ठः पीतशालः पीतकः प्रियकोऽसनः ॥”
इति वैद्यकरत्नमालायाम् ॥)

**नीलकण्ठाक्षं**, क्ली, (नीलकण्ठो महादेवस्तत्-
प्रियोऽक्षो यत्र ।) रुद्राक्षम् । इति राज-
निर्घण्टः ॥ (नीलकण्ठः खञ्जनस्तस्य अक्षिणीव
अक्षिणी यस्य । षच् समासे ।) खञ्जनाक्षे, त्रि ॥

**नीलकन्दः**, पुं, (नीलः कन्दो मूलं यस्य ।) महिष-
कन्दभेदः । तत्पर्य्यायः । सर्पाख्यः २ वनवासी ३
विषकन्दः ४ महिषीकन्दः ५ । अस्य गुणाः ।
कटुत्वम् । उष्णत्वम् । कफवातामयमुखजाड्य-
नाशित्वम् । रुच्यत्वम् । सितस्य तस्य महा-
सिद्धिकरत्वञ्च । इति राजनिर्घण्टः ॥ नील-
वर्णमूलञ्च ॥

**नीलकमलं**, क्ली, (नीलं कमलं पद्मम् ।) नील-
वर्णपद्मम् । तत्पर्य्यायः । उत्पलम् २ नील-
पङ्कजम् ३ नीलपद्मम् ४ नीलाब्जम् ५ । अस्य
गुणाः । शीतलत्वम् । स्वादुत्वम् । सुगन्धित्वम् ।
पित्तनाशित्वम् । रुच्यत्वम् । रसायने श्रेष्ठत्वम् ।
देहदार्ढ्यकेश्यदञ्च । इति राजनिर्घण्टः ॥ नील-
वर्णजलञ्च ॥

**नीलकुन्तला**, स्त्री, (नीला नीलवर्णाः कुन्तला
यस्याः ।) गौर्य्याः सखीविशेषः । यथा, --
“सखी रत्नमुखी नाम जगादैवं शुचिस्मिता ।
तां निवार्य्यापरा प्राह सखी सा नीलकुन्तला ॥”
कौमुद्यामुणादिवृत्तिः ॥ (भ्रमराली । प्रसूनम् ।
इति विश्वः । गे, ५० ॥)

**नीलचर्म्म**, [न्] क्ली, (नीलं चर्म्म फलत्वग्
यस्य ।) परूषकम् । इति राजनिर्घण्टः ॥
(नीलञ्च तत् चर्म्म चेति ।) नीलवर्णाजिनञ्च ॥
(नीलचर्म्मविशिष्टे, त्रि ॥)

**नीलजं**, क्ली, (नीलात् जायते इति । जन +
डः ।) वर्त्तलोहम् । इति राजनिर्घण्टः ॥
नीलजाते, त्रि ॥ (स्त्री, नीलात् नीलपर्व्वतात्
जायते इति । वितस्ता नदी । यथा, राजतर-
ङ्गिण्याम् । ५ । ९६ ।
“पाषाणसेतुबन्धेन सुय्येनाद्भुतकर्म्मणा ।
सप्ताहमभवद्बद्धा निखिला नीलजा सरित् ॥”)

**नीलझिण्टी**, स्त्री, (नीला नीलवर्णा झिण्टी ।)
नीलवर्णझिण्टीपुष्पवृक्षः । तत्पर्य्यायः । नील-
कुरण्टः २ नीलकुसुमा ३ बाला ८ वाणा ५
दासी ६ कण्टार्त्तगला ७ । अस्या गुणाः । कटु-
त्वम् । तिक्तत्वम् । दन्तामयशूलवातकफकास-
त्वग्दोषनाशित्वञ्च । इति राजनिर्घण्टः ॥

**नीलतरुः**, पुं, (नीलस्तरुः ।) नारिकेलः । इति
राजनिर्घण्टः ॥

**नीलतालः**, पुं, (नीलस्तालः ।) हिन्तालः । तमालः ।
इति राजनिर्घण्टः ॥

**नीलदूर्व्वा**, स्त्री, (नीला दूर्व्वा ।) हरितदूर्व्वा ।
तत्पर्य्यायः । हरिता २ शाम्भवी ३ श्यामा ४
शीता ५ शतपर्व्विका ६ अमृता ७ पूता ८
शतग्रन्थिः ९ अनुष्णवल्लिका १० शिवा ११
शिवेष्टा १२ मङ्गला १३ जया १४ सुभगा १५ भूत-

प्राग्रसल्लोकरक्षार्थं ब्रह्मणो
वचनाच्छिवः ॥
दधार भगवान् कण्ठे
मन्त्रमूर्त्तिर्म्महेश्वरः ।
तदा प्रभृति देवस्तु नीलकण्ठ इति
श्रुतः ॥”)
मयूरः । इत्यमरः । ३ । ३ । ३९ ॥
(यथा,
मेघदूते । ७९ ।
“यामध्यास्ते दिवसविगमे
नीलकण्ठः सुहृद्वः ॥”)
पीतसारः । दात्यूहः । ग्रामचटकः ।
खञ्ज-
रीटः । इति हेमचन्द्रः ॥ मूलके,
क्ली । इति
राजनिर्घण्टः ॥ * ॥ विजयदशम्यां
नीलकण्ठ-
दर्शनविधिर्य्यथा, --
“कृत्वा नीराजनं राजा बलवृद्धौ
यथाबलम् ।
शोभनं खञ्जनं पश्येत्
जलगोगोष्ठसन्निधौ ॥”
दर्शनानन्तरं नमस्कारमन्त्रो यथा, -
-
“नीलग्रीव शुभग्रीव
सर्व्वकामफलप्रद ।
पृथिव्यामवतीर्णोऽसि खञ्जरीट !
नमोऽस्तु ते ॥
त्वं योगयुक्तो मुनिपुत्त्रकस्त्व-
मदृश्यतामेषि शिखोद्गमेन ।
त्वं दृश्यसे प्रावृषि निर्गतायां
त्वं खञ्जनाश्चर्य्यमयो नमस्ते ॥”
द्रव्यविशेषोपरिस्थितस्य तस्य
दर्शनफलं यथा, --
“अब्जेषु गोषु गजवाजिमहोरगेषु
राज्यप्रदः कुशलदः शुचिशाद्वलेषु ।
भस्मास्थिकेशनखलोमतुषेषु दृष्टो
दुःखं ददाति बहुशः खलु खञ्जरीटः
॥”
दिग्विशेषे फलं यथा, --
“वित्तं ब्रह्मणि कार्य्यसिद्धिरतुला
शक्रे हुताशे

इति बृहद्धर्म्मपुराणे ३४ अध्यायः ॥

**नीलकुरण्टकः**, पुं, (नीलः कुरण्टकः ।) नील-

झिण्टी । इति रत्नमाला ॥ (विवृतिरस्य नील-
झिण्टीशब्दे ज्ञातव्या ॥)

**नीलक्रान्ता**, स्त्री, (नीलेन नीलवर्णेन क्रान्ता ।)

विष्णुक्रान्ता । इति राजनिर्घण्टः ॥

**नीलक्रौञ्चः**, पुं, (नीलः क्रौञ्चः ।) नीलवकः ।

तत्पर्य्यायः । नीलाङ्गः २ दीर्घग्रीवः ३ अति-
जागरः ४ । इति राजनिर्घण्टः ॥

**नीलगणेशः**, पुं, (नीलो नीलवर्णो गणेशः ।)

नीलवर्णगणपतिः । इति भूतडामरः ॥ अपि च
।
“लीलागललुलल्लोलकालव्यालविलासिने।
गणेशाय नमो नीलकमलामलकान्तये ॥”
इति लीलावती ॥

**नीलग्रीवः**, पुं, (नीला नीलवर्णा ग्रीवा यस्य ।)

महादेवः । इति हलायुधः ॥ (यथा, महा-
भारते । ३ । ३९ । ७४ ।
“देवदेव महादेव नीलग्रीव जटाधर ॥”)
नीलवर्णग्रीवायुक्ते, त्रि ॥

**नीलङ्गुः**, पुं, (निलङ्गति गच्छतीति । नि + लगि

गतौ + “खरुशङ्कुपीयुनीलङ्गुलिगु ।” उणां । १
।
३७ । इति कुप्रत्ययेन निपातनात् पूर्ब्बदीर्घे
साधुः ।) अतिक्षुद्रजन्तुमात्रम् ।
इत्यमरटीकायां
भरतः ॥ क्रिमिभेदः । शृगालः । इति सिद्धान्त

हन्त्री १६ शतमूला १७ महौषधी १८
विजया १९
गौरी २० शान्ता २१ ॥ (यथा निघण्टौ
धन्व-
न्तरिः ।
“नीलदूर्व्वा स्मृता शस्यं शाद्वलं हरितं तथा ।
शतपर्व्वा शीतकुम्बी शीतला वामनी तथा
॥”)
तस्या गुणाः । हिमत्वम् । तिक्तत्वम् । मधु-
रत्वम् । तुवरत्वम् । लघुत्वम् । रक्तपित्ताति-
सारकफवान्तिज्वरनाशित्वञ्च। पुस्तकान्तरे
रोचनत्वम् । वातापहत्वञ्च । इति
राजनिर्घण्टः ॥
(अस्याः पर्य्यायान्तरं गुणान्तरञ्च यथा, --
“नीलदूर्व्वारुहानन्ता भार्गवी शतपर्व्विका ।
शष्पं सहस्रवीर्य्या च शतवल्ली च कीर्त्तिता
नीलदूर्व्वा हिमा तिक्ता मधुरा तुवरा हरेत् ।
कफपित्तास्रवीसर्प्तृष्णादाहत्वगामयान् ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**नीलध्वजः**, पुं, (नीलः नीलवर्णः ध्वज इव ।)

तमालवृक्षः । इति राजनिर्घण्टः ॥ (नीलो
ध्वजो यस्य ।) राजविशेषः । अस्य पुरी
माहि-
ष्मती । भार्य्याज्वाला । कन्या स्वाहा
लक्ष्मी-
शापाज्जाता ।
“अर्ज्जुनस्य हयो राजन् ! पुरीं माहिष्मतीं
ययौ ।
नीलध्वजेन वीरेण रक्षितां दुर्गमण्डिताम् ॥
नीलध्वजस्य महिषी ज्वालानाम्नी
सुमध्यमा ।
स्वाहां कन्यां प्रसूता सा सुन्दरीं धर्म्मतत्परा
॥”

| भयं<br>याम्यामग्निभयं सुरद्विषि कलिर्लाभः<br>समुद्रालये ।<br>वायव्यां वरवस्त्रगन्धसलिलं<br>दिव्याङ्गना चोत्तरे<br>ऐशान्यां मरणं ध्रुवं निगदितं<br>दिग्लक्षणं<br>खञ्जने ॥”<br>अशुभखञ्जनदर्शनप्रायश्चित्तं यथा,<br>-- | | |
|---|---|---|

इति जैमिनिभारते आश्वमेधिके पर्व्वणि १५ अध्यायः ॥ नीलध्वजाविशेष्टे, त्रि ॥

**नीलनिर्गुण्डी**, स्त्री, (नीला निर्गुण्डी ।) नील-सिन्धुवारः । इति राजनिर्घण्टः ॥

**नीलनिर्य्यासकः**, पुं, (नीलः निर्य्यासो यस्य । कप् ।) नीलासनवृक्षः । इति राजनिर्घण्टः ॥ कृष्णवर्णनिर्य्यासश्च ॥

**नीलपङ्कं**, क्ली, (नीलं पङ्कमिव ।) अन्धकारः । इति त्रिकाण्डशेषः ॥ कृष्णवर्णकर्दमश्च ॥

**नीलपत्रं**, क्ली, (नीलं पत्रं पुष्पदलं यस्य ।) इन्दीवरम् । इति शब्दचन्द्रिका ॥ नीलवर्णपत्र-युक्ते, त्रि ॥

**नीलपत्रः**, पुं, (नीलानि पत्राणि यस्य ।) गुण्ड-तृणम् । अश्मन्तकवृक्षः । नीलासनवृक्षः । दाडिमः । इति राजनिर्घण्टः ॥

**नीलपद्मं**, क्ली, (नीलं पद्मम् ।) नीलकमलम् । इति शब्दचन्द्रिका ॥ (नीलकमलशब्देऽस्य विवरणं ज्ञातव्यम् ॥)

**नीलपिङ्गला**, स्त्री, (नीला पिङ्गला चेति कर्म्म-धारयः ।) गोजातिविशेषः । यथा, --

"गवां जातिन्तु वक्ष्यामि शृणुष्वैकमना द्विज !
।
प्रथमा गौरकपिला द्वितीया गौरपिङ्गला ॥
तृतीया रक्तकपिला चतुर्थी नीलपिङ्गला ।
पञ्चमी शुक्लपिङ्गाक्षी षष्ठी तु शुक्लपिङ्गला
॥
सप्तमी चित्रपिङ्गाक्षी अष्टमी वभ्रुरोहिणी ।
नवमी श्वेतपिङ्गाक्षी दशमी श्वेतपिङ्गला ॥
तादृशास्तेऽप्यनड्वाहः कपिलास्तु
प्रकीर्त्तिताः ॥"
इति बृहद्धर्म्मपुराणे उत्तरखण्डे १५
अध्यायः ॥

**नीलपिच्छः**, पुं, (नीलं पिच्छं यस्य ।) श्येनपक्षी । इति राजनिर्घण्टः ॥

अतसी । तस्याः पर्य्यायो यथा, --
"अतसी नीलपुष्पी च पार्व्वती
स्यादुमाक्षमा ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ॥)

**नीलफला**, स्त्री, (नीलं फलं यस्याः ।) जम्बूः । इति राजनिर्घण्टः ॥

**नीलभृङ्गराजः**, पुं, (नीलो भृङ्गराजः ।) नील-वर्णभृङ्गराजः । नीलकेशरिया इति नील-भेगरिया इति च भाषा । तत्पर्य्यायः । महा-भृङ्गः २ महानीलः ३ सुनीलकः ४ नीलपुष्पः ५ श्यामलः ६ । अस्य गुणाः । तिक्तत्वम् । उष्णत्वम् । चक्षुष्यत्वम् । केशरञ्जनत्वम् । कफा-मशोफश्वित्रनाशित्वम् । रसायनत्वञ्च । इति राजनिर्घण्टः ॥

**नीलमणिः**, पुं, (नीलो मणिः ।) स्वनामख्यात-मणिः । तत्पर्य्यायः । मसारः २ । इति हारा-वली । १४५ ॥ अस्य विवरणं नीलशब्दे द्रष्टव्यम् ॥

**नीलमाधवः**, पुं, (नीलो नीलवर्णो माधवः । नीलपर्व्वतस्थो माधवो वा ।) विष्णुः । जग-न्नाथः । यथा, --
"प्रेषितोऽहं हरिं द्रष्टुमत्रस्थं
नीलमाधवम् ।
दृष्ट्वा यावत् सुपतितं वार्त्तां नेष्यामि
सोऽप्यहम् ॥"
इत्युत्कलखण्डे ७ अध्यायः ॥

**नीलवल्ली**, स्त्री, (नीला नीलवर्णा वल्ली ।) वन्दा-कम् । इति रत्नमाला ॥

**नीलवसनः**, पुं, (नीलं वसनं वस्त्रं यस्य ।) शनै-श्चरः । इति हारावली । १२ ॥ (बलरामः । परिधेयनीलवस्त्रत्वादस्य तथात्वम् ॥) नील-वस्त्रयुक्ते, त्रि ॥

**नीलवस्त्रः**, पुं, (नीलं वस्त्रं यस्य ।) बलरामः । इति हेमचन्द्रः । २ । १३९ ॥ (नीलं वस्त्रम् ।) नीलवर्णवसने, क्ली । यथा, --
"स्त्रीक्रीडाशयनीयादौ नीलवस्त्रं न दुष्यति ।
नीलीवस्त्रं न स्पृशेच्च नीलीमनिरयं व्रजेत् ॥"
इति गारुडे प्रायश्चित्ताध्यायः ॥
तस्य धारणप्रायश्चित्तादि यथा । यत्र भविष्य-
पुराणम् ।
"शृणुष्वेति महावाहो ! नीलीरक्तस्य धारणात् ।
वाससो गणशार्द्दूल ! गदतो मम कृत्स्नशः ॥
पालनाद्विक्रयाच्चैव उद्वृत्तैरुपजीवनात् ।
पतितस्तु भवेद्विप्रस्त्रिभिः कृच्छ्रैर्विशुध्यति ॥
नीलीरक्तेन वस्त्रेण यत् कर्म्म कुरुते द्विजः ।
स्नानं दानं तपो होमः स्वाध्यायः पितृतर्पणम्
॥
वृथा तस्य महायज्ञो नीलीवस्त्रस्य धारणात् ।
नीलीरक्तं यदा वस्त्रं कचिद्विप्रस्तु धारयेत् ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥
इदमज्ञाने । ज्ञाने तु द्वैगुण्यम् । अत्रापवादः ।
नीलीत्यनुवृत्तावापस्तम्बः ।
स्त्रीणां क्रीडार्थसंयोगे शयनीये न दुष्यति ॥
इति प्रायश्चित्तविवेकः ॥

**नीलवासाः**, पुं, (नीलं वासो वस्त्रं यस्य ।) शनि-ग्रहः । इति त्रिकाण्डशेषः ॥ (नीलवस्त्रयुक्ते, त्रि । यथा, हरिवंशे । ८२ । ४३ ।
"श्रीमत्स्वस्तिकमूर्द्धानं प्रणमिष्यामि भोगिनम्
।
सहस्रशिरसं देवमनन्तं नीलवाससम् ॥")

**नीलवुह्ना**, स्त्री, (नीला नीलवर्णा वुह्ना ।) नीलवृध्ना । नीलवर्णवोना इति भाषा ॥ तत्-

**नीलपुनर्नवा**, स्त्री, (नीला पुनर्नवा ।) कृष्णवर्ण-
पुनर्नवाशाकम् । नीलगदपडोया इति हिन्दी
भाषा ॥ तत्पर्य्यायः । नीला २ श्यामा ३
कृष्णाख्या
४ नीलवर्षाभूः ५ । अस्या गुणाः । तिक्तत्वम्
।
कटुत्वम् । उष्णत्वम् । रसायनत्वम् । हृद्रोग-
पाण्डुश्वयथुश्वासवातकफनाशित्वञ्च। इति
राज-
निर्घण्टः ॥

**नीलपुष्पं**, क्ली, (नीलं पुष्पमस्य ।) ग्रन्थिपर्णम् ।
इति भावप्रकाशः ॥ (नीलञ्च तत् पुष्पञ्चेति
।)
नीलवर्णकुसुमञ्च ॥

**नीलपुष्पः**, पुं, (नीलं पुष्पं यस्य ।) नीलभृङ्ग-
राजः । नीलाम्लानः । इति राजनिर्घण्टः ॥

**नीलपुष्पा**, स्त्री, (नीलं पुष्पं यस्याः ।) विष्णु-
क्रान्ता । इति राजनिर्घण्टः ॥

**नीलपुष्पिका**, स्त्री, (नीलं पुष्पं यस्याः । कप् ।
कापि अत इत्वम् ।) असती । इति राज-
निर्घण्टः ॥ नीली । इति रत्नमाला ॥

**नीलपुष्पी**, स्त्री, (नीलं पुष्पं यस्याः । ङीष् ।)
नीलवुह्ना । इति रत्नमाला ॥ (शेफालिका ।
तत्पर्य्यायो यथा, --
“नीलपुष्पी तु निर्गुण्डी शेफाली सुवहा
च सा ॥”

**नीलमासः**, पुं, (नीलो नीलवर्णो मासः ।)
राज-
मासः ! इति राजनिर्घण्टः ॥

**नीलमीलिकः**, पुं, (नीलमीलं
नीलवर्णनिमीलन-
मस्त्यस्येति । नीलमील + ठन् ।)
खद्योतः । इति
शब्दमाला ॥

**नीलमृत्तिका**, स्त्री, (नीला नीलवर्णा मृत्तिकेव
।)
पुष्पकासीसम् । इति राजनिर्घण्टः
॥ कृष्ण-
वर्णमृच्च ॥

**नीललोहं**, क्ली, (नीलं नीलवर्णं लोहम् ।)
वर्त्त-
लोहम् ।) इति राजनिर्घण्टः ॥

**नीललोहितः**, पुं, (नीलश्चासौ लोहितश्चेति
।
“वर्णो वर्णेन ।” २ । १ । ६९ । इति
समासः ।
नीलः कण्ठे लोहितश्च केशेष्विति
स्वामी ।)
शिवः । इत्यमरः । १ । १ । ३५ ॥
(यथा,
कुमारे । २ । ५७ ।
“संयुगे सांयुगीनं तमुद्यन्तं प्रसहेत
कः ।
अंशादृते निषिक्तस्य
नीललोहितरेतसः ॥”)
चैत्रे मासि तस्य व्रतविधानं यथा, --
“चैत्रे शिवोत्सवं
कुर्य्यान्नृत्यगीतमहोत्सवैः ।
स्नात्वा त्रिसन्ध्यं रात्रौ च
हविष्याशी जितेन्द्रियः ॥
किमलभ्यं भगवति प्रसन्ने
नीललोहिते ।
उपोष्य हुत्वा संक्रान्त्यां व्रतमेतत्
समर्पयेत् ॥”
इति मासकृत्ये बृहद्धर्म्मपुराणम् ॥
कल्पविशेषः । इति महाभारतम् ॥
अस्य विव-
पर्य्यायः । अजान्त्री २ नीलपुष्पी ३ अति-
लोमशा ४ । इति रत्नमाला ॥ (यथा, --
“नीलवुह्नारसस्तैलसिन्धुकाञ्जिकसंयुतः ।
कदुष्णं पूरणात् कर्णे निःशेषक्रिमिपातनः ॥”
इति वैद्यकचक्रपाणिसंग्रहे कर्णरोगाधिकारे ॥)

**नीलवृक्षः**, पुं, (नीलो वृक्षः ।) वृक्षप्रभेदः । तत्-
पर्य्यायः । नीलः २ वातारिः ३ शोफनाशनः ४
नरनामा ५ नखवृक्षः ६ नखालुः ७ नरप्रियः
८ । अस्य गुणाः । कटुत्वम् । कषायत्वम् ।
उष्णत्वम् । लघुत्वम् । वातामयनानाश्वयथु-
नाशित्वञ्च । इति राजनिर्घण्टः ॥

**नीलवृन्तकं**, क्ली, (नीलवर्णं वृन्तं यस्य । कप् ।)
तूलम् । इति राजनिर्घण्टः ॥

**नीलवृषः**, पुं, कृष्णवर्णवृषः । वृषविशेषः । तस्य
लक्षणं यथा, --
“लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डरः ।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥”
इति शुद्धितत्त्वम् ॥

| | रणं कल्पशब्दे द्रष्टव्यम् ॥)<br>नीलरक्तमिश्रितवर्णश्च ॥<br>**नीललोहिता**, स्त्री, (नीला लोहिता च ।)<br>भूमिजम्बुः । इति शब्दचन्द्रिका ।<br>शिवा च ॥<br>**नीलवर्षाभूः**, स्त्री, (नीला नीलवर्णा वर्षाभूः ।)<br>नीलपुनर्नवा । इति राजनिर्घण्टः ॥<br>कृष्ण-<br>भेके, पुं ॥ | |
|---|---|---|

अपि च ।
"लोहितो यस्तु वर्णेन शङ्खवर्णः खुरो वृषः ।
लाङ्गूलशिरसोश्चैव स वै नीलवृषः स्मृतः ॥"
तस्योत्सर्गे गयाश्राद्धादितुल्यफलं यथा, --
"जायेरन् बहवः पुत्त्रा यद्येकोऽपि गयां व्रजेत् ।
यजेद्वा अश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥"
इति देवीपुराणम् ॥

**नीलवृषा**, स्त्री, (नीलं नीलवर्णं पुष्पफलादिकं वर्षति प्रसूते इति । वृष + इगुपधेति कः । ततष्टाप् ।) वार्त्ताकी । इति राजनिर्घण्टः ॥ (वार्त्ताकीशब्देऽस्या गुणाः पर्य्यायाश्च ज्ञेयाः ॥)

**नीलव्रतं**, क्ली, व्रतविशेषः । यथा, --
"यस्तु नीलोत्पलं हैमं शर्करापात्रसंयुतम् ।
एकान्तरितनक्ताशी समान्ते वृषभं युतम् ।
वैष्णवं स पदं याति नीलव्रतमिदं स्मृतम् ॥"
इति मात्स्ये ८३ अध्यायः ॥
नीललोहितव्रतञ्च ॥

**नीलशिग्रुः**, पुं, (नीलः शिग्रुः ।) शोभाञ्जनः । इति राजनिर्घण्टः ॥

**नीलसारः**, पुं, (नीलः सारो ऽस्य ।) तिन्दुक-वृक्षः । इति राजनिर्घण्टः ॥

**नीलसिन्दुवारः**, पुं, (नीलः सिन्दुवारः ।) कृष्ण-वर्णसिन्दुवारवृक्षः । नीलसिन्दुयार इति भाषा ।
तत्पर्य्यायः । शीतसहा २ निर्गुण्डी ३ नील-सिन्दुकः ४ सिन्दुकः ५ कपिका ६ भूतकेशी ७ इन्द्राणी ८ नीलिका ९ नीलनिर्गुण्डी १० ।

**नीलाञ्जनं**, क्ली, (नीलमञ्जनम् ।) सौवीराञ्जनम् ।
(यथा, नवग्रहस्तोत्रे शनैश्चरप्रणाममन्त्रम् ।
"नीलाञ्जनचयप्रख्यं रविसूनुं महाग्रहम् ।
छायाया गर्भसम्भूतं वन्दे भक्त्या शनैश्चरम् ॥")
तत्तु उपधातुविशेषः । तस्य गुणाः । कटुत्वम् । श्लेष्ममुखरोगनेत्ररोगव्रणदाहनाशित्वम् । उष्ण-त्वम् । रसायनत्वम् । तिक्तत्वम् । भेदकत्वञ्च । इति राजवल्लभः ॥ (अस्य शोधनविधिर्य्यथा, --
"नीलाञ्जनं चूर्णयित्वा जम्बीरद्रवभावितम् ।
दिनैकमातपे शुद्धं भवेत् कार्य्येषु योजयेत् ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणाधि-कारे ॥) तुत्थम् । इति राजनिर्घण्टः ॥

**नीलाञ्जना**, स्त्री, (नीलं मेघं अञ्जयतीति । अञ्ज + णिच् + ल्युः ।) विद्युत् । इति जटाधरः ॥

**नीलाञ्जनी**, स्त्री, (नीलवत् अञ्ज्यतेऽनयेति । अञ्ज + करणे ल्युट् । ततो ङीष् ।) कालाञ्जनी-क्षुपः । इति राजनिर्घण्टः ॥

**नीलाञ्जसा**, स्त्वी, अप्सरोभेदः । नदीविशेषः । विद्युत् । इति मेदिनी । से, ५७ ॥

**नीलापराजिता**, स्त्री, (नीला अपराजिता ।) नीलवर्णापराजितालता । तत्पर्य्यायः । नील-पुष्पी २ महानीली ३ नीलगिरिकर्णिका ४ गवा-दनी ५ व्यक्तगन्धा ६ नीलसन्ध्या ७ नीलाद्रिकर्णी ८ । अस्या गुणाः । शिशिरत्वम् । तिक्तत्वम् । रक्तातिसारज्वरदाहच्छर्द्युन्मादमदश्रमार्त्तिश्वास सातिकासामयनाशित्वञ्च । इति राजनिर्घण्टः ॥

**नीलाब्जं**, क्ली, (नीलमब्जमिति कर्म्मधारयः ।) नीलोत्पलम् । इति रत्नमाला ॥ (नीलोत्-पलशब्देऽस्य विशेषो ज्ञेयः ॥)

**नीलाम्बरं**, क्ली, (नीलमम्बरमिव । नीलमम्बतीति वा । अबि + अरण् ।) तालीशपत्रम् । इति राजनिर्घण्टः ॥ (नीलञ्च तदम्बरञ्चेति । नील-वस्त्रञ्च ॥)

**नीलाम्बरः**, पुं, (नीलमम्बरं यस्येति ।) बलदेवः ।

**नीलालुः**, पुं, (नीलवर्ण आलुरिति कर्म्मधारयः ।) कन्दभेदः । तत्पर्य्यायः । असितालुः २ श्यामलालुकः ३ । अस्य गुणाः । मधुरत्वम् । शीतत्वम् पित्तदाहश्रमनाशित्वञ्च । इति राजनिर्घण्टः ॥

**नीलाश्मा**, [न्] पुं, (नीलवर्णः अश्मा प्रस्तर-भेदः ।) नीलमणिः । इति राजनिर्घण्टः ॥

**नीलासनः**, पुं, (नीलवर्णः असनो वृक्षभेदः ।) असनवृक्षविशेषः । पियाशालप्रभेदः । तत्-पर्य्यायः । नीलबीजः २ नीलपत्रः ३ सुनी-लकः ४ नीलद्रुमः ५ नीलसारः ६ नीलनिर्य्या-सकः ७ । अस्य गुणाः । कटुत्वम् । शीतत्वम् । कषायत्वम् । कुष्ठकण्डूदद्रुनाशित्वम् । सारक-त्वम् । तत्र सितस्य श्रेष्ठत्वञ्च । इति राज-निर्घण्टः ॥ रतिबन्धविशेषः । यथा, --
"लिङ्गोपरिस्थिता नारी शय्यां कृत्वा पदद्वयम् ।
हृदये दत्तहस्ता च बन्धो नीलासनो मतः ॥"
इति स्मरदीपिका ॥

**नीलिका**, स्त्री, (नीलक + टाप् । कापि अत इत्वम् । नीलीव इवार्थे कन् टाप् पूर्ब्बह्रस्वः । इति केचित् ।) नीलसिन्दुवारः । इति राज-

अस्य गुणाः । कटुत्वम् । उष्णत्वम् । तिक्तत्वम् । रूक्षत्वम् । कासश्लेष्मशोफसमीरणार्त्तिप्रदराध्माननाशित्वञ्च । इति राजनिर्घण्टः ॥

**नीला**, स्त्री, (नीलो नीलवर्णोऽस्त्यस्या इति । अच् । ततष्टाप् ।) नीलवर्णमक्षिका । इत्यमरः । २ । ५ । २६ ॥ नीलपुनर्नवा । नीली । इति राज-निर्घण्टः ॥ (कुब्जकः । तत्पर्य्यायो यथा, --
"कुब्जको भद्रतरणिर्बृहत्पुष्पोऽतिकेसरः ।
महासहा कण्टकाट्या नीलालिकुलसङ्कुला ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
"नीलानामौषधिस्तु नीलक्षीरा नीलपुष्पीलता प्रताणबहुला ।" इति चरके चिकित्सितस्थाने । १ अध्यायः ॥ नदीविशेषः । यथा, --
"वेणा इरावती नीला उत्तरात् पूर्ब्बवाहिनी ॥"
इति हारीते प्रथमस्थाने सप्तमेऽध्याये ॥
यथा च महाभारते । ६ । ९ । ३१ ।
"नीलां धृतिकरोञ्चैव पर्णासाञ्च महानदीम् ॥")
मल्लाररागस्य स्त्री । इति बृहद्धर्म्मपुराणे ४४ अः ॥

**नीलाङ्गः**, पुं, (नीलमङ्गं यस्य ।) सारसपक्षी । चासपक्षी । इति राजनिर्घण्टः ॥

**नीलाङ्गुः**, पुं, (नितरां लिङ्गतीति । नि + लिगि गतौ + कुः । केचित् धातूपसर्गयोर्दीर्घमाहुः । इत्युज्ज्वलदत्तोक्त्या धातूपसर्गयोर्द्दीर्घत्वम् ।) कृमिः । इत्यमरः । २ । ५ । १३ ॥ भ्रमराल्यां राक्षसः । शनैश्चरः । इति मेदिनी । रे, २७४ ॥ नीलवस्त्रयुक्ते, त्रि ॥

**नीलाम्बुजन्म**, [न्] क्ली, (अम्बुनि जन्मास्य । ततः नीलवर्णं अम्बुजन्मेति ।) नीलोतपलम् । इत्यमरः । १ । १० । ३७ ॥

**नीलाम्लानः**, पुं, (आम्लायति यथाकालमिति । आ + म्ला + ल्युः । नीलो नीलवर्ण आम्लानः ।) पुष्पवृक्षभेदः । काला कोराठा इति हिन्दी भाषा ॥ तत्पर्य्यायः । दासी २ छादनः ३ बाला ४ आर्त्तगला ५ नीलपुष्पः ६ । अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । कफमारुतशूलकण्डूकुष्ठव्रणशोफत्वग्दोषनाशित्वञ्च । इति राजनिर्घण्टः ॥

**नीलाम्ली**, स्त्री, (नीला अम्ली ।) क्षुपभेदः । नल्लवुलगुड इति हिन्दी भाषा ॥ तत्पर्य्यायः । नीलपिष्टोडी २ श्यामाम्ली ३ दीर्घशाखिका ४ । अस्या गुणाः । मधुरत्वम् । रूक्षत्वम् । कफवातहरत्वञ्च । इति राजनिर्घण्टः ॥

निर्घण्टः ॥ नीलिनी । (पर्य्यायोऽस्या यथा, --
"नीली तु नीलिनी तूली कालदोला च नीलिका ।
रञ्जनी श्रीफली तुच्छा ग्रामीणा मधुपर्णिका ॥
क्लीतका कालकेशी च नीलपुष्पा च सा स्मृता ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
शेफालिका । इति मेदिनी । के, १११ ॥ नेत्ररोगविशेषः । यथा, --
"दोषे दृष्ट्याश्रिते तिर्य्यगेकं वै मन्यंते द्विधा ।
तिमिराख्यः स वै दोषश्चतुर्थपटलं गतः ॥
रुणद्धि सर्व्वतो दृष्टिं लिङ्गनाशमतः परम् ।
अस्मिन्नपि तमोभूते नातिरूढे महागदे ॥
चन्द्रादित्यौ सनक्षत्रावन्तरीक्षे च विद्युतः ।
निर्म्मतानि च तेजांसि भ्राजिष्णूनि च पश्यति ।
स एव लिङ्गनाशस्तु नीलिकाकाचसंज्ञितः ॥"
क्षुद्ररोगभेदः । यथा, --
"क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः ।
मुखमागत्य सहसा मण्डलं विसृजत्यतः ॥
नीरुजं तनुकं श्यावं तं व्यङ्गमिति निर्द्दिशेत् ।
कृष्णमेवं गुणं गात्रे मुखे वा नीलिकां विदुः ॥"
इति माधवकरः ॥
जलस्य ज्वरः । यथा,
"भूमेरूषरा वृक्षस्य

| | | |
|---|---|---|
| स्त्री । इति मेदिनी । गे, ४० ॥ शुषिरम् । इति<br>विश्वः ॥ | | कोटरः जलस्य नीलिका इत्यादि ।"<br>इति ज्वरप्रकरणे विजयरक्षितः ॥<br>क्षुद्ररोगविशेषः । तल्लक्षणं यथा, --<br>"कृष्णमेवं गुणं वक्त्रे गात्रे वा नीलिकां विदुः ।"<br>एवं गुणं नीरुजं तनुकं मण्डलम् ॥<br>तच्चिकित्सा यथा, --<br>"शिरावेधैः प्रलेपैश्च तथाभ्यङ्गैरुपाचरेत् ।<br>व्यङ्गञ्च नीलिकां वापि न्यच्छञ्च तिलकालकम् ॥<br>वटाङ्कुरा मसूराश्च प्रलेपाद्व्यङ्गनाशनाः ।<br>व्यङ्गे मञ्जिष्ठया लेपः प्रशस्तो मधुयुक्तया ॥ |

अथवा लेपनं शस्तं शशस्य रुधिरेण च ।
व्यङ्गहृद्वरुणत्वक् स्यादजामूत्रेण पेषिता ॥
जातीफलस्य लेपस्तु हरेद्व्यङ्गञ्च नीलिकाम् ।
अर्कक्षीरहरिद्राभ्यां मर्द्दयित्वा प्रलेपनात् ॥
मुखकार्ष्ण्यं समं याति चिरकालोद्भवं ध्रुवम् ।
मसूरैः क्षीरसंपिष्टैर्लिप्तमास्यं घृतान्वितैः ॥
सप्तरात्रात् भवेत् सत्यं पुण्डरीकदलोपमम् ।
वटस्य पाण्डुपत्राणि मालती रक्तचन्दनम् ॥
कुष्ठं कालीयकं लोध्रमेभिर्लेपं प्रयोजयेत् ॥
युवानपिडकानान्तु व्यङ्गानाञ्च विनाशनम् ।
स्यादेतेन मुखञ्चापि वर्जितं नीलिकादिभिः ॥
कालीयकं कलम्बक इति लोके ।
युवानपिडका
युवाननं तत्र पिडका पृषोदरादित्वान्नकारलोपः ।
कुङ्कुमं चन्दनं लोध्रं पत्तङ्गं रक्तचन्दनम् ।
कालीयकमुशीरञ्च मञ्जिष्ठा मधुयष्टिका ॥
पत्रकं पद्मकं कुष्ठं पद्मं गोरोचना निशा ।
लाक्षा दारुहरिद्रा च गैरिकं नागकेशरम् ॥
पलाशकुसुमञ्चापि प्रियङ्गुश्च वटाङ्कुराः ।
मालती च मधूच्छिष्टं सर्षपाः सुरभिर्व्वचा ॥
चतुर्गुणपयःपिष्टैरेतैरक्षमितैः पृथक् ।

नीलिनी ११ । इत्यमरः । २ । ४ । ९४ ॥
नीला १२ तूली १३ द्रोणी १४ मेला १५ । इति भरतः ॥ नीलपत्री १६ राज्ञी १७ नीलिका १८ नीलपुष्पी १९ काली २० श्यामा २१ शोधनी २२
श्रीफला २३ ग्राम्या २४ भद्रा २५ भारवाही २६
मोचा २७ कृष्णा २८ व्यञ्जनकेशी २९ महा-फला ३० असिता ३१ क्लीतनी ३२ केशी ३३ चारटिका ३४ गन्धपुष्पा ३५ श्यामलिका ३६ रङ्गपत्री ३७ महाबला ३८ स्थिररङ्गा ३९ रङ्गपुष्पी ४० दूली ४१ दूलिका ४२ द्रोणिका ४३ ।
इति शब्दरत्नावली ॥ अस्या गुणाः । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । केश्यत्वम् । कासकफमरु-द्विषोदरव्याधिगुल्मजन्तुव्रणनाशित्वञ्च। इति राजनिर्घण्टः ॥ नीलिकारोगः । इति मेदिनी । ले, २९ ॥

**नीलीरागः**, पुं, स्थिरप्रेमपुरुषः । तत्पर्यायः ।

स्थिरसौहृदः २ । इति हेमचन्द्रः । १ । १४० ॥ (नीलीसङ्गातो रागः ।) नीलवर्णः । इति नीलशब्दस्य नानार्थे शब्दरत्नावली ॥ नायक-नायिकयोः पूर्ब्बरागविशेषः । यथा, --
“नीलीकुसुम्भमञ्जिष्ठाः पूर्ब्बरागोऽपि च त्रिधा ।”
तल्लक्षणोदाहरणे ।
“न चातिशोभते यन्नापैति प्रेम मनोगतम् ।
नीलीरामः स विज्ञेयो यथा श्रीरामसीतयोः ॥”
इति साहित्यदर्पणम् ॥

**नीलोत्पलं** क्ली, (नीलं नीलवर्णमुत्पलमिति ।)

नीलवर्णोत्पलम् । नीलशाँपला इति भाषा । तत्पर्य्यायः । उत्पलकम् २ कुवलयम् ३ इन्दी-वरम् ४ कन्दोत्थम् ५ सौगन्धिकम् ६ सुगन्धम् ७
कुड्मलकम् ८ असितोत्पलम् ९ ॥ (यथा, भागवते । ५ । २४ । १० ।
“झषकुलोल्लङ्घनक्षुभितनीरनीरजकुमुदकुवलय-कह्लारनीलोत्पललोहितशतपत्रादिवनेषु ॥”)

**नीवारः**, पुं, (नि + वृ + घञ् उपसर्गस्य दीर्घत्वं

च ।) तृणधान्यभेदः । इत्यमरः । २ । ९ । २५ ॥
उडीधान इति वङ्गभाषा । तीनी इति हिन्दी-भाषा । तत्पर्य्यायः । अरुण्यधान्यम् २ मुनि-धान्यम् ३ तृणोद्भवम् ४ अरण्यशालिः ५ । (यथा, शाकुन्तले । १ अङ्के ।
“नीवाराः शुककोटरार्भकमुखभ्रष्टास्तरूणा-मधः ॥”)
अस्य गुणाः । मधुरत्वम् । स्निग्धत्वम् । पवि-त्रत्वम् । पथ्यत्वम् । लघुत्वञ्च । इति राज-निर्घण्टः ॥ तन्नामगुणाः
“प्रसाधिका तु नीवारस्तृणान्तमिति च स्मृतम् ।
नीवारः शीतलो ग्राही पित्तघ्नः कफवातकृत् ॥”
इति भाषप्रकाशः ॥

**नीविः**, स्त्री, (निव्ययति निवीयते वा । नि +

व्येञ् + “नौ व्यो यलोपः पूर्ब्बस्य च दीर्घः ।” उणां । ४ । १३५ । इति इञ् यलापः
निशब्दस्य दीर्घत्वञ्च । ततः कृदिकारादिति
वा ङीष् ।) परिपणम् । बणिजां मूलधनम् । राजपुत्रादेर्बन्धकः । इति सुभूतिः ॥ स्त्रीकटी-वस्त्रबन्धः । कोँचडी इति भाषा । (यथा, महाभारते । २ । ६३ । १९ ।

**नीवी**, स्त्री, (निव्ययति निवीयते वा । नि +

व्येञ् + “नौ व्यो यलोपः पूर्ब्बस्य च दीर्घः ।” उणां । ४ । १३५ । इति इञ् यलापः
निशब्दस्य दीर्घत्वञ्च । ततः कृदिकारादिति

पचेन्मन्दाग्निना वैद्यस्तैलं
प्रस्थद्वयोन्मितम् ॥
वदनाभ्यञ्जनाद्देतद्व्यङ्गं नीलिकया
सह ।
तिलकं माषकं न्यच्छं
नाशयेन्मुखदूषिकाम् ॥
पद्मिनीकण्टकं वापि हरेज्जतुमणिं
तथा ।
विदध्याद्वदनं
पूर्णचन्द्रमण्डलसुन्दरम् ॥
पत्तङ्गं वकम् इति लोके । कालीयकं
कलम्ब इति
लोके । सुरभिर्व्वचा महाभरी इति
लोके ।
कुङ्कुमाद्यं तैलम् ।” इति भावप्रकाशः
॥

**नीलिनी**, स्त्री, (नीलः प्रशस्ततयास्त्यस्या इति ।

इनिः । ततो ङीप् ।) नीलीवृक्षः ।
इत्यमरः ।
२ । ४ । ९५ ॥ (पर्य्यायोऽस्या
यथा, वैद्यक-
रत्नमालायाम् ।
“नीलिनीच्छगलान्त्री
स्यादन्तःकोटरपुष्प्यपि ।
अजाजी नीलबुह्ना
स्यान्नीलपुष्प्यतिलोमशा ॥”
यथा च ।
“नीली तु नीलिनी तूली कालदोला
च नीलिका ।
रञ्जनी श्रीफली तुत्था ग्रामीणा
मधुपर्णिका ॥
क्लीतका कालकेशी च नीलपुष्पा च
सा स्मृता ।
नीलिनी रेचनी तिक्ता केश्या
मोहभ्रमापहा ॥
उष्णा
हन्त्युदरप्लीहवातरक्तकफानिलान् ।
आमवातमुदावर्त्तं मन्दञ्च विषमुद्धृतम्
॥”

अस्य गुणाः । अतिस्वादुत्वम् । शीतत्वम् ।
सुरभिलम् । सौख्यकारित्वम् । पाके
अत्यन्ततिक्त-
त्वम् । रक्तपित्तहरत्वञ्च । इति राजनिर्घण्टः ॥

**नीलोत्पली**, [न्] पुं, (नीलोत्पलं नीलोत्पलबीजं

मनोहरशिञ्जनाय धार्य्यत्वेनास्त्यस्य इति इनिः
।)
मञ्जुघोषः । इति त्रिकाण्डशेषः ॥

**नीवरः**, पुं, (नयत्यात्मानं यत्र कुत्रचित् देहयात्रा-

निष्पादनायेति । नी + “छित्वरच्छत्वरेति ।”
उणां ३ । १ । इति ष्वरच्प्रत्ययेन निपातनात्
गुणाभावात् साधुः ।) भिक्षुः । इत्युणादि-
कोषः ॥ बणिजकम् । वास्तव्यम् । इति मेदिनी ।
रे, १७५ ॥ परिव्राट् । पङ्कः । जले, क्ली । इति
संक्षिप्तसारोणादिवृत्तिः ॥

**नीवाकः**, पुं, (निरन्तरं नियतं वा उच्यते इति ।

नि + वच् + घञ् कुत्वं उपसर्गस्य दीर्घत्वं च ।)
महार्घहेतोर्धान्यादिषु जनानामादरातिशयः ।
तुलाधरणाधिक्यम् । क्रमाक्रमादरः । मूल्या-
धिक्यहेतोर्निश्चयेन परिच्छेदनम् । इति भरतः
॥
तत्पर्य्यायः । प्रयामः २ । इत्यमरः । ३ । २ ।
२३ ॥

वा ङीष् ।) परिपणम् । बणिजां मूलधनम् ।
राजपुत्त्रादेर्बन्धकः । इति सुभूतिः ॥
स्त्रीकटी-
वस्त्रबन्धः । काँचडी इति भाषा । (यथा,
महाभारते । २ । ६३ । १९ ।
“एकवस्त्रा त्वधोनीवी रोदमाना रजस्वला
॥”)
स्त्रीत्युपलक्षणं पुंस्कटीवस्त्रबन्धेऽपि ।
इत्यमर-
टीकायां भरतः । तथा च । “नीवीं
विस्रंस्य
परिहितवस्त्रस्य षामाङ्गग्रन्थिं प्रोचयित्वा
आचमनमाह बौधायनः ।” इति
यजुर्व्वेदिश्राद्ध-
तत्त्वम् ॥ शूद्रस्य पित्रादिश्राद्धे
मोटकबन्धनम् ।
इति मथुरेशः ॥

**नीवृत्**, पुं, (नियतं वर्त्तते वसत्यत्र जनसमूह इति ।

नि + वृत् + अधिकरणे क्विप् ।
“नहिवृतिवृषि-
व्यधिरुचिसहितनिषु कौ ।” ६ । ३ ।
११६ । इति
पूर्ब्बपदस्य दीर्घः ।) जनपदः । इत्थमरः ।
२ । १ । ८ ॥
“द्वेअङ्गवङ्गकलिङ्गपञ्चालमगधकोशलादौ
मण्ड-
लत्वेन ख्याते ग्रामसमूहे ।” इति भरतः ॥

**नीव्रं**, क्ली, (नितरां व्रियते इति । नि + वृ +

बाहुलकात् कप्रत्ययेन साधुः ।)
छदिप्रान्त-
भागः । छाँचि इति भाषा । तत्पर्य्यायः ।
वलीकम् २ पटलप्रान्तम् ३ । इत्यमरः ॥
नीध्रम् । इति भरतः ॥ नेमिः । चन्द्रः ।
रेवती-
नक्षत्रम् । वनम् । इति मेदिनी । रे, ५३ ॥

**नीशारः**, पुं, (निःशेषेण नितरां वा शीर्य्यन्ते

हिमवाय्वादयोऽनेन अस्मादत्र वा । शॄ +
घञ् ।

इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)
श्यामत्रिपुटा । इति शब्दरत्नावली ॥
अजमीढस्य पत्नी । इति विष्णुपुराणे
४ अंशे
१९ अध्यायः ॥ (तथा च हरिवंशे ।
३२ । ४५ ।
“अजमीढस्य पत्न्यस्तु तिस्रो
रूपसमन्विताः ।
नलिनी केशिनी चैव धूमनी च
वराङ्गना ॥”)

**नीली**, स्त्री, (नीलो निष्पाद्यत्वेनास्त्यस्याः
इति ।

नील + अच् ततो ङीष् ।) वृक्षभेदः ।
नीलेर
गाछ इति भाषा ॥ तत्पर्य्यायः ।
काला २
क्लीतकिका ३ ग्रामीणा ४
मधुपर्णिका ५
रञ्जनी ६ श्रीफली ७ तुत्था ८ तूणी
९ दोला १०

उपसर्गस्य दीर्घत्वञ्च ।)
हिमानिलनिवारण-
प्रावरणम् । इत्यमरः । २ । ६ । ११८ ॥
हिमा-
निलप्रावरणं घनं महद्वस्त्रम् । इति
रमानाथः ॥
काण्डारः । इति नयनानन्दः ॥ मशारि
इति
कश्चित् । काण्डपटः । कानात् इति
कश्चित् ।
इति भरतः ॥ (यथा, --
“गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः
॥”
इति सिद्धान्तकौसद्याम् । ३ । ३ । २१ ।
इत्यस्य वृत्तौ ॥)

**नीहारः**, पुं, (निर्ह्रियते इति । नि + हृ + घञ् ।
उपसर्गस्य घञीति दीर्घत्वम् ।) घनीभूतशिशि-
रम् । तत्पर्य्यायः । अवश्यायः २ तुषारः ३
तुहिनम् ४ हिमम् ५ प्रालेयम् ६ महिका ७ ।
इत्यमरः । १ । ३ । १८ ॥ खजलम् ८ निशा-
जलम् ९ । इति त्रिकाण्डशेषः ॥ निहारः १०
मिहिका ११ । इति शब्दरत्नावली ॥ (यथा,
महाभारते । १ । २२८ । २ ।
"खाण्डवञ्च वनं सर्व्वं पाण्डवो बहुभिः शरैः ।
प्राच्छादयदमेयात्मा नीहारेणेव चन्द्रमाः ॥")
अस्य गुणः । कफवायुवर्द्धकत्वम् । इति राज-
वल्लभः ॥

**नु**, व्य, (नौति नुदति वा । नु नुद वा + यथा-
यथं कर्त्तर्य्यादिषु मितद्रूवादित्वात् डुः ।)
वितर्कः ।
(यथा, शाकुन्तले । १ ।
"निष्कम्पचामरशिखाश्च्युतकर्णभङ्गाः
धावन्ति वर्त्मनि तरन्ति नु वाजिनस्ते ॥")
अपमानः । विकरपः । (यथा, महाभारते ।
५ । १७५ । ३ ।
"किं नु गर्हाम्यथात्मानमथ भीष्मं दुरासदम्
॥")
अनुनयः । अतीतः । प्रश्वः । (यथा, महा-
भारते । ३ । ६३ । १२ ।
"कथं नु राजंस्तृषितः क्षुधितः श्रमकर्षितः ॥")
हेतुः । अपदेशः । इति मेदिनी । अव्यये, ४१ ॥

**नुः**, पुं, अनुस्वारः । इति वोपदेवः । यथा, --
"नुवी पूर्ब्बेण सम्बद्धौ मुन्यौ तु परगामिनौ ।"
इति दुर्गादासः ॥

**नुड**, शि वधे । इति कविकल्पद्रुमः ॥ (तुदां-कुटां-
परं-सकं-सेट् ।) शि, नुडति अनुडीत् नुनोड ।
इति दुर्गादासः ॥

**नुतं**, त्रि (नु ल स्तुतौ + क्तः ।) स्तुतम् । यथा, --
"तं वेदशास्त्रपरिनिष्ठितशुद्धबुद्धिं
चर्म्माम्बरं सुरमुनीन्द्रनुतं कवीन्द्रम् ।
कृष्णत्विषं कनकपिङ्गजटाकलापं
वार्त्तिकोक्त्या तनप् नवस्य नूरादेशश्च ।)
अपुरा-
तनम् । तत्पर्य्यायः । प्रत्यग्रः २ अभिनवः
३
नव्यः ४ नबीनः ५ नवः ६ नूत्नः ७ ।
इत्यमरः ।
३ । १ । ७७ ॥ सद्यस्कः ८ अजीर्णः ९ ।
इति
हेमचन्द्रः । ६ । ८४ ॥ अभ्यग्रः १०
प्रतिनवः ११ ।
इति जटाधरः ॥ (यथा, रघौ । ८ । १५ ।
"प्रशमस्थितपूर्ब्बपार्थिवं
कुलमभ्युद्यतनूतनेश्वरम् ॥")

**नूत्नः**, त्रि, (नव एव । नव + त्नप् नूरादेशश्च ।)
नूतनः । इत्यमरः । ३ । १ । ७८ ॥
(यथा,
ऋग्वेदे । ७ । १८ । २० ।
"न त इन्द्र सुमतयो न रायः
सं चक्षे पूर्ब्वा उषसो न नूत्नाः ॥"
"न नूत्ना नूतनाश्च ।" इति सायनभाष्यम्
॥")

**नूदः**, पुं, (नुदति रोगाद्यनिष्टमिति । नुद +
"इगुपधज्ञाप्रीकिरः कः ।" ३ । १ । १३५
। इति
कः । पृषोदराद्दीर्घः ।) ब्रह्मदारुवृक्षः ।
इत्य-
मरः । २ । ४ । ४२ ॥ (ब्रह्मदारुशब्देऽवि-
शेषोऽस्य ज्ञातव्यः ॥)

**नूनं**, व्य, (नु ऊनयतीति । ऊन परिहाणे +
अम् ।) तर्कः । ऊहः । यथा, ओजसापि
खलु
नूनमनूनम् । अर्थनिश्चयः । (यथा,
देवीभाग-
वते । १ । १० । ३६ ।
"स्वर्गदञ्च तथा प्रोक्तं ज्ञानिनां मोक्षदं तथा
।
न भविष्यति तन्नूनमनया देवकन्यया ॥")

**नृचक्षाः** [स्] पुं, (नन् चष्टे भक्ष्यत्वेन पश्यतीति
।
चक्ष ङ् दर्शने + "सर्व्वधातुभ्योऽसुन्"
उणां ४ ।
१८८ । इत्यसुन् । यद्वा, "चक्षेर्बहुलं
शिच्च ।"
उणां । ४ । २३२ । इत्यसिः ।
असनयोश्चेति
न ख्याञादेशः ।) राक्षसः । इति
हेमचन्द्रः ।
२ । १०१ ॥ (नृन् चष्टे पश्यतीति नृन्
शुभा-
शुभकर्त्तॄन् चष्टे पश्यति जानातीत्यर्थः
। देवः ।
यथा, ऋग्वेदे । १० । १०७ । ४ ।
"शतधारं वायुमर्कं स्वर्व्विदं
नृचक्षसस्ते अभिचक्षते हविः ॥"
"नृचक्षसः नृणां द्रष्टृनन्यानिन्द्रादीन्
देवांश्च ।"
इति भाष्यकृत्सायनः ॥ नृणां
कर्म्मणेतृणा-
मध्वर्य्यादीनामुपद्रष्टा । यथा, ऋग्वेदे ।
३ । ५३ । ९ ।
"अस्तभ्नात् सिन्धुमर्णवं नृचक्षाः ॥")

**नृचक्षुः**, [स्] पुं, (नृणां प्रजाजनानां चक्षुरिव ।)
सुनीथराजपुत्त्रः । इति महाभारतम् ॥
(यथा,
भागवते । ९ । २२ । ४१ ।
"सुनीथस्तस्य भविता नृचक्षुर्यत्
सुखीनलः ॥"
विष्णुपुराणे तु । ४ । २१ । ३ ।
"तस्मादपि सुनीथः सुनीथादृचः ततो
नृचक्षुः ॥")

**नृत**, य नर्त्ते । इति कविकल्पद्रुमः ॥ (दिवां-परं-
अकं-सेट् ।) य, नृत्यति नर्त्तकः । इति
दुर्गा-
दासः ॥

**नृतिः**, स्त्री, (नृत् नर्त्तने + "इगुपधात् कित् ।"

व्यासं नमामि शिरसा तिलकं मुनीनाम् ॥”
इति पुराणम् ॥

**नुतिः**, स्त्री, (नु + भावे क्तिन् ।) स्तुतिः । इत्यमरः । १ । ६ । ११ ॥ (यथा, भर्त्तृहरिः ।
“परगुणनुतिभिः स्वान् गुणान् ख्यापयन्तः ॥”)
पूजा । इति शब्दरत्नावली ॥

**नुत्तः**, त्रि, (नुद् + क्तः । “नुदविदेति ।” ८ । २ । ५६ । इति पाक्षिको नत्वाभावः ।) क्षिप्तः । प्रेरितः । इत्यमरः । ३ । १ । ८७ ॥

**नुन्नः**, त्रि, (नुद + क्तः । निष्ठातस्य पूर्ब्बदस्य च नत्वम् ।) नुत्तः । इत्यमरः । ३ । १ । ८७ ॥ (यथा,
माघे । १ । २७ ।
“प्रसह्य तेजोमिरसङ्ख्यतां गतै-
रदस्त्वया नुन्नमनुत्तमं तमः ॥”)

**नूतः**, त्रि, नू शि स्तवने + कर्म्मणि क्तप्रत्ययः । स्तुतः । इति व्याकरणम् ॥

**नूतनः**, त्रि, (नव एव । “नवस्य नूरादेशो त्नप्त-नपस्वाग्र प्रत्यया वक्तव्याः ।” ५ । ४ । २५ । इत्यस्य अवधारणम् । यथा, नूनं हन्ति स्म रावणम् ।
इत्यमरभरतौ ॥ स्मरणम् । वाक्यपूरणम् । इति
मेदिनी ॥

**नूपुरं**, पुं, क्ली, (नू + क्विप् । नुवि पुरति इति । पुर अग्रगमने + “इगुपधेति ।” ३ । १ । १३५ । इति
कः ।) स्वनामख्यातपादभूषणम् । नेपुर इति
भाषा । तत्पर्य्यायः । पादाङ्गदम् २ तुला-कोटिः ३ मञ्जीरः ४ हंसकः ५ पादकटकः ६ ।
इत्यमरः ॥ पदाङ्गदम् ७ । इति
शब्दरत्नावली ॥
(यथा, मार्कण्डेये । ८२ । २५ ।
“नूपुरौ विमलौ तद्वद्ग्रैवेयकमनुत्तमम् ॥”
“गुणवानपि मौखर्य्यात् पादे लुठति नूपुरः ।
हारस्तु मूकभावेन कण्टवल्लभतां गतः ॥
इत्युद्भटः ॥)

**नृकेशरी**, [न्] पुं, (केशरः प्राचुर्य्येणास्त्यस्येति इनिः । ना चासौ केशरी चेति ।) नरसिंहाव-तारः । इति पुराणम् ॥ (ना केशरीवेति उप-मितिसमासे कृते “सिंहशार्द्दलनागाद्याः पुंसि
श्रेष्ठार्थवाचकाः ।” इत्यमरोक्तेः । पुरषश्रेष्ठः ॥)

**नृगः**, पुं, राजविशेषः । यथा, श्रीभागवते ।
“नृगो नाम नरेन्द्रोऽहमिक्ष्वाकुतनयः प्रभो ॥”
(अस्य राजप्रवरस्य कदाचिद् गोदानप्रमाद-जनितपापात् कृकलासत्वप्राप्तिर्वृष्णिकुमार-गणानुरुद्धेन पुनर्भगवता वासुदेवेनोद्धारादिकथा उणां ४ । ११९ । इति इन् स च कित् ।) नर्त्त-नम् । इति शब्दरत्नावली ॥ (यथा, ऋग्वेदे ।
१० । १८ । ३ ।
“प्राञ्चो अगाय नृतये हसाय
द्राघीय आयुः प्रतरं दधानाः ॥”)

**नृतुः**, पुं, (नृत्यतीति । नृत् + बाहुलकात् कुः ।) नर्त्तकः । इत्युणादिकोषः ॥ (यथा, ऋग्वेदे ।
८ । २४ । ९ ।
“इन्द्र यथा ह्यस्ति तेऽपरीतं नृतो शवः ॥”
नृत्यत्यत्रेति । अधिकरणे कुः ।) भूमिः ।
दीर्घः । क्रिमिः । इति
संक्षिप्तसारोणादिवृत्तिः ॥

**नृत्तं**, क्ली, (नृत् + भावे क्तः ।) नृत्यम् । इत्यमर-टीकायां भरतः ॥ (यथा,
बृहत्संहितायाम् ।
५ । ७३ ।
“नृत्तज्ञशस्यप्रवराङ्गनानां
धनुष्करक्षत्त्रतपस्विनाञ्च ॥”)

**नृत्यं**, क्ली, (नृत् + “ऋदुपधाच्चाकॣपिचृतेः ।” २ । १ । ११० । इति क्यप् ।) तालमानरसा-श्रयसविलासाङ्गविक्षेपः । नाच इति भाषा ।
तत्पर्य्यायः । ताण्डवम् २ नटनम् ३ नाट्यम् ४
लास्यम् ५ नर्त्तनम् ६ । इत्यमरः । ४ । ७ । १० ॥
नृत्तम् ७ । उद्धृतं नृत्यं ताण्डवम् । सुकुमारन्तु
लास्यम् । भावाश्रयं नृत्तम् ।ताललयाश्रयं
नृत्यमिति भेदोऽत्र नादृतः । इति भरतः ॥ नाटः

| | | |
|---|---|---|
| | च महाभारते । १३ । ६० । अध्यायस्य प्रथम-<br>श्लोकादासमाप्तेर्द्रष्टव्या ॥ नॄन् जीवान् गच्छति<br>प्राप्नोति जानाति वेति व्युत्पत्त्या परमात्मा ॥) | ८ लासः ९ लास्यकम् १० नृतिः ११ इति<br>शब्दरत्नावली ॥ * ॥ तस्य लक्षणादि यथा, --<br>"देवरुच्या प्रतीतो यस्तालमानरसाश्रयः ।<br>सविलासोऽङ्गविक्षेपो नृत्यमित्युच्यते बुधैः ॥ * ॥ |

ताण्डवञ्च तथा लास्यं द्विविधं नृत्यमुच्यते ।
पेवलिर्बहुरूपञ्च ताण्डवं द्विविधं मतम् ॥
अङ्गविक्षेपबाहुल्यं तथाभिनयशून्यता ।
यत्र सा पेवलिस्तस्याः सङ्गादेशीति लोकतः ॥
छेदनं भेदनं यत्र बहुरूपा मुखावली ।
ताण्डव बहुरूपन्तद्वारुणागलमुद्धतम् ॥ * ॥
छरितं यौवतञ्चेति लास्यं द्विविधमुच्यते ।
यत्राभिनयाद्यैर्भावै रसैराश्लेषचुम्बनैः ॥
नायिकानायकौ रङ्ग नृत्यतश्छुरितं हि तत् ॥
मधुरं बद्धलीलाभिर्नटीभिर्यत्र नृत्यते ।
वशीकरणविद्याभं तल्लास्यं यौवतं मतम् ॥ * ॥
गेयादुत्तिष्ठते वाद्यं वाद्यादुत्तिष्ठते लयः ।
लयतालसमारब्धं ततो नृत्यं प्रवर्त्तते ॥”
इति सङ्गीतदामोदरः ॥
अरूपस्य नृत्यं व्यर्थम् । यथा, --
“नृत्येनालमरूपेण सिद्धिर्नाट्यस्य रूपतः ।
चार्व्वधिष्ठानवन्नृत्यं नृत्यमन्यद्विडम्बना ॥”
इति मार्कण्डेयपुराणम् ॥
विष्णुगृहे नृत्यफलं यथा, --
“नृत्यमानस्य वक्ष्यामि तच्छृणुष्व वसुन्धरे ! ।
मनुजा येन गच्छन्ति छित्वा संसारसागरम् ॥
त्रिंशद्वर्षसहस्राणि त्रिंशद्वर्षशतानि च ।
पुष्करद्वीपमासाद्य मोदते वै यदृच्छया ॥
पुष्कराच्च परिभ्रष्टः स्वच्छन्दगमनालयः ।
फलं प्राप्नोति सुश्रोणि ! मम कर्म्मपरायणः ॥

अनिच् ।) कुवेरः । इति हेमचन्द्रः । २ । १०३ ॥ नरधर्म्मयुक्ते, त्रि ॥

**नृपः**, पुं, (नॄन् नरान् पाति रक्षतीति । नृ + पा रक्षणे + “आतोऽनुपसर्गे कः ।” ३ । २ । ३ । इति कः ।) नरपतिः । इत्यमरः । २ । ८ । १ । तस्य लक्षणं यथा, --
“चतुर्योजनपर्य्यन्तमधिकारी नृपस्य च ।
यो राजा तच्छतगुणः स एव मण्डलेश्वरः ।
तत्तद्दशगुणो राजा राजेन्द्रः परिकीर्त्तितः ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ८६ अः ॥
तत्प्रमाणं यथा, --
“अपुत्रस्य नृपः पुत्त्रो निर्धनस्य धनं नृपः ।
अमातुर्जननी राजा अतातस्य पिता नृपः ॥
अनाथस्य नृपो नाथो ह्यभर्त्तुः पार्थिवः पतिः ।
अभृत्यस्य नृपो भृत्यो नृप एव नृणां सखा ॥
सर्व्वदेवमयो राजा तस्मात्त्वामर्थये नृप ! ॥”
इति कालिकापुराणे ५० अध्यायः ॥
नृपदर्शनदिनं यथा । तत्र तिथयः शुभाः । वाराः शनिमङ्गलभिन्नाः । नक्षत्राणि उत्तर-फल्गुन्युत्तराषाढोत्तरभाद्रपद्रोहिणीपुष्याश्विनीहस्ताचित्रानुराधामृगशिरोरेवतीज्येष्ठाश्रवणाः । लग्नानि मिथुनकन्याधनुर्मीनवृषभसिंहसंज्ञ-कानि । तत्र चन्द्रः शोभनः । इति ज्योतिषम् ॥

**नृपकन्दः**, पुं, (नृपप्रियः कन्दः । कन्दानां नृपः श्रेष्ठो वा । राजदन्तादिवत् समसः ।) राज-पलाण्डुः । इति राजनिर्घण्टः ॥

**नृपतिः**, पुं, (नॄन् पातीति । पा रक्षणे + डतिः । यद्वा, नृणां पतिः ।) राजा । (यथा, मनुः । ७ । ३४ ।
“अतस्तु विपरीतश्च नृपतेरजितात्मनः ।
संक्षिप्यते यशो लोके घृतविन्दुरिवाम्भसि ॥”) कुवेरः । इति शब्दरत्नावली ॥

**नृपतिवल्लभः**, पुं, (नृपतीनां वल्लभः प्रियः ।) औषधविशेषः । नृपवल्लभ इति ख्यातः । यथा,
“जातीफलं लवङ्गाब्दत्वगेलाटङ्गरामठम् ।
जीरकञ्च यमानी च विश्वसैन्धवपत्रकम् ॥
लौहमभ्रं रसं गन्धं ताम्रं प्रत्येकशः पलम् ।
दाहविद्रधिहिक्काश्च जडगद्गदमूकताः ।
वाधिर्य्यं स्वरभेदञ्च वृध्नवृद्धिविसर्फकान् ॥
ऊरुस्तम्भं रक्तपित्तं गुदभ्रंशारुचिं तृषाम् ।
कर्णनासानुशोथांश्च दन्तरोगञ्च पीनसम् ॥
स्थौल्यञ्च शीतपित्तञ्च स्थावराणि विषाणि च ।
वातपित्तकफोत्थांश्च द्वन्द्वजान् सान्निपाति-कान् ॥
सर्व्वरोगचयान् हन्ति चण्डांशुरिव पापहा ।
बलवर्णकरो ह्येष आयुष्यो वीर्य्यवर्द्धनः ॥
परं वाजीकरः श्रेष्ठः पटुतामन्त्रसिद्धिदः ।
अरोगीदीर्घजीवी स्यात् रोगी रोगं विमुञ्चति ।
रसस्यास्य प्रसादेन सुबुद्धिर्जायते नरः ॥”
इति रत्नावली ॥

**नृपद्रुमः**, पुं, (नृपप्रियो द्रुमो वृक्षः ।) आरग्बधः । राजादनीवृक्षः । इति राजनिर्घण्टः ॥

**नृपप्रियः**, पुं, (नृपाणां प्रियः ।) वेष्टवंशः । इति शब्दचन्द्रिका । वेड वाँश इति भाषा ॥ राज-पलाण्डुः । रामशरः । शालिधान्यम् । आम्रम् । इति राजनिर्घण्टः ॥

**नृपप्रियफला**, स्त्री, (नृपप्रियं फलं यस्याः ।) वार्त्ताकी । इति राजनिर्घण्टः ॥

रूपवान् गुणवान् शूरः शीलवान् सुपथे स्थितः ।
मद्भक्तश्चैव जायेत संसारपरिमोचितः ॥”
इति वाराहे शौकरमाहात्म्यम् ॥
“दृष्ट्वा संपूजितं देवं नृत्यमानोऽनुमोदयेत् ।
असंशयमतिः शुद्धः परं ब्रह्म स गच्छति ॥”
इत्यग्निपुराणम् ॥
अपि च । द्वारकामाहात्म्ये श्रीभागवते ।
“यो नृत्यति प्रहृष्टात्मा भावैर्बहुसुभक्तितः ।
स निर्द्दहति पापानि जन्मान्तरशतेष्वपि ॥”
हरिभक्तिसुधोदये ।
“बहुधोत्सार्य्यते हर्षाद्विष्णुभक्तस्य नृत्यतः ।
पद्भ्यां भूमेर्दिशोऽक्षिभ्यां दोर्भ्याञ्चामङ्गलं दिवः ॥”
विष्णुधर्म्मोत्तरे ।
“नृत्यं दत्त्वा तथाप्नोति रुद्रलोकमसंशयम् ।
स्वयं नृत्येन संपूज्य तस्यैवानुत्तरो भवेत् ॥”
अन्यत्र च नारदोक्तौ ।
“नृत्यतां श्रीपतेरग्रे तालिकावादनैर्भृशम् ।
उड्डीयन्ते शरीरस्थाः सर्व्वे पातकपक्षिणः ॥”
इति हरिभक्तिविलासः ॥

**नृदेवः**, पुं, (नृषु नरेषु मध्ये देवः । ना देव इव इत्युपमितसमासो वा ।) राजा । यथा, नैषधे ।
१० । ३३ ।
“अम्लानमालाविपुलातपत्रै-र्देवा नृदेवाश्च भिदां न भेजुः ॥”

**नृधर्म्मा**, [न्] पुं, (नुर्नरस्य इव धर्म्मो यस्य । “धर्म्मादनिच् केवलात् ।” ५ । ४ । १२४ । इति
मरिचं त्रिपलं दत्त्वा छागीदुग्धेन पेषयेत् ॥
धात्रीरसेन वा पिष्ट्वा वटिकां कुरु यत्नतः ।
श्रीमद्गहननाथेन विचिन्त्य परिनिर्म्मितः ॥
सूर्य्यवत्तेजसा चायं रसो नृपतिवल्लभः ।
अष्टाद्दशवटीं खादेत् पवित्रः सूर्य्यदर्शकः ॥
हन्ति मन्दानलं सर्व्वमामदोषं विसूचिकाम् ।
प्लीहगुल्मोदराष्ठीलायकृत्पाण्डुहलीमकम् ॥
हृत्शूलं कण्ठशूलञ्च चक्षुःशूलञ्च कामलाम् ।
शिरःशूलं कटीशूलमानाहमोष्ठशूलकम् ॥
कासश्वासामवातञ्च श्लीपदं शोथमर्व्वुदम् ।
गलगण्डं गण्डमालामम्लपित्तञ्च गर्द्दभीम् ॥
क्रिमिकुष्ठानि दद्रूणि वातरक्तं भगन्दरम् ।
उपदंशमतीसारं ग्रहण्यर्शःप्रमेहकम् ॥
अश्मरीं मूत्रकृच्छ्रञ्च मूत्राघातमसृग्दरम् ।
ज्वरं जीर्णज्वरं कण्डुं तन्द्रालस्यं वमिं भ्रमिम् ॥

**नृपप्रिया**, स्त्री, (नृपाणां प्रिया ।) केतकी । राज-खर्ज्जूरी । इति राजनिर्घण्टः ॥

**नृपबदरः**, पुं, (नृपप्रियो बदरः ।) राजबदर-वृक्षः । तत्फले क्ली । इति राजनिर्घण्टः ॥

**नृपमन्दिरं**, क्ली, (नृपस्य मन्दिरम् ।) राजसद-नम् । तत्पर्य्यायः । सौधम् २ । इति हेम-चन्द्रः । ४ । ५२ ॥

**नृपमाङ्गल्यकं**, क्ली, (नृपस्य माङ्गल्यं मङ्गलं यस्मा-दिति । कप् ।) आहुल्यवृक्षः । इति राज-निर्घण्टः ॥

**नृपलक्ष्म**, [न्] क्ली, (नृपस्य लक्ष्म चिह्नम् ।) राजच्छत्रम् । इत्यमरः । २ । ८ । ३२ ॥ राज-चिह्नञ्च ॥

**नृपलिङ्गधरः**, पुं, (धरतीति । धृ + अच् । नृप-लिङ्गस्य धरः ।) राजवेशधारी । यथा, --
“निजग्राहौजसा वीरः कलिं दिग्विजये क्वचित्
नृपलिङ्गधरं शूद्रं घ्नन्तं गोमिथुनं पदा ॥”
इति श्रीभागवते । १ । १५ ॥

**नृपवल्लभः**, पुं, (नृपाणां वल्लभः प्रियः ।) राजाम्रः । इति राजनिर्घण्टः ॥ राजप्रिये, त्रि ॥

**नृपवल्लभा**, स्त्री, (नृपस्य वल्लभा ।) केविक-पुष्पम् । इति राजनिर्घण्टः ॥ राजमहिषी च ॥

**नृपसभं**, क्ली, (नृपाणां सभा । “सभा राजा-

| | | मनुष्यपूर्ब्बा ।” २ । ४ । २३ ।<br>इति क्लीवत्वम् ।)<br>नृपाणां शाला संहतिर्व्वा ।<br>इत्यमरभरतौ ॥<br><br>**नृपात्मजा**, स्त्री, (नृपस्य आत्मजेव । सुदृश्यत्वात्<br><br>तथात्वम् ।) कटुतुम्बी । इति<br>रत्नमाला ॥<br>(नृपस्य आत्मजा कन्या ।)<br>राजकन्या । यथा,<br>“स्वयम्बरं भीमनृपात्मजाया<br>दिशः पतिर्न्न प्रविवेश शेषः ॥”<br>इति नैषधे १० सर्गः ॥ |
|---|---|---|

**नृपाध्वरः**, पुं, (नृपाणामध्वरो यज्ञः ।) राज-
सूययज्ञः । इति त्रिकाण्डशेषः ॥

**नृपान्नं**, क्ली, (नृपप्रियं अन्नम् ।) राजान्ननाम-
धान्यम् । इति राजनिर्घण्टः ॥ राज्ञ
ओदनञ्च ॥

**नृपाभीरं**, क्ली, (अभीरयति सूचयति भोजन-
कालमिति । अभि + ईर् + कः ।
नृपस्य अभीरं
भोजनकालसूचकवाद्यविशेषः ।)
भक्ततूर्य्यम् ।
राजभोजनकालीनवाद्यविशेषः । इति
त्रिकाण्ड-
शेषः ॥

**नृपामयः**, पुं, (आमयानां नृपः । राजदन्तादि-
वत् पूर्ब्बनिपातः ।) राजयक्ष्मा ।
क्षयरोगः ।
इति राजनिर्घण्टः ॥ (नृपस्य आमयो
व्याधिः ।)
राज्ञो रोगश्च ॥

**नृपावर्त्तं**, क्ली, (नृप इव आवर्त्तते इति । आ +
वृत् + अच् ।) राजावर्त्तरत्नम् । इति
राज-
निर्घण्टः ॥

**नृपासनं**, क्ली, (नृपस्य आसनम् ।) राजासनम्
।
तत्पर्य्यायः । भद्रासनम् २ सिंहासनम्
३ ।
इत्यमरः । २ । ८ । ३१ ॥ (यथा,
भागवते ।
३ । १ । २८ ।
"यमभ्यषिञ्चच्छतपत्रनेत्रो
नृपासनाशां परिहृत्य दूरात् ॥")

**नृपाह्वयः**, पुं, (नृपं आह्वयते गन्धेनेति । आ +
ह्वे + अच् ।) राजपलाण्डुः । इति राज-
निर्घण्टः ॥ नृपनामा च ॥

१ । ४७ ॥ (यथा, पञ्चतन्त्रे । ३ । १४२ ।
"ये नृशंसा दुरात्मानः प्राणिनां
प्राणनाशकाः ।
उद्वेजनीया भूतानां व्याला इव भवन्ति ते
॥")

**नृसिंहः**, पुं, (ना चासौ सिंहश्चेति । नरसिंह-
मूर्त्तिधरत्वाद्वास्य तथात्वम् ।) विष्णुः ।
इति
त्रिकाण्डशेषः ॥ विष्णोर्दशावताराणां मध्ये
चतुर्थः पूर्णावतारः । तस्य रूपं यथा, --
"सिंहस्य कृत्वा वदनं मुरारिः
सदा करालञ्च सुरक्तनेत्रम् ।
अर्द्धं वपुर्व्वै मनुजस्य कृत्वा
ययौ सभां दैत्यपतेः पुरस्तात् ॥"
इत्यग्निपुराणम् ॥
महाविष्णुः । तन्मन्त्रादि यथा, --
अथ नृसिंहमन्त्राः । निबन्धे ।
"उग्रं वीरं वदेत् पूर्ब्बं महाविष्णुमनन्तरम् ।
ज्वलन्तं पदमाभाष्य सर्व्वतोमुखमीरयेत्
॥
नृसिंहं भीषणं भद्रं मृत्युमृत्युं वदेत्ततः ।
नमाम्यहमिति प्रोक्तो मन्त्रराजसुरद्रुमः ॥
अयं मन्त्रो मायापुटितोऽपि भवति तदा
सर्व्व-
फलप्रदः । तथा च निबन्धे ।
"हृल्लेखापुटितश्चेत् स्यात्
सर्व्वकामफलप्रदः ।"
अस्य पूजा
प्रातःकृत्यादिवैष्णवोक्तपीठमन्वन्तं
विधाय ऋष्यादिन्यासं कुर्य्यात् । शिरसि
ब्रह्मणे
ऋषये नमः । मुखेऽनुष्टुप्छन्दसे नमः । हृदि
नृसिंहाय देवतायै नमः ॥ ततः
कराङ्गन्यासौ ।
"चतुर्भिर्हृदयं वर्णैः शिरस्तावद्भिरक्षरैः ।
शिखाष्टाभिःसमुद्दिष्टाषड्भिः
कवचमीरितम् ॥
तावद्भिर्नयनं प्रोक्तं अस्त्रं स्यात् करणाक्षरैः
॥"

"वर्णलक्षं जपेन्मन्त्रं तत्सहस्रं घृतप्लुतैः ।
पायसान्नैः प्रजुहुयाद्विधिवत् पूजितेऽनले ॥"
मन्त्रान्तरं यथा, --
"पाशः शक्तिर्नरहरिरङ्कुशो वर्म्मफट् मनुः ।
षडक्षरो नरहरेः कथितः सर्व्वकामदः ॥"
अस्य पूजा
प्रातःकृत्यादिवैष्णवोक्तपीठन्यासान्त
पीठमन्वन्तं विधाय ऋष्यादिन्यासं कुर्य्यात् ।
शिरसि ब्रह्मणे ऋषये नमः । मुखे पङ्क्ति-
च्छन्दसे नमः । हृदि नृसिंहाय देवतायै नमः ।
ततः कराङ्गन्यासौ । आं अङ्गुष्ठाभ्यां नमः ।
ह्रीं तर्ज्जनीभ्यां स्वाहा । क्ष्रौं मध्यमाभ्यां वषट्
।
क्रो अनामिकाभ्यां हूम् । हूं कनिष्ठाभ्यां
वौषट् । फट् करतलपृष्ठाभ्यां फट् । एवं हृद-
यादिषु । ततो ध्यानम् ।
"कोपादालोलजिह्वं विवृतनिजमुखं
सोमसूर्य्या-
ग्निनेत्रं
पादादानाभिरक्तप्रभमुपरिसितंभिन्नदैत्येन्द्र-
गात्रम् ।
शङ्खं चक्रासिपाशाङ्कुशकुलिशगदादारणान्यु-
द्वहन्तं
भीमं तीक्ष्णोग्रदंष्ट्रं मणिमयविविधाकल्पमीडे
नृसिंहम् ॥"
एवं ध्यात्वा मानसैः संपूज्य शङ्खस्थापनं
कृत्वा
वैष्णवोक्तपीठपूजां कृत्वा
पुनर्ध्यात्वावाहनादि-
पञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधायावरणपूजा-
मारभेत । केशरेष्वग्न्यादिकोणेषु मध्ये दिक्षु च
आं हृदयाय नमः । इत्यादिना षडङ्गानि पूज-
येत् । ततः पत्रेषु पूर्ब्बादिषु शङ्खं चक्रं पाशं
अङ्कुशं वज्रं गदां खड्गं खेटकञ्च प्रणवादि-
नमोऽन्तेन पूजयेत् । तथा च निबन्धे ।
"अङ्गावृतैर्ब्बहिश्चक्रं शङ्खं पाशाङ्कुशौ पुनः ।
वज्रं कौमोदकीं खड्गखेटौ पत्रेषु पूजयेत् ॥"
तत इन्द्रादीन् वज्रादींश्च सम्पूज्य
धूपादिविस-

**नृपोचितः**, पुं, (नृपाणामुचितो योग्यः ।) राज-

माषः । इति राजनिर्घण्टः । राजयोग्ये, त्रि ॥

**नृयज्ञः**, पुं, (ना मनुष्यस्तदर्थो यो यज्ञः ।)

अतिथिसेवा । यथा, मनुः । ७ । ७० ।
"अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥"

**नृवराहः**, पुं, (ना चासौ वराहश्चेति ।) वराह-

रूपधृग्भगवदवतारः । यथा, --
"नृवराहस्य वसतिर्महर्ल्लोके प्रतिष्ठिता ।
नृसिंहस्य तथा प्रोक्ता जनलोके महात्मनः ॥"
स एव बलेर्द्वारी । यथा, --
"शौकरं रूपमास्थाय द्वार्य्यस्य च दुरात्मनः ।
भविष्यामि न सन्देहो व्रज शक्र ! त्यरान्वितः ॥"
इति पाद्मे सृष्टिखण्डे २८ अध्यायः ॥
अपि च ।
"दैत्यस्ततोऽसौ नृवराहमाहवे
निपातयामास रुषा ज्वलन्तीम् ।
शक्तिं यथा विद्युतमाशु कुञ्जे
प्रवर्षमाणोऽपि गिरिं सुमेघः ॥
स हन्यमानो गदयाप्रमेयः
प्रोवाच दैत्यं नृवराहमूर्त्तिः ।
प्रजापतेः सेतुमिमं निहत्य
व्रजेच्च कः स्वस्ति यथासुरेन्द्र ॥"
इत्यग्निपुराणम् ॥

**नृशसः**, त्रि, (नॄन् नरान् शंसति हिनस्तीति ।

नृ + शन्स हिंसायाम् + "कर्म्मण्यण् ।" ३ । २ । १ ।
इत्यण् ।) क्रूरः । परद्रोही । इत्यमरः । ३ ।

ततो मन्त्रन्यासः ।
"शिरोललाटनेत्रेषु मुखबाह्वङ्घ्रिसन्धिषु ।
साग्रेषु कुक्षौ हृदये गले पार्श्वद्वये पुनः ॥
अपराङ्गे च ककुदि न्यसेद्वर्णान् यथाक्रमम् ॥"
ध्यानन्तु ।
"माणिक्याद्रिसमप्रभं निजरुचा संत्रस्तरक्षोगणं
जानुन्यस्तकराम्बुजं त्रिनयनं रत्नोल्लसद्भूषणम् ।
बाहुभ्यां धृतशङ्खचक्रमनिशं दंष्ट्रोग्रवक्त्रोल्लसज्-
ज्वालाजिह्वमुदारकेशरचयं वन्दे नृसिंहं विभुम् ॥
एवं ध्यात्वा मानसैः संपूज्य शङ्खस्थापनं कृत्वा
वैष्णवोक्तपीठपूजां कृत्वा पुनर्ध्यात्वावाहनादि-
पञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधायावरणपूजा-
मारभेत । केशरेष्वग्न्यादिकोणेषु मध्ये दिक्षु च
अङ्गानि पूजयेत् । यथा उग्रं वीरं हृदयाय
नमः । महाविष्णुं शिरसे स्वाहा । ज्वलन्तं
सर्व्वतोमुखं शिखायै वषट् । नृसिंहं भीषणं
कवचाय हूं । भद्रं मृत्युमृत्युं नेत्रत्रयाय
वौषट् । नमाम्यहं अस्त्राय फट् । ततः पूर्ब्बादि-
दलेषु गरुडं शङ्करं शेषं ब्रह्माणञ्च प्रपूजयेत् ।
विदिग्दलेषु श्रियं ह्रियं धृतिं पुष्टिञ्च प्रण-
वादिनमोऽन्तेन पूजयेत् । तद्बहिः इन्द्रादीन्
वज्रादींश्च संपूज्य धूपादिविसर्ज्जनान्तं कर्म्म
समापयेत् । अस्य पुरश्चरणं द्वात्रिंशल्लक्ष-
जपः । तथा च ।

र्ज्जनान्तं कर्म्म समापयेत् ॥ अस्य पुरश्चरणं
षड्लक्षजपः । तथा च ।
"ऋतुलक्षं जपेन्मन्त्रं घृतेन जहयात्ततः ।
तत्सहस्रं समिद्धेऽग्नौ तोषयेद्वगना गुरुम् ॥"
मन्त्रान्तरं यथा, --
"क्षकारो वह्निमारूढो मनुबिन्दुसमन्वितः ।
एकाक्षरो मनुः प्रोक्तः सर्व्वकामफलप्रदः ॥"
अस्य पूजा
प्रातःकृत्यादिवैष्णवोक्तध्यानार्च्चना-
दिकं सर्व्वं मन्त्रराजवत् । विशेषस्तु ऋषिस्त्वत्रि-
र्गायत्री छन्दो नृसिंहो देवता क्षकारो बीजं
औकारः शक्तिः षड्दीर्घभाजा बीजेनाङ्ग-
कल्पना । अस्य पुरश्चरणमष्टलक्षजपः । तथा
च । अष्टलक्षं जपेन्मन्त्रमित्यादि ॥ * ॥
मन्त्रान्तरं यथा । कल्पे ।
"जयद्वयं समुच्चार्य्य श्रीपूर्ब्बो नृसिंहेत्यपि ।
अष्टाक्षरो मनुः प्रोक्तो भजतां कामदो मणिः ॥
अस्य ब्रह्मा ऋषिर्गायत्री छन्दो नृसिंहो देवता
षड्दीर्घयुक्तवीजेनाङ्गकल्पना । ध्यानार्च्चनं
मन्त्रराजवत् । अस्य पुरश्चरणमष्टलक्षजपः ।

वसुलक्षं जपेन्मन्त्रमित्यादिवचनात् ।” इति तन्त्र-
सारः ॥ * ॥
षोडशरतिबन्धान्तर्गतनवमबन्धः ।
तस्य लक्षणं यथा, रतिमञ्जर्य्याम् ।
“पादौ संपीड्य योनौ च हठाल्लिङ्गप्रवेशनम् ।
हस्तयोर्वेष्टयेद्गात्रं बन्धो नृसिंहसंज्ञकः ॥”
(स्वनामख्यातनृपविशेषः । यथा,
सह्याद्रिखण्डे ।
३१ । ४० ।
“नागात् नृसिंहभूपालस्तत्सुतो गाढभाषणः
॥”
ना सिंह इव इत्युपमितसमासः ।) नरश्रेष्ठः
॥
(यथा, महाभारते । ९ । ५३ । २४ ।
“इष्ट्वा महार्हैः क्रतुभिर्नृसिंहाः
सन्त्यज्य देहान् सुगतिं प्रपन्नाः ॥”)

**नृसिंहचतुर्द्दशी**, स्त्री, (नृसिंहप्रिया नृसिंहव्रतोप-
लक्षिता वा चतुर्द्दशी ।) वैशाखशुक्लचतु-
र्द्दशी । तत्र व्रतविधिर्यथा, --
“वैशाखस्य चतुर्द्दश्यां शुक्लायां श्रीनृकेशरी
।
जातस्तदस्यां तत्पूजोत्सवं कुर्व्वीत सव्रतम्
॥”
अथ श्रीनृसिंहचतुर्द्दशीव्रतनित्यता ।
बृहन्नार-
सिंहपुराणे श्रीभगवन्नृसिंहप्रह्लादसंवादे व्रत-
विधिकथने ।
“वर्षे वर्षे तु कर्त्तव्यं मम सन्तुष्टिकारणम् ।
महागुह्यमिदं श्रेष्ठं मानवैर्भवभीरुभिः ॥”
किञ्च
“विज्ञाय मद्दिनं यस्तु लङ्घयेत् स तु
पापभाक् ।
एवं ज्ञात्वा प्रकर्त्तव्यं मद्दिने व्रतमुत्तमम् ।
अन्यथा नरकं याति यावच्चन्द्रदिवाकरौ ॥”
* ॥
तत्राधिकारिनिर्णयः । तत्रैव ।
“सर्व्वेषामेव लोकानामधिकारोऽस्तिमद्व्रते
।
अग्निष्टोमादिभिर्यज्ञैरिष्टाः सर्व्वे
सुरोत्तमाः ।
तेनापि विद्यमानेन न कृतं दुष्कृतं
कियत् ॥
तस्य भार्य्या सुशीलाभूद्विख्याता
भुवनत्रये ।
पतिव्रता सदाचारा पतिभक्तिपरायणा
॥
जज्ञिरे च सुताः पञ्च तस्यां
द्विजवरात्ततः ।
सदाचाराः सुविद्वांसः
पितृभक्तिपरायणाः ॥
तेषां मध्ये कनिष्ठस्त्वं वेश्यायां तत्परः
सदा ।
तां सन्निवेशमानेन सुरापानं कृतं त्वया
॥
सदा पापरतस्त्वं हि नाकृथाध्ययनं
भृशम् ।
विलासिनीगृहे नित्यं वसतिर्ह्यभवत्तव
॥
एकदा तद्गृहे ह्यासीत्तया सह महान्
कलिः ।
ततः कलहभावेन भोजनं न कृतं त्वया
॥
अज्ञानान्मद्व्रतं चक्रे व्रतानामुत्तमं
व्रतम् ।
तया सह विवादेन रात्रौ जागरणं कृतम्
॥
वेश्याया अपि तत् सर्व्वं प्रजातं तु
त्वया समम् ।
रात्रौ जागरणे तस्याः सञ्जातं
कायशोधनम् ॥
युवयोर्म्मद्व्रतं जातमज्ञानाद्बहुपुण्यदम्
।
येन चीर्णव्रतेनाद्य मोदन्ते दिवि देवताः
॥
सृष्ट्यर्थन्तु ततो ब्रह्मा चक्रे
मद्व्रतमुत्तमम् ।
सदा पापरतानान्तु पुरुषाणां विकर्म्मणि ॥
विचार्य्यैवं प्रकर्त्तव्यं माधवे मासि मद्व्रतम् ।
प्राप्ते भूतदिने वत्स ! सर्व्वकल्मषनाशनम् ॥
येनैव क्रियमाणेन सहस्रद्वादशीफलम् ।
जायते न मृषा वच्मि मानुषाणां महात्मनाम्
॥”
तदन्ते च ।
“य इदं शृणुयाद्भक्त्या व्रतं पापप्रणाशनम् ।
तस्य श्रवणमात्रेण ब्रह्महत्यां व्यपोहति ॥
पवित्रं परमं गुह्यं कीर्त्तयेत् यस्तु मानवः ।
सर्व्वान् कामानवाप्नोति व्रतस्यास्य फलं
लभेत् ॥
अथ तद्व्रतदिननिर्णयः । आगमे ।
“वैशाखे शुक्लपक्षे च चतुर्दश्यां महातिथौ ।
सायं प्रह्लादधिक्कारमसहिष्णुः परो हरिः ॥
सद्यः कटकटाशब्दविस्मापितसभाजनः ।
लीलया स्तम्भगर्भान्ताद्भूतः शब्दभीषणः ॥
नृहरेरवतारात्तां यत्नतः समुपोषयेत् ।
महापुण्यतमायाञ्च सायं विष्णुं प्रपूजयेत् ॥”
बृहन्नारसिंहे ।
“वैशाखशुक्लपक्षस्य चतुर्द्दश्यां समाचरेत् ।
मज्जन्मसम्भवं पुण्यं व्रतं पापप्रणाशनम् ॥”
किञ्च ।
“स्वातीनक्षत्रयोगे तु शनिवारे हि मद्व्रतम् ।
सिद्धयोगस्य योगे च लभ्यते दैवयोगतः ॥
सर्व्वैरेतैस्तु संयुक्तैर्हत्याकोटिविनाशनम् ।
केवलञ्च प्रकर्त्तव्यं मद्दिनं फलकाङ्क्षिभिः ।
वैष्णवैर्न तु कर्त्तव्या स्मरविद्धा चतुर्द्दशी ॥”
अथ तद्व्रतविधिः । तत्रैव ।
“प्रातरुत्थाय कुर्व्वीत नियमं मनसा स्मरन् ।
मामेव मद्दिने वत्स ! दन्तधावनपूर्ब्बकम् ॥”
नियममन्त्रम् ।
“श्रीनृसिंह महोग्रस्त्वं दयां कुरु ममोपरि ।
अद्याहं ते विधास्यामि व्रतं निर्व्विघ्नतां
नयेति ॥
व्रतस्थेन न वक्तव्यं मद्दिने पापिभिः सह ।
मिथ्यालापो न कर्त्तव्यः समग्रफलकाङ्क्षिभिः
॥
स्त्रियं दूतं विहायोच्चैर्व्रतस्थेन महात्मना ।

मद्भक्तैस्तु विशेषेण प्रणेयं मत्परायणैः ॥" *
॥
अथ तन्माहात्म्यम्। तत्रैव।
श्रीप्रह्लाद उवाच।
"नमस्ते भगवन् विष्णो नृसिंहवपुषे नमः।
त्वद्भक्तोऽहं सुरेशैकं त्वां पृच्छामि च तत्त्वतः
॥
स्वामिंस्त्वयि ममोत्पन्ना भक्तिर्ब्बहुविधा
कथम्।
कथं ते सुप्रियो जातः कारणं वद मे प्रभो!
॥
श्रीनृसिंह उवाच।
कथयामि महाप्राज्ञ शृणुष्वैकाग्रमानसः।
भर्क्तेर्यत् कारणं वत्स! प्रियत्वस्य च तत्
पुनः ॥
पुराकल्पे ह्यभूर्व्विप्रः किञ्चित्त्वं
नाप्यधीतवान्।
नाम्ना च वसुदेवो हि वेश्यायां तत्परो ह्यभूः
॥
तस्मिन् जन्मनि नैव त्वं चकर्थ सुकृतं
कियत्।
मुक्त्वा तु मद्व्रतं चैकं वेश्यासङ्गतिलालसः
॥
मद्व्रतस्य प्रभावेण भक्तिर्ज्जाता तवेदृशी।
श्रीप्रह्लाद उवाच।
श्रीनृसिंहाच्युत स्वामिन् कस्य पुत्रेण किं
कृतम्।
वेश्यायां वर्त्तमानेन कथं तद्धि कृतं मया ॥
आख्यानं विस्तरेणेदं वक्तुमर्हसि साम्प्रतम्।
श्रीनृसिंह उवाच।
पुरावन्तीपुरे ह्यासीद्ब्राह्मणो वेदपारगः।
तन्नाम वसुशर्म्मेति सर्व्वलोकेषु विश्रुतम् ॥
नित्यं होमक्रियामेष करोति द्विजसत्तमः।
ब्रह्मक्रियासु सततं सर्व्वासु किल तत्परः ॥

मद्व्रतस्य प्रभावेण निर्म्मितं
सचराचरम् ॥
ईश्वरेणापि तच्चीर्णं वधार्थं त्रिपुरस्य
च।
महिम्नैव व्रतस्यास्य त्रिपुरं
संनिपातितम् ॥
अन्यैश्च बहुभिर्देवैरृषिभिश्च पुरातनैः
।
राजभिश्च महाप्राज्ञैर्व्विहितं
व्रतमुत्तमम् ॥
एतद्व्रतप्रभावेण सर्व्वे सिद्धिमुपागताः
॥
वेश्यापि मत्प्रिया जाता त्रैलोक्ये
सुखचारिणी।
ईदृशं मद्व्रतं वत्स! त्रैलोक्ये चैव
विश्रुतम् ॥
धूर्त्तायाश्च विलासिन्या
व्रतमेतदुपस्थितम्।
प्रह्लाद! तेन ते भक्तिर्म्मयि जाता
ह्यनुत्तमा।
सा वेश्या त्वप्सरा जाता दिवि
भोगाननेकशः।
भुक्त्वा कामं विलीना तु त्वं प्रह्लाद
विविष्ट माम् ॥
कार्य्यार्थमवतारस्ते मच्छरीरात् पृथक्
त्वसौ।
विधाय सर्व्वकार्य्याणि शीघ्रं मयि
गमिष्यसि ॥
य इदं व्रतमग्र्यन्तु प्रविधास्यन्ति
मानवाः।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि
॥
अपुत्त्रो लभते पुत्त्रान्मद्भक्तांश्च
सुवर्च्चसः।
दरिद्रो लभते लक्ष्मीं धनदस्य च
यादृशी ॥
तेजस्कामो लभेत्तेजो राज्येप्सू
राज्यमुत्तमम्।
आयुस्कामो लभेत्त्वायुर्यादृशन्तु
शिवस्य च ॥

स्मर्त्तव्यं मम रूपञ्च मद्दिने सकले शुभे ॥
ततो मध्याह्नवेलायां नद्यादौ विमले जले।
गृहे वा देवखाते वा तडागे वातिशोभने ॥
वैदिकेन च मन्त्रेण स्नानं कुर्य्याद्विचक्षणः।
मृत्तिकागोमयेनैव तथा धात्रीफलेन वा ॥
तिलैर्व्वा सर्व्वपापघ्नैः स्नानं कृत्वा
महात्मभिः।
परिधाय शुचिर्व्वस्त्रे नित्यकर्म्म समाचरेत् ॥
ततो गृहं समागत्य स्मरन् मां भक्तियोगतः।
गोमयेन विलिप्याथ कुर्य्यादष्टदलाम्बुजम् ॥
कलसं तत्र संस्थाप्य ताम्ररत्नसमन्वितम्।
तस्योपरि न्यसेत् पात्रं तण्डुलैः परिपूरितम्
॥
हैमी मूर्त्तिस्तु तत्रैव स्थाप्या लक्ष्मीस्तथैव च
।
पलेन च तदर्द्धेन तदर्द्धार्द्धेन वा पुनः ॥
यथाशक्ति तथा कार्य्ये
वित्तशाठ्यविवर्ज्जितैः।
पञ्चामृतेन ते स्नाप्य पूजनन्तु समाचरेत् ॥
ततो ब्राह्मणमाहूय तमाचार्य्यमलोलुपम्।
कुर्य्याच्छास्त्रसमायुक्तं शान्तं दान्तं
जितेन्द्रियम् ॥

| | | |
|---|---|---|
| | स्त्रीणां व्रतमिदं साधु पुत्रदं भाग्यदं तथा ।<br>अवैधव्यकरं तासां पुत्रशोकविनाशनम् ॥<br>धनधान्यफलञ्चैव पतिप्रियकरं सुखम् ।<br>सार्व्वभौमसुखं तासां दिव्यसौख्यं भवेत्ततः ॥<br>स्त्रियो वा पुरुषा वापि कुर्व्वन्ति व्रतमुत्तमम् ।<br>तेभ्यो ददाम्यहं सौख्यं भुक्तिमुक्तिफलं तथा ॥<br>बहुनोक्तेन किं वत्स ! व्रतस्यास्य फलस्य हि ।<br>यद्व्रतस्य फलं वक्तुं नाहं शक्तो न शङ्करः ।<br>ब्रह्मा चतुर्भिर्व्वक्त्रैश्च नालं स्याज्जीविताविधि ॥”<br>किञ्च तत्रैव व्रतविधिकथने ।<br>“यथा यथा प्रवृत्तिः स्यात् पातकस्य कलौ युगे ।<br>तथा तथा विधास्यन्ति मद्व्रतं विरलं जनाः ॥<br>मद्व्रतस्य विधाने च मतिर्व स्यात् दुरात्मनाम् । | |

तेनैव कारयेत् पूजां दृष्ट्वा शास्त्रानुसारतः
।
आचार्य्यवचनाद्धीमान् पूजां कुर्य्याच्चरन्
व्रतम् ॥”
तत्राग्रे प्रह्लादः पूजनीयः । तथा चागमे ।
“प्रह्लादक्लेशनाशाय या हि पुण्या चतुर्द्दशी
।
पूजयेत्तत्र यत्नेन हरेः प्रह्लादमग्रतः ॥”
बृहन्नारसिंहे ।
“मण्डपं कारयेत्तत्र पुष्पस्तवकशोभितम्।
ऋतुकालोद्भवैः पुष्पैः पूज्योऽहञ्च
यथाविधि ॥
उपचारैः षोडशभिर्म्मन्मन्त्रैर्नामभिस्तथा।
ततः पौराणिकैर्म्मन्त्रैः पूजनीयो विशेषतः
॥”
तत्र चन्दनमन्त्रः ।
“चन्दनं शीतलं दिव्यं चन्द्रकुङ्कुममिश्रितम्
।
ददामि ते प्रतुष्ट्यर्थं नृसिंह परमेश्वरेति
॥”
पुष्पमन्त्रः ।
“कालोद्भवानि पुष्पाणि तुलस्यादीनि वै
प्रभो ! ।
पूजयामि नृसिंहेश ! लक्ष्म्या सह नमोऽस्तु
ते ॥”
धूपमन्त्रः ।
“कालागुरुमयं धूपं सर्व्वदेवसुवल्लभम् ।
करोमि ते महाविष्णो ! सर्व्वकामसमृद्धये
॥”
द्वीपमन्त्रः ।
“दीपः पापहरः प्रोक्तस्तमसां राशिनाशनः
।
दीपेन लभते तेजस्तस्माद्दीपं ददामि ते ॥”
नैवेद्यमन्त्रः ।
“नैवेद्यं सौख्यदं चास्तु
भक्ष्यभोज्यसमन्वितम्।
ददामि ते रमाकान्त सर्व्वपापक्षयं कुरु ॥”
अर्घमन्त्रः ।

**नृसोमः**, पुं, (ना सोमश्चन्द्र इव । इत्युपमिति-
समासः ।) नरश्रेष्ठः । यथा, रघौ । ५ । ५९
।
“तथेत्युपस्पृश्य पयः पवित्रं
सोमोद्भवायाः सरितो नृसोमः ।
उदङ्मुखः सोऽस्त्रविदस्त्रमस्त्रं
जग्राह तस्मान्निगृहीतशापात् ॥”

**नृहरिः**, पुं, (ना चासौ हरिश्चेति ।) नृसिंहाव-
तारः । यथाह वोपदेवः ।
“शेते स चित्तशयने मम मीनकूर्म्म-
कोलोऽभवन्नृहरिवामनयामदग्न्यः।
योऽभूद्बभूव भरताग्रजकृष्णबुद्धः
कल्की सताञ्च भविता प्रहरिष्यतेऽरीन् ॥”
(यथा च भागवते । ७ । ८ । २७ ।
“तं मन्यमानो निजवीर्य्यशङ्कितं
यद्धस्तमुक्तो नृहरिं महासुरः ॥”)

**नॄ**, गि नीतौ । कविकल्पद्रुमः ॥ (क्र्यां-प्वां-परं-
सकं-सेट् ।) गि, नृणाति नीर्णः नीर्णिः ।
नीतिः
प्रापणा । इति दुर्गादासः ॥

**नॄ**, म नीतौ । इति कविकल्पद्रुमः ॥ (स्वां-णिचि
घटां-सकं-सेट् ।) म, नरयति । नीतिः
प्रापणा ।
इति दुर्गादासः ॥

**नेजकः**, पुं, (निज शुद्धौ + ण्वुल् ।) निर्न्नेजकः ।
रजकः । (यथा, मनौ । ८ । ३९६ ।
“शाल्मले फलके श्लक्ष्णे
नेनिज्यान्नेजकःशनैः ।
न च वासांसि वासोभिर्निर्हरेन्न च वासयेत्
॥”
(शोधके, त्रि ॥)

**नेता**, [ऋ] पुं, (नयतीति । नी + तृच् ।)
प्रभुः । इत्यमरः । ३ । १ । ११ ॥ (यथा,
रघौ । ४ । ७५ ।
“आसन्नोषधयो नेतुर्नक्तमस्नेहदीपिकाः ॥”)

**नेत्रच्छदः**, पुं, (नेत्रे छाद्येतेऽनेनेति । छद +
णिच् + कः । ततो ह्रस्वः ।)
नेत्रपिधायकचर्म्म-
पुटः । चक्षुर पाता इति भाषा । इति
वर्त्म-
शब्दस्य नानार्थे अमरः । ३ । ३ । १२१
॥

**नेत्रपर्य्यन्तः**, पुं, (नेत्रयोः पर्य्यन्तः अन्तः ।)
अपाङ्गः । इति राजनिर्घण्टः ॥
नयनावधिके, त्रि ॥

**नेत्रपिण्डः**, पुं, (नेत्रे नेत्रं वा पिण्ड इवास्य इति ।)
विडालः । इति हारावली । ८३ ॥
चक्षुर्गोल-
कश्च ॥

**नेत्रपुष्करा**, स्त्री, (नेत्रयोः पुष्करं जलं यस्याः यत्
सेवनादित्यर्थः ।) रुद्रजटा । इति
राजनिर्घण्टः ॥

**नेत्रमीना**, स्त्री, (नेत्रयोर्म्मिला मेलनं मुद्रणं
यस्याः । ततः पृषोदरादित्वात् लस्य
नत्वम् ।
क्वचित् नेत्रमिला इति वा पाठः ।)
यवतिक्ता-
लता । इति राजनिर्घण्टः ॥

**नेत्रयोनिः**, पुं (नेत्राणि योनिभिर्ज्जातानि अस्य ।
सहस्रयोनय एव सहस्रनेत्राणि जातानि
अत-
स्तन्नाम्ना विश्रुतः । नेत्राणि योनय
इवास्येति
वा ।) इन्द्रः । इति शब्दमाला ॥ (नेत्रं
अत्रि-
लोचनं योनिरुत्पतिकारणं यस्य ।)
अत्रि-
नेत्रोद्भवत्वात् चन्द्रः ॥

**नेत्रञ्जनं**, क्ली, (रज्यतेऽनेनेति । रन्ज + करणे

"नृसिंहाच्युत देवेश लक्ष्मीकान्त जगत्पते
।
अनेनार्घ्यप्रदानेन सफलाः स्युर्म्मनोरथाः
॥"
पूजामन्त्रः ।
"पीताम्बर महाविष्णो प्रह्लादभयनाशकृत् ।
यथा भूतार्च्चने नाथ यथोक्तफलदो भवेति
॥
रात्रौ जागरणं कुर्य्यात् गीतवादित्रनर्त्तनैः ।
पुराणपठनं नृत्यं श्रोतव्यं मत्कथानकम् ॥
ततः प्रभातसमये स्नानं कृत्वा ह्यतन्द्रितः
।
पूर्ब्बोक्तेन विधानेन पूजयेन्मां प्रयत्नतः ॥"
किञ्च ।
"मद्वंशे ये नरा जाता ये जनिष्यन्ति मत्पुरः
।
तांस्त्वमुद्धर देवेश ! दुःसहात् भवसागरात्
॥
पातकार्णवमग्नस्य व्याधिदुःखाम्बुराशिभिः
।
तीव्रैस्तु परिभूतस्य महादुःखगतस्य मे ॥
करावलम्बनं देहि शेषशायिन् जगत्पते ।
श्रीनृसिंह रमाकान्त भक्तानां भयनाशन ॥
क्षीराम्बुधिनिवास त्वं प्रीयमाणो जनार्द्दन ।
व्रतेनानेन मे देव भुक्तिमुक्तिप्रदो भव ॥
एवं प्रार्थ्य ततो देवं विसर्ज्ज्य च यथाविधि ।
उपहारादिकं सर्व्वमाचार्य्याय निवेदयेत् ॥
दक्षिणाभिः सुसन्तोष्य ब्राह्मणांश्च
विसर्ज्जयेत् ।
मम ध्यानसमासक्तो भुञ्जीत सह
बन्धुभिरिति ॥"
इति श्रीहरिभक्तिविलासे १४ विलासः ॥

**नृसेनं**, क्ली स्त्री, (नृणां सेना । "विभाषा सेनेति ।"
२ । ४ । २५ । इति पाक्षिकं क्लीवत्वम् ।) नृणां
सेना । इत्यमरः । ३ । ५ । ४० ॥

निम्बवृक्षः । इति राजनिर्घण्टः ॥ प्रापके, त्रि
।
(यथा, महाभारते । ३ । ६६ । ६ ।
"तिष्ठ त्वं स्थावर इव यावदेव नलः क्वचित्
।
इतो नेता हि तत्र त्वं शापान्मोक्ष्यसि यत्-
कृतात् ॥")

**नेत्रं**, क्ली, (नीयते नयति वानेनेति । "दाम्नी-
शसेति ।" ३ । २ । १८२ । इति करणे ष्ट्रन्
।)
चक्षुः । (यथा, मनुः । ४ । ४४ ।
"नाञ्जयन्तीं स्वके नेत्रे नचाभ्यक्तामनावृताम्
।
न पश्येत् प्रसवन्तीञ्च तेजस्कामो द्विजोत्तमः
॥")
जटा । अंशुकम् । इत्यमरः । २ । ६ । ९३,
३ । ३ । १७९ ॥ मन्थगुणः । (यथा,
महाभारते ।
१ । १८ । १३ ।
"मन्थानं मन्दरं कृत्वा तथा नेत्रञ्च वासुकिम्
।
देवा मथितुमारब्धाः समुद्रं निधिमम्भ-
साम् ॥")
वृक्षमूलम् । रथः । नेतरि, त्रि । इति मेदिनी ।
रे, ५४ ॥ (यथा, महाभारते । २ । ६० । ४
।
"नावं समुद्र इव बालनेत्रा-
मारुह्य घोरे व्यसने निमज्जेत् ॥")
नाडी । इति विश्वः ॥ वस्तिशलाका । इति
राजनिर्घण्टः ॥

ल्युट् । नेत्रस्य रञ्जनम् ।) कज्जलम् ।
यथा, --
"एष नौ कथितो धूपः शृणुतां नेत्ररञ्जनम्
।
येन तुष्यति कामाख्या त्रिपुरा वैष्णवी
तथा ॥
सौवीरं जाम्बलं तुत्थं मयूरश्रीकरं तथा ।
दर्व्विका मेघनीलश्च अञ्जनानि भवन्ति
षट् ॥
स्रवद्रूपन्तु सौवीरं जाम्बलं प्रस्तरन्तथा
।
मयूरश्रीकरं रत्नं मेवनीलन्तु तैजसम् ॥
घृष्ट्वा निगाह्य चैतानि शिलायां
तैजसेऽथवा ।
प्रदद्यात् सर्व्वदेवेभ्यो देवीभ्यश्चापि
पुत्रक ॥
घृततैलादियोगेन ताम्रादौ दीपवह्निना ।
यदञ्जनं जायते तु दर्व्विका परिकीर्त्तिता
॥
सर्व्वाभावे तु तद्दद्याद्देवीभ्यो
दर्व्विकाञ्जनम् ।
महामाया जगद्धात्री कामाख्या त्रिपुरा
तथा ॥
आप्नुवन्ति महातोषं षड्भिरेभिः
सदाञ्जनैः ।
विधवा नाञ्जनं कुर्य्यान्महामायार्थमुत्तमम्
॥
नादत्ते त्वञ्जनं देवी वैष्णवी विधवाकृतम्
।
न मृत्पात्रे योजयेत्तु साधको नेत्ररञ्जनम्
॥
न पूजाफलमाप्नोति मृत्पात्रविहिताञ्जनैः
॥
चतुर्व्वर्गप्रदो धूपः कामदं नेत्ररञ्जनम् ।
तस्माद्द्वयमिदं दद्याद्देवेभ्यो भक्तितो
नरः ॥
इति नौ कथितो धूपस्तथोक्तं नेत्ररञ्जनम्
॥"
इति कालिकापुराणे ६८ अध्यायः ॥

**नेत्ररोगः**, पुं, (नेत्रस्य चक्षुषो रोगः ।) चक्षू-
रोगः । तस्य निदानं यथा, --

|  |  | “उष्णाभितप्तस्य जलप्रवेशाद्-<br>दूरेक्षणात् स्वप्नविपर्य्ययाच्च ।<br>स्वेदाद्द्रजोधूमनिषेवणाच्च<br>छर्द्देर्व्विघाताद्वमनातियोगात् ॥<br>द्रवात्तथान्नान्निशि सेविताच्च<br>विण्मूत्रवातक्रमनिग्रहाच्च। |
|---|---|---|

प्रसक्तसंरोदनशोककोपा-
च्छिरोऽभिघातादतिमद्यपानात्॥
तथा ऋतूनाञ्च विपर्य्ययेण
क्लेशाभिघातादतिमैथुनाच्च ।
वास्पग्रहात् सूक्ष्मनिरीक्षणाच्च
नेत्रे विकारान् जनयन्ति दोषाः ॥
वातात् पित्तात्
कफाद्रक्तादभिस्यन्दश्चतुर्व्विधः ।
प्रायेण जायते घोरः सर्व्वनेत्रामयाकरः
॥”
तस्य सम्प्राप्तिर्यथा, --
“निस्तोदनस्तम्भनरोमहर्ष-
संघर्षपारुष्यशिरोऽभितापाः।
विशुष्कभावः शिशिराश्रुता च
वाताभिपन्ने नयने भवन्ति ॥
दाहप्रपाकौ शिशिराभिनन्दा
धूमायनं वास्पसमुच्छ्र्यश्च ।
उष्णाश्रुता पीतकनेत्रता च
पित्ताभिपन्ने नयने भवन्ति ॥
उष्णाभिनन्दा गुरुताक्षिशोथः
कण्डूपदेहावतिशीतता च ।
स्रावो बहुः पिच्छिल एव चापि
कफाभिपन्ने नयने भवन्ति ॥
ताम्राश्रुता लोहितनेत्रता च
बाह्यः समन्तादतिलोहितश्च।
पित्तस्य लिङ्गानि च यानि तानि
रक्ताभिपन्ने नयने भवन्ति ॥”
इति माधवकरः ॥
(अस्य निदानादिपूर्ब्बकं लक्षणं
चिकित्सा च
यथा, --
“उष्णातिक्षारकटुकैरभिघातेन वा पुनः ।
सूक्ष्मवस्त्वीक्षणेनापि दोषाः कुप्यन्ति
नेत्रजाः ॥
सहजा ये परा ज्ञेया वक्ष्यामि शृणु
लक्षणम् ।
रूक्षः कण्डूश्च तोदश्च
शुष्कशीतास्रसन्ततिः ।
दुग्धोत्पन्नं नवनीतं यष्टीनिम्बस्तिलाश्च
संयोज्याः ।
त्रिफला गुडसंयुक्ता लेपनं
कफनेत्रजरोगघ्नम् ॥
शुण्ठी सैन्धवतुल्यं मागधिका
ताम्रभाजने घृष्टम् ।
दध्ना धृतेनाञ्जनकं निहन्ति सर्व्वांश्च
नेत्रगदान् ॥
वातपित्तकफदोषसम्भवान्
नेत्रयोर्बहुपीडनं क्षणात् ।
एक एव हरति प्रयोजितः
शिशुपल्लवरसः समाक्षिकः ॥”
इति हारीते चिकित्सितस्थाने ४४
अध्यायः ॥)

**नेत्ररोगहा**, [न्] पुं, (नेत्ररोगं हन्तीति । हन् +
क्विप् ।) वृश्चिकालीवृक्षः । इति
राजनिर्घण्टः ॥
चक्षूरोगनाशके, त्रि ॥

**नेत्रामयः**, पुं, (नेत्रस्य आमयो रोगः ।) चक्षू-
रोगः । तस्य निदानं यथा, --
“वातात् पित्तात्
कफाद्रक्तादभिष्यन्दश्चतुर्व्विधः ।
प्रायेण जायते घोरः सर्व्वनेत्रामयाकरः
॥”
इति माधवकरः ॥
(अस्य लक्षणं यथा, --
“अल्पास्रुरागाऽनुपदेहता च
प्रस्पन्दतोदातिरुजश्च वातात् ।
पित्तात्तु दाहार्त्ति रुजोऽतिरागाः
पीतोऽतिदेहः सुभृशोष्णमस्रु ॥
शुक्लोपदेहो बहुपिच्छिलास्रु
नेत्रं कफात् स्यात् गुरुता सकण्डूः ।
सर्व्वाणि रूपाणि तु सन्निपाता
नेत्रामयाः षण्णवतिस्तु भेदात् ॥
तेषामभिव्यक्तिरभिप्रदिष्टा
शालाक्यतन्त्रेषु चिकित्सितञ्च ।
पराधिकारे तु न विस्तरोक्तिः
शस्तेति तेनात्र न नः प्रयासः ॥”

**नेदिष्ठं**, त्रि, (अयमेषामतिशयेनान्तिकः । अन्तिक
+ “अतिशायने तमबिष्ठनौ ।” ५ । ३ । ५५ ।
इति इष्ठन् । “अन्तिकवाढयोर्न्नेदसाधौ ।” ५ ।
३ । ६३ । इति नेदादेशः ।) अन्तिकतमम् ।
अतिनिकटम् । इत्यमरः । ३ । १ । ६८ ॥
(यथा,
ऋग्वेदे । ४ । १ । ५ ।
“स त्वं नो अग्नेऽवमो भवोती नेदिष्टो अस्या
उषसो व्युष्टौ ॥”
यथाच, उद्धवसन्देशे । ३ ।
“सोत्कण्ठोऽभूदभिमतकथांसंशितुं कंसभेदी
नेदिष्ठाय प्रणयलहरी बद्धवागुद्धवाय ॥”)
निपुणम् । इति राजनिर्घण्टः ॥ अङ्कोठवृक्षे
पुं । इति जटाधरः ॥

**नेदीयान्**, [स्] त्रि, (अयमनयोरतिशयेनान्तिकः ।
अन्तिक + इयसुन् । नेदादेशः ।) नेदिष्ठः ।
अत्यन्तसमीपः । इति जटाधरः ॥ (यथा,
सर्व्व-
दर्शनसंग्रहे आर्हतदर्शने ।
“न चेदमिष्टापादनमेष्टव्यं दवीयान् महीधरो
नेदीयान् दीर्घो बाहुरिति व्यवहारस्य निरा-
बाधं जागरुकत्वात् ॥”)

**नेपः**, पुं, (नयति प्रापयति शुभमिति । नी +
“पानीविषिभ्यः पः ।” उणां । ३ । २३ । इति
पः ।) पुरोहितः । उदकम् । इति संक्षिप्त-
सारोणादिवृत्तिः ॥

**नेपथ्यं**, क्ली, (नी + विच् + गुणः । नेः नेता तस्य
पथ्यम् ।) वेशः । इत्यमरः । २ । ६ । ९९ ॥
(यथा, रघुः । १४ । ९ ।
“राजेन्द्रनेपथ्यविधानशोभा
तस्योदितासीत् पुनरुक्तदोषा ॥”)
अलङ्कारः । रङ्गभूमिः । इति मेदिनी । ये, ८८
॥
(यथाह भरतः ।
“वाक्यस्यार्थतया यत्र पात्रं नैव प्रवेश्यते ।
नेपथ्यमिति प्राकाश्ये प्रयोज्यं तत्र नाटके
॥”)

वातिकं तं विजानीयात् पैत्तिकं शृण्वतः परम् ॥
सरक्तदाहे नेत्रे च उष्णस्रावश्च पैत्तिके ।
शोफकण्डूः सन्निपाते शीतजाड्ये कफात्मके ॥
द्वन्द्वजो मिश्रलिङ्गैश्च सर्व्वैस्तैः सान्निपातिकः ।
एतद्धि लक्षणं ज्ञात्वा चोपचारं शृणुष्व मे ॥
शुण्ठी सुराह्वसुरसाः सह काञ्जिकेन
चोष्णेन धावनमिदं सहपैत्तिके च ।
श्लेष्मोद्भवे त्रिफलकल्कमिदं समूत्र-
मन्यैस्तथा कथितमत्रभिषग्वरैस्तत् ॥
शुण्ठी शठी च रजनी त्रिफला सनिम्बा
पत्राणि सैन्धवयुतानि तुषाम्लकेन ।
शस्तं वदन्ति नयने च ससन्निपाते
रक्तोद्भवे च सरुजे च तथा प्रशस्तम् ॥
फलत्रिकं दारु निशासु धूमो
वचासु वर्षाभवसैन्धवेन ।
प्रलेपनं श्लेष्मभवे विकारे
सवातिके वा हितमेव शस्तम् ॥
शुण्ठी सैन्धवतक्रेण ताम्रभाण्डे विघर्षितम् ।
अपामार्गस्य मूलं वा मूलं धूस्तूरकस्य वा ॥
अञ्जनञ्च हितं तेषां वातनेत्रामयापहम् ॥

इति चिकित्सितस्थाने षड्विंशतितमेऽध्याये चरकेनोक्तम् ॥)

**नेत्राम्बु**, क्ली, (नेत्रस्य अम्बु जलम् ।) अश्रु ।

इत्यमरः । २ । ६ । ९३ ॥

**नेत्रारिः**, पुं, (नेत्रस्य अरिः शत्रुः ।) सेहुण्डवृक्षः ।

इति राजनिर्घण्टः ॥

**नेत्री**, स्त्री, (नीयतेऽनयेति । नी + "दाम्नी-

शसेति ।" ३ । २ । १८२ । इति करणे ष्ट्रन् ।
षित्वात् ङीष् ।) लक्ष्मीः । नाडी । इति शब्द-
रत्नावली ॥ नदी । इति मेदिनी । रे, ५४ ॥
(नयतीति । नी + तृच् + ङीप् ।) प्रापण-
कर्त्री ॥ (शिक्षयित्री । इति नीलकण्ठः ॥
यथा, महाभारते । ५ । १३६ । १३ ।
"यस्य मे भवती नेत्री भविष्यद्भूतिदर्शिनी ॥")

**नेत्रोपमफलः**, पुं, (नेत्रोपमं नयनतुल्यं फलं यस्य ।)

वातादः । इति भावप्रकाशः ॥ वादाम इति भाषा ॥

**नेत्रौषधं**, क्ली, (नेत्रस्य औषधम् ।) पुष्पकासीसम् ।

इति राजनिर्घण्टः ॥ चक्षूरोगौषधमात्रञ्च ॥

**नेत्रौषधी**, स्त्री, (नेत्रस्य औषधी ।) अजशृङ्गी ।

इति रत्नमाला ॥ काँगा इति भाषा ॥

**नेपालः**, पुं, स्वनामप्रसिद्धदेशः । इति जटाधरः ॥

(यथा, शक्तिसङ्गमतन्त्रे ।
"जटेश्वरं समारभ्य योगेशान्तं महेश्वरि ! ।
नेपालदेशो देवेशि ! साधकानां सुसिद्धिदः ॥")

**नेपालनिम्बः**, पुं, (नेपालोद्भवो निम्बः ।) नेपाल-

देशोद्भवनिम्बः । तत्पर्य्यायः । नैपालः २ तृण-
निम्बः ३ ज्वरान्तकः ४ नाडीतिक्तः ५ निद्रारिः
६ सन्निपातरिपुः ७ । अस्य गुणाः । शीतत्वम् ।
उष्णत्वम् । योगवाहित्वम् । लघुत्वम् । तिक्त-
त्वम् । अतिकफपित्तास्रशोफतृष्णाज्वरापह
त्वञ्च । इति राजनिर्घण्टः ॥

**नेपालिका**, स्त्री, (नेपालः उत्पत्तिस्थानत्वेना-

स्त्यस्या इति । नेपाल + ठन् + टाप् ।) मनः-
शिला । इति राजनिर्घण्टः ॥

**नेमः**, पुं, (नयतीति । नी + “अर्त्तिस्तुसुह्विति ।” उणां । १ । १३९ । इति मन् ।) कालः । अवधिः । खण्डम् । प्राकारः । कैतवम् । इति मेदिनी । मे, १८ ॥ अर्द्धम् । गर्त्तः । इति हेमचन्द्रः । ६ । ७० ॥ नाट्यादिः । अन्यः । इति शब्दरत्नावली ॥ सायंकालः । मूलम् । ऊद्ध्र्वम् । इति संक्षिप्तसारोणादिवृत्तिः ॥

**नेमिः**, स्त्री, (नयति चक्रमिति । नी + “नियो मिः ।” उणां । ४ । ४३ । इति मिः ।) चक्रपरिधिः । रथचक्रस्य भूमिस्पर्शिभागः । तत्पर्य्यायः । प्रधिः २ । इत्यमरः । २ । ८ । ५६ ॥ नेमी ३ । इति भरतः ॥ (यथा, रघुः । १ । ३९ ।
“मनोऽभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः ।
षड्जसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः ॥”)
कूपोपरिस्थपट्टप्रान्तभागः । इति भरतः ॥ (प्रान्तभागः । यथा, रघुः । ९ । १० ।
“अजयदेकरथेन स मेदिनी-
मुदधिनेमिमधिज्यशरासनः ॥”)
भूमिस्थकूपपट्टः । इत्यन्ये । कूपस्य समीपे रज्जुधारणार्थं त्रिदारुयन्त्रम् । इति स्वामी ॥ तत्पर्य्यायः । त्रिका २ । इत्यमरः । १ । १० । २७ ॥ कूपनिकटसमानस्थानम् । यथा, --
“नेमिर्नेमीतिका च स्यात् कूपान्तिकसमस्थले ॥”
इति शब्दरत्नावली ॥

**नेमिः**, पुं, जिनविशेषः । इति हेमचन्द्रः । १ । २८ ॥ तिनिशवृक्षः । इत्यमरः । २ । ४ । २६ ॥ मथुरादौ तिनाश इति ख्यातः ॥ (दैत्यविशेषः । यथा, भागवते । ८ । २१ । १९ ।
“हे विप्रचित्ते हे राहो हे नेमे श्रूयतां वचः ।
मा युध्यत निवर्त्तध्वं न नः कालोऽयमर्थकृत् ॥”
नयति शत्रून् विनाशमिति । नी + “नियो मिः ।” उणां ४ । ४३ । इति मिः । वज्रः । इति निघण्टुः । २ । २० ॥)

**नेमिचक्रः**, पुं, परीक्षिद्वंशजः असीमकृष्णस्य पुत्त्रः । स हस्तिनानगरे नद्या हृते कौशाम्ब्यां पुर्य्यां राजासीत् । इति श्रीभागवते । ९ । २२ । ३९ ॥ (अस्यैव राज्यशासनसमयनिर्णयो यथा, राजावल्याम् १ परिच्छेदे ।
“गजाह्वये हृते नद्या कोशम्ब्यां निवसन् मुदा ।
षट्सप्ततिमितान् वर्षान् तथा मासत्रयाधिकान् ।
भुक्त्वा भोगान् गतः स्वर्गं सुतं राज्येऽभिषिच्य च ॥”)

**नेमी**, [न्] पुं, (नेम ऊद्ध्र्वमस्यास्तीति । नेम + इनिः ।) तिनिशवृक्षः । इत्यमरटीकायां भरतः ॥

**नेमी**, स्त्री, (नेमि + वा ङीष् ।) नेमिः । इत्यमरटीकायां भरतः ॥ (तिनिशवृक्षः । पर्य्यायोऽस्या यथा, --
“स्यन्दनस्तिनिशो नेमी -- ॥”
इति वैद्यकरत्नमालायाम् ॥)

**नेष्टा**, [ऋ] पुं, (नयति शुभमिति । नी + “नप्तृनेष्टृत्वष्ट्रिति ।” उणां २ । ९६ । इति तृन्प्रत्ययेन साधुः ।) ऋत्विक् । इति संक्षिप्तसारोणादिवृत्तिर्भूरिप्रयोगश्च ॥ (त्वष्टृदेवः । इति सायनः ॥ यथा ऋग्वेदे । १ । १५ । ३ ।
“अभियज्ञं गृणीहि नो ग्नावो नेष्टः पिब ऋतुना ॥”

**नैकटिकः**, त्रि, (निकट + “निकटे वसति ।” ४ । ४ । ७३ । इति ठक् ।) निकटवासी । यथा, भट्टिः । ४ । १२ ।

“व्रातीनव्यालदीप्रास्त्रः सुत्वनः परिपूजयन् ।
पर्षद्वलान्महाब्रह्मैराटनैकटिकाश्रमान् ॥”
इति भट्टिः । ४ । १२ ॥

**नैकट्यं**, क्ली, निकटस्य भाव इत्यर्थे ष्यप्रत्ययनिष्पन्नम् । निकटत्वम् ॥ (यथा, कथासरित्सागरे । १५ । १२५ ।
“बाधते तच्च नैकट्यात् सर्व्वं स मगधेश्वरः ।
तत्तत्र रक्षाहेतोश्च विनोदाय च गम्यताम् ॥”)
निकटभवे, त्रि ॥

**नैकभेदः**, त्रि, (न एको भेदोऽत्रेति ।) उच्चावचम् । अनेकप्रकारः । इत्यमरः । ३ । १ । ८३ ॥

**नैकषेयः**, पुं, (निकषाया अपत्यमिति । निकषा + ढक् ।) निकषापुत्त्रः । राक्षसः । इति हलायुधः ॥

**नैगमः**, पुं, (निगम एव । स्वार्थे अण् ।) उपनिषत् । बणिक् । (यथा, रामायणे । १ । ७७ । २३ ।
“एवं दशरथः प्रीतो ब्राह्मणा नैगमास्तथा ॥”
“नैगमा बणिजः ।” इति तट्टीकायां रामानुजः ॥) नागरः । इति मेदिनीशब्दरत्नावल्यौ ॥ नयः । (यथा, महाभारते । १२ । १०० । ४ ।
“तेषां प्रतिविघातार्थं प्रवक्ष्याम्यथ नैगमम् ॥”)
ऋतिः । इति हेमचन्द्रः । ३ । ५३१ ॥ त्रि निगमसम्बन्धिनि ॥ (निगमशास्त्रवेत्तरि । यथा, महाभारते । १३ । १६७ । ४ ।
“द्विजेभ्यो बलमुख्येभ्यो नैगमेभ्यश्च नित्यशः ॥”)

**नैचिकं**, क्ली, (नीच + ठक् ।) गोः शिरोदेशः । इति हेमचन्द्रः । ४ । ३३६ ॥

**नैचिकी**, स्त्री, (नीचैश्चरतीति ठक् । यद्वा निचिः कर्णशिरोदेशः । ततः स्वार्थे कन् । प्रशस्तं निचिकमस्याः । ततो ज्योत्स्नादिभ्य इत्यण् ततो ङीप् ।) उत्तमा गौः । इत्यमरः । २ । ६७ । ९ ॥

**नैजं**, त्रि, (निजस्येदमिति । निज + अण् ।) निजसम्बन्धि । स्वीयम् । यथा, --
“ब्रह्मास्त्रस्य च ब्रह्मास्त्रं वायव्यस्य च पार्व्वतम् ।
आग्नेयस्य च पार्ज्जन्यं नैजं पाशुपतस्य च ॥”
इति श्रीभागवते १० स्कन्धे वाणयुद्धे ॥ (यथा च हरिवंशे भविष्ये । ३३ । ९ ।
“स ददौ दर्शनं नैजं व्याघ्रचर्म्माम्बरो हरः ॥”)

**नैत्यं**, क्ली, नित्यत्वम् । नित्यस्य भाव इत्यर्थे ष्यप्रत्ययनिष्पन्नम् ॥ (नित्यसम्बन्धि । नित्यकरणीयं वा ॥)

**नैपालः**, पुं, (नेपाले नेपालाख्यदेशे भवः अण् ।) नेपालनिम्बः । इति राजनिर्घण्टः ॥ नेपालदेशसम्बन्धिनि, त्रि ॥ (भूनिम्बविशेषः । यथा, भावप्रकाशस्य पूर्ब्बखण्डे प्रथमभागे ।
“किरातकोऽन्यो नैपालः सोऽर्द्धतिक्तो ज्वरान्तकः ॥”
इक्षुजातिभेदः । यथा तत्रैव २ भागे । अथ सूचीपत्रनैपालीदीर्घपत्रनीलपोराणां गुणाः ॥
“सूचीपत्रो नीलपोरो नैपालो दीर्घपत्रकः ।
वातलाः कफपित्तघ्नाः सकषाया विदाहिनः ॥”)

**नैपालिकं**, स्त्री, (नेपाले नेपालाख्यदेशे भवम् । इति ठक् ।) ताम्रम् । इति राजनिर्घण्टः ॥ (ताम्रशब्देऽस्य गुणादिकं व्याख्यातम् ॥)

**नैपाली**, स्त्री, (नेपाले भवा इत्यण् ङीप् च ।) नवमल्लिका । (नेवारि इति लोके । यथास्याः पर्य्यायः ।
“नैपाली कथिता तज्ज्ञैः सप्तला नवमल्लिका ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥) मनःशिला । (अस्याः पर्य्यायो यथा, --
“मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका ।
नैपाली कुनटी गोला शिलादिव्यौषधिः स्मृता ॥”
इति भाप्रकाशः । १ । १ ॥) शेफालिका । इति मेदिनी । ले, १०४ ॥ नीली । इति शब्दरत्नावली ॥

**नैपुणं**, क्ली, (निपुणस्य भावः कर्म्म वा इति । “हायनान्तयुवादिभ्योऽण् ।” ५ । १ । ३० । इत्यण् ।) नैपुण्यम् । यथा, माघे । १६ सर्गः ।
“प्रकटान्यपि नैपुणं महत्
परवाच्यानि चिराय गोपितुम् ।
विपरीतमथात्मनो गुणान्
भृशमाकौशलमार्य्यचेतसा ॥”
(यथा, महाभारते । १३ । १८ । ८१ ।
“वैश्यो लाभं प्राप्नुयान्नैपुणञ्च
शूद्रो गतिं प्रेत्य तथा सुखञ्च ॥”)

**नैपुण्यं**, क्ली, (निपुणस्य भावः कर्म्म वा । “गुणवचनब्राह्मणादिभ्यः कर्म्मणि च ।” ५ । १ । १२४ । इति ष्यञ् ।) निपुणता । निपुणस्य भाव इत्यर्थे ष्यप्रत्ययनिष्पन्नम् । यथा, --
“अशक्यः सहसा राजन् भावो बोद्धुं परस्य वै ।
अन्तःस्वभावैर्गीतैस्तैर्नैपुण्यं पश्यता भृशम् ॥”
इति रामायणे लङ्काकाण्डे १७ सर्गः ॥

**नैमित्तिकं**, त्रि, (निमित्तादागतं निमित्तभवं वा । इति ठक् ।) निमित्तजन्यम् । यथा, --
“नैमित्तिकानि काम्यानि निपतन्ति यथा यथा ।
तथा तथैव कार्य्याणि नात्र कालं विचारयेत् ॥”
इति ग्रहयागतत्त्वम् ॥
माससंवत्सरादिविशेषे नियम-शून्यावश्यकर्त्तव्यकादाचित्कनिमित्तोत्पन्नंपुत्त्रजन्मादिनिमित्तकश्राद्धादि । यथा, --
“नित्यनैमित्तिके कुर्य्यात् प्रयतः सन् मलिम्लुचे ।
तीर्थस्नानं गजच्छायां प्रेतश्राद्धं तथैव च ॥”
इति मलमासतत्त्वम् ॥
(निमित्तं वेत्ति निमित्तबोधकग्रन्थमधीतेवा इति ठक् । निमित्तशास्त्राभिज्ञे तदध्ययनकर्त्तरि च ॥)

**नैमित्तिकक्रिया**, स्त्री, (नैनित्तिकी चासौ क्रिया-चेति निमित्तजन्या क्रियेत्यर्थः ।) निमित्तनिश्चयवदधिकारिकर्त्तव्यकर्म्म । यथा, --
“नित्यां नैमित्तिकीं काम्यां क्रियां पुंसामशेषतः ।
समाख्याहि द्विजश्रेष्ठ सर्व्वज्ञो ह्यसि मे मतः ॥
उर्व्व उवाच ।
यदेतदुक्तं भवता नित्यनैमित्तिकाश्रितम् ।
तदहं कथयिष्यामि शृणुष्वैकमना मम ॥

४ । ७३ । इति ठक् ।) निकटवर्त्ती यथा, --



जातस्य जातकर्म्मादि क्रियाकाण्डमशेषतः ।
पुत्त्रस्य कुर्व्वीत पिता श्राद्धञ्चाभ्युदयात्मकम् ॥”
इति विष्णुपुराणे ३ अंशे ९ अध्यायः ॥
(यथा, मार्कण्डेये । ३० । १ ।
“नित्यं नैमित्तिकञ्चैव नित्यनैमित्तिकन्तथा ।
गृहस्थस्य तु यत् कर्म्म तन्निशामय पुत्त्रक ! ॥”)

**नैमित्तिकदानं**, क्ली, (निमित्तमाश्रित्य दीयते इति दा + भावे ल्युट् । अस्य निरुक्तिर्थथा ।) निमित्त-निश्चयवदधिकारिकर्त्तव्यदानम् । यथा, --
“यत्तु पापोपशान्त्यर्थं दीयते विदुषां करे ।
नैमित्तिकं तदुद्दिष्टं दानं सद्भिरनुष्ठितम् ॥”
इति गरुडपुराणम् ॥

**नैमित्तिकलयः**, पुं, (नैमित्तिकः ब्रह्मणो दिवाव-साननिमित्तवशात् यो लयः ।) प्रलयविशेषः । यथा, --
“चतुर्युगसहस्रान्ते ब्राह्मो नैर्मित्तिको लयः ।
अनावृष्टिश्च कल्पान्ते जायते शतवार्षिकी ॥
उत्तिष्ठन्ति तदा रौद्रा दिवि सप्त दिवाकराः ।
ते तु पीत्वा जलं सर्व्वं शोषयन्ति जगत्त्रयम् ॥
भूर्भुवःस्वर्म्महर्लोकसंस्था यान्ति जनं जनाः ।
रुद्रो भूत्वा त्वसौ विष्णुः पातालानि दहत्यधः ॥
विष्णुर्द्देहेत्त्रिलोकञ्च मुखान्मेघान् सृजत्यलम् ।
वर्षन्ते च वर्षशतं नानावर्णा महाघनाः ॥
विष्णवास्यजः शतं वाति वर्षाणां वायुरूर्ज्जितः ॥
विष्णुरेकार्णवे पीत्वा सव्व ब्रह्मस्वरूपधृक् ।
शेतेऽनन्तासने विष्णुर्नष्टे स्थावरजङ्गमे ।
सुप्त्वा युगसहस्रं स जगद्भूयोऽसृजद्धरिः ॥”
इति गरुडपुराणम् ॥
(तथा च भागवते । ८ । २४ । ७ ।
“आसीदतीतकल्पान्ते ब्राह्मो नैमित्तिको लयः ॥”)

**नैमित्तिकस्नानं**, क्ली, (नैमित्तिकञ्च तत् स्नानञ्चेति । निमित्तवशात् निमित्तमाश्रित्य विधेयं स्नान-मित्येके ।) निमित्तनिश्चयवदधिकारिकर्त्तव्य स्नानम् । यथा, --
“चाण्डालशवयूपादि स्पृष्ट्वा स्नातां रजस्वलाम् ।
स्नानार्हस्तु यदा स्नाति स्नानं नैमित्तिकं हि तत् ॥”
इति गरुडपुराणम् ॥

**नैमिषारण्यं**, क्ली, (निमिषान्तरमात्रेण निहतं आसुरं बलं यत्र ततस्तत् नैमिषं अरण्य-मिति ।) अरण्यविशेषः । तस्योत्पत्तिर्यथा, --
“तेन चक्रेण तत्सैन्यमासुरं दौर्ज्जयं क्षणात् ।
निमिषान्तरमात्रेण भस्मवद्वहुधा कृतम् ॥
एवं कृत्वा ततो देवो मुनिं गौरमुखं तदा ।
उवाच निमिषेणेदं निहतं दानवं बलम् ॥
अरण्येऽस्मिंस्त्वतस्त्वेवन्नैमिषारण्यसंज्ञकम् ।
भविष्यति यथार्थं वै ब्राह्मणानां विणेषतः ॥”
इति वराहपुराणे गौरमुखं प्रति भगवद् वाक्यम् ॥ अपि च ।
“देशं वः संप्रवक्ष्यामि यस्मिन्देशे चरिष्यथ ।
उक्त्वा मनोमयं चक्रं स सृष्ट्वा तानुवाच ह ॥
क्षिप्तमेतन्मया चक्रमनुव्रजत माचिरम् ।
यत्रास्य नेमिः शीर्य्येत स देशः पुरुषर्षभ ॥
ततो मुमोच तच्चक्रं ते च तत् समनुव्रजन् ।
तस्य वै व्रजतः क्षिप्रं यत्र नेमिरशीर्य्यत ॥
नैमिषं तत् स्मृतं नाम्ना पुण्यं सर्व्वत्र पूजितम् ।
सिद्धचारणसङ्कीर्णं यक्षगन्धर्व्वसेवितम् ॥
स्थानं भगवतः शम्भोरेतन्नैमिषमुत्तम् ।
अत्र देवाः सगन्धर्व्वाः सयक्षोरगराक्षसाः ।
तपस्तप्त्वा पुरा देवा लेभिरे प्रचुरान् भगान् ॥”
इति कौर्म्मे ४० अध्याये षट्कुलीयान् प्रति ब्राह्मवाक्यम् ॥ (क्वचि त्तालव्यशान्तोऽपि पाठो दृश्यते तत्र तु ब्रह्मणा विसृष्टस्य मनोमयचक्रस्य नेमिः शीर्य्यते यत्रेति व्युत्पत्त्या नेमिशं नेमिश-मेव नैमिशं तदाख्यमरण्यमिति बोध्यम् । तथा च वायवीये ।
“एतन्मनोमयं चक्रं मया सृष्टं विसृज्यते ।
यत्रास्य शीर्य्यते नेमिः स देशः तपसः शुभः ॥
इत्युक्त्वा सूर्य्यसङ्काशं चक्रं सृष्ट्वा मनोमयम् ।
प्रणिपत्य महादेवं विससर्ज्ज पितामहः ॥
तेऽपि हृष्टतमा विप्राः प्रणम्य जगतां प्रभुम् ।
प्रययुस्तस्य चक्रस्य यत्र नेमिर्व्यशीर्य्यत ॥
तद्वनं तेन विख्यातं नैमिशं मुनिपूजितम् ॥”
तथा च देवीभागवते । १ । २ । २८-३२ ।
“कलिकालविभीताः स्मो नैमिशारण्यवासिनः ।
ब्रह्मणात्र समादिष्टाश्चक्रं दत्त्वा मनोमयम् ॥
कथितं तेन नः सर्व्वान् गच्छन्त्वेतस्य पृष्ठतः ।
नेमिः संशीर्य्यते यत्र स देशः पावनः स्मृतः ॥
कलेस्तत्र प्रवेशो न कदाचित् संभविष्यति ।
तावत् तिष्ठन्तु तत्रैव यावत् सत्ययुगं पुनः ॥
तच्छ्रुत्वा वचनं तस्य गृहीत्वा तत्कथानकम् ।
चालयन्निर्गतस्तूर्णं सर्व्वदेशदिदृक्षया ॥
प्रेत्यात्र चालयंश्चक्रं नेमिः शीर्णोऽत्र पश्यतः ।
तेनेदं नैमिशं प्रोक्तं क्षेत्रं परमपावनम् ॥”)

**नैमेयः**, पुं, (नि + मेङ् प्रणिदाने + अचो यत् इति यत् । ततः स्वार्थे प्रज्ञाद्यण् । मिधातुना निष्पन्नमिति केचित् ।) परिवर्त्तः । विनिमयः । इत्यमरः । २ । ९ । ८० ॥

**नैयग्रोधं**, क्ली, (न्यग्रोधस्य विकारः ततःप्लक्षादिभ्यो-ऽण् ।” ४ । ३ । १६४ । इत्यण् । तस्य विधान-सामर्थ्यात् फले न लुक् । “न्यग्रोधस्य च केव-लस्य ।” ७ । ३ । ५ । इति न वृद्धिरैजागमश्च ।) न्यग्रोधफलम् । इत्यमरः । २ । ४ । १८ ॥ न्यग्रोध-जातचमसादि । इति वोपदेवरामतर्कवागीशौ ॥

**नैयङ्कवं**, त्रि, (न्यङ्कोर्व्विकार इति । “प्राणिरज-तादिभ्योऽञ् ।” ४ । ३ । १५४ । इति विकारे-ऽञ् ।) न्यङ्कुमृगजातवस्त्रचर्म्मादि । इति वोप-देवरामतर्करागीशौ ॥

**नैयत्यं**, क्ली, (नियतस्येदं इति । नियत + ष्यञ् ।) नियतत्वम् । नियतस्य भाव इत्यर्थे ष्यप्रत्यय-निष्पन्नम् ॥

**नैयायिकः**, पुं, (न्यायं गोतमादिप्रणीतं तर्कशास्त्र-विशेषं अधीते, वेत्ति वा । न्याय + “क्रतूक्थादि-सूत्राड्डक् ।” ४ । २ । ६० । इति ठक् ।) न्यायवेत्ता । न्यायाध्येता । तत्पर्य्यायः । स्वाक्षपादः २ साम्बादिकः २ आर्हितः ४ । इति जटाधरः ॥ (यथा, महाभारते । १ । २ । १६९ ।
“नैयायिकानां मुख्येन वरुणस्यात्मजेन च ।
पराजितो यत्र बन्दी विवादेन महात्मना ॥”)

**नैरन्तर्य्यं**, क्ली, (निरन्तरस्य भाव इति । निरन्तर + ष्यञ् ।) निरन्तरत्वम् । निरन्तरस्य भाव इत्यर्थे ष्यप्रत्ययनिष्प्रन्नम् ॥ (यथा मनौ । ९ । २७१ श्लोकस्य टीकायां कुल्लूकभट्टः ।
“ये च ददति तानपि नैरन्तर्य्याद्यपराधगोचरा पेक्षया घातयेत् ॥”)

**नैराश्यं**, क्ली, (निराशस्य निरभिलाषस्य भावः इति । निराश + ष्यञ् ।) आशाया अभावः । यथा, --
“आशा हि परमं दुःखं नैराश्यं परमं सुखम् ।
आशया पिङ्गला वेश्या कृत्वा जन्म निरर्थकम् ॥”
इति ब्रह्मवैवर्त्तीयश्रीकृष्णजन्मखण्डे ९७ अः ।
(यथा, महाभारते । १ । २२५ । १ ।
“स तु नैराश्यमापन्नः सदा ग्लानिसमन्वितः ।
पितामहमुपागच्छत् संक्रुद्धो हव्यवाहनः ॥”)

**नैरुक्तं**, त्रि, (निरुक्तस्येदं निरुक्तौ भवं वा । “अणृ-गयनादिभ्यः ।” ४ । ३ । ७३ । इति अण् ।) निरुक्तसम्बन्धि । यथा, “षष्ठेत्यत्र ष्टुभिष्टेति थस्य ठः न डः इति नैरुक्तम् ॥” इति रामतर्क-वागीशः ॥
(निरुक्तं ग्रन्थविशेषं वेत्ति अधीते वा । निरुक्त-वेत्ता । यथा, मनुः । १२ । १११ ।
“त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्म्मपाठकः ॥”)

**नैरृतः**, पुं, (निरृतेरपत्यम् । इत्यण् ।) राक्षसः ।
(यथा, महाभारते । १ । ६६ । ५५ ।
“तस्यापि निरृ तिर्भार्य्या नैरृता येन राक्षसाः ॥”)
पश्चिमदक्षिणकोणाधिपतिः । इत्यमरः । १ । १ । ६३, १ । ३ । २ ॥ ज्योतिषमते तत्कोणा-धिपती राहुः । यथा, --
“सूर्य्यः शुक्रः क्षमापुत्त्रः सैंहिकेयः शनिः शशी ।
सौम्यस्त्रिदशमन्त्री च प्रागादिदिगधीश्वराः ॥”
इति ज्योतिस्तत्त्वम् ॥

**नैरृती**, स्त्री, (निरृतेरियमिति । निरृतोऽधि-ष्ठाता यस्यां वा । अण् ङीप् च ।) अबाची-प्रतीच्योर्मध्या दिक् । नैरृतकोणः । इति राजनिर्घण्टः जटाधरश्च ॥ (यथा, मनुः । ११ । १०५ ।
“स्वयं वा शिश्नवृषणावुत्कृत्याधाय चाञ्जलौ ।
नैरृतीं दिशमातिष्ठेदानिपातादजिह्मगः ॥”)

**नैर्गुण्यं**, क्ली, (निर्गुणस्य भावः कर्म्म वा । निर्गुण + ष्यञ् ।) निर्गुणत्वम् । यथा, श्रीभागवते । २ । १ । ९ ।
“परिनिष्ठितोऽपि नैर्गुण्ये उत्तमश्लाकलीलया ।
गृहीतचेता राजर्षे आख्यानं यदधीतवान् ॥”
(यथा, महाभारते । २ । १६ । १५ ।

"गुणाग्निः संशयाद्राजन् नैर्गुण्यं मन्यसे कथम् ॥
न सन्ति प्रकृतेः सत्त्वादि गुणा यत्र ज्ञानयोगे ।
तत्त्वज्ञानयोगः । यथा, भागवते । ३ । ३२ । ३२ ।
"ज्ञानयोगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः ॥")

**नैर्म्मल्यं**, क्ली, (निर्म्मलस्य भावः । इति ष्यञ् ।)
निर्म्मलत्वम् । (तथा च हारीतेनोक्तम् ।
"जिह्वाक्लेदं जनयति तथा नेत्रनैर्म्मल्यकारी ॥")
विषयवैराग्यम् । यथा, --
"विषयेष्वतिसंरागो मानसो मल उच्यते ।
तेष्वेव हि विरागस्तु नैर्म्मल्यं समुदाहृतम् ॥"
इति प्रायश्चित्ततत्त्वम् ॥

**नैल्यं**, क्ली, (नीलस्य भावः । ष्यञ् ।) नीलिमा ।
इति मुग्धबोधटीकायां रामतर्कवागीशः ॥

**नैविड्यं**, क्ली, वंशफुत्कारगुणविशेषः । यथा, --
"नैविड्यं प्रौढता चापि सुस्वरत्वञ्च शीघ्रता ।
माधुर्य्यमिति पञ्चामी फुत्कृतेषु गुणाः स्मृताः ॥"
इति सङ्गीतदामोदरः ॥
(निविडस्य भावः । निविड + ष्यञ् ।) निवि-
डता च ॥

**नैवेद्यं**, क्ली, (निवेदं निवेदनमर्हतीति । निवेद +
ष्यञ् ।) देवाय निवेदनीयद्रव्यम् । तस्य निरुक्ति-
र्यथा, --
"चतुर्व्विधं कुलेशानि द्रव्यं ते षड्रसान्वितम् ।
निवेदनात् भवेत्तृप्तिर्नैवेद्यं तदुदाहृतम् ॥"
इति कुलार्णवे १७ उल्लासः ॥
तद्द्रव्याणि यथा, --
"ससितेन सुशुद्धेन पायसेन ससर्पिषा ।
सितोदनं सकदलिदध्याद्यैश्च निवेदयेत् ॥"
इति प्रपञ्चसारः ॥
तत् पञ्चविधम् । यथा, --
"निवेदनीयं यद्द्रव्यं प्रशस्तं प्रयतं तथा ।
तद्भक्ष्यार्हं पञ्चविधं नैवेद्यमिति कथ्यते ॥
भक्ष्यं भोज्यञ्च लेह्यञ्च पेयं चूष्यञ्च पञ्चमम् ।
सर्व्वत्र चैतन्नैवेद्यमाराध्यास्यै निवेदयेत् ॥" * ॥
तत् पात्रं यथा, --
"तैजसेषु च पात्रेषु सौवर्णे राजते तथा ।
ताम्रे वा प्रस्तरे वापि पद्मपत्रेऽथवा पुनः ॥
यज्ञदारुमये वापि नैवेद्यं स्थापयेद्बुधः ।
सर्व्वाभावे च माहेये स्वहस्तघटिते यदि ॥"
इति तन्त्रसारः ॥ * ॥
तद्दानफलं यथा, --
"नैवेद्येन भवेत् स्वर्गो नैवेद्येनामृतं भवेत् ।
धर्म्मार्थकाममोक्षाश्च नैवेद्येषु प्रतिष्ठिताः ॥
सर्व्वयज्ञफलं नित्यं नैवेद्यं सर्व्वतुष्टिदम् ।
ज्ञानदं मानदं पुण्यं सर्व्वभोग्यमयं तथा ॥
मनसापि महादेव्यै नैवेद्यं दातुमिच्छति ।
यो नरो भक्तियुक्तः सन् दीर्घायुः स सुखी भवेत् ॥
महामायां कदा देवीमर्च्चयिष्यामि शक्तितः ।
नानाविधैस्तु नैवेद्यैरिति चिन्ताकुलस्तु यः ।
स सर्व्वकामान् संप्राप्य मम लोके महीयते ॥"
इति कालिकापुराणे । १६९ । १७० । अध्यायः ॥
तत्कालो यथा, --

"अर्व्वाक् विसर्ज्जनाद्द्रव्यं नैवेद्यं सर्व्वमुच्यते ।
विसर्ज्जिते जगन्नाथे निर्म्माल्यं भवति क्षणात् ॥
पञ्चरात्रविदो मुख्या नैवेद्यं भुञ्जते सुखम् ॥"
इति गरुडपुराणम् ॥
तस्य स्थापनक्रमो यथा, -- गौतमीये ।
"नैवेद्यं दक्षिणे भागे पुरतो वा न पृष्ठतः ॥
दक्षिणभागस्तु देवताया एव न तु साधकस्य ।
पक्वञ्च देवतावामे आमान्नञ्चैव दक्षिणे ॥
पुरश्चरणचन्द्रिकायाम् ।
दक्षिणन्तु परित्यज्य वामे चैव निधापयेत् ।
अभोज्यं तद्भवेदन्नं पानीयञ्च सुरोपमम् ॥"
इति तन्त्रसारः ॥
तन्मुद्रा यथा, --
"नैवेद्यमुद्रामङ्गुष्ठकनिष्ठाभ्यां प्रदर्शयेत् ।
कनिष्ठानामिकाङ्गुष्ठैर्मुद्रा प्राणस्य कीर्त्तिता ॥
तर्ज्जनीमध्यमाङ्गुष्ठैरपानस्य तु मुद्रिका ।
अनामामध्यमाङ्गुष्ठैरुदानस्य तु सा स्मृता ॥
तर्ज्जन्यनामामध्याभिः साङ्गुष्ठाभिश्चतुर्थिका ।
सर्व्वाभिः सा समानस्य प्राणाद्यन्नेषु योजिता ॥
तारपूर्ब्बां जपेन्मुद्रां प्राणादीनां प्रदर्शयेत् ॥"
इति यामलः ॥
ब्राह्मणाय तत्समर्पणं यथा, --
"साक्षात् खादति नैवेद्यं विप्ररूपी जनार्द्दनः ।
ब्राह्मणे परितुष्टे च सन्तुष्टाः सर्व्वदेवताः ॥
देवाय दत्त्वा नैवेद्यं द्विजाय न प्रयच्छति ।
भस्मीभूतञ्च नैवेद्यं पूजनं निष्फलं भवेत् ॥
देवदत्तं न भोक्तव्यं नैवेद्यञ्च विना हरेः ।
प्रशस्तं सर्व्वदेवेषु विष्णोर्नैवेद्यभोजनम् ॥"
शूद्रस्य तद्भक्षणविधिर्यथा, --
शूद्रश्चेद्धरिभक्तश्च नैवेद्यभोजनोत्सुकः ।
आमान्नं हरये दत्त्वा पाकं कृत्वा च खादति ॥"
इति श्रीकृष्णजन्मखण्डे २१ अध्यायः ॥ * ॥
विष्णुनैवेद्यभोजनफलादि स्कान्दे ।
"कृत्वा चैवोपवासन्तु भोक्तव्यं द्वादशीदिने ।
नैवेद्यं तुलसीमिश्रं हत्याकोटिविनाशनम् ॥
पाद्मे ।
हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः ।
पादोदकञ्च निर्म्माल्यं मस्तके यस्य सोऽच्युतः ॥
स्कान्दे ।
अग्निष्टोमसहस्रैश्च वाजपेयशतैस्तथा ।
तुल्यं फलं भवेद्देवि ! विष्णोर्नैवेद्यभक्षणात् ॥
पादोदकञ्च निर्म्माल्यं नैवेद्यञ्च विशेषतः ।
महाप्रसाद इत्युक्त्वा ग्राह्यं विष्णोः प्रयत्नतः ॥
बह्वृचगृह्यपरिशिष्टे ।
पवित्रं विष्णुनैवेद्यं सुरसिद्धर्षिभिः स्मृतम् ।
अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणञ्चरेत् ॥
स्वदत्तमिति विशेषणीयम् ॥ स्मृतौ ।
ब्रह्मचारिगृहस्थैश्च वनस्थयतिभिस्तथा ।
भोक्तव्यं विष्णनैवेद्यं नात्र कार्य्या विचारणा ॥"
इत्येकादशीतत्त्वम् ॥
अपि च ।
"विष्णोर्निवेदितं पुष्पं नैवेद्य वा फलं जलम् ।

प्राप्तिमात्रेण भोक्तव्यं त्यागेन ब्रह्महा जनः ॥
भ्रष्टश्रीर्भ्रष्टबुद्धिश्च भ्रष्टज्ञानो भवेन्नरः ।
यस्त्यजेद्विष्णुनैवेद्यं भाग्येनोपस्थितं शुभम् ॥
प्राप्तिमात्रेण यो भुङ्क्ते भक्त्या विष्णुनिवेदितम् ।
पुंसां शतं समुद्धृत्य जीवन्मुक्तः स्वयं भवेत् ॥
विष्णुनैवेद्यभोजी यो नित्यं वा प्रणमेद्धरिम् ।
पूजयेत् स्तौति वा भक्त्या स विष्णुसदृशो भवेत् ॥
पुंश्चल्यन्नमवीरान्नं शूद्रश्राद्धान्नमेव च ।
यद्धरेरनिवेद्यञ्च वृथामांसमभक्षणम् ॥
शिवलिङ्गप्रदत्तान्नं यदन्नं शूद्रयाजिनाम् ।
चिकित्सकद्विजान्नञ्च देवलान्नं तथैव च ॥
कन्याविक्रयिणामन्नं यदन्नं योनिजीविनाम् ।
अशुद्धान्नं पर्य्युषितं सर्व्वभक्ष्यावशेषकम् ॥
शूद्रापतिद्विजान्नञ्च वृषवाहद्विजान्नकम् ।
अदीक्षितद्विजानाञ्च यदन्नं शवदाहिनाम् ॥
अगम्यागामिनाञ्चैव द्विजानामन्नमेव च ।
मित्रद्रुहां कृतघ्नानामन्नं विश्वासघातिनाम् ॥
मिथ्यासाक्ष्यप्रदानाञ्च ब्राह्मणानान्तथैव च ।
एतत् सर्व्वं विशुध्येत विष्णोर्नैवेद्यभक्षणात् ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ३० अध्यायः ॥ *
"विष्णोर्निवेदितान्नेन यष्टव्याः सर्व्वदेवताः ।
पितरोऽतिथयश्चैवमिति वेदेषु विश्रुतम् ॥
अमृतं सर्व्ववस्तूनां मिष्टं सारं सुदुर्लभम् ।
विष्णोर्निवेदितान्नस्य कलां नार्हन्ति षोडशीम् ॥
यदृच्छया तन्नैवेद्यं यो भुङ्क्ते साधुसङ्गतः ।
षष्टिवर्षसहस्राणां प्राप्नोति तपसां फलम् ॥
यो निवेद्य हरिं भुङ्क्ते भक्त्या भुक्तश्च नित्यशः ।
किं वा तपस्या सुतरां स हरेस्तेजसा समः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ३७ अध्यायः ॥
शिवनैवेद्ये विशेषो यथा, बह्वृचगृह्यपरिशिष्टे ।
"अग्राह्यं शिवनैवेद्यं पत्रं पुष्पं फलं जलम् ।
शालग्रामशिलास्पर्शात् सर्व्वं याति पवित्रताम् ॥
शालग्रामशिलायां शिवपूजने तद्ग्राह्यम् ।
इत्याह्निकतत्त्वम् ॥" कालिकापुराणे ।
"यो यद्देवार्च्चनरतः स तन्नैवेद्यभक्षकः ।
केवलं सौरशैवे तु वैष्णवो नैव भक्षयेत् ॥"
वैष्णवपदमन्यदेवोपासकपरम् ।
'समानन्त्वन्यनैवेद्यं भक्षयेदन्यदैवतः ।'
एतदन्योत्सृष्टपरम् । नन्दिकेश्वरपुराणे ।
'दत्त्वा नैवेद्यवस्त्रादि नाददीत कथञ्चन ।
त्यक्तव्यं शिवमुद्दिश्य तदादाने न तत्फलम् ॥'
इति शिवदत्ते विशेषः ।" इत्येकादशीतत्त्वम् ॥
स्वदत्तशिवनैवेद्यस्यापि भक्त्या भक्ष्यत्वमुक्तं यथा,
"रोगं हरति निर्म्माल्यं शोकन्तु चरणादकम् ।
अशेषं पातकं हन्ति शम्भोर्नैवेद्यभक्षणम् ॥"
इति शाक्तानन्दतरङ्गिणी ॥
शिवनैवेद्यस्याग्राह्यत्वकारणं यथा, --
राधिकोवाच ।
"एवम्भूतस्य च विभो ! सर्व्वेशस्य महात्मनः ।
न शस्तं कथमुच्छिष्टं ब्रूहि सन्देहभञ्जन ! ॥
श्रीकृष्ण उवाच ।
शृणु देवि ! प्रवक्ष्येऽहमितिहासं पुरातनम् ।

पापेन्धनानां दहने ज्वलदग्निशिखोपमम् ॥
सनत्कुमारो वैकुण्ठमेकदा च जगाम ह ।
ददर्श भुक्तवन्तञ्च नाथं नारायणं द्विजः ॥
तुष्टाव गूढैः स्तोत्रैश्च ग्रणम्य भक्तितो मुदा ।
अवशेषं ददौ तस्मै सन्तुष्टो भक्तवत्सलः ॥
प्राप्तमात्रेण तत्रैव भुक्तं तेनैब किञ्चन ।
किञ्चिद्रक्ष बन्धूनां भक्षणाय च दुर्लभम् ॥
सिद्धाश्रमे च तद्दत्तं गुरवे शूलपाणिने ।
भक्त्युद्रेकाच्च तत् सर्व्वं भुक्तञ्च प्राप्तिमात्रतः ॥
भुक्त्वा सुदुर्लभं वस्तु ननर्त्त प्रेमविह्वलः ।
पुलकाञ्चितसर्व्वाङ्गः साश्रुनेत्रो मुदान्वितः ॥
गायन्मम गुणं भक्त्या सुकण्ठः पञ्चवक्त्रतः ।
रागभेदैकतानेन तालमानेन सुन्दरम् ॥
पपात डमरुर्हस्तात् शूलञ्च व्याघ्रचर्म्म च ।
स्वयं निपत्य पश्चाच्च रुदन्मूर्च्छामवाप च ॥
अतीवकमनीयैतद्रूपध्यानैकमानसः ।
सहस्रदलमध्यस्थं मां पश्यन् हृत्सरोरुहे ॥
एतस्मिन्नन्तरे देवी दुर्गा दुर्गतिनाशिनी ।
मुदा जगाम शीघ्रं तत् प्रसन्नवदनेक्षणा ॥
रुदन्तं मूर्च्छितं दृष्ट्वा निपतन्तञ्च भक्तितः ।
प्रहस्य वार्त्तां पप्रच्छ कुमारं शूलपाणिनः ।
सर्व्वं तां कथयामास कुमारः संपुटाञ्जलिः ।
श्रुत्वा चुकोप सा देवी शिवं प्रस्फुरिताधरा ॥
तां शमुमुद्यतां देवीमुत्थाय च त्रिलोचनः ।
बोधयामास विविधं तुष्टाव संपुटाञ्जलिः ॥
श्रुत्वा मनोहरं स्तोत्रं न शशाप शिवं शिवा ।
दुष्टञ्चक्रे तदुच्छिष्टमभक्ष्यं विदुषामपि ॥
पार्व्वत्युवाच ।
सुचिरञ्च तपस्तप्त्वा मया लब्धस्त्वमीश्वरः ।
त्वया विष्णोः प्रसादेन वञ्चिताहं कथं विभो ।
यतो न दत्तन्नैवेद्यं विष्णोर्मह्यं त्वयाधुना ।
अतो मत्तो गृहाणैतत् फलमेव महेश्वर !
अद्यप्रभृति ये लोका नैवेद्यं भुञ्जते तव ।
ते जन्मैकं सारमेया भविष्यन्त्येव भारते ॥
इत्यक्त्वा पार्व्वती मानाद्रुरोद पुरतो विभोः ।
दृष्टिः पपात तत्कण्ठे नीलकण्ठो बभूव सः ॥
तदा शिवः शिवां भक्त्या कृत्वा वक्षसि सादरम् ।
तन्मानभङ्गं स्तोत्रेण विनयेन चकार ह ॥
करेण चक्षुषोर्नीरं संमृज्य च पुनः पुनः ।
बोधयामास विविधैर्नीतिवाक्यैर्मनोहरैः ॥
परितुष्टा च सा देवी भर्त्तारं समुवाच ह ।
कलेवरञ्च त्यक्ष्यामि नैवेद्येन विना हरेः ॥
विभर्म्मि देहं सततं तव सौभाग्यवर्द्धितम् ।
कथं वहामि सौभाग्यरहितञ्च कलेवरम् ॥
अपूर्ब्बं तव नैवेद्यं जन्ममृत्युजराहरम् ।
कृतं दुष्टं यतस्तस्मात् पश्य देहं त्यजामि च ॥
लिङ्गोपरि च यद्दत्तं तदेवाग्राह्यमीश्वर ! ।
सुपवित्रं भवेत्तत्र विष्णोर्नैवेद्यमिश्रितम् ॥
इत्येवमुक्त्वा सा देवी देहं त्यक्तुं समुद्यता ।
त्रस्तो हरस्तत्पुरतः स्तुत्वा च स्वीचकार ह ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्ण जन्मखण्डे ३७ अः ॥
तत्कारणान्तरं यथा, --

श्रीदेव्युवाच ।
"दुर्लभं तव निर्म्माल्यं ब्रह्मादीनां कृपानिधे ! ।
तत् कथं परमेशान ! निर्म्माल्यं तव दूषितम् ॥
ईश्वर उवाच ।
माभैर्मर्भैर्महादेवि ! ज्ञानसारं शृणु प्रिये ।
एतज्ज्ञानं महादेवि ! सारात्सारं परात्परम् ॥
पञ्चभूतात्मकं देवि मुखं मे परिकीर्त्तितम् ।
मध्यस्थानं स्थितं तत्तु तन्मुखं परमेश्वरि ! ॥
श्यामलं तत्तु ईशानं सदा ऊर्द्धं सुचिस्मिते ! ।
कालाग्निरूपिणं तत्तु सर्व्वशक्तिमयं सदा ।
तेजोमयं महेशानि मुखमूर्द्ध्वं वरानने ! ॥
क्षीरोदमन्थने देवि उत्थितं गरलं विषम् ।
उत्थितं गरलं यत्तु ब्रह्माण्डनाशकारकम् ॥
तदेव गरलं देवि हस्ते कृत्वा तु तद्विषम् ।
कृष्णाञ्जननिभं दिव्यं गरलं जलवत्तदा ॥
मम हस्ते महेशानि आविरासीत् शुचिस्मिते ।
ततः करतलीकृत्य तद्विषं परमेश्वरि ॥
निपीय तद्विषं सूक्ष्मं तीक्ष्णं ब्रह्माण्डनाशकम् ।
ततः श्याममुखे देवि न पीत्वा तद्विषं प्रिये ॥
तद्विषं कण्ठदेशे तु स्थितं हि सर्व्वदा मम ।
ततःप्रभृति देवेशि मुखं ज्वालायते सदा ॥
कण्ठे तु कलुषं भूत्वा सदा तिष्ठति कामिनि ।
ततःप्रभृति देवेशि नीलकण्ठत्वमाप्नुयाम् ॥
ईशानं मन्मुखं देवि परं ब्रह्म वरानने ।
प्रत्यङ्गिरामयं देवि मन्मुखं कमलानने ॥
साक्षात् ज्योतिर्म्मयी देवी सदा मे मुखसंस्थिता ।
पत्रं वा यदि वा पुष्पं जलं वा वरवर्णिनि ॥
अन्यं हि परमेशानि उपचारं मनोहरम् ।
यो दद्यात् परमेशानि मन्मुखोपरि पार्व्वति ॥
अग्राह्यं तत्तु निर्म्माल्यं साक्षाद्ब्रह्ममयं ततः ।
एतत्तु परमेशानि निर्म्माल्यं यस्तु धारयेत् ॥
स भ्रष्टो जायते देवि निष्कृतिर्नास्ति तत्र वै ।
अग्राह्यं मम निर्म्माल्यं अतएव वरानने ॥
यद्दत्तं मन्मुखे देवि पुष्पं वा पत्रमुत्तमम् ।
तन्निर्म्माल्यं महेशानि ! गृह्णीयात् शिरसा सदा ॥
स ब्रह्मतेजसा तस्य समतां याति सुन्दरि ! ।
न दद्याद्यदि देवेशि ! उपचारं शुचिस्मिते ! ॥
लिङ्गोपरि वरारोहे ! यश्च तस्य शुचिस्मिते ।
निगदामि शृणु प्रौढे वचनं मम कामिनि ॥
स एव नारकी भूत्वा नरकं सर्व्वदाप्नुयात् ।
अशेषनरकं भुक्त्वा अशेषयोनिमाव्रजेत् ॥
अशेषस्थावरं देवि जङ्गमञ्च तथा प्रिये ।
भुक्त्वा तु सर्व्वपापान् स अशेषक्रिमितां व्रजेत् ॥
शृणु देवि प्रवक्ष्यामि उच्छिष्टं मम पार्व्वति ।
उपचारं स्थापयित्वा पूतं पात्रान्तरे प्रिये ॥
कृत्वा तु मन्त्रपूतं हि उपचारं निवेदयेत् ।
वामदेवादि देवेशि मुखेषु वरवर्णिनि ॥
भक्षणं मम देवेशि ब्रह्माण्डसृष्टिकारकम् ।
एतद्धि परमेशानि ! ब्रह्मादीनां सुदुर्लभम् ॥
अशुचिर्व्वा शुचिर्व्वापि उच्छिष्टं भक्षयेद्यदि ।
स एव परमाराध्यः साक्षाद्ब्रह्म शुचिस्मिते ॥
उच्छिष्टभक्षणे कामी स एव श्रीसदाशिवः ।

निर्म्माल्यं दृढभक्तित्वाद्गृह्णीयाद्यस्तुपार्व्वति ॥
प्रथमं विष्णवे दत्त्वा विष्णुमन्त्रेण सुन्दरि ।
निर्म्माल्यं मम देवेशि विष्णोर्ग्राह्यं वरानने ॥
देवासुरमनुष्याश्च गन्धर्व्वाः किन्नरादयः ।
ते सर्व्वे परमेशानि वराकाः क्षुद्रबुद्धयः ॥
निर्म्माल्येषु च देवेशि ! अधिकारी कथं भवेत् ॥"
इति लिङ्गार्च्चनतन्त्रे । १३ । १४ । पटलः ॥

**नैवेशिकं**, क्लो, (निवेशाय गार्हस्थाय हितम् ।
निवेश + ठक् ।) निवेशनार्थं गार्हस्थाय यत्
कन्या दीयते तत् । इति मिताक्षरा ॥ यथा,
याज्ञवल्क्यः । १ । २१० ।
"भूदीपांश्चान्नवस्त्राम्भस्तिलसर्पिप्रतिश्रयान् ।
नैवेशिकं स्वर्णधुर्य्यं दत्त्वा स्वर्गे महीयते ॥
निवेशसम्बन्धिनि, त्रि ॥

**नैशं**, त्रि, (निशायाइदम् । निशा + "तस्येदम् ।"
४ । ३ । १२० । इति अण् ।) निशासम्बन्धि ।
(यथा, बृहत्संहितायाम् । ४ । २ ।
"सलिलमये शशिनि रवेर्दीधितयो मूर्च्छिता-
स्तमो नैशम् ।
क्षपयन्ति दर्पणोदरनिहिता इव मन्दिर-
स्यान्तः ॥" * ॥
निशायां भवम् । निशा + "निशाप्रदोषाभ्याञ्च ।"
४ । ३ । १४ । इति पक्षे अण् ।) निशाभवम् ।
इति सिद्धान्तकौमुदी ॥ (यथा, मनुः । २ । १०२ ।
"पूर्ब्बां सन्ध्यां जपंस्तिष्ठन्नैशमेनो व्यपोहति ।
पश्चिमान्तु समासीनो मलं हन्ति दिवाकृतम् ॥")

**नैशिकं**, त्रि, (निशायां भवम् । निशा + "निशा-
प्रदोषाभ्याञ्च ।" ४ । ३ । १४ । इति ठञ् ।)
निशाभवम् । इति सिद्धान्तकौमुदी ॥ (निशा-
व्यापकम् ॥ स्त्रियां ङीप् । यथा, मनुः ।
५ । ६७ ।
"नृणामकृतचूडाणां विशुद्धिर्नैशिकी स्मृता ॥")

**नैश्चित्यं**, त्रि, निश्चितत्वम् । निश्चितस्य भाव इत्यर्थे
ष्यप्रत्ययनिष्पन्नम् ॥

**नैषधः**, पुं, (निषधानां राजा । निषध + अण् ।)
नलराजा । इति त्रिकाण्डशेषः ॥ (यथा, महा-
भारते । ३ । ५३ । १६ ।
"तस्याः समीपे तु नलं प्रशशंसुः कुतूहलात् ।
नैषधस्य समीपे तु दमयन्तीं पुनः पुनः ॥"
निषधदेशाधिपतिः । यथा, रघुः । १८ । १ ।
"स नैषधस्यार्थपतेः सुताया-
मुत्पादयामास निषिद्धशत्रुः ॥"
वर्षविशेषः । जम्बुद्वीपेश्वरोऽग्नीध्रस्तु स्वपुत्राय
हरिवर्षाय वर्षमेतद्दत्तवान् । यथा, विष्णु-
पुराणे । २ । १ । २० ।
"तृतीयं नैषधं वर्षं हरिवर्षाय दत्तवान् ॥"
नैषधं नलमधिकृत्य कृतो ग्रन्थः । नैषध + अण् ।
स्वनामख्यातो हर्षदेवविरचितो द्वाविंशसर्गा-
त्मकः काव्यग्रन्थविशेषः । यथा, --
"उदिते नैषधेकाव्ये क्व माघः क्वच भारविः ॥" * ॥
निषधानामयमिति । "तस्येदम् ।" ४ । ३ । १२० ।
इत्यण् ।) निषधसम्बन्धिनि, त्रि ॥

**नैष्किकः**, पुं, (निष्के स्वर्णे दीनारे तदागारे वा
नियुक्तः । निष्क + "तत्र नियुक्तः ।" ४ । ४ ।
६९ । इति ठक् ।) रूप्याध्यक्षः । इत्यमरः । २ ।
८ । ७ ॥ टङ्ककपतिः । पुरुषाश्वादिरूपं गठितं
रजतं रूप्यं तस्याध्यक्षः । इति भरतः ॥ (त्रि,
निष्केण क्रीतं निष्कस्य विकारो वा । "क्रीत-
वत् परिमाणात् ।" ४ । ३ । १५६ । इत्यभि-
देशात् "असमासे निस्कादिभ्यः ।" ५ । १ । २० ।
इति ठक् । निष्कक्रीते । निष्कविकारे ॥)

**नैष्ठिकः**, त्रि, (निष्ठा विद्यतेऽस्येति । निष्ठा +
मत्वर्थीयष्ठक् ।) ब्रह्मचर्य्यं कृत्वा यावज्जीवं
"गुरुकुले यो वसति सः । यथा, --
नैष्ठिको ब्रह्मचारी च वसेदाचार्य्यसन्निधौ ।
तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा ॥
अनेन विधिना देहं साधयेद्विजितेन्द्रियः ।
ब्रह्मलोकमवाप्नोति न चेह जायते पुनः ॥"
इति गरुडपुराणम् ॥
(यथा, महाभारते । ३ । २८२ । २७ ।
"शतयोजनविस्तारं न शक्ताः सर्व्ववानराः ।
क्रान्तुं तोयनिधिं वीरा नैषा वो नैष्ठिकी मतिः ॥")

**नैसर्गिकः**, त्रि, (निसर्गादागतः । निसर्ग + ठक् ।)
स्वाभाविकः । (यथा, रघुः । ५ । ३७ ।
"रूपं तदोजस्वि तदेव वीर्य्यं
तदेव नैसर्गिकमुन्नतत्वम् ॥")
यथाच कल्किपुराणे २६ अध्याये ।
"पृच्छामस्त्वामियं भक्तिः क्व लब्धा परमात्मनः ।
कस्य वा शिक्षिता राजन् किंवा नैसर्गिकी तव ॥"

**नैस्त्रिंशिकः**, त्रि, (निस्त्रिंशः खड्गः प्रहरण-
मस्य । निस्त्रिंश + "प्रहरणम् ।" ४ । ४ । ५७ ।
इति ठक् ।) खड्गधारी । निस्त्रिंशेन प्रह-
रति यः । तत्पर्य्यायः । असिहेतिः २ । इत्य-
मरः । २ । ८ । ७० ॥ असिहेतिकः ३ । इति
शब्दरत्नावली ॥

**नो**, व्य, (नह + डो ।) नहि । अभावः । इत्य-
मरः । ३ । ४ । ११ ॥ (यथा, अपराधभञ्जन-
स्तोत्रे । ७ ।
"नो शक्यं स्मार्त्तकर्म्म प्रतिदिनगहनं प्रत्यवाया-
कुलाख्यम् ॥")

**नोधाः**, [स्] पुं, (नूयते स्तूयते इति । नु + "नुवो
धुट् च ।" उणां ४ । २२५ । इति असिः धुट्
च । यद्वा, नवं दधातीति । नव + धा + असुन् ।
नवशब्दस्य नोभावश्च । इति यास्कः ।) ऋषि-
भेदः । इत्युणादिकोषः ॥ (यथा, ऋग्वेदे । १ ।
६१ । १४ ।
"उपो वेनस्य जोगुवान ओणिं
सद्यो भुवद्वीर्य्याय नोधाः ॥")

**नोपस्थाता**, [ऋ] त्रि, (न उप समीपे तिष्ठतीति ।
स्था + तृच् ।) दूरस्थः । न उप समीपे तिष्ठति
यः सः ॥ हीनार्थिविशेषः । यथा, --
"अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः ।
आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः ॥"
इति मिताक्षरायां व्यवहारमातृका ॥

**नौः**, स्त्री, (नुद्यतेऽनयेति । नुद प्रेरणे + "ग्लानु-
दिभ्यां डौः ।" उणां २ । ६४ । इति डौः ।)
नौका । इत्यमरः । १ । १० । १० ॥ यथा, महा-
भारते । १ । १५० । ४ -- ५ ।
"ततः स प्रेषितो विद्वान् विदुरेण नरस्तदा ।
पार्थानां दर्शयामास मनोमारुतगामिनीम् ॥
सर्व्ववातसहां नावं यन्त्रयुक्तां पताकिनीम् ।
शिवे भागीरथीतीरे नरैर्व्विश्रम्भिभिः कृताम् ॥"
एतेन यन्त्रवाहिता नौका प्रतीयते । कलेर
नौका इति इष्टिम्बोट् इति च यस्याः प्रसिद्धिः ॥

**नौका**, स्त्री, (नौरेव । नौ + स्वार्थे कन् ।) नद्यादि-
सन्तरणार्थकाष्ठादिनिर्म्मितयानविशेषः । वारि-
रथः । इति त्रिकाण्डशेषः ॥ तत्पर्य्यायः । नौः २
तरिका ३ तरणिः ४ तरणी ५ तरिः ६ तरी ७
तरण्डी ८ तरण्डः ९ पादालिन्दा १० उत्प्लवा ११
होडः १२ वाधूः १२ वार्व्वटः १४ वहित्रम् १५
पोतः १६ । इति शब्दरत्नावली ॥ वहनम् १७ ।
इति जटाधरः ॥ * ॥
अथ निष्पदयानोद्देशः ।
"नौकाद्यं निष्पदं यानं तस्य लक्षणमुच्यते ।
अश्वादिकन्तु यद्यानं स्थले सर्व्वं प्रतिष्ठितम् ॥
जले नौकैव यानं स्यादतस्तां यत्नतो वहेत् ॥"
अथ कालः ।
"सुवारवेलातिथिचन्द्रयोगे
चरे विलग्ने मकरादिषट्के ।
ऋक्षेऽन्त्यसप्तष्वतिरिक्ततोऽन्ये
व्रदन्ति नौकाघटनादि कर्म्म ॥ * ॥
अश्विखरांशुसुधानिधिपूर्ब्बा-
मित्रघनाच्युतभे शुभलग्ने ।
तारकयोगतिथीन्दुविशुद्धौ
नौगमनं शुभदं शुभवारे ॥" * ॥
"वृक्षायुर्व्वेदगदिता वृक्षजातिश्चतुर्व्विधा ।
समासेनैव गदितं तेषां काष्ठं चतुर्व्विधम् ॥"
तद्यथा, --
"लघु यत् कोमलं काष्ठं सुघटं ब्रह्मजाति तत् ।
दृढाङ्गं लघु यत् काष्ठमघटं क्षत्त्रजाति तत् ॥
कोमलं गुरु यत् काष्ठं वैश्यजाति तदुच्यते ।
दृढाङ्गं गुरु यत् काष्ठं शूद्रजाति तदुच्यते ॥
लक्षणद्वययोगेन द्विजातिः काष्ठसंग्रहः ॥
क्षत्त्रियकाष्ठैर्घटिता भोजमते सुखसम्पदं नौका
अन्ये लघुभिः सुदृढैर्व्विदधति जलदुष्पदे
नौकाम् ॥
विभिन्नजातिद्वयकाष्ठजाता
न श्रेयसे नापि सुखाय नौका ।
नैषा चिरं तिष्ठति पच्यते च
विभिद्यते वारिणि मज्जते च ॥
न सिन्धुगाद्यार्हति लौहबन्धं
तल्लोहकान्तैर्ह्रियते हि लौहम् ।
विपद्यते तेन जलेषु नौका
गुणेन बन्धं निजगाद भोजः ॥"
अथ लक्षणानि ।
"सामान्यञ्च विशेषश्च नौकाया लक्षणद्वयम् ॥"
अत्र सामान्यम् ।
"राजहस्तमितायामा तत्पादपरिणाहिनी ।
तावदेवोन्नता नौका क्षुद्रेति गदिता बुधैः ॥
अतः सार्द्धमितायामा तदर्द्धपरिणाहिनी ।
त्रिभागेणोत्थिता नौका मध्यमेति प्रचक्ष्यते ॥
क्षुद्राथ मध्यमा भीमा चपला पटलाभया ।
दीर्घा पत्रपुटा चैव गर्भरा मन्थरा तथा ॥
नौकादशकमित्युक्तं राजहस्तैरनुक्रमम् ।
एकैकवृद्धैः सार्द्धैश्च विजानीयात् द्वयं द्वयम् ॥
उन्नतिश्च प्रवीणा च हस्तादर्द्धांशसम्मिता ।
अत्र भीमाभया चैव गर्भरा चाशुभप्रदा ॥
मन्थरापरतो यास्तु तासामेवाम्बुधौ गतिः ।
तासां गुणस्तु संक्षेपात् दृढता च प्रकीर्णता ॥"
अथ विशेषः ।
"दीर्घा चैवोन्नता चेति विशेषे द्विविधा भिदा ॥"
तत्र दीर्घा यथा, --
"राजहस्तद्वयायामा अष्टांशपरिणाहिनी ।
नौकेयं दीर्घिका नाम दशाङ्गेनोन्नतापि च ॥
दीर्घिका तरणिर्लोला गत्वरा गामिनी तरिः ।
जङ्घाला प्लाविनी चैव धारिणी वेगिनी तथा ॥
राजहस्तैकैकवृद्ध्या नौकानामानि वै दश ।
उन्नतिः परिणाहश्च दशाष्टांशमितौ क्रमात् ॥
अत्र लोला गामिनी च प्लाविनी दुःखदा भवेत् ।
लोलाया मानमारभ्य यावद्भवति गत्वरा ॥
लोलायाः फलमाधत्ते एवं सर्व्वासु निर्णयः ।
वेगिन्याः परतो या तु सा शिवायोत्तरा यथा ॥"
भोजोऽपि ।
"नौकादीर्घं यथेच्छं स्यात्तत्रतानि विवर्ज्जयेत् ।
हस्तसंख्या परित्याज्या वसुवेदग्रहोत्तरे ॥
षष्ट्युत्तरमिता नौका कुलं हन्ति बलं धनम् ।
नवतेरुत्तरे यापि या चत्वारिंशतेः परा ॥
एतेन चत्वारिंशतिषष्टिनवतिसंख्या तत्परतो-
ऽपि ।
यावदपरदशकं तावदेव तत्फलमिति ।"
इति दीर्घा ।
अथोन्नता ।
"राजहस्तद्वयमिता तावत् प्रसरणोन्नता ।
इयमूर्द्ध्वाभिधा नौका क्षेमाय पृथिवीभुजाम् ॥
ऊर्द्ध्वानूर्द्ध्वा स्वर्णमुखी गर्भिणी मन्थरा तथा ।
राजहस्तैकैकवृद्ध्या नाम पञ्चत्रयं भवेत् ॥
अत्रानूर्द्ध्वा गर्भिणी च निन्दितं नामयुग्मकम् ।
मन्थरायाः परा यास्तु ताः शुभाय यथोद्भवम् ॥"
भोजोऽपि ।
"बाणाम्न्युत्तरतो मानं नौकानामशुभं वहेत् ।
पञ्चाशदूर्द्ध्वाद्विलासं धननाशं त्रयोदूर्द्ध्वतः ॥"
इत्युन्नता ॥ * ॥
"धात्वादीनामतो वक्ष्यं निर्णयं तरिसंश्रयम् ।
कनकं रजतं ताम्रं त्रितयं वा यथाक्रमम् ॥
ब्रह्मादिभिः परिन्यस्य नौकाचित्रणकर्म्मणि ।
चतुःशृङ्गा त्रिशृङ्गाभा द्विशृङ्गा चैकशृङ्गिणी ॥
सितरक्तापीतनीलवर्णान्दद्याद्यथाक्रमम्।
केशरी महिषो नागो द्विरदो व्याघ्न एव च ॥

पक्षी भेको मनुष्यश्च एतेषां वदनाष्टकम् ।
नावां मुखे परिन्यस्य आदित्यादिदशा भुवाम् ॥
कलसो दर्पणश्चन्द्रस्त्रैदशानां महीभुजाम् ।
हंसः केकी शुकः सिंहो गजोऽहिर्व्याघ्रषट्-
पदौ ॥
आदित्यादिदशाजातनौकोपरिपरिन्यसेत् ॥ * ॥
नौकासु मणिविन्यासो विज्ञेयो नवदण्डवत् ।
मुक्तास्तवकैर्युक्ता नौका स्यात् सर्व्वतो भद्रा ।
तत्संख्या चेदथ रसवेदद्वयसम्मिता क्रमशः ॥
कनकादीनां माला जयमालेति गद्यते सद्भिः ।
ब्रह्मक्षत्रे द्वितये एकैके वैश्यशूद्रयोनी ॥ * ॥
निर्गृहं सगृहं वाथ तत् सर्व्वं द्विविधं भवेत् ।
निर्गृहं पूर्ब्बमुद्दिष्टं सगृहाणि यथा शृणु ॥
सगृहा त्रिविधा प्रोक्ता सर्व्वमध्याग्रमन्दिरा ।
सर्व्वतो मन्दिरं यत्र सा ज्ञेया सर्व्वमन्दिरा ॥
राज्ञां कोशाश्वनारीणां यानमत्र प्रशस्यते ।
मध्यतो मन्दिरं यत्र सा ज्ञेया मध्यमन्दिरा ॥
राज्ञां विलासयात्रादि वर्षासु च प्रशस्यते ।
अग्रतो मन्दिरं यत्र सा ज्ञेया त्वग्रमन्दिरा ॥
चिरप्रवासयात्रायां रणे काले घनात्यये ॥
मन्दिरमानं नौकाप्रसरत एवार्द्धभागतो न्यूनम् ।
भोजस्तु ।
दीर्घवृत्तवसुषट्दिवाकरा-
नेकदिङ्नवमिता यथाक्रमम् ।
राजपञ्चभुजसम्मितोन्नति-
र्मन्दिरे तरिगते महीभुजाम् ॥
भास्करादिकदशा भुवां पुनर्धातुनिर्णयनमत्र
नवदण्डवत् ॥
काष्ठजं धातुजञ्चेति मन्दिरं द्विविधं भवेत् ।
काष्ठजं सुखसम्पत्त्यै विलासे धातुजं मतम् ॥
अत्र शय्यासनादीनां मन्थरोल्लोचयोरपि ।
अन्येषाञ्चैव मुनिभिनिर्णयः पूर्ब्बवन्मतः ॥
दिङ्मात्रमिदमुद्दिष्टं नौकालक्षणमग्रजम् ।
प्रधानेष्वेव नियमः अप्रधाने न निर्णयः ॥
लघुता दृढता चैव गामिताच्छिद्रता तथा ।
समतेति गुणोद्देशो नौकानां संप्रकाशितः ॥
एवं विचिन्त्य यो राजा नौकायानं करोति च ।
स चिरं सुखमाप्नोति विजयं समरे श्रियम् ॥
योऽज्ञानादन्यथा यानं नौकावां कुरुते नृपः ।
तस्यैतानि विनश्यन्ति यशो वीर्य्यं बलं धनम् ॥"
इति निष्पदयानोद्देशे नौकायानम् ॥ * ॥
जघन्यजलयानानि यथा, --
"नौकान्यतो जले यानं जघन्यमिति गद्यते ।
तद्देहा बहवस्ते तु पाश्चात्यानां प्रकीर्त्तिताः ॥
द्रोणीरूपन्तु यद्यानं द्रोणीयानन्तदुच्यते ।
घटीभिर्घटितं यानं घटीनौकेति गद्यते ॥
तुम्ब्याद्यैस्तु फलैर्यानं फलयानं प्रचक्ष्यते ।
चर्म्मभिस्तूलपूर्णैर्यच्चर्म्मयानं तदुच्यते ॥
यानं यल्लघुभिर्वृक्षैर्वृक्षयानन्तदुच्यते ।
जन्तुभिः सलिले यानं जन्तुयानं प्रचक्ष्यते ॥
बाहुभ्यां सन्तरेद्वारि जघन्येषु न निर्णयः ॥"
इति युक्तिकल्पतरौ निष्पदयानोद्देशः ॥

**नौकादण्डः**, पुं, (नौकायाः परिचालनार्थं यो दण्डः ।) क्षेपणी । इत्यमरः । १ । १० । १३ ॥ चाइड इति ध्वजी इति नगी इति च भाषा ॥

**नौतार्य्यं**, त्रि, (नावा नौकया तार्य्यं तरणीयम् ।) नाव्यम् । नौकागम्यदेशादि । इत्यमरः । १ । १० । १० ।

**न्यकारुका**, स्त्री, (न्यक् क्रियतेऽसौ पृषोदरात् कलोपे साधुः । शकृत्कीटः । विष्ठाक्रिमिः । इति हारावली । १६३ ॥ (क्वचित् अन्यकारका इति पाठः ॥)

**न्यक्वारः**, पुं, (न्यक् क्रियते इति । कृ + घञ् ।) न्यक्वरणम् । तत्पर्य्यायः । अवज्ञा २ परीहारः ३ परिहारः ४ पराभवः ५ अपमानम् ६ परिभवः ७ तिरस्कारः ८ तिरस्क्रिया ९ अवहेला १० हेला ११ अवहेलनम् १२ हेलनम् १३ अनादरः १४ अभिभवः १५ सूक्षणं १६ सूर्क्षणम् १७ रीढा १८ अभिभूतिः १९ निकृतिः २० असूक्षणम् २१ असूर्क्षणम् २२ नीकारः २३ अवहेलम् २४ अमाननम् २५ क्षेपः २६ निकारः २७ धिक्कारः २८ । इति शब्दरत्नावली ॥ विमानना । इति कालिदासः ॥ (यथा, महानाटके । ९ । १४ ।
"न्यक्वारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो
रावणः ॥")

**न्यक्षं**, क्ली, कार्त् स्न्यम् । तृणम् । निकृष्टे, त्रि । इति मेदिनी । षे, १६ ॥

**न्यक्षः**, पुं, (नीयते अक्षिणी यस्य । षच् समासे ।) महिषः । इति मेदिनी । षे, १६ ॥ जामदग्न्यः ॥ इति हेमचन्द्रः ॥

**न्यग्रोधः**, पुं, (न्यक् रुणद्धि इति । रुध + अच् ।) वटवृक्षः । (यथा, भागवते । ४ । ६ । १६ ।
"पनसोडुम्बराश्वत्थप्लक्षन्यग्रोधहिङ्गुभिः ॥")
व्यामपरिमाणम् । इत्यमरः । २ । ४ । ३२, ३ । ३ । ९५ ॥ शमीवृक्षः । इति मेदिनी । धे, ३२ ॥ विषपर्णी । मोहनाख्यौषधिः । इति विश्वः ॥ (उग्रसेननृपपुत्राणामन्यतमः । यथा, हरिवंशे । ३७ । ३० ।
"नवोग्रसेनस्य सुतास्तेषां कंसस्तु पूर्ब्बजः ।
न्यग्रोधश्च सुनामा च कल्कः शल्कः सुभूमिपः ॥")

**न्यग्रोधपरिमण्डलः**, पुं, (न्यग्रोधः व्यामः परिमण्डलं परिणाहो यस्य ।) व्यामपरिमितोच्छ्रयपरीणाहः पुरुषः । एतादृशाः पुरुषास्त्रेतायुगे चक्रवर्त्तिन आसन् । यथा मात्स्ये ११८ अः ।
"महाधनुर्धराश्चैव त्रेतायां चक्रवर्त्तिनः ।
सर्व्वलक्षणसम्पन्ना न्यग्रोधपरिमण्डलाः ॥
न्यग्रोधौ तु स्मृतौ बाहू व्यामो न्यग्रोध उटच्यते ।
व्यामेन उच्छ्रयो यस्य अध ऊर्द्ध्वञ्च देहिनः ।
समोच्छ्रयपरीणाहो न्यग्रोधपरिमण्डलः ॥"
(अपिच । भट्टिटीकायां भरतमल्लिकधृताग्निपुराणवचनम् ।
"प्रसारितभुजस्येह मध्यभागद्वयान्तरम् ।
उच्छ्रायेण समं यस्य न्यग्रोधपरिमण्डलः ॥")

**न्यग्रोधपरिमण्डला**, स्त्री, (न्यक्रुणद्धि इति न्यग्रोधं अधःप्रसूतं परितो मण्डलं नितम्बमण्डलरूं यस्याः । यद्वा न्यग्रोधस्य वटस्य इव परिमण्डलं परिणाहो नितम्बभागे यस्याः ।) अङ्गनाविशेषः । यथा, --
"स्तनौ सुकठिनौ यस्या नितम्बे च विशालता ।
मध्ये क्षीणा भवेद्या सा न्यग्रोभपरिमण्डला ॥"
इति शब्दमाला ॥
(तथाच भट्टिः । ४ । १८ ।
"योषिद्वृन्दारिका तस्य दयिता हंसनादिनी ।
दूर्व्वाकाण्डमिव श्यामा न्यग्रोधपरिमण्डला ॥")

**न्यग्रोधा**, स्त्री, (न्यक्रुणद्धीति । रुध् + अच् । टाप् ।) न्यग्रोधी । इति शब्दरत्नावली ॥ (पर्य्यायोऽस्या यथा, --
"दन्त्युदुम्बरपर्णी स्यान्निकुम्भोऽथ मुकूलकः ।
द्रवन्ती नामतश्चित्रा न्यग्रोधा मूषिकाह्वया ॥"
इति चरके कल्पस्थाने द्वादशेऽध्याये ॥)

**न्यग्रोधी**, स्त्री, (न्यक् रुणद्धीति । रुध् + अच् । गौरादित्वात् ङीष् इति प्राञ्चः ।) उपचित्रा । इत्यमरभरतौ ॥ इन्दुरकानी इति भाषा । थुलकुँडी इति केचित् ।

**न्यङ्**, [च्] त्रि, (नितरामञ्चतीति । अञ्चु + क्विप् ।) नीचः । खर्व्वः इत्यमरः । ३ । १ । १० ॥ निम्नः । इति मेदिनी । चे, ५६ ॥ कात्स्न्र्यम् । इति विश्वः ॥

**न्यङ्कुः**, पुं, (नितरां अञ्चति गच्छतीति । अञ्चु गतौ + "नावन्चेः ।" उणां । १ । १८ । इति उः । "न्यङ्क्वादीनाञ्च ।" ७ । ३ । ५३ । इति कुत्वम् ।) मृगभेदः । इत्यमरः । २ । ५ । १० ॥ (यथा, हरिवंशे । १२१ । ४१ ।
"न्यङ्कुभिश्च वराहैश्च रुरुभिश्च निषेवितम् ॥")
मुनिविशेषः । इति मेदिनी । के, २७ ॥

**न्यङ्कुभूरुहः**, पुं, (न्यङ्कुरिव भूरुहः ।) शोणकवृक्षः । इति त्रिकाण्डशेषः ॥ (शोणकशब्देऽस्य विवरणं ज्ञातव्यम् ॥)

**न्यच्छं**, क्ली, (नितरामच्छम् ।) क्षुद्ररोगविशेषः । मेचेता इति भाषा ॥ तल्लक्षणं यथा, --
"मण्डलं महदल्पं वा श्यावं वा यदि वा सितम् ।
सहजं नीरुजं गात्रे न्यच्छं तदभिधीयते ॥"
तच्चिकित्सा यथा, --
"शिरावेधैः प्रलेपैश्च तथाभ्यङ्गैरुपाचरेत् ।
न्यच्छं लिम्पेत् पयःपिष्टैः कल्पैः क्षीरितरूद्भवैः ॥
त्रिभुवनविजयापत्रं मूलं स्थविरस्य शिंशपा
चैभिः ।
उद्वर्त्तनं विरचितं न्यच्छव्यङ्गापहं सिद्धम् ॥
स्थविरस्य वृद्धदारोः ।" इति भावप्रकाशः ॥

**न्यञ्चितं**, त्रि, (नि + अञ्च + णिच् + क्तः ।) अधःक्षिप्तम् । इति जटाधरः ॥

**न्ययः**, पुं, (नि + इ + "एरच् ।" ३ । ३ । ५६ इत्यच् ।) अपचयः । इति केचित् ॥

**न्यस्तं**, त्रि, (नि + अस + क्त ।) निहितम् । स्थापितम् । तत्पर्य्यायः । निसृष्टम् २ । इत्य-

मरः । ३ । १ । ८८ ॥ अस्य पर्य्यायान्तरं निक्षिप्तशब्दे द्रष्टव्यम् ॥

**न्यस्तशस्त्रः**, पुं, (न्यस्तं शस्त्रं येन । युद्धादिविरत-त्वात् तथात्वम् ।) पितृलोकः । इति त्रिकाण्ड-शेषः ॥ (यथा, मनुः । ३ । १९२ ।
"अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः ।
न्यस्तशस्त्रा महाभागाः पितरः पूर्ब्बदेवताः ॥")
त्यक्तशस्त्रे, त्रि । यथा, --
"न्यस्तशस्त्रं दिलीपञ्च तञ्च शुश्रुवुषां प्रभुम् ।
राज्ञामुद्धृतनाराचे हृदि शल्यमिवार्पितम् ॥"
इति रघुः ॥

**न्याक्यं**, क्ली, (नितरामक्यते इति । नि + अक + ण्यत् ।) भृष्टतण्डुलम् । मुडी इति भाषा ॥ तत्पर्य्यायः । भृष्टान्नम् २ कुहवम् ३ । इति शब्दचन्द्रिका ॥

**न्यादः**, पुं, (न्यदनमिति । नि + अद भक्षणे + "नौ ण च ।" ३ । ३ । ६० । इति णः ।) आहारः । इत्यमरः । २ । ९ । ५६ ॥

**न्यायः**, पुं, विष्णुः । यथा,
"अग्रणीर्ग्रामणीः श्रीमान्न्यायो नेता समीरणः ।"
इति तस्य सहस्रनाममध्ये गणितः ॥ * ॥
(नियमेन ईयते इति । नि + इण् + "परि-न्योर्नीणोर्द्यूताभ्रेषयोः ।" ३ । ३ । ३७ । इति घञ् ।) उचितः । तत्पर्य्यायः । अभ्रेषः २ क्ल्पः ३ देशरूपम् ४ समञ्जसम् ५ । इत्यमरः । २ । ८ । २४ ॥ * ॥ (नीयन्ते प्राप्यन्ते विवक्षितार्था येनेति । नी + "अध्यायन्यायोद्यावसंहाराश्च ।" ३ । ३ । १२२ । इति घञ्प्रत्ययेन निपातनात् साधुः । नीतिः । जयोपायः । भोगः । युक्तिः । इति चिन्तामणिः ॥) प्रतिज्ञाहेतूदाहरणोप-नयनिगमनात्मकपञ्चावयववाक्यम् । तल्लक्षणं यथा । अनुमितिचरमकारणलिङ्गपरामर्शप्रयो-जकशाब्दज्ञानजनकवाक्यत्वम् । इति चिन्ता-

अत्र, यूपस्य स्वरुं करोति इति वाक्यं विषयः । तत्र षष्ठी यूपसम्बन्धिकर्त्तव्यता लक्षणार्था उत यूपावयवलक्षणार्था इति सन्देहो विषयः । एतावेव पूर्ब्बोत्तरपक्षौ ज्ञेयौ । कल्पना लाघ-वानुग्रहादुत्तरः पक्षः सिद्धान्तः । फलं अनु-ष्ठानभेदः । पूर्ब्बपक्षे तक्षणाष्टास्री करणादिना काष्ठान्तरं यूपसदृशं निर्म्मातव्यम् । सिद्धान्ते एकदेशस्य पृथक् करणमात्रमिति । इदमेव पञ्चकं मोक्षधर्म्मेषूक्तम् ।
'सूक्ष्मं सांख्यक्रमौ चोभौ निर्णयः सप्रयोजनः ।
पञ्चैतान्यनुजानीहि वाक्यमित्युच्यते बुधैः ॥"
सूक्ष्मं गहनार्थत्वाद्विषयः । सांख्यः एवमेवं वेति विचारः । क्रमः अतिक्रमः सिद्धान्तस्य पूर्ब्बः पक्ष इत्यर्थः । निर्णयः सिद्धान्तः । प्रयोजनं फलम् । इति वाक्यं वाक्यार्थनिर्णयोपायः एवं पूर्ब्बोत्तरमीमांसाधिकरणानिन्यायस्तद्वित् ॥" इति तट्टीकायां नीलकण्ठः ॥ * ॥) षड्दर्शनान्तर्गतदर्शनविशेषः । तत्पर्य्यायः । तर्कविद्या २ आन्वीक्षिकी ३ । इत्यमरभरतौ ॥ एतद्दर्शनमते नित्येच्छाकृतिमतिसहितः पर-मात्मा ईश्वरः स तु ब्रह्मपदार्थो जीवातिरिक्तः । एतच्छास्त्रप्रयोजनं चार्व्वाकादिमतनिराकरण-पूर्ब्बकं जगत्कारणतया ईश्वरसंस्थापनं संश-यादिनिरूपणेन वेदार्थनिर्णयश्च । न्यायदर्शन-कारो गोतमः । तत्सूत्रे प्रमाणादिषोडश-पदार्थनिरूपणम् । तेषां तत्त्वज्ञानान्निःश्रेयसम् । तस्य भाष्यकारो वात्स्यायनः । तद्वार्त्तिककारः कात्यायनः । तट्टीकाकारो वाचस्पतिमिश्रः । तच्छात्र उदयनाचार्य्यः कुसुमाञ्जलिप्रभृतिग्रन्थ-कारः । कुसुमाञ्जलिटीकाकारौ हरिदासराम-भद्रौ । गङ्गेशोपाध्यायः प्रत्यक्षानुमानोपमान-शब्दाख्यखण्डचतुष्टयात्मकचिन्तामणिकारः । तत्सुतो वर्द्धमानोपाध्यायस्तयोश्छात्रौमणि-मिश्रयज्ञपत्युपाध्यायौ मणिप्रभाकरौ । यज्ञ-पत्युपाध्यायच्छात्रः पक्षधरमिश्रश्चिन्तामणे-रालोककारः । पक्षधरमिश्रच्छात्रो रघुनाथ-शिरोमणिश्चिन्तामणेर्दीधितिकारः । तच्छात्रो मथुरानाथतर्कवागीशश्चिन्तामणिदीधित्योष्टी-काकारः । तच्छात्रो भवानन्दसिद्धान्तवागीशो दीधितेष्टीकाकारः । तच्छात्रौ जगदीशतर्का-लङ्कारगदाधरभट्टाचार्य्यौ दीधितिटीकाकारौ । एतदतिरिक्ता वादार्थकारा बहवः पण्डिता आसन् ॥ तर्कशास्त्रम् । यथा, शब्दरत्नावल्याम् ।
"न्यायवैशेषिकादिः स्यात् तर्कविद्या प्रतिष्ठिता ।
तस्यामान्वीक्षिकी ज्ञेया तत्रात्मज्ञानमुन्नयेत् ॥"
अथ न्यायप्रथमसूत्रं लिख्यते
प्रमाणप्रमेयसंशय-प्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवाद-जल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्था-नानां तत्त्वज्ञानान्निःश्रेयसाधिगमः । एषां लक्ष-णानि यथा । प्रत्यक्षानुमानोपमानशब्दाः प्रामाणानि । १ । आत्मशरीरेन्द्रियार्थबुद्धिमनः-प्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम् २ । समानानेकधर्म्मोपपत्तेर्व्विप्रतिपत्तेरुपलब्ध्यनुप-लब्ध्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः । ३ । यमर्थमधिकृत्य प्रवर्त्तते तत् प्रयोजनम् । ४ । लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसामान्यं स दृष्टान्तः । ५ । तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः । ६ । प्रतिज्ञाहेतूदाहरणोपनयनि-गमनान्यवयवाः । ७ । अविज्ञाततत्त्वेऽर्थे कार-णोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः । ८ । विमृश्य-पक्षप्रतिपक्षाभ्यामर्थावधारणंनिर्णयः । ९ । प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चाषयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः । १० । यथोपपन्नच्छलजातिनिग्रहस्थानोपालम्भो जल्पः ११ । सत्प्रतिपक्षस्थापनाहीनो वितण्डा । १२ । सव्यभिचारविरुद्धप्रकरणसमसाध्यसम-कालात्ययापदिष्टा हेत्वाभासाः । १३ । वचन-विघातोऽर्थविकल्पोपपत्त्या छलम् । १४ । साधर्म्म्यवैधर्म्म्याभ्यां प्रत्यवस्थानं जातिः । १५ । विप्रतिपत्तिरप्रतिपत्तिश्चनिग्रहस्थानम् । १६ । इति गोतमसूत्रम् ॥ * ॥ न्यायशास्त्रञ्च पञ्चा-ध्यायात्मकम् । तत्र प्रत्यध्यायस्याह्निकद्वयम् । तत्र प्रथमाध्ययस्य प्रथमाह्निके भगवता गौत-भेन प्रमाणादिपदार्थनवकलक्षणनिरूपणं विधाय द्वितीये वादादिसप्तपदार्थलक्षणनिरू-पणम् । १ । द्वितीयस्य तु प्रथमे संशयपरीक्षणं प्रमाणचतुष्टयाप्रामाण्यशङ्कानिराकरणञ्च । द्वितीये अर्थापत्त्यादेरन्तर्भावनिरूपणम् । २ । तृतीयस्य प्रथमे आत्मशरीरेन्द्रियार्थपरीक्षणम् । द्वितीये बुद्धिमनःपरीक्षणम् । ३ । चतुर्थस्य प्रथमे प्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गपरी-क्षणम् । द्वितीये दोषनिमित्तकत्वनिरूपणं अव-यवादिनिरूपणञ्च । ४ । पञ्चमस्यस्य प्रथमे जातिभेदनिरूपणम् । द्वितीये निग्रहस्थानभेद-निरूपणम् । ५ । इति सर्व्वदर्शनसंग्रहः ॥ * ॥ युक्तिमूलकदृष्टान्तविशेषः । स च बहुविधः । तेषां मध्ये प्रसिद्धानां नामलक्षणप्रमाणानि लिख्यन्ते ॥

| न्यायनामानि | तल्लक्षणानि | तत्प्रमाणा[illegible] |
| --- | --- | --- |
| अन्धगोलाङ्गूलन्यायः १ । | कश्चिद्दुष्टात्मा महारण्यमार्गे पतितमन्धं स्वबन्धुनगरं जिगमिषुं वभाषे किमत्रायुष्मता दुःखितेन स्थीयत इति स चान्धः सुखवाणीमाकर्ण्य तमाप्तं मत्वोवाच अहो मद्भागधेयं यदत्रभवान् दीनं मां स्वाभीष्टनगर प्राप्त्यसमर्थं भाषत इति स च विप्रलिप्सुर्दुष्टो गोयुवानमानीय तदीय | हे[illegible] १ |

| | | | | | |
|---|---|---|---|---|---|
| मणिः ॥<br>उचितानुपूर्ब्बिकप्रतिज्ञादिपञ्चकसमु-<br>दायत्वम् । इति शिरोमणिः ॥ तल्लक्ष्यं<br>यथा ।<br>पर्व्वतो वह्निमान् धूमात् यो यो<br>धूमवान् स्र<br>वह्निमान् यथा महानसं<br>वह्निव्याप्यधूमवांश्चायं<br>तस्माद्वह्निमान् । इति जगदीशः ॥ * ॥<br>(पञ्चाङ्गमधिकरणम् । यथा, महाभारते<br>।<br>२ । ५ । ३ ।<br>“न्यायविद्धर्म्मतत्त्वज्ञः<br>षडङ्गविदनुत्तमः ।”<br>“न्यायः पञ्चाङ्गमधिकरणम् । यथा, --<br>‘विषयो विषयश्चैव<br>पूर्ब्बपक्षस्तथोत्तरः ।<br>पक्षद्वयफलञ्चैव शास्त्रेऽधिकरणं विदुः<br>॥’ | | | | | |

| न्यायनामानि | तल्लक्षणानि | तत्प्रमाणानि |
| --- | --- | --- |
| | लाङ्गूलमन्धं ग्राहयामास उपदिदेश चैनमन्धमेष गोयुवा त्वां नगरं नेष्यति मा त्यज लाङ्गूलमिति स चान्धः श्रद्धालुतया तदत्यजन् स्वाभीष्टमप्राप्यानर्थपरम्पराम्प्राप्तः। १। | |
| अन्धपङ्गुन्यायः २। | अन्धस्कन्धारूढः पङ्गुर्यथा अन्धस्य पद्भ्यां अध्वातिक्रमसमर्थस्तथा स चान्धः पङ्गोदृग्भ्यां चक्षुष्मानिव भवति। २। | काव्यप्रकाशे चण्डीदासटीका २। |
| अन्धहस्तिन्यायः ३। | बहवोऽन्धा हस्तिनिरूपणार्थं प्रवृत्ताः केनचित् चरणं स्पृष्ट्वा स्तम्भाकारत्वेन केनापि लाङ्गूलं स्पृष्ट्वा रज्ज्वाकारत्वेन परेण श्रोत्रं स्पृष्ट्वा सूर्पाकारत्वेनापरेण शुण्डं स्पृष्ट्वा सर्पाकारत्वेन गजो निर्णीतः। ३। | भागवतादयः ३। |
| अशोकवनिकान्यायः ४। | तुल्यगुणादिशालिनामशोकादिनानावनानामशोकवनगमेन सत्यन्यवनगमनापेक्षा न। अपि च। तुल्यगुणशालिनि वने सत्यपि रावणेनाशोकवने सीता स्थापिता तत्र वनान्तरे स्थापनानपेक्षा। ४। | भाष्यसप्तमसूत्रव्याख्या ४। |
| उष्ट्रकण्टकभोजनन्यायः ५। | उष्ट्रस्य शमीकण्टकक्षतजन्यबहुदुःखसहनपूर्ब्बकं किञ्चित्सुखजनकसपत्रशमीकण्टकभक्षणम्। ५। | वेदान्तशङ्करभाष्यटीका ५। |
| कदम्बगोलकन्यायः ६। | कदम्बगोलकस्य सर्व्वावयवेषु युगपदेव पुष्पाणामुत्पत्तिः। ६। | भाषापरिच्छेदादयः ६। |
| करकङ्कणन्यायः ७। | कङ्कणशब्देनैव करभूषणविशेषबोधसम्भवेऽपि करशब्दपूर्व्वककङ्कणशब्दः करसंलग्नकङ्कणबोधार्थकः। ७। | काव्यप्रकाशटीकादयः ७। |
| काकाक्षिगोलकन्यायः ८। | एकमेव चक्षुर्गोलकमुभयचक्षुःसम्बन्धिसदुभयचक्षुःकार्य्यकारकम्। ८। | अमरकोषटीकादयः ८। |
| कूर्म्माङ्गन्यायः ९। | कूर्म्मःस्वेच्छया अङ्गानि प्रसारयति संकोचयति तद्वत्। ९। | पञ्चदशीटीका ९। |
| कैमुतिकन्यायः १०। | यद्भारवहनं दुर्ब्बलस्यापि साध्यं तद्भारवहनं सुतरां सबलस्य साध्यम्। १०। | व्यधिकरणधर्म्मावच्छिन्नाभावजगदीशटीका १०। |
| खलेकपोतन्यायः ११। | वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत् पतन्ति। तथैव सर्व्वे युगपत् पदार्थाः परस्परेणान्वयिनो भवन्ति। ११। | सामान्यलक्षणाजगदीशटीका ११। |
| गुडजिह्विकान्यायः १२। | गुडजिह्वासम्बन्धे रसास्वादनमेव फलम्। १२। | भाष्यरत्नप्रभा १२। |
| गोबलीवर्द्दन्यायः १३। | बलीवर्द्दशब्देन महोक्षबोधसम्भवेऽपि गोशब्दपूर्ब्बकबलीवर्द्दशब्दो झटिति बोधार्थकः। १३। | साहित्यदर्पणादयः १३। |
| चालनीन्यायः १४। | चालनीभ्रामणेन तण्डुलादेः स्थानान्तरपतनं तद्वत्। १४। | व्याप्तिपञ्चके जगदीशः १४। |
| तृणारणिमणिन्यायः १५। | तृणारणिमणीनामेकमात्रजन्यवह्नौ व्यभिचारभिया नैकधर्म्मावच्छिन्नं प्रति कारणत्वं किन्तु वह्निनिष्ठकार्य्यतावच्छेदकत्रयमवलम्ब्य कार्य्यकारणभावत्रयम्। १५। | बाधग्रन्थटीका १५। |
| दग्धपत्रन्यायः १६। | पत्राणां दग्धानामपि पूर्ब्बाकारेणावस्थानज्ञानमात्रं न तु वस्तुतः पत्रत्वम्। १६। | वेदान्तभाष्यटीका १६। |
| दण्डचक्रादिन्यायः १७। | घटत्वाद्येकधर्म्मावच्छिन्नं प्रति दण्डचक्रादीनां कारणत्वम्। १७। | परामर्शमथुरानाथटीका १७। |
| दण्डापूपन्यायः १८। | आखुभक्षितैकदेशं दण्डं पश्यतस्तदेकदेशसंलग्नपिष्टकभक्षणबुद्धिः। १८। | दायभागादयः १८। |
| पङ्कप्रक्षालनन्यायः १९। | पङ्कलेपनपूर्ब्बकक्षालनमपेक्ष्य पङ्कस्यालेपनं श्रेयः। १९। | अवयवस्य गादाधरी टीका १९। |
| मणिमन्त्रादिन्यायः २०। | दाहं प्रति जलस्य प्रतिबन्धकत्वं वह्निनाशकतया यौक्तिकं मणिमन्त्रादीनान्तु तद्विलक्षणप्रतिबन्धकत्वंस्वातन्त्र्येण। २०। | पक्षताजगदीशटीका २०। |
| राजपुरप्रवेशन्यायः २१। | विशृङ्खलगमनासहिष्णुरक्षकसङ्कुले राजपुरे जनानां श्रेणीरूपेण प्रवेशः। २१। | न्यायशब्दखण्डमथुरानाथटीका२१ |
| लूतातन्तुन्यायः २२। | लूता सूत्रमुत्पाद्य जालं रचयति संहरति च तद्वत्। २२। | वेदान्तसारटीका २२। |
| विशेष्यविशेषणन्यायः २३। | भूतले आदौ केवलघटो विशेषणं ततस्तत्र घटे जलं विशेषणं न तु जलविशिष्टघट एवादौ विशेषणम्। २३। | सामान्यलक्षणामथुरानाथटीका २३। |
| वीचीतरङ्गन्यायः २४। | वीचीजनितस्तरङ्गस्तज्जनितोऽपितरङ्ग इति क्रमेण तरङ्गोत्पत्तिः। २४। | भाषापरिच्छेदः २४। |
| बीजाङ्कुरन्यायः २५। | | कुसुमाञ्जलिटीकादयः २५। |
| शङ्खवेलान्यायः २६। | | मलमासतत्त्वादयः २६। |
| शतपत्रभेदन्यायः २७। | | प्रत्यक्षखण्डमथुरानाथटीका२७। |
| शृङ्गग्राहितान्यायः २८। | | अवच्छेदकत्वनिरुक्तेर्जागदीशी टीका २८। |

| | | |
|---|---|---|
| | आदौ बीजं ततोऽङ्कुरः किमादावङ्कुरस्ततो बीजमित्यनिर्णयेन बीजाङ्कुर-<br>प्रवाहोऽनादिः । २५ ।<br>कस्यचित् शङ्खशब्देनैव वेलाविशेषनिर्णयः । २६ ।<br>उपर्य्युपरिस्थितशतसंख्यकपत्राणां सूच्या युगपद्भेदभ्रमविषयाणामपि<br>वस्तुत एकभेदानन्तरमपरभेदः । २७ ।<br>दुर्वृत्तवृषभादेः प्रथमतः कौशलेनैकशृङ्गग्रहणं पश्चादपरशृङ्ग-<br>ग्रहणम् । २८ । | |

सन्दंशप्रापितन्यायः २९ ।
सव्वपिक्षान्यायः ३० ।
सूचीकटाहन्यायः ३१ ।
स्थविरलगुडन्यायः । ३२ ।

सन्दंशः साँडाशी यस्य प्रसिद्धिः । यथा तेनोभयपार्श्वधारणेन वस्तु-प्राप्तिस्तथा । तथा हि ।
अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।
पुरी द्वारवती चैव सप्तैता मोक्षदायिकाः ॥
इत्यत्र काश्याः पुरत्रयपाठानन्तरं पुरत्रयपाटपूर्ब्बञ्च पठितत्वेन तदितरषट्पुराणि काशीप्रापकाणि । २९ ।
बहुषु निमन्त्रितेषु एकस्मिन्नागतेऽपि भोज्यं न दीयते सर्व्वानपेक्षते तद्वत् । ३० ।
स्वल्पश्रमसाध्यसूचीनिर्म्माणानन्तरं बहुश्रमसाध्यकटाहनिर्म्माणम् । ३१ ।
बृद्धहस्तस्थयष्टिः सहसा लक्ष्यस्थाने क्वचित् पतति क्वचिन्न पतति तद्वत् । ३२ ।

काशीखण्डटीका २९ ।
भाष्यरत्नप्रभा ३० ।
कलापव्याकरणानन्दलहरीटीका-दयः ३१ ।
कलापटीका । ३२ ।

(यदि च न्यायवेदान्तसाङ्ख्यपातञ्जलप्रभृत्या-स्तिकदर्शनानां साक्षात्पारम्पर्य्येणैकमात्रा-नन्तविश्वब्रह्माण्डस्योदयस्थितिलयकारणं एको-ऽद्वितीयः सर्व्वपुषार्थस्वरूपः सनातनपुरुषः सर्व्वशक्तिमान् परमेश्वरः परमात्मैव प्रतिपाद्यः तत्रापि चार्व्वाकादिविपक्षमतनिराकरणेन जगत्कारणतयेश्वरस्य संस्थापनात् न्यायदर्शन-स्यैव सर्व्वप्राधान्यसिद्धिः । आत्मतत्त्वज्ञानोत्-पादनाय साक्षादुपयोगितया समस्तश्रुतिमीमां-सिततया च पुराणादिशास्त्रेषु वेदान्तस्य भूयसी-प्रशंसादर्शनाच्च तस्यैव दर्शनस्य मुख्यत्वमायाति चेत् न अतीवसूक्ष्मतमब्रह्मतत्त्वनिरूपकजगत् पूज्यवेदान्तशास्त्रे कदापि कस्यापि विषयभोग-कलुषितबुद्धिपरिमार्ज्जकन्यायदर्शनबोधादृते प्रवे-शानधिकारात् । अतो नितरामेव सर्व्वेभ्योऽस्यैव गौरवमभ्युपजग्मिरे तार्किकाः । वस्तुतस्तु सर्व्वे ष्वास्तिकदर्शनेषु न्यायदर्शनमेव सर्व्वोच्छ्र्यसिंहा-सनमारोढुमर्हतीति सर्व्वेषां प्रेक्षावतां परा-मर्शः । विशेषतः चार्व्वाकादिदुष्टमतखण्डनपूर्ब्बक मोक्षस्वरूपस्थापनायेश्वरसत्तासंस्थापनाय चैक-मात्रन्यायदर्शनमेवालं नत्वन्यत् । एतच्च सत्यं नवेति प्रतिपादनाय श्रीमन्माधवाचार्य्यसङ्कलित सर्व्वदर्शनसारसंग्रहग्रन्थान्तर्गताक्षपाददर्शन-शास्त्रादेव समुद्धृत्य दर्शयिष्यामः । तत्र प्रथमतः ईश्वरसंस्थापनं यथा, --
“नन्वीश्वरसद्भावे किं प्रमाणं प्रत्यक्षमनुमान-मागमो वा न तावदत्र प्रत्यक्षं क्रमते रूपादि-रहितत्वेनातीन्द्रियत्वात् नाप्यनुमानं तद्ब्याप्ति-लिङ्गाभावात् नागमः विकल्पासहत्वात् किं नित्योऽवगमयत्यनित्योवा । आद्ये अपसिद्धान्ता-पातः द्वितीये परस्पराश्रयापातः । उपमाना-दिकमशक्यशङ्कं नियतविषयत्वात् । तस्मादीश्वरः शशविषाणायते इति चेत्तदेतन्न चतुरचेतसां चेतसि चमत्कारमाविष्करोति । विवादास्पदं नगमागरादिकं सकर्त्तृकं कार्य्यत्वात् कुम्भवत् । न चायमसिंद्धो हेतुः सावयवत्वेन तस्य सुसाधन-त्वात् । ननु किमिदं सावयवत्वं अवयवसं योगित्वं अवयवसमवायित्वं वा नाद्यः गगनादौ व्यभि-चारात् न द्वितीयः तन्तुत्वादावनैकान्त्यात् । तस्मादनुपपन्नमिति चेन्मैवं वादीः समवेतद्रव्यत्वं सावयवत्वमिति निरुक्तेर्वक्तुं शक्यत्वात् । अवा-न्तरमहत्त्वेन वा कार्य्यत्वानुमानस्य सुकरत्वात् । नापि विरुद्धो हेतुः साध्यविपर्य्ययव्याप्तेरभावात् नाप्यनैकान्तिकः पक्षादन्यत्र वृत्तेरदर्शनात् नापि कालात्ययोपदिष्टः बाधकानुपलम्भात् नापि सत्-प्रतिपक्षः प्रतिभटादर्शनात् । ननु नगादिक-मकर्तृकं शरीराजन्यत्वात् गगनवदिति चेन्नैतत् परीक्षाक्षममीक्ष्यते नहि कठोरकण्ठीरवस्य कुरङ्गशावः प्रतिभटो भवति अजन्यत्वस्यैव समर्थतया शरीरविशेषणवैयर्थ्यात । तर्ह्यजन्यत्व-मेव साधनमिति चेन्नासिद्धेः नापि सोपाधिकत्व-शङ्काकलङ्काङ्कुरः सम्भवो अनुकूलतर्कसम्भवात् यद्ययमकर्तृकः स्यात् कार्य्यमपि न स्यादिह जगति नास्त्येव तत्कार्य्यं नाम यत्कारकचक्र-मवधीर्य्यात्मानमासादयेदित्येतदविवादम् । तच्च सर्व्वं कर्तृविशेषोपहितमर्य्यादं कर्तृत्वं चेतर-कारकाप्रयोज्यत्वे सति सकलकारकप्रयोक्तृत्व-लक्षणं ज्ञानचिकीर्षाप्रयत्नाधारत्वम् । एवञ्च कर्तृव्यावृत्तेस्तदुपहितसमस्तकारकव्यावृत्तावका-रणककार्य्योत्पादप्रसङ्ग इति स्थूलः प्रमादः । तथा निरुटङ्कि शङ्करकिङ्करेण ।
“अनुकूलेन तर्केण सनाथे सति साधने ।
साध्यव्यापकताभङ्गात्पक्षे नोपाधिसम्भव” इति ।
यदीश्वरः कर्त्ता स्यात्तर्हि शरीरी स्यादित्यादि-प्रतिकूलतर्कजातं जागर्त्तीति चेदीश्वरसिद्ध्य-सिद्धिभ्यां व्याघातात् । तदुदितमुदयनेन ।
“आगमादेः प्रमाणत्वे बाधनादनिषेधनम् ।
अभासत्वे तु सैव स्यादाश्रयासिद्धिरुद्धतेति ॥”
न च विशेषविरोधः शक्यशङ्कः ज्ञातत्वा-ज्ञातत्वविकल्पपराहतः स्यात् । तदेतत् पर-मेश्वरस्य जगन्निर्म्माणे प्रवृत्तिः किमर्था स्वार्था परार्था वा आद्येऽपीष्टप्राप्त्यर्था अनिष्टपरि-

द्रम् । अथ मन्येथाः शरीरादिवदात्मापि दुःख-
हेतुत्वादुच्छेद्य इति तन्न सङ्गच्छते विकल्पानुप-
पत्तेः किमात्मा ज्ञानसन्तानो विवक्षितः तदति
रिक्तो वा प्रथमे न विप्रतिपत्तिः कः खल्वनुकूल-
माचरति प्रतिकूलमाचरेत् द्वितीये तस्य नित्यत्वे
निवृत्तिरशक्यविधानैव प्रवृत्यनुपपतिश्चाधिकं
दूषणं न खलु कश्चित् प्रेक्षावानात्मनस्तु कामाय
सर्व्वं प्रियं भवतीति सर्व्वतः प्रियतमस्यात्मनः
समुच्छेदाय प्रयतते सर्व्वो हि प्राणी मुक्त इति
व्यवहरति । ननु धर्म्मिनिवृत्तौ निर्म्मलज्ञानोदयो
महोदय इति विज्ञानवादिवादे सामग्र्यभावः
सामानाधिकरण्यानुपपत्तिश्चभावनाचतुष्टयं
हि तस्य कारणमभीष्टं तच्च क्षणभङ्गपक्षे स्थिरै-
काधारासम्भवात् लङ्घनाभ्यासादिवदनासादित
प्रकर्षं न स्फटमभिज्ञानमभिजनयितुंप्रभवति
सीपप्लवस्य ज्ञानसन्तानस्य बद्धत्वे निरुपप्लवस्य
च मुक्तत्वे यो बद्धः स एव मुक्त इति सामा-
नाधिकरण्यं न सङ्गच्छते । आवरणमुक्तिर्मुक्ति-
रिति जैनजनाभिमतोऽपि मागो न निर्गतो
निर्गलः अङ्ग भवान् पृष्टो व्याचष्टां किमावरणं
धर्म्माधर्म्मभ्रान्तय इति चेत् इष्टमेव । अथ देह-
मेवावरणं तथाच तन्निवृत्तौ पञ्जरान्मुक्तस्य
शुकस्येवात्मनः सततोदूर्ध्वगमनं मुक्तिरिति चेत्तदा
वक्तव्यं किमयमात्मा मूर्त्तोऽमूर्त्तो वा । प्रथमे
निरवयवः सावयवो वा निरवयवत्वे निरवयवो
मूर्त्तः परमाणुरिति परमाणुलक्षणापत्या पर-
माणुधर्म्मवदात्मधर्म्माणामतीन्द्रियत्वंप्रसजेत् ।
सावयवत्वे यत् सावयवं तदनित्यमिति प्रतिबन्ध-
बलेनानित्यत्वापत्तौ कृतप्रणाशाकृताभ्यागमौ
निष्प्रतिबन्धौ प्रसरेताम् । अमूर्त्तत्वे गमनमनुप-
पन्नमेव चलनात्मिकायाः क्रियायाः मूर्त्तप्रति-
बन्धात् पारतन्त्र्यं बन्धः स्वातन्त्र्यं मोक्ष इति
चार्व्वाकपक्षेऽपि स्वातन्त्र्यं दुःखनिवृत्तिश्चेद्-
विवाद ऐश्वर्य्यं चेत् सातिशयतया सदृक्षतया च
प्रेक्षावतां नाभिमतम् । प्रकृतिपुरुषान्यत्वख्यातौ
प्रकृत्युपरमे पुरुषस्य स्वरूपेणावस्थानं मुक्ति-
रिति साङ्ख्याख्यातेऽपि पक्षे दुःखोच्छेदोऽभ्यु-
पेयते विवेकज्ञानं पुरुषाश्रयं वेति एतावदव-
शिष्यते तत्र पुरुषाश्रयमिति न श्लिष्यते पुरु-
षस्य कौटस्थ्यात् स्थाननिरोधापातान्नापि
प्रकृत्याश्रयः अचेतनत्वात् तस्याः । किञ्च
षकृतिः प्रवृत्तिस्वभावा निवृत्तिस्वभावा वा
आद्ये अनिर्मोक्षः स्वभावस्यानपायात् द्वितीये
सम्प्रति संसारोऽस्तमियात् । नित्यनिरतिशय-
मुखाभिव्यक्तिर्मुक्तिरिति भट्टसर्व्वज्ञाद्यभिमते-
ऽपि दुःखनिवृत्तिरभिमतैव परन्तु नित्यसुखं
न प्रमाणपद्धतिमध्यास्ते । श्रुतिस्तत्र प्रमाण-
मिति चेन्न योग्यानुपलब्धिबाधिते तदनवकाशा-
दवकाशे वा ग्रावप्लवेपि तथा भावप्रसङ्गात् ।
ननु सुखाभिव्यक्तिर्मुक्तिरिति पक्षं परित्यज्य
दुःखनिवृत्तिरेव मुक्तिरिति स्वीकारः क्षीरं
विहायारोचकग्रस्तस्य सौवीररुचिमनुभवतीति

चेत्तदेतन्नाटकपक्षपतितं त्वद्वच इत्युपेक्ष्यते ।
सुखस्य सातिशयतया प्रत्यक्षतया बहुप्रत्यनीका-
क्रान्ततया साधनप्रार्थनापरिक्लिष्टतया च
दुःखाविनाभूतत्वेन विषानुषक्तमधुवत् दुःखपक्ष-
निक्षेपात् । नन्वेकमनुसन्धित्सतोऽपरं प्रच्यवते
इति न्यायेन दुःखवत् सुखमित्युच्छिद्यत इति
अकाम्योऽयं पक्ष इति चेन्मैवं मंस्थाः सुखसम्पा-
दने दुःखसाधनबाहुल्यानुषङ्गिनियमेन तप्तायः-
पिण्डे तपनीयबुद्ध्या प्रवर्त्तमानेन साम्यापातात्
तथा हि न्यायोपार्ज्जितेषु विषयेषु कियन्तः
सुखखद्योताः कियन्ति दुःखदुर्दिनानि अन्यायो-
पार्ज्जितेषु तु यद्भविष्यति तन्मनसापि चिन्तयितुं
न शक्यमित्येतत् स्वानुभवमप्रच्छादयन्तः सन्तो
विदाङ्कुर्व्वन्तु विदांवरा भवन्तः । तस्मात् परि-
शेषात् परमेश्वरानुग्रहवशाच्छ्रवणादिक्रमेणात्म-
तत्त्वसाक्षात्कारवतः पुरुषधौरेयस्य दुःख-
निवृत्तिरात्यन्तिकी निश्रेयसमिति निरवद्य-
मिति ॥ * ॥
न्यायदर्शनन्तु पूर्ब्बोत्तरविभागभेदेन द्विविधम् ।
पूर्ब्बभागो भगवता महर्षिगोतमेन प्रणीतः
उत्तरभागस्तु भगवता महर्षिकणभुजैव प्रणीतः
पूर्ब्बभागे भगवान् गोतमः जीवनिश्रेयसाधि-
गमाय षोडशपदार्थान् निरूपितवान् तेषां
षोडशपदार्थानां तत्त्वज्ञानादेव निःश्रेयसाधि-
गम इत्युपदिदेशेति । परभागे तु भगवान्
कणादः द्रव्यादिषण्णां पदार्थानां तत्त्वज्ञानादेव
निःश्रेयसं स्यादित्युपदिष्टवान् । तद्यथा, “धर्म्म-
विशेषसूताद् द्रव्यगुणकर्म्मसामान्यविशेषसम-
वायानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञाना-
न्निःश्रेयसमिति ।” परं एष्वेव षट्पदार्थेषु भग-
वता गोतमेनोपदिष्टाः षोडशपदार्थाः सर्व्व
एवान्तर्निवेशिता भगवता कणभुजा । इह पुन-
र्व्विशेषपदार्थस्वीकरणात् लोके वैशेषिकमित्या-
ख्यान्तरेणैव प्रसिद्धमेतद्दर्शनमिति बोध्यम् ॥
अतिरिक्तन्यायनामानियथा, --
१ अग्न्यातपनन्यायः । २ अजाकृपाणीयन्यायः ।
३ अजातपुत्त्रनामकरणन्यायः । ४ अण्ड-
कुक्कुटीन्यायः । ५ अत्यन्तं बलवन्तोऽपि पौर-
जानपदा जना इतिन्यायः । ६ अदग्धदहन-
न्यायः । ७ अध्यारोपापवादन्यायः । ८ अन-
धीते महाभाष्ये इतिन्यायः । ९ अनन्तरस्य
विधिर्व्वा भवति प्रतिषेधो वेतिन्यायः । १० अन्ते
या मतिः सा गतिरितिन्यायः । ११ अन्तेरण्डा-
विवाहश्चेदादावेव कुतो न स इतिन्यायः । १२
अन्धगजन्यायः । १३ अन्धचटकन्यायः । १४
अन्धदर्पणन्यायः । १५ अन्धस्येवान्धलग्नस्य विनि-
पातः पदे पदे इतिन्यायः । १६ अन्यभुक्त-
न्यायः । १७ अपराह्णच्छायान्यायः । १८ अप-
सारिताग्निभूतलन्यायः । १९ अपस्थानं तु
गच्छन्तं सोदरोऽपि विमुञ्चति इतिन्यायः । २०
अब्भक्षकन्यायः । २१ अभाण्डलाभन्यायः ।
२२ अरण्यरोदनन्यायः । २३ अर्के चेन्मधु विन्देत

किमर्थं पर्व्वतं व्रजेदितिन्यायः । २४ अर्द्ध-
जरतीन्यायः । २५ अर्द्धं त्यजति पण्डितन्यायः ।
२६ अर्द्धवैशसन्यायः । २७ अवश्यापेक्षितानपे
क्षितयोरितिन्यायः । २८ अश्मलोष्ट्रन्यायः । २९
अश्वतरीगर्भन्यायः । ३० अश्वभृत्यन्यायः । ३१
अस्नेहदीपन्यायः । ३२ अहिकुण्डलन्यायः ।
३३ अहित्रिपुत्त्र इतिन्यायः । ३४ अहिनकुल-
न्यायः । ३५ अहिमुक्कैवर्त्तन्यायः । ३६ आकाशा-
परिच्छन्नत्वन्यायः । ३७ आदावन्ते वेतिन्यायः ।
३८ आभाणकन्यायः । ३९ आयुर्घृतमितिन्यायः ।
४० आषाढवातन्यायः । ४१ इक्षुरसन्यायः ।
४२ इक्षुविकारन्यायः । ४३ इच्छेष्यमाणयोः
समभिव्याहारे इष्यमाणस्यैव प्राधान्यमिति-
न्यायः । ४४ इषुवेगक्षयन्यायः । ४५ उत्पाटित-
दन्तनागन्यायः । ४६ उदकनिमज्जनन्यायः ।
४७ उपजनिष्यमाणनिमित्तोऽप्यपवादोजात-
निमित्तमप्युत्सर्गं बाधते इतिन्यायः । ४८
उपजीव्योपजीवकन्यायः । ४९ उपपन्नधम्मो
विकरोति हि धर्म्मिणमितिन्यायः । ५० उप-
षासाद्वरं भिक्षेतिन्यायः । ५१ उभयतः पाश-
रज्जुन्यायः । ५२ उषरवृष्टिन्यायः । ५३ उष्ट्र-
लगुडन्यायः । ५४ ऋजुमार्गेण सिध्यतोऽर्थस्य
वक्रेण साधनायोग इतिन्यायः । ५५ एकत्र
निर्णीतः शास्त्रार्थः अन्यत्रापि तथेतिन्यायः ।
५६ एकदेशविकृतमनन्यवदितिन्यायः । ५७
एकसन्धित्सतोऽपरं प्रच्यवते इतिन्यायः । ५८
एकाकिनी प्रतिज्ञेतिन्यायः । ५९ एकामसिद्धिं
परिहरतो द्वितीया आपद्यते इतिन्यायः ।
६० कण्टकन्यायः । ६१ कण्ठचामीकरन्यायः ।
६२ कदम्बकुसुमन्यायः । ६३ करस्थविल्वन्यायः ।
६४ करिवृं हितन्यायः । ६५ कांस्यभोजिन्यायः ।
६६ काकतालीयन्यायः । ६७ काकदधिघातक-
न्यायः । ६८ काकदन्तपरीक्षान्यायः । ६९
काकाक्षिन्यायः । ७० कामनागोचरत्वेन शब्द-
बोध एव शब्दसाधनतान्वय इतिन्यायः । ७१
कारणगुणक्रमन्यायः । ७२ कार्य्येण कारण-
संप्रत्ययः इतिन्यायः । ७३ कालनाशे कार्य्यनाश-
न्यायः । ७४ किमज्ञानस्य दुष्करमितिन्यायः ।
७५ कीटभृङ्गन्यायः । ७६ कुक्कुटध्वनिन्यायः ।
७७ कुम्भीधान्यन्यायः । ७८ कुशकाशावलम्बन-
न्यायः । ७९ कूपखानकन्यायः । ८० कूपन्यायः ।
८१ कूपमण्डूकन्यायः । ८२ कृताकृतप्रसङ्गो यो
विधिः स नित्य इतिन्यायः । ८३ कृते कार्य्ये किं
मुहूर्त्तप्रश्नेन इतिन्यायः । ८४ कृदभिहितो
भावो द्रव्यवत् प्रकाशते इतिन्यायः । ८५ कोष्ठ-
पालन्यायः । ८६ कौण्डिन्यन्यायः । ८७ कौन्तेय-
राधेयन्यायः । ८८ क्रिया हि विकल्प्यते न
वस्त्वितिन्यायः । ८९ खलमैत्रीन्यायः । ९०
खादकघातकन्यायः । ९१ गजघटान्यायः । ९२
गजभुक्तकपित्थन्यायः । ९३ गड्डलिकाप्रवाह-
न्यायः । ९४ गणपतिन्यायः । ९५ गर्द्दभा-
रामगणनान्यायः । ९६ गले पादुकान्यायः ।

९७ गुणोपसंहारन्यायः । ९८ गोक्षीरं श्वदन्तै-
र्धृतमितिन्यायः । ९९ गोबलीवर्द्दन्यायः । १००
गोमयपायसन्यायः । १०१ गोमहिषादिन्यायः ।
१०२ घटकुटीप्रपातन्यायः । १०३ घटप्रदीप-
न्यायः । १०४ घुणाक्षरन्यायः । १०५ चक्र-
अमणन्यायः । १०६ चतुर्व्वेदविन्न्यायः । १०७
चम्पकपटवासन्यायः । १०८ चर्म्मतन्तौ महिषीं
हन्तीतिन्यायः । १०९ चितामृतन्यायः । ११०
चित्रपटन्यायः । १११ चित्राङ्गनान्यायः । ११२
चित्रानलन्यायः । ११३ चिन्तामणिं परित्यज्य
काचमणिग्रहणन्यायः । ११४ चौरापराधात्
माण्डव्यनिग्रहन्यायः । ११५ जलतुम्बिकान्यायः ।
११६ जलमन्थनन्यायः । ११७ जलानयनन्यायः ।
११८ जलौकान्यायः । ११९ जामात्रर्थं क्लिप्तस्य
सूपादेरतिथ्युपकारकत्वमिति न्यायः । १२० ज्ञान-
धर्म्मिण्यभ्रान्तप्रकारे तु विपर्य्यय इति न्यायः ।
१२१ ज्ञानादेर्निष्कर्षवदुत्कषोऽप्यङ्गीकार्य्य इति-
न्यायः । १२२ ज्योतिर्न्यायः । १२३ तण्डुलन्यायः ।
१२४ तत्तादृगवगम्यते इतिन्यायः । १२५ तद-
भिन्नत्वमितिन्यायः । १२६ तदागमेऽपि दृश्यते
इतिन्यायः । १२७ तप्तमाषकोद्धरणन्यायः । १२८
तमःप्रकाशन्यायः । १२९ तरतमभावापन्नमिति-
न्यायः । १३० तामसं परिवर्ज्जयेदितिन्यायः । १३१
तालसर्पन्यायः । १३२ तिर्य्यगधिकरणन्यायः ।
१३३ तुलोन्नमनन्यायः । १३४ तुष्यतु दुर्ज्जन इति-
न्यायः । १३५ त्यजेदेकं कुलस्यार्थे इतिन्यायः । १३६
त्यज्या दुस्तटिनीतिन्यायः । १३७ दग्धरसना-
न्यायः । १३८ दग्धेन्धनवह्निन्यायः । १३९ दण्ड-
सर्पमारणन्यायः । १४० दधिपयसि प्रत्यक्षो
ज्वर इतिन्यायः । १४१ दन्तपरीक्षान्यायः ।
१४२ दानव्यालकटन्यायः । १४३ दाहकदाह्य-
न्यायः । १४४ दुर्ब्बलैरपि बाध्यन्ते पुरुषैः पार्थि-
वाश्रितैरितिन्यायः । १४५ देवताधिकरणन्यायः ।
१४६ देवदत्तहन्तृहतन्यायः । १४७ देवदत्ता-
पुत्रन्यायः । १४८ देहलीदीपन्यायः । १४९
देहाधोमुखत्वन्यायः । १५० धटारोहणन्यायः ।
१५१ धर्म्मकल्पनान्यायः । १५२ धर्म्माधर्म्म-
न्यायः । १५३ धर्म्मिकल्पनान्यायः । १५४ धान्य-
पललन्यायः । १५५ नष्टाश्वदग्धरथन्यायः । १५६
न हि करकङ्कणदर्शनाय आदशपिक्षेतिन्यायः ।
१५७ न हि दुष्टे अनुपपन्नं नामेतिन्यायः ।
१५८ न हि निन्दा निन्दितुं प्रवर्त्तते अपि तु
विधेयं स्तोतुमितिन्यायः । १५९ न हि प्रत्य-
भिज्ञामात्रेण अर्थसिद्धिरितिन्यायः । १६० न हि
भिक्षुको भिक्षुकमितिन्यायः । १६१ न हि
विवाहानन्तरं वरपरीक्षा क्रियते इतिन्यायः ।
१६२ न हि शाब्दमशाब्देनान्वेतीतिन्यायः ।
१६३ न हि सुतीक्ष्णाप्यसिधारा स्वयमेव छेत्तु-
माहितव्यापारा भवतीतिन्यायः । १६४ नागोष्ट्र-
पतिन्यायः । १६५ नाज्ञातविशेषणा विशिष्ट-
बुद्धिः विशेष्यं संक्रामतीतिन्यायः । १६६ नारि-
केलफलाम्बुन्यायः । १६७ निम्नगाप्रवाहन्यायः ।
१६८ नीरक्षीरन्यायः । १६९ नीलेन्दीवरन्यायः ।
१७० नृपनापितपुत्रन्यायः । १७१ नौनाविक-
न्यायः । १७२ पञ्जरचालनन्यायः । १७३ पट-
न्यायः । १७४ पटे पक्षिन्यायः । १७५ पतन्तमनु-
धावतो बद्धोऽपि गत इतिन्यायः । १७६ पदमप्य-
धिकाभावात् स्मारकात् न विशिष्यत इति-
न्यायः । १७७ परशुग्रहणन्यायः । १७८ परिष-
न्यायः । १७९ पर्व्वताधित्यकान्यायः । १८०
पर्व्वतोपत्यकान्यायः । १८१ पाषाणेष्टिकान्यायः ।
१८२ पिञ्जरमुक्तपक्षिन्यायः । १८३ पिण्डं हित्वा
करं लेढीतिन्यायः । १८४ पिष्टपेषणन्यायः ।
१८५ पुत्रलिप्सया दैवं भजन्त्या भर्त्ताऽपि नष्ट
इतिन्यायः । १८६ पुरस्तादपवादा अनन्तरान्
विधिन् बाधते नेतरानितिन्यायः । १८७ पुष्ट-
लगुडन्यायः । १८८ पूर्ब्बमपवादा निविशन्ते
पश्चादुत्सर्गा इतिन्यायः । १८९ पूर्ब्बात् पर-
बलीयस्त्वन्यायः । १९० प्रकल्प्यापवादविषयं
पश्चादुत्सर्गोऽभिनिविशते इतिन्यायः । १९१
प्रकाशाश्रयन्यायः । १९२ प्रकृतिप्रत्ययार्थयोः
प्रत्ययार्थस्य प्राधान्यमितिन्यायः । १९३ प्रक्षा-
लनाद्धि पङ्कस्य दूरादस्पर्शनमितिन्यायः । १९४
प्रदीपन्यायः । १९५ प्रधानमल्लनिवर्हणन्यायः ।
१९६ प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्य-
पीतिन्यायः । १९७ प्रयोजनमनुद्दिश्य न मन्दो-
ऽपि प्रवर्त्तते इतिन्यायः । १९८ प्रसङ्गपठित-
न्यायः । १९९ प्रासादवासिन्यायः । २०० फल-
वत्सहकारन्यायः । २०१ बध्यघातकन्यायः ।
२०२ बहुच्छिद्रवटप्रदीपन्यायः । २०३ बहुवृका-
कृष्टन्यायः । २०४ बहुराजकपुरन्यायः । २०५
बहूनामनुग्रहो न्याय्य इतिन्यायः । २०६ ब्राह्मण-
परिव्राजकन्यायः । २०७ ब्राह्मणवसिष्ठन्यायः ।
२०८ ब्राह्मणश्रमणन्यायः । २०९ भक्षितेऽपि
लशुने न शान्तो व्याधिरितिन्यायः । २१० भच्छु-
न्यायः । २११ भामतीन्यायः । २१२ भावप्रधान-
माख्यातमितिन्यायः । २१३ भ्वादिन्यायः । २१४
भिक्षुपादप्रसारणन्यायः । २१५ भूलिङ्गपक्षि-
न्यायः । २१६ भूशैत्योष्णन्यायः । २१७ भैरवन्यायः ।
२१८ भ्रमरन्यायः । २१९ मक्षिकान्यायः ।
२२० मज्जनोन्मज्जनन्यायः । २२१ मण्डूकप्लुति-
न्यायः । २२२ मत्स्यकण्टकन्यायः । २२३
मरणाद्वरो व्याधिरितिन्यायः । २२४ मल्लग्राम-
न्यायः । २२५ महिषीप्रसवोन्मुखीतिन्यायः ।
२२६ मात्स्यन्यायः । २२७ मुञ्जादिष्विकान्यायः ।
२२८ मूकभयेन कथात्यागन्यायः । २२९ मूर्ख-
सेवनन्यायः । २३० भूषासिक्तताम्रन्यायः ।
२३१ मृगभयेन शस्यानाश्रयणन्यायः । २३२
मृगवागुरान्यायः । २३३ मृतमारणन्यायः ॥
२३४ यः कारयति स करोत्येवेतिन्यायः ।
२३५ यः कुरुते स भुङ्क्ते इतिन्यायः । २३६
यत् कृतकं तदनित्यमितिन्यायः । २३७ यत्परः
शब्दः स शब्दार्थ इतिन्यायः । २३८ यत्प्रायः
श्रूयते यादृक् तत्तादृगवगम्यते इतिन्यायः ।
२३९ यत्रोभयोः समो दोष इतिन्यायः । २४०
यथासंख्यन्यायः । २४१ यदर्था प्रवृत्तिः तदर्थः ।
प्रतिषेध इतिन्यायः । २४२ यद्विवाहगीत-
गानमितिन्यायः । २४३ यादृशं मुखं तादृशं
चपेटमितिन्यायः । २४४ यादृशो यक्षस्तादृशो
बलिरितिन्यायः । २४५ यस्याज्ञानं भ्रमस्तस्य
भ्रातः सम्यक् च वेद स इतिन्यायः । २४६
यावच्छिरस्तावच्छिरोव्यथेतिन्यायः । २४७ येन
उत्क्रम्यते येन च उपसंह्रियते स वाक्यार्थ
इतिन्यायः । २४८ येन चाप्राप्ते यो विधि-
रारभ्यते स तस्य बाधको भवति इतिन्यायः ।
२४९ योजनप्राप्यायां कावेर्य्यां मल्लबन्धनन्यायः ।
२५० रक्तपटन्यायः । २५१ रज्जसर्पन्यायः ।
२५२ रथवडवान्यायः । २५३ रश्मितृणादि-
न्यायः । २५४ राजपुत्रव्याधन्यायः । २५५
राजसं तामसञ्चेतिन्यायः । २५६ रासभरटित-
न्यायः । २५७ रूढिर्योगमपहरतीतिन्यायः ।
२५८ रेखागवयन्यायः । २५९ रोगिन्यायः ।
२६० लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिरिति-
न्यायः । २६१ लाङ्गल्जीवनमितिन्यायः । २६२
लोहचुम्बकन्यायः । २६३ लौहाग्निन्यायः ।
२६४ वकबन्धनन्यायः । २६५ वरगोष्ठीन्यायः ।
२६६ वरघाताय कन्यावरणमितिन्यायः । २६७
वस्तूनि मानान्यपेक्ष्य प्रयोजनानीतिन्यायः ।
२६८ वह्निधुमन्यायः । २६९ वह्निन्यायः । २७०
वाजिमन्दुरान्यायः । २७१ वातादिन्यायः ।
२७२ वायुभक्षकन्यायः । २७३ वायुशैत्योष्ण
म्यायः । २७४ विधिनिषेधौ सति विशेषबाधे
विशेषणमुपसंक्रामेत इतिन्यायः । २७५ विधेयं
हि स्तूयते वस्त्वितिन्यायः । २७६ विपरीतं
बलाबलमितिन्यायः । २७७ विल्वखल्लाटन्यायः ।
२७८ विवाह प्रवृत्तभृत्यन्यायः । २७९ विशिष्ट-
वृत्तेरितिन्यायः । २८० विशिष्टस्य वैशिष्ट्य-
मितिन्यायः । २८१ विषं मृत्युरितिन्यायः । २८२
विषभक्षणन्यायः । २८३ विषवृक्षोऽपि संवर्द्ध्य
स्वयं छेत्तुमसाम्प्रतमितिन्यायः । २८४ वृक्षप्रक-
म्पनन्यायः । २८५ वृद्धकुमारीवाक्यन्यायः ।
२८६ वृद्धिमिष्टवतो मूलं विनष्टमितिन्यायः ।
२८७ वृश्चिकीगर्भन्यायः । २८८ वैशे-
ष्यात्तु तद्वाद इतिन्यायः । २८९ व्यञ्जक-
व्यङ्ग्यन्यायः । २९० व्याघ्रीक्षीरन्यायः । २९१
व्रणशोधनाय शस्त्रग्रहणमितिन्यायः । २९२
व्रीहिबीजन्यायः । २९३ शक्तिः सहकारिणीति
न्यायः । २९४ शवोद्वर्त्तनन्यायः । २९५ शाखा-
चन्द्रन्यायः । २९६ शालिसमृद्धौ कोद्रवनाशन-
न्यायः । २९७ शाब्दी ह्याकाङ्क्षा शब्देनैव
पूरणीयेतिन्यायः । २९८ शिरोवेष्टनेन नासिका-
स्पर्श इतिन्यायः । २९९ शैलुषीन्यायः । ३००
श्यालशुनकन्यायः । ३०१ श्वःकर्त्तव्यमद्य कुर्व्विति-
म्यायः । ३०२ श्वपुच्छोन्नामनन्यायः । ३०३
सच्छिद्रघटाम्बुन्यायः । ३०४ सति बोधे न जाना-
तीतिन्यायः । ३०५ सन्दिग्धस्य सन्दिग्धं स

प्रयोजनं चेत् विचारमर्हतीतिन्यायः । ३०६ समुद्रवृष्टिन्यायः । ३०७ सम्भवत्येकवाक्यत्वे वाक्यभेदो न चेष्यते इतिन्यायः । ३०८ सर्व्वं वाक्यं साधारणमितिन्यायः । ३०९ सर्व्वं कार्य्यं सकारणकमितिन्यायः । ३१० सर्व्वविशेषणं साधारणमितिन्यायः । ३११ सर्व्वशास्त्राप्रत्यय-मेकं कर्म्मेतिन्यायः । ३१२ साक्षात्प्रकृत्तमिति-न्यायः । ३१३ साधुमैत्रीन्यायः । ३१४ सार्व्व-जनीनतुल्यायव्ययन्यायः । ३१५ सावकाशनिर-वकाशयोर्निरवकाशो बलीयानितिन्यायः । ३१६ सिंहमृगन्यायः । ३१७ सिंहावलोकन्यायः । ३१८ सुतजनिमृतिन्यायः । ११९ सुभगा-भिक्षुकन्यायः । ३२० सुन्दोपसुन्दन्यायः । ३२१ सूत्रसाटिकान्यायः । ३२२ सोपानारोहण-न्यायः । ३२३ स्तनन्धयन्यायः । ३२४ स्थाली-पुलाकन्यायः । ३२५ स्थावरजङ्गमविषन्यायः । ३२६ स्थूणानिखननन्यायः । ३२७ स्थूलारुन्धती-न्यायः । ३२८ स्फटिकलौहित्यन्यायः । ३२९ स्वकरकुचन्यायः । ३३० स्वपक्षहानिकर्त्तृत्वात् स्वकुलाङ्गारतां गत इतिन्यायः । ३३१ स्वप्न-व्याघ्रन्यायः । ३३२ स्वशिशुमपि चुम्बन्तमिति न्यायः । ३३३ स्वामिभृत्यन्यायः । ३३४ हस्ता-मलकन्यायः । इति श्रीरामदयालुशिष्यरघु-नाथेन विरचितो लौकिकन्यायसंग्रहः ॥)

**न्यायसारिणी**, स्त्री, (न्यायं सरतीति । सृ + णिनि + ङीप् ।) युक्तिपूर्ब्बककर्म्मकारिणी तत्-पर्य्यायः । लुण्ठी २ । इति त्रिकाण्डशेषः ॥

**न्यायी**, [न्] त्रि, (न्यायोऽस्यास्तीति । न्याय + इनिः ।) न्यायवान् । न्यायोऽस्यास्तीत्यर्थे इन्-प्रत्ययनिष्पन्नः ॥

**न्याय्यं**, त्रि, (न्यायादनपेतम् । न्याय + “धर्म्म-पथ्यर्थन्यायादनपेते ।” ४ । ४ । ९२ । इति यत् ।) न्यायादनपेतम् । (न्याये भवः । न्याया-दागतो वा । “दिगादिभ्यो यत् ।” ४ । ३ । ५४ । इति यत् ।) न्यायागतधनादिः । इति भरतः ॥ तत्पर्य्यायः । युक्तम् २ औपयिकम् ३ लभ्यम् ४ भजमानम् ५ अभिनीतम् ६ । इत्यमरः । २ । ८ । २५ ॥ क्रमोचितम् ७ । इति शब्दरत्ना-वली ॥ (यथा, मनुः । २ । १५२ । “देवाश्चैतान् समेत्योचुर्न्याय्यं वः शिशुरुक्तवान् ॥”)

**न्यासः**, पुं, (न्यस्यत इति । नि + अस + घञ् ।) उपनिधिः । स्थाप्यद्रव्यम् । इत्यमरः । २ । ९ । ८९ ॥ अस्य विवरणं निक्षेपशब्दे द्रष्टव्यम् ॥ * ॥ विन्यासः । अर्पणम् । यदाह कालिदासः । “पदन्यासैरासीत् कमलपरिपूर्णा वमुमती दृगान्दोलैरिन्दीवरमयमभूदम्बरतलम् । इदं याचे किञ्चिद्विरचय वचः स्मेरमधुरं धरायामप्यास्तां विधुमुखि ! सुधायाः परि-चयः ॥” त्यागः । यथा, श्रीभगवद्गीतायां १८ अध्याये । “काम्यानां कर्म्मणां न्यासं सन्न्यासं कवयो विदुः । सर्व्वकर्म्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥”

काशिकाख्यपाणिनिसूत्रव्याख्यानग्रन्थविशेषः । यथा, माघे । २ । ११२ । “अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना । शब्दविद्येव नो भाति राजनीतिरपस्पशा ॥” सन्न्यासः । यथा, -- “वक्ष्ये विविदिषान्यासं विद्वन्न्यासञ्च भेदतः । हेतू विदेहमुक्तेश्च जीवन्मुक्तेश्च तौ क्रमात् ॥” इति जीवन्मुक्तिप्रथमविवेकः ॥ * ॥ पूजाजपादेः प्राग्विघ्ननाशमन्त्रसिद्ध्याद्यर्थंदेहान्त-र्बहिर्व्वर्णादिविन्यासः । तत्र न्यासकालो यथा, “प्रातःकालेऽथवा पूजासमये होमकर्म्मणि । जपकालेऽपि वा तेषां विनियोगः पृथक् पृथक् । पूजाकाले समस्तं वा कुर्य्यात् साधकसत्तमः ॥” इति योगिनीहृदयम् ॥ * ॥ अथ मातृकान्यासः । अस्य मातृकामन्त्रस्य ब्रह्मऋषिर्गायत्री छन्दो मातृकासरस्वती देवता हलो बीजानि स्वराः शक्तयो लिपि-न्यासे विनियोगः । शिरसि ॐ ब्रह्मणे ऋषये नमः । मुखे ॐ गायत्रीच्छन्दसे नमः । हृदि ॐ मातृकासरस्वत्यै देवतायै नमः । गुह्ये ॐ व्यञ्जनेभ्यो बीजेभ्यो नमः । पादयोः स्वरेभ्यः शक्तिभ्यो नमः । तथा च ज्ञानार्णवे । मातृकां शृणु देवेशि ! न्यसेत् पापनिकृन्तनीम् । ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ॥ देवता भातृकादेवी बीजं व्यञ्जनसञ्चयम् । शक्तयस्तु स्वरा देवि ! षडङ्गन्यासमाचरेत् ॥ ततः षडङ्गन्यासौ । अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः । इं चं छं जं झं ञं ईं तर्ज्जनीभ्यां स्वाहा । उं टं ठं डं ढं णं ऊं मध्यमाभ्यां वषट् । एं तं थं दं धं नं ऐं अनामिकाभ्यां हुम् । ओं पं फं बं भं मं औं कनिष्ठाभ्यां वौषट् । अं यं रं लं वं शं षं सं हं लं क्षं अः करतल-पृष्ठाभ्यां फट् । एवं हृदयादिषु । अं कं खं घं ङं आं हृदयाय नमः । इत्यादि । तथा च ज्ञानार्णवे । अं आं मध्ये कवर्गन्तु इं ईं मध्ये चवर्गकम् । उं ऊं मध्ये टवर्गन्तु एं ऐं मध्ये तवर्गकम् ॥ ओं औं मध्ये पवर्गन्तु बिन्दुयुक्तं न्यसेत् प्रिये । अनुस्वारविसर्गान्तर्यशवर्गौ सलक्षकौ ॥ हृदयन्तु शिरो देवि ! शिखा कवचकं तथा । नेत्रमन्त्रं न्यसेत् ङेऽन्तं नमःस्वाहा क्रमेण तु ॥ वषट् हुं वौषडन्तञ्च फडन्तं योजयेत् प्रिये ! । षडङ्गोऽयं मातृकायाः सर्व्वपापहरः स्मृतः ॥ अथान्तर्मातृकान्यासः । अकारादिषोडशस्वरान् सबिन्दून् षोडशदल-कमले कण्ठमूले न्यसेत् । ककारादिद्वादशवर्णान् सबिन्दून् द्वादशदलकमले हृदये न्यसेत् । डका-रादिदशवर्णान् सबिन्दून् दशदलकमले नाभौ न्यसेत् । वकारादिषड् वर्णान् सबिन्दून् षड्-दलकमले लिङ्गमूले न्यसेत् । वकारादिचतुरो वर्णान् सबिन्दून् चतुर्द्दलकमले मूलाधारे न्यसेत् ।

हक्षवर्णद्वयं सबिन्दुं द्विदलकमले भ्रमध्ये न्यमेत् । तथा च ज्ञानार्णवे । “द्व्यष्टपत्राम्बुजे कण्ठे स्वरान् षोडश विन्यसेत् । द्वादशच्छदहृत्पद्मे कादीन् द्वादश यिन्य सेतु ॥ दशपत्राम्बुजे नाभौ डकारादीन्न्यसेद्दश । षट्पत्रमध्ये लिङ्गस्थे वकारादीन्न्यसेच्च षट् ॥ आधारे चतुरो वर्णान् न्यसेद्वादीन् चतुर्द्दले ॥ हक्षौ भ्रूमध्यगे पद्मे द्विदले विन्यसेत् प्रिये ॥” अगस्त्यसंहितायाम् । “एकैकवर्णमेकैकपत्रान्ते विन्यसेत् प्रिये । एवमन्तः प्रविन्यस्य मनसातो वहिर्न्यसेत् ॥” वैष्णवे तु । “एकैकवर्णमुच्चार्य्य मूलाधाराच्छिरोऽन्तकम् । नमोऽन्तमिति विन्यास आन्तरः परिकीर्त्तितः ॥ अथान्तर्मातृकान्यासो मूलाधारे चतुर्द्दले । सुवर्णाभे वशषसचतुर्व्वर्णविभूषिते ॥ षड्दले वैद्युतनिभे स्वाधिष्ठानेऽनलत्विषि । बभमैर्यवलैर्युक्ते वर्णैः षड्भिश्च सुव्रते । मणिपूरे दशदले नीलजीमूतसन्निभे । डादिफान्तदलैर्युक्ते बिन्दूद्भाषितमस्तकैः ॥ अनाहते द्वादशारे प्रवालरुचिसन्निभे । कादिठान्तदलैर्युक्ते योगिनां हृदयङ्गमे ॥ विशुद्धे षोडशदले धूम्राभे स्वरभूषिते । आज्ञाचक्रे तु चन्द्राभे द्विदले हक्षलाञ्छिते ॥ सहस्रारे हिमनिभे सर्व्ववर्णविभूषिते । अकथादित्रिरेखात्महलक्षत्रयभूषिते ॥ तन्मध्ये परविन्दुञ्च सृष्टिस्थितिलयात्मकम् । एवं समाहितमना ध्यायेन्न्यासोऽयमान्तरः ॥” * ॥ अथ वाह्यमातृकान्यासः । अस्या ध्यानं यथा, -- “पञ्चाशल्लिपिभिर्विभक्तमुखदोःपन्मध्यवक्षःस्थलां भास्वन्मौलिनिबद्धचन्द्रसकलामापीनतुङ्गस्तनीम् । मुद्रामक्षगुणं सुधाढ्यकलसं विद्याञ्च हस्ताम्बुजै-र्विभ्राणां विषदप्रभां त्रिनयनां वाग्देवतामा-श्रये ॥” एवं ध्यात्वा न्यसेत् । तत्राङ्गुलिनियमस्तन्त्रे । “ललाटे नासिकामध्ये विन्यसेन्मुखपङ्कजे । तर्ज्जनी मध्यमानामा वृद्धानामे च नेत्रयोः ॥ अङ्गुष्ठं कर्णयोर्न्यस्य कनिष्ठाङ्गुष्ठकौ नसोः । मध्यास्तिस्रो गण्डयोश्च मध्यमाञ्चोष्ठयोर्न्यसेत् ॥ अनामां दन्तयोर्न्यस्य मध्यमामुत्तमाङ्गके । मुखेऽनामां मध्यमाञ्च हस्तपादेषु पार्श्वयोः ॥ कनिष्ठानामिकामध्यास्तास्तुपृष्ठे च विन्यसेत् । ताः साङ्गुष्ठा नाभिदेशे सर्व्वाः कुक्षौ च विन्यसेत् ॥ हृदये च तलं सर्व्वमंसयोश्च ककुत्स्थले । हृत्पूर्ब्बं हस्तपत्कुक्षिमुखेषु तलमेव च ॥ एतास्तु मातृकामुद्राः क्रमेण परिकीर्त्तिताः । अज्ञात्वा विन्यसेद्यस्तु न्यासः स्यात्तस्य निष्फलः ॥” गौतमीये । “ललाटमुखवृत्ताक्षिश्रुतिघ्राणेषु गण्डयोः । ओष्ठदन्तोत्तमाङ्गास्यदोःपत्सन्ध्यग्रकेषु च ॥

पार्श्वयोः पृष्ठतो नाभौ जठरे हृदयेऽंशके ।
ककुद्यंशे च हृत्पूर्ब्बं पाणिपादयुगे तथा ॥
जठराननयोर्न्यस्येन्मातृकार्णान् यथाक्रमात् ॥”
तद्यथा । अं नमो ललाटे । आं नमो मुखे ।
इं ईं चक्षुषोः । उं ऊं कर्णयोः । ऋं ॠं
नसोः । ऌं ॡं गण्डयोः । एं ओष्ठे । ऐं अधरे ।
ओं ऊर्द्ध्वदन्ते । औं अधोदन्ते । अं ब्रह्मरन्ध्रे ।
अः मुखे । कं दक्षबाहुमूले । खं कुर्परे । गं
मणिबन्धे । घं अङ्गुलिमूले । ङं अङ्गुल्यग्रे । एवं
चं ५ वामबाहुमूलसन्ध्यग्रकेषु । एवं टं ५ दक्षिण-
पादमूलसन्ध्यग्रकेषु । एवं तं ५ वामपादमूल-
सन्ध्यग्रकेषु । पं दक्षिणपार्श्वे । फं वामपार्श्वे ।
बं पृष्ठे । भं नाभौ । मं उदरे । यं हृदि । रं
दक्षबाहुमूले । लं ककुदि । वं वामबाहुमूले ।
शं हृदादिदक्षहस्ते । षं हृदादिवामहस्ते ।
सं हृदादिदक्षपादे । हं हृदादिवामपादे । लं
हृदाद्युदरे । क्षं हृदादिमुखे । सर्व्वत्र नमो-
ऽन्तेन न्यसेत् । तथा च ।
“ओमाद्यन्तो नमोऽन्तो वा सविन्दुर्विन्दुवर्ज्जितः ।
पञ्चाशद्वर्णविन्यासः क्रमादुक्तो मनीषिभिः ॥”
इति भट्टः ॥
अथ संहारमातृकान्यासः ।
तस्या ध्यानं यथा, --
“अक्षस्रजं हरिणपोतमुदग्रटङ्क-
विद्याः करैरविरतं दधतीं त्रिनेत्राम् ।
अर्द्धेन्दुमौलिमरुणामरविन्दरामां
वर्णेश्वरीं प्रणमतस्तनभारनम्राम् ॥”
न्यासस्तु क्षक्राराद्यकारान्तः । यथा । क्षं नमो
हृदादिमुखे इत्यादि ॥ * ॥
अपरञ्च ।
“चतुर्धा मातृका प्रोक्ता केवला विन्दुसंयुता ।
सविसर्गा सोभया च रहस्यं शृणु कथ्यते ॥
विद्याकरी केवला च सोभया भुक्तिदायिनी ।
पुत्त्रदा सविसर्गा तु सविन्दुर्वित्तदायिनी ॥”
विशुद्धेश्वरे ।
“वाग्भवाद्या च वाक्सिद्ध्यै रमाद्या श्रीप्रवृद्धये ।
हृल्लेखाद्या सर्व्वसिद्ध्यै कामाद्या लोकवश्यदा ॥
श्रीकण्ठाद्यानिमान् न्यस्येत् सर्व्वमन्त्रः प्रसीदति ॥”
श्रीविद्यात्वषये नवरत्नेश्वरे ।
“वाग्भवाद्या नमोऽन्ताश्च न्यस्तव्या मातृका-
क्षराः ।
श्रीविद्याविषये मन्त्री वाग्भवाद्यष्टसिद्धये ॥”
यामले ।
“भूतशुद्धिलिपिन्यासौ विना वस्तु प्रपूजयेत् ।
विपरीतफलं दद्यादभक्त्या पूजनं यथा ॥”
सामान्यन्यासे अङ्गुलिनियमो गौतमीये ।
“मनसा विन्यसेन्न्यासान् पुष्पैर्वाथवा मुने ।
अङ्गुष्ठानामिकाभ्यां वा चान्यथा विफलं भवेत् ॥”
विशेषन्यासे तु नायं नियमः ॥ * ॥
अथ पीठन्यासः ।
ॐ आधारशक्तये नमः ॐ प्रकृतये नमः ॐ
कूर्म्माय नमः ॐ अनन्ताय नमः ॐ पृथिव्यै
नमः ॐ क्षीरसमुद्राय नमः ॐ श्वेतद्वीपाय
नमः एवं मणिमण्डपाय कल्पवृक्षाय मणिवेदि-
कायै रत्नसिंहासनाय एतत् सर्व्वन्तु हृदि ।
ततो दक्षिणस्कन्धे ॐ धर्म्माय नमः । वामस्कन्धे
ॐ ज्ञानाय नमः । एवं वामोरौ वैराग्याय ।
दक्षिणोरौ ऐश्वर्य्याय । मुखे अधर्म्माय । वाम-
पार्श्वे अज्ञानाय । नाभौ अवैराग्याय । दक्षिण-
पार्श्वे अनैश्वर्य्याय । सर्व्वत्र प्रणवादिनमोऽन्तेन
न्यसेत् । तथा च शारदायाम् ।
“अंसोरुयुग्मयोर्व्विद्वान् प्रादक्षिण्येन साधकः ।
धर्म्मं ज्ञानञ्च वैराग्यमैश्वर्य्यं क्रमशः सुधीः ॥
मुखपार्श्वनाभिपार्श्वेष्वधर्म्मादीन् प्रकल्पयेत् ॥”
पुनर्हृदि । ॐ अनन्ताय नमः । एवं पद्माय
नमः । अं सूर्य्यमण्डलाय द्वादशकलात्मने नमः ।
उं सोममण्डलाय षोडशकलात्मने नमः । मं
वह्निमण्डलाय दशकलात्मने नमः । सं सत्त्वाय
नमः । रं रजसे नमः । तं तमसे नमः । आं
आत्मने नमः । अं अन्तरात्मने नमः । पं पर-
मात्मने नमः । ह्रीं ज्ञानात्मने नमः । इत्यन्तं
विन्यस्य हृत्पद्मस्य पूर्ब्बादिकेशरेषु तत्तत्-
कल्पोक्तपीठशक्तीर्म्मध्ये पीठमनुञ्च न्यसेत् ।
यथा शारदायाम् ।
“अनन्तं हृदये पद्मं तस्मिन् सूर्य्येन्दुपावकान् ।
एषु स्वस्वकलां न्यस्य नामाद्यक्षरपूर्ब्बकः ॥
सत्त्वादीन् त्रिगुणान् न्यस्य तथैवात्र गुरूत्तमः ।
“आत्मानमन्तरात्मानं परमात्मानमेव च ।
ज्ञानात्मानं प्रविन्यस्य न्यसेत् पीठमनुं ततः ॥”
अथ ऋष्यादिन्यासः ।
ऋषिस्तु ।
“महेश्वरमुखाज्ज्ञात्वा यः साक्षात्तपसा मनुम् ।
संसाधयति शुद्धात्मा स तस्य ऋषिरीरितः ॥
गुरुत्वान्मस्तके चास्य न्यासस्तु परिकीर्त्तितः ।
सर्व्वेषां मन्त्रतत्त्वानां छादनाच्छन्द उच्यते ॥
अक्षरत्वात् पदत्वाच्च मुखे छन्दः समीरितम् ।
सर्व्वेषामेव जन्तूनां भाषणात् प्रेरणात्तथा ॥
हृदयाम्भोजमध्यस्थादेवता तत्र तां न्यसेत् ।
ऋषिच्छन्दोऽपरिज्ञानान्नमन्त्रफलभाग्भवेत् ॥
दौर्ब्बल्यं याति मन्त्राणां विनियोगमजानताम् ॥”
तन्त्रान्तरे ।
“ऋषिं न्यसेन्मूर्द्धिर्न देशे छन्दस्तु मुखपङ्कजे ।
देवतां हृदये चैव बीजन्तु गुह्यदेशके ॥
शक्तिञ्च पादयोश्चैव सर्व्वाङ्गे कीलकं न्यसेत् ॥”
अथाङ्गन्यासः । तत्राङ्गुलिनियमः ।
त्रिद्व्येकदशकद्वित्रिसंख्यया शैलसम्भवे ।
अङ्गुलीनामिति वचनादिति सर्व्वसाधारणम् ॥
यामले ।
“हृदयं मध्यमानामातर्ज्जनीभिः स्मृतं शिरः ।
मध्यमातर्ज्जनीभ्यां स्यादङ्गुष्ठेन शिखा स्मृता ॥
दशभिः कवचं प्रोक्तं तिसृभिर्नेत्रमीरितम् ।
प्रोक्ताङ्गुलीभ्यामस्त्रं स्यादङ्गकॢप्तिरियं मता ॥
तिसृभिस्तर्ज्जनीमध्यमानामाभिः ॥
तर्ज्जनीमध्यमानामा प्रोक्ता नेत्रत्रये क्रमात् ।
यदि नेत्रद्वयं प्रोक्तं तदा तर्ज्जनिमध्यमे ॥”
इति भट्टधृतवचनात् ॥
“हृदयादिषु विन्यस्येदङ्गमन्त्रांस्ततः सुधीः ।
हृदयाय नमः पूर्ब्बं शिरसे वह्निवल्लभा ॥
शिखायै वषडित्युक्तं कवचाय हुमीरितम् ।
नेत्रत्रयाय वौषट् स्यादस्त्राय फडितिक्रमात् ॥
षडङ्गमन्त्रानित्युक्तान् षडङ्गेषु नियोजयेत् ।
पञ्चाङ्गानि मनोर्यत्र तत्र नेत्रमनुं त्यजेत् ॥”
इति शारदावचनम् ॥
वैष्णवे तु ।
“अनङ्गुष्ठा ऋजवो हस्तशाखा
भवेन्मुद्रा हृदये शीर्षके च ।
अधोऽङ्गुष्ठा खलु मुष्टिः शिखायां
करद्वन्द्वाङ्गुलयो वर्म्मणि स्युः ॥
नाराचमुष्ट्युद्धृतबाहुयुग्म-
काङ्गुष्ठतर्ज्जन्युदितो ध्वनिस्तु ।
विश्वग्विशक्ता कथितास्त्रमुद्रा
यत्राक्षिणी तर्ज्जनिमध्यमे च ॥”
शारदायाम् ।
“न्यासक्रमेण देहेषु धर्म्मादीन् पूजयेत्ततः ।
पुष्पाद्यैः पीठमन्वन्तं तस्मिंश्च परदेवताम् ॥”
इति दर्शनात् शरीरे पीठपूजा ।
“अङ्गहीनस्य मन्त्रस्य स्वेनैवाङ्गानि कल्पयेत् ॥”
तथा ब्रह्मयामले ।
“स्वनामाद्यक्षरं बीजं सर्व्वेषामभिधीयते ॥”
अथ व्यापकन्यासः ।
नवधा सप्तधा वापि मूलेन पञ्चधा त्रिधेति
भैरवतन्त्रवचनात् । नवधाकरणे शिरस्तः
पादान्तं पादतः शिरोऽन्तम् । एवं चतुर्धा ।
सप्तधाकरणे तादृशं त्रिधा । पञ्चधाकरणे
तादृशं द्विधा । त्रिधाकरणेऽपि तादृशमेकधा ।
हृदादिमुखान्तन्तु शेषे एकधा सर्व्वत्रैव ।
शतधाकरणे तु तादृशं पञ्चाशद्वारं हृदादि-
मुखान्तं नास्तीति व्यापकन्यासः । इत्यागम-
तत्त्वविलासः ॥ * ॥ नित्यं म्यासकरणफलं
यथा, --
“आगमोक्तन विधिना नित्यं न्यासं करोति यः ।
देवताभावमाप्नोति मन्त्रसिद्धिः प्रजायते ॥
यो न्यासकवचच्छन्दो मन्त्रं जपति तं प्रिये ।
विघ्ना दृष्ट्वा पलायन्ते सिंहं दृष्ट्वा यथा गजाः ॥”
न्यासाकरणे दोषो यथा, --
“अकृत्वा न्यासजालं यो मूढत्वात् प्रजपेन्मनुम् ।
सर्व्वविघ्नैः स बाध्यः स्याद्व्याघ्रैर्म्मृगशिशुर्यथा ॥”
इति तन्त्रसारः ॥ * ॥
एते न्यासाः सामान्यपूजाप्रकरणोक्ताः ।
अन्ये च देवताविशेषे बहवः सन्ति बाहु-
ल्यभिया तेषां प्रमाणादिकमलिखित्वा केवलं
तत्र विष्णुविषये केशवकीर्त्त्यादि १ मूर्त्तिपञ्जर २
तत्त्व ३ भूतिपञ्जर ४ दशाङ्ग ५ पञ्चाङ्ग ६
न्यासाः । शिवविषये श्रीकण्ठादि १ ईशानादि-
पञ्चमूर्त्ति २ मन्त्र ३ मूर्त्ति ४ गोलक ५ सुभ-
गादि ६ भूषण ७ न्यासाः । अन्नपूर्णाविषये

पदन्यासः १ । श्रीविद्याविषये वशिन्यादि १ नव-
योन्यात्मक २ पीठ ३ तत्त्व ४ पञ्चदशी ५
षोडशी ६ संहार ७ स्थिति ८ सृष्टि ९ नाद १०
षोढा ११ गणेश १२ ग्रह १३ नक्षत्र १४
योगिनी १५ राशि १६ त्रिपुरा १७ षोडश-
नित्या १८ कामरति १९ सृष्टिस्थिति २० प्रकट-
योगिनी २१ आयुध २२ न्यासाः । तारा-
विषये रुद्र १ ग्रह २ लोकपाल ३ न्यासाः ।
एतेषां प्रमाणानि तन्त्रसारादौ द्रष्टव्यानि ॥

**न्युङ्खः**, पुं, (न्युङ्ख्यते इति । नि + उङ्ख गतौ +
घञ् ।) सामवेदे नियतप्रणवषट्कम् । दीर्घ-
वानयमिति नयनानन्दः । इत्यमरभरतौ ॥
सम्यक् । मनोज्ञः । इति मेदिनी । खे, २ ॥

**न्युब्जं**, क्ली, (न्युब्जति अधोमुखीभवतीति । नि +
उब्ज + अच् ।) कर्म्मरङ्गफलम् । इति मेदिनी ।
जे, १२ ॥ श्राद्धादिपात्रभेदः । इति शब्दरत्नावली ॥
तथा च गोभिलः । प्रथमे पात्रे संस्रवान् सम-
वनीय पात्रं न्युब्जं कुर्य्यात् पितृभ्यः स्थान-
मसीति । प्रथमे पात्रे पितृपात्रे । संस्रवान्
पितामहादिपञ्चार्घपात्रस्थशेषजलानि । समव-
नीय क्रमेण स्थापयित्वा तत्पात्रस्य प्रपितामह-
पात्रेणाच्छादनमाह शौनकः । प्रपितामह-
पात्रेण पिधाय प्रतिष्ठापयतीति । याज्ञवल्क्ये-
नापि तत्पात्रस्याधःस्थत्वाभिधानात्पात्रा-
न्तरेण पिधानमाक्षिप्तम् । तथा च याज्ञ-
वल्क्यः ।
“दत्त्वार्घ्यं संस्रवांस्तेषां पात्रे कृत्वा विधानतः ।
पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः ॥”
विधानतः यथापूर्ब्बं स्थापितं क्रमेण । तेन
प्रपितामहपात्रेणाधःकृत्तं पितृपात्रं ऊर्द्ध्वमुख-
मवस्थितं न्युब्जं करोति । तन्न्यासश्च । पितृ-
पात्रे निधायाथ न्युब्जमुत्तरतो न्यसेत् । इति
मत्स्यपुराणवचने न्यसेदित्यत्राख्यातोपस्थापित-
कर्त्तुर्व्वामिपार्श्वे कर्त्तव्यः । इति श्राद्धतत्त्वम् ॥

**न्युब्जः**, पुं, (नि + उब्ज + अच् ।) दर्भमयस्रुक् ।
इति मेदिनी । जे, ११ ॥ (यथा, --
“शयनासनयानानामुत्तानानान्तुदर्शनम् ।
न्युब्जानामितरेषाञ्च पात्रादीनामशोभनम् ॥”
इति वाभटे शारीरस्थाने । ६ । २३ ॥)
कुशः । स्रुक् । इति हेमचन्द्रः ॥

**न्युब्जः**, त्रि, (न्युब्जति अधोमुखीभवतीति । नि +
उब्ज + अच् ।) कुब्जः । अधोमुखः । इति
मेदिनी । जे, १२ ॥ (यथा, हरिवंशे । ६१ । ६ ।
“स तत्रैकेन पादेन शकटं पर्य्यवर्त्तयत् ।
न्युब्जं पयोधराकाङ्क्षी चकार च रुरोद च ॥”)
रुजा भुग्नः । इत्यमरः । २ । ६ । ६१ ॥
रोगेण वक्रीकृतपृष्ठाधोमुखपुरुषादिः । इति
भरतः ॥

**न्युब्जखड्गः**, पुं, (न्युब्जः खड्गः ।) कुब्जखड्गः ।
वाँका तरवार इति भाषा ॥ तत्पर्य्यायः ।
कटीतलः २ । इति त्रिकाण्डशेषः ॥

**न्यूनं**, त्रि, (न्यूनयति । नि + ऊन परिहाणे +
अच् ।) गर्ह्यम् । (यथा, महाभारते । १३ ।
१४३ । ४६ ।
“एतैः कर्म्मफलैर्द्देवि ! न्यूनजातिकुलोद्भवः ।
शूद्रोऽप्यागमसम्पन्नो द्विजो भवति संस्कृतः ॥”)
ऊनम् । इत्यमरः । ३ । ३ । १२७ ॥ (यथा,
मनुः । ८ । २०३ ।
“नान्यदन्येन संसृष्टरूपं विक्रयमर्हति ।
न चासारं न च न्यूनं न दूरे न तिरोहितम् ॥”)

**न्यूनपञ्चाशद्भावः**, पुं, (न्यूनपञ्चाशतः ऊनपञ्चा-
शब्दायूनां भावो यत्र ।) ऊनपञ्चाशद्भावः ।
पागल इत्यर्थः । यथा, --
“उदीरितेन्द्रियो धाता वीक्षाञ्चक्रेऽयदात्मजाम् ।
तदैव न्यूनपञ्चाशद्भावा जाताः शरीरतः ॥”
इति कालिकापुराणे द्वितीयाध्यायः ॥

**न्रस्थिमाली**, [न्] पुं, (नृणामस्थिमाला न्रस्थि-
माला सा अस्त्यस्येति । इनिः ।) शिवः । इति
त्रिकाण्डशेषः ॥ नरास्थिमालाविशिष्टे त्रि ॥

**शब्दकल्पद्रुमः । तृतीयकाण्डम् ।**

**प**

**प**, पकारः । स तु पञ्चमवर्गस्य प्रथमो व्यञ्जनस्यैक-

विंशतितमो वर्णः । अस्योच्चारणस्थानं ओष्ठः ।
इति व्याकरणम् ॥ (तथा च शिक्षायाम् ।
"कण्ठ्यावहाविचुयशास्तालव्याओष्ठजावुपू" ॥
अस्योच्चारणे आभ्यन्तरप्रयत्नः । ओष्ठेन सह
जिह्वाग्रस्य स्पर्शः ॥) तत्पर्य्यायः । लोहितः २
पार्श्वः ३ शूरः ४ । इति रुद्रयामले वर्णाभि-
धानम् ॥ अस्य तत्त्वं यथा, --
"अतः परं प्रवक्ष्यामि पकाराक्षरमव्ययम् ।
चतुर्व्वर्गप्रदं वर्णं शरच्चन्द्रसमप्रभम् ॥
पञ्चदेवमयं वर्णं स्वयं परमकुण्डली ।
पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं सदा ॥
त्रिगुणावहितं वर्णमात्मादितत्त्वसंयुतम् ।
महामोक्षप्रदं वर्णं हृदि भावय पार्व्वति !" ॥
इति कामधेनुतन्त्रे ५ पटलः ॥
(वङ्गभाषायां) अस्य लेखनक्रमो यथा, --
"कुञ्चिता वामरेखायाः कोणाद्दक्षिणतोऽपरा ।
कुञ्चिता सापि विज्ञेया मात्रा वामोद्गता तथा ॥
शम्भुर्ब्रह्मा भगवती क्रमशस्तासु तिष्ठति" ॥
इति वर्णोद्धारतन्त्रम् ॥
अस्योत्पत्तिप्रकारो यथा, --
"ऋटुरेफषकारञ्च मूर्द्धगो दन्तगस्तथा ।
लृतवर्गलसानोष्ठ्यानुपूपध्मानस्रंज्ञकान्" ॥
इति प्रपञ्चसारः ॥ तस्य ध्यानं यथा, --
"विचित्रवसनां देवीं द्विभुजां पङ्कजेक्षणाम् ।
रक्तचन्दनलिप्ताङ्गीं पद्ममालाविभूषिताम् ॥
मणिरत्नादिकेयूरहारभूषितविग्रहाम ।
चतुर्व्वर्गप्रदां नित्यां नित्यानन्दमयीं पराम् ॥
एवं ध्यात्वा पकारन्तु तन्मन्त्रं दशधा जपेत्" ॥
इति वर्णोद्धारतन्त्रम् ॥ * ॥ तस्य नामानि यथा ।
"पः पूरप्रियता तीक्ष्णा लोहितः पञ्चमो रमा ।
गुह्यकर्त्ता निधिः शेषः कालरात्रिः सुवाहिता ॥
तपनः पालनः पाता पद्मरेणुर्न्निरञ्जनः ।
सावित्री पातिनी पानं वीरतत्त्वो धनुर्द्धरः ॥
दक्षपार्श्वश्च सेनानी मरीचिः पवनः शनिः ।
उड्डीशं जयिनी कुम्भोऽलसं रेखा च मोहक ॥
मूलाद्द्वितीयमिन्द्राणी लोकाक्षी मन
आत्मनः" ॥
इति नानातन्त्रशास्त्रम् ॥
(अनुबन्धविशेषः । यथा
कविकलपद्रुमे ।
'नः स्वादिः पो मुचादिर्मः शमादिर्म्मो
णिचीण्णमोः' ।
तेन मुच लृ श प ञौ मोक्ष इत्यस्य
लटि मुञ्चति ॥)

**पः**, पुं, (पातयति वेगेन वृक्षादीन् । पत् + कर्त्तरि

डः । अन्तर्णिच् ।) पवनः । (पतति
वृक्षात् ।
पत् + कर्त्तरि डः ।) पर्णम् । (पीयते
इति ।)
पानम । पाता । इत्येकाक्षरकोषः ॥
(यथा, मनुः । २ । १३९ ।
"राजस्नातकयोश्चैव स्नातको
नृपमानभाक्" ॥)

**पक्कणः**, पुं क्लीं, (पचति श्वादिनिकृष्टमांसमिति ।

पच् + क्विप् । पक् शवरः तस्य कणः
कलह-
शब्दः कोलाहलशब्दो वा यत्र ।)
शवरा-
लयः । इत्यमरः ॥ २ । २ । २० ॥
(यदुक्तम् ।
"मध्येविन्ध्याटवि पुरा
पक्वणस्थजनाग्रणीः ।
पल्लीपतिरभूदुग्रः पिङ्गाक्ष इति विश्रुतः"
॥)

**पक्तपौडः**, पुं, वृक्षविशेषः । पखौडा इति

हिन्दी भाषा । तत्पर्य्यायः । पञ्चकृत्यः
२
वर्द्धनः ३ पञ्चरक्षकः ४ । अस्य गुणाः
। दृष्ट्य-
ञ्जनविधौ शस्ततत्वम् । कटुत्वम् ।
जीर्णज्वरापह-
त्वञ्च । इति राजनिर्घण्टः ॥

शूलम् । तत्पर्य्यायः । पाकजम् २
परिणामजम्
३ । इति राजनिर्घण्टः ॥

**पक्त्रं**, क्ली, (पच्यतेऽनेन । पच् "गृधृवीपचिव-

चीति" । ऊणां ४ । १६६ । इति त्रः
।) गार्ह-
पत्याग्निः । इत्युणादिकोषः ॥

**पक्त्रिमं**, त्रि, (पाकेन निर्वृत्तम् । डु पच पाके

+ "ड्वितः क्त्रिः" । ३ । ३ । ८८ ।
इति क्त्रिः ।
"क्त्रेर्मम् नित्यम्" । इति मम् ।)
पाकिमम् ।
पाकाज्जातम् । इति त्रिकाण्डशेषः ॥

**पक्वं**, क्ली, (पच्यते स्म । पच + क्त । "पचो वः" ।

८ । २ । ५२ । इति निष्ठातस्य वः ।)
स्विन्न-
तण्डुलादि । तत्र पाकस्य
विधिनिषेधादिर्यथा, --
"पूर्ब्बाशाभिमुखो भूत्वा
उत्तराशामुखेन वा ।
पचेदन्नञ्च मध्याह्ने सायाह्ने च
विवर्ज्जयेत् ॥
अग्न्याशाभिमुखे पक्त्वा अमृतान्नं
निबोध च ।
पूर्ब्बमुखो धर्म्मकामः शोकहानिश्च
दक्षिणे ॥
श्रीकामश्चोत्तरमुखो पतिकामश्च
पश्चिमे ।
ऐशान्याभिमुखे पक्त्वा दरिद्रो जायते
नरः" ॥ * ॥
"यदा तु आयसे पात्रे पक्वमश्नाति वै
द्विजः ।
स पापिष्ठोऽपि भुङ्क्तेऽन्नं रौरवे
परिपच्यते ॥
ताम्रे पक्त्वा चक्षुर्हानिर्म्मणौ भवति वै
क्षयम् ।

**पक्ता**, [ऋ] त्रि, (पचतीति । पच पाके +

"ण्वुल्तृचौ" । ३ । १ । १३३ । इति तृच् ।)
पाककर्त्ता ।
(यथा अथर्व्ववेदे । १० । ९ । ७ ।
"ये ते देवि ! शमितारः पक्तारो ये च तेजनाः" ॥)
अग्नौ पुं । यथा । आग्नेये २ अध्यायः ॥
"अन्नस्रष्टा च पक्ता च पचभोक्ता पचे नमः" ॥

**पक्तिः**, स्त्री, (पच्यते परिणम्यते इति । भावे

क्तिन् ।) गौरवम् । पाकः । इति मेदिनी ॥
(यथा, मनुः । ३ । ६७ ।
"वैवाहिकेऽग्नौ कुर्व्वीत गृह्यं कर्म्म यथाविधि ।
पञ्चयज्ञविधानञ्च पक्तिञ्चान्वाहिकीं गृही" ॥)

**पक्तिशूलं**, क्ली, (पक्तौ भुक्तस्यान्नादिकस्य परि-

णामे जायते यत् शूलं रोगविशेषः ।) परिणाम-

स्वर्णपात्रे तु यत् पक्वं अमृतं तदंपि स्मृतम्" ॥ * ॥
"पितृभ्यां पक्वमन्नञ्च पितृव्येण यशस्विनि ! ।
पुण्डरीकस्य यज्ञस्य लभते फलमीप्सितम् ॥
वातुलेन तु यत् पक्वं भगिन्या च कनिष्ठया ।
असगोत्रेण यत पक्वं शोणितं तदपि स्मृतम् ॥
अभक्तेन च यत् पक्वं स्त्रिया पक्वं तथैव च ।
पक्वपात्रे च यत् पक्वं तत् सर्व्वं निष्फलं भवेत्" ॥ * ॥
"उडुम्बरेण काष्ठेन कदम्बस्य दलेन च ।
शालेन करमर्द्दन उदरावर्त्तकेन च ॥
पक्वान्नं नैव भुञ्जीत भुक्त्वा रात्रिमुपावसेत् ।
गर्हितान्नमवीरान्नं भुक्त्वा कृच्छ्रं समाचरेत् ॥
अप्रजा यातु वनिता नाश्नीयादेव तद्गृहे" ॥
"शालकाष्ठस्य पक्वान्नं शिरीषकस्य चैव हि ।
कलिचण्डातकस्यैव वज्रावारुणकस्य च ।
भेरण्डशाल्मलैर्व्वापि पक्वान्नं गर्हितं स्मृतम् ॥ * ॥"

"यदा मृण्मयपात्रे तु पक्वं वै सार्व्वकालिकम् ।
मासे पक्षे तथाष्टौ च तत् पात्रं विसृजेद्गृही" ॥ *
"धनुःपाके तथा सिंहे मिथुने वा वरानने ।
यः कुर्य्याद्भोजनं देवि !
कृच्छ्रेणैव विशुध्यति" ॥ * ॥
"एकदा तु जलं दद्यात् द्बिवारं न प्रदापयेत् ।
त्रिभागं पूरयेत् पात्रं पश्चात्तोयं न दापयेत्" ॥
इति ॥ * ॥
"मोदकं कन्दुपक्वञ्च गव्याढ्यं घृतसंयुतम् ।
पुनः पुनर्भोजने च पुनरन्नं न दुष्यति" ॥
इति च मत्स्यसूक्ते महातन्त्रे ४२ पटलः ॥

**पक्वं**, त्रि, (पच्यते स्म यत् इति । पच + कर्म्मणि
क्तः । "पचो वः" । ८ । २ । ५२ । इति
निष्ठातस्य वः ।) परिणतम् । पाका इति
भाषा ॥ (यथा, मनुः । ६ । १७ ।
"अग्निपक्वाशनो वा स्याता कालपक्वभुगेव वा" ॥)
निष्ठां प्राप्तम् । सुदृढमिति यावत् । यथा परि-
णता बुद्धिः । विनाशोन्मुस्वम् । प्रत्यासन्नविना-
शम् । अतिपक्वव्यञ्जनदशमूलादौ निष्पक्वं कथि-
तञ्च । क्षीराज्यपयसां पाके शृतम् । ईषत्पक्वे

**पक्षः**, [स्] क्ली, (पचतीति । "पचिवचिभ्यां
दशाहोरात्राः । स च द्बिविधः । शुक्लपक्षः पूर्ब्ब-
संज्ञः कृष्णपक्षोऽपरसंज्ञः । तद्भेदेन व्यवस्था
यथा ।
"शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः" ॥
अत्रामावास्यावत्तिथिक्षयवृद्धिभ्यां न व्यवस्था किन्तु
रवेरुदयास्तमयसम्बन्धाच्छुक्लकृष्णपक्षाभ्यां
व्यवस्था सा च युग्माद्यनाघ्राततिथिकर्म्मपरा
सामान्यविशेषन्यायात्" । इति तिथ्यादितत्त्वम् ॥
पक्षिणामवयवविशेषः । पाखा इति भाषा ।
तत्पर्य्यायः । गरुत् २ छदः ३ पत्रम् ४ पतत्रम् ५
तनूरुहम् ६ ॥ शरपक्षः । तीरेर पाखा इति
भाषा । तत्पर्य्यायः । वाजः २ । सहायः ।
कचात् परे समूहार्थः । यथा केशपक्षः । इत्य-
मरः ॥ (महाकालः शिवः । कालोपाधि-
भेदात् पक्षस्य तथात्वम् । यथा महाभारते ।
१३ । शिवसहस्रनामकीर्त्तने । १७ । १३९ ।
"ऋतुः संवत्सरो मासः पक्षः संख्या समापनः ॥")
पार्श्वः । गृहम् । साध्यम् । (सन्दिग्धसाध्यवान्
पदार्थः । यथा, भाषापरिच्छेदे । ७० । ७१ ।
"सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते ।
स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत्" ॥)
विरोधः । बलम् । (यथा, पञ्चतन्त्रे । ३ । ६६ ।
"यस्तीर्थानि निजे पक्षे परपक्षे विशेषतः ।
गुप्तैश्चरैर्नृपो वेत्ति न स दुर्गतिमाप्नुयात्" ॥)
सखा । चुल्लीरन्ध्रम् । राजकुञ्जरः । इति मेदिनी ॥
विहगः । वलयम् । शुद्धः । इति शब्दरत्नावली ॥
वर्गः । (सजातीयवृन्दम् । यथा, गोः रामायणे ।
२ । १८ । १३ ।
"भरतस्यापि वा पक्षं यो गृह्णीयादचेतनः ।
तं पापमहमद्यैव प्रेषयामि यमक्षयम्" ॥)
पिच्छम् । देहाङ्गम् । इति हेमचन्द्रः ॥

"दाहसन्तापमूर्च्छाः स्युर्व्वायौ पित्तसमन्वित ।
शैत्यशोथगुरुत्वानि तस्मिन्नेव कफावृते" ॥
दाहो वाह्यः । सन्तापः आभ्यन्तरः । एतच्च
लक्षणमन्यत्रापि वातव्याधौ बोद्धव्यम् । सामा-
न्यतो वायाविति निर्द्दिष्टत्वात् ॥ * ॥
पक्षाघातस्य साध्यत्वादिकमाह ।
"शुद्धवातहतं पक्षं कृच्छ्रसाध्यतमं विदुः ।
साध्यमन्येन संयुक्तमसाध्यं क्षयहेतुकम्" ॥
शुद्धः केवलः । अन्येन पित्तेन कफेन वा । क्षय-
हेतुकं क्षयो धातुक्षयः । तत्कुपितं वातनिमि-
त्तकम् ॥ * ॥ अपरमसाध्यलक्षणमाह ।
"गर्भिणीसूतिकाबालवृद्धक्षीणेष्वसृक्क्षये ।
पक्षाघातं परिहरेत् वेदनारहितो यदि" ॥
वेदनारहितो यदीति भिन्नमसाध्यलक्षणम् ॥ * ॥
अथ तस्य चिकित्सा ।
"माषात्मगुप्तावातारिवाट्यालकजटाशृतम्।
हिङ्गुसैन्धवसंयुक्तं पक्षाघातं विनाशयेत् ।
माषिके हिङ्गुसिन्धूत्थे जरणाद्यास्तु शाणिकाः" ॥
इति माषादिक्वाथः ॥ १ ॥
"ग्रन्थिकाग्निकणाशुण्ठीरास्नासैन्धवकल्कितम् ।
माषक्वाथशृतं तैलं पक्षाघातं व्यपोहति" ॥
इति ग्रन्थिकादितैलम् ॥ २ ॥
"माषात्मगुप्तातिविषारुवूक-
रास्नाशताह्वालवणैः सुपिष्टैः ।
चतुर्गुणे माषवलाकषाये
तैलं शृतं हन्ति हि पक्षघातम्" ॥
इति माषादितैलम् ॥ ३ ॥ इति भावप्रकाशः ॥ * ॥
पक्षाघातस्तु जन्मान्तरीयमहापातकशेषपाप-
चिह्नविशेषः । यथा, --
"पूर्ब्बजन्मकृतं पापं नरकस्य परिक्षये ।
बाधते व्याधिरूपेण तस्य कृच्छ्रादिभिः शमः ॥
कुष्ठञ्च राजयक्ष्मा च प्रमेहो ग्रहणी तथा ।
मूत्रकृच्छ्राश्मरीकाशा अतिसारभगन्दरौ ॥
दुष्टव्रणं गण्डमाला पक्षाघातोऽक्षिनाशनम् ।
इत्येवमादयो रोगा महापापोद्भवा गदाः" ॥ * ॥
तत्प्रायश्चित्तं यथा, --
"लक्षमुच्चावचं पुष्पं प्रदद्यात् केशवार्च्चने ।

आपक्वम् । इत्यमरभरतौ ॥
(भावे क्तः । पाकः ।
परिणामः ॥)

**पक्वकृत्**, पुं, (पक्वं करोति वेदनान्वितस्थलं परि-
णमयति
निष्पिष्टपत्रत्वगादिभिरिति । कृ
+ क्विप्
ततस्तुक् ।) निम्बवृक्षः । इति
शब्दचन्द्रिका ॥
(पक्वं करोति
पचत्यन्नादिकमित्यर्थः ।)
पाक-
कर्त्तरि त्रि ॥

**पक्वरसः**, पुं, (पक्वस्य गुडान्नादेः रसः ।)
मद्यम् । इति शब्दरत्नावली ॥

**पक्ववारि**, क्ली, (पक्वस्यान्नादेर्व्वारि यद्वा, पक्वं वारि
स्विन्नसलिलमिति यावत् ।)
काञ्जिकम् । इति
शब्दचन्द्रिका ॥ पङ्कवारि
इत्यपि पाठः । पक्वजलञ्च ॥

**पक्वान्नं**, त्रि, (पक्वमन्नम् ।) कृतपाकतण्डुलादि । यथा-
"आमं शूद्रस्य पक्वान्नं
पक्वमुत्सृष्टमुच्यते" ।
इति तिथितत्त्वम् ॥
("यती च ब्रह्मचारी च
पक्वान्नस्वामिनावुभौ" ।
इति सदाचारः ॥)

**पक्वाशयः**, पुं, (पक्वस्य आमादेराशयः आधानम् ।
यद्वा पक्वं आमादिकं
आशेतेऽत्र । पक्व + आ
+ शीङ् + आधारे + अप् ।)
नाभ्यधोभागः ।
इति राजनिर्घण्टः ॥
"पक्वाशयस्त्वधो
नाभेरूर्द्ध्वमामाशयः स्मृतः" ।
सुट् च" । उणां । ४ । २१९ । इति असुन् सुट्
च ।) गरुत् । यथा । पक्षसी च स्मृतौ पक्षौ ।
इति भरतधृतशुभाङ्कः ॥

**पक्षकः**, पुं, (पक्ष इव प्रतिकृतिः । "इवे प्रति-
कृतौ" । ५ । ३ । ९६ । इति कन् ।) पक्ष-
द्वारम् । पार्श्वद्वारम् । इत्यमरः । २ । २ । १४
॥
खडकीद्वार इति भाषा । पाश्बमात्रम् । इति
मेदिनी ॥ सहायः । इति शब्दरत्नावली ॥

**पक्षघातः** पुं, (पक्षस्य देहार्द्धस्य घातं विना-
शनं यस्मात् यत्र वा ।) स्वनामख्यात-
वातरोगविशेषः । तल्लक्षणादि यथा, --

**पक्षाघातः** पुं, (पक्षस्य देहार्द्धस्य घातं विना-
शनं यस्मात् यत्र वा ।) स्वनामख्यात-
वातरोगविशेषः । तल्लक्षणादि यथा, --
"गृहीत्वार्द्धं ततो वायुः शिरास्नायू विशोष्य च ।
पक्षमन्यतमं हन्ति सन्धिबन्धान् विमोक्षयन् ॥
कृत्स्नोऽर्द्धकायस्तस्य स्यादकर्म्मण्यो विचेतनः
।
एकाङ्गवातं तं केचिदन्ये पक्षवधं विदुः" ॥
अर्द्धं अर्द्धनारीश्वरवत् । पक्षं बाहुपार्श्वोरु-
जङ्घादिभागम् । अन्यतमं वामं दक्षिणं वा ।
विमोक्षयन् शिथिलीकुर्व्वन् । अकर्म्मण्यः
कर्म्मा-
समर्थः । विचेतनः ईषत्स्पर्शादिज्ञानयुक्तः ॥ *
॥
अस्य साध्यासाध्यज्ञानार्थमाह ।
दद्यात् द्विजसहस्राय मिष्टान्नं द्विजभोजने" ॥
इति मलमासतत्त्वम् ॥ किञ्च ।
"कुनखी श्यावदन्तश्चद्वादशरात्रं कृच्छ्रं चरित्वा
उद्धरेयातां तद्दन्तनखाविति । अत्र द्वादशरात्रं
पराकरूपम् । तत्र पञ्च धेनवः । न तु प्राजापत्यं
तद्वाहकर्त्तुर्यतिचान्द्रायणेन विषमशिष्टत्वात् ।
अत्र बहूनामेकधर्म्माणामिति वचनादाकाङ्क्षि-
तत्वात् कुष्ठ्यादीनामपि प्रायश्चित्तम् । अत-
एव प्रायश्चित्तविवेकेऽप्युक्तम् । एवं
दुश्चर्म्मादिष्व-
प्यूह्यम्" । इति शुद्धितत्त्वम् ॥

**पक्षचरः**, पुं, (पक्षे शुक्लपक्षे चरतीति । चर + टः ।)
चन्द्रः । पृथक्चारिगजः । इति मेदिनी ॥

**पक्षजः**, पुं, (पक्षे शुक्लपक्षे जायते इति । पक्ष +
जन् + ड ।) चन्द्रः । इति त्रिकाण्डशेषः ॥

**पक्षजन्मा**, [न्] पुं, (पक्षे शुक्लपक्षे जन्म उत्पत्ति-

इति वैद्यकम् ॥

**पक्ष**, क परिग्रहे । इति कविकल्पद्रुमः ॥ (चुरां-

परं-सकं-सेट् ।) क, पक्षयति ।

इति दुर्गादासः ॥

**पक्ष**, त् क परिग्रहे । इति कविकल्पद्रुमः ॥ (अदन्त

चुरां-परं-सकं-सेट् ।) पक्षयति

पक्षापयति ।

इति दुर्गादासः ॥

**पक्षः**, पुं, (पक्ष्यते परिगृह्यते देवपितृकार्य्यार्थं यः ।

यद्वा, पक्ष्यते चन्द्रस्य

पञ्चदशानां कलाना-

मापूरणं क्षयो वा येन । पक्ष +

घञ् । यद्वा,

पणते इति । पण स्तुत्यादौ

“गृधिपण्योर्दकौच” ।

उणां ३ । ६९ । इति सः

कश्चान्तादेशः ।) पञ्च-

र्यस्य ।) चन्द्रः । इति शब्दरत्नावली ॥ पक्ष-
जाते त्रि ॥

**पक्षता**, स्त्री, (पक्षस्य भावः ।) अनुमित्साविरह-
विशिष्टसिद्ध्यभावः । इत्यमनुमितिकारणम् । तच्च
पर्व्वते वह्न्यनुमितौ
अनुमित्साविरहविशिष्ट-
पर्व्वतधर्म्मिकवह्निनिश्चयाभावः । यथा, --
"सिसाधयिषया शून्या सिद्धिर्यत्र न विद्यते ।
स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भ्भवेत्" ॥
इति भाषापरिच्छेदे । ७१ ॥

**पक्षतिः**, स्त्री, (पक्षस्य मूलम् । "पैक्षात्तिः" ।
५ । २ । २५ । इति तिः ।) प्रतिपत्तिथिः । (यदुक्तं
तिथितत्त्वे ।
"पक्षत्याद्यास्तु तिथयः क्रमात्पञ्चदश
स्मृताः" ॥)
पक्षमूलम् । इत्यमरः । ३ । ३ । ७२ ॥
डानक्
इति भाषा ॥

**पक्षद्वारं**, क्ली, (पक्षे पार्श्वे स्थितं द्वारम् ।) पार्श्व-
द्वारम् । इत्यमरः । २ । २ । १४ ॥
खडकीद्वार
इति भाषा ॥

**पक्षधरः**, पुं, (पक्षं धरति धारयतीति वा । धृ
+ अच् ।) चन्द्रः । इति जटाधरः ॥
पक्षधारण-
कर्त्तरि, त्रि ॥

**पक्षपातः**, पुं, (पक्षे अन्याय्यसाहाय्ये पातः अभि-
निवेशः । स्नेहसम्बन्धाद्यनुरोधत
एकस्मिन्नेव वर्गे
आनुकूल्यप्रयोगचिकीर्षेतिभावः ।)
अन्याय्य-
साहाय्यकरणम् । (यथा गोः रामायणे
२ । १०९ । ५७ ।

**पक्षान्तः**, पुं, (पक्षस्य अन्तो यत्र काले ।) अमा-
वस्या । पूर्णिमा । तत्पर्य्यायः ।
पञ्चदशी २ ।
इत्यमरः । १ । ४ । ७ ॥
अर्केन्दुविश्लेषः ३ पर्ष्व
४ । इति राजनिर्घण्टः ॥ पक्षावसरः
५ । इति
शब्दरत्नावली ॥ (अस्मिन् यात्रा
निष्फला
भवति । यदुक्तं ज्योतिस्तत्त्वे ।
'पक्षान्ते निष्फला यात्रा मासान्ते
मरणं ध्रुवम्' ॥)

**पक्षालुः**, पुं, (पक्षौ विद्येते यस्य । पक्ष + अस्त्यर्थे
आलुच् ।) पक्षी । इति शब्दचन्द्रिका
॥

**पक्षावसरः**, पुं, (पक्षस्यावसरोऽपसरणं यत्र
काले ।) पूर्णिमा । अमावस्या । इति
शब्द-
रत्नावली ॥

**पक्षिणी**, स्त्री, (पक्षौ इव पूर्ब्बापरदिने विद्येते
यस्याः । पक्ष + इति ङीप् च ।)
आगामिवर्त्त-
मानाहर्युक्ता रात्रिः । इत्यमरः । १ ।
४ । ५ ॥
यथा, शुद्धितत्त्वे ।
"द्वावह्नावेकरात्रिश्च
पक्षिणीत्यभिधीयते" ॥
पूर्णिमा ॥ (पक्षौ विद्येते यस्याः । इति
ङीप् ।)
विहगी । शाकिनीभेदः । इति मेदिनी
॥

**पक्षिपानीयशालिका**, स्त्री, (पक्षिणां पानीयस्य
पानार्थजलस्य शालिका शाला ।)
चुण्टीवृताल-

स्थूलकायपक्षिणां पूर्ब्बार्द्धस्य श्रेष्ठत्वं यथा, --
"गुरुभक्षा बहुभुजो ये चोपचितमेदसः ।
एकदेहेऽपि पूर्ब्बार्द्धं मृगाणां पक्षिणां परम्" ॥ * ॥
पक्षिणामङ्गादीनामुत्तरोत्तरंगुरुत्वं यथा, --
"सर्व्वेषाञ्च शिरःस्कन्धप्लीहचर्म्मयकृद्गुदम् ।
पादपुच्छान्त्रमस्तिष्कमुष्कक्रोडाःसमेहनाः ।
धातवः शोणिताद्याश्च गुरवःस्युः परस्परम्" ॥
अस्याण्डगुणाः ।
"मत्स्यकूर्म्मखगाण्डानि स्वादुवाजीकराणि च ।
कटुपाकानि रुच्यानि वातश्लेष्महराणि च" ॥
इति राजवल्लभः ॥ * ॥ तेषामुत्पत्तिर्यथा, --
"अरुणस्य भार्य्या श्येनी वीर्य्यवन्तौ महाबलौ ।
सम्पातिश्च जटायुश्च प्रसूतौ पक्षिसत्तमौ ॥
सम्पातिर्जनयन् गृध्रान् काकाः पुत्त्रा
जटायुषः ।
भार्य्या गरुत्मतश्चापि भासी क्रौञ्ची शुनी
शुकी ॥
धृतराष्ट्री गरुत्मांस्तु शुन्यां जज्ञे च षट् सुतान ।
त्रिशिखञ्च सुनेत्रञ्च सुमुखं सुनसन्तथा ॥
सुरूपन्तु सुपर्व्वाणं तेषां पुत्त्रा अनन्तकाः ।
चतुर्द्दशसहस्राणि क्रूराणां पन्नगाशिनाम् ॥
सप्तद्वीपेष्विमे सन्ति गारुडास्ते महाबलाः ।
भासीपुत्त्रास्तथा भासा उलूकाः
काककुक्कुटाः ॥
मयूराः कलविङ्काश्च कपोती चैव तित्तिरी ।
क्रौञ्च्यां वाध्रीणसा आसन् कुरराः सारसा
वकाः ॥
धृतराष्ट्री कलहंसान् धार्त्तराष्ट्रांश्च भामिनी ।
चक्रवाकांश्च विहगान् सश्येनानौदकान्
द्विजान् ॥
अन्यानपि द्विजान् जज्ञे
पुत्त्रपौत्त्राननन्तकान्" ॥

"क्वचिद्विवदतोऽर्थेषु बलिनो दुर्ब्बलस्य च ।
अपक्षपातात् पश्यन्ति कार्य्येष्वधिकृता नराः" ॥)
गणताकरणम् । यथा । "ईश्वरत्वविषये विप-
श्चितां पक्षपातकरणे न कारणम्" । इत्युत्तर-
मीमांसायां संक्षेपशारीरम् ॥ (पक्षाणां गरुतां
पातः पतनं यत्र ।) पक्षिणां ज्वरः । यदुक्तं
"पक्षपातः पतङ्गानाम् । इति विजयरक्षितः ॥

**पक्षपातिता**, स्त्री, (पक्षपातिनः साहाय्यकारिणो
भावः । पक्षपातिन् + तल् ।) सहायता । यथा, --
"न सुवर्णमयी तनुः परं
ननु किं वागपि तावकी तथा ।
न परं पथि पक्षपातिता
ऽनवलम्बे किमु मादृशेऽपि सा" ॥
इति नैषधे । २ । ५२ ॥ (पक्षयोः पातो विद्यतेऽस्य
इति पक्षपाती खगस्तस्य भावः । पक्षपातनञ्च ॥)

**पक्षपालिः**, पुं, (पक्षस्य गृहस्य पालिरिव ।) खड-
क्किका । इति शब्दरत्नावली । खडकीद्वार
इति भाषा ॥

**पक्षभागः**, पुं, (पक्षस्य पार्श्वस्य पक्ष एव वा
भागः ।) हस्तिपार्श्वभागः । इत्यमरः । २ ।
८ । ४० ॥

**पक्षमूलं**, क्ली, (पक्षस्य मूलम् ।) पक्षतिः । इत्य-
मरः । २ । ५ । ३६ । डानक् इति भाषा ॥

**पक्षवाहनः**, पुं, (पक्षौ वाहनमिव यस्य ।) पक्षी ।
इति शब्दचन्द्रिका ॥

**पक्षसुन्दरः**, पुं, (पक्षे देहाङ्गे कुसुमे सुन्दरः ।)
लोध्रः । इति हारावली ॥

वालम् । पक्षिजलपानस्थानम् । इति भूरि-
प्रयोगः ॥

**पक्षिलः**, पुं, (पक्षयति तत्त्वज्ञानं परिगृह्णातीति ।
पक्ष + बाहुलकादिलच् ।)
वात्स्यायनमुनिः । इति
त्रिकाण्डशेषः ॥ (अयं हि गौतमसूत्रभाष्यं कृत-
वान् ॥)

**पक्षिशाला**, स्त्री, (पक्षिणां शाला गृहम् ।) नीडम् ।
तत्पर्य्यायः । कुलायिका २ । इति
त्रिकाण्डशेषः ॥

**पक्षिसिंहः**, पुं, (पक्षी सिंह इव । उपमितसमासः ।
यद्वा, पक्षिषु सिंहः श्रेष्ठः ।
"सिंहशार्द्दूल-
नागाद्याः पुंसि श्रेष्ठार्थवाचकाः" ।
इत्यमरोक्ते-
स्तथात्वम् ।) गरुडः । इति
त्रिकाण्डशेषः ॥

**पक्षिस्वामी**, [न्] पुं, (पक्षिणां स्वामी प्रभुः ।)
गरुडः । इति हेमचन्द्रः ॥

**पक्षी**, [न्] पुं, (पक्षाः कङ्कादीनां पत्राणि सन्त्यस्य ।
"अत इनिठनौ" । ५ । २ । ११५ ।
इति इनिः ।)
वाणः । इति धरणिः ॥

**पक्षी**, [न्] पुं स्त्री, पक्षौ विद्येते यस्य । (पक्ष +
इनिः ।) विहङ्गमः ॥ पाखी इति चिडिया इति
च भाषा ॥ तत्पर्य्यायः । खगः २
विहङ्गः ३
विहगः ४ विहङ्गमः ५ विहायाः ६
शकुन्तिः ७
शकुनिः ८ शकुन्तः ९ शकुनः १०
द्विजः ११
पतत्री १२ पत्री १३ पतगः १४ पतन् १५ पत्र-

इत्यग्निपुराणे काश्यपीयवंशः ॥ (महादेवः । यथा,
महाभारते १३ । शिवनामकीर्त्तने । १७ ।
६९ ।
"पक्षी च पक्षरूपश्च अतिदीप्तो विशाम्पतिः" ॥)

**पक्ष्णुः**, त्रि, पाककर्त्ता । पच + "ग्लाम्लास्थाक्षि-
पचपरिमृजः स्नुः" । इति स्नुप्रत्ययनिष्पन्नः ।
इति मुग्धबोधव्याकरणम् ॥

**पक्ष्म**, [न्] क्ली, (पक्ष्यते परिगृह्यते आतपतापा-
दिकमनेन । पक्ष + करणे मनिन् ।) अक्षिलोम ।
नेत्रच्छदरोम । (यथा, भागवते । ३ । १ । ३९ ।
"यमायुतस्वित् तनयौ पृथायाः
पार्थैर्वृतौ पक्ष्मभिरक्षिणीव" ॥)
किञ्जल्कः । केशरः । तन्त्वादेरणीयान् । सूत्रादे-
रत्यल्पभागः । इत्यमरभरतौ ॥ गरुत् । पक्षः ।
इत्यमरमाला ॥

**पङ्कः**, पुं, क्ली, (पच्यत्रे व्याप्यते क्लिद्यते वाऽनेन ।
पच् + घञ् कुत्वं च ।) कर्द्दमः । पाँक् इति
भाषा । (यथा, हितोपदेशे । १ । ६२ ।
"कङ्कणस्य तु लोभेन मग्नः पङ्के सुदुस्तरे ।
वृद्धव्याघ्रेण संप्राप्तः पथिकः संमृतो यथा" ॥
पच्यते व्यक्तीक्रियते दुःखमनेन । पचि विस्तारे
व्यक्तीकरणेच । पचधातोरिदित्वात् नुम् । "हल-
श्चेति" । ३ । ३ । १२१ । करणे घञ् ततो
घित्वात् चस्य कुत्वम् ।) पापम् । इत्यमरः ।
१ । ४ । २३ ॥ (यथा, अम्बाष्टके । ६ ।
"न्यङ्का-
करे वपुषि कङ्कादिरक्तपुषि कङ्कादिपक्षिविषये
त्वं कामनामयसि किं कारणं हृदय ! पङ्कारि-

|  | रथः १६ अण्डजः १७ नगौकाः १८ वाजी १९ विकिरः २० विः २१ विष्किरः २२ पतित्रिः २३ नीडोद्भवः २४ गरुत्मान् २५ पिच्छन् २६ नभ-सङ्गमः २७ । इत्यमरः । २ । ५ । ३४ ॥ नाडीचरणः २८ कण्डाग्निः २९ पतङ्गः ३० अगौकाः ३१ चञ्चु-भृत् ३२ छुरण्डः ३३ सरण्डः ३४ । इति शब्द-रत्नावली ॥ पिपतिषुः ३५ पत्रवाहः ३६ द्युगः ३७ । इति राजनिर्घण्टः ॥ * ॥ गुरुभक्षबहुभक्ष- |  |
| --- | --- | --- |

मेहि गिरिजाम् ॥”) पूर्ब्बस्य गुणाः ।
पित्तास-
दाहनाशित्वम् । भग्नक्षयहितत्वम् ।
हिमत्वञ्च ।
इतिराजवल्लभः ॥ शोथघ्नत्वम् ।
सरत्वञ्च । इति
भावप्रकाशः ॥

**पङ्कर्व्वटः**, पुं, (पङ्केषु कर्व्वटो मनोहरः ।) जल-
युक्तपङ्कम् । यथा, --
“चुलुको घनजम्बाले दलाढ्ये
पङ्ककर्व्वटः” ।
इति त्रिकाण्डशेषः ॥

**पङ्ककीरः**, पुं, (पङ्कप्रियः कीरः पक्षिविशेषः ।)
कोयष्टिपक्षी । इति त्रिकाण्डशेषः ॥
(कादा-
खाँचा इति भाषा ॥)

**पङ्कक्रीडः**, पुं, (पङ्के पङ्केन वा क्रीडति यः । पङ्क
+ क्रीड + अच् ।) शूकरः । इति
कश्चित् ।
कर्द्दमखेलके, त्रि ॥

**पङ्कगडकः**, पुं, (पङ्के स्थितो गडकः ।) मत्स्य-
विशेषः । पाँकाल इति भाषा ।
तत्पर्य्यायः ।
ब्रह्मी २ । इति त्रिकाण्डशेषः ॥

**पङ्कगतिः**, स्त्री, (पङ्के गतिरस्य ।) पङ्कगडक-
मत्स्यः । इति शब्दमाला ॥

**पङ्कग्राहः**, पुं, (पङ्केस्थितो ग्राहः जलजन्तुभेदः ।)
मकरः । इति हारावली ॥

**पङ्कजं**, क्ली, (पङ्के पङ्कात् वा जायते इति । पङ्क
+ जन + कर्त्तरि + डः ।) पद्मम् । इति
राज-
निर्घण्टः ॥ (यथा रघुः । ३ । ८ ।
“तिरश्चकार भ्रमराभिलीनयोः
सुजातयोः पङ्कजकोषयोः श्रियम्” ॥

**पङ्कशुक्तिः**, स्त्री, (पङ्के स्थिता या शुक्तिः ।) दुर्नामा
।
इति हारावली ॥ झिनुक् इति भाषा ॥

**पङ्कशूरणः**, पुं, (पङ्के शूरण इव ।) शालूकः । इति
त्रिकाण्डशेषः ॥

**पङ्कारः**, पुं, (पङ्कमृच्छति पङ्कं प्राप्य वर्द्धते
इति यावत् । पङ्क + ऋ + उपपदे
“कर्म्मण्यण्” ।
३ । २ । १ । इति अण् ।) शैवलः । सेतुः
।
सोपानम् । जलकुब्जकः । इति मेदिनी ॥

**पङ्किलः**, त्रि, (पङ्कोऽस्त्यस्मिन् । “लोमादिपामादि-
पिच्छादिभ्यः शनेलचः” । ५ । २ ।
१०० । इति
इलच् ।) सकर्द्दमः । तत्पर्य्यायः ।
सजम्बालः
२ । इत्यमरः । २ । १ । १० ॥ पङ्कयुक्तः
३ । इति
शब्दरत्नावली ॥ कर्द्दमान्वितः ४ । इति
जटाधरः ॥
(लक्षणया व्याप्त्यर्थेऽपि । यथा
महाभारते ८
पर्व्वणि । “मांसमज्जास्थिपङ्किला मही”
॥)

**पङ्केजं**, क्ली, (पङ्के जायते इति । “सप्तम्यां जनेर्डः” ।
३ । २ । ९७ । इति डः । “तत्पुरुषे
कृतीति” ।
६ । ३ । १४ । इति सप्तम्या अलुक् ।)
पद्मम् ।
इति त्रिकाण्डशेषः ॥

**पङ्केरुहं**, क्ली, (पङ्केरोहतीति । पङ्क + रुह + “इगु-
पधेति” । ३ । १ । १३५ । इति कः ।
“तत्-
पुरुषे कृति बहुलम्” । ६ । ३ । १४ ।
इति

“तेन मन्त्रप्रयुक्तेन निमेषार्द्धादपातयत् ।
स रावणशिरःपङ्क्तिमज्ञातव्रणवेदनाम्” ॥)
पृथिवी । इति शब्दमाला ॥ गौरवम् । पाकः ।
इति हेमचन्द्रः ॥ * ॥
अथ पङ्क्तिसाङ्कर्य्यदोषाः यथा, --
“न संवसेच्च पतितैर्न चाण्डालैर्न पुक्कशैः ।
न मूर्खैर्नावलिप्तैश्च नान्त्यैर्नान्त्यावसायिभिः ॥
एकशय्यासनं पङ्क्तिर्भाण्डपक्वान्नमिश्रणम् ।
याजनाध्यापने योनिस्तथैव सह भोजनम् ॥
सहाध्यायस्तु दशमः सहयाजनमेव च ।
एकादश समुद्दिष्टा दोषाः साङ्कर्य्यसञ्ज्ञिताः ॥
समीपे चाप्यवस्थानात् पापं संक्रमते नृणां ।
तस्मात् सर्व्वप्रयत्नेन साङ्कर्य्यं परिवर्ज्जयेत्” ॥
* ॥
पङ्क्तिसाङ्कर्य्यदोषनिवारणोपाया यथा, --
“एकपङ्क्त्युपविष्टा ये न स्पृशन्ति परस्परम् ।
भस्मना क्रममर्य्यादा न तेषां सङ्करो भवेत् ॥
अग्निना भस्मना चैव षड्भिः पङ्क्तिर्विभिद्यते”
॥
इति कूर्म्मे १५ अध्यायः ॥

**पङ्क्तिग्रीवः**, पुं, (पङ्क्तिः दशसङ्ख्यिका ग्रीवा
यस्य ।) रावणः । इति शब्दरत्नावली ॥

**पङ्क्तिचरः**, पुं, (पङ्क्त्या श्रेणीबद्धः सन् चर-
तीति । पङ्क्ति + चर् + टः ।) कुररपक्षी ।
इति राजनिर्घण्टः ॥

**पङ्क्तिदूषकः**, पुं, (श्राद्धकाले भोजनार्थमुप-
विष्टानां व्रतस्नातानां ब्राह्मणानां पङ्क्तिं श्रेणीं
दूषयति यः । पङ्क्ति + दूष् + कर्त्तरि ण्वुल् ।)
अपाङ्क्तेयः । श्राद्धभोजनानर्हब्राह्मणः । यथा,
--
“अपाङ्क्तेयास्तु येराजन् ! कीर्त्तयिष्यामि तान्
शृणु ।
कितवो भ्रूणहा यक्ष्मी पशुपालो निराकृतिः ॥
ग्रामप्रेष्यो वार्द्धुषिको गायनः सर्व्वविक्रयी ।
अगारदाही गरदः कुण्डाशी सोमविक्रयी ॥
सामुद्रिको राजदूतस्तैलिकः कूटकारकः ।
पित्रा विवदमानश्च यस्य चोपपतिर्गृहे ॥
अभिशस्तस्तथा स्तेनः शिल्पं यश्चोपजीवति ।

अयं हि योगरूढशब्दः । यदुक्तम् ।
"रूढा गष्मदयः प्रोक्ता यौगिकाः
पाचकादयः ।
योगरूढाश्च विज्ञेयाः पङ्कजाद्या
मनीषिभिः" ॥)

**पङ्कजन्म**, [न्] क्ली, (पङ्के जन्म यस्य ।) पद्मम् ।

इति त्रिकाण्डशेषः ॥

**पङ्कजिनी**, स्त्री, (पङ्कजानि सन्त्यस्याम् । "पुष्व-

रादिभ्यो देशे" । ५ । २ । १३५ । इति
इनिः ।)
पद्माकरः ।
(यथा, मार्कण्डेये । ७५ । २४ ।
"तस्यर्क्षर्स्य तु या कान्तिर्जाता
पङ्कजिनीसरः" ॥)
पद्मसमूहः । इति रत्नमाला
हेमचन्द्रश्च ॥

**पङ्कणः**, पुं, (पङ्के मांसादिनिमित्तके पापाचार-

कर्म्मणि कणः (कलहो यस्य सः ।
पृषोदरादित्वात्
साधुः ।) पक्वणः । शवरालयः । इति
शब्द-
रत्नावली ॥

**पङ्कप्रभा**, स्त्री, (पङ्कस्य प्रभा प्रकाशो यस्याम् ।)

कर्द्दमयुक्तनरकविशेषः । इति हेमचन्द्रः
॥

**पङ्कमण्डूकः**, पुं, (पङ्के मण्डूक इव) शम्बूकः । इति

हारावली ॥

**पङ्करुट्** [ह्] क्ली, (पङ्के रोहतीति । पङ्क

+ रुह + क्विप् ।) पद्मम् । इति
राजनिर्घण्टः ॥

**पङ्करुहं**, क्ली, (पङ्के रोहतीति । पङ्क + रुह् +

"इगुपधज्ञाप्रीकिरः कः" । ३ । १ ।
१३५ ।
इति कः ।) पद्मम । इति राजनिर्घण्टः
॥

सप्तम्या अलुक् ।) पद्मम् । इत्यमरः ॥ १
। १० ।
४० ॥ (यथा, भागवते । ७ । १५ । ६८
।
"यत्पादपङ्केरुहसेवया
भवानहारषीन्निर्जित-
दिग्गजः क्रतून्" ॥) सारसपक्षिणि, पुं ॥

**पङ्क्तिः**, स्त्री, (पच्यते व्यक्तीक्रियते श्रेणीविशेषे-

णेति यावत् । पचि + व्यक्तीकरणे + भावे
+
क्तिन् । इदित्वान्नुम् । यद्वा, पञ्चयति
विस्तार-
यति जातिसंस्थानविशेषमिति । पचि +
विस्तारे
+ कर्त्तरि + क्तिच् ।)
सजातीयसंस्थानविशेषः ।
शारि इति पाँति इति च भाषा । तत्-
पर्य्यायः । वोथी २ आलिः ३ आवलिः
४
श्रेणी ५ । इत्यमरः । २ । ४ । ४ ॥
वीथिः ६
आली ७ आवली ८ पङ्क्ती ९ श्रेणिः
१० ।
इति भरतः ॥ शरणिः ११ सन्ततिः १२
।
इति जटाधरः ॥ विञ्ञोली १३ पालिः
१४ पाली
१५ वीथिका १६ । इति शब्दरत्नावली
॥
(यथा, मार्कण्डेये । ४३ । ३९ ।
'विलोक्या विशदा चैषां फलपङ्क्तिः
सुभीषणा' ॥)
पञ्चाक्षरपादच्छन्दोविशेषः । तस्य लक्षणं
यथा ।
"भ्गौगिति पङ्क्तिः" ॥ १ ॥ उदाहरणं
यथा, --
"कृष्णसनाथा तर्णकपङ्क्तिः ।
यामुनकच्छे चारु चचार" ॥
इति छन्दोमञ्जरी ॥ (पङ्क्तिच्छन्दस
उत्पत्ति-
स्थानं यथा, भागवते । ३ । १२ । ४६ ।

पर्व्वकारश्च सूची च मित्रध्रुक् पारदारिकः ॥
अव्रतानामुपाध्यायः काण्डपृष्ठस्तथैव च ।
श्वभिश्च यः परिक्रामेत् यः शुना दष्ट एव च ॥
परिवृत्तिस्तु यश्च स्याद्दुश्चर्म्मा गुरुतल्पगः ।
कुशीलवो देवलको नक्षत्रैर्यश्च जीवति ॥
ईदृशा ब्राह्मणा ये च अपाङ्क्तेयास्तु ते मताः ।
रक्षांसि गच्छते हव्यं यदेषान्तु प्रदीयते" ॥ * ॥
"श्राद्धे भुक्त्रा महाराज ! दुश्चर्म्मा गुरुतल्पगः ।
श्राद्धं नाशयते तस्य पितरोऽपि न भुञ्जते ॥
सोमविक्रयिणे दत्तं विष्ठातुल्यं भवेन्नृप !
भिषजे शोणितसमं नष्टं देवलके तथा ॥
अप्रतिष्ठं वार्द्धुषिके निष्फलं परिकीर्त्तितम् ।
बहुवाणिजके दत्तं नेह नामुत्र तद्भवेत् ॥
भस्मनीव हुतं हव्यं तथा पौनर्भवे द्विजे ।
ये तु धर्म्मव्यपेतेषु चरित्रापगतेषु च ॥
हव्यं कव्यं प्रयच्छन्ति तेषां तत् परिनश्यति ।
ज्ञानपूर्ब्बन्तु ये तेभ्यः प्रयच्छन्त्यल्पबुद्धयः ॥
पुरीषं भुञ्जते तस्य पितरः प्रेत्य निश्चितम् ।

| | | |
|---|---|---|
| **पङ्कवासः**, पुं, (पङ्के वासो यस्य सः ।) कर्क्कटः ।<br><br>इति राजनिर्घण्टः ॥<br>(मत्स्यादयोऽप्यत्र ॥) | “मज्जायाः पङ्क्तिरुत्पन्नावृहती प्राणतोऽभवत्” ॥<br>पञ्चकद्वयं परिमाणमस्य इति । “पङ्क्ति-विंशतित्रिंशदिति” । ५ । १ । ५९ । निपातनात्<br>प्रकृतेः पञ्चन्शब्दस्य टिलोपः तिप्रत्ययश्च ।)<br>दशाक्षरपादच्छन्दः । दशसंख्या । इति मेदिनी ॥<br>(यथा, रघुः । १२ । ९९ । | |

एतान्विद्धि महाबाहो अपाङ्क्तेयान् द्विजाधमान् ।
शूद्राणामुपदेशन्तु ये कुर्व्वन्त्यल्पबुद्धयः ॥
षष्टिं काणः शतं खञ्जः श्वित्री यावत् प्रपश्यति ।
पङ्क्त्यां समुपविष्टायां तावद्दूषयते नृप ! ॥
यद्वेष्टितशिरा भुङ्क्ते यद्भङ्क्ते दक्षिणामुखः ।
सोपानत्कश्च यद्भुङ्क्ते सर्व्वं विद्यात्तदासुरम् ॥
असूयते च यद्दत्तं यच्च श्रद्धादिवर्ज्जितम् ।
सर्व्वं तदसुरेन्द्राय ब्रह्मा भागमकल्पयत् ॥
श्वानश्च पङ्क्तिदूषाश्च नावेक्षेरन् कथञ्चन ॥" * ॥
"तस्मात् परिवृते दद्यात्तिलांश्चान्ने विकीरयेत् ।
तिलैर्व्विरहितं श्राद्धं कृतं क्रोधवशेन च ॥
यातुधानाः पिशाचाश्च विप्रलुम्पन्ति तद्धविः ।
अपाङ्क्तेयानतः पङ्क्त्यां भुञ्जानो ननु पश्यति ।
तावत् फलाद्भ्रंशयति दातारं तस्य वाऽनिशम् ॥"
इति पाद्मे स्वर्गखण्डे ३५ अध्यायः ॥

**पङ्क्तिपावनः**, पुं, (पङ्क्तिं श्राद्धोपलक्षे भोज-
नायोपविष्टानां वेदविद्याविशारदानां ब्राह्म-
णानां श्रेणीं पुनाति पावयति वा स्वोपवेशने-
नेति । पङ्क्ति + पावि + ल्युः ।) श्रेणिपवित्र-
कर्त्ता । श्राद्धभोजनार्हब्राह्मणः । यथा, --
"इमे हि मनुजश्रेष्ठ ! विज्ञेयाः पङ्क्तिपावनाः ।
विद्यावेदव्रतस्नाता ब्राह्मणाः सर्व्व एव हि ॥
सदाचारपराश्चैव विज्ञेयाः पङ्क्तिपावनाः ।
तथा च ।
"अयोध्यायां महाराजः पुरा पङ्क्तिरथो बली ।
तस्यात्मजो रामचन्द्रः सर्व्वशूरशिरोमणिः ॥"
इति पाद्मे पातालखण्डम् ॥ (तथा, रघुः । ९ । ७४ ।
"नृपतेः प्रतिषिद्धमेव तत्
कृतवान् पङ्क्तिरथो विलङ्घ्य यत् ॥")

**पङ्क्तिवीजः**, पुं, (पङ्क्तिभूतानि वीजानि यस्य
सः ।) वर्व्वूरवृक्षः । इति राजनिर्घण्टः ॥

**पङ्गुः**, पुं, (खञ्जति गतिवैकल्यं प्राप्नोतीति । खजि
गतिवैकल्ये । "बाहुलकात् कुः । खजयोः
पगौ नुमागमश्च ।" उणां । १ । ३७ । इति पगौ
नुमागमश्च । अस्य कक्षाया अत्युच्चतया बहु-
कालेन राशिभागादिभोगात् मन्दगतित्वादस्य
तथात्वम् ।) शनैश्चरः । इति शब्दमाला ॥ (परि-
व्राट् । यथोक्तं चिन्तामणौ ।
"भिक्षार्थं गमनं यस्य विण्मूत्रकरणाय च ।
योजनान्न परं याति सर्व्वथा पङ्गुरेव सः ॥")

**पङ्गुः**, त्रि, (खजि गतिवैकल्ये । बाहुलकात् कुः ।
खस्य पत्वे जस्य गादेशः नुम् च । उणां १ । ३७ ।)
जङ्घावैकल्येन चलनाक्षमः । तत्पर्य्यायः । श्रोणः
२ । इत्यमरः । २ । ६ । ४८ ॥ जङ्घाहीनः ३ । इति
शब्दरत्नावली ॥ (यथा, महाभारते २ । ५ । १२५ ।
पाककर्त्ता । इति व्याकरणम् ॥ स्वार्थे कनि पच-
कश्च ॥

**पचतः** पुं, (पचतीति । "भृमृदृशियजिपर्व्वि-
पच्यमितमिनमिहर्य्योऽतच् ।" उणां । ३ । ११० ।
इति अतच् ।) सूर्य्यः । अग्निः । इन्द्रः ।
इत्युणादिकोषः ॥ (परिपक्वे, त्रि । यथा,
ऋग्वेदे । १ । ६१ । ७ । "पचतं सहीयान्
विध्यद्वराहं तिरो अद्रिमस्ता ॥")

**पचतिकल्पं** क्ली, (ईषदूनं पचतीति तिङन्तात्
कल्पप् ।) ईषदूनस्य पाकस्य कर्त्ता । इति
व्याकरणम् ॥

**पचत्पुटः**, पुं, (पचत् पुटमस्य ।) सूर्य्यमणि-
वृक्षः । इति शब्दचन्द्रिका ॥

**पचन्**, [त्] त्रि, (पचति यः । "लटः शत्रिति ।"
२ । २ । १२४ । इति शतृप्रत्ययः ।) पाक-
कर्त्ता । इति व्याकरणम् ॥

**पचनं**, क्ली, (पच्यते इति । पच् + भावे ल्युट् ।)
पाकः । (यथा, भागवते । ३ । २६ । ४० ।
"द्योतनं पचनं पानमदनं हिममर्द्दनम् ॥"
पच्यतेऽनेन् इति पचेः करणे ल्युट् । पाकसाध-
नम् । यथा, ऋग्वेदे । १ । १६२ । ६ । "ये
चार्वते पचनं संभरन्त्युतो तेषामभिगूर्तिर्न
इन्वतु ॥")

**पचनः**, पुं, (पचत्यसौ इति । पच् + कर्त्तरि
ल्युः ।) अग्निः । इति शब्दचन्द्रिका ॥ पाक-
कर्त्तरि, त्रि ॥

**पचनी**, स्त्री, (भुक्तमजीर्णादिकं पच्यतेऽनया ।
पच् + करणे ल्युट् स्त्रियां ङीप् ।) वनवीज-
पूरकः । इति राजनिर्घण्टः ॥

**पचन्ती**, स्त्री, (ओदनादीन् पचति या । पच् +

मातापित्रोर्य्यश्च वश्यः श्रोत्रियो दश पूरुषः ॥
ऋतुकालाभिगामी च धर्म्मपत्नीषु यः सदा ।
वेदविद्याव्रतस्नातो विप्रः पङ्क्तिं पुनात्युत ॥
अथर्व्वशिरसोऽध्येता ब्रह्मचारी यतव्रतः ।
सत्रवादी धर्म्मशीलः स्वकर्म्मनिरतश्च यः ॥
ये च पुण्येषु तीर्थेषु अभिषेककृतश्रमाः ।
मखेषु च समस्तेषु भवन्त्यवभृथप्लुताः ॥
अक्रोधना ह्यचपलाः क्षान्ता दान्ता जितेन्द्रियाः ।
सर्व्वभूतहिता ये च श्राद्धेष्वेतान् निमन्त्रयेत् ॥
एतेषु दत्तमक्षय्यमेते वै पङ्क्तिपावनाः ।
यतयो मोक्षधर्म्मज्ञा योगाः सुचरितव्रताः ॥
ये चेतिहासं प्रयताः श्रावयन्ति द्विजोत्तमान् ।
ये च भाष्यविदः केचिद्ये च व्याकरणे रताः ॥
अधीयते पुराणं ये धर्म्मशास्त्राणि चाप्युत ।
अधीत्य च यथान्यायं विधिवत्तस्य कारिणः ॥
उपपन्नो गुरुकुले सत्यवादी सहस्रदः ।
अग्र्याः सर्व्वेषु वेदेषु सर्व्वप्रवचनेषु च ॥
यावदेते प्रपश्यन्ति पङ्क्त्यां तावत् पुनन्ति च ।
ततो हिपावनात् पङ्क्त्या उच्यन्ते पङ्क्तिपावनाः ॥
अनृत्विगनुपाध्यायः स चेदग्र्यासनं व्रजेत् ।
ऋत्विग्भिरननुज्ञातः पङ्क्त्या हरति दुष्कृतम् ॥
अथ चेद्वेदवित् सर्व्वैः पङ्क्तिदोषैर्व्विवर्ज्जितः ।
न च स्यात् पतितो राजन् ! पङ्क्तिपावन उच्यते ॥”
इति पाद्मे स्वर्गखण्डे ३५ अध्यायः ॥
(पञ्चाग्निर्गृ हस्थः । यथाह हारीतः ।
“पवनः पावनस्त्रेता यस्य पञ्चाग्नयो गृहे ।
“कच्चिदन्धांश्च मूकांश्च पङ्गून् व्यङ्गानबान्धवान् ।
पितेव पासि धर्म्मज्ञ ! तथा प्रव्रजितानपि ॥”
यानहरणेनैव लोकः पङ्गुर्भवति । यथा, मार्क-
ण्डेये । १५ । ३१ ।
“पुष्पापहृद्दरिद्रश्च पङ्गुर्यानापहृन्नरः ॥”)
अस्य लक्षणं खञ्जशब्दे द्रष्टव्यम् ॥

**पङ्गुलः**, पुं, सितकाचाभघोटकः । इति हेमचन्द्रः ॥

**पङ्गुल्यहारिणी**, स्त्री, (सेवनेन पङ्गुल्यं पङ्गुत्वं हरति या । पङ्गुल्य + हृ + णिनि + ङीप् ।)
शिमृडीक्षुपः । इति राजनिर्घण्टः ॥

**पच**, इ क ततौ । इति कविकल्पद्रुमः ॥ (चुरां-परं-सकं-सेट् । इदित् ।) ततिरिह विस्तार-
वचनम् । इ क, पञ्चयति धीरो ग्रन्थार्थम् । इति
दुर्गादासः ॥ (यथा, गीतगोविन्दे । १० । १३ ।
“व्यथयति वृथा मौनं तन्वि ! प्रपञ्चय पञ्चमम् ।
तरुणि ! मधुरालापैस्तापं विनोदय दृष्टिभिः ॥”)

**पच**, इ ङ व्यक्तीकारे । (भ्वां-आत्मं-सकं-सेट् ।)
इ, कर्म्मणि पञ्च्यते । ङ, पञ्चते स्वगुणं भिक्षुकः ।
इति दुर्गादासः ॥

**पच**, ङ औ व्यक्तीकारे । इति कविकल्पद्रुमः ॥
(भ्वां-आत्मं-सकं-अनिट् ।) औ, पक्ता । ङ, पचते स्वगुणं भिक्षुकः । इति दुर्गा-
दासः ॥

**पच**, डु ञ औ ष पाके । इति कविकल्पद्रुमः ॥
(भ्वां-उभं-द्विकं-अनिट् ।) पाको विक्लित्यनु-
शतृ + स्त्रियां ङीप् ।) पाककर्त्री । इति व्याक-
रणम् ॥

**पचमानः**, त्रि, (पचतेऽसौ इति । “लटः शतृ-
शानचौ” । ३ । २ । १२४ । इति शानच् ।)
पाककर्त्ता । इति व्याकरणम् ॥ (पुं, वह्निः ॥)

**पचम्पचा**, स्त्री, (पचं पच्यं पचति । पचेः खश
ततो मुम् । स्त्रियां टाप् ।) दारुहरिद्रा ।
इत्यमरः । २ । ४ । १०२ ॥

**पचा**, स्त्री, (पच्यते इति पचेः षित्वादङ् तत-
ष्टाप् ।) पाकः । इत्यमरः । ३ । २ । ८ ॥ (पच-
त्यसौ इति पचाद्यच् स्त्रियां टाप् । पाक-
कर्त्री ॥)

**पचिः**, पुं, (पचतीति । पच् + “सर्व्वधातुभ्यः इन् ।”
उणां । ४ । ११७ । इति इन् ।) अग्निः । इति
त्रिकाण्डशेषः ॥ पचनम् । इति संक्षिप्तसार-
व्याकरणम् ॥

**पचेलिमः**, पुं, (पचत्यसौ इति । “पच एलि-
मच् ।” उणां । ४ । ३७ । इति एलिमच् ।)
सूर्य्यः । अग्निः । इत्युणादिकोषः ॥ कर्त्तुरना-
यासेन स्वयं पक्वं त्रि । (स्वयमेव पच्यते पचः
कर्म्मकर्त्तरि केलिमप्रत्ययः ।) यथा पचेलिमा-
स्तण्डुलाः । इति मुग्धबोधव्याकरणम् ॥ (यथा च

सायं प्रातः प्रदीप्यन्ते स विप्रः पङ्क्तिपावनः ॥”)

**पङ्क्तिरथः**, पुं, (पङ्क्तिषु दशसु दिक्षु गतो रथो यस्य ।) दशरथराजः । इति शब्दरत्नावली ॥

कूलव्यापारः । ड्ु, पक्त्रिमम् । ञ, पचति पचते तण्डुलानोदनं लोकः । औ, पक्ता । ष, पचा । इति दुर्गादासः ॥

**पचः**, त्रि, पचति यः । (पच् + “नन्दिग्रहिपचा-दिभ्यो ल्युणिन्यचः ।” ३ । १ । १३४ । इति अच् ।)

मनौ । ४ । १७२ । श्लोकस्य टीकायां कुल्लूक-
भट्टः । "यथा भूमिरुप्तवीजमात्रा तदैव प्रचुर-
पचेलिमफलव्रीहिस्तवकसम्बलितान भवति ॥")

**पचेलुकः** पुं, (पचत्योदनादीन् । पचो बाहु-
लकादेलुकः ।) सूदः । पाचकः । इति त्रिकाण्डशेषः ॥

**पच्छः**, [स्] व्य, (वीप्सार्थे पादं पादमिति पद्भावः
ततः शस् ।) पादं पादम् । इति संक्षिप्तसार-
व्याकरणम् ॥

**पच्यमानः**, त्रि, (पच्यतेऽसौ इति । पच् + कर्म्मणि
शानच् ।) वर्त्तमानपचनकर्म्मताश्रयः । वर्त्त-
मानपाकविशिष्टतण्डुलादि । इति व्याकरणम् ॥

**पज**, इ रोधे । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-सकं-सेट्-इदित् ।) रोध आवरणम् ।
पञ्जरः । सौत्रधातुरयम् । इति दुर्गादासः ॥

**पज्जः**, पुं, (पद्भ्यां जातः । पद् + जन् + कर्त्तरि
डः ।) शूद्रः । इति हेमचन्द्रः ॥ (शूद्रस्य
पदजातत्वमुक्तं श्रुतौ यथा, --
"ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृतः ।
उरू तदस्य यत् वैश्यः पद्भ्यां शूद्रो व्यजायत ॥")

**पज्झटिका**, स्त्री, (छन्दोविशेषः । तल्लक्षणं यथा,
"प्रतिपदयमकितषोडशमात्रा
नवमगुरुत्वविभूषितगात्रा ।
पज्झटिका पुनरत्र विवेकः
क्वापि न मध्यगुरुर्गण एकः ॥"
उदाहरणं यथा, --

माणम् ।" ५ । १ । ५७ । इत्यनुवृत्तौ "संख्यायाः
संज्ञा संङ्घसूत्राध्ययनेषु ।" ५ । १ । ५८ । इति
पञ्चसङ्ख्यापरिमिति संघार्थे कन् प्रत्ययः । धनि-
ष्ठादि पञ्चनक्षत्रम् । यथाह चिन्तामणिः ।
"अग्निचौरभयं रोगो राजपीडा धनक्षतिः ।
संग्रहे तृणकाष्ठानां कृते वस्वादिपञ्चके ॥"
पञ्चभिः क्रीतम् । "संख्याया अतिशदन्तायाः
कन् ।" ५ । १ । १२ । इति कन् । पञ्चभिः क्रीते
द्रव्यविशेषे ॥)

**पञ्चकपालः**, पुं, पञ्चसु कपालेषु संस्कृतः पुरो-
डाशः । ("संस्कृतं भक्षाः ।" ४ । २ । १६ । इत्यण्
ततो "द्विगोर्लुगनपत्ये ।" ४ । १ । ८८ । इत्यणो
लुक् ।) स तु यज्ञविशेषः । यथा । "परा वा
एष यज्ञं पशून् वपति योऽग्निमुद्वासयते पञ्च-
कपालः पुरोडाशो भवति ।" इत्यादि यजुर्वेदीय-
श्रुतिः ॥ (पञ्चानां कपालानां समाहारः । पर-
निपातः ।) कपालपञ्चके, क्ली ॥

**पञ्चकर्म्म**, [न्] क्ली, (पञ्चानां कर्म्मणां समा-
हारः ।) पञ्चप्रकारशारीरिकचिकित्साविशेषः ।
यथा, --
"वमनं रेचनं नस्यं निरूहश्चानुवासनम् ।
पञ्चकर्म्मेदभन्यच्च कर उत्क्षेपणादिकम् ॥"
इति शब्दचन्द्रिका ॥
(भाषापरिच्छेदोक्तानि पञ्चकर्म्माणि । यथा, तत्रैव ६ ।

"पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
सक्षारैरर्द्धपलिकैर्द्विः प्रस्थं सर्पिषः पचेत् ॥
कल्कैर्द्विपञ्चमूलस्य तुलार्द्धस्य रसेन च ।
दधिमण्डातकोपेतं तत्सर्पिर्जठरापहम् ।
श्वयथुं वातविष्टम्भं गुल्मार्शांसि च नाशयेत् ॥")

**पञ्चकोषाः**, पुं, (पञ्च च ते कोषाश्चेति ।) कोषा
इवात्माच्छादकत्वेन कोषाः । ते च पञ्चविधाः ।
यथा । अन्नविकारत्वात् स्थूलशरीरं अन्नमय-
कोषः १ ॥ पञ्चकर्म्मेन्द्रियसहितप्राणपञ्चकं प्राण-
मयकोषः २ ॥ पञ्चज्ञानेन्द्रियसहितं मनः मनो-
मयकोषः ३ ॥ पञ्चज्ञानेन्द्रियसहिता बुद्धिः
विज्ञानमयकोषः ४ ॥ अहङ्कारात्मकोऽविद्या-
त्मको वा आनन्दमयकोषः ५ ॥ इति शिव-
गीतामतम् ॥ * ॥ अपि च ।
"पितृभुक्तान्नजाद्वीर्य्याज्जातोऽन्नेनैव वर्द्धते ।
देहः सोऽन्नमयो नात्मा प्राक् चोर्द्ध्वं तदभावतः ॥"
इत्यन्नमयकोषः १ ॥
"पूर्णो देहे वलं यच्छन्नक्षाणां यः प्रवर्त्तकः ।
वायुः प्राणमयो नासावात्मा चैतन्यवर्ज्जनात् ॥"
इति प्राणमयकोषः २ ॥
"अहन्तां ममतां देहे गृहादौ च करोति यः ।
कामाद्यवस्थया भ्रान्तो नासावात्मा मनोमयः ॥"
इति मनोमयकोषः ३ ॥
"लीना सुप्तौ वपुर्बोधे व्याप्नुयादानखाग्रगा ।
चिच्छायोपेतधीर्नात्मा विज्ञानमयशब्दभाक् ॥"
इति विज्ञानमयकोषः ४ ॥
"काचिदन्तर्मुखावृत्तिरानन्दप्रतिविम्बभाक् ।
पुण्यभोगे भोगशान्तौ निद्रारूपेण लीयते ॥
कादाचित्कत्वतो नात्मा स्यादानन्दमयोऽप्ययम् ॥"
इत्यानन्दमयकोषः ५ ॥ इति पञ्चदशी ॥

"तरलवतंसाश्लिष्टस्कन्ध-
श्चलतरपज्झटिकाकटिबन्धः।
मौलिचपलशिखिचन्द्रकवृन्दः
कालियशिरसि ननर्त्त मुकुन्दः ॥"
इति छन्दोमञ्जर्य्यां मात्रावृत्ताख्यः ५
स्तवकः ॥
(तथा च
भगवच्छङ्कराचार्य्यकृतमोहमुद्गरे ४ ।
"मा कुरु धनजनयौवनगर्व्वम्
हरति निमेषात् कालः सर्व्वम् ।
मायामयमिदमखिलं हित्वा
ब्रह्मपदं प्रविशाशु विदित्वा ॥" * ॥)
क्षुद्रघण्टिका । इति छन्दोमञ्जरीटीका ॥

**पञ्च**, [न्] त्रि, संख्याविशेषः । पाँच इति भाषा ।

बहुवचनान्तोऽयम् । इत्युणादिकोषः ॥
(यथा,
मनुः । ११ । १६५ ।
"पुष्पमूलफलानाञ्च पञ्चगव्यं विशोधनम्
॥")
तद्वाचकानि यथा । पाण्डवः १
शिवास्यम् २
इन्द्रियम् ३ स्वर्गः ४ व्रताग्निः ५
महापापम् ६
महाभूतम् ७ महाकाव्यम् ८ महामखः
९
पुराणलक्षणम् १० अङ्गम् ११ प्राणाः
१२ वर्गः
१३ इन्द्रियार्थः १४ वाणः १५ । इति
कविकल्प-
लता ॥ पञ्चसंख्याविशिष्टे, त्रि । यदुक्तम्
। "संख्या-
संख्येये ह्यादश त्रिषु ।" इत्यमरः । २ ।
९ । ८३ ॥

**पञ्चकं**, त्रि, (पञ्चैव इति स्वार्थे कन् ।) पञ्च ।

यथा, भाषापरिच्छेदे । ३३ ।
"संख्यादि-
पञ्चकं कालदिशोः शब्दश्च ते च खे ।"
इति ॥
(पञ्च संख्यापरिमाणमस्य । "तदस्य
परि-
"उत्क्षेपणं ततोऽवक्षेपणमाकुञ्चनं तथा ।
प्रसारणञ्च गमनं कर्म्माण्येतानि पञ्च च
॥")

**पञ्चकषायः**, पुं, (पञ्चविधः कषायः । अथवा

पञ्चानां वृक्षाणां कषायः वल्कलरसः ।
क्वचित्त्वयं
बहुवचनान्तोऽपि दृश्यते । तत्र तु पञ्च च
ते
कषायाश्चेति एवमेव ।)
महास्नानीयपञ्चप्रकार-
कषायद्रव्यम् । यथा, --
"जम्वुशाल्मलिवाट्यालंवकुलं वदरं
तथा ।
कषायाः पञ्च विज्ञेया देव्याः प्रीतिकराः
शुभाः ॥"
इति दुर्गोत्सवपद्धतिः ॥

**पञ्चकृत्यः**, पुं, (पञ्चं विस्तृतं कृत्यं शाखापल्लवा-

दिकं यत्र ।) पक्तपौडवृक्षः । इति
राजनिर्घण्टः ॥
(क्ली, पञ्चं प्रपञ्चितं कृत्यं कार्य्यं
सृष्ट्यादिकम् ।
सृष्टिस्थितिध्वंसविधानानुग्रहात्मकं
कार्य्यम् इति
भावः । यथाह चिन्तामणिः ।
"यस्मिन्
सृष्टिस्थितिध्वंसविधानानुग्रहात्मकम् ।
कृत्यं पञ्चविधं शश्वद्भासते तं नुमः शिवम्
॥")

**पञ्चकोलं**, क्ली, पाचनविशेषः । यथा, --

"पञ्चकोलं कणामूलं कृष्णाचव्याग्निनागरैः
।"
इति शब्दचन्द्रिका ॥ अस्य गुणाः ।
"पञ्चकोलं रसे पाके कटुकं रुचिकृन्मतम्
।
तीक्ष्णोष्णं पाचनं श्रेष्ठं दीपनं कफवातनुत्
।
गुल्मप्लीहोदरानाहशूलघ्नंपित्तकोपनम्
॥"
इति भावप्रकाशः ॥ अपि च ।

**पञ्चक्षारगणः**, पुं, (पञ्चानां क्षाराणां गणः ।)

क्षारपञ्चकम् । पञ्चलवणम् । यथा, --
"क्षारैस्तु पञ्चभिः प्रोक्तः पञ्चक्षाराभिधो गणः ।
काचसैन्धवसामुद्रविट्सौवर्च्चलकैः समैः ॥
स्यात् पञ्चलवणं तच्च मृज्जोपेतं षडाह्वयम्
॥"
इति राजनिर्घण्टः ॥

**पञ्चखट्वं**, क्ली स्त्री, (पञ्चानां खट्वानां समाहारः ।)

पञ्चखट्वाः समाहृताः । इति व्याकरणम् ॥

**पञ्चगणयोगः**, पुं, (पञ्चानां गणो यत्र स एव

योगः ।) विदारी गन्धा वृहती पृश्निपर्णी
निदिग्धिका श्वदंष्ट्रा एता मिलिताः । इति
राजनिर्घण्टः ॥

**पञ्चगवं**, क्ली स्त्री, पञ्चानां गवां समाहारः ॥

(समासे टच् ।) पञ्चगावः समाहृताः । इति
व्याकरणम् ॥

**पञ्चगवधनः**, त्रि, पञ्च गावो धनं यस्य । इति

मुग्धबोधव्याकरणम् ॥

**पञ्चगव्यं**, क्ली, (गोर्विकारः गव्यम् । पञ्चगुणितं

गव्यम् ।) गोसम्बन्धिपञ्चप्रकारद्रव्यम् । (यथा,
मनुः । ११ । १६५ ।
"भक्ष्यभोज्यापहरणे यानशय्यासनस्य च ।
पुष्पमूलफलानाञ्च पञ्चगव्यं विशोधनम् ॥")

| | | |
|---|---|---|
| | “पिप्पली पिप्पलीमूलं चव्यचित्रकनागरम्<br>।<br>दीपनीयः श्रुतो वर्गः कफानिलगदापहः<br>॥”<br>इति चक्रपाणिदत्तः ॥ (पञ्चकोलघृतमुक्तं<br>चरके<br>चिकित्सितस्थाने १८ अध्याये । | |

तत्तु गोमयगोमूत्रदुग्धदधिघृतरूपम् ।
यथा, --
“पञ्चगव्यं दधिक्षीरघृतगोमूत्रगोमयैः ।”
इति
शब्दचन्द्रिका ॥ * ॥ तत्परिमाणं यथा, --
“पलमात्रं दुग्धभागं गोमूत्रं तावदिष्यते ।
घृतञ्च पलमात्रं स्यात् गोमयं तोलकत्रयम् ॥
दधि प्रसृतमात्रं स्यात् पञ्चगव्यमिदं स्मृतम् ।
अथवा पञ्चगव्यानां समानो भाग इष्यते ॥”
इति गौतमीयतन्त्रम् ॥ * ॥ अपि च ।
“गोशकृद्द्विगुणं मूत्रं पयः स्यात्तच्चतुर्गुणम् ।
घृतं तद्द्विगुणं प्रोक्तं पञ्चगव्यं तथा दधि ॥” * ॥
तस्य पानफलं यथा, --
“पञ्चगव्येन पूतन्तु वाजिमेधफलं लभेत् ।
गव्यन्तु परमं मेध्यं गव्यादन्यन्न विद्यते ॥
सौम्ये मुहूर्त्ते संयुक्ते पञ्चगव्यन्तु यः पिबेत् ।
यावज्जीवकृतात् पापात् तत्क्षणादेव मुच्यते ॥”
गव्यानां देवप्रीतिकरत्वं यथा, --
“दध्ना हि त्रिदशाः सर्व्वे क्षीरेण च महेश्वरः ।
घृतेन पावको नित्यं पायसेन पितामहः ॥
सकृद्दत्तेन प्रीयन्ते वर्षाणाञ्च त्रयोदश ।
तां दत्त्वा चैव पीत्वा च प्रेतो मेध्यस्तु जायते ॥”
इति वराहपुराणम् ॥ * ॥
तस्य विशेषो यथा, --
“पयः काञ्चनवर्णायाः श्वेतवर्णोत्थगोमयम् ।
गोमूत्रं ताम्रवर्णाया नीलवर्णभवं घृतम् ॥
दधि स्यात् कृष्णवर्णाया दर्भोदकसमायुतम् ।
“उर्व्वशी मेनका रम्भा पञ्चचूडा तिलोत्तमा ।
उपानृत्यंस्तु काकुत्स्थं प्रहृष्टा रक्षसो वधात् ॥”)

**पञ्चजनः**, पुं, (पञ्चभिर्भूतैर्जन्यतेऽसौ । पञ्च + जन् + कर्म्मणि घञ् । “जनिवध्योश्च” । ७ । ३ । ३५ । इति न वृद्धिः ।) पुरुषः । इत्यमरः । २ । ६ । १ ॥ (यथा, राजतरङ्गिण्याम् । ३ । ३५५ ।
“सद्भावश्यादिका देव्यस्तेन श्रीशब्दलाञ्छिताः ।
पञ्च पञ्चजनेन्द्रेण पुरे तस्मिन् निवेशिताः ॥”)
दैत्यविशेषः । स च संह्रादस्य कृतौ पत्न्यां जातः । (यथा, श्रीभागवते । ६ । १८ । १४ ।
“संह्रादस्य कृतिर्भार्य्याऽसूत पञ्चजनं ततः ॥”
अपरो दैत्यभेदः । श्रीकृष्णः एनं हत्वा सान्दीपनिमुनये अस्य मृतं पुत्त्रं गुरुदक्षिणास्वरूपं ददौ । यथा, भागवते । ३ । ३ । २ ।
“सान्दीपनेः सकृत् प्रोक्तं ब्रह्माधीत्य सविस्तरम् ।
तस्मै प्रादात् वरं पुत्त्रं मृतं पञ्चजनोदरात् ॥”)
अस्यास्थ्ना पाञ्चजन्यनामा शङ्खो जातः । सच श्रीकृष्णस्य । यथा, --
“पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ॥”
इत्यादि श्रीभगवद्गीतायाम् । १ । १५ ॥ (प्रजापतिः । यथा, भागवते । ६ । ४ । ५१ ।
“एषा पञ्चजनस्याङ्ग ! दुहिता वै प्रजापतेः ।
सतैलं वर्त्तिकायुक्तं देहस्थं ब्रह्मतेजसम् ।
गुरुणा मन्त्रदानेन तत्सूत्रं दीपितं भवेत् ॥
देवतायाः शरीरं हि मन्त्रादुत्पद्यते ध्रुवम् ।
अत एव हि तस्यात्मा देवरूपो न संशयः ॥
ईश्वरस्य तु यद्वीर्य्यं तदेव अक्षयात्मकम् ।
तेन वर्णात्मकं देहं जन्तोरेव न संशयः ॥
मन्त्रवर्णे सर्व्ववर्णमयास्ते परमेश्वरि ! ।
वर्णतत्त्वमिदं देवि ! सर्व्वस्वं मम यद्भवेत् ॥
स्वयं देवो न चान्योऽस्मि निर्म्मलो देवरूपकः ।
सर्व्वत्र देवतां ध्यायेत् तृणगुल्मलतादिषु ॥
ध्यानेन लभते सर्व्वं ध्यानेन विष्णुरूपकः ।
ध्यानेन सिद्धिमाप्नोति विना ध्यानं न सिध्यति ॥
इति ते कथितं तत्त्वं वैष्णवस्य सुरेश्वरि ! ।
यज्ज्ञानादमरत्वञ्च विष्णुरूपो भवेन्नरः ॥
ते नरा नहि गच्छन्ति कदाचिद्यममन्दिरम् ॥”
इति निर्व्वाणतन्त्रे १२ पटलः ॥

**पञ्चतपाः**, [स्] त्रि, (अग्न्यादिभिः पञ्चभिस्तेजः-पदार्थैस्तपति यः । पञ्च + तप् + असुन् ।) अग्निचतुष्टयसूर्य्यपञ्चकसाध्यतपोविशिष्टः । यथा,
“तेजस्विमध्ये तेजस्वी दवीयानपि गण्यते ।
पञ्चमः पञ्चतपसस्तपनो जातवेदसाम् ॥”
इति माघे । २ । ५२ ॥

**पञ्चतयं**, त्रि, (पञ्च अवयवा यस्य । अवयवे तयप् ।) पञ्चावयवम् । इति व्याकरणम् ॥

**पञ्चतन्मात्रं**, क्ली, (पञ्चगुणितं शब्दादिभूतसूक्ष्मात्मकं तन्मात्रम् ।) तामसाहङ्कारोत्पन्नमहाभूतोपादानकारणशब्दस्पर्शरूपरसगन्धाः । तदाश्रयद्रव्याणि च । इति सांख्यभाष्यम् ॥

**पञ्चता**, स्त्री, (पञ्चानां भूतानां भावः । पाञ्चभौतिकस्य शरीरस्य पञ्चधाभावे आरम्भकाणां भूतानां तद्भावापत्तौ सत्यां औपचारिकत्वात् ।) मृत्युः । इत्यमरः । २ । ८ । ११६ ॥ (यथा, भागवते । ७ । ८ । ५२ ।

गोमूत्रमाषकाण्यष्टौ गोमयस्य चतुष्टयम् ॥
क्षीरस्य द्वादश प्रोक्ता दध्नस्तु दश उच्यते ।
घृतस्य माषकाः पञ्च पञ्चगव्यं मलापहम् ॥”
इति गारुडे प्रायश्चित्तप्रकरणम् ॥

**पञ्चगुः**, त्रि, पञ्चभिर्गोभिः क्रीतः । इति मुग्ध-

बोधव्याकरणे द्विगुसमासः ॥

**पञ्चगुप्तः**, पुं, (पञ्चानामिन्द्रियाणां चापल्यं गुप्तं

यत्र । यद्वा पञ्चानां पदार्थानां गुप्तः गोपनं यत्र ।) चार्व्वाकदर्शनम् । (करौ चरणौ शिर-
श्चेति पञ्चाङ्गानि गुप्तानि अस्य ।) कच्छपः ।
इति मेदिनी ॥

**पञ्चगुप्तिरसा**, स्त्री, (पञ्चधा गुप्तौ रसोऽस्याः ।)

स्पृक्का । इति राजनिर्घण्टः ॥

**पञ्चचामरं**, क्ली, षोडशाक्षरपादच्छन्दोविशेषः ।

यथा, --
“प्रमाणिकापदद्वयं वदन्ति पञ्चचामरम् ॥”
इति छन्दोमञ्जरी ॥ ४ ॥
(अस्योदाहरणमाह तत्रैव ।
“सुरद्रुमूलमण्डपे विचित्ररत्ननिर्म्मिते
लसद्वितानभूषिते सलीलविभ्रमालसम् ॥
सुराङ्गनाभवल्लवीकरप्रपञ्चचामर-
स्फुरत्समीरवीजितं सदाच्युतं भजामि तम् ॥”)

**पञ्चचीरः**, पुं, (पञ्च चीराण्यस्य । बौद्धधर्म्माव-

लम्बि-जिनभेदः । पञ्च चीराणि स्वरभेदा अस्य ।)
मञ्जुघोषः । इति त्रिकाण्डशेषः ॥

**पञ्चचूडा**, स्त्री, (पञ्चसङ्ख्यकाः चूडाः शिरोरत्नानि

यस्याः ।) अप्सरोविशेषः । इति पुराणम् ॥
(यथा, रामायणे । ६ । ९२ । ७१ ।
असिक्नी नाम पत्नीत्वे प्रजेश !
प्रतिगृह्यताम् ॥”
सगरराजपुत्त्रः । यथा, हरिवंशे । १५ । ६ ।
“केशिन्यसूत सगरादसमञ्जसमात्मजम् ।
राजा पञ्चजनो नाम बभूव स महाबलः ॥”
गन्धर्ब्बाः पितरो देवा असुरा रक्षांसि पञ्चजन-
पदवाच्यानि भवन्ति । इति चिन्तामणिः ॥)

**पञ्चजनी**, स्त्री, पञ्चानां जनानां समाहारः ततो

ङीप् । इति व्याकरणम् ॥
(विश्वरूपकन्या ।
यथा, भागवते । ५ । ७ । १ ।
“तदनुशासनपरः
पञ्चजनीं विश्वरूपदुहितरमुपयेमे ॥”)

**पञ्चजनीनः**, पुं, (पञ्चसु जनेषु व्यापृतः । दिक्-

संख्ये संज्ञायामिति समासः । पञ्चजने हितम् ।
पञ्चजनादुपसङ्ख्यानमितिखः । पां । ५ । १ । ९ ।
वार्त्तिके ।) भण्डः । इति हलायुधः ॥ पञ्च-
जनसम्बन्धिनि पञ्चजन्याः प्रभौ च त्रि ॥

**पञ्चज्ञानः**, पुं, (पञ्चानां पदार्थानां ज्ञानमस्य ।)

बुद्धः । इति हेमचन्द्रः ॥

**पञ्चतक्षं**, क्ली, स्त्री, पञ्चानां तक्ष्णां समआहारः ।

इति व्याकरणम् ॥

**पञ्चतत्त्वं**, क्ली, (पञ्चानां तत्त्वानां समाहारः ।)

पञ्चभूतम् । इति स्वरोदयः ॥
पञ्चमकारः । मद्य-
मांसमत्स्यमुद्रामैथुनरूपम् । यथा, --
“मद्यं मांसं तथा मत्स्यं मुद्रां मैथुनमेव च ।
“स तु जनपरितापं तत्कृतं जानता ते ! ।
नरहर उपनीतः पञ्चतां पञ्चविंश ॥”)
देहारम्भकाणां पृंथिव्यादिपञ्चमहाभूतानां
स्वांशसंक्रमणात् पृथक्त्वम् । इति भरतः ॥ पञ्च-
भावः । इति मेदिनी ॥ (यथा, मनुः । ८ । १५१ ।
“धान्येसदेलवे वाह्ये नातिक्रामति पञ्चताम् ॥”)

**पञ्चतिक्तं**, क्ली, (पञ्चगुणितं तिक्तम् ।) तिक्तद्रव्य-

पञ्चकम् । यथा । निम्बामृतावृषपटोलनिदि-
ग्धिकाः । इत्यादि चक्रपाणिदत्तः ॥

**पञ्चतीर्थी**, स्त्री, (पञ्चानां तीर्थानां समहारः ।

ङीप् ।) तीर्थपञ्चकम् । यथा । “विषुवद्दिवसे
प्राप्ते पञ्चतीर्थीविधानतः ।” इति तिथितत्त्वम् ।
पञ्चतीर्थान्याह । (तानि च भिन्नदेशे भिन्न-
रूपाणि, तत्र काशीस्थानि । यथा, काशीखण्डे ।
१०० । ३९ -- ४० ।
“ज्ञानवापीमुपस्पृश्य नन्दिकेशं ततोऽर्च्चयेत् ।
तारकेशं ततोऽभ्यर्च्य महाकालेश्वरं ततः ॥
ततः पुनर्दण्डपाणिमित्येषा पञ्चतीर्थिका ॥”)

| | पञ्चतत्त्वमिदं देवि ! निर्व्वाणमुक्तिहेतवे ॥<br>मकारपञ्चकं देवि ! देवानामपि दुर्लभम् ॥”<br>इति कैवल्यतन्त्रे प्रथमपटलः ॥<br>वैष्णवानां यथा, --<br>“तत्त्वज्ञानमिदं प्रोक्तं वैष्णवे शृणु यत्नतः ।<br>गुरुतत्त्वं मन्त्रतत्त्वं मनस्तौत्त्वं सुरेश्वरि ! ॥<br>देवतत्त्वं ध्यानतत्त्वं पञ्चतत्त्वं वरानने ! ।<br>तत्रादौ श्रीगुरोस्तत्त्वं स्नेहाद्वक्ष्यामि पार्व्वति ! ॥ | |
|---|---|---|

पुरुषोत्तमस्थानि यथा, --
"मार्कण्डेये वटे कृष्णे रौहिणेये महोदधौ ।
इन्द्रद्युम्नसरः स्नात्वा पुनर्जन्म न विद्यते ॥"
इति तीर्थतत्त्वम् ॥ * ॥ अपि च । नाना-
स्थानस्थानि यथा, --
"पृथिव्यां यानि तीर्थानि
सर्व्वाण्येवाभिषेचनात् ।
तत्पञ्चतीर्थस्नानेन समं नास्त्यत्र संशयः ॥
एकादश्याञ्च विश्रान्तौ द्वादश्यां शौकरे
तथा ।
त्रयोदश्यां नैमिषे च प्रयागे च चतुर्द्दशी ॥
कार्त्तिक्यां पुष्करे चैव कार्त्तिकस्य
सितासिते ।
कालेष्वेषु नरः स्नात्वा सर्व्वं पापं
व्यपोहति ॥"
इति वराहपुराणम् ॥

**पञ्चत्वं**, क्ली, (पञ्चानां क्षित्यादिभूतानां भावः ।)

मरणम् । पञ्चानां भावः । इति हेमचन्द्रः ॥
("पञ्चधासम्भृतः कायो यदि
पञ्चत्वमामतः ।
पञ्चभिः स्वशरीरोत्थैस्तत्र का परिवेदना" ॥
तथा, भागवते । १ । १५ । ४१ ।
"मृत्यावपानं सोत्सर्गं तं पञ्चत्वे
ह्यजोहवीत् ॥")

**पञ्चदशः**, त्रि, पञ्चदशानां पूरणः । (पूरणे डट् ।

पञ्चाधिका दश यत्र वा ।) पोनेर इत्यादि
भाषा । तत्संख्यामात्रवाचित्वे
नान्तबहुवच-
नान्तोऽयम् । इति व्याकरणम् ॥
तद्वाचकशब्दः ।
(यथा, अथर्व्ववेदे । ११ । १ । १९ ।
"पितामहाः
पितरः प्रजोपजाहं पक्त्वा पञ्चदशस्ते
अस्मि ॥")
तिथिः । इति कविकल्पलता ॥

"पञ्च पञ्चनखा भक्ष्या ये प्रोक्ताः
कृतजैर्द्विजैः ।
कौशल्याज ! शशादीनां तेषां नैकोऽप्यहं
कपिः ॥"
इति भट्टिः । ६ । १३१ ॥

**पञ्चनदः**, पुं, (पञ्च पञ्चसङ्ख्याकाः नद्यः सन्त्यत्र ।

समासे टच् ।) पञ्चनदीयुक्तदेशविशेषः ।
पञ्जाव इति पारस्यभाषा ।
तस्यनामान्तरम् ।
वाह्लीकः मद्रदेशश्च । ता नद्यो यथा ।
शतद्रुः
१ विपाशा २ इरावती ३ चन्द्रभागा ४
वितस्ता
५ । इति पुराणम् ॥
(यथा, राजतरङ्गिण्याम् । ४ । २४८ ।
"रुद्धः पञ्चनदे जातु दुस्तरैः सिन्धुसङ्गमैः ॥")
पञ्चानां नदीनां समाहारे क्ली ॥ (यथा,
रामायणे । ३ । ४३ । २१ ।
"ततः पञ्चनदं कृत्स्नं विचेतव्यं समन्ततः ॥"
तच्च काशीस्थनदीपञ्चकरूपं तीर्थम् ।
यथा,
काशीखण्डे । ५९ । ११३ -- ११६ ।
"किरणाधूतपापे च तस्मिन् धर्म्मनदे शुभे ।
स्रवन्त्यौ पापसंहर्त्र्यौ वाराणस्यां शुभद्रवे ॥
ततो भागीरथी प्राप्ता तेन दैलीपिना सह ।
भागीरथी समायाता यमुना च सरस्वती ॥
किरणाधूतपापा च पुण्यतोया सरस्वती ।
गङ्गा च यमुना चैव पञ्चनद्योऽत्र कीर्त्तिताः ।
अतः पञ्चनदं नाम तीर्थं त्रैलोक्यविश्रुतम् ॥"
तीर्थविशेषः । यथा, महाभारते । ३ । ८२
। ७९ ।
"अथ पञ्चनदं गत्वा नियतो नियताशनः ।

ऊर्द्ध्वावलोकने जीवस्त्वधोदृष्टौ तु
मूलकम् ।
समदृष्टौ भवेद्ध्वातुरेताश्चिन्ताप्रभेदतः ॥"
तत्र ।
"ललाटे पुत्त्रचिन्ता स्यात् कामचिन्ता च
कण्ठके ।
बाहुभ्यां वस्तुचिन्ता च व्याधिचिन्ता
तथोदरे ॥
कटौ विच्छेदचिन्ता च शत्रुचिन्ता च गुह्यके ।
दुःखचिन्ता भवेत् पादे एते चिन्ताप्रभेदकाः ॥" * ॥
अपरञ्च ।
"अक्षरं पक्षिभुक्तञ्च दिग्दैवतदिनानि च ।
कालं वर्णं बलं मित्रं धातुमूलादिकं क्रमात् ॥
आरूढप्रश्नलग्नेभ्यः प्रथमाक्षरतोऽपि वा ।
प्रच्छकस्य वचः शुत्वा ग्र्याह्यो वर्णः
स्वरस्तथा ॥ * ॥
स्वरेण कल्पयेदवारं वारात् पक्षी प्रजायते ।
पक्षिणो जायते वाक्यं वाक्याच्च
फलसम्भवः ॥" * ॥
"अकारादिओकारान्ताः स्वराः पञ्च
प्रकीर्त्तिताः ।
भुक्त्यर्थं कल्पयेद्रूपं स्वरास्ते पक्षिरूपिणः ॥
अकारः श्येन आख्यात इकारः
पिङ्गलस्तथा ।
उकारो वायसश्चैव एकारस्ताम्रशेखरः ।
ओकारो नीलकण्ठश्च स्वरास्ते
पक्षिसंज्ञकाः ॥
अकारः पूर्ब्बदिग्भागे इकारश्चैव दक्षिणे ।
उकारः पश्चिमे ज्ञेय एकारश्चोत्तरे तथा ॥
शेषस्थानेषु सर्व्वेषु ओकारस्तु प्रकीर्त्तितः ।
शकुनानां क्रियागत्या द्यूते युद्धे जयाजयौ ॥
प्राक्श्येनः पिङ्गलोयाम्ये पश्चिमे काक
उच्यते ।
उत्तरे ताम्रचूडश्च कलापी मध्यगः स्मृतः ॥
ङञणाक्षरकैर्हीनान् ककारादींस्तु विन्यसेत् ।

**पञ्चदशी**, स्त्री, (पञ्चदशानां पूरणी । डट् ।
डीप् ।) पूर्णिमा । अमावास्या । इति
मेदिनी ॥ (यथाह याज्ञवल्क्यः । १ ।
१४६ ।
“पञ्चदश्यां चतुर्द्दश्यामष्टम्यां राहुसूतके ।
ऋतुसन्धिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य
च ॥”
(पञ्चदशप्रकरणानि सन्त्यस्याम् ।)
श्रीमद्भारती-
तीर्थविद्यारण्यमुनीश्वरकृतो
वेदान्तग्रन्थविशेषः ॥

**पञ्चदीर्घं**, क्ली, (शरीरस्य स्मृतिशास्त्रोक्तलक्ष-
णकपञ्चस्थलं दीर्घं पञ्चसु अवयवेषु
दीर्घलक्ष-
णकमित्यर्थः ।)
शरीरपञ्चावयवलक्षणविशेषः ।
यथा, --
“बाहू नेत्रद्वयं कुक्षिर्द्वे तु नासे तथैव च ।
स्तनयोरन्तरञ्चैव पञ्चदीर्घं प्रशस्यते ॥”
इति सामुद्रकम् ॥

**पञ्चधा**, व्य, (पञ्चन् + “संख्यायाविधार्थे धा ।”
५ । ३ । ४२ । इति धा ।) पञ्चप्रकारम् ।
इति
व्याकरणम् ॥ (यथा, भागवते । ८ । १९ ।
३७ ।
“धर्म्माय यशसेऽर्थाय कामाय स्वजनाय
च ।
पञ्चधा विभजन् वित्तमिहामुत्र च मोदते
॥”)

**पञ्चनखः**, पुं, (पञ्च नखा यस्य ।) हस्ती । कूर्म्मः ।
इति हेमचन्द्रः ॥ व्याघ्रः । इति
राजनिर्घण्टः ॥ * ॥
भक्षणीयपञ्चनखा यथा, --
“शशकः शल्लकी गोधा खड्गी कूर्म्मश्च
पञ्चमः ॥”
इति स्मृतिः ॥
(तथाच याज्ञवल्क्यः । १ । १७७ ।
“भक्ष्याः पञ्चनखाः
सेधागोधाकच्छपशल्लकाः ।
पञ्चयज्ञानवाप्नोति क्रमशो येऽनुकीर्त्तिताः
॥”
असुरभेदः । यथा, हरिवंशे । १२० । ८८
।
“हत्वा पञ्चनदं नाम नरकस्य महासुरम्
॥”)

**पञ्चनिम्बं**, क्ली, (पञ्चानां स्वीयपुष्पमूलादि-
रूपाणां निम्बानां समाहारः ।)
निम्बवृक्षस्य-
पत्रत्वक्पुष्पफलमूलानि । इति
राजनिर्घण्टः ॥
“पञ्चनिम्बन्तु तत्पुष्पमूलवल्कफलच्छदैः
॥”
इति शब्दचन्द्रिका ॥

**पञ्चनी**, स्त्री, (पञ्च्यते प्रपञ्च्यते पाशक्रीडा-
नियमो यत्र । पचि विस्तारे + ल्युट् स्त्रियां
ङीप् ।) शारिशृङ्खला । इति शब्दरत्नावली
॥
(पाशार छक् इति भाषा ॥)

**पञ्चनीराजनं**, क्ली, पञ्चानां नीराजनानां समा-
हारः । पञ्चप्रकारारात्रिकम् । इति
कालोत्तर-
तन्त्रम् ॥ अस्य विवरणं नीराजनशब्दे
द्रष्टव्यम् ॥

**पञ्चपक्षी**, [न्] पुं, (अकारादि-ओकारान्ताः
ऐउएओरूपाः पञ्चस्वराः पक्षिणः पक्षि-
स्वरूपा यत्र ।)
पारिभाषिकपक्षिपञ्चकद्वारा
त्रिकालबोधकप्रश्नग्रन्थः । यथा, --
“प्रणम्य श्रीमहादेबं सर्व्वशास्त्रविशारदम्
।
भविष्यदर्थबोधाय पप्रच्छुर्म्मुनयो मुदा ॥
तेषां वचनमाकर्ण्य निजगाद महेश्वरः ।
त्रिकालज्ञानबोधार्थं पञ्चपक्षी प्रदर्श्यते ॥
अनेन शास्त्रसारेण लोकैः कालत्रयं प्रति ।
बलाबलानि दृश्यन्ते सर्व्वकार्य्येषु
निश्चितः ॥
आगतं प्रच्छकं दृष्ट्वा दैवज्ञः सावधानतः
।
अकारादिषु हान्तांस्तानेकैकं षट् परिक्रमात्
॥
अस्वरे कछडा वर्णा धभवाश्च भवन्ति हि ।
खजढा नमशा वर्णा इकारे परिकीर्त्तिताः ।
गझताः पयषा वर्णा उस्वरे स्युर्यथाक्रमम् ॥
घटथाः फरसा एते वर्णा एस्वरमात्रगाः ।
चठदा वलहा वर्णा ओस्वरे परिकीर्त्तिताः ॥
* ॥
प्रथमे रविभौमौ च द्वितीये चन्द्रचन्द्रजौ ।
तृतीये जीववारश्च चतुर्थे भृगुवासरः ॥
पञ्चमे मन्दवारश्च पक्षिणां क्रमशो लिखेत् ।
नन्दा भद्रा जया रिक्ता पूर्णा च तिथयः
क्रमात् ॥
अकारे मेषसिंहालिः इः कन्यायुग्मकर्क्कटाः
।
उकारे चापमीनौ च एकारे च तुलावृषौ ॥
ओकारे मृगकुम्भौ च एवं राशिञ्च संलिखेत् ।
स्वराधः स्थापयेत् खेटान् राशेर्योयस्य
नायकः ॥
अकारे सप्त ऋक्षाणि रेवत्यादिक्रमेण च ।
पञ्च पञ्च इकारादावेवमृक्षं स्वरोदये ॥ * ॥
प्रथमे चाश्विनी पूर्ब्बं पञ्चनक्षत्रमुच्यते ।
अतः क्रमात् द्विषट्चैव पञ्च पञ्च च तारकाः
॥ *
स्वराणाञ्च क्रमेणैव देवताः परिकीर्त्तिताः ।
ईश्वरः पवनश्चैव इन्द्राकाशः सदाशिवः ॥
* ॥
प्राच्यां पृथ्वी गुरुश्चैव याम्यां शुक्रो जलं
तथा ।
अङ्गारकः पश्चिमेऽग्निर्बुधो वायुस्तथोत्तरे ॥
सूर्य्यपुत्रस्तथाकाशे ऊर्द्ध्वमेवं लिखेत्ततः
।
क्षितौ ब्रह्मा जले विष्णुस्तथा रुद्रो हुताशने
॥
ईश्वरः पवने चैव तथाकाशे सदाशिवः ।
भूतो मयूरः कुब्जश्च कुक्कुटो वर्त्तमानकः
॥

बलिभुक्श्येनकौ ख्यातौ भविष्यन्तौ सुनिश्चितम् ।
श्येनो हिरण्यवर्णश्च पिङ्गलः शुक्लवर्णकः ॥
काको रक्तोऽसितश्चित्रः कुक्कुटः श्यामलः शिखी ।
काको बलीयान् सर्व्वेभ्यस्तस्मात् श्येनो हि दुर्ब्बलः ॥
कुक्कुटो दुर्ब्बलस्ताभ्यां पिङ्गलस्तेभ्य ऊनकः ।
सर्व्वेभ्यो दुर्ब्बलः पक्षी नीलकण्ठो न संशयः ॥
बली मयूरात् कुब्जस्तु ताम्रचूडस्तयोर्ब्बली ।
एतेभ्यो बलवान् श्येनश्चतुर्णां वायसो बली ॥ * ॥
मित्रं मयूरः श्येनस्य मयूरस्य च पिङ्गलः ।
ताम्रचूडस्य सुहृदौ मयूरपिङ्गलौ तथा ॥
वायसस्यापि मित्रं स्यात् शिखी भवति सर्व्वदा ।
सुहृदौ पिङ्गलश्येनौ मयूरारुणशेखरौ ॥ * ॥
काककुक्कुटश्येनाश्च पिङ्गलस्य च विद्विषः ।
मयूरस्य रिपू नित्यं सर्व्वदा श्येनवायसौ ॥
भवतः श्येनकाकौ द्वौ ताम्रचूडस्य विद्विषौ ।
काकस्य शत्रवो नित्यं पिङ्गलश्येनकुक्कुटाः ॥ * ॥
ऊद्‌र्ध्वदृष्टिर्भवेत् जीवो ह्यधोदृष्टिस्तु मूलकम् ।
समदृष्टिर्भवेद्धातुरेते चिन्ताप्रभेदकाः ॥ * ॥
श्येनो मूलं तथा कुब्जो जीवो धातुश्च वायसः ।
कुक्कुटो मूलजीवौ च मूलधातू शिखण्ड्यपि ॥ * ॥
पादायुधः शिखी शुक्रे काक कुब्जौ गुरौ तथा ॥
कुब्जकुक्कुटाविन्दुज्ञौ क्रमोऽयं शुक्लकृष्णयोः ।
यस्य वारस्य यः पक्षी तदादिं गणयेद्बुधः ॥
दिनपक्षी कार्य्यरूपी प्रश्नपक्षी फलप्रदः ।
दिनेषु शुक्लपक्षे यत् कृष्णे रात्रिषु तत्तथा ॥
कृष्णे दिनेषु यद्यत्तत् शुक्ले रात्रिषु योजयेत् ।
बालः कुमारस्तरुणो वृद्धो मृत इति क्रमात् ॥
घटिका षट् षडेवं हि फलमेषामुदीरितम् ।
किञ्चिल्लाभकरो बालः कुमारस्त्वर्द्धलाभदः ॥
तरुणो राज्यदो वृद्धो हानिदो मृत्युदो मृतः ।
भोजनं गमनं राज्यं निद्रा मरणमेव च ॥
एकान्तरे भवेत् कृष्णे शुक्ले स्यात् क्रमशो विदुः ।
पक्षिणां क्रमशो ज्ञात्वा फलं ब्रूयात् यथा तथा ॥
गणयेत् पञ्चपक्ष्यादौ जातभूतगणाद्यपि ॥"
शुक्लपक्षे ॥ * ॥ ततः कृष्णपक्षे ।
"भोजनं मरणञ्चैव निद्रा राज्यं तथैव च ।
गमनं पञ्चपक्षाणां कृष्णपक्षे क्रमो दिवा ॥ * ॥
राज्यं सुभिक्ष्यमक्षोभं नष्टलाभं सदा जयम् ।
रोगमुक्तं महालाभं पक्षिणां भुक्तिलक्षणम् ॥ * ॥
अनायासेन दृष्टिः स्याददृष्टधनसञ्चयः ।
काके भोक्तरि यात्रायां ताम्रचूडः शिखी नृपः ।
निद्रायां रमते श्येनः कुब्जः कालवशं गतः ॥ * ॥
कुब्जे भोक्तरि यात्रायां वायसः कुक्कुटो नृपः ।
नीलकण्ठस्तथा स्वापी श्येनो मृत्युवशं गतः ॥"
इति शुक्लपक्षस्य दिवाक्रमः कृष्णपक्षस्य रात्रि-क्रमश्च ॥ * ॥ स्वरोऽपि यथा । अहिपुरेभोः । गोकरिपुरे । एकोनरिपुः । उपेन्द्रो हरिः । विष्णुस्ते लोकः ॥ * ॥
"इत्युक्तं पक्षिणां कार्य्यं लाभालाभं शुभाशुभम् ।
येन विज्ञानमात्रेण त्रिकालज्ञो भवेन्नरः ॥
तावद्‌गर्ज्जन्ति शास्त्राणि शकुनानामनेकशः ।
यावन्न श्रूयते पक्षिशकुनं शङ्करोदितम् ॥"
इति श्रीमहादेवविरचितं पञ्चपक्षिशाकुनं समाप्तम् ॥

**पञ्चपर्णिका**, स्त्री, (पञ्च पञ्च पर्णान्यस्याः । ततः कप् कापि अतः इत्वम् ।) गोरक्षीक्षुपः । इति राजनिर्घण्टः ॥

**पञ्चपल्लवं**, क्ली, (पञ्चानां पल्लवानां समाहारः ।) आम्रादिपत्रपञ्चकम् । यथा, --
"आम्रजम्वूकपित्थानां बीजपूरकविल्वयोः ।
गन्धकर्म्मणि सर्व्वत्र पत्राणि पञ्चपल्लवम् ॥"
इति शब्दचन्द्रिका ॥
वैदिककर्म्मणि घटोपरिदेयपञ्चपल्लवं यथा, --
आम्राश्वत्थवटपर्कटीयज्ञोडुम्बराणि ।
तान्त्रिक−ः
कर्म्मणि पञ्चपल्लवं यथा, --
"पनसाम्रं तथाश्वत्थं वटं वकुलमेव च ।
पञ्चपल्लवमुक्तञ्च मुनिभिस्तन्त्रवेदिभिः ॥"
इति तन्त्रसारः ॥

**पञ्चपात्रं**, क्ली, पञ्चानां पात्राणां समाहारः । इति व्याकरणम् ॥ पञ्चपात्रकरणकपार्व्वणविधिक-श्राद्धम् । तत्तु अन्वष्टकाश्राद्धम् । अमावस्या-मृतप्रेतपक्षमृतसाम्बत्सरिकंसपिण्डीकरणञ्च । इति लोकप्रसिद्धम् ॥

**पञ्चपित्तं**, क्ली, (पञ्चविधं पित्तम् ।) पित्तपञ्च-कम् । यथा, --

श्येनो नरो बधूः कुब्जः पुरुषो वायसस्तथा ।
कुक्कुटः स्त्री पुमांश्चैव शिखी नपुंसकस्तथा ॥ * ॥
श्येनकुब्जौ द्विजश्रेष्ठौ महीपालस्तु वायसः ।
ताम्रचूडो वणिक् शूद्रो नीलकण्ठस्तथान्त्यजः ॥ * ॥
चतुष्पात् पिङ्गलो ज्ञेयो द्विपदौ श्येनवायसौ ।
ताम्रचूडो नखी शृङ्गी शिखण्डी पक्षिजीवकः ॥ * ॥
श्येनो मुखं कण्ठबाहू कुब्जो वक्षस्तु वायसः ।
कुक्कुटः पृष्ठभागः स्यात् शिखी पादयुगं क्रमात् ॥ *
श्येनो भूम्यां धनं ज्ञेयं पिङ्गलो जलपङ्कयुक् ।
वायसस्तृणसङ्घाते कुक्कुटो भस्मनावृतम् ॥
श्येनः शिखी गृहानर्थं बन्धुस्थानेषु निश्चितम् ।
स्वग्रामे श्येनकुब्जौ तु वायसो बन्धुमाप्नुयात् ॥
कुक्कुटः परदेशे च परग्रामे तथा शिखी ।
कुब्जस्तु दशहस्ते च त्वर्द्धक्रोशे तु कुक्कुटः ॥
द्विक्रोशे तु तथा काकः श्येनः क्रोशे तु पूर्ब्बतः ।
मयूरो योजने चेति तथैवं दूरनिश्चयः ॥ * ॥
भुक्तौ च मासो गमने च पक्षो राज्ये दिनानि त्वयनन्तु सुप्ते ।
मृते च वर्षं शकुनस्य चर्य्या कालप्रमाणं मुनयो वदन्ति ॥
शुक्रे चन्द्रे गुल्मवल्ली लताकन्दौ बुधे तथा ।
पत्रं गुरौ फलं सूर्य्ये मूलञ्च रविजे कुजे ॥ * ॥
शुक्रे चन्द्रे भवेद्रौप्यं बुधे स्वर्णमुदाहृतम् ।
गुरौ रत्नयुतं हेम सूर्य्ये मौक्तिकमेव च ॥
भूलाभो रोगनाशश्च यात्रासिद्ध्वी रणे जयः ॥
दूरादागमनं योगः प्रयाणे पक्षिलक्षणम् ।
राज्योदये यदि प्रश्नो लाभार्थे स्वल्पलाभदः ॥
रुजानां चिररोगः स्यात् याने हानिः क्षयो रणे ।
पुरग्रामप्रवेशञ्च गमनं कलहं तथा ।
मनश्चञ्चलमारोग्यं गमनेषु विचारयेत् ॥ * ।
राज्यलाभो जयं सौख्यमक्षोभं रोगनाशनम् ।
सुभिक्षं बहुवृष्टिश्च पक्षिणां राज्यलक्षणम् ॥ * ॥
यात्राहानिरनावृष्टिः कार्य्यहानिरदर्शनम् ।
व्याधिश्च दीर्घरोगश्च पक्षिणां सुप्तिलक्षणम् ॥
अपमृत्युभयञ्चैव सर्व्वकार्य्यविनाशनम् ।
एतदेव फलं ब्रूयात् पक्षिणां मृत्युलक्षणम् ॥ * ॥
श्येने भोक्तरि काकस्तु पान्थो राजा भुजङ्गभुक् ।
स्वप्नावस्थां गतः कुब्जः परासुस्ताम्रशेखरः ॥ * ॥
काके भोक्तरि केकी तु पान्थः स्यात् पिङ्गलो नृपः ।
ताम्रचूडस्तथा स्वापी श्येनः कालवशं गतः ॥ * ॥
मयूरे भोक्तरि तथा कुब्जो यात्रावशं गतः ।
महीपः कुक्कुटः श्येनः स्वापी काको वशं गतः ॥
कुब्जे भोक्तरि पान्थस्तु कुक्कुटः श्येनको नृपः ।
काको निद्रावशं यातो मयूरो मरणं गतः ॥ * ॥
कुक्कुटे भोक्तरि श्येनः पान्थो राजा तु वायसः ।
“वराहच्छागमहिषमत्स्यमायूरपित्तकम् ।
पञ्चपित्तमिति ख्यातं सर्व्वेष्वेव हि कर्म्मसु ॥”
इति वैद्यकम् ॥

**पञ्चप्रदीपः**, पुं, (पञ्चसंख्यकाः प्रदीपा यत्र ।) पञ्चदीपयुक्तारात्रिकम् । यथा, --
“कुर्य्यात् सप्तप्रदीपेन शङ्खघण्टादिवाद्यकैः ।
हरेः पञ्चप्रदीपेन बहुशो भक्तितत्परः ॥”
इति पाद्मोत्तरखण्डे १०७ अध्यायः ॥

**पञ्चप्रासादः**, पुं, (प्रसीदन्ति मनांसि अत्र । प्र + सद + अधिकरणे घञ् । “उपसर्गस्य दीर्घत्वं क्विप्घञादौ क्वचिद्भवेत् ।” इति वचनात् दीर्घः । पञ्चचूडान्वितः प्रासादः । मध्यपदलोपिकर्म्मधारयः ।) देवगृहविशेषः । पञ्चरत्न इति ख्यातः । यथा, --
“पक्वेष्टकचितं रम्यं पञ्चप्रासादसंयुतम् ।
कारयित्वा हरेर्धाम धूतपापो व्रजेद्दिवम् ॥”
इत्यग्निपुराणम् ॥

| | | |
|---|---|---|
| भौमे ताम्रं शनौ लौहं राहावस्थीनि कीर्त्तयेत् ।<br>एतेषां धातुभेदञ्च वाराणामुदयक्रमात् ॥ * ॥<br>शुक्रे चन्द्रे जलाधारो देवतावसतिर्गुरौ ।<br>रवौ चतुष्पदस्थानमिष्टकानिलयोबुधे ॥<br>दग्धस्थानं कुजे प्रोक्तं शनौ राहौ च वाह्यभूः ।<br>अमीभिर्हिवुके स्थाने नष्टभूमिं विलोकयेत् ॥ * ॥<br>रवौ भौमे च भेरुण्डो मयूरो वायसः शनौ । | शिखी निद्रावशं यातः पिङ्गलः कालमाप्नुयात् ॥”<br>इति कृष्णपक्षस्य दिवाक्रमः शुक्लपक्षस्य रात्रिक्रम-श्च ॥ स्वरोऽपि यथा । अनुमोदिते । उन्मोदितेन ।<br>ओमित्येवायुः । इत्येव जुहो । एवमुक्तोऽसि ॥ * ॥<br>“श्येने भोक्तरि कुब्जः स्यात् पान्थः काकोमही-पतिः ।<br>ताम्रचूडो निद्रितश्च शिखी कालवशं गतः ॥ * ॥<br>मयूरे भोक्तरि श्येनः पान्थः कुब्जोमहीपतिः ।<br>स्वप्नावस्थां गतः काकस्ताम्रचूडो मृतस्तथा ॥ * ॥<br>कुक्कुटे भोक्तरि शिखी सदा गमनमाप्नुयात् ।<br>श्येनो महीपतिः कुब्जः स्वापी काको मृतिं गतः ॥ * ॥ | |

**पञ्चबन्धः**, पुं, (पञ्चमः वन्धः भागो यत्र ।) नष्ट-

द्रव्यस्य पञ्चमांशदण्डः । यथा, --

"आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा ।

पञ्चनन्धो दमस्तस्य राज्ञे तेनाविभाविते ॥"

आगमेन रिक्थक्रयादिना । उपभोगेन च

मदीयमिदं द्रव्यं तच्चैवं नष्टमपहृतं वेत्यपि ।

भाव्यं साधनीयं तत् स्वामिना । अतोऽन्यथा

तेन स्वामिना अविभाविते । पञ्चबन्धो नष्ट-

द्रव्यस्य पञ्चमांशो दमो नाष्टिकेन राज्ञं देयः ।

इति मिताक्षरा ॥

**पञ्चभद्रः**, पुं, (पञ्चसु अङ्गभेदेषु भद्रः शुभः

पुष्पितत्वात् ।) पञ्चस्थानेषु पुष्पितोऽश्व-

विशेषः । यथा, --

"पञ्चभद्रस्तु हृत्पृष्ठमुखपार्श्वेषु पुष्पितः ॥"

इति हेमचन्द्रः ॥ पाचनविशेषः । यथा, --

"छिन्नोद्भवापर्पटवारिवाह-

भूनिम्बशुण्ठीजनितः कषायः ।

समीरपित्तज्वरजर्ज्जराणां

करोति भद्रं खलु पञ्चभद्रः ॥"

इति शार्ङ्गधरः ॥

**पञ्चभूतं**, क्ली, पञ्चानां भूतानां क्षित्यप्तेजोमरु-

द्व्योम्नां समाहारः । (केचित्तु संज्ञाप्रयुक्तत्वात्

पञ्च च तानि भूतानि चेति कर्म्मधारयसमास-

माहुस्तत्र तु एकवचनञ्चिन्तनीयम् ।)

अस्योत्पत्तिर्यथा ।

"अभूत्तस्मादहङ्कारस्त्रिविधःसृष्टिभेदतः ।

वैकारिकादहङ्काराद्देवा वैकारिका दश ॥

दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः ।

तैजसादिन्द्रियाण्यासंस्तन्मात्रा क्रमयोगतः ।

भूतादिकादहङ्कारात् पञ्चभूतानि जज्ञिरे ॥"

इति शारदायां प्रथमपटलः ॥ * ॥

"सोऽहङ्कारस्त्रिभेदः स्यात् सत्त्वादिगुणयोगतः ।

वैकारः सात्त्विको नाम तैजसो राजसः स्मृतः ॥

भूतादिस्तामसस्ते च पृथक्तत्त्वाद्यवासृजन् ।

वैकारिकाद्दिगाद्याश्च चन्द्रेणैकादश स्मृताः ॥

इन्द्रियाणामधिष्ठातृत्वोस्ते परिकीर्त्तिताः ।

यच्चापरं मनस्तत्त्वं ससङ्कल्पविकल्पकम् ॥

तैजसादेव तज्जातमिन्द्रियाणि तथा दश ।

"आद्याद्यस्य गुणन्त्वेषामवाप्नोति

परःपरः ।

यो यो यावतिथश्चैषां स स

तावद्गुणः स्मृतः ॥"

अत्र कुल्लूकभट्टः ।

"आद्याद्यस्याकाशादेर्गुणं शब्दादिकं

वाय्वादिः

परः परः प्राप्नोति । एतदेव स्पष्टयति

यो यः

इति येषां मध्ये यो यो यावतां पूरणा

याव-

तिथः वतोरिथुक् स स द्वितीयादिः

द्वितीयो

द्विगुणः तृतीयस्त्रिगुणः

इत्येवमादिर्मन्वादिभिः

स्मृतः । एतेनैतदुक्तं भवति ।

आकाशस्य शब्दो

गुणः वायोः शब्दस्पर्शौ तेजसः

शब्दस्पर्श-

रूपाणि अपां शब्दस्पर्शरूपरसाः

भूमेः शब्द-

स्पर्शरूपरसगन्धा इति ॥)

तस्य लयप्रकारो यथा, --

"मही संलीयते तोये तोयं संलीयते

रवौ ।

रविः संलीयते वायौ वायुर्नभसि

लीयते ।

पञ्चतत्त्वाद्भवेत् सृष्टिस्तत्त्वे तत्त्वं

विलीयते ॥"

इति ब्रह्मज्ञानतन्त्रनिर्ब्बाणतन्त्रे ॥ *

॥

तदुद्भवास्थ्यादि यथा, --

"अस्थिमांसनखाश्चैव नाडी त्वक्

चेति पञ्चमः ।

पृथ्वीपञ्चगुणाः प्रोक्ता ब्रह्मज्ञानेन

भाषितम् ॥

मलं मूत्रं तथा शुक्रं श्लेष्मा

शोणितमेव च ।

जादिसप्तस्वराणां पञ्चमः स्वरः ।

तस्योत्-

पत्तिर्यथा, --

"वायुः समुद्गतो नाभेरुरोहृत्कण्ठमूर्द्धसु

।

विचरन् पञ्चमस्थानप्राप्त्या पञ्चम उच्यते

॥"

इति तट्टीकायां भरतः ॥ अपि च ।

"प्राणोऽपानः समानश्च उदानो व्यान एव

च ।

एतेषां समवायेन जायते पञ्चमः स्वरः ॥"

इति सङ्गीतदामोदरः ॥ अस्य जातिः

औडवः ।

पञ्चस्वरमिलित इति यावत् । अस्य

कूटतानाः

विंशत्यधिकशतम् १२० प्रत्येकताने

चत्वारिंशत्

४० । समुदायेन चतुःसहस्राष्टशतानि

४८००

ताना भवन्ति । अस्योच्चारणजातिः

पिकः ।

उच्चारणस्थानं उरः गलः शिरश्च ।

व्याकरण-

मते अधरः । अयं विप्रवर्णः । इति शुद्ध-

तानविवेकलक्षणम् ॥ अस्य रूपं

इन्द्ररूप-

तुल्यम् । वर्णः श्यामः । स्थानं

क्रौञ्चद्वीपम् ।

देवता महादेवः । वारो बृहस्पतेः । समय-

श्चतुस्त्रिंशत्पलाधिकाष्टौघटिकाः ।

श्रुतय-

श्चत्वारः क्षितिः रक्ता सन्दीपनी

आलापिनी

च । मूर्च्छनास्तिस्रः यमली निर्म्मली

कोमली

च । इति नादपुराणम् ॥ * ॥ रागभेदः ।

इति

मेदिनी ॥ अयं कल्लिनाथमते सोमेश्वरमते

च

भूतादेः पञ्चतन्मात्राण्यासन् भूतमतः परम् ॥"
इति राघवभट्टधृतम् ॥ * ॥
"शब्दाद्व्योमस्पर्शतस्तेन वायु-
स्ताभ्यां रूपाद्वह्निरेतै रसाच्च ।
अम्भांस्येतैर्गन्धतो भूर्धराद्या
भूताः पञ्च स्युर्गुणोनाः क्रमेण ॥"
इति प्रपञ्चसारे प्रथमपटलः ॥ * ॥
"आकाशाज्जायते वायुर्वायोरुत्पद्यते रविः ।
रवेरुत्पद्यते तोयं तोयादुत्पद्यते मही ॥"
(तथा च श्रुतिः ।
"तस्मादेतस्मादाकाशः सम्भूतः । आकाशाद्वायुः
वायोरग्निरग्नेरापोऽद्भ्यः पृथ्वी समजायत ॥"
एतच्छ्रु त्यवलम्बनेन मनुनाप्युक्तम् । १ । २० ।
यथा, --

तोयपञ्चगुणाः प्रोक्ता ब्रह्मज्ञानेन
भाषितम् ॥
हासो निद्रा क्षुधा चैव
भ्रान्तिरालस्यमेव च ।
तेजःपञ्चगुणाः प्रोक्ता ब्रह्मज्ञानेन
भाषितम् ॥
धारणं चालनं क्षेपः सङ्कोचः
प्रसरस्तथा ।
वायुपञ्चगुणाः प्रोक्ता ब्रह्मज्ञानेन
भाषितम् ॥
कामक्रोधस्तथा लोभस्त्रपा मोहश्च
पश्चमः ।
नभःपञ्चगुणाः प्रोक्ता ब्रह्मज्ञानेन
भाषितम् ॥"
इति ब्रह्मज्ञानतन्त्रे प्रथमपटलः ॥ *
॥
पञ्चभूतनक्षत्राणि यथा, --
"धनिष्ठा रेवती ज्येष्ठानुराधा श्रवणा
तथा ।
अभिजिच्चोत्तराषाढा
पृथ्वीतत्त्वमुदाहृतम् ॥
पूर्ब्बाषाढा तथाश्लेषा मूलार्द्रा चैव
रोहिणी ।
उत्तरभाद्रपदा तोयं
आपस्तत्त्वन्त्वभीष्टदम् ॥
भरणी कृत्तिका पुष्या मघा पूर्ब्बा च
फल्गुनी ।
पूर्ब्बभाद्रपदा स्वाती तेजस्तत्त्वमिति
प्रिये ॥
विशाखोत्तरफल्गुन्यौ हस्ता चित्रा
पुनर्व्वसुः ।
अश्विनी मृगशीर्षा च
वायुस्तत्त्वमुदाहृतम् ॥"
इति सूक्ष्मस्वरोदयः ॥

**पञ्चमं**, क्ली, मैथुनम् । यथा, --

"भगलिङ्गस्य योगेन मैथुनं यद्भवेत्
प्रिये ।
तस्य नाम भवेद्देवि पञ्चमं
परिकीर्त्तितम् ॥"
इति समायाचारतन्त्रे द्वितीयपटलः ॥

**पञ्चमः**, त्रि, पञ्चानां पूरणः । (पूरणे डट

षड्रागाणां मध्ये तृतीयरागः ।
सोमेश्वरमते
अस्य गानसमयः शरदृतुः प्रातःकालश्च
। कल्लि-
नाथमते अस्य रागिण्यः षट् । यथा,
त्रिवेणी
१ स्तम्भतीर्था २ आभीरी ३ कुकभ् ४
वरारी
५ सावीरी ६ । सोमेश्वरमते तु विभासा
१
भूपाली २ कार्णाटी ३ वडहंसिका ४
मालश्रीः
५ पटमञ्जरी ६ । अस्मिन्रागे गान्धार-
स्वरस्तीव्रः । ऋषभपञ्चमौ स्वरौ लुप्तौ ।
षड्ज-
स्वरः गृहांशन्यासाः । स च हनूमन्मते
भरत-
मते च भैरवरागस्याष्टमपुत्त्रः । इति
सङ्गीत-
शास्त्रम् ॥

**पञ्चमकारं**, क्ली, (पञ्चसंख्यकं मकारं तत्त्वं यत्र । मद्यं

मांसमित्यादिषु आदौ
मकारस्थितेस्तथात्वम् ।)
मकारपञ्चकम् । पञ्चतत्त्वम् । तत्तु
मुद्रामैथुन-
मद्यमांसमत्स्यरूपम् । यथा, --
"मद्यं मांसं तथा मत्स्यो मुद्रा मैथुनमेव च
।
पञ्चतत्त्वमिदं देवि ! निर्व्वाणमुक्तिहेतवे ।
मकारपञ्चकं देवि ! देवानामपि दुर्लभम्
॥"
इति गुप्तसाधनतन्त्रे ७ पटलः ॥ * ॥
"मद्यैर्मांसैस्तथा मत्स्यैर्मुद्राभिर्मैथुनैरपि ।
स्त्रीभिः सार्द्धं
महासाधुरर्च्चयेद्जगदम्बिकाम् ॥
अन्यथा च महानिन्दा गीयते पण्डितैः
सुरैः ।
कायेन मनसा वाचा तस्मात्तत्त्वपरो भवेत्
॥"
इति कामाख्यातन्त्रे ५ पटलः ॥ * ॥

| | | |
|---|---|---|
| | ततः नान्तादिति मट् ।) पाँच इत्यादि भाषा । इति मेदिनी ॥ (यथा, मनुः । ८ । १२५ ।<br>“उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम् ।<br>चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च ॥”)<br>रुचिरः । दक्षः । इति हेमचन्द्रः ॥<br>**पञ्चमः**, पुं, पञ्चानां स्वराणां पूरणः । तन्त्री-<br>कण्ठोत्थितस्वरविशेषः । इत्यमरः ॥ स तु षड्- | “या सुरा सर्व्वकार्य्येषु कथिता भुवि मुक्तिदा ।<br>तस्या नाम भवेद्देवि ! तीर्थं पानं सुदुर्लभम् ॥<br>शूद्राणां भक्ष्ययोग्यानां यन्मांसं देवनिर्म्मितम ।<br>वेदमन्त्रेण विधिवत् प्रोक्ता सा शुद्धिरुत्तमा ॥<br>भक्ष्ययोग्याश्च कथिता ये ये मत्स्या वरानने ! ।<br>ते रहस्ये मया प्रोक्ता मीनाः सिद्धिप्रदायकाः ॥ |

पृथुकास्तण्डुला भृष्टा गोधूमचणकादयः ।
तस्य नाम भवेद्देवि ! मुद्रा मुक्तिप्रदायिनी ॥
भगलिङ्गस्य योगेन मैथुनं यद्भवेत् प्रिये ! ।
तस्य नाम भवेद्देवि ! पञ्चमं परिकीर्त्तितम् ॥
प्रथमन्तु भवेन्मद्यं मांसञ्चैव द्बितीयकम् ।
मत्स्यश्चैव तृतीयं स्यान्मुद्रा चैव चतुर्थिका ॥
पञ्चमं पञ्चमं विद्यात् पञ्च ते नामतः स्मृताः ॥"
इति समयाचारतन्त्रे २ पटलः ॥ * ॥
अथ मत्स्यादिव्युत्पत्तिः ।
"मायामलादिशमनान्मोक्षमार्गनिरूपणात् ।
अष्टदुःखादिविरहान्मत्स्येति परिकीर्त्तितः ॥
माङ्गल्यजननाद्देवि ! सम्बिदानन्ददानतः ।
सर्व्वदेवप्रियत्वाच्च मांस इत्यभिधीयते ॥
पञ्चमं देवि ! सर्व्वेषु मम प्राणप्रियं भवेत् ।
पञ्चमेन विना देवि ! चण्डीमन्त्रं कथं जपेत् ॥
यदि पञ्चमकारेषु भ्रान्तिश्चेत् कुरुते प्रिये ! ।
तस्य सिद्धिः कथं देवि ! चण्डीमन्त्रं कथं जपेत् ॥
आनन्दं परमं ब्रह्म मकारास्तस्य सूचकाः ॥"
इति कुलार्णवतन्त्रे पञ्चमखण्डे १७ उल्लासः ॥ * ॥
तेषां शोधनादिकं बाहुल्यभिया लोकमोह-भयाच्च नोक्तम् ॥

**पञ्चमहायज्ञाः**, पुं, (पञ्चविधा महायज्ञाः ।)
गृहस्थकर्त्तव्यपञ्चप्रकारनित्यकर्म्माणि। यथा, --
"पाठो होमश्चातिथीनां सपर्य्या तर्पणं वलिः ।
एतैः पञ्च महायज्ञा ब्रह्मयज्ञादिनामकैः ॥"
इत्यमरः । २ । ७ । १४ ॥
(तथा च मनुः । ३ । ६८-७० ।
"पञ्चसूना गृहस्थस्य चूल्लीपेषण्युपस्करः ।
कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन् ॥
तासां क्रमेण सर्व्वासां निष्कृत्यर्थं महात्मभिः ।
पञ्चक्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम् ॥
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।

अथ नागपञ्चमी । यथा, -- देवीपुराणे ।
"सुप्ते जनार्द्दने कृष्णे पञ्चम्यां भवनाङ्गने ।
पूजयेन्मनसादेवीं स्नुहीविटपसंस्थिताम् ॥
पद्मनाभे गते शय्यां देवैः सर्व्वैरनन्तरम् ।
पञ्चम्यामसिते पक्षे समुत्तिष्ठति पन्नगी ॥"
देवैरिति सहार्थे तृतीया । तथा, --
"देवीं संपूज्य नत्वा च न सर्पभयमाप्नुयात् ।
पञ्चम्याम्पूजयेन्नागाननन्ताद्यान्महोरगान् ।
क्षीरं सर्पिस्तु नैवेद्यं देयं सर्व्वविषापहम् ॥"
एवं गारुडे तथैव नागानाह ।
"अनन्तं वासुकिं पद्मं शङ्खं कम्बलमेव च ।
तथा कर्कोटकं नागं धृतराष्ट्रञ्च शङ्खकम् ॥
कालीयं तक्षकञ्चैव पिङ्गलं मासि मासि च ।
यजेत्तानसिते नागान् दष्टमुक्तो दिवं व्रजेत् ॥"
पुराणान्तरेऽपि ।
"अनन्तो वासुकिः पद्मो महापद्मोऽथ तक्षकः ।
कुलिकः कर्कटः शङ्खो ह्यष्टौ नागाः प्रकीर्त्तिताः ॥"
पुराणान्तरेऽपि ।
"शेषः पद्मो महापद्मः कुलीरः शङ्खपालकः ।
वासुकिस्तक्षकश्चैव कालीयो मणिभद्रकः ।
ऐरावतो धृतराष्ट्रः कर्कोटकधनञ्जयौ ॥"
अत्र च ।
"योऽसौ चानन्तरूपेण ब्रह्माण्डं सचराचरम् ।
पुष्पवद्धारयेन्मूर्द्ध्नि तस्मै नित्यं नमो नमः ॥"
इत्यनेन ओंकारपूर्ब्बेण मत्स्यपुराणोक्तेनानन्तं पूजयेत् । रत्नाकरे ।
"पिचुमर्द्दस्य पत्राणि स्थापयेद्भवनोदरे ।
स्वयञ्चापि तदश्नीयाद्ब्राह्मणांश्चैव भोजयेत् ॥" * ॥
अथ श्रीपञ्चमी । भविष्योत्तरे । माघशुक्लपक्ष-मधिकृत्य, --
"चतुर्थी वरदा नाम तस्यां गौरी प्रपूजिता ।
सौभाग्यमतुलं कुर्य्यात् पञ्चम्यां श्रीरपि श्रियम् ॥"
सम्बत्सरप्रदीपे ।
"पञ्चम्यां पूजयेल्लक्ष्मीं पुष्पधूपान्नवारिभिः ।
मस्याधारं लेखनीञ्च पूजयेन्न लिखेत्ततः ॥
माघे मासि सिते पक्षे पञ्चमी या श्रियः प्रिया ।

"यथा न देवो भगवान् ब्रह्मा लोकपितामहः ।
त्वां परित्यज्य सन्तिष्ठेत्तथा भव वरप्रदा ॥
वेदाः शास्त्राणि सर्व्वाणि नृत्यगीतादिकञ्च यत् ।
न विहीनं त्वया देवि ! तथा मे सन्तु सिद्धयः ॥
लक्ष्मीर्मेधा धरा पुष्टिर्गौरी तुष्टिः प्रभा धृतिः ।
एताभिः पाहि तनुभिरष्टाभिर्म्मां सरस्वति ! ॥"
इति मत्स्यपुराणीयैः प्रार्थयेत् ॥ * ॥
अथ पञ्चमीव्रतम् ।
तच्च शुद्धकाले माघशुक्लपञ्चम्यामारभ्यषड्वर्ष-पर्य्यन्तं प्रतिमासीयशुक्लपञ्चम्यां कार्य्यम् । यथा, --
"क्षीरोदे च पुरा सुप्तं लक्ष्मीसमन्वितं हरिम् ।
प्रणम्य परिपप्रच्छ नारदो मुनिसत्तमः ॥
नारद उवाच ।
केनोपायेन देवेश ! नारीणाञ्च सुखं भवेत् ।
सौभाग्यमतुलं याति तन्मे त्वं वक्तुमर्हसि ॥
श्रुत्वा तद्वचनं देवो नारदस्य महात्मनः ।
संप्रेक्ष्य कमलां सव्ये ब्रूहि देवि शुभानने ! ॥
इङ्गितं पत्युरालोक्य पद्मपत्राक्षवल्लभा ।
वल्लभं तं पुरस्कृत्य प्रीत्या व्रतमुवाच ह ॥
देव्युवाच ।
अस्ति श्रीपञ्चमीनाम व्रतं परमदुर्लभम् ।

होमो दैवो वलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥”)

**पञ्चमारः**, पुं, (पञ्चसु इन्द्रियेषु म्रियते आसक्तो भवतीति । पञ्च + मृ + कर्त्तरि घञ् ।) बल-देवपुत्त्रः । इति शब्दमाला ॥

**पञ्चमास्यः**, पुं, (पञ्चमो रागः स्वरो वा आस्ये यस्य । “कोकिलो पञ्चमं वदेत् ।” इत्युक्तेरस्य तथात्वम् ।) कोकिलः । इति शब्दरत्नावली ॥

**पञ्चमी**, स्त्री, (पञ्चानां पाण्डवानां इयम् । अथवा पञ्च पतीन् मिनोति सेवास्नेहादिभिर्बध्नाति या । पञ्च + मी + क्विप् । मीधातुरत्र बन्धार्थः ।) पाण्डवपत्नी । द्रौपदी । इति मेदिनी ॥ (पञ्चानां पूरणी डट् ततो मट् स्त्रियां ङीप् ।) शारि-शृङ्खला । पाशार छक् इति भाषा । इति भूरि-प्रयोगः ॥ * ॥ तिथिविशेषः । सा च चन्द्रस्य पञ्चमकलाक्रियारूपा तदुपलक्षितकालश्च । पञ्जिकाकारसङ्केतेन शुक्लपक्षे ५ कृष्णपक्षे २० एतदङ्कबोधिता ॥ * ॥ अथ पञ्चमीव्यवस्था । सा च चतुर्थीयुता ग्राह्या युग्मात् ।
“पञ्चमी च प्रकर्त्तव्या चतुर्थीसहिता विभो ! ॥”
इति स्कन्दपुराणाच्च ॥ * ॥

तस्याः पूर्ब्बाह्ण एवेह कार्य्यः सारस्वतोत्सवः ॥”
इत्युपादानात् श्रियः स्वरसत्याः । तथा च व्याडिः ।
“लक्ष्मीसरस्वतीधीत्रिवर्गसम्पद्विभूतिशोभासु ।
उपकरणवेशरचनाविधासु च श्रीरितिप्रथिता ॥”
ध्यानं यथा, --
“तरुणशकलमिन्दोर्ब्बिभ्रती शुभ्रकान्तिः
कुचभरनमिताङ्गी सन्निषण्णा सिताब्जे ।
निजकरकमलोद्यल्लेखनीपुस्तकश्रीः
सकलविभवसिद्ध्यै पातु वाग्देवता नः ॥”
इति शारदोक्तं ध्यायेत् । पाद्यादिभिः पूजयित्वा ।
“भद्रकाल्यै नमो नित्यं सरस्वत्यै नमो नमः ।
वेदवेदान्तवेदाङ्गविद्यास्थानेभ्य एव च ॥”
स्वाहेति ब्रह्मपुराणीयेन त्रिः पूजयेत् । मत्स्य-सूक्ते । बन्धुजीवञ्च द्रोणञ्च सरस्वत्यै न दापयेत् । सरस्वतीं संपूज्य, --

यत् कृत्वा प्राप्यते लोकैः सुखं सौभाग्यमुत्तमम् ॥”
तत्र मां पूजयेद्भक्त्या माधवञ्च प्रयत्नतः ।
गन्धैः पुष्पैश्च वस्त्रैश्च धूपैर्नानाविधैः फलैः ॥
श्रद्धया पूजयेद्भक्त्या माघादौ पञ्चमीदिने ।
इमां ब्रह्मपुराणोक्तां या करोति च पञ्चमीम् ॥
लक्ष्मीसमा भवेन्नारी इह लोके परत्र च ।
विधानं शृणु धर्म्मज्ञ ! यादृशी पञ्चमी मम ॥
वर्षाणि षट् प्रकर्त्तव्या परमप्रीतिमानसा ।
शुद्धकाले तु संप्राप्ते पञ्चमी या शुभा भवेत् ॥
तस्यामारभ्य कर्त्तव्यं व्रतं पापप्रणाशनम् ।
स्वयं यतात्मा भूत्वा च आरभेद्व्रतमुत्तमम् ॥
आद्यद्वयमलवणेन हविष्येण द्वयं तथा ।
फलेनैकन्तु कर्त्तव्यमुपवासैः प्रतिष्ठयेत् ॥
प्रतिष्ठाया विधिरयं काञ्चनस्य श्रियं हरिम् ।
ब्राह्मणञ्च सपत्नीकं पूर्ब्बेद्यु रधिवासयेत् ॥
पञ्चम्यामृत्विजं विप्रमाचार्य्यञ्च द्विजोत्तमम् ।
पूजा च विविधा कार्य्या मूलमन्त्रेण भक्तितः ॥
होमञ्च तिललाजानां शतं कुर्य्यात् पृथक् पृथक् ।
नैवेद्यं विविधं कुर्य्यात् लड्डुक पूपमुत्तमम् ॥
आसनं पाद्यमर्घ्यञ्च तथाप्याचमनीयकम् ।

| | | |
|---|---|---|
| | | वासौ यज्ञोपवीतञ्च गन्धपुष्पफलं तथा ॥<br>छत्रं धूपः प्रदीपश्च ताम्वूलं फलमेव च ।<br>गौः शय्या कम्बलञ्चैव हिरण्यं रजतं तथा ॥<br>ब्राह्मणेभ्यः प्रदेयानि दक्षिणासंयुतानि च ।<br>यथोक्तेन विधानेन या कुर्य्यात् पञ्चमीव्रतम् ॥<br>आसप्तकुलमुद्धृत्य विष्णुलोकमवाप्नुयात् ।<br>शचीव पुरुहूतस्य रतीव मदनस्य च ॥<br>शङ्करस्य यथा गौरी तथा भवति सा शुभा ।<br>मासि मासि सिते पक्षे पञ्चमी या प्रकीर्त्तिता ॥<br>तस्यां पूज्या सदा देवी भक्तितः कमलोद्भवा ।<br>लक्ष्मीसमा भवेन्नारी षट्पञ्चमीव्रतेन वै ॥ |

श्रीपञ्चमीव्रतं रम्यं या करोति पतिव्रता ।
तस्याहं स्थिरतां यामि यथा नारायणे स्थिरा ॥
मत्प्रसादान्मुनिश्रेष्ठ !
सर्व्वसौभाग्यमाप्नुयात् ॥”
इति ब्रह्मपुराणोक्तषट्पञ्चमीव्रतकथा समाप्ता ॥
अथ पञ्चमीजातफलं यथा ।
“भूपालमान्यो मनुजः सुगात्रः
कृपासमेतो विदुषां वरेण्यः ।
वाग्मी गुणी बन्धुजनैकमान्यः
प्रसूतिकाले यदि पञ्चमी स्यात् ॥”
इति कोष्ठीप्रदीपः ॥
विद्याविशेषः । तद्विवरणं यथा, --
“कामं विष्णुयुतं देवि !
शक्तिभायेन्द्रमेव च ।
महामायां ततः पश्चात् वाग्भवं
बीजमुद्धरेत् ॥”
विष्णुयुतं अकारयुक्तमित्यर्थः ।
शक्तिरेकारः ।
माया ईकारः ।
“वियच्चन्द्रस्ततः पश्चात् कलौ
नकुलिरेव च ।
मायास्वरेण संयुक्तं
नादबिन्दुकलान्वितम् ॥
प्रथमं कामराजस्य बीजं परमदुर्लभम् ।
वियद्विष्णुयुतं कामो हंसः शक्रस्ततः परम् ॥
महामाया ततः पश्चात् स्वप्नावतीति कथ्यते ॥”
हंसो हकारः । एतद्द्वितीयं कामकूटम् ॥ * ॥
“मादनं शिववीजञ्च वायुबीजं ततः परम् ।
इन्द्रबीजं ततः पश्चात् महामायां समुद्धरेत् ॥”
इति तृतीयम् । इयं मधुमती ॥ * ॥

एषा चतुर्द्धा वाग्भवकूटभेदात् ।
एतयोः काम-
राजस्य तृतीयकूटन्तु तत्रैव ॥ * ॥
“कामबीजं महेशानि ! शिवबीजं ततः परम् ।
तदधो हंसबीजन्तु इन्द्रबीजं विचिन्तयेत् ॥
महामायां ततः पश्चात् कूटं परमदुर्लभम् ॥”
एषा पूर्ब्बवदष्टधा । अन्या चतुर्द्धा ॥ * ॥
तथा तत्त्वबोधे ।
“कामाकाशपरा शक्र
संस्थानकृतरूपिणी ॥”
परा सकारः । संस्थानकृतरूपिणी महामाया ॥ * ॥
तथा च तन्त्रे ।
“कामबीजं महेशानि ! शम्भुबीजं ततः परम् ।
तदधश्चन्द्रबीजन्तु पृथ्वीबीजं ततो लिखेत् ।
तदन्ते च महामाया कूटं परमदुर्लभम् ॥”
एषा पूर्ब्बवदष्टधा । अन्या चतुर्द्धा । तेन षट्-
त्रिंशद्रूपिणी पञ्चमी ॥ * ॥
हंसमाहेश्वरे ।
“वामकेश्वरविद्यायाः कूटं वाग्भवमुत्तमम् ।
एकारादि वागभवन्तु कूटं वाग्भवमुत्तमम् ॥
एकारादि वाग्भवन्तु सौभाग्यायाश्च वाग्भवम् ।
एषा च पञ्चमी विद्या
त्रैलोक्यवशकारिणी ॥” * ॥
श्रीक्रमे ।
“एतासां चैव विद्यानां प्राणं शृणु वरानने ! ।

कर्त्तव्यं व्रतम् नियमविशेषः ।) माघशुक्लपञ्चमी मारभ्य षड्वर्षपर्य्यन्तं प्रतिमासीयशुक्लपञ्चम्यां स्त्रीकर्त्तव्यनियमविशेषः । तत्प्रयोगो यथा, तत्रादौ कृतनित्यक्रिया यजमाना कुशहस्ताचम्य स्वस्ति-वाचनपूर्ब्बकं सङ्कल्पं कुर्य्यात् । विष्णुर्नमोऽद्य माघे मासि शुक्ले पक्षे पञ्चम्यां तिथौ अमुकगोत्रा श्री-अमुकी पुत्त्रपौत्त्राद्यनवच्छिन्नसन्ततिमहदैश्वर्य्य-सौभाग्यारोग्यसौन्दर्य्यावैधव्यप्राप्तिपूर्ब्बकविष्णुलो-कप्राप्तिकामा अद्यारभ्य षड्वर्षपर्य्यन्तं प्रतिमा-सीयशुक्लपञ्चम्यां गणपत्यादिनानादेवतासलक्ष्मी-कवासुदेवपूजापूर्ब्बकभविष्यपुराणोक्तकथाश्रवण-रूपषट्पञ्चमीव्रतमहं करिष्ये । इति सङ्कल्प्य सूक्तं पाठयेत् । ततः सामान्यार्घ्यादि आसनशुद्धि-भूतशुद्धिमातृकान्यासकराङ्गन्यासान्तंकृत्वा गणे-शादीन् संपूज्य लक्ष्मीं नारायणञ्च यथाशक्ति पूजयेत् । ततो भोज्योत्सर्गं कृत्वा प्रणमेत् ॥ * ॥
अथ कथा ।
“शेषशय्यासमासीनं लक्ष्मीधृतपदाम्वुजम् ।
योगनिद्रान्वितं कृष्णं नारदः परिपृच्छति ॥
केनोपायेन भगवन्नारी दुःखं न विन्दति ।
सौ भाग्यारोग्यसौन्दर्य्यपुत्त्रपौत्त्रादिकं लभेत् ॥
इत्युक्तो माधवश्चक्रे लक्ष्मीमुखनिरीक्षणम् ।
इङ्गिताकारतत्त्वज्ञा पद्मा पद्माक्षवल्लभा ।
वल्लभाज्ञां पुरस्कृत्य प्रीता वचनमब्रवीत् ॥
श्रीरुवाच ।
षट्पञ्चमीव्रतं सम्यक् श्रूयतां पापनाशनम् ।
सौभाग्यारोग्यसौन्दर्य्यपुत्त्रपौत्त्रधनप्रदम् ॥
माघे मासि सिते पक्षे पञ्चमी या शुभा भवेत् ।
तस्यामारभ्य कर्त्तव्यं षडब्दं व्रतमुत्तमम् ॥
प्रतिमासि च पञ्चम्यां लक्ष्मीं संपूज्य केशवम् ।
पूजयेद्गन्धपुष्पाद्यैर्न्नैवेद्यैश्च पृथग्विधैः ॥
कुर्य्याद्धोमञ्च विधिवत् गणेशस्य ग्रहस्य च ।
विष्णोर्लक्ष्म्याश्च वाग्देव्या दुर्गाया विभवक्रमात् ॥
अन्येषाञ्च यथाशक्ति तिलाज्ययवधान्यकैः ।
ततोऽश्नीयादलवणमादौ संवत्सरद्वयम् ॥
तृतीये च चतुर्थे च हविष्यान्नञ्च भोजयेत् ।
पञ्चमे फलमश्नीयात् षष्ठेकुर्य्यादुपोषणम् ।
षष्ठे प्रतिष्ठा कर्त्तव्या भोजयेद्द्वादश द्विजान् ॥
तत्र षोडशदानानि हेमशृङ्गीमलङ्कृताम् ।

“शिवबीजं तथा कामं इन्द्रं देवीं नियोजयेत् ।
महामायां ततः पश्चात् शक्तिकूटं समुद्धरेत् ॥”
देपीं सकारम् ।
“वाग्भबं प्रथमं कूटं शक्तिकूटन्तु पञ्चमम् ।
मध्यकूटत्रयं देवि ! कामराजं मनोहरम् ।
कथिता पञ्चमी विद्या त्रैलोक्यसुभगोदया ॥” * ॥
ईश्वर उवाच ।
“शृणु देवि ! महाभागे शक्तिकूटं सुदुर्लभम् ।
वाग्भवं प्रथमं कूटं कामराजं त्रिकूटकम् ॥
शक्तिकूटं प्रवक्ष्यामि तव स्नेहात् विशेषतः ।
जीवप्राणौ महादेवि ! मादनं तदनन्तरम् ॥
इन्द्रबीजं ततः पश्चात् भुवनेशी तु पञ्चमम् ॥”
जीवः सकारः । प्राणो हकारः । इति वा शक्ति-
कूटम् ॥ * ॥
“अथवा देवदेवेशि ! सौभाग्यायाश्च वाग्भवम् ।
कूटत्रयं कामराजं शक्तिबीजञ्च पूर्ब्बवत् ।
एषा शाक्ता महादेवि ! पञ्चमी परमेश्बरी ॥”
अस्या वाग्भवं कूटं हित्वा सौभाग्यायाः प्रथम-
कूटं वाग्भवं कूटमित्यर्थः ।
कामराजकूटत्रयं पञ्चम्या एव ।
“वामनेत्रादिकूटं वा भगादिकूटमेव वा ।
अरिहा सिद्धिदा विद्या सर्व्वदोषविवर्ज्जिता ॥”
रमां मायां हंसबीजं वाग्भवाद्ये नियोजयेत् ॥
शक्त्यन्ते तु महादेवि ! हंसं मायां रमां तथा ।
एभिर्युक्तेन देवेशि ! विद्याजपनमाचरेत् ॥”
जपश्च सप्तवारमेव दीपन्यां तथा दर्शनात् ।
एतासां पूर्ब्बोक्तश्रीक्रमोक्तविद्यानाम् ॥ * ॥
पञ्चम्यान्तु विशेषो यथा ।
“रमां मायां हंसबीजं वाग्भवाद्ये नियोजयेत् ।
शक्त्यन्ते तु महेशानि ! हंसं मायां रमां तथा ॥
कामराजत्रये देवि ! ककारं शक्रसंयुतम् ।
मायाबिन्द्वीश्वरयुतं सूर्य्यकोटिसमप्रभम ॥
प्रथमं कामकूटस्य चाद्ये नियोजयेदिदम् ॥
वान्तं वह्निसमायुक्तं वामनेत्रविभूषितम् ॥
नादबिन्दुसमायुक्तं श्रियो बीजमुदाहृतम् ।
द्वितीयं कामबीजन्तु जपेदुक्त्वा च सुन्दरि ! ॥
गगनं वह्निसंयुक्तं वामनेत्रविभूषितम् ।
नादबिन्दुसमायुक्तं मायाबीजं प्रकीर्त्तितम् ॥
मधुमतीं जपेच्चापि सर्व्वकामफलप्रदाम् ॥”
इति तन्त्रसारः ॥ * ॥ * ॥
रागिणीविशेषः । सा
च वसन्तरागस्य प्रिया । यथा, --
“वसन्ती पञ्चमी दौली वहारी रूपमञ्जरी ।
रागिण्य ऋतुराजस्य वसन्तस्य प्रिया इमाः ॥”
अस्या ध्यानं यथा, --
दक्षिणासहितां दद्यादाचार्य्याय मुनीश्वर ! ॥
ततः षड्गुल्लकं दद्यात् सर्व्वालङ्कारभूषितम् ।
काञ्चनप्रतिमायुग्मलक्ष्मीनारायणान्वितम् ॥
विधिनानेन या कुर्य्यात् पञ्चमीव्रतमुत्तमम् ।
स्ववंशांस्तु समुद्धृत्य विष्णुलोकमवाप्नुयात् ॥
एतत्ते कथितं विप्र ! मर्त्यलोके प्रकाशितम् ।
शोकसन्तापहानिश्च वृथादुःखं न जायते ॥
धर्म्म्यं यशस्यमायुष्यमैश्वर्य्यञ्चापि वर्द्धयेत् ।
याश्च कुर्व्वन्ति भूर्लोके तासां सर्व्वं षुखावहम् ॥
श्रीरुवाच ।
शृणु सत्यं मुनिश्रेष्ठ ! देव्या यत् कथितं मयि ।
तदनुष्ठानसर्व्वन्तु प्रतिष्ठाञ्च द्विजोत्तम् ! ॥
या करोति व्रतं साध्वी सर्व्वकामफलं लभेत् ।

भग एकारः । एतेनाष्टधा पञ्चमी वाग्भवशक्ति-
कूटभेदेन ॥ * ॥ यामले ।
“द्विविधा पञ्चमी विद्या पञ्चपञ्चाक्षरी परा ।
मध्ये षडक्षरी चैव शक्तिश्च चतुरक्षरी ॥”
षडिति कामराजविद्याया मध्यकूटमित्यर्थः ।
शक्तिरिति कामराजस्य शक्तिकूटमित्यर्थः ।

“सङ्गीतगोष्ठीषु गरिष्ठभावं
समाश्रिता गायनसम्प्रदायैः ।
खर्व्वाङ्गिणी नूपुरपादपद्मा
सा पञ्चमी पञ्चमवेदवेत्त्री ॥”
इति सङ्गीतदर्पणः ॥
(नदीविशेशः । यथा, महाभारते । ६ । ९ । २६ ।
“वरां वीरकराञ्चापि
पञ्चमीञ्चमहानदीम् ॥”)

**पञ्चमीव्रतं**, क्ली, (पञ्चम्यां माघशुक्लपञ्चमीमारभ्य

षड्वर्षं यावत्
प्रतिमासीयशुक्लपञ्चम्यांस्त्रिया

तस्याः श्रीर्निश्चला गेहे सत्यं सत्यं हि नारद ! ॥
यथेन्द्राणी महेन्द्रस्य लक्ष्मीर्लक्ष्मीपतेर्य्यथा ।
शङ्करस्य यथा गौरी सापि भर्त्तुर्भवेत्तथा ॥
या पञ्चमीव्रतं कुर्य्यात् सा भवेच्च पतिव्रता ।
यथोक्तविधिना या तु कुर्व्वीत व्रतमुत्तमम् ॥
पुत्त्रपौत्त्रधनैश्वर्य्यं पञ्चमीकरणादपि ।
एतत्ते कथितं सर्व्वं तत्त्वं कमललोचन ! ॥
नारद उवाच ।
केनापि कथितं पूर्ब्बं कृतं केनापि वा पुनः ।
प्राप्तं कुत्र त्वया देवि ! श्रोतुमिच्छामि तद्वद ॥
श्रीरुवाच ।
माघे मासि सिते पक्षे पञ्चम्याञ्च महामुने ! ।
निशावसानसमये चन्द्रभागां महानदीम् ॥
हंससङ्घैः समाकीर्णां नलिनीपुलिनोज्ज्वलाम् ।
तत्र गौरी शची मेधा सावित्री चोर्व्वशी परा ॥
नारायणं समारोप्य कुर्व्वन्ति व्रतमुत्तमम् ।
काम्यव्रतमिदं पद्मे ! लभते फलमुत्तमम् ॥
हर्षवतीञ्च तां वीक्ष्य प्रोवाच कमलालया ।
पुष्पञ्च देहि मे धूपं दीपं नैवेद्यडल्लकम् ॥
मया तव प्रसादेन क्रियते व्रतमुत्तमम् ।

**पञ्चमुखी**, स्त्री, (पञ्चमुखानीव सन्त्यस्याः ।) वासकः ।
इति राजनिर्घण्टः ॥ जवापुष्पविशेषश्च ॥ (पञ्चं विस्तृतं मुखमस्याः । सिंहस्त्री ॥ सृष्टिकाले पञ्च-महाभूतान्येव पञ्चमुखानीव यस्याः शक्ते-रित्यर्थः । शिवपत्नी । इति शब्दाम्बुधिः ॥)

**पञ्चमुद्रा**, स्त्री, (पञ्चविधा मुद्रा ।) पूजायां कर्त्तव्या
पञ्चप्रकारमुद्रा । तस्या अनुष्ठानं यथा, --
“सम्यक् प्रपूरितः पुष्पैः कराभ्यां कल्पितोऽञ्जलिः ।
आवाहनी समाख्याता मुद्रा देशिकसत्तमैः ॥ १ ॥
अधोमुखी त्वियञ्चेत् स्यात् स्थापनी मुद्रिका भवेत् । २ ।
उच्छ्रिताङ्गुष्ठमुष्ट्यो स्तु संयोगात् सन्निधापनी ॥ ३ ॥
अन्तःप्रवेशिताङ्गुष्ठा सैव सम्बोधनी मता । ४ ।
उत्तानमुष्टियुगला संमुखी करणी मता ॥” ५ ॥
इति पूजाप्रदीपः ॥

**पञ्चमूत्रं**, क्ली, (पञ्चविधं मूत्रम् ।) गवाजामेषी-
महिषीगर्द्दभीमूत्रम् । इति राजनिर्घण्टः ॥

**पञ्चमूलं**, क्ली, (पञ्चप्रकारं पञ्चगुणितं वा मूलम् ।)
स्वनामख्यातपाचनम् । तत् त्रिविधं वृहत् स्वल्पं तृणाख्यञ्च । आद्यं यथा, --
“विल्वश्योणाकगाम्भारीपाटला गणिकारिका ।
कफवातहरं श्रेष्ठं पञ्चमूलमिदं महत् ॥”
द्बितीयं यथा, --
“शालपर्णी पृश्निपर्णी बृहतीद्वयगोक्षुरम् ।
वातपित्तहरं वृष्यं कनीयः पञ्चमूलकम् ॥”
कानि यस्मिन् ।) पक्वपौडवृक्षः । इति राज-निर्घण्टः ॥

**पञ्चरत्नं**, क्ली, पञ्चानां रत्नानां समाहारः । (यद्वा
पञ्चविधं पञ्चगुणितं वा रत्नम् ।) तद्यथा, कनकम् १ हीरकम् २ नीलमणिः ३ पद्मरागः ४ मुक्ता ५ । यथा, --
“कनकं हीरकं नीलं पद्मरागञ्च मौक्तिकम् ।
पञ्चरत्नमिदं प्रोक्तमृषिभिः पूर्ब्बदर्शिभिः ॥
रत्नानाञ्चाप्यभावे तु स्वर्णं कर्षार्द्धमेव वा ।
सुवर्णस्याप्यभावे तु आज्यं ज्ञेयं विचक्षणैः ॥”
इति हेमाद्रिः ॥
कनकरजतप्रवालमौक्तिकराजपट्टात्मकमिति गौडाः ॥

**पञ्चरसा**, स्त्री, (पञ्चः विस्तीर्णो रसोऽस्याम् ।)
आमलकी । इति हारावली शब्दमाला च ॥

**पञ्चरात्रं**, क्ली, (पञ्चविधानि रात्राणि ज्ञानानि
यत्र । समासे अच् ।) ग्रन्थविशेषः । यथा, --
“रात्रञ्च ज्ञानवचनं ज्ञानं पञ्चविधं स्मृतम् ।
तेनेदं पञ्चरात्रञ्च प्रवदन्ति मनीषिणः ॥
प्रथमं सात्विकं ज्ञानं द्बितीयन्तु तदेव च ।
नैर्गुण्यञ्च तृतीयञ्च ज्ञानञ्च सर्व्वतः परम् ॥
चतुर्थञ्च राजसिकं भक्तस्त न्नाभिवाञ्छति ।
पञ्चमं तामसं ज्ञानं विद्वांस्तन्नाभिवाञ्छति ॥
ज्ञानं पञ्चविधं प्रोक्तं पञ्चरात्रं विदुर्बुधाः ॥”
तत् सप्तविधं यथा, --
“पञ्चरात्रं सप्तविधं ज्ञानिनां ज्ञानदं परम् ।
ब्राह्मं शैवञ्च कौमारं वाशिष्ठं कापिलं परम् ॥
गौतमीयं नारदीयमिदं सप्तविधं स्मृतम् ॥”
इति नारदपञ्चरात्रे प्रथमरात्रम् ॥
अपि च ।
“पञ्चकं पञ्चरात्राणां कृष्णमाहात्म्यपूर्ब्बकम् ।
वाशिष्ठं नारदीयञ्च कापिलं गौतमीयकम् ।
परं सनतकुमारीयं पञ्चरात्रञ्च पञ्चकम् ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १३२ अध्यायः ॥
एतदतिरिक्तानिहयशीर्षपृथुध्रुवादिपञ्चरात्राणि-

ततस्तासां फलैः पुष्पैर्नैवेद्यैश्च व्रतं कृतम् ॥
ततस्तासां प्रसादेन वल्लभाहं जनार्द्दन ! ।
त्वयि देव जगन्नाथ ! नरनारीगणेन च ॥
भक्त्या मया ते कथितं मर्त्यलोके प्रकाशितम् ।
या करोति व्रतं ह्येतत् यथाविधिविधानतः ॥
इह लोके सुखं भुक्त्वा नारायणपुरं व्रजेत् ।
श्रुत्वा व्रतस्य माहात्म्यं व्रतमेतत् चरन्ति याः ॥
न किञ्चिद्दुष्कृतं लोके तासां सत्यं वदाम्यहम् ।
हरन्ति तासां पापानि याश्च शृण्वन्त्यहर्न्निशम् ॥
नारायणं नमस्कृत्य प्रपूज्य च विसर्ज्जयेत् ॥"
इति भविष्यपुराणोक्ता षट्पञ्चमीव्रतकथा समाप्ता ॥

**पञ्चमुखः**, पुं, (पञ्चं विस्तृतं मुखं यस्य सः ।) सिंहः ।

इति राजनिर्घण्टः ॥ (पञ्च मुखानि यस्य सः ।) शिवः । इति हेमचन्द्रः ॥ तस्य नामवर्णादि यथा, देवीपुराणे ।
"शिवस्तत्र स्थितः साक्षात् सर्व्वपापहरः शुभः ।
स तु पञ्चमुखः ख्यातो लोके सर्व्वार्थसाधकः ।
पञ्चब्रह्मात्मको यस्मात्तेन पञ्चमुखः स्मृतः ॥
पश्चिमे तु मुखे सद्यो वामदेवस्तथोत्तरे ।
पूर्ब्बे तत्पुरुषं विद्यादघोरञ्चापि दक्षिणे ॥

तृतीयं यथा, --
"कुशः काशः शरो दर्भ इक्षुश्चेति तृणोद्भवः ।"
इति चक्रपाणिदत्तः ॥
अपि च ।
"विल्वाग्निमन्थश्योणाककाश्मर्य्यः पाटला तथा ।
ज्ञेयं बृहत् पञ्चमूलं पञ्चमूलमिति स्मृतम् ॥
शरेक्षदर्भ काशानां नलस्य मूलमेव च ।
सौश्रुतञ्चारकञ्चैव तृणाख्यं पञ्चमूलकम् ॥"
इति शब्दचन्द्रिका ॥
(पञ्चानां मूलानां समाहारः । इति विग्रहे मूलपञ्चकम् ॥)

**पञ्चमूली**, स्त्री, (पञ्चानां मूलानां समाहारः ।

"द्विगोः ।" ४ । १ । २१ । इति ङीप् ।) स्वल्प-
पञ्चमूलपाचनम् । यथा, --
"शालपर्णी पृश्निपर्णी बृहती कण्टकारिका ।
तथा गोक्षुरकञ्चैव पञ्चमूली कनीयसी ॥"
इति शब्दचन्द्रिका ॥

**पञ्चयज्ञाः**, पुं, (पञ्चविधा यज्ञाः ।) गृहस्थकर्त्तव्य-

पञ्चप्रकारयज्ञविशेषाः । यथा, --
"ब्रह्मयज्ञो नृयज्ञश्च दैवयज्ञश्च सत्तम ! ।
पितृयज्ञो भूतयज्ञः पञ्चयज्ञाः प्रकीर्त्तिताः ॥"
इति पाद्मे क्रियायोगसारे १६ अध्यायः ॥
शूद्रमधिकृत्य, --
"नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत् ।"
इति तिथ्यादितत्त्वम् ॥
अस्य विवरणं पञ्चमहायज्ञशब्दे द्रष्टव्यम् ॥

**पञ्चरक्षकः**, पुं, (पञ्चगुणितानि रक्षका इव कण्ट-

सन्ति ॥ (पञ्चानां रात्रीणां समाहारः ।) पञ्च निशाः । यथाह चक्रपाणिदत्तः ।
"त्रिरात्रं पञ्चरात्रं वा दशरात्रमथापि वा ।
लङ्घनं सन्निपातेषु कुर्य्यादारोग्यदर्शनात् ॥"

**पञ्चलक्षणं**, क्ली, (सर्गादि पञ्चविधानि लक्षणानि

यत्र ।) पुराणम् । यथा, --
"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम् ॥"
इत्यमरभरतौ ॥
(पञ्चानां लक्षणानां समाहारः । इति विग्रहे पश्चलक्षणानि ॥)

**पञ्चलवणं**, क्ली, पञ्चानां लवणानां समाहारः ।

(पञ्चगुणितं लवणमिति केचित् ।) तद्यथा, --
काचम् । सैन्धवम् । सामुद्रम् । विडम् । सौवर्च्चलम् । इति राजनिर्घण्टः ॥

**पञ्चलाङ्गलकं**, क्ली, (मुक्तादिविभूषितदशवृष-

| | | |
|---|---|---|
| ईशानः पञ्चमो मध्ये सर्व्वेषामुपरि स्थितः ।<br>एते पञ्च मुखा वत्स ! पापघ्ना ग्रहनाशनाः ॥<br>सद्योजातं भवेच्छुक्लं वामदेवन्तु पीतकम् ।<br>रक्तस्तत्पुरुषो ज्ञेयोऽघोरः कृष्णः स एव च ॥<br>ईशानः पश्चिमस्तेषां सर्व्ववर्णसमन्वितः ।<br>कामदः कामरूपी स्यात् ज्ञानाधारः शिवात्मकः ॥<br>(रुद्राक्षविशेषः । अस्य धारणतः शुभं भवति ॥<br>पञ्च मुखानि यस्य इति विग्रहे वाच्यलिङ्गत्वम् ।<br>यथा, रामायणे । ५ । ४१ । २३ ।<br>“तस्य पञ्चायसांस्तीक्ष्णान् शितान् पञ्चमुखान् ततः ।<br>शिरस्युत्पलपत्राभान् दुर्धर्षः संन्यवेशयत् ॥”) | | |

युक्तानि सारदारुनिर्म्मितानि पञ्च
लाङ्गलकानि
यस्मिन् ।) महादानभेदः । यथा, --
“अथातः संप्रवक्ष्यामि महादानमनुत्तम् ।
पञ्चलाङ्गलकं नाम महापातकनाशनमम् ॥
पुण्यां तिथिं समासाद्य युगादिग्रहणादिकम्
।
भूमिदानं ततो दद्यात् पञ्चलाङ्गलकान्वितम्
॥
कर्व्वटं खेटकञ्चापि ग्रामं वा शस्यशालिनम्
।
निवर्त्तनशतं वापि तदर्द्ध्वं वापि शक्तितः
॥
सारदारुमयान् कृत्वा हलान् पञ्च विचक्षणः
।
सर्व्वोपकरणैर्युक्तानन्यान् पञ्च च काञ्चनान्
॥
वृषलक्षणसंयुक्तान् दशैव तु धुरन्धरान् ।
सुवर्णशृङ्गाभरणान् मुक्तालाङ्गूलभूषितान् ॥
रौप्यपादाग्रतिलकान्रक्तकौशेय्रभूषणान् ।
स्रग्दामचन्दनयुतान् शालायामधिवासयेत्
॥
पर्ज्जन्यादित्यरुद्रेभ्यः पायसं निर्व्वपेत्
चरुम् ।
एकस्मिन्नेव कुण्डे तु गुरुर्यस्मिन्निवेदयेत् ॥
पालाशाः समिधस्तद्वदाज्यं
कृष्णतिलांस्तथा ।
तुलापुरुषवत् कुर्य्यात् लोकेशावाहनं बुधः
॥
ततो मङ्गलशब्देन युक्तमाल्याम्बरो बुधः ।
आहूय द्विजदाम्पत्यं हेमसूत्राङ्गरीयकैः ॥
कौशेयवस्त्रकटकैर्मणिभिश्चापि पूजयेत् ।
शय्यां सोपस्करां तद्बद्धेनुमेकां पयस्विनीम्
॥
तथाष्टादश धान्यानि समन्तादधिवासयेत्
।
ततः प्रदक्षिणं कृत्वा गृहीतकुसुमाञ्जलिः ॥
इममुच्चारयेन्मन्त्रमथ सर्व्वं निवेदयेत् ।

हारः । तद्यथा ।
सुवर्णरजतताम्ररङ्गनागानि ।
इति राजनिर्घण्टः ॥

**पञ्चवक्त्रः**, पुं, (पञ्च वक्त्राणि यस्य ।) शिवः । (“विश्वाद्यं
विश्वबीजं निखिलभयहरं पञ्चवक्त्रं
त्रिनेत्रम् ॥”
इति शिवध्यानम् ॥)
अस्य मन्त्रा यथा, --
“समस्तानां स्वराणान्तु दीर्घाः शेषाः
सबिन्दुकाः ।
ऋनृकशून्याः सार्द्धचन्द्रा उपान्ते
नाभिसंहिताः ॥
एभिः पञ्चाक्षरैर्म्मन्त्रं पञ्चवक्त्रस्य
कीर्त्तितम् ।
क्रमात्
सम्मदसन्दोहमादगौरवसञ्ज्ञकाः ॥
प्रासादन्तु भवेत् शेषं पञ्चमन्त्राः
प्रकीर्त्तिताः ।
एकैकेन तथैवैकं वक्त्रं मन्त्रेण पूजयेत्
॥
एकं समुदितं कृत्वा पञ्चभिर्व्वा
प्रपूजयेत् ।
प्रासादेनाथवा पञ्चवक्त्रं देवं प्रपूजयेत्
॥
सम्मदादिषु मन्त्रेषु प्रासादन्तु
प्रशस्यते ।
शम्भोः प्रसादनेनैव यस्मादवृत्तस्तु
मन्त्रकः ॥
तेन प्रासादसंज्ञोऽयं कथ्यते
मुनिपुङ्गवैः ।
तस्मात् सर्व्वेषु मन्त्रेषु प्रासादः
प्रीतिदः प्रभोः ॥
आमोदकारकः शम्भोर्म्मन्त्रः सम्मद
उच्यते ।
मनःप्रपूरणश्चापि सन्दोहः
परिकीर्त्तितः ॥
आकर्षको भवेन्मादो
गुरुत्वाद्गौरवाह्वयः ।

मुच्यते सर्ब्बपापेभ्यः पञ्चवक्त्रस्य धारणात्
॥”
इति तिथितत्त्वम् ॥
(पञ्चं विस्तृतं वक्त्रं वदनं यस्य । इति विग्रहे ।
सिंहः ॥)

**पञ्चवटः**, पुं, (पञ्चो विस्तीर्णो वटः ।) उरस्कटः ।
तत्पर्य्यायः । जोटिङ्गः २ महाव्रती ३ बाल-
यज्ञोपवीतकम् ४ । इति त्रिकाण्डशेषः ॥
(पञ्च-
संख्यका वटा अश्बत्थविल्ववटधात्र्यशोक-
रूपा वृक्षा यस्मिन् । पञ्चवटीवनम् । यथा
रामायणे । १ । ३ । १३ ।
“समागमं विराधेन वासं पञ्चवटे तथा ॥”)

**पञ्चवटी**, स्त्री, (पञ्चानां वटानां समाहारः ।
तद्धितार्थेति तत्पुरुषः संख्यापूर्ब्बोद्विगुरुरिति
द्विगुसंज्ञायां “द्विगोः” । ४ । १ । २१ । इति
ङीष् ।
द्विगुरेकवचनमिति एकवचनम् ।) पञ्चप्रकार-
वृक्षविशेषः । यथा, --
“अश्वत्थविल्ववृक्षञ्च वटधात्रीअशोककम् ।
वटीपञ्चकमित्युक्तं स्थापयेत् पश्चदिक्षु च ॥
अश्वत्थं स्थापयेत् प्राचि विल्वमुत्तरभागतः ।
वटं पश्चिमभागे तु धात्रीं दक्षिणतस्तथा ॥
अशोकं वह्निदिक्स्थाप्यं तपस्यार्थं सुरेश्वरि ।
मध्ये वेदीं चतुर्हस्तां सुन्दरीं सुमनोहराम् ॥
प्रतिष्ठां कारयेत्तस्याः पञ्चवर्षोत्तरं शिवे ! ।
अनन्तफलदात्री सा तपस्याफलदायिनी ॥ *
॥
इयं पञ्चवती प्रोक्ता बृहत्पञ्चवटीं शृणु ।
विल्ववृक्षं मध्यभागे चतुर्द्दिक्षु चतुष्टयम् ॥
वटवृक्षं चतुष्कोणे वेदसंख्यं प्ररोपयेत् ।
अशोकं वर्त्तुलाकारं पञ्चविंशतिसम्मितम् ॥
दिग्विदिक्ष्वामलकीञ्चैवएकैकं परमेश्वरि ।
अश्वत्थञ्च चतुर्द्दिक्षु बृहत्पञ्चवटी भवेत् ॥
यः करोति महेशानि ! साक्षादिन्द्रसमी भवेत् ।
इह लोके मन्त्रसिद्धिः परे च परमा गतिः ॥”
इति
हेमाद्रीयव्रतखण्डधृतस्कन्दपुराणवचनानि॥

यस्माद्देवगणाः सर्व्वे स्थावराणि चराणि च
॥
धुरन्धराङ्गे तिष्ठन्ति तस्माद्भक्तिः शिवेऽस्तु
मे ।
यस्माच्च भूमिदानस्य कलां नार्हन्ति
षोडशीम् ॥
दानान्यन्यानि मे भक्तिर्धर्म्म एव दृढा भवेत्
।
दण्डन सप्तहस्तेन त्रिंशद्दण्डान्निवर्त्तनम् ॥
त्रिभागहीनं गोचर्म्ममानमाह प्रजापतिः ।
मानेनानेन यो दद्यात् निवर्त्तनशतं बुधः ॥
विधिनानेन तस्याशु क्षीयते पापसंहतिः ।
तदर्द्धमथवा दद्यादपि गोचर्म्ममात्रकम् ।
भवनस्थानमात्रं वा सोऽपि पापैः प्रमुच्यते
॥
यावन्ति लाङ्गलकमार्गमुखानि भूमे-
स्तासां पतिर्दुहितुरङ्गजरोमकाणि ।
तावन्ति शङ्करपुरे वर्षाणि तिष्ठे-
द्भूमिप्रदानमथ यः कुरुते मनुष्यः ॥
गन्धर्व्वकिन्नरसुरासुरसिद्धसंघै-
राधूतचामरमुपेत्य महाद्भमानम् ।
सम्पूज्यते पितृपितामहबन्धुयुक्तः
शम्भोः पुरं व्रजति चामरनायकः सन् ॥
इन्द्रत्वमप्यधिगतं क्षयमभ्युपैति
गोभूमिलाङ्गलधुरन्धरसंप्रदानात् ।
तस्मादघौघपटलक्षयकारिभूमे-
र्द्दानं विधेयमिति भूतिभवाभवाय ॥”
इति मात्स्ये २५७ अध्यायः ॥

**पञ्चलोहं**, क्ली, (पञ्चं विस्तीर्णं लोहम् ।) सौराष्ट्रक-
लोहम् । इति हेमचन्द्रः ॥ (पञ्चगुणितं
लोहम् ।
सुवर्णरजतताम्रसीसकरङ्गाणि ॥)

**पञ्चलोहकं**, क्ली, पञ्चानां लोहकानां धातूनां समा-
एतद्व्यस्तं समस्तञ्च मन्त्रं शम्भोः
प्रकीर्त्तितम् ॥
पञ्चाक्षरञ्च यन्मन्त्रं पञ्चवक्त्रस्य
कीर्त्तितम् ।
स्वयन्तेनैव मन्त्रेण
आराधयतमीश्वरम् ॥ * ॥
ध्यानञ्च शृणु वक्ष्यामि
सम्यग्वेतालभरवौ ।
पञ्चवक्त्रं महाकायं जटाजूटविभूषितम्
॥
चारुचन्द्रकलायुक्तं मूर्द्ध्नि
व्यालौघसंगतम् ।
बाहुभिर्द्दशभिर्युक्तं
व्याघ्रचर्म्मास्वराम्बरम् ॥
कालकूटधरं कण्ठे नागहारोपशाभितम्
।
कोटीरबन्धनं बाहुभूषणञ्च भुजङ्गमाः
॥
विभूतिं सर्व्वगात्रेषु
ज्योत्स्नार्पितस्वरोचिषम् ।
भूतिसंलिप्तसर्व्वाङ्गमेकैकत्र
त्रिभिस्त्रिभिः ॥
नेत्रैस्तु
पञ्चदशभिर्ज्योतिष्मद्भिर्विभूषितम् ।
वृषभोपरि संस्थन्तु
गजकृत्तिपरिच्छदम् ॥
सद्योजातं वामदेवमघोरञ्च ततः परम् ।
तत्पुरुषं यथेशानं पञ्चवक्त्रं
प्रकीर्त्तितम् ॥
सद्योजातं भवेद्वक्त्रं
शुद्धस्फटिकसन्निभम् ।
पीतवर्णं तथा सौम्यं वामदेवं मनोहरम्
॥
नीलवर्णमघोरन्तु दंष्ट्राभीतिविवर्द्धनम्
।
रक्तं तत्पुरुषं देवं दिव्यमूर्त्तिं मनोहरम्
॥
श्यामलञ्च तथेशानं सर्व्वदैव
शिवात्मकम् ।
चिन्तयेत् पश्चिमे त्वाद्यं द्वितीयञ्च
तथोत्तरे ॥
(स्वनामख्यातः प्रदेशविशेषः । यथा, रामायणे
।
१ । १ । ४५ ।
“देशः पञ्चवटीनाम तत्र वासं स कल्पयत् ॥”)

**पञ्चवल्कलं**, क्ली, (पञ्चानां वल्कलानां समा-
हारः ।) वल्कलपञ्चकम् । यथा, --
“न्यग्रोधोडुम्बराश्वत्थप्लक्षवेतसवल्कलैः ।
सर्व्वैरेकत्र संयुक्तैः पञ्चवल्कलमुच्यते ॥”
अपि च ।
“न्यग्रोधोडुम्बराश्वत्थप्लक्षपिप्पलपीतनाः ।
क्षीरिवृक्षाश्च पञ्चैषां वल्कलं पञ्चवल्कलम् ॥”
इति शब्दचन्द्रिका ॥
अस्य गुणाः ।
“पञ्चैते क्षीरिणो वृक्षास्तेषां त्वक् पञ्चलक्षणम् ।
त्वक्पञ्चकं हिमं ग्राहि व्रणशोथविसर्पजित् ॥”
इति राजनिर्घण्टः ॥

**पञ्चवाणः**, पुं, (पञ्च वाणाः शरा यस्य सः ।)
कामदेवः । इति हेमचन्द्रः ॥ पञ्चानां वाणानां
समाहारे क्ली । (कामस्य पञ्च वाणा यथा, --
“द्रवणं शोषणं वाणं तापनं मोहनाभिधम् ।

| | | |
|---|---|---|
| | अघोरं दक्षिणे देवं पूर्ब्बे तत्पुरुषन्तथा । ईशानं मध्यतो ध्येयं चिन्तयेद्भक्तितत्परः ॥ शक्तित्रिशूलखड्वाङ्गवरदाभयदंशिवम् । दक्षिणेष्वथ हस्तेषु वामेष्वपि ततः शृणु ॥ अक्षसूत्रं बीजपूरं भुजगं डमरूत्पलम् । अष्टैश्वर्य्यसमायुक्तं ध्यायेत्तु हृद्गतं शिवम् ॥” इति कालिकापुराणे ५० अध्यायः ॥ * ॥ पञ्चमुखरुद्राक्षः । यथा स्कान्द्रे, -- “पञ्चवक्त्रः स्वयं रुद्रः कालाग्निर्नाम नामतः । अगम्यागमनाच्चैव अभक्ष्यस्य च भक्षणात् । | |

उन्मादनञ्च कामस्य वाणाः पञ्च प्रकीर्त्तिताः ॥”

पञ्चपुष्पवाणा यथा, --

“अरविन्दमशोकञ्च चूतञ्च नवमल्लिका ।

नीलोत्पलञ्च पञ्चैते पञ्चवाणस्य सायकाः ॥”)

पञ्चवाणविशिष्टे त्रि ॥

**पञ्चशरः**, पुं, (पञ्च शरा यस्य सः ।) कन्दर्पः ।

इत्यमरः । १ । १ । २६ ॥ अस्य पञ्च शराणि यथा, ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ३२ अध्याये ।

“सम्मोहनं समुद्वेगबीजं स्तम्भनकारणम् ।

उन्मत्तबीजं ज्वलनं शश्वच्चेतनहारकम् ॥”

अपि च ।

“सम्मोहनोन्मादनौ च शोषणस्तापनस्तथा ।

स्तम्भनश्चेति कामस्य पञ्च वाणाः प्रकीर्त्तिताः ॥”

पञ्च इन्द्रियार्थाः शरा अस्येत्यन्ये । इति भरतः ॥

(यथा, कुमारे । ७ । ९२ ।

“शापावसाने प्रतिपन्नमूर्त्ते-र्ययाचिरे पञ्चशरस्य सेवाम् ॥”)

**पञ्चशस्यं**, क्ली, (पञ्चानां शस्यानां समाहारः ।)

शस्यपञ्चकम् । तत्तु धान्यमुद्गतिलयवश्वेतसर्षप-रूपम् । सर्षपस्थाने माषोऽपि । इति दुर्गोत्-सवपद्धतिः ॥

**पञ्चशाखः**, पुं, (पञ्च शाखा इवाङ्गुलयो यस्य ।)

यत्तदेकाक्षरं ब्रह्म नानारूपं प्रदृश्यते ।

आसुरिर्म्मण्डले तस्मिन् प्रतिपेदे तदव्ययम् ॥

तस्य पञ्चशिखः शिष्यो मानुष्या पयसा भृतः ॥

ब्राह्मणी कपिला नाम काचिदासीत् कुटुम्बिनी ।

तस्याः पुत्त्रत्वमागम्य स्त्रियाः स पिबति स्तनौ ॥

ततः स कापिलेयत्वं लेभे बुद्धिञ्च नैष्ठिकीम् ।

एतत्ते भगवानाह कापिलेयस्य सम्भवम् ॥

तस्य तत् कापिलेयत्वं सर्व्ववित्त्वमनुत्तमम् ॥

सामान्यं जनकं ज्ञात्वा धर्म्मज्ञो ज्ञानमुत्तमम् ।

उपेत्य शतमाचार्य्यान्मोहयामासहेतुभिः ॥

जनकस्त्वभिसंरक्तः कापिलेयानुदर्शनात् ।

उत्सृज्य शतमाचार्य्यान् पृष्ठतोऽनुजगाम तम् ॥

पञ्चस्रोतसि निष्णातः पञ्चरात्रविशारदः ।

पञ्चज्ञः पञ्चकृत् पञ्चगुणः पञ्चशिखः स्मृतः ॥”

गायत्रीस्वरूपायां शक्त्यां स्त्री । यथा, देवी-भागवते । १२ । ६ । १०५ ।

“पानप्रिया पञ्चशिखा पन्नगोपरिशायिनी ॥”)

**पञ्चशूरणः**, पुं, (पञ्च शूरणा यत्र ।) पञ्चप्रकार-

शूरणः । तद्यथा । अत्यम्लपर्णी काण्डीरः मालाकन्दः शूरणः श्वेतशूरणश्च । तथाहि ।

“अत्यम्लपर्णीकाण्डीरमालाकन्दद्विशूरणैः ।

कृमो भवति योगोऽयं पञ्चशूरणसंज्ञकः ॥”

इति राजनिर्घण्टः ॥

**पञ्चशैरीषकं**, क्ली, (शिरीषवृक्षस्य इदम् शैरी-

षकम् । पञ्चसंख्यकं शैरीषकम् ।) शिरीष-वृक्षस्य कुसुममूलफलपत्रत्वचः । इति राज-निर्घण्टः ॥

प्रायश्चित्तं वैश्यदेवः । यथा, --

“लौकिके वैदिके वापि हुतोच्छिष्टे जले क्षितौ ।

वैश्वदेवन्तु कुर्व्वीत पञ्चसूनापनुत्तये ॥”

इति आह्निकतत्त्वधृतशातातपवचनम् ॥

अशौचकालोत्पन्नपञ्चसूनादिजन्यपापस्यदाना-दिनाश्यत्वं यथा, --

“दशाहात्तुपरं सम्यक् विप्रोऽधीयीत धर्म्मवित् ।

दानञ्च विधिना देयमशुभात्तारकं हि तत् ॥”

इति शुद्धितत्त्वधृतसम्बर्त्तवचनम् ॥

**पञ्चस्वरा**, स्त्री, (पञ्च स्वरा यत्र ।) प्रजापति-

दासवैद्यकृतशिशुरिष्टमातृरिष्टपितृरिष्टस्त्रीपुं-। पुंसकज्ञानसुखदुःखरिष्टच्छेदादियोगमृत्युज्ञान-निर्णय इति सप्ताध्यायात्मकज्योतिर्ग्रन्थविशेषः यथा । तत्रैव ।

“पञ्चस्वराभिधानञ्च ग्रन्थं निदानसम्मतम् ।

किञ्चिदुद्देशगम्यञ्च स्वल्पं वक्ष्यामि शाश्वतम् ॥”

**पञ्चस्वरोदयः**, पुं, (पञ्चानां स्वराणामुदयो यत्र ।)

ज्योतिःशास्त्रविशेषः । यथा, --

“कालं वक्ष्यामि संसिद्ध्यौ रुद्र पञ्चस्वरोदयात् ।

राजा माजा उदासा च पीडा मृत्युस्तथैव च ॥

आ इ ऊ ऐ औ स्वराश्च लिखेत् पञ्चाग्निकोष्ठके ।

ऊर्द्ध्वतिर्य्यग्गतैरेखैः षड्वह्निक्रममागतैः ॥

तिथी एकाग्निकोष्ठेषु त्रयो राजाथ माजया ।

उदासा पीडा मृत्युश्च कुजः सोमसुतः क्रमात् ॥

गुरुशुक्रशनैश्चररविचन्द्रा यथोदितम् ।

रेवत्यादिशिवान्ताश्च ऋक्षाश्च प्रथमाः कलाः ॥

पञ्चपञ्चान्यत्र भानि चैत्राद्य उदयस्तथा ।

द्वादशाहा द्वयो मासा नाम्न आद्यक्षरं तथा ॥

कला लिङ्गञ्च या तिष्ठेत् पञ्चमस्तस्य वैमृतिः ।

लका तिथिस्तथा वारनक्षत्रं मासमेव च ॥

नामोदयस्य पूर्ब्बञ्च तथा भवति नान्यथा ॥”

इति गरुडपुराणम् ॥

**पञ्चाग्नि**, क्ली, पञ्चानामग्नीनां समाहारः । अस्य

विंवरणं पञ्चातपाशब्दे द्रष्टव्यम् ॥ शरीरस्थ-पञ्चाग्नयो यथा, --

हस्तः । इत्यमरः । २ । ६ । ८१ ॥
पञ्चानां
शाखानां समाहारे क्ली ।
पञ्चशाखाविशिष्टेत्रि ॥

**पञ्चशिखः**, पुं, (पञ्चा विस्तीर्णा शिखा केश-

रादिर्य्यस्य ।) सिंहः । इति हेमचन्द्रः ॥
धर्म्मस्य हिंसाभार्य्यायां जातो मुनिविशेषः ।
यथा, --
“धर्म्मस्य भार्य्या हिंसाख्या तस्यां पुत्त्रचतुष्टयम् ।
सम्प्राप्तं मुनिशार्द्दूल ! योगशास्त्रविचारकम् ॥
ज्येष्ठः सनत्कुमारोऽभूद्द्वितीयश्च सनातनः ।
तृतीयः सनको नाम चतुर्थश्च सनन्दनः ॥
सांख्यवेत्तारमपरं कपिलं वोढ्डमासुरिम् ।
दृष्ट्वा पञ्चशिखं श्रेष्ठं योगयुक्तं तपोनिधिम् ॥
ज्ञानयोगं न ते दद्युर्ज्यायांसोऽपि कनीयसाम् ॥”
इति वामने ५० अध्यायः ॥
(अस्य अन्यप्रकारोत्पत्तिर्नामनिरुक्तिश्च उक्ता महाभारते । १२ । २१८ । ६ -- १९ ।
“तत्र पञ्चशिखो नाम कापिलेयो महामुनिः ।
परिधावन् महीं कृत्स्नां जगाम मिथिलामथ ॥
सर्व्वसन्न्यासधर्म्माणां तत्त्वज्ञानविनिश्चये ।
सुपर्य्यवसितार्थश्च निर्द्वन्द्वो नष्टसंशयः ॥
ऋषीणामाहुरेकं यं कामादवसितं नृषु ।

**पञ्चषाः**, त्रि, पञ्च वा षड्वा परिमाणं येषां ते ।

बहुवचनान्तोऽयं शब्दः । इति मुग्धबोध-व्याकरणम् ॥

**पञ्चसिद्धौषधिः**, पुं, (पञ्च सिद्धा औषधयो यस्मिन् ।)

पञ्चप्रकारौषधिविशेषः । यथा, --
“तैलकन्दसुधाकन्दक्रोडकन्दरुदन्तिकाः।
सर्पनेत्रयुताः पञ्चसिद्धौषधिकसंज्ञकः ॥”
इति राजनिर्घण्टः ॥

**पञ्चसुगन्धकं**, क्ली, (पञ्च सुगन्धा यत्र । ततः कप् ।)

पञ्चप्रकारसुगन्धिद्रव्यम्। यथा, --
“कुसुमानि लवङ्गस्य तथा कक्कोलकाण्डयोः ।
जातीफलानि कर्पूरमेतत् पञ्चसुगन्धकम् ॥”
इति शब्दचन्द्रिका ॥
अपि च ।
“कर्पूरकक्कोललवङ्गपुष्प-
गुवाकजातीफलपञ्चकेन ।
समांशभागेन च योजितेन
मनोहरं पञ्चसुगन्धकं स्यात् ॥”
इति राजनिर्घण्टः ॥

**पञ्चसूना**, स्त्री, (पञ्चगुणिता सूना प्राणिवध-

स्थानम् ।) पञ्चप्रकारप्राणिवधस्थानम्।
यथा, --
“पञ्चसूना गृहस्थस्य चुल्ली पेषण्युपस्करः ।
कण्डनी चोदकुम्भश्च बध्यते याश्च वाहयन् ॥”
इति शुद्धितत्त्वम् ॥
तज्जन्यपापं गृहस्थस्य प्रतिदिनं भवति तस्य

“उदरे गार्हपत्याग्निर्मध्यदेशे तु दक्षिणः ।
आस्य आहवनोऽग्निश्च सत्यः पर्व्वा च मूर्द्धनि ।
यः पञ्चाग्नीनिमान् वेद आहिताग्निः स उच्यते ॥”
इति गरुडपुराणम् ॥
(पञ्चाग्नयो गृहे यस्य । इति विग्रहे वाच्य-लिङ्गत्वम् । यथा मनुः । ३ । १८५ ।
“त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णषडङ्गवित् ॥”)

**पञ्चाङ्गं**, क्ली, पञ्चानां अङ्गानां एकवृक्षस्य त्वक्-

पत्रपुष्पमूलफलानां समाहारः । यथा, --
“त्वक्पत्रकुसुमं मूलं फलमेकस्य शाखिनः ।
एकत्र मिलितञ्चैतत् पञ्चाङ्गमिति संज्ञितम् ॥”
इति राजनिर्घण्टः ॥
पुरश्चरणविशेषः । यथा, --
“जपहोमौ तर्पणञ्चाभिषेको विप्रभाजनम् ।
पञ्चाङ्गोपासनं लोके पुरश्चरणमिष्यते ॥”
इति तन्त्रसारः ॥
वारतिथिनक्षत्रयोगकरणात्मकपञ्जिका। यथा, --

| | | |
|---|---|---|
| शाश्वतं सुखमत्यन्तमन्विच्छन्तं सुदुर्लभम् ॥<br>यमाहुः कपिलं सांख्याः परमर्षि प्रजापतिम् ।<br>स मन्ये तेन रूपेण विस्मापयति हि स्वयम् ॥<br>आसुरेः प्रथमं शिष्यं यमाहुश्चिरजीविनम् ।<br>पञ्चस्रोतसि यः रात्रमास्ते वर्षसहस्रिकम् ॥<br>यत्र चासीनमागम्य कापिलं मण्डलं महत् ।<br>पुरुषावस्थमव्यक्तं परमार्थं न्यवेदयत् ॥<br>इष्टसत्रेण संपृष्ठो भूयश्च तपसासुरिः ।<br>क्षेत्रक्षेत्रज्ञयोर्व्यक्तिं बुबधे देवदर्शनः ॥ | | |

"तिथिर्वारश्च नक्षत्रं योगः करणमेव
च ।
पञ्चाङ्गस्य फलं श्रुत्वा
गङ्गास्नानफलं लभेत्" ॥
इति ज्योतिषम् ॥

**पञ्चाङ्गः**, पुं, (पञ्चाङ्गाणि यस्य ।) कमठः । इति
शब्दमाला ॥ अश्वविशेषः ।
तत्पर्य्यायः । पञ्च-
भद्रः २ पुष्पिततुरङ्गमः ३ । इति
शब्दरत्नावली ॥
प्रणामविशेषः । यथा, --
"बाहुभ्याञ्चैव जानुभ्यां शिरसा
वचसा दृशा ।
पञ्चाङ्गोऽयंप्रणामः स्यात् पूजासु
प्रवराविमौ ॥"
इति तन्त्रसारः ॥
(राजनयः । यदुक्तम् ।
"सहायाः साधनोपाया विभागो
देशकालयोः ।
विनिपातप्रतीकारः सिद्धिः पञ्चाङ्ग
इष्यते ॥")

**पञ्चाङ्गगुप्तः**, पुं, (पञ्चसंख्यकानि अङ्गानि गुप्तानि
यस्य ।) कच्छपः । इति
त्रिकाण्डशेषः ॥

**पञ्चाङ्गुलः**, पुं, (पञ्च अङ्गुलय इव पत्राणि यस्य ।)
एरण्डवृक्षः । इत्यमरः । २ । ४ ।
५१ । पञ्चा-
ङ्गुलपरिमाणयुक्ते त्रि ॥

**पञ्चाङ्गुलिः**, त्रि, पञ्चाङ्गुलयो यस्य सः । इति
व्याकरणम् ॥

**पञ्चाङ्गुली**, स्त्री, तक्राह्वाक्षुपः । इति राज-
निर्घण्टः ॥

**पञ्चातपा**, स्त्री, (पञ्चभिरग्निसूर्य्यैरातप्यते इति ।
गर्भवतीभ्यस्तद्दानस्य दिनं यथा, --
"रेवत्यश्विपुनर्व्वसुद्वयमरुन्म्रलानुराधामघा-
हस्तासूत्तरफल्गुनीषु भृगुजे जीवार्कवारे तथा ।
लग्नर्क्षोडुपशोभनेषु नियतं सन्त्यज्य रिक्तां तिथिं
देयं मासि च पञ्चमेषु करणे पञ्चामृतं योषि-
ताम् ॥"
इति ज्योतिस्तत्त्वम् ॥

**पञ्चामृतयोगः**, पुं, (पञ्चानाममृतानां गुडुच्यादीनां
योगः ।) गुडुचीगोक्षुरमुशलीमुण्डिकाशताव
रीर्णा संयोगः । यदुक्तं राजनिर्घण्टे ।
"गुडूची गोक्षुरश्चैव मुशली मुण्डिका तथा ।
शतावरीति पञ्चानां योगः पञ्चामृताभिधः ॥"

**पञ्चाम्नायः**, पुं, (पञ्चसंख्यकः आम्नायः ।) शिवस्य
पञ्चवक्त्रविनिर्गतस्तन्त्रशास्त्रविशेषः । यथा, --
"पूर्ब्बाम्नायः पूर्ब्बमुखः पश्चिमः पश्चिमामुखः
।
दक्षिणो दक्षिणस्तद्वदुत्तरश्चोत्तरः परः ॥
निरुत्तरं तथा चोर्द्ध्वं सिद्धान्तागमरूपिणम् ।
ऊर्द्ध्वाम्नायपरिज्ञानं नाल्पस्य तपसः फलम्
॥"
अन्यत्र ।
"पूर्ब्बाम्नायः शब्दरूपो दक्षिणः कर्णरूपकः ।
पश्चिमः प्रश्नरूपः स्यादुत्तरश्चोत्तरस्तथा ॥
ऊर्द्ध्वाम्नायस्तत्त्वबोधःकेवलानुभवात्मकः
॥"
इत्यादि । इति भैरवतन्त्रम् ॥
मम पञ्चमुखेभ्यश्च पञ्चाम्नायाः समुद्गताः ।"
इति कुलार्णवतन्त्रम् ॥ * ॥
"विभाव्य मुखपद्मं हि शिवस्य वरवर्णिनि ।
सद्योजातं वामदेवमघोरस्य ततः परम् ॥
तत्पुरुषं तथेशानं पञ्चवक्त्रं प्रकीर्त्तितम् ॥
सद्योजातस्य वै शुक्लं शुद्धस्फटिकसन्निभम् ।
पीतवर्णं तथा सौम्यं वामदेवं मनोहरम् ॥
कृष्णवर्णमघोरस्य समं भीमविवर्द्धनम् ।
रक्तं तत्पुरुषं देवि ! दिव्यमूर्त्तिं मनोहरम् ॥
श्यामलस्य तथेशानं सर्व्वदेवशिवात्मकम् ।
चिन्तयेत् पश्चिमे चाद्यं द्वितीयस्य तथोत्तरे ॥
अघोरं दक्षिणे देवं पूर्ब्बे तत्पुरुषं तथा ।
पञ्चाम्ररोपी नरकं न याति ॥"
इति तिथितत्त्वम् ॥

**पञ्चाम्लं**, क्ली, (पञ्चानामम्लानां कोलादीनां समा-
हारः ।) अम्लपञ्चकम् । यथा, --
"कोलदाडिमवृक्षाम्लैरम्लवेतससंयुतैः ।
चतुरम्लञ्च पञ्चाम्लं मातुलङ्गसमन्वितम् ॥"
इति शब्दचन्द्रिका ॥

**पञ्चारी**, स्त्री, (पञ्चपञ्चसंख्यामृच्छतीति । ऋ गतौ
"कर्म्मण्यण्" । ३ । २ । १ । इति अण् ।
गौरादि-
त्वात् ङीष् ।) शारिशृङ्खला । इति शब्दमाला
॥
(पाषार छक् इति भाषा ॥)

**पञ्चार्च्चिः**, [स्] पुं, (पञ्च अर्च्चींषि यस्य सः ।) बुध-
ग्रहः । इति त्रिकाण्डशेषः ॥

**पञ्चालः**, पुं (पचिविस्तारवचने + "तमिविशिविड्वि-
मृणिकुलीति ।" उणां १ । ११७ । इति
कालन् ।)
देशविशेषः । इत्युणादिकोषः ॥ तस्य
व्युत्पत्ति-
र्यथा ।
"हर्य्यश्वान्मुद्गलसृञ्जयबृहदिषुयवीनर
काम्पिल्वसंज्ञाः । पञ्चानामेतेषां विषयाणां
रक्ष-
णायालमेते मत्पुत्त्रा इति पित्राभिहिता इति
पञ्चालाः ।" इति विष्णुपुराणे ४ अंशे १९
अध्यायः ॥ (अस्य स्थितिनिर्णय
उक्तस्तन्त्रशास्त्रे
यथा, --
"कुरुक्षेत्रात् पश्चिमेषु तथाचोत्तरभागतः ।
इन्द्रप्रस्थान्महेशानि ! दशयोजनकद्वये ।
पञ्चालदेशो देवेशि ! सौन्दर्य्यगर्व्वभूषितः
॥")

**पञ्चालाः**, पुं, (पञ्चालाः क्षत्त्रियास्तेषां निवासो-
जनपदः । निवासेऽणो जनपदे लुप् ।)
नीवृद-

आङ् + तप् + अच् । ततः टाप् ।)
तपस्या-
विशेषः । यथा, --
“चर्य्या पञ्चातपाचिन्ता शाम्भवी
शाम्भवो जपः ।
यज्ञियैर्दारुभिः शुष्कैश्चतुर्द्दिक्षु
चतुष्कृतम् ॥
वह्निसंस्थापनं ग्रीष्मे तीव्रांशुस्तत्र
पञ्चमः ।
हस्तान्तरे चतुर्व्वह्नीन् कृत्वा
वैश्वानरेष्टिना ॥
तन्मध्यस्था सूर्य्यविम्बं वीक्षन्ती
बहुलांशुका ।”
इति कालिकापुराणे ४२ अध्यायः
॥

**पञ्चाननः**, पुं, (पञ्च आननानि यस्य ।)

शिवः । (पञ्चं विस्तृतं आननं यस्य
।) सिंहः ।
इति मेदिनी ॥ अत्युग्रः । इति
शब्दरत्ना-
वली ॥ (ज्योतिषोक्तसिंहराशिः ।
यथाह
स्मृतिः ।
“पञ्चाननगते भानौ पक्षयोरुभयोरपि
।
चतुर्थ्यामुदितश्चन्द्रो नेक्षितव्यः
कदाचन ॥”
रुद्राक्षविशेषः । तद्धारणे महच्छुभं
भवति ॥)

**पञ्चामराः**, स्त्री, (पञ्च अमराः ।
संज्ञात्वात्कर्म्म-

धारयः ।) पञ्चप्रकारामरलतादि ।
यथा, --
“एका तु अमरा दूर्व्वा तस्या ग्रन्थिं
समानयेत् ।
अन्या तु विजया देवी सिद्धिरूपा
सरस्वती ॥
अन्या तु विल्वपत्रस्था
शिवसन्तोषकारिणी ।
ईशानं मध्यतो ज्ञेयं चिन्तयेद्भक्तितत्परः ॥”
इति निर्व्वाणतन्त्रे ६ पटलः ॥ * ॥
अन्यत् षडाम्नायशब्दे द्रष्टव्यम् ॥

**पञ्चाम्रं**, क्ली, (अमन्ति रसानि प्राप्नुवन्तीति । अम-

गत्यादिषु + “अमितम्योर्दीर्धश्च ।” उणां २ ।
१६ ।
इति रक् दीर्घश्चोपधायाः इति आम्रा वृक्षाः ।
पञ्चानां आम्राणामश्वत्थादिवृक्षाणांसमाहारः ।)
वृक्षविशेषाणां समाहारः । यथा, --
“अश्वत्थमेकं पिचुमर्द्दमेकं
न्यग्रोधमेकं दश पुष्पजातीः ।
द्वे द्वे तथा दाडिममातुलङ्गे
पञ्चाम्रवापी नरकं न याति ॥”
इति वराहपुराम् ॥
अपि च ।
“अश्वत्थ एकः पिचुमर्द्द एको
द्वौ चम्पकौ त्रीणि च केशराणि ।
सप्ताथ ताला नव नारिकेलाः
विशेषः । बहुवचनान्तोऽयम् । इति मेदिनी
॥

**पञ्चालिका**, स्त्री, (पञ्चभिर्वर्णैरलति इति । आ +

अल् भूषणे + अच् । टाप् स्वार्थे कन् इत्वञ्च
।)
पुत्तली । इत्यमरटीकायां भरतः ॥

**पञ्चाली**, स्त्री, (पञ्चभिर्वर्णैरलति । आ + अल् भूषणे

+ अच् । गौरादित्वात् ङीष् ।) वस्त्रादिकृत-
पुत्रिका । कानिर पुतुल इति भाषा ॥ गीत-
विशेषः । इति मेदिनी ॥ पाँचाली इति भाषा
॥
(पञ्चारी रस्य लत्वे सिद्धम् ।) शारिशृङ्खला ।
इति त्रिकाण्डशेषः ॥ छक् इति भाषा ॥

**पञ्चावटं**, क्ली, (पञ्च विस्तृतमुरःस्थलं आवटति

वेष्टते इति । आ + वट् + अच् ।) उरस्कटम्
।
बालोपवीतम् । इति हारावली ॥ (पञ्चानां
वटानां वटादिवृक्षाणां समाहारः । निपा-
तनात् साधुः । पञ्चवटी । यथा, गोः रामा-
यणे । ३ । २० । ३८ ।
“विवेश पञ्चावटमुग्रसेवितम्
रिपून् दिधक्षुः शलभानिवाज्यभुक् ॥”)

**पञ्चावस्थः**, पुं, (पञ्चसु भूतेषु अवस्था यस्य । तस्य

देहारम्भकस्वस्वकारणेषु लयत्वात्तथात्वम्
॥
शवः । इति त्रिकाण्डशेषः ॥ पञ्चावस्थायुक्ते
त्रि ॥

**पञ्चाशत्**, त्रि, (पञ्चदशतः परिमाणमस्य ।)

“पङ्क्तिविंशतित्रिंशदिति ।” ५ । १ । ५९ ।
निपा ।
तनात् साधुः ।) संख्याविशेषः । इति
ज्योतिषम् ॥
पञ्चाश इति भाषा ॥ (यथा, स्तुतिपञ्चाशति
। ५१ ।

| | | |
|---|---|---|
| अन्या तु योगसिद्ध्यर्थे निर्गुण्डी चामरा लता ॥<br>अन्या तु कालतुलसी श्रीविष्णोः प्रियतोषिणी ।<br>एताः पञ्चामरा ज्ञेया योगसाधनकर्म्मणि ॥"<br>इति रुद्रयामलोत्तरखण्डे ३ ६ पटलः ॥<br>**पञ्चामृतं**, क्ली, (पञ्चानाममृतानां समाहारः ।<br>शर्करादुग्धघृतदधिमधुघटितम्।<br>यथा, --<br>"दुग्धं सशर्करञ्चैव घृतं दधि तथा मधु ।<br>पञ्चामृतामदं प्रोक्तं विधेयं सर्व्वकर्म्मसु ॥" | | |

"पञ्चाशल्लिपिभिः पुरा भगवति ! स्तव्या यदङ्गी-
कृतं तत्राहं सफलोऽद्युनापि विमतिस्तत्पादपद्म-
स्मृतेः ॥")

**पञ्चास्यः**, पुं, (पञ्चं विस्तृतं आस्यं यस्य ।) सिंहः ।
इत्यमरः । २ । ५ । १० ॥ (पञ्चानि आस्यानि
यस्य । शिवः ॥ पञ्चमुखविशिष्टे, त्रि । यथा,
गोः रामायणे । ५ । ७४ । २३ ।
"लक्षितेयं विशालाक्षी मया शोकपरायणा ।
आदायेतां न जानीषे पञ्चास्यामिव भोगि-
नीम् ॥")

**पञ्चीकरणं**, क्ली, पञ्चभूतानां भागविशेषेण मिश्री-
करणम् । यथा । "पञ्चीकरणन्तु आकाशादि-
पञ्चस्वेकैकं द्विधा समं विभज्य तेषु दशसु
भागेषु मध्ये प्राथमिकान् पञ्चभागान् प्रत्येकं
चतुर्द्धा समं विभज्य तेषां चतुर्णां भागानां
स्वस्वद्वितीयार्द्धभागं परित्यज्य भागान्तरेषु
संयोजनम् । तदुक्तम् ।
द्विधा विधाय चैकैकं चतुर्द्धा प्रथमं पुनः ।
स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते ॥ इति ॥
अस्याप्रामाण्यं नाशङ्कनीयं त्रिवृत्करणश्रुतेः
पञ्चीकरणस्याप्युपलक्षणार्थत्वात् । पञ्चानां पञ्चा-
त्मकत्वे समानेऽपि तेषु च वैशिष्ट्याच्च तद्वादस्त-
द्वाद इति न्यायेन आकाशादिव्यपदेशः सम्भवति ।
तदानीमाकाशे शब्दोऽभिव्यज्यते । वायौ शब्द-
स्पर्शौ । अग्नौ शब्दस्पर्शरूपाणि । अप्सु शब्द-
स्पर्शरूपरसाः । पृथिव्यां शब्दस्पर्शरूपरस-
गन्धाश्च । एतेभ्यः पञ्चीकृतेभ्यो भूतेभ्यः
भूर्भुवः स्वर्म्महर्जनस्तपः सत्यमित्येतन्नामकानामु-
पर्य्युपरि विद्यमानानां अतलवितलसुतलरसा-
तलतलातलमहातलपातालनामकानांअधोऽधो
विद्यमानानां लोकानां ब्रह्माण्डस्य तदन्तर्गत-
चतुर्व्विधस्थूलशरीराणामन्नपानादीनाञ्चोत्पत्ति
र्भवति ॥" इति वेदान्तसारः । ३९-४२ ॥

**पञ्चेन्द्रियं**, क्ली, पञ्चानां ज्ञानेन्द्रियाणां समाहारः ।
यथा । "श्रोत्रत्वङ्नेत्ररसनघ्राणं पञ्चेन्द्रियाणि
च ।" इति शब्दचन्द्रिका ॥ पञ्चकर्म्मेन्द्रियञ्च ॥

**पञ्चेषुः**, पुं, (पञ्च इषवो यस्य ।) कामदेवः । इति
पञ्ज्यते रुध्यते पक्ष्यादिरत्र ।)
पक्ष्यादिबन्धगृहम् ।
इत्यमरभरतौ । पिँज्रा इति भाषा ।
तत्-
पर्य्यायः । शालारम् २ । इति
जटाधरः ॥ (यथा,
हेः रामायणे । २ । ६५ । ५ ।
"तेन शब्देन विहगाः प्रतिबुद्धाश्च
सस्वनुः ।
शाखास्थाः पञ्जरस्थाश्च ये
राजकुलगोचराः ॥")

**पञ्जरः**, पुं, (पञ्ज्यते रुध्यते आत्मा यस्मिन् ।
पजि-
रोधे + अरन् ।) शरीरम् । इति
त्रिकाण्ड-
शेषः ॥ (यथा, हठयोगदीपिकायाम् ।
४ । १८ ।
"द्वासप्ततिसहस्राणि नाडीद्वाराणि
पञ्जरे ।
सुषुम्ना शाम्भवी शक्तिः शेषास्त्वेव
निरर्थकाः ॥"
"पञ्जरे पञ्जरवच्छिरास्थिभिर्बद्धे शरीरे
।" इति
तट्टीका ॥) देहास्थिसमूहः ।
तत्पर्य्यायः ।
कङ्कालः २ देहबन्धास्थि ३ । इति
जटाधरः ॥
कलियुगम् । गवां नीराजनाविधिः ।
इति सार-
स्वताभिधानम् ॥

**पञ्जराखेटः**, पुं, (पञ्जरेणेव यन्त्रेण आखेटो
मृगया
यस्मात् ।) मत्स्यमारणोपाययन्त्रम् ।
पोलो
इति भाषा । तत्पर्य्यायः । प्लवः २
पलवः ३ ।
इति त्रिकाण्डशेषः ॥

**पञ्जलः**, पुं, (पञ्ज + अलच् ।) कोलकन्दः । इति
राजनिर्घण्टः ॥

सरस्वतीं तां कुलदेवताञ्च ।
शिशुप्रबोधाय कुलस्य पञ्जी
विविच्यते श्रीयुतमिश्रकेण ॥"

**पञ्जीकरः**, पुं, (पञ्जीं पञ्जिकां करोतीति । कृ +
टः ।) कायस्थः । यथा । "कायस्थे
कूटकृत्-
पञ्जीकरौ ।" इति त्रिकाण्डशेषः ॥

**पट**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) पटति । इति दुर्गादासः
॥

**पट**, क त्विषि । इति कविकल्पद्रुमः ॥ (चुरां-
परं-
अकं-सेट् ।) क, पाटयति । त्विषि
दीप्तौ ।
इति दुर्गादासः ॥

**पट**, त् कवेष्टने । इति कविकल्पद्रुमः ॥
(अदन्त-
चुरां-परं-सकं-सेट् ।) ग्रन्थने ।
इत्यन्ये । पट-
यति मालां मालिकः । इति
दुर्गादासः ॥

**पटं**, क्ली, (पटतीति । पट् + पचाद्यच् ।)
छदिः ।
चालम् । इति पटलशब्दटीकायां
भरतः ॥

**पटः**, पुं, क्ली, (पटयत्यनेन । पट वेष्टने
घञर्थे कः ।)
शोभनवस्त्रम् । तत्पर्य्यायः ।
सुचेलकः २ ।
इत्यमरः । २ । ६ । ११६ ॥ (यथा,
पञ्चदशी । ६ । २ ।
"यथा धौतो घट्टितश्च लाञ्छितो
रञ्जितः पटः ।
चिदन्तर्यामिसूत्राणि विराट् चात्मा
तथर्य्यते ॥")
चित्रपटः । इति मेदिनी ॥ तस्य
लक्षणं यथा, --

हलायुधः ॥

**पञ्चोपविषं**, क्ली, (पञ्चसंख्यकं उपविषम् ।) उप-

विषपञ्चकम् । यथा, राजनिर्घण्टे ।
“स्नुह्यर्कककरवीराणि लाङ्गली विषमुष्टिका ।
एतान्युपविषाण्याहुः पञ्च पाण्डित्यशालिनः ॥”

**पञ्चोष्माणः**, पुं, (पञ्च उष्माणः ।) आहारपाचक-

शरीरस्थपञ्चाग्नयः । यथा, सारकौमुद्याम ।
“भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः ।
पञ्चाहारगुणान्स्वान्स्वान्पार्थिवादीन् पचन्त्यनु ।
पार्थिवाः पार्थिवानेव शेषाः शेषांशदेहगान् ॥”

**पञ्जरं**, क्ली, (पञ्ज्यते रुध्यते उदरयन्त्रमनेन । पजि-

रोधे + अरन् ।) कायास्थिवृन्दम् । शरीरास्थि-
पञ्जरम् । (यथा, पञ्चदशी । ६ । १७३ ।
“देहादिपञ्जरं यन्त्रं तदारोहोऽभिमानिता ।
विहितप्रतिषिद्धेषु प्रवृत्तिर्भ्रमणं भवेत् ॥”

**पञ्जिः**, स्त्री, (पञ्ज + इन् ।) सूत्रनालिका । इति

शब्दमाला । पाँइज इति भाषा ।
पञ्जिका च ॥

**पञ्जिका**, स्त्री, (पञ्जि + स्वार्थे कन् टाप् ।) तूलना-

लिका । इति हारावली ॥ पाँइज इति
भाषा ॥
टीकाविशेषः । यथाह हेमचन्द्रः ।
“टीका निरन्तरव्याख्या पञ्जिका
पदभञ्जिका ॥”
अग्रसन्धानी । इति त्रिकाण्डशेषः ॥
पञ्चाङ्गम् ।
पाँजि इति भाषा । तत्श्रवणफलं यथा,
--
“वारो हरति दुःस्वप्नं नक्षत्रं
पापनाशनम् ।
तिथिर्भवति गङ्गाया योगः
सागरसङ्गमः ।
करणं सर्व्वतीर्थानि श्रूयते दिनपञ्जिका
॥”
इति दैवज्ञाः ॥
अपि च ज्योतिस्तत्त्वे वराहवचनम् ।
“दुःस्वप्ननाशको वारो नक्षत्रं
पापनाशनम् ।
तिथिरायुष्करी प्रोक्ता योगो
बुद्धिविवर्द्धकः ॥
चन्द्रः करोति सौभाग्यमंशकः
शुभदायकः ।
करणाल्लभते लक्ष्मीं यः शृणोति दिने
दिने ॥”
निःशेषपदव्याख्यात्री ।
तिथिवारादिज्ञापिका ।
आयव्ययलिखनार्थाच ।
इत्यमरटीकायां भरतः ॥

**पञ्जिकारकः**, पुं, (पञ्जिं करोतीति । कृ + ण्वुल् ।)

कायस्थजातिः । यथाह जटाधरः ।
“अथ कायस्थः करणः पञ्जिकारकः
॥”
(अस्य पञ्जिकरणकथा कायस्थशब्दे
द्रष्टव्यम् ॥)

“पटस्य लक्षणं वक्ष्ये यथा
सिध्यन्ति साधकाः ।
ग्रन्थिकेशविहीने तु अजीर्णे
समतन्तुके ॥
अस्फाटिते अच्छिद्रे तु स्थलेनैव
समालिखेत् ।
योगिनी रूपिणी कार्य्या जयाद्यैः
परिवारिता ॥
वृद्धेन च भवेद्वृद्धो व्याधिते व्याधितो
भवेत् ।
कुरूपेण कुरूपस्तु मूर्खेण तु न
पूज्यते ॥
लेखकस्य तु यद्रूपं चित्रे भवति
तादृशम् ॥”
इति देवीपुराणम् ॥

**पटः**, पुं, पियालवृक्षः । इति मेदिनी ॥ पुरस्कृतः ।

इति विश्वः ॥

**पटकः**, पुं, (पटेन छदनेन कायति प्रकाशते इति ।

कै + कः ।) शिविरम् । इति
शब्दमाला ॥

**पटकारः**, पुं, (पटं शोभनवस्त्रं चित्रं वा करोति

यः । पट् + कृ + अण् ।) तन्त्रवायः
। चित्रकरः ॥

**पटकुटी**, स्त्री, (पटस्य पटनिर्म्मिता वा कुटी ।)

वस्त्रवेश्म । ताँवु इति भाषा ।
ततपर्य्यायः ।
केणिका २ गुणालयनिका ३ । इति
हेमचन्द्रः ॥

**पटच्चरं**, क्ली, (भूतपूर्ब्बं पटत् । भूतपूर्ब्बे चरट ।

यद्वा पटदित्यव्यक्तं शब्दं चरतीति ।
पटत् + चर
+ अच् ।) जीर्णबस्त्रम् । इत्यमरः ।
२ । ६ । ११५ ॥
(पट्यते आवेष्ट्यते इति । पट् +
बाहुलकात्

पञ्जिकाकारश्च ॥

**पञ्जी**, स्त्री, (पञ्जि + वा ङीप् ।) पञ्जिः । नालिका ।

इति शब्दमाला ॥ पञ्जिका । पाँजि इति
भाषा । यथोक्तं दैवज्ञैः ।
"दैवज्ञवक्त्रेण शृणोति पञ्जीं
शत्रुक्षयं याति शशीव कृष्णे ॥"
ग्रन्थविशेषः । यथाह ध्रुवानन्दमिश्रः ।
"प्रणम्य विघ्नेश्वरपादमादौ

अत् । पटदिव चरति यः । चर् +
अच् ।)
चौरे पुं इत्यमरटीकायां रमानाथः ॥

**पटमण्डपः**, पुं, (पटानां वस्त्राणां मण्डपः ।) पट-

कुटी । इति शब्दचन्द्रिका ॥

**पटमयं**, क्ली, (पट + मयट् ।) वस्त्रगृहम् । यथा, --

"पटवापः पटमयं दूष्यं वस्त्रगृहं
स्थलम् ॥"
इति त्रिकाण्डशेषः ॥
शाटी । यथा, शब्दरत्नावल्याम् ।
"पटवासः पटमयं शाटी शाटक
इत्यपि ॥"

**पटरकः**, पुं, (पटर + स्वार्थे कन् ।) गुन्द्रवृक्षः ।
इति राजनिर्घण्टः ॥

**पटलं**, क्ली, (पटं विस्तृतं लाति । पट् + ला +
"आतोनुपेति" । ३ । २ । ३ । कः । यद्वा पटतीति ।
पट + "कृषादिभ्यश्चित् ।" उणां । १ । १०८ । इति
कलच् ।) छदिः । चाल इति भाषा । नेत्ररोगः ।
इत्यमरः । ३ । ३ । २०० ॥ पिटकः । परिच्छदः ।
तिलकः । (यथा, कलाविलासे । १ । २५ ।
"अस्तमिते दिवसकरे तिमिरभरद्विरदसंसक्ता ।
सिन्दूरपटलपाटलकान्तिरिवाग्रेबभौ सन्ध्या ॥")
समूहे क्ली स्त्री । इति मेदिनी ॥ (यथा, भाग-
वते । ३ । १४ । २६ ।
"यस्यानवद्याचरितं मनीषिणो
गृणन्त्यविद्यापटलं बिभित्सवः ।
निरस्तसाम्यातिशयोऽपियत् स्वयं
पिशाचचर्य्यामचरत् गतिः सताम् ॥")
दृष्टेरावरकम् । चक्षुर परदा इति भाषा ।
यथाह माधवकरः ।
"प्रथमे पटले दोषो यस्य दृष्ट्या व्यवस्थितः ।
अव्यक्तानि सरूपाणि कदाचिदथ पश्यति ॥"
दृष्ट्यां चत्वारि पटलानि । रसरक्ताश्रयं वाह्यं
द्वितीयं माससंश्रयं तृतीयं मेदःसंश्रितं चतुर्थं
कालकास्थिसंश्रितम् । तथा च सुश्रुतः ।
"तेजोजलाश्रितं वाह्यं तेष्वन्यत् पिशिताश्रितम् ।

**पटहः**, पुं, (पट इत्यष्फुटं शब्दं जहाति त्यज-
तीति । पट + हा + ड ।) पाटयति गमयति
योधान् युद्धाय उत्साहवर्द्धकत्वात् पट गतौ
नाम्नीति अहः । इति भरतः ॥ युद्धे वाद्यमान-
ढक्का । तत्पर्य्यायः । आडम्बरः २ । इत्यमरः ।
२ । ८ । १०८ ॥ समारम्भः । हिंसनम् । इति
शब्दरत्नावली ॥

**पटाकः**, पुं, (पटति गच्छतीति । पट् + निपातनात्
आकः ।) पक्षिविशेषः । इत्युणादिकोषः ॥

**पटाका**, स्त्री, (पटाक + टाप् ।) पताका । इति
शब्दरत्नावली ॥

**पटालुका**, स्त्री, (पट इव अलतीति । पट् + बाहु-
लकात् उकः ततष्टाप् ।) जलौका । इति
त्रिकाण्डशेषः ॥

**पटिः**, स्त्री, (पट + इन् ।) पटभेदः । वागुलिः ।
कुम्भिकाद्रुमः । इति मेदिनी ॥

**पटिका**, स्त्री, (पटि + स्वार्थे कन् ततः टाप् ।) पटिः ।
वस्त्रम् । यथा, लीलावती ।
"विस्तारे त्रिकराः कराष्टकमिता दैर्घ्ये विचित्राश्चचे-
द्रूपैरुत्कटपट्टसूत्रपटिका अष्टौ लभन्ते शतम् ।
दैर्घ्ये सार्द्धकरत्रया परपटी हस्तार्द्धविस्तारिणी
तादृक्किं लभतेद्रुतं वद वणिक् वाणिज्यकंवेत्सि
पटुरपि प्रियकण्ठजिघृक्षया ।
अनयदासनरज्जुपरिग्रहे
भुजलतां जडतामबलाजनः ॥")
नीरोगः । चतुरः । इति मेदिनी ॥ (मधुरः ।
यथा, रघुः । ९ । ७३ ।
"कुम्भपूरणभवः पटुरुच्चै-
रुच्चचार निनदोऽम्भसि तस्याः ॥")
तीक्ष्णः । स्फुटः । इति हेमचन्द्रः ॥ निष्ठुरः ।
इति जटाधरः ॥ धूर्त्तः । इति त्रिकाण्डशेषः ॥

**पटुकः**, पुं, (पटु + स्वार्थे कन् ।) पटोलः । इति
शब्दरत्नावली ॥

**पटुकल्पः**, त्रि, ईषदूनः पटुः । (पटु + कल्पप् ।)
इति व्याकरणम् ॥

**पटुजातीयः**, त्रि, पटुप्रकारः । (पटु + जातीयर् ।)
इति व्याकरणम् ॥

**पटुतृणकं**, क्ली, (पटु लवणं तत्प्रचुरं तृणम् । ततः
कन् ।) लवणतृणम् । इति राजनिर्घण्टः ॥

**पटुपत्रिका**, स्त्री, (पटु पत्रमस्याः कप् । टापि अत
इत्वम् ।) क्षुद्रचञ्चुक्षुपः । इति राजनिर्घण्टः ॥

**पटुपर्णिका**, स्त्री, (पटु पर्णमस्याः । कप् टाप
अत इत्वञ्च ।) क्षीरिणीवृक्षः । इति राज-
निघण्टः ॥

**पटुपर्णी**, स्त्री, (पटुपर्ण + "पाककर्णपर्णपुष्प-
फलेति ।" ४ । १ । ६४ । इति ङीष् ।) स्वर्णक्षीरी ।
इत्यमरः । २ । ४ । १३८ ॥

**पटरूपः**, त्रि, (प्रशस्तः पटुः । पटु + रूपप् ।) अति-
शयपटुः । इति व्याकरणम् ॥

**पटोटजं**, क्ली, (पटस्य छदिसः उटे तृणादौ जायते
यत् । "सप्तम्यां जनेर्डः ।" ३ । २ । ९७ । इति डः ।)
छत्राकः । इति शब्दरत्नावली ॥

**पटोलं**, क्ली, (पट गतौ + "कपिगडिगण्डीति ।"

मेदस्तृतीयं पटलमाश्रितं त्वस्थि चापरम् ।
पञ्चमाशसमं दृष्टेस्तेषां बाहुल्यमिष्यते ॥”
इति । अत्र तेजःशब्देन रक्तं जलशब्देन रसो
व्याख्यातः । तेषु पटलेषु वाह्यादिभेदेनाधिष्ठान-
विशषप्रभावात् दोषाणां लिङ्गविशेषमाह प्रथमे
पटले इत्यादि । प्रथमे पटले सर्व्वाभ्यन्तरे न तु
वाह्ये । इति विजयरक्षितः ॥

**पटलः**, पुं, स्त्री, (पाटयति दीप्यते यः । पट् +
कलच् ।) ग्रन्थः । वृक्षः । इति शब्दरत्ना-
वली ॥ वृक्षस्थाने वृन्तोऽपि पाठः ॥

**पटलप्रान्तं**, क्ली, (पटलस्य छदिसः प्रान्तम् ।) गृह-
चालिकान्तभागः । छाँचि इति भाषा । तत्-
पर्य्यायः । वलीकम् २ नीव्रम् ३ । इत्यमरः । २ ।
२ । १४ ॥

**पटली**, स्त्री, (पटल + ङीष् ।) छदिः । इति भरत-
हेमचन्द्रौ ॥ चाल इति भाषा ॥

**पटवापः**, पुं, (पट उप्यते प्राचुर्य्येण दीयते यत्र । पट
+ वप् + घञ् ।) वस्त्रगृहम् । इति त्रिकाण्डशेषः ॥

**पटवासः**, पुं, (पटस्य पटनिर्म्मितो वा वासः गृहम् ।)
वस्त्रगृहम् । शाटी । इति शब्दरत्नावली ॥

**पटवासकः**, पुं, पटो वास्यतेऽनेनेति घञि पटवासः
ततः स्वार्थे कन् । पटवासचूर्णम् । तत्पर्य्यायः ।
चेत् ॥”

**पटिष्ठः**, त्रि, (अयमेषामतिशयेन पटुः । पट +
“अतिशायने तमबिष्ठनौ ।” ५ । ३ । ५५ । इति
इष्ठन् ।) अतिशयपटुः । इति व्याकरणम् ॥

**पटी**, स्त्री, (पट + इन् । वा ङीप् ।) वस्त्रभेदः ।
इति शब्दरत्नावली । यवनिका । इति त्रिकाण्ड-
शेषः ॥

**पटीयान्**, [स्] त्रि, (अयमेषामतिशयेन पटुः । पटु
+ “द्विवचनविभज्योपपदे तरबियसुनौ ।” ५ । ३ ।
५७ । इति इयसुन् ।) अतिशयपटुः । इति
व्याकरणम् ॥

**पटीरं**, क्ली, (पटतीति । पट गतौ । “शॄ पॄकटि-
पटिशौटिभ्य ईरन् ।” उणां । ४ । ३० । इति
ईरन् ।) तितौः । तुङ्गम् । मूलकम् । केदारः ।
वारिदः । वेणुसारः । वातिकः । चन्दनम् । इति
शब्दरत्नावली ॥ खदिरम् । उदरम् । कन्दर्पः ।
हरणीयम् । इति संक्षिप्तसारोणादिवृत्तिः ॥

**पटु**, क्ली, (पाटयति । पट गतौ ण्यन्तः । “फलिपा-
टीति ।” उणां । १ । १९ । इति उः पटादेशश्च ।)
छत्रा । लवणम् । इति मेदिनी ॥ पांशुलवणम् ।
इति रत्नमाला ॥

**पटुः**, पुं, (पाटयतीति । पट् + णिच् + “फलि-
उणां । १ । ६७ । इति ओलच् ।) वस्त्रभेदः । इति
मेदिनी ॥ तत्तु गुज्जरदेशीयविचित्रपट्टवस्त्रम् ॥

**पटोलः**, पुं, (पटति बहुगुणान् प्राप्नोतीति । पट-
गतौ + “कपिगडिगण्डीति ।” उणां १ । ६७ ।
इति ओलच् ।) स्वनामप्रसिद्धलतिकाफलम् ।
पलवल् इति हिन्दी भाषा ॥ (यथा, पञ्चतन्त्रे
१ । ४०९ ।
“साम्नैव यत्र सिद्धिर्न तत्र दण्डो बुधेन विनियोज्यः ।
पित्तं यदि शर्करया शाम्यति कोऽथः पटोलेन ॥”)
तत्पर्य्यायः । कुलकम् २ तिक्तकः ३ पटुः ४ ।
इत्यमरः । २ । ४ । १५५ ॥ कर्कशदलः ५ कुलजः ६
वाजिमान् ७ लताफलः ८ राजफलः ९ वर-
तिक्तः १० अमृताफलः ११ । इति रत्नमाला ॥
कटुफलः १२ कटुकः १३ कर्कशच्छदः १४ राज-
नामा १५ अमृतफलः १६ पाण्डुः १७ पाण्डु-
फलः १८ बीजगर्भः १९ नागफलः २० कुष्ठारिः
२१ कासमर्द्दनः २२ पञ्जरः २३ आजीफलः २४
ज्योत्स्नी २५ कच्छुघ्नी २६ । अस्य गुणाः ।
कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । सारकत्वम् ।
पित्तवलाशकफकण्डूतिकुष्ठासृग्ज्वरदाहार्त्ति-
नाशित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।

पिष्टातः २ । पिष्टेन कुङ्कुमचूर्णादिना अततीति
पिष्टातः पचाद्यन् । इत्यमरभरतौ ॥

**पटहं**, क्ली, पुं, (पटेन हन्यते इति । पट + हन्

+ ड ।) पटत्शब्दं जहाति पटहः डः निपा-
तनात् तलोपः । इति भरतः ॥
आनकवाद्यम् ।
इत्यमरः । १ । ७ । ६ ॥

पाटीति ।” उणां । १ । १९ । इति उः पटा-
देशश्च ।) पटोलः । इत्यमरः । २ । ४ । १५५ ॥
पटोलपत्रम् । इति विश्वः ॥
काण्डीरलता ।
कारवेल्लः । चोरकः । इति राजनिर्घण्टः ॥

**पटुः**, त्रि, (पाटयतीति । पट गतौ । ण्यन्तः ।

“फलिपाटीति ।” उणां । १ । १९ । इति उः पटा-
देशश्च ।) दक्षः । (यथा, रघुः । ९ । ४६ ।
“अनुभवन् नवदोलमृतूत्सवं

पाचनत्वम् । हृद्यत्वम् । वृष्यत्वम् । लघुत्वम् ।
अग्निदीपनत्वम् । स्निग्धत्वम् ।
कासदोषत्रय-
क्रिमिनाशित्वञ्च । तस्य मूलादिगुणाः ।
"पटोलस्य भवेन्मूलं विरेचनकरं सुखात् ।
नालं श्लेष्महरं पत्रं पित्तहारि फलं पुनः ॥
दोषत्रयहरं प्रोक्तं तद्वत्तिक्ता पटोलिका ॥"
इति भावप्रकाशः ॥
अपि च राजवल्लभः ।
"पटोलं कफपित्तासृग्ज्वरकुष्ठव्रणापहम् ।
विसर्पनयनव्याधित्रिदोषगरनाशिनौ।
पटोलफलकञ्चेति किञ्चिद्गुणान्तरावुभौ ॥"

**पटोलकः**, पुं, (पटोल इव कायति प्रकाशते इति कै + कः ।) शुक्तिः । इति शब्दमाला ॥

**पटोलिका**, स्त्री, (पटोल + कन् + टाप् + अत इत्वञ्च ।) फलविशेषः । झिङ्गा इति भाषा । पोरलि इति ख्याता । इति केचित् । इति भरतः ॥ तत्पर्य्यायः । ज्योत्स्नी २ जाली ३ ।
इत्यमरः । २ । ४ । ११८ ॥ ज्योत्स्ना ४ । इति
स्वामी ॥

**पटोली**, स्त्री, (पटोल + जातित्वात् ङीष् ।) ज्योत्स्नी । इति मेदिनी ॥ (झिङ्गा इति भाषा ॥ यथा, गारुडे १९८ अध्याये ।
"पटोलीमुस्तकाभ्याञ्च वासकेन च नाशयेत् ॥")

**पट्टं**, क्ली, (पट् गतौ + क्तः । नैट् ।) नगरम् । इति शब्दरत्नावली ॥

**पट्टः**, पुं, (पट् + क्तः । नेट् ।) पेषणपाषाणः । शिल् इति भाषा ॥ (यथा, रघुः । १८ । १७ ।
"तस्याभवत् सूनुरुदारशीलः
शिलः शिलापट्टविशालवक्षाः ॥")
व्रणादीनां बन्धनम् । पटी इति भाषा ॥ चतु-
द्वे च प्रसादपट्टः पञ्च ते कीर्त्तिताः पट्टाः ॥
सर्व्वे द्विगुणायामा मध्यादर्द्धेन
पार्श्वविस्तीर्णाः ।
सर्व्वे च शुद्धकाञ्चनविनिर्म्मिताः
श्रेयसो वृद्ध्यै ॥
पञ्चशिखो भूमिपतेस्त्रिशिखो
युवराजपार्थिव-
महिष्योः ।
एकशिखः सैन्यपतेः प्रसादपट्टो विना
शिखया ॥
क्रियमाणं यदि पत्रं सुखेन
विस्तारमेति पट्टस्य ।
वृद्धिजयौ भूमिपतेस्तथा प्रजानाञ्च
सुखसम्पत् ॥
जीवितराज्यविनाशं करोति मध्ये
व्रणः
समुत्पन्नः ।
मध्येस्फुटितस्त्याज्यो विघ्नकरः
पार्श्वयोः स्फुटितः ॥
अशुभनिमित्तोत्पत्तौ शास्त्रज्ञः
शान्तिमादिशे-
द्राज्ञः ।
शस्तनिमित्तः पट्टो नृपराष्ट्रविवृद्धये
भवति ॥")

**पट्टकः**, पुं, पट्ट एव इत्यर्थे स्वार्थे कन् । पट्टः ॥

**पट्टजं**, क्ली, (पट्टात् कौषेयात् जायते इति । पट्ट + जन् + ड ।) वस्त्रभेदः । पट्टवस्त्रम् । इति
जटाधरः ॥ (यथा, महाभारते । २ । ५० । २३ ।
"और्ण्णञ्च राङ्कवञ्चैव पट्टजं
कीटजन्तथा ।
कुटीकृतं तथैवान्यत् कमलाभं
सहस्रशः ॥")

**पट्टदेवी**, स्त्री, (पट्टा सिंहासनार्हा देवी ।) महादेवी ।

**पट्टिकालोध्रः**, पुं, (पट्टिका एव लोध्रः ।) रक्त-लोध्रः । पाटिया लोध इति भाषा ।
तत्पर्य्यायः ।
क्रमुकः २ वल्कलोध्रः ३ बृहद्दलः ४
जीर्णवुध्नः ५
बृहद्वल्कः ६ शीर्णपत्रः ७ अक्षिभेषजः ८
शावरः
९ श्वेतलोध्रः १० गालवः ११ बृहत्त्वचः १२
पट्टी १३ लाक्षाप्रसादः १४ वल्कः १५ ।
इति
राजनिर्घण्टः ॥ स्थूलवल्कलः १६ जीर्णपत्रः
१७
बृहत्पत्रः १८ । इति भावप्रकाशः ॥ लोध्रद्वय-
गुणाः । कषायत्वम् । शीतत्वम् ।
वातकफास्र-
विषनाशित्वम् । चक्षुष्यत्वम् । तत्र
वल्कलोध्रको-
विशिष्टः । इति राजनिर्घण्टः ॥ ग्राहित्वम् ।
लघुत्वम् ।
पित्तरक्तपित्तातीसारशोथनाशित्वञ्च।
इति भावप्रकाशः ॥

**पट्टिलः**, पुं, (पट्टो विद्यतेऽस्य । पट्ट + अस्त्यर्थे इलच् ।) पूतिकरजः । इति जटाधरः ॥

**पट्टिलोध्रः**, पुं, (पट्टिरेव लोध्रः ।) पट्टिकालोध्रः । इति शब्दरत्नावली ॥

**पट्टिलोध्रकः**, पुं, (पट्टिलोध्र + स्वार्थे कन् ।) पट्टिका-लोध्रः । इति शब्दरत्नावली ॥

**पट्टिशः**, पुं, (पट् गतौ + बाहुलकात् टिश(स) च् ।) अस्त्रविशेषः । यथा, --

**पट्टिसः** पुं, (पट् गौतौ + बाहुलकात् टिश(स) च् ।) अस्त्रविशेषः । यथा, --
"परशुः पट्टिसो नाम स एव च परश्वधः ॥"
इत्यमरटीकायां भरतः ॥
(यथा, भागवते । ८ । १० । ३६ ।
"भुशुण्डिभिश्चक्रगदार्ष्टिपट्टिशैः
शक्त्युल्मुकैः प्रासपरश्वधैरपि ।

ष्पथः । चौमाता रास्ता इति भाषा ॥
राजादि-
शासनान्तरम् । पाट्टा इति भाषा ॥ (यथा, मार्कण्डेये । ३६ । ८ ।
"तदास्मात् पुत्त्र ! निष्कृष्य मद्दत्तादङ्गुलीयकात् ।
वाच्यन्ते शासनं पट्टे सूक्ष्माक्षरनिवेशितम् ॥")
पीठः । इति मेदिनी ॥ पिडि इति भाषा ॥
फलकः । इति त्रिकाण्डशेषः ॥ ढाल इति भाषा ॥ उष्णीषादिः । इति स्वामी ॥ पाग् इत्यादि भाषा ॥ उत्तरीयादिः । इति सुभूतिः ॥
एक पाट्टा इति भाषा ॥ (यथा, भट्टिः । १० । ६० ।
"गलितमिव भुवो विलोक्य रामं धरणिधरस्तनशुक्लपट्टचीनम् ॥")
कौषेयः । इति मुकुटः ॥ पाट् रेशम् इति च भाषा । लोहितकौषेयमुष्णीषादि । इति भरतः ॥ राङ्गा रेशमी पाग् इत्यादि भाषा ॥ (नृपादीनां किरीटविशेषस्वरूपपट्टलक्षणं बृहत्-
संहितायां ४९ अध्याये उक्तम् । तद्यथा, --
"विस्तरशो निर्द्दिष्टं पट्टानां लक्षणं यदाचार्य्यैः ।
तत् संक्षेपः क्रियते मयात्र सकलार्थसम्पन्नः ॥
पट्टः शुभदो राज्ञां मध्येऽष्टावङ्गुलानि विस्तीर्णः ।
सप्तनरेन्द्रमहिष्याः षड्युवराजस्य निर्द्दिष्टः ॥
चतुरङ्गलविस्तारः पट्टः सेनापतेर्भवति मध्ये ।
इति राजनिर्घण्टः ॥ पाटराणी इति भाषा ॥

**पट्टनं**, क्ली, (पटन्ति गच्छन्ति वणिजो यत्र । पट गतौ + बाहुलकात् तनन् ।) पत्तनम् । इति द्विरूप-
कोषः ॥

**पट्टनी**, स्त्री, (पट्टन + गौरादित्वात् ङीष् ।) पत्त-
नम् । इति द्विरूपकोषः ॥

**पट्टरङ्गं**, क्ली, (पट्टं वस्त्रं रज्यतेऽनेन । पट्ट + रञ्ज + घञ् ।) पत्तरङ्गम् । इति राजनिर्घण्टः ॥
वकम् इति भाषा ॥

**पट्टरञ्जनकं**, क्ली, (पट्टानां वस्त्राणां रञ्जनम् । ततः कन् ।) पत्तरङ्गम् । इति राजनिर्घण्टः ॥

**पट्टशाकं**, क्ली पुं, (पट्टस्य पट्टवृक्षस्य शाकम् ।) नालिताशाकम् । इति शब्दमाला भावप्रकाशश्च ॥
अस्य गुणाः नाडीचशब्दे द्रष्टव्याः ॥

**पट्टार्हा**, स्त्री, (पट्टे नृपासने अर्हा योग्या ।) महादेवी । इति राजनिर्घण्टः ॥ पाटराणी
इति भाषा ॥

**पट्टिका**, स्त्री, (पट्टिरिव कायति प्रकाशते इति । पट्टि + कै + कः । स्त्रियां टाप् ।) पट्टिकाख्य-
लोध्रः । इत्यमरटीकायां वाचस्पतिः ॥ (क्षुद्रः
पट्टः । ह्रस्वार्थे कन् । स्त्रियां टाप् इत्वञ्च ।
वितस्तिविस्तारं वस्त्रम् । इति चिन्तामणिः ॥
पट्टः । पाटा इति भाषा । यथा, नैषधे । १९ । ६१ ।
निस्त्रिंशभल्लैः परिघैः समुद्गरैः
सभिन्दिपालैश्च शिरांसि चिच्छिदुः ॥")

**पट्टी**, स्त्री, (पट्टि + वा ङीप् ।) पट्टिकालोध्रः । इति राजनिर्घण्टः ॥ ललाटभूषा । इति विश्वः ॥
तलसारकम् । अश्ववक्षःस्थलबन्धनरज्जुः । इति
शब्दमाला ॥

**पट्टी**, [न्] पुं, (पट्टोऽस्यास्तीति । इनिः ।) रक्त-
लोध्रः । इति स्वामी ॥ इत्यमरटीकायां भरतः ॥

**पट्टोलिका**, स्त्री (पट्टं पट्टाख्यं उलति प्राप्नोतीति । उल गतौ + ण्वुल् टापि इत्वम् ।) कूप्रकीला । व्यवस्थापत्रं इति केचित् । पाट्टा । इति च केचित् ।
इति त्रिकाण्डशेषः ॥

**पठ**, वाचि । इति कविकल्पद्रुमः । (भ्वां-परं-सकं-
सेट् ।) पठति श्लोकं धीरः । इति दुर्गादासः ॥

**पठनं**, क्ली, (पठ् + भावे ल्युट् ।) वाचनम् । पडन् इति भाषा । यथा, मार्कण्डेये । ९२ । १८ ।
"भूतप्रेतपिशाचानां पठनादेव नाशनम् ॥"

**पठमञ्जरी**, स्त्री, श्रीरागस्य चतुर्थरागिणी । तस्या न्यासांशगृहाः पञ्चमः । गानसमयस्तु एकप्रहर-
दिवसोत्तरम् । इति सङ्गीतदर्पणः ॥ लक्षणं यथा,
सङ्गीतदामोदरे ।
"वियोगिनी कान्तवितीर्णपुष्पां
स्रजं वहन्ती वपुषातिमुग्धा ।
आश्वास्यमाना प्रियया च सख्या
विधूसराङ्गी पठमञ्जरीयम् ॥"

**पठसमञ्जरी**, स्त्री, रागिणीविशेषः । इति हलायुधः ॥

| | | |
|---|---|---|
| | “सर्व्वं विस्मृत्य दैवात् स्मृति-<br>मुषसि गतां घोषयन् यो धसंज्ञां<br>प्राक् संस्कारेण सम्प्रत्यपि धुवति<br>शिरः पट्टिकापाठनेन ॥”)<br><br>**पट्टिकाख्यः**, पुं, (पट्टिका आख्या यस्य ।) रक्त-<br><br>लोध्रः । पाटियालोध इति भाषा ।<br>तत्पर्य्यायः ।<br>क्रमुकः २ पट्टी ३ लाक्षाप्रसादनः ४<br>। इत्य-<br>मरः । २ । ४ । ४१ ॥ | |

**पठिः**, स्त्री, (पठ + “सर्व्वधातुभ्य इन् ।” उणां ।
४ । ११७ । इति इन् ।) पठनम् । पाठः ।
इति शब्दरत्नावली ॥

**पठितः**, त्रि, (पठ् + क्त ।) वाचितः । कृतपाठः ।
अधीतः । उच्चरितः । यथा, हास्यार्णवे ।
“मया न पठिता चण्डी त्वया नापि
चिकित्सितम् ।
अकस्मान्नगरोपान्ते कथं धूमायते चिता
॥”

**पठितव्यं**, त्रि, (पठ् + “तव्यत्तव्यानीयरः ।” ३ । १
।
९६ । इति तव्य ।) पठनीयम् । पाठ्यम् ।
यथा,
मार्कण्डेये देवीमाहात्म्ये । ९२ । ६ ।
“तस्मान्ममैतन्माहात्म्यं पठितव्यं
समाहितैः ॥”

**पड**, इ क् संहतौ । इति कविकल्पद्रुमः ॥ (चुरां-
परं-सकं-सेट् । इदित् ।) इ क्, पण्डयति ।
संहती राशीकरणम् । इति दुर्गादासः ॥

**पड**, इ ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-सकं-सेट् । इदित् ।) इ, पण्ड्यते ।
ङ,
पण्डते । इति दुर्गादासः ॥

**पण**, ङ व्यवहृतौ । स्तुतौ । इति कविकल्पद्रुमः ॥
(भ्वां-आत्मं-सकं-सेट् ।) व्यवहृतौ
व्यवहारे ।
ङ, पणते । पणायति पणायते
आयान्तत्वादुभय-
पदमिति वोपदेवः । प्राणानामपणिष्टासौ
अत्र
कर्म्मणि षष्ठी । स्तुतौ तु पणायति पणायते
विष्णुं धीरः । अरे तु द्वयोरर्थयोरेव
आयस्या-
प्राप्तिपक्ष आत्मनेपदमेव । अपणिष्ट पेणे
पणिता पणिषीष्ट पणिष्यते अपणिष्यत् ।
इति
प्रायेण ।” ३ । ३ । ११८ । इति घः ।
विष्णुः ।
यथा, महाभारते । १३ । १४९ । ११५ ।
“ऊर्द्ध्वगः सत्पथाचारः प्राणदः प्रणवः
पणः ॥”)

**पणग्रन्थिः**, पुं, (पणस्य विक्रयादेर्ग्रन्थिर्यत्र ।) हट्टः ।
इति शब्दरत्नावली ॥

**पणनं**, क्ली, (पण व्यवहारे + भावे ल्युट् ।) विक्रयः ।
इति शब्दरत्नावली ॥

**पणफरं**, क्ली, लग्नात् द्वितीयपञ्चमाष्टमैकादश-
लग्नाः । यथा, ज्योतिस्तत्त्वे ।
“पणफरं द्वितीयाष्टपञ्चमैकादशं विदुः ॥”

**पणवः**, पुं, (पणं स्तुतिं वातीति । पण + वा + कः ।)
गायनपटहः । (यथा, गीतायाम् । १ । १३ ।
“ततः शङ्खाश्च भेर्य्यश्च पणवानकगोमुखाः
।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत्
॥”)
प्रणव इति केचित् । इत्यमरभरतौ ॥

**पणवा**, स्त्री, (पणव + टाप् ।) पणवः । यथा, --
“पणवः पणवा च स्यात् प्रणवोऽप्यत्र वर्त्तते
॥”
इति भरतद्विरूपकोषः ॥

**पणसः**, पुं, (पणायते इति । पण + “अत्यविच-
मीति ।” उणां । ३ । ११७ । इति असच् ।)
पण्यद्रव्यम् । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**पणाङ्गना**, स्त्री, (पणेन धनेन लभ्या अङ्गना । धनेन
वश्यत्वात् तथात्वम् ।) वेश्या । इति
हेमचन्द्रः ॥

**पणाया**, स्त्री, (पणाय्यते व्यवह्रियते इति । पण
व्यवहारे स्तुतौ च + स्वार्थे आय + ततो
भावे
न्तात् डः ।” उणां । १ । ११३ । इति
डः ।)
क्लीवम् । नपुंसकम् । इत्यमरः । २ । ६
। ३९ ॥
निष्फले, त्रि, ॥

**पण्डा**, स्त्री, (पण ङ व्यवहारे । “ञमन्तात् डः ।”
उणां । १ । ११३ । इति डः । ततष्टाप्
।)
बुद्धिः । इति मेदिनी ॥ तत्त्वानुगा बुद्धिः ।
इति
हेमचन्द्रः ॥

**पण्डापूर्व्वं**, क्ली, (पण्डं निष्फलं अपूर्व्वं अदृष्टम् ।)
फलाजनकादृष्टम् । तद्विशिष्टे त्रि । यथा,
“यदपि पण्डापूर्ब्बं फलमिति तदपि न
कामना-
भावे अकरणापत्तेस्तौल्यात् ।” इति
सिद्धान्त-
मुक्तावली ॥

**पण्डितः**, पुं, (पण्डा वेदोज्ज्वला तत्त्वविषयिणी
वा बुद्धिः । सा जाता अस्य । “तदस्य
संजातं
तारकादिभ्य इतच् ।” ५ । २ । ३६ ।
इति इतच् ।
यद्वा, पण्ड्यते तत्त्वज्ञानं प्राप्यतेऽस्मात् ।
गत्यर्थेति
क्तः ।) शास्त्रज्ञः । अस्य लक्षणं यथा, --
(“निषेवते प्रशस्तानि निन्दितानि न
सेवते ।
अ-नास्तिकः श्रद्दधान एतत्
पण्डितलक्षणम् ॥”
इति चिन्तामणिः ॥)
“पठकाः पाठकाश्चैव ये चान्य
शास्त्रचिन्तकाः ।
सर्व्वे व्यसनिनो मूर्खा यः क्रियावान् स
पण्डितः ॥”
इति महाभारते वनपर्व्व ॥
अपि च श्रीभगवद्गीतायाम् । ५ । १७ ।

दुर्गादासः ॥

**पणः**, पुं, (पण्यतेऽनेन । पण व्यवहारे + “नित्यं पणः परिणामे ।” ३ । ३ । ६६ । इति अप् ।) कार्षिकताम्रिकः । स तु पञ्चकृष्णलमाषकारब्ध-ताम्रकर्षकृतव्यवहारद्रव्यम् । पूर्ब्बं हि ताम्र-रक्तिकायाः कपर्द्दक एको मूल्यमिति अशीति-वराटमूल्यः । लोके तूपचारात् कार्षापणवत् पणव्यपदेशो मूल्य एव । निर्व्वेशः । भृतिः । (पणो ग्लहोऽस्त्यस्मिन् । पण + “अर्श आदिभ्यो ऽच् ।” ५ । २ । १२७ । इत्यच् ।) द्यूतम् । ग्लहः । आड़् इति होड़् इति वाजि इति च भाषा । (यथा, आर्य्यासप्तशती । ३५४ । “प्रतिभूः शुको विपक्षे दण्डः शृङ्गारसंकथागुरुषु । पुरुषायितं पीणस्तद्बाले परिभाव्यतां दायः ॥” पण्यते व्यवह्रियते इति । “पुंसि संज्ञायां घः प्रायेण ।” ३ । ३ । ११८ । इति घः ।) मूल्यम् । धनम् । इत्यमरभरतौ ॥ कार्षापणः । (यथा, मनुः । ८ । २२४ । “यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति । तस्य कुर्य्यान्नृपो दण्डं स्वयं षण्णवतिं पणान् ॥”) क्रय्यशाकाष्टिका । व्यवहारः । इति मेदिनी ॥ विंशतिगण्डकः । इति हेमचन्द्रः ॥ शौण्डिकः । इति जटाधरः ॥ गृहम् । इति शब्दमाला ॥ (पणते अधिकारिभेदेन सुखभोगादिकं व्यव-अप् । ततष्टाप् ।) क्रयविक्रयव्यवहारः । इति जटाधरः ॥ (स्तुतिः । द्यूतम् । इति धात्वर्थ-लब्धोऽर्थः ॥)

**पणायितः**, त्रि, (पणाय्यते स्म इति । पण व्यव-हारे स्तुतौ च । “आयादय आर्धधातुके वा ।” ३ । १ । ३१ । इति स्वार्थे आयस्ततः क्तः ।) स्तुतः । इत्यमरः । ३ । २ । १०९ ॥ (व्यव-हृतम् । क्रीतम् । विक्रीतम् । इति धात्वर्थ-लब्धोऽर्थः ॥)

**पणास्थि**, क्ली, (पणस्य पणाय वा यदस्थि ।) कपर्द्द-कम् । वराटकः । इति त्रिकाण्डशेषः ॥

**पणास्थिकं**, क्ली, (पणास्थि + स्वार्थे कन् ।) वरा-टकः । इति हेमचन्द्रः ॥

**पणितं**, त्रि, (पण्यते स्म इति । पण + क्त । अया-भावपक्षे सिद्धम् ।) स्तुतम् । इत्यमरः । ३ । २ । १०९ ॥ व्यवहृतम् । इति पणधात्वर्थदर्शनात् ॥ (ग्लहे, क्ली । वाजि इति भाषा । यथा, महाभारते । १ । सौपर्णे । २२ । ४ । “ततस्ते पणितं कृत्वा भगिन्यौ द्विजसत्तम ! । जग्मतुः परया प्रीत्या परं पारं महोदधेः ॥”)

**पणितव्यं**, त्रि, (पण्यते इति । पण ङ व्यवहारे स्तुतौ च । “तव्यत्तव्यानीयरः ।” ३ । १ । ९६ । इति तव्य ।) विक्रेयद्रव्यम् । इत्यमरः । २ । ९ । ८२ ॥ स्तोतव्यम् । व्यवहार्य्यम् । इति पणधात्वर्थ-दर्शनात् ॥

**पण्डः**, पुं, (पण्डते निष्फलत्वं प्राप्नोतीति । पडि-

“विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥” तत्पर्य्यायः । विद्वान् २ विपश्चित् ३ दोषज्ञः ४ सन् ५ सुधीः ६ कोविदः ७ बुधः ८ धीरः ९ मनीषी १० ज्ञः ११ प्राज्ञः १२ संख्यावान् १३ कविः १४ धीमान् १५ सूरिः १६ कृती १७ कृष्टिः १८ लब्धवर्णः १९ विचक्षणः २० दूरदर्शी २१ दीर्घदर्शी २२ । इत्यमरः । २ । ७ । ५-६ ॥ विशारदः २३ । कवी २४ सूरी २५ । इति भरतः ॥ विदग्धः २६ दूरदृक् २७ वेदी २८ वृद्धः २९ बुद्धः ३० विधा-नगः ३१ प्रज्ञिलः ३२ कृस्निः ३३ । इति शब्दरत्नावली ॥ विज्ञः ३४ मेधावी ३५ । इति राजनिर्घण्टः ॥ सिह्लकः । इति मेदिनी ॥ (सर्व्वज्ञत्वात् महादेवः । यथा, महाभारते । १३ । १७ । १२४ । “न्यायनिर्व्वपणः पादः पण्डितो ह्यचलोपमः ॥”)

**पण्डितम्मन्यः**, त्रि, (आत्मानं पण्डितम्मन्यते यः सः । “आत्ममाने खश्च ।” ३ । २ । ८३ । इति खश् ।) पण्डिताभिमानी । इति व्याकरणम् ॥

**पण्डितमानी**, [न्] त्रि, (आत्मानं पण्डितं मन्यते इति । मन + इणिः ।) पण्डिताभिमानी । यथा

हरति साधकस्य मुकृत्यनुसारेण वैकुण्ठवासादि-
फलं प्रददातीत्थर्थः । पचाद्यच् । यद्वा, पण्यते
स्तूयते यः । पण स्तुतौ “पुंसीति संज्ञायां घः

गतौ + पचाद्यच् । यद्वा पण ङ व्यवहारे ।
“अम-

“मूर्खाः पण्डितमानिनः ।” इति प्राचीनाः ॥

**पण्यं**, त्रि, (पण्यते इति । पण ङ व्यवहारे स्तुतौ

च । “अवद्यपण्यवर्य्यागर्ह्येति ।” ३ । १ । १०१ ।
निपातनात् साधु ।) पणितव्यम् । विक्रेय-
द्रव्यम् । इत्यमरः । २ । ९ । ८२ ।
(यथा, हेः
रामायणे । २ । ४८ । ४ ।
“न चाहृष्यन् न चामोदन् वणिजो न
प्रसारयन् ।

न चाशोभन्त पण्यानि नापचन् गृहमेधिनः ॥”)
व्यवहार्य्यम् । स्तोतव्यम् । इति पणधात्वर्थदर्श-
नात् ॥ (क्ली, पण्यते व्यवह्रियतेऽत्र । पण +
यत् । विपणिः । यथा, मनुः । ५ । १२९ ।
“नित्यं शुद्धः कारुहस्तः पण्ये यच्च प्रसारितम् ॥”
“पण्ये पण्यवीथिकायाम् ।” इति कुल्लूकभट्टः ॥)

**पण्यवीथिका**, स्त्री, (पण्यानां विक्रेयद्रव्याणां
वीथिका गृहम् ।) विपणिः । इत्यमरः । २ । २ । २ ॥
पण्यविक्रयशाला । इति हलायुधः ॥ हट्टः ।
इत्यन्ये ॥ विक्रयार्थप्रसारितनानाद्रव्याणां वणि-
ग्वीथी । वाणियाविही इति वाजार इति च
ख्यातः । इति केचित् । हट्टमण्डपः । इति
केचित् । हट्टमध्यस्थपण्यविक्रयवीथी । इति
केचित् । इति तट्टीकायां भरतः ॥
“आपणः पण्यवीथी च द्वयं वीथीति संज्ञितम् ॥”
इति शाश्वतः ॥

**पण्यवीथी**, स्त्री, (पण्यानां वीथी विक्रयगृहम् ।)
क्रयविक्रयस्थानम् । इति शब्दमाला ॥

**पण्यशाला**, स्त्री, (पण्यानां विक्रेयद्रव्याणां शाला
गृहम् ।) हट्टः । इति हेमचन्द्रः ॥ विक्रयगृहञ्च ॥

**पण्यस्त्री**, स्त्री, (पण्या मूल्येन लभ्या या स्त्री ।
यद्वा पण्ये हट्टादिस्थले स्थिता स्त्री ।) वेश्या ।
इति कोषान्तरम् ॥

**पण्या**, स्त्री, (पण्यते स्तूयते रोगहन्तृत्वात् ।
पृथक्शब्दा इत्येके ।” इति मुग्धबोधे वोप-
देवेनोक्तम् ॥)

**पत**, ऌ ज गतौ । ऐश्ये । इति कविकल्पद्रुमः ॥
(भ्वां-परं-अकं-सेट् ।) ऌ, अपतत् । ज, पातः
पतः । गतिरिह पतनम् । पतति पत्रं वृक्षात् ।
इति दुर्गादासः ॥

**पत**, त् क गतौ । ऐश्ये । इति कविकल्पद्रुमः ॥
(अदन्तचुरां-परं-अकं-सेट् ।) ऐश्यमिश्वरी-
भावः । गतिरिह पतनम् । पतयति पत्रं
वृक्षात् । इति दुर्गादासः ॥

**पत**, य ङ ऐश्ये । इति कविकल्पद्रुमः ॥ (दिवां-
आत्मं-अकं-सेट् ।) य ङ, पत्यते । ऐश्यमैश्वर्य्य-
मिश्वरीभावः । इति दुर्गादासः ॥

**पतं**, त्रि, (पततीति । पत् + अच् ।) पुष्पम् ।
इति जटाधरः ॥ (पतनकर्त्तरि च, त्रि ॥)

**पतगः**, पुं, (पत उत्पतितः सन् गच्छति । यद्वा
पतेन पक्षेण गच्छतीति । गम् + डः ।) पक्षी ।
इत्यमरः । २ । ५ । ३३ ॥ (यथा, मनुः । ७ । २३ ।
“देवदानवगन्धर्व्वा रक्षांसि पतगोरगाः ।
तेपि भोगाय कल्पन्ते दण्डेनैव निपीडिताः ॥”)

**पतङ्गं**, क्ली, (पत् ऌ गत्यैश्वर्य्ययोः । बाहुलकात्
अङ्गच् ।) सुतम् । पारदम् । इति मेदिनी ॥
चन्दनभेदः । इति शब्दचन्द्रिका ॥

**पतङ्गः**, पुं, (पतति गच्छतीति । “पतेरङ्गच्
पक्षिणि ।” उणां । १ । ११८ । इति अङ्गच् ।)

**पतञ्जलिः**, पुं, (पतः पतन् वा अञ्जलिः नम-
स्कार्य्यतया यस्मिन् । शकन्ध्वादित्वात् साधुः ।)
मुनिविशेषः । स तु पातञ्जलदर्शनपाणिनिटीका-
महाभाष्यादिग्रन्थकर्त्ता । तत्पर्य्यायः । गोनर्द्दीयः
२ । इति हेमचन्द्रः ॥ चूर्णिकृत् ३ भाष्यकारः
४ । इति त्रिकाण्डशेषः ॥ वररुचिः ५ । इति
शब्दरत्नावली ॥ (केषाञ्चिन्मते योगसूत्रकारक-
पतञ्जलेर्भाष्यकृत् पतञ्जलिर्भिन्न एव । अनयो-
रभेदतान्तु निर्द्दिशन्ति पाश्चात्याः ॥ पातञ्जलयोग-
शास्त्रन्तु पादचतुष्टयात्मकं तत्र प्रथमे पादे
“अथ योगानुशासनम् ।” इति योगशास्त्रारम्भ-
प्रतिज्ञां विधाय “योगश्चित्तवृत्तिनिरोधः ।”
इत्यादिना योगलक्षणमुक्त्वा सप्रपञ्चसमाधि-
निर्द्देशं कृतवान् भगवान् पतञ्जलिः ॥ द्वितीये
तु “तपः स्वाध्यायेश्वरप्रणिधानानि क्रिया-
योगः ।” इत्यादिना व्युत्थितचित्तस्य क्रियायोगं
यमादीनि पञ्च वहिरङ्गाणि साधनानि च निर-
दिशत् । तृतीये “देशबन्धश्चित्तस्य धारणा ।”
इत्यादिना धारणाध्यानसमाधित्रयरूपमन्तरङ्गं
संयमपदवाच्यं तत्र अवान्तरफलं विभूतिजातञ्च
उपदिदेश । चतुर्थे पादे तु “जन्मौषधिमन्त्रतषः
समाधिजाः सिद्धयः ।” इत्यादिना ससिद्धिपञ्चकं
मुख्यं प्रयोजनं कैवल्यं प्रधानादीनि पञ्चविंशति-

पण ङ व्यवहारे स्तुतौ च + कर्म्मणि यत् तत-
ष्टाप् ।) पिण्या । इति द्विरूपकोषः ॥

**पण्याङ्गना**, स्त्री, (पण्या पणेन मूल्येन लभ्या या

अङ्गना ।) वेश्या । इति हेमचन्द्रः ॥

**पण्याजीवः**, पुं, (पण्यैः क्रयविक्रयद्रव्यैराजीवति

प्राणिति । आ + जीव + कः ।) क्रयविक्रयिकः ।
वणिक् । इत्यमरः । २ । ९ । ७८ ॥

**पण्याजीवकं**, क्ली, (पण्यैः क्रयविक्रयद्रव्यैराजीवति-

तिष्ठतीति । पण्याजीवस्ततः स्वार्थे कन् । अभि-
घानात् क्लीवत्वम् । यद्वा, पण्याजीवैवणिग्भिः
कायति शब्दायते इति । कै + कः ।) हट्टः ।
इति त्रिकाण्डशेषः ॥ पण्यजीवकमित्यपि पाठः ॥

**पण्यान्धा**, स्त्री, (पण्यं अन्धयति स्वगुणेन या ।

अन्ध + अच् ।) तृणविशेषः । तत्पर्य्यायः ।
कङ्गुनीपत्रा २ पण्यधा ३ पणधा ४ । अस्या
गुणाः । समवीर्य्यत्वम् । तिक्तत्वम् । क्षारत्वम् ।
सारकत्वम् । तत्कालशस्त्रघातव्रणसंरोपणत्वञ्च ।
"दीर्घा मध्यातथा ह्रस्वा पण्यान्धा त्रिविधा स्मृता ।
रसवीर्य्यविपाकेषु मध्यमा गुणदायिका ॥"
इति राजनिर्घण्टः ॥ पण्यन्धा इत्यपि पाठः ॥

**पत्** [द्] पुं, (पद्यते गच्छत्यनेन । पद्यौ ङ गतौ +

पक्षी । (यथा, मार्कण्डेये । १० । ८६ ।
"ततः सर्व्वेषु निस्तीर्णः पापी तिर्य्यक्त्वमश्नुत ।
कृमिकीटपतङ्गेषु श्वापदे मशकादिषु ॥")
सूर्य्यः । (यथा, माघे । १ । १२ ।
"पतत्पतङ्गप्रतिमस्तपोनिधिः
पुरोऽस्य यावन्न भुवि व्यलीयत ॥"
"कथं पतङ्गः सूर्य्यः । खगत्वसामान्योपचारात् ।
'पतङ्गः शलभे सूर्य्ये पतङ्गः पक्षिणि स्मृतः ॥'
इति कोषान्तरम् ॥" इत्युज्ज्वलदत्तः ॥)
शलभः । इत्यमरः । ३ । ३ । २० ॥ शालि-
प्रभेदः । इति मेदिनी ॥ जलमधूकवृक्षः । इति
राजनिर्घण्टः ॥

**पतङ्गमः**, पुं, (पत उत्पतितः सन् गच्छतीति ।

गम् + खच् । मुम् च ।) पक्षी । इति व्याकर-
णम् ॥ (शलभः । यथा, भागवते । ७ । ८ । २४ ।
"अलक्षितोऽग्नौ पतितः पतङ्गमो
यथा नृसिंहौजसि सोऽसुरस्तदा ॥")

**पतङ्गिका**, स्त्री, (पतङ्ग + स्वल्पार्थे संज्ञायां वा

कन् । स्त्रियां टाप् अत इत्वञ्च ।) मधुमक्षिका-
विशेषः । तत्पर्य्यायः । पुत्तिका २ । इत्य-
मरः । २ । ५ । २७ ॥ (यथा, महाभारते ।

तत्त्वानि क्लेशकर्म्मविपाकाशयैरसंश्लेष्टं पुरुषं
स्वेच्छया निर्म्माणकायमधिष्ठाय लौकिकादि-
सम्प्रदायप्रवर्त्तकं संसारदहने दग्धानां जीवानां
निस्तारकञ्च उपदिष्टवान् ॥)

**पतत्रं**, क्ली, (पतन्तं त्रायत्ले इति । पतत् + त्रै

+ कः ।) पक्षः । पाखा इति भाषा । इत्य-
मरः । २ । ५ । ३६ । (यथा, भागवते । ८ । ११ । ३४ ।
"येन मे पूर्ब्बमद्रीणां पक्षच्छेदः प्रजात्यये ।
कृतो निविशतां भारैः पतत्त्रैः पततां भुवि ॥"
(त्रं) पत ऌ गतौ ।
"अमिनक्षियजिवधिपतिभ्यो-
ऽत्रन् ।" उणां । ३ । १०५ । इति अत्रन् ।
वाहनम् । इत्युज्ज्वलदत्तः ॥)

**पतत्री**, [न्] पुं, (पतत्त्रं पक्षो विद्यतेऽस्य ।

पतत्त्र + इनिः ।) पक्षी । इत्यमरः । २ । ५ । ३३ ॥
(यथा, कुमारे । ५ । ४ ।
"पदं सहेत भ्रमरस्य पेलवं
शिरीषपुष्पं न पुनः पतत्त्रिणः ॥")

**पतत्रिः**, पुं, (पतति उत्पततीति । "पतेरत्रिन् ।"

उणां । ४ । ६९ । इति अत्रिन् ।) पक्षी ।
इत्यमरः । २ । ५ । ३३ ॥

**पतद्ग्रहः**, पुं, (पतत् मुखादिभ्यः स्खलत् जलादि

गृह्णातीति । पतत् + ग्रह् + अच् ।) प्रति-
ग्राहः । इत्यमरः । २ । ३ । १३९ ॥ पिक्दानी
पर्व्वतानां मुखं मेरुर्गरुडः पततां मुखम् ॥")
पतनशीले त्रि । इति मेदिनी ॥

**पतनं**, क्ली, (पत् + भावे ल्युट् ।) पातः । पडन्
इति भाषा । यथा, --
“अशनेः पतने न वेदना पतनज्ञानमतीव
दुःसहम् ॥”
इत्युद्भटः ॥
“द्विजातिकर्म्मभ्यो हानिः पतनं परत्र
चासिद्धि-
स्तमेके नरकम् ।” इति हारीतसूत्रम् ॥
पापम् ।
यथा, प्रायश्चित्तविवेके ।
“विहितस्याननुष्ठानान्निन्दितस्यच
सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति
॥”

**पतमः**, पुं, (पतति कर्म्मक्षये यस्मात् । पत् + अम
।
क्षीणपुण्यानां चन्द्रलोकात् पतनं शास्त्रे
प्रसि-
द्धम् ।) चन्द्रः । (पततीति । पत् + अम
।) पक्षी ।
पतङ्गः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**पतयालुः**, त्रि, (पत + “स्पृहिगृहिपतिदयीति ।”
३ । २ । १५८ । इति आलच् ।)
पतनशीलः । तत्-
पर्य्यायः । पातुकः २ । इत्यमरः । ३ ।
२ । २७ ॥

**पतसः**, पुं, (पततीति । “अत्यविचमीति ।” उणां
३ । ११७ । इति असच् ।) पक्षी ।
इत्युणादिवृत्तिः ॥
चन्द्रः । पतङ्गः । इति
संक्षिप्तसारोणादिवृत्तिः ॥

**पताका**, स्त्री, पत्यते ज्ञायते कस्यचित् भेदोऽनया
।
(पत् + “वलाकादयश्च ।” उणां ४ ।
१४ । इति
आक प्रत्ययेन साधुः ।) ध्वजम् ।
निशान् इति
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ।
अत्र रक्तादीनां रुधिरशरीरार्थहेतुकश्लेषवशेन
बीजार्थप्रतिपादनात् नेतृमङ्गलप्रतिपत्तौ सत्यां
द्वितीयं पताकास्थानम् । २ ।
अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत् ।
श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते ॥
लीनं अव्यक्तार्थं श्लेष्टेन
सम्वन्धयोग्येनाभिप्राया-
न्तरप्रयुक्तेन प्रत्युत्तरेणोपेतं सविनयं विशेष-
निश्चयप्राप्त्या सहितं सम्पद्यते यत् तत् तृतीयं
पताकास्थानम् । यथा, वेणीसंहारे २ अङ्के ।
कञ्चुकी । ‘देव ! भग्नं भग्नम् ।’ राजा । ‘केन ।’
कञ्चुकी । ‘भीमेन ।’ राजा । ‘कस्य ।’ कञ्चुकी
।
‘भवतः ।’ राजा । ‘आः ! किं प्रलपसि ?’
कञ्चुकी ।
(सभयम्) ‘देव ! ननु ब्रवीमि । भग्नं भीमेन
भवतः ।’ राजा । ‘धिक् वृद्धापसद ! कोऽयमद्य
ते
व्यामोहः ।’ कञ्चुकी । ‘देव ! न व्यामोहः
सत्यमेव ।
भग्नं भीमेन भवतो मरुता रथकेतनम् ।
पतितं किङ्किणीक्वाणबद्धाक्रन्दमिवक्षितौ॥’
अत्र
दुर्य्योधनोरुभग्नरूपप्रस्तुतसङ्क्रान्तमर्थोप
क्षेपणम् । ३ ।
द्व्यर्थो वचनविन्यासः सुश्लिष्टः
काव्ययोजितः ।
प्रधानार्थान्तरापेक्षी पताकास्थानकं परम् ॥”
४ ॥)
अङ्कः । केतुः । इति हेमचन्द्रः ॥ अस्य विवरणं
ध्वजशब्दे द्रष्टव्यम् ॥

**पताकी**, [न्] त्रि, (पताका विद्यतेऽस्य । पताका
+ इनिः ।) वैजयन्तिकः । पताकाधारी । इत्य-
मरः । २ । ८ । ७१ ॥ (यथा, महाभारते ।
६ । १७ । २० ।
“स तु गोवासनः शैव्यः सहितः सर्व्वराजभिः ।
ययौ मातङ्गराजेन राजार्हेण पताकिना ॥”)
रिष्टारिष्टबोधकचक्रविशेषः । तस्य लिखनक्रमो
वेधज्ञानं यथा, --
“कर्केर्मीनधनुर्भ्याञ्च हरेः कीटघटेन च ।
स्त्रियास्तौलिमृगाभ्याञ्चधटे मीनेन कन्यया
॥
धनुषो मृगकर्किभ्यां मकरे धनुषा स्त्रिया ।
मीने कर्कितुलाभ्याञ्च मीनस्त्रीधनुषात्वजे ॥
तुलाकर्किमृगैर्द्वन्द्वे कीटकुम्भवृषेषु च ।
सिंहवद्वेध एतेषु वामदक्षिणसंमुखैः ॥
राहुकेत्वर्कसौरारैः पापैर्विद्धो युतोऽशुभः ।
तदन्यैर्युतविद्धस्तु लग्नराशिः शुभप्रदः ॥”
रिष्टिकालो यथा, --
“एकोनविंशतिः कर्के सिंहे सप्तदशैव तु ।
षट्त्रिंशदबलायाञ्च षड्विंशतिस्तुलाधरे ॥
वृश्चिके सिंहवज्ज्ञेयमूनत्रिंशच्छरासने ।
षड्विंशं मकरे ज्ञेयं कुम्भे सप्तदश स्मृताः ॥
नव युग्मे तथा मीने मेषे षड्दशभिस्तथा ।
वृषभे च तथा सिंहे युग्मेऽङ्कहरलोचने ॥
त्रितयाङ्कादियं संख्या दिनमासाब्दनिर्णये ।
एकाङ्काद्द्विगृहाङ्काद्वा क्वचिद्रिष्टेश्च
सम्भवः ॥”
अथ यामार्द्धाधिपज्ञानम् ।
“वारेशादर्द्धयामेषु रात्र्यह्नोः पञ्चषट् क्रमात्
।
अधिपाः स्युर्ग्रहास्तत्र यथार्काहि भवन्ति ते
।
रवीज्येन्दुभृगुक्ष्माजशनिज्ञरवयो निशि ॥
रविशुक्रज्ञरात्रीशशनीज्यकुजभास्कराः ।
दिने ऊह्याः परेष्वेवं तत्राध्यक्षाश्चतुर्ग्रहाः
॥”
अथ दण्डाधिपज्ञानम् ।
“पापदण्डे भवेद्रिष्टिः शुभदण्डे शुभं भवेत् ।
शुभग्रहस्य दण्डे तु कर्म्मारम्भाच्छुभं भवेत्
॥
यस्यार्द्धयामस्तस्यैव प्राग्दण्डः सर्व्वदा
ततः ।
षट् षट् परीत्य दण्डाश्च त्रयो रात्रौ
मतायथा ॥
आदित्येभृगुजो बुधोऽपि च शशी सोमे
शनीज्यौ
कुजो

भाषा । (यथा, महाभारते । ६ । १७ । १५ ।
“श्वेतैश्छत्रैः पताकाभिर्ध्वजवारणवाजिभिः ।
तान्यनीकान्यशोभन्त राजन्रथपदातिभिः ॥”)
तत्पर्य्यायः । वैजयन्ती २ केतनम् ३ ध्वजम् ४ ।
इत्यमरः । २ । ८ । ९९ ॥ पटाका ५ जयन्ती ६ वैज-
यन्तिका ७ कदली ८ कन्दुली ९ केतुः १० कद-
लिका ११ व्योममण्डलम् १२ । इति शब्दरत्नावली ॥
चिह्नम् १३ । इति जटाधरः ॥ केतनं ध्वजं एतद्वयं
पताकादण्डे । इति भरतः ॥ सौभाग्यम् । नाट-
काङ्गम् । इति मेदिनी ॥ (यथा, साहित्य-दर्पणे । ६ । २७ ।
“पताकास्थानकं योज्यं सुविचार्य्येह वस्तुनि ॥”
इह नाट्टे ॥ तल्लक्षणं यथा तत्रैव । ६ । २८ ।
“यत्रार्थे चिन्तितेऽन्यस्मिंस्तल्लिङ्गोऽन्यः प्रयुज्यते ।
आगन्तुकेन भावेन पताकास्थानकन्तु तत् ॥”
तद्भेदानाह तत्रैव । ६ । २९ -- ३२ ।
“सहसैवार्थसम्पत्तिर्गुणवत्युपचारतः ।
पताकास्थानकमिदं प्रथमं परिकीर्त्तितम् ॥
यथा, रत्नावल्यां ‘वासवदत्तेयमिति’ राजा यदा
तत्कण्ठपाशं मोत्तयति तदा तदुक्त्या ‘सागरि-
केयमिति’ प्रत्यभिज्ञाय ‘कथं प्रिया मे साग-
रिका अलमलमतिमात्रम्’ इत्यादि फलरूपार्थ-
सम्पत्तिः पूर्ब्बपिक्षया उपचारातिशयात् गुण-

यथा, --
“तिर्य्यगूर्द्धगता रेखास्तिस्रो देयाः पताकया ।
युताः कार्य्या वेधविदा सर्व्वसङ्गतरेखया ॥
दक्षस्थोद्गतरेखातो वामं मेषाद्यराशयः ।
पञ्चाष्टयुग्मविंशाश्च शङ्दशेन्द्राग्निसागराः ।
कर्क्कटान्मीनपर्य्यन्तमङ्का देया यथाक्रमम् ॥
५ -- ४
८ -- ३
२ -- १४
२० ६ १०
बालस्य जन्मकालीनग्रहलग्नमजादिष ।
विन्यस्य चिन्तयेत् प्राज्ञः शुभाशुभं यथाग्रहात् ॥”
तत्र शुभाशुभज्ञानं यथा, --
“शुभदण्डयोगवेधैर्लग्नाद्बालस्य शोभनम् ।
पापदण्डयोगवेधैराश्यङ्काद्रिष्टिकालवित् ।
बलेऽधिके दिनं मध्ये मासो हीने च हायनम् ॥”

भौमेऽर्कः सितसोमजौ च शशिजे सोमः शनि-
र्व्वाक्पतिः ।
जीवेऽङ्गाररवी भृगुर्भृ गुसुते सौम्येन्दुमार्त्तण्डजाः
काले जीवमहीजतिग्मकिरणा रात्रौ च दण्डा-
धिपाः ॥
यामार्द्धाधिपसंख्यातो द्वितीयस्तु तदर्द्धकः ।
तदर्द्धात्तु तृतीयः स्यात्तदर्द्धात्तु तुरीयकः ॥
अङ्काभावे तु राहुः स्यात् तदङ्को वसुसंज्ञकः ।
भग्नाङ्कस्य परित्यागाद्दिवादण्डाधिपायथा ॥
रविदनुजबुधग्लौश्चन्द्रसूरासुरज्ञाः
कुजरविदनुजज्ञाज्ञेन्दुसूरासुराश्च ।
गुरुशशिरविदैत्याः शुक्रभौमार्कदैत्याः
शनिकुजरविदैत्या दण्डपाल्वर्द्धयामे ॥”
शुभाशुभदण्डज्ञानं यथा, --
“शेषावर्कस्य दण्डौ सततशुभकरावादिशेषौ तथेन्दोः
शेषो दण्डः कुजस्याप्यथ गुरुषुधयोराद्यमर्द्धं प्रशस्तम् ।
आदिर्दण्डस्तथैको भृगुकुलनृपतेः सर्व्वकार्य्येष शस्तो
दण्डाश्चत्वार एते क्वचिदपि समये नैव शौरेः
प्रशस्ताः ॥”

| | | |
|---|---|---|
| वती उत्कृष्टा । १ ।<br>वचः सातिशयश्लिष्टं<br>नानाबन्धसमाश्रयम्।<br>पताकास्थानकमिदं द्वितीयं<br>परिकीर्त्तितम्॥<br>यथा, वेणीसंहारे सूत्रधारः ।<br>‘रक्तप्रसाधितभुवः क्षतविग्रहाश्च | | |

पलपताकी यथा, --
"प्रतिदण्डं पलान्येषां ज्ञात्वा वाच्यं क्वचिच्छभम् ॥
रवौ च वेदा वसवः सुधांशौ
कुजे च वाणाः शशिजे तथाङ्काः ।
शनावृतुर्द्दिक् च बृहस्पतौ स्या-
द्राहौ तुरङ्गा भृगुजे च रुद्राः ॥"
बालस्य शुभाशुभफलं यथा, --
"अशुभे दण्डसंयोगे सर्व्वत्र पुण्यवर्जिते ।
बालस्य मरणं शीघ्रं यदि पापैः समन्वितम् ॥
अशुभग्रहदण्डे तु सर्व्वत्र पापवर्ज्जिते ।
बालस्य कुशलं सर्व्वं शुभैर्यदि समन्वितम् ॥
अशुभो दण्डनाथो हि वेधश्चेत्तेन लभ्यते ।
मरणं तत्र वक्तव्यं बालस्य नान्यथा भवेत् ॥
पापस्य दण्डमात्रे तु तद्योगवेधवर्जिते ।
बालस्य कुशलं तत्र शुभैर्यदि समन्वितम् ॥"
इति ज्योतिषतत्त्वे पताकीवेधः ॥
(स्त्रियां ङीप् । सेना । यथा, रघुः । ४ । ८२ ।
"न प्रसेहे स रुद्धार्कमधारावर्षदुर्द्दिनम् ।
रथवर्त्म रजोऽप्यस्य कुत एव पताकिनीम् ॥")

**पतिः**, पुं, (पाति रक्षतीति । पा ल रक्षणे + डतिः ।)
मूलम् । गतिः । इति विश्वः ॥ पाणिग्रहीता । भातार इति भाषा । तत्पर्य्यायः । धवः २ प्रियः ३ भर्त्ता ४ । इत्यमरः । २ । ६ । ३५ ॥ कान्तः ५ प्राणनाथः ६ गुरुः ७ हृदयेशः ८ जीवितेशः ९ जामाता १० सुखोत्सवः ११ नर्म्मकीलः १२ रतगुरुः १३ स्वामी १४ रमणः
१५ । इति शब्दरत्नावली ॥ वरः १६ परिणेता १७ गृही १८ । इति राजनिर्घण्टः ॥ तस्य लक्ष-
णम् । विधिवत्पाणिग्राहकः । अनुकूलदक्षिण-धृष्टशठभेदात् पतिश्चतुर्धा ।
सार्व्वकालिकपरा-
ङ्गनापराङ्मुखत्वे सति सर्व्वकालमनुरक्तोऽनु-कूलः । १ । सकलनायिकाविषयसमसहजानुरागो दक्षिणः । २ । भूयो निःशङ्कः कृतदोषो-ऽपि भूयो निवारितोऽपि भूयः प्रश्रयपरायणो ततो भवति चाण्डाली
पतिपुत्त्रविवर्ज्जिता ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ४३ अध्यायः ॥ * ॥
अपि च ।
"स्वकान्तश्च परो बन्धुरिह लोके परत्र च ।
नहि कान्तात् परः श्रेयान् कुलस्त्रीणां परो गुरुः ॥
देवपूजा व्रतं दानं तपश्चानशनं जपः ।
स्नानञ्च सर्व्वतीर्थेषु दीक्षा सर्व्वमखेष च ॥
प्रादक्षिण्यं पृथिव्याश्च
ब्राह्मणातिथिसेवनम् ।
सर्व्वाणि पतिसेवायाः कलां नार्हन्ति षोडशीम् ॥
किमतः पतिभक्ताया अभक्तायाश्च भारते ।
ययादुःखी सुखारम्भे साकाङ्क्षः प्रथमो भवेत् ॥
पतिसे वापरो धर्म्मो नहि स्त्रीणां श्रुतौ श्रुतम् ।
स्वप्ने ज्ञाने च सततं कान्तं
नारायणाधिकम् ।
दृष्ट्वा तच्चरणाम्भोजं सेवां नित्यं करिष्यसि ॥
परिहासेन कोपेन भ्रमेणावज्ञया सुते ! ।
कटूक्तिं स्वामिनः साक्षात् परोक्षान्न करिष्यसि ॥
स्त्रिया वाग्योनिदुष्टायाः कामतो भारते भुवि ।
प्रायश्चित्तं श्रुतौ नास्ति नरकं ब्रह्मणः शतम् ॥
सर्व्वधर्म्मपरीता या कटूक्तं कुरुते पतिम् ।
शतजन्मकृतं पुण्यं तस्या नश्यति निश्चितम् ॥
दत्त्वा कन्यां बोधयित्वा जगाम
मुनिपुङ्गवः ॥"
पुत्त्रो वापि पिता वापि बान्धवो वा सहोदरः ।
योषितां कुलजातानां न कश्चित् स्वामिनः समः ॥"
इति ब्रह्मवैवर्त्ते गणेशखण्डे ४४ अध्यायः ॥ * ॥
पतिदक्षिणादि यथा, --
"निरूपितश्च वेदेषु स्वशब्दो धनवाचकः ।
तद्यस्यास्तीति स स्वामी वेदज्ञ ! शृणु मद्वचः ॥
तस्य दाता सदा स्वामी न च स्वं स्वामिनो भवेत् ।
अहो व्यवस्था भवतां वेदज्ञानमबोधताम् ॥
धर्म्म उवाच ।
पत्नीं विना न स्वं साध्वि ! स्वामिनं दातुमक्षमम् ।
दम्पती ध्रुवमेकाङ्गौ तयोर्द्दाता च द्वौ समौ ॥
निरूपिता पुण्यके च व्रते स्वामी च दक्षिणा ।
श्रुतौ श्रुतो यः स्वधर्म्मो विपरीतो
ह्यधर्म्मकः ॥"
इति ब्रह्मवैवर्त्ते गणेशखण्डे ७ अध्यायः ॥

**पतिः**, त्रि, (पाति रक्षति पालयतीति वा । "पते-
र्डतिः ।" उणां । ४ । ५७ । इति डतिः ।)
अधिपतिः । तत्पर्य्यायः । स्वामी २ ईश्वरः ३
ईशिता ४ अधिभूः ५ नायकः ६ नेता ७ प्रभुः ८
परिवृढः ९ अधिपः १० । इत्यमरः । ३ । ११० । ११ ॥
(यथा, मनुः । ७ । ११५ ।
"ग्रामस्याधिपतिं कुर्य्यात् दशग्रामपतिं तथा ।
विंशतीशं शतेशञ्च सहस्रपतिमेव च ॥")

**पतिंवरा**, स्त्री, (पतिं वृणीते या सा । वृ ञ वरणे +
खच् । "संज्ञायां भृआतृवृजीति ।" ३ । २ । ४६ ।
इति मुम् ।) स्वयंवरा । स्वेच्छया पत्यन्वेषिणी ।

धृष्टः । ३ । कामिनीविषयकपटपटुः शठः । ४
।
इति रसमञ्जरी ॥ * ॥ पतिसेवादिफलं यथा, --
"कथं मे सुव्रते ! साध्वि ! निद्राभङ्गः
कृतस्त्वया ।
व्यर्थं व्रतादिकं तस्या या भर्त्तुश्चापकारिणी ॥
तपश्चानशनञ्चैव व्रतं दानादिकञ्च यत् ।
भर्त्तुरप्रियकारिण्याः सर्व्वं भवति निष्फलम् ॥
यया प्रियः पूजितश्च श्रीकृष्णः पूजितस्तया ।
पतिव्रताव्रतार्थञ्च पतिरूपी हरिः स्वयम् ॥
सर्व्वदानं सर्व्वयज्ञः सर्व्वतीर्थनिषेवणम् ।
सर्व्वं व्रतं तपः सर्व्वमुपवासादिकञ्च यत् ॥
सर्व्वधर्म्मञ्च सत्यञ्च सर्व्वदेवप्रपूजनम् ।
तत् सर्व्वं स्वामिसेवायाः कलां नार्हन्ति
षोडशीम् ॥
सुपुण्ये भारते वर्षे पतिसेवां करोति या ।
वैकुण्ठं स्वामिना सार्द्धं सा याति ब्रह्मणः शतम्
॥
विप्रियं कुरुते भर्त्तुर्विप्रियं वदति प्रियम् ।
असत्कुलप्रजाता या तत्फलं श्रूयतां सति ! ॥
कुम्भीपाकं व्रजेत् सा च यावच्चन्द्रदिवाकरौ ।
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे २४
अध्यायः ॥
अपि च ।
"या स्त्री भर्त्तुरसौभाग्या साऽसौभाग्या च
सर्व्वतः ।
शयने भोजने तस्या न सुखं जीवनं वृथा
॥
यस्या नास्ति प्रियप्रेम तस्या जन्म
निरर्थकम् ।
तत् किं पुत्त्रे धने रूपे सम्पत्तौ
यौवनेऽथवा ॥
य भक्तिर्नास्ति कान्ते च सर्व्वप्रियतमे
परे ।
सा शुचिर्धर्म्महीना च
सर्व्वकर्म्मविवर्ज्जिता ॥
पतिर्ब्बन्धुर्गतिर्भर्त्ता दैवतं गुरुरव च ।
सर्व्वस्माच्च परः स्वामी न गुरुः
स्वामिनः परः ॥
पिता माता सुतो भ्राताक्लिष्टो दत्त्वा
मितं धनम् ।
सर्व्वस्वदाता स्वामी च मूढानां योषितां
सुराः ! ॥
काचिदेव हि जानाति महासाध्वी च
स्वामिनम् ।
अतिसद्वंशजाता च सुशीला
कुलपालिका ॥
असद्वंशप्रसूता या दुःशीला
धर्म्मवर्ज्जिता ।
मुखदुष्टा योनिदुष्टा पतिं निन्दति कोपतः
॥
या स्त्री द्वेष्टि सर्व्वपरं पतिं विष्णुसमं
गुरुम् ।
कुम्भीपाके पचति सा
यावदिन्द्राश्चतुर्द्दश ॥
व्रतञ्चानशनं दानं सत्यं पुण्यं तपश्चिरम्
।
पतिभक्तिविहीनाया भस्मीभूतं
निरर्थकम् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ५७
अध्यायः ॥
अपि च ।
(यथा, रघौ । ६ । १० ।
"मनुष्यवाह्यं चतुरस्रयान-
मध्यास्य कन्या परिवारशोभि ।
विवेश मञ्चान्तरराजमार्गं
पतिंवरा कॢप्तविवाहवेशा ॥")
कृष्णजीरकः । इति शब्दचन्द्रिका ॥

**पतिघ्नी**, स्त्री, (पतिं हन्ति इति । "लक्षणे जाया-
पत्योष्टक् ।" ३ । २ । ५२ । इति टक् ततो
ङीप् ।)
पतिनाशकहस्तरेखाविशेषः । यथा, "लक्षणे
जायापतिभ्याम् । जायाघ्नो हस्तः ।
पतिघ्नी पाणि-
रेखा ।" इति संक्षिप्तसारव्याकरणम् ॥
स्वामिहन्त्री ।
(विवाहात् प्राक् क्षेत्रादिमृत्पिण्डाष्टकस्य
कुमार्य्यै
परीक्षार्थं दाने तदा श्मशानजातमृत्पिण्डस्य
ग्रहणे कुमार्य्यास्तस्याः पतिहननरूपफलं
यथा,
आश्वलायनगृह्यसूत्रे १ । ५ । ६ । "अष्टौ
पिण्डान्
कृत्वा पिण्डानभिमन्त्र्य कुमारीं ब्रूयात्
एषामेकं
गृहाणेति ।" इति नियोजिता कुमारी यदि
श्मशानादाहृतां मृदं गृह्णाति तदा पतिघ्नीति
तां विद्यात् ॥)

**पतितः**, त्रि, (पतति भ्रष्टो भवति स्वधर्म्मात् शास्त्र-
विहितकर्म्मणः सदाचारादिभ्यो वा यः ।
पत् +
कर्त्तरि क्तः चलितः । गलितः । पतनाश्रयः
।
पडा इति भाषा । तत्पर्य्यायः । प्रस्कन्नः २
।
इति हेमचन्द्रः ॥ पातित्यविशिष्टः ।
स्वधर्म्मच्युतः ।
तस्य लक्षणं यथा, मार्कण्डेयपुराणे ।
"स्वधर्म्मं यः समुच्छिद्य परधर्म्मं समाश्रयेत्
।
अनापदि स विद्वद्भिः पतितः परिकीर्त्तितः
॥"

| | | |
|---|---|---|
| | “साध्व्याः सद्वंशजायाश्च शतपुत्राधिकः पतिः ।<br>असद्वंशप्रसूता या दुःशीला ज्ञानवर्ज्जिता ॥<br>स्वामिनं मन्यते नासौ पित्रोर्द्दोषेण कुत्सिता ।<br>कुत्सितं पतितं मूढं दरिद्रं रोगिणं जडम् ॥<br>कुलजा विष्णुतुल्यञ्च कान्तं पश्यति सन्ततम् ॥<br>हुताशनो वा सूर्य्यो वा सर्व्वतेजस्विनां परः ।<br>पतिव्रतातेजसश्च कलां नार्हन्ति षोडशीम् ॥<br>महादानानि पुण्यानि व्रतान्यनशनानि च ।<br>तपांसि पतिसेवायाः कलां नार्हन्ति षोडशीम् ॥ | |

पातित्यकारणं यथा, मात्स्ये २०१ अध्याये ।
"चाण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च ।
पतत्यज्ञानतो विप्रो ज्ञानात् साम्यन्तु गच्छति ॥"
पतिता यथा, --
"गराग्निविषदाश्चैव पाषण्डाः क्रूरबुद्धयः ।
क्रोधात् प्रायं विषं वह्निं शस्त्रमुद्बन्धनं जलम् ॥
गिरिवृक्षप्रपातञ्च ये कुर्व्वन्ति नराधमाः ।
कुशिल्पजीविनश्चैव सूनालङ्कारकारिणः ॥"
तथा, --
"ब्रह्मदण्डहता ये च ये च वै ब्राह्मणैर्हताः ।
महापातकिनो ये च पतितास्ते प्रकीर्त्तिताः ॥"
तेषां दाहादिनिषेधो यथा, --
"पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः ।
न चाश्रुपातः पिण्डो वा कार्य्यंश्राद्धादिकं क्वचित् ॥"
इति शुद्धितत्त्वे ब्रह्मपुराणम् ॥ * ॥
तेषां संसर्गनिषेधो यथा, वराहपुराणे ।
"आसनञ्शयनाच्चैनं भोजनात् कथनादिषु ।
सम्बत्सरेण पतति पतितेन सहाचरन् ॥"
प्रायश्चित्तेतरवैदिकर्म्मानधिकारी सन् नरक-भागी । यथा, --
"पतितैः संप्रयुक्तानामिमां शृणुत निष्कृतिम् ।
सम्बत्सरेण पतति पतितेन सहाचरन् ॥
याजनाध्यापनाद्यौनाच्छासपानाशनासनात्।
यो येन पतितेनैव संसर्गं याति मानवः ।
स तस्यैव व्रतं कुर्य्यात् संसर्गस्य विशुद्धये ॥"
तेषामुदककार्य्यं यथा, --
"पतितस्यौदकं कार्य्यं सपिण्डैर्ब्राह्मणैः सह ।
निन्दितेऽहनि सायाह्ने ज्ञातिभिर्गुरुसन्निधौ ॥
दासीघटमयं पूर्णं पर्य्यस्येत् प्रेतवत् सदा ।
अहोरात्रमुपासीनं नाशौचं ब्राह्मणैः सह ॥
निवर्त्तयेरंस्तस्मात्तु सम्भाषणसहासनम् ॥"
इति मात्से २०१ अध्यायः ॥
अत्याज्या पतिता यथा, मत्स्यपुराणे ।
"पतिता गुरवस्त्याज्या न तु माता कदाचन ।
गर्भधारणपोषाभ्यां तेन माता गरीयसी ॥"

"शुक्लपक्षे तु द्वादश्यां कुर्य्यात् श्राद्धन्तु वत्सरम् ।
द्वादशाहानि वा कुर्य्यात् शुक्ले च प्रथमेऽहनि ॥"
छागलेयः ।
"नारायणवलिः कार्य्यो लोकगर्हभयान्नरैः ।
तथा तेषां भवेच्छौचं नान्यथेत्यब्रवीद्यमः ॥"
व्यासः ।
"नारायणं समुद्दिश्य शिवं वा यत् प्रदीयते ।
तस्य शुद्धिकरं कर्म्म तद्भवेन्नैतदन्यथा ॥"
स चात्मघातादिप्रायश्चित्तं कृत्वा कार्य्यः । तदुक्तं
हेमाद्रौ षट्त्रिंशन्मते ।
"कृत्वा चान्द्रायणं पूर्ब्बं क्रिया कार्य्या यथाविधि ।
नारायणवलिः कार्य्यो लोकगर्हभयात् नरैः ॥
पिण्डोदकक्रियाः पश्चात् वृषोत्सर्गादिकञ्च यत् ।
एकोद्दिष्टानि कुर्व्वीत सपिण्डीकरणं तथा ॥"
दिवोदासीये वृद्धशातातपस्तु इत्याह ।
"पतिते च मृते शुद्ध्यौ प्राजापत्यांस्तु षोडश ।
मृते चापत्यरहिते कृच्छ्राणां नवतिं चरेत् ॥"
इदं प्रायश्चित्तार्हपित्रादिविषयम् ।
"इन्द्रियैरपरित्यक्ता ये च मूढा विषादिनः ।
घातयन्ति स्वमात्मानं चाण्डालादिहताश्च ये ॥
तेषां पुत्त्राश्च पौत्त्राश्च दयया समभिप्लुताः ।
यथाश्राद्धं प्रतन्वन्ति विष्णुनामप्रतिष्ठितम् ॥
तथा ते संप्रवक्ष्यामि नमस्कृत्य स्वयम्भुवे ॥"
इति हेमाद्रौ तेनैवोक्तेः ॥ * ॥

कृतेन प्रायश्चित्तेन पितुः पापनाशे मानाभावः ।
आत्मघाते तु वचनादस्तु । महापातके तु कथं
स्यादिति । स स्वयमेव आत्मवधप्रायश्चित्तस्य
जातिवधनिमित्तेन समुच्चयं वदन् हृदयशून्य
एव । नहि जातिवधनिमित्तं पुत्त्रैः कार्य्यमिति
वचनमस्ति
पुत्त्रकर्त्तृकसर्व्वप्रायश्चित्तादिविप्लवा-पत्तेः । प्रागुक्तवौधायनवचनाच्चेति दिक् । इदं
प्रायश्चित्तार्हाणामेव ।
प्रायश्चित्तानर्हाणान्तु पति-तौदकमात्रं कार्य्यमिति केचित् ।
मदनपारि-जातादिस्वरसोऽप्येवम् । वस्तुतस्तु
तदर्हानर्हयो-र्व्वचनेऽनुपादानात् अविशेषात् तत्रापि
नारा-यणवलिर्गयाश्राद्धञ्चेति युक्तम् ॥ * ॥
पतितोदक-विधिस्तु मित्राद्यतिरिक्तविषय इत्यपरे । स यथा ।
हेमाद्रौ ब्राह्मे ।
"पतितस्य तु कारुण्यात् यस्तृप्तिं कर्त्तुमिच्छति ।
स हि दासीं समाहूय सर्व्वगां दत्तवेतनाम् ॥
अशुद्धघटहस्तान्तां यथावृत्तं ब्रवीत्यपि ।
हे दासि ! गच्छ मूल्येन तिलानानय सत्वरम् ॥
तोयपूर्णं घटञ्चेमं सतिलं दक्षिणामुखी ।
उपविष्टा तु वामेन चरणेन ततः क्षिप ॥
कीर्त्तयेः पातकिसंज्ञां त्वं पिबेति मुहुर्व्वद ।
निशम्य तस्य वाक्यं सा लब्धमूल्या करोति तत् ॥

द्वादशवार्षिकव्रतनाश्यपापयुक्तः । तस्य औद्‌र्ध्व-
देहिकविधिर्यथा, “पूर्ब्बोक्तश्चात्महादेः दाहा-
शौचादिनिषेधस्तदानीमेव । वत्सरान्ते तु सर्व्व-
मौर्द्धदेहिकं कुर्य्यात् ॥
गोब्राह्मणहतानाञ्च पतितानां तथैव च ।
ऊर्द्ध्वं संवत्सरात् कुर्यात् सर्व्वमेवौर्द्ध्वदेहिकम् ॥”
इति हेमाद्रौ षट्त्रिंशन्मतात् ॥
एवं म्लेच्छीकृतानामपि । गयाश्राद्धमपि कार्य्यम् ।
“ब्रह्महा च कृतघ्नश्च गोघाती पञ्चपातकी ।
सर्व्वेते निष्कृतिं यान्ति गयायां पिण्डपातनात् ॥”
इत्यग्निपुराणात् ॥ * ॥
एवं ब्राह्मेऽपि ।
“क्रियते पतितानान्तु गते संवत्सरे क्वचित् ।
देशधर्म्मप्रमाणत्वात् गयाकूपे स्वबन्धुभिः ॥
मार्त्तण्डपादमूले वा श्राद्धं हरिहरौ स्मरन् ॥”
सूर्यपदे इत्यर्थः ॥ * ॥ तत्र वर्षमध्ये कृत्यमुक्त-
मपरार्के वायुपुराणे ।
तत्रैव वौधायनोऽपि । नारायणवलिं व्याख्या-
स्यामोऽभिशस्तपतितसुरापात्मत्यागिनां ब्राह्मण-
हतानाञ्च द्वादशवर्षाणि त्रीणि वा वारिमरणं
यत्र यस्य तत्र तत्र कुर्व्वीतेति ॥ * ॥ गृह्यपरि-
शिष्टे तु चण्डालादित्याद्युक्त्वा, --
“दग्ध्वा शरीरं प्रेतस्य संस्थाप्यास्थीनि यत्नतः ।
प्रायश्चित्तन्तु कर्त्तव्यं पुत्त्रैश्चान्द्रायणत्रयम् ॥”
इत्युक्तम् ॥ * ॥ मदनरत्ने ।
“ब्राह्मणहतानाञ्च द्वादशवर्षाणि त्रीणि वा
कुर्व्वीतेति ॥” * ॥ मदनरत्ने ब्राह्मे ।
“प्रमादादपि निःशङ्कस्त्वकस्माद्विधिचोदितः।
चण्डालैर्ब्राह्मणैश्चौरैर्निहतो यत्र कुत्रचित् ॥
तस्य दाहादिकं कार्य्यं यस्मान्न पतितस्तु सः ।
चान्द्रायणं तप्तकृच्छ्रद्वयं तस्य विशुद्धये ॥
यद्वा कृच्छ्रान् पञ्चदश कृत्वा तु विधिना दहेत् ।
बुद्धिपूर्ब्बमृतानान्तु त्रिंशत्कृच्छ्रं समाचरेत् ॥”
इत्युक्तम् । स्मृतिरत्नावल्यां तद्द्विगुणं प्रायश्चित्तं
कृत्वा अर्व्वागप्यब्दात् सर्व्वं कार्य्यं इत्युक्तम् ।
“आत्मनो घातशुद्‌ध्यर्थं चरेच्चान्द्रायणद्वयम् ।
तप्तकृच्छ्रचतुष्कञ्च त्रिंशत्कृच्छ्राणि वा पुनः ॥
अर्व्वाक् संवत्सरात् कुर्य्यात् दहनादि यथोदितम् ।
कृत्वा नारायणवलिमनित्यत्वात्तदाग्रः ॥”
इति ॥
इदञ्चात्मवधनिमित्तं तज्जातिवधप्रायश्चित्तेन
समुच्चितं कार्य्यम् । अतएव वौधायनेनोक्तम् ।
द्वादशवर्षाणि त्रीणि वेति । मदनपारिजाते
एवं कृते भवेत्तृप्तिः पतितानां न चान्यथा ॥”
इति ।
इदञ्च मृताहे कार्य्यम् । पतितस्य दासी मृताह्नि
पदा घटमपवर्जयेदेतावतायमुपचरितो भव-
तीति मदनरत्ने विष्णूक्तेः ।
इदञ्चात्मत्यागि-विषयम् । आत्मत्यागिनः
पतितास्तेनाशौचोदक-भाजः स्युरित्युपक्रम्य विष्णुना
एतस्याभिधाना-दिति गौडाः । उपलक्षणत्वात्
सर्व्वेषामिति तु युक्तम् । इति निर्णयसिन्धौ ५ परिच्छेदः ॥

**पतिवत्नी**, स्त्री, (पतिर्विद्यते यस्याः । पति + मतुप् । “अन्तर्वत्पतिवतोर्नुक् ।” ४ । १ । ३२ ।
इति निपातनात् वत्वं नुगागमश्च । ततः । “ऋन्नेभ्यो ङीप् ।” ४ । १ । ५ । इति ङीप् ।)
सभर्त्तृका । सधवा । इत्यमरः । २ । ६ । १२ ॥
(यथा, रघुः । १५ । ३५ ।
“इतरेऽपि रघोर्वंश्यास्त्रयस्त्रेताग्नितेजसः ।
तद्योगात् पतिवत्नीषु पत्नीष्वासन् द्विसूनवः ॥”)

**पतिव्रता**, स्त्री, (पतिर्व्रतमिव धर्म्मार्थकामेषु काय-वाक्मनोभिः सदोपास्योऽस्याः ।) स्वाम्यनु-
रक्ता । तत्पर्य्यायः । सुचरित्रा २ सती ३ साध्वी ४ । इत्यमरः । २ । ६ । ६ ॥ एकपत्नी ५ ।
इति शब्दरत्नावली ॥ तस्या लक्षणं यथा, --
“आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा ।
मृते म्रियेत यापत्यौ सा स्त्री ज्ञेया पतिव्रता ॥”

| | | |
|---|---|---|
| | स्मृत्यर्थसारे च ब्रह्महादीनां तद्योग्यं प्रायश्चित्तं<br>कृत्वा नारायणवलिः कार्य्य इत्युक्तम् । एवं म्लेच्छी-<br>कृतानामपि ॥ * ॥ यत्तु कश्चिदाह । पुत्त्र- | इति शुद्धितत्त्वम् ॥ * ॥<br>तस्या माहात्म्यं यथा, --<br>नारद उवाच ।<br>“कर्म्मणा केन राजेन्द्र ! तपसा वा तपोधन ! ।<br>उत्तमाञ्च गतिं याति कृष्णवासः प्रशंस मे<br>एवसुक्तस्तु धर्म्मात्मा नारदेनाब्रवीत्तदा । |

यम उवाच ।
न तस्या निषमो विप्र ! तपो नैव च सुव्रत ! ।
उपवासो न दानञ्च न दमो वा महामते ! ॥
यादृशी तु भवेद्विप्र ! शृणु तत्त्वं समासतः ।
प्रसुप्ते या प्रस्वपिति विबुद्धे जाग्रति स्वयम् ॥
भुङ्क्ते तु भोजिते विप्र ! सा मृत्युञ्जयति ध्रुवम् ।
मौने मौना भवेद्या तु स्थिते तिष्ठति या स्वयम् ।
सा मृत्युञ्जयते विप्र ! नान्यत् पश्यामि किञ्चन ॥
एकदृष्टिरेकमना भर्त्तुर्व्वचनकारिणी ।
तस्या बिभीमहे सर्व्वे ये तथान्ये तपोधन ! ॥
देवानामपि सा साध्वी पूज्या परमशोभना ।
भर्त्ता वाभिहिता वापि प्रणत्याख्यायिनी भवेत् ॥
वर्त्तमानापि विप्रेन्द्र ! प्रत्याख्यानापि सा यदा ।
तदैव तं संश्रयति पतिं नान्यं कदाचन ॥
भर्त्तुर्मृत्युमुखं ब्रह्मन् ! या पश्यति वराङ्गना ।
एवं याति भवेन्नित्यं भर्त्तुः प्रियहिते रता ॥
अनुविष्टेन भावेन भर्त्तारमनुगच्छति ।
सा तु मृत्युमुखद्वारं न गच्छेद्ब्रह्मसम्भव ! ॥
एष माता पिता बन्धुरेष मे दैवतं परम् ।
एवं शुश्रूषते या तु सा मां विजयते सदा ।
पतिव्रता तु या साध्वी तस्याश्चाहं कृताञ्जलिः ॥
भर्त्तारमनुध्यायन्ती भर्त्तारमनुगच्छति ।
भर्त्तारमनुशोचन्ती मृत्युद्वारं न पश्यति ॥
गीतवादित्रनृत्यानि प्रेक्षणीयान्यनेकशः ।
न शृणोति न पश्येत मृत्युद्वारं न पश्यति ॥
स्नायन्ती तिष्ठती वापि कुर्व्वन्ती वा प्रसाधनम् ।
यद्भक्ष्यं स्वामिनां नित्यं तदेवमपि योषिताम् ।
नहि त्यजेत्तु तत्सङ्गं क्षणमेव च सुव्रता ॥
उत्तरे नोत्तरं दद्यात् स्वामिनश्च पतिव्रता ।
न कोपं कुरुते शुद्धा ताडनाच्चापि कोपतः ॥
क्षुधितं भोजयेत् कान्तंदद्यात् पानञ्च तोषणे ।
न बोधयेत्तं निद्रालुं प्रेरयत्येव कर्म्मसु ॥
पुत्राणाञ्च शतगुणं स्नेहं कुर्य्यात् पतिं सती ।
पतिर्बन्धुर्गतिर्भर्त्ता दैवतं कुलयोषितः ॥
शुभं दृष्टा सुधातुल्यं कान्तं पश्यति सुन्दरी ।
सस्मितं वदनं कृत्वा भक्तिभावेन यत्नतः ॥
पुरुषाणां सहस्रञ्च सती स्त्री च समुद्धरेत् ।
पतिः पतिव्रतानाञ्च मुच्यते सर्व्वपातकात् ॥
नास्ति तेषां कर्म्मभोगः सतीनां व्रततेजसा ।
तया सार्द्धञ्च निष्कर्म्मी मोदते हरिमन्दिरे ॥
पृथिव्यां यानि तीर्थानि सतीपादेषु तान्यपि ।
तेजश्च सर्व्वदेवानां मुनीनाञ्च सतीषु च ॥
तपस्विनां तपः सर्व्वं व्रतिनां यत् फलं व्रज ।
दाने फलं यद्दातॄ णां तत् सर्व्वं तासु सन्ततम् ॥
स्वयं नारायणः शम्भुर्विध ता जगतामपि ।
सुराः सर्व्वे सुमुनयो भीतास्ताभ्याञ्च सन्ततम् ॥
सतीनां पादरजसा सद्यः पूता वसुन्धरा ।
पतिव्रतां नमस्कृत्य मुच्यते पातकान्नरः ॥
त्रैलोक्यं भस्मसात् कर्त्तुं क्षणेनैव पतिव्रता ।
स्वतेजसा समर्था सा महापुण्यवती सदा ॥
क्षमस्व भगवन् ! दोषं ज्ञानाज्ञानकृतञ्च यत् ।
पत्नीबन्धो ! दयासिन्धो ! दासीदोषं क्षमस्व च ॥
इदं स्तोत्रं महापुण्यं सृष्ट्याद्ये पद्मया कृतम् ।
सरस्वत्या च धरया गङ्गया च पुरा व्रज ॥
सावित्र्या च कृतं पूर्ब्बं ब्रह्मणे चापि नित्यशः ।
पार्व्वत्या च कृतं भक्त्या कैलासे शङ्कराय च ॥
मुनीनाञ्च सुराणाञ्च पत्नीभिश्च कृतं पुरा ।
पतिव्रतानां सर्व्वासां स्तोत्रमेतत् शुभावहम् ॥
इदं स्तोत्रं महापुण्यं या शृणोति पतिव्रता ।
नरोऽन्यो वापि नारी वा लभते सर्व्ववाञ्छितम् ॥
अपुत्रो लभते पुत्रं निर्धनो लभते धनम् ।
रोगी च मुच्यते रोगात् बद्धो मुच्येत बन्धनात् ॥
पतिव्रता च स्तुत्वा च तीर्थस्नानफलं लभेत् ।
फलञ्च सर्व्वतपसां व्रतानाञ्च व्रजेश्वर ! ॥
इदं स्तुत्वा नमस्कृत्य भुङ्क्ते सा तदनुज्ञया ।
उक्तः पतिव्रताधर्म्मो गृहिणां श्रूयतां व्रज ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ८३ अध्यायः ॥ * ॥
पतिव्रतानामानि यथा, --
सूर्य्यस्य सुवर्च्चला १ शक्रस्य शची २ वशिष्ठस्य
अरुन्धती ३ चन्द्रस्य रोहिणी ४ अगस्त्यस्य लोपामुद्र ५ च्यवनस्य सुकन्या ६ सत्यवतः सावित्री ७ कपिलस्य श्रीमती ८ सौदासस्य मदयन्ती ९ सगरस्य केशिनी १० नलस्य दम-
यन्ती ११ रामस्य सीता १२ शिवस्य सती १३
नारायणस्य लक्ष्मीः १४ ब्रह्मणः सावित्री १५ रावणस्य मन्दोदरी १६ । इति पुराणान्तरम् ॥
(गायत्रीस्वरूपा भगवती । यथा, देवीभागवते । १२ । ६ । ९६ ।
“पतिव्रता पवित्राङ्गी पष्पहासपरायणा ।
प्रज्ञावती सुता पौत्री पुत्त्रपूज्या पयस्विनी ॥”)

नान्यञ्च मनसा ध्यायेत कदाचिदपि सुव्रता ॥
देवता अर्च्चयन्ती वा भीजयन्त्यथ वा द्विजान् ।
पतिं न त्यजते चित्तात् मृत्युद्वारं न पश्यति ॥
भानौ चानुदिते या तु उत्थाय च तपोधन ! ।
गृहं मार्जयते नित्यं मृत्युद्वारं न पश्यति ॥
चक्षुर्देहः स्वभावश्च यस्या नित्यं सुसंवृतम् ।
शौचाचारसमायुक्ता सापि मृत्युं न पश्यति ॥
भर्त्तुर्मुखं प्रपश्यन्ती भर्त्तुश्चित्तानुसारिणी ।
वर्त्तते च हिते भर्त्तुर्मृत्युद्वारं न पश्यति ॥
एवं कीर्त्तिमतां लोके दृश्यन्ते दिवि देवताः ।
मानुषाणाञ्च भार्य्या वै तत्र देशे तु दृश्यते ॥
कथितैवं पुरा विप्र ! आदित्येन पतिव्रता ।
मया तस्माचु विप्रर्षे ! यथावृत्तं यथाशुतम् ॥
गुह्यमेतत्ततो दृष्ट्वा पूजयामि पतिव्रताम् ॥”
इति वाराहे पतिव्रताचरित्रम् ॥ * ॥
पतिव्रताधर्म्मो यथा, --
“पतिव्रतानां यद्धर्म्मं तन्निबोध व्रजेश्वर ! ।
नित्यं भर्त्तर्य्युत्सुकया
तत्पादोदकमीप्सितम् ।
भक्तिभावेन सततं भोक्तव्यं तदनुज्ञया ॥
व्रतं तपस्यां देवार्च्चां परित्यज्य प्रयत्नतः ।
कुर्य्याच्चरणसेवाञ्च स्तवनं परितोषणम् ॥
तदाज्ञारहितं कर्म्म न कुर्य्याद्विरतः सती ।
नारायणात् परं कान्तं ध्यायते सततं सती ॥
परपुंसां पुरश्चैव सुवेशं पुरुषं परम् ।
यात्रामहोत्सवं नित्यं नर्त्तकं गायनं व्रज ।
परक्रीडाञ्च सततं नहि पश्यति सुव्रता ॥

सतीनाञ्च पतिः साध्वीपुत्रो निःशङ्क एव च ।
नहि तस्य भयं किञ्चिद्देवेभ्यश्च यमादपि ॥
शतजन्मपुण्यवतां गृहे जाता पतिव्रता ।
पतिव्रताप्रसूः पूता जीवन्मुक्तः पिता तथा ॥
सती स्त्री प्रातरुत्थाय त्यक्त्वा च रात्रिवाससम् ।
भर्त्तारञ्च नमस्कृत्य करोति स्तवनं मुदा ॥
गृहकार्य्यं ततः कृत्वा स्नात्वा धौते च वाससी ।
गृहीत्वा शुक्लपुष्पञ्च भक्तितः पूजयेत् पतिम् ॥
स्नापयित्वा सुपूतेन जलेन निर्म्मलेन च ।
तस्मै दत्त्वा धौतवस्त्रं तत्पादौ क्षालयेन्मुदा ॥
आसने वासयित्वा च दत्त्वा भाले च चन्दनम् ।
सर्व्वाङ्गलेपनं कृत्वा दत्त्वा माल्यं गलेऽपि च ॥
सामवेदोक्तमन्त्रेण भोगद्रव्यैः सुधोपमैः ।
संपूज्य भक्तितः कान्तं स्तुत्वा च प्रणमेन्मुदा ॥
‘ओं नमः कान्ताय शान्ताय
सर्व्वदेवाश्रयाय
स्वाहा ॥’
इत्यनेनैव मन्त्रण दत्त्वा पुष्पञ्च चन्दनम् ।
पाद्यार्घ्यधूपदीपांश्च वस्त्रं नैवेद्यमुत्तमम् ॥
जलं सुवासितं शुद्धं ताम्बू लञ्च सुसंस्कृतम् ।
दत्त्वा स्तोत्रञ्च प्रपठेत् यत् कृतं पाठ्यमेव च ॥
ओं नमः कान्ताय शास्त्रे च
शिवचन्द्रस्वरूपिणे ।
नमः शान्ताय दान्ताय सर्व्वदेवाश्रयाय च ॥
नमो ब्रह्मस्वरूपाय सतीप्राणपराय च ।
नमस्याय च पूज्याय हृदाधाराय ते नमः ॥
पञ्चप्राणाधिदेवाय चक्षुषस्तारकाय च ।
ज्ञानाधाराय पत्नीनां परमानन्दरूपिणे ॥
पतिर्ब्रह्मा पतिर्विष्णुः पतिरेव महेश्वरः ।

**पतेरः**, पुं, स्त्री, (पतति गच्छतीति । पत ऌ गतौ + “पतिकठिकुठिगडिदंशिभ्य एरक् ।” उणां १ । ५९ ।
इति कर्त्तरि एरक् ।) पक्षी । गन्तरि त्रि । इत्यु-णादिकोषः ॥

**पतेरः**, पुं, (पतत्यस्मिन्निति । “पति कठीति ।” उणां १ । ५९ । इति अधिकरणे एरक् ।)
आढकः ।
गर्त्तः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**पतङ्गं**, क्ली, (पत्रमिव अङ्गं यस्य । पृषोदरात्-साधु ।) रक्तचन्दनम् । इति शब्दरत्नावली ॥
वृक्षविशेषः । वकम् इति भाषा । तत्पर्य्यायः ।
पत्राङ्गम् २ रक्तकाष्ठम् ३ सुरङ्गदम् ४ पत्रा-ण्यम् ५ पट्टरङ्गम् ६ भार्य्यावृक्षः ७ रक्तकः ८
लोहितम् ९ रङ्गकाष्ठम् १० रोगकाष्ठम् ११
कुचन्दनम् १२ पट्टरञ्जनकम् १३ सुरङ्गम् १४ ।
अस्य गुणाः । कटुत्वम् । रूक्षत्वम् ।
अम्लत्वम् ।
शीतत्वम् । गौल्यत्वम् । वातपित्तज्वरविष्फो-टोन्मादभूतनाशित्वञ्च । इति राजनिर्घण्टः ॥
अपि च भावप्रकाशे ।
“पतङ्गन्तु रक्तसारं सुरङ्गं रञ्जनं तथा ।
पटरञ्जनमाख्यातं पत्तूरञ्च कुचन्दनम् ॥
पतङ्गं मधुरं शीतं पित्तश्लेष्मव्रणास्रनुत् ।
हरिचन्दनवज्ज्ञेयं विशेषाद्दाहनाशनम् ॥”

**पत्तनं**, क्ली, (पतन्ति गच्छन्ति जना यस्मिन् । पत ऌ
गतौ + "वीपतिभ्यां तनन् ।" उणां ३ । १५०
। इति
तनन् ।) नगरम् । इत्यमरः । २ । २ । १० ॥
(यथा,
भागवते । ७ । २ । १४ ।
"पुरग्रामव्रजोद्यानक्षेत्रारामाश्रमाकरान् ।
खेटखर्व्वटघोषांश्च ददहुः पत्तनानि च ॥")
महती पुरी । इति श्रीधरस्वामी ॥ मृदङ्गः ।
इति हारावली ॥

**पत्तनवणिक्**, [ज्] पुं, (पत्तनस्य नगरस्य वणिक् ।)
नगरवणिक् । तत्पर्य्यायः । स्वाध्यायी २ ।
इति
त्रिकाण्डशेषः ॥

**पत्तिः**, पुं, (पद्यते विपक्षसेनां प्रति पद्भ्यां गच्छ-
तीति । पद्यौ ङ गतौ + "पदिप्रथिभ्यां नित् ।"
उणां ४ । १८२ । इति तिः स च नित् ।)
पदा-
तिकः । इत्यमरः । २ । ८ । ६६ । (यथा,
रघुः । ७ । ३७ ।
"पत्तिः पदातिं रथिनं रथेश-
स्तुंरङ्गसादी तुरगाधिरूढम् ।
यन्ता गजस्याभ्यपतद्गजस्थं
तुल्यप्रतिद्वन्दि बभूव युद्धम् ॥" * ॥
पद्यते विपक्षं प्राप्नोतीति । पद् + तिन् ।) वीरः
।
इति विश्वः ॥

**पत्तिः**, स्त्री, (पत ऌ गतौ + भावे क्तिन् ।) गतिः ।
(पत्यते विपक्षो यया । पत् + करणे क्तिन् ।)
सेनाविशेषः । यदुक्तं अमरे । २ । ८ । ८० ।
"एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका ॥"

**पत्तिसंहतिः**, स्त्री, (पत्तीनां पदातीनां संहतिः ।)
पदातिसमूहः । तत्पर्य्यायः । पादातम् २ ।
इत्यमरः । २ । ८ । ६७ ॥

**पत्तूरः**, पुं, (पत गतौ + बाहुलकादूरः । निपातनात्
तस्य द्वित्वम् ।) शालिञ्चशाकः । इति
त्रिकाण्ड-

आत्मगुप्ता स्वामिभक्ता देवता सा न
मानुषी ।
अनुकूलकलत्रो यस्तस्य स्वर्ग इहैव
हि ॥
प्रतिकूलकलत्रस्य नरको नात्र
संशयः ।
स्वर्गेऽपि दुर्लभं ह्येतदनुरागं परस्परम्
॥
रक्त एको विरक्तोऽन्यस्तस्मात्
कष्टतरं नु किम् ॥
गृहवासः सुखार्थाय पत्नीमूलं गृहे
सुखम् ।
सा पत्नी या विनीता स्याच्चित्तज्ञा
वशवर्त्तिनी ॥
दुःखदान्या सदा खिन्ना चित्तभेदात्
परस्परम् ।
प्रतिकूलकलत्रस्य द्विदारस्य
विशेषतः ॥
योषित् सर्व्वा जलौकेव
भूषणाच्छादनाशनैः ।
सुभूत्यापि कृता नित्यं पुरुषं
ह्यपकर्षति ॥
जलौका रक्तमादत्ते केवलं सा
तपस्विनी ।
इतरा तु धनं वित्तं मांसं वीर्य्यं बलं
सुखम् ॥
सशङ्का बालभावे तु यौवने विमुखी
भवेत् ।
तृणवन्मन्यते पश्चाद्वृद्धभावे स्वकं
पतिम् ॥
अनुकूला न वाग्दुष्टा दक्षा साध्वी
पतिव्रता ।
एभिरेव गुणैर्युक्ता श्रीरेव स्त्री न
संशयः ॥
या हृष्टमनसा नित्यं
स्थानमानविचक्षणा ।
भर्त्तुः प्रीतिकरी नित्यं सा पत्नी
हीतरा ज्वरा ॥")

**पत्न्याटः**, पुं, (अटति मुखं विहरति अत्र इति
आटो

वासः ७ तापसम् ८ सुकुमारकम् ९ वस्त्रम् १०
तमालकम् ११ रामम् १२ गोपनम् १३ वस-
नम् १४ तमालम् १५ सुरनिर्गन्धम् १६ । अस्य
गुणाः । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् ।
कफ-
वातविषवस्तिकण्डूतिदोषनाशित्वम् ।
मुखमस्तक-
शोधनत्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
भावप्रकाशे ।
"पत्रकं मधुरं किञ्चित्तीक्ष्णोष्णं पिच्छिलं लघु ।
निहन्ति कफवातार्शोहृल्लासारुचिपीनसान् ॥"
(पत्यते स्थानात् स्थानान्तरे अनेन । पत +
"दाम्नी-
शसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे
।"
३ । २ । १८२ । इति करणे ष्ट्रन् ।) वाहनम् ।
शरपक्षः । पक्षिपक्षः । इति मेदिनी ॥ * ॥
(पत्यते पात्यते शास्त्रबोधायवर्णनिचयोऽनेन ।
पत् + करणे ष्ट्रन् । अन्तर्निवन्तत्वात् तथात्वम्
।
(लिखनाधारः । पात् इति भाषा । यथा,
ज्योतिस्तत्त्वे ।
"षाण्मासिके तु सम्प्राप्ते भ्रान्तिः संजायते यतः
।
धात्राक्षराणि सृष्टानि पत्रारूढान्यतः पुरा ॥"
धातुमयपत्राकृतिद्रव्यम् । पतर् इति तवक् इति
च भाषा । यथा, तुलापुरुषदाने दानसागरे ।
"सुवर्णपत्राभरणा च कार्य्या
सुलोहपार्श्वद्वयशृङ्खलाभिः ॥" * ॥
(पात्यते स्थानात् स्थानान्तरं समाचारोऽनेन ।)
पत्री । लिपिः । तस्य रञ्जनं यथा, --
"सुवर्णरूप्यरङ्गाद्यै रञ्जयेत् पत्रमुत्तमम् ।
सामान्योत्तममध्यानां पत्ररञ्जनमीरितम् ॥" * ॥
अथ पत्रप्रमाणम् ।
"षडङ्गुलाधिकं हस्तं पत्रमुत्तममीरितम् ।
मध्यमं हस्तमात्रं स्यात् सामान्यं मुष्टिहस्तकम्
॥"
अथ पत्रभङ्गप्रकारः ।
"पत्रन्तु त्रिगुणीकृत्य ऊर्द्धे तु द्विगुणं त्यजेत् ।

शेषः ॥ पत्तङ्गे, क्ली । इति भावप्रकाशः ॥

**पत्नी**, स्त्री (पत्यर्यज्ञे सम्बन्धो यया । "पत्युर्नोयज्ञ-
संयोगे ।" ४ । १ । ३२ । इति नकारादेशः ङीप्
च ।) वेदविधानेनोढा । अन्यत्रोपचारात् ।
पत्या उद्वाहविहितमन्त्रादिनाऊढा । इति
भरतः ॥ तत्पर्य्यायः । पाणिगृहीती २ द्बितीया
३ सहधर्म्मिणी ४ भार्य्या ५ जाया ६ दाराः ७
सधर्म्मिणी ८ धर्म्मचारिणी ९ दारः १० गृहिणी
११ । इति शब्दरत्नावली ॥ सहचरी १२ गृहः
१३ क्षेत्रम् १४ वधूः १५ जनी १६ परिग्रहः १७
ऊढा १८ कलत्रम् १९ । इति हेमचन्द्रः ॥
(पत्नीगुणेनैव हि पुरुषाः सुखिनो भवन्ति ।
यस्य पत्नी वशानुगा स भूस्थोऽपि स्वर्गस्थः ।
गृहाश्रमतुल्यं किञ्चिदपि नास्ति यदि तत्र हित-
कामा पत्नी वर्त्तते । सपत्नीक एव सर्व्वधर्म्म-
करणार्हः । यदक्तं दक्षसंहितायाम् ।
"पत्नीमूलं गृहं पुंसां यदि छन्दोनुवर्त्तिनी ।
गृहाश्रमसमं नास्ति यदि भार्य्या वशानुगा ॥
तया धर्म्मार्थकामानां त्रिवर्गफलमश्नुते ।
प्राकाम्ये वर्त्तमाना तु स्नेहान्नतु निवारिता ॥
अवश्या सा भवेत् पश्चात् यथा व्याधिरपेक्षितः ।
अनुकूला न वागदुष्टा दक्षा साध्वी प्रियंवदा ॥
गृहम् । ततः पत्न्या आटः ।)
पत्नीगृहम् ।
यदुक्तं त्रिकाण्डशेषे ।
"वासागारं भोगगृहं
कन्यापत्न्याटनिष्कुटाः ॥"

**प(त्र)त्त्रं**, क्ली, (पतति वृक्षात् । पत लृ गतौ +
"सर्व्वधातुभ्यः ष्ट्रन् ।" उणां ४ ।
१५८ । इति ष्ट्रन् ।)
वृक्षावयवविशेषः । पाता इति भाषा । तत्-
पर्य्यायः । पलाशम् २ छदनम् ३ दलम् ४ पर्णम्
५ छदः ६ । इत्यमरः । २ । ४ । १४ ॥ पात्रम् ७
छादनम् ८ वर्हम् ९ वर्हणम् १०
पत्रकम् ११ ।
इति शब्दरत्नावली ॥ * ॥ विष्णवे पत्रविशेष-
दानफलं यथा नारसिंहे ५२ अध्याये
।
"पत्राण्यपि सपुष्पाणि हरेः
प्रीतिकराणि च ।
प्रवक्ष्यामि नृपश्रेष्ठ ! शृणुष्व गदतो
मम ॥
अपामार्गपत्रं प्रथमं तस्माद्भृङ्गारकं
परम् ।
तस्मात्तु खादिरं श्रेष्ठं ततश्च
शमिपत्रकम् ॥
दूर्व्वापत्रं ततः श्रेष्ठं ततोऽपि
कुशपत्रकम् ।
पत्रं तस्माद्दमनकं ततो विल्वस्य
पत्रकम् ॥
विल्वपत्रादपि हरेस्तुलसीपत्रमुत्तमम्
।
एतेषाञ्च यथालब्धैः पत्रैर्वा
योऽर्च्चयेद्धरिम् ॥
सर्व्वपापविनिर्मुक्तो विष्णुलोके
महीयते ॥"
देवीप्रीतिकरपत्राणि यथा, --
"अपामार्गस्य पत्रन्तु ततो
भृङ्गारपत्रकम् ।
शेषभागे लिखेद्वर्णान् गद्यपद्यादिसंयुतान् ॥" *
॥
अथ पत्रस्य रचनक्रमः ।
"राजलेखकमाहूय नृपो ब्रूयात् प्रयत्नतः ।
पत्रं कुरु यथायोग्यं गद्यपद्यादिसंयुतम् ॥
पण्डितद्वयमानीय लेखको रहसि स्थितः ।
यथायोग्यानुसारण पत्रं कुर्य्यान्मिनोरमम् ॥
दिनद्वयं त्रयं वापि विचार्य्य पण्डितेन वै ।
स्वभ्रान्तेर्दूषणं ज्ञात्वा विलिखेत् पत्रपुस्तके ॥
सामान्यपत्रे संलिख्य रहसि श्रावयेन्नृपम् ।
नृपाज्ञया शुभे पत्रे विलिखेद्राजलेखकः ॥" *
॥
अथ लेखनप्रकारः ।
"अङ्कुशं प्रथमं दद्यात् मङ्गलार्थं विचक्षणः ।
मध्ये विन्दुसमायुक्तमधः सप्ताङ्कसंयुतम् ॥ ७ँ ॥
तदधः स्वस्ति विन्यस्य ततो गद्यं सुशोभनम् ।
ततः श्रीशब्दरूपाणि पदन्यासक्रमं लिखेत् ॥
भाषया संस्कृतेनैव कुशलं विलिखेत् सुधीः ।
ततः शुभाशुभां वार्त्तां संस्कृतैः प्राकृतैस्तथा ॥
ततः प्रमाणसन्देशं ततो वार्त्तां नियोजयेत् ।
कीर्त्तिप्रीतियुतं पद्यं ततः किमधिकादिकम् ॥
पत्रप्रेषणश्लोकञ्च अङ्कमासादिसंयुतम् ।

| | | |
|---|---|---|
| | ततोऽपि गन्धिनीपत्रं वलाहकमतः परम् ॥<br>तस्मात् खदिरपत्रन्तु वञ्जुलस्तवकस्तथा ।<br>आम्रन्तु वकगुच्छस्तु जम्बूपत्रं ततः परम् ॥<br>बीजपूरस्य पत्रन्तु ततोऽपि कुशपत्रकम् ।<br>दूर्व्वाङ्कुरं ततः प्रोक्तं शमीपत्रमतः परम् ॥<br>पत्रमामलकं तस्माद्वामपत्रमतः परम् ।<br>सर्व्वतो विल्वपत्रन्तु देव्याः प्रीतिकरं मतम् ॥"<br>इति कालिकापुराणे ९८ अध्यायः ॥ * ॥<br>तेजपत्रम् । तत्पर्य्यायः । तमालपत्रम् १ पत्रकम्<br>२ छदनम् ३ दलम् ४ पालाशम् ५ अंशुकम् ६ | |

सर्व्वेषामेव पत्रेषु
लिखनञ्चैवमीरितम् ॥
सर्व्वेषामेव पत्राणां
विधिं ज्ञात्वा लिखेत्तु
यः ।
स्वदेशे कीर्त्तिमाप्नोति
तथा देशान्तरेष्वपि ॥
एवं शास्त्रक्रमं ज्ञात्वा
यो लिखेद्राजपत्रकम्
।
स राजमन्त्रिभिः सार्द्धं
यशः प्राप्नोत्यनुत्तमम्
॥
शास्त्रसन्दर्भमज्ञात्वा
यो लिखेद्राजपत्रकम्
।
स राजमन्त्रिभिः सार्द्धं
दुर्य्यशो महदाप्नुयात्
॥" * ॥
अथ पत्रनयनक्रमः ।
"राजपत्रं नयेन्मूर्द्ध्नि
ललाटे पात्रमन्त्रिणाम्
।
गुरुपत्रं नयेन्मूर्द्ध्नि
ब्राह्मणानान्तथैव च ॥
यतिसन्न्यासिनाञ्चैव
स्वामिनश्च तथैव च ।
सादरेणैव यत्नेन तथा
मूर्द्धनि धारयेत् ॥
भार्य्यापुत्त्रस्य
मित्रस्य हृदये धारयेत्
सुधीः ।
प्रवीराणां कण्ठदेशे
पत्रधारणमीरितम् ॥
एतेषाञ्चैव पत्राणामुक्तं
धारणलक्षणम् ।
अन्येषामपि पत्राणां
नियमो नात्र दर्शितः
॥"
अथ पत्रपठनप्रकारः ।

अथ गुरुपत्रस्य ।
"सांख्यसिद्धान्तनिपुणं सनमस्कारकं पदम् ।
विन्यस्य विलिखेत् प्राज्ञो गुरुपत्रपदक्रमम् ॥"
अथ स्वामिपत्रस्य ।
"प्रवर्य्यं सनमस्कारं प्राणप्रियादिकं पदम् ।
विन्यस्य विलिखेद्धीमान् स्वामिपत्रपदक्रमम् ॥"
अथ भार्य्यापत्रस्य ।
"प्राणप्रियापदं साध्वीं तथा सच्चरितादिकम् ।
भार्य्यापत्रं लिखेद्विद्वान् पदक्रममनुत्तमम् ॥"
अथ पुत्रस्य ।
"प्राणपुत्त्रपदं तद्वत्तथा सच्चरितादिकम् ।
आशीर्व्वचनसंयुक्तं पुत्त्रपत्रपदक्रमम् ॥"
अथ पितृपत्रस्य ।
"प्रभुवर्य्यं नमस्कारं तथा सच्चरितादिकम् ।
विन्यस्य विलिखेत् पुत्त्रः पितृपत्रपदक्रमम् ॥"
अथ सन्न्यासियतिपत्रस्य ।
"सर्व्ववाञ्छाविनिर्मुक्तं सर्व्वशास्त्रार्थपारगम् ।
सन्न्यासियतिपत्रेषु विलिखेच्च पदक्रमम् ॥"
सामान्यस्य ।
"सामान्यभृत्यशत्रूणां विनियोज्यामुकं प्रति ।
शस्त्रावशेषितपदं छागतुल्यादिकं तथा ॥
एतेषामेव पत्रेषु यथायोग्यानुसारतः ।
विन्यस्य विलिखेत् प्राज्ञः पदक्रममनुत्तमम् ॥"
श्रीशब्दविन्याससंख्या यथा, --
"षड्गुरोः स्वामिनः पञ्च द्वे भृत्येचतुरो रिपौ ।
श्रीशब्दानां त्रयं मित्रे एकैकं पुत्त्रभार्य्ययोः ॥" * ॥
अथ राज्ञः प्रशस्तिः ।

स्वस्तिगीर्व्वाणचयचूडारत्नराजिरोचिश्चुम्बित

चन्द्रचूडचरणनखेन्दुवृन्दचन्द्रिकासन्दोहास्वाद
चतुरचेतश्चकोरवरविषमसमरसञ्चरत्प्रबलतर
तुरगखुरपुटपटलदलितभूपृष्ठोत्तिष्ठद्भूयिष्ठधूलि-
धाराधूसरितसकलहरिदन्तरप्रचण्डभुजदण्ड
भ्राजमानखरतरासिवित्रासितप्रत्यर्थिपृथ्वीपति-
सार्थप्रार्थितानुकम्पासुधासम्पातानवरतविद्वद्द
रिद्र्यविद्रावणद्रविणराशिविश्राणनसमुपार्ज्जितो-
र्ज्जितयशोमरालावलिकवलितवलिदधीचिसञ्चित
यशोमृणालजालभूपालकुलतिलकश्रीयुतमहा-
राजाधिराजेषु ॥ १ ॥

कोषगोकृषिकृषीवलगजवाजिगृहपरिवारहर्ष
हेतुनीतिसेतुरक्षणनिपुणेषु । अस्मद्विश्वासैक-
निकेतनेषु श्रीश्रीमन्त्रिप्रवीरेषु आशीराशिनिवे-
दनकोऽयं वर्णभूतोऽत्रत्यं भव्यमावेदयन् तत्रत्यं
भव्यमव्याहतमनुदिनमनुक्षणंपृच्छति स्म ॥ * ॥
अथ गुरुप्रशस्तिः ।

स्वस्तिश्रीनारायणपदपाथोरुहनिःसरन्मक

रन्दमधुपायमानमानसेषु । विविधविद्याविद्योति-
ताखिलगुणगणालङ्कृतवेदवेदाङ्गपारगस्वाश्रमो-
चिताचारसम्पन्नपरमहंसपरिव्राजकाचार्य्यसेव्य-
मानश्रीगोविन्दस्वरूपगुरुचरणारविन्देषु कोटि-
शः प्रणामाः ॥ * ॥
अथ भार्य्यायाः स्वामिप्रशस्तिः ।
स्वस्तिश्रीमदुद्दामप्रेमहेमभूषितास्मदादिभक्त-
जनेषु । कर्णयोरधिष्ठानेषु । नेत्रयोरधिदैवतेषु ।
कामस्य परिणामेषु । चतुर्व्वर्गप्रदायकेषु । ममा-
पररूपेषु । श्रीमत्स्वामिचरणारविन्देषु । गोविन्द
इवेन्दिरायाः शङ्कर इव गिरिजायाः महेन्द्र इव
पुलोमजायाः प्रतिदिनं वर्द्धमाना समाराधना
प्रणामपूर्व्वमास्ताम् ॥ * ॥
अथ भर्त्तुर्भार्य्याप्रशस्तिः ।
स्वस्तिश्रीमत्समस्तप्रेमपारलावण्यमूर्त्तौप्रिय-
तमायां नेत्रयुग्मस्य कनीनिकायामिव चन्द्रस्य
क्षणदायामिव कमलाकरस्य कमलिन्यामिव
पथिकस्य छायायामिव तृषातुरस्य शीतलामृत-
धारायामिव मम सप्रेम निवेदयन्ती पत्री
शुभाशीराशीन्निवेदयतु सर्व्वदा ॥ * ॥
अथ पुत्रस्य पितरं प्रति प्रशस्तिः ।
स्वस्तिश्रीमदभिनववशम्बदचित्तचिन्तितस्वी
यानुरागानुरञ्जितानुगृहीतस्वगृह्यवर्गेषु । निज-
चरणसरोज-रञ्जितपरागसं रक्तास्म दादिभाल-
स्थलविशालभाग्यसम्भावुकेषु। श्रीयुतपितृचरण-
सरोरुहेषु । अकिञ्चित्करकिङ्करस्यमम वद्ध-
करसम्पुटस्यावनीपृष्ठलग्नाःसाष्टाङ्गप्रणतयः
सहस्रमजस्रं विज्ञाप्यञ्च ॥ * ॥
अथ पितुः पुत्त्रं प्रति प्रशस्तिः ।
स्वस्तिश्रीविश्वेश्वरचरणसरोरुहानुग्रहसमा
सादितातिविततानवद्यविद्याविलासपीयूषपर-
म्परापराभावुकानुपममाधुरीधुरीणविविधगुण

"पत्रं धृत्वा नमस्कृत्य
पूर्ब्बाग्रं स्थापयेत् सुधीः ।
दक्षिणाग्रेण सदसि नृपाग्रे राजलेखकः ॥
पत्रं वितत्य सदसि द्विवारं मनसा पठेत् ।
स्फुटं पश्चात् प्रवक्तव्यमक्षोभो राजलेखकः ॥
रहसि श्रावयेत् पत्रं शुभं वा यदि वाशुभम् ।
पत्रं श्रुत्वा विदित्वार्थं सभायां श्रावयेत्ततः ॥
रहस्य-पत्रं रहसि नृपाग्रे श्रावयेद्द्विजः ।
अशुभं नैव सदसि शुभं पत्रं नृपाज्ञया ॥
एवं क्रमेण पत्रार्थं श्रावयित्वा द्विजोत्तमः ।
नृपतेः सन्निधौ स्थित्वा नृपाज्ञामनुवर्त्तते ॥"

अथ पत्रचिह्नानि ।

"ऊद्‌र्ध्वे षडङ्गुलं त्यक्त्वा वर्त्तुलं चन्द्रविम्बवत् ।
कस्तूरीकुङ्कुमैः कुर्य्याद्राजपत्रं सुचिह्नितम् ॥
मन्त्रिणां कुङ्कुमेनैव पण्डितस्यैव चन्दनैः ।
गुरूणां चन्दनेनैव सिन्दूरेणैव स्वामिनः ॥
भार्य्यायाश्चाप्यलक्तेन चन्दनैः पितृपुत्त्रयोः ।
सन्न्यासिनां चन्दनेन यतीनां कुङ्कुमेन च ॥

स्वस्तिप्रचण्डदोर्दण्डखण्डखण्डितारिमण्डल-मुण्डोन्मुक्तमुक्तावलीमण्डितसंग्रामाङ्गनरिङ्गमाणानेकवारणवाहादिकायकाण्डवक्रतरनक्रचक्रचंक्रमणदुरतिक्रमणीयापगापतिप्रभूतयशश्चन्द्रचन्द्रिकाद्योतविद्योतिताखिलजगन्मण्डलविविधद्रविणार्पणसन्तोषितसूरिसमूहस्तूयमानावदातकीर्त्तिनर्त्तकीनर्त्तनलीलालेमलेपितगीतिधुरीणोर्व्वश्यादिवेश्याजनसविलासगीयमानगुणश्रवणान्दोलिताखण्डश्रवणकुण्डलपरितःप्रसर्पितप्रतापतपनोत्तापितारातितितिसमध्यासितनिकुञ्जकुञ्ज-प्रस्तुतसौन्दर्य्यगाथाप्रमुदितश्रीमन्नारायणचरणकिङ्करश्रीयुतमहाराजदानशौण्डेषु ॥ २ ॥ * ॥

अथ मन्त्रिप्रशस्तिः ।

स्वस्तिश्रीमत्समस्तसामन्तसेनकनिर्व्वाहकेषु । लङ्कृतनिजवंशावतंससकलविश्वासनिधाननिजकुलपवित्रीकृतात्मप्रायेषु । श्रीयुतशुद्धाचारपरिपूरितपुत्त्रेषु शुभाशिषां राशयः सन्तु विज्ञाप्यञ्च ॥ * ॥

अथ सन्न्यासियतिप्रशस्तिः ।

स्वस्तिश्रीमत्परमहंसपरिव्राजकाचार्य्यकरण-निपुणतापराङ्मुखेषु । विषमविषयदोषदर्शनदूषितप्रपञ्चरचनाविभावेषु । वेदवेदान्तसांख्यसिद्धान्तबद्धदेवप्रकृतिपुरुषविवेकज्ञानशीलेषु । संख्यावन्मुख्यवन्दितचरणारविन्दस्वाश्रमोचितचारपरिपालनपवित्रीकृतधरित्रीतलेषु । सकलभूदेव-पूजित-श्रीयुत-गोस्वामि-चरणारविन्देषु ।

रक्तचन्दनपङ्केन
भृत्यस्य समुदीरितम्
।
शोणितेनैव शत्रूणां
पत्रचिह्नं प्रकल्पयेत् ॥
एतेषाञ्चैव सर्व्वेषां
यथायोग्यानुसारतः ।
पत्रस्योद्‌र्ध्वे तु
मतिमान् कुर्य्यात्
चिह्नं सुवर्त्तुलम् ॥”
अथ राजपत्रस्य
कोणच्छेदनप्रकारः ।
“दक्षिणे पत्रकोणस्य
अधस्तात छेदयेत्
सुधीः ।
एकाङ्गुलप्रमाणेन
राजपत्रस्य चैव हि ॥”
अथ राजपत्रादेः
पदन्यासः ।
“महाराजाधिराजञ्च
दानशौण्डं तथैव च ।
तथा सच्चरितं योज्यं
कल्पवृक्षादिकं न्यसेत्
॥
यथायोग्यानुसारेण
तथैव गुणभेदतः ।
राजपत्रेषु सर्व्वेषु
पदन्यासक्रमं विदुः
॥”
अथ मन्त्रिपत्रस्य ।
“प्रवरं गुणमेदेन तथा
सच्चरितादिकम् ।
विन्यस्य विलिखेत्
प्राज्ञो मन्त्रिपत्रे
पदक्रमम् ॥”
अथ पण्डितस्य ।
“संख्यावद्वन्दितपदं
शास्त्रार्थनिपुणादिकम्
।
पण्डितानाञ्च पत्रेषु
विलिखेद्वै पदक्रमम्
॥”

ममावनीसंलग्नाः साष्टाङ्गप्रणामसहस्रमजस्रंओं
नमो नारायणायेति मन्त्रेणाकलितमस्तु ॥ * ॥
अथ भृत्यप्रशस्तिः ।
१ँस्वस्तिभगवच्चरणपरायणसकलद्रविणाधि
रक्षकगोमहिष्यादिप्रतिपालकनिखिलवंशानु-
सेवकवशंवदामुकभृत्यं प्रति ॥ * ॥
अथारिप्रशस्तिः ।
स्वस्तिसमराङ्गनभ्रष्टप्रतिभटयशःपरिपूरित
सकलसामन्तराजधानीविजृम्भितवीरशस्त्राव
शेषितनिजवंशानुरक्षकसततपरित्रस्तशरणा
गतामुकं प्रति ॥ * ॥
अथ विवेकिनां प्रशस्तिः ।
स्वस्तिश्रीभगवत्पदपङ्कजपूजनोपचितपुण्य
पुञ्जपवित्रीकृतान्तःकरणदिग्विलासिनीविसर
द्धम्मिल्लमिलन्मल्लीमालाकलायशोऽनुबन्धिनिर
वधिवसुविश्राणनाधरीकृतसुरपुरभूमीरुहेषु ।
स्वस्तिश्रीमत्परमेश्वरपादपाथोरुहास्वाद-
चतुरचित्तचञ्चरीकभूवृन्दारकवृन्दावनजनिता
मितयशःपटीरपङ्कपटलालङ्कृतदिगङ्गनागणस्तन-
तटप्रबलप्रतापौर्व्वखर्व्वीकृतप्रत्यर्थिसार्थगर्व्वाकू-
पारपारेषु ।” इति वररुचिकृतपत्रकौमुदी ॥

**पत्रकं**, क्ली, (पत्रमेव । पत्र + स्वार्थे कन् ।)
वृक्षस्य पत्रम् । पत्रावली । इति शब्दरत्ना-
वली । तेजपत्रम् । अस्य गुणः । कफवाय्वर्शो-
हृल्लासारुचिनाशित्वम् । इति राजवल्लभः ।
शालिञ्चशाके पुं । इति रत्नमाला ॥

**पत्रकाहला**, स्त्री, (पत्रकाणां आहला शब्दः ।)
पिञ्जोला । पत्रशब्दः । इति हारावली ॥

**पत्रकृच्छ्रः**, पुं, (पत्रैः पत्रक्वाथैः साध्यः कृच्छ्रो-
व्रतविशेषः ।) पर्णकृच्छ्रव्रतम् । यथा, --
“पर्णोदुम्बरराजीवविल्वपत्रकुशोदकैः ।
प्रत्येकं प्रत्यहं पीतैः पर्णकृच्छ्र उदाहृतः ॥”
इति याज्ञवल्क्यः ॥
“पलाशोदुम्बरारविन्द-श्रीवृक्ष-पर्णानामेकैकेन
क्वथितमुदकं प्रत्यहं पिबेत् कुशोदकञ्च एक-
स्मिन्नहनीति पञ्चाहसाध्यः पर्णकृच्छ्रः ।” इति
मिताक्षरा ॥

**पत्रगुप्तः**, पुं, (पत्राणि गुप्तानि अस्य ।) त्रिकण्टः ।
यत्र ।) शरपत्ररचना । यथाह
हारावली ।
“शराणां पत्ररचना पत्रणा
परिकीर्त्तिता ॥”

**पत्रतण्डुली**, स्त्री, (पत्रेषु तण्डुलवत् विद्यते-
ऽस्याः । अर्श-आदित्वादच् ।
गौरादित्वात्
ङीष् ।) यवतिक्ता । इति
राजनिर्घण्टः ॥

**पत्रतरुः**, पुं, (पत्रप्रधानस्तरुः । शाकपार्थिववत्
समासः ।) दुष्खदिरः । इति
राजनिर्घण्टः ॥

**पत्रदारकः**, पुं, (पत्रवत् दारयति वृक्षाणि इति ।
दॄ + णिच् + ण्वुल् ।) क्रकचः । इति
त्रिकाण्ड-
शेषः । करात् इति भाषा ॥

**पत्रनाडिका**, स्त्री, (पत्रस्य नाडिका ।) पत्रशिरा ।
इति जटाधरः ॥

**पत्रपरशुः**, पुं, (पत्रे घातुनिर्म्मितपत्राकारे परशु-
रिव । तच्छेदकत्वात्तथात्वम् ।)
स्वर्णकारा-
दीनां स्वर्णादिच्छेदिका । छेनी इति
भाषा ।
तत्पर्य्यायः । व्रश्चनः २ । इत्यमरः ।
२ । १० । ३३ ॥
पत्रपर्शुः ३ । इति शब्दरत्नावली ॥

**पत्रपा**, स्त्री, (अपत्रपणमिति । अप + त्रप् + अच् ।
निपातनात् अकारलोपः ।) अपत्रपा
। लज्जा ।
इति शब्दरत्नावली ॥

**पत्रपालः**, पुं, (पत्रवत् पल्यते प्राप्यतेऽसौ । पत्र +
पलं गतौ + घञ् ।) आयता छुरिका ।
इति
विचित्रता यत्र ।) स्तनकपोलादौ
कस्तूरिकादि-
रचितपत्रावली । तत्पर्य्यायः । पत्रलेखा
२
पत्रवल्ली ३ पत्रलता ४ पत्राङ्गुली ५ । इति
हेमचन्द्रः ॥ पत्राङ्गुलिः ६ पत्रभङ्गी ७
पत्रकम् ८
पत्रभङ्गिः ९ पत्रावली १० । इति
शब्दरत्नावली ॥

**पत्रभङ्गी**, स्त्री, (पत्रभङ्ग + गौरादित्वात् ङीष् ।)
पत्रभङ्गः । इति शब्दरत्नावली ॥

**पत्रयौवनं**, क्ली, (पत्राणां यौवनं यत्र ।) पल्लवम् ।
नूतनपत्रम् । यथा, जटाधरः ।
“नवोद्गते किशलयं किशलं पत्रयौवनम्
॥”

**पत्ररथः**, पुं, स्त्री, (पत्रं पक्षो रथो यानमिव यस्य ।)
पक्षी । इत्यमरः । २ । ५ । ३३ ॥ (यथा,
भाग-
वते । १ । ६ । १३ ।
“चित्रस्वनैः पत्ररथैर्विभ्रमद्भ्रमरश्रियम् ।
नलवेणुशरस्तम्बकुशकीचकगह्वरम् ॥”)

**पत्रलं**, क्ली, द्रपसम् । अघनदधि । इति हेमचन्द्रः ॥

**पत्रलेखा**, स्त्री, (पत्राणां कस्तूरिकादिरचितपत्रा-
कृतीणां लेखा रचना ।) पत्रभङ्गः ।
इत्यमरः ॥
२ । ६ । १२२ ॥ (यथा, रघुः ६ । ७२ ।
“महेन्द्रमास्थाय महोक्षरूपं
यः संयति प्राप्तपिनाकलीलः ।
चकार वाणैरसुराङ्गनानां
गण्डस्थलीः प्रोषितपत्रलेखाः ॥”)

**पत्रवल्ली**, स्त्री, (पत्राणां रचितपत्राकृतीनां वल्ली
लतेव ।) पत्रभङ्गः । इति हेमचन्द्रः । ३ ।
३१९ ॥
(यथा, माघे । ८ । ५९ ।
“गण्डेषु स्फुटरचनाब्जपत्रवल्ली
पर्य्याप्तं पयसि विभूषणं बधूनाम् ॥”)

इति शब्दचन्द्रिका । तेकाँटा सिज् इति भाषा ॥

**पत्रधना**, स्त्री, (पत्रमेव धनं यस्याः । पत्र-

बाहुल्यात्तथात्वम् ।) सातलावृक्षः । इति राज-निर्घण्टः ॥

**पत्रङ्गं**, क्ली, (पत्रमज्यतेऽनेन । अञ्ज + करणे

घञ् । यद्वा पत्रवत् अङ्गं यस्य । शकन्धादित्वात् साधु ।) पत्राङ्गम् । रक्तचन्दनम् । इति शब्द-रत्नावली ।

**पत्रझङ्कारः**, पुं, (पत्रेषु झङ्कारस्तद्वत् शब्दो

यस्य ।) पुरोटिः । इति त्रिकाण्डशेषः । राय-भाटी इति भाषा ॥

**पत्रणा**, स्त्री, (अण प्राणे + अप् अणः ।

लक्ष्यं प्रतिगमनाय । पत्रैः अणो जीवनमिव

हेमचन्द्रः । ३ । ४४८ ॥

**पत्रपाली**, स्त्री, (पत्रवत् पालिरग्रभागो यस्याः । ङीप् ।

कर्त्तनी । इति हलायुधः ॥ काँची इति भाषा ।

**पत्रपाश्या**, स्त्री, (पाशानां समूहः पाश्या । पत्र-

मिव पाश्या ।) स्वर्णादिरचितललाटाभरणम् । इत्यमरः । २ । ६ । १०३ ॥ टीका इति भाषा ॥

**पत्रपिशाचिका**, स्त्री, (पत्रैः पत्रेण वा पिशा-

चीव । इवार्थे कन् ।) जलत्रा । टोका इति भाषा । तत्पर्य्यायः । खर्परः २ वारित्रा ३ मूर्द्धखोलम् ४ । इति त्रिकाण्डशेषः ॥ मस्तके पलाशपत्रबन्धनम् । यदुक्तं
"बन्धः पलाशपत्राणां शीर्षे पत्रपिशाचिका ॥"
इति हारावली ॥

**पत्रपुष्पः**, पुं, (पत्रं पुष्पमिव यस्य ।) रक्ततुलसी ।

इति शब्दचन्द्रिका ॥

**पत्रपुष्पकः**, पुं, (पत्रपुष्प इव कायते प्रकाशते इति ।

कै + कः ।) भूर्ज्जपत्रम् । इति शब्दमाला ॥

**पत्रपुष्पा**, स्त्री, (पत्रपुष्प + स्त्रियां टाप् ।) तुलसी ।

इति शब्दमाला ॥ क्षुद्रपत्रतुलसी । इति रत्न-माला ॥

**पत्रबन्धः**, पुं, (पत्राणां बन्धो बन्धनं यस्मिन् । पुष्प-

रचनाकाले हि पत्राणां ग्रन्थनं स्यादतस्तथा-त्वम् ।) पुष्परचना । यथा, शब्दरत्नावल्याम् ।

रुद्रजटा । पलाशी लता । इति राजनिर्घण्टः ॥ पर्णलता च ॥

**पत्रवाहः**, पुं, (पत्रेण पक्षच्छदेन उह्यते इति ।

वह + घञ् ।) बाणः । इति जटाधरः ॥ (पत्र लिपिं वहतीति । वह + अण् ।) लिपिवाहकेत्रि ॥

**पत्रशाकः**, पुं, (पत्रप्रधानः शाकः । शाकपार्थिववत्

समासः ।) षड्विधशाकान्तर्गतपत्रात्मकशाकः यथाह राजवल्लभः ।
"पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा ।
शाकं षड्विधमुद्दिष्टं गुरु विद्याद्यथोत्तरम् ॥"

**पत्रशिरा**, स्त्री, (पत्रस्य शिरेव ।) पत्रभङ्गः । तत-

पर्य्यायः । माढिः २ । इति हारावली ॥ पर्ण-नाडी च ॥

**पत्रश्रेणी**, स्त्री, (पत्राणां श्रेणीव ।) द्रवन्ती ।

इति राजनिर्घण्टः ॥ पर्णपंक्तिश्च ॥

**पत्रश्रेष्ठः**, पुं, (पत्रं श्रेष्ठं यस्य ।) विल्वः । इति

राजनिर्घण्टः ॥

**पत्रसूचिः**, पुं, (पत्राणां सूचिरिव ।) कण्टकम् ।

इति त्रिकाण्डशेषः ॥

**पत्रहिमं**, क्ली, (पत्रेषु हिमं यस्मिन् दिने ।) हिम-

दुर्द्दिनम् । इति त्रिकाण्डशेषः ॥

**पत्राख्यं**, क्ली, (पत्रमेव आख्या यस्य ।) तेजपत्रम् ।

इति शब्दचन्द्रिका ॥ तालीशपत्रम् । इति राज-निर्घण्टः ॥

“रचना च परिष्पन्दः पत्रबन्ध इति

त्रयम् ।

पत्रभङ्गप्रसूनादिरचनायांनिगद्यते ॥”

**पत्रबालः**, पुं, (पत्रवत् बल्यते ध्रीयतेऽस्मिन् । बल-

रक्षणे + अधिकरणे घञ् । अग्रभागे

पत्राकृते-

स्तथात्वम् ।) तुलाधटः । इति

त्रिकाण्डशेषः ।

दाँड् इति भाषा ॥

**पत्रभङ्गः**, पुं, (पत्राणां लिखितपत्राकृत्तीनां भङ्गो

**पत्राङ्गं**, क्ली, (पत्रमिव अङ्गं यस्य । यद्वा पत्रेषु
अङ्गतीति । अगि गतौ + अच् ।) रक्तचन्दनम् ।
रक्तचन्दनसदृशकाष्ठविशेषः । वकम् इति भाषा ।
इत्यमरः । २ । ६ । १३२ ॥ भूर्ज्जम् । पद्मकम् ।
इति मेदिनी ॥

**पत्राङ्गुलिः**, स्त्री, (पत्रं अङ्गुलिरिव यत्र । यद्वा
अङ्गुलिभिर्लिखितं रचितं पत्रं पत्राकृतिरत्र
इति परनिपातत्वात्तथात्वम् ।) पत्रभङ्गः ।
स्तनकपोलादौ कस्तूरिकादिरचितपत्रावली।
इत्यमरः । २ । ६ । १२२ ॥

**पत्राञ्जनं**, क्ली, (पत्रं लेखनपत्रमज्यतेऽनेन । पत्र +
अञ्ज + करणे ल्युट् ।) मसी । इति शब्द-
रत्नावली ॥

**पत्राढ्यं**, क्ली, (पत्रराढ्यम् ।) पिप्पलीमूलम् ।
पर्व्वततृणम् । इति राजनिर्घण्टः ॥

**पत्रान्यं**, क्ली, पत्तङ्गम् । इति राजनिर्घण्टः ॥

**पत्रालुः**, पुं, (पत्र + अस्त्यर्थे आलुः ।) कासालुः ।
इक्षुदर्भा । इति राजनिर्घण्टः ॥

**पत्रावलिः**, स्त्री, (पत्राणां पत्राकृतीनां आवलिः
पङ्क्तिरिव रचना यस्याः ।) गैरिकम् । इति
शब्दचन्द्रिका ॥ (पत्राणां आवलिः श्रेणी
राजिर्वा ।) पत्रश्रेणी च ॥

**पत्रावली**, स्त्री, (पत्रावलि + वा ङीप् ।) पत्रभङ्गः ।
इति शब्दरत्नावली ॥ नवदुर्गासम्प्रदानकमधु-
मिश्रितयवचूर्णयुक्तनवाश्वत्थपत्राणि । यथा, --
"अमायां निशि संघे तु पत्रे चाश्वत्थसंज्ञके ।
क्रमात् पत्रावली देयं मधुना यवचूर्णकम् ॥"
इति कैवल्यतन्त्रम् ॥
देवादिसन्निधौ सन्दिग्धवस्तुनोऽस्फुतरावधारणा-
र्थकब्राह्मणबालकोत्तोलिततत्तत्सन्देहकोटिलि-
खितपत्रसमूहश्च ॥

**पत्रिका**, स्त्री, (पत्री एव । स्वार्थे कन् ततो ह्रस्वः ।)
पत्री । लिपिः । यथा, ज्योतिषे ।
"आदित्यादिग्रहाः सर्व्वे नक्षत्राणि च राशयः ।
दीर्घमायुः प्रकुर्व्वन्तु यस्येयं जन्मपत्रिका ॥"
श्येनः । (यथा, नैषधे । १९ । १२ ।
"नभसि महसां
ध्वान्तध्वाङ्क्षप्रमापणपत्रिणा-
मिह विहरणैः श्यैनम्पातां रवेरवधारयन्
॥"
"पत्रिणां श्येनाख्यपक्षिरूपाणाम् ।"
इति तट्टी-
कायां नारायणः ॥ पत्राणि च्छदानि
सन्त्यस्य ।
अत इनिः ।) वृक्षः । रथी । पर्व्वतः ।
इति
मेदिनी ॥ तालः । श्वेतकिणिही ।
गङ्गापत्री ।
पाची । इति राजनिर्घण्टः ॥
पत्रविशिष्टे, त्रि ॥

**पत्री**, स्त्री, (पत्र + स्त्रियां ङीप् ।) लिपिः । पत्रम्
।
यथा, जातके ।
"श्रीमत्पङ्कजिनीपतिः
कुमुदिनीप्राणेश्वरो
भूभवः
शाशाङ्किः सुरराजवन्दितपदो
दैत्येन्द्रमन्त्री शनिः ।
स्वर्भानुः शिखिनां गणो
गणपतिर्ब्रह्मेशलक्ष्मीधरा-
स्त्वां रक्षन्तु सदैव यस्य विमला पत्री
मया
लिख्यते ॥"

**पत्रोपस्करः**, पुं, (पत्रमेव उपस्कर उपकरणं
यस्य ।)
कासमर्द्दः । इति हारावली ॥

**पत्रोर्णं**, क्ली, (पत्रजा ऊर्णा साधनत्वेनास्त्यस्य
।
"अर्श आदिभ्योऽच् ।" ५ । २ । १२७
। इति अच् ।)
वटलकुचादिपत्रेषु क्रिमिभिरुर्णायाः
कृतत्वात्
पत्रसम्बन्धिनी ऊर्णा अत्रेति । इति
भरतः ॥
त्रिकाण्डशेषः ॥ पथिकसंहतिः ३ ।
इति हारा-
वली ॥

**पथिका**, स्त्री, (पथिक + टाप् ।) कपिलद्राक्षा ।
इति राजनिर्घण्टः ॥

**पथिद्रुमः**, पुं, (पथिः प्राप्तगुणो द्रुमः ।
बहुगुणवत्त्वा-
त्तथात्वम् ।) स्वदिरवृक्षः । इति
जटाधरः ॥
श्वेतखदिरः । इति राजनिर्घण्टः ॥

**पथिलः**, त्रि, (पथति गच्छतीति । पथ गतौ +
"मिथिलादयश्च ।" उणां । १ । ५८ ।
इति
निपातनात् साधुः ।) पथिकः ।
इत्युणादिकोषः ॥

**पथिवाहकः**, त्रि, (पन्थानं वाहयतीति । वह
+ णिच् + ण्वुल् ।) शाकुनिकः । निष्ठुरः
। इति
शब्दमाला ॥ भारवाहकश्च ॥

**पथ्यं**, त्रि, (पथिन् + "धर्म्मपथ्यर्थन्यायादनपेते
।"
४ । ४ । ९२ । इति यत् ।)
चिकित्सादौ हित-
कारकम् । तत्पर्य्यायः । करणम् २
हितम् ३ ।
इति शब्दचन्द्रिका ॥ आत्मीयम् ४
आयुष्यम्
५ । सैन्धवे क्ली । इति राजनिर्घण्टः
॥

**पथ्यः**, पुं, (पथि साधुः । दिगादित्वात् यत् इनो-
लोपः ।) हरीतकीवृक्षः । यथा, --
शिवायां वनतिक्तः स्यात् पथ्यः
सुन्दरमातृकौ ।"
इति शब्दमाला ॥

**पथ्यशाकः**, पुं, (पथ्यं हितकरं शाकं यस्य ।)
तण्डु-
लीयशाकः । इति राजनिर्घण्टः ॥

(प्रशस्तपत्रं विद्यते यस्याः । पत्र + विद्यमानार्थे ठन् । कदल्यादिनवपत्रिका । यथा, दुर्गोत्सव-पद्धतौ ।
"कदली दाडिमी धान्यं हरिद्रा मानकं कचु ।
विल्वाशोकौ जयन्ती च विज्ञेया नवपत्रिका ॥")

**पत्रिकाख्यः**, पुं, (पत्रिका आख्या यस्य ।) कर्पूर-भेदः । इति राजनिर्घण्टः ॥ पत्रिकानामके त्रि ॥

**पत्रिणी**, स्त्री, (पत्राणि सन्त्यस्याः । पत्र + इनिः । स्त्रियां ङीप् ।) पल्लवः । इति शब्दचन्द्रिका ॥

**पत्री**, [न्] पुं, (पत्रं पक्षो विद्यतेऽस्य । पत्र + इनिः ।) वाणः । (यथा, रघुः । ११ । ८४ ।
"शंस किं गतिमनेन पत्रिणा
हन्मि लोकमुत ते मखार्ज्जितम् ॥")
पक्षी । इत्यमरः । ३ । ३ । १०५ ॥ (यथा, रघुः ११ । २९ ।
"तं क्षुरप्रशकलीकृतं कृती
पत्रिणां व्यभजदाश्रमाद्बहिः ॥")
घौतकौषेयम् । इत्यमरः । २ । ६ । ११३ ॥ (यथा, महाभारते । १३ । १११ । १०३ ।
"पत्रोर्णं चोरयित्वा तु क्रकरत्वं
नियच्छति ॥")

**पत्रोर्णः**, पुं, (पत्रेषु ऊर्णा यस्य ।) श्योणाकवृक्षः । इत्यमरः । २ । ४ । ५६ ॥

**पत्सलं**, क्ली, (पतति गच्छति अस्मिन् । पत ऌ गतौ + "पते रश्च लः ।" उणां । ३ । ७४ । इति सरन् रस्य लश्च ।) पन्थाः । इत्युणादिवृत्तिः ॥

**पथ**, इ क गत्याम् । इति कविकल्पद्रुमः ॥ (चुरां-परं-सकं-सेट् । इदित् ।) इ क, पन्थयति । इति दुर्गादासः ॥

**पथ**, ए ज गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् । ज्वलादिः ।) ए, अपथीत् । ज, पाथः पथः । इति दुर्गादासः ॥

**पथः**, पुं, (पथति गच्छति अत्र । पथ गतौ + घञर्थ अधिकरणे कः ।) पन्थाः । इति त्रिकाण्डशेषः ॥

**पथन्**, [त्] पुं, पथः । इत्यमरटीका ॥ (पथति गच्छति । पथ गतौ + शतृ ।) गमनकर्त्ता च ॥

**पथिकः**, त्रि, पन्थानं गच्छति यः । (पथिन् + "पथः ष्कन् ।" ५ । १ । ७५ । इति ष्कन् षो ङीषर्थः ।)
पथगन्ता । (यथा, गोः रामायणे । १ । ५ । १० ।
"नानापथिकदूतैश्च
वणिग्भिश्चोपशोभिताम् ।
देवतायतनैश्चैव विमानैरिव शोभिताम्
॥")

**पथ्या**, स्त्री, (पथ्य + टाप् ।) हरीतकी । (यथा, हठयोगदीपिकायाम् । ३ । ३५ ।
"ततः सैन्धवपथ्याभ्यां चूर्णिताभ्यां
प्रकर्षयेत् ।"
पुनः सप्तदिने प्राप्ते रोममात्रं समुच्छिनेत्
॥")
मृगेर्व्वारुः । चिर्भिटा ॥ बन्ध्या कर्कोटकी । इति राजनिर्घण्टः ॥ (संसाररोगस्य पथ्यस्वरूपत्वात् गङ्गापि पथ्यस्वरूपा । यथा, काशीखण्डे २९ । ११२ ।
"पद्मनाभपदार्घ्येण प्रसूता पद्ममालिनी
।
परर्द्धिर्व्वदा पुष्टिकरी पथ्या पूर्त्तिः
प्रभावती ॥")

**पथ्यादिगुग्गुलुः**, पुं, (पथ्या आदिर्यस्य तथाविधो गुग्गुलुः ।) औषधविशेषः । यथा, --
"पथ्या विभीतामलकीफलानां
शतं क्रमेण द्विगुणाभिवृद्धम् ।
प्रस्थेन युक्तञ्च पलङ्कषाणां
द्रोणे जले संस्थितमेकरात्रम् ॥
अर्द्धावशेषं क्वथितं कषायं
भाण्डे पचेत्तत् पुनरेव लोहे ।
अमूनि वह्नेरवतार्य्य दद्यात्
द्रव्याणि संचूर्ण्य पलार्द्धकानि ॥
विडङ्गदन्तीत्रिफलागुडूची-
कृष्णात्रिवृन्नागरकोषणानि ।
यथेष्टचेष्टस्य नरस्य शीघ्रं
हिमाम्वुपानानि च भोजनानि ॥
निषेव्यमानो विनिहन्ति रोगान्
सगृध्रसीं नूतनखञ्जताञ्च ।
प्लीहानमुग्रं जठरार्त्तिगुल्मं
पाण्डुत्वकण्डुत्वविवातरक्तम् ॥

तत्पर्य्यायः । अध्वनीनः २ अध्वगः ३ अध्वन्यः
४ पान्थः ५ । इत्यमरः । २ । ८ । १७ ॥ गन्तुः ६
यातुः ७ पथकः ८ यात्रिकः ९ यातृकः १० ।
इति शब्दरत्नावली ॥ पथिलः ११ । इत्युणादि-
कोषः ॥

**पथिकसन्ततिः**, स्त्री, (पथिकानां सन्ततिः समूहः ।)

पथिकसङ्घः । तत्पर्य्यायः । हारिः २ । इति

पथ्यादिको गुग्गुलुरेष नाम्ना
ख्यातः क्षितावप्रमितप्रभावः ।
बलेन नागेन समं मनुष्यं
जवेन कुर्य्यात्तुरगेण तुल्यम् ॥
आयुःप्रकर्षं विदधाति चक्षु-
र्ब्बलं तथा पुष्टिकरो विषघ्नः ।
क्षतस्य सन्धानकरो विशेषा-
द्रोगेषु शस्तः सकलेषु तज्ज्ञैः ॥”
इति भावप्रकाशः ॥

**पथ्यापथ्यं**, क्ली, (पथ्यं रोगिणां हितकरं अपथ्यं
अशुभकरं द्वयोः समाहारः ।) रोगाणां हिता-
हितकारकद्रव्याणि ।
तत्र तरुणज्वरे पथ्यं यथा ।
वमनम् । लङ्घनम् । कालोऽष्टाहः । यवागुः ।
स्वेदनम् । कटुतिक्तरसौ । एतानि पाचनानि
॥ * ॥
नवज्वरे अपथ्यं यथा ।
स्नानम् । विरेकः । सुरतम् । कषायः ।
व्यायामः ।
अभ्यञ्जनम् । दिवानिद्रा । दुग्धम् । घृतम् ।
वैद-
लम् । आमिषम् । तक्रम् । सुरा ।
स्वादुगुरुद्रष-
द्रव्याणि । अन्नम् । प्रवातः । भ्रमणम् ।
कोपः ॥ * ॥
मध्यज्वरे पथ्यं यथा ।
पुरातनषष्टिकः । पुरातनशालिः । वार्त्ताकुः
।
शोभाञ्जनम् । कारवेल्लः । वेत्राग्रम् । आषाढ-
फलम् । पटोलम् । कर्क्कोटकम् ।
मूलकपोतिका ।
मुद्गमसूरचणककुलत्थमुकुष्टकानां यूषः ।
पाठा ।
अमृता । वास्तूकम् । तण्डुलीयः । जीवन्ती
।
काकमाची । सुपक्वानि
द्राक्षाकपित्थदाडिम-
वैकङ्कतफलानि । लघूनि सात्म्यानि च भेष-
जानि ॥ * ॥

विल्वम् । तिन्दुकम् । दाडिमद्वयम् ।
तिल-
कम् । कञ्चटदलम् । चाङ्गेरी ।
विजया ।
अरुणा । जातीफलम् । अहिफेनम् ।
जीरकः ।
गिरिमल्लिका । कुस्तुम्वुरु ।
महानिम्बम् । सकल-
कषायरसः । दीपनानि
लघून्यन्नपानानि । नाभे-
र्द्व्यङ्गुलतोऽधस्तात् तथा
वंशास्थिमूले शस्त्रेण
अर्द्धचन्द्रवद्दाहः ॥ * ॥
अतीसारे अपथ्यं यथा ।
स्वेदः । अञ्जनम् । रुधिरमोक्षणम् ।
अम्वुपानम् ।
स्नानम् । व्यवायः । जागरणम् ।
धूमः । नस्यम् ।
अभ्यञ्जनम् । सकलवेगधारणम् ।
रूक्षाणि ।
असात्म्यमशनम् । विरुद्धान्नम् ।
गोधूमः ।
माषः । यवः । वास्तूकम् ।
काकमाची ।
निष्पावः । कन्दः । मधुशिग्रुः ।
रसालम् ।
पूगम् । कुष्माण्डम् । तुम्बी । वदरम्
। गुर्व्व-
न्नम् । गुरुपानम् । ताम्वूलम् । इक्षुः
। गुडः ।
मद्यम् । उपोदिका । द्राक्षा ।
अम्लवेतसफलम् ।
लशुनम् । धात्री । दुष्टाम्वु । मस्तु ।
गृहवारि ।
नारिकेलम् । स्नेहनम् । मृगमदः ।
अखिल-
पत्रशाकम् । क्षारः । सर्व्वाणि सराणि
। पुन-
र्नवा । इर्व्वारुकम् । लवणम् ।
अम्लम् ॥ * ॥

अम्लम् । लवणरसः । गुर्व्वन्नम् । गुरुपानम् ।
सर्व्वे पूपाः ॥ * ॥
अथार्शसि पथ्यम् ।
विरेचनम् । लेपनम् । अस्रमोक्षः । क्षारः ।
अग्निकर्म्म । शस्त्रकर्म्म । पुरातनलोहितशालयः ।
पुरातनषष्टिकाः । यवाः । कुलत्थाः । गोधाखु-
गजोष्ट्रकूर्म्माविकलिङ्गाजखरौतुकीशतरक्षुचास्न
शृगालकाकानां मांसानि । स्वल्पमांसाः
प्रसहाः । पटोलम् । पत्तूरः । रसोनकम् ।
वह्निः । पुनर्नवा । शूरणः । वास्तूकम् । जीव-
न्तिका । दन्तशठः । सुरा । त्रुटिः । वयःस्था ।
नवनीतम् । तक्रम् । कक्कोलम् । धात्री । रुच-
कम् । कपित्थम् । औष्ट्रमूत्राज्यपर्य्यांसि । भल्ला-
तकम् । सर्षपतैलम् । गोमूत्रम् । सौवीरम् ।
तुषोदकम् । वातापहान्नपानम् । अग्निवर्द्धकान्न-
पानम् ॥ * ॥
अर्शसि अपथ्यं यथा ।
आनूपमामिषम् । मत्स्यः । पिण्याकः । दधि ।
पिष्टकम् । माषः । करीरम् । निष्पावः ।
विल्वम् । तुम्बी । उपोदिका । पक्वाम्रम । सर्व्व-
शालूकम् । विष्टम्भीनि । गुरूणि । आतपः ।
जलपानम् । वमनम् । वस्तिकर्म्म । नदीनां
सलिलम् । विरुद्धानि सर्व्वाणि । पूर्ब्बदिग्भव-
वायुः । वेगरोधः । स्त्रियः । पृष्ठयानम् । उत्-
कटकासनम् । यथास्वं दोषलं द्रव्यम् । रक्त-
पित्तिनां यद्यत् पथ्यापथ्यं तत्तदपि रक्तार्शो-
रोगिणां बिशेषतो विद्यात् ॥ * ॥
अथाग्निमान्द्याजीणादौपथ्यम् ।
श्लौष्मके पूर्ब्बं बमनम् । पैत्तिके मृदुरेचनम् ।
वातिके स्वेदनम् । यथावस्थं हितवस्तूनि । नाना-
प्रकारव्यायामः । दीपनानि । लघूनि । बहु-
कालसमुत्पन्ना मुद्गलोहितशालयः । विलेपी ।
लाजमण्डः । मुद्गभवमण्डः । सुरा । एणः ।
वर्ही । शशः । लावः । सर्व्व क्षुद्रमत्स्यः । शालिञ्च-
शाकम् । वेत्राग्रम् । वास्तूकम् । बालमूलम् ।
लशुनम् । वृद्धकुष्माण्डम् । नवीनकदलीफलम् ।
शोभाञ्जनम् । पटोलम् । वार्त्ताकुः । नलदाम्वु ।
कर्क्कोटकम् । कारवेल्लम् । बार्हतम् । महा-
र्द्रकम् । प्रसारणी । काकमाची । चाङ्गेरी ।
सुनिषण्णकम् । धात्रीफलम् । मातुलुङ्गम् ।

अथ पुराणज्वरे पथ्यम् ।
विरेचनम् । छर्द्दनम् । अञ्जनम् । नस्यम् ।
धूमः ।
अनुवासनम् । सिराव्यधः । संशमनम् ।
प्रदेहः ।
अभ्यङ्गः । अवगाहः । शिशिरोपचारः ।
एणः ।
कुलिङ्गः । हरिणः । मयूरः । लावः । शशः ।
तित्तिरिः । कुक्कुटः । क्रौञ्चः । कुरङ्गः ।
पृषतः ।
चकोरः । कपिञ्जलः । वर्त्तकः । कालपुच्छः
।
गोक्षीरम् । अजाक्षीरम् । गोघृतम् । अजा-
घृतम् । हरीतकी । पर्व्वतनिर्झराम्भः ।
एरण्ड-
तलम् । सितचन्दनम् । ज्योत्स्ना । प्रिया-
लिङ्गनम् ॥ * ॥
व्यायामञ्च व्यवायञ्च स्नानं चंक्रमणं तथा ।
ज्वरमुक्तो न सेवेत यावन्नो बलवान् भवेत् ॥
* ॥
अथातिसाररोगे पथ्यम् ।
वमनम् । लङ्घनम् । निद्रा । पुराणाः शालि-
षष्टिकाः । विलेपी । लाजमण्डः । मसूर-
तुवरीशशैणलावहरिणकपिञ्जलभवयूषः ।
सर्व्वे
क्षुद्रमत्स्याः । शृङ्गी । खुड्डीशः । मधुरा-
लिका । तैलम् । छागघृतक्षीरे । गोदधितक्रे
।
गवाजयोर्दधिजं पयोजं वा नवनीतम् । नव-
रम्भापुष्पम् । नवरम्भाफलम् । क्षौद्रम् ।
जम्वु-
फलम् । भव्यम् । महार्द्रकम् । निम्बम् ।
शालु-
कम् । विकङ्कतम् । कपित्थम् । वकुलम् ।

अथ ग्रहणीरोगे पथ्यम् ।
निद्रा । छर्द्दनम् । लङ्घनम् ।
पुरातनशालयः ।
पुरातनषष्टिकाः । लाजमण्डः ।
मसूरतुवरी-
मुद्गभवयूषः ।
निःशेषोद्धृतसारगव्यदधि । गवां
छाग्या वा पयोजं नवनीतम् ।
छागघृतपयो-
दधीनि । तिलतैलम् । सुरा ।
माक्षिकम् ।
शालूकम् । वकुलम् । दाडिमयुगम् ।
नव्यं
भव्यम् । रम्भापुष्पम् । रम्भाफलम् ।
तरुण-
विल्वम् । शृङ्गाटकम् । चाङ्गेरी ।
विजया ।
कपित्थम् । कुटजम् । अजाजी ।
कशेरुः ।
तक्रम् । कञ्चटपल्लवम् । तिलकम् ।
जाती-
फलम् । जाम्बवम् । धन्याकम् ।
तिन्दुकम् ।
महानिम्बम् । अरुणा । अफेनम् ।
क्रव्यात् ।
लावशशैणतित्तिरिमांसयूषः । सर्व्वे
क्षुद्रमत्स्याः ।
खुड्डीशः । मधरालिकामत्स्यः ।
खलिशः ।
सर्व्वकषायरसः ।
नाभेर्द्व्यङ्गुलतोऽधस्तात् तथा
वंशास्थिमूले
प्रज्वलितायसार्द्धचन्द्रवद्दाहः ॥ * ॥
ग्रहण्यामपथ्यं यथा ।
रक्तस्रुतिः । जागरः । अम्बुपानम् ।
स्नानम् ।
स्त्री । वेगविधारणम् । नस्यम् ।
अञ्जनम् ।
स्वेदनम् । धूमपानम् । श्रमः ।
विरुद्धाशनम् ।
आतपः । गोधूमः । निष्पावः ।
कलायः ।

दाडिमम् । यवः । पर्प्पटः । अम्लवेतसम् । जम्बी-
रम् । नागरङ्गम् । माक्षिकम् । नवनीतम् ।
घृतम् । तक्रम् । सौवीरकम् । तुषोदकम् ।
धान्याम्लम् । कटुतैलम् । रामठम् । लवणार्द्र-
कम् । यमानी । मरिचम् । मेथी । धान्यकम् ।
जीरकम् । दधि । ताम्वूलम् । तप्तसलिलम् ।
कटुरसः । तिक्तरसः ॥ * ॥
अग्निमान्द्याजीर्णादौ अपथ्यं यथा ।
विरेचनम् । विण्मूत्रवायूनां वेगधारणम् । अति-
रिक्ताशनम् । अध्यशनम् । जागरणम् । विषमा-
शनम् । रक्तस्रुतिः । शमीध्यानम् । मत्स्यः ।
मांसम् । उपोदिका । जलपानम् । पिष्टकम् ।

| | | |
|---|---|---|
| | माषः । यवः । आर्द्रकम् । छत्रकम् । राज-<br>माषः । उपोदिका । वास्तूकः । काकमाची ।<br>कुष्माण्डः । तुम्बी । मधुशिग्रुः । कन्दः । ताम्वू-<br>लम् । इक्षुः । वदरम् । रसालम् । इर्व्वारुकम् ।<br>पूगफलम् । रसोनम् । धान्याम्लम् । सौवीरम् ।<br>तुषोदकम् । दुग्धम् । गुडः । मस्तु । नारि-<br>केलम् । पुनर्नवा । बार्हतम् । वैणवम् । सर्व्वाणि<br>पत्रशाकानि । दुष्टाम्वु । गोमूत्रम् । मृग-<br>नाभिः । क्षारम् । समस्तानि सराणि । द्राक्षा । | |

जाम्बवम् । सर्व्वशालूकम् ।
कूर्च्चिका । मोरटः ।
क्षीरम् । किलाटः । प्रपानकम् ।
तालास्थि-
शस्यम् । बालतालम् । स्नेहनम् ।
दुष्टवारि ।
विरुद्धपानान्नम् । असात्म्यपानान्नम्
। विष्ट-
म्भीनि । गुरूणि ।
फलवर्त्तिं वमिं स्वेदं लङ्घनं
चापतर्पणम् ।
विशेषादलसे
कुर्य्याद्विसूच्यामतिसारवत् ॥ * ॥
अथ क्रिमिरोगे पथ्यम् ।
आस्थापनम् । कायविरेचनम् ।
शिरोविरे-
चनम् । धूमः । कफघ्नानि द्रव्याणि ।
शरीर-
मार्ज्जना । पुरातनवैणवरक्तशालयः
। पटोलम् ।
वेत्राग्रम् । रसोनम् । वास्तूकम् ।
हुताशः ।
मन्दारदलम् । सर्षपाः । नवीनमोचम्
। बृहती-
फलम् । तिक्तानि नालीचदलानि ।
मौषिक-
मांसम् । विडङ्गम् । पिचुमर्द्दपल्लवम् ।
पथ्या ।
तिलतैलम् । सर्षपतैलम् । सौवीरम् ।
शुक्तम् ।
तुषोदकम् । मध । पचेलिमतालम् ।
अरु-
ष्करम् । गोमूत्रम् । ताम्बूलम् । सुरा ।
मृगा-
ण्डजम् । औष्ट्रमूत्राज्यपयांसि ।
रामठम् ।
क्षारः । अजमोदा । खदिरः ।
वत्सकम् ।
जम्बीरनीरम् । सुषवी । यमानिका ।
सुराह्वा-

प्रियङ्गुनीवारयवप्रशातिकाः । मुद्गः । मसूरः ।
चणकः । तुवरी । मुकुष्टकः । चिङ्गटः । वर्म्मि-
मत्स्यः । शशः । कपोतः । हरिणः । एणः ।
लावः । शरालिः । पारावतः । वर्त्तकः । वकः ।
उरभ्रः । कालपुच्छः । कपिञ्जलः । कषायवर्गः ।
गोदुग्धघृतम् । अजादुग्धघृतम् । महिषीघृतम् ।
पनसम् । पियालम् । रम्भाफलम् । कञ्चटम् ।
तण्डलीयः । पटोलम् । वेत्राग्रम् । महार्द्रकम् ।
पुराणकुष्माण्डफलम् । पक्वतालम् । तद्बीजजलम् ।
वासा । स्वादूनि । विल्वम् । दाडिमम् । खर्ज्जू-
रम् । धात्री । मिषिः । नारिकेलम् । कशेरु ।
शृङ्गाटकम् । पौष्करम् । कपित्थम् । शालू-
कम् । परूषकम् । भूनिम्बशाकम् । पिचुमर्द्द-
पत्रम् । तुम्वी । कलिङ्गम् । लाजशक्तवः ।
द्राक्षा । सिता । माक्षिकम् । ऐक्षवम् । शीतो-
दकम् । औद्भिदवारि । सेकः । अवगाहः ।
शतधौतसर्पिः । अभ्यङ्गः । शिशिरप्रदेहः ।
हिमानिलः । चन्दनम् । इन्दुपादाः । मनोऽनु-
कूलविचित्रकथा । धारागृहम् । सुशीतं भूमि-
गृहम् । वैदूर्य्यमुक्तामणीनां धारणम् । रम्भोत्-
पलाम्भोरुहपत्राणां शय्या । क्षौमाम्बरम् ।
सुशीतोपवनम् । प्रियङ्गुः । चन्दनरूषितानां
वराङ्गनानामालिङ्गनम् । पद्माकरसरिश्चन्द-
चन्द्रोदयहिमवद्दरीसुशीतलगिरिनिर्झराणामा-
लिङ्गनम् । श्रुतिप्रशस्तकीर्त्तनम् । प्रवीणनीरम् ।
हिमवालुका ॥ * ॥
रक्तपित्ते अपथ्यं यथा ।
व्यायामः । अध्वनिषेवणम् । रविकरः । ती-
क्ष्णानि कर्म्माणि । क्षोभः । वेगधारणम् ।
चपलता । हस्त्यश्वयानानि । स्वेदः । अस्रस्रुतिः ।
धूमपानम् । सुरतः । क्रोधः । कुलत्थः । गुडः ।
वार्त्ताकुः । तिलः । माषः । सर्षपः । दधि ।
क्षारः । कौपपयः । ताम्बूलम् । नलदाम्बु ।
मद्यम् । लशुनम् । शिम्बी । विरुद्धाशनम् । कटु ।
अम्लम् । लवणम् । विदाहिद्रव्यम् ॥ * ॥
अथ राजयक्ष्मणि पथ्यम् ।
घृतपक्वमरिचजीरकसंस्कृतलावतित्तिरिजरसः ।
दोषाधिकस्य बलिनोऽग्रे मृदुशुद्धिः । गोधूमः ।
मुद्गः । चणकः । अरुणशालयः । छागानि मांस-
नवनीतपयोघृतानि । क्रव्याट्मांसम् । जाङ्ग-

गाहनम् । हर्म्यम् । स्रजः । स्मरकथा ।
मृदु-
गन्धवाहः । गीतानि । लास्यम् ।
चन्द्ररुचिः ।
विपञ्ची । मृगदृशां सन्दर्शनम् । हेमचूर्णम्
।
मुक्तामणिप्रचूरभूषणधारणम् । होमः ।
प्रदा-
नम् । अमरपूजा । द्विजपूजा । हृद्यान्न-
पानम् ॥ * ॥
राजयक्ष्मणि अपथ्यं यथा ।
विरेचनम् । वेगधारणम् । श्रमः । स्त्री ।
स्वेदः ।
अञ्जनम् । प्रजागरः । साहसकर्म्मसेवा ।
रूक्षान्नपानम् । विषमाशनम् । ताम्बू लम्
।
कालिङ्गम् । कुलत्थम् । माषः । रसोनम्
। वंशा-
ङ्कुरः । रामठम् । अम्लम् । तिक्तम् ।
कषायः ।
सर्व्वकटु । पत्रशाकः । क्षारः ।
विरुद्धाशनम् ।
शिम्बी । कर्कोटकम् । विदाहिद्रव्यम् ।
कृष्ण-
कठिल्लकम् ॥ * ॥
अथ कासे पथ्यम् ।
स्वेदः । विरेचनम् । छर्दिः । धूमपानम् ।
समा-
शनम् । शालिः । षष्टिकः । गोधूमः ।
श्यामाकः ।
यवः । कोद्रवः । आत्मगुप्ता ।
माषमुद्गकुलत्थानां
रसाः । ग्राम्योदकम् ।
अनूपधन्वदेशभवविविध-
मांसानि । सुरा । पुरातनसर्पिः ।
छागदुग्धम् ।
छागघृतम् । वास्तूकम् । षायसीशाकम् ।
वार्त्ताकुः । बालमूलकम् । कण्टकारी ।
कास-
मर्द्दः । जीवन्ती । सुनिषण्णकम् । द्राक्षा ।

गुरुसिंशपोद्भवक्षारः ।
तिक्तकटुकषायरसाः ॥ * ॥
क्रिमिरोगे अपथ्यं यथा ।
छर्द्दिः । तद्वेगविधारणम् ।
विरुद्धपानाशनम् ।
दिवानिद्रा । द्रवद्रव्यम् । पिष्टान्नम् ।
अजीर्ण-
भोजनम् । घृतम् । माषः । दधि ।
पत्रशाकम् ।
मांसम् । पयः । अम्लः । मधुररसः ॥
* ॥
अथ पाण्डरोगे पथ्यम् ।
छर्द्दिः । विरेचनम् ।
पुरातनयवगोधूमशालयः ।
मुद्गाढकीमसूराणां यूषः ।
जाङ्गलजरसः । पटो-
लम् । वृद्धकुष्माण्डम् ।
तरुणकदलीफलम् ।
जीवन्ती । क्षुरः । मत्स्याक्षी । गुडूची
। तण्डु-
लीयकम् । पुनर्नवा । द्रोणपुष्पी ।
वार्त्ताकुः ।
लशुनद्वयम् । पक्वाम्रम् । अभया ।
विम्बी । शिङ्गी
मत्स्यः । गोमूत्रम् । धात्री । तक्रम् ।
घृतम् ।
तैलम् । सौवीरकम् । तुषोदकम् ।
नवनीतम् ।
गन्धसारः । हरिद्रा । नागकेशरम् ।
यवक्षारः ।
लौहभस्म । कषायद्रव्यम् । कुङ्कुमम् ।
चरणयोः
सन्धौ नाभेर्द्व्यङ्गुलादधः मस्तके
हस्तयोर्मूले
स्तनकक्षयोर्मध्ये च दाहः ।
यथादोषमिदं पथ्यं
पाण्डुरोगवतां भवेत् ॥ * ॥
पाण्डुरोगे अपथ्यं यथा ।
रक्तस्रुतिः । धूमपानम् । वमिः ।
वेगधारणम् ।
स्वेदनम् । मैथुनम् । शिम्बी ।
पत्रशाकानि ।

लजा रसाः । मार्त्तण्डचण्डकिरणपरिशोषितसु
चूर्णितपक्वपललं लेह्यम् । रागाः । काम्बलिकः ।
षाडवः । वेशवारः । शशाङ्ककिरणः । मधुर-
रसः । मोचपनसाम्राणां पक्वफलानि । धात्री ।
खर्ज्जूरम् । पौष्करम् । परूषकम् । नारि-
केलम् । शोभाञ्जनम् । वकुलम् । नवताल-
शस्यम् । द्राक्षा । मिषिः । माणिमन्थम् ।
सिंहास्यपत्रम् । अजागोमहिषीघृतम् । छागा-
श्रयः । छागावस्करमूत्रलेपः । मत्स्यण्डिका ।
शिखरिणी । मदिरा । रसाला । कर्पूरम् ।
मृगमदः । सितचन्दनम् । अभ्यञ्जनानि । सुरभी-
ण्यनुलेपनानि । स्नानम् । वेशरचनम् । अव-

विम्बी । मातुलुङ्गम् । पौष्करम् । वासकः
।
त्रुटिः । गोमूत्रम् । लशुनम् । पथ्या ।
व्योषम् ।
उष्णोदकम् । मधु । लाजाः । दिवसनिद्रा
।
लघून्यन्नानि ॥ * ॥
कासे अपथ्यं यथा ।
वस्तिः । नस्यम् । असृङ्मोक्षः । व्यायामः
।
दन्तघर्षणम् । आतपः । दुष्टपवनः । रजः
।
मार्गनिषेवणम् । विष्टम्भीनि । विदाहीनि ।
विविधरूक्षाणि ।
शकृन्मूत्रोद्गारकासवमिवेग-
विधारणम् । मत्स्यः । कन्दः । सर्षपः ।
तुम्बी ।
उपोदिका । दुष्टाम्बु । दुष्टान्नपानम् ।
विरुद्धा-
शनम् । गुरुशीतान्नपानम् ॥ * ॥
अथ श्वासे पथ्यम् ।
विरेचनम् । स्वेदनम् । धूमपानम् ।
प्रच्छर्द्दनम् ।
दिवास्वपनम् । पुरातनाः
षष्टिकरक्तशालिकुलत्थ-
गोधूमयवाः । शशः । अहिभुक् ।
तित्तिरिः ।
लावः । दक्षः । शुकादयः । धन्वमृगाः ।
धन्व-
पक्षिणः । पुरातनसर्पिः । अजादुग्धघृतम्
।
सुरा । मधु । निदिग्धिका । वास्तूकम् ।
तण्डु-
लीयः । जीवन्तिका । मूलकपोतिका ।
पटो-
लम् । वार्त्ताकुः । रसोनम् । पथ्या ।
जम्बीरम् ।
विम्बीफलम् । मातुलुङ्गम् । द्राक्षा । त्रुटिः
।
पौष्करम् । उष्णवारि । कटुत्रयम् ।
गोमूत्रम् ।

| | | |
|---|---|---|
| रामठम् । माषः । अम्बुपानम् ।<br>पिण्याकः ।<br>ताम्बू लम् । सर्षपः । सुरा ।<br>मृद्भक्षणम् । दिवा-<br>स्वप्नः । तीक्ष्णानि । लवणानि ।<br>सिन्धुविन्ध्याद्रि-<br>जातनदीनां जलम् । सर्व्वाण्यम्लानि<br>। दुष्टाम्भः ।<br>विरुद्धाशनानि । गुर्व्वन्नम् । विदाहीनि<br>॥ * ॥<br>अथ रक्तपित्ते पथ्यम् ।<br>अधोगमे छर्द्दनम् । ऊद्‌र्ध्वनिर्गमे<br>विरेचनम् ।<br>उभयत्र लङ्घनम् । पुरातनाः<br>षष्टिकशालिकोद्रव- | | कफानिलघ्नान्यन्नपानभेषजानि ।<br>वक्षःप्रदेशात्<br>पार्श्वयुग्मे करस्थयोर्मध्यमयोर्द्वयोः<br>कण्ठकूपे च<br>प्रदीप्तलौहेन दाहः ॥ * ॥<br>श्वासे अपथ्यं यथा ।<br>मूत्रोद्‌गारच्छर्द्दितृट्कासानांरोधः ।<br>नस्यम् । |

वस्तिः । दन्तकाष्ठम् । श्रमः । अध्वा ।
भारः ।
रेणुः । सूर्य्यकिरणः । विष्टम्भीनि ।
ग्राम्यधर्म्मः ।
विदाहीनि । आनूपमामिषम् । निष्पावः ।
श्लेष्म-
कारीणि । माषः । रक्तस्रावः ।
पूर्ब्बवातान्न-
पानम् । मेषीघृतदुग्धम् । दुष्टजलम् ।
मत्स्यः ।
कन्दः । सर्षपः । रूक्षशीतगुर्व्वन्नपानम् ॥
* ॥
अथ हिक्कायां पथ्यम् ।
स्वेदनम् । वमनम् । नस्यम् । धूमपानम्
। विरे-
चनम् । निद्रा । स्निग्धानि लघून्यन्नानि ।
लव-
णानि ।
जीर्णकुलत्थगोधूमशालिषष्टिकयवाः।
एणतित्तिरिलावाद्या जाङ्गला मृगपक्षिणः
।
पक्वकपित्थभ् । लशुनम् । पटोलम् ।
बालमूल-
कम् । पौष्करम् । कृष्णतुलसी । मदिरा ।
नल-
दाम्वु । उष्णोदकम् । मातुलुङ्गम् ।
माक्षिकम् ।
सुरभिजलम् ।
वातश्लेष्महराण्यन्नपानानि ।
शीताम्वुसेकः । सहसा त्रासः ।
विस्मापनम् ।
भयम् । क्रोधः । हर्षः । प्रियोद्वेगः ।
प्राणा-
यामनिषेवणम् । दग्धसिक्तमृदाघ्राणम्।
कूर्च्चे
धाराजलार्पणम् । नाभ्यूद्र्ध्वपीडनम् ।
पायूद्र्ध्वं
नाभेद्‌र्व्यङ्गुलादूद्र्ध्वञ्च दीपदग्धहरिद्रया
दाहः ॥ * ॥
हिक्कायां अपथ्यं यथा ।

दधि । तक्रम् । आर्द्रकम् । कक्कोलम् ।
खर्ज्जू-
रम् । पियालम् । तिन्दुकम् । पक्वकपित्थम् ।
वदरम् । विकङ्कतम् । तालास्थिमज्जा । हिम-
वालुका । सिता । पथ्या । यमानी । मरिचम् ।
रामठम् । स्वाद्वम्लतिक्तानि । देहमार्जना ॥ *
॥
अरोचके अपथ्यम् ।
कासोद्गारक्षुधानिद्रावमीनांवेगधारणम् ।
अहृ-
द्यान्नम् । असृङ्मोक्षः । क्रोधः । लोभः । भयम्
।
शोकः । दुर्गन्धः । सूर्य्यसेवा ॥ * ॥
अथ छर्द्यां पथ्यम् ।
विरेचनम् । छर्द्दनम् । लङ्घनम् । स्नानम् ।
मृजा ।
लाजमण्डः । पुरातनाः षष्टिकशालिमुद्गाः ।
कलायः । गोधूमः । यवः । मधु । शशाहिभुक्-
तित्तिरिलावकाद्याः । जाङ्गलमृगपक्षिणः ।
मनोज्ञनानारसगन्धरूपारसाः । षाडवा यूषाः
।
रागाः । खडाः । काम्बलिकाः । सुरा । वेत्रा-
ग्रम् । कुस्तुम्बुरु । नारिकेलम् । पचेलिमानि
जम्बीरधात्रीसहकारकोलद्राक्षाकपित्थानि।
ह-
रीतकी । दाडिमम् । बीजपूरम् । जातीफलम्
।
बालकम् । निम्बम् । वासा । सिता । शताह्वा ।
करिकेशरम् । हितमनःप्रीतिकरभक्ष्याः ।
भुक्तस्य
वक्त्रे शिशिराम्बुसेकः । कस्तूरिका । चन्दनम्
।
इन्दुकिरणः । मनोज्ञगन्धान्यनुलेपनानि । सु-
गन्धिपुष्पपानफलानि ।
स्वमनोऽनुकूलरूपरस-
गन्धस्पर्शशब्दाः । नाभेस्त्रियवोपरिष्टाद्दाहः ॥
*
छर्द्यां अपथ्यम् ।
नस्यम् । वस्तिः । स्वेदनम् । स्नेहपानम् ।
रक्त-

अम्लम् । लवणम् । कषायः । कटुः । स्त्रियः
।
दुष्टजलम् । तीक्ष्णम् ॥ * ॥
अथ मूर्च्छायां पथ्यम् ।
सेकः । अवगाहः । मणिः । हारः । शीताः ।
प्रदेहाः । व्यजनानिलः । शीतानि गन्धवन्ति
पानानि । धारागृहम् । शीतमरीचिरोचिः ।
धूमः । अञ्जनम् । लावणम् । अस्रमोक्षः ।
दाहः ।
सूचीपरितोदनम् । लोम्नां कचानाञ्च लुञ्च-
नम् । नखान्तपीडा । दशनोपदंशः । नासा-
मुखद्वारमरुन्निरोधः । विरेचनम् । छर्द्दनम् ।
लङ्घनम् । क्रोघः । भयम् । दुःखकरी शय्या
।
विचित्रा मनोहराः कथाः । छाया ।
नभोऽम्भः ।
शतधौतसर्पिः । मृदूनि । तिक्तानि ।
लाजमण्डः ।
जीर्णयवलोहितशालयः । कौम्भं हविः ।
मुद्ग-
यूषः । सतीलयूषः । धन्वोद्भवा मांसरसाः ।
रागाः । षाडवाः । गव्यपयः । सिता ।
पुराण-
कुष्माण्डम् । पटोलम् । मोचम् । हरीतकी ।
दाडिमम् । नारिकेलम् । मधूकपुष्पम् ।
तण्डु-
लीयः । तुषोदकम् । लघून्यन्नानि । प्रनीर-
नीरम् । सितचन्दनम् । कर्पूरनीरम् । हिम-
वालका । अत्युच्चशब्दः । अद्भुतदर्शनम् ।
उत्-
कटगीतम् । उत्कटवाद्यम् । श्रमः । स्मृतिः
।
चिन्तनम् । आत्मबोधः । धैर्य्यम् ॥ * ॥
मूर्च्छायामपथ्यं यथा ।
ताम्बूलम् । पत्रशाकम् । व्यवायः । स्वेदनम्
।
कटुः । तृन्निद्रयोर्व्वेगरोधः । तक्रम् ॥ * ॥
अथ मदात्यये पथ्यम् ।
संशोधनम् । संशमनम् । स्वपनम् । लङ्घनम्
।

वातमूत्रोद्गारकासशकृद्वेगधारणम् । रजः ।
अनिलः । आतपः । विरुद्धाशनम् ।
विष्टम्भीनि ।
विदाहीनि । रूक्षाणि । कफदानि ।
निष्पावः ।
पिष्टकः । माषः । पिण्याकः ।
आनूपमामिषम् ।
अविदुग्धम् । दन्तकाष्ठम् । वस्तिः ।
मत्स्यः ।
सर्षपम् । अम्लम् । तुम्बी । कन्दः ।
तैलभृष्टम् ।
उपोदिका । गुरुशीतान्नपानम् ॥ * ॥
अथ स्वरभेदे पथ्यम् ।
स्वेदः । वस्तिः । धूमपानम् । विरेकः ।
कवल-
ग्रहः । नस्यम् । भालसिरावेधः । यवः ।
लोहित-
शालिः । हंसाटवी । ताम्रचूडकेकिनां
मांस-
रसाः । सुरा । गोकण्टकः । काकमाची ।
जीवन्ती । बालमूलकम् । द्राक्षा । पथ्या । मातु-
लुङ्गम् । लशुनम् । लवणार्द्रकम् ।
ताम्बूलम् ।
मरिचम् । सर्पिः ॥ * ॥
स्वरभेदे अपथ्यम् ।
आमकपित्थम् । वकुलम् । शालूकम् ।
जाम्ब-
वम् । तिन्दुकम् । कषायः । वमिः ।
स्वप्नः ।
प्रजल्पनम् । अनुपानम् ॥ * ॥
अथारोचके पथ्यम् ।
वस्तिः । विरेकः । यथाबलं वमनम् ।
धूमोप-
सेवा । कवडग्रहः । तिक्तकाष्ठेन
दन्तधावनम् ।
चित्रान्नपानम् । गोधूमः । मुद्गाः ।
लोहित-
शालयः । षष्टिका । वराहच्छागशशैणानां
मांसम् । चेङ्गः । झसाण्डम् । मधुरालिका ।

स्रावः । दन्तकाष्ठम् । द्रवान्नम् । वीभत्सदर्श-
नम् । भीतिः । उद्वेगः । उष्णस्निग्धासात्म्या-
हृद्यवैरोधिकान्नम् । रम्भा । शिम्बी । कोष-
वती । मधूकम् । चित्रा । सूक्ष्मैला । सर्षपः ।
देवदाली । व्यायामः । छत्रिका । अञ्जनम् ॥ * ॥
अथ तृष्णायां पथ्यम् ।
शोधनम् । वमनम् । निद्रा । स्नानम् ।
कवलधार-
णम् । दीपदग्धहरिद्रया जिह्वाधःशिरयोर्द्वाहः ।
कोद्रवाः । शालयः । पेयाः । विलेपी । लाज-
शक्तवः । अन्नमण्डः । धन्वरसः । शर्करा ।
रागः ।
षाडवः । भृष्टमुद्गमसूरचणककृतरसः ।
रम्भा-
पुष्पम् । तैलकूर्च्चम् । द्राक्षा । पर्पटपल्लवः ।
क-
पित्थम् । कोलम् । मल्लिका । कुष्माण्डकम् ।
उपो-
दिका । खर्ज्जूरम् । दाडिमम् । धात्री । कर्कटी ।
नलदाम्बु । जम्बीरम् । करमर्द्दम् । बीजपूरम् ।
गवां पयः । मधूकपुष्पम् । ह्रीवेरम् । तिक्तानि ।
मघुराणि । बालतालाम्वु । शीताम्बु । पयःपेटी ।
प्रपानकम् । माक्षिकम् । सरसीतोयम् ।
शताह्वा ।
नागकेशरम् । एला । जातीफलम् । पथ्या ।
कुस्तुम्बुरु । टङ्कणम् । घनसारः । गन्धसारः ।
कौमुदी । शिशिरानिलः । चन्दनार्द्रप्रियाश्लेषः ।
रत्नाभरणधारणम् । हिमानुलेपनम् ॥ * ॥
तृष्णाया अपथ्यम् ।
स्नेहः । अञ्जनम् । स्वेदः । धूमपानम् ।
व्यायामः ।
नस्यम् । आतपः । दन्तकाष्ठम् । गुर्व्वन्नम् ।

श्रमः ।
सम्बत्सरसमुत्पन्नशालिषष्टिकयवमुद्ग-
माषगोधूमसतीलाः । रागः । षाडवः । एण-
तित्तिरिलावाजदक्षवर्हिशशानामामिषम् ।
वेश-
वारः । विचित्रान्नम् । हृद्यमद्यम् । पयः ।
सिता । तण्डुलीयः । पटोलम् । मातुलुङ्गम् ।
परूषकम् । स्वर्ज्जूरम् । दाडिमम् । घात्री ।
नारिकेलम् । गोस्तनी । पुराणसर्पिः ।
कर्पूरम् ।
प्रनीरम् । शिशिरानिलः । धारागृहम् । चन्द्र-
पादाः । मणयः । मित्रसङ्गमः । क्षौमाम्बरम् ।
प्रियाश्लेषः । उद्धतगीतवादित्रम् । शीताम्ब ।
चन्दनम् । स्नानम् ॥ * ॥
मदात्यये अपथ्यं यथा ।
स्वेदः । अञ्जनम् । धूमपानम् । लावणम् ।
दन्त-
घर्षणम् । ताम्बू लम् ॥ * ॥
अथ दाहे पथ्यम् ।
शालयः । षष्टिकाः । मुद्गाः । मसूराः ।
चणकाः ।
यवाः । घन्वमांसरसाः । लाजमण्डः ।
लाज-
शक्तवः । सिता । शतधौतघृतम् । दुग्धम् ।
पयोभवनवनीतम् । कुष्माण्डम् । कर्कटी ।
मोचम् । पनसम् । स्वादुदाडिमम् । पटोलम् ।
पर्पटम् । द्राक्षा । धात्रीफलम् । परूषकम् ।
शिम्बी । तुम्बी । पयःपेटी । खर्ज्जूरम् ।
धान्य-
कम् । मिसिः । बालतालम् । पियालम् ।
शृङ्गा-
टकम् । कशेरुकम् । मधूकपुष्पम् । ह्रीवेरम् ।

| | | |
|---|---|---|
| इल्लिशः । प्रोष्ठी । खलेशः । कवयी । रोहितः । कर्कारुः । वेत्राग्रम् । नवीनमूलकम् । वार्त्ताकुः । शोभाञ्जनम् । मोचम् । दाडिमम् । भव्यम् । पटोलम् । रुचकम् । घृतम् । पयः । बाल-तालम् । रसोनम् । शूरणम् । द्राक्षा । रसा-लम् । नलदाम्वु । काञ्जिकम् । मद्यम् । रसाला । | | |

पथ्या । सर्व्वाणि तिक्तानि । शीताः
प्रदेहाः ।
भूवेश्म । सेकः । अभ्यङ्गः ।
अवगाहनम् ।
पद्मोत्पलदलक्षौमाणां शय्या ।
शीतलकाननम् ।
विचित्रा कथा । गीतानि । शिशिरः ।
मञ्जु-
भाषणम् । उशीरचन्दनालेपः ।
शीताम्बु ।
शिशिरानिलः । घारागृहम् ।
प्रियास्पर्शः ।
प्रनीरम् । हिमवालुका ।
सुधांशुरश्मयः । स्नानम् ।
मणयः । मघुररसः ॥ * ॥
दाहे अपथ्यम् ।
विरुद्धान्यन्नपानानि । क्रोधः ।
वेगधारणम् ।
गजाश्वयानम् । अध्वा । क्षारम् ।
पित्तकराणि ।
व्यायामः । आतपः । तक्रम् ।
ताम्बूलम् ।
मधु । रामठम् । व्यवायः । कटुः ।
तिक्तः ।
उष्णः ॥ * ॥
अथोन्मादे भूतोन्मादे च पथ्यम् ।
मरुद्भवे पूर्ब्बं स्वेदः । पित्तोदभवे
पूर्ब्बं विरेकः ।
कफोद्भवे पूर्ब्बं वमनम् । ततःपरं
वस्तिविधिः ।
नस्यम् । सन्तर्जनम् । ताडनम् ।
अञ्जनम् ।
आश्वासनम् । त्रासनम् । बन्धनम् ।
भयम् ।
हर्षणम् । दानम् । धूपः । दमः ।
विस्मरणम् ।
प्रदेहः । शिराव्यधः । संशमनम् ।
सेकः ।
आश्चर्य्यकर्म्माणि । घूमपानम् ।
धीधैर्य्यम् ।

पूजाव्यतिक्रमः । पत्रशाकानि । विम्वी ।
आषाढ-
फलम् । तृष्णानिद्राक्षुधावेगाः ॥ * ॥
अथ वातरोगे पथ्यम् ।
अभ्यङ्गः । मर्द्दनम् । वस्तिः । स्नेहः । स्वेदः
।
अवगाहनम् । संवाहनम् । संशमनम् ।
प्रावृतिः ।
वातवर्ज्जनम् । अग्निकर्म्म । उपनाहः ।
भूशय्या ।
स्नानम् । आसनम् । तैलद्रोणी । शिरोवस्तिः
।
शयनम् । नस्यम् । आतपः । सन्तर्पणम् ।
बृंह-
णम् । किलाटः । दधि । कूर्च्चिका । सर्पिः ।
तैलम् । वसा । मज्जा । स्वाद्वम्ललवणा
रसाः ।
नवीनतिलगोधूममाषाः ।
सम्बत्सरोषितशालि-
षष्टिकाः । कुलत्थरसः । सुरा । ग्राम्या
गोऽश्व-
तरोष्ट्ररासभच्छागलादयः । आनूपाः कोल-
महिषन्थङ्कखड्गिगजादयः । औदका हंस-
कादम्बचक्रमद्गुरकादयः । विलेशया भेक-
गोधानकुलश्वाविदादयः । जाङ्गलाः चटक-
कुक्कुटवर्हितित्तिरयः । शिलिन्दः । पर्व्वतः ।
नक्रः । गर्गरः । कवयी । इल्लिशः । एरण्डः ।
चुलुकी । कूर्म्मः । शिशुमारः । तिमिङ्गिलः ।
रोहितः । मद्गुरः । शृङ्गी । वर्म्मी । खुड्डीशः ।
एते झषाः । पटोलम् । शिग्रु । वार्त्ताकुः ।
लशुनम् । दाडिमद्वयम् । पक्वतालम् । रसा-
लम् । नलदाम्बु । परूषकम् । जम्बीरम् ।
वदरम् । द्राक्षा । नागरङ्गम् । मधूकजम् ।
प्रसारणी । गोक्षुरकः । शुक्लाक्षी । पारि-
भद्रकः । पयांसि । पयःपेटी । रुवुतैलम् ।
गवां
जलम् । मत्स्यण्डिका । ताम्बूलम् ।
धान्याम्लम् ।
निन्तिडीफलम् । स्निग्धोष्णभोज्यानि ।
स्निग्धो-

गुग्गुलावपथ्यम् ।
व्यायामः । आतपः । रूक्षम् । स्नानम् । बहु-
भाषणम् । प्रवातः । मैथुनम् । यानम् ॥ * ॥
अथ वातरक्ते पथ्यम् ।
उत्तानेऽभ्यञ्जनम् सेकः सोपनाहः प्रलेपनम् ।
गम्भीरे स्नेहपानं आस्थापनं विरेचनम् । सर्व्वत्र
सूचीजलौकशृङ्गालावुभिरस्रस्रुतिः । शतधौत-
घृताभ्यङ्गः । मेषीदुग्धावसेचनम् । यवः ।
षष्टिकः । नीवारः । कलमः । अरुणशालिः ।
गोधूमः । चणकः । मुद्गः । तुवरी । मुकुष्टकः ।
अव्यजामहिषीगवां पयः । लावः । तित्तिरिः ।
सर्पद्विट् । ताम्रचूडादिः । एते विष्किराः ।
प्रत्तदाः शुकदात्यूहकपोतचटकादयः । उपो-
दिका । काकमाची । वेत्राग्रम् । सुनिषण्णकम् ।
वास्तूकम् । कारवेल्लम् । तण्डुलीयः । प्रसारणी ।
पत्तूरः । वृद्धकुष्माण्डम् । सर्पिः । सम्पाकपल्ल-
वम् । पटोलम् । रुवुतैलम् । मृद्वीका । श्वेत-
शर्करा । नवनीतम् । सोमवल्ली । कस्तूरी ।
सितचन्दनम् । शिंशपागुरुदेवाह्वसरलस्नेह-
मर्द्दनम । तिक्तम् ॥ * ॥
वातरक्ते अपथ्यम् ।
दिवास्वप्नः । अग्निसन्तापः । व्यायामः । आतपः
।
मैथुनम् । माषः । कुलत्थः । निष्पावः । कलायः
।
क्षारसेवनम् । अम्बुजानूपमांसानि । विरुद्धानि ।
दधीनि । इक्षुः । मूलकम् । मद्यम् । पिण्या-
कम् । अम्लम । काञ्जिकम् । कटु । उष्णम् ।
गुरु । अभिष्यन्दि । लवणम् । शक्तवः ॥ * ॥
अथोरुस्तम्भे पथ्यम् ।
सर्व्वो रूक्षविधिः । स्वेदः । कोद्रवः । रक्तशालिः
।
यवः । कुलत्थः । श्यामाकः । पुरातनोद्दालाः ।
शोभाञ्जनम् । कारवेल्लम् । पटोलम् । लशुनम् ।
सुनिषण्णम् । काकमाची । वेत्राग्रम् । निम्ब-
पल्लवम् । पत्तूरः । वास्तूकम् । पथ्या । वार्त्ताकुः
।
तप्तवारि । सम्पाकशाकम् । पिण्याकम् । तक्रम् ।
अरिष्टम् । मधु । कटुः । तिक्तः । कषायः ।
क्षीरसेवा । गवां जलम् । यथाशक्तिव्यायामः ।

सत्वम् । आत्मनिवेदनम् ।
अभ्यञ्जनम् । स्वाप-
नम् । आसनम् । निद्रा ।
सुशीतान्यनुलेपनानि ।
गोधूमः । मुद्गः । अरुणशालयः ।
धारोष्णदुग्धम् ।
शतधौतसर्पिः । नवीनघृतम् ।
पुरातनघृतम् ।
कूर्म्मामिषम् । धन्वरसः । रसालम् ।
पुराण-
कुष्माण्डफलम् । पटोलम् ।
ब्रह्मीदलम् । वास्तू-
कम् । तण्डुलीयः । खराश्वमूत्रम् ।
गगनाम्बु ।
पथ्या । सुवर्णचूर्णम् । नारिकेलम् ।
द्राक्षा ।
कपित्थम् । पनसम् ॥ * ॥
उन्मादे अपथ्यम् ।
मद्यम् । विरुद्धाशनम् ।
उष्णभोजनम् । निद्रा-
क्षुत्तृष्णावेगधारणम् । व्यवायः ।
आषाढफलम् ।
कठिल्लकम् । पत्रशाकम् । तिक्तानि ।
विम्बी ॥ * ॥
अथापस्मारे पथ्यम् ।
वातोद्भवे पूर्ब्बं वस्तिः । पैत्तिके
विरेचनम् ।
श्लैष्मिके वमनम् । परं धूपनम् ।
अञ्जनम् । नस्यम् ।
शिराव्यधः । दानम् । त्रासनम् ।
बन्धनम् ।
भयम् । तर्ज्जनम् । ताडनम् । हर्षः
। धूम-
पानम् । विस्मयः । धीधैर्य्यम् ।
आत्मादिविज्ञा-
नम् । स्नानम् । अभ्यञ्जनम् ।
लोहितशालयः ।
मुद्गाः । गोधूमाः । प्रतनं हविः ।
कूर्म्मामिषम् ।
घन्वरसः । दुग्धम् । ब्रह्मीदलभ् ।
वचा । पटो-
ष्णानुलेपनम् । आमाशयमुपागते विशेषाद्वम-
नम् । पक्वाशयस्थे तथा मांसस्थे
स्निग्धविरेच-
नम् । प्रत्याध्मानाध्मानसङ्गेवर्त्तिः लङ्घनं
दीप-
नम् । अष्ठीलाख्ये गुल्मविधिः । शुक्रस्थे
क्षय-
जित्क्रिया । त्वङ्मांसासृक्सिराप्राप्ते रक्त-
मोक्षणम् ॥ * ॥
वातरोगे अपथ्यम् ।
चिन्ता । प्रजागरः । वेगधारणम् । छर्द्दिः ।
श्रमः । अनशनम् । चणकः । कलायः ।
नीवार-
कङ्गुयववैणवकोरदूषश्यामाकचूर्णम् । कुरु-
विन्दः । तृणधान्यानि । राजमाषः । मुद्गः ।
तडागसरिदम्बु । करीरम् । जम्बु । कशेरु ।
तलकम् । क्रमुकम् । मृणालम् ।
निष्पावबीजम् ।
तालफलास्थिमज्जा । शालूकम् । तिन्दुकम्
।
कठिल्लकम् । बालतालम् । विम्बी ।
पत्रशाकम् ।
उडुम्बरम् । शीताम्बु । रासभपयः । विरुद्ध-
मन्नम् । क्षारः । शुष्कपललम् । क्षतजस्रुतिः ।
क्षौद्रम् । कषायकटुतिक्तरसाः । व्यवायः ।
हस्त्यश्वयानम् । चंक्रमणम् । खट्वा ।
आध्मानि-
नोऽर्द्दितवतोऽपि विशेषात् स्नानम् । प्रदुष्ट-
सलिलम् । दन्तघर्षणम् ॥ * ॥
अथ वाते गुग्गुलुसेविनां पथ्यम् ।
क्षीरम् । मांसरसाः । यूषाः ।
कलमादिशालयः ।
यवगोधूममाषाः ॥ * ॥
स्थूलस्याक्रमणम् । अच्छह्रदे सन्तरणम् । नदीषु
प्रतिस्रोतः सन्तरणम् । श्लेष्मापहरणम् । अमा-
रुतकोपनम् ॥ * ॥
ऊरुस्तम्भे अपथ्यम् ।
गुरुशीतद्रवस्निग्धविरुद्धासात्म्यभोजनम्। विरे-
चनम् । स्नेहनम् । वमनम् । रक्तमोक्षणम् ।
वस्तिः ॥ * ॥
अथामवाते पथ्यम् ।
रूक्षस्वेदः । लङ्घनम् । स्नेहपानम् । वस्तिः ।
लेपः । रेचनम् । पायुवर्त्तिः । अब्दोत्पन्नशालि-
कुलत्थाः । जीर्णं मद्यम् । जाङ्गलानां रसः ।
वातश्लेष्मघ्नानि सर्व्वाणि । तक्रम् । वर्षाभूः ।
एरण्डतैलम् । रसोनम् । पटोलम् । पत्तूरकम् ।
कारवेल्लम् । वार्त्ताकुः । शिग्रु । तसनीरम् ।
मन्दारः । गोकण्टकः । वृद्धदारः । मल्लातकम् ।

| | | |
|---|---|---|
| लम् । वृद्धकुष्माण्डम् । वास्तूकम् । स्वादुदाडि-<br>मम् । शोभाञ्जनम् । पयःपेटी । द्राक्षा । धात्री ।<br>परूषकम् । तैलम् । खराश्वमूत्रम् । गगनाम्बु ।<br>हरीतकी ॥ * ॥<br>अपस्मारे अपथ्यम् ।<br>चिन्ता । शोकभयम् । क्रोधः । अशुचीन्यश-<br>नानि । मद्यम् । मत्स्यः ।<br>विरुद्धान्नम् । तीक्ष्णोष्ण-<br>गुरुभोजनम् । अतिव्यवायः ।<br>आयासः । पूज्य- | | |

गोजलम् । आर्द्रकम् । कटूनि । तिक्तानि
।
दीपनानि ॥ * ॥
आमवाते अपथ्यम् ।
दधिः । मत्स्यः । गुडः । क्षीरम् ।
उपोदिका ।
माषः । पिष्टकम् । दुष्टनीरम् । पूर्ब्बवातः
।
विरुद्धाशनम् । असात्म्यम् । वेगरोधः ।
जागरः ।
विषमाशनम् ॥ * ॥
अथ शूले पथ्यम् ।
छर्द्दिः । स्वेदः । लङ्घनम् । पायुवर्त्तिः ।
वस्तिः ।
निद्रा । रेचनम् । पाचनम् । अब्दोत्पन्नाः
शालयः । वाट्यमण्डः । तप्तक्षीरम् ।
जाङ्गलानां
रसः । पटोलम् । शोभाञ्जनम् ।
कारवेल्लम् ।
वार्त्ताकुः । पक्वाम्रम् । द्राक्षा । कपित्थम्
। रुच-
कम् । पियालम् । शालिञ्चपत्राणि ।
वास्तूकम् ।
सामुद्रम् । सौवर्च्चलम् । हिङ्गु । विश्वम्
। विडम् ।
शताह्वा । लशुनम् । लवङ्गम् ।
एरण्डतैलम् ।
सुरभीजलम् । तप्ताम्बु । जम्बीररसः ।
कुष्ठम् ।
लघूनि । क्षाररजांसि ॥ * ॥
शूले अपथ्यम् ।
विरुद्धान्नपानम् । जागरः । विषमाशनम्
।
रूक्षतिक्तकषायाणि । शीतलानि ।
गुरूणि ।
व्यायामः । मैथुनम् । मद्यम् । वैदलम् ।
लव-
णम् । कटु । वेगरोधः । शोकः । क्रोधः
॥ * ॥
अथोदावर्त्तानाहयोः पथ्यम् ।

नालीचशाकम् । शालूकम् । जाम्बवम् । कर्कटी-
फलम् । पिण्याकम् । सर्व्वमालुकम् । करीरः ।
पिष्टवैकृतम् । विष्टम्भीनि । विरुद्धानि । कषा-
याणि । गुरूणि ॥ * ॥
अथ गुल्मे पथ्यम् ।
स्नेहस्वेदः । विरेकः । वस्तिः । बाहुसिराव्यधः ।
लङ्घनम् । वर्त्तिः । अभ्यङ्गः । स्नेहः । पक्वे तु
पाटनम् । सम्बत्सरसमुत्पन्नकलायरक्तशालयः ।
खडः । कुलत्थयूषः । घन्वमांसरसः । सुरा ।
गवाजयोः पयः । मृद्वीका । परूषकम् । खर्ज्जू-
रम् । दाडिमम् । धात्री । नागरङ्गम् । अम्ल-
वेतसम् । तक्रम् । एरण्डतैलम् । लशुनम् । बाल-
मूलकम् । पत्तूरः । वास्तूकम् । शिग्रु । यव-
क्षारः । हरीतकी । रामठम् । मातुलुङ्गम् ।
त्र्यूषणम् । सुरभीजलम् । स्निग्धोष्णबृंहणलघु-
दीपनान्नानि । वातानुलोमनम् ॥ * ॥
गुल्मे अपथ्यम् ।
सर्व्वं वातकारि । विरुद्धाशनम् । वल्लूरम् । मूल-
कम् । मत्स्थः । मधुरफलम् । शुष्कशाकम् ।
शमीधान्यम् । विष्टम्भीनि । गुरूणि । अघो-
वातशकृन्मूत्रश्रमश्वासाश्रुधारणम् । वमनम् ।
जलपानम् ॥ * ॥
अथ हृद्रोगे पथ्यम् ।
स्वेदः । विरेकः । वमनम् । लङ्घनम् । वस्तिः ।
विलेपी । पुरातनरक्तशालयः । जाङ्गलमृग-
पक्षियूषाः । मुद्गकुलत्थरसाः । रागाः । खडाः ।
काम्बलिकाः । षाडवाः । भव्यम् । पटोलम् ।
कदलीफलम् । पुराणकुष्माण्डम् । रसालम् ।
दाडिमम् । सम्पाकशाकम् । नवमूलकम् । एरण्ड-
तैलम् । गगनाम्बु । सैन्धवम् । द्राक्षा । तक्रम् ।
पुरातनगुडः । शुण्ठी । यमानी । लशुनम् । हरी-
तकी । कुष्ठम् । कुस्तुम्बुरु । कृष्णम् । आर्द्रकम् ।
सौवीरम् । शुक्तम् । मधु । वारुणीरसः । कस्तू-
रिका । चन्दनम् । प्रपानकम् । ताम्बूलम् ॥ * ॥
हृद्रोगे अपथ्यम् ।
तृट्छर्द्दिमूत्रानिलशुक्रकासोद्गारश्रमश्वासविड
श्रूणां वेगधारणम् । सह्याद्रिविन्ध्याद्रिनदीनां
जलम् । मेषीपयः । दुष्टजलम् । कषायः । विरु-
द्धम् । उष्णम् । गुरु । तिक्तः । अम्लः । चिर-
न्तनपत्रोत्थशाकानि । क्षारः । मधूकम् । दन्त-

कुमारी ।
गुवाकखर्ज्जूरनारिकेलतालद्रुमाणां
शिरांसि । पथ्या । तालास्थिमज्जा ।
त्रपुषम् ।
त्रुटिः । शीतपानम् । शीताशनम् ।
प्रनीर-
नीरम् । हिमवालुका ॥ * ॥
मूत्रकृच्छ्रे अपथ्यम् ।
मद्यम् । श्रमः । निधुवनम् ।
गजवाजियानम् ।
सर्व्वं विरुद्धाशनम् । विषमाशनम् ।
ताम्बूलम् ।
मत्स्यः । लवणम् । आर्द्रकम् । तैलभृष्टम्
।
पिण्याकम् । हिङ्गु । तिलः । सर्षपः ।
वेगरोधः ।
माषः । करीरः । अतितीक्ष्णम् । विदाहि
।
रूक्षम् । अम्लः ॥ * ॥
अथ मूत्राघाते पथ्यम् ।
अभ्यञ्जनम् । स्नेहः । विरेकः । वस्तिः ।
स्वेदः ।
अवगाहः । उत्तरवस्तिः ।
पुरातनलोहित-
शालिः । धन्वभवमांसम् । मद्यम् । तक्रम्
। पयः ।
दधि । माषयूषः । पुराणकुष्माण्डफलम्
। पटो-
लम् । महार्द्रकम् । तालफलास्थिलज्जा
। हरी-
तकी । कोमलनारिकेलम् ।
गुवाकखर्ज्जूरनारि-
केलतालद्रुमाणां मस्तकानि ॥ * ॥
मूत्राघाते अपथ्यम् ।
सर्व्वाणि विरुद्धानि । व्यायामः । मार्गः ।
शीत-
लम् । रूक्षम् । विदाहि । विष्टम्भि ।
व्यवायः ।
वेगधारणम् । करीरम् । वमनम् ॥ * ॥
अथाश्मर्य्यां पथ्यम् ।

नारिकेलपुष्पमिश्रितशीतलोदकपानम्।
स्नेह-
स्वेदः । विरेकः । वस्तिः । फलवर्त्तिः ।
अभ्यङ्गः ।
यवः । सृष्टविण्मूत्रमारुतः । ग्राम्योदकम्
। आनूप-
रसः । रुवुतैलम् । वारुणी ।
बालमूलकम् ।
सम्पाकः । त्रिवृत् । तिलः । सुधादलम् ।
शृङ्ग-
वेरम् । मातुलुङ्गम् । यवक्षारः । हरीतकी
।
लवङ्गम् । रामठम् । द्राक्षा । गोमूत्रम् ।
लव-
णानि । अधोवातसमुत्थे तु । स्नेहः ।
स्वेदः ।
वर्त्तिः । वस्तिः । समीरणहरान्नपानम्।
तथा
पुरीषजे । वस्तिः । स्वेदः । अभ्यङ्गः ।
अव-
गाहनम् । फलवर्त्तिः । विड्भेद्यशनपानम्
।
मूत्रवेगसमुत्पन्ने । त्रिविधं वस्तिकर्म्म ।
स्वेदः ।
अभ्यङ्गः । अवगाहः । सर्पिषावपीडनम् ।
उद्गारोत्थे हिक्काघ्नविधिः । कासजे
कासजि-
द्विधिः । क्षवजे । स्वेदनम् । धूमः ।
औत्तरभक्तिक-
घृतम् । क्षवप्रवर्त्तननस्यम् ।
ऊर्द्ध्वजत्रुकाभ्यङ्गः ।
तृष्णोत्थे शीतान्नपानम् । जृम्भोत्थे
वातजित्-
क्रिया । निद्रावेगोत्थिते क्षीरम् ।
स्वप्नसंवाह-
नम् । बुभुक्षोत्थे
स्निग्धाल्पोष्णलघुभोजनम्।
वास्पजे वास्पसंमोक्षः । स्वप्नः । मद्यम्
। प्रिय-
कथा । श्रमश्वाससमुत्पन्ने विश्रामः ।
वात-
काष्ठम् । रक्तस्रुतिः ॥ * ॥
अथ मूत्रकृच्छ्रे पथ्यम् ।
वातोद्भवे अभ्यङ्गः । निरूहः । वस्तिः । स्नेहः ।
अवगाहः । उत्तरवस्तिः । सेकः । पैत्ते अव-
गाहः । शिशिरप्रदेहः । ग्रैष्मो विधिः । वस्ति-
विधिः । विरेकः । श्लेष्मोद्भवे स्वेदः । विरेकः ।
वस्तिः । क्षारः । यवान्नम् । तीक्ष्णम् । उष्णम् ।
त्रिदोषजे अभ्यङ्गपुरःसराणि त्रिमलोदितानि
सर्व्वाण्यमूनि । यथा यथा दोषमयं गणः । पुरा-
तनलोहितशालिः । गोभवतक्रपयोदधीनि ।
धन्धामिषम् । मुद्गरसः । सिता ।
पुराणकुष्माण्ड-
फलम् । पटोलम् । महार्द्रकम् । गोक्षुरकः ।
वस्तिः । विरेकः । वमनम् । लङ्घनम् ।
स्वेदः ।
अवगाहः । वारिसेचनम् । यवाः ।
कुलत्थाः ।
प्रपुराणशालयः । मद्यम् ।
घन्वाण्डजसम्भवरसः।
पुराणकुष्माण्डफलम् । कशेरुकम् ।
गोकण्टकः ।
वारुणशाकम् । आर्द्रकम् । पाषाणभेदी ।
यव-
शूकः । रेणुः । छिन्ना । अश्मनां
समाकर्षणम् ॥
अश्मर्य्यां अपथ्यम् ।
मूत्रस्य शुक्रस्य च वेगधारणम् । अम्लः ।
विष्टम्भि । रूक्षम् । गुर्व्वन्नपानम् ।
विरुद्धपाना-
शनम् ॥ * ॥
अथ प्रमेहे पथ्यम् ।
पूर्ब्बं लङ्घनम् । वमनम् । विरेचनम् ।
प्रोद्वर्त्त-
नम् । शमनम् । दीपनम् । नीवारः ।
कङ्गुः ।
यवः । वैणवः । कोरदूषः । श्यामाकः ।
जूर्णः ।
कुरुविल्वः । मुकुष्टकः । गोधूमः ।
शालिः ।
कलमः । पुरातनकुलत्थः ।
मुद्गाढकीचणक-
यूषरसाः । तिलाः । लाजाः ।
पुरातनसुरा ।
मधु । वाट्यमण्डः । तक्रम् ।
रासभजलम् ।
महिषीजलम् । कह्वः । जाङ्गलाः
कपोतशश-
तित्तिरिलाववर्हिभृङ्गैणवर्त्तकशुकादयः ।
शोभा-
ञ्जनम् । कुलकम् । कठिल्लकम् ।
कर्कोटकम् ।
तलकम् । वार्हतम् । औड म्बरम् ।
लशुनम् ।
नवीनमोचम् । पत्तूरम् । गोक्षुरकम् ।
मूषिक-

| हारिद्रव्यम् । शुक्रोत्थे वस्तिः । अभ्यङ्गः । अव-<br>गाहः । चरणायुधः । शालिः । मदिरा ।<br>क्षीरम् । यौवनगर्व्वितप्रिया । छद्‌र्द्युत्थे लङ्घ-<br>नम् । धूमः । भुक्त्वा प्रच्छर्द्दनम् । श्रमः । रूक्षान्न-<br>पानम् । विरेकः । रक्तमोक्षणम् ॥ * ॥<br>उदावर्त्तानाहयोरपथ्यम्।<br>वमनम् । वेगरोधः । शमीधान्यम् ।<br>कोद्रवः । | | पर्णिशाकम् । मन्दारपत्रम् । अमृता ।<br>त्रिफला ।<br>कपित्थम् । जम्बूः । कशेरु ।<br>कमलोत्पलकन्द-<br>बीजम् । खर्ज्जूरलाङ्गलिकतालतरूणां<br>मस्तकम् ।<br>व्योषम् । तिन्दुकफलम् । खदिरः ।<br>कलिङ्गः । |
|---|---|---|

तिक्तः । कषायः । हस्त्यश्ववाहनम् ।
अतिभ्रम-
णम् । रविकिरणः । व्यायामः ॥ * ॥
प्रमेहे अपथ्यम् ।
मूत्रवेगः । धूमपानम् । स्वेदः । रक्तमोक्षणम् ।
सदासन्नम् । दिवानिद्रा । नवान्नम् । दधि ।
आनूपमांसम् । निष्पावम् । पिष्टान्नम् । मैथु-
नम् । सौवीरकम् । सुरा । शुक्तम् । तैलम् ।
क्षीरम् । घृतम् । गुडः । तुम्बी ।
तालास्थिमज्जा ।
विरुद्धाशनम् । कुष्माण्डम् । इक्षुः । दुष्टाम्बु ।
स्वादु । अम्लः । लवणम् । अभिष्यन्दि ॥ *
॥
अथ मेदसि पथ्यम् ।
चिन्ता । श्रमः । जागरणम् । व्यवायः ।
प्रोद्वर्त्त-
नम् । लङ्घनम् । आतपः । हस्त्यश्वयानम् ।
भ्रमणम् । विरेकः । प्रच्छर्द्दनम् । अपतर्पणम् ।
पुरातना वैणवकोरदूषश्यामाकनीवारप्रियङ्गु-
जूर्णाः । यवः । कुलत्थः । चणकः । मसूरः ।
मुद्गः । तुवरी । मधु । लाजाः ।
कटुतिक्तकषा-
याणि । तक्रम् । सुरा । चिङ्गटमत्स्यः । दग्ध-
वार्त्ताकुः । फलत्रयम् । यवासकम् । शिरीष-
लोध्रहरीतकीनां चूर्णेन गात्रविलेपनम् । कटु-
त्रयम् । सर्षपतैलम् । एला । सर्व्वाणि रूक्षाणि
।
मुख्यतैलम् । पत्रशाकः । अगुरुलेपनम् ।
प्रतप्त-
नीराणि । शिलाजतूनि । भोजनात् प्राक्
वारि-
पानम् ॥ * ॥
मेदसि अपथ्यम् ।
स्नानम् । रसायनम् । शालिः । गोधूमः ।
सुख-
शीलता । क्षीरम् । इक्षुविकृतिः । माषः ।
सौहित्यम् । स्वेदनानि । मत्स्यः । मांसम् ।
दिवानिद्रा । स्रक् । गन्धः । मधुराणि । समग्र-
भोजनस्य पश्चात् जलपानम् । अतिमात्रोप-
चिते विशेषाद्वमनक्रिया ॥ * ॥

महेन्द्रगिरिजातानां नदीनां जलम् । विष्ट-
म्भीनि । छिद्रसमुद्भवे विशेषतः स्वेदः ॥ *
॥
अथ शोथे पथ्यम् ।
संशोधनम् । लङ्घनम् । अस्रमोक्षः । स्वेदः
।
प्रलेपः । परिषेचनम् ।
पुरातनशालियवकुलत्थ-
मुद्गाः । गोधा । शल्लकः ।
भुजङ्गभुक्तित्तिरि-
ताम्रचूडलावादयो जाङ्गलविष्किराः ।
कूर्म्मः ।
शृङ्गी । प्रपुराणसर्पिः । तक्रम् । सुरा ।
माक्षिकम् । आसवः । निष्पावः ।
कठिल्लकम् ।
रक्तशिग्रु । रसोनम् । कर्कोटकम् ।
मानमूलम् ।
सुवर्च्चला । गृञ्जनकह् । पटोलम् । वेत्राग्रम्
।
वाडिङ्गनम् । मूलकम् । पुनर्नवा । चित्रकम्
।
पारिभद्रः । श्रीपर्णम् । निम्बः । क्षुरपल्लवम्
।
एरण्डतैलम् । कटुका । हरिद्रा । हरीतकी
।
क्षारनिषेवणम् । भल्लातकम् । गुग्गुलुः ।
आय-
सम् । कटूनि । तिक्तानि । दीपनानि ।
गोऽजा-
महिषीभवमूत्राणि । कस्तूरिका ।
शिलाजतु ।
पाण्डुरोगोक्तवह्निकर्म्म ॥ * ॥
शोथे अपथ्यम् ।
पवनसलिलम् । वेगरोधः ।
विरुद्धपानाशनम् ।
विषमाशनम् । मृद्भक्षणम् । ग्राम्याब्जानूपे
पिशितलवणे । शुष्कशाकम् । नवान्नम् ।
गौडम् ।
पिष्टान्नम् । दधि । कृशरम् । विज्जलम् ।
मद्यम् ।

गलगण्डे अपथ्यम् ।
सर्व्वक्षीरेक्षुविकृतिः । आनूपमांसम् । पिष्टा-
न्नम् । अम्लम् । मधुरम् । गुरुद्रव्यम् ।
अभि-
ष्यन्दिद्रव्यम् ॥ * ॥
अथ श्लीपदे पथ्यम् ।
प्रच्छर्द्दनम् । लङ्घनम् । अस्रमोक्षः । स्वेदः
।
विरेकः । परिलेपनम् ।
पुरातनषष्टिकशालयः ।
यवाः । कुलत्थाः । लशुनम् । पटोलम् ।
वार्त्ताकुः ।
शोभाञ्जनम् । कारवेल्लम् । पुनर्नवा ।
मूलकम् ।
पूतिका । एरण्डतैलम् । सुरभीजलम् ।
कटूनि ।
तिक्तानि । दीपनानि । वातोद्भवे गुल्फोपरि-
ष्टात् चतुरङ्गुले सिराव्यधः । पैत्तिके
गुल्फतले
शिराव्यधः । कफजे अङ्गुष्ठमूले सिराव्यधः
॥ * ॥
श्लीपदे अपथ्यम् ।
पिष्टान्नम् । दुग्धविकृतम् । गुडः ।
आनूपमामि-
षम् । स्वादुरसः ।
पारिपात्रसह्यविन्ध्यनदी-
जलम् । पिच्छिलम् । गुरुद्रव्यम् ।
अभिष्यन्दि-
द्रव्यम् ॥ * ॥
अथ विद्रधौ पथ्यम् ।
आमावस्थे रेचनलेपस्वेदास्रमोक्षणानि ।
जीर्ण-
श्यामाककलमौ । कुलत्थः । लशुनम् ।
रक्त-
शिग्रु । निष्पावः । कारवेल्लः । पुनर्नवा ।
श्रीपर्णी । चित्रकम् । क्षौद्रम् । शोथोक्तानि
सर्व्वाणि । पक्वावस्थे शस्त्रकर्म्म ।
पुराणरक्त-
शालिः । घृतम् । तैलम् । मुद्गरसः ।
विलेपी ।

अथोदररोगे पथ्यम् ।
विरेचनम् । लङ्घनम् ।
अब्दसम्भवकुलत्थमुद्गा-
रुणशालियवाः । जाङ्गलमृगपक्षिणः । सिता ।
सुरा । माक्षिकम् । सीधुः । माध्वीकम् ।
षाडवः । तक्रम् । रसोनम् । रुवुतैलम् ।
आर्द्र-
कम् । शालिञ्चशाकम् । कुलकम् ।
कठिल्लकम् ।
पुनर्नवा । शिग्रुफलम् । हरीतकी । ताम्बू-
लम् । एला । यवशूकम् । आयसम् । अजा-
गवोष्ट्रीमहिषीणां पयः मूत्रञ्च । लघूनि ।
तिक्तानि । दीपनानि । वस्त्रेण सम्बेष्टनम् ।
अग्निकर्म्म । विषप्रयोगः । विशेषतः
प्लोहसमु-
द्भवे वामे अग्रवाहौ धमनीव्यधः । वद्धाह्वये
उदकजे क्षतोत्थिते नाभेरधः यथाविधिशस्त्र-
विधिः । समीरणोत्थे आदितः घृतपानम् ।
अभ्यञ्जनम् । अनुवासनम् ॥ * ॥
उदररोगे अपथ्यम् ।
सस्नेहनम् । धूमपानम् । जलपानम् । सिरा-
व्यधः । छर्द्दिः । यानम् । दिवानिद्रा ।
व्यायामः ।
पिष्टवैकृतम् । औदकानूपमांसम् । पत्रशाकम्
।
तिलः । उष्णानि । विदाहीनि । लवणाशनम्
।
शमीधान्यम् । विरुद्धान्नम् । दुंष्टनीरम् ।
गुरूणि ।

अम्लम् । धानाः । वल्लूरम् । गुरु ।
असात्म्यम् ।
विदाहि । अरात्रौ स्वप्नः । मैथुनम् ॥ * ॥
अथ वृद्धिव्रध्नाधिकारे पथ्यम् ।
संशोधनम् । वस्तिः । असृग्विमोक्षः ।
स्वेदः ।
प्रलेपः । अरुणशालयः । एरण्डतैलम् ।
सुरभी-
जलम् । धन्वामिषम् । शिग्रुफलम् ।
पटोलम् ।
पुनर्नवा । गोक्षुरः । अग्निमन्थः । ताम्बूलम्
।
पथ्या । सरला । रसोनम् । वाडिङ्गनम् ।
गृञ्ज-
नकम् । मधूनि । कौम्भं घृतम् । तप्तजलम्
।
तक्रम् । आमवातापहमग्निकारि चान्नपानम्
।
पुराणसुरा । अर्द्धेन्दुवद्वक्षणयोर्द्दाहः ।
आमा-
शये बाहुशिराव्यधः ॥ * ॥
व्रध्नवृद्धावपथ्यम् ।
विरुद्धपानान्नम् । असात्म्यसेवा ।
संक्षोभणम् ।
हस्तिहयादियानम् । आनूपमांसानि ।
दधीनि ।
माषाः । दुग्धानि । पिष्टान्नम् । उपोदिका ।
गुरूणि । शुक्रोत्थितवेगरोधः ॥ * ॥
अथ गलगण्डादौ पथ्यम् ।
छर्द्दिः । विरेचनम् । नस्यम् । स्वेदः ।
धूमः ।
शिराव्यधः । अग्निकर्म्म । क्षारयोगः ।
प्रलेपः ।
लङ्घनम् । पुराणघृतपानम् । जीर्णलोहित-
शालयः । यवाः । मुद्गाः । पटोलम् ।
रक्त-
शिग्रु । कठिल्लकम् । शालिञ्चशाकम् ।
वेत्रा-
ग्रम् । रूक्षाणि । कटूनि । सर्व्वाणि
दीवनानि ।
गुग्गुलुः । शिलाजतु । विशेषतः
जिह्वातलस्थ-

घन्वजरसाः । शालिञ्चशाकम् । कदलम् ।
पटो-
लम् । हिमवालुका । चन्दनम् । तप्ताम्बु ।
शीताम्बु । व्रणोदितं सर्व्वम् ॥ * ॥
विद्रधावपथ्यम् ।
आमावस्थे शोथोक्तान्यपथ्यानि ।
पक्वावस्थे व्रणो-
क्तान्यपथ्यानि ॥ * ॥
अथ व्रणशोथव्रणसद्योव्रणनाडीव्रणेषु
पथ्यम् ।
विम्लापनम् । रक्तमुक्तिः । उपनाहः ।
विपा-
टनम् । शोधनम् । रोपणम् । पुराणसित-
शालयः । यवः । षष्टिकः । गोधूमः ।
जाङ्गलमृग-
पक्षिणः । विलेपी । लाजमण्डः । कटुतैलम्
।
घृतम् । मधु । तैलम् । मसूरम् । तुवरी ।
मुद्गयूषः । शर्करा । आषाढफलम् ।
वार्त्ताकुः ।
कर्कोटकम् । पटोलम् । कारवेल्लम् । निम्ब-
पत्रम् । वेत्राग्रम् । बालमूलकम् । सुनिषण्ण-
कम् । शालिञ्चशाकम् । तण्डुलीयः ।
वास्तू-
कम् । त्रिफला । पनसम् । चोचम् । दाडि-
मम् । कटुकाफलम् । जीवन्ती । सैन्धवम्
।
द्राक्षा । स्वादुतिक्तकषायाः ।
स्निग्धोष्णद्रवो-
त्तरान्नम् । एषणम् । शमनम् । दाहः ।
स्वेद-
नम् । बन्धनक्रिया । व्रणावचूर्णनम् । लेपः
।
धूपनम् । पत्रधारणम् । उशीरम् ।
बालव्यज-
नम् । चन्दनम् । तिललेपनम् । तप्तशीताम्बु
।
कर्पूरम् । पक्वतः परा वैकृताः ॥ * ॥
व्रणशोथव्रणसद्योव्रणनाडीव्रणेषु अपथ्यम् ।
नवधान्यम् । तिलः । कलायः । माषः ।
कुलत्थः ।

| | | |
|---|---|---|
| | सिराद्वयच्छेदः । मणिबन्धोर्द्ध अङ्गुलान्तरास्तिस्रो रेखाः कार्य्याः । गलगण्डगण्डमालापचीग्रन्थ्यर्व्वुदातुरे यथादोषं यथावस्थं एतत् सर्व्वं पथ्यम् ॥ * ॥ | |

कृषरः । हिमाम्भः ।
विविधक्षीरेक्षुविकारः ।
अम्लानि । पत्रशाकम् ।
अजाङ्गलमांसम् ।
असात्म्यमन्नम् । विदाहि । विष्टम्भि ।
गुरूणि ।
कटु । अम्लम् । शीतम् । लवणम् ।
व्यवायः ।
व्यायामः । उच्चैः परिभाषणम् ।
प्रियासमा-
लोकनम् । अह्नि निद्रा । प्रजागरम् ।
नितान्त-
चंक्रमणम् । यथास्थितं प्रागधिरोपणम्
। नस्यम् ।
ताम्बूलम् । अजीर्णता । प्रचण्डवातः ।
आतपः ।
धूमः । वृष्टिः । रजः । भयम् । क्रोधः ।
वमिः ।
प्रहर्षः । शोकः । विरुद्धाशनम् ।
अम्बुपानम् ।
तीक्ष्णम् । उष्णम् । रूक्षम् । विघट्टनम्
। कण्डू-
यनम् । काष्ठनखादितोदः । निरन्नभावः
। विष-
मोपचारः ॥ * ॥
अथ भग्ने पथ्यम् ।
शीताम्बु । चन्दनम् । पङ्कप्रदेहः ।
बन्धनक्रिया ।
शालिः । प्रियङ्गुः । गोधूमः ।
मुद्गसतीलयो-
र्यूषः । नवनीतम् । घृतम् । क्षीरम् ।
तैलम् ।
मांसरसः । मधु । पटोलम् । लशुनम् ।
शिग्रु ।
पत्तूरम् । बालमूलकम् । द्राक्षा । धात्री ।
वज्रवल्ली । लाक्षा । बृंहणम् ॥ * ॥
भग्ने अपथ्यम् ।
लवणम् । कटुकम् । क्षारः । अम्लः ।
मैथुनम् ।
आतपः । व्यायामः । रूक्षान्नम् ॥ * ॥

दकम् । गन्धसारः । कस्तूरी । हिमवालुका ।
तक्रम् । कषायम् । तैलम् ॥ * ॥
शूकदोषे अपथ्यम् ।
मूत्रवेगः । दिवानिद्रा । व्यायामः । मैथुनम् ।
गुडः । विदाहि । गुरुद्रव्यम् । तक्रम् ॥ * ॥
अथ कुष्ठरोगे पथ्यम् ।
पक्षात् पक्षात् छर्द्दनम् । मासात् मासाद्विरे-
चनम् । त्र्यहात् त्र्यहात् नस्यम् । षष्ठे षष्ठे
मासि अस्रमोक्षणम् । सर्पिर्लेपः । पुराणाः
यव-
गोधूमशालिमुद्गाढकीमसूराः । माक्षिकम् ।
जाङ्गलामिषम् । आषाढफलम् । वेत्राग्रम् ।
पटोलम् । बृहतीफलम् । काकमाची । निम्ब-
पत्रम् । लशुनम् । हिलमोचिका । पुनर्नवा ।
मेषशृङ्गम् । चक्रमर्द्दलम् । भल्लातकम् ।
पक्व-
तालम् । खदिरः । चित्रकः । वरा । जाती-
फलम् । नागपुष्पम् । कुङ्कुमम् । प्रतनहविः ।
कोषातकी ।
करञ्जोमातिलसर्षपनिम्बेङ्गुदीभव-
तैलम् । लघूनि अन्नानि । सरलदेवाह्वशिंशपा-
गुरुसम्भवस्नेहः । गोखरोष्ट्राश्वमहिषीणां
मूत्राणि । कस्तूरिका । गन्धसारा । तिक्तानि ।
क्षारकर्म्म ॥ * ॥
कुष्ठरोगे अपथ्यम् ।
पापकर्म्म । कृतघ्नभावः । गुरुनिन्दा ।
गुरुधर्ष-
णम् । विरुद्धपानाशनम् । दिवानिद्रा ।
चण्डांशु-
तापः । विषमाशनम् । स्वेदः । रतम् । वेग-
रोधः । इक्षुः । व्यायामः । अम्लम् । तिलः ।
माषः । द्रवगुरुनवान्नानां भोजनम् । विदाहि ।
विष्टम्भि । मूलकम् ।
सह्याद्रिविन्ध्याद्रिसमुद्भव-
नदीजलम् । आनूपमांसम् । दधि । दुग्धम् ।
मद्यम् । गुडः ॥ * ॥
अथ शीतपित्तोदर्द्दकोठरोगेषु पथ्यम् ।
छर्द्दिः । विरेचनम् । लेपः । असृङ्मोक्षः ।
पुराणशालिः । जाङ्गलामिषमुद्गकुलत्थानां
यूषः ।

अम्लपित्ते अपथ्यम् ।
नवान्नम् । विरुद्धद्रव्यम् । पित्तकोपकरद्रव्यम्
।
वेगरोधः । तिलः । माषः । कुलत्थः । तैल-
भक्षणम् । अविदुग्धम् । धान्याम्लम् । लवणम्
।
अम्लम् । कटु । गुर्व्वन्नम् । दधि । मत्स्यः ॥ *
॥
अथ विसर्पे पथ्यम् ।
विरेकः । वमनम् । लेपः । लङ्घनम् । रक्त-
मोक्षणम् । पुराणायवगोधूमकङ्गुषष्टिकशालयः
।
मुद्गः । मसूरः । चणकः । तुवरी । जाङ्गलज-
रसः । नवनीतम् । घृतम् । द्राक्षा । दाडि-
मम् । कारवेल्लकम् । वेत्राग्रम् । कुलकम् ।
धात्री । खदिरः । नागकेशरम् । लाक्षा ।
शिरीषः । कर्पूरम् । चन्दनम् । तिललेपनम् ।
ह्रीवेरकम् । मुस्तकम् । सकलानि तिक्तानि ॥
विसर्पे अपथ्यम् ।
व्यायामः । अह्नि शयनम् । सुरतम् । प्रवातः ।
क्रोधः । शोकः । वमनम् । वेगः । असूयनम् ।
शाकम् । विरुद्धाशनम् । दधि । कूर्च्चिका ।
सौवीरकादि । अनेकविधकिलाटः । गुर्व्वन्न-
पानम् । लशुनम् । कुलत्थः । माषः । तिलः ।
सकलमजाङ्गलमांसम् । स्वेदः । विदाहि ।
लव-
णम् । अम्लम् । कटु । मद्यम् । अर्कप्रभा ॥ *
॥
अथ विस्फोटे पथ्यम् ।
विरेचनम् । छर्द्दनम् । लेपः । लङ्घनम् । पुरा-
तनषष्टिकशालयः । यवः । मुद्गः । मसूरः ।
चणकः । मुकुष्टकः । धन्वामिषम् । गव्यघृतम्
।
कठिल्लकम् । वेत्राग्रम् । आषाढफलम् । पटो-
लम् । ज्योतिष्मती । निम्बदलम् । चन्दनम् ।
तैलम् । सिताभ्रः । तिललेपः । लङ्घनम् ।
बालम् ॥ * ॥
विस्फोटे अपथ्यम् ।
स्वेदः । व्यवायः । व्यायामः । क्रोधः । गुर्व्व-
न्नम् । आतपः । वमिवेगः । पत्रशाकम् ।

अथ भगन्दरे पथ्यम् ।
आमे संशोधनम् । लेपः । लङ्घनम् । रक्त-
मोक्षणम् । पक्वे यथाविधिशस्त्रवह्निक्षार-
कर्म्माणि । सर्षपः । शालिः । मुद्गः । विलेपी ।
जाङ्गलरसः । पटोलम् । शिग्रु । वेत्राग्रम् ।
पत्तूरम् । बालमूलकम् ।
तिलसर्षपयोस्तैलम् ।
तिक्तवर्गः । घृतम् । मधु ॥ * ॥
भगन्दरे अपथ्यम् ।
विरुद्धान्यन्नपानानि । विषमाशनम् । आतपः ।
व्यायामः । मैथुनम् । युद्धम् । पृष्ठयानम् ।
गुरूणि । रूढव्रणोऽपि नरः सम्बत्सरं एतत्
सर्व्वं परिहरेत् ॥ * ॥
अथोपदंशे पथ्यम् ।
छर्द्दिः । विरेकः । ध्वजमध्यनाडीवेधः ।
जलौका । परिपातनम् । सेकः । प्रलेपः । यवः ।
शालयः । धन्वामिषम् । मुद्गरसः । घृतम् ।
कठिल्लकम् । शिग्रुफलम् । पटोलम् । शालिञ्च-
शाकम् । नवमूलकम् । तिक्तम् । कषायम् ।
मधु । कूपवारि । तैलम् ॥ * ॥
उपदंशे अपथ्यम् ।
दिवानिद्रा । मूत्रवेगः । गुर्व्वन्नम् । मैथुनम् ।
गुडः । आयासः । अम्लम् । तक्रम् ॥ * ॥
अथ शूकदोषे पथ्यम् ।
लेपः । विरेकः । असृङ्मोक्षः । सर्पिःपानम् ।
शालिः । यवः । जाङ्गलमांसम् । मुद्गयूषः ।
कर्कोटकम् । कारवेल्लम् । शिग्रु । मूलकपो-
तिका । शालिञ्चशाकम् । वेत्राग्रम् । दाडिमम् ।
त्रिफला । मधु । कटुतैलम् । तप्तनीरम् । पित्त-
श्लेष्महरद्रव्यम् । सर्व्वकटुतिक्तकषायाणि ॥ * ॥
शीतपित्तादावपथ्यम्।
विविधक्षीरेक्षुविकारः । मत्स्यः । उदकानूप-
भवामिषम् । नवीनमद्यम् । वमिवेगरोधः ।
प्राग्दक्षिणाशापवनः । अह्नि निद्रा । स्नानम् ।
विरुद्धाशनम् । आतपः । स्निग्धम् । अम्लम् ।
मधुरम् । कषायः । गुर्व्वन्नपानानि ॥ * ॥
अथाम्लपित्ते पथ्यम् ।
ऊदर्ध्वगे पूर्ब्बं वमनम् । अधोगे पूर्ब्बं विरेचनम् ।
पश्चादन्नाशनम् । निरूहः । शालिः । यवः ।
गोधूमः । मुद्गः । जाङ्गलजरसः । तप्तशीत-
जलानि । शर्करा । मधु । शक्तुः । कर्कोटकम् ।
कारवेल्लम् । पटोलम् । हिलमोचिका । वेत्रा-
ग्रम् । वृद्धकुष्माण्डम् । रम्भापुष्पम् । वास्तूकम् ।
कपित्थम् । दाडिमम् । धात्री । तिक्तानि ।
कफपित्तहरपानान्नम्॥ * ॥
प्रवातः । दिवास्वप्नः । ग्राम्योदकम् । आनूप-
मांसम् । विरुद्धान्यशनानि । तिलः । माषः ।
कुलत्थः । लवणाम्लकटूनि । विदाहि । रूक्षम् ।
उष्णम् ॥ * ॥
अथ मसूर्य्यां पथ्यम् ।
पूर्ब्बं लङ्घनवान्तिरेचनशिरावेधाः । शशाङ्को-
ज्ज्वलजीर्णषष्टिकशालयः । चणकः । मुद्गः ।
मसूरः । यवः । कपोतचटकदात्यूहक्रौञ्च-
जीवञ्जीवशुकादयः पक्षिणः । नङ्गलः । काठि-
ल्लम् । आषाढकम् । कर्कोटम् । कदलम् ।
शिग्रु । रुचकम् । द्राक्षा । दाडिमम् । मेध्य-
बृंहणान्नपानम् । कोलम् । माषरसः । अक्ष्णोः
सेकविधौ गवेधुमधुकोद्भूतसुशीतोदकम् । शम्बू-
कोदरकोषनीरम् । कर्पूरचूर्णम् । पक्वे मुद्ग-
रसः । जाङ्गलरसः । शालिञ्चशाकम् । घृतम् ।
निर्गुण्डीजलम् । यक्षधूपविहितो धूपः । शश्वद्-
गोमयभस्मगुण्डनम् । शुष्के शिलापिष्टयोः
पिचुमर्द्दपत्रनिशयोरालेपः । शेषे व्रणोक्त-
क्रिया ॥ * ॥

| | | |
|---|---|---|
| कठिल्लकम् । पटोलम् । शिग्रु । ककोटम् । पत्तूरम् । बालमूलकम् । वेत्राग्रम् । आषाढ-फलम् । दाडिमम् । सैन्धवम् । वचा । कूपो- | | |

मसूर्य्यामपथ्यम् ।
रतम् । स्वेदः । श्रमः । तैलम् ।
गुर्व्वन्नम् ।
क्रोधः । आतपः । दुष्टाम्बु । दुष्टपवनः
।
विरुद्धाशनम् । निष्पावः ।
आनूपशाकम् ।
लवणम् । विषमाशनम् । कटु ।
अम्लम् । वेग-
रोधः ॥ * ॥
अथ क्षुद्ररोगे पथ्यापथ्यम् । यथा, --
क्षुद्ररोगेषु सर्व्वेषु नानारोगानुकारिषु ।
दोषान् दुष्यानवस्थाश्च निरीक्ष्य
मतिमान् भिषक् ।
तस्य तस्य च रोगस्य पथ्यापथ्यानि
सर्व्वशः ।
यथादोषं यथादुष्टं यथादृष्टञ्च
कल्पयेत् ॥ * ॥
अथ मुखरोगे पथ्यम् ।
स्वेदः । विरेकः । वमनम् । गण्डूषः ।
प्रतिसार-
णम् । कवलः । असृक्स्रुतिः । नस्यम्
। धूमः ।
शस्त्राग्निकर्म्मणी । तृणधान्यम् । यवः
। मुद्गः ।
कुलत्थः । जाङ्गलरसः । बृहत्प्रोष्ठी ।
कार-
वेल्लम् । पटोलम् । बालमूलकम् ।
कर्पूरनीरम् ।
ताम्बूलम् । तप्ताम्बु । खदिरः । घृतम्
। कटु ।
तिक्तम् ॥ * ॥
मुखरोगे अपथ्यम् ।
दन्तकाष्ठम् । स्नानम् ॥ अम्लम् ।
मत्स्यः ।
आनूपामिषम् । दधि । क्षीरम् । गुडः ।
मांसम् । रूक्षान्नम् । कठिनाशनम् ।
अधो-
मुखशयनम् । गुरु । अभिष्यन्दकारि
। दिवा-

अथ नेत्ररोगे पथ्यम् ।
आश्च्योतनम् । लङ्घनम् । अञ्जनम् । स्वेदः
।
विरेकः । प्रतिसारणम् । प्रपूरणम् । नस्यम्
।
असृङ्मोक्षः । शस्त्रक्रिया । लेपनम् ।
आज्य-
पानम् । सेकः । मनोनिर्वृतिः । अङ्घ्रिपूजा
।
मुद्गः । यवः । लोहितशालिः । लावः ।
मयूरः ।
वनकुक्कुटः । कूर्म्मः । कुलिङ्गः ।
कपिञ्जलः ।
कौम्भं हविः । वन्यकुलत्थयूषः । पेया ।
विलेपी ।
लशुनम् । पटोलम् । वार्त्ताकुः । कर्कोटकः
।
कारवेल्लम् । नवीनमोचम् । नवमूलकम् ।
पुन-
र्नवा । मार्कवः । काकमाची । पत्तूरशाकम्
।
कुमारिका । द्राक्षा । कुस्तुम्बुरु ।
माणिमन्थम् ।
लोध्रम् । वरा । क्षौद्रम् । उपानहौ । नारी-
पयः । चन्दनम् । इन्दुखण्डम् । तिक्तम् ।
लघु ॥
नेत्ररोगे अपथ्यम् ।
क्रोधः । शोकः । मैथुनम् ।
अश्रुवायुविण्मूत्र-
निद्रावमीनां वेगरोधः । सूक्ष्मेक्षणम् । दन्त-
विघर्षणम् । स्नानम् । निशाभोजनम् ।
आतपः ।
प्रजल्पनम् । छर्द्दनम् । अम्बुपानम् ।
मधूक-
पुष्पम् । दधि । पत्रशाकम् । कठिल्लम् ।
पिण्याकः । विरूढकम् । मत्स्यः । सुरा ।
अजाङ्गलमांसम् । ताम्बुलम् । अम्लम् ।
लव-
णम् । विदाहि । तीक्ष्णम् । कटु । उष्णम् ।
गुर्व्वन्नपानम् ॥ * ॥

गर्भिण्या अपथ्यम् ।
स्वेदनम् । वमनम् । क्षारः । कलहः । विषमा-
शनम् । असात्म्यम् । नक्तसञ्चारः । चौर्य्यम् ।
अप्रियदर्शनम् । अतिव्यवायः । आयासः । भारः ।
गुरुप्रावरणम् । अकालजागरणं स्वप्नश्च ।
कठिनोत्कटकासनम् । शोकः । क्रोधः । भयम् ।
उद्वेगः । श्रद्धा । वेशविधारणम् । उपवासः ।
अध्वगमनम् । तीक्ष्णोष्णगुरुविष्टम्भिभोजनम् ।
नक्तम् । निरशनम् । श्वभ्रकूपेक्षणम् । मद्यम् ।
आमिषम् । उत्तानशयनम् । स्त्रीणामनीप्सि-
तम् ॥ * ॥
अष्टममासमारभ्य गर्भिण्या अपथ्यं यथा, --
तथा रक्तस्रुतिं शुद्धिं वस्तिमायासतोऽष्टमात् ।
एभिर्गर्भः स्रवेदामः कुक्षौ शुष्येन्म्रियेत वा ॥
भजेन्न नित्यं तिक्ताम्लकटूषणकषायकान् ।
वातलैश्च भवेद्गर्भः कुब्जान्धजडवामनः ॥
पित्तलैः खलती पिङ्गः श्वित्री पङ्गः कफात्मभिः ।
अपथ्यमिदमुद्दिष्टं गर्भिणीनां महर्षिभिः ॥ * ॥
अथ प्रसूतायाः पथ्यम् ।
लङ्घनम् । मृदुस्वेदः । गर्भकोष्ठविशोधनम् ।
अभ्यञ्जनम् । तैलपानम् । कटुतिक्तोष्णसेवनम् ।
दीपनम् । पाचनम् । मद्यम् । पुराणषष्टि-
शालयः । कुलत्थः । लशुनम् । शिग्रु । वार्त्ताकुः ।
बालमूलकम् । पटोलम् । मातुलुङ्गम् । ताम्बू-
लम् । दाडिमद्वयम् । श्लेष्मानिलघ्नानि । सप्ता-
हात् परं किञ्चित् बृंहणम् । द्वादशाहात् परं
आमिषम् । सार्द्धमासात्परं आहारादियन्त्रणा-
त्यागः ॥ * ॥
प्रसूताया अपथ्यम् ।
श्रमः । नस्यम् । रक्तमुक्तिः । मैथुनम् । विषमा-
शनम् । विरुद्धान्नम् । वेगरोधः । असात्म्यम् ।
अतिभोजनम् । दिवानिद्रा । अभिष्यन्दि । वि-
ष्टम्भि गुरुभोजनम् ॥
सूतिकाख्येष रोगेषु वातश्लेष्मोचितानि च ।
तत्तद्रोगानुकूल्ये न पथ्यापथ्यानि निर्द्दिशेत् ॥ * ॥
अथ बालरोगे पथ्यापथ्यम् ।
नृणां ज्वरादिषु यत् पथ्यापथ्यं बालानामौचि-
त्यात् तद्विधेयम् । मन्दाग्नौ यत् पथ्यापथ्यं
बालानां पारिगर्भिके तद्विधेयम् । आगन्तुको-
न्मादिनां यत् पथ्यापथ्यं बालानां ग्रहरोगिणां

निद्रा ॥ * ॥
अथ कर्णरोगे पथ्यम् ।
स्वेदः । विरेकः । वमनम् । नस्यम् ।
धूमः ।
सिराव्यधः । गोधूमः । शालिः ।
मुद्गः । यवः ।
प्रतनहविः । लावः । मयूरः । हरिणः
।
तित्तिरिः । वनकुक्कुटः । पटोलम् ।
शिग्रु ।
वार्त्ताकुः । सुनिषण्णम् । कठिल्लकम्
। रसायन-
द्रव्यम् । ब्रह्मचर्य्यम् । अभाषणम् ॥ *
॥
कर्णरोगे अपथ्यम् ।
विरुद्धान्नपानम् । वेगरोधः ।
प्रजल्पनम् । दन्त-
काष्ठम् । शिरःस्नानम् । व्यवायः ।
श्लेष्मलम् ।
गुरु । कण्डूयनम् । तुषारः ॥ * ॥
अथ नासारोगे पथ्यम् ।
निर्व्वातनिलयस्थितिः।
प्रगाढोष्णीषधारणम्।
गण्डूषः । लङ्घनम् । नस्यम् । धूमः ।
छर्द्दिः ।
सिराव्यधः । कटुचूर्णं नासारन्ध्रे
निःक्षिप्य त्रिः
प्रवेशनम् । स्वेदः । स्नेहः ।
शिरोऽभ्यङ्गः ।
पुराणा यवशालयः ।
कुलत्थमुद्गयोर्यूषः ।
ग्राम्यजाङ्गलजा रसाः । वार्त्ताकुः ।
कुलकम् ।
शिग्रु । कर्कोटः । बालमूलकम् ।
लशुनम् ।
दधि । तप्ताम्बु । वारुणी । कटुत्रयम् ।
कटु ।
अम्लम् । लवणम् । स्निग्धम् ।
उष्णम् । लघु-
भोजनम् ॥ * ॥
नासारोगे अपथ्यम् ।

अथ शिरोरोगे पथ्यम् ।
स्वेदः । नस्यम् । धूमपानम् । विरेकः ।
लेपः ।
छर्द्दिः । लङ्घनम् । शीर्षवस्तिः ।
रक्तोन्मुक्तिः ।
वह्निकर्म्म । उपनाहः । जीर्णसर्पिः ।
शालिः ।
षष्टिकः । यूषः । दुग्धम् । धन्वमांसम् ।
पटो-
लम् । शिग्रु । द्राक्षा । वास्तूकम् ।
कारवेल्लम् ।
आम्रम् । धात्री । दाडिमम् । मातुलुङ्गम् ।
तैलम् । तक्रम् । काञ्जिकम् । नारिकेलम् ।
पथ्या । कुष्ठम् । भृङ्गराजः । कुमारी ।
मुस्तः ।
उशीरम् । चन्द्रिका । गन्धसारः । कर्पूरम्
॥ * ॥
शिरोरोगे अपथ्यम् ।
क्षवजृम्भमूत्रवास्पनिद्राविष्ठानांवेगधारणम्
।
अञ्जनम् । दुष्टनीरम् । विरुद्धान्नम् ।
सह्यविन्ध्य-
सरिज्जलम् । दन्तकाष्ठम् । दिवानिद्रा ॥ *
॥
अथ स्त्रीरोगे पथ्यापथ्यम् ।
यत्पथ्यं यदपथ्यञ्च रक्तपित्तेषु कीर्त्तितम् ।
प्रदरेषु यथादोषं तत्तन्नारी भजेत्त्यजेत् ॥
वातव्याधिमतां पथ्यमपथ्यञ्च यदीरिम् ।
योनिव्यापत्सु सर्व्वासु तद्विद्याच्च
यथामलम् ॥ * ॥
अथ गर्भिणीपथ्यम् ।
शालिः । षष्टिकः । मुद्गः । गोधूमः ।
लाजशक्तुः ।
नवनीतम् । घृतम् । क्षीरम् । रसाला । मधु
।
शर्करा । पनसम् । कदलम् । धात्री । द्राक्षा
।
अम्लम् । स्वादु । शीतलम् । कस्तूरी ।
चन्दनम् ।
माला । कर्पूरम् । अनुलेपनम् । चन्द्रिका ।
स्नानम् । अभ्यङ्गः । मृदुशय्या ।
हिमानिलः ।

तद्योज्यम् ॥ * ॥
अथ विषरोगे पथ्यम् ।
अरिष्टाबन्धनम् । मन्त्रक्रिया । छर्द्दिः । विरे-
चनम् । रूषणम् । शोणिताकृष्टिः । परिषेकः ।
अवगाहनम् । हृदयावरणम् । नस्यम् । अञ्ज-
नम् । प्रतिसारणम् । उत्कर्त्तनम् । प्रधमनम् ।
प्रलेपः । वह्निकर्म्म । उपधानम् । प्रतिविषम् ॥
धूपः । संज्ञाप्रबोधनम् । शालिः । षष्टिकः । कोर-
दूषः । प्रियङ्गुः । मुद्गः । हरेणुः । तैलम् । सर्पिः ।
शिखितित्तिरिलावैणगोधाखुश्वाविदामिषम् ।
वार्त्ताकुः । कुलकम् । धात्री । निष्पावः । तण्डु-
लीयः । मण्डुकपर्णी । जीवन्ती । सुनिषण्णम् ।

| | | |
|---|---|---|
| विरुद्धान्नम् । दिवास्वप्नः । अभिष्यन्दि । गुरूणि । स्नानम् । क्रोधः । शकृन्मूत्रवाष्पाणां वेगधार-णम् । शोकः । द्रवम् । भूशय्या ॥ * ॥ | सन्तर्पणम् । प्रियवाक् । मनोरमविहारः । प्रिय-ङ्कराऩ्नपानम् ॥ * ॥ | |

उपोदिका । कालशाकम् । लशुनम् ।
दाडि-
मम् । विकङ्कतम् । प्राचीनामलकम् ।
पथ्या ।
कपित्थम् । नागकेशरम् ।
गोच्छागनरमूत्राणि ।
तक्रम् । शीताम्बु । शर्करा ।
अबिदाहीन्य-
न्नानि । सैन्धवम् । मधु । कुङ्कुमम् ।
पश्चिमो-
त्तरवातः । हरिद्रा । सितचन्दनम् ।
मुस्तम् ।
शिरीषः । कस्तूरी । तिक्तानि । मधुराणि
।
हेमचूर्णम् ॥ * ॥
विषरोगे अपथ्यम् ।
क्रोधः । विरुद्धाशनम् । अध्यशनम् ।
व्यवायः ।
ताम्बूलम् । आयासः । प्रवातः ।
सर्व्वाम्लम् ।
सर्व्वलवणम् । नानाविधसंस्वेदनम् ।
निद्रा ।
भयम् । धूमविधिः । क्षुधा ॥ * ॥
अथ रोगसङ्करे पथ्यम् ।
एषां गदानां यदि सङ्करः स्या-
त्तत्र प्रयत्नेन भिषङ्मनीषी ।
उक्तेषु पथ्येषु विरोधि यद्य-
त्तत्तत् प्रयुञ्जीत चिकित्सितेषु ॥ * ॥
रोगसङ्करे अपथ्यम् ।
अपथ्यानि च सर्व्वाणि
तत्तद्रोगोचितानि च ।
रुग्बलाबलविद्वैद्यो वर्ज्जयेद्व्याधिसङ्करे
॥ * ॥
अथ वातिकरोगे पथ्यम् ।
अभ्यङ्गः । परिमर्द्दनम् । शमनम् ।
संस्नेहनम् ।
बृंहणम् । स्नेहः । स्वेदनम् । आसना ।
शय-
नम् । संवाहनम् । वस्तिः । नस्यम् ।
प्राव-

वातिकरोगे अपथ्यम् ।
चिन्ता । जागरणम् । असृङ्मोक्षः । वमिः ।
लङ्घनम् । व्यायामः । गजवाजिवाहनविधिः ।
सन्धारणम् । मैथुनम् । आघातः । अपतर्प-
णम् । प्रपतनम् । धातुक्षयः । क्षोभणम् ।
शोकः । चंक्रमणम् । विरुद्धाशनम् । सम्पक्व-
भुक्तक्रमः । वृद्धत्वम् । जलदागमः । रजनी-
शेषः । अपराह्णः । भयम् । रूक्षात्यल्पकषाय-
तिक्तकटुकक्षारातिशीतानामशनम् । तृण-
धान्यम् । उद्रिका । आढकी । कङ्गुः । उद्दालः ।
मुकुष्टकः । कोद्रवः । यवः । श्यामाकः । जूर्णा-
दयः । शिम्बी । जम्बु । राजमाषः । चणकः ।
मुद्गः । कुलत्थः । विषम् । शालूकम् । क्रमुकम् ।
कशेरु । तलकम् । कठिल्लकम् । तिन्दुकम् ।
कर्कोटम् । नवतालशस्यम् । तालास्थिमज्जा ।
नदीतडागजलम् । करका । निक्षारबीजम् ।
पिण्याकः । शिशिराम्बु । रासभपयः । पत्र-
शाकम् । त्रिवृत् । भूनिम्बम् । कटुका । करी-
रम् । अखिलशुष्कामिषम् । माक्षिकम् । धूमः ।
बद्धमरुत् । रजः । परिभवः । खट्वा ॥ * ॥
अथ पैत्तिके पथ्यम् ।
सर्पिःपानविधिः । विरेचनम् । असृङ्मोक्षः ।
सितशालिः । गोधूमः । आढकिः । धान्यकम् ।
चणकः । मुद्गः । मसूरः । यवः । पर्य्यूषित-
मण्डः । पयः । पयःपेटी । वरा । माक्षिकम् ।
लाजाः । धन्वरसः । घृतानि । सिता । शीतो-
दकम् । उद्भिदः । कर्कोटम् । कदलम् । कण्टकि-
फलम् । वेत्राग्रम् । आषाढकम् । मृद्वीका ।
कोमलकुलकम् । कुष्माण्डम् । इर्व्वारुः । तुम्बी ।
पर्पटकः । अल्पमारिषदलम् । कठिल्लकम् ।
दाडिमम् । धात्री । कोमलतालशस्यम् ।
अभया । खर्जूरम् । औडुम्बरम् । विश्वम् ।
कषायः । तिक्तः । मधुरः । मधूकम् । वरी ।
कांस्यम् । अयः । रजतम् । हेम । कटुका ।
निम्बः । त्रिवृत् । चन्दनम् । हर्म्म्यम् । भूमि-
गृहम् । सुशीतलवनम् । धारागृहम् । चन्द्रिका ।
रम्भाम्भोरुहनव्यपत्रशयनम् । शीताः प्रदेहाः ।
भूशय्या । मणिः । प्रदोषसमयः । गीतम् ।
प्रियालिङ्गनम् । स्नानम् । मित्रसमागमः ।
प्रियकथा । मन्दानिलः । अभ्युक्षणम् । वादित्र-

जम्बीरम् । नलदाम्बु । हिङ्गु । लकुचम् ।
मूत्रम् । भल्लातकम् । ताम्बूलम् । दधि ।
सर्षपः ।
वदरम् । तैलाशनम् । तिन्तिडी । कटु ।
अम्लम् ।
लवणम् । विदाहि ॥ * ॥
अथ श्लैष्मिके पथ्यम् ।
छर्द्दिः । लङ्घनम् । अञ्जनम् । निधुवनम्
।
प्रोद्वर्त्तनम् । स्वेदनम् । चिन्ता ।
जागरणम् ।
श्रमः । अतिगमनम् । तृड्वेगधारणम् ।
गण्डूषः ।
प्रतिसारणम् । प्रधमनम् ।
हस्त्यश्वयानम् ।
धूमः । प्रावरणम् । नियुद्धम् ।
अतिसंक्षोभः ।
नस्यम् । भयम् । रूक्षोष्णविधिः ।
पुरातन-
शालिः । षष्टिका । निष्पावः ।
तृणधान्यम् ।
चणकः । मुद्गः । कुलत्थरसः । क्षारः ।
सर्षप-
तैलम् । उष्णजलम् । धन्वामिषम् ।
राजिका ।
वेत्राग्रम् । कुलकम् । कठिल्लकम् ।
वार्त्ताकुः ।
औडुम्बरम् । कर्कोटम् । लशुनम् ।
मोचकुसु-
मम् । शक्राशनम् । शूरणः । निम्बम् ।
मूलक-
पोतिका । वरुणः । तिक्ता । त्रिवृत् ।
माक्षि-
कम् । ताम्बूलम् । नलदाम्बु ।
जीर्णमदिरा ।
व्योषम् । वरा । गोजलम् । लाजाः ।
सुभृष्ट-
तण्डुलभवम् । तिक्तम् । सुखोष्णालयः
। कांस्यम् ।

रणम् । समीरणपरित्यागः । अवगाहः । शिरो-
वस्तिः । विस्मरणम् । दिवाकरकरः । स्नानम् ।
विस्मापनम् । तैलद्रोणी । सरसता । गाढोप-
नाहः । सुरा । भूशय्या । सुखशीलता । स्वा-
द्वम्ला रसाः । मज्जा । तैलम् । वसा । घृतम् ।
नवमाषः । कुलत्थः । तिलः । गोधूमः । मुद्गः ।
कलमः । शालिः । षष्टिकः । पेया । धान्य-
जलम् । पयः । कृषरः । मस्तुः । सुखोष्णो-
दकम् । गोमूत्रम् । नलदाम्बु । दधि । पयः-
पेटी । यवः । कूर्च्चिका । आनूपाःरुरुखड्गि-
कोलमहिषाः । एणः । धन्वोद्भवाः सर्पद्विट्-
कृकवाकुतित्तिरिकुलिङ्गाः । कुम्भीरः । तिमि-
ङ्गिलः । मकरः । गण्डूपदः । कच्छपः । रोहित-
मत्स्यः । वर्म्मिः । मदगुरः । सिलिन्धः । एरङ्गः ।
शृङ्गी । इल्लिशः । प्रोष्ठी । गर्गरः । पर्व्वतः ।
अन्ये जलजन्तवः । वार्त्ताकुः । कुलकम् । शिग्रु ।
लशुनम् । द्राक्षा । आम्रम् । आम्रातकम् ।
धात्री । दाडिमम् । अम्लवेतसफलम् । कोलम् ।
कपित्थम् । शिवा । पक्वतालम् । वकुलम् ।
गोकण्टकः । वास्तूकम् । शुक्लाक्षी । गणिका ।
सरस्रा । मन्दारपत्रम् । ताम्बूलम् । सित-
श्रवणम् । मनोरमतरभावाः । सुलास्येक्षणम् ।
पुन्नागोत्पलपाटलाब्जसुमनःकह्लारपुष्पाणि।
कर्परम् । प्रनीरनीरम् । शीतक्रिया ॥ * ॥
पैत्तिके अपथ्यम् ।
धूमः । स्वेदनम् । आतपः । निधुवनम् । सन्धा-
रणम् । क्रोधः । क्षारः । अध्वा । गजवाजि-
वाहनविधिः । तीक्ष्णकर्म्म । व्यायामः । अन्न-
विदाहकारिसमयः । ग्रीष्मः । विरुद्धाशनम् ।
मध्याह्नः । जलदात्ययः । रजनीमध्यम् । मध्य-
वयः । व्रीहिः । वेणुफलम् । तिलः । लशुनम् ।
माषः । कुलत्थः । गुडः । निष्पावः । मदिरा ।
अतसी । प्रहीजलम् । घान्याम्लम् । उष्णोदकम् ।
अयः । अञ्जनम् । मौक्तिकम् । कटुः । कषाय-
रसः ॥ * ॥
श्लैष्मिके अपथ्यम् ।
स्नेहः । अभ्यञ्जनम् । आसनम् । अस्थ्नि शय-
नम् । स्नानम् । विरुद्धाशनम् । पूर्ब्बाह्नः ।
शिशिरः । वसन्तसमयः । रात्र्यादिः । आद्य-
वयः । भुक्तमात्रसमयः । अन्नपानकरणम् ।
माषः । नवतण्डुलः । मत्स्यः । मांसम् । इक्षु-
विकृतिः । दुग्धविकृतिः । तालास्थिमज्जा ।
द्रवः । पेया । भव्यम् । उपोदिका । पनसम् ।
छत्राकम् । आषाढकम् । खर्ज्जूरम् । अनु-
लेपनम् । पयःपेटी । पयः । पायसः । स्वादु ।
अम्लम् । लवणम् । गुरूणि । तुहिनम् । सन्तर्प-
णम् ॥ * ॥
अथ वसन्तर्त्तौ पथ्यम् ।
वमनम् । व्यवायः । व्यायामः । भेदः । भ्रमणम् ।
अग्निसेवा । कटुः । तिक्तः । विदाहि । तीक्ष्णम् ।
कषायः । मध्वोदनम् ॥ * ॥
वसन्तर्त्तावपथ्यम् ।
दिवानिद्रा । सन्तर्पणम् । आलस्यम् । सुधांशु-
सेवा । पिण्डालुकम् । स्वादु । गुरूदकान्नम् ।
पिष्टम् । दधि । क्षीरम् । घृतम् ॥ * ॥
अथ ग्रीष्मर्त्तौ पथ्यम् ।
चन्दनम् । शीतवातः । छाया । अम्बु । कक्षा-
शयनम् । प्रसूनम् ।
सद्यःपयोभावितशीतभक्तम् ।

| | | | |
|---|---|---|---|
| शर्करा । लवणः । लोध्रः । तुरुष्कः । अगुरु । श्रीवासः । सुरदारु । गुग्गुलुः । ग्रन्थाह्वः । कुङ्कुमम् । स्निग्धोष्णविधिः । सञ्चूर्णितं हेम रजतं सीसकञ्च । जात्युत्पाटनमल्लिकापुष्पाणां विशाला माला ॥ * ॥ | | | विशिष्टद्रव्यम् । प्रियभोजनम् ॥ * ॥ ग्रीष्मर्त्तावपथ्यम् । कटु । तिक्तम् । उष्णम् । क्षारम् । अम्लम् । रौद्रम् । भ्रमणम् । अग्निसेवा । उन्निद्रता । भास्करतप्ततोयस्नानम् । अतिपानम् । दधि । तक्रम् । तैलम् ॥ * ॥ |

अथ वर्षासु पथ्यम् ।
लवणम् । अम्लम् । मिष्टम् । सारम् ।
प्रियम् ।
स्निग्धम् । गुरु । उष्णम् । बल्यम् ।
अभ्यङ्गः ।
उद्वर्त्तनम् । अग्निसेवा । तप्तान्नपानम् ।
दधि ॥
वर्षास्वपथ्यम् ।
पूर्ब्बपवनः । वृष्टिः । घर्म्मः । हिमः । श्रमः
।
नदीनीरम् । दिवास्वप्नः । रूक्षम ।
नित्यमैथु-
नम् ॥ * ॥
शरदि पथ्यम् ।
शीतरसाम्बुपानम् । तरुच्छाया । चन्दनम्
।
इन्दुसेवा । सिता । मुद्गः । मसूरम् ।
गव्य-
दुग्धम् । इक्षुः । शाल्योदनम् ॥ * ॥
शरद्यपथ्यम् ।
लवणम् । अम्लम् । तीक्ष्णम् । कटु ।
पिष्टम् ।
अतसी । विदाहि । सुरा । नालम् । दधि ।
तक्रम् । तैलम् । क्रोधः । उपवासः ।
आतपः ।
मैथुनम् ॥ * ॥
अथ हिमर्त्तौ पथ्यम् ।
तप्तजलम् । उपनाहः । पयः । अन्नम् ।
पानम् ।
घृतम् । स्त्रीसेवा । वह्निसेवा । गुरूणि ।
यथेष्ट-
भुक्तम् ॥ * ॥
हिमर्त्ताविपथ्यम् ।
दिवानिद्रा । कुभोजनम् । अभोजनम् ।
लङ्घ-
नम् । पुरातनान्नम् । लघुपाकि । शैत्यम् ।
वार्घ्योदनम् । शीतजलावगाहः ॥ * ॥
शिशिरे पथ्यम् ।
स्त्री । वाह्नसेवा । मतस्यः । अजमांसम् ।
दधि ।

देवानां ब्राह्मणानाञ्च गुरूणामपि पूजनम् ।
ब्रह्मचर्य्यं तपो होमः प्रदानं नियमो जपः ॥
साधूनां दर्शनं सत्यं रत्नौषधिविधारणम् ।
मङ्गलाचरणञ्चेति वर्गः सर्व्वान् ज्वरान् जयेत्
॥”
आगन्तुकज्वरे अपथ्यम् ।
“अधिवासनकर्म्माणि रक्तस्रग्वस्त्रधारणम् ।
वमिवेगं दन्तकाष्ठमसात्म्यमपि भोजनम् ॥
विरुद्धान्यन्नपानानि विदाहीनि गुरूणि च ।
दुष्टाम्वुक्षारमम्लांनि पत्रशाकं विरूढकम् ॥
नलदाम्बु च ताम्वूलं कलिङ्गं लकुचं फलम् ।
आडीमत्स्यञ्च पिण्याकं छत्राकं पिष्टवैकृतम् ॥
अभिष्यन्दीनि चैतानि ज्वरितः परिवर्ज्जयेत्
॥”
इति पथ्यापथ्यविनिश्चयः समाप्तः ॥

**पद**, स्थैर्य्ये । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-
सेट् ।) पदति । इति दुर्गादासः ॥

**पद**, त् क ङ गतौ । इति कविकल्पद्रुमः ॥ (अदन्त-
चुरां-आत्मं-सकं-सेट् ।) क ङ, पदयते । इति
दुर्गादासः ॥

**पद**, य ङ औ गत्याम् । इति कविकल्पद्रुमः ॥
(दिवां-आत्मं-सकं-अनिट् ।) य ङ, पद्यते । औ,
पत्ता । इति दुर्गादासः ॥

**पदं**, क्ली, (पद + ‘नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ।’
३ । १ । १३४ । इति अच् ।) व्यवसायः ।
त्राणम् । स्थानम् । (यथा, मनुः । १२ । १२५
।
“एवं यः सर्व्वभूतेषु पश्यत्यात्मानमात्मना ।
स सर्व्वसमतामेत्य ब्रह्माभ्येति परं पदम् ॥”)
चिह्नम् । पादः । वस्तु । इत्यमरः । ३ । ३ ।
९३ ॥
शब्दः । वाक्यम् । प्रदेशः । पादचिह्नम् ।
श्लोक-
पादः । (यथा, हेः रामायणे । १ । २ । १८ ।
“पादबद्धोऽक्षरसमस्तन्त्रीलयसमन्वितः ।
शोकार्त्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा
॥”)

“रामजाख्यमुपाध्यायं
ख्यातव्याकरणश्रमम् ।
व्याख्यातृपदकञ्चक्रे स तस्मिन्
सुरमन्दिरे ॥”)
स्वनामख्यातकण्ठभूषणञ्च ।
देवपदचिह्नादि-
युक्तत्वात् ॥ (पदमेव इति स्वार्थे के कृते,
क्लो ।
पदम् । यथा, महाभारते
अनुशासनपर्व्वणि ।
“इतःप्रभृति यातव्यं पदकं पदकं शनैः
॥”)

**पदगः**, पुं, (पदाभ्यां गच्छतीति । गम लृगतौ +
“अन्येभ्योऽपि ।” इति डः ।) पदातिकः ।
इत्य-
मरः । २ । ८ । ६६ ॥ पद्भ्यां
गमनकर्त्तरि त्रि ॥

**पदन्यासः**, पुं, (पदस्य गोपदस्येव न्यासो यत्र ।)
गोक्षुरः । रति शब्दचन्द्रिका ॥ पदस्य
विन्यासः ।
यथा, रसमञ्जरी ।
“पदन्यासो गेहाद्वहिरहिफणारोहणसमः
स्वगेहादन्यत् स्याद्वनमपरद्वीपतुलितम्
।
वचो लोकालभ्यं कृपणधनतुल्यं मृगदृशः
पुमानन्यः कान्ताद्विधुरिव
चतुर्थीसमुदितः ॥”
(तन्त्रोक्तान्नपूर्णामन्त्रस्थपदानांतत्तदङ्गेषु
न्यासः ।
यदुक्तं तन्त्रसारज्ञानार्णवे ।
“एकमेकं पुनश्चैकं पुनरेकं द्वयन्ततः ।
चतुश्चतुस्तथा द्वाभ्यां पदान्येतानि
पार्व्वति ! ॥
पदान्येतानि देवेशि ! नवद्वारेषु विन्यसेत्
।
मूर्द्धादिगुह्यपर्य्यन्तं पुनस्तेषु वरानने ! ॥
गुह्यादिब्रह्मरन्ध्रान्तं पदानां नवकं न्यसेत्
॥”)

**पदभञ्जनं**, क्ली, (विभक्तियुक्तानां पदानां भञ्जनं

दुग्धम् । सर्पिः ॥ * ॥
शिशिरेऽपथ्यम् ।
तीक्ष्णोष्णकट्वम्लकषायतिक्तानि।
सामुद्रकम् ।
आर्द्रभोजनम् । दिवानिद्रा । चन्दनम् ।
चन्द्र-
सेबा । शीतजलस्नानादि ॥ * ॥
माघे विशेषो यथा ।
माघे च शीतद्रवमिष्टपिष्टं
कन्दः कदल्या गुरुशालिभक्तम्।
इति षड़्तुपथ्यापथ्याधिकारः ॥ * ॥
आगन्तुकज्वराणां पथ्यापथ्यं
ज्वराधिकारे
न लिखितमतोऽत्र लिख्यते ।
"अभिघातसमुत्थाने पानाभ्यङ्गौ च
सर्पिषः ।
क्षतजे व्रणजे चापि क्षतव्रणचिकित्सितम्
॥
ओषधीगन्धविषजे विषपित्तप्रसाधनम्।
अभिचाराभिशापोत्थे जपहोमादिभेषजम्
॥
उत्पातग्रहपीडोत्थे दानस्वस्त्ययनादयः।
क्रोधोत्थिते पित्तहरं कामजे
कामजित्क्रिया ॥
कामशोकभयोद्भूते सर्व्वा वातहरी क्रिया ।
आश्वासनञ्चेष्टलाभो हर्षदायीनि यानि च
॥
विशेषतः पुनश्चात्र कामक्रोधसमुत्थिते।
भयशोकसमुद्भूते कामक्रोधोक्तमौषधम्।
भूताभिषङ्गजे भूतबन्धावेशनताडनम् ।
मनःक्षोभसमुत्पन्ने मनसः सान्त्वनानि च
॥
इत्यागन्तुज्वरे पूर्ब्बैर्भिषाग्भिः
पथ्यमिष्यते ।
विष्णोर्नामसहस्रस्य पाठनं श्रवणं श्रुतेः ॥

किरणे पुं । इति मेदिनी ॥ पदलक्षणं यथा, --
"वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः ।"
इति साहित्यदर्पणे । २ । ४ ॥
श्रीकृष्णपदचिह्नं यथा, --
"सौवर्णी राजतीं वापि पाषाणनिर्म्मितामपि ।
पादयोश्चाङ्कितां कृत्वा पूजाञ्चैव समाचरेत् ॥
दक्षिणस्य पदाङ्गुष्ठमूले चक्रं विभर्त्त्यजः ।
तत्र नम्रजनस्योग्रसंसारच्छेदनाय सः ॥
मध्यमाङ्गुलिमूले तु धत्ते कमलमच्युतः ।
धातुश्चित्तद्विरेफाणां लोभमायाति शोभनम् ॥
पद्मस्याधो ध्वजं धत्ते सर्व्वानर्थजयध्वजम् ।
कनिष्ठामूलतो वज्रं भक्तपापाद्रिभेदनम् ॥
पार्ष्णिमध्येऽङ्कुशं भक्तचित्तेभवशकारणम्।
भोगसम्पन्मयं धत्ते यवमङ्गुष्ठपर्व्वणि ।
तथा वामाङ्गुष्ठमूले पाञ्चजन्यस्य लक्षणम् ।
सर्व्वविद्याप्रकाशाय धत्ते च भगवानजः ॥"
इति पाद्मे पातालखण्डे १२ अध्यायः ॥

**पदकः**, पुं, पदं वेत्ति यः ("क्रमादिभ्यो पुन् ।" ४ । २ ।
६१ । इति वुन् ।) पदज्ञाता । इति व्याकर-
णम् ॥ (यथा, राजतरङ्गिण्याम् । ५ । ४९ ।

विश्लेषो यत्र । यद्वा, पदानि भज्यन्तेऽनेन
।
भञ्ज + करणे ल्युट् ।) निरुक्तम् ।
गूढार्थशब्द-
व्याख्या । इति हेमचन्द्रः ॥

**पदभञ्जिका**, स्त्री, (पदानां भञ्जिका विश्लेषिका ।)
पञ्जिका । टिप्पनी । इति हेमचन्द्रः ॥

**पदमाला**, स्त्री, (पदानां माला विस्तृतिर्य्यस्याम् ।)
मोहनशीला विद्या । यथा, --
"पदमालां महाविद्यां सर्व्वदेवनमस्कृताम्
।
याचयामि सुरेशानमुमादेहार्द्धधारिणम् ॥"
इति देवीपुराणे ९ अध्यायः ॥
अस्या विवरणं तत्रैव द्रष्टव्यम् । पदश्रेणी
च ॥

**पदविः**, स्त्री, (पद्यते गम्यतेऽनया । पद गतौ +
"पद्यटिभ्यामविः ।" इति अविः ।) पद्धती
।
पन्थाः । इत्यमरः । २ । १ । १५ ॥

**पदवी**, स्त्री, (पदवि + "कृदिकारान्तादक्तिनः ।"
इति पक्षे ङीष् ।) पन्थाः । इत्यमरः । २ ।
१ । १५ ॥
(यथा, रघुः । ७ । ७ ।
"उत्सृष्टलीलागतिरागवाक्षा-
दलक्तकाङ्कां पदवीं ततान ॥"
पद्धतिः । यथा, तत्रैव । ३ । ५० ।
"अलं प्रयत्नेन तवात्र मा निधाः
पदं पदव्यां सगरस्य सन्ततेः ॥"
पदम् । यथा, पञ्चतन्त्रे । १ । २५८ ।
"अथ तेन
सिंहाय अमात्यपदवी प्रदत्ता व्याघ्राय
शय्या-
पालत्वमिति ॥")

**पदष्ठीवं**, क्ली, (पादौ च अष्ठीवन्तौ च तयोः समा-
हारः । "अचतुरविचतुरेति ।" ५ । ४ ।
७७ । इति

निपातनात् सिद्धम् ।) युगपदुपस्थितचरण-
जानुनी । इति व्याकरणम् ॥

**पदाङ्कः**, पुं, (पदस्य अङ्कश्चिह्नम् ।) क्रमाङ्कः । पाद-
चिह्नम् । यथा, --
"शाके शायकवेदषोडशमिते श्रीकृष्णशर्म्मार्पिय-
न्नानन्दप्रदनन्दनन्दनपदद्वन्दारविन्दंहृदि ।
चक्रे कृष्णपदाङ्कदूतमतुलं प्रीतिप्रदं शृण्वतां
धीरः श्रीरघुरामरायनृपतेराज्ञां गृहीत्वादरात् ॥
इति पदाङ्कदूतकाव्यम् ॥

**पदाङ्गी**, स्ती, (हंसस्य पदमिव अङ्गं यस्याः । स्तियां
ङीष् ।) हंसपदी । इति राजनिर्घण्टः ॥

**पदाजिः**, पुं, (पादाभ्यामजतीति । अज गतौ +
"पादे च ।" उणां । ४ । १३१ । इति पादे चोप-
पदे अजेरिण् । "पादस्य पदाज्यातिगोप-
हतेषु ।" ६ । ३ । ५२ । इति पदादेशः । बहुल-
वचनात् अजेर्व्यभावः ।) पदातिकः । इत्य-
मरः । २ । ८ । ६६ ॥

**पदातः**, पुं, (पदाभ्यामततीति । पद् + अत् + अच् ।)
पादातिकः । इति शब्दरत्नावली ॥

**पदातिः**, पुं, (पादाभ्यामतति गच्छतीति "पादे
च ।" उणां ४ । १३१ । इति पाद् + अति +
इण् ।
"पादस्य पदाज्यातिगोपहतेषु ।" ६ । ३ । ५२
।
इति पदादेशः ।) पदातिकः । पेयादा इति
भाषा । तत्पर्य्यायः । पत्तिः २ पतगः ३ पादा-
तिकः ४ पदाजिः ५ पद्गः ६ पदिकः ७ ।
इत्य-
मरः । २ । ८ । ६६ ॥ पदातिकः ८ पादात् ९
पादाविकः १० पदात् ११ पायिकः १२ शव-
रालिः १३ । इति शब्दरत्नावली ॥ (यथा,
महाभारते । १ । १३९ । ३१ ।
"गजानश्वान् रथांश्चैव पातयामास पाण्डवः ।
पदातींश्च रथांश्चैव न्यवधीदर्ज्जनाग्रजः ॥")

**पदातिकः**, पुं, (पदाति + स्वार्थे कन् ।) पदातिः ।
इति शब्दरत्नावली ॥

द्विविधः ईश्वरजीवाद्युपाधिभेदात् ।
एतावपि
विद्याविद्याभेदेन द्विविधौ ।
केवलमविद्योप-
हितत्वाद्भेदव्यवहारः । अनात्मापि कारण-
सूक्ष्मस्थूलभेदात् त्रिविधः इति ॥)

**पदासनं**, क्ली, (पदः पादस्य वा आसनम् ।) पाद-
पीठम् । इति हेमचन्द्रः ॥ पा राखा टुल् ।
इति भाषा ॥

**पदिकः**, पुं, (पादेन चरतीति । पाद + "पर्पादिभ्यः
ष्ठन् ।" ४ । ४ । १० । इति ष्ठन् । ततः
पदादेशश्च ।)
पदातिः । इत्यमरः । २ । ८ । ६७ ॥

**पद्गः**, पुं, (पद्भ्यां गच्छतीति । पत् + गम् +
अन्ये-
भ्योऽपीति डः ।) पदातिकः । इत्यमरः ।
२ । ८ । ६७ ॥

**पद्धतिः**, स्त्री, (पद्भ्यां हन्ति गच्छतीति । हन
गतौ + क्तिन् । "हिमकाषिहतिषु
च ।" ६ । ३ । ५४ । इति पद्भावः ।
"बह्वादिभ्यश्च ।"
४ । १ । ४५ । इति वा ङीष् ।) वर्त्म ।
(यथा, रघुः
३ । ४६ ।

**पद्धती**, स्त्री, (पद्भ्यां हन्ति गच्छतीति । हन
गतौ + क्तिन् । "हिमकाषिहतिषु
च ।" ६ । ३ । ५४ । इति पद्भावः ।
"बह्वादिभ्यश्च ।"
४ । १ । ४५ । इति वा ङीष् ।) वर्त्म ।
(यथा, रघुः
३ । ४६ ।
"पथः श्रुतेर्दर्शयितार ईश्वराः
मलीमसामाददते न पद्धतिम् ॥")
पंक्तिः । इति मेदिनी ॥
ग्रन्थार्थबोधकग्रन्थः ।
इति हेमचन्द्रः ॥ पदवी । सा च घोषवसु-

तच्च गजस्य मुखादिस्थो बिन्दुसमूहः ।
व्यूह-
विशेषः । (यथा, मनुः ७ । १८८ ।
"यतश्च भयमाशङ्केत्ततो विस्तारयेद्बलम्
।
पद्मेन चैव व्यूहेन निविशेत सदा स्वयम्"
॥)
निधिभेदः । (यथा, महाभारते । २ । १०
। ३६ ।
"निधिप्रवरमुख्यौ च शङ्खपद्मौ धनेश्वरौ ।
सर्व्वान्निधीन् प्रगृह्याथ उपास्तां वै
धनेश्वरम्" ॥)
संख्यान्तरम् । तच्च दशार्वुदम् । (यथा,
महा-
भारते ।
"अयुतम् प्रयुतञ्चैव पद्मम्
खर्वमथार्व्वुदम्" ॥)
दशशङ्खश्च इति मेदिनी ॥ पद्मकाष्ठौषधिः
। इति
धरणिः ॥ पुष्करमूलम् । सीसकम् । इति
राज-
निर्घण्टः (कल्पविशेषः । यथा, मार्कण्डेये
४७ । ३ ॥
"पद्मावसाने प्रलये निशासुप्तोत्थितः
प्रभुः ।
सत्त्वोद्रिक्तस्तदा ब्रह्मा शून्यं
लोकमवैक्षत" ॥)
शरीरस्थषट्पद्मानि यथा, --
"मूलाधारे त्रिकोणाख्ये
इच्छाज्ञानक्रियात्मके ।
मध्ये स्वयम्भुलिङ्गन्तु
कोटिसूर्य्यसमप्रभम् ॥
तदूर्द्ध्वे कामबीजन्तु
कलशान्तीन्दुनादकम् ।
तदूर्द्ध्वे तु शिखाकारा कुण्डली
ब्रह्मविग्रहा ॥
तद्बाह्ये हेमवर्णाभम् व-स-वर्णचतुर्द्दलम् ।
द्रुतहेमसमप्रख्यं पद्मं तत्र विभावयेत् ॥
तदूर्द्ध्वेऽग्निसमप्रख्यं षड्दलं हीरकप्रभम्
॥

**पदारः**, पुं, (पदं ऋच्छति प्राप्नोतीति । ऋ + अण् ।)

पादधूलिः । पादालिन्दः । इति मेदिनी ॥

**पदार्थः**, पुं, पदानां घटपटादीनां अर्थोऽभिधेयः ।

तत्पर्य्यायः । भावः २ धर्म्मः ३ तत्त्वम् ४ सत्त्वम्
५ वस्तु ६ । इति जटाधरः ॥ * ॥ (पदार्था हि
दर्शनमतभेदेन नानाविधाः । तत्र वैशेषिकाणां
मते ।) सप्त पदार्थाः । यथा, --
"द्रव्यं गुणास्तथा कर्म्म सामान्यं सविशेषकम् ।
समवायस्तथाभावः पदार्थाः सप्त कीर्त्तिताः ॥"
"सप्तानामपि साधर्म्म्यं ज्ञेयत्वादिकमिष्यते ।
द्रव्यादयः पञ्च भावा अनेके समवायिनः ॥
सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः ॥"
इति भाषापरिच्छेदे । २, १४ ॥
"एते पदार्था वैशेषिकप्रसिद्धाः । नैयायिकाना-
मप्यविरुद्धाः ।" इति सिद्धान्तमुक्तावली ॥ गोत-
मोक्तषोडशपदार्थास्तु न्यायशब्दे द्रष्टव्याः ॥
(कपिलमते प्रकृत्यादयः पञ्चविंशतिः । पातञ्जल-
मते तु ईश्वरेण सह षड्विंशतिः । वेदान्तमते
आत्मानात्मभेदात् द्विविधः । तत्र आत्मापि
मित्रादिरूपा । यथा । "षष्ठेऽन्नप्राशनं मासि
यद्वेष्टं मङ्गलं कुले इति मनुवचनात् चूडाकार्य्या
यथाकुलमिति याज्ञवल्क्यवचनात् देशानु-
शिष्टं कुलधर्म्ममुख्यं सगोत्रधर्म्मं नहि संत्यजेच्च
इति वामनपुराणाच्च संस्कारमात्रे कुलधर्म्मानु-
रोधेन कालान्तरे मङ्गलविशेषाचरणवत्
शूद्राणां नामकरणे
वसुघोषादिरूपपद्धतियुक्त-
नामत्वञ्च बोध्यम् । एवमेव कुल्लूकभट्टः ।" इत्यु-
द्वाहतत्त्वम् ॥

**पद्धिमं**, क्ली, (पादस्य हिमम् । "हिमकाषिहतिषु

च ।" ६ । ३ । ५४ । इति पद्भावः ।) पदस्य शीत-
लता । इति संक्षिप्तसारव्याकरणम् ॥

**पद्मं**, क्ली पुं, (पद्यते इति । पद गतौ + "अर्त्तिस्तु-

सुहुस्रिति ।" उणां । १ । १३९ । इति मन् ।
यद्वा, पद्मा लक्ष्मीरस्त्यस्मिन् । "अर्श आदि-
भ्योऽच् ।" ५ । २ । १२३ । इति अच् ।) स्वनाम-
ख्यातपुष्पविशेषः । तत्पर्य्यायः । नलिनम् २
अरविन्दम् ३ महोत्पलम् ४ सहस्रपत्रम् ५
कमलम् ६ शतपत्रम् ७ कुशेशयम् ८ पङ्केरु-
हम् ९ तामरसम् १० सारसम् ११ सरसी-
रुहम् १२ विसप्रसूनम् १३ राजीवम् १४ पुष्क-
रम् १५ अम्भोरुहम् १६ । इत्यमरः । १ । १० ।
३९-४० ॥ पङ्कजम् १७ अम्भोजम् १८ अम्बु-
जम् १९ सरसिजम् २० श्रीवासम् २१ श्रीपर्णम्
वादिलान्तषड्रूणेन युक्ताधिष्ठानसंज्ञकम् ॥
मूलमाधारषट्कानां मूलाधारं ततो विदुः ॥ १ ॥
स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदुः ॥ २ ॥
तदूर्द्ध्वे नाभिदेशे तु मणिपूरं महत्प्रभम् ।
मेघाभं विद्युदाभञ्च बहुतेजोमयं ततः ॥
मणिवद्भिन्नं तत् पद्मं मणिपूरं तथोच्यते ।
दशभिश्च दलैर्युक्तं डादिफान्ताक्षरान्वितम् ॥
शिवेनाधिष्ठितं पद्मं विश्वालोकैककारणम् ॥ ३ ॥
तदूर्द्ध्वेऽनाहतं पद्ममुद्यदादित्यसन्निभम् ।
कादिठान्ताक्षरैरर्कपत्रैश्च समधिष्ठितम् ॥
तन्मध्ये वाणलिङ्गन्तु सूर्य्यायुतसमप्रभम् ।
शब्दब्रह्ममयं शब्दोऽनाहतस्तत्र दृश्यते ॥
तेनाहताख्यं पद्मं तन्मुनिभिः परिकीर्त्त्यते ।
आनन्दसदनं तत्तु पुरुषाधिष्ठितं परम् ॥ ४ ॥
तदूर्द्ध्वन्तु विशुद्धाख्यं दलषोडशपङ्कजम् ।
स्वरैः षोडशकैर्युक्तं धूम्रवर्णं महत्प्रभम् ॥
विशुद्धं तनुते यस्मात् जीवस्यस् हंसलोकनात् ।
विशुद्धं पद्ममाख्यातमाकाशाख्यंमहत् परम् ॥ ५ ॥
आज्ञाचक्रं तदूर्द्ध्वे तु आत्मनाधिष्ठितं परम् ।
आज्ञा संक्रमणं तत्र गुरोराज्ञेति कीर्त्तितम् ॥ ६ ॥
कैलासाख्यं तदूर्द्ध्वे तु बोधनीन्तु तदूर्द्ध्वतः ।
एवञ्च शिवचक्राणि प्रोक्तानि तव सुव्रत ! ।
सहस्राराम्बुजं बिन्दुस्थानं तदूर्द्ध्वमीरितम् ॥"
इति तन्त्रसारः ॥

**पद्मः**, पुं, (पद्यते इति । पद गतौ + "अर्त्तिस्तु

| | | |
|---|---|---|
| | २२ इन्दिरालयम् २३ जलेजातम् २४ अब्जम् २५<br>कञ्जम् २६ नलम् २७ नालीकम् २८ नालिकम्<br>२९ वनजम् ३० अम्लानम् ३१ पुटकम् ३२<br>अब्जः ३३ । इति शब्दरत्नावली ॥ अस्य गुणाः ।<br>कषायत्वम् । मधुरत्वम् । शीतत्वम् । पित्त-<br>कफास्रनाशित्वञ्च । इति राजवल्लभः ॥ अव-<br>शिष्टम् कमलशब्दे द्रष्टव्यम् ॥ * ॥ पद्मकम् । | स्विति ।” उणां । १ । १३९ । इति मन् ।) दाश-<br>रथिः । नागविशेषः । इति धरणिः ॥ (यथा,<br>महाभारते । २ । ९ । ८ ।<br>“कृष्णश्च लोहितश्चैव पद्मश्चित्रश्च वीर्य्यवान् ॥” |

पद्मोत्तरात्मजः । स तु द्वादशजिनचक्रवर्त्त्यन्त-
र्गतचक्रवर्त्तिविशेषः । बलदेवः । इति हेमचन्द्रः
।
षोडशरतिबन्धान्तर्गतप्रथमबन्धः । यथा, --
"हस्ताभ्याञ्च समालिङ्ग्य नारी पद्मासनोपरि
।
रमेद्गाढं समाकृष्य बन्धोऽयं पद्मसंज्ञकः ॥"
इति रतिमञ्जरी ॥

**पद्मकं**, क्ली, (पद्ममिव कायतीति । पद्म + कै +
कः । पद्मप्रतिकृतिरक्तवर्णत्वात् तथात्वम् ।)
बिन्दुजालम् । गजस्य मुखादिस्थो बिन्दुसमूहः
।
इत्यमरभरतौ ॥ (यथा, कुमारे । १ । ७
श्लोक-
टीकायां मल्लिनाथः । "अतएव कुञ्जरस्य ये
बिन्दवः काये वयोविशेषभाविनः पद्मकाख्याः
।)
पद्मकाष्ठम् । इति मेदिनीधरण्यौ ॥ (यथा,
गारुडे १९८ अध्याये ।
"कर्पूरकः पद्मकञ्च एतैस्तैलं प्रसाधितम् ।
प्रस्वेदमलदौर्गन्ध्यकण्डुकुष्ठहरं परम् ॥"
अस्य गुणा यथा, भावप्रकाशे ।
"पद्मकं तुवरं तिक्तं शीतलं वातलं लघु ।
विसर्पदाहविस्फोटकुष्ठश्लेष्मास्रपित्तहृत् ।
गर्भसंस्थापनं रुच्यं वमिव्रणतृषाप्रणत् ॥")
कुष्ठम् । इति राजनिर्घण्टः ॥

**पद्मकन्दः**, पुं, (पद्मस्य कन्दः ।) कमलकन्दः ।
तत्पर्य्यायः । शालूकम् २ पद्ममूलम् ३ कटा-
ह्वयम् ४ शालुकम् ५ जलालूकम् ६ । अस्य
गुणाः । कटुत्वम् । विष्टम्भित्वम् । रूक्षत्वम् ।
रुच्यत्वम् । कषायत्वम् ।
कफपित्तकाशतृष्णादाह-
विनाशित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
"पद्मादिकन्दः शालूकं करहाटश्च कथ्यते ।
मृणालमूलं भिष्माण्डं जलालूकञ्च कथ्यते ॥
शालूकं शीतलं वृष्यं पित्तदाहास्रनुद्गुरु ।
दुर्जरं स्वादुपाकञ्च स्तन्यानिलकफप्रदम् ॥
संग्राहि मधुरं रूक्षं भिष्माण्डमपि तद्गुणम् ॥"
इति भावप्रकाशः ॥

**पद्मगन्धं**, त्रि, (पद्मस्येव गन्धोऽस्य । "उप-
मानाच्च ।" ५ । ४ । १३६ । इति इत्
।
मुग्धबोधमते तु
वातूपमानादित्युक्तेर्विभाषा ।)
पद्मस्येव गन्धो यस्य तत् । इति
मुग्धबोधव्याक-
रणम् ॥

**पद्मगन्धि**, त्रि, (पद्मस्येव गन्धोऽस्य । "उप-
मानाच्च ।" ५ । ४ । १३६ । इति इत्
।
मुग्धबोधमते तु
वातूपमानादित्युक्तेर्विभाषा ।)
पद्मस्येव गन्धो यस्य तत् । इति
मुग्धबोधव्याक-
रणम् ॥

**पद्मगर्भः**, पुं, (पद्मं गर्भः कुक्षिरिव यस्य । विष्णु-
नाभिकमलजातत्वात् तथात्वम् ।) ब्रह्मा
। इति
शब्दरत्नावली ॥ (पद्मस्य
हृदयस्थपद्मस्य गर्भ
आसनत्वेन कल्पितो यस्य
उपासकैरितिशेषः ।
विष्णुः । यथा, महाभारते । १३ ।
१४९ । ५१ ।
"पद्मनाभोऽरविन्दाक्षः पद्मगर्भः
शरीरभृत् ॥"
"पद्मस्य हृदयाख्यस्य मध्ये
उपास्यत्वात् पद्मगर्भः ।"
इति भाष्यम् ॥
शिवः । यथा, तत्रैव १३ । १७ । १३२
।
"पद्मगर्भो महागर्भो ब्रह्मगर्भो जलोद्भवः
॥")

**पद्मचारिणी**, स्त्री (पद्ममिव चरतीति । चर +
णिनिः स्त्रियां ङीप् ॥)
उत्तरापथभवस्वनाम-

**पद्मनालं**, क्ली, (पद्मस्य नालम् ।) मृणालम् । यथा,
"कर्णिका पद्मनालन्तु मृणालं तन्तुलं विसम्
॥"
इति हेमचन्द्रः । ४ । २३१ ॥

**पद्मपत्रं**, क्ली, (पद्मस्य पत्रमिव । पद्मपर्णसादृश्या-
दस्य तथात्वम् ।) पुष्करमूलम् । इत्यमरः ।
२ ।
४ । १४५ ॥ (यथा, सुश्रुते
चिकित्सितस्थाने ५
अध्याये । "शैवलपद्मकपद्मपत्रप्रभृतिभिः
॥" * ॥
पद्मस्य पत्रम् ।) कमलदलम् ॥ (यथा,
हठयोग-
दीपिकायाम् । २ । ७० ।
"अन्तः प्रवर्त्तितोदारमारुतापूरितोदरः ।
पयस्यगाधेऽपि सुखात् प्लवते पद्मपत्रवत्
॥")

**पद्मपर्णं**, क्ली, (पद्मस्य पर्णं पत्त्रम् ।) पद्मपत्रम् ।
पुष्करमूलम् । इत्यमरटीका ॥

**पद्मपलाशलोचनः**, पुं, (पद्मस्य पलाशे पत्त्रे इव
लोचने यस्य ।
पद्मपुष्पदलाकारचक्षुर्विशिष्टत्वा-
त्तथात्वम् ।) विष्णुः । । यथा, --
"नान्यं ततः पद्मपलाशलोचनाद्
दुःखच्छिदन्ते मृगयामि कञ्चन ।
यो मृग्यते हस्तगृहीतपद्मया-
श्रियेतरैरङ्ग ! विमृग्यमाणया ॥"
इति श्रीभागवते ४ स्कन्धः ॥

**पद्मपाणिः**, पुं, (पद्मं पाणौ यस्य ।) ब्रह्मा । इति
शब्दरत्नावली ॥ बुद्धः । सूर्य्यः । इति
त्रिकाण्ड-
शेषः ॥ (पद्महस्तके त्रि ॥)

**पद्मपुष्पः**, पुं, (पद्ममिव पुष्पमस्य ।) कर्णिकार-
वृक्षः । पिकाङ्गपक्षी । इति शब्दचन्द्रिका ॥

**पद्मप्रभः**, पुं, (पद्मस्येव प्रभा दीप्तिर्यस्य ।) चतु-
र्विंशतिवृत्तार्हदन्तर्गतषष्ठार्हन् । इति हेम-

**पद्मकाष्ठं**, क्ली (पद्ममिव गन्धवत् काष्ठम् ।)

ओषधिविशेषः । तत्पर्य्यायः । पद्मकम् २ पीत-
कम् ३ पीतम् ४ मालयम् ५ शीतलम् ६
हिमम् ७ शुभम् ८ केदारजम् ९ रक्तम् १०
पाटलापुष्पसन्निभम् ११ पद्मवृक्षम् १२ । अस्य
गुणाः । शीतलत्वम् । तिक्तत्वम् । रक्तपित्त-
विनाशित्वम् ।
मोहदाहज्वरभ्रान्तिकुष्ठविस्फोट-
शान्तिकारित्वञ्च । इति राजनिर्घण्टः ॥
अपि च भावप्रकाशे ।
"पद्मकं पद्मगन्धि स्यात्तथा पद्माह्वयं स्मृतम् ।
पद्मकं तुवरं तिक्तं शीतलं वातलं लघु ॥
विसर्पदाहविस्फोटकुष्थश्लेष्मास्रपित्तहृत् ।
गर्भसंस्थापनं रुच्यं वमिव्रणतृषाप्रणुत् ॥"
इति भावप्रकाशः ॥

**पद्मकी** [न्,] पुं, (पद्मकं बिन्दुजालमस्त्यस्य ।

इनिः ।) भूर्ज्जवृक्षः । इति शब्दमाला ॥

**पद्मकेशरः**, पुं, क्ली, (पद्मस्य केशरः ।) किञ्जल्कः ।

इति राजनिर्घण्टः ॥ (यथा, इन्द्रजालसंग्रहे ।
"गोक्षीरैः पेषयेत्तुल्यं पद्मकेशरचन्दनम् ॥")

ख्यातवृक्षविशेषः । (स्थलकमलिनी इति ख्याता ॥)
तत्पर्य्यायः । अव्यथा २ अतिचरा ३ पद्मा ४
चारटी ५ । इत्यमरः । २ । ४ १४६ ॥ अस्याः
पर्य्यायान्तरं गुणाश्च स्थलपद्मिनीशब्दे
द्रष्टव्याः ॥

**पद्मतन्तुः**, पुं, (पद्मस्य तन्तुः ।) मृणालम् । इति

राजनिर्घण्टः ॥

**पद्मदर्शनः**, पुं, (पद्मस्येव दर्शनमस्य ।) श्रीवासः ।

इति शब्दचन्द्रिका ॥ लोवान् इति भाषा ॥

**पद्मनाभः**, पुं, (पद्मं नाभौ यस्य । "अच्प्रत्यन्वय

पूर्ब्बात् सामलोम्नः ।" ५ । ४ । ७५ । इत्यत्र
"अच्" इति योगविभागादच् । ब्रह्मोत्पत्ति-
कारणीभूतपद्मस्य नाभिजातत्वादस्य तथात्वम् ।)
विष्णुः । इत्यमरः । १ । १ । १० ॥ (यथा, महा-
भारते । १३ । १४९ । १९ ॥
"अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ॥")
शयने तस्य स्मरणीयत्वं यथा, --
"औषये चिन्तयेद्विष्णुं भोजने च जनार्द्दनम् ।
शयने पद्मनाभञ्च विवाहे च प्रजापतिम् ॥"
इत्यादि बृहन्नन्दिकेश्वरपुराणम् ॥
(हृदयपद्मस्यनाभौ नाभेरीषदुपरिभागे प्रकाश-
नात् महादवः । यथा, महाभारते । १३ ।
१७ । १०५ ।
"पद्मनाभो महागर्भश्चन्द्रवक्त्रोऽनिलोऽनलः ॥"
पद्ममिव वर्त्तुलाकृतिः नाभिर्यस्य । धृतराष्ट्रपुत्रा-

चन्द्रः ॥ पद्मतुल्यप्रभायुक्ते त्रि ॥

**पद्मप्रिया**, स्त्री, (पद्मानि प्रियाणि यस्याः ।)

जरत्कारुमुनिपत्नी । मनसादेवी । इति शब्द-
रत्नावली ॥ (गायत्रीरूपा महादेवी । यथा,
देवीभागवते । १२ । ६ । ९४ ।
"पद्मप्रिया पद्मसंस्था पद्माक्षी पद्मसम्भवा ॥")

**पद्मबन्धः**, पुं, (पद्मस्येव बन्धो रचना यस्य ।)

चित्रकाव्यविशेषः । शब्दालङ्कारप्रभेदः । यथा,
"पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते ।"
अस्य च तथाविधसन्निवेशवशेन चमत्कार-
विधायिनामपि वर्णानां तथाविधश्रोत्राकाश-
समवायविशेषवशेन च चमत्कारविधायिभि-
र्वर्णैरभेदेनोपचारत्वाच्छब्दालङ्कारत्वम्। उदा-
हरणं यथा, साहित्यदर्पणे ॥
"मारमा सुषमा चारु रुचा मार बधूत्तमा ।
मात्त धूर्त्ततमा वासा सा वामा मेस्तु मा रमा ॥"
अद्म पद्मदलेषु वर्णविन्यासक्रमः ॥

णामन्यतमः । यथा, महाभारते । १ । ६७ । ९५ ।
“ऊर्णनाभः पद्मनाभस्तथा नन्दोपनन्दकौ ॥”
नागविशेषः । यथा, तत्रैव । १२ । ३५५ । ४ ।
“कृताधिवासो धर्म्मात्मा तत्र चक्षुःश्रवा महान् ।
पद्मनाभो महानाभः पद्म इत्येव विश्रुतः ॥”)
भाविजिनविशेषः । इति हेमचन्द्रः ॥ (स्तम्भ-
नास्त्रविशेषः । यथा, गोः रामायणे १ । ३१ । ७ ।
“पद्मनाभो महानाभः सुनाभो दुन्दुभिस्वनः ॥”)

**पद्मनाभिः**, पुं, (पद्मं नाभौ यस्य । अजिति योग-
विभागस्य असार्व्वत्रिकत्वात् न अच् ।) पद्म-
नाभः । इति द्विरूपकोषः ॥

**पद्मबन्धुः**, पुं (पद्मस्य कमलस्य बन्धुः । सूर्य्योदये
पद्मस्य प्रकाशतया तथात्वम् ।) सूर्य्यः । इति
शब्दरत्नावली ॥ (पद्मेन बध्यते रुध्यते असौ
निशायां मधुलोभात् इति भावः । बन्ध +
उन् ।)
भ्रमरः । इति शब्दचन्द्रिका ॥

**पद्मभूः** पुं, (पद्मं विष्णुनाभिभवकमलं भूरुत्पत्ति-
स्थानं यस्य । (यद्वा, पद्मात् भवतीति । भू +
क्विप् ।) ब्रह्मा । इति हलायुधः ॥ (अस्योत्पत्ति-
कथा यथा भागवते । ९ । १ । ८ -- ९ ।
"परावरेषां भूतानामात्मा यः पुरुषः परः ।
स एवासीदिदं विश्वं कल्पान्तेऽन्यन्न किञ्चन ॥
तस्य नाभेः समभवत् पद्मकोशो हिरण्मयः ।
तस्मिन् जज्ञे महाराज ! स्वयम्भूश्चतुराननः ॥")

**पद्ममुखी**, स्त्री, (पद्मस्य मुखमिव मुखं उत्पत्ति-
प्रारम्भो यस्याः । स्त्रियां ङीप् ।) दुरालभा ।
इति शब्दचन्द्रिका ॥ (पद्मस्य मुखमिव मुखं
वदनं यस्य ।) पद्मसदृशमुखविशिष्टे त्रि ॥

**पद्मयोनिः**, पुं, (पद्मं विष्णुनाभिकमलं योनिरुत्-
पत्तिस्थानं यस्य ।) ब्रह्मा । यथा, --
"अस्माच्च कारणाद्ब्रह्मन् ! पुत्त्रो भवतु मे भवान् ।
पद्मयोनिरिति ख्यातो मत्प्रियार्थं जगन्मयः ॥"
इति कौर्म्मे ९ अध्यायः ॥

**पद्मरागः**, पुं, (पद्मस्येव रागो यस्य ।) रक्तवर्ण-
मणिविशेषः । माणिक इति भाषा । तत्प-
र्य्यायः । शोणरत्नम् २ । लोहितकः ३ । इत्य-
माषकचतुष्टयं दशशतक्रयं
द्वौ तु पञ्चशतमूल्यौ ॥
परिकल्प्यमन्तराले
मूल्यं हीनाधिकगुणानाम् ॥
वर्ण यूनस्यार्द्धं तेजोहीनस्य
मूल्यमष्टांशः ।
अल्पगुणो बहुदोषो मूल्यात् प्राप्नोति
विंशांशम् ॥
आधूम्रं व्रणबहुलं
स्वल्पगुणञ्चाप्नुयाद्द्विशत-
भागम् ।
इति पद्मरागमूल्यं पूर्ब्बाचार्य्यैः
समुद्दिष्टम् ॥")
राजनिर्घण्टोक्तपर्य्यायगुणौ
माणिक्यशब्दे द्रष्टव्यौ
तस्य वर्णो यथा, --
"सिंहले तु भवेद्रक्तं पद्मरागमनुत्तमम् ।
पीतं काणपुरोद्भूतं कुरुविन्दमिति
स्मृतम् ॥
अशोकपल्लवच्छायममुं सौगन्धिकं विदुः
।
तुम्बुरे छायया नीलं नीलगन्धि
प्रकीर्त्तितम् ॥
उत्तमं सिंहलोद्भूतं निकृष्टं तुम्बुरोद्भवम् ।
मध्यमं मध्यमं ज्ञेयं माणिक्यं क्षेत्रभेदतः
॥ * ॥
तथा च ।
बन्धूकगुञ्जासकलेन्द्रगोप-
जवासनासृक्समवर्णशोभाः ।
भ्राजिष्णवो दाडि मबीजवर्णा-
स्तथापरे किंशुकपुष्पभासः ॥
सिन्दूरपद्मोत्पलकुङ्कुमानां
लाक्षारसस्यापि समानवर्णाः ।
सान्द्रे निरागे प्रभया स्वयैव
भान्ति स्वलक्ष्म्या स्फुटमध्यशोभाः ॥
भानोश्च भासामनुवेधयोग-
मासाद्य रश्मिप्रकरेण दूरम् ।
पार्श्वानि सर्व्वाण्यनुरञ्जयन्ति
गुणोपपन्नाः स्फटिकप्रसूताः ॥
कुसुम्भनीलीव्यतिमिश्ररागा-
अथ जात्यादि ।
"माणिक्यस्य प्रवक्ष्यामि यथा जातिचतुष्टयम् ।
ब्रह्मक्षत्त्रियवैश्याश्च शूद्रश्चाथ यथाक्रमम् ॥
रक्तश्वे तो भवेद्विप्रस्त्वतिरक्तस्तु क्षत्त्रियः ।
रक्तपीतो भवेद्वैश्यो रक्तनीलस्तथान्त्यजः ।
पद्मरागो भवेद्विप्रः कुरुविन्दस्तु बाहुजः ।
सौगन्धिको भवेद्वैश्यो मांसखण्डस्तथान्त्यजः ॥
शोणपद्मसमाकारः खदिराङ्गारसप्रभः ।
पद्मरागो द्विजः प्रोक्तश्छायाभेदेन सर्व्वदा ॥
गुञ्जासिन्दूरबन्धूकनागरङ्गसमप्रभः ।
दाडिमीकुसुमाभासः कुरुविन्द स्तु बाहुजः ॥
हिङ्गुलाभाशोकपुष्पाभमीषत्पीतलोहितम् ।
जवालाक्षारसप्रायं वैश्यं सौगन्धिकं विदुः ॥
आरक्तः कान्तिहीनश्च चिक्कणश्च विशेषतः ।
मांसखण्डसमाभासो ह्यन्त्यजः पापनाशनः ॥"
मांसखण्डस्तु नीलगन्धेः संज्ञा ॥ * ॥
अथ दोषाः ।
"माणिक्यस्य समाख्याता अष्टौ दोषा मुनीश्वरैः
।
द्विच्छायञ्च द्विरूपञ्च सम्भेदः कर्करन्तथा ॥
अशोभनं कोकिलञ्च जलं धूम्राभिधञ्च वै ।
गुणाश्चत्वार आख्याताश्छायाः षोडश
कीर्त्तिताः ॥
छायास्तु पूर्ब्बोक्ता एव ।
"छायाद्वितयसम्बन्धादद्विच्छायंबन्धुनाशनम् ।
द्विरूपं द्विपदन्तेन माणिक्येन पराभवः ॥
सम्भेदो भिन्नमित्युक्तं शस्त्रघातविधायकः ।
कर्करं कर्करायुक्तं पशुबन्धुविनाशकृत् ॥
दुग्धेनेव समालिप्तमघनीपुटमुच्यते ।
अशोभनं समुद्दिष्टं माणिक्यं बहुदुःखकृत् ॥
मधुविन्दुसमच्छायं कोकिलं परिकीर्त्तितम् ।
आयुर्लक्ष्मीयशो हन्ति सदोषं तन्न धारयेत् ॥
रागहीनं जलं प्रोक्तं धनधान्यापवादकृत् ।
धूम्रं धूमसमाकारं वैद्युतं भयमावहेत् ॥
तथा, --
"शोभाद्वितयवन्तो ये मणयः क्षतिकारकाः ।
उभयत्र पदं येषां तेन च स्यात् पराभवः ॥
भिन्नेन युद्धे मृत्युः स्यात् कर्करन्धननाशकृत् ।
दुग्धेनेव समालिप्तः पुटके यस्तु सम्भवेत् ॥
दुःखकृत् स समाख्यातो न नृपै रक्षणीयकः ।

मरः । २ । ९ । ९२ ॥ लोहितम् ४ ।
कुरुबिन्दकम् ५ ।
इति शब्दरत्नावली ॥ (बृहत्संहितायां ८२
अध्याये अस्य परीक्षादिकं यथा, --
"सौगन्धिककुरुविन्दस्फटिकेभ्यः
पद्मरागसम्भूतिः ।
सौगन्धिकजा भ्रमराञ्जनाब्जजम्वूरसद्युतयः
॥
कुरुविन्दभवाः शबला मन्दद्युतयश्च
धातुभि-
र्विद्धाः ।
स्फटिकभवा द्युतिमन्तो नानावर्णा
विशुद्धाश्च ॥
स्निग्धः प्रभानुलेपो स्वच्छोऽर्च्चिष्मान् गुरुः
सुसंस्थानः ।
अन्तःप्रभोऽतिरागा मणिरत्नगुणाः
समस्ता-
नाम् ॥
कलुषा मन्दद्युतयो लेखाकीर्णाः सधातवः
खण्डाः ।
दुर्व्विद्धा न मनोज्ञाः सशर्कराश्चेति
मणिदोषाः ॥
भ्रमरशिखिकण्ठवर्णा
दीपशिखासमप्रभो भुजङ्गानाम् ।
भवति मणिः किल मूर्द्धनि योऽनर्घेयः स
विज्ञेयः ॥
यस्तं बिभर्त्ति मनुजाधिपतिर्न तस्य
दोषा भवन्ति विषरोगकृताः कदाचित् ।
राष्ट्रे च नित्यमभिवर्षति तस्य देवः
शत्रूश्च नाशयति तस्य मणेः प्रभावात् ॥
षड्विंशतिः सहस्राण्येकस्य मणेः पलप्रमा-
णस्य ।
कर्षत्रयस्य विंशतिरुपदिष्टा पद्मरागस्य ॥
अर्द्धपलस्य द्वादशकर्षस्यैकस्य षट्
सहस्राणि ।
यच्चाष्टमाषकधृतं तस्य सहस्रत्रयं मूल्यम्
॥
प्रत्यग्ररक्ताम्बरतुल्यभासः ।
तथापरेऽरुष्करकण्टकारी-
पुष्पत्विषो हिङ्गुलकत्विषोऽन्ये ॥
चकोरपुंस्कोकिलसारसानां
नेत्रावभासश्च भवन्ति केचित् ।
अन्ये पुनर्नातिविपुष्पितानां
तुल्यत्विषः कोकनदोदराणाम् ॥
प्रभावकाठिन्यगुरुत्वयोगैः
प्रायः समानाः स्फटिकोद्भवानाम् ।
आनीलरक्तोत्पलचारुभासः
सौगन्धिकाख्या मणयो भवन्ति ॥
यो मन्दराजः कुरुबिन्दजेषु
स एव जातः स्फटिकोद्भवेषु ।
निरर्च्चिषोऽन्तर्ब्बहुलीभवन्ति
प्रभाववन्तोऽपि न तत्समानाः ॥
ये तु रावणगङ्गायां जायन्ते
कुरुविन्दकाः ।
पद्मरागा घनं रागं बिभ्राणाः
स्वस्फुटार्च्चिषः ॥
वर्णानुयायिनस्तेषामन्ध्रदेशे तथापरे ।
न जायन्ते तु ये केचित्
मूल्यलेशमवाप्नुयुः ॥
तथैव स्फटिकोत्थानां देशे तुम्बुरसंज्ञके
।
सधर्म्माणः प्रजायन्ते स्वल्पमूल्याहि ते
स्मृताः ॥" *
मधुबिन्दुसमा शोभा कोकिलानां प्रकीर्त्तिता ॥
तेषाञ्च बहुभेदाः स्युर्नते धार्य्याः कदाचन ॥"
अथ गुणाः ।
"गुरुत्वं स्निग्धता चैव वैमल्यमतिरक्तता ॥"
तथा च ।
"वर्णाधिकं गुरुत्वञ्च स्निग्धता समताच्छता ।
अर्च्चिष्मत्ता महत्ता च मणीनां गुणसंग्रहः ॥" *
॥
फलम् ।
"ये कर्कराश्छिद्रमलोपदिग्धाः
प्रभाविमुक्ताः परुषा विवर्णाः ।
न ते प्रशस्ता मणयो भवन्ति
समानतो जातिगुणैः समस्तैः ॥
दोषोपसृष्टं मणिमप्रबोधाद्
बिभर्त्ति यः कश्चन कञ्चिदेकम् ।

तं बन्धुदुःखाय सबन्धुवित्त-
नाशादयो दोषगणा भजन्ते ॥
सपत्नमध्येऽपि कृताधिवासं
प्रमादवृत्तावपि वर्त्तमानम् ।
न पद्मरागस्य महागुणस्य
भर्त्तारमापत समुपैति काचित् ॥
दोषोपसर्गप्रभवाश्च ये ते
नोपद्रवास्तं समभिद्रवन्ति ।
गुणैः समुख्यैः सकलैरुपेतं
यः पद्मरागं प्रयतो बिभर्त्ति ॥” * ॥
अस्य परीक्षा यथा, --
“बालार्क्ककरसंस्पर्शात् यः शिखां लोहितां
वमेत् ।
रञ्जयेदाश्रमं वापि स महागुण उच्यते ॥
दुग्धे शतगुणे क्षिप्तो रञ्जयेद्यः समन्ततः ।
वमेच्छिखां लोहितां वा पद्मरागः स उत्तमः ॥
अन्धकारे महाघोरे यो न्यस्तः सन् महामणिः ।
प्रकाशयति सूर्य्यामः सश्रेष्ठः पद्मरागकः ॥
पद्मकोषे तु यो न्यस्तो विकाशयति तत्क्षणात् ।
पद्मरागवरो ह्येष देवानामपि दुर्लभः ॥
सर्व्वारिष्टप्रशमनाः सर्व्वसम्पत्तिदायकाः ।
चत्वारस्तु मयोद्दिष्टा गुणिनश्च यथोत्तरम् ॥
यो मणिर्दृश्यते दूराज्ज्वलदग्निसमच्छविः ।
वंशकान्तिः स विज्ञेयः सर्व्वसम्पत्तिकारकः ॥
पञ्च सप्त नव विंशति रागः
क्षिप्त एव सकलः खलु वस्त्रे ।
वर्ज्जयेद्भमति वा करजाल-
मुत्तरोत्तरमहागुणिनस्ते ॥
नीलं रसं दुग्धरसं जलं वा
ये रञ्जयन्ति द्विशतप्रमाणम् ।
ते ते यथापूर्ब्बमतिप्रशस्ताः
सौभाग्यसम्पत्तिविधानदायकाः ॥ * ॥
परिमाणम् ।
“गुञ्जाफलप्रमाणस्तु दशसप्तत्रिगुञ्जकान् ।
पद्मरागस्तुलयति यथापूर्ब्बं महागुणः ॥
क्रोष्टुकोलफलाकारो द्वादशाष्टाब्धिगुञ्जकान् ।
पद्मरागस्तुलयति यथापूर्ब्बं महागुणः ॥
वदरीफलतुल्यो यः स्वरदिग्वसुमाषक ।
तथा धात्रीफलत्रिंशद्विंशतिद्व्यष्टमाषकः ॥
तथाक्षफलतुल्यो यो वह्निपक्षैकमाषकः ।

श्रीपर्णकं दीप्तिनिराकृतित्वा-
द्विजातिलिङ्गाश्रय एष भेदः ॥”
तथा च ।
“स्नेहप्रदेहो मृदुता लघुत्वं
विजातिलिङ्गं खलु सार्व्वजन्यम् ।
यः श्यामिकां पुष्यति पद्मरागो
यो वा तुषाणामिव चूर्णमध्यः ॥
स्नेहप्रदिग्धो न च यो बिभाति
यो वा प्रमृष्टः प्रजहाति दीप्तिम् ।
आक्रान्तमूर्द्धा च तथाङ्गुलिभ्यां
यः कालिकां पार्श्वगतां बिभर्त्ति ॥
सम्प्राप्य चोत्क्षेपपथानुवृत्तिं
बिभर्त्ति यः सर्व्वगुणानतीव ।
तुल्यप्रमाणस्य च तुल्यजाते-
र्यो वा गुरुत्वेन भवेन्न तुल्यः ॥
प्राप्यापि रत्नाकरजां स्वजातिं
लक्षेद्गुरुत्वेन गुणेन विद्वान् ॥
अप्रणश्यति सन्देहे शिलायां
परिघर्षयेत् ।
घृष्टो योऽत्यन्तशोभावान् गरिमाणं
न मुञ्चति ।
स ज्ञेयः शुद्धजातिस्तु ज्ञेयाश्चान्ये
विजातयः ॥
स्वजातकं समुत्थेन विलिखेद्वा
परस्परम् ।
वज्रं वा कुरुबिन्दं वा
विमुच्यान्योन्यकेनचित् ।
न शक्यं लेखनं कर्त्तुं
पद्मरागेन्द्रनीलयोः ॥
जातस्य सर्व्वेऽपि मणेर्न जातु
विजातयः कान्तिसमानवर्णाः ।
तथापि नानाकरणार्थमेवं
भेदप्रकारः परमः प्रदिष्टः ॥
गुणोपपन्नेन सहावबद्धो
मणिस्तु धार्य्यो विगुणेन जात्यः ।
न कौस्तुभेनापि सहावबद्धं
विद्वान् विजातिं बिभृयात् कदाचित्
॥
चण्डाल एकोऽपि यथा द्विजातीन्
समेत्य भूरीनपहन्त्ययत्नात् ।

एकोनो नूयते यस्तु जवाकुसुमसन्निभः ।
कार्षापणसहस्राणि तस्य मूल्यं चतुर्द्दश ॥
बालादित्यद्युतिनिभः कर्षं यस्तु प्रतुल्यते ।
कार्षापणशतानान्तु मूल्यं सद्भिः
प्रकीर्त्तितम् ॥
यस्तु दाडिमपुष्पाभः कर्षार्द्धेन तु सम्मितः
।
कार्षापणशतानान्तु विंशतिं मूल्यमादिशेत्
॥
चत्वारो माषका यस्तु रक्तोत्पलदलप्रभः ।
मूल्यं तस्य विधातव्यं सूरिभिः शतपञ्चकम्
॥
द्विमाषको यस्तु गुणैः सर्व्वैरेव समन्वितः ।
तस्य मूल्यं विधातव्यं द्विशतं तत्त्ववेदिभिः
॥
माषकैकमितो यस्तु पद्मरागो गुणान्वितः ।
शतैकसम्मितं वाच्यं मूल्यं रत्नविचक्षणैः ॥
अतोऽन्यूनप्रमाणास्तु पद्मरागा गुणोत्तराः ।
स्वर्णद्विगुणमूल्येन मूल्यं तेषां प्रकल्पयेत् ॥
कार्षापणः समाख्यातः पुराणद्वयसम्मितः ।
अन्ये कुसुम्भपानीयमञ्जिष्ठोदकसन्निभाः॥
काषाया इति विख्याताः स्फटिकप्रभवाश्च
ते ।
तेषां दोषान् गुणान् वापि पद्मरागवदादिशेत्
॥
मूल्यमल्पन्तु विज्ञेयं धारणेऽल्पफलं तथा ।
ब्रह्मक्षत्त्रियवैश्यान्त्याश्चतुर्धा ये
प्रकीर्त्तिताः ॥
चतुर्विधैर्नृपतिभिर्धार्य्या सम्पत्तिहेतवे ।
अतोऽन्यथा धृतः कुर्य्याद्रोगशोकभयक्षयम्
॥”
इति युक्तिकल्पतरौ पद्मरागपरीक्षा ॥

**पद्मलाञ्छनः**, पुं, (पद्मवत् लाञ्छनं पद्माकारलक्षणं चिह्नमितिशेषः यस्य ।) ब्रह्मा । सूर्य्यः । कुवेरः ।
राजा । इति मेदिनी ॥ (बुद्धविशेषः । इति शब्दचिन्तामणिः ॥)

**पद्मलाञ्छना**, स्त्री, (पद्मं लाञ्छनं यस्याः ।)

ताम्बूलफलमानो यश्चतुस्त्रिद्विकतोलकः ॥
बिम्बीफलसमाकारो वसुषड्दशतोलकः ।
अतःपरं प्रमाणेन मानेन च न लभ्यते ।
यदि लभ्येत पुण्येन तदा सिद्धिमवाप्नुयात् ॥
केचिच्चारुतराः सन्ति जातीनां प्रतिरूपकाः ।
विजातयः प्रयत्नेन विद्वांस्तानुपलक्षयेत् ॥
कलसपुरोद्भवसिंहलतुम्बुरुदेशोत्थमुक्तमालीयाः ।
श्रीपर्णिकाश्च सदृशा विजातयः पद्मरागाणाम् ॥
तुषोपसर्गात् कलसाभिधान-
माताम्रभावादपि तुम्वुरूत्थम् ।
कार्ष्णात्तथा सिंहलदेशजातं
मुक्ताभिधानं नभसः स्वभावात् ।

तथा मणीन् भूरिगुणोपपन्नान्
शक्नोति विद्रावयितुं विजातः ॥”
* ॥
अथ मूल्यम् ।
बालार्काभिमुखं कृत्वा दर्पणे
धारयेन्मणिम् ।
तत्र कान्तिविभागेन छायाभागं
विनिर्द्दिशेत् ॥
वज्रस्य यत्तण्डुलसंख्ययोक्तं
मूल्यं समुन्मापितगौरवस्य ।
तत्पद्मरागस्य गुणान्वितस्य
स्यान्माषकाख्या तुलितस्य मूल्यम्
॥
यन्मूल्यं पद्मरागस्य सगुणस्य
प्रकीर्त्तितम् ।
तावन्मूल्यं तथाशुद्धे कुरुविन्दे
विधीयते ॥
सगुणे कुरुबिन्दे च यावन्मूल्यं
प्रकीर्त्तितम् ।
तावन्मूल्यचतुर्थांशहीनं स्याद्वै
सुगन्धिके ॥
यावन्मूल्यं समाख्यातं वैश्यवर्णे च
सूरिभिः ।
तावन्मूल्यचतुर्थांशं हीयते
शूद्रजन्मनि ॥
पद्मरागः पणं यस्तु धत्ते
लाक्षारसप्रभः ।
कार्षापणसहस्राणि त्रिंशन्मूल्यं
लभेत सः ॥
इन्द्रगोपकसङ्काशः कर्षत्रयधृतो
मणिः ।
द्वाविंशतिं सहस्राणां तस्य मूल्यं
विनिर्द्दिशेत् ॥

तारा । लक्ष्मीः । स्वरस्वती । इति मेदिनी
॥

**पद्मवर्णकं**, क्ली, (पद्मस्येव वर्णोऽस्य । कप् ।
पुष्करमूलम् । इति जटाधरः ॥
पद्मतुल्यवर्ण-
युक्ते त्रि ॥

**पद्मवासा**, स्त्री, (पद्मे वासो यस्याः ।) लक्ष्मीः)
इति हेमचन्द्रः ॥

**पद्मवीजं**, क्लीं, (पद्मस्य वीजम् ।) कमलवीजम् ।
तत्पर्य्यायः । पद्माक्षम् २ गालोड्यम् ३
कन्दली
४ भेण्डा ५ क्रौञ्चादनी ६ क्रौञ्चा ७ श्यामा
८
पद्मपर्क्कटी ९ । अस्य गुणाः । कटुत्वम् ।
स्वादुत्वम् ।
पित्तच्छर्द्दिदाहास्रशोषनाशित्वम्।
पाचनत्वम् ।
रुचिकारित्वञ्च । इति राजनिर्घण्टः ॥
“पद्मवीजं हिमं स्वादु कषायं तिक्तकं गुरु ।
विष्टम्भि वृष्यं रूक्षञ्च गर्भसंस्थापकं परम् ॥
कफवातकरं बल्यं ग्राहि पित्तास्रदाहनुत्
॥”
इति भावप्रकाशः ॥
(पद्मबीजमालाजपेनाशु साधकः
सिद्धिमाप्नुयात् ।
इति तन्त्रशास्त्रे प्रसिद्धिः ॥ तदुक्तं यथा, --
“भक्त्या यो जपते नित्यं पद्मवीजैः
सुदेशिकः ।
अचिराल्लभते सिद्धिं सत्यं सत्यं न संशयः
॥”

**पद्मवीजाभं**, क्ली, (पद्मवीजस्य आभा इव आभा
यस्य । पद्मवीजवत् आभातीति वा । आ +
भा + कः ।) मखान्नम् । इति राजनिर्घण्टः
।
माखाना इति भाषा ॥

**पद्मा**, स्त्री, (पद्मं वासस्थलत्वेनास्त्यस्याः । “अर्श
आदिभ्योऽच् ।” ५ । २ । १२७ । इति अच्
टाप् च ।) लक्ष्मीः । (यथा, रघुः । ४ । ५ ।
“छायामण्डललक्ष्येण तमदृश्या किल स्वयम् ।
पद्मा पद्मातपत्रेण भेजे साम्राज्यदीक्षितम् ॥”)
लवङ्गम् । पद्मचारिणी । इत्यमरः ॥
(पद्यते इति ।
“अर्त्तिस्तुस्विति ।” उणां । १ । १४० । इति मन्
टाप् च ।) पन्नगी । सा तु मनसा । फञ्जिका ।
इति मेदिनीशब्दरत्नावल्यौ ॥ वृत्तार्हत्माता ।
इति हेमचन्द्रः ॥ कुसुम्भपुष्पम् । इति रत्नमाला ॥
बृहद्रथराजकन्या कल्किदेवेन विवाहिता ।
यथा, कल्किपुराणे १० अध्यायः ॥
“हरेरागमनं श्रुत्वा सहर्षोऽभूदवृहद्रथः ।
पुरोधसा ब्राह्मणैश्च पात्रैर्मित्रैः सुमङ्गलैः ॥
वाद्यताण्डवगीतैश्च पूजायोजनपाणिभिः ।
जगामानयितुं कल्किं सार्द्धं निजजनैः प्रभुः ॥
ततो जलाशयाभ्यासं गत्वा विष्णुयशःसुतम् ।
मणिवेदिकमासीनं भुवनैकगतिं पतिम् ॥
ददर्श पुरतो राजा रूपशीलगुणाकरम् ।
साश्रुः सपुलकः श्रीशं दृष्ट्वा साधु तमर्च्चयत् ॥
स्वरूपत्वात् गङ्गापि । यथा, काशीखण्डे गङ्गा-
सहस्रनामकीर्त्तने । २९ । १०५ ।
“पद्मालया पराशक्तिः पुरजित्परमप्रिया ॥”)

**पद्मावती**, स्त्री, (पद्म + अस्त्यर्थे मतुप् मस्य वत्वम् ।
संज्ञायां दीर्घः ।) मनसादेवी । नदीविशेषः ।
पद्मा इति ख्याता । इति शब्दरत्नावली ॥
पद्मचारिणी । इति जटाधरः ॥ जयदेवपत्नी ।
यथा, --
“जयति पद्मावतीरमणजयदेव-
कविभारतीभणितमतिशातम् ।”
इति गीतगोविन्दः ॥

**पद्मावतीप्रियः**, पुं, (पद्मावत्याः प्रियः स्वामी ।)
जरत्कारुमुनिः । इति शब्दरत्नावली ॥ जय-
देवश्च ॥

**पद्मासनं**, क्ली, (पद्ममिव पद्माकारेण बद्धमित्यर्थः ।
आसनम् ।) योगासनविशेषः । यथा, --
“वामोरूपरि दक्षिणं नियमतः संस्थाप्य वामं तथा
दक्षोरूपरि पश्चिमेन विधिना धृत्या कराभ्यां धृतम् ।
अङ्गुष्ठं हृदये निधाय चिवुकं नासाग्रमालोकये-
देतद्व्याधिविकारनाशनकरंपद्मासनं प्रोच्यते ॥”
अन्यदत्रापि ।
“वामोरूपरि दक्षिणं हि चरणं संस्थाप्य वामं तथा-
प्यन्योरूपरि तस्य बन्धनविधौ धृत्वा कराभ्यां दृढम् ।
अङ्गुष्ठं हृदये निधाय चिवुंकं नासाग्रमालोकये-
देतद्व्याधिविनाशकारियमिनां पद्मासनं

**पद्माह्वा**, स्त्री, (पद्मस्य आह्वा आख्या यस्याः ।)
पद्मचारिणी । इति राजनिर्घण्टः ।

**पद्मिनी**, स्त्री, (पद्मानि सन्त्यस्याम् । पुष्करा-
दित्वादिनिः ।) पद्मयुक्तदेशः । पद्मसमूहः ।
पद्मलता । इति भरतः ॥ तत्पर्य्यायः ।
नलिनी २ विसिनी ३ । इत्यमरः । १ । १० । ३९ ॥
मृणालिनी ४ कमलिनी ५ पुटकिनी ६ पङ्क-
जिनी ७ सरोजिनी ८ । इति माधवः ॥
नालिकिंनी ९ नालीकिनी १० अरबिन्दिनी ११ ।
इति कोषान्तरम् ॥ अम्भोजिनी १२ पुष्क-
रिणी १३ जम्बालिनी १४ । इति शब्दरत्ना-
वली ॥ अब्जिनी १५ । तस्या लक्षणं यथा, --
“मूलनालदलोत्फुल्लफलैः समुदिता पुनः ।
पद्मिनी प्रोच्यते प्राज्ञैर्विसिन्यादिश्च सा स्मृता ॥”
तस्या गुणाः ।
“पद्मिनी मधुरा तिक्ता कषाया शिशिरा परा ।
पित्तक्रिमिशोषवान्तिभ्रान्तिसन्तापदोषहृत् ॥”
इति राजनिर्घण्टः ॥ * ॥
(पद्मं पद्मगन्धोऽस्त्यस्याः पद्मस्य गन्ध इव गन्धो
विद्यते शरीरे यस्या इति तात्पर्य्यार्थः अत्रतु पद्म-
गन्धयोस्तादात्म्यमङ्गीकृत्यैव समासः कल्पितः ।)
चतुर्व्विधस्त्रीमध्ये स्त्रीविशेषः । तस्या लक्षणं यथा, --
“भवति कमलनेत्रा नासिकाक्षुद्ररन्ध्रा
अविरलकुचयुग्मा दीर्घकेशी कृशाङ्गी ।
मृदुवचनसुशीला नृत्यगीतानुरक्ता
सकलतनुसुवेशा पद्मिनी पद्मगन्धा ॥”
इति रतिमञ्जरी । ४ ॥ * ॥
(अस्या रतिप्रकारः यदुक्तः तत्रैव । २८ ।
“कुचं करेण संमर्द्य पीडयेदधरं दृढम् ।
रमणं पद्मबन्धेन पद्मिनीरतिमादिशेत् ॥”)
सरोवरम् । पद्मम् । इति विश्वः ॥ (यथा, कुमारे । ३ । ७६ ।
“सुरगज इव बिभ्रत् पद्मिनीं दन्तलग्नां
प्रतिपथगतिरासीद्वेगदीर्घीकृताङ्गः ॥”)
मृणालम् । इति शब्दमाला ॥ हस्तिनी । इति
धरणिः ॥

ज्ञानागोचरमेतन्मे तवागमनमीश्वर !
।
यथा मान्धातृपुत्त्रस्य यदुनाथेन
कानने ॥
इत्यक्त्रा तं पूजयित्वा समानीय
निजाश्रमे ।
हर्म्यप्रासादसंबाधे स्थापयित्वा ददौ
सुताम् ॥
पद्मां पद्मविशालाक्षीं पद्मनेत्राय
पद्मिनीम् ।
पद्मजादेशितः पद्मनाभायादादयथा
श्रियम् ॥
कल्किर्लब्ध्वा प्रियां भार्य्यां सिंहले
साधु सत्कृतः ।
समुवास विशेषज्ञः समीक्ष्य
द्वीपमुत्तमम् ॥”

**पद्माकरः**, पुं, (पद्मस्य आकरः ।) पद्मजनक-
जलाशयः । तत्पर्य्यायः । तडागः २
कासारः ३
सरसी ४ सरः ५ । इत्यमरः । १ ।
१० । २८ ॥
सरोजिनी ६ । इति जटाधरः ॥
सरोवरः ७
तडाकः ८ तटाकः ९ सरसम् १०
सरम् ११
सरकम् १२ । इति शब्दरत्नावलो ॥
पद्म
सदैवागाधे महाजलाशये सपद्मे
योग्यतया
निष्पद्मे च । पद्मैव सरोमात्रे । इति
पञ्जिका-
कोङ्ककटादयोऽपि । पद्माकरादिद्वयं
सपद्मा-
गाधजलाशये । कासारादित्रयं
कृत्रिमपद्मा-
करे । इति स्वाम्यादयः ।
पद्माकरादिद्वयं पद्म-
युक्तजलाशयमात्रे । कासारादित्रयं
सरोवर-
मात्रे । इत्यन्ये । पद्मानामाकर
उत्पत्तिस्थानं
प्रोच्यते ॥”
इति गोरक्षसंहिता ॥
(मत्स्येन्द्रनाथाभिमतं पद्मासनं यथा,
हठयोग-
दीपिकायाम् । १ । ४४-४७ ।
“वामोरूपरिदक्षिणं च चरणं संस्थाप्य वामं
तथा
दक्षोरूपरि पश्चिमेन् विधिना धृत्वा कराम्यां
दृढं ।
अङ्गुष्ठौ हृदये निघाय चिवुकं नासाग्र-
मालोकयेदेतद्व्याधिविनाशकारियमिनां
पद्मासनं प्रोच्यते ॥
उत्तानौ चरणौ कृत्वा ऊरुसंस्थौ प्रयत्नतः
।
ऊरुमध्ये तथोत्तानौ पाणी कृत्वा ततोदृशौ
॥
नासाग्रे विन्यसेद्राजदन्तमूले तु जिह्वया ।
उत्तम्भ्य चिवुकं वक्षस्युत्थाप्य पवनं शनैः
॥
इदं पद्मासनं प्रोक्तं सर्व्वव्याधिविनाशनम् ।
दुर्लभं येन केनापि धीमता लभ्यते भुवि ॥”)
पूजार्थं धातुमयपद्माकारासनञ्च ।
(रतिविषयकपद्मासनम्यथा, रतिमञ्जर्य्याम्
४०
“पद्मासनो नागपादो लतावेष्टोऽर्द्धसंपुटः ॥”
तल्लक्षणं यथा, तत्रैव ४२ ।
“हस्ताभ्याञ्च समालिङ्ग्य नारीं
पद्मासनोपरि ।
रमेद्गाढं समाकृष्य बन्धोऽयं पद्मसंज्ञकः
॥”)

**पद्मासनः**, पुं, (पद्मं विष्णुनाभिकमलं आसनं
यस्य ।) ब्रह्मा । कमलासनः ।
इत्यमरदर्शनात् ॥

**पद्मिनीकण्टकः**, पुं, (पद्मिनीकण्टक इव आकृति-
र्विद्यतेऽस्य ।) क्षुद्ररोगविशेषः । पद्मकाँटा
इति भाषा । तल्लक्षणं यथा, --
“कण्टकैराचितं वृत्तं कण्डूमत्पाण्डुमण्डलम् ।
पद्मिनी कण्टकप्रख्यैस्तदाख्यं कफवातजम् ॥”
आचितं व्याप्तम् । पद्मिनीकण्टकप्रख्यैः पद्मिनी-
नालकण्टकसदृशैः । तदाख्यं पद्मिनीकण्टक-
नामकम् ॥ * ॥
तच्चिकित्सा यथा, --
“पद्मिनीकण्टके रोगे छर्द्दयेन्निम्बवारिणा ।
तेनैव सिद्धं सक्षौद्रं सर्पिः पातुं प्रदापयेत् ॥
निम्बारग्बधकल्कैर्व्वा मुहुरुद्वर्त्तनं हितम् ।
चतुर्गुणेन निम्बोत्थपत्रक्वाथेन गोघृतम् ॥
पचेत्ततस्तु निम्बस्य कृतमालस्य पत्रजैः ।
कल्कैर्भूयः पचेत् सिद्धं तत् पिबेत् पलसंमितम् ॥

पद्माकरः क्वचित् पद्मशून्येऽपि

योग्यतयेति

सुभूतिः । इति भरतः ॥

**पद्माक्षं**, क्ली, (पद्मस्य अक्षीव । समासे षच् ।)

पद्मबीजम् । इति हारावली ॥ (पद्मे

इव पद्मयु-

गलवत् अक्षिणी यस्य ।)

पद्मतुल्याक्षे त्रि ॥

**पद्माटः**, पुं, (पद्मं पद्मसादृश्यं अटति गच्छति

पत्रेणेति अट गतौ + "कर्म्मण्यण् ।"

३ । २ । १ ।

इति अण् ।) चक्रमर्द्दः । इत्यमरः ।

२ । ४ ।

१४७ ॥

**पद्मालया**, स्त्री, (पद्ममेव आलयो वासस्थानं

यस्याः ।) लक्ष्मीः । लवङ्गम् ।

इत्यमरः ॥ (लक्ष्मी-

पद्मिनीकण्टकाद्रोगान्मुक्तोभवति
नान्यथा ॥”
इति निम्बादिघृतम् । इति भावप्रकाशः
॥

**पद्मिनीकान्तः**, पुं, (पद्मिन्याः कान्तः । पद्मपुष्प-
प्रकाशकत्वादस्य तथात्वम् ।) सूर्य्यः
। इति
जटाधरः ॥

**पद्मिनीवल्लभः**, पुं, (पद्मिन्या नलिन्या वल्लभः प्रियः ।
पद्मिनी वल्लभाऽस्येति वा ।) सूर्य्यः ।
इति शब्द-
रत्नावली ॥

**पद्मी**, [न्] पुं, (पद्मं बिन्दुजालकमस्त्यस्य । पद्म
+ इनिः ।) हस्ती । इत्यमरः । २ । ८
। ३५ ॥
(यथा, महाभारते । १२ । २९ । ६६
।
“सर्व्वा रथगताः कन्या रथाः सर्व्वे
चतुर्युजः ।
शतं शतं रथे नागाः पद्मिनो
हेममालिनः ॥”
नाभिकमले हस्ते वा पद्ममस्यास्तीति
। विष्णुः ।
यथा, महाभारते । १३ । १४९ । ५०
।
“अनुकूलः शतावर्त्तः पद्मी
पद्मनिभेक्षणः ।
पद्मनाभोऽरविन्दाक्षः पद्मगर्भः
शरीरभृत् ॥”)

**पद्मेशयः**, पुं, (पद्मे शेते इति । शी ङ ल शयने +
“अधिकरणे शेतेः ।” ३ । २ । १५ ।
इति
अच् । “शयवासवासिष्विति ।” ६ । ३
। १८ ।
इत्यलुक् ।) विष्णुः । इति हेमचन्द्रः ॥

**पद्मोत्तरः**, पुं, (पद्मादुत्तरः वर्णतः श्रेष्ठः ।)

“ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः
कृतः ।
ऊरूतदस्य यद् वैश्यः पद्भ्यां
शूद्रोव्यजायत ॥”)

**पद्या**, स्त्री, (पादाय हिता । शरीरावयवात् यत् ।
“पद्यत्यतदर्थे ।” ६ । ३ । ५२ । इति
पद्भावः ।)
स्तुतिः । इति विश्वः ॥ पन्थाः । इत्य-
मरः । २ । १ । १५ ॥ (यथा, ऋग्वेदे । २
। ३१ । २ ।
“यदाशवः पद्याभिस्तित्रतो रजः पृथिव्याः
सानौ
जङ्घनन्त पाणिभिः ॥” पादौ विध्यन्ति
पद्याः
शर्कराः । इति सिद्धान्तकौमुदी ।
“विध्यत्यध-
नुषा ।” ४ । ४ । ८३ । इति यत् ।
“पद्यत्य-
तदर्थे ।” ६ । ३ । ५२ । इति पदादेशः ॥)

**पद्रः**, पुं, (पद्यतेऽस्मिन्निति । पद गतौ । “स्फायि-
तञ्चीति ।” उणां । २ । १३ । इति रक् ।)
ग्रामः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः
॥
ग्रामपथः । इत्युणादिकोषः ॥ भूलोकः ।
देश-
भेदः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**पद्वः**, पुं, (पद्यते गम्यतेऽस्मिन्ननेन वा । पद गतौ
“सर्व्वनिघृष्वरिष्वेति ।” उणां । १ । १५३
। इति
निपातनात् सिद्धम् ।) भूलोकः । रथः ।
इति
संक्षिप्तसारोणादिवृत्तिः ॥ पन्थाः ।
इत्युणादि-
कोषः ॥

**पद्मा**, [न्] पुं, (पद्यते गम्यते यत्र । पद गतौ +
“स्नामदिपदीति ।” उणां । ४ । ११२ ।
इति

“पनसः कण्टकिफलः फणाशोऽतिबृहत्फलः ।
पनसं शीतलं पक्वं स्निग्धं पित्तानिलापहम् ॥
तर्पणं बृंहणं स्वादु मांसलं श्लेष्मलं भृशम् ।
बल्यं शुक्रप्रदं हन्ति रक्तपित्तक्षतक्षयान् ॥
आमन्तदेव विष्टम्भि वातलं तुवरं गुरु ।
दाहकृन्मधुरं बल्यं कफमेदोविमर्द्दनम् ॥
पनसोद्भूतबीजानि वृष्याणि मधुराणि च ।
गुरूणि वद्धवर्च्चांसि सृष्टमूत्राणि संवदेत् ॥”
अन्यच्च ।
“मज्जाः पनसजो वृष्यो वातपित्तकफापहः ।
विशेषात् पनसं वर्ज्यं गुल्मिभिर्मन्दवह्निभिः ॥
अलं पनसपाकाय फलं कदलसम्भवम् ॥”
इति भावप्रकाशः ॥ * ॥
“कण्टाफलं सुमधुरं बृंहणं स्निग्धशीतलम् ।
दुर्ज्जरं वातपित्तघ्नं श्लेष्मशुक्रबलप्रदम् ॥
तदेव सर्पिषा युक्तं स्निग्धं हृद्यं बलप्रदम् ।
छर्द्दिघ्नं न च चक्षुष्यं वृष्यञ्च वातपित्तनुत् ॥
कण्टाफलमपक्वन्तु कषायं स्वादु वातलम् ।
रक्तपित्तहरं स्वादु तत्फलास्थ्यपि तद्गुणम् ॥”
इति राजवल्लभः ॥

**पनसतालिका**, स्त्री, (पनसं दीर्घत्वेन स्तुत्यं
यत्तालम् । तद्वत् फलमस्त्यस्याः । ठन् ।)
कण्टकि-
फलम् । इति शब्दमाला ॥

**पनसिका**, स्त्री, (पनसवत् कण्टकमयाकृतिर्विद्यते
यस्याः । पनस + ठन् ।) क्षुद्ररोगविशेषः । स
च कर्णमध्यजातव्रणः । तल्लक्षणं यथा, --
“कर्णस्याभ्यन्तरे जातां पिडकामुग्रवेदनाम् ।
स्थिरां पनसिकां तान्तु विद्याद्वातकफोत्थिताम्
॥”
तच्चिकित्सा यथा, --
“भिषक् पनसिकां पूर्ब्बं स्वेदयेदथ लेपयेत् ।
कल्कैर्म्मनःशिलाकुष्ठनिशातालकदारुजैः ॥
पक्वां विज्ञाय तां भित्त्वा व्रणवत् समुपाचरेत् ॥”
इति भावप्रकाशः ॥

**पन्थाः**, [इन्] पुं, पतन्ति यान्त्यनेन । (पत ऌ
गतौ + “पतस्थ च ।” उणां । ४ । १२ । इति
इनिः थश्चान्तादेशः ।) रथ्या । रास्ता इति

कुसुम्भः । इति राजनिर्घण्टः ॥

**पद्मोत्तरात्मजः**, पुं, (पद्मोत्तरस्य आत्मजः पुत्त्रः ।)

जिनचक्रवर्त्तिविशेषः । इति हेमचन्द्रः ॥

**पद्मोद्भवः**, पुं, (पद्मं उद्भव उत्पत्तिस्थानं यद्वा पद्मे

पद्माद्वा उद्भवो यस्य ।) ब्रह्मा ।
अब्जयोनिरित्य-
मरदर्शनात् ॥ (यथा, महाभारते । १३ । ६ । ४ ।
“ततः पद्मोद्भवो राजन् ! देवदेवः पितामहः ।
उवाच मधुरं वाक्यमर्थवद्धेतुभूषितम् ॥”)

**पद्मोद्भवा**, स्त्री, (पद्मे पद्माद्वा उद्भवो यस्याः ।)

मनसा देवी । यथास्याः पौराणिकध्यानम् ।
“कान्त्या काञ्चनसन्निभां सुवदनां पद्मासनां शोभनां
नागेन्द्रैः कृतशेखरां विषहरीं पद्मोद्भवां जाङ्ग-
लीम् ॥”

**पद्यं**, क्ली, (पदं चरणमर्हतीति । पद + यत् ।)

कविकृतिः । श्लोकः । इत्यमरः । ३ । ५ । ३१ ॥
तस्य लक्षणं यथा, छन्दोमञ्जर्य्याम् ।
“पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ।
वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत् ॥”
(तत्तु अन्वयगतिवशात् मुक्तकयुग्मकसन्दानितक-
कलापककुलकभेदात् पञ्चविधम् । यदुक्तं साहित्य-
दर्पणे । ६ । २८७ ।
“छन्दोबद्धपदं पद्यं तेनैकेन च मुक्तकम् ।
द्वाभ्यान्तु युग्मकं सन्दानितकं त्रिभिरिष्यते ॥
वनिप् ।) पत्थाः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**पन**, ङ ईडे । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-

सकं-सेट् ।) ईडः स्तुतिः । पनायति पनायते
विष्णुं धीरः । आयान्तत्वादुभयपदमिति वोप-
देवः । अरे तु आयस्याप्राप्तिपक्षे आत्मनेपद-
मेव । ङ, अपनिष्ट पेने पनिता पनिषीष्ट पनि-
ष्यते अपनिष्यत । इति दुर्गादासः ॥

**पनसः**, पुं, (पनाय्यते स्तूयतेऽनेन देवः मनुष्यादि-

र्वेति । यद्वा पनायति स्तौति सन्तोषयती-
त्यर्थः देवमनुष्यादीन् इति । पन स्तुतौ +
“अत्यविचमितमीति ।” उणां । ३ । ११७ ।
इति असच् ।) फलवृक्षविशेषः । काँटाल इति
भाषा ॥ (यथा भागवते । ८ । २ । १० ।
“चूतैः प्रियालैः पनसैराम्रैराम्रातकैरपि ॥”)
तत्पर्य्यायः । कण्टकिफलः २ । इत्यमरः ।
२ । ४ । ६१ ॥ महासर्ज्जः ३ फलिनः ४ फलवृक्षकः ५
स्थूलः ६ कण्टफलः ७ मूलफलदः ८ अपुष्प-
फलदः ९ पूतफलः १० चम्पकोषः ११ चम्पालुः १२
कण्टकीफलः १३ रसालः १४ मृदङ्गफलः १५
पानसः १६ । इति शब्दरत्नावली ॥ अस्य फल-
गुणाः । मधुरत्वम् । सुपिच्छिलत्वम् । गुरुत्वम् ।
हृद्यत्वम् । बलवीर्य्यवृद्धिदत्वम् । श्रमदाह-
विशोषनाशित्वम् । रुचिकारित्वम् । ग्राहित्वम् ।
परमदुर्ज्जरत्वञ्च । तद्बीजगुणाः । ईषत्कषाय-
त्वम् । मधुरत्वम् । वातलत्वम् । गुरुत्वम् ।
भाषा ॥ (यथा, मनुः । ४ । ४५ ।
“न मूत्रं पथि कुर्व्वीत न भस्मनि न गोव्रजे ॥”)
तत्पर्य्यायः । अयनम् २ वर्त्म ३ मार्गः ४
अध्वा ५ पदवी ६ सृतिः ७ सरणिः ८ पद्धतिः ९
पद्या १० वर्त्तनी ११ एकपदी १२ । इत्यमरः ।
२ । १ । १५ ॥ पथः १३ पदविः १४ पदवी १५ सरणी
१६ शरणिः १७ पद्धती १८ वर्त्तनिः १९ । इति
भरतः ॥ शरणी २० वाटः २१ धर्म्मवर्त्तनम् २२
माथः २३ विवधः २४ वीवधः २५ । इति शब्द-
रत्नावली ॥ * ॥
तस्य लक्षणम् ।
“त्रिंशद्धनूषि विस्तीर्णो देशमार्गस्तु तैः कृतः ।
विंशद्धनुर्ग्रममार्गः सीमामार्गो दशैव तु ॥
धनूंषि दश विस्तीर्णः श्रीमान् राजपथः कृतः ।
नृवाजिरथनागानामसम्बाधःसुसञ्चरः ॥
धनूंषि चैव चत्वारि शाखारथ्यास्तु निर्म्मिताः ।

कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम् ॥”
“तदूद्र्ध्वं कुलकं स्मृतम् ।” इति क्वचित् पाठः ॥)
शाठ्यम् । इति जटाधरः ॥
(“पदमस्मिन्
दृश्यम् ।” ४ । ४ । ८७ । इति यत् । नाति-
शुष्ककर्द्दमः । इति सिद्धान्तकौमुदी ॥)

**पद्यः**, पुं, (पद्भ्यां जातः । पद + यत् ।) शूद्रः ।
इति मेदिनी ॥ (यदुक्तं यजुषि ।

रुच्यत्वम् ।
तत्फलविकारत्वग्दोषनाशित्वञ्च।
“बालन्तु नीरसं हृद्यं मध्यं पक्वन्तु दीपनम् ।
रुचिदं लवणाभ्यक्तं पनसस्य फलं स्मृतम् ॥”
इति राजनिर्घण्टः ॥ * ॥

त्रिकराश्चोपरथ्यास्तु द्विकराप्युपरक्षका ॥
जङ्घापथश्चतुष्पादस्त्रिपादस्यगृहान्तरम् ।
वृतीपादस्त्वर्द्धपादः प्राग्वंशः पादकः स्मृतः ॥
अवकरः परीवारः पादमात्रः समन्ततः ॥”
इति देवीपुराणे गोपुरद्वारलक्षणाध्यायः ॥ * ॥
चतुष्पथलक्षणादि यथा, --
“एकलिङ्गे श्मशाने वा शून्यागारे चतुष्पथे ।
तत्रस्थः साधयेद्योगी विद्यां त्रिभुवनेश्वरीम् ॥
चतुष्पथन्तु तत् प्रोक्तं त्रिकोणं यत्र वर्त्तते ॥”
इति नीलतन्त्रम् ॥ * ॥
पथगमनगुणाः
“अध्वा मेदःकफस्थौल्यसौकुमार्य्यविनाशनः
।
यत्तु चङ्क्रमणं नातिदेहपीडाकरं भवेत् ॥”
तदायुर्बलमेधाग्निप्रदमिन्द्रियशोधनम्॥”
इति राजवल्लभः ॥ * ॥
ब्राह्मणादिभ्यः पथावकाशो देयो यथा, --
“पन्था देयो ब्राह्मणाय स्त्रियै राज्ञे ह्यचक्षुषे ।
वृद्धाय भारयुक्ताय रोगिणे दुर्ब्बलाय च ॥”
इति कौर्म्मे उपविभागे ११ अध्यायः ॥ * ॥
गोपथदानफलं यथा, --
“गोमार्गस्य तथा कर्त्ता गोलोके क्रीडते चिरम्
।”
इति प्रतिष्ठातत्त्वे हयशीर्षपञ्चरात्रम् ॥ * ॥
अस्याचारादावुपचारो यथा, --
“तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना
नैको मुनिर्यस्य मतं प्रमाणम् ।
धर्म्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतः स पन्थाः ॥”
इति महाभारते । ३ । ३१२ । ११२ ।
धर्म्मवकप्रश्ने
युधिष्ठिरोत्तरम् ॥ * ॥ नरकविशेषः । यत्रा-
टाट्यते । इति मनौ ४ अध्यायः ॥

**पन्नं**, त्रि, (पद्यौ ङ गतौ + “गत्यर्थेति ।” ३ । ४ ।
७२ । इति कर्त्तरि क्तः ।) च्युतम् । गलितम् ।
इत्यमरः । ३ । १ । १०४ ॥

**पन्नः**, पुं, (पन स्तुतौ + “कृवृजॄ षिद्रुपनीति ।”
उणां । ३ । १० । इति नः स च नित् ।) अधो-
“तां स आपततीं वीक्ष्य भगवान्
समवस्थितः ।
जग्राह लीलया प्राप्तां गरुत्मानिव पन्नगीम्
॥”)
मनसा देवी । यथा, तिथितत्त्वे ।
“पञ्चम्यामसिते पक्षे समुत्तिष्ठति पन्नगी ॥”
सर्पिणीक्षुपः । इति राजनिर्घण्टः ॥

**पन्नद्धा**, स्त्री, (पदि नद्धा बद्धा ।) चर्म्मपादुका ।
इति हेमचन्द्रः ॥

**पन्नद्ध्री**, स्त्री, (पदोश्चरणयोर्नद्ध्री ।) चर्म्मपादुका ।
इति त्रिकाण्डशेषः ॥

**पपिः**, पुं, (पाति लोकम् । पिबति वा । पा +
“आदृगमहनजनः किकिनौ लिट् च ।” ३ ।
२ ।
१७१ । इति किः द्वित्वञ्च ।) चन्द्रः ।
पानकर्त्तरि
त्रि । इति संक्षिप्तसारव्याकरणम् ॥ (यथा,
ऋग्वेदे । ६ । २३ । ४ । “पपिः सोमं
ददिर्गाः ॥”)

**पपीः**, पुं, (पाति लोकम् । पा रक्षणे + “यापोः
कित् द्वे च ।” उणां । ३ । १५९ । इति ईक्
द्वित्वञ्च ।) सूर्य्यः । चन्द्रः । इत्युणादिकोषः
॥

**पपुः**, पुं, (पाति रक्षतीति । “कुर्भ्रश्चेति ।”
उणां । १ । २३ । इति चकारात्
अन्यतोऽपि
कुर्द्वित्वञ्च ।) पालकः । धात्र्यां स्त्री ।
इत्युणादि-
कोषः ॥

**पमरा**, स्त्री, गन्धद्रव्यविशेषः । सल्लुकी इति ख्याता ।
अस्यानुलेपनगुणः । परमालक्ष्मीरक्षोज्वर-
नाशित्वम् । इति राजवल्लभः ॥

**पम्पा**, स्त्री, (पाति रक्षति महर्ष्यादीन् स्वीय-
पवित्रसलिलदानादिभिरितिशेषः । पा पालने
+

**पयस्यं**, त्रि, (पयसो विकारस्तत्र हितं वा ।
पयस् + “गोपयसोर्यत् ।” ४ । ३ ।
१६० । इति
यत् ।) पयोविकारः । घृतदध्यादि ।
इत्यमरः ।
२ । ९ । ५१ ॥ पयोहितम् । इति
मेदिनी ॥

**पयस्यः**, पुं, (पयः पिबतीति ।) विडालः । इति
शब्दचन्द्रिका ॥

**पयस्या**, स्त्री, (पयस्य + टाप् ।) दुग्धिका । क्षीर-
काकोली । स्वर्णक्षीरी । इति मेदिनी ॥
अर्क-
पुष्पिका । इति रत्नमाला ॥
कुटुम्बिनीक्षुपः ।
इति राजनिर्घण्टः ॥ आमिक्षा । इति
हेम-
चन्द्रः ॥

**पयस्वलः**, पुं, (पयोऽस्त्यस्य । पयस् +
“अन्येभ्यो-
ऽपीति ।” वलच् ।) छागः । इति राज-
निर्घण्टः ॥

**पयस्विनी**, स्त्री, (पयो विद्यतेऽस्याः ।
“अस्माया-
मेधास्रजो विनिः ।” ५ । २ । १२१ ।
इति
विनिः ततो ङीष् ।) नदी ।
(प्रशस्तजल-
वत्त्वात्तथा पुण्यसलिलत्वाद् गङ्गा ।
यथा, काशी-
खण्डे गङ्गासहस्रनामकीर्त्तने । २९ ।
१०६ ।
“परापरफलप्राप्तिः पाचनी च
पयस्विनी ॥”)
धेनुः । (यथा, रघुः, । २ । २१ ।
“प्रदक्षिणीकृत्य पयस्विनीन्तां
सुदक्षिणा साक्षतपात्रहस्ता ॥”)
रात्रिः । इति मेदिनी ॥ काकोली ।
क्षीर-

गमनम् । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**पन्नगः**, पुं, (पन्नं अधोगमनं पतितं वा गच्छ-

तीति । गम ऌ गतौ + “सर्व्वत्र पन्नयोरुपसंख्या-
नम् ।” ३ । २ । ४८ । इत्यस्य वार्त्तिं इति डः ।
पद्भ्यां न गच्छतीति वा विग्रहः ।) सर्पः ।
इत्यमरः । १ । ८ । ८ ॥ (यथा, विष्णुपुराणे । १ । १७ । ७ ।
“पानासक्तं महात्मानं हिरण्यकशिपुं तदा ।
उपासाञ्चक्रिरे सर्व्वे सिद्धगन्धर्व्वपन्नगाः ॥”)
ओषधीभेदः । पद्मकाष्ठम् । इति मेदिनी ॥

**पन्नगकेशरः**, पुं, (पन्नगवत् केशरो यस्य ।) नाग-

केशरपुष्पम् । इति राजनिर्घण्टः ॥

**पन्नगाशनः**, पुं, (पन्नगं सर्पं अश्नातीति । अश ग

भोजने + ल्युः । पन्नगः अशनं भक्ष्यो यस्येति
वा ।) गरुडः । इत्यमरः । १ । १ । ३१ ॥

**पन्नगी**, स्त्री, (गन्नग + जातौ ङीष् ।) पन्नग-

पत्नी । (यथा, भागवते । ३ । १९ । ११ ।
“खष्प-शिल्प-शष्प-वाष्प-रूप-पम्पा-तल्पाः ।”
उणां । ३ । २८ । इति निपातनात् ह्रस्वत्वे मुडा-
गमत्वे च साधुः ।) ओड्रदेशस्थनदीविशेषः ।
इत्युणादिकोषः ॥ (यथा, रघुः । १३ । ३० ।
“दूरावतीर्णा पिबतीव खेदा-
दमूनि पम्पासलिलानि दृष्टिः ॥”
इयं हि ऋष्यमूकपर्व्वतसन्निकटस्था । इति
रामायणम् ॥)

**पम्ब**, गतौ । (भ्वां-परं-सकं-सेट् ।) ओष्ठ्यवर्ग-

शेषोपधः । पम्बति । इति दुर्गादासः ॥

**पय**, ङ गतौ । इति कविकल्पद्रुमः ॥ (भ्वां आत्मं-

सकं सेट् ।) ङ, पयते । इति दुर्गादासः ॥

**पयः**, [स्] क्ली, (पय्यते पीयते वा पय गतौ पी ङ

पाने वा + “सर्व्वधातुभ्योऽसुन् ।” उणां । ४ ।
१८८ । इत्यसुन् ।) जलम् । (यथा, रघुः । १ । ६७ ।
“पयः पूर्ब्बैः स्वनिश्वासैः कवोष्णमुपभुज्यते ॥”)
दुग्धम् । इति मेदिनी ॥ (यथा, मनुः । ३ । ८२ ।
“कुर्य्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पयोमूलफलैर्व्वापि पितृभ्यः प्रीतिमावहन् ॥”)

**पयःकन्दा**, स्त्री, (पयः कन्दे यस्याः ।) क्षीर-

विदारी । इति राजनिर्घण्टः ॥

**पयःफेनी**, स्त्री, (पयो दुग्धमिव फेनमस्याः । गौरा-

दित्वात् ङीष् ।) दुग्धफेनीक्षुपः । इति राज-
निर्घण्टः ॥

**पयश्चयः**, पुं, (पयसां चयः समूहः ।) जलसमूहः ।

तत्पर्य्यायः । पूरः २ वेणिः ३ । इति
जटाधरः ॥
काकोली । दुग्धफेनी । क्षीरविदारी ।
छागी ।
इति राजनिर्घण्टः ॥ जीवन्ती इति
भावप्रकाशः ॥
(गायत्रीस्वरूपा महादेवी । यथा, देवीभाग-
वते । १२ । ६ । ९६ ।
“प्रज्ञावती सुता पौत्री पुत्त्रपूज्या
पयस्विनी ॥”)

**पयोगडः**, पुं, (पयसो गड इव ।) घनोपलः ।

द्वीपः । इति शब्दमाला ॥

**पयोघनः**, पुं, (पयोभिर्घनः सान्द्रः ।) घनोपलः ।

इति हारावली ॥

**पयोजन्मा**, [न्] पुं, (पयसो जलस्य जन्म यस्मात् ।)

मेघः । इति शब्दमाला ॥

**पयोधरः**, पुं, (धरतीति धरः । धृ + अच् ।

पयसो दुग्धस्य जलस्य वा धरः ।) स्त्रीस्तनः ।
(यथा, रघुः । १४ । २२ ।
“षडाननापीतपयोधरासु
नेता च मूलामिव कृत्तिकासु ॥”)
मेघः । इत्यमरः । ३ । ३ । १६३ ॥
कोषकारः ।
नारिकेलम् । कशेरु । इति मेदिनी ॥

**पयोधाः**, [स्] पुं, (पयो जलं दधातीति । डु धा

ञलि धारणे + “पयसि च ।” उणां । ४ । २२९ ।
इति असिः ।) समुद्रः । जलाधारः ।
इत्युणादि-
कोषः ॥

**पयोधिः**, पुं, (पयांसि धीयन्तेऽस्मिन् । डु धा ञ् +

“कर्म्मण्यधिकरणे च ।” ३ । ३ । ९३ । इति
किः ।) समुद्रः । इति राजनिर्घण्टः ॥

**पयोधिकं**, क्ली, (पयोधौ समुद्रे कायति प्रका-

**पयोनिधिः**, पुं, (पयांसि निधीयन्तेऽस्मिन् । धा
धारणे + अधिकरणे किः ।) समुद्रः । यथा, --
"न गणितं यदि जन्म पयोनिधौ
हरशिरःस्थितिभूरपि विस्मृता ।"
इति नैषधे । ४ । ५० ॥ (पय इव शुक्लः सत्त्व-
गुणः निधीयतेऽत्र इति विग्रहे । शिवः । यथा,
महाभारते । १३ । १७ । ८७ ।
"लम्बनो लम्बितोष्ठश्च महामायः पयोनिधिः
॥")

**पयोरः**, पुं, (पयो जलं रातीति । रा + कः ।)
खदिरः । इति शब्दचन्द्रिका ॥

**पयोलता**, स्त्री, (पयः क्षीरं तेनाढ्या लता ।)
क्षीरविदारी । इति राजनिर्घण्टः ॥

**पयोव्रतः**, पुं, (पयोमात्रपानसाध्यो व्रतः ।) पयो-
मात्रपानरूपव्रतविशेषः । यथा, --
"पुण्यां तिथिं समासाद्य युगमन्वन्तरादिकम् ।
पयोव्रतस्त्रिरात्रं स्यादेकरात्रमथापि वा ॥"
इति मात्स्ये १५२ अध्यायः ॥ * ॥
द्वादशाहसाध्यविष्णुव्रतविशेषः । यथा, --
कश्यप उवाच ।
"एतन्मे भगवान् पृष्टः प्रजाकामस्य पद्मजः ।
यदाह ते प्रवक्ष्यामि व्रतं केशवतोषणम् ॥
फाल्गुनस्यामले पक्षे द्वादशाहं पयोव्रतः ।
अर्च्चयेदरविन्दाक्षं भक्त्या परमयान्वितः ॥
सिनीबाल्यां मृदालिप्य स्नायात् क्रोडविदीर्णया
।
यदि लभ्येत वै स्रोतस्येतन्मन्त्रमुदीरयेत् ॥
त्वं देव्यादिवराहेण रसायाः स्थानमिच्छता ।
उद्धृतासि नमस्तुभ्यं पाप्मानं मे प्रणाशय ॥
निर्व्वर्त्तितात्मनियमो देवमर्च्चेत् समाहितः ।
अर्च्चायां स्थण्डिले सूर्य्ये जले वह्नौ गुरावपि ॥
नमस्तुभ्यं भगवते पुरुषाय महीयसे ।
सर्व्वभूतनिवासाय वासुदेवाय साक्षिणे ॥
नमोऽव्यक्ताय सूक्ष्माय प्रधानपुरुषाय च ।
चतुर्विंशद्गुणज्ञाय गुणसंख्यानहेतवे ॥
नमो द्विशीर्ष्णे त्रिपदे चतुःशृङ्गाय तन्तवे ।
सप्तहस्ताय यज्ञाय त्रयीविद्यात्मने नमः ॥
नमः शिवाय रुद्राय नमः शक्तिधराय च ।
सृतं पयसि नैवेद्यं शाल्यन्नं विभवे सति ॥
ससर्पिः सगुडं दत्त्वा जुहुयान्मूलविद्यया ।
निवेदितं तद्भक्ताय दद्याद्भुञ्जीत वा स्वयम् ॥
दत्त्वाचमनमर्च्चित्वा ताम्बूलञ्च निवेदयेत् ।
जपेदष्टोत्तरशतं स्तुवीत स्तुतिभिः प्रभुम् ॥
कृत्वा प्रदक्षिणं भूमौ प्रणमेद्दण्डवन्मुदा ।
कृत्वा शिरसि तच्छेषं देवमुद्वासयेत्ततः ॥
द्व्यवरान् भोजयेद्विप्रान् पायसेन
यथोचितम् ।
भुञ्जीत तैरनुज्ञातः शेषं सेष्टः सभाजितैः ॥
ब्रह्मचार्य्यथ तद्रात्र्यां श्वोभूते प्रथमेऽहनि ।
स्नातः शुचिर्यथोक्तेन विधिना सुसमाहितः
॥
पयसा स्नापयित्वार्च्चेद्यावद्व्रतसमापनम् ।
पयोभक्ष्यो व्रतमिदं चरेद्विष्णवर्च्चनादृतः ॥
पूर्व्ववज्जुहुयादग्निं ब्राह्मणांश्चापि भोजयेत् ।
एवन्त्वहरहः कुर्य्याद्द्वादशाहं पयोव्रतम् ॥
हरेराराधनं होममर्हणं द्विजतर्पणम् ।
प्रतिपद्दिनमारभ्य यावत् शुक्लत्रयोदशीम् ॥
ब्रह्मचर्य्यमधःस्वप्नं स्नानं त्रिसवनञ्चरेत् ।
वर्ज्जयेदसदालापं भोगानुच्चावचांस्तथा ॥
अहिंस्रः सर्व्वभूतानां वासुदेवपरायणः ।
त्रयोदश्यामथो विष्णोः स्नपनं पञ्चकैर्विभोः
॥
कारयेच्छास्त्रदृष्टेन विधिना विधिकोविदैः ।
पूजाञ्च महतीं कुर्य्याद्वित्तशाठ्यविवर्ज्जितः
॥
चरुं निरूप्य पयसि शिपिविष्टाय विष्णवे ।
सूक्तेन तेन पुरुषं यजेत सुसमाहितः ॥
नैवेद्यञ्चातिगुणवद्दद्यात् पुरुषतुष्टिदम् ।
आचार्य्यं ज्ञानसम्पन्नं वस्त्राभरणधेनुभिः ॥
तोषयेदृत्विजश्चैव तद्विद्ध्याराधनं हरेः ।
भोजयेत्तान् गुणवता सदन्नेन शुचिस्मिते ॥
अन्यांश्च ब्राह्मणान् शक्त्या ये च तत्र
समागताः ।
दक्षिणां गुरवे दद्यादृत्विग्भ्यश्च यथार्हतः ॥
अन्नाद्येनाश्वपाकांश्च प्रीणयेत् समुपागतान्
।
भुक्तवत्स्वथ सर्व्वेषु दीनान्धकृपणेषु च ॥
प्रसिद्धा । अस्या जलगुणाः ।
"पयोष्णीसलिलं रुच्यं पवित्रं
पापनाशनम् ।
सर्व्वामयहरं सौख्यबलकान्तिप्रदं लघु
॥"
इति राजनिर्घण्टः ॥

**परं**, क्ली, (पॄ + "ऋदोरप् ।" ३ । ३ । ५७ ।
इति अप् ।) केवलम् । इति मेदिनी ॥
मोक्षः ।
यथा । कैवल्यममृतं परम् । इति
मुक्तिपर्य्याये
रत्नावली ॥ (ब्रह्म ब्रह्मा च । यदुक्तं
श्रुतौ ।
"द्वे ब्रह्मणी वेदितव्ये परञ्चापरमेव च
॥"
विष्णुः । यथा, महाभारते । १३ ।
१४९ । २० ।
"प्रभूतस्त्रिककुद्धाम पवित्रं मङ्गलं परम्
॥"
ब्रह्मण आयुः । यथा, मार्कण्डेये । ४६
। ४२ ।
"एवन्तु ब्रह्मणो वर्षमेकं वर्षशतन्तु तत्
।
शतं हि तस्य वर्षाणां
परमित्यभिधीयते ।
पञ्चाशद्भिस्तथावर्षैः परार्द्धमिति
कीर्त्त्यते ॥")

**परं**, [म्] व्य, नियोगः । क्षेपः । इति मेदिनी ॥

**परः**, पुं, (पॄ + अच् ।) शत्रुः । इत्यमरः ॥ (यथा,
रघुः । ७ । ६७ ।
"इतः परानर्भकहार्य्यशस्त्रान्
वैदर्भि ! पश्यानुमता मयासि ॥")
ब्रह्मण आयुः । यथा, --
"कालसंख्यां समासेन
पूर्ब्बार्द्धद्वयकल्पिताम् ।
स एव स्यात् परः कालस्तदन्ते
परिपूज्यते ॥

सर्व्वविद्याधिपतये भूतानां पतये नमः ॥
नमो हिरण्यगर्भाय प्राणाय जगदात्मने ।
योगैश्वर्य्यशरीराय नमस्ते योगहेतवे ॥
नमस्त आदिदेवाय साक्षिभूताय ते नमः ।
नारायणाय ऋषये नराय हरये नमः ॥
नमो मरकतश्यामवपुषेऽधिगतश्रिये ।
केशवाय नमस्तुभ्यं नमस्ते पीतवाससे ॥
त्वं सर्व्ववरदः पुंसां वरेण्य वरदर्षभ ! ।
अतस्ते श्रेयसे धीराः पादरेणुमुपासते ॥
अन्ववर्त्तन्त यं देवाः श्रीश्च तत्पादपद्मयोः ।
स्पृहयन्त इवामोदं भगवान्मे प्रसीदताम् ॥
एतैर्मन्त्रैर्हृषीकेशमावाहनपुरस्कृतम् ।
अर्च्चयेच्छ्रद्धया युक्तः पाद्योपस्पर्शनादिभिः ॥
अर्च्चित्वा गन्धमाल्याद्यैः पयसा स्नापयेद्विभुम् ।
वस्त्रोपवीताभरणपाद्योपस्पर्शनैस्ततः ॥
गन्धधूपादिभिश्चार्च्चेद्द्वादशाक्षरविद्यया ।

विष्णोस्तत् प्रीणनं विद्वान् भुञ्जीत सह बन्धुभिः ।
नृत्यवादित्रगीतैश्च स्तुतिभिः स्वस्तिवाचनैः ॥
कारयेत्तत्कथाभिश्च पूजां भगवतोऽन्वहम् ।
एतत् पयोव्रतं नाम पुरुषाराधनं परम् ॥
पितामहेनाभिहितं मया ते समुदाहृतम् ।
त्वञ्चानेन महाभागे ! सम्यक् चीर्णेन केशवम् ॥
आत्मना शुद्धभावेन नियतात्मा भजाव्ययम् ।
अयं वै सर्व्वयज्ञाख्यः सर्व्वव्रतमिति स्मृतम् ॥
तपःसारमिदं भद्रे दानञ्चेश्वरतर्पणम् ।
त एव नियमाः साक्षात्त एव च यमोत्तमाः ॥
तपो दानं व्रतं यज्ञो येन तुष्यत्यधोक्षजः ।
तस्मादेतद्व्रतं भद्रे प्रयता श्रद्धया चर ॥
भगवान् परितुष्टस्ते वरानाशु विधास्यति ॥”
इति श्रीभागवते ८ स्कन्धे १६ आध्यायः ॥

**पयोष्णिजाता**, स्त्री, (पयोष्णी नाम्नी नदी जाता अस्याः । पृषोदरात् साधुः ।) सरस्वती नदी ।
इति राजनिर्घण्टः ॥

**पयोष्णी**, स्त्री, (पयः सलिलं उष्णं उष्णगुणं वाऽस्याः ।) नदीविशेषः । सा बिन्ध्याचलदक्षिणे

निजेन तस्य मानेन चायुर्व्वर्षशतं स्मृतम् ।
तत् पराख्यं तदर्द्धञ्च परार्द्धमभिधीयते ॥”
अपि च ।
“त्रीणि कल्पशतानि स्युस्तथा षष्टिर्द्विजोत्तमाः ।
ब्रह्मणः कथितं वर्षं पराख्यं तच्च तत् पदम् ॥”
इति कौर्म्मे ५ अध्यायः ॥
(शिवः । यथा, तत्रैव । १३ । १७ । ९७ ।
“कपिलः कपिशः शुक्ल आयुश्चैव परोऽपरः ॥”)

**परः**, त्रि, श्रेष्ठः । (यथा, आर्य्यासप्तशत्याम् । ३५५ ।
“परमोहनाय मुक्तो निष्करुणो तरुणि ! तव कटाक्षोऽयम् ।
विशिख इव कलितकर्णः प्रविशति हृदयं निःसरति ॥”)
अरिः । दूरः । अन्यः । उत्तरः । इति मेदिनी ॥ * ॥
न्यायमते द्रव्यगुणकर्म्मवृत्तिसत्ता । इयं व्यापक-जातिः । यथा, --
“सामान्यं द्विविधं प्रोक्तं परञ्चापरमेव च ।
द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ॥
परभिन्ना तु या जातिः सैवापरतयोच्यते ।
द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥
व्यापकत्वात् परापि स्यात् व्याप्यत्वादपरापि च ॥”
इति भाषापरिच्छेदे । ८ -- ९ ॥ * ॥
परान्नादिभक्षणादेः श्रीनाशकत्वं यथा, --
“परान्नञ्च परस्वञ्च परशय्या परस्त्रियः ।
परवेश्मनि वासश्च शक्रादपि हरेच्छ्रियम् ॥”

| | | इति गरुडपुराणम् ॥ * ॥<br>श्रेष्ठवाचकपरशब्दप्रयोगाः। यथा, --<br>“अन्नदातुः शतगुणोऽमीष्टदेवः परः स्मृतः ।<br>गुरुस्तस्माच्छतगुणो विद्यामन्त्रप्रदायकः ॥ |
|---|---|---|

अज्ञानतिमिराच्छन्नं ज्ञानदीपेन चक्षुषा ।
यः सर्व्वार्थं दर्शयति तत्परः कोऽपि बान्धवः ॥
गुरुदत्तेन मन्त्रेण तपसेष्टसुरं लभेत् ।
सर्व्वज्ञत्वं सर्व्वसिद्धिं तत्परः कोऽपि बान्धवः ॥
पितरं मातरं भार्य्यां गुरुपत्नीं गुरुं परम् ।
यो न पुष्णाति कापट्यात् स महापातकी शिव ! ॥
नास्ति वेदात् परं शास्त्रंनहि कृष्णात् परः सुरः ।
नास्ति गङ्गासमं तीर्थं न पुष्पं तुलसीपरम् ॥
क्षमावती भूपरा न पुत्त्रान्नास्ति परः प्रियः ।
न च दैवात् परः शक्तो व्रतं नैकादशीं विना ॥
शालग्रामात् परो यन्त्रो न क्षेत्रं भारतात् परम् ।
परं पुण्यस्थलानाञ्च पुण्यं वृन्दावनं यथा ॥
मोक्षदानां यथा काशी वैष्णवानां यथा शिवः ।
न पार्व्वत्याः परा साध्वी न गणेशात् परो वशी ॥
न च विद्यासमो बन्धुर्नास्ति कश्चिद्गुरोः परः ॥”
इति ब्रह्मवैवर्त्तपुराणे गणपतिखण्डे ४४ अध्यायः ॥

**परःशतं**, त्रि, शतात् परम् । शताधिकसंख्या । इत्यमरः । ३ । १ । ६४ ॥

**परःश्वः**, [स्] व्य, श्वो दिनात् परमहः परःश्वः परः सहस्रवत् पारस्करादित्वात् सुट् परःश्व इति मधुः । सुटं नेच्छन्त्यन्ये परश्व इत्याहुः । अतिक्रान्ते पूर्ब्बतरे दिने परश्वो जात इति प्रयोगो गौणः तत्र परञ्च तत् श्वश्चेति कर्म्म-धारयः । इति भरतः ॥ श्वः पराहः । इत्य-मरः । ३ । ४ । २२ ॥ पर्शु । इति भाषा ॥

**परःसहस्रं**, त्रि, सहस्रात् परम् । सहस्राधिक-संख्या । इत्यमरटीका ॥

**परकीयं**, त्रि, (परस्येदम् । “गहादिभ्यश्च ।” ४ । २ । १३८ । इति छः । “कुग्जनस्य परस्य च ।”
इति कुक् ।) परसम्बन्धि । (यथा, मनुः । ४ । २०१ ।
विदग्धा द्विविधा । वाग्विदग्धा १ क्रियाविदग्धा
चेति २ । प्रथमा, --
“निविडतमतमालमल्लिवल्ली-
विचकिलराजिविराजितोपकण्ठे।
पथिकसमुचितस्तवाद्यतीव्रे
सवितरि तत्र सरित्तटे निवासः ॥”
द्बितीया यथा, --
“दासाय भवननाथे
वदरीमपनेतुमादिशति ।
हेमन्ते हरिणाक्षी पयसि कुठारं विनिक्षि-
पति ॥” * ॥
लक्षिता यथा, --
“यद्भूतं तद्भूतं यद्भूयात्तदपि वा भूयात् ।
यद्भवतु तद्भवतु वा विफलस्तव गोपनायासः ॥” *
कुलटा यथा, --
“एते वारिकणान् किरन्ति पुरुषान् वर्षन्ति
नाम्भोधराः
शैलाः शाद्बलमुद्वमन्ति न सृजन्त्येते पुनर्नाय-
कान् ।
त्रैलोक्ये तरवः फलानि सुवते नैवारभन्ते जनान्
धातः ! कातरमालपामि कुलटाहेतोस्त्वया किं
कृतम् ॥”
अपि च ।
“पृथ्वी तावत्त्रिकोणा विपुलनदनदीग्रावरुद्धं
तदर्द्धं
तस्यामेवास्ति शैलो विपिनमपि तथा क्षेत्र-
कासारकूपाः ।
लोकानामर्द्धनारी शिशुरपि जरसः कोऽपि
रोगी विवेकी
‘किञ्चित्कुञ्चितहारयष्टिसरलभ्रूवल्लिसाचिस्मितं
प्रान्तभ्रान्तविलोचनद्युतिभुजापर्य्यस्तकर्णोत्-
पलम् ।
अङ्गुल्या स्फुरदङ्गुलीयकरुचा कर्णस्य कण्डूयनं
कुर्व्वाणा नृपकन्यका सुकृतिनं सव्याजमालो-
कते ॥”
इति रतिमञ्जरी ॥

**परक्षेत्रं**, क्ली, (परस्य क्षेत्रं पत्न्यादि ।) परपत्नी । (यथा, मनुः । ३ । १७५ ।
“तौ तु जातौ परक्षेत्रे प्राणिनौ प्रेत्य चेह च ।
दत्तानि हव्यकव्यानि नाशयेते प्रदायिनाम् ॥”)
परशरीरम् । परभूमिः । यथा, --
“वृषापेहि परक्षेत्रादायाति क्षेत्ररक्षकः ।”
इति चन्द्रालोकः ॥
(तथा च मनुः । ८ । ३४१ ।
“द्विजोऽध्वगः क्षीणवृत्तिर्द्बाविक्षू द्वे च मूलके ।
आददानः परक्षेत्रान्न दण्डं दातुमर्हति ॥”)

**परग्रन्थिः**, पुं, (परेण ग्रन्थिर्यत्र ।) पर्व्वावधिः । अङ्गुलिपर्व्व । इति हारावली ॥

**परच्छन्दः**, त्रि, (परस्य छन्दो यत्र ।) परा-धीनः । इति हेमचन्द्रः ॥

**परच्छिद्रं**, क्ली, (परस्य छिद्रम् ।) परदोषः । यथा,
“नीचः सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो विल्वमात्राणि पश्यन्नपि न पश्यति ॥”
इति गरुडपुराणम् ॥

**परजातः**, त्रि, (परेण जातः । परपुष्टत्वात्तथा-त्वम् ।) परैधितः । औदासीन्येन परपुष्टः । परपोषितत्वात् । परस्माज्जातः । इत्यमरभरतौ ॥
अन्येनोत्पन्नश्च ॥ (कोकिले पुं । एष हि काकेन पुष्टो भवतीति प्रसिद्धिः ॥)

**परजितः**, त्रि, (परेण जितः ।) परपुष्टः । शत्रुणा पराजितः । इति केचित् ॥

**परञ्जः**, पुं, (परं जयतीति । जि जये + बाहुलकात् डः ।) तैलयन्त्रम् । छुरिकाफलः । फेनः । इति

“परकीयनिपानेषु न स्नायाच्च कदाचन ॥”)

**परकीया**, स्त्री, (परकीय + टाप् ।) नायिका-

भेदः । अस्या लक्षणं यथा । अप्रकटपर-
पुरुषानुरागा । सा च द्विविधा । परोढा १
कन्यका च २ । कन्यायाः पित्राद्यधीनतया
परकीयत्वम् । अस्या गुप्तैव सकला चेष्टा ॥ * ॥
परोढा यथा, --
“अयं रेवाकुञ्जः कुसुमशरसेवासमुचितः
समीरोऽयं वेलादरविलसदेलापरिमलः ।
इयं प्रावृड्धन्या नवजलदविन्यासचतुरा
पराधीनं चेतः सखि ! किमपि कर्त्तुं मृगयते ॥”
*
गुप्ताविदग्धालक्षिताकुलटानुशयानामुदिताप्रभृ
तीनां परकीयायां एवान्तर्भावः । गुप्ता
त्रिविधा । वृत्तसुरतगोपना १ वर्त्तिष्यमाण-
सुरतगोपना २ वर्त्तमानसुरतगोपना च ३ ।
त्रिविधा यथा, --
“श्वश्रूः क्रुध्यतु विद्बिषन्तु सुहृदो निन्दन्तु वा
यातर-
स्तस्मिन् किन्तु न मन्दिरे सखि ! पुनः स्वापो
विधेयो मया ।
आखोराक्रमणाय कोणकुहरादुत्फालमातन्वती
माज्जारी नखरैः खरैः कृतवती कां कां न मे
दुर्द्दशाम् ॥” * ॥
मिथ्यावादो ममायं मुखरमुखवरः
पुंश्चली
पुंश्चलीति ॥” * ॥
अनुशयाना त्रिविधा ।
वर्त्तमानस्थानविघट्टनेन
भाविस्थानाभावशङ्कया
स्वानधिष्ठितसङ्केतस्थले
भत्तगमनानुमानेन प्रत्येकं
उदाहरणानि ।
“समुपागतवति चैत्रे निपतति पत्रे
लवङ्गलति-
कायाः ।
सुदृशः कपोलपाली शिव शिव
तालीदलद्युतिं
लेभे ॥” * ॥
“निद्रालुकेकिमिथुनानि
कपोतपोत-
व्याधूतनूतनमहीरुहपल्लवानि ।
तत्रापि तन्वि ! न वनानि कियन्ति
सन्ति
खिद्यस्व न प्रियतमस्य गृहं प्रयाहि
॥
कर्णकल्पितरसालमञ्जरी-
पिञ्जरीकृतकपोलमण्डलः ।
निष्पतन्नयनवारिधारया
राधया मधुरिपुर्न्निरीक्ष्यते ॥” * ॥
मुदिता यथा, --
“गोष्ठेषु तिष्ठति पतिर्वधिरा ननन्दा
नेत्रद्बयस्य न च पाटवमस्ति यातुः
।
इत्थं निगद्य सुतनुः
कुचकुम्भसीम्नि
रोमाञ्चकञ्चुकमुदञ्चितमाततान ॥”
* ॥
कन्यका यथा, --
मेदिनी ॥

**परञ्जनः**, पुं, (परायाः पश्चिमस्या दिशो जनः

स्वामी । निपातनात् साधुः ।) वरुणः । इति
हेमचन्द्रः ॥

**परञ्जयः**, पुं, (परां पश्चिमां दिशं जयति स्वामि-

त्वेन । जि + अच् । सर्व्वनाम्नः वृत्तौ पुंवद्भावः
मुम् च ।) वरुणः । इति त्रिकाण्डशेषः ॥ शत्रु-
जयकर्त्ता । परान् जयतीति खप्रत्ययनिष्पन्नः ॥

**परतन्त्रः**, त्रि, (परस्तन्त्रं प्रधानं यस्य ।) परा-

धीनः । इत्यमरः ॥ (यथा, महाभारते । १३ । १
। १५ ।
“परतन्त्रं कथं हेतुमात्मानमनुपश्यसि ।
कर्म्मणां हि महाभाग ! सूक्ष्मं ह्येतदतीन्द्रियम् ॥”
परस्य तन्त्रं इति विग्रहे क्ली । परकीय-
शास्त्रम् । परं श्रेष्ठं तन्त्रमिति विग्रहे । उत्-
कृष्टशास्त्रम् । उत्तमपरिच्छदम् ॥)

**परत्रभीरुः**, त्रि, (परत्र परलोकान्तरघटना-

विषये भीरुः ।) धार्म्मिकः । परकालभय-
शीलः । यथा, --

"परत्रभीरुं धर्म्मिष्ठमुद्युक्तं क्रोधवर्ज्जितम् ॥"
इति मिताक्षरायां कात्यायनः ॥

**परत्वं**, क्ली, परस्य भावः । परता । न्यायमते तद्-
द्विविधम् । दैशिकम् १ । तत्तु बहुतरसूर्य्य-
संयोगज्ञानजन्यगुणः । कालिकम् २ तच्च बहु-
तरकालान्तरितत्त्वज्ञानजन्यगुणः। एतद्द्वयं
मूर्त्तपदार्थगुणः । दैशिकपरत्वस्यासमवायि-
कारणं दिक्शरीरसंयोगः ।
कालपरत्वस्यासम-
वायिकारणं कालपिण्डसंयोगः । ते अपेक्षा-
बुद्धिजन्ये । तन्नाशनाश्ये च । यथा, --
"परत्वञ्चापरत्वञ्च द्विविधं परिकीर्त्तितम् ।
दैशिकं कालिकञ्चापि मूर्त्त एव तु दैशिकम् ॥
परत्वं सूर्य्यसंयोगभूयस्त्वज्ञानतो भवेत् ।
अपरत्वं तदल्पत्वबुद्धितः स्यादितीरितम् ॥
तयोरसमवायी तु दिक्संयोगस्तदाश्रये ।
दिवाकरपरिष्पन्दपूर्ब्बोत्पन्नत्वबुद्धितः॥
परत्वमपरत्वन्तु तदनन्तरवुद्धितः ।
अत्र त्वसमवायी तु संयोगः कालपिण्डयोः ॥
अपेक्षा बुद्धिनाशाच्च नाशस्तेषां निरूपितः ।"
इति भाषापरिच्छेदः ॥

**परदारः**, (परस्य दाराः ।) परभार्य्या । तद्गमने
दोषो यथा, कर्म्मलोचनम् ॥
"परदाररताश्चैव परद्रव्यहराश्च ये ।
अधोऽधो नरके यान्ति पीड्यन्ते यमकिङ्करैः ॥"
"ब्राह्मणः क्षत्त्रियो वैश्यो यो रतः परयोषिति ।
याति तस्यापूजितस्य रुष्टा लक्ष्मीर्गृहादपि ॥
इहातिनिन्द्यः सर्व्वत्र नाधिकारी स्वकर्म्मसु ।
परत्रैबान्धकूपे च यावद्वर्षशतं वसेत् ॥
अपि च ।
"किन्तज्जपेन तपसा मौनेन च व्रतेन च ।
सुरार्च्चनेन तीर्थेन स्त्रीभिर्यस्य मनो हृतम् ॥
सर्व्वमायाकरण्डश्च धर्म्ममार्गार्गलं नृणाम् ।
व्यवधानञ्च तपसां दोषाणामाश्रमं परम् ॥
नयन्ति परदारा हि नरकानेकविंशतिम् ॥
सर्व्वेषामेव वर्णानामेष धर्म्मो ध्रुवोऽन्धक ! ॥
एवं पुरा सुरपते ! देवर्षिरसितोऽव्ययः ।
प्राह धर्म्मव्यवस्थानं खगेन्द्रायारुणाय हि ।
तस्मात् सुदूरतो वर्जेत् परदारान् विचक्षणः ।
नयन्ति निकृतिप्रज्ञं परदाराः पराभवम् ॥"
इति वामने ६३ अध्यायः ॥

**परदुःखं**, क्ली, (परेषां दुःखम् ।) अन्यजनपीडा ।
यथा, --
"त्यक्त्वात्मसुखभोगेच्छां सर्व्वसत्त्वसुखैषिणः ।
भवन्ति परदुःखेन साधवो नित्यदुःखिताः ॥
परदुःखातुरा नित्यं स्वसुखानि महान्त्यपि ।
नापेक्षन्ते महात्मानः सर्व्वभूतहिते रताः ॥"
इत्यग्निपुराणम् ॥

**परद्वेषी**, [न्] त्रि, (परेभ्योद्वेष्टीति । पर + द्विष्
+ णिनिः ।) विदूषकः । परद्वेष्टा । इति शब्द-
माला ॥

**परध्यानं**, क्ली, (परं श्रेष्टं ध्यानम् ।) ध्यान-
विशेषः । यथा, --
"ध्येये मनो निश्चलतां याति ध्येयं विचिन्तयन् ॥
यत्तद्ध्यानं परं प्रोक्तं मुनिभिर्ध्यानचिन्तकैः ॥"
इति गरुडपुराणम् ॥
(परस्य ब्रह्मणोध्यानं यद्वा परं ब्रह्मविषयकं-

**परपाकनिवृत्तः** पुं, (परार्थात् पाकात् निवृत्तः ।)
परोद्देश्यकपाकरहितः । पञ्चयज्ञाकर्त्ता ।
यथा, --
"गृहीत्वाग्निं समारोप्य पञ्चयज्ञान्न निर्वपेत् ।
परपाकनिवृत्तोऽसौ मुनिभिः परिकीर्त्तितः ॥"
इति मिताक्षरायां प्रायश्चित्ताध्यायः ॥

**परपाकरतः**, पुं, (परस्य पाके रतः ।) परपाक-
रुचिः । प्रातः पञ्चयज्ञान्निर्व्वर्त्य परान्नभोजी ।
यथा, -- मिताक्षरायां प्रायश्चित्ताध्याये ।
"पञ्चयज्ञान् स्वयं कृत्वा परान्नमुपजीवति ।
सततं प्रातरुत्थाय परपाकरतस्तु सः ॥" * ॥
परपाकनिवृत्तपरपाकरतयोरन्नभोजनेदोषो
यथा, --
"परपाकनिवृत्तस्य परपाकरतस्य च ।
अपचस्य च भुक्त्वान्नं द्विजश्चान्द्रायणञ्चरेत् ॥"
इति मिताक्षरायां प्राथश्चित्ताध्यायः ॥

**परपिण्डादः**, त्रि, (परस्य पिण्डं अन्नादिकंअत्तीति ।
अद् लौ भक्षणे + "कर्म्मण्यण् ।" ३ । २ । १ । इति
अण् ।) परान्नोपजीवी । इत्यमरः । ३ । १ । २० ॥

**परपुरुषः**, पुं, (परः श्रेष्ठः पुरुषः ।) विष्णुः । इति
त्रिकाण्डशेषः ॥ (परोऽन्यः पुरुषः ।) अन्यपुमान् ।
उपनायकः । यथा, --
"राजन् जीवावधानं कुरु शृणु निभृतं प्रेय-
सीनां कुचेष्टा
एका ते कीर्त्तिकान्ता जगदटनपरा विश्वभोग्या-
परा श्रीः ।
या वा पाणौ गृहीता विधिवदसिलता शुद्ध-
धारेति मत्वा
सोत्कण्ठं सापि नित्यं परपुरुषशतं मारभावा-
दुपैति ॥"
इति कर्णाटराजम्प्रति कालिदासः ॥

**परपुष्टः**, पुं, (परेण काकेन पुष्टः पालितः । डिम्ब-

कर्म्मबन्धनिबद्धानां निगडं कठिनं सुत ! ।
प्रदीपरूपं कीटानां मीनानां वडिशं यथा ॥
विषकुम्भं दुग्धमुखमारम्भे मधुरोपमम् ।
परिणामे दुःखबीजं सोपानं नरकस्य च ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ३० । ६१
अध्यायः ॥ * ॥
“यस्तु पाणिगृहीतीं तां हित्वान्यां योषितं
व्रजेत् ।
अगम्यागमनं तद्धि सद्यो नरककारणम् ॥
नित्यं नैमित्तिकं काम्यं यागयोग्यव्रतादिकम् ।
चेत्रतीर्थाटनं तस्मिन् वासो धर्म्मक्रियादिकम्
॥
स्वाध्यायादि तपो दैवं पैत्रं कर्म्म वरानने ! ।
यात्येतन्निष्फलं सर्व्वं परस्त्रीगमनान्नृणाम् ॥
परदाराभिगमनात् कोटि एकादशीव्रतम् ।
अपरं किमु वक्तव्यं निष्फलं निरये स्थितिः ॥
सत्यं सत्यं पुनः सत्यं सत्यमेव ब्रवीमि ते ।
परयोनौ पतन् बिन्दुः कोटिपूजां विनाशयेत्
॥”
इति पाद्मोत्तरखण्डे ७५ अध्यायः ॥ * ॥
अपि च ।
“त्याज्यं धर्म्मान्वितैर्नित्यं परदारोपसेवनम् ।
ध्यानमिति । ब्रह्मचिन्तनम् ॥ परेषां
ध्यानमिति-
विग्रहे । परानिष्टचिन्तनम् ॥)

**परन्तपः**, त्रि, (परान् शत्रून् तापयतीति । तप
सन्तापे “द्विषत्परयोस्तापेः ।” ३ । २ ।
३९ ।
इति खच् । “खचि ह्रस्वः ।” ६ । ४ ।
९४ ।
इति उपधाया ह्रस्वस्ततो मुम् ।)
परतापी ।
(यथा, भट्टिः । १ । १ ।
“अभून्नृपो विबुधसखः परन्तपः
श्रुतान्वितो दशरथ इत्युदाहृतः ॥”)
(जितेन्द्रियः । इति चिन्तामणिः ॥
तामस-
मनोः पुत्त्रभेदः । यथा, हरिवंशे । ७ ।
२४ ।
“द्युतिस्तपस्यः
सुतपास्तपोमूलस्तपोशनः ।
तपोरतिरकल्माषस्तन्वीधन्वीपरन्तपः
।
तामसस्य मनोरेते दशपुत्रा महाबलाः
॥”
नृपविशेषः । असौ हि मगधेश्वरः ।
यदुक्तं
रघौ । ६ । २१ ।
“असौ शरण्यः शरणोन्मुखाना-
मगाधसत्त्वो मगधप्रतिष्ठः ।
राजा प्रजारञ्जनलब्धवर्णः
परन्तपो नाम यथार्थनामा ॥”)

**परपदं**, क्ली, (परं श्रेष्ठं पदम् ।) श्रेष्ठस्थानम् ।
मुक्तिः । यथा, --
“कल्याणानां निदानं कलिमलमथनं
जीवनं
सज्जनानां
पाथेयं यन्मुमुक्षोः सपदि परपदप्राप्तये
प्रस्थि-
तस्य ।”
इति महानाटकम् ॥
(परस्य परेषां वा पदं स्थानमितिविग्रहे-
परराष्ट्रम् ॥)
स्फोटनाक्षमया कोकिलया हि नीडस्थं
काकडिम्बमपसार्य्य स्वडिम्बे तत्र स्थापिते
काक्या
निजडिम्बबुद्ध्या तत्परिपाल्यते इति
प्रसिद्धेरस्य
तथात्वम् ।) कोकिलः । इति मेदिनी ॥ परेण
पोषिते त्रि । इति धरणिः ॥

**परपुष्टमहोत्सवः**, पुं, (परपुष्टानां कोकिलानां
महोत्सवो यत्र । आम्रमुकुलोद्गमे हि कोकि-
लानां आनन्दो जायते ।) आम्रः । इति शब्द-
माला ॥

**परपुष्टा**, स्त्री, (परेण परपुरुषेण पुष्टा पालिता ।)
वेश्या । इति मेदिनी ॥ पराश्रया । इति शब्द-
चन्द्रिका ॥ परसाडा इति भाषा ॥

**परपूर्व्वा**, स्त्री, परोऽन्यः पूर्ब्बो भर्त्ता यस्याः सा
पत्यन्तरग्रहणात् प्रागन्येन गृहीतासीदित्यर्थः
।
अस्या लक्षणं यथा, मानवे ५ अध्यायः ॥
“पतिं हित्वापकृष्टं स्वमुत्कृष्टं या निषेवते ।
निन्द्यैव सा भवेल्लोके परपूर्ब्बेति चोच्यते ॥”
अस्याः प्रकारो यथा, --
“परपूर्ब्बाः स्त्रियस्त्वन्याः रुप्त प्रोक्तां
यथाक्रमम् ।
पुनर्भस्त्रिविधा तासां स्वैरिणी तु चतुर्व्विधा
॥”
इति मिताक्षरायां नारदः ॥

**परप्रतिनप्ता**, [ऋ] पुं, (प्रतिनप्तुः परः अन्तरः ।) वृद्धप्रपौत्रः । इति हेमचन्द्रः ॥

**परप्रपौत्रः** पुं, (प्रतिनप्तुः परः अन्तरः ।) वृद्धप्रपौत्रः । इति हेमचन्द्रः ॥

**परभागः**, पुं, (परस्य श्रेष्ठस्य भागः ।) गुणोत्कर्षः । इति हेमचन्द्रः ॥ (यथा, रघुः । ५ । ७० ॥
"आभाति लब्धपरभागतयाऽधरोष्ठे
लीलास्मितं सदशनार्च्चिरिव त्वदोयम् ॥")
सुसम्पत् । इति त्रिकाण्डशेषः ॥ शेषांशश्च ॥

**परभुक्ता**, स्त्री, (परेण परपुरुषेण भुक्ता ।) अन्यपुरुषसम्भोगविशिष्टा । यथा, --
"परभुक्ताञ्च कान्ताञ्च यो भुङ्क्ते स नरधः ।
स पच्यते कालसूत्रे यावच्चन्द्रदिवाकरौ ॥
न सा दैवे न सा पैत्रे पाकार्हा पापसंयुता ।
तस्या आलिङ्गने भर्त्ता भ्रष्टश्रीस्तेजसा हतः ॥
देवताः पितरस्तस्य हव्यदाने च तर्पणे ।
सुखिनो न भवन्त्येवमित्याह कमलोद्भवः ॥
तस्माद्यत्नेन भार्य्याञ्च रक्षणं कुरुते सुधीः ।
अन्यथा पापिनीभर्त्ता निश्चितं नरकं व्रजेत् ॥
पदे पदे सावधानः कान्तां रक्षति पण्डितः ।
न प्रतीतिस्थली योषा दोषाणाञ्च करण्डिका ॥

**परम**, व्य, अनुज्ञा । इति मेदिनी ॥ हाँ इति भाषा । तथा च । ओमेवं परमं मते । इत्यमरः । ३ । ४ । १२ ॥ त्रीणि मते अनुमतौ । ओं कुरु ओमित्युक्तवतः । एवं वाढं एवं यदाह भगवान् । परमन्ते आवसं ममेदं परमम् । त्रयं प्रकारेऽपि । इति भरतः ॥

**परमः**, त्रि, (परं उत्कृष्टं मातीति । "आतोऽनुपसर्गे कः ।" ३ । २ । ४ । इति कः ।) परः । उत्कृष्टः । इति मेदिनी ॥ (यथा, मनुः । ९ । ३१९ ।
"सर्व्वथा ब्राह्मणाः पूज्याः परमं दैवतं हि तत् ॥")
प्रधानम् । (यथा, मनुः । ६ । ९६ ।
"एवं संन्यस्य कर्म्माणि स्वकार्य्यपरमोऽस्पृहः ॥")
आद्यः । ओङ्कारः । इति विश्वः ॥ (यथा, कुमारे । ६ । ३५ ।
"ततः परममित्युक्त्वा प्रतस्थे मुनिमण्डलम् ॥")
अग्रेसरः । इति हेमचन्द्रः ॥ (महादेवः । यथा, महाभारते । १३ । १७ । ५१ ।
मन्त्रवित् परमोमन्त्रः सर्व्वभावकरो हरः ॥")

**परमगतिः**, स्त्री, (परमा गतिः ।) मुक्तिः । मोक्षहेतौ त्रि । यथा ।
गुणातीतोऽपीशस्त्रिगुणसचिवस्त्राक्षरभयस्त्रिमूर्त्तिर्य्यः सृष्टिस्थितिविलयकर्म्माणि कुरुते । कपापारावारः परमगतिरेष त्रिजगतां नमस्तस्मै कस्मैचिदमितमहिम्ने पुरभिदे ॥ इति

एषा सन्निचयो यस्मात् ब्रह्मणश्च ततस्त्वृषिः ॥
विवृत्तिसमकालन्तु बुद्ध्या व्यक्तिरृषिस्त्वयम् ।
ऋषते परमं यस्मात् परमर्षिस्ततः स्मृतः ॥
गत्यर्थादृषतेर्धातोर्नामानि वृत्तिकारणम् ।
यस्मादेष स्वयं भूतस्तस्माच्च ऋषिता मता ॥"
इति मात्स्ये १२० अध्यायः ॥
भेलादिऋषिविशेषः । इति त्रिकाण्डशेषः ॥ (वेदव्यासो हि परमर्षिः । यथा, महाभारते । १ । १ । १७ ।
"द्वैपायनेन यत् प्रोक्तं पुराणं परमर्षिणा ॥")

**परमस्वधर्म्मा**, [न्] त्रि, परमस्वो धर्म्मो यस्य । इति कर्म्मधारयपूर्ब्बपदबहुव्रीहौ सिद्धान्तकौमुदी ॥

**परमहंसः**, पुं, (परमः श्रेष्ठः हंसः सोऽहं आत्मा यस्य ।) सन्न्यासिविशेषः । अस्य लक्षणं यथा । जातरूपवेरो निर्द्वन्द्वो निराग्रहस्तत्त्वब्रह्ममार्गे सम्यक् सम्पन्नः शुद्धमानसः प्राणसंधारणार्थं यथोक्तकाले भैक्षमाचरन् लाभालाभौ समौ कृत्वा शून्यागारदेवगृहतृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रनदीपुलिनगिरिकुहरकन्दरकोटरनिकरस्थण्डिलेष्वनिकेतवासी निष्प्रयत्नो निर्म्ममः शुक्लध्यानपरायणः अध्यात्मनिष्ठः शुभाशुभकर्म्मनिर्मूलनाय सन्न्यासेन देहत्यागं करोति यः सएव परमहंसो नामेति जीवन्मुक्तिविवेकः ॥ (अयं हि चतुर्व्विधाबधूतेषु श्रेष्ठः । यदुक्तं महानिर्व्वाणतन्त्रे ।
"चतुर्णामबधूतानां तुरीयो हंस उच्यते ।
त्रयोऽत्ये भोगयोगाढ्यामुक्ताः सर्व्वे शिवोपमाः ॥"
परमहंसेन हि यज्ञोपवीतादिचिह्नानि परित्यज्य कौपीनादिकं धारणीयम् । यदुक्तं सूतसंहितायां ज्ञानयोगे ।
"परमहंसस्त्रिदण्डञ्च रज्जुं गोबालमिश्रितम् ।
शिक्यं जलपवित्रञ्च पवित्रञ्च कमण्डलुम् ॥
पक्षिणीमजिनं सूचीं मृत् खनित्रीं कृपाणिकाम् ।
शिखां यज्ञोपवीतञ्च नित्यकर्म्म परित्यजेत् ॥
कौपीनं छादनं वस्त्रं कन्थां शीतनिवारिकाम् ।
योगपट्टं वहिर्वस्त्रं पादुकां छत्रमद्भुतम् ॥
अक्षमालाञ्च गृह्णीयात् वैणवं दण्डमव्रणम् ।

कलत्रं पाकपात्रञ्च सदा रक्षितुमर्हति
।
परस्पर्शादशुद्धाञ्च शुद्धां स्वस्पर्शने
सदा ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे
१८ अध्यायः ॥ * ॥
अन्येन भक्षिते त्रि ॥

**परभृत्**, पुं, (परान् कोकिलान् विभर्त्तीति । डु
भृञलि भृतिपुष्टौ + क्विप् । परेषां
भृदिति
केचित् ।) काकः । इत्यमरः । २ । ५
। २० ॥
(परजनपोषके, त्रि । यथा, भागवते ।
२ । २ । ५ ।
“चीराणि किं पथि न सन्ति दिशन्ति
भिक्षां
नैवाङ्घ्रिपाः परभृतः
सरितोऽप्यशुष्यन् ॥”)

**परभृतः**, पुं, (परेण काकेन भृतः पुष्टः ।) कोकिलः ।
इत्यमरः । २ । ५ । १९ ॥ (यथा,
मृच्छकटीये ।
“परभृत इव नीडे रक्षितो वायसीभिः
॥”
स्त्रियां टाप् । यथा, रघौ । ९ । ४७ ।
“परभृताभिरितीव निवेदिते
स्मरमते रमते स्म बधूजनः ॥”
तथाच कुमारे । ६ । २ ।
“चूतयष्टिरिवाभ्यासे मधौ
परभृतोन्मुखी ॥”
अत्र मल्लिनाथः । “परभृतया
कोकिलया
उन्मुखी मुखरा । परभृतेति
क्रियाशब्दविव-
क्षायां ‘जातेरस्त्री’ इति ङीप् प्रत्ययो
न भवति ।
अथवा भृद्भरणं सम्पदादित्वात् क्विप्
। परैः
भृत्यस्यास्तया परभृता इति व्यासेन
व्याख्यातम् ।
मङ्गलवादः ॥ तस्या लक्षणं यथा, --
“यां विप्राः सर्व्वतः शान्ता विशुद्धा
ज्ञाननिश्चयाः ।
गतिं गच्छन्ति सन्तुष्टास्तामाहुः परमां
गतिम् ॥”
इति महाभारते मोक्षधर्म्मः ॥

**परमगवः**, पुं, स्त्री, परमश्चासौ गौश्चेति श्रेष्ठगौः ।

**परमपदः**, पुं, क्ली, (पद्यते ज्ञानिभिः प्राप्यते इति
पदम् । ततः कर्म्मधारयः ।) श्रेष्ठस्थानम्
। पर-
देवताचरणः । यथा । स्वपुष्पैराकीर्णं
कुसुम-
धनुषो मन्दिरमहो पुरो ध्यायन् ध्यायन्
यदि
जपति भक्तस्तव मनुम् । स
गन्धर्व्वश्रेणीपति-
रपि कवित्वामृतनदीनदीनः पर्य्यन्ते
परमपद-
लीनः प्रभवति ॥ इति कर्पूराख्यस्तोत्रम्
॥

**परमब्रह्म**, [न्] क्ली, (परमं ब्रह्म ।) परमेश्वरः ।
नारायणः । यथा ।
सत्यतपा उवाच ।
“यदेतत् परमं ब्रह्म त्वया प्रोक्तं महामुने !
।
तस्य रूपं न जानन्ति योगिनोऽपि
महात्मनः ॥
अनामगोत्ररहितममूर्त्तं मूर्त्तिवर्ज्जितम् ।
कथं तज्ज्ञायते ब्रह्म
संज्ञानामविवर्ज्जितम् ॥
तत्तस्य संज्ञां कथय येन जानाम्यहं
गुरो ! ॥”
दुर्व्वासा उवाच ।
“यदेतत् परमं ब्रह्म वेदवादेषु पठ्यते ।
स देवः पुण्डरीकाक्षः स्वयं नारायणः
परः ॥
स यज्ञैर्विविधैरिष्टैदर्निर्दत्तैश्च सत्तम ! ।
प्राप्यते परमो देवः स्वयं नारायणो हरिः
॥”
इति वराहपुराणम् ॥

अग्निरित्यादिभिर्म्मन्त्रैः कुर्य्यादुद्धूमनं मुदा ॥
आमिति च त्रिभिः प्रोच्य परमहंसस्त्रिपुण्ड्रकम् ॥”
अविदुषा परमहंसेन एकदण्डन भाव्यम् ।
विदुषा तु दण्डादिकं किमपि न धारणीयम् ॥
यदुक्तं निर्णयसिन्धौ । “परमहंसस्यैकदण्ड एव
सोऽप्यविदुवः । विदुषान्तु सोऽपि नास्ति ।
न दण्डं न शिखां नाच्छादनं धरति परमहंसः ॥”
परमहंसास्तु केवलं प्रणवजपतत्परा एव
भवन्ति । यदुक्तं सूतसंहितायाम् ।
“प्रणवाद्यास्त्रयोवेदाः प्रणवे पर्य्यवस्थिताः ।
तस्मात् प्रणवमेवैकं परमहंसः सदा जपेत् ॥
विविक्तदेशमाश्रित्य सुखासीनः समाहितः ।
यथाशक्ति समाधिस्थो भवेत् सन्न्यासिनां वरः ॥”
परमहंसास्तु “तत्त्वमसि” इत्यादि महावाक्याक-

पदमञ्जरीकारस्तु परैः भ्रियते इति कर्म्मणि

क्विपमाह ॥”) परपोषिते त्रि ॥

**परम्**, व्य, (पॄ पूर्त्तौ + अम् ।) नियोगः । क्षेपः । इति

मेदिनी ॥ पश्चात् ॥ (किन्त्वर्थे ।

यथा, पञ्चतन्त्रे ।

“तेषां सर्व्वे शास्त्रपारगाः परं

बुद्धिरहिताः ॥”

अधिकम् । यथा, रघुः । १ । १७ ।

“रेखामात्रमपि क्षुण्णादामनोर्व्वर्त्मनः

परम् ॥”

अनन्तरम् । यथा, तत्रैव । १ । ६६ ।

“नूनं मत्तःपरं वंश्याः

पिण्डविच्छेददर्शिनः ॥”)

**परमर्षिः**, पुं, (परमश्चासौ ऋषिश्चेति ।) अस्य

व्युत्पत्तिर्यथा, --

“ऋषिर्हिंसागतौ

धातुर्विद्यासत्यतपःश्रुतैः ।

लम्बनेन आत्मज्ञानानुशीलिनो भवन्ति "सोऽहं" शिवोऽहं" इत्यादि वदन्तस्तत्त्वज्ञानावलम्बनस्य परिचयं प्रयच्छन्ति च । एषामध्यक्षो हि स्वामीत्याख्यया प्रसिद्धः । एते हि तीर्थभ्रमण-निपुणास्तीर्थस्थानस्थाश्च । मतस्य परमहंसस्य
शरीरं भूमौ निखाततत्वम् । यदुक्तं वायु-संहितायाम् ।
"मृते न दहनं कार्य्यं परमहंसस्य सर्व्वदा ।
कर्त्तव्यं खननं तस्य नाशौचं नोदकक्रिया ॥"
परमहंसस्तु दण्डिपरमहंसावधूतपरमहंसभेदेन द्विविधः । ये तु दण्डं परित्यज्य पारमहंस्य-व्रतावलम्बनं कुर्व्वन्ति ते दण्डिपरमहंसाः । ये चावधूतवृत्त्यनुष्ठानेन परमहंसास्ते एवा-वधूतपरमहंसाः । परं सर्व्वे एव प्रणवोपासकाः इति ॥ * ॥
शुक्लयजुर्व्वेदगत उपनिषद्विशेषः । इति मुक्ति कोपनिषत् ॥)

**परमाणुः**, पुं, (परमः सर्व्वचरमकोऽणुः ।)

पृथिव्यादिभूतचतुष्टयानांद्व्यणुकानामवयवः । स च नित्यः निरवयवः ततः किमपिसूक्ष्मं नास्ति ।
यथा, --
"नित्यानित्या च सा द्वेधा नित्या स्यादणुलक्षणा ।
अनित्या तु तदत्या स्यात् सैवावयवयोगिनी ॥"
पारिमाण्डल्यनामकतत्परिमाणन्तुन कस्यापि कारणम् । यथा,
"पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥"
जलादिपरमाणुरूपस्य नित्यत्वम् । पार्थिवपर-माणुरूपस्यानित्यत्वम् । पार्थिवपरमाणुरूप-स्यानित्यत्वम् । यथा, भाषापरिच्छेद्वे ॥
"जलादिपरमाणौ तन्नित्यमन्यत् सहेतुकम् ।"
तैरेव परमाणुभिराद्युपादानैर्द्व्यणुकत्रसरेण्वादि-क्रमेण स्थूलक्षितिजलतेजोमरुतः सृजति परमे-श्वरः । यथा आयोजनं परमाणुकर्म्म तथा च सर्गाद्यकालीनं द्व्यणुकारम्भकपरमाणुकर्म्म यत्नजन्यं प्रयत्नवदात्मसंयोगजन्यं वा कर्म्मत्वात्
ग्रहर्क्षताराचक्रस्थ इत्यादिना यत्
सूर्य्यपर्य्यटनं
वक्ष्यति तत्र सूर्य्यो यावता
परमाणुदेशमति-
क्रामति तावान् कालः परमाणुः । यावता च
द्वादशराश्यात्मकं सर्व्वं
भुवनकोषमतिक्रामति
स परममहान् संवत्सरात्मकः
तस्यैवावृत्त्या
युगमन्वन्तरादिक्रमेण
द्विपरार्द्धान्तत्वमिति । तथा
च पञ्चमे सूर्य्यगत्यैव कालादिविभागं वक्ष्यति । ५ ।
इदानीं द्व्यणुकादिलक्षणपूर्व्वकं
मध्यमकालावस्थां
कथयति द्वौ परमाणू अणुः स्यात्
त्रयोऽणव-
स्त्रसरेणुः स तु प्रत्यक्ष इत्याह
जालार्केति
गवाक्षप्रविष्टेष्वर्करश्मिष्ववगतः कोऽसौ योऽति-
लघुत्वेन खमेवानुपतन् अगात् गतः । न गामिति पाठे खमेवानुपतन्नवगतः न तु गां
पृथ्वीम् । इति श्रीधरस्वामी ॥

**परमाण्वङ्गकः**, पुं, (परमाणुरङ्गं यस्य । कप् ।)

विष्णुः । इति शब्दमाला ॥

**परमात्मा**, [न्] पुं, (परमः केवलः आत्मा ।)

परं ब्रह्म । तत्पर्य्यायः । आपोज्योतिः २ चिदात्मा ३ । यथा, --
"परमात्मा परं ब्रह्म निर्गुणः प्रकृतेः परः ।
कारणं कारणानाञ्च श्रीकृष्णो भगवान् स्वयम् ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २३ अध्यायः ॥
(विष्णुः । यथा, महाभारते । १३ । १४९ । १५ ।
अथायुरानयनम् ।
"अज्ञानादायुषः सर्व्वं विफलं कीर्त्तितञ्च यत् ।
तस्मादानयनं तस्य स्फुटार्थमभिधीयते ॥
नीचान्तरस्य खेटस्य भागस्तुङ्गगुणो भवेत् ।
चेष्टा केन्द्रस्तु चेत् षड्भादधिकं चक्रशोधितम् ॥
नान्यथा तस्य भागादि चेष्टा गुणक उच्यते ।
गुणश्चेत् षष्टि ६० तो न्यूनं तदा द्व्याप्तं सखा-
नलः ३० ॥
एवं तुङ्गगुणश्चेष्टा गुणो यत् स्यात् तयोर्वधात् ।
मूलं कलादिकं तत् स्याद्गुणकस्फुट उच्यते ॥
अथाश्रयगुणं वक्ष्ये क्षेत्रादिसप्तवर्गजम् ।
वर्गे क्षेत्रादिके स्वर्क्षे ग्राह्यस्त्रिंशत् ३० कलागुणः ॥
अधिमित्रगृहे तत्त्वम् २५
मित्रेवित्र्यंशजातयः ।
२१ । ४० ।
समे पञ्चदश ग्राह्याः शत्रौ स्वत्र्यंशकोरगाः ८ । २०
पञ्चात्यरौ ५ तदैक्यं यत् क्षेत्रोत्थगुणयुक् पुनः ।
स्वर्क्षे वर्गोत्तमे स्वांशे स्वत्र्यं शे स्यादयं गुणः ॥
अधीष्टर्क्षे युगांशोनस्त्र्यंशोनो मित्रवेश्मनि ।
समे द्व्याप्तो रिपौ त्र्याप्तो
युगांशस्त्वतिशत्रुभे ॥
एवं स्यादाश्रयगुणो विशेषो यः स उच्यते ।
स्वत्र्यंशकः स्वांशको वा वर्गोत्तमगतोऽपि वा ॥
यदि स्यादधिमित्रर्क्षे तदा तत्राश्रये गुणे ।

अस्मदादिशरीरकर्म्मवत् इति कुसुमाञ्जलिः ॥
प्रलयेऽतिस्थूलस्थूलनाशानन्तरंपरमाणुक्रिया-
विभागपूर्ब्बसंयोगनाशादिक्रमेण द्व्यणुकनाशा-
त्तिष्ठन्ति परमाणव एवेति । यथा, --
"दोधूयमानास्तिष्ठन्ति प्रलये परमाणवः ।"
इति प्राचीनकारिका ॥
तस्य महत्त्वाभावादतीन्द्रियत्वम् । यथा । महत्त्वं
षड्विधे हेतुरिति भाषापरिच्छेदः ॥ * ॥
कालविशेषः । यथा, श्रीभागवते ३ । ११ । ४-५
॥
"स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम् ।
सतो विशेषभुग् यस्तु कालः स परमो महान् ॥
अणुर्द्वौ परमाणू स्यात्त्रसरेणुस्त्रयः स्मृतः ।
जालार्करश्म्यवगतः खमेवानुपतन्नगात् ॥"
अस्यार्थः । एतदेव प्रपञ्चयति स इत्यादिना ।
सतः प्रपञ्चस्य परमाणुतां परमाण्ववस्थां यो
भुङ्क्ते स कालः परमाणुः तस्यैवाविशेषं
साकल्यं यो भुङ्क्ते स परममहान् । अयमर्थः

"पूतात्मा परमात्मा च मुक्तानां परमा
गतिः ॥"
महादेवः । यथा, तत्रैव । १३ । १७ ।
१३७ ।
"प्रीतात्मा परमात्मा च प्रयतात्मा
प्रधानधृक् ॥")

**परमाद्वैतः**, पुं, (परमः अद्वैतः द्वैतवर्ज्जितः ।)
विष्णुः । यथा, --
"नमस्ते ज्ञानसद्भाव नमस्ते ज्ञानदायक
।
नमस्ते परमाद्वैत नमस्ते पुरुषोत्तम ! ॥"
इति गरुडपुराणम् ॥

**परमान्नं**, क्ली, देवपित्रन्नत्वात् परममुत्कृष्टमन्नम् ।
परमाणामुत्कृष्टानां देवादीनामन्नमिति वा
।
इति भरतः ॥ तत्पर्य्यायः । पायसः २ ।
इत्य-
मरः । २ । ७ । २४ ॥ क्षीरिका ३ ।
तस्य
पाकप्रकारो यथा, --
"शुद्धेऽर्द्धपक्वे दुग्धे तु
घृताक्तांस्तण्डुलान् क्षिपेत् ।
ते सिद्धाः क्षीरिका ख्याता सा
सिताज्ययुतो-
त्तमा ॥"
अस्य गुणाः ।
"क्षीरिका दुर्ज्जरा बल्या धातुपुष्टिप्रदा
गुरुः ।
विष्टम्भिनी हरेत्
पित्तरक्तपित्ताग्निमारुतान् ॥"
इति भावप्रकाशः ॥

**परमायुः**, [स्] क्ली, (परमं आयुः ।) जीवित-
कालः । यथा, --
"शतं वर्षाणि विंशत्या निशाभिः पञ्चभिः
सह ।
परमायुरिदं प्रोक्तं नराणां करिणामिह ॥
अब्दा द्वात्रिंशदश्वानां शुनां
द्वादशवत्सराः ।
पञ्चविंशतिवर्षाणि खरस्य करभस्य च ॥
चतुर्व्विंशतिरब्दानां वृषस्य महिषस्य च ।

गजनेत्रे समुद्राक्षी २८ । ३४ कलाद्यं
मिश्रयेद्बुधः ।
एवं मित्रगृहे तद्वद्रूपस्त्रिंशद्विमिश्रयेत् १६
। ३० ।
शत्रुक्षेत्रे तु षड्लिप्तां कुनेत्रविकलां त्यजेत्
॥ ६ ॥ २१
अधिशत्रुगृहे वाणस्त्र्यब्धी ५ । ४३
लिप्तादिकं
त्यजेत् ।
आश्रयस्य गुणस्यास्य बधः स्फुटगुणस्य
यः ॥
तन्मूलं कर्म्मयोग्यः स्याद्गुण आयुर्व्विधौ
स्मृतः ।
खेटानाञ्च तनोर्भागाः खाब्धि ४० शिष्टाः
कली-
कृताः ॥
पुनः शून्यरसा ६० भ्यस्ताः क्रमात्
स्यादायुषः
पलम् ।
जन्मलग्नं ग्रहेणोनं न्यूनं चक्रार्द्धतो यदि ॥
तत्कला स्यात्तदाहारो नायं षड्भाधिके
विधिः ।
खखधृत्या १८०० खखाङ्केन ९००
गुणितं पल-
मायुषः ॥
क्रमतः पापसौम्यानां हाराप्तं शोधनं
भवेत् ।
खखधृत्यूनहारश्चेद्धारो हारदलं क्रमात्
॥
आयुः पलघ्नं शून्याभ्रं धृत्याप्ता शोधनं
तथा ।
आयुःपलं शोधनोनमेवं चक्रार्द्धशोधनम्
॥
चक्रार्द्धशोधने त्वेकराशौ द्व्यादिग्रहे
सति ।
एकस्याधिकवीर्य्यस्य हानिं सत्यः
प्रभासते ॥
आयुःपलं हतं स्वीयैर्गुणैर्योग्यैः
कलादिभिः ।
षष्ट्याप्तम् ६० तत् पुनः सूर्य्यसहस्राप्ताः
१२००
समादयः ।

|  |  |  |
|---|---|---|
|  | मृगशूकरवस्तादिपशूनांषड्दशान्विताः ॥”<br>इति शब्दमाला ॥ * ॥ | तनोरायुः पलं सूर्य्यः सहस्राप्ताः समादयः ।<br>चेल्लग्नं बलवद्योज्या राशितुल्याः समास्तथा ॥<br>द्वादशाहतभागाद्यैर्न्निाद्यैश्चापि संयुताः ।<br>एवं सूर्य्यादिलग्नानामंशायुः प्रस्फुटं भवेत् ॥<br>सूच्चान्तरितखेटस्य कला आयुःपलं भवेत् ।<br>तच्चेत् षड्भः कलान्यूनं तदा तांद्विगुणाच्च्युतम् ॥ |

अथवा ।
"सुनीचान्तरितः खेटः सवङ्भः
सकलीकृतः ।
आयुःपलमिदं प्राज्ञैर्ज्ञेयं पैण्डादिकत्रये ॥
त्र्यंशोनं शत्रुभस्थस्य विनारमायुषः पलम् ।
अस्तगस्य द्विभागोनं हित्वा शुक्रशनैश्चरौ ॥
एकस्य यदि खेटस्य त्र्यंशार्द्धहानिसम्भवः ।
अधिकैका तदा हानिः कर्त्तव्यात्र विपश्चिता
॥
चक्रार्द्धशोधनं कार्य्यं पूर्ब्बवत् सति सम्भवे ।
एवमायुःपलं पैण्डे जीवः प्रोक्ते निसर्गजे ॥
पैण्डं यथागतं सौरेर्भानोर्व्विंशांशवर्ज्जितम् ।
चन्द्रस्य वेदभागाढ्यं भृगो २०
व्विंशांशसंयुतम् ॥
कुजगुर्व्वो ४ र्युगांशोनं ज्ञस्यार्द्धं तत्
शरांशयुक् ।
आयुःपलं निसर्गाख्ये रविकव्योर्य्यथागतम् ॥
दशांशोनदलं ज्ञस्य जीवस्य विद्वशांशकम् ।
दशांशं भूमिपुत्रस्य विंशत्यंशं निशापतेः ॥
दशघ्नं श्रुतिभिर्भक्तं शनेरायुःपलं भवेत् ।
जीवोक्तं सप्तभागोनं सर्व्वेषामायुषः पलम् ॥
आयुः पलस्य खाभ्राष्टदिग्भागेन १०८००
समा-
युतम् ।
इत्थमायुःपलं खाष्टदशाप्तम् १०८० स्यात्
समा-
दिकम् ॥
पैण्डनैसर्ग्यजीवोक्ते भवेदायुः खगामिनाम् ।"
अथवा ।
"रवेरायुःपलं त्र्याप्तं विनखांशं दिनादिकम् ।
पैण्डमायुर्भवेदिन्दोर्व्वाणघ्नम् ५ द्वादशो १२
द्धृतम् ।
कुजगुर्व्वो ४ र्युगे नाप्तं बुधस्य पञ्चभिर्हृतम् ।
कवेः शैल ७ हतं विंशत्याप्तं २०
सौरेर्गुणोद्धृतम् ।
विधोरायुःपलं लब्धं खरसैः स्याद्दिनादिकम्
॥
निसर्गे शशिपुत्रस्य ३ रामघ्नं खयमोद्धृतम्
।
रविकव्योर्गुणेनाप्तं कुजस्य खगुणोद्धृतम् ॥
अंशायुषि न कार्य्यैवं हानिः प्राज्ञैः
कथञ्चन ॥
लग्नस्य वीर्य्यादंशोत्थं पैण्डं
भानोर्व्वलाधिकात् ।
निसर्गोऽयं विधोर्ब्बीर्य्यादायुः साध्यं
विचक्षणैः ॥
त्रयश्चेद्बलहीनाः स्युर्जीवोक्तं साधयेत्तदा
।
लग्नेन्दोर्लग्नभान्वोश्च सूर्य्येन्दोः
समवीर्य्ययोः ॥
तदायुषो यदैक्यार्द्धं तदुक्तं श्रीधरादिभिः ।
नाक्षत्रसावनादायुः पृथक्शून्यनगांशकैः ॥
साष्टसूर्य्यांशकै १२८ र्हीनं सौरं वर्षादिकं
भवेत् ॥
पथ्याशिनः सधर्म्मा येसच्छीलाढ्या
जितेन्द्रियाः ।
गुरुदेवद्विजे भक्तास्तेषामेवायुरीरितम् ॥
ये पापा लुब्धकृपणा देवब्राह्मणनिन्दकाः ।
बन्धुगुर्व्वङ्गनासक्तास्तेषां मृत्युरकालजः
॥"
इति तोषण्यामायुर्दायाध्यायः ॥

**परमायुषः**, पुं, (परमं आयुर्य्यस्य । पृषोदरादि-
त्वादच् । दीर्घकालजीवित्वादस्य
तथात्वम् ।)
असनवृक्षः । इति शब्दचन्द्रिका ॥

**परमार्थः**, पुं, (परमः श्रेष्ठः अर्थः ।) उत्कृष्ट-
वस्तु । यथार्थः । यथा, --
"प्रपञ्चो यदि वर्त्तेत निवर्त्तेत न संशयः ।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥"
इति माण्डूक्यवार्त्तिकम् ॥
(तथा च कुमारे । ५ । ७५ ।
"उवाच चैनं परमार्थतो हरं
न वेत्सि नूनं यत एवमात्थ माम् ॥"
परमः मुख्यः अर्थः प्रयोजनमिति विग्रहे ।
मोक्षः । सुखम् । सुखभोगः दुःखाभावः ॥
इति
न्यायदर्शनम् ॥)

**परमार्हतः**, पुं, (परमः अर्हन् देवता उपास्यतया
कित् । "हलदन्तात् सप्तम्याः संज्ञा-
याम् ।" ६ । ३ । ९ । इत्यलुक् "स्थास्थिन्
स्थणाम् । इति षत्वम् । परमे
स्थानेऽनावृत्त-
लक्षणे तिष्ठतीति कुल्लूकभट्टः ॥) ब्रह्मा ।
इत्यमरः । १ । १ । १६ । (यथा, मनुः । १
। ८० ।
"मन्वन्तराण्यसंख्यानि सर्गः संहार एव च ।
क्रीडन्निवैतत् कुरुते परमेष्ठी पुनः पुनः ॥"
विष्णुः । यथा, महाभारते । १३ । १४९ ।
५८ ।
"ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः ॥"
महादेवः । यथा, महाभारते । ३ । ३७ ।
५८ ।
"क्रियतां दर्शने यत्नो देवस्य परमेष्ठिनः ॥")
दर्शनात्तस्य कौन्तेय ! संसिद्धः सर्व्वमेष्यसि
॥")
जिनः । इति हेमचन्द्रः ॥ शालग्रामविशेषः ।
यथा, --
"परमेष्ठी च शुक्लाभः पद्मचक्रसमन्वितः ।
चित्राकृतिस्तथा पृष्ठे शुषिरञ्चातिपुष्कलम् ॥
परमेष्ठी लोहिताभश्चक्रमेकं तथा युतम् ।
विम्बाकृतिस्तथा रेखा शुषिरञ्चातिपुष्कलम्
॥"
इति ब्रह्मपुराणम् ॥
"परमेष्ठी च शुक्लाभश्चक्रपद्मसमन्वितः ।
स वर्त्तुलस्तथा पीतः पृष्ठे च शुषिरं ध्रुवम्
॥"
इति पुराणसंग्रहः ॥
"परमेष्ठी तु रक्ताभश्चक्रपद्मसमन्वितः ।
द्विधाकृतस्तथा पृष्ठे शुषिरञ्चापि वर्त्तुलम् ॥
पीतवर्णयुतो वापि भुक्तिमुक्तिवरप्रदः ॥"
इति वैश्वानरसंहिता ॥ * ॥
गुरुविशेषः । यथा, --
"आदौ सर्व्वत्र देवेशि ! मन्त्रदः परमो गुरुः ।
परापरगुरुस्त्वं हि परमेष्ठी त्वहं गुरुः ॥"
इति बृहन्नीलतन्त्रे २ पटलः ॥
मन्त्रदाता गुरुः प्रोक्तो मन्त्रस्तु परमो गुरुः ।
परापरगुरुस्त्वं हि परमेष्ठिगुरुस्त्वहम् ॥"
इति तन्त्रान्तरम् ॥

गुरोस्त्रिघ्नं खचन्द्राप्तं १० शनेस्तर्क्षां ६ शतो-
लितम् ॥”
अथवा ।
“आयुःपलमिनादीनां खाब्धिषण्णाग ८६४०
भागयुक् ।
द्विघ्नं सप्ताप्तमायुः स्याद्दिनाद्यं जीवभाषितम् ॥
विराशिलग्नविकला खखखार्क १२००० हृतातनोः ।
तदंशकसमं ज्ञेयमायुः पैण्डादिकत्रये ॥
अंशतुल्यं तनोरायुर्व्वदन्ति बहवो बुधाः ।
केचिद्राशिसमं केचित्तस्य यस्याधिपो बली ॥
लग्नस्फुटस्य लिप्ताभिर्हन्यादायुर्द्युचारिणाम् ।
प्रत्येकं चन्द्रलिप्ताभि २१६००० र्भजेद्वर्षाधिकं
भवेत् ॥
अनेन हीनस्वस्वायुर्लग्ने पापग्रहे सति ।
दृष्टे तु सौम्यखेटेन तस्यार्द्धेन तदा वियुक् ॥
व्याखानमुत्पलस्यैव बृहज्जातकभाषितम् ।
केचित् प्राहुर्लग्नराशिं त्यक्त्वा लिप्तादिका क्रिया ॥
अन्ये लग्नस्थपापस्य भावोत्थफलताडितम् ।
पुराप्तं शोध्यमायुर्यत् तत्षष्ट्याप्तं विशोधयेत् ॥
तत्रापि लग्ने पापौ चेत् बलिष्ठस्य फलेन तत् ।
साम्ये पुष्टफलेनैव क्रिया कार्य्या विचक्षणैः ॥
पापेऽपि लग्ने लग्नेशे न कर्त्तव्या त्वियं क्रिया ।
अस्त्यस्य । परमार्हत् + अच् ।) जैनराजर्षि-
विशेषः । इति हेसचन्द्रः ॥

**परमृत्युः**, पुं, परेभ्यो मृत्युरस्य । (रोगादिना
मृत्योरभावात् अस्य तथात्वम् ।) काकः । इति
त्रिकाण्डशेषः ॥

**परमेश्वरः**, पुं, (परमश्चासौ ईश्वरश्चेति ।) शिवः ।
इति हलायुधः ॥ (यथा, महालिङ्गार्च्चनतन्त्रे
शिवशतनाम प्रकरणे, --
“सहस्रारे महापद्मे त्रिकोणनिलयान्तरे ।
विन्दुरूपे महेशानि ! परमेश्वर ईरितः ॥”)
विष्णुः । यथा, --
“इदन्तु द्वादशं प्रोक्तं पत्रं वै केशवस्य हि ।
द्वादशारं तथा चक्रं यन्नाभिद्विभुजं तथा ॥
त्रिव्यूहन्त्वेकमूर्त्तिश्च तथोक्तः परमेश्वरः ।”
इति वामने ५८ अध्यायः ॥
(स्त्रियां ङीप् । दुर्गा । यथा, --
देवीभागवते । ७ । ३० । ७० ।
“देवकी मथुरायान्तु पाताले परमेश्वरी ॥”)

**परमेष्ठिनी**, स्त्री (परमेष्ठिन् + ङीप् ।) ब्राह्मी ।
इति राजनिर्घण्टः ॥ वामनहाटी इति भाषा ॥
परमेष्ठिनः शक्तिश्च ॥

**परमेष्ठी**, [न्] पुं, (परमे व्योम्नि चिदाकाशे ब्रह्म-
पदे वा तिष्ठतीति । स्थागति निवृत्तौ “परमे
कित् ।” उणां । ४ । १० । इति इनिः स च
(अजमीडपुत्त्रः । यथा, महाभारते । १ ।
९४ । ३१ ।
“अजमीडो वरस्तेषां तत्मिन् वंशः प्रतिष्ठितः ।
षट् पुत्रान् सोऽप्यजनयत् तिसृषु स्त्रीषु भारत ! ।
ऋक्षं धूमिन्यथोनिली दुष्मन्तपरमेष्ठिनौ ॥”
परमस्थानस्थिते वाच्यलिङ्गः । यथा, मार्क-
ण्डेये । ७६ । २ ।
“अन्यजन्मनि जातोऽसौ चक्षुषः परमेष्ठिनः ।
चाक्षुषत्वमतस्तस्य जन्मन्यस्मिन्नपि द्विज ! ॥”)

**परम्परः**, पुं, (परं पिपर्त्तीति । पृलि पूर्त्तौ + अच् ।
“तत्पुरुषे कृतीति” अलुक् ।) प्रपौत्रादिः ।
मृगभेदः । इति हेमचन्द्रः ॥ प्रपौत्रतनयः ।
इति मेदिनी ॥

**परम्परा**, स्त्री, अन्वयः । (यथा, कुमारे । ६ । ४९ ।
“गगनादवतीर्णा सा यथां वृद्धपुरःसरा ।
तोयान्तर्भास्करालीच रेजे मुनिपरम्परा ॥”)
सन्तानः । बधः । हिंसा । इति हेमचन्द्रः ॥ परी-
पाटी । अनुक्रमः । इति शब्दरत्नावली ॥ यथा,
“इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥

एवं परम्पराप्राप्तं तथा राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परन्तप ! ॥”
इति श्रीभगवद्गीतायां ४ अध्यायः ॥

**परम्पराकं**, क्ली, (परम्परया कायते प्रकाशते

इति । कै + कः । परम्परास्थापितपशुहननात्
तथात्वम् ।) यज्ञार्थपशुहननम् । तत्पर्य्यायः ।
शमनम् २ प्रोक्षणम् ३ । इत्यमरः । २ । ७ ।
२६ ॥
घातनम् ४ वधः ५ । इति शब्दरत्नावली ॥

**परम्परीणं**, त्रि, (परांश्च परतरांश्च अनुभवति ।

“परोवरपरम्परेति ।” ५ । २ । १० । इति स्वः
।
प्रकृतेः परम्परभावो निपात्यते ।) परम्परा-
प्राप्तम् । यथा, भट्टिः । ५ । १५ ।
“लक्ष्मीं परम्परीणां त्वं पुत्त्रपौत्त्रीणतां नय ॥”

**परुरुः**, पुं, (पिपर्त्ति देहादिकं पूरयतीति । पॄ +

बाहुलकात् अरुः ।) केशराजः । इति त्रिकाण्ड-
शेषः ॥

**परलोकः**, पुं, (परो लोकः ।) लोकान्तरम् । तच्च

स्वर्गादि । यथा, --
“समज्ञानाल्पभूयिष्ठपान्थैकमत्यमेत्य यम् ।
लोके प्रयाति पन्थानं परलोकेन तं कुतः ॥”
इति नैषधम् ॥

**परलोकगमः**, पुं, (परलोके लोकान्तरे गमो गमनं

यस्मात् ।) मृत्युः । इति हेमचन्द्रः ॥

**परवशः**, त्रि, (परस्य परेषां वा वशः वशीभूतः ।)

अन्यवशीभूतः । तत्पर्य्यायः । परायत्तः २ परा-
घीनः ३ परच्छन्दः ४ परवान् ५ । इति हेम-
चन्द्रः ॥ (यथा, मनुः । ४ । १५९ ।
“यद्यत् परवशं कर्म्म तत्तद् यत्नेन वर्ज्जयेत् ।
यद्यदात्मवशन्तु स्यात्तत्तत् सेवेत यत्नतः ॥”)

**परवाणिः**, पुं, (परं धर्म्मं वाणयति प्रकाशयति ।

वण शब्दे + णिच् + इन् ।
धातूनामनेकार्थत्वादत्र
प्रकाशार्थः ।) धर्म्माध्यक्षः । वत्सरः । इति

**परशुः**, पुं, (परान् शत्रून् शृणाति हिनस्त्यनेनेति । शॄ

हिंसायाम् + “आङ्परयोः खनिशॄभ्यां डिच्च
।”
उणां । १ । ३४ । इति कुः स च डित् ।)
अस्त्र-
विशेषः । टाङ्गी इति भाषा ॥ तत्पर्य्यायः ।
पर्शुः २ परश्वधः ३ पर्श्वधः ४ स्वधितिः ५
कुठारः ६ ।
इति हेमचन्द्रः ॥ (यथा, मार्कण्डेये । ८९ ।
१४ ।
“ततः परशुहस्तं तमायान्तं दैत्यपुङ्गवम् ।
आहत्य देवीबाणौघैरपातयत भूतले ॥”)

**परशुधरः**, पुं, (धरतीति धरः । धृ + अच् । ततः

परशोर्धरः ।) गणेशः । इति हलायुधः ॥
(परशुरामः । परशुशस्त्रप्रधानत्वादस्यतथा-
त्वम् ॥)

**परशुरामः**, पुं, (परशुना कुठाराख्यशस्त्रेण

रामः रमणं यस्य । परशुशस्त्रबलेनैव दुष्ट-
क्षत्त्रियवंश्यान् निहत्यात्मानं रमयति इति
तात्
पर्य्यार्थः ।) भगवतः षोडशावतारः । यथा, -
-
“अवतारे षोडशमे पश्यन् ब्रह्मद्रुहो नृपान् ।
त्रिःसप्तकृत्वः कुपितो निःक्षत्त्रामकरोन्महीम्
॥”
इति श्रीभागवते १ स्कन्धे २ अध्यायः ॥
तत्पर्य्यायः । जामदग्न्यः २ पर्शुरामः ३
परशु-
रामकः ४ भार्गवः ५ भृगुपतिः ६ भृगूला-
पतिः ७ । इति शब्दरत्नावली ॥ अस्योत्-
पत्त्यादिकं यथा, --
मार्कण्डेय उवाच ।
“अथ काले व्यतीते तु जमदग्निर्म्महातपाः ।
विदर्भराजस्य सुतां प्रयत्नेन जितां स्वयम् ॥
भार्य्यार्थे प्रतिजग्राह रेणुकां लक्षणान्विताम् ।
सा तस्मात् सुषुवे पुत्त्रान् चतुरो
वेदसम्मतान् ॥
रुमण्वन्तं सुषेणञ्च विश्वं विश्वावसुन्तथा ।
पश्चात्तस्यां स्वयं जज्ञे भगवान् मधुसूदनः ॥

स (जमदग्निः) तां दृष्ट्वा च्युतां धैर्य्यात्
ब्राह्म्या
लक्ष्म्या विवर्ज्जिताम् ।
धिक्शब्देन महातेजा गर्हयामास
वीर्य्यवान् ॥
ततो ज्येष्ठो जामदग्न्यो रुमण्वान्नाम
नामतः ।
आजगाम सुषेणश्च
वसुर्व्विश्वावसुस्तथा ॥
तानानुपूर्ब्ब्या भगवान् वधे
मातुरचोदयत् ।
न च ते जातसम्मोहाः
किञ्चिदूचुर्व्विचेतसः ॥
ततः शशाप तान् क्रोधात्ते
शप्ताश्चेतनां जहुः ।
मृगपक्षिसधर्म्माणः क्षिप्रमासन्
जडोपमाः ॥
ततो रामोऽभ्यात् पश्चादाश्रमं
परवीरहा ।
तमुवाच महाबाहुं जमदग्निर्म्महातपाः
॥
जहीमां मातरं पापां मा च पुत्त्र !
व्यथां कृथाः ।
तत आदाय परशुं रामो मातुः
शिरोऽहरत् ॥
ततस्तस्य महाराज !
जमदग्नेर्महात्मनः ।
कोपोऽभ्यगच्छत् सहसा
प्रसन्नश्चाब्रवीदिदम् ॥
ममेदं वचनात्तात ! कृतं ते कर्म्म
दुष्करम् ।
वृणीष्व कामान् धर्म्मज्ञ ! यावतो
वाञ्छसे हृदा ॥
स वव्रे मातुरुत्थानमस्मृतिञ्च वधस्य
वै ।
पापेन तेन चास्पर्शं भ्रातॄणां
प्रकृतिन्तथा ॥
अप्रतिद्वन्दतां युद्धे दीर्घमायुश्च
भारत ! ।

मेदिनी ॥ (परं शत्रुं सर्पमित्यर्थः बाणयतीति ।) कार्त्तिकेयवाहनो मयूरः । इति शब्दमाला ॥

**परवान्,** [त्] त्रि, (परः स्वामी अस्त्यस्य ।

"तदस्यास्त्यस्मिन्निति ।" ५ । २ । ९४ । इति मतुप् मस्य वः ।) पराधीनः । इत्यमरः । ३ । १ । १६
(यथा, रघौ । २ । ५६ ।
"भवानपीदं परवानवैति
महान् हि यत्नस्तव देवदारौ ॥")

**परव्रतः**, पुं, (परं व्रतमस्य ।) धृतराष्ट्रः । इति

शब्दरत्नावली ॥

**परशं**, क्ली, (स्पृशतीति । पृषोदरादित्वात् साधुः ।

अस्य स्पर्शनात् अपरस्य धातोः स्वर्णत्वं जायते
अतोऽस्य तथात्वम् ।) रत्नविशेषः । यथा, --
"मुक्तामाणिक्यपरशमणिरत्नाकरान्वितम्।
कृष्णशुभ्रहरिद्रक्तमणिराजिविराजितम्॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ४ अध्यायः ॥

**परशव्यं**, त्रि, परशवे हितम् । तस्मै हितादा-

वुदन्तगवार्द्यत् । इति संक्षिप्तसारसूत्रम् ॥
(पां उपगवादिभ्यो यत् । परशुहितम् । इति व्याकरणम् ॥)

कार्त्तवीर्य्यवधायाशु शक्राद्यैः सकलैः सुरैः ।
याचितः पञ्चमः सोऽभूत्तेषां रामाह्वयस्तु यः ॥
भारावतारणार्थाय जातः परशुना सह ।
सहजः परशुस्तस्य तं जहाति कदाच न ॥
अयं निजपितामह्याश्चरुभुक्तिविपर्य्ययात् ।
ब्राह्मणः क्षत्त्रियाचारो रामोऽभूत् क्रूरकर्म्मकृत् ।
स वेदानखिलान् ज्ञात्वा धनुर्व्वेदांश्च सर्व्वशः ।
स्वतातात् कृतकृत्योऽभूद्वेदविद्याविशारदः ॥"
इति कालिकापुराणे ८५ अध्यायः ॥
अवशिष्टं पाद्मोत्तरखण्डे ५० अध्याये द्रष्टव्यम् ॥
(अयमेव पितुरादेशात् परशुना स्वमातुः शिर-
श्चिच्छेद ततः प्रसन्नात् पितुर्व्वरं लब्ध्वा मातरं
पुनर्जीवयामास । यदुक्तं महाभारते । ३ । ११६ । ५ -- १८ ।
"फलाहारेषु सर्व्वेषु गतेष्वथ सुतेषु वै ।
रेणुका स्नातुमगमत् कदाचिन्नियतव्रता ॥
सा तु चित्ररथं नाम मार्त्तिकावतकं नृपम् ।
ददर्श रेणुका राजन्नागच्छन्ती यदृच्छया ॥
क्रीडन्तं सलिले दृष्ट्वा सभार्य्यं पद्ममालिनम् ।
ऋद्धिमन्तं ततस्तस्य स्पृहयामास रेणुका ॥
व्यभिचाराच्च सा तस्मात् क्लिन्नाम्भसि विचेतना ।
प्रविवेशाश्रमं त्रस्ता तां वै भर्त्ता त्वबुध्यत ॥

ददौ च सर्व्वान् कामांस्तान् जमदग्निर्महा-
तपाः ॥"
अयं पुनर्बलदर्पितं आश्रमात् वत्स्यहारिणं
कार्त्तवीर्य्यार्ज्जुनं हतवान् । अनेन जातामर्षा-
स्तस्यार्ज्जुनस्य सुतास्ततःप्रभृति कालं प्रतीक्ष-
माणाः कदाचित् रामविरहितमाश्रममागत्य
तस्य पितरं जमदग्निं निजघ्नुः ।
रामस्तु अस्मात् पितृवधामर्षात् त्रिःसप्तकृत्वः पृथिवीं निःक्षत्रिया-
मकरोत् । ततो गच्छति काले दाशरथिना
रामेण हतगर्व्वो दक्षिनाशां गत्वा महेन्द्रे गिरौ
उग्रेण तपसा कालं यापयति ॥)

**परश्वः**, [स्] व्य, श्वः परदिनम् । आगामि-

दिनात् परदिनम् । इत्यमरः । ३ । ४ । २२ ॥
अस्य टीका परश्वःशब्दे द्रष्टव्या ।
गतदिनात् पूर्ब्बदिनम् । पर्शु इति भाषा ॥ यथा, --
"परश्वश्च महाभाग ! स्नातुं गङ्गाह्रदं गता ।
अवतीर्णा विकृष्टास्मि वृद्धनागेन केनचित् ॥"
इति मार्कण्डेयपुराणे अबीक्षिच्चरितम् ॥

**परश्वधः**, पुं, (पर + श्वि + अन्येभ्योऽपीति डः । ततः

परश्वं दधातीति । "आतोनुपेति" ३ । २ । ३,
इति कः । कुठारः । इत्यमरः । २ । ८ । ९२ ॥
(यथा, रघौ । ६ । ४२ ।
धारां शितां रामपरश्वधस्य

| | | सम्भावयत्युत्पलपत्रसाराम् ॥”)<br>**परसंज्ञकः**, पुं, (परा श्रेष्ठा संज्ञा अस्य । ततः<br>कप् ।) आत्मा । इति शब्दरत्नाबली<br>॥<br>**परस्परं**, त्रि, (“सर्व्वनाम्ने द्बे वाच्ये समासवच्च<br>बहुलम् ।” वार्त्तिं असमासवद्भावे<br>पूर्ब्बपदस्य<br>सुपः सुर्व्वक्तव्यः । कस्कादित्वात्<br>विसर्जनीयस्य<br>सः ।) अन्योन्यम् । इतरेतरम् । यथा,<br>--<br>“वनानि तोयानि च नेत्रकल्पैः<br>पुष्पैः सरोजैश्च निलीनभृङ्गैः । |
|---|---|---|

परस्परां विस्मयवन्ति लक्ष्मी-
मालोकयाञ्चक्रुरिवादरेण ॥”
इति भट्टिः । २ । ५ ॥

**परस्मैपदं**, क्ली, (परस्मै परार्थं परबोधकं पदम् ।
दशलकाराणां प्रत्येकं पूर्ब्बनवविभक्तयः ।
यथा,
“लडादिषु पूर्ब्बे नव परस्मैपदं परे नव
आत्मने-
पदं परिभाष्यन्ते । इति संक्षिप्तसारव्याकरणम्
॥
(ताश्च पाणिनिमते । तिप् तस् झि । सिप्
थस् थ । मिप् वस् मस् ॥) वोपदेवेनास्य
पसंज्ञा कृता । यथा । “नवशः पमे ञितोऽन्य-
ङिद्भ्यां घे ।” इति मुग्धबोधव्याकरणम् ॥

**परस्वधः**, पुं, (परश्वध + निपातनात् सत्वम् ।)
परश्वधः । कुठारः । इत्यमरटीकायां राय-
मुकुटः ॥

**परा**, व्य, विमोक्षः । प्राधान्यम् । प्रातिलोम्यम् ।
धर्षणम् । आभिमुख्यम् । भृशार्थम् । विक्रमः
।
गतिः । वधः । इति मेदिनी ॥ * ॥ उपसर्ग-
विशेषः । अस्यार्थः । भङ्गः । अनादरः ।
प्रत्या-
वृत्तिः । न्यग्भावः । इति मुग्धबोधटीकायां
दुर्गादासः ॥

**परा**, स्त्री, (पॄ + अच् + ततः टाप् ।) बन्ध्या-
कर्कोटकी । इति राजनिर्घण्टः ॥ (अस्याः
गुणा
यथा, --
“बन्ध्याकर्कोटकी लघ्वी कफणुद्व्रणशोधिनी
।
सर्पदर्पहरी तीक्ष्णा विसर्पविषहारिणी ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
नाभिरूपमूलाधारात्प्रथमोदितनादस्वरूप-
वर्णः । यथा, --
“मूलाधारात् प्रथममुदितो यस्तु भावः
पराख्यः ॥”

भवतीति । अतः प्राजापत्यपञ्चकतुल्यः
पराकः ।
इति प्रायश्चित्ततत्त्वम् ॥ * ॥
“द्वादशाहोपवासेन पराकः सर्व्वपापहा
॥”
इति गरुडपुराणे प्रायश्चित्तप्रकरणम् ॥

**पराक्**, [च] त्रि, परा अञ्चतीति । (परा + अञ्च +
क्विप् ।) प्रतिलोमगमनाश्रयः ॥

**पराक्पुष्पी**, स्त्री, (पराक् पुष्पं यस्याः ।) अपा-
मार्गः । इति राजनिर्घण्टः ॥
(अपामार्गशब्दे-
ऽस्या विवृतिरुक्ता ॥)

**पराक्रमः**, पुं, (पराक्रम्यतेऽनेन । (क्रम +
“हलश्च ।”
३ । ३ । १२१ । इति घञ् ।
“नोदात्तोप-
देशस्य ।” ७ । ३ । ३४ । इति न
वृद्धिः ।)
तत्पर्य्यायः । द्रविणम् २ तरः ३ सहः ४
बलम् ५
शौर्य्यम् ६ स्थाम ७ शुष्मम् ८ शक्तिः
९ प्राणः १० ।
इत्यमरः । २ । ८ । १०२ ॥ महः ११
शूष्म १२
सामर्थ्यम् १३ । इति शब्दरत्नावली ॥
(यथा,
मार्कण्डेये देवीमाहात्म्ये । ९२ । १३ ।
“पराक्रमञ्च युद्धेषु जायते निर्भयः
पुमान् ॥”)
विक्रमः ॥ (यथा, मार्कण्डेये । २० ।
२५ ।
“यस्य मित्रगुणान् मित्राण्यमित्राश्च
पराक्रमम् ।
कथयन्ति सदा सत्सु पुत्त्रवांस्तेन वै
पिता ॥”)
उद्योगः । इति मेदिनी ॥ निष्क्रान्तिः ।
इति
शब्दरत्नावली ॥ (विष्णुः । यथा, महा-

**पराचितः**, त्रि, (परेण आचितः पालितः ।)
परपुष्टः । परद्वारा प्रतिपालितः । तत्पर्य्यायः
।
परिस्कन्दः २ परजातः ३ परैधितः ४ ।
इत्य-
मरः । २ । १० । १८ ॥ परिष्कन्दः ५ । इति
भरतः ॥

**पराचीनः**, त्रि, (पराञ्चति अनभिमुखीभवतीति ।
अञ्चु + “ऋत्विग्दधृक् ।” ३ । २ । ५९ । इति
क्विन् ततः स्वार्थे “विभाषाञ्चेरदिक् स्त्रियाम्
।”
५ । ४ । ८ । इति खः ।) पराङ्मुखः । इत्य-
मरः । ३ । १ । ३३ ॥ (यथा, भागवते । ३ ।
३२ । २८ ।
“ज्ञानमेकं पराचीनैरिन्द्रियैर्ब्रह्म निर्गुणम् ।
अवभात्यर्थरूपेण भ्रान्त्या शब्दादिधर्म्मिणा
॥”)

**पराजयः**, पुं, (परा + जि + अप् ।) रणे भङ्गः ।
इत्यमरः । २ । ८ । १११ ॥ (अत्र रण
इत्युप-
लक्षणं वस्तुतस्तु
विद्यावादादावपीतिबोद्धव्यम् ।)
तत्पर्य्यायः । भङ्गः २ हारी ३ हारिः ४ परा-
भवः ५ । इति शब्दरत्नावली ॥ (यथा, मनुः
।
७ । १९९ ।
“अनित्यो विजयो यस्माद्दृश्यते
युध्यमानयोः ।
पराजयश्च संग्रामे तस्माद्युद्धं विवर्ज्जयेत्
॥”)

**पराजितः**, त्रि, (परा + जि + कर्म्मणि क्तः ।)
कृतपराजयः । हारितः । तत्पर्य्यायः । परा-
भूतः २ विजितः ३ निर्जितः ४ जितः ५ ।
इति
शब्दरत्नावली ॥ “इदं वाच्यमिदमवाच्यमेवं
सति
पराजितो भवतीति इमानि खलु पदानि
भिषग्-

इत्यलङ्कारकौस्तुभे प्रथमकिरणः ॥
(पूरयति सागरं भक्तमनोरथञ्चेति व्युत्पत्या गङ्गा । यथा, काशीखण्डे । २९ । १०६ ।
“परानन्दा प्रकृष्टार्था प्रतिष्ठा पालनी परा ॥”
गायत्री । यथा, देवीभागवते । १२ । ६ । ९० ।
“पार्व्वती परमोदारा परब्रह्मात्मिका परा ॥”)

**पराकः**, पुं, (परं अत्यन्तं अकं दुःखं उपवासादि-जन्यशारीरिकादिक्लेशो यत्र यस्माद्वा ।) व्रत-विशेषः । खड्गः । इति मेदिनी ॥ क्षुद्रः । रोगविशेषः । जन्तुविशेषः । इति विश्वः ॥ * ॥
पराकव्रतमाह मनुः । ११ । २१५ ।
“यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् ।
पराको नाम कृच्छ्रोऽयं सर्व्वपापापनोदनः ॥”
पराके पञ्च धेनवः पराकस्य प्राजापत्यपञ्चक-तुल्यत्वात् । यथा अङ्गिराः ।
“षड्भिर्व्वर्षैः कृच्छ्रचारी ब्रह्महा तु विशुध्यति ।
मासि मासि पराकेण त्रिभिर्व्वर्षैर्व्यपोहति ॥”
अत्र षड्भिर्व्वर्षैः साशीतिशतप्राजापत्यानि पूर्ब्बमुक्तानि तथा प्रतिमास्यैकैकपराकेण वर्षे द्वादश पराकाः वर्षत्रये षट्त्रिंशत् पराकाः । ततश्च षट्त्रिंशत् पराकाशीत्युत्तरप्राजापत्य-शतयोः प्रत्येकं ब्रह्मवधपापक्षयैककार्य्यकरत्वात् तुल्यत्वं षट्त्रिंशतश्च पञ्चगुणमशीत्युत्तरशतं भारते । १३ । १४९ । ४४ ।
“औषधं जगतः सेतुः सत्यधर्म्मः पराक्रमः ॥”)

**परागः**, पुं, (परागच्छतीति । गम + अन्येभ्यो-पीति डः ।) पुष्पधूलिः । तत्पर्य्यायः । सुमनो-रजः २ कौसुमरेणुः ३ । इत्यमरः । २ । ४ । १७ ॥ पुष्परेणुः ४ । इति शब्दरत्नावली ॥ (यथा, आर्य्यासप्तशती । ५०६ ॥
“लिप्तं न मुखं नाङ्गं न पक्षती न चरणाः परागेण ।
अस्पृशतेव नलिन्या विदग्धमधुपेन मधु पीतम् ॥”)
धूलिः ॥ (यथा, रघुः । ४ । ३० ।
“प्रतापोऽग्रे ततः शब्दः परागस्तदनन्तरम् ।
ययौ पश्चाद्रथादीति चतुस्कन्धेव सा चमूः ॥”)
स्नानीयद्रव्यम् ॥ गिरिप्रभेदः ॥ विख्यातिः ॥
उपरागः ॥ चन्दनम् । इति मेदिनी ॥ स्वच्छन्द-गमनम् । इति शब्दरत्नावली ॥

**पराङ्गदः**, पुं, (परं अङ्गं काशीमृत्यौ शिवत्वं ददातीति । दा + कः ।) शिवः । इति शब्द-माला ॥

**पराङ्गवः**, पुं, (पराङ्गं जलवृद्ध्या प्रचुरशरीरं वाति प्राप्नोतीति । वा + कः ।) समुद्रः । इति त्रिकाण्डशेषः ॥

**पराङ्मुखः**, त्रि, (पराक् प्रतिलोमगामि मुखं यस्य ।) विमुखः । तत्पर्य्यायः । पराचीनः २ । इत्यमरः । ३ । १ । ३३ ॥ (यथा, मनुः । १० । ११९ ।
वादमार्गज्ञानार्थमधिगम्यानि भवन्ति ।” इति चरके विमानस्थानेऽष्टमेऽध्याये ॥)

**पराञ्चः**, पुं, (परान् अनक्तीति । अञ्चु व्याप्तौ + अच् ।) तैलयन्त्रः । फेनः । छुरिकादलम् । इति शब्दरत्नावली ॥

**परात्परः**, पुं, परात् श्रेष्ठादपि परः श्रेष्ठः । स च श्रीकृष्णः । यथा, --
“देवाः कालस्य कालोऽहं विधातुर्व्विधिरेव च ।
संहारकर्त्तुः संहर्त्ता पातुः पाता परात्परः ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ६ अध्यायः ॥

**परात्प्रियः** पुं, (परादपि प्रियः ।) तृणविशेषः । इति शब्दचन्द्रिका । उलु इति भाषा ॥

**परादनः**, पुं, (परमुत्कृष्टं अदनं यस्य यद्वा परान् शत्रून् अत्ति भक्षयति नाशयतीत्यर्थः आदयति विजापयति स्वारोहिणं संग्रामे इति वा अद ल्युः णिच् ल्युर्वा ।) पारसीघोटकः । इति त्रिकाण्डशेषः ॥

**पराधीनः**, त्रि, (परस्य परेषां वा अधीनः ।) परवशः । तत्पर्य्यायः । परतन्त्रः २ परवान् ३ नाथवान् । इत्यमरः । ३ । १ । १६ ॥ तस्य जीवन्मृतत्वं यथा, --
“स्वाधीनवृत्तेः साफल्यं न पराधीनवृत्तिता ।
ये पराधीनकर्म्माणो जीवन्तोऽपि च ते मृताः ॥”
इति गरुडपुराणे ११३ अध्यायः ॥

**परानसा**, स्त्री, चिकित्सा । इति शब्दचन्द्रिका ॥

**परान्नं**, क्ली, (परस्य अन्नम् ।) अन्यस्वामिकभक्त-पिष्टकादि ॥ परकर्त्तृकशस्यपाकजद्रव्यमात्रम् । परस्पृष्टान्नम् । तस्य त्याज्यत्वं यथा, --

|  |  |  |
| --- | --- | --- |
|  | “स्वधर्म्मो विजयस्तस्य नाहवे स्यात् पराङ्मुखः ॥<br>तन्त्रोक्तमन्त्रविशेषे, पुं । यथा, तन्त्रसारे ।<br>“कामबीजं मुखे माया शिरस्यङ्कुशमेव च ।<br>असौ पराङ्मुखः प्रोक्तो मध्ये तु बिन्दुलाञ्छितः ॥”) |  |

"परान्नं परवासश्च नित्यं
धर्म्मरतस्त्यजेत् ।"
इति स्मृतिः ॥
संयमदिने तस्य त्याज्यत्वं यथा, --
"कांस्यं मांसं मसूरञ्च चणकं
कोरदूषकम् ।
शाकं मधु परान्नञ्च त्यजेदुपवसन्
स्त्रियम् ॥" * ॥
पारणदिने तस्य त्याज्यत्वं यथा, --
"अभ्यङ्गञ्च परान्नञ्च तैलं
निर्म्माल्यलङ्घनम् ।
तुलसीचयनं द्यूतं पुनर्भोजनमेव वा ॥
वस्त्रपीडां तथा क्षारं द्वादश्यां
वर्ज्जयेद्बुधः ॥" * ॥
तद्भोक्तुर्यागादेर्विफलत्वं यथा, --
"परपाकेन जुष्टस्य द्विजस्य गृहमेधिनः
।
इष्टं दत्तं तपोऽधीतं यस्यान्नं तस्य
तद्भवेत् ॥" * ॥
तद्भुक्त्वा पुत्त्रोत्पादने दोषो यथा, --
"यस्यान्नेन तु भुक्तेन भार्य्यां
समधिगच्छति ।
यस्यान्नं तस्य ते पुत्त्रा अन्नाद्रेतः
प्रवर्त्तते ॥" * ॥
ब्राह्मणादिस्वामिकान्नभोजनेदोषो
यथा, --
"ब्राह्मणान्नेन दारिद्र्यं क्षत्त्रियान्नेन
प्रेष्यताम् ।
वैश्यान्नेन तु शूद्रत्वं शूद्रान्नैर्नरकं व्रजेत्
॥"
इत्येकादशीतत्त्वम् ॥ * ॥
परान्नभोजनेन तीर्थगमने
फलस्याल्पत्वं यथा, --
"षोडशांशं स लभते यः परान्नेन
गच्छति ।
अर्द्धं तीर्थफलं तस्य यः प्रसङ्गेन
गच्छति ॥"
इति प्रायश्चित्ततत्त्वम् ॥ * ॥
महागुरुनिपाते तस्य त्याज्यत्वं यथा, -
-
"आदौ सर्व्वत्र देवेशि ! मन्त्रदः परमो गुरुः
।
परापरगुरुस्त्वं हि परमेष्ठी त्वहं गुरुः ॥"
इति बृहन्नीलतन्त्रे २ पटलः ॥
(तन्त्रान्तरे च यथा, --
"मन्त्रदाता गुरुः प्रोक्तो मन्त्रस्तु परमो गुरुः
।
परापरगुरुस्त्वं हि परमेष्ठिगुरुस्त्वहम् ॥")

**पराभवः**, पुं, (पराभूयते इति पराभवनमित्यर्थः ।
परा + भू + भावे अप् ।) तिरस्कारः ।
(यथा,
मार्कण्डेये । १८ । २८ ।
"मद्यासक्तोऽहमुच्छिष्टो नचैवाहं जितेन्द्रियः
।
कथमिच्छथ मत्तोऽपि देवाः शत्रुपराभवम्
॥")
अस्य पर्य्यायः । न्यक्कारः २ तिरस्क्रिया
३ परि-
भावः ४ विप्रकारः ५ परिभवः ६ अभिभवः
७
अत्याकारः ८ निकारः ९ । इति हेमचन्द्रः
॥
विनाशः । इति मेदिनी ॥

**पराभूतः**, त्रि, (पराभूयते स्म । परा + भू + क्त ।)
पराजितः । इत्यमरः । २ । ८ । ११२ ॥

**परामर्शः**, पुं, (परामृश्यते इति । परामर्शन-
मित्यर्थः । परा + मृश् + भावे घञ् ।)
युक्तिः ।
विवेचनम् । तत्पर्य्यायः । वितर्कः २ उन्नय-
नम् ३ विमर्षणम् ४ अध्याहारः ५ तर्कः ६
ऊहः ७ । इति हेमचन्द्रः ॥ तर्कशास्त्रे तु
व्याप्ति-
विशिष्टपक्षधर्म्मताज्ञानम् । यथा, --
"व्याप्यस्य पक्षधर्म्मत्वधीः परामर्श उच्यते
॥"
इति भाषापरिच्छेदः ॥
अस्यार्थः "व्याप्तिविशिष्टस्य पक्षेणसह
वैशिष्ट्या
माञ्जलिकारिकाव्याख्यानेरामभद्रः ॥ कृतपरा-
मर्शः । विवेचितः ॥

**परायणं**, त्रि, आसङ्गवचनम् । इत्यमरः । ३ । २ । २ ॥
परं केवलमयनमासक्तिस्थानमितिपरायणम् ।
यथा धर्म्मपरायणो धर्म्मासक्तः । इति भरतः ॥
आश्रयः । (यथा, मनुः । ४ । १० ।
"वर्त्तयंश्च शिलोञ्छाभ्यामग्निहोत्रपरायणः ॥"
तत्परम् । अभीष्टम् । इति मेदिनी ॥ (नित्य-
प्रतिष्ठा । यथा, रामायणे । २ । ४८ । १७ ।
"पादच्छायासुखं भर्त्तुस्तादृशस्य महात्मनः ।
स हि नाथोजनस्यास्य स गतिः स परायणम्
॥"
"परायणं शाश्वतप्रतिष्ठा ।" इति रामानुजः ॥)

**परायत्तं**, त्रि, (परस्य परेषां वा आयत्तम् ।)
पराधीनम् । यथा, --
"तत्रायत्तवशाधीनच्छन्दवन्तःपरात्परे ॥"
इति हेमचन्द्रः ॥

**परारि**, व्य (पूर्ब्बतरे वत्सरे इत्यर्थे "सद्यः परुत्-
परारीति ।" ५ । ३ । २२ । इति पूर्ब्बतरस्य
परभावः आरि च संवत्सरे ।) पूर्व्वतरवत्सरे ।
गततृतीयवर्षे । इत्यमरभरतौ ॥ (परस्य अरिः
।)
परशत्रौ त्रि ॥

**परारित्नः**, त्रि, (परारि भवः । "चिरपरुत्परा-
रिभ्यस्त्नो वक्तव्यः ।" ४ । ३ । २३ । इत्यस्य
वार्त्ति
इत्यनेन त्नः ।) पूर्ब्बतरवत्सरसम्बन्धी । इति
व्याकरणम् ॥

**परारुः**, पुं, (पराच्र्छतीति । परा + ऋ + उन् ।)
कारवेल्लः । इति त्रिकाण्डशेषः ॥
(कारवेल्लशब्दे-
ऽस्य गुणादयो ज्ञातव्याः ॥)

**परारुकः**, पुं, (पराच्र्छतीति । परा + ऋ + उकः ।)
प्रस्तरः । इति त्रिकाण्डशेषः ॥

**परार्द्धं** क्ली, (परादर्ध्यति सर्व्वोत्कृष्टतया वदर्ध्यते इति ।

"अन्यश्राद्धं परान्नञ्च गन्धं माल्यञ्च मैथुनम् ।
वर्ज्जयेद्गुरुपाते तु यावत् पूर्णो न वत्सरः ॥"
इति शुद्धितत्त्वम् ॥ * ॥
तद्भोक्तुर्मन्त्रसिद्धिहानिर्यथा, --
"जिह्वा दग्धा परान्नेन करौ दग्धौ प्रतिग्रहात् ।
मनो दग्धं परस्त्रीभिः कथं सिद्धिर्व्वरानने ! ॥"
इति तन्त्रम् ॥ * ॥
तद्भोजने प्रतिप्रसवो यथा, --
"गुर्व्वन्नं मातुलान्नं वा श्वशुरान्नं तथैव च ।
पितुः पुत्त्रस्य चैवान्नं न परान्नमिति स्मृतिः ॥"
इत्येकादशीतत्त्वम् ॥

**परान्नः**, त्रि, (परान्नं नित्यमस्त्यस्य । "अर्श आदिभ्योऽच् ।" ५ । २ । १२७ । इति अच् ।) परान्नोपजीवी । तत्पर्य्यायः । परपिण्डादः २ । इत्यमरः । ३ । १ । २० ॥

**परापं**, त्रि (परागता आपो यस्मात् । "अवर्णान्ताद्वा ।" ६ । ३ । ९७ । इत्यस्य वार्त्तिं इत्यनेन पक्षे अप ईदभावः ।) पक्षे ईत्वे परेपम् । इति सिद्धान्तकौमुदी ॥

**परापरं**, क्ली, (परमापिपर्त्ति । आ + पृ + अच् ।) परूषकम् । इति भावप्रकाशः ॥ (अस्य विवरणं परूषशब्दे द्रष्टव्यम् ॥ परञ्चापरञ्च द्वयोः समाहारः ।) परमपरञ्च ॥ (यथा, विष्णुपुराणे । १ । ६ । २७ ।
"एताश्च सहयज्ञेन प्रजानां कारणं परम् ।
वगाहिज्ञानमनुमितिजनकम् । तच्च व्याप्यः पक्षे इति ज्ञानं पक्षो व्याप्यवान् इति ज्ञानं वा ।" इति सिद्धान्तमुक्तावली ॥ स चानुमितव्यापारः । यथा, --
"व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् ॥"
इति भाषापरिच्छेदः ॥
अस्यार्थः । "अनुमायामनुमितौ व्याप्तिज्ञानं कारणं परामर्शो व्यापारः । तथा हि । येन पुरुषेण महानसादौ धूमे वह्नेर्व्याप्तिर्गृहीता पश्चाच्च स एव पुरुषः क्वचित् पर्व्वतादौ अविच्छिन्नमूलां धूमरेखां पश्यति तदनन्तरं धूमो वह्निव्याप्य इत्येवं रूपं व्याप्तिस्मरणं तस्य पुरुषस्य भवति पश्चाच्च वह्निव्याप्यधूमवान् पर्व्वत इति ज्ञानं भवति स एव परामर्श इत्युच्यते ।"
इति सिद्धान्तमुक्तावली ॥

**परामृतं**, क्ली (परममृतं वारि यस्मात् ।) वर्षणम् । इति त्रिकाण्डशेषः ॥ (परममृतं अमरणधर्म्मकं ब्रह्मात्मभूतं यस्य । इति विग्रहे वाच्यलिङ्गः । यथा, मुण्डकोपनिषदि । ३ । २ । ६ ।
"वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगात् यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्व्वे ॥")

**परामृष्टः**, त्रि, (परामृश्यते स्म । परा + मृश् + कर्म्मणि क्तः ।) सम्बन्धः । सम्बन्धयुक्तः । यथा, --
"क्लेशकर्म्मविपाकाशयैरपरामृष्टः । इति कुसु-
ऋध्यैर वृद्धौ + अच् ।) दशमध्यसंख्या । लक्षलक्षकोटिः ।
१००,०००,०००,०००,०००,०००
इदं चरमसंख्या अष्टादशाङ्कपर्य्यन्तम् । इति हेमचन्द्रः ज्योतिषश्च ॥ (यथा, नैषधे । ३ । ४० ।
"यदि त्रिलोकीगणनापरा स्यात्
तस्याः समाप्तिर्यदि नायुषः स्यात् ।
पारे परार्द्धं गणितं यदि स्यात्
गणेयनिःशेषगुणोऽपि स स्यात् ॥")
ब्रह्मण आयुषोऽर्द्धम् । यथा, --
"निजेन तस्य मानेन चायुर्व्वर्षशतं स्मृतम् ।
तत् पराख्यं तदर्द्धञ्च परार्द्धमभिधीयते ॥"
इति कौर्म्मे ५ अध्यायः ॥
(तथा, मार्कण्डेये । ४६ । ४२ -- ४३ ।
"शतं हि तस्य (ब्रह्मणः) वर्षाणां परमित्यभिधीयते ।
पञ्चाशद्भिस्तथावर्षैः परार्द्धमिति कीर्त्त्यते ॥
एवमस्य परार्द्धन्तु व्यतीतं द्विजसत्तम् ! ।
यस्यान्तेऽभून्महाकल्पः पाद्म इत्यभिविश्रुतः ॥")

**परार्द्ध्यः**, त्रि, (परार्द्धं परार्द्धसंख्यावत् प्रधानत्वमर्हतीति । परार्द्ध + यत् यद्वा परस्मिन्नर्द्धे भवः ।
"परावराधमोत्तमपूर्ब्बांच्च ।" ४ । ३ । ५ । इति

| | | |
|---|---|---|
| परापरविदः प्राज्ञास्ततो यज्ञान् वितन्वते ॥”)<br>**परापरगुरुः**, पुं, (परमादपि परः श्रेष्ठः परापरः । पृषोदरादित्वात् साधुः ततः कर्म्मधारयः ।) गुरु-विशेषः । स तु भगवती । (यथा, -- | | |

यत् ।) प्रधानः । श्रेष्ठः । इत्यमरः । ३ । १ । ५८ ।
(यथा, रघुः । १० । ६४ ।
“ताभ्यस्तथाविधान् स्वप्नान् श्रुत्वा प्रीतो हि
पार्थिवः ।
मेने परार्द्ध्यमात्मानं गुरुत्वेन जगद्गुरोः ॥”)

**परावतं**, क्ली, (परावततीति । परा + अव + बाहु-लकात् अतच् ।) परूषकम् । इति राज-निर्घण्टः ॥

**परावर्त्तः**, पुं, (परा वर्त्त्यते इति । परा + वृत् + अप् ।) परिवर्त्तः । विनिमयः । इति हेमचन्द्रः ॥

**परावहः**, पुं, (परा वहतीति । वह् + अच् ।) सप्तवाय्वन्तर्गतसप्तमवायुः । स तु परिवहवायो-
रूर्द्ध्वस्थितः । इति सिद्धान्तशिरोमणिः ॥ (यथा,
हरिवंशे २३६ अध्याये ।
“आवहः प्रवहश्चैव विवहश्च समीरणः ।
परावहः संवहश्च उद्वहश्च महाबलः ॥”)

**पराविद्धः**, पुं, (परा + व्यध + क्तः ।) कुवेरः । इति शब्दमाला ॥

**परावेदी**, स्त्री, (परमुत्कर्षमाविन्दतीति । विद् + अण् । स्त्रियां ङीप् ।) बृहती । इति केचित् ॥

**पराशरः**, पुं, (अस्य निरुक्तिरुक्ता यथा, महा-भारते । १ । १७९ । ३ ।
“परासुः स यतस्तेन वशिष्ठः स्थापितो मुनिः ।
गर्भस्थेन ततो लोके पराशर इति स्मृतः ॥”
“परासोराशासनमवस्थानंयेन स पराशरः ।
१ । ५७ । १८ । “वराहको वीरणकः सुचित्र-श्चित्रवेगिकः । पराशरस्तरुणको मणिस्कन्ध-स्तथारुणिः ॥”)

**पराशरी**, [न्] पुं, पराशरेण प्रोक्तं भिक्षुसूत्रं पाराशरं तद्विद्यतेऽस्याध्ययनायेति ष्णः इन् च । पराशरीति ह्रस्वादिश्च । इत्यमरटीकायां भरतः ॥ पाराशरी । चतुर्थाश्रमी ॥

**पराश्रया**, स्त्री, (पर आश्रयो यस्याः ।) वृक्षो-परिजातलताविशेषः । परसाडा इति भाषा । तत्पर्य्यायः । बन्दा २ वृक्षादनी ३ वृक्षरुहा ४ जीवन्तिका ५ वशिनी ६ पुत्त्रिणी ७ बन्ध्या ८ परपुष्टा ९ । इति शब्दचन्द्रिका ॥ (अन्याश्रिते, त्रि ॥)

**परासनं**, क्ली, (परा + अस् + भावे ल्युट् ।) मारणम् । वधः । इत्यमरः । २ । ८ । ११३ ॥

**परासुः**, त्रि, (परागताः प्रस्थिता असवः प्राणा यस्य ।) मृतः । इत्यमरः । २ । ८ । ११७ ॥
(यथा, रघौ । ९ । ७८ ।
“तौ दम्पती बहु विलप्य शिशोः प्रहर्त्रा
शल्यं निखातमुदहारयतामुरस्तः ।
सोऽभूत् परासुरथ भूमिपतिं शशाप
हस्तार्पितैर्नयनवारिभिरेव वृद्धः ॥”
परासुपरीक्षा वैद्यके यथा, --
“तस्य चेत् परिदृश्यमानं पृथक्त्वेन पादजङ्घोरु-स्फिगुदरपार्श्व-पृष्ठेषिका-पाणिग्रीवा-ताल्वोष्ठ-ललाटं स्विन्नं शीतं प्रस्तब्धं दारुणं वीतमांस-शोणितं वा स्यात् । परासुरयं पुरुषो न चिरात् कालं करिष्यतीति विद्यात् । तस्य चेत् परि-मृश्यमानानि पृथक्त्वेन गुल्फजानुवङ्क्षण-गुद-वृषण-मेढ्रनाभ्यंशस्तनमणिकहनुपर्शुका नासिका कर्णाक्षिभ्रूशङ्खादीनि स्रस्तानि व्यस्तानि च्युतानि स्थानेभ्यः स्युः परामुरयं पुरुषो न चिरात् कालं करिष्यतीति विद्यात् ।”
“तस्य चेदुच्छासोऽतिदीर्घोऽतिह्रस्वोवा स्यात् परासुरिति विद्यात् । तस्य चेन्मन्ये परिदृश्य-मानेन न स्पन्देयातां परासुरिति विद्यात् । तस्य चेद्दन्ताः प्रतिकीर्णाः श्वेता जातशर्कराः
तस्य चेन्नखा वीतमांसशोणिताः पक्वजाम्बर-
वर्णाः स्यः परासुरिति विद्यात् ।
अथास्याङ्गुलीरायच्छेत्तस्य चेदङ्गुलय आयस्य-
माना नचेत् स्फुटेयुः परासुरिति विद्यात् ॥”
इति चरकेणेन्द्रियस्थाने चतुर्थेऽध्याय उक्तम् ॥
“वाताष्ठीला तु हृदये
यस्योद्ध्वर्मनुयायिनी ।
रुजान्नविद्वेषकरी स परासुरसंशयम् ॥”
इति सुश्रुते सूत्रस्थाने
एकत्रिंशत्तमेऽध्याये ॥)

**परासुता**, स्त्री, (परासोर्मृतस्य भावः । परासु + तल् स्त्रियां टाप् ।) मृतत्वम् । निद्रापरवशता । इति पुराणम् ॥

**परास्कन्दी**, [न्] पुं, (परान् आस्कन्दितुं शील-मस्य । आ + स्कन्द + णिनिः ।) चौरः । इत्य-मरः । २ । १० । २५ ॥

**परास्तं**, त्रि (परास्यते स्म । परा + अस् + क्तः ।) निरस्तम् । पराजितम् । यथा, --
“ह्रीर्गिरास्तु वरमस्तु पुनर्म्मा-
स्वीकृतैव परवागपरास्ता ॥”
इति नैषधे ५ सर्गः ॥

**पराहः**, पुं, (परमुत्तरवर्त्ति अहः । “राजाहः सखिभ्यष्टच् ।” ५ । ४ । ९१ । इति टच् ।) पर-दिनम् । यथा । पूर्ब्बाह्णे तद्विधत्वेऽपि पराहे
त्रिसन्ध्याव्यापित्वे पराह एव । इति सावित्री-व्रते तिथितत्त्वम् ॥

आङ्पूर्ब्बाच्छासतेर्डरन् ।” इति
नीलकण्ठः ॥)
व्यासपिता । शक्त्रिमुनिपुत्त्रः । यथा, --
“सुतं त्वजनयच्छक्त्रेरदृश्यन्तीपराशरम्
।
काली पराशरात् जज्ञे कृष्णद्वैपायनं
मुनिम् ॥”
इत्यग्निपुराणम् ॥
(अयं हि द्बादशाध्यायात्मिकां धर्म्मसंहितां
कृत-
वान् । सा च कलिकर्त्तव्यधर्म्मविषया ।
यदुक्तं
तत्रैव ।
“कृते तु मानवो धर्म्मस्त्रेतायां गौतमः
स्मृतः ।
द्बापरे शङ्खलिखितः कलौ पाराशरः स्मृतः
॥”
तत्र संहितायां १ मे अध्याये युगभेदे
धर्म्मभेदादि-
कथनम् । २ अः
आचारधर्म्मगृहधर्म्मादिकथ-
नम् । ३ अः अशौचव्यवस्था
आत्महरणादि-
दोषाः । ४ अः
प्रायश्चित्तमतान्त्येष्टिक्रियाकुश-
पुत्तलिकादिकथनम् । ५ अः
प्राणिदष्टप्रायश्चित्त-
अवस्था । ६ अः
प्राणिवधप्रायश्चित्तकथनम् ।
७ अः द्रव्यशुद्ध्यादि । ८ अः
गोवधादिप्राय-
श्चित्तम् । ९ अः गोवधापवादादि । १०
अः
अगम्यागमनादिप्रायश्चित्तम् । ११ अः
अमेध्य-
भक्षणादि प्रायश्चित्तेम् । १२ अः
प्रायश्चि त्ताङ्ग-
स्नानमेदादि ॥ * ॥
अयं खलु मत्स्यगन्धायां सत्यवत्यां
वेदव्यास-
मुनुपादितवान् । एतद्बिवरणमुक्तं यथा
देवी-

स्युः परासुरिति विद्यात् । तस्य चेत् पक्ष्माणि
जटावद्धानि स्युः परासुरिति विद्यात् । तस्य
चेच्चक्षुषी प्रकृतिहीने विकृतियुक्ते अत्युत्-
पिण्डिते अतिप्रविष्टे अतिजिह्मे अतिविषमे
अतिप्रस्नुते अतिविमुक्तबन्धने सततोन्मिषिते
सततनिमिषिते निमेषोन्मेषातिप्रवृत्ते बिभ्रान्त-
दृष्टिके विपरीतदृष्टिके हीनदृष्टिके व्यस्तदृष्टिके
नकुलान्धे कपोतान्धे अङ्गारवर्णे कृष्णनील-
पीतश्यावताम्रहरितहारिद्रशुक्लवैकारिकाणां
वर्णानामन्यतमेनाभिसंप्लुते वा स्यातां परासु-
रिति विद्यात् । तथास्य केशलोमान्यायच्छेत् ।
तस्य चेत् केशलोमान्यायस्यमानानि प्रलुच्येरन्
नचेत् वेदयत् परासुरिति विद्यात् ।
तस्य चेदुदरे शिराः प्रदृश्येरन् । श्यावताम्र-
नील-हारिद्रशुक्ला वा स्युः परासुरिति विद्यात् ।

**पराह्णः**, पुं, (परञ्च तदहश्चेति कर्म्मधारयः ।

“अह्नोऽह्न एतेभ्यः ।” ५ । ४ । ८८ ।
इति
अह्नादेशः । ततः नस्य णः ।)
अपराह्णः ।
विकालः । (केषाञ्चिन्मते अयं
पराह्णोऽपि ॥)

**परि**, व्य, सर्व्वतोभावः । वर्ज्जनम् । व्याधिः ।
शेषः ।

इत्थम्भूतः । आख्यानम् । भागः ।
वीप्सा ।
आलिङ्गनम् । लक्षणम् । दोषाख्यानम्
। निर-
सनम् । पूजा । व्याप्तिः । भूषणम् ।
इति मेदिनी ॥
उपरमः । शोकः । इति हेमचन्द्रः ॥
सन्तोष-
भाषणम् । इति शब्दरत्नावली ॥
उपसर्गविशेषः ।
अस्यार्थः । सर्व्वतोभावः । अतिशयः
। वीप्सा ।
इत्थम्भावः । चिह्नम् । भागः । त्यागः
। नियमः ।
इति मुग्धबोधटीकायां दुर्गादासः ॥

**परिकथा**, स्त्री, (परितः कथा ।) वाङ्मयभेदः ।
यथा,

“अथ वाङ्मयभेदाः स्युश्चम्पुः
खण्टकथा कथा ।
आख्यायिका परिकथा
कलापकविशेषकौ ॥”
इति त्रिकाण्डशेषः ॥

**परिकम्पः**, पुं, (परितः कम्पो यस्मात् ।) भयम्
।

कम्पः । इति मेदिनी ॥

**परिकरः**, पुं, (परिकीर्य्यते इति । कॄ शविक्षेपे +

“ऋदोरप् ।” ३ । ३ । ५७ । इति अप्
। यद्बा
परिक्रियतेऽनेनेति पुंसीति घः ।)
पर्य्यङ्कः ।

<table>
<tr>
<td>भागवते । २ स्कन्धे । २ अध्याये<br>द्रष्टव्यम् ॥<br>परान् आश्वणाति हिनस्तीति । श्‍ृ गि<br>हिंसे<br>+ अच् ।” नागभेदः । यथा, महाभारते ।</td>
<td></td>
<td>परिवारः । इत्यमरः । ३ । ३ । १६५<br>॥ समा-<br>रम्भः । बृन्दः । इति शब्दरत्नावली ॥<br>प्रगाढ-<br>गात्रिकाबन्धः । (यथा, मार्कण्डेये ।<br>१६ । २५ ।<br>“गाढं परिकरं बद्ध्वा शुक्लसादाय<br>चाधिकम् ।<br>स्कन्धे भर्त्तारमादाय जगाम<br>मृदुगामिनी ॥”)<br>विवेकः । इति विश्वः । सहकारी ।<br>यथा, --</td>
</tr>
</table>

"परिकरः सहकारी स च
व्याप्तिपक्षधर्म्मत्वादिः ।"
इति सामान्यनिरुक्तौ जगदीशः ॥
(अलङ्कारविशेषः । यथा,
साहित्यदर्पणे । १० । ७५ ।
"उक्तिर्विशेषणैः साभिप्रायैः परिकरो
मतः ॥"
उदाहरणं यथा तत्रैव । "अङ्गराज !
सेना-
पते ! द्रोणोपहासिन् ! कर्ण ! रक्षैनं
भीमाद्-
दुःशासनम् ॥")

**परिकर्त्ता**, [ऋ] पुं, (परिकरोतीति । परि + कृ

+ तृच् ।) अनूढज्येष्ठे
कनिष्ठविवाहस्य याजकः ।
इत्युद्वाहतत्त्वम् ॥

**परिकर्म्म**, [न्] क्ली, (परिक्रियते इति । परि +

कृ + मनिन् ।) कुङ्कुमादिना
शरीरशोभाधान-
रूपसंस्कारः । इति भरतः ॥
स्नानोद्वर्त्तनादि ।
इति स्वामी ॥ शरीरसंस्कारमात्रम् ।
इत्यन्ये ॥
तत्पर्य्यायः । अङ्गसंस्कारः २ ।
इत्यमरः । २ ।
६ । १२१ ॥ प्रतिकर्म्म ३ । इति
शब्दरत्नावली ॥
(यथा कुमारे । ४ । १९ ।
"विबुधैरसि यस्य दारुणैः
असमाप्ते परिकर्म्मणि स्मृतः ।
तमिमं कुरु दक्षिणेतरं
चरणं निर्म्मितरागमेहि मे ॥")

**परिकर्म्मा**, [न्] पुं, (परितः कर्म्म यस्य ।) परि-

चारकः । सेवकः । इति रत्नमाला ॥

**परिकर्म्मी**, [न्] त्रि, (परिकर्म्म विद्यतेऽस्य ।

परिकर्म्म + णिनिः ।) परिकर्म्मा ।
इति हेम-
मनसापि न शक्यन्ते गमनस्य च का कथा ॥
सप्तद्वीपे तु तीर्थानि भ्रमणाद् यत् फलं भवेत् ।
प्राप्यते त्ताधिकं तस्मान्मथुरायाः परिक्रमे ॥
मथुरां समनुप्राप्य यस्तु कुर्य्यात् प्रदक्षिणम् ।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ॥
तस्मात् सर्व्वप्रयत्नेन सर्व्वकामानभीप्सुभिः ।
कर्त्तव्या मथुरां प्राप्य नरैः सम्यक् प्रदक्षिणा ॥"
इति वराहपुराणम् ॥

**परिक्रमसहः**, पुं, (परिक्रमं विहारं सहते इति ।

सह + पचाद्यच् ।) छागलः । इति त्रिकाण्ड-
शेषः ॥

**परिक्रिया**, स्त्री, (परिकरणम् । परि + कृ + शच् ।

"रिङ् शयग्लिङ्क्षु ।" ७ । ४ । २८ । इति रिङ् ।)
परिखाजलादिना वेष्टनम् । तत्पर्य्यायः । परि-
सर्पः २ । इत्यमरः । ३ । २ । २० ॥ (एकाह-
यागविशेषः । यदुक्तं आश्वलायनश्रौते । ९ । ५ ।
१२ ।
"सद्यस्क्रिया अनुक्रिया परिक्रिया वा स्वर्ग-
कामः ॥" "परिक्रियाप्येकाहा भवति एषामन्य-
तमेन स्वर्गकामो यजेत ॥" इति नारायणी ॥)

**परिक्षित्**, पुं, (परि सर्व्वतोभावेन क्षीयते हन्यते

दुरितं येन । परि + क्षि + क्विप् । कलिशासन-
कर्त्तृत्वादस्य तथात्वम् । यद्वा, परिक्षीणेषु
कुरुषु क्षियति ईष्टे इति । तथा चोक्तं महा-
भारते । १० । १६ । २ -- ३ ॥
"विराटस्य सुतां पूर्ब्बं स्नुषां गाण्डीवधन्वनः ।
उपप्लव्य गतां दृष्ट्वा व्रतवान् ब्राह्मणोऽब्रवीत् ॥
परिक्षीणेषु कुरुषु पुत्त्रस्तव भविष्यति ।
एतदस्य परिक्षित्त्वं गर्भस्थस्य भविष्यति ॥")
अभिमन्युपुत्त्रः । तत्पर्य्यायः । परीक्षित् २ पारि-
क्षीतः ३ परिक्षितः ४ । इति शब्दरत्नावली ॥
(अयं पुनर्युधिष्ठिरादनन्तरं कलियुगस्यारम्भे
राजचक्रवर्त्ती आसीत् । कुरुक्षेत्रयुद्धे परि-
क्षीणे कुरुकुले अभिमन्युपत्न्या उत्तराया गर्भा-
ज्जातः । अयमेव गर्भस्थः क्रुद्धाश्वत्थामप्रयुक्तेन
ब्रह्मास्त्रेण निहतोऽपि पुनर्भगवतः कृष्णस्य
प्रभावात् जीवितं लब्धवान् । अयमेव वृषरूपिणं
धर्म्मं निगृह्णन्तं कलिं प्रशशास । ततो गच्छति

**परिक्षिप्तं**, त्रि, (परितः क्षिप्यते स्म इति ।

क्षिप् + क्त ।) परिखादिना वेष्टितम् ।
तत्-
पर्य्यायः । निवृतम् २ । इत्यमरः । ३ ।
१ । ८८ ॥
सर्व्वतोभावेन क्षेपयुक्तञ्च ॥

**परिखा**, स्त्री, (परितः खन्यते इति । खन् +

"अन्येष्वऽपीति ।" ३ । २ । १०१ ।
डः ।)
राजधान्यादिवेष्टनखातम् । इति भरतः
॥ गड-
खाइ इति खाना इति च यस्याः
प्रसिद्धिः ।
तत्पर्य्यायः ॥ खेयम् । इत्यमरः । १ ।
१० । २९ ॥
(यथा, मनुः । ७ । १९६ ।
"भिन्द्याच्चैव तडागानि
प्राकारपरिखास्तथा ।
समवस्कन्दयेच्चैनं रात्रौ वित्रासयेत्तथा
॥")
तस्या मानं यथा, --
"प्रस्थे च परिखामानं शतहस्तं
प्रशस्तकम् ।
परितः शिविराणाञ्च गम्भीरं
दशहस्तकम् ॥"
सङ्केतपूर्ब्बकञ्चैव परिखाद्वारमीप्सितम्
।
शत्रोरगम्यं मित्रस्य गम्यमेव सुखेन च
॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे
२०२ अध्यायः ॥

**परिख्यातः**, त्रि, परिसर्व्वतोभावेन ख्यातः
प्रथितः ।

इति परिपूर्ब्बख्याधातोः कर्त्तरि
क्तप्रत्यय-
निष्पन्नः ॥ विख्यातः ॥

**परिगणितः**, त्रि, (परिसर्व्वतोभावेन गण्यते

चन्द्रः ॥

**परिकाङ्क्षितः**, त्रि, (परित्यक्तं काङ्क्षितं अभिलाषो
येन ।) तपस्वी । इति शब्दरत्नावली ॥

**परिकूटं**, क्ली, (परि सर्व्वतो भूषितं कूटम् ।)
पुरद्वारकूटकम् । तत्पर्य्यायः । हस्तिनखः २
नगरद्वारकूटकम् ३ । इति हेमचन्द्रः ॥

**परिक्रमः**, पुं, (परिक्रमणम् । क्रमु पादविक्षेपे +
भावे घञ् । "नोदात्तोपदेशस्येति ।" ७ । ३ । ३४ ।
इति उपधाया न वृद्धिः ।) क्रीडार्थं पद्भ्यां
गमनम् । तत्पर्य्यायः । विहारः २ । इत्यमरः ।
३ । २ । १६ ॥ प्रदक्षिणम् । यथा, --
वराह उवाच ।
"शृणु भद्रे ! महापुण्यं पृथिव्यां सर्व्वतो दिशम् ।
परिक्रम्य यथाध्वानं प्रमाणगणितं शुभम् ॥
भूम्याः परिक्रमे सम्यक् प्रमाणं योजनानि च ।
षष्टिकोटिसहस्राणि षष्टिकोटिशतानि च ॥
तीर्थान्येतानि देवाश्च तारकाश्च नभस्तले ।
गणितानि समस्तानि वायुना जगदायुषा ॥
ब्रह्मणा लोमशेनैव नारदेन ध्रुवेण च ।
जाम्बवता सपुत्त्रेण रावणेन हनूमता ॥
एतैरनेकधा देवैः ससागरवना मही ।
क्रमिता बालिना चैव वाह्यमण्डलरेखया ॥
अन्तरा भ्रमणेनैव सुग्रीवेण महात्मना ।

काले एकदाऽसौ मृगयां विहरन् क्षुधातृट्-
पीडितः मौनव्रतावलम्बिनः शमीकस्य मुने-
राश्रमं गत्वा प्रत्युत्तरदानपराङ्मुखस्य तस्य स्कन्धे
धनुष्कोट्या मृतं सर्पमासञ्जयामास । अनेना-
पराधेनेमं राजनं शमीकस्य पुत्त्रः शृङ्गी नामा
तपस्वी इतः सप्तमेऽहनि तक्षकदष्टोऽयं मृतो
भविष्यतीत्यभिशप्तवान् । एतदाकर्ण्यायं गङ्गातीरे
मुनिप्रभृतिभिरीश्वरनामकीर्त्तनादिकमालोचयन्
प्रायोपवेशने स्थितस्तक्षकदष्टो मृतश्च । इत्ये-
तत्कथा महाभारते विस्तरतो द्रष्टव्या ॥
(कुरुपुत्त्रविशेषः । यथा, हरिवंशे । ३२ । ९० ।
"कुरोस्तु पुत्त्राश्चत्वारः सुधन्वा सुधनुस्तथा ।
परिक्षित्तु महाबाहुः प्रवरश्चारिमेजयः ॥
अविक्षित्-पुत्त्रः । यथा, महामारते । १ । ९४ । ५० ।
"अविक्षितः परिक्षिच्च शवलाश्वश्च बीर्य्यवान् ॥")

स्म । परि + गण + क्त ।) सर्व्वतोभावेन गणना-
युक्तः । यथा । "परिगणितव्यतिरिक्तेषु संसर्ग-
कृतविशेषो नादरणीयः परिगणनानर्थक्यात् ।"
इति जीमूतवाहनः ॥

**परिगतः**, त्रि, (परि + गम् + क्त ।) प्राप्तः ।
विस्मृतः । ज्ञातः । चेष्टितः । इति मेदिनी ॥
गतः । इति हेमचन्द्रः ॥ वेष्टितः । यथा, --
"अथ सवल्कदुकूलकुथादिभिः
परिगतोज्ज्वलदुद्धतबालधिः ।"
इति भट्टिकाव्ये । १० । १ ॥

**परिगृह्या**, स्त्री, (परि सर्व्वतोभावेन गृह्यते या
परि + ग्रह + कर्म्मणि क्यप् ।) नारी । इति
शब्दचन्द्रिका ॥

**परिग्रहः**, पुं, (परिग्रहणमिति । परि + ग्रह +
"ग्रह वृदृनिश्चिगमश्च ।" ३ । ३ । ५८ । इति
अप् ।) प्रतिग्रहः । (यथा, पञ्चतन्त्रे । ४ । ७ ।
"कण्ठाश्लेषपरिग्रहे शिथिलता यन्नादराच्चुम्बसे
तत्ते धूर्त्त ! हृदि स्थिता प्रियतमा काचिन्ममे-
वापरा ॥")
सैन्यपश्चाद्भागः । पत्नी । भार्य्या । (यथा,
रघुः । ९ । १४ ।
"समनुकम्प्य सपत्नपरिग्रहा-
ननलकानलकानवमां पुरीम् ॥")
परिजनः । परिवारः । आदानम् । (यथा,
रघुः । ९ । ४६ ।
"अनुभवन्नवदोलमृतूत्सवं
पटुरपि प्रियकण्ठजिघृक्षया ।
अनयदासनरज्जुपरिग्रहे

| | | |
|---|---|---|
| तथा च पूर्ब्बदेवेन्द्रैः पञ्चभिः पाण्डुनन्दनैः ॥<br>योगसिद्धैस्तथा कैश्चिन्मार्कण्डेयमुखैरपि ।<br>क्रमिता न क्रमिष्यन्ति न पूर्ब्बे नापरे जनाः ॥<br>अल्पसत्त्वबलोपेतैः प्राणिभिश्चाल्पबुद्धिभिः। | | भुजलताजलतामवलाजनः॥”)<br>स्वीकारः । (यथा, रघुः । १८ । ३८ । |

"लोकेन भावी पितुरेव तुल्यः
सम्भावितो मौलिपरिग्रहात् सः ॥")
मूलम् । कन्दः । शापः । शपथः ।
इत्यमरभरतौ ॥
राहुवक्त्रस्थभास्करः । इत्यजयः ॥
(पुत्त्रदाराद्-
भर्त्तव्यपरिमाणम् । यथा, मनुः । १० ।
१२४ ।
"प्रकल्प्या तस्य तैर्वृत्तिः स्वकुटुम्बाद्
यथार्हतः ।
शक्तिञ्चावेक्ष्य दाक्ष्यञ्च भूतानाञ्च परिग्रहम्
॥"
परिगृह्यतेऽनेनेति विग्रहे हस्तः ॥ विष्णुः ।
यथा,
महाभारते । १३ । १४९ । ५८ ।
"ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः ॥"
"शरणार्थिभिः परितो गृह्यते सर्व्वगतत्वात्
परितो ज्ञायत इति वा ।
पुष्पादिभिर्भक्तैरर्च्चितं
परिगृह्णाति इति वा परिग्रहः ॥" इति
शाङ्कर-
भाष्यम् ॥ साधनम् । यथा, रघुः । ९ । २१
।
"अजिनदण्डभृतं कुशमेखलां
यतगिरं मृगशृङ्गपरिग्रहाम् ॥"
"मृगशृङ्गं परिग्रहः कण्डूयनसाधनं
यस्यास्ताम् ॥"
इति तट्टीकायां मल्लिनाथः ॥)

**परिग्राहः**, पुं, (परि + ग्रह् + "परौ यज्ञे ।" ३ ।
३ । ४७ । इति घञ् ।) यज्ञवेदिविशेषः ।
इति
केचित् ॥

**परिघः**, पुं, (परि हन्यतेऽनेनेति । परि + हन् +
"परौ षः ।" ३ । ३ । ८४ । इति अप्
घादेशश्च ।) लोहबद्धलगुडः । लोहमय-
लगुडः लोहमुखलगुडः । तत्पर्य्यायः । परि-
घातनः २ । इत्यमरः । २ । ८ । ९१ ॥
परि-

"लम्बकर्णो महावक्त्रो मलिनो
घोरदर्शनः ।
परिघो नाम चण्डालः शस्त्रपाणिरदृश्यत
॥")

**परिघातः**, पुं, (परिहन्यतेऽनेन । परि + हन् +
घञ् । "हनस्तोऽचिण्णलोः ।" इति तः
।)
अस्त्रम् । हननम् । इति धरणिः ॥

**परिघातनः**, पुं, (परितो घातनं यस्मात् ।) परिघा-
स्त्रम् । इत्यमरः । २ । ८ । ९१ ॥
सर्व्वतो-
भावेन हनने क्ली ॥

**परिघोषः**, पुं, (परितो घोषो यस्मिन् ।) मेघ-
शब्दः । शब्दः । अवाच्यः । इति मेदिनी
॥

**परिचयः**, पुं, (परि समन्तात् चयनं बोधो ज्ञान-
मित्यर्थः । परि + चि + अप् ।) विशेषेण
ज्ञानम् ।
चेना इति भाषा । तत्पर्य्यायः । संस्तवः
२ ।
इत्यमरः । ३ । २ । २३ ॥ प्रणयः ३ ।
इति भरतः ॥
(यथा, माघे । ७ । ६१ ।
"न परिचयो मलिनात्मनां प्रसाधनम् ॥"
अभ्यासः । यथा, माघे । २ । ७५ ।
"हेतुः परिचयस्थैर्य्ये वक्तर्गुणनिकैव सा
॥"
नादस्य अवस्थाविशेषः । यथा,
हठयोगदीपि-
कायाम् । ४ । ६९ ।
"आरम्भश्च घटश्चैव तथा परिचयोऽपि
च ।
निष्पत्तिः सर्व्वयोगेषु
स्यादवस्थाचतुष्टयम् ॥")

**परिचरः**, पुं, (परितश्चरतीति । परि + चर +

**परिचाय्यः**, पुं, (परिचीयते इति । चिञ् चित्याम्
+ "अग्नौ परिचाय्योपचाय्यसमूह्याः ।" ३ । १
।
१३१ । इत्यनेन साधुः ।) यज्ञाग्निः ।
तत्पर्य्यायः ।
समूह्यः २ उपचाय्यः ३ । इत्यमरः । २ । ७ ।
२० ॥
(अग्निरिह न वह्निः किन्त्वग्निधारणार्थस्थल-
विशेषः । इति सिद्धान्तकौमुदी ॥)

**परिचारकः**, त्रि, (परिचरतीति । परि + चर् +
ण्वुल् ।) सेवकः । चाकर इति भाषा ॥ (यथा,
मनुः । ७ । २१७ ।
"तत्रात्मभूतैः कालज्ञैरहार्य्यैः परिचारकैः ।
सुपरीक्षितमन्नाद्यमद्यान्मन्त्रैर्विषापहैः ॥")
तत्पर्य्यायः । भृत्यः २ दासेरः ३ दासेयः ४
दासः ५ गोप्यकः ६ चेटकः ७ नियोज्यः ८
किङ्करः ९ प्रेष्यः १० भुजिष्यः ११ । इत्य-
मरः । २ । १० । १७ ॥ डिङ्गरः १२ चेटः
१३
गोप्यः १४ पराचितः १५ परिष्कन्दः १६
परि-
कर्म्मी १७ । इति हेमचन्द्रः । ३ । २४ ॥

**परिचार्य्यः**, त्रि, परिचर्य्यतेऽसौ इति । परि +
चर + कर्म्मणि ण्यत् । सेव्यः ॥

**परिचितः**, त्रि, (परि + चि + कर्म्मणि क्तः ।)
परिचयविशिष्टः । ज्ञातः । यथा, --
"त्यक्तव्येयं चिरपरिचिता जन्मभूमीति
बुद्ध्या
मा खिद्यस्व त्रिभुवनजनत्राणहेतोः क्रमाङ्क ! ।
किन्न त्याज्यं भवति महतां चेत् परस्योपकारी
।
वाराणस्या मुनिरपि गतो दक्षिणाशामगस्त्यः
॥"
इति पदाङ्कदूतः ॥

**परिचेयं**, त्रि, परि पूर्ब्बचिधातोः कर्म्मणि यप्रत्ययेन
निष्पन्नम् ॥ परिचययोग्यम् । परिचयनीयम् ।
परिचेतव्यम् ॥

घातकः ३ । इति शब्दरत्नावली ॥ (यथा,
महाभारते । ६ । ६७ । २४ ।
“बाहूनामुत्तमाङ्गानां कार्म्मुकाणाञ्च भारत !
।
गदानां परिघाणाञ्च हस्तानाञ्चोरुभिः सह
॥”)
परिघातः । परितो हननम् । इत्यमरभरतौ
॥
विष्कम्भादिसप्तविंशतियोगान्तर्गत
ऊनविंशति-
योगः । (यथा, ज्योतिषे ।
“वज्रोऽसृक् च व्यतीपातो वरीयान्
परिघस्तथा ॥”
अस्य अर्द्धांशं परित्यज्य शुभं कर्म्म कुर्य्यात्
।
यदुक्तं तत्रैव ।
“परिघस्य त्यजेदर्द्धं शुभकर्म्म ततः परम्
॥”)
अथ परिघयोगजातफलम् ।
“उत्पत्तिकाले परिघो यदि स्या-
न्नरस्तदा वंशकुठारकल्पः ।
असत्यसाक्षी क्षमया विहीनः
स्वल्पानुभोक्ता विजितारिपक्षः ॥”
इति कोष्ठीप्रदीपः ॥
अर्गलः । इति मेदिनी ॥ मुद्गरः । शूलः ।
इत्य-
जयः ॥ कलसः । काचघटः । गोपुरम् ।
सद्म ।
इति शब्दरत्नावली ॥ ॥ * ॥
(कार्त्तिकानुचर-
विशेषः । यथा, महाभारते । ९ । ४५ । ३३
।
“परिघञ्च वटञ्चैव भीमञ्च सुमहाबलम् ।
दहतिं दहनञ्चैव प्रचण्डौ वीर्य्यसम्मतौ ॥
अंशोऽप्यनुचरान् पञ्च ददौ स्कन्दाय धीमते
॥”
चण्डालविशेषः । यथा, महाभारते । १२ ।
१३८ । ११४ ।
पचाद्यच् ।) युद्धकाले परप्रहारात्
रथरक्षकः ।
प्रजासामन्तव्यवस्थापनकारी । इति
केचित् ॥
सेनायां राज्ञो दण्डनायकः । इत्यन्ये ।
इति
भरतः ॥ तत्पर्य्यायः । परिधिस्थिः २ ।
इत्य-
मरः । २ । ८ । ६२ ॥ सहायः ३ । इति
रत्न-
माला ॥ (परिचर्य्याकारकः । यथा
वैद्यके, --
“उपचारज्ञता दाक्ष्यमनुरागश्च भर्त्तरि ।
शौचञ्चेति चतुर्थोऽयं गुणः परिचरे जने
॥”
इति चरके सूत्रस्थाने नवमेऽध्याये ॥
“स्निग्धोऽजुगुप्सुर्बलबान् युक्तो
व्याधितरक्षणे ।
वैद्यवाक्यकृदश्रान्तः पादः परिचरः
स्मृतः ॥”
इति सुश्रुते सूत्रस्थाने चतुस्त्रिंशेऽध्याये
॥)

**परिचरणकर्म्म**, [न्] क्ली, (परिचरणं सेवैव
कर्म्म ।) परिचर्य्या । तद्वैदिकपर्य्यायाः ।
इर-
ज्यति १ विधेम २ सपर्य्यति ३
नमस्यति ४ दुर-
स्यति ५ ऋध्नोति ६ र्णद्धि ७ ऋच्छति
८
सपति ९ बिवासति १० । इति दश
परिचरण-
कर्म्माणः । इति वेदनिघण्टौ ३ अध्याये
॥

**परिचर्य्या**, स्त्री, (परिचर्य्यते परिचरणमित्यर्थः ।
परि + चर् + “परिचर्य्यापरिसर्य्येति ।”
३ । ३ ।
१०१ । इत्यस्य वार्त्तिं इति शो यक् च
निपात्यते ।) सेवा । (यथा, देवीभागवते
।
१ । ४ । ११ ।

**परिच्छदः**, पुं, (परिच्छाद्यतेऽनेनेति । परि + छद
+ णिच् + “पुंसि संज्ञायाम् ।” ३ । ३ । ११८
।
इति घः । “छादेर्घेऽद्ब्युपसर्गस्य ।” ६ । ४ ।
९६ ।
इति उपधाह्रस्वः ।) परिवारः । इति हेम-
चन्द्रः ॥ (यथा, आर्य्यासप्तशत्याम् । ६७३ ।
“सहधर्म्मचारिणी मम परिच्छदः सुतनु ! नेह
सन्देहः ।
न तु सुखयति तुहिनदिनच्छत्त्रच्छायेव
सज्जन्ती ॥”)
हस्त्यश्ववस्त्रकम्बलाद्युपकरणम् । यथा, --
“परिच्छदे नृपार्हेऽर्थे परिवर्होऽव्ययाः परे ॥”
इत्यस्य टीकायां भरतः ॥
(यथा, रघुः । १ । १९ ।
“सेना परिच्छदस्तस्य द्वयमेवार्थसाधनम् ।
शास्त्रेष्वकुण्ठिता बुद्धिर्मौर्व्वी धनुषि चातता
॥”)
आच्छादनम् । यथा, --
“पयःफेननिभा शय्या दान्ता रुक्मपरिच्छदा
।”
इति श्रीभागवतम् ॥

**परिच्छन्दः**, पुं, (परिच्छन्द्यतेऽनेन । परि + छदि
संवरणे + घञ् ।) परिच्छदः । इति हला-
युधः ॥

**परिच्छन्नः**, त्रि, परिपूर्ब्बच्छदधातोः कर्त्तरि कर्म्मणि
च क्तप्रत्ययनिष्पन्नः ॥ परिच्छदविशिष्टः ।
सर्व्वतो-
भावेनाच्छादितः । संवृतः ॥

| | | |
|---|---|---|
| | “अथवा वार्द्धके प्राप्ते परिचर्य्यां<br>करिष्यति ।<br>पुत्त्रः परमधर्म्मिष्ठः पुण्यार्थं कलविङ्कयोः<br>॥”)<br>तत्पर्य्यायः । वरिवस्या २ शुश्रूषा ३<br>उपा-<br>सनम् ४ । इत्यमरः । २ । ७ । ३५ ॥<br>परिसर्य्या ५<br>उपासना ६ उपास्तिः ७ । इति भरतः ॥<br>शुश्रू-<br>षणा ८ । इति शब्दरत्नावली ॥ | |

**परिच्छिन्नः**, त्रि, (परि + छिद् + कर्त्तरि क्तः ।)

परिच्छेदविशिष्टः । अवधिप्राप्तः । यथा, --
“परिच्छिन्नामेवं त्वयि परिणता बिभ्रति गिरं
न विद्मस्तत्तत्त्वं वयमिह हि यत्त्वं न भवसि ।”
इति महिम्नः स्तोत्रम् ॥
सर्व्वतोभावेन छेदविशिष्टश्च ॥

**परिच्छेदः**, पुं, (परि + छिद् + भावे करणादौ च

घञ् ।) ग्रन्थविच्छेदः । यथा, त्रिकाण्डशेषे ॥
“सर्गवर्गपरिच्छेदोद्घाताध्यायाङ्कसंग्रहाः ।
उच्छासः परिवर्त्तश्च पटलः काण्डमस्त्रियाम्
॥
स्थानं प्रकरणं पर्व्वाह्निकञ्च ग्रन्थसन्धयः ॥”
(तत्र काव्ये सर्गः । कोषे वर्गः । अलङ्कारे परि-
च्छेदोच्छ्वासौ । कथायामुद्धातः । पुराणसंहि-
तादौ अध्यायः । नाटके अङ्कः । तन्त्रे पटलः
।
ब्राह्मणे काण्डम् । संगीते प्रकरणम् । इति-
हासे पर्व्व । भाष्ये आह्निकम् । एवमन्येऽपि
पाद-
तरङ्गस्तवकप्रपाठकस्कन्धमञ्जरीलहरीशाखा
दयो ग्रन्थसन्धयो ग्रन्थभेदे यथायथं ज्ञेयाः ॥
* ॥)
सीमा । अवधिः । यथा, मालतीमाधवे ।
“परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथंयो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापञ्च कुरुते
॥”

**परिजनः**, पुं, (परिगतो जनः ।) परिवारः ।

पोष्यवर्गः । यथा, महिम्नः स्तोत्रे ।
“यदृद्धिं सूत्रान्णो वरद परमोच्चैरपि सती-
मधश्चक्रे वाणः परिजनविधेयत्रिभुवनः ॥”
नियतसन्निधिवर्त्तिपरिचारकः । यथा,
आनन्द-
लहर्य्याम् । ३० ।
“किरीटं वैरिञ्चं परिहर पुरः कैटभभिदः
कठोरे कोटीरे स्खलसि जहि जम्भारिमुकुटम्
।
“डीनं प्रडीनमुड्डीनं संडीनं परिडीनकम् ।”
इति जटाधरः ॥
(तथाच महाभारते । ८ । ४१ । २७ ।
“अतिडीनं महाडीनं खडीनं परिडीनकम्
॥”)

**परिणतं**, त्रि, (परिणमति स्म । परि + नम् +

क्तः ।) पक्वम् । इत्यमरः । ३ । १ । ९६ ॥
तिर्य्यग्घातिगजः । इति हेमचन्द्रः ॥ (यथा,
माघे । ४ । २९ ।
“सततमसुमतामगम्यरूपाः
परिणतदिक्करिकास्तटीर्बिभर्त्ति ॥”)
सर्व्वतोभावेन नतञ्च ॥

**परिणयः**, पुं, (परिणयनम् । परि + नी + अप् ।)

विवाहः । इत्यमरः । २ । ७ । ५७ ॥

**परिणामः**, पुं, (परिणमनम् । परि + नम् +

घञ् ।) विकारः । प्रकृतेरन्यथाभावः । यथा
।
मुखस्य विकारः क्रोधरक्तता । केचित्तु ।
प्रकृति-
ध्वंसजन्यविकारः । यथा काष्ठस्य विकारो
भस्म । मृत्पिण्डस्य घटः । इत्यमरभरतौ ॥
चरमः । शेषः । यथा, --
“परिणामसुखे गरीयसि
व्यथकेऽस्मिन् वचसि क्षतौजसाम् ।
अतिवीर्य्यवतीव भेषजे
बहुरल्पीयसि दृश्यते गुणः ॥”
इति भारवौ । २ । ४ ॥
(निदानभेदेन यथा, --
“असात्म्येन्द्रियार्थसंयोगप्रज्ञापराधपरिणाम-
भेदात्त्रिविधो वा ॥”
“परिणामोऽयोगादियुक्ता
ऋतुस्वभावजा शीतादयः । अधर्म्मस्य च
रोग-
हेतोरत्रैवान्तर्भाव इति भट्टारहरिश्चन्द्रः ॥”
इति माधवकरकृतरुग्विनिश्चयस्य
पञ्चनिदान-
व्याख्याने विजयेनोक्तम् ॥
“कालस्य परिणामेन जरामृत्यनिमित्तजाः ।
“तृष्णादाहारतिस्वेदकट्वम्ललवणोत्तरम्
।
शूलं शीतशमग्रायं पैत्तिकं लक्षयेद्भिषक्
॥”
श्लैष्मिकस्य तस्य लक्षणं यथा, --
“छर्द्दिहृल्लाससम्मोहं
स्वल्परुग्दीर्घसन्तति ।
कटुतिक्तोपशान्तौ च तद्विज्ञेयं
कफात्मकम् ॥”
त्रिदोषजस्य तस्य लक्षणं यथा, --
“संसृष्टलक्षणं बुद्धा द्विदोषं परिकल्पयेत्
।
त्रिदोषजमसाध्यन्तु
क्षीणमांसबलानलम् ॥”
इति माधवकरः ।
तस्यौषधं यथा, गरुडपुराणे ।
“लौहचूर्णसमायुक्तं त्रिफलाचूर्णमेव वा ।
मधुना स्वादितं रुद्र !
परिणामाख्यशूलनुत् ॥”
(चिकित्सास्य यथा, --
“वमनं तिक्तमधुरैर्विरेकश्चापि शस्यते ।
वस्तयश्च हिताः शूले परिणामसमुद्भवे
॥
विडङ्गतण्डुलव्योषं त्रिवृद्दन्तीसचित्रकम्
।
सर्व्वाण्येतानि संहृत्य श्लक्ष्णचूर्णानि
कारयेत् ॥
गुडेन मोदकं कृत्वा भक्षयेत्
प्रातरुत्थितः ।
उष्णोदकानुपानन्तु दद्यादग्निविवर्द्धनम्
॥
जयेत्त्रिदोषजं शूलं परिणामसमुद्भवम् ॥
नागरगुडतिलकल्कं पयसा संसाध्य यः
पुमा-
नद्यात् ।
उग्रं परिणामशूलं तस्यापैति सप्तरात्रेण
॥”
“तिलनागरपथ्यानां भागं
शम्बूकभस्मनाम् ।

प्रणम्रेष्वेतेषु प्रसभमभियातस्य भवनं
हरस्याभ्युत्थाने तव परिजनोक्तिर्विजयते ॥”
“परिजनः नियतसन्निधिवर्त्तिपरिचारकः।”
इत्यस्यश्लोकस्य
व्याख्यायांगोपीरमणतर्कपञ्चाननः ॥

**परिजल्पितं**, क्ली, (परि + जल्प + भावे क्तः ।)

दशाङ्गचित्रजल्पान्तर्गतद्वितीयजल्पनम् ।
यथा,
“प्रभोर्निर्द्दयताशाठ्यचापलाद्युपपादनात्।
स्वविचक्षणताव्यक्तिर्भङ्ग्यास्यात्
परिजल्पितम् ॥”
इत्युज्ज्वलनीलमणिः ॥

**परिज्मा**, [न्] पुं, (परिजायते इति । परि +

जन् + मन् । निपातनात् साधुः ।) चन्द्रः ।
अग्निः ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ (पर्य्य-
जतीति । अजेः परिपूर्ब्बस्य
श्वन्नुक्षन्नित्यादिना
मन्प्रत्ययोऽकारलोपः आद्युदात्तत्वञ्च निपा-
त्यते । परिगन्ता । इति वेदभाष्यम् ॥)

**परिज्वा**, [न्] पुं, (परि + जु सौत्रधातुः +

“श्वन्नुक्षन् पूषन्निति ।” उणां । १ । १५८ ।
इति कनिन् । इदन्तु उज्ज्वलदत्तमतम् ।)
इन्द्रः । अग्निः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**परिडीनकं**, क्ली, (परि + डी + क्तः । ततः स्वार्थे

कन् ।) पक्षिगतिविशेषः । यथा, --

रोगाः स्वाभाविका दृष्टाः स्वभावो
निष्प्रतिक्रियः ॥”
इति चरके शरीरस्थाने प्रथमेऽध्याये ॥
अर्थालङ्कारभेदः । तल्लक्षणं यथा, --
“परिणामः क्रियार्थश्चेद्विषयी विषयात्मना
॥”)

**परिणामदर्शी**, [न्] त्रि, (परिणामं चरमं पश्य-

तीति । दृश् + णिनि ।) चरमकालप्रेक्षी ।
पश्चा-
द्दर्शी । विषयादेः शेषद्रष्टा । इति भारतम् ॥

**परिणामशूलः**, पुं, (परिणामे चरमावस्थायां

शूलं यस्य । यद्वा परिणामे भुक्तान्नादेः परि-
पाके उत्पद्यते शूलं यस्मात् ।) रोगविशेषः ।
तस्योत्पत्तिर्यथा, --
“स्वैर्निदानैः प्रकुपितो वायुः सन्निहिते यदा ।
कफपित्ते समावृत्य शूलकारी भवेद्बली ॥”
तस्य लक्षणं यथा, --
“भुक्ते जीर्य्यति यच्छूलं तदेव परिणामजम् ।
तस्य लक्षणमप्येतत् समासेनाभिधीयते ॥”
वातिकस्य तस्य लक्षणं यथा, --
“आध्मानाटोपविण्मूत्रविबन्धारतिवेपनैः ।
स्निग्धाष्णोपशमप्रायं वातिकं तद्वदेद्भिषक्
॥”
पैत्तिकस्य तस्य लक्षणं यथा, --

द्विभागगुडसंयुक्तं गुडीं
कृत्वाक्षभागिकाम् ॥
शीताम्बुपानं पूर्ब्बाह्णे भक्षयेत्
क्षीरभोजनः ।
सायाह्ने रसकं पीत्वा नरो मुच्येत
दुर्ज्जयात् ॥
परिणामसमुत्थाच्चशूलाच्चिरभवादपि
।
शम्बूकजं त्र्यूषणञ्च पञ्चैव लवणानि च
॥
समांशां गुडिकां कृत्वा कलम्बीकरसेन
वा ।
प्रातर्भोजनकाले वा भक्षयेत्तु यथाबलम्
॥
शूलाद्विमुच्यते जन्तुः सहसा
परिणामजात् ॥
यः पिबति सप्तरात्रं शक्तूनेकान्
कलाययूषेण ।
स जयति परिणामरुजं चिरजामपि
किमुत-
नूतनजाम् ॥
लौहचूर्णं वरायुक्तं विलीढं मधुसर्पिषा ।
परिणामशूलं शमयेत्तन्मलं वा
प्रयोजितम् ॥
सामुद्रं सैन्धवं क्षारो रुचकं रौमकं
विडम् ।
दन्ती लौहरजः किट्टं त्रिवृच्छूरणकं
समम् ॥
दधिगोमूत्रपयसा मन्दपावकपाचितम् ।
तद्यथाग्निबलं चूर्णं पिबेदुष्णेन वारिणा ॥
जीर्णाजीर्णे तु भुञ्जीत
मांसादिघृतसाधितम् ।
नाभिशूलं प्लीहशूलं यकृद्गुल्मकृतञ्च
यत् ॥
विद्रध्यष्ठीलिकं हन्ति
कफवातोद्भवन्तथा ।
शूलानामपि सर्व्वेषामौषधं नास्ति तत्
परम् ॥
परिणामसमुत्थस्य
विशेषेणान्तकृन्मतम् ॥”
इति समुद्राद्यं चूर्णम् ॥ * ॥

|  |  | “सपिप्पलीगुडं सर्पिः पचेत् क्षीरे चतुर्गुणे ।<br>विनिहन्त्यम्लपित्तञ्च शूलञ्च परिणामजम् ॥”<br>इति गुडपिप्पलीघृतम् ॥ * ॥<br>“क्वाथेन कल्केन च पिप्पलीनां सिद्धं घृतं माक्षिकसंप्रयुक्तम् । |
|---|---|---|

क्षीरानुपानं विनिहन्त्यवश्यं
शूलं प्रवृद्धं परिणामसंज्ञम् ॥”
इति पिप्पलीघृतम् ॥ * ॥
“मण्डूरं शोधितं पत्रीं लौहजां वा गुडेन तु ।
भक्षयम्मुच्यते शूलात् परिणामसमुद्भवात् ॥
संशोध्य चूर्णितं कृत्वा मण्डूरस्य पलाष्टकम् ।
शतावरीरसस्याष्टौ दध्नस्तु पयसस्तथा ॥
पलान्यादाय चत्वारि तथा गव्यस्य सर्पिषः ।
विपचेत् सर्व्वमेकैध्यं यावत् पिण्डत्वमागतम् ॥
सिद्धन्तु भक्षयेन्मध्ये भोजनस्याग्रतोऽपि वा ।
वातात्मकं पित्तभवं शूलञ्च परिणामजम् ॥
निहन्त्येव हि योगोऽयं मण्डूरस्य न संशयः ॥”
इति शतावरीमण्डूरम् ॥ * ॥
इति वैद्यकचक्रपाणिसंग्रहे शूलाधिकारे ॥
“अजीर्णान्नरसः प्रोक्तो दशमः परिणामजः ।”
“जीर्णेऽन्ने च भवेद्यस्तु स ज्ञेयः परिणामजः ॥”
“लङ्घनं वमनञ्चैव विरेकश्चानुवासनम् ॥
निरूहो वस्ति कर्म्माणि परिणामे त्रिदोषजे ।
चित्रकं त्रिवृता दन्ती विडङ्गं कटुकत्रयम् ॥
समं चूर्णं गुडेनाथ क्वारयेन्मोदकान् सुधीः ।
भक्षयेत् प्रातरुत्थाय पश्चादुष्णोदकं पिबेत् ॥
परिणामोद्भवं शूलं हन्ति शीघ्रं नरस्य च ।
यवानीहिङ्गु सिन्धूत्थक्षारं सौवर्च्चलाभया ।
सुरामण्डेन पातव्या परिणामे त्रिदोषजे ॥
हिङ्गव्योषवचाजमोदहबुषापथ्यायवानी शठी
जातीपिप्पलीदाडिमवृकीतिन्तीडिचव्याग्नि
कम् ।
तस्मादम्लसुवर्च्चला च यवजक्षारं तथा
सर्ज्जिका
सिन्धूत्थं विडचूर्णकं समकृतं स्याद्बीजपूरे रसे
॥
संभाव्यं सुकृतात्वनेन गुडिका चाक्षप्रमाणा तथा
कल्को वातविकारिणां प्रददतः शूलार्शसः
प्लीहकान् ॥”
“एष हिङ्ग्वादिको नाम सर्व्वशूलार्त्तिनाशनः ।
सर्व्ववातविकारघ्नः सर्व्वक्षयनिवारणः ।
परिणामोद्भवं शूलं वारयत्याश्वसंशयम् ॥”
इति हारीते चिकित्सितस्थाने नवमेऽध्याये ॥

**परिणायः**, पुं, (परितो वामदक्षिणतो नयनम् ।
अप्यर्थकामौ तस्यास्तां धर्म्म एव
मनीषिणः ॥”
इति रघुः । १ । २५ ।)

**परितः** [स्] व्य, (परि + “पर्य्यभिभ्याञ्च ।” ५ ।
३ । ९ । इति तसिल् ।) सर्व्वतः
। चतुर्द्दिगभि-
व्याप्तौ । इत्यमरः । ३ । ४ । १३
॥ (यथा, रघुः । ६ । ९ ।
“पुरोपकण्ठो पवनाश्रयाणां
कलापिनामुद्धतनृत्यहेतौ ।
प्रध्मातशङ्खे परितो दिगन्तान्
तूर्य्यस्वने मूर्च्छति मङ्गलार्थे ॥”)

**परितापः**, पुं, (परिसर्व्वतोभावेन तप्यतेऽनेन ।
परि + तप् + वञ् ।) दुःखम् ।
(यथा, भाग-
वते । ७ । ८ । ५२ ।
“स तु जनपरितापं तत्कृतं
जानता ते
नरहर उपनीतः पञ्चतां पञ्चविंश
॥”)
नरकान्तरम् । इति मेदिनी ॥
शोकः । इति
शब्दरत्नावली ॥ (यथा, रामायणे
। २ । २२ । २५ ।
“एतया तत्त्वया बुद्ध्या
संस्तभ्यात्मानमात्मना ।
व्याहतेऽप्यभिषेके मे परितापो न
विद्यते ॥”)
भयम् । कम्पः । इति विश्वः ॥
अत्युष्णता च ॥
(यथा, मार्कण्डेये । १५ । ४९ ।
“परितापञ्च गात्रेभ्यः
पीडाबाधाश्च कृत्स्नशः ।
अपहन्ति नरव्याघ्र ! दयां कुरु
महीपते ! ॥”)

**परितुष्टः**, त्रि, (परि + तुष् + क्तः ।) परितोष-
तत्कनिष्ठाय कन्यादाता । “यथा हारीतः ।
ज्येष्ठेऽनिर्व्विष्टे कनीयान् निर्व्विशन् परिवेत्ता
भवति परिविन्नो ज्येष्ठः परिवेदनीया कन्या
परिदायी दाता परिकर्त्ता याजकस्ते सर्व्वे
पतिताः ।” इत्युद्वाहतत्त्वम् ॥

**परिदेवनं**, क्ली, (परि + दिव + ल्युट् ।) अनुशोच-
नोक्तिः । विलापः । इत्यमरः । १ । ६ । १६ ॥
(यथा, महाभारते । १ । २ । १४६ ।
“परिदेवनञ्च पाञ्चाल्या वासुदेवस्य सन्निधौ ।
आश्वासनञ्च कृष्णस्य दुःखार्त्तायाः प्रकीर्त्ति-
तम् ॥”)

**परिदेवना**, स्त्री, (परिदेवयतीति । परि + दिवि +
“ण्यासश्रन्थो युच् ।” ३ । ३ । १०७ । इति युच्
।
ततष्टाप् ।) शोकनिमित्तो विलापः । यथा, --
“अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ! ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥”
इति श्रीभगवद्गीताद्वितीयाध्यायश्लोकव्याख्याने
श्रीधरस्वामी ॥ अपि च ।
“न मन्त्रबलवीर्य्येण प्रज्ञया पौरुषेण च ।
अलभ्यं लभते मर्त्यस्तत्र का परिदेवना ॥
अव्यक्तादीनि भूतानि व्यक्तमध्यानि शौनक ! ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥
अयाचितो मया लब्धस्त्वत्प्रेषितः पुनः कुतः ।
यत्रागतस्तत्र गतस्तत्र का परिदेवना ॥
एकवृक्षे यदा रात्रौ नानापक्षिसमागमः ।
प्रभाते दश दिशो यान्ति तत्र का परिदेवना ॥
एकसार्थप्रयातानां सर्व्वेषान्तत्र गामिनाम् ।
यद्येकस्त्वरितो याति का तत्र परिदेवना ॥”
इति गरुडपुराणे १११ अध्यायः ॥

**परिधानं**, क्ली, (परिधीयते यत् । परि + धा +
कर्म्मणि ल्युट् ।) परिधेयवस्त्रम् । तत्पर्य्यायः ।
अन्तरीयम् २ उपसंव्यानम् ३ अधोऽंशुकम् ४ ।
इत्यमरः । २ । ६ । ११७ ॥ (यथा, पञ्च-
तन्त्रे । ५ । २३ ।
“वरं वनं व्याघ्रगजादिसेवितं
जलेन हीनं बहुकण्टकावृतम् ।
तृणानि शय्या परिधानवल्कलं

परि + नी + "परिण्योर्नीनोद्यूताभ्रेषयोः।" ३ । ३ । ३७ । इति घञ् ।) शारीणां समन्तान्नयनम् । इत्यमरः । २ । १० । ४६ ॥ परेरितो दीर्घत्वे परीणायश्च । इति भरतः ॥

**परिणाहः**, पुं, (परिणह्यतेऽनेन इति । परि + नह + घञ् ।) विस्तारः । तत्पर्य्यायः । विशालता २ । इत्यमरः । २ । ६ । ११४ ॥ ओसार इति चौडा इति च भाषा ॥ (यथा, महाभारते । ६ । ७ । २२ ।
"अरत्नीनां सहस्रञ्च शतानि दश पञ्च च ।
परिणाहस्तु वृक्षस्य फलानां रसभेदिनाम् ॥")

**परिणेता**, [ऋ] पुं, (परिणयतीति । परि + नी + तृच् ।) वोढा । भर्त्ता २ । इति राजनिर्घण्टः ॥ (यथा, --
"स्थित्यै दण्डयतो दण्ड्यान् परिनेतुः प्रसूतये । युक्तः । सन्तुष्टः । यथा, --
"यत् प्रार्थ्यते त्वया भूप ! त्वया च कुलनन्दन ! ।
मत्तस्तत् प्राप्यतां सर्व्वं परितुष्टा ददामि तत् ॥"
इति मार्कण्डेये देवीमाहात्म्ये । ९३ । १० ॥

**परितोषः**, पुं, (परितोषणमिति । परि + तुष् + घञ् ।) सर्व्वतोभावेन तुष्टिः । सन्तोषः । यथा, --
"त्वामुदर ! साधुमन्ये शाकैरपि यदसि लब्धपरितोषम् ।
हतहृदयं ह्यधिकाधिकवाञ्छाशतदुर्भरं न पुनः ॥"
इति शान्तिशतके ॥

**परित्यागः**, पुं, (परित्यजनमिति । परि + त्यज् + घञ् ।) सर्व्वतोभावेन वर्ज्जनम् । तत्पर्य्यायः । छोरणम् २ । इति त्रिकाण्डशेषः ॥ * ॥
"गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥"
इति मत्स्यसूक्तम् ॥

**परित्राणं**, क्ली, (परित्रायते इति । परि + त्रै + ल्युट् ।) मारणोद्यतस्य निवारणम् । तत्पर्य्यायः । पर्य्याप्तिः २ हस्तवारणम् ३ । इत्यमरः । ३ । २ । ५ ॥ रक्षणम् । यथा, --
"परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्म्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥"
इति श्रीभगवद्गीतायाम् । ४ । ८ ॥

न बन्धुमध्ये धनहीनजीवितम् ॥")

**परिधायः**, पुं, (परिधीयतेऽत्र । परि + धा + घञ् ।) जनस्थानम् । परिच्छेदः । नितम्बः । इति मेदिनी ॥ (जनस्थानमित्यत्र जलस्थानमिति केचित् ॥)

**परिधिः**, पुं, (परिधीयतेऽनेन । परि + धा + "उपसर्गे धोः किः ।" ३ । ३ । ९२ । इति किः ।) परिवेशः । चन्द्रसूर्य्यसमीपमण्डलम् । (यथा, रघुः । ८ । ३० ।
"अनृणत्वमुपेयिवान् बभौ
परिधेर्मुक्त इवोष्णदीधितिः ॥")
यज्ञियतरुशाखा । यज्ञियतरोः पलाशादेर्यज्ञपशुबन्धनार्थं या शाखा निखायते तस्याम् । इत्यमरभरतौ ॥ (यथाह आपस्तम्बः । "खादिरं पालाशं वैकविंशतिदारुकमिध्वं करोति त्रयः

**परिदानं**, क्ली, (परिदीयते इति । परि + दा +

भावे ल्युट् ।) परीवर्त्तः ।

विनिमयः । इत्य-

मरः । २ । ९ । ८० ॥

**परिदायी**, [न्] पुं, (परित्यज्य शास्त्रधर्म्मं ददा-

तीति । परि + दा + णिनिः ।)

अनूढज्येष्ठे

परिधयः पालाशकाष्ठकाः
खादिरौदुम्बरबिल्व-
रोहितकविकङ्कतानां ये वा यज्ञिया वृक्षा
आर्द्राः श्रुष्करसत्वच्काः ॥" इति ॥ * ॥)
भूगोलादेर्वेष्टनम् । यथा, --
"व्यासेभनन्दाग्निहते विभक्ते
खवाणसूर्य्यैः परिधिस्तु सूक्ष्मः ॥"
इति लीलावती ॥
(क्ली, परिधीयते यदिति । परि + धा +
कर्म्मणि किः । परिधेयवस्त्रम् । यथा,
भाग-
वते । ८ । ७ । १७ ।
"मेघश्यामः कनकपरिधिः
कर्णविद्योतविद्यु-
न्मूर्ध्नि भ्राजद्विलुलितकचः स्रग्धरो
रक्तनेत्रः ॥"
"कनकं सुवर्णमिव पीतं परिधि वस्त्रं
यस्य"
इति तट्टीका ॥)

**परिधिस्थः**, पुं, (परिधौ तिष्ठतीति । परिधि +
स्था + कः ।) परिचरः । इत्यमरः । २ ।
८ । ६२ ॥
युद्धकाले परप्रहारात् रथरक्षके । प्रजा-
सामन्तव्यवस्थापनकारिणीतिकेचित् ।
सेनायां
राज्ञो दण्डनायकः । इत्यन्ये । इति भरतः
॥

**परिधेयं**, त्रि, (परिधातुं शक्यम् । परि + धा +
"अचो यत् ।" ३ । १ । ९७ । इति यत्
"ईद्यति ।" ६ । ४ । ६५ । इति आत ईत्
ततो गुणः ।) परिधानीयम् । परिधातव्यम्
।
परिधानोपयुक्तवस्त्रादि । यथा, --
"न तु स्वभोग्यतयापि प्राप्ते परिधेयादौ
स्मृतेर-
दृष्टार्थत्वापत्तेः ।" इति विवादचिन्तामणिः
॥

**परिपणं**, क्ली, (परिपण्यते व्यवह्रियतेऽनेन ।

**परिपाकिनी**, स्त्री, (परिपाकः परिपाकशक्ति-
र्विद्यतेऽस्याः । परिपाक + इनि + ङीप् ।)
त्रिवृता । इति शब्दचन्द्रिका ॥

**परिपाटिः**, स्त्री, (परिपाटनम् । परि + पट् +
स्वार्थे णिच् + अच इः । यद्वा परि भागे
भागेन पाटिः पाटनं गतिर्यस्याम् ।)
पारिपाट्य-
विशिष्टः । तत्पर्य्यायः । आनुपूर्ब्बी २
आवृत् ३
अनुक्रमः ४ पर्य्यायः ५ । इत्यमरः । २ ।
७ । ३७ ॥
आनुपूर्ब्बम् ६ परिपाटी ७ । इति भरतः ॥
आनुपूर्ब्बम् ८ आनुपूर्ब्बकम् ९ । इति
टीका-
न्तरम् ॥ क्रमः १० । इति
जटाधरशब्दरत्ना-
वल्यौ ॥

**परिपिष्टकं**, क्ली, (परि + पिष् + क्त + संज्ञायां
कन् ।) सीसकम् । इति राजनिर्घण्टः ॥

**परिपुष्करा**, स्त्री, (परितः पुष्करं मुखं यस्याः ।)
गोडुम्बा । इति शब्दचन्द्रिका ॥
राजगोमक्
इति भाषा ॥

**परिपूतं**, क्ली, (परि + पू + क्तः ।) अपास्ततुष-
धान्यम् । यथा, मनुः ।
"परिपूतेषु धान्येषु शाकमूलफलेषु च ।
निरन्वये शतं दण्डः सान्वयेऽर्द्धशतं दमः
॥"
त्रि, सर्व्वतोभावेन पवित्रम् ॥ (यथा, माघे
। २ । १६ ।
"घूर्णयन् मदिरास्वादमदपाठलितद्युती।
रेवतीवदनोच्छिष्टपरिपूतपुटेदृशौ ॥")

**परिपूर्णता**, स्त्री, (परिपूर्णस्य भावः । परिपूर्ण +
"तस्य भावस्त्वतलौ ।" ५ । १ । ११९ ।
इति

(यथा, माघे । १४ । ६८ ।
"मत्कुणाविव पुरा परिप्लवौ
सिन्धुनाथशयने निषेदुषः ।
गच्छतः स्म मधुकैटभौ विभो-
र्यस्य नैद्रसुखविघ्नतां क्षणम् ॥"
पुं, राज्ञः सुखीनलस्य पुत्त्रः । यथा, भागवते ।
९ । २२ । ४२ ।
"सुनीथस्तस्य भविता नृचक्षुर्यत्सुखीनलः ।
परिप्लवः सुतस्तस्मान्मेधावी सुनयात्मजः
॥")

**परिप्लुतः**, त्रि, (परिप्लु + क्तः ।) जलादिप्लावितः ।
यथा, मार्कण्डेये देवीमाहात्म्ये १ अध्यायः ॥
"आवां जहि न यत्रोर्व्वी सलिलेन परिप्लुता
॥"

**परिप्लुता**, स्त्री, (परि + प्लु + क्तः । स्त्रियां टाप् ।)
मदिरा । इति हेमचन्द्रः । ३ । ५६६ ॥ ग्राम्य-
धर्म्मे (मैथुने) वेदनावती योनिः । यथा, --
"परिप्लुतायां भवति ग्राम्यधर्म्मे रुजा भृशम्
।"
इति योनिव्यापन्निदाने माधवकरः ॥
("पित्तलाया नृसंवासे क्षवथूद्गारधारणात्।
पित्तसंमूर्च्छितो वायुर्योनिं दूषयति स्त्रियाः ॥
शूनास्पर्शाक्षमासार्त्तिर्नीलपीतमसृक्स्रवेत् ।
श्रोणीवंक्षणपृष्ठार्त्तिज्वरार्त्तायाःपरिप्लुता ॥"
इति चरके चिकित्सास्थाने त्रिंशेऽध्याये ॥)
आप्लुते त्रि ॥

**परिवर्हः**, पुं, (परिवर्ह्यतेऽनेन । वर्ह प्राधान्ये +
घञ् ।) परिच्छदः । हस्त्यश्ववस्त्रकम्बलादि।
नृपार्होऽर्थः । राजयोग्यद्रव्यं सितच्छत्त्रादि ।
नृपार्हं सितच्छत्त्रादि अर्थो धनमिति केचित् ।
इत्यमरभरतौ ॥ (यथा, --
"निवेश्य गङ्गामनु तां महानदीं
चमूं विधानैः परिवर्हशोभिनीम् ।
उवास रामस्य तदा महात्मनो
विचिन्तमानो भरतो निवर्तनम् ॥"
इति रामायणे । २ । ८३ । २६ ।)

**परिभवः**, पुं, (परि + भू + अप् ।) अनादरः ।

परि + पण् + "पुंसि संज्ञायां घः प्रायेण ।" ३ । ३ । ११८ । इति घः ।) मूलधनम् । इत्यमरः । २ । ९ । ८० । पुँजि इति भाषा ॥

**परिपन्थकः**, पुं, (परिपन्थयति दोषादिकं प्राप्नोतीति । परि + पथि क गतौ + ण्वुल् ।) शत्रुः । इति हेमचन्द्रः । ३ । ३९३ ॥ (यथा, महाभारते । १० । १६ । ३१ ।
"हतो दुर्य्योधनः पापो राज्यस्य परिपन्थकः ॥")

**परिपन्थी**, [न्] त्रि, (परिसर्व्वतो भावेन दोषाख्यानं पन्थयितु शीलमस्य । परि + पन्थ + णिनिः ।) शत्रुः । इत्यमरः । २ । ८ । ११ । (यथा, गीतायाम् । ३ । ३४ ।
"इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥"
प्रतिकूलाचारी । यथाह कश्चित् ।
"अपराधिनि चेत् क्रोधः क्रोधे क्रोधः कथं नहि ।
धर्म्मार्थकाममोक्षाणां चतुर्णां परिपन्थिनि ॥")

**परिपाकः**, पुं, (परिपच्यते इति । परि + पच् + घञ् ।) परिपक्वता । यथा, भावप्रकाशे ।
"इत्यद्भुतं केवलवह्निपक्व-
मांसेन मत्स्यः परिपाकमेति ।"
नैपुण्यम् । यथा, --
"वीक्ष्य तस्य विनये परिपाकं
पाकशासनपदं स्पृशतोऽपि ।"
इति नैषधपञ्चमसर्गः ॥

तल् ततः "त्वान्तं क्लीवन्तलन्तं स्त्रियाम् ।" इति वार्त्तिकोक्तत्वात् स्त्रियां टाप् ।) परिपूर्णत्वम् । सम्पूर्णता । तत्पर्य्यायः । आभोगः २ । इत्यमरः । २ । ६ । १३७ ॥

**परिपूर्णत्वं**, क्ली, (परिपूर्णस्य भावः । "तस्य भावस्त्वतलौ ।" ५ । १ । ११९ । इति त्व । ततः क्लीवत्वम् ।) परिपूर्णता । सम्पूर्णत्वम् । इति जटाधरः ॥ (यथा, --
"दृश्यते परिपूर्णत्वं मुखचन्द्रस्य ते सखि ! ।
न जाने कञ्चकोरं हि विधाता पालयिष्यति ॥"
इत्युद्भटः ॥)

**परिपेलं**, क्ली, (परिपेलति मृदुतां गच्छतीति । पेल गतौ + अच् ।) परिपेलवम् । कैवर्त्तीमुस्तकम् । इति शब्दमाला ॥ तन्त्रान्तरे यथा, --
"परिपेलं प्लवं बल्यं तत्कुटन्नटसंज्ञकम् ।
जायते मुस्तकाकारं शेवालकुलसञ्चये ॥"
इत्यमरटीकायां भरतः ॥

**परिपेलवं**, क्ली, (परि सर्व्वतः पेलवं मृदुता यस्य ।) कैवर्त्तीमुस्तकम् । इत्यमरः । २ । ४ । १३१ ॥ (अत्यन्तकोमले, त्रि । यथा, बृहत्संहितायाम् । ९४ । ८ ।
"स्फीतमध्यपरिपेलवं फलं
शीघ्रमध्यचिरकालसम्भवम् ॥"
गुणादयोऽस्य कैवर्त्तीमुस्तकशब्दे ज्ञयाः ॥)

**परिप्लवं**, त्रि, (परिप्लवते इति । प्लु + अच् ।) चञ्चलम् । इत्यमरः । ३ । १ । ३५ । इत्यमरः । १ । ७ । २२ ॥ (यथा, रघुः । १२ । ३७ ।
"फलमस्योपहासस्य सद्यः प्राप्स्यसि पश्य मां ।
मृग्याः परिभवो व्याघ्र्यामित्यवेहि त्वया कृतम् ॥")

**परिभावः**, पुं, (परि + भू + "परौ भुवोऽवज्ञाने ।" ३ । ३ । ५५ । इति घञ् ।) परिभवः । इत्यमरः । १ । ७ । २२ ॥

**परिभाषणं**, क्ली, (परि + भाष् + ल्युट् ।) सनिन्द उपालम्भः । इत्यमरः । १ । ६ । १४ ॥ उपालम्भो दुर्व्वादः । निन्दया सह वर्त्तमानो य उपालम्भस्तत्र सनिन्दे परिभाषणम् । उपालम्भो गुणाविष्करणेन स्तुतिपूर्ब्बकोऽपि भवति । यथा
महाकुलस्य भवतः किमिदमुचितं भवति ।
अत्र तु सस्तुतौ न परिभाषणम् । टीकान्तरेऽपि बन्धुलस्य तवागम्यागमनं योग्यमिति निन्दापूर्ब्बः । महाकुलस्य तव कथं विप्रबधः ।
इति स्तुतिपूर्ब्बश्च उपालम्भः । इति भरतः ॥ * ॥ नियमः । इति मेदिनी ॥ आलापः । इति विश्वः ॥

**परिभाषा**, स्त्री, (परि + भाष् + अच् । ततष्टाप् ।
परिष्कृतं भाषणम् । पदार्थविवेचकाचार्य्याणां युक्तियुक्ता वाक् । इति काव्यप्रकाशटीकायां चण्डीदासः ॥ तत्पर्य्यायः । प्रज्ञप्तिः २ शैली ३
सङ्केतः ४ समयकारः ५ । इति त्रिकाण्डशेषः ॥
(सूत्रलक्षणविशेषः । सूत्रं षड्विधम् । यथा, --
"सं ज्ञा च परिभाषा च विधिर्नियम एव च ।
अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम् ॥")
"ग्रन्थस्य संक्षेपनिर्व्वाहार्थसङ्केतविशेषः । यथा
चपोदितेत्यादि ।" इति मुग्धबोधटीकायां दुर्गा-
दासः ॥ यथा माघे । १६ । ८० ।
"न खलु प्रतिहन्यते कुतश्चित्
परिभाषेव गरीयसी यदाज्ञा ॥"
("अव्यक्तानुक्तलेशोक्तसन्दिग्धार्थप्रकाशिकाः ।
परिभाषाः प्रवक्ष्यन्ते दीपीभूताः सुनिश्चिताः ॥"
इति वैद्यकपरिभाषाया लक्षणम् ॥
"प्रथमं परिभाषा स्याद्भेषज्याख्यानकन्तथा ।"
इति शार्ङ्गधरे पूर्ब्बखण्डे प्रथमेऽध्याये ॥)

**परिभूतं**, त्रि, (परिभूयते स्म । परि + भू + क्तः ।)
अनादृतम् । तत्पर्य्यायः । अवगणितम् २ अव-
मतम् ३ अवज्ञातम् ४ अवमानितम् ५ । इत्य-
मरः । ३ । १ । १०६ । अभिभूतम् ६ । इति जटा-
धरः ॥ अप्रस्तुतम् ७ । इति शब्दरत्नावली ॥
(यथा, सारावल्यां विंशाध्याये ।
"परिभूतं सुखरहितं
कुलटापुत्त्रमतिपापरतञ्च ।
मरभरतौ ॥ सुरभिमाल्यगन्धादिधारणेनोत्पन्नो हृद्यो गन्धः । इति स्वामी ॥ (यथा, कलावि-
लासे । १ । ५ ।
"रतिलुलितललितललनाक्लमजललववाहिनो मुहुर्यत्र ।
श्लथकेशकुसुमपरिमलवासितदेहा वहन्त्य-
निलाः ॥")
तत्पर्य्यायः । आमोदः २ गन्धः ३ सौरभ्यम् ४ सौरभम् ५ । इति राजनिर्घण्टः ॥ पण्डित-
समूहः । इति शब्दरत्नावली ॥

**परिमाणं**, क्ली, परिमीयतेऽनेन । (परि + मा +
करणे ल्युट् ।) परिमितव्यवहारासाधारण-
कारणम् । इति सिद्धान्तमुक्तावली ॥ माप इति भाषा । (यथा, मनुः । ८ । १३३ ।
"त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः ॥")
तत्पर्य्यायप्रकारा यथा, --
"यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयम् ।
मानं तुलाङ्गुलिप्रस्थैर्गुञ्जाः पञ्चाद्यमाषकः ॥
ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम् ।
सुवर्णविस्तौ हेम्नोऽक्षे कुरुविस्तस्तु तत्पले ॥
तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुलाः ।
आचितं दशभाराः स्युः शाकटो भार आचितः ॥
कार्षापणः कार्षिकश्च ताम्रिके कार्षिके पणः ।
अस्त्रिया वाढकद्रोणौ खारी वाहो निकुञ्चकः ॥
कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक् ।"
इत्यमरः । २ । ९ । ८५ -- ८९ ॥ * ॥
न्यायमते तद्यथा, --
"परिमाणं भवेन्मानव्यवहारस्य कारणम् ।
अणु दीर्घं महद्ध्रस्वमिति तद्भेद ईरितः ॥
अनित्ये तदनित्य स्यान्नित्ये नित्यमुदाहृतम् ।
संख्यातः परिमाणाच्च प्रचयादपि जायते ॥
अनित्यं द्व्यणुकादौ तु संख्याजन्यमुदाहृतम् ।
परिमाणं घटादौ तु परिमाणजमुच्यते ॥
प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते ।
परिमाणन्तूलकादौ नाशस्त्वाश्रयनाशतः ॥"
इति भाषापरिच्छेदे । ११० -- ११३ ॥
रेणुपरिमाणस्यासमवायिकारणमित्यर्थः । परि-
माणजन्यमुदाहरति परिमाणं घटादाविति परि-
माणजं कपालादि परिमाणजन्यम् । प्रचय-
जन्यमुदाहर्त्तुं प्रचयं निर्व्वक्ति प्रचय इति अर्थात्
प्रचयस्य नचावयविनाशः कथं परिमाण-
नाशकः असत्यप्यवयविनि त्रिचतुरपरमाणु-
विश्लेषे तदुपचये चावयविनः प्रत्यभिज्ञानेऽपि
परिमाणान्तरस्य प्रत्यक्षसिद्धत्वादिति वाच्यम् ।
परमाणुविश्लेषे द्व्यणुकस्य नाशोऽवश्यमभ्यु-
पेयस्तन्नाशे च द्व्यणुकनाशः एवं क्रमेण महा-
वयविनो नाशस्यावश्यकत्वात् सति च नाशकेऽन-
भ्युपगममात्रेण नाशस्य अपवदितुमशक्यत्वात्
शरीरादाववयवोपचये असमवायिकारण-
नाशस्यावश्यकत्वादवयवविनाशः आवश्यकः न
च पटविनाशेऽपि तन्त्वन्तरसंयोगात् परिमाणा-
धिक्यं स्यादिति वाच्यं तत्रापि वेमाद्यभिघातेन
समवायिकारणतन्तुसंयोगनाशात् पटनाशस्या-
वश्यकत्वात् किञ्च तन्त्वन्तरस्य तत्पटावयवत्वे
पूर्ब्बं तत्पट एव न स्यात् तत्तन्तुरूपकारणा-
भावात् तत्तन्तोरवयवत्वाभावेच न तेन परि-

जनयति नक्षत्रपतिः क्षितिसुतदृष्टो झषि शूरम् ॥”)

**परिभ्रमः**, पुं, (परि + भ्रम् + अच् ।) सर्व्वतोभ्रमणम् । परिपूर्ब्बभ्रमधातोर्भावि अल्प्रत्ययनिष्पन्नः ॥

**परिमण्डलं**, त्रि, (परि सर्व्वतो मण्डलम् ।) वर्त्तुलम् । इति हेमचन्द्रः ॥ (यथा, भागवते । ५ । २२ । १९ ।
“लक्षोत्तरं सार्द्धनवकोटियोजनपरिमण्डलं भू-
वलयस्य क्षणेन सगव्यूत्युत्तरं द्विसहस्रयोजनानि
स भुङ्क्ते ॥” परमाणुपरिमाणम् । परिमाण-विशिष्टः परमाणुः । इति वैशेषिकसूत्रविवृतिः ॥
शब्दोऽयं न्यग्रोधशब्देन युक्तः अर्थान्तरं प्रका-
शयति । पुं, पुरुषविशेषः । तस्य लक्षणं यथा, मात्स्ये ११८ अध्याये ।
“न्यग्रोधौ तु स्मृतौ बाहू व्यासो न्यग्रोध उच्यते ।
व्यासेन उच्छ्रयो यस्य अध उर्द्धञ्च देहिनः ।
समोच्छ्रयपरीणाहो न्धग्रोधपरिमण्डलः ॥”
स्त्री, लक्षणान्वितरमणीविशेषः । यथा, शब्द-रत्नावल्याम् ।
“स्तनौ सुकटिनौ यस्या नितम्बे च विशालता ।
मध्ये क्षीणा भवेद् या च न्यग्रोधपरिमण्डला ॥”
पर्व्वतविशेषः । यथा महाभारते ६ । ६ । ११ ।
“परिमण्डलस्तयोर्म्मध्ये मेरुः कनकपर्व्वतः ।
आदित्यतरुणाभासो विधूम इव पावकः ॥”)

**परिमलः**, पुं, (परिमलते सुगन्धिपार्थिवकणां धरतीति । मल ङ धारणे + अच् । “क्षिताविव गन्धः ।” इति न्यायादस्य तथात्वम् ।)
विमर्द्दनम् ।
कुङ्कमादिमर्द्दनम् ।
विमर्द्दोत्थिजनमनोहरगन्धः ।
(परिमाणं निरूपयति । परिमाणमिति । परि-मितव्यवहारासाधारणंकारणं परिमाण-मित्यर्थः । तच्चतुर्व्विधं अणु महद्दीर्घं ह्रस्वञ्च इदं चातुर्व्विध्यं प्रत्यक्षसिद्धं तत्राणुत्वह्रस्वत्वे महत्त्वदीर्घत्वे च समनियते तत्परिमाणं नित्य-मित्यत्रपरिमाणमित्यनुषज्यतेजायते इत्यत्रापि परिमाणमित्यनुवर्त्तते । अनित्यमिति पूर्ब्बेणान्वितं
तथाचानित्यं परिमाणं संख्याजन्यं परिमाणजन्यं
प्रचयजन्यञ्चेत्यर्थः । तत्र संख्याजन्यमुदाहरति द्व्यणुकादाविति । द्ब्यणुकस्य त्रसरेणोश्च परि-
माणं प्रति परमाणुपरिमाणं द्व्यणुकादिपरि-माणं वा न कारणं परिमाणस्य स्वसमानजाती-योत्कृष्टपरिमाणजनकत्वात्द्ब्यणुकादिपरि-माणन्तु परमाणुत्वापेक्षया नोत्कृष्टं त्रसरेणुपरि-माणन्तु न सजातीयं अतः परमाणौ द्वित्वसंङ्ख्या
द्व्यणुकपरिमाणस्य द्व्यणुके त्रित्वसङ्ख्या च त्रस-
माणाधिक्यं संयुक्तद्रव्यान्तरवत् तस्मात्तत्र
तन्त्वन्तरसंयोगे सति पूर्ब्बपटनाशस्ततः पटा-
न्तरोत्पत्तिरित्यवश्यं स्वीकार्य्यम् । अवयविनः
प्रत्यभिज्ञानन्तु साजात्येन दीपकलिकादिवत् न
च पूर्ब्बतन्तव एव तन्त्वन्तरसहकारात् पूर्ब्ब-
पटे सत्येव पटान्तरमारभ्यमिति वाच्यम्
मूर्त्तयोः समानदेशताविरोधात् एकदा नाना-
द्रव्यस्य तत्रानुपलभ्य बाधितत्वाच्च पूर्ब्बद्रव्यस्य
प्रतिबन्धकस्य विनाशे द्रव्यान्तरोत्पत्तिरित्यवश्य-मभ्युपेयत्वात् ॥” इति सिद्धान्तमुक्तावली ॥)

**परिमार्ग्यं**, त्रि, (परि + मृज् + ण्यत् । “चजोः कु घिण्यतोः ।” ७ । ३ । ५२ । इति जस्यगः ।
“मृजेर्वृद्धिः ।” ७ । २ । ११४ । इति वृद्धिः ।)
परिमृज्यम् । परिशोधनीयम् ॥

**परिमार्जनं**, क्ली, (परि + मृज् + ल्युट् ततो वृद्धिः ।)
खाद्यभेदः । मधुमस्तकम् । यथा, शब्दचन्द्रिका ।
“मधुतैलघृतैर्मध्ये वेष्टिताः समिताश्च ये ।
मधुमस्तकमुद्दिष्टं तस्याख्या परिमार्ज्जनम् ॥”
परिशोधनञ्च ॥

**परिमितं**, त्रि, (परि + मा + क्तः । परितो मितं वा ।) युक्तम् । इति त्रिकाण्डशेषः ॥ परिमाण-
विशिष्टम् । यथा, उद्भटः ।
“द्रविणं परिमितमधिक-
व्ययिनं जनमाकुली कुरुते ।

| | | |
|---|---|---|
| सुरतादिविमर्द्दंत्थिविलेपनकुङ्कमादिगन्धः । इत्य- | | क्षीणाञ्चलमिव पीन-<br>स्तनजघनायाः कुलीनायाः ॥"<br>**परिमृज्यं**, त्रि, (परि + मृज् + "मृजेर्व्विभाषा ।"<br>३ । १ । ११३ । इति क्यप् ।)<br>परिमार्ग्यम् । इति<br>व्याकरणम् ॥<br>**परिमेयं**, त्रि, (परिमीयते इति । परि + मा + "अचो<br>यत् ।" ३ । १ । ९७ । इति यत् ।<br>"ईद्यति ।"<br>६ । ४ । ६५ । इति ईत् ततो गुणः ।)<br>परि- |

माणविशिष्टम् । परिमातव्यम् ।
परिमाणीयम् ।
(यथा, रघुः । १ । ३७ ।
“माभूदाश्रमपीडेति परिमेयपुरःसरौ ।
अनुभावविशेषात्तु सेनापरिगताविव ॥”)

**परिमोक्षः**, पुं, (परितो मोक्षः परित्यागः ।) मल-
त्यागः । यथा, श्रीभागवते २ । ६ । १० ।
“पायुर्यमस्य मित्रस्य परिमोक्षस्य नारद ! ।
हिंसाया निरृतेर्म्मृत्योर्निरयस्य गुदं स्मृतम् ॥”
“परिमोक्षस्य मलत्यागस्य । पायुरिन्द्रियं गुदं
स्थानम् । निरृतेरलक्ष्म्याः ।” इति तट्टीकायां
श्रीधरस्वामी ॥ * ॥ परित्राणम् । यथा, विष्णु-
धर्म्मोत्तरे ।
“सर्व्वाशुभानां परिमोक्षकारि
संपूजनं देववरस्य विष्णोः ।”
इति तिथ्यादितत्त्वम् ॥
(विमुक्तिः । यथा, महाभारते । १ । २ । १६० ।
“कर्णस्य परिमोक्षोऽत्र कुण्डलाभ्यां
पुरन्दरात् ॥”)

**परिमोषी**, [न्] त्रि, (परिमुष्णातीति । परि +
मुष् + णिनिः ।) परिमोषणशीलः । चौरः ।
(इति हेमचन्द्रः । ३ । ४६ ॥)

**परिरम्भः**, पुं, (परिरम्भ्यते इति । परि + रभि +
घञ् । “रभेरशब्लिटोः ।” ७ । १ । ६३ । इति
नुम् ।) आलिङ्गनम् । इत्यमरः । ३ । २ । ३० ॥
(यथा, गीतगोविन्दे । ५ । ७ ।
“ध्यायंस्त्वामनिशं जपन्नपि
तवैवालापमन्त्रावलीं
मूयस्त्वत्कुचकुम्भनिर्भरपरीरम्भामृतं
वाञ्छति ॥”)

कुभार्य्याञ्च कुमित्रञ्च कुराजानं कुसौहृदम् ।
कुबन्धुञ्च कुदेशञ्च दूरतः परिवर्ज्जयेत् ॥”
इति गरुडपुराणे ११३ अध्यायः ॥
(“यस्य वै भाषमाणस्य रुजत्यूर्द्ध्वमुरोभृशम् ।
अन्नञ्च च्यवते भुक्तं स्थितञ्चापि न जीर्य्यति ॥
बलञ्च हीयते यस्य तृष्णा चाभिप्रवर्द्धते ।
जायते हृदि शूलञ्च तं भिषक् परिवर्ज्जयेत् ॥”
इति चरकेणेन्द्रियस्थाने षष्ठेऽध्याय उक्तम् ॥)

**परिवर्त्तः**, पुं, (परिवर्त्तनमिति । परि + वृत् + भावे
घञ् ।) विनिमयः । (यथा, रामायणे । २ । १०५ । २५ ।
“हृष्यन्त्यृतुमुखं दृष्ट्वा नवं नवमिवागतम् ।
ऋतूनां परिवर्त्तेन प्राणिनां प्राणसंक्षयः ॥”)
कूर्म्मराजः । अपवर्त्तनम् । इति मेदिनी ॥
युगान्तः । इति हेमचन्द्रः ॥ ग्रन्थविच्छेदः ।
इति जटाधरः ॥ मृत्युपुत्त्रस्य दुःसहस्यौरसेन
कलिकन्यानिर्म्माष्टिगर्भजाताष्टपुत्त्रान्तर्गततृतीय-
पुत्त्रः । (यथा, मार्कण्डेये । ५१ । २ ।
“अष्टौ कुमाराः कन्याश्च तथाष्टावतिभीषणाः ।
दन्ताकृष्टिस्तथोक्तिश्च परिवर्त्तस्तथापरः ॥”
तन्नामनिरुक्तिर्यथा तत्रैव १४ श्लोके ।
“अन्यगर्भे परान् गर्भान् सदैव परिवर्त्तयन् ।
रतिमाप्नोति वाक्यञ्च विवक्षोरन्यदेव यत् ॥
परिवर्त्तकसंज्ञोऽयं तस्यापि सितसर्षपैः ।
रक्षोघ्नमन्त्रजप्यैश्च रक्षां कुर्व्वीत तत्त्ववित् ॥”)
तस्य पुत्त्रयोः कर्म्मादि यथा, --
“परिवर्त्तसुतौ द्वौ तु विरूपविकृतौ द्विज ! ।
तौ तु वृक्षाद्रिपरिखाप्राकाराम्भोधिसंश्रयौ ॥
गुर्व्विण्याः परिवर्त्तन्तौ कुरुतः पादपादिषु ।
क्रोष्टुके ! परिवर्त्तः स्याद्गर्भस्यान्योदरात्ततः ॥
न वृक्षञ्चैव नैवाद्रिं न प्राकारं पयोनिधिम् ।
परिखां न समाक्रामेदबला गर्भधारिणी ॥”
इति मार्कण्डेयपुराणे । ५१ । ६२ -- ६४ ॥

**परिवर्त्तनं**, क्ली, (परि + वृत् + ल्युट् ।) परिवर्त्तः ।
तत्पर्य्यायः । परिदानम् २ विनिमयः ३ नैमेयः ४
व्यतिहारः ५ परावर्त्तः ६ वैमेयः ७ विमयः ८ ।
इति हेमचन्द्रः ॥ (यथा, रघुः । १९ । १३ ।
“अङ्कमङ्कपरिवर्त्तनोचिते
तस्य निन्यतुरशून्यतामुभे ।

अथ तस्याश्चिकित्सा ।
“परिवृत्तं घृताभ्यक्तं
सुस्विन्नमुपनाहयेत् ।
त्रिरात्रं पञ्चरात्रं वा वातघ्नैः
शाल्वणादिभिः ॥
ततोऽभ्यज्य शनैश्चर्म्म पाटयेत्
पीडयेन्मणिम् ।
प्रविष्टे चर्म्मणि मणौ
स्वेदयेदुपनाहयेत् ॥
दद्याद्वातहरान् वस्तीन्
स्निग्धान्यन्नानि भोजयेत् ।”
इति भावप्रकाशः ॥

**परिवसथः**, पुं, (परितो वसन्त्यत्र । परि + वस् +
उपसर्गे वसेरिति अथच् ।) ग्रामः । इति हेम-
चन्द्रः ४ । २७ ॥

**परिवहः**, पुं, (परि सर्व्वतोभावेन वहतीति । परि
+ वह् + अच् ।)
सप्तवाय्वन्तर्गतषष्ठवायुः । स
तु सुवहवायोरुपरिस्थितः । (यथा, सिद्धान्त-
शिरोमणौ ।
“भूवायुरावह इह प्रवहस्तदूर्द्ध्वः
स्यादुद्वहस्तदनुसंवहसंज्ञकश्च ।
अन्यस्ततोऽपि सुवहः
परिपूर्ब्बकाऽस्मात्
वाहः परावह इमे पवनाः प्रसिद्धाः
॥”)

**परिवादः**, पुं, (परिसर्व्वतो दोषोल्लेखेन वादः
कथनम् । परि + वद् + भावे घञ् ।) अपवादः ।
(यथा, महानिर्व्वाणतन्त्रे । १ । ४२ ।
“नीचसंसर्गनिरताः
परवित्तापहारकाः ।
परनिन्दापरद्रोह-परिवादपराः खलाः
॥” * ॥

**परिवत्सरः**, पुं, वत्सरः । इति जटाधरः ॥ वत्सर-

विशेषः । यथा, मलमासतत्त्वे ।

"शकाब्दात् पञ्चभिः शेषात् समाद्यादिषु वत्सराः ।

सम्परीदानुपूर्ब्बाश्च तथोदापूर्ब्बका मताः ॥"

"परिपूर्ब्बे तथादानं यवानाञ्च द्विजोत्तमाः ॥"

इति विष्णुधर्म्मोत्तरम् ॥

**परिवर्ज्जनं**, क्ली, (परिवर्ज्यते परित्यज्यते प्राणैर्य्येन ।

परि + वृज् + णिच् + ल्युट् ।) मारणम् । इत्य-

मरः । २ । ८ । ११४ ॥ (भावे ल्युट् ।) परित्यागः ।

यथा, उद्भटः ।

"गोप्यो न दोषो मथुराङ्गनानां

धूर्त्तस्य कृष्णस्य हि रीतिरेषा ।

विपर्य्ययो येन कृतः स्वपित्रो-

स्तस्योपपत्नीपरिवर्ज्जनं किम् ॥"

परिवर्ज्जनीया यथा, कौर्म्मे उपरिभागे १५ अः ।

"एकशय्यासनं पंक्तिभाण्डपक्वान्नमिश्रणम् ।

याजनाध्ययने योनिस्तथैव सहभोजनम् ॥

सहाध्यायस्तु दशमः सहयाजनमेव च ।

एकादश समुद्दिष्टा दोषाः साङ्कर्य्यसञ्ज्ञिताः ॥

समीपे चाप्यवस्थानात् पापं संक्रमते नृणाम् ।

तस्मात् सर्व्वप्रयत्नेन साङ्कर्य्यं परिवर्ज्जयेत् ॥"

"यस्मिन्देशे न सम्मानो न प्रीतिर्न च बान्धवाः ।

न च विद्यागमः कश्चित्तं देशं परिवर्ज्जयेत् ॥"

इति चाणक्यम् ॥

"ब्राह्मणं बालिशं क्षत्त्रमयोद्धारं विशं जडम् ।

शूद्रमक्षरसंयुक्तं दूरतः परिवर्ज्जयेत् ॥

बल्लकी च हृदयङ्गमस्वना

वल्गुवागपि च वामलोचना ॥")

**परिवर्त्तिका**, स्त्री, मेढ्रजातक्षुद्ररोगविशेषः । तल्ल-

क्षणमाह ।

"मर्द्दनात् पीडनाद्वापि तथैवाप्यभिघाततः ।

मेढ्रचर्म्म यदा वायुर्भजते सर्व्वतश्चरन् ॥

तदा वातोपसृष्टन्तु तच्चर्म्म परिवर्त्तते ।

सवेदनं सदाहञ्च पाकञ्च व्रजति क्वचित् ॥

मणेरधस्तात् कोषस्तु ग्रन्थिरूपेण लम्बते ।

मारुतागन्तुसम्भूतां विन्द्यात्तां परिवर्त्तिकाम् ।

सकण्डुः कठिना वापि सैव श्लेष्मसमन्विता ॥"

अस्यां वातजायामपि पित्तानुबन्धो बोद्धव्यो

दाहपाकभावात् । कोषः चर्म्मकोषः ॥ * ॥

परि + वद् + णिच् + करणे घञ् ।) वीणा-

वादनवस्तु । इति मेदिनी ॥

**परिवादकः**, त्रि, (परिवदतीति । परि + वद् +

ण्वुल् ।) परिवादकर्त्ता । इति व्याकरणम् ॥

**परिवादिनी**, स्त्री, (परिवदति स्वरानिति । परि

+ वद् + "सुप्यजातौ णिनिस्ताच्छील्ये ।" ३ । २ ।

७८ । इति णिनिः स्त्रियां ङीप् ।) सप्ततन्त्री-

युक्तवीणा । इत्यमरः ॥ (यथा, माघे । ६ । ९ ।

"कलतया वचसः परिवादिनी

स्वरजिता रजितावशमाययुः ॥")

परिवादविशिष्टा च ॥

**परिवादी**, [न्] त्रि, (परिवदतीति परिवदितु

शीलमस्य वा । परि + वद् + शीलार्थे कर्त्तरि

णिनिः ।) परिवादकर्त्ता । (यथा, महाभारते ।

७ । ७१ । २६ ।

"साधूनसूयतां ये च ये चापि परिवादिणाम् ॥"

परिवादो निन्दा विद्यतेऽस्य ।) परिवाद-

विशिष्टः । इति परिवादशब्दादस्त्यर्थे इनिः ॥

**परिवापः**, पुं, (परिसर्व्वत उप्यते इति । परि + वप्

+ घञ् ।) पर्य्युप्तिः । वपनम् । जलस्थानम् ।

परिच्छदः । इति मेदिनी । पे २५ ॥

**परिवापनं**, क्ली, (परि + वप् + णिच् + ल्युट् ।)

मुण्डनम् । इति हेमचन्द्रः ॥

**परिवापितं**, त्रि, (परिवाप्यते स्म । परि + वप +

| | | णिच् + क्त ।) मुण्डितम् । इत्यमरः । ३ । १ । ८५ ॥<br>**परिवारः**, पुं, (परिव्रियतेऽनेन । परि + वृ + करणे घञ् ।) परिजनः । (यथा, रघुः । ६ । १० ।<br>"मनुष्यवाह्यं चतुरस्रयान-<br>मध्यास्य कन्या परिवारशोभि । |
|---|---|---|

विवेश मञ्चान्तरराजमार्गं
पतिंवरा क्लृप्तविवाहवेषा ॥”)
खड्गकोषः । परिच्छदः । इति मेदिनी । रे । २८० ॥

**परिवाहः**, पुं, (पर्य्यह्यते तृणादिकं येन । परि + वह् + घञ् ।) परीवाहः । जलोच्छासः । इत्य-
मरटीकायां रमानाथः ॥ (यथा, रघुः । ८ । ७४ ।
“स विवेश पुरीं तया विना
क्षणदापायशशाङ्कदर्शनः ।
परिवाहमिवावलोकयन्
स्वशुचः पौरबधूमुखाश्रुषु ॥”)

**परिविण्णः**, पुं, (परि + विद् + क्तः ।) परिवित्तिः । यथा, उद्वाहतत्त्वे ।
“ज्येष्ठेऽनिर्विष्टे कनीयान् निर्व्विषन् परिवेत्ता भवति
परिविन्नो ज्येष्ठः परिवेदनीया कन्या परिदायी
दाता परिकर्त्ता याजकः ते सर्व्वे पतिताः ॥”

**परिवित्तिः**, पुं, (परिवर्ज्जनं विन्दति लभते इति । परि + विद् + क्तिच् ।) परिवेत्तृज्येष्ठः । कृत-
विवाहस्यानूढज्येष्ठभ्राता । इत्यमरः । २ । ७ । ५६ ॥
(यथा, मनुः । ३ । १७१ ।
“दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्ब्बजः ॥”)

**परिविन्दन्**, [त्] पुं, (परित्यज्य ज्येष्ठं भ्रातरं विन्दति अग्न्याधानभार्य्यादिकं लभते इति । विद् + शतृ ।) परिवेदनकर्त्ता । यथा, --
“देशान्तरस्थक्लीवैकवृषणानसहोदरान् ।
वेश्याभिसक्तपतितशूद्रतुल्यातिरोगिणः ॥
जडमूकान्धवधिरकुब्जवामनकुष्ठकान् ।
अतिवृद्धानभार्य्यांश्च कृषिसक्तान् नृपस्य च ॥
धनवृद्धिप्रसक्तांश्च कामतः कारिणस्तथा ।
+ वृत् + भावे क्तिन् । परिवर्त्तनम् । यथा, महाभारते । १४ । १८ । २९ ।
“तस्य कालपरीमाणमकरोत् स पितामहः ।
भूतेषु परिवृत्तिञ्च पुनराघृत्तिमेव च ॥”
अर्थालङ्कारविशेषः । यथा, साहित्यदर्पणे । १० । १०५ ।
“परिवृत्तिर्विनिमयः समन्यूनाधिकैर्भवेत् ॥”
क्रमेणोदाहरणं यथा, --
“दत्त्वा कटाक्षमेणाक्षी जग्राह हृदयं मम ।
मया तु हृदयं दत्त्वा गृहीतो मदनज्वरः ॥”
अत्र प्रथमेऽर्द्धे समेन द्वितीयेऽर्द्धे न्यूनेन ॥)

**परिवृहितं**, त्रि, सर्व्वतोभावेन वृद्धिविशिष्टम् । सर्व्वतोभावेनोद्यमविशिष्टम् । इति वृहधातोः
कर्म्मणि क्तप्रत्ययनिष्पन्नम् ॥

**परिवेत्ता**, [ऋ] पुं, (परित्यज्य ज्येष्ठं भ्रातरं विन्दति भार्य्यामग्न्यादिकं वा लभते इति । विद
लाभे + “ण्वुल्तृचौ ।” ३ । १ । १३३ । इति
तृच् ।) अनूढज्येष्ठे कृतविवाहकनिष्ठः । इत्युद्-
वाहतत्त्वम् ॥ (यथा, मनुः । ३ । १७१ ।
“दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवृत्तिस्तु पूर्ब्बजः ॥”)

**परिवेदनं**, क्ली, (परि + विद् + ल्युट् ।) विवाहः । अग्न्याध्यानम् । यथा, --
“क्लीवे देशान्तरगते पतिते भिक्षुकेऽपि वा ।
योगशास्त्राभियुक्ते च न दोषः परिवेदने ॥”
इत्युद्वाहतत्त्वे शातातपः ॥
सर्व्वतोभावेन ज्ञानम् । (यथा, महाभारते । १४ । १६ । १२ ।
“स हि धर्म्मः सुपर्य्याप्तो ब्रह्मणः परिवेदने ।
न शक्यं तन्मया भूयस्तथा वक्तुमशेषतः ॥”)
इन्द्रयमवरुणनिरृतिश्वसनेशपितामहाग्नि-
कृताः ॥
धनदः करोति मेचकमन्योऽन्यगुणाश्रयेण चाप्यन्ये ।
प्रविलीयते मुहुर्मुहुरल्पफलः सोपि वायुकृतः ॥
चाषशिखिरजततैलक्षीरजलाभः स्वकाल-
सम्भूतः ।
अविकलवृत्तः स्निग्धः परिवेषः शिवसुभिक्षकरः ॥
सकलगगनानुचारी नैकाभः क्षतजसन्निभो रूक्षः ।
असकलशकटशरासनशृङ्गाटकवत्स्थितः पापः ॥
शिखिगलसमेऽतिवर्षं बहुवर्णे नृपवधो भयं धूम्रे ।
हरिचापनिभे युद्धान्यशोककुसुमप्रभे चापि ॥
वर्णेनैकेन यदा बहुलः स्निग्धः क्षुराभ्रकाकीर्णः ।
स्वर्त्तौ सद्यो वर्षं करोति पीतश्च दीप्तार्कः ॥
दीप्तविहङ्गमृगरुतः कलुषः सन्ध्यात्रयोत्थितो-
ऽतिमहान् ।
भयकृत्तडिदुल्काद्यैर्हतो नृपं हन्ति शस्त्रेण ॥
प्रतिदिनमर्कहिमांश्वोरहर्निशं रक्तयोर्नरेन्द्रवधः ।
परिविष्टयोरभीक्ष्णं लग्नास्तनभःस्थयोस्तद्वत् ॥
सेनापतेर्भयकरो द्विमण्डलो नातिशस्त्रकोप-
करः ।
त्रिप्रभृतिशस्त्रकोपं युवराजभयं नगररोधम् ॥
वृष्टिस्त्र्यहेन मासेन विग्रहोवा ग्रहेन्दुभनिरोधे ।
होराजन्माधिपयोर्जन्मर्क्षे वाशुभो राज्ञः ॥

कुलटोन्मत्तचौरांश्च परिविन्दन् न दुष्यति ॥”
इत्युद्वाहतत्त्वे छन्दोगपरिशिष्टम् ॥

**परिविष्णु**, क्ली, सर्व्वतो विष्णुः । विष्णुं विष्णुं परि इत्यव्ययीभावसमासे दुर्गादासः ॥

**परिवृहितं**, त्रि, वृहिधातोः कर्म्मणि क्तः । (ततः परितो वृंहितमिति ।) सर्व्वतोभावेन दीप्ति-विशिष्टम् । सर्व्वतोभावेन करिगर्ज्जितम् । सर्व्वतोभावेन वृद्धिविशिष्टम् । सर्व्वतोभावेन ध्वनिविशिष्टम् ॥

**परिवृढः**, त्रि, (परिसर्व्वतोभावेन वृंहति वर्द्धते इति । वृहि बृद्धौ + कर्त्तरि क्तः । निपातनात् हकारलोपो निष्ठातस्य ढत्वञ्च ।) अधिपः । । प्रभुः । इत्यमरः । ३ । १ । ११ ॥
(यथा, राजतरङ्गिण्याम् । ३ । २८२ ।
“जगत्परिवृढः प्रौढप्रीतिस्तं स फलार्थिनम् ।
कृत्वा प्रादुष्कृतवपुस्ततो भूयोऽप्यभाषत ॥”)

**परिवृतः**, त्रि, (परिसर्व्वतोभावेन वृतः ।) आवृतः । वेष्टितः । यथा, --
“व्यवहारान् नृपः पश्येत् सभ्यैः परिवृतोऽन्वहम् ।”
इति मिताक्षरा ॥

**परिवृत्तिः**, पुं, (परिवर्ज्जने वर्त्तते इति । परि + वृत् + क्तिच् ।) परिवित्तिः । इति हड्डः ॥ (परि सर्व्वतोभावेन विचारणम् । सर्व्वतोभावेन विद्य-मानत्वम् । सर्व्वतोभावेन लाभः ॥

**परिवेदिनी**, स्त्री, (परिवेदोऽस्त्यस्यामिति । इनि ङीप् च ।) परिवेत्तुः स्त्री । इति हेमचन्द्रः ॥

**परिवेदनीया**, स्त्री, (परिविद्यते या । परि + विद् अनीयर् ।) अनूढज्येष्ठे तत्कनिष्ठेन विवा-हिता कन्या । अस्य प्रमाणं परिदायिशब्दे द्रष्टव्यम् ॥

**परिवेशः**, पुं, (परितो विशतीति । परि + विश् + घञ् ।) वेष्टनम् । परिधिः । इनि मेदिनी । शे । ३७ ॥
“वातेन मण्डलीभूताः सूर्य्याचन्द्रमसोः कराः ।
मालाभा व्योम्नि तनुते परिवेशः प्रकीर्त्तितः ॥”
इति भरतधृतसाहसाङ्कः ॥

**परिवेषः**, पुं, (परितो विष्यते व्याप्यतेऽनेन । विषिरौ व्यापने + घञ् ।) परिवृतिः । परिधिः ।
(बृहत्संहितायाम् ३४ अध्याये तल्लक्षणादिक-मुक्तम् । तद्यथा, --
“सम्मूर्च्छिता रवीन्द्वोः किरणाः पवनेन मण्डली-भूताः ।
नानावर्णाकृतयस्तन्वभ्रे व्योम्नि परिवेषाः ॥
ते रक्तनीलपाण्डुरकापोताभ्राभशबलहरि शुक्लाः ।
परिवेषमण्डलगतो रवितनयः क्षुद्रधान्यनाश-करः ।
जनयति च वातवृष्टिं स्थावरकृषिकृन्निहन्ता च ॥
भौमे कुमारबलपतिसैन्यानां विद्रवोऽग्निशस्त्र-भयम् ।
जीवे परिवेषगते पुरोहितामात्यनृपपीडा ॥
मन्त्रिस्थावरलेखकपरिवृद्धिश्चन्द्रजे सुवृष्टिश्च ।
श्रुक्रे यायिक्षत्त्रियराज्ञां पीडा प्रियं चान्नम् ॥
क्षुदनलमृत्युनराधिपशस्त्रेभ्यो जायते भयं केतौ ।
परिविष्टे गर्भभयं राहौ व्याधिर्नृपभयञ्च ॥
युद्धानि विजानीयात् परिवेषाभ्यन्तरे द्वयो-र्ग्रहयोः ।
दिवसकृतः शशिनो वा क्षुदवृष्टिभयं त्रिषु प्रोक्तम् ।
याति चतुर्षु नरेन्द्रः सामात्यपुरोहितो वशं मृत्योः ।
प्रलयमिव विद्धि जगतः पञ्चादिषु मण्डलस्थेषु ॥
ताराग्रहस्य कुर्य्यात् पृथगेव समुत्थितो नरेन्द्र-वधम् ।
नक्षत्राणामथवा यदि केतोर्नोदयो भवति ॥
विप्रक्षत्त्रियविट्शूद्रहा भवेत् प्रतिपदादिषु क्रमशः ।
श्रेणीपुरकोशानां पञ्चम्यादिष्वशुभकारी ॥
युवराजस्याष्टम्यां परतस्त्रिषु पार्थिवस्य दोष-करः ।
पुररोधो द्वादश्यां सैन्यक्षोभस्त्रयोदश्याम् ॥
नरपतिपत्नीपीडां परिवेषोऽभ्युत्थितश्चतुर्द्दश्याम् ।

कुर्य्यात्त् पञ्चदश्यां पीडां मनुजाधिपस्यैव ॥
नागरकाणामभ्यन्तरस्थितायायिनाञ्च
वाह्यस्था ।
परिवेषमध्यरेखा विज्ञेया क्रन्दसाराणाम् ॥
रक्तः श्यामो रूक्षश्च भवति येषां पराजय-
स्तेषाम् ।
स्निग्धः श्वेतो द्युतिमान् येषां भागो जय-
स्तेषाम् ॥”)
परिवेषणम् । इति हेमचन्द्रः ॥

**परिवेषकः**, पुं, (परिवेषतीति । परि + विष् +

ण्वुल् ।) परिवेष्टा । परिवेषणकर्त्ता । तस्य
लक्षणं यथा, --
“स्नातश्चन्दनचर्च्चितः सुवसनः स्रग्वी
प्रसन्नाननः
स्पष्टात्मा सुभगः प्रसन्नहृदयः
श्रीकान्तपूजारतः ।
स्वामिस्नेहपरःस्वकार्य्यनिपुणः प्रौढो
वदान्यःशुचि-
र्विप्रो वा परिवेषकस्तु कुलजश्चान्योऽपि
वा
भूपतेः ॥”
इति पाकराजेश्वरः ॥

**परिवेषणं**, क्ली, (परि + विष् + णिच् + ल्युट् ।)
वेष्ट-

नम् । भोजनार्थं भोजनपात्रे अन्नादेर्दानम् ।
अथ श्राद्धे परिवेषणं मनुः ।
“पाणिभ्यान्तूपसंगृह्य स्वयमन्नस्य वर्द्धितम्
।
विप्रान्तिके पितॄन् ध्यायन्
शनकैरुपनिक्षिपेत् ॥
अन्नस्येति तृतीयार्थे षष्ठी वर्द्धितं पूरितं
पात्र-
मिति शेषः । उपनिक्षिपेत् परिवेषणार्थम् ।
तथा च पाकस्थाल्या आकृष्य प्रथमं
भोजन-
पात्रे न देयं किन्तु स्थाल्यादिकं पाणिभ्यां
पात्र-
समीपे भूमौ संस्थाप्य पश्चात् पाणिभ्यां
पात्रा-

+ ण्वुल् । स्त्रियां टाप् अत इत्वञ्च ।) परि-
वेषणकर्त्री । तस्या लक्षणं यथा, --
“स्नाता विशुद्धवसना नवधूपिताङ्गी
कर्पूरसौरभमुखी नयनाभिरामा ।
विम्बाधरा शिरसि वद्धसुगन्धिपुष्पा
मन्दस्मिता क्षितिभृतां परिवेषिका स्यात्
॥”
इति पाकराजेश्वरः ॥

**परिवेष्टितं**, त्रि, सर्व्वतोभावेन वेष्टितम् । तत्-

पर्य्यायः । परिक्षिप्तम् २ वलयितम् ३
निवृतम्
४ परिष्कृतम् ५ परीतम् ६ । इति
हेमचन्द्रः ॥

**परिव्याधः**, पुं, (परि सर्व्वतोभावेन विध्यतीति ।

परि + व्यध्यौ ताडे + “श्याद्व्यधेति ।”
३ । १ ।
१४१ । इति णः ।) अम्बुवेतसः ।
द्रुमोत्पलः ।
इत्यमरः । २ । ४ । ३०, ६० ॥

**परिव्रज्या**, स्त्री, (परि + व्रज + भावे क्यप् । स्त्रियां

टाप् ।) तपस्या । इति हेमचन्द्रः । १ ।
८१ ।
(इतस्ततो भ्रमणम् । यथा, मनुः । १० ।
५२ ।
“वासांसि मृतचेलानि भिन्नभाण्डेषु
भोजनम् ।
कार्ष्णायसमलङ्कारःपरिव्रज्या च
नित्यशः ॥”
“लौहवलयादि चालङ्करणं सर्व्वदा च
भ्रमण-
शीलत्वम् ॥” इति कुल्लूकभट्टः ॥)

**परिव्राजः**, पुं, (परित्यज्य सर्व्वान् विषयभोगान्

गृहाश्रमाद् व्रजतीति । परि + व्रज् +
संज्ञायां
कर्त्तरि घञ् ।) परिव्राट् । इत्यमरटीकायां
रमानाथः ॥

**परिव्राजकः**, पुं, (परिव्राज + स्वार्थे कन् । परिव्रज-

अङ्के स्थितापि युवतिः परिरक्षणीया
शास्त्रे नृपे च युवतौ च कुतो वशित्वम् ॥”
इत्युद्भटः ॥

**परिशिष्टं**, क्ली, (परितः शिष्टः । शिष् + क्तः ।)

परिशेषविशिष्टम् । अवशिष्टार्थबोधकग्रन्थः ।
इति हेमचन्द्रः । २ । १७१ ॥ (यथा, छान्दोग-
परिशिष्टम् । गृह्यपरिशिष्टमित्यादि ॥)

**परिशुष्कं**, क्ली, (परितः शुष्कम् । शुष् + क्तः ।)

मांसव्यञ्जनभेदः । यथा, --
“मांसं बहुघृतैर्भृष्टं सिक्तञ्चेच्चाम्बुना मुहुः ।
जीरकाद्यैः समायुक्तं परिशुष्कं तदुच्यते ॥”
इति शब्दचन्द्रिका ॥
सर्व्वतोनीरसे त्रि ॥ (यथा, हेः रामायणे ।
२ । ५९ । ५ ।
“उपतप्तोदका नद्यः पल्वलानि सरांसि च ।
परिशुष्कपलाशानि वनान्युपवनानि च ॥”)

**परिशोधः**, पुं, (परि + शुध् + भावे घञ् ।) परि-

शोधनम् । सर्व्वतोभावेन शुद्धिः ॥

**परिशोषः**, पुं, (परि + शुष् + भावे घञ् ।)

सर्व्वतोभावेन शुष्कता । (यथा, गोः रामा-
यणे । ४ । १५ । ३४ ।
“वाय्वर्कपरिपीताम्बुर्विपरिम्लानपङ्कजः ।
तडाग इव कालेन परिशोषं गमिष्यति ॥”)

**परिश्रमः**, पुं, (परि + श्रम् + घञ् । न वृद्धिः ।)

परिश्रान्तिः । तत्पर्य्यायः । श्रमः २ क्लमः ३
क्लेशः ४ प्रयासः ५ आयासः ६ व्यायामः ७
।
इति हेमचन्द्रः । २ । २३३ ॥ (यथा, रघुः ।
१ । ५८ ।
“तमातिथ्यक्रियाशान्त-रथक्षोभपरिश्रमम् ।
पप्रच्छ कुशलं राज्ये राज्याश्रममुनिं मुनिः ॥”)

**परिश्रयः**, पुं, (परिश्रयत्यस्मिन् इति । परि + श्रि

+ “एरच् ।” ३ । ३ । ५६ । इति अच् ।)
सभा । (भावे अच् ।) आश्रयः । इति मेदिनी ।
ये । १२२ ॥

**परिश्रान्तः**, त्रि, (परि + श्रम + कर्त्तरि क्तः ।)

न्तरिताभ्यां श्राद्धे परिवेषयेत् ।
उभाभ्यामपि
हस्ताभ्यामाकृष्य परिवेषयेदिति
मत्स्यपुरा-
णात् । यत्तु श्राद्धे परिवेषणन्तु दक्षिणपाणि-
मात्रेणैवाङ्गानभिधानादिति मैथिलोक्तं तन्न
।
एकेन पाणिना दत्तं शूद्रादत्तं न
भक्षयेदित्यादि
पुराणीयेन
एकपाणिदत्तशूद्रादत्तभक्षणनिषेधेन
तन्मात्रपरिवेषणस्यापि निषिद्धत्वात्
पाणिभ्या-
मपि पात्रान्तरितं कृत्वा देयम् ।
हस्तदत्ताश्च ये स्नेहा लवणं व्यञ्जनानि च
।
दातारं नोपतिष्ठन्ते भोक्ता भुङ्क्ते च
किल्विषम् ॥
तस्मादन्तरितं देयं पर्णेनाथ तृणेन वा ।
प्रदद्यान्न तु हस्तेन नायसेन कदाचन ॥
इति वशिष्ठवचनेन सामान्यतोऽभिधानात्।
पितृ-
भक्तितरङ्गिण्यामप्येवम् । मनुः ।
गुणांश्च सूपशाकाद्यान् पयो दधि घृतं मधु
।
विन्यसेद्यत्नतः सम्यग्भूमावेव समाहितः ॥
आमिषं पानपात्रञ्च भोक्तुर्दक्षिणतो न्यसेत् ।
भक्ष्यं भोज्यञ्च विविधं मूलानि च फलानि
च ॥
हृद्यानि चैव मांसानि पानानि सुरभीणि च ।
उपनीय च तत् सर्व्वं शनकैः सुसमाहितः
॥
परिवेषयेत् प्रयतो गुणान् सर्व्वान् प्रचोदयन्
।
गुणान् उपकरणानि भूमावेव न तु
व्यञ्जनादि-
पात्राणि अन्नादि पात्रोपरि निक्षिपेत् ।” इति
श्राद्धतत्त्वम् ॥

**परिवेषिका**, स्त्री, (परिवेषति या । परि + विष्
तीति । परि + व्रज् + ण्वुल् वा ।) परिव्राट्
॥
(यथा, गोः रामायणे । ३ । ५५ । २ ।
“स परिव्राजकश्छद्मा महाकायशिरोधरः ।
प्रतिपेदे स्वकं रूपं रावणो राक्षसाधिपः
॥”)

**परिव्राजिः**, स्त्री, (परि + व्रज् + णिच् + इन् ।)
श्रावणी । इति राजनिर्घण्टः ॥ थुलकुडी
इति
भाषा ॥ (श्रावणीमण्डूकपर्णीशब्दयोरस्या
विशेषो ज्ञेयः ॥)

**परिव्राट्**, [ज्] पुं, (परित्यज्य सर्व्वं विषय-
भोगं गृहस्थाश्रमाद् व्रजति
गच्छतीति । परि + व्रज् + क्विप् दीर्घश्च
।)
चतुर्थाश्रमी । तत्पर्य्यायः । भिक्षुः २
कर्म्मन्दी ३
पाराशरी ४ मस्करी ५ । इत्यमरः । २ ।
७ । ४२ ॥
सन्न्यासी ६ श्रमणः ७ । इति जटाधरः
॥ परि-
व्राजकः ८ पराशरी ९ व्रजकः १० । इति
शब्द-
रत्नावली ॥ तस्य लक्षणं यथा,
गरुडपुराणे ।
“सर्व्वारम्भपरित्यागो भैक्ष्याश्यं
ब्रह्ममूलता ।
निष्परिग्रहताद्रोहसमताः सर्व्वजन्तुषु ॥
प्रियाप्रियपरिष्वङ्गे सुखदुःखाविकारिता ।
संवाह्याभ्यन्तरं शौचं
सुखदुःखाविकारिता ॥
सर्व्वेन्द्रियसमाहारो धारणा ध्याननित्यता
।
भावसंशुद्धिरित्येष परिव्राड्वर्य्य उच्यते
॥”

**परिव्राड्**, पुं, (परित्यज्य सर्व्वं विषय-
भोगं गृहस्थाश्रमाद् व्रजति
गच्छतीति । परि + व्रज् + क्विप् दीर्घश्च
।)
सर्व्वतोभावेन श्रान्तियुक्तः । (यथा, महा-
भारते । १ । ४९ । २६ ।
“परिश्रान्तो वयःस्थश्च षष्टिवर्षो जरान्वितः ।
क्षुधितः स महारण्ये ददर्श मुनिसत्तमम् ॥”
स्त्री । गायत्रीस्वरूपा भगवती । यथा, देवी-
भागवते । १२ । ६ । ९३ ।
“पावनी पादसहिता पेशला पवनाशिनी ।
प्रजापतिः परिश्रान्ता पर्व्वतस्तनमण्डला ॥”)

**परिश्रुतः**, त्रि, (परि + श्रु + क्तः ।) सर्व्वतोभावेन
श्रवणविशिष्टः ॥

**परिश्लेषः**, पुं, (परि + श्लिष + भावे घञ् ।)
आश्लेषः ॥

**परिषत्**, [द्] स्त्री, (पारतः सीदन्त्यस्याम् । पार-
+ सद् + अधिकरणे क्विप् । “सदिरप्रतेः ।”
८ । ३ । ६६ । इति षत्वम् ।) सभा । इत्य-
मरः । २ । ७ । १५ ॥ (यथा, गोः रामा-
यणे । २ । १३ । १६ ।

चतुर्थाश्रमी । तत्पर्य्यायः । भिक्षुः २
कर्म्मन्दी ३
पाराशरी ४ मस्करी ५ । इत्यमरः । २ ।
७ । ४२ ॥
सन्न्यासी ६ श्रमणः ७ । इति जटाधरः
॥ परि-
व्राजकः ८ पराशरी ९ व्रजकः १० । इति
शब्द-
रत्नावली ॥ तस्य लक्षणं यथा,
गरुडपुराणे ।
“सर्व्वारम्भपरित्यागो भैक्ष्याश्यं
ब्रह्ममूलता ।
निष्परिग्रहताद्रोहसमताः सर्व्वजन्तुषु ॥
प्रियाप्रियपरिष्वङ्गे सुखदुःखाविकारिता ।
संवाह्याभ्यन्तरं शौचं
सुखदुःखाविकारिता ॥
सर्व्वेन्द्रियसमाहारो धारणा ध्याननित्यता
।
भावसंशुद्धिरित्येष परिव्राड्वर्य्य उच्यते
॥”

**परिशङ्कनीयः**, त्रि, (परिशङ्क्यते इति । परि + शङ्क

+ अनीयर् ।) सर्व्वतोभावेन शङ्काविषयः
। यथा,
“शास्त्रं सुचिन्तितमपि प्रतिचिन्तनीय-
माराधितोऽपि नृपतिः परिशङ्कनीयः ।

"यादृशी परिषत् सीते ! दूतश्चायं तथाविधः ।
ध्रुवमद्यैव राजा मां यौवराज्येऽभिषेक्ष्यति ॥"
परियच्च खलु द्विविधा, ज्ञानवती मूढपरिषच्च,
सैव द्विविधा सती त्रिविधा पुनरनेन कारण-
विभागेन सुहृत्परिषत्, उदासीनपरिषत, प्रति-
निविष्टपरिषच्चेति । तत्र प्रतिनिविष्टायां परि-
षदि ज्ञानविज्ञानवचनप्रतिवचनशक्ति सम्पन्नायां
मूढायां वा न कथञ्चित् केनचित् सह जल्पो
विधीयते । मूढायान्तु सुहृत्परिषदि उदा-
सीनायां वा ज्ञानविज्ञानमन्तरेणाप्यदीप्तयशसा
महाजनद्विष्टेन सह जल्पो विधीयते । तद्विधेन
च सह कथयता आविद्धदीर्घसूत्रसङ्कलैर्वाक्य-
दण्डकैः कथयितव्यम् । अतिहृष्टं मुहुर्मुहुरुप-
हसता परं रूपयता च परिषदमाकारैर्बुव-
तश्चास्य वाक्यावकाशो न देयः । कष्टशब्दञ्च
ब्रुवन् वक्तव्यो नोच्यत इति । अथवा पुनर्हीना ते
प्रतिज्ञेति पुनश्चाह्वयमानः प्रतिवक्तव्यः । परि-
संवत्सरोभव शिक्षस्व तावत् । पर्य्याप्तमेतावत्ते ।
सकृदपि हि पारिक्षेपिकं निहतं निहतमाहु-
रिति । नास्य योगः कर्त्तव्यः कथञ्चिदप्येवं श्रेयसा
सह विगृह्य वक्तव्यमित्याहुरित्येके । नत्वेवं
ज्यायसा सह विग्रहं प्रशंसन्ति कुशलाः । प्रत्य-
वरेण तु सह समानाभिमतेन वा विगृह्य जल्पता
सुहृत्परिषदि कथयितव्यम् । अथवाप्युदासीनपरिषदि
अनवधानश्रवणज्ञानविज्ञानोप
धारणवचनशक्तिसम्पन्नायांकथयता चाव-
हितेन परस्य साद्गुण्यदोषबलमवेक्षितव्यम् ।
समवेक्ष्य च यत्रैनं श्रेष्ठं मन्येत नास्य तत्र
जल्पं योजयेत् अनाविकृतमयोगं कुर्व्वन् । यत्र
त्वेनमवरं मन्येत तत्रैवैनमाशु निगृह्णीयात् ।"
इति चरके विमानस्थानेऽष्टमेऽध्याये ॥)
परिषत्त्वं यथा, प्रायश्चित्तविवेके ।
णत्वञ्च ।) परिस्कन्दः ।
इत्यमरटीकायां राय-
मुकुटः ॥

**परिष्कारः**, पुं, (परिष्क्रियतेऽनेन । परि + कृ +
"सम्परिभ्यां करोतौ भूषणे ।" ६ । १ । १३७ ।
इति सुट् । "परिनिवीति ।" ८ । ३ । ७० ।
इति षत्वम् ।) अलङ्कारः ।
इत्यमरः । २ । ६ । १०१ ॥ संस्कारः । शुद्धिः ॥

**परिष्कृतः**, त्रि, (परिष्क्रियते स्म इति । परि + कृ
+ क्तः । "सम्परिभ्यामिति ।" सुट् । "परि-
निवीति ।" ८ । ३ । ७० । इति षत्वञ्च ।)
भूषितः । अलङ्कृतः । इत्यमरः । २ । ६ । १०० ॥
वेष्टितः । इति हेमचन्द्रः ॥
आहितसंस्कारः ।
इति वेदिशब्दटीकायां भरतः ॥

**परिष्कृतभूमिः**, स्त्री, वेदिः । परिष्कृता यज्ञार्थं
पशुबन्धनाय यज्ञपात्रासादनाय चाहितसंस्कारा
भूमिः । इत्यमरभरतौ ॥

**परिष्टोमः**, पुं, (परितः स्तूयते नानावर्णवत्त्वादिति ।
स्तु + मन् । ततः षत्वम् । केचित्तु "परेःस्तौतिं
प्रति अनुपसर्गत्वात् न षः ।" इत्युक्त्वा परि-
स्तोम इति कल्पयन्ति ।)
परिस्तोमः । इत्यमर-
टीकायां स्वामी ॥

**परिष्वङ्गः**, पुं, (परिष्वञ्जनम् । परि + स्वञ्ज + घञ् ।

**परिस्कन्दः**, पुं, (परिस्कन्दतीति । परि + स्कन्द +
अच् । "परेश्च ।" ८ । ३ । ७४ । इति पक्षे-
षत्वाभावः ।) परपुष्टः । परेण प्रतिपालितः ।
इत्यमरः । २ । १० । १८ ॥

**परिस्कन्नः**, पुं, (परि + स्कन्द + क्त । "परेश्च ।"
८ । ३ । ७४ । इति पक्षे षत्वाभावः ।) परि-
स्कन्दः । इत्यमरटीकायां रायमुकुटः ॥

**परिस्तोमः**, पुं, (परि स्तूयते प्रशस्यते नानावर्ण-
वत्त्वात् । परि + स्तु + "अत्तिस्तुस्विति ।" मन् ।
यद्वा परिगतः स्तोमोऽत्र वर्णस्तोमत्वात् ।)
गजपृष्ठस्थचित्रकम्बलः । इत्यमरः । २ । ८ । ४२ ॥
हातीर पिठेर झुल इति भाषा ॥

**परिस्पन्दः**, पुं, (परि + स्पन्द + अधिकरणे घञ् ।)
कुसुमप्रकरादेः पत्रावल्यादेश्च रचना । इत्य-
मरः । २ । ६ । १३७ ॥ परिकरः । परिवारः ।
इति हेमचन्द्रः । ३ । ३७९ ॥ (भावे + घञ् ।)
सर्व्वतोभावेन स्पन्दनञ्च ॥ (मर्द्दनम् । यथा,
महाभारते । १ । १५४ । ८ ।
"अहमेनं हनिष्यामि प्रेक्षन्त्यास्ते सुमध्यमे ! ।
नायं प्रतिबलो भीरु ! राक्षसापसदो मम ।
सोढुं युधि परिस्पन्दमथवा सर्व्वराक्षसाः ॥")

**परिस्पन्दनं**, क्ली, (परि सर्व्वतोभावेन स्पन्द्यते
इति । परि + स्पन्द + ल्युट् ।) सर्व्वतोभावेन कम्प-
नम् । यथा । कोऽपि परिस्पन्दनसाधनसाध्यः।
यथा गमनादिः । कोऽप्यपरिस्पन्दनसाधनसाध्यः ।
थथा अवस्थानादिः । इति गोयीचन्द्रः ॥

**परिस्पन्दमानः**, त्रि, (परिस्पन्दते इति । परि +
स्पन्द + शानच् ।) सर्व्वतोभावेन कम्पमानः ।
यथा । "अनवरतपरिस्पन्दमानापरिमित-
पवनादिपरमाणुचेतनसंयोगसन्तानान्तःपाति-
व्यक्तीनामविरतमेवोपरमात् ।" इति सामान्य-
लक्षणायां शिरोमणिः ॥

**परिस्यन्दः**, पुं, (परि + स्यन्द + भावे घञ् ।

“एकविंशतिसंख्याकैर्मीमांसान्यायपारगैः ।
वेदाङ्गकुशलैश्चैव परिषत्त्वं प्रकल्पयेत् ॥”

**परिषदः**, पुं, (परितः सीदतीति । परि + सद् +
अच् । “सदिरप्रतेः ।” ८ । ३ । ६६ । इति
षत्वम् ।) पारिषदः । अनुचरः । इति भरत-
कृतद्विरूपकोषः ॥

**परिषद्यः**, पुं, (परिषदमर्हतीति । परिषद् + यत् ।)
परिषद्वलः । इति भरतकृतद्विरूपकोषः ॥

**परिषद्वलः**, पुं, (परिषदस्यास्तीति । परिषद् +
“रजःकृष्यासुतिपरिषदो वलच् ।” ५ । २ ।
१११ । इति वलच् ।) सभासदः । पारिषदः ।
इति शब्दरत्नावली ॥ (यथा, भट्टिः । ४ । १२
।
“व्रातीनव्यालदीप्रास्तः सुत्वनः परिपूजयन् ।
परिषद्वलान्महाब्रह्मैराट नैकटिकाश्रमान् ॥”)

**परिष्कन्दः**, त्रि, (परिष्कन्दतीति । परि + स्कन्दिरौ
गतिशोषणयोः + पचाद्यच् । “परेश्च ।” ८ ।
३ । ७४ । इति षत्वम् ।) परिस्कन्दः । पर-
पुष्टः । इत्यमरटीकायां रमानाथः ॥

**परिष्कणः**, त्रि, (परि + स्कन्द + क्तः । दस्य तस्य
च नः । “परेश्च ।” ८ । ३ । ७४ । इति षत्वे
“परिनिवीति ।” ८ । ३ । ७० ।
इति षत्वम् ।)
आलिङ्गनम् । इत्यमरः । ३ । २ ।
३० ॥ (यथा,
गोः रामायणे । १ । ४ । ८८ ।
“अङ्गदप्रमुखानाञ्च हरीणां
रामदर्शनम् ।
हनूमतः परिष्वङ्गो राघवेण
महात्मना ॥”)

**परिसभ्यः**, पुं, सर्व्वतोभावेन सभायां साधुः
इत्यर्थे
यत् प्रत्ययः ॥ परिषद्यः ।
सभासदः ॥

**परिसरः**, पुं, (परिसरन्त्यत्र । परि + सृ +
“पुंसीति ।”
३ । ३ । ११८ । इति घः ।)
पर्य्यन्तभूः । नदी-
नगरपर्व्वतादेरुपान्तभूमिः ।
इत्यमरभरतौ ॥
(यथा, मेघदूते । ६९ ।
“मुक्ताजालैः
स्तनपरिसरच्छिन्नसूत्रैश्चहारै-
र्नैशो मार्गः सवितुरुदये सूच्यते
कामिनीनाम् ॥”)
मृत्युः । विधिः । इति मेदिनी । रे ।
२७९ ॥

**परिसर्पः**, पुं, (परि समन्तात् सर्पणम् । परि
+
सृप् + धञ् ।) परिक्रिया ।
परिजनादिना
वेष्टनम् । समन्तात् सर्पणम् ।
इत्यमरभरतौ ॥
(सर्पविशेषः । यथा, सुश्रुते
कल्पस्थाने
४ अध्याये । तत्र दर्व्वीकराः ।
“गवेधुकः परि-
सर्पः खण्डफणः ककुदः पद्मो
महापद्मः ॥” इति ।
कुष्ठविशेषः । यथा, तत्रैव
निदानस्थाने ५ म
अप्राणिकर्त्तृकत्वे वा षत्वम् ।) परिस्पन्दः । इत्य-
मरटीकायां भरतः ॥

**परिस्रुत्**, स्त्री, (परिस्रवतीति । परि + स्रु + क्विप्
तुक् च ।) वरुणात्मजा । मदिरा । इत्यमरः ।
२ । १० । ३९ ॥ (यथा, अथर्व्ववेदे । ३ । १२ ।
७ ।
“एमां परिस्रुतः कुम्भ आदध्नः कलशैरगुः ॥”
सर्व्वतोभावेन क्षरिते त्रि । यथा, ऋग्वेदे । ८ ।
३९ । १० ।
“त्वामापः परिस्रुतः परियन्ति स्वसेतवो नभन्ता-
मन्यके समे ॥”)

**परिस्रुतः**, त्रि, (परितः सूयते स्म । स्रु स्रवणे +
“गत्यर्थेति ।” ३ । ४ । ७२ । इति क्तः ।) स्रव-
युक्तः । सर्व्वतोभावेन क्षरितः । इति मेदिनी ।
ते । २०६ ॥ (वारुणीशब्देऽस्या विवृतिर्ज्ञातव्या ।
यथा, यजुर्व्वेदे । २ । ३४ ।
“ऊर्ज्ज वहन्तीरमृतं घृतं पयः कीलालं परि-
स्रुतम् ॥”)

**परिस्रुता**, स्त्री, (परितः स्रूयते स्मेति । परि + स्रु +
क्तः । स्त्रियां टाप् । अन्नादिभ्यः क्षरणेन जात-

अध्याये । “क्षुद्रकुष्ठान्यपि स्थूलारुष्कं महा-कुष्ठमेककुष्ठञ्चर्म्मदलं विसर्पः परिसर्पः सिध्म विचर्च्चिका किटिमं पामा रकसा चेति ॥”)

**परिसर्य्या**, स्त्री, (परिसरणमिति । सृ गतौ + “परि-

चर्य्या परिसर्य्येति ।” ३ । ३ । १०१ । इत्यस्य वार्त्तिं इति निपातनात् सिद्धम् ।) परीसारः । सर्व्वतोगमनम् । भूमौ सर्व्वतोभ्रमणम् । इति सर्व्वस्वम् ॥ अन्तसरणम् । इति केचित् । इत्य-मरभरतौ ॥

त्वात् तथात्वम् ।) वारुणी । मदिरा इति
मेदिनी । ते । २०६ ॥

**परिहारः**, पुं, (परिह्रियतेऽनेनेति । परि + हृ +

घञ् ।) अवज्ञा । अनादरः । इति शब्दरत्ना-
वली ॥ ("परिहारो नाम तस्यैव दोषवचनस्य
परिहरणं यथा नित्यमात्मनि शरीरस्थे जीव-
लिङ्गान्यपलभ्यन्ते तस्य चापगमान्नोपलभ्यन्ते
तस्मादत्यः शरीरादामा नित्यः शरीराच्चेति ।"
इति चरके विमानस्थानेऽष्टमेऽध्याये ॥ त्यागः ।
परिवर्ज्जनम् । यथा, राजतरङ्गिण्याम् । ४ ।
६७६ ।
"दुर्व्वृत्तस्य प्रभोरन्यत् परिहारात् न भेषजम्
॥"
गोपनम् । यथा, शकुन्तलायां १ म अङ्के ।
"कथमिदानीमात्मानं निवेदयामि कथं वा
आत्मनः परिहारं करोमि ॥" विजितद्रव्यादि-
कम् । यथा, मनुः । ७ । २०१ ।
"जित्वा सम्पूजयेत् देवान् ब्राह्मणांश्चैवधार्म्मि-
कान् ।
प्रदद्यात परिहारांश्च ख्यापयेदभयानि च ॥"
स्थानविशेषः । यथा, मनुः । ८ । २३७ ।
"धनुः शतं परीहारो ग्रामस्य स्यात् समन्ततः
॥"
अत्र कुल्लूकभट्टः । "चतुर्हस्तो धनुः शम्या
यष्टिस्तस्याः पातः प्रक्षेपो ग्रामसमीपे सर्व्वासु
दिक्षु चत्वारि हस्तशतानि त्रीन् वा यष्टिप्रक्षे-
पान् यावत् पशुप्रचारार्थं शस्यवपनादिसंरोध-
परिहारः कार्य्यः ॥")

**परिहार्य्यः**, पुं, (परि + हृ + ण्यत् ।) पारिहार्य्यः ।

वलयः । इति भरतद्विरूपकोषः ॥ परिहरणीये
त्रि ॥ (यथा, शकुन्तलायाम् १ मे अङ्के ।
"न परिहार्य्ये वस्तुनि पौरवाणां मनः प्रवर्त्तते
॥")

**परिहासः**, पुं, (परि + हस् + भावे घञ् ।) परि-

हसनम् । ठाट्टा इति भाषा । परीहासः ।
यथा । "परिहासः केलिमुखः
केलिर्द्रवननर्म्मणी ।"
इति त्रिकाण्डशेषः ॥ तत्पर्य्यायः । क्रीडः २

"भेदोपजापावुपधाधर्म्माद्यैर्यत् परीक्षणम् ।"
इत्यमरः । २ । ८ । २१ ॥
सर्व्वतोभावेन दर्शनञ्च ॥

**परीक्षा**, स्त्री, (परित ईक्ष्यतेऽनया । परि + ईक्ष

+ "गुरोश्च हलः ।" ३ । ३ । १०२ । इति
अः ।
ततष्टाप् ।) दिव्यम् । अथ दिव्यानि । तत्र
बृहस्पतिः ।
"धटोऽग्निरुदकञ्चैव विषं कोषश्च पञ्चमम् ।
षष्ठञ्च तण्डुलाः प्रोक्तं सप्तमं तप्तमाषकम् ॥
अष्टमं फालमित्युक्तं नवमं धर्म्मजं स्मृतम् ।
दिव्यान्येतानि सर्व्वाणि निर्द्दिष्टानि
स्वयम्भुवा ॥"
अथ किन्तद्दिव्यम् ।
तत्र मानुषप्रमाणानिर्णयस्यापि निर्णायकं
यत्त-
द्दिव्यमिति लोकप्रसिद्धम् । एतद्यद्यपि
शपथा-
नामस्ति तथापि कालान्तरनिर्णायकत्वेन
तेषां
भेदात् । अपिना मानुषप्रमाणसत्त्वेऽपि यत्र
धटादीनामङ्गीकारस्तत्रापितद्भवति इति
सूचि-
तम् । अतएव
लिखितसाक्षिभुक्तिलक्षणत्रिविध
मानुषप्रमाणभिन्नप्रमाणंयत्तद्दिव्यं प्रमाणं
तत
प्रमाणं न भावैकगोचरं किन्तु भावाभावा-
विशेषेण गोचरयतीति । तत्र महाभियोगेषु
दिव्यान्याह याज्ञवल्क्यः ।
"तुलाग्न्यापो विषं कोषो दिव्यानीह
विशुद्धये ।
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि
॥"
विशुद्धये सन्दिग्धार्थस्य सन्देहनिवृत्तये ।
महाभियोगेषु महापातकादिगुरुतराभियोगेषु
।
शीर्षकस्थ इति शीर्षकं प्रधानं व्यवहारस्य
चतुर्थपादो जयपराजयलक्षणः । तेन दण्डो

"स्नेहात्क्रोधाल्लोभतो वा भेदमायान्ति
साक्षिणः ।
विधिदृष्टस्य दिव्यस्य न भेदो जायते
क्वचित् ॥"
भेदः सत्याद्वैपरीत्यम् । यत्तु
कात्यायनवचनम् ।
"क्रिया न वैदिकी प्रोक्ता विद्यमानेषु
साक्षिषु ।
लेख्ये च सति वादेषु न स्याद्दिव्यं न
साक्षिणः ॥"
इति तद्गुणान्वितसाक्षिसत्त्वे । यथा
व्यासः ।
"मणिमन्त्रौषधिबलात्प्रदत्तं वा
विधानतः ।
विसंषदेद्दिव्यमपि न तु साक्षी गुणान्वितः
॥"
अतएव नारदः ।
"युक्तिष्वप्यवसन्नासु शपथैनैनमर्द्दयेत्
॥"
एनं विपर्य्ययमाणमर्थं अर्द्दयेत् पीडयेत् ।
निर्द्धारयेदिति यावत् ॥ * ॥ शपथानाह
नारदः ।
सत्यवाहनशस्त्राणि गोबीजकनकानि च
।
देवतापितृपादांश्च दत्तानि सुकृतानि च
॥
स्पृशेच्छिरांसि पुत्त्राणां दाराणां
सुहृदान्तथा ।
अभियोगेषु सर्व्वेषु कोषपानमथापि वा ॥
इत्येते शपथाः प्रोक्ता मनुना
स्वल्पकारणात् ॥"
बृहस्पतिः ।
"यथोक्तविधिना देयं दिव्यं
दिव्यविशारदैः ।
अयथोक्तप्रदत्तन्तु न शक्तं साध्यसाधने
॥
अदेशकालदत्तानि वहिर्वादिकृतानि च ।
व्यभिचारं सदा त्वेवं कुर्व्वन्तीह न
संशयः ॥"

देवना ३ । इति शब्दरत्नावली ॥ वर्क्करा ४ । इति जटाधरः ॥ (यथा, शकुन्तलायाम् २ ये अङ्के ।
"परिहासविजल्पितं सखे ! परमार्थेन न गृह्यतां वत्तः ॥")

**परीक्षकः**, त्रि, (परि + ईक्ष + ण्वुल् ।) निरूपकः ।

(यथा, पञ्चतन्त्रे । १ । ८४ ।
"परीक्षका यत्र न सन्ति देशे
नार्घन्ति रत्नानि समुद्रजानि ।
आभीरदेशे किल चन्द्रकान्तं
त्रिभिर्वराटैर्विपणन्ति गोपाः ॥")
तत्पर्य्यायः । कारणिकः २ । इत्यमरः । ३ । १ । ७ ॥
परीक्षते अवधारयति प्रमाणेन । यथा, वह्निना परीक्षकः स्वर्णस्य स्वर्णकारः । कारणैर्हेतुभि-श्चरति कारणिकः इति भरतः ॥

**परीक्षणं**, क्ली, (परि + ईक्ष + ल्युट् ।) परीक्षा ।

राज्ञा धर्म्मकामार्थभयैरमात्यादेर्भावतत्त्वनिरू-पणम् । इति भरतः ॥ यथा, --

लक्ष्यते तत्र तिष्ठतीति शीर्षकस्थः
तत्प्रयुक्तदण्ड-
भागीत्यर्थः । महाभियोगान् स्पष्टयति
कालिका-
पुराणम् ।
"परदाराभिशापे च चौर्य्यागम्यागमेषु च ।
महापातकशस्तेषु स्याद्दिव्यं नृपसाहसे ॥
प्रतिपत्तौ विवादे च पणस्य स्थापने कृते ।
तत्रैव स्थापयेद्दिव्यं शिरःपूर्ब्बं महीपतिः ॥"
परदाराभिशापे च बहवो यत्र वादिनः ।
शिरोहीणं भवेद्दिव्यमात्मनः शुद्धिकारणात्
॥"
पितामहः ।
"शिरःस्थायिविहीनानि दिव्यानि
परिवर्ज्जयेत् ।
चत्वारि तु धटादीनि कोषश्चैवाशिराः
स्मृतः ॥"
महाभियोगेतरेऽपि कोषमाह स्मृतिः । कोष-
मल्पे च दापयेत् ।
याज्ञवल्क्येनाभियोक्तुर्वादिनः
शिरोवर्त्तित्वाभिधानादभियोज्यस्य
दिव्यकर्त्तृत्वं
प्रतिपादितम् । व्यक्तमाह कात्यायनः ।
"न कश्चिदभियोक्तारं दिव्येषु विनियोजयेत्
।
अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदैः
॥"
प्रत्यर्थिस्वीकारेणार्थिनोऽपि दिव्यमाह
याज्ञ-
वल्क्यः ।
"रुच्या वान्यतरः कुर्य्यादितरो वर्त्तयेच्छिरः
।
विनापि शीर्षकान् कुर्य्यान्नृपद्रोहेऽथ पातके
॥"
इतरोऽभियुक्तः शिरः शारीरदण्डमर्थदण्डं
वा
वर्त्तयेत् स्वीकुर्य्यात् । बृहस्पतिः ।

वहिर्वादिकृतमभियोक्तारं विना कृतम् ।
एतच्च
प्रायिक्तं आत्मशुद्धिपराणामभियोक्तारं
विनापि
दिव्यविधानात् ।
तथा च नारदः ।
"राजभिः शङ्कितानाञ्च निर्द्दिष्टानाञ्च
दस्युभिः ।
आत्मशुद्धिपराणाञ्च देयं दिव्यं शिरो
विना ॥ * ॥"
अथ दिव्यदेशाः । कात्यायनः ।
"इन्द्रस्थानेऽभिशस्तानां महापातकिनां
नृणाम् ।
नृपद्रोहप्रवृत्तानां राजद्वारे प्रयोजयेत् ॥
प्रातिलोम्यप्रसूतानां दिव्यं देयं चतुष्पथे
।
अतोऽन्येषु च कार्य्येषु सभामध्ये
विदुर्बुधाः ॥"
इन्द्रस्थाने इन्द्रध्वजस्थाने ॥ * ॥
अथ दिव्यकालाः । पितामहः ।
"चैत्रो मार्गशिराश्चैव वैशाखश्च तथैव हि
।
एते साधारणा मासा
दिव्यानामविरोधिनः ॥
धटः सर्व्वर्त्तुकः प्रोक्तो वाते वाति
विवर्ज्जयेत् ।
अग्निः शिशिरहेमन्तवर्षासु परिकीर्त्तितः
॥
शरद्ग्रीष्मे तु सलिलं हेमन्ते शिशिरे
विषम् ।
कोषस्तु सर्व्वदा देयस्तुला स्यात्
सार्व्वकालि-
कीति ॥"
मिताक्षरायां नारदः ।
"न शीते तोयशुद्धिः
स्यान्नोष्णकालेऽग्निशोधनम् ।
न प्रावृषि विषं दद्यात् प्रवाते न तुलां
नृप ! ॥"
नारदः ।
"पूर्ब्बाह्णे सर्व्वदिव्यानां प्रदानं
परिकीर्त्तितम् ।

| | | |
|---|---|---|
| | | नापराह्णे न सन्ध्यायां न मध्याह्ने कदाचन ॥" शीते हेमन्तशिशिरवर्षासु। उष्णकाले ग्रीष्म- शरदोः। वर्षासु विषनिषेधश्चतुर्यवातिरिक्तपरः। वषे चतुर्यवा मात्रा इति वक्ष्यमाणनारदवचनात्। तण्डुलादीनान्तु विशेषानभिधानात् सार्व्वकालि- |

कत्वम् । अत्र विषे विशेषतो वर्षानिषेधात् वक्ष्य-
माणवचने सिंहस्थरवावेव परीक्षामात्रनिषे-
धाच्चदिव्यान्तरं सिंहेतरत्र वर्षास्वपि कुर्व्वीत ।
व्यतोयास्यायने हरौ सुप्ते सर्व्वकर्म्माणि वर्ज्जये-
दित्यस्य न विषयः । ज्योतिषे ।
निंहस्थे मकरस्थे च जीवे चास्तमिते तथा ।
मलमासे न कर्त्तव्या परीक्षा जयकाङ्क्षिणा ॥
रविशुद्धो गुरौ चैव न शुक्रेऽस्तङ्गते पुनः ।
"सिंहस्थे च रवौ नैव परीक्षा शस्यते बुधैः ॥
नाष्टम्यां न चतुर्द्दश्यां प्रायश्चित्तपरीक्षणे ।
न परीक्षा विवाहश्च शनिभौमदिने तथा ॥
रविशुद्धौ गुरौ चैवेत्यत्र शस्यत इति शेषः ॥
तथा च दीपिकायाम् ।
"नो शुक्रास्तेऽष्टमेऽर्के गुरुसहितरवी जन्ममासे-
ऽष्टमेन्दौ
विष्टौ मासे मलाख्ये कुजशनिदिवसे जन्म-
तारासु चाथ ।
नाडीनक्षत्रहीने गुरुरविरजनीनाथतारा-
विशुद्धौ
प्रातः कार्य्या परीक्षा द्वितनुचरगृहांशोदये
शस्तलग्ने ॥" * ॥
पितामहः ।
"प्रत्यक्षं दापयेद्दिव्यं राजा वाधिकृतोऽपि वा ।
वाह्मणानां श्रुतवतां प्रकृतीनान्तथैव च ॥"
ब्राह्मणानां प्रकृतीनाञ्च प्रत्यक्षं दिव्यं दापये-
दित्यन्वयः । प्रकृतयस्तु ।
"स्वाम्यमात्यः मुहृत् कोषो राष्ट्रदुर्गबलानि च ।
राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि चेति
अमरसिंहोक्ताः ॥ * ॥
अथ दिव्यविशेषाधिकारिणः । नारदः ।
"ब्राह्मणस्य धटो देयः क्षत्त्रियस्य हुताशनः ।
रणेषु मार्गशिरश्चैत्रवैशाखेषु स्त्र्यादीनां सर्व्व-
दिव्यसमवधानविधाने नियमार्थकतयार्थवत् । न
च सर्व्वकालं स्त्रीणान्तुलैवेति ।
"स्त्रीणान्तु न विषं प्रोक्तं न चापि सलिलं स्मृतम् ।
धटकोषादिभिस्तासामन्तस्तत्त्वंविचारयेत् ॥"
इति विषसलिलव्यतिरिक्तधटकोषादिभिः शुद्धि-
विधानात् । एवं बालादिष्वपि योजनीयम् ।
तथा ब्राह्मणादीनामपि न सार्व्वकालिकस्तुलादि-
नियमः ।
"सर्व्वेषामेव वर्णानां कोषाच्छुद्धिर्विधीयते ।
सर्व्वाण्येतानि सर्व्वेषां ब्राह्मणस्य विषं विना ॥"
इति पितामहस्मरणात् ।
तस्मात् साधारणे काले बहुदिव्यसमवधाने
तुलादिनियमार्थमेवेदं वचनम् । कालान्तरे तु
तत्तत्कालविहितं सर्वेषाम् । तथा हि वर्षा-
स्वग्निरेव सर्व्वेषां हेमन्तशिशिरयोस्तु क्षत्त्रिया-
दीनां त्रयाणां अग्निविषयोर्व्विकल्पः ब्राह्मणस्य
तु अग्निरेव न कदाचिद्विषं ब्राह्मणस्य विषं
विनेति निषेधात् । ग्रीष्मशरदोस्तु सलिलमेव ।
येषां कुष्ठ्यादीनान्तु विशेषेणाग्न्यादिनिषेधः ।
"कुष्ठिनां वर्ज्जयेदग्निं सलिलं श्वासकासिनाम् ।
पित्तश्लेष्मवतां नित्यं विषन्तु परिवर्ज्जयेदिति वच-
नात्तेषामग्न्यादिकालेऽपि साधारणं तुलाद्यव
दिव्यं भवति । यथा । तोयमग्निर्विषञ्चैव दातव्यं
बलिनां नृणामिति स्मरणात् । दुर्ब्बलानामपि
सर्व्वथा विषनिषेधात् तत्कालानतिक्रमेण जाति-
वयोऽवस्थाश्रितानि दिव्यानि देयानि । अत्र च
यस्य यानि विशेषसामान्यपर्य्युदस्तेतरविहितानि
तानि मुख्यकल्पानुकल्परूपाणिवेदितव्यानि ।
यथा, ब्राह्मणस्य धटो मुख्यः कोषस्त्वनुकल्पः ।
जलाग्नी आपत्कल्पौ प्रागुक्तनारदवचने एव-
एतेष्वेवाभियोगेषु निन्द्येष्वेव प्रयत्नतः ।
इत्याद्यभिधाय ।
दिव्यं प्रकल्पयेन्नैव राजा धर्म्मपरायणः ।
एतैरेव प्रयुक्तानां साधूनां दिव्यमर्हति ॥"
कात्यायनः ।
"न लौहशिल्पिनामग्निं सलिलं नाम्बुसेविनाम् ।
तण्डुलैर्न नियुञ्जीत ब्राह्मणं मुखरोगिणम् ॥"
नारदः ।
"क्लीवातुरान् सत्त्वहीनान् परितापार्द्दितान्नरान् ।
बालवृद्धातुरादींश्च परीक्षेत धटे सदा ॥
नार्त्तानां तोयशुद्धिः स्यान्न विषं पित्तरोगिणाम् ।
श्वित्र्यन्धकुनखादीनां नाग्निकर्म्म विधीयते ॥"
न मज्जनं स्त्रीबालयोर्धर्म्मशास्त्रविशारदैः ।
निरुत्साहान् व्याधिकृशान्नार्त्तांस्तोये निमज्ज-
येत् ॥
न चापि हारयेदग्निं न विषेण विशोधयेत् ॥
यत्तु, --
स्थावरेषु विवादेषु दिव्यानि परिवर्ज्जयेदिति
पितामहवचनं तल्लिखितसामन्तादिसत्त्वे दिव्य-
निषेधकम् । यद्यपि अलेख्यसाक्षिके दिव्यं
व्यवहारे विनिर्द्दिशेदिति स्मृतेर्व्विवादान्तरेऽपि
लेख्यादिसत्त्वे दिव्यानादरस्तथापि ऋणादानादि-
विवादे साक्ष्युपन्यासे कृतेऽपि प्रत्यर्थी यदि
दण्डाङ्गीकारेण दिव्यमङ्गीकरोति तदा दिव्यमपि

वैश्यस्य सलिलं देयं शूद्रस्य विषमेव तु ॥
साषारणः समस्तानां कोषः प्रोक्तो
मनीषिभिः ।
विषषर्ज्जं ब्राह्मणस्य सर्व्वेषान्तु तुला स्मृता
॥”
यत् पुनरनेन ।
“मव्रतानां भृशार्त्तानां व्याधितानां
तपस्विनाम् ।
स्वीणाञ्च न भवेद्दिव्यं यदि धर्म्मस्त्वपेक्षितः
॥”
इति स्त्र्यादीनां दिव्यं निषिद्धं
तत्तुलेतरविषयक-
मिति शूलपाणिः ॥ मिताक्षारायान्तु ।
स्त्रोपुंसयोर्व्विवादेन स्त्रीणां दिव्यमिति
रुच्या
वान्यतरः कुर्य्यादिति
विकल्पनिषेधार्थमेतदुक्तं
भवति । अवष्टब्धाभियोगेषु स्त्र्यादीनामभि-
योक्तृत्वे अभियोज्यानामेव दिव्यं
एतेषामभियोगे
योज्यत्वेऽपि अभियोक्तृणामेव दिव्यं
परस्पराभि-
योगे तु विकल्प एव तत्रापि तुलैवेति
नियम्यते ।
तथा महापातकादिशङ्काभियोगेतु
स्त्र्यादीनां
तुलैव । यथा याज्ञवल्क्यः ।
“तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम्
।
अग्निर्जलं वा शूद्रस्य यवाः सप्त विषञ्च वा
॥”
स्त्रीमात्रं जातिवयोऽवस्थाविशेषानादरेण
बाल
आपोडशाद्वर्षाज्जातिविशेषानादरेण वृद्धो-
ऽशीतिपारगः । एतच्च वत्तनं
सर्व्वदिव्यसाधा-
कारश्रुतेर्भुख्यकल्पादित्वं न तु
प्रशस्ततमादित्व-
मिति । एवञ्चात्रापि अयथोक्तप्रदत्तन्तु न शक्तं
साध्यसाधने इति प्रागुक्तं बोध्यम् । स्मृतिः ।
“अवष्टम्भाभियुक्तानां धटादीनि विनिर्द्दिशेत् ।
तण्डुलश्चैव कोषश्च शङ्कास्वेव न संशयः ॥”
अवष्टम्भोऽत्र निश्चयः । शिरोवर्त्तितेति केचित्
।
इति व्यवहारदीपिका ॥ कात्यायनः ।
“अस्पृश्याधमदासानांम्लेच्छानां
पापकारिणाम् ।
प्रतिलोमप्रसूतानां निश्चयो न तु राजनि ॥
तत्प्रसिद्धानि दिव्यानि समये तेषु निर्द्दिशेत् ॥”
तत्प्रसिद्धानि सर्पघटादीनि । तथा, --
देशकालाविरोधे तु यथायुक्तं प्रकल्पयेत् ।
अन्येन हारयेद्दिव्यं विधिरेष विपर्य्यये ॥”
अन्येन प्रतिनिधिना हारयेत् कारयेत् । विप-
र्य्यये अभियुक्तस्यासामर्थ्ये ।
अतएव महापातक्यादीनामन्यद्वारादिव्यमाह
स एव ।
“मातापितृद्विजगुरुबालस्त्रीराजघातिनाम् ।
महापातकयुक्तानां नास्तिकानां विशेषतः ॥
लिङ्गिनां प्रमदानाञ्च मन्त्रयोगक्रियावताम् ।
वर्णसङ्करजातानां पापाभ्यासप्रवर्त्तिनाम् ॥
भवति साक्षिणां दोषसम्भवाद्दिव्यस्य तु
निर्दो-
षत्वेन वस्तुतत्त्वविषयत्वात्
तल्लक्षणत्वाच्च धर्म्मस्य ।
यथाह नारदः ।
“तत्र सत्ये स्थितो धर्म्मो व्यवहारस्तु
साक्षिणि ।
दैवसाध्ये पौरुषन्तु न लेख्यन्तु
प्रयोजयेत् ॥”
स्थावरविवादे तु प्रत्यर्थिना
दण्डाङ्गीकारेण
दिव्यावलम्बने कृते
सामन्तादिदृष्टप्रमाणसद्भावे-
ऽपि दिव्यं ग्राह्यमिति विकल्पनिवारणाय
स्थावरेष्वित्यादि पितामहवचनं
नात्यन्तिकदिव्यं
निराकरणाय लिखिताद्यभावे
स्थावरादिषु
निर्णयाप्रसक्तेः ॥ * ॥
अथ द्रव्यसंख्यया दिव्यविशेषाः ।
विष्णुः ।
अथ समयक्रियाराजद्रोहसाहसेषु
यथाकामं
निःक्षेपर्णस्तेयेष्वर्थप्रमाणादिति । समयो
दिव्यं
राजद्रोहादिषु यथाकामं
राजेच्छानुरोधाद्दिव्यं
निःक्षेपादिषु तु
धनप्रमाणतारतम्यादित्यर्थः ।
बृहस्पतिः ।
“संख्या रश्मिरजोमूला मनुना
समुदाहृता ।
कार्षापणान्ता सा दिव्ये नियोज्या विनये
तथा ॥
विषं सहस्रेऽपहृते पादोने च हुताशनः ।
त्रिभागोने च सलिलमर्द्धे देयो धटः सदा
॥
चतुःशताभियोगे तु दातव्यस्तप्तमाषकः
।
त्रिशते तण्डुला देयाः कोषश्चैव तदर्द्धके
॥

| | | |
|---|---|---|
| | | शते हृतेऽपह्नुते च दातव्यं धर्म्मशोधनम्<br>।<br>गोचौरस्य प्रदातव्यं सभ्यैः फालं<br>प्रयत्नतः ॥<br>एषा संख्या निकृष्टानां मध्यानां द्विगुणा<br>स्मृता ।<br>चतुर्गुणोत्तमानान्तु कल्पनीया परीक्षकैः<br>॥”<br>रश्मिरजः । |

जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः ।
प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते ॥”
इति मनूक्तम् ॥
“कार्षापणान्ता पणान्ता कार्षापणः पण इति पर्य्यायदर्शनात् । विनये दण्डे । एवञ्च सहस्र इत्यादौ पण इति ज्ञेयं उपक्रमात् निकृष्टानां जातिकर्म्मगुणैः । नासहस्राद्धरेदग्निं न तुलां न विषन्तथेति याज्ञवल्क्यवचनं
मध्यमोत्तमविषय-
त्वेन बृहस्पतिवचनैकवाक्यत्वादविरुद्धम् ।
“सहस्रेषु धटं दद्यात् सहस्रार्द्धे तथायसम् ।
अर्द्धस्यार्द्धे तु सलिलं तस्यार्द्धे तु विषं स्मृतम्
॥”
इति वचनं यत्राल्पापराधे पातित्यं तद्विषय-मिति । एतत् सर्व्वं स्तेयसाहसविषयम् । अप-ह्नवे तु कात्यायनः ।
“दत्तस्यापह्नवो यत्र प्रमाणं तत्र कारयेत् ।
स्तेयसाहसयोर्द्दिव्यं स्वल्पेऽप्यर्थे प्रदापयेत् ॥
सर्व्वद्रव्यप्रमाणन्तु ज्ञात्वा हेम प्रकल्पयेत् ।
हेमप्रमाणयुक्तन्तु तदा दिव्यं प्रदापयेत् ॥
ज्ञात्वा संख्यां सुवर्णानां शतनाशे विषं स्मृतम्
।
अशीतेश्च विनाशे तु दद्याच्चैव हुताशनम् ॥
षष्ट्या नाशे जलं देयं चत्वारिंशति वै घटम् ।
विंशद्दशविनाशे तु कोषपानं विधीयते ॥
पञ्चाधिकस्य वा नाशे ततोऽर्द्धार्द्धस्य तण्डुलाः
।
ततोऽर्द्धार्द्धविनाशे तु स्पृशेत् पुत्रादिमस्तकान्
॥
ततोऽर्द्धार्द्धविनाशे तु लौकिक्यश्च क्रियाः स्मृताः ।
एवं विचारयन्राजा धर्म्मार्थाभ्यां न हीयते ॥”
सुवर्णानां पञ्च कृष्णलको माषस्ते सुवर्णस्तु षोडश इत्युक्ताशीतिरक्तिकापरिमितहेम्नां नाशे अपह्नवे वा दशाधिकस्य पञ्चाधिकस्य वा विंशस्य नाशे कोषपानमित्यर्थः । तण्डुलाः पुन-
रल्पचौर्य्याभिशङ्कायाम्वे न तु साहसादौ ।
चौर्य्ये च तंण्डुला देया नान्यत्रेति विनिश्चय इति

वमनादीनां प्रवृत्तिः क्व च निवृत्तिः प्रवृत्ति-निवृत्तिलक्षण-संयोगे च किं नैष्ठिकं कानि च वमनादीनां भेषजद्रव्याणि उपयोगं गच्छ-न्तीति । स एवं पृष्टो यदि मोहयितुमिच्छेत् ब्रूयादेनं बहुविधा परीक्षा तथा परीक्ष्यविधि-भेदः कतमेन विधिभेदप्रकृत्यन्तरेण
परीक्ष्यस्या
भिन्नभेदाग्रं भवान् पृच्छत्याख्यायमानं नेदानीं भवतोऽन्येन वा विधिभेदप्रकृत्यन्तरेण
परीक्ष्यस्य
भिन्नस्याभिलषितमर्थं श्रोतुमहमन्येन परीक्षा विधिभेदप्रकृत्यन्तरेण परीक्ष्यं भित्त्वार्थमाच-क्षाण इच्छां पूरयेयमिति ।
द्विविधा परीक्षा ज्ञानवतां प्रत्यक्षमनुमानञ्च एतत्तु द्वयमुपदेशश्च परीक्षात्रयमेवमेषा द्विविधा परीक्षा त्रिविधा वा सहोपदेशेन ।
दशविधं परीक्ष्यं कारणादि यदुक्तमग्रे तदिह भिषगादिषु संसार्य्य सन्दर्शयिष्यामः इह
कार्य्य-
प्राप्तेः कारणं भिषक्करणं पुनर्भेषजं कार्य्य-योनिर्धातुवैषम्यं कायं धातुसाम्यं कार्य्यफलं सुखावाप्तिः अनुबन्ध आयुः देशो भूमिरा-तुरश्च कालः संवत्सरश्चातुरावस्था च
प्रवृत्तिः
प्रतिकर्म्मासमारम्भः उपायो भिषगादीनां सौष्ठवमभिविधानञ्च सम्यगिहाप्यस्योपायस्यं विषयः पूर्ब्बेणैवोपायविशेषेण व्याख्यात इति कारणादीनि दश दशसु भिषगादिषु संसार्य्य-सन्दर्शितानि तथैवानुपूर्ब्ब्या
एतद्दशविधपरीक्ष्य-
मुक्तम् ।
तस्य यो यो विशेषो यथा यथा च परीक्षितव्यः स स तथा तथा व्याख्यास्यते कारणं भिषगि-त्युक्तमग्रे तस्य परीक्षा भिषङ्नाम यो
भिषज्यति
यः सूत्रार्थप्रयोगकुशलः यस्य चायुः सर्व्वथा-विदितम् । यथावत् सर्व्वधातुसाम्यं चिकीर्षन्ना-त्मानमेवादितः परीक्षेत गुणेषु गुणतः
कार्य्याभि-

मवाप्य परीक्षिज्जज्ञे । योऽयं
साम्प्रतमेतद्भूम-
ण्डलमखण्डितायतिधर्म्मेण पालयति
।” इति
विष्णुपुराणे ४ अंशे २० अध्यायः ॥
“विपरीतानि दृष्ट्वा च निमित्तानि स
पाण्डवः ।
याते कृष्णे चकाराथ सोऽभिषेकं
परीक्षितः ॥
प्रयास्यन्ति यदा चैते पूर्ब्बाषाढां
महर्षयः ।
तदा नन्दात् प्रभृत्येष कलिर्वृद्धिं
गमिष्यति ॥
यस्मिन् कृष्णो दिवं यातस्तस्मिन्नेव
तदाहनि ।
प्रतिपन्नं कलियुगं तस्य संख्यां
निबोध मे ॥”
इति तत्रैव २४ अः । ३८ -- ४० ॥
(अनश्वपुत्त्रः । यथा, महाभारते । १
। ९५ । ४० ।
“अनश्वा खलु मागधीमुपयेमे अमृतां नाम तस्यामस्य जज्ञे परीक्षित् ॥”)

**परीक्षितः**, पुं, (परिक्षीणे कुरुकुले क्षियति स्म ईष्टे स्म इति । परि + क्षि + क्तः ।
उपसर्गस्य
दीर्घत्वम् ।) अभिमन्युपुत्त्रः । (यथा, देवी-
भागवते । २ । ७ । ६ ।
“परिक्षीणेषु वंशेषु जातो यस्मात् वरः सुतः ।
तस्मात् परीक्षितो नाम विख्यातः पृथिवी-
तले ॥” * ॥
परीक्षा सञ्जाता अस्य । परीक्षा इतच्
। कृत-
परीक्षे, त्रि । यथा, गोः रामायणे । २ ।
४३ । ९ ।
“स हि राजगुणैर्युक्तो युवराजः
परीक्षितः ॥”)

पितामहस्मृतेः । तप्तमाषस्तु महाचौर्य्याभि-
शङ्कायाम् ।
महाचौर्य्याभियुक्तानां तप्तमाषो विधीयते ।
इति स्मृतेः ॥
व्यवहारमातृकायाम् ।
"समत्वं साक्षिणां यत्र दिव्यैस्तमपि शोधयेत् ।
प्राणान्तिकविवादेषु विद्यमानेषु साक्षिषु ॥
दिव्यमालम्बते वादी न पृच्छेत्तत्र साक्षिणः ॥"
इति दिव्यतत्त्वम् ॥ * ॥
धटादिनवविधपरीक्षा तत्तत्शब्दे द्रष्टव्या ॥
("बुद्धिः पश्यति या भावान् बहुकारणयोगजान् ।
युक्तिस्त्रिकाला सा ज्ञेया त्रिवर्गः साध्यते यया ॥
एषा परीक्षा नास्त्यन्या यया सर्व्वं परीक्ष्यते ।
परीक्ष्यं सदसच्चैव तया चास्ते पुनर्भवः ॥"
इति चरके सूत्रस्थाने एकादशेऽध्याये ॥
"तत्र चेद्भिषगभिषग्वा भिषजं पृच्छेद्वमनविरे-
चनास्थापनानुवासन-शिरोविरेचनानि प्रयोक्तु-
कामेन भिषजा कतिविधया परीक्षया कति-
विधं परीक्ष्यं कश्चात्र परीक्ष्यविशेषः कथञ्च
परीक्षितव्यं किंप्रयोजना च परीक्षा क्व च
निर्वृत्तिं पश्यन् कच्चिदहमस्य
कार्य्यस्याभिनिर्व-
र्त्तने समर्थो नवेति ।" इति चरके
विमानस्थाने-
ऽष्टमेऽध्याये ॥)

**परीक्षित्**, पुं, (परि सर्व्वतोभावेन क्षीयते हन्यते
दुरितं येन । परि + क्षि वधे + क्विप् । कलि-
शासनादस्य तथात्वम् । यद्वा, परिक्षीणेषु
कुरुषु
क्षियति ईष्टे इति । क्षि श ऐश्वर्य्ये + क्विप् ।
"उपसर्गस्य दीर्घलं क्विप्घञादौ क्वचिद्भवेत् ।"
इति वाक्यात् उपसर्गस्य दीर्घत्वम् । अस्य
निरुक्तिरुक्ता महाभारते । १ । ९५ । ८४ ।
"स भगवता वासुदेवेनासंजातबलवीर्य्यपरा-
क्रमोऽकालजातोऽस्त्राग्निनादग्धस्तेजसा स्वेन
संजीवितः । संजीवयित्वा चैनमुवाच । परि-
क्षीणे कुले जातो भवत्वयं परीक्षिन्नामेति ।")
अभिमन्युपुत्रः । स युधिष्ठिरादनन्तरं कलि-
युगस्यारम्भे राजचक्रवर्त्ती आसीत् । यथा, --
"अभिमन्योरुत्तरायां परिक्षीणेषु
कुरुष्वश्वत्थाम-
प्रयुक्तब्रह्मास्त्रेण गर्भ एव भस्मीकृतो भगवतः
सकलसुरासुरवन्दितचरणयुगलस्य
आत्मेच्छया
कारणमानुषरूपधारिणोऽनुभावात्पुनर्जीवित-

**परीणायः**, पुं, (परितो नयनम् । परि + नी +
घञ् । "उपसर्गस्य दीर्घत्वं
क्विप्घञादौ
क्वचिद्भवेत् ।" इति पाक्षिको दीर्घः ।)
परि-
णायः । शारीणां समन्तान्नयनम् ।
इत्यमर-
टीकायां भरतः ॥

**परीतं**, त्रि, (परि + इ + क्तः ।) परिवेष्टितम् ।
इति हेमचन्द्रः ॥ (यथा, महाभारते ।
१ ।
११२ । ७ ।
"ततः कामपरीताङ्गी
सकृत्पचलमानसा ।
व्रीडमाना स्रजं कुन्ती राज्ञः स्कन्धे
समासजत् ॥")

**परीतत्**, त्रि, (परि + तन + क्विप् + "नहिवृतिवृषि-
व्यधीति ।" ६ । ३ । ११६ । इति
पूर्ब्बपदस्य
दीर्घः ।) सर्व्वतोभावेन विस्तृतम् ।
इति मुग्ध-
बोधव्याकरणम् ॥

**परीभावः**, पुं, (परिभाव्यते इति । परि + भावि +
घञ् वैकल्पिकदीर्घश्च ।) परिभावः ।
अनादरः ।
इत्यमरटीकायां भरतः ॥

**परीरं**, क्ली, (पूर्य्यतेऽनेनेति । पॄ + "कॄशॄप
कटीति ।" उणां ४ । ३० । इति ईरन्
।)
फलम् । इत्युणादिकोषः ॥

**परीरम्भः**, पुं, (परिरभ्यते इति । परि + रभ + घञ्
भावे वैकल्पिकदीर्घत्वम् ।) परिरम्भः
। आलि-
ङ्गनम् । इति भरतद्विरूपकोषः ॥

**परीवर्त्तः**, पुं, (परि + वृत् + घञ् । "उपसगस्य

| | | |
|---|---|---|
| | | घञीति ।" ६ । ३ । १२२ । इति दीर्घः ।) परि-<br>वर्त्तनम् । तत्पर्य्यायः । प्रतिदानम् २ नैमेयः ३<br>निमयः ४ । इत्यमरः । २ । ९ । ८०<br>॥ परिवर्त्तः ५<br>वैमेयः ६ विनिमयः ७ परिदानम् ८ । इति शब्द-<br>रत्नावली ॥ कूर्म्मराजः । इति जटाधरः ॥ |

**परीवादः**, पुं, (परि + वद् + भावे घञ् । "उप-
सर्गस्य घञीति ।" ६ । ३ । १२२ । इति
दीर्घः ।)
दोषोल्लासः । तत्पर्य्यायः । कुत्सा २
निन्दा ३
जुगुप्सा ४ गर्हा ५ गर्हणम् ६ निन्दनम् ७
कुत्सनम् ८ परिवादः ९ जुगुप्सनम् १०
आक्षेपः
११ अवर्णः १२ निर्वादः १३ अपक्रोशः
१४
भर्त्सनम् १५ उपक्रोशः १६ अपवादः
१७
अववादः १८ । इति शब्दरत्नावली ॥
(यथा,
"परीवादस्तथ्यो भवति वितथो वापि
महतां
तथाप्युच्चैर्धाम्नां हरति महिमानं जनरवः
।
तुलोत्तीर्णस्यापि प्रकटितहताशेषतमसो
रवेस्तादृक्तेजो नहि भवति कन्यां गतवतः
॥")
वीणादिवादनम् । येन काष्ठविशेषादिना
वीणादिर्वाद्यते सः । इति जटाधरः ।

**परीवारः**, पुं, (परिव्रियतेऽनेनेति । परि + वृ + घञ्
।
उपसर्गस्य दीर्घः ।) खड्गकोषः । जङ्गमः
।
(यथा, रघुः । १५ । १६ ।
"धूमधूम्रो वसागन्धी ज्वालाबभ्रुशिरोरुहः
।
क्रव्याद्गणपरीवारश्चिताग्निरिवजङ्गमः
॥")
परिच्छदः । इत्यमरः । ३ । ३ । १६८ ॥
परीवारः परिजने खड्गकोषे परिच्छदे ।
इत्यनेकत्र दर्शनात् । जङ्गमो जङ्गमविशेषः
परिजन इत्यर्थः । खड्गकोषोऽसिवायकः
मेयान्
इति ख्यातः । परिच्छदः
शोभाजनकमुपकरणं
नर्म्म ६ । इत्यमरः । १ । ७ । ३२ ॥
परिहासः ७
केलिमुखम् ८ देवनम् ९ । इति त्रिकाण्ड-
शेषः ॥

**परुः**, पुं, (पिपर्त्तीति । पॄ लि पूर्त्तौ + बाहुलकादुः ।)
समुद्रः । स्वर्गलोकः । ग्रन्थिः । पर्व्वतः । इति
संक्षिप्तसारोणादिवृत्तिः ॥

**परुः**, [स्] क्ली, (पॄ + "अर्त्तिपवपियजितनीति ।"
उणां । २ । ११८ । इति उस् ।) ग्रन्थिः ।
इत्य-
मरः । २ । ४ । १६२ ॥ (यथा, वाजसनेय-
संहितायाम् । १३ । २० ।
"काण्डात् काण्डात् प्ररोहन्ति परुषः (सः)
परुषस्परि ॥")

**परुत्**, व्य, (पूर्ब्बस्मिन् वत्सरे इति । "सद्यः परु-
दिति ।" ५ । ३ । २२ । इति पूर्ब्बस्य
परभावः
उत् च ।) गतवत्सरः । इत्यमरः । २ । ४ ।
२० ॥

**परुत्नः**, त्रि, (परुत् गतवसरे भवः । परुत् + "चिर-
परुत्परारिभ्यस्त्नो वक्तव्यः ।" ४ । ३ । २३
।
इत्यस्य वार्त्ति इति त्नः ।) इति व्याकरणम् ॥

**परुद्वारः**, पुं, (परुः समुद्रः पर्व्वतो वा द्वारमिव
यस्य ।) वोटकः । इति शब्दमाला ॥

**परुषं**, क्ली, (पिपर्त्ति अलं बुद्धिं करोतीति । पॄ +
"पॄनहिकलिभ्य उषच् ।" उणां । ४ । ७५ ।
इति उषच् ।) निष्ठुरवाक्यम् । इत्यमरः । १ ।
६ । १९ ॥ (परेषां
देशजातिकुलविद्याशिल्परूप-
वृत्त्याचारपरिच्छदशरीरकर्म्मजीविनां प्रत्यक्ष-
दोषवचनं परुषमिति वदन्ति ॥ यथा, हेः
रामायणे । १ । १८२ ।
"तामुवाच ततो रामः परुषं जनसंसदि ।
अमृष्यमाणा सा सीता विवेश ज्वलनं सती
॥")
अल्पास्थि ५ परापरम् ६ । इति
भावप्रकाशः ॥
नीलचर्म्म ७ गिरिपीलु ८ परावतम् ९ नील-
मण्डलम् १० परुः ११ । अस्य गुणाः ।
अम्ल-
त्वम् । कटुत्वम् । कफार्त्तिवातनाशित्वञ्च ।
तदाम-
फलगुणः । पित्तदत्वम् उष्णत्वञ्च ।
तत्पक्वफल-
गुणाः । मधुरत्वम् । रुचिप्रदत्वम् ।
पित्तशोफ-
हरत्वम् । तर्पणत्वञ्च । इति राजनिर्घण्टः ॥
"परूषकं कषायाम्लमामं पित्तकरं लघु ।
तत् पक्वं मधुरं पाके शीतं विष्टम्भि बृंहणम्
॥
हृद्यं तृट्पित्तदाहास्रज्वरक्षयसमीरहृत् ॥"
इति भावप्रकाशः ॥
("परूषकैटर्य्यकपीलुकानां
पियालसिंही करमर्द्दकानाम् ।
फलानि चैतानि निहन्ति पित्तं
हन्याच्च सर्व्वातुरसन्धिवातम् ॥"
इति हारीते प्रथमस्थाने दशमेऽध्याये ॥)

**परूषकं**, क्ली, (परूष + स्वार्थे कन् ।) परूषम् ।
इति राजनिर्घण्टः ॥ (अस्य पर्य्याया यथा,
--
"परूषकं परूषं स्यात् क्वचिन्नागदलोपमम्
।"
इति वैद्यकरत्नमालायाम् ॥
यथास्य गुणाः चरके सूत्रस्थाने २७
अध्याये ।
"अम्लं परूषकं द्राक्षा वदर्य्याण्यारुकाणि च
।
पित्तश्लेष्मप्रकोपीनि कर्कन्धुलकुचान्यपि
॥"
"अत्यम्लमीषन्मधुरं कषायानुरसं लघु ।
वातघ्नं पित्तजननमामं विद्यात् परूषकम् ॥
तदेव पक्वं मधुरं वातपित्तनिवर्हणम् ।
विपाके मधुरं शीतं रक्तपित्तप्रसादनम् ॥"
इति सुश्रुते सूत्रस्थाने । ४६ अध्याये ॥)

**परेतः**, त्रि, (परं लोकमितः ।) मृतः । इत्य-

छत्रचामरादिः सभ्यजनादिश्च एषु
परीवारः ।
इति तट्टीकायां भरतः ॥

**परीवाहः**, पुं, (परितो वहत्यनेनेति । परि + वह +
"हलश्च ।" ३ । ३ । १२१ । इति घञ् । "उप-
सर्गस्य घञीति ।" ६ । ३ । १२२ । इति
दीर्घः ।) जलोच्छ्वासः । इत्यमरः । १ ।
१० । १० ॥
(अत्र जलशब्द उपलक्षणमात्रं ज्ञेयम् । द्रव-
द्रव्यस्य प्रवाहेऽप्यस्यार्थो बोद्धव्यः । यथा च
महाभारते । ७ । ६८ । १३ ।
"रुधिरस्य परीवाहान् पूरयित्वा सरांसि च ॥"
परित उह्यते इति ।) राजयोग्यवस्तु । इति
मेदिनी ॥ हे, ३३ ॥

**परीष्टिः**, स्त्री, (परि + इष् + "परे र्वा ।" ३ । ३ ।
१०७ । इत्यस्य वार्त्तिं इति पक्षे क्तिन् ।) अन्वे
षणा । इत्यमरः । २ । ७ । ३२ ॥ परिचर्य्या ।
प्राकाम्यम् । इति मेदिनी । टे, ४९ ॥

**परीसारः**, पुं, (परिसरणम् । परि + सृ + घञ् ।
"उपसर्गस्य घञीति ।" ६ । ३ । १२२ । इति
दीर्घः ।) परिसर्य्या । सर्व्वतोगमनम् । इत्य-
मरः । ३ । २ । २१ ॥

**परीहारः**, पुं, (परिहरणम् । परि + हृञ् हरणे
+ घञ् । "उपसर्गस्य घञीति ।" ६ । ३ ।
१२२ । इति दीर्घः ।) अवज्ञा । इति शब्द-
रत्नावली ॥

**परीहासः**, पुं, (परि + हस + घञ् । उपसर्गस्य
दीर्घः ।) परीहसनम् । (यथा, मार्कण्डेये ।
३४ । ८४ ।
नीलझिण्टी । इति शब्दचन्द्रिका ॥ परुषफलम् ।
इति भावप्रकाशः ॥ (नीलझिण्टीशब्देऽस्य
गुणादयो ज्ञातव्याः ॥)

**परुषं**, त्रि, (पिपर्त्तीति । पॄ लि पूर्त्तौ + "पॄनहि-
कलिभ्य उषच् ।" उणां । ४ । ७५ । इति
उषच् ।) कर्व्वूरः । (यथा, बृहत्संहिता-
याम् । ३ । ३९ ।
"असितविचित्रनीलपरुषोजनघातकरः ।
खगमृगभैरवखररुतैश्च निशाद्युमुखे ॥")
रूक्षः । (यथा, हेः रामायणे । १ । ५८ । १० ।
"अथ रात्र्यां व्यतीतायां राजा चण्डालतां गतः ।
नीलवस्त्रधरो नीलः परुषो ध्वस्तमूर्द्धजः ॥")
निष्ठुरोक्तिः । इति मेदिनी । षे, ४० ॥ (मलिनः ।
यथा, आर्य्यासप्तशत्याम् । ४१९ ।
"भस्मपरुषेऽपि गिरिशे स्नेहमयी त्वमुचितेन
सुभगासि ।"
"भस्ममलिनेऽपि गिरिशे ।" इति तट्टीका ॥)

**परुषोक्तिकः**, त्रि, (परुषमेव उक्तिर्यस्य । ततः
स्वार्थे कन् कप् वा ।) निष्ठुरवक्ता । इति
जटाधरः ॥

**परूषं**, क्ली, (पॄ + ऊषन् ।) फलवृक्षभेदः । परुष-
फल इति वङ्गभाषा । फरूसा इति फलूहे इति
च हिन्दीभाषा । तत्पर्य्यायः । परूषकम् २
नागदलोपमम् ३ । इति रत्नमाला ॥ परुषम् ४
मरः । २ । ८ । ११७ ॥ (यथा, कुमारे । ५ । ६८ ।
"अलक्तकाङ्कानि पदानि पादयो-
र्विकीर्णकेशासु परेतभूमिषु ॥")
भूतान्तरे पुं, । इति मेदिनी । ते, १२६ ॥

**परेतराट्**, [ज्] पुं, (परेतेषु मृतेषु राजते इति ।
राजृ ञ् ण दीप्तौ + "सत्सूद्विषेति ।" ३ । २ । ६१ ।
इति क्विप् । यद्वा, परेत्रानां प्रेतानां राट् ।)
प्रेतराजः । यमः । इत्यमरः । १ । १ । ६१ ॥

**परेद्यवि**, व्य, परस्मिन्नहनि । ("सद्यःपरुदिति ।"
५ । ३ । २२ । इति निपातनात् साधुः ।) पर-
दिनम् । इति मुग्धबोधव्याकरणम् ॥ यथा, --
"परेद्यव्यद्यपूर्ब्बेद्युरन्येद्युश्चापि चिन्तयन् ।
वृद्धिक्षयौ मुनीन्द्राणां प्रियम्भावुकतामगात् ॥"
इति भट्टिः । ४ । १३ ॥

**परेद्युः**, [स्] व्य, (पर + एद्युस् ।) परदिनम् ।
इति मुग्धबोधव्याकरणम् ॥

**परेपं**, त्रि, परा गता आपो यत्र । ("द्व्यन्तरुप-
सर्गेभ्योऽप ईत् ।" ६ । ३ । ९७ । इत्यस्य वार्त्तिं
"अवर्णान्ताद्वा ।" इति ईत् । परापम् ।) इति
सिद्धान्तकौमुदी ॥

**परेष्टुका**, स्त्री, (परैरिष्यते इति । इष + बाहु-
लकात् तु । स्वार्थे कन् । स्त्रियां टाप् ।) बहुसूति
बहुप्रसूता गौः । इत्यमरः । २ । ९ । ७० ॥

| “परीवादं न कुर्व्वीत परीहासञ्च पुत्त्रक ! ॥”)<br>तत्पर्य्यायः । द्रवः २ केलिः ३ क्रीडा ४ लीला ५ | | |
|---|---|---|

**परैधितः**, त्रि, (परैरेधितः सम्बर्द्धितः ।) औदा-

सीन्येन परपुष्टः । परेण संवर्ड्धितः ।
तत्पर्य्यायः ।
पराचितः २ परिष्कन्दः ३ परजातः ४ ।
इत्य-
मरः । २ । १० । १८ ॥ कोकिले पुं ।
इति शब्द-
माला ॥

**परोक्षं**, क्ली, (अक्ष्णोः परम् ।) अप्रत्यक्षम् । असा-

क्षात् । यथा, चाणक्यशतके ।
"परोक्षे कार्य्यहन्तारं प्रत्यक्षे
प्रियवादिनम् ।
वर्ज्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम्
॥"
(परोक्षं परोक्षत्वमित्यर्थः विद्यतेऽस्य ।
"अर्श-
आदिभ्योऽच् ।" ५ । १ । १२७ । इति
अच् ।)
तद्विशिष्टेत्रि ॥
(श्रुत्याप्तजन्यादिज्ञानविशेषः ।
यथा, पञ्चदश्याम् । ७ । ३१ ।
"अस्ति कूटस्थ इत्यादौ परोक्षं वेत्ति
वार्त्तया ॥")

**परोक्षः**, पुं, (परोक्षमस्यास्तीति । श्रुत्याप्तवाक्य-

श्रवणजन्यदाढर्य्याच्चैवेति बोध्यम् ।)
तपस्वी । इति
शब्दमाला ॥ ययातिपुत्त्रस्यानोः
पुत्त्रविशेषः ।
यथा, भागवते । ९ । २३ । १ ।
"अनोः सभानरश्चक्षुः परोक्षश्च
सुतास्त्रयः ॥")

**परोपकारः**, पुं, (परेषामुपकारः ।) परेषा-

मुपकृतिः । अन्यसम्बन्धिहितम् । यथा,
--
"एष मे प्रवरो भाति शुद्धधर्म्मप्रदो विधिः
।
परोपकरणादन्यत् सर्व्वमल्पं स्मृतं बुधैः
॥

रत्नमाला ॥ कपीतनः ५ क्षीरी ६
सुपार्श्वः ७
कमण्डलुः ८ शृङ्गी ९ अवरोहः १०
शाखी ११
गर्द्दभाण्डः १२ पीतनः १३ दृढप्ररोहः
१४
प्लक्षकः १५ प्लवङ्गः १६ महाबलः १७
। अस्य
गुणाः कटुत्वम् । कषायत्वम् ।
शिशिरत्वम् ।
रक्तदोषमूर्च्छाभ्रमप्रलापनाशित्वञ्च ।
विशेषतो
ह्रस्वप्लक्षस्यैते गुणाः । इति राजनिर्घण्टः
॥

**पर्ज्जनी**, स्त्री, (परं स्वास्थं जनयतीति । पर् +

जन + णिच् । "कर्म्मण्यण् ।" ३ । २ । १
। इत्यण् ।
स्त्रियां ङीप् ।) दारुहरिद्रा । इत्यमरः । २
। ४ । १०२ ॥

**पर्ज्जन्यः**, पुं, (पर्षति सिञ्चति वृष्टिं ददातीति । पृषु

सेचने + "पर्ज्जन्यः ।" उणां । ३ । १०३
। इति
निपातनात् षकारस्य जकारत्वे साधुः ।)
इन्द्रः ।
(यथा, ऋग्वेदे । ६ । ५२ । १६ ।
"अग्नीपर्ज्जन्याववतं धियं मेऽस्मिन् हवे
सुहवा
शब्दायमानमेघः । इत्यमरः । ३ । ३ ।
१४६ ॥
मेघशब्दः । इति विश्वः ॥ अगर्ज्जन्नपि
मेघ ।
इति भरतः ॥ यथा, श्रीभगवद्गीतायाम् ।
"यज्ञाद्भवति पर्ज्जन्यः
पर्ज्जन्यादन्नसम्भवः ॥"
(कश्यपपत्न्या मुनेः पुत्त्रविशेषः । स तु
गन्धर्व्व-
विशेषः । यथा, महाभारते । १ । ६५ ।
४४ ।

पक्षः । यथा, महाभारते । १ । ३३ । २४ ।
"तदुत्सृष्टमभिप्रेक्ष्य तस्य पर्णमनुत्तमम् ।
हृष्टानि सर्व्वभूतानि नाम चक्रुर्गरुत्मतः ।
सुरूपं पत्रमालक्ष्य तस्य पर्णमनुत्तमम् ॥")

**पर्णः**, पुं, (पिपर्त्तीति । पॄ पालने + "धापॄवस्य-

ज्यतिभ्यो नः । उणां । ३ । ६ । इति नः ।
पलाशवृक्षः । इत्यमरः । २ । ४ । २९ ॥ (यथा,
ऋग्वेदे । १० । ९७ । ५ ।
"अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता ॥")

**पर्णकारः**, पुं, (पर्णं ताम्बूलम् । करोति उत्पादय-

तीति । पर्ण + कृ + अण् ।) वारजीवी । वारुइ
इति भाषा ॥ इति केचित् ॥

**पर्णकृच्छ्रः**, पुं, (पर्णैः साध्यं कृच्छ्रं व्रतं यत्र ।

पत्रकृच्छ्रव्रतम् । यथा, याज्ञवल्क्ये । ३ । ३१६
।
"पर्णोडुम्बरराजीवविल्वपत्रकुशोदकैः ।
प्रत्येकं प्रत्यहाभ्यस्तैः पर्णकृच्छ्र उदाहृतः ॥"

**पर्णखण्डः**, पुं, (पर्णमेव खण्डो यस्य । पुष्पादि-

हीनत्वात्तथात्वम् ।) वनस्पतिः । इति शब्द-
चन्द्रिका ॥ (पर्णस्य ताम्बुलस्य खण्डः ।)
ताम्बूलै-
कांशश्च ॥

**पर्णचोरकः**, पुं, (पर्णं चोरयतीति । पर्ण +

चोरि + ण्वुल् ।) चोरकनामगन्धद्रव्यम् । इति
राजनिर्घण्टः ॥

**पर्णध्वत्**, [स्] त्रि, पर्ण + ध्वन्स् + कर्त्तरि क्विप् ।

पत्रध्वंसकर्त्ता । इति व्याकरणम् ॥

**पर्णनरः**, पुं, (पर्णैः पलाशपत्रैर्निर्म्मितो नरः नरा-

कारः पुत्तलकः ।) पित्रादिशवास्थ्यलाभेदाहार्थ-
तत्प्रतिनिधीभूतशरपलाशपत्ररचितोर्णातन्तु
वेष्टितयवपिष्टलिप्तनराकारपुत्तलकः । यथा,
"आश्वलायनगृह्यपरिशिष्टम् । अस्थिनाशे
पलाश-
वृन्तानां त्रीणि षष्टिशतानि पुरुषप्रतिकृतिं कृत्वा,
अशीत्यर्द्धन्तु शिरसि ग्रीवायां दश योजयेत् ।

परोपकारिभिर्द्दत्ता स्वप्राणा ऋषिभिः पुरा ।
अद्भिः प्रेतोपकारः स्यात् किन्न लब्धं मया पुनः ॥
दधीचिना पुरा गीतः श्लोकश्च श्रूयते भुवि ।
सर्व्वधर्म्ममयः सारः सर्व्वधर्म्मज्ञसम्मतः ॥
परोपकारः कर्त्तव्यः प्राणैः कण्ठगतैरपि ।
परोपकारजं पुण्यं तुल्यं क्रतुशतैरपि ॥"
इति पद्मोत्तरखण्डे २२ अध्यायः ॥

**परोवरीणः**, त्रि, परांश्चावरांश्चानुभवति। ("परो-
वरपरम्परपुत्त्रपौत्त्रमनुभवति।" ५ । २ । १० ।
इति ।) अवरस्योत्वं निपात्यते । श्रेष्ठाश्रेष्ठ-
युक्तः । इति सिद्ध्वान्तकौमुदी ॥

**परोष्णी**, स्त्री, (परः शत्रुरुष्णो यस्याः ।) तैल-
पायिका । इत्यमरः । २ । ५ । २६ ॥ (काश्मीर-
देशस्थनदीविशेषः । यथा, राजतरङ्गिण्याम् ।
८ । २००७ ।
"कोष्टकोमल्लकोष्टाद्यैर्म्मित्रैर्युक्तोऽपि सादिभिः ।
तीर्त्वा परोष्णीं तत्सेनां निर्म्ममाथाप्रमा-
थिनीम् ॥")

**पर्कटिः**, स्त्री, (पृच् धी च् सम्पर्के + बाहु-
लकादटिः । "बह्वादिभ्यश्च ।" ४ । १ । ४५
इति वा ङीष् ।) प्लक्षवृक्षः । इत्यमरटीकायां
भरतः ॥ पाकुड इति भाषा ॥ (यथा, हितोप
देशे । "अस्ति तत्र महान् पर्कटीवृक्षः ॥")
तस्य गुणाः भावप्रकाशे ।

**पर्कटी**, स्त्री, (पृच् धी च् सम्पर्के + बाहु-

"तथा शालिशिरा राजन् ! पर्ज्जन्यश्च चतुर्द्दश ।
कलिः पञ्चदशस्त्वेषां नारदश्चैव षोडशः ॥"
पर्ज्जन्य इव सर्व्वकामप्रदानात् विष्णुः । यथा,
महाभारते । १३ । १४९ । १०० ।
"कुमुदः कुन्दरः कुन्दः पर्ज्जन्यः पावनोऽनिलः ॥"
"पर्ज्जन्यवदाध्यात्मिकादितापत्रयं शमयति सर्व्वान्
कामानभिवर्षतीति पर्ज्जन्यः ।" इति शाङ्कर-
भाष्यम् ॥)

**पर्ज्जन्या**, स्त्री, (पर्ज्जन्य + टाप् ।) दारुहरिद्रा ।
इति राजनिर्घण्टः ॥

**पर्ण**, त् क हारित्ये । इति कविकल्पद्रुमः ॥
(अदन्तचुरां-परं-सकं-सेट् ।) हरित् पीत-
वर्णस्तस्य भावः हारित्यम् । पर्णयति पर्णा-
पयति चम्पकम् । इति दुर्गादासः ॥

**पर्णं**, क्ली, (पिपर्त्तीति । पॄ + "धापॄवस्यज्यतिभ्यो
नः ।" उणां । ३ । ६ । इति नः । यद्वा,
पर्णयतीति । पर्ण त् क हारित्ये + अच् ।)
पत्रम् । इत्यमरः । २ । ४ । १४ ॥ (यथा,
कुमारे । ५ । २८ ।
"स्वयं विशीर्णद्रुमपर्णवृत्तिता
परा हि काष्ठा तपसस्तया पुनः ।
तदप्यपाकीर्णमतः प्रियंवदां
वदन्त्यपर्णेति च तां पुराविदः ॥")
ताम्वूलम् । यथा, राजनिर्घण्टे ।
"अनिधाय मुखे पर्णं पूगं स्वादयते नरः ।
मतिभ्रंशो दरिद्रः स्यादन्ते न स्मरते हरिम् ॥
ताम्बूलधारिलक्षणं यथा, --
"अनाहार्य्योऽनृशंसश्च दृढभक्तिश्च पार्थिवे ।
ताम्बूलधारी भवति नारी वाप्यथ तद्गुणा ॥"
इति मात्स्ये १८९ अध्यायः ॥

'उरसि त्रिंशतं दद्यात् विंशतिं जठरे तथा ॥
बाहुभ्याञ्च शतं दद्यात् दद्यादङ्गुलिभिर्द्दश ।
द्वादशार्द्धं वृषणयोरष्टार्द्धं शिश्न एव च ॥
ऊरुभ्यान्तु शतं दद्यात् त्रिंशतं जानुजङ्घयोः ।
पादाङ्गुलीषु च दश एतत् प्रेतस्य लक्षणम् ॥
ऊर्णासूत्रेण संवेष्ट्य यवपिष्टेन लेपयेत् ॥'
आदिपुराणम् ।
'तदलाभे पलाशोत्थैः पत्रैः कार्य्यः पुमानपि ।
शतैस्त्रिभिस्तथा षष्ट्या शरपत्रैर्विधानतः ॥'
तदलाभे अस्थ्यलाभे । अत्र पलाशपत्रशरपत्रयोः
तुल्यत्वेनोपादानात् आश्वलायनसूत्रेऽपि प्रति-
कृतौ शरपत्रस्य लाभः । अत्राचाराद्योग्यत्वाच्च
शरपत्रैः पुत्तलकं कृत्वा शिरप्रभृतिषु पलाश-
पत्राणि देयानि । ततो वेष्टनं ऊर्णासूत्रेण लेपनं
यवपिष्टेनेति । अशौचाभ्यन्तरदाहे शेषाहेन-
शुद्धिः । तदुत्तरपर्णनरदाहे तु त्रिरात्रम् । एवं
पर्णनरं दग्ध्वा त्रिरात्रमशुचिर्भवेदित्यादि पुरा-
णात् । यज्ञपार्श्वः ।
'पुत्राश्चेदुपलभ्येरन् तदस्थीनि कदाचन ।
तदलाभे पलाशस्य सम्भवे हि पुनः क्रिया ॥'

| | | |
|---|---|---|
| लकादटिः । "बह्वादिभ्यश्च ।" ४ । १ । ४५ इति वाङीष् ।) प्लक्षवृक्षः । इत्यमरटीकायां भरतः ॥ पाकुड इति भाषा ॥ (यथा, हितोपदेशे । "अस्ति तत्र महान् पर्कटीवृक्षः ॥") तस्य गुणाः भावप्रकाशे । "प्लक्षः कषायः शिशिरो व्रणयोनिगदापहः । दाहपित्तकफास्रघ्नः शोथहा रक्तपित्तहृत् ॥"<br><br>**पर्कटी**, [न्] पुं, वृक्षविशेषः । पाकुड इति भाषा ॥ तत्पर्य्यायः । प्लक्षः २ जटी ३ । इत्य-मरः । २ । ४ । ३२ ॥ कमण्डलुतरुः ४ । इति | (पिपर्त्ति पालयति गगनपातादिति । पॄ + न । | |

हि यस्मात्तदलाभे अस्थ्नामप्राप्तौ
पलाशस्य तत-
कृतपुत्तलकस्य दाहक्रिया । पुनरपि सम्भवे
अस्थिलाभे पुनरपि अस्थिदाहक्रिया
विहिता
तस्माद्यदि पुनरस्थीनि प्राप्यन्ते तदा
पुनर्दाह-
त्रिरात्राशौचे कर्त्तव्ये न पुनः पिण्डादिदानं
वक्ष्य-
माणयुक्तेः । विष्णुः ।
“त्रिपक्षे तु गते पर्णनरं दह्यादनग्निकः ।
त्रिपक्षाभ्यन्तरे राजन्नैव पर्णनरं दहेत् ॥
तदूर्द्ध्वमष्टमीं प्राप्य दर्शं वापि विचक्षणः
॥”
दहेदिति शेषः । अस्यार्थः ।
अशौचाभ्यन्तरे
यदि पर्णनरदाहं न कुर्य्यात्तदा मरणदिना-
वधित्रिपक्षानन्तरं दाहः कार्य्य इत्यर्थः ।
इति
हरिदासतर्काचार्य्याः ॥ यादवभट्टोऽप्येवम् ।
व्यव-
हारोऽपि ईदृश एव ।
‘पर्णनरं दहेन्नैव विना दर्शं कदाचन ।
अस्थ्नामलाभे दर्शे तु ततः पर्णनरं दहेदिति
॥’
दीपकलिकायां सुमन्तुवचनात् दर्शे पर्णनर-
दाहः । दर्शमित्यत्राष्टमीमिति क्वचित् पाठः
।
अत्राष्टमी कृष्णा पितृकर्म्मणि कृष्णपक्षस्य
प्राशस्त्योक्तेः ।” इति शुद्धितत्त्वम् ॥

**पर्णभेदिनी**, स्त्री, (पर्णानि भिनत्तीति । पर्ण +
भिद् + णिनिः स्त्रियां ङीप् ।) प्रियङ्गुः ।
इति
राजनिर्घण्टः ॥

**पर्णभोजनः**, पुं, (पर्णान्येव भोजनं यस्य । पर्णानि
भुङ्क्ते इति वा । भुज् + कर्त्तरि ल्युः ।)
छागलः ।
इति शब्दरत्नावली ॥

**पर्णमाचालः**, पुं, (पर्णमाचालयतीति । पर्ण +
तच्छिष्याध्ययननिवेदितावसानां
संविष्टः कुशशयने निशां निनाय ॥”
मध्यदेशस्थग्रामविशेषः । यथा महाभारते ।
१३ । ६८ । ३ ।
“मध्यदेशे महान् ग्रामो ब्राह्मणानां बभूव ह ।
गङ्गायमुनयोर्मध्ये यासुनस्य गिरेरधः ॥
पर्णशालेति विख्यातो रमणीयो नराधिप ! ॥”)

**पर्णसिः**, पुं, (पॄ पूरणे + “सानसिवर्णसिपर्ण-
सीति ।” उणां । ४ । १०७ । इति असिर्नुक्
च ।) पद्मम् । इत्युणादिकोषः ॥ जलगृहम् ।
जलटुङ्गी इति भाषा ॥ इति सिद्धान्तकौमुद्या-
मुणादिवृत्तिः ॥ शाकम् । आभरणक्रिया । इति
संक्षिप्तसारोणादिवृत्तिः ॥

**पर्णाशनः**, पुं, (पर्णं अश्नाति भक्षयतीति । अश +
ल्युः । पर्णानामशनः ।) मेघः । इति शब्दमाला ॥

**पर्णासः**, पुं, (पर्णैरसति दीप्यति शोभते इति
यावत् । अस दीप्तौ + अच् ।) तुलसी । इत्य-
मरः । २ । ४ । ७९ ॥

**पर्णिनी**, स्त्री, (पर्णानि सन्त्यस्याः । पर्ण + इनिः ।)
माषपर्णी । इति रत्नमाला ॥ (यथा, सुश्रुते
उत्तरतन्त्रे ६२ अध्याये ।
“वर्हिष्ठरजनीकुष्ठ पर्णिनीशारिवाह्वयैः ॥”
अप्सरोविशेषः । यथा, हरिवंशे । २१८ । ४९ ।
“मेनकासहजन्या च पर्णिनी पुञ्जिकास्थला ॥”)

**पर्णी**, [न्] पुं, (पर्णानि सन्त्यस्य । पर्ण + इनिः ।)
वृक्षः । इति हेमचन्द्रः । ४ । १८० ॥

**पर्णोटजं**, क्ली, (पर्णनिर्म्मितं उटजम् ।) पर्ण-
शाला । इति शब्दरत्नावली ॥

**पर्द्द**, ङ अपानोत्सर्गे । इति कविकल्पद्रुमः ॥ (भ्वां-
आत्मं-अकं-सेट् ।) ङ, पर्द्दते वृद्धः । इति
दुर्गादासः ॥

**पर्द्दः**, पुं, (पॄ + बाहुलकात् दः ।) केशसमूहः ।
इत्युणादिकोषः ॥ (पर्द्द अपानोत्सर्गे + अच् ।)
अपानोत्सर्गश्च ॥

**पर्द्दनं**, क्ली, (पर्द्द + ल्युट् ।) अपानोत्सर्गः ।
“पर्पटो वरतिक्तश्च स्मृतः
पर्पटकश्च सः ।
कथितः पांशुपर्य्यायस्तथा
कवचनामकः ॥
पर्पटो हन्ति
पित्तास्रभ्रमतृष्णाकफज्वरान् ।
संग्राही शीतलस्तिक्तो दाहनुद्वातलो
लघुः ॥”
इति भावप्रकाशः ॥ * ॥
पिष्टकभेदः । पापर इति भाषा ॥
तस्य गुणः ।
लघुत्वम् । रूक्षत्वञ्च । इति
राजवल्लभः ॥
“धूमसीरचिता
हिङ्गुहरिद्रालवणैर्युताः ।
जीरकस्वर्जिकाभ्याञ्च तनुं कृत्वा च
वेल्लिताः ॥
दीपनाः पाचना रूक्षा गुरवः
किञ्चिदीरिताः ॥
मौद्गाश्च तद्गुणाः प्रोक्ता
विशेषाल्लघवो हिताः ।
चणकस्य गुणैर्युक्ताः
पर्पटाश्चणकोद्भवाः ॥
स्नेहे भृष्टास्तु ते सर्व्वे भवेयुर्मध्यमा
गुणैः ॥”
इति भावप्रकाशे पूर्ब्बखण्डे
द्वितीयभागे ॥

**पर्पटद्रुमः**, ण, (पर्पट एव द्रुमः ।) कुम्भीवृक्षः
इति राजनिर्घण्टः ॥

**पर्पटी**, स्त्री, (पर्पट + ङीप् ।) सौराष्ट्रमृत्तिका
।
इति रत्नमाला ॥ पिष्टकभेदः ।
इत्युणादिकोषः ॥
उत्तरदेशभवसुगन्धिद्रव्यम् ।
पपरीति प्रसि-
द्धम् । पद्मावतीति च । तत्पर्य्यायः ।
रञ्जनी २
कृष्णा ३ जतुका ४ जननी ५ जनी
६ जतु-

आ + चल + णिच् + अण् । निपातनात् विभक्ते-
लोंपाभावः । बाहुलकात् मुम् वा ।) कर्म्मरङ्ग-
वृक्षः । इति शब्दमाला ॥

**पर्णमृगः**, पुं, (पर्णचरो मृगः पशुः ।) मृग-

गणविशेषः । यथा, --
"वनौकोवृक्षमार्ज्जारवृक्षमर्क्कटिकादयः ।
एते पर्णमृगाः प्रोक्ताः सुश्रुताद्यैर्महर्षिभिः ॥
वनौका वानरो वृक्षमार्ज्जारो वृक्षविडालः ।
वृक्षमर्कटिका रुषी इति लोके । एतेषां मांसगुणाः ।
"स्मृताः पर्णमृगा वृष्याश्चक्षुष्याः शोषिणे हिताः ।
श्वासार्शःकासशमनाः सृष्टमूत्रपुरीषकाः ॥"
इति भावप्रकाशः ॥

**पर्णलता**, स्त्री, (पर्णप्रधाना लता ।) नागवल्ली ।

इति राजनिर्घण्टः ॥

**पर्णवल्ली**, स्त्री, (पर्णप्रधाना वल्ली ।) पलाशी

लता । इति राजनिर्घण्टः ॥

**पर्णशाला**, स्त्री, (पर्णैः पत्रादिभिः रचिता

शाला । मध्यपदलोपिसमासः ।) मुनीनां पत्र-
रचितगृहम् । तत्पर्य्यायः । उटजम् २ । इत्य-
मरः । २ । २ । ६ ॥ पर्णोटजम् ३ । इति शब्द-
रत्नावली ॥ पर्णवती शाला । पर्णप्रधाना शाला
वा । इति भरनः ॥ (यथा, रघुः । १ । ९५ ।
"निर्दिष्टां कुलपतिना स पर्णशाला-
मध्यास्य प्रयतपरिग्रहद्वितीयः ।

इति हेमचन्द्रः । ६ । ३९ ॥ पाद् इति भाषा ॥

**पर्पं**, क्ली, (पॄ पालनादौ + "खष्पशिल्पशष्पवाष्प-

रूपपर्पतल्पाः ।" उणां । ३ । २८ । इति निपा-
तनात् सिद्धम् ।) नवतृणम् । गृहम् । इत्युणादि-
कोषः ॥ खञ्जवाह्यशकटम् । इति सिद्धान्त-
कौमुद्यामुणादिवृत्तिः ॥

**पर्पटः**, पुं, (पर्प + अटन् ।) वृक्षविशेषः । क्षेत-

पापडा इति वङ्गभाषा । दवनपापर इति
हिन्दीभाषा । तत्पर्य्यायः । त्रियष्टिः २ तिक्तः ३ ।
इति रत्नमाला ॥ चरकः ४ रेणुः ५ तृष्णारिः ६
वरकः ७ अरकः ८ शीतः ९ शीतप्रियः १०
पांशुः ११ कल्पाङ्गः १२ कर्म्मकण्टकः १३ कृश-
शाखः १४ प्रगन्धः १५ सुतिक्तः १६ रक्त-
पुष्पकः १७ पित्तारिः १८ कटुपत्रः १९ वक्रः २० ।
अस्य गुणाः । शीतलत्वम् । तिक्तत्वम् ।
पित्तश्लेष्मज्वररक्तदाहारुचिग्लानिमदभ्रमनाशि
त्वञ्च । इति राजनिर्घण्टः ॥ * ॥

कृष्णा ७ संस्पर्शा ८ जतुकृत् ९
चक्रवर्त्तिनी १० ।
अस्या गुणाः । तुवरत्वम् । तिक्तत्वम् । शिशि-
रत्वम् । वर्णकृत्त्वम् । लघुत्वम् । विषव्रणकण्डू-
कफपित्तास्रकुष्ठनाशित्वञ्च । इति भावप्रकाशः ॥

**पर्परीकः**, पुं, (पिपर्त्तीति । प + "शपॄवृञां द्वे

रुक्चाभ्यासस्य ।" उणां । ४ । १९ । इति इकन्
द्वित्वं अभ्यासस्य रुगागमश्च ।) सूर्य्यः । इत्यु-
णादिकोषः ॥ वह्निः । इति त्रिकाण्डशेषः ।
जलाशयः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**पर्पिकः**, पुं, स्त्री, पर्पेण गच्छतीति । (पर्प + ठन् ।

खञ्जः । इति सिद्धान्तकौमुदी ॥

**पर्ब्ब**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां परं-सकं-

**पर्य्यङ्कः**, पुं, (परितोऽङ्व्यते इति । परि + अकि-

लक्षणे + घञ् ।) खट्वा । पालङ्क इति भाषा ॥
इत्यमरः । २ । ६ । १३८ ॥ तत्पर्य्यायः । (मञ्चः
मञ्चकः ३ पल्यङ्कः ४ । इति हेमचन्द्रः । ३ । ३४७ ॥)
पर्य्यस्तिका ५ परिकरः ६ अवसक्थिका ७)
इति च तत्रैव । ३ । ३४३ ॥ (यथा, महा-
भारते । ३ । २४६ । ८ ।
"अथोपविष्टं राजानं पर्य्यङ्के ज्वलनप्रभे ।
उपप्लुतं यथा सोमं राहुणा रात्रिसंक्षये ।
उपगम्याब्रवीत् कर्णो दुर्य्योधनमिदं तदा ॥"

| | | योगपट्टः । यथा, कुमारे । ३ । ४५ ।<br>पर्य्यङ्कबन्धस्थिरपूर्ब्बकायं<br>मृज्वायतं सन्नमितोभयांसम् ॥”)<br><br>**पर्य्यङ्कपादिका**, स्त्री, (पर्य्यङ्कस्येव पादोऽस्त्यस्याः ।<br><br>ठन् टाप् च ।) कोलशिम्बी । इति<br>राज-<br>निर्घण्टः ॥<br><br>**पर्य्यङ्कबन्धनं**, क्ली, (पर्य्यङ्कवत् यद्बन्धनम् ।)<br><br>वस्त्रादिना पृष्ठजानुजङ्घावन्धनम्।<br>फाँड्वाँधा<br>इति भाषा ॥ यथा, -- |
|---|---|---|

"पादप्रसारणञ्चाग्रे तथा पर्य्यङ्कबन्धनम् ॥"
इत्यपराधगणनायां हरिभक्तिविलासः ॥

**पर्य्यटनं**, क्ली, (परितोऽटनं भ्रमणम् । परि + अट + भावे ल्युट् ।) सर्व्वतोभावेनाटनम् । पुनः पुनर्गमनम् । भ्रमणम् । तत्पर्य्यायः । व्रज्या २ अटाट्या ३ । इत्यमरः । २ । ७ । ३६ ॥ (यथा, भागवते । ९ । ७ । १८ ।
"भूमेः पर्य्यटनं पुण्यं तीर्थक्षेत्रनिषेवणैः ॥")

**पर्य्यनुयोगः**, पुं, (परितोऽनुयोगः पृच्छा । परि + अनु + युज् + भावे घञ् ।) जिज्ञासा । इति हलायुधः ॥ ("एतेनास्यापि पर्य्यनुयोगस्यानवकाशः ।" इति दायभागः ॥)

**पर्य्यन्तः**, पुं, (परितोऽन्तम् । प्रादिसमासः ।) शेषसीमा । इति दुर्गादासः ॥ (यथा, पञ्चतन्त्रे । १ । १४१ ।
"पर्य्यन्तो लभ्यते भूमेः ससुद्रस्य गिरेरपि ।
न कथञ्चित् महीपस्य चित्तान्तः केनचित् क्वचित् ॥"
समीपम् । यथा, हरिवंशे । १२२ । ५३ ।
"पर्य्यन्तदेशं सरसेन देवी
लिलेप सा लोहितचन्दनेन ॥"
पार्श्वः । यथा, रघौ । १८ । ४३ ।
"पर्य्यन्तसञ्चारितचामरस्य
कपोललोलोभयकाकपक्षात्।
तस्याननादुच्चरितो विवादः
चस्खाल वेलास्वपि नार्णवानाम् ॥")

**पर्य्यन्तभूः**, स्त्री, (पर्य्यन्तस्य शेषसीमाया भूः पृथिवी ।) नदीनगरपर्व्वतादेरुपान्तभूमिः ।

**पर्य्यवस्थाता** [ऋ] त्रि, (पर्य्यवतिष्ठते इति । परि + अव + स्था + तृच् ।) पर्य्यवस्थाकर्त्ता । विरोधी । इति हलायुधः ॥ (यथा, किरा-तार्ज्जुनीये । ११ । १३ ।
"अन्तकः पर्य्यवस्थाता जन्मिनः सन्ततापदः ।
इति त्याज्ये भवे भव्यो मुक्तावुत्तिष्ठते जनः ॥")

**पर्य्यवस्थानं**, क्ली, (परितोऽवतिष्ठतेऽनेन । परि + अव + स्था + करणे ल्युट् ।) विरोधः । इति जटाधरः ॥ सर्व्वतोभावेनावस्थितिश्च ॥

**पर्य्यस्तः**, त्रि, (परितोऽस्तः क्षिप्तः । अस्यु इर क्षेपे + क्तः ।) पतितः । हतः । इति मेदिनी । ते, १२१ ॥ (सर्व्वतः प्रसृतः । विस्तृतः । यथा, हरिवंशे । १५९ । २० ।
"पर्य्यस्तां पृथिवीं कृत्स्नां साश्वां सरथकुञ्जराम् ॥")

**पर्य्यस्तिका**, स्त्री, (परितः अस्यते क्षिप्यते शरीरमत्र । परि + अस क्षेपे + अधिकरणे क्तिन् । ततः स्वार्थे कन् ।) खट्वा । इति हेमचन्द्रः । ३ । ३४३ ॥

**पर्य्याणं**, क्ली, (परितो याति गच्छत्यनेनेति । परि + या + ल्युट् । पृषोदरादित्वात् साधुः । अश्वपल्ययनम् । इति हेमचन्द्रः । ४ । ३१८ ॥ (यथा, बृहत्संहितायाम् । ९३ । ६ ।
"आरोहणमन्यवाजिनां
पर्य्याणादियुतस्य वाजिनः ।
उपवाह्य तुरङ्गमस्य वा
स्यानतिपातोऽनुपात्ययः ।) पर्य्ययणम् । क्रमः । (यथा, कुमारे । २ । ३६ ।
"पर्य्यायसेवामुत्सृज्य पुष्पसम्भारतत्पराः ।
उद्यानपालसामान्यमृतवस्तमुपासते॥")
तत्पर्य्यायः । आनुपूर्ब्बी २ आवृत् ३ परिपाटी ४ अनुक्रमः ५ । इत्यमरः । २ । ७ । ३७ ॥ आनुपूर्ब्ब्यम् ६ आनुपूर्ब्बम् ७ आनुपूर्ब्बकम् ८ परिपाटिः ९ । इति भरतादयः ॥ प्रकारः । अवसरः । इति मेदिनी । ये, ८९ ॥ निर्म्माणम् । द्रव्यधर्म्मः । इति हेमचन्द्रः ॥ ६ । १३९ । क्रमेणैकार्थवाचकाः शब्दाः पर्य्यायाः । इति विजयरक्षितः ॥ सम्पर्कविशेषः । येन सह यत्सम्पर्कः सम्बन्धस्तेन सह तत्पर्य्यायः । यथा, --
"समानं कुलभावञ्च दानादानन्तथैव च ।
तयोर्व्वंशसमानं हि पर्य्यायञ्च प्रचक्षते ॥"
इति कुलदीपिका ॥
(अर्थालङ्कारविशेषः । यथा, साहित्यदर्पणे १० । १०४ ।
"क्वचिदेकमनेकस्मिन्ननेकञ्चैकगं क्रमात् ।
भवति क्रियते वा चेत् तदा पर्य्याय इष्यते ॥"
उदाहरणं क्रमेण यथा, --
"स्थिताः क्षणं पक्ष्मसु ताडिताधराः
पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे
क्रमेण नाभिं प्रथमोदविन्दवः ॥
विचरन्ति विलासिन्यो यत्र श्रोणिभरालसाः ।
वृककाकशिवास्तत्र धावन्त्यरिपुरे तव ॥
विमृष्टरागादधरान्निवर्त्तितः
स्तनाङ्गरागादरुणाच्च कन्दुकात् ।
कुशाङ्कुरादानपरिक्षताङ्गुलिः
कृतोऽक्षसूत्रप्रणयी तया करः ॥
ययोरारोपितस्तारो हारस्तेऽरिबधूजनैः ।
निधीयन्ते तयोः स्थूलाः स्तनयोरश्रुबिन्दवः ॥
एषु च क्वचिदाधारः संहतरूपोऽसंहतरूपश्च ।

तत्पर्य्यायः । परिसरः २ । इत्यमरः । २ ।
१ । १४ ॥

**पर्य्यन्तिका**, स्त्री, (परितः सर्व्वतो भावेन अन्तिका

गुणादीनां नाशिका ।) गुणभ्रंशः । इति
हारा-
वली । २१० ॥

**पर्य्यन्यः**, पुं, (पर्जन्य + पृषोदरादित्वात् साधुः ।)

इन्द्रः । शब्दायमानमेघः । मेघशब्दः ।
इत्यु-
णादिकोषः ॥ (यथा, गोः रामायणे । ६ ।
३१ । ३२ ।
“ततो दुन्दुभिनिर्घोषः पर्य्यन्यनिनदोपमः
॥”)

**पर्य्ययः**, पुं, (परि क्रमशः अयो गमनम् ।) क्रमो-

ल्लङ्घनम् । (परि शास्त्रलोकाचारमर्य्यादां
परि-
त्यज्य अयो गमनमुल्लङ्घनमित्यर्थः ।)
व्यति-
क्रमः । शास्त्रतो लोकव्यवहाराच्च
प्राप्तस्यार्थस्य
परित्यागः । तत्पर्य्यायः । अतिपातः २
उपा-
त्ययः ३ । इत्यमरभरता ॥ विपर्य्ययः ४
अत्ययः ५ ।
अतिपतनम् ६ व्यत्ययः ७ अतिक्रमः ८ ।
इति
शब्दरत्नावली ॥ (यथा, महाभारते । २ ।
४८ । १२ ।
“अश्नाम्याच्छादये चाहं यथा
कुपुरुषस्तथा ।
अमर्षं धारये चोग्रं प्रतीक्षन् कालपर्य्ययम्
॥”)

**पर्य्ययणं**, क्ली, (परितोऽयते गच्छत्यनेन । परि +

अय + ल्युट् ।) अश्वसज्जा । इति
शब्दमाला ॥
जिन् इति भाषा ॥

**पर्य्यवस्था**, स्त्री, (परितोऽवस्थानम् । परि + अव

+ स्था + “आतश्चोपसर्गे ।” ३ । ३ ।
१०६ ।
कल्यस्यैव विपन्नशोभना ॥”)

**पर्य्याप्तं**, क्ली, (परि + आप् + भावे क्तः ।) यथेष्टम्
।

तृप्तिः । शक्तिः । निवारणम् । इति मेदिनी
।
ते, १२७ ॥ त्रि, प्राप्तः ॥ (शक्तिसम्पन्नः ।
यथा,
भगवद्गीतायाम् । १ । १० ।
“पर्य्याप्तन्त्विदमेतेषां बलं भीमाभिरक्षितम्
।”
“पर्य्याप्तं समर्थं भाति इति ।”
श्रीधरस्वामी ॥)

**पर्य्याप्तिः**, स्त्री, (परि + आप + क्तिन् ।) परि-

त्राणम् । मरणोद्यतस्य निवारणम् ।
इत्यमर-
भरतौ ॥ प्रकाशः । प्राप्तिः । इति
शब्दरत्ना-
वली ॥ (तृप्तिः । यथा, कथासरित्सागरे ।
२६ । १९९ ।
“नास्ति व्यसनिनां वत्स ! भुवि पर्य्याप्तये
धनम् ॥”
शक्तिः । यथा, तत्रैव । २६ । ४७ ।
“प्रविष्टः सोऽप्यपश्यत्तां तत्र
नेत्रोत्सवप्रदाम् ।
धातुरद्भुतनिर्म्माणपर्य्याप्तिमिव रूपिणीम्
॥”)
स्वरूपसम्बन्धविशेषः । स च सर्व्वेषामेव
पदार्थानां
विशिष्टबुद्धिनियामकः । पदार्थभेदेन नाना
।
यथा । पर्य्याप्तिश्चायमेको घट इमौ द्वौ
इत्यादि
प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः ।
इति
दीधितिः ॥ समवायेन गुणे
गुणस्यासत्त्वेऽपि
चत्वारो गुणा इत्यादि प्रतीत्या गुणादिषु
संख्यादिमत्त्वनियामकोऽपि
तादृशसम्बन्धः । इति
सामान्याभावे जगदीशः ॥
द्वितीयव्युत्पत्तिवादे
क्वचिदाधेयमपि । यथा, ‘स्थिताःक्षणं
पक्ष्मसु’
इत्यत्र उदबिन्दवः पक्ष्मादावसंहतरूप आधारे
क्रमेणाभवन् । ‘विचरन्ति’ इत्यत्राधेयभूता
वृकादयः संहतरूपारिपुरे क्रमेणाभवन् । एव-
मन्यत् । अत्र चैकस्यानेकत्र क्रमेणैव वृत्ते-
र्विशेषालङ्काराद्भेदः । विनिमयाभावात् परि-
वृत्तेः ॥”)

**पर्य्यायशयनं**, क्ली, (पर्य्यायेण क्रमेण शयनम् ।)

प्रहरिकादीनां क्रमेण शयनम् । तत्पर्य्यायः ।
उपशायः २ विशायः ३ । इत्यमरभरतौ ॥

**पर्य्यासः**, पुं, (पर्य्यस्यते इति । परि + अस् + घञ् ।)

पतनम् । हननम् । इति
पर्य्यस्तशब्दार्थदर्शनात् ॥
(परिवर्त्तः । यथा, मार्कण्डेयपुराणे । ५४ । २
।
“महाभूतप्रमाणञ्च लोकालोकन्तथैव च ।
पर्य्यासं परिमाणञ्च गातञ्चन्द्रार्कयोरपि ॥”)

**पर्य्युदच्चं**, क्ली, (पर्य्युदच्यते इति । परि + उत् +

अञ्च + “कृत्यल्युटो बहुलम् ।” ३ । ३ ।
११३ ।
इति ल्युट् ।) ऋणम् । इत्यमरः । २ । ९ । ३
॥

| | | |
|---|---|---|
| इत्यङ् ।) विरोधनम् । इत्यमरः । ३ । २ । २१ ॥ | गदाधरभट्टाचार्य्यश्च ॥<br>**पर्य्यायः**, पुं, (परि + इन गतौ + ‘परावनुपात्यय इनः ।’ ३ । ३ । ३८ । इति घञ् । क्रमप्राप्त- | |

**पर्य्युदस्तः**, त्रि, (पर्य्युदस्यते इति । परि + उत् + अस + क्तः ।) पर्य्युदासविशिष्टः । विध्यन्वयि-भेदात्मकनञर्थयुक्तः । यथा । यद्यपि पर्य्युदस्त-रात्र्यादिषु श्राद्धादिकरणे विधेरौदासीन्यान्न फलं न वा प्रत्यवाय इति सिद्धान्तः ॥ इति मल-मासतत्त्वम् ॥ (परित उत्क्षिप्ते त्रि ॥)

**पर्य्युदासः**, पुं, परि सर्व्वतोभावेन उदास्यते विधि-यत्र सः । (परि + उत् + अस् + घञ् ।) तस्य लक्षणम् श्राद्धविवेके ।
"सामान्यशास्त्रप्राप्तनिषेधस्यैव पर्य्युदासत्वम् ॥"
अपि च मलमासतत्त्वे ।
"प्राधान्यन्तु विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्य्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥"
अस्योदाहरणम् । अमावस्यायां पितृभ्यो दद्यात् रात्रौ श्राद्धं न कुर्व्वीत । अत्र श्राद्धकरणे रात्रेः पर्य्युदासः ॥ (यथा च साहित्यदर्पणे । ७ । ३ ।
"जुगोपात्मानमत्रस्तो भेजे धर्म्ममनातुरः ।
अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत् ॥
अत्रात्रस्ततामनूद्यात्मगोपनाद्येवविधेयमिति नञः पर्य्युदासतया गुणभावो युक्तः ॥")

**पर्य्युषितं**, त्रि, (परित्यज्य स्वकालमुषितम् । वस + क्तः ।) व्युष्टम् । वासि इति भाषा । तस्या-भक्षणीयत्वं यथा, --
"भक्तं पर्य्युषितोच्छिष्टं श्वस्पृष्टं पतितेक्षितम् ।
उदक्यास्पृष्टसंमृष्टं पर्य्यायाप्तञ्च वर्ज्जयेत् ॥"
इति गरुडपुराणम् ॥
"यातयामं गतरसं पूतिपर्य्युषितञ्च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥"
इति भगवद्गीता ॥ * ॥
तस्य भक्ष्यत्वं यथा, --
"मन्त्राभिमन्त्रितं शस्तं न च पर्य्युषितं नृप ! ।
अन्यत्र फलमासेभ्यः शुष्कशाकादिकात्तथा ॥
तद्वद्बादरिकेभ्यश्च गुडपक्वेभ्य एव च ॥"
इत्याह्निकतत्त्वम् ॥
तुलसीयुक्तपुष्पे पर्य्युषितदोषाभावो यथा, --
"तुलसीलग्नपुष्पाणि पद्मं गङ्गोदकं कुशाः ।
न पर्य्युषितदोषोऽत्र छिन्नभिन्नं न दुष्यति ॥"
इति पुराणम् ॥

**पर्व्व**, [न्] क्ली, (पर्व्वतीति । पर्व्व गतौ + बाहु-लकात् कनिन् । यद्वा, पिपर्त्तीति । पॄ + "स्ना-मदिपद्यर्त्तिपॄशकिभ्यो वनिप् ।" उणां । ४ । ११२ । इति वनिप् ।) महः । ग्रन्थिः । (यथा, भागवते । ५ । २१ । १७ । "तथा वालखिल्या ऋषयोऽङ्गुष्ठपर्व्वमात्राः षष्टिसहस्राणि पुरतः सूर्य्यं सूक्तवाकाय नियुक्ताः संस्तुवन्ति ॥")
प्रस्तावः । लक्षणान्तरम् । दर्शप्रतिपदोः सन्धिः । (पूर्णिमाप्रतिपदोःसन्धिश्च । यथा, साहित्यदर्पणे ।
"अकालजलदावली किरतु नाम मुक्तावली-रपर्व्वणि विधुन्तुदस्तुदतु नाम शीतद्युतिम् ॥")
विषुवत्प्रभृति । इति मेदिनी । ने, ८८ ॥ ग्रन्थ-विच्छेदः । इति त्रिकाण्डशेषः ॥ (यथा, महा-भारते अष्टादशपर्व्वाणि । तानि उक्तानि यथा तट्टीकायाम् ।
"आदिः सभावनविराटमथोद्यमश्च
भीष्मो गुरू रविजमद्रकसौप्तिकश्च ।
स्त्रीपर्व्व शान्तिरनुशासनमश्वमेध-
व्यासाश्रमो मुषलयानदिवावरोहः ॥")
क्षणः । इति शब्दचन्द्रिका ॥ (भङ्गी । यथा, रघुवंशे । १६ । ४६ ।
दिने दिने शैवलवन्त्यधस्तात्
सोपानपर्व्वाणि विमुञ्चदम्भः ॥")
पञ्चपर्व्वाणि यथा । विष्णुपुराणम् ।
"चतुर्द्दश्यष्टमी चैव अमावास्याथ पूर्णिमा ।

इति अतच् ।) यद्वा, पर्व्वणि भागाः सन्त्यत्र ।
पाहाड इति भाषा ॥ तत्पर्य्यायः ।
महीध्रः २
शिखरी ३ क्ष्माभृत् ४ अहार्य्यः ५
धरः ६
अद्रिः ७ गोत्रः ८ गिरिः ९ ग्रावा १०
अचलः ११ शैलः १२ शिलोच्चयः १३ । इत्य-मरः । २ । ३ । १ ॥ स्थावरः १४
सानुमान् १५
पृथुशेखरः १६ धरणीकीलकः १७
कुट्टारः १८
जीमूतः १९ धातुभृत् २० भूधरः २१
स्थिरः २२
कुलीरः २३ कटकी २४ शृङ्गी २५
निर्झरी २६
अगः २७ नगः २८ दन्ती २९ । इति शब्द-रत्नावली ॥ धरणीध्रः ३९ भूभृत् ३१ क्षिति-भृत् ३२ अवनीधरः ३३ कुधरः ३४
धराधरः ३५
प्रस्थवान् ३६ वृक्षवान् ३७ । इति राज-निर्घण्टः ॥ * ॥ सुमेरोः पूर्ब्बे पर्व्वता यथा, --
"शीतान्तश्चक्रमुञ्जश्च कुलीरोऽश्वश्च कङ्कवान् ।
मणिशैलोऽथ वृषवान् महानीलो भवाचलः ॥
सुबिन्दुर्म्मन्दरो वेणुः सुमेषो निमिषस्तथा ।
देवशैलस्य पूर्ब्बेण मन्दरस्य महाचलाः ॥" * ॥
सुमेरोर्दक्षिणे पर्व्वता यथा, --
"त्रिकूटः शिखराद्रिश्च कलिङ्गोऽथ पतङ्गकः ।
रुचकः सानुमांश्चैव ताम्रकोऽथ विशाखवान् ॥

**पर्य्युषितभोजी**, [न्] त्रि, (पर्य्युषितं व्युष्टं भुङ्क्ते इति । भुज + णिनिः ।) व्युष्टद्रव्यभोक्ता । इति कलापव्याकरणम् ॥

**पर्य्येषणा**, स्त्री, (इष् + युच् + टाप् । ततः परित एषणा ।) अन्वेषणा । इत्यमरः । २ । ७ । ३२ ॥ तर्कादिना यथाबोधितधर्म्माद्यन्वेषणे । अन्वेषणमात्रेऽपि । इति भरतः ॥ (क्ली, अन्वेषणम् । यथा, महाभारते । ३ । २६ । १८ । "ब्राह्मणेष्वेव मेधावी बुद्धिपर्येषणञ्चरेत् ॥")

**पर्व्व**, गतौ । (भ्वां-परं-सकं-सेट् ।) पर्व्वति । इति दुर्गादासः ॥

**पर्व्व**, पूर्त्तौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) पर्व्वति पयसा कुम्भं चेटी । इति दुर्गादासः ॥

पर्व्वाण्येतानि राजेन्द्र ! रविसंक्रान्तिरेव च ॥
स्त्रीतैलमांससम्भोगी पर्व्वस्वेतेषु वै पुमान् ।
विण्मूत्रभोजनं नाम प्रयाति नरकं मृतः ॥"
पर्व्वसु कर्त्तव्याकर्त्तव्यानि यथा ।
ब्रह्मपुराणे ।
"नित्यं द्वयोरयनयोर्न्नित्यं विषुवतोर्द्वयोः ।
चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्व्वसु ॥
अहोरात्रोषितः स्नानं श्राद्धं दानं तथा जपम् ।
यः करोति प्रसन्नात्मा तस्य स्यादक्षयञ्च तत् ॥"
पराशरभाष्ये कूर्म्मपुराणम् ।
"अनध्यायस्तु नाङ्गेषु नेतिहासपुराणयोः ।
न धर्म्मशास्त्रेष्वन्येषु पर्व्वस्वेतानि वर्ज्जयेत् ॥"
पैठीनसिः । न पर्व्वसु तैलं क्षौरं मांसमभ्युपेयात् नामावस्यायां हरितमपि छिन्द्यात् । इति तिथ्यादितत्त्वम् ॥

**पर्व्वकं**, क्ली, (पर्व्वणा ग्रन्थिना कायतीति । कै + कः ।) ऊरुपर्व्व । इति शब्दचन्द्रिका ॥ आँटु इति भाषा ॥

**पर्व्वकारी**, [न्] पुं, (पर्व्व करोतीति । पर्व्व + कृ + णिनिः ।) धनादिलोभेनापर्व्वसु अमावास्याक्रियाप्रवर्त्तकः । यथा, विष्णुपुराणे द्वितीयांशे ६ अः ।
"सूची माहिषकश्चैव पर्व्वकारी च यो द्विजः ॥"

**पर्व्वगामी**, [न्] पुं, (पर्व्वसु चतुर्द्दश्यष्टम्यादिषु गच्छति स्त्रियमिति । पर्व्व + गम + णिनिः ।) पर्व्वसु स्त्रीगामी । इति पूर्ब्बोक्तश्लोके पर्व्वकारीत्यत्र पर्व्वगामीति पाठद्वैधे स्वामी ॥

**पर्व्वतः**, पुं, (पर्व्वति पूरयतीति । पर्व्व पूरणे + "भृमृदृशियजिपर्व्वीति ।" उणां । ३ । ११० ।

श्वेतोदरः समलश्च वसुधारश्च रत्नवान् ।
एकशृङ्गो महाशैलो गजशैलः पिशाचकः ॥
पञ्चशैलोऽथ कैलासो हिमवांश्चाचलोत्तमः ।
इत्येते दक्षिणे पार्श्वे मेरोः प्रोक्ता महाचलाः ॥"
सुमेरोः पश्चिमे पर्व्वता यथा, --
"सुचक्षुः शिशिरश्चैव वैदूर्य्यः पिङ्गलस्तथा ।
पिञ्जरोऽथ तथा भद्रः सुरसः कपिलो मधुः ॥
अञ्जनः कुक्कुटः कृष्णः पाण्डुरश्चाचलोत्तमः ।
सहस्रशिखरश्चाद्रिः पारिपात्रः स शृङ्गवान् ॥
पश्चिमेन तथा मेरोर्विष्कम्भात् पश्चिमाद्बहिः ।
एतेऽचलाः समाख्याताः शृणुष्वातस्तथोत्तरान् ॥"
सुमेरोरुत्तरे पर्व्वता यथा, --
"शङ्खकूटोऽथ ऋषभो हंसनाभौ तथाचलौ ।
कपिलेन्द्रस्तथा शैलः सानुमान्नील एव च ॥
शतशृङ्गः स्वर्णशृङ्गः तुन्नाको मेघपर्व्वतः ।
विराजाख्यो वराहाद्रिर्म्मयूरो रुचिरस्तथा ॥
इत्येते कथिता ब्रह्मन्मेरोरुत्तरतो नगाः ॥"
इति माकण्डेयपुराणम् ॥ * ॥
सप्तकुलपर्व्वतादि यथा, --
"सप्त येऽस्मिन् महापर्व्वा विस्तृताः कुलपर्व्वताः ।
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षवानपि ॥
विन्ध्यश्च पारिपात्रश्च इत्येते कुलपर्व्वताः ।

| | | |
|---|---|---|
| | | तेषां सहस्रशश्चान्ये पर्व्वतास्तु समीपतः ॥<br>अविज्ञाताः पर्व्ववन्तो विपुलाश्चित्रसानवः ।<br>अन्ये तेभ्योऽपरिज्ञाता ह्रस्वाः स्वल्पोपजीविनः ॥<br>तैर्विमिश्रा जनपदा आर्य्या म्लेच्छाश्च सर्व्वशः ॥”<br>इति मात्स्ये ९५ अध्यायः ॥ * ॥<br>विंशतिः श्रेष्ठपर्व्वता यथा, --<br>“हिमवान् हेमकूटश्च निषधो नीलपर्व्वतः ।<br>श्वेतश्च भृङ्गवान् मेरुर्माल्यवान् गन्धमादनः ॥ |

महेन्द्रो मलयः सह्यः शुक्तिमानृक्षवानपि ।
बिन्ध्यश्च पारिपात्रश्च कैलासो
मन्दरस्तथा ॥
लोकालोको महांस्तेषु तथैवोत्तरमानसः ।
एते विंशतिर्विख्याताः पर्व्वतास्तस्थुषां
वराः ॥”
जम्बु द्वीपवर्षविभाजकपर्व्वता यथा, --
“लङ्कादेशाद्धिमगिरिरुदक् हेमकूटश्च
तस्मा-
त्तस्माच्चान्यो निषध इति ते
सिन्धुपर्य्यन्तदैर्घ्याः ।
एवं सिद्धादुदगपि पुराच्छृङ्गवच्छुक्लनीला
वर्षाण्येषां जगुरिह बुधा अन्तरे
द्रोणिदेशान् ॥”
इति सिद्धान्तशिरोमणिः ॥ * ॥
पर्व्वतानां पक्षोत्पत्तिर्यथा, --
“ततोऽद्रयो जातपक्षा विष्णोश्चैव तु
मायया ।
प्रस्थिता मेदिनीं त्यक्त्वा यथापूर्ब्बं
निवेशिताः ॥
तत् स्थानमसुराणान्तु धात्रादिष्टं जलार्णवे
।
प्रतीच्यां पर्व्वताः सर्व्वे निममज्जुर्यथा
गजाः ॥
तत्रासुरेभ्यः शंसुस्ते आधिपत्यं सुराश्रयम्
।
तच्छ्रुत्वैवासुराः सर्व्वे चक्रुरुद्योगमुत्तमम्
॥ * ॥”
युद्धजयानन्तरं तेषां पक्षोच्छेदो यथा, --
“धरण्यान्तु गिरीन् स्थाप्य स्वेषु स्थानेषु
गोःपतिः ।
चिच्छेद पविना पक्षान् सर्व्वेषां भुवि
चारिणाम् ॥
एकः सपक्षो मैनाकः सुरैस्तत्समये कृतः
॥”
इत्यग्निपुराणम् ॥ * ॥
पर्व्वतानां स्थावरजङ्गमरूपे यथा, --
“नद्यश्च पर्व्वताः सर्व्वे द्विरूपाश्च
स्वभावतः ।
तोयं नदीनां रूपन्तु शरीरमपरन्तथा ॥

उलूकरोमसममहाक्रेाादयश्च राजानो विद्या-
धराणाञ्च एकैके च शैलराजनि स्वयमेव
गरुडो
व्यवस्थितः । कुञ्जरे तु पर्व्वतवरे नित्यं
पशुपतिः
स्थितः वृषभाङ्को महादेवः शङ्करो योगिनां
प्रभुः अनेकगुणभूतकोटिसहस्रपरिवारोभग-
वानादिपुरुषो व्यवस्थितः । वसुधारे
चायुष्मतां
वसूनाञ्च समावासः
वसुधाररत्नधारयोर्मूद्‌र्ध्नि
अष्टौ सप्त च संख्यया पुराणि वसुसप्तर्षीणाञ्च
।
एकशृङ्गे च पर्व्वतोत्तमे प्रजापतेः स्थानं चतु-
र्व्वक्त्रस्य ब्रह्मणः । गजपर्व्वते च
महाभूतपरि-
वृता स्वयमेव भगवती तिष्ठति । वसुधारे च
पर्व्वतवरे मुनिसिद्धविद्याधराणामायतनं
चतु-
रशीत्यपरपुर्य्यो महाप्राकारतोरणाः तत्र
चानेकपव्वता नाम गन्धर्व्वा युद्धशालिनो
वसन्ति
तेषाञ्चाधिपतिर्द्देवो राजराजैकपिङ्गलः ।
सुर-
राक्षसाः पञ्चकूटे दानवाः शतशृङ्गे यक्षाणां
पुरशतम् । प्रभेदकस्य पश्चिमेन
देवदानवसिद्धा-
दीनां पुराणि तस्य गिरेर्मूद्‌र्ध्नि महती
सोमशिला
तिष्ठति तस्याञ्च पर्व्वणि पर्व्वणि सोमः
स्वयमेवा-
वतरति । तस्यैवोत्तरपार्श्वे त्रिकूटं नाम तत्र
ब्रह्मा तिष्ठति क्वचित्तत्र च वह्न्यायतनं तत्र
मूर्त्तिमान् वह्निरुपास्यते देवैः । उत्तरे च
शृङ्गाक्षे
पर्व्वतवरे देवतानामायतनानि पूर्ब्बेण नारा-
यणस्यायतनं मध्ये ब्रह्मणः शङ्करस्य च
पश्चिमे
तत्र यक्षादीनां कानिचित् पुराणि । तस्य
चोत्तरतीरे जातुच्छमहापर्व्वते त्रिंशद्योजन-

लेखनं दीपनं रूक्षं किञ्चिद्वातप्रकोपणम् ॥”
इति राजवल्लभः ॥ * ॥
पर्व्वते वर्णनीयानि यथा, --
“शैले मेघौषधीधातुवंशकिन्नरनिर्झराः ।
शृङ्गपादगुहारत्नवनजीवाद्युपत्यकाः ॥”
इति कविकल्पलता ॥ * ॥
अथ कैलासपर्व्वतवर्णनम् ।
“मध्ये हिमवतः पृष्ठे कैलासो नाम पर्व्वतः ।
तस्मिन्निधिपतिः श्रीमान् कुवेरः सह राक्षसैः
॥
अप्सरःसहितो राजा मोदते ह्यलकाधिपः ।
कैलासपादसम्भूतं पुण्यं शीतजलं शुभम् ॥
मन्दोदकं नाम सरः पयस्तु दधिसन्निभम् ।
तस्मात् प्रभवते दिव्या नदी मन्दाकिनी शुभा
॥
दिव्यञ्च चन्दनन्तत्र तस्यास्तीरे महद्वनम् ।
प्रागुत्तरेण कैलासं दिव्यं सौगन्धिकं गिरिम् ॥
सर्व्वधातुमयं दिव्यं शबलं पर्व्वतं प्रति ।
चन्द्रप्रभो नाम गिरिः शुपुभे रत्नसन्निभः ॥
तत्समीपे सरो दिव्यमच्छोदन्नाम विश्रुतम् ।
तस्मात् प्रभवते दिव्या नदी ह्यच्छोदका शुभा
॥
तस्यास्तीरे वनं दिव्यं महच्चैत्ररथं शुभम् ।
तस्मिन् गिरौ निवसति मणिभद्रः सहानुगः ॥
यक्षसेनापतिः क्रूरैर्गुह्यकैः परिवारितः ।
पुण्या मन्दाकिनी चैव नदी ह्यच्छोदका शुभा
॥
महीमण्डलमध्ये तु प्रविष्टा तु महोदधिम् ।
कैलासाद्दक्षिणप्राच्यां शिवं सर्व्वौषधिं गिरिम् ।
मनःशिलामयं दिव्यं शबलं पर्व्वतं प्रति ॥
लोहितो हेमशृङ्गस्तु गिरिः सूर्य्यप्रभो महान् ।
तस्य पादे महद्दिव्यं लोहितं सुमहत् सरः ॥
तस्मात् प्रभवते पुण्यो लोहितश्च नदो महान्
।
देवारण्यं विशोकञ्च तस्य तीरे महद्वनम् ॥
तस्मिन् गिरौ निवसति यक्षो मणिधरो बली ।
सौम्यैः स धार्म्मिकैश्चैव गुह्यकैः परिवारितः
॥ * ॥
कैलासात् पश्चिमोदीच्यां ककुद्मानोषधीगिरिः
॥

स्थावरं पर्व्वतानान्तु रूपं कायस्तथापरः
।
शुक्तीनामथ कम्बूनां तथैवान्तर्गता तनूः
॥
वहिरस्थिस्वरूपन्तु सर्व्वदैव प्रवर्त्तते ।
एवं जलं स्थावरश्च नदीपर्व्वतयोस्तथा ॥
अन्तर्व्वसति कायस्तु सततं नोपपद्यते ।
आप्याय्यते स्थावरेण शरीरं पर्व्वतस्य तु
॥
तथा नदीनां कायस्तु तोयेनाप्याय्यते
सदा ।
नदीनां कामरूपित्वं पर्व्वतानान्तथैव च ॥
जगत्स्थित्योः पुरा विष्णुः कल्पयामास
यत्नतः ।
तोयहानौ नदीदुःखञ्जायते सततन्दिजाः
॥
विशीर्णे स्थावरे दुःखं जायते गिरिकायगम्
॥”
इति कालिकापुराणे २२ अध्यायः ॥ * ॥
अतः परं पर्व्वतेषु देवानामवकाशा
वर्ण्यन्ते ।
तत्र योऽसौ शान्ताख्यः पर्व्वतस्तस्योपरि
महे-
न्द्रस्य क्रीडास्थानं तत्र देवराजस्य
पारिजातक-
वृक्षवनम् । तस्थ पूर्ब्बपार्श्वे कुञ्जरो नाम
गिरिः
तस्योपरि दानवानामष्टौ पुराणि च । तथा
वज्रकेतुपर्व्वते राक्षसानामनेकानि पुराणि
ते च
नाम्ना नीलकाः कामरूपिणः महानीले च
शैलेन्द्रे पुराणि पञ्चदशसहस्राणि
किन्नराणां
ख्यातानि तत्र देवताश्चन्द्रादयो राजानः
पञ्च-
दश किन्नराणां गर्व्विताः तानि सौवर्णानि
विल-
प्रवेशनानि च पुराणि चन्द्रोदये च
पर्व्वतवरे
नागानामधिवासः ते च
विलप्रवेशासेवितेषु

मण्डलं नन्दजं नाम सरस्तत्र नन्दो नाम
नाग-
राजो वसति शतशीर्षप्रचण्ड इति ।
इत्येतेऽष्टौ
देवपर्व्वता विज्ञेयाः तेनानुक्रमेण
हेमरजतरत्न-
वैदूर्य्यमनःशिलादिवर्णाः । इत्यञ्च पृथ्वी
लक्ष-
कोटिशतानेकसंख्याता पूर्णा तेषु च
सिद्धविद्या-
धराणां निलयाः । तद्यथा मेरोः पार्श्वतः
केशरवलयालबालं सिद्धलोकेति कीर्त्त्यते
इयञ्च
पृथ्वी पद्माकारेण व्यवस्थिता एष
सर्व्वपुराणेषु
क्रमः सामान्यः प्रतिपाद्यते । इति वराहपुरा-
णम् ॥ * ॥ हिमालयादिपर्व्वतवासिनो यथा,
--
“रक्षःपिशाचा यक्षाश्च सर्व्वे हैमवतास्तु ते ।
हेमकूटे तु गन्धर्व्वा विज्ञेयाश्चाप्सरोगणाः ॥
सर्व्वे नागाश्च निषधे शेषवासुकितक्षकाः ।
महामेरौ त्रयस्त्रिंशत् क्रीडन्ते याज्ञिकाः
सुराः ॥
नीले तु वैदूर्य्यमये सिद्धा ब्रह्मर्षयोऽवसन् ।
दैत्यानां दानवानाञ्च श्वेतपर्व्वत उच्यते ॥
शृङ्गवान् पर्व्वतश्रेष्ठः पितृणां प्रतिसञ्चरः ।
इत्येतानि मयोक्तानि नव वर्षाणि भागशः ॥”
इति मात्स्ये ९५ अध्यायः ॥ * ॥
अथ पर्व्वतनदीजलगुणाः ।
“हिमवत्प्रभवा याश्च जलं तास्वमृतोपमम् ।
पारिपात्रभावा याश्च बिन्ध्यर्क्षप्रभवाश्च याः
॥
शिरोहृद्रोगकुष्ठानां ता हेतुः श्लीपदस्य च ।
चन्द्रार्क्ककरसंस्पृष्टं वायुनास्फालितां मुहुः ॥
पर्व्वतोपरि यद्वारि समं पौरन्दरेण तत् ।
तस्यानुगुणमुद्दिष्टं शैलप्रस्रवणोद्भवम् ॥

ककुद्मति च रुद्रस्य चोत्पत्तिस्त्रिककुद्मिनः ।
तदञ्चनं त्रैककुदं शैलं त्रिककुदं प्रति ॥
सर्व्वधातुमयस्तत्र सुमहद्वैद्युतो गिरिः ।
तस्य पादे महद्दिव्यं मानसं सिद्धसेवितम् ॥
तस्मात् प्रभवते पुण्या सरयूर्लोकपावनी ।
तस्यास्तीरे वनं दिव्यं वैभ्राजन्नाम विश्रुतम् ॥
कुवेरानुचरस्तस्मिन् प्रहेतितनयो बली ।
नाम्ना वै ब्रह्मधामेति राक्षसोऽनन्तविक्रमः ॥
* ॥
कैलासात् पश्चिमामाशां दिव्यः
सर्व्वौषधिर्गिरिः ।
अरुणः पर्व्वतश्रेष्ठो रुक्मधातुविभूषितः ॥
भवस्य दयितः श्रीमान् पर्व्वतो हेमसन्निभः ।
शातकौम्भमयैर्दिव्यैः शिलाजालैः समन्ततः
॥
शतसंख्यैस्तापनीयैः शृङ्गैर्द्दिवमिवोल्लिखन् ।
युक्तवान् सुमहद्दिव्यैर्दुर्गशैलो महोच्छ्रितः ॥
तस्मिन् गिरौ निवसति गिरीशो धूम्रलोहितः ॥
तस्य पादे महद्दिव्यं सरः काञ्चनबालुकम् ॥
तस्य पादात् प्रभवति शैलोदं नाम तत् सरः ।
तस्मात् प्रभवते पुण्या नदी शैलोदका शुभा ॥
सा वङ्क्षुशीतयोर्मध्ये प्रयिष्ठा पश्चिमोदधिम् ।

| | | |
|---|---|---|
| वैनतेयविषयावर्त्तिनो व्यवस्थितानुरागे च दान-<br>वेन्द्रा व्यवस्थिता वेणुवत्यपि विद्याधरपुरत्रयं<br>त्रिंशद्योजनशतविस्तीर्णमेकैकं तावदायतं | | |

अभ्युत्तरेण कैलासं शिवं सर्व्वौषधिं गिरिम्
।
गौरन्तु पर्व्वतश्रेष्ठं हरितालमयं प्रति ।
हिरण्यशृङ्गः सुमहान् दिव्यौषधिमयो गिरिः
॥
तस्य पादे महद्दिव्यं सरः काञ्चनबालुकम्
।
रम्यं बिन्दुसरो नाम यत्र राजा भगीरथः ॥
गङ्गार्थे स तु राजर्षिरुवास बहुलाः समाः ।
दिवं यास्यन्ति मे पूर्ब्बे
गङ्गातोयपरिप्लुताः ॥
तत्र त्रिपथगा देवी प्रथमन्तु प्रतिष्ठिता ॥”
इति मात्स्ये १०१ अध्यायः ॥
अथ दशधा कृत्रिमपर्व्वतदानम् ।
“प्रथमो धान्यशैलः स्याद्द्वितीयो
लवणाचलः ।
गुडाचलस्तृतीयस्तुं चतुर्थो हेमपर्व्वतः ॥
पञ्चमस्तिलशैलः स्यात् षष्ठः
कार्पासपर्व्वतः ।
सप्तमो घृतशैलश्च रत्नशैलस्तथाष्टमः ॥
राजतो नवमस्तद्वद्दशमः शर्कराचलः ।
वक्ष्ये विधानमेतेषां यथावदनुपूर्ब्बशः ॥
अयने विषुवे पुण्ये व्यतीपाते दिनक्षये ।
शुक्लपक्षे तृतीयायामुपरागे शशिक्षये ॥
विवाहोत्सवयज्ञेषु द्वादश्यामथवा पुनः ।
शुक्लायां पञ्चदश्यां वा पुष्यर्क्षे वा
विधानतः ॥
धान्यशैलादयो देया यथाशास्त्रं विजानता
।
तीर्थे वायतने वापि गोष्ठे वा भवनाङ्गने ॥
मण्डपं कारयेद्भक्त्या चतुरस्रमुदङ्मुखम् ।
प्रागुदक्प्लवनञ्चैव प्राङ्मुखं वा विधानतः ॥
गोमयेनानुलिप्तायां भूमावास्तीर्य्य वै
कुशान् ।
तन्मध्ये पर्व्वतं
कुर्य्याद्विष्कम्भपर्व्वतान्वितम् ॥
धान्यद्रोणसहस्रेण भवेद्गिरिरिहोत्तमः ।
मध्यमः पञ्चशतिकः कनिष्ठः स्यात्त्रिभिः
शतैः ॥
मेरुर्महाव्रीहिमयस्तुमध्ये

वितानकञ्चोपरि पञ्चवर्ण-
मम्लानपुष्पाभरणं सितं वा ।
इत्थं निवेश्यामरशैलमग्र्य-
मतस्तु विष्कम्भगिरीन् क्रमेण ॥
तुरीयभागेण चतुर्द्दिशञ्च
संस्थापयेत् पुष्पविलेपनाढ्यान् ॥
पूर्ब्बेण मन्दरमनेकफलावलीभि-
र्युक्तं यवैः कनकभद्रकदम्बचिह्नम् ।
कामेन काञ्चनमयेन विराजमान-
माकारयेत् कुसुमवस्त्रविलेपनाढ्यम् ॥
क्षीरारुणोदसरसाथ वनेन चैव
रौप्येण शक्तिघटितेन विराजमानम् ।
याम्येन गन्धमदनश्च निवेशनीयो
गोधूमसञ्चयमयः कलधौतजो वा ॥
हैमेन यक्षपतिना हृतमानसेन
वस्त्रैश्च राजतवनेन च संयुतः स्यात् ।
पश्चात्तिलाचलमनेकसुगन्धिपुष्पं
सौवर्णपिप्पलहिरण्मयहंसयुक्तम् ॥
आकारयेद्रजतपुष्पवनेन तद्व-
द्वस्त्रान्वितं दधिसितोदसरस्तथाग्रे ।
संस्थाप्य तं विपुलशैलमथोत्तरेण
शैलं सुपार्श्वमपि ताम्रमयं सुवस्त्रम् ॥
पुष्पैश्च हेमवटपादपशेखरन्त-
माकारयेत् कनकधेनुविराजमानम् ।
माक्षीकभद्रसरसा च वनेन तद्व-
द्रौप्येण भास्वरवता च युतं विधाय ॥
होमश्चतुर्भिरथ वेदपुराणविद्भि-
र्दान्तैरनिन्द्यचरिताकृतिभिर्द्विजेन्द्रैः ।
पूर्ब्बेण हस्तमितमत्र विधाय कुण्डं
कार्य्यन्तिलैर्यवघृतेन समित्कुशैश्च ॥
रात्रौ च जागरमनुद्धतगीततूर्य्यै-
रावाहनञ्च कथयामि शिलोच्चयानाम् ।
त्वं सर्व्वदेवगणधामनिधे ! विरुद्ध-
मस्मद्गृहेष्वमरपर्ब्बत ! नाशयाशु ॥
क्षेमं विधत्स्व कुरु शान्तिमनुत्तमां नः
संपूजितः परमभक्तिमता मया हि ॥
त्वमेव भगवानीशो ब्रह्मा विष्णुर्दिवाकरः ।
मूर्त्तामूर्त्तजगद्बीजस्त्वं नः पाहि सनातनः ॥
यस्मात्त्वं लोकपालानां विश्वमूर्त्तेश्च मन्दिरम् ।
रुद्रादित्यवसूनाञ्च तस्माच्छान्तिं प्रयच्छ मे ॥

स्नात्वाथ गुरवे दद्यान्मध्यमं
पर्व्वतोत्तमम् ॥
विष्कम्भान् पर्व्वतान्दद्यादृत्विग्भ्यः
क्रमशो मुने ! ।
गावो देयाश्चतुर्व्विंशदथवा दश नारद !
॥
शक्तितः सप्त चाष्टौ वा पञ्च
दद्यादशक्तिमान् ।
एकापि गुरवे देया कपिलाथ पयस्विनी ।
पर्व्वतानामशेषाणामेष एव विधिः स्मृतः
॥
त एव पूजने मन्त्रास्त एवोपस्कराः
स्मृताः ।
ग्रहाणां लोकपालानां ब्रह्मादीनाञ्च सर्व्वदा
॥
स्वमन्त्रेणैव सर्व्वेषु होमः शैलेषु पठ्यते ।
उपवासी भवेन्नित्यमशक्तो नक्तमिष्यते ॥
विधानं सर्व्वशैलानां क्रमशः शृणु नारद !
।
दानकाले च ये मन्त्राः पर्व्वतेषु च यत्
फलम् ॥
अन्नं ब्रह्म यतः प्रोक्तमन्नं प्राणाः
प्रकीर्त्तिताः ।
अन्नाद्भवन्ति भूतानि जगदन्नेन वर्त्तते ॥
अन्नमेव यतो लक्ष्मीरन्नमेव जनार्द्दनः ।
धान्यपर्व्वतरूपेण पाहि तस्मान्नगोत्तम् !
॥
अनेन विधिना यस्तु दद्याद्धान्यमयं
गिरिम् ।
मन्वन्तरशतं साग्रं देवलोके महीयते ॥
अप्सरोगणगन्धर्व्वैराकीर्णेन विराजितः ।
विमानेन दिवः पृष्ठमायाति सुरसेवितम् ॥
ततः कर्म्मक्षये राज्यमाप्नोतीह न
संशयः ॥ १ ॥
अथातः संप्रवक्ष्यामि लवणाचलमुत्तमम्
।
यत्प्रदाता नरो लोकं प्राप्नोति
शिवसंयुतम् ॥
उत्तमः षोडशद्रोणः कर्त्तव्यो लवणाचलः
।

सुवर्णवृक्षत्रयसंयुतः स्यात् ।
पूर्ब्बेण मुक्ताफलवज्रयुक्तो
याम्येन गोमेदकपुष्परागैः ॥
पश्चाच्च गारुत्मतनीलरत्नैः
सौम्येन वैदूर्य्यसरोजरागैः ।
श्रीखण्डखण्डैरभितः प्रवाल-
लतान्वितः शुक्तिशिलातलः स्यात् ॥
ब्रह्माथ विष्णुर्भगवान् मुरारि-
र्दिवाकरोऽप्यत्र हिरण्मयः स्यात् ।
मूर्द्धन्यवस्थानममत्सरेण
कार्य्यन्त्वनेके च पुनर्दिवीशाः ॥
चत्वारि शृङ्गाणि च राजतानि
नितम्बभागेष्वपि राजतः स्यात् ।
तथेक्षुवंशावृतकन्दरस्तु
घृतोदकप्रस्रवणश्च दिक्षु ॥
शुक्लाम्बराण्यम्बु धरावली स्यात्
पूर्ब्बेण नीलानि च दक्षिणेन ।
वासांसि पश्चादथ कर्व्वुराणि
रक्ताणि चैवोत्तरतो घनाली ॥
रौप्यान्महेन्द्रप्रमुखानथाष्टौ
संस्थाप्य लोकाधिपतीन् क्रमेण ।
नानाफलाली च समन्ततः स्या-
न्मनोरमं माल्यविलेपनञ्च ॥

यस्मादशून्यममरैर्नारीभिश्च शिरस्तव ।
तस्मान्मामुद्धराशेषदुःखसंसारसागरात् ॥
एवमभ्यर्च्च्य तं मेरुं मन्दरञ्चाभिपूजयेत् ।
यस्माच्चैत्ररथेन त्वं भद्राश्वे च विशेषतः ।
शोभसे मन्दर ! क्षिप्रमतस्तुष्टिकरो भव ॥
यस्माच्चूडामणिर्जम्बुद्वीपे त्वं गन्धमादन ! ।
गन्धर्व्ववनशोभावांस्ततः कीर्त्तिर्दृढास्तु मे ॥
यस्मात्त्वं केतुमालेन वैभ्राजेन वनेन च ।
हिरण्मयश्च शिखरस्तस्मात् पुष्टिर्ध्रुवास्तु मे ॥
उत्तरैः कुरुभिर्यस्मात् सावित्रेण वनेन च ।
सुपार्श्व ! राजसे नित्यमतः श्रीरक्षयास्तु मे ॥
एवमामन्त्र्य तान् सर्व्वान् प्रभाते विमले पुनः ।

मध्यमः स्यात्तदर्द्धेन चतुर्भिरधमः स्मृतः ॥
वित्तहीनो यथाशक्त्या द्रोणादूर्द्ध्वन्तु कारयेत् ।
चतुर्थांशेन विष्कम्भान् पर्व्वतान् कारयेत् पृथक् ॥
विधानं पूर्ब्बवत् कुर्य्यात् ब्रह्मादीनाञ्च सर्व्वदा ।
तद्वद्धेमतनून् सर्व्वान्
लोकपालान्निवेशयेत् ॥
सरांसि कामदेवादींस्तद्वच्चात्र निवेशयेत् ।
कुर्य्याज्जागरमत्रापि दानमन्त्रं निबोधत ॥
सौभाग्यरससंभूतो यतोऽयं लवणो रसः ।
तथात्मकत्वेन च मां पाहि
पापान्नगोत्तम ! ॥
यस्मादन्नरसाः सर्व्वे सोत्कटा लवणं विना ।
प्रियश्च शिवयोर्नित्यं तस्माच्छान्तिप्रदो भव ॥
विष्णुदेहसमुद्भूतो यस्मादारोग्यवर्द्धनः ।
तस्मात् पर्व्वतरूपेण पाहि
संसारसागरात् ॥
अनेन विधिना यस्तु दद्याल्लवणपर्व्वतम् ।
उमालोके वसेत् कल्पं ततो याति परां गतिम् ॥ २ ॥
अतः परं प्रवक्ष्यामि गुडपर्व्वतमुत्तमम् ।
यत्प्रदानान्नरः स्वर्गमाप्नोति सुरपूजितः ॥
उत्तमो दशभिर्भारैर्मध्यमः पञ्चभिर्म्मतः ।
त्रिभिर्भारैः कनिष्ठः
स्यात्तदर्द्धेनाल्पवित्तवान् ॥
तद्वदामन्त्रणं पूजां हैमवृक्षसुरार्च्चनम् ।
विष्कम्भपर्व्वतास्तद्वत् सरांसि
वनदेवताः ॥
होमजागरणन्तद्वत् लोकपालाधिवासनम् ।
धान्यपर्व्वतवत् कुर्य्यादिमं मन्त्रमुदीरयेत् ॥
यथा देवेषु विश्वात्मा प्रवरोऽयं जनार्द्दनः ।

| | | |
|---|---|---|
| | | सामवेदस्तु वेदानां महादेवस्तु योगिनाम् ॥<br>प्रणवः सर्व्वमन्त्राणां नारीणां पार्व्वती यथा ।<br>तथा रसानां प्रवरः सदैवेक्षुरसो मतः ॥<br>मम तस्मात् परां लक्ष्मीं गुडपर्व्वत ! देहि वै । |

यस्मात् सौभाग्यदायिन्या भ्राता त्वं गुडपर्व्वत ! ॥
निवासस्त्वं हि पार्व्वत्यास्तस्मान्मां पाहि सर्व्वदा ।
अनेन विधिना यस्तु दद्याद्गुडमयं गिरिम् ॥
पूज्यमानः सगन्धर्व्वैर्गौरीलोके महीयते ।
पुनः कल्पशतान्ते तु सप्तद्वीपाधिपो भवेत् ॥
आयुरारोग्यसम्पन्नः शत्रुभिश्चापराजितः ॥ ३ ॥
अथ पापहरं वक्ष्ये सुवर्णाचलमुत्तमम् ।
यस्य प्रदानाद्भुवनं वैरिञ्चं याति मानवः ॥
उत्तमः पलसाहस्रो मध्यमः पञ्चभिः शतैः ।
तदर्द्धेनाधमस्तद्वदल्पवित्तोऽपिशक्तितः ॥
दद्यादेकपलादूर्द्ध्वं यथाशक्त्या विमत्सरः ।
घान्यपर्व्वतवत् सर्व्वं विदध्यान्मुनिपुङ्गव ! ॥
विष्कम्भशैलांस्तद्वच्च ऋत्विग्भ्यः प्रतिपादयेत् ।
नमस्त ब्रह्मबीजाय ब्रह्मगर्भाय वै नमः ॥
यस्मादनन्तफलदस्तस्मात्पाहि शिलोच्चय ! ।
यस्मादग्नेरपत्यं त्वं तस्माद्रत्नं जगत्पते ! ॥
हेमपर्व्वतरूपेण तस्मात् पाहि नगोत्तम ! ॥
अनेन विधिना यस्तु दद्यात् कनकपर्व्वतम् ॥
स याति परमं ब्रह्मलोकमानन्दकारकम् ।
तच कल्पशतन्तिष्ठेत्ततो याति परां गतिम् ॥ ४ ॥
अतः परं प्रवक्ष्यामि तिलशैलं विधानतः ।
यत्प्रदानान्नरो याति विष्णुलोकमनुत्तमम् ॥
उत्तमो दशभिर्द्रोणैः पञ्चभिर्मध्यमो मतः ।
त्रिभिः कनिष्ठो विप्रेन्द्र ! तिलशैलः प्रकीर्त्तितः ॥
पूर्ब्बवच्चापरं सर्व्वं विष्कम्भपर्व्वतादिकम् ।
दानमन्त्रं प्रवक्ष्यामि यथावन्मुनिसत्तम ! ॥
यस्मान्मधुवधे विष्णोर्देहात् स्वेदसमुद्भवाः ।
कारयेत् संहृतानुच्चान् यथाशोभं विधानतः ॥
वेष्टयेत् शुक्लवासोभिरिक्षुदण्डफलादिकैः ।
धान्यपर्व्वतवत् सर्व्वं विधानमिह पठ्यते ॥
अधिवासनपूर्ब्बन्तु तद्वद्धोमसुरार्च्चनम् ।
प्रभातायान्तु शर्व्वर्य्यां गुरवे च निवेदयेत् ॥
विष्कम्भपर्व्वतांस्तद्वदृत्विग्भ्यः शान्तमानसः ।
संयोगाद्घृतमुत्पन्नं यस्मादमृततेजसोः ॥
तस्माद्घृतार्च्चिर्विश्वात्मा प्रीयतामत्र शङ्करः ।
यस्मात्तेजोमयं ब्रह्म घृते तच्च व्यवस्थितम् ॥
घृतपर्व्वतरूपेण तस्मान्मां पाहि भूधर ! ।
अनेन विधिना दद्याद्घृताचलमनुत्तमम् ॥
महापातकयुक्तोऽपि लोकमायाति शाङ्करम् ।
हंससारसयुक्तेन किङ्किणीजालमालिना ॥
विमानेनाप्सरोभिश्च सिद्धविद्याधरैर्वृतः ।
विहरेत् पितृभिः सार्द्धं यावदाहूतसंप्लवम् ॥ ७ ॥
अतः परं प्रवक्ष्यामि रत्नाचलमनुत्तमम् ।
मुक्ताफलसहस्रेण पर्व्वतः स्यादनुत्तमः ॥
मध्यमः पञ्चशतिकस्त्रिशतैरवरः स्मृतः ।
चतुर्थांशेन विष्कम्भाः पर्व्वताः स्युः समन्ततः ॥
पूर्ब्बेण वज्रगोमेदैर्दक्षिणेनेन्द्रनीलकैः ।
पुष्परागयुतैः काय्र्यो विद्वद्भिर्गन्धमादनः ॥
वैदूर्य्यविद्रुमैः पश्चात् संमिश्रो विपुलोऽचलः ।
पद्मरागैः ससौवर्णैरुत्तरेण तु विन्यसेत् ॥
धान्यपर्व्वतवत् सर्व्वमत्रापि परिकल्पयेत् ।
तद्वदावाहनं कृत्वा वृक्षान् देवांश्च काञ्चनान् ॥
रजतं पाहि तस्मान्नः शोकसंसारसागरात् ।
इत्थं निवेश्य यो दद्याद्रजताचलमुत्तमम् ।
गवामयुतदानस्य फलं प्राप्नोति मानवः ॥
सोमलोके स गन्धर्व्वैः किन्नराप्सरसाङ्गणैः ।
पूज्यमानो वसेद्विद्वान् यावदाहूतसंप्लवम् ॥ ९ ॥
अथातः संप्रवक्ष्यामि शर्करशैलमुत्तमम् ।
यस्य प्रदानाद्विष्ण्वर्करुद्रास्तुष्यन्ति सर्व्वदा ॥
अष्टभिः शर्कराभारैरुत्तमः स्यान्महाचलः ।
चतुर्भिर्मध्यमः प्रोक्तो भाराभ्यामधमः स्मृतः ॥
सार्द्धभारेण शैलन्तु यः कुर्य्यात् स्वल्पवित्तवान् ।
विष्कम्भपर्व्वतान् कुर्य्यात्तुरीयांशेन मानवः ॥
धान्यपर्व्वतवत् सर्व्वमासाद्य मेरुसंयुतम् ।
मेरोरुपरि तद्वच्च स्थाप्यं हेमतरुत्रयम् ॥
मन्दारः पारिजातश्च तृतीयः कल्पपादपः ।
एतद्वृक्षत्रयं मूर्द्ध्नि सर्व्वेष्वपि निवेशयेत् ॥
हरिचन्दनसन्तानौ पूर्ब्बपश्चिमभागयोः ।
निवेश्यौ सर्व्वशैलेषु विशेषाच्छर्कराचले ॥
मन्दरे कामदेवस्तु प्रत्यग्वक्त्रः सदा भवेत् ।
गन्धमादनशृङ्गेषु धनदः स्यादुदङ्मुखः ॥
प्राङ्मुखो वेदमूर्त्तिश्च हंसः स्याद्विपुलाचले ।
हैमी सुपार्श्वसुरभी दक्षिणाभिमुखी भवेत् ॥
धान्यपर्व्वतवत् सर्व्वमावाहनमखादिकम् ।
कृत्वाथ गुरवे दद्यान्मध्यमं पर्व्वतोत्तमम् ।
ऋत्विग्भ्यश्च नरः शैलानिमान्मन्त्रानुदीरयेत् ॥
सौभाग्यामृतसारोऽयं परमः शर्करायुतः ।
तत् सदानन्दकारी त्वं भव शैलेन्द्र ! सर्व्वदा ॥
अमृतं पिबतां ये तु निपेतुर्भुवि शीकराः ।
देवानान्तत्समुत्थोऽयं पाहि नः शर्कराचल ! ॥
मनोभवधनुर्मध्यादुद्भूता शर्करा यतः ।
तन्मयोऽसि महाशैल ! पाहि संसारसागरात् ॥
यो दद्यात् शर्कराशैलमनेन विधिना नरः ।
सर्व्वपापविनिर्मुक्तः प्रयाति शिवमन्दिरम् ॥
चन्द्रादित्यप्रतीकाशमधिरुह्यानुजीविभिः।
सहैव यानमातिष्ठेत् स तु विष्णुप्रचोदितः ॥
ततः कल्पशतान्ते तु सप्तद्वीपाधिपो भवेत् ।
आयुरारोग्यसम्पन्नो यावज्जन्मार्व्वुदत्रयम् ॥
भोजनं शक्तितः कुर्य्यात् सर्व्वशैलेष्वमत्सरः ।

तिलाः कुशाश्च समिधस्तस्माच्छान्त्यै भवन्त्विह ॥
हव्यकव्येषु यस्माच्च तिला एवाभिरक्षणम् ।
भवादुद्धर शैलेन्द्र ! तिलाचल ! नमोऽस्तु ते ॥
इत्यामन्त्र्य च यो दद्यात्तिलाचलमनुत्तमम् ।
स वैष्णवं पदं याति पुनरावृत्तिदुर्लभम् ॥
दीर्घायुष्ट्वमवाप्नोति पुत्त्रपौत्त्रैश्च मानवः ।
पितृभिर्द्देवगन्धर्व्वैः पूज्यमानो दिवं व्रजेत् ॥ ५ ॥
अथातः संप्रवक्ष्यामि कार्पासाचलमुत्तमम् ।
यत्प्रदानान्नरो नित्यमाप्नोति परमं पदम् ॥
कार्पासपर्व्वतस्तद्वद्विंशद्भारैरिहोत्तमः ।
दशभिर्म्मध्यमः प्रोक्तः कनिष्ठः पञ्चभिर्म्मतः ॥
भारेणाल्पधनो दद्याद्वित्तशाठ्येन वर्ज्जितः ।
धान्यपर्व्वतवत् सर्व्वमासाद्य मुनिपुङ्गव ! ॥
प्रभातायान्तु शर्व्वर्य्यां दद्यादिदमुदीरयेत् ।
त्वमेवावरणं यस्माल्लोकानामिह सर्व्वदा ॥
कार्पासाद्रे नमस्तस्मादघौघध्वंसनो भव ।
इति कार्पासशैलेन्द्रं यो दद्यात् शर्व्वसन्निधौ ॥
रुद्रलोके वसेत् कल्पं ततो राजा भवेदिह ॥ * । ६ ।
अथातः संप्रवक्ष्यामि घृताचलमनुत्तमम् ।
तेजोऽमृतमयं दिव्यं महापातकनाशनम् ॥
विंशत्या घृतकुम्भानामुत्तमः स्याद्घृताचलः ।
दशभिर्मध्यमः प्रोक्तः पञ्चभिस्त्ववरः स्मृतः ॥
अल्पवित्तोऽपि कुर्व्वीत द्वाभ्यामिह विधानतः ।
विष्कम्भान् पर्व्वतांस्तद्वच्चतुर्भागेन कल्पयेत् ॥
शालितण्डुलपात्राणि कुम्भोपरि निवेशयेत् ।
पूजयेद् पुष्पपानीयैः प्रभाते चाथ पूर्ब्बवत् ।
पूर्ब्बवद्‌गुरु-ऋत्विग्भ्यः फलमन्त्रानुदीरयेत् ॥
यथा देवगणाः सर्व्वे सर्व्वरत्नेष्ववस्थिताः ।
त्वञ्च रत्नमयो नित्यमतः पाहि महाचल ! ॥
यस्माद्रत्नप्रदानेन तुष्टिं प्रकुरुते हरेः ।
सदानन्दप्रदानेन तस्मान्नः पाहि पर्व्वत ! ॥
अनेन विधिना यस्तु दद्याद्रत्नमहागिरिम् ।
स याति वैष्णवं लोकममरेश्वरपूजितः ॥
यावत् कल्पशतं साग्रं वासश्चेह नराधिप ! ।
रूपारोग्यगुणोपेतः सप्तद्वीपाधिपो भवेत् ॥
ब्रह्महत्यादिकं किञ्चिद्यदत्रामुत्र वा कृतम् ।
तत् सर्व्वं नाशमायाति गिरिर्व्वज्रहतो यथा ॥ ८ ॥
अतः परं प्रवक्ष्यामि रौप्याचलमनुत्तमम् ।
यत्प्रदानान्नरो याति सोमलोकं द्विजोत्तम् ! ॥
दशभिः पलसाहस्रैरुत्तमो रजताचलः ।
पञ्चभिर्मध्यमः प्रोक्तस्तदर्द्धेनावरः स्मृतः ॥
अशक्तौ विंशतेरूर्द्ध्वं कारयेत् शक्तितः सदा ।
विष्कम्भपर्व्वतांस्तद्वत्तुरीयांशेन कल्पयेत् ॥
पूर्ब्बवद्राजतान् कुर्य्यान्मन्दरादीन् विधानतः ।
कलधौतमयांस्तत्र लोकेशान् रचयेद्बुधः ॥
ब्रह्मविष्णवर्क्कवत् कार्य्यो नितम्बोऽत्र हिरण्मयः ।
राजतं स्याद्यदन्येषां सर्व्वन्तदिह काञ्चनम् ॥
शेषञ्च पूर्ब्बवत् कुर्य्याद्धोमजागरणादिकम् ।
प्रदद्यात्तं प्रभाते तु गुरवे रौप्यपर्व्वतम् ॥
विष्कम्भशैलानृत्विग्भ्यः पूज्यवस्त्रविभूषणैः ।
सर्व्वत्राक्षारलवणमश्नीयात्तदनुज्ञया ।
पर्व्वतोपस्करान् सर्व्वान् प्रापयेत् ब्राह्मणा-लयम् ॥ १० ॥
इति मात्स्ये ७७ अध्यायः ॥
देवर्षिविशेषः । यथा, --
“कश्यपान्नारदश्चैव पर्व्वतोऽरुन्धती तथा ॥”
इत्यग्निपुराणम् ॥
(यथाच, महाभारते । ३ । ९३ । २५ ।
“लोमशस्योपसंगृह्य पादौ द्वैपायनस्य च ।
नारदस्य च राजेन्द्र ! देवर्षेः पर्व्वतस्य च ॥”)
मत्स्यविशेषः । पाव्दा इति भाषा । अस्य गुणाः । वायुनाशित्वम् । स्निग्धत्वम् । बलशुक्र-
कारित्वञ्च । इति राजवल्लभः ॥ वृक्षः । शाक-भेदः । इति मेदिनी । ते, १२६ ॥ (सन्न्यासि-विशेषः । स तु शङ्कराचार्य्यशिष्यस्य मण्डनमिश्रस्य

|  | इमं मन्त्रं पठन् दद्याद्दर्भपाणिर्विमत्सरः ॥<br>पितॄणां वल्लभं यस्माद्विष्णोर्व्वा शङ्करस्य च । |  |
| --- | --- | --- |

शिष्यविशेषः । यथा, प्राणतोषिण्यां अवधूत-
प्रकरणे ।
“वसेत् पर्व्वतमूलेषु प्रौढो यो ध्यानधारणात्
।
सारात्सारं विजानाति पर्व्वतः परिकीर्त्तितः
॥”)

**पर्व्वतकाकः**, पुं, (पर्व्वते जातः काकः । प्रायशः
पर्व्वतजातत्वात्तथात्वम् ।) द्रोणकाकः । इति
हेमचन्द्रः । ४ । ३ । ८९ ॥

**पर्व्वतजा**, स्त्री, (पर्व्वताज्जायते या । पर्ब्बत +
जन् + “पञ्चम्यामजातौ ।” ३ । २ । ९८ ।
इति
डः ।) नदी । इति हेमचन्द्रः । ४ । १४६ ॥
(हिमगिरिजातत्वात् गौरी ।) गिरिभववस्तुनि
त्रि ॥

**पर्व्वततृणं**, क्ली, (पर्व्वतभवं तृणम् । शाकपार्थिव-
वत् समासः ।) तृणभेदः । सण्ड इति हिन्दी
भाषा । तत्पर्य्यायः । तृणाढ्यम् २ पत्राढ्यम्
३
मृगप्रियम् ४ । अस्य गुणाः । बलपुष्टिकरत्वम्
।
पशूनां सर्व्वदा प्रियत्वञ्च । इति राजनिर्घण्टः
॥

**पर्व्वतमोचा**, स्त्री, (पर्व्वतोद्भवा मोचा कदली-
त्यर्थः ।) गिरिकदली । इति राजनिर्घण्टः ॥

**पर्व्वतराजः**, पुं, (पर्व्वतानां राजा । “राजाहः-
सखिभ्यष्टच् ।” ५ । ४ । ९१ । इति टच् ।)
हिमालयगिरिः । अस्य प्रमाणं वक्ष्यमाणशब्दे
द्रष्टव्यम् ॥

**पर्व्वतराजपुत्त्री**, स्त्री, (पर्व्वतराजस्य हिमालयस्य
पुत्त्री ।) दुर्गा । यथा, जिकनधनञ्जयसंग्रहयोः
।
“शक्रध्वजात् पक्षयुते दशाहे
मूलर्क्षयुक्ता सितसप्तमी या ।
आरभ्य तस्यां दशमीञ्च यावत्
प्रपूजयेत् पर्व्वतराजपुत्त्रीम् ॥”
सम्बन्धी । पर्व्वतभवः । पाहाडिया इति भाषा ।
पर्व्वतशब्दात् भवार्थे ईयप्रत्ययनिष्पन्नः ।
(मनुष्ये
तु पार्व्वतीयः । इति सिद्धान्तकौमुदी ॥ यथा,
रघुः । ४ । ७७ ।
“तत्र जन्यं रघोर्घोरं पार्व्वतीयैर्गणैरभूत् ।
नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम् ॥”)

**पर्व्वतोर्म्मिः**, पुं, मत्स्यविशेषः । इति कस्मिन् भूरि-
प्रयोगे प्रमादलिखनं, पर्व्वतोवर्म्मिरिति मत्स्य-
द्वयबोधकपाठः साधुः ॥

**पर्व्वधिः**, पुं, (पर्व्वणि अमावस्यापूर्णिमयोः ह्रास-
वृद्धिं दधातीति । पर्व्व + धा + किः ।) चन्द्रः ।
इति त्रिकाण्डशेषः ॥

**पर्व्वपुष्पी**, स्त्री, (पर्व्वसु ग्रन्थिषु पुष्पं यस्याः ।
स्त्रियां ङीष् ।) रामदूतीवृक्षः । नागदन्ती ।
इति शब्दचन्द्रिका रत्नमाला च ॥

**पर्व्वपूर्णता**, स्त्री, (पर्व्वणः पूर्णता ।) सम्भारः ।
आयोजनम् । इति भूरिप्रयोगः ॥ पर्व्वणः पूर्ण-
त्वञ्च ॥

**पर्व्वमूला**, स्त्री, (पर्व्वणि पर्व्वणि मूलं यस्याः ।
यद्वा, पर्व्व ग्रन्थिरेव मूलं यस्याः ।) श्वेता ।
इति राजनिर्घण्टः ॥

**पर्व्वयोनिः**, पुं, (पर्व्व ग्रन्थिरेव योनिरुत्पत्तिकारणं
यस्य ।) इक्ष्वादि । इति हेमचन्द्रः । ४ । २६६ ॥

**पर्व्वरीणं**, क्ली, पर्व्व । इति शब्दरत्नावली ॥

**पर्व्वरीणः**, पुं, पर्णवृन्तरसः । गर्व्वः । मारुतः ।
पर्णशिरा । मृतकम् । द्यूतकम्बलः । पत्र-
चूर्णरसः । इति शब्दरत्नावली ॥ पर्परीण
इति मेदिन्यां पाठः ॥

**पर्व्वरुट्** [ह्] पुं, (पर्व्वसु ग्रन्थिषु रोहतीति ।
रुह + क्विप् ।) दाडिमः । इति त्रिकाण्डशेषः ॥

**पर्व्ववल्ली**, स्त्री, (पर्व्वप्रधाना ग्रन्थिबहुला वल्ली
लता ।) मालादूर्ब्बा । इति राजनिर्घण्टः ॥

**पर्व्वसन्धिः**, पुं, (पर्व्वणोः सन्धिः) प्रतिपत्पञ्च-
१ । ३४ । इति कुः स च डित् ।
पुषोदरादि-
त्वात् दलोपः । यद्वा, स्पृशति
शत्रूनिति । स्पृश
संस्पर्शे + “स्पृशेः श्वण् शुनौ पृ च ।”
उणां
५ । २७ । इति शुन् धातोश्च पृ-
आदेशः ।)
परशुः । इति हेमचन्द्रः । ३ । ४५०
॥ (यथा,
रामायणे । ३ । २८ । २४ ।
“भिन्दिपालान् सुतीक्ष्णाग्रान्
पाषाणांश्च
महोपलान् ।
प्रासान् पाशांस्तथा पर्शून् कुन्तांश्च
कुणपां-
स्तथा ॥”)

**पर्शुका**, स्त्री, (पर्शुरिव प्रतिकृतिः । “इवे प्रति-
कृतौ ।” ५ । ३ । ९६ । इति कन् ।
स्त्रियां टाप् ।)
पार्श्वास्थि । इत्यमरः । २ । ६ । ६९
॥

**पर्शुपाणिः**, पुं, (पर्शुः परशुः पाणौ यस्य ।)
गणेशः । इति हेमचन्द्रः । २ । १२१
॥ (परशुरामः ।
इति व्युत्पत्तिलब्धोऽर्थः ॥)

**पर्शुरामः**, पुं, (पर्शुधारी रामः । शाकपार्थिवादि-
वत् समासः । परशुना सह
जातत्वादस्य तथा-
त्वम् । यदुक्तं कालिकापुराणे ७८
अध्याये ।
“भारावतरणार्थाय जातः परशुना सह
।
सहजः परशुस्तस्य न जहाति
कदाचन ॥”)
परशुरामः । इति शब्दरत्नावली ॥

**पर्श्वधः**, पुं, (परश्वं दधातीति । परश्व + धा +

इति तिथ्यादितत्त्वम् ॥

**पर्व्वतवासिनी**, स्त्री, (पर्व्वते वसतीति । पर्व्वत +

वस + णिनि + ङीप् ।) आकाशमांसी । इति
राजनिर्घण्टः ॥ गायत्त्री । यथा, --
"उत्तरे शिखरे देवि ! भूम्यां पर्व्वतवासिनि !
।
ब्रह्मयोनिसमुत्पन्ने ! गच्छ देवि ! यथासुखम्
॥"
इति यजुर्व्वेदीयगायत्त्रीविसर्ज्जनमन्त्रः ।
काली । यथा, श्यामापूजायां विसर्जनमन्त्रः
॥
"उत्तरे शिखरे देवि ! भूम्यां पर्व्वतवासिनि !
।
ब्रह्मयोनिसमुत्पन्ने गच्छ देवि ! ममान्तरम् ॥"

**पर्व्वताधारा**, स्त्री, (पर्व्वतः आधारो यस्याः ।

अष्टकुलाचलैः पृथिवी ध्रियते इति पुराण-
प्रसिद्धेस्तथात्वम् ।) पृथिवी । इति हेम-
चन्द्रः । ४ । ३ ॥

**पर्व्वतारिः**, पुं, (पर्व्वतानामरिः शत्रुः । पर्व्वत-

पक्षच्छेदनादस्य तथात्वम् ।) इन्द्रः । इति
शब्दरत्नावली ॥

**पर्व्वताशयः**, पुं, (पर्व्वते आशेते इति । आ + शी

शयने + अच् ।) मेघः । इति शब्दचन्द्रिका ॥

**पर्व्वताश्रयः**, पुं, (पर्व्वत आश्रयो वासस्थानं यस्य ।)

शरभः । इति राजनिर्घण्टः ॥ पर्व्वतवासिनि
त्रि ॥

**पर्व्वतीयः**, त्रि, (पर्व्वते भवः । पर्व्वत + "विभाषा-

मनुष्ये ।" ४ । २ । १४४ । इति छः ।)
पर्व्वत-
दश्योरन्तरम् । इत्यमरः । १ । ४ । ७ ॥
"प्रतिपत्-
पञ्चदश्योर्यन्मध्यं स पर्व्वसन्धिः । किंवा स
सन्धिः पर्व्वेत्यन्वयः । पञ्चदशानां पूरणी पञ्च-
दशी संख्याया डडिति डट् टित्त्वादीप् ।
पञ्चदशीशब्देन पूर्णिमामावास्ययोर्द्वयोर्ग्रहणम् ।
अतएव पौर्णमास्या अमावास्या वा शेषसार्द्ध-
दण्डचतुष्टयं प्रतिपदश्च प्रथमसार्द्धदण्डचतुष्टयं
पर्व्वसन्धिरिति वृद्धाः ॥ सैहिकेयो यदा राहु-
र्ग्रसते पर्व्वसन्धिष्विति यमः ॥ पर्व्वणोः सन्धिः
पर्व्वसन्धिः पृधातोर्व्वनिपि पर्व्वपूरणे इत्यस्य
नाम्नीत्यनि वा पर्व्व । प्रतिपत्पञ्चदश्योस्तु
सन्धिः पर्व्वाथ दिक् ककुविति स्वामी ॥
दर्शप्रतिपदोः सन्धौ ग्रन्थिप्रस्तावयोरपि ।
पर्व्वशब्दो हि विषुवत्प्रभृतिष्वपि दृश्यते ॥
इति रत्नः ।" इति भरतः ॥

**पर्व्वितः**, पुं, (पर्व्व ग्रन्थिर्जातमस्य । पर्व्व +

इतच् ।) पर्व्वतमत्स्यः । इति शब्दरत्नावली ॥

**पर्शुः**, पुं, (परं शत्रुं शृणातीति । शृगि हिंसे +

"आङ् परयोः खनिशृभ्यां डिच्च ।" उणां ।
"आतोऽनुपसर्गे कः ।" ३ । २ । ३ ।
इति कः ।
पृषोदरात् साधुः ।) कुठारः । इति
जटाधरः ॥

**पर्ष**, ङ स्नेहे । इति कविकल्पद्रुमः ॥ (भ्वां-आत्मं-

अकं-सेट् ।) रेफोपधः । स्नेह इह
आर्द्री-
भावः । ङ, पर्षते पयसा पटः । स्पर्ष
इति
चतुर्भुजः । स्पर्षते पस्पर्षे । इति
दुर्गादासः ॥

**पर्षत्**, [द्] स्त्री, (परिसीदन्त्यस्याम् । परि +

सद् + "सत्सूद्विषेति ।" ३ । २ । ६१
। इति
क्विप् । "सदिरप्रतेः ।" ८ । ३ । ६६
। इति
षत्वम् । बाहुलकात् इकारलोपः ।
यद्वा,
"शॄदॄभसोऽदिः ।" उणां १ । १२९ ।
इति बहुल-
वचनात् पर्ष स्नेहने इत्यस्मादपि
अदिः ।) सभा ।
इत्युणादिकोषः ॥ (यथा, याज्ञवल्क्ये
। १ । ९ ।
"चत्वारो वेदधर्म्मज्ञाः पर्षत्त्रैविद्यमेव
वा ।
सा ब्रूते यं स धर्म्मः स्यादेको
वाध्यात्म-
वित्तमः ॥")

**पर्षद्वलः**, त्रि, (पर्षत् सभा विद्यते यस्य । पर्षत्

+ "रजःकृषीति ।" ५ । २ । ११२ ।
इति वलच् ।)
पारिषदः । इति शब्दरत्नावली ॥
(यथा,
भट्टिः । ४ । १२ ।
"व्रातीनव्यालदीप्तास्त्रः सुत्वनः
परिपूजयन् ।
पर्षद्वलान् महाब्रह्मैराट
नैकटिकाश्रमान् ॥")

**पल**, क रक्षे । इति कविकल्पद्रुमः ॥ (चुरां-

| | | |
|---|---|---|
| | | परं-सकं-सेट् ।) क, पालयति । ह्रस्ववतै- वेष्टसिद्धे दीर्घिणोऽपि पाठः कानुबन्धाना- मिदनुबन्धवत् ञेरनित्यतां बोधयति । तेन पालति पलति इत्यपि सिद्धम् । इति दुर्गादासः ॥<br>**पल**, ज गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं- सकं-सेट् ।) ज, पालः पलः । इति दुर्गादासः ॥ |

**पलं**, क्ली, (पलतीति । पल + अच् ।) आमिषम् ।

कर्षचतुष्टयम् । इत्यमरः । ३ । ३ । २०१ ॥ २ । ९ । ८६ ॥
तत्तु शास्त्रे तोलकचतुष्टयम् । वैद्यके अष्ट-
तोलकम् । लौकिके साष्टरक्तिद्विमाषकतोलक-
त्रितयम् । तत्पर्य्यायः । मुष्टिः २ प्रकुञ्चः ३
चतुर्थिका ४ विल्वम् ५ षोडशिकाम्रम् ६ । इति
वैद्यकपरिभाषा ॥ यथा, तिथ्यादितत्त्वे ।
"पलन्तु लौकिकैर्मानैः साष्टरक्तिद्विमाषकम् ।
तोलकत्रितयं ज्ञेयं ज्योतिर्ज्ञैः स्मृतिसम्मतम् ॥"
विघटिका । इति राजनिर्घण्टः ॥ सा तु
घटिकाषष्टिभागैकभागः । षष्टिविपलश्च । पल-
दण्डयोः प्रमाणन्तु ।
"दशगुर्व्वक्षरोच्चारकालः प्राणः षडात्मकैः ।
तैः पलं स्यात्तु तत्षष्ट्या दण्ड इत्यभिधीयते ॥"
तेन च ।
"मा कान्ते पक्षस्यान्ते पर्याकाशे देशे स्वाप्सीः
कान्तं वक्त्रं वृत्तं पूर्णं चन्द्रं मत्वा रात्रौ चेत् ।
क्षुत्क्षामः प्राटंश्चेतश्चेतो राहुः क्रूरः प्राद्या-
त्तस्माद्धान्ते हर्म्म्यस्यान्ते शय्यैकान्ते कर्त्तव्या ॥"
अस्यैकपाठात् पलं षष्टिपाठाद्दण्डः । इति
ज्योतिस्तत्त्वम् ॥

**पलः**, पुं, (पलतीति । पल् + अच् ।) पलालः ।

**पलप्रियः**, पुं, (पलमामिषं प्रियं यस्य ।) द्रोण-
काकः । इति राजनिर्घण्टः ॥ मांसाशिनि, त्रि ॥

**पलभा**, स्त्री, (पलस्य भा छविर्यत्र ।) मेषसंक्रमणा-
दर्व्वाक् सपादाष्टदिने मध्याह्ने द्वादशाङ्गुल-
शङ्कुजा छाया । तत्पर्य्यायः । पलविभा २
विषुवत्प्रभा ३ । यथा, ग्रहलाघवे ।
"मेषादिगे सायनभागसूर्य्ये
दिनार्द्धजा भा पलभा भवेत् सा ॥"
पलभयोद्धृतचरखण्डकैः क्रमोत्क्रमस्थैर्हीनान्वितै-
र्लङ्कोदयैः स्वदेशीयोदया भवन्ति । अन्यत्स्पष्टा-
धिकारेऽपि चरसंस्कृता ग्रहाः स्पष्टा भवन्तीति
प्रयोजनम् ॥ यथा, सिद्धान्तशिरोमणौ ॥
"क्रियतुलाधरसंक्रमपूर्ब्बतोऽयनलवोत्थदिनैर्विषु-
वद्दिनम् ।
मकरकर्कटसंक्रमतोऽयनं द्युदलभा विषुवद्दिवसे-
ऽक्षभा ॥"
"एवं विषुवती छाया स्वदेशे या दिनार्द्धजा ।
दक्षिणोत्तररेखायां सा तत्र विषुवत्प्रभा ॥"
इति सूर्य्यसिद्धान्तः ॥
"अजतुलादिगतस्य रवेर्द्दिने
द्युदलभार्कमिताङ्गुलशङ्कुजा ।
पलविभाथ -- ॥"
इति वृद्धवशिष्ठसिद्धान्तः ॥

**पललं**, क्ली, (पलति पल्यतेऽनेन वा । पल गतौ
+ "वृषादिभ्यश्चित् ।" उणां १ । १०८ । इति
कलच् ।) मांसम् । इत्यमरः । २ । ६ । ३३ ॥ (यथा,
गारुडे । १८१ । अध्याये ।
"माज्जारपललं विष्ठा हरितालञ्च भावितम् ।
छागमूत्रेण तल्लिप्तो मूषिको मूषिकान् हरेत् ॥")
पङ्कम् । (यथा, गोः रामायणे । ५ । ८७ । २६ ।
"दोषपङ्कनिमग्नं त्वामयशःपललावृतम् ।
सर्व्वथा मानुषो रामस्त्वामन्तमुपनेष्यति ॥")
तिलचूर्णम् । इति मेदिनी । ले, १०४ ।
"पललं तिलकल्कं स्यात्तिलचूर्णञ्च पिष्टकः ।
पललं मधुरं रुच्यं पित्तास्रबलपुष्टिदम् ॥"
इति राजनिर्घण्टः ॥
सैक्षवतिलचूर्णम् । तिलकुटा इति भाषा ।
यथा, वैद्यके ।
ऽनुपसर्गे कः ।" ३ । २ । ३ । इति कः ।) मत्स्य-
धारणोपायः । पोलो इति भाषा । तत्पर्य्यायः ।
प्लवः २ पञ्जराखेटः ३ । इति त्रिकाण्डशेषः ॥

**पलाग्निः**, पुं, (पलस्य मांसस्य अग्निः । मांस-
पाकशक्तिवत्तयास्य तथात्वम् ।) पित्तम् । इति
हारावली । १४१ ॥

**पलाङ्गः**, पुं, (पलं मांसं तत्प्रधानं अङ्गं यस्य ।)
शिशुमारः । इति हारावली । ७७ ॥

**पलाण्डुः**, पुं, (पलस्य मांसस्य अण्डमिवाचर-
तीति । "मृगय्वादयश्च ।" उणां १ । ३८ । इति
कुप्रत्ययात् साधुः ।) मूलविशेषः । पेयाज्
इति भाषा । तत्पर्य्यायः । सुकन्दकः २ । इत्य-
मरः । २ । ४ । १४७ ॥ लोहितकन्दः ३ । इति
रत्नमाला ॥ तीक्ष्णकन्दः ४ उष्णः ५ मुख-
दूषणः ६ शूद्रप्रियः ७ कृमिघ्नः ८ दीपनः ९
मुखगन्धकः १० बहुपत्त्रः ११ विश्वगन्धः १२
रोचनः १३ पलाण्डूः १४ सुकुन्दकः १५ ।
इति शब्दरत्नावली ॥ अस्य गुणाः । कटुत्वम् ।
बल्यत्वम् । कफपित्तवान्तिदोषनाशित्वम् ।
गुरुत्वम् । वृष्यत्वम् । रोचनत्वम् । स्निग्धत्वञ्च ।
इति राजनिर्घण्टः ॥ यथा, भावप्रकाशे ।
"पलाण्डुर्यवनेष्टश्च दुर्गन्धो मुखदूषकः ।
पलाण्डुस्तु गुणैर्ज्ञेयो रसोनसदृशो गुणैः ॥
स्वादुपाकरसोऽनुष्णः कफकृन्नातिपित्तलः ।
हरते केवलं वातं बलवीर्य्यकरो गुरुः ॥"
पलाण्डुभक्षणे दोषो यथा, --
"पलाण्डुं विड्वराहञ्च छत्राकं ग्रामकुक्कुटम् ।

इति हेमचन्द्रः । ४ । २४८ ॥
(यथा, महा-
भारते । ३ । २३३ । ११ ।
"चण्डाश्च शौण्डाश्च
महाशनाश्च
चौराश्च दुष्टाश्च पलाश्च वर्ज्याः
॥")

**पलक्या**, स्त्री, (पलकं मांसं तद्वृद्धये हितम् ।

पलक + यत् । स्त्रियां टाप् ।)
पालङ्क्यशाकः ।
इति राजनिर्घण्टः ॥

**पलगण्डः**, पुं, (पलं मांसं तद्वत् गण्डति भित्तौ

मृदादिना लिम्पतीति । गण्ड +
अच् ।)
लेपकः । इत्यमरः । २ । १० ।
६ ॥ राज इति
भाषा ॥

**पलङ्कटः**, त्रि, (पलं मांसं कटति आकुञ्चितं

करोतीति । पल + कट +
बाहुलकात् खच् मुम्
च ।) भयशीलः । भीरुः । इति
त्रिकाण्डशेषः ॥

**पलङ्करः**, पुं, (पलं मांसं करोतीति । पल + कृ

+ अच् । "तत्पुरुषे कृतीति ।" ६
। ३ । १४ । इति
द्वितीयायाः अलुक् ।) पित्तम् ।
इति त्रिकाण्ड-
शेषः ॥

**पलङ्कषः**, पुं, (पलं कषतीति । कष हिंसायाम् +

अच् । "तत्पुरुषे कृतीति ।" ६ ।
३ । १४ ।
इति द्वितीयाया अलुक् ।) राक्षसः
। इति
मेदिनी । षे, ५३ ॥ कणगुग्गुलुः ।
इति
राजनिर्घण्टः ॥

"पललन्तु समाख्यातं सैक्षवं तिलपिष्टकम् ।
पललं मलकृद् वृष्यं वातघ्नं कफपित्तकृत् ॥
बृंहणं गुरु वृष्यञ्च स्निग्धं मूत्रनिवर्त्तकम् ॥"

**पललः**, पुं, (पलतीति । पल गतौ + "वृषादिभ्य-

श्चित् ।" उणां । १ । १०८ । इति कलच् ।
यद्वा, पलं मांसं लातीति । ला + कः ।)
राक्षसः । इति मेदिनी । ले, १०४ ॥

**पललज्वरः**, पुं, (पललस्य मांसस्य ज्वर इव ।)

पित्तम् । इति हारावली । १४१ ॥

**पललाशयः**, पुं, (पलले आशेते इति । आ +

शीङ शयने + अच् ।) गण्डरोगः । इति शब्द-
रत्नावली ।

**पलवः**, पुं, (पलं पलायनं वाति हिनस्ति नाशय-

तीति । पल + वा ल गमनहिंसयोः + "आतो-

लशुनं गृञ्जनञ्चैव जग्ध्वा चान्द्रायणञ्चरेत् ॥"
इति प्रायश्चित्तविवेके याज्ञवल्क्यः ॥

**पलादः**, पुं स्त्री, (पलं मांसमत्तीति । अद्

भक्षणे + "कर्म्मण्यण् ।" ३ । २ । १ इत्यण्
।)
राक्षसः । इति जटाधरः ॥ (मांसभक्षके, त्रि
॥)

**पलादनः**, पुं, स्त्री, (पलं मांसमत्तीति । पल +

अद् + ल्युः ।) राक्षसः । इति हेमचन्द्रः ॥
मांस-
भक्षणशीले, त्रि ॥

**पलान्नं**, क्ली, (पलं मांसं तेन सह पक्वं अन्नम् ।

शाकपार्थिवादिवत् समासः ।) मांसादि-
युक्तसिद्धभक्तम् । पोलाओ इति भाषा । तस्य
पाकप्रकारो द्रव्याणि च यथा । छागमांसं १
शरावः । घृतं । ० शरावपादः । त्वचं ३
माषकम् । लवङ्गं ३ माषकम् । एला ३
माषकम् । तण्डुलं १ शरावः । मरिचं २
तोलकम् । तेजपत्रं २ तोलकम् । कुङ्कमं १
माषकम् । आर्द्रकं २ तोलकम् । लवणं ६
तोलकम् । धन्याकं २ तोलकम् । द्राक्षा ०
शरावपादार्द्धम् । छागमांसं सूक्ष्मं थोरयित्वा
शुष्कप्रलेहपाककरणानन्तरं पात्रान्तरे तेज-
पत्रोपरि अल्पाखण्डगन्धद्रव्येण सह प्रथमं
सज्जीकर्त्तव्यम् । ततस्तण्डुलं
जलेनार्द्धसिद्धं
कृत्वा
मण्डगालनपूर्ब्बकमल्पाखण्डगन्धद्रव्येण सह
तन्मांसोपरि सज्जीकर्त्तव्यम् । एवं प्रकारेण
वारं वारं सज्जीकृत्य तदुपरि अवशिष्टघृत-

| | | |
|---|---|---|
| **पलङ्कषा**, स्त्री, (पलङ्कष् + टाप् ।) गोक्षुरकः ।<br><br>रास्ना । गुग्गुलुः । किंशुकः ।<br>मुण्डीरी ।<br>लाक्षा । इति मेदिनी ॥<br>क्षुद्रगोक्षुरकः । महा-<br>श्रावणी । (यथा, सुश्रुते उत्तरतन्त्रे ३९<br>अध्याये ।<br>“अजाव्योश्चर्म्मरोमाणि वचाकुष्ठं पलङ्कषा ॥”)<br>मक्षिका । इति राजनिर्घण्टः ॥ | | |

क्षेपणेन दण्डद्वयं तप्ताङ्गारोपरि रक्षेत् । इति
पाकराजेश्वरः ॥ * ॥ अत्र मांसस्थाने
मत्स्य-
फलमूलादिकं गन्धद्रव्येण सह दधियोगः
घृत-
परिमाणस्याधिक्यञ्च भवितुमर्हति ॥

**पलापः**, पुं, (पलं मांसं आप्यते प्राप्यते बाहु-
ल्येन अत्र । पल + आप् + घञ् ।) कण्ठ-
पाशकः । हस्तिकपोलः । इति शब्दमाला ॥

**पलायनं**, क्ली, (पलाय्यते इति । पलाय + भावे
ल्युट् ।) भयादिना स्थानान्तरगमनम् ।
पालान
इति पीठ देओन इति च भाषा ॥ (यथा,
रघुः । १९ । ३१ ।
"मित्र कृत्यमपदिश्य पार्श्वतः
प्रस्थितं तमनवस्थितं प्रियाः ।
विद्म हे शठ ! पलायनच्छला-
न्यञ्जसेति रुरुधुः कचग्रहैः ॥")
तत्पर्य्यायः । अपयानम् २ संदावः ३ द्रवः
४
विद्रवः ५ उपक्रमः ६ संद्रावः ७ उद्द्रावः ८
प्रद्रावः ९ । इति हेमचन्द्रः । ३ । ४६६ ॥
निद्रावः १० उद्द्रवः ११ सन्त्रापः १२
द्रावः १३
शृगालिका १४ अपक्रमः १५ चंक्रमः १६ ।
इति शब्दरत्नावली ॥

**पलायितः**, त्रि, (पलाय + क्त ।) पलायनविशिष्टः ।
तत् पर्य्यायः । नष्टः २ गृहीतदिक् ३ तिरो-
हितः ४ । इति हेमचन्द्रः ॥

**पलालः**, पुं, क्ली, (पलति शस्यशून्यत्वं प्राप्नोतीति ।
पल + "तमिविशिविडीति ।" उणां १ ।
११७ ।
इति कालन् । यद्वा, पलं अलतीति । अल +
"कर्म्मण्यण् ।" ३ । २ । १ । इति अण् ।)
निष्फलकाण्डः । शस्यशून्यधान्यनालः ।
इत्य-

सूत उवाच ।
"अश्वत्थरूपो भगवान् विष्णुरेव न संशयः ।
रुद्ररूपो वटस्तद्वत् पलाशो ब्रह्मरूपधृक् ॥
दर्शनस्पर्शसेवासु ते वै पापहराः स्मृताः ।
दुःखापद्व्याधिदुष्टानां विनाशकारिणो ध्रुवम् ॥
ऋषय ऊचुः ।
कथं वृक्षत्वमापन्ना ब्रह्मविष्णुमहेश्वराः ।
एतत् कथय सर्व्वज्ञ ! संशयोऽत्र महान् हि नः
॥
सूत उवाच ।
पार्व्वतीशिवयोर्द्देवैः सुरतं कुर्व्वतोः किल ।
अग्निं ब्राह्मणवेशेन प्रेष्य विघ्नं कृतं पुरा ॥
ततस्तु पार्व्वती क्रुद्धा शशाप त्रिदिवौकसः ।
रेतःसेकसुखभ्रंशकम्पमाना तदा रुषा ॥
पार्व्वत्युवाच ।
क्रिमिकीटादयोऽप्येते जानन्ति सुरतेः सुखम् ।
तस्मान्ममसुखभ्रंशाद्यूयंवृक्षत्वमाप्स्यथ ॥
सूत उवाच ।
एवं सा पार्व्वती देवी अशपत् क्रुद्धमानसा ।
तस्माद्वृक्षत्वमापन्ना ब्रह्मविष्णुमहेश्वराः ॥"
इति पाद्मोत्तरखण्डे १६० अध्यायः ॥
तत्पर्य्यायः । किंशुकः २ पर्णः ३ वातपोथः ४
।
इत्यमरः । २ । १ । २९ ॥ याज्ञिकः ५
त्रिपर्णः ६
वक्रपुष्पः ७ पूतद्रुः ८ ब्रह्मवृक्षकः ९ ब्रह्मोप-
नेता १० काष्ठद्रुः ११ । अस्य गुणाः । कषा-
यत्वम् । उष्णत्वम् । क्रिमिदोषविनाशित्वञ्च ॥
तद्-
बीजगुणः । पामकण्डूतिदद्रुत्वग्दोषनाशित्वम्
॥
तत्पुष्पगुणः । उष्णत्वम् । कण्डूकुष्ठनाशित्वञ्च
॥
तत्पुष्पं चतुर्विधं यथा, राजनिर्घण्टे ।
"रक्तः पीतः सितो नीलः कुसुमैस्तु विभाव्यते
।
किंशुकैर्गुणसाम्योऽपि सितो विज्ञानदः स्मृतः
॥"
"पलाशः किंशुकः पर्णो याज्ञिको रक्तपुष्पकः ।
क्षारश्रेष्ठो वातपोथो ब्रह्मवृक्षः समिद्वरः ॥

**पलाशकः**, पुं, (पलाश + संज्ञायां कन् ।) शटी ।
इति जटाधरः ॥ पलाशवृक्षः । इति
शब्द-
रत्नावली ॥

**पलाशपर्णी**, स्त्री, (पलाशस्य पर्णमिव पर्णमस्याः ।
गौरादित्वात् ङीष् ।) अश्वगन्धा । इति
राज-
निर्घण्टः ॥

**पलाशाख्यः**, पुं, (पलाशस्य आख्या आख्या
यस्य ।
यद्वा, पलाशं पलाशगन्धमाख्यातीति ।
आ +
ख्या + कः ।) नाडीहिङ्गु । इति
राजनिर्घण्टः ॥

**पलाशान्ता**, स्त्री, (पलाशं अन्ते यस्याः । यद्वा,
पलाशानां पत्राणां अन्तो गन्धवान्
यस्याः ।)
गन्धपत्रा । इति राजनिर्घण्टः ॥

**पलाशी**, [न्] पुं, (पलाशं विद्यतेऽस्य । पलाश
+ इनिः ।) वृक्षः । इत्यमरः । २ । ४ । ५
॥
(पलं मांसं अश्नातीति । अश + णिनिः
।)
राक्षसः । इति मेदिनी । ने, १९३ ॥
क्षीरि-
वृक्षः । इति रत्नमाला ॥ (पत्रविशिष्टे
वाच्य-
लिङ्गः । यथा, --
"ततः स भगवान् विद्वान् काश्यपो
द्विजसत्तमः ।
भष्मराशीकृतं वृक्षं विद्यया समजीवत् ॥
अङ्कुरं कृतवांस्तत्र ततः पर्णद्वयान्वितम्
।
पलाशिनं शाखिनञ्च तथा विटपिनं पुनः
॥"
इति महाभारते । १ । ४३ । ९ -- १० ॥
स्त्री, नदीविशेषः । इत्यन्तु
शुक्तिमत्पर्व्वतसम्भूता ।

मरः । २ । ९ । २२ ॥ पोयाल इति भाषा ॥ (यथा,
मनुः । ५ । १२२ ।
"प्रोक्षणात् तृणकाष्ठञ्च पलालञ्चैव शुध्यति ॥"
स्त्री, स्कन्दस्य मातृविशेषः । यथा, महा-
भारते । ३ । १२७ । १० ।
"काकी च हलिमा चैव मालिनी बृंहिला तथा ।
आर्य्या पलाला वैमित्रा सप्तैताः शिशुमातरः ॥")

**पलालदोहदः**, पुं, (पलालं दोहदं यस्य ।)

आम्रवृक्षः । इति शब्दमाला ॥

**पलाशं**, क्ली, (पलं गतिं कम्पनमित्यर्थः । अश्नुते

व्याप्नोतीति । पल + अश + "कर्म्मण्यण् ।" ३ ।
२ । १ । इत्यण् ।) पत्रम् । इत्यमरः । २ । ४ । १४ ॥
(यथा, महाभारते । ३ । ३५ । २५ ।
"बृहच्छाल इवानूपे शाखापुष्पपलाशवान् ॥"
पलाशस्य पलाशवृक्षस्य इदम् ।
पलाशपुष्पादि ।
यथा कुमारे । ३ । २९ ।
"बालेन्दुवक्राण्यविकाशभावात्
बभुः पलाशान्यतिलोहितानि ।
सद्यो वसन्तेन ममागतानां
नखक्षतानीव वनस्थलीनाम् ॥")

**पलाशः**, पुं, (पलाशानि पर्णानि सन्त्यस्य । "अर्श

आदिभ्योऽच ।" ५ । २ । १२७ । इत्यच् ।) स्वनाम-
ख्यातवृक्षः । स तु ब्रह्मणः स्वरूपः । यथा, --
पलाशो दीपनो वृष्यः सरोष्णो व्रणगुल्मजित् ।
कषायः कटुकस्तिक्तः स्निग्धो गुदजरोगजित् ॥
भग्नसन्धानकृद्दोषग्रहण्यर्शःक्रिमीन् हरेत् ।
तत्पुष्पं स्वादु पाके तु कटु तिक्तं कषायकम् ॥
वातलं कफपित्तास्रकृच्छ्रजिद्ग्राहि शीतलम् ।
तृड्दाहशमनं वातरक्तकुष्ठहरं परम् ॥
फलं लघूष्णं मेहार्शःक्रिमिवातकफापहम् ।
विपाके कटुकं रूक्षं कुष्ठगुल्मोदरप्रणुत् ॥"
इति भावप्रकाशः ॥
पलाशभेदा । यथा, --
"तद्भेदे स्यात् किंशुलुकः किञ्चलो हस्तिकर्णकः ॥"
इति शब्दरत्नावली ॥
(पलाशस्य फलपुष्पादौ क्ली ॥) शटी । (पलं
मांशं अश्नातीति । पल + अश् + अण् । यद्वा,
पले मांसे आशा यस्य ।) राक्षसः । इति
मेदिनी । शे, २४ ॥ हरितः । मगधदेशः । इति
शब्दरत्नावली ॥

**पलाशः**, त्रि, (पलवद्धरिद्वर्णेन अश्यते व्याप्यते

इति । अश + घञ् ।) हरिद्वर्णविशिष्टः । इति
मेदिनी । शे, २४ ॥ निर्द्दयः । इति धरणिः ॥
यथा, मार्कण्डेये । ५७ । ३० ।
"कृपा पलाशिनी चैव शुक्तिमत्प्रभवा स्मृता ॥")

**पलाशी**, स्त्री, (पलाश + गौरादित्वात् ङीष् ।)

लाक्षा । लताविशेषः । तत्पर्य्यायः ।
पत्रवल्ली २
पर्णवल्ली ३ पलाशिका ४ सुरपर्णी ५ सुपर्णी ६
दीर्घवल्ली ७ विषादनी ८ अम्लपत्री ९ दीर्घपत्री १०
रसाम्ला ११ अम्लिका १२ अम्लातकी १३
काञ्जिका १४ । अस्या गुणाः ।
मधुरत्वम् ।
अम्लत्वम् । मुखदोषारोचकनाशित्वम् । पथ्य-
त्वम् । पित्तकोपकारित्वञ्च । इति
राजनिर्घण्टः ॥

**पलिक्नी**, स्त्री, (पलितमस्या अस्तीति । "अर्श

आदिभ्योऽच् ।" इत्यच् ।
"असितपलितयोर्न ।"
वार्त्ति । "छन्दसि क्नमेके ।"
इत्येकोक्तेर्भाषाया-
मपि तस्य क्न इत्यादेशो भवति । ततो नान्त-
त्वात् ङीप् ।) वृद्धा । इत्यमरः । २ । ६ । १२ ॥
वालगर्भिणी गौः । इति हेमचन्द्रः ॥

**पलिघः**, पुं, (परिहन्यतेऽनेनेति । परि + हन +

"परौ घः ।" ८ । २ । २२ । इति अप् घादे-
शश्च । ततः "परेश्च घाङ्कयोः ।" ८ । २ । २२ ।
इति रस्य लः ।) काचकलसः । घटः ।
प्राकारः ।
गोपुरम् । इति मेदिनी । घे, ९ ॥

**पलितं**, क्ली, (पलि + भावे क्तः । यद्वा, फलन-

मिति । फल + "फलेरितजादेश्च पः ।" उणां ।

| | | |
|---|---|---|
| | | ५ । ३४ । इति इतच् फस्य पत्वम् ।) जरसा केशादौ शौक्ल्यम् । केशपाकः । इत्यमरः । २ । ६ । ४१ ॥ (यथा, मनुः । ६ । २ । "गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः । अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत् ॥") |

तस्य निदानं यथाह माधवकरः ।
"क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः
।
पित्तञ्च केशान् पचति पलितं तेन जायते
॥"
तच्चिकित्सा यथा, --
"लौहचूर्णस्य कर्षन्तु दशार्द्धञ्चूतमज्जतः
।
धात्रीफलद्वयं पथ्ये द्वे तथैकं विभीतकम्
॥
पिष्ट्वा लोहमये भाण्डे स्थापयेन्निशि
वासयेत् ।
लेपोऽयमचिराद्धन्ति पलितं नेह संशयः ॥
दशार्द्धं पञ्चकर्षाणि ।
काशमर्य्या मूलमादौ सहचरकुसुमं
केतकस्यापि
मूलं
लौहं चर्णं सभृङ्गं त्रिफलपलयुतं तैलमेभिः
पचेयुः ।
कृत्वा लोहस्य भाण्डे क्षितितलनिहितं
स्थापये-
न्मासमेकं
केशाः काशप्रकाशा अपि मधुपनिभा
अस्य
योगाद्भवन्ति ॥
त्रिफला नीलिकापत्रं भृङ्गराजोऽयसो रजः
।
अवीमूत्रेण संपिष्टं लेपात् कृष्णीकरं परम्
॥"
इति भावप्रकाशे मध्यखण्डे
क्षुद्ररीगाधिकारे ॥
शैलजम् । तापः । कर्द्दमः । इति मेदिनी ।
ते,
१२२ ॥ (पल गतौ + "लोष्टपलितौ ।"
उणां । ३ ।
९२ । इति क्तप्रत्ययेन निपातनात् सिद्धम्
।)
केशपाशः । इति हेमचन्द्रः उज्ज्वलदत्तश्च
॥

**पलितः**, पुं, (फलति वृद्धावस्थायां केशशौक्ला-

**पल्लः**, पुं, (पल्लति शस्यादिप्राचुर्य्यं गच्छतीति ।

पल्ल + पचाद्यच् ।) स्थूलकुशूलकम् । इति
मेदिनी । ले, ३० ॥ पालुइ इति मराइ इति
च भाषा ॥ (यथा, सुश्रुते चिकित्सितस्थाने
१३ अध्याये ।
"सुपिधानन्तु तं कृत्वा यवपल्ले निधापयेत् ॥")

**पल्लवः**, पुं, क्ली, (पल्यते इति पल् । पल् + क्विप् ।

लूयते इति लवः । लू + "ऋदोरप् ।" ३ । ३ ।
५७ ।
इति अप् । ततः पल् चासौ लवश्चेति ।)
नवपत्रादियुक्तशाखाग्रपर्व्व । इति भरतः ॥ नव-
पत्रस्तवकः । "इति मधुः ॥ पर्व्वपत्रादिसंघाते
शाखायाः पल्लवो मतः ।" इति कोषान्तरम् ॥
(यथा, रघुः । ९ । ३३ ।
"अभिनयान् परिचेतुमिवोद्यता
मलयमारुतकम्पितपल्लवा।
अमदयत् सहकारलता मनः
सकलिकाकलिकामजितामपि॥")
तत्पर्य्यायः । किसलयम् २ । इत्यमरः । २ ।
४ । १४ ॥ प्रवालम् ३ नबपत्रम् ४ । इति राज-
निर्घण्टः ॥ वंलम् ५ किसलम् ६ किशलम् ७
किशलयम् ८ विटपः ९ । इति शब्दरत्नावली
॥
पत्रयौवनम् १० । इति जटाधरः ॥ विस्तरः ।
वलम् । शृङ्गारः । अलक्तरागः । इति विश्व-
मेदिन्यौ ॥ वलमित्यत्र वनमिति क्वचित् पाठः
॥
वलयः । चापलः । इति शब्दरत्नावली ॥ (देश-
विशेषः । तद्देशवासिषु पुं भूम्नि । यथा, मार्क-
ण्डेये । ५७ । ३६ ।
"अपरान्ताश्च शूद्राश्च पल्लवाश्चर्म्मखण्डिकाः
।
गान्धारा गबलाश्चैव सिन्धुसौवीरमद्रकाः ॥")

**पल्लवकः**, पुं, (पल्लवेन शृङ्गारेण कायतीति ।

पल्लव + कै + कः ।) वेश्यापतिः । (पल्लव इव
कायतीति ।) मत्स्यविशेषः । इति हलायुधः ॥
(पल्लवः किसलयैः कायतीति । अशोकवृक्षः ।
इति कश्चित् ॥)

**पल्लिः**, स्त्री, (पल्लतीति । पल्ल + "सर्व्वधातुभ्य

इन् ।" इति इन् ।) ग्रामकः । कुटी । इति
हेमचन्द्रः ॥ कुटीसमुदायः । ग्रामः ।
इत्यन्ये ॥
गृहमिति भट्टः ॥ कुटीग्रामकयोः पल्लीति
शाश्वतः ॥ स्थानमिति स्वामी ॥ पतन्ति
भरणेन
भ्रमणेन च जीवन्तीति क्विपि पतो गावः
ते
लीयन्तेऽत्र पल्लिः नाम्नीति डिः
पाच्छोणादीति
ईपि पल्ली च गोपपल्लीप्रभृति च ।
इत्याभीर-
पल्लिशब्दटीकायां भरतः ॥ (गृहगोधिका ।
इति हेमचन्द्रे पल्लीशब्ददर्शनात् ॥)

**पल्लिका**, स्त्री, (पल्लि + स्वार्थे कन् ततष्टाप् ।)

गृहगोधिका । इति राजनिर्घण्टः ॥

**पल्लिवाहः**, पुं, (पल्लिं कुटीं वाहयति निर्वाहय-

तीति । पल्लि + वह + णिच् + अण् ।)
तृण-
भेदः । यथाह राजनिर्घण्टः ।
"पल्लिवाहो दीर्घतृणः सुपत्रस्ताम्रवर्णकः ।
अदृढः शाकपत्रादिः पशूनामबलप्रदः ॥"

**पल्ली**, स्त्री, (पल्लि + "कृदिकारादिति ।" वा

ङीष् ।) स्वल्पग्रामः । (यथा, कथासरित्-
सागरे । १० । १३५ ।
"इतस्त्वं गच्छ मत्पल्लीं जाने सा तत्र ते
गता ।
अहं तत्रैव चैष्यामि दास्याम्यसिमिमञ्च ते
॥")
कुटी । इति विश्वमेदिन्यौ ॥ नगरभेदः ।
स तु
दक्षिणदेशे प्रसिद्धः त्रिचनापल्ल्यादिः ।
इति
शब्दरत्नावली ॥ क्षुद्रजन्तुविशेषः ।
टिक्टिकी
इति भाषा । तत्पर्य्यायः । मुषली २
गृहगोधा

दिकं प्राप्नोतीति । फल +
“फलेरितजादेश्चपः ।”
उणां । ५ । ३४ । इति इतच् फस्य च पः
।)
वृद्धः । इति जटाधरः ॥

**पलिता**, स्त्री, (पलित + टाप् ।) वृद्धा । इति
जटाधरः ॥

**पल्यङ्कः**, पुं, (परितोऽङ्क्यतेऽत्र इति । परि + अकि
लक्षणे + घञ् । “परेश्च घाङ्कयोः ।” ८ ।
२ । २२ ।
इति रस्य लः ।) पर्य्यङ्कः । इत्यमरः । २
। ७ ।
१३८ ॥ (यथा, रामायणे । २ । ३२ । ९
।
“पल्यङ्कमग्र्यास्तरणं नानारत्नविभूषितम्
।
तमपीच्छति वैदेही प्रतिष्ठापयितुं त्वयि
॥”)

**पल्ययनं**, क्ली, (परितः अयति गच्छति अनेन ।
परि + अय गतौ + करणेल्युट् । रस्य
लत्वम् ।)
पर्य्याणम् । इति हेमचन्द्रः । ४ । ३१८ ॥
घोडार
जिन् इति भाषा ॥

**पल्युल**, त् क लूनिपूत्योः । इति कविकल्पद्रुमः ।
(अदन्तचुरां-परं-सकं-सेट् ।)
यकारयुक्तैक-
लकारमध्यः ह्रस्वमध्यश्च । लूनिश्छेदः ।
पूतिः
पवित्रीकरणम् । अपपल्युलत् तृणं लोकः
।
पल्युलयति जनं गङ्गा । इति दुर्गादासः ॥

**पल्यूल**, त् क लूनिपूत्योः । इति कविकल्पद्रुमः ॥
(अदन्तचुरां-परं-सकं-सेट् ।)
यकारयुक्तैक-
लकारमध्यः दीर्घमध्यश्च । लूनिश्छेदः ।
पूतिः

**पल्लवद्रुः**, पुं, (पल्लवप्रधानो द्रुर्वृक्षः ।) अशोक-
वृक्षः । इति राजनिर्घण्टः ॥

**पल्लवाधारः**, पुं, (पल्लवस्य आधारः ।) शाखा ।
इति शब्दचन्द्रिका ॥

**पल्लविकः**, त्रि, (पल्लवः शृङ्गाररसोऽस्त्यस्यास्मिन्
वा । पल्लव + ठन् ।) कामुकः । इति हेमचन्द्रः ।
२ । २४५ ॥

**पल्लवितं**, क्ली, (पल्लवोऽलक्तरागः सञ्जातोऽस्य ।
तारकादिभ्य इतच् ।) लाक्षारक्तः । इति
मेदिनी । ले, २०४ ॥

**पल्लवितः**, त्रि, (पल्लवः सञ्जातोऽस्य । पल्लव +
इतच् ।) सपल्लवः । पल्लवयुक्तः । ततम् ।
विस्तृ-
तम् । इति मेदिनी । ले, २०४ ॥

**पल्लवी**, [न्] पुं, (पल्लवाः सन्त्यस्य । पल्लव + इनिः ।)
वृक्षः । इति शब्दमाला ॥ (पल्लवविशिष्टे, त्रि ।
यथा, कुमारे । ३ । ५४ ।
“पर्य्याप्तपुष्पस्तवकावनम्रा
सञ्चारिणी पल्लविनी लतेव ॥”)

३ विशम्बरा ४ ज्येष्ठा ५ कुड्यमत्स्यः ६
पल्लिका
७ गृहगोधिका ८ । इति राजनिर्घण्टः ॥
गृह-
गोलिका ९ माणिक्या १० भित्तिका ११
गृहो-
लिका १२ । इति हेमचन्द्रः । ४ । ३६३
॥
अवशिष्टं ज्येष्ठीशब्दे द्रष्टव्यम् ॥ (अस्याः
पतन-
फलमुक्तं यथा, ज्योतिषशास्त्रे ।
“निपतति यदि पल्ली दक्षिणाङ्गे नराणां
स्वजनधनवियोगो लाभदा वामभागे ।
उरसि शिरसि पृष्ठे कण्ठदेशे च राज्यं
करचरणहृदिस्था सर्व्वसौख्यं ददाति ॥”)

**पल्वलं**, क्ली, पुं, (पलति गच्छति पिबत्यस्मिन् वा ।
पल गतौ पा पाने वा +
“सानसिवर्णसिपर्ण-
सीति ।” उणां । ४ । १०७ । इति
निपातनात्
वलच् प्रत्ययेन सिद्धम् ।) अल्पसरः ।
इत्य-
मरः । १ । १० । २८ ॥ (यथा, महाभारते
।
७ । ५१ । ९ ।
“पल्वलानि च सर्व्वानि सर्व्वे चैव
तृणोपलाः ।
स्थावरं जङ्गमञ्चैव निःशेषं कुरुते जगत्
॥”)
तस्य लक्षणं यथा, --
“अल्पं सरः पल्वलं स्याद्यत्र चन्द्रर्क्षगे रवौ
।
न तिष्ठति जलं किञ्चित्तत्रत्यं वारि
पाल्वलम् ॥
तज्जलगुणाः ।
पाल्वलं वार्य्यभिष्यन्दि गुरु स्वादु
त्रिदोषकृत् ॥”
इति भावप्रकाशः ॥
“पाल्वलं गुर्व्वभिष्यन्दि विष्टम्भि दोषलं
परम् ॥”
इति राजवल्लभः ॥

| पवित्रीकरणम् । अपपल्यूलत् तृणं लोकः । पल्यूलयति जनं गङ्गा । इति दुर्गादासः ॥ **पल्ल**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) पल्लति । इति दुर्गादासः ॥ | | |
|---|---|---|

**पवं**, क्ली, (पूयतेऽनेन । पूञगि शोधे + “ऋदोरप् ।”

३ । ३ । ५७ । इति अप् ।) गोमयम् । इति शब्दचन्द्रिका ॥ (गोमयशब्दे विवरणमस्य ज्ञातव्यम् ॥)

**पवः**, पुं, (पवनमिति । पूञ शोधने + भावे अप् ।

यद्वा, पुनातीति । पू + अच् ।) निष्पावः । स च धान्यादीनां निर्वुषीकरणम् । शाल्यादेः शोधनं बहुलीकरणम् । इत्यमरभरतौ ॥ (पू + करणे अप् । यद्वा पुणातीति कर्त्तरि अच् ।) वायुः । इति शब्दचन्द्रिका ॥

**पवनं**, क्ली, (पूयते अग्निसंयोगेन यस्मिन् । पू +

आधारे ल्युट् ।) कुम्भकारस्य
आमघटादिपाक-
स्थानम् । पोयान् इति भाषा । इति मेदिनी ।
ने, ८४ ॥ (यथा, --
“यः कुम्भकारपवनोपरिपङ्क्लेम-
स्तापाय केवलमसौ न तु तापशान्त्यै ॥”)
इत्युद्भटः ॥)
पयनमिति प्रमादपाठः । जलम् । इति शब्द-
माला ॥ प्रयते त्रि । इति शब्दरत्नावली ।
(भावे ल्युट् ।) पवित्रीकरणञ्च ॥

**पवनः**, पुं, (पुनातीति । पू + बहुलमन्यत्रापीति

युच् ।) निष्पावः । वायुः । इति मेदिनी । ने,
८४ ॥ (यथा, गीतायाम् । १० । ३१ ।
“पवनः पवतामस्मि रामः शस्त्रभृतामहम् ॥”)
अष्टौ वाह्यपवना यथा, सिद्धान्तशिरोमणौ ।
“भूवायुरावह इह प्रवहस्तदूद्र्ध्वः
स्यादुद्वहस्तदनु संवहसंज्ञकश्च ।
अन्यः परोऽपि सुवहः परिपूर्ब्बकोऽस्मा-
द्वाह्यः परावह इमे पवनाः प्रसिद्धाः ॥”
सप्त पवनाधिपा यथा, ज्योतिस्तत्त्वे ।
“शाकः शराब्धिसंयुक्तो मुनिभिर्भागहारितः ।
आवहादिक्रमेणैव सप्त वाताः प्रकीर्त्तिताः ॥
आवहः प्रवहश्चैव सम्बहो निवहस्तथा ।
उद्वहो विवहो वायुः सप्त वाताः प्रकीर्त्तिताः ॥”
अन्यद्वायुशब्दे द्रष्टव्यम् ॥ (प्राणवायुः । यथा,
हठयोगदीपिकायाम् । ३ । ७५ ।
“अनेनैव विधानेन प्रयाति पवनो लयम् ।
ततो न जायते मृत्युर्ज्जरारोगादिकं तथा ॥”

स्थानसेवां तथा ध्यानं बाणिज्यं
राजदर्शनम् ।
अन्यानि शुभकर्म्माणि कारयेत प्रयत्नतः ॥
दक्षनाडीप्रवाहे तु शनिर्भौमश्च सैंहिकः ।
इनश्चैव तथाप्येव पापानामुदयो भवेत् ॥
शुभाशुभविवेको हि ज्ञायते तु स्वरोदयात् ।
देहमध्ये स्थिता नाड्यो बहुरूपाः
सुविस्तराः ॥
नाभेरधस्ताद्यः कन्दो अङ्कुरास्तत्र निर्गताः
।
द्वासप्ततिसहस्राणि नाभिमध्ये व्यवस्थिताः
॥
चक्रवच्च स्थितास्तास्तु सर्व्वाः प्राणहराः
स्मृताः ।
तासां मध्ये त्रयः श्रेष्ठा वामदक्षिणमध्यमाः
॥
वामा सोमात्मिका प्रोक्ता दक्षिणा
रविसन्निभा ।
मध्यमा च भवेदग्निः फलती कालरूपिणी ॥
वामा ह्यमृतरूपा च जगदाप्यायने स्थिता ।
दक्षिणा रौद्रभागेन जगच्छोषयते सदा ॥
द्वयोर्वहि तु मृत्युः स्यात्
सर्व्वकार्य्यविनाशिनी ।
निर्गमे च भवेद्वामा प्रवेशे दक्षिणा स्मृता ॥
कारयेत् क्रूरकर्म्माणि प्राणे पिङ्गलसंस्थिते ।
इडाचारे तथा सौम्यं चन्द्रसूर्य्यगतस्तथा ॥
यात्रायां सर्व्वकार्य्येषु विषापहरणे इडा ।
भोजने मैथुने युद्धे पिङ्गला सिद्धिदायिका ॥
उच्चाटमारणाद्येषु कर्म्मस्वेतेषु पिङ्गला ।
मैथुने चैव संग्रामे भोजने सिद्धिदायिका ॥
शोभनेषु च कार्येषु यात्रायां विषकर्म्मणि ।
शान्तिमुक्त्यर्थसिद्धौ च इडा योज्या
नराधिपैः ॥
द्वाभ्याञ्चैव प्रवाहे च क्रूरसौम्यविवर्ज्जने ।
विष्णुवतीन्तु जानीयात् संस्मरेत्तु विचक्षणः
॥
सौम्यादिशुभकार्य्येषु लाभादिजयजीविते ।
गमनागमने चैव वामा सर्व्वत्र पूजिता ।
युद्धादिभोजने घाते स्त्रीणाञ्चैव तु सङ्गमे ।
प्रशस्ता दक्षिणा नाडी प्रवेशे क्षुद्रकर्म्मणि ॥

अन्यत्र वामवाहे तु नाम वै विषमाक्षरम् ।
तदासौ जयमाप्नोति योधः संग्राममध्यतः ॥
दक्षवातप्रवाहे तु यदि नाम समाक्षरम् ।
जायते नात्र सन्देहो नाडीमध्ये तु लक्षयेत् ॥
पिङ्गलान्तर्गते प्राणे समानीयाहवञ्जयेत् ।
यावन्नाड्योदयं चारस्तां दिशं यावदाजयेत् ।
न जातु जयते सोऽपि नात्र कार्य्या विचारणा
॥
अथ संग्राममध्ये तु यत्र नाडी सदा वहेत् ।
सा दिशा जयमाप्नोति शून्ये भङ्गं विनिर्द्दिशेत्
॥
जातचारे जयं विद्यान्मृतके मृतमादिशेत् ।
जयं पराजयञ्चैव यो जानाति स पण्डितः ॥
वामे वा दक्षिणे वापि यत्र सञ्चरते शिरा ।
कृत्वा तत्पदमादौ तु यात्रां नयति शोभनाम्
॥
शशिसूर्य्यप्रवाहे तु सति युद्धं समाचरेत् ।
तत्रस्थः पृच्छते यस्तु स साधुर्जयति ध्रुवम्
॥
यां दिशं वहते वायुस्तां दिशं यावदाजयेत् ।
जयते नात्र सन्देह इन्द्रो यद्यग्रतः स्थितः ॥
मेषाद्या दश या नाड्यो दक्षिणा
वामसंस्थिताः ।
चरस्थिरद्विमार्गे तास्तादृशे तादृशः क्रमात् ॥
निर्गमे निर्गमं याति संग्रहे संग्रहं विदुः ।
पृच्छकस्य वचः श्रुत्वा घण्टाकारेण लक्षयेत्
॥
वामे वा दक्षिणे वापि पञ्चतत्त्वस्थितः शिवे ।
ऊद्र्ध्वेऽग्निरध आपश्च तिर्य्यक्संस्थः
प्रभञ्जनः ।
मध्ये तु पृथिवी ज्ञेया नभः सर्व्वत्र सर्व्वदा ॥
ऊर्द्ध्वे मृत्युरधः शान्तिस्तिर्य्यक् चोच्चाटयेत्
सुधीः ।
मध्ये ह्यस्तं विजानीयान्मोक्षः सर्व्वत्र सर्व्वगे
॥”
इति गारुडे पवनविजयादि ६७ अध्यायः ॥

**पवनव्याधिः**, पुं, (पवनः वायुरोग एव व्याधिरस्य ।)

उद्धवः । श्रीकृष्णस्य सखा । इति त्रिकाण्ड-
शेषः ॥ (यथा, --
“विवक्षितामर्थविदस्तत्क्षणप्रतिसंहृताम् ।

उत्तममनुपुत्त्रविशेषः । यथा, भागवते । ८ । १ । २३ ।
“तृतीय उत्तमो नाम प्रियव्रतसुतो मनुः ।
पवनः सृञ्जयो यज्ञहोत्राद्यास्तत्सुता नृप ! ॥”)

**पवनविजयः**, पुं, (पवनं श्वासवायुं विजयतेऽनेन ।
वि + जि + करणे अप् । यद्वा, पवनस्य विजयो
यत्र ।)
शुभाशुभसूचकश्वासवायुजयोपायकग्रन्थ-
विशेषः । यथा --
सूत उवाच ।
“हरेः श्रुत्वा हरो गौरीं देहस्थं ज्ञानमब्रवीत् ।
कुजो वह्नी रविः पृथ्वी शौरिरापः प्रकीर्त्तिताः ॥
वायुसंस्थास्थितो राहुर्दक्षरन्ध्रावभासकः ।
गुरुः शुक्रस्तथा सौम्यश्चन्द्रश्चैव चतुर्थकः ॥
वामनाड्यास्तु मध्यस्थान् कारयेदात्मनस्तथा ।
यदाचार इडायुक्तस्तदा कर्म्म समाचरेत् ॥
शुभाशुभानि कार्य्याणि लाभालाभौ जयाजयौ ।
जीवाजीवाय यत् पृच्छेन्न सिध्यति च मध्यमा ॥
वामाचारेऽथवा दक्षे प्रत्यये यत्र नायकः ।
तत्रस्थः पृच्छते यस्तु तत्र सिद्धिर्न संशयः ॥
वैच्छन्दो वामदेवस्तु यदा वहति चात्मनि ।
तत्र भागे स्थितः पृच्छेत् सिद्धिर्भवति निष्फला ॥
वामे वा दक्षिणे वापि यत्र संक्रमते शिरा ।
घोरे घोराणि कर्म्माणि सौम्ये वै मध्यमानि च ॥
प्रस्थिते भागतो हंसे द्वाभ्यां वै सर्व्ववाहिनि ।
तदा मृत्युं विजानीयाद्योगी योगविशारदः ॥
यत्र यत्र स्थितः पृच्छेद्वामदक्षिणसंमुखः ।
तत्र तत्र समं दिश्याद्वातस्योदयनं सदा ॥
अग्रतो वामिका श्रेष्ठा पृष्ठतो दक्षिणा शुभा ।
वामेन वामिका प्रोक्ता दक्षिणे दक्षिणा शुभा ॥
जीवो जीवति जीवेन यच्छून्यं तत् स्वरो भवेत् ।
यत्किञ्चित् कार्य्यमुद्दिष्टं जयादिशुभलक्षणम् ॥
तत् सर्व्वं पूर्णनाड्यान्तु जायते निर्व्विकल्पकम् ।
अन्यनाड्यादिपर्य्यन्तपक्षत्रयमुदाहृतम् ॥
यावत् षष्ठीन्तु पृच्छायां पूर्णायां प्रथमो जयेत् ।
रिक्तायान्तु द्वितीयन्तु कथयेत्तदशङ्कितः ॥
वामाचारः समं वायुर्जायते कर्म्मसिद्धिदम् ।
प्रवृत्ते दक्षिणे मार्गे विषमे विषमाक्षरम् ॥
प्रापयन् पवनव्याधेर्गिरमुत्तरपक्षताम् ॥”
इति माघे । २ । १५ ॥
पवनात् प्रकुपितवायोरुद्भवो व्याधिः ।) वायु-
रोगश्च ॥

**पवनात्मजः**, पुं, (पवनस्य आत्मजः पुत्त्रः ।) हनू-
मान् । इति शब्दरत्नावली ॥ (पवनस्य वायो-
रात्मजः । “वायोरग्निः ।” इति श्रुतेर्वायुजन्य-
तयास्य तथात्वम् ।) हव्यवाहनः । इति मत्स्य-
पुराणम् ॥ (भीमसेनः । इति महाभारतम् ॥
यथा, राजतरङ्गिण्याम् । ८ । २८९० ।
“वाहिनीरुद्धमार्गौ तौ पदवीमनुसस्रतुः ।
मार्गे धनञ्जयस्येव शैनेयपवनात्मजौ ॥”)

**पवनालः**, पुं, (पवनाय निष्पावाय अलति पर्य्याप्नो-
तीति । अल पर्य्याप्तौ + अच् ।) धान्यविशेषः ।
देधान इति पोनरी इति च भाषा ।
तत्पर्य्यायः ।
देवधान्यम् २ चूर्णाह्वः ३ जुहुलः ४ जुललः ५
बीजपुष्पः ६ पुष्पगन्धः ७ । अस्य गुणाः ।
हितत्वम् । स्वादुत्वम् । लोहितत्वम् । श्लेष्म-
पित्तनाशित्वम् । अवृष्यत्वम् । तुवरत्वम् ।
रूक्षत्वम् । क्लेदकारित्वम् । लघुत्वञ्च । इति
भावप्रकाशः ॥

**पवनाशः**, पुं, (पवनं वायुं अश्नाति भक्षयतीति ।
अश भोजने + "कर्म्मण्यण् ।" ३ । २ । १ । इति
अण् ।) सर्पः । इति हलायुधः ॥

**पवनाशनः**, पुं, (पवनो वायुरशनं भक्ष्यं यस्य ।)
सर्पः । इत्यमरः । १ । ८ । ८ ॥

**पवनाशनाशः**, पुं, (पवनाशस्य सर्पस्य नाशो
यस्मात् । यद्वा, पवनाशनं सर्पमश्नातीति ।
अश + अण् ।) गरुडः । इति हलायुधः ॥
मयूरः । यथा, उत्तरचोरपञ्चाशिकायाम् ।
"स्वयोनिभक्षध्वजसम्भवानां
श्रुत्वा निनादं गिरिगह्वरेषु ।
तमोऽरिविम्बप्रतिविम्बधारी
रुराव कान्ते ! पवनाशनाशः ॥"

**पवनेष्टः**, पुं, (पवने वायुरोगे इष्टः ।) महानिम्बः ।
इति रत्नमाला ॥ (महानिम्बशब्देऽस्य गुणा-
दिकं ज्ञेयम् ॥)

**पवनोम्बुजं**, क्ली, परूषम् । इति शब्दचन्द्रिका ॥

**पवमानः**, पुं, (पवते शोधयतीति । पूङ् शोधने +
"पूङ्यजोः शानच् ।" ३ । २ । १ । ८ । इति शानच् ।
"आने मुक् ।" ७ । २ । ८२ । इति मुमागमः ।)
वायुः । इत्यमरः । १ । १ । ६६ ॥
(यथा, रघुः । ८ । ९ ।
"न खरो न च भूयसा मृदुः
पवमानः पृथिवीरुहानिव ।
स पुरस्कृतमध्यमक्रमो
नमयामास नृपाननुद्धरन् ॥"
अग्नेः स्वाहायां जातः पुत्त्रः । यथा, मार्क-
ण्डेये । ५२ । २७-२८ ॥

**पविता** [ऋ], त्रि, (पुनातीति । पू + तृच् ।)
पवित्रताकारकः । यथा, नैषधे ।
"तनुश्रिया यस्य तृणं स मन्मथः
कुलश्रिया यः पवितास्मदन्वयम् ॥"

**पवित्रं**, क्ली, (पूयतेऽनेनेति । पू + "पुवः संज्ञा-
याम् ।" ३ । २ । १८५ । इति इत्रः ।) वर्षणम् ।
कुशम् । (यथा, मनुः । २ । ७५ ।
"प्राक्कूलान् पर्य्युपासीनः पवित्रैश्चैव पावितः ॥")
ताम्रम् । पयः । इति मेदिनी । रे, १७७ ॥
घर्षणम् । इति विश्वः ॥ अर्घोपकरणम् । इति
हेमचन्द्रः ॥ यज्ञोपवीतम् । इति त्रिकाण्डशेषः ॥
घृतम् । मधु । इति राजनिर्घण्टः ॥ पार्व्वण-
श्राद्धादावर्घार्थं होमादावाज्यसंस्काराद्यर्थञ्च
साग्रनिर्गर्भकुशान्तरवेष्टितप्रादेशमात्रकुशपत्र-
द्वयम् । यथा, --
"अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥"
इति श्राद्धतत्त्वम् ॥
(विष्णुः । यथा, महाभारते । १२ । १४९ । २० ।
"प्रभूतस्त्रिककुद्धाम पवित्रं मङ्गलं परम् ॥"
महादेवः । यथा तत्रैव । १२ । १७ । ३५ ।
"पवित्रञ्च महांश्चैव नियमो नियमाश्रितः ॥")

**पवित्रः**, त्रि, (पू + इत्र ।) व्रतादिना शुद्धः ।
(यथा, गीतायाम् । ४ । ३८ ।
"नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ॥")
तत्पर्य्यायः । प्रयतः २ पूतः ३ । एतत्त्रयं
प्राणिविषयमात्रम् । शुचिः ४ शुद्धः ५ पवि-
त्रितः ६ । इति शब्दरत्नावली ॥ पुण्यः ७
पावनः ८ । इति जटाधरः ॥ (पूयतेऽनेन । पूञ्
+ "पुवः संज्ञायाम् ।" ३ । २ । १८५ । इति इत्रः ।)
शुद्धद्रव्यम् । तत्पर्य्यायः । पूतम् २ मेध्यम् ३ ।
एतत्त्रयं अप्राणिद्रव्यविषयम् । इति ब्रह्मवर्गे
विशेष्यनिघ्ने च अमरभरतौ ॥ शुद्ध्यम् ४ शुचि ५
पुण्यम् ६ पूतिवत् ७ । इति जटाधरः ॥
(यथा, --
"बल्यं पवित्रमायुष्यं सुमङ्गल्यं रसायनम् ।
एतत्तु गव्यघृतगुणपरम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥)

**पवित्रकः**, पुं, (पवित्र + स्वार्थे कन् ।) कुशः ।
दमनकः । अश्वत्थः । उदुम्बरः । इति राज-
निर्घण्टः ॥

**पवित्रधान्यं**, क्ली, (पवित्रं धान्यम् । नित्यकर्म्म-
धारयः ।) यवः । इति राजनिर्घण्टः ॥ (यव-
शब्देऽस्य गुणादयो वक्तव्याः ॥)

**पवित्रा**, स्त्री, (पवित्र + टाप् ।) तुलसी । इति
शब्दमाला ॥ नदीभेदः । इति हेमचन्द्रः ॥
हरिद्रा । अश्वत्थीवृक्षः । इति राजनिर्घण्टः ॥

**पवित्रारोपणं**, क्ली, (पवित्रस्य यज्ञोपवीतस्य
आरोपणं प्रदानं यत्र ।)
श्रीकृष्णसम्प्रदानकोप-
वीतदानरूपोत्सवविशेषः । यथा, --
"श्रावणस्य सिते पक्षे द्वादश्यां वैष्णवैर्मुदा ।
कर्त्तव्यः कृष्णदेवस्य पवित्रारोपणोत्सवः ॥"
अथ तन्नित्यता बह्वृचपरिशिष्टे ।
"स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञे षु दीक्षितः ।
हरिश्च प्रीतिमाप्नोति यः पवित्रं समाचरेत् ॥
विधिना शास्त्रदृष्टेन यो न कुर्य्यात् पवित्रकम् ।
हरन्ति राक्षसास्तस्य वर्षपूजादिकं फलम् ॥"
योगसारे च पवित्रोत्पत्त्युपाख्यानेन नागराजं
पवित्रं प्रति श्रीरुद्रेण वरदानम् । यथा, --
"ये त्वां न बहुमन्यन्ते यथा सम्भावितो मया ।
जपहोमादिकं तेषां फलं त्वामेतु निश्चयात् ॥
विष्णुरहस्ये ।
न करोति विधानेन पवित्रारोपणन्तु यः ।
तस्य साम्बत्सरी पूजा निष्फला मुनिसत्तम् ! ॥
तस्माद्भक्तिसमायुक्तैर्नरैर्व्विष्णुपरायणैः ।
वर्षे वर्षे तु कर्त्तव्यं पवित्रारोपणं हरेः ॥"
अथ पवित्रारोपणमाहात्म्यम् ।
तत्र बौधायनः ।
"यावांस्तन्तुः पवित्रस्य तावत् स्वर्गे महीयते ।
आयुरारोग्यमैश्वर्य्यं विपुलं तस्य वर्द्धते ॥
महासंहितायाम् ।
सम्बत्सरेण या पूजा कृता वै मन्त्रिणा द्विज ! ।

“योसावग्निरभीमानी
ब्रह्मणस्तनयोऽग्रजः ।
तस्मात् स्वाहा सुतान् लेभे
त्रीनुदारौजसो द्विज ! ॥
पावकं पवमानञ्च शुचिञ्चापि
जलाशिनम् ।
तेषान्तु सन्ततावन्ये चत्वारिंशच्च पञ्च
च ॥”)
निर्मथ्याग्निः । स च गार्हपर्याग्निः ।
यथा, --
“अथ यः पवमानस्तु निर्म्मथ्योऽग्निः स
उच्यते ।
स च वै गार्हपत्योऽग्निः प्रथमो ब्रह्मणः
स्मृतः ॥”
इति मात्स्ये ४८ अध्यायः ॥

**पवमानात्मजः**, पुं, (पवमानस्य वायोरात्मजः ।
“वायोरग्निः ।” इति
श्रुतेर्वायुजन्यतयास्य
तथात्वम् । यद्वा, पवमानस्य
अग्निविशेषस्य
आत्मजः ।) हव्यवाहनः । यथा, --
“पवमानात्मजो ह्यग्निर्हव्यवाहन उच्यते
॥”
इति मात्स्ये ४८ अध्यायः ॥

**पवाका**, स्त्री, (पुनातीति । पूञ् गि शोधने +
“वलाकादयश्च ।” उणां ४ । १४ ।
इति आक-
प्रत्ययेन निपातनात् साधुः ।) वात्या ।
चक्र-
वातः । इत्युणादिकोषः ॥

**पविः**, पुं, (पुणातीति । पूञ शोधने + “अच इः
।”
उणां ४ । १३८ । इति इः ।) वज्रम् ।
इत्य-
मरः । १ । १ । ५० ॥

**पवितः**, त्रि, (पूयते स्म । पूङ् शोधे + क्तः ।
“पूङश्च ।”
७ । २ । ५१ । इति इट् । “पूङः क्त्वा
च ।” १ । २ । २२ ।
इति न कित्त्वम् ।) पूतः । इति
मुग्धबोध-

**पवित्रः**, पुं, (पुनातीति । पू + कर्त्तरि इत्रः ।)
तिलवृक्षः । पुत्त्रजीववृक्षः । इति राजनिर्घण्टः ॥
(तिलपुत्त्रजीवशब्दयोरस्यविर्वृतिर्ज्ञेया ॥)
कार्त्तिकेयस्य नामान्तरम् । यथा, महाभारते ।
३ । २३१ । ६ ।
“षष्ठीप्रियश्च धर्म्मात्मा पवित्रो मातृवत्सलः ॥”)

**पवित्रकं**, क्ली, (पवित्र + कन् । यद्वा, पवित्रे
पयसि कायतीति । कै + कः ।) जालम् । इति
शब्दरत्नावली ॥ शणसूत्रजालम् । इत्यमरः ।
१ । १० । १६ ॥ क्षत्त्रियस्य यज्ञोपवीतम् । यथा,
“कार्पासमुपवीतं स्याद्विप्रस्योद्र्ध्ववृतं त्रिवृत् ।
शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम् ॥
इति मनुवचनात् पवित्रकमपि तदुच्यते । इत्य-
मरटीकायां भरतः ॥

पवित्रदानात् पूर्णा स्यादित्याह भगवान् हरिः
॥
विष्णुरहस्ये ।
पवित्रारोपणं विष्णोर्भुवि मुक्तिप्रदायकम् ।
स्त्रीपुंकीर्त्तिप्रदं पुण्यं सुखसम्पद्धनावहम् ॥
पुण्यानान्तु तथा पुण्यं सर्व्वपापहरन्तु वै ।
पवित्रारोपणं तस्मात् पवित्रं परमं स्मृतम् ॥
सम्बत्सरे नरो भक्त्या समभ्यर्च्च्य जनार्द्दनम्
।
यत् फलं समवाप्नोति पवित्रारोपणेन तत् ॥
किञ्च ।
पावयत्येनसो नित्यं त्रायते भवबन्धनात् ।
पवित्रं तेन विख्यातं ब्राह्मं तेजोऽभिधीयते ॥
विष्णवाख्यया तु विख्यातं तदा लोके
विधीयते ।
स एव सूत्ररूपेण यज्ञेशः कर्म्मणां प्रभुः ॥
तदेव त्रिगुणीसूत्रं ततं नारायणाख्यया ।
त्रिदेवात्मा त्रिवेदात्मा त्र्यक्षरः प्रणवः स्मृतः ॥
अथ पवित्रारोपणविधिः ।
“सौवर्णै राजतैस्ताम्रैः क्षौमैः सूत्रैस्तु पाद्मिकैः
।
कार्पासैर्वा पवित्राणीष्यते काशैः कुशैरपि ॥

तत्र कार्पासिकं सूत्रं ब्राह्मणीकर्त्तितं शुभम् ।
आनीय त्रिगुणीकृत्य पुनस्त्रिगुणयेच्छुचिः ॥
पञ्चगव्येन तत् प्रोक्ष्य प्रक्षाल्य शुचिनाम्बुना ।
मूलेनाष्टोत्तरशतं मन्त्रेणाथाभिमन्त्रयेत् ॥
त्रीणि सावृशतेनास्य तस्यार्द्धेनास्य चार्द्धतः ।
जानूरुनाभिदघ्नानि पवित्राण्याचरेत् प्रभोः ॥
षट्त्रिंशद्ग्रन्थयस्तेषामाद्ये कार्य्यास्तु मध्यमे ।
चतुर्विंशतिरन्ते च द्वादशग्रन्थयो बुधैः ॥
अङ्गुष्ठपर्व्वमात्रन्तु कुर्य्याद्ग्रन्थिमथोत्तमे ।
तदर्द्धं मध्यमे कुर्य्यात्तदर्द्धञ्च कनीयसि ॥
ग्रन्थीन् कुर्व्वीत सर्व्वत्र सुवृत्तान् सुमनोहरान् ।
न वै विषमसंख्याकान् ग्रन्थीन् कुर्व्वीत कुत्रचित् ॥
अष्टोत्तरसहस्रेण तत्सूत्रस्य पवित्रकम् ।
अष्टोत्तरशतं ग्रन्थिं वनमालाख्यमाचरेत् ॥
आरभ्य मुकुटं या तु सूत्रैर्विरचिता शुभा ।
आपादलम्बिनी माला वनमाला प्रकीर्त्तिता ॥
कुर्य्याद्गन्धपवित्रञ्च सूत्रैर्द्वादशभिः शुभैः ।
अरत्निप्रमितं तच्च द्वादशग्रन्थिकं कृती ॥
पवित्राणि परीवारदेवतानां समाचरेत् ।
सूत्रैस्तैरुडुसंख्याकैः कलासंख्यार्कसंख्यकैः ॥
तेषु ग्रन्थीन् यथाशोभं बद्ध्वा वह्नेर्गुरोरपि ।
सप्तविंशतिभिः सूत्रैः षड्विंशतिभिरात्मनः ॥
यथासम्भवमन्येषां पवित्राणि च कारयेत् ।
सम्पादयेच्च सर्व्वाणि शोभनान्येव यत्नतः ॥
तथा चोक्तम् ।
विशोभसूत्रदानेन कर्त्तुः स्यादशुभं फलम् ।
परित्रं परया भक्त्या तस्मात् कुर्व्वीत शोभनम् ॥
रञ्जयित्वाथ काश्मीरागुरुगोरोचनादिना ।
वस्त्रेणाच्छाद्य पटले स्थापयेत्तानि वैणये ॥”
इति पवित्रयिनिर्म्माणम् ॥ * ॥
“कृत्वा कृत्यं दशम्याञ्च पवित्रारोपणाय हि ।
तेष्वावाह्य यथास्थानं ब्रह्माद्या देवतास्ततः ।
तत्तन्मन्त्रैः सन्निधाप्याक्षतगन्धादिनार्च्चयेत् ॥
तत्र तत्र ता देवताश्चोक्ताः ।
ब्रह्मविष्णुमहादेवास्त्रिसूत्रीदेवताः स्मृताः ।
प्रणवः सोमवह्नी च ब्रह्मा नागः शशी रविः ॥
शिवश्च विश्वदेवाश्च नवसूत्र्यधिदेवताः ।
क्रिया च पौरुषी वीरा चतुर्थी चापराजिता ॥
जया च विजया चैव मुक्तिदा च सदाशिवा ।
मनोमयी तु नवमी दशमी सर्व्वतोमुखी ।
ग्रन्थीनां देवतास्त्वेतास्तास्तत्र विनिवेशयेत् ॥
तन्मन्त्राश्चैते ।
ॐ सर्व्वाभरणचित्राङ्ग ! सर्व्वदेवनमस्कृत ! ।
लावण्यरूपविश्वात्मन् ! ज्येष्ठसूत्रं समाश्रय ॥
ॐ सर्व्वलक्ष्मीकर ! श्रीश ! सर्व्वज्ञानरसात्मक ! ।
निवृत्तरूपविश्वात्मन् ! मध्यसूत्रं समाश्रय ॥
ॐ अतिवेगमरुद्योने ! पुरुषात्मन् ! दिवस्पते ! ।
कनीयो हे प्रभो ! देव ! तेजसा सूत्रमाश्रय ॥
यत्र मन्त्रो न वर्त्तेत तत्तन्नामैव तत्र च ।
नमोऽन्तं सचतुर्थीकमूह्यः प्राग्लिखनान्मनुः ॥ * ॥
अथ कृष्णकराम्भोजे पट्टसूत्रेण निर्म्मितम् ।
वितस्तिमात्रं बध्नीयात् डोरकं मङ्गलात्मकम् ॥
तत्र मन्त्रः ।
ॐ संवत्सरकृतार्च्चायाः सम्पूर्णफलदायि यत् ।
पवित्रीकरणायैतत् कौतुकं धरते नमः ॥
ततो गन्धपवित्रञ्च गृहीत्वा धूपितं बुधः ।
भगवन्तं नमस्कृत्य भक्त्या संप्रार्थयेदिदम् ॥
आमन्त्रितोऽसि देवेश ! सार्द्धं देवगणेश्वरैः ।
मन्त्रेशैर्लोकपालैश्च सहितः परिवारकैः ॥
आगच्छ भगवन्नीश ! विधिसंपूर्त्तिकारक ! ।
प्रातस्त्वां पूजयिष्यामि सान्निध्यं कुरु केशव ! ॥
ततश्च ।
विष्णुतेजोद्भवं रम्यं सर्व्वपातकनाशनम् ।
सर्व्वकामप्रदं देव तवाङ्गे धारयम्यहम् ॥
अनेन मनुना विद्वान् मूलसंपुटितेन हि ।
दद्यात् गन्धपवित्रं तच्छ्रीकृष्णचरणाब्जयोः ॥
नीराज्य देवं स्तुत्वा च दत्त्वा पुष्पाञ्जलिं ततः ।
तत्पवित्राणि तत्कुम्भमप्यस्त्रमनुनाथवा ॥
वनमालां यथा देव ! कौस्तुभं सततं हृदि ॥
तद्वत् पवित्रतन्तूंश्च पूजाञ्च हृदये वह ।
जानताजानता वापि न कृतं यत्तवार्च्चनम् ॥
केनचिद्विघ्नदोषेण परिपूर्णन्तदस्तु मे ॥
अथाग्निं विधिनाभ्यर्च्च्य पवित्रं तस्य चार्पयेत् ।
कृष्णे निवेदयेन्मन्त्रहीन इत्यादिना कृतम् ॥
गुरुञ्च शक्त्या संपूज्य पवित्रं गुरवेऽर्पयेत् ।
वैष्णवेभ्यः पवित्राणि दत्त्वैकं धारयेत् स्वयम् ॥
संपूज्य वैष्णवान् विप्रान् शक्त्या सम्भोज्य बन्धुभिः ।
समं महाप्रसादान्नं सुखं भुञ्जीत वैष्णवः ॥”
अथ पवित्रविसर्ज्जनविधिः । तन्त्रे ।
“मासं पक्षमहोरात्रं त्रिरात्रं धारयेत्तथा ।
देवं तं सूत्रसन्दर्भं देशकालानुसारतः ॥
प्रत्यहं स्नानकर्म्मादि सूत्राण्युत्तार्य्य कारयेत् ।
अभिषिच्याथ तोयेन पुनर्देवे निवेदयेत् ॥
तथान्ते देवमभ्यर्च्च्य विशेषात् पुष्पचन्दनैः ।
नैवेद्यं विविधं दत्त्वा ततः सूत्रं विसर्ज्जयेत् ॥
ॐ सांवत्सरीं शुभां पूजां सम्पाद्य विधिवन्मम ।
व्रजेदानीं पवित्र ! त्वं विष्णुलोकं विसर्ज्जितम् ॥
यावद्देवे पवित्राणि तावत्तिष्ठेत् समाहितः ।
ब्रह्मचारी हविष्याशी देवपूजापरायणः ॥
तत्फलञ्चोक्तं बौधायनेन ।
एवं यः कुरुते विद्वान् वर्षे वर्षे न संशयः ।
स याति परमं स्थानं यत्र देवो नृकेशरी ॥”
अथ तत्र मुख्यगौणकालनिर्णयः ।
“मुख्यकालस्य चैवास्य विघ्नतोपगमे सति ।
भाद्रादावपि कर्त्तव्यं पवित्रारोपणं प्रभोः ॥
तथा च विष्णुरहस्ये ।
श्रावणस्य सिते पक्षे कर्कटस्थे दिवाकरे ।

कृष्णं विज्ञाप्य तत्राद्रिं यथा प्राग्लिखितं नयेत् ॥
एकादश्यां प्रभाते च नित्यकृत्यं समाप्य हि ।
देवालवमुपस्कृत्य मण्डलं रचयेत् शुभम् ॥
कृत्वा कृष्णस्य नित्यार्च्चां पवित्रारोपणाथकाम्।
पूजां विशेषतः कृत्वा कृष्णं विज्ञापयेदिदम् ॥
क्रियालोपविघातार्थं यत्त्वया विहितं प्रभो ! ।
मयैतत् क्रियते देव ! भवत्तुष्ट्यै पवित्रकम् ॥
न मे विघ्नो भवत्वत्र कुरु नाथ ! दयां मयि ।
सर्व्वथा सर्व्वदा विष्णो ! मम त्वं परमा गतिः ॥
देवस्य सर्व्वतो न्यस्येद्दन्तकाष्ठं जलं कुशान् ।
मृत्तिकाञ्च हरिद्राञ्च कुङ्कुमं रोचनानि च ॥
उपानहौ सितं छत्त्रं चामरं व्यजनं तथा ।
यवा ब्रीह्यादिघान्यानि यथास्थानं पृथक् पृथक् ॥
कुम्भं शुद्धाम्बुनापूर्य्य सर्व्वतोभद्रमण्डले ।
देवाग्रतो निधायास्मिन् परित्राण्यधिवासयेत् ॥”
अथ पवित्राधिवासनम्।
“भगवत्पुरतस्तानि पटलस्थानि पूजयन् ।
आदावावाहयेन्मूलयुजा तन्मनुना बुधः ॥
तन्मन्त्रश्चायम्।
ॐ सांवत्सरस्य यागस्य परित्रीकरणाय भोः ।
विष्णुलोकात् परित्राद्य आगच्छेह नमोऽस्तु ते ॥
नृसिंहमनुना रक्षेत् कवचेनावगुण्ठयेत् ।
गीतनृत्यादिना कुर्य्याद्विधिवज्जागरं निशि ॥”
अथ पवित्रार्पणम् ।
“प्रातःकृत्यानि निर्व्वृत्य नित्यपूजां विधाय च ।
विशेषतोऽर्च्चयेद्देवं पवित्राणि च पूजयेत् ॥
महावादित्रघोषेण नामसंकीर्त्तनोत्सवैः ।
मूलसंपुटितेनैव पवित्राण्यर्पयेत् क्रमात् ॥
वक्ष्यमाणेन मन्त्रेण भक्त्या कृष्णाय वैष्णवः ।
पूजां कृत्वा परीवारदेवानां तान्यथार्पयेत् ॥
अर्पणमन्त्रः ।
कृष्ण ! कृष्ण ! नमस्तुभ्यं गृहाणेदं पवित्रकम् ।
पवित्रकरणार्थाय वर्षपूजाफलप्रदम् ॥
पवित्रकं कुरुष्वाद्य यन्मया दुष्कृतं कृतम् ।
शुद्धो भवाम्यहं देव ! त्वत्प्रसादाज्जनार्द्दन ! ॥
महापूजां ततः कृत्वा स्तुत्वा नत्वार्थयेत् प्रभुम् ।
द्वादश्यां वासुदेवाय पवित्रारोपणं स्मृतम् ॥
सिंहस्थे वा रवौ कार्य्यं कन्यायाञ्च गतेऽथवा ।
तस्यामेव तिथौ सम्यक् तुलासंस्थे कथञ्चन ॥
मन्त्रतन्त्रप्रकाशे च ।
कर्क्कटञ्च गते सूर्य्ये तथा सिंहगतेऽपि वा ।
द्वादश्यां शुक्लपक्षस्य हरेर्द्दद्यात् पवित्रकम् ॥
अथ चेद्विघ्नपातेन मुख्यकालो न लभ्यते ।
कन्यागतेऽपि कुर्व्वीत यावन्नोत्तिष्ठते हरिः ॥”
इति हरिभक्तिविलासः ॥

**पवित्रारोहणं**, क्ली, (पवित्रस्य यज्ञोपवीतस्य आरोहणं सम्प्रदानं यत्र ।) पवित्रारोपणम्। यथा, --
“आषाढशुक्लपक्षस्य याष्टमी श्रावणस्य च ।
पवित्रारोहणं कुर्य्याद्देव्याः प्रीतिकरं परम् ॥
दुर्गातन्त्रेण मन्त्रेण दुर्गाबीजेन भैरव ! ।
वैष्णवीतन्त्रमन्त्रेण पवित्रारोहणञ्चरेत् ॥
विशेषात् श्रावणादेव देव्याः कुर्य्यात् पवित्रकम् ।
सर्व्वेषामपि देवानां पवित्रारोहणञ्चरेत् ॥
आषाढे श्रावणे वापि संवत्सरफलप्रदम् ।
प्रतिपद्धनदस्योक्ता पवित्रारोहणे तिथिः ॥
श्रिया देव्या द्वितीया तु तिथीनामुत्तमा तिथिः ॥
तृतीया भवभाविन्याश्चतुर्थी तत्सुतस्य च ॥
पञ्चमी सोमराजस्य षष्ठी प्रोक्ता गुहस्य च ।

सप्तमी भास्करस्योक्ता दुर्गायाश्च
तथाष्टमी ॥
मातणां नवमी प्रोक्ता वासुकेर्दशमी स्मृता
।
एकादशी ऋषीणाञ्च द्वादशी चक्रपाणिनः
॥
त्रयोदशी त्वनङ्गस्य मम चैव चतुर्द्दशी ।
ब्रह्मणो दिक्पतीनाञ्च पौर्णमासी तिथिर्मता
॥
पवित्रारोहणं यो वै देवानां न समाचरेत् ।
तस्य सांवत्सरीपूजाफलं हरति केशवः ॥
तस्माद्यत्नेन कर्त्तव्यं पवित्रारोहणं परम् ।
कृते बहुफलप्राप्तिस्तत्पूजा सफला भवेत्
॥
पवित्रं येन सूत्रेण यथा कार्य्यं विजानता ।
तत् शृणुष्व प्रमाणञ्च रचनासु च भैरव ! ॥
प्रथमं दर्भसूत्रञ्च पद्मसूत्रं ततः परम् ।
ततः क्षौमं सुपुण्यं स्यात् कार्पासिकमतः
परम् ॥
पट्टसूत्रं तथान्येन पवित्राणि न कारयेत् ।
पवित्राणि विचित्राणि कर्त्तव्याणि प्रयत्नतः
॥
गन्धमाल्यैः सुरभिभिरर्च्चितानि
यथोदितम् ॥
कन्या च कर्त्तयेत् सूत्रं प्रमदा वा पतिव्रता
॥
विधवा शाधुशीला च दुःशीला न हि
कर्त्तयेत् ।
यत् सूचिभिन्नं दग्धञ्च
भस्मधूमाभिगुण्ठितम्॥
तद्वर्ज्जयेत यत्नेन सूत्रमस्मिन् पवित्रके ।
उपयुक्तञ्चाखुदष्टं मद्यरक्तादिदूषितम् ॥
मलिनं नीलरक्तञ्च यत्नेन परिवर्ज्जयेत् ।
सूत्रैः पवित्रं कुर्व्वीत कनिष्ठोत्तममध्यमम्
॥
कनिष्ठकं पवित्रन्तु सप्तविंशतितन्तुभिः ।
मर्त्यलोके यशःकीर्त्तिसुखसौभाग्यवर्द्धनम्
॥
चतुःपञ्चाशता प्रोक्तं तन्तूनां मध्यमं परम्
।
द्विगुणैर्मध्यमे कुर्य्यात्त्रिगुणैरुत्तमे तथा ॥
अधिवास्य पवित्राणि पूर्ब्बस्मिन्दिवसे पुनः ।
मन्त्रन्यासं पवित्रेषु कुर्य्यात्तत्र परेऽहनि ॥
दुर्गाबीजेन मन्त्रेण मन्त्रन्यासं द्विजश्चरेत् ।
वैष्णवीतन्त्रमन्त्रेण कुर्य्युरन्ये च भैरव ! ॥
प्रतिग्रन्थि स्वयं कुर्य्यान्मन्त्रन्यासं विचक्षणः ॥
अङ्गुष्ठाग्रेण जप्यन्तु मालायामिह भैरव ! ।
यावन्ता ग्रन्थयश्चात्र तावन्त्येव च संन्यसेत् ।
मन्त्राणि तस्य तेन स्यात् देवाङ्गोपनियाजनम् ॥
दुर्गातन्त्रेण मन्त्रेण तत्त्वन्यासन्तु कारयेत् ।
एकत्र न्यस्य सकलं यज्ञपात्रे पवित्रकम् ॥
तस्मिन्निधाय पुष्पाणि गन्धादि च सुशोभनम् ॥
तत्त्वन्यासं ततः कुर्य्यादङ्गुल्यग्रेण भैरव ! ॥
विष्णोस्तु मूलमन्त्रेण तत्त्वन्यासन्तु कारयेत् ।
इदं विष्णुरिति प्रोक्तं मन्त्रन्यासे द्विजस्य हि ॥
शूद्राणां मन्त्रविन्यासे मन्त्रो वै द्वादशाक्षरः ।
प्रासादेन तु मन्त्रेण मन्त्रन्यासो मम स्मृतः ॥
अनेन मन्त्रम्यासन्तु दानञ्चानेन कारयेत् ।
कुङ्कुमोशीरखर्ज्जूरैश्चन्दनादिविलेपनैः ॥
पवित्राणि विलिप्याथ तत्त्वन्यासन्तु योजयेत् ।
सम्पूज्य विधिवद्देवीं मण्डले प्रयतो नरः ॥
वैष्णवीतन्त्रमन्त्रेण दुर्गामन्त्रेण भैरव ! ।
दुर्गाबीजेन दद्यात्तु देव्या मूर्द्ध्नि पवित्रकम् ॥
यस्य देवस्य या पूजा तस्य तस्यैव मण्डलम् ।
यस्य यस्य तु यो मन्त्रो यथाध्यानादिपूजनम् ॥
तं देवं तेन भावेन पूजयित्वा प्रयत्नतः ।
तस्यैव बीजमन्त्राभ्यां मूर्द्ध्नि दद्यात् पवित्रकम्
॥
पवित्रं समये दद्याद्देवेभ्यश्च पवित्रकम् ।
सर्व्वेषामेव वेदानां सम्पूर्णार्थञ्च भैरव ! ॥
अग्निर्ब्रह्मा भवानी च गजवक्त्रो महोरगः ।
स्कन्दो भानुर्मातृगणो दिक्पालाश्च नव ग्रहाः ॥
एषां घटेषु प्रत्येकं पूजयित्वा यथाविधि ।
मूर्द्ध्नि पवित्रमेकैकं दद्यादेभ्यः समाहितः ॥
पञ्चगव्यचरुं कृत्वा देव्यै दत्त्वाहुतित्रयम् ।
तेनैव वह्नये दत्त्वा शम्भवे च यथाविधि ॥
आज्यैरष्टोत्तरशतं तिलैराज्यैस्तथैव च ।
अष्टोत्तरशतं दद्यान्महादेव्यै च साधकः ॥
एवमेवं विधानेन विष्णवादीनाञ्च वैष्णवः ।
पवित्रारोपणं कुर्य्याद्धर्म्मकामार्थसिद्धये ॥
नैवेद्यैर्व्विविधैः पेयैर्वटपिष्टकमोदकैः ।
इयं सांवत्सरी पूजा तवास्तु परमेश्वरि ! ॥
ततो विसर्ज्जयेद्देवीं पूर्ब्बभिः प्रतिपत्तिभिः ।
एवं कृते पवित्राणां दाने देव्या यथाविधि ॥
संवत्सरस्य या पूजा सम्पूर्णा वत्स ! जायते ।
कल्पकोटिशतं यावद्देवीगेहे वसेन्नरः ।
अत्रापि सुखसौभाग्यसमृद्धिरतुलाभवेत् ॥”
इति कालिकापुराणे ५८ अध्यायः ॥
गरुडपुराणे ४२ । ४३
अध्याययोरप्येतद्द्रष्ट-
व्यम् ॥

**पवित्रितः**, त्रि, पवित्रमस्य जात इत्यर्थे तार-
कादित्वात् इतच्प्रत्ययनिष्पन्नः । तत्पर्य्यायः
।
पवित्रः २ प्रयतः ३ पूतः ४ शुचिः ५ शुद्धः ६
।
इति शब्दरत्नावली ॥

**पश**, क बन्धे । इति कविकल्पद्रुमः ॥ (चुरां-परं-
सकं-सेट् ।) क, पाशयति । इति दुर्गादासः ॥

**पश**, ञ बाधे । ग्रन्थे । इति कविकल्पद्रुमः ॥
(भ्वां-उभं-सकं-सेट् ।) ञ, पशति, पशते ।
बाधो
विहतिः । ग्रन्थो ग्रन्थनम् । ग्रन्थस्थाने
स्पर्शनं
पठन्ति केचित् । इति दुर्गादासः ॥

**पश**, त् क अनुपसर्गाद्बन्धबाधयोः । स्पर्शगत्योः ।
इति कविकल्पद्रुमः ॥ (अदन्तचुरां-परं-सकं-
सेट् ।) तालव्योपधः । पशयति । अनुपसर्गा-
दिति सोपसर्गस्य प्रयोगो निषिध्यते । बाधो-
विहतिः । इति दुर्गादासः ॥

**पशव्यं**, त्रि, (पशोरिदं पशवे हितं वा । पशु +
यत् ।) पशुसम्बन्धि । इति
संक्षिप्तसारव्याकर-
णम् ॥ (पशुहितकरम् । यथा, याज्ञवल्क्ये ।
१ । ३२१ ।
“रम्यं पशव्यमाजीवं जाङ्गलं देशमावसेत् ॥”)

**पशुः**, पुं, (अविशेषेण सर्व्वं पश्यतीति । दृशिरौ

दिव्यभोगावहं पुण्यं स्वर्गसौख्यप्रदायकम्
॥
उत्तमञ्चैव तन्तूनामष्टोत्तरशतेन वै ।
तद्दत्त्वा तु महादेव्यै शिवसायुज्यमाप्नुयात्
॥
उत्तमं वासुदेवाय दद्याद्यदि पवित्रकम् ।
तदा याति हरेर्लोकं साधको नात्र संशयः
॥
अष्टोत्तरसहस्रन्तु रत्नमालेति गीयते ।
पवित्रन्तु महादेव्या भुक्तिमुक्तिप्रदायकम् ॥
रत्नमालान्तु यो दद्यान्महादेव्यै पवित्रकम्
।
कल्पकोटिसहस्राणि स्वर्गे स्थित्वा शिवो
भवेत् ॥
एतत्तु नागहाराख्यं शङ्करस्य पवित्रकम् ।
अष्टोत्तरसहस्रेण तन्तूनां सुमनोहरम् ॥
यः प्रयच्छति मह्यन्तु स यावान्
तन्तुसञ्चयः ।
तावत्कल्पसहस्राणि मम लोके प्रमोदते ॥
अष्टोत्तरसहस्रेण वनमाला हरेः स्मृता ।
तन्तूनां तस्य दानेन
विष्णुसायुज्यमाप्नुयात् ॥
यत् कनिष्ठं पवित्रन्तु नाभिमात्रं भवेत्तु तत्
।
द्वादशग्रन्थिसंयुक्तमात्ममानेन योजयेत् ॥
ऊरुप्रमाणं मध्यं स्यात् ग्रन्थीनां तत्र
योजयेत् ।
चतुर्विंशतिमप्यस्य मालामात्मन एव च ॥
पवित्रमुत्तमं प्रोक्तं जानुमात्रञ्च भैरव ! ।
षट्त्रिंशत्तन्तुग्रन्थीनां योजयेदात्ममानतः
॥
शतमष्टोत्तरं कार्य्यं ग्रन्थीनां स्वविधानतः
।
नागहाराह्वयं तद्वदर्थेषु च विधानतः ॥
पवित्रं क्रियते येन सूत्रेण ग्रन्थयः पुनः ।
तदन्यवर्णसूत्रेण कर्त्तव्या लक्षणान्विताः ॥
ग्रन्थिन्तु सप्तभिः कुर्य्याद्वेष्टनैस्तु कनिष्ठके
।

कुष्माण्डैर्नारिकेलैश्च खर्ज्जूरैः पनसैस्तथा ॥
आम्रदाडिमकर्कारुद्राक्षादिविविधैः फलैः ।
भक्ष्यभोज्यादिभिः सर्व्वैर्मद्यैर्मांसैस्तथोदनैः ॥
गन्धैः पुष्पैस्तथा धूपैर्दीपैश्च सुमनोहरैः ।
वासोभिर्भूषणैश्चैव भवानीं साधको यजेत् ॥
नटनर्त्तकसंघैश्च वेश्याभिरपि भैरव ! ।
नृत्यगीतैः समुदितो जागरं कारयेन्निशि ॥
भोजयेद्ब्राह्मणांश्चापि ज्ञातीनपि द्विजोत्तमैः ।
पवित्रारोहणे वृत्ते दक्षिणामुपदापयेत् ॥
हिरण्यं गां तिलं वासो घृतं वा शाकमेव वा ।
इमं मन्त्रं ततः पश्चात् साधकः समुदीरयेत् ॥
मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः ।

प्रेक्षणे + “अर्ज्जिदृशिकम्यमिपंसीति ।” उणां
।
१ । २८ । इति कुः पश्यादेशश्च ।) अन्या
व्युत्पत्तिर्यथा, “पशयन्ति पश्यन्ति पार्श्व-
हस्ताभ्यां हिताहितम् ।” इति भरतः ॥
जन्तु-
विशेषः । तस्य लक्षणम् । लोमवल्लाङ्गूल-
वत्त्वम् । इति भाषारत्ने कणादः ॥ तद्भेदा
यथा । सिंहः १ व्याघ्रः २ तरक्षुः ३ वराहः ४
कपिः ५ भल्लूकः ६ खड्गी ७ महिषः ८
शृगालः ९ विडालः १० गोधा ११ श्वावित्
१२
हरिणः १३ कृष्णसारः १४ रुरुः १५ न्यङ्कुः
१६
रङ्कुः १७ शम्बरः १८ रौहिषः १९ गोकर्णः
२०
पृषतः २१ एणः २२ ऋष्यः २३ रोहितः
२४
चमरः २५ गन्धर्व्वः २६ शरभः २७ रामः
२८
सृमरः २९ गवयः ३० शशः ३१ खट्टाशः
३२
गौः ३३ उष्ट्रः ३४ छागः ३५ मेषः ३६ खरः
३७
हस्ती ३८ अश्वः ३९ । इत्यमरः ॥ * ॥
(यथा,
(“पशुः पशूनां दौर्ब्बल्यात् कश्चिन्मध्ये
वृकायते ।
ससत्त्वं वृकमासाद्य प्रकृतिं भजते पशुः ॥
तद्वदज्ञो ज्ञमध्यस्थः कश्चिन्मौखर्य्यसाधनः
।
स्थापयत्याप्तमात्मानमाप्तन्त्वासाद्यभिद्यते
॥”
इति चरके सूत्रस्थाने त्रिंशेऽध्याये ॥)
तत्र ग्राम्यारण्यभेदेन चतुर्द्दशविधाः पशवो
यथा,

"गौरविरजोऽश्वोऽश्वतरोगर्द्दभो
मनुष्यश्चेति
सप्त ग्राम्याः पशवः । महिषवानरऋक्षसरी-
सृपरुरुपृषतमृगाश्चेति सप्तारण्याः पशवः
॥"
इति दुर्गोत्सवतत्त्वे पैठीनसिः ॥ * ॥ वैद्यके
भूशयजाङ्गलम्भेदेन स द्विविधः । तत्र
विलशायि-
त्वात् भूशया नकुलगोधादयः । तेषां
मांसगुणाः ।
"प्रहसा भूशयानूपवारिजा वारिचारिणः ।
गुरूष्णमधुराः स्निग्धा वातघ्नाः
शुक्रवर्द्धनाः ॥
स्थलजा जाङ्गलाः प्रोक्ता मृगा
जङ्गलचारिणः ।
जाङ्गला हरिणच्छागादयः । तेषां मांसगुणाः
।
लघवः शीतमधुराः सकषाया हिता नृणाम्
॥
तेषामवयवादीनां गुणः ।
गुरुभक्षा बहुभुजो ये चोपचितमेदसः ।
एकदेहेऽपि पूर्ब्बार्द्धं मृगाणां पक्षिणां परम् ॥
सर्व्वेषाञ्च शिरःस्कन्धप्लीहचर्म्मयकृद्गुदम्
।
पादपुच्छान्त्रमस्तिष्कमुष्कक्रोडाः
समेहनाः ।
धातवः शोणिताद्याश्च गुरवः स्युः
परस्परम् ॥"
इति राजवल्लभः ॥ * ॥
("तत्र गजगवयमहिषरुरुचमरसृमररोहित-
वराहखड्गिगोकर्णकालपुच्छ-
कोन्द्रन्यङ्कुरण्य-
गवयप्रभृतयः कूलचराः पशवः ।" एषां
गुणा
यथा, --
"वातपित्तहरा वृष्या मधुरा रसपाकयोः ।
शीतला बलिनः स्निग्धा मूत्रलाः
कफवर्द्धनाः ॥"
इति सुश्रुते सूत्रस्थाने ४६ अध्यायः ॥
"उष्ट्रा गजा वाजिनश्च महिषाः
सौरभाजकाः ।

"पशुभावस्थितां नाथ ! देवतां शृणु विस्तरात् ।
दुर्गापूजां विष्णुपूजां शिवपूजाञ्च नित्यशः ॥
अवश्यं हि यः करोति स पशुरुत्तमः स्मृतः ।
केवलं शिवपूजाञ्च यः करोति च साधकः ॥
पशूनां मध्यतः श्रीमान् शिवया सह चोत्तमः ।
केवलं वैष्णवो धीरः पशू नां मध्यमः स्मृतः ॥
भूतानां देवतानाञ्च सेवां कुर्व्वन्ति सर्व्वदा ।
पशूनामधमाः प्रोक्ता नरकस्था न संशयः ॥
त्वत्सेवां मम सेवाञ्च ब्रह्मविष्णादिसेवनम् ।
कृत्वान्यसर्व्वभूतानां नायिकानां महाप्रभो ! ॥
यक्षिणीनां भूतिनीनां ततः सेवां शुभप्रदाम् ।
यः पशुर्ब्रह्मकृष्णादिसेवाञ्च कुरुते सदा ॥
तथा श्रीतारकब्रह्मसेवां ये वा नरोत्तमाः ।
तेषामसाध्या भूतादिदेवता सर्व्वकामहा ॥
वर्ज्जयेत् पशुमार्गेण विष्णुसेवापरो जनः ॥"
द्वितीयपटले ।
"नित्यश्राद्धं तथा सन्ध्यावन्दनं पितृतर्पणम् ।
देवतादर्शनं पीठदर्शनं तीर्थदर्शनम् ॥
गुरोराज्ञापालनञ्च देवतानित्यपूजनम् ।
पशुभावस्थितो मर्त्यो महासिद्धिं लभेद्ध्रुवम् ॥"
षष्ठपटले ।
"पुनर्भावं पशोरेव शृणुष्वादरपूर्ब्बकम् ।
अकस्मात् सिद्धिमाप्नोति पशुर्नारायणोपमः ॥
वैकुण्ठनगरे याति चतुर्भुजकलेवरः ।
शङ्खचक्रगदापद्महस्तो गरुडवाहनः ॥
महाधर्म्मस्वरूपोऽसौ महाविद्याप्रसादतः ।
पशुभावं महाभावं भावानां सिद्धिदं परम् ॥
आदौ भावं पशोः कृत्वा पश्चात् कुर्य्यादवश्यकम्
।
वीरभावं महाभावं सर्व्वभावोत्तमोत्तमम् ।
तत्पश्चादतिसौन्दर्य्यं दिव्यभावं महाफलम् ॥
इति रुद्रयामले उत्तरखण्डम् ॥ * ॥
तस्य कालो यथा, --
"आदौ दशमदण्डेन पशुभावमथापि वा ॥"
इति तत्रैव ।
"जन्ममात्रं पशुभावं वर्षषोडशकावधि ॥"
इति वामकेश्वरे ५१ पटलः ॥ * ॥
पशुभावकर्त्तव्याकर्त्तव्यगर्भ्भतद्भावनिन्दामाह ।
"पशुभावरता ये च केवलं पशुरूपिणः ।
रात्रौ यन्त्रञ्च मन्त्रञ्च न स्पृशेत् न जपेत् क्वचित्
॥

पशूनां व्रतभङ्गप्रायश्चित्तं यथा, --
"पशूनां व्रतभङ्गादौ विधिं प्रथमतः शृणु ।
व्रतभङ्गे नित्यभङ्गे नित्यपूजादिकर्म्मणि ।
सहस्रं प्रजपेन्मन्त्री व्रतदोषोपशान्तये ॥"
इति रुद्रयामले उत्तरखण्डे २ पटलः ॥

**पशु**, व्य, (दृश्यते इति । दृश + "अर्ज्जिदृशीति ।"
उणां । १ । २८ । इति भावे कुः पशि-
आदेशश्च ।)
दर्शनम् । इति मेदिनी । शे, १० ॥

**पशुक्रिया**, स्त्री, (पशोरिव क्रिया कार्य्यम् ।)
मैथुनम् । इति हेमचन्द्रः । ३ । २०१ ॥
(पशुना
छागादिजन्तुना क्रिया इति विग्रहे छागादि
पशुबलिदानकार्य्यम् । यथा, हरिवंशे । ५७
। ५२ ।
"कृतानुयात्रा भूतैस्त्वं नित्यं मांसबलिप्रिया
।
तिथौ नवम्यां पूजाञ्च प्राप्स्यसे
सपशुक्रियाम् ॥")

**पशुगायत्री**, स्त्री, (पशुकर्णजप्या गायत्री ।)
बलिदानीयपशुकर्णजप्यमन्त्रविशेषः ।
यथा, --
पशुकर्णे पशुगायत्रीं जपेत् । सा यथा ।
"पशु-
पाशाय विद्महे शिरश्छेदाय धीमहि तन्नः
पशुः
प्रचोदयात् ।" इति दुर्गोत्सवप्रयोगः ॥

**पशुपतिः**, पुं, (पशूनां स्थावरजङ्गमानां पतिः ।)
शिवः । इत्यमरः । १ । १ । २२ ॥ (यथा,
महाभारते । १३ । १७ । १३४ ।
"ऊर्द्ध्वगात्मा पशुपतिर्व्वातरंहा मनोजवः
॥"
तस्य निरुक्तिर्यथा चिन्तामणिधृतवचने, --
"ब्रह्माद्याः स्थावरान्ताश्च पशवः
परिकीर्त्तिताः ।
तेषां पतिर्महादेवः स्मृतः पशुपतिः श्रुतौ
॥")
अपरा निरुक्तिर्यथा, वराहपुराणे ।

खरशूकरमेषाश्च श्वा च मार्ज्जारमूषकाः ।
इत्यते पशवो ज्ञेया ग्रामवासनिवासिनः ॥”
इति हारीते प्रथमस्थाने एकादशेऽध्याये ॥)
छागादौ पशुपदप्रयोगमाह यज्ञपार्श्वः ।
“उष्ट्रो वा यदि वा मेषश्छागो वा यदि वा हयः ।
पशुस्थाने नियुक्तानां पशुशब्दोऽभिधीयते ॥”
इति वलिदानप्रकरणे तिथितत्त्वम् ॥ * ॥
अवैधपशुहनने दोषो यथा, --
“वसेत् स नरके घोरे दिनानि पशुरोमभिः ।
सम्मितानि दुराचारो यो हन्त्यविधिना पशून् ॥”
इति गारुडे ९५ अध्यायः ॥ * ॥
पश्वधिष्ठात्री देवता यथा, --
“सिंहे वसति दुर्गा च शरभे च प्रजापतिः ।
एणे च वसते वायुर्मेषे चैव च चन्द्रमाः ॥
नक्षत्राणि च शशके कृष्णसारे हरिः स्वयम् ।
शतक्रतुर्गवां पृष्ठे गवये भुवनानि च ॥
शल्लके मङ्गलान्यष्टौ गजे विष्णुर्गणेश्वरः ।
अश्वे तु द्वादशादित्या ब्राह्मणे सर्व्वदेवताः ॥
ब्रह्मा तु चामरे चैव छागले तु तथानलः ।
एतस्मान् कारणादेते पूज्या वन्द्याः प्रयत्नतः ॥”
इति मत्स्यमूक्तन्त्रे ३९ पटलः ॥ * ॥
प्रमयः । देवः । प्राणिमात्रम् । इति शब्द-रत्नावली ॥ छगलः । यज्ञः ।
संसारिणामात्मा ।
इति धरणिः ॥ यज्ञोडुम्बरः । इति शब्द-चन्द्रिका ॥ * ॥ * ॥ साधकानां भावत्रयाणां
प्रथमो भावः । तस्य निर्णयो यथा,
षष्ठपटले ।
संशयो बलिदाने च तन्त्रे च संशयः सदा ।
मन्त्रे चाक्षरबुद्धिश्च अविश्वासो गुरौ सदा ॥
प्रतिमासु शिलाबुद्धिर्भेदको दैवते पुनः ।
निरामिषेण देवेशि ! देवतायाः प्रपूजनम् ॥
अज्ञानेन सदा स्नानं प्रत्यहं देहताडनम् ।
सर्व्वेषाञ्चैव निन्दास्तु यः कुर्य्याच्च महेश्वरि ! ।
स एव पशुभावेन अधमः परिकीर्त्तितः ॥”
इति रुद्रयामले उत्तरखण्डे ६ पटलः ॥ * ॥
“रात्रौ नैव यजेद्देवीं सन्ध्यायां वा पराह्णके ।
ऋतुकालं विना देवि ! रमणं परिवर्ज्जयेत् ॥
मांसादिकं महेशानि ! त्यजेत् पञ्चसु पर्व्वसु ।
यदन्यद्वेदविहितं कुर्य्यान्नियमतत्परः ॥”
इति नित्यातन्त्रे १ पटलः ॥ * ॥
“अहञ्च सर्व्वविद्यानां पतिराद्यः सनातनः ।
अहं वै पतिभावेन पशुमध्ये व्यवस्थितः ।
अतः पशुपतिर्नाम त्वं लोके ख्यातिमेष्यसि ॥”
अयं यजमानमूर्त्तिः । यथा । पशुपतये यज-मानमूर्त्तये नमः । इत्यष्टमूर्त्तिपूजायां भविष्य-
पुराणम् ॥ (महादेवो हि नेपाले पीठस्थाने पशु-
पतिरित्याख्यया विराजते । यदुक्तं महालिङ्गे-
श्वरतन्त्रे शिवस्य शतनामस्तोत्रे, --
“नेपाले च पशुपतिः केदारे परमेश्वरः ॥”)

**पशुपल्वलं**, क्ली, (पशुप्रियं पल्वलं क्षुद्रजलाशय
उत्पत्तिस्थानत्वेनास्त्यस्य । अच् । पशुप्रियं
पल्वलमिवेति केचित् ।) कैवर्त्तीमुस्तकम् । इति
शब्दचन्द्रिका ॥

**पशुपाशकः**, पुं, (पशूनामिव पाशो बन्धनं यत्र ।
ततः कप् ।) रतिबन्धविशेषः । यथा, --
“स्त्रियमानतपूर्ब्बाङ्गीं स्वपादान्तःपदद्वयम् ।
ऊद्ध्वांशेन रमेत् कामी बन्धोऽयं पशुपाशकः ॥”
इति रतिमञ्जरी ॥

**पशुप्रेरणं**, क्ली, (पशूनां प्रेरणम् ।) गवादीनां
चालनम् । तत्पर्य्यायः । उदजः २ । इत्य-मरः । ३ । २ । ३९ ॥

**पशुमोहनिका**, स्त्री, (मुह्यतेऽनया । मुह +
ल्युट् । स्वार्थे कन् टापि अत इत्वम् । ततः
पशूनां मोहनिका ।) कट्वीलता । इति राज-निर्घण्टः ॥ (कट्वीशब्देऽस्या विशेषो ज्ञेयः ॥)

**पशुरज्जुः**, स्त्री, पशूनामश्वादीनां बन्धनाय रज्जुः ।
तत्पर्य्यायः । दामनी २ । इत्यमरः । २ । ९ । ७३ ॥
बन्धनी ३ । इति शब्दरत्नावली ॥

**पशुराजः**, पुं, (पशूनां राजा । "राजाहःसखि-
भ्यष्टच् ।" ५ । ४ । ९१ । इति समासान्तटच् ।)
सिंहः । इति शब्दचन्द्रिका ॥

**पशुहरीतकी**, स्त्री, (पशूनां हरीतकीव हित-
कारित्वात् ।) आम्रातकफलम् । इति त्रिकाण्ड-
शेषः ॥

**पश्चात्**, व्य, (अपरस्मिन् अपरस्मात् अपरो वा
वसति आगतो रमणीयं वा । "पश्चात् ।" ५ ।
३ । ३२ । इति अपरस्य पश्चभाव आतिश्च
प्रत्ययोऽस्तातेर्विषये ।) प्रतीची । चरमम् ।
इत्यमरः । ३ । ३ । २४२ ॥ (यथा, रघुः । ४ ।
३० ।
"प्रतापोऽग्रे ततः शब्दः परागस्तदनन्तरम् ।
ययौ पश्चाद्रथादीति चतुस्कन्धेव चा चमूः ॥")
अधिकारः । इति मेदिनी । ते, ३१ ॥

**पश्चात्तापः**, पुं, (पश्चात् अग्रतोऽकार्य्ये कृते चरमे
तापः ।) अनुशोचनम् । चरमे शोकः । पस्तान
इति भाषा । तत्पर्य्यायः । अनुतापः २ विप्रती-
सारः ३ । इत्यमरः । १ । ७ । २५ ॥ (यथा,
रामायणे । ३ । ५१ । ३६ ।
"उक्त्रेति परुषं वाक्यं पश्चात्तापसमन्वितः ॥"
केचित्तु पश्चात् ताप इति पदद्वयमिच्छन्ति ॥)

**पश्चार्द्धः**, त्रि, (अपरश्चासावर्द्धश्च इति । "अपर-
स्यार्द्धे पश्चभावो वक्तव्यः ।" २ । १ । ५८ ।
इत्यस्य वार्त्ति इति पश्चभावः ।) शेषार्द्धः ।
अपरार्द्धः । यथा, शकुन्तलायाम् । १ अङ्के ।
"ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्ध-
दृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्ब्ब-
कायम् ॥"

**पश्चिमं**, त्रि, (पश्चाद्भवम् । "अग्रादिपश्चात्
डिमच् ।" ४ । ३ । २३ । इत्यस्य वार्त्ति इति
कुवेर ईशः पतयः पूर्ब्बादीनां दिशां क्रमात् ॥"
तद्दिक्पतयो मिथुनतुलाकुम्भराशयश्च । यथा,
"प्रागादिककुभान्नाथा यथासंख्यं प्रदक्षिणम् ।
मेषाद्या राशयो ज्ञेयास्त्रिरावृत्ति परिभ्रमात् ॥"
इति ज्योतिस्तत्त्वम् ॥

**पश्य**, व्य, प्रशंसा । विस्मयः । इति शब्दरत्ना-
वली ॥ (पश्यतीति व्युत्पत्त्या "पाघ्राध्माधेट्-
दृशः शः ।" ३ । १ । १३७ । इति शप्रत्ययेन
पश्यो वाच्यलिङ्गः । दर्शकः । यथा, मुण्डकोप-
निषदि । ३ । १ । ३ ।
"यदा पश्यः पश्यते रुक्यवण
कर्त्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय
निरञ्जनः परमं साम्यमुपेति ॥")

**पश्यतिकर्म्मा**, [न्] पुं, (पश्यतिर्दर्शनमेव कर्म्म
यस्य ।) दर्शनकर्म्मा । तद्वैदिकपर्य्यायाः ।
चिक्यात् १ चाकनत् २ आचक्ष्म ३ चष्टे ४
विचष्टे ५ विचर्षणिः ६ विश्वचर्षणिः ७ अव-
चाकशत् ८ । इत्यष्टौ पश्यतिकर्म्माणः । इति
वेदनिघण्टौ ३ अध्यायः ॥

**पश्यतोहरः**, त्रि, (पश्यन्तं जनमनादृत्य हर-
तीति । हृञ् हरणे + अच् । "षष्ठी चाना-
दरे ।" २ । ३ । ३८ । इति अनादरे षष्ठी ।
"वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु ।" ६ ।
३ । २१ । इत्यस्य वार्त्ति इति षष्ठ्या अलुक्
।)
चौरः । यथा, हेमचन्द्रे । ३ । ४६ ।
"यः पश्यतो हरेदर्थं स चौरः पश्यतोहरः ॥"

**पश्यन्** [त्], त्रि, (पश्यतीति । दृशिरौ प्रेक्षणे
+ "लटः शतृशानचाविति ।" २ । २ । १२४ ।
इति शतृ ।) ईक्षणकर्त्ता । इति व्याक-
रणम् ॥ (यथा, मार्कण्डेये । ९२ । २९ ।
"इत्युक्त्वा सा भगवती चण्डिका चण्डविक्रमा
।
पश्यतामेव देवानां तत्रैवान्तरधीयत ॥")

**पश्यन्ती**, स्त्री, (पश्यति या दृश् + शतृ + ङीप् ।
ततः "श्यप्श्यनोर्न्नित्यम् ।" ७ । १ । ८१ ।
इति नुम् ।)
न्यान्तपाठस्तु कस्यचिदनुरोधात् ।
इति दुर्गा-
दासः ॥

**पष**, ञ बाधे । ग्रन्थे । इति कविकल्पद्रुमः ॥
(भ्वां-उभं-सकं-सेट् ।) ञ, पषति पषते
। बाधो
विहतिः । ग्रन्थो ग्रन्थनम् ।
ग्रन्थनस्थाने
स्पर्शनं केचित् पठन्ति । इति दुर्गादासः
॥

**पष**, त् क अनुपसर्गाद्बन्धबाधयोः । स्पर्शगत्योः ।
इति कविकल्पद्रुमः ॥ (अदन्तचुरां-परं-
सकं-
सेट् ।) मूर्द्धन्योपधः । क, पषयति ।
अनुप-
सर्गादिति सोपसर्गस्य प्रयोगो
निषिध्यते । बाधो
विहतिः । इति दुर्गादासः ॥

**पस**, इ क नाशे । इति कविकल्पद्रुमः । (चुरां-
परं-सकं-सेट् ।) नाश इह नष्टीकरणम् ।
इ क, पंसयति पापं गङ्गा । इति
दुर्गादासः ॥

**पस**, क बन्धे । इति कविकल्पद्रुमः ॥ (चुरां-
परं-सकं-सेट् ।) क, पासयति ।
पृथक्पाठा-
दयं न ञित् । अन्यथा पस कि ञ
इत्यनेनैवेष्ट-
सिद्धे पृथक्पाठोऽनर्थकः स्यात् । इति
दुर्गा-
दासः ॥

**पस**, ञ बाधे । ग्रन्थे । इति कविकल्पद्रुमः ।
(भ्वां-
उभं-सकं-सेट् ।) ञ, पसति पसते ।
इति दुर्गा-
दासः ॥

**पस्त्यं**, क्ली, (अपस्त्यायन्ति सङ्घीभूय तिष्ठन्ति
जीवा यत्र । अप + स्त्यै सङ्घातशब्दयोः
+

डिमच् ।) पश्चाद्भवम् । इत्यमरः । ३ । १ । ८१ ॥
(यथा, रघुः । १७ । ८ ।
“तदात्मसम्भवं राज्ये मन्त्रिवृद्धाः समादधुः ।
स्मरन्तः पश्चिमामाज्ञां भर्त्तुः संग्रामयायिनः ॥”)

**पश्चिमा**, स्त्री, (पश्चिम + टाप् ।) अस्ताचला-
वच्छिन्नदिक् । तत्पर्य्यायः । प्रतीची २ वारुणी ३
प्रत्यक् ४ । तद्दिग्भववायुगुणाः ।
“पश्चिमो मारुतस्तीक्ष्णः कफमेहविशोषणः ।
सद्यः प्राणहरो दुष्टः शोषकारी शरीरिणाम् ॥”
इति राजनिर्घण्टः ॥
अपिच । राजवल्लभः ।
“पश्चिमोऽग्निवपुर्व्वर्णबलारोग्यविवर्द्धनः ।
कषायः शोषणः स्वर्य्यो रोचनो विशदो लघुः ॥
अपां लघुत्ववैशद्यशैत्यवैमल्यकारकः ।
सर्व्वद्रव्यष्वभिव्यक्तप्रभावरसवीर्य्यकृत् ॥
व्रणसंरोपणस्त्वच्यो दाहशोथतृषापहः ॥”
तद्दिगधिपतिर्व्वरुणः । यथा, अमरे । १ । ३ । १ ।
“इन्द्रो वह्निः पितृपतिर्नैरृतो वरुणो मरुत् ।
मूलाधारोत्थितहृदयगतनादरूपवर्ण । यथा, --
“मूलाधारात् प्रथममुदितो यस्तु तारः पराख्यः
पश्चात् पश्यन्त्यथ हृदयगो बुद्धियुङ्मध्यमाख्यः ॥”
इत्यलङ्कारकौस्तुभः ॥
(यथाच, --
“वैखरीशक्तिनिष्पत्तिर्म्मध्यमा शुतिगोचरा ।
द्योतितार्था तु पश्यन्ती सूक्ष्मा वागनपायिनी ॥”
इति मल्लिनाथधृतवाक्यम् ॥
ईक्षणकर्त्री । इति व्याकरणम् ॥)

**पश्वाचारः**, पुं, (पशूनां तन्त्रोक्ताधिकारिविशेषाणा-
माचारः ।) आचारविशेषः । यथा, --
“वेदोक्तेन यजेद्देवीं कामसङ्कल्पपूर्ब्बकम् ।
स एव वैदिकाचारः पश्वाचारः स उच्यते ॥”
इत्याचारभेदतन्त्रम् ॥

**पष**, क बन्धे । इति कविकल्पद्रुमः ॥ (चुरां-परं-
सकं-सेट् ।) क, पाषयति । तालव्यान्त एवाय-
मिति बहवः । दन्त्यान्त इति केत्रित् । मूर्द्ध-
“आतश्चोपसर्गे ।” ३ । १ । १३६ ।
इति कः ।
उपसर्गस्याकारलोपो निपातनात् ।)
गृहम् ।
इति हेमचन्द्रः । ४ । ५६ ॥ (यथा, ऋग्वेदे ।
१० । ९६ । ११ ।
प्र पस्त्यमसुर हर्य्यतं गोराविष्कृधि
हरयेसूर्य्याय ॥”)

**पह्लवः**, पुं, श्मश्रुधारिम्लेच्छजातिविशेषः । तस्य
विवरणं यथा, हरिवंशे । १४ । १५ -- १९ ।
“सगरस्तां प्रतिज्ञाञ्च गुरोर्वाक्यं निशम्य च ।
धर्म्मं जघान तेषां वै वेशान्यत्वं चकार ह ॥
अर्द्धं शकानां शिरसो मुण्डयित्वा व्यसर्ज्जयत् ।
यवनानां शिरः सर्व्वं काम्बोजानान्तथैव च ॥
पारदा मुक्तकेशाश्च पह्लवाः श्मश्रुधारिणः ।
निःस्वाध्यायवषट्काराः कृतास्तेन महात्मना ॥
शका यवनकाम्बोजाः पारदाः पह्लवास्तथा ।
कोलाः सर्पाः समहिषा दार्व्वाश्चोलाः सकेरलाः ॥
सर्व्वे ते क्षत्त्रियास्तात ! धर्म्मस्तेषां निराकृतः ।
वशिष्ठवचनाद्राजन् ! सगरेण महात्मना ॥”
(क्वचित् पह्लवः पाठोऽपि दृश्यते । यथा,
गोः रामायणे । १ । ५५ । १८ ।
“तस्या हम्भारवोत्सृष्टाः पह्लवाः शतशो नृप ! ।
अनाशयन् बलं सर्व्वं विश्वामित्रस्य पश्यतः ॥”)

**पह्लिका**, स्त्री, वारिप्रश्नी । इति शब्दमाला ॥

**पा**, पाने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-

| | | अनिट् ।) अस्यैव पिबादेशः । पिबति पयः<br>पान्थः । इति दुर्गादासः ॥<br>**पा**, ल रक्षणे । इति कविकल्पद्रुमः ॥ (अदां-<br>परं-सकं-अनिट् ।) ल, पाति । इति दुर्गा-<br>दासः ॥ |
|---|---|---|

**पाः**, त्रि, (पिबतीति । पा पाने + क्विप् ।) पान-
कर्त्ता ॥ (पाति रक्षतीति । पा रक्षणे + क्विप् ।)
रक्षणकर्त्ता । ("विश्वं पातीति विश्वपाः ।"
इति मुग्धबोधव्याकरणम् ॥)

**पांशवः**, पुं, (पांशोर्लवणविशेषस्य विकारः । पांशु
+ अण् ।) लवणविशेषः । पाङ्गा लोन इति भाषा ॥
तत्पर्य्यायः । रोमकम् २ औद्भिज्जम् ३ वसुकम् ४
वसुपांशुः ५ ऊषरजम् ६ औषरम् ७ ऐरिणम् ८
और्व्वम् ९ सहम् १० । अस्य गुणाः । तीक्ष्ण-
त्वम् । अत्युष्णत्वम् । कटुत्वम् । तिक्तत्वम् ।
दीपनत्वम् । दाहशोषकरत्वम् । ग्राहित्वम् ।
पित्तकोपकरत्वञ्च । इति राजनिर्घण्टः ॥
"औद्भिदं पांशुलवणं यज्जातं भूमितः स्वयम् ।
क्षारं गुरु कटु स्निग्धं श्लेष्मलं वातनाशनम् ॥"
इति भावप्रकाशः ॥

**पांशुः**, पुं, (पंशयति नाशयति आत्मानमिति ।
पशि नाशने + "अर्ज्जिदृशिकमीति ।" उणां ।
१ । २८ । इति कुः दीर्घश्च ।) धूलिः । इत्य-
मरः । २ । ८ । ९८ ॥ (यथा, मनुः । ४ । १०२ ।
"कर्णश्रवेऽनिले रात्रौ दिवा पांशुसमूहने ।
एतौ वर्षास्वनध्यायावध्यायज्ञाःप्रचक्षते ॥")
शस्यार्थचिरसञ्चितगोमयः । सार इति भाषा ॥
इति मेदिनी । शे, ११ ॥ पर्पटः । कर्पूरविशेषः ।
इति राजनिर्घण्टः ॥ (दन्त्यसकारान्तोऽपि
दृश्यते ॥)

**पांशुकासीसं**, क्ली, (पांशुरिव कासीसम् ।) कासी-
सम् । इति राजनिर्घण्टः ॥

**पांशुमर्द्दनः**, पुं, (मृद्यतेऽसाविति । मृद् + ल्युट् ।
मर्द्दनः । ततः पाशुः मर्द्दनो यत्र । यद्वा पांशो-
र्म्मर्द्दनं यत्र ।) केदारः । इति त्रिकाण्डशेषः ॥

**पांशुरः**, पुं, (पांशुं चिरसञ्चितगोमयादिकमुत्-
पत्तित्वेन रातीति । पांशु + रा + कः ।)
दंशकः । डाँश इति भाषा ॥ पीठसर्पी ।
स्वञ्जः । इति हारावली । १२३ ॥ (पांशुरस्या-
स्तीति । "नगपांशुपाण्डुभ्यश्च ।" ५ । २ ।
१०७ । इत्यस्य वार्त्तिं इति रः । पांशुविशिष्टे,
त्रि ॥ यथा, ऋग्वेदे । १ । २२ । १७ ।
"इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।
समूहमस्य पांशु(सु)रे ॥")

**पांशुरागिणी**, स्त्री, (पांशुरागो विद्यतेऽस्याः ।
इनिः स्त्रियां ङीप् च ।) महामेदा । इति राज-
निर्घण्टः ॥

**पांशुलः**, पुं, (पांशुर्विद्यतेऽस्य । पांशु + "सिध्मा-
दिभ्यश्च ।" ५ । २ । ९७ । इति लच् ।) हरः ।
पापी । इति शब्दरत्नावली ॥ पुंश्चलः । शम्भोः
खट्वाङ्गम् । इति मेदिनी । ले, १०८ ॥ पूतिकः ।
काँटाकरञ्ज इति भाषा ॥ इति शब्दचन्द्रिका ॥
पांशुयुक्ते त्रि । इति धरणिः ॥ (पांशुर्दोषः पापञ्च
तद्युक्ते च त्रि । यथा, रघुः । २२ ।
"तस्याः खुरन्यासपवित्रपांशु
मपांशुलानां धुरि कीर्त्तनीया ।
मार्गं मनुष्येश्वरधर्म्मपत्नी
श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ॥")

**पांशुला**, स्त्री, (पांशुल + टाप् ।) कुलटा । भूमिः ।

स्थालीमार्ज्जनाद्योदनपरीक्षान्तो व्यापारनिचयः
पाकः । इति स्मृतिः ॥ * ॥ पाकभाण्डस्य
त्याज्यत्वं यथा, --
"नित्यं नूतनभाण्डेन कर्त्तव्यः पाक एव च ।
अथवा पक्षपर्य्यन्तं ततस्त्याज्यं मनीषिभिः ॥"
इति ब्रह्मवैवर्त्तपुराणम् ॥ * ॥
पाककाले शूद्रायाग्निदाननिषेधो यथा, --
"शूद्रायाग्निञ्च यो दद्यात् पाककाले विशेषतः ।
शूद्रापक्वं भवेदन्नं ब्राह्मणः शूद्रतामियात् ॥"
इति कर्म्मलोचनम् ॥ * ॥
एकोद्दिष्टश्राद्धे तस्य नित्यत्वं यथा, --
"एकोद्दिष्टन्तु कर्त्तव्यं पाकेनैव सदा स्वयम् ।
अभावे पाकपात्राणां तदहःसमुपोषणम् ॥"
इति श्राद्धतत्त्वम् ॥ * ॥
तस्य विधिर्यथा, --
"पूर्ब्बाशाभिमुखो भूत्वा उत्तराशामुखेन वा ।
पचेदन्नञ्च मध्याह्ने सायाह्ने च विवर्ज्जयेत् ॥
अग्न्याशाभिमुखे पक्वममृतान्नं विजानता ।
पूर्ब्बामुखो धर्म्मकामः शोकहानिश्च दक्षिणे ॥
श्रीकामश्चोत्तरमुखे पतिकामश्च पश्चिमे ।
ऐशान्याभिमुखे पक्त्वा दरिद्रो जायते नरः ॥
यदा तु आयसे पात्रे पक्वमश्नाति वै द्विजः ।
स पापिष्ठोऽपि भुङ्क्तेऽन्नं रौरवे परिपच्यते ॥
ताम्रे पक्त्रा चक्षुर्हानिर्मणौ भवति वै क्षयम् ॥
पितृभ्यां पक्वमन्नञ्च पितृव्येण यशस्विनि ! ।
पुण्डरीकस्य यज्ञस्य लभते फलमीप्सितम् ॥
वातुलेन तु यत् पक्वं भगिन्या च कनिष्ठया ।
असगोत्रेण यत् पक्वं शोणितं तदपि स्मृतम् ॥
अभक्तेन च यत् पक्वं स्त्रिया पक्वन्तथैव च ।
पक्वपात्रे च यत् पक्वं तत् सर्व्वं निष्फलं भवेत् ॥
उडुम्बरेण काष्ठेन कदम्बस्य दलेन च ।
शालेन करमर्द्देन उदरावर्त्तकेन च ॥
पक्वान्नं नैव भुञ्जीत भुक्त्वा रात्रिमुपावसेत् ।
गर्हितान्नमवीरान्नं भुक्त्वा कृच्छ्रं समाचरेत् ।
अप्रजा या तु वनिता नाश्नीयादेव तद्गृहे ॥
शालकाष्ठस्य पक्वान्नं शिरीषकस्य चैव हि ।
कलिचण्डातकस्यैव वज्रावारुणकस्य च ।
भेरण्डशाल्मलेर्वापि पक्वान्नं गर्हितं स्मृतस् ॥
यदा मृण्मयपात्रे तु पक्वं वै सार्व्वकालिकम् ।
मासे पक्षे तथाष्टौ च तत्पाकं विसृजेत् गृही ॥

**पांशुकुली**, स्त्री, (पांशुना कोलति आकुलीभव-
तीति । कुल + कः । ततः स्त्रियां ङीष् ।) राज-
मार्गः । यथा, । "रथ्या पांशुकुली भवेत् ।" इति
हारावली । ११२ ॥

**पांशुकूलं**, क्ली, (पांशोः कूलमिव ।) अनामपट्टो-
लिका । यथा, त्रिकाण्डशेषे ।
"शासनं धर्म्मकीलः स्यान्मुकुतिः शूद्रशासनम् ।
पट्टोलिका कृप्तकीला पांशुकूलं न कस्यचित् ॥"

**पांशुचत्वरः**, पुं, (पांशुभिश्चत्वर इव ।) घनोपलः ।
इति शब्दमाला ॥

**पांशुचन्दनः**, पुं, (पांशुश्चिताभस्मरजश्चन्दनमिव
यस्य ।) शिवः । इति त्रिकाण्डशेषः ॥

**पांशुचामरः**, पुं, (पांशुर्धूलिश्चामर इव यस्य ।)
पटवासः । इति जटाधरः ॥ ताँवु इति भाषा ॥
(पांशौ दूर्व्वा चामर इव यस्य ।) दूर्व्वाञ्चिततटी
भूमिः । वर्द्धापकः । प्रशंसा । पुरोटिः । धूलि-
गुच्छकः । इति मेदिनी । रे, ३०५ ॥

**पांशुजं**, क्ली, (पांशोर्जायते इति । पांशु + जन्
+ डः ।) पांशुलवणम् । पाङ्गा लोन इति
भाषा ॥ ततपर्य्यायः । ऊपम् २ औद्भिदम् ३ ।
पाक्यम् ४ लवणम् ५ पटु ६ । इति रत्नमाला ॥
अस्य गुणाः । भेदकत्वम् । पाचनत्वम् । पित्त-
कारित्वम् । इति राजवल्लभः ॥

**पांशुपत्रं**, क्ली, (पांशुः कर्पूर इव सुगन्धि पत्र-
मस्य ।) वास्तकम् । इति शब्दमाला ॥
इति शब्दरत्नावली ॥ केतकी । रजस्वला ।
इति राजनिर्घण्टः ॥

**पांसनः**, त्रि, (पंसयति गुणादिकं नाशयतीति ।
पसि + ल्युः । बाहुलकात् दीर्घः ।) दूषकः । इति
त्रिकाण्डशेषः ॥ (यथा, महाभारते । १ ।
१५४ । ३३ ॥
"निराबाधास्त्वयि हते मया राक्षसपांसन ! ।
वनमेतच्चरिष्यन्ति पुरुषा वनचारिणः ॥")

**पांसुः**, पुं, (पंसयतीति । पसि नाशने + "अर्ज्जि-
दृशिकमीति ।" उणां । १ । २८ । इति
कुर्दीर्घश्च ।) घूलिः । (यथा, हेः रामायणे ।
२ । ८० । ९ ।
"अपरे पूरयन् कूपान् पांसुभिः श्वभ्रमायतम् ।
निम्नभागांस्तथैवाशु समांश्चक्रुः समन्ततः ॥")
चिरसञ्चितगोमयम् । इत्युणादिकोषः भरतश्च ॥
सार इति भाषा ॥

**पाकः**, पुं, (पच् + भावे घञ् ।) पचनम् । क्लेदनम् ।
तत्पर्य्यायः । पचा २ । इत्यमरः । ३ । २ । ८ ॥
रन्धनम् । स तु सप्तप्रकारो यथा, --
"भर्ज्जनं तलनं स्वेदः पचनं क्वथनं तथा ।
तान्दूरं पुटपाकश्च पाकः सप्तविधो मतः ॥"
भर्ज्जनं केवलपात्रे । तलनं स्नेहद्रव्ये । स्वेदनं
अग्न्युत्तापे । पचनं जले । क्वथनं सिद्धद्रव्यरस-
ग्रहणे । तान्दूरं द्वारवद्धतप्तयन्त्रे । पुटपाकः
अधोर्द्ध्वाग्नितापे ज्ञेयः । इति पाकराजेश्वरः ॥
धनुः पाके तथा सिंहे मिथुने वा वरानने ! ।
यः कुर्य्याद्भोजनं देवि ! क्वच्छ्रेणैव विशुध्यति ॥
एकदा तु जलं दद्याद् द्विवारं न प्रदापयेत् ।
त्रिभागं पूरयेत् पात्रं पश्चात्तोयं न दापयेत् ॥"
इति मत्स्यसूक्ते ४२ पटलः ॥ * ॥
परिणतिः । (यथा, मार्कण्डेये । ७० । ३४ ।
"स्वकर्म्मफलपाकेन भर्त्तुस्तस्य महात्मनः ।
वियोजिताहं तद्धेतुरयमासीन् निशाचरः ॥"
पिबति स्तन्यादिकं इति । पा पाने + "इण्-
भीकापाशल्यतिमर्च्चिभ्यः कन् ।" उणां । ३ ।
४३ । इति कन् ।) शिशुः । जरसा केशस्य
शौक्ल्यम् । स्थाल्यादि । इति मेदिनी । के, २९ ॥

पेचकः । राष्ट्रादि । भङ्गः । भीतिः । इति शब्द-
रत्नावली ॥ दैत्यः । इति हेमचन्द्रः । २ । ८८ ॥
(यथा, भागवते । ७ । २ । ४ ।
“भो भो दानवदैतेया ! द्विमूर्द्धन् ! त्र्यक्ष ! शम्बर !
।
शतबाहो ! हयग्रीव ! नमुचे ! पाक ! इल्वल ! ॥”
पिबतीति । पा + “इण्भीकापेति ।” उणां
३ । ४३ । इति कन् ।) पानकर्त्तरि त्रि ॥

**पाककृष्णः**, पुं, (पाके कृष्णं फले यस्य ।) कृष्ण-
फलपाकः । पानी आमला । इति शब्द-
चन्द्रिका ॥

**पाककृष्णफलः**, पुं, (पाके कृष्णं फलं यस्य ।)
पाककृष्णः । इति शब्दमाला ॥

**पाकजं**, क्ली, (पाकात् जायते इति । पाक +
जन् + ड ।) काचलवणम् । परिणामशूलम् ।
इति राजनिर्घण्टः ॥ (पाकजाते त्रि । यथा,
भाषापरिच्छेदे । ३६ ।
“स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीतपाकजः
॥”)

**पाकपुटी**, स्त्री, (पाकाय पुटी ।) कुम्भशाला ।
इति हेमचन्द्रः । ४ । ९९९ ॥ पोयान् इति भाषा
॥

**पाकफलः**, पुं, (पाककृष्णं फलमस्य ।) फलपाकः ।
इति शब्दचन्द्रिका ॥ पानी आमला इति
भाषा ॥

**पाकभाण्डं**, क्ली, (पाकाय पाकस्य वा भाण्डम् ।)
पाकपात्रम् । यथा, --
“यस्य यस्य तु वर्णस्य यद्यत् स्यात्
पश्चिमन्त्वहः ।
स तत्र गृहशुद्धिञ्च वस्त्रशुद्धिं करोत्यपि ॥
पश्चिमन्त्वहः अशौचान्तदिम् । गृहशुद्ध्विं प्रा-
क्तनपाकभाण्डत्यागोल्लेपनादिना ।” इति शुद्धि-
तत्त्वम् ॥

**पाकमत्स्यः**, पुं, (पाकः पाकयुक्तो मत्स्यो यत्र ।)
मत्स्यव्यञ्जनम् । तत्पर्य्यायः । मत्स्यलम् २ ।
इति शब्दचन्द्रिका ॥ (समुद्रजातमत्स्य-

“अग्न्याधेयं
पाकयज्ञानग्निष्टोमादिकान्
मखान् ।
यः करोति वृतो यस्य स
तस्यर्त्विगिहोच्यते ॥”
“अष्टकादीन् पाकयज्ञान् ।” इति
तट्टीकायां
कुल्लुकभट्टः ॥)

**पाकयज्ञिकः**, पुं, (पाकयज्ञं करोतीति । पाकयज्ञ
+ ठञ् ।) पाकयज्ञकर्त्ता ।
(पाकयज्ञस्य व्याख्यान-
स्तत्र भवो वा । “क्रतुयज्ञेभ्यश्च
।” ४ । ३ ।
६८ । इति ठञ् ।
पाकयज्ञव्याख्यानग्रन्थः ।
पाकयज्ञभवश्च । इति
व्याकरणम् ॥)

**पाकरञ्जनं**, क्ली, (पाकं पच्यमानं रञ्जयतीति ।
रञ्ज + णिच् + ल्युः ।) तेजपत्रम्
। इति शब्द-
चन्द्रिका ॥

**पाकलं**, क्ली, (पाकं लातीति । ला + “आतो-
ऽनुपसर्गे कः ।” ३ । २ । ३ ।
इति कः ।) कुष्ठौ-
षधिः । इत्यमरः । २ । ४ ।
१२६ ॥

**पाकलः**, पुं, (पाक + ला + कः ।) कुञ्जरज्वरः ।
इति मेदिनी । ले, १०८ ॥
बोधनद्रव्यम् ।
अनिलः । अनलः । इति विश्वः
॥ व्रणादि-
कारिणि, त्रि ॥

**पाकलिः**, स्त्री, (पाक + ला + इन् ।) वृक्ष-
विशेषः । इति रत्नमाला ।
रोहिणीति केचित् ॥

**पाका**, स्त्री, (पाक + अजादित्वात् टाप् ।)
बालिका । इति जटाधरः ॥

**पाकारिः**, पुं, (पाकं ऋच्छतीति । ऋ गतौ +
इन् ।) श्वेतकाञ्चनम् । इति रत्नमाला ॥

**पाकिमं**, त्रि, (पाकेन निर्वृत्तम् । पाक + भाव-
प्रत्ययन्तादिमप् ।) पक्त्रिमम् । पाकेन निष्प-
न्नम् । इति त्रिकाण्डशेषः ॥ (यथा, सुश्रुते ।
सूत्रस्थाने । ४६ अध्याये ।
“मेदोघ्नः पाकिमः क्षारो मूत्रवस्तिविशोधनः ॥”)

**पाकुकः**, पुं, (पचतीति । पच पाके + “पचि-
नश्योर्णुकन्कनुमौ च ।” उणां । २ । ३० ।
इति णुकन् कादेशश्च ।) सूपकारः । इत्यु-
णादिकोषः ॥

**पाक्यं**, क्ली, (पच्यतेऽनेन । पच् + “ऋहलोर्ण्यत् ।”
३ । १ । १२४ । इति ण्यत् । “चजोः कुघिण्यतोः ।”
७ । ३ । ५२ । इति कुत्वम् ।) विड्लवणम् ।
इत्यमरः । २ । ९ । ४२ ॥ पांशुलवणम् । इति
रत्नमाला ॥ (यथा, सुश्रुते । १ । ४२ ।
“सैन्धवसौवर्च्चलविडपाक्यरोमकसामुद्रकपक्त्रिम-
यवक्षारोषप्रसूतसुवर्च्चिकाप्रभृतीनि समासेन
लवणो वर्गः ॥” पचनीये, त्रि । यथा, चक्रपाणि-
संग्रहे ज्वराधिकारे पित्तज्वरचिकित्साथाम् ।
“अवश्यायस्थितं पाक्यमेतत् पित्तज्वरापहम् ॥”)

**पाक्यः**, पुं, (पच् + ण्यत् कुत्वञ्च ।) यवक्षारः ।
इत्यमरः । २ । ९ । १०९ ॥

**पाक्षायणः**, त्रि, (पक्षस्यायं पक्षे भवः पक्षेण
निर्वृत्त इति वा । पक्ष + “युञ्छण्कठजिति ।”
४ । २ । ८० । इति फक् ।) पक्षसम्बन्धी । पक्षे
भवः । इति सिद्धान्तकौमुदी ॥

**पाक्षिकः**, त्रि, (पक्षे तिष्ठतीति । पक्ष + ठक् ।)
पक्षपाती । यथा, --
“स को राजा न शास्ता यः प्रजावध्यश्च पाक्षिकः ॥”
इति ब्रह्मवैवर्त्ते गणपतिखण्डे १४ अध्यायः ॥
(पक्षिणो हन्तीति । “पक्षिमत्स्यमृगान् हन्ति ।”
४ । ४ । ३५ । इति ठक् ।) पक्षिघातकः ॥
(पक्षे पक्षान्तरे भवतीति । पक्षकालभवः ॥

विशेषः । यथा, सुश्रुते सूत्रस्थाने । ४६ अध्याये । "तिमितिमिङ्गिलकुलिशपाकमत्स्य-निरालकनन्दिवारलकमकरगर्ग्गरकचन्द्रकमहा-मीनराजीवप्रभृतयः सामुद्राः ॥" कीटविशेषः । यथा, सुश्रुते कल्पस्थाने ८ अध्याये । "पद्मकीटो दुन्दुभिको मकरः शतपादकः । पञ्चालकः पाकमत्स्यः कृष्णतुण्डोऽथ गर्द्दभी ॥")

**पाकयज्ञः**, पुं, (पाकसाध्यो यज्ञः । शाकपार्थिव-वत् समासः ।) वृषोत्सर्गगृहप्रतिष्ठादीनां होमः । चरुहोमाङ्गककर्म्म । यथा, --
"प्रायश्चित्ते विधुश्चैव पाकयज्ञे तु साहसः ॥"
इति तिथितत्त्वम् ॥
(ब्रह्मयज्ञादन्ये पञ्चमहायज्ञान्तर्गता वैश्वदेव-होमबलिकर्म्मनित्यश्राद्धातिथिभोजनात्मका-श्चत्वारः पाकयज्ञाः । यथा, मनुः । २ । ८६ ।
"ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः ।
सर्व्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥"
अष्टकादयोऽपि पाकयज्ञाः । यथा, तत्रैव । २ । १४३ ।

**पाकली**, स्त्री, (पाकलि + ङीष् ।) कर्कटी । इति शब्दमाला ॥

**पाकशाला**, स्त्री, (पाकस्य शाला गृहम् ।) रन्धनगृहम् । तत्पर्य्यायः । रसवती २ । इति जटाधरः ॥ पाकस्थानम् ३ महानसम् ४ । इत्य-मरः । २ । ९ । २७ ॥ अग्निकोणे तस्याः कर्त्तव्यता । यथा, --
"प्राच्यां दिशि स्नानगृहमाग्नेय्यां पचनालयम् ।
शयनं याम्यदिग्भागे नैरृत्यां शस्त्रमन्दिरम् ॥
प्रतीच्यां भोजनगृहं वायुभागे सभागृहम् ।
भाण्डारसदनं सौम्ये त्वैशान्यां देवतालयम् ॥"
इति मुहूर्त्तचिन्तामणिटीकायां पीयूषधारायां कश्यपवचनम् ॥

**पाकशासनः**, पुं, (शास्तीति । शास + ल्युः । ततः पाकस्य तदाख्यया प्रसिद्धस्य असुरस्य शासनः शास्ता ।) इन्द्रः । इत्यमरः । १ । १ । ४४ ॥ तन्नाम-कारणं यथा, वामनपुराणे ।
"पाकं जघान तीक्ष्णाग्रैर्म्मार्ग्गणैः कङ्कवाससैः ।
तत्र नाम विभुर्लेभे शासनत्वाच्छरैर्दृढैः ।
पाकशासनतां शक्रः सर्व्वामरपतिर्व्विभुः ॥"

**पाकशासनिः**, पुं, (पाकशासनस्यापत्यम् । "अत इञ् ।" ४ । १ । ९५ । इति इञ् ।) इन्द्रपुत्त्रः । जयन्तः । इत्यमरः । १ । १ । ४९ ॥ (अर्ज्जुनः । यथा, महाभारते । १ । १३७ । ८ ।

पक्षेण निर्वृत्त इति । पक्ष + ठञ् । पक्षसाध्यः । इति व्युत्पत्तिलब्धोऽर्थः ॥)

**पाखण्डः**, पुं, (पातीति । पा + क्विप् । पास्त्रयी-धर्म्मस्तं खण्डयतीति । खडि भेदने + पचा-द्यच् । यदुक्तम् ।
"पालनाच्च त्रयीधर्म्मः पाशब्देन निगद्यते ।
तं खण्डयन्ति ते यस्मात् पाखण्डास्तेन हेत्ना ।
नानाव्रतधरा नानावेशाः पाखण्डिनो मताः ॥")
पाषण्डः । इत्यमरटीकायां भानुदीक्षितः ॥

**पागलः**, पुं, (पा रक्षणं तस्मात् गलति आत्म-रक्षणात् विच्युतो भवतीति । गल् + अच् ।) उन्मत्तः । वातुलः । यथा, --
"पागलायाङ्गहीनाय चान्धाय वधिराय च ।
जडाय चैव मूर्खाय क्लीवतुल्याय पापिने ।
ब्रह्महत्यां लभेत् सोऽपियः स्वकन्यां ददाति च ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे १४ अध्याथः ॥

"सोऽब्रवीन्मेघगम्भीरस्वरेण

वदताम्बरः ।

भ्राता भ्रातरमज्ञातं सावित्रः

पाकशासनिम् ॥")

**पाकशुक्ला**, स्त्री, (पाके परिणामे शुक्ला ।) खडी ।

यथा, शब्दचन्द्रिकायाम् ।

"पाकशुक्ला शिलाधातुः कठिनी

कक्खटीखडी ॥"

**पाकस्थानं**, क्ली, (पाकस्य स्थानम् ।) महानसम् ।

इत्यमरः । २ । ९ । २७ ॥

**पाचकं**, क्ली, (पचतीति । पच् + ण्वुल् । पित्त-
रसेन भुक्तद्रव्यपचनादस्य तथात्वम् ।) पित्त-
विशेषः । यथा, --
"पाचकं भ्राजकञ्चैव रञ्जकालोचके तथा ।
साधकञ्चैव पञ्चेति पित्तनामान्यनुक्रमात् ॥"
इति शब्दचन्द्रिका ॥
षाचकादीनां स्थानान्याह ।
"अग्न्याशये यकृत्प्लीह्नोर्हृदये लोचनद्वये ।
त्यचि सर्व्वशरीरेषु पित्तं निवसति क्रमात् ॥"
अथ तेषां कर्म्माण्याह ।
"पाचकं पचते भुक्तं शेषाग्निबलवर्द्धनम् ।
रसमूत्रपुरीषाणि विरेचयति नित्यशः ॥"
इति भावप्रकाशः ॥
("पित्तं पञ्चात्मकं तत्र पक्वामाशयमध्यगम् ।
पञ्चभूतात्मकत्वेऽपि यत्तैजसगुणोदयात् ॥
त्यक्तद्रवत्वं पाकादिकर्म्मणानलशब्दितम् ।
पचत्यन्नं विभजते सारकिट्टौ पृथक् तथा ॥
तत्रस्थमेव पित्तानां शेषानामप्यनुग्रहम् ।
करोति बलदानेन पाचकं नाम तत् स्मृतम् ॥"
इति वाभटे सूत्रस्थाने द्वादशाध्याये ॥)

**पाचकः**, पुं, (पचतीति । पच् + ण्वुल् ।) अग्निः ।
इति हलायुधः ॥ ("तच्चादृष्टहेतुकेन विशेषेण
पक्वामाशयमध्यस्थं पित्तं चतुर्व्विधमन्नपानं
पचति विरेचयति च रसदोषमूत्रपुरीषाणि

"किराताब्दामृतोदीच्यबृहतीद्वयगोक्षुरैः ।
सस्थिराकलसीविल्वैः क्वाथो वातज्वरापहः ॥"
इति किरातादि ॥ ४ ॥
"रास्ना वृक्षादनी दारु सरलं सैलबालुकम् ।
कषायः शर्कराक्षौद्रयुक्तो वातज्वरापहः ॥"
इति रास्नादि ॥ ५ ॥
"विल्वादिपञ्चमूली च गुडूच्यामलके तथा ।
कुस्तुम्बुरुसमो ह्येष कषायो वातिके ज्वरे ॥"
इति विल्वादिपञ्चमूल्यादि ॥ ६ ॥
"पिप्पलीशारिवाद्राक्षाशतपुष्पाहरेणुभिः ।
कृतः कषायः सगुडो हन्याच्छ्सनजं ज्वरम् ॥"
इति पिप्पल्यादि ॥ ७ ॥
"गुडूची शारिवा द्राक्षा शतपुष्पा पुनर्नवा ।
सगुडोऽयं कषायः स्याद्वातज्वरविनाशनः ॥"
इति गुडूच्यादि ॥ ८ ॥
"द्राक्षागुडूचीकाश्मर्य्यत्रायमाणाः सशारिवाः ।
निःक्वाथ्य सगुडं क्वाथं पिबेद्वातज्वरापहम् ॥"
इति द्राक्षादि ॥ ९ ॥ * ॥
अथ पैत्तिकज्वरे ।
"कलिङ्गं कट्फलं मुस्तं पाठातिक्तकरोहिणी ।
पक्वं सशर्करं पीतं पाचनं पैत्तिके ज्वरे ॥"
इति कलिङ्गादि ॥ १० ॥
"सक्षौद्रं पाचनं पैत्ते तिक्ताब्देन्द्रयवैः शृतम् ॥"
इति तिक्तादि ॥ ११ ॥
"लोध्रोत्पलामृतापद्मशारिवाणांसशर्करः ।
क्वाथः पित्तज्वरं हन्यादथवा पर्पटोद्भवः ॥"
इति लोध्रादि ॥ १२ ॥ १३ ॥
"पटोलयवनिःक्वाथो मधुना मधुरीकृतः ।
तीव्रपित्तज्वरामर्द्दी पानात्तृड्दाहनाशनः ॥"
इति यवपटोलम् ॥ १४ ॥
"दुरालभापर्पटकप्रियङ्गु-
भूनिम्बवासाकटुरोहिणीनाम् ।
जलं पिबेच्छर्करयावगाढं
तृष्णास्रपित्तज्वरदाहयुक्तः ॥"
इति दुरालभादि ॥ १५ ॥
"त्रायमाणा च मधुकं पिप्पलीमूलमेव च ।
किराततिक्तकं मुस्तं मधुकं सविभीतकम् ॥
सशर्करं पीतमेतत् पित्तज्वरनिवर्हणम् ॥"

द्राक्षाभयापर्पटकाब्दतिक्ता-
क्वाथं ससंपाकफलं विदध्यात् ।
प्रलापमूर्च्छाभ्रमदाहशोष-
तृष्णान्विते पित्तभवे ज्वरे तु ॥"
इति द्राक्षादि ॥ २३ ॥
"व्युषितं धन्याकजलं प्रातः पीतं सशर्करंपुंसाम् ।
अन्तर्द्दाहं शमयत्यचिराद्दूरप्ररूढमपि ॥" २४ ॥
अथ कफज्वरे ।
"मातुलुङ्गशिफाविश्वब्रह्मीग्रन्थिकसंयुतम् ।
कफज्वरेऽम्बु सक्षारं पाचनं वा कणादिकम् ॥"
इति मातुलुङ्गादि ॥ २५ ॥
"कटुकं चित्रकं निम्बं हरिद्रेऽतिविषे वचाम् ।
कुष्ठमिन्द्रयवं मुर्व्वां पटोलञ्चापि साधितम् ॥
पिबेन्मरिचसंयुक्तं सक्षौद्रं श्लैष्मिके ज्वरे ॥"
इति कटुकादि ॥ २६ ॥
"निम्बविश्वामृतादारुशटीभूनिम्बपौष्करम् ।
पिप्पल्यौ बृहती चेति क्वाथो हन्ति कफज्वरम् ॥"
इति निम्बादि ॥ २७ ॥
"सिन्धुवारदलक्वाथं शोषणं कफजे ज्वरे ।
जङ्घयोश्च बले क्षीणे कर्णे वा पिहिते पिबेत् ॥"
इति सिन्धुवारादि ॥ २८ ॥
"आमलक्यभया कृष्णा चित्रकश्चेत्ययं गणः ।
सर्व्वज्वरकफातङ्कभेदी दीपनपाचनः ॥"
इति आमलक्यादि ॥ २९ ॥
"त्रिफलापटोलवासाच्छिन्नरुहातिक्तरोहिणी-
षड्ग्रन्थाः ॥"
इति त्रिफलादि ॥ ३० ॥
"मधुनाश्लेष्मसमुत्थे दशमूली वासकस्य वा
क्वाथः ॥" ३१ ॥
"मुस्तं वत्सकबीजानि त्रिफला कटुरोहिणी ।
परूषकाणि च क्वाथः कफज्वरविनाशनः ॥"
इति मुस्तादि ॥ ३२ ॥ * ॥
अथ वातपैत्तिकज्वरे ।
"संसृष्टदोषेषु हितं संसृष्टमथ पाचनम् ॥
विश्वामृताब्दभूनिम्बैः पञ्चमूलीसमन्वितैः ।
कृतः कषायो हन्त्याशु वातपित्तोद्भवं ज्वरम् ॥"
इति नवाङ्गम् ॥ ३३ ॥
"त्रिफलाशाल्मलीरास्नाराजवृक्षाटरूषकैः ।
शृतमम्बु हरेत्तूर्णं वातपित्तोद्भवं ज्वरम् ॥"
इति त्रिफलादि ॥ ३४ ॥

तत्रस्थमेव चात्मशक्त्या शेषाणां पित्तस्थानानां
शरीरस्य चाग्निकर्म्मणानुग्रहं करोति तस्मिन्
पित्ते पाचकोऽग्निरिति संज्ञा ।” इति सुश्रुते
सूत्रस्थाने एकविंशेऽध्याये ॥) त्रि, सूपकारः ।
पाककर्त्ता । यथा, --
“पुत्त्रपौत्त्रगुणोपेतः शास्त्रज्ञो मिष्टपाचकः ।
शूरश्च कठिनश्चैव सूपकारः स उच्यते ॥”
इति चाणक्यम् ॥
अन्नादिपाककारकौषधादिश्च॥

**पाचनं**, क्ली, (पाच्यतेऽनेनेति । पच् + णिच् +
करणे ल्युट् ।) प्रायश्चित्तम् । इति मेदिनी ।
ने, ९० ॥ दोषपाचकक्वाथौषधम् । तस्य दान-
कालः । यथा, सारकौमुद्याम् ।
“ज्वरितं षडहेऽतीते लघ्वन्नप्रतिभोजितम् ।
सप्ताहात् परतोऽस्तब्धे सामे स्यात् पाचनं ज्वरे ॥”
सर्व्वेषां पाचनद्रव्यानां परिमाणं यथा, --
“दशरक्तिकमाषेण गृहीत्वा तोलकद्वयम् ।
दत्त्वाम्भः षोडशगुणं ग्राह्यं पादावशेषितम् ॥”
इति परिभाषा ॥
अथ सर्व्वज्वरे पाचनम् ।
“नागरं देवकाष्ठञ्च धन्याकं बृहतीद्वयम् ।
दद्यात् पाचनकं पूर्व्वं ज्वरिताय ज्वरापहम् ॥”
इति नागरादि ॥ १ ॥
अथ वातिकज्वरे ।
“विल्वादिपञ्चमूलस्य क्वाथः स्याद्वातिकज्वरे ॥”
इति विल्वादिपञ्चमूली ॥ २ ॥

इति त्रायमाणादि ॥ १६ ॥
“मृद्वीका मघुकं निम्बं कटुकारोहिणीसमाः ।
अवश्यायस्थितं पाक्यमेतत् पित्तज्वरापहम् ॥”
इति मृद्वीकादि ॥ १७ ॥
“एकः पर्पटकः श्रेष्ठः पित्तज्वरविनाशनः ।
किं पुनर्यदि युज्येत चन्दनोदीच्यनागरैः ॥”
इति पर्पटकादि ॥ १८ ॥
“विश्वाम्बुपर्पटोशीरघनचन्दनसाधितम् ।
दद्यात् सुशीतलं वारि तृट्छर्द्दिज्वरदाहनुत् ॥”
इति विश्वादि ॥ १९ ॥
“पर्पटामृतघात्रीणां क्वाथः पित्तज्वरं जयेत् ॥”
इति पर्पटादि ॥ २० ॥
“द्राक्षारग्वघयोश्चापि ॥ २१ ॥
काश्मर्य्यस्याथवा पुनः ॥ २२ ॥

“किराततिक्तकं मुस्तं द्राक्षामामलकीं शटीम् ।
निष्काथ्य पित्तानिलजे क्वथितं सगुडं पिबेत् ॥”
इति किराततिक्तकादि ॥ ३५ ॥
“निदिग्धिकाबलारास्नात्रायमाणामृतायुतैः ।
मसूरविदलैः क्वाथो वातपित्तज्वरं जयेत् ॥”
इति निदिग्धिकादि ॥ ३६ ॥
“गुडूची पर्पटं मुस्तं किरातं विश्वभेषजम् ।
वातपित्तज्वरे देयं पञ्चभद्रमिदं शुभम् ॥”
इति पञ्चभद्रम् ॥ ३७ ॥
“मधुकं शारिवे द्राक्षा मधूकं चन्दनोत्पलम् ।
काश्मरी पद्मकं लोध्रं त्रिफलां पद्मकेशरम् ॥
परूषकं मृणालञ्च न्यसेदुत्तमवारिणि ।

| “पाचनं पिप्पलीमूलगुडूची<br>विश्वजोऽथवा ॥”<br>इति पिप्पलीमूलादि ॥ ३ ॥ | | |
|---|---|---|

मधुलाजसितायुक्तं तत् पीतं व्युषितं निशि ॥
वातपित्तज्वरदाहं तृष्णामूर्च्छावमिभ्रमान्।
शमयेद्रक्तपित्तञ्च जीमूतानिव मारुतः ॥”
इति मधुकादि ॥ ३८ ॥ * ॥
अथ पित्तश्लैष्मिकज्वरे।
“पटोलं चन्दनं मुर्व्वातिक्तापाठामृतागणः।
पित्तश्लेष्मानिलच्छर्द्दिज्वरकण्डूविषापहः ॥”
इति पटोलादि ॥ ३९ ॥
“गुडूचीनिम्बधन्याकं पद्मकं रक्तचन्दनम्।
एष सर्व्वज्वरान् हन्ति गुडूच्यादिस्तु दीपनः ॥
हृल्लासारोचकच्छर्द्दिपिपासादाहनाशनः॥”
इति गुडूच्यादि ॥ ४० ॥
“किरातं नागरं मुस्तं गुडूचीञ्च कफाधिके।
पाठोदीच्यमृणालैस्तु सह पित्ताधिके पिबेत् ॥”
इति चातुर्भद्रकपाठासप्तकौ ॥ ४१ ॥ ४२ ॥
“गुडूची चन्दनं पद्मं नागरेन्द्रयवासकम्।
अभयारग्वधोशीरं पाठा धान्याब्दरोहिणी ॥
कषायं पाययेदेतत् पिप्पलीचूर्णसंयुतम्।
पित्तश्लेष्महरं तन्द्रापिपासादाहनाशनम्॥
विण्मूत्रानिलविष्टम्भत्रिदोषप्रभवस्यच।
गुडूच्यादिगणो ह्येष पाचनो दीपनः परः ॥”
इति गुडूच्यादिगणः ॥ ४३ ॥
“कण्टकार्य्यमृताभार्गी नागरेन्द्रयवासकम् ।
भूनिम्बं चन्दनं मुस्तं पटोलं कटुरोहिणी ॥
कषायं पाययेदेतत् पित्तश्लेष्मज्वरापहम्।
दाहतृष्णारुचिच्छर्द्दिकासहृत्पार्श्वशूलनुत् ॥”
इति कण्टकार्य्यादि ॥ ४४ ॥
“सपत्रपुष्पवासाया रसः क्षौद्रसितायुतः।
कफपित्तज्वरं हन्ति सास्रपित्तं सकामलम् ॥”
इति वासादि ॥ ४५ ॥
“पटोलं पिचुमर्द्दश्च त्रिफला मधुकं बला।
साधितोऽयं कषायः स्यात् पित्तश्लेष्मभवे ज्वरे ॥”
कफवातप्रशमनं पाचनं ज्वरनाशनम् ॥” ५१ ॥
पिप्पली पिप्पलीमूलं चव्यं चित्रकनागरम्।
दीपनीयः शृतो वर्गः कफानिलगदापहः ॥”
इति पञ्चकोलम् ॥ ५२ ॥
“पिप्पलीभिः शृतं तोयमनभिष्यन्दि दीपनम्।
वातश्लेष्मविकारघ्नं प्लीहज्वरविनाशनम्॥”
इति पिप्पलीक्वाथः ॥ ५३ ॥
“आरम्बधग्रन्थिकमुस्ततिक्ता-
हरीतकीभिः क्वथितः कषायः।
सामे सशूले कफवातयुक्ते
ज्वरे हितो दीपनपाचनश्च ॥”
इति आरग्वधादि ॥ ५४ ॥
“क्षुद्रामृतानागरपुष्कराह्वैः
कृतः कषायः कफमारुतोत्तरे।
सश्वासकासारुचिपार्श्वरुक्करे
ज्वरे त्रिदोषप्रभवे च शस्यते ॥”
इति क्षुद्रादि ॥ ५५ ॥
“दशमूलीरसः पेयः कणायुक्तः कफानिले।
अविपाकेऽतितन्द्रायां पार्श्वरुक्श्वासकासके ॥”
इति दशमूलम् ॥ ५६ ॥
“मुस्तं पर्पटकं शुण्ठी गुडूची सदुरालभा।
कफवातारुचिच्छर्द्दिदाहश्वासज्वरापहा॥”
इति मुस्तादि ॥ ५७ ॥
“दारुपर्पटभार्ग्यब्दवचाधन्याककट्फलैः।
साभयाविश्वपूतीकैः क्वाथो हिङ्गुमधूत्कटः ॥
कफवातज्वरे पीतो हिक्काश्वासगलग्रहान्।
कासशोषप्रसेकांश्च हन्यात् तरुमिवाशनिः ॥”
इति दार्व्वादि ॥ ५८ ॥ * ॥
अथ त्रिदोषजज्वरे।
“पञ्चमूलीकिरातादिर्गणो योज्यस्त्रिदोषजे।
पित्तोत्कटे च मधुना कणया च कफोत्कटे ॥”
इति चतुर्भद्रपञ्चमूलम् ॥ ५९ ॥
“विल्वश्योणाकगाम्भारीपाटलागणिकारिकाः ।
दीपनं कफवातघ्नं पञ्चमूलमिदं महत् ॥”
इति बृहत्पञ्चमूली ॥ ६० ॥
“शालपर्णी पृश्निपर्णी बृहतीद्वयगोक्षुरम्।
वातपित्तज्वरहरं कनीयः पञ्चमूलकम् ॥”
इति स्वल्पपञ्चमूली ॥ ६१ ॥
“भूनिम्बदारुदशमूलमहौषधाब्द-
तिक्तेन्द्रबीजधनिकेभकणाकषायः।
तन्द्रीप्रलापकसनारुचिदाहमोह-
श्वासादियुक्तमखिलं ज्वरमाशु हन्ति ॥”
इति अष्टादशाङ्गम् ॥ ६५ ॥
“मुस्तपर्पटकोशीरदेवदारुमहौषधम्।
त्रिफला धन्वयासश्च नीली कम्पिल्वकं त्रिवृत् ॥
किराततिक्तकं पाठा बला कटुकरोहिणी।
मधुकं पिप्पलीमूलं मुस्ताद्यो गण उच्यते ॥
अष्टादशाङ्गमुदितमेतद्वा सन्निपातनुत्।
पित्तोत्तरे सन्निपाते हितञ्चोक्तं मनीषिभिः ॥
मन्यास्तम्भ उरोघात उरःपार्श्वशिरोग्रहे ॥ ६६ ॥
द्राक्षामृता शटी शृङ्गी मुस्तकं रक्तचन्दनम्।
नागरं कटुकं पाठा भूनिम्बं सदुरालभम् ॥
उशीरं पद्मकं धान्यं बालकं कण्टकारिका।
पुष्करं पिचुमर्द्दश्च दशाष्टाङ्गमिदं शुभम् ॥
जीर्णज्वरारुचिश्वासकासश्वयथुनाशनम्॥”
इति अपराष्टादशाङ्गम् ॥ ६७ ॥
“शटी पुष्करमूलञ्च व्याघ्री शृङ्गी दुरालभा।
गुडूची नागरं पाठा किरातं कटुरोहिणी ॥
एष शट्यादिको वर्गः सन्निपातज्वरापहः।
कासहृद्ग्रहपार्श्वार्त्तिश्वासेतन्द्र्याञ्च शस्यते ॥”
इति शट्यादि ॥ ६८ ॥
“बृहत्यौ पुष्करं भार्गी शटी शृङ्गी दुरालभा।
वत्सकस्य च बीजानि पटोलं कटुरोहिणी ॥
बृहत्यादिर्गणः प्रोक्तः सन्निपातज्वरापहः।
कासादिषु च सर्व्वेषु हितः सोषद्रवेषु च ॥”
इति बृहत्यादिगणः ॥ ६९ ॥
“भार्गी पुष्करमूलञ्च रास्नाविल्वयमानिकाः।
नागरं दशमूलञ्च पिप्पलीञ्चाप्सु साधयेत् ॥
सन्निपातज्वरे देयं हृत्पार्श्वानाहशूलिनाम्।
कासश्वासाग्निमान्द्यञ्च तन्द्राञ्च विनिवर्त्तयेत् ॥”
इति भार्ग्यादि ॥ ७० ॥
“द्विपञ्चमूली षड्ग्रन्था विश्वगृध्रनखीद्वयम्।
कफवातहरः क्वाथः सन्निपातहरः परः ॥”
इति द्विपञ्चमूल्यादि ॥ ७१ ॥
“कारवीपुष्करैरण्डत्रायन्तीनागरामृताः।

इति पटोलादि ॥ ४६ ॥
"गुडूचीन्द्रयवारिष्टं पटोलं कटुरोहिणी ।
नागरं चन्दनं मुस्तं पिप्पलीचूर्णसंयुतम् ॥
अमृताष्टक इत्येष पित्तश्लेष्मज्व रापहः ।
हृल्लासारोचकच्छर्द्दितृष्णादाहनिवारणः॥"
इति अमृताष्टकम् ॥ ४७ ॥
"पटोलयवधान्याकमुद्गामलकचन्दनम्।"
पैत्तिके श्लेष्मपित्तोत्थे
ज्वरतृट्छर्द्दिदाहनुत् ॥"
इति पटोलादि ॥ ४८ ॥
क्षुद्रामृताभ्यां सह नागरेण
सपुष्करञ्चेति किराततिक्तम् ।
पिबेत् कषायं त्विह पञ्चतिक्तं
ज्वरं निहन्त्यष्टविधं समग्रम् ॥"
इति क्षुद्रादि ॥ ४९ ॥
इति पित्तश्लैष्मिकज्वराधिकारः ॥ * ॥
अथ वातश्लैष्मिकज्वरे ।
"दीपनं कफविच्छेदि वातपित्तानुलोमनम्।
ज्वरघ्नं पाचनं भेदि शृतं धान्यपटोलयोः
॥"
इति धान्यपटोलम् ॥ ५० ॥
"मुस्तनागरभूनिम्बं त्रयमेतत्त्रिकार्षिकम् ।

"उभयं दशमूलञ्च सन्निपातज्वरापहम्।
कासे श्वासे च तन्द्रायां पार्श्वशूले च शस्यते ।
पिप्पलीचूर्णसंयुक्तं कण्ठहृद्ग्रहनाशनम् ॥"
इति दशमूलम् ॥ ६२ ॥
"चिरज्वरे वातकफोल्वणे वा
त्रिदोषजे वा दशमूलमिश्रः ।
किराततिक्तादिगणः प्रयोज्यः
शुद्ध्यर्थिने वा त्रिवृता विमिश्रः ॥"
इति चतुर्द्दशाङ्गम् ॥ ६३ ॥
"दशमूलं शटी शृङ्गी पौष्करं सदुरालभम् ।
भार्गी कुटजबीजञ्च पटोलं कटुरोहिणी ॥
अष्टादशाङ्ग इत्येष सन्निपातज्वरापहः ।
कासहृल्लासपार्श्वार्त्तिश्वासहिक्कावमीहरः॥"
इति वातश्लेष्महरोऽष्टादशाङ्गः ॥ ६४ ॥

दशमूलीशटीशृङ्गीयासभार्गीपुनर्नवाः ॥
तुल्या मूत्रेण निष्क्वाथ्य पीतश्चेतोविशोधनः
।
अभिन्यासं ज्वरं घोरमाशु घ्नन्ति समुद्धतम्
॥"
इति दशमूल्यादि ॥ ७२ ॥
"मातुलुङ्गाश्मभिद्बिल्वव्याघ्रीपाठोरुवूकजः।
क्वाथो लवणमूत्राढ्योऽभिन्यासानाहशूलनुत्
॥"
इति मातुलुङ्गादि ॥ ७३ ॥
"कण्टरोधकफश्वासहिक्कासंन्यासपीडितः
।
मातुलुङ्गार्द्रकरसं दशमूलाम्भसा पिबेत् ॥"
इति मातुलुङ्गार्द्रकरसयुक्तदशमूलम् ॥ ७४ ॥
"व्योषाब्दत्रिफलातिक्तापटोलारिष्टवासैक ।
भूनिम्बामृतयासैश्च त्रिदोषज्वरनुत् जलम् ॥"
इति व्योषादि ॥ ७५ ॥
"त्रिवृद्बि शालात्रिफलाकटुकारग्वधैः कृतः ।

सक्षारो भेदनः क्वाथः पेयः सर्व्वज्वरापहः ॥”
इति त्रिवृतादि ॥ ७६ ॥
अथ जीर्णज्वरे ।
“निदिग्धिकानागरकामृतानां
क्वाथं पिबेन्मिश्रितपिप्पलीकम् ।
जीर्णज्वरारोचककासशूल-
श्वासाग्निमान्द्यार्द्दितपीनसेषु ॥
हन्त्यूर्द्ध्वगामयं प्रायः सायं तेनायमिष्यते ॥”
इति निदिग्धादि ॥ ७७ ॥
“पिप्पलीचूर्णसंयुक्तः क्वाथश्छिन्नरुहोद्भवः ।
जीर्णज्वरकफर्ध्वसी पञ्चमूलीकृतोऽथवा ॥
कासाजीर्णारुचिश्वासहृत्पाण्डुक्रिमिरोगनुत्
॥ ७८ ॥
इति जीर्णज्वराधिकारः ॥ * ॥
अथ सन्ततादिज्वरे ।
“मधुकं चन्दनं मुस्तं धात्री धात्यमुशीरकम् ।
छिन्नोद्भवा पटोलञ्च क्वाथं समधुशर्करम् ॥
ज्वरं पञ्चविधं हन्यात् सन्तताद्यं सुदारुणम् ।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥
आमं विपाचयत्याशु निरामं शमयत्यपि ॥”
इति मधुकाद्यम् ॥ ७९ ॥
“कलिङ्गकाः पटोलस्य पत्रं कटुकरोहिणी ॥ ८०
॥
पटोलं शारिवामुस्तं पाठा कटुकरोहिणी ॥ ८१
॥
निम्बं पटोलं त्रिफलां मृद्वीकां मुस्तवत्सकौ ॥
॥ ८२ ॥
किराततिक्तममृतां चन्दनं विश्वभेषजम् ॥ ८३ ॥
गुडूच्यामलकं मुस्तम् ८४ अर्द्धश्लोकसमापनाः
।
कषायाः शमयन्त्याशु पञ्च पञ्चविधान् ज्वरान् ॥
सन्ततं सततान्येद्युस्तृतीयकचतुर्थकान् ।
गुडूचीमुस्तधात्रीणां कषायंवा समाक्षिकम् ॥
मुस्तामलकगुडूचीविश्वौषधकण्टकारिकाक्वाथः
।
पीतः सकणाचूर्णः समधुर्व्विषमज्वरं हन्ति ॥”
इति मुस्तादि ॥ ८५ ॥ * ॥
अथ तृतीयकज्वरे ।
“महौषधामृतामुस्तचन्दनोशीरधान्यकैः ।
क्वाथस्तृतीयकं हन्ति शर्कराभधुयोजितः ॥”
इति महौषधादि ॥ ८६ ॥

“गुडूच्यतिविषाधान्यशुण्ठीविल्वाब्दबालकैः
।
पाठाभूनिम्बकुटजचन्दनोशीरपद्मकैः ॥
कषायः शीतलः पेयो ज्वरातीसारशान्तये ।
हृल्लासारोचकच्छर्द्दिपिपासादाहनाशनः ॥”
इति बृहद्गुडूच्यादि ॥ ९१ ॥
“उशीरं बालकं मुस्तं धन्याकं विश्वभेषजम्
।
समङ्गा धातकी लोध्रं विल्वं दीपनपाचनम् ॥
हन्त्यरोचकपिच्छामं विबन्धं सातिवेदनम् ।
सशोणितमतासारं सज्वरं वाथ विज्वरम्
॥”
इति उशीरादि ॥ ९२ ॥
“पञ्चमूलीबलाविल्वगुडूचीमुस्तनागरैः ।
पाठाभूनिम्बह्रीबेरकुटजत्वक्फलैः शृतम् ॥
हन्ति सर्व्वानतीसारान् ज्वरदोषं वमिं तथा
।
सशूलोपद्रवं श्वासं कासं हन्यात् सुदारुणम्
॥”
इति पञ्चमूल्यादि ॥ ९३ ॥
“कलिङ्गातिविषाशुण्ठीकिराताम्बुयवासकम्
।
ज्वरातिसारसन्तापं नाशयेदविकल्पतः ॥”
इति कलिङ्गादि ॥ ९४ ॥
“वत्सकस्य फलं दारु रोहिणी गजपिप्पली
॥”
इति वत्सकादि ॥ ९५ ॥
“श्वदंष्ट्रा पिप्पलीधान्यं विल्वं
पाठायमानिका ॥”
इति श्वदंष्ट्रादि ॥ ९६ ॥
“द्वावपेतौ सिद्धियोगौ
श्लोकार्द्धेनाभिभाषितौ ।
ज्वरातीसारशमनौ विशेषाद्दाहनाशनौ ॥
नागरामृतभूनिम्बविल्वबालकवत्सकैः ।
समुस्तातिविषोशीरैर्ज्वरातीसारनुज्जलम्
॥”
इति नागरादि ॥ ९७ ॥
“मुस्तकविल्वातिविषापाठाभूनिम्ब
वत्सकैः क्वाथः ।
मकरन्दगर्भयुतो ज्वरातिसारौ जयेद्घोरौ ॥”
इति मुस्तकादि ॥ ९८ ॥

पिबेत् पित्तातिसारघ्नं सक्षौद्रं वेदनापहम्
॥”
इति किराततिक्तकादि ॥ १०५ ॥
“कुटजत्वक्फलं मुस्तं क्वाथयित्वा जलं
पिबेत् ।
अतीसारं जयेदाशु शर्करामधुयोजितम् ॥”
इति कुटजादि ॥ १०६ ॥
“विल्वचूतास्थिनिर्य्यूहः पीतः सक्षौद्रशर्करः
।
निहन्याच्छर्द्दर्य्यतीसारंवैश्वानर इवाहुतिम्
॥”
इति विल्वादिकाथः ॥ १०७ ॥
“पटोलयवधन्याकक्वाथःपेयः सुशीतलः
।
शर्करामधुसंमिश्रश्छर्द्द्यतीसारनाशनः ॥”
इति पटोलादिक्वाथः ॥ १०८ ॥
“कुटजं दाडिमं मुस्तं धातकी
विल्वबालकम् ।
लोध्रचन्दनपाठाश्च कषायं मधुना पिबेत् ॥
सामे सशूले रक्ते च पिच्छास्रावे च शस्यते
।
कुटजादिरिति ख्यातः सर्व्वातीसारनाशनः
॥”
इति कुटजादि ॥ १०९ ॥
“समङ्गातिविषा मुस्तं विल्वं ह्रीवेरधातकी
।
कुटजत्वक् फलं विश्वं क्वाथः
सर्व्वातिसारनुत् ॥”
इति समङ्गादि ॥ ११० ॥
“कुटजत्वक्कृतक्वाथो घनीभूतः
सुशोभनः ।
लोहितोऽतिविषायुक्तः सर्व्वातीसारनाशनः
॥”
इति कुटजक्वाथः ॥ १११ ॥
“सवत्सकः सातिविषः सविल्वः
सोदीच्यमुस्तैश्च कृतः कषायः ।
सामे सशूले सह शोणिते च
चिरप्रवृत्तेऽपि हितोऽतिसारे ॥”
इति वत्सकादि ॥ ११२ ॥
“कषायो मधुना पीतस्त्वचो
दाडिमवत्सकात् ।

अथ चातुर्थकज्वरे ।
“वासाधात्रीस्थिरादारुपथ्यानागरसाधितः।
सितामधुयुतः क्वाथश्चातुर्थकनिवारणः ॥”
८७ ॥
इति ज्वराधिकारः ॥ * ॥
अथ ज्वरातीसारे ।
“पाठेन्द्रयवभूनिम्बमुस्तपर्प्टकामृताः ।
जयन्त्याममतीसारं सज्वरं समहौषधाः ॥”
इति पाठादि ॥ ८८ ॥
“नागरातिविषामुस्तभूनिम्बामृतवत्सकै ।
सर्व्वज्वरहरः क्वाथः सर्व्वातीसारनाशनः ॥”
इति नागरादि ॥ ८९ ॥
“ह्रीवेरातिविषामुस्तविल्वधान्यकनागरैः ।
पिबेत् पिच्छाविबन्धघ्नं शूलदोषामपाचनम् ॥
सरक्तं हन्त्यतीसारं सज्वरं वाथ विज्वरम् ॥”
इति ह्रीवेरादि ॥ ९० ॥

“घनजलपाठातिविषापथ्योत्पलधान्यरोहिणीविश्वैः ।
सेन्द्रयवैः शृतमम्भः सातीसारं ज्वरं जयति ॥”
इति घनादि ॥ ९९ ॥
“दशमूलीकषायेण विश्वमक्षसमं पिबेत् ।
ज्वरे चैवातिसारे च सशोथे ग्रहणीगदे ॥”
इति दशमूलशुण्ठी ॥ १०० ॥
“किराताब्दामृताविश्वचन्दनोदीच्यवत्सकै ।
शोथातीसारशमनं विशेषात् ज्वरनाशनम् ॥”
इति किरातादि ॥ १०१ ॥
इति ज्वरातीसाराधिकारः ॥ * ॥
अथातीसारे ।
“धान्यकं नागरं मुस्तं बालकं विल्वमेव च ।
आमशूलविबन्धघ्नं पाचनं वह्निदीपनम् ॥”
इति धान्यपञ्चकम् ॥ १०२ ॥
“इदं धान्यचतुष्कं स्यात् पैत्ते शुण्ठीं विना पुनः ॥”
इति धान्यचतुष्कम् ॥ १०३ ॥
“कञ्चटदाडिमजम्बुशृङ्गाटकपत्रविल्वह्रीवेरम् ।
जलधरनागरसहितं गङ्गामपि वेगिनीं रुन्ध्यात् ॥
इति कञ्चटादि ॥ १०४ ॥
“किराततिक्तकं मुस्तं वत्सकं सरसाञ्जनम् ।

सद्यो जयेदतीसारं सरक्तं दुर्निवारणम् ॥”
इति कुटजदाडिमम् ॥ ११३ ॥ * ॥
अथ ग्रहण्याम् ।
“ग्रहणीमाश्रितं दोषमतीसारवदाचरेत् ।
अतीसारोक्तविधिना तस्यामञ्च विपाचयेत् ॥
नागरातिविषामुस्तक्वाथःस्यादामपाचनः ॥”
इति नागरादि ॥ ११४ ॥ * ॥
अथाग्निमान्द्ये ।
“विश्वाभयागुडूचीनां कषायेण षडूषणम् ।
पिबेत् श्लेष्मणि मन्देऽग्नौ
त्वक्पत्रसुरभीकृतम् ॥
पञ्चकोलं समरिचं षडूषणमुदाहृतम् ॥”
इति सडूषणविश्वादि ॥ ११५ ॥ * ॥
अथामाजीर्णे ।
“धान्यनागरसंसिद्धं तोयं दद्याद्विचक्षणः ।
आमाजीर्णप्रशमनं दीपनं वस्तिशोधनम् ॥”
इति धान्यशुण्ठी ॥ ११६ ॥ * ॥
अथ पाण्डुरोगे ।
“फलत्रिकामृतावासातिक्ताभूनिम्बनिम्बजः ।
क्वाथः क्षौद्रयुतो हन्यात् पाण्डुरोगं सकामलम् ॥”
इति फलत्रिकादि ॥ ११७ ॥ * ॥
अथ रक्तपित्ते ।
“जलं खर्ज्जूरमृद्वीकामधुकैः सपरूषकैः ।
शृतशीतं प्रयोक्तव्यं तर्पणार्थं सशर्करम् ॥”
इति खर्ज्जरादिजलम् ॥ ११८ ॥ * ॥

अथ राजयक्ष्मणि।
“धन्याकपिप्पलीविश्वदशमूलीजलंपिबेत्।
पार्श्वशूलज्वरश्वासपीनसादिनिवृत्तये॥”
इति धन्याकादि॥ ११९॥
“अश्वगन्धामृताभीरुदशमूलीबलावृषाः।
पुष्करातिविषे घ्नन्ति क्षयं क्षीररसाशिनः॥”
इति अश्वगन्धादि॥ १२०॥
“दशमूलबलारास्नापुष्करसुरदारुनागरैरक्वथितम्
।
पेयं पार्श्वांसशिरोरुक्क्षतकासादिशान्तये
सलिलम्॥”
इति दशमूलादि॥ १२१॥
इति राजयक्ष्माधिकारः॥ * ॥
अथ कासे।
“पञ्चमूलीकृतः क्वाथः पिप्पलीचूर्णसंयुतः।
रसान्नमश्नतो नित्यं वातकासमुदस्यति॥”
इति पिप्पलीचूर्णयुक्तपञ्चमूली॥ १२२॥
“पौष्करं कट्फलं भार्गी पिप्पलीविश्वसाधितम्।
पिबेत् क्वाथं कफोद्रेके कासे श्वासे च हृद्ग्रहे॥”
इति पौष्करादि॥ १२३॥
“पिप्पलीचूर्णसंयुक्तं दशमूलीजलं पिबेत्॥”
इति पिप्पलीचूर्णयुक्तदशमूली॥ १२४॥
“कट्फलं कत्तृणं भार्गी मुस्तं धान्यं वचाभया।
शृङ्गी पर्पटकं शुण्ठी सुराह्वञ्च जले शृतम्॥
मधुहिङ्गुयुतं पेयं कासे वातकफात्मके।
कण्ठरोगे मुखे शूले श्वासहिक्काज्वरेषु च॥”
इति कट्फलादि॥ १२५॥
“कण्टकारीकृतः क्वाथः सकृष्णः सर्व्वकासहा
॥”
इति कण्टकारीक्वाथः॥ १२६॥
इति कासाधिकारः॥ * ॥
अथ हिक्कायाम्।
“अमृतानागरफञ्जीव्याघ्रीपर्णाशसाधितक्वाथः।
पीतः सकणाचूर्णः कासश्वासौ जयत्याशु॥”
इति अमृतादि॥ १२७॥
“दशमूलीकषायस्तु पुष्करेणावचूर्णितः।
कासश्वासप्रशमनः पार्श्वहृच्छूलनाशनः॥”
इति कुष्ठचूर्णयुक्तदशमूली॥ १२८॥
“कुलत्थनागरव्याघ्रीवासाभिःक्वथितं जलम्।
पीतं पुष्करसंयुक्तं हिक्काश्वासनिवारणम्॥”
इति कुलत्थादि॥ १२९॥

“क्वाथः पर्पटजः पीतः
सक्षौद्रश्छर्द्दिनाशनः॥”
इति पर्पटक्वाथः॥ १३३॥
“कृतं गुडूच्या विधिवत् कषायं हिमसंज्ञितम्
।
तिसृष्वपि भवेत् पथ्यं माक्षिकेण समायुतम्
॥
द्रव्यादापोथितात्तोये प्रतप्ते निशि
संस्थितात्।
कषायो योऽभिनिर्याति स शीतः समुदाहृतः
॥”
इति गुडूचीशीतकषायः॥ १३४॥
“श्रीफलस्य गुडूच्या वा कषायो मधुसंयुतः
।
पेयश्छर्द्दित्रये शीतो दूर्व्वा वा तण्डुलाम्बुना
॥”
इति विल्वमूलगुडूचीकषायौ॥ १३५॥
“जम्ब्वाम्रपल्लवगवेधुकधान्यसेव्य-
ह्रीवेरवारि पिबतो मधुनाल्पमल्पम्।
छर्द्दिः प्रयाति शमनं त्रिसुगन्धियुक्ता
लीढा निहन्ति मधुनाथ दुरालभा वा॥”
इति जम्ब्वादिवारि॥ १३६॥
इति छर्द्दधिकारः॥ * ॥
अथ मूर्च्छायाम्।
“महौषधामृताक्षौद्रं पौष्करं ग्रन्थिकोद्भवम्।
पिबेत् कणायुतं क्वाथं मूर्च्छा येषु गदेषु च
॥”
इति महौषधादि॥ १३७॥
“पिबेद्दुरालभाक्वाथं सघृतं भ्रमशान्तये॥”
इति दुरालभाक्वाथः॥ १३८॥
इति मूर्च्छाधिकारः॥ * ॥
अथोन्मादे।
“दशमूलाम्बु सघृतं युक्तं मांसरसेन वा।
ससिद्धार्थकचूर्णं वा पुराणं वैकं घृतम्॥”
इति घृतादियुक्तदशमूलम्॥ १३९॥ * ॥
अथापस्मारे।
“हृत्कम्पोऽक्षिरुजा यस्य स्वेदो हस्तादि-
शीतता।
दशमूलीजलं तस्य कल्याणाज्यञ्च योजयेत्
॥”
इति दशमूलीकल्याणघृतौ॥ १४०॥ * ॥

“वातघ्नैर्दशमूल्या च नरं कुब्जमुपाचरेत्
॥”
इति वातघ्नगणदशमूलीकषायौ॥ १४६
॥
“दशमूली बला रास्ना गुडूची
विश्वभेषजम्।
पिबेदेरण्डतैलेन गृध्रसीखञ्जपङ्गुषु॥”
इति एरण्डतैलयुक्तदशमूल्यादि॥ १४७
॥
“शेफालिकादलक्वाथो
मृद्वग्निपरिसाधितः।
दुर्व्वारं गृध्रसीरोगं पीतमात्रं समुद्धरेत्॥”
इति शेफालीक्वाथः॥ १४८॥
“पञ्चमूलीकषायन्तु रुवुतैलविमिश्रितम्।
त्रिवृतैर्व्वाथवा युक्तं गृध्रसीगुल्मशूलनुत्
॥”
इति एरण्डतैलयुक्तपञ्चमूली॥ १४९॥
“दशमूलीकषायेण पिबेद्वा नागराम्भसा।
कटीशूलेषु सर्व्वेषु तैलमेरण्डसम्भवम्॥”
इति एरण्डतैलयक्तदशमूलीशुण्ठीक्वाथौ
॥ १५०॥
“गुग्गुलुं क्रोष्टुशीर्षे तु गुडूची
त्रिफलाम्भसा।
क्षीरेणैरण्डतैलं वा पिबेद्वा वृद्धदारकम्॥”
इति गुग्गुलुयुक्तगुडूचीत्रिफलाक्वाथः॥
१५१॥
इति वातव्याध्यधिकारः॥ * ॥
अथ वातरक्ते।
“अमृतानागरधन्याककर्षत्रयेण पाचनकं
सिद्धम्।
जयति सरक्तं वातं सामं कुष्ठान्यशेषाणि
॥”
इति अमृतादि॥ १५२॥
“वत्सादन्युद्भवः क्वाथः पीतो
गुग्गुलुसंयुतः।
समीरणसमायुक्तं शोणितं संप्रधावयेत्॥”
इति वत्सादनीक्वाथः॥ १५३॥
“वासागुडूची चतुरङ्गुलाना-
मेरण्डतैलेन पिबेत् कषायम्।
क्रमेण सर्व्वाङ्गजमप्यशेषं
जयेदसृग्वातभवं विकारम्॥”

“शृङ्गीमहौषधकणाघनपौष्कराणां
चूर्णं शटीमरिचशर्करया विमिश्रम्।
क्वाथेन पीतममृतावृषपञ्चमूल्याः
श्वासं त्र्यहेण विनिहन्त्यतिदोषमुग्रम्॥”
इति शृङ्ग्यादि ॥ १३० ॥
इति हिक्काश्वासाधिकारः॥ * ॥
अथ छर्द्याम्।
“कषायो भृष्टमुद्गस्य सलाजमधुशर्करः।
निहन्याच्छर्द्यतीसारं वैश्वानर इवाहुतिम्॥”
इति भृष्टमुद्गकषायः॥ १३१ ॥
“गुडूचीत्रिफलारिष्टपटोलैः क्वथितं पिबेत्।
क्षौद्रयुक्तं निहन्त्याशु छर्द्दिं पित्ताम्लसम्भवाम्॥”
इति गुडूच्यादि ॥ १३२ ॥

अथ वातरोगे।
“पञ्चमूलीकृतः क्वाथो दशमूलीकृतोऽथवा
।
रूक्षः स्वेदस्तथा नस्यं मन्यास्तम्भे
प्रशस्यते॥”
इति पञ्चमूली-दशमूलीक्वाथौ॥ १४१ ॥
“अर्द्दिते नवनीतेन खादेन्माषेण्डवीं नरः।
क्षीरमांसरसैर्भुक्त्वा दशमूली जलं पिबेत्
॥”
इति दशमूली ॥ १४२ ॥
“माषबलाशुकशिम्बाकत्तृणरास्नाश्वगन्धोरुवूकाणाम्।
क्वाथो नस्यनिपीतो रामठलवणान्वितः
कोष्णः॥
अपहरति पक्षवातं मन्यास्तम्भं सकर्ण-
नादरुजम्।
दुर्ज्जयमर्द्दितवातं सप्ताहाज्जयति चावश्यम्
॥”
इति माषबलादि ॥ १४३ ॥
“दशमूलीबलामाषक्वाथं तैलाज्यमिश्रितम्
।
सायं भुक्त्वा पिबेन्नस्यं विश्वच्यामववाह्नके
॥”
इति दशमूल्यादि ॥ १४४ ॥
“माषात्मगुप्तकैरण्डवाट्यालकशृतं षिबेत्।
हिङ्गुसैन्धवसंयुक्तं पक्षाघातनिवारणम्॥”
इति माषादि ॥ १४५ ॥

इति वासादि ॥ १५४ ॥
“लीढ्वा मुण्डितिकाचूर्णं
मधुसर्पिःसमन्वितम्।
छिन्नाक्वाथं पिबन् हन्ति वातरक्तं
सुदुस्तरम्॥”
इति गुडूचीक्वाथः॥ १५५ ॥
“तिस्रोऽथवा पञ्चगुडेन पथ्या
जग्ध्वा पिबेच्छिन्नरुहाकषायम्।
सवातरक्तं शमयत्युदीर्ण-
माजानुसंस्थञ्च निहन्त्यवश्यम्॥”
इति गुडू चीकषायः॥ १५६ ॥
इति वातरक्ताधिकारः॥ * ॥
अथोरुस्तम्भे।
“शिलाजतुं गुग्गुलुं वा पिप्पलीमथ
नागरम्।
ऊरुस्तम्भे पिबेन्मूत्रैर्दशमूलीरसेन वा॥”
इति शिलाजत्वादियुक्तदशमूली ॥ १५७
॥
“भल्लातकामृताशुण्ठीदारुपथ्यापुनर्नवाः
।
पञ्चमूलीद्वयोन्मिश्रा ऊरुस्तम्भनिवारणाः
॥”
इति भल्लातकादि ॥ १५८ ॥
“पिप्पली पीप्पलीमूलं भल्लातक्वाथ एव
वा।
कल्को वा समधुर्देय
ऊरुस्तम्भविनाशनः॥”
इति पिप्पल्यादि ॥ १५९ ॥
इत्यूरुस्तम्भाधिकारः॥ * ॥
अथामवाते।
“शटीशुण्ठ्यभया चोग्रा
देवाह्वातिविषामृता।

कषायमामवातस्य पाचनं रूक्षभोजनम् ॥”
इति शट्यादि ॥ १६० ॥
“शटी विषौषधं कल्कं वर्षाभूक्वाथसंयुतम् ।
सप्तरात्रं पिबेज्जन्तुरामवातविपाचनम् ॥”
इति पुनर्नवाक्वाथः ॥ १६१ ॥
“दशमूलामृतैरण्डरास्नानागरदारुभिः ।
क्वाथोरुवुकतैलेन सामं हन्त्यनिलं गुरुम् ॥”
इति रास्नादशमूलम् ॥ १६२ ॥
“दशमूलीकषायेण पिबेद्वा नागराम्भसा ।
कुक्षिवस्तिकटीशूले तैलमेरण्डसम्भवम् ॥”
इति एरण्डतैलयुक्तदशमूलशुण्ठीक्वाथौ ॥
१६३ ॥
“रास्नां गुडूचीमेरण्डं देवदारु महौषधम् ।
पिबेत् सर्व्वाङ्गवाते च सामे सन्ध्यस्थिमज्जगे
॥”
इति रास्नापञ्चकम् ॥ १६४ ॥
“रास्नामृतारग्वधदेवदारु-
त्रिकण्टकैरण्डपुनर्नवानाम् ।
क्वाथं पिबेन्नागरचूर्णमिश्रं
जङ्घोरुपृष्ठत्रिकपार्श्वशूली ॥”
इति रास्नासप्तकम् ॥ १६५ ॥
“शुण्ठीगोक्षुरकक्वाथः प्रातः प्रातर्निषेवितः ।
सामे वाते कटीशूले पाचनो रुक्प्रणाशनः ॥”
इति गोक्षुरशुण्ठी ॥ १६६ ॥
“आमवाते कणायुक्तं दशमूलीजलं पिबेत् ॥”
इति कणायुक्तदशमूली ॥ १६७ ॥
इत्यामवाताधिकारः ॥ * ॥
अथ शूले ।
“बलापुनर्नवैरण्डबृहतीद्वयगोक्षुरैः ।
सहिङ्गु लवणं पीतं सद्यो वातरुजापहम् ॥”
इति बलादि ॥ १६८ ॥
“विश्वमेरण्डजं मूलं क्वाथं पीत्वा जलं पिबेत्
।
हिङ्गुसौवर्च्चलोपेतं सद्यः शूलनिवारणम् ॥”
इति विश्वादि ॥ १६९ ॥
“हिङ्गुपुष्करमूलाभ्यां हिङ्गुसौवर्च्चलेन वा ।
विश्वैरण्डयवक्वाथः सद्यः शूलनिवारणः ॥”
इति हिङ्गुपुष्करमूलयुक्तविश्वैरण्डयवक्वाथः
॥
१७० ॥
“तद्वद्वुयवक्वाथो हिङ्गुसौवर्च्चलान्वितः ॥”
पाययेद्रक्तपित्तघ्नं दाहशूलनिवारणम् ॥”
इति त्रिफलारग्वधक्वाथः ॥ १७६ ॥
“विल्वमूलमथैरण्डं चित्रकं विश्वभेषजम् ।
हिङ्गुसैन्धवसंयुक्तं सद्यः शूलनिवारणम् ॥”
इति विल्वमूलादि ॥ १७७ ॥
“सक्षारं वा पिबेत् क्वाथं विल्वादेः
कफशूलवान् ॥”
इति विल्वादिक्वाथः ॥ १७८ ॥
“मातुलुङ्गरसो वापि शिग्रुक्वाथस्तथापरः ।
सक्षारो मधुना पीतः पार्श्वहृद्वस्तिशूलनुत् ॥”
इति शिग्रुक्वाथः ॥ १७९ ॥
“आमशूले क्रिया कार्य्या कफशूल-
विनाशिनी ।
सेव्यमामहरं सर्व्वं यदन्यदग्निवर्द्धनम् ॥
पटोलत्रिफलारिष्टक्वाथं समधुकं पिबेत् ।
पित्तश्लेष्मज्वरच्छर्द्दिदाहशूलोपशान्तये ॥”
इति पटोलादि ॥ १८० ॥
“विश्वोरुवूकदशमूलयवाम्भसातु
द्विक्षारहिङ्गुलवणत्रयपुष्कराणाम् ।
चूर्णं पिबेद्धृदयपार्श्वकटीग्रहाम-
पक्वाशयांशभृशरुग्ज्वरगुल्मशूली ॥”
इति विश्वादि ॥ १८१ ॥
“क्वाथेन चूर्णपानं यत्तत्र क्वाथप्रधानता ।
प्रवर्त्तते न तेनात्र चूर्णपिक्षी चतुर्द्रवः ॥
चूर्णं समं रुचकहिङ्गुमहौषधानां
शुण्ठ्यम्बुना कफसमीरणपित्तजेषु ।
हृत्पार्श्वपृष्ठजठरार्त्तिविसूचिकासु
पेयं तथा यवरसेन तु विड्विबन्धे ॥” १८२
॥
“समं शुण्ठ्यम्बुनेत्येवं योजनां क्रियते बुधैः ।
तेनाल्पमानमेवात्र हिङ्गु संपरिदीयते ॥”
इति रुचकादि ॥ १८३ ॥
“हिङ्गु सौवर्च्चलं पथ्या विडसैन्धवतुम्बरु ।
पौष्करञ्च पिबेच्चूर्णं दशमूलयवाम्भसा ॥
पार्श्वहृत्कटिपृष्ठांशशूले तन्त्रापतानके ।
शोथश्लेष्मश्वासके च कर्णरोगे च शस्यते ॥”
इति हिङ्ग्वादिचूर्णयुक्तदशमूलीयक्वाथः ॥
१८४ ॥
“एरण्डविश्वबृहतीद्वयमातुलुङ्ग
पाषाणभिद्विकटमूलकृतः कषायः ।
सक्षारहिङ्गुलवणो रुवुतैलमिश्रः
उदावर्त्तोदरानाहविषगुल्मादिनाशनः ॥”
इति प्रत्येकं श्यामादिगणक्वाथः ॥ १८७
॥
इत्युदावर्त्ताधिकारः । आनाहोऽपि ॥ * ॥
अथ हृद्रोगे ।
“वातोपसृष्टे हृदये वामयेत् स्निग्धमातुरम् ।
द्विपञ्चमूलीक्वाथेन सस्नेहलवणेन च ॥”
इति स्नेहलवणयुक्तदशमूली ॥ १८८ ॥
“नागरं वा पिबेदुष्णं कषायञ्चाग्निवर्द्धनम् ।
कासश्वासानिलहरं शूलहृद्रोगनाशनम् ॥”
इति नागरक्वाथः ॥ १८९ ॥
“वचानिम्बकषायाभ्यां वान्तं हृदि
कफोत्थिते ।
वातहृद्रोगहृच्चूर्णं पिप्पल्यादिञ्च पाचयेत्
॥”
इति वचानिम्बकषायौ ॥ १९० ॥
“हिङ्गूग्रगन्धाविडविश्वकृष्णा-
कुष्ठाभयाचित्रकयावशूकम् ।
पिबेत् ससौवर्च्चलपुष्कराढ्यं
यवाम्भसा शूलहृदामयघ्नम् ॥”
इति हिङ्ग्वादिचूर्णयुक्तयवक्वाथः ॥ १९१
॥
“दशमूलकषायन्तु लवणक्षारसंयुतम् ।
कासं श्वासञ्च हृद्रोगं गुल्मशूलञ्च नाशयेत्
॥”
इति लवणक्षारयुक्तदशमूली ॥ १९२ ॥
इति हृद्रोगाधिकारः ॥ * ॥
अथ मूत्रकृच्छ्रे ।
“अमृता नागरं धात्री वाजिगन्धा
त्रिकण्टकम् ।
प्रपिबेद्वातरोगार्त्तः सशूलो मूत्रकृच्छ्रवान् ॥”
इति अमृतादि ॥ १९३ ॥
“कुशः काशः शरो दर्भ इक्षुश्चेति तृणोद्भवम्
।
पित्तकृच्छ्रहरं पञ्चमूलं वस्तिविशोधनम् ॥”
इति तृणपञ्चमूलम् ॥ १९४ ॥
“एतत् सिद्धं पयः पीत्वा मेढ्रगं हन्ति
शोणितम् ॥
शतावरीकाशकुशश्वदंष्ट्रा-
विदारिशालीक्षुकशेरुकाणाम् ।
क्वाथं सुशीतं मधुशर्करात्तं

इति रुव्वादि ॥ १७१ ॥

“बृहत्यौ गौक्षुरैरण्डकुशकासेक्षुरालिकाः ।
पीताः पित्तभवं शूलं सद्यो हन्ति सुदारुणम्
॥”

इति बृहत्यादि ॥ १७२ ॥

“शतावरीसयष्ट्याह्ववाट्यालकुशगोक्षुरैः ।
शृतशीतं पिबेत्तोयं सगुडक्षौद्रशर्करम् ॥
पित्तासृग्दाहशूलघ्नं सद्यो दाहज्वरापहम् ॥”

इति शतावर्य्यादि ॥ १७३ ॥

“त्रिफलानिम्बयष्ट्याह्वकटुकारग्वधैः शृतम् ।
पाययेन्मधुसंमिश्रं दाहशूलोपशान्तये ॥”

इति त्रिफलादि ॥ १७४ ॥

“तैलमेरण्डजं वापि मधुकक्वाथसंयुतम् ।
शूलं पित्तोद्भवं हन्याद्गुल्मं पैत्तिकमेव च ॥”

इति मधुकक्वाथः ॥ १७५ ॥

“त्रिफलारग्वधक्वाथं सक्षौद्रं शर्करान्वितम् ।
श्रोण्यंशमेढ्रहृदयस्तनवक्षसि यः ॥”

इति एरण्डसप्तकः ॥ १८५ ॥

“एरण्डफलमूलानि बृहतीद्वयगोक्षुरम् ।
पर्णिन्यः सहदेवा च सिंहपुच्छीक्षुरालिका ॥
तुल्यैरेतैः शृतं तोयं यवक्षारयुतं पिबेत् ।
पृथग्दोषभवं शूलं हन्यात् सर्व्वभवन्तथा ॥”

इति एरण्डद्वादशकः ॥ १८६ ॥

इति शूलाधिकारः ॥ * ॥

अथोदावर्त्ते ।

“श्यामा दन्ती द्रवन्ती त्वक् महाश्यामा स्नुही त्रिवृत् ।
सप्तला शङ्खिनी श्वेता राजवृक्षः सतिन्दुकः ॥
कम्पिल्लकः करञ्जश्च हेमक्षीरीत्ययं गणः ।
सपिस्तैलरजःक्वाथकल्केष्वन्यतमेन च ॥
पिबन् जयेत् पैत्तिकमूत्रकृच्छ्रम् ॥”

इति शतावर्य्यादि ॥ १९५ ॥

“हरीतकीगोक्षुरराजवृक्ष-
पाषाणभिद्धन्वषवासकानाम् ।
क्वाथं पिबेन्माक्षिकसंप्रयुक्तं
कृच्छ्रे सदाहे सरुजे विबन्धे ॥”

इति हरीतक्यादि ॥ १९६ ॥

“श्वदंष्ट्रा विश्वतोयं वा कफकृच्छ्रविनाशनम्
॥”

इति श्वदंष्टाविश्वकषायौ ॥ १९७ ॥

“बृहतीधावनीपाठायष्टीमधुकपिङ्गलाः ।
पाचनीयो बृहत्यादिः कृच्छ्रदोषत्रयापहः ॥”
१९८ ॥

“क्वाथं गोक्षुरबीजस्य यवक्षारयुतं पिबेत् ।
मूत्रकृच्छ्रं शकृज्जञ्च पीतः शीघ्रं निवारयेत्
॥”

इति यवक्षारयुक्तगोक्षुरबीजक्वाथः ॥ १९९
॥

“क्रिया हिता त्वश्मरिशर्करायां
या मूत्रकृच्छ्रे कफमारुतोत्थे ।
यन्मूत्रकृच्छ्रे विहितन्तु पैत्ते
तत् कारयेच्छोणितमूत्रकृच्छ्रे ॥

त्रिकण्टकारग्वधदर्भकाश-
दुरालभापर्व्वतभेदपथ्याः ।
निघ्नन्ति पीता मधुनाश्मरीञ्च
संप्राप्तमृत्योरपि मूत्रकृच्छ्रम् ॥”
इति त्रिकण्टकादि ॥ २०० ॥
“कषायोऽतिबलामूलसाधितोऽशेषकृच्छ्रजित्
॥”
इति अतिबलाकषायः ॥ २०१ ॥
इति मूत्रकृच्छ्राधिकारः ॥ * ॥
अथ मूत्राघाते ।
“मूत्राघातान् यथादोषं मूत्रकृच्छ्रहरैर्ज्जयेत् ।
पिबेच्छिलाजतुक्वाथे गणे वीरतरादिके ॥”
इति शिलाजतुयुक्तवीरतरादिक्वाथः ॥ २०२
॥
“रसं दुरालभाया वा कषायं वासकस्य वा ॥”
इति दुरालभारसवासाकषायौ ॥ २०३ ॥
इति मूत्राघाताधिकारः ॥ * ॥
अथाश्मर्य्याम् ।
“वरुणस्य त्वचं श्रेष्ठां शुण्टीगोक्षुरसंयुताम् ।
यवक्षारगुडं दत्त्वा क्वाथयित्वा पिबेद्धिताम् ॥
अश्मरीं वातजां हन्ति चिरकालानुबन्धिनीम्
॥”
इति वरुणत्वगादि ॥ २०४ ॥
“वीरतरः सहचरौ दर्भो वृक्षादनी नलः ।
गुन्द्रा काशकुशावश्मभेदमोरटटुण्टुकाः ॥
कुरुण्टकोऽथ वशिरो वसुकः साग्निमन्थकः ।
इन्दीवरी श्वदंष्ट्रा च तथा कापोतवक्त्रकः ॥
वीरतरादिरित्येष गणो वातविकारनुत् ।
अश्मरीशर्करामूत्रकृच्छ्राघातरुजापहः ॥”
इति वीरतरादिगणक्वाथः ॥ २०५ ॥
“शुण्ठ्यग्निमन्थपाषाणशिग्रुवरुणगोक्षुरैः ।
अभयारग्वधफलैः क्वाथं कुर्य्याद्विचक्षणः ॥
रामठक्षारलवणचूर्णं दत्त्वा पिबेन्नरः ।
अश्मरीमूत्रकृच्छ्रघ्नं पाचनं दीपनं परम् ॥
हन्यात् कोष्ठाश्रितं वातं कट्यूरुगुदमेढ्रगम् ॥”
इति शुण्ठ्यादि ॥ २०६ ॥
“वरुणत्वक्कषायन्तु पीतन्तु गुडसंयुतम् ।
अश्मरीं पातयत्याशु वस्तिशूलविनाशनम् ॥”
इति वरुणक्वाथः ॥ २०७ ॥
“पिबेद्वरुणमूलत्वक्क्वाथं तत्कल्कसंयुतम् ॥”

क्वाथं पिबेदश्मजतुप्रगाढं
सशर्करे साश्मरिमूत्रकृच्छ्रे ॥”
इति एलादि ॥ २१३ ॥
“शुक्राश्मर्य्यान्तु सामान्यो
विधिरश्मरिनाशनः ॥”
इत्यश्मरीशर्कराधिकारः ॥ * ॥
अथ मेहे ।
“दूर्व्वाकशेरुपूतीककुम्भीकप्लवशैवलम् ।
जले निःक्वथितं पीतं शुक्रमेहहरं परम् ॥”
इति दूर्व्वादि ॥ २१४ ॥
“त्रिफलारग्वधद्राक्षाकषायोमधुना युतः ।
पीतो निहन्ति फेनाख्यं प्रमेहं नियतं
नृणाम् ॥”
इति त्रिफलादि ॥ २१५ ॥
“लोध्राभयाकटफलमुस्तकानां
विडङ्गपाठार्ज्जनधन्वनानाम् ।
कदम्बशालार्ज्जुनदीप्यकानां
विडङ्गदार्व्वीधवशल्यकानाम् ॥
चत्वार एते मधुना कषायाः
कफप्रमेहेषु निषेवणीयाः ॥
अश्वत्थाच्चतुरङ्गुल्या न्यग्रोधादेः
फलत्रयात् ।
सजिङ्गिरक्तसाराच्च क्वाथाः पञ्च
समाक्षिकाः ॥
नीलहारिद्रशुक्लाख्यान्
क्षारमाञ्जिष्ठसाह्वयान् ।
मेहान् हन्युः क्रमादेते सक्षौद्रो रक्तमेह-
जित् ॥
क्वाथः
खर्ज्जूरकाश्मर्य्यतिन्दुकास्थ्यमृताकृतः
॥”
इति खर्ज्जूरादि ॥ २१६ ॥
“लोध्रार्ज्जुनोशीरकुचन्दनानाम् २१७
अरिष्टसेव्यामलकाभयानाम् । २१८ ।
धात्र्यर्ज्जुनारिष्टकवत्सकानां २१९
नीलोत्पलैलातिनिशार्ज्जुनानाम् ॥ २२०
॥
चत्वार एते विहिताः कषायाः
पित्तप्रमेहे मधुसंप्रयुक्ताः ॥”
इति कषायचतुष्टयम् ॥ २२१ ॥
“छिन्नावह्निकषायेण पाठाकुटजरामठम् ।

“त्रिफलादारुदार्व्व्यब्दक्वाथः क्षौद्रेण मेहहा ॥
इति त्रिफलादि ॥ २२९ ॥
“कुटजासनदार्व्व्यब्दफलत्रयभवोऽथवा ॥”
इति कुटजादि ॥ २३० ॥
इति प्रमेहाधिकारः ॥ * ॥
अथोदरे ।
“पयसा सत्रिवृत्कल्केनोरुवूकशृतेन वा ।
सप्तलात्रायमाणाभ्यां शृतेनारग्वधेन वा ॥”
इति त्रिवृत्कल्कयुक्तारग्वधक्वाथैरण्डक्वाथौ
॥
२३१ ॥
“सन्निपातोदरे सर्व्वां यथोक्तां कारयेत् क्रियाम्
।
पीतः प्लीहोदरं हन्यात् पिप्पलीमरिचान्वितः
॥
अम्लवेतससंयुक्तः शिग्रुक्वाथः ससैन्धवः ॥”
इति शिग्रुक्वाथः ॥ २३२ ॥
“दशमूलदारुनागरच्छिन्नरुहापुनर्नवाक्वाथः ।
जयति जलोदरशोथश्लीपदगलगण्डवात-
रोगांश्च ॥”
इति दशमूलादि ॥ २३३ ॥
“हरीतकीनागरदेवदारु
पुनर्नवाच्छिन्नरुहाकषायः ।
सगुग्गुलुर्मूत्रयुतश्च पेयः
शोथोदराणां प्रवरः प्रयोगः ॥”
इति हरीतक्यादि ॥ २३४ ॥
“एरण्डतैलं दशमूलमिश्रं
गोमूत्रयुक्तस्त्रिफलारसो वा ।
निहन्ति वातोदरशोथशूलं
क्वाथः समूत्रो दशमूलजश्च ॥”
इति एरण्डतैलेन गोमूत्रेण वा युक्ता दशमूली ॥
२३५ ॥
“पुनर्नवानिम्बपटोलशुण्ठी-
तिक्तामृतादार्व्वभयाकषायः ।
सर्व्वाङ्गशोथोदरकाशशूल-
श्वासान्वितं पाण्डुगदं निहन्ति ॥”
इति पुनर्नवाष्टकम् ॥ २३६ ॥
“पुनर्नवादार्व्वभयागुडूचीं
पिबेत् समूत्रां महिषाक्षयुक्ताम् ।
त्वग्दोषशोथोदरपाण्डुरोग-
स्थौल्यप्रसेकोर्द्धकफामयेषु ॥”

इति वरुणकल्कयुक्तवरुणत्वक्कषायः ॥
२०८ ॥
“क्वाथश्च शिग्रुमूलोत्थः
कदुष्णोऽश्मरिघातनः ॥”
इति शिग्रुक्वाथः ॥ २०९ ॥
“नागरवरुणकगोक्षुरपाषाणभित्कपोतवक्त्रजः
क्वाथः ।
गुडयावशूकमिश्रः पीतो हन्त्यश्मरीमुग्राम् ॥”
इति नागरादि ॥ २१० ॥
“वरुणत्वक्शिलाभेदशुण्ठीगोक्षुरकैः कृतः ।
कषायः क्षारसंयुक्तः शर्कराञ्च भिनत्त्यपि ॥”
इति वरुणत्वगादि ॥ २११ ॥
“श्वदंष्ट्रैरण्डपत्राणि नागरं वरुणत्वचम् ।
एतत्क्वाथवरं प्रातः पिबेदश्मरिभेदनम् ॥”
इति श्वदंष्ट्रादि ॥ २१२ ॥
“एलोपकुल्यामधुकाश्मभेद-
कौन्तीश्वदंष्ट्रावृषकोरुवूकैः ।

तिक्तां कुष्ठश्च सञ्चूर्ण्य सर्पिर्मेहे पिबेन्नरः
॥”
इति छिन्नावह्निकषायः ॥ २२२ ॥
“कदरखदिरपूगक्वाथं क्षौद्राह्वये पिबेत् ॥”
इति कदरादि ॥ २२३ ॥
“अग्निमन्थकषायन्तु वसामेहे प्रयोजयेत्
॥”
इति अग्निमन्दकषायः ॥ २२४ ॥
“पाठाशिरीषदुस्पर्शमुर्व्वाः किंशुकतिन्दुकौ
।
कपित्थानां भिषक् क्वाथं हस्तिमेहे
प्रयोजयेत् ॥”
इति पाठादि ॥ २२५ ॥
“कषायस्त्रिफलादारुमुस्तकैरथवा कृतः
॥”
इति त्रिफलादि ॥ २२६ ॥
“फलत्रिकं दारु निशां विशालां
मुस्तञ्च निष्क्वाथ्य निशांशकल्कम् ।
पिबेत् कषायं मधुसंप्रयुक्तं
सर्व्वप्रमेहेषु समुत्थितेषु ॥”
इति फलत्रिकादि ॥ २२७ ॥
“कटङ्कटेरीमधुकत्रिफलाचित्रकैः समैः ।
सिद्धः कषायः पातव्यः प्रमेहाणां
विनोत्थितः ॥”
इति कटङ्कटेर्य्यादि ॥ २२८ ॥

इति पुनर्नवाचतुष्कम् ॥ २३७ ॥
इति उदराधिकारः ॥ * ॥
अथ शोथे ।
“शुण्ठीपुनर्नवैरण्डपञ्चमूलशृतं जलम् ।
वातिके श्वयथौ शस्तं पानाहारपरिग्रहे ॥”
इति शुण्ठ्यादि ॥ २३८ ॥
“दशमूलं सर्व्वथा च शस्तं वाते विशेषतः ॥”
इति दशमूलम् ॥ २३९ ॥
“क्षीराशनः पित्तकृतेऽथ शोथे
त्रिवृद्गुडूचीत्रिफलाकषायम् ।
पिबेद्गवां मूत्रविमिश्रितं वा
फलत्रिकाचूर्णमथाक्षमात्रम् ॥”
इति त्रिवृतादि ॥ २४० ॥
“अभया दारु मधुकं तिक्ता दन्ती सपिप्पली ।

पटोलं चन्दनं दार्व्वी त्रायमाणेन्द्रवारुणी ॥
एषां क्वाथः ससर्पिष्कः श्वयथुज्वरदाहहा।
वीसर्पतृष्णासन्तापसन्निपातविषापहः॥"
इति अभयादि ॥ २४१ ॥
"पुनर्नवाविश्वत्रिवृद्गुडूची-
सम्पाकपथ्यामरदारुकल्कम्।
शोथे कफोत्थे महिषाक्षमूत्र-
युक्तं पिबेद्वा सलिलं तथैषाम् ॥"
इति पुनर्नवासप्तकम् ॥ २४२ ॥
"पुनर्नवादारुशुण्ठीक्वाथे मूत्रेऽथ केवले ।
दशमूलजले वापि गुग्गुलुः शोथनाशनः ॥"
इति गुग्गुलुयुक्तपुनर्नवादिदशमूलक्वाथौ ॥ २४३ ॥
"सिंहास्यामृतभण्टाकीक्वाथं कृत्वा
समाक्षिकम्।
पीत्वा शोथं जयेज्जन्तुः कासं श्वासं ज्वरं
वमिम् ॥"
इति सिंहास्यादि ॥ २४४ ॥
"भूनिम्बविश्वकल्कं जग्धा पेयः
पुनर्नवाक्वाथः।
अपहरति नियतमाशु शोथं सर्व्वाङ्गिगं नणाम्
॥"
इति पुनर्नवाक्वाथः ॥ २४५ ॥
इति शोथाधिकारः ॥ * ॥
अथान्त्रवृद्धौ।
"पुनर्नवायास्तैलं वा तैलं नारायणन्तथा।
पाने वस्तौ रुवोस्तैलं पेयं वा दशकाम्भसा
॥"
इति रुवुतैलयुक्तदशमूलम् ॥ २४६ ॥
"रास्नायष्ट्यमृतैरण्डवलागोक्षुरसाधितः।
क्वाथोऽन्त्रवृद्धिं हन्त्याशु रुवुतैलेन मिश्रितः
॥"
इति रास्नादि ॥ २४७ ॥
इति ब्रध्नवृद्ध्यधिकारः ॥ * ॥
अथ विद्रधौ।
"पुनर्नवादारुविश्वदशमूलाभयाम्भसा।
गुग्गुलुं रुवुतैलं वा पिबेन्मारुतविद्रधौ ॥"
इति पुनर्नवादि ॥ २४८ ॥
"पिबेद्वा त्रिफलाक्वाथं त्रिवृत्कल्काक्षसंयुतम्
॥"

अथ भग्ने ।
"न्यग्रोधादिकषायन्तु सुशीतं परिषेचने ॥"
इति न्यग्रोधादि ॥ २५५ ॥ * ॥
अथ कुष्ठे ।
"त्रिफलापटोलरजनीमञ्जिष्ठारोहिणीवचा
निम्बैः ।
एष कषायोऽभ्यस्तो निहन्ति कफपित्तजं
कुष्ठम् ॥"
इति नवकषायः ॥ २५६ ॥
"पटोलखदिरारिष्टत्रिफलाकृष्णवेत्रजम् ।
तिक्ताशनः पिबेत् क्वाथं कुष्ठी कुष्ठं व्यपोहति
॥"
इति पटोलादि ॥ २५७ ॥
"धात्रीखदिरयोः क्वाथं पीत्वा वल्गुजसंयुतम्
।
शङ्खेन्दुधवलं श्वित्रं तूर्णं हन्ति न संशयः ॥"
इति धात्रीखदिरक्वाथः ॥ २५८ ॥ * ॥
अथ शीतपित्ते।
"उदर्द्दे वमनं कार्य्यं पटोलारिष्टवारिणा ॥"
इति पटोलारिष्टजलम् ॥ २५९ ॥ * ॥
अथाम्लपित्ते।
"निस्तुषयववृषधात्रीक्वाथस्त्रिसुगन्धियुक्तः
पीतः ।
अपनयति चाम्लपित्तं यदि भुङ्क्ते मुद्गयूषेण
॥"
इति निस्तुषयवादि ॥ २६० ॥
"कफपित्तवमीकण्डूज्वरविस्फोटदाहहा।
पाचनो दीपनः क्वाथः शृङ्गवेरपटोलयोः ॥"
इति शृङ्गवेरपटोलक्वाथः ॥ २६१ ॥
"पटोलं नागरं धान्यं क्वाथयित्वा जलं पिबेत्
।
कण्डूपामार्त्तिशूलघ्नं कफपित्ताग्निमान्द्यजित्
॥"
इति पटोलादि ॥ २६२ ॥
"पटोलविश्वामृतरोहिणीकृतं
जलं पिबेत् पित्तकफोच्छ्रये च ।
शूलभ्रमारोचकवह्निमान्द्य-
कासज्वरच्छर्द्दिनिवारणन्तत्॥"
इति पटोलादि ॥ २६३ ॥
"यवकृष्णापटोलानां क्वाथं क्षौद्रयुतं पिबेत् ।
नाशयेदम्लपित्तञ्च अरुचिञ्च वमिन्तथा ॥"

"पटोलत्रिफलानिम्बशृतं मधुयुतं पिबेत् ।
पित्तश्लेष्मज्वरच्छर्द्दिदाहशूलोपशान्तये॥"
इति पटोलादि ॥ २६९ ॥
"सिंहस्यामृतभण्टाकीक्वाथं कृत्वा
समाक्षिकम्।
अम्लपित्तं जयेज्जन्तुः कासं श्वासं ज्वरं
वमिम् ॥"
इति सिंहास्यादि ॥ २७० ॥
इति अम्लपित्ताधिकारः ॥ * ॥
अथ विसर्पे।
"तृणवर्ज्जं प्रयोक्तव्यं पञ्चमूलचतुष्टयम् ॥"
इति पञ्चमूलत्रयम् ॥ २७१ ॥
"मुस्तारिष्टपटोलानां क्वाथः सर्व्वविसर्पनुत्
॥"
इति मुस्तादि ॥ २७२ ॥
"धात्रीपटोलमुद्गानामथवाघृतसंप्लुतः ॥"
इति धात्र्यादि ॥ २७३ ॥
"अमृतवृषपटोलं निम्बपत्रैरुपेतं
त्रिफलखदिरसारं व्याधिघातञ्च तुल्यम्।
क्वथितमिदमशेषं गुग्गुलोर्भागयुक्तं
जयति विषविसर्पान् कुष्ठमष्टादशाख्यम् ॥"
इति नवकषायः ॥ २७४ ॥
"अमृतवृषपटोलं मुस्तकं सप्तपर्णं
खदिरमसितवेत्रं निम्बपत्रं हरिद्रे।
विविधविषविसर्पान् कुष्ठविस्फोटकण्डू-
रपनयति मसूरीं शीतपित्तं ज्वरञ्च ॥"
इति अमृतादि ॥ २७५ ॥
"पटोलामृतभूनिम्बवासकारिष्टपर्पटैः ।
खदिराब्दयुतैः क्वाथो
विस्फोटार्त्तिज्वरापहः ॥"
इति पटोलादि ॥ २७६ ॥
"पटोलत्रिफलारिष्टगुडूचीमुस्तचन्दनैः ।
समुर्व्वा रोहिणी पाठा रजनी सदुरालभा ॥
कषायं पाययेदेतत् पित्तश्लेष्मज्वरापहम्।
कण्डूत्वग्दोषविस्फोटविषवीसर्पनाशनम् ॥"
इति पटोलादि ॥ २७७ ॥
"भूनिम्बवासाकटुकापटोल-
फलत्रिकाचन्दननिम्बसिद्धः।
विसर्पदाहज्वरवक्त्रशोष-
विस्फोटतृष्णावमिनुत् कषायः ॥"
इति भूनिम्बादि ॥ २७८ ॥

इति त्रिवृत्कल्कयुक्तत्रिफलाक्वाथः ॥ २४९ ॥

"दशमूलीकषायेण सन्दोहनरसेन वा ।
शोथं व्रणं वा कोष्णेन सशूलं परिषेचयेत् ॥"

इति दशमूलीकषायः ॥ २५० ॥

"क्वाथो वंशत्वगेरण्डश्वदंष्ट्राश्मभिदा कृतः ।
सहिङ्गुसैन्धवः पीतः कोष्ठस्थं स्रावयेदसृक् ॥"

इति वंशत्वगादिक्वाथः ॥ २५१ ॥ * ॥

अथोपदंशे ।

"पटोलनिम्बत्रिफलागुडूची-
क्वाथं पिबेद्वा खदिराशनाभ्याम् ।
सगुग्गुलुं वा त्रिफलायुतं वा
सर्व्वोपदंशापहरः प्रयोगः ॥"

इति पटोलादि ॥ २५२ ॥

"त्रिफलायाः कषायेण भृङ्गराजरसेन वा ।
वणप्रक्षालनं कुर्य्यादुपदंशप्रशान्तये ॥"

इति त्रिफलाक्वाथः ॥ २५३ ॥

"जयाजात्यश्वमारार्कसम्पाकानां दलैः पृथक् ।
कतं प्रक्षालने क्वाथं मेढ्रपाके प्रयोजयेत् ॥"

इति जयादिक्वाथः ॥ २५४ ॥ * ॥

इति यवादि ॥ २६४ ॥

"वास्नामृतापर्पटकभूनिम्बनिम्बमार्क्वैः ।
त्रिफलाकुलकैः क्वाथः सक्षौद्रश्चाम्लपित्तहा ॥"

इति दशाङ्गम् ॥ २६५ ॥

"फलत्रिकं पटोलञ्च तिक्ताक्वाथः सितायुतः ।
पीतः क्लीतकमध्वक्तो
ज्वरच्छर्द्द्यम्लपित्तजित् ॥"

इति फलत्रिकादि ॥ २६६ ॥

"पटोलधन्याकमहौषधाब्दै
कृतः कषायो विनिहन्ति शीघ्रम् ।
मन्दानलं पित्तवलासदाह-
च्छर्द्दिज्वरामानिलशूलरोगान् ॥"

इति पटोलादि ॥ २६७ ॥

"छिन्नोद्भवानिम्बपटोलपत्रं
फलत्रयं सुक्वथितं सुशीतम् ।
क्षौद्रान्वितं पीतमनेकरूपं
सुदारुणं हन्ति तदम्लपित्तम् ॥"

इति छिन्नोद्भवादि ॥ २६८ ॥

"सकफे पित्तयुक्ते तु त्रिफलां योजयेन्नरः ।
दुरालभां पर्पटकं पटोलं कटुकान्तथा ।
कोष्णं गुग्गुलुसंयुक्तं पिबेद्वा खदिराष्टकम् ॥"

इति दुरालभादि ॥ २७९ ॥

"कुण्डली पिचुमर्द्दाम्बु खदिरेन्द्रयवाम्बु वा ।
विस्फोटान्नाशयत्याशु वायुर्जलधरानिव ॥"

इति कुण्डल्यादि ॥ २८० ॥ * ॥

अथ मसूर्य्याम् ।

"दुरालभां पर्पटकं भूनिम्बं कटुरोहिणीम् ।
श्लैष्मिक्यां पित्तजायां वा पाने निःक्वाथ्य दापयेत् ॥"

इति दुरालभादि ॥ २८१ ॥

"निम्बं पर्पटकं पाटां पटोलं कटुरोहिणीम् ।
वासां दुरालभां धात्रीमुशीरं चन्दनद्वयम् ॥
एष निम्बादिकः क्वाथः पीतः शर्करया युतः ।
हन्ति त्रिदोवमसूरीं क्षयवीसर्पसम्भवाम् ॥

उत्थिता प्रविशेद्या तु पुनस्तां वाह्यतो नयेत्
॥”
इति निम्बादि ॥ २८२ ॥
“पटोलकुण्डलीमुस्तवृषधन्वयवासकैः ।
भूनिम्बनिम्बकटुकापर्पटैश्च शृतं जलम् ॥
मसूरीं शमयेदामां पक्वाञ्चैव विशोषयेत् ।
नातः परतरं किञ्चिद्विस्फोटज्वरशान्तये ॥”
इति पठोलादि ॥ २८३ ॥
“पटोलमूलारुणतण्डूलीयकं
पिबेद्धरिद्रामलकल्कसंयुतम् ।
मसूरिविस्फोटविदाहशान्तये
तदेव पित्तास्रवमिज्वरापहम् ॥”
इति पटोलादि ॥ २८४ ॥
“पटोलमूलारुणतण्डूलीयकं
तथैव धात्रीखदिरेण संयुतम् ।
पिबेज्जलं सुक्वथितं सुशीतं
मसूरिकारोगविनाशनं परम् ॥”
इति पटोलमूलादि ॥ २८५ ॥
“खदिरत्रिफलारिष्टपटोलामृतवासकैः ।
क्वाथोऽष्टकाङ्गो जयति रोमान्तीञ्च
मसूरिकाम् ॥
वीसर्पकुष्ठविस्फोटकण्ड्वादीनपिपानतः
॥”
इति खदिराष्टकम् ॥ २८६ ॥
“अमृतादिकषायस्तु जयेत्
पित्तकफात्मिकाः ॥”
इति अमृतादि ॥ २८७ ॥
“जातीपत्रं समञ्जिष्टं दार्व्वीं पूगफलं शमीम् ।
धात्रीफलं समधुकं क्वथितं मधुसयुतम् ॥
मुखरोगे कण्ठरोगे गण्डूषार्थं प्रशश्यते ॥”
इति जातीपत्रादि ॥ २८८ ॥
“अक्ष्णोः सेकं प्रशंसन्ति गवेधुमधुकाम्बुना
॥”
इति गवेधुमधुकक्वाथः ॥ २८९ ॥
“वेदनादाहशान्त्यर्थं स्वराणाञ्च विशुद्धये ।
सगुग्गुलं वराक्वाथं युञ्ज्याद्वा खदिराष्टकम्
॥”
इति वराक्वाथखदिराष्टकौ ॥ २९० ॥
“निम्बातिमुक्तकाशोकप्लक्षवेतसपल्लवैः ।
निशापर्य्युषितः क्वाथो मसूरीभयनाशनः ॥”

“पञ्चवल्ककषायो वा त्रिफलाक्वाथ एव वा ।
मुखपाकेषु सक्षौद्रः प्रयोज्यो मुखधावने ॥”
इति पञ्चवल्कत्रिफलाकषायौ ॥ २९७ ॥
“स्वरसः क्वथितो दार्व्व्या घनीभूतो रसक्रिया
।
सक्षौद्रा मुखरोगासृग्दोषनाडीव्रणापहा ॥”
इति दार्व्वीक्वाथः ॥ २९८ ॥
“सप्तच्छदोशीरपटोलमुस्त-
हरीतकीतिक्तकरोहिणीभिः ।
यष्ट्याह्वराजद्रुमचन्दनैश्च
क्वाथं पिबेत् पाकहरं मुखस्य ॥”
इति सप्तच्छदयष्ट्याह्वादिकषायौ ॥ २९९ ॥
“पटोलशुण्ठीत्रिफलाविशाला-
त्रायन्तितिक्तात्रिवृतामृतानाम् ।
पीतः कषायो मधुना निहन्ति
मुखे स्थितस्तस्य गदानशेषान् ॥”
इति पटोलादि ॥ ३०० ॥
“क्वथितास्त्रिफलापाठामृद्वीकाजातिपल्लवाः ।
निषेव्या भक्षणीया वा त्रिफला मुखपाकहा ॥”
इति त्रिफलादि ॥ ३०१ ॥
इति मुखरोगाधिकारः ॥ * ॥
अथ प्रदरे ।
“दार्व्वीरसाञ्जनवृषाब्दकिरातविल्व-
भल्लातकैरवकृतो मधुना कषायः ।
पीतो जयत्यतिबलं प्रदरं सशूलं
पीतासितारुणविलोहितनीलकृष्णम् ॥”
इति दार्व्व्यादि ॥ ३०२ ॥ * ॥
अथ योनिव्यापदि ।
“गुडूचीत्रिफलादन्तीक्वाथैश्च परिषेचनम् ॥”
इति गुडूचीत्रिफलादन्तीक्वाथाः ॥ ३०३ ॥
अथ गर्भिण्याम् ।
“चन्दनं शारिवालोध्रमृद्वीकाशर्करान्वितम् ।
एष क्वाथः प्रदातव्यो गर्भिण्या ज्वरशान्तये ॥”
इति चन्दनादि ॥ ३०४ ॥
“ह्रीवेरारलुरक्तचन्दनबलाधन्याकवत्सादनी-
मुस्तोशीरयवासपर्पटविषाक्वाथं पिबेद्गर्भिणी ।
नानावर्णरुजातिसारकगदे गर्भाश्रिते वा ज्वरे
योगोऽयं मुनिभिः पुरा निगदितः सूत्यामये-
षूत्तमः ॥”
इति बृहत्ह्रीवेरादि ॥ ३०५ ॥ * ॥
अथ स्तनरोगे ।

“सघृतं त्रिफलाक्वाथं स्तनरोगहरं पिवेत्
॥”
इति सघृतत्रिफलाक्वाथः ॥ ३११ ॥ * ॥
अथ सूतिकारोगे ।
“अमृतानागरसहचरभद्रोत्कटपञ्च-
मूलजलद-
जलम् ॥
शृतशीतं मधुयुतं निवारयति सूतिकातङ्कम्
॥”
इति सूतिकादशमूलम् ॥ ३१२ ॥
“सहचरपुष्करवेतसमूलं
वैकङ्कतदारुकुलत्थ-
समम् ।
जलमत्र ससैन्धवहिङ्गुयुतं सद्यो
ज्वरसूतिक-
शूलहरम् ॥”
इति सहचरादि ॥ ३१३ ॥
“दशमूलीकृतः क्वाथः सद्यः
सूतीरुजापहः ॥”
इति दशमूली ॥ ३१४ ॥ * ॥
अथ मक्कल्लशूले ।
“सूताया हृच्छिरोवस्तिशूलं
मक्कल्लसंज्ञितम् ।
यवक्षारं पिवेत्तत्र मस्तुनोष्णोदकेन वा ॥
पिप्पल्यादिगणक्वाथं पिबेद्वा
लवणान्वितम् ॥”
इति पिप्पल्यादिगणक्वाथः ॥ ३१५ ॥
इति स्त्रीरोगाधिकारः ॥ * ॥
अथ बालरोगे ।
“भैषज्यं पूर्ब्बमुद्दिष्टं नराणां यज्ज्वरादिषु ।
कार्य्यन्तदेव बालानां मात्रा त्वस्य
कनीयसी ॥
हरिद्राद्वययष्ट्याह्वसिंहीशक्रयवैः कृतः ।
शिशोर्ज्वरातिसारघ्नः कषायः
स्तन्यदोषजित् ॥”
इति हरिद्रादि ॥ ३१६ ॥
“विल्वञ्च पुष्पाणि च धातकीनां
जलं सलोध्रं गजपिप्पली च ।
क्वाथावलेहौ मधुना विमिश्रौ
बालेषु योज्यावतिसारितेषु ॥”
इति विल्वादिक्वाथः ॥ ३१७ ॥

इति निम्बादि ॥ २९१ ॥ इति मसूर्य्यधिकारः ॥ * ॥

अथ मुखरोगे ।

"बृहतीभूमिकदम्बककण्टकार्य्याःक्वाथः ।
गण्डूषतैलयुक्तः क्रिमिदस्तस्य वेदनाशमनः ॥"

इति बृहत्यादि ॥ २९२ ॥

"क्वाथपानन्तु दार्व्वीत्वङ्निम्बतार्क्ष्यकलिङ्गजम् ।
हरीतकीकषायो वा पेयो माक्षिकसंयुतः ॥"

इति दार्व्व्यादिहरीतकीकषायौ ॥ २९३ ॥

"कटुकातिविषादारुपाठामुस्तकलिङ्गकाः।
गोमूत्रक्वथिताः पेयाः कण्ठरोगविनाशनाः ॥"

इति कटकादि ॥ २९४ ॥ * ॥

मुखपाके ।

"जातीपत्रामृताद्राक्षायासदार्व्वीफलत्रिकै ।
क्राथः क्षौद्रयुतः शीतो गण्डूषो मुखपाकनुत् ॥"

इति जातीपत्रादि ॥ २९५ ॥

"पटोलनिम्बजम्ब्वाम्रमालतीनवपल्लवाः।
पञ्चपल्लवकः श्रेष्ठः कषायो मुखधावने ॥"

इति पटोलादि ॥ २९६ ॥

"हरिद्रादिं वचादिं वा प्रपिबेत् स्तन्यवृद्धये ॥"

इति हरिद्रादिवचादिक्काथौ ॥ ३०६ ॥

"तत्र वातात्मके स्तन्ये दशमूलीजलं पिबेत् ॥"

इति दशमूलक्वाथः ॥ ३०७ ॥

"पित्तदुष्टेऽमृताभीरुपटोलं निम्बचन्दनम् ।
धात्री कुमारश्च पिबेत् क्वाथयित्वा सशारिवम् ॥"

इति अमृतादि ॥ ३०८ ॥

"कफे वा त्रिफलाचव्यभूनिम्बकटुरोहिणी ॥"

इति त्रिफलादि ॥ ३०९ ॥

"धात्री स्तन्यविशुद्ध्यर्थं मुद्गाष्टकरसाशना ।
भार्गीदारुवचापाठाः पिबेत् सातिविषाःशृताः ॥"

इति भार्ग्यादि ॥ ३१० ॥

"समङ्गाधातकीलोध्रशारिवाभिःशृतं जलम् ।
दुर्व्वरेऽपि शिशोर्देयमतीसारे समाक्षिकम् ॥"

इति समङ्गादि ॥ ३१८ ॥

"नागरातिविषामुस्तबालकेन्द्रयवैः शृतम् ।
कुमारं पाययेत् प्रातः सर्व्वातीसारनाशनम् ॥"

इति नागरादि ॥ ३१९ ॥

"विल्वमूलकषायेण लाजाश्चैव सशर्कराः ।
आलोड्य पाययेद्बालं छर्द्यतीसारनाशिनीः ॥"

इति सशर्करलाजयुक्तविल्वमूलकषावः ॥ ३२० ॥

"पटोलत्रिफलारिष्टहरिद्राक्वथितंपिबेत्
क्षतविस्फोटवीसर्पज्वराणां शान्तये शिशुः ॥"

इति पटोलादि ॥ ३२१ ॥ * ॥

अथ विषे ।

"कटभ्यर्ज्जुनशौरीयशेलुक्षीरिद्रुमत्वचः ।
कषायकल्कचूर्णाः स्युः कीटलूतावणापहाः ॥"

इति कटभ्यादि ॥ ३२२ ॥ इति चक्रपाणिदत्तः ॥

**पाचनं**, त्रि, पाचयिता । इति मेदिनी । ने, ९१

अथ किशिष्टद्रव्याजीर्णे विशिष्टं पाचनद्रव्यमाहा ।

"अलं पनसपाकाय फलं कदलसम्भवम् ।
कदलस्य तु पाकाय बुधैरभिहितं घृतम् ॥
घृतस्य परिपाकाय जम्बीरस्य रसो हितः ॥

नारिकेलफलतालबीजयोः
पाचकं सपदि तण्डुलं विदुः ।
क्षीरमाशु सहकारपाचनं
चारमज्जनि हरीतकी हिता ॥
मधूकमालूरनृपादनानां
परूषखर्ज्जूरकपित्थकानाम् ।
पाकाय पेयं पिचुमर्द्दबीजं
घृतेऽपि तक्रेऽपि तदेव देयम् ॥
खर्ज्जूरशृङ्गाटकयोः प्रशस्तं
विश्वौषधं कुत्र च भद्रमुस्तम् ।
यज्ञाङ्गबोधिद्रुफलेषु शीतं
प्लक्षे तथा वार्य्युषितं प्रणीतम् ॥
तण्डुलेषु पयसः पयो हितं
दीप्यकन्तु चिपिटे कणायुतम् ।
यष्टिका दधिजलेन जीर्य्यते
कर्कटी च सुमनेषु गीर्य्यते ॥”
मुमनेषु गोधूमेषु । गीर्य्यते कथ्यते ।
गोधूममाषहरिमन्थसतीलमुद्ग-
पाको भवेज्झटिति मातुलपुत्त्रकेण ।
खण्डञ्च खण्डयति माषभवन्त्वजीर्णं
तैलं कुलत्थमथवा विद्धाति जीर्णम् ॥
मातुलपुत्त्रकः धुत्तूरफलम् ॥
कङ्गूश्यामाकनीवाराः
कुलत्थञ्चाविलम्बितम् ।
दध्नो जलेन जीर्य्यन्ति तैदलाः
काञ्जिकेन तु ॥
पिष्टान्नं शीतलं वारि कृशरां सैन्धवं
पचेत् ।
माषेण्डरीनिम्बमूलं पायसं मुद्गयूषकैः
॥
वटो वेशवाराम्लवङ्गेन फेनी-
शमं पर्पटः शिग्रुवीजेन याति ।
कणामूलतो लड्डुकापूपशष्टा-
विपाको भवेच्छष्कुलीमण्डयोश्च ॥
वेसवारः वेसर इति लोके । तद्यथा, --
स्नेहो निशाहिङ्गुलवङ्गकैला-
धन्याकजीरार्द्रकनागराणि ।
अम्लोषणं सैन्धवपर्णमन्ने
यथोचितं संस्कृतये प्रणीतमिति ॥
शष्टा शष्टकः पानकविशेषः । मण्डः
माण्डे इति
चञ्चूक चेचु इति लोके । गायत्री खदिरः ॥
पलङ्किकाकेमुककारवेल्ली-
वार्त्ताकुवंशाङ्कुरमूलकानाम् ।
उपोदिकालावुपटोलकानां
सिद्धार्थको मेघरवस्य पक्ता ॥
मेघरवः चवराई इति लोके ।
विपच्यते शूरणकं गुडेन
तथालुकं तण्डुलजोदकेन ।
पिण्डालुकं जीर्य्यति कोरदूषात्
कशेरुपाकः किल नागरेण ॥
लवणस्तण्डुलतोयात् सर्पिर्जम्बीरकाद्यम्लात् ।
मरिचादपि तच्छीघ्रं पाकं यात्येव काञ्जिका-
त्तैलम् ॥
क्षीरं जीर्य्यति तक्रेण तद्गव्यं कोष्णमण्डकात् ।
माहिषं माणिमन्थेन शङ्खचूर्णेन तद्दधि ॥
मण्डकः माण्डे इति लोके ।
रसाला जीर्य्यति व्योषात् खण्डं नागरभक्षणात् ।
सिता नागरमुस्तेन तथेक्षुश्चाद्रिकारसात् ॥
जरामिरा गैरिकचन्दनाभ्या-
मभ्येति शीघ्रं मुनिभिः प्रणीतम् ।
उष्णेन शीतं शिशिरेण चोष्णं
जीर्णो भवेत् क्षारगणस्तथाम्लैः ॥
इरा मदिरा ।
तप्तं तप्तं हेम वा तारमग्नौ
तोये क्षिप्तं सप्तकृत्वस्तदम्भः ।
पीत्वाजीर्णं तोयजातं निहन्या-
त्तत्र क्षौद्रं भद्रमुस्तं विशेषात् ॥
तत्र तोयाजीर्णे । इति भावप्रकाशे जठ-
राग्निविकाराजीर्णविसूचिकालसकविलम्बिका-
चिकित्सा ॥

**पाचनः**, पुं, (पाचयतीति । पच् + णिच् + “नन्दि-
ग्रहीति ।” ३ । १ । १३४ । इति ल्युः ।) अग्निः ।
इति मेदिनी । ने, ९० ॥ अम्लरसः । इति हेम-
चन्द्रः । ६ । २४ ॥ रक्तैरण्डः । इति राज-
निर्घण्टः ॥

**पाचनकः**, पुं, (पाच्यतेऽनेनेति । पच + णिच् +
करणे ल्युट् । ततः संज्ञायां कन् ।) टङ्कणः ।
इति हेमचन्द्रः । ४ । १० ॥

**पाचनी**, स्त्री, (पाच्यते भुक्तद्रव्यादिकं यथा । पच +

**पाची**, स्त्री, (पाचयति स्वपत्ररसादिप्रलेपादिना
परिपक्वयति व्रणानिति । पच + णिच् +
“सर्व्व-
धातुभ्य इन् ।” उणां ४ । ११७ । इति इन्
।
“कृदिकारादक्तिनः ।” ४ । १ । ४५ ।
इत्यस्य
वार्त्तिकोक्त्या ङीष् ।) लताविशेषः । पाचि
इति
पच्चे इति च हिन्दी भाषा । तत्पर्य्यायः ।
मर-
कतपत्री २ हरितलता ३ हरितपत्रिका ४
पत्री ५ सुरभिः ६ मालारिष्टा ७ गारुत्मत-
पत्रिका ८ । अस्या गुणाः । कटुत्वम् ।
तिक्त-
त्वम् । उष्णत्वम् । कषायत्वम् ।
वातदोषग्रह-
भूतविकारनाशित्वम् । त्वग्दोषप्रशमनत्वम् ।
व्रणेषु हितत्वञ्च । इति राजनिर्घण्टः ॥

**पाजः**, [स्] क्ली, (पाति रक्षतीति पात्यनेनेति
वा । पा रक्षणे + “पातेर्बले जुट् च ।” उणां
४ । २०२ । इति असुन् जुडागमश्च ।)
बलम् ।
इत्युणादिकोषः ॥ (यथा, ऋग्वेदे । ८ । ४६
। २५ ।
“आ नो वायो महेतने याहि मखाय पाजसे
॥”)

**पाञ्चकपालः**, त्रि, (पञ्चकपालस्यायमिति । “तस्ये-
दम् ।” ४ । ३ । १२० । इत्यण् ।)
पञ्चकपाल-
यागसम्बन्धी ॥ इति व्याकरणम् ॥

**पाञ्चजन्यः**, पुं, (पञ्चजने दैत्यविशेषे भवः । “पञ्च-
जनादुपसंख्यानम् ।” ४ । ३ । ५८ ।
इत्यस्य
वार्त्तिकोक्त्या ञ्यः ।) विष्णुशङ्खः । इत्यमरः
।
१ । १ । २९ ॥ “पञ्चजनो नाम दैत्यः समुद्रे
तिमि-

लोके ।
किमत्र चित्रं बहुमत्स्यमांस-
भोजी सुखी काञ्जिकपानतः स्यात् ।
इत्यद्भुतं केवलवह्निपक्व-
मांसेन मत्स्यः परिपाकमेति ॥
आममाम्रफलं मीने तद्वीजं पिशिते
हितम् ।
कूर्म्ममांसं यवक्षाराच्छीघ्रं पाकमुपैति हि
॥
कपोतपारावतनीलकण्ठ-
कपिञ्चलानां पिशितानि भुक्त्रा ।
कासस्य मूलं परिपीय पिष्टं
सुखी भवेन्ना वहुशो हि दृष्टम् ॥
कपोतो धवलपाण्डुः ।
शाकानि सर्व्वाण्यपि यान्ति पाकं
क्षारेण सद्यस्तिलनालजेन ।
चञ्चूकसिद्धार्थकवास्तुकानां
गायत्रिसारक्वथितेन पाकः ॥

णिच् + ल्युट् । स्त्रियां ङीप् ।) हरीतकी ।
इति मेदिनी । ने, ९१ ॥ (पाचयतीति व्युत्पत्या
परिपाचके वाच्यलिङ्गः । यथा, भावप्रकाशे
पूर्ब्बखण्डे १ भागे ।
"कण्टकारी सरा तिक्ता कटुका दीपनी लघुः ।
रूक्षोष्णा पाचनी कासश्वासजरकफानिलान् ॥")

**पाचलं**, क्ली, (पाचयतीति । पच् + णिच् +
बाहुलकात् कलन् । यद्बा, पाचं पाचनं
लातीति । ला + कः ।) पाचनम् । इति
मेदिनी । ले, १०९ ॥

**पाचलः**, पुं, (पाचयतीति । पच् + णिच् + बाहुल-
कात् कलन् ।) पाचकः । अग्निः । राधन-
द्रव्यम् । वायुः । इति शब्दरत्नावली ॥

रूप आसीत् तदस्थिजत्वात् ।" इति भरतः
॥
(यथा, गीतायाम् । १ । १५ ।
"पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्म्मा वृकोदरः
॥"
अस्य विवरणम् यथा, हरिवंशे । ८९ । १५
-- १७ ।
"समुद्रः प्रत्युवाचेदं दैत्यः पञ्चजनो महान् ।
तिमिरूपेण तं बालं ग्रस्तवानिति माधव ! ॥
स पञ्चजनमासाद्य जघान पुरुषोत्तमः ।
न चाससाद तं बालं गुरुपुत्रं तदाच्युतः ॥
स तु पञ्चजनं हत्वा शङ्खं लेभे जनार्द्दनः ।
यः स देवमनुष्येषु पाञ्चजन्य इति श्रुतः ॥"
पञ्चभिः
काश्यपवशिष्टप्राणाङ्गिरसच्यवनैर्ज्जनै-
र्निर्वृत्तः । इति ष्यञ् ।) अग्निः । इति मेदिनी
।
ये, १२२ ॥ (यथा, महाभारते । ३ । २१९
। १-५ ।
"काश्यपो ह्यथ वाशिष्ठः प्राणश्च
प्राणपुत्त्रकः ।
अग्निराङ्गिरसश्चैव च्यवनस्त्रिसुवर्च्चकः ॥
अचरत् स तपस्तीव्रं पुत्त्रार्थे बहुवार्षिकम् ।
पुत्त्रं लभेयं धर्म्मिष्ठं यशसा ब्रह्मणा समम् ॥
महाव्याहृतिभिर्ध्यातः पञ्चभिस्तैस्तदा त्वथ
।
जज्ञे तेजो महार्च्चिष्मान् पञ्चवर्णः प्रभावनः
॥
समिद्धोऽग्निः शिरस्तस्य बाहू सूर्य्यनिभौ
तथा ।
त्वङ्नेत्रे च सुवर्णाभे कृष्णे जङ्घे च भारत !
॥
पञ्चवर्णः सुतपसा कृतस्तैः पञ्चभिर्जनैः ।
पाञ्चजन्यः श्रुतो देवः पञ्चवंशकरस्तु सः ॥"
हारीतमुनिवंशीयस्य दीर्घबुद्धेः पुत्त्रः । इति
स्कन्धपुराणे सह्याद्रिखण्डम् । १ । २७ ।
४२ ॥)

**पाञ्चजन्यधरः**, पुं, (पाञ्चजन्यं तदाख्यया प्रसिद्धंशङ्खं
धरतीति । धृ + अच् ।) विष्णुः । इति
हारावली ॥

**पाञ्चलिका**, स्त्री, (पञ्चाली + स्वार्थे अण् । ततः कन् ततष्टापि अत इत्वञ्च ।) पञ्चालिका । इति भरतद्विरूपकोषः ॥

**पाञ्चशब्दिकं**, क्ली, (पञ्चभिः शब्दैर्निर्वृत्तम् । "तेन निर्वृत्तम् ।" ५ । १ । ७९ । इति ठक् ।) पञ्चप्रकारवाद्यम् । यथा, स्कान्दे रेवाखण्डे ।
"अङ्गजं चर्म्मजञ्चैव तन्त्रजं कांस्यजं तथा ।
फुत्कृतञ्चेति मुनिभिः कथितं पाञ्चशब्दिकम् ॥"

**पाञ्चार्थिकः**, पुं, (पञ्चार्थाः सन्त्यत्र । "अत इनि-ठनौ ।" ५ । २ । ११५ । इति ठन् ।) पाशुपतः । यथा, --
"पाञ्चार्थिकः पाशुपतश्चिद्रूपः स्फूर्त्तिमान्मतः ॥"
इति त्रिकाण्डशेषः ॥

**पाञ्चालं**, क्ली, (पञ्चाल एव । पञ्चाल + स्वार्थे अण् ।) शास्त्रम् । यथा, --
"पितृहूर्नृपपुर्य्या द्वार्द्दक्षिणेन पुरञ्जनः ।
राष्ट्रं दक्षिणपञ्चालं याति श्रुतधरान्वितः ॥
इति श्रीभागवते । ४ । पुरञ्जनोपाख्याने । २५ । ५० ॥
"पञ्चानां विषयाणामन्यतोऽनवगतानां प्रकाश-नायालमिति पञ्चालं शास्त्रम् ।" इति ।
"प्रवृत्तञ्च निवृत्तञ्च शास्त्रं पञ्चालसंज्ञकम् ।"
इति च तट्टीकायां श्रीधरस्वामी ॥
अत्र पञ्चालमिति पाठः किन्तु स्वार्थे ष्णप्रत्यये पाञ्चालमपि भवति ॥

**पाञ्चालः**, त्रि, (पञ्चाले तदाख्यया प्रसिद्धे प्रदेशे भवः । अण् ।) पञ्चालदेशजाते पदार्थे । यथा, रघौ । ६ । ८ ॥
...

Actually the page middle column starts with "यन्माया".

"यन्माया मोहितश्चाहं सदावर्त्ते परात्मनः ।
परवान् दारुपाञ्चाली मायिकस्य यथा वशे ॥")
(पाञ्चाले भवा । पाञ्चाल + अण् । स्त्रियां ङीप् ।) पाण्डवपत्नी । तत्पर्य्यायः । कृष्णा २ पाण्डु-शर्म्मिला ३ पार्व्वती ४ द्रौपदी ५ याज्ञसेनी ६ वेदिजा ७ । इति जटाधरः ॥ सैरन्ध्री ८ नित्य-यौवना ९ । इति हेमचन्द्रः ॥ (यथा, महा-भारते । १ । १६८ । ४१ ।
"कुमारी चापि पाञ्चाली वेदीमध्यात् समु-त्थिता ॥"
अस्य जन्मादिविवरणं द्रौपदीशब्दे द्रष्टव्यम् ॥
रीतिविशेषः । पाञ्चालानां प्रियत्वादेवास्या-स्तथात्वम् । यथा, साहित्यदर्पणे । ९ । २ ।
"वैदर्भी चाथ गौडी च पाञ्चाली लाटिका तथा ॥"
एतल्लक्षणं यदाह भोजः ।
"समस्तपञ्चषपदामोजःकान्तिसमन्विताम्।
मधुरां सुकुमाराञ्च पाञ्चालीं कवयो विदुः ॥")

**पाट्**, व्य, (पाटयति कार्य्यान्तरप्रेरणात् पूर्ब्ब-कार्य्यं छेदयतीति । पट + णिच् + क्विप् ।) सम्बो-धनम् । इत्यमरः । ३ । ४ । ७ ॥

**पाटकः**, पुं, (पाटयति दीप्यतीति । पाटि + ण्वुल् ।) महाकिस्कुः । कटकान्तरम् । वाद्यम् । अक्षादिचालनम् । मूलद्रव्यापचयः । रोधः । इति मेदिनी ॥ ग्रामैकदेशः । इति हेमचन्द्रः ॥ (पाटयति छिनत्तीति । छेदके । भेदके, त्रि । यथा, हरिवंशे । १७१ । १४ ।
"अहं तमो घनीभूतमहमेब च पाटकः ॥")

**पाटच्चरः**, पुं, (पाटयन् छिन्दन् चरतीति । चर + पचाद्यच् । पृषोदरादित्वात् साधुः ।) चौरः । इत्यमरः ॥ (यथा, प्रद्युम्नविजये । ७ अङ्के ।
"मन्त्रिन् ! कुलिङ्गसाहसिकत्वं किलैतस्य पाप-पाटच्चरस्य ॥")

**पाटनं**, क्ली, (पट + णिच् + भावे ल्युट् ।) छेद नम् । यथा, --
"अस्थिभङ्गं गवां कृत्वा लाङ्गूलच्छेदनं तथा ।
पाटने कर्णशृङ्गाणां मासार्द्धन्तु यवान् पिबेत् ॥"
अधित्यकायामिव धातुमत्यां
लोध्रद्रुमं सानुमतः प्रफुल्लम् ॥")

**पाटलद्रुमः**, पुं, (पाटलस्य पाटलपुष्पस्य द्रुमो वृक्षः । यद्वा, पाटलो द्रुमः इति नित्यकर्म्म धारयः ।) पुन्नागवृक्षः । इति राजनिर्घण्टः ॥

**पाटला**, स्त्री, (पाटलो वर्णोऽस्त्यस्याः । पाटल-वर्णत्वादेवास्यास्तथात्वम् ।) दुर्गा । यथा, --
"अपर्णनिकपर्णा च पाटला पाटलावती ॥"
इति तन्त्रसारे तस्याः शतनामस्तोत्रम् ॥
पुष्पवृक्षविशेषः । पारुल इति भाषा ॥ तत्-पर्य्यायः । पाटलिः २ अमोघा ३ काचस्थाली ४ फलेरुहा ५ कृष्णवृन्ता ६ कुवेराक्षी ७ । इत्य-मरः ॥ ताम्रपुष्पी ८ कुम्भिका ९ सुपुष्पिका १० वसन्तदूती ११ स्थाली १२ स्थिरगन्धा १३ अम्बवासी १४ कालवृन्ती १५ । इति राज-निर्घण्टः ॥ मधुदूती १६ कालास्थली १७ अलि-वल्लभा १८ । इति भावप्रकाशः ॥ कामदूती १९ कुम्भी २० तोयाधिवासिनी २१ । इति रत्न-माला ॥ अस्या गुणाः । तिक्तत्वम् । कटुत्वम् । उष्णत्वम् । कफवातशोफाध्मानवमिश्वाससन्नि पातनाशित्वञ्च । इति राजनिर्घण्टः ॥ तुव-रत्वम् । अनुष्णत्वम् । दोषत्रयारुचिहिक्का-तृष्णानाशित्वञ्च ॥ तत्पुष्पगुणाः । कषायत्वम् । मधुरत्वम् । हिमत्वम् । क्लेद्यत्वम् । कफास्र-नाशित्वञ्च । तत्फलगुणाः । पित्तातिसारदाह-नाशित्वम् । हिक्कास्रपित्तकारित्वञ्च । इति भावप्रकाशः ॥ * ॥ तदुत्पत्तिर्यथा, --
"गते ब्रह्मणि सर्व्वोऽपि तपः संहृत्य तं तदा ।
लिङ्गं चित्रबने सूक्ष्मं प्रतिष्ठाप्य चचार ह ॥
विचरन्तं तदा भूयो महेशं कुसुमायुधः ।
आरात् स्थित्वाग्रतो धन्वी सन्तापयितुमुद्यतः ॥

भवः । "तत्र भवः ।" ४ । ३ । ५३ ।
इत्यण् ।)
पञ्चालदेशोद्भवः ॥

**पाञ्चालः**, पुं, (पञ्चभिः प्रधानाभिर्नदीभिरलति
पर्य्याप्नोतीति पञ्चालः । ततः स्वार्थे
अण् ।)
देशविशेषः । स तु द्रुपदराजनगरम् ।
अधुना
फरक्कावाद इति ख्यातः ॥ (यथा,
महाभारते ।
१ । १३८ । ३ ।
"पाञ्चालराजं द्रुपदं गृहीत्वा रणमूर्द्धनि ।
पर्य्यानयत भद्रं वः सा स्यात्
परमदक्षिणा ॥"
तद्देशवासिषु पुं भूम्नि ।) यथा, --
"पाञ्चालाश्चेदिमत्स्याश्च शूरसेनाः
पटच्चराः ।"
इत्यादि विराटपर्व्व ॥
(ब्रह्मदत्तस्य सहचरविशेषः । यथा,
हरिवंशे ।
२३ । २२ ।
"पाञ्चालकण्डरीकाभ्यां तस्य
सख्यमभूत्तदा ॥")

**पाञ्चालिका**, स्त्री, (पाञ्चाली + स्वार्थे कन् ! ततो
ह्रस्वष्टाप् च ।)
वस्त्रदन्तादिकृतपुत्तलिका ।
तत्पर्य्यायः । पुत्रिका २ । इत्यमरः ॥
पञ्चा-
लिका ३ । इति भरतः ॥ शालभञ्जी ४
। इति
हेमचन्द्रः ॥ पाञ्चाली ५ शालभञ्जिका
६ । इति
जटाधरः ॥ (रीतिविशेषः । तल्लक्षणं
यथा,
साहित्यदर्पणे । ९ । ५ ।
"--वर्णैः शेषैः पुनर्द्वयोः ।
समस्तपञ्चषपदो बन्धः पाञ्चालिका
मता ॥")

**पाञ्चाली**, स्त्री, (पञ्चभिर्वर्णैरलतीति । अल +
अच् । गौरादित्वात् ङीष् ।) पाञ्चालिका
।
इति प्रायश्चित्ततत्त्वे यमः ॥

**पाटलं**, क्ली, (पाटलो वर्णोऽस्यास्तीति । पाटल +
अर्श आदित्वादच् ।) पाटलीपुष्पम् । इत्य-
मरः ॥ गोलावाख्यपुष्पमिति केचित् ॥ (यथा,
भागवते । ४ । ६ । १४ ।
"पाटलाशोकवकुलैः कुन्दैः कुरुवकैरपि ॥"
पाटलेति केचित् ॥)

**पाटलः**, पुं, (पाटयतीति । पट + णिच् + वृषादि-
त्वात् कलच् ।) श्वेतरक्तवर्णः । गोलाविरङ्ग
इति भाषा । आशुधान्यम् । इत्यमरः ॥ अस्य
गुणाः । अत्युष्णत्वम् । बद्धनिष्यन्दित्वम् ।
त्रिदोष-
कारित्वञ्च । इति राजवल्लभः ॥ तद्वर्णयुक्ते, त्रि ॥
(यथा, रघौ । २ । २९ ।
"स पाटलायां गवि तस्थिवांसं
धनुर्द्धरः केशरिणं ददर्श ।
ततस्तमग्रतो दृष्ट्वा क्रोधाध्मातदृशा हरः ।
स्मरमालोकयामास शिखाग्राच्चरणान्तिकम्
॥
आलोकितस्त्रिनेत्रेण मदनो द्युतिमानपि ।
प्रादह्यत तदा ब्रह्मन् पादादारभ्य कक्षवत् ॥
प्रदह्यमानौ चरणौ दृष्ट्वासौ कुसुमायुधः ।
उत्ससर्ज धनुः श्रेष्ठं तज्जगामाथ पञ्चधा ॥
यदासीन्मुष्टिबन्धस्तु रुक्मपृष्ठो महाप्रभः ।
स चम्पकतरुर्जातः स्रग्गन्धाढ्यो गुणाकृतिः
॥
नाहस्थानं शुभाकारं यदासीद्वज्रभूषितम् ।
तज्जातं केशरारण्यं वकुलं नामतो नगैः ॥
या च कोटी शुभा ह्यासीदिन्द्रनीलविभूषिता ।
जाता सा पाटला रम्या भृङ्गराजिविभूषिता
॥"
इति वामने ६ अध्यायः ॥
रक्तलोध्रः । इति शब्दचन्द्रिका ॥

**पाटलापुष्पसन्निभं**, क्ली, (पाटलापुष्पस्य सन्निभा
सादृश्यं यत्र ।) पद्मकाष्ठम् । इति राज-
निर्घण्टः ॥

**पाटलिः**, स्त्री, (पाटि + भावे घञ् । पाटो दीप्तिसं
लातीति । ला + "अच इः ।" उणां ४ । १३८
।
इति इः । पाटलिपुष्पाणां अतिभुश्रीकतापे
वास्यातथात्वम् ।) पाटलापुष्पवृक्षः ।
इत्यमरः ॥

(यथा, महाभारते । ७ । २२ । १५ ।
"तन्तु पाटलिपुष्पाणां समवर्णा हयोत्तमाः
।
वहमाना व्यराजन्त मत्सस्यामित्रघातिनः
॥")

**पाटलिपुत्रं**, क्ली, (पाटलिः पुत्त्र इव यस्य । बहु-
पाटलिवृक्षोत्पत्तिस्थानत्वेनास्य तथात्वम्
।)
नगरविशेषः । पाटना इति ख्यातः ।
तत्पर्य्यायः ।
कुसुमपुरम् २ । इति हेमचन्द्रः । ४ । ४२
॥
पुष्पपुरम् ३ पाटलिपुत्त्रकम् ४ । इति
त्रिकाण्ड-
शेषः ॥ (इदन्तु गङ्गातीरस्थम् । यथा
हितोप-
देशे । "अस्ति भागीरथीतीरे
पाटलीपुत्त्रनाम-
धेयं नगरम् ॥"
इदमेव पुरा मगधानां राजधानी आसीत् ।
अत्रत्यसुदर्शननाम्नो भूपतेः पुत्त्राणां
नीति-
विद्याधिगमाय विद्वत्कुलचूडामणिना
विष्णु-
शर्म्मणा पञ्चतन्त्रहितोपदेशादयो ग्रन्था
विर-
चिताः ॥)

**पाटली**, स्त्री, (पाटं दीप्तिं लातीति । ला + कः ।
स्त्रियां ङीप् ।) कटभीवृक्षः । मुष्ककवृक्षः
।
इति राजनिर्घण्टः ॥ (यथा, इन्द्रजाले १
अध्याये ।
"पुष्ये रुद्रजटामूलं मुखस्थं कारयेद्बुधः ।
ताम्बुलादौ प्रदातव्यं वश्या भवति
निश्चितम् ।
तथैव पाटलीमूलं ताम्बुलेन तु वश्यकृत्
॥")

**पाटवं**, क्ली, (पटोर्भावः कर्म्म वा । पटु + "इग-

"लाटीनेत्रपुटीपयोधरघटीखातटीदुष्कुटी
पाटीरद्रुमवर्णनेन कविभिर्मूढैर्दिनं नीयते ।
गोविन्देति जनार्द्दनेति जगतां नाथेति कृष्णेति च
व्याहारैः समयस्तदेकमनसांपुंसामतिक्रामति
॥")

**पाट्यं**, क्ली, (पट्टस्य इदम् । "तस्येदम् ।" ४ । ३ ।
१२० । इत्यण् ।) पट्टशाकम् । यथा, --
"पाट्यशाकन्तु मधुरं दुर्जरं गुरुपाकि च ॥"
इति राजवल्लभः ॥
(पाटि + यत् । पाटनीये । छेद्ये, त्रि ॥)

**पाठः**, पुं, (पठनमिति । पठ + भावे घञ् ।)
विधिना वेदस्याभ्यसनम् । (पठ + णिच् + भावे
घञ् ।) शिष्याणामध्यापनम् । तत्पर्य्यायः ।
महायज्ञः २ ब्रह्मयज्ञः ३ पठनम् ४ पाठना ५
पाठनम् ६ अध्ययनम् ७ अध्यापनम् ८ अध्या-
पना ९ अभ्यसनम् १० । इत्यमरभरतौ ॥
निपाठः ११ निपठः १२ । इति सङ्कीर्णवर्गे
अमरः ॥ * ॥ माहात्म्यादिपाठे तु ॐ नारा-
यणाय नमः ॐ नराय नमः ॐ नरोत्तमाय
नमः ॐ देव्यै नमः ॐ सरस्वत्यै नमः ॐ
व्यासाय नमः । इति नत्वा पाठ्यम् ।
"नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥"
इति विधेः ॥
एवञ्च भागवतीयसूतोक्तौ उदीरयेत् इत्यस्य
स्वयन्तथा उदीरयन्नन्यान् पौराणिकानुपशिक्ष-
यतीति
श्रीधरस्वामिव्याख्यानमनुशासनविरुद्धम्।
चैवेति भारतपाठाच्चकारेण व्यासो लब्धः ।
भागवते चैवेत्यत्र व्यास इति साक्षाल्लिखितम् ।
जयपदार्थमाह ब्रह्मचारिकाण्डे भविष्यपुराणम् ॥
"अष्टादशपुराणानि रामस्य चरितन्तथा ।
विष्णुधर्म्मादिशास्त्राणि शिवधर्म्माश्च भारत ! ॥
कार्ष्णञ्च पञ्चमो वेदो यन्महाभारतं स्मृतम् ॥"
कार्ष्ण्यं कृष्णद्वैपायनप्रणीतम् ।
"सौराश्च धर्म्मा राजेन्द्र मानवोक्ता महीपते ।
जयेति नाम एतेषां प्रवदन्ति मनीषिणः ॥"
जयव्यनेन संसारमिति जयस्तत्तद्ग्रन्थः । एव-
ञ्चार्थानवलोकनात् आचाराद्वा स्तोत्रादावेष
श्लोकः पठ्यते । मत्स्यसूक्ते वाराहीतन्त्रे च ।

ततश्च मार्कण्डेयपुराणीयदेवीमाहात्म्यस्यादौ
ऋषिच्छन्दादिकं पठेत् । तद्यथा । प्रथम-
चरितस्य ब्रह्म ऋषिर्महाकाली देवता गायत्त्री
छन्दो नन्दा शक्ती रक्तदन्तिकाबीजमग्निस्तत्त्वं
महाकालीप्रीत्यर्थं जपे विनियोगः । मध्यम-
चरितस्य विष्णुरृषिर्म्महालक्ष्मीर्द्देवतानुष्टुप्
छन्दः शाकम्भरी शक्तिर्दुर्गा बीजं सूर्य्यस्तत्त्वं
महालक्ष्मीप्रीत्यर्थं जपे विनियोगः ।
उत्तरचरि-
तस्य रुद्र ऋषिः सरस्वती देवता उष्णिक्
छन्दो
भीमा शक्तिर्भ्रामरीबीजं वायुस्तत्त्वं सरस्वती-
प्रीत्यर्थं जपे विनियोगः ॥
नैयतकालिककल्प-
तरौ भविष्यपुराणम् ॥
"इतिहासपुराणानि श्रुत्वा भक्त्या महीपते ।
मुच्यते सर्व्वपापेभ्यो ब्रह्महत्यादिभिर्व्विभो ॥
ब्राह्मणं वाचकं विद्यान्नान्यवर्णजमादरात् ।
श्रुत्वान्यवर्णजाद्राजन् ! वाचकान्नरकं व्रजेत्
॥"
तथा ।
"देवार्च्चामग्रतः कृत्वा ब्राह्मणानां विशेषतः ।
ग्रन्थिञ्च शिथिलं कुर्य्याद्वाचकः कुरुनन्दन ॥
पुनर्ब्बध्नीत तत् सूत्रं न मुक्त्वा धारयेत्
क्वचित् ।
हिरण्यं रजतं गाश्च तथा कांस्योपदोहनाः ॥
दत्त्वा तु वाचकायेह श्रुतस्याप्नोतियत् फलम्
।"
कांस्योपदोहनाः कांस्यक्रोडाः ।
"वाचकः पूजितो येन प्रसन्नस्तस्य देवताः
॥"
तथा ।
"ज्ञात्वा सर्व्वसमाप्तिञ्च पूजयेद्वाचकं बुधः ।
आत्मानमपि विक्रीय य इच्छेत् सफलं क्रतुम्
॥"
तथा ।
"विस्पष्टमद्रुतं शान्तं स्पष्टाक्षरपदन्तथा ।
कलस्वरसमायुक्तं रसभावसमन्वितम् ॥
बुध्यमानः सदर्थं वै ग्रन्थार्थं कृत्स्नशो नृप ।
ब्राह्मणादिषु सर्व्वेषु ग्रन्थार्थञ्चार्पयेन्नृप ॥

न्ताच्च लघुपूर्ब्बात् ।” ५ । १ । १३१ ।
इत्यण् ।)
षट्‌ता । यथा । “पाटवं संस्कृतोक्तिषु ।”
इति
हितोपदेशः ॥ (दाढर्य्यम् । यथा, पञ्चतन्त्रे
। ४ । ६४ ।
“विक्षिप्यते कदाचित् धीः कर्म्मणा भोग-
दायिना ।
पुनः समाहिता सा स्यात्
तदैवाभ्यासपाट-
वात् ॥”)
आरोग्यम् । इति राजनिर्घण्टः ॥ (पटो-
श्छात्राः पाटवाः । इति सिद्धान्तकौमुदी
॥)

**पाटविकः**, त्रि, (पाटवं पटुत्वमस्त्यस्य । पाटव +

ठन् ।) पटुः । धूर्त्तः । इति त्रिकाण्डशेषः
॥

**पाटहिका**, स्त्री, (पाटहं पटहावयवः तद्वदा-

कृतिरस्त्यस्याः । पाटह + ठन् ।
ढक्कावाद्या-
कृतिसदृशत्याद्वास्यास्तथात्वम् ।) गुञ्जा
।
इति हारावली । १४५ ॥

**पाटितं**, त्रि, (पाश्वते स्म इति । पट + णिच् +

क्तः ।) कृतपाटनम् । तत्पर्य्यायः ।
दारितम् २
भिन्नम् ३ । इति हेमचन्द्रः ॥ (यथा,
सुश्रुते ।
२ । १६ ।
“पाटितमनु बहुविदारितं वेदनावच्च ॥”)

**पाटी**, स्त्री, (पाटयतीति । पाटि + “सर्व्वधातुभ्य

इन् ।” उणां ४ । ११७ । इति इन् ।
स्त्रियां वा
ङीष् ।) वृलाक्षुपः । इति राजनिर्घण्टः ॥
परि-
पाटी । अनुक्रमः । यथा, “पाटीं
सद्‌गणितस्य
वच्मि चतुरप्रीतिप्रदां प्रस्फुटाम् ।”
इत्यादि
लीलावती ॥

“प्रणवञ्चादौ जप्त्वा च स्तोत्रं वा संहितां पठेत् ।
अन्ते च प्रणवं दद्यादित्युवाचादिपूरुषः ॥
सर्व्वत्र पाठे विज्ञेयो ह्यन्यथा विफलं भवेत् ।
शुद्धेनानन्यचित्तेन पठितव्यं प्रयत्नतः ॥
न कार्य्यासक्तमनसा कार्य्यं स्तोत्रस्य वाचनम् ।
आधारे स्थापयित्वा तु पुस्तकं वाचयेत् सुधीः
॥
हस्तसंस्थापनादेव यस्मादल्पफलं भवेत् ।
स्वयञ्च लिखितं यत्तु कृतिना लिखितन्न यत् ॥
अब्राह्मणेन लिखितं तच्चापि विफलं भवेत् ।
ऋषिच्छन्दादिकं न्यस्य पठेत् स्तोत्रं विचक्षणः
॥
स्तोत्रे न दृश्यते यत्र प्रणवन्यासमाचरेत् ।
सङ्कल्पिते स्तोत्रपाठे संख्यां कृत्वा पठेत् सुधीः
॥
अध्यायं प्राप्य विरमेन्न तु मध्ये कदाचन ।
कृते विरामे मध्ये तु अध्यायादिं पठेन्नरः ॥”

य एवं वाचयेद्‌ब्रह्मन् स विप्रो व्यास उच्यते
॥”
तथा ।
“सप्तस्वरसमायुक्तं काले काले विशाम्पते ।
प्रदर्शयन्रसान् सर्व्वान् वाचयेद्वाचको नृप ॥”
इति तिथ्यादितत्त्वम् ॥ * ॥
पाठस्याष्टादशदाषा यथा, --
“शङ्कितं भीतमुद्धुष्टमव्यक्तमनुनासिकम् ।
विस्वरं विरसञ्चैव विश्लिष्टं विषमाहतम् ॥
काकस्वरं शिरसितं तथा स्थानविवर्ज्जितम्
।
व्याकुलं तालहीनञ्च पाठदोषाश्चतुर्द्दश ॥
संगीतं शिरसः कम्पमल्पकण्ठमनर्थकम् ॥”
इति मार्कण्डेयपुराणम् ॥ * ॥
अध्ययनक्रमो यथा, --
“आचम्य प्रयतो नित्यमधीयीत उदङ्मुखः ।
उपसंगृह्य तत्पादौ वीक्ष्यमाणो गुरोर्मुखम् ॥”
अध्यापनक्रमो यथा, --
“अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति
चाचमेत् ।
प्राक् कूलान् पर्य्युपासीनः पवित्रैश्चैव
पावितः ॥
प्राणायामैस्त्रिभिः पूतस्तत ओङ्कारमर्हति ।
ब्राह्मणः प्रणवं कुर्य्यादन्ते च विधिवद्‌द्विजाः
॥

कुर्य्यादध्यापनं नित्यं स ब्रह्मादीनि पूर्ब्बतः ।
सर्व्वेषामेव भूतानां वेदश्चक्षुः सनातनः ॥
अधीयीताध्ययन्नित्यं ब्राह्मण्याद्धीयतेऽन्यथा ॥”
इति कौर्म्मे उपविभागे १३ अध्यायः ॥ * ॥
पाठनिषेधकालो यथा । ग्रहणेऽनध्यायो न दृष्टोपरागमात्रविषयः ।
“त्र्यहं नकीर्त्तयेद्‌ब्रह्म राज्ञो राहोश्च सूतके ।”
इति मनुवचनेन सामान्यतो निषेधात् ॥
एष त्र्यहानध्यायो ग्रस्तास्तविषय इति मिता-क्षरा अन्यत्र त्वहोरात्रमनध्यायो याज्ञ-वल्क्यात् । यथा, --
“सन्ध्यागर्ज्जितनिर्घातभूकम्पोल्कानिपातने।
समाप्य वेदं द्युनिशमारण्यकमधीत्यच ॥
पञ्चदश्यां चतुर्द्दश्यामष्टम्यां राहुसूतके ।
ऋतुसन्धिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य च ॥”
द्युनिशमहोरात्रम् । चैत्रश्रावणमार्गशीर्षाणा-मादिप्रतिपदो नित्याः इति ब्रह्मचारिकाण्डधृत-हारीतवचने एतासामनध्याये नित्यत्वाभिधाना-दब्यासां काम्यत्वम् । आदिप्रतिपदः शुक्ल-प्रतिपदः ॥
“सा च यौधिष्ठिरी सेना गाङ्गेयशरताडिता ।
प्रतिपत्पाठशीलानां विद्येव तनुतां गता ॥”
इति व्यासवचनमपि तावन्मात्रपरम् ॥ * ॥
गोतमोक्ताकालिकानध्यायायथा, --
आकालिकनिर्घातभूकम्पराहुर्द्दर्शनोल्का इति आकालिका इति । निमित्तकालमारभ्य परेद्यु-र्यावत् स एव कालस्तावदकालस्तत्र भवाः ॥
तथा, --
“विद्युत्स्तनितवज्रेषु महोल्कानाञ्च संप्लवे ।
आकालिकमनध्यायमेतेषु मनुरब्रवीत् ॥” * ॥
उल्कादिषु प्रतिप्रसवमाह मनुः ।
“वेदोपकरणे चैव स्वाध्याये चैव नित्यके ।
नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥”
पराशरभाष्ये कूर्म्मपुराणम् ।
“अनध्यायस्तु नाङ्गेषु नेतिहासपुराणयोः ।
न धर्म्मशास्त्रेष्वन्येषु पर्व्वस्वेतानि वर्ज्जयेत् ॥”
नारदः ।
न्तरे । अत्र पूर्ब्बवचनमुत्तरमीमांसाध्यायिभिः परिगृहीतम् । परवचनन्तु अन्यग्रन्थपरम् ।
यत्तु निर्णयामृतधृतम् ।
“प्रतिपल्लेशमात्रेण कलामात्रेण चाष्टमी ।
दिनं दूषयते सर्व्वं सुरा गव्यघटं यथा ॥”
तद्दूषयत इत्यभिधानात् पूर्ब्बवर्त्तितामात्रेण सर्व्वदिनदूषणाय । राजमार्त्तण्डे ।
“प्रे को चै चा द्वितीयास्ताः प्रेतपक्षे गते तु या ।
या तु कोजागरे जाते चैत्रावल्याः परेऽपि या ॥
चातुर्मास्ये समाप्ते च द्वितीया या भवेत्तिथिः ।
सर्व्वास्वेतास्वनध्यायः पुराणैः परिकीर्त्तितः ॥”
इति तिप्यादितत्त्वम् ॥

**पाठकः**, त्रि, (पाठयति अध्यापयतीति । पठ + णिच् + ण्वुल् ।) उपाध्यायः । इति हेमचन्द्रः । १ । ७८ ॥ (यथा, महाभारते । ३ । ३१२ । १०५ ।
“पठकाः पाठकाश्चैव ये चान्ये शास्त्रचिन्तकाः ।
सर्व्वे व्यसनिनो मूर्खा यः क्रियावान् स पण्डितः ॥”)
धर्म्मभाणकः । इति त्रिकाण्डशेषः ॥ (पठ-तीति । पठ + ण्वुल् । वाचकः । अध्येता ।
“चर्व्वणं गिलनञ्चापि कासितं श्वासितन्तथा ।
नीचोच्चञ्चैव गम्भीरं वर्ज्जयेत् पाठकः सुधीः ॥”
इति हारीते प्रथमस्थाने प्रथमेऽध्याये ॥)

**पाठभूः**, स्त्री, (पाठस्य भूर्भुमिः स्थानमित्यथः ।) ब्रह्मारण्यम् । वेदादिपाठस्थानम् । इति त्रिकाण्डशेषः ॥

**पाठमञ्जरी**, स्त्री, (मञ्जु सुन्दरं यथा तथा रायति शब्दायते इति । मञ्जु + रै + कः । स्त्रियां ङीप् । पृषोदरादुलोपः । ततः पाठस्य मञ्जरी वाचिकेव ।) शारी पक्षिणी । इति शब्द-माला ॥

**पाठशाला**, स्त्री, अध्यनगृहम् । पाठस्य अध्य-यनस्य शाला गृहम् । इति षष्ठीतत्पुरुष-
गन्धपर्णी चित्रपुष्पी श्रेयसी सुखवाचिका ।
छिन्नपत्री भूरिमल्लिर्विज्ञेया षोडशाह्वया ॥
अम्बष्ठा सकषायाम्ला कफकण्ठरुजापहा ।
वातामयवलासघ्नी रुचिकृद्दीपनी परा ॥”
इति राजनिर्घण्टः ॥
“पाठाम्बष्ठाम्बष्ठकी च प्राचीना पापचेलिका ।
एकाष्ठीला रसा प्रोक्ता पाठिका वरतिक्तिका ॥
पाठोष्णा कटुका तीक्ष्णा वातश्लेष्महरी लघुः ।
हन्ति शूलज्वरच्छर्द्दिकुष्ठातीसारहृद्रुजः ॥
दाहकण्डूविषश्वासकृमिगुल्मगलव्रणान् ॥”
इति भावप्रकाशः ॥

**पाठिका**, स्त्री, (पाठा + स्वार्थे कन् । टापि अत इत्वञ्च ।) पाठा । इति भावप्रकाशः ॥

**पाठी**, [न्] पुं, (पाठेव आकृतिर्विद्यते यस्य । पाठा + इनिः ।) चित्रकवृक्षः । इत्यमरः ॥ (पाठोऽस्त्यस्येति । “अत इनिठनौ ।” ५ । २ । ११५ ।
इति इनिः ।) पाठविशिष्टः ॥ (कर्म्मोपपदेनास्य प्रमाणं यथा, मार्कण्डेये । ६८ । २६ ।
“बन्दिनामथ सूतानां विटानां लास्यपाठि-नाम् ॥”)

**पाठीकुटः**, पुं, (पाठीं कुटतीति । कुट + “इगु-पधज्ञेति ।” ३ । १ । १३५ । इति कः ।) चित्रक-वृक्षः । इति राजनिर्घण्टः ॥

**पाठीनः**, पुं, (पाठिं पृष्टं नमयतीति । पाठि + नम + णिच् + “अन्येभ्योऽपीति ।” डः । “अन्येषा मपि दृश्यते ।” ६ । ३ । १३७ । इति दीर्घः ।)

"अयने विषुवे चैव शयने बोधने हरेः ।
अनध्यायस्तु कर्त्तव्यो मन्वादिषु युगादिषु ॥"
* ॥
सन्ध्यागर्जने शास्त्रचिन्तानिन्दामाहकृत्य-
चिन्तामणौ दुर्व्वासाः ।
"सन्ध्यायां गर्जिते मेघे शास्त्रचिन्तां करोति यः
।
चत्वारि तस्य नश्यन्ति आयुर्विद्या यशो बलम्
॥
प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिस्वने।
सज्योतिः स्यादनध्याय इत्याह भगवान् मनुः
॥"
इति मनुवचनं वर्षाविषयम् ॥ * ॥
अष्टम्यादिषु विशेषमाह हेमाद्रिधृतापस्तम्बः।
"उदयास्तमिते वापि मुहूर्त्तत्रयगामि यत् ।
तद्दिनं तदहोरात्रमनध्यायविदो विदुः ॥
केचिदाहुः क्वचिद्देशे यावत्तु दिननाडिकाः ।
तावदेव त्वनध्यायो न तन्मिश्रे दिनान्तरे ॥"
तद्दिनं तां तिथिं प्राप्येत्यर्थः । दिनान्तरे
तिथ्य-
समासनिष्पन्ना ॥

**पाठशालिनी**, स्त्री, (पाठेन शालते श्लाघते इति ।

शाल + णिनिः + ङीप् ।) शारी पक्षिणी ।
इति शब्दमाला ॥

**पाठा**, स्त्री, (पठ्यते बहुगुणवत्तया कथ्यते इति ।

पठ + कर्म्मणि घञ् । अजादित्वात् टाप् ।)
लताविशेषः । आकनादि इति भाषा । तत्-
पर्य्यायः । अम्बष्ठा २ अम्बष्ठिका ३ प्राचीना
४
पापचेलिका ५ यूथिका ६ स्थापनी ७ श्रेयसी
८
विद्धकर्णिका ९ एकाष्ठीला १० कुचेली ११
दीपनी १२ वनतिक्तिका १३ तिक्तपुष्पा १४
बृहत्तिक्ता १५ शिशिरा १६ वृकी १७ मालती
१८ वरा १९ देवी २० वृत्तपर्णी २१ । अस्या
गुणाः । तिक्तत्वम् । गुरुत्वम् । उष्णत्वम् ।
वातपित्तज्वरपित्तदाहातीसारशूलनाशित्वम्।
भग्नसन्धानकारित्वञ्च। इति वैद्यकम् ॥ * ॥
"अम्बष्ठा बालिका बाला शठाम्बा बालिका-
म्बिका ।
अम्बा च माचिका चैव दृढवल्का मयूरिका ॥
मत्स्यविशेषः । वोयालि इति भाषा । तत्-
पर्य्यायः । सहस्रदंष्ट्रः २ । इत्यमरः ॥
सहस्र-
दंष्ट्री ३ वोदालः ४ वदालकः ५ । इति
शब्द-
रत्नावली ॥ (यथा, मनुः । ५ । १६ ।
"पाठीनरोहितावाद्यौ नियुक्तौ
हव्यकव्ययोः ॥")
अस्य गुणाः । श्लेष्मलत्वम् । स्निग्धत्वम्
। मधुर-
त्वम् । कषायत्वम् । बल्यत्वम् । वृष्यत्वम्
। पाके
कटुत्वम् । रोचनत्वम् । वातपित्तजित्त्वञ्च
। इति
राजवल्लभः ॥ (यथा च ।
"पाठीनः श्लेष्मलो वृष्यो निद्रालुः
पिशिता-
शनः ।
दूषयेदम्लपित्तन्तु कुष्ठरोगं करोत्यसौ ॥"
इति सुश्रुते सूत्रस्थाने ४६ अध्यायः ॥)
पाठकः । गुग्गुलुद्रुमः । इति मेदिनी । ने,
८९ ॥

**पाठ्यं**, त्रि, (पठ्यते इति । पठ + "ऋहलोर्ण्यत् ।"

३ । १ । १२४ । इति ण्यत् ।) पठनीयम्
।
पठितव्यम् । यथा, --
"तिष्ठ रे तिष्ठ कण्ठोष्ठं कुण्ठयामि
हठादहम् ।
अपष्ठु पठतः पाठ्यमधिगोष्ठि शठस्य ते
॥"
इति नैषधे १७ सर्गः ॥

**पाणः**, पुं, (पण्यते व्यवह्रियतेऽनेनेति । पण +

करणे घञ् ।) पाणिः । इति शब्दचन्द्रिका
॥
(पण + भावे घञ् । पणनम् । समयः ।
यथा,
महाभारते । २ । ५७ । ८ ।
"दीव्यामहे पार्थिव ! मा विशङ्कां
कुरुष्व पाणञ्च चिरञ्च मा कृथाः ॥")

**पाणिः**, स्त्री, (पणायन्ते व्यवहरन्त्यस्यामिति ।

पण + "अशिपणाय्यो रुडायलुकौ च ।" उणां ४ । १३२ । इति इण् आयप्रत्ययस्य लुक् च ।) पण्यवीथी । हट्टः । इत्युणादिकोषः ॥

**पाणिः**, पुं, (पणायन्ते व्यवहरन्त्यनेन । पण ङ व्यवहारे + "अशिपणाय्यो रुडायलुकौ च ।" उणां ४ । १३२ । इति इण् आयप्रत्ययस्य लुक् च ।) स च मणिबन्धावध्यङ्गुलिपर्य्यन्तभागः । स तु गर्भस्थबालकस्य मासद्वयेन भवति ॥ इति सुखबोधः ॥ तत्पर्य्यायः । पञ्चशाखः २ शयः ३ समः ४ हस्तः ५ करः ६ । इत्यमरभरतौ ॥ भुजः ७ । इति जटाधरः ॥ कुलिः ८ । इति शब्दरत्नावली ॥ भुजादलः ९ । इति त्रिकाण्ड-शेषः ॥ (यथा, देवीभागवते । २ । २ । १९ ।

"मृगनाभिसुगन्धां तां कृत्वा कान्तां मनो-रमाम् ।
जग्राह दक्षिणे पाणौ मुनिर्म्मन्मथपीडितः ॥")

कुलिकवृक्षः । इति रत्नमाला ॥ कुलियाकडा इति भाषा ॥

**पाणिकच्छपिका**, स्त्री, (कच्छपः कूर्म्मस्तदाकारो-ऽस्त्यस्याः । कच्छप + ठन् । टापि अत इत्वञ्च । पाणिभ्यां कृता कच्छपिका कूर्म्माकृतिमुद्रा ।) कूर्म्ममुद्रा । यथा, --

**पाणिजः**, पुं, (पाणौ जायते इति । पाणि + जन् + "सप्तम्यां जनेर्डः ।" ३ । २ । ९७ । इति डः ।) नखः । इति हलायुधः ॥

**पाणितलं**, क्ली, (पाणितलमिव परिमाणमस्त्य-स्येति । अच् ।) कर्षपरिमाणम् । तोलकद्वयम् । इति वैद्यकपरिभाषा ॥ (पर्य्यायोऽस्या यथा, --

"कोलद्वयञ्च कर्षः स्यात् स प्रोक्ता पाणिमालिका ।
अक्षं पिचुःपाणितलं किञ्चित्पाणिश्च तिन्दुकम् ॥
विडालपदकञ्चैव सुवर्णं कवलग्रहः ।
उदम्बरश्च पर्य्यायैः कर्ष एव निगद्यते ॥"

इति शार्ङ्गधरे पूर्ब्बखण्डे प्रथमेऽध्याये ॥ पर्य्यायान्तरं यथा, --

"विद्याद्द्वौ द्रंक्षणौ कर्षं सुवर्णञ्चाक्षमेव च ।
विडालपदकन्तच्च पिचुम्पाणितलन्तथा ॥
तिन्दुकञ्च विजानीयात् कवडग्रहमेव च ॥"

इति चरके कल्पस्थाने द्वादशेऽध्याये ॥ पाणेस्तलम् ।) हस्ताधोभागः ॥ (यथा, मनौ । ४ । १४३ ।

"स्पृष्ट्वैतानशुचिर्नित्यमद्भिः प्राणानुपस्पृशेत् ।
गात्राणि चैव सर्व्वाणि नाभिं पाणितलेन तु ॥")

**पाणिनः**, पुं, (पणिनो मुनेर्गोत्रापत्यम् । पणिन् + अण् । "गाथिविदथिकेशिगणिपणिनश्च ।" ६ । ४ । १६५ । इति न टिलोपः ।) पाणिनि-मुनिः । इति त्रिकाण्डशेषः ॥

**पाणिनिः**, पुं, (पणिनो मुनेर्युवापत्यम् । पणिन् + इञ् । न टिलोपः ।) मुनिविशेषः । तत्पर्य्यायः । आहिकः २ दाक्षीपुत्त्रः ३ शालङ्की ४ पाणिनः ५ शालातुरीयः ६ । इति त्रिकाण्डशेषः ॥ * ॥ (अयं हि पणिन्-वंशसम्भूतः प्रसिद्धो व्याकरण-कर्त्ता । अस्य माता दाक्षी इत्याख्यया विश्रुता । यथा, पातञ्जलकारिकायाम् । १ । १ । २० ।

"सर्व्वे सर्व्वपदादेशा दाक्षीपुत्त्रस्य पाणिनेः ॥"

तथाच शिक्षायाम् । ५६ ।

"शङ्करः शाङ्करीं प्रादाद्दाक्षीपुत्त्राय धीमते ।
वाङ्मयेभ्यः समाहृत्य देवीं वाचमिति स्थितिः ॥"

अस्य शालातुरीय इत्याख्यापि दृश्यते । यथा, अभिधानचिन्तामणौ । ३ । ५१५ ।

प्रदेशः पाणिनेः पूर्ब्बपुरुषाणां वासस्थानमित्ये-वावगम्यते नतु तस्येति ।

पुरा किल कात्यायननामा मुनिः सप्तलक्ष-श्लोकात्मकं बृहत्कथामिधानं ग्रन्थं विरचय्य काणभूतये श्रावयामास । सोमदेवभट्टस्तु ततः सारांशं समुद्धृत्य कथासरित्सागर इत्याख्यया प्रसिद्धं ग्रन्थं निर्म्मितवान् तस्मादेषाख्यायिका समधिगम्यते । यथा, तत्रैव । ४ । २० -- ९५ ।

"अथ कालेन वर्षस्य शिष्यवर्गो महानभूत् ।
तत्रैकः पाणिनिर्नाम जडबुद्धितरोऽभवत् ॥
स शुश्रूषापरिक्लिष्टः प्रेषितो वर्षभार्य्यया ।
अगच्छत् तपसे खिन्नो विद्याकामो हिमालयम् ॥
तत्र तीव्रेण तपसा तोषितादिन्दुशेखरात् ।
सर्व्वविद्यामुखं तेन प्राप्तं व्याकरणं नवम् ॥
ततश्चागत्य मामेव वादायाह्वयते स्म सः ।
प्रवृत्ते चावयोर्वादे प्रयाताः सप्तवासराः ॥
अष्टमेऽह्नि मया तस्मिन् जिते तत्समनन्तरम् ।
नभःस्थेन महाघोरो हूङ्कारः शम्भुना कृतः ॥
तेन प्रनष्टमैन्द्रन्तदस्मद्व्याकरणं भुवि ।
जिताः पाणिनिना सर्व्वे मूर्खीभूता वयं पुनः ॥
अथ संजातनिर्व्वेदः स्वगृहस्थितये धनम् ।
हस्ते हिरण्यदत्तस्य विधाय बणिजो निजम् ॥
उक्त्वा तच्चोपकोशायै गतवानस्मि शङ्करम् ।
तपोभिराराधयितुं निराहारो हिमाचलम् ॥"
"अत्रान्तरे तुषाराद्रौ कृत्वा तीव्रतरं तपः ।
आराधितो मया देवो वरदः पार्व्वतीपतिः ॥
तदैव तेन शास्त्रं मे पाणिनीयं प्रकाशितम् ।
तदिच्छानुग्रहाद्वेव मया पूर्णीकृतञ्च तत् ॥"

"पाणिकच्छपिकां कुर्य्यात् कूर्म्मम‌न्त्रेण साधकः ।
तत्र संस्कृतपुष्पेण पूजयेदात्मनो वपुः ॥
पूजितं तेन पुष्पेण देवत्वं स्वस्य जायते ॥"
कूर्म्ममन्त्रो यथा, --
"द्वितीयं वैष्णवीतन्त्रं बीजं बिन्द्विन्दुसंयुतम् ।
षष्ठस्वरो परिचरं कूर्म्मबीजं प्रकीर्त्तितम् ॥"
इति कालिकापुराणे ५६ अध्यायः ॥

**पाणिगृहीती**, स्त्री, (पाणिर्गृहीतो यस्याः ।
"पाणिगृहीती भार्य्यायाम् ।" ४ । १ । ५२ ।
इत्यस्य वार्त्तिकोक्त्या ङीष् ।) विधानेनोढा ।
इत्यमरः । २ । ६ । ५ ॥

**पाणिग्रहणं**, क्ली, (पाणेर्ग्रहणं यत्र ।) विवाहः ।
इति हेमचन्द्रः । ३ । १८२ ॥ (यथा, रघुः ।
७ । २९ ।
"इति स्वसुर्भोजकुलप्रदीपः
सम्पाद्य पाणिग्रहणं स राजा ।
महीपतीनां पृथगर्हनार्थं
समादिदेशाधिकृतानधिश्रीः ॥")

**पाणिघः**, पुं, (पाणिं पाणिना वा हन्तीति ।
हन + "पाणिघताडघौ शिल्पिनि ।" ३ । २ ।
५५ । इति टक् टिलोपो घत्वञ्च निपात्यते ।)
पाणिवादः । पाणिना मृदङ्गादिवाद्यम् । पाणिं
वा हन्ति यः । यः पाणिनैव मृदङ्गादिवाद्य-
मतपादयति तत्र । यः पाणिना मृदङ्गमिव
पाणिं वादयति तत्र च । इत्यमरभरतौ ॥

**पाणिघातः**, पुं, (पाणिना हन्तीति । हन् +
अशिल्पित्वात् अण् ।) पाणिताडकः । इति

" -- अथ पाणिनौ ।
शालातुरीयदाक्षेयौ -- ॥"
"गान्धारप्रदेशविशेषशलातुरग्रामजातत्वा-
देवास्य तथा नाम ।" इति चिन्तामणिटीका ॥
परे तु शलातुरग्रामोऽस्य जन्मस्थानमिति न
स्वीकुर्व्वन्ति । यतः शलातुरोऽभिजनोऽस्य इति
व्युत्पत्त्या शालातुरशब्देन शलातुरदेशोद्भवे
जने एवार्थो नावगम्यते । अष्टाध्यायीसूत्र-
पाठस्य "तूदीशलातुरवर्म्मतीकूचवारात् ढक्
छण् ढञ् यकः ।" ४ । ३ । ९४ । सूत्रात् अभि-
जनार्थे एव छण्प्रत्ययः । वृत्तिकारभट्टोजी-
दीक्षितेन तु "अभिजनश्च ।" ४ । ३ । ९० ।
इति सूत्रे "यत्र स्वयं वसति स निवासः । यत्र
पूर्व्वैरुषितं सोऽभिजनः ।" इत्यभिजनशब्द-
स्यार्थः प्रदर्शितः । अतः स्पष्टतः शलातुर-

"वर्षोऽथ मन्मुखादैच्छत् श्रोतुं व्याकरणं नवम् ।
ततः प्रकाशितं स्वामिकुमारेणैव तस्य तत् ॥
ततो व्याडीन्द्रदत्ताभ्यां विज्ञप्तो दक्षिणां प्रति ।
गुरुर्वर्षोऽब्रवीत् स्वर्णकोटिर्मे दीयतामिति ॥
अङ्गीकृत्य गुरोर्वाक्यं तौ च मामित्यवोचताम् ।
एहि राज्ञः सखे ! नन्दात् याचितुं गुरुदक्षिणाम्
गच्छामो नान्यतोऽस्माभिरियत् काञ्चनमाप्यते ।
नवाधिकाया नवतेः कोटीनामधिपो हि सः ॥"
इत्युपाख्यानेन पाणिनिः कात्यायनस्य राज्ञो-
नन्दस्य च समसामयिक इत्येवायाति । परं
कात्यायनपाणिन्योः शब्दशास्त्रपाठेन पाणिनिः
कात्यायनात् पूर्ब्बतन इत्यनायासेनैव विज्ञायते ।
यतः कात्यायन एव पाणिनिकृतव्याकरणस्य
वार्त्तिककारः । स च स्वकृतग्रन्थे विदुषां वरं
पाणिनिं आचार्य्यत्वेन स्वीकृतवान् । [६ । ४ ।
१०४ । सूत्रस्य वार्त्ति ।] पाणिनिस्तु स्वीय-
व्याकरणे पूर्ब्बतनानां बहूनां विदुषां नामोल्लेखं
कृतवान् परं कुत्रापि कात्यायनस्य नाम नाभि-
हितवानतः स्पष्टतोऽवगम्यते पाणिनिः कात्या-
यनात् वृद्धतर इति ।

अनेन महात्मना पाणिना रचितं व्याकरणं

पाणिनीयाष्टकमित्याख्यया प्रसिद्धम् । कात्ययन

एवास्य वार्त्तिकं विधाय तीव्रसमालोचना-
ञ्चकार । परं पतञ्जलिः सूत्रपाठस्य वार्त्तिकस्य
च महाभाष्यं विधाय सर्व्वतः प्रमादपरिशून्योऽयं
पाणिनीयाष्टाध्यायीग्रन्थइति प्रदर्शयन् कात्या-
यनतीव्रदृष्टेः ररक्षैणं समादरणीयं ग्रन्थमुत्त-
मम् । अष्टाध्यायीप्रारम्भे तु चतुर्द्दशसूत्राणि
सन्ति तानि तु प्रत्याहारसूत्राणि ।
अष्टाध्यायीसूत्रपाठे, आपिशलिः । ६ । १ । ९२
।
गालवः । ६ । ३ । ६१ । चाक्रवर्म्मणः । ६ । १ ।
१३० । स्फोटायनः । ६ । १ । १२३ । काश्यपः
।
८ । ४ । ६७ । गार्ग्यः । ८ । ४ । ६७ । भार-
द्वाजः । ७ । २ । ६३ । सेनकः ५ । ४ । ११२ ।
शाकटायनः । ३ । ४ । १११ । शाकल्यः । १ ।
१ । १६ ।
एतेषां पूर्ब्बतनवैयाकरणानां नामानि सन्ति ।
अत्र ३९९६ संख्यकानि सूत्राणि विद्यन्ते ।
काश्मीरराजस्य जयापीडस्य राजत्वसमये
पाणिनिव्याकरणं वार्त्तिकेन महाभाष्येण च
सह विशेषविद्यार्थिसुधीवरविद्वज्जनशिक्षार्थं
प्रचलितमासीत् । यथा, राजतरङ्गिण्याम् । ४ ।
६३८ -- ६४० ।
“नितान्तं कृतकृत्यस्य गुणवृद्धिविधायिनः ।
श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरम् ॥
भाष्यव्याख्याक्षणे श्लोकैर्व्वैलक्षण्यहतैः कृतः ।
सोऽयं तस्य विपर्य्यासो बुधैरिव विवर्त्तितः ॥
कृतविप्रोपसर्गस्य भूतनिष्ठाविधायिनः ।
श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरम् ॥”
कात्यायनकृतवार्त्तिकात् पतञ्जलिकृतमहा-
भाष्याच्च अन्या अपि अष्टाध्यायीसूत्रपाठस्य
उल्लिखितमहाभाष्यस्यच बह्व्यष्टीकाः सन्ति
बाहुल्यभिया तासां नामानि न प्रदत्तानि ॥ * ॥)

**पाणिनीयं**, त्रि, (पाणिनिना प्रोक्तं उपदिष्टं वा ।
पाणिनि + “वृद्धाच्छः ।” ४ । २ । ११४ । इति
छः ।) पाणिनिना कृतं ग्रन्थादि । इति मुग्ध-
बोधव्याकरणम् ॥

**पाणिन्धमः**, त्रि, (पाणिं धमतीति । ध्मा शब्दाग्नि-
संयोगयोः + “उग्रंपश्येरम्मदपाणिन्धमाश्च ।”
३ । २ । ३७ । इति खश् मुम् च ।) हस्तकर्म्म-

**पाणिभुक्**, [ज्] पुं, (पाणिनेव भुज्यते दीयतेऽनेन
चर्व्वादिहव्यं यद्वा, पाणिरिव भुज्यते
यज्ञादि-
स्थले व्यवह्रियते इति । भुज् + क्विप् ।)
उडुम्बर-
वृक्षः । इति शब्दचन्द्रिका ॥ (पाणिना
भुङ्क्ते
इति । भुज् + क्विप् ।)
पाणिकरणकभोक्तरि, त्रि ॥

**पाणिमर्द्दः**, पुं, (पाणिं मृद्नातीति । पाणि + मृद्
+ “कर्म्मण्यण् ।” ३ । २ । १ । इत्यण् ।)
कर-
मर्द्दकः । इति राजनिर्घण्टः ॥

**पाणिमुक्तं**, क्ली, (पाणिभ्यां मुक्तं परित्यक्तम् ।)
अस्त्रम् । इति हलायुधः ॥

**पाणिरुहः**, पुं, (पाणौ रोहतीति । रुह + “इगुप-
धज्ञेति ।” ३ । १ । १३५ । इति कः ।)
नखः ।
इति राजनिर्घण्टः ॥

**पाणिवादः**, त्रि, (पाणिं पाणिना वा वादयतीति ।
वद + णिच् + अण् ।) पाणिघः । मृदङ्गादि-
वादकः । इत्यमरः ॥ (पाणिना वाद्यते इति
।
वद् + णिच् + कर्म्मणि घञ् । मृदङ्गादौ,
क्ली ।
यथा, रामायणे । २ । ६५ । ४ ।
“अपदानान्युदाहृत्य पाणिवादान्यवादयन्
॥”)

**पाणिवादकः**, त्रि, (पाणिं पाणिना वा वादय-
तीति । वद् + णिच् + ण्वुल् ।) पाणिवादः
।
इति हेमचन्द्रः । ३ । ५८९ ॥ (यथा,
रामा-
यणे । २ । ६५ । ४ ।
“ततस्तु स्तुवतां तेषां सूतानां
पाणिवादकाः ।

“गृध्रः कङ्कः कपोतश्च उलूकः श्येन एव च
।
चिल्लश्च धर्म्मचिल्लश्च भासः पाण्डर एव च
।
गृहे यस्य पतन्त्येते गेहं तस्य विपद्यते ॥”)
तद्वर्णविशिष्टे, त्रि । इत्युणादिकोषः ॥
(यथा,
हरिवंशे । ८२ । ५० ।
“असिताम्बरसंवीतं पाण्डरं पाण्डरासनम्
॥”)

**पाण्डरपुष्पिका**, स्त्री, (पाण्डरं शुक्लवर्णं पुष्प-
मस्याः । कप् । ततः कापि अत इत्वम् ।)
शीतलावृक्षः । इति शब्दचन्द्रिका ॥

**पाण्डवः**, पुं, (पाण्डोस्तदाख्यया प्रसिद्धस्य राज्ञो-
ऽपत्यम् । पाण्डु + “ओरञ् ।” ४ । २ ।
७१ ।
इत्यञ् ।) पाण्डुनन्दनः ।
पञ्चपाण्डवोत्पत्ति-
र्यथा, --
वैशम्पायन उवाच ।
“संवत्सरधृते गर्भे गान्धार्य्या जनमेजय ! ।
आह्वयामास वै कुन्ती गर्भार्थे धर्म्ममच्युतम्
॥
सा बलिं त्वरिता देवी धर्म्मायोपजहार ह ।
जजाप मन्त्रं विधिवद्दत्तं दुर्व्वाससा पुरा ॥
संगम्य सा तु धर्म्मेण योगमूर्त्तिधरेण ह ।
लेभे पुत्त्रं वरारोहा सर्व्वप्राणिहितं वरम् ॥
ऐन्द्रे चन्द्रसमायुक्ते मुहूर्त्तेऽभिजितेऽष्टमे ।
दिवामध्यगते सूर्य्ये तिथौ पुण्येऽभिपूजिते
॥
समृद्धयशसं कुन्ती सुषाव प्रवरं सुतम् ।
जातमात्रे सुते तस्मिन् वागुवाचाशरीरिणी
॥
एष धर्म्मभृतां श्रेष्ठो भविष्यति नरोत्तमः ।
विक्रान्तः सत्यवाक् चैव राजा पृथ्व्यां
भविष्यति ॥
युधिष्ठिर इति ख्यातः पाण्डोः प्रथमजः
सुतः ।
भविता प्रथितो राजा त्रिषु लोकेषु विश्रुतः
।

ताकाग्निसंयोगकर्त्ता । एवं शब्दकर्त्ता च ।

इति मुग्धबोधव्याकरणम् ॥ ("पाणयो ध्मायन्ते ऽस्मिन्निति पाणिन्धमोऽध्वा । अन्धकाराद्यावृत इत्यर्थः । तत्र हि सर्पाद्यपनोदनाय पाणयः शब्द्यन्ते ।" इति सिद्धान्तकौमुदी ॥)

**पाणिन्धयः**, त्रि, (पाणिभ्यां धयति पिबतीति ।

धेट पाने + "नाडीशुनीस्तनकरमुष्टिपाणि-नासिकात् ध्मश्च ।" इति सूत्रात् खशप्रत्ययेन साधुः ।) पाणिद्वारा पानकर्त्ता । इति मुग्ध-बोधव्याकरणम् ॥

**पाणिपादं**, क्ली, पाणिश्च पादश्च द्वयोः समाहारः ।

पाणिपादयोः समाहारः । इति व्याकरणम् ॥

**पाणिपीडनं**, क्ली, (पाणेः पीडनं ग्रहणं यत्र ।)

पाणिग्रहणम् । विवाहः । इत्यमरः ॥ (पाणिभ्यां पीडनमिति विग्रहे क्रोधादिना हस्तमर्द्दनम् ॥)

अपदानान्युदाहृत्य पाणिवादान्यवादयन् ॥")

**पाणिसर्य्या**, स्त्री, (पाणिभ्यां सृज्यतेऽसौ । सृजौ

श विसर्गे + "पाणौ सृजेण्येत् वाच्यः ।" इति

ण्यत् । "चजोः कुः घिण्ण्यतोः ।" ७ । ३ । ५२ ।

इति कुत्वम् ।) रज्जुः । इति मुग्धबोधव्याक-रणम् ॥

**पाणीतलं**, क्ली, (पाणितलं निपातनात् दीर्घः ।)

तोलकद्वयम् । यथा, --

"विडालपदकर्षौ च् पाणीतलमुडुम्बरम् ॥"

इति शब्दमाला ॥

**पाणौकरणं**, क्ली, (पाणौ क्रियतेऽनेनास्मिन् वा ।

कृ + ल्युट् । सप्तम्याः अलुक् ।) विवाहः । इति जटाधरः ॥

**पाण्डरं**, क्ली, (पाण्डरो वर्णोऽस्त्यस्येति । अच् ।)

कुन्दपुष्पम् । गैरिकम् । इति शब्दचन्द्रिका ॥

**पाण्डरः**, पुं, (पाण्डरः शुक्लवर्णोऽस्त्यस्येति । अच् ।)

मरुवकवृक्षः । (पडि + अर + दीर्घश्च ।)

श्वेतवर्णः । (पर्व्वतविशेषः । स तु मेरोः पश्चिमे

वर्त्तते । यथा, मार्कण्डेये । ५५ । १० ।

"अञ्जनः कुक्कुटः कृष्णः

पाण्डरश्चाचलोत्तमः ॥"

"पश्चिमेन तथा मेरोर्विस्कम्भात् पश्चिमाद्बहिः ।

एतेऽचलाः समाख्याताः -- ॥"

ऐरावतकुलोत्पन्ननागविशेषः । यथा, महा-भारते । १ । ५७ । ११ -- १२ ।

"पारावतः पारिजातः पाण्डरो हरिणः कृशः ।

विहङ्गः शरभो मेदः प्रमोदः संहतापनः ॥

ऐरावतकुलादेते प्रविष्टा हव्यवाहनम् ॥"

पक्षिविशेषः । यथा,

ज्योतिस्तत्त्वधृतवचनम् ।

यशसा तेजसा चैव वृत्तेन च समन्वितः ॥ १ ॥ * ॥

धार्म्मिकं तं सुतं लब्ध्वा पाण्डुस्तां पुनरब्रवीत् ।

प्राहुः क्षात्त्रं बलं ज्येष्ठं बलज्येष्ठं सुतं वृणु ॥

ततस्तथोक्ता भर्त्रा तु वायुमेवाजुहाव सा ।

तस्माज्जज्ञे महाबाहुर्भीमो भीमपराक्रमः ॥

तमप्यतिबलं जातं वागुवाचाशरीरिणी ।

सर्व्वेषां बलिनां श्रेष्ठो जातोऽयमिति भारत ! ॥

इदमत्यद्भुतञ्चासीज्जातमात्रे वृकोदरे ।

यदङ्कात् पतितो मातुः शिलां गात्रैरचूर्णयत् ॥

कुन्ती व्याघ्रभयोद्विग्ना सहसोत्पतिता किल ।

नान्वबुध्यत तं सुप्तमुत्सङ्गे स्वे वृकोदरम् ॥

वज्रसंहननः सोऽथ कुमारो न्यपतद्‌गिरौ ।

पतता तेन शतधा शिला गात्रैर्व्विचूर्णिता ॥

तां शिलां चूर्णितां दृष्ट्वा पाण्डुर्विस्मयमागतः ।

यस्मिन्नहनि भीमस्तु जज्ञे भरतसत्तम ! ॥

दुर्य्योधनोऽपि तत्रैव प्रजज्ञे वसुधाधिप ! ॥ २ ॥ * ॥

जाते वृकोदरे पाण्डुरिदं भूयोऽन्वचिन्तयत् ।

कथन्नु मे वरः पुत्त्रो लोकश्रेष्ठो भवेदिति ॥

दैवे पुरुषकारे च लोकोऽयं संप्रतिष्ठितः ।

तत्र दैवन्तु विधिना कालयुक्तेन लभ्यते ॥

इन्द्रो हि राजा देवानां प्रधान इति नः श्रुतम् ।

अप्रमेयबलोत्साहो वीर्य्यवानमितद्युतिः ॥

तं तोषयित्वा तपसा पुत्त्रं लप्स्ये महाबलम् ।

यं दास्यति स मे पुत्त्रं स गरीयान् भविष्यति ॥

कर्म्मणा मनसा वाचा तस्मात्तप्स्ये महत्तपः ।
ततः पाण्डुर्महाराजो मन्त्रयित्वा महर्षिभिः ॥
दिदेश कुन्त्याः कौरव्यो व्रतं सांवत्सरं शुभम् ।
आत्मना च महाबाहुरेकपादस्थितोऽभवत् ॥
उग्रं स तप आतस्थे परमेण समाधिना ।
आरिराधयिषुर्द्देवं त्रिदशानां तमीश्वरम् ॥
सूर्य्येण सह धर्म्मात्मा पर्य्यवर्त्तत भारत ! ।
तन्तु कालेन महता वासवः प्रत्यपद्यत ॥
शक्र उवाच ।
पुत्त्रं तव प्रदास्यामि त्रिषु लोकेषु विश्रुतम् ।
ब्राह्मणानां गवाञ्चैव सुहृदाञ्चार्थसाधकम् ॥
दुर्हृदां शोकजननं सर्व्वबान्धवनन्दनम् ।
सुतं तेऽग्र्यं प्रदास्यामि सर्व्वामित्रविनाशनम् ॥
इत्युक्तः कौरवो राजा वासवेन महात्मना ।
उवाच कुन्तीं धर्म्मात्मा देवराजवचः स्मरन् ॥
उदर्कस्तव कल्याणि तुष्टो देवगणेश्वरः ।
दातुमिच्छति मे पुत्त्रं यथासङ्कल्पितं हृदा ॥
अतिमानुषकर्म्माणं यशस्विनमरिन्दमम् ।
नीतिमन्तं महात्मानमादित्यसमतेजसम् ॥
दुराधर्षं क्रियावन्तमतीवाद्भुतदर्शनम् ।
पुत्त्रं जनय सुश्रोणि ! धाम क्षत्त्रियतेजसाम् ॥
लब्धः प्रसादो देवेन्द्रात् तमाह्वय शुभानने ! ॥
एवमुक्ता ततः शक्रमाजुहाव यशस्विनी ।
अथाजगाम देवेन्द्रो जनयामास चार्ज्जुनम् ॥
जातमात्रे कुमारे तु वागुवाचाशरीरिणी ।
महागम्भीरनिर्घोषा नभो नादयती तदा ॥
शृण्वतां सर्व्वभूतानां तेषाञ्चाश्रमवासिनाम् ।
नावरत्वे वरार्हायाः स्थित्वा चानघ ! नित्यदा ॥
गान्धार्य्याश्चैव नृपते ! जातं पुत्त्रशतन्तथा ।
श्रुत्वा न मे तथा दुःखमभवत् कुरुनन्दन ! ॥
इदन्तु मे महद्दुःखं तुल्यतायामपुत्त्रता ।
दिष्ट्या त्विदानीं भर्त्तुर्मे कुन्त्यामप्यस्ति सन्ततिः ॥
यदि चापत्यसन्धानं कुन्तिराजसुता मयि ।
कुर्य्यादनुग्रहो मे स्यात्तव चापि हितं भवेत् ॥
संस्तम्भो मे सपत्नीत्वात् वक्तुं कुन्तिसुतां प्रति ।
यदि तु त्वं प्रसन्नो मे स्वयमेनां प्रचोदय ॥
पाण्डुरुवाच ।
ममाप्येष सदा माद्रि ! हृद्यर्थः परिवर्त्तते ।
न तु तां प्रसहे वक्तुमिष्टानिष्टविवक्षया ॥
तव त्विदं मतं मत्वा प्रयतिष्याम्यतःपरम् ।
मन्ये ध्रुवं मयोक्ता सा वचनं प्रतिपत्स्यते ॥
वैशम्पायन उवाच ।
ततः कुन्तीं पुनः पाण्डुर्विविक्त इदमब्रवीत् ।
कुलस्य मम सन्तानं लोकस्य च कुरु प्रियम् ॥
मम चापिण्डनाशाय पूर्ब्बेषामपि चात्मनः ।
मत्प्रियार्थञ्च कल्याणि ! कुरु कल्याणमुत्तमम् ।
यशसेऽर्थाय चैव त्वं कुरु कर्म्म सुदुष्करम् ॥
एवमुक्ताब्रवीन्माद्रीं सकृच्चिन्तय दैवतम् ।
तस्मात्ते भवितापत्यमनुरूपमसंशयम् ॥
ततो माद्री विचार्य्यैवं जगाम मनसाश्विनौ ।
तावागम्य सुतौ तस्यां जनयामासतुर्यमौ ॥
नकुलं सहदेवञ्च रूपेणाप्रतिमौ भुवि ।
तथैव तावपि यमौ वागुवाचाशरीरिणी ॥
रूपसत्त्वगुणोपेतावेतावत्यश्विनावपि ।
भासतस्तेजसात्यर्थं रूपद्रविणसम्पदा ॥
नामानि चक्रिरे तेषां शतशृङ्गनिवासिनः ।
भक्त्या च कर्म्मणा चैव तथाशीर्भिर्विशाम्पते ॥
ज्येष्ठं युधिष्ठिरेत्येवं भीमसेनेति मध्यमम् ।
अर्ज्जुनेति तृतीयञ्च कुन्तीपुत्त्रानकल्पयन् ॥
पूर्ब्बजं नकुलेत्येवं सहदेवेति चापरम् ।
माद्रीपुत्त्रावकथयंस्ते विप्राः प्रीतमानसाः ॥”
इति महाभारते १ । १२३ -- १२४ ॥
तेषां पुत्त्रा यथा, --
“कथं वा पाण्डवेयस्य राजर्षेर्मुनिना सह ।
संवादः समभूत्तात ! यत्रैषा सात्वती श्रुतिः ॥”)

**पाण्डवाभीलः**, पुं, (अभीः अभयं लातीति । ला + कः । पाण्डवोऽभीलो यस्मात् । पाण्डवाना-मभियमभयं लातीति वा ।) कृष्णः । इति त्रिकाण्डशेषः ॥

**पाण्डवायनः**, पुं, (पाण्डवानामयनं रक्षणं यस्मात् ।) कृष्णः । इति हेमचन्द्रः । २ । १३१ ॥

**पाण्डित्यं**, क्ली, (पण्डितस्य भावः कर्म्म वा । इति “वर्णदृढादिभ्यः ष्यञ् च ।” ५ । १ । १२३ । इति ष्यञ् ।) पण्डितधर्म्मकर्म्मणी । यथा, --
“रसज्ञा पाण्डित्यच्छिदुरशशिधामभ्रमभरान् ॥”
इति मुरारिः ॥
(यथा, च महाभारते । ५ । ३१ । २ ।
“उत बालाय पाण्डित्यं पण्डितायोत बालताम् ।
ददाति सर्व्वमीशानः पुरस्ताच्छुक्रमुच्चरन् ॥”)

**पाण्डुः**, पुं, (पडि गतौ + “मृगय्वादयश्च ।” उणां । १ । ३८ । इति कुप्रत्ययः निपातनात् धातो-र्दीर्घश्च ।) पाण्डुरफलीक्षुपः । पटोलः । इति राजनिर्घण्टः ॥ शुक्लपीतमिश्रितवर्णः । तत्-पर्य्यायः । हरिणः २ । पाण्डुरः ३ । इत्यमरः ॥
पाण्डरः ४ । इति हड्डः ॥
“सितपीतसमायुक्तः पाण्डुवर्णः प्रकीर्त्तितः ॥”
इति सुभूतिः ॥
भेदोऽपि दृश्यते यथा, --
“पाण्डुरस्तु रक्तपीतभागी प्रत्यूषचन्द्रवत् ।
पाण्डुस्तु पीतभागार्द्धः केतकीधूलिसन्निभः ॥”
इति भरतः ॥
तद्वति, त्रि । इत्यमरः ॥ (यथा रघुः । ३ । २ ।
“शरीरसादादसमग्रभूषणा
मुखेन सालक्ष्यत लोध्रपाण्डुना ॥”

कुन्तीमाभाष्य विस्पष्टमुवाचेदं शुचिस्मिताम् ॥
कार्त्तवीर्य्यसमः कुन्ति ! शिवितुल्यपराक्रमः ।
एष शक्र इवाजेयो यशस्ते प्रथयिष्यति ॥
अदित्या विष्णुना प्रीतिर्य्यथाभूदभिवर्द्धिता ।
तथा विष्णुसमः प्रीतिम्बर्द्धयिष्यति ते सुतः ॥
एष मद्रान् वशे कृत्वा कुरूंश्च सह सोमकैः ।
चेदिकाशिकरूषांश्च कुरुलक्ष्मीं वहिष्यति ॥
एतस्य भुजवीर्य्येण खाण्डवे हव्यवाहनः ।
मेदसा सर्व्वभूतानां तृप्तिं यास्यति वै पराम् ॥
ग्रामणीश्च महीपालान् एष जित्वा महाबलः ।
भ्रातृभिः सहितो वीरस्त्रीन् मेधानाहरिष्यति ॥
जामदग्न्यसमः कुन्ति ! वायुवेगपराक्रमः ।
एष वीर्य्यवतां श्रेष्ठो भविष्यति महायशाः ॥
तथा दिव्यानि चास्त्राणि निखिलेनाहरिष्यति ।
विप्रनष्टां श्रियञ्चायमाहर्त्ता पुरुषर्षभः ॥
एतामत्यद्भुतां वाचं कुन्ती शुश्राव भारत ! ।
वाचमुच्चरितामुच्चैस्तां निशम्य तपस्विनाम् ॥
बभूय परमो हर्षः शतगृङ्गनिवासिनाम् ।
तथा देवरथानाञ्च सेन्द्राणाञ्च दिवौकसाम् ।
आकाशे दुन्दमोनाञ्च बभूव तुमुलः स्वनः ।
उदतिष्टन्महाघोषः पुष्पवृष्टिभिरावृतः ॥”
३ ॥ * ॥
वैशम्पायन उवाच ।
“कन्तीपुत्त्रषु जातेषु धृतराष्ट्रात्मजेषु च ।
महराजसता पाण्डुं रहो वचनमब्रवीत् ॥
न मेऽस्ति त्वयि मन्तापो विगुणेऽपि परन्तप ।

“प्रतिबिन्ध्यः सुतः सोमः श्रुतकीर्त्तिस्तु चार्ज्जुनात् ।
शतानीकः श्रुतकर्म्मा द्रौपद्याः पञ्च विक्रमात् ॥”
तेषां भार्य्या यथा, गारुडे १३९ अध्याये ।
“यौधेयी च हिडिम्बा च काशी चैव सुभद्रिका ।
विजया वै वेणुमती पञ्चभ्यस्तु सुताः क्रमात् ॥
देवको घटोत्कचश्च अभिमन्युश्च सर्व्वशः ।
अहोत्रो निरपत्रश्च परिक्षिदभिमन्युजः ॥”

**पाण्डवेयः**, त्रि, (पाण्डोरियं इत्यञ् ङीप् च पाण्डवी कुन्ती माद्री च तयोरपत्यम् इति । ढक् ।) पाण्डोरपत्यम् । इति मुग्धबोधव्याकरणम् ॥ (युधिष्ठिरप्रभृतयः पञ्च भ्रातरः । यथा, महाभारते । १ । २०३ । १५ ।
“यावन्नायाति वार्ष्णेयः कर्षन् यादववाहिनीम् ।
राज्यार्थे पाण्डवेयानां पाञ्चाल्यसदनं प्रति ॥”
अभिमन्युपुत्त्रो नरपतिः परीक्षित् । यथा, भागयते । १ । ४ । ७ ।

नृपतिविशेषः । स तु शन्तनुपुत्त्रविचित्रवीर्य्यस्य क्षेत्रे व्यासाज्जातः । (यथा, महाभारते । १ । ११८ । ५ ।
“राजा पाण्डुर्महारण्ये मृगव्यालनिषेविते ।
चरन् मैथुनधर्म्मस्थं ददर्श मृगयूथपम् ॥”
अस्य देहपाण्डुताकारणं नामनिरुक्त्यादिकं च यथा, महाभारते । १ । १०६ । १५-१८ ।
“अम्बालिकामथाभ्यागादृषिदृष्ट्वा च सापि तम् ।
विषण्णा पाण्डुसङ्काशा समपद्यत भारत ! ।
तां भीतां पाण्डुसङ्काशां विषण्णां प्रेक्ष्य भारत ! ॥
व्यासः सत्यवतीपुत्त्र इदं वचनमब्रवीत् ।
यस्मात् पाण्डुत्वमापन्ना विरूपं प्रेक्ष्य मामिह ॥
अस्मादेष सुतस्ते वै पाण्डुरेव भविष्यति ।
नाम चास्यैतदेवेह भविष्यति शुभानने ! ॥”)
नागभेदः । श्वेतहस्ती । सितवर्णः । रोग विशेषः । इति शब्दरत्नावली ॥ * ॥
पाण्डुरोगनिदानम् । यथा, --
“पाण्डुरोगाः स्मृताः पञ्च वातपित्तकफैस्त्रयः ।
चतुर्थः सन्निपातेन पञ्चमो भक्षणान्मृदः ॥
व्यायाममम्लं लवणानि मद्यं मृदं दिवास्वप्नमतीवतीक्ष्णम् ।

निषेवमाणस्य समेत्य रक्तं
दोषास्त्वचं पाण्डरतां नयन्ति ॥ * ॥
तस्य पूर्ब्बरूपाणि यथा, --
त्वक्स्फोटनष्ठीवनगात्रसाद-
मृद्भक्षणप्रेक्षणकूटशोथाः ।
विण्मूत्रपीतत्वमथाविपाको
भविष्यतस्तस्य पुरःसराणि ॥ * ॥
वातिकस्य तस्य लक्षणं यथा, --
त्वङ्मूत्रनयनादीनां रूक्षकृष्णारुणाभताः ।
वातपाण्ड्वामये कम्पतोदानाहभ्रमादयः ॥ * ॥
पैत्तिकस्य लक्षणं यथा, --
पीतमूत्रशकृन्नेत्रो दाहतृष्णाज्वरान्वितः ।
भिन्नविट्कोऽतिपीताभः पित्तपाण्ड्वामयी नरः ॥
श्लैष्मिकस्य लक्षणं यथा, --
कफप्रसेकश्वयथुतन्द्रालस्यातिगौरवैः ।
पाण्डुरोगी कफाच्छुक्लैस्त्वङ्मूत्रनयनाननैः ॥ * ॥
त्रिदोषजस्य लक्षणं यथा, --
ज्वरारोचकहृल्लासच्छर्द्दितृष्णाक्लमान्वितः।
पाण्डुरोगी त्रिभिर्द्दोषैस्त्याज्यः क्षीणो हतेन्द्रियः ॥
मृज्जस्य संप्राप्तिर्यथा, --
मृत्तिकादनशीलस्य कुप्यत्यन्यतमो मलः ।
कषाया मारुतं पित्तमूषरा मधुरा कफम् ॥
कोपयेन्मृद्रसादींश्च रौक्ष्याद्भुक्तञ्च रूक्षयेत् ।
पूरयत्यविपक्वैव स्रोतांसि विरुणद्ध्यपि ॥
इन्द्रियाणां बलं हत्वा तेजो वीर्य्यौजसी तथा ।
पाण्डुरोगं करोत्याशु बलवर्णाग्निनाशनम् ॥ * ॥
मृत्तिकाभक्षणजन्यपाण्डुलक्षणं यथा, --
मृद्भक्षणाद्भवेत् पाण्डुस्तन्द्रालस्यनिपीडितः
सकासश्वासशूलार्शःसदारुचिसमन्वितः ॥
शूनाक्षिकूटगण्डभ्रूः शूनपान्नाभिमेहनः ।
कृमिकोष्ठोऽतिसार्य्येत मलं सासृक्ककफान्वितम् ॥
तस्य असाध्यलक्षणं यथा, --
ज्वरारोचकहृल्लासच्छर्द्दितृष्णाक्लमान्वितः।
पाण्डुरोगी त्रिभिर्दोषैस्त्याज्यः क्षीणो हतेन्द्रियः ॥
पाण्डुरोगश्चिरोत्पन्नः खरीभूतो न सिध्यति ।
कालप्रकर्षाच्छूनानां यो वा पीतानि पश्यति ॥
बद्धाल्पविट् सहरितं सकफं योऽतिसार्य्यते ।
दीनः श्वेतातिदिग्धाङ्गश्छर्द्दिमूर्च्छातृषान्वितः॥
स नास्त्यसृक्क्षयाद्यश्च पाण्डुः श्वेतत्वमाप्नुयात् ॥
पाण्डुदन्तनखो यस्तु पाण्डुनेत्रश्च यो भवेत् ।
श्लेष्मत्वग्रक्तमांसानि प्रदूष्यान्तरमाश्रितम् ॥
त्वङ्मांसयोस्तत् कुरुते त्वचि वर्णान् पृथग्-
विधान् ।
पाण्डुहारिद्रहरितान् पाण्डुत्वं तेषु चाधिकम् ॥
यतोऽतः पाण्डुरित्युक्तः स रोगस्तेन गौरवम् ॥
धातूनां स्याच्च शैथिल्यमोजसश्च गुणक्षयः ॥
ततोऽल्परक्तमेदस्को निःसारः स्यात्
श्लथेन्द्रियः ।
मृद्यमानैरिवाङ्गैर्ना द्रवता हृदये न च ॥
शूनाक्षिकूटसदनः कोपनः ष्ठीवनोऽल्पवाक् ।
अन्नद्विट् शिशिरद्वेषी शीर्णरोमा हतानलः ॥
सन्नसक्थी ज्वरी श्वासी कर्णक्ष्वेडी भ्रमी
श्रमी ।
स पञ्चधा पृथग्दोषैः समस्तैर्मृत्तिकादनात् ॥
प्राग्रूपमस्य हृदयस्पन्दनं रूक्षता त्वचि ।
अरुचिः पीतमूत्रत्वं स्वेदाभावोऽल्पवह्निता ॥
सादः श्रमोऽनिलात्तत्र गात्ररुक्तोदकम्पनम् ।
कृष्णरुक्षारुणसिरानखविण्मूत्रनेत्रता ॥
शोफानाहास्यवैरस्यविट्शोषाः पार्श्वमूर्द्धरुक् ।
पित्ताद्धरितपीताभसिरादित्वंज्वरस्तमः ॥
तृट्स्वेदमूर्च्छाशीतेच्छादौर्गन्ध्यं कटुवक्त्रता ।
वर्च्चोभेदोऽम्लको दाहः कफात्
शुक्लसिरादिता ॥
तन्द्रालवणवक्त्रत्वं रोमहर्षः स्वरक्षयः ।
कासः श्छर्द्दिश्च
निचयान्मिश्रलिङ्गोऽतिदुःसहः ॥
मृत्कषायानिलं पित्तमूषरा मधुराकफम् ।
दूषयित्वा रसादींश्च रौक्ष्याद्भुक्तं विरूक्ष्य च ॥
स्रोतांस्यपक्वैवापूर्य्य कुर्य्याद्रुद्ध्वा च
पूर्ब्बवत् ।
पाण्डुरोगं ततः शूननाभिपादास्यमेहनः ॥
पुरीषं कृमिमन्मुञ्चेद्भिन्नं सासृक्ककफं नरः ॥”
इति वाभटे निदानस्थाने । १३ । १ -- १३ ॥)
तस्यौषधं यथा, --
“लोहचूर्णं तक्रपीतं पाण्डुरोगहरं भवेत् ॥”
क्षारञ्चाम्लं कल्यमैरेयसेवा
अव्यायामान्मैथुनातिश्रमेण ।
निद्रानाशे नातिनिद्रा दिवापि
योगैश्चैतैर्मृत्तिकाभक्षणेन ॥
अतिशिथिलशरीरे रोगसम्पीडिते वा
लवणकटुकषाया सेवनाम्लेन मृद्भिः ।
अतिसुरतमजस्रं सेवनातिक्रमेण
नयति रुधिरशोषं तेन वै पाण्डुरोगम् ॥
तेनाक्षिकूट श्वयथुः शरीरे
पाण्डुत्वमायाति सपीतमूत्रः ।
निष्ठीवते त्वक् प्रविदीर्य्यते च
संजायते तस्य पुरःसराणि ॥
तोदः परूषत्वशिरोगुरुत्वं
त्वङ्मूत्रनेत्रे नखकालिमा स्यात् ।
वातात्मकं तन्मनुजस्य विद्धि
लिङ्गैरुपेतोऽनिलपाण्डुरोगः ॥
आमत्वपीतत्वकरो हि लोके
बिभर्त्ति शोषं कटुकास्यता च ।
मन्दज्वरो वै भृशशोषमोहः
पीतच्छविः पीतभवो हि पाण्डुः ॥
तन्द्रालुताशोफकफेन युक्तः
आलस्यकस्वेदगुरुत्वमेव ।
संजायते तस्य कफात्मकोऽसौ
नरस्य पाण्डुत्वभवो विकारः ॥
तन्द्रालस्यं श्वयथुवमथू
काशहृन्नासशोषा
विड्भेदः स्यात् परुषनयने सज्वरो वै
क्षुधार्त्तः ।
मोहस्तृष्णाक्लममथ मनुजस्याशु
पश्येत् सुदूरं
त्याज्यो वैद्यैर्निपुणमतिभिः
सन्निपातोत्थपाण्डुः ॥
मृत्तिकाभक्षणेनाथ शृणु पुत्त्र ! गदो
महान् ।
पाण्डुरोगो गरिष्ठोऽपि भवेद्धातुक्षयङ्करः ॥
मृद्भक्षणाच्चैव मलं प्रकीर्य्य
स्रोतांसि रुन्धन्ति च मृत्तिकायाः ।
तेनैव नासृक् परिवर्त्तयन्ति
न तर्पयन्ते वपुषं रसेन ॥
क्षारात् कषायान्मधुरस्य पानात्

पाण्डुसंघातदर्शी च पाण्डुरोगी विनश्यति ॥
अन्तेषु शूनं परिहीणमध्यं
म्लानं तथान्तेषु च मध्यशूनम् ।
गुदे च शेफस्यथ मुष्कयोश्च
शूनं प्रताम्यन्तमसंज्ञकल्पम् ॥
विवर्ज्जयेत् पाण्डुकिनं यशोऽर्थी
तथातिसारज्वरपीडितञ्च ॥”
इति माधवकरः ॥
(यथा च, --
“पित्तप्रधानाः कुपिता यथोक्तैः कोपनैर्मलाः ।
तत्रानिलेन बलिना क्षिप्तं पित्तं हृदि स्थितम् ॥
धमनीर्दश सम्प्राप्य व्याप्नुवत् सकलां तनुम् ।

इति गारुडे १८० अध्यायः ॥
अपि च ।
“सुप्तरात्रं गवां मूत्रे भावितं चायसो रजः ।
पाण्डुरोगप्रशान्त्यर्थं पयसा प्रपिबेन्नरः ॥ १
॥
गोमूत्रसिद्धं मण्डूरचूर्णं सगुडमश्नतः ।
पाण्डुरोगः क्षयं याति पङ्क्तिशूलञ्च दारुणम्
॥ २
अयोमलं सुसन्तप्तं भूयो गोमूत्रसाधितम् ।
मधुसर्पिर्युतं लीढ्वा पाण्डुरोगी सुखी भवेत् ॥
३ ॥
पुनर्नवात्रिवृद्व्योषविडङ्गं दारु चित्रकम् ।
कुष्ठं हरिद्रे त्रिफला दन्ती चव्यं कलिङ्गकम् ॥
कटुका पिप्पलीमूलं मुस्तं शृङ्गी च कारवी ।
यमानी कट्फलञ्चेति पृथक्पलमितं मतम् ॥”
४ ॥
इति भावप्रकाशः ॥ * ॥
(अस्य सकारणलक्षणचिकित्सादीनियथा, -
-
“शृणु पुत्र ! प्रवक्ष्यामि पाण्डुरोगं महागदम् ।
पञ्चैव पाण्डुरोगास्ते सम्भवन्तीह मानुषे ॥
वातिकः पैत्तिकश्चैव श्लैष्मिकः
सान्निपातिकः ।
पञ्चमो रूक्षणः प्रोक्तो वक्ष्ये चैषान्तु सम्भवम्
॥
दीर्घाध्वना पीडितो वा ज्वरेण
रक्तस्रावो पीडितो वा व्रणेन ।
चिन्तायासादोधनाद्वै मनुष्ये
चायं पाण्डुर्जायते सेवते यः ॥

स कोपयत्याशु नरस्य मृत्स्ना ।
श्लेष्मप्रकोपान्मधुरान् करोति
मृतस्ना न जग्धा हितकारिणी स्यात् ॥
विकृतिमुपगतास्ते मारुताद्यास्त्रयस्तु
वलवदनरुचीनां नाशयन्त्याशु दोषाः ।
भवति विकलमेवं पाण्डुरोगे शरीरं
भवति जठरपाण्डू रोग आशुप्रवीणः ॥”
“गोमूत्रमध्ये मतिमान् स्नापयेत्
सप्तरात्रि-
कम् ।
तस्मात् चूर्णन्तु मधुना देयं
पाण्ड्वामयापहम् ॥
त्र्यूषणं त्रिफला मुस्ता विडङ्गं चित्रकं
समम् ।
भागमेकं लौहचूर्णमिक्षुद्रावे विभावयेत् ॥
सप्ताहमथ लोहखल्वितं
पुनरपि ध्रुवं प्रवरं स्यात् ।
शीलितन्तु मधुनापि घृतेन
पाण्डुरोगहृदयामयापहम् ॥

कामलार्शो हलीमकहारि
कथितं सुमतिभिश्च पण्डितैः ॥
इति लौहचूर्णवटकम् ॥ * ॥
त्र्युषणं त्रिफलया सह चित्रकं
मेघचव्यसुरदारुसमाक्षिकम्।
ग्रन्थिकञ्च शिखिभृङ्गराजकं
योजयेत् पलिकभागिकानिमान्॥
चूर्णिताद्द्विगुणमेव योजयेत्
लौहचूर्णमपि कज्जलप्रभम्।
अष्टभागसममूत्रकल्पितं
पाचितं पुनरभवद्वरप्रदम्।
सेवयेद्बलमुपक्रमं तथा
तक्रसंयुतमिहास्तिशोभनम्।
नाशयेच्च कफकामलान् क्रिमीन्
पाण्डुकुष्ठगुदजान् हलीमकम् ॥
इति मण्डुरवटकम् ॥" * ॥
पथ्यापथ्यान्यस्य यथा, --
"गोधूमशालियवषष्टिकमुद्गकानां
श्यामाढकीघृतयुतं सपयःसतक्रम्।
गाञ्जीववास्तकमथो शतपुष्पवर्त्ता
पथ्यं हितं निगदितं मनुजस्य पाण्डौ ॥
शाल्यन्नमुद्गगोधूममसूराश्चाढकीयवाः।
जाङ्गलानि च मांसानि भोजने च प्रशस्यते ॥
तिक्तानि रूक्षाणि कषायकाणि
तीव्राणि दाहीन्यपि काञ्जिकानि।
सुराम्लसौवीरकबीजपूरान्
तैलानि वर्ज्यानि च पाण्डुरोगे ॥"
इति हारीते चिकित्सितस्थाने नवमेऽध्याये ॥ * ॥
अस्य चिकित्सान्तरं यथा, --
"पाण्ड्वामयी पिबेत् सर्पिरादौ कल्याणकाह्वयम् ।
पञ्चगव्यं महातिक्तं शृतं वारग्वधादिना ॥
दाडिमात् कुडवो धान्यात् कुडवार्द्धं पलं पलम् ।
चित्रकात् शृङ्गवेराच्च पिप्पल्यर्द्धपलञ्च तैः ॥
काङ्कतैर्विंशतिपलं घृतस्य सलिलाढके।
सिद्धं हृत्पाण्डुगुल्मार्शःप्लीहवातकफार्त्तिनुत्।
दीपनं श्वासकासघ्नं मूढवातानुलोमनम् ॥
दुःखप्रसविनीनाञ्च बन्ध्यानाञ्च प्रशस्यते।
स्नेहितं वामयेत्तीक्ष्णैः पुनःस्निग्धञ्च शोधयेत्।
पाण्डुरोगं ज्वरं दाहं कासं श्वासमरोचकम्।
गुल्मानाहामवातांश्च रक्तपित्तञ्च तज्जयेत् ॥
वासागुडूचीत्रिफला कट्वीभूनिम्बनिम्बजः।
क्वाथः क्षौद्रयुतो हन्ति पाण्डुपित्तास्रकामलाः ॥"
"गुडनागरमण्डूरतिलांशान्मानतः समान्।
पिप्पलीद्विगुणान् दद्यात् गुटिकां पाण्डुरोगिणे ॥
ताप्यं दार्व्व्यास्त्वचं चव्यं ग्रन्थिकं देवदारु च ॥
व्योषादि नरकञ्चैतच्चूर्णयेद्द्विगुणं ततः।
मण्डूरञ्चाञ्जननिभं सर्व्वतोऽष्टगुणेऽथ तत् ॥
पृथग्विपक्वे गोमूत्रे वटकीकरणक्षमे।
प्रक्षिप्य वटकान् कुर्य्यात् तान्
खादेत्तक्रभोजनः ॥
एते मण्डूरवटकाः प्राणदाः पाण्डु रोगिणाम्।
कुष्ठान्यजरकं शोफमूरुस्तम्भमरोचकम्॥
अर्शांसि कामलां मेहान् प्लीहानं शमयन्ति च ।
ताप्याद्रिजतुरौप्यायोमलाःपञ्चपलाः पृथक् ॥
चित्रकत्रिफला व्योषविडङ्गैः पालिकैः सह।
शर्करााष्टपलीन्मिश्राश्चूर्णिता मधुना द्रुताः ॥
पाण्डुरोगं विषं कासं यक्ष्माणं विषमं ज्वरम्।
कुष्ठान्यजरकं मेहं शोफं श्वासमरोचकम्॥
विशेषाद्धन्त्यपस्मारं कामलां गुदजानि च।
कौटजत्रिफलानिम्बपटोलघननागरैः ॥
भावितानि दशाहानि रसैर्द्विंत्रिगुणानि वा।
शिलाजतुपलान्यष्टौ तावती सितशर्करा ॥
त्वक्क्षीरी पिप्पली धात्री कर्कटाख्याः पलोन्मिताः।
निर्दग्धाः फलमूलाभ्यां पलं युक्त्या
त्रिजातकम् ॥
मधुत्रिपलसंयुक्तं कुर्य्यादक्षसमान् गुडान्।
दाडिमाम्बुपयःपक्षिरसतोयसुरासवान्॥
तान् भक्षयित्वानुपिबेन्निरन्नो भुक्त एव वा।
पाण्डुकुष्ठज्वरप्लीहतमकार्शोभगन्दरम् ॥
हृण्मूत्रपूतीशुक्राग्निदोषशोषगरोदरम्।
कासासृग्दरपित्तासृक्शोफगुल्मगलामयान्॥
मेहवर्ध्मभ्रमान् हन्युः सर्व्वदोषहराः शिराः ॥"
इति वाभठे चिकित्सास्थाने षोडशेऽध्याये ॥ * ॥
कफेन पाण्डुंमनुजं व्यवस्येद्
युक्तं तथान्यैस्तदुपद्रवैश्च ॥
सर्व्वात्मके सर्व्वमिदं व्यवस्येद्
वक्ष्यामि लिङ्गान्यथ कामलायाः ॥"
चिकित्सान्तरं यथा, --
"साध्यन्तु पाण्ड्वामयिनं समीक्ष्य
स्निग्धं घृतेनोर्द्ध्वमधश्च शुद्धम् ॥
सम्पादयेत् क्षौद्रघृतप्रगाढै
र्हरीतकीचूर्णयुतैः प्रयोगैः।
पिबेद्घृतं वा रजनीविपक्वं
यत्त्रैफलं तैल्वकमेव वापि ॥
विरेचनद्रव्यकृतं पिबेद्धि
योगांश्च वैरेचनिकान् घृतेन ॥"
"उभे बृहत्यौ रजनीं शुकाख्यां
शुकादनीञ्चापि सकाकमाचीम्।
आदारिविम्बीं सकदम्बपुष्पीं
विपाच्य सर्पिर्व्विपचेत् कषाये ॥
तत् पाण्डुतां हन्त्युपयुज्यमानं
क्षीरेण वा मार्गधिकां यथाग्निः।
हितञ्च यष्टीमधुकं कषायं
चूर्णं समं वा मधुनावलिह्यात्॥
गोमूत्रयुक्तं त्रिफलादनानां
दत्त्वायसश्चूर्णमनल्पकालम्।
प्रवालमुक्ताञ्जनशङ्खचूर्णं
लिह्यात्तथा काञ्चनगैरिकोत्थम्॥
आजं शकृद्वा कुडवप्रमाणं
विडं हरिद्रा लवणोत्तमञ्च।
पृथक् पलांशानि समग्रमेत-
च्चूर्णं हिताशी मधुनावलिह्यात्॥
मण्डूरलोहाग्निविडङ्गपथ्या
व्योषांशकः सर्व्वसमानताप्यः।
मूत्रासुतोऽयं मधुनावलेहः
पाण्ड्वामयं हन्त्यचिरेण घोरम् ॥"
इत्युत्तरतन्त्रे चतुश्चत्वारिंशत्तमेऽध्याये सुश्रुते-
नोक्तम् ॥ * ॥ चिकित्सार्थमस्य
वटिकौषधं यथा,
"लौहचूर्णं निशायुग्मं त्रिफला कटुरोहिणी ।
प्रलिह्यान्मधुसर्पिर्भ्यां कामला
पाण्डुरोगनुत् ॥"

पयसा मूत्रयुक्तेन बहुशः केवलेन वा ॥
दन्तीफलरसे कोष्णे काश्मर्य्याञ्जलिमासुतम्।
द्राक्षाञ्जलिं वा मृदितं तत् पिबेत् पाण्डुरोग-
जित् ॥
मूत्रेण पिष्टां पथ्यां वा तत्सिद्धं वा फलत्रयम् ।
स्वर्णक्षीरी त्रिवृच्छ्यामा भद्रदारु महौषधम् ॥
गोमूत्राञ्जलिना पिष्टं शृतं तेनैव वा पिबेत् ।
साधितं क्षीरमेभिर्वा पिबेद्दोषानुलोमनम् ॥
मूत्रे स्थितं वा सप्ताहं पयसा यो रजः पिबेत् ।
जीर्णे क्षीरेण भुञ्जीत रसेन मधुरेण वा ॥
शुद्धश्चोभयतो लिह्यात् पथ्यां मधुघृतद्रुताम् ।
विशालां कटुकां मुस्तां कुष्ठं दारुकलिङ्गकः ॥
द्वाविंशाद्विपिचुर्मूर्व्वा कर्षार्द्धांशाद्घुणप्रिया ।
पीत्वा तच्चूर्णमम्भोभिः सुखैर्लिह्यात्ततो मधु ॥

"व्यवायमम्लं लवणानि मद्यं
मृदं दिवास्वप्नमतीवतीक्ष्णम् ।
निषेवमानस्य प्रदूष्य रक्तं
कुर्व्वन्ति दोषास्त्वचि पाण्डुभावम् ॥
पाण्ड्वामयोऽष्टार्द्धविधः प्रदिष्टः
पृथक्समस्तैर्युगपच्च दोषैः ।
सर्व्वेषु चैवैष्विह पाण्डु भावो
यतोऽधिकोऽतः खलु पाण्डु रोगः ॥"
"कृष्णेक्षणं कृष्णसिरावनद्धं
तद्वर्णविण्मूत्रनखाननञ्च ।
वातेन पाण्डु मनुजं व्यवस्ये-
द्युक्तं तथान्यैस्तदुपद्रवैश्च ॥
पीतेक्षणं पीतसिरावनद्धं
तद्वर्णविण्मूत्र नखाननञ्च ।
पित्तेन पाण्डुं मनुजं व्यवस्येद्-
युक्तं तथान्यैस्तदुपद्रवैश्च ॥
शुक्लेक्षणं शुक्लसिरावनद्धं
तद्वर्णविण्मूत्रनखाननञ्च ।

इति निशालौहम् ॥
"शुद्धसूतं तथा गन्धं मृतहेमाभ्रगुग्गुलु ।
जैपालबीजं तुल्यञ्च घृतेन गुडकीकृतम् ॥
भक्षयेद्बदराभान्ताच्छोथपाण्डुप्रशान्तये
।
पञ्चाननवटी ख्याता अनुपानञ्च पूर्ब्बवत्
॥"
इति पञ्चाननवटी ॥
"पलं सूतं पलं गन्धं वह्निपथ्या पलं
पलम् ।
मुस्तैलापत्रकानाञ्च प्रतिसार्द्धपलं क्षिपेत्
॥
त्र्यूषणं पिप्पलीमूलं विषञ्चापि पलं पलम्
।
नागकेशरतः कर्षमेरण्डस्य पलन्तथा ॥
पुरातनगुडेनैव तुल्येनैव विमिश्रयेत् ।
मर्द्दयेत् कनकद्रावैरेककं वा घृतान्वितम्
॥
गुडेन वदराण्डाभान् कारयेद्भक्षयेन्निशि ।
पाण्डु रोगहरः सोऽयं रसः कामेश्वरः
स्वयम् ॥"
इति कामेश्वरो रसः ॥

इति वैद्यकरसेन्द्रसारसंग्रहे पाण्डुरोगाधि-
कारे ॥ * ॥ * ॥)

**पाण्डूः**, स्त्री, (पडि + कुः । निपातनात् दीर्घत्वम् ।)
माषपर्णी । इति शब्दचन्द्रिका ॥ माषाणी
इति भाषा ॥ पाण्डुवर्णस्त्री । इति
मुग्धबोध-
व्याकरणम् ॥

**पाण्डुकः**, पुं, (पाण्डु + संज्ञायां कन् ।) पाण्डु-
रोगः । पाण्डुराजा । इति शब्दरत्नावली
॥
पाण्डुवर्णः । इति हलायुधः ॥

**पाण्डुकण्टकः**, पुं, (पाण्डुवर्णानि कण्टकान्यस्येति ।)
अपामार्गः । इति राजनिर्घण्टः ॥

**पाण्डुकम्बलः**, पुं, (पाण्डुवर्णः कम्बलः नित्यकर्म्म-
धारयः ।) श्वेतप्रावारः । प्रस्तरभेदः ।
इति
मेदिनी । ले, १७० ॥ पाण्डुवर्णकम्बलः
। इति भरतः ॥

**पाण्डुकम्बली**, [न्] पुं, (पाण्डुवर्णकम्बलेन परि-
वृतः । पाण्डुकम्बल +
"पाण्डुकम्बलादिनिः ।" ४ ।
२ । ११ । इति इनिः ।)
पाण्डुवर्णकम्बलावृत-
रथः । इत्यमरः । २ । ८ । ५४ ॥
पाण्डुकम्बल-
युक्ते, त्रि ॥

**पाण्डुतरुः**, पुं, (पाण्डुवर्णस्तरुरिति कर्म्मधारयः ।)
धववृक्षः । इति राजनिर्घण्टः ॥

**पाण्डुनागः**, पुं, (पाण्डुवर्णो नाग इव । यद्वा, नाग
इव पाण्डुरिति राजदन्तादिवत् समासः
।)
पुन्नागवृक्षः । इति शब्दारत्नावली ॥
(पाण्डु-
वर्णो नाग इति विग्रहे ।) श्वेतहस्ती श्वेत-
(यथा, भागवते । ८ । ८ । ३ ।
"तत उच्चैःश्रवा नाम हयोऽभूच्चन्द्रपाण्डुरः
।
तस्मिन् बलिः स्पृहाञ्चक्रेनेन्द्र ईश्वरशिक्षया
॥")
कामलारोगः । इति शब्दरत्नावली ॥ श्वित्र-
रोगे, क्ली । इति हलायुधः ॥

**पाण्डुरङ्गः**, पुं, (पाण्डुराणि अङ्गान्यस्येति ।)
फलशाकविशेषः । पाटराङ्गा इति भाषा ॥
अस्य गुणाः । क्रिमिश्लेष्मपित्तनाशित्वम् ।
तिक्त-
त्वम् । लघुत्वञ्च । इति राजवल्लभः ॥

**पाण्डुरद्रुमः**, पुं, (पाण्डुरः श्वेतः श्वेतपीतमिश्रित-
वर्णो वा द्रुमो वृक्षः ।) कुटजवृक्षः । इति
त्रिकाण्डशेषः ॥ (अस्य पर्य्यायो यथा, भाव-
प्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
"कुटजः कूटजः कौटो वत्सकों गिरिमल्लिका
।
कालिङ्गः शक्रशाखी च मल्लिका पुष्प इत्यपि
।
इन्द्रो यवफलः प्रोक्तो वृक्षकः पाण्डु रद्रुमः
॥")

**पाण्डुरपृष्ठः**, त्रि, (पाण्डुरं पृष्ठमस्य ।) लक्षण-
हीनः । इति हेमचन्द्रः ॥
पाण्डुवर्णपृष्ठयुक्तश्च ॥

**पाण्डुरफली**, स्त्री, (पाण्डुरं पाण्डुवर्णं फलं अस्याः ।
जातित्वात् ङीष् ।) क्षुद्रक्षुपविशेषः । तत्-
पर्य्यायः । पाण्डुः २ धूसरा ३ वृत्तबीजका
४
भूरिपलितदा ५ पाण्डुफली ६ । अस्या
गुणाः ।
शिशिरत्वम् । गौल्यत्वम् ।
कृच्छ्रास्रदोषपित्त-
मूत्राघातनाशित्वम् । बल्यत्वम् । वृष्यत्वञ्च ।
इति राजनिर्घण्टः ॥

**पाण्डुरा**, स्त्री, (पाण्डुरस्त्यस्या इति ततष्टाप् च ।)
माषपर्णी । इति राजनिर्घण्टः ॥ पाण्डुर-
वर्णा च ॥

**पाण्डुसोपाकः**, पुं, वर्णसङ्करविशेषः । स तु चाण्डाला
द्वैदेह्यां जातः ॥ (अस्योत्पत्तिविवरणम् । यथा,
मनौ । १० । ३७ ।
"चण्डालांत् पाण्डुसोपाकस्त्वक्सारव्यवहारवान्
।
आहिण्डिको निषादेन वैदेह्यामेव जायते ॥"
"वैदेह्यां चण्डालात् पाण्डुसोपाकाख्यो वेण-
व्यवहारजीवी जायते ।" इति तट्टीकायां
कुल्लूकभट्टः ॥ क्वचित् पाण्डुसौपाकोऽपि पाठो
दृश्यते । यथा, महाभारते । १३ । ४८ । २६ ।
"चण्डालात् पाण्डुसौपाकस्त्वक्सारव्यवहार-
वान् ॥")

**पाण्यः**, त्रि, (पण व्यवहारस्तुत्योः + ण्यत् ।)
स्तुत्यः । स्तवनीयः । ("पण्या गौः व्यवहर्त्तव्ये-
त्यर्थः । पाण्यमन्यत् स्तुत्यर्हमित्यर्थः ।" इति
"सिद्धान्तकौमुद्याम् । ३ । १ । १०१ । इत्यस्य
सूत्रस्य वृत्तौ व्याख्यातम् ॥)

**पातः**, पुं, (पत + घञ् ।) पतनम् । (यथा,
महाभारते । ३ । १३३ । २६ ।
"वडवे इव संयुक्ते श्येनपाते दिवौकसाम् ।
कस्तयोर्गर्भमाधत्ते गर्भं सुषुवतुश्च कम् ॥")
त्राते, त्रि । इति मेदिनी ॥ (पातयति चन्द्र-
सूर्य्यौ छादयतीति । पत + णिच् + अच् ।)
राहुः । यथा, --
"ताडितः खदहनैर्द्दिनसङ्ख्यः
षट्कषट्कशरहृत्फलमांशाः ।
स्वं ध्रुवे कुमुदिनीपतिपातो
राहुमाहुरिह केऽपि तदेव ॥"
इति सिद्धान्तशिरोमणिः ॥

**पातकं**, क्ली, (पातयति अधो गमयति दुष्क्रिया
कारिणमिति । पत + णिच् + ण्वुल् ।) नरक-
साधनमिति यावत् । तत्पर्य्यायः । अशुभम्
२ दुष्कृतम् ३ दुरितम् ४ पापम् ५ एनः ६
पाप्मा ७ किल्विषम् ८ कलुषम् ९ किण्वम् १०
कल्मषम् ११ वृजिनम् १२ तमः १३ अंहः १४
कल्कम् १५ अघम् १६ पङ्कम् १७ । इति हेम-
चन्द्रः ॥ तत्तु नवविधं यथा । अतिपातकम् १
महापातकम् २ अनुपातकम् ३ उपपातकम् ४
सङ्करीकरणम् ५ अपात्रीकरणम् ६ जातिभ्रंश-

सर्षपश्च ॥

**पाण्डुपत्री**, स्त्री, (पाण्डुपत्रमस्या इति जातित्वात्

ङीप् ।) रेणुका । इति राजनिर्घण्टः ॥
(पर्य्यायो-
ऽस्या यथा, --
"रेणुका राजपुत्त्री च नन्दिनी कपिला
द्विजा ।
भस्मगन्धा पाण्डुपत्री स्मृता कौन्ती
हरेणुका ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**पाण्डुपृष्ठः**, त्रि, (पाण्डुपृष्ठं यस्य ।) पाण्डु-

वर्णपृष्ठयुतः । अलक्षणः । इति
त्रिकाण्डशेषः ॥

**पाण्डुफलः**, पुं, (पाण्डूनि फलानि यस्य ।) पटोलः
।

इति राजनिर्घण्टः ॥

**पाण्डुफला**, स्त्री, (पाण्डुफलमस्या इति टाप् ।)

चिर्भिटा । इति राजनिर्घण्टः ॥

**पाण्डुभूमः**, त्रि, (पाण्डुर्भूमिरत्र इति । "कृष्णो-

दकपाण्डु सङ्ख्यापूर्ब्बाया भूमेरजिष्यते
।" ५ ।
४ । ७५ । इत्यस्य सूत्रस्य
वार्त्तिकोक्त्या अच्
समासे ।) पाण्डु वर्णभूमियुक्तदेशः ।
यथा, --
"पाण्डू दक् कृष्णतो भूमिः पाण्डूदक्
कृष्ण
मृत्तिका ॥"
इति हेमचन्द्रः ॥

**पाण्डुमृत्**, स्त्री, (पाण्डुः पाण्डुवर्णा मृत्

मृत्तिका यत्र ।) पाण्डुभूमिः । पाण्डुर्मृत्
इति
कर्म्मधारये ।) खटी । इति राजनिर्घण्टः
॥

**पाण्डु** रः, पुं, (पाण्डुरस्यास्तीति । पाण्डु + "नग-

पांशुपाण्डुभ्यश्च ।" ५ । २ । १०७ ।
इत्यस्य

**पाण्डुरागः**, पुं, (पाण्डुरं पाण्डुरत्वं आ सम्यक्-

रूपेण गच्छतीति । गम + डः । यद्वा, पाण्डुः
रागोऽस्येति ।) दमनकवृक्षः । इति राज-
निर्घण्टः ॥ पाण्डुवर्णयुक्ते, त्रि ॥

**पाण्डुरेक्षुः**, पुं, (पाण्डुरः श्वेतवर्ण इक्षुः ।) श्वेतेक्षुः ।

इति राजनिर्घण्टः ॥

**पाण्डुलेखः**, पुं, (पाण्डुर्लेखः ।) पाण्डुलिपिः ।

मुसविदा इति पारस्यभाषा ॥ यथाह व्यासः
।
"पाण्डुलेखेन फलके भूमौ वा प्रथमं लिखेत्
।
न्यूनाधिकन्तु संशोध्य पश्चात् पत्रे
निवेशयेत् ॥
फलकं काष्ठादिपट्टकम् ।" इति व्यवहार-
तत्त्वम् ॥

**पाण्डुलोमशा**, स्त्री, (पाण्डूनि लोमानीवाङ्गा-

न्यस्त्यस्याः ।) माषपर्णी ॥ इति रत्नमाला
॥
पाण्डुबर्णलोमयुक्ता च ॥

**पाण्डुलोमा**, स्त्री, (पाण्डु लोम यस्याः ।) माष-

पर्णी । इति जटाधरः ॥ पाण्डुवर्णलोमयुक्ते,
त्रि ॥

**पाण्डुशर्करा**, स्त्री, (पाण्डुः शर्करा इव यस्यां

रोगावस्थायामित्यर्थः ।) रोगविशेषः । यथा,
गारुडे १८२ अध्यये ।
"पिष्टं वै मालतीमूलं ग्रीष्मकाले समाहृतम् ।
साधितं छागदुग्धेन पीतं शर्करयान्वितम् ॥
हरेन्मूत्रनिरोधञ्च हरेद्वै पाण्डुशर्कराम् ॥"

**पाण्डुशर्म्मिला**, स्त्री, द्रौपदी । इति त्रिकाण्डशेषः ॥

करम् ७ मलावहम् ८ प्रकीर्णकम् ९ । इति
प्रायश्चित्तविवेकः ॥ एषां विवरणं तत्तच्छब्दे
द्रष्टव्यम् ॥ कायवाङ्मनःकृतानि दशविधपापानि
यथा, --
"अदत्तानामुपादानं हिंसा चैवाविधानतः ।
परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥
पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्व्वशः ।
असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्व्विधम् ॥
परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् ।
वितथाभिनिवेशश्च त्रिविधं कर्म्म मानसम् ॥"
इति तिथ्यादितत्त्वम् ॥

**पातङ्गिः**, पुं, (पतङ्गस्य सूर्य्यस्यापायमिति । पतङ्ग

+ "अत इञ् ।" ४ । १ । १५ । इति इञ ।)
शनैश्चरः । इति शब्दरत्नावली ॥

| सूत्रस्य वार्त्तिकोक्त्या रः ।)<br>श्वेतपीतमिश्रित-<br>वर्णः । तद्वति, त्रि । इत्यमरः । १ । ५ । १७ ॥ | | |
|---|---|---|

**पातञ्जलं**, क्ली, (पतञ्जलिना स्वनामविश्रुतमह-
र्षिणा प्रणीतं प्रोक्तं वा इति अण् ।) पतञ्जलि-
मुनिप्रणीतपादचतुष्टयात्मकयोगकाण्डनिरूपक
दर्शनशास्त्रविशेषः ॥ तत्र प्रथमे पादे अथ
योगानुशासनमिति योगशास्त्रारम्भे प्रतिज्ञां
विधाय योगश्चित्तवृत्तिनिरोध इत्यादिना योग-
लक्षणमभिधाय समाधिं सप्रपञ्चं निरदिक्षद्भग-
वान् पतञ्जलिः ॥ १ ॥ द्बितीये तपःस्वाध्याये-
श्वरप्रणिधानानि क्रियायोग इत्यादिना
व्युत्थित-
चित्तस्य क्रियायोगं यमादीनि पञ्च बहिरङ्गानि
साधनानि ॥ २ ॥ तृतीये । देशबन्धश्चित्तस्य
धार-
णेत्यादिना धारणाध्यानसमाधित्रयमन्तरङ्गं
संयमपदवाच्यं तत्रावान्तरफलं विभूतिजातम् ॥
३ ॥
चतुर्थे जन्मौषधिमन्त्रतपःसमाधिजाःसिद्धय
इत्यादिना सिद्धिप्रपञ्चनपुरःसरं परमं प्रयो-
जनं कैवल्यम् ॥ ४ ॥ प्रधानादीनि पञ्चविंशति-
तत्त्वानि साङ्ख्योक्तान्येवात्रापि । षड्विंशस्तु
परमेश्वरोऽधिकः । इति सर्व्वदशनसंग्रहः ॥

**पातनं**, क्ली, (पत + णिच् + भावे ल्युट् ।) अधो
नयनम् । यथा “ऊद्‌र्ध्वाधस्तिर्य्यक्पातनादिभी
रसस्य नानाविधा शुद्धिरुक्ता ।” इति रत्नावली
॥

**पाता**, [ऋ] त्रि, (पाति रक्षतीति । पा
रक्षणे + तृच् ।) रक्षिता । यथा, --
“संहारकर्त्तुः संहर्त्ता पातुः पाता परात्परः ।
ममाज्ञयायं संहर्त्ता नाम्ना तेन हरः स्मृतः ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ६ अध्यायः ॥
गन्धपत्रः । इति शब्दचन्द्रिका ॥ वायुइ इति
भाषा ॥

**पातालं**, क्ली, (पतन्त्यस्मिन् दुष्क्रियावन्त इति ।
पत + “पतिचण्डिभ्यामालञ् ।” उणां । १ ।
११६ । इति आलञ् । पादस्य तले वर्त्तते
इति पृषोदरात् साधुरित्येके ।) विवरम् ।
वडवानलः । इति मेदिनी ॥ लग्नाच्चतुर्थस्थानम्
।
यथा, --
या च सा मेदिनी ब्रह्मन् ! धत्ते
स्थावरजङ्गमान् ।
अधस्तस्या यदतलं योजनायुततो द्विज !
॥
मयपुत्त्रो महामायो वसत्यत्र महासुरः ।
येन सृष्टाः पुरा माया षड्डूद्‌र्ध्वनवतिः
किल ॥ १ ॥
तदधो वितलं नाम योजनानां ततोऽयुते ।
हरो विहरते तत्र भगवान् हाटकेश्वरः ॥
सुपार्श्वदैर्भूतगणैर्भवान्या च सह प्रभुः ।
प्रवृत्ता च सरित् तत्र हाटकी नाम
विस्तृता ॥ २ ॥
अधः सुतलमित्येतत् योजनानां ततोऽयुते
।
तत्रोदारश्रवाः पुण्यश्लोको
वैरोचनिर्ब्बलिः ॥ ३ ॥
तलातलं ततोऽधस्तात्
सुतलाद्योजनायुते ।
मयो नाम दानवेन्द्रस्त्रिपुराधिपतिर्म्महान् ।
निवसत्यत्र सुचिरं मायानां परमाश्रयः ॥
४ ॥
महातले ततोऽधस्ताद्योजनानामथायुते ।
सर्पाणां काद्रवेयाणां गणः क्रोधवशाह्वयः
॥
गरुडात् सर्व्वदा भीतः सकुटुम्बः सुहृद्वृतः
।
निवसत्यनभिज्ञातः पक्षिराजेन गह्वरे ॥ ५
॥
रसातले ततोऽधस्ताद्योजनानामथायुते ।
निवसन्ति दानवाश्च शक्राद्भीता
निरन्तरम् ॥ ६ ॥
पाताले तु ततोऽधस्ताद्योजनानां
द्विजायुते ।
नागलोकेश्वराः शूरा निवसन्ति महाबलाः
॥” ७
इति पाद्मे पातालखण्डे १ । २ । ३
अध्यायाः ॥ *
अपि च अग्निपुराणे ।
“अतलं सुतलञ्चैव वितलञ्च गभस्तिमत् ।
महातलं रसातलं पातालं सप्तमं स्मृतम् ॥

**पातालः**, पुं, (पतति जारणाद्यर्थं पारदादिकं
यत्र । पत + आलञ् ।) औषधपाकार्थयन्त्र-
विशेषः । इति शब्दचन्द्रिका ॥ तत्प्रकारो
यथा, वैद्यके ।
“ऊद्‌र्ध्वमापस्तले वह्निर्मध्ये तु रससंग्रहः ।
पातालयन्त्रमेतद्धि शोधयेत् सूतकादिकम् ॥”

**पातालगरुडी**, स्त्री, (पातालाख्या गरुडी ।) लता-
विशेषः । छेउडा इति हिन्दीभाषा ॥ तत्-
पर्य्यायः । बत्सादनी २ सोमवल्ली तिक्ताङ्गा
४
मेचकाभिधा ५ तार्क्षी ६ सौपर्णी ७ गारुडी ८
दीर्घकाण्डा ९ दृढकाण्डा १० महाबला ११
दीर्घवल्ली १२ दृढलता १३ । अस्या गुणाः ।
मधुरत्वम् । पित्तदाहास्रदोषविषदोषनाशि-
त्वम् । वृष्यत्वम् । सन्तर्पणत्वम् । रुच्यत्वञ्च
।
इति राजनिर्घण्टः ॥
अपि च ।
“छिलिहिण्डो महामूलः पातालगरुडाह्वयः ।
छिलिहिण्डः परं वृष्यः कफघ्नः पवनापहः
॥”
इति भावप्रकाशः ॥

**पातालनिलयः**, पुं, (पाताले पातालं वा निलयो
यस्य ।) दैत्यः । इति हलायुधः ॥ सर्पः ।
इति
राजनिर्घण्टः ॥

**पातालौकाः**, [स्] पुं, (पातालमोकः स्थान-
मस्येति ।) दैत्यः । इति हेमचन्द्रः ॥ पाताल-
वासिनि, त्रि ॥

**पातिः**, पुं, (पाति रक्षतीति । पा + “पातेरतिः ।”
उणां । ५ । ५ । इति अतिप्रत्ययः ।) प्रभुः ।
स्वामी । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः
॥

**पातिकः**, पुं, (पातः पतनं जले निमज्जनोन्मज्जन-
मेवास्त्यस्येति । पात + ठन् ।) शिशुमारः ।
इति
शब्दमाला ॥

"पातालं हिवुकञ्चैव सुहृदम्भश्चतुथकम् ॥"
इति ज्योतिस्तत्त्वम् ॥
स्वनामख्यातभुवनविशेषः । तत्पर्य्यायः । अधो-
भुवनम् २ बलिसद्म ३ रसातलम् ४ नागलोकः
५ । इत्यमरः ॥ अधः ६ उरगस्थानम् ७ ॥ * ॥
सप्तपातालानि यथा, --
"अतलं नितलञ्चैव वितलञ्च गभास्तमत् ।
तलं सुतलपाताले पातालानि तु सप्त वै ॥"
इति शब्दरत्नावली ॥
शेष उवाच ।
"कथयामि महाभाग ! पातालस्य विनिर्णयम् ।
क्रमादेव निबोधैतत् सावधानो द्विजर्षभ ! ॥
पातालानि च सप्तैव मुनयः संप्रचक्षते ।
अतलं वितलञ्चैव सुतलञ्च तलातलम् ॥
महातलञ्च विख्यातं ततो ज्ञेयं रसातलम् ।
ततः पातालमित्येवं सप्त पातालसंज्ञकाः ॥
एते स्वर्गाधिकसुखा विलस्वर्गाः प्रकीर्त्तिताः ।
समृद्धभवनोद्यानविहाराक्रीडचत्वराः॥
रुक्मभौमं शिलाभौमं पातालं नीलमृत्तिकम् ।
रक्तपीतश्वेतकृष्णभौमानि च भवन्त्यपि ॥
पातालानाञ्च सप्तानां लोकानाञ्च यदन्तरम् ।
शुषिरं तानि कथ्यन्ते भुवनानि चतुर्द्दश ॥
अष्टाविंशतिविख्यातास्ततो नरककोटयः ।
नरकाणामधस्तात्तु धूमः कालाग्निसम्भवः ॥
तस्याधस्तादनन्ताख्योरुद्रः सर्व्वमयो महान् ।
तदधो धर्म्मचक्रन्तु येनेदं धार्य्यते जगत् ॥" * ॥
अन्यच्च ।
"दशसाहस्रमेकैकं पातालं मुनिसत्तम् ! ।
अतलं वितलञ्चैव नितलञ्च गभस्तिमत् ॥
महाख्यं सुतलञ्चाग्र्यां पातालञ्चापि सप्तमम् ।
कृष्णाशुक्लारुणापीताशर्करा‌शैलकाञ्चनाः ॥
भूमयो यत्र मैत्रेय ! वरप्रासादशोभिताः ।
तेषु दानवदैतेयजातयः शतसंघशः ॥
निवसन्ति महाभागा अहयश्च महामुने ! ।
स्वर्लोकादपि रम्याणि पातालानीति नारद ! ॥
दिवार्करश्मयो यत्र प्रभां तन्वन्ति नातपम् ।
शशिनश्च न शीताय निशि द्योताय केवलम् ॥
पातालानामधश्चास्ते विष्णोर्या तामसी तनुः ।
शेषाख्यायद्गुणान् वक्तुं न शक्ता दैत्यदानवाः ॥
योऽनन्तः पठ्यते सिद्धैर्द्देवदेवर्षिपूजितः ।
यस्यैषा सकला पृथ्वी फणामणिशिखारुणा ।
आस्ते कुसुममालेव कस्तद्वीर्य्यं वदिष्यति ॥
यदा विजृम्भतेऽनन्तो मदाघूर्णितलोचनः ।
तदा चलति भूरेषा साद्रितोयाब्धिकानना ॥"

**पातिली**, स्त्री, (पातिः सम्पातिः पक्षियूथं लीयते-ऽत्र । ली + डः । ङीष् च ।) वागुरा । (पातिः स्वामी लीयतेऽस्याम् ।) नारी । मृत्पात्र-भेदः । इति मेदिनी ॥ पातिल् इति भाषा ॥

**पातुकः**, त्रि, (पत + "लषपतपदस्थेति ।" ३ । २ । १५४ । इति उकञ् ।) पतयालुः । पतन-शीलः । इत्यमरः ॥ (यथा, महाभारते । १२ । ९१ । ४२ ।
"यमो राजा धार्म्मिकाणां मान्धातः परमेश्वरः ।
संयच्छन् भवति प्राणानसंयच्छंस्तु पातुकः ॥")
प्रपाते जलहस्तिनि च पुं । इति मेदिनी ॥

**पात्रः**, त्रि, (नानागुणालङ्कृतो जनः ।
"अपात्रः पात्रतां याति यत्र पात्रो न विद्यते ॥"
इत्युणादिवृत्तिकृदुज्ज्वलदत्तः ॥
तथा च महाभारते । १३ । ६९ । २२ ।
"शुभे पात्रे ये गुणा गोप्रदाने
तावान् दोषो ब्राह्मणस्वापहारे ॥")
पाधातोस्त्रप्रत्ययनिष्पन्नत्वात्क्तकारवानयम् ॥

**पात्रं**, क्ली, पाति रक्षति क्रियामाधेयं वा । पिब-न्त्यनेनेति वा । पा रक्षणे पा पाने वा + "सर्व्व-धातुभ्यः ष्ट्रन् ।" उणां ४ । १५८ । इति ष्ट्रन् ।)

आधेयधारणवस्तु । तत्पर्य्यायः । अमत्रम्
२
भाजनम् ३ । इत्यमरः । २ । ९ । ३३ ॥
भाण्डम् ४
कोशः ५ कोषः ६ पात्री ७ कोशी ८
कोषी ९
कोशिका १० कोषिका ११ । इति
शब्दरत्ना-
वली ॥ (यथा, देवीभागवते । १ । २ ।
४० ।
"सकलगुणगणानामेकपात्रं पवित्र-
मखिलभुवनमातुर्नाट्यवद्यद्विचित्रम् ॥")
योग्यम् । स्रुवादि । राजमन्त्री ।
तीरद्वयान्त-
रम् । इति मेदिनी ॥ पातार इति भाषा ॥
पर्णम् । नाट्यानुकर्त्ता । इति हेमचन्द्रः ॥
आढकपरिमाणम् । इति वैद्यकपरिभाषा
॥ * ॥
(यथा, चरके कल्पस्थाने १२ अध्याये ।
" -- चतुः प्रस्थमथाढकम् ।
पात्रं तदेव विज्ञेयं -- ॥")
पात्राणां विधिर्य्यथा, --
"हेमपात्रेण सर्व्वाणि लभते चेति तान्मुने !
।
अर्घ्यं दत्त्वा तु रौप्येण आयूराज्यसुतान्
लभेत् ॥
ताम्रपात्रेण सौभाग्यं धर्म्मं मृण्मयसम्भवैः
।
वार्क्षपात्राणि रम्याणि नैष्ठिकादिषु कारयेत्
॥
शैलानि क्रूरजातीनां रक्तानि
सर्व्वकामिनाम् ।
धातूत्तमानि पात्राणि नृपराष्ट्रविवृद्धये ॥
त्रपुसीसकलौहानि अन्त्यजादिषु कारयेत्
।
विवाहयज्ञश्राद्धेषु प्रतिष्ठासु विशेषतः ॥
पात्राणाञ्चाद्वरः कार्य्यः पात्राण्येवोत्तमानि
च ।
पात्रेषु पृथिवी दुग्धा सुधा पात्रेषु धार्य्यते
॥

धटः । इति जटाधरः ॥ पातओयार इति
भाषा ॥

**पात्रसंस्कारः**, पुं, (संस्क्रियते इति । सम् + कृ +
घञ् । पात्रस्य संस्कारः शुद्धिः ।)
भाजनशुद्धिः ।
पुरोटिः । इति शब्दचन्द्रिका ॥ रायभाटी
इति भाषा ॥

**पात्री**, स्त्री, (पा + ष्ट्रन् । षित्वात् ङीप् ।) पात्रम् ।
इति त्रिलिङ्गसंग्रहे अमरः । ३ । ५ । ४२ ॥
(यथा, पाद्मे सृष्टिखण्डे तडागविधिप्रकरणे ।
"पात्रीमादाय सौवर्णीं पञ्चरत्नसमन्विताम् ।
तत्र निःक्षिप्य मकरं मत्स्यादींश्चैव सर्व्वशः
॥")

**पात्रीयं**, क्ली, (पात्रे साधु । पात्र + बाहुलकात्
च्छः ।) यज्ञपात्रम् । इति त्रिकाण्डशेषः ॥

**पात्रीरः**, पुं, (पात्र्यै राति पात्रीं रातीति वा ।
रा + कः ।) यज्ञद्रव्यम् । इति भूरिप्रयोगः ॥

**पात्रेसमितः**, त्रि, (पात्रे भोजनसमये एव
समितः सङ्गतः ।) भोजनादन्यत्र यो न
मिलितः सः । भोजनेष्वेव दक्षः । यथा, --
"स पात्रेसमितोऽन्यत्र भोजनान्मिलितो न
यः ॥"
इति त्रिकाण्डशेषः ॥
पापविशेषः । यथा, --
"निधाय हृदये पापं यः परं शंसति स्वयम् ।
स पात्रेसमितोऽथ स्यात् ॥" इति शब्दमाला
॥

**पात्रोपकरणं**, क्ली, (पात्रस्य पात्राणां वा उप-
करणम् उपभूषणम् ।) उपभूषणम् । यथा, --
"रीतिवर्गादिसंजातं पात्रोपकरणादिकम् ।
दद्यादायसवर्ज्जन्तु भूषणं न कदाचन ॥
घण्टाचामरकुम्भादिपात्रोपकरणादिकम् ।
तद्भूषणान्तरे दद्याद्यस्मात्तदुपभूषणम् ॥"
इति कालिकापुराणे ६८ अध्यायः ॥

**पात्त्रं**, क्ली, (पततीति । पत + क्विप् । पतं अधः-

इति असुन् थुट् च । "पातेरेवोदके वाच्येऽसुन्
तस्य थुडागम इत्युज्ज्वलदत्तः ।) जलम् । इत्य-
मरः ॥ (यथा, काशीखण्डे । २९ । ४९ ।
"खरसन्तापशमनी खनिः पीयूषपाथसाम् ॥")

**पाथिः**, [स्] पुं, (पिबति नद्यादिजलमाकर्ष-
तीति । "पिबतेस्थुक् च ।" उणां । २ । ११५ ।
इति इसिन् थुगागमश्च ।) समुद्रः । इत्युणादि-
कोषः ॥ चक्षुः । इति सिद्धान्तकौमुद्यामुणादि-
वृत्तिः ॥ (पीयते इति । पा + इसिन् थुगा-
गमश्च ।) कीलाले, क्ली । इत्युणादिकोषः ॥

**पाथेयं**, क्ली, (पथि साधुरिति । "पथ्यतिथिवसति
स्वपतेर्ढञ् ।" ४ । ४ । १०४ । इति ढञ् ।)
पथि व्ययितव्यद्रव्यम् । इति हेमचन्द्रः ॥ पथ-
खरच इति भाषा ॥ तत्पर्य्यायः । शम्बलम् २ ।
इत्यमरः ॥ सम्बलम् ३ । इति भरतः ॥ (यथा,
देवीभागवते । ३ । २५ । १२ ।
"लुण्ठिता तस्करैर्मार्गे वस्त्रमात्रा तथा-कृता ।
पाथेयञ्च हृतं सर्व्वं बालपुत्त्रा निराश्रया ॥")
कन्याराशिः । यथा, --
"क्रियतावुरिजितुमकुलीरलेयपाथेययूककौ-
र्पाख्याः ।
तौक्षिक आकोकेरो हृरोगश्चान्त्यभञ्चेत्थम् ॥"
इति ज्योतिस्तत्त्वम् ॥

**पाथोजं**, क्ली, (पाथसि जले जायते इति । जन +
डः ।) कमलम् । इति राजनिर्घण्टः ॥ (यथा,
नैषधे । १९ । २७ ।
"अनतिशिथिले पुम्भावेन प्रगल्भबलाः खलु
प्रसभमलयः पाथोजास्ये निविश्य निरित्वराः
॥"
कमलशब्दे विवरणं सविस्तरं ज्ञेयम् ॥)

**पाथोदः**, पुं, (पाथो जलं ददातीति । दा + कः ।)
मेघः । इति त्रिकाण्डशेषः ॥

**पाथोधरः**, पुं, (धरति धारयतीति वा । धृ + अच् ।
पाथसो धरः । पाथो धारयतीति । धारि + अच्
ह्रस्व इत्येके ।) मेघः । इति हलायुधः ॥
(यथा, राजतरङ्गिण्याम् । ३ । २४० ।
"अन्तर्ये सततं लुठन्ति गणितास्तानेव
पाथोधरै-

देवाः सोमः क्रतुर्यज्ञः पात्राण्येवं विदुर्बुधाः ।
बलिहोमक्रियादीनि विना पात्रैर्न सिध्यति ॥
तस्माद्यज्ञाङ्गमेवातः पात्रञ्चाग्र्यं महामुने ! ॥”
तत्परिमाणादिर्यथा, --
“षट्त्रिंशदङ्गुलं पात्रञ्चोत्तमं परिकीर्त्तितम् ।
मध्यमं तत्त्रिभागेण भागं कन्यसमीरितम् ॥
वस्वङ्गुलप्रमाणन्तु तत् पात्रं कारयेत् क्वचित् ।
नानाविचित्ररूपाणि पौण्डरीकाकृतीनि च ॥
शङ्खनीलोत्पलाकारपात्राणिपरिकल्पयेत् ।
रत्नादिरचितान् कुर्य्यात् काञ्चीमूलसुसञ्चितान् ॥
यथाशोभं यथालाभं तथा पात्राणि कारयेत् ।
विना पात्रेण यः कुर्य्यात् प्रतिष्ठायाज्ञिकीं क्रियाम् ।
विफला भवते सर्व्वा वाहनादिधनापहा ॥”
इति देवीपुराणम् ॥ * ॥
भोजनपात्राणि भोजनशब्दे द्रष्टव्यानि ॥

**पात्रटः**, पुं, (पाता इव पिबन्निव वा अटतीति । अट् + अच् ।) कर्पटकः । कृशे, त्रि । इति शब्दरत्नावली ॥

**पात्रटीरः**, पुं, (पातेव रक्षन्निव पिबन्निव वा अट-तीति + अट + बाहुलकात् ईरन् ।) युक्तव्यापार-मन्त्री । लौहपात्रम् । कांस्यपात्रम् । रजतपा-त्रम् । सिंहाणम् । पावकः । इति शब्दमाला मेदिनी च ॥ रे, २८१ । पिङ्गाशः । वायसः । कङ्कः । इति शब्दरत्नावली ॥

**पात्रपालः**, पुं, (पात्रं पालयतीति । पाल + पतन्तं जनं त्रायते । त्रै + कः । ततः स्वार्थे प्रज्ञा-द्यण् निम्नेऽस्य निरुक्तिश्च दर्शनीया ।) पापि-त्राता । यथा, भविष्यपुराणे ।
“सर्व्वषामेव पात्राणां परं पात्रं महेश्वरः ।
पतन्तं त्रायते यस्मादतीवनरकार्णवात् ॥”
महेश्वर इति प्रदर्शकं हेतोरविशेषात् ।
तथा नन्दिपुराणम् ।
“पात्राण्याध्यात्मिका मुख्या विशुद्धाश्चाग्निहो-त्रिणः ।
देवताश्च तथा मुख्या गोदानं ह्येतदुत्तमम् ॥”
इति प्रायश्चित्ततत्त्वम् ॥

**पात्रता**, स्त्री, (पात्रस्य भावः ।) पात्रत्वम् । विद्यातपस्याचारयुक्तता । यथा, --
“न विद्यया केवलया तपसा वापि पात्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रचक्ष्यते ॥”
इति शुद्धितत्त्वम् ॥

**पाथं**, क्ली, जलम् । इति मेदिनी । थे, ९ ॥

**पाथः**, पुं, (पातीति । पा + थुट् निपातनात् ।) सूर्य्यः । अग्निः । इति मेदिनी । थे, ९ ॥

**पाथः**, [स्] क्ली, (पाति रक्षति जीवानिति । पा + “उदके थुट् च ।” उणां । ४ । २०४ । रार्त्तानापतितांस्तरङ्गवलयैश्चालिङ्ग्य गृह्णन्नसौ ॥”)

**पाथोधिः**, पुं, (पाथांसि धीयन्तेऽत्र । धा + कि ।) समुद्रः । इति त्रिकाण्डशेषः ॥ (यथा, राज-तरङ्गिण्याम् । ३ । ६८ ।
“वशीकृतेयं पृथिवी कृत्स्ना भवदनुग्रहात् ।
जेतुं द्वीपान् कथ्यतान्तु युक्तिः पाथोधिलङ्घने ॥”)

**पाथोनिधिः**, पुं, (पाथांसि जलानि निधीयन्ते-ऽस्मिन् इति । नि + धा + किः ।) समुद्रः । इति शब्दरत्नावली ॥

**पाद**, पुं, (पद + णिच् + क्विप् ।) पादः । इति जटाधरः ॥

**पादः**, पुं, (पद + करणे घञ् ।) पद्यते गम्यते अनेन । पा इति भाषा । स तु गर्भस्थबालकस्य मासद्वयेन भवति । यथा, --
“मासेन तु शिरो द्वाभ्यां बाह्वङ्घ्र्याद्यङ्गविग्रहः ॥”
इति भागवतीयतृतीयस्कन्धः ॥

तत्पर्य्यायः । पत् २ अङ्घ्रिः ३ चरणः ४ । इत्य-
मरः ॥ अंह्रिः ५ । इति शब्दरत्नावली ॥ * ॥
ऋग्वेदीयमन्त्रचतुर्थांशः । श्लोकचतुर्थांशः । यथा,
पादाश्चेल्लोपे सत्येव पूर्य्येत । इह ऋक्पाद एव
गृह्यते । इति वामनः ॥ अविशेषात् श्लोकपादो-
ऽपि । इत्यपरे । इति सिद्धान्तकौमुदी ॥ * ॥
पादद्वारा पादाक्रमणादिनिषेधो यथा, --
"पादेन नाक्रमेत् पादमुच्छिष्टं नैव लङ्घयेत् ।
न संहताभ्यां पाणिभ्यां कण्डूयेदात्मनः शिरः ॥"
इति कर्म्मलोचनम् ॥ * ॥
पादचालनादिनिषेधो यथा, --
"न पादचालनं कुर्य्यात् पादेन वा कदाचन ।
नाग्नौ प्रतापयेत् पादौ न कांस्ये धावयेद्बुधः ॥
नातिप्रसारयेद्देवं ब्राह्मणान् गामथापि वा ।
वाय्वग्निनृपविप्राणां सूर्य्यं वा शशिनं प्रति ॥"
इति कौर्म्मे उपविभागे १५ अध्यायः ॥ * ॥
पादेन्द्रियस्याध्यात्मत्वं तस्मिन्नधिभूतमधिदैवतञ्च
यथा, महाभारते आश्वमेधिकपर्व्वणि
४२ अध्याये ।
"अतः परं प्रवक्ष्यामि सर्व्वं विविधमिन्द्रियम् ।
पादावध्यात्ममित्याहुर्ब्राह्मणास्तत्त्वदर्शिनः ॥
अधिभूतन्तु गन्तव्यं विष्णुस्तत्राधिदैवतम् ॥"
वुध्नः । वृक्षमूलम् । तुरीयांशः । चतुर्थभागः ।
शैलप्रत्यन्तपर्व्वतः । महाद्रिसमीपे क्षुद्रपर्व्वतः ।
(यथा, हरिवंशे ९४ । २० ।
"उभयोर्बिन्ध्यर्क्षयोः पादे नगयोस्तां महा-
पुरीम् ॥")
मयूखः । किरणः । इति मेदिनी ॥ (शिवः ।
यथा, महाभारते । १३ । १७ । १२४ ।
"न्यायनिर्व्वपणः पादः पण्डितो ह्यचलोपमः ॥"
चिकित्सापादचतुष्टयं यथा, --
"वैद्यो व्याध्युपसृष्टस्तु भेषजं परिचारकः ।
एते पादाश्चिकित्सायाः कर्म्मसाधनहेतवः ॥
गुणवद्भिस्त्रिभिः पादैश्चतुर्थो गुणवान् भिषक् ।
व्याधिमल्पेन कालेन महान्तमपि साधयेत् ॥
वैद्यहीनास्त्रयः पादा गुणवन्तोऽप्यपार्थकाः ।
उद्गातृहोतृब्रह्माणो यथाध्वर्य्युं विनाध्वरे ॥
तत्त्वाधिगतशास्त्रार्थो दृष्टकर्म्मा स्वयं कृती ।
लघुहस्तः शुचिः शूरः सज्जोपस्करभेषजः ॥
प्रत्युत्पन्नमतिर्धीमान् व्यवसायी विशारदः ।
सत्यधर्म्मपरो यश्च स भिषक् पाद उच्यते ॥
अस्य शुभलक्षणं यथा, --
"अस्वेदनौ मृदुतलौ कमलोदराभौ
श्लिष्टाङ्गुली रुचिरताम्रनखौ सुपार्ष्णी ।
उष्णौ शिराविरहितौ च निगूढगुल्फौ
कूर्म्मोन्नतौ च चरणौ मनुजेश्वरस्य ॥"
अशुभलक्षणञ्च यथा, --
"सूर्पाकारविरूक्षपाण्डुरनखौ वक्रौ शिरा-
सन्ततौ
संशुष्कौ विरलाङ्गुली च चरणौ दारिद्र-
दुःखप्रदौ ॥")

**पादकटकः**, पुं, (पादस्य कटक इवेति ।) नूपुरः ।
रवशून्यहंसाकृतिचरणभूषणम् । वैँक मल
इति
भाषा । तत्पर्य्यायः । हंसकः २ । इत्यमर-
भरतौ ॥

**पादकृच्छ्रः**, पुं, व्रतविशेषः । यथा, --
"एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन चैकेन पादकृच्छ्र उदाहृतः ॥"
इति गारुडे १०३ अध्यायः ॥

**पादगण्डिरः**, पुं, (गड्यते क्षर्य्यते पूयरक्तादि यस्मात्
यत्र वा पादे इत्यर्थः । गड + किरच् इति
गण्डिरः पदः ततो राजदन्तादिवत्
परनिपा-
तनात् साधुः । गण्डीर इति पाठोऽपि
दृश्यते
तत्र गड + ईरन्प्रत्ययेन सग्धुरिति ।)
श्लीप-
दम् । इति त्रिकाण्डशेषः ॥ गोद इति भाषा
॥
(श्लीपदशब्देऽस्य विवृतिर्व्विज्ञेया ॥)

**पादग्रहणं**, क्ली, (पादयोर्ग्रहणम् इति । ग्रह +
भावे ल्युट् ।) अभिवादनम् ।
पादस्पर्शपूर्ब्बक-
प्रणामः । इत्यमरः ॥ तन्निषेधो यथा,
"समि-
द्वार्य्युदकुम्भपुष्पान्नहस्तो नाभिवादयेत्
यच्चा-
प्येवं युक्तम् ।" इति बौधायनः ॥

**पादचारी**, [न्] पुं, (पद्भ्यां चरतीति । चर
गतौ + णिनिः) पदातिः । इति हेमचन्द्रः
।
३ । १६२ ॥ पद्भ्यां गमनशीले, त्रि ॥
(यथा,
भागवते । ६ । १२ । २९ ।
"गिरिराट् पादचारीव पद्भ्यां निर्ज्जरयन्
महीम् ।
जग्रास स समासाद्य वज्रिनं सहवाहनम्
॥")

**पादजः**, पुं, (पद्भ्यां जायते इति । जन + डः ।
"पद्भ्यां शूद्रोऽजायत ।" इति
श्रुतेर्ब्रह्मणः
पद्भ्यां जातत्त्वात्तथात्वम् ।) शूद्रः । इति
त्रिकाण्डशेषः ॥ (यथा, हरिवंशे
भविष्यपर्व्वणि ।
३९ । ६३ ।
"न विप्रा न च राजानो न वैश्या न च
पादजाः ॥"
पादोद्भवमात्रे, त्रि ॥)

**पादत्राणं**, क्ली, (पादयोस्त्राणं यस्मात् ।) पादुका
इति जटाधरः ॥ (यथा, सुश्रुते
चिकित्सित-
स्थाने ११ अध्याये ।
"अधनस्त्वबान्धवो वा पाद-
त्राणातपत्रविरहितो भैक्ष्याशी
ग्रामैकरात्रा-
नुवासी मुनिरिर्व संयतात्मा
योजनशतमधिकं
वा गच्छेत् ॥" शीतऋतूपचारेऽस्य
व्यवहारो
यथा, --
"उष्णत्वभावैर्लघुभिः प्रावृतः
शयनम्भजेत् ।
युक्त्यार्ककिरणान् स्वेदं पादत्राणञ्च
सर्व्वदा ॥")

**पादपः**, पुं, (पादेन मूलेन पिबति रसानिति ।
पा + कः ।) वृक्षः । इत्यमरः ॥ (यथा,
हितोप-

आयुष्मान् सत्त्ववान् साध्यो द्रव्यवानात्मावानपि ।
आस्तिको वैद्यवाक्यस्थो व्याधितः पाद उच्यते ॥
प्रशस्तदेशसम्भूतं प्रशस्तेऽहनि चोद्धृतम् ।
युक्तमात्रं मनस्कान्तं गन्धवर्णरसान्वितम् ॥
दोषघ्नमग्लानिकरमविकारिविपर्य्यये ।
समीक्ष्य दत्तं काले च भेषज्रं पाद उच्यते ॥
स्निग्धोऽजुगुप्सुर्ब्बलवान् युक्तो व्याधितरक्षणे ।
वैद्यवाक्यकृदश्रान्तः पादः परिचरः स्मृतः ॥"
इति च सुश्रुते सूत्रस्थाने ३४ अध्यायः ॥
"कारणं षोडशगुणं सिद्धौ पादचतुष्टयम् ॥"
इति चरकं सूत्रस्थाने नवमेऽध्यांये ॥

"जपयज्ञजलस्थञ्च समित्पुष्पकुशानलान् ।
दन्तकाष्ठञ्च भक्ष्यञ्च वहन्तं नाभिवादयेत्
॥"
इति लघुहारीतः ॥
न पुष्पाक्षतपाणिर्नाशुचिर्न जपन् न
देवपितृ-
कार्य्यं कुर्व्वन् । अभिवादयेदित्यनुवृत्तौ
शङ्ख-
लिखितौ ॥ * ॥ तद्विधिः ।
"लौकिकं वैदिकं वापि तथाध्यात्मिकम्मेव
वा ।
आददीत यतो ज्ञानं तं पूर्ब्बमभिवादयेत् ॥
ऊर्द्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर
आयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते
॥" * ॥
तत्प्रकारः ।
"अभिवादात् परं विप्रो
ज्यायांसमभिवादयन् ।
असौ नामाहमस्मीति स्वं नाम परिकीर्त्तयेत्
॥
नामधेयस्य ये केचिदभिवादं न जानते ।
तान् प्राज्ञोऽहमिति ब्रूयात् स्त्रियः
सर्व्वास्तथैव
च ॥
भोः शब्दं कीर्त्तयेदन्ते स्वस्य
नाम्नोऽभिवादने ।
नाम्नां स्वरूपभावो हि भो भाव ऋषिभिः
स्मृतः ॥"
इति मनुः । २ । १२२ -- १२४ ॥

**पादचतुरः**, पुं, (पादे पदव्यापारे गमनादौ
चतुरः ।) छागः । सैकतम् । पिप्पलः ।
करकः ।
परदोषैकप्रवक्ता । इति मेदिनी । रे, ३०४
॥

देशे । १ । ६३ ।
"यत्र विद्वज्जनो नास्ति
श्लाघ्यस्तत्राल्पधीरपि ।
निरस्तपादपे देशे एरण्डोऽपि द्रुमायते ॥"
पादौ पाति रक्षतीति । पा + रक्षणे + कः
।)
पादपीठः । इति मेदिनी । पे, २१ ॥

**पादपरुहा**, स्त्री, (पादपे वृक्षे रोहतीति । रुह +
कः ।) बन्दाकः । इति राजनिर्घण्टः ॥

**पादपा**, स्त्री, (पादौ पाति रक्षतीति । पा +
कः + टाप् ।) पादुका । इति मेदिनी । पे,
२१ ॥

**पादपाशः**, पुं, (पादस्य पाशः ।) अश्वपादरज्जुः ।
तत्पर्य्यायः । दामाञ्चनम् २ । इति
हेमचन्द्रः ।
४ । २९५ ॥

**पादपाशी**, स्त्री, (पादपाश + स्त्रियां गौरादित्वात्
ङीष् ।) खड्डुका । खेड़ुया इति भाषा ॥
शृङ्खला । शिकली इति भाषा ॥ इति
मेदिनी ॥

**पादपीठं**, क्ली, (पादस्य पीठम् ।) पादस्थाप-
नासनम् । पा राखा टुल इति भाषा ॥
तत्-
पर्य्यायः । पदासनम् २ । इति हेमचन्द्रः
। ३ ।
३८२ ॥ (यथा, रघुः । १७ । २८ ।
"वितानसहितं तत्र भेजे पैतृकमासनम् ।
चूडामणिभिरुद्घृष्टपादपीठं महीक्षिताम्
॥")

**पादपीठिका**, स्त्री, (पादपीठं साधनत्वेनास्त्यस्या
इति । पादपीठ + ठन् ।)
नापितादिशिल्पम् ।
यथा, --
"नापितादिकशिल्पे तु कारिका
पादपीठिका ॥"
इति शब्दमाला ॥

**पादप्रक्षालनं**, क्ली, (पादयोः प्रक्षालनम् ।)
चरणधौतम् । पा धोओया इति भाषा ॥
अस्य
गुणाः । मेधाजनकत्वम् । पवित्रत्वम् ।
आयुष्य-
त्वम् । अलक्ष्मीकलिनाशकत्वञ्च । इति
राज-
वल्लभः ॥ (यथा, च, --
"पादप्रक्षालनं पादमलरोगश्रमापहम् ।
चक्षुःप्रसादनं वृष्यं रक्षोघ्नं प्रीतिवर्द्धनम् ॥"
इति चिकित्सितस्थाने चतुर्व्विंशेऽध्याये
सुश्रुते-
नोक्तम् ॥)

**पादप्रधारणं**, क्ली, (पादौ प्रधार्य्येते कण्टकादिभ्यो
रक्ष्येतेऽनेनेति । प्र + धृ + णिच् + ल्युट् ।)
पादुका । इति केचित् ॥

**पादप्रहारः**, पुं, (पादस्य पादेन वा प्रहारः ।)
पदाघातः । लाति इति भाषा ॥ यथा ।
"नायिकापादप्रहारादिना नायकस्य
कोपादि-
वर्णनम् ।" इति काव्यप्रकाशे सप्तमोल्लासः
॥
(यथा च साहित्यदर्पणे । १० । ४६ ।
"दासे कृतागसि भवत्युचितः प्रभूणां
पादप्रहार इति सुन्दरि ! नात्र दूये ।
उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रै-
र्यद्भिद्यते मृदु पदं ननु सा व्यथा मे ॥")

**पादबन्धनं**, क्ली, (पादयोर्गोमहिष्यादीनामित्यर्थः ।
यद्बन्धनम् ।) गोमहिष्यादिबन्धनम् । इति
जटा-
धरः ॥ यादवशब्दटीकायां भरतश्च ॥
(बध्ना-
त्यनेनेति । बन्ध + करणे ल्युट् ।
पादयोर्बन्धनं
तत्साधनवस्तु । गोमहिष्यादीनां
पादबन्धन-
द्रव्यम् । यथा, हेमचन्द्रः । ४ । ३२१ ।
"स तु शृङ्खलकः काष्ठमयैः स्यात्
पादबन्धनैः ॥")

**पादविरजाः**, [स्] स्त्री, (पादो विरजा धूलि-
विहीनो यस्याः ।) पादुका । इति हारा-
वली । ७४ ॥

**पादशः**, [स्] व्य, पादं पादम् । पादशब्दात्
वीप्सायां चशस्प्रत्ययनिष्पन्नम् । इति
व्याकर-
णम् ॥ (यथा, मनुः । १ । ८३ ।
"अरोगाः सर्व्वसिद्धार्थाश्चतुर्व्वर्षशतायुषः ।
कृते त्रेतादिषु ह्येषामायुर्ह्रसति पादशः ॥")

**पादशैलः**, पुं, (पादः महाद्रिसमीपस्थः क्षुद्रपर्व्वतः
स एव शैलः ।) प्रत्यन्तपर्व्वतः । इति
शब्दरत्ना-
वली ॥

**पादशोथः**, पुं, (पादोद्भवः शोथः । शाकपार्थि-
वादिवत् समासः ।) पादगतशोफः । यथा, -
-
"अनन्योपद्रवकृतः शोथः पादसमुत्थितः ।
पुरुषं हन्ति नारीन्तु मुखजो गुह्यजो द्वयम्
॥"
इति माधवकरः ॥
(यथा च हारीते चिकित्सितस्थाने २६ अः
॥
"शोथो भवेच्च विकलेन्द्रियरोममार्गः
क्षीणे बले वपुषि चाम्लकटूष्णसेवया ।
शैत्यात्तथा विशदपिच्छलसेवनेन
रूक्षाभिघातपतनेन च धारणाद्वा ॥
आमाशये गतिरतोऽपि नरस्य यस्य
अन्ते प्रधावति ततोऽपि च दोष एषः ।
करोति पाणिचरणे च पृथक् प्रसूतो
द्वन्द्वेन वा भवति शोथविकारचारः ॥
नरस्य चान्तःप्रभवाश्च शोथाः
साध्या भवेयुर्विनता मुखेषु ।
असाध्यकाः सर्व्वशरीरगाश्च
पादे स्त्रिया वा वदने नरस्य ॥")

**पादस्फोटः**, पुं, (पादस्य स्फोटः । पादं स्फोटय-
तीति वा । स्फुट् + "कर्म्मण्यण् ।" ३ । २
। १ ।
इत्यण् ।) रोगविशेषः । तत्पर्य्यायः । विपा-

**पादातं**, क्ली, (पदातीनां समूहः । पदाति +
"भिक्षादिभ्योऽण् । ४ । २ । ३८ । इत्यण् ।)
पत्तिसंहतिः । पदातिसमूहः । इत्यमरः ॥
(यथा, महाभारते । १२ । ९९ । ८ ।
"सादिनामन्तरे स्थाप्यं पादातमपि दंशितम्
॥")

**पादातः**, पुं, (पादाभ्यामततीति । अत + अच् ।)
पादातिः । यथा, --
"पदातिपत्तिपादातपादातिकपदाजयः ॥"
इत्यमरमाला ॥
(यथा, महाभारते । २ । ५१ । ४३ ।
"अयुतं त्रीणि पद्मानि गजारोहाः ससादिनः ।
रथानामर्व्वुदं चापि पादाता बहवस्तथा ॥")

**पादातिः**, पुं, (पादाभ्यामततीति । अत + इन् ।)
पदातिः । इति हेमचन्द्रः ॥

**पादातिकः**, पुं, (पादातिरेव । पादाति + स्वार्थे
कन् ।) पदातिः । इति हेमचन्द्रः । ३ । १६२ ॥

**पादारकः**, पुं, (पाद इव ऋच्छतीति । ऋ +
ण्वुल् ।) पोलिन्दः । इति त्रिकाण्डशेषः ॥

**पादालिन्दी**, स्त्री, (पाद इव अलिन्दो यत्र । गौरा-
दित्वात् ङीष् ।) नौका । इति हारावली । ५९ ।

**पादावर्त्तः**, पुं, (पाद इव आवर्त्तते इति । आ +
वृत् + अच् ।) अरघट्टकः । इति हेमचन्द्रः ।
४ । १५९ ॥ रहट् इति हिन्दीभाषा ॥

**पादाविकः**, पुं, (अव रक्षणे + भावे घञ् । पादेन
अवः रक्षणम् । तत्र पादावे पादेन शरीरादि-
रक्षणे नियुक्तः । पादाव + "तत्र नियुक्तः ।" ४ ।
४ । ६९ । इति ठक् ।) पदातिः । इति शब्द-
रत्नावली ॥

**पादी**, [न्] पुं, (पादोऽस्त्यस्येति । पाद + इनिः ।)
पादविशिष्टजलजन्तुगणः । अस्य गणना
गुणाश्च
यथा, भावप्रकाशे ।
"कुम्भीरकूर्म्मनक्राश्च गोधामकरशङ्कवः ।

चरणोद्वानञ्च ॥

**पादमूलं**, क्ली, (पादयोर्मलम् ।) चरणाधोभागः ।

यथा, हेमचन्द्रः ।
"पादमूलं गोहिरं स्यात् पार्ष्णस्तु घुटयोरधः ॥"
(यथा, रामायणे । २ । ७८ । २५ ।
"सा पादमूले कैकेय्या मन्थरा निपपात ह ॥"
प्रत्यन्तपर्व्वताधोभागः । यथा, कथासरित्-
सागरे । १ । २७ ।
"महीं भ्रमन्तौ हिमवत्पादमूलमवापतुः ॥")

**पादरक्षणं**, क्ली, (पादयो रक्षणं यस्मात् ।)

पादुका । इति हेमचन्द्रः । ३ । ५७८ ॥

**पादरज्जुः**, स्त्री, (पादबन्धनार्था रज्जुः ।) हस्ति-

पादबन्धनरज्जुः । तत्पर्य्यायः । पारी २ । इति
जटाधरः ॥ चरणबन्धनदाममात्रञ्च ॥

**पादरथी**, स्त्री, (पादस्य रथी क्षुद्रो रथ इव ।)

पादुका । इति त्रिकाण्डशेषः ॥

**पादरोहणः**, पुं, (पादैर्मूलैः रोहतीति । रुह +

ल्युः ।) वटवृक्षः । इति राजनिर्घण्टः ॥

**पादवल्मीकः**, पुं, (पादे वल्मीक इव ।) श्लीप-

दम् । इति हेमचन्द्रः । ३ । १२९ ॥ (श्लीपद-
रोगशब्देऽस्य विवरणं ज्ञातव्यम् ॥)

**पादविकः**, पुं, (पदवीं धावतीति । पदवी +

"माथोत्तरपदपदव्यनुपदं धावति ।" ४ । ४ । ३७ ।
इति ठक् ।) पथिकः । इति
सिद्धान्तकौसुदी ॥

दिका २ । इत्यमरः ॥ स्फुटी ३ स्फुटिः ४ पाद-
स्फोटिः ५ । इति शब्दरत्नावली ॥ स तु एका
दशक्षुद्रकुष्ठान्तर्गततृतीयकुष्ठम् । यथा, --
"वैपादिकं पाणिपादस्फुटनं तीव्रवेदनम् ।
पाणिपादस्फुटनं पाण्योः पादयोश्च स्फुटनं
विदारणं येन तत् । इति माधवकरः ॥ अस्य
चिकित्सा कुष्ठशब्दे द्रष्टव्या ॥

**पादहारकः**, त्रि, पादाभ्यां ह्रियतेऽसौ । पाद-

शब्दात् निपातनात् कर्म्मणि णकप्रत्ययान्तः ।
इति मुग्धबोधव्याकरणम् ॥ ("कृत्यल्युटो बहु-
लम् ।" ३ । ३ । ११३ । इति कर्म्मणि ण्वुल् । इति
सिद्धान्तकौमुदी ।) चरणद्वारा हरणकर्त्ता ॥

**पादाग्रं**, क्ली, (पादयोरग्रम् ।) चरणाग्रभागः ।

तत्पर्य्यायः । प्रपदम् २ । इत्यमरः ॥

**पादाङ्गदं**, क्ली, (पादस्य अङ्गदमिव ।) नूपुरम् ।

इत्यमरः ॥

**पादात्**, पुं, (पादाभ्यामतति गच्छतीति । अत +

क्विप् ।) पादातिः । इति शब्दरत्नावली ॥
(पादाभ्यामत्तीति । अद् + क्विप् । वृक्षः । इति
व्युत्पत्तिलब्धोऽर्थः ॥)

घण्डिकः शिशुमारश्चेत्यादयः पादिनः स्मृताः ॥
पादिनोऽपि च ये ते तु कोषस्थानां गुणैः समाः ॥"
चतुर्थांशभागी । यथा, मनुः । ८ । २१० ।
"सर्व्वेषामर्द्धिनो मुख्यास्तदर्द्धेनार्द्धिनोऽपरे ।
तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्चपादिनः ॥"

**पादुकः**, त्रि, (पद्यते गच्छतीति । पद + "लष-

पतपदेति ।" ३ । २ । १५४ । इति उकञ् ।)
गमनशीलः । पदधातोः कर्त्तरि उुक्प्रत्यय-
निष्पन्नः । इति मुग्धबोधव्याकरणम् ॥

**पादुका**, स्त्री, (पादूरेव । पादू + स्वार्थे कन् ततो

ह्रस्वः ।) चर्म्मादिनिर्म्मितपादाच्छादनम् । जुता
इति भाषा ॥ तत्पर्य्यायः । पादूः २ उपानत् ३ ।
इत्यमरः ॥ पन्नद्धा ४ पादरक्षिका ५ प्राणि-
हिता ६ । इति हेमचन्द्रः ॥ पन्नद्ध्री ७ पाद-
रथी ८ । इति त्रिकाण्डशेषः ॥ कौषी ९ ।
इति शब्दरत्नावली ॥ * ॥ तस्या धारणविधि-
र्यथा, --
"वर्षातपादिके छत्री दण्डी रात्र्यटवीषु च ।
शरीरत्राणकामो वै सोपानत्कः सदा व्रजेत् ॥"
इति ज्योतिस्तत्त्वम् ॥

अस्या धारणगुणाः ।
“पादप्रधारणं वृष्यमोजस्यं चक्षुषोर्हितम् ।
सुखप्रचारमायुष्यं बल्यं पादरुजापहम् ॥” * ॥
अस्या अधारणे दोषा यथा, --
“पादाभ्यामनुपानद्भ्यां नृणां चंक्रमणं सदा ।
अनारोग्यमनायुष्यमिन्द्रियघ्नमदृष्टिकृत् ॥”
इति राजवल्लभः ॥ * ॥
तस्या दानफलं यथा, --
“दह्यमानाय विप्राय यः प्रयच्छत्युपानहौ ।
न तस्य मानसो दाहः कदाचिदपि जायते ॥
यानञ्चाश्वतरीयुक्तं तस्य हेममयं शुभम् ।
उपतिष्ठति विप्रर्षे सर्व्वरत्नविभूषितम् ॥
दानमत्र यथोत्पन्नं तत्ते वक्ष्यामि पार्थिव ।
शृणुष्वैकमना भूप ! लोके सर्व्वसुखप्रदम् ॥
जमदग्निर्मुनिः पूर्ब्बं तपःस्वाध्यायकर्शितः ।
वाणखड्गधरो धन्वी बभूव सततोद्यतः ॥
धनुर्वेदे तथा वेदे सर्व्वास्त्रपारगोऽभवत् ।
क्षिपन् वाणांस्तथा शश्वत् भार्य्ययानुगतो हि सः ॥
कदा निदाघकाले तु क्षिपन् वाणान् सहस्रशः ।
तस्यौ स्थाणुरिवासह्यः प्रतिलक्षं महामुनिः ॥
निदाघतीव्रसन्तापाद्गच्छन्त्याःसततं भयात् ।
भर्त्तुः स्नेहात्तथा यान्त्यास्तस्याश्चण्डायते रविः ॥
क्षुत्तृष्णाश्रमतापार्त्ता तथा यातुं न साशकत् ।
सुतापाद्देशविभ्रष्टा रेणुका च तपस्विनी ॥
तांदृष्ट्वा स मुनिः प्राह भार्य्यां किन्ते भवेच्चिरम् ।
कोपार्त्तमाह भर्त्तारं न कोपं कर्त्तुमर्हसि ॥
निदाघतीव्रसन्तापाद् भ्रष्टपादा तृषार्द्दिता ।
घृणिमदघृणिभिः स्पृष्टा न शशाकाह मार्गि-
तुम् ॥
इत्युक्ते स क्रुधाविष्टः प्राह सन्धाय कार्मुके ।
पृषत्कं मां न जानाति सूर्य्यो विभ्रंशमीयिवान् ॥
यः सन्तपति मे भार्य्यां साध्वीं धर्म्मपरायणाम् ।
साध्वसाधु अजानन् वै फलमाप्नोतु तस्य हि ॥
इत्युक्त्रा स्थानमातस्थावर्कविभ्रंशहेतवे ।
प्रतीक्ष्य हि सुघोरेण क्रूररूपधरो मुनिः ॥
तं विज्ञाय मुनिं सूर्य्यो द्विजोऽभूच्चेदमब्रवीत् ।
किमालोकयसे सूर्य्यं पुनः पुनरतीव हि ॥
सुवाणाञ्चितपाणिस्त्वं कथयस्वाखिलं मुने ! ।
दत्तं तैर्धार्य्यतेऽन्येषां क्षत्रियाणां द्विजोत्तम ! ॥
यो ददाति द्विजेभ्यस्तु तृतीयायामुपानहौ ।
वैशाखे शुक्लपक्षे तु सच्छत्रं कनकान्वितम् ॥
न तस्य मानषो दाहो मृत्युलोकेऽभिजायते ।
सर्व्वव्याधिविनिर्मुक्तः श्रियं पुत्त्रांश्च विन्दति ॥
कालादिह यदा याति मम लोके द्विजोत्तम ! ।
यानं वाश्वतरीयुक्तं सर्व्वहेममयं शुभम् ॥
दिव्याङ्गनाभिराकीर्णं सर्व्वरत्नविभूषितम् ।
उपतिष्ठति विप्रेन्द्र ! सर्व्वकामफलप्रदम् ॥”
इत्यग्निपुराणम् ॥ * ॥
विष्णुगृहे सपादुकगमने दोषो यथा, --
वराह उवाच ।
“वहन्नुपानहौ पद्भ्यां यस्तु मामुपचाक्रमेत् ।
चर्म्मकारस्तु जायेत वर्षाणान्तु त्रयोदश ॥
तत्र जन्मपरिभ्रष्टः शूकरो जायते पुनः ।
शूकराच्च परिभ्रष्टः श्वा च तत्रैव जायते ॥
ततः श्वत्वात् परिभ्रष्टो मानुषश्चैव जायते ।
मद्भक्तश्च विनीतश्च अपराधविवर्ज्जितः ॥
मुक्त्रा तु सर्व्वसंसारं मम लोकाय गच्छति ॥
य एतेन विधानेन वसुधे ! कर्म्म कारयेत् ।
न स लिप्यति पापेन एवमेतन्न संशयः ॥”
इति वराहपुराणे उपानहापराधप्रायश्चित्तम् ॥
अथ देवतापादुकानिर्म्माणपूजनविधिः ।
यथा, --
“मणिरत्नमयी कार्य्या हेमरूप्यमयी पि वा ।
चन्दनेनापि कर्त्तव्या पादुकाप्रतिमापि वा ॥
श्रीपर्णा श्रीद्रुमा चापि देवदारुमयी पि वा ।
षडङ्गुला च सा कार्य्या पादुके पूजयेत् सदा ॥”
इति देवीपुराणम् ॥ * ॥
गुरुपादुकास्तोत्रं यथा, --

**पादुकाकारः**, पुं, (पादुकां करोतीति । कृ + “कर्म्मण्यण् ।” ३ । २ । १ । इत्यण् ।) चर्म्म-कारः । इति हलायुधः ॥

**पादुकाकृत्**, पुं, (पादुकां करोतीति । कृ + क्विप् ।) चर्म्मकारः । इति हेमचन्द्रः । ३ । ५७८ ॥

**पादूः**, स्त्री, (पद्यते गभ्यते सुखेन ययेति । पद + “णित्कशिपद्यर्त्तेः ।” उणां १ । ८७ । इति ऊः स च णित् ।) पादुका । इत्यमरः ॥

**पादूकृत्**, पुं, (पादूं पादुकां करोतीति । कृ + क्विप् । तुक् ।) चर्म्मकारः । इत्यमरः ॥

**पादोदकं**, क्ली, (पादप्रक्षालनजातं उदकम् । शाकपार्थिवादिवत् समासः ।) चरणधौत-जलम् । चरणामृतम् । यथा, --
“हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः ।
पादोदकञ्च निर्म्माल्यं मस्तके यस्य सोऽच्युतः ॥
नैवेद्यमन्नं तुलसीविमिश्रं
विशेषतः पादजलं पिबेच्च ।
योऽश्नाति नित्यं प्रयतो मुरारेः
प्राप्नोति सुप्रेमयुतां स भक्तिम् ॥
हत्यां हन्ति यदङ्घ्रिसङ्गतुलसीस्तेयञ्च पादोदकं
नैवेद्यं बहुमद्यपानदुरितं गुर्व्वङ्गनासङ्गमम् ।
भक्त्याधीनमतिः स्थितिर्हरिजने तत्संगतिः सङ्गजा
शालग्रामशिलादिमूर्त्तिमहितांजानन्ति के वै हरेः ॥”
इति पाद्मोत्तरखण्डे १०० अध्यायः ॥ * ॥
अथ श्रीचरणोदकाभिषेकमाहात्म्यं पद्मपुराणे ।
“स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षितः ।
शालग्रामशिलातोयैर्य्योऽभिषेकं समाचरेत् ॥
गङ्गागोदावरीरेवानद्यो मुक्तिप्रदास्तु याः ।
निवसन्ति सतीर्थास्ताः शालग्रामशिलाजले ॥

इत्युक्तः स तमाहेदं पातयिष्याम्यहं रविम् ॥
द्विजस्तु तमुवाचाथ मुने चित्रं विभाति मे ।
मातुरङ्कगतो यद्वद्बालश्चन्द्रं जिघृक्षति ॥
योजनानां सहस्राणि निमेषाद्याति यो दश ।
विप्र ! मुक्तेन वाणेन तं कथं पातयिष्यसि ॥
तच्छ्रुत्वा यमदग्निस्तं प्राह शृणु द्विजोत्तम ! ।
पातयिष्याम्यहं यद्वदिमं सूर्य्यं नभःस्थलात् ॥
वियच्चरो यदा सूर्य्यो मर्त्यलोके त्वतन्द्रितः ।
मध्याह्ने स्थिरतामेति सर्व्वलोकान्ददर्शिवान् ॥
तत्काले सुमहल्लक्ष्यं भविष्यति दिवाकरः ।
एवं तं पातयिष्यामि पश्यतस्ते द्विजोत्तम ! ॥
तच्छ्रुत्वा सहसोद्विग्नस्तस्य प्रत्यक्षतां ययौ ।
सूर्य्यस्तं क्षमयामास दत्त्वा छत्रमुपानहौ ॥
ततःप्रभृति तच्छत्रं द्विजानां परिगीयते ।

"ब्रह्मरन्ध्रसरसीरुहोदरे
नित्यलग्नमवदातमद्भुतम् ।
कुण्डलीविवरकाण्डमण्डितं
द्वादशार्णसरसीरुहं भजे ॥ १ ॥
तस्य कन्दलितकर्णिकापुटे
कॢप्तरेखमकथादिरेखया ।
कोणलक्षितहलक्षमण्डली-
भावलक्ष्यमबलालयं भजे ॥ २ ॥
तत्पुटे पटुतडित्कडारिम-
स्पर्द्धमानमणिपाटलप्रभम्।
चिन्तयामि हृदि चिन्मयं वपु-
बिन्दुनादमणिपीठमण्डलम्॥ ३ ॥
ऊद्ध्र्वमस्य हुतभुक्शिखासखं
तद्विलासपरिबृंहणास्पदम् ।
विश्वघस्मरमहोत्सदोत्कटं
व्यामृषाठियुगमादिहंसयोः ॥ ४ ॥
तत्र नाथचरणारविन्दयोः
कुङ्कुमासवझरीमरन्दयोः ।
द्वन्द्वमिन्दुमकरन्दशीतलं
मानसं स्मरति मङ्गलास्पदम् ॥ ५ ॥
पादुकापञ्चकस्तोत्रं पञ्चवक्त्राद्विनिर्गतम् ।
षडाम्नायफलोपेतं प्रपञ्चे चातिदुर्लभम् ॥"
इति रुद्रयामलः ॥

कोटितीर्थसहस्रैस्तु सेवितैः किं प्रयोजनम्
।
तीर्थं यदि भवेत् पुण्यं शालग्रामशिलोद्भवम्
॥"
तत्रैव गौतमाम्बरीषसंवादे ।
"येषां धौतानि गात्राणि हरेः पादोदकेन वै ।
अम्बरीष ! कुले तेषां दासोऽस्मि वशगः
सदा ॥
राजन्नेतानि तावच्च तीर्थानि भुवनत्रये ।
यावन्न प्राप्यते तोयं शालग्रामाभिषेकजम्
॥"
स्कान्दे कार्त्तिकमाहात्म्ये ।
"गृहेऽपि वसतस्तस्य गङ्गास्नानं दिने दिने
।
शालग्रामशिलातोयैर्योऽभिषिञ्चति मानवः
॥"
तत्रैवान्यत्र ।
"यानि कानि च तीर्थानि ब्रह्माद्या देवता-
स्तथा ।
विष्णुपादोदकस्यैते कलां नार्हन्ति षोडशीम्
॥
शालग्रामोद्भवो देवो देवो द्वारवतीभवः ।
उभयोः स्नानतोयेन ब्रह्महत्या निवर्त्तते ॥"
किञ्च ।
"स वै चावभृतस्नातः स च गङ्गाजलाप्लुतः
।
विष्णुपादोदकं कृत्वा शङ्खेयः स्नाति मानवः
॥"
श्रीनृसिंहपुराणे ।
"गङ्गाप्रयागगयनैमिषपुष्कराणि
पुण्यानि यानि कुरुजाङ्गलयामुनानि ।

कालेन तीर्थसलिलानि पुनन्ति पापं
पादोदकं भगवतः प्रपुनाति सद्यः ॥”
स्मृतौ च ।
“त्रिरात्रिफलदा नद्यो याः काश्चिदसमुद्रगाः ।
समुद्रगाश्च पक्षस्य मासस्य सरितां पतिः ॥
षण्मासफलदा गोदा वत्सरस्य तु जाह्नवी ।
पादोदकं भगवतो द्वादशाब्दफलप्रदम् ॥”
तन्नित्यता च गरुडपुराणे ।
“जलञ्च येषां तुलसीविमिश्रितं
पादोदकं चक्रशिलासमुद्भवम् ।
नित्यं त्रिसन्ध्यं प्लवते न गात्रं
खगेन्द्र ! ते धर्म्मबहिस्कृता नराः ॥”
अथ श्रीचरणोदकपानमाहात्म्यम् । पाद्मे
गौत-
माम्बरीषसंवादे ।
“हरेः स्नानावशेषन्तु जलं यस्योदरे स्थितम्
।
अम्बरीष ! प्रणम्योच्चैः पादपांशुः प्रगृह्यताम्
॥”
तत्रैव देवदूतविकुण्डलसंवादे ।
“ये पिबन्ति नरा नित्यं शालग्रामशिलाजलम्
।
पञ्चगव्यसहस्रैस्तु सेवितैः किं प्रयोजनम् ॥
कोटितीर्थसहस्रैस्तु सेवितैः किं प्रयोजनम् ।
नित्यं यदि पिबेत् पुण्यं शालग्रामशिलाजलम्
॥
शालग्रामशिलातोयं यः पिबेद्विन्दुना समम् ।
मातुः स्तन्यं पुनर्नैव स पिबेन्मुक्तिभाग्नरः ॥”
किञ्च ।
“दहन्ति नरकान् सर्व्वान् गर्भवासञ्च दारुणम्
।
पीतं यैस्तु सदा नित्यं शालग्रामशिलाजलम्
॥”
तत्रैव श्रीयमधूम्रकेतुसंवादे ।
“शालग्रामशिलातोयं विन्दुमात्रं तु यः पिबेत् ।
सर्व्वपापैः प्रमुच्येत मुक्तिमार्गे कृतोद्यमः ॥”
तत्रैव पुलस्त्यभगीरथसंवादे ।
“पादोदकस्य माहात्म्यं भगीरथ ! वदामि ते ।
पावनं सर्व्वतीर्थेभ्यो हत्याकोटिविनाशनम् ॥
धृते शिरसि पीते च सर्व्वास्तुष्यन्ति देवताः ।
प्रायश्चित्तन्तु पापानां कलौ पादोदकं हरेः ॥”

नित्यन्तु पुष्करं तस्य यस्य पादोदकं हरेः
॥
प्रबोधवासरे प्राप्ते मथुरायाञ्च तस्य किम् ।
नित्यञ्च यामुनं स्नानं यस्य पादोदकं हरेः ॥
काश्यामुत्तरवाहिन्यां गङ्गायान्तु मृतस्य
किम् ।
यस्य पादोदकं विष्णोर्मुखे चैवावतिष्ठते ॥”
किञ्च ।
“हित्वा पादोदकं विष्णोर्योऽन्यतीर्थानि
गच्छति ।
अनर्घ्यरत्नमुत्सृज्य लोष्ट्रं वाञ्छति दुर्म्मतिः
॥
कुरुक्षेत्रसमो देशो विन्दुपादोदकं मतः ।
पतेद् यत्राक्षयं पुण्यं नित्यं भवति तद्गृहे ॥
गयापिण्डसमं पुण्यं पुत्राणामपि जायते ।
पादोदकेन देवस्य ये कुर्य्युः पितृतर्पणम् ॥
नासुराणां भयं तस्य प्रेतजन्यं न राक्षसम् ।
न रोगस्य भयं चैव नास्ति विघ्नकृतं भयम्
॥
न दुष्टा नैव घोराक्षाश्चापदोत्थभयं नहि ।
ग्रहाः पीडां न कुर्व्वन्ति वैरा नश्यन्ति
दारुणाः ॥
किं तस्य तीथगमने देवर्षीणाञ्च दर्शने ।
यस्य पादोदकं मूर्द्ध्नि शालग्रामशिलोद्भवम्
॥
प्रीतो भवति मार्त्तण्डः प्रीतो भवति केशवः
।
ब्रह्मा भवति सुप्रीतः प्रीतो भवति शङ्करः ॥
पादोदकस्य माहात्म्यं यः पठेत् केशवाग्रतः
।
स याति परमं स्थानं यत्र देवो जनार्द्दनः ॥”
ब्रह्माण्डपुराणे श्रीब्रह्मनारदसंवादे ।
“प्रायश्चित्तं यदि प्राप्तं कृच्छ्रं वा
त्वघमर्षणम् ।
सोऽपि पादोदकं पीत्वा शुद्धिं प्राप्नोति
तत्क्षणात् ॥
अशौचं नैव विद्येत सूतके मृतकेऽपि च ।
येषां पादोदकं मूर्द्ध्नि प्राशनं ये प्रकुर्व्वते ॥
अन्तकालेऽपि यस्येह दीयते पादयोर्जलम्
।

दुःस्वप्ननाशनं पुण्यं विष्णुपादोदकं शुभम् ॥
सर्व्वोपद्रवहन्तारं सर्व्वव्याधिविनाशनम् ।
सर्व्वोत्पातप्रशमनं सर्व्वतापनिवारणम् ॥
सर्व्वकल्याणसुखदं सर्व्वकामफलप्रदम् ।
सर्व्वसिद्धिप्रदं धन्यं सर्व्वधर्म्मविवर्द्धनम् ॥
सर्व्वशत्रुप्रशमनं सर्व्वभोगप्रदायकम् ।
सर्व्वतीर्थस्य फलदं मूर्द्ध्नि पादाम्बुधारणम्
॥
प्रयागस्य प्रभासस्य पुष्करस्य च सेवने ।
पृथूदकस्य तीर्थस्य आचान्तो लभते फलम्
॥
चक्रतीर्थे फलं यादृक् तादृक् पादाम्बुधारणात्
॥
सरस्वत्यां गयायाञ्च गत्वा यत् प्राप्नुयात्
फलम् ।
तत् फलं लभते श्रेष्ठं मूर्द्ध्नि पादाम्बुधारणात्
॥”
स्कान्दे ।
“पादोदकस्य माहात्म्यं देवो जानाति शङ्करः ।
विष्णुपादच्युता गङ्गा शिरसा येन धारिता ॥
स्थानं नैवास्ति पापस्य देहिनां देहमध्यतः ।
सवाह्याभ्यन्तरं यस्य व्याप्तं पादोदकेन वै ॥
पादोदं विष्णुनैवेद्यमुदरे यस्य तिष्ठति ।
नाश्रयं लभते पापं स्वयमेव विनश्यति ॥
महापापग्रहग्रस्तो व्याप्तो रोगशतैरपि ।
हरेः पादोदकं पीत्वा मुच्यते नात्र संशयः ॥
शिरसा तिष्ठते येषां नित्यं पादोदकं हरेः ।
किं करिष्यन्ति ते लोके तीर्थकोटिमनोरथैः ॥
अयमेव परो धर्म्म इदमेव परं तपः ।
इदमेव परं तीर्थं विष्णुपादाम्बु यत् पिबेत् ॥”
तत्रैव शिवोमासंवादे ।
“विलयं यान्ति पापानि पीते पादोदके हरेः ।
किं पुनर्विष्णुपादोदं शालग्रामशिलाप्लुतम् ॥
विशेषेण हरेत् पापं ब्रह्महत्यादिकं प्रिये ॥
पीते पादोदके विष्णोर्यदि प्राणैर्विमुच्यते ।
हत्वा यमभटान् सर्व्वान् वैष्णवं
लोकमाप्नुयात् ॥
तत्रैव शिवकार्त्तिकेयसंवादे शालग्रामशिला-
माहात्म्ये ।
“छिन्नस्तेन महासेन । गर्भवासः सुदारुणः ।
पीतं येन सदा विष्णोः शालग्रामशिलाजलम् ॥

किञ्च ।
“त्रिभिः सारस्वतं तोयं सप्ताहेन तु नामदम् ।
सद्यः पुनाति गाङ्गेयं दर्शनादेव यामुनम् ॥
पुनन्त्येतानि तोयानि स्नानदर्शनकीर्त्तनैः ।
पुनाति स्मरणादेव कलौ पादोदकं हरेः ॥
अर्च्चितैः कोटिभिर्लिङ्गैर्नित्यं यत् क्रियते फलम् ।
तत् फलं शतसाहस्रं पीतैः पादोदकैर्हरेः ॥
अशुचिर्वा दुराचारो महापातकसंयुतः ।
स्पृष्ट्वा पादोदकं विष्णोः सदा शुद्ध्यति मानवः ॥
पापकोटियुतो यस्तु मृत्युकाले शिरे मुखे ।
देहे पादोदकं यस्य न प्रयाति यमालयम् ॥
न दानं न हविर्येषां स्वाध्यायो न सुराच्चर्नम् ।
तेऽपि पादोदकं पीत्वा प्रयान्ति परमां गतिम् ॥
विशाखाऋक्षसंयुक्ता वैशाखी किं करिष्यति ।
पिण्डारके महातीर्थे उज्जयिन्यां भगीरथ ! ॥
माघमासे प्रयागे तु स्नानं वै किं करिष्यति ।
प्रयागं सततं तस्य यस्य पादोदकं हरेः ॥
कार्त्तिके कार्त्तिकीयोगे किं करिष्यति पुष्करे ।
सोऽपि सद्गतिमाप्नोति
सदाचारैर्ब्बहिष्कृतः ॥
अपेयं पिबते यस्तु भुङ्क्ते यश्चाप्यभोजनम् ।
अगम्यागमना ये वै पापाचाराश्च ये नराः ।
तेऽपि पूज्या भवन्त्याशु सद्यः
पादाम्बुसेवनात् ॥”
किञ्च ।
“अपवित्रं यदन्नं स्यात् पानीयं चापि पापिनाम् ।
भुक्त्वा पीत्वा विशुद्धः स्यात् पीत्वा पादोदकं
हरेः ॥
तप्तकृच्छ्रात् पञ्चगव्यात्
महाकृच्छ्राद्विशिष्यते ।
चान्द्रायणात् पादकृच्छ्रात् पराकादपि सुव्रत ।
कायशुद्धिर्भवेदाशु पीत्वा पादोदकं हरेः ॥
अगुरुं कुङ्कुमं चापि कर्पूरं चानुलेपनम् ।
विष्णुपादाम्बुसंलग्नं तद्वै पावनपावनम् ॥
दृष्टिपूतन्तु यत्तोयं विष्णुना प्रभविष्णुना ।
तद्वै पापहरं पुत्र ! किं पुनः पादयोर्जलम् ॥
एतदर्थमहं पुत्र ! शिरसा विष्णुतत्परः ।
धारयामि पिबाम्यद्य माहात्म्यं विदितं मम ॥
प्रियस्त्वमग्रजः पुत्र त्वदर्थं गदितं मया ।
रहस्यं मे त्वनर्हस्य न वक्तव्यं कदाचन ॥
धारयस्व सदा मूर्द्ध्नि प्राशनं कुरु नित्यशः ॥
जन्ममृत्युजरादुःखैर्मोक्षं यास्यसि पुत्रक ! ॥”
विष्णुधर्म्मोत्तरे ।
“सद्यः फलप्रदं पुण्यं सर्व्वपापविनाशनम् ।
सर्व्वमङ्गलमङ्गल्यं सर्व्वदुःखविनाशनम् ।
ये पिबन्ति नरा नित्यं शालग्रामशिलाजलम् ।
पञ्चगव्यसहस्रैस्तु प्राशितैः किं प्रयोजनम् ॥
प्रायश्चित्ते समुत्पन्ने किं दानैः किमुपोषणैः ।
चान्द्रायणैश्च तीर्थैश्च पीत्वा पादोदकं शुचिः ॥
बृहन्नारदीये लुब्धकोपाख्यानारम्भे ।
हरिपादोदकं यस्तु क्षणमात्रञ्च धारयेत् ।
स स्नातः सर्व्वतीर्थेषु विष्णोः प्रियतरस्तथा ॥
अकालमृत्युशमनं सर्व्वजाधिविनाशनम् ।
सर्व्वदुःखोपशमनं हरिपादोदकं शुभम् ॥”
तत्रैव तदुपाख्यानान्ते ।
“हरिपादोदकस्पर्शाल्लुब्धको वीतकल्मषः ।
दिव्यं विमानमारुह्य मुनिमेनमथाब्रवीत् ॥
हरिपादोदकं यस्मान्मयि त्वं क्षिप्तवान् मुने ।
प्रापितोऽस्मि त्वया तस्मात्तद्विष्णोः परमं पदम् ॥”
हरिभक्तिसुधोदये ।
“पादं पूर्ब्बं किल स्पृष्ट्वा गङ्गाभूत् स्मर्त्तृमोक्षदा ।
विष्णोः सद्यस्तु तत्सङ्गि पादाम्बु कथमीष्यते ॥

तापत्रयानलो योऽसौ न शाम्येत् सकलाब्धिभिः ।
द्रुतं शाम्यति सोऽल्पेन श्रीमद्विष्णुपदाम्बुना ॥
अघास्त्राभेद्यकवचं भवाग्निस्तम्भनौषधम् ।
सर्व्वाङ्गैः सर्व्वथा धार्य्यं पाद्यं शुचिसदः सदा ॥
अमृतत्वावहं नित्यं विष्णुपादाम्बु यः पिबेत् ।
स पिबत्यमृतं नित्यं मासे मासे तु देवताः ॥
माहात्म्यमियदित्यस्य यो वक्ता सोऽपि निर्भयः ।
न त्वनर्घ्यमणेर्मूल्यं कलयन्नघमश्नुते ॥”
अन्यत्रापि ।
“स ब्रह्मचारी स व्रती आश्रमी च सदा शुचिः ।
विष्णुपादोदकं यस्य मुखे शिरसि विग्रहे ॥
जन्मप्रभृतिपापानां प्रायश्चित्तं यदीच्छति ।
शालग्रामशिलावारि पापहारि निषेव्यताम् ॥”
अतएव तेजोद्रविणपञ्चरात्रे श्रीब्रह्मोक्तम् ।
“पीठप्लणालाद्धकं पृथगादाय पुत्रक ! ।
सिञ्चयेन्मूर्द्ध्नि भक्तानां सर्व्वतीर्थमयं हि तत् ॥”
इति ।
“पादोदकस्य माहात्म्यं विख्यातं सर्व्वशास्त्रतः ।
लेखितुं शक्नुयात् को हि सिन्धूर्म्मीन् गणयन्नपि ॥
विशेषतश्च पादोदं तुलसीदलसंयुतम् ।
शङ्खे कृत्वा वैष्णवेभ्यो दत्त्वा प्राग्वत् पिबेत्स्वयम् ॥”
अथ शङ्खकृतपादोदकमाहात्म्यं स्कान्दे ब्रह्म-

“षडङ्गुलं प्रविस्तारमुत्सेधञ्चतुरङ्गुलम् ।
ओष्ठमेकाङ्गुलं कुर्य्यान्नासिकां चतुरङ्गुलाम् ॥
पृष्ठे पादसमायुक्तं चतुरङ्गुलमानतः ।
पाद्यपात्रमिति ख्यातं सर्व्वदेवप्रपूजने ॥”
इति सिद्धान्तशेखरः ॥

**पानं**, क्ली, (पा पाने + भावे ल्युट् ।) पीतिः ।
द्रवद्रव्यस्य गलाधःकरणम् । (यथा, हितोपदेशे ।
“पयःपानं भुजङ्गानां केवलं विषवर्द्धनम् ॥”)
भाजनम् । (पाल रक्षणे + भावे ल्युट् ।) रक्ष-णम् । इति मेदिनी ॥ (पीयते खगादिभि-र्यत्र । पा + अधिकरणे ल्युट् । कुल्या । इति हेमचन्द्रः । ४ । १५५ ॥ पीयते यदिति । कर्म्मणि ल्युट् । जलम् । इति व्युत्पत्तिलब्धोऽर्थः ॥ * ॥ पाति रक्षतीति । पा + ल्युः । रक्षाकर्त्तरि, त्रि । यथा, ऋग्वेदे । ९ । ७० । ४ ।
“व्रतानि पानो अमृतस्य चारुण
उभे नृचक्षा अनु पश्यते विशौ ॥”
पायनम् । अस्त्रशस्त्राणां तीक्ष्णाग्रतासम्पा-दनव्यापारभेदः । पान् इति भाषा ॥ यदुक्तं बृहत्संहितायाम् ।
“वडवोष्ट्रकरेणुदुग्धपानं
यदि पानेन समीहतेऽर्थसिद्धिम् ।
झसपित्तमृगाश्च वस्तदुग्धैः
करिहस्तच्छिदये सतालगर्भैः ॥
आर्कं पयोहुडुविषाणमसीसमेतं
पारावताखुशकृता च युतं प्रलेपः ।
शस्त्रस्य तैलमथितस्य ततोऽस्य पानं
पश्चाच्छितस्य न शिलासु भवेद्विघातः ॥
क्षारे कदल्या मथितेन युक्ते
दिनोषिते पायितमायसं यत् ।
सम्यक् शितं चाश्मनि नैति भङ्गं
न चान्यलौहेष्वपि तस्य कौण्ठ्यम् ॥”
तथाच शुक्रनीत्याम् ।
“इदमौशनसञ्च शस्त्रपानं
रुधिरेण श्रियमिच्छतः प्रदीप्ताम् ।
हविषा गुणवत् सुताभिलिप्सोः
सलिलेनाक्षयमिच्छतश्च वित्तम् ॥”)

**पानः**, पुं, (पीयते यस्मादिति । पा + अपादाने ल्युट् ।) शौण्डिकः । इति जटाधरः ॥ निःश्वासः । इति हेमचन्द्रः । ६ । ४ ॥

प्रपानकमिदं श्रेष्ठं भीमसेनेन निर्मितम् ।
सद्यो रुचिकरं बल्यं शीघ्रमिन्द्रियतर्पणम् ॥
अपक्वाम्ररसोद्भूतपानकं वातनाशनम् ।
कफपित्तकरं किञ्चिन् प्रत्यहं यदि सेवितम् ॥”
पक्वाम्रस्य तु ।
“सुपक्कमाम्रस्य फलं सुमुष्टिना सम्मर्दितं शर्करया समन्वितम् ।
एलालवङ्गार्द्रकवासवासितं वर्णान्वितं कस्य न रोचकं भवेत् ॥
पानकं चाम्रसम्भूतं स्वाद्वम्लं गुरुपित्तजित् ।
सुहृद्यं श्लेष्मकृद्बल्यं वर्ण्यं वृष्यं रुचिप्रपदम् ॥”
अम्लिकाफलपानकं यथा, --
“अम्लिकायाः फलं पक्वं मर्द्दितं वारिणा दृढम् ।
शर्करा मरिचोन्मिश्रं लवङ्गेन्दुसुवासितम् ॥
अम्लिकाफलसम्भूतं पानकं वातनाशनम् ।
पित्तश्लेष्मकरं किञ्चित् सुरुच्यं वह्निबोधनम् ॥”
निम्बुफलपानकं यथा, --
“भागैकनिम्बुजं तोयं षड्भागं शर्करोदकम् ।
लवङ्गमरिचोन्मिश्रं पानकं पानकोत्तमम् ॥
निम्बूफलभवं पानमत्यम्लं वातनाशनम् ।
वह्निदीप्तिकरं रुच्यं समस्ताहारपाचकम् ॥”
धान्याकपानकं यथा, --
“शिलायां साधुसम्पिष्टं धान्याकं वस्त्रगालितम् ।
शर्करोदकसंयुक्तं कर्पूरादिसुसंस्कृतम् ॥
नवीने मृन्मये पात्रे स्थितं पित्तहरं परम् ॥
जम्ब्वाः पानकं यथा, --
“जम्बूफलं स्थूलतरं सुपक्वं सम्मर्द्दितं शर्करयाम्बुनालम् ।
सुवासितं वेल्लजभृङ्गपत्रे रुचिं विधत्ते विरुचौ जनानाम् ॥

नारदसंवादे ।
“कृत्वा पादोदकं शङ्खे वैष्णवानां महात्मनाम् ।
यो दद्यात्तुलसीमिश्रं चान्द्रायणशतं लभेत् ॥
गृहीत्वा कृष्णपादाम्बु शङ्खे कृत्वा तु वैष्णवः ।
यो वहेत् शिरसा नित्यं स मुनिस्तापसोत्तमः ॥”
पाद्मे देवदूतविकुण्डलसंवादे ।
“शालग्रामशिलातोयं यदि शङ्खभृतं पिबेत् ।
हत्याकोटिविनाशं तु कुरुते नात्र संशयः ॥”
अगस्त्यसंहितायाञ्च ।
“शालग्रामशिलातोयं तुलसीदलवासितम् ।
ये पिबन्ति पुनस्तेषां स्तन्यपानं न विद्यते ॥
श्रीविष्णोर्वैष्णवानाञ्च पावनञ्चरणोदकम् ।
सर्व्वतीर्थमयं पीत्वा कुर्य्यादाचमनं न हि ॥”
तदुक्तं स्कान्दे श्रीशिवेन ।
“विष्णोः पादोदकं पीत्वा पश्चादशुचिशङ्कया ।
आचामति च यो मोहाद्ब्रह्महा स निगद्यते ॥”
श्रुतिश्च । “भगवान् पवित्रो भगवत्पादौ पवित्रौ
पादोदकं पवित्रं न तत्पान आचमनीयं यथा
हि सोम इति ।” सौपर्णे च ।
“विष्णुपादोदकं पीत्वा भक्तपादोदकं तथा ।
य आचामति संमोहात् ब्रह्महा स निगद्यते ॥”
इति श्रीहरिभक्तिविलासः ॥

**पाद्यं**, क्ली, (पादार्थमुदकम् । पाद + “पादार्घा-

भ्याञ्च ।” ५ । ४ । २५ । इति यत् ।) पादाय

**पानकं**, क्ली, (पानाय कायतीति । कै + कः ।)

पानद्रव्यविशेषः । तत्प्रकारो यथा, “यथोक्त-
परिमितशर्करानिम्बूरसयुक्तोऽथवान्याम्लयुक्तः
पक्करसः । इति पाकराजेश्वरः ॥ (यथा, सुश्रुते ।
१ । ४६ ।
“पानीयं पानकं मद्यं मृण्मयेषु प्रदापयेत् ॥”
क्वचित् पुंस्यपि दृश्यते । यथा, तत्रैव । १ । ३९ ।
“एभिर्लेपान् कषायांश्च तैलं सर्पींषि पान-
कान् ॥”
तत्राम्रफलपानकम् । यथा, --
“आम्रमामं जलस्विन्नं मर्द्दितं दृढपाणिना ।
सिताशीताम्बुसंयुक्तं कर्पूरमरिचान्वितम् ॥
जम्बूफलभवं रुच्यं पानकं कफनाशनम् ।
कषायं वातकृत् स्तोकं स्वाद्वम्लं ग्राहकं परम् ॥”
वीजपूरपानकम् ।
“मातुलुङ्गरसे योज्यं त्रिगुणं शार्करं जलम् ।
कर्पूरमरिचोन्मिश्रं पानकं स्यादिदं वरम् ॥
मातुलुङ्गभवं पानं शूलानाञ्च विनाशनम् ।
श्वासे कासेऽरुचौ वातविड्वन्धेषु च पूजितम् ॥”
हेमकिरणन्तु ।
“शर्करानालिकेलञ्च बीजपूररसप्लुतम् ।
पटपुतं भवेद्धेमकिरणं नामपानकम् ॥
पानकं हेमकिरणं रुच्यं वृष्यं बलप्रदम् ।
सुस्निग्धं वातहृच्छुभ्रं किञ्चित् कफकरं गुरु ॥”
करमर्द्दपानकं यथा, --
“लवङ्गार्द्रकसंयुक्तं सुपिष्टं वारिणा युतम् ।
करमर्दं करैर्मर्द्यं सप्तभागसितान्वितम् ॥
वातहृद्रुचिदं भव्यं हृद्यमम्लतरं स्मृतम् ।
रक्तपित्तकरञ्चोष्णमाकण्ठ्यंकारमर्दितम् ॥”
नारङ्गपानकं यथा, --
“सुपक्वनारङ्गफलं निपीडितं
संयोजितं शर्करयाति शुभ्रया ।
सहार्द्रकं चेन्दुकणेन वासितं
पानेच्छया केन न संस्तुतक्षणम् ॥”

| | | |
|---|---|---|
| वारि । पादप्रक्षालनार्थजलम् । इत्यमरः ॥ तत्-<br>लक्षणं यथा, --<br>“पादावनेजनजलग्रहणं पात्रमद्भुतम् ।<br>लौहजं वा सरोजातं हैमं राजतमेव वा ॥<br>ताम्रमचरणमपि वायवेनं सतामिति ॥”<br>इति वैखानसग्रन्थः ॥ | | |

नारङ्गफलसम्भूतं पानकं वातनाशनम् ।
मधुरं विशदं रुच्यं सुस्निग्धं पित्तहृद्दृढम् ॥”
चारस्य तु ।
“चारवृक्षफलजं सशर्करं
मर्दितं शिशिरवारिणा दृढम् ।
ऐलमार्द्रकयुतेन सुवासं
भक्तसिक्थमिलितं कृतहासम् ॥
चारस्य फलजं पानं गुरु वृष्यं रुचिप्रदम् ।
कफपित्तहरं श्रेष्ठं हृद्यं मधुरपाकि च ॥
परुषजीरचुक्रादिद्राक्षादाडिमजंतथा ।
एकैकं सम्भवं भिन्नं पानकं क्रियते बुधैः ॥
एवमम्लस्य पुष्पस्य फलस्याम्लस्य वा तथा ।
शर्करामरिचोन्मिश्रं रस्यं स्यात् पानकं वरम् ॥
एवं हि पानकं कार्य्यं सुधिया सुष्ठु यत्कृतम् ।
गुणा द्रव्यानुसारेण ज्ञातव्याः पानकेषु च ॥”
यथास्य गुणाः, --
“श्रमक्षुत्तृट्क्लमहरं पानकं प्रीणनं गुरु ।
विष्टम्भि मूत्रलं हृद्यं यथाद्रव्यगुणञ्च तत् ॥”
इति वाभटे सूत्रस्थाने षष्ठेऽध्याये ॥
“गौडमम्लमनम्लं वा पानकं गुरु मूत्रलम् ।
तदेव खण्डमृद्वीकाशर्करासहितं पुनः ॥
साम्लं सुतीक्ष्णं सुहिमं पानकं स्यान्निरत्ययम् ।
“प्रद्रवाणि रसांश्चैव पानीयं पानकं पयः ।
खडान् यूषांश्च पेयांश्च सव्ये पार्श्वे प्रदापयेत् ॥”
इति सुश्रुते सूत्रस्थाने ४६ अध्याये ॥”

**पानगोष्ठिका**, स्त्री, (पानस्य पानाय वा गोष्ठिका ।)

यत्र सम्भूय पीयते । मद्यपानचक्रम् । तत्-
पर्य्यायः । आपानम् २ । इत्यमरः । २ । १० ।
४३ ॥
चक्रानुष्ठानं यथा श्यामारहस्यधृतम् । चक्रा-
कारेण पंक्त्याकारेण वा भिन्नभिन्नासने स्वशक्ति-
युक्तश्चेत् युग्मयुग्मक्रमेण पद्मासनेनोपविश्य साम-
यिकललाटे चन्दनं दत्त्वा शिवशक्तिबुद्ध्या पुष्पञ्च
दद्यात् । ततो यदि गुरुस्तत्र तिष्ठति तदादौ
गन्धादिना तं पूजयित्वा तत्पात्रे पुष्पं दत्त्वा
शुद्धिसहितं तस्मै समर्प्य प्रणमेत् । गुरोरभावे
तत् पात्रं जले क्षिपेत् । ततः शक्तिपात्रं शुद्धि-
सहितं शक्त्यै दत्त्वा सामयिकेभ्योऽपि ज्येष्ठानु-
क्रमेण वीरपात्रात् परामृतं शुद्धिसहितं दद्यात् ।
ततः सामयिकोऽपि भक्त्या हस्तद्वयेन संगृह्य
ह्वान्तां विभाव्य गुरुपादुकां स्मृत्वा शिवोऽह-
मिति विचिन्त्य हस्ताभ्यां पात्रं धृत्वा
मूलमुच्च-
रन् कुण्डलिनीमुखे देवीं तर्पयेत् । एतदुक्त-
मुदयाकरपद्धत्याम् ।
“कृत्वा मन्त्रतनुं स्मरेत् गुरुपदं देवीं बलां
चिन्मयीं
पश्चात् वारत्रयं सदासववृतं दीपैर्युतं
कज्जलैः ।
पुष्पादिष्वभिमन्त्रितञ्च निविडं
सम्मोहकध्वंसकं
ये सञ्चिन्त्य पिबन्ति यान्ति खलु ते भुक्तिञ्च
मुक्तिं पराम् ॥”
तन्त्रान्तरे च ।
“सिन्दूरतिलकं भाले पाणौ च मदिरासवम् ।
कृत्वा पिबेद्गुरुं ध्यायंस्तथा देवीञ्च चिन्मयीम्
॥”
ततः पात्रमाधारोपरि संस्थाप्य पुनस्तेन
क्रमेण
परामृतं गृहीत्वा पात्रवन्दनं कुर्य्यात् । यथा, --
“मद्यं मीनरसावहं यदि तया दत्तञ्च पेयादिभिः
किञ्चिच्चञ्चलरक्तपङ्कजदृशातस्यै
समावेदितम् ।
वामे स्वात्मविशुद्धिशुद्धिकमलंपाणौ
विधायात्मके
वन्दे पात्रमहं द्वितीयमधुनानन्दैकसंवर्द्धनम्
॥”
ततः पूर्ब्बवत् पात्रं स्वीकृत्य अन्यत्
पात्रवन्दनं
कुर्य्यात् । यथा, --
“सर्व्वाम्नायकलाकलापकलितं
कौतूहलद्योतनं
चन्द्रोपेन्द्रमहेन्द्रशम्भुवरुणब्रह्मादिभिः
सेवितम् ।
ध्यातं देवगणैः परं मुनिगणैर्म्मोक्षार्थिभिः
सर्व्वदा
वन्दे पात्रमहं तृतीयमधुना चात्मावबोधक्षमम्
॥”
तृतीयपात्राभिवन्दनं कृत्वान्यत् पात्रवन्दनं
कुर्य्यात् । यथा, --
“हैमं मीनरसावहं हरिहरब्रह्मादिभिः सेवितं
भावचूडामणौ च ।
“साक्षाद्यदि गुरुर्न स्यात्तदातोये
विसर्ज्जयेत् ॥”
एतत् सर्म्बं कलीतरपरम् ।
“दिव्यवीरमयो भावः कलौ नास्ति
कदाचन ॥”
इति कालीविलासवचनात् ॥

**पानपात्रं**, क्ली, (पानस्य पेयमद्यादेः पात्रम् ।)

मद्यपानपात्रम् । मद्यपानस्य भाजनम् ।
तत्-
पर्य्यायः । चषकः २ सरकः ३
अनुतर्षणम् ४ ।
इत्यमरः ॥ पूर्ब्बद्वयं मद्यपानपात्रे
शेषद्वयं मद्य-
परिवेशनपात्रे । इति भरतः ॥ चषकम्
५ अनु-
तर्षः ६ पारी ७ पारीकम् ८ । इति
शब्द-
रत्नावली ॥ * ॥ (यथा, मार्कण्डेये ।
८२ । २९ ।
“ददावशून्यं सुरया पानपात्रं धनाधिपः
॥”)
अथ पानपात्रपरिमाणादि यथा
कुलसारे ।
“नयनाग्निबाणसंख्यकर्षैस्तु
परमेश्वरि ! ।
पात्रं प्रकर्त्तव्यमित्युक्तं कुलसाधने ॥
इतोऽप्यधिकपात्रन्तु न कर्त्तव्यञ्च
साधकैः ॥”
कर्षं लौकिकतोलकमित्यर्थः । तदुक्तं
कुलोत्तमे ।
“गुञ्जाद्वादश माषः स्यात्तदष्टौ कर्ष
उच्यते ॥”
अथोत्तरतन्त्रे ।
“अनुज्ञां पुरतो लब्ध्वा गृह्णामीति स्वयं
वदेत् ।
जुषस्वेत्यभ्यनुज्ञातो गुरुणा वा
कुलीनकैः ॥
गृह्णीयाच्च स्वयं सिद्धो बद्धपद्मासनः
सुधीः ॥”

तदुपरि मूलमन्त्रमष्टधा जप्त्वा पूर्ब्बवदानन्द-
भैरवं भैरवीञ्च सन्तर्प्य गुरून् देवताञ्च सन्त-
र्पयेत् । स्वस्वकल्पोक्तविधिना भूतशुद्धिं कुर्य्यात्
।
ततश्चक्रनायकस्तैःसह पात्रवन्दनं कुर्य्यात् ।
यथा,
“श्रीमद्भैरवशेखरप्रविलसच्चन्द्रामृतप्लावितं
क्षेत्राधीश्वरयोगिनीसुरगणैः सिद्धिः समाराधि-
तम् ।
आनन्दार्णवकं महात्मकमिदं साक्षात्त्रिखण्डामृतं
वन्दे श्रीप्रथमं कराम्बुजगतं पात्रं विशुद्धिप्रदम् ॥”
इत्यभिमन्त्र्य वामहस्तेन पात्रमुत्तोल्य अन्योन्य-
वन्दनं कृत्वा गृह्णामीति गुरुशक्तिसाधकेश्वराणा-
माज्ञां गृह्णीयात् । ते जुषस्वेति ब्रूयुः । ततो मूला-
धारात् कुण्डलिनीं इष्टदेवतास्वरूपां आजि-

मुद्रामैथुनधर्म्मकर्म्मनिरतं क्षाराम्लतिक्ताश्र-
यम् ।
आचार्य्याष्टकसिद्धिभैरवकलामांसेन
संशोधितं
पायात् पञ्चमकारतत्त्वसहितं पात्रं चतुर्थं नमः
॥”
इति चतुर्थपात्रवन्दनं कृत्वान्यत्पात्रवन्दनं
कुर्य्यात् । यथा, --
“आधारे भुजगाधिराजवलये पात्रं महीमण्डलं
मद्यं सप्तसमुद्रवारि पिशितं चाष्टौ च दिग्-
दन्तिनः ।
सोऽहञ्चैव विभावयन् प्रतिदिनं तारागणैरक्षितो
ऽप्यादित्यप्रमुखैः सुरासुरगणैराज्ञाकरैः
किङ्करैः ॥”
इति पञ्चमपात्रं स्वीकुर्य्यात् । ततो
यावद्दृष्ठ्या-
दिकं न चलति तावत् पानादिकं कार्य्यम् ।
अथास्य प्रमाणं यथा रुद्रयामले ।
“साधकेभ्यश्च शक्तिभ्यो
दद्यान्निर्म्माल्यचन्दनम् ।
सामयिकैः समं कुर्य्याद्देवि ! पानादिभक्षणम्
॥”
अन्यत्रापि ।
“निविशेच्चक्ररूपेण पंक्त्याकारेण वा यथा ।
शक्तियुक्तो वसेद्वापि युग्मयुग्मविधानतः ।
शिवशक्तिधिया सर्व्वं चक्रमध्ये समर्पयेत् ॥”
तन्त्रान्तरे च ।
“ततः पुष्पं समादाय गुरोः पात्रे निवेदयेत् ।
गुरवे च निवेद्याथ शक्त्यै दत्त्वा स्वयं हरेत् ॥”

कुलार्णवे ।
“एकासने निविष्टा ये भुञ्जीरंश्चैव
भाजने ।
एकपात्रे पिबेद्द्रव्यं ते यान्ति नरकाधमे
॥”
एकपात्रमिति सर्व्वैर्म्मिलित्वा नैकपात्रे
पिबेत् ।
न तु प्रतिवारं द्रव्यपाने भिन्नभिन्नपात्रं
कार्य्यं
अननुष्ठानलक्षणापत्तेः
सम्प्रदायविरोधाच्च ॥

**पानबणिक्**, [ज्] पुं, (पानाय पेयसुरादेर्व्विक्र-
यार्थं बणिक् पानस्य बणिक् वा ।)
शौण्डिकः ।
इति हेमचन्द्रः ॥

**पानभाजनं**, क्ली, (पानाय पानस्य वा भाजनं
पात्रम् ।) पानपात्रम् । तत्पर्य्यायः ।
कंसः २ ।
इत्यमरः । २ । ९ । ३२ ॥
“काम्यतेऽसौ कंसः
कमुक्ङ्स्पृहि नाम्नीति सः दन्त्यान्तः
। स्वार्थे
ष्ण्ये कांस्यञ्च । स्वर्णरजतादिनिर्म्मिते
पात्रमात्रे-
ऽपि कंसः । ‘कंसः स्यात् तैजसे द्रव्ये
पान-
पात्रेऽपि कांस्यवत् ।’ इति शाश्वतः ॥
‘पात्रान्तरे पानपात्रे कांस्यं कंसे त्त
तैजसे ।’
इति रभसः ॥
पीयते पानं मद्यादि तस्य भाजनं
पानभीज-
नम् ।” इति भरतः ॥

**पानसं**, क्ली, (पनसस्य इदं पनसफले भवं तत्-
फलस्य विकार इति वा अण् ।)
पनसभव-
मद्यम् । इति जटाधरः ॥
पनससम्बन्धिनि, त्रि ॥

**पानात्ययः**, पुं, (पानाद्धेतोः जातो योऽत्ययः
रोग-

| | | विशेषः ।) मदात्ययरोगः । इति राजनिर्घण्टः ॥<br>**पानिलं**, क्ली, (पानमाधारत्वेनास्त्यत्र इति इलच् ।)<br>पानपात्रम् । इति शब्दचन्द्रिका ॥<br>**पानीयं**, क्ली, (पीयते इति । पा + अनीयर् ।)<br>जलम् । इत्यमरः । १ । १० । ४ ॥<br>पातव्ये रक्ष- |
|---|---|---|

णीये च त्रि ॥ पानार्हद्रव्यविशेषः । पाना इति वङ्गभाषा । शरवत् इति पारस्यभाषा । तत्र अम्लिकापानीयं पित्तवमिनाशकम् । मिष्ट-दाडिमीपानीयं प्रतिश्यायकाशनाशकम् । अम्ल-
दाडिमीपानीयं उदरविकारे धारकं क्षुधावृद्धि-कारकञ्च । निम्बूपानीयं
छर्द्दिहृल्लासपित्तज्वर-
निवारकं सकलाहारपाचकञ्च । नागरङ्ग-
पानीयं कासपित्तविनाशकं
अन्तःकरणप्राशस्त्य-
जनकञ्च । सेवचन्दनपानीयं बलकारकं
उन्माद-
मूर्च्छारोगशान्तिकारकं रतिशक्तिवर्द्धकं उदर-विकारोपकारकञ्च । इति पाकराजेश्वरः ॥
(अन्यत् पानकशब्दे द्रष्टव्यम् ॥ * ॥) जल-दानविधिर्यथा, --
यम उवाच ।
"एतत्ते कथितं विप्र ! मम लोके तु दुर्लभम् ।
पानीयं सन्ततन्तस्माद्दातव्यं सुखमिच्छता ॥
अतोऽर्द्धं कारयेत् कूपं वापीं वा बहुपल्वलम् ।
बहुलोकाकुले देशे सर्व्वसत्त्वोपजीवितम् ॥"
इत्यग्निपुराणम् ॥
तद्दानानन्तरं पाठ्यमन्त्रो यथा, --
"पानीयं प्राणिनः प्राणाः पानीयं पावनं महत्
।
पानीयस्य प्रदानेन तृप्तिभवति शाश्वती ॥"
इति स्मृतिः ॥
तत्पर्य्यायः ।
"पानीयजीवनवनामृतपुष्कराम्भः-
पाथोऽम्बुशम्बरपथःसलिलोदकानि ।
आपः कवारुणकबन्धजलानि नीरं
कीलालवारिकमलानि विषार्णसी च ॥
भुवनं दहनारातिर्वास्तोयं सर्व्वतोमुखम् ।
क्षीरं घनरसं निम्नगं मेघप्रसवो रसः ॥"
अस्य साधारणगुणाः ।
"पानीयं मधुरं हिमञ्च रुचिदं तृष्णाविशोषापहं
मोहभ्रान्तिमपाकरोति कुरुते भुक्तान्नपक्तिं
पराम् ।
निद्रालस्यनिरासनं विषहरं श्रान्तार्त्तिसन्तर्पनं

**पानीयनकुलः**, पुं, (पानीये जले नकुल इव ।)
उद्रः । उद्विडाल इति भाषा । यथा, --
"उद्रस्तु जलमार्जारः पानीयनकुलो
वसी ॥"
इति हेमचन्द्रः ॥

**पानीयपृष्ठजः**, पुं, (पानीयपृष्ठे जलोपरि जायते
इति । जन + डः ।) कुम्भी । इति
रत्नमाला ॥
पाना इति भाषा ॥

**पानीयफलं**, क्ली, (पानीयजातं फलमिति मध्य-
पदलोपी समासः ।) मखान्नम् । इति
भाव-
प्रकाशः ॥ माखाना इति भाषा ।

**पानीयमूलकं**, क्ली, (पानीयमेव मूलमस्य । ततः
कप् ।) सोमराजी । इति
शब्दचन्द्रिका ॥

**पानीयवर्णिका**, स्त्री, (पानीयं वर्णयति प्रका-
शयतीति । वर्णि + ण्वुल् । टाप् अत
इत्वञ्च ।)
वालुका । इति राजनिर्घण्टः ॥

**पानीयशालिका**, स्त्री, (पानीयस्य जलस्य वित-
रणार्थं शालिका शालागृहमित्यर्थः ।)
जला-
वस्थानगृहम् । पानिशाला इति
जलछत्र इति
च भाषा । तत्पर्य्यायः । प्रपा २ ।
इत्यमरः ॥
तत्कर्त्तृफलं यथा, --
"कूपारामप्रपाकारी तथा
वृक्षादिरोपकः ।
कन्याप्रदः सेतुकारी
स्वर्गमाप्नोत्यसंशयम् ॥"
इत्युद्वाहतत्त्वे यमः ॥

**पानीयामलकं**, क्ली, (पानीयमामलकं पानीयाख्यं

शल्यम् १६ पापकम् १७ । इति शब्दरत्नावली
(निषिद्धकर्म्मानुष्ठानविहितकर्म्माननुष्ठानाभ्यां
पापोत्पत्तिं सविशेषमाह श्रीसंदाशिवः ।
"अनुष्ठानं निषिद्धस्य त्यागो विहितकर्म्मणः ।
नृणां जनयतः पापं क्लेशशोकामयप्रदम् ॥
स्वानिष्टमात्रजननात् परानिष्टोपपादनात् ।
तदेव पापं द्विविधं जानीहि कुलनायिके ! ॥
परानिष्टकरात् पापान् मुच्यते राजशासनात् ।
अन्यस्मान्मुच्यते मर्त्यः प्रायश्चित्या समाधिना ॥
प्रायश्चित्याथवा दण्डैर्न पूता ये कृतांहसः ।
नरकान् न निवर्त्तन्ते इहामुत्र निगर्हिताः ॥"
इति श्रीमहानिर्व्वाणतन्त्रे ॥)
तद्दशविधं यथा, --
"प्राणाभिपातनं स्तैन्यं परदारमथापि च ।
त्रीणि पापानि कायेन सर्व्वतः परिवर्ज्जयेत् ॥
असत्प्रलापं पारुष्यं पैशुन्यमनृतन्तथा ।
चत्वारि वाचा राजेन्द्र ! न जल्पेत न चिन्तयेत् ॥
अनभिध्या परस्वेषु सर्व्वसत्त्वेषु सौहृदम् ।
कर्म्मणां फलमस्तीति त्रिविधं मनसा चरेत् ॥"
इति शान्तिपर्व्वणि दानधर्म्मः ॥
स्मृत्युक्तान्येतानि पातकशब्दे लिखितानि ॥ * ॥
पापस्य पुरुषत्रयानुवर्त्तित्वं यथा, --
"नाधर्म्मश्चरितो राजन् ! सद्यः फलति गौरिव ।
शनैरावर्त्तमानस्तु मूलान्यपि निकृन्तति ॥
यदि नात्मनि मित्रेषु न चेत् पुत्रेषु नप्तृषु ।
पापमाचरितं कर्म्म त्रिवर्गमनुवर्त्तते ॥
फलत्येवं ध्रुवं पापं गुरुभुक्तमिवोदरे ॥"
इति मात्स्ये २८ अध्यायः ॥ * ॥
तीर्थस्य पापनाशकत्वं तत्र कृतपापस्य वज्र-लेपत्वञ्च । यथा, --
"अन्यत्र हि कृतं पापं तीर्थमासाद्य गच्छति ।
तीर्थे तु यत् कृतं पापं वज्रलेपो भविष्यति ॥
मथुरायां कृतं पापं तत्रैव च विनश्यति ।
एषा पुरी महापुण्या यस्यां पापं न विद्यते ॥"
इति वाराहे मथुरामाहात्म्यम् ॥ * ॥
शेषपापलक्षणं यथा, --
"अतः परं प्रवक्ष्यामि शेषपापस्य लक्षणम् ।
ऋणं देवर्षिभूतानां मनुष्याणां विशेषतः ॥
पितॄणाञ्च द्विजश्रेष्ठ ! सर्व्ववर्णेषु चैकतः ।
ॐकारादिनिवृत्तिश्च पापकार्य्यकृतिश्च या ॥
हत्यादिकं महापापं त्वगम्यागमनं तथा ।

नृणां धीबलवीर्य्यवृद्धिजननं नष्टाङ्गपुष्टिप्रदम्
॥”
सद्यो वृष्ट्यम्बु भूमिस्थं कलुषं दोषदायकम् ।
चिरस्थितं लघु स्वच्छं पथ्यं स्वादु
सुखावहम् ॥”
देशभूमिविशेषजलगुणाः ।
“जातं ताम्रमृदस्तत्वे सलिलं वातादिदोषप्रदं
देशाज्जाड्यकरञ्च दुर्ज्जरतरं दोषावहं
धूसरात् ।
वातघ्नञ्च शिलाशिरोत्थममलं पथ्यं लघु
स्वादुकं
श्रेष्ठं श्याममृदस्त्रिदोषशमनं सर्व्वामयघ्नं
जलम् ॥”
इति राजनिर्घण्टः ॥
“पिच्छिलं कृमिलं क्लिन्नं पर्णशैवालकर्द्दमैः ।
विवर्णं विरसं सान्द्रं दुर्गन्धि न हितं जलम् ॥
चन्द्रार्क्ककरसंजुष्टं वायुना स्फालितं मुहुः ।
पर्व्वतोपरि यद्वारि समं पौरन्दरेण तत् ॥
तस्यानुगुणमुद्दिष्टं शैलप्रस्रवणोद्भवम् ।
लेखनं दीपनं रूक्षं किञ्चिद्वातप्रकोपणम् ॥”
इति राजवल्लभः ॥

आमलकं वा ।) प्राचीनामलकम् ।
पानि
आमला इति भाषा । अस्य गुणाः ।
दोषत्रय-
ज्वरनाशित्वम् । इति भावप्रकाशः ॥
मुख-
शुद्धिमलबद्धकारित्वम् । अम्लत्वम् ।
स्वादुत्वञ्च ।
इति राजवल्लभः ॥

**पानीयालुः**, पुं, (पानीयसम्भूत आलुः ।) कन्द-
विशेषः । पनियालु इति हिन्दीभाषा ।
तत्-
पर्य्यायः । जलालुः २ क्षुपालुः ३
वालुकः ४ ।
अस्य गुणः । त्रिदोषनाशित्वम् ।
सन्तर्पणकारि-
त्वञ्च । इति राजनिर्घण्टः ॥

**पानीयाश्ना**, स्त्री, (पानीयं जलं अश्नातीति ।
अश ग् भोजने + बाहुलकात् नः
ततष्टाप् ।)
वल्वजा । इति राजनिर्घण्टः ॥

**पान्थः**, त्रि, (पथि कुशलः पन्थानं नित्यं गच्छ-
तीति वा । “पथो ण नित्यम् ।” ५ ।
१ ।
७६ । पथः पन्थ च इत्यनेन
पन्थादेशे कृते णः ।
पथिकः । इत्यमरः । २ । ८ । १७ ॥
(यथा,
हरिवंशे । ४२ । २ ।
“यथा निदाघसमये
सूर्य्यांशुपरिपीडितः ।
पान्थो याति जलं दृष्ट्वा त्वरितं
तत्पिपा-
सया ॥”)

**पापं**, क्ली, (पाति रक्षति अस्मादात्मानमिति ।
पा + “पानीविषिभ्यः पः ।” उणां ।
३ । २३ ।
इति पः ।) अघर्म्मम् । दुरदृष्टम् ।
तत्पर्य्यायः ।

घृतादिविक्रयं घोरं चाण्डालादिप्रतिग्रहम् ॥
स्वदोषगोपनं पापं परदोषप्रकाशनम् ।
ईर्षाविद्धं वाक्यदुष्टं निष्ठुरत्वं षडम्बरम् ॥
ढाकित्वं तालवादित्वं नाम्ना वाचाप्यधर्म्मजः ।
मारणत्वमधार्म्मिक्यं नरकावहमुच्यते ॥
एतैः पापैस्तु संयुक्तः पच्यते यदि शङ्करः ॥”
इति वामने ५८ अध्यायः ॥
साङ्कर्य्यनामकपापानि यथा, --
“एकशय्याशनं पंक्तिभाण्डपक्वान्नमिश्रणम् ।
याजनाध्यापने योनिस्तथैव सहभोजनम् ॥
सहाध्यायस्तु दशमः सहयाजनमेव च ।

| | पङ्कम् १ पाप्मा २ पापम् ३<br>किल्विषम् ४<br>कल्मषम् ५ कलुषम् ६ वृजिनम् ७<br>एनः ८<br>अघम् ९ अहः १० दुरितम् ११<br>दुष्कृतम् १२ ।<br>इत्यमरः ॥ पातकम् १३ तूस्तम् १४<br>कण्वम् १५ | |
|---|---|---|

एकादश समुद्दिष्टा दोषाः साङ्कर्य्यसंज्ञिताः ॥
समीपे चाप्यवस्थानात् पापं संक्रमते नृणाम् ।
तस्मात् सर्व्वप्रयत्नेन साङ्कर्य्यं परिवर्ज्जयेत् ॥”
इति कौर्म्मे उपविभागे १५ अध्यायः ॥
“आलापाद्गात्रसंस्पर्शात् संवासात्सहभोज-
नात् ।
आसनाच्छयनाद्यानात् पापं संक्रमते नृणाम् ॥
आसनादेकशय्याया भोजनात् पंक्तिसङ्करात् ।
ततः संक्रमते पापं घटाद्घट इवोदकम् ॥”
इति गारुडे नीतिसारे ११२ अध्यायः ॥
राष्ट्रादिकृतपापेन राजादीनां परस्परं पापित्वं
यथा, --
“राजा राष्ट्रकृतात् पापात् पापी भवति वै
हरे ! ।
तथैव राज्ञः पापेन तद्राज्यस्थास्तु ये जनाः ॥
वर्णाश्रमादयः सर्व्वे पापिनो नात्र संशयः ।
भार्य्याहोदुष्कृती स्वामी वृजिनात् स्वामिनो-
ऽबला ॥
तथा देशिकपापात्तु शिष्यः स्यात् पातकी सदा ।
शिष्याद्धि पापिनो नित्यं गुरुर्भवति दुष्कृती ॥
पातकी यजमानः स्यात् पापिनोऽङ्ग ! पुरोधसः
।
पुरोहितस्तथा पापी यजमानांहसो ध्रुवम् ॥”
अदत्तपुण्यपापभागित्वं यथा, --
“अदत्तानि च पुण्यानि पापानि च यथा प्रिये ! ।
प्राप्याणि कर्म्मणा येन तद्यथावन्निशामय ॥
देशग्रामकुलानि स्युर्भागभाञ्जि कृतादिषु ।
कलौ तु केवलं कर्त्ता फलभुक् पुण्यपापयोः ॥
अकृतेऽपि च संसर्गे व्यवस्थेयमुदाहृता ।
संसर्गात् पुण्यापापानि यथा यान्ति निबोध तत्
॥
एकत्र मैथुनाद्यानादेकपात्रस्थभोजनात् ।
फलार्द्धं प्राप्नुयान्मर्त्त्यो यथावत् पुण्यपापयोः ॥
स्पर्शनाद्भाषणाद्वापि परस्य स्तवनादपि ।
दशांशं पुण्यपाषानां नित्यं प्राप्नोति मानवः ॥
दर्शनश्रवणाभ्याञ्च मनोध्यानात्तथैव च ।
परस्य पुण्यपापानां शतांशं प्राप्नुयान्नरः ॥
परस्य निन्दापैशुन्यं धिक्कारञ्च करोति यः ।
तत्कृतं पातकं प्राप्य स्वपुण्यं प्रददाति सः ॥
कुर्व्वतः पुण्यकर्म्माणि सेवां यः कुरुते परः ।
प्रजाभ्यः पुण्यपापानां राजा षष्ठांशमुद्धरेत्
।
शिष्याद्गुरुः स्त्रिया भर्त्ता पिता पुत्रात्तथैव
च ।
स्वपतेरपि पुण्यस्य भार्य्यार्द्धं
समवाप्नुयात् ॥
परहस्तेन दानादि कुर्व्वतः पुण्यकर्म्मणः ।
विना भृतकशिष्याभ्यां कर्त्ता षष्ठांशमाहरेत्
।
आत्मनो वा परस्यापि यदि सेवां न
कारयेत् ॥
श्रीकृष्ण उवाच ।
इत्थं ह्यदत्तान्यपि पुण्यपापा-
न्यायान्ति नित्यं परसञ्चितानि ।
शृणुष्व चास्मिन्नितिहासमग्र्यं
पुराभवं पुण्यमतिप्रियञ्च ॥”
इति पाद्मोत्तरखण्डे । ७१ । १५७
अध्यायः ॥
क्षुद्रजन्तुप्रभृतीनां वधे पापं
तत्प्रायश्चित्तञ्च
यथा, --
“वधे च क्षुद्रजन्तूनां हिंसकानाञ्च पण्डितः
।
कार्षापणं समुत्सृज्य मृत्युकाले प्रमुच्यते ॥
अहिंसकानां क्षुद्राणां वधे शतगुणं ध्रुवम् ।
प्रायश्चित्तं मृत्युकाले कथितं पद्मयोनिना
॥
वधे विशिष्टजन्तूनां पश्वादीनाञ्च कामतः ।
ततः शतगुणं पापं निश्चितं मनुरब्रवीत् ॥
नराणां म्लेच्छजातीनां वधे शतगुणं ततः ॥
म्लेच्छानाञ्च शतानाञ्च यत् पापं लभते वधे
।
सच्छूद्रैकस्य च वधे तत् पापं लभते पुमान्
॥
सच्छूद्राणां शतानाञ्च यत् पापं लभते वधे
।
तत् पापं लभते नूनं गोवधेनैव निश्चितम् ॥
गवां दशगुणं पापं ब्राह्मणस्य वधे भवेत् ।
विप्रहत्यासमं पापं स्त्रीवधे लभते नरः ॥”
* ॥
पापिदर्शनजन्यपापं यथा, --
एतान् दृष्ट्वा च स्पृष्ट्वा च ब्रह्महत्यां लभेन्नरः
।
तस्माद्दैवादिमान् दृष्ट्वा सूर्य्यं दृष्ट्वा हरिं
स्मरेत् ॥
कामतो यदि पश्यन्ति तत्तुल्यास्ते भवन्ति
वै ।
तस्मात् सन्तो न पश्यन्ति पापभीता
व्रजेश्वर ! ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ७ । ७८
अध्यायः ॥
(अनिष्टम् । वधः । इति राजानुजः ॥ यथा,
रामायणे । २ । ८ । ३२ ।
“तस्मात् न लक्ष्मणे रामः पापं किञ्चित्
करि-
ष्यति ।
रामस्तु भरते पापं कुर्य्यादिव न संशयः ॥”
तद्वति, त्रि । इत्यमरः ॥ यथा, महाभारते ।
१ । ९० । १९ ।
“पुण्यां योनिं पुण्यकृतो व्रजन्ति
पापां योनिं पापकृतो व्रजन्ति ।
कीटाः पतङ्गाश्च भवन्ति पापा
न मे विवक्षास्ति महानुभाव ! ॥”)

**पापकं**, क्ली, (पापमेव । स्वार्थे कन् ।) पापम् ।
इति शब्दरत्नावली ॥ (यथा, महाभारते ।
१ । ७४ । २७ ।
“मन्यते पापकं कृत्वा न कश्चिद्वेत्ति
मामिति ।
विदन्ति चैनं देवाश्च यश्चैवान्तरपूरुषः ॥”
पापेन कायतीति । कै + कः । पापवति, त्रि
।
यथा, महाभारते । १ । ७४ । २६ ।
“एकोहमस्मीति च मन्यसे त्वं
न हृच्छयं वेत्सि मुनिं पुराणम् ।
यो वेदिता कर्म्मणः पापकस्य
यस्यान्तिके त्वं वृजिनं करोषि ॥”)

**पापकृत्**, त्रि, (पापं कृतवानिति । पाप + कृ +
“सुकर्म्मपापमन्त्रपुण्येषु कृञः ।” ३ । २ ।
८९ ।
इति क्विप् ।) पारकर्त्ता । यथा, --
“ख्यापनेनानुतापेन तपसाध्ययनेन च ।

पत्नी भृत्योऽथ शिष्यो वा सजातीयोऽपि मानवः ।
तस्य सेवानुरूपेण तस्य तत्पुण्यभाग्भवेत् ॥
एकपंक्तेस्ततो यस्तु लङ्घयन् परिवेशयेत् ।
तस्य पापशतांशन्तु लभते परिवेशकः ॥
स्नानसन्ध्यादिकं कुर्व्वन् संस्पृशेद्वा प्रभाषते ।
स पुण्यकर्म्मषष्ठांशं दद्यात्तस्मै सुनिश्चितम् ॥
धर्म्मोद्देशेन यो द्रव्यं परं याचयते नरः ।
तत् पुण्यं कर्म्मजं तस्य धनं दत्त्वाप्नुयात् फलम् ॥
अपहृत्य परद्रव्यं पुण्यकर्म्म करोति यः ।
कर्म्मकृत् पापभोक्तात्र धनिनस्तद्भवेत् फलम् ॥
नापनुद्य ऋणं यस्तु परस्य म्रियते नरः ।
धनी तत् पुण्यमाप्नोति स्वधनस्यानुरूपतः ॥
बुद्धिदस्त्वनुमन्ता च यश्चोपकरणप्रदः ।
बलकृच्चापि षष्ठांशं प्राप्नु यात् पुण्यपापयोः ॥

"पापं यद्दर्शने तात ! कथयामि निशामय ।
दुःस्वप्नं पापबीजञ्च केवलं विघ्नकारणम् ॥
गोघ्नञ्च ब्रह्मघ्नं वापि कृतघ्नं कुटिलं तथा ।
देवघ्नं पितृमातृघ्नं पापं विश्वासघातिनम् ॥
मिथ्यासाक्ष्यप्रदातारं पञ्चातिथ्यविवञ्चकम् ।
ग्रामयाजिनमेवेति देवविप्रस्वहारिणम् ॥
अश्वत्थघातिनं दुष्टं शिवविष्णुविनिन्दकम् ।
अदीक्षितमनाचारं सन्ध्याहीनं द्विजन्तथा ॥
देवलं वृषवाहञ्च शूद्राणां सूपकारकम् ।
शवदाही च शूद्राणां शूद्रश्राद्धान्नभोजिनम् ॥
अवीरां छिन्ननासाञ्च देवब्राह्मणनिन्दकम् ।
पतिभक्तिविहीनाञ्च विष्णुभक्तिविहीनकम् ॥
शूद्राणां विधवाञ्चैव चण्डालं व्यभिचारिणीम् ।
शश्वत् कोपयुतं दुष्टमृणग्रस्तञ्च जारजम् ॥
चौरं मिथ्यावादिनञ्च शरणागतघातिनम् ।
मांसापहारिणञ्चैव ब्राह्मणं वृषलीपतिम् ॥
ब्राह्मणीगामिनं शूद्रं द्विजं वार्द्धुषिकन्तथा ।
अगम्यागामिनं दुष्टं चतुर्व्वर्णं नराधमम् ॥
मातासपत्नी माता च श्वश्रूश्च भगिनी सुता ।
गुरुपत्नी पुत्त्रपत्नी सोदरस्य प्रिया सती ॥
मातृष्वसा पितृष्वसा भागिनेयप्रिया तथा ।
मातुलानी नवोढा च पितृव्यस्त्री रजस्वला ॥
पितृमातृप्रसूश्चैव चागम्याष्टादश स्मृताः ।
कीर्त्तिताः सामवेदे च परिपाल्याः सतां व्रज ! ॥

पापकृन्मुच्यते पापाद्दानेन च दमेन च ॥"
इति प्रायश्चित्ततत्त्वम् ॥
(यथा च महाभारते । १ । ९० । १९ ।
"पुण्यां योनिं पुण्यकृतो व्रजन्ति
पापां योनिं पापकृतो व्रजन्ति ॥")

**पापग्रहः**, पुं, (पापोऽशुभकारी ग्रहः ।) अर्द्धोन-चन्द्रः । कुजः । राहुः । शनिः । एतैर्युक्तो बुधः । रविः । यथा, ज्योतिःसारसंग्रहे ।
"अर्द्धोनेन्दुः कुजो राहुः शनिस्तैर्युत इन्दुजः ।
रविः पापा भवन्त्येते शुभाश्चान्ये प्रकीर्त्तिताः ॥"

**पापघ्नः**, पुं, (पापं हन्तीति । पाप + हन + "अमनुष्यकर्त्तृके च ।" ३ । २ । ५३ । इति टक् ।) तिलः । इति राजनिर्घण्टः ॥ पापनाशके, त्रि इति मुग्धबोधव्याकरणम् ॥

**पापचेलिका**, स्त्री, (पापमशुभं चेलति गच्छतीति । चेल + ण्वुल् + टाप् । कापि अत इत्वञ्च ।) पाठा । इति रत्नमाला ॥ आकनादि इति भाषा ॥

**पापचेली**, स्त्री, (पापं चेलतीति । चेल + अच् + गौरादित्वात् ङीष् ।) पाठा । इत्यमरः । २ । ४ । ८५ ॥

**पापनापितः**, पुं, (पापो नापितः ।) धूर्त्तनापितः इति संक्षिप्तसारव्याकरणम् ॥

**पापपतिः**, पुं, (पापोत्पादकः पतिः ।) उपपतिः ।
इति त्रिकाण्डशेषः ॥

**पापपुरुषः**, पुं, (पापः पापमयः पुरुषः ।) पाप-
मयाङ्गनरः । यथा, --
“वामपार्श्वस्थितं पापपुरुषं कज्जलप्रभम् ।
ब्रह्महत्याशिरस्कञ्च स्वर्णस्तेयभुजद्वयम् ॥
सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम् ।
तत्संसर्गि पदद्वन्द्वमङ्गप्रत्यङ्गपातकम् ॥
उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ।
खड्गचर्म्मधरं क्रुद्धमेवं कुक्षौ विचिन्तयेत् ॥”
इति भूतशुद्धिप्रकरणे तन्त्रसारः ॥ * ॥
“सृष्ट्वादौ पुरुषश्रेष्ठः संसारं सचराचरम् ।
सर्व्वेषां दमनार्थाय सृष्टवान् पापपूरुषम् ॥
द्विजातिहत्यामूर्द्धानं मदिरापानलोचनम् ।
सुवर्णस्तेयवदनं गुरुतल्पगतिश्रुतिम् ॥
स्त्रीहत्यानासिकञ्चैव गोहत्यादोषबाहुकम् ।
न्यासापहरणग्रीवं भ्रूणहत्यागलन्तथा ॥
परस्त्रीगतिवुक्कालं सुहृल्लोकवधोदरम् ।
शरणापन्नहत्यादिनाभिं गर्व्वकथाकटिम् ॥
गुरुनिन्दासक्थिभागं कन्याविक्रयशेफसम् ।
विश्वासवाक्यकथनपायुं पितृवधाङ्घ्रिकम् ॥
उपपातकरोमाणं महाकायं भयङ्करम् ।
कृष्णवर्णं पिङ्गनेत्रं स्वाश्रयात्यन्तदुःखदम् ॥”
इति पाद्मे क्रियायोगसारे २१ अध्यायः ॥

**पापमुक्तः**, त्रि, पापान्मक्तः । निष्पापः । इति
संक्षिप्तसारव्याकरणम् ॥ स च यथा, --
“यः समः सर्व्वभूतेषु जितात्मा शान्तमानसः
।
स पापेभ्यो विमुच्यत ज्ञानवान् स च वेदवित्
॥
गुणागुणपरिज्ञाता ह्यक्षयस्य क्षयस्य च ।
ध्यानेनैव ह्यसंमूढः स पापेभ्यः प्रमुच्यते ॥
स्वदेहे परदेहे च सुखदुःखेन नित्यशः ।
विचारज्ञो भवेद्यस्तु स मुच्येतैनसो ध्रुवम् ॥
अहिंसः सर्व्वभूतेषु तृष्णाक्रोधविवर्जितः ।
शुभन्यासः सदा यश्च स पापेभ्यः प्रमुच्यते ॥
प्राणायामैश्च निर्दह्य अधःसन्धारणानि च ।
व्यवस्थितमना यस्तु स पापेभ्यः प्रमुच्यते ॥
निराशीः सर्व्वतस्तिष्टेदिष्टार्थेषु न लोलुपः ।
शृगालयोनिं प्राप्नोति पापरोगैश्च पीड्यते ॥”
यत्पानजन्यो यद्रोगो भवति तत् सर्व्वं कर्म्म-
विपाकशब्दे द्रष्टव्यम् ॥)

**पापर्द्धिः**, स्त्री, (पापानां ऋद्धिर्वृद्धिर्यत्र ।) मृगया ।
इति हेमचन्द्रः । ३ । ५९१ ॥ (यथा, पञ्च-
तन्त्रे । २ । ७८ ।
“अस्ति कस्मिंश्चिद्वनोद्देशे कश्चित् पुलिन्दः
।
स च पापर्द्धिं कर्त्तुं वनं प्रस्थितः ॥”)

**पापलं**, क्ली, परिमाणविशेषः । इति संक्षिप्त-
सारोणादिवृत्तिः ॥ (पापं लातीति । ला +
कः ।) पापग्राहके, त्रि ॥

**पापशमनी**, स्त्री, (पापं शम्यतेऽनयेति । शम +
णिच् + करणे ल्यट् । स्त्रियां ङीप् ।) शमी-
वृक्षः । इति राजनिर्घण्टः ॥ पातकनाशिका
च ॥

**पापात्मा**, [न्] पुं, (पापः पापविशिष्ट आत्मा
वस्य । पापे अधर्म्मे आत्मा बुद्धिर्यस्येति वा
।)
पापी । यथा, --
“पापात्मनां शृणु गतिं विस्तरेण वदाम्यहम् ।
षडशीतिसहस्राणि योजनानि दुरात्मनाम् ॥
प्रोक्तो मार्गस्य विस्तारः सर्व्वदुःखान्वितस्य
च ।
क्वचित्क्वचित् ज्वलद्वह्निः सन्तप्तः कर्द्दमः
क्वचित् ।
क्वचितं क्वचित् द्विजश्रेष्ठ ! सन्तप्तं
ताम्रबालुकम् ॥
क्वचित् क्वचित्तीक्ष्णशिलाः
क्वचित्तप्तशिलास्तथा ॥
क्वचित् क्वचिच्छस्त्रवृष्टिः
क्वचिदङ्गारवर्षणम् ।
कुत्रचिद्वह्निवृष्टिश्च कुत्रचित् पङ्कवर्षणम् ॥
उष्णाम्बुवर्षणं क्वापि क्वचित् पाषाणवर्षणम्
।
ज्वलदग्निरिव क्वापि सन्तप्तो वाति मारुतः
॥
गभीरा अन्धकूपाश्च तृणावृतमुखा द्विज ! ।
ततः स चिन्तयामास ब्राह्मणस्य विचेष्टितम्
।
पुरोहितेन संयुक्तो रत्नान्यादाय सर्व्वशः ॥
प्रसादनार्थं विप्रस्य अनुकीर्णं ययौ तदा ।
प्रसादितः स राज्ञा च तुष्टः प्रोवाच तं नृपम्
॥
ब्राह्मणा नावमन्तव्याः पुरुषेण विजानता ।
ब्राह्मणश्चेदवज्ञातो नश्येत्त्रिपुरुषं कुलम् ॥
एवमुक्त्रा स नृपतिमाज्येन पयसा पुनः ।
उत्थापयामास मृतांस्तस्य राज्ञो हिते
स्थितः ॥
तस्मिंस्तीर्थे तु यः स्नाति श्रद्दधानो
जितेन्द्रियः ।
स प्राप्नोति नरो नित्यं मनसा चिन्ततं
फलम् ॥
तत्तु तीर्थं सुविख्यातं पापान्तं नाम नामतः
।
यस्येह यज्ञतृप्तस्य मधु सुस्राव वै नदी ॥
तस्मिन् स्नातोऽथ भक्त्या च मुच्यते
सर्व्वपातकैः ।
फलं प्राप्नोति यज्ञस्य अश्वमेधस्य मानवः
॥
पापान्तमिति विख्यातं तीर्थं पुण्यतमं द्विजाः
॥”
इति वामनपुराणे ३८ अध्यायः ॥

**पापी**, [न्] पुं, (पापमस्त्यस्येति । इनिः ।)
पापयुक्तः । यथा, --
“रुधिरौघप्लुताः केचित् केचित्
कर्द्दमभूषिताः ।
केचित् केचित् कृशाङ्गाश्च पथि गच्छन्ति-
पापिनः ॥
क्रन्दन्तो व्यथया केचित्
स्रवद्वास्पाकुलेक्षणाः ।
शोचन्तः स्वानि कर्म्माणि केचिद्गच्छन्ति
पापिनः ॥
कस्यचिच्चर्म्मपाशस्य बन्धनं पापिनो गले ।
कङ्काले कस्यचिद्वन्धः कस्यचिच्च भुजद्वये
॥
कस्यचिन्नासिकारन्ध्रे निर्द्दयैर्यमकिङ्करैः ।
अङ्कुशाग्रं विनिक्षिप्य क्रोधेनाकृष्यते द्विज ॥

परीतात्मा त्यजेत् प्राणान् सर्व्वपापात् प्रमुच्यते ॥
श्रद्दधानी जितक्रोधः परद्रव्यविवर्ज्जितः ।
अनसूयश्च यो मर्त्यः स पापेभ्यः प्रमुच्यते ॥
गुरुशुश्रूषया युक्तो ह्यहिंसानिरतश्च यः ।
क्षुद्रश्च क्षुद्रशीलश्च स पापेभ्यः प्रमुट्यते ॥
प्रशस्तानि च यः कुर्य्यादप्रशस्तानि वर्जयेत् ।
योऽभिगच्छति तीर्थानि विशुद्धेनान्तरात्मना ।
पापादुपरतो नित्यं स पापेभ्यः प्रमुच्यते ॥
उत्थाय ब्राह्मणं गच्छेन्नरो भक्त्या समन्वितः ।
अभिगम्य प्रयत्नेन स पापेभ्यः प्रमुच्यते ॥”
इति वराहपुराणम् ॥

**पापरोगः**, पुं, (पापोद्भवो रोगः ।) मसूरीरोगः ।

इति शब्दरत्नावली ॥ (यथा, मनुः । ५ । १६४ ।
“व्यभिचारात्तु भर्त्तुः स्त्री लोके प्राप्नोति निन्द्य-
ताम् ।
क्वापि कण्टकवृक्षाश्च नाराचसमकण्टकाः ॥
पाषाणश्रेणयः क्वापि दुरारोहाः सपन्नगाः ।
क्वचिद्गाढान्धकाराश्च क्वचित् शोणित-
कन्धराः ॥
क्वचिद्वीरणवृक्षाश्च क्वचित् काशाः क्वचित्शराः ।
क्वचित् क्वचित् शर्कराश्च लोष्टवश्च क्वचित्
क्वचित् ॥
क्वचिदस्थ्नां राशयश्च दुर्गन्धा मांसराशयः ।
क्वचित् कण्टकराशिश्च शैबालानि क्वचित् क्वचित् ॥
कीलका वलयः क्वापि क्वचिद्व्याघ्रास्तथा शिवाः ।
खड्गिनः करिणः क्वापि क्वचिदृक्षा भयङ्कराः ॥
एवं बहुविधक्लेशे छायाजलविवर्ज्जिते ।
तस्मिन्मार्गे द्विजश्रेष्ठ ! पापिनो यान्ति दुःखिनः ॥
नग्ना विमुक्तकेशाश्च प्रेताकारभयङ्कराः ।
गच्छन्ति पापिनस्तत्र शुष्ककण्ठौष्ठतालुकाः ॥”
इति क्रियायोगसारे २२ अध्यायः ॥

**पापान्तं**, क्ली, (पापं अन्तयतीति । अन्त + “कर्म्म-

ण्यण् ।” ३ । २ । १ । इत्यण् ।) तीर्थविशेषः । तस्य
नामान्तरम् पृथूदकं अनुकीर्णञ्च । यथा, --
“पृथूदके महातीर्थे त्वनुकीर्णेति नामतः ।
जुहाव धृतराष्ट्रस्य राष्ट्रं नरपतेस्ततः ॥
हूयमाने तदा राष्ट्रे प्रवृत्ते यज्ञकर्म्मणि ।
अक्षीयत ततो राष्ट्र नृपतेर्दष्कतेन वै ॥
घ्राणे सूचिसमुत्कीर्णे पाशं दत्त्वा दृढं रुषा ।
आकृष्यते यमप्रेष्यैः केषाञ्चित् सञ्चितैनसाम् ॥
शिक्यस्थान् गुरुपाषाणान् वहन्तः कर्णरन्ध्रकैः ।
आयोभारांश्च शिश्नाग्रैर्व्रजन्ति पथि पापिनः ॥
कांश्चिद्गृहीत्वा केशेषु कांश्चित् कर्णेषु पापिनः ।
कांश्चिद्गुदेषु पादेषु नयन्ति यमकिङ्कराः ॥
ग्रीवासु पापिनः कांश्चित् करप्रहरणैर्दृढैः ।
क्षिप्त्वा क्षिप्त्वा यमप्रेष्या नयन्ति यममन्दिरम् ॥
यान्त्यधःशिरसः केचिदूर्द्ध्वपादास्तथा परे ।
गच्छन्ति वायुभिः केचिदेकपादाश्च केचन ॥
इत्येवं विकृताकारा आर्त्तरावविराविणः ।
यमदूतैस्ताड्यमानाः पापिनोऽपि च तत्पथि ॥”
इति पाद्मे क्रियायोगसारे २२ अध्यायः ॥

**पाप्मा**, [न्] पुं, (पा + “नामन् सीमन्निति ।”

उणां । ४ । १५० । इति मनिन् । पुगागमे निपा-
तनात् साधुः ।) पापम् । इत्यमरः । १ । ४ ।
२३ ॥ (यथा, मनुः । ६ । ८५ ।
“अनेन क्रमयोगेन परिव्रजति यो द्विजः ।
स विधूयेह पाप्मानं परं ब्रह्माधिगच्छति ॥”)

**पाम**, [न्] क्ली, (पा + मनिन् ।) विचर्च्चिका ।

इत्यमरः । २ । ६ । ५३ ॥ (यथा, माधवकरः ।
“सूक्ष्मा बह्व्यः पीडरणः श्राववत्यः
पामेत्युक्ताः कण्डूकत्यः सदाहा ॥”)

**पामघ्नः**, पुं, (पाम हन्तीति । हन् + टक् ।)

गन्धकः । इति जटाधरः ॥

**पामघ्नी**, स्त्री, (पाम हन्तीति । हन् + टक् ।
टित्वात् ङीप् ।) कटुका । इति
राजनिर्घण्टः ॥

**पामनः**, त्रि, (पामास्त्यस्य इति । "लोमादि-
पामादिपिच्छादिभ्यः शनेलचः ।" ५ ।
२ । १०० ।
इत्यस्य वार्त्तिकोक्त्या "पामादिभ्यो
नः ।" इति
नः ।) पामरोगविशिष्टः । तत्पर्य्यायः ।
कच्छुरः २ । इति हेमचन्द्रः ॥

**पामरः**, त्रि, (पाम पापादिदौरात्ममस्त्यस्येति ।
पामन् + "अश्मादिभ्यो रः ।" ४ । २
। ८० ।
इत्यस्य वार्त्तिकोक्त्या रः । ततो न
लोपे साधुः ।)
खलः । नीचः । इति मेदिनी । रे,
१८२ ॥
(यथा, राजतरङ्गिण्याम् । १ । ३७८ ।
"दूरात् पामरफुत्कृतैः श्रुतिपथप्राप्तैः
प्रबुद्धस्त्वभू-
द्दृष्टो निर्झरवारिभिः सहमनाः श्वभ्रे
निमज्ज-
न्निव ॥"
मूर्खः । इति हेमचन्द्रः ॥

**पामरोद्धारा**, स्त्री, (पामरं उद्धरतीति । उत् +
धृ + अण् । ततो अजादित्वात् टाप् ।)
गुडूची ।
इति शब्दचन्द्रिका ॥

**पामा**, [न्] स्त्री, (पामन् + "मनः ।" ४ । १ ।
११ । इति न ङीप् ।) कच्छूः ।
इत्यमरः । २ ।
६ । ५३ ॥ पाँचडा इति भाषा ॥
अस्या औषधं
यथा, --
"हरिद्रा हरितालञ्च
दूर्व्वागोमूत्रसैन्धवम् ।
अयं लेपो हन्ति दद्रुं पामानं वै गरं
तथा ॥"
तृप्ता भवन्ति पितरस्तस्य वर्षशतं हरे ! ।
यच्छन्ति विविधान् कामान् पतितुष्टाः पिता-
महाः ॥"
इति स्कान्दे काशीखण्डे २७ अध्यायः ॥
चन्द्रप्रभपायसो यथा, --
"भृष्टजीरचतुर्जातश्चन्द्रकान्तःसुरोचनः ॥"
इति राजवल्लभः ॥
पयोविकारे, त्रि । यथा, --
"कन्दुपक्वानि तैलेन पायसं दधि शक्तवः ।
द्विजैरेतानि भोज्यानि शूद्रगेहकृतान्यपि ॥"
इति तिथितत्त्वे वराहपुराणम् ॥

**पायिकः**, पुं, पदातिकः । इति शब्दरत्नावली ॥

**पायुः**, पुं, (पाति रक्षति शरीरं मलनिस्मारणे-
नेति । यद्वा, पिबति वस्त्यौषधमनेनेति । पा +
"कृवापाजीति ।" उणां १ । १ । इत्युण् ।
"आतो युक् चिण्कृतोः ।" ७ । ३ । ३३ ।
इति युक् ।) मलद्वारम् । स तु गर्भस्थस्य सप्त-
भिर्मासैर्भवति । इति सुखबोधः ॥ तत्पर्य्यायः
।
अपानम् २ गुदम् ३ च्युतिः ४ अधोमर्म्म ५
शकृद्द्वारम् ६ त्रिवलीकम् ७ वलिः ८ । इति
हेमचन्द्रः । ३ । २७६ ॥ (यथा, पञ्चदशी ।
१ । २१ ।
"रजोऽशैःपञ्चभिस्तेषां क्रमात् कर्म्मेन्द्रियाणि
तु ।
वाक्पाणिपादपायूपास्थाभिधानानि जज्ञिरे ॥")
तस्याध्यात्मादि यथा, --
"अवाग् गतिरपानश्च पायुरध्यात्ममुच्यते ।
अधिभूतं विसर्गश्च मित्रस्तत्राधिदैवतम् ॥"
इति महाभारते आश्वमेधिकपर्व्व ॥
(स्वनामख्यातो भरद्वाजपुत्त्रः । यथा, ऋग्वेदे ।
६ । ४७ । २४ । "अश्वथः पायवेऽदात् ॥"
"पायवे भरद्वाजपुत्त्रायैतत्संज्ञायास्मद्भ्रात्रे
चाश्वथोऽश्ववान्तेत्संज्ञः प्रस्तोकोऽदात् दत्त-
वान् ।" इति तद्भाष्ये सायनः ॥ पालके, त्रि ।
यथा, ऋग्वेदे । २ । १ । ७ ।
"त्वं पायुर्दमे यस्तेऽविधत् ॥")

**पाय्यं**, क्ली, (मीयतेऽनेनेति । मा माने + "पाय्य-

**पारः**, पुं, (पूर्य्यतेऽनेनेति । पॄ + घञ् ।) पारदः
इत्यमरटीकायां सारसुन्दरी ॥ प्रान्तभागे, पुं
क्ली । इति मेदिनी । रे, ५६ ॥

**पारकः**, त्रि, (पॄ पूर्त्तौ पालने प्रीतौ व्यायाभे च +
ण्वुल् ।) पूर्त्तिकारकः । पालनकारकः । प्रीति-
कारकः । व्यायामकारकः । एष्वर्थेषु पृधातोः
कर्त्तरि णकप्रत्ययनिष्पन्नः ॥

**पारक्**, [ज्] पुं, (पारयतीति । पार कर्म्म-
समाप्तौ + णिच् + "पारेरजिः ।" उणां १ ।
१३५ । इति अजिः । णिलोपः ।) सुवर्णम् ।
इत्युणादिकोषः ॥

**पारक्यं**, क्ली, (परस्मै लोकाय हितम् । पर +
ष्यञ् कुक् च ।) परलोकहितकर्म्म । यथा, --
"पादेन तस्य पारक्यं कुर्य्यात् सञ्चयमात्मवान् ।
अर्द्धेन चात्मभरणं नित्यनैमित्तिकन्तथा ॥
पादस्यार्द्धार्द्धमर्थस्य मूलभूतं विवर्द्धयेत् ।
एवमाचरतः पुंसो ह्यर्थः साफल्यमृच्छति ॥"
इति मार्कण्डेयपुराणम् ॥
(परस्य इदमिति । परकीये, त्रि । यथा,
मनुः । १० । ९७ ।
"वरं स्वधर्म्मो विगुणो न पारक्यः स्वनुष्ठितः ।
परधर्म्मेण जीवन् हि सद्यः पतति जातितः ॥")

**पारगः**, त्रि, (पारं गच्छतीति । पार + गम +
"अन्तात्यन्ताध्वदूरपारसर्व्वानन्तेषु डः ।" ३ । २
।
४८ । इति डः ।) पारगामी । तत्पर्य्यायः ।
कर्त्तरीकः २ । इति शब्दमाला ॥ (यथा, महा-
भारते । ४ । १४ । २१ ।
"उदतिष्ठन्मुदा सूतो नावं लब्ध्वेव पारगः ॥"
तथा च तत्रैव । १ । १४० । १६ ।
"पारगश्च धनुर्युद्धे बभूवाथ धनञ्जयः ॥")

**पारगतः**, पुं, (शास्त्रादेः अविद्याया वा पारं
गतः ।) जिनः । इति हेमचन्द्रः ॥ पारगे, त्रि ॥

**पारजायिकः**, पुं, (परजायां गच्छतीति । पर-
जाया + ठक् ।) पारदारिकः । (यथा, महा-
भारते । १२ । ६७ । १८ ।
"वाक्शूरो दण्डपरुषो यश्च स्यात् पारजायिकः ।

अपि च ।
"माहिषं नवनीतञ्च सिन्दूरञ्च मरीचकम् ।
पामा विलेपिता नश्येत् बहुलापि वृषध्वज ! ॥"
अन्यच्च ।
"मरीचं त्रिवृतं कुष्ठं हरितालं मनःशिला ।
देवदारु हरिद्रे द्वे कुष्ठं मांसी च चन्दनम् ॥
विशाला करवीरञ्च अर्कक्षीरं सकृत् पलम् ।
एषाञ्च कार्षिको भागो विषस्यार्द्धपलं भवेत् ॥
प्रस्थं कटुकतैलस्य गोमूत्रेऽष्टगुणे पचेत् ।
मृत्पात्रे लौहपात्रे वा शनैर्मृद्वग्निना पचेत् ॥
पामा विचर्च्चिका चैव दद्रुविस्फोटकानि च ।
अभ्यङ्गेन प्रणश्यन्ति कोमलत्वञ्च जायते ॥
प्रसूतान्यपि श्वित्राणि तैलेनानेन म्रक्षयेत् ।
चिरोत्थितमपि श्वित्रं विवर्णं तत्क्षणाद्भवेत् ॥"
इति गारुडे १९४ । १९८ अध्याययोः ॥

**पामारिः**, पुं, (पामाया अरिर्नाशकः ।) गन्धकः ।
इति हेमचन्द्रः ॥

**पायसः**, पुं, क्ली, श्रीवासः ॥ टारपिन् इति भाषा ।
पयसा संस्कृतः । (पयसो विकार इत्यण् ।)
परमान्नम् । इत्यमरमेदिनीकरौ । अस्य पाक-
प्रकारो गुणाश्च ।
"अतप्ततण्डुलो धौतः परिभृष्टो घृतेन च ।
खण्डयुक्तेन दुग्धेन पाचितः पायसो भवेत् ॥
सांनाय्येति ।" ३ । १ । १२९ । इति निपातनात्
ण्यद्धात्वादेः पत्वं युगागमश्च ।) परिमाणम् ।
इत्यमरः । २ । ९ । ८५ ॥ पानम् । इति
संक्षिप्तसारोणादिवृत्तिः ॥ जलम् । निन्दनीये,
त्रि । इति विश्वः ॥ (पा पाने + णिच् + ण्यत् ।
पाययितव्ये । यथा, सुश्रुते । १ । १६ ।
"घृतञ्च पाय्यः स नरः सुजीर्णे
स्निग्धो विरेच्यः स यथोपदेशम् ॥")

**पार**, त् क कर्म्मसमाप्तौ । इति कविकल्पद्रुमः ॥
(अदन्त चुरां-परं-सकं-सेट् ।) अपपारत् ।
इति दुर्गादासः ॥

**पारं**, क्ली, (पारयतीति । पार + पचाद्यच् ।)
परतीरम् । नदीलङ्घनाद्गन्तव्यतीरम् । इत्य-
मरः । १ । १० । ८ ॥ (यथा, सङ्गीतदर्पणे ।
"नादाब्धेस्तु परं पारं न जानाति सरस्वती ।
अद्यापि मज्जनभयात् तुम्बीं वहति वक्षसि ॥")
यः परस्वमथादद्यात् त्याज्या नस्तादृशा इति ॥")

**पारटीटः**, पुं, प्रस्तरः । इति त्रिकाण्डशेषः ॥

**पारणः**, पुं, (पारयतीति । पार + णिच् + ल्युः ।)
मेघः । इति शब्दमाला ॥

**पारणं**, क्ली, (पार + भावे ल्युट् ।) उपवास-
व्रतान्तरदिवसकर्त्तव्यप्राथमिकभोजनम् । विव-
रणमस्य पारणाशब्दे द्रष्टव्यम् ॥

**पारणा**, स्त्री, (पार + युच् + टाप् ।) उपवासव्रता-
नन्तरदिवसकर्त्तव्यप्राथमिकभोजनम् । यथा, --
"पारणं पावनं पुंसां सर्व्वपापप्रणाशनम् ।
उपवासाङ्गभूतञ्च फलदं शुद्धिकारणम् ॥
सर्व्वेष्वेवोपवासेषु दिवापारणमिष्यते ।
अन्यथा फलहानिः स्यादृते धारणपारणम् ॥
न रात्रौ पारणं कुर्य्यादृते वै रोहिणीव्रतात् ।
निशायां पारणं कुर्य्याद्विवर्ज्जयित्वा महानिशाम् ॥
पूर्ब्बाह्णे पारणं शस्तं कृत्वा विप्र ! सुरार्च्चनम् ।

| पायसः कफकृद्बल्यो विष्टम्भी मधुरो गुरुः ॥"<br>तस्य पित्रुद्देशेन गङ्गाम्भसि निःक्षेपे फलं यथा, --<br>"पितॄनुद्दिश्य यो भक्त्या पायसं मधुसंयुतम् ।<br>गुडसर्पिस्तिलैः सार्द्धं गङ्गाम्भसि विनिःक्षिपेत् ॥ | | |
| --- | --- | --- |

सर्व्वेषां सम्मतं कुर्य्यादृते वै रोहिणीव्रतम्
॥”
इति ब्रह्मवैवर्त्त श्रीकृष्णजन्मखण्डे ८
अध्यायः ॥
अथ श्रीकृष्णजन्माष्टमीव्रतपारणकालः।
“अष्टम्यामथ रोहिण्यां न कुर्य्यात्पारणं
क्वचित् ।
हन्यात् पुराकृतं कर्म्म उपवासार्जितं
फलम् ॥
तिथिरष्टगुणं हन्ति नक्षत्रञ्च चतुर्गुणम् ।
तस्मात् प्रयत्नतः कुर्य्यात्तिथिभान्ते च
पारणम् ॥”
अत्रोभयवियोगे पारणमुक्तम् । “यदा सार्द्ध-
प्रहरनिशाभ्यन्तरे एकस्यैव
वियोगस्तदैकतर-
वियोगेऽपि पारणम् ॥ तथा च नारदीये ।
“तिथिनक्षत्रसंयोगे उपवासो यदा भवेत् ।
पारणन्तु न कर्त्तव्यं यावन्नैकस्य संक्षयः ॥
सांयोगिके व्रते प्राप्ते यद्यप्येको वियुज्यते ।
तत्रैव पारणं कुर्य्यादेवं वेदविदो विदुः ॥
यद्यैकस्यापि सार्द्धप्रहरनिशाभ्यन्तरेन
वियोग-
स्तदा तयोरवियोगेऽपि प्रातरुत्सवान्ते
पार-
णम् । तिथ्यन्ते चोत्सवान्ते वा व्रती
कुर्व्वीत
पारणम् । इत्युक्तत्वात् ॥ * ॥
महाष्टम्युपवास-
पारणं मत्स्यमांसोपहारेण कर्त्तव्यम् ।
यथा, --
“अष्टम्यां समुपोष्यैव नवम्यामपरेऽहनि ।
मत्स्यमांसोपहारेण दद्यान्नैवेद्यमुत्तमम् ॥
तेनैव विधिनान्नन्तु स्वयं भुञ्जीत नान्यथा
॥”
स्त्रियास्तु पशुमांसभक्षणनिन्दया न तेन
पारणं
किन्तु मत्स्येन । अष्टम्युपवासपारणे
रविवारादौ
मांसनिषेधः । एवं
मांसाशनत्यागकृतनियमेन
नियोगादिष्वपि मांसं वर्ज्जनीयम् ॥ * ॥

पारणदिने वर्ज्यानि यथा, ब्रह्माण्डपुराणम् ।
“कांस्यं मांसं सुरां क्षौद्रं लोभं वितथभाषणम् ।
व्यायामञ्च व्यवायञ्च दिवास्वप्नं तथाञ्जनम् ॥
शिलापिष्टं मसूरांश्च द्वादशैतानि वैष्णवः ।
द्वादश्यां वर्ज्जयेन्नित्यं सर्व्वपापैः प्रमुच्यते ॥”
सूरिसन्तोषे ।
“कांस्यं मांसं मसूरञ्च चणकं कोरदूषकम् ।
शाकं मधु परान्नञ्च त्यजेदुपवसन् स्त्रियम् ॥”
अत्रोपवसन्निति तद्दिने भोजनासम्भवात्
सामीप्यात् पूर्ब्बापरयोर्ग्रहणम् । इति तिथ्यादि-
तत्त्वम् ॥

**पारतः**, पुं, (विविधव्याधिसङ्कटादिभ्यःपारं
तनोतीति । तन + अन्येभ्योपीति डः ।)
पारदः । इति हेमचन्द्रः । ४ । ११६ ॥

**पारतन्त्र्यं**, क्ली, (परतन्त्रस्य भावः । परतन्त्र +
ष्यञ् ।) परतन्त्रता । पराधीनत्वम् । अन्याय-
त्तता । यथा, माधवकरः ।
“दोषाणां समवेतानां विकल्पेऽंशांशकल्पना ।
स्वातन्त्र्यपारतन्त्र्याभ्यांव्याधेः प्राधान्यमादि-
शेत् ॥”

**पारत्रिकं**, त्रि, (परत्र भवम् । परत्र + ठक् ।)
पारलौकिकम् । परत्र भवमित्यर्थे ष्णिकप्रत्यय-
निष्पन्नम् ॥

**पारदः**, पुं, (जरामरणसङ्कटादिभ्यःपारं ददा-
तीति । दा + कः ।) धातुविशेषः । पारा इति
भाषा । तत्पर्य्यायः । रसराजः २ रसनाथः
३ महारसः ४ रसः ५ महातेजः ६ रसलेहः
७ रसोत्तमः ८ सूतराट् ९ चपलः १० जैत्रः
११ शिवबीजम् १२ शिवः १३ अमृतम् १४
रसेन्द्रः १५ लोकेशः १६ दुर्द्धरः १७ प्रभुः
१८
रुद्रजः १९ हरतेजः २० रसधातुः २१ अचि-
न्त्यजः २२ खेचरः २३ अमरः २४ देहदः
२५
मृत्युनाशकः २६ सूतः २७ स्कन्दः २८
स्कन्दां-
शकः २९ देवः ३० दिव्यरसः ३१
रसायनश्रेष्ठः

तस्योत्पत्तिलक्षणे यथा, --
“शिवाङ्गात् प्रच्युतं रेतः पतितं धरणीतले ।
तद्देहसारजातत्वाच्छुक्लमच्छमभूच्च तत् ॥
अत्र भेदेन विज्ञेयं शिववीर्य्यं चतुर्व्विधम् ।
श्वेतं रक्तं तथा पीतं कृष्णं तत्तु भवेत् क्रमात्
॥
ब्राह्मणः क्षत्त्रियो वैश्यः शूद्रश्च खलु जातितः
।
श्वेतं शस्तं रुजां नाशे रक्तं किल रसायने ॥
धातुवादे तु तत् पीतं खे गतौ कृष्णमेव च ॥
पारदः षड्रसः स्निग्धस्त्रिदोषघ्नो रसायनः ।
योगवाही महावृष्यः सदा दृष्टिबलप्रदः ॥
सर्व्वामयहरः प्रोक्तो विशेषात् सर्व्वकुष्ठनुत् ।
स्वस्थो रसो भवेद्ब्रह्मा बद्धो ज्ञेयो जनार्द्दनः
।
रञ्जितः क्रामितश्चापि साक्षाद्देवो महेश्वरः ॥
मूर्च्छित्वा हरति रुजं बन्धनमनुभूय खे गतिं
कुरुते ।
अजरीकरोति हि मृतः कोऽन्यः करुणाकरः
सूतात् ॥”
रसामृते ।
“यस्य रोगस्य यो योगस्तेनैव सह योजितः ।
रसेन्द्रो हन्ति तं रोगं नरकुञ्जरवाजिनाम् ॥”
तस्य दोषा यथा, --
“मलं विषं वह्निगिरित्वचापलं
नैसर्गिकं दोषमुषन्ति पारदे ।
उपाधिजौ द्वौ त्रिपुनागयोगजौ
दोषौ रसेन्द्रे कथितौ मुनीश्वरैः ॥
मलेन मूर्च्छा मरणं विषेण
दाहोऽग्निना कष्टतरः शरीरे ।
देहस्य जाड्यं गिरिणा सदा स्या-
च्चाञ्चल्यतो वीर्य्यहृतिश्च पुंसाम् ॥
वङ्गेन कुष्ठं भुजगेन गण्डो
भवेदतोऽसौ परिशोधनीयः ॥
वह्निर्व्विषं मलञ्चेति मुख्या दोषास्त्रयो रसे ।
एते कुर्व्वन्ति सन्तापं मृतिं मूर्च्छां नृणां
क्रमात् ॥
अन्येऽपि दोषाः कथिता भिषग्भिः पारदे यदि
।
तथाप्येते त्रयो दोषा हरणीया विशेषतः ॥
संस्कारहीनं खलु सूतराजं

अथ श्रीरामनवमीव्रतपारणकालः।
“नवमी चाष्टमीविद्धा त्याज्या
विष्णुपरायणैः ।
उपोषणं नवम्यां वै दशम्यामेव पारणम् ॥”
अथैकादशीव्रतपारणकालः।
“मन्त्रं जपित्वा हरये निवेद्योपोषणं व्रती ।
द्वादश्यां पारणं कुर्य्याद्वर्ज्जयित्वा
ह्युपोदकीम् ॥”
द्वादशीलङ्घने दोषमाह नारदीयम् ।
“महाहानिकरी ह्येषा द्वादशी लङ्घिता
नृणाम् ॥
विष्णुधर्म्मोत्तरे ।
“द्वादश्याः प्रथमः पादो हरिवासरसंज्ञितः
।
तमतिक्रम्य कुर्व्वीत पारणं विष्णुतत्परः
॥”
अथ श्रवणद्वादश्युपवासपारणकालः।
“तिथिनक्षत्रसंयोगे उपवासो यदा भवेत् ।
तावदेव न भोक्तव्यं यावन्नैकस्य संक्षयः ॥
विशेषेण महीपाल श्रवणं वर्द्धते यदि ।
तिथिक्षयेण भोक्तव्यं द्वादशीं नैव लङ्घयेत्
॥”
तिथिक्षयेण एकादशीक्षयेण भोक्तव्यं
द्वादश्यां
पारयेदित्यर्थः ॥ * ॥ अथ
शिवरात्र्युपवास-
पारणकालः ।
“जयन्ती शिवरात्रिश्च कार्य्ये
भद्रजयान्विते ।
कृतोपवासं तिथ्यन्ते तदा कुर्य्याच्च
पारणम् ॥”
तिथ्यन्ते पारणन्तु जयन्तीमात्रपरम् । अत्र
चतुर्द्दश्यामेव तत् ।
“ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति
वै ।
पूजितानि भवन्तीह भूताहे पारणे कृते ॥”
* ॥

३२ यशोदः ३३ । इति राजनिर्घण्टः ॥
सूतकः
३४ सिद्धधातुः ३५ पारतः ३६ । इति
शब्दरत्ना-
वली ॥ हरबीजम् ३७ रजस्वलः ३८ । इति
हेमचन्द्रः ॥ शिववीर्य्यम् ३९ शिवाह्वयः ४० ।
इति भावप्रकाशः ॥ अस्य गुणाः । क्रमिकुष्ठ-
नाशित्वम् । चक्षुष्यत्वम् । रसायनत्वञ्च । इति
राजवल्लभः ॥ अस्य भस्मनः पूर्णवीर्य्यं
मासत्रय-
पर्य्यन्तं तिष्ठति । इति परिभाषा ॥ * ॥ अपि च
।
“पारदः सकलरोगनाशकः
षड्रसो निखिलयोगवाहकः ।
पञ्चभूतमय एष कीर्त्तितो
देहलोहवरसिद्धिकारकः ॥
मूर्च्छितो हरते व्याधीन् बद्धः खेचरसिद्धिदः ।
सर्व्वसिद्धिकरो लीनो निरुत्थो देहसिद्धिदः ॥
विविधव्याधिभयोदयमरणजरासङ्कटेऽपि
मर्त्त्येभ्यः ।
पारं ददाति यस्मात्तस्मादयं पारदः कथितः ॥”
इति राजनिर्घण्टः ॥

यः सेवते तस्य करोति बाधास् ।
देहस्य नाशं विदधाति नूनं
कष्टांश्च रोगान् जनयेन्नराणाम् ॥”
मारितस्य मूर्च्छितस्य तस्य गुणाः ।
“पारदः कृमिकुष्ठघ्नो जयदो दृष्टिदः सरः ।
मृत्युहृच्च महावीर्य्यो योगवाही जराहरः ॥
स्मृत्योजोरूपदो वृष्यो वृद्धिकृद्धातुवर्द्धनः ।
षण्डत्वनाशनः शूरः खेचरः सिद्धिदः परः ॥
पारदः सकलरोगहा स्मृतः
षड्रसो निखिलयोगवाहकः ।
पञ्चभूतमय एव कीर्त्तित-
स्तेन तद्गुणगणैर्व्विराजते ॥” * ॥
अथ रसस्य शोधनविधिः । तत्र स्वेदनम् ।
“नानाधान्यैर्यथा प्राप्तैस्तुषवर्ज्जैर्जलान्वितैः ।
मृद्भाण्डं पूरितं रक्षेद्यावदम्लत्वमाप्नुयात् ॥
तन्मध्ये भृङ्गराण्मण्डी विष्णुक्रान्ता पुनर्नवा ।

मीनाक्षी चैव सर्पाक्षी सहदेवी शतावरी ॥
त्रिफला गिरिकर्णी च हंसपादी च चित्रकः ।
समूलं कुट्टयित्वा तु यथालाभं विनिःक्षिपेत् ॥
पूर्ब्बाम्लिभाण्डमध्ये तु धान्याम्लकमिदं स्मृतम्
।
स्वेदनादिषु सर्व्वत्र रसराजस्य योजयेत् ॥"
विष्णुक्रान्ता गिरिकर्णी च अपराजितैव श्वेत-
नीलपुष्पभेदात् । अत्यम्लमारनालं वा तदभावे
प्रयोजयेत् । तदभावे धान्याम्लाभावे ।
"त्र्युषणं लवणं राजी रजनी त्रिफलार्द्रकम् ।
महाबला नागबला मेघनादः पुनर्नवा ॥
मेषशृङ्गी चित्रकञ्च नवसारं समं समम् ।
एतत् समस्तं व्यस्तं वा पूर्ब्बाम्लेनैव पेषयेत् ॥
प्रलिम्पेत्तेन कल्केन वस्त्रमङ्गुलमात्रकम् ।
तन्मध्ये निःक्षिपेत् सूतं बद्ध्वा तत्त्रिदिनं पचेत्
॥
दोलायन्त्रेऽम्लसंयुक्ते जायते स्वेदितो रसः ॥"
मेघनादः चवराइ शाकविशेषः । मेषशृङ्गी मेढा-
शृङ्गी । तदलाभे कर्कटशृङ्गी ग्राह्या । नवसारं
नौसादर । अन्यच्च ।
"सूलकानलसिन्धूत्थत्र्युषणार्द्रकराजिकाः ।
रसस्य षोडशांशेन द्रव्यं युञ्ज्यात् पृथक् पृथक्
॥
द्रव्येष्वनुक्तमानेषु मतं मानमिदं बुधैः ।
पटावृतेषु चैतेषु सूतं प्रक्षिप्य काञ्जिके ॥
स्वेदयेद्दिनमेकञ्च दोलायन्त्रेण बुद्धिमान् ।
स्वेदात्तीव्रो भवेत् सूतो मर्द्दनाच्च सुनिर्म्मलः
॥"
मूलकंमुरै । अनलश्चित्रकम् । त्र्युषणं त्रिकटु ।
राजिका राइ ॥ * ॥ अथ मर्द्दनम् ।
"इष्टिकाचूर्णचूर्णाभ्यामादौ मर्द्यो रसस्ततः ।
दध्ना गुडेन सिन्धूत्थराजिकागृहधूमकैः ॥"
अन्यच्च ।
"कुमारिकाचित्रकरक्तसर्षपैः
कृतैः कषायैर्बृहतीविमिश्रितैः ।
फलत्रिकेणापि विमर्द्दितो रसो
दिनत्रयं सर्व्वमलैर्विमुच्यते ॥" * ॥
अथ मूर्च्छनम् ।
"त्र्युषणं त्रिफलाबन्ध्याकन्दैः क्षुद्राद्वयान्वितैः ।
चित्रकोर्णानिशाक्षारकन्यार्क्कनकद्रवैः ॥
सूतं कृतेन यूषेण वारान् सप्ताभिमूर्च्छयेत् ।
नष्टपिष्टं रसं कृत्वा लेपयेदूर्द्ध्वभाजनम्
॥
ततो दीप्तैरधःपातमुपलैस्तस्य कारयेत्
।
यन्त्रे भूधरसंज्ञे तु ततः सूतो
विशुद्ध्यति ॥
स्वेदनादिक्रियाभिस्तु शोधितोऽसौ यदा
भवेत् ।
तदा कार्य्याणि कुरुते प्रयोज्यः
सर्व्वकर्म्मसु ॥"
अथ मुख्यदोषहरशोधनविधिः ।
"गृहकन्या हरति मलं त्रिफलाग्निं
चित्रको
विषं हन्ति ।
तस्मादेभिर्मिश्रैर्वारान् संमूर्च्छयेत् सप्त
॥" * ॥
अथ सर्व्वदोषहरः संक्षिप्तः शोधनविधिः
।
"कुमारिकाचित्रकरक्तसर्षपैः
कृतैः कषायैर्बृहतीविमिश्रितैः ।
फलत्रिकेणापि विमर्द्दितो रसो
दिनत्रयं सर्व्वमलैर्विमुच्यते ॥"
एवं कदर्थितः सूतः षण्डो भवति
निश्चितम् ।
बह्वौषधीकषायेण स्वेदितः स बली
भवेत् ॥
सर्पाक्षीचिञ्चिकाबन्ध्याभृङ्गाब्दैः
स्वेदितो बली ।
ततः स पारकद्रावैः स्विन्नः
स्याददितिदीप्तिमान् ॥"
सर्पाक्षी नागफणी । चिञ्चिका अम्बिली ।
बन्ध्या
वाँझखखसा । भृङ्गः भृङ्गराजः । अब्दो
मुस्ता ।
पावकः चित्रकः ॥ * ॥
अथ रसस्य मारणविधिः ।
"धूमसारं रसं तोरीं गन्धकं नवसादरम्
।
यामैकं मर्द्दयेदम्लैर्भागं कृत्वा समं समम्
॥
मृन्मूषासंपुटे पक्वः सूतो यात्येव भस्मताम् ॥"
इति भावप्रकाशे पूर्ब्बखण्डे २ भागे ॥
अथ पारदशिवलिङ्गनिर्म्माणविधिः ।
"पारदे शिवनिर्म्माणे नानाविघ्नं यतः प्रिये ! ।
अतएव महेशानि ! शान्तिस्वस्त्ययनं चरेत् ॥
पारदं शिवबीजं हि ताडनं नहि कारयेत् ।
ताडनाद्वित्तनाशः स्यात्ताडनाद्वित्तहीनता ॥
ताडनाद्रोगयुक्तत्वं ताडनान्मरणं भवेत् ।
द्वादशं पार्थिवं लिङ्गमुपचारैश्च षोडशैः ।
पट्टादिसूत्रनिर्म्माणरचितं शुक्लमेव वा ॥
पुरुषस्य यथायोग्यं युग्मवस्त्रं निवेदयेत् ॥
भोगयोग्यं प्रदातव्यं मधुपर्कं कुलेश्वरि ! ।
अलङ्कारं यथाशक्ति दद्यात् कल्याणहेतवे ॥
पूजयेद्बहुयत्नेन विल्वपत्रेण पार्व्वति ! ।
तोडलोक्तेन विधिना प्रत्येकेनायुतं जपेत् ॥
आदौ पञ्चाक्षरं मन्त्रमष्टोत्तरशतं जपेत् ।
पूजान्ते प्रजपेत् पश्चात् प्रासादाख्यं महामनुम्
॥
दक्षिणान्तं समाचर्य्य हविष्याशी जितेन्द्रियः ।
ताम्बूलञ्च तथा मत्स्यं वर्जयेन्न कदाचन ।
अस्मिंस्तन्त्रे हविष्यान्नं ताम्बूलं मीनमुत्तमम् ॥
होमयेत् परमेशानि ! दशांशं वा शतांशकम् ।
होमस्य दक्षिणा कार्य्या तदा विघ्नैर्न लिप्यते ॥
ततः परस्मिन् दिवसे पारदं आनयेत् सुधीः ।
तस्योपरि जपेन्मन्त्रं सर्व्वबन्धं नवात्मकम् ॥
व्योमबीजं शिवार्णञ्च वर्णाद्यं बिन्दुमस्तकम् ।
वायुबीजं चेन्दुयुतं त्रितयं त्र्यम्बकं प्रिये ! ॥
इमं मन्त्रं महेशानि ! प्रजपेदौषधोपरि ॥
पारदे प्रजपेन्मन्त्रमष्टोत्तरशतं यदि ।
तदैवौषधयोगेन बद्धो भवति नान्यथा ॥
ततः परस्मिन् दिवसे शृणु यत् प्राणवल्लभे ! ।
वरयेत् सर्व्वकर्त्तारं यथोक्तविभवावधि ॥
सुवर्णं चम्पकाकारं कर्णयुग्मे निवेशयेत् ।
चतुष्कोणयुतं स्वर्णं ग्रीवायां सुमनोहरम् ॥
हस्तद्वये महेशानि ! दद्याद्वलययुग्मकम् ।
वलयं शुक्लवर्णञ्च अङ्गुरीयं तथैव च ॥
ऊर्म्मीं दद्यात् पीतवर्णां क्षौमवस्त्रयुगं शिवे ! ।
एवं कृत्वा महेशानि ! शिवरूपं विचिन्तयेत् ॥
अथातः संप्रवक्ष्यामि विधानं शृणु पार्व्वति ! ।
प्रस्तरे चैव संस्थाप्य झिण्टीपत्ररसेन च ।
प्रणवेन समालोड्य कुर्य्यात् कर्द्दमवन् प्रिये ! ॥

इत्थं संमूर्च्छितः सूतस्त्यजेत् सप्तापि कञ्चुकान्
॥”
बन्ध्याकन्दः वाझखखसाकन्दः । क्षुद्राद्वयं छोटी-
कटैया वडोकटैया । ऊर्णा ऊर्णमिषका । निशा
हरिद्रा । क्षारः यवक्षारः । कन्या कुमारिका ।
अर्कः अर्कपत्ररसः । कनकः धत्तूरपत्ररसः ॥ *
॥
अथोद्‌र्ध्वपातनम् ।
“मयूरग्रीवताप्याभ्यां नष्टपिष्टीकृतस्य च ।
यन्त्रे विद्याधरे कुर्य्याद्रसेन्द्रस्योद्‌र्ध्वपातनम् ॥
सूतः स्यादूद्‌र्ध्वपातेन सर्व्वदोषविवर्ज्जितः ॥”
मयूरग्रीवा तुतिया । ताप्यः सुवर्णमाषी । नष्ट-
पिष्टीकृतस्य कुमारिकाद्रवयोगेन तावन्मर्द्दनं
कर्त्तव्यं यावत् पारदः पृथङ्न दृश्यते इत्यर्थः ।
विद्याधरयन्त्रे डमरुयन्त्रे ॥ * ॥
अथाधःपातनम् ।
“त्रिफलाशिग्रुशिखिभिर्ल्लवणासुरिसंयुतैः ।
काचकूप्यां विनिः क्षिप्य ताञ्च
मृद्वस्त्रमुद्रया ।
विलिप्य परितो वक्त्रे मुद्रां दत्त्वा
विशोषयेत् ॥
अधःसच्छिद्रपिठरीमध्येकूपीं
निवेशयेत् ।
पिठरीं बालुकापूरैर्भृत्वा वा
कूपिकागलम् ॥
निवेश्य चुल्ल्यां तदधो वह्निं
कुर्य्याच्छनैः शनैः ।
तस्मादप्यधिकं किञ्चित् पावकं
ज्वालयेत् क्रमात् ॥
एवं द्वादशभिर्यामैर्म्रियते रस उत्तमः ।
स्फोटयेत् स्वाङ्गशीतं तमूद्‌र्ध्वगं गन्धकं
त्यजेत् ॥
अधःस्थञ्च मृतं सूतं गृह्णीयात्तन्तु
मात्रया ।
यथोचितानुपानेन सर्व्वकर्म्मसु योजयेत्
॥” * ॥
अथान्यप्रकारः ।
“अपामार्गस्य बीजानां मूषायुग्मं
प्रकल्पयेत् ।
तत् संपुटे क्षिपेत् सूतं
मलपूदुग्धमिश्रितम् ॥”
मलपूः काष्ठोदुम्बरिका ।
“द्रोणपुष्पीप्रसूनानि विडङ्गमिरिमेदकः ।
एतच्चूर्णमधश्चोद्‌र्ध्वं दत्त्वा मुद्रां
प्रदीपयेत् ॥
तद्गोलमाधमेत् सम्यक् मृन्मूषासंपुटे
सुधीः ।
मुद्रां दत्त्वा शोषयित्वा ततो गजपुटे
पचेत् ॥
एकेनैव पुटेनैव सूतकं भस्म जायते ।
तत् प्रयोज्यं यथास्थाने यथामात्रं
यथाविधि ॥”
अथान्यप्रकारः ।
“काष्ठोडुम्बरिकादुग्धै रसं
किञ्चिद्विमर्द्दयेत् ।
तद्दुग्धघृष्टहिङ्गोश्च मूषायुग्मं प्रकल्पयेत्
॥
क्षिप्त्वा तत्संपुटे सूतं तत्र मुद्रां
प्रदीपयेत् ।
निर्म्माणयोग्यं तद्द्रव्यं यदि स्यात् सुरसुन्दरि !
।
तदा निर्म्माय तल्लिङ्गं पुनर्दृढतरञ्चरेत् ॥
खपुष्पसंयुते वस्त्रे अङ्गारे च करीषके ।
किञ्चिदुष्णं प्रकर्त्तव्यं यतो दृढतरं भवेत् ॥”
इति मातृकाभेदतन्त्रे ८ पटलः ॥ * ॥
सगरराजकृतमुक्तकेशम्लेच्छजातिविशेषः ॥
(यथा, महाभारते । २ । ५१ । १३ ।
“कैराता दरदा दर्व्वाः शूरा वैयामकास्तथा ।
औदुम्बरादुर्व्विभागा पारदाः सह वाह्लिकैः ॥”)
अस्य विवरणं पह्लवशब्दे द्रष्टव्यम् ॥

**पारदण्डकः**, पुं, देशविशेषः । इति शब्दरत्ना-
वली । स तु ओड्रदेशैकभाग इति केचित् ॥

| | धृत्वा तद्गोलकं प्राज्ञो<br>मृन्मूषासंपुटेऽधिके ॥<br>पचेद्गजपुटे तेन सूतकं याति भस्मताम्<br>॥”<br>अन्यः प्रकारः ।<br>“नागवल्लीरसैर्घृष्टः कर्कोटीकन्दगर्भितः<br>। | |
|---|---|---|

**पारदारिकः**, पुं, (परेषां अन्येषां दारान् गच्छतीति ।
परदार + "गच्छतौ परदारादिभ्यः ।" ७ । ३ । ७ ।
इत्यस्य वार्त्तिकोक्त्या ठक् ।)
पारजायिकः ।
परदाररतः । (यथा, महाभारते । २ । ३१ । २५ ।
"तत्र माहिष्मतीवासी भगवान् हव्यवाहनः ।
श्रूयते हि गृहीतो वै पुरस्तात् पारदारिकः ॥")
"पुष्पकाण्डजयडिण्डिमायितं
यत्र गोतमकलत्रकामिनः ।
पारदारिकविलाससाहसं
देवभर्त्तुरुदटङ्कि भित्तिषु ॥"
इति च नैषधे १८ सर्गः ॥
अस्य दोषा यथा, --
"यः परस्त्रीषु निरतस्तस्य श्रीर्वा कुतो यशः ।
स च निन्द्यः पापयुक्तः शश्वत् सर्व्वसभासु च ॥"
इति ब्रह्मवैवर्त्ते गणेशखण्डे २१ अध्यायः ॥

**पारदार्य्यं**, क्ली, (परदारा दारा यस्य स परदार-
स्तस्य कर्म्मेति ष्यञ् ।) परदारगमनम् । यथा,
"भृतादध्ययनादानं भृतकाध्यापनन्तथा ।
पारदार्य्यं पारिवित्तं वार्धुष्यं लवणक्रिया ॥"
इत्युपपातकगणने याज्ञवक्ल्यः ॥

**पारदेश्यः**, त्रि, प्रोषितः । पारदेशिकः । पथिकः ।
परदेशं गत इत्यर्थे ष्ण्यप्रत्ययनिष्पन्नः ॥ (परदेशे
भव इति ष्यञ् । परदेशजातः । यथा, याज्ञवक्ल्ये । २ । २५५ ।
मुख्यम् । यथा, --
"त्रिचतुःपञ्चसप्ताष्टनवद्वादशएव च ।
क्रमेण घटिका ह्येतास्तत्पुण्यं पारमार्थिकम् ॥"
इति तिथ्यादितत्त्वम् ॥
(यथाथः । यथा, मनौ ९ । ६२ श्लोकटीकायां
कुल्लूकभट्टः । "तेषां प्रकाशाप्रकाशतस्कराणां
स्वकर्म्मणि चौर्य्यादौ ये पारमार्थिका दोषा
इति ।" परस्परविभक्तः । यथा, भागवते ।
३ । २९ । १ ।
"लक्षणं महदादीनां प्रकृतेः पुरुषस्य च ।
स्वरूपं लक्ष्यतेऽमीषां येन तत् पारमार्थिकम् ॥"
"पारमार्थिकं परस्परविभक्तमित्यर्थः ।" इति
तट्टीकायां श्रीधरस्वामी ॥)

**पारम्पर्य्यं**, क्ली, (परम्पराया आगतम् । तत
आगत इत्यण् । चतुर्वर्णादित्वात् ष्यञ् । पर-
म्परा + स्वार्थे ष्यञ् वा ।) आम्नायः । कुल-
क्रमः । इति हेमचन्द्रः ॥ तथा च ।
"यस्मिन् देशे य आचारः पारम्पर्य्यक्रमागतः ।
तत्र तं नावमन्येत धर्म्मस्तत्रैव तादृशः ॥"
इति विवादभङ्गार्णवः ॥
परम्पराया भावश्च ॥ (यथा, महाभारते ।
६ । ११७ । २७ ।
"निवृत्तेषु च सैन्येषु पारम्पर्य्येण सर्व्वशः ।
विमुक्तकवचाः सर्व्वे भीष्ममीयुर्नराधिपाः ॥")

संज्ञान्तरेण पारशवश्चोच्यते । तस्योपनयन-
संस्कारनिषेधमाह ।
स पारयन्नेव शवस्तस्मात् पारशवः स्मृतः ॥
स जीवन्नेव शवतुल्यः ।" इति मनुकुल्लूकभट्टौ ॥
परस्त्रीतनयः । (परशुरेव स्वार्थे अण् ।)
शस्त्रम् । तत्तु लौहम् । इति मेदिनी । वे, ६० ॥
परशुजाते, त्रि ॥

**पारशीकः**, पुं, पारसीकः । इत्यमरटीकायां रमा-
नाथः ॥

**पारश्वधः**, पुं, (परश्वधेन युध्यतेऽसौ परश्वधः प्रह-
रणमस्येति वा । परश्वध + "तदस्येति ।" अण् ।)
परश्वधधारी । पारश्वधिकः । इति हेमचन्द्रः ॥

**पारश्वधिकः**, पुं, (परश्वधः प्रहरणमस्य । "पर-
श्वधाट्ठञ् च ।" ४ । ४ । ५८ । इति ठञ् ।)
परशुहेतिकः । कुठारधारी । तत्पर्य्यायः ।
पारश्वधः २ परश्वधायुधः ३ । इति हेमचन्द्रः ॥

**पारसिकः**, पुं, पारसीकः । इति शब्दरत्नावली ॥

**पारसी**, स्त्री, पारस्यभाषा । पारसदेशभव-
विद्यादि । तदारम्भदिनं यथा, --
"ज्येष्ठाश्लेषामघापूब्बरिवतीभरणीद्वये ।
विशाखार्द्रोत्तराषाढशतभेपापवासरे ॥
लग्ने स्थिरे सचन्द्रे च पारसीमारवीं पठेत् ॥"
इति गणपतिमुहूर्त्तः ॥

**पारसीकः**, पुं, पारसीकदेशोद्भवघोटकः । तत्-
पर्य्यायः । वानायुजः २ । इति केचिदित्यमर-
टीकायां भरतः ॥ परादनः ३ आवट्टजः ४ ।
इति त्रिकाण्डशेषः ॥ (यथा, अश्ववैद्यके । ६ । ८ ।
"पारसीकास्ताजिकाभाःकोङ्काणाः केचि-
दुन्नताः ॥")
देशविशेषः । तत्पर्य्यायः । पारसिकः २ ।
इति शब्दरत्नावली ॥ तद्देशोद्भवे, त्रि ॥ (यथा,

"स्वदेशपण्ये तु शतं बणिग्गृह्णीत
पञ्चकम् ।
दशकं पारदेश्ये तु यः सद्यः क्रयविक्रयी
॥")

**पारमहंस्यं**, त्रि, (परमहंसैर्गन्तव्यं परमहंसस्य
भावः परमहंसेन ज्ञेयं यत् प्राप्यमिति वा
।
परमहंस + ष्यञ् ।) परमहंससम्बन्धि ।
यथा,
"श्रीमद्भागवतं पुराणममलं यद्वैष्णवानां
प्रियं
यस्मिन् पारमहंस्यमेकममलं ज्ञानं परं
गीयते ।
यत्र ज्ञानविरागभक्तिसहितं
नैष्कर्म्म्यमाविष्कृतं
तच्छृण्वन् सुपठन् विचारणपरो भक्त्या
विमु-
च्येन्नरः ॥"
इति श्रीमद्भागवते । १२ । १३ । १८ ॥
"पारमहंस्यं परमहंस्यैः प्राप्यम् ।" इति
तट्टी-
कायां श्रीधरस्वामी ॥ (परब्रह्मधाम ।
यथा,
भागवते । १ । १८ । २२ ।
"यत्रानुरक्ताः सहसैव धीरा
व्यपोह्य देहादिषु सङ्गमूढम् ।
व्रजन्ति तत्पारमहंस्यमन्त्यं
यस्मिन्नहिंसोपशमः स्वधर्म्मः ॥"
प्रत्यङ्निष्ठारूपम् । यथा, तत्रैव । २ । ४
। १२ ।
"पुंसां पुनः पारमहंस्य आश्रमे ॥
व्यवस्थितानामनुमृग्यदाशुषे॥"
ज्ञानस्वरूपम् । यथा तत्रैव । ४ । २१ ।
४१ ।
"न वै तथा चेतनया बहिष्कृते
हुताशने पारमहंस्यपर्य्यगुः ॥")

**पारमार्थिकः**, त्रि, (परमार्थाय परमपुरुषार्थाय
हित इति । ठक् ।) परमार्थयुक्तः । यथा,
--

**पारम्पर्य्योपदेशः**, पुं, (पारम्पर्य्येण गुरुपरम्परया
प्राप्त उपदेशः ।) उपदेशपरम्परा । तत्-
पर्य्यायः । ऐतिह्यम् २ इतिह ३ ।
इत्यमरः ।
२ । ७ । १२ ॥ परम्परैव पारम्पर्य्यं
स्वार्थे
ष्ण्यः पारम्पर्य्येणोपदेशः
पारम्पर्य्योपदेशः तत्र
इतिहशब्दोऽव्ययः । यथा । इतिह
वृद्धैरुक्तं
इह वटे यक्षः प्रतिवसतीति । इति एवं
रूपं
हन्ति गच्छति इतिह हनजनादिति डः ।
इतिह शब्दात् स्वार्थे ष्ण्ये ऐतिह्यम् ।
इति
भरतः ॥

**पारलौलिकः**, त्रि, (परलोके भवः परलोकाय
हित इति वा । परलोक + ठञ् । "अनु-
शतीकादीनाञ्च ।" ७ । ३ । २० । इति
ञित्त्वादुभय-
पदस्यैव वृद्धिः ।) परलोकसम्बन्धी ।
यथा, --
"दानपात्रमधमर्णमिहैक-
ग्राहि कोटिगुणितं दिवि दायि ।
साधुरेति सुकृतैर्यदि कर्त्तुं
पारलौकिककुसीदमसीदत् ॥"
इति नैषधे । ५ । ९२ ॥
(तथा च महाभारते । १३ । १११ ।
१६ ।
"तस्मान्न्यायागतैरर्थैर्धर्म्मं सेवेत
पण्डितः ।
धर्म्म एको मनुष्याणां सहायः
पारलौकिकः ॥")

**पारवतः**, पुं, पारावतः । इति द्विरूपकोषः ॥

**पारशवः**, पुं, शूद्रायां विप्रतनयः । इत्यमरः । ३ ।
३ । २०९ ॥ स तु निषादजातिः । यथा,
--
"ब्राह्मणाद्वैश्यकन्यायामम्बष्ठोनाम
जायते ।

रघुः । ४ । ६० ।
"पारसीकांस्ततो जेतुं प्रतस्थे स्थलवर्त्तना
॥")

**पारस्त्रैणेयः**, त्रि, (परस्त्रियां जातः । "कल्याण्या-
दीनामिन्ङ् ।" ४ । १ । १२६ । इति ढक्
इनङादेशश्च । तत उभयपदवृद्धिः ।)
परस्त्रियाः
सुतः । इत्यमरः । २ । ६ । २४ ॥

**पारा**, स्त्री, (पारोऽस्त्यस्या इत्यच् ततष्टाप् ।)
नदीविशेषः । सा तु पारिपात्रपर्व्वतोद्भवा
इति मेदिनी । रे, ५६ ॥ (यथा, मात्स्ये ।
११३ । २४ ।
"पारा चर्म्मण्वती रूपा विदुषा वेणुमत्यपि ॥")

**पारापतः**, पुं, (पारे गिरिनद्यादिपरपारे यद्वा,
पारादप्यापतति लोभादिति । पत + अच् ।)
पारावतः । इत्यमरटीकायां रमानाथः ॥

**पारापारः**, पुं, (पारञ्चापारञ्चास्त्यस्येति । "अर्श
आदिभ्योऽच् ।" ५ । २ । १२७ । इत्यच् ।)
पारावारः । इति द्विरूपकोषः ॥

**पारायणं**, क्ली, साकल्यवचनम् । इत्यमरः । ३ ।
२ । २ ॥ "पारं समाप्तिं अयते गच्छति
प्राप्नोति
पारायणं नन्द्यादित्वादनः । आविष्टलिङ्गत्वा-
द्भिन्नलिङ्गेन सामानाधिकरण्येऽपि क्लीवमव
पारायणम् । यथा धातुपारायणम् । रत्न-

| “गतानुगतिको लोको न लोकः पारमार्थिकः ॥”<br>इति पुराणम् ॥ | निषादः शूद्रकन्यायां यः पारशव उच्यते ॥<br>शूद्रकन्यायामूढायां निषाद उत्पद्यते यतः | |
|---|---|---|

पारायणं नाम लङ्केति मम मैथिलीति
भक्तिः ।”
इति भरतः ॥ (पारमयन्ते समाप्तिं
प्राप्नुवन्ति
येनेति । अय + ल्युट् करणे इत्येके ।)
पुराण-
पाठः । (यथा, देवीभागवते । ३ । २६
। १७ ।
“वरयेद्ब्राह्मणं शान्तं पारायणकृते
तदा ॥”)
तत्र श्रीभागवतपाठानुक्रमो यथा, --
श्रीपार्व्वत्युवाच ।
“स्कन्धैर्द्वादशभिः प्रोक्तं श्रीमद्भागवतं
प्रभो ! ।
शुकस्तच्छ्रावयामास महाराजं
परीक्षितम् ॥
सप्ताहेनेति भगवन् ! श्रूयते तत्र तत्र ह
।
तस्यानुक्रममिच्छामि श्रोतुं तत्फलमेव
च ॥
सदाशिव उवाच ।
साधु पृष्टम्महाभागे ! लोके यत्
प्रचरिष्यति ।
पारायणमिति ख्यातं सद्यो मुक्तिप्रदं
नृणाम् ॥
शुकस्योक्तिक्रमेणैव पठेद्भागवतन्तु यः
।
श्रावयेच्छृणुयाद्वापि तस्यानन्तं फलं
भवेत् ॥
कृतनित्यक्रियः प्रातः कुशहस्तः
कृतासनः ।
देवद्विजगुरून्नत्वा ध्यात्वा विष्णुं
सनातनम् ॥
द्वैपायनं नमस्कृत्य शुकदेवञ्च भक्तितः
।
हिरण्याक्षवधं यावत् प्रथमेऽहनि
कीर्त्तयेत् ॥
चरितं भरतस्यापि द्वितीयेऽथ
तृतीयके ।

दूरे हरिकथाः केचिद्दूरे
चाच्युतकीर्त्तनाः ।
स्त्रियः शूद्रादयो ये च तेषां बोधो यतो
भवेत् ॥
देशे देशे विरक्ता ये वैष्णवाः
कीर्त्तनोत्सुकाः ।
तेष्वेव पत्रं प्रेष्यञ्च तल्लेखनमितीरितम्
॥
सतां समाजो भविता सप्तरात्रं सुदुर्लभः
।
अपूर्ब्बरसरूपैव कथा चात्र भविष्यति
॥
श्रीभागवतपीयूषकथासु रसलम्पटाः ।
भवन्तश्च तदा शीघ्रमायान्तु
प्रेमतत्पराः ॥
नावकाशः कदाचिद्वा दिनमात्रं तथापि
वा ।
सर्व्वथा गमनं कार्य्यं क्षणोऽत्रैव
सुदुर्लभः ॥
एवमाकारणं तेषां कर्त्तव्यं विनयेन च ।
आगन्तुकानां सर्व्वेषां वासस्थानानि
कल्पयेत् ॥
तीर्थे चैव वने चापि गृहे वा श्रवणं
स्मृतम् ।
विशाला वसुधा यत्र कर्त्तव्यं
तत्कथास्थलम् ॥
शोधनं मार्जनं भूमेर्लेपनं धातुमण्डनम्
।
गृहोपस्करमुद्धृत्य गृहकोणे निवेशयेत्
॥
अर्व्वाक् पञ्चाहतो यत्नादास्तीर्णानि
प्रलेपयेत् ।
कर्त्तव्यं मण्डपं प्रोच्चैः
कदलीषण्डमण्डितम् ॥
फलपुष्पदलैर्विश्वक् वितानेच
विराजितम् ।
चतुर्द्दिक्षु ध्वजारोपो बहुसम्पद्विराजितः
॥

एततकथाप्रकाशेन मदज्ञानं विनाशय ॥
तदग्रे नियमः पश्चात् कर्त्तव्यः श्रेयसे मुदा ।
सप्तरात्रं यथाशक्त्या धारणीयः स एव हि ॥
वरणं पञ्चविप्राणां कथाभागनिवृत्तये ।
कर्त्तव्यं तैर्हरेर्जप्यं द्वादशाक्षरविद्यया ॥
ब्राह्मणान् वैष्णवान् चान्यान् तथा कीर्त्तन-
कारिणः ।
नत्वा संपूज्य दत्त्वार्घ्यं स्वयमासनमाविशेत् ॥
लोकचिन्ताधनागारपुत्त्रचिन्ताच्युतश्च यः ।
कथाचिन्ताशुद्धमतिः स लभेत् फलमुत्तमम् ॥
आसूर्य्योदयमारभ्य सार्द्धं त्रिप्रहरान्तकम् ।
वाचनीया कथा सम्यक् धीरकण्ठं सुधीमता ॥
कथाविरामः कर्त्तव्यो मध्याह्ने घटिकाद्वयम् ।
तत्कथामनुकार्य्यं वै कीर्त्तनं वैष्णवैस्तदा ॥
मलमूत्रजयार्थं हि लघ्वाहारः सुखावहः ।
हविष्यान्नेन कर्त्तव्यो ह्येकवारं कथार्थिना ॥
उपोष्य सप्तरात्रं वा शक्तिश्चेत् शृणुयात्तदा ।
घृतपानं पयःपानं कृत्वा वा शृणुयात् सुखम् ॥
फलाहारेण वा श्राव्यमेकभक्तेन वा पुनः ।
सुखसाध्यं भवेद्यत्तु कर्त्तव्यं श्रवणाय तत् ॥
भोजनन्तु वरं मन्ये कथाश्रवणकारकम् ।
नोपवासो वरः प्रोक्तः कथाविघ्नकरो यदि ॥
सप्ताहव्रतिनां पुंसां नियमान् शृणु नारद ! ।
विष्णुदीक्षाविहीनानां नाधिकारः कथाश्रवे ॥
ब्रह्मचर्य्यमधःसुप्तिः पत्रावल्याञ्च भोजनम् ।
कथासमाप्तौ भक्तिञ्च कुर्य्यान्नित्यं कथाव्रती ॥
द्विदलं मधु तैलञ्च गरिष्ठान्नन्तथैव च ।
भावदुष्टं पर्य्युषितं जह्यान्नित्यं कथाव्रती ॥
वृन्ताकञ्च कलिङ्गञ्च दग्धमन्नं मसूरिकाम् ।
निष्पावमामिषाद्यञ्च वर्ज्जयेत्तु कथाव्रती ॥
पलाण्डुं लशुनं हिङ्गुं मूलकं गृञ्जनन्तथा ।
लालिकामूलकुष्माण्डं नैवाद्याच्च कथाव्रती ॥
देववैष्णवविप्राणां गुरुमोवतिनान्तथा ।
स्त्रीराजमहतां निन्दां वज्जयेच्च कथाव्रती ॥
कामं क्रोधं मदं दानं मत्सरं लोभमेव च ।
दम्भं मोहं तथा द्वेषं दूरयेच्च कथाव्रती ॥
रजस्वलान्त्यजम्लेच्छपतितव्रातकैस्तथा ।
द्विजद्विड्वेदवाह्यैश्च न वदेद्य कथाव्रती ॥
सत्यं शौचं दयां मौनं मार्ज्जनं विनयन्तथा ।

मथनञ्चामृतस्यापि यत्र कूर्म्मः स्वयं हरिः ॥
चतुर्थदिवसे चैव दशमे हरिजन्म च ।
पञ्चमे तु पठेद्विद्वान् रुक्मिण्या हरणावधि ॥
षष्ठे चोद्धवसंवादं सप्तमे तु समापयेत् ।
अध्यायं प्राप्य विरमेन्न तु मध्ये कदाचन ॥
कृते विरामे मध्ये तु अध्यायादिं पठेत् पुनः ।
पठेदर्थं बुध्यमानः श्रावयेद्वैष्णवोत्तमे ! ॥
श्रोता तु प्राङ्मुखो भूत्वा शृणुयाद्भक्तितत्परः ।
अध्याये स्वर्णमाषैकं तथा दद्याच्च दक्षिणाम् ॥
समाप्तौ च ततो धेनुं स्वर्णशृङ्गीं निवेदयेत् ।
कुर्य्याच्च वैष्णवं होमं सात्वतान् भोजयेत्ततः ॥
एवं यः कुरुते देवि ! पाठं भागवतस्य तु ।
श्रवणं श्रावणं वापि स इष्टां गतिमाप्नुयात् ।
एतत् पारायणं नाम सर्व्वकामफलप्रदम् ॥
पाठकाले तु त्रिदशा मुनयश्च तपोधनाः ।
पार्श्वदाश्च तथा विष्णोः सान्निध्यं तत्र कुर्व्वते ॥
एतत्ते कथितं देवि ! पारायणविधानकम् ।
विष्णुप्रीतिकरं पुण्यं किम्भूयः श्रोतुमिच्छसि ॥”
इति पाद्मे पातालखण्डे पारायणमाहात्म्ये ७१ अध्याय ॥ * ॥ अपिच ।
कुमारा ऊचुः ।
“अथ ते संप्रवक्ष्यामः सप्ताहग्रहणे विधिम् ।
ऊर्द्ध्वं सप्तैव लोकाश्च कल्पनीयाः सुविस्तरम् ।
तेषु विप्रा विरक्ताश्च स्थापनीयाः प्रबुध्य च ॥
पूर्ब्बं तेषामासनानि कर्त्तव्याणि यथोत्तरम् ।
वक्तुश्चापि तथा दिव्यमासनं परिकल्पयेत् ॥
उदङ्मुखो भवेद्वक्ता श्रोता वै प्राङ्मुखस्तदा ।
प्राङ्मुखोऽथ भवेद्वक्ता श्रोता चोदङ्मुखस्तदा ॥
अथवा पूर्ब्बदिक् ज्ञेया पूज्यपूजकमध्यतः ।
श्रोतॄणामागमः प्रोक्तो देशकालादिकोविदैः ॥
विरक्तो वैष्णवो विप्रो वेदशास्त्रविशुद्धिमान् ।
दृष्टान्तकुशलो धीरो वक्ता कार्य्योऽतिनिस्पृहः ॥
अनेककर्म्मविभ्रान्ताः स्त्रैणाः पाषण्डवादिनः ।
शुकशास्त्रकथोच्चारे त्याज्यास्ते येऽप्यपण्डिताः ।
वक्तुः पार्श्वे समर्थार्थमन्यः स्थाप्यस्तथाविधः ॥
पण्डितः संशयच्छेत्ता लोकबोधनतत्परः ॥
वक्त्रा क्षौरं प्रकर्त्तव्यं दिनादर्व्वाक् व्रताप्तये ।
अरुणोदयेऽसौ निर्व्वत्य शौचं स्नानं समाचरेत् ॥
मण्डलञ्च प्रकर्त्तव्यं तत्र स्थाप्यो हरिस्तथा ।
कृष्णमुद्दिश्य मन्त्रेण चरेत् पूजाविधिं क्रमात् ।
प्रदक्षिणनमस्कारान् पूजान्ते स्तुतिमाचरेत् ॥
संसारसागरे मग्नं दीनं मां करुणानिधे ! ।
उदारं मानसं तद्वत् कुर्य्यादिवं कथाव्रती ॥
दरिद्रश्च क्षयी रोगी निर्भाग्यः पापकर्म्मवान् ।
अनपत्यो मोक्षकामः शृणुयात् स कथामिमाम् ॥
अपुष्पा काकबन्ध्या च बन्ध्या या च मृतार्भका ।
स्रवद्गर्भा च या नारी तया श्राव्या प्रयत्नतः ॥
एतेन विधिना दत्तं तदक्षयतरं भवेत् ।
अत्युत्तमादिना सप्तकोटियज्ञफलप्रदा ॥
एवं कृत्वा व्रतविधिमुद्यापनमथाचरेत् ।
तज्जन्माष्टमीव्रतवत् कर्त्तव्यं फलकाङ्क्षिभिः ॥
अकिञ्चनेषु भक्तेषु प्रायो नोद्यापनाग्रहः ।
श्रवणेनैव पूतास्ते निष्कामा वैष्णवा यतः ॥
एवं नगाहयज्ञेऽस्मिन् समाप्ते श्रोतृभिस्तदा ।
पुस्तकस्य च वक्तुश्च पूजा कार्य्यातिभक्तितः ॥

| | | |
|---|---|---|
| सहायैर्वसुभिश्चैव प्रायः साध्यो विधिः स्मृतः ॥<br>दैवज्ञन्तु समाहूय मुहूर्त्तं पृच्छ यत्नतः ।<br>विवाहे यादृशं वित्तं तादृशं परिकल्पयेत् ॥<br>नभस्य आश्विनोर्ज्जौ च मार्गशीर्षः शुचिर्नभाः ।<br>एते मासाः कथारम्भे श्रोतृणां मोक्षसूचकाः ॥<br>मासानां निर्णये यानि तानि त्याज्यानि सर्व्वथा ।<br>सहायाश्च त एवात्र कर्त्तव्याः सोद्यमाश्च ये ॥<br>देशे देशे तथा चेयं वार्त्ता प्रेष्या प्रयत्नतः ।<br>भविष्यति कथा चात्र आगन्तव्यं कुटम्बिभिः ॥ | कर्म्मग्राहगृहीताङ्गं मामुद्धर भवार्णवात् ॥<br>श्रीमद्भागवतस्यापि ततः पूजा प्रयत्नतः ।<br>कर्त्तव्या विधिना प्रीत्या धूपदीपसमन्विता ॥<br>ततस्तु श्रीफलं धृत्वा नमस्कारं समाचरेत् ।<br>स्तुतिः प्रसन्नचित्तेन कर्त्तव्या केवलं तदा ॥<br>श्रीमद्भागवताख्यस्त्वं प्रत्यक्षः कृष्ण एव हि ।<br>स्वीकृतोऽसि मया नाथ ! मुक्त्यर्थं भवसागरे ॥<br>मनोरथो मदीयोऽयं सफलः सर्व्वथा त्वया ।<br>निर्विघ्नेनैव कर्त्तव्यो दासोऽहं तव केशव ! ॥<br>एवं दीनं वचः प्रोक्त्वा वक्तारञ्चाथ पूजयेत् ।<br>संभूष्य वस्त्रभूषाभिः पूजान्ते तञ्च संस्तवेत् ॥<br>शुकरूपप्रबोधज्ञः सर्व्वशास्त्रविशारदः । | |

प्रसादस्तुलसीमाला श्रोतृभ्यश्चाथ दीयताम् ।
मृदङ्गतालललितं कीर्त्तनं कीर्त्त्यतां ततः ॥
जयशब्दो नमःशब्दः शङ्खशब्दश्च गीयताम् ।
विप्रेभ्यो याचकेभ्यश्च वित्तमन्नञ्च दीयताम् ॥
विरक्तश्चेद्भवेत् श्रोता गीता वाच्या परेऽहनि ।
मृहस्थश्चेत्तदा होमः कर्त्तव्यः कर्म्मशान्तये ॥
प्रतिश्लोकञ्च जुहुयाद्विधिना दशमस्य च ।
पायसं दधि सर्पिश्च तिलादिमधुसंयुतम् ॥
अथवा हवनं कुर्य्याद्गायत्र्या सुसमाहितः ।
तन्मयत्वात् पुराणस्य परमस्यास्य तत्त्वतः ॥
होमाशक्तौ बुधो हौम्यं दद्यात्तत्फलसिद्धये ।
नानाच्छिद्रनिरोधार्थं न्यूनताधिक्यताख्ययोः ॥
दोषयोः प्रशमार्थन्तु पठेन्नामसहस्रकम् ।
तेन स्यात् सफलं सर्व्वं नास्त्यस्मादधिकं यतः ॥
द्वादश ब्राह्मणान् पश्चाद्भोजयेन्मधुपायसैः ।
दद्यात् सुवर्णं धेनुञ्च व्रतपूर्णत्वसिद्धये ॥
शक्तौ पलत्रयमितं स्वर्णसिंहं विधाय च ।
तत्रास्य पुस्तकं स्थाप्य लिखितं ललिताक्षरम् ॥
संपूज्यावाहनाद्यैस्तदुपचारैः सदक्षिणम् ।

अस्य मांसगुणाः । स्निग्धत्वम् । मधुरत्वम् । गुरुत्वम् । शीतलत्वम् । पित्तास्रदाहनाशित्वम् । बल्यत्वम् । वीर्य्यवृद्धिदातृत्वम् । इति राजनिर्घण्टः ॥ रसे पाके स्वादुत्वम् । कषायत्वम् । विशदत्वञ्च । इति राजवल्लभः ॥ तद्भेदो यथा, --
"पारावतोऽन्यो वग्देशी कामुको घुल्घुलारवः ।
पारावताङ्घ्रिपिच्छश्च ज्ञेयो गलरवश्च सः ॥"
इति राजनिर्घण्टः ॥
मर्कटः । तिन्दुकः । इति मेदिनी । ते, २१२ ॥
गिरिः । इति हेमचन्द्रः ॥ (नागविशेषः । यथा, महाभारते । १ । ५७ । ११ ।
"पारावतः पारिजातः पाण्डरो हरिणः कृशः ।
विहङ्गः शरभो मेदः प्रमोदः संहतापनः ।
ऐरावतकुलादेते प्रविष्टा हव्यवाहनम् ॥"
अम्लवर्गाणामन्यतमः । यथा, सुश्रुते । १ । ४२ ।
"दाडिमामलकमातुलुङ्गाम्रातककपित्थकरमर्द्द वदरकोलप्राचीनामलकतिन्तिडीककोशाम्रभव्य पारावतवेत्रफललकुचाम्लवेतसदन्तशठतक्रसुराशुक्तसौवीरकतुषोदकधान्याम्लप्रभृतीनिसमासेनाम्लो वर्गः ॥" * ॥ परात् शत्रोरहङ्कारात् अवति रक्षतीति । अव रक्षणे + शतृ । ततः पारावते इदमिति । तस्येदमित्यण् । दत्तात्रेयस्य गुरुः । इति चिन्तामणिः ॥)

**पारावतपदी**, स्त्री, (पारावतस्येव पादो मूलं यस्याः । ङीष् । पद्भावः ।) पारावताङ्घ्रिः । नयाफट्की इति भाषा ॥ इति रत्नमाला ॥ काकजङ्घा । इति राजनिर्घण्टः ॥ (यथा, सुश्रुते चिकित्सितस्थाने । ९ अध्याये ।
"पारावतपदीदन्तीवाकुचीकेशराह्वयैः ।
कण्टकार्य्या च तत् पक्वं घृतं कुष्ठिषु योजयेत् ॥")

**पारावताङ्घ्रिः**, स्त्री, (पारावतस्य अङ्घ्रिरिव अङ्घ्रिर्मूलं यस्याः ।) ज्योतिष्मती । इत्यमरः । २ । ४ । १५० ॥

**पारावताङ्घ्रिपिच्छः**, पुं, (पारावताङ्घ्रिरिव पिच्छः पश्चात्प्रदेशो यस्य ।) वग्देशीयपारावतः । इति राजनिर्घण्टः ॥

**पारावती**, स्त्री, (पारावतस्येव ध्वनिरस्त्यस्या इति ।

९३ । इत्यत्र "अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम् ।" इति वार्त्तिकोक्त्या खः ।)
पारावारे गच्छति यः । पारावारशब्दात् णीन्प्रत्ययनिष्पन्नः ॥

**पाराशरं**, क्ली, (पराशरेण कृतमिति । पराशर + अण् ।) पराशरोक्तभिक्षुसूत्रम् । इति पाराशरिशब्दटीकायां भरतः ॥ (उपपुराणविशेषः । इति पुराणम् ॥ घृतविशेषः । यथाह चक्रदत्तः ।
"यष्टीबलागुडूच्यल्पपञ्चमूलीतुलां पचेत् ।
शूर्पेऽपामष्टभागस्थे तत्र पात्रे पचेद्घृतम् ॥
धात्रीविदारीक्षुरसे त्रिपात्रे पयसोर्म्मले ।
सुपिष्टैर्जीवनीयैश्च पाराशरमिदं घृतम् ॥")

**पाराशरः**, पुं, (पराशरस्यापत्यं पुमान् । पराशर + "ऋष्यन्धकेति ।" ४ । १ । ११४ । इत्यण् ।)
व्यासदेवः । इति शब्दरत्नावली ॥ (पराशरकृतस्मृतिसंहिताविशेषः । यथा, --
"कृते तु मानवो धर्म्मस्त्रेतायां गौतमः स्मृतः ।
द्वापरे शङ्खलिखितः कलौ पाराशरः स्मृतः ॥"
अस्य विशेषविवरणन्तु पराशरशब्दे द्रष्टव्यम् ॥)
पराशरसम्बन्धिनि, त्रि ॥

**पाराशरकल्पिकः**, पुं, (पाराशरः पराशरकृतः कल्पस्तं वेत्त्यधीते वा ।
"विद्यालक्षणकल्पान्ताच्चेति व्यक्तव्यम् ।" ४ । २ । ६० ।
इत्यस्य वार्त्ति-

वस्त्रभूषणगन्धाद्यैः पूजिताय यतात्मने ॥
आचार्य्याय सुधीर्द्दत्त्वा मुक्तः स्याद्भवबन्धनैः ।
एवं कृते विधाने च सर्व्वपापनिवारणे ।
फलदं स्यात् पुराणन्तु श्रीमद्भागवतं शुभम् ॥
धर्म्मार्थकाममोक्षाणां साधनं नात्रसंशयः ।
इति ते कथितं सर्व्वं किं भूयः श्रोतुमिच्छसि ॥
श्रीमद्भागवतेनैव भक्तिभुक्तिः प्रकाशिता ॥”
इति पाद्मोत्तरखण्डे श्रीभागवतमाहात्म्ये ६ अध्यायः ॥

**पारायणिकः**, पुं, (पारायणं वर्त्तयतीति । पारायण + “पारायणतुरायणेति ।” ५ । १ । ७२ । इति ठञ् ।) पाठकः । छात्रः । इति सिद्धान्तकौमुदी ॥

**पारारुकः**, पुं, (पॄ पूर्त्तौ + घञ् । पारं पूर्त्तिं ऋच्छतीति । ऋ गतौ + उकञ् ।) प्रस्तरः । इति शब्दरत्नावली ॥

**पारावतः**, पुं, (पारे गिरिदुर्गनद्यादिपरपारे आपततीति । पार + आ + पत + अच् । पृषोदरादित्वात् पस्य वः । उड्डीयने सुदक्षत्वादेवास्य तथात्वम् । यद्वा, परावद्दूरदेशस्तस्मिन् अन्तरीक्षादिदूरदेशे भवः उड्डीयमानः सन् स्थित इत्यर्थः । परावत् + अण् ।) अच् । ततो ङीष् ।) गोपगीतम् । नदीभेदः । (यथा, हारीते प्रथमस्थाने ७ अध्याये ।
“तथा चर्म्मण्वती वेत्रवती पारावती तथा ॥”) लवलीफलम् । इति मेदिनी । ते, २१२ ॥

**पारावारं**, क्ली, (पारं नद्यादिपरपारं आवृणोतीति । आ + वृ + “कर्म्मण्यण् ।” ३ । २ । १ । इत्यण् ।) तटद्वयम् । इति मेदिनी । रे, २८१ ॥

**पारावारः**, पुं, (पारावारं तटद्वयं पारं अवारञ्च वा अस्त्यस्येति । अच् ।) समुद्रः । इत्यमरः । १ । १० । १ ॥ (यथा, देवीभागवते । १ । ५ । ५९ ।
“यदल्पं कीलालं कलयितुमशक्तः स तु नरः
कथं पारावाराकलनचतुरः स्यादृतमतिः ॥”)

**पारावारीणः**, त्रि, (पारावारं गच्छतीति । पारावार + “राष्ट्रावारपाराद्घखौ ।” ४ । २ । कोक्त्या ठक् ।) पाराशरकल्पाध्यायी । पाराशरकल्पवेत्ता । इति सिद्धान्तकौमुदी ॥

**पाराशरिः**, पुं, (पराशरस्यापत्यम् । “अत इञ् ।” ४ । १ । ९५ । इतीञ् ।) वेदव्यासः । इति भूरिप्रयोगः ॥

**पाराशरी**, [न्] पुं, (पाराशर्य्येण प्रोक्तं भिक्षुमधीते इति । पाराशर्य्य + “पाराशर्य्यशिलालिभ्यां भिक्षुनटसूत्रयोः ।” ४ । ३ । ११० । इति णिनिः ।) मस्करी । चतुर्थाश्रमी । पराशरेण प्रोक्तं भिक्षुसूत्रं इत्यर्थे ष्णे पाराशरं तद्विद्यतेऽस्याध्ययनायेति नैकाजादिति इन् । इत्यमरभरतौ ॥

**पाराशर्य्यः**, पुं, (पराशरस्यापत्यम् । पराशर + “गर्गादिभ्यो यञ् ।” ४ । १ । १०५ । इति यञ् ।) व्यासः । इति शब्दरत्नावली ॥ (यथा, देवीभागवते । १ । ४ । ३२ ।
“पाराशर्य्य ! महाभाग ! यत्त्वं पृच्छसि मामिह ॥”)

**पारिकाङ्क्षी**, [न्] पुं, (पारमत्रास्तीति । इनिः । पारि ब्रह्मज्ञानं तत् काङ्क्षतीति । काङ् क्ष + णिनिः ।) तपस्वी । इत्यमरः । २ । ७ । ४२ ॥ मस्करी । इति हेमचन्द्रः । ३ । ४७४ ॥

**पारिजातः**, पुं, (पारमस्यास्तीति पारी समुद्रस्तस्मात् जातः । समुद्रमन्थनकाले तद्गर्भजातत्वात् तथात्वम् । पारिणोऽद्रेर्जातः इति कश्चित् ।) पारि-

| | | |
|---|---|---|
| पक्षिविशेषः । पायरा इति भाषा ॥ तत्पर्य्यायः । छेद्यकण्ठः २ कपोतः ३ रक्तलोचनः ४ । इति रभसः ॥ पारापतः ५ कलरवः ६ अरुण-लोचनः ७ मदनकाकुरवः ८ कामी ९ रक्ते-क्षणः १० मदनमोहनवाग्विलासी ११ कण्ठी-रवः १२ गृहकपोतकः १३ ॥ (यथा, -- "सिंहो बली द्विरदकुञ्जरमांसभोजी संवत्सरेण कुरुते रतिमेकवारम् । पारावतः खलु शिलाकणमात्रभोजी कामी भवेदनुदिनं वद कोऽत्र हेतुः ॥" इत्युद्भटः ॥) | | भद्रवृक्षः । सुरतरुः । इति मेदिनी । ते, २११ ॥ (समुद्रमन्थनकालेऽस्योत्पत्तिकथा यथा, भागवते । ८ । ८ । ६ । |

“ततोऽभवत् पारिजातः
सुरलोकविभूषणम् ।
पूरयत्यर्थिनो योऽर्थैः शश्वद्भुवि यथा
भवान् ॥”)
अस्योत्पत्तिहरणे यथा, --
“अदित्यानुकृतानुज्ञो देवराजो जनार्द्दनम् ।
यथावत् पूजयामास बहुमानपुरःसरम् ॥
ततो ददर्श कृष्णोऽपि सत्यभामासहायवान्
।
देवोद्यानानि सर्व्वाणि नन्दनादीनि सत्तम !
॥
ददर्श च सुगन्धाढ्यं मञ्जरीपुञ्जधारिणम् ।
शैत्याह्लादकरं दिव्यं बालपल्लवशोभितम् ॥
मथ्यमानेऽमृते जातं जातरूपमयत्वचम् ।
पारिजातं जगन्नाथः केशवः केशिसूदनः ॥
तं दृष्ट्वा प्राह गोविन्दं सत्यभामा
द्विजोत्तम ! ।
कस्मान्न द्वारकामेष नीयते कृष्ण ! पादपः
॥
इत्युक्तः स प्रहस्यैनं पारिजातं गरुत्मति ।
आरोपयामास हरिस्तमूचुर्व्वनचारिणः ॥
भोः शची देवराजस्य महिषी तत्परिग्रहम् ।
पारिजातं न गोविन्द ! हर्त्तुमर्हसि पादपम्
।
शचीविभूषणार्थाय देवैरमृतमन्थने ।
उत्पादितोऽयं न क्षेमी गृहीत्वैनं गमिष्यसि
॥
अवश्यमस्य देवेन्द्रो निष्कृतिं कृष्ण !
यास्यति ।
वज्रोद्यतकरं शक्रमनुयास्यन्ति चामराः ॥
तदलं सकलैर्द्देवैर्विग्रहेण तवाच्युत ! ।
विपाककटु यत् कर्म्म न तच्छंसन्ति
पण्डिताः ॥
इत्युक्ते तैरुवाचैतान् सत्यभामातिकोपिनी
।
का शची पारिजातस्य कोऽयं शक्रः सुरा-
धिपः ॥
सामान्यः सर्व्वलोकानां यद्येषोऽमृतमन्थने
।
वज्रचक्रधरौ दृष्ट्वा देवराजजनार्द्दनौ ॥
क्षिप्तं वज्रमथेन्द्रेण जग्राह भगवान् हरिः ।
न मुमोच तथा चक्रं शक्र ! तिष्ठेति
चाब्रवीत् ।
प्रनष्टवज्रं देवेशं गरुडक्षतवाहनम् ।
सत्यभामाब्रवीद्वीरं पलायनपरायणम् ॥
त्रैलोक्येश्वर ! नो युक्तं शचीभर्त्तुः
पलायनम् ।
पारिजातस्रगाभोगा त्वामुपस्थास्यते शची
॥
श्रीपराशर उवाच ।
इत्युक्तो वै निववृते देवराजस्तया द्विज ! ।
प्राह चैनामलं चण्डि ! सख्युः
खेदातिविस्तरैः ॥
न चापि सर्गसंहारस्थितिकर्त्ताखिलस्य
यः ।
जितस्य तेन मे व्रीडा जायते विश्वरूपिणा
॥
यस्मिन् जगत् सकलमेतदनादिमध्ये
यस्माद्यतश्च न भविष्यति सर्व्वभूतात् ।
तेनोद्भवप्रलयपालनकारणेन
व्रीडा कथं भवति देवि ! निराकृतस्य ॥
संस्तुतो भगवानित्थं देवराजेन केशवः ।
प्रहस्य भावगम्भीरमुवाचेन्द्रं द्विजोत्तम ! ॥
देवराजो भवानिन्द्रो वयं मर्त्त्या जगत्पते !
।
क्षन्तव्यं भवतैवैतदपराधं कृतं मया ॥
पारिजाततरुश्चायं नीयतामुचितास्पदम् ।
गृहीतोऽयं मया शक्र ! सत्या
वचनकारणात् ॥
श्रीशक्र उवाच ।
विमोहयसि मामीश ! मर्त्योऽहमिति किं
वदन् ।
जानीमस्त्वां भगवतो न तु सूक्ष्मविदो
वयम् ॥
नीयतां पारिजातोऽयं कृष्ण ! द्वारवतीं
पुरीम् ।
मर्त्यलोके त्वया मुक्ते नायं वै स्थास्यते
भुवि ॥

**पारिणाय्यं**, त्रि, (परिणये विवाहकाले लब्धम् ।
परिणय + ष्यञ् ।) परिणयलब्धं
धनादिकम् ।
यथा, --
“मातुः पारिणाय्यं स्त्रियो विभजेरन् ॥”
इति दायभागधृतवशिष्ठवचनम् ॥

**पारिणाह्यं**, त्रि, (परिणाहमर्हतीति । परिणाह
+ ष्यञ् ।) गृहोपकरणशय्यासनकुण्डकटा-
हादि । यथा, मनुः । ९ । ११ ।
“अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत्
।
शौचे धर्म्मेऽन्नपक्त्याञ्च पारिणाह्यस्य चेक्षणे
॥”
“पारिणाह्यस्य गृहोपकरणस्य
शय्यासनकुण्ड-
कटाहादेरवेक्षणे एनां नियोजयेत् ॥” इति
तट्टीकायां कुल्लूकभट्टः ॥

**पारितथ्या**, स्त्री, (परितस्तथाभूता परितथा ।
ततः स्वार्थे ष्यञ् ।)
सीमन्तिकास्थितस्वर्णादि
रचितपट्टिका । सिँती इति भाषा ॥ तत्-
पर्य्यायः । बालपाश्या २ । इत्यमरः । २ ।
६ । १०३ ॥

**पारितोषिकं**, त्रि, (परितोषेण लब्धं परितोषा-
दागतं वा । परितोष + शैषिकष्ठक् ।)
आनति-
करम् । परितोषजनकद्रव्यम् । यथा, --
“ममापि चन्द्रशेखर-
शरासनारोपणप्रथमवा-
दिनः पारितोषिकं धारयसि ।” इति मुरारिः
॥

**पारिन्द्रः**, पुं, (पारीन्द्र + पृषोदरादित्वात् ह्रस्वः ।)
सिंहः । इति हेमचन्द्रः । ४ । ३५० ॥

**पारिपन्थिकः**, पुं, (परिपन्थं पन्थानं वर्ज्जयित्वा
व्याप्य वा तिष्ठति परिपन्थं हन्तीति वा ।
“परि-

समुत्पन्नः सुराः कस्मादेको गृह्णाति वासवः ॥
यथा सुधा यथैवेन्दुर्यथा श्रीर्वनरक्षिणः ! ।
सामान्यः सर्व्वलोकस्य पारिजातस्तथा तरुः ॥
भर्तृबाहुमहागर्व्वा रुणद्ध्यैनं यथा शची ।
तत् कथ्यतामलं क्षान्त्या सत्याहारयति द्रुमम् ॥
कथ्यतां वै द्रुतं गत्वा पौलम्यां वचनं मम ।
सत्यभामा वदत्यैतदिति गर्व्वोद्धताक्षरम् ॥
यदि त्वं दयिता भर्त्तुर्यदि वश्यः पतिस्तव ।
मद्भर्त्तुर्हरतो वृक्षं तत् कारय निवारणम् ॥
जानामि ते पतिं शक्रं जानामि त्रिदशेश्वरम् ।
पारिजातं तथाप्येनं मानुषी हारयामि ते ॥
श्रीपराशर उवाच ।
इत्युक्ता रक्षिणो गत्वा शच्या ऊचुर्यथोदितम् ।
शची चोत्साहयामास श्रुतार्था त्रिदशाधिपम् ॥
ततः समस्तदेवानां सैन्यैः परिवृतो हरिः ।
प्रययौ पारिजातार्थमिन्द्रो योधयितुं द्विज ! ॥
ततः परिघनिस्त्रिंशगदाशूलवरायुधाः ।
बभूवुस्त्रिदशाः सज्जाः शक्रे वज्रकरे स्थिते ॥
ततो निरीक्ष्य गोविन्दो नागराजोपरिस्थितम् ।
शक्रं देवपरीवारं युद्धाय समुपस्थितम् ॥
चकार शङ्खनिर्घोषं दिशः शब्देन पूरयन् ।
मुमोच च शरव्रातं सहस्रायुतसम्मितम् ॥
छिन्नेष्वशेषबाणेषु शस्त्रेष्वस्त्रेषु सत्वरम् ।
जग्राह वासवो वज्रं कृष्णश्चक्रं सुदर्शनम् ॥
ततो हाहाकृतं सर्व्वं त्रैलोक्यं द्विजसत्तम ! ।
तथेत्युक्त्वा च देवेन्द्रमाजगाम भुवं हरिः ।
हर्षमुत्पादयामास द्वारकावासिनां द्विज ! ॥
अवतीर्य्याथ गरुडात् सत्यभामासहायवान् ।
निष्कुटे स्थापयामास पारिजातं महातरुम् ॥
यमभ्येत्य जनः सर्व्वो जातिं स्मरति पौर्ब्बिकीम् ।
वास्यते यस्य पुष्पाणां गन्धेनोर्वी त्रियोजना ॥
ततस्ते यादवाः सर्व्वे देहबन्धानमानुषान् ।
ददृशुः पादपे तस्मिन् कुर्व्वन्तो मुखदर्शनम् ॥”
इति विष्णुपुराणे पञ्चमेऽंशे पारिजातहरणे ३० । ३१ अध्यायौ ॥
(ऐरावतकुलजातनाग-विशेषः । यथा, महाभारते । १ । ५७ । ११ ।
“पारावतः पारिजातः पाण्डरो हरिणः कृशः ॥”
ऋषिविशेषः । यथा तत्रैव । २ । ५ । ११ ।
“पारिजातेन राजेन्द्र ! रैवतेन च धीमता ।
सुमुखेन च सौम्येन देवर्षिरमितद्युतिः ॥”
तन्त्रशास्त्रविशेषः । यथा, आगमतत्त्वविलासे ।
“भुवनेश्वरीं पारिजातं प्रयोगसारमुत्तमम् ॥”)

**पारिजातकः**, पुं, पारिणोऽद्रेर्जातः पारिजातः स्वार्थे कः । ‘पारे जातो विष्णुपद्याः पारि-जातेति शब्दितः ।’ इत्यागमः ॥ देवतरुः । तत्-पर्य्यायः । मन्दारः २ । इत्यमरः । २ । ४ । २६ ॥
पारिभद्रवृक्षः । पालितामादार इति भाषा ॥
“पारि पारं प्राप्तं जातं जन्म यस्य । ‘पारिभद्रे पन्थश्च तिष्ठति ।” ४ । ४ । ३६ । इति ठक् ।)
चौरः । इति हेमचन्द्रः । ३ । ४५ ॥

**पारिपाट्यं**, क्ली, (परिपाटी + ष्यञ् ।) परि-पाट्या भावः । परिपाटीशब्दात् भावे ष्ण्यप्रत्ययः ॥

**पारिपात्रः**, पुं, पर्व्वतविशेषः । तत्पर्य्यायः । पारि-यात्रः २ । इति शब्दरत्नावली ॥ स तु बिन्ध्यस्य पश्चिमे मालवदेशस्य सीमापर्व्वतः ॥ (अयं हि भारतस्यास्य वर्षस्य कुलपर्व्वतानामन्यतमः ।
यथा, मार्कण्डेये । ५७ । ११ ।
“महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्व्वतः ।
बिन्ध्यश्च पारिपात्रश्च सप्तैवात्र कुलाचलाः ॥”
अस्माद्धूतनद्यो यथा, तत्रैव । ५७ । १९ - - २० ।
“वेदस्मृतिर्व्वेदवती वृत्रघ्नी सिन्धुरेवं च ।
वेण्वा सानन्दिनी चैव सदानीरा मही तथा ।
पारा चर्म्मण्वती नूपी विदिशा वेत्रवत्यपि ।
शिप्रा ह्यवर्णी च तथा पारिपात्राश्रयाः स्मृताः ॥”)

**पारिपात्रिकः**, पुं, (पारिपात्र + स्वार्थे कन् ।) पारिपात्रपर्व्वतः । इत्यमरः । २ । ३ । ३ ॥

**पारिपार्श्विकः**, पुं, (परिपार्श्वं वर्त्तते इति । परिपार्श्व + “परिमुखञ्च ।” ४ । ४ । २९ । इति चकारात् ठक् ।) नट्याः पार्श्वस्थः । इति हेमचन्द्रः ॥ त्रि, पार्श्ववर्त्ती । यथा, अमर-कोषे । १ । ३ । ३१ ।
“माठरः पिङ्गलो दण्डश्चण्डांशोः पारि-पार्श्विकाः ॥”

| | | |
|---|---|---|
| | तु मन्दारुर्म्मन्दारः पारिजातकः ।’ इति हड्‌- चन्द्रः ॥” इत्यमरटीकायां भरतः ॥ | |

**पारिप्लवं**, त्रि, (परि + प्लु + अच् । ततः प्रज्ञाद्यण् ।) चञ्चलम् । इत्यमरः । ३ । १ । ७५ ॥ (यथा, रघुः । ३ । ११ ।
"तयोपचाराञ्जलिखिन्नहस्तया
ननन्द पारिप्लवनेत्रया नृपः ॥")
आकुलः । इति मेदिनी । वे, ६० ॥ (क्ली, तीर्थविशेषः । यथा, महाभारते । ३ । ८३ । १२ ।
"ततः पारिप्लवं गच्छेत्तीर्थं त्रैलोक्यविश्रुतम् ।
अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति भारत ! ॥"
पुं, जलपक्षी । इति रामानुजः ॥ यथा, रामायणे । ४ । २७ । २३ ।
"पारिप्लवशतैर्ज्जुष्टा बर्हिक्रौञ्चनिनादिता ।
रमणीया नदी सौम्या मुनिसङ्घनिषेविता ॥"
पञ्चममन्वन्तरीयप्रकृतिविशेषः । यथा, हरिवंशे । ७ । २७ ।
"देवाश्चाभूतरजसस्तथा प्रकृतयोऽपरे ।
पारिप्लवश्च रैभ्यश्च मनोरन्तरमुच्यते ॥")

**पारिभद्रः**, पुं, (परितो भद्रमस्मात् । परिभद्रस्ततः प्रज्ञाद्यण् ।) वृक्षविशेषः । पालितामादार इति भाषा ॥ तत्पर्य्यायः । निम्बतरुः २ मन्दारः ३ पारिजातकः ४ । इत्यमरः । २ । ४ । २६ ॥ रक्तकुसुमः ५ कृमिघ्नः ६ बहुपुष्पः ७ रक्तकेसरः ८ । इति राजनिर्घण्टः ॥ अस्य गुणः । अनिलश्लेष्मशोथमेदःकृमिनाशित्वम् । अस्य पुष्पगुणः । पित्तरोगकर्णव्याधिनाशित्वम् । इति भावप्रकाशः ॥ देवदारु । इति मेदिनी ॥ सरलवृक्षः । इति शब्दचन्द्रिका ॥ (यज्ञवाहस्य पुत्त्रविशेषः । प्लक्षद्वीपस्य वर्षविशेषः । यथा,

**पारिमाण्डल्यं**, क्ली, (परिमण्डलस्य परमाणोर्भावः । परिमण्डल + ष्यञ् ।) परमाणुपरिमाणम् । यथा, भाषापरिच्छेदे । १५ ।
"पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥"

**पारिमुखिकः**, त्रि, (परिमुखं वर्त्तते इति । "परिमुखञ्च ।" ४ । ४ । २९ । इति ठक् ।) परिमुखेण तिष्ठति यः । सम्मुखवर्त्ती । परिमुखशब्दात् ष्णिकप्रत्ययनिष्पन्नः ॥

**पारियात्रः**, पुं, (परितो यात्रया दृश्यते । "शेषे ।" ४ । २ । ९२ । इत्यण् ।) पारिपात्रपर्व्वतः । इति शब्दरत्नावली ॥ (यथा, गोलाध्याये । ३ । ४२ ।
"माहेन्द्रशुक्तिमलयर्क्षकपारियात्राः
सह्यः सविन्ध्य इह सप्तकुलाचालाख्याः ॥")

**पारियात्रिकः**, पुं, (पारियात्र एव । स्वार्थे ठक् ।) पारियात्रः । इति हेमचन्द्रः । ४ । ९७ ॥

**पारियानिकः**, पुं, (परियानं प्रयोजनमस्य । परियान + ठञ् ।) अध्वरथः । इति हेमचन्द्रः । ३ । ४१६ ॥ परिघातिकोऽपि पाठः ॥

**पारिरक्षकः**, पुं, (परिरक्षति आत्मानमिति । परि + रक्ष + ण्वुल् । ततः प्रज्ञाद्यण् ।) मस्करी । तापसः । इति हेमचन्द्रः । ३ । ४७४ ॥

**पारिशः**, पुं, वृक्षविशेषः । पलाशपिपुल इति गजहण्ड इति च भाषा ॥ तत्पर्य्यायः । फलीशः २ कपिचूतः ३ कमण्डलुः ४ गर्द्दभाण्डः ५ कन्दरालः ६ कपीतनः ७ सुपार्श्वकः ८ । अस्य गुणाः । दुर्जरत्वम् । स्निग्धत्वम् । क्रमिशुक्रकफप्रदत्वम् । फले अम्लत्वम् ।

"नन्वयं पुत्त्रनामाग्रहीत् न भगवन्नामतत्राह्ः ।
साङ्केत्यं पुत्त्रादौ सङ्केतितम् । पारिहास्यं परिहासेन कृतम् । स्तोभं गीतालापपूरणार्थे कृतम् । हेलनं किं विष्णुनेति सावज्ञमपि च वैकुण्ठनामोच्चारणम् ।" इति तट्टीकायां श्रीधरस्वामी ॥

**पारी**, स्त्री, (पारयत्यनयेति । पॄ पूर्त्तौ + णिच् + घञ् । ततो ङीष् ।) पूरः । जलसमूहः । कर्क्करी । हस्तिपादरज्जुः । इति मेदिनी । रे, ५६ ॥ पात्री । परागः । इति विश्वः ॥ (पीयतेऽत्रेति । पा + क्विप् । तद्रातीति । रा + कः । ङीष् ।) पानपात्रम् । इति त्रिकाण्डशेषः ॥ (यथा, राजतरङ्गिण्याम् । ४ । ३७३ ।
"कर्पूरपारीपतितं मौरेयमिव हारितम् ॥")
दोहनपात्रम् । इति जटाधरः ॥

**पारीक्षितः**, पुं, परीक्षितराजः । इति शब्दरत्नावली ॥ जनमेजयः । परीक्षितोऽपत्यं इत्यर्थे ष्णप्रत्ययनिष्पन्नः ॥ (यथा, देवीभागवते । २ । ११ । १२ ।
"ततः सुवर्णवर्म्माक्षो राजा काशीपतिः किल ।
वपुष्टमां शुभां कन्यां ददौ पारीक्षिताय च ॥")

**पारीणः**, त्रि, (पारं गामीति । पार + "अवार-

भागवते । ५ । २० । ९ ।
"तद्द्वीपाधिपतिः प्रियव्रतात्मजो यज्ञवाहः
स्वसुतेभ्यस्तन्नामानि सप्त वर्षाणि व्यभजत्
।
सुरोचनं सौमनस्यं रमणकं देवबर्हं पारिभद्र-
माप्यायनमभिज्ञातमिति ॥")

**पारिभद्रकः**, पुं, (पारिभद्र एव । स्वार्थे कन् ।)

देवदारुवृक्षः । इत्यमरः ॥ (यथा, महाभारते
।
१ । १२५ । ३ ।
"पलाशैस्तिलकैश्चूतैश्चम्पकैः पारिभद्रकैः
॥")
निम्बवृक्षः । कुष्ठौषधे, क्ली । इति राज-
निर्घण्टः ॥

**पारिभाव्यं**, क्ली, (परिभवाय रोगादिनाशाय

हितम् । परिभव + ष्यञ् ।) कुष्ठौषधम् ।
इत्य-
मरः । २ । ४ । १२६ ॥ परिभुवो भावः ।
जामिनी
इति भाषा ॥ यथा, --
"साक्षित्वं पारिभाव्यञ्च दानं ग्रहणमेव च ।
विभक्ता भ्रातरः कुर्य्युर्नाविभक्ताः परस्परम्
॥"
इति दायभागः ॥

**पारिभाषिकं**, क्ली, (परिभाषात आगतम् । परि-

भाषा + ठञ् ।) परिभाषयार्थबोधकं पदम् ।
यथा । तत्राधुनिकसङ्केतः परिभाषा तया
अर्थ-
बोधकं पदं पारिभाषिकम् । यथा शास्त्र-
कारादिसङ्केतितनदीवृद्ध्यादिपदम् । इति
शक्ति-
वाद गदाधरः ॥

मूले मधुरत्वम् । कषायत्वम् ।
स्वादुमज्जक-
त्वञ्च । इति भावप्रकाशः ॥

**पारिषदः**, पुं, परिषदि तिष्ठति यः । (परिषदि

साधुः । परिषदो ण्यः इत्यत्र योगविभागात्
णः ।) सभास्थः । तत्पर्य्यायः । सभ्यः २
सभा-
स्तारः ३ सभासत् ४ परिषद्बलः ५ पर्षद्बलः
६
पारिषद्यः ७ पार्श्वदः ८ । इति
शब्दरत्नावली ॥
(यथा, महाभारते । २ । १० । ३२ ।
"शङ्कुकर्णमुखाः सर्व्वे दिव्याः
पारिषदास्तथा ॥"
परिषद इदम् । "पत्राध्वर्युपरिषदश्च ।" ४ ।
३ । १२३ । इति अञ् ।)
परिषत्सम्बन्धिनि, त्रि ॥

**पारिषद्यः**, पुं, (परिषदं समवैति । "परिषदो

ण्यः ।" ४ । ४ । ४४ । इति ण्यः ।) पारि-
षदः । इति शब्दरत्नावली ॥

**पारिहारिकः**, त्रि, (परिहारे साधुः । परिहार

+ ठञ् ।) परिहारकर्त्ता । परिहारं करोति
यः इत्यर्थे ष्णिकप्रत्ययनिष्पन्नः ॥

**पारिहार्य्यः**, पुं, (परिह्रियते इति । परि + हृ +

ण्यत् । ततः प्रज्ञाद्यण् ।) बलयः । इत्यमरः
॥
परिहारत्वे, क्ली ॥

**पारिहास्यं**, क्ली, (परिहास + ष्यञ् ।) परि-

हासस्य भावः । परिहासद्वारा कृतम् । यथा,
श्रीभागवते । ६ । अजामिलोपाख्याने । २ ।
१४ ।
"साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा
।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥"

पारत्यन्तानुकामं गामी ।" ५ । २ ।
११ । इति
खः ।) पारगमनकर्त्ता । पारं गच्छति
इत्यर्थे
णीनप्रत्ययनिष्पन्नः ॥ (यथा, भट्टिः ।
२ । ४६ ।
"त्रिवर्गपारीणमसौ भवन्त-
मध्यासयन्नासनमेकमिन्द्रः ॥")

**पारीन्द्रः**, पुं, (पृ पालने + कर्म्मणि इन् । पारिः

पशुस्तस्य इन्द्रः ।) सिंहः ।
अजगरसर्पः । इति
हेमचन्द्रः ॥

**पारीरणः**, पुं, (पार्य्यां जलपूरे रणं यस्य ।)

कमठः । दण्डः । पटशाटकः । इति
विश्वः ॥

**पारुः**, पुं, (पिबति रसानिति । पा + "वाहु-

लकात् पिबतेश्च । ४ । १०१ । इत्यत्र
उज्ज्वल-
दत्तोक्त्या रुः ।) वह्निः । सूर्य्यः ।
इत्युणादि-
कोषः ॥

**पारुष्यं**, क्ली, (परुषस्य भावः । परुष + ष्यञ्
।)

अप्रियभाषणम् । तत्पर्य्यायः ।
अभिवादः २ ।
इत्यमरः । १ । ६ । १४ ॥ तत्तु
चतुर्व्विधवाङ्मय-
पापान्तर्गतपापघिशेषः । यथा, --
"पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्व्वशः
।
असम्बद्धप्रलापश्च वाङ्मयं
स्याच्चतुर्व्विधम् ॥"
इति तिथ्यादितत्त्वम् ॥
परुषत्वम् । दुर्व्वाक्यम् । इति मेदिनी ।
ये, ९४ ॥
इन्द्रस्य वनम् । इति विश्वः ॥ अगुरु ।
इति
शब्दचन्द्रिका ॥

**पारुष्यः**, पुं, (परुषस्य भावः पारुष्यं दुर्व्वाक्यं

| | | तदिव नीतिवाक्यमस्ति अस्यास्मिन् वा इत्यच् ।) बृहस्पतिः । इति मेदिनी । ये, ९४ ।<br>**पारेरकः**, पुं, (वध्यादेः पारमीर्त्ते गच्छ- तीति । ईर् + ण्वुल् ।) खड्गः । इति शब्द- माला ॥ |
|---|---|---|

**पार्घटं**, क्ली, (पादे घटते इति अच् । ततः

पृषोदरादित्वात् साधुः ।) पांशु । इति
हारा-
वली । १६२ ॥

**पार्थः**, पुं, पृथिवीपालः । (पृथाया अपत्यं पुमान्
।

शिवादित्वादण् ।) पृथापुत्त्रः । (यथा,
महा-
भारते । ३ । २३५ । १ ।
"सरस्तदासाद्य वनञ्च पुण्यं
ततः परं किमकुर्व्वन्त पार्थाः ॥"
अर्ज्जुनः । यथा, भगवद्गीतायाम् । १
। २५ ।
"उवाच पार्थ ! पश्यैतान् समवेतान्
कुरूनिति ॥")
अर्ज्जुनवृक्षः । इति शब्दचन्द्रिका ॥

**पार्थक्यं**, क्ली, (पृथक् + भावे ष्यञ् ।)
पृथक्त्वम् ।

पृथक् इत्यस्य भाव इत्यर्थे
ष्ण्यप्रत्ययनिष्पन्नम् ॥
("घटप्रदीपवद् व्यङ्ग्यव्यञ्जकयोः
पार्थक्यमेव ॥"
इति साहित्यदर्पणम् ॥)

**पार्थवं**, क्ली, (पृथोर्भावः । पृथु + अण् ।) पृथुता
।

पृथोर्भावः इति भावार्थे
ष्णप्रत्ययनिष्पन्नम् ॥
(पृथनामा राजा तस्येदमित्यण् ।
पृथुराज-
सम्बन्धिनि, त्रि । यथा, भागवते । १ ।
३ । १४ ।
"ऋषिभिर्याचितो भेजे नवमं पार्थवं
वपुः ॥")

**पार्थिवं**, क्ली, (पृथिव्या विकारः पृथिव्यां
भवमिति

वा अञ् ।) तगरपुष्पम् । इति
राजनिर्घण्टः ॥

**पार्थिवः**, पुं, (पृथिव्या ईश्वरः ।) पृथिवी +

पर्व्वणि यत् क्रियते इत्यनेनामावास्यायाः पर्व्व-
त्वात्तच्छ्राद्धस्य वैदिकप्रयोगाधीनयौगिकत्वेन
पार्व्वणत्वप्राप्तौ अमावास्यायां पृथगभिधानं तद-
मावास्याश्राद्धस्य रूढित्वार्थं तेन पार्व्वणेन
विधानेनेत्यादौ यौगिकनानावयवशक्त्यपेक्षया
एकस्याः समुदायशक्तेर्लघुत्वात् अमावास्या-
पार्व्वणातिदेशो लभ्यते न तु पूपाष्टकादि-
पार्व्वणधर्म्मातिदेशः ।" इति श्राद्धतत्त्वम् ॥ * ॥
सामगानां तस्य प्रयोगो यथा, --
"विप्राप्राप्त्या श्राद्धकृतौ सुखार्थं क्रमसूचनम् ।
श्राद्धपूर्ब्बदिने मांसस्त्रीत्यागश्चैकभोजनम् ॥
श्राद्धाहे दन्तकाष्ठस्य त्यागः स्नानं तथोषसि ।
याम्यास्यत्वं पादशौचे वास्त्वर्च्चा विष्णुचिन्तनम्
॥
तस्मै पूजा मूल्यदानं परभूस्वामिनेऽथवा ।
तत् पितृभ्यश्चाग्रदानं रक्षादीपकुशद्विजाः ॥
श्राद्धानुज्ञा च गायत्त्री देवताभ्य इति त्रिधा ।
मृज्जलप्रोक्षणं रक्षाजलस्थापनमेकतः ॥
पूर्ब्बं विप्रकरे तोयं कुशासनमनन्तरम् ।
दक्षिणे देवविप्रस्य पितृविप्रस्य वामतः ॥
आवाहनार्घ्ये न्युब्जञ्च ततो गन्धादिपञ्चकम् ।
ऐशानीक्रमतो रेखा प्रागग्रा देवमण्डले ॥
नैरृतीक्रमतो रेखा दक्षाग्रा पितृमण्डले ।
पात्राणां तेषु विन्यासो होमप्रश्नोऽग्निहोमकः ॥
हुतशेषप्रदानञ्च पात्रालम्भोऽन्नवेशनम् ।
इदमित्यङ्गुलेः क्षेपस्तूष्णीं दैवे यवस्य च ॥
पित्रे मन्त्रेण निःक्षेपस्तिलस्यापहता इति ।
मधुनोऽन्ने च निःक्षेपो गायत्र्यास्त्रिर्ज्जपस्ततः ॥
मधुवाता त्वृचा चैव मधुशब्दत्रयेण च ।
अन्नाभिमन्त्रणं तस्य दानं जलनिवेदनम् ॥
गायत्र्यादित्रिकजपोऽप्यन्नहीनजपस्तथा।
द्विजाभावेऽपि तृप्त्यर्थं गायत्र्यादित्रिकस्य च ॥
पुण्याख्यानस्य च जपः सतिलप्रोक्षिते कुशे ।
अग्निदग्धेतिमन्त्राभ्यां सतिलान्ननिवेदनम् ॥
हस्तक्षालश्चाचमनं हरिस्मृतिर्जलस्य च ।
पित्रादिक्रमतो दानं गायत्र्यादिजपः पुनः ॥
शेषान्नपिण्डयोः प्रश्नो निहन्मीति च मण्डले ।
अपहतानिहन्मिभ्यां रेखायुग्मं पितृक्रमात् ॥
आस्तरो देवतेत्यस्य जप आवाहनं तिलैः ।

दीपप्रच्छादनं हस्तक्षालमाचमने तथा
॥
अच्छिद्रवाचनं विष्णुस्मरणं
शेषभोजनम् ।
उपवासदिने घ्राणं मांसेतराशिताव्रते ॥
तद्दिने मैथुनत्यागः
श्राद्धकृच्छ्राद्धभोजिनोः ॥" * ॥
यजुषां विशेषो यथा, --
"आस्तरो देवताभ्यश्च
तिलपुष्पजलैस्ततः ।
अवनेजनपिण्डौ च हस्तालेपापघर्षणम्
॥
हस्तक्षालश्चाचमनं विष्णोः
संस्मरणाय वै ।
अत्रेत्यादिजपो वामावर्त्तेनोदङ्मुखस्ततः
॥
आवृत्यामीजपश्चैव श्वासः
प्रत्यवनेजनम् ।
नीवीविस्रंसनञ्चैव तथैवाचमनद्वयम् ॥
नमो वः पितरः
सुष्मायेत्यादिकषडञ्जलिः ।
ऋतुनत्यर्थमेवायं वासः पिण्डप्रपूजनम्
॥
दैवादिब्राह्मणे दानं जलादित्रितयस्य च
।
शिवा इत्यादिनाक्षय्यमघोरा
गोत्रमित्यपि ॥
दातारोऽन्नञ्चनञ्चैव एताः
सत्याशिषोऽस्त्विति
सपवित्रकुशाः पिण्डे
स्वधावाचनमूर्ज्जनम् ॥
आघ्राणञ्चैव पिण्डानां
तेषामुत्तोलनन्ततः ।
न्युब्जोत्थानं पितुः पक्षे
दक्षिणादानमग्रतः ॥
विश्वेदेवाश्च प्रीयन्तां दैवे वा
जलमित्यपि ।
विसर्जनं वाज इति आमावेति
प्रदक्षिणम् ॥

"तस्येश्वरः ।" ५ । १ । ४२ । इति अञ् ।)
राजा । इत्यमरः ॥ (यथा, मनुः । २ । १३९ ।
"तेषान्तु समवेतानां मान्यौ स्नातकपार्थिवौ ।
राजस्नातकयोश्चैव स्नातको नृपमानभाक् ॥"
वत्सरविशेषः । यथा, --
"बहुशस्यानि जायन्ते सर्व्वदेशे सुलोचने ।
सौराष्ट्रलाटदेशे च पार्थिवे नात्र संशयः ॥"
इति चिन्तामणिधृतवचनम्॥
पृथिव्या अयं इत्यण् ।) शरावः । इति त्रिकाण्डशेषः ॥ (पृथिव्या विकार इति । "सर्व्व-
भूमिपृथिवीभ्यामणञौ ।" ५ । १ । ४१ । इत्यञ् ।)
पृथिवीविकृतौ, त्रि । इति मेदिनी ॥ (यथा,
भागवते । १ । २ । २४ ।
"पार्थिवाद्दारुणो धूमस्तस्मादग्निस्त्रयीमयः ॥"
पृथिव्या निमित्तं संयोग उत्पातो वा ॥
पृथिवीसम्बन्धिनि, त्रि । यदुक्तम् ।
"मधुमत् पार्थिवं रजः ॥")

**पार्थिवी**, स्त्री, (पृथिव्यां भवा । "दित्यदितीति ।"

४ । १ । ८५ । इत्यस्य सूत्रस्य वार्त्तिके
"पृथिव्या ञाञौ ।" इत्युक्तेरञ् । ततो ङीप् ।)
सीता । इति मेदिनी । वे, ४३ ॥

**पार्परः**, पुं, यमः । इति जटाधरः ॥

**पार्व्वणः**, पुं, (पर्व्वणि ग्रहणयोग्यः इत्यण् ।)

मृगविशेषः । इति शब्दचन्द्रिका ॥ (पर्व्वणि
क्रियते यत् तत् ।)
अमावस्यापर्व्वसामान्ययोः कर्त्तव्यश्राद्धम् । यथा, --
अवनेजनदानञ्च मधुवाता मधुत्रयम् ॥
अक्षन्नमी पिण्डदानं दर्भलेपापघर्षणम् ।
आचमनं स्मृतिर्व्विष्णोः पात्रक्षालावनेजनम् ॥
अत्रेत्यादिजपो वामावर्त्तनोदङ्मुखस्ततः ।
आवृत्यामीजपश्चैव श्वासत्यागोऽञ्जलिस्ततः ॥
नम इत्यादिकजपो वासोदानञ्च पूजनम् ।
वसन्ताय जपश्चैव द्विजाग्रभूमिसेचनम् ॥
दैवादिब्राह्मणे दानं जलादित्रतयस्य च ।
शिवा इत्यादिनाक्षय्यमघोरा गोत्रमित्यपि ॥
सपवित्रकुशाः पिण्डे स्वधावाचनमूर्ज्जनम् ।
न्युब्जोत्थानं पितुः पक्षे दक्षिणादानमग्रतः ॥
विश्वेदेवाश्च दातारो देवतेतिजपस्त्रिधा ।
विसर्जनं वाज इति आमावेति प्रदक्षिणम् ॥
अन्नादेः प्रतिपत्तिश्च वामदेव्यजपस्त्रिधा ।
अन्यत् सर्व्वं समानम् ।" इति श्राद्धप्रयोगतत्त्वम् ॥

**पार्व्वतः**, पुं, (पर्व्वते भवः । "विभाषा मनुष्ये ।"

४ । २ । १४४ । इति पक्षे अण् ।)
महानिम्बः । इति रत्नमाला ॥ घोडानिम् इति भाषा ॥ (अस्त्र-
विशेषः । यथा, महाभारते । १ । १३६ । २० ।
"भौमेन प्राविशद्भूमिं पार्व्वतेनाभवद्गिरिः ॥")
पर्व्वतसम्बन्धिनि, त्रि ॥ (यथा, महाभारते ।
१ । ९० । १० ।
"यावत् पृथिव्यां विहितं गवाश्वं सहारण्यैः पशुभिः पार्व्वतैश्च ॥")

**पार्व्वती**, स्त्री, (पर्व्वतो हिमाचलस्तस्य तदधिष्ठा-

तृदेवस्येति भावः अपत्यमिति । अण् ङीप् च ।)
दुर्गा । इत्यमरः ॥ तस्या व्युत्पत्तिर्यथा, --
"तिथिभेदे कल्पभेदे पर्व्वभेदप्रभेदतः ।
ख्यातौ तेषु च विख्याता पार्व्वती तेन कीर्त्तिता ॥
महोत्सवविशेषश्च पर्व्वस्विति प्रकीर्त्तितम् ।
तस्याधिदेवी या सा पार्व्वती परिकीर्त्तिता ॥
पर्व्वतस्य सुता देवी साविर्भूता च पर्व्वते ।
पर्व्वताधिष्ठातृदेवी पार्व्वती तेन कीर्त्तिता ॥"
इति प्रकृतिखण्डे दुर्गोपाख्याने ५४ अध्यायः ॥
शल्लकी । गोपालपुत्त्रिका । इति मेदिनी ॥
द्रौपदी । जीवनी । इति विश्वः ॥ सौराष्ट्र- ।
मृत्तिका । इति रत्नमाला ॥
क्षुद्रपाषाणभेदा ।

| | | |
|---|---|---|
| “अमावस्यां यत् क्रियते तत् पार्व्वणमुदाहृतम् ।<br>क्रियते पर्व्वणि वा यत्तत् पार्व्वणमुदाहृतम् ॥”<br>इति भविष्यपुराणम् ॥ | | घातकी । सैंहली । इति राजनिर्घण्टः ॥<br>**पार्व्वतीनन्दनः**, पुं, (पार्व्वत्या नन्दनः ।) कार्त्तिकेयः । इत्यमरः । १ । १ । ४२ ॥<br>**पार्व्वतीयकुमारः**, पुं, (पार्व्वतीयः पार्व्वतीजातः कुमारः ।) पार्व्वतीपुत्त्रः । यथा, --<br>“स्वानुशाखविशाखाश्च नैगमेयस्तथैव च ।<br>पार्व्वतीयाः कुमाराश्च चत्वारः परिकीर्त्तिताः ॥”<br>इत्यग्निपुराणम् ॥ |

**पार्व्वतेयं**, क्ली, (पर्व्वते भवम् । पर्व्वत + ढक् ।)

सौवीराञ्जनम् । इति शब्दचन्द्रिका ॥

**पार्व्वतेयः**, पुं, (पर्व्वते भवः । पर्व्वत + ढक् ।)

सूर्य्यावर्त्तवृक्षः । इति रत्नमाला ॥
सूलचिया
इति भाषा । पर्व्वतजाते, त्रि ॥

**पार्शवः**, पुं, (पर्शुना आयुधेन जीवतीति । पर्शु +

"पर्श्वादियौधेयादिभ्योऽणञौ ।" ५ । ३ । ११७ ।
इति अण् ।) पर्शुधारियोद्धा । पर्शुना युध्यते
इत्यर्थे ष्णप्रत्ययनिष्पन्नः ॥

**पार्श्वं**, क्ली, पुं, (स्पृश्यते इति । स्पृश + "स्पृशेः

श्वण्शुनौ पृ च ।" उणां ५ । २७ ।
इति श्वण्
पृ-आदेशश्च ।) कक्षाधोभागः ।
इत्यमरः । २ । ६ ।
७९ ॥ पाश इति भाषा ॥ (यथा, शुश्रुते
चिकित्सितस्थाने । ३६ अध्याये ।
"तिर्य्यक् प्रणिहिते नेत्रे तथा पार्श्वावपीडिते ॥"
यथा, शकुन्तलायाम् १ अङ्के ।
"न मे दूरे किञ्चित् क्षणमपि न पार्श्वे रथ-
जवात् ॥")

**पार्श्वं**, क्ली, (स्पृश + श्वण् धातोः पृ-आदेशश्च ।)

चक्रोपान्तम् । (पर्शूनां समूहः । अण् ।)
पर्शुगणः । पार्श्वास्थिसमूहः । इति मेदिनी ॥
(अनृजुरुपायः । इति
सिद्धान्तकौमुदी ॥)

**पार्श्वः**, पुं, जिनः । (अयमेव जैनागमोक्तत्रयो-

ज्ञानहीनो वपुःक्लेशो व्यर्थः
पापाश्रवान्नृणाम् ।
दयां विना तपो धर्म्मः सर्व्वमस्ति
निरर्थकम् ॥
तुषखण्डनयोगेन लभ्यन्ते तण्डुला यथा ।
न तथा ज्ञानकष्टेन मोक्षमार्गादयः क्वचित्
॥
यथाम्बुमथनान्नैवोत्पद्यते जातुचिद्घृतम् ।
तथा हिंसाकरेणैव तपसात्र सुखादि च ॥
अत्रान्धाश्माद्यथा स्वर्णं गोशृङ्गाच्च पयो न
हि ।
जायते जातु धर्म्मो वा सुखं
पञ्चाग्निसाधनात् ॥
दावभीत्या यथान्धो धावन्नपि म्रियते यथा
।
कुर्व्वन्नपि तपो ज्ञानी मज्जत्येव भवार्णवे ॥
हेयाहेयविचारञ्च पुण्यपापं हिताहितम् ।
देवादेवं भवं मोक्षं स्वाश्रवं सम्बरं शुभम् ॥
निर्ज्जरा तत्त्वविज्ञानं गुरुं चक्रुर्गुरुं शुभम् ।
कुशास्त्रं वेत्ति नज्ञानी जात्यन्ध इव
दन्तिनम् ॥
अतो जैनमतं तथ्यं धर्म्मजीवदयावहम् ।
तपोनाथं गृहाणत्वं त्यक्त्रेमञ्च दुराग्रहम् ॥
नैग्रन्थतपसा मोक्षः सुखं वाचामगोचरम् ।
अज्ञानं तपसा दुःखं भ्रमणञ्च भवाटवौ ॥
भवत्स्नेहेन तथ्यंते हितञ्च धर्म्मसाधनम् ।
वचः प्रोक्तं मयेति त्वां हीच्छता शुभमञ्जसा
॥"
तत्प्रचलितानुप्रेक्षादिमतं तत्रैव १५
अध्याये
विशेषंतो द्रष्टव्यम् ॥ * ॥
जैनशास्त्रोक्ततत्त्वादीनि यथा, तत्रैव २०
अध्याये ।
"शृणु तत्त्वं गणाधीश ! सार्द्धं द्वादशभिर्गणैः
।
तत्त्वादीनि प्रवक्ष्येऽहं स्वैकचित्तेन संप्रति
॥
जीवादिसत्पदार्थानां याथार्थ्यं
तत्त्वमिष्यति ।

इति जीवसमासाः स्युरष्टानवतिसंख्यकाः ॥
पृथवप्तेजःसमीरा अष्टधा वादरसूक्ष्मता ।
नित्येतरनिकोताश्चतुर्द्धा वादरसूक्ष्मतः ॥
निकोतसहितास्तद्रहिताःप्रत्येककायिनः ।
एकत्र मेलिता एते सर्व्वे भेदाश्चतुर्द्दश ॥
एकाक्षा गुणितास्ते द्विचत्वारिंशत्प्रमाः स्फुटम् ।
पर्य्याप्तकेतरालब्धिपर्य्याप्तैः स्युर्ज्जिनागमे ॥
द्विप्रकाराः सुराः स्युः पर्य्याप्तापर्य्याप्तभेदतः ।
तथा च नारको ज्ञेयो द्विधा दुःखाब्धिमध्यगः ॥
जलस्थलनभश्चारिणं संज्ञासंज्ञिभेदतः ।
षड्विधा गर्भजा जीवाः पञ्चेन्द्रियसमाह्वयाः ॥
भोगभूमिभवा जीवा द्विधा स्थलखगामिनः ।
ते सर्व्वे मेलिता अष्टभेदाश्च गुणिताः पुनः ॥
पर्य्याप्तितरभेदाभ्यां षोडशैव भवत्यपि ।
संज्ञ्यसंज्ञित्वभेदाभ्यां जलस्थलखचारिणः ॥
षड्वासन्मूर्च्छितास्ते पर्य्याप्तियुक्तास्तथेतराः ।
भवन्त्यलब्धिपर्य्याप्तकाःप्रत्येकं किलाङ्गिनः ॥
कृता एकत्र ते सर्व्वे भेदा अष्टादशप्रमाः ।
गर्भसन्मूर्च्छिताः सर्व्वे स्युश्चतुस्त्रिंशदङ्गिनः ॥
आर्य्यम्लेच्छभवा भोगकुभोगभूमिजा नराः ।
अष्टभेदा मता वै पर्य्याप्तापर्य्याप्तभेदतः ॥
सन्मूर्च्छिनो मनुष्या अलब्धिपर्य्याप्तसंज्ञकाः ।
इति विश्वे भवन्त्यत्र नव भेदा नृयोनिजाः ॥
पर्य्याप्तादित्रिभेदेन गुणिता विकलाङ्गिनः ।
नवधा श्रीजिनैः प्रोक्ता ज्ञाननेत्रैर्व्वरागमे ॥
अष्टानवतिरेते जीवसमासा विचक्षणैः ।
विज्ञेया यत्नतस्तेषां दया कार्य्या मुमुक्षुभिः ॥
भूरोदकाग्निवाताख्या नित्येतरनिकोतकाः ।
सप्तसप्तपृथग्लक्षाश्च वनस्पतयो दश ॥
द्वित्रितुर्य्येन्द्रिया द्वौ द्वौ लक्षौ देवाश्च नारकाः ।
पशवो हि चतुर्लक्षाश्चतुर्द्दशनृजातयः ॥
चतुरशीतिलक्षा इमा जीवजातयोऽखिलाः ।
रक्षणीया प्रयत्नेन ज्ञात्वा दक्षैः स्वमुक्तये ॥
कोटीकोटैकानवनवतिलक्षाश्च कोटयः ।
सत्पञ्चाशत्सहस्रा इत्यखिलाङ्गिकुलान्यपि ॥
जीवितः प्रागनादौ हि जीविष्यति पुनः सदा ।
जीवत्ययं ततस्तज्ज्ञो जीवद्रव्यं किलोच्यते ॥
अक्षजाः पञ्च च प्राणा मनोवाक्कायतस्त्रयः ।
आयुरुच्छ्वासनिश्वासो दशेति संज्ञिनां मता ॥

विंशतीर्थङ्करः । अस्य पिता
विश्वसेनः माता च
ब्रह्मी । यदुक्तं पार्श्वनाथचरित्रे । १०
। ७१ ।
"श्रीलश्रीपार्श्वतीर्थेशो
विश्वसेननृपालये ।
ब्रह्मीगर्भे जगन्नाथोऽवतरिष्यति
मुक्तये ॥"
तथा च तत्रैव । ११ । ३९ ।
"विश्वसेनपतेर्ब्रह्म्याः
सद्गर्भेऽवतरिष्यति ।
श्रीपार्श्वनाथ एवाद्यतीर्थकर्त्ता
जगद्गुरुः ॥"
हेमचन्द्राचार्य्यादिमते तु अस्य
पितृनाम अश्व-
सेनः मातृनाम वामा ॥ * ॥
अस्य जन्मकालादिर्यथा तत्रैव ।
११ । ४५ -- ४६,
९६ -- ९७ ।
"वैशाखकृष्णपक्षस्य द्वितीयायां
निशात्यये ।
विशाखर्क्षे सुलग्नादौ सुमुहूर्त्ते
सुरेश्वरः ॥
अवतीर्णो दिवश्च्युत्त्वा भुक्त्वा
भोगान् सुनिर्म्मले ।
राज्ञ्या गर्भे निरौपम्ये
शुद्धस्फाटिकसन्निभे ॥"
"नवमे मासि संपूर्णे पौषे मासि
वृषोदयात् ।
कृष्णपक्षेनिले योगे शुभे
एकादशीतिथौ ॥
शुभलग्नमुहूर्त्तादौ सुषुवेऽतिसुखेन सा
।
सती देवकुमारीभिः सेव्या तीर्थङ्करं
सुतम् ॥"
बाल्यकाले एवास्य
वैराग्योत्पत्तिर्जाता ।
ततोऽसौ संसारासक्तिं तुच्छीकृत्य
गृहादिकं
विहाय वनं प्रस्थितवान् ।
एतत्प्रचलितमतं

सम्यग् जैनागमे तत्त्वं विद्धि नान्यत्
कुशासने ॥
जीवाजीवाश्रवबन्धः स्वम्बरो निर्ज्जरा
शिवः ।
इत्युक्तानि जिनाधीशैः सप्त तत्त्वानि चागमे
॥
संसारिमुक्तभेदेन द्विधा जीवा रुवन्त्यहो ।
मुक्ता भेदविनिष्क्रान्ता अनन्तगुणभाजनाः
॥
भव्याभव्यप्रभेदेन द्विधा संसारिणोऽङ्गिनः ।
त्रसस्थावरभेदेन वा मुक्ति भवे गामिनः ॥
एकाक्षा विकलाक्षाः पञ्चाक्षास्त्रेधेति ते
मताः ।
देवनारकतिर्य्यङ्नृभेदा इति चतुर्व्विधाः ॥
एकद्वित्रिचतुःपञ्चेन्द्रियैर्होच्चपञ्चधा ।
पृथ्वप्तेजोमरुद्वृक्षत्रसभेदात् षडङ्गिनः ॥
संज्ञिनोऽसंज्ञिनोद्व्यक्षास्त्र्यक्षा हि चतु-
रिन्द्रियाः ।
एकाक्षा वादराः सूक्ष्माः सप्तधेत्यङ्गिराशयः
॥
पर्य्याप्तेतरभेदेन ताः सप्त जीवयोनयः ।
गुणिता अखिला जीवसमासाः स्युश्चतुर्द्दश
॥
अष्टधा धातवो वादरसूक्ष्मेण चतुर्व्विधा ।
नित्येतरनिकोता हि विकलत्रयदेहिनः ॥
संज्ञिनोऽसंज्ञिनः सुप्रतिष्ठिताः
अप्रतिष्ठिताः ।
इति संसारिणो जीवभेदा एकोनविंशतिः ॥
ते पर्य्याप्तेरालब्धिपर्य्याप्तैर्व्वर्गिता भुवि ।
सर्व्वे जीवसमासाः सप्तपञ्चाशत्प्रमा मता ॥
स्थावराश्च द्विचत्वारिंशद्भेदाः सुरनारकाः
।
द्विधापञ्चाक्षतिर्य्यञ्चश्चतुस्त्रिंशत्प्रमाः
स्मृताः ॥
नवधा मानवाश्चैव नवधा विकलाङ्गिनः ।

असंज्ञिनां नवस्युस्ते विनात्र मनसाखिलाः ।
चतुरेन्द्रियजीवानां ह्यष्टौ कर्णैर्व्विना स्मृताः ॥
त्रीन्द्रियाणां विना चक्षुः सप्त प्राणाः प्रकीर्त्तिताः ।
द्वीन्द्रियाणां हि षट्प्राणाः कथिता नासिकां
विना ॥
मुखवाग्भ्यां विनैकाक्षाणां प्राणाः स्युश्चतुः-
प्रमाः ।
यथायोग्यमपर्य्याप्तानांज्ञेयास्ते जिनागमे ॥
आहाराङ्गेन्द्रियोच्छ्वासनिश्वासवाक्यचेतसः ।
षड्वा पर्य्याप्तयश्चेति विज्ञेया संज्ञिदेहिनाम् ॥
विकला संज्ञिनां पञ्चपर्य्याप्तयो मनो विना ।
चतुःपर्य्याप्तयो ज्ञेया एकाक्षाणां वचो विना ॥
निश्चयेन भवेत् केवलज्ञानदृग्मयोऽसुमान् ।

| | | |
|---|---|---|
| यथा, तत्रैव । १४ । ७८ -- ९० ।<br>“मिथ्यात्वेनाविरत्या च प्रमादेन कषायतः ।<br>दुष्टयोगेन मूढानां महापापं प्रजायते ॥<br>पञ्चाग्निसाधनेनैव पृथिव्याद्यंगिराशयः ।<br>म्रियते षडविधः सर्व्वदिक्षु तत्तापसो भृशम् ।<br>जीवघातेन घोराघं तस्य पाकेन दुर्गतिः ।<br>जायते च महद्दुःखं तापसानां जडात्मनाम् ॥ | | |

अनन्तसुखवीर्य्याढ्यसिद्धसादृश्यएव हि ॥
व्यवहारेण मित्यादिविभावगुणसंयुतः ।
नेत्रादिदर्शनैर्युक्तः प्राणी कर्म्मकृतैः कलौ ॥
मूर्त्तपुद्गलसंयोगान्मूर्त्तो गीर्व्यवहारतः ।
अमूर्त्तो निष्कलः शुद्धो ज्ञानमूर्त्तिश्च निश्चयात् ॥
व्यवहारे नयेनाङ्ग्यनुपचारमृषात्मना।
कर्म्मणो कर्म्मणां कर्त्ता भोक्ता तत्फलमञ्जसा ॥
उपचारमृषानाम्ना नयेन प्राणभृद्भुवि ।
कटवस्त्रगृहादीनां कर्त्ता च शिल्पिकर्म्मणाम् ॥
अशुद्धनिश्चयेनाङ्गी कर्त्ता च भावकर्म्मणाम् ।
रागद्वेषमदोन्मादशोकादिविषयात्मनाम्॥
प्राग्वपुस्त्यजनान्मृत्युः प्रादुर्भावाद्यसम्भवः ।
द्रव्यरूपेण नित्यत्वं चतुर्गतिषु देहिनाम् ॥
जायतेऽतो गणाधीशैरुत्पादव्यय एव च ।
ध्रौव्यभावोऽत्र संप्रोक्तः सर्व्वेषां व्यवहारतः ॥
कायप्रमाण आत्मायं पर्य्यायनयतः क्वचित् ।
युक्तः प्रदेशसंहारविसर्पाभ्यां प्रदीपवत् ॥
विना सप्तसमुद्घातैर्निश्चयेन भवेत् पुनः ।
कर्म्मोत्पन्नाङ्गहीनाङ्गी ह्यसंख्यातप्रदेशमः ॥
वेदनाख्यः कषायाख्यो विकुर्व्वणसमाह्वयः ।
मारणान्तिकसंज्ञस्तेजसाहारकसंज्ञकौ ॥
केवलाख्यः समुद्घाताः सप्तेति श्रीजिनैर्मताः ।
कैवल्यतैजसाहारायोगिनां स्युः परेऽङ्गिनाम् ॥
पुण्यपापफलानां हि विविधानां चतुर्गतौ ॥
शर्म्माशर्म्मकराणां प्राणी भोक्ता व्यवहारतः ॥

चतुर्द्दश जिनैः प्रोक्ता गुणस्थानगुणाकराः ॥
मुक्तेः सोपानमाला एते भव्यानां जिनोदिताः ।
अभव्यानां किलैको मिथ्यागुणस्थानशाश्वतः॥
हीनाधिकगुणैर्युक्ता अन्येष्यास्तेषु धीयुतैः ।
गुणानां स्थानकेष्वङ्गिनः परीक्ष्य गुणव्रजैः ॥
इत्यादिवाक्सुधापूरैराप्लाव्य निखिलां सभाम् ।
अजीवतत्त्वमाख्यातुं पुनरारब्धवान् प्रभुः ॥
पुद्गलो बहुधा धर्म्मोऽधर्म्म आकाश एव हि ।
कालश्चेति जिनैः प्रोक्तो जीवद्रव्योऽत्र पञ्चधा ॥
पूरणाद्गलनाद्दक्षैः पुद्गलोऽयं निरूपितः ।
मूर्त्तोऽनेकविधः सार्थनामकः कर्म्मदेहकृत् ॥
अष्टौ स्पर्शा रसाः पञ्च वर्णाः पञ्च गन्धौ द्विधा ।
इति विंशतिरस्यैव गुणाः प्रोक्ता द्विधात्मकाः ॥
शुद्धाणोर्येगुणाः शुद्धा मताः स्वाभाविकाश्च ते ।
गुणाः स्कन्धेषु ये शुद्धा विभवाख्या हि ते बुधैः ॥
अणुस्कन्धविभेदेन पुद्गलस्य द्विधा स्थितिः ।
स्निग्धरूक्षमयाणूनां सङ्घातः स्कन्ध उच्यते ॥
अणवः कार्य्यलिङ्गाः स्युरत्रैकैकतयाखिलाः ।
नित्या द्रव्यार्थिकेनानित्याः पर्य्यार्थिकेन च ॥

राशयश्चैव रत्नानां स कालो निश्चयाभिधः ॥
एकत्र सह जीवेन षड्द्रव्या मुनिभिः स्मृताः ।
ते कालेन विना ज्ञेयाः पञ्चास्तिकायसंज्ञकः ॥
पुद्गलौघो य आयाति कर्म्मरूपोऽत्र रागिणः ।
द्रव्यभावविभेदेन द्विधा स आश्रवो भवेत् ॥
रागद्वेषादियुक्तेन परिणामेन येन हि ।
आश्रवन्त्यत्र कर्म्माणि स स्याद्भावाश्रवोऽङ्गिनाम् ॥
मिथ्यात्वपञ्चकं द्वादशधा विरतयोशुऽभाः ।
प्रमादा हि त्रयश्चैव योगाः पञ्चदशात्मकाः ॥
सर्व्वदुःखाकरीभूताः कषायाः पञ्चविशतिः ।
एतेऽत्र प्रत्यया ज्ञेया भावाश्रवनिबन्धनाः ॥
आयाति कर्म्मरूपेण पुद्गलौघोऽत्र योगिनः ।
द्रव्याश्रवः स विज्ञेयोऽप्यनन्तभवकारकः ॥
ध्यानाद्यैराश्रवो रुद्धो यैस्ते स्युर्मुक्तिवल्लभाः ।
अन्यथा विफलक्लेशस्तपोवृत्तादितः सताम् ॥
संश्लेषो जीवकर्म्मणोर्यः सम्बन्धो द्विधा मतः ।
भावद्रव्यप्रभेदेन विश्वाशर्म्माकरोऽशुभः ॥
बध्यन्ते येन भावेन रागादिदूषितेन हि ।
कर्म्माणि भावबन्धोऽत्र सोऽनन्तसंसृतिप्रदः ॥
प्रकृतिस्थितिबन्धानुभागप्रदेशतोऽङ्गिनाम् ।
चतुर्धा बन्ध आम्नातोऽत्रानेकविक्रियाकरः ॥
प्रकृतिः स्वभावः स्याच्च स्थितिः कालावधारणम् ॥
रसतुल्योऽनुभागः प्रदेशो जीवप्रदेशयुक् ॥

स्वस्वरूपस्य कर्त्ता शुद्धनिश्चयनयादसौ
।
जन्ममृत्युजरातीतो न कर्त्ता बन्धमोक्षयोः
॥
अतोऽत्रात्माप्यसौ ध्येयो
निर्व्विकल्पपदाश्रितैः ।
गुणैः सिद्धेन सादृश्यो ज्ञानमूर्त्तिरमूर्त्तिमान्
॥
यथाग्निकणिकेनात्र दह्यन्ते काष्ठराशयः ।
अनन्तकर्म्मकाष्ठानि तथाध्यानलवाग्निना
॥
दन्तभग्नो यथा नागो दंष्ट्र्याभग्नोक्षमो हरिः
।
स्वकार्य्ये च तथा ध्यानहीनः
कर्म्मारिघातने ॥
चिन्तामणिश्च रत्नानां कल्पवृक्षोऽत्र
शाखिनाम् ।
त्रिदशानां यथा शक्रो नृणां मध्ये परो
जिनः ॥
आत्मतत्त्वञ्च तत्त्वानां पदार्थानां तथा
महान् ।
स्वकीयात्मपदार्थो द्रव्याणां स्वद्रव्य एव
हि ॥
इति मत्वा स्वसंसिद्ध्यै मनः
कृत्वातिनिश्चलम् ।
विषयेभ्यो विनिष्क्रान्तं
संवेगादिगुणाङ्कितम् ॥
सर्व्वद्रव्यबहिर्भूतोऽप्यनन्तगुणसागरः ।
सर्व्वावस्थासु सर्व्वत्र स्वात्मा ध्येयो
मुमुक्षुभिः ॥
इत्यात्मतत्त्वमाख्याय तीर्थनाथो गणान्
प्रति ।
मार्गणादिकमाख्यातुं प्रारेभे मार्गसिद्धये ॥
गतिरिन्द्रियकायौ हि योगवेदकषायकः ।
ज्ञानसंयमदृग्लेश्याभव्यसम्पत्कसंज्ञिनः ॥
आहारे मार्गणञ्चेति चतुर्द्दश निरूपिताः ।
जिनैस्तासु बुधैर्मृग्यो जीवतत्त्वो महांश्चिदे
॥
मिथ्याशासादनौ मिश्रो
विरताख्यश्चतुर्थकः ।
वैदेशविरताख्यः प्रमत्तोऽप्रमत्तसंज्ञकः ॥

सूक्ष्मसूक्ष्मास्तथा सूक्ष्माः
सूक्ष्मस्थूलाभिधाः परे ।
स्थूलसूक्ष्मात्मकाः स्थूलाः
स्थूलस्थूलाश्च पुद्गलाः ॥
एकोऽणुः सूक्ष्मसूक्ष्मः स्याददृश्यो
नयनैर्नृणाम् ।
सूक्ष्मास्तेऽपि मताः सद्भिर्ये
कर्म्ममयपुद्गलाः ॥
रसनस्पर्शनघ्राणश्रोत्रैर्ये यान्ति पुद्गलाः ।
व्यक्ततान्ते समुद्दिष्टाः सूक्ष्मस्थूला
जिनागमे ॥
स्थूलसूक्ष्मा
जिनैर्ज्ञेयाश्छायाज्योत्स्नातपादयः ।
जलव्यालादयः स्थूला उच्यन्ते पुद्गला
बुधैः ॥
भूकायाद्रिविमानादयः
स्थूलस्थूलपुद्गलाः ।
षड्भेदा इति तीर्थेशैः पुद्गला हि
निरूपिताः ॥
शब्दो बन्धस्तथा सूक्ष्मः स्थूलः
संस्थानसंज्ञकः ।
भेदस्तमस्तथाच्छायाद्युद्योतआतपादयः
॥
एते पुद्गलपर्य्याया विभावाख्या मता
जिनैः ।
स्वाभाविकाश्च पर्य्याया अणुरूपाः पृथक्
पृथक् ॥
शरीरवाङ्मनःप्राणापानदुःखसुखादिकान् ।
कुर्व्वन्ति पुद्गला जीवानां
मृत्युजीवितादिकान् ॥
जीवपुद्गलयोः साद्यकर्त्ता जिनैर्म्मतो गतौ
।
अमूर्त्तो निष्क्रियो धर्म्मो मत्स्यानाञ्च यथा
जलम् ।
सहकारी मतो धर्म्मः स्थितौ
पुद्गलजीवयोः ।
अमूर्त्तो निष्क्रियो नित्यो यथा
च्छायाध्वगामि-
नाम् ॥
लोकालोकावभदेन
द्विधाकाशस्त्वमूर्त्तिमान् ।

सप्रकृतिप्रदेशाख्यौ बन्धौ च योगतो सताम्
।
स्थित्यनुभागबन्धौ कषायैर्भवनिबन्धनौ ॥
यथा बन्धनबन्धो लभते दुःखमनेकशः ।
कर्म्मशृङ्खलबद्धोऽङ्गी तथा श्वभ्रादिदुर्गतौ ॥
सर्व्वाश्रवनिरोधो यो ध्यानाद्यैर्द्रव्यभावतः ।
स द्विधा संवरः प्रोक्तः
स्वर्गमुक्त्यादिकारकः ॥
चैतन्यपरिणामो य एकीभूतो निजात्मकः ।
निर्व्विकल्पमयो ज्ञेयो भावसंवर एव सः ।
त्रयोदशविधं वृत्तं परो धर्म्मो दशात्मकः ।
द्विषड्भेदा अनुप्रेक्षाः परीषदजयोखिलः ॥
पञ्चधा संयमो ध्यानश्रुतास्यासंग्रमादयः ।
भवन्त्यमी सतां सर्व्वे भावसंवरकारणम् ।
निरोधः क्रियते योऽत्र कर्म्मणां यत्नतो
बुधैः ।
सद्रव्यसंवरः प्रोक्तोऽप्यनन्तगुणसागरः ॥
संवरेण स्वयं ह्येत्य दत्तेऽत्रालिङ्गनं मुदा ।
सतां स्वस्त्रीव मुक्तिश्रीर्नान्यथा
क्लशकोटिभिः ॥
प्राक्तनः कर्म्मबन्धो यः कालेन तपसाथवा
।
क्षीयते निर्ज्जरासासविपाकेन रता द्विधा ॥
कर्म्मपाकेन या जाता
सविपाकाखिलात्मनाम् ।
सायभाजनिता हेया परकर्म्मनिबन्धनाः ॥
संवरेण समयात्र निर्ज्जरा क्रियते बुधैः ।
तपोभिः साविपाका प्रादेयानेकसुखाकरा ॥
निर्ज्जराकर्म्मणामत्र जायतेऽपि यथा यथा
।
आयाति निकटं मुक्तिस्तत्कारिणां तथा
तथा ॥
अत्यन्तं योऽत्र विश्लेषः कर्म्मात्मनो
स्वयोगिनाम् ।
काललब्ध्या स मोक्षः स्यात्
द्रव्यभावाद्द्विधा-
त्मकः ॥
क्षये हेतुर्व्वरो यः परिणामोऽखिलकर्म्मणाम्
।

| | | |
|---|---|---|
| अपूर्ब्बकरणो नाम्ना निवृत्तिकरणाभिधः ।<br>द्विसूक्ष्मसाम्परायोपशान्तक्षीणकषायकाः<br>॥<br>सयोग्ययोगिनामानौ सद्गुणाश्रयणादिमे । | अवकाशप्रदः सर्व्वद्रव्याणां<br>निष्क्रियोऽव्ययः ॥<br>पदार्था यत्र लोक्यन्ते लोकाकाशो मतो हि<br>सः ।<br>तस्माद्बहिरनन्तोऽप्यलोकाकाशोऽस्ति<br>केवलः ॥<br>धर्म्माधर्म्मैकजीवानां लोकाकाशस्य<br>सन्ति च ।<br>असंख्याताः प्रदेशा हि पुद्गलानामनेकधा<br>॥<br>निश्चयव्यवहारेण द्विधा<br>कालोऽतिनिष्क्रियः ।<br>द्रव्याणां सहकारी परिणतौ मूर्त्तिवर्ज्जितः<br>॥<br>समयादिमयः कालो व्यवहारोऽत्र लक्ष्यते<br>।<br>गोदोहादिक्रियाद्यैः परत्वापरत्वयोगतः ॥<br>भिन्नाभिन्नाणवो येऽत्र लोकाकाशे<br>सुसंस्थिताः । | |

भावमोक्षः स विज्ञेयः
कर्म्ममोचनहेतुकृत् ॥
समस्तकर्म्मदेहाद्यदैवात्मा जायते
पृथक् ।
तदैव द्रव्यमोक्षः स्यादनन्तगुणदायकः
॥
आपादमस्तकान्तं यथा बद्धो
बन्धनैर्दृढैः ।
मोचनाल्लभते सौख्यं तथा मुक्तो विधेः
क्षयात् ॥
तस्मात् कर्म्मातिगो जीव
एरण्डादिकबीजवत् ।
समयेन व्रजेदूद्र्ध्वं
यावल्लोकाग्रमस्तकम् ॥
तत्रैवास्थानिरावाधः सोग्रे
गमनवर्ज्जितः ।
सिद्धो धर्म्मोऽस्ति
कायाभावादनन्तसुखा-
ब्धिगः ॥
तत्र भुक्ते निरावाधं स्वात्मजं
विषयातिगम् ।
वृद्धिह्रासव्यपेतं स सिद्धः शुद्धो महान्
सुखम् ॥
दुःखातीतं निरौपम्यं शाश्वतं
मुखसम्भवम् ।
अवन्तं परमं ह्यन्यद्द्रव्यानप्रेक्षम्वे हि
॥
यद्देवमनुजैः सर्व्वैः सुखं
त्रैलोक्यगोचरम् ।
भुक्तं तस्मादनन्तं तज्जायते
परमेष्ठिनाम् ॥
एकेन समयेनैव भूषितानां गुणाष्टकैः ।
नित्यानामशरीराणां सर्व्वोत्कृष्टं
व्ययच्युतम् ॥
इति विविधविभागैः सप्ततत्त्वानि मुक्त्यै
दृगवगमसुवीजानि प्ररूप्यात्मवान् यः ।
परमुदमपि भव्यानाञ्चकार स्वबीजै-
रमृतपरमतुल्यैर्मेऽत्र दद्यात् स्वशक्तिम्
॥

**पार्श्वपरिवर्त्तनं**, क्ली, (पार्श्वस्य पार्श्वेन वा परि-
वर्त्तनम् ।) कटिदानम् । कर्णिकापरिवृत्तिः ।
पाशफेराण इति भाषा । श्रीहरेः पार्श्वपरि-
वर्त्तनोत्सवो यथा, --
"भाद्रस्य शुक्लैकादश्यां शयनोत्सववत् प्रभोः
।
कटिदानोत्सवं कुर्य्याद्वैष्णवैः सह वैष्णवः ॥"
तथा च भविष्योत्तरे ।
"प्राप्ते भाद्रपदे मासि एकादश्यां सितेऽहनि ।
कटिदानं भवेद्विष्णोर्महापातकनाशनम् ॥
जलाशयान्तिकं नीत्वा संपूज्याभ्यर्च्च्य च
प्रभुम् ।
कर्णिकापरिवृत्तिञ्च दक्षिणाङ्गे प्रकल्पयेत् ॥"
अस्य व्याख्या । शयनोत्सवात्
कथञ्चिद्विशेपमनु-
वादपूर्ब्बकं लिखति । जलेति त्रिभिः
कर्णिकायाः
कट्याः परिवृत्तिं दक्षिणाङ्गे प्रकल्पयेदिति
पूर्व्वं
वामाङ्गेन सुप्तस्याधुना दक्षिणाङ्गेन शाययेदि-
त्यर्थः । तत्कालविशेषश्च पूर्ब्बमेव
निर्णीतोऽस्ति ।
अभ्यर्थनामन्त्रः ।
"देवदेव ! जगन्नाथ योगिगम्य ! निरञ्जन ! ।
कटिदानं कुरुष्वाद्य मासि भाद्रपदे शुभे ॥
महापूजां ततः कृत्वा वैष्णवान् परितोष्य च ।
देवं स्वमन्दिरे नीत्वा यथापूर्ब्बं निवेशयेत् ॥"
इति श्रीहरिभक्तिविलासे १५ विलासः ॥

**पार्श्वपिप्पलं**, क्ली, (पार्श्वे पिप्पलमिव ।) हरी-
तकीविशेषः । इति भावप्रकाशः ॥ गजहड
इति हिन्दीभाषा ॥

**पार्श्वभागः**, पुं, (पार्श्वस्य भागः ।) पक्षभागः ।
हस्त्यादेः पार्श्वदेशः । इत्यमरः । २ । ८ ।
४० ॥

**पार्श्वशूलः**, पुं, क्ली, (पार्श्वे जातः शूलः ।) शूल-
रोगविशेषः । तस्यौषधम् । यथा, --
"शतपुष्पा देवदारु शालपर्णी वचागुरु ।
"यस्य मन्त्री च गोप्ता च पार्श्वस्थो हि
जना-
र्द्दनः ॥")

**पार्श्वास्थि**, क्ली, (पार्श्वस्य अस्थि ।) शरीर-
पार्श्वस्थितास्थि । पाँजरा इति भाषा ।
तत्-
पर्य्यायः । पर्शुका २ । इत्यमरः । २ । ६
। ६९ ॥

**पार्श्विकं**, त्रि, (पार्श्व + ठक् ।) पार्श्वस्येदम् ।
पार्श्वजातम् । पार्श्वशब्दात्
ष्णिकप्रत्ययनिष्प-
न्नम् ॥

**पार्श्वैकादशी**, स्त्री, (पार्श्वसम्बन्धिनी हरेः पार्श्व-
परिवर्त्तनजन्या एकादशी ।)
भाद्रशुक्लैकादशी ।
तद्विवरणं पार्श्वपरिवर्त्तनशब्दे द्रष्टव्यम् ॥

**पार्श्वोदरप्रियः**, पुं, (पार्श्वंमुदरञ्च ताभ्यां प्रीणाति
भोक्तारमिति । प्री + कः ।) कर्क्कटः ।
इति
हेमचन्द्रः । ४ । ४१८ ॥

**पार्षती**, स्त्री, (पृषतस्यापत्यमिति । पृषत + अण्
+ स्त्रियां ङीप् ।) द्रौपदी । इति त्रिकाण्ड-
शेषः ॥ (यथा, महाभारते । ३ । ३ । ८५
।
"युधिष्ठिरं भोजयित्वा शेषमश्नाति पार्षती
।
द्रौपद्यां भुज्यमानायां तदन्नं क्षयमेति च
॥")

**पार्षदः**, त्रि, (पारिषद + पृषोदरादित्वात् साधुः ।
यद्वा, पर्षदि साधुः पर्षदो ण्यः इत्यत्र योग-
विभागात् ण इति कश्चित् ।) पारिषदः ।
इति
शब्दरत्नावली ॥ (यथा, भागवते । ३ ।
१६ । २ ।

पार्श्वः सर्व्वसुखाकरोऽसुखहरः पार्श्वं
श्रिता
धर्म्मिणः
पार्श्वेणाशु समाप्यतेऽमरपदं पार्श्वाय
मूद्ध्वर्न्ना नमः ।
पार्श्वान्नास्ति हितङ्करो भवभृतां
पार्श्वस्य मुक्तिः
प्रिया
पार्श्वे चित्तमहं दधेऽखिलचिदे मां
पार्श्व ! पार्श्वं
नय ॥”
इति श्रीपार्श्वनाथचरित्रे २० सर्गः ॥ *
॥)
सनिकृष्टे, त्रि । इति हेमचन्द्रः ॥

**पार्श्वकः**, त्रि, (अनृजुरुपायः पार्श्वं तेन अन्वि-

च्छति अर्थानिति । “पार्श्वेनान्विच्छति
।” ५ ।
२ । ७५ । इति कन् ।) शाठ्येन
विभवान्वेषी ।
यथा, --
“कुसृत्या विभवान्वेषी पार्श्वकः
सन्धिजीवकः ॥”
इति हेमचन्द्रः ॥
स्वार्थे के पार्श्वार्थोऽपि । (यथा,
याज्ञवल्क्ये ।
३ । ८९ ।
“तन्मूले द्वे ललाटाक्षिगण्डे
नासाघनास्थिका ।
पार्श्वकास्थालकैः सार्द्धमर्व्वुदैश्च
द्विसप्ततिः ॥”)

**पार्श्वतः**, [स्] व्य, (पार्श्व + “आद्यादिभ्य उप-

संख्यानम् ।” ५ । ४ । ४४ । इत्यस्य
वार्त्ति-
कोक्त्या तसिः ।) पार्श्वात् । पार्श्वे ।
इत्यादि ।
इति संक्षिप्तसारव्याकरणम् ॥ (यथा,
रघुः ।
१९ । ३१ ।
“मित्रकृत्यमपदिश्य पार्श्वतः
प्रस्थितं तमनवस्थितं प्रियाः ॥”)

कुष्ठं मांसी सैन्धवञ्च पलमेकं पुनर्नवा ॥
पाने नस्ये तथाभ्यङ्गे तैलमेतत् प्रदापयेत् ।
हृच्छूलं पार्श्वशूलञ्च गण्डमालाञ्च नाशयेत् ॥”
इति गारुडे १८९ अध्यायः ॥
(अस्य सम्प्राप्तिपूर्ब्बकलक्षणचिकित्सितानि
यथा, सुश्रुते उत्तरतन्त्रे ४२ अध्याये ।
“रुणद्धि मारुतं श्लेष्मा कुक्षिपार्श्वव्यवस्थितः
।
स संरुद्धः करोत्याशु मानं गुडगुडायनम् ॥
सूचीभिरिव निस्तोदः कृच्छ्रोच्छ्वासी तदा नरः
।
नान्नं वाञ्छति नो निद्रामुपैत्यर्त्तिनिपीडितः ॥
पार्श्वशूलः स विज्ञेयः कफानिलसमुद्भवः ।
तत्र पुष्करमूलानि हिङ्गुसौवर्च्चलं विडम् ॥
सैन्धवं तुम्बुरूपथ्याचूर्णं कृत्वा तु पाययेत् ।
पार्श्वहृद्बस्तिशूलेषु यवक्वाथेन संयुतम् ॥
सर्पिःप्लीहोदरोक्तं वा घृतं वा हिङ्गुसंयुतम् ।
बीजपूरकसारं वा पयसा सह साधितम् ॥
एरण्डतैलमथवा मद्यमस्तुपयोरसैः
भजयेच्चापि पयसा जाङ्गलेन रसेन वा ॥”

**पार्श्वस्थः**, पुं, (पार्श्वे तिष्ठतीति । पार्श्व + स्था +

कः ।) पार्श्वस्थितनटः । इति हेमचन्द्रः ॥
समीपस्थिते, त्रि ॥ (यथा, महाभारते । ६ ।
२०० । १४८ ।

“एतौ द्वौ पार्षदौ मह्यं जयो विजयो एव च
॥”)

**पार्षद्यः**, त्रि, (पर्षदि साधुः । पर्षद् + “पर्ष-

दो ण्यः ।” इति ण्यः ।) पार्षदः । इति
भरतः ॥

**पार्ष्णिः**, पुं, स्त्री (पृष्यते भूम्यादिकमनेनेति ।

पृष् + “घृणिपृश्निपार्ष्णिचूर्णिभूर्णि ।”
उणां ४ ।
५२ । इति निप्रत्ययेन निपातनात् साधुः
।)
गुल्फस्याधोभागः । पादग्रन्थ्यधरः ।
इत्यमरः ।
२ । ६ । ७२ ॥ गोडमुडा इति गोडारि
इति च
भाषा । स तु गर्भस्थस्य मासद्वयेन भवति
।
इति सुखबोधः ॥ (यथा, कुमारे । १ ।
११ ।
“उद्वेजयत्यङ्गुलिपार्ष्णिभागान्
मार्गे शिलीभूतहिमेऽपि यत्र ॥”)
सैन्यपृष्ठम् । इति मेदिनी । णे, २० ॥
(यथा,
हरिवंशे । २५ । ३२ ।
“उशना तस्य जग्राह पार्ष्णिमाङ्गिरसस्तदा
॥”)
पृष्ठम् । इति हलायुधः ॥ जिगीपा । यथा,
--
“सैन्यपृष्ठे पुमान् पार्ष्णिः
पश्चात्पदजिगीपयोः ॥”
इति रत्नकोषः ॥

**पार्ष्णिः**, स्त्री, उन्मदस्त्री । इति मेदिनी । णे, २० ॥

कुन्ती । इति धरणिः ॥

**पार्ष्णिग्राहः**, पुं, (पार्ष्णिं सैन्यपृष्ठं गृह्णातीति ।

ग्रह + अण् ।) पृष्ठतः शत्रुः ।
शत्रुजयोद्यतस्य
विजिगीषोस्तत्शत्रुपक्षपातेन पार्ष्णिं
पश्चात्
पदं गृह्णाति याति यः । इत्यमरभरतौ ॥
(यथा,

| | | |
|---|---|---|
| **पार्श्वतीयः**, त्रि, (पार्श्वतो भवः । पार्श्व + “मुख-<br>पार्श्वतसोर्लोपश्च ।” ४ । २ । १३८ ।<br>इत्यस्य<br>वार्त्तिकोक्त्या छः ।) पार्श्वसम्बन्धी ।<br>पार्श्वतो<br>भवः । इति सिद्धान्तकौमुदी ॥ | | मनुः । ७ । २०७ ।<br>“पार्ष्णिग्राहञ्च संप्रेक्ष्य तथाक्रन्दञ्च मण्डले<br>॥”)<br>**पार्ष्णित्रं**, क्ली, (पार्ष्णिं त्रायते इति । त्रै +<br>“आतोऽनुपसर्गे कः ।” ३ । २ । ३ । इति<br>कः ।)<br>पश्चाद्रक्षकसेना । इति सिद्धान्तकौमुदी ॥ |

**पाल**, क रक्षे । इति कविकल्पद्रुमः (चुरां-परं-

सकं-सेट् ।) क, पालयति । ह्रस्ववतैवेष्टसिद्धे दीर्घिणोऽपि पाठः । कानुबन्धानामिदनुबन्धवत् ञेरनित्यतां बोधयति । तेन पालति पलति इत्यपि सिद्धम् । इति दुर्गादासः ॥

**पालः**, पुं, (पालयतीव निंष्ठीवनादिकमिति ।

पालि + अच् ।) पतद्ग्रहः । इति हेमचन्द्रः ॥ पिक्दान् इति भाषा ॥ पालके, त्रि । यथा, --
"दिवावक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे ।
योगक्षेमेऽन्यथा चेत्तु पालो वक्तव्यतामियात् ॥"
इति मनुः ॥

**पालकः**, पुं, (पालयतीति । पालि + ण्वुल् ।)

घोटकरक्षकः । तत्पर्य्यायः । अश्वरक्षः २ वल्लभः ३ । इति जटाधरः ॥ चित्रकवृक्षः । इति राजनिर्घण्टः ॥ पालनकर्त्तरि, त्रि । यथा, प्रायश्चित्ततत्त्वे ।
"गोपालको गवां गोष्ठे यस्तु धूमं न कारयेत् ।
मक्षिकालीननरके मक्षिकाभिः स भक्ष्यते ॥"

**पालकाप्यः**, पुं, मुनिविशेषः । तत्पर्य्यायः । करे-

णुभूः २ । इति हेमचन्द्रः ॥ धन्वन्तरिः । इति त्रिकाण्डशेषः ॥

**पालघ्नः**, पुं, (पालं क्षेत्रं हन्तीति । हन + टक् ।)

छत्रा । इत्यमरः । २ । ५ । १६७ ॥

**पालङ्कः**, पुं, (पाल रक्षणे + सम्पदादित्वात्

क्विप् । तेन अङ्क्यते इति । अङ्क + घञ् ।) शल्लकी । शाकभेदः । पालङ् इति भाषा । प्राजिपक्षी । इति मेदिनी । के, ११७ ॥ वाज इति भाषा ॥

**पालङ्की**, स्त्री, (पालङ्क + गौरादित्वात् ङीष् ।)

कुन्दुरुनामगन्धद्रव्यम् । इत्यमरः । २ । ४ । १२१ ॥ शाकभेदः । पालङ् इति भाषा ॥ (यथा, सुश्रुते चिकित्सितस्थाने ६ अध्याये ।
"यथादोषशाकैर्व्वास्तूकतन्तूलीयकजीवन्त्युमोदि-काश्ववलावालमूलकपालङ्क्यसनचिल्लीचुच्चुकलम्ब यवल्लीभिरन्यैर्व्वा ॥") अस्या गुणाः । कफपित्त-

गुणाः । वातलत्वम् । शीतत्वम् । श्लेष्मलत्वम् । भेदनत्वम् । गुरुत्वम् । विष्टम्भित्वम् । मदश्वास-पित्तरक्तविषापहत्वञ्च । इति भावप्रकाशः ॥

**पालनं**, क्ली, (पाल्यतेऽनेनेति । पालि + "करणा-

धिकरणयोश्च ।" ३ । ३ । ११७ । इति ल्युट् ।) सद्यःप्रसूताया गोः क्षीरम् । इति शब्द-चन्द्रिका ॥ (पाल रक्षणे + भावे ल्युट् ।) रक्षणम् । यथा,
"अभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनं परमो धर्म्मः ॥" इति मिताक्षरा ॥

**पालाशं**, क्ली, (पलाशस्येदमिति । अण् ।)

तमालपत्रम् । इति राजनिर्घण्टः ॥ तेजपात इति भाषा ॥ (यथा, वाभटे गुल्मचिकित्सि-तायाम् ।
"पालाशं दहनार्ज्जुनं शठिजयापामार्गकुष्मा-ण्डकम् ॥")

**पालाशः**, पुं, (पालाशस्य वर्ण इव वर्णोऽस्त्यत्रेति ।

अच् ।) हरिद्वर्णः । (यथा, बृहत्संहितायाम् । ९३ । ४ ।
"पालाशताम्रासितकर्व्वुराणाम् ॥") तद्वर्णविशिष्टे पलाशवृक्षसम्बन्धिनि च, त्रि । इत्यमरः ॥ (यथा, मनुः । २ । ४५ ।
"ब्राह्मणो वैल्वपालाशौ क्षत्रियो वट-

अपामार्गः सर्ज्जरसः पाटलालकुच्त्वचौ ।
उत्पाटके प्रलेपः स्यात् तैलमेभिश्च पाचयेत् ॥
शम्पाकशिग्रुपूतीकगोधाम्ब्लोऽथ तद्वसा ।
वाराहं गव्यमैणेयं पित्तं सर्पिश्च संसृजेत् ॥
लेपमुत्पुटके दद्यात्तैलमेभिश्च साधितम् ।
गौरीं सुगन्धां सश्यामामनन्तां तण्डुलीयकम् ॥
श्यावे प्रलेपनं दद्यात्तैलमेभिश्च साधितम् ।
पाठां रसाञ्जनं क्षौद्रं तथास्यादुष्णकाञ्जिकम् ॥
दद्याल्लेपं सकण्डूके तैलमेभिश्च साधितम् ।
व्रणीभूतस्य देयं स्यादिदं तैलं विजानता ॥
मधुकं क्षीरकाकोली जीवकाद्यैर्विपाचितम् ।
गोधावराहसर्पाणां वसाः स्युः कृतवृंहणे ॥
प्रलेपनमिदं दद्यादवसिच्यावमन्थके ।
प्रपौण्डरीकं मधुकं समङ्गां धवमेव च ॥
तैलमेभिश्च सम्पक्वं शृणु कण्डूमतः क्रियाम् ।
सहदेवा विश्वदेवा अजाक्षीरं ससैन्धवम् ॥
एतैरालेपनं दद्यात् तैलमेभिश्च साधितम् ।
ग्रन्थिके गुटिकां पूर्ब्बं स्रावयेदवपाट्य तु ॥
ततः सैन्धवचूर्णन्तु घृष्ट्वा लेपं प्रदापयेत् ।

वातविवन्धनाशित्वम् । रूक्षत्वञ्च । इति राज-
वल्लभः ॥

**पालङ्क्यं**, क्ली, (पालङ्क + स्वार्थे ष्यञ् ।) शाक-

भेदः । पालङ् इति भाषा ॥ तत्पर्य्यायः ।
पलक्या २ मधुरा ३ क्षुरपत्रिका ४ सुपत्रा ५
स्निग्धपत्रा ६ ग्रामीणा ७ ग्राम्यवल्लभा ८ ।
अस्य गुणाः । ईषत् कटुत्वम् । मधुरत्वम् । पथ्य-
त्वम् । शीतलत्वम् । रक्तपित्तहरत्वम् । ग्राहि-
त्वम् । परमतर्पणत्वञ्च । इति राजनिर्घण्टः ॥

**पालङ्क्या**, स्त्री, (पालङ्क्य + स्त्रियां अजादित्वात्

टाप् ।) कुन्दुरुः । इत्यमरः ॥ कुन्दुरुखोटी इति
भाषा । पालङ्कशाकः । तत्पर्य्यायः । वास्तु-
काकारा २ छुरिका ३ चीरितच्छदा ४ ।
(यथा, सुश्रुते । १ । ४२ ।
"प्रायशः कूरवककोविदारकजीवन्तीचिल्ली-
पालङ्क्यासुनिषण्णकप्रभृतीनिनीवारादयो मुद्-
गादयश्च समासेन कषायो वर्गः ॥") अस्या

खादिरौ ॥")

**पालाशषण्डः**, पुं, (पालाशानां पलाशवृक्षाणां

षण्डो यत्र ।) मगधदेशः । इति
शब्दरत्नावली ॥
पलाशसमूहश्च ॥

**पालिः**, स्त्री, (पल्यते पाल्यते इति । पल
पालने +

"बाहुलकात् शलतिपलतिभ्याञ्च ।"
४ । १२९ ।
इत्युज्ज्वलदत्तोक्त्या इण् ।)
कर्णलताग्रम् । (यथा,
"यस्य पालिद्वयमपि कर्णस्य न
भवेदिह ।
कर्णपीठं समे मध्ये तस्य विद्ध्वा
विवर्द्धयेत् ॥
बाह्यायामिह दीर्घायां
सन्धिराभ्यन्तरो भवेत् ।
आभ्यन्तरायां दीर्घायां
बाह्यसन्धिरुदाहृतः ॥
एकैव तु भवेत् पालिः स्थूला पृथ्वी
स्थिरा च
या ।
तां द्विधा पाटयित्वा तु छित्त्वा
चोपरि सन्धयेत् ॥
गण्डादुत्पाट्य मांसेन सानुबन्धेन
जीवता ।
कर्णपालिमपालेस्तु कुर्य्यान्निर्लिख्य
शास्त्रवित् ॥"
"कर्णपाल्यामयान्नॄणां पुनर्वक्ष्यामि
सुश्रुत ! ।
कर्णपाल्यां प्रकुपिता
वातपित्तकफास्त्रयः ॥
द्विधा वाप्यथ संसृष्टाः कुर्व्वन्ति
विविधा रुजः ।
विस्फोटः स्तब्धता शोफः पाल्यां
दोषे तु वातिके ॥
दाहविस्फोटजननं शोफः पाकश्च
पैत्तिके ।
कण्डूः सश्वयथुः स्तम्भो गुरुत्वञ्च
कफात्मके ॥
लिखित्वा तत् स्रुतं घृष्ट्वा चूर्णै
रोध्रस्य जम्बुले ॥
क्षीरेण प्रतिसार्य्यैनं शुद्धं
संरोपयेत्ततः ।
मधुपर्णीं मधूकञ्च मधुकं मधुना सह
॥
लेपः स्राविणि दातव्यस्तैलमेभिश्च
साधितम् ।
पञ्चकल्कैः समधुकैः पिष्टैस्तैश्च
घृतान्वितैः ॥
जीवकाद्यैः ससर्पिष्कैर्दह्यमानं
प्रलेपयेत् ॥"
इति सुश्रुते सूत्रस्थाने षोडशेऽध्याये
॥)
अश्रिः । पङ्क्तिः । (यथा,
गीतगोविन्दे । ६ । १० ।
"विपुलपुलकपालिः
स्फीतशीत्कारमन्त-
र्जनितजडिमकाकुव्याकुलं
व्याहरन्ती ॥")
अङ्कप्रभेदः । छात्रादिदेयम् । इति
मेदिनी । ले,
३० ॥ यूका । जातश्मश्रुस्त्री ।
प्रान्तः । (यथा,
गीतगोविन्दे । ३ । १३ ।
"भ्रूपल्लवं धनुरपाङ्गतरङ्गितानि
बाणा गुणः श्रवणपालिरिति स्मरेण ।
तस्यामनङ्गजयजङ्गमदेवताया-
मस्त्राणि निर्ज्जितजगन्ति
किमर्पितानि ॥")
सेतुः । कल्पितभोजनम् । प्रशंसा ।
उत्सङ्गः ।
प्रस्थः । इति हेमचन्द्रः ॥

**पालिका**, स्त्री, (पालिरेव । स्वार्थे कन् टाप् च
।)

अश्रिः । इति शब्दरत्नावली ॥
कर्णपत्रम् । इति
शब्दचन्द्रिका । दध्यादिच्छेदनी ।
तत्पर्य्यायः ।
कुन्तलिका २ । इति हारावली ॥

**पालितः**, त्रि, (पाल + क्त ।) रक्षितः । यथा, --

| | | |
|---|---|---|
| | यथादोषञ्च संशोध्य कुर्य्यात्तेषां चिकित्सितम् ।<br>स्वेदाभ्यङ्गपरीषेकैः प्रलेपासृग्विमोक्षणैः ॥<br>मृद्वीं क्रियां बृंहणीयैर्यथास्वं भोजनैस्तथा ।<br>य एवं वेत्ति दोषाणां चिकित्सां कर्त्तुमर्हति ॥<br>अत ऊद्‌र्ध्वं नामलिङ्गैर्वक्ष्ये पाल्यामुपद्रवान् ।<br>उत्पाटकश्चोत्पुटकः श्यावः कण्डूयुतो भृशम् ॥<br>अवमन्थः सकण्डूको ग्रन्थिको जम्बुलस्तथा ।<br>स्रावी च दाहवांश्चैव शृण्वेषां क्रमशः क्रियाम् ॥ | "चित्रलेखा तमाज्ञाय पौत्रं कृष्णस्य योगिनी ।<br>ययौ विहायसा राजन्द्वारकां कृष्णपालिताम् ॥"<br>इति श्रीभागवतीयदशमस्कन्धे ६२ अध्यायः ॥<br>कायस्थस्य पद्धतिविशेषः ॥<br>**पालिन्दः**, पुं, (पालयतीति । पालि + बाहुल-<br>कात् किन्दच् ।) कुन्दुरुकः । इति राजनिर्घण्टः ॥<br>**पालिन्दी**, स्त्री, (पालिन्द + गौरादित्वात् ङीष् ।)<br>श्यामालता । इति रत्नमाला ॥<br>(यथा, सुश्रुते<br>कल्पस्थाने १ अध्याये । |

"ऋष्यपित्तघृतश्यामा
पालिन्दीतण्डुलीयकैः ॥")
पालिन्धी । त्रिवृता । इति द्विरूपकोषः ॥
(अस्याः पर्य्यायो यथा, --
"त्रिवृत् श्यामार्द्धचन्द्रा च पालिन्दी च
सुषे-
णिका ।
मसूरविदलाकोलकैषिका कालमेषिका
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**पालिन्धी**, स्त्री, कृष्णत्रिवृता । इत्यमरः । २ । ४ । १०८ ॥

**पाली**, स्त्री, (पालि + कृदिकारादिति वा ङीष् ।)
यूका । सश्मश्रुयोषित् । इति मेदिनी । ले,
३० ।
श्रेणी । इति शब्दरत्नावली ॥ स्थाली ।
इति
शब्दचन्द्रिका ॥

**पावकः**, पुं, (पुनातीति । पू ञ गि शोधे + ण्वुल् ।)
अग्निः । इत्यमरः । १ । १ । ५७ ॥
(यथा, काशी-
खण्डे ९ अध्याये ।
"अपावनानि सर्व्वाणि वह्निसंसर्गतः
क्वचित् ।
पावनानि भवन्त्येव तस्मात् स पावकः
स्मृतः ॥")
वैद्युताग्निः । यथा, --
"पावकः पवस्रानश्च शुचिरग्निश्च ते त्रयः
।
निर्म्मथ्यः पवमानः स्याद्वैद्युतः पावकः
स्मृतः ॥
यश्चासौ तपते सूर्य्यः शुचिरग्निस्त्वसौ
स्मृतः ॥"
इति कौर्म्मे १२ अध्यायः ॥
स च ब्रह्मणो
मानसपुत्त्रादभिमानिनामकाग्नेः
स्वाहायां जातः । यथा, --

**पावनः**, पुं, (पावयतीति । पू + णिच् + ल्युः ।)
व्यासः । पावकः । इति मेदिनी । ने,
९० ॥
(यथा, ३ । १८५ । मनुश्लोकटीकायां
कुल्लूकभट्टः ।
"पावनः सभ्योऽग्निर्यः
शीतापनोदनाद्यर्थं बहुषु
देशेष्वपि विधीयते ॥") सिह्लकः । इति
विश्वः ॥
पीतभृङ्गराजः । इति राजनिर्घण्टः ॥
(विष्णुः ।
यथा, महाभारते । १३ । १४९ । ४५
।
"भूतभव्यभवन्नाथः पवनः
पावनोऽनलः ॥"
"पावयतीति पावनः । भीषास्माद्वातः
पवत
इति श्रुतेः ।" इति शाङ्करभाष्यम् ॥)
सिद्धः ।
पवित्रे पावयितरि च, त्रि । इति
हेमचन्द्रः ॥
(यथा, रघुः । १९ । ५३ ।
"स त्वनेकवनिता सखोऽपि सन
पावनीमनवलोक्य सन्ततिम् ।
वैद्ययत्नपरिभाविनं गदं
न प्रदीप इव वायुमत्यगात् ॥")

**पावनध्वनिः**, पुं, (पावनः पवित्रजनको ध्वनि-
र्यस्य ।) शङ्खः । इति राजनिर्घण्टः ॥
(पावनो-
ध्वनिरिति विग्रहे ।) पवित्रशब्दः ॥

**पावनी**, स्त्री, (पावयत्यनयेति । पू + णिच् +
ल्युट् + ङीप् ।) हरीतकी । इति
विश्वः ॥
तुलसी । गौः । इति राजनिर्घण्टः ।
गङ्गा ।
यथा, शङ्कराचार्य्यकृतगङ्गाष्टके ।
"ब्रह्माण्डं खण्डयन्ती हरशिरसि
जटावल्लि-

"दशहस्तो भवेत् पाशो वृत्तः करमुखस्तथा ।
गुणकार्पासमुञ्जानामर्कस्नायवचर्म्मणाम् ॥
अन्येषां सुदृढानाञ्च सुकृतं परिवेष्टितम् ।
तथा त्रिंशत्समं पाशं बुधः कुर्य्यात्सुवर्त्तितम् ॥"
अस्य क्रियादिकं यथा, --
"कर्त्तव्यं शिक्षकैस्तस्य स्थानं कक्षासु वै सदा ।
वामहस्तन संगृह्य दक्षिणेनोद्धरेत्ततः ॥
कुण्डलस्याकृतिं कृत्वा भ्राम्यैकं मस्तकोपरि ।
क्षिपेत् -- ॥"
"वल्पिते च प्लुते चैव तथा प्रव्रजितेषु च ।
समयोगविधिं ज्ञात्वा प्रयुञ्जीत सुशिक्षितः ॥
विजित्वा तु यथान्यायं ततो बन्धं समाचरेत् ।
कट्यां बद्ध्वा ततः खड्गं
वामपार्श्वावलम्बितम् ॥
दृढं विगृह्य वामेन निष्कर्षेद्दक्षिणेन च ॥"
अन्यच्च ।
"परावृत्तमपावृत्तं गृहीतं लघुसंज्ञितम् ।
ऊद्र्ध्वक्षिप्तमधःक्षिप्तं सन्धारितविधारितम् ॥
श्येनपातं गजपातं ग्राहग्राह्यं तथैव च ।
एवमेकादशविधा ज्ञेयाः पाशविधारणाः ॥"
वैशम्पायनोक्तक्रिया यथा, --
"प्रसारणं वेष्टनञ्च कर्त्तनञ्चेति ते त्रयः ।
योगाः पाशाश्रिता लोके पाशाः क्षुद्रसमा-
श्रिताः ॥"
अन्यच्च ।
"ऋज्वायतं विशालञ्च तिर्य्यक्भ्रामितमेव च ।
पञ्च कर्म्मविनिर्द्दिष्टं व्यस्ते पाशे महात्मभिः ॥")
कचान्ते समूहार्थः । (यथा, माघे । ७ । ६२ ।
"श्लथशिरसिजपाशपातभारा-
दिव नितरां नतिमद्भिरंसभागैः ॥")
कर्णान्ते शोभनार्थः । छात्राद्यन्ते निन्दार्थः
पक्ष्यादिबन्धनरज्जादि । इति विश्वः ॥ (यथा,
महाभर्रते । ५ । ६४ । १ ।
"शकुनीनामिहार्थाय पाशं भूमावयोजयत् ।
कश्चिच्छाकुनिकस्तात पूर्ब्बेषामिति शुश्रुम ॥"
योगविशेषः । यथा, ज्योतिषे ।
"यदा राशिपञ्चके सव्व ग्रहा भवन्ति तदा
पाशाख्ययोगो भवति ॥" पारिभाषिकपाशो
यथा, कुलार्णवे १ उल्लासे ।

"योऽसावग्निरभीमानी स्मृतः
स्वायम्भुवेऽन्तरे ।
ब्रह्मणो मानसः पुत्रस्तस्मात् स्वाहा
व्यजीजनत् ॥
पावकं पवमानञ्च शुचिरग्निश्च यः स्मृतः
॥"
इति मात्स्ये ४८ अध्यायः ॥
सदाचारः । वह्निमन्थः । (अस्य पर्य्यायो
यथा,
"तेजोमन्थो हविर्मन्थो ज्योतिष्को
पावकोऽरणिः ।
वह्निमन्थोऽग्निमन्थश्च मथनो
गणिकारिका ॥"
इति वैद्यकरत्नमालायाम् ॥)
चित्रकः । भल्लातकः । विडङ्गः । इति
मेदिनी ।
के, ११८ ॥ शोधयितृनरः । इति
हेमचन्द्रः ॥ रक्त-
चित्रकः । कुसुम्भः । इति राजनिर्घण्टः ॥
(पवित्र-
कारके, त्रि । यथा, ऋग्वेदे । ३ । ३१ ।
२० ।
"मिहः पावकाः प्रतता अभूवन् ॥")

**पावकारणिः**, पुं, (पावकाय वह्न्युत्पादनार्थं
अरणिरिव ।) अग्निमन्थः । इति
शब्दमाला ॥

**पावकिः**, (पावकस्यापत्यम् । पावक + इञ् ।)
कार्त्तिकेयः । यथा, --
"कथं तं कृत्तिकापुत्रमुक्तवान् तं सुरं
गुरुम् ।
कथञ्च पावकिरसौ कथं वा मातृनन्दनः
॥"
इति वराहपुराणम् ॥

**पावनं**, क्ली, (पावयत्यनेनेति । पू + णिच् + ल्युट्
।)
जलम् । कृच्छ्रम् । इति मेदिनी । ने, ९०
॥ गोम-
यम् ॥ इति शब्दचन्द्रिका ॥ रुद्राक्षम् ।
कुष्ठम् ।
मुल्लासयन्ती
स्वर्लोकादापतन्ती
कनकगिरिगुहागण्डशैलात्
स्खलन्ती ।
क्षौणीपृष्ठे लुठन्ती दुरितचयचमूर्निर्भरं
भर्त्-
सयन्ती
पाथोधिं पूरयन्ती सुरनगरसरित्पावनी
नः
पुनातु ॥"
(इयन्तु गङ्गाया अंशविशेषः । यथा,
मात्स्ये ।
१२० । ३९ -- ४१ ।
"ततो विसर्ज्जयामास संरुद्धां स्वेन
तेजसा ।
नदीं भगीरथस्यार्थे तपसोग्रेण तोषितः
।
ततो बिसर्ज्जयामास सप्त स्रोतांसि
गङ्गायाः ॥
त्रीणि प्राचीमभिमुखं प्रतीचीं त्रीण्यथैव
तु ।
स्रोतांसि त्रिपथगायास्तु प्रत्यपद्यन्त
सप्तधा ॥
नलिनी ह्लादिनी चैव पावनी चैव
प्राच्यगा ।
सीता चक्षुश्च सिन्धुश्च तिस्रस्ता वै
प्रतीच्यगाः ॥
सप्तमी त्वनुगा तासां दक्षिणेन
भगीरथम् ।
तस्माद् भागीरथी सा वै प्रविष्टा
दक्षिणो-
दधिम् ॥"
शाकद्वीपस्य नदीविशेषः । यथा,
मत्स्यपुराणे ।
१२१ । ३१ ।
"नन्दा च पावनी चेव तृतीया
परिकीर्त्तिता ॥")

**पाशः**, पुं, (पश्यते बध्यतेऽनेनेति । पश + घञ्
।)
शस्त्रभेदः । इति शब्दरत्नावली ॥
(वैशम्पा-
"घृणा शङ्का भयं लज्जा जुगुप्सा चेति पञ्चमी ।
कुलं शीलं तथा जातिरष्टौ पाशाः प्रकी-
र्त्तिताः ॥"
स्वप्नेऽस्य दर्शनफलं यथा, --
"कार्पासभस्मास्थिकपालशूलं
चक्रञ्च पाशन्त्वथवा प्रपश्येत् ।
तस्यापदं रोगधनक्षयं वा
रोगी मृतिं वा तनुतेऽतिकष्टम् ॥"
इति हारीते द्वितीये स्थाने द्वितीयेऽध्याये ॥)

**पाशकः**, पुं, (पाशयति पीडयतीति । पश + णिच्
+ ण्वुल् ।) द्यूतविशेषः । पाशा इति भाषा ।
तत्पर्य्यायः । अक्षः २ देवनः ३ । इत्यमरः ।
२ । १० । ४५ ॥ सारिः ४ शारिः ५ सारः
शारः ७ पाशः ८ । इति शब्दरत्नावली ॥

| | | |
|---|---|---|
| इति राजनिर्घण्टः ॥ चित्रकम् । अध्यासः ।<br>प्रायश्चित्तम् । इति विश्वः ॥ (शुद्धिः । यथा,<br>मनुः । ११ । १७८ ।<br>“सा चेत् पुनः प्रदुष्येत्तु सदृशेनोपयन्त्रिता ।<br>कृच्छ्रंचान्द्रायणञ्चैव तदस्याः पावनं स्मृतम् ॥”) | यनधनुर्व्वेदोक्तपाशलक्षणं यथा, --<br>“पाशः सुसूक्ष्मावयवो लौहधातुस्त्रिकोणवान् ।<br>प्रादेशपरिधिः सीसगुलिकाभरणाञ्चितः ॥”<br>आग्नेयधनुर्व्वेदोक्तलक्षणं यथा, -- | |

**पाशपाणिः**, पुं, (पाशः पाणौ यस्य ।) वरुणः ।
इति हलायुधः ॥

**पाशवपालनं**, क्ली, (पाशवं पशुसंघं पालयतीति ।
पालि + ल्युः ।) घासः । इति
शब्दचन्द्रिका ॥

**पाशितः**, त्रि, (पाश + क्त ।) पाशयुक्तः । बद्धः ।
इति धरणिः ॥

**पाशी**, [न्] पुं, (पाशोऽस्त्यस्येति । पाश +
इनिः ।) वरुणः । इत्यमरः । १ । १ । ६४
॥
(यथा, हरिवंशे भविष्यपर्व्वणि । ३ । ८ ।
"यदि शक्रं यमं वापि कुवेरमपि पाशिनम्
॥")
व्याधः । इति मेदिनी । ने, ९१ ॥ यमः ।
इति
कश्चित् ॥ पाशधरे, त्रि । इति विश्वः ॥

**पाशीकृतः**, त्रि, पाशबद्धः । अभूततद्भावे च्वि-
प्रत्ययनिष्पन्नः ॥

**पाशुपतः**, पुं, (पशुपतिर्द्देवतास्येति । "सास्य
देवता ।" ४ । २ । २४ । इति अण् ।)
वक-
पुष्पम् । (अस्य पर्य्यायो यथा, भावप्रकाशे
। १ । १ ।
"शिवमल्ली पाशुपत एकाष्ठीलो वुको वसुः
॥")
पशुपत्यधिदैवतः । तद्भक्तः । इति मेदिनी ।
ते,
२११ ॥ (क्ली, तन्त्रशास्त्रविशेषः । यथा,
कूर्म्म-
पुराणे १४ अध्याये ।
"एवं सम्बोधितो रुद्रो माधवेन मुरारिणा ।
चकार मोहशास्त्राणि केशवोऽपि शिवेरितः
॥
कापालं नाकुलं वामं भैरवं पूर्ब्बपश्चिमम् ।
पञ्चरात्रं पाशुपतं तथान्यानि सहस्रशः ॥"

गङ्गाधर ! धराधीश ! परात्पर वरप्रद ! ।
श्रीकण्ठ ! नीलकण्ठस्त्वसुमाकान्त!
नमोऽस्तु ते ॥
संपूज्यैवंविधानेन प्रतिपद्युदिते रवौ ।
हैरण्यादीन् गोवृषांश्च ब्राह्मणेभ्यो
निवेदयेत् ॥
यथा त्वं सर्व्वगः सर्व्वः सर्व्ववासस्तु
सर्व्वहृत् ।
न लिप्यसे विकुर्व्वाणस्तथा मां कुरु
शङ्कर ! ॥
एवं स्तुत्वा नमस्कृत्य वृषादींश्च
यथोदितान् ।
गुर्व्वादिभ्यो द्विजेभ्यश्च शङ्करः
प्रीयतामिति ॥
एवं व्रतमिदं कृत्वा वृषं दद्याद्द्विजातये ।
यममार्गं महाघोरं न पश्यति कदाचन ॥
यः करोति व्रतेनैव सर्व्वपापप्रणाशनम् ।
न स लिप्येत पापेन पद्मपत्रमिवाम्भसा
॥
ब्रह्महत्यादिभिः पापैरगम्यागमनादिभिः
।
मुच्यते पातकेभ्योऽथ ह्यभक्ष्यापेयजैः
पुमान् ॥
यः करोति महाभाग ! दानं
सर्व्वसुखावहम् ।
हत्वा पापान्यशेषाणि स्वर्गलोकं स
गच्छति ॥"
इति वह्निपुराणे पाशुपतव्रतदानाध्यायः
॥
(यथा च शिवपुराणे वायुसंहितायां
पूर्ब्बभागे
२९ अध्याये ।
ऋषय ऊचुः ।
"भगवन् ! श्रोतुमिच्छामो व्रतं पाशुपतं
परम् ।
ब्रह्मादयोऽपि यत् श्रुत्वा सर्व्वे पाशुपताः
स्मृताः ॥
वायुरुवाच ।

मन्त्रैस्तु विरजैर्हुत्वा होतासौ विरजो भवेत् ॥
अथ गोमयमादाय पिण्डीकृत्याभिमन्त्र्य च ।
न्यस्याग्नौ तच्च संरक्ष्य दिने तस्मिन् हविष्य-
भुक् ॥
प्रभाते तु चतुर्द्दश्यां कृत्वा सर्व्वं पुरोदितम् ।
दिने तस्मिन्मिताहारः कालशेषं समापयेत् ॥
प्रातःपर्व्वणि चाप्येवं कृत्वा होमावसानतः ।
उपसंहृत्य रुद्राग्निं गृह्णीयाद्भस्म यत्नतः ॥
ततस्तु जटिलो मुण्डः शिखैकजट एव वा ।
भूत्वा स्नात्वा पुनर्वीतलज्जश्चेत्
स्याद्दिगम्बरः ॥
अन्यः काषायवसनश्चर्म्मचीराम्बरोऽथवा ।
एकाम्बरो वल्कली वा भवेद्दण्डी च मेखली ॥
प्रक्षाल्य चरणौ पश्चाद्द्विराचम्यात्मनस्तनुम्
।
संकलीकृत्य तद्भस्म विरजानलसम्भवम् ॥
अग्निरित्याभिर्म्मन्त्रैः षड्भिराथर्व्वणैः क्रमात्
।
विमृज्याङ्गानि मूर्द्धादिचरणान्तञ्च संस्पृशेत्
॥
ततस्तेन क्रमेणैव समुद्धृत्य च भस्मना ।
सर्व्वाङ्गोद्धूलनं कुर्य्यात् प्रणवेन शिवेन वा ॥
ततस्त्रिपुण्ड्रं रचरेत्त्रियायुषसमाह्वयम् ।
शिवभावं सगागम्य शिवयोगं समाचरेत् ॥
कुर्य्यात्त्रिसन्ध्यमप्येवमेतत् पाशुपतं व्रतम् ।
पूजनीयो महादेवो लिङ्गमूर्त्तिः सनातनः ॥
पद्ममष्टदलं हैमं नवरत्नैरलङ्कृतम् ।
कर्णिकाकेसरोपेतमासनं परिकल्पयेत् ॥
विभवे तदभावे तु रक्तं सितमथापि वा ।
पद्मं तस्याप्यभावे तु केवलं भावनामयम् ॥
तत्पद्मकर्णिकामध्ये कृत्वा लिङ्गं कनीयसम् ।
स्फाटिकं पीठिकोपेतं पूजयेद्धि ततःक्रमात्
॥
प्रतिष्ठाप्य विधानेन तल्लिङ्गं कृतशोधनम् ।
परिकल्प्यासनं मूर्त्तिं पञ्चवक्त्रप्रकारतः ॥
पञ्चगव्यादिभिः पूर्ण्यैर्यथाविभवविस्तरैः ।
स्नापयेत् कलशैः पूर्णैः सहस्रादिषु सम्भवैः
॥
गन्धद्रव्यैः सकर्पूरैश्चन्दनाद्यैः सकुङ्कुमैः ।

अथर्व्ववेदान्तर्गतोपनिषद्विशेषः । यथा, मुक्ति-
कोपनिषदि ।
“सावित्र्यात्मा पाशुपतं परब्रह्मावधूतकम् ॥”)

**पाशुपतव्रतं**, क्ली, (पाशुपतं पशुपतिसम्बन्धि व्रतम् ।) पशुपतिव्रतविशेषः । यथा, --
“यथा पशुपतिर्न्नित्यं हत्वा सर्व्वमिदं जगत् ।
न लिप्यते पुनः सोऽपि यो नित्यं व्रतमाचरेत् ॥
इहजन्मकृतं पापं पूर्ब्बजन्मकृतञ्च यत् ।
व्रतं पाशुपतं नाम कृत्वा हन्ति द्विजोत्तम ! ॥
द्वादश्यामेकभक्ताशी त्रयोदश्यामयाचितम् ।
चतुर्द्दश्यां तथा नक्तमुपवासं परेऽहनि ॥
गोवृषञ्चैव हैरण्यं रौप्यं ताम्रमयन्तथा ।
सौवर्णं कारयेत् पत्रं गुञ्जाशीत्या पृथक् पृथक् ॥
तत्रैवोल्लेखयेन्मूर्त्तिं शिवायाश्च शिवस्य च ।
तत्प्रमाणं वृषं कुर्य्याद्रौप्यं हेम्नश्चतुर्गुणैः ॥
रौप्यादष्टमुणं ताम्रं तदर्द्धं वापि कारयेत् ।
क्षारपत्रे समारोप्य वस्त्रोत्तमयुतन्तथा ॥
त्रयोदश्यामेकभक्तं रिक्तायां नक्तमाचरेत् ।
कुर्य्यादयाचितं दर्शे पादकृच्छ्रव्रतञ्चरेत् ॥
गन्धपुष्पैः सुनैवेद्यैर्व्वस्त्राभरणदीपकैः ।
गङ्गाधरं समभ्यर्च्च्य प्रार्थयेत् प्रवरं वरम् ॥
गङ्गाधर ! महादेव ! सर्व्वलोकचराचर ! ।
जहि मे सर्व्वपापानि पूजितस्त्विह शङ्कर ! ॥
शङ्कराय नमस्तुभ्यं सर्व्वपापहराय च ।
यथा यमं न पश्यामि तथा मे कुरु शङ्कर ! ॥
यममार्गं यया शम्भो ! न पश्यामि कदाचन ।
संपूजितो मया भक्त्या तथा मे कुरु शङ्कर ! ॥
रहस्यं वः प्रवक्ष्यामि सर्व्वपाशनिकृन्तनम् ।
व्रतं पाशुपतं श्रौतमथर्व्वशिरसि श्रुतम् ॥
कालश्चित्रापौर्णमासी देशः शिवपरिग्रहः ।
क्षेत्रारामादिरम्यो वा प्रशस्तः शुभलक्षणः ॥
तत्र पूर्ब्बं त्रयोदश्यां सुस्नातः सुकृताह्निकः ।
अनुज्ञाप्य स्वमाचार्य्यं संपूज्य प्रणिपत्य च ॥
पूजां वशेषिकीं कृत्वा शुक्लाम्बरधरः स्वयम् ।
शुक्लयज्ञोपवीती च शुक्लमाल्यानुलेपनः ॥
दर्भासने समासीनो दर्भमुष्टिं प्रगृह्य च ।
प्राणायामत्रयं कृत्वा प्राङ्मुखो वाप्युदङ्मुखः ॥
ध्यात्वा देवञ्च देवीञ्च तद्विज्ञापनवर्त्मना ।
व्रतमेतत् करोमीति भवेत् संकल्प्य दीक्षितः ॥
यावच्छरीरपातं वा द्वादशाब्दमथापि वा ।
तदर्द्धं वा तदर्द्धं वा मासद्वादशकन्तु वा ॥
तदर्द्धं वा तदर्द्धं वा मासमेकमथापि वा ।
दिनद्वादशकं वाथ दिनषट्कमथापि वा ॥
तदर्द्धं दिनमेकं वा व्रतसंकल्पनावधि ।
अग्निमाधाय विधिवद्विरजा होमकारणात् ॥
हुत्वाज्येन समिद्भिश्च चरुणा च यथाक्रमम् ।
पूर्णाद्याः पुरतो भूयस्तत्वानां शुद्धिमुद्दिशन् ॥
जुहुयान्मूलमन्त्रेण तैरेव समिदादिभिः ।
तत्वान्येतानि मद्देहे शुध्यन्तामित्यनुस्मरन् ॥
पञ्च भूतानि तन्मात्राः पञ्च कर्म्मेन्द्रियाणि च ।
सवेदिकं समालिप्य लिङ्गं भूषणभूषितम् ॥
बिल्वपत्रैश्च पद्मैश्च रक्तश्वेतैस्तथोत्पलैः ।
नीलोत्पलैस्तथान्यैश्च पुष्पैस्तैस्तैः सुगन्धिभिः ॥
पुण्यैश्च शतपत्रैश्च चित्रैर्द्दूर्षाक्षतादिभिः ।
समभ्यर्च्च्य यथालाभं महापूजाविधानतः ॥
धूपं दीपं तथाचार्घ्यं नैवेद्यञ्च समादिशेत् ।
निवेदयित्वा विभवे कल्याणञ्च समाचरेत् ॥
इष्टानि च विशिष्टानि न्यायेनोपार्जितानि च ।
सर्व्वद्रव्याणि देयानि व्रते तस्मिन् विशेषतः ॥
श्रीपत्रोत्पलपद्मानां संख्या साहस्रिकी मता ।
प्रत्येकमपरा संख्या शतमष्टोत्तरं द्विजाः ॥
तत्रापि च विशेषेण न त्यजेद्बिल्वपत्रकम् ।
हैममेकं परं प्राहुः पद्मं पद्मसहस्रकात् ॥
नीलोत्पलादिष्वप्येतत्समानं बिल्वपत्रकैः ।
पुष्पान्तरान्यनियमाद्यथालाभंनिवेदयेत् ॥
अष्टाङ्गमर्घ्यमुत्कृष्टं धूपालेपौ विशेषतः ।
कृष्णागुरुमघोराख्ये वक्रे सद्ये मनःशिलाम् ॥
चन्दनं वामदेवाख्ये हरितालञ्च पौरुषे ।
ईशाने भसितं केचिदालेपनमितीदृशम् ॥

| | | |
|---|---|---|
| | ज्ञानकर्म्मविभेदेन पञ्च पञ्च विभागशः ॥<br>त्वगादिधातवः सप्त पञ्च प्राणादिवायवः ।<br>मनोबुद्धिरहंख्यातिर्गुणाः प्रकृतिपूरुषौ ॥<br>रागो विद्या कला चैव नियतिः काल एव च ।<br>माया च शुद्धविद्या च महेश्वरसदाशिवौ ॥<br>शक्तिश्च शिवतत्वञ्च तत्वानि क्रमशो विदुः । | |

न धूप इति मन्यन्ते धूपान्तरविधानतः ।
सितागुरुमघोराख्ये मुखे कृष्णागुरुं पुनः ॥
पौरुषे गुग्गुलुं सद्ये सौम्ये सौगन्धिकं मुखे ।
ईशानेऽपि उशीरादि दद्याद्धूपं विशेषतः ॥
शर्करामधुकर्पूरकपिलाघृतसंयुतम् ।
चन्दनागुरुकाष्ठाद्यं सामान्यं संप्रचक्षते ॥
कर्पूरवर्त्तिराज्याढ्या देया दीपावली ततः ।
अर्घ्यमाचमनं देयं प्रतिवक्त्रमतःपरम् ॥
प्रथमावरणे पूज्यौ क्रमाद्धेरम्बषण्मुखौ ।
ब्रह्माङ्गानि ततश्चैवं प्रथमावरणेऽर्च्चिते ॥
द्वितीयावरणे पूज्या विघ्नेशाश्चक्रवर्त्तिनः ।
तृतीयावरणे पूज्या भवाद्याश्चाष्टमूर्त्तयः ॥
महादेवादयस्तत्र तथैकादशमूर्त्तयः ।
चतुर्थावरणे पूज्याः सर्व्व एव गणेश्वराः ॥
बहिरेव तु पद्मस्य पञ्चमावरणे क्रमात् ।
दश दिक्पतयः पूज्याः सास्त्राः सानुचरास्तथा ॥
ब्रह्मणो मानसाः पुत्त्राः सर्व्वेऽपि ज्योतिषाङ्गणाः ।
सर्व्वे देवाश्च देव्यश्च सर्व्वाः सर्व्वेऽपि खेचराः ॥
पातालवासिनश्चान्ये सर्व्वे मुनिगणा अपि ।
योगिनो मुख्यतः सर्व्वे पञ्चमे मातरस्तथा ॥
क्षेत्रपालश्च सगणः सर्व्वं चैतच्चराचरम् ।
अथावरणपूजान्ते सम्पूज्य परमेश्वरम् ॥
साज्यं सव्यञ्जनं हृद्यं हविर्भक्त्या निवेदयेत् ।
मुखवासादिकं दत्त्वा ताम्बूलं सोपदंशकम् ॥
अलङ्कृत्य च भूयोऽपि नानापुष्पविभूषणैः ।
नीराजनान्ते विस्तीर्णं पूजाशेषं समापयेत् ॥
चन्द्रसङ्काशहारञ्च शयनीये समर्पयेत् ।
आढ्यं नृपोचितं हृद्यं तत्सर्व्वमनुरूपतः ॥
कृत्वा च कारयित्वा च हुत्वा च प्रतिपूजनम् ।
स्तोत्रं व्यपोहनं जप्त्वा विद्यां पञ्चाक्षरीं जपेत् ॥
प्रदक्षिणां प्रणामञ्च कृत्वात्मानं समर्च्चयेत् ।
ततः पुरस्ताद्देवस्य गुरुविद्ये च पूजयेत् ॥
दत्वार्घ्यमष्टौ पुष्पाणि देवमुद्वास्य लिङ्गतः ।
अग्नेश्चाग्निं सुसंरक्ष्य उद्वास्य च तमप्युत ॥
प्रत्यहं जन इत्येवं कुर्य्यात्सर्व्वं पुरोदितम् ।
ततस्तत्साम्बुजं लिङ्गं सर्व्वोपकरणान्वितम् ॥
समर्पयेत् स्वगुरवे स्थापयेद् वा शिवालये ।
संपूज्य च गुरूनन्यान् व्रतिनश्च विशेषतः ॥
भक्तान् द्विजांश्च शक्तश्चेद्दीनानाथांश्च तोषयेत् ।
बहुनात्र किमुक्तेन नाचरेदशिवं व्रती ।
प्रमादात्तु तथाचारे निरूप्य
गुरुलाघवम् ॥
उचितां निष्कृतिं कुर्य्यात्
पूजाहोमजपादिभिः ।
आसमाप्तेर्व्रतस्यैवमाचरेन्न प्रमादतः ॥
गोदानञ्च वृषोत्सर्गं कुर्य्यात् पूजां जपं
सदा ।
सामान्यमेतत् कथितं व्रतस्यास्य
समासतः ॥
प्रतिमासं विशेषञ्च प्रवक्ष्यामि
यथाक्रमम् ।
वैशाखे वज्रलिङ्गन्तु ज्येष्ठे मारकतं
शुभम् ॥
आषाढे मौक्तिकं विद्याच्छ्रावणे
नीलनिर्म्मितम् ।
मासे भाद्रपदे चैव पद्मरागमयं परम् ॥
आश्वयुज्याञ्च विधिवद्गोमेदकमयं
शुभम् ।
कार्त्तिक्यां वै द्रुमं लिङ्गं वैदूर्य्यं
मार्गशीर्षके ॥
पुष्परागमयं पौषे माघे द्युमणिजं तथा ।
फाल्गुन्यां चन्द्रकान्तोत्थं चैत्रे
तद्व्यत्ययोऽथवा ॥
सर्व्वमासेषु रत्नानामलाभे हैममेव वा
।
हैमाभावे राजतं वा ताम्रं शैलजमेव वा
॥
मृण्मयं वा यथालाभं क्षणिकं चान्यदेव
वा ।
सर्व्वगन्धमयं वाथ लिङ्गं
कुर्य्याद्यथारुचि ॥
व्रतावसानसमये समाचरितनैत्यकः ।
कृत्वा वैशेषिकीं पूजां हुत्वा चैव यथा
पुरा ॥
संपूज्य च सदाचार्य्यं व्रतिनश्च
विशेषतः ।
दैशिकेनाभ्यनुज्ञातः प्राङ्मुखो
वाप्युदङ्मुखः ॥
परमास्त्रञ्च शैवानां भस्मैतत्पारमेश्वरम्
।
धौभ्याग्रजस्य तपसि ह्यापदो
यन्निवारिताः ॥
तस्मात्सर्व्वप्रयत्नेन कृत्वा पाशुपतं
व्रतम् ।
धनवद्भस्म संगृह्य भस्मस्नानरतो भवेत्
॥”
इति श्रीशिवपुराणे वायुसंहितायां
पूर्ब्बभागे
एकोनत्रिंशोऽध्यायः ॥ * ॥)

**पाशुपतास्त्रं**, क्ली, (पाशुपतं पशुपतिसम्बन्धि
अस्त्रम् ।) पशुपतेः शूलास्त्रम् । तस्य
स्वरूपं
यथा, --
“गजाननोऽपि सञ्चिन्त्य यत्तत् पाशुपतं
परम् ।
महारूपं महाकायं युगान्ताग्निसमप्रभम्
॥
पञ्चवक्त्रं महाघोरं दशबाहुं त्रिलोचनम् ।
सौम्यं घोरं सुघोरास्यमूर्द्ध्वकेशं
भयोत्कटम् ॥
जटाभारेन्दुगङ्गाहिध्रियमाणं शिवाङ्गजम्
।
वेणुवीणाशङ्खघण्टं डमरुकारावसंकुलम्
॥
शिवारावं भयात्त्रासि गृध्रवायसचेष्टितम्
।
उल्कादण्डज्वलज्वालं
गोनाशकृतभूषणम् ॥
ललन्मेखलनागेन्द्रं गजचर्म्मार्द्रवाससम्
।
केकरं तर्ज्जमानन्तु
शूलखट्वाङ्गधारिणम् ॥
ग्रसमानं सममिदं त्रैलोक्यं सचराचरम् ।
पुरतो विघ्ननाशस्य लेलिहानं
व्यवस्थितम् ॥”
इति देवीपुराणम् ॥

स्वयं चानशनप्रायः फलमूलाशनोऽथवा ॥
पयोव्रती वा भिक्षाशी भवेदेकाशनस्तथा ।
नक्तं युक्ताशनो नित्यं भूशय्यानिरतः शुचिः ॥
भस्मशायी तृणे शायी चीराजिनशयोऽथवा ।
ब्रह्मचर्य्यरतो नित्यं व्रतमेतत् समाचरेत् ॥
अर्कवारे तथार्द्रायां पञ्चदश्याञ्च पक्षयोः ।
अष्टम्याञ्च चतुर्द्दश्यां शक्तस्तूपवसेदपि ॥
पाषण्डपतितोदक्यासूतिकान्त्यजपूर्ब्बकान् ।
वर्ज्जयेत्सर्व्वत्नेन मनसा कर्म्मणा गिरा ॥
क्षमादानदयासत्याहिंसाशीलः सदा भवेत् ।
सन्तुष्टश्च प्रशान्तश्च तपोध्यानरतः सदा ॥
कुर्य्यात्त्रिषवणस्नानं भस्मस्नानमथापि वा ।
पूजां षैशेषिकोञ्चैव मनसा कर्म्मणा गिरा ॥

दर्भासनो दर्भपाणिः प्राणापानौ
नियम्य च ।
जपित्वा शक्तितो मूलं ध्यात्वा शाम्बं
त्रियम्बकम् ॥
अनुज्ञाप्य यथापूर्ब्बं नमस्कृत्य
कृताञ्जलिः ।
समुत्सृजामि भगवन् !
व्रतमेतत्त्वदाज्ञया ॥
इत्युक्त्वा लिङ्गमूलन्तु
दर्भानुत्तरतस्त्यजेत् ।
ततो दण्डजटाचीरमेखलाद्यपि
चोत्सृजेत् ॥
पुनराचम्य विधिवत् पञ्चाक्षरमुदीरयेत्
।
यः कृत्वात्यन्तिकीं
दीक्षामादेहान्तमनाकुलः ॥
व्रतमेतत् प्रकुर्व्वीत स तु वै नैष्ठिकः
स्मृतः ।
सोऽत्याश्रमी च विज्ञेयो
महापाशुतस्तथा ॥
स एव तपसां श्रेष्ठः स एव च महाव्रती
।
न तेन सदृशः कश्चित् कृतकृत्यो
मुमुक्षुषु ॥
यतिर्यो नैष्ठिको
जातस्तमाहुर्नैष्ठिकोत्तमम् ।
योऽनश्नन्द्वादशाहं वा व्रतमेतत्
समाचरेत् ॥
सोऽपि नैष्ठिकतुल्यः
स्यात्तीव्रव्रतसमन्वयात् ।
घृताक्ता यश्चरेदेतद्व्रतं व्रतपरायणः
॥
द्वित्र्यैकदिवसं वापि स च कश्चन
नैष्ठिकः ।
कृत्यमित्येव निष्कामो यश्चरेद्
व्रतमुत्तमम् ॥
शिवार्पितात्मा सततं न तेन सदृशः
क्वचित् ।
भस्मच्छन्नो द्विजो विद्वान्
महापातकसम्भवैः ॥

**पाशुपाल्यं**, क्ली, (पशुपालस्य भावः कर्म्म वा ।
पशुपाल + ष्यञ् ।) वैश्यवृत्तिः । पशून्
गोमहि-
ष्यादीन् पालयति पशुपालः ढात् षण् ।
पशु-
पालस्य भावः कर्म्म वा इत्यर्थे
ष्यप्रत्ययनिष्प-
न्नम् । इत्यमरभरतौ ॥ (यथा,
मार्कण्डेये । २८ । ६ ।
“दानमध्ययनं यज्ञो वैश्यस्यापि त्रिधैव
सः ।
बाणिज्यं पाशुपाल्यञ्च कृषिञ्चैवास्य
जीविका ॥”)

**पाश्चात्यः**, त्रि, (पश्चात् + “दक्षिणापश्चात्पुरस-
स्त्यक् ।” ४ । २ । ९८ । इति त्यक् ।)
पश्चा-
द्भवः । (यथा, देवीभागवते । १ । १७ ।
६६ ।
“पाश्चात्यं यामिनीयामं
ध्यानमेवान्वपद्यत ।
स्नात्वा प्रातः क्रियाः कृत्वा पुनरास्ते
समा-
हितः ॥”)
पश्चिमदेशजातः । इति
मुग्धबोधव्याकरणम् ॥
(यथा, महाभारते । १ । १२१ । ११ ।
“स विजित्य गृहीत्वा च भूपतीन्
राजसत्तमः ।
प्राच्यानुदीच्यान् पाश्चात्यान्
दाक्षिणात्यानकाल-
यत् ॥”)

**पाश्चात्याकरसम्भवं**, क्ली, (पाश्चात्ये पश्चिमदिग्-
भवे आकरे सम्भव उत्पत्तिर्यस्य ।)
साम्भरी-
लवणम् । तत्पर्य्यायः । रोमकम् २
रामलब-
णम् ३ । इति रत्नमाला ॥

**पाश्या**, स्त्री, (पाशानां समूहः । पाश + “पाशा-

| | | |
|---|---|---|
| | पापैर्विमुच्यते सद्यो मुच्यते नात्र संशयः ।<br>रुद्राग्नेर्यत्परं वीर्य्यं तद्भस्म परिकीर्त्तितम् ॥<br>तस्मात्सर्व्वेषु कालेषु वीर्य्यवान् भस्मसंयुतः ।<br>भस्मनिष्ठस्य दह्यन्ते दोषा भस्माग्निसङ्गमात् ॥<br>भस्मस्नानविशुद्धात्मा भस्मनिष्ठ इति स्मृतः ।<br>भस्मना दिग्धसर्व्वाङ्गो भस्मदीप्तत्रिपुण्ड्रकः ॥<br>भस्मशायी च पुरुषो भस्मकल्मषभक्षणात् ।<br>भूतिर्भूतिकरी पुंसां रक्षा रक्षाकरी परम् ॥<br>किमन्यदिह वक्तव्यं भस्ममाहात्म्यकारणम् ।<br>व्रती च भस्मना स्नातः स्वयं देवो महेश्वरः ॥ | दिभ्यो यः ।” ४ । २ । ४९ । इति यः ।) पाश-<br>समूहः । इत्यमरः । ३ । २ । ४३ ॥<br>**पाषकः**, पुं, (पषति बध्नातीव चरणौ । पष बन्धे +<br>ण्वुल् ।) पादाभरणविशेषः । पाषुली इति<br>भाषा ॥ यथा, --<br>“रत्नपाषकषट्कैश्च<br>विराजितपदाङ्गुलैः ॥”<br>इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ४<br>अध्यायः ॥ |

**पाषण्डः**, पुं, (पापं सनोति दर्शनसंसर्गादिना

ददातीति । षणु ञ दाने + ञमन्तात् डः । पृषो-
दरादित्वात् साधुः । यद्वा, पाति रक्षति दुष्कृ-
तेभ्य इति । पा + क्विप् । पा वेदधर्म्मस्तं षण्ड-
यति खण्डयतीति । यदुक्तम् ।
“पालनाच्च त्रयीधर्म्मः पाशब्देन निगद्यते ।
तं ष(ख)ण्डयन्ति ते यस्मात् पाषण्डास्तेन हेतुना ॥
नानाव्रतधरा नानावेशाः पाषण्डिनो मताः ॥”)
वेदविरुद्धाचारवान् सर्व्ववर्णचिह्नधारी । बौद्ध-
क्षपणकादिः । इति भरतः ॥ तत्पर्य्यायः । सर्व्व-
लिङ्गी २ । इत्यमरः । २ । ७ । ४५ ॥ कौलिकः ३
पाषण्डिकः ४ । इति शब्दत्नावली ॥ * ॥ पाष-
ण्डादिसम्भाषणे दोषो यथा, --
“तस्मात पाषण्डिभिः पापैरालापं स्पर्शनं त्यजेत् ।
विशेषतः क्रियाकाले यज्ञादौ चापि दीक्षितः ॥
क्रियाहानिर्गृहे यस्य मासमेकं प्रजायते ।
तस्यावलोकनात् सूर्य्यं पश्येत मतिमान् नरः ॥
किं पुनर्य्यैस्तु सन्त्यक्ता त्रयी सर्व्वात्मना द्विज ! ।
पाषण्डभोजिभिः पापैर्व्वेदवादविरोधिभिः ॥
पाषण्डिनो विकर्म्मस्थान् वैडालव्रतिकान् शठान् ।
हैतुकान् वकवृत्तींश्च वाङ्मात्रेणापि नार्च्चयेत् ॥
दूरापास्तस्तु संसर्गः सहास्या वापि पापिभिः ।
रहिता ये द्विजा देवि ! ते वै पाषण्डिनो मताः ॥
श्रुतिस्मृत्युक्तमाचारं यस्तु नाचरति द्विजः ।
स पाषण्डीति विज्ञेयः सर्व्वलोकेषु गर्हितः ॥
समस्तयज्ञभोक्तारं विष्णुं ब्रह्मण्यदैवतम् ॥
उदस्य देवताञ्चैव जुहोति च ददाति च ।
स पाषण्डीति विज्ञेयः स्वतन्त्रो वापि कर्म्मसु ॥
स्वातन्त्र्यात् क्रियते यैस्तु कर्म्म वेदोदितं महत् ।
विना वै भगवत्प्रीत्या ते वै पाषण्डिनः स्मृताः ॥
यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः ।
समत्वेनैव वीक्षेत स पाषण्डी भवेत् सदा ॥
अनास्था क्रियते यैस्तु मनोवाक्कायकर्म्मभिः ।
वासुदेवं न जानाति स पाषण्डी भवेत् द्विजः ॥
हरेर्नामैकमन्त्राभ्यां लोकाः सद्भिर्विवर्ज्जिताः ।
यदि वर्णाश्रमाद्या ये ते वै पाषण्डिनः स्मृताः ॥
वर्णानां गुरवो नित्यं शिवे यद्यप्यवैष्णवाः ।
भगवद्धर्म्मरहिता वैष्णवादिविनिन्दकाः ॥
रजस्तमोमया जीवहिंसका जीवभक्षकाः ।
असत्प्रतिग्रहरता देवला ग्रामयाजकाः ॥
भ्रष्टाचारास्तथा व्रात्या नानाविबुधपूजकाः ।
देवतोच्छिष्टश्राद्धादिभोजिनःशूद्रवत्क्रियाः ॥
विविधासत्कर्म्मरता भक्षणाद्यविचारिणः ।
लोभमोहमदक्रोधकामाहङ्कारिणःसदा ॥
एवंविधाः पारदारिकाद्या येऽत्र शुभानने ! ।
अन्येषां का कथा तत्र पाषण्डा ब्राह्मणाः स्मृताः ॥
वर्णाश्रमाद्या ये मर्त्याः स्वस्वधर्म्मविवर्ज्जिताः ।
ते वै पाषण्डिनो देवि ! नारायणबहिर्मुखाः ॥
सर्व्वाशिनो द्विजा येऽपि सर्व्वविक्रयिणस्तथा ।
षड्वेदाचाररहितास्ते वै पाषण्डिनो मताः ॥
ये त्वसद्भक्ष्यपानादिरता लोका निरन्तरम् ।
शिवे ! पाषण्डिनो ज्ञेया इह ते नात्र संशयः ॥
विष्णुवैष्णवगोभूमिदेवादिषु विशेषतः ।
अश्वत्थतुलसीतीर्थक्षेत्रादिषु महागुरौ ॥
लक्ष्मीसरस्वतीगङ्गायमुनासुवरानने ! ।
स्मृताः पाषण्डिनस्तेऽपि ये न सेवापरायणाः ॥
रुद्राक्षेन्द्राक्षभद्राक्षस्फाटिकाक्षादिधारिणः।
कामं क्रोधञ्च लोभञ्च मोहञ्च मदमत्सरौ ॥”
इति पाद्मे क्रियायोगसारे १६ अध्यायः ॥ * ॥
तस्य राष्ट्राद्बहिष्कर्त्तव्यता यथा, --
“कितवान् कुशीलवान् क्रूरान् पाषण्डस्थांश्च मानवान् ।
विकर्म्मस्थान् शौण्डिकांश्च क्षिप्रं निर्व्वासयेत् पुरात् ॥
एते राष्ट्रे वर्त्तमाना राज्ञः प्रच्छन्नतस्कराः ।
विकर्म्मक्रियया नित्यं वाधन्ते भद्रिकाः प्रजाः ॥”
इति मानवे ९ अध्यायः ॥
अपि च ।
“आक्रुद्धांश्च तथा लुब्धान् दृष्टार्थातत्त्वभाषिणः ।
पाषण्डिनस्तापसादीन्परराष्ट्रेषु योजयेत् ॥”
इति युक्तिकल्पतरुः ॥

**पाषण्डकः**, पुं, (पाषण्ड एव । स्वार्थे कन् ।)

पाषण्डः । इति शब्दरत्नावली ॥

**पाषण्डी**, [न्] पुं, (पां त्रयीधर्म्मं षण्डयतीति ।

पा + षण्ड + णिनिः ।) पाषण्डः । इति जटा-
धरः ॥ (यथा, मनुः । ४ । ३० ।
“पाषण्डिनो विकर्म्मस्थान् वैडालव्रतिकान् शठान् ।
हैतुकान् वकवृत्तींश्च वाङ्मात्रेणापि नार्च्चयेत् ॥”)

**पाषाणः**, पुं, (पषति पीडयत्यनेनेति । पष पीडने +

बाहुलकात् आनच् । “पषेर्णिच्च ।” २ । ९० ।

पाषण्डिभिर्दुराचारैस्तस्मात्तान्
परिवर्ज्जयेत् ॥
एते नग्नास्तवाख्याता दृष्ट्या
श्राद्धोपघातकाः ।
येषां सम्भाषणात् पुंसां दिनपुण्यं प्रणश्यति
॥
एते पाषण्डिनामानो ह्येतान्न आलपेद्बुधः ।
पुण्यं नश्यति सम्भाषादेतेषां तद्दिनोद्भवम् ॥
पुंसां जटाधरणमौण्ड्यवतां वृथैव
मोघाशिनामखिलशौचनिराकृतानाम् ।
तोयप्रदानपितृपिण्डबहिष्कृतानां
सम्भाषणादपि नरा नरकं प्रयान्ति ॥”
इति विष्णुपुराणे ३ अंशे १८ अध्यायः ॥ *
॥
पाषण्डादीनां लक्षणं यथा, --
“भ्रष्टः स्वधर्म्मात् पाषण्डो विकर्म्मस्थो
निषिद्धकृत् ।
यस्य धर्म्मध्वजो नित्यं सुरध्वज
इवोत्थितः ॥
प्रच्छन्नानि च पापानि वैडालं नाम तद्व्रतम्
॥
तद्वान् वैडालव्रतिकः ॥
प्रियं व्यक्ति पुरोऽन्यत्र विप्रियं कुरुते भृशम्
।
व्यक्तापराधचेष्टश्च शठोऽयं कथितो बुधैः ॥
सन्देहकृद्धेतुभिर्यः सत्कर्म्मसु सहैतुकः ।
अर्व्वाग्दृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः ॥
शठो मिथ्याविनीतश्च वकवृत्तिरुदाहृतः
॥” इति ।
एतट्टीकायां स्वामी ॥ * ॥ अपि च ।
सदाशिव उवाच ।
“येऽन्यदेवं परत्वेन वदन्त्यज्ञानमोहिताः ।
नारायणाज्जगद्वन्द्यं ते वै पाषण्डिनस्तथा
॥
कपालभस्मास्थिधरा ये ह्यवैदिकलिङ्गिनः ।
ऋते वनस्थाश्रमाश्च जटावल्कलधारिणः ।
अवैदिकक्रियोपेतास्ते वै पाषण्डिनस्तथा ॥
शङ्खचक्रोर्द्ध्वपुण्ड्रादिचिह्नैः प्रियतमैर्हरेः ।
जटिला भस्मलिप्ताङ्गास्ते वै पाषण्डिनः प्रिये !
॥
असिजीवी मसीजीवी धावकः पाचकस्तथा ।
एते पाषण्डिनो विप्रा मादकद्रव्यभोजिनः ॥
देवि ! कार्ष्णादयो भक्ता अनन्यशरणास्तु ये ।
पाषण्डसङ्गं न कुर्य्युस्तद्गेहे पानभोजने ॥
यदि दैववशाल्लोभान्मोहात्तस्यान्नभोजनम्।
तत्स्पर्शजलपानञ्च चक्रुस्तत्सङ्गमादिकम् ॥
तत्पानभोजनालापसङ्गालिङ्गनतोऽचिरात्।
पाषण्डिनो वैष्णवाः स्युरन्येषामपि का कथा ॥
किमत्र बहुनोक्तेन ब्राह्मणा ये ह्यवैष्णवाः ।
असदाचरणाश्चेत् स्युस्तदा पाषण्डिनः स्मृताः
॥
एतद्भोजनपानादिकर्म्मभिर्वैष्णवा जनाः ।
पाषण्डिनस्तथा स्युर्व्वै जटाभस्मादिधारिणः
॥”
इति पाद्मो त्तरखण्डे पाषण्डाचरणं नाम ४२
अः ॥
तस्य त्याज्यत्वं यथा, --
“त्यज पाषण्डसंसर्गं सङ्गं भज सतां सदा ।
इत्युज्ज्वलदत्तोक्त्या स च णित् ।)
प्रस्तरः । तत्-
पर्य्यायः । ग्रावः २ उपलः ३ अश्मा
४ शिला ५
दृषत् ६ । इत्यमरः । २ । ३ । ४ ॥
दृशत् ७ । इति
भरतः ॥ प्रस्तरः ८ पारावुकः ९
पारटीटः १०
मृन्मरुः ११ काचकः १२ । इति
शब्दरत्नावली ॥
(यथा, देवीभागवते । ४ । २१ ।
५४ ।
“गतेऽथ नारदे कंसः समाहूयाथ
बालकम् ।
पाषाणे पोथयामास सुखं प्राप च
मन्दधीः ॥”
पाषाणादिनिर्म्मितत्वात्
देवताप्रतिमादि । यथा,
आर्य्यासप्तशत्याम् । ३८६ ।
“पूजां विना प्रतिष्ठां नास्ति न मन्त्रं
विना
प्रतिष्ठा च ।
तदुभयविप्रतिपन्नः पश्यतु
गीर्व्वाणपाषाणम् ॥”)

**पाषाणगर्द्दभः**, पुं, हनुसन्धिजक्षुद्ररोगविशेषः ।

तल्लक्षणमाह ।
“वातश्लेष्मसमुद्भूतः
श्वयथुर्हनुसन्धिजः ।
स्थिरो मन्दरुजः स्निग्धो ज्ञेयः
पाषाणगर्द्दभः ॥”
स्थिरः कठिनः ॥ * ॥ तच्चिकित्सा
यथा, --
“पाषाणगर्द्दभं पूर्ब्बं स्वेदयेत् कुशलो
भिषक् ।
ततः पनसिकाप्रोक्तैः कल्कैरुष्णैः
प्रलेपयेत् ॥
वातश्लैष्मिकशोथघ्नैः
कल्कैरन्यैश्च लेपयेत् ।
परिपाकगतं भित्त्वा व्रणवत्तमुपाचरेत्
॥

| | | |
|---|---|---|
| | | जलोकाभिर्हृते रक्ते स शाम्यति विनौषधम् ।<br>एतत्स्थलेषु बहुषु प्रेक्षितं लिखितं ततः ॥”<br>इति भावप्रकाशः ॥<br><br>**पाषाणचतुर्द्दशी**, स्त्री, (पाषाणसाध्या पाषाणवत्-<br>पिष्टकभोजनसाध्या चतुर्द्दशी ।) वृश्चिकराशिस्थ-<br>रविकशुक्लपक्षीयचतुर्द्दशी । यथा, भविष्ये । |

"वृश्चिके शुक्लपक्षे तु या पाषाणचतुर्द्दशी ।
तस्यामाराधयेद्गौरीं नक्तं पाषाणभोजनैः ॥
पाषाणभोजनैः पाषाणाकारपिष्टकभोजनैः
।"
इति तिथ्यादितत्त्वम् ॥

**पाषाणदारकः**, पुं, (दारयति विदारयतीति । द +
णिच् + ण्वुल् । पाषाणस्य दारकः ।) टङ्कः
।
इति हेमचन्द्रः । ३ । ५८३ ॥

**पाषाणदारणः**, पुं, (दारयतीति । दॄ + णिच् +
ल्युः । पाषाणस्य दारणो विदारकः ।) टङ्कः
।
इत्यमरः । २ । १० । ३४ ॥

**पाषाणभेदनः**, पुं, (पाषाणं अश्मरीं भिनत्तीति ।
भिद् + ल्युः ।) वृक्षविशेषः । हाड्जुडी इति
भाषा । तत्पर्य्यायः । अश्मघ्नः २
शिलाभेदः ३
अश्मभेदकः ४ श्वेता ५ उपलभेदी ६
पलभित् ७
शिलगर्भजः ८ । अस्य गुणाः । मधुरत्वम् ।
तिक्त-
त्वम् । मेहतृड्दाहमूत्रकृच्छ्राश्मरीनाशित्वम्
।
शीतलत्वञ्च । इति राजनिर्घण्टः ॥ अपि च
।
"पाषाणभेदकोऽश्मघ्नो गिरिभिद्भिन्नयोजनी
।
अश्मभेदो हिमस्तिक्तः कषायो
वस्तिशोधनः ॥
भेदनो हन्ति दोषार्शोगुल्मकृच्छ्राश्महृद्रुजः ।
योनिरोगान् प्रमेहांश्च प्लीहाशूलव्रणानि च
॥"
इति भावप्रकाशः ॥

**पाषाणभेदी**, [न्] पुं, (पाषाणं अश्मरीं भिन-
त्तीति । भिद + णिनिः ।) वृक्षविशेषः ।
पाथर-
चुर इति भाषा । तत्पर्य्यायः । अश्मभेदः २

**पिकवल्लभः**, पुं, (पिकानां वल्लभः ।) आम्रवृक्षः
।
इति भावप्रकाशः ॥ (गुणाश्चास्य
आम्रशब्दे
ज्ञातव्याः ॥)

**पिकाक्षः**, पुं, (पिकस्य अक्षि लोचनं तद्वत् वर्णो
यस्य । समासे षच् ।) रोचनी । इति
शब्द-
चन्द्रिका ॥

**पिकाङ्गः**, पुं, (पिकस्याङ्गमिव अङ्गं यस्य ।)
पक्षिविशेषः । इति शब्दचन्द्रिका ॥

**पिकानन्दः**, पुं, (पिकानामानन्दो यस्मिन् ।)
वसन्तकालः । इति राजनिर्घण्टः ॥

**पिकी**, स्त्री, (पिक + स्त्रियां ङीष् ।) कोकिला ।
इति राजनिर्घण्टः ॥

**पिकेक्षणा**, स्त्री, (पिकस्य ईक्षणं लोचनं तद्वत्
वर्णो यस्याः ।) कोकिलाक्षः । इति
राज-
निर्घण्टः ॥
कोकिलचक्षुस्तुल्यचक्षुर्युक्ता च ॥

**पिक्कः**, पुं, (पिक् इत्यव्यक्तशब्देन कायति
शब्दा-
यते इति । कै + कः । पिक इव
कायतीति ।
पृषोदरादित्वात् साधुरित्येके ।)
हस्तिशावकः ।
इति शब्दमाला ॥

**पिङ्गं**, क्ली, (पिञ्जतीति । पिजि वर्णे + अच् ।
न्यङ्-
क्वादित्वात् कुत्वम् ।) बालकः । इति
मेदिनी ।
गे, १२ ॥ हरितालम् । इति
राजनिर्घण्टः ॥

**पिङ्गः**, पुं, (पिजि वर्णे + अच् । कुत्वञ्च ।)
पिङ्गल-

"निष्ठानको हेमगुहो नहुषः पिङ्गलस्तथा ॥")
रुद्रः । चण्डांशुपारिपार्श्विकः । निधिभेदः ।
कपिः । अग्निः । इति मेदिनी । ले, ११३ ॥
मुनिविशेषः । (यथा, महाभारते । १ । ५३ ।
६ ।
"ब्रह्माभवत् साङ्गरवो अध्वर्य्युश्चापि पिङ्गलः
॥")
नकुलः । स्थावरविषविशेषः । इति हेमचन्द्रः ।
४ । १६५ ॥ क्षुद्रोलूकः । इति राजनिर्घण्टः ॥
(यक्षविशेषः । यथा, महाभारते । ३ । २३० ।
५१ ।
"पिङ्गलो नाम यक्षेन्द्रो लोकस्यानन्ददायकः
॥"
पर्व्वतविशेषः । इति ब्रह्माण्डपुराणम् ॥)
प्रभवादिषष्टिवर्षान्तर्गतैकपञ्चाशत्तमवर्षः ।
यथा,
"देशभङ्गोऽथ दुर्भिक्षं समासात् कथयाम्यहम् ।
पिङ्गले चारुपद्माक्षि ! दुर्भिक्षं नर्म्मदातटे ॥"
इति ज्योतिस्तत्त्वम् ॥ * ॥
पिङ्गलाचार्य्यकृतच्छन्दोग्रन्थविशेषः । यथा, -
-
"जो विविहमत्तसायरपारं पत्तो विविमलमै
हेलम् ।
पढमं भासतरण्डो नाओसो पिङ्गलो जयै ॥"
अस्य व्याख्या ।
"अथ छन्दःशास्त्रकर्त्तुः पिङ्गलाचार्य्यस्य
स्तुति-
रूपं मङ्गलं निर्विघ्नग्रन्थपरिसमाप्तये ग्रन्थकृत्
करोति । विविधा
नानाप्रकारकविन्यासविशिष्टा
मात्रा यत्र तद्विविधमात्रं छन्दःकदम्बं तदेवं
सागरः अतिदुर्गमत्वात् भाषा एव तरण्डा
नौर्यस्य । प्राकृते ह्रस्वता तेन भाषयैव छन्दः-
शास्त्रमुक्तवानित्यवगम्यते। केचित्तु लघुगुरु-
रूपा या विविधा मात्रा सैव सागरः तत्पारं
प्राप्तः अपिरवधारणे । विमलया मत्या हेला
यत्र तद्यथा स्यात् निर्म्मलबुद्ध्या हेलयैव पारं
गत इत्यर्थः । प्रथममित्यनेन छन्दःशास्त्रस्य
प्रथमप्रणेतायमित्यवगम्यते । अर्थान्तरमप्यने-
नैव व्यज्यते यो विविधमात्राभिः सागरपारं

शिलाभेदः ३ अश्मभित् ४ । इति
रत्नमाला ॥
(अश्मभेदशब्दे ज्ञातव्यमस्य विवरणम् ॥)

**पाषाणी**, स्त्री, (पाषाण + अल्पार्थे ङीष् ।)

क्षुद्रपाषाणः । स तु परिमापकविशेषः । वाट्-
खारा इति भाषा । तत्पर्य्यायः । पृषाकरा २ ।
इति शब्दचन्द्रिका ॥

**पाहातः**, पुं, (पाति रक्षति दुष्कृतेभ्य इति । पा +

क्विप् । पां त्रयीधर्म्मं हन्ति गच्छतीति । हन्
गतौ + डः । पाहं ब्रह्माणं अततीति । अच् ।)
ब्रह्मदारुवृक्षः । इति शब्दचन्द्रिका ॥

**पि**, श गतौ । इति कविकल्पद्रुमः ॥ (तुदां-परं-

सकं-अनिट् ।) श, पियति । इति दुर्गादासः ॥

**पिकः**, पुं, (अपि कायति शब्दायते इति । अपि

+ कै + "आतश्चोपसर्गे ।" ३ । १ । १३६ ।
इति कः । अपेरकारलोपः ।) कोकिलः ।
इत्यमरः ॥ २ । ५ । १९ । (यथा, --
"पिक ! विधुस्तव हन्ति समं तम-
स्त्वमपि चन्द्रविरोधिकुहूरवः ।
इति तयोरनिशं हि विरोधिता
कथमहो समता मम तापने ॥"
इत्युद्भटः ॥)

**पिकप्रिया**, स्त्री, (पिकानां प्रिया ।) महाजम्बूः ।

इति राजनिर्घण्टः ॥

**पिकबन्धुः**, पुं, (पिकानां बन्धुरिव ।) आम्रवृक्षः ।

इति त्रिकाण्डशेषः ॥

**पिकरागः**, पुं, (पिकानां रागोऽनुरागो यत्र ।)

आम्रवृक्षः । इति राजनिर्घण्टः ॥

वर्णः । तद्वति, त्रि । इत्यमरः । १ । ५ । १६ ॥
(यथा, महाभारते । १ । १२३ । ३२ ।
"पद्मपत्राननः पिङ्गस्तेजसा
प्रज्वलन्निव ॥")
मूषकः । इति राजनिर्घण्टः ॥

**पिङ्गकपिशा**, स्त्री, (पिङ्गा कपिशा च । वर्णो

वर्णेनेति समासः ।) तैलपायिका । इति हेम-
चन्द्रः । ४ । २७३ ॥

**पिङ्गचक्षुः**, [स्] पुं, (पिङ्गे चक्षुषी यस्य ।)

कुम्भीरः । इति हेमचन्द्रः । ४ । ४१८ ॥

**पिङ्गजटः**, पुं, (पिङ्गा पिङ्गलवर्णा जटा यस्य ।)

शिवः । इति हेमचन्द्रः । २ । ११३ ॥

**पिङ्गलं**, क्ली, (पिङ्गं लातीति । ला + कः ।)

रीतिः । इति राजनिर्घण्टः ॥

**पिङ्गलः**, पुं, (पिङ्गो वर्णोऽस्यास्तीति । पिङ्ग +

"सिध्मादिभ्यश्च ।" ५ । २ । ९७ । इति लच् ।)
नीलपीतमिश्रितवर्णः । तत्पर्य्यायः । कडारः २
कपिलः ३ पिङ्गः ४ पिशङ्गः ५ कद्रुः ६ । तद्-
वति, त्रि । इत्यमरः । १ । ५ । १६ ॥ केचित्
द्वयं द्वयं पर्य्यावमाहुः । अत्र नीलपीतः कपिलः ।
रोचनाभः पिशङ्गः । कनकपिङ्गलः कद्रुः ।
इति सुभूतिः ॥
"पिशङ्गो रोचना पाण्डुः कद्रुः कनकपिङ्गलः ॥"
इति नाममाला ॥
"पिङ्गदीपशिखाभः स्यात् पिशङ्गः पद्मधूलिवत् ।

प्राप्तः विः पक्षी अर्थाद्गरुडः तस्य विमलमतौ
हेला यत्र तत् यथा स्यात् भाषा अनुनयवाक्
सैव नौर्यस्य ईदृशो नागो जयति । एवं हि
श्रूयते भोक्तुमुद्यतं गरुडं दृष्ट्वा सकौशलं सवि-
नयं तमुवाच भो गरुड ममेदं कौशलं पश्य
यद्येकवारलिखितं मया लिख्यते तदा मां भक्ष
इत्युक्त्वा सागरतीरं षड्विंशत्यक्षरपर्य्यन्तं प्रस्तारं
प्रदर्श्य समुद्रं प्रविवेश गरुडोऽपि वञ्चनां गुरु-
त्वेन तञ्च मत्वा तद्देशाद्विरराम एतादृशं बुद्धि-
गौरवं यस्य अतएव जयति उत्कर्षेण वर्त्तते
तं प्रति प्रणतोऽस्मीति व्यज्यते अथवा गाथायां
भगणोपन्यासो मङ्गलार्थः प्रथमं भृत्योदासी-
नयोर्भगणजगणयोर्योगोऽनुचितोऽपिकथमित्य-
वहितैर्भाव्यम् ।" इति पिङ्गलग्रन्थस्तट्टीका च ॥

**पिङ्गललोहं**, क्ली, (पिङ्गलं लोहमिति नित्यकर्म्म-

धारयः ।) पित्तलम् । इति राजनिर्घण्टः ॥

**पिङ्गला**, स्त्री, (पिङ्गल + टाप् ।) वामनाख्य-

दक्षिणदिग्गजस्य स्त्री । इत्यमरः । १ । ३ । ४ ॥
कुमुदस्य करिणी । वेश्याविशेषः । इति मेदिनी ।
ले, ११३ ॥ तस्या उपाख्यानं यथा, --

| | | |
|---|---|---|
| | पीतनीलहरिद्रक्तः कडारस्तृणवह्निवत् ॥ अयन्तूद्रिक्तः पीताङ्गः कपिलो रोचनाच्छविः ॥ इत्यत्र भेदोऽपि दृश्यते । अल्पभेदत्वादिहासौ नादृतः ।” इति तट्टीकायां भरतः ॥ * ॥ नाग- भेदः । (यथा, महाभारते । १ । ३५ । ९ । | |

"पिङ्गला नाम वेश्यासीद्विहेहनगरे पुरा ।
तस्या मे शिक्षितं किञ्चिन्निबोध नृपनन्दन ! ॥
सा स्वैरिण्येकदा कान्तं सङ्केत उपनेष्यती ।
अभूत् काले बहिर्द्वारि बिभ्रती रूपमुत्तमम् ॥
मार्ग आगच्छतो वीक्ष्य पुरुषान् पुरुषर्षभ ! ।
तान् शुल्कदान् वित्तवतः कान्तान् मेनेऽर्थ-कामुका ॥
आगतेष्वपयातेषु सा सङ्केतोपजीविनी ।
अप्यन्यो वित्तवान् कोऽपि मामुपैष्यति भूरिदः ॥
एवं दुराशया ध्वस्तनिद्रा द्वार्य्यवलम्बिनी ।
निर्गच्छन्ती प्रविशती निशीथं समपद्यत ॥
तस्या वित्ताशया शुष्यद्वक्त्वाया दीनचेतसः ।
निर्व्वेदः परमो जज्ञे चिन्ताहेतुः सुखावहः ॥
तस्या निर्व्विन्नचित्ताया गीतं शृणु यथा मम ॥
निर्व्वेद आशापाशानां पुरुषस्य यथा ह्यसिः ।
नह्यङ्गाजातनिर्व्वेदो देहबन्धं जिहासति ॥
पिङ्गलोवाच ।
अहो मे मोहविततिं पश्यतां विजितात्मनः ।
या कान्तादसतः कामं कामये येन वालिशा ॥
सन्तं समीपे रमणं रतिप्रदं
वित्तप्रदं नित्यमिमं विहाय ।
अकामदं दुःखभयाधिशोक-
मोहप्रदं तुच्छमहं भजेऽज्ञा ॥
अहो मयात्मा परितापितो वृथा
साङ्केत्यवृत्त्यातिविगर्ह्य वार्त्तया ।
स्त्रैणान्नराद्यार्थतृषोऽनुशोच्यात्
क्रीतेन वित्तं रतिमात्मनेच्छती ॥
यदस्थिभिर्निर्म्मितवंशवंश्य-
स्थूणं त्वचा रोमनखैः पिनद्धम् ।
क्षरन्नवद्वारमगारमेतद्-
विण्मूत्रपूर्णं मदुपैति कान्या ॥
विदेहानां पुरे ह्यस्मिन्नहमेकैव मूढधीः ।
यान्यमिच्छत्यसत्यस्मादात्मदात् काममच्युतात् ॥
सुहृत् प्रेष्ठतमो नाथ आत्मा चायं शरीरिणाम् ।
तं विक्रीयात्मनैवाहं रमेऽनेन यथा रमा ॥
कियत् प्रियन्ते व्यभजन् कामा ये कामदा नराः ।
छित्त्वोपशममास्थाय शय्यामुपविवेश सा ॥
आशा हि परमं दुःखं नैराश्यं परमं सुखम् ।
यथा संछिद्य कान्ताशां सुखंसुष्वाप पिङ्गला ॥"
इति श्रीभागवते ११ स्कन्धे श्रीभगवदुद्धव-संवादे अष्टमेऽध्याये । २२ -- ४३ ॥ * ॥ कर्णिका । नाडीविशेषः । इति हेमचन्द्रः ॥
पक्षिभेदः । राजरीतिः । इति राजनिर्घण्टः ॥
शिंशपावृक्षः । इति रत्नमाला ॥ * ॥
अथ पिङ्गलादिनाडीनिरूपणम्।
"दक्षिणांशः स्मृतः सूर्य्यो वामभागो निशाकरः ।
नाडीर्द्दश विदुस्तासु मुख्यास्तिस्रः प्रकीर्त्तिताः ॥
इडा वामे तनोर्म्मध्ये सुषुम्णा पिङ्गला परे ।
मध्या तास्वपि नाडी स्यादग्नीसोमस्वरूपिणी ॥"
"अत्रेता वामवुक्काधःस्था धनुर्व्वक्रा वामनासा-पर्य्यन्तं गता एवं पिङ्गला दक्षिणाण्डाधःस्था धनुर्व्वक्रा दक्षिणनासान्तं गता पृष्ठवंशान्तर्गता सुषुम्णा इत्यर्थः ।" इति सारदातिलकम् ॥
"नाडीनां संवहो देवि ! कञ्जयोनिः खगाण्डवत् ।
तत्र नाड्यः समुत्पन्नाः सहस्राणां द्विसप्ततिः ॥"
कञ्जस्य पद्मस्य योनिरुत्पत्तिस्थानं शालूकमिति यावत् ।
चण्डिका । इति मेदिनी । ने, ११ ॥
हरिद्रा ।
इति शब्दचन्द्रिका ॥ वंशरोचना । इति राज-निर्घण्टः ॥ (स्वनामख्याता तपस्विनी । अस्या आश्रमस्तु तीर्थस्थानत्वेन प्रसिद्धः । यथा,
महाभारते । ३ । ८२ । ५५ ।
"पिङ्गातीर्थ उपस्पृश्य ब्रह्मचारी नराधिप ! ।
कपिलानां नरव्याघ्र ! शतस्य फलमश्नुते ॥"
तथा च तत्रैव । १३ । २५ । ५३ ।
"उज्जानक उपस्पृश्य आर्ष्टिसेनस्य चाश्रमे ।
पिङ्गायाश्चाश्रमे स्नात्वा सर्व्वपापैः प्रमुच्यते ॥")

**पिङ्गाक्षः**, पुं, (पिङ्गं अक्षि यस्य । षच् समासे ।) शिवः । इति त्रिकाण्डशेषः ॥ (कुम्भीरः । पिङ्ग-चक्षुःशब्ददर्शनात् ॥ द्रोणपुत्त्रखगविशेषः । यथा,
मार्कण्डेये । १ । २१ ।
"पिङ्गाक्षश्च विबोधश्च सुपुत्त्रः सुमुखस्तथा ।
द्रोणपुत्त्राः खगश्रेष्ठास्तत्वज्ञाः शास्त्रचिन्तकाः ॥"
पिङ्गलनेत्रे, त्रि । यथा, तत्रैव । ९९ । ४५ ।
"नमस्तेऽनल ! पिङ्गाक्ष ! नमस्तेऽस्तु हुता-शन ! ॥")

**पिङ्गाशः**, पुं, (पिङ्गं वर्णमश्नुते इति । अश + अण् ।) पल्लीपतिः । मत्स्यभेदः । पाङ्गाश इति भाषा ॥ जात्यस्वर्णे, क्ली । इति मेदिनी । शे, २५ ॥

आद्यन्तवन्तो भार्य्याया देवा वा कालविद्रुताः
।
नूनं मे भगवान् प्रीतो विष्णुः केनापि कर्म्मणा ।
निर्व्वेदोऽयं दुराशाया यन्मे जातः सुखावहः ॥
मैवं स्युर्म्मन्दभाग्यायाः क्लेशा निर्व्वेदहेतवः ।
येनानुबन्धं निर्हृत्य पुरुषः शममृच्छति ॥
तेनोपकृतमादाय शिरसा ग्राम्यसङ्गताः ।
त्यक्त्रा दुराशाः शरणं व्रजामि तमधीश्वरम् ॥
सन्तुष्टा श्रद्दधत्येतद्यथालाभेन जीवती ।
विहराम्यमुनैवाहमात्मना रमणेन वै ॥
संसारकूपे पतितं विषयैर्म्मुषितेक्षणम् ।
ग्रस्तं कालाहिनात्मानं कोऽन्यस्त्रातुमधी-
श्वरः ॥
आत्मैव ह्यात्मनो गोप्ता निर्व्विद्येत
यदाखिलात् ।
अप्रमत्त इदं पश्येद्ग्रस्तं कालाहिना जगत् ॥
श्रीब्राह्मण उवाच ।
एवं व्यवसितमतिर्दुराशां कान्ततर्षजाम् ।

"प्रधानाः प्राणवाहिन्यो भूयस्तत्र दश
स्मृताः ।
इडा च पिङ्गला चैव सुषुम्णा च तृतीयिका
॥
गान्धारी हस्तिजिह्वा च पूषा चैव
यशस्विनी ।
अलम्बुषा कुहूश्चैव शङ्खिनी च दश
स्मृताः ॥
एवं नाडीमयं चक्रं विज्ञेयं शक्तिचक्रके ।
इडायाः पिङ्गलायाश्च मध्ये या सा
सुषुम्-
णिका ॥
इयञ्च त्रिगुणा ज्ञेया ब्रह्मविष्णुशिवात्मिका
।
रजोगुणा च वज्राख्या चित्रिणी
सत्वसंयुता ॥
तमोगुणा ब्रह्मनाडी कार्य्यभेदक्रमेण च
॥"
इति निरुत्तरतन्त्रे प्रथमपटलः ॥
इडापिङ्गलथोः स्वरूपं यथा, --
"इडा च शङ्खचन्द्राभा तस्या वामे
व्यवस्थिता ।
पिङ्गला सितरक्ताभा दक्षिणं
पार्श्वमाश्रिता ॥"
इति योगार्णवः ॥
"इडायां संश्रितश्चन्द्रः पिङ्गलायां
दिवाकरः ॥"
इति तन्त्रान्तरम् ॥

**पिङ्गलिका**, स्त्री, (पिङ्गलो बर्णोऽस्त्यस्या इति ।

पिङ्गल + ठन् ।) वलाका । इति जटाधरः
॥
(कीटविशेषः । यथा, सुश्रुते । ५ । ८ ।
"मक्षिकाः कान्तारिका कृष्णा पिङ्गलिका
मधू-
लिका काषायी स्थालिकेत्येवं षट्
ताभिर्दष्टस्य
दाहशोफौ भवतः ॥")

**पिङ्गसारः**, पुं, (पिङ्गमेव सारो यस्य ।) हरि-

तालम् । इति राजनिर्घण्टः ॥
(हरितालशब्दे

**पिङ्गाशी**, स्त्री, (पिङ्गं वर्णमश्नुते इति । अश +

अण् । स्त्रियां ङीष् ।) नीलिका । इति
मेदिनी ।
शे, २५ ॥

**पिङ्गास्यः**, पुं, (पिङ्गमास्यं वदनं यस्य ।) पिङ्गाश-

मत्स्यः । इति शब्दरत्नावली ॥

**पिङ्गी**, स्त्री, (पिङ्गो वर्णोऽस्त्यस्या इति । अच् ।

ततो गौरादित्वात् ङीष् ।) शमीवृक्षः ।
इति
मेदिनी । गे, १२ ॥

**पिङ्गेक्षणः**, पुं, (पिङ्गानि पिङ्गलवर्णानि ईक्षणानि

यस्य ।) शिवः । इति हेमचन्द्रः । २ ।
११० ॥
(कुम्भीरः । पिङ्गचक्षुःशब्ददर्शनात् ॥
पिङ्गल-
नेत्रे, त्रि ॥)

**पिचण्डः**, पुं, (अपिचण्ड्यतेऽनेनेति । अपि +

चडि कोपे + घञ् । अपेरल्लोपः ।)
पशोर-
वयवः । उदरम् । इति हेमचन्द्रः । ३ ।
२६८ ॥

**पिचण्डिलः**, त्रि, (अतिशयितं पिचण्डमुदरमस्य ।

पिचण्ड + तुन्दादित्वात् इलच् ।)
तुन्दिलः ।
इति हेमचन्द्रः । ३ । ११४ ॥ (यथा,
काशी-
खण्डे । ८७ । १२२ ।
"स्वाहाकारैर्व्वषड्कारैः सुरा जाताः
पिच-
ण्डिलाः ।
रचिता गिरयस्तेन सदन्नानां पदे पदे ॥")

**पिचव्यः**, पुं, (पिचवे तूलाय साधुः । पिचु + यत्
।)

कार्पासः । इति हेमचन्द्रः । ४ । २०५
॥

**पिचिण्डः**, पुं, उदरम् । इत्यमरः । २ । ६ । ७७ ॥

तस्य लक्षणं यथा, --

| | | |
|---|---|---|
| | विवृतिरस्य ज्ञातव्या ॥)<br>**पिङ्गस्फटिकः**, पुं, (पिङ्गः पिङ्गलवर्णः स्फटिकः इति नित्यकर्म्मधारयः ।) गोमेदमणिः । इति राजनिर्घण्टः ॥<br>**पिङ्गा**, स्त्री, (पिङ्गो वर्णोऽस्त्यस्या इति । अच् टाप् च ।) गोरोचना । हिङ्गुः । नालिका । | "भोगाढ्याः समजठरा निःस्वाः स्युर्घटसन्निभाः ।<br>सर्पोदरा दरिद्राः स्युः -- ॥"<br>इति गारुडे ६३ अध्यायः ॥<br>पशोरवयवः । इति मेदिनी । डे, ३२ ॥ |

**पिचिण्डिका**, स्त्री, (पिचिण्ड इव पिण्डाकृतिरस्त्य-
स्येति । पिचिण्ड + ठन् ।) पिण्डिका । इति
हेमचन्द्रः । ३ । २७९ ॥ पार डिम् इति भाषा ॥

**पिचिण्डिलः**, पुं, (अतिशयितः पिचिण्ड उदर-
मस्य । पिचिण्ड + तुन्दादित्वात् इलच् ।)
बृहदुदरयुक्तः । इत्यमरः । २ । ६ । ४४ ॥ तत्-
पर्य्यायः । पिचण्डिलः २ बृहत्कुक्षिः ३ तुन्दी ४
तुन्दिकः ५ तुन्दिलः ६ उदरी ७ उदरिलः ८ ।
इति हेमचन्द्रः । ३ । ११४ ॥ (यथा, काशी-
खण्डे शिवशर्म्मणो वैकुण्ठलोकगमने विष्णुगण-
संवादे ।
"पिचिण्डिलैः स्थूलवक्त्रैर्मेघगम्भीरनिस्वनैः ॥")

**पिचुः**, पुं, (पेचतीति । पिच मर्द्दने + मृगय्वादि-
त्वात् कुः ।) कार्पासतूलः । इत्यमरः । २ । ९ ।
१०६ ॥ (यथा, सुश्रुते । ४ । ६ ।
"अर्शो वीक्ष्य शलाकयोत्पीड्य पिचुवस्त्रयो-
रन्यतरेण प्रमृज्य क्षारं पातयेत् ॥") कुष्ठ-
भेदः । कर्षः । असुरविशेषः । इति मेदिनी ।
चे, ७ ॥ भैरवः । शस्यभेदः । इति विश्वः ॥
(चिकित्सोपयोगिपञ्चकर्म्मान्तर्गतक्रियाविशेषः ।
यथा, --
"कामिन्यां पूतियोन्याञ्च कर्त्तव्यः स्वेदनो विधिः ।
क्रमः कार्य्यस्ततः स्नेहपिचुभिस्तर्पणं भवेत् ॥
शल्लकीजिङ्गिनीजम्बुधवत्वक्पञ्चवल्कलै ।
कषायैः साधितैः स्नेहः पिचुः स्याद्विप्लुतापहः ॥"
इति वैद्यकचक्रपाणिसंग्रहे योनिव्यापच्चिकित्-
सायाम् ॥)

**पिचुकः**, पुं, (पिचुरिव कायतीति । कै + कः ।)
मदनवृक्षः । इति रत्नमाला ॥ मयना इति
भाषा ॥

**पिचुतूलं**, क्ली, (पिचोस्तूलम् ।) तूलः । इति
त्रिकाण्डशेषः ॥

**पिचुमन्दः**, पुं, (पिचुं कुष्ठविशेषं मन्दयति नाशय-
तीति । मन्द + अण् ।) निम्बवृक्षः । इति हेम-
चन्द्रः । ४ । २०५ ॥ (यथा, आर्य्यासप्त-
शत्याम् । ३४९ ।

**पिच्च** क छेदे । इति कविकल्पद्रुमः ॥ (चुरां-
परं-सकं-सेट् ।) क, पिच्चयति ।
इति दुर्गा-
दासः ॥

**पिच्चटं**, क्ली, (पिच्चयतीति । पिच्च छेदने +
अटन् ।) सीसकम् । रङ्गम् । (अस्य
पर्य्यायो
यथा, वैद्यकरत्नमालायाम् ।
"रङ्गं वङ्गञ्च कस्तीरं मृद्वङ्गं पुत्र
पिच्चटम् ॥")
नेत्ररोगे, पुं । इति मेदिनी । टे, ५०
॥

**पिच्छ**, श बाधे । इति कविकल्पद्रुमः ॥
(तुदां-
परं-सकं-सेट् ।) श, पिच्छती
पिच्छन्ती ।
बाधो विहितिः । इति दुर्गादासः ॥

**पिच्छं**, क्ली, (पिच्छतीति । पिच्छ + अच् ।)
मयूरपुच्छम् । तत्पर्य्यायः ।
शिखण्डः २ वर्हम् ३ ।
इत्यमरः । २ । ५ । ३१ ॥
शिखिपुच्छम् ४
शिखण्डकम् ५ । इति
शब्दरत्नावली ॥ (यथा,
अनर्घराघवे । ६ । ६५ ।
"तस्यारिबलभीमस्य ध्वजदण्डस्य
लाञ्छनम् ।
दर्पदीप्तः क्षुरप्रेण मायूरं
पिच्छमच्छिनत् ॥")
चूडा । इति मेदिनी । छे, ५ ॥

**पिच्छः**, पुं, (पिच्छतीति । पिच्छ + अच् ।)
लाङ्गू-
लम् । इति मेदिनी । छे, ५ ॥

**पिच्छलदला**, स्त्री, (पिच्छलं दलं पत्रं यस्याः
।)
वदरीवृक्षः । इति त्रिकाण्डशेषः ॥

लम् ५ इज्जलम् ६ लालसीकम् ७ ।
इति
वाचस्पतिः ॥ (यथा, छन्दोमञ्जर्य्याम् ।
"तरुणं सर्षपशाकं नवौदनानि
पिच्छिलानि च
दधीनि ।
अल्पव्ययेन सुन्दरि ! ग्राम्यजनो
मिष्टमश्नाति ॥")
पिच्छयुक्तः ॥
(स्निग्धसरसपदार्थविशेषः । पेचल
इति भाषा ॥ यथा, साहित्यदर्पणे १० ।
५५ ।
"काले वारिधराणामपतितया नैव
शक्यते
स्थातुम् ।
उत्कण्ठितासि तरले ! नहि नहि
सखि !
पिच्छिलः पन्थाः ॥")

**पिच्छिलः**, पुं, (पिच्छं चूडास्त्यस्येति ।
पिच्छादि-
त्वात् इलच् ।) श्लेष्मान्तकवृक्षः । इति
राज-
निर्घण्टः ॥

**पिच्छिलकः**, पुं, (पिच्छिलः सन् कायतीति । कै
+
कः ।) धन्वनवृक्षः । इति राजनिर्घण्टः
॥

**पिच्छिलच्छदा**, स्त्री, (पिच्छिलश्छदो यस्याः ।)
उपोदकी । इति राजनिर्घण्टः ॥

**पिच्छिलत्वक्**, [च्] पुं, (पिच्छिला त्वग् यस्य ।)
नागरङ्गवृक्षः । इति त्रिकाण्डशेषः ॥
धन्वन-
वृक्षः । इति रत्नमाला ॥

**पिच्छिलसारः**, पुं, (पिच्छिलः सारो यस्य ।)
मोचरसः । इति राजनिर्घण्टः ॥

**पिच्छिला**, स्त्री, (पिच्छा + इलच् । ततष्टाप् ।)

"पश्यानुरूपमिन्दिन्दिरेण माकन्दशेखरो मुखरः ।
अपि च पिचुमन्दमुकुले मौकुलिकुलमाकुलं मिलति ॥")

**पिचुमर्द्दः**, पुं, (पिचुं कुष्ठविशेषं मर्द्दयति मृद्नातीति वा । मृद् + अण् ।) निम्बवृक्षः । इत्यमरः । २ । ४ । ६२ ॥ (यथा, देवीभागवते । ३ । १० । १२ ।
"असतामुपकाराय दुर्ज्जनानां विभूतयः ।
पिचुमर्द्दः फलाढ्योऽपि काकैरेवोपभुज्यते ॥"
पर्य्यायोऽस्य यथा, वैद्यकरत्नमालायाम् ।
"कैटर्य्यः पिचुमर्द्दश्च निम्बोऽरिष्टो वरत्वचा ।
दर्द्दुघ्नो हिङ्गुनिर्य्यासः सर्व्वतोभद्र इत्यपि ॥")

**पिचुलः**, पुं, (पिचुं लातीति । ला + कः ।) झायुकः । इज्वलः । जलवायसः । इति मेदिनी । ले, ११२ ॥ तूलः । इत्यमरटीकायां सारसुन्दरी ॥

**पिच्छबाणः**, पुं, (पिच्छं बाण इव यस्य ।) श्येनपक्षी । इति राजनिर्घण्टः ॥

**पिच्छा**, स्त्री, (पिच्छ + अजादित्वात् टाप् ।) शाल्मलीवेष्टः । इत्यमरः । २ । ४ । ४७ ॥
(अस्याः पर्य्यायो यथा, --
"निर्य्यासः शाल्मलेः पिच्छा शाल्मली वेष्टकोऽपि च ।
मोचास्रावो मोचरसो मोचनिर्य्यास इत्यपि ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
पूगः । छटा । कोषः । मोचा । भक्तसम्भूतमण्डम् । पङ्क्तिः । अश्वपदामयः । इति मेदिनी । छे, ४ ॥ चोलिका । फणिलाला । इति हारावली । २३० ॥ शिंशपावृक्षः । इति शब्दचन्द्रिका ॥

**पिच्छिका**, स्त्री, (पिच्छं मयूरवर्हं अस्त्यत्रेति । पिच्छ + ठन् ।) चामरविशेषः । यथा । "पिच्छिकां भ्रामयित्वा बहुविधं हास्यं कृत्वा पणमहैं दस्म चरणे इदं अलिं अपिणा कुणमस्म ।"
इति रत्नावलीनाटके ४ अङ्कः ॥

**पिच्छितिका**, स्त्री, शिंशपा । इति शब्दचन्द्रिका ॥
(विवृतिरस्याः शिंशपाशब्दे ज्ञातव्या ॥)

**पिच्छिलं**, त्रि, (पिच्छा भक्तसम्भूतमण्डं अस्त्यस्येति । पिच्छादित्वात् इलच् ।) भक्तमण्डपोतिका । शिंशपा । (अस्याः पर्य्यायो यथा,
वैद्यकरत्नमालायाम् ।
"पिङ्गला पिच्छिला वीरा कृष्णसारा च शिंशपा ॥")
शाल्मलिः । (अस्याः पर्य्यायो यथा, --
"शाल्मलिस्तु भवेन्मोचा पिच्छिला पूरणीति च ।
रक्तपुष्पा स्थिरायुश्च कण्टकाढ्या च तूलिनी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
सिन्धुभेदः । इति मेदिनी । ले, ११५ । कोकिलाक्षः । वृश्चिकाक्षुपः । शूलीतृणम् । अतसी ।
इति राजनिर्घण्टः ॥ कच्वी । इति शब्दचन्द्रिका ॥

**पिज**, इ क भाषट्टार्थे । इति कविकल्पद्रुमः ॥
(चुरां-परं-अकं-सकं च-सेट् ।) इ क पिञ्ज्ययति । भाः दीप्तिः । षट्टार्थो निकेतनहिंसाबलदानानि । इति दुर्गादासः ॥

**पिज**, इ ल ङ वर्णपूजयोः । इति कविकल्पद्रुमः ॥
(अदां-आत्मं-अकं-सकं च-सेट् ।) इ, पिञ्ज्यते ।
ल ङ, पिङ्क्ते । इति दुर्गादासः ॥

**पिञ्जं**, क्ली, (पिञ्ज बले + भावे घञ् ।) बलम् ।
व्याकुले, त्रि । इति मेदिनी । जे, १३ ॥

**पिञ्जः**, पुं, (पिञ्ज वधे + भावे घञ् ।) वधः । इत्यमरः । २ । ८ । ११५ ॥ कर्पूरभेदः । इति राजनिर्घण्टः ॥

**पिञ्जटः**, पुं, (पिञ्जयति नेत्रं दूषयतीति । पिजि +

| | | |
|---|---|---|
| | युक्तम् । इति रायमुकुटः ॥ सरसव्यञ्जनादि । इति भरतः ॥ सूपादि । इति रमानाथः । स्निग्धसूपादि । इति भानुदीक्षितः ॥ मण्ड-युक्तभक्तम् । जलयुक्तव्यञ्जनम् । इति नील-कण्ठः ॥ तत्पर्य्यायः । विजिलम् २ । इत्यमरः । २ । ९ । ४६ ॥ विजयिनम् ३ विजिनम् ४ विज्ज- | अटन् ।) नेत्रमलम् । पिँचुटि इति भाषा ॥ यथा, शब्दरत्नावल्याम् । “दूषीका दूषिका दूषिः पिञ्जेटपिञ्जटावपि ॥” |

**पिञ्जनं**, क्ली, (पिञ्ज्यतेऽनेनेति । पिजि स्फोटने +
करणे ल्युट् ।) कार्पासस्फोटनधनुः । तत्पर्य्यायः ।
विहननम् २ तूलस्फोटनकार्म्मुकम् ३ । इति
हेमचन्द्रः । ३ । ५७६ ॥

**पिञ्जरं**, क्ली, (पिजि दीप्तौ वर्णे वा + बाहुलकात्
अरः । इत्युज्ज्वलदत्तः । ३ । १३१ ।) हरि
तालम् । इत्यमरः । २ । ९ । १०३ ॥ स्वर्णम् ।
इति मेदिनी । रे, १८५ ॥ नागकेशरम् । इति
राजनिर्घण्टः ॥ पक्ष्यादिबन्धनगृहम् । कायास्थि-
बृन्दम् । इत्यमरटीकायां रामाश्रमः ॥

**पिञ्जरः**, पुं, (पिजि + अरः ।) अश्वभेदः । पीत-
रक्तवर्णः । इति हेमचन्द्रः ॥ (सुमेरुपश्चिम-
पार्श्वस्थपर्व्वतविशेषः । यथा, मार्कण्डेये । ५५ । ९ ।
"पिञ्जरोऽथ महाभद्रः सुरसः कपिलो मधुः ॥")
पीते, त्रि । इति मेदिनी । रे, ११५ ॥ (यथा,
आर्य्यासप्तशत्याम् । ३९१ ।
"प्रियया कुङ्कुमपिञ्जरपाणिद्वययोजनाङ्कितं वासः ।
प्रहितं मां याच्त्राञ्जलिसहस्रकिरणाय शिक्ष-
यति ॥")

**पिञ्जरकं**, क्ली, (पिञ्जरमेव । स्वार्थे कन् ।) हरि-
तालम् । इति राजनिर्घण्टः ॥ (पुं, नाग-

**पिञ्जोला**, स्त्री, (पिञ्जयतीति । पिजि + बाहुलकात्
ओलः ।) पत्रकाहला । पत्रशब्दः । इति
हारावली । २०७ ॥

**पिट**, संहतौ । ध्वनौ । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-सकं-अकंच-सेट् ।) पेटति जनः किञ्चि-
द्राशीकरोति शब्दायते वा । इति
दुर्गादासः ॥

**पिटं**, क्ली, (पेटति संहतो भवतीति । पिट +
कः ।) चालः । इति त्रिकाण्डशेषः ॥

**पिटः**, पुं, (पेटति द्रव्यान्तरैः संहतो भवतीति ।
पिट सहतौ + कः ।) पेटः । इति धरणिः ॥
पेटारा इति भाषा ॥

**पिटकः**, पुं, क्ली, (पेटतीति । पिट् + क्वुन् ।) वंश-
वेत्रादिमयसमुद्गकः । पेटारी इति पेटा इति
पेडा इति च ख्यातः । तत्पर्य्यायः । पेटकः २
पेडा ३ मञ्जूषा ४ । इत्यमरः । २ । १० । ३० ॥
आद्यौ स्वल्पपेटिकायाम् । इति स्वामी ॥ पेटः ५
पेटिका ६ तरिः ७ तरी ८ मञ्जुषा ९ पेडिका १० ।
इति शब्दरत्नावली ॥ (यथा, मार्कण्डेये ।
५० । ८६ ।
"कुद्दालदात्रपिटकास्तद्वत् स्थाल्यादिभाज-
नम् ॥")
विस्फोटे, त्रि । इति मेदिनी । के, १२० ॥ (देहे-
ऊर्व्वोर्यानाङ्गनालाभं जान्वोः शत्रुजनात् क्षतिम् ।
शस्त्रेण जङ्घयोर्गुल्फेऽध्वबन्धक्लेशदायिनः ॥
स्फिक्पार्ष्णिपादजाता धननाशागम्यगमनमध्वानम् ।
बन्धनमङ्गुलिनिचये-ऽङ्गुष्ठे च ज्ञातिलोकतः पूजाम् ॥
उत्पातगण्डपिटका दक्षिणतो वामतस्त्वभीघाताः ।
धन्या भवन्ति पुंसां तद्विपरीतास्तु नारीणाम् ॥
इति पिटकविभागः प्रोक्त आ मूर्द्धतोऽयं
व्रणतिलकविभागोऽप्येवमेव प्रकल्प्यः ।
भवति मशकलक्ष्मावर्त्तजन्मापितद्व-
न्निगदितफलकारि प्राणिनां देहसंस्थम् ॥")

**पिटङ्काशः**, पुं, पर्व्वतोर्म्मिमत्स्यः । इति भूरि-
प्रयोगः ॥

**पिटङ्कोकी**, स्त्री, इन्द्रवारुणी । इति रत्नमाला ॥

**पिटाकः**, पुं, मुनिविशेषः । इत्युणादिकोषः ॥

**पिट्टकं**, क्ली, (किट्टकं पृषोदरादित्वात् कस्य पः ।)
दन्तकिट्टकम् । इति शब्दरत्नावली ॥

**पिठ**, क्लिशि । वधे । इति कविकल्पद्रुमः ॥ (भ्वां-
परं-अकं-वधे सकं-सेट् ।) ओष्ठ्यवर्गाद्यादिः ।
पेठति । पिपिठतुः । क्लिशि दुःखानुभवे । इति
दुर्गादासः ॥

**पिठरं**, क्ली, (पिठं रातीति । रा + कः ।) मुस्ता ।
मन्थानदण्डः । इति मेदिनी । रे, १८४ ॥

**पिठरः**, पुं, (पिठ्यते क्लिश्यतेऽनेनेति । पिठ +
करन् ।) गृहभेदः ॥ तत्पर्य्यायः । कुद्रङ्कः २
उद्घाटः ३ । इति त्रिकाण्डशेषः ॥ (यथा,
अर्य्यासप्तशत्याम् । ५५२ ।
"विद्युज्ज्वालावलयितजलधरपिठरोदराद्विनिर्य्यान्ति ॥")
स्थाली । इत्यमरः । २ । ९ । ३१ ॥ (यथा,
महाभारते । ३ । ३ । ७२ ।
"गृह्णीष्व पिठरं ताम्रं मया दत्तं नराधिप ! ।

विशेषः । यथा, महाभारते । १ । ३५ । ६ ।
"नागस्तथा पिञ्जरक एलापत्रोऽथ वामनः ॥")

**पिञ्जलं**, क्ली, (पिजि हिंसायां वर्णे च + कलच् ।)
कुशपत्रम् । हरितालम् । इति धरणिः ॥

**पिञ्जलः**, पुं, (पिजि + कलच् ।) अत्यन्तव्याकुल-
सैन्यादिः । इत्यमरः । २ । ८ । ९९ ॥

**पिञ्जली**, स्त्री, (पिञ्जल + स्त्रियां ङीष् ।) कुशा-
न्तरवेष्टितप्रादेशमात्रसाग्रकुशपत्रद्वयम् । अस्या
नामान्तरं पवित्रम् । यथा, --
"अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥
एतदेव हि पिञ्जल्या लक्षणं समुदाहृतम् ॥"
इति छन्दोगपरिशिष्टम् ॥

**पिञ्जा**, स्त्री, (पिञ्ज्यते स्फोट्यते इति । पिञ्ज +
गुरोश्चेत्यः । ततष्टाप् ।) तूलम् । हरिद्रा ।
इति त्रिकाण्डशेषः ॥ छडी । छडा इति भाषा ॥
यथा, शब्दमालायाम् ।
"प्रोत्फलः सिंहला स्थानश्छडी पिञ्जा छटापि च ॥"

**पिञ्जानं**, क्ली, स्वर्णम् । इति राजनिर्घण्टः ॥

**पिञ्जिका**, स्त्री, (पिञ्जयतीति । पिजि + ण्वुल् ।
टापि अत इत्वम् ।) तूलनालिका । इति
त्रिकाण्डशेषः ॥ पाँइज इति भाषा ॥

**पिञ्जूलं**, क्ली, (पिञ्जयतीति । पिजि + "खर्जि-

स्थानभेदेन जातस्यास्य शुभाशुभमुक्तम् । यथा,
बृहत्संहितायाम् । ५२ । १ -- १० ।
"सितरक्तपीतकृष्णा विप्रादीनां क्रमेण पिटका
ये ।
ते क्रमशः प्रोक्तफला वर्णानामग्रजादीनाम् ॥
सुस्निग्धव्यक्तशोभाः शिरसि धनचयं मूर्द्धिर्न-
सौभाग्यमाराद्
दौर्भाग्यं भ्रूयुगोत्थाः प्रियजनघटनामाशु दुःशी-
लताञ्च ।
तन्मध्योत्थाश्च शोकं नयनपुटगता नेत्रयोरिष्ट-
दृष्टिं
प्रव्रज्यां शङ्खदेशेऽश्रुजलनिपतनस्थानगाश्चाति
चिन्ताम् ॥
घ्राणागण्डे वसनसुतदाश्चोष्ठयोरन्नलाभं
कुर्य्युस्तद्वच्चिबुकतलगा भूरि वित्तं ललाटे ।
हन्वोरेवं गलकृतपदा भूषणान्यन्नपाने
श्रोत्रे तद्भूषणगणमपि ज्ञानमात्मस्वरूपम् ॥
शिरःसन्धिग्रीवाहृदयकुचपार्श्वोरसि गता
अयोघातं घातं सुततनयलाभं शुचमपि ।
प्रियप्राप्तिं स्कन्धेऽप्यटनमथ भिक्षार्थमसकृद्-
विनाशं कक्षोत्था विदधति धनानां बहु सुखम् ॥
दुःखशत्रुनिचयस्य विघातं
पृष्ठबाहुयुगजा रचयन्ति ।
संयमञ्च मणिबन्धनजाता
भूषणाद्यमुपबाहुयुगोत्थाः ॥
धनाप्तिं सौभाग्यं शुचमपि कराङ्गुल्युदरगाः

यावत् वर्त्स्यति पाञ्चाली पात्रेणानेन सुव्रत ! ॥"
अग्निविशेषः । यथा, हरिवंशे । १७८ । ३३ ।
"पिठरः पतगः स्वर्गश्चागाधो भ्राज एव च ।
स्वधाकाराश्रयाः पञ्च अयुध्यंस्तेऽपि चाग्नयः ॥"
दानवविशेषः । यथा, महाभारते । २ । ९ । १३ ।
"घटोदरो महापार्श्वः क्रथनः पिठरस्तथा ॥")

**पिठरी**, स्त्री, (पिठर + स्त्रियां ङीष् ।) स्थाली ।
इत्यमरटीकायां रायमुकुटः ॥

**पिड**, इ क संहतौ । इति कविकल्पद्रुमः ॥ (चुरां-
परं-सकं-सेट् ।) इ क, पिण्डयति । संहतिः
राशीकरणम् । इति दुर्गादासः ॥

**पिड**, इ ङ संहतौ । इति कविकल्पद्रुमः ॥ (भ्वां
आत्मं-अकं सेट् । सकं इति केचित् ।) इ
पिण्ड्यते । ङ, पिण्डते । इति दुर्गादासः ॥

**पिडकः** पुं, (पीडयतीति । पीड + ण्वुल् । निपा-
तनात् साधुः ।) स्फोटकः । इति हेमचन्द्रः । ३ ।
१३० ॥

| | | |
|---|---|---|
| पिञ्ज्यादिभ्य ऊरोलचौ ।” उणां ४ । ९० । इति ऊलच् ।) वर्त्तिका । इत्युणादिकोषः ॥<br>**पिञ्जूषः**, पुं, (पिञ्जयति हिनस्ति कर्णौ इति । पिजि + बाहुलकात् ऊषन् ।) कर्णमलम् । इति हेमचन्द्रः । २ । २९६ ॥<br>**पिञ्जेटः**, पुं, (पिञ्जटः । पृषोदरादित्वात् साधुः ।) नेत्रमलम् । इति शब्दरत्नावली ॥ | सुपानान्नं नाभौ तदध इह चौरैर्धनहृतिम् ।<br>धनं धान्यं घस्तौ युवतिमथ मेढ्रे सुतनयान्<br>धनं सौभाग्यं वा गुदवृषणजाता विदधति ॥ | |

**पिडका**, स्त्री, (पीडयतीति । पीड + ण्वुल् + टाप् ।
निपातनात् साधुः ।) स्फोटकविशेषः ।
प्रमे-
जहा सा दशविधा । यथा, --
“शराविका कच्छपिका जालिनी
विनतालजी ।
मसूरिका सर्षपिका पुत्त्रिणी च विदारिका
।
विद्रधिश्चेति पिडकाः प्रभेहोपेक्षया दश
॥”
तासां प्रत्येकलक्षणं यथा, --
“सन्धिमर्म्मसु जायन्ते मांसलेषु च
धामसु ।
अन्तोन्नता च तद्रूपा निम्नमध्या
शराविका ॥ १ ॥
सदाहा कूर्म्मसंस्थाना ज्ञेया कच्छपिका
बुधैः । २ ।
जालिनी तीव्रदाहार्त्तिर्मांसजालसमावृता
॥ ३ ॥
अवगाढरुजा क्लेदा पृष्ठे वाप्युदरेऽपि वा
।
महती पिडका नीला विनता नाम सा
स्मृता ॥ ४ ॥
रक्तासिता स्फोटचिता दारुणा त्वलजी
भवेत् । ५ ।
मसूरफलसंस्थाना विज्ञेया सा मसूरिका
॥ ६ ॥
गौरसर्षपसंस्थाना तत्प्रमाणा च सर्षपी ।
७ ।
महत्यल्पचिता ज्ञेया पिडका चापि
पुत्त्रिणी ॥ ८ ॥
विदारी कन्दवद्वृत्ता कठिना च विदारिका
। ९ ।
विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका तु सा
॥” १० ॥
कुष्ठपिडका यथा, --
“कण्डूर्विपूयकश्चैव कुष्ठे शोणितसंश्रिते ।
बाहुल्यं वक्त्रशोषश्च कार्कश्यं
पिडकोद्गमः ॥” * ॥
पिडकाविशेषो यथा, --
“यवाकारा सुकठिना ग्रथिता
मांससंश्रिता ।
विसर्पवत् सर्पति यः शोथस्तनुरपाकवान् ।
दाहज्वरकरः पित्तात् स ज्ञेयो जालगर्दभः ॥ ९ ॥
पिडकामुत्तमाङ्गस्थां वृत्तामत्युग्ररुग्ज्वराम् ।
सर्व्वात्मिकां सर्व्वलिङ्गां जानीयादिरिवेल्वि-
काम् ॥ १० ॥
बाहुपार्श्वांसकक्षेषु कृष्णस्फोटां सवेदनाम् ।
पित्तप्रकोपसम्भूतां कक्षामित्यभिनिर्द्दिशेत् ॥ ११
॥
एकामेतादृशीं दृष्ट्वा पिडकां स्फोटसन्निभाम् ।
त्वग्गतां पित्तकोपेन गन्धनामां प्रचक्षते ॥ १२ ॥
कक्षभागेषु ये स्फोटा जायन्ते मांसदारुणाः ।
अन्तर्द्दाहज्वरकरा दीप्तपावकसन्निभाः ॥
सप्ताहाद्द्वादशाहाद्वा पक्षाद्वा घ्नन्ति मानवम् ।
तामग्निरोहिणीं विद्यादसाध्यां सन्निपाततः ॥ १३
॥
नखमांसमधिष्ठाय वातः पित्तञ्च देहिनाम् ।
कुरुते दाहपाकौ च व्याधिन्तं चिप्यमादिशेत् ॥
तदेवाल्पतरैर्द्दोषैः कुनखं परुषं वदेत् ॥ १४ ॥
गम्भीरामल्पसंरम्भां सवर्णामुपरिस्थिताम् ।
पादस्यानुशयीं तान्तु विद्यादन्तःप्रपाकिणीम् ॥
१५
विदारीकन्दवद्वृत्तां कक्षावङ्क्षणसन्धिषु ।
विदारीति च तां विद्यात् सर्व्वजां सर्व्वलक्ष-
णाम् ॥” १६ ॥
इति माधवकरः ॥

**पिण्डं**, क्ली, पुं, (पिण्डते संहतो भवतीति । पिडि
संहतौ + अच् । पिण्ड्यते राशोक्रियते इति ।
कर्म्मणि घञ् वा ।) आजीवनम् । अयः ।
इति मेदिनी । डे, १९ ॥ श्राद्धशेषद्रव्यनिर्म्मित-
बिल्वफलाकारपित्रुद्देश्यकदेयान्नम् । यजुर्व्वेदिनां
पिण्डशब्दो नपुंसकलिङ्गेन प्रयुज्यते । यथा, --
“अवनिक्तं पिण्डं दद्यादसावेतत्त इति श्राद्ध-
विवेकधृतपिण्डपितृयज्ञीयकात्यायनवचनेपिण्ड-
विशेषणे एतदिति नपुंसकनिर्द्देशात् भाषेतैतच्च
वै पिण्डं यज्ञदत्तस्य पूरकमिति ऋष्यशृङ्गवचने-
ऽपि तथा दर्शनाच्च । छन्दोगानां पिण्डशब्दः
पुंलिङ्गेन प्रयुज्यते । दर्भेषु मधु मधु मध्वित्यक्ष-
न्नमी मदन्त इति जपित्वा त्रींस्त्रीन् पिण्डान्
दद्यादिति गोभिलसूत्रे पिण्डानिति पुंलिङ्ग-
निर्द्देशात् ।” इति श्राद्धतत्त्वम् ॥ * ॥ गयादा-
वात्मपिण्डदानविधिर्यथा, --
“गयान्तं पिण्डदानञ्च गयान्तं तीर्थमेव च ।
“द्वौ चास्य पिण्डावधरेण कण्ठा-
दजातरोमौ सुमनोहरौ च ॥”)
अगारैकदेशः । देहमात्रम् । (यथा, रघुः ।
२ । ५७ ।
“एकान्तविध्वंसिषु मद्विधानां
पिण्डेष्वनास्था खलु भौतिकेषु ॥”)
निवापः । (यथा, मनुः । ३ । २१५ ।
“त्रींस्तु तस्माद्धविःशेषात् पिण्डान् कृत्वा समा-
हितः ।
औदकेनैव विधिना निर्व्वपेद्दक्षिणामुखः ॥”)
गोलः । सिह्लकः । ओड्रपुष्पम् । इति मेदिनी ।
डे, १९ ॥ बृन्दम् । कवलः । इति हेमचन्द्रः ॥
(यथा, मनुः । ११ । २१७ ।
“एकैकं ह्रासयेत् पिण्डं कृष्णे शुक्ले च वर्द्धयेत्
॥”)
गजकुम्भः । इत्यमरः । २ । ८ । ३७ ॥
मदनवृक्षः ।
इति राजनिर्घण्टः ॥ (यथा, भावप्रकाशे पूर्ब्ब-
खण्डे प्रथमे भागे ।
“मदनश्छर्द्दनः पिण्डो नटः पिण्डीतकस्तथा ।
करहाटो मरुवकः शल्यको विषपुष्पकः ॥”
किलाटः । यथा, वैद्यकरत्नमालायाम् ।
“किलाटः कुर्च्चिका पिण्डः -- ॥”)
निवापस्य पितृदेयस्य विधिर्यथा, --
“यावदन्नमुपादाय हविषोऽर्भकमर्भकम् ।
चरुणा सह सन्नीय पिण्डदानमुपक्रमेत् ॥
श्राद्धार्थाद्धविषोऽन्नादेः सकाशात् यावद्भक्ष्य-
मोदनव्यञ्जनादि ततोऽल्पाल्पं गृहीत्वा यदग्नौ
करणशेषेण सह सन्नीय मिश्रीकृत्य पिण्डदान-
मारभेतेत्यर्थः ।
मध्वाज्यतिलसंयुक्तं सर्व्वव्यञ्जनसंयुतम् ।
उष्णमादाय पिण्डन्तु कृत्वा विल्वफलोपमम् ।
दद्यात् पितामहादिभ्यो दर्भमूलाद्यथाक्रमम् ॥
अत्र पितामहपदं पितृपरं वचनान्तरैकवाक्य-
त्वात् ।
सपित्रे प्रथमं पिण्डं दद्यादुच्छिष्टसन्निधौ ।
पितामहाय चैवाथ तत्पित्रे च ततः परम् ॥
दर्भमूले लेपभुजस्तर्पयेल्लेपघर्षणैः ।
पिण्डैर्मातामहांस्तद्वद्गन्धमाल्यादिसंयुतैः ॥
प्रीणयित्वा द्विजाग्र्याणां दद्यादाचमनन्ततः ॥”
इति श्राद्धतत्त्वम् ॥ * ॥
अन्नाद्यभावे फलादिनापि तस्य कर्त्तव्यत्वं

पिडका श्लेष्मवाताभ्यां यवप्रख्येति सोच्यते ॥
घनामवक्रां पिडकामुन्नतां परिमण्डलाम् ।
अन्त्रालजीमल्पपूयां तां विद्यात् कफवातजाम् ॥ १
विवृतास्यां महादाहां पक्कोडुम्बरसन्निभाम् ।
परिमण्डलां पित्तकृतां विवृतां नाम तां विदुः ॥ २ ॥
ग्रथिताः पञ्च वा षड् वा दारुणाः कच्छपो-
पमाः ।
कफानिलाभ्यां पिडका ज्ञेयाः कच्छपिका बुधैः ॥ ३ ॥
ग्रीवांसकक्षाकरपाददेशे
सन्धौ गले वा त्रिभिरेव दोषैः ।
ग्रन्थिः सवल्मीकवदक्रियाणां
जातः क्रमेणैव गतः प्रवृद्धिम् ॥
मुखैरनेकैः स्रुतितोदवद्भि-
र्विसर्पवत् सर्पति चोन्नताग्रैः ।
वल्मीकमाहुर्भिषजो विकारं
निष्प्रत्यनीकं चिरजं विशेषात् ॥ ४ ॥
पद्मकर्णिकवन्मध्ये पिडकाभिः सदाचिताम् ।
इन्द्रवृद्धान्तु तां विद्याद्वातपित्तोत्थितां भिषक् ॥ ५ ॥
मण्डलं वृत्तमुत्सन्नं सरक्तं पिडकाचितम ।
रुजाकरीं गर्द्दभिकां तां विद्याद्वातपित्त-जाम् ॥ ६ ॥
वातश्लेष्मसमुद्भूतः श्वयथुहनुसन्धिजः ।
स्थिरो मन्दरुजः स्निग्धो ज्ञेयः पाषाण-गर्दभः ॥ ७ ॥
कर्णस्याभ्यन्तरे जातां पिडकामुग्रवेदनाम् ।
स्थिरां पनसिकान्तान्तु विद्यादन्तःप्रपाकि-
णीम् ॥ ८ ॥

पञ्चकान्तं कामरूपं पिच्छिलान्तं सरित् शुभे ॥
जनार्द्दनस्य हस्ते तु पिण्डं दद्यात् स्वकं नरः ।
विरजे च तथा चाश्वकर्णे रामे च सोमके ॥
जीवत्पिण्डप्रदानेन अल्पायुर्जायते नरः ।
यत्रागम्ये महाक्षेत्र स्वकं पिण्डं ददेत्तु यः ।
मासद्वयाधिकं वर्षमायुषो वर्द्धते क्रमात् ॥”
इति योगिनीयन्त्रे प्रथमतमे २ भागे ५ पटलः ॥
अन्यत् गयाशब्दे द्रष्टव्यम् ॥

**पिण्डः**, पुं, (पिडि संहतौ + अच् ।) वोलः ।

(अस्य पर्य्यायो यथा, वद्यकरत्नमालायाम् ।
“विद्वान् गोलः पिण्डकश्च पिण्डो वोलो रसोरसः ॥)
बलम् । सान्द्रम् । देहैकदेशः । (यथा, महा-भारते । ३ । ११२ । ३ ।

यथा, --
“ऐङ्गुदं वदरोन्मिश्रं पिण्याकं दर्भसंस्तरे ।
न्यूप्य पिण्डं सतो राम इदं वचनमब्रवीत् ॥
इदं भुङ्क्ष्व महाराज ! प्रीतो यदशना वयम् ।
यदन्नाः पुरुषा राजंस्तदन्नाः पितृदेवताः ॥”
इत्ययोध्याकाण्डम् ॥ * ॥
पूरकपिण्डविधिर्य्यथा, --
“ततश्चोत्तरपूर्ब्बस्यामग्निं प्रज्वालयेद्दिशि ।
तण्डुलप्रसूतिं तत्र प्रक्षाल्य द्विः पचेत् स्वयम् ॥
सपवित्रैस्तिलैर्म्मिश्रां केशकीटविवर्जिताम् ।
द्वारोपान्ते ततः क्षिप्त्वा शुद्धां वा गौरमृत्तिकाम् ॥
तत्पृष्ठे प्रस्तरेद्दर्भान् याम्याग्रान् देशसम्भवान् ।

ततोऽवनेजनन्दद्यात् संस्मरन् गोत्रनामनी ॥
तिलसर्पिर्मधुक्षीरैः सञ्चितं तप्तमेव हि ।
दद्यात् प्रेताय पिण्डन्तु दक्षिणाभिमुखस्थितः ॥
फलमूलगुडक्षीरतिलमिश्रन्तुकुत्रचित् ।
अर्घ्यैः पुष्पैस्तथा दीपैर्धूपैस्तोयैः सुशीतलैः ॥
ऊर्णातन्तुमयैः शुद्धैर्वासोभिः पिण्डमर्च्चयेत् ।
प्रयाति यावदाकाशं पिण्डाद्बास्पमयी शिखा ॥
तावत्तु संमुखस्तिष्ठेत् सर्व्वं तोये ततः क्षिपेत् ।
दिवसे दिवसे देयः पिण्ड एवं क्रमेण तु ॥
सद्यःशौचेऽपि दातव्याः सर्व्वेऽपि युगपत्तथा ।
त्र्यहाशौचे प्रदातव्याः प्रथमे त्वेक एव हि ॥
द्वितीयेऽहनि चत्वारस्तृतीये पञ्च चैव हि ।
एकस्तोयाञ्जलिस्त्वेवं पात्रमेकञ्च दीयते ॥
द्वितीये द्वौ तृतीये त्रीन् चतुर्थे चतुरस्तथा ।
पञ्चमे पञ्च षष्ठे षट् सप्तमे सप्त एव च ॥
अष्टमेऽष्टौ च नवमे नवैव दशमे दश ।
येन स्युः पञ्चपञ्चाशत्तोयस्याञ्जलयः क्रमात् ॥
तोयपात्राणि तावन्ति संयुक्तानि जलादिभिः ॥"
इति शुद्धितत्त्वम् ॥ * ॥
गयायामात्मपिण्डदानप्रमाणंयथा, --
"स्वकर्म्मधर्म्मयोगेन धनमुच्चावचं बहु ।
उपार्जयित्वा प्रययौ गयातीर्थमनुत्तमम् ॥
पिण्डनिर्व्वपणं तत्र प्रेतानामनुपूर्ब्बशः ।
चकार स्वपितृणाञ्च दायादानामनन्तरम् ॥
आत्मनश्च महाबुद्धिर्महावेद्यां तिलैर्विना ।
पिण्डनिर्व्वपणं चक्रे तथान्येषाञ्च गोत्रिणाम् ॥
एवं प्रदत्तेष्वथ वै पिण्डेषुं प्रेतभावतः ।
विमुक्तास्ते द्विज प्रेता ब्रह्मलोकं ततो गताः ॥"
इति वामने ७६ अध्यायः ॥

**पिण्डकं**, क्ली, (पिण्ड इव कायतीति । कै + कः ।) वोलम् । पिण्डमूलम् । इति राजनिर्घण्टः ॥

**पिण्डखर्ज्जूरः** पुं, (पिण्डवत् खर्ज्जूरः ।) स्वनामंख्यातखर्ज्जूरः । तत्पर्य्यायः । राजजम्बूः २ पिण्डी ३ । इति जटाधरः ॥

**पिण्डखर्ज्जूरी**, स्त्री, (पिण्डखर्ज्जूर + स्त्रियां ङीष् ।) पिण्डखर्ज्जूरः । तत्पर्य्यायः । दीप्या २ स्वपिण्डा ३ मधुरश्रवा ४ फलपुष्पा ५ स्वादुपिण्डा ६ हयभाक्षा ७ पिण्डखर्ज्जूरिका ८ । अस्या गुणाः । गौल्यत्वम् । हिमत्वम् । पित्तदाहार्त्तिश्वासभ्रमनाशित्वम् । वीर्य्यवृद्धिदत्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
"पिण्डखर्ज्जूरिका त्वन्या सा देशे पश्चिमे भवेत् ।
खर्जूरी गोस्तनाकारा परादद्वीपादिहागता ॥
जायते पश्चिमे देशे सा छोहोरेति कीर्त्त्यते ।
खर्जूरीत्रितयं शीतं मधुरं रसपाकयोः ॥
स्निग्धं रुचिकरं हृद्यं क्षतक्षयहरं गुरु ।
तर्पणं रक्तपित्तघ्नं पुष्टिविष्टम्भिशुक्रदम् ॥
कोष्ठमारुतकृद्बल्यं वान्तिवातकफापहम् ।
ज्वराभिघातक्षुत्तृष्णाकासश्वासनिवारकम् ॥
मदमूर्च्छामरुत्पित्तमद्योद्भूतगदान्तकृत् ।
महद्भिश्च गुणैरल्पा स्वल्पखर्जूरिका स्मृता ॥
खर्जूरीतरुतोयन्तु मदपित्तकरं भवेत् ।
वातश्लेष्महरं रुच्यं दीपनं बलशुक्रकृत् ॥"
अथ पिण्डखर्जूरीभेदः ।
"सुनेपाली तु मृदुला दलहीनफला च सा ।
सुनेपाली श्रमभ्रान्तिदाहमूर्च्छास्रपित्तहृत् ॥"
इति भावप्रकाशे पूर्ब्बखण्डे १ भागे ॥

**पिण्डगोसः**, पुं, (पिण्डवत् संहतो गोसः ।) गन्धरसः । इत्यमरटीकायां रमानाथः ॥

**पिण्डतैलकः**, पुं, (पिण्डवत् तैलं यस्य । कप् ।) तुरुस्कः । इति राजनिर्घण्टः ॥

**पिण्डदः**, पुं, (पिण्डं ददातीति । दा + कः ।) पिण्डदानकर्त्ता । यथा, --
"लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥"
इति शुद्धितत्त्वम् ॥
अपि च ।
"गाङ्गेनेह परां सिद्धिं प्राप्यन्ते वारिणा नराः ।
पैत्र्याः पश्चात् क्रियाः कार्य्याः सर्व्वाश्चैवौर्द्ध्वदेहिकाः ॥

करयुग्मभुक्तशेषं षोडशाधिकद्विशतहृतावशिष्टं तत् संख्यानं पिण्डपदसंज्ञं गृहस्य भवति ॥"
इति ज्योतिस्तत्त्वम् ॥

**पिण्डपादः**, पुं, (पिण्ड इव पादो यस्य ।) हस्ती । इति त्रिकाण्डशेषः ॥

**पिण्डपुष्पं**, क्ली, (पिण्ड इव पुष्पं पुष्पगुच्छो यस्य ।) अशोकपुष्पम् । (क्वचित् पुं । यथा, --
"अशोको हेमपुष्पश्च वञ्जुलस्ताम्रपल्लवः ।
कङ्केलिः पिण्डपुष्पश्च गन्धपुष्पो नटस्तथा ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
जवापुष्पम् । पद्मपुष्पम् । इति मेदिनी । पे, २७ ॥
तगरपुष्पम् । इति शब्दरत्नावली ॥

**पिण्डपुष्पकः**, पुं, (पिण्डपुष्पमिव प्रतिकृतिः । "इवे प्रतिकृतौ ।" ५ । ३ । ९६ । इति कन् ।) वास्तूकम् ।
इति शब्दमाला ॥ (वास्तूकशब्देऽस्य गुणादयो ज्ञातव्याः ॥)

**पिण्डफला**, स्त्री, (पिण्ड इव फलं यस्याः ।) कटुतुम्बी । इति जटाधरः ॥ (यथा, --
"स्विन्नस्य विम्लापनमेव कुर्य्याद‍ङ्गुष्ठलोहोपलवेणुदण्डैः ॥
विकङ्कतारग्वधकाकनन्ती
काकादनीतापसवृक्षमूलैः ।
आलेपयेत् पिण्डफलार्कभार्गी
करञ्जकालामदनैश्च विद्वान् ॥"
इति सुश्रुते चिकित्सितस्थानेऽष्टादशेऽध्याये ॥)

**पिण्डबीजकः**, पुं, (पिण्डवत् बीजानि यस्य । कप् ।) कर्णिकारवृक्षः । इति राजनिर्घण्टः ॥ (कर्णिकारशब्दे विवृतिरस्य ज्ञातव्या ॥)

**पिण्डमुस्तां**, स्त्री, (पिण्डवत् स्थूला मुस्ता ।) नागरमुस्ता । इति राजनिर्घण्टः ॥

**पिण्डमूलं**, क्ली, (पिण्डमिव मूलमस्य ।) गर्जरम् । मूलकभेदः । तत्पर्य्यायः । गजाण्डम् २ पिण्ड-

(गोलः । यथा, सुश्रुते शारीरस्थाने ३ अध्याये ।
"तृतीये (मासि) हस्तपादशिरसां पञ्च पिण्डकानि वर्त्तन्तेऽङ्गप्रत्यङ्गविभागश्च सूक्ष्मो
भवति ॥")

**पिण्डकः**, पुं, (पिण्ड इव कायतीति । कै + कः ।)

सिह्लनामगन्धद्रव्यम् । इत्यमरः । १ । ६ । १२८ ॥
(वोलः । अस्य पर्य्यायो यथा, --
"विद्वान् गोलः पिण्डकश्च पिण्डोवोलो रसोरसः ॥"
इति वैद्यकरत्नमालायाम् ॥)
पिशाचः । इति त्रिकाण्डशेषः ॥ पिण्डालुः ।
इति राजनिर्घण्टः ॥ (अस्य गुणा यथा, --
"पिण्डको वातलः श्लेष्मी ग्राही वृष्यो महा-
गुरुः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
पिण्ड + स्वार्थे कन् । कवलः । यथा, हरिवंशे ।
भविष्यपर्व्वणि । १० । २१ ।
"पयःपानं तथा कुर्व्वन् भक्षयन् दधिपिण्ड-
कम् ॥")

**पिण्डकन्दः**, पुं, (पिण्डाकारः कन्दः ।) पिण्डालुः ।

इति राजनिर्घण्टः ॥ (पिण्डालुशब्देऽस्य विशेषो
ज्ञातव्यः ॥)

क्रियां करोति यः पूर्ब्बां पितॄणां यश्च पिण्डदः ।
प्रायश्चित्तमचीर्णं तत् प्रायश्चित्ती भवेत्तु सः ॥"
इत्यग्निपुराणम् ॥

**पिण्डपदं**, क्ली, (पिण्डस्य संहतस्य पदम् ।) अङ्क-

विशेषः । यथा, --
"रूपाष्टकैर्विनिहतो भवनस्य बन्धः
कर्त्तुः स्वमृक्षमिह युग्मशरैकनिघ्नम् ।
एकीकृतं रसनिशाकरयुग्मभुक्त-
शेषं ततो भवति पिण्डपदं गृहस्य ॥
रूपाष्टकैरेकाशीत्या विनिहतः पूरितः भवनस्य
बन्धः दीर्घप्रस्तारमिलितहस्ताः स्वमृक्षं तत्-
संख्यानं युग्मशरैकनिघ्नं द्विपञ्चाशदुत्तरशत-
पूरितं एकीकृतं पूर्ब्बाङ्केण मिलितं रसनिशा-

कम् ३ पिण्डमूलकम् ४ । अस्य गुणाः । कटु-
त्वम् । उष्णत्वम् । गुल्मवातादिदोषनाशित्वञ्च
।
इति राजनिर्घण्टः ॥

**पिण्डलः**, पुं, (पिडि संहतौ + बाहुलकात् कलच् ।)

सेतुः । इति हारावली । १२९ ॥

**पिण्डसः**, पुं, (पिण्डेन परदत्तग्रासेन सनोति

जीवतीति । सन + डः ।) भिक्षाशी । भिक्षो-
पजीवी । इति शब्दमाला ॥

**पिण्डा**, स्त्री, (पिण्ड + टाप् ।) पिण्डायसम् । कस्तूरी-

भेदः । सा कुलत्थिकातः कियत्स्थूला । इति
राजनिर्घण्टः ॥ वंशपत्री । इति भावप्रकाशः ॥

**पिण्डातः**, पुं, (पिण्ड इव अतति सादृश्यमनुकरो-

तीति । अत + अच् ।) सिह्लकः । इति रत्न-
माला ॥

**पिण्डाभ्रं**, क्ली, (पिण्डवत् आभ्रं मेघजलसम्बन्धि-

द्रव्यम् ।) घनोपलः । इति शब्दमाला ॥

**पिण्डायसं**, क्ली, (पिण्डं संहतमायसम् ।)

तीक्ष्णायसम् । इति राजनिर्घण्टः ॥

**पिण्डारं**, क्ली, (पिण्डं संहतमृच्छतीति । ऋ +

"कर्म्मण्यण् ।" ३ । २ । १ । इत्यण् ।) फल-

शाकविशेषः। पिण्डारा इति हिन्दीभाषा।
अस्य गुणाः। शीतलत्वम्। बल्यत्वम्। पित्त-
नाशित्वम्। रुचिकारित्वम्। पाके लघुत्वम्।
विशेषेण विषशान्तिकरत्वञ्च। इति भावप्रकाशः॥

**पिण्डारः**, पुं, (पिण्डं ऋच्छतीति। ऋ + अण्।)

क्षपणकः। गोपः। महिषीरक्षकः। द्रुमभेदः।
इति मेदिनी। रे, १८५॥ विकङ्कतवृक्षः। इति
राजनिर्घण्टः॥

**पिण्डालुः**, पुं, (पिण्डवत् स्थूल आलुः।) कन्द-

गुडूची। कन्दभेदः। पेडालु इति हिन्दी-
भाषा। चुवडि आलु इति वङ्गभाषा। तत्-
पर्य्यायः। ग्रन्थिलः २ पिण्डकन्दः ३ ग्रन्थिः ४
रोमशः ५ रोमकन्दः ६ रोमालुः ७ ताम्बूल-
पत्रः ८ नानाकन्दः ९ पिण्डकः १०। अस्य
गुणाः। मधुरत्वम्। शीतत्वम्। मूत्रकृच्छ्रदाह-
शोषप्रमेहनाशित्वम्। वृष्यत्वम्। सन्तर्पणत्वम्।
गुरुत्वञ्च। इति राजनिर्घण्टः॥

**पिण्डालुकं**, क्ली, (पिण्डालुरिव प्रतिकृतिः। इवार्थे

कन्।) आलुविशेषः। गोल आलु इति गुड
आलु इति चुवडि आलु इति च भाषा। अस्य
गुणाः। कफहरत्वम्। गुरुत्वम्। वातप्रकोप-
णत्वञ्च। इति राजवल्लभः॥ (यथा, सुश्रुते।
१।४६।
"विदारीकन्दशतावरीविसमृणालशृङ्गाटक
कशेरुकपिण्डालुकमध्वालुकहस्त्यालुककाष्ठालुक
शङ्खालुकरक्तालुकेन्दीवरोत्पलकन्दप्रभृतीनि॥")

**पिण्डाह्वा**, स्त्री, (पिण्डां कस्तूरीविशेषमाह्वयते

स्पर्द्धते स्वगन्धेनेति। ह्वे + कः।) नाडीहिङ्गु।
इति राजनिर्घण्टः॥

**पिण्डिः**, स्त्री, (पिडि संहतौ + इन्।) पिण्डिका।

इत्यमरटीकायां रमानाथः॥

**पिण्डिका**, स्त्री, (पिण्डन्ते संहतानि भवन्ति

पिण्ड्यन्ते राशीक्रियन्ते वा अराणि यस्याम्।
पिण्ड + घञ्। गौरादित्वात् ङीष्। ततः कन्।
ह्रस्वश्च।) रथनाभिः। इत्यमरः। २।८।५६॥
सा रथचक्रमध्ये मण्डलाकारा यस्यां सर्व्वाणि
काष्ठान्यासज्यन्ते। इति रायमुकुटः॥ (पिण्डम्।
यथा, हारीते प्रथमस्थाने सप्तमेऽध्याये।

भागैस्त्रिभिस्तथा कण्ठं कण्ठपट्टस्तु
भागतः।
भागेन वृत्तपट्टस्तु शेषभागेन पट्टिकी॥
प्रचिन्त्यं भागमेकैकं जगती यावदेव तु।
निर्गमस्तु पुरस्तस्या यावद् विशेषपट्टिकाः
॥
पीठिकानान्तु सर्व्वासामेतत्
सामान्यलक्षणम्।
निःशेषाद्देवताभेदात् शृणुध्वं द्विजसत्तमाः
॥
स्थण्डिला वाथ वापी च यक्षी वेदी च
मण्डला।
पूर्णचन्द्रा च वज्री च पद्मा वार्द्धशशिस्तथा
॥
त्रिकोणा दशमी तासां संस्थानञ्च निबोधत
।
स्थण्डिला चतुरस्रा तु वर्जिता
मेखलादिभिः॥
वापी द्विमेखला ज्ञेया यक्षी चैव त्रिमेखला
।
चतुरस्रायतां वेदीं न तां लिङ्गेषु योजयेत्
॥
मण्डला वर्त्तुला या तु मेखलाभिर्गणप्रिया
।
रिक्ता द्विमेखला मध्ये पूर्णचन्द्रा तु सा
भवेत्॥
मेखलात्रयसंयुक्ता षडस्रा वज्रिका भवेत्।
षोडशास्रा भवेत् पद्मा किञ्चिद्ध्रस्वा च
मूलतः॥
तथैव धनुराकारा सार्द्धचन्द्रा प्रशस्यते।
त्रिशूलसदृशा तद्वत् त्रिकोणानूद्र्ध्वतो
मता॥
प्रागुदक्प्रवणा तद्वत्प्रशस्ता लक्षणान्विता
।
परिवेषस्त्रिभागेन निर्द्देशन्तत्र कारयेत्॥
विस्तारन्तत्प्रमाणन्तु मूले चाग्रे
तदूद्र्ध्वतः।
जलवाहश्च कर्त्तव्यस्त्रिभागेन सुशोभनः॥
लिङ्गस्यार्द्धत्रिभागेन स्थौल्येन
समधिष्ठिता।
मेखला तु त्रिभागेन खातं वै तत्प्रमाणतः
॥

**पिण्डिला**, स्त्री, (पिण्डिल + टाप्।) गोडुम्बा।

इति शब्दचन्द्रिका॥

**पिण्डी**, [न्] त्रि, (पिण्डोऽस्त्यस्येति। इनिः।)

शरीरी। यथा, --
"यथा सूर्य्यं विना भूमिर्गृहं
दीपविवर्ज्जितम्।
लिङ्गहीनो यथा पिण्डी जयश्रीस्त्वां विना
तथा॥"
इति जैमिनिभारते आश्वमेधिकपर्व्वणि
३८
अध्याये॥

**पिण्डी**, स्त्री, (पिण्डाकारोऽस्त्यस्या इति। अच्।

ततो ङीष्।) पिण्डीतगरः। अलावूः।
खर्ज्जूर-
विशेषः। इति मेदिनी। डे, २०॥
ज्ञाननिरूप-
णार्थकोपन्यासः। इति धरणिः॥
(पिण्डि +
कृदिकारादिति वा ङीष्।) पिण्डिका।
इत्यमर-
टीकायां रायमुकुटः॥ पिण्डम्। यथा, --
"नीताय तुरगायाशु भक्तपिण्डीं
सुगन्धिनीम्।
दद्यात् पुरोहितस्तत्र संमन्त्र्य
शान्तिमन्त्रकैः॥"
इति कालिकापुराणे ८६ अध्यायः॥

**पिण्डीतकः**, पुं, (पिण्डीं स्वल्पपिण्डं तनोतीति।

तन + अनेभ्योऽपीति डः। ततः संज्ञायां
कन्।)
मदनवृक्षः। इत्यमरः। २।४।५२॥
(अस्य पर्य्यायो
यथा, वैद्यकरत्नमालायाम्।
"मदनः श्वसनोराचो गोलः पिण्डीतकः
फलम्।
छर्द्दालो बिल्वपुष्पा च हरहाटस्तु
शल्यकः॥"
यथा च।
"पिण्डीतकस्य तु वराहविभावितस्य
मूलेषु कन्दशकलेषु च सौवहेषु।
तैलं कृतं गतिमपोहति शीघ्रमेतत्

"कांस्यपात्रे समुद्धृत्य परीक्षेत भिषग्वरः ।
शुद्धकर्म्मा स तल्लब्ध्वा श्वेतशाल्योदनस्य वा ॥
पिण्डिका तत्र संक्षिप्ता नान्यथा भातिसा पुनः ॥")
पिचिण्डिका । सा जानुनोऽधोमांसलप्रदेशः ।
इति हेमचन्द्रः ॥ पायेर डिम् इति भाषा ॥
(यथा, चरके सूत्रस्थाने ७ अध्याये ।
"पकाशयशिरःशूलं वातवर्च्चो निरोधनम् ।
पिण्डिकोद्वेष्टनाध्मानं पुरीषे स्याद्विधारिते ॥")
श्वेताम्लिः । इति राजनिर्घण्टः ॥ पीठः । यथा,
सूत उवाच ।
"पिण्डिकालक्षणं वक्ष्ये यथावदनुपूर्ब्बशः ।
पीठोच्छ्रायं यथावच्च भागान् षोडश कारयेत् ॥
भूमावकः प्रतिष्ठः स्याच्चतुर्भिर्जगतो मता ।
वृत्तो भागस्तथैकः स्यात् वृत्तपट्टस्य भागतः ॥
अथवा पादहीनन्तु शोभनं कारयेत् सदा ।
उत्तरस्थं प्रमाणतु प्रमाणादधिकं भवेत् ॥
स्थण्डिलायामथारोग्यं धनधान्यञ्च पुष्कलम् ।
गोप्रदा तु भवेत् यक्षी वेदी सम्पत्प्रदा भवेत् ॥
मण्डलायां भवेत् कीर्त्तिर्व्वरदा पूर्णचन्द्रिका ।
आयुःप्रदा भवेद्वज्री पद्मा सौभाग्यदायिनी ॥
पुत्त्रप्रदार्द्धचन्द्रा स्यात् त्रिकोणा शत्रुनाशिनी ।
देवस्य यजनार्थन्तु पिण्डिका दश कीर्त्तिताः ॥
शैले शैलमयीं दद्यात् पार्थिवे पार्थिवीन्तथा ।
दारुजे दारुजां कुर्य्यान्मिश्रे मिश्रान्तथैव च ॥
नान्ययोनिस्तु कर्त्तव्या सदा शुभफलेप्सुभिः ॥
अर्च्चायामसमं दैर्घ्यं लिङ्गायामसमं तथा ।
यस्य देवस्य या पत्नी तां पीठे परिकल्पयेत् ॥
एवमेतत् समाख्यातं समासात् पीठलक्षणम् ॥"
इति मत्स्यपुराणे पीठिकानुकीर्त्तनं २३६ अः ॥
(लिङ्गपीठम् । गौरीपट्टः । यथा, काशीखण्डे
बायुसंहितायामुत्तरखण्डे । २८ । ६ ।
"लिङ्गं पिण्डिकया सार्द्धं पञ्चगव्यैश्च शोधयेत् ॥")

**पिण्डितं**, त्रि, (पिडि + क्तः ।) गणितम् । घनम् ।
इति विश्वमेदिन्यौ ॥ (संहतः । यथा, वायुपुराणे ।
"अर्च्चिष्मान् पिण्डितशिखः सर्पिः काञ्चनसन्निभः ।
स्निग्धः प्रदक्षिणश्चैव वह्निः स्यात् कार्य्य-सिद्धये ॥")
गुणितम् । इति हेमचन्द्रः ॥ तुरुष्के, पुं । इति
राजनिर्घण्टः ॥

कन्देषु चामरवरायुधसाह्वयेषु ॥"
इति सुश्रुते चिकित्सितस्थाने सप्तदशेऽध्याये ॥)
तगरः । फणिज्झकः । इति विश्वः ॥

**पिण्डीतगरः**, पुं, (पिण्ड्या पुष्पावच्छेदे स्वल्पपिण्डेन
उपलक्षितस्तगरः ।) तगरविशेषः ।
तत्पर्य्यायः ।
कफवर्द्धनः २ । इति त्रिकाण्डशेषः ॥

**पिण्डीतगरकः**, पुं, (पिण्डीतगर + स्वार्थे संज्ञायां
वा कन् ।) तगरम् । इति राजनिर्घण्टः ॥

**पिण्डीतरुः**, पुं, (पिण्ड्या उपलक्षितस्तरुः ।)
महापिण्डीतरुः । इति राजनिर्घण्टः ॥

**पिण्डीपुष्पः**, पुं, (पिण्डीवत् पुष्पं पुष्पस्तवको
यस्य ।) अशोकवृक्षः । इति राजनिर्घण्टः ॥
(अशोकशब्देऽस्य विशेषो ज्ञेयः ॥)

**पिण्डीरः**, पुं, (पिण्डीवत् पिण्डाकाराणीत्यर्थः
फलानि ईरयतीति । ईर + णिच् + अण् ।)
दाडिमवृक्षः । इति त्रिकाण्डशेषः ॥
हिण्डीरः ।
इत्यमरटीकायां रायमुकुटः ॥ नीरसे, त्रि ।
इति हारावली । १६६ ॥

**पिण्डीशूरः**, पुं, (पिण्ड्यां पिण्डव्यापारे भोजने
एव शूरः अतिनिपुणः नान्यत्र कार्य्यादाविति
भावः ।) स्वगेहमात्रे वसन् परद्वेषी । तत्-
पर्य्यायः । गेहेनर्दी २ गेहेशूरः ३ । इति हेम-
चन्द्रः । ३ । १४१ ॥ (यथा, भट्टौ । ५ । ८५ ।
"राक्षसान् वटुयज्ञेषु पिण्डीशूरान्निरस्तवान् ।
यद्यसौ कूपमाण्डूकि ! तवैतावति कः स्मयः ॥")

| | | |
|---|---|---|
| | **पिण्डिलः**, पुं, (पिण्डवदाकृतिरस्त्यस्येति । पिण्ड + इलच् ।) सेतुः । इति त्रिकाण्डशेषः ॥ गणकः । इत्युणादिकोषः ॥ | |

**पिण्डोलिः**, स्त्री, भुक्तसमुज्झितः । इति हेम-
चन्द्रः । ३ । ९१ ॥

**पिण्या**, स्त्री, पण्यते स्तूयते रोगहन्तृत्वात् पण्या
पण ङ व्यवहृतौ स्तुतौ मूर्द्धन्यान्तः
तव्यानीयया
इति यः निपातनादत् इत् । पण्येति पठति
स्वामी । इति भरतः ॥ ज्योतिष्मती । इत्यमरः
॥
(ज्योतिष्मतीशब्देऽस्या विवृतिर्विज्ञेया ॥)

**पिण्याकः**, पुं, क्ली, (पिनष्टीति । पिषॄ संचूर्णने
+ "पिनाकादयश्च ।" उणां । ४ । १५ । इति
आकप्रत्ययेन निपातनात् साधुः ।) तिल-
कल्कः । (अस्य गुणाः यथा, --
"पिण्याको ग्लपनो रुक्षो विष्टम्भी दृष्टिदूषणः
॥"
इति वाभटे सूत्रस्थाने षष्ठेऽध्याये ॥
यथा, महाभारते । १२ । १६७ । ३६ ।
"नवनीतं यथा दध्नस्तथा कामोऽर्थधर्म्मतः ।
श्रेयस्तैलं हि पिण्याकात् घृतं श्रेय उदश्वितः
॥")
अस्य भक्षणे दोषो यथा, --
"पिण्याकं भक्षयित्वा तु यो वै मामुपसर्पति ।
तस्य वै शृणु सुश्रोणि ! प्रायश्चित्तं सुशोभनम् ॥
उलूको दशवर्षाणि कच्छपस्तु समास्त्रयः ।
जायते मानवस्तत्र मम कर्म्मपरायणः ॥"
इति वराहपुराणम् ॥
हिङ्गु । वाह्लीकम् । सिह्लकः । इति मेदिनी ॥
(सरलरसः । अस्य पर्य्यायो यथा, --
"तैलपर्णी दधित्थाख्यः पिण्याको रक्तशीर्षकः ।
वेष्टो रसाह्वः श्रीवासः श्रीपिष्टसरलद्रवौ ॥"
इति वैद्यकरत्नमालायाम् ॥)

**पितरौ**, पुं, जनकजनयित्र्यौ । माता च पिता
चेति विग्रहे विकल्पादेकशेषे पितराविति
प्राञ्चः । इति भरतः ॥ तत्पर्य्यायः । माता-
पितरौ २ मातरपितरौ ३ तातजनयित्र्यौ ४ ।
इत्यमरः । २ । ६ । ३७ ॥ (यथा, रघुः । १ ।
१ ।
"जगतः पितरौ वन्दे पार्व्वतीपरमेश्वरौ ॥")
तयोरभक्त्या पालने दोषो यथा, --
"पितृमातृगुरूंश्चापि भक्तिहीनेन पालयेत् ।
अहो यस्य प्रसादेन सर्व्वान् पश्यति मानवः
॥
जनको जन्मदाता च रक्षणाच्च पिता नृणाम्
।
तातो विस्तीर्णकरणात् कलया सा
प्रजापतिः ॥"
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ४४ अध्यायः
॥
स च गुरुः । यथा, --
"उपाध्यायः पिता ज्येष्ठोभ्राता चैव
महीपतिः ।
मातुलः श्वशुरस्त्राता मातामहपितामहौ ॥
बन्धुर्ज्येष्ठपितृ व्यश्च पुंस्वेते गुरवः स्मृताः
॥"
इति कौर्म्मे उपविभागे ११ अध्यायः ॥
(ज्येष्ठपितृव्यार्थे पितृशब्दप्रयोगो यथा,
महा-
भारते । ६ । ५३ । ३ ।
"गरुडस्य स्वयं तुण्डे पिता देवव्रतस्तव
॥")
स हि महागुरुः । यथा, "महागुरूनाह
विष्णुः । त्रयः पुरुषस्यातिगुरवो भवन्ति
माता पिताचार्य्यश्चेति ॥" इति शुद्धितत्त्वम्
॥
कामासक्तस्य पितुर्व्वचनमग्राह्यं यथा, --
"पितुर्व्वचो हि मा कार्षीः
कामव्यासक्तचेतसः ।
आत्मानञ्चाभिषिञ्चस्व तदर्थं क्षत्त्रियो ह्यसि
॥"
इत्याग्नेये श्रीरामं प्रति कौशल्यावाक्यम् ॥
तस्य पुत्त्रकृतधर्म्माधर्म्मभागित्वं यथा, --
"यः पिता स तु पुत्त्रोऽयमिति वै वैदिकी
श्रुतिः ।
निगद्यते पुराणे तु तां शृणुष्व यथातथम् ॥
न्यग्रोधस्य सुशाखायाः शटास्तास्तु गता
भुवि ।
प्ररोहानुपपद्यन्ते मूलभ्रंशात्तथा सुताः ॥
तद्विधानुपपद्यन्ते तथान्ये ते च तादृशाः ।
तेभ्यश्चान्ये प्ररोहन्ति व्रीहिभ्योऽपि यथा
तथा ॥
एवं पुत्त्रैः कृतो धर्म्मस्तथाधर्म्मश्च भूपते ।
वरो वरेण्यो वरदो भूतिदः पुष्टिदस्तथा ।
विश्वपाता तथा धाता सप्तैते च गणाः स्मृताः ॥
महान् महात्मा महितो महिमावान्महाबलः ।
गणाः पञ्च तथैवैते पितॄणां पापनाशनाः ॥
सुखदो धनदश्चान्यो धर्म्मदोऽन्यश्च भूतिदः ।
पितॄणां कथ्यते चैतत्तथा गणचतुष्टयम् ॥
एकत्रिंशत्पितृगणा यैर्व्याप्तमखिलं जगत् ।
ते मेऽत्र तृप्तास्तुष्यन्तु दिशन्तु च सदा हितम् ॥"
इति गारुडे पितृस्तोत्रं ८९ अध्यायः ॥
(पितॄणां स्तुतिपूर्ब्बकं नामसंख्यादिकथनम्
यथा मार्कण्डेये । ९६ । १३ -- ४८ ।
रुचिरुवाच ।
"नमस्येऽहं पितॄन् श्राद्धे ये वसन्त्यधिदेवताः ।
देवैरपि हि तर्प्यन्ते ये च श्राद्धे स्वधोत्तरैः ॥
नमस्येऽहं पितॄन् स्वर्गे ये तर्प्यन्ते महर्षिभिः ।
श्राद्धैर्मनोमयैर्भक्त्या भुक्तिमुक्तिमभीप्सुभिः ॥
नमस्येऽहं पितॄन् स्वर्गे सिद्धाः सन्तर्पयन्ति यान्
।
श्राद्धषु दिव्यैः सकलैरुपहारैरनुत्तमैः ॥
नमस्येऽहं पितॄन् भक्त्या येऽर्च्यन्ते गुह्यकैरपि ।
तन्मयत्वेन वाञ्छद्भिरृद्धिमात्यन्तिकींपराम् ॥
नमस्येऽहं पितॄन्मर्त्त्यैरर्च्यन्ते भुवि ये सदा ।
श्राद्धेषु श्रद्धयाभीष्टलोकप्राप्तिप्रदायिनः ॥
नमस्येऽहं पितॄन् विप्रैरर्च्यन्ते भुवि ये सदा ।
वाञ्छिताभीष्टलाभाय प्राजापत्यप्रदायिनः ॥
नमस्येऽहं पितॄन् ये वै तर्प्यन्तेऽरण्यवासिभिः ।
वन्यैः श्राद्धैर्यताहारैस्तपोनिर्धूतकिल्विषैः ॥
नमस्येऽहं पितॄन् विप्रैर्नैष्ठिकव्रतचारिभिः ।
ये संयतात्मभिर्नित्यं सन्तर्प्यन्ते समाधिभिः ॥
नमस्येऽहं पितॄन् श्राद्धै राजन्यास्तर्पयन्ति यान् ।
कव्यैरशेषैर्विधिवल्लोकत्रयफलप्रदान् ॥
नमस्येऽहं पितॄन् वैश्यैरर्च्यन्ते भुवि ये सदा ।
स्वकर्माभिरतैर्नित्यं पुष्पधूपान्नवारिभिः ॥
नमस्येऽहं पितॄन् श्राद्धैर्ये शूद्रैरपि भक्तितः ।
सन्तर्प्यन्ते जगत्यत्र नाम्ना ख्याताः सुकालिनः
॥
नमस्येऽहं पितॄन् श्राद्धैः पाताले ये महासुरैः ।
सन्तर्प्यन्ते स्वधाहारास्त्यक्तदम्भमदैः सदा ॥
नमस्येऽहं पितॄन् श्राद्धैरर्च्यन्ते ये रसातले ।
भोगैरशेषैर्विधिवन्नागैः कामानभीप्सुभिः ॥
नमस्येऽहं पितॄन् श्राद्धैः सर्पैः सन्तर्पितान् सदा ।
तत्रैव विधिवन्मन्त्रभोगसम्पत्समन्वितैः ॥

वाचा च ताडयेन्नित्यं स्वामिनं कुलटा च या ॥
सा कृतघ्नीति विख्याता पापिनां भारते नरः ।
वह्निकुण्डं महाघोरं स च सा च प्रयाति च ॥
तत्र वह्नौ वसत्येव यावच्चन्द्रदिवाकरौ ।
ततो भवेज्जलौका च जन्म सप्त ततः शुचिः ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ४९ अध्यायः ॥

**पिता**, [ऋ] पुं, पाति रक्षत्यपत्यं यः । (पा

रक्षणे + "नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृ-
मातृपितृदुहितृ ।" उणां । २ । ९६ । इति तृच्-
प्रत्ययेन निपातनात् साधुः ।) उत्पादकः । वाप्
इति भाषा । तत्पर्य्यायः । तातः २ जनकः ३ ।
इत्यमरः । २ । ६२८ ॥ प्रसविता ४ वप्ता ५
जन-
यिता ६ गुरुः ७ जन्मदः ८ जन्यः ९ जनिता
१० । इति शब्दरत्नावली ॥ बीजी ११ वप्रः
१२ । इति हेमचन्द्रः ॥ * ॥ तस्य मान्यत्वं
लक्षणञ्च यथा, --
"मान्यः पूज्यश्च सर्व्वेभ्यः सर्व्वेषां जनको
भवेत् ।
पिता संलिप्यते तेन मा च त्वं संशयं कृथाः
॥
न धर्म्मिणां नराणान्तु बीजनाशो भवेदिह ।
सर्व्वथा शंसते लोके बीजात् पुनः
समुच्छ्रयः ॥"
इत्याग्नेये पापनाशनवृषदानाध्यायः ॥ * ॥
तस्मिन् जीवति बाह्वोस्तिलकनिषेधो यथा,
--
"न बाह्वोस्तिलकं कुर्य्यात् यस्य जीवन्
पिता
स्थितः ।
तथा ज्येष्ठः सोदरश्च यस्य जीवति स तथा
॥"
इति बृहद्धर्म्मपुराणम् ॥ * ॥
उत्पादकपित्रपेक्षया मन्त्रदातृपितुर्गुरुतरत्वं
यथा, तन्त्रसारे ।
"उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता ।
तस्मान्मन्येत सततं पितुरप्यधिकं गुरुम् ॥"
पञ्च पितरो यथा, चाणक्ये ।
"अन्नदाता भयत्राता यस्य कन्या विवाहिता
।
जनयिता चोपनेता च पञ्चैते पितरः स्मृताः
॥"
सप्त पितरो यथा, --
"कन्यादातान्नदाता च ज्ञानदाताभयप्रदः ।
जन्मदो मन्त्रदो ज्येष्ठभ्राता च पितरः
स्मृताः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ३५
अध्यायः ॥
एकत्रिंशत्पितृगणा यथा, --
"विश्वो विश्वभुगाराध्यो धर्म्मो धन्यः
शुभासनः ।
भूमिदो भूमिकृद्भूतिः पितृणां ये गणा नव ॥
कल्याणः कल्यदः कल्यतरः
कल्यतराश्रयः ।
कल्यताहेतुरनघः षडिमे ते गणाः स्मृताः ॥
पितॄन्नमस्ये निवसन्ति साक्षात्
ये देवलोके च तथान्तरीक्षे ।
महीतले ये च सुरादिपूज्या-
स्ते मे प्रतीच्छन्तु मयोपनीतम् ॥
पितन्नमस्ये परमात्मभूता
ये वै विमाने निवसन्ति मूर्त्ताः ।
यजन्ति यानस्तमलैर्मनोभि-
र्योगीश्वराः क्लेशविमुक्तिहेतून् ॥
पितॄन्नमस्ये दिवि ये च मूर्त्ताः
स्वधाभुजः काम्यफलाभिसन्धौ ।
प्रदानशक्ताः सकलेप्सितानां
विमुक्तदा येऽनभिसंहितेषु ॥

तृप्यन्तु तेऽस्मिन् पितरः समस्ता
इच्छावतां ये प्रदिशन्ति कामान् ।
सुरत्वमिन्द्रत्वमतोऽधिकंवा
सुतान् पशून् स्वानि बलं गृहाणि ॥
सोमस्य ये रश्मिषु येऽर्कविम्बे
शुक्ले विमाने च सदा वसन्ति ।
तृप्यन्तु तेऽस्मिन् पितरोऽन्नतोयै-
र्गन्धादिना पुष्टिमितो व्रजन्तु ॥
येषां हुतेऽग्नौ हविषा च तृप्ति-
र्ये भुञ्जते विप्रशरीरसंस्थाः ।
ये पिण्डदानेन मुदं प्रयान्ति
तृप्यन्तु तेऽस्मिन् पितरोऽन्नतोयैः ॥
ये खड्गिमांसेन सुरैरभीष्टैः
कृष्णैस्तिलैर्दिव्यमनोहरैश्च ।
कालेन शाकेन महर्षिवर्य्यैः
संप्रीणितास्ते मुदमत्र यान्तु ॥
कव्यान्यशेषाणि च यान्यभीष्टा-
न्यतीव येषाममरार्चितानाम् ।
तेषान्तु सान्निध्यमिहास्तु पुष्प-
गन्धान्नभोज्येषु मया कृतेषु ॥
दिने दिने ये प्रतिगृह्णतेऽर्च्चां
मासान्तपूज्या भुवि येऽष्टकासु ।
ये वत्सरान्तेऽभ्युदये च पूज्याः
प्रयान्तु ते मे पितरोऽत्र तृप्तिम् ॥
पूज्या द्विजानां कुमुदेन्दुभासो
ये क्षत्त्रियाणाञ्च नवार्कवर्णाः ।
तथा विशां ये कनकावदाता
नीलीनिभाः शूद्रजनस्य ये च ॥
तेऽस्मिन् समस्ता मम पुष्पगन्ध-
धूपान्नतोयादिनिवेदनेन ।
तथाग्निहोमेन च यान्तु तृप्तिं
सदा पितृभ्यः प्रणतोऽस्मि तेभ्यः ॥
ये देवपूर्ब्बान्यतितृप्तिहेतो-
रश्नन्ति कव्यानि शुभाहुतानि ।
तृप्ताश्च ये भूतिसृजो भवन्ति
तृप्यन्तु तेऽस्मिन् प्रणतोऽस्मि तेभ्यः ॥
रक्षांसि भूतान्यसुरांस्तथोग्रान्
निर्नाशयन्तस्त्वशिवं प्रजानाम् ।
आद्याः सुराणाममरेशपूज्या-
स्तृप्यन्तु तेऽस्मिन् प्रणतोऽस्मि तेभ्यः ॥
अग्निस्वात्ता वर्हिषद आज्यपाः सोपमास्तथा ।
व्रजन्तु तृप्तिं श्राद्धेऽस्मिन् पितरस्तर्पिता मया ॥
वरो वरेण्यो वरदः पुष्टिदस्तुष्टिदस्तथा ॥
विश्वपाता तथा धाता सप्तैवैते तथा गणाः ।
महान्महात्मा महितो महिमावान्महाबलः ॥
गणाः पञ्च तथैवैते पितॄणां पापनाशनाः ।
सुखदो धनदश्चान्यो धर्म्मदोऽन्यश्च भूतिदः ॥
पितॄणां कथ्यते चैतत्तथा गणचतुष्टयम् ।
एकत्रिंशत्पितृगणा यैर्व्याप्तमखिलं जगत् ॥
ते मेऽनुतृप्तास्तुष्यन्तु यच्छन्तु च सदा हितम् ॥”
शिवः । यथा, महाभारते । १३ । १७ । १४१ ।
“सदसद्व्यक्तमव्यक्तं पिता माता पितामहः ॥”)

**पितामहः**, पुं, (पितुः पितेति । “पितृव्यमातुल-
मातामहपितामहाः ।” ४ । २ । ३६ । इत्यत्र “मातृपितृभ्यां पितरि डामहच् ।” इति वार्त्ति-
कोक्त्या डामहच् । ब्रह्मणि तु पितुः पिता जनक-
स्यापि जनकः । पितॄणां मरीच्यादीनां पितृ-
गणानां पिता वा ।) ब्रह्मा । (यथा, महा-
भारते । १ । १ । ३२ ।
“यस्मात् पितामहो यज्ञे प्रभुरेकः प्रजापतिः ।
ब्रह्मा सुरगुरुः स्थाणुर्मनुः कः परमेष्ठ्यथ ॥”
शिवः । यथा, महाभारते । १३ । १७ । १४१ ।
“सदसद्व्यक्तमव्यक्तं पिता माता पितामहः ॥”)
पितृपिता । इत्यमरः । २ । ६ । ३३ ॥ ठाकुरदादा
इति भाषा ॥ अस्य पर्य्यायः । आर्य्यकः २ ।
इति शब्दमाला ॥ (यथा, मनौ । ३ । २२१ ।
“पिता यस्य तु वृत्तः स्याद् जीवेद्वापि पितामहः ।
पितुः स नाम संकीर्त्त्य कीर्त्तयेत् प्रपितामहम् ॥”)

**पितामही**, स्त्री, (पितुर्मातेति । पितृव्यमातुलेत्यत्र

**पितृतर्पणं**, क्ली, (तृप्यन्तेऽनेनेति । तृप् + करणे
ल्युट् । पितॄणां तर्पणमिति । यद्वा, तृप + भावे
ल्युट् । पितॄणां तर्पणं तृप्तिर्यस्मात् ।) पितृ-
तीर्थम् । तत्तु तर्जन्यङ्गुष्ठयोर्म्मध्यम् । इति शब्द-
चन्द्रिका ॥ निवापः । इति हेमचन्द्रः ॥ तिलः ।
इति राजनिर्घण्टः ॥ पितृतीर्थेन पित्रुद्देश्यक-
जलदानम् । तस्यानुष्ठानं तर्पणशब्दे द्रष्टव्यम् ॥
पितॄणां तृप्तिमात्रञ्च ॥

**पितृतिथिः**, स्त्री, (पितृप्रिया तिथिरिति मध्य-
लोपी समासः ।) अमावास्या । यथा, --
“अमावास्यादिनं वोऽस्तु तस्यां
कुशतिलोदकैः ।
तर्पिता मानुषैस्तृप्तिं परां गच्छत नान्यथा ॥”
इति वाराहे पितृसर्गस्थितिवर्णनम् ॥

**पितृतीर्थं**, क्ली, (पितृप्रियं तीर्थम् ।) गया । इति
जटाधरः ॥ (गयादि-२२२ पितृवल्लभतीर्थानि
मत्स्यपुराणे श्राद्धकल्पे २२ अध्याये उक्तानि ।
यथा, --
“तीर्थानि कानि शस्तानि पितॄणां वल्लभानि च ।
नामतस्तानि वक्ष्यामि संक्षेपेण द्विजोत्तमाः ! ।
पितृतीर्थं गया नाम सर्व्वतीर्थवरं शुभम् ॥
यत्रास्ते देवदेवेशः स्वयमेव पितामहः ।
तत्रैषा पितृभिर्गीता गाथा भागमभीप्सुभिः ॥
एष्टव्या बहवः पुत्त्रा यद्येकोऽपि गयां व्रजेत् ।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥
तथा वाराणसी पुण्या पितॄणां वल्लभा सदा ।
तत्राविमुक्तसान्निध्यं भुक्तिमुक्तिफलप्रदम् ॥
पितॄणां वल्लभं तद्वत् पुण्यञ्च विमलेश्वरम् ।
पितृतीर्थं प्रयागन्तु सर्व्वकामफलप्रदम् ॥
वटेश्वरस्तु भगवान् माधवेन समन्वितः ।
योगनिद्राशयस्तद्वत् सदा वसति केशवः ॥
दशाश्वमेधिकं पुण्यं गङ्गाद्वारं तथैव च ।
नन्दाथ ललिता तद्वत्तीर्थं मायापुरी शुभा ॥
तथा मित्रपदं नाम ततः केदारमुत्तमम् ।
गङ्गासागरमित्याहुः सर्व्वतीर्थमयं शुभम् ॥

अग्निस्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे
दिशम् ।
तथा वर्हिषदः पान्तु याम्यां ये पितरः स्मृताः ।
प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः ।
रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ॥
सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे ।
विश्वो विश्वभुगाराध्यो धर्म्मो धन्यः शुभाननः ॥
भूतिदो भूतिकृद्भूतिः पितॄणां ये गणा नव ।
कल्याणः कल्यता कर्त्ता कल्यः कल्यतराश्रयः ॥
कल्यताहेतुरनघः षडिमे ते गणाः स्मृताः ।

"मातृपितृभ्यां पितरि डामहच् ।" इति डाम-
हच् । ततः "मातरि षिच्चेति ।" षित्कार्य्यं
ततः
षित्वात् ङीप् ।) पितामहपत्नी । इति जटा-
धरः ॥ ठाकुरमा इति भाषा ॥ (यथा, कौर्म्मे
उपविभागे ११ अध्याये ।
"मातामही मातुलानी तथा मातुश्च सोदराः
।
श्वश्रूः पितामही ज्येष्ठा धात्री च गुरवः स्त्रीषु
॥")
पौत्रैः पितामहधनविभागकरणे पितामह्यै
मातृवद्भागो देयः । यथा, --
"असुताश्च पितुः पत्न्यः समानांशाः
प्रकीर्त्तिताः ।
पितामह्यश्च सर्व्वास्ता मातृतुल्याः
प्रकीर्त्तिताः ॥"
इति दायभागे व्यासः ॥

**पितृकं**, त्रि, (पितुः सम्बन्धि पितुरागतं वेति ।
पितृ + कन् । यद्वा, पैतृक + पृषोदरादित्वात्
साधुः ।) पितृसम्बन्धि । यथा, --
"पैत्रञ्च पितृकञ्चापि पित्र्यञ्च पितुरागतम् ॥"
इति शब्दमाला ॥

**पितृकाननं**, क्ली, (पितॄणां काननमिव ।) श्मशा-
नम् । इति जटाधरः ॥ (यथा, महानिर्व्वाण-
तन्त्रे । १० । ७९ ।
"पञ्चवर्षाधिकान् मर्त्त्यान् दाहयेत् पितृकानने
।
भर्त्रा सह कुलेनाशि ! न दहेत् कुलकामिनीम्
॥")

**पितृगृहं**, क्ली, (पितॄणां गृहम् ।) श्मशानम् ।
इति हेमचन्द्रः ॥ (पितुर्गृहम् ।) पितृ-
वेश्म च ॥

तीर्थं ब्रह्मसरस्तद्वच्छतद्रुसलिलेह्रदे ।
तीर्थन्तु नैमिषं नाम सर्व्वतीर्थफलप्रदम् ॥
गङ्गोद्भेदस्तु गोमत्यां यत्रोद्भूतः सनातनः ।
तथा यज्ञवराहस्तु देवदेवश्च शूलभृत् ॥
यत्र तत्काञ्चनं द्वारमष्टादशभुजो हरः ।
नेमिस्तु हरिचक्रस्य शीर्णा यत्राभवत् पुरा ॥
तदेतन्नैमिषारण्यं सर्व्वतीर्थनिषेवितम् ।
देवदेवस्य तत्रापि वाराहस्य तु दर्शनम् ॥
यः प्रयाति स पूतात्मा नारायणपदं व्रजेत् ।
कृतशौचं महापुण्यं सर्व्वपावनिषूदनम् ॥
यत्रास्ते नारसिंहस्तु स्वयमेव जनार्द्दनः ।
तीर्थमिक्षुमती नाम पितॄणां वल्लभं सदा ॥
सङ्गमे यत्र तिष्ठन्ति गङ्गायाः पितरः सदा ।
कुरुक्षेत्रं महापुण्यं सर्व्वतीर्थसमन्वितम् ॥
तथा च सरयूः पुण्या सर्व्वदेवनमस्कृता ।
इरावती नदी तद्वत् पितृतीर्थाधिवासिनी ॥
यमुना देविका काली चन्द्रभागा दृषद्वती ।
नदी वेणुमती पुण्या परा वेत्रवती तथा ॥

पितॄणां वल्लभा ह्येताः श्राद्धे कोटिगुणा मताः ।
जम्बूमार्गं महापुण्यं यत्र मार्गो हि लक्ष्यते ॥
अद्यापि पितृतीर्थं तत् सर्व्वकामफलप्रदम् ।
नीलकुण्डमिति ख्यातं पितृतीर्थं द्विजोत्तमाः ! ॥
तथा रुद्रसरः पुण्यं सरो मानसमेव च ।
मन्दाकिनी तथाच्छोदा विपाशाथ सरस्वती ॥
पूर्ब्बमित्रपदन्तद्वद्वैद्यनाथं महाफलम् ।
क्षिप्रा नदी महाकालस्तथाकालञ्जरं शुभम् ॥
वंशोद्भेदं हरोद्भेदं गङ्गोद्भेदं महाफलम् ।
भद्रेश्वरं विष्णुपदं नर्म्मदाद्वारमेव च ॥
गयापिण्डप्रदानेन समान्याहुर्महर्षयः ।
एतानि पितृतीर्थानि सर्व्वपापहराणि च ॥
स्मरणादपि लोकानां किमु श्राद्धकृतां नृणाम् ।
ओङ्कारं पितृतीर्थञ्च कावेरी कपिलोदकम् ॥
सम्भेदश्चण्डवेगायास्तथैवामरकण्टकम् ।
कुरुक्षेत्राच्छतगुणं तस्मिन् स्नानादिकं भवेत् ॥
शुक्रतीर्थञ्च विख्यातं तीर्थं सोमेश्वरं परम् ।
सर्व्वव्याधिहरं पुण्यं शतकोटिफलाधिकम् ॥
श्राद्धे दाने तथा होमे स्वाध्याये जलसन्निधौ ।
कायावरोहणं नाम तथा चर्म्मण्वती नदी ॥
गोमती वरुणा तद्वत्तीर्थमौशनसं परम् ।
भैरवं भृगुतुङ्गञ्च गौरीतीर्थमनुत्तमम् ॥
तीर्थं वैनायकं नाम भद्रेश्वरमतः परम् ।
तथा पापहरं नाम पुण्याथ तपती नदी ॥
मूलतापी पयोष्णी च पयोष्णीसङ्गमस्तथा ।
महाबोधिः पाटला च नागतीर्थमवन्तिका ॥
तथा वेणा नदी पुण्या महाशालं तथैव च ।
महारुद्रं महालिङ्गं दशार्णा च नदी शुभा ॥
शतरुद्रा शताह्वा च तथा विश्वपदं परम् ।
अङ्गारवाहिका तद्वन्नदौ तौ शोणघर्घरौ ॥
कालिका च नदी पुण्या वितस्ता च नदी तथा ।
एतानि पितृतीर्थानि शस्यन्ते स्नानदानयोः ॥
श्राद्धमेतेषु यद्दत्तन्तदनन्तफलं स्मृतम् ।
द्रोणी वाटनदी धारासरित् क्षीरनदी तथा ॥
गोकर्णं गजकर्णञ्च तथा च पुरुषोत्तमः ।
द्वारका कृष्णतीर्थञ्च तथार्बुदसरस्वती ॥
नदी मणिमती नाम तथा च गिरिकर्णिका ।
धूतपापं तथा तीर्थं समुद्रो दक्षिणस्तथा ॥
एतेषु पितृतीर्थेषु श्राद्धमानन्त्यमश्नुते ।
तीर्थं मेघकरं नाम स्वयमेव जनार्द्दनः ॥
यत्र शार्ङ्गधरो विष्णुर्मेखलायामवस्थितः ।
तथा मन्दोदरी तीर्थं तीर्थं चम्पा नदी शुभा ॥
तीर्थं त्रैयम्बकं नाम सर्व्वतीर्थनमस्कतम् ।
यत्रास्ते भगवानीशः स्वयमेव त्रिलोचनः ॥
श्राद्धमेतेषु सर्व्वेषु कोटिकोटिगुणं भवेत् ।
स्मरणादपि पापानि नश्यन्ति शतधा
द्विजाः ! ॥
श्रीपर्णी ताम्रपर्णी च जयातीर्थमनुत्तमम् ।
तथा मत्स्यनदी पुण्या शिवधारं तथैव च ॥
भद्रतीर्थञ्च विख्यातं पम्पातीर्थञ्च शाश्वतम्
।
पुण्यं रामेश्वरं तद्वद्वेलापुरमलं परम् ॥
अङ्गभूतञ्च विख्यातमानन्दकमलं बुधम् ।
आम्रातकेश्वरं तद्वदेकाम्भकमतः परम् ॥
गोवर्द्धनं हरिश्चन्द्रं कृपुचन्द्रं पृथूदकम् ।
सहस्राक्षं हिरण्याक्षं तथा च कदली नदी ॥
रामाधिवासस्तत्रापि तथा सौमित्रिसङ्गमः ।
इन्द्रकीलं महानादन्तथा च प्रियमेलकम् ॥
एतान्यपि सदा श्राद्धे प्रशस्तान्यधिकानि तु
।
एतेषु सर्व्वदेवानां सान्निध्यं दृश्यते यतः ॥
दानमेतेषु सर्व्वेषु दत्तं कोटिशताधिकम् ।
बाहुदा च नदी पुण्या तथा सिद्धवनं शुभम् ॥
तीर्थं पाशुपतं नाम नदी पार्व्वतिका शुभा ।
श्राद्धमेतेषु सर्व्वेषु दत्तं कोटिशतोत्तरम् ॥
तथैव पितृतीर्थन्तु यत्र गोदावरी नदी ।
युतालिङ्गसहस्रेण सर्व्वान्तरजलावहा ॥
जामदग्न्यस्य तत्तीर्थं क्रमादायातमुत्तमम् ।
प्रतीकस्य भयाद्भिन्नं यत्र गोदावरी नदी ॥
तत्तीर्थं हव्यकव्यानामप्सरोयुगसंज्ञितम् ।
श्राद्धाग्निकार्य्यदानेषु तथा कोटिशताधिकम्
॥
तथा सहस्रलिङ्गञ्च राघवेश्वरमुत्तमम् ।
सेन्द्रफेना नदी पुण्या यत्रेन्द्रः पतितः पुरा ॥
निहत्य नमुचिं शक्रस्तपसा स्वर्गमाप्तवान् ।
तत्र दत्तं नरैः श्राद्धमनन्तफलदं भवेत् ॥
तीर्थन्तु पुष्करं नाम शालग्रामं तथैव च ।
सोमपानञ्च विख्यातं यत्र वैश्वानरालयम् ॥
तीर्थं सारस्वतं नाम स्वामितीर्थं तथैव च ।
मलन्दरा नदी पुण्या कौशिकी चन्द्रिका
तथा ॥
वैदर्भा वाथ वैरा च पयोष्णी प्राङ्मुखा परा ।
कावेरी चोत्तरा पुण्या तथा जालन्धरो गिरिः
॥
तथा च वदरीतीर्थं गणतीर्थं तथैव च ।
जयन्तं विजयञ्चैव शुक्रतीर्थं तथैव च ॥
श्रीपतेश्च तथा तीर्थं तीर्थं रैवतकं तथा ।
तथैव शारदातीर्थं भद्रकालेश्वरं तथा ॥
वैकुण्ठतीर्थञ्च परं भीमेश्वरमथापि वा ।
एतेषु श्राद्धदातारः प्रयान्ति परमां गतिम् ॥
तीर्थं मातृगृहं नाम करवीरपुरं तथा ।
कुशेश्वरञ्च विख्यातं गौरीशिखरमेव च ॥
नकुलेशस्य तीर्थञ्च कर्दमालं तथैव च ।
दण्डिपुण्यकरं तद्वत् पुण्डरीकपुरं तथा ॥
सप्त गोदावरीतीर्थं सर्व्वतीर्थेश्वरेश्वरम् ।
तत्र श्राद्धं प्रदातव्यमनन्तफलमीप्सुभिः ॥
एष तूद्देशतः प्रोक्तस्तीर्थानां संग्रहो मया ।
वागीशोऽपि न शक्नोति विस्तरात् किमु ।
मानुषः ॥
सत्यं तीर्थं दया तीर्थं तीर्थमिन्द्रियनिग्रहः ।
वर्णाश्रमाणां गेहेऽपि तीर्थन्तु समुदाहृतम् ॥
एतत्तीर्थेषु यच्छ्राद्धं तत् कोटिगुणमिष्यते ।
यस्मात् तस्मात् प्रयत्नेन तीर्थं श्राद्धं समाच-
रेत् ॥" * ॥)
तर्ज्जन्यङ्गुष्ठयोर्मध्यम् । इत्यमरः ॥
"अन्तराङ्गुष्ठदेशिन्योः पितॄणां तीर्थमुत्तमम् ॥"
इति कौर्म्मे उपविभागे ११ अध्यायः ॥

**पितृदानं**, क्ली, (पितरि पित्रे वा दानम् ।) पित्राद्यु-
द्देशेनान्नवस्त्रादिदानम् । पितृपदं मृतोपलक्षणं
तेन मात्रादेरपि ग्रहणम् । तत्पर्य्यायः ।
निवापः २ । इत्यमरः । २ । ७ । ३१ ॥
निवपनम् ३
पितृदानकम् ४ । इति शब्दरत्नावली ॥

**पितृदानकं**, क्ली, (पितृदान + स्वार्थे कन् ।)
पित्रुद्देश्यकदानम् । इति शब्दरत्नावली ॥

**पितृपक्षः**, पुं, (पितृप्रियः पक्षः ।) गौणाश्विन-
कृष्णपक्षः । स तु प्रेतपक्षः । तत्र श्राद्धफलं
यथा, हेमाद्रिमाधवसंग्रहयोर्नागरखण्डम् ।
"आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे ।
यो वै श्राद्धं नरः कुर्य्यादेकस्मिन्नपि वासरे ।
तस्य संवत्सरं यावत् तृप्ताः स्युः पितरो ध्रुवम्
॥
नभा वाथ नभस्यो वा मलमासो यदा भवेत् ।
सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः ॥"

तथा सामलनाथश्च महाशालनदी तथा ।
चक्रवाकं चर्म्मकोटं तथा जन्मेश्वरं महत् ॥
अर्ज्जुनं त्रिपुरं चैव सिद्धेश्वरमतः परम् ।
श्रीशैलं शाङ्करं तीर्थं नारसिंहमतःपरम् ॥
महेन्द्रञ्च तथा पुण्यमथ श्रीरङ्गसंज्ञितम् ।
एतेष्वपि सदा श्राद्धमनन्तफलदं स्मृतम् ॥
दर्शनादपि चैतानि सद्यः पापहराणि वै ।
तुङ्गभद्रा नदी पुण्या तथा भीमरथी सरित् ॥
भीमेश्वरं कृष्णवेणा कावेरी कुड्मला नदी ।
नदी गोदावरी नाम त्रिसन्ध्या तीर्थमुत्तमम् ॥

एतेषु श्राद्धतीर्थेषु श्राद्धमानन्त्यमश्नुते ।
लोहदण्डं तथा तीर्थं चित्रकूटस्तथैव च ॥
बिन्ध्ययोगश्च गङ्गायास्तथा नदीतटं शुभम् ।
कुब्जाभ्रन्तु तथा तीर्थं उर्व्वशीपुलिनं तथा ॥
संसारमोचनं तीर्थं तथैव ऋणमोचनम् ।
एतेषु पितृतीर्थेषु श्राद्धमानन्त्यमश्नुते ॥
अट्टहासं तथा तीर्थं गौतमेश्वरमेव च ।
तथा वशिष्ठं तीर्थन्तु हारितं तु ततः परम् ॥
ब्रह्मावर्त्तं कुशावर्त्तं हयतीर्थं तथैव च ।
पिण्डारकञ्च विख्यातं शङ्खोद्धारं तथैव च ॥
घण्टेश्वरं विल्वकञ्च नीलपर्व्वतमेव च ।
तथा च धरणीतीर्थं रामतीर्थं तथैव च ॥
अश्वतीर्थञ्च विख्यातमनन्तं श्राद्धदानयोः ।
तीर्थं बेदशिरो नाम तथैवौघवती नदी ॥
तीर्थं वसुप्रदं नाम छागलाण्डं तथैव च ।
एतेषु श्राद्धदातारः प्रयान्ति परमं पदम् ॥

इति मलमासतत्त्वम् ॥

**पितृपतिः**, पुं, (पितॄणां पतिः ।) यमः । इत्यमरः । १ । १ । ६१ ॥ (यथा, मार्कण्डेये । १०४ । ३७
"त्वं ब्रह्मा हरिरजसंज्ञितस्त्वमिन्द्रो
वित्तेशः पितृपतिरम्बुपतिः समीरः ।
सोमोऽग्निर्गगनमहीधरोऽब्धिसंघः
किं स्तव्यं तव सकलात्मरूपधाम्नः ॥")

**पितृपिता**, [ऋ] पुं, (पितुः पिता ।) पितामहः ।
इत्यमरः । २ । ६ । ३३ ॥

**पितृप्रसूः**, स्त्री, (पितणां प्रसूर्मातेव । पितृकृत्ये सन्ध्यावर्त्तिन्यास्तिथेर्ग्राह्यत्वादस्याः प्रसूतुल्यपालकतया तथात्वम् ।) सन्ध्या । इत्यमरः । १ । ४ । ३ ॥
(यथा, आर्य्यासप्तशत्याम् । ५०१ ।
"रजनीमियमुपनेतुं पितृप्रसूः प्रथममुपतस्थे ।

रञ्जयति स्वयमिन्दुं कुनायकं दुष्टदूतीव ॥”
पितुः प्रसूर्जनयित्री ।) पितामही ॥

**पितृप्रियः**, पुं, (पितॄणां प्रियः ।) भृङ्गराजः ।
इति राजनिर्घण्टः ॥ (गुणादयोऽस्य भृङ्गराज-
शब्दे ज्ञातव्याः ॥)

**पितृबन्धुः**, पुं, (पितुर्बन्धुः ।) पितामहभगिनी-
पुत्त्रः । पितामहीमगिनीपुत्त्रः । पितुर्मातुल-
पुत्त्रः । इत्युद्वाहतत्त्वम् ॥

**पितृबान्धवः**, पुं, (पितुर्बान्धवः ।) पितृबन्धुः ।
यथा, उद्वाहतत्त्वे ।
“पितुः पितुःखसुः पुत्त्राः पितुर्मातुःस्वसुः सुताः ।
पितुर्मातुलपुत्त्राश्च विज्ञेयाः पितृबान्धवाः ॥”

**पितृभोजनः**, पुं, (पितृभिर्भुज्यते इति । भुज +
कर्म्मणि ल्युट् । पित्रुद्देश्यकदानेऽस्य प्रशस्त-
तया तथात्वम् ।) माषः । इति राजनिर्घण्टः ॥
(भुज + भावे ल्युट् । पितॄणां भोजनमिति ।)
पितॄणां भक्षणे, क्ली ॥

**पितृभ्राता**, [ऋ] पुं, (पितुर्भ्राता ।) पितृव्यः ।
इत्यमरः । २ । ६ । ३१ ॥

**पितृयज्ञः**, पुं, (पितृभ्यः पितॄनुद्दिश्येत्यर्थः यो
यज्ञः ।) तर्पणम् । यथा, मनुः । ३ । ७० ।
“अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो वलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥”

**पितृलोकः**, पुं, (पितॄणां लोकः ।) पितॄणां भुव-
नम् । (यथा, महाभारते । १ । ६२ । १० ।
“कथञ्च बहुलाः सेनाः पाण्डवः कृष्णसारथिः ।
अस्यन्नेकोऽनयत् सर्व्वाः पितृलोकं धनञ्जयः ॥”)
अस्य विवरणं यथा, --
मार्कण्डेय उवाच ।
“सर्व्वेषामेव देवानामाद्यो नारायणो गुरुः ।
तेषां नामानि लोकांश्च कीर्त्तयिष्यामि तच्छृणु ॥
लोकाः सन्तानकामाय यत्र तिष्ठन्ति भास्वराः ।
अमूर्त्तयः पितृगणास्ते वै पुत्त्राः प्रजापतेः ॥
विराजस्य प्रजाः श्रेष्ठास्ते वैराजा इति स्मृताः ।
देवानां पितरस्ते हि तान् यजन्तीह देवताः ॥
एते वै लोकविभ्रष्टा लोकान् प्राप्य सनातनान् ।
पुनर्युगशतान्तेषु जायन्ते ब्रह्मवादिनः ॥
ते प्राप्य तां स्मृतिं भूयः सिद्धियोगमनुत्तमम् ।
चिन्त्य योगगतिं शुद्धां पुनरावृत्तिदुर्लभाः ॥
एतेऽस्मिन् पितरः श्राद्धे योगिनां योगवर्द्धनाः ।
आप्यायितास्तु ते पूर्ब्बं येऽपि योगबले रताः ॥
तस्मात् श्राद्धानि देयानि योगिनां योगसत्तमैः ।
एष वै प्रथमः सर्गः सोमपानामनुत्तमः ॥
एते त एकतनवो वर्त्तन्ते द्बिजसत्तमाः ।
भूर्लोकवासिना याज्या भुवर्लोकनिवासिनः ॥
स्वर्गलोका मरीच्याद्यास्तेषां याज्या महर्गताः ।
कल्पवासिकसंज्ञानां तेषामपि जने स्थिताः ॥
सनकाद्यास्ततस्तेषां वैराजास्तपसि स्थिताः ।
तेषां सत्यगताः प्रोक्ता इत्येषा पितृसन्ततिः ॥
सप्तधा सप्तलोकेषु आदिमन्वन्तरक्रिया ।
अन्येषां वसवः साध्या रुद्रादित्याश्विनाविति ॥
अग्रतः सर्व्ववर्णानां साधारण्येन संस्थिताः ।
ऋषयश्च तदुत्पन्ना इति सप्तविधा गणाः ॥
तेषां कल्यास्तु संजाता महती पितृसन्ततिः ।
आग्निस्वात्ताश्च मारीचा वैराजा वर्हिसंज्ञिताः ॥
सुकाला नाम पितरो वशिष्ठस्य प्रजापतेः ।
तेऽपि याज्यास्त्रिभिर्वर्णैर्न शूद्रेण पृथव् कृतम् ॥
वर्णत्रयाभ्यनुज्ञातः शूद्रः सर्व्वान् पितॄन् यजेत् ।
न तु तस्य पृथक् सन्ति पितरः शूद्रजातयः ॥
मुक्तचेतनका ब्रह्मन् ! न दृश्यन्ते पितृष्वपि ।
विशेषशास्त्रदृष्ट्या तु पुराणानाञ्च दर्शनात् ॥
एवं ऋषिस्तुतैः शास्त्रैर्ज्ञात्वा याजकसम्भवान् ।
स्वयं सृष्ट्या स्मृतिर्लब्धा पुत्त्राणां ब्रह्मणा ततः ॥
परं निर्व्वाणमापन्नास्तेऽपि ज्ञानिन एव च ।
वैश्यादीनां कश्यपाद्या वर्णानां वसवादयः ॥
अविशेषेण विज्ञेया गन्धर्व्वाद्या अपि ध्रुवम् ।
एष ते पैतृकः सर्ग उद्देशेन महामुने ! ।
कथितो नान्त एवास्य वर्षकोट्या हि दृश्यते ॥”
इति वाराहे श्राद्धकल्पः ॥ * ॥
अपि च ।
“पितॄणां सम्भवं राजन् ! कथ्यमानं निबोध मे ।
इत्युक्त्वा तु तदा ब्रह्मा तेषां पन्थानमाकरोत् ।
दक्षिणायनसंज्ञन्तु पितॄणान्तु पितामहः ॥
तूष्णीं ससर्ज भूतानि तमूचुः पितरस्ततः ।
वृत्तिं नो देहि भगवन् यया विन्दामदे सुखम् ॥
ब्रह्मोवाच ।
अमावास्यादिनं वोऽस्तु तस्यां कुशतिलोदकैः ।
तर्पिता मानुषैस्तृप्तिं परां गच्छत नान्यथा ॥
तिला देयास्तथैतस्यामुपोष्य पितृभक्तितः ।
परमं तस्य सन्तुष्टाः परं यच्छत मा चिरम् ॥”
इति वाराहे पितृसर्गस्थितिवर्णनम् ॥ * ॥
पितृश्राद्धविशेषे देवताविशेषाः पितृगणाश्च यथा,
“क्रतुर्दक्षो वसुः सत्यः कामः कालस्तथा ध्वनिः ।
रोचकश्चाद्रवाश्चैव तथा चान्यः पुरूरवाः ॥
विश्वेदेवा भवन्त्येते दश सर्व्वत्र पूजिताः ।
विश्वदेवौ क्रतुदक्षौ सर्व्वास्विष्टिषु विश्रुतौ ॥
नित्यं नान्दीमुखश्राद्धे वसुसत्यौ च पैतृके ।
नवान्नालम्भने देवौ कामकालौ सदैव हि ॥
अपि कन्यागते सूर्य्ये श्राद्धे च ध्वनिरोचकौ ।
पुरूरवाश्चाद्रवाश्च विश्वदेवौ च पर्व्वणि ॥
सुभास्वरा वर्हिषदो ह्यग्निस्वात्तास्तथैव च ।
आज्यपाश्चोपहूताश्च क्रव्यादाश्च सुकालिनः ।
एते पितृगणाः सप्त पौराणाः केचिदेव हि ॥”
इत्यग्निपुराणम् ॥ * ॥
अग्निस्वात्तादेरुत्पत्तिर्यथा, --
“ततो निगृह्येन्द्रियकं विकारं चतुराननः ।
जिघृक्षुरपि तत्याज तां सन्ध्यां कामरूपिणीम् ॥
तत्शरीरात्तु घर्म्माम्भो यत् पपात द्बिजोत्तमाः ।
अग्निस्वात्ता वर्हिषदो जाताः पितृगणास्ततः ॥
भिन्नाञ्जननिभाः सर्व्वे फुल्लराजीवलोचनाः ।
नितान्तसंयताः पुण्याः संसारविमुखाः परे ॥
सहस्राणां चतुःषष्टिरग्निस्वात्ताः प्रकीर्त्तिताः ।
षडशीतिसहस्राणि तथा वर्हिषदो द्बिजाः ॥”
इति कालिकापुराणे २ अध्यायः ॥ * ॥
तेषां तर्पणविधिर्यथा, --
“अपसव्यं ततः कृत्वा सव्यं जानु च भूतले ।
अग्निस्वात्तांस्तथा सौम्यान् हविष्मतस्तथोष्मपान् ॥
सुकालिनो वर्हिषदस्तथा चैवाज्यपान् पुनः ।

तस्माद्ब्रह्मा समुत्पन्नः सोऽपि सप्तासृजन्मुनीन् ॥
मा यजस्वेति तेनोक्तास्तदा ते परमेष्ठिनः ।
आत्मनात्मानमेवाग्रे अयजन्त इति श्रुतिः ॥
तेषां वै ब्रह्मजातानां महावैकारिकर्म्मणाम् ।
अपश्यद्व्यभिचारेण महानेष कृतो यतः ।
प्रभ्रष्टज्ञानिनः सर्व्वे भविष्यथ न संशयः ॥
एवं शप्तास्ततस्तेऽपि ब्रह्मणात्मसमुद्भवाः ।
सद्योवंशकरान् पुत्त्रानुत्पाद्य त्रिदिवं ययुः ॥
ततस्तेषु प्रयातेषु त्रिदिवं ब्रह्मवादिषु ।
तत्पुत्त्राः श्राद्धदानेन तर्पयामासुरञ्जसा ॥
ते च वैमानिकाः सर्व्वे ब्रह्मणः सप्त मानसाः ।
तत्पिण्डदानमन्त्रोक्तं प्रपश्यन्तो व्यवस्थिताः ॥
गौरमुख उवाच ।
ये च ते पितरो ब्रह्मन् स्वञ्च कालं समासते ।
कियन्तो वै पितृगणास्तस्मिन् लोके व्यवस्थिताः ॥
मार्कण्डेय उवाच ।
प्रवर्त्तन्ते वराः केचिद्देवानां सोमवर्द्धनाः ।
ते मरीच्यादयः सप्त स्वर्गे ते पितरः स्मृताः ॥
चत्वारो मूर्त्तिमन्तो वै त्रयस्त्वन्ये ह्यमूर्त्तयः ।
तेषां लोकनिसर्गञ्च कीर्त्तयिष्यामि तच्छृणु ॥
प्रभावञ्च महर्षे त्वं विस्तरेण निवोध मे ।
धर्म्ममूर्त्तिधरास्तेषां त्रयोऽन्ये परमा गणाः ॥
पूर्ब्बं प्रजापतिर्ब्रह्मा सिसृक्षुर्व्विविधाः प्रजाः ॥
एकाग्रमानसः सर्व्वास्तन्मात्रा मनसो बहिः ।
कृत्वा परमकं ब्रह्म ध्यायन् सर्व्वेषु रूपकैः ॥
तस्यात्मनि तदा योगं गतस्य परमेष्ठिनः ।
तन्मात्रा निर्य्ययुर्द्देहाद्धूमवर्णकृतत्विषः ॥
पिबाम इति भाषन्तः सुरां सोममितोऽसकृत् ।
ऊद्‌र्ध्वं जिगमिषन्तो वै अधःसंस्थास्तपस्विनः ॥
तान् दृष्ट्वा सहसा ब्रह्मा तिर्य्यक्संस्थांस्तदो-न्मुखान् ।
भवन्तः पितरः सन्तु सर्व्वेषां गृहमेधिनाम् ॥
ऊद्‌र्ध्ववक्त्रास्तु ये तत्र ते नान्दीमुखसंज्ञिताः ॥
तर्पयेत्तु पितॄन् भक्त्या सतिलोदकचन्दनैः ॥
दर्भपाणिस्तु विधिवत् प्रेतांस्तांस्तर्पयेत्ततः ।
पित्रादीन्नामगोत्रेण तथा मातामहानपि ।
सन्तर्प्य विधिवद्भक्त्या इमं मन्त्रमुदीरयेत् ॥
ये बान्धवाबान्धवा वा येऽन्यजन्मनि बान्धवाः ।
ते तृप्तिमखिलां यान्तु यश्चास्मत्तोऽभिवाञ्छति ॥”
इति मात्स्ये स्नानविधौ ८४ अध्यायः ॥

**पितृवनं**, क्ली, (पितॄणां वनमिव ।) श्मशानम् ।

इत्यमरः । २ । ८ । ११८ ॥ (यथा, महाभारते । ११ । ४ । १५ ।
“सर्व्वे पितृवनं प्राप्ता स्वपन्ति विगतज्वराः ।
निर्म्मांसैरस्थिभूयिष्ठैर्गात्रैः स्नायुनिबन्धनैः ॥”)

**पितृवनेचरः**, पुं, (पितृवने श्मशाने चरतीति ।

चर + “चरेष्टः ।” ३ । २ । १६ । इति टः । अलुक्समासः ।) शिवः । इति केचित् ॥

**पितृवसतिः**, स्त्री, (पितृणां वसतिर्यत्र ।) शवशयन-
स्थानम् । श्मशानम् । इत्यमरटीकायां रमा-
नाथः ॥

**पितृव्यः**, पुं, (पितुर्भ्राता । "पितृव्यमातुलमाता-
महपितामहाः ।" ४ । २ । ३६ । इत्यत्र
"पितुर्भ्रातरि व्यत् ।" इति वार्त्तिकोक्त्या व्यत्-
प्रत्ययः ।) पितृभ्राता । इत्यमरः । २ । ६ । ३१ ॥
अपि च ।
"पितृव्यो जनकभ्राता ज्येष्ठतातोऽग्रजो यदि ।
पितुः कनिष्ठभ्राता तु खुल्लतातोऽभिधीयते ॥"
इति शब्दरत्नावली ॥

**पितृष्वसा**, [ऋ] स्त्री, (पितुः स्वसा भगिनी ।
"मातृपितृभ्यां स्वसा ।" ८ । ३ । ८४ । इति
षत्वम् ।) पितुर्भगिनी । पिसी इति भाषा । यथा,
"मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा ।
श्वश्रूः पूर्ब्बजपत्नी च मातृतुल्याः प्रकीर्त्तिताः ॥"
इति दायभागः ॥

**पितृष्वस्रीयः**, त्रि, पितृष्वसुरपत्यम् । (पितृष्वसृ +
छः ।) पितृभागिनेयः । इति मुग्धबोधव्याकर-
णम् ॥ (यथा, महाभारते । १ । १११ । २ ।
"पितृष्वस्रीयाय सुतामनपत्याय भारत ! ।
अग्र्यमग्ने प्रतिज्ञाय स्वस्यापत्यं स सत्यवाक् ॥")

**पितृसन्निभः**, पुं, (सम्यङ्निभातीति सन्निभस्तुल्यः ।
पितुः सन्निभः ।) पितृतुल्यः । तत्पर्य्यायः ।

(यथा, महाभारते । ६ । ८१ । ४१ ।
"अभिमन्योस्ततस्तैस्तु घोरं युद्धमवर्त्तत ।
शरीरस्य यथा राजन् ! वातपित्तकफैस्त्रिभिः ॥")
अस्य गुणाः ।
"पित्तञ्च तिक्ताम्लरसञ्च सारकं
तूष्णं द्रवं तीक्ष्णमिदं मधौ बहु ।
वर्षान्तकाले भृशमर्द्धरात्रे
मध्यन्दिने तप्युदिते च कुप्यति ॥"
इति राजनिर्घण्टः ॥ * ॥
अपिच ।
"सर्व्वं पित्तमपस्मारकुष्ठदुष्टव्रणापहम् ।
चक्षुष्यं कटुतीक्ष्णोष्णमुन्मादक्रिमिनाशनम्॥"
इति राजवल्लभः ॥ * ॥
पित्तस्य स्वरूपमाह ।
"पित्तमुष्णं द्रवं पीतं नीलं सत्वगुणोत्तरम् ।
सरं कटु लघु स्निग्धं तीक्ष्णमम्लन्तु पाकतः ॥"
पीतं निरामम् । नीलं सामम् । एकं पित्तं
वातवन्नामस्थानकर्म्मभेदैः पञ्चविधम् ॥ * ॥
तेषां पित्तानां नामान्याह ।
"पाचकं रञ्जकञ्चापि साधकालोचके तथा ।
भ्राजकञ्चेति पित्तस्य नामानि स्थानभेदतः ॥" * ॥
अथ पाचकादीनां स्थानान्याह ।
"अग्न्याशये यकृत्प्लीह्नोर्हृदये लोचनद्वये ।
त्वचि सर्व्वशरीरेषु पित्तं निवसति क्रमात् ॥" * ॥
अथ तेषां कर्म्माण्याह ।
"पाचकं पचते भुक्तं शेषाग्निबलवर्द्धनम् ।
रसमूत्रपुरीषाणि विरेचयति नित्यशः ॥"
पाचकं पित्तमामपक्वाशयमध्यस्थंषड्विधमा-
हारं भोज्यं भक्ष्यं चर्व्व्यं लेह्यं चूष्यं पेयं पचति
दोषरसमूत्रपुरीषाणि पृथक् करोति च । तद-
ग्न्याशयस्थमेवात्मशक्त्या रसरञ्जनहृदयस्थकफ-
तमोऽपनोदनरूपग्रहणप्रभाप्रकाशनाभ्यङ्ग
लेपादिपाचनाद्यग्निकर्म्मणा शेषाणां पित्तस्थाना-
नामनुग्रहं करोति । शेषाण्यपि पित्तस्थानानि
यकृत्प्लीहादीनि भागेन गत्वा तत्र तत्र रसरञ्ज-
नादिकर्म्मभिरुपकरोतीत्यर्थः । कथन्मूतं पाचक-
पित्तं शेषाग्निबलवर्द्धनं शेषा अग्नयः पृथि-
व्यादिमहाभूतगताः सप्तधातुगताश्च । यत
उक्तं चरकेण ।
"भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः ।"
इति ।
उष्माणोऽग्नयः । यत उक्तं वाग्भटे ।

ननु पित्तादन्योऽग्निराहोस्वित्पित्तमेवाग्निरिति
सन्देहः । उच्यते पित्तस्योष्णादिगुणद्वाराहार-
पाचनरञ्जनदर्शनादिकर्म्मणश्च न खलु पित्त-
व्यतिरेकेणान्योऽग्निः । तस्मादग्निरूपस्यैव पित्तस्य
स्थानभेदात्
पाचकरञ्जकसाधकालोचकभ्राजक-
संज्ञाः । तथा च वाग्भटे ।
"पाचकं तिलमानं स्यात् काठिन्यान्नास्य दोषता ।
अनुगृह्णात्यविकृतं पित्तं पाकोष्मदर्शनैः ॥
क्षुत्तृड्रुचिप्रभामेधाधीशौर्य्यतनुमार्द्दवैः ।
पित्तं पञ्चात्मकं तच्च पक्वामाशयमध्यगम्॥
पञ्चभूतात्मकत्वेऽपि यत्तैजसगुणोदयात् ।
त्यक्तद्रवत्वं पाकादिकर्म्मणानलशब्दितम्॥
पचत्यन्नं विभजते सारकिट्टौ पृथक् तथा ।
तत्रस्थमेव पित्तानां शेषाणामप्यनुग्रहम्॥
करोति बलदानेन पाचकं नाम तत् स्मृतम् ॥"
ननु यदि पित्ताग्न्योरभेदस्तदा कथं घृतं पित्तस्य
शमनमग्नेर्दीपनमिति । तथा मत्स्याः पित्तं
कुर्व्वन्ति न च तेऽग्निदीप्तिकरा इति । तथा
पित्ताधिक्यात्तीक्ष्णोऽग्निरित्यपिकथं स्यात् ।
तथा समदोषः समाग्निश्चेत्यपि वक्तुं न युज्यते ।
तथा द्रवं स्निग्धमधोगञ्च पित्तं वह्निरतोऽन्य-
थेति । अत्रोच्यते । पित्तमग्नेः सतताधिष्ठानम् ।
तथा चोक्तं तन्त्रान्तरे ।
"अग्निर्भिन्नगुणैर्युक्तः पित्तं भिन्नगुणैस्तथा ।
द्रवं स्निग्धमधोगञ्च पित्तं वह्निरतोऽन्यथा ॥
तस्मात्तेजोमयं पित्तं पित्तोष्मा यः स शक्तिमान् ।
स सञ्चरति कुक्षिस्थः सर्व्वतो धमनीमुखैः ॥
स कायाग्निः स कायोष्मा स पक्ता स च जीवनम् ।
अनन्यगतिरित्येवं देहे कायाग्निरुच्यते ॥"
अन्यच्च ।
"वामपार्श्वाश्रितं नाभेः किञ्चित् सोमस्य मण्ड-
लम् ।
तन्मध्ये मण्डलं सौर्य्यं तन्मध्येऽग्निर्व्यवस्थितः ॥
जरायुमात्रप्रच्छन्नः काचकोषस्थदीपवत्॥"
तथा च मधुकोषे । "द्रवतेजःसमुदायात्मकस्य

मनोजवः २ मनोजवसः ३ ।
इत्यमरभरतौ ॥

**पितृसूः**, स्त्री, (सूते इति सूर्जननी । पितॄणां सूर्जननीव । पितृकृत्ये सन्ध्यागामिन्यास्तिथेर्ग्राह्य-त्वात् जननीवत् पालकत्वेनैव तथात्वम् ।) सन्ध्या । इति शब्दमाला । (पितरं सूते इति । क्विप् । पितामही । इति व्युत्पत्तिलब्धोऽर्थः ॥)

**पितृहूः**, पुं, (पितॄनाह्वयत्यनेनेति । पितृ + ह्वे + करणे क्विप् ।) दक्षिणकर्णः । यथा, श्रीभाग-वते । ४ । २५ । ५० ।
"पितृहूर्नृपपुर्य्या द्वार्दक्षिणेन पुरञ्जनः ॥"
"शास्त्रे च प्रथमं श्रोतव्यं कर्म्मकाण्डं इत्येता-वता सामान्येन प्रवृत्तसंज्ञकस्य कर्म्मकाण्डस्य दक्षिणकर्णेन श्रवणमिष्यते । ततस्तदर्थमनुष्ठाय पितृभिराहूतः पितृलोकप्रापकं पितृयानं प्रप-द्यते । तदनेन प्रकारेण पितॄणामाह्वानमनेन भवति पितृहूर्दाक्षिणः कर्णः । एवं तद्वैपरीत्येन उत्तरकर्णो देवहूः । तथा च व्याख्यास्वपि ।
पितृहूर्दक्षिणः कर्णः उत्तरो देवहूः स्मृतः ।
प्रवृत्तञ्च निवृत्तञ्च शास्त्रं पञ्चालसंज्ञितम् ॥"
इति तट्टीकायां श्रीधरस्वामी ॥

**पित्तं**, क्ली, (अपिदीयते प्रकृतावस्थया रक्ष्यते विकृतावस्थया नाश्यते वा शरीरं येनेति । अपि + दे ङ पालने, दो य च्छेदने वा + क्तः । "अच उपसर्गात्तः ।" ७ । ४ । ४७ । इति तादेशः । अपेरल्लोपः ।) शरीरस्थधातुविशेषः । तत्-

"दोषधातुमलादीनामुष्मेत्यात्रेयशासनम् ।" इति ।
दोषधातुमलादीनामुष्मैवाग्निरित्यर्थः । रसादि-धातुगताश्च सप्त तेषां बलवर्द्धनम् । यथा गृहे स्थापितानि रत्नानि खद्योतवदद्दूरभास्वराणि तान्यपि दीपज्योतिषा दूरप्रकाशकानि भवन्ति । तथा अग्न्याशयस्थपाचकाग्नितेजसा सर्व्वे अग्नयो बलवन्तो भवन्ति । तथा च वाग्भटः ।
"अन्नस्य पक्ता सर्व्वेषां पक्तॄणामधिको मतः ।
तन्मूलास्ते हि तद्वृद्धिक्षयवृद्धिक्षयात्मकाः ॥"
इति ॥

पित्तस्य तेजोभागोऽग्निरिति । तेन पित्तमप्य-ग्निवत् मन्यते । अग्नितापितायोगोलकवत् ।"
परमार्थतस्तु अग्निः पित्ताद्भिन्न एवेति सिद्धान्तः । अतएवाह रसप्रदीपे ।
"जाठरो भगवानग्निरीश्वरोऽन्नस्यपाचकः ।
सौक्ष्म्याद्रसानाददानो विवेक्तुं नैव शक्यते ॥
नाभौ मध्ये शरीरस्य विशेषात् सोममण्डलम् ।
सोममण्डलमध्यस्थं विद्यात् सूर्य्यस्य मण्डलम् ॥
प्रदीपवत्तत्र नृणां स्थितो मध्ये हुताशनः ।
सूर्य्यो दिवि यथा तिष्ठंस्तेजोयुक्तैर्गभस्तिभिः ॥
विशोषयति सर्व्वाणि पल्वलानि सरांसि च ॥
तद्वच्छरीरिणां भुक्तं त्वनलो नाभिमाश्रितः ।
मयूखैः पचते क्षिप्रं नानाव्यञ्जनसंस्कृतम् ॥
स्थूलकायेषु सत्त्वेषु यवमात्रप्रमाणतः ।
ह्रस्वकायेषु सत्त्वेषु तिलमात्रप्रमाणतः ॥
कृमिकीटपतङ्गेषु चाणुमात्रोऽवतिष्ठते ॥" इति ।
पुनः प्रकृतमनुसरति ।

| | | |
|---|---|---|
| पर्य्यायः । मायुः २ । इत्यमरः । २ । ६ । ६२ ॥<br>पलज्वलः ३ । इति शब्दरत्नावली ॥<br>तेजः ४<br>तिक्तधातुः ५ उष्मा ६ अग्निः ७ अनलः ८ । | | |

"रञ्जकं नाम यत् पित्तं तद्रसं शोणतां नयेत् ।
यत्तु साधकसंज्ञं तत् कुर्य्याद्बुद्धिं धृतिं स्मृतिम्
॥"
धृतिं मेधाम् ।
"यदालोचकसंज्ञं तद्रूपग्रहणकारणम् ।
भ्राजकं कान्तिकारि स्याल्लेपाभ्यङ्गादिपाच-
कम् ॥
पित्तप्रकृतिको यथा, --
"पित्तप्रकृतिको यादृक् तादृशोऽथ निगद्यते ।
अकालपलितो गौरः क्रोधी स्वेदी च बुद्धिमान् ॥
बहुभुक् ताम्रनेत्रश्च स्वप्ने ज्योतींषि पश्यति ।
श्यामकेशः क्षमी स्थूलो बहुवीर्य्यो महाबलः ॥
पित्तं वह्निर्वह्निजं वा तदस्मात्
पित्तोद्रिक्तस्तीव्रतृष्णो बुभुक्षुः ।
गौरोष्णाङ्गस्ताम्रहस्तोऽङ्घ्रिरक्तः
शूरो मानी पिङ्गकेशोऽल्पलोमा ॥"
पित्तप्रकृतिकमृगा यथा, --
"व्याघ्रर्क्षकपिमार्जारयक्षोलूकाश्च पैत्तिकाः ॥"
पित्तस्योपशमहेतुमाह ।
"तिक्तस्वादुकषायशीतपवनच्छायानिशावीजन-
ज्योत्स्नाभूगृहयन्त्रवारिजलदस्त्रीगात्रसंस्पर्श-
नम् ।
सर्पिःक्षीरविरेकसेकरुधिरस्रावप्रदेहादिकं
पानाहारविहारभेषजमिदं पित्तं प्रशान्तिं
नयेत् ॥"
अथ पित्तप्रकोपकारणानि ।
"कट्वम्लोष्णविदाहितीक्ष्णलवणक्रोधोपवासातप
स्त्रीसंभोगतृषाक्षुधाभिहननव्यायाममद्यादिभिः ।
भुक्तेऽजीर्य्यति भोजने च शरदि ग्रीष्मे तथा
प्राणिनां
मध्याह्ने च तथार्द्धरात्रसमये पित्तप्रकोपो भवेत्
॥"
इति भावप्रकाशे पूर्ब्बखण्डे २ भागे ॥
(यथा च ।
"अत्युष्णरुक्षाम्लकटुप्रदाहैः
सीधोः सुरासेवनेनातिघर्म्मे ।
क्रोधादपि स्वेदने च व्यवाये
अभोजने याति कोपञ्च पित्तम् ॥
कुलत्थ्याढकीयूषमूलेषु शिग्रु
तिलातसीराजिकाशाकवृन्दे ।
निशाजागरे योधने च श्रमे वा
घृनान्ते शरत्सु प्रकोपः प्रदिष्टः ।
तत्रस्थमेव पित्तानां शेषाणामप्यनुग्रहम् ।
करोति बलदानेन पाचकं नाम तत् स्मृतम् ॥
आमाशयाश्रयं पित्तं रञ्जकं रसरञ्जनात् ।
बुद्धिमेधाभिमानाद्यैरभिप्रेतार्थसाधनात् ॥
साधकं हृद्गतं पित्तं रूपालोचनतः स्मृतम् ।
दृक्स्थमालोचकं त्वक्स्थं भ्राजकं भ्राजना-
त्त्वचः ॥"
इति वाभटे सूत्रस्थाने द्वादशेऽध्याये ॥
"पित्तविकाराश्चत्वारिंशदत ऊर्द्ध्वं
व्याख्यास्यन्ते ।
तद्यथा, ओषश्च प्लोषश्च दाहश्च दवथुश्च
धूमक-
श्चाम्लकश्च विदाहश्च अन्तर्दाहश्चांसदाहश्चो-
ष्माधिक्यञ्चातिस्वेदश्चाङ्गगन्धश्चाङ्गावयवदरणञ्च
शोणितक्लेदश्च मांसक्लेदश्च त्वग्दाहश्च मांस-
दाहश्च त्वङ्मांसदरणञ्च रक्तकोठाश्च रक्त-
विस्फोटाश्च रक्तपित्तञ्च रक्तमण्डलानि च
हरितत्वञ्च हरिद्रत्वञ्च नीलिका च कक्षा च
कामला च तिक्तास्यता च पूतिमुखता चतृष्णाया
आधिक्यञ्चातृप्तिश्चास्यपाकश्चगलपाकश्चाक्षि-
पाकश्च गुदपाकश्च मेढ्रपाकश्च जीवादानञ्च
तमःप्रवेशश्च हरितहारिद्रमूत्रनेत्रवर्च्चस्त्वञ्चेति-
चत्वारिंशत् पित्तविकाराः । पित्तविकाराणाम-
परिसंङ्ख्येयानामाविष्कृततमा व्याख्याता भवन्ति ।
सर्व्वेष्वपि खल्वेतेषु पित्तविकारेष्वन्येषु चानु-
क्तेषु पित्तस्येदमात्मरूपमपरिणामिकर्म्मणश्च
स्वलक्षणं यत्तदुपलभ्य तदवयवं वा विमुक्त-
सन्देहाः पित्तविकारमेवाध्यवस्यन्ति कुशलाः ।
तद्यथा, --
औष्ण्यं तैक्ष्ण्यं लाघवमनतिस्नेहो वर्णश्च शुक्ला-
रुणवर्ज्जो गन्धश्च विस्रो रसौ च कटुकाम्लौ
पित्तस्यात्मरूपाण्येवंविधत्वाच्च कर्म्मणः स्वल-
क्षणमिदमस्य भवति । तं तं शरीरावयवमा-
विशतो दाहोष्मपाकस्वेदक्लेदकोथस्रावरागाः ।
यथास्वञ्च गन्धवर्णरसाभिनिर्व्वर्त्तनं पित्तस्य
कर्म्माणि तैरन्वितं पित्तविकारमेवाध्यवस्येत् ।
तं मधुरतिक्तकषायशीतैरुपक्रमैरुपक्रमेत । स्नेह-
विवेकप्रदेहपरिषेकाभ्यङ्गावगाहादिभिः पित्त-
हरैर्मात्रां कालञ्च प्रमाणीकृत्य विरेचनन्तु
सर्व्वोपक्रमेभ्यः पित्ते प्रधानतमं मन्यन्ते भिषजः ।
तद्ध्यादित एवामाशयमनुप्रविश्य केवलं वैका-
रिकं पित्तमूलञ्चापकर्षति । तत्रावजिते पित्ते-
विस्रत्वात्
प्रभूतपूतिवक्षःकक्षास्यशिरःशरीर-
गन्धाः कट्वम्लत्वादल्पशुक्रव्यवायापत्याः
। त एवं
गुणयोगात् पित्तला मध्यबला मध्यायुषो
ज्ञान-
विज्ञानवित्तोपकरणवन्तश्च ।" इति
चरके
विमानस्थानेऽष्टमेऽध्याये ॥)

**पित्तघ्नी**, स्त्री, (पित्तं हन्तीति । हन + "अमनुष्य-
कर्त्तृके च ।" ३ । २ । ५३ । इति टक् ।
ततो
ङीप् ।) गुडूची । इति शब्दचन्द्रिका ॥
(पित्तनाशके, त्रि । यथा, भावप्रकाशे । १
। १ ।
"मधुली शीतला स्निग्धा पित्तघ्नी मधुरा
लघुः ॥")

**पित्तज्वरः**, पुं, (पित्तनिमित्तको ज्वरः ।) पैत्तिक-
ज्वरः । यथा, --
"विशेषतः कोमलनारिकेलं
निहन्ति पित्तज्वरमूत्रदोषान् ॥"
इति राजनिर्घण्टः ॥
अस्य लक्षणं ज्वरशब्दे द्रष्टव्यम् ॥ * ॥
अथ पित्तज्वरचिकित्सा ।
"आमाशयस्थो हत्वाग्निं सामो मार्गान्
पिधा-
पयन् ।
विदधाति ज्वरं दोषस्तस्माल्लङ्घनमाचरेत्
॥"
इति वचनात् सामान्यतो ज्वरिमात्रस्य
यावदा-
रोग्यदर्शनं लङ्घनाभिधाने पित्तज्वरिणो
लङ्घन-
विधाने विशेषमाह सुश्रुतः । पैत्तिके
दशरात्रेण
ज्वरे युञ्जीत भेषजमिति । दशरात्रेण
लङ्घन-
वता व्यतीतेनेत्यर्थः । किन्तद्भेषजं तदाह
।
"तिक्तामुस्तायवैः पाठाकट्फलाभ्यां
सहोदकम् ।

भृशं वासरे मध्यगेऽर्के निशीथे
ऽसुजीर्य्यत्प्रभुक्ते प्रकोपः प्रदिष्टः ॥”
इति हारीते प्रथमस्थाने पञ्चमेऽध्याये ॥)
स तु ज्वरजनकमन्दाग्नेर्ज्जनकः ।
“मन्दाग्निस्तस्य जनको मन्दाग्नेर्जनकास्त्रयः ।
पित्तश्लेष्मसमीराश्च प्राणिनां दुःखदायकाः ॥”
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १६ अध्यायः ॥ * ॥
(यथा च ।
“पित्तं पञ्चात्मकं तत्र पक्वामाशयमध्यगम् ।
पञ्चभूतात्मकत्वेऽपि यत्तैजसगुणोदयात् ॥
त्यक्तद्रवत्वं पाकादिकर्म्मणानलशब्दितम् ।
पचत्यन्नं विभजते सारकिट्टौ पृथक् तथा ॥

ऽपि शरीरान्तर्गताः पित्तविकाराः प्रशान्ति-
मापद्यन्ते । यथाग्नौ व्यपोढे केवलमग्निगृहञ्च
शीतं भवति तद्वत् ॥” इति चरके सूत्रस्थाने
विंशेऽध्याये ॥ * ॥
“पित्तमुष्णन्तीक्ष्णं द्रवं विस्रमम्लङ्कटुकञ्च ।
तस्यो-
ष्ण्यात् पित्तला भवन्त्युष्णासहाः सुकुमारा-
वदातगात्राः प्रभूतपिप्लुव्यङ्गतिलकपिडकाःक्षुत्-
पिपासावन्तः क्षिप्रवलीपलितखालित्यदोषाः
प्रायोमृद्वल्पकपिलश्मश्रुलोमकेशाः तैक्ष्ण्या-
त्तीक्ष्णपराक्रमाः तीक्ष्णाग्नयः प्रभूताशनपानाः
क्लेशासहिष्णवो दन्दशूका द्रवत्वात् शिथिल-
मृदुसन्धिमांसाः प्रभूतसृष्टस्वेदमूत्रपुरीषाश्च

पक्वं सशर्करं पीतं पाचनं पैत्तिके ज्वरे
॥”
इति तिक्तादिक्वाथः ॥
“पर्पटो वासकस्तिक्ता कैरातो
धन्वयासकः ।
प्रियङ्गुश्च कृतः क्वाथ एष शर्करया युतः
॥
पिपासादाहपित्तास्रयुक्तं पित्तज्वरं हरेत्
॥”
इति पर्पटादिक्वाथः ॥
“द्राक्षा हरीतकी मुस्ता कटुका
कृतमालकः ।
पर्पटश्च कृतः क्वाथः एष पित्तज्वरापहः
॥
मुखशोषप्रलापान्तर्दाहमूर्च्छाभ्रमप्रणुत् ।
पिपासारक्तपित्तानां शमनो भेदनो मतः
॥”
इति द्राक्षादिक्वाथः ॥
“पटोलमथ धन्याकं मधुकं मधुसंयुतम् ।
हन्ति पित्तज्वरं दाहं
तृष्णाञ्चातिप्रमाथिनीम् ॥”
इति पटोलादिक्वाथः ॥
“गुडूच्यामलकीयुक्तः केवलो वापि पर्पटः
।
पित्तज्वरं हरेत्तूर्णं दाहशोषभ्रमान्वितम्
॥”
इति गुडूच्यादिक्वाथः ॥
“एकः पर्पटकः श्रेष्ठः पित्तज्वरविनाशनः
।
किं पुनर्यदि युज्येत चन्दनोशीरबालकैः
॥
ह्रीवेरचन्दनोशीरघनपर्प्टसाधितम् ।
दद्यात् सुशीतलं वारि
तृट्छर्द्दिज्वरदाहनुत् ॥”
इति ह्रीवेरादिक्वाथः ॥
“भूनिम्बातिविषालोध्रमुस्तकेन्द्रयवामृताः
।
बालकं धान्यकं विल्वं कषायो
माक्षिकान्वितः ॥
विड्भेदश्वासकासांश्च रक्तपित्तज्वरं
हरेत् ॥”
इति भूनिम्बादिक्वाथः ॥

"द्राक्षाचन्दनपद्मानि मुस्ता तिक्तामृतापि च ।
धात्री बालमुशीरञ्च लोध्रेन्द्रयवपर्पटाः ॥
परूषकं प्रियङ्गुश्च यवासो वासकस्तथा ।
मधुकं कुलकं वापि किरातो धान्यकं तथा ॥
एषां क्वाथो निहन्त्येव ज्वरं पित्तसमुत्थितम्
।
तृषां दाहं प्रलापञ्च रक्तपित्तं भ्रमं क्लमम् ॥
मूर्च्छां छर्द्दिं तथा शूलं मुखशोषमरोचकम् ।
कासं श्वासञ्च हृल्लासं नाशयेन्नात्र संशयः ॥"
इति महाद्राक्षादिक्वाथः ॥
"ससितो निशि पर्य्युषितः
प्रातर्धन्याकतण्डुल-
क्वाथः ।
पीतः शमयत्यचिरादन्तर्द्दाहं ज्वरं पैत्तम् ॥"
इति धन्याकक्वाथः ॥
"अमृताया हिमः प्रातः ससितः पैत्तिकज्वरम्
।
वासायाश्च तथा कासरक्तपित्तज्वरान् जयेत्
॥"
इति अमृतावासाक्वाथौ ॥
"गुडूची भूमिनिम्बश्च बालं वीरणमूलकम् ।
लघुमुस्तं त्रिवृद्धात्री द्राक्षा वासा च पर्प्पटः ॥
एषां क्वाथो हरत्येव ज्वरं पित्तकृतं द्रुतम् ।
सोपद्रवमपि प्रातर्निपीतो मधुना सह ॥"
इति गुडूच्यादिक्वाथः ॥
"पलाशस्य वदर्य्या वा निम्बस्य मृदुपल्लवैः ।
अम्लपिष्टैः प्रलेपोऽयं हन्याद्दाहयुतं ज्वरम् ॥
उत्तानसुप्तस्य गभीरताम्र-
कांस्यादिपात्रे निहिते च नाभौ ।
शीताम्बुधारा बहुला पतन्ती
निहन्ति दाहं त्वरितं ज्वरञ्च ॥
पथ्यां तैलघृतक्षौद्रैर्लिहन् दाहज्वरापहा ।
कासासृक्पित्तवीसर्पश्वासान् हन्ति वमीनपि
॥"
तैलघृतक्षौद्रैरित्यत्र न समुच्चयः तेन केवलेन
क्षौद्रेणापि लिह्यात् ।
"काञ्जिकार्द्रपटेनावगुण्ठनं दाहनाशनम् ।
अथ गोतक्रसुस्विन्नशीतलीकृतवाससा ॥
द्राक्षामलककल्केन कवलोऽत्र हितो मतः ।
पक्वदाडिमबीजैर्वा धन्याकल्केन च क्वचित्
॥"
इति कवलः ॥ धन्यात्र धान्याकम् ॥ * ॥

इति पित्तज्वराधिकारः ।" इति भावप्रकाशे
मध्यखण्डे प्रथमभागः ॥ * ॥
पित्तश्लेष्मज्वरनाशकौषधं यथा, --
"गुडूचीपद्मकारिष्टधन्याकं रक्तचन्दनम् ।
पित्तश्लेष्मज्वरच्छर्द्दिदाहतृष्णाघ्नमग्निकृत् ॥"
इति गारुडे १८८ अध्यायः ॥
(अस्य सलक्षणचिकित्सितान्यपराणियथा, --
"मूर्च्छा दाहो भ्रममदतृषावेगतीक्ष्णोऽतिसार-
स्तन्द्रालस्यं प्रलपनवमिः पाकताल्वोष्ठवक्त्रे ।
स्वेदः श्वासो भवति कटुकं विह्वलत्वं क्षुधा वा
एतैर्लिङ्गैर्भवति मनुजे पैत्तिको वै ज्वरस्तु ॥
रोध्रोत्पलामृतलता कमलं सिताढ्यं
तत्सारिवासहितमेव हि पाचनेषु ।
निःक्वाथ्य पानमति चाशु निहन्ति पित्तं
पित्तज्वरप्रशमनं प्रकरोति पुंसाम् ॥
क्वथितं तण्डुलपयसा शक्राह्वकटुरोहिणीसहि-
तम् ।
क्वाथं यष्टीमधुना विनाशनं पित्तज्वराणान्तु ।
दुरालभावासकपर्पटानां
प्रियङ्गुनिम्बैः कटुरोहिणीनाम् ।
किराततिक्तं क्वथितं कषायं
सशर्कराढ्यं क्वथितञ्च पाचनम् ॥
सदाहपित्तज्वरमाशु हन्ति
तृष्णाभ्रमं शोषविकारयुक्तम् ।
एकोऽपि वै पर्पटको वरिष्ठः
पित्तज्वराणां शमनाय योग्यः ।
तस्मात् पुनर्नागरबालकाढ्यः
सिंहो यथा कङ्कटके प्रवृत्तः ॥
नागरोशीरमुस्ता च चन्दनं कटुरोहिणी ।
धान्यकानां क्वाथ एव पित्तज्वरविनाशनः ॥
अमृतापर्पटोधात्री क्वाथः पित्तज्वरं हरेत् ।
सितारग्वघयोर्वापि काश्मर्य्याश्चाथ वा पुनः ॥
द्राक्षापर्पटकं तिक्ता पथ्यारग्वधमुस्तकैः ।
क्वाथस्तृषाभ्रमदाहयुक्तपित्तज्वापहः ॥
विदारिका रोध्रदधित्थकानां
स्यान्मातुलुङ्गस्य च दाडिमानाम् ।
यथानुलाभेन च मूलपत्रं
निहन्ति तृड्दाहसमूर्च्छनञ्च ॥
उत्तानस्य प्रसुप्तस्य कांस्यं वा ताम्रभाजनम् ।
नाभौ निधाय धाराम्बुशीतदाहनिवारणम्॥
रम्यारामाकुचभरनमितालिङ्गनं चेष्टसङ्गं
अव्यायामं मुनिवरगदितं शीतलं सेवनं स्यात् ।

**पित्तद्रावी**, [न्] पुं, (पित्तं द्रावयतीति । द्रु + णिच् + णिनिः ।) मधुरजम्बीरः । इति राज-निर्घण्टः ॥

**पित्तरक्तं**, क्ली, (पित्तसंसृष्टं रक्तमिति मध्यपद-लोपी समासः ।) रोगविशेषः । तत्पर्य्यायः । रक्तपित्तम् २ पित्तास्रम् ३ पित्तशोणितम् ४
।
इति राजनिर्घण्टः ॥ अस्य विवरणं
रक्तपित्त-
शब्दे द्रष्टव्यम् ॥

**पित्तलं**, क्ली, (पित्तं तद्वर्णं लातीति । ला + कः ।) धातुविशेषः । पितल इति भाषा ॥ (यथा, वैद्यकरसेन्द्रसारसंग्रहे जारणमारणाधिकारे
।
"पित्तलञ्च तथा कांस्यं ताम्रवन्मारयेद्भिषक्
।
ताम्रवच्छोधनं तेषां ताम्रवद्गुणकारकम्
॥")
तत्पर्य्यायः । आरकूटम् २ रीतिः ३
पतिकावे-
रम् ४ द्रव्यदारु ५ । इति जटाधरः ॥ रीती
६ । इति शब्दरत्नावली ॥ मिश्रम् ७ । इति
रत्नमाला ॥ आरः ८ राजरीतिः ९
ब्रह्मरीतिः
१० कपिला ११ पिङ्गला १२ । इति भाव-
प्रकाशः ॥ क्षुद्रसुवर्णः १३ सिंहलम् १४
पिङ्ग-
लकम् १५ पीतलकम् १६ लोहितकम् १७
पिङ्गललोहम् १८ पीतकम् १९ । रीतिका-
युगलगुणाः । तिक्तत्वम् । शीतलत्वम् । रसे
लवणत्वम् । शोधनत्वम् ।
पाण्डुवातकृमिप्लीह-
पित्तनाशित्वञ्च ।
"शुक्ला स्निग्धा मृदुः शीता सुरङ्गा
सूत्रपत्रिणी ।
हेमोपमा शुभा स्वच्छा जात्या रीतिः प्रकी-
र्त्तिता ॥"
इति राजनिर्घण्टः ॥
"रीतिरप्युपधातुः स्यात् ताम्रस्य यसदस्य
च ।

अथान्नमाह ।
“दाहवम्यर्दितं क्षामं निरन्नं तृषयान्वितम् ।
शर्करामधुसंयुक्तं पाययेल्लाजतर्पणम् ॥”
लाजतर्पणं लाजशक्तुरूपतर्पणम् । सन्तर्पण-
स्वरूपमुक्तं सामान्यज्वरचिकित्सायाम् ।
“मुद्गयूषौदनो देयः सितया पैत्तिके ज्वरे ॥
हर्म्ये शुभ्राभ्रसङ्काशे शशाङ्ककरशीतले ।
मलयोदकसंसिक्ते सुप्यात् पित्तज्वरी नरः ॥
हारावलीचन्दनशीतलानां
सुगन्धपुष्पाम्बरभूषितानाम् ।
नितम्बिनीनां सुपयोधराणा-
मालिङ्गनञ्चाशु हरन्ति दाहम् ॥
आह्लादञ्चास्य विज्ञाय ताश्च स्त्री रमयेत् पुनः
।
हितञ्च भोजयेदन्नं न हितं सुरतं महत् ॥
वाप्यः कमलहासिन्यो जलयन्त्रगृहाः शुभाः ।
नार्य्यश्चन्दनदिग्धाङ्ग्यो दाहदैन्यहरा मताः
॥
शुभ्राम्भोजं मलयजसलिलासिक्तसंशीतवासो
मुक्ताहारो विशदसतुहिनं कौमुदी या सुखाय ॥
एभिर्हन्ति द्रुततरनिभं मानुषाणान्तु पित्तं
दाहं शोषं क्लममपि तथा तृड्भ्रमं मूर्च्छनञ्च ।
एतैर्योगैर्भवति नितरां पित्तदाहस्य शान्ति-
र्योग्या चैव प्रभवति सदा सत्क्रिया श्रीमताञ्च ॥
यदि जिह्वा गलतालुशोषो घै मनुजस्य च ।
केशरं मातुलुङ्गस्य मधुसैन्धवसंयुतम् ।
पेष्यमाणं तालुलेपः सद्यः पित्ततृषापहः ॥”
इति पित्तज्वरचिकित्सा ॥ * ॥
पित्तलस्य गुणा ज्ञेया स्वयोनिसदृशा जनैः
॥
संयोगस्य प्रभावेण तस्यान्येऽपि गुणाः
स्मृताः ।
रीतिकायुगलं रूक्षं तिक्तञ्च लवणं रसे ।
शोधनं पाण्डुरोगघ्नं कृमिघ्नं नातिलेखनम्
॥”
इति भावप्रकाशः ॥ * ॥
भूर्जपत्रम् । इति शब्दमाला ॥ (बाहुल्येन
पित्तमस्त्यस्येति । पित्त +
“सिध्मादिभ्यश्च ।”
५ । २ । १७ । इति लच् ।) पित्तयुक्ते, त्रि ।
इति मेदिनी । ले, ११४ ॥ (पित्तवृद्धिकरे च
।
यथा, सुश्रुते सूत्रस्थाने । ४५ अध्याये ।
“सक्षारं पित्तलं कौपं श्लेष्मघ्नं दीपनं लघु
॥”
यथा च माधवकरधृतरुग्विनिश्चयसंग्रहे
पाण्डधि-
कारे ।
“पाण्डुरोगी तु योऽत्यर्थं पित्तलानि निषेवते
।
तस्य पित्तमसृङ्मांसं दग्ध्वा रोगाय कल्पते
॥”)

**पित्तला**, स्त्री, (पित्तल + टाप् ।) तोयपिप्पली ।
इति मेदिनी । ले, ११४ ॥

**पित्तारिः**, पुं, (पित्तानामरिर्नाशकः ।) पर्प्पटः ।
लाक्षा । वर्व्वरम् । इति राजनिर्घण्टः ॥

**पित्र्यं**, क्ली, (पितरो देवता अस्येति । पितृ + “वायु-
वृतुपित्रुषसो यत् ।” ४ । २ । ३१ । इति
यत् ।
“रीङृतः ।” ७ । ४ । २७ । इति
रीङादेशश्च ।
पितृदेवताकदानीयत्वादस्य तथात्वम् ।)
मधु ।

इति राजनिर्घण्टः ॥ पितृतीर्थम् । तत्तु तर्ज्ज-न्यङ्गुष्ठान्तः । इति हेमचन्द्रः । ३ । ५०४ ॥ (पितुरिदं पितुरागतं वेति । पितृ + "पितु-र्यत् ।" ४ । ३ । ७९ । इति यत् । ततो रीङा-देशः ।) पितृसम्बन्धिनि, त्रि । यथा, --
"ज्येष्ठ एव तु गृह्णीयात् पित्र्यं धनमशेषतः ।
शेषास्तमुपजीवेयुर्यथैव पितरन्तथा ॥"
इति दायभागः ॥
(पितृप्रियत्वात् श्राद्धार्हे च त्रि । यथा, सुश्रुते । १ । ४६ ।
"कफघ्नं स्वङ्गिपिशितं कषायमनिलापहम् ।
पित्र्यं पवित्रमायुष्यं बद्धमूत्रं विरूक्षणम् ॥")

**पित्र्यः**, पुं, (पितुस्तुल्य इति । बाहुलकात् यत् । ततो रीङादेशः ।) ज्येष्ठभ्राता । इति हेमचन्द्रः । ३ । २१५ ॥ (पितॄणां प्रिय इति यत् ।) माषः । इति शब्दमाला ॥

**पित्र्या**, स्त्री, (पितरो देवता अस्या इति । पितृ + यत् । पितृदैवतत्वादेव तथात्वम् ।) मघानक्ष-त्रम् । इति हेमचन्द्रः । २ । २५ ॥ पौर्णमासी । इति शब्दमाला ॥

**पित्सन्**, [त्] पुं, (पतितुमिच्छतीति । पत् + सन् + "सनि मीमाघुरभलभशकपतपदामच इस् ।" ७ । ४ । ५४ । इति इस् । अभ्यासस्य लोपश्च । ततः पित्स + शतृ ।) पक्षी । इत्य-मरः । २ । ५ । ३४ ॥ प्रतिपन्ने पतनेच्छौ च त्रि । इति विश्वः ॥

**पित्सलं**, क्ली, (पतत्यत्रेति । पत + "सलः पते-रदिद्वा ।" २ । २९२ । इति उणादिकोषधृत-सूत्रात् अधिकरणे सलः । अकारस्य इच्च ।) पन्थाः । इत्युणादिकोषः । २ । २९२ ॥

**पिधानं**, क्ली, (अपि + धा + ल्युट् । अपेरल्लोपः ।) छदनम् । इत्यमरः । १ । ३ । १३ ॥ (यथा, आर्य्यासप्तशत्याम् । ४८१ ।
"युगपज्जघनोरःस्तनपिधानमधुरे! त्रपास्मिता-र्द्रमुखि ! ।
लोलाक्षि ! नैष पवनो विरमति तव वसनपरि-वर्त्ती ॥")
उदञ्चनम् । इति हेमचन्द्रः । ४ । ९२ ॥

**पिनद्धः**, त्रि, (अपि नह्यते स्मेति । अपि + नह + शाङ्करमिहेति केचित् । इति भरतः ॥ पांशु-वर्षणम् । इति मेदिनी । के, ११९ ॥

**पिनाकी**, [न्] पुं, (पिनाकोऽस्त्यस्येति । इनिः ।) शिवः । इत्यमरः । १ । १ । ३३ ॥ (यथा, हरिवंशे । ३५ । २० ।
"कृत्वा च निश्चयं सर्व्वे पलायनपरायणाः ।
विहाय मथुरां रम्यां मानयन्तः पिनाकिनम् ॥"
रुद्रभेदः । यथा, मात्स्ये । ५ । २९ -- ३० ।
"अजैकपादहिर्व्विध्नो विरूपाक्षोऽथ रैवतः ।
हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः ॥
सावित्रश्च जयन्तश्च पिनाकी चापराजितः ॥")

**पिन्यासं**, क्ली, (अपिगतो विज्ञातो व्यक्तगन्ध-त्वात् न्यासो यस्य । अपेरलोपः ।) हिङ्गु । इति जटाधरः ॥

**पिपतिषन्**, [त्] त्रि, (पतितुमिच्छतीति । पत + सन् । ततः शतृ ।) पतनेच्छुः । विहङ्गमे, पुं । इति मेदिनी । ते, २३१ ॥

**पिपतिषुः**, पुं, (पतितुमिच्छतीति । पत + सन् । पिपतिस + "सनाशंसभिक्ष उः ।" ३ । २ । १६८ ।
इति उः ।) पक्षी । इति राजनिर्घण्टः ॥
(पतनेच्छौ, त्रि ॥)

**पिपासा**, स्त्री, (पातुमिच्छेति । पा + सन् + अः । ततष्टाप् ।) पानेच्छा । तत्पर्य्यायः । तृष्णा २ तर्षः ३ उपलासिका ४ तृट् ५ तृषा ६ उदन्या ७ । इति हेमचन्द्रः । ३ । ५८ ॥ (यथा, सुश्रुते सूत्रस्थाने १ अध्याये । "स्वाभाविकाः क्षुत्पि-पासाजरामृत्युनिद्राप्रभृतयः ॥")

**पिपासितः**, त्रि, (पिपासा जातास्येति । पिपासा + इतच् ।) पिपासायुक्तः । तृषितः । इति हलायुधः ॥ (यथा, मनौ । ८ । ९३ ।
"नग्नो मुण्डः कपालेन भिक्षार्थी क्षुत्पिपासितः ।
अन्धः शत्रुकुलं गच्छेद्यः साक्ष्यमनृतं वदेत् ॥")

**पिपासुः**, त्रि, (पातुमिच्छुः । पा + सन् + उः ।)
यां कृत्वा यमलोकाद्वै प्राप्यते वैष्णवं पदम् ॥
पिपीतक इति ख्यातो ब्राह्मणः संशितव्रतः ।
तपःस्वाध्यायनिरतः सर्व्वप्राणिहिते रतः ॥
शान्तो दान्तः क्षमायुक्तो बलिहोमपरायणः ।
निवसन् निर्जनेऽरण्ये बहून् कालान् द्विजोत्तमः ॥
चिरं कृत्वा तपोऽरण्ये काले मृत्युमुपेयिवान् ॥
ततः कालेन कियता यमदूतैर्महाबलैः ।
नीयमानः स विप्रेन्द्रो यमलोकं भयावहम् ॥
ददर्श बहुशस्तत्र नरान्निरयसंस्थितान् ॥
असिपत्राद्यनेकेषु कुम्भीपाकेषु संस्थितान् ।
कृतार्त्तरावांस्तान् दृष्ट्वा विषादमगमद्द्विजः ।
क्षुत्पिपासाकुलो भूत्वा प्रेतराजवशं गतः ॥
बहून् वस्त्रावृतान् कुम्भान् ददृशेऽतिमनो-हरान् ।
प्रदेशानीप्सितांस्तत्र प्रासादैरुपशोभितान् ॥
गीतवाद्यादिनृत्यैश्च सेव्यमानः समन्ततः ।
क्वचित् प्रहरमाणांश्च किङ्करैर्यमशासनैः ॥
नीयमानांस्ततः प्रेतान् वध्यमानान् स्वकर्म्मभिः ।
शोकसन्तापसंयुक्तान् तृषया परिपीडितः ॥
संपश्यमानो राजेन्द्र ! ययाचे किङ्करान् जलम् ।
बहुशो याच्यमानैश्च किङ्करैरभिताडितः ॥
स नीयमानो ददृशे बहुशाखं द्रुमोत्तमम् ।
सुच्छायं शीतलं रम्यं महान्तं पिप्पलद्रुमम् ॥
तत्रैव सजलान् कुम्भान् माल्यग्रीवान् सुशो-भितान् ।
ददर्शवस्त्रावृतमुखान् सुवासितसुशीतलान् ॥
रक्षन्ति बहवस्तत्र किङ्कराः शस्त्रपाणयः ।
तोयदर्शनमात्रेण साह्लादो ब्राह्मणोऽभवत् ॥
विनयावनतो भूत्वा ययाचे किङ्कराज्जलम् ।
ब्राह्मण उवाच ।
यमदूता महात्मानस्तोयं मे दीयतामिति ।

क्तः । अपेरल्लोपः ।) परिहितवस्त्रादि । तत्-
पर्य्यायः । आमुक्तः २ प्रतिमुक्तः ३ अपिनद्धः
४ । इत्यमरः । २ । ८ । ६५ ॥ (आच्छादितः ।
यथा, भागवते । ११ । ८ । ३३ ।
"यदस्थिभिर्निर्म्मितवंशवंश्य-
स्थूलं त्वचा रोमनखैः पिनद्धम् ॥")

**पिनाकः**, पुं, क्ली, (पाति रक्षति पनाय्यते स्तूयते

वा । पाल रक्षणे, पन स्तुतौ वा + "पिनाकाद-
यश्च ।" उणां ४ । १५ । इति आकप्रत्ययेन
निपा-
तनात् साधुः ।) शिवधनुः । तत्पर्य्यायः । अज-
गवम् २ । (यथा, महाभारते । ६ । ६० । १८ ।
"पिनाकमिव रुद्रस्य क्रुद्धस्याभिघ्नतः पशून् ॥")
शूलम् । इत्यमरः । १ । १ । ३७ ॥ शूलमपि

पानेच्छुः । तत्पर्य्यायः । तृषितः २ तृष्णक् ३
।
इति हेमचन्द्रः । ३ । ५७ ॥ (यथा, महा-
भारते । ३ । २२३ । २५ ।
"भागार्थं तपसो धातुं तेषां सोमं तथाध्वरे ।
पिपासवो ययुर्देवाः शतक्रतुपुरोगमाः ॥")

**पिपीतकः**, पुं, ब्राह्मणविशेषः । अस्य प्रमाणं

पिपीतकीशब्दे द्रष्टव्यम् ॥

**पिपीतकी**, स्त्री, (पिपीतको ब्राह्मणविशेषः प्रवर्त्त-

कतयास्त्यत्रेति । अच् । गौरादित्वात् ङीष् ।)
वैशाखशुक्लद्वादशी । तत्र कर्त्तव्यव्रतं यथा, --
शतानीक उवाच ।
"जलदानस्य माहात्म्यं यत्त्वया परिकीर्त्तितम्
।
तदहं श्रोतुमिच्छामि पिपीतकीकथां शुभाम् ॥
पुरा केन कृतञ्चैतत् केन चैतत् प्रकाशितम् ।
कथं पिपीतकीनाम विधानञ्चैव कीदृशम् ॥
तत् सर्व्वं ब्रूहि देवर्षे ! यदि तुष्टो मयि प्रभो ! ॥
नारद उवाच ।
शृणु राजन् ! प्रवक्ष्यामि द्वादशीं तां पिपी-
तकीम् ।

अप्राप्य तोयं प्राणानां विनाशो जायते
ध्रुवम् ॥
तस्मात्तोयप्रदानेन प्राणान्रक्षत मेऽधुना ।
श्रुत्वा विप्रस्य तद्वाक्यं तमूचुर्यमकिङ्कराः ॥
न कृतं कर्म्म तद्विप्र ! येन तोयञ्च लभ्यते ॥
प्रार्थयानः पुनस्तोयं यमदूतैः स ताडितः ॥
तृषार्त्तवचनं श्रुत्वा यमः प्रोवाच तं द्विजम् ।
ब्रूहि त्वं विप्र ! मा रोदीः का ते पीडास्ति
चेतसि ॥
पुनर्ययाचे तत्तोयं तृषाव्याकुलचेतनः ।
श्रुत्वा विप्रस्य तद्वाक्यं तमुवाच स धर्म्मराट्
॥
त्वया तन्न कृतं कर्म्म येन वै लभ्यते जलम्
॥
ब्राह्मण उवाच ।
त्वयि प्रसन्ने दिक्पाल ! तत्तोयं दुर्लभं न मे
।
तस्मात्तोयप्रदानेन प्राणरक्षां कुरु प्रभो ! ॥
इत्थं बहुविधैर्व्वाक्यैर्यमः प्रीतोऽभवत्तदा ॥
यम उवाच ।
वरं वरय विप्रेन्द्र ! यत्ते मनसि वर्त्तते ॥
ब्राह्मण उवाच ।
यदि तुष्टोऽसि मे देव ! येन प्राप्तोऽस्मि
तज्जलम् ।
तत् कुरुष्व धर्म्मराज ! सर्व्वप्राणेश्वर !
प्रभो ! ॥

यम उवाच ।
वैष्णवं तद्व्रतं विप्र ! कुरु गत्वा निजालयम् ।
विधानं शृणु विप्रेन्द्र ! द्वादशी यादृशी भवेत् ॥
वैशाखे शुक्लपक्षस्य द्वादशी वैष्णवी तिथिः ।
तस्यां सुशीतलजलैः स्नापयेत् केशवं प्रभुम् ॥
पूजयेद्गन्धपुष्पाद्यैर्धूपदीपैर्विधानतः ॥
नैवेद्यैर्विविधैश्चैव ताम्बूलैरथ वाससा ॥
जप्त्वा तु वैष्णवं मन्त्रं दण्डवत् प्रणमेत्ततः ।
दद्याद्द्विजेभ्यो विधिवत् कुम्भांस्तोयसमन्वितान् ।
प्रथमेऽब्दे चतुःकुम्भान् दद्याल्लवणसंयुतान् ॥
शुक्लवस्त्रावृतमुखानुपवीतसुसंयुतान् ।
धनुर्व्वाणसमायुक्तान् सभोज्यदक्षिणान्वितान्॥
द्वितीयेऽष्टौ घटान्दद्याद्दधिशर्करसंयुतान् ।
तृतीये द्वादश घटान् तिलमोदकसंयुतान् ॥
चतुर्थे षोडशघटान् दुग्धलड्डुकसंयुतान् ।
दद्यात् संपूज्य देवेशं द्विजातिभ्यः प्रयत्नतः ॥
दक्षिणां शक्तितो दद्यात् भोज्यञ्चैव विशेषतः ।
यत्र कुत्रापि संगच्छेन्न कुत्रापि तृषान्वितः ॥
ततो द्विजो गृहं गत्वा चकार द्वादशीव्रतम् ॥
अन्ते जगाम स्वर्लोकं वैष्णवं पदमुत्तमम् ॥
पिपीतकीति नाम्नातो विख्यातो वैष्णवी तिथिः ।
नरो यः कुरुते भक्त्या नारी वा भक्तिसंयुता ।
इह पुत्त्रादिसम्पन्ना धनधान्यसुतान्विता ॥”
इति भविष्यपुराणे पिपीतकीव्रतकथा समाप्ता ॥

**पिपीलकः**, पुं, (अपिपीलतीति । अपि + पील स्तम्भने + ण्वुल् । अपेरल्लोपः ।) पीलकः । इति हेमचन्द्रः । ४ । २७२ ॥ डेउया पिँपीडा इति भाषा ॥

**पिपीलिका**, स्त्री, (पिपीलक + टापि अत इत्वम् ।) हीनाङ्गी । इति हेमचन्द्रः । ४ । २७३ ॥ क्षुद्रे पिँपीडा इति भाषा ॥ तत्पर्य्यायः । पिपी- लिकः २ पिपीलः ३ पीलकः ४ । इति शब्द- रत्नावली ॥ पिपीली ५ पिपिली ६ स्त्रीसंज्ञा ७ । इति राजनिर्घण्टः ॥ हीरा ८ । इति त्रिकाण्डशेषः ॥ (यथा, हरिवंशे । २४ । ४ ।
“श्रुत्वा तु याच्यमानां तां क्रुद्धां सूक्ष्मपिपीलि- काम् ।
ब्रह्मदत्तो महाहासमकस्माद्वै चाहसत् ॥”)

**पिपीली**, स्त्री, (अपिपीलतीति । पील् + अच् । निरंशुकः । पक्षिभेदः । इति मेदिनी । ले, ११२ ॥ * ॥ अश्वत्थस्वरूपं यथा, --
नारद उवाच ।
“अनायासेन यन्मर्त्यः सर्व्वान् कामानवाप्नुयात् ।
सर्व्वदेवात्मकञ्चैव तन्मे ब्रूहि पितामह ! ॥
ब्रह्मोवाच ।
शृणु नारद ! यत्नेन शुद्धं सर्व्वात्मकं गुरुम् ।
प्रदक्षिणीकृत्य नित्यं नराणां सर्व्वकामदम् ॥
पूजयेत् परया भक्त्या सर्व्वसिद्धियुतो भवेत् ।
अश्वत्थं पूजयेद्विप्र ! सर्व्वसिद्धिविधायकम् ॥ * ॥
अश्वत्थदक्षिणे रुद्रः पश्चिमे विष्णुरेव च ।
ब्रह्मा चोत्तरतस्तस्य पूर्ब्बे चेन्द्रादिदेवताः ॥
स्कन्धे स्कन्धे च पत्रेषु ब्राह्मणा ऋषयः स्मृताः ।
तस्य मूले सर्व्ववेदाः श्रद्धा तस्य द्रुमाश्रिता ॥
नदीनदाः सागराद्याः पूर्ब्बस्यान्दिशि संस्थिताः ।
लोकधर्म्मान् समाश्रित्य तस्मात्तं सेवयेन्नरः ॥
पुराणस्मृतिमन्त्रेभ्यः सारसुद्धृत्य सञ्चितम् ।
निष्ठाप्रतिष्ठितं सम्यगश्वथं सेवयेन्नरः ॥
त्वं क्षीरी फलितश्चैव शीतलश्च वनस्पते ! ।
त्वामाराध्य नरो हन्यात् दैहिकाधिष्ठितं मलम् ॥
अश्वत्थ ! यस्मात् त्वयि वृक्षराज !
नारायणस्तिष्ठति सर्व्वकारणम् ।
अतः शुचिस्त्वं सततं तरूणां
विशेषतोऽरिष्टविनाशनोऽसि ॥
क्षीरोदमथने चैव यथा श्रीस्त्वामुपासते ।
सत्येन तेन वृक्षेन्द्र ! आशीर्मयि निषेवतु ॥
एकादशोऽसि रुद्राणां वसूनाञ्चाष्टमस्तथा ।
नारायणोऽसि देवानां वृक्षाणामसि पिप्पलः ॥
अग्निगर्भस्त्वमश्वत्थ ! देवगर्भः प्रजापतिः ।
हरिर्यथैव श्रीगर्भो यज्ञगर्भ ! नमोऽस्तु ते ॥
अरातेरग्निरश्वत्थ ! परापर ! नमोऽस्तु ते ।
निर्वति त्वभिवर्षन्तु स्वस्ति तेऽस्तु नमोऽस्तु ते ॥
अक्षिस्पन्दं भुजस्पन्दं दुःस्वप्नं दुर्निरीक्षितम् ।
अक्षयं मुनिशार्दूल ! ब्रह्मणो वचनं यथा ॥
एवं समर्च्चितोऽश्वत्थः सर्व्वसौख्यप्रदो भवेत् ।
यज्ञार्थं छेदितोऽश्वत्थः सर्व्वारोग्यप्रदो भवेत् ॥
अश्वत्थः पूजितो येन पूजिताः सर्व्वदेवताः ।
अश्वत्थश्छेदितो येन छेदिताः सर्व्वदेवताः ॥
अन्तःशुद्धः सुसन्तुष्टोऽश्वत्थो देवमयो गुरुः ।
स सेव्यः पूजनीयश्च गुणत्रयविनाशकः ॥
भृग्वर्कवारे भौमे च मध्याह्ने निशि सन्ध्ययोः ।
अश्वत्थदर्शनं कार्य्यं कुलक्षयभयात्मभिः ॥ * ॥
अश्वत्थस्य जले यस्य छाया तिष्ठति कुत्रचित् ।
तत् प्रयागसमं तीर्थं तत्र सन्निहितो हरिः ॥
तस्मात् कार्त्तिकमासेऽत्र पूर्ब्बोक्तविधिना मुने ! ।
अश्वत्थं सेचयेद्विद्वान् संप्रदक्षिणमादिशेत् ॥
पापोपहतमर्त्यानां पापनाशो भवेद्ध्रुवम् ।
सकामो लभते कामं निष्कामो मोक्षमाप्नुयात् ॥
यः पठेत् शृणुयाद्वापि अश्वत्थस्य समीपतः ।
सर्व्वान् कामानवाप्नोति
विष्णुसायुज्यमाप्नुयात् ॥”
इति पाद्मोत्तरखण्डे १२६ अध्यायः ॥
ऋषय ऊचुः ।
“कथं त्वयाश्वत्थवटौ गोब्राह्मणसमौ कृतौ ।
सर्व्वेभ्योऽपि तरुभ्यस्तौ कथं पूज्यतमौ कृतौ ॥
सूत उवाच ।
अश्वत्थरूपो भगवान् विष्णुरेव न संशयः ।
रुद्ररूपो वटस्तद्वत् पलाशो ब्रह्मरूपधृक् ॥
दर्शनस्पर्शसेवासु ते वै पापहराः स्मृताः ।
दुःखापद्व्याधिदुष्टानां विनाशकारिणो ध्रुवम् ॥
ऋषय उचुः ।
कथं वृक्षत्वमापन्ना ब्रह्मविष्णुमहेश्वराः ।
एतत् कथय सर्व्वज्ञ ! संशयोऽत्र महान् हि नः ॥
सूत उवाच ।

अपेरलोपः । ततो गौरादित्वात् ङीष् ।) पिपी-
लिका । इति राजनिर्घण्टः ॥

**पिप्पटा**, स्त्री, खाद्यद्रव्यविशेषः । तत्पर्य्यायः ।

गुडशर्करा २ । इति त्रिकाण्डशेषः ॥

**पिप्पलं**, क्ली, (पीयते इति । पा + अलच् । पृषो-

दरादित्वात् साधुः ।) जलम् । वस्त्रच्छेदभेदः ।
इति मेदिनी । ले, १११ ॥

**पिप्पलः**, पुं, (पिप्पलं जलं सिच्यमानत्वेनास्त्यस्य

मूलावच्छेदे इति । पिप्पल + "अर्शआदिभ्यो-
ऽच् ।" ५ । २ । १२७ । इत्यच् ।) अश्वत्थवृक्षः ।
(यथा, महाभारते । २ । २१ । ८ ।
"वनराजीस्तु पश्येमाः पिप्पलानां मनोरमाः ।
लोध्राणाञ्च शुभाः पार्थ ! गौतमौकःसमी-
पजाः ॥")

शत्रूणाञ्च समुत्थानमश्वत्थ ! शमयाशु मे ॥
यं स्पृष्ट्वा मुच्यते रोगैः सर्व्वपापैः प्रमुच्यते ।
समाश्लिष्य च दीर्घायुस्तमश्वत्थं नमाम्यहम्
॥
अश्वत्थ ! सुमहाभाग ! सर्व्वदा प्रियदर्शन !
।
दिव्यान्नभोजनं देहि शत्रूणाञ्च पराजयम् ॥
आयुः प्रजां धनं धान्यं सौभाग्यं सर्व्वदा
सुखम् ।
देहि देव महावृक्ष ! त्वामहञ्चाभिवादये ॥
अश्वत्थ ! देवमूलस्त्वमृषिभिः प्रोच्यते सदा
॥
ब्रह्महा गुरुहा चैव दरिद्रो व्याधिपीडितः ।
आवृत्य दशलक्षन्तु शुद्धः पापातिगो भवेत् ॥
ब्रह्मचारी हविष्याशी अधःशायी जितेन्द्रियः ।
पापापहन्ता मर्त्यस्तु व्रतमेतत् समाचरेत् ॥
एकहस्तं द्विहस्तं वा कुर्य्याद्गोमयलेपनम् ।
अश्वत्थे स्थापिते यस्तु मूले स्नपनमाचरेत्
॥
धनायुःसन्ततैर्वृद्धो नरकात्तारयेत् पितॄन् ॥
अश्वत्थमूलमासाद्य शाकेनान्नोदकेन वा ।
एकं वा भोजयेद्विप्रं कोटि कोटि फलं भवेत् ॥
अश्वत्थमूलमासाद्य तपो होमः सुरार्च्चनम् ।

पार्व्वतीशिवयोर्द्देवैः सुरतं कुर्व्वतोः किल ।
अग्निं ब्राह्मणवेशेन प्रेष्य विघ्नः कृतः पुरा ॥
ततस्तु पार्व्वती क्रुद्धा शशाप त्रिदिवौकसः ।
रेतःसेकसुखभ्रंशकम्पमाना तदा रुषा ॥
पार्व्वत्युवाच ।
क्रिमिकीटादयोऽप्येते जानन्ति सुरतेः सुखम्
।
तस्मान्मम सुखभ्रंशाद्यूयं वृक्षत्वमाप्स्यथ ॥
सूत उवाच ।
एवं सा पार्व्वती देवी अशपत् क्रुद्धमानसा ।
तस्माद्वृक्षत्वमापन्ना ब्रह्मविष्णुमहेश्वराः ॥
तस्मादिमौ विष्णुमहेश्वरावुभौ
बभूवतुर्ब्बोधिवटौ मुनीश्वराः ! ।
बोधिस्त्वयं चार्किदिनं विनैव
नस्पृश्यतामर्कजवारयोगात् ॥
ऋषय ऊचुः ।
अस्पृश्यत्वं कथं यातः सूत ! बोधितरुः
स्वयम् ।
स्पृश्यत्वञ्च कथं प्राप्तस्तथायं शनिवासरे ॥
सूत उवाच ।
समुद्रमथनाद्यानि रत्नान्यापुः सुरोत्तमाः ।
श्रेष्ठञ्च कौस्तुभं तेषु विष्णवे प्रददुः सुराः ॥
यावदङ्गीचकारासौ लक्ष्मीं भार्य्यार्थमात्मनः ।
तावत् विज्ञापयामास लक्ष्मीस्तं चक्रपाणिनम्
॥

लक्ष्मीरुवाच ।
असंस्कृत्य कथं ज्येष्ठां कनिष्ठा परिणीयते ।
तस्मात्त्वमग्रजामेतामलक्ष्मीं मधुसूदन ! ॥
विवाह्योद्वह मां पश्चादेष धर्म्मः सनातनः ।
तस्माद्धर्म्मव्यतिक्रामं न कुर्य्या मधुसूदन ! ॥
सूत उवाच ।
इति तद्वचनं श्रुत्वा स विष्णुर्लोकभावनः ।
उद्दालकाय मुनये सुदीर्घतपसे तदा ।
आप्तवाक्यानुरोधेन तामलक्ष्मीं ददौ किल ॥
स्थूलोष्ठीं शुष्कवदनां विरूपां बिभ्रतीं तनुम् ।
सवदारक्तनयनां रूक्षपिङ्गशिरोरुहाम् ॥
स मुनिर्विष्णुवाक्यात्तामङ्गीकृत्य स्वमाश्रमम्
।
वेदध्वनिसमायुक्तमानयामास धर्म्मवित् ॥
होमधूमसुगन्धाढ्यं वेदघोषेण नादितम् ।
आश्रमन्तं विलोक्याथ व्यथिता साब्रवीदिदम्
॥
ज्येष्ठोवाच ।
नहि वासोऽनुरूपोऽयं वेदध्वनियुतो मम ।
नात्रागमिष्ये भो ब्रह्मन् ! नयस्वान्यत्र मां ध्रुवम्
॥
उद्दालक उवाच ।
कथं नायासि किञ्चात्र वर्त्तते स्वमतं तव ।
तव योग्या च वसतिः का भवेत्तद्वदस्व माम् ॥
ज्येष्ठोवाच ।
वेदध्वनिर्भवेद्यस्मिन्नतिथीनाञ्च पूजनम् ।
यज्ञदानादिकं यत्र नैव तत्र वसाम्यहम् ॥
परस्परानुरागेण दाम्पत्यं यत्र विद्यते ।
पितृदेवार्च्चनं यत्र तत्र नैव वसाम्यहम् ॥
दानशौचे न विद्येते परद्रव्यापहारिणः ।
परदाररता यत्र तत्र स्थाने रतिर्म्मम ॥
वृद्धसज्जनविप्राणां यत्र स्यादपमाननम् ।
निष्ठुरं भाषणं यत्र तत्र सम्यग्वसाम्यहम् ॥
सूत उवाच ।
इति तद्वचनं श्रुत्वा विषण्णवदनोऽभवत् ।
उद्दालकस्ततो वाक्यं तामलक्ष्मीमुवाच ह ॥
उद्दालक उवाच ।
अश्वत्थवृक्षमूलेऽस्मिन्नलक्ष्मि ! श्राम्यतां
क्षणम् ।
आश्रमस्थानमालोक्य यावदायाम्यहं पुनः ॥
सूत उवाच ।
इति तां तत्र संस्थाप्य जगामोद्दालको मुनिः ।
मन्दवारे सदा नूनं लक्ष्मीरत्रागमिष्यति ।
अस्पृश्योऽसौ भवेत्तस्मान्मन्दवारं विना किल
॥
प्रत्यब्दमर्च्चयिष्यन्ति त्वां ज्येष्ठां गृहधर्म्मिणः ।
तेष्वियं श्रीः कनिष्ठा ते सदा तिष्ठत्वनामया ॥”
इति पाद्मोत्तरखण्डे । १६० -- १६१ ।
अध्यायौ ॥
(रेवत्यां जातो मित्रस्य पुत्त्रविशेषः । यथा,
भागवते । ६ । १८ । ६ ।
“रेतः सिषिचतुः कुम्भे उर्व्वश्याः सन्निधौ द्रुतम्
।
रेवत्यां मित्र उत्सर्गमरिष्टं पिप्पलं व्यधात् ॥”)

**पिप्पलकं**, क्ली, (पीयते इति । पा + अलच् ।
पृषोदरादित्वात् साधुः । ततः संज्ञायां कन् ।)
स्तनवृन्तम् । सीवनसूत्रम् । इति मेदिनी । के,
१९८ ॥

**पिप्पलिः**, स्त्री, (पिपर्त्तीति । पृ लि पूर्त्तौ + बाहु-
लकात् अलच् । गौरादित्वात् ङीष् । ह्रस्वः ।
पृषोदरादित्वात् साधुः ।) पिप्पली । इति
शब्दरत्नावली ॥

**पिप्पली**, स्त्री, (पिपर्त्तीति + पृ + बाहुलकात्
अलच् । पृषोदरादित्वात् साधुः । गौरादित्वात्
ङीष् ।) वृक्षविशेषः । पिँपुल इति भाषा ॥
तत्पर्य्यायः । कृष्णा २ उपकुल्या ३ वैदेही ४
मागधी ५ चपला ६ कणा ७ उषणा ८ शौण्डी
९ कोला १० । इत्यमरः । २ । ४ । ९७ ॥
ऊषणा ११ पिप्पलिः १२ । इति भरतः ॥
कृकला १३ कटुबीजा १४ कोरङ्गी १५ तिक्त-
तण्डुला १६ श्यामा १७ दन्तफला १८
मगधो-
द्भवा १९ । अस्या गुणाः । ज्वरनाशित्वम् ।
वृष्यत्वम् । स्निग्धत्वम् । उष्णत्वम् । कटुत्वम्
।
तिक्तत्वम् । दीपनत्वम् ।
मारुतश्वासकासश्लेष्म-
क्षयापहत्वञ्च । इति राजनिर्घण्टः ॥ स्वादु-
पाकत्वम् । रसायनत्वम् । लघुत्वम् । पित्तल-
त्वम् । रेचनत्वम् । कुष्ठप्रमेहगुल्मार्शःप्लीह-
शूलामनाशित्वञ्च ॥ आर्द्रायास्तस्या गुणाः ।
कटुमूलम् ८ कटूषणम् ९ सर्व्वग्रन्थि १० पत्रा-
ढ्यम् ११ विरूपम् १२ शोषसम्भवम् १३
सुगन्धि १४ ग्रन्थिलम् १५ । इति
राजनिर्घण्टः ॥
उषणम् १६ । अस्य गुणाः । दीपनत्वम् ।
कटुत्वम् । पाचनत्वम् । लघुत्वम् । रूक्षत्वम् ।
पित्तकरत्वम् । भेदकत्वम् । कफवातोदरानाह-
प्लीहगुल्मकृमिश्वासक्षयापहत्वञ्च । इति भाव-
प्रकाशः ॥ उष्णत्वम् । रोचनत्वम् । इति राज-
निर्घण्टः ॥

**पिप्पिका**, स्त्री, दन्तमलम् । इति हेमचन्द्रः ।
३ । २९६ ॥

**पिप्लुः**, पुं, (अपि प्लवते देहोपरि इति । अपि +
प्लु + डुः । अपेरल्लोपः ।) जटुलः । इत्यमरः ।
२ । ६ । ४९ ॥

**पियालः**, पुं, (पीयते तर्पयतीति । पीय + “पीयु-
कणिभ्यां कालन् ह्रस्वः सम्प्रसारणञ्च ।” उणां
३ । ७६ । इति कालन् ह्रस्वश्च ।) वृक्षविशेषः
।
अस्यैव बीजं चिरौञ्जीति ख्यातम् । तत्पर्य्यायः
।
राजादनम् २ सन्नकद्रुः ३ धनुष्पटः ४ । इत्य-
मरः । २ । ४ । ३५ ॥ राजातनम् ५ राजातनः
६ प्रियालः ७ सन्नः ८ कद्रुः ९ धनुः १० पटः
११ । इति तट्टीका ॥ ह्रसन्नकः १२ धन्वपटः
१३ पियालकः १४ । इति शब्दरत्नावली ॥
खरस्कन्धः १५ चारः १६ बहुलवल्कलः १७
तापसेष्टः १८ ॥ (यथा, भागवते । ८ । २ ।
१० ।
“चूतैः पियालैः पनसैराम्रैराम्रातकैरपि ॥”)
तस्य गुणाः । पित्तकफास्रनाशित्वम् । इति
भावप्रकाशः ॥ अस्य फलगुणाः । मधुरत्वम् ।
स्निग्धत्वम् । बृंहणत्वम् । वातपित्तनाशित्वञ्च ।
इति राजवल्लभः ॥ गुरुत्वम् । सरत्वम् । दाह-
ज्वरतृषापहत्वञ्च । तस्य मज्जगुणाः । मधु-
रत्वम् । वृष्यत्वम् । पित्तानिलापहत्वम् । हृद्य-
त्वम् । अतिदुर्जरत्वम् । स्निग्धत्वम् । विष्टम्भि-
त्वम् । आमवर्द्धनत्वञ्च । इति भावप्रकाशे पूर्ब्ब-
खण्डे प्रथमो भागः ॥

**पिल**, क नुदि । इति कविकल्पद्रुमः ॥ (चुरां-

प्रतीक्षन्ती चिरं तत्र यदा तं न ददर्श सा ॥
तदा रुरोदे करुणं भर्त्तुस्त्यागेन दुःखिता ॥
तत्तस्याः क्रन्दितं लक्ष्मीर्वैकुण्ठभवनेऽशृणोत्
।
तदा विज्ञापयामास विष्णुमुद्विग्नमानसा ॥
लक्ष्मीरुवाच ।
स्वामिन् ! मद्भगिनी ज्येष्ठा स्वामित्यागेन
दुःखिता ।
तामाश्वासयितुं याहि कृपालो ! यद्यहं प्रिया ॥
सूत उवाच ।
लक्ष्म्या सह ततो विष्णुस्तत्रागात्
कृपयान्वितः ।
आश्वासयन्नलक्ष्मीं तामिदं वाक्यमथाब्रवीत्
॥
विष्णुरुवाच ।
अश्वत्थवृक्षमासाद्य सदालक्ष्मि ! स्थिरा भव
।
ममांशसम्भवो ह्येष आवासस्ते मया कृतः ॥

कफप्रदत्वम् । स्निग्धत्वम् । शीतलत्वम् ।
मधुर-
त्वम् । गुरुत्वम् । पित्तप्रशमनत्वञ्च । राजवल्लभे
तु कफापहत्वम् । मधुयुक्तायास्तस्या गुणाः ।
मेदःकफश्वासकासज्वरहरत्वम् । वृष्यत्वम् ।
मेधाग्निवर्द्धनत्वञ्च । गुडपिप्पलीगुणाः । जीर्ण-
ज्वरे अग्निमान्द्ये च शस्तत्वम् । कासाजीर्णा-
रुचिश्वासहृत्पाण्डुक्रिमिनाशित्वञ्च । द्विगुणात्
पिप्पलीचूर्णाद्गुडोऽत्र भिषजां मतः । इति
भावप्रकाशः ॥ (ऋष्यवन्तपर्व्वतान्निःसृतो
नदी-
विशेषः । यथा, मात्स्ये । ११३ । २५ ।
“तमसा पिप्पली श्येनी तथा चित्रोत्पलापि
च ॥”)

**पिप्पलीका**, स्त्री, अश्वत्थीवृक्षः । इति राज-
निर्घण्टः ॥

**पिप्पलीमूलं**, क्ली, (पिप्पल्या मूलमिव मूलमस्य ।)
स्वनामख्यातमूलम् । पिँपुलमूल इति भाषा ।
तत्पर्य्यायः । ग्रन्थिकम् २ चटिकाशिरः ३ ।
इत्यमरः । २ । ९ । ११० ॥ षड्ग्रन्थि ४ ।
इति
रत्नमाला ॥ मूलम् ५ कोलमूलम् ६ कटुग्रन्थि
७

परं-सकं-सेट् ।) क, पेलयति । नुदि प्रेरणे ।
इति दुर्गादासः ॥

**पिलुकः**, पुं, (अपिलातीति । अपि + ला + बाहु-
लकात् डुः । अपेरलोपः । ततः कन् ।) पीलु-
वृक्षः । इति शब्दरत्नावली ॥

**पिलुपर्णी**, स्त्री, (पिलोरिव पर्णमस्याः । ङीष् ।)
मोरटा । इति रत्नमाला ॥

**पिल्लः**, पुं, (क्लिन्ने चक्षुषी यस्येति । “इनच्पिट-
च्चिकचि च ।” ५ । २ । ३३ । इत्यत्र
“क्लिन्नस्य
चिल्पिल्लश्चास्य चक्षुषी ।” इति वार्त्तिकोक्त्या
पिल्लादेशः ।) क्लेदयुक्तचक्षुः । (अस्य
चिकित्सा
यथा, --
“ताम्रपात्रे गुहामूलं सिन्धूत्थमरिचान्वितम् ।
आरनालेन संघृष्टमञ्जनं पिल्लनाशनम् ॥”
इति वैद्यकचक्रपाणिसंग्रहे नेत्ररोगाधिकारे ॥)
तद्युक्ते, त्रि । इत्यमरः । २ । ६ । ६० ॥

**पिल्लका**, स्त्री, (पिल्लेन क्लेदयुक्तचक्षुषा काय-
तीति । कै + कः । टाप् ।) हस्तिनी । इति
शब्दमाला ॥

**पिव**, इ सेचने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) इ, पिन्व्यते । इति दुर्गादासः ॥

**पिश**, श प अवयवे । इति कविकल्पद्रुमः ॥
(तुदां-मुचां-परं अकं-सेट् ।) श प, पिंशति
पटः अवयवी स्यादित्यर्थः । इति दुर्गादासः ॥

**पिशङ्गः**, पुं, (पिंशतीति । पिश + "विडादिभ्यः
कित् ।" उणां । १ । १२० । इत्यङ्गच् स च कित् ।)
पिङ्गलवर्णः । तद्वति, त्रि । इत्यमरः । १ । ५ ।
१६ -- १७ ॥ (यथा, ऋग्वेदे । १ । ८८ । २ ।
"तेऽरुणेभिर्वरमा पिशङ्गैः शुभे कं यान्ति रथ-
तूर्भिरश्वैः ॥"
यथा च माघे । १ । ६ ।
"पिशङ्गमौञ्जीयुजमर्ज्जुनच्छविं
वसानमेणाजिनमञ्जनद्युति ।
सुवर्णसूत्राकलिताधराम्बरां
विडम्बयन्तं शितिवाससस्तनुम् ॥"
नागभेदः । यथा, महाभारते । १ । ५७ । १६ ।
"भैरवो मुण्डवेदाङ्गः पिशङ्गश्चोद्रपारकः ॥")

**पिशाचः**, पुं, (पिशितं मांसमश्नातीति । पिशित +
अश + "कर्म्मण्यण् ।" ३ । २ । १ । इति अण् ।
ततः "पृषोदरादीनि यथोपदिष्टम् ।" ६ । ३ ।
१०९ । इति शितभागस्य लोपः अशभागस्य
शाचादेशः ।) देवयोनिविशेषः । इत्यमरः । १ ।
१ । ११ ॥ पिचाश इति भाषा ॥ (यथा,
मनौ । १ । ३७ ।
"यक्षरक्षःपिशाचांश्च गन्धर्व्वाप्सरसोऽसुरान् ॥"
"यक्षो वैश्रवणस्तदनुचराश्च । रक्षांसि रावणा-
दीनि । पिशाचास्तेभ्योऽपकृष्टा अशुचिमरुदेश-
निवासिनः ।" इति तट्टीकायां कुल्लूकभट्टः ॥)
तस्य लोको यथा, --
"अन्तरीक्षचरा ये च भूतप्रेतपिशाचकाः ।
वर्जयित्वा रुद्रगणांस्ते तत्रैव चरन्ति हि ॥
नोद्‌र्ध्वं विक्रमणे शक्तिस्तेषां सम्भृतपाप्मनाम् ।
अत ऊद्‌र्ध्वं हि विप्रेन्द्र ! राक्षसा ये कृतैनसः ।
ते तु सूर्य्यादधः सर्व्वे विहरन्त्यूद्‌र्ध्ववर्जिताः ॥"
इति पाद्मे स्वर्गखण्डे १५ अध्यायः ॥

**पिशाचसभं**, क्ली, पिशाचानां सभा । इति नपुं-
सकलिङ्गसंग्रहटीकायां भरतः ॥

**पिशाची**, स्त्री, (पिशाच + ङीष् ।) पिशाचिका ।
स्त्री पिशाची । इति शब्दमाला ॥ (पिशाच-
वद्‌गन्धोऽस्त्यस्या इति । अच् ततो ङीष्
।
तद्वद्‌गन्धयुक्तत्वात् तथात्वम् ।)
गन्धमांसी ।
इति राजनिर्घण्टः ॥

**पिशितं**, क्ली, (पिंशति अवयवीभवतीति । पिश
+ "पिशेः किच्च ।" उणां । ३ । ९५ ।
इति
इतन् स च कित् । यद्वा, पिश्यते स्मेति ।
क्तः ।)
मांसम् । इत्यमरः । २ । ६ । ६३ ॥
(यथा,
मार्कण्डेयपुराणे । २५ । १७ ।
"हासोऽस्थिसन्दर्शनमक्षियुग्म-
मत्युज्ज्वलं तर्ज्जनमङ्गनायाः ।
कुचादि पीनं पिशितं घनं तत्
स्थानं रतेः किं नरकं न योषित् ॥")

**पिशिता**, स्त्री, (पिशितवद्‌गन्धोऽस्त्यस्याइति ।
अच् ततष्टाप् ।) जटामांसी । इति मेदिनी
।
ते, ३३ ॥

**पिशिताशी**, [न्] त्रि, (पिशितं अश्नातीति ।
अश् + णिनिः ।) शाष्कुलः । मांसभक्षकः
। इति
हेमचन्द्रः । ३ । ९३ ॥ (यथा, महाभारते
।
१ । ८४ । १४ ।
"सङ्कीर्णाचारधर्म्मेषु प्रतिलोमचरेषु च ।
पिशिताशिषु चान्त्येषु मूढ ! राजा भवि-
ष्यसि ॥")

**पिशी**, स्त्री, (पिंशतीति । पिश + कः । गौरादि-
त्वात् ङीष् ।) जटामांसी । इति
राजनिर्घण्टः ॥
(जटामांसीशब्देऽस्या गुणादयो ज्ञातव्याः
॥)

"कर्णेजपः सूचकः स्यादनौचित्यप्रबोधके ।
परस्परं भेदशीले पिशुनो दुर्जनः खलः ॥"
इति शब्दरत्नावली ॥
(यथा, आर्य्यासप्तशत्याम् । ५९ ।
"अनुग्रहेण न तथा व्यथयति
कटुकूजितैर्यथा
पिशुनः ॥
रुधिरादानादधिकं दुनोति कर्णे क्वणन्
मशकः ॥")
क्रूरः । इति मेदिनी । ने, ९२ ॥ (यथा, मनौ
।
३ । १६१ ।
"भ्रामरी गण्डमाली च श्वित्र्यथो
पिशुनस्तथा ॥")

**पिशुना**, स्त्री, (पिशुन + टाप् ।) पृक्का । इति
मेदिनी । ने, ९२ ॥ पिडिंशाक इति भाषा ॥
(पृक्काशब्देऽस्या गुणादयो ज्ञातव्याः ॥)

**पिष**, ध औ ऌ चूर्णने । इति कविकल्पद्रुमः ॥
(रुधां-परं-सकं-अनिट् ।) ध, पिनष्टि लोको
गोधूमम् । औ, पेष्टा । ऌ, अपिषत् । इति
दुर्गादासः ॥

**पिष्टं**, क्ली, (पिष्यते स्मेति । पिष + क्तः ।) सीस-
कम् । इति रत्नमाला ॥ पिष्टकः । यथा, --
"अन्नादष्टगुणं पिष्टं पिष्टादष्टगुणं पयः ।
पयसोऽष्टगुणं मांसं मांसादष्टगुणं घृतम् ।
घृतादष्टगुणं तैलं मर्द्दनान्न च भक्षणात् ॥" *
॥
अस्य गुणाः ।
"पिष्टं प्राणकरं रूक्षं विदाहि गुरु दुर्ज्जरम् ।
शालिपिष्टमया भक्ष्याः कफपित्तविनाशनाः
।
वैदला गुरवो भक्ष्या विष्टम्भिसृष्टमारुताः ॥
सगुडाः सतिलाश्चैव सक्षौद्रक्षारशर्कराः ।
भक्ष्या बल्याश्च हृद्याश्च गुरवो बृंहणाः परम्
॥
सस्नेहाः स्नेहसिक्ताश्च भक्ष्या
गोधूमसम्भवाः ।
गुरवस्तर्पणा हृद्या बलोपचयवर्द्धनाः ॥
मर्द्दितां समितां क्षीरनारिकेलघृतादिभिः ।
अवग्राह्य घृते पक्त्वा घृतपूरोऽयमुच्यते ॥

प्रेतः । यथा, शुद्धितत्त्वे ।

"अशौचान्ताद्द्वितीयेऽह्नि यस्य नोत्सृज्यते वृषः ।

पिशाचत्वं भवेत्तस्य दत्तैः श्राद्धशतैरपि ॥"

**पिशाचकी**, [न्] पुं, (पिशाचाः सन्त्यस्येति ।

"वातातीसाराभ्यां कुक् च ।" ५ । २ । १२९ ।

इत्यत्र "पिशाचाच्च ।" इति वार्त्तिकोक्त्या इनिः

कुक् च ।) कुवेरः । इति हेमचन्द्रः । २ । १० । ३ ॥

**पिशाचद्रुः**, पुं, (पिशाचानां द्रुः पिशाचप्रियो द्रुर्वा

निविडत्वादन्धकारवत्त्वादशुचिस्थानजातत्वाच्चा)

शाखोटवृक्षः । इति त्रिकाण्डशेषः ॥ (शाखोट-

शब्देऽस्य विवृतिर्ज्ञातव्या ॥)

**पिशाचवृक्षः**, पुं, (पिशाचानां वृक्षः पिशाचप्रियो

वृक्षो वा ।) शाखोटवृक्षः । इति रत्नमाला ॥

**पिशुनं**, क्ली, (पिंशतीति । पिश + "क्षुधिपिशि-

मिथः कित् ।" उणां ३ । ५५ । इति उनन्

।

स च कित् ।) कुङ्कुमम् । इत्यमरः । २ । ६

।

१२४ ॥ (पर्य्यायोऽस्य यथा, --

"कुङ्कुमं घुसृणं रक्तं काश्मीरं पीतकं वरम् ।

सङ्कोचं पिशुनं धीरं वाह्लीकं शोणिताभिधम्

॥"

इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे

॥)

**पिशुनः**, पुं, (पिश + उनन् । स च कित् ।) कपि-

वक्त्रः । नारदः । काकः । इति मेदिनी ।

ने, ९२ ॥

(अङ्गधृषः पुत्त्रः । यथा, मार्कण्डेये । ५१

। ६५ ।

"अङ्गधृक् तनयं लेभे पिशुनं नाम नामतः

॥"

कौशिकस्य पुत्त्रभेदः । यथा, हरिवंशे ।

२१ । ५-६ ।

"वाग्दुष्टः क्रोधनो हिंस्रः पिशुनः कविरेव

च ।

खसृमः पितृवर्त्ती च नामभिः

कर्म्मभिस्तथा ॥

कौशिकस्य सुतास्तात ! शिष्या गार्ग्यस्य

भारत ! ।

पितर्य्युपरते सर्व्वे व्रतवन्तस्तदाभवन् ॥")

**पिशुनः**, त्रि, (पिश + उनन् । स च कित् ।)

अप्रकाशेनानुचितप्रबोधकः ।

परस्परभेदशीलः ।

इत्यमरटीकायां भरतः ॥ तत्पर्य्यायः ।

"द्विजिह्वः सूचकः कर्णेजपः पिशुन इत्यपि

।

दुर्जनो दुर्व्विधो विश्वकद्रुश्च पिशुनः

खलः ॥"

इति जटाधरः ॥ * ॥

घृतपूरो गुरुर्वृष्यः कफकृद्रक्तमांसदः ।

रक्तपित्तहरो हृद्यः स्वादुः पित्तहरोऽग्निदः

॥"

गोधूमचूर्णं समिता ।

"समिता मधुदुग्धेन खण्डैलामरिचादिभिः ।

घृते पक्त्वा क्षिपेत् खण्डे संयावो बृंहणो

गुरुः ॥

समिता वेष्टिता मध्ये मधु दत्त्वा घृते शृता ।

मधुमस्तकमुद्दिष्टं तद्वृष्यं गुरु दुर्जरम् ॥"

इति राजवल्लभः ॥

पर्पटशस्कुलीफेनकवटलड्डुकानां

गुणास्तत्त-

च्छब्दे द्रष्टव्याः ॥ * ॥ चूर्णीकृते, त्रि ॥

(यथा,

कथासरित्सागरे । ६ । ४१ ।

"कृत्वा तांश्चणकान् पिष्टान् गृहीत्वा जल-

कुम्भिकाम् ।

अतिष्ठं चत्वरे गत्वा छायायां नगराद् बहिः

॥")

**पिष्टकं**, क्ली, (पिष्टमिव प्रतिकृतिः । इवार्थे कन् ।)

तिलचूर्णम् । इति राजनिर्घण्टः ॥

**पिष्टकः**, पुं, (पिष्टानां विकार इति । "संज्ञा-

याम् ।" ४ । ३ । १४७ । इति कन् ।)

पिष्टानां

तण्डुलादीनां विकारः । पिटा इति भाषा ॥

तत्पर्य्यायः । पूपः २ अपूपः ३ । इत्यमरः । २ । ९ । ४८ ॥ आपूपः ४ पिष्टः ५ । इति शब्द-
रत्नावली ॥ अस्य गुणाः पिष्टशब्दे द्रष्टव्याः । नेत्ररोगविशेषः । इति मेदिनी । के, १२० ॥ तस्य लक्षणम् । यथा, --
"श्लेष्मा मारुतकोपेन शुक्ले पिष्टसमुन्नतम् । पिष्टवत् पिष्टकं विद्धि मलाक्तादर्शसन्निभम् ॥"
इति माधवकरः ॥
(अस्य चिकित्सा यथा, --
"वैदेही सितमरिचं सैन्धवं नागरं समम् । मातुलुङ्गरसैः पिष्टमञ्जनं पिष्टकापहम् ॥"
इति वैद्यकचक्रपाणिसंग्रहे नेत्ररोगाधिकारे ॥)

**पिष्टपं**, क्ली, पुं, (विशन्त्यत्र सुकृतिन इति । "विटपपिष्टपविशिपोलपाः ।" उणां । ३ । १४५ ।
इति कपप्रत्ययेन निपातनात् साधुः ।) भुवनम् ।
इत्यमररत्नकोषौ ॥ (यथा, मनौ । ४ । २३१ ।
"अनड्वहः श्रियं पुष्टां गोदो व्रध्नस्य पिष्टपम् ॥")

**पिष्टपचनं**, क्ली, (पच्यते अत्रेति । पच + आधारे ल्युट् । पिष्टस्य पचनम् ।) पिष्टपाकपात्रम् । तेलानी इति ख्यातम् । इति सुभूतिः ॥ तत्-पर्य्यायः । ऋजीषम् २ । इत्यमरः । २ । ९ । ३२ ॥
ऋचीषम् ३ । इति स्वामी ॥ पिष्टपाकभृत् ४ ।
इति हेमचन्द्रः ॥ (यथा, सुश्रुते चिकित्सित-स्थाने सप्तविंशाध्याये ।
"विडङ्गतण्डुलानां द्रोणं पिष्टपचने पिष्टवदुत्-स्वेद्येति ॥")

**पिष्टपाकभृत्**, क्ली, (पिष्टपाकं कृदभिहितो भाबो द्रव्यवत् प्रकाशते इति न्यायात् पच्यमानपिष्टं बिभर्त्ति धारयतीति । भृ + क्विप् तुगागमश्च ।)
पिष्टकपाकपात्रम् । इति हेमचन्द्रः । ३ । ८६ ॥

"दालिः संस्थापिता तोये ततोऽपहतकञ्चुका । शिलायां साधु संपिष्टा पिष्टिका कथिता बुधैः ॥"
इति भावप्रकाशः ॥

**पिष्टोडी**, स्त्री, श्वेताम्लिः । इति राजनिर्घण्टः ॥

**पिस**, इ कि द्युतौ । इति कविकल्पद्रुमः ॥ (चुरां-पक्षे भ्वां-परं-अकं-सेट् । इदित् ।) इ, पिंस्यते । कि, पिंसयति पिंसति । द्युतिर्दीप्तिः । इति दुर्गादासः ॥

**पिस**, ऋ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) ऋ, अपिपेसत् अपिपिसत् । पिपे-सतुः पिपिसतुः । इति दुर्गादासः ॥

**पिस**, क षट्टार्थे । गत्याम् । इति कविकल्पद्रुमः ॥ (चुरां-परं-सकं-सेट् ।) क, पेसयति । मूर्द्धन्या-न्तोऽयमिति केचित् । षट्टार्थो निकेतनहिंसा-बलदानानि । इति दुर्गादासः ॥

**पिहितं**, त्रि, (अपि धीयते स्मेति । धा + क्तः । "दधातेर्हिः ।" ७ । ४ । ४२ । इति ह्यादेशः । अपेरल्लोपः ।) आच्छादितम् । तत्पर्य्यायः । संवीतम् २ रुद्धम् ३ आवृतम् ४ संवृतम् ५ छन्नम् ६ स्थगितम् ७ अपवारितम् ८ अन्त-र्हितम् ९ तिरोधानम् १० । इति हेमचन्द्रः ॥ (यथा, महाभारते । ४ । ४४ । १८ ।
"ध्वजेन पिहिताः सर्व्वा दिशो न प्रतिभान्ति मे । गाण्डीवस्य च शब्देन कर्णौ मे वधिरीकृतौ ॥")

**पी**, ङ य पाने । इति कविकल्पद्रुमः ॥ (दिवां-आत्मं-सकं-अनिट् ।) ङ य, पीयते । इति दुर्गादासः ॥

**पीठं**, त्रि, (पेठन्त्युपविशन्त्यस्मिन्निति । पिठ + "हलश्च ।" ३ । ३ । १२१ । इति घञ् । बाहु-लकादिकारस्य दीर्घः । यद्वा, पीयतेऽत्रेति । पी ङ् पाने + बाहुलकात् ठक् ।) उपवेश-नाधारः । इत्यमरः । २ । ६ । १३८ ॥ पिडी चौकी
इत्यादि भाषा । तत्पर्य्यायः । आसनम् २ उपा-सनम् ३ पीठी ४ विष्टरः ५ । इति शब्दरत्ना-वली । व्रतिनामासनम् । तत्तु कुशासनादि । तत्पर्य्यायः । विष्टरः २ । इति त्रिकाण्डशेषः ॥ वृषी ३ । इति हेमचन्द्रः ॥ (यथा, महाभारते ।

समदीर्घसुखावाप्तिर्विषमे विषमापदः ॥
आयामपरिणाहाभ्यां हस्तद्वयमितो हि यः ।
अर्द्धहस्तोन्नतः पीठो जारको नाम विश्रुतः ॥
दैर्घ्योन्नतिपरीणाहैश्चतुर्हस्तमितो हि यः ।
राजपीठ इति ज्ञेयः सकलार्थप्रसाधकः ।
अत्राभिषेकमिच्छन्ति क्षितिपस्य पुराविदः ॥
दैर्घ्योन्नतिपरीणाहैः षढस्तमितो हि यः ।
राज्ञां चित्तप्रसादार्थं केलिपीठाभिधानकः ॥
दैर्घ्योन्नतिपरीणाहैरष्टहस्तमितो हि यः ।
अङ्गपीठो ह्ययं नाम्ना भवेत् पञ्चसुखप्रदः ॥
कानको राजपीठः स्याज्जयो वा राजतः सुखः ।
राज्ञामेवोपयोक्तव्यो लघवश्चोत्तरोत्तरम् ॥
राजपीठे चिरायुः स्याज्जये सर्व्वां महीं जयेत् ।
जारको जारयेच्छत्रून् सुखे सुखमवाप्नुयात् ॥
राजतः कीर्त्तिजननो धनवृद्धिकरः परः ।
ताम्रः प्रतापजननो विपक्षक्षयकारकः ॥
लौहस्तूच्चाटने सार्व्वः सर्व्वकर्म्मसु युज्यते ।
त्रपुसीसकरङ्गाद्याः शत्रुक्षयफलप्रदाः ॥"
इति धातुपीठाः ।
अथ शिलापीठाः ।
"राजपीठो वज्रपाणेरेव नान्यस्य दृश्यते ।
पद्मरागो दिनेशस्य चान्द्रकान्तो विधोरपि ॥
राहोर्मारकतः पीठः शनेर्नीलसमुद्भवः ।
गोमेदकस्तु सौम्यस्य स्फाटिकस्तु बृहस्पतेः ॥
शुक्रस्य वैदूर्य्यभवः प्रावालो मङ्गलस्य हि ॥"
इत्थं पुराणवार्त्ता ॥ * ॥
"यो यस्य हि दशाजातः पीठस्तस्य हि तन्मयः ।
स्फाटिकस्तु महीन्द्राणां सर्व्वेषामेव युज्यते ॥
अभिषेके च यात्रायामुत्सवे जयकर्म्मणि ।
अयस्कान्तोपघटितः संग्रामे पीठ इष्यते ॥
गरुडोद्गाररचिते वर्षासु नृपतिर्व्वसेत् ।
शुद्धरत्नमयं पीठं भजते घनगर्ज्जिते ॥
सामान्यः प्रास्तरः पीठो विलासाय मही-भुजाम् ।
एषां मानं गुणाश्चापि विज्ञेया धातुपीठवत् ॥"
अथ काष्ठपीठाः ।
तद्यथा, मानं पूर्व्ववदेव ।

**पिष्टपूरः**, पुं, (पिष्टैः पूर्य्यते इति । पूरि + कर्म्मणि अप् ।) वटकः । इति भूरिप्रयोगः । पिष्टक-विशेषः । तत्पर्य्यायः । घृतपूरः २ घृतवरः ३ घार्त्तिकः ४ । इति हेमचन्द्रः । ३ । ६४ ॥

**पिष्टवर्त्तिः**, पुं, (पिष्टं वर्त्तयतीति । वर्त्ति + इन् ।) मुद्गगमसूरादिपिष्टम् । तत्पर्य्यायः । चमसिः २ ।
इति हेमचन्द्रः । ३ । ६४ ॥

**पिष्टसौरभं**, क्ली, (पिष्टेन पेषणेन सौरभं यस्य ।) चन्दनम् । इति हारावली । १०३ ॥

**पिष्टातः**, पुं, (पिष्टं अतति गच्छतीति । अत + अण् ।) पटवासचूर्णम् । इति भरतः ॥ वस्त्रादि-
वासनार्थमेकीकृतगन्धद्रव्यचूर्णम् । इति सार-
सुन्दरी ॥ वृक्का । इति भानुदीक्षितः ॥ आवीर
इति ख्यातः । इति रमानाथनीलकण्ठौ ॥ तत्-
पर्य्यायः । पटवासकः २ । इत्यमरः । २ । ७ ।
१३९ ॥ धूलिगुच्छकः ३ । इति त्रिकाण्डशेषः ॥

**पिष्टिकं**, क्ली, (पिष्टमुत्पत्तिकारणत्वेनास्त्यस्येति । ठन् ।) तण्डुलोद्भवतवक्षीरम् । इति राज-
निर्घण्टः ॥

**पिष्टिका**, स्त्री, (पिष्टं पेषणं साधनतया अस्त्यस्या इति । पिष्ट + ठन् । ततष्टाप् ।) पिष्टद्विदलः । पिटी इति हिन्दीभाषा ॥ यथा, --

५ । ३८ । २ ।
"पीठं दत्त्वा साधवेऽभ्यागताय
आनीयापः परिनिर्निज्य पादौ ।
सुखं पृष्ट्वा प्रतिवेद्यात्मसंस्थां
ततो दद्यादन्नमवेक्ष्य धीरः ॥")
अथ पीठोद्देशः ।
"धातुपाषाणकाष्ठैश्च पीठस्त्रिविध उच्यते ।
धातवश्च शिलाश्चैव काष्ठानि विविधानि च ॥
तदत्र संप्रवक्ष्यामि यद्येषामुपयुज्यते ॥"
अथ मानम् ।
"हस्तद्वयस्तु दैर्घ्येण तदर्द्धे परिणाहतः ।
तदर्द्धेनोन्नतः पीठः सुख इत्यभिधीयते ॥
हस्तद्वयद्वयाधिक्यात् पञ्च पीठा भवन्ति हि ।
सुखं जयः शुभः सिद्धिः सम्पच्चेति यथाक्रमम् ॥
धनभोगसुखैश्वर्य्यवाञ्छितार्थप्रदायकः ।

"सम्पत्तिसुखवृद्ध्यर्थं गाम्भारीजनितो जयः ।
जारको रोगनाशाय सुखः शत्रुविनाशनः ॥
सिद्धिः सर्व्वार्थसंसिद्ध्यै विजयाय च वैरिणाम् ।
शुभः स्यादभिषेके च सम्पद्वैरिनिवारणः ॥
पानसो राजकः पीठः सुखसम्पत्तिकारकः ।
जयः स्यादभिषेके च शुभः शत्रुविनाशनः ॥
सुखो रोगविनाशाय सिद्धिः सर्व्वार्थदायिका ।
सम्पदुच्चाटनविधौ विज्ञेयं पीठलक्षणम् ॥
चान्दनस्तु सुखः पीठो अभिषेके महीभुजाम् ।
जयः स्याद्रोगनाशाय शुभः सौख्यं प्रयच्छति ॥
जारको ग्रहतुष्ट्यर्थं अन्ये तु रतिदुष्कराः ।
यज्ञतो निर्म्मितास्ते तु साम्राज्यफलदायकाः ॥
कालेयको यावको हि भूभुजामभिषेचने ।
पीठानगुरुकादीनामन्ये चन्दनवद्विदुः ॥
वाकुलस्तु शुभः पीठो भूभुजामभिषेचने ।

जयो रोगविनाशाय सुखसम्पत्तिकारकः ॥
सिद्धिः सिद्धिप्रदा सम्पत् संग्रामे विजयप्रदः ।
जारको जारणाय स्यादिति भोजस्य सम्मतम् ॥
एवं सुगन्धिकुसुमाः ससारा ये च पादपाः ।
वाकुलेन समः कार्य्य एवं पीठस्य निर्णयः ॥
ये शुष्ककाष्ठा वृक्षास्तु मृदवो लघवोऽथवा ।
गाम्भारीसदृशः पीठस्तेषां कार्य्यस्तथा गुणः ॥
फलिनश्च ससाराश्च रक्तसाराश्च ये नगाः ।
तेषां पानसवत् पीठस्तथैव गुणमावहेत् ॥" * ॥
अथ निषेधः ।
"विज्ञेयो निन्दितः पीठो लौहोत्थः सर्व्वधातुजे ।
शिलोत्थः शार्करो वर्ज्यः कर्करश्च विशेषतः ॥
काष्ठजेषु च पीठेषु नासारा नातिसारिणः ॥"
तथाहि ।
"आम्रजम्बुकदम्बानामासनंवंशनाशनम् ॥"
भोजस्त्वाह ।
"गुरुः पीठो गौरवाय लघुर्लाघवकारकः ॥"
पराशरस्तु ।
"नाग्रन्थिर्नातिग्रन्थिश्च नागुरुर्नासमाकृतिः ।
पीठः स्यात् सुखसम्पत्त्यै नातिदीर्घो न वामनः ॥
ये चान्ये पीठसदृशा दृश्याः शिल्पिविनिर्म्मिताः ।
गुणान्दोषांश्च मानञ्च तेषां पीठवदादिशेत् ॥
विचार्य्यानिन विधिना यः शुद्धं पीठमाचरेत् ।
तस्य लक्ष्मीरियं वेश्म कदाचिन्न विमुञ्चति ॥
अज्ञानादथवा मोहाद्योऽन्यथा पीठमाचरेत् ।
एतानि तस्य नश्यन्ति लक्ष्मीरायुर्ब्बलं कुलम् ॥"
इति युक्तिकल्पतरौ पीठोद्देशः ॥ * ॥
कृतयुगे दक्षक्रतौ शिवनिन्दां श्रुत्वा प्राणां-स्त्यक्तवत्याः सत्याः शरीरं शिरसि धृत्वा भ्रमति शिवे विष्णुना चक्रेण छिन्नास्तस्या अवयवा यत्र यत्र पतितास्त एव देशा एकपञ्चाशन्महापीठा अभवन् ॥ इति पौराणिकी वार्त्ता ॥ * ॥
तेषां निरूपणं यथा, --
ईश्वर उवाच ।
"मातः परापरे ! देवि ! सर्व्वज्ञानमयीश्वरि ! ।
कथ्यतां मे सर्व्वपीठं शक्तिर्भैरवदेवता ॥
देव्युवाच ।
शृणु वत्स ! प्रवक्ष्यामि दयालो ! भक्तवत्सल ! ।
याभिर्विना न सिध्यन्ति जपसाधनतत्क्रियाः ॥
पञ्चाशदेकपीठानि एवं भैरवदेवताः ।
अङ्गप्रत्यङ्गपातेन विष्णुचक्रक्षतेन च ॥
भीषणो भैरवस्तत्र देवी त्रिपुरमालिनी ॥ ६ ॥
हार्द्दपीठं वैद्यनाथे वैद्यनाथस्तु भैरवः ।
देवता जयदुर्गाख्या ७ नेपाले जानुनी मम ।
कपाली भैरवः श्रीमान् महामाया च देवता ॥ ८ ॥
मानसे दक्षहस्तो मे देवी दाक्षायणी हर ।
अमरो भैरवस्तत्र सर्व्वसिद्धिप्रदायकः ॥ ९ ॥
उत्कले नाभिदेशश्च विरजाक्षेत्रमुच्यते ।
विमला सा महादेवी जगन्नाथस्तु भैरवः ॥ १० ॥
गण्डक्यां गण्डपातश्च तत्र सिद्धिर्न संशयः ।
तत्र सा गण्डकी चण्डी चक्रपाणिस्तु भैरवः ॥ ११ ॥
बहुलायां वामबाहुर्ब्बहुलाख्या च देवता ।
भीरुको भैरवो देवः सर्व्वसिद्धिप्रदायकः ॥ १२ ॥
उज्जयिन्यां कूर्परञ्च माङ्गल्यः कपिलाम्बरः ।
भैरवः सिद्धिदः साक्षाद्देवी मङ्गलचण्डिका ॥ १३ ॥
चट्टले दक्षबाहुर्मे भैवरश्चन्द्रशेखरः ।
व्यक्तरूपा भगवती भवानी तत्र देवता ॥
विशेषतः कलियुगे वसामि चन्द्रशेखरे ॥ १४ ॥
त्रिपुरायां दक्षपादो देवता त्रिपुरा मता ।
भैरवत्रिपुरेशश्च सर्व्वाभीष्टफलप्रदः ॥ १५ ॥
त्रिसोतायां वामपादो भ्रामरी भैरवोऽम्बरः ॥ १६ ॥
योनिपीठं कामगिरौ कामाख्या तत्र देवता ।
यत्रास्ते त्रिगुणातीता रक्तपाषाणरूपिणी ।
यत्रास्ते माधवः साक्षादुमानन्दोऽथ भैरवः ॥
सर्व्वदा विहरेद्देवी तत्र मुक्तिर्न संशयः ।
तत्र श्रीभैरवी देवी तत्र नक्षत्रदेवता ॥
प्रचण्डचण्डिका तत्र मातङ्गी त्रिपुराम्बिका ।
वगला कमला तत्र भुवनेशी सुधूमिनी ॥
एतानि वरपीठानि शंसन्ति वरभैरव ! ।
एवं ता देवताः सर्व्वा एवन्ते दश भैरवाः ॥
सर्व्वत्र विरला चाहं कामरूपे गृहे गृहे ।
गौरीशिखरमारुह्य पुनर्जन्म न विद्यते ॥ १७ ॥
करतोयां समासाद्य यावत् शिखरवासिनीम् ।
शतयोजनविस्तीर्णं त्रिकोणं सर्व्वसिद्धिदम् ॥
देवा मरणमिच्छन्ति किं पुनर्म्मानवादयः ।
देवता देवगर्भाख्या २८ नितम्बः कालमाधवे ॥
भैरवश्चासिताङ्गश्च देवी काली च मुक्तिदा ।
दृष्ट्वा दृष्ट्वा महादेव ! मन्त्रसिद्धिमवाप्नुयात् ॥
कुजवारे भूततिथौ निशार्द्धे यस्तु साधकः ।
नत्वा प्रदक्षिणीकृत्य मन्त्रसिद्धिमवाप्नुयात् ॥ २९ ॥
शोणाख्या भद्रसेनस्तु नर्म्मदाख्ये नितम्बकः ॥ ३० ॥
रामगिरौ स्तनान्यञ्च शिवानी चण्डभैरवः ॥ ३१ ॥
वृन्दावने केशजाले उमानाम्नी च देवता ।
भूतेशो भैरवस्तत्र सर्व्वसिद्धिप्रदायकः ॥ ३२ ॥
संहाराख्य ऊर्द्ध्वदन्ते देवी नारायणी शुचौ ।
अधोदन्ते महारुद्रो वाराही पञ्चसागरे ॥ ३३ ॥
करतोयातटे तल्पं वामे वामनभैरवः ।
अपर्णा देवता तत्र ब्रह्मरूपा करोद्भवा ॥ ३४ ॥
श्रीपर्व्वते देक्षतल्पं तत्र श्रीसुन्दरी परा ।
सर्व्वसिद्धिकरी सर्व्वा सुन्दरानन्दभैरवः ॥ ३५ ॥
कपालिनी भीमरूपा वामगुल्फो विभाषके ॥ ३६ ॥
उदरञ्च प्रभाषे मे चन्द्रभागा यशस्विनी ।
वक्रतुण्डो भैरव-३७ श्चोर्द्ध्वोष्ठो भैरवपर्व्वते ।
अवन्ती च महादेवी लम्बकर्णुस्तु भैरवः ॥ ३८ ॥
चिवुके भ्रामरी देवी विकृताक्षो जले स्थले ॥ ३९ ॥
गण्डो गोदावरीतीरे विश्वेशी विश्वमातृका ।
दण्डपाणिर्भैरवस्तु वामगण्डे तु राकिणी ॥
अमायी भैरवो वत्स ! सर्व्वशैलात्मकोपरि ॥ ४० ॥
रत्नावल्यां दक्षस्कन्धः कुमारी भैरवः शिवः ॥ ४१ ॥
मिथिलायां उमा देवी वामस्कन्धो महोदरः ॥ ४२ ॥
नलाहाट्यां नलापातो योगेशो भैरवस्तथा ।
तत्र सा कालिका देवी सर्व्वसिद्धिप्रदायिका ॥ ४३ ॥

ममान्यवपुषो देव ! हिताय त्वयि कथ्यते ।
ब्रह्मरन्ध्रं हिङ्गुलायां भैरवो भीमलोचनः ॥
कोट्टरीसा महामाया त्रिगुणा या दिगम्बरी ॥ १
शर्करारे त्रिनेत्रं मे देवी महिषमर्द्दिनी ।
क्रोधीशो भैरवस्तत्र सर्व्वसिद्धिप्रदायकः ॥ २ ॥
सुगन्धायां नासिका मे देवस्त्र्यम्बकभैरवः ।
सुन्दरी सा महादेवी सुनन्दा तत्र देवता ॥ ३ ॥
काश्मीरे कण्ठदेशश्च त्रिसन्ध्येश्वरभैरवः ।
महामाया भगवती गुणातीता वरप्रदा ॥ ४ ॥
ज्वालामुख्यां महाजिह्वा देव उन्मत्तभैरवः ।
अम्बिका सिद्धिदानाम्नी ५ स्तनं जालन्धरे मम
।

भूतधात्री महामाया भैरवः क्षीरखण्डकः ॥
युगाद्यायां महादेव ! दक्षाङ्गुष्ठं पदो मम ॥ १८
॥
नकुलीशः कालिपीठे दक्षपादाङ्गुलीषु च ।
सर्व्वसिद्धिकरीदेव्वी कालिका तत्र देवता ॥
१९ ॥
अङ्गुलीषु च हस्तस्य प्रयागे ललिता भवः ॥
२० ॥
जयन्त्यां वामजङ्घा च जयन्ती क्रमदीश्वरः ॥
२१ ॥
भुवनेशी सिद्धिरूपा किरीटस्था किरीटतः ।
देवता विमला नाम्नी सम्बर्त्तो भैरवस्तथा ॥
२२ ॥
वाराणस्यां विशालाक्षी देवता कालभैरवः ।
मणिकर्णीति विख्याता कुण्डलञ्च मम श्रुतेः ॥
२३ ॥
कन्याश्रमे च पृष्ठं मे निमिषो भैरवस्तथा ।
सर्व्वाणी देवता तत्र २४ कुरुक्षेत्रे च गुल्फतः
॥
स्थाणुर्नाम्ना च सावित्री देवता २५ मणि-
वेदके ।
मणिबन्धे च गायत्री सर्व्वानन्दस्तु भैरवः ॥
२६ ॥
श्रीशैले च मम ग्रीवा महालक्ष्मीस्तु देवता ।
भैरवः शम्बरानन्दो देशे देशे व्यवस्थितः ॥
२७ ॥
काञ्चीदेशे च कङ्कालो भैरवो रुरुनामकः ।

कर्णाटे चैव कर्णं मे अभीरुर्नाम भैरवः ।
देवता जयदुर्गाख्या नानाभोगप्रदायिनी ॥ ४४
॥
वक्रेश्वरे मनःपातो वक्रनाथस्तु भैरवः ।
नदी पापहरा तत्र देवी महिषमर्द्दिनी ॥ ४५ ॥
यशोरे पाणिपद्मञ्च देवता यशरेश्वरी ।
चण्डश्च भैरवो यत्र तत्र सिद्धिमवाप्नुयात् ॥
४६ ॥
अट्टहासे चोष्ठपातो देवी सा फुल्लरा स्मृता ।
विश्वेशो भैरवस्तत्र सर्व्वाभीष्टप्रदायकः ॥ ४७
॥
हारपातो नन्दिपुरे भैरवो नन्दिकेश्वरः ।
नन्दिनी सा महादेवी तत्र सिद्धिर्न संशयः ॥
४८ ॥
लङ्कायां नूपुरञ्चैव भैरवो राक्षसेश्वरः ।
इन्द्राक्षी देवता तत्र इन्द्रेणोपासिता पुरा ॥ ४९
॥
विराटदेशमध्ये तु पादाङ्गुलिनिपातनम् ।
भैरवश्चामृताक्षश्च देवी तत्राम्बिका स्मृता ॥
५० ॥
मागधे दक्षजङ्घा मे व्योमकेशस्तु भैरवः ।
सर्व्वानन्दकरी देवी सर्व्वकामफलप्रदा ॥ ५१
॥
एतास्ते कथिताः पुत्र ! पीठनाथाधिदेव्वताः ॥
क्षेत्राधीशं विना देवं पूजयेत् पीठदेवताम् ।
भैरवैर्ह्रियते सर्व्वं जपपूजादिसाधनम् ॥
अज्ञात्वा भैरवं पीठं पीठशक्तिञ्च शङ्कर ! ।
प्राणनाथ ! न सिध्येत कल्पकोटिजपादिभिः
॥
न देयं परशिष्येभ्यो निन्दकाय दुरात्मने ।
शठाय वञ्चकायेदं दत्त्वा मृत्युमवाप्नुयात् ॥
दद्यात् शान्ताय शिष्याय नैष्ठिकाय शुचौ प्रिये
साधकाय कुलीनाय मन्त्री मन्त्रार्थसिद्धये ॥”)

इति तन्त्रचूडामणौ शिवपार्व्वतीसंवादे एक-
पञ्चाशद्विद्योत्पत्तौ पीठनिर्णयः समाप्तः ॥ * ॥
(देवीभागवतोक्ताष्टाधिकशतपीठनामानियथा,
तत्रैव । ७ । ३० । ४४ -- ९५ ।
"अपश्यत्तां सतीं वह्नौ दह्यमानान्तु चित्कलाम् ।
स्कन्धेऽप्यारोपयामास हा ! सतीति वदन् मुहुः ॥
बभ्राम भ्रान्तचित्तः सन्नानादेशेषु शङ्करः ।
तदा ब्रह्मादयो देवाश्चिन्तामापुरनुत्तमाम् ॥
विष्णुस्तु त्वरया तत्र धनुरुद्यम्य मार्गणैः ।
चिच्छेदावयवान् सत्यास्तत्तत्स्थानेषु तेऽपतन् ॥
तत्तत् स्थानेषु तत्रासीन्नानामूर्त्तिधरो हरः ।
उवाच च ततो देवान् स्थानेष्वेतेषु ये शिवाम् ॥
भजन्ति परया भक्त्या तेषां किञ्चिन्न दुर्लभम् ।
नित्यं सन्निहिता यत्र निजाङ्गेषु पराम्बिका ॥
स्थानेष्वेतेषु ये मर्त्याः पुरश्चरणकर्म्मिणः ।
तेषां मन्त्राः प्रसिध्यन्ति मायाबीजं विशेषतः ॥
इत्युक्त्वा शङ्करस्तेषु स्थानेषु विरहातुरः ।
कालं निन्ये नृपश्रेष्ठ ! जपध्यानसमाधिभिः ॥
जनमेजय उवाच ।
कानि स्थानानि तानि स्युः सिद्धपीठानि चानघ !
।
कतिसंख्यानि नामानि कानि तेषाञ्च मे वद ॥
तत्र स्थितानां देवीनां नामानि च कृपाकर ! ।
कृतार्थोऽहं भवे येन तद्वदाशु महामुने ! ॥
व्यास उवाच ।
शृणु राजन् ! प्रवक्ष्यामि देवीपीठानि सांप्रतम् ।
येषां श्रवणमात्रेण पापहीनो भवेन्नरः ॥
येषु येषु च पीठेषूपास्येयं सिद्धिकाङ्क्षिभिः ।
भूतिकामैरभिध्येया तानि वक्ष्यामि तत्त्वतः ॥
वाराणस्यां विशालाक्षी गौरीमुखनिवासिनी ।
क्षेत्रे वै नैमिषारण्ये प्रोक्ता सा लिङ्गधारिणी ॥
प्रयागे ललिता प्रोक्ता कामुकी गन्धमादने ।
मानसे कुमुदा प्रोक्ता दक्षिणे चोत्तरे तथा ॥
विश्वकामा भगवती विश्वकामप्रपूरिणी ।
गोमन्ते गोमती देवी मन्दरे कामचारिणी ॥
मदोत्कटा चैत्ररथे जयन्ती हस्तिनापुरे ।
गौरी प्रोक्ता कान्यकुब्जे रम्भा तु मलयाचले ॥
एकाम्रपीठे संप्रोक्ता देवी सा कीर्त्तिमत्यपि ।
विश्वे विश्वेश्वरीं प्राहुः पुरुहूताञ्च पुष्करे ॥
केदारपीठे संप्रोक्ता देवी सन्मार्गदायिनी ।
मन्दा हिमवतः पृष्ठे गोकर्णे भद्रकर्णिका ॥
स्थानेश्वरी भवानी तु बिल्वके बिल्वपत्रिका ।
सह्याद्रावेकवीरा तु हरिश्चन्द्रे तु चन्द्रिका
।
रमणा रामतीर्थे तु यमुनायां मृगावती ॥
कोटवी कोटतीर्थे तु सुगन्धा माधवे वने ।
गोदावर्य्यां त्रिसन्ध्या तु गङ्गाद्वारे रतिप्रिया
॥
शिवकुण्डे शुभानन्दा नन्दिनी देविकातटे
।
रुक्मिणी द्वारवत्यान्तु राधा वृन्दावने वने
॥
देवकी मथुरायान्तु पाताले परमेश्वरी ।
चित्रकूटे तथा सीता विन्ध्ये
बिन्ध्याधिवासिनी ॥
करवीरे महालक्ष्मीरुमादेवी विनायके ।
आरोग्या वैद्यनाथे तु महाकाले महेश्वरी ॥
अभयेत्युष्णतीर्थेषु नितम्बा बिन्ध्यपर्व्वते
।
माण्डव्ये माण्डवी नाम स्वाहा
माहेश्वरीपुरे ॥
छगलण्डे प्रचण्डा तु चण्डिकामरकण्टके ।
सोमेश्वरे वरारोहा प्रभासे पुष्करावती ॥
देवमाता सरस्वत्यां पारावारा तटे स्मृता ।
महालये महाभागा पयोष्ण्यां पिङ्गलेश्वरी
॥
सिंहिका कृतशौचे तु कार्त्तिके
त्वतिशाङ्करी ।
उत्पलावर्त्तके लोला सुभद्रा शोणसङ्गमे ॥
माता सिद्धवने लक्ष्मीरनङ्गा भरताश्रमे ।
जालन्धरे विश्वमुखी तारा
किष्किन्धपर्व्वते ॥
देवदारुवने पुष्टिर्मेधा काश्मीरमण्डले ।
भीमादेवी हिमाद्रौ तु तुष्टिर्व्विश्वेश्वरी तथा
॥
कपालमोचने शुद्धिर्माता कायावरोहणे ।
शङ्खोद्धारे धरा नाम घृतिः पिण्डारके तथा
॥
कला तु चन्द्रभागायामच्छोदे शिवधारिणी
।
वेणायाममृता नाम वदर्य्यामुर्व्वशी तथा ॥
औषधिश्चोत्तरकुरौ कुशद्वीपे कुशोदका ।
मन्मथा हेमकूटे तु कुमुदे सत्यवादिनी ॥
अश्वत्थे वन्दनीया तु निधिर्वैश्रणालये ।
यथाशक्तिपुरश्चर्य्यां कुर्य्यान्मन्त्रस्य सत्तमः ।
मायाबीजेन देवेशीं तत्तत्पीठाधिवासिनीम् ॥
पूजयेदनिशं राजन् ! पुरश्चरणकृद्भवेत् ।
वित्तशाठ्यं न कुर्व्वीत देवीभक्तिपरो नरः ॥
य एवं कुरुते यात्रां श्रीदेव्याः प्रीतमानसः ।
सहस्रकल्पपर्य्यन्तं ब्रह्मलोके महत्तरे ॥
वसन्ति पितरस्तस्य सोऽपि देवीपुरे तथा ।
अन्ते लब्ध्ना परं ज्ञानं भवेन्मुक्तो भवाम्बुधेः
॥")
अन्यानि पीठादीनि कालीपुराणे १८ । ५० ।
६१
अध्यायेषु द्रष्टव्यानि ॥ * ॥ पीठन्यासस्तु
न्यास-
शब्दे द्रष्टव्यः । पीठदेवतापूजनं न्यासक्रमेणैव ॥

**पीठकेलिः**, पुं, (पीठे आसने केलिर्नर्म्मादिरस्य ।)
पीठमर्द्दनायकः । यथा, --
"षिड्गो व्यलीकः षट्प्रज्ञः कामकेलिर्विदूषकः
।
पीठकेलिः पीठमर्द्दो भविलश्छिदुरो विटः ॥"
इति त्रिकाण्डशेषः ॥

**पीठमर्द्दः**, पुं, (मृद्नातीति । मृद् + अच् ।
पिठस्यासनस्य मर्द्दः ।) नायकविशेषः । तस्य
लक्षणम् । कुपितस्त्रीप्रसादकः । उदाहरणं
यथा, --
"कोऽयं कोपविधिः प्रयच्छ करुणागर्भं वचो
जायतां
पीयूषद्रवदीर्घिकापरिमलैरामोदिता मेदिनी ।
आस्तां वा स्पृहयालु लोचनमिदं व्यावर्त्तयन्ती-
मुहु-
र्यस्मै कुप्यसि तस्य सुन्दरि ! तपोवृन्दानि
वन्दामहे ॥
नर्म्मसचिवोऽप्ययमेव ।" इति रसमञ्जरी ॥
(अयं
हि नायकस्य उत्तमसहायानामन्यतमः । इति
साहित्यदर्पणम् । ३ । ५३ ॥ नायकप्रियः ।
अति-
धृष्टः । यथा, मेदिनी । दे, ५० ।
"पीठमर्द्दोऽति धृष्टे स्यात् नायकस्य प्रियेऽपि च
॥"
यथा, महाभारते । ४ । २० । ३३ ।
"प्रेक्षते स्म विराटस्तु कङ्कश्च बहवो जनाः ।

श्रीशैले माधवी प्रोक्ता भद्रा भद्रेश्वरे तथा ॥
वराहशैले तु जया कमला कमलालये ।
रुद्राणी रुद्रकोट्यान्तु काली कालञ्जरे तथा ॥
शालग्रामे महादेवी शिवलिङ्गे जलप्रिया ।
महालिङ्गे तु कपिला माकोटे मुकुटेश्वरी ॥
मायापुर्य्यां कुमारी स्यात्मन्ताने ललिताम्बिका ।
गयायां मङ्गला प्रोक्ता विमला पुरुषोत्तमे ॥
उत्पलाक्षी सहस्राक्षे हिरण्याक्षे महोत्पला ।
विपाशायाममोघाक्षी पाडला पुण्ड्रवर्द्धने ॥
नारायणी मुपार्श्वे तु त्रिकूटे रुद्रसुन्दरी ।
विपुले विपुला देवी कल्याणी मलयाचले ॥

गायत्री वेदवदने पार्व्वती शिवसन्निधौ ॥
देवलोके तथेन्द्राणी ब्रह्मास्येषु सरस्वती ।
सूर्य्यविम्बे प्रभा नाम मातृणां वैष्णवी मता ॥
अरुन्धती सतीनान्तु रामासु च तिलोत्तमा ।
चित्ते ब्रह्मकला नाम शक्तिः सर्व्वशरीरिणाम् ॥
इमान्यष्टशतानि स्युः पीठानि जनमेजय ! ।
तत्संख्याकास्तदीशान्यो देव्यश्च परिकीर्त्तिताः ॥
सतीदेव्यङ्गभूतानि पीठानि कथितानि च ।
अन्यान्यपि प्रसङ्गेन यानि मुख्यानि भूतले ॥
यः स्मरेच्छृणुयाद्वापि नामाष्टशतमुत्तमम् ।
सर्व्वपापविनिर्म्मुक्तो देवीलोकं परं व्रजेत् ॥
एतेषु सर्व्वपीठेषु गच्छेद् यात्राविधानतः ।
सन्तर्पयेच्च पित्रादीन् श्राद्धादीनि विधाय च ॥
कुर्य्याच्च महतीं पूजां भगवत्या विधानतः ।
क्षमापयेज्जगद्धात्रीं जगदम्बां मुहुर्मुहुः ॥
कृतकृत्यं स्वमात्मानं जानीयाज्जनमेजय ! ।
भक्ष्यभोज्यादिभिः सर्व्वान् ब्राह्मणान् भोजये-
त्ततः ॥
सुवासिनीः कुमारीश्च बटुकादींस्तथा नृप ! ।
तस्मिन् क्षेत्रे स्थिता ये तु चाण्डालाद्या अपि
प्रभो ! ॥
देवीरूपाः स्मृताः सर्व्वे पूजनीयास्ततो हि ते ।
प्रतिग्रहादिकं सर्व्वं तेषु क्षेत्रेषु वर्ज्जयेत् ॥

रथिनः पीठमर्द्दाश्च हस्त्यारोहाश्च नैगमाः ॥”)

**पीठसर्पी**, [न्] त्रि, (पीठेन सर्पतीति । सृप् + णिनिः ।) खञ्जः । तत्पर्य्यायः । पांशुरः २ । इति हारावली ॥

**पीठी**, स्त्री, (पीठ + स्वल्पार्थे ङीष् ।) आसनम् । इति शब्दरत्नावली ॥ पीँडी इति भाषा ॥

**पीड**, ऋ क वाधे । गाहे । इति कविकल्पद्रुमः ॥ (चुरां-परं-सकं-सेट् ।) वाधो विहतिः । गाहो विलोडनम् । ऋ, अपीपिडत् अपिपीडत् । क, पीडयति शत्रुं लोकः । पीडयति स्तनं कामी । इति दुर्गादासः ॥

**पीडनं**, क्ली, (पीड वाधे अवगाहे वा + भावे-ल्युट् ।) शस्यादिसम्पन्नदेशस्य परचक्रेण पीड-नम् । शत्रुकृतगाढप्रहारः । इति केचित् । पदाक्रमणम् । इति केचित् । इति भरतः ॥ तत्-पर्य्यायः । अवमर्द्दः २ । इत्यमरः । २ । ८ । १०९ ॥
(यथा, देवीभागवते । ३ । १२ । १३ ।
“पीडनञ्चैव पाञ्चाल्या स्तथा द्यूते पराजयः ॥”)

दुःखनम् । यथा, --
"भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम् ।
नरकं पीडने चास्य तस्माद्यत्नेन तं भरेत् ॥"
इति दायभागधृतमनुवचनम्॥
मर्द्दनम् । टिपन चापन इत्यादि भाषा । यथा, --
"गर्भोऽभिघातविषमाशनपीडनाद्यैः
पक्वं द्रुमादिव फलं पततिं क्षणेन ॥"
इति माधवकरः ॥

**पीडा**, स्त्री, (पीडनमिति । पीड + "षिद्भिदा-
दिभ्योऽङ् ।" ३ । ३ । १०४ । इति अङ् । तत-
ष्टाप् ।) पीडनम् । तत्पर्य्यायः । वाधा २
व्यथा ३ दुःखम् ४ अमानस्यम् ५ प्रसूतिजम् ६
कष्टम् ७ कृच्छ्रम् ८ आभीलम् ९ । इत्यमरः ।
१ । ९ । ३ ॥ आवाधा १० । इति हलायुधः ॥
आमानस्यम् ११ । इति रायमुकुटः ॥ (शूलम्
१२ रुग् १३ वेदना १४ आर्त्तिः १५ तोदः १६
रुजा १७ । इति वैद्यकरत्नमाला ॥ यथा,
मनुः । ७ । १६९ ।
"यदावगच्छेदायत्यामाधिक्यं ध्रुवमात्मनः ।
तदात्वे चाल्पिकां पीडां तदा सन्धिं समाश्र-
येत् ॥")
एषां पीडादीनां मध्ये विशेष्यगामिनो ये
दुःखकष्टकृच्छ्राभीलास्ते त्रिलिङ्गाः । सा
आध्यात्मिकाधिभौतिकाधिदैविकतापत्रयभेदेन
त्रिविधा । आध्यात्मिकोऽपि द्विविधः । यथा, --
"आध्यात्मिकादि मैत्रेय ! ज्ञात्वा तापत्रयं
बुधः ।
उत्पन्नज्ञानवैराग्यः प्राप्नोत्यात्यन्तिकं लयम् ॥
आध्यात्मिको वै द्विविधः शारीरो मानसस्तथा ।
शारीरो बहुभिर्भेदैर्भिद्यते श्रूयताञ्च सः ॥
शिरोरोगप्रतिश्यायज्वरशूलभगन्दरैः ।
गुल्मार्शःश्वयथुश्वासच्छर्द्यादिभिरनेकधा ॥
तथाक्षिरोगातीसारकुष्ठाङ्गामयसंज्ञकैः ।
भिद्यते देहजस्तापो मानसं श्रोतुमर्हसि ॥"
अङ्गामयो वातजलोदरादिः । १ ॥ * ॥
"कामक्रोधभयद्वेषलोभमोहविषादजः।
शोकासूयावमानेर्ष्यामात्सर्य्यादिभवस्तथा॥
मानसोऽपि द्विजश्रेष्ठ ! तापो भवति नैकधा ॥ २ ॥
इत्येवमादिभिर्भेदैस्तापो ह्याध्यात्मिकः स्मृतः ॥
मृगपक्षिमनुष्याद्यैः पिशाचोरगराक्षसैः ।
सरीसृपाद्यैश्च नृणां जन्यते चाधिभौतिकः ॥
शीतोष्णवातवर्षाम्बुवैद्युतादिसमुद्भवः ।
यान्तः पीडापर्य्यायोऽप्यत्र ॥ (मन्त्रभेदः । यथा,
तन्त्रसारे ।
"सहस्रार्णाधिका मन्त्रा दण्डकाः पीडिताह्वयाः ॥)

**पीतं**, क्ली, (पा + भावे क्तः ।) पानम् । इति
मेदिनी । ते, ३४ ॥ (पीतो वर्णोऽस्यास्तीति ।
अच् । पीताभत्वादस्य तथात्वम् ।) हरितालम् ।
इति राजनिर्घण्टः ॥ (हरिचन्दनम् । तत्पर्य्यायो
यथा, वैद्यकरत्नमालायाम् ।
"पीतसारं सुशीतञ्च तत्पीतं हरिचन्दनम् ॥")

**पीतः**, पुं, (पिबति वर्णान्तरमिति । पा + कर्त्तरि
औणादिकः क्तः ।) वर्णविशेषः । हल्दिया इति
भाषा । तत्पर्य्यायः । गौरः २ हरिद्राभः ३ ।
इत्यमरः । १ । ५ । १४ ॥ कुसुम्भः । अङ्कोठः ।
शाखोटः । पुष्परागः । इति राजनिर्घण्टः ॥
पीतवस्तूनि यथा, --
"पीतानि ब्रह्म-१जीवे-२न्द्र-३गरुडे-४श्वरदृग्-५
जटाः ६ ।
गौरी-७द्वापर-८गोमूत्र-९मधु-१०वीररसा-११
रजः १२ ।
हरिद्रा १३ रोचना १४ रीति-१५गन्धके १६ द्वीप-
१७ चम्पके १८ ।
किञ्जल्क-१९ वल्कले २० शालि-२१
हरिताल-२२
मनःशिलाः २३ ।
कर्णिकारम् २४ चक्रवाक-२५ वानरौ २६
शारिकामुखम् २७ ।
केशवांशुक-२८मण्डूक-२९सराग-३०कनका-
दयः ३१ ॥" * ॥
पीतश्वेतवाचकानि यथा, --
"पीतश्वेतौ गौर-१ द्विजराज-२ कपर्द्द-३ शम्भु-४
हरि-५ताक्ष्यार्ः ६ ।
हैमस्तोमा-७ ष्टापद-८ महारजत-९ चन्द्र-१०
कलधौताः ११ ॥"
अस्यार्थः । गौरः श्वेतपीतयोः । द्विजराजो
गरुडचन्द्रयोः । कपर्द्दः शम्भुजटाजूटकपर्द्दयोः ।
शम्भुर्ब्रह्मत्रिलोचनयोः । हरिः पिङ्गलसिंहयोः ।
ताक्ष्यो गरुडः पक्षे उच्चैःश्रवाः । हैमस्तोमः
हेम्नेऽयं हैमः पक्षे हिमस्यायम् । अष्टापदं
सुवर्णशरभयोः । महारजतं सुवर्णरूप्ययोः ।
चन्द्रः स्वर्णशशाङ्कयोः । कलधौतं हेमरूप्ययोः ।
"सुशोभितारकूटश्रीः स्वर्णस्तोमसमद्युतिः ।
तमस्तुल्ययोः । विद्युत्कान्तः
मेघतडित्मनो-
ज्ञयोः । ध्वान्तद्वेषी
सूर्य्यान्धिकारतुल्ययोः ।
हरिः कपिकृष्णयोः । स्वर्णवच्छायः
सुवर्णसुन्दर-
समुद्रतुल्यशोभयोः । इति
कविकल्पलता ॥
(पर्व्वतविशेषः । यथा, मात्स्ये ।
१२१ । ९३ ।
"प्रथमः सूर्य्यसङ्काशः सुमना नाम
पर्व्वतः ।
पीतस्तु मध्यमस्तत्र शातकौम्भमयो
गिरिः ॥")

**पीतं**, त्रि, (पीतवर्णोऽस्यास्तीति । अच् ।) पीत-
वर्णयुक्तम् । इति मेदिनी । ते, ३४ ।
(यथा,
महाभारते । ४ । ४१ । २० ।
"ये त्विमे निशिताः पीताः पृथवो
दीर्घवाससः ।
हेमशृङ्गास्त्रिपर्व्वाणो राज्ञ एते
महाशराः ॥"
पा + कर्म्मणि क्तः ।) कृतपानम् ।
यथा, --
"हालाहलमपि पीतं बहुशो भिक्षापि
भक्षिता
भवता ।
अनयोरवगतरसयोः कियदन्तरं वद
योगिन् ! ॥"
इत्युद्भटः ॥
(पीतं पानमस्त्यस्येति । अच् । यद्वा,
पीतं नीरं
क्षीरं वा येन इत्युत्तरपदलोपः ।
पीतदुग्धादि-
कम् । यथा, रघौ । २ । १ ।
"अथ प्रजानामधिपः प्रभाते
जायाप्रतिग्राहितगन्धमाल्याम् ।
वनाय पीतप्रतिबद्धवत्सां
यशोधनो धेनुमृषेर्मुमोच ॥")

**पीतकं**, क्ली, (पीत + "यावादिभ्यः कन् ।" ५
।

तापो द्विजवरश्रेष्ठ ! कथ्यते चाधिदैविकः ॥
गर्भजन्मजराज्ञानमृत्युनारकजं तथा ।
दुःखं सहस्रशो भेदैर्भिद्यते मुनिसत्तम ! ॥”
इति विष्णुपुराणे । ६ । ५ । १ -- ९ ॥ * ॥
कृपा । शिरोमाला । सरलद्रुः । इति मेदिनी ।
डे, २० ॥

**पीडितं**, त्रि, (पीड + क्तः । यद्वा, पीडास्य
जातेति तारकादित्वात् इतच् ।) स्त्रीणां कर-
णम् । यन्त्रितम् । वाधितम् । इति मेदिनी । ते,
१३४ ॥ मर्द्दितम् । इति हेमचन्द्रः ॥ इतप्रत्य-

दहनोपलसत्कान्तिगङ्ग्यिच्छविपेशलः ॥”
अस्यार्थः । तारकूटो रूप्यसमूहः पक्षे आर-
कूटो रीतिः । सुशोभनमर्णः कनकञ्च । गोपति-
तार्क्ष्यकान्तिः रविगरुडच्छविः । पक्षे गोपति-
रिन्द्रः तस्य तार्क्ष्यस्तुरङ्गः । वामदेवगिरिर्मनोज्ञ-
मेरुः कैलासश्च ॥ * ॥ पीतश्यामवाचकानि यथा,
“पीतश्यामौ कृष्णाम्बर-१ मधुजित्-२ ध्वान्त-
जेतारः ३ ।
विद्युत्कान्तः ४ ध्वान्तद्वेषि-५ हरि ६ स्वर्णव-
च्छायाः ७ ॥”
अस्यार्थः । कृष्णाम्बरं विष्णुवस्त्रे हर्य्याकाशयोः ।
मधुजित् मधुतुल्यविष्ण्वोः । ध्वान्तजेता सूर्य्य-

४ । २९ । इति स्वार्थे कन् ।)
हरितालम् ।
इत्यमरः ॥ (पीतेन पीतवर्णेन
कायतीति । कै +
कः ।) कुङ्कुमम् । इति जटाधरः ॥
(अस्य
पर्य्यायो लक्षणञ्च यथा, --
“कुङ्कुमं घुसृणं रक्तं काश्मीरं पीतकं
वरम् ।
सङ्कोचं पिशुनं धीरं वाह्लीकं
शोणिताभिधम् ॥
काश्मीरदेशजे क्षेत्रे कुङ्कुमं यद्भवेद्धितम्
।
सूक्ष्मकेशरमारक्तं पद्मगन्धि तदुत्तमम्
॥
वाह्लीकदेशसञ्जातं कुङ्कुमं
पाण्डुरम्मतम् ।
केतकीगन्धयुक्तन्तन्मध्यमं
सूक्ष्मकेशरम् ॥
कुङ्कुमं पारसीकेयम्मधुगन्धि
तदीरितम् ।
ईषत्पाण्डुरवर्णन्तदधमं स्थूलकेशरम्
॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)
अगुरु । पद्मकाष्ठम् । रीतिः ।
माक्षिकम् । इति
राजनिर्घण्टः ॥ नन्दीवृक्षः ।
पीतशालः । इति
रत्नमाला ॥ श्योनाकप्रभेदः । हरिद्रुः
। किंकि-
रातवृक्षः । इति राजनिर्घण्टः ॥
(पीतेन
पीतवर्णेन रक्तमिति । पीत +
“लाक्षारोचना-
ठ्ठक् ।” ४ । २ । २ । इत्यस्य
“पीतात् कन् ।”
इति वार्त्तिकोक्त्या कन् ।
पीतवर्णरञ्जिते पीत-
वर्णविशिष्टे च त्रि ॥ पीत + स्वार्थे कन्
।
पीतवर्णे, पुं । यथा, महाभारते । १२
।
१८८ । ५ ।

**पीतकदली**, स्त्री, (पीता कदलीति नित्यकर्म्म-
धारयः ।) स्वर्णकदली । इति राजनिर्घण्टः ॥

**पीतकद्रुमः**, पुं, (पीतको द्रुम इति नित्यकर्म्म-
धारयः ।) हरिद्रुवृक्षः । इति राजनिर्घण्टः ॥
(हरिद्रुशब्देऽस्य विवरणं विज्ञेयम् ॥)

**पीतकन्दं**, क्ली, (पीतः कन्दोऽस्य ।) गर्जरम् ।
इति राजनिर्घण्टः ॥

**पीतकरवीरकः**, पुं, (पीतः करवीर इति नित्य-
कर्म्मधारयः । ततः स्वार्थे कन् ।) पीतवर्ण-
करवीरपुष्पवृक्षः । तत्पर्य्यायः । पीतप्रसवः २
सुगन्धिकुसुमः ३ । अस्य गुणाः । सामान्यकर-
वीरगुणतुल्याः । इति राजनिर्घण्टः ॥

**पीतकावेरं**, क्ली, (कुत्सितं वेरं शरीरं कावेरम् ।
पीतं कावेरं कुत्सितशरीरमपि यस्मात् ।)
कुङ्कुमम् । पित्तलम् । इति मेदिनी । रे, ३०५ ॥
(विवृतिरस्य कुङ्कुमपित्तलशब्दयोर्ज्ञेया ॥)

**पीतकाष्ठं**, क्ली, (पीतं काष्ठमिति नित्यकर्म्म-
धारयः ।) पीतचन्दनम् । इति राजनिर्घण्टः ॥

**पीतकीला**, स्त्री, (पीता कीला कीलतुल्या लतेति
नित्यकर्म्मधारयः ।) आवर्त्तकीलता । इति राज-
निर्घण्टः ॥

**पीतघोषा**, स्त्री, (पीतानि पुष्पानि सन्त्यस्या इति
पीता पीतपुष्पेत्यर्थः । ततः पीता घोषेति कर्म्म-
धारयः ।) पीतपुष्पघोषालता । इति रत्न-
माला ॥ अस्याः पर्य्यायः घोषकशब्दे
द्रष्टव्यः ॥

**पीतचन्दनं**, क्ली, (पीतं चन्दनमिति नित्यकर्म्म-

**पीततैला**, स्त्री, (पीतं तैलमस्याः ।) ज्योतिष्मती
लता । इति जटाधरः ॥ महाज्योतिष्मती ।
इति राजनिर्घण्टः ॥

**पीतदारु**, क्ली, (पीतञ्च तत् दारु चेति ।)
देवदारु । इत्यमरः । २ । ४ । ५३ ॥ (पर्य्यायोऽस्य-
यथा, --
"सुरदारु द्रुकिलिमं सुराह्वं भद्रदारु च ।
देवकाष्ठम्पीतदारु देवदारु च दारु च ॥"
इति वैद्यकरत्नमालायाम् ॥)
सरलः । इति रत्नमाला ॥ हरिद्रुः । इति राज-
निर्घण्टः ॥ (पर्य्यायोऽस्य यथा, --
"दार्व्वी दारुहरिद्रा च पर्ज्जन्या पर्ज्जनीति च ।
कटङ्कटेरी पीता च भवेत् सैव पचम्पचा ।
सैव कालीयकः प्रोक्तस्तथा कालेयकोऽपि च ॥
पीतद्रुश्च हरिद्रुश्च पीतदारुकपीतकम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**पीतदुग्धा**, स्त्री, पीतं दुग्धं यस्या यया वा ।
धेनुष्या । दुग्धबन्धकैः संस्थिता गौः । इति
हेमचन्द्रः ॥ (पीतं पीतवर्णं दुग्धं क्षीरमस्याः ।
कटुपर्णी । चोक इति भाषा ॥ यथास्याः
पर्य्यायः ।
"कटुपर्णी हैमवती हेमक्षीरी हिमावती ।
हेमाह्वा पीतदुग्धा च तन्मूलञ्चोकमुच्यते ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**पीतद्रुः**, पुं, (पीतो द्रुरिति नित्यकर्म्मधारयः ।)

**पीतपादा**, स्त्री, (पीतौ पादौ यस्याः ।) शारिका-
पक्षी । इति हेमचन्द्रः ॥ पीतचरणयुक्ते, त्रि ॥

**पीतपुष्पं**, क्ली, (पीतानि पुष्पानि यस्य ।) आहुल्य-
वृक्षः । इति राजनिर्घण्टः ॥ (कुष्माण्डम् ।
तत्पर्य्यायो यथा भावप्रकाशे ।
"कुष्माण्डं स्यात् पुष्पफलं पीतपुष्पं बृहत्-
फलम् ॥")
हरिद्राभकुसुमञ्च ॥

**पीतपुष्पः**, पुं, (पीतानि पीतवर्णानि पुष्पानि यस्य ।)
कर्णिकारवृक्षः । इति शब्दचन्द्रिका ॥ चम्पक-
वृक्षः । इति राजनिर्घण्टः ॥ पीतझिण्टी ।
पिण्डीतकभेदः । इति रत्नमाला ॥ (इङ्गुदी-
वृक्षः । यथा, वैद्यकरत्नमालायाम् ।
"पीतपुष्पोऽङ्गारपुष्प इङ्गुदी तापसप्रियः ॥"
राजकोशातकी । तत्पर्य्यायो यथा, भाव-
प्रकाशे ।
"धामार्गवः पीतपुष्पो जालिनी कृतबोधना ।
राजकोशातकी चेति तथोक्ता राजिमत्फला ॥")

**पीतपुष्पा**, स्त्री, (पीतं पुष्पं यस्याः ।) इन्द्र-
वारुणी । झिञ्झरिष्टाक्षुपः । आढकी । इति
राजनिर्घण्टः ॥ (महाबला । तत्पर्य्यायो
यथा, वैद्यकरत्नमालायाम् ।
"ऋष्यप्रोक्ता त्वतिबला पीतपुष्पा महाबला ॥")

**पीतपुष्पी**, स्त्री, (पीतं पुष्पं यस्याः । जातित्वात्
ङीष् ।) शङ्खपुष्पी । सहदेवी । महाकोषा-
तकी । त्रपुषी । इति राजनिर्घण्टः ॥

धारयः ।) पीतवर्णचन्दनम् । तत्तु द्रविडदेशे प्रसिद्धम् । कलम्बक इति ख्यातम् । तत्पर्य्यायः ।
पीतगन्धम् २ कालेयम् ३ पीतकम् ४ माधव-
प्रियम् ५ कालेयकम् ६ पीतकाष्ठम् ७ वर्व्वरम्
८ । इति राजनिर्घण्टः ॥ कालीयकम् ९ कालीयम् १० वीताभम् ११ हरिचन्दनम् १२
हरिप्रियम् १३ कालसारम् १४ कालानुसार्य्य-
कम् १५ । अस्य गुणाः । रक्तचन्दनगुणतुल्य-
गुणत्वम् । व्यङ्गनाशित्वञ्च । इति भावप्रकाशः ॥
शीतलत्वम् । तिक्तत्वम् । कुष्ठश्लेष्मकण्डूविच-
र्च्चिकादद्रुक्रिमिनाशित्वम् । कान्तिकरत्वञ्च ।
इति राजनिर्घण्टः ॥

**पीतचम्पकः**, पुं, (पीतं चम्पकमिव शिखा यस्य ।)
प्रदीपः । इति जटाधरः ॥ (पीतं चम्पकं तत्-
पुष्पमस्य ।) पीतवर्णचम्पकपुष्पवृक्षश्च ॥

**पीततण्डुलः**, पुं, (पीतस्तण्डुलोऽस्य ।) कङ्गुनी ।
इति राजनिर्घण्टः ॥

**पीततण्डुला**, स्त्री, (पीतस्तण्डुलोऽस्याः ।) क्षविका-
वृक्षः । इति राजनिर्घण्टः ॥

**पीततुण्डः**, पुं, (पीतं तुण्डं यस्य ।) कारण्डव-
पक्षी । तत्पर्य्यायः । चञ्चुसूचिः २ सुगृहः ३ ।
इति त्रिकाण्डशेषः ॥

**पीतता**, स्त्री, (पीत + तल् + टाप् ।) हरिद्रा-
भता । पीतत्वम् । पीतशब्दात् भावार्थे तप्रत्यय-
निष्पन्ना । इति व्याकरणम् ॥ (यथा, महा-
भारते । ३ । १४९ । २६ ।
सरलवृक्षः । दारुहरिद्रा । इत्यमरः । २ । ४ । ६०,
२ । ४ । १०१ ॥ (यथास्य पर्य्यायः ।
"दार्व्वी दारुहरिद्रा च पर्ज्जन्या पर्ज्जनीति च ।
कटङ्कटेरी पीता च भवेत् सैव पचम्पचा ॥
सैव कालीयकः प्रोक्तस्तथा कालेयकोऽपि च ।
पीतद्रुश्च हरिद्रुश्च पीतदारुकपीतकम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**पीतनं**, क्ली, (पीतं करोतीति । तत्करोतीति णिच् ।
ततो ल्युः । यद्वा, पीतं पीतवर्णं नयतीति ।
नी + डः ।) कुङ्कुमम् । (यथा, श्रीकण्ठचरिते ।
९ । ३४ ।
"अपहृत्य पीतनमशेष-
ममरसुदृशां शरीरतः ।
भीत इव गहननाभिगुहां
प्रपलाय्य तूर्णमविशत् पयोभरः ॥")
हरितालम् । पीतदारु । इत्यमरमेदिन्यौ ॥

**पीतनः**, पुं, (पीतं करोतीति । णिच् । ततो ल्युः ।)
प्लक्षः । इति राजनिर्घण्टः ॥ आम्रातकः । इति
मेदिनी । ने, ९२ ॥ (नन्दीवृक्षः । तत्पर्य्यायो
यथा, वैद्यकरत्नमालायाम् ।
"नन्दीवृक्षस्ताम्रपाकी फलपाकी च पीतनः ।
गन्धभाण्डो गन्धमुण्डो द्वितीयः क्षिप्रपाक्यसौ ॥")

**पीतनकः**, पुं, (पीतन एव । पीतन + स्वार्थे कन् ।)
आम्रातकः । इति राजनिर्घण्टः ॥

**पीतपर्णी**, स्त्री, (पीतानि पीतवर्णानि पर्णानि
यस्याः । ङीष् ।) श्वित्रघ्नी । इति शब्दचन्द्रिका ॥

**पीतफलः**, पुं, (पीतानि फलानि यस्य ।) शाखोट-
वृक्षः । इति त्रिकाण्डशेषः ॥ कर्म्मारवृक्षः ।
इति राजनिर्घण्टः ॥

**पीतफलकः**, पुं, (पीतफल एव । स्वार्थे कन् ।)
शाखोटवृक्षः । इति भावप्रकाशः ॥

**पीतबालुका**, स्त्री, (पीता बालुकेव चूर्णनरजो
यस्याः ।) हरिद्रा । इति त्रिकाण्डशेषः ॥ पीतवर्णसिकता च ॥

**पीतबीजा**, स्त्री, (पीतं बीजं यस्याः ।) मेथिका ।
इति राजनिर्घण्टः ॥ पीतवर्णबीजयुक्ते, त्रि ॥

**पीतभृङ्गराजः**, पुं, (पीतो भृङ्गराजः ।) पीत-
भृङ्गराजः । पीत केशुरिया इति भाषा । तत्-
पर्य्यायः । स्वर्णभृङ्गारः २ हरिप्रियः ३ देव-
प्रियः ४ वन्दनीयः ५ पावनः ६ । अस्य गुणाः ।
तिक्तत्वम् । उष्णत्वम् । चक्षुष्यत्वम् । केश-
रञ्जनत्वम् । कफामशोफनाशित्वम् । तत्र नीलो
रसायनः । इति राजनिर्घण्टः ॥

**पीतमणिः**, पुं, (पीतो मणिरिति नित्यकर्म्मधारयः ।)
पुष्परागः । इति राजनिर्घण्टः ॥ (पुष्पराग-
शब्देऽस्य विवरणं ज्ञातव्यम् ॥)

**पीतमाक्षिकं**, क्ली, (पीतं माक्षिकम् ।) माक्षि-
कम् । इति राजनिर्घण्टः ॥

**पीतमुद्गः**, पुं, (पीतः पीतवर्णो मुद्गः ।) मुद्ग-
विशेषः । सोणा मुग इति भाषा । तत्पर्य्यायः ।
वसुः २ खण्डीरः ३ प्रवेलः ४ जयः ५ शारदः
६ । इति हेमचन्द्रः । ४ । २३८ ॥

| | | |
|---|---|---|
| “द्वापरेऽपि युगे धर्म्मो द्विभागो नः प्रवर्त्तते ।<br>विष्णु र्वै पीततां याति चतुर्द्धा वेद एव च ॥” | विछिटि इति भाषा ॥ | |

**पीतमूलकं**, क्ली, (पीतं मूलमस्य । कप् ।) गर्ज्ज-
रम् । इति राजनिर्घण्टः ॥

**पीतयूथी**, स्त्री, (पीता यूथी ।) स्वर्णयूथी । इति
राजनिर्घण्टः ॥ (स्वर्णयूथीशब्देऽस्या विवृति-
र्विज्ञेया ॥)

**पीतरक्तं**, क्ली, (पीतं रक्तञ्च । वर्णो वर्णेनेति
समासः ।) पुष्परागमणिः । इति राजनिर्घण्टः ॥

**पीतरागं**, क्ली, (पीतो रागो वर्णो यस्य ।) किञ्ज-
ल्कम् । शिक्थकम् । इति राजनिर्घण्टः ॥ पीत-
वर्णे, पुं । तद्वति, त्रि ॥

**पीतरोहिणी**, स्त्री, (पीता सती रोहतीति ।
रुह + णिनिः + ङीप् ।) काश्मरी । इति भाव-
प्रकाशः ॥ (यथा, भावप्रकाशे पूर्ब्बखण्डे
प्रथमे भागे ।
"काश्मीरी काश्मरी हीरा काश्मर्य्यः पीत-
रोहिणी ॥")

**पीतलः**, पुं, (पीतं लातीति । ला + कः ।) पीत-
वर्णः । इति हेमचन्द्रः । ६ । ३० ॥
तद्युक्ते, त्रि ॥

**पीतलकं**, क्ली, (पीतलेन पीतेन वर्णेन कायति
प्रकाशते इति । कै + कः ।) पित्तलम् । इति
राजनिर्घण्टः ॥

**पीतलोहं**, क्ली, (पीतं लोहमिति नित्यकर्म्म-
धारयः ।) पित्तलभेदः । इति
हेमचन्द्रः । ४ । ११४ ॥

**पीतसालकः**, पुं, (पीतः सालकः सालवृक्षः ।)
पीतवर्णसालवृक्षः । पेया साल इति भाषा ।
तत्पर्य्यायः । सर्ज्जकः २ असनः ३ वन्धूकपुष्पः ४
प्रियकः ५ जीवकः ६ । इत्यमरः । २ । ४ ।
४३ ॥ अस्य पर्य्यायान्तरं गुणाश्च असनशब्दे
द्रष्टव्याः ॥

**पीतस्फटिकः**, पुं, (पीतः स्फटिक इति नित्य-
कर्म्मधारयः ।) पुष्परागमणिः । इति राज-
निर्घण्टः ॥

**पीता**, स्त्री, (पीतो वर्णोऽस्त्यस्या इति । अच् ।
टाप् ।) हरिद्रा । इत्यमरः । २ । ९ । ४१ ॥
(पर्य्यायोऽस्या यथा, वैद्यकरत्नमालायाम् ।
"हरिद्रा पीतका गौरी काञ्चनी रजनी निशा ।
मेहघ्नी रजनी पीता वर्णिनी रात्रिनामिका ॥")
दारुहरिद्रा । महाज्योतिष्मती ॥ कपिलशिंशपा ।
प्रियङ्गुः । गोरोचना । इति राजनिर्घण्टः ॥
अतिविषा । इति शब्दचन्द्रिका ॥ (पीतवर्णयुक्ते,
त्रि । यथा, विश्वकर्म्मप्रकाशे । १ । २४ ।
"श्वेता रक्ता तथा पीता कृष्णा वर्णानुपूर्ब्बशः ॥")

**पीताङ्गः**, पुं, (पीतं अङ्गं यस्य ।) श्योनाक-
प्रभेदः । इति राजनिर्घण्टः ॥

**पीताब्धिः**, पुं, (पीतः अब्धिः समुद्रो येन ।)

**पीतिः**, पुं, (पिबतीति । पा + क्तिच् । "घुमास्था-
गापेति ।" ६ । ४ । ६६ । इतीत्वम् ।) घोटकः ।
इत्यमरः । २ । ८ । ४३ ॥

**पीतिः**, स्त्री, (पा + भावे क्तिन् ।) पानम् । इति
मेदिनी । ते, ३३ ॥ (पीयतेऽनयेति । करणे
क्तिन्) शुण्डा । इति शब्दचन्द्रिका ॥

**पीतिका**, स्त्री, (पीतो वर्णोऽस्त्यस्या इति । ठन् ।)
हरिद्रा । इति रत्नमाला ॥ दारुहरिद्रा । इति
राजनिर्घण्टः ॥ स्वर्णयूथी । इति जटाधरः ॥

**पीती**, [न्] पुं, (पीतं पानं प्राचुर्य्येनास्त्यस्येति ।
इनिः ।) पीतिः । घोटकः । इत्यमरटीकायां
रायमुकुटः ॥

**पीतुः**, पुं, (पिबति रसादीनिति । पा + "पः किच्च ।"
उणां १ । ७१ । इति कुन् । स च कित् । कित्त्वात्
ईत्वम् ।) सूर्य्यः । अग्निः । इत्युणादिकोषः ।
यूथपतिः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**पीथं**, क्ली, (पीयते इति । पा + "पातॄतुदीति ।"
उणां २ । ७ । इति थक् ।) जलम् । इति
हेमचन्द्रः ॥ घृतम् । इत्युणादिकोषः ॥ (पिबति
रसादीनिति । पा + कर्त्तरि थक् ।) सूर्य्यः ।
अग्निः । कालः । इति त्रिकाण्डशेषः ॥

**पीथिः**, पुं, (पीति + पृषोदरादित्वात् तस्य थः ।)
पीतिः । घोटकः । इत्यमरटीकायां स्वामी ॥

**पीनः**, त्रि, (ओ प्या यी ङ वृद्धौ + क्तः । "ओदि-
तश्च ।" ८ । २ । ४५ । इति निष्ठातस्य नः ।) स्थूलः ।
इत्यमरः । ३ । १ । ६१ ॥ (यथा, आर्य्यासप्त-
शत्याम् । ५६१ ।
"वक्षःस्थलसुप्ते मम मुखमुपधातुं न मौलि-
मालभसे ।
पीनोत्तुङ्गस्तनभरदूरीभूतं रतश्रान्तौ ॥")

**पीनसः**, पुं, (पीनं स्थूलमपि जनं स्यति नाशय-
तीति । सो + कः ।) नासिकारोगविशेषः ।
पीनास इति भाषा । तत्पर्य्यायः । प्रतिश्यायः

**पीतवासाः**, [स्] पुं, (पीतं वासो वस्त्रं यस्य ।)

श्रीकृष्णः । इति हलायुधः ॥
पीतवस्त्रयुक्ते, त्रि ॥
(यथा, महाभारते । १ । ६४ । ५३ ।
"यः सचक्रगदापाणिः पीतवासाः
शितिप्रभः ॥")

**पीतवृक्षः**, पुं, (पीतो वृक्षः ।) श्योनाकप्रभेदः ।

सरलवृक्षः । इति राजनिर्घण्टः ॥
(यथास्य
पर्य्यायः ।
"सरलः पीतवृक्षः स्यात्तथा
सुरभिदारुकः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**पीतशा(सा)लः**, पुं, (पीतः शालो वृक्षविशेषः ।)

असनवृक्षः । इति शब्दचन्द्रिका ॥
(यथा,
कालिकापुराणे ६८ अध्याये ।
"पीतशालः परिमलो
विमर्द्दीकासनस्तथा ॥")

**पीतसारं**, क्ली, (पीतः सारो यस्य ।) पीतवर्ण-

चन्दनकाष्ठम् । हरिचन्दनम् । इति
शब्दचन्द्रिका ॥
(पर्य्यायोऽस्य यथा,
वैद्यकरत्नमालायाम् ।
"पीतसारं सुशीतञ्च तत्पीतं
हरिचन्दनम् ॥")

**पीतसारः**, पुं, (पीतः पीतवर्णः सारो यस्य ।)

मलयजः । मोमेदकमणिः । इति
मेदिनी । रे,
२८३ ॥ अङ्कोठवृक्षः । इति जटाधरः
॥ तुरुष्कः ।
बीजकः । इति राजनिर्घण्टः ॥
(अस्य पर्य्यायो
यथा, भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ।
"बीजकः पीतसारश्च पीतशालक
इत्यपि ।
अगस्त्यमुनिः । इति हेमचन्द्रः । २ ।
३६ ॥
(अगस्त्यमुनेः समुद्रपानकथा यथा,
भहा-
भारते । ३ । १०५ । १ -- ६ ।
"समुद्रं स समासाद्य वारुणिर्भगवानृषिः ।
उवाच सहितान् देवानृषींश्चैव समागतान्
॥
अहं लोकहितार्थं वै पिबामि वरुणालयम्
।
भवद्भिर्यदनुष्ठेयं तच्छीघ्रं संविधीयताम् ॥
एतावदुक्त्वा वचनं मैत्रावरणिरच्युतः ।
समुद्रमपिबत् क्रुद्धः सर्व्वलोकस्य
पश्यतः ॥
पीयमानं समुद्रस्तु दृष्ट्वा सेन्द्रास्तदामराः
।
विस्मयं परमं जग्मुः
स्तुतिभिश्चाप्यपूजयन् ॥
त्वं नस्त्राता विधाता च लोकानां
लोकभावन ! ।
तत्प्रसादात् समुच्छेदं न गच्छेत् सामरं
जगत् ॥
संपूज्यमानस्त्रिदशैर्महात्मा
गन्धर्व्वतूर्य्येषु नदत्सु सर्व्वशः ।
दीव्यैश्च पुष्पैरवकीर्य्यमाणो
महार्णवं निःसलिलं चकार ॥")

**पीताम्बरः**, पुं, (पीतं अम्बरं वस्त्रं यस्य ।) विष्णुः ।

इत्यमरः । १ । १ । १९ ॥ (यथा,
विष्णुस्तोत्रे । २१ ।
"एतत्पातित्यदाम्नो
जघनमतिघनादेनसो मान-
नीयं ।
सातत्येनैव चेतोविषयमवतरत् पातु
पीता-
म्बरस्य ॥")
शैलूषः । इति मेदिनी । रे, २८३ ॥
पीतवस्त्र-
युक्ते, त्रि । हरिद्राभवसने, क्ली ॥ (यथा,
--
"पीताम्बरधरः स्रग्वी वनमालाविभूषितः
॥"
२ । इत्यमरः । २ । ६ । ५१ ॥ अपीनसः ३
प्रतिश्याः ४ । इति भरतः ॥ नासिकामयः ५ ।
इति शब्दरत्नावली ॥ तस्य निदानं यथा, --
"आनह्यते यस्य विशुष्यते च
प्रक्लिद्यते धूप्यति चैव नासा ।
न वेत्ति यो गन्धरसांश्च जन्तु-
र्जुष्टं व्यवस्येत् खलु पीनसेन ॥
तञ्चानिलश्लेष्मभवं विकारं
ब्रूयात् प्रतिश्यायसमानलिङ्गम् ॥"
इति माधवकरः ॥
आमपीनसलक्षणं यथा, --
"शिरोगुरुत्वमरुचिर्नासास्रावस्तनुस्वरः।
क्षामः ष्ठीवति चाभीक्ष्णमामपीनसलक्षणम् ॥"
पक्वपीनसलक्षणं यथा, --
"आमलिङ्गान्वितः श्लेष्मा घनः खेषु निमज्जात
।
स्वरवर्णविशुद्धिश्च पक्वपीनसलक्षणम् ॥" * ॥
तस्यौषधानि यथा, --
"सर्व्वेषु सर्व्वकालं पीनसरोगेषु जातमात्रेषु ।
मरिचं गडेन दषा भञ्जीत नरः मुखं लभते ॥ १

बन्धूकपुष्पः प्रियकः
सर्ज्जकश्चासनः स्मृतः ॥”)

**पीतसारकः**, पुं, (पीतः सारो यस्य । कप् ।)

निम्बवृक्षः । अङ्कोठवृक्षः । इति
राजनिर्घण्टः ॥

**पीतसारि**, क्ली, (पीतं पीतवर्णं सरति प्राप्नो-

तीति । सृ + णिनिः ।) स्रोतोऽञ्जनम्
। इति
शब्दचन्द्रिका ॥

इति पुराणम् ॥)

**पीताश्मा**, [न्] पुं, (पीतः अश्मा ।) पुष्पराग-

मणिः । इति राजनिर्घण्टः ॥
(विवृतिरस्य पुष्प-
रागशब्दे ज्ञातव्या ॥)

कट्फलं पौष्करं शृङ्गी व्योषं यासश्च कारवी ।
एषां चूर्णं कषायं वा दद्यादार्द्रकजै रसैः ॥
पीनसे स्वरभेदे च नासास्रावे हलीमके ।
सन्निपाते कफे वाते कासे श्वासे च शस्यते ॥
२ ॥
व्योषचित्रकतालीशतिन्तिडीकाम्लवेतसम् ।
सचव्याजाजितुल्यांशमेलात्वक्पत्रपादिकम् ॥
व्याषादिकमिदं चूर्णं पुराणगुडमिश्रितम् ।
पीनसश्वासकासघ्नं रुचिस्वरकरं परम् ॥” ३
॥
इति भावप्रकाशः ॥ * ॥
“पिप्पलीत्रिफलाचूर्णं मधुसैन्धवसंयुतम् ।
सर्व्वरोगज्वरश्वासशोषपीनसहृद्भवेत् ॥”
इति गारुडे १८९ अध्यायः ॥
(अस्य चिकित्सान्तरं यथा, --
“वातात् सकासवैस्वर्य्यं सक्षारं पीनसे घृतम् ।
पिबेद्रसं पयश्चोष्णं स्नैहिकं धूममेव वा ॥”
“दशमूलस्य निष्क्वाथे रास्नामधुककल्कवत्
।
सिद्धं ससैन्धवं तैलं दशकृत्वो गुणाः स्मृतम् ।
स्निग्धस्यास्थापनैर्दोषं निर्हरेद्वातपीनसे ॥
स्निग्धाम्लोष्णैश्च लघ्वन्नं ग्राम्यादीनां
रसैर्हितम् ।
उष्णाम्बुना स्नानपाननिवातोष्णप्रतिश्रयः।
चिन्ताव्यायामवाक्चेष्टाव्यवायविरतो भवेत् ।
पैत्ते सर्पिः पिबेत् सिद्धं शृङ्गबेरशृतम्पयः ॥
पाचनार्थं पिबेत् पक्वे कार्य्यमूद्र्ध्वविरेचनम् ।
पाठाद्विरजनीमूर्व्वापिप्पलीजातिपल्लवै ॥
दन्त्या च साधितं तैलं नस्यं सम्पक्वपीनसे ।
पूयास्रे रक्तपित्तघ्नाः कषायो लवणानि च ॥
पाकदाहाद्यरुक्षेषु शीता लेपाः ससेचनाः ।
घ्रेयनस्योपचारश्च कषायस्वादुतिक्तकाः ॥”
“गौरवारोचकेष्वादौ लङ्घनं कफपीनसे ।
स्वेदाः सेकाश्च पाकार्थं लिप्ते शिरसि सर्पिषा
॥
लशुनं मुद्गचूर्णेन व्याषक्षारसमायुतम् ।
देयं कफघ्नं वमनमुत्क्लिष्टश्लेष्मणे हितम् ॥
अपीनसे पूतिनस्ये घ्राणस्रावसकण्डुके ।
घूमः शस्तोऽवपीडश्च कटुभिः कफपीनसे ॥
“विलङ्घनैः पाचनदीपनीयै-
रुपाचरेत् पीनसिनं यथावत् ।
बहुद्रवैर्वातकफोपसृष्टं
प्रच्छर्द्दयेत् पीनसिनं वयःस्थम्
॥”)

**पीनोध्नी**, स्त्री, (पीनं स्थूलमूधोऽस्याः । “बहु-
व्रीहेरूधसो ङीष् ।” ४ । १ । २५
। इति ङीष् ।
“उधसोऽनङ् ।” ५ । ४ । १३१
। इति उधो-
ऽन्तस्य बहुव्रीहेरनङादेशः ।)
पीवरस्तनी
गौः । इत्यमरः । २ । ९ । ७१ ।

**पीपरिः**, पुं, (अपि पिपर्त्तीति । पॄ + इन् । अपे
रल्लोपः । दीर्घश्च ।) ह्रस्वप्लक्षः
। इति राज-
निर्घण्टः ॥

**पीय**, प्रीणने । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) पीयूषं सौत्रधातुरयम्
। इति
दुर्गादासः ॥

**पीयुः**, पुं, (पिबतीति । पा + “खरुशङ्कुपीयु-
नीलङ्गुलिगु ।” उणां । १ । ३७ ।
इति कुः ।
निपातनात् युगागम ईत्वं
चान्तादेशः ।)
कालः । रविः । घूकः । इति
मेदिनी । ये, ३७ ॥
काकः । इति
संक्षिप्तसारोणादिवृत्तिः ॥ (हिंसके
प्रतिकूले च त्रि । यथा, ऋग्वेदे ।
१ । १७४ । ८ ।
“भिनत्पुरो न भिदो अदेवीर्ननमो
वधरदेवस्य
जडीभावः इत्यर्थः । पीलति पशुः । इति दुर्गा-
दासः ॥

**पीलकः**, पुं, (पीलति स्तभ्नातीति । पील + ण्वुल् ।)
पिपीलिका । इति हेमचन्द्रः ॥ (कायस्थानां
पद्धतिकरविशेषः । यथा, वङ्गजकुलाचार्य्य-
कारिकायाम् ।
“आदित्या विष्णुगुप्ताश्च खिलश्च पीलकस्तथा
॥”)

**पीलुः**, पुं, (पीलति प्रतिष्टम्नातीति । पील +
“मृगय्वादयश्च ।” उणां । १ । ३७ । इति कुः
।)
प्रसूनम् । परमाणुः । मतङ्गजः । अस्थि-
खण्डम् । तालकाण्डः । इति मेदिनी । ले, ३२
॥
बाणः । कृमिः । इति धरणिः ॥ कोङ्कणादि-
देशे प्रसिद्धः फलवृक्षविशेषः । पील इति
भाषा । तत्पर्य्यायः । गुडफलः २ श्रंसी ३ ।
इत्यमरः । २ । ४ । २८ ॥ शीतसहः ४ धानी
५
विरेचनः ६ फलशाखी ७ श्यामः ८ करभ-
वल्लभः ९ ॥ (यथा, महाभारते । २ । ५० । ४ ।
“उष्ट्रवामीस्त्रिशतञ्च पुष्टाः पीलुशमीङ्गुदैः ॥”)
अस्य फलगुणाः । श्लेष्मवायुगुल्मनाशित्वम् ।
पित्तदत्त्वम् । भेदकत्वम् । यत् स्वादु तिक्तं
तत् नात्युष्णं त्रिदोषहरत्वञ्च । इति राज-
निर्घण्टः ॥

**पीलुनी**, स्त्री, (पील + बाहुलकात् उन । गौरा-
दित्वात् ङीष् ।) मूर्व्वा । इति रत्नमाला ॥

**पीलुपत्रः**, पुं, (पीलुयुक्तं पत्रमस्य ।) मोरटा-
लता । इति राजनिघण्टः ॥

**पीलुपर्णी**, स्त्री, (पीलोरिव पर्णान्यस्याः । यद्वा,
पीलुयुक्तानि पर्णान्यस्याः । “पाककर्णपर्णपुष्प-
फलमूलबालोत्तरपदाच्च ।” ४ । १ । ६४ ।
इति
ङीष् ।) मूर्व्वा । विम्बिका । ओषधिभेदः । इति
मेदिनी । णे, १०३ ॥

मनःशिला वचाव्योषं विडङ्गं हिङ्गु गुग्गुलुः ।
चूर्णो घ्रेयः प्रधमनः कटुभिश्च फलैस्तथा ॥"
"स्निग्धस्य व्याहते वेगे छर्द्दनं कफपीनसे ।
वमनीयशृतक्षीरतिलमाषयवागुभिः ॥"
"सर्व्वजित् पीनसे दुष्टे कार्य्यं शोफे च
शोफजित् ।
क्षारोऽर्व्वुदाधिमांसेषु क्रिया सर्व्वेष्ववेक्ष्य च
॥"
इति चरके चिकित्सास्थाने २६ अध्याये ॥
"सर्व्व एव प्रतिश्याया नरस्याप्रतिकारिणः ।
कालेन रोगजनना जायन्ते दुष्टपीनसाः ॥
वाधिर्य्यमान्ध्यमघ्राणं घोरांश्च नयनामयान् ।
कासाग्निसादशोफांश्च वृद्धाः कुर्व्वन्ति
पीनसाः ॥"
इत्युत्तरतन्त्रे चतुर्व्विंशेऽध्याये सुश्रुतेनोक्तम्
॥)

**पीनसा**, स्त्री, (पीनं स्यतीति । सो + कः । टाप् ।)

कर्क्कटी । इति राजनिर्घण्टः ॥ (कर्कटीशब्दे-
ऽस्या गुणादयो ज्ञातव्याः ॥)

**पीनसी**, [न्] त्रि, पीनसरोगी । पीनसशब्दाद-

स्त्यर्थे इन्प्रत्ययनिष्पन्नः ॥ (यथा, सुश्रुते
उत्तर-
तन्त्रे २४ अध्याये ।
पीयोः ॥"
"पीयोः प्रतिकूलस्य वृत्रस्य ।"
इति तद्भाष्ये
सायनः ॥)

**पीयूषं**, क्ली, (पीय्यते इति । पीय सौत्रधातुः +

"पीयेरूषन् ।" उणां । ४ । ७६ ।
इति ऊषन् ।)
अमृतम् । इत्यमरः । १ । १ ।
५१ ॥ (यथा,
काशीखण्डे । २९ । ४९ ।
"खरसन्तापशमनी खनिः
पीयूषपाथसाम् ॥")
दुग्धम् । इति राजनिर्घण्टः ॥
(यथा, --
"पानीयं क्लमनाशनं श्रमहरं
मूर्च्छापिपासापहं
तन्द्राच्छर्द्दिविबन्धहृद्बलकरं
निद्राहरं तर्पणम् ।
हृद्यं गुप्तरसं ह्यजीर्णशमकं नित्यं
हितं शीतलं
लघ्वच्छं रसकारणन्तु निगते
पीयूषवज्जी-
विनम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे
द्बितीये भागे ॥)

**पीयूषः**, पुं, क्ली, (पीय + ऊषन् ।) अभिनवं पयः ।

नवप्रसूताया गोः
सप्तदिनाभ्यन्तरीणदुग्धम् ।
इत्यमरभरतौ ॥
"अथ पीयूषपेयूषे नवं
सप्तदिनावधि ।"
इति शब्दार्णवः ॥
"आसप्तरात्रप्रभवं क्षीरं पेयूष
उच्यते ॥"
इति हारावली ॥

**पीयूषमहाः**, [स्] पुं, (पीयूषममृतमयं महः

किरणं यस्य । यद्वा, पीयूषमिव
महो यस्य ।)

**पीव**, स्थौल्ये । इति कविकल्पद्रुमः ॥ (भ्वां-परं-

अकं-सेट् ।) पीवति लोकः स्थूलः स्यादि-
त्यर्थः । इति दुर्गादासः ॥

**पीव**, [न्] त्रि, (प्यायते इति । प्यैङ् वृद्धौ +

"ध्याप्योः सम्प्रसारणञ्च ।" उणां । ४ । ११४ ।
इति क्वनिप् सम्प्रसारणञ्च । "हलः ।" ६ । ४ ।
२ ।
इति दीर्घः ।) स्थूलम् । इत्यमरः । ३ । १ । ६१
॥
(यथा, भागवते । ९ । १९ । ६ ।
"पीवानं श्मश्रुलं प्रेष्ठं मीढ्वांसं याभकोविदम् ।
स एकोऽजवृषस्तासां बह्वीनां रतिवर्द्धनः ॥")

**पीवरः**, त्रि, (प्यायते वर्द्धते इति । प्यैङ् +

"छित्वरच्छत्वरधीवरपीवरमीवरचीवरतीवर
नीवरगह्वरकट्वरसंयद्वराः ।" उणां । ३ । १ ।
ष्वरच् । सम्प्रसारणं दीर्घश्च ।) उपचिता-
वयवः । मोटा इति भाषा । तत्पर्य्यायः ।
पीनः २ पीवा ३ स्थूलः ४ । इत्यमरः । ३ । १
। ६१ ॥
(यथा, आर्य्यासप्तशत्याम् । ४२० ।
"भयपिहितं बालायां पीवरमूरुद्वयं स्मरोन्निद्रः ।
निद्रायां प्रेमार्द्रः पश्यति निःश्वस्य निःश्वस्य
॥"
पुं, तामसमन्वन्तरीयसप्तर्षिभेदः । यथा, मार्क-
ण्डेये । ७४ । ५९ ।

चन्द्रः । इति शब्दरत्नावली ॥

**पीयूषरुचिः**, पुं, (पीयूषं पीयूषमयी रुचिस्तिड्

यस्य ।) चन्द्रः । इति हलायुधः

॥ (पीयूषे

अमृते रुचिर्यस्य ।) अमृतप्रियश्च

॥

**पील**, रोधे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-

अकं-सेट् ।) दीर्घी । रोधः

क्रियानिरोधः

"ज्योतिर्धामा पृथुः
काव्यश्चैत्रोऽग्निर्वलकस्तथा ।
पीवरश्च तथा ब्रह्मन् ! सप्त सप्तर्षयोऽभवन्
॥")

**पीवरस्तनी**, स्त्री, (पीवरौ स्थूलौ स्तनौ यस्याः ।
"स्वाङ्गोपसर्ज्जनादिति ।" ४ । १ । ५४ । इति
ङीष् ।) पीनोध्नी । इत्यमरः । २ । ९ । ७१ ॥ स्थूल-
स्तनयुक्ता नारी ॥ (यथा, भारवौ । ८ । १९ ।
"व्यपोहितुं लोचनतो मुखानिलै-
रपारयन्तं किल पुष्पजं रजः ।
पयोधरेणोरसि काचिदुन्मनाः
प्रियञ्जघानोन्नतपीवरस्तनी॥")

**पीवा**, [न्] पुं, (प्यायते इति । प्यै ङ वृद्धौ +
"ध्याप्योः सम्प्रसारणम् ।" उणा० ४ । १४ ।
इति क्वनिप् सम्प्रसारणञ्च । "हलः ।" ६ । ४ ।
२ । इति दीर्घः ।) बलवान् । वायुः । इति
संक्षिप्तसारोणादिवृत्तिः ॥

**पीवा**, स्त्री, (पीयते इति । पी ङ् य पाने + बाहु-
लकात् वः । ततष्टाप् ।) उदकम् । इति संक्षिप्त-
सारोणादिवृत्तिः ॥

**पीवरा**, स्त्री, (पीवर + टाप् ।) अश्वगन्धा ।
शतावरी । इति राजनिर्घण्टः ॥ स्थूला च ॥

**पीवरी**, स्त्री, (प्यायते इति । प्यै + ष्वरच् । सम्प्र-
सारणं दीर्घः ङीप् च ।) शतमूली । इति रत्न-
माला ॥ शालपर्णी । इति भावप्रकाशे । १ । १ ॥
तरुणी । गौः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**पुंश्चली**, स्त्री, (पुंसो भर्त्तुः सकाशात् चलति पुरुषा-
न्तरं गच्छतीति । चल + अच् । गौरादित्वात्
ङीष् ।) असती । इत्यमरः । २ । ६ । १० ॥ अस्या
अमरोक्तपर्य्यायः कुलटाशब्दे लिखितः । तदति-
रिक्तपर्य्यायो यथा, धृष्टा १ दुष्टा २ धर्षिता ३ ।
इति शब्दरत्नावली ॥ लङ्का ४ निशाचरी ५
त्रपारण्डा ६ । इति जटाधरः ॥ तस्याश्चरित्र-
दोषादि यथा, --
"अहो ! को वेद भुवने दुर्ज्ञेयं पुंश्चलीमनः ।
पुंश्चल्यां यो हि विश्वस्तो विधिना स विडम्बितः ।
बहिष्कृतश्च यशसा धर्म्मेण स्वकुलेन च ॥
वाञ्छितं नूतनं प्राप्य विनश्यति पुरातनम् ।
सदा स्वकर्म्मसाध्या सा को वा तस्याः प्रियो-
ऽप्रियः ॥
दैवे कर्म्मणि पैत्रे च पुत्त्रे ब्रन्धौ च भर्त्तरि ।
दारुणं पुंश्चलीचित्तं सदा शृङ्गारकर्म्मणि ॥
प्राणाधिकं रतिज्ञं सामृतदृष्ट्या हि पुंश्चली ।
रत्नप्रदं रत्यविज्ञं विषदृष्ट्या हि पश्यति ॥
सर्व्वेषां स्थलमस्त्येव पुंश्चलीनां न कुत्रचित् ।
दारुणा पुंश्चलीजातिर्न्नरजातिभ्य एव च ॥
निष्कृतिः कर्म्मभोगान्ते सर्व्वेषामस्ति निश्चितम् ।
न पुंश्चलीनां विप्रेन्द्र ! यावच्चन्द्रदिवाकरौ ॥
विद्युद्दीप्तिर्ज्जले रेखा लोभान्मैत्री यथा भवेत् ।
परद्रोहाद्यथा सम्पत् कुलटाप्रेमतत्परम् ॥
सर्व्वेभ्यो हिंस्रजन्तुभ्यो विपद्बीजा सदैव सा ।
यो विश्वसेत्तां संमूढो विपत्तस्य पदे पदे ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । २३ । २४ ।
३२ अध्यायाः ॥

**पुंश्चिह्नं**, क्ली, (पुंसः पुरुषस्य चिह्नम् ।) शिश्नः ।
इति हेमचन्द्रः । ३ । २७४ ।

**पुंस**, क मर्द्दे । इति कविकल्पद्रुमः ॥ (चुरां-परं-
सकं-सेट् ।) ओष्ठ्यवर्गशेषोपधः । संयोगादनु-
स्वारः । तेन क्विपि पुंसोऽसुङ्ङावित्यसुङि पुमान् ।
मर्द्दोऽभिमर्द्दनम् । क, पुंसयति खलं राजा ।
इति दुर्गादासः ॥

**पुंसवनं**, क्ली, (पुमांसमिव सूते बलप्रदानेन पुरुष-
वत् जनयत्यनेनेति । सू + करणे ल्युट् ।) दुग्धम् ।
इति हेमचन्द्रः । ३ । ४०४ ॥ (पुमासं सूतेऽने-
नेति । सू ङ ल + करणे ल्युट् ।) संस्कार-
विशेषः । इति त्रिकाण्डशेषः ॥ (यथा, रघु-
वंशे । ३ । १० ।
"यथाक्रमं पुंसवनादिकाः क्रियाः
धृतेश्च धीरः सदृशीर्व्यधत्त सः ॥")
अस्येतिकर्त्तव्यता यथा । "गर्भस्य तृतीयमासो-
पक्रमे यच्छुद्धदिनं तस्मिन् पतिः कृतनित्यक्रियः
कृतवृद्धिश्राद्धः चन्द्रनामानमग्निं संस्थाप्य विरू-
पाक्षजपान्तां कुशण्डिकां समाप्य कृतस्नानां

(बर्हिषद्नामकपितृणां मानसीकन्यानामन्य-
तमा । सा तु शुकदेवस्य पत्नी । यथा, हरि-
वंशे । १८ । ४९ -- ५२ ।
"एतेषां मानसी कन्या पिवरी नाम विश्रुता ।
योगा च योगिपत्नी च योगिमाता तथैव च ॥
भवित्री द्वापरं प्राप्य युगं धर्म्मभृतां वरा ।
पराशरकुलोद्भूतं शुको नाम महातपाः ॥
भविष्यति युगे तस्मिन् महायोगी द्विजर्षभः ।
व्यासादरण्यां सम्भूतो विधूमाग्निरिवोज्ज्वलन् ॥
स तस्यां पितृकन्यायां पीवर्य्यां जनयिष्यति ।
कृष्णं गौरं प्रभुं शम्भुं कृत्वीं कन्यां तथैव च ॥")

**पुंलिङ्गं**, क्ली, (पुंसो लिङ्गं चिह्नम् ।) पुंचिह्नम् ।
शिश्नः । (यथा, महाभारते । ५ । १९४ । ३ ।
"किञ्चित् कालान्तरं दास्ये पुंलिङ्गं स्वमिदं तव ।
आगन्तव्यं त्वया काले सत्यञ्चैव वदस्व मे ॥")
शब्दवाचकतायाम्, पुं । इति जुमरः ॥ (पुंसो
लिङ्गमस्येति । पुंलिङ्गविशिष्टे, त्रि । यथा, महा-
भारते । ९ । ५८ । ५७ ।
"पुंलिङ्गा इव नार्य्यस्तु स्त्रीलिङ्गाः पुरुषाभवन् ।
दुर्य्योधने तदा राजन् ! पतिते तनये तव ॥")

**पुंवृषः**, पुं, (पुमानिव वर्षतीति । वृष + कः ।) गन्ध-
मूषिकः । इति शब्दमाला ॥ छुँचा इति भाषा ॥
(पुमान् गौः ।) पुंगवश्च ॥

**पुंश्चलः**, पुं, (पुंश्चलीव । उपचारात् पुंस्त्वम् ।)

अन्यासां कामिनीनाञ्च कीटं हन्तुञ्च या दया ।
सा नास्ति पुंश्चलीनान्तु कान्तं हन्तुं पुरातनम् ॥
रतिज्ञं नूतनं प्राप्य विषतुल्यं पुरातनम् ।
कान्तं दृष्ट्वा हिनस्त्येव सोपायेनावलीलया ॥ * ॥
पृथिव्यां यानि पापानि पुंश्चलीष्वेव भारते ।
तिष्ठन्ति ताभ्यो न पराः पापिष्ठाः सन्तिकेचन ॥
पुंश्चलीपरिपक्वान्नं सर्व्वपातकमिश्रितम् ।
दैवे कर्म्मणि पैत्रे च देयं न च तथा जलम् ॥
अन्नं विष्ठा पयो मूत्रं पुंश्चलीनाञ्च निश्चितम् ।
दत्त्वा पितृभ्यो देवेभ्यो भुक्त्वा च नरकं व्रजेत् ॥
शतवर्षं कालसूत्रे पचत्येव सुदारुणे ।
घोरान्धकारे कृमयस्तं दशन्ति दिवानिशम् ॥
पुंश्चल्यन्नञ्च यो भुङ्क्ते दैवाद्यदि नराधमः ।
सप्तजन्मकृतं पुण्यं तस्य नश्यति निश्चितम् ॥
आयुःश्रीयशसां हानिरिह लोके परत्र च ।
तस्माद्यत्नाद्रक्षणीयं पाकपात्रं कलत्रकम् ॥
पुंश्चलीदर्शने पुण्यं यात्रासिद्धिर्भवेद्ध्रुवम् ।
स्पर्शने च महापापं तीर्थस्नानाद्विशुध्यति ॥
स्नानं दानं व्रतञ्चैव जपश्च देवपूजनम् ।
निष्फलं पुंश्चलीनाञ्च भारते जीवनं वृथा ॥"
उपस्थितसकामपुंश्चलीत्यागे दोषो यथा, --
"रहस्युपस्थितां कामात् पुंश्चलीञ्चेज्जितेन्द्रियः ।
परित्यजेद्धर्म्मभयादधर्म्मान्नरकं व्रजेत् ॥"
सर्व्वदैव तस्यास्तपस्वित्याज्यत्वं गर्हिततवञ्च यथा,

बधूमग्नेः पश्चिमायां दिशि स्वदक्षिणतः कुशेषु
प्राङ्मुखीमुपवेश्य प्रकृतकर्म्मारम्भे प्रादेश-
प्रमाणां घृताक्तां समिधं तूष्णीमग्नौ हुत्वा
महाव्याहृतिहोमं कुर्य्यात् । यथा । प्रजापति-
रृषिर्गायत्री छन्दोऽग्निर्देवता महाव्याहृति-
होमे विनियोगः ॐ भूः स्वाहा । प्रजापति-
रृषिरुष्णिक् छन्दो वायुर्द्देवता महाव्याहृति-
होमे विनियोगः ॐ भुवः स्वाहा । प्रजापति-
रृषिरनुष्टुप् छन्दः सूर्य्यो देवता महाव्याहृति-
होमे विनियोगः ॐ स्वः स्वाहा । ततः पति-
रुत्थाय बधूपृष्ठदेशे स्थितो बधूदक्षिणस्कन्धं
स्पृष्ट्वा अवतीर्णेन दक्षिणहस्तेन अव्यवहितं
बधूनाभिदेशं स्पृशन् जपति । प्रजापतिरृषि-
रनुष्टुप् छन्दो मित्रावरुणाग्निवायवो देवताः
पुंसवने विनियोगः ।
ॐ पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ ।
पुमानग्निश्च वायुश्च पुमान् गर्भस्तवोदरे ॥
इत्येकं पुंसवनम् ॥ * ॥
अपरपुंसवनकर्म्मार्थञ्च वटवृक्षस्य पूर्ब्बोत्तर-
शाखायां फलयुगलशालिनीं कृमिभिरनुपहतां
वटशुङ्गां यवानां माषाणां वा त्रिभिस्त्रिभि-
र्गुडकैः सप्त वारान् सप्तभिर्मन्त्रैः क्रीणीयात् ।
सप्तानां मन्त्राणामृष्यादयः साधारणाः । प्रजा-
पतिरृषिः सोमवरुणवसुरुद्रादित्यमरुद्विश्वे
देवा देवता न्यग्रोधशुङ्गापरिक्रयणे विनियोगः
ॐ यद्यसि सौमी सोमायत्वा राज्ञे परिक्री-
णामि । इति गुडकत्रयेण एकं क्रयणम् ॥ १ ॥

| | | |
|---|---|---|
| व्यभिचारी। यथा, गारुडे ६६ अध्याये।<br>“ललाटोपसृतास्तिस्रो रेखाः स्युः शतवर्षिणाम्।<br>नृपत्वं स्याच्चतसृभिरायुः पञ्चनवत्यथ॥<br>अरेखेणायुर्नवतिर्विच्छिन्नाभिश्च पुंश्चलाः॥” | “उपस्थिता च या योषिदत्याज्या रागिणामपि।<br>श्रुतौ श्रुतमिति त्याज्या सर्व्वदैव तपस्विनाम्॥<br>अहो सर्व्वैः परित्याज्या पुंश्चली च विशेषतः।<br>धनायुःप्राणयशसां नाशिनी दुःखदायिनी॥<br>स्वकार्य्यतत्परा शश्वत् परकार्य्यविघातिनी।<br>निष्ठरा नरघातिभ्यः सर्व्वापद्बीजरूपिणी॥ | |

ॐ यद्यसि वारुणी वरुणायत्वा राज्ञे परि-
क्रीणामि । इति गुडकत्रयेण द्बितीयं क्रय-
णम् ॥ २ ॥ ॐ यद्यसि वसुभ्यो वसुभ्यस्त्वा
परि-
क्रीणामि । इति गुडकत्रयेण तृतीयं क्रय-
णम् ॥ ३ ॥ ॐ यद्यसि रुद्रेभ्यो रुद्रेभ्यस्त्वा परि-
क्रीणामि । इति गुडकत्रयेण चतुर्थं क्रयणम् ॥ ४
॥
ॐ यद्यसि आदित्येभ्य आदित्येभ्यस्त्वा परि-
क्रीणामि । इति गुडकत्रयेण पञ्चमं क्रयणम् ॥ ५
॥
ॐ यद्यसि मरुद्भ्यो मरुद्भ्यस्त्वा परिक्रीणामि
।
इति गुडकत्रयेण षष्ठं क्रयणम् ॥ ६ ॥ ॐ यद्यसि
विश्वेभ्यो देवेभ्यो विश्वेभ्यो देवेभ्यस्त्वा परि-
क्रीणामि । इति गुडकत्रयेण सप्तमं क्रय-
णम् ॥ ७ ॥ ततः क्रीतां वटशुङ्गां अनेन मन्त्रेण
वृक्षादाहरेत् । प्रजापतिरृषिरोषध्यो देवता
न्यग्रोधशुङ्गाच्छेदने विनियोगः । ॐ ओषधयः
सुमनसो भूत्वा अस्यां वीर्य्यं समाधत्त इयं कर्म्म
करिष्यति । ततस्तां तृणवेष्टितामन्तरीक्षेणानीय
अन्तरीक्षे स्थापयेत् । ततः कृतशोभननाम्नो-
ऽग्नेरुत्तरतः प्रक्षालितशिलायां ब्रह्मचारी गर्भ-
वती वा श्रुतस्वाध्यायहीनो वा ब्राह्मणः प्राङ्मुख
आचारतो नीहारजलेन अनावृत्तलोष्टेन पुनः
पुनः पेषयेत् । ततोऽग्नेः पश्चिमत उत्तराग्रेषु
कुशेषु पश्चिमाभिमुखीं बधूं पूर्ब्बदिगानतमस्तकां
कृत्वा तत्पृष्ठदेशे स्थितः पतिर्दक्षिणपाणे-
रङ्गुष्ठानामिकाभ्यां वस्त्रवद्धां पेषितवटशुङ्गां
गृहीत्वा गर्भवत्या दक्षिणनासाविवरे शुङ्गारसं
निःक्षिपति । प्रजापतिरृषिरनुष्टुप् छन्दो-
ऽग्नीन्द्रबृहस्पतयो देवता न्यग्रोधश्रुङ्गारसस्य
दाने विनियोगः ।
ॐ पुमानग्निः पुमानिन्द्रः पुमान् देवी बृहस्पतिः ।
पुमांसं पुत्त्रं विन्दस्व तं पुमाननुजायताम् ॥
ततो महाव्याहृतिहोमं कृत्वा तूष्णीं प्रादेश-
प्रमाणां घृताक्तां समिधमग्नौ हुत्वा प्रकृतं कर्म्म
समाप्य उदीच्यं शाट्यायनहोमादिवामक्ष्य-
गानान्तं कर्म्म कृत्वा कर्म्मकारयितृब्राह्मणाय

स्नात्वा शुक्लदती शुक्ले
वसीतालङ्कृताम्बरे ।
पूजयेत् प्रातराशात् प्राक् भगवन्तं श्रिया
सह ॥
अलं ते निरपेक्षाय पूर्णकाम ! नमोऽस्तु ते ।
महाविभूतिपतये नमः सकलसिद्धये ॥
यथा त्वं कृपया धृत्या तेजसा महिमौजसा ।
जुष्ट ईशगुणैः सर्व्वैस्ततोऽसि भगवान् प्रभुः
॥
विष्णुपत्नि ! महामाये महापुरुषलक्षणे ।
प्रीयेथा मे महाभागे लोकमातर्नमोऽस्तु ते ॥
ॐ नमो भगवते महापुरुषाय महानुभावाय
महाविभूतिपतये सह महाविभूतिभिर्व्वलि-
मुपहरामीति । अनेनाहरहर्म्मन्त्रेण विष्णो-
रावाहनार्घ्यपाद्योपस्पर्शन-स्नान-
वासोपवीत-
भूषणगन्धपुष्पधूपदीपोपहाराद्युपचारान्
सुस-
माहितोपाहरेत् ।
हविःशेषञ्च जुहुयादनले द्वादशाहुतीः ।
ॐ नमो भगवते महापुरुषाय
महाविभूतिपतये
स्वाहेति ।
श्रियं विष्णुञ्च वरदावाशिषां प्रभवायुभौ ।
भक्त्या संपूजयेन्नित्यं यदीच्छेत्
सर्व्वसम्पदः ॥
प्रणमेद्दण्डवद्भूमौ भक्तिप्रह्वेण चेतसा ।
दशवारं जपेन्मन्त्रं ततः स्तोत्रमुदीरयेत् ॥
युवान्तु विश्वस्य विभू जगतः कारणं परम् ।
इयं हि प्रकृतिः सूक्ष्मा मायाशक्तिर्दुरत्यया ।
तस्या अधीश्वरः साक्षात् त्वमेव पुरुषः परः
॥
त्वं सर्व्वयज्ञ इज्येयं क्रियेयं फलभुग्भवान् ।
गुणव्यक्तिरियं देवी व्यञ्जको गुणभुग्भवान् ॥
त्वं हि सर्व्वशरीर्य्यात्मा श्रीः
शरीरेन्द्रियासवः ।
नामरूपे भगवती प्रत्ययस्त्वमपाश्रयः ॥
यथा युवां त्रिलोकस्य वरदौ परमेष्ठिनौ ।

दद्यात् पत्न्यै चरोः शेषं सुप्रजस्त्वं
सुसौभगम् ॥
एतच्चरित्वा विधिवद्व्रतं विभो-
रभीप्सितार्थं लभते पुमानिह ।
स्त्री चैतदास्थाय लभेत सौभगं
श्रियं प्रजां जीवपतिं यशो गृहम् ॥
कन्या च विन्देत समग्रलक्षणं
पतिं त्ववीरा हतकिल्विषाङ्गतिम् ।
मृतप्रजा जीवसुता धनेश्वरी
सुदुर्भगा सुभगा रूपमग्रियम् ॥
विन्देदविरूपा विरुजा विमुच्यते
य आमयावीन्द्रियकल्यदेहम् ।
एतत् पठन्नभ्युदये च कर्म्म-
ण्यनन्ततृप्तिः पितृदेवतानाम् ॥
तुष्टाः प्रयच्छन्ति समस्तकामान्
होमावसाने हुतभुक् श्रीर्हरिश्च ।
राजन्महन्मरुतां जन्मपुण्यं
दितेर्व्रतञ्चाभिहितं महत्ते ॥”
इति श्रीभागवते ६ स्कन्धे
पुंसवनव्रतकथनं १९
अध्यायः ॥ (पुंवत् सूयते इति ।
कर्म्मणि ल्युट् ।
गर्भः । इति श्रीधरस्वामी ॥ यथा,
भागवते ।
५ । २४ । १५ । “यस्मिन्
प्रविष्टेऽसुरबधूनां प्रायः
पुंसवनानिभयाद्वे स्रवन्ति पतन्ति
च ॥” * ॥
पुत्त्रोत्पादके, त्रि । यथा, भागवते ।
९ । ६ । २८ ।
“पप्रच्छुः कस्य कर्म्मेदं पीतं
पुंसवनं जलम् ॥”
तथा च तत्रैव । ४ । १३ । ३७ --
३८ ।
“स विप्रानुमतो राजा
गृहीत्वाञ्जलिनौदनम् ।
अवघ्राय मुदा युक्तः प्रादात् पत्न्या
उदारधीः ॥

दक्षिणां दद्यादिति पुंसवनम् ।” इति दशकर्म्म-
पद्धतौ भवदेवभट्टः ॥ * ॥ अथ पुंसवनोक्तवाराः
।
रविमङ्गलबृहस्पतयः । नक्षत्राणि । पूर्ब्बाषाढो-
त्तराषाढापूर्ब्बभाद्रपदुत्तरभाद्रपद्पुष्यपुनर्व्वसु-
मूलाद्रखितीहस्ताश्रवणामृगशिरसः । तिथयः ।
नन्दा भद्राः । लग्नानि । कुम्भसिंहधनुर्मीन-
मिथुनानि । स्त्रियाश्चन्द्रादिशुद्धौ दशयोगभङ्ग-
विष्टिभद्रात्र्यहस्पर्शादीन्परित्यज्य गर्भधारण-
दिनावधितृतीयमासे कर्त्तव्यम् । इति ज्योति-
षम् ॥ * ॥ स्त्रीकर्त्तव्यव्रतविशेषः । यथा, --
श्रीराजोवाच ।
“व्रतं पुंसवनं ब्रह्मन् ! भवता यदुदीरितम् ।
तस्य वेदितुमिच्छामि येन विष्णुः प्रसीदति ॥
श्रीशुक उवाच ।
शुक्ले मार्गशिरे पक्षे योषिद्भर्त्तुरनुज्ञया ।
आरभेत व्रतमिदं सर्व्वकामिकमादितः ॥
निशम्य मरुतां जन्म ब्राह्मणाननुमन्त्र्य च ।
तथा म उत्तमश्लोक ! सन्तु सत्या
महाशिषः ॥
इत्यभिष्टूय वरदं श्रीनिवासं श्रिया सह ।
तन्निसार्य्योपहरणं दत्त्वाचमनमर्च्चयेत् ॥
ततः स्तुवीत स्तोत्रेण भक्तिप्रह्वेण चेतसा ।
यज्ञोच्छिष्टमवघ्राय पुनरभ्यर्च्चयेद्धरिम् ॥
पतिञ्च परया भक्त्या महापुरुषचेतसा ।
प्रियैस्तैस्तैरुपनमेत् प्रेमशीलः स्वयं पतिः
॥
बिभृयात् सर्व्वकर्म्माणि पत्न्या
उच्चावचानि च ।
कृतमेकतरेणापि दम्पत्योरुभयोरपि ॥
पत्न्यां कुर्य्यादनर्हायां पतिरेतत् समाहितः
।
विष्णोर्व्रतमिदं बिभ्रन्न विहन्यात् कथञ्चन ॥
विप्रान् स्त्रियो वीरवतीः
स्रग्गन्धबलिमण्डनैः ।
अर्च्चेदहरहर्भक्त्या देवं नियममास्थिता ॥
उद्वास्य देवं स्वे धाम्नि तन्निवेदितमग्रतः ।
अद्यादात्मविशुद्ध्यर्थं सर्व्वकामसमृद्धये ॥
एतेन पूजाविधिना मासान् द्वादशहायनम् ।
नीत्वाथोपरमेत् साध्वी कार्त्तिके चरमेऽहनि
॥
श्वोभूतेऽप उपस्पृश्य कृष्णमभ्यर्च्च्य पूर्ब्बवत्
।
पयःशृतेन जुहुयाच्चरुणा सह सर्पिषा ।
पाकयज्ञविधानेन द्वादशैवाहुतीः पतिः ॥
आशिषः शिरसादाय द्विजैः प्रीतैः
समीरिताः ।
प्रणम्य शिरसा भक्त्या भुञ्जीत तदनुज्ञया ॥
आचार्य्यमग्रतः कृत्वा वाग्यतः सह बन्धुभिः
।
सा तत् पुंसवनं राज्ञी प्राश्य वै
पत्युरादधे ।
गर्भं काल उपावृत्ते कुमारं सुषुवे
प्रजाः ॥”)

**पुंस्कोकिलः**, पुं, (पुमान् कोकिलः ।) पुरुषपिक-
पक्षी । पुम्स्शब्देन कोकिलशब्दस्य
कर्म्मधारय-
समासे तस्यान्तलोपे पुंसः सन्निति
मस्य सनि
कृते मस्यानुस्वारे निष्पन्नः । इति
मुग्धबोध-
व्याकरणम् ॥ (यथा, कुमारे । ३ ।
३२ ।
“चूताङ्कुरास्वादकषायकण्ठः
पुंस्कोकिलो यन्मधुरं चुकूज ॥”)

**पुंस्त्वं**, क्ली, (पुंसः पुरुषस्य भावः । पुम्स् + त्व ।)
शुक्रम् । इति हेमचन्द्रः । ३ ।
२९३ ॥ पुरुष-
त्वञ्च ॥ (यथा, मार्कण्डेये । ५० ।
१२ ।
“सौम्यासौम्यैस्तथा शान्तैः पुंस्त्वं
स्त्रीत्वञ्च स
प्रभुः ।
विभेद बहुधा देवः पुरुषैरसितैः
सितैः ॥”)

**पुंस्त्वविग्रहः**, पुं, (पुंस्त्वस्य शुक्रस्येव विग्रहो यस्य ।)
भूतृणम् । इति राजनिर्घण्टः ॥

**पुक्कशः**, पुं, (पुक् कुत्सितं कशति गच्छतीति ।
कश गतौ + अच् ।) चण्डालः ।
इत्यमरः । २ ।
१० । २० ॥ (यथा, मार्कण्डेये ।
१५ । १८ ।
“अकृतज्ञोऽधमः पुंसां विमुक्तो
नरकान्नरः ।
मत्स्यस्तु वायसः कूर्म्मः पुक्कशो
जायते ततः ॥”

|  |  | स तु निषादात् शूद्रायां जातो जातिविशेषः ।<br>यथा, मनुः । ४ । ७९ ।<br>“न संवसेच्च पतितैर्नचाण्डालैर्न पुक्कशैः ॥”) |
| --- | --- | --- |

**पुक्कषः**, पुं, (पुक् कुत्सितं कषतीति । कष गतौ +
अच् ।) चण्डालः ।
इत्यमरटीकायां भरतः ॥

**पुक्कसः**, पुं, (पुक् कुत्सितं कसतीति । कस गतौ +
अच् ।) चण्डालः । (स तु
निषादात् शूद्रायां
जातः । यथा, मनुः । १० । १८
।
“जातो निषादात् शूद्रायां जात्या
भवति
पुक्कसः ॥”)
अधमे, त्रि । इति
मेदिनीशब्दरत्नावल्यौ ॥

**पुक्कसी**, स्त्री, कालिका । नीली । इति मेदिनी-
शब्दरत्नावल्यौ ॥ (पुक्कस +
जातौ ङीष् । पुक्कस-
स्त्रीजातिः । यथा, मनुः । १० ।
३८ ।
“चण्डालेन तु सोपाको
मूलव्यसनवृत्तिमान्।
पुक्कस्यां जायते पापः सदा
सज्जनगर्हितः ॥”)

**पुङ्खः**, पुं, (पुमांसं खनतीति । खन + डः ।) काण्ड-
मूलम् । इत्यमरः । ३ । ५ । १७
॥ पुष्कल इति
ख्यातम् ॥ (अर्द्धर्च्चादित्वात्
क्लीवलिङ्गोऽपि ॥
यथा, रघुः । २ । ३१ ।
“सक्ताङ्गुलिः सायकपुङ्ख एव
चित्रार्पितारम्भ इवावतस्थे ॥”
मङ्गलाचारः । इति हेमचन्द्रटीका
॥)

**पुङ्गः**, पुं, क्ली, (पुञ्ज + पृषोदरादित्वात् साधुः ।)

**पुच्छदा**, स्त्री, (पुच्छमिवददातीति । दा + कः ।)
लक्ष्मणाकन्दः । इति राजनिर्घण्टः ॥

**पुच्छी**, [न्] पुं, (पुच्छोऽस्त्यस्येति । पुच्छ +
इनिः ।) अर्कवृक्षः । इति राजनिर्घण्टः ॥
कुक्कुटः । इति शब्दचन्द्रिका ॥ लाङ्गूलयुक्ते, त्रि
॥

**पुञ्जः**, पुं, (पिञ्ज्यते पिञ्जयतीति वा । पिजि +
अच् । पृषोदरादित्वात् साधुः ।) समूहः ।
राशिः । इत्यमरः । २ । ५ । ४२ ॥ (यथा,
मार्कण्डेये । ८ । ८२ ।
“गृहीतपक्षिपुञ्जश्च शवमाल्यैरलङ्कृतः ॥”)

**पुट**, क चूर्णे । भासि । इति कविकल्पद्रुमः ॥
(चुरां-परं-चूर्णे सकं-भासि अकं-सेट् ।) क,
पोटयति । भासि दीप्तौ । इति दुर्गादासः ॥

**पुट**, त् क संसर्गे । इति कविकल्पद्रुमः ॥ (अदन्त-
चुरां-परं-सकं-सेट् ।) पुटयति पुष्पं सूत्रेण जनः
संसृजतीत्यर्थः । इति दुर्गादासः ॥

**पुट**, शि श्लेषे । इति कविकल्पद्रुमः ॥ (तुदां-कुटां-
परं-अकं-सेट् ।) शि, पुटति अपुटीत् पुपोट ।
श्लेषः सम्बन्धीभावः । इति दुर्गादासः ॥

**पुटं**, क्ली, (पुटतीति । पुट संश्लेषे + कः ।) जाती-
फलम् । इति राजनिर्घण्टः ॥ उपर्य्यधोभावा-
पन्नसंयुक्तमृदादिकपालद्वयरूपौषधपाकपात्रम्।
धात्वादिमारणोपयुक्तान् पुटप्रकारानाह रस-
प्रदीपे ।
“लोहादेरपुनर्भावस्तद्गुणत्वं गुणाढ्यता ।
सलिले तरणञ्चापि तत्सिद्धिः पुटनाद्भवेत् ॥
गम्भीरे विस्तृते कुण्डे द्विहस्ते चतुरस्रके ।
वनोपलसहस्रेण पूरिते पुटनौषधम् ॥
कोष्ठे रुद्धं प्रयत्नेन गोविष्ठोपरि धारयेत् ।
वनोपलसहस्राद्धं कोष्ठिकोपरि निःक्षिपेत् ॥
वह्निं विनिःक्षिपेत्तत्र महापुटमिति स्मृतम् ॥ १ ॥
कोष्ठं मूषा । गोविष्ठा गोइठा । इति महापुटम् ॥
सपादहस्तमानेन कुण्डे निम्ने तथायते ।
वनोपलसहस्रेण पूर्णमध्ये विधारयेत् ॥

तद्गोवरपुटं प्रोक्तं भिषग्भिः सूतभस्मकृत् ॥
६ ॥
बृहद्भाण्डे तुषैः पूर्णे मध्ये मूषां विधारयेत् ।
क्षिप्त्वाग्निं मुद्रयेद्भाण्डं तद्भाण्डपुटमुच्यते ॥”
* ॥
इति भावप्रकाशे पूर्ब्बखण्डे २ भागः ॥

**पुटः**, पुं क्ली, (पुटतीति । पुट श्लेषे + कः ।) अश्व-
खुरः । इति शब्दरत्नावली ॥

**पुटः**, त्रि, (पुट् + कः ।) आच्छादनम् । पत्रादि-
रचितः पुष्पाद्याधारः । यथा, रघुः । २ ।
६५ ।
“दुग्ध्वा पयः पत्रपुटे मदीयं
पुत्रोपभुङ्क्ष्वेति तमादिदेश ॥”
(यथा च मनौ । ६ । २८ ।
“ग्रामादाहृत्य वाश्नीयादष्टौ ग्रासान् वने
वसन् ।
प्रतिगृह्य पुटेनैव पाणिना सकलेन वा ॥”)
मिथःसंश्लेषः । इति मुकुटः ॥
इत्यमरटीकायां
भरतः ॥

**पुटकं**, क्ली, (पुटवत् कायतीति । कै + कः ।)
पद्मम् । इति शब्दरत्नावली ॥ स्वार्थे
कप्रत्यये
पुटशब्दार्थोऽप्यत्र ॥

**पुटकन्दः**, पुं, (पुटमिव कन्दो यस्य ।) कोलकन्दः ।
इति राजनिर्घण्टः ॥

**पुटकिनी**, स्त्री, (पुटकानि सन्त्यत्रेति । पुटक +
“पुष्करादिभ्यो देशे ।” ५ । २ । १३५ ।
इति
इनिः । स्त्रियां ङीप् ।) पद्मिनी ।
पद्मयुक्तदेशः ।
पद्मसमूहः पद्मलता च । इति हेमचन्द्रः ॥

**पुटग्रीवः**, पुं, (पुटमिव ग्रीवा यस्य ।) गर्गरी ।
ताम्रकुम्भः । इति मेदिनी । वे, ६१ ॥

**पुटपाकः**, पुं, (पुटेन पाकः ।) पुटाभ्यन्तरितौ-

समूहः । इति शब्दचन्द्रिका ॥

**पुङ्गलः**, पुं, (पुङ्गं देहसमूहं लाति आदत्ते इति ।

पुङ्ग + ला + कः ।) आत्मा । इति भूरि-
प्रयोगः ॥

**पुङ्गवः**, पुं, (पुमान् गौः । "गोरतद्धितलुकि ।"

५ । ४ । ९२ । इति टच् ।) वृषः । (यथा,
हरिवंशे । ७५ । ४१ ।
"भवता रक्षिता लोका गोलोकश्च महालयम् ।
यद्वयं पुङ्गवैः सार्द्धं वर्द्धामः प्रसवैस्तथा ॥")
औषधभेदः । (पुमान् गौरिव मदबलाद्याति-
शय्यादित्युपमितसमासः ।) उत्तरपदस्थः श्रेष्ठ-
वाचकः । इति मेदिनी । वे, ४४ ॥ (यथा, भाग-
वते । १ । ९ । ३२ ।
"इति मतिरुपकल्पिता वितृष्णा
भगवति सात्त्वतपुङ्गवे विभूम्नि ॥")
ऋषभौषधम् । महोक्षः । इति राजनिर्घण्टः ॥

**पुच्छ**, प्रसादे । इत्यमरटीकायां रायमुकुटधृत-

धातुः ॥ (भ्वां-परं-अकं-सेट् ॥)

**पुच्छः**, पुं, क्ली, (पुच्छतीति । पुच्छ प्रसादे + अच् ।)

लाङ्गूलम् । इत्यमरः । २ । ८ । ५० ॥ (यथा, देवी-
भागवते । ५ । ७ । १६ ।
"खुरघातैस्तथा देवान् पुच्छस्य भ्रमणेन च ।
स जघान रुषाविष्टो महिषः परमाद्भुतः ॥")

पुठनद्रव्यसंयुक्तां कोष्ठिकां मुद्रितां मुखे ।
अधोऽर्द्धानि करण्डानि अर्द्धान्युपरि निःक्षिपेत् ॥
एतद्गजपुटं प्रोक्तं ख्यातं सर्व्वपुटोत्तमम् ॥
हस्तश्चतुर्व्विंशत्यङ्गुलप्रमाणः स सपादः तेन
त्रिंशदङ्गुलप्रमाणेनेत्यर्थः । अतएवोक्तम् ।
साधारणो नराङ्गुल्या त्रिंशदङ्गुलको गजः ॥
इति गजपुटम् ॥ २ ॥
अरत्निमात्रके कुण्डे पुटं वाराहमुच्यते ॥ ३ ॥
वितस्तिमात्रके खाते कथितं कौक्कुटं पुटम् ।
'अरत्निस्तु निष्कनिष्ठेन मुष्टिना' इत्यमरः ।
२ । ६ । ८६ ॥ निःसृतकनिष्ठया मुष्ट्योपलक्षितो
हस्तोऽरत्निरित्यर्थः ।
षोडशाङ्गुलके खाते कस्यचित् कौक्कुटं पुटम् ॥ ४ ॥
यत् पुटं दीयते खाते ह्यष्टसंख्यैर्वनोपलैः ।
कपोतपुटमेतत्तु कथितं पुटपण्डितैः ॥ ५ ॥
गोष्ठान्तर्गोखुरक्षुण्णं शुष्कचूर्णितगोमयम् ।
गोवरं तत् समाख्यातं वरिष्ठं रससाधने ॥
बृहद्भाण्डस्थितैर्यन्त्रैर्गोवरैर्दीयते पुटम् ।

षधपचनम् । अथ पुटपाकविधिः ।
"पुटपक्वस्य कल्कस्य स्वरसो गृह्यते यतः ।
अतस्तु पुटपाकानां युक्तिरत्रोच्यते मया ॥
पुटपाकस्य पाकोऽयं लेपस्याङ्गारवर्णता ।
लेपञ्च द्व्यङ्गुलं स्थूले कुर्य्याद्बाङ्गुलिमात्रकम् ॥
काश्मरीवटजम्ब्वादिपत्रैर्वेष्टनमुत्तमम् ।
पलमात्रो रसो ग्राह्यः कर्षमात्रं मधु क्षिपेत् ॥
कल्कचूर्णद्रवाद्यास्तु देयाः कोलमिता बुधैः ॥
अपि च ।
द्वे विल्वे स्निग्धमांसस्य परं द्रव्यं पलं मतम् ।
द्रव्यस्य कुडवोन्मानं सर्व्वमेकत्र पेषयेत् ॥
तदेकत्र समालोड्य पत्रैः सूपरिवेष्टितम् ॥
पुटपाकविधानेन तत् पक्त्वा तद्रसं बुधः ।
तर्पणोक्तेन विधिना यथावदवचारयेत् ॥
दृष्टिमध्ये निषेच्यः स्यान्नित्यमुत्तानशायिनः ।
स्नेहनो लेखनश्चैव रोपणश्चेति स त्रिधा ॥
हितः स्निग्धो विरूक्षस्य स्निग्धस्य स तु लेखनः
दृष्टेर्ब्बलार्थमितरः पित्तासृग्व्रणवातनुत् ॥
इतरो रोपणः ।
स्नेहमांसवसामज्जमेदःस्वाद्वौषधैः कृतः ।
स्नेहनः पुटपाकः स्याद्धार्य्यो द्वे वाक्शते तु सः ॥
वाक्शतं छोटिकाशतम् ।
जाङ्गलानां यकृन्मांसैर्लेखनद्रव्यसंयुतैः ।
कृष्णलोहरजस्ताम्रशङ्खविद्रुमसिन्धुजैः ॥
समुद्रफेनकासीसस्रोतोजदधिमस्तुभिः ।

| | | |
|---|---|---|
| पश्चाद्भागे, पुं, । इति मेदिनी । छे, ५ ॥ (यथा, महाभारते । ७ । ६ । २८ । “उल्का ज्वलन्ती संग्रामे पुच्छेनावृत्य सर्व्वशः ॥”) लोमवल्लाङ्गूलेकलापे च, क्ली । इत्युणादिकोषः ॥<br><br>**पुच्छटी**, क्ली, (पुच्छ प्रसादे + भावे क्विप् । पुच्छं प्रसादं अटतीति । अट गतौ + इन् ।) अङ्गुलि-मोटनम् । इति त्रिकाण्डशेषः ॥ आङ्गुलमट्-कान इति भाषा ॥ | | |

लेखनो वाक्शतं तस्य परं धारणमिष्यते ॥
स्तन्यजाङ्गलमध्वाज्यतिक्तकद्रव्यभावितः।
लेखनात्त्रिगुणो धार्य्यः पुटपाकस्तु रोपणः ॥
तिक्तकद्रव्याण्याह।
निम्बामृतावृषपटोलनिदिग्धिकाभिः
स्यात् पञ्चतिक्तक इति प्रथितो गणोऽयम् ॥
आचरेत्तर्पणोक्तान्तु क्रियां व्यापत्तिदर्शने ॥
व्यापत्तिदर्शने मिथ्याकृतपुटपाकजनितव्याधि-
दर्शने ।
तेजांस्यनिलमाकाशमादर्शं भास्कराणि च ।
नैक्षेत तर्पिते नेत्रे यश्च वा पुटपाकवान् ॥”
इति भावप्रकाशः ॥

**पुटभेदः**, पुं, (पुटं संश्लिष्टं भिनत्तीति । भिद +
“कर्म्मण्यण् ।” ३ । २ । १ । इत्यण् ।) नदी-
वक्रम् । (नदीचक्रम् । इत्यमरः । १ । १० । ७ ॥
यथा, आर्य्यासप्तशत्याम् । ३९८ ।
“प्रायेणैव हि मलिना मलिनानामाश्रयत्वमुप-
यान्ति ।
कालिन्दीपुटभेदः कालियपुटभेदनं भवति ॥”)
पत्तनम् । आतोद्यम् । इति मेदिनी । दे, ५० ॥

**पुटभेदनं**, क्ली, (पुटैरश्वखुरैर्भिद्यते इति । भिद +
कर्म्मणि ल्युट् ।) नगरम् । इत्यमरः । २ । २ । १
॥
(यथा, महाभारते । १ । १०० । १२ ॥
“स हास्तिनपुरे रम्ये कुरूणां पुटभेदने ।
वसन् सागरपर्य्यन्तामन्वशासद्वसुन्धराम् ॥”)

**पुटालुः**, पुं, (पुटः संश्लिष्ट आलुः ।) कोलकन्दः ।
इति राजनिर्घण्टः ॥

**पुटिका**, स्त्री, (पुटं अस्त्यस्या इति । पुट + ठन्
+ टाप् ।) एला । इति हारावली । ९७ ॥

**पुटितं**, क्ली, (पुटं जातमस्येति । पुट + इतच् ।
पुट + क्त वा ।) हस्तपुटम् । पाटितम् । स्यूते,
त्रि । इति मेदिनी । ते, १३४ ॥ आद्यन्तप्रण-
वादियुक्तमन्त्रादौ पुटप्राप्ते च त्रि ॥

**पुटी**, स्त्री, (पुटतीति । पुट + कः । गौरादित्वात्

**पुण**, श धर्म्मे । इति कविकल्पद्रुमः ॥ (तुदां-परं-
सकं-सेट् ।) शुभक्रियायामित्यन्ये । श,
पुणति
शुभं लोकः । पोणिता । इति दुर्गादासः
॥

**पुण्डः**, पुं, (पुण्ड्यते इति । पुडि मर्द्दे + घञ् ।)
तिलकः । इति जटाधरः ॥

**पुण्डरी**, [न्] पुं, हस्तिनां मनुष्याणाञ्च चक्षुष्यः
क्षुद्रविटपः । शालपर्णीपत्रतुल्यपत्रः ।
पुण्ड-
रिया इति ख्यातः । तत्पर्य्यायः ।
पौण्डरी-
कम् २ पुण्डरीकम् ३ पुण्डरीयकम् ४
प्रपौण्ड-
रीकम् ५ चक्षुष्यम् ६ पौण्डर्य्यम् ७
तालपुष्प-
कम् ८ सालपुष्पम् ९ दृष्टिकृतम् १०
स्थलपद्मम्
११ मालकम् १२ । केचित्तु पूर्ब्बदशकं
पद्मकाष्ठे
प्रचक्षते ॥ इति शब्दरत्नावली ॥

**पुण्डरीकं**, क्ली, (पुण्डति अन्यपुष्पाणां गर्व्वं
चूर्णी-
करोतीति । पुण्ड मर्द्दे +
“फर्फरीकादयश्च ।”
उणां । ४ । २० । इति ईकन्प्रत्ययेन
निपा-
तनात् साधुः । “पुणतेः पुण्डरीकम् ।”
इत्यु-
ज्ज्वलदत्तः ।) शुक्लपद्मम् । तत्पर्य्यायः
। सिता-
म्भोजम् २ । इत्यमरः । १ । १० ।
४१ ॥ शत-
पत्रम् ३ महापद्मम् ४ सिताम्बुजम् ५ ।
इति
रत्नमाला ॥ अस्य पर्य्यायान्तरं
गुणाश्च श्वेत-

रामचन्द्रवंशीयनृपविशेषः । यथा, रघुः
। १८ । ८ ।
“तेन द्विपानामिव पुण्डरीको
राज्ञामजय्योऽजनि पुण्डरीकः ।
शान्ते पितर्य्याहृतपुण्डरीका
यं पुण्डरीकाक्षमिव श्रिता श्रीः ॥”
पुण्डरीकाः सन्त्यत्रेति । अच् ।
पुण्डरीक-
विशिष्टे, त्रि । यथा, मात्स्ये । १२० ।
६८ ।
“पयोदस्तु ह्रदो नीलः स शुभः
पुण्डरीकवान् ।
पुण्डरीकात् पयोदाच्च तस्मात् द्वे
सम्प्रसूय-
ताम् ॥”)

**पुण्डरीकाक्षं**, क्ली, (पुण्डरीकवदक्षिणी यस्मात्
।
षच् समासे ।) पुण्डर्य्यम् । इति
शब्दचन्द्रिका ॥

**पुण्डरीकाक्षः**, पुं, (पुण्डरीकवदक्षिणी नेत्रे यस्य ।
षच् समासे ।) विष्णुः । इत्यमरः । १ ।
१ । १९ ॥
(यथा, महाभारते । ५ । ७० । ६ ।
“पुण्डरीकं परं धाम नित्यमक्षरमव्ययम्
।
तद्भावात् पुण्डरीकाक्षो
दस्युत्रासाज्जनार्द्दनः ॥”
“हृदयाख्यपुण्डरीकमश्नुतेव्याप्नोति
तत्रोपलभ्यत
इति पुण्डरीकाक्षः । यत्
पुण्डरीकाक्षस्तत्-
पुण्डरीकं परममध्यमन्त इति श्रुतेः ।
अक्षिणी
पुण्डरीकाभे यस्येति वा ।” इति
शाङ्करभा-
ष्यम् ॥) तस्य स्मरणे
बाह्याभ्यन्तरशुचित्वं यथा,

ङीष् ।) कौपीनम् । इति जटाधरः ॥ आच्छा-
दनम् । पत्रादिरचितः पुष्पाद्याधारः । इत्य-
मरभरतौ ॥ (यथा, आर्य्यासप्तशत्याम् । १४९ ।
“एरण्डपत्रशयना जनयन्ती स्वेदमलघुजघन-
तटा ।
धूलिपुटीव मिलन्ती स्मरज्वरं हरति हलिक-
बधूः ॥”)

**पुटोटज**, क्ली, (पुटं संश्लिष्टमुटजमिव ।) श्वेत-
च्छत्रम् । इति त्रिकाण्डशेषः ॥

**पुटोदकः**, पुं, (पुटे अन्तर्युब्जपात्रमध्ये उदकं
यस्य ।) नारिकेलः । इति हारावली । १०० ॥

**पुट्ट**, क तौच्छ्ये । इति कविकल्पद्रुमः ॥ (चुरां-
परं-सकं-सेट् ।) पञ्चमस्वरी । टद्वयान्तः । एक-
टकार इति रामः । क, पुट्टयति । तौच्छमल्पी-
भावः । इति दुर्गादासः ॥

**पुड**, इ मर्द्दे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) पञ्चमस्वरी । इ, पुण्ड्यते । मर्द्द-
श्चर्णीकरणम् । इति दुर्गादासः ॥

पद्मशब्दे द्रष्टव्याः ॥ (यथा, रघुः । ४ ।
१७ ।
“पुण्डरीकातपत्रस्तं
विकसत्काशचामरः ।
ऋतुर्विडम्बयामास न पुनः प्राप
तच्छ्रियम् ॥”)
पद्ममात्रम् । इति भरतधृतव्याडिः ॥
श्वेत-
च्छत्रम् । भेषजभेदः । इति मेदिनी ।
के, १९९ ॥
सप्तमहाकुष्ठानामन्यतमः । तल्लक्षणं
यथाह
माधवकरः ।
“सश्वेतं रक्तपर्य्यन्तं
पुण्डरीकदलोपमम् ।
सोत्सेधञ्च सरागञ्च पुण्डरीकं तदुच्यते
॥”

**पुण्डरीकः**, पुं, (पुण्डरीकवद्वर्णोऽस्त्यस्येति ।
अच् ।)
अग्निकोणस्थदिग्गजः । व्याघ्रः ।
इत्यमरः । ३ । ३ ।
११ ॥ कोषकारभेदः । इति मेदिनी ॥
सहकारः ।
गणधरः । राजिलसर्पः । गजज्वरः ।
इति
हेमचन्द्रः ॥ दमनकवृक्षः । इति
राजनिर्घण्टः ॥
(धान्यविशेषः । तद्यथा, --
“पुष्पाण्डकः पुण्डरीकस्तथा
महिषमस्तकः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)
कमण्डलुः । श्वेतवर्णः ।
इत्यनेकार्थकोषः ॥
(क्रौञ्चद्वीपस्थपर्व्वतविशेषः । यथा,
मात्स्ये ।
१२१ । ८१ ।
“देवावृतः परेणापि पुण्डरीको महान्
गिरिः ।
एते रत्नमयाः सप्त क्रौञ्चद्वीपस्य
पर्व्वताः ॥”

“अपवित्रः पवित्रो वा सर्व्वावस्थां
गतोऽपि वा ।
यः स्मरेत् पुण्डरीकाक्षं स
बाह्याभ्यन्तरः शुचिः ॥”
इति वामने ३३ अध्यायः ॥
(जलचरपक्षिविशेषः । तद्यथा, --
“उत्क्रोशः पुण्डरीकाक्षो
मेघरावोऽम्बुकुक्कुटी ॥”
इति चरके सूत्रस्थाने २७ अध्याये ॥)

**पुण्डरीयकं**, क्ली, स्थलपद्मम् । इति शब्दमाला
॥
प्रपौण्डरीकम् । इति राजनिर्घण्टः ॥

**पुण्डर्य्यं**, क्ली, (पुण्डतीति । पुडि + अच् ।
तस्यार्य्यं
प्रधानम् । शकन्ध्वादित्वात् साधुः ।)
प्रपौण्ड-
रीकम् । इत्यमरः । २ । ४ । १२७ ॥
“द्वे हस्तिनां
मनुष्याणाञ्च चक्षुष्ये क्षुद्रविटपे
शालपर्णीपत्र-
तुल्यपत्रे । पुण्डरिया इति ख्याते ।
प्रकृष्टं पुण्ड-
रीकमिव दाहहरणात् प्रपौण्डरीकं ष्णः
सुप-
ञ्चालादित्वादन्तपदस्यादौवृद्धिः ।
पुण्डयति
खण्डयति दोषान् पुण्डर्य्यं पुडि मर्द्दे
नाम्नीति
अर्य्यः पौण्डर्य्यमिति पाठे स्वार्थे ष्णः
वृद्धिः
पुण्डरीकादिरप्यत्र ।
‘स्थलपद्मं साधुपुष्पं दृष्टिकृत्
पुण्डरीयकम् ॥’
इति रभसः ।” इत्यमरटीकायां भरतः
॥

**पुण्ड्रः**, पुं, (पुण्ड्यन्ते गुडशर्कराद्यर्थं चूर्णीक्रियते
इति । पुडि मर्द्दे + “स्फायितञ्चीति ।”
उणा ०
२ । १३ । इति रक् ।) इक्षुभेदः ।
पुँडिआक् इति

|  |  |  |
| --- | --- | --- |
|  | तीर्थविशेषः । यथा, महाभारते । ३ । ८३ । ७६ ।<br>“शुक्लपक्षे दशम्याञ्च पुण्डरीकं समाविशत् ।<br>तत्र स्नात्वा नरो राजन् !<br>पुण्डरीकफलं लभेत् ॥”<br>यज्ञविशेषः । यथा, तत्रैव । ३ । ३० । १७ ।<br>“अश्वमेधो राजसूयः पुण्डरीकोऽथ गोसवः ।<br>एतैरपि महायज्ञैरिष्टं ते भूरिदक्षिणैः ॥”<br>नागविशेषः । यथा, तत्रैव । ५ । १०३ । १३ ।<br>“नागानामेकवंश्यानां यथाश्रेष्ठन्तु मे शृणु ।<br>द्वौ पद्मौ पुण्डरीकश्च पुष्पो मुद्गरपर्णकः ॥” | भाषा । इत्यमरः । २ । ४ । १६३ ।<br>दैत्यविशेषः ।<br>अतिमुक्तकः । चित्रम् । क्रिमिः ।<br>पुण्डरीकम् ।<br>देशविशेषे, पुं भूम्नि । इति मेदिनी । रे, ५९ ॥<br>(यथा, मात्स्ये । ११३ । ४५ ।<br>“प्राग्ज्योतिषाश्च पुण्ड्राश्च विदेहास्ताम्रलिप्तकाः ।<br>शाम्बमागधगोनर्द्दाः प्राच्या जनपदाः स्मृताः ॥”)<br>तिलकवृक्षः । इति हेमचन्द्रः ॥<br>ह्रस्वप्लक्षः । |

इति राजनिर्घण्टः ॥
(अश्वदेहस्थचिह्नविशेषः ।
अस्य लक्षणादिकं पुण्ड्रकशब्दे द्रष्टव्यम् ॥
वलि-
राजस्य क्षेत्रजः पुत्त्रविशेषः । यन्नाम्नैव
पुण्ड्र-
देशो विख्यातः । यथा, महाभारते । १ ।
१०४ ।
४७ -- ५१ ।
"वलिः सुदेष्णां भार्य्यां स्वां तस्मै तां
प्राहिणोत्
पुनः ।
तां स दीर्घतमाङ्गेषु स्पृष्ट्वा देवीमथाब्रवीत् ॥
भविष्यन्ति कुमारास्ते तेजसादित्यवर्च्चसः ।
अङ्गो वङ्गः कलिङ्गश्च पुण्ड्रः सुह्मश्च ते
सुताः ॥
तेषां देशाः समाख्याताः स्वनामप्रथिता भुवि
।
अङ्गस्याङ्गोऽभवद्देशो वङ्गो वङ्गस्य च स्मृतः
॥
कलिङ्गविषयश्चैव कलिङ्गस्य च स स्मृतः ।
पुण्ड्रस्य पुण्ड्राः प्रख्याताः सुह्माः सुह्मस्य च
स्मृताः ॥
एवं वलेः पुरा वंशः प्रख्यातो वै महर्षिजः ॥")

**पुण्ड्रकः**, पुं, (पुण्ड्र इव प्रतिकृतिः । "इवे प्रति-
कृतौ ।" ४ । ३ । ९६ । इति कन् ।) माधवी-
लता । इत्यमरः । २ । ४ । ७२ ॥
(पर्य्यायोऽस्य
यथा, भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ।
"माधवी स्यात्तु वासन्ती पुण्ड्रको
मस्तकोऽपिच ।
अतिमुक्तो विमुक्तश्च कामुको भ्रमरोत्सवः
॥")
तिलकवृक्षः । (पुण्ड्र + स्वार्थे कन् ।)
इक्षुभेदः ।
पुँडि आक् इति भाषा । तत्पर्य्यायः । रसालः
२
इक्षुवाटी ३ योनिः ४ इक्षुयोनिः ५ रसाली ६

**पुण्ड्रकेलिः**, पुं, (पुण्ड्रे इक्षुविशेषे केलिर्यस्य ।)
हस्ती । इति शब्दमाला ॥

**पुण्यं**, क्ली, (पूयतेऽनेनेति । पू + "पूञो यण्णुक्
ह्रस्वश्च ।" उणा० ५ । १५ । इति
यत् णुगागमो
ह्रस्वश्च ।) शुभादृष्टम् । तत्पर्य्यायः ।
धर्म्मम् २
श्रेयः ३ सुकृतम् ४ वृषः ५ । इत्यमरः
। १ । ४ । २४ ॥
पुण्यभारवोढ्रुमशक्तस्य पण्डितस्य
निन्दा यथा,
अग्निपुराणे ।
"पण्डितेनापि किन्तेन समर्थेन च
देहिनाम् ।
यत् पुण्यं भारमुद्वोढुमशक्तं
पारलौकिकम् ॥"
आत्मकृतपुण्यकथननिषेधो यथा, --
"इष्टं दत्तमधीतं वा
विनश्यत्यनुकीर्त्तनात् ।
श्लाघानुशोचनाभ्याञ्च भग्नतेजो
विभिद्यते ॥
तस्मादात्मकृतं पुण्यं वृथा न
परिकीर्त्तयेत् ॥"
इति शुद्धितत्त्वे देवलः ॥ * ॥
अदत्तपुण्यभागित्वं पापशब्दे द्रष्टव्यम्
॥ * ॥
शोभनकर्म्म । पावनम् । सुन्दरे, त्रि ।
इति
हेमचन्द्रः ॥ सुगन्धि । इति जटाधरः
॥

**पुण्यकं**, क्ली, (पुण्याय कायतीति । कै + कः
।)
व्रतम् । तच्च उपवासादि । शास्त्रे
पुण्यत्वेन
पवित्रताजनकत्वेन
यद्बोधितमुपवासादि तदेव
व्रतं न तु यः कोऽपि नियमः । आदिना
नक्तं

नीलोत्पलानां लक्षञ्च देयं कृष्णाय भक्तितः ।
व्रताङ्गभूतं देवेशि ! चक्षुषो रूपहेतवे ॥
हिमालयोद्भवं लक्षं रुचिरं श्वेतचामरम् ।
प्रददौ केशवायैव केशसौन्दर्य्यहेतवे ॥
अमूल्यरत्नरचितं दर्पणानां सहस्रकम् ।
देयं नारायणायैव नाभिसौन्दर्य्यहेतवे ॥
अमूल्यरत्नरचितं पुटकानां सहस्रकम् ।
प्रदेयं गोपिकेशाय नासिकारूपहेतवे ॥
बन्धूकपुष्पलक्षञ्च देयं राधेश्वराय च ।
स्वस्यौष्ठाधरयोश्चैव बहुसौन्दर्य्यहेतवे ॥
मुक्ताफलानां लक्षञ्च दन्तसौर्य्यहेतवे ।
देयं गोलोकनाथाय शैलजे ! भक्तिपूर्ब्बकम्
॥
रत्नगेण्डूकलक्षञ्च गण्डसौन्दर्य्यहेतवे ।
मदीश्वराय दातव्यं व्रते शैलेन्द्रकन्यके ! ॥
रत्नपाषकलक्षञ्च देयं ब्रह्मेश्वराय च ।
ओष्ठाधःस्थलरूपाय प्राणेशि ! भक्तितो व्रते
॥
कर्णभूषणलक्षञ्च रत्नसारविनिर्म्मितम् ।
देयं सर्व्वेश्वरायैव कर्णसौन्दर्य्यहेतवे ॥
माध्वीककलसानाञ्च लक्षं रत्नविनिर्म्मितम्
।
देयं विश्वेश्वरायैव स्वरसौन्दर्य्यहेतबे ॥
सुधापूर्णञ्च कुम्भानां सहस्रं रत्ननिर्म्मितम् ।
देयं कृष्णाय देवेशि ! वाक्यसौन्दर्य्यहेतवे ॥
रत्नप्रदीपलक्षञ्च गोपवेशविधायिने ।
देयं किशोरवेशाय दृष्टिसौन्दर्य्यहेतवे ॥
धुस्तूरकुसुमाकारं रत्नपात्रसहस्रकम् ।
देयं गोरक्षकायैव गलसौन्दर्य्यहेतवे ॥
सद्रत्नसाररचितं पद्मनालसहस्रकम् ।
देयं तन्तुकपालाय बाहुसौन्दर्य्यहेतवे ॥
लक्षञ्च रक्तपद्मानां कक्षसौन्दर्य्यहेतवे ।
देयं गोपाङ्गनेशाय नारायणि ! हरिव्रते ॥
अङ्गुरीयकलक्षञ्च रत्नसारविनिर्म्मितम् ।
अङ्गुलीनाञ्च रूपार्थं देयं देवेश्वराय च ॥
मणीन्द्रसारलक्षञ्च श्वेतवर्णं मनोहरम् ।
देयं मुनीन्द्रनाथाय नखसौन्दर्य्यहेतवे ॥
सद्रत्नसारहाराणां लक्षञ्चातिमनोहरम् ।
देयं मदनमोहाय वक्षःसौन्दर्य्यहेतवे ॥

रसदालिका ७ करङ्कशालिः ८ । अस्य गुणाः ।
मधुरत्वम् । शीतलत्वम् । रुचिकारित्वम् । मृदु-
त्वम् । पित्तदाहहरत्वम् । वृष्यत्वम् । तेजोबल-
विवर्द्धनत्वञ्च । इति राजनिर्घण्टः ॥ (अश्व-
शरीरस्थचिह्नविशेषे, पुं, क्ली । यथा, अश्व-
वैद्यके । ३ । ७३ -- ८१ ।
"अत ऊर्द्ध्वं प्रवक्ष्यामि पुण्ड्राणां लक्षणं शुभम् ।
आनुपूर्ब्ब्या यथादृष्टं मुनिभिस्त्वर्थवेदिभिः ॥
शुक्तिशङ्खगदाखड्गपद्मचक्राङ्कुशोपमाः ।
शरासनसमाकाराः प्रशस्ताः पुण्ड्रकाः स्मृताः ॥
मत्स्यभृङ्गारप्रासादस्रग्वेदीयूपसन्निभाः ।
श्रीवृक्षदर्पणाकाराः शुभदाः परिकीर्त्तिताः ॥
शिरोललाटवदनं यः पुण्ड्रो व्याप्य तिष्ठति ।
स धन्यः पूजितो नित्यमृजुकश्चैव यो भवेत् ॥
पर्व्वतेन्दुपताकाभा ये च स्रग्दामसन्निभाः ।
ते सर्व्वे पूजिताः पुण्ड्रा धनधान्यफलप्रदाः ॥
इति पुण्ड्राः शुभाः प्रोक्ताः पूर्ब्बशास्त्रानुसारतः ।
अशुभांश्चैव वक्ष्यामि ययायोगं समासतः ॥
काककङ्ककबन्धाहिगृध्रगोमायुसन्निभाः ।
असिताः पीतका रक्ताः पुण्ड्रका नैव पूजिताः ॥
तिर्य्यग्गाश्चैव विच्छिन्नाः शृङ्खलापाशसन्निभाः ।
शूलाग्रा वामदेहस्थाः पुण्ड्रका न शुभाः स्मृताः ॥
जिह्वाकल्मषरूक्षाणि भस्मवर्णनिभानि च ।
पुण्ड्रकाणि न शस्यन्ते भिन्नवर्णानि वाजिनः ॥"
पुण्ड्रदेशनृपतिः । यथा, महाभारते । १ । ४ । २४ ।
"तथाङ्गवङ्गौ सह पुण्ड्रकेण
पाण्ड्यौड्रराजौ च सहान्धकेन ॥")

भोजनाक्षारलवणादिपरिग्रहः ।
इत्यमरभरतौ ॥

**पुण्यकव्रतं**, क्ली, (पुण्यकं व्रतमिति ।) पतिसौभा-
ग्यस्य श्रीकृष्णतुल्यपुत्त्रस्य च जनकः स्त्रीकर्त्तव्य-
नियमविशेषः । तस्य विधिर्यथा, --
महादेव उवाच ।
"हरेराराधनं कृत्वा व्रतं कुरु वरानने ।
व्रतञ्च पुण्यकं नाम वर्षमेकं करिष्यसि ॥
देवि ! शुद्धे च कालेऽत्र परं नियमपूर्ब्बकम् ।
माघशुक्लत्रयोदश्यां व्रतारम्भः शुभः प्रिये ! ॥
गात्रं सुनिर्म्मलं कृत्वा शिरःसंस्कारपूर्ब्बकम् ।
उपोष्य पूर्ब्बदिवसे वस्त्रं प्रक्षाल्य यत्नतः ॥
धौते च वाससी धृत्वा उपविश्यासने शुचौ ।
आचम्य तिलकं कृत्वा निर्व्वाप्य आह्निकं पुरः ॥
घटस्यारोपणं कृत्वा स्वस्तिवाचनपूर्ब्बकम् ॥
पुरोहितस्य वरणं पुरः कृत्वा प्रयत्नतः ।
संकल्प्य वेदविहितं व्रतमेतत् समाचरेत् ॥
व्रते द्रव्याणि नित्यानि चोपहाराणि षोडश ।
देयानि नित्यं देवेशि ! कृष्णाय परमात्मने ।
आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ॥
मधुपर्कश्च स्नानीयं वस्त्राण्याभरणानि च ।
सुगन्धिपुष्पं धूपश्च दीपनैवेद्यवन्दनम् ॥

सुपक्वश्रीफलानाञ्च लक्षञ्च सुमनोहरम् ।
देयं सिद्धेन्द्रनाथाय स्तनसौन्दर्य्यहेतवे ॥
सद्रत्नवर्त्तुलाकारं लक्षपात्रं मनोहरम् ।
देयं पद्मालयेशाय देहस्य रूपहेतवे ॥
सद्रत्नसाररचितनाभीनालसहस्रकम् ।
प्रदेयं पद्मनाभाय नाभिसौन्दर्य्यहेतवे ॥
सद्रत्नसाररचितरथचक्रसहस्रकम् ।
नितम्बसौन्दर्य्यार्थञ्च प्रदेयञ्चक्रपाणये ॥
सुवर्णरत्नकुम्भानां लक्षञ्च सुमनोहरम् ।
प्रदेयं श्रीनिवासाय श्रोणिसौन्दर्य्यहेतवे ॥
शतपत्रस्थलाब्जानां लक्षमम्लानमक्षतम् ।
प्रदेयं पद्मनेत्राय पादसौन्दर्य्यहेतवे ॥
सुवर्णरचितानाञ्च खञ्जनानां सहस्रकम् ।
गतिसौन्दर्य्यहेत्वर्थं देयं लक्ष्मीश्वराय च ॥
राजहंससहस्रञ्च गजेन्द्राणां सहस्रकम् ।
सुवर्णच्छत्रलक्षञ्च देयं नारायणाय च ॥

| | | |
|---|---|---|
| | यज्ञसूत्रञ्च ताम्बूलं कर्पू<br>रादिसुवासितम् ।<br>द्रव्याण्येतानि पूजायाश्चाङ्गरूपाणि<br>सुन्दरि ! ॥<br>देवि ! किञ्चिद्विहीनेनैवाङ्गहानिः<br>प्रजायते ।<br>अङ्गहीनञ्च यत् कर्म्म चाङ्गहीनो यथा<br>नरः ॥<br>अङ्गहीने च कार्य्ये च फलहानिः<br>प्रजायते ।<br>अष्टोत्तरशतं पुष्पं पारिजातस्य<br>विष्णवे ।<br>देयं प्रतिदिनं दुर्गे ! स्वात्मनो रूपहेतवे<br>॥<br>श्वेतचम्पकपुष्पाणां<br>लक्षमक्षतमीप्सितम् ।<br>प्रदेयं हरये भक्त्या बहुसौन्दर्य्यहेतवे<br>॥ | |

विचित्रं रत्नसारेण मूद्‌र्ध्नः सौन्दर्य्यहेतवे ॥
मालतीनाञ्च कुसुममक्षतं लक्षमीश्वरि ! ।
देयं वृन्दावनेशाय हास्यसौन्दर्य्यहेतवे ॥
अमूल्यरत्नलक्षञ्च देयं नारायणाय वै ।
सुव्रते ! व्रतपूर्णार्थं शीलसौन्दर्य्यहेतवे ॥
शुद्धस्फटिकसङ्काशं मणीन्द्रसारलक्षकम् ।
देयं मुनीन्द्रनाथाय मनःसौन्दर्य्यहेतवे ॥
प्रवालसारसङ्काशं मणिसारसहस्रकम् ।
देयं कृष्णाय भक्त्या च प्रियानुरागवृद्धये ॥
माणिक्यसारलक्षञ्च देयं कृष्णाय यत्नतः ।
जन्मनः कोटिपर्य्यन्तं स्वामिसौभाग्यहेतवे ॥
कुष्माण्डं नारिकेलञ्च जम्बीरं श्रीफलं तथा ।
फलान्येतानि देयानि हरये पुत्त्रहेतवे ॥
रत्नेन्द्रसारलक्षञ्च देयं कृष्णाय यत्नतः ।
असंख्यजन्मपर्य्यन्तं स्वात्मनो धनवृद्धये ॥
वाद्यं नानाप्रकारञ्च कांस्यतालादिकं परम् ।
व्रते सम्पत्तिवृद्ध्यर्थं श्रीहरिं श्रावयेद्‌व्रती ॥
पायसं पिष्टकं सर्पिःशर्कराक्तं मनोहरम् ।
प्रदेयं हरये भक्त्या स्वात्मनो भोगवृद्धये ॥
सुगन्धिपुष्पमाल्यानां लक्षमक्षतमीप्सितम् ।
प्रदेयं हरये भक्त्या हरिभक्तिविवृद्धये ॥
नैवेद्यानि प्रदेयानि स्वादूनि मधुराणि च ।
श्रीकृष्णप्रीतिप्राप्त्यर्थं दुर्गे ! नानाविधानि च ॥
नानाविधानि पुष्पाणि तुलसीसंयुतानि च ।
श्रीकृष्णप्रीतये भक्त्या व्रते देयानि सुव्रते ! ॥
ब्राह्मणानां सहस्रञ्च प्रत्यहं भोजयेद्‌व्रती ।
स्वात्मनः शस्यवृद्ध्यर्थं व्रते जन्मनि जन्मनि ॥
पुष्पाञ्जलिशतं देयं नित्यं पूर्णञ्च पुजने ।
प्रणामशतकं देवि ! कर्त्तव्यं भक्तिवृद्धये ॥
षण्मासांश्च हविष्यान्नं मासान् पञ्च फलादिकम् ।
हविः पक्षं जलं पक्षं व्रते पक्षे च सुव्रते ! ॥
रत्नप्रदीपशतकं वह्निं दद्याद्दिवानिशम् ।
रात्रौ हुताशनं कृत्वा नित्यं जागरणं व्रते ॥
पुत्त्रस्ते भविता साध्वीत्युक्त्वा च विरराम ह ॥”
इति ब्रह्मवैवर्त्ते गणपतिखण्डे । ३-४ । अध्यायौ ॥

**पुण्यकृत्**, त्रि, (पुण्यं करोति स्मेति । कृ + “सुकर्म्म-पापमन्त्रपुण्येषु कृञः ।” ३ । २ । ८९ । इति क्विप् । “ह्रस्वस्य तुक् पिति कृति ।” ६ । १ । ७१ । इति तुगागमश्च ।) पुण्यकर्त्ता । धार्म्मिकः । यथा,
“पुण्यकृच्चाटुकारस्ते किङ्करः सुरतेषु कः ॥”
इति भट्टिः । ५ । ६८ ॥

**पुण्यगन्धः**, पुं, (पुण्यः पवित्रो हृद्यश्च गन्धोऽस्य ।) चम्पकः । इति त्रिकाण्डशेषः ॥

**पुण्यजनः**, पुं, (पुण्यः विरुद्धलक्षणया पापी चासौ जनश्चेति ।) राक्षसः । इत्यमरः । १ । १ । ६३ ॥
यक्षः । (यथा, हरिवंशे । २ । २६ ।
“सर्पैः पुण्यजनैश्चैव वीरुद्भिः पर्व्वतैस्तथा ॥”
पुण्याश्रितो जनः ।) सज्जनः । इति मेदिनी ।
ने, १६८ ॥

**पुण्यजनेश्वरः**, पुं, (पुण्यजनानां यक्षाणामीश्वरः ।) कुवेरः । इत्यमरः । १ । १ । ७३ ॥ (यथा,
रघुः । ९ । ६ ।
“समतया वसुवृष्टिविसर्ज्जनैः
नियमनादसताञ्च नराधिपः ।
अनुययौ यमपुण्यजनेश्वरौ
सवरुणावरुणाग्रसरं रुचा ॥”)

**पुण्यतृणं**, क्ली, (पुण्यं पवित्रं तृणम् ।) श्वेत-

**पुण्यवान्**, [त्] त्रि, (पुण्यमस्यास्तीति । पुण्य + मतुप् । मस्य वः ।) पुण्ययुक्तः । तत्पर्य्यायः । सुकृती २ धन्यः ३ । इत्यमरः । ३ । १ । ३ ॥ सुकृत् ४
पुण्यकृत् ५ । इति जटाधरः ॥ धर्म्मवान् ६ श्रेय-स्वान् ७ वृषवान् ८ । एते पुण्यपर्य्यायकशब्दो-त्तरवतुप्रत्ययेन निष्पन्नाः ॥ (यथा, महा-भारते । १२ । २९७ । २८ ।
“ऊद्‌र्ध्वं भित्त्वा प्रतिष्ठन्ते प्राणाः पुण्यवतां नृप ! ।
मध्यतो मध्यपुण्यानामधो दुष्कृतकर्म्मणाम् ॥”)

**पुण्यश्लोकः**, पुं, (पुण्यः पुण्यदायकः श्लोको यश-श्चरित्रं वा यस्य ।) विष्णुः । इति श्रीभाग-वतम् ॥ युधिष्ठिरः । इति महाभारतम् ॥ नल-राजः । इति त्रिकाण्डशेषः ॥ (यथा, महा-भारते । ३ । ७४ । ११ ।
“पुण्यश्लोकस्य वै सूतो वार्ष्णेय इति विश्रुतः ॥”)
पुण्यचरित्रे, त्रि ॥ (यथा, भागवते । १ । १४ । १ ।
“संप्रस्थिते द्वारकायां जिष्णौ बन्धुदिदृक्षया ।
ज्ञातुञ्च पुण्यश्लोकस्य कृष्णस्य च विचेष्ठितम् ॥”)

**पुण्यश्लोका**, स्त्री, (पुण्यः पुण्यजनकः श्लोको यश-श्चरित्रं वा यस्याः ।) द्रौपदी । इति शब्द-माला ॥ सीता । यथा, --
“पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः ।
पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्द्दनः ॥”
इति पुराणम् ॥

**पुण्या**, स्त्री, (पुणाति या पूयतेऽनयेति वा । पू + “पूञो यण्णुक् ह्रस्वश्च ।” उणा० ५ । १५ । इति

स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।
सङ्कल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च ॥
मैथुनं विविधं त्याज्यं व्रते क्रीडाविवृद्धये ।
ज्ञानवृद्धिर्जागरणे सुबुद्धिर्मितभोजने ॥
लोभमोहकामक्रोधभयशोकविवादकम्।
कलहञ्च परित्याज्यं व्रते बन्धुविवृद्धये ॥
संपूर्णे च व्रते देवि ! प्रतिष्ठा तदनन्तरम् ॥
त्रिशतञ्च षष्ट्यधिकं डल्लकं वस्त्रसंयुतम् ।
सभोज्यं सोपवीतञ्च सोपहारं मनोहरम् ॥
त्रिशतञ्च षष्ट्यधिकं सहस्रं विप्रभोजनम् ।
त्रिशतञ्च षष्ट्यधिकं सहस्रं तिलहोमकम् ॥
त्रिशतञ्च षष्ट्यधिकं सहस्रं स्वर्णमेव च ।
देया व्रतसमाप्तौ च दक्षिणा विविधेरिता ।
अन्यां समाप्तिदिवसे कथयिष्यामि दक्षिणाम् ॥
एतद्व्रतफलं देवि ! दृढा भक्तिर्हरौ भवेत् ।
हरितुल्यो भवेत् पुत्त्रो विख्यातो भुवनत्रये ॥
सौन्दर्य्यं स्वामिसौभाग्यमैश्वर्य्यं विपुलं धनम् ।
सर्व्ववाञ्छितसिद्धीनां बीजं जन्मनि जन्मनि ॥
इत्येवं कथितं देवि ! व्रतं कुरु महेश्वरि ! ।

कुशम् । इति राजनिर्घण्टः ॥

**पुण्यदर्शनः**, पुं, (पुण्यं शुभजनकं दर्शनं यस्य ।)

चाषपक्षी । इति राजनिर्घण्टः ॥ (यद्दर्शनेन पुण्यं भवति तत्र, त्रि । यथा, रघुः । १ । ८६ ।
“तां पुण्यदर्शनां दृष्ट्वा निमित्तज्ञस्तपोनिधिः ।
याज्यमाशंसिताबन्ध्यप्रार्थनं पुनरब्रवीत् ॥”)

**पुण्यफलः**, पुं, (पुण्यानि शुभानि फलानि यस्य ।)

वनभेदः । तत्पर्य्यायः । लक्ष्म्यारामः २ । इति शब्दमाला ॥ (पुण्यस्य फलं पुण्यजन्यं फल-मिति वा ।) धर्म्मजन्यफले, क्ली ॥ (यथा, मनुः । ५ । ५३ ।
“वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः ।
मांसानि च न खादेद्यस्तयोः पुण्यफलं समम् ॥”)

**पुण्यभाक्**, [ज्] त्रि, (पुण्यं भजतीति । भज + ण्विः ।) पुण्यविशिष्टः । यथा, पञ्चशायके ।
“क्रीडावन्तो विनीता लघुसुरतरताः पुण्यभाजः शशाः स्युः ॥”

**पुण्यभूः**, स्त्री, (पुण्यस्य पुण्योत्पादिका वा भू-र्भूमिः ।) आर्य्यावर्त्तदेशः । यथा, हेमचन्द्रे । ४ । १४ ।
“आर्य्यावर्त्तो जन्मभूमिर्जिनचक्र्यर्द्धचक्रिणाम् ।
पुण्यभूराचारवेदी मध्यं बिन्ध्यहिमालयोः ॥”

**पुण्यभूमिः**, स्त्री, (पुण्यस्य पुण्योत्पादिका वा

यत् णुक् ह्रस्वश्च धातोः । ततष्टाप् ।) तुलसी । इति शब्दमाला ॥ पुण्यजनिका च ॥

**पुण्यात्मा**, त्रि, (पुण्यः आत्मा स्वभावो यस्य ।)

पुण्यस्वभावः । तस्य गत्यादिर्यथा, --
सुप्रज्ञोवाच ।
“शृणु विप्र ! प्रवक्ष्यामि यत्त्वया श्रोतुमिष्यते ।
पुण्यात्मनां पापिनाञ्च पन्थानं सुखदुःखदम् ॥
आदौ ब्रवीमि पन्थानं नृणां पुण्यवतामहम् ।
शृणुष्व द्विजशार्द्दूल ! शृण्वतां प्रीतिवर्द्धनम् ॥
प्रस्तरैरिष्टकैर्बद्धो दिव्यवस्त्रैः समावृतः ।
भाति पुण्यात्मनां पन्थाः सर्व्वोपद्रववर्ज्जितः ॥
क्वचिद्गन्धर्व्वकन्याभिर्गीयते गानमुत्तमम् ।
क्वचिन्मञ्जुशरीराभिरप्सरोभिश्चनृत्यते ॥
क्वचिच्च वीणाक्वणनं नानावाद्यं मनोहरम् ।
क्वचित् कुसुमवृष्टिश्च क्वचिद्वायुः सुशीतलः ॥
क्वचित् पुष्पाः शीततोयाः कुत्रचित् भक्त-शालिकाः ।
क्वचिद्देवाश्च गन्धर्व्वाः पठन्ति स्तवमुत्तमम् ॥
क्वचित् क्वचिद्दीर्घिकाश्च फुल्लपद्मसुशोभिताः ।
सुच्छायाः पादपाः क्वापि पुष्पिता वञ्जुलादयः ॥
समस्तसुखसम्पन्ने पथि गच्छन्ति मानवाः ।
पुण्यात्मानो द्विजश्रेष्ठ ! सुखमृत्युमवाप्य च ॥
केचित्तुरङ्गमारूढा नानालङ्कारभूषिताः ।
उद्दण्डधवलच्छत्रैर्गच्छन्त्यावृतमस्तकाः ॥
केचिद्यान्ति गजारूढा रथारूढाश्च केचन ।
यानारूढा जनाः केचित् मुखेन यममन्दिरम् ॥

| | | |
|---|---|---|
| | भूमिः ।) आर्य्यावर्त्तदेशः । इत्यमरः ।<br>२ । १ । ८ ॥<br>स तु बिन्ध्यहिमालयावधिमध्यदेशः ।<br>यथा, --<br>“आसमुद्रात्तु पूर्ब्बस्मादासमुद्रात्तु<br>पश्चिमात् ।<br>तयोरेवान्तरं गिर्य्योराय्यावर्त्तं<br>विदुर्बुधाः ॥”<br>इति भरतधृतमधुः ॥<br>पुत्त्रसूः । इति शब्दरत्नावली ॥ | |

केचिद्देवाङ्गनाहस्तन्यस्तचामरवायुभिः ।
गच्छन्ति वीजिता मर्त्याः स्तूयमानाः
सुरर्षिभिः ॥
केचिद्दिव्याङ्कनधराः सुचन्दनविभूषिताः ।
भुञ्जन्तो यान्ति ताम्बूलं पुण्यात्मानो
यमालयम् ॥
निजगात्रत्विषा केचिज्ज्वालयन्तो दिशो दश ।
व्रजन्ति शमनागारं चलद्गृहनिवासिनः ॥
केचिच्च पायसं दिव्यं भुञ्जन्तो यान्ति सत्तमाः
।
सुधापानं प्रकुर्व्वन्तः पथि गच्छन्ति केचन ॥
केचिद्दुग्धं पिबन्तश्च केचिदिक्षुरसं तथा ।
केचित्तक्रं पिबन्तश्च गच्छन्ति यममन्दिरम् ॥
केचिद्दधीनि खादन्तः केचिन्नानाफलानि च ।
केचिन्मधु पिबन्तश्च पुण्यवन्तो व्रजन्ति वै ॥
तानागतांस्ततो दृष्ट्वा नरान् धर्म्मपरायणान् ।
भास्करिः प्रीतिमासाद्य स्वयं नारायणो भवेत्
॥
चतुर्ब्बाहुः श्यामवर्णः प्रफुल्लकमलेक्षणः ।
शङ्खचक्रगदापद्मधारी गरुडवाहनः ॥
स्वर्णयज्ञोपवीती च स्मेरचारुतराननः ।
किरीटी कुण्डली चैव वनमालाविभूषितः ॥
चित्रगुप्तो महाप्राज्ञश्चण्डाद्या यमकिङ्कराः ।
सर्व्वे नारायणाकारा बभूवुर्मधुरोक्तयः ॥
ततः स्वयं धर्म्मराजस्तान्
सर्व्वान्मनुजोत्तमान् ।
परमां प्रीतिमासाद्य मित्रवत् पूजयेद्द्विज ! ॥
दिव्यैर्व्वन्यैः फलैश्चैव तेषां पुण्यवतां नृणाम् ।
भोजनं कारयित्वा तु तानुवाचाथ भास्करिः ॥
यम उवाच ।
यूयं सर्व्वे महात्मानो नरकक्लेशभीरवः ।
निजपुण्यप्रभावेन गम्यतां परमं पदम् ॥
संसारे जन्म संप्राप्य पुण्यं यः कुरुते नरः ।
स मे पिता स मे भ्राता स मे बन्धुः स मे सुहृत्
॥
इत्युक्ता धर्म्मराजेन ते सर्व्वे द्विजसत्तम् ! ।
दिव्यं रथं समारुह्य नारायणपुरं ययुः ॥”
इति पाद्मोत्तरे क्रियायोगसारे २२ अध्यायः ॥

**पुण्याहं**, क्ली, (पुण्यञ्च तदहश्चेति । “राजाहः-
कन् । अन्याश्रयेणैव हि
गमनादिक्रियावत्त्वादस्य
तथात्वम् ।)
पत्रादिनिर्म्मितप्रतिमूर्त्तिः । पुतुल
इति भाषा । यथा, “आचारात्
योग्यत्वाच्च
शरपत्रैः पुत्तलकं कृत्वा शिरःप्रभृतिषु
पलाश-
पत्राणि देयानि ।” इति शुद्धितत्त्वम् ॥

**पुत्तलिका**, स्त्री, तृणकाष्ठमृदश्मधातुरत्नादि-
निर्म्मितप्रतिमूर्त्तिः । पुत्तली एवेति
स्वार्थे कनि
ईकारस्य ह्रस्वे टापि निष्पन्ना ॥

**पुत्तली**, स्त्री, (पुत्तं गमनं लाति अन्याश्रयेणेति
।
ला + कः । ततो ङीष् ।)
मृदादिनिर्म्मितप्रति-
मूर्त्तिः । यथा, उत्तरकामाख्यातन्त्रे ॥
“अमावास्यां समासाद्य मध्यरात्रौ
विचक्षणः ।
मृण्मयीं पुत्तलीं कृत्वा
दीपादिभिरलङ्कृताम् ॥”

**पुत्तिका**, स्त्री, (पुत्तं इतस्ततो भ्रमणमस्त्यस्या
इति । पुत्त + ठन् । ततष्टाप् ।)
मधुमक्षिका-
विशेषः । तत्पर्य्यायः । पतङ्गिका २
। इत्यमरः ।
२ । ५ । २७ ॥ (पिपीलिकाप्रभेदः ।
यथा,
मनुः । ४ । २३८ ।
“धर्म्मं शनैः सञ्चिनुयात् वल्मीकमिव
पुत्तिकाः ।
परलोकसहायार्थं
सर्व्वभूतान्यपीडयन् ॥”)

**पु(त्र)त्त्रः**, पुं, लग्नात् पञ्चमस्थानम् । यथा, --
“पुत्त्रस्थेऽर्के नरोऽसौ प्रथमसुतहतः
सिंहराशौ
यस्तल्पजः प्रमीतस्य क्लीवस्य व्याधितस्य
वा ।
स्वधर्म्मेण नियुक्तायां स पुत्त्रः क्षेत्रजः स्मृतः
॥ २ ॥
माता पिता वा दद्यातां यमद्भिः पुत्त्रमापदि ।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः ॥
३ ॥
सदृशन्तु प्रकुर्य्याद्यं गुणदोषविचक्षणम् ।
पुत्त्रं पुत्त्रगुणैर्युक्तं स विज्ञेयश्च कृत्रिमः ॥ ४
॥
उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः ।
स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः
॥ ५ ॥
भातापितृभ्यामुत्सृष्टन्तयोरन्यतरेण वा ।
यं पुत्त्रं परिगृह्णीयादपविद्धः स उच्यते ॥ ६
॥
पितृवेश्मनि कन्या तु यं पुत्त्रञ्जनयेद्रहः ।
तं कानीनं वदेन्नाम्ना वोढः कन्यासमुद्भवम्
॥ ७ ॥
या गर्भिणी संस्क्रियते ज्ञाताज्ञातापि वासती
।
वोढुः स गर्भो भवति सहोढ इति चोच्यते ॥
८ ॥
क्रीणीयाद्यस्त्वपत्यार्थं
मातापित्रोर्य्यमन्तिकात् ।
स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि
वा ॥ ९ ॥
या पत्या वा परित्यक्ता विधवा वा
स्वयेच्छया ।
उत्पादयेत् पुनर्भूत्वा स पौनर्भव उच्यते ॥
१० ॥
मातापितृविहीनो यस्त्यक्तो वा
स्यादकारणात् ।
आत्मानं स्पर्शयेद्यस्मै स्वयं दत्तस्तु स
स्मृतः ॥ ११
यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत् सुतम्
।
स पारयन्नेव शवस्तस्मात् पारशवः स्मृतः ॥
१२ ॥

सखिभ्यष्टच् ।” ५ । ४ । ९१ । इति टच् ।
“उत्तमैकाभ्याञ्च ।” ५ । ४ । ९० । इति अह्ना-
देशो न ।) पुण्यदिनम् । इत्यमरः ॥ (यथा, अमरुशतके । ६१ ।
“पुण्याहं व्रजमङ्गलं सुदिवसं प्रातः प्रयातस्य ते
यत्स्नेहोचितमीहितं प्रियतम ! त्वं निर्गतः श्रोष्यसि ॥”)

**पुण्याहवाचनं**, क्ली, (पुण्याहस्य वाचनम् ।)

दैवादिकर्म्मादौ मङ्गलार्थं पुण्याहमितिशब्दस्य वारत्रयकथनम् । यथा, --
“पुण्याहवाचनं दैवे ब्राह्मणस्य विधीयते ।
एतदेव निरोङ्कारं कुर्य्यात् क्षत्त्रियवैश्ययोः ॥
सोङ्कारं ब्राह्मणे ब्रूयात् निरोङ्कारं महीपतौ ।
उपांशु च तथा वैश्ये शूद्रे स्वस्ति प्रयोजयेत् ॥”
इत्युद्वाहतत्त्वे यमः ॥

**पुत्त**, गतौ ॥ (भ्वां-परं-सकं-सेट् ।) तद्वयान्तः ।

पुत्तिका । सौत्रधातुरयम् । इति दुर्गादासः ॥

**पुत्तलकः**, पुं, (पुत्त गतौ + भावे घञ् । पुत्तं गमनं

लाति अन्यस्मादिति । ला + कः । ततः संज्ञायां
सुपुत्त्रः ॥”
इत्यादि ज्योतिस्तत्त्वम् ॥
(पुनाति पित्रादीनिति । पू + “पुवो ह्रस्वश्च ।”
उणा ०४ । १६४ । इति क्त्रः धातोर्ह्रस्वत्वञ्च ।
तकारद्वये तु पुन्नामनरकात् त्रायते इति । पुत् +
त्रै + डः । पितॄन् पातीति व्युत्पत्या पृषोदरा-
दित्वात् साधुः । इति रामायणे । २ । १०७ । १२ ।
श्लोकटीकायां रामानुजः ।)
पुंसन्तानः । पुन्नाम-
नरकत्राता । पुत इति वेटा इति च भाषा ।
तत्पर्य्यायः । आत्मजः २ तनयः ३ सूनुः ४
सुतः ५ । इत्यमरः । २ । ६ । २७ ॥ तनूजः ६
अपत्यम् ७ दायादः ८ कुलाधारकः ९ नन्दनः
१० आत्मजन्मा ११ द्वितीयः १२ प्रसूतिः १३
स्वजः १४ । इति शब्दरत्नावली ॥ अस्य
निरुक्तिर्यथा, --
“पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः ।
तस्मात् पुत्त्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥”
इति महाभारते । १ । ७४ । ३७ ॥
(यथा च रामायणे । २ । १०७ । १२ ।
“पुन्नाम्नो नरकात् यस्मात् पितरं त्रायते सुतः ।
तस्मात् पुत्त्र इति प्रोक्तः पितॄन् यः पाति
सर्व्वतः ॥”)
स च द्वादशविधः यथा, --
क्षेत्रजादीन् सुतानेनानेकादश यथोदितान् ।
पुत्त्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥”
इति मानवे ९ अध्यायः ॥ * ॥
चतुर्व्विधपुत्त्रा यथा, --
सुमना उवाच ।
“ऋणसम्बन्धिनः केचित् केचिन्न्यासापहारकाः ।
रिपवश्च प्रियाश्चेति स्वकर्म्मवशवर्त्तिनः ॥
भेदैश्चतुर्भिर्जायन्ते पुत्त्रा मित्राः स्त्रियस्तथा ।
भार्य्या पिता च माता च भृत्याः स्वजनबान्धवाः ॥
स्वेन स्वेन हि जायन्ते सम्बन्धेन महीतले ।
न्यासापहारभावेन यस्य यस्य कृतं भुवि ॥
न्यासस्वामी भवेत् पुत्त्रो गुणवान् रूपवान् भुवि ।
येन चापहृतं न्यासं तस्य गेहे न संशयः ॥
न्यासापहरणाद्दुःखं स दत्त्वा दारुणं गतः ।
न्यासस्वामी स पुत्त्रोऽभून्न्यासापहारकस्य च ॥
गुणवान् रूपवांश्चैव सर्व्वलक्षणसंयुतः ।
भक्तिञ्च दर्शयेत्तस्य पुत्त्रो भूत्वा दिने दिने ॥
प्रियवाक्यधरो वापि बहुस्नेहं प्रदर्शयेत् ।
स्वीयं द्रव्यं समुद्राढ्यं प्रीतिमुत्पाद्य चातुलाम् ॥
भुक्त्वा तु पोषणात्तेन तदादाय पुनर्व्रजेत् ।
यथा तेन प्रदत्तं तन्न्यासापहरणात् पुरा ॥
दुःखमेवं महत् कृत्वा दारुणं प्राणनाशनम् ।
तादृशं तस्य दद्यात् स पुत्त्रो भूत्वा महागुणैः ॥
अल्पायुषस्तथा भूत्वा मरणं यान्ति ते तथा ।
दुःखं दत्त्वा प्रयान्त्येवं प्रकृत्यैवं पुनः पुनः ॥
यदाह पुत्त्र पुत्त्रेति प्रलापं हि करोति सः ।
तदा हास्यं करोत्येष कः स पुत्त्रो हि कस्य च ॥
अनेनापि कृतं न्यासं मदीयं परिचारिणा ।
द्रव्यापहारोऽपि पिता पूर्ब्बमद्यैव तस्य च ॥
पिशाचत्वं मया दत्तमद्यैव हि दुरात्मनः ।

|  |  |  |
| --- | --- | --- |
|  | “औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ।<br>गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट् ॥<br>कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ।<br>स्वयन्दत्तश्च शौद्रश्च षडदायादबान्धवाः ॥” * ॥<br>तेषां लक्षणानि यथा, --<br>“स्वे क्षेत्रे संस्कृतायान्तु स्वयमुत्पादयेद्धि यम् ।<br>तमौरसं विजानीयात् पुत्त्रम्प्रथमकल्पितम् ॥ १ ॥ |  |

द्रव्यापहरणेनापि मम प्राणा गताः किल ॥
दुःखेन महता चैव यदाहं पीडितः पुरा ।
तथा दुःखं प्रदत्त्वाहं द्रव्यं मुद्राढ्यमुत्तमम् ॥
भोगेन सर्व्वमादाय चिराद्विश्वास्य सौम्यवत् ।
गतोऽस्मि स्वगृहञ्चाद्य कस्याहं सुत ईदृशः ॥
न चैषोऽपि पिता पूर्ब्बमद्यैव न च कस्यचित् ।
पिशाचत्वं मया दत्तमद्यैव च दुरात्मनः ॥
एवमुक्त्वा प्रयात्येव तं प्रहस्य पुनः पुनः ।
प्रयात्यनेन मार्गेण दुःखं दत्त्वा सुदारुणम् ॥
एवं न्यासस्य सम्बन्धात् पुत्त्राः किन्ते भवन्ति वै ।
संसारे दुःखबहुला दृश्यन्ते यत्र तत्र हि ॥ १ ॥
ऋणसम्बन्धिनः पुत्त्रान् प्रवक्ष्यामि तवाग्रतः ।
ऋणं यस्य गृहीत्वा यः प्रयाति मरणं किल ॥
अन्नदाता सुतो भूत्वा भ्राता वाथ पिता प्रियः ।
मित्त्ररूपेण वर्त्तेत अन्तर्द्दुष्टः सदैव सः ॥
गुणं नैव प्रपश्येत स क्रूरो निष्ठुराकृतिः ।
जल्पते निष्ठुरं वाक्यं सदैव स्वजनेषु च ॥
नित्यं मिष्टं समश्नाति भोगान् भुञ्जीत नित्यशः ।
द्यूतकर्म्मरतो नित्यं चौरकर्म्मणि नित्यशः ॥
गृहाद्द्रव्यं बलाद्धर्त्ता वार्य्यमाणः प्रकुप्यति ।
पितरं मातरञ्चैव कुत्सते च दिने दिने ॥
द्रावकस्त्रासकश्चैव बहुनिष्ठुरजल्पकः ।
वञ्चयित्वैव मुद्राञ्च हृत्वा सुखेन तिष्ठति ॥
जातकर्म्मादिभिर्ब्बाल्ये द्रव्यं गृह्णाति दारुणः ।
पुनर्व्विवाहसंयोगान्नानाभेदैरनेकधा ॥
एवं संक्षीयते द्रव्यं नैवमेतद्ददात्यपि ।
गृहक्षेत्रादिकं सर्व्वं ममैव हि न संशयः ॥
पितरं मातरञ्चैव वदत्येवं दिने दिने ।
उदासीनं प्रवक्ष्यामि तवाग्रे प्रिय ! साम्प्रतम् ॥
उदासीनेन भावेन सदैव परिवर्त्तते ।
ददाति नैव गृह्णाति न क्रुध्यति न तुष्यति ॥
नैवोपयाति संत्यज्य उदासीनो द्विजोत्तम ! ।
तवाग्रे कथितं सर्व्वं पुत्त्राणां गतिरीदृशी ॥
यथा पुत्त्रास्तथा भार्य्या पिता माताथ बान्धवाः ।
भृत्याश्चान्ये समाख्याताः पशवस्तुरगास्तथा ।
गजा महिष्यो दास्यश्च ऋणसम्बन्धिनस्त्वमी ॥” *
सुपुत्त्रलक्षणं यथा, --
वशिष्ठ उवाच ।
“पुत्त्रस्य लक्षणं पुण्यं तवाग्रे प्रवदाम्यहम् ।
पुण्यप्रसक्तो यस्यात्मा सत्यधर्म्मरतः सदा ।
बुद्धिमान् ज्ञानसम्पन्नस्तपस्वी वाग्विदांवरः ॥
सर्व्वकर्म्मसु सन् धीरो वेदाध्ययनतत्परः ।
सर्व्वशास्त्रप्रवक्ता च देवब्राह्मणपूजकः ॥
याजकः सर्व्वयज्ञानां दाता त्यागी प्रियंवदः ।
विष्णुध्यानपरो नित्यं शान्तो दान्तः सुहृत्सदा ॥
पितृमातृपरो नित्यं सर्व्वस्वजनवत्सलः ।
कुलस्य तारको विद्वान् कुलस्य परिपोषकः ॥
एवं गुणैः सुसंयुक्तः सुपुत्त्रः सुखदायकः ॥” * ॥
पुत्त्रस्य जङ्गमतीर्थत्वं यथा, --
सर्व्वैस्तपोभिर्यत् पुण्यं यदेवानशनव्रतैः ।
सत्पुत्त्रोद्भवपुण्यस्य कलां नार्हन्ति षोडशीम् ॥
यद्विप्रभोजनैः पुण्यं यदेव सुरसेवनैः ।
सत्पुत्त्रप्राप्तिपुण्यस्य कलां नार्हन्ति षोडशीम् ॥”
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ९ अध्यायः ॥ * ॥
पुत्त्रोत्सवविधिर्यथा, --
“परं पुत्त्रोत्सवं नन्दश्चकार परमादरात् ।
ददौ यशोदा गोपीभ्यो ब्राह्मणेभ्यो ददौ मुदा ।
धनानि नानावस्तूनि तैलसिन्दूरमेव च ॥”
अपि च ।
“नन्दः सचेलः स्नात्वा च धृत्वा धौते च वाससी ।
पारम्पर्य्यविधं तत्र चकार हृष्टमानसः ॥
ब्राह्मणान् भोजयामास कारयामास मङ्गलम् ।
वाद्यानि वादयामास वन्दिभ्यश्च ददौ धनम् ॥
ततो नन्दश्च सानन्दं ब्राह्मणेभ्यो ददौ धनम् ।
सद्रत्नानि प्रवालानि हीरकाणि च सादरम् ॥
तिलानां पर्व्वतान् सप्त सुवर्णं काञ्चनं मुने ! ।
रौप्यं धान्याचलं वस्त्रं गोसहस्रं मनोहरम् ॥
दधि दुग्धं शर्कराञ्च नवनीतं घृतं मधु ।
मिष्टान्नं लड्डुकौघञ्च स्वादूनि मोदकानि च ॥
भूमिञ्च सर्व्वशस्याढ्यां वायुवेगांस्तुरङ्गमान् ।
ताम्बूलानि च तैलानि दत्त्वा हृष्टो बभूव ह ॥”
पुत्त्रप्रशंसा यथा, --
“धनं धान्यञ्च रत्नं वा तत् सर्व्वं पुत्त्रहेतुकम् ।
न भक्षितं यत् पुत्त्रेण तद्द्रव्यं निष्फलं भुवि ॥
शतकूपाधिका वापी शतवापीसमं सरः ।
सरःशताधिको यज्ञः पुत्त्रो यज्ञशताद्वरः ॥
तपोदानोद्भवं पुण्यं जन्मान्तरसुखप्रदम् ।
सुखप्रदोऽपि सत्पुत्त्रः प्राणेभ्योऽपि सुनिश्चितम् ।
पुत्त्रादपि परो बन्धुर्न भूतो न भविष्यति ॥”
पुत्त्रात् पराजये आनन्दयुक्तत्वं यथा, --
“नन्दः सपुलको हृष्टः सभायां साश्रुलोचनः ।
आनन्दयुक्ता मनुजा यदि पुत्त्रैः पराजिताः ॥”

सुदण्डैर्मुषलैश्चैव कषाघातैस्तु दारुणैः ॥
मृते तु तस्मिन् पितरि तथा मातरि निष्ठुरम्
।
निःस्नेहो निर्घृणश्चैव जायते नात्र संशयः ॥
श्राद्धकार्य्याणि दानानि न करोति कदाचन
।
एवंविधास्त्रयः पुत्त्रा भवन्ति च महीतले ॥
२ ॥
रिपुपुत्त्रं प्रवक्ष्यामि तवाग्रे द्विजपुङ्गव ! ।
बाल्ये वयसि संप्राप्ते रिपुवद्वर्त्तते सदा ॥
पितरं मातरञ्चैव क्रीडमानो हि ताडयेत् ।
ताडतित्वा प्रयात्येवं प्रहस्यैव पुनः पुनः ॥
पुनरायाति तं तत्र पितरं मातरं पुनः ।
सक्रोधो वर्त्तते नित्यं वैरकर्म्मणि सर्व्वदा ॥
पितरं मारयित्वा तु मातरञ्च पुनः पुनः ।
प्रयात्येवं स दुष्टात्मा पूर्ब्बवैरानुभावतः ॥ ३
॥ * ॥
अथातः संप्रवक्ष्यामि यस्माल्लभ्यो भवेत्
प्रियः ।
जातमात्रः प्रियं कुर्य्याद्बाल्ये नटनक्रीडनैः ॥
वयः प्राप्य प्रियं कुर्य्यान्मातापित्रोरनन्तरम्
।
भक्त्या संतोषयेन्नित्यं तावुभौ परिपालयेत्
॥
स्नेहेन वचसा चैव प्रियसम्भाषणेन च ।
मृधौ गुरू समाज्ञाय स्नेहेन रुदते पुनः ॥
श्राद्धकर्म्माणि सर्व्वाणि पिण्डदानादिकां
क्रियाम् ।
करोत्येवं सुदुःखात्तस्तेभ्यो यात्रां प्रयच्छति
॥
ऋणत्रयान्वितः स्नेहान्निर्य्यापयति
निश्चितः ।
यस्माल्लभ्यं भवेत् कान्त प्रयच्छति न
संशयः ।
पुत्त्रो भूत्वा महाप्राज्ञः अनेन विधिना किल
॥ ४ ॥

"सर्व्वतीर्थाद्वरं तीर्थं
पुत्त्रतीर्थमुदाहृतम् ।
यद्वेणो वैष्णवद्वेषी सर्व्वधर्म्मबहिष्कृतः
॥
पृथुना पुत्त्रतीर्थेन पवित्रोऽगात् परं
पदम् ॥
सत्पुत्त्रं परमं तीर्थं प्राप्य मुञ्चन्ति
पूर्ब्बजाः ।
पितापि ऋणमुक्तः स्याज्जाते पुत्त्रे
महात्मनि ॥"
वैष्णवपुत्त्रस्य पूर्ब्बपुरुषत्रातृत्वं यथा,
--
"वैष्णवो यदि पुत्त्रः स्यात् सतारयति
पूर्ब्बजान् ।
पितॄनधस्तना
वंशास्तारयन्त्यतिपावनाः॥" * ॥
कुपुत्त्रजनने पितॄणां नरकगमनं यथा,
--
"तथा यदि कुपुत्त्रः स्यात्तेन
मज्जन्ति पूर्ब्बजाः ।
सुघोरे नरके दीनाः शपन्ति च मुहुर्मुहुः
॥
यथा जलं कुप्लवेन तरन्मज्जति
मूढधीः ।
तथा पिता कुपुत्त्रेण तमस्यन्धे
निमज्जति ॥
जातमात्रे कुले जन्तौ संशेरते
पितामहाः ।
किमेषोऽधो नयेदस्मानूर्द्ध्वं वा
वैष्णवो भवन् ॥"
इति पाद्मे भूमिखण्डे ११ । १२ ।
१८ । १२० ।
अध्यायाः ॥ * ॥
सप्तविधपुत्त्रा यथा, --
"वरजो वीर्य्यजश्चैव क्षेत्रजः
पालकस्तथा ।
विद्यामन्त्रसुतानाञ्च ग्रहीता सप्तमः
सुतः ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५६
अध्यायः ॥ * ॥
पुत्त्रमुखदर्शने पुण्यं यथा, --
पार्व्वत्युवाच ।

इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ९ । १४ ।
२१
अध्यायाः ॥ * ॥
बहवः पुत्त्राः काम्याः । यथा, --
"एष्टव्या बहवः पुत्त्रा यद्येकोऽपि गयां व्रजेत् ।
यजेद्वा चाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥"
मातापित्रोराज्ञाकारिकनिष्ठपुत्त्रस्यापिराज्य-
भागित्वं यथा, --
ययातिरुवाच ।
"पुत्त्रो यस्त्वनुवर्त्तेत स राजा पृथिवीपतिः ।
भवन्तः प्रतिजानन्तु पुरू राज्येऽभिषिच्यताम्
॥
प्रकृतयः ऊचुः ।
यः पुत्त्रो गुणसम्पन्नो मातापित्रोर्हितः सदा ।
सर्व्वं सोऽर्हति कल्याणं कनीयानपि स प्रभुः
॥"
इति मात्स्ये २२ । ३४ अध्यायौ ॥ * ॥
सत्पुत्त्रोत्पत्तिमात्रेण पुन्नामनरकत्राणं स्वर्ग-
गमनञ्च । यथा, --
"सत्पुत्त्रेण मुनिश्रेष्ठाः समुत्पन्नेन दुर्म्मतिः ।
उत्ततारान्वियात् स्वर्गं पुन्नामनरकाद्द्रुतम् ॥"
इत्यग्निपुराणम् ॥

|  |  |  |
| --- | --- | --- |
|  | “गृहमागत्य प्राणेश ! तपसां फलदायकम् ।<br>कल्पे कल्पे ध्यासते यं तं पश्यागत्य मन्दिरम् ॥<br>शीघ्रं पुत्रमुखं पश्य पुण्यबीजं महोत्सवम् ।<br>पुन्नामनरकत्राणकारणं भवतारणम् ॥<br>स्नातञ्च सर्व्वतीर्थेषु सर्व्वयज्ञेषु दक्षिणा ।<br>पुत्रस्य दर्शनस्यास्य कलां नार्हन्ति षोडशीम् ॥<br>सर्व्वदानेन यत् पुण्यं यत् पृथिव्याः प्रदक्षिणम् ।<br>पुत्रदर्शनपुण्यस्य कलां नार्हन्ति षोडशीम् ॥ |  |

अपि च ।
“सत्पुत्त्रेण च जातेन वेणोऽपि त्रिदिवं ययौ ।
पुन्नामनरकात्त्रातः स तेन सुमहात्मना ॥”
इति विष्णुपुराणे । १ । १३ । ४१ ॥ * ॥
विद्यादिरहितस्य पुत्त्रस्य निन्दा यथा, --
“तया गवा किं क्रियते या न दोग्ध्री न गर्भिणी ।
कोऽर्थः पुत्त्रेण जातेन यो न विद्वान्न धार्म्मिकः ॥
एकेनापि सुपुत्त्रेण विद्यायुक्तेन धीमता ।
कुलं पुरुषसिंहेन चन्द्रेण गगनं यथा ॥
एकेनापि सुवृक्षेण पुष्पितेन सगन्धिना ।
वनं सुवासितं सर्व्वं सुपुत्त्रेण कुलं यथा ॥
एको हि गुणवान् पुत्त्रो निर्गुणेन शतेन किम् ।
चन्द्रो हन्ति तमांस्येको न च ज्योतिः सहस्रशः ॥
लालयेत् पञ्च वर्षाणि दश वर्षाणि ताडयेत् ।
प्राप्ते तु षोडशे वर्षे पुत्त्रं मित्रवदाचरेत् ॥
जायमानो हरेद्दारान् वर्द्धमानो हरेद्धनम् ।
म्रियमाणो हरेत् प्राणान् नास्ति पुत्त्रसमो रिपुः ॥
शौर्य्ये तपसि दाने वा यस्य न प्रथितं यशः ।
विद्यायामर्थलाभे वा मातुरुच्चार एव सः ॥”
इति गारुडे ११४ । ११५ अध्यायौ ॥ * ॥
स च मध्यमोत्तमाधमभेदेन त्रिविधः । यथा, --
“यदुपात्तं यशः पित्रा धनं वीर्य्यमथापि वा ।
तन्न हापयते यस्तु स नरो मध्यमः स्मृतः ॥
तद्वीर्य्याभ्यधिकं यस्तु पुनरन्यत् स्वशक्तितः ।
निष्पादयति तं प्राज्ञा वदन्ति नरमुत्तमम् ॥
यः पित्रा समुपात्तानि धनवीर्य्ययशांसि च ।
न्यूनतां नयति प्राज्ञास्तमाहुः पुरुषाधमम् ॥”
इति मार्कण्डेयपुराणम् ॥ * ॥
अपि च ।
वाच्या स्यात् । इत्येतत् सर्व्वं पुत्त्राशिषां समृद्धि-
करं कर्म्म व्याख्यातम् ।”
“तथा च कुर्व्वती शनैः शनैः पूर्ब्बं प्रवाहेत
ततोऽनन्तरं बलवत्तरमिति तस्याञ्च प्रवाह-
माणायां स्त्रियः शब्दं कुर्य्युः प्रजाताः प्रजाता
धन्यं धन्यं पुत्त्रमिति तथास्या हर्षेणाप्यायन्ते
प्राणाः ।” इति चरके शारीरस्थानेऽष्टमेऽध्याये ॥)

**पुत्त्रकः**, पुं, (पुत्त्र + स्वार्थे सञ्ज्ञायामनुकम्पायां वा
कन् ।) पुत्त्रः । (यथा, विष्णुपुराणे । १ । ११ । २१ ।
तथापि दुःखं न भवान् कर्त्तुमर्हति पुत्त्रक ! ।
यस्य यावत् स तेनैव स्वेन तुष्यति बुद्धिमान् ॥”)
शरभः । धूर्त्तः । शैलविशेषः । वृक्षभेदः । इति
मेदिनी । के, १२४ ॥ पतङ्गकः । अनुकम्पान्वित-
जनः । इति शब्दरत्नावली ॥

**पुत्त्रकन्दा**, स्त्री, (पुत्त्रप्रदो कन्दोऽस्याः । अस्याः
कन्दस्य गर्भदोषनाशेन पुत्त्रदातृत्वात् तथात्वम् ।)
लक्ष्मणाकन्दः । इति राजनिर्घण्टः ॥

**पुत्त्रका**, स्त्री, (पुत्त्र + स्वार्थे संज्ञायां वा कन् ।
टाप् । “न यासयोः ।” ७ । ३ । ४५ । इत्यस्य
“सूतकापुत्त्रिकावृन्दारकानांवेति वक्तव्यम् ।”

**पुत्त्रप्रदा**, स्त्री, (पुत्त्रं प्रददाति सेवनेनेति । प्र +
दा + कः । टाप् ।) क्षविका । इति राज-
निर्घण्टः ॥

**पुत्त्रभद्रा**, स्त्री, (पुत्त्रस्य भद्रमस्या इति ।) बृह-
ज्जीवन्ती । इति राजनिर्घण्टः ॥

**पुत्त्रशृङ्गी**, स्त्री, (पुत्त्रं पवित्रं शृङ्गमिव पुष्प-
मस्याः । गौरादित्वात् ङीष् ।) अजशृङ्गी ।
इति राजनिर्घण्टः ॥

**पुत्त्रश्रेणी**, स्त्री, (पुत्त्राणां तत्सन्तानानां श्रेणि-
रत्र । ङीप् ।) मूषिकपर्णी । इति रत्नमाला ॥
(यथा, सुश्रुते सूत्रस्थाने ३८ अध्याये ।
“श्यामा महाश्यामा तृवृद्दन्ती शङ्खिनी
तिल्वककम्पिल्लकरम्यकक्रमुकपुत्त्रश्रेणीगवाक्षी
राजवृक्षकरञ्जद्वयगुड्चीसप्तलाच्छगलान्त्रीसुधाः
सुवर्णक्षीरी चेति ॥”)

**पुत्त्रसूः**, स्त्री, (पुत्त्रं सूते इति । सू + क्विप् ।)
पुत्त्रजनिका । यथा, --
“पुत्त्रसूः पुण्यभूमिः स्याद्धनसूः पुत्त्रिकाप्रसूः ॥”
इति शब्दरत्नावली ॥

**पुत्त्रान्नादः**, त्रि, (पुत्त्रस्य अन्नं तदुपहृतमन्न-
मत्तीति । अद् + अण् ।) पुत्त्रान्नभोजी । तत्-
पर्य्यायः । कुटीचकः २ । इति त्रिकाण्डशेषः ॥

**पुत्त्रिका**, स्त्री, (पुत्त्री + स्वार्थेकन् टाप् । “केऽणः ।”
७ । ४ । १३ । इति ह्रस्वः ।) कन्या । तत्-
पर्य्यायः । आत्मजा २ दुहिता ३ पुत्त्री ४
तनुजा ५ सुता ६ अपत्यम् ७ पुत्त्रका ८ स्वजा ९
तनया १० नन्दिनी ११ । इति शब्दरत्नावली ॥
(यथा, पञ्चतन्त्रे । ३ । २२१ ।
“पुत्त्रिकाब्रवीत् । तात ! अतिदहनात्मकोऽयं
नाहमेनमभिलषामि ॥” पुत्त्रीव प्रतिकृति-
रस्या इति । पुत्त्री + “इवे प्रतिकृतौ ।” ५ ।
३ । १६ । इति कन् ह्रस्वश्च ।) पुत्तलिका ।
यावतूलकः । इति मेदिनी । के, १२४ ॥

"उत्तमश्चिन्तितं कुर्य्यात् प्रोक्तकारी च
मध्यमः ।
अधमोऽश्रद्धया कुर्य्यादकर्त्तोच्चरितं पितुः
॥"
इति महाभारतम् ॥
(अनुरूपपुत्त्रप्राप्त्युपायो यथा, --
"ततः समाप्ते कर्म्मणि पूर्ब्बं दक्षिणपादमभि-
हरन्ती प्रदक्षिणमग्निमनु परिक्रामेत् ततो
ब्राह्मणान् स्वस्ति वाचयित्वा सह
भर्त्राज्यशेषं
प्राश्नीयात् । पूर्ब्बं पुमान् पश्चात् स्त्री
नचोच्छिष्ट-
मवशेषयेत् । ततस्तौ सह संवसेतामष्टरात्रं
तथा-
विधपरिच्छदावेव तथेष्टं पुत्त्रं जनयेताम् ।
या तु
स्त्री श्यामं लोहिताक्षं व्यूढोरस्कं महाबाहुं
पुत्त्रमाशासीत । या वा कृष्णं
कृष्णमृदुदीर्घकेशं
शुक्लाक्षं शुक्लदन्तं तेजस्विनमात्मवन्तम्
। एष
एवानयोरपि होमविधिः किन्तु परिवर्हवर्ण-
वर्ज्यं स्यात् पुत्त्रवर्णानुरूपस्तु यथाशीरेव
तयोः
परिवर्होऽन्यः कार्य्यः स्यात् । द्विजेभ्यः
शूद्रा तु
नमस्कारमेव कुर्य्यात्
देवगुरुतपस्विसिद्धेभ्यश्च ।
या या च यथाविधं पुत्त्रमाशासीत
तस्यास्तस्या-
स्तान्तां पुत्त्राशिषमनुनिशम्य तांस्तान्
जन-
पदान् मनसानुपरिक्रामयेत् । ततो या या
येषां येषां जनपदानां मनुष्याणामनुरूपं
पुत्त्र-
माशासीत सा सा तेषां तेषां जनपदानामा-
हारविहारोपचारपरिच्छदाननुविधीयस्वेति
इति वार्त्तिकोक्त्या ङीन इवर्णस्य
पक्षेऽकारः ।)
पुत्त्रिका । इति शब्दरत्नावली ॥

**पुत्त्रजीवः**, पुं, (पुत्त्रं गर्भं जीवयतीति । जीवि
+
अण् ।) वृक्षविशेषः । जियापुता
इति भाषा ।
तत्पर्य्यायः । श्लीपदापहः २ ।
इति त्रिकाण्ड-
शेषः ॥ कुमारजीवः ३ पुत्त्रञ्जीवकः
४ । इति
रत्नमाला ॥ पवित्रः ५ गर्भदः ६
सुतजीवकः ७ ॥
अस्य गुणाः । हिमत्वम् । वृष्यत्वम्
। श्लेष्मगर्भ-
जीवदातृत्वम् । चक्षुष्यत्वम् ।
पित्तशमनत्वम् ।
दाहतृष्णानिवारणत्वञ्च । इति
राजनिर्घण्टः ॥
गुरुत्वम् । वातकारित्वम् ।
सृष्टमूत्रमलत्वम् ।
स्वादुत्वम् । पटुत्वम् । कटुत्वम् ।
इति भाव-
प्रकाशः ॥

**पुत्त्रञ्जीवकः**, पुं, (पुत्त्रं गर्भं जीवयतीति ।
जीवि
+ ण्वुल् । द्वितीयाया अलुक् ।)
पुत्त्रजीवक
वृक्षः । इति रत्नमाला ॥ (यथा,
सुश्रुते
चिकित्सितस्थाने १९ अध्याये ।
"अनेनैव विधानेन पुत्त्रञ्जीवकजं
रसम् ।
प्रयुञ्जीत भिषक प्राज्ञः
कालसात्म्यविभाग-
वित् ॥")
पुत्त्रस्य जीवके, त्रि ॥

**पुत्त्रदा**, स्त्री, (पुत्त्रं गर्भं ददाति सेवनेनेति ।
दा + कः ।) बन्ध्याकर्कोटकी ।
लक्ष्मणाकन्दः ।
(यथा, सुश्रुते सूत्रस्थाने । १६ अध्याये ।
"पीठोपमपालिरुभयतः क्षीणपुत्त्रिकाश्रितो
निर्व्वेधिमःस्थूलाणुसम विषमपालिव्या योजिमः
॥"
पुत्त्रस्वरूपत्वेन कृता कन्या । तद्गर्भजातः
पुत्त्रस्तु
कन्यादातुः पुत्त्रो भवतीति । यथा, मनौ । ९ ।
१२७ -- १२८ ।
"अपुत्त्रोऽनेन विधिना सुतां कुर्व्वीत पुत्त्रिकाम् ।
यदपत्यं भवेदस्यां तन्मम स्यात् स्वधाकरम ॥"
यथा च महाभारते । १ । ६६ । १२ ।
"ताः सर्व्वास्त्वनवद्याङ्ग्यः कन्याः
कमललोचनाः ।
पुत्त्रिकाः स्थापयामास नष्टपुत्त्रः प्रजापतिः ॥")

**पुत्त्रिकापुत्त्रः**, पुं, (पुत्त्रिकायाः जातेऽस्याः पुत्त्रे
स हि मदीयः पुत्त्रो भविष्यतीति पुत्त्रस्वरूपत्वेन
कृतायाः सुतायाः पुत्त्रः ।) पुत्त्रिकायाः सुतः ।
स च औरससमः । यथाह वशिष्ठः ।
"अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम् ।
अस्यां यो जायते पुत्त्रः स मे पुत्त्रो भवेदितीति
॥
अथवा पुत्त्रिकैव सुतः पुत्त्रिकासुतः
सोऽप्यौरस-
सम एव पित्रवयवानामल्पत्वान्मात्रवयवानां

गर्भदात्रीक्षुपः । इति राजनिर्घण्टः ॥

**पुत्त्रदात्री**, स्त्री, (पुत्त्रं ददाति सेवनेनेति । दा +
तृच् + ङीप् । बन्ध्यादोषनाशित्वादस्यास्तथात्वम् ।) मालवे प्रसिद्धो लताविशेषः । तत्पर्य्यायः । वातारिः २ भ्रमरी ३ श्वेतपुष्पिका ४ वृतपत्रा ५ अतिगन्धालुः ६ वेशीजाता ७ सुवल्लरी ८ । अस्या गुणाः । वातकटूष्णकफनाशित्वम् । सुरभित्वम् । सर्व्वदा पथ्यत्वम् । बन्ध्यादोषनाशित्वञ्च । इति राजनिर्घण्टः ॥

बाहुल्याच्च । यथाह वशिष्ठः । द्बितीयः पुत्त्रिकै-
वेति । द्बितीयः पुत्त्रः कन्यैवेत्यर्थः ।” इति मिता-
क्षरा ॥

**पुत्त्रिकाप्रसूः**, स्त्री, (पुत्त्रिकायाः कन्यायाः प्रसू-
र्जननी ।) पुत्त्रिकाजननी । तत्पर्य्यायः
धनसूः २ । इति शब्दरत्नावली ॥

**पुत्त्रिकासुतः**, पुं, (पुत्त्रिकायाः सुतः ।) पुत्त्रि-
कायाः पुत्त्रः । पुत्त्रिकैव पुत्त्रः । अस्य प्रमाणं
पुत्त्रिकापुत्त्रशब्दे द्रष्टव्यम् ॥

**पुत्त्रिणी**, स्त्री, (पुत्त्रोऽस्या अस्तीति । पुत्त्र +
इनिः + ङीप् ।) पुत्त्रवती । यथा, --
“सर्व्वासामेकपत्नीनामेका चेत् पुत्त्रिणी भवेत् ।
सर्व्वास्तास्तेन पुत्त्रेण प्राह पुत्त्रवतीर्म्मनुः ॥”
इति दायभागधृतमनुवचनम् ॥

**पुत्त्री**, [न्] पुं, (पुत्त्रोऽस्यास्तीति । पुत्त्र + इनिः ।)
पुत्त्रयुक्तः । पुत्त्रशब्दादस्त्यर्थे इन्प्रत्ययनिष्पन्नः ॥
यथा, --
“ज्येष्ठेन जातमात्रेण पुत्त्री भवति मानवः ।
पितॄणामनृणश्चैव स तस्माल्लब्धुमर्हति ॥
इति मनुः ॥

**पुत्त्री**, स्त्री, (पुत्त्र + “शार्ङ्गरवाद्यञो ङीन् । ४ ।
१ । ७३ । इति ङीन् । यद्बा, गौरादित्वात्
ङीष् ।) सुता । इति हलायुधः ॥ अस्याः
पर्य्यायः पुत्त्रिकाशब्दे द्रष्टव्यः । वृक्षविशेषः ।
हरन्ती प्रदक्षिणमग्निमनुपरिक्रामेत् ततो ब्राह्म-
णान् स्वस्ति वाचयित्वा सह भर्त्राज्यशेषं प्राश्नी-
यात् । पूर्ब्बं पुमान् पश्चात् स्त्री नचोच्छिष्ट-
मवशेषयेत् ततस्तौ सहसंवसेतामष्टरात्रं तथा-
विधपरिच्छदाक्वे तथेष्टपुत्त्रं जनयेताम् ।
या तु स्त्रीश्यामं लोहिताक्षं व्यूढोरस्कं महाबाहुं
पुत्त्रमाशासीत । या वा कृष्णं कृष्णमृदुदीर्घकेशं
शुक्लाक्षं शुक्लदन्तं तेजस्विनमात्मवन्तम् । एष
एवानयोरपि होमविधिः किन्तु परिवर्हवर्णवर्ज्ज्यं
स्यात् पुत्त्रवर्णापुरूपस्तु यथाशीरेव तयोः परि-
वर्होऽन्यः कार्य्यः स्यात् ।” इति चरके शारीर-
स्थानेऽष्टमेऽध्याये ॥)

**पुत्त्रेष्ठिका**, स्त्री, (पुत्त्रेष्टि + स्वार्थे कन् टाप् च ।)
पुत्त्रनिमित्तकयागविशेषः । इति जटाधरः ॥

**पुत्त्रौ**, पुं, (दुहिता च पुत्त्रश्च पुत्त्रौ इत्येकशेषः ।)
पुत्त्रदुहितरौ । इत्यमरः । २ । ६ । ३७ ॥
द्बिवचनान्तोऽयम् ॥

**पुत्त्र्यं**, त्रि, (पुत्त्रस्य निमित्तं संयोग उत्पातो
वेति । पुत्त्र + “पुत्त्राच्छ च ।” ५ । १ । ४० ।
चकाराद् यत् ।) पुत्त्रीयम् । पुत्त्रनिमित्तसंयोगः
पुत्त्रनिमित्तोत्पातो वा । इति पाणिनिः ॥

**पुथ**, इ कुन्थे । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।) पञ्चमस्वरी । इ, पुन्थ्यते ।
“ऊर्द्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते ॥”)
भेदः । अवधारणम् । इत्यमरः । ३ । ४ । १५ ॥
अधिकारः । पक्षान्तरम् । इति मेदिनी ॥ रे,
७२ ॥ (यथा, रघुः । २ । ४८ ।
“भूतानुकम्पा तव चेदियं गौ-
रेका भवेत् स्वस्तिमति त्वदन्ते ।
जीवन् पुनः शश्वदुपप्लवेभ्यः
प्रजाः प्रजानाथ ! पितेव पासि ॥”)

**पुनःपुनः** [र्] व्य, (पुनर् + वीप्सायां द्बित्वम् ।)
वारंवारम् । तत्पर्य्यायः । मुहुः २ शश्वत् ३
अभीक्ष्णम् ४ असकृत् ५ । इत्यमरः । ३ । ४ । १ ॥
वारंवारेण ६ पौनःपुन्यम् ७ प्रतिक्षणम् ८ ।
इति शब्दरत्नावली ॥ (यथा, चाणक्ये ।
“अतिथिर्बालकश्चैव राजा भार्य्या तथैव च ।
अस्ति नास्ति न जानन्ति देहि देहि पुनः-पनः ॥”)

**पुनःपुना**, स्त्री, नदीविशेषः । पन्पुना इति
भाषा । यथा, --
“कीकटेषु गया पुण्या पुण्यं राजगृहे वनम् ।
च्यवनस्याश्रमः पुण्यो नदी पुण्या पुनःपुना ॥”
इति वायुपुराणे गयामाहात्म्यम् ॥

**पुनःसंस्कारः**, पुं, (पुनः पुनर्वारकृतः संस्कारः ।)
द्बितीयवारोपनयनादिसंस्कारः । यथा, --
“पुनर्व्वसौ कृतो विप्रः पुनःसंस्कारमर्हति ॥”
इति ज्योतिस्तत्त्वम् ॥

**पुनरागमनं**, क्ली, (पुनः पुनर्व्वारमागमनम् ।)
द्बितीयवारागमनम् । फिरे आसा इति भाषा ॥
यथा --
“संवत्सरव्यतीते तु पुनरागमनाय च ॥”
इति दुर्गोत्सवपद्धतिः ॥

इति शब्दचन्द्रिका ॥

**पुत्रीयं**, त्रि, (पुत्रस्य निमित्तं संयोग उत्पातो-
वेति । पुत्र + "पुत्राच्छ च ।" ५ । १ । ४० ।
इति छः ।) पुत्र्यम् । (यथा, महाभारते १ ।
६७ । १६३ ।
"धन्यं यशस्यं पुत्त्रीयमायुष्यं विजयावहम् ।
इदमंशावतरणं श्रोतव्यमनसूयता ॥"
यथा च रघौ । १० । ४ ।
"ऋष्यशृङ्गादयस्तस्य सन्तः सन्तानकाङ्क्षिणः ।
आरेभिरे जितात्मानः पुत्त्रीयामिष्टिमृत्विजः ॥"
"पुत्त्रीयां पुत्त्रनिमित्ताम् ।" इति तट्टीकायां
मल्लिनाथः ॥") पुत्त्रसम्बन्धि ।
पुत्त्रस्येदमित्यर्थे
ईयप्रत्ययनिष्पन्नम् । इति व्याकरणम् ॥

**पुत्त्रेष्टिः**, स्त्री, (पुत्त्रनिमित्तिका इष्टिरिति मध्य-
पदलोपी समासः ।)
पुत्त्रनिमित्तकयागविशेषः ।
इति जटाधरः ॥ यथा, --
"गृहीत्वा पञ्चवर्षीयं पुत्त्रेष्टिं प्रथमञ्चरेत् ॥"
इति स्मृतिः ॥
(अस्याः क्रियाविशेषो यथा, --
"ततः पुत्त्रकामा पश्चिमतोऽग्निं दक्षिणतो ब्राह्मण-
मुपवेश्यान्वालभेत सह भर्त्रा यथेष्टं पुत्त्रमाशा-
साना । ततस्त्वस्या आशासानाया ऋत्विक्
प्रजापतिमभिनिर्द्दिश्य योनौ तस्याः कामपरि-
पूरणार्थं काम्यामिष्टिं निर्व्वपेद्विष्णुर्योनिं कम्पय-
त्वित्यन्वयाच्चार्चा ततश्चैवाज्येन स्थालीपाकमयभिः
अन्तःस्थप्रथमादिरयमित्यन्ये । पुन्थति । इति
दुर्गादासः ॥

**पुथ**, क त्विषि । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-अक०-सेट् ।) क, पोथयति । त्विषि
दीप्तौ ।
इति दुर्गादासः ॥

**पुथ**, य हिंसे । इति कविकल्पद्रुमः ॥ (दिवा०-
पर०-सक०-सेट् ।) य, पुथ्यति पुपोथ । इति
दुर्गादासः ॥

**पुद्गलः**, पुं, (पूरणात् पुत् गलनात् गलः । ततः कर्म्म-
धारयः । वृद्धिह्रासवत्त्वाद्देहस्य तथात्वम् ।)
देहः । (यथा, पार्श्वनाथचरिते । १२ । ११० ।
"चक्रुः शिरसि भाले च नेत्रे सर्व्वाङ्गपुद्गले ॥")
आत्मा । इति शब्दरत्नावली ॥ परमाणुः ।
यथा, --
"स्थूला मध्यास्तथा सूक्ष्माः सूक्ष्मात् सूक्ष्म-
तराश्च ये ।
देहभेदा भवान् सर्व्वे ये केचित् पुद्गलाश्रयाः ॥"
इति विष्णुपुराणे ५ अंशे २० अध्यायः ॥
"पूर्य्यन्ते गलन्ति चेति पुद्गलाः । वृद्ध्यपक्षय-
भाजो येऽवयवास्तदाश्रया देहभेदाः ।
यथाहुः ।
पूरणाद्गलनाद्देहे पुद्गलाः परमाणव इति ।"
इति तट्टीकायां श्रीधरस्वामी ॥

**पुद्गलः**, त्रि, (पुत् वर्द्धनशीलः गलो ह्रासवांश्चेति
कर्म्मधारयः ।) सुन्दराकारः । इति शब्द-
रत्नावली ॥ रूपादिमद्द्रव्यम् । इति हेम-
चन्द्रः ॥

**पुनः**, [र्] व्य, (पनाय्यते स्तूयते इति । पन +

**पुनरुक्तं**, क्ली, (वच + भावे क्तः । पुनः पुनर्व्वार-
मुक्तम् ।) पुनर्व्वारकथनम् । यथा, --
"आपाततो यदर्थस्य पौनरुक्त्येव भाषणम् ।
पुनरुक्तवदाभासः स भिन्नाकारशब्दगः ॥"
इति साहित्यदर्पणम् ॥
(यथाह गोतमः । ५ । ५७ -- ५८ ।
"शब्दार्थयोः पुनर्व्वचनं पुनरुक्तमन्यत्रानु-
वादात् ॥"
"पुनर्वचनं पुनरुक्तं तस्य विभागार्थं शब्दार्थयो-
रिति । तेन शब्दपुनरुक्तमर्थपुनरुक्तञ्च लभ्यते ।
अनुवादेऽतिव्याप्तिवारणाय अन्यत्रानुवादादिति
अनुवादान्यत्वे सतीत्यर्थः । निष्प्रयोजनं पुन-
रभिधानं हि पुनरुक्तं अनुवादस्तु व्याख्यारूपः
सप्रयोजनक एवेति भावः । तथाच समा-
नार्थकपूर्ब्बानुपूर्ब्बीकशब्दप्रयोगः शंब्दपुनरु-
क्तम् । समानार्थकभिन्नानुपूर्ब्बीकशब्दस्य निष्प्रयो-
जनं पुनरभिधानमर्थपुनरुक्तम् । आद्यं यथा
घटो घट इति । द्वितीयं यथा, घटः कलस
इति । एतस्य प्रमादादिना सम्भवः ॥" * ॥
पुनरुक्तभेदान्तरमाह ।
"अर्थादापन्नस्य स्वशब्देन पुनरभिधानम् ।"

| | | |
|---|---|---|
| संसार्य्य त्रिर्जुहुयात् ।<br>यथाम्नायञ्चोपमन्त्रितमुद-<br>पात्रं तस्यै दद्यात् सर्व्वोदकार्थान्<br>कुरुष्वेति ।<br>ततः समाप्ते कर्म्मणि पूर्ब्बं<br>दक्षिणपादमभि- | बाहुलकात् अर् अस्य उत्वञ्च ।) अप्रथमः<br>।<br>(यथा, मनुः । २ । १२० । | |

"पुनरुक्तमित्यनुवर्त्तते। यस्मिन्नुक्ते यस्यार्थस्यौत्-
सर्गिकी प्रतिपत्तिर्भवति तस्य तेन रूपेण
पुनरभिधानं पुनरुक्तम्। इदमेव च अर्थपुन-
रुक्तमिति गीयते। यथा वह्निरुष्ण इति पूर्ब्ब-
पदाक्षिप्तोक्तिरियम्। उष्णो वह्निरिति उत्तर-
पदाक्षिप्तोक्तिः। एवं बहिरस्ति गेहे नास्तीति
विध्याक्षिप्तोक्तिः। जीवन् गेहे नास्ति बहि-
रस्तीति निषेधाक्षिप्तोक्तिः।
पुनरुक्तत्रैविध्यञ्चेदं
भाष्यादि सम्मतम्। तस्यैव शब्दस्य पुनरभि-
धानं पर्य्यायेणाभिधानम् अन्यत् पुनरर्थपुन-
रुक्तमित्याहुः ॥" * ॥ पुनर् + वच +
कर्म्मणि क्तः।
पुनःकथिते, त्रि। यथा, महाभारते। ८। ४। १३।
"ब्रूहि सञ्जय! तत्त्वेन पुनरक्तां कथामिमाम्
॥")

**पुनरुक्तजन्मा**, [न्] पुं, (पुनरुक्तं जन्म यस्य।
"द्वीतीयं मौञ्जीबन्धने।" इति मनूक्तेरस्य तथा-
त्वम्।) ब्राह्मणः। इति त्रिकाण्डशेषः॥

**पुनर्जन्म**, [न्] क्ली, (पुनर्भूयो जन्म।) पुन-
र्व्वारोत्पत्तिः। यथा, --
"आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्ज्जुन!।
मामुपेत्य तु कौन्तेय! पुनर्जन्म न विद्यते
॥"
इति श्रीभगवद्गीतायाम्। ८। १६॥

**पुनर्नवः**, पुं, (पुनरपि छिन्ने भूयोऽपि नवः।) नखः।
इति हेमचन्द्रः॥

**पुनर्भवी** [न्] पुं, (पुनर्भवः पुनःपुनरुत्पत्तिर-
स्त्यस्येति। पुनर्भव + इनिः।) आत्मा। इति
हेमचन्द्रः। ६। २॥

**पुनर्भूः**, स्त्री, (पुनर्भवति जायात्वेनेति। भू +
क्विप्।) द्विरूढा। तत्पर्य्यायः। दिधिषूः २।
इत्यमरः। २। ६। २३॥
"अक्षतयोनित्वाद्विधवा
पुनरुह्यते। इत्यसावन्यस्य भूत्वा अन्यस्य पुन-
र्भवतीति क्विपि पुनर्भूः। धिष्यते निन्दिततया
शब्द्यते द्विधिषूः धिष शब्दे नाम्नीति कूः निपा-
तनाद्द्वित्वम्।" इति तट्टीकायां भरतः॥ सा
त्रिविधा। यथा, --
"परपूर्ब्बास्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम्।
पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्व्विधा॥
कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता।
पुनर्भूः प्रथमा प्रोक्ता पुनःसंस्कारकर्म्मणा
॥
देशधर्म्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते।
उत्पन्नसाहसान्यस्मै सा द्बितीया प्रकीर्त्तिता॥
उत्पन्नसाहसा उत्पन्नव्यभिचारा।
असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते।
सवर्णाय सपिण्डाय सा तृतीया प्रकीर्त्तिता॥"
इति मिताक्षरा॥ * ॥
पुनर्व्वारजाते, त्रि॥

**पुनर्यात्रा**, स्त्री, (पुनरप्रथमा यात्रा।) निवर्त्त-
यात्रा। सा तु आषाढशुक्लपक्षीयरथद्वितीया-
२। ४। २५॥ कुम्भीकः ६ रक्तकेशरः ७।
इति रत्नमाला॥ पुन्नामा ८ पाटलद्रुमः ९
रक्तपुष्पः १० रक्तरेणुः ११ अरुणः १२। अस्य
पुष्पगुणाः। मधुरत्वम्। शीतत्वम्। सुगन्धि-
त्वम्। पित्तनाशित्वम्। भूरितो द्रावणत्वम्।
देवताप्रसादनत्वञ्च। इति राजनिर्घण्टः॥ कषाय-
त्वम्। कफरक्तनाशित्वञ्च। इति राजवल्लभः
॥ * ॥
सितोत्पलः। जातीफलः। नरश्रेष्ठः। पाण्डु-
नागः। इति मेदिनी। गे, ४६॥

**पुन्नाटः**, पुं, (पुन्नाड + पृषोदरादित्वात् डस्य टः।)
चक्रमर्द्दः। इति राजनिर्घण्टः॥ (पर्य्यायोऽस्य
यथा, भावप्रकाशे पूर्ब्बखण्डे प्रथमे भागे।
"चक्रमर्द्दः प्रपुन्नाटो दद्रुघ्नो मेषलोचनः।
पद्माटः स्यादेडगजश्चक्री पुन्नाट इत्यपि
॥")

**पुन्नाडः**, पुं, (पुमांसं नाडयतीति। नड भ्रंशे +
"कर्म्मण्यण्।" ३। २। १। इत्यण्।) चक्रमर्द्दः।
इति राजनिर्घण्टः॥

**पुन्नामनरकः**, पुं, (पुदिति नाम यस्य स पुन्नामा।
पुन्नामा चासौ नरकश्चेति कर्म्मधारयः।) पुत्
इतिनामकनरकविशेषः। तत्र षोडशविधपापैः
पतति। यथा, --
ब्रह्मोवाच।
"परदाराभिगमनं पापानाञ्चोपसेवनम्।
पारुष्यं सर्व्वभूतानां प्रथमं नरकं स्मृतम्॥
फलस्तेयं महापापं फलार्हस्य च पाटनम्।
पाटनं वृक्षजातीनां द्वितीयं परिकीर्त्तितम्॥
वर्ज्यादानं तथा द्विष्टमवध्यवधबन्धनम्।
विवादित्वमहेतूत्थं तृतीयं नरकं स्मृतम्॥

**पुनर्नवा**, स्त्री, (छिन्नायां पुनरपि नवा । यद्वा,

पुनर्भूयोभूयः नूयते स्तूयते इति । नु स्तुतौ +
"ऋदोरप् ।" ३ । ३ । ५७ । इत्यप् ।
ततष्टाप् ।
क्षुभ्नादित्वात् न णत्वम् ।) शाकविशेषः ।
तत्पर्य्यायः । शोथघ्नी २ वर्षाभूः ३ प्रावृषा-
यणी ४ कठिल्लकः ५ । एता अरुणाः ॥
श्वेतायाः पर्य्यायः । वृश्चीरः २
चिराटिका ३ ।
इति रत्नमाला ॥ विशाखः ४ कठिल्लः ५ शशि-
वाटिका ६ पृथ्वी ७ सितवर्षाभूः ८ घनपत्रः ९
कठिल्लकः १० । अस्या गुणाः । उष्णत्वम् ।
तिक्तत्वम् ।
कफकासहृद्रोगशूलास्रपाण्डुशोफा-
निलनाशित्वञ्च । इति राजनिर्घण्टः ॥ भेदक-
त्वम् । रसायनत्वम् ।
आमदुर्नामव्रध्नोदरनाशि-
त्वञ्च । इति राजवल्लभः ॥ * ॥
"पुनर्नवा श्वेतमूला शोथघ्नी दीर्घपत्रिका ।
कटुः कषाया रुच्यर्शःपाण्डुहृद्दीपनी परा ॥
शोफानिलगरश्लेष्महरी व्रध्नोदरप्रणुत् ॥ * ॥
पुनर्नवा परा रक्ता रक्तपुष्पानिलाटिका।
शोथघ्नी क्षुद्रवर्षाभूर्वर्षकेतुः कठिल्लकः ॥
पुनर्नवारुणा तिक्ता कटुपाका हिमा लघुः ।
वातला ग्राहिणी श्लेष्मपित्तरक्तविनाशिनी ॥"
इति भावप्रकाशः ॥

**पुनर्भवः**, पुं, (छिन्नोऽपि पुनर्भवतीति । भू +

अच् ।) नखः । इत्यमरः । २ । ६ । ८३ ॥ रक्त-
पुनर्नवा । इति राजनिर्घण्टः ॥ (पुनर् + भू +
नन्तरं तन्नवमदिवसविहिता
श्रीजगन्नाथदेवस्य
दक्षिणमुखयात्रा । फिरे रथ इति उल्टा रथ
इति च भाषा । अस्या इतिकर्त्तव्यता यात्रा-
शब्दे द्रष्टव्या ॥

**पुनर्व्वसुः**, पुं, (पुनः पुनः शरीरेषु वसति क्षेत्रज्ञ-

रूपेणेति । पुनर् + वस + उः ।) विष्णुः । (यथा,
महाभारते । १३ । १४९ । ३९ ।
"अघनो विजयो जेता विश्वयोनिः
पुनर्व्वसुः ॥")
शिवः । कात्यायनमुनिः । लोकभेदः । धना-
रम्भः । इति शब्दरत्नावली ॥
नक्षत्रविशेषः ।
स च धनुराकृतिपञ्चतारात्मकः । यथा, --
"मध्यवर्त्मनि शरासनाकृता-
वम्बरस्य सुरमातृभे गताः ।
लिप्तिकाः सुमुखि ! पञ्चतारके
पक्षपावकमिता घटोदयात् ॥"
इति कालिदासकृतरात्रिलग्ननिरूपणम् ॥
तस्याधिष्ठात्री देवता अदितिः । इति
जातकः ॥
तत्र जातफलम् । यथा, कोष्ठीप्रदीपे ।
"प्रभूतमित्रः कृतशास्त्रयत्नः
सद्रत्नकामी वरभूषणाढ्यः ।
दाता प्रतापी वसुधाधिपश्रीः
पुनर्व्वसौ यस्य भवेत् प्रसूतिः ॥"

**पुनर्व्वसू**, पुं, अश्विन्यादिसप्तविंशतिनक्षत्रान्तर्गत-

सप्तमनक्षत्रम् । तत्पर्य्यायः । यामकौ २ आदित्यौ
३ । इति हेमचन्द्रः ॥ द्विवचनान्तोऽयम् ॥

**पुन्नागः**, पुं, (पुमान् नाग इव श्रेष्ठत्वात् ।) स्वनाम

ख्यातबृहत्पुष्पवृक्षविशेषः । तत्पर्य्यायः । पुरुषः
भयदं सर्व्वसत्त्वानां नरभूतिविनाशनम् ।
भ्रंशनं निजधर्म्माणां चतुर्थं नरकं स्मृतम् ॥
मारणं मित्रकौटिल्यं मिथ्याभिशपनञ्च यत् ।
मिष्टैकाशनमित्युक्तं पञ्चमञ्च विपाचनम् ॥
प्ररोहणं यन्त्रकरं यमनं योगनाशनम् ।
यानमुख्यस्य हरणं षष्ठमुक्तं नृपाचनम् ॥
राजभागस्य हरणं राजजायानिषेवणम् ।
राज्ये त्वहितकारित्वं सप्तमं नरकं स्मृतम् ॥
स्तब्धत्वं लोलुपत्वञ्च लब्धधर्म्मार्थनाशनम् ।
नानाकर्म्मकरं प्रोक्तमष्टमं नरकं स्मृतम् ॥
ब्रह्मस्वहरणञ्चैव ब्राह्मणानां विनिन्दनम् ।
विरोधो ब्राह्मणैश्चोक्तो नवमो नरकस्त्वयम् ॥
शिष्टाचारविनाशञ्च मित्रद्वेषं शिशोर्व्वधम् ।
शास्त्रस्तेयं धर्म्मशून्यो दशमं परिकीर्त्तितम् ॥
षडङ्गनिधनं घोरं षाड्गुण्यप्रतिषेधनम् ।
एकादशममेवोक्तं नरकं सद्भिरुत्तम ! ॥
सद्भिरुक्तं सदा चैवमनाचारमसत्क्रिया ।
संस्कारपरिहीणत्वमिदं द्वादशमं स्मृतम् ॥
हानिर्धर्म्मार्थकामानामपवर्गस्य हारणम् ।
स्वर्णहर्त्तुश्च मतिदं त्रयोदशममुच्यते ॥
समलं धर्म्महीनञ्च यद्वर्ज्यं यच्च दोषजम् ।
चतुर्द्दशकमेवोक्तं नरकं सद्भिर्गर्हितम् ॥
अज्ञानञ्चाप्यनिष्ठत्वमशौचमशुभावहम्।
गर्ह्यं तत् पञ्चदशकमसत्यवचनानिच ॥

| | | |
|---|---|---|
| भावे अप् । पुनरुत्पत्तिः । यथा, महाभारते । १ । १ । २५५ । "सन्ततिश्च प्रवृत्तिश्च जन्ममृत्युपुनर्भवाः ॥" * ॥ पुनर्भवतीति । भू + अच् ।) पुनर्व्वारजाते, त्रि ॥ | २ तुङ्गः ३ केशरः ४ देववल्लभः ५ । इत्यमरः । | |

आलस्यं वै षोडशकमाक्रोशञ्च विशेषतः
।
सर्व्वस्य चाततायित्वमगारेष्वग्निदापनम्
॥
इच्छा च परदारेषु नरकाय निगद्यते ।
ईर्ष्याभावश्च सभ्येषु औद्धत्यन्तु
विगर्हितम् ॥
एतैस्तु पापैः पुरुषः पुन्नामनरके पतेत् ।
पुन्नामनरकं घोरं विनाशं प्राह सर्व्वतः ॥
एतस्मात् कारणात् साध्यस्ततः पुत्त्रो
निगद्यते ॥”
इति वामने ५८ अध्यायः ॥

**पुप्फुलः**, पुं, (पुप्फुस् । पृषोदरादित्वात् सस्य
लत्वम् ।) उदरस्थवायुः । इति
भूरिप्रयोगः ॥

**पुप्फुसः**, पुं, (पुप्फुसवत् आकृतिरस्यास्तीति ।
अच् ।) पद्मबीजाधारः । तत्पर्य्यायः ।
बीज-
कोषः २ वराटकः ३ । (पुप्फुस इति
शब्दो-
ऽस्त्यस्येति ।) वामपार्श्वस्थमलाशयः
। फाँफडा
इति फुलघरा इति च भाषा ।
तत्पर्य्यायः ।
कोष्ठः २ । इति शब्दचन्द्रिका ॥
रक्तफेनजः ३ ।
इति हेमचन्द्रः ॥ तिलकम् ४ क्लोम ५
। इत्य-
मरः ॥ क्लोमम् ६ । इति भरतः ॥
फुप्फुसोऽपि
पाठः ॥ (फुप्फुसशब्देऽस्य विषयो
ज्ञातव्यः ॥)

**पुमान्** [स्] पुं, (पाति रक्षतीति । पा + “पाते-
र्डुम्सुन् ।” उणा० । ४ । १७७ । इति
डुम्सुन् ।
डित्वात् टिलोपः ।) मनुष्यजातिपुरुषः
। तत्-

पत्तनम् ५ स्थानीयम् ६ कटकम् ७
पट्टम् ८
निगमः ९ पुटभेदनम् १० । इति
शब्दरत्ना-
वली ॥ तस्य लक्षणादि यथा, --
मत्स्य उवाच ।
“राजा सहायसंयुक्तः प्रभूतयवसेन्धनम्
।
रम्यमाणन्तु सामन्तं
मध्यमन्देशमावसेत् ॥
वैश्यशूद्रजनप्रायमनाहार्य्यन्तथा परैः ।
किञ्चिद्ब्राह्मणसंयुक्तं बहुकर्म्मकरन्तथा
॥
अदैवमातृकं रम्यमनुरक्तजनान्वितम् ।
करैरपीडितं वापि बहुपुष्पफलन्तथा ॥
अगम्यं परचक्राणां तद्वासगृहमापदि ।
समदुःखसुखं राज्ञः सततं
प्रियमास्थितम् ॥
सरीसृपविहीनञ्च व्याडतस्करवर्ज्जितम्
।
एवंविधं यथालाभं राजा विषयमावसेत्
॥
एतद्दुर्गं नृपः कुर्य्यात् षण्णामेकतमं बुधः
।
वनदुर्गं महीदुर्गं नरदुर्गन्तथैव च ॥
वार्क्षञ्चैवाम्बुदुर्गञ्च गिरिदुर्गञ्च पार्थिव ! ।
सर्व्वेषामेव दुर्गाणां गिरिदुर्गं प्रशस्यते ॥
दुर्गञ्च परिघोपेतं चयाट्टालकसंयुतम् ।
शतघ्नीयन्त्रमुख्यैश्च शतशश्च
समावृतम् ॥
गोपुरं सकवाटञ्च तत्र स्यात् सुमनोहरम्
।
सपताकं गजारूढो येन राजा विशेत्
पुरम् ॥
चतस्रश्च तथा कार्य्या वीथयः
सर्व्वतोमुखाः ।
एकस्मिंस्तत्र वीथ्यग्रे देववेश्म
भवेद्दृढम् ॥

दद्यादावसथान् दुर्गे मन्त्रकालविदां शुभान् ॥
गोवैद्यानश्ववैद्यांश्च गजवैद्यांस्तथैव च ।
आहरेत भृशं राजा दुर्गे परबलारुजः ॥
कुशीलवानां विप्राणां दुर्गे स्थानं विधीयते ।
न बहूनामतो दुर्गं विनां कार्य्यं तथा भवेत् ॥
सर्व्वं निरर्थकं कार्य्यं विना दुर्गं महीपते ! ।
दुर्गे यन्त्राः प्रकर्त्तव्या नानाप्रहरणान्विताः ।
सहस्रघातिनो राजंस्तैस्तु रक्षा विधीयते ॥
दुर्गद्वाराणि गुप्तानि कार्य्याण्यपि च भूभुजा ।
सञ्चयश्चात्र सर्व्वेषामायुधानां विधीयते ॥
धनुषां क्षेपणीयानां तोमराणाञ्च भार्गव ! ।
शराणामथ खड्गानां कवचानान्तथैव च ॥
लगुडानाञ्च कुन्तानां परिघैः सहपार्थिव । !
अश्मनाञ्च प्रभूतानां मुद्गराणान्तथैव च ॥
त्रिशूलानां पट्टिशानां कुणपानाञ्च पार्थिव ! ।
प्रासानाञ्च सशूलानां शक्तीनाञ्च नरोत्तम ! ॥
परश्वधानां चक्राणां वर्म्मणाञ्चर्म्मभिः सह ।
कुद्दालरज्जुवेत्राणां पिटकानान्तथैव च ॥
हेमुकानाञ्च दात्राणामङ्गारस्य च सञ्चयः ।
सर्व्वेषां शिल्पभाण्डानां सञ्चयश्चात्र इष्यते ॥
वादित्राणाञ्च सर्व्वेषामौषधीनान्तथैव च ।
यवसानां प्रभूतानामिन्धनस्य च सञ्चयः ॥
गुडानां सर्व्वतैलानां गोरसानान्तथैव च ।
वसानामथ मज्जानां स्नायूनामस्थिभिः सह ॥
गोचर्म्मपटहानाञ्च धान्यानां सर्व्वतस्तथा ।
तथैव पर्पटानाञ्च यवगोधूमयोरपि ॥
रत्नानां सर्व्ववस्त्राणां लोहानाञ्चाप्यशेषतः ।
कलायमुद्गमाषाणां चणकानां तिलैः सह ॥
तथा च सर्व्वशस्यानां पांशुगोमययोरपि ।
शणसर्ज्जरसं भूर्जजतुलाक्षाश्च टङ्कणम् ॥
राजा सञ्चिनुयाद्दुर्गे यच्चान्यदपि किञ्चन ॥ * ॥
कुम्भाश्चाशीविषाः कार्य्या व्यालसिंहादयस्तथा
।
मृगाश्च पक्षिणश्चैव विरुद्धा ये परस्परम् ॥
स्थानानि च विरुद्धानां सुगुप्तानि पृथक् पृथक् ।
कर्त्तव्यानि महाभाग ! यत्नेन पृथिवीक्षिता ॥
उक्तानि चाप्यनुक्तानि राजद्रव्याण्यशेषतः ।
सुगुप्तानि पुरे कुर्य्याज्जनानां हितकाम्यया ॥
जीवकर्षभकाकोलीआमलक्यः परूषकम् ।

पर्य्यायः । पञ्चजनः २ पुरुषः ३ पूरुषः ४ ना ५ ।
इत्यमरः । २ । ६ । १ ॥ (यथा, --
“स्वदेशजातस्य जनस्य लोके
गुणाधिके पुंसि भवत्यवज्ञा ।
निजाङ्गना यद्यपि रूपराशि-
स्तथापि पुंसां परदारचेष्टा ॥”
इत्युद्भटः ॥)
मबुष्यजातिः । इति केचिदिति भरतः ॥ पुंलिङ्ग-
मात्रञ्च ॥ (कूटस्थपुरुषः । यथा, विष्णुपुराणे ।
१ । १ । २ ।
“सदक्षरं ब्रह्म य ईश्वरः पुमान्
गुणोर्म्मिसृष्टिस्थितिकालसंलयः ।
प्रधानबुद्ध्यादिजगत्प्रपञ्चसूः
स नोऽस्तु विष्णुर्गतिभूतिमुक्तिदः ॥”
“अक्षरमिति विकारं निराकरोति पुमान् कूटस्थः ।” इति तट्टीकायां श्रीधरस्वामी ॥)

**पुर**, श अग्रगत्याम् । इति कविकल्पद्रुमः ॥ (तुदा०-
पर०-सक०-सेट् ।) श, पुरति ज्येष्ठः कनिष्ठस्य
अग्रे गच्छतीत्यर्थः । पोरिता । इति दुर्गादासः ॥

**पुरं**, क्ली, (प्रियते पूर्य्यते इति । पॄलि पूर्त्तौ + कः ।)
गेहः । देहः । पाटलिपुत्त्रः । पुष्पादीनां दला-
वृत्तिः । इति मेदिनी । रे, ५८ -- ५९ ॥ नागर-
मुस्ता । इति रत्नमाला ॥ चर्म्म इति शब्दरत्ना-
बली ॥ गृहोपरिगृहम् । इति विश्वः ॥

**पुरं**, क्ली, स्त्री, (पिपर्त्तीति । पॄ + मूलविभुजादि-
त्वात् कः । यद्वा, पुरति अग्र गच्छतीति । पुर +
“इगुपधज्ञाप्रीकिरः कः ।” ३ । १ । १३५ । इति कः ।)

द्वितीये वापि वीथ्यग्रे राजवेश्म विधीयते ।
धर्म्माधिकरणं कार्य्यं वीथ्यग्रे च तृतीयके ॥
चतुर्थे चैव वीथ्यग्रे गोपुरन्तु विधीयते ॥
आयतं चतुरस्रं वा वृत्तं वा कारयेत् पुरम् ।
मुक्तिहीनं त्रिकोणञ्च यवमध्यन्तथैव च ॥
अर्द्धचन्द्रप्रकारञ्च वजाकारञ्च कारयेत् ॥
अर्द्धचन्द्रं प्रशंसन्ति नदीतीरेषु तद्वसेत् ।
अन्यत्र तन्न कर्त्तव्यं प्रयत्नेन विजानता ॥
राज्ञा कारागृहं कार्य्यं दक्षिणे राजवेश्मनः ।
तस्यापि दक्षिणे भागे गजस्थानं विधीयते ॥
गजानां प्राङ्मुखा शाला कर्त्तव्या वाप्युदङ्मुखा ।
आग्नेये च तथा भागे आयुधागारमिष्यते ॥
महानसञ्च धर्म्मज्ञ ! कर्म्मशालास्तथापराः ।
गृहं पुरोधसः कार्य्यं वामतो राजवेश्मनः ॥
मन्त्रिवेदविदाञ्चैव चिकित्साकर्त्तरेव च ।
तत्रैव च तथा भागे कोष्ठागारं विधीयते ॥
गवां स्थानं तथैवात्र तुरगाणान्तथैव च ।
उत्तराभिमुखा श्रेणी तुरगाणां विधीयते ॥
दक्षिणाभिमुखा वाथ परिशिष्टास्तु गर्हिताः ।
तुरगास्तु तथा धार्य्याः प्रदीपैः सार्व्वरात्रिकैः ॥
कुक्कुटान् वानरांश्चैव मर्कटांश्च नराधिप ! ।
धारयेदश्वशालायां सवत्सां धेनुमेव च ॥
अजाश्च धार्य्या यत्नेन तुरगाणां हितैषिणा ।

शालपर्णी पृश्निपर्णी मुद्गपर्णी तथैव च ॥
माषपर्णी च मेदे द्वे शारिवे द्वे वलात्रयम् ।
वीरा श्वसन्ती वृष्टीया बृहती कण्टकारिका ॥
भृङ्गी शृङ्गाटकी द्रोणी वर्षाभूर्दर्भरेणुका ।
मधुपर्णी विदार्य्यौ द्वे महाक्षुद्रा महातपा ॥
धन्वना सह देवाह्वा कटुकैरण्डकं विषम् ।
पर्णाशनाकमृद्वीका फल्गुखर्ज्जूरयष्टिका ॥
शुक्रातिशुक्रकाश्मर्य्यच्छत्रातिच्छत्रवीरणाः ॥
इक्षुरिक्षुविकाराश्च फाणिताद्याश्च सत्तम ! ।
सिंही च सहदेवी च विश्वेदेवाटरूषकम् ॥
मधुकं पुष्पकं साक्षा शतपुष्पा मधूलिका ।
शतावरीमधूके च पियालन्तालमेव च ॥
आत्मगुप्ता कट्फलाख्या दारदा राजशीर्षिका ।
राजसर्षपधन्याकमृष्यप्रोक्ता तथोत्कटा ॥

| हट्टादिविशिष्टस्थानम्। इति श्रीधरस्वामी ॥ बहुग्रामीयव्यवहारस्थानम्। इत्यमरटीकायां भरतः ॥ तत्पर्य्यायः। पूः २ पुरी ३ नगरम् ४ | गोगजाश्वादिशालासु तत्पुरीषस्य निर्गमम्। अस्तं गते न कर्त्तव्यं देवदेवे दिवाकरे ॥ ततस्तत्र यथास्थानं राजा विज्ञाय सारथिम्। दद्यादावसथस्थानं सर्व्वषामनुपूर्ब्बशः ॥ योधानां शिल्पिनाञ्चैव सर्व्वेषामविशेषतः। | |
|---|---|---|

कालशाकं पद्मबीजं गोवल्ली मधुवल्लिका ।
शीतपाकी कुलिङ्गाक्षी काकजिह्वोरुपत्रिका ॥
इर्व्वारुत्रपुषौ चोभौ गुञ्जारकपुनर्नवे ।
कशेरुका तु काश्मीरी विश्वशालूककेशरम् ॥
* ॥
शूकधान्यानि सर्व्वाणि शमीधान्यानि यानि च
।
क्षीरं क्षौद्रं तथा शुक्रं मज्जा तैलं वसा घृतम् ॥
निकोचाभिषुकास्फोटंवातासामारुमालकम् ।
एवमादीनि चान्यानि विज्ञेयो मधुरो गणः ॥
राजा सञ्चिनुयात् सर्व्वं पुरे निरवशेषतः ।
दाडिमाम्रातकाम्राश्च तिन्तिडीकाम्लवेतसम् ॥
भव्यं कर्कन्धु लकुचं करमर्द्दकरूषकम् ।
बीजपूरककाण्डीरं मालती राजबन्धुकम् ॥
कौटकद्वयपर्णानि द्वयोरम्लिकयोरपि ।
पारेवतं नागरकं प्राचीनारुकमेव च ॥
कपित्थामलकी चुक्रं फलं दन्तशठस्य च ।
जम्बीरं नवनीतञ्च सौवीरकतुषोदके ॥
सुरारसञ्च मद्यानि मण्डतक्रदधीनि च ।
शुक्तानि चैव सर्व्वाणि ज्ञेयान्यम्लगणं द्विजाः ॥
एवमादीनि सर्व्वाणि राजा सञ्चिनुयात् पुरे ॥
सैन्धवोद्भिदपाठ्येपाक्यसामुद्ररोमकम् ।
कुप्यसौवर्च्चलविटं बालकेयं यवाह्वयम् ॥
औषक्षारं कालभस्म विज्ञेयो लवणो गणः ।
एवमादीनि सर्व्वाणि राजा सञ्चिनुयात् पुरे ॥
पिप्पली पिप्पलीमूलं चव्यचित्रकनागरम् ।
कुठेरकं समरिचं शिग्रुभल्लातसर्षपाः ॥
कुष्ठाजमोदा किणिही हिङ्गुमूलकधान्यकम् ।
कारवी कुञ्चिकाजाज्यः सुमुखः कालमालिका
॥
फणिज्झकोऽथ लशुनं भूस्तृणं सुरसस्तथा ।
कायस्था च वयःस्था च हरितालं मनःशिला
॥
अमृता च रुदन्ती च रोहिषं कुङ्कुमं तथा ।
वचा एरण्डकाण्डीरं शल्लकी हपुषा तथा ॥
सर्व्वपित्तानि मूत्राणि प्रायो हरितकानि च ।
सङ्गराणि च मूलानि षष्टिखारिविषाणि च ॥
फलानि चैव च तथा सूक्ष्मैला हिङ्गुपत्रिका ।
एवमादीनि चान्यानि गणः कटुकसंज्ञकः ।

प्रियङ्गुधातकीपुष्पं
मोचलोध्राज्जुर्नासनाः ।
अनन्तान्त्री मुरानङ्गा श्योनाकं कड्यलं
तथा ॥
भूर्जपत्रं शिलोद्भेदं पाटलापत्रलोमकम् ।
समङ्गा त्रिवृतामूलं कार्पासा
गैरिकाञ्जनम् ॥
विद्रुमं समघूच्छिष्टं
कुम्भीकाकुमुदोत्पलम् ।
न्यग्रोधोदुम्बराश्वत्थकिंशुका शिंशपा
शमी ॥
पियालपिलुका शालशिरीषं पद्मकन्तथा
।
विल्वोऽग्निमन्थः प्लक्षश्च
श्यामाकयवकोद्रवम् ॥
राजादनं करीरञ्च धान्यकप्रियकौ तथा
।
शाकोटाशोकवदराः कदम्बखदिरद्वयम्
॥
एषां पत्राणि साराणि मूलानि कुसुमानि
च ।
एवमादीनि चान्यानि कषायाख्यो गणो
मतः ॥
प्रयत्नेन नृपश्रेष्ठः ! राजा सञ्चिनुयात्
पुरे ।
कीटाश्च मारणे योग्या व्यङ्गतायान्तथैव
च ॥
वातधूमाम्बुमार्गाणां दूषणानि तथैव च ।
धार्य्याणि पार्थिवैर्दुर्गे तानि वक्ष्यामि
भारत ! ॥
विषाणान्धारणं कार्य्यं प्रयत्नेन
महीभुजा ।
विचित्राश्च गदा धार्य्या
विषप्रशमनास्तथा ॥
रक्षोभूतपिशाचघ्नाः पापघ्नाः
पुष्टिवर्द्धनाः ।
कलाविदश्च पुरुषाः पुरे धार्य्याः
प्रयत्नतः ॥

"उदेति पूर्ब्बं कुसुमं ततः फलं
घनोदयः प्राक् तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं विधि-
स्तव प्रसादस्य पुरस्तु सम्पदः ॥")
पुरार्थे । अतीते । इति तट्टीकायां भरतः
॥

**पुरःसरः**, त्रि, (पुरोऽग्रे सरति गच्छतीति । सृ +
"पुरोऽग्रतोऽग्रेषु सर्त्ते ।" ३ । २ । ११८ ।
इति
टः ।) अग्रगामी । इत्यमरः । २ । ८ ।
७२ ॥ (यथा,
महाभारते । ४ । १९ । २२ ।
"यस्याः पुरःसरा ह्यासन्
पृष्ठतश्चानुयायिनः ।
साहमद्य सुदेष्णायाः पुरःपश्चाच्च
गामिनी ॥")
अस्य पर्य्यायः अग्रसरशब्दे द्रष्टव्यः ॥

**पुरञ्जनः**, पुं, (परं देहक्षेत्रं जनयतीति । जनि +
बाहुलकात् खः ।) जीवः । यथा, --
"पुरुषं पुरञ्जनं विद्यात्
यद्व्यनक्त्यात्मनः पुरम् ।
एकद्वित्रिचतुष्पादं बहुपादमपादकम् ॥"
इति श्रीभागवते । ४ । २९ । २ ॥

**पुरञ्जनी**, स्त्री, (पुरञ्जन + गौरादित्वात् ङीष् ।)
बुद्धिः । यथा, --
"न विदाम वयं सम्यक् कर्त्तारं पुरुषर्षभ !
।
आत्मनश्च परस्यापि गोत्रं नाम च
यत्कृतम् ॥
राजन् ! मदीयाः सर्व्वेते मामाहुश्च
पुरञ्जनीम् ॥"
"बुद्धिन्तु प्रमदां विद्यान्ममाहमिति यत्
कृतम् ।
यामधिष्ठाय देहेऽस्मिन् पुमान्
भुङ्क्तेऽक्षिभि-
र्गुणान् ॥"

राजा सञ्चिनुयाद्दुर्गे प्रयत्नेन नृपोत्तम ! ॥ * ॥
मुस्तचन्दनह्रीवेरकृतमालकदारवः ।
हरिद्रामलकोशीरं रक्तमालकवस्तुकम् ॥
दूर्व्वापटोलकटुकादन्तित्वक्पत्रकच्छुराः ।
किराततिक्तकं निम्बं विषा चातिविषा तथा ॥
तालीशपत्रं तगरं सप्तपर्णविकङ्कताः ।
काकोडुम्बरकोदीच्यसुषव्यः किणिही तथा ॥
षड्ग्रन्था रोहिणी मांसी पर्पटं मदयन्तिका ।
रसाञ्जनं भृङ्गराजं पतङ्गी परिपेलवम् ॥
दुष्पर्शा गुरुणी कामा श्यामाकं गन्धनाकुली ।
चतुष्पर्णी व्याघ्रनखमम्बका चतुरङ्गुला ॥
रम्भा चैव कुथापुष्पी तारास्फोता हरेणुका ।
वेत्राग्रो वेतसस्तुम्बी विषाणी लोहमञ्जनम् ॥
मालती करतिक्ताख्या विषाङ्गी जिह्विका तथा
।
पर्य्यटञ्च गुडूची च गणस्तिक्तकसंज्ञकः ॥
एवमादीनि चान्यानि राजा सञ्चिनुयात् पुरे ।
अभयामलके चोभे तथैव च विभीतकम् ॥

भीतान् प्रमत्तान् कुपितान् तथैव च
विमानि-
तान् ।
कुभृत्यान् पापशीलांश्च न राजा
वासयेत् पुरे ॥
यन्त्रायुधाट्टालचयोपपन्नं
समप्रधान्यौषधिसंप्रयुक्तम् ।
बणिग्जनैश्चान्वितमावसेत
दुर्गं सुगुप्तं नृपतिः सदैव ॥”
इति मात्स्ये राजधर्म्मे दुर्गसम्पत्तिर्नाम
१९१
अध्यायः ॥ * ॥ पुरे वर्णनीयानि यथा,
--
“पुरे हट्टप्रतोली च परिखातोरणध्वजाः
।
प्रासादाध्वप्रपारामवापीवेश्याः सती
त्वरी ॥”
इति कविकल्पलता ॥
अवशिष्टं नगरशब्दे द्रष्टव्यम् ॥

**पुरः**, पुं, (पिपर्त्तीति । पॄ + कः ।) गुग्गुलुः ।

इत्यमरः । २ । ४ । ३६ ॥ (अस्य
पर्य्यायो यथा, --
“गुग्गुलुर्देवधूपश्च जटायुः कौशिकः
पुरः ।
कुम्भोलूखलकं क्लीवे महिषाक्षः
पलङ्कषः ॥”
“अम्लं तीक्ष्णमजीर्णञ्च व्यवायं
श्रममातपम् ।
मद्यं रोषन्त्यजेत् सम्यग्गुणार्थी
पुरसेवकः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)
पीतझिण्टी । इति शब्दचन्द्रिका ॥

**पुरः**, [स्] व्य, (पूर्ब्बस्मिन् पूर्ब्बस्मात् पूर्ब्बो वा

एवं पूर्ब्बस्याः पूर्ब्बस्यामित्यादि । पूर्ब्ब
+ “पूर्ब्बा-
धरावराणामसि पुरधवश्चैषाम् ।” ५ ।
३ । ३९ ।
इति असि तद्योगेन पुर् इत्यादेशश्च ।)
अग्रतः ।

इति श्रीभागवते । ४ स्कन्धे । २५ । २९
अध्यायौ ॥

**पुरञ्जयः**, पुं, (पुरं शत्रुपुरं जयतीति । जि + खच् ।)

सूर्य्यवंशीयराजविशेषः । तत्पर्य्यायः ।
काकुस्थः
२ । इति त्रिकाण्डशेषः ॥ (यथा, भागवते
।
९ । ६ । १२ ।
“पितर्य्युपरतेऽभ्येत्य विकुक्षिः
पृथिवीमिमाम् ।
शासदीजे हरिं यज्ञैः शशाद इति विश्रुतः
॥
पुरञ्जयस्तस्य सुत इन्द्रवाह इतीरितः ।
ककुस्थ इति चाप्युक्तः शृणु नामानि
कर्म्मभिः ॥”
पूरुवंशीयः सृञ्जयपुत्त्रः । यथा, हरिवंशे ।
३१ । १८ ।
“सृञ्जयस्याभवत् पुत्त्रो वीरो राजा
पुरञ्जयः ।
जनमेजयो महाराज ! पुरञ्जयसुतोऽभवत्
॥”
पुरं जयतीति । पुर + जि + खच् ।)
पुरजय-
कर्त्तरि, त्रि ॥ (यथा, महाभारते । १ ।
१०२ । ४५ ।
“स्वान्येव तेऽपि राष्ट्राणि जग्मुः
परपुरञ्जय ! ॥”)

**पुरटं**, क्ली, (पुरति अग्रे गच्छतीति । पुर +

बाहुलकात् अटन् ।) सुवर्णम् । यथा, --
“हरिः पुरटसुन्दरद्युतिकदम्बसन्दीपितः
सदा हृदयकन्दरे स्फरतु वः शचीनन्दनः
॥”
इति विदग्धमाधवः ॥

**पुरणः**, पुं, (पिपर्त्ति पूर्य्यते वेति । पॄ पालनादौ +

“कृपॄवृजिमन्दिनिधाञः क्युः ।” उणा०
२ । ८१ ।
इति क्युः । उत्वं रपरत्वञ्च ।) समुद्रः ।
इत्युणा-
दिकोषः ॥

| | | |
|---|---|---|
| | इत्यमरः । ३ । ४ । ७ ॥ (यथा, कुमारे । ४ । ३ ।<br>"अयि जीवितनाथ ! जीवासी-<br>त्यभिधायोत्थितया तया पुरः ।<br>ददृशे पुरुषाकृति क्षितौ<br>हरकोपानलभस्म केवलम् ॥")<br>प्राच्यां दिशि । प्रथमे काले । (यथा, अभि-<br>ज्ञानशकुन्तलायाम् । ७ अङ्के । | |

**पुरतः**, [स्] व्य, (पुरति अग्रे गच्छतीति । पुर +
बाहुलकात् अतसुच् ।) अग्रतः । इत्यमरः । ३ । ४ । ७ ॥ (यथा, राजतरङ्गिण्याम् । १ । १०७ ।
“निर्गते मञ्जरीकुञ्जादपश्यत् पुरतस्ततः ।
कन्ये नीलनिचोलिन्यौ स केचिच्चारुलोचने ॥”)

**पुरतटी**, स्त्री, (पुरस्थिता तटीव ।) हट्टी । क्षुद्र-
हट्टः । इति हारावली । १६४ ॥

**पुरद्वारं**, क्ली, (पुरस्य द्वारम् ।) नगरद्वारम् ।
तत्पर्य्यायः । गोपुरम् २ । इत्यमरः । २ । २ । १६ ॥
(यथा, मनुः । ५ । ९२ ।
“दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत् ।
पश्चिमोत्तरपूर्ब्बैस्तु यथायोगं द्विजम्मनः ॥”)

**पुरद्विट्**, [ष्] पुं, (पुरं द्वेष्टीति । द्विष् + क्विप् ।
मयनिर्म्मितानां पुरविशेषाणां दाहकत्वादस्य
तथात्वम् ।) शिवः । इति जटाधरः ॥ (यथा,
भागवते । ४ । ६ । ७ ।
“स इत्थमादिश्य सुरानजस्तु तैः
समन्वितः पितृभिः सप्रजेशैः ।
ययौ सधिष्ण्यान्निलयं पुरद्विषः
कैलासमद्रिप्रवरं प्रियं प्रभोः ॥”)

**पुरन्दरं**, क्ली, (पुर् + दारि + खच् ।) चविकम् ।
इति शब्दचन्द्रिका ॥

**पुरन्दरः**, पुं, (अरीणां पुरो दारयतीति । दॄ +
णिच् + “पूःसर्व्वयोर्दारिसहोः ।” ३ । २ । ४१ ।

मन्त्रजपहोमतर्पणाभिषेकब्राह्मणभोजनरूपप-
ञ्चाङ्गकसाधना । यथा, योगिनीहृदये ।
“गुरोराज्ञां समादाय शुद्धान्तःकरणो नरः ।
ततः पुरस्क्रियां कुर्य्यान्मन्त्रसंसिद्धिकाम्यया ॥
जीवहीनो यथा देही सर्व्वकर्म्मसु न क्षमः ।
पुरश्चरणहीनोऽपि तथा मन्त्रः प्रकीर्त्तितः ॥
तस्मादादौ स्वयं कुर्य्यात् गुरुं वा कारयेद्बुधः ।
गुरोरभावे विप्रं वा सर्व्वप्राणिहिते रतम् ।
स्निग्धं शास्त्रविदं मित्रं नानागुणसमन्वितम् ॥
स्त्रियं वा सद्गुणोपेतां सपुत्त्रां विनियोजयेत् ॥
आदौ पुरस्क्रियां कर्त्तुं स्थाननिर्णय उच्यते ॥”
योगिनीहृदये ।
“पुण्यक्षेत्रं नदीतीरं गुहापर्व्वतमस्तकम् ।
तीर्थप्रदेशाः सिन्धूनां सङ्गमः पावनं वनम् ॥
उद्यानानि विविक्तानि विल्वमूलं तटं गिरेः ॥
तुलसीकाननं गोष्ठं वृषशून्यं शिवालयम् ॥
अश्वत्थामलकीमूलं गोशालाजलमध्यतः ।
देवतायतनं कूलं समुद्रस्य निजं गृहम् ॥
साधनेषु प्रशस्तानि स्थानान्येतानि मन्त्रिणाम् ।
अथवा निवसेत्तत्र यत्र चित्तं प्रसीदति ॥” * ॥
तथा ।
“गृहे शतगुणं विद्याद्गोष्ठे लक्षगुणं भवेत् ।
कोटिर्देवालये पुण्यमनन्तं शिवसन्निधौ ॥
म्लेच्छदुष्टमृगव्यालशङ्कातङ्कविवर्ज्जिते ।
एकान्तपावने निन्दारहिते भक्तिसंयुते ॥
सुदेशे धार्म्मिके देशे सुभिक्षे निरुपद्रवे ।
रम्ये भक्तजनस्थाने निवसेत् तापसः प्रिये ! ॥
गुरूणां सन्निधाने च चित्तैकाग्रस्थले तथा ।
एषामन्यतमस्थानमाश्रित्य जपमाचरेत् ॥
यत्र ग्रामे जपेन्मन्त्री तत्र कूर्म्मं विचिन्तयेत् ॥”
गौतमीये ।
“पर्व्वते सिन्धुतीरे वा पुण्यारण्ये नदीतटे ।
यदि कुर्य्यात् पुरश्चर्य्यां तत्र कूर्म्मं न चिन्तयेत् ॥”
विल्वमूलादावपि कूर्म्मचिन्ता नास्ति तदुक्तं
वैशम्पायनसंहितायाम् ।
“पुण्यक्षेत्रं गृही तीर्थं देवतायतनं शुभम् ।
नदीतीरं तथा सिन्धुसङ्गमोऽतिमनोहरः ॥
पर्व्वतस्य गुहाश्चैव तथा पर्व्वतमस्तकम् ।
विल्वमूलं समुद्रश्च वनमुद्यानमेव च ॥
एषु स्थानेषु विप्रेन्द्र ! कूर्म्मचक्रं न चिन्तयेत् ।

आम्रमामलकञ्चैव पनसञ्च हरीतकी ॥
व्रतान्तरे प्रशस्तञ्च हविष्यं मन्यते बुधैः ॥”
व्रतान्तर इति ।
“हैमन्तिकं सितास्विन्नं धान्यं मुद्गास्तिला यवाः ।
कलायकङ्गुनीवारा वास्तूकं हिलमोचिका ॥
षष्टिका कालशाकञ्च मूलकं केमुकेतरत् ।
लवणे सैन्धवसामुद्रे गव्ये च दधिसर्पिषी ॥
पयोऽनुद्धृतसारञ्च पनसाम्रहरीतकी ।
पिप्पली जीरकञ्चैव नागरङ्गञ्च तिन्तिडी ॥
कदलीलवलीधात्रीफलानिगुडमैक्षवम् ।
अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते ॥
भुञ्जानो वा हविष्यान्नं शाकं यावकमेव वा ।
पयो मूलं फलं वापि यत्र यत्रोपलभ्यते ॥
रम्भाफलं तिन्तिडीकं कमला नागरङ्गकम् ।
फलान्येतानि भोज्यानि एभ्योऽन्यानि विवर्ज्ज-
येत् ॥”
यत्तु योगिनीतन्त्रे ।
“चिञ्चाञ्च नालिकाशाकं कलायं लकुचं तथा ।
कदम्बं नारिकेलञ्च व्रते कुष्माण्डकं त्यजेत् ॥”
तत्तु व्रतान्तरे बोध्यम् । चिञ्चा तिन्तिडी ॥ * ॥
अथ वर्ज्यानि ।
“विवर्ज्जयेन्मधु क्षारलवणं तैलमेव च ।
ताम्बूलं कांस्यपात्रञ्च दिवाभोजनमेव च ॥”
तथा ।
“क्षारञ्च लवणं मांसं गृञ्जनं कांस्यभोजनम् ।
माषाढकीमसूरांश्च कोद्रवांश्चणकानपि ॥
अन्नं पर्य्युषितञ्चैव निःस्नेहं कीटदूषितम् ॥”
रामार्च्चनचन्द्रिकायाम् ।
“मैथुनं तत्कथालापं तद्गोष्ठीः परिवर्ज्जयेत् ।
ऋतुकालं विना मन्त्री स्वस्त्रियं नैव गच्छति ॥
लवणञ्च पलञ्चैव क्षारं क्षौद्रं रसान्तरम् ।
कौटिल्यं क्षौरमभ्यङ्गमनिवेदितभोजनम् ॥
असङ्कल्पितकृत्यञ्च वर्ज्जयेन्मर्द्दनादिकम् ।

इति खच् । “वाचं यमपुरन्दरौ च ।” ६ । ३ । ६१ ।
इति निपातितः ।) इन्द्रः । इत्यमरः । १ । १ । ४४ ॥
(यथा, महाभारते । ३ । १०१ । ९ ।
“कालेयभयसन्त्रस्तो देवः साक्षात् पुरन्दरः ।
जगाम शरणं शीघ्रं तन्तु नारायणं प्रभुम् ॥”
पुरं गेहं दारयतीति । दारि + खच् । निपा-
तितः ।) चौरः । यथा, --
“समांसमीना यदि पाकशाला
समांसमीना दश धेनवः स्युः ।
पुरन्दरस्याविषयं यदि स्यात्
पुरन्दरस्यापि पुरं न याचे ॥”
इत्युद्भटः ॥

**पुरन्दरा**, स्त्री, (पुरं दारयति प्रवाहैरिति ।
दारि + खच् । निपातनात् साधुः ।
ततष्टाप् ।)
गङ्गा । इति हारावली ॥

**पुरन्ध्रिः**, स्त्री, (स्वजनसहितं पुरं धारयतीति ।
धृञ + खच् । गौरादित्वात् ङीष् ।
पृषोदरादित्वात् ह्रस्वो वा ।)
षतिपुत्त्रदुहि-
त्रादिमती । इति भरतः ॥
तत्पर्य्यायः । कुटु-
म्बिनी । इत्यमरः । २ । ६ । ६ ॥
(यथा, रघुः । ७ । २८ ।

**पुरन्ध्री** स्त्री, (स्वजनसहितं पुरं धारयतीति ।
धृञ + खच् । गौरादित्वात् ङीष् ।
पृषोदरादित्वात् ह्रस्वो वा ।)
षतिपुत्त्रदुहि-
त्रादिमती । इति भरतः ॥
तत्पर्य्यायः । कुटु-
म्बिनी । इत्यमरः । २ । ६ । ६ ॥
(यथा, रघुः । ७ । २८ ।
“तौ स्नातकैर्बन्धुमता च राज्ञा
पुरन्ध्रिभिश्च क्रमशः प्रयुक्तम् ।
ग्रामे वा यदि वा वास्तौ गृहे तञ्च विचिन्त-
येत् ॥”
अथ पुरश्चरणे भक्ष्यादिनियमः ।
गौतमीये ।
“पुरश्चरणकृन्मन्त्री भक्ष्याभक्ष्यं विचारयेत् ।
अन्यथा भोजनाद्दोषात् सिद्धिहानिः प्रजायते ॥
शस्तान्नञ्च समश्नीयात् मन्त्रसिद्धिसमीहया ।
तस्मान्नित्यं प्रयत्नेन शस्तान्नाशी भवेन्नरः ॥”
अगस्त्यसंहितायाम् ।
“दधि क्षीरं घृतं गव्यं ऐक्षवं गुडवर्ज्जितम् ।
तिलाश्चैव सिता मुद्गाः कन्दः केमुकवर्ज्जितः ॥
नारिकेलफलञ्चैव कदली लवली तथा ।
स्नायाच्च पञ्चगव्येन केवलामलकेन वा ॥
मन्त्रजप्तान्नपानीयैः स्नानाचमनभोजनम् ।
कुर्य्याद्यथोक्तविधिना त्रिसन्ध्यं देवतार्च्चनम् ॥
अपवित्रकरो नग्नः शिरसि प्रावृतोऽपि वा ।
प्रलपन् प्रजपेद्यावत्तावत् निष्फलमुच्यते ॥”
नारदीये ।
“मृदु सोष्णं सुपक्वञ्च कुर्य्याद्वै लघु भोजनम् ।
नेन्द्रियाणां यथा वृद्धिस्तथा भुञ्जीत साधकः ॥”
कुलार्णवेऽपि ।
“यस्यान्नपानपुष्टाङ्गः कुरुते धर्म्मसञ्चयम् ।
अन्नदातुः फलस्यार्द्धं कर्त्तुश्चार्द्धं न संशयः ॥
तस्मात् सर्व्वप्रयत्नेन परान्नं वर्ज्जयेत् सुधीः ।
पुरश्चरणकालेषु सर्व्वकर्म्मसु शाम्भवि ! ॥
जिह्वा दग्धा परान्नेन करौ दग्धौ प्रतिग्रहात् ।
परस्त्रीभिर्म्मनो दग्धं कथं सिद्धिर्व्वरानने ! ॥”
परान्नं भिक्षितेतरविषयम् । भिक्षायां तस्य स्वत्वोत्पादात् । तथा च ।
“वैदिकाचारयुक्तानां शुचीनां श्रीमतां सताम् ।
सत्कुलस्थानजातानां भिक्षाशी
चाग्रजन्मनाम् ॥

| | | |
|---|---|---|
| कन्याकुमारौ कनकासनस्थौ<br>आर्द्राक्षतारोपणमन्वभूताम् ॥”)<br>स्त्रीमात्रम् । इति राजनिर्घण्टः ॥<br><br>**पुरश्चरणं**, क्ली, (पुरोऽग्रतश्चरणं मन्त्रजपादि-<br><br>पञ्चाङ्गकर्म्माचरणमिति ।)<br>पुरस्क्रिया । सा तु<br>स्वेष्टदेवतामन्त्रसिद्ध्यर्थं<br>तद्देवतापूजापूर्ब्बकं तन्- | | |

विहाय वह्निं नहि वस्तु किञ्चित्
ग्राह्यं परेभ्यः सति सम्भवे च ।
असम्भवे तीर्थबहिर्व्विशुद्धात्
पर्व्वातिरिक्ते प्रतिगृह्य जप्यात् ॥
तत्रासमर्थोऽनुदिनं विशुद्धात्
याचेत यावद्दिनमात्रभैक्ष्यम् ।
गृह्णाति रागादधिकं न सिद्धिः
प्रजायते कल्पशतैरमुष्य ॥ * ॥
सकृदुच्चरिते शब्दे प्रणवं समुदीरयेत् ।
प्रोक्ते पारशवे शब्दे प्राणायामं सकृच्चरेत् ॥
बहुप्रलापी आचम्य न्यस्याङ्गानि ततो जपेत् ।
क्षुतेऽप्येवं तथास्पृश्यस्थानानां स्पर्शनेन च ॥
एवमादींश्च नियमान् पुरश्चरणकृच्चरेत् ॥
विण्मूत्रोत्सर्गशङ्कादियुक्तः कर्म्म करोति यत् ।
जपार्च्चनादिकं सर्व्वमपवित्रं भवेत्प्रिये ! ॥
मलिनाम्बरकेशादिमुखदौर्गन्ध्यसंयुतः ।
यो जपेत्तं दहत्याशु देवता गुप्तिसंस्थिता ॥
आलस्यं जृम्भणं निद्रां क्षुतं निष्ठीवनं भयम् ।
नीचाङ्गस्पर्शनं कोपं जपकाले विवर्ज्जयेत् ॥ * ॥
एवमुक्तविधानेन विलम्बं त्वरितं विना ।
उक्तसंख्यं जपं कुर्य्यात् पुरश्चरणसिद्धये ॥
देवतागुरुमन्त्राणामैक्यं सम्भावयन् धिया ।
जपेदेकमनाः प्रातःकालं मध्यन्दिनावधि ॥
यत्सङ्ख्यया समारब्धं तत् कर्त्तव्यं दिने दिने ।
यदि न्यूनाधिकं कुर्य्यात् व्रतभ्रष्टो भवेन्नरः ॥”
मुण्डमालायाम् ।
“यत्सङ्ख्यया समारब्धं तत् जप्तव्यं दिने दिने ।
न्यूनाधिकं न कर्त्तव्यमासमाप्तं सदा जपेत् ॥
प्रजपेदुक्तसङ्ख्यायाश्चतुर्गुणजपं कलौ ॥”
अन्यत्रापि ।
“कृते जपस्तु कल्पोक्तस्त्रेतायां द्विगुणो मतः ।
द्वापरे त्रिगुणः प्रोक्तश्चतुर्गुणजपः कलौ ॥”
कुलार्णवेऽपि ।
“न्यूनातिरिक्तकर्म्माणि न फलन्ति कदाचन ।
यथाविधिकृतान्येव सत्कर्म्माणि फलन्ति हि ॥
भूशय्या ब्रह्मचारित्वं मौनमाचार्य्यसेविता ।
नित्यपूजा नित्यदानं देवतास्तुतिकीर्त्तनम् ॥
त्यजेदुष्णोदकस्नानमन्यदेवप्रपूजनम् ॥”
तत्रैव ।
“नैकवासा जपेन्मन्त्रं बहुवासाकुलोऽपि वा ॥”
वैशम्पायनसंहितायाम् ।
“विपर्य्यासं स कुर्य्याच्च कदाचिदपि मोहतः ।
उपर्य्यधो बहिर्व्वस्त्रे पुरश्चरणकृन्नरः ॥
पतितानामन्त्यजानां दर्शने भाषणे श्रुते ।
क्षुतेऽधोवायुगमने जृम्भणे जपमुत्सृजेत् ॥
तथा तस्य च तत्प्राप्तौ प्राणायामं षडङ्गकम् ।
कृत्वा सम्यक् जपेत् शेषं यद्वा सूर्य्यादिदर्शनम् ॥”
आदिशब्दाद्वह्निं ब्राह्मणञ्च ॥ * ॥ तन्त्रान्तरे ।
“मनःसंहरणं शौचं मौनं मन्त्रार्थचिन्तनम् ।
अव्यग्रत्वमनिर्व्वेदो जपसम्पत्तिहेतवः ॥ * ॥
उष्णीशी कञ्चुकी नग्नो मुक्तकेशो गणावृतः ।
अपवित्रकरोऽशुद्धः प्रलपन्न जपेत् क्वचित् ॥
अनासनः शयानो वा गच्छन् भुञ्जान एव वा ।
अप्रावृतौ करौ कृत्वा शिरसा प्रावृतोऽपि वा ॥
चिन्ताव्याकुलचित्तो वा क्षुब्धो भ्रान्तः क्षुधा-
न्वितः ।
रथ्यायामशिवस्थाने न जपेत्तिमिरालये ॥
उपानद्गूढपादो वा यानशय्यागतोऽपि वा ।
प्रसार्य्य न जपेत् पादावुत्कटासन एव च ।
न यज्ञकाष्ठे पाषाणे न भूमौ नासने स्थितः ॥”
तथा ।
“मार्ज्जारं कुक्कुटं क्रौञ्चं श्वानं शूद्रं कपिं खरम् ।
दृष्ट्वाचम्य जपेत् शेषं स्पृष्ट्वा स्नानं विधीयते ॥”
सन्ध्यात्रये पूजाङ्गत्वाज्जपमष्टोत्तरशतमित्यर्थः ॥
“एकदा वा भवेत् पूजा न जपेत् पूजनं विना ।
जपान्ते वा भवेत् पूजा पूजान्ते वा जपेन्मनुम् ॥
प्रातःकालं समारभ्य जपेन्मध्यन्दिनावधि ॥”
मध्यन्दिनावधीति न नियमपरं किन्त्वधिककाल-
व्यवच्छेदपरम् । अन्यथा तत्समयजपनियमे
कदाचित् जिह्वाया जाड्याजाड्येन वा प्रति-
नियतदिवसीयजपसङ्ख्यायाअपूर्णत्वे अधिकत्वे
वा नियमभङ्गः स्यात् ॥ * ॥
“मनः संहृत्य विषयान्मन्त्रार्थगतमानसः ।
न द्रुतं न विलम्बञ्च जपेन्मौक्तिकपंक्तिवत् ॥ * ॥
जपः स्यादक्षरावृत्तिर्मानसोपांशुवाचिकैः ।
धिया यदक्षरश्रेणीं वर्णस्वरपदात्मिकाम् ॥
उच्चरेदर्थमुद्दिश्य मानसः स जपः स्मृतः ॥”
मन्त्रनिर्णये ।
“मानसं मन्त्रवर्णस्य चिन्तनं मानसः स्मृतः ।
जिह्वोष्ठौ चालयेत् किञ्चिद्देवतागतमानसः ॥
किञ्चित् श्रवणयोग्यः स्यात् उपांशुः स जपः
स्मृतः ।
मन्त्रमुच्चारयेद्वाचा वाचिकः स जपः स्मृतः ॥
उच्चैर्ज्जपाद्विशिष्टः स्यादुपांशुर्द्दशभिर्गुणैः ।
जिह्वाजपः शतगुणः सहस्रो मानसः स्मृतः ॥”
प्रकारान्तरम् ।

नित्यं त्रिसवनं स्नानं क्षुद्रकर्म्मविवर्ज्जनम् ।
नैमित्तिकार्च्चनञ्चैव विश्वासो गुरुदेवयोः ॥
जपनिष्ठा द्वादशैते धर्म्माः स्युर्म्मन्त्रसिद्धिदाः ॥
स्त्रीशूद्रपतितव्रात्यनास्तिकोच्छिष्टभाषणम्।
असत्यभाषणं जिह्मभाषणं परिवर्ज्जयेत् ॥
सत्येनापि न भाषेत जपहोमार्च्चनादिषु ।
अन्यथानुष्ठितं सर्व्वं भवत्येव निरर्थकम् ॥
पुरश्चरणकाले तु यदि स्यान्मृतसूतकम् ।
तथा च कृतसङ्कल्पो व्रतं नैव परित्यजेत् ॥"
योगिनीहृदये ।
"शयीतकुशशय्यायां शुचिवस्त्रधरः सदा ।
प्रत्यहं क्षालयेत् शय्यामेकाकी निर्भयः स्वपेत्
॥
असत्यभाषणं वाचं कुटिलां परिवर्ज्जयेत् ।
वर्ज्जयेद्गीतवाद्यादिश्रवणं नृत्यदर्शनम् ॥
अभ्यङ्गं गन्धलेपञ्च पुष्पधारणमेव च ।

सर्व्वत्र जपे त्वयं नियमः ॥ मानसे तु
नियमो
नास्त्येव । तथा च ।
"अशुचिर्व्वा शुचिर्व्वापि गच्छंस्तिष्ठन्
स्वपन्नपि ।
मन्त्रैकशरणो विद्वान् मनसैव सदाभ्यसेत्
॥
न दोषो मानसे जाप्ये सर्व्वदेशेऽपि सर्व्वदा
॥"
श्यामादिजपे तु तत्तन्मन्त्रे विशेषो वक्तव्यः
॥
जपफलमाह शिवधर्म्मे ।
"जपनिष्ठो द्विजश्रेष्ठोऽखिलयज्ञफलं लभेत्
।
सर्व्वेषामेव यज्ञानां जायतेऽसौ महाफलः ॥
जपेन देवता नित्यं स्तूयमाना प्रसीदति ।
प्रसन्ना विपुलान् कामान् दद्यान्मुक्तिञ्च
शाश्व-
तीम् ॥"
पाद्मे ।
"यक्षरक्षःपिशाचाश्च ग्रहाः सर्पाश्च
भीषणाः ।
जापिनं नोपसर्पन्ति भयभीताः समन्ततः
॥"
पाद्मनारदीययोः ।
"यावन्तः कर्म्मयज्ञाः स्युः प्रदिष्टानि
तपांसि च ।
सर्व्वे ते जपयज्ञस्य कलां नार्हन्ति
षोडशीम् ॥
माहात्म्यं वाचिकस्यैतज्जपयज्ञस्य
कीर्त्तितम् ।
तस्माच्छतगुणोपांशुः सहस्रो मानसः
स्मृतः ॥"
तथा तन्त्रे ।
"मानसः सिद्धिकामानां पुष्टिकामैरुपांशुकः
।
वाचिको मारणे चैव प्रशस्तो जप ईरितः
॥"
गौतमीये ।
"शक्त्या त्रिसवनं स्नानमन्यथा द्विः
सकृच्च वा ।

"निजकर्णागोचरो यो मानसः स जपः
स्मृतः ।
उपांशुर्निजकर्णस्य गोचरः स प्रकीर्त्तितः
॥
निगदस्तु जनैर्वेद्यस्त्रिविधोऽयं जपः स्मृतः
॥"
तन्त्रान्तरे ।
"उच्चैर्जपोऽधमः प्रोक्त उपांशुर्म्मध्यमः
स्मृतः ।
उत्तमो मानसो देवि ! त्रिविधः कथितो
जपः ॥"
जिह्वाजपस्तु ।
"जिह्वाजपः स विज्ञेयः केवलं जिह्वया
बुधैरिति ॥
अतिविलम्बातिशीघ्रजपे दोषमाह ।
"अतिह्रस्वो व्याधिहेतुरतिदीर्घो वसुक्षयः
।
अक्षराक्षरसंयुक्तं जपेन्मौक्तिकहारवत् ॥
मनसा यः स्मरेत् स्तोत्रं वचसा वा मनुं
जपेत् ।
उभयं निष्फलं याति भिन्नभाण्डोदकं
यथा ॥"
गौतमीये ।
"पशुभावे स्थिता मन्त्राः केवला
वर्णरूपिणः ।
सौसुम्नध्वन्युच्चरिताः प्रभुत्वं प्राप्नुवन्ति
ते ॥"
पाद्मनारदीययोः ।
"मन्त्राक्षराणि चिच्छक्तौ प्रोतानि
परिभावयेत् ।
तामेव परमव्योम्नि परमामृतबृंहिते ॥
दर्शयत्यात्मसद्भावं पूजाहोमादिभिर्व्विनेति
।"
गौतमीये दशाक्षरपटले ।
"मूलमन्त्रं प्राणबुद्ध्या सुसुम्नामूलदेशके
।
मन्त्रार्थं तस्य चैतन्यं जीवं ध्यात्वा पुनः
पुनः ॥
कुलार्णवेऽपि ।
"मनोऽन्यत्र शिवोऽन्यत्र शक्तिरन्यत्र
मारुतः

|  | त्रिसन्ध्यं प्रजपेन्मन्त्रं पूजनं तत्समं भवेत् ॥” | न सिद्ध्यति वरारोहे ! कल्पकोटिशतैरपि ॥ जातसूतकमादौ स्यादन्ते च मृतसूतकम् । सूतकद्वयसंयुक्तो यो मन्त्रः स न सिद्ध्यति ॥ गुरोस्तद्रहितं कृत्वा मन्त्रं यावज्जपेद्धिया । |
|---|---|---|

सूतकद्वयनिर्म्मुक्तः स मन्त्रः सर्व्वसिद्धिदः ॥
जातसूतकमादौ स्यान्मृतसूतकमन्ततः ।
सूतकद्वयनिर्म्मुक्तो मन्त्रः सिद्ध्यति नान्यथा ॥”
तत्रैव ।
“तस्माद्देवि ! प्रयत्नेन ध्रुवेण पुटितं मनुम् ।
अष्टोत्तरशतं वापि सप्तवारं जपादितः ॥
जपान्ते च तथा जप्यात् चतुर्व्वर्गफलाप्तये ॥”
तत्रैव ।
“ब्रह्मबीजं मनोर्द्दत्त्वा चाद्यन्ते परमेश्वरि ! ।
सप्तवारं जपेन्मन्त्रं सूतकद्वयमुक्तये ॥ * ॥
मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रां न वेत्ति यः ।
शतकोटिजपेनापि तस्य सिद्धिर्न जायते ॥
लुप्तबीजाश्च ये मन्त्रा न दास्यन्ति फलं प्रिये ! ।
मन्त्राश्चैतन्यसहिताः सर्व्वसिद्धिकराः स्मृताः ॥
चैतन्यरहिता मन्त्राः प्रोक्ता वर्णास्तु केवलम् ।
फलं नैव प्रयच्छन्ति लक्षकोटिजपैरपि ॥
मन्त्रोच्चारे कृते यादृक् स्वरूपं प्रथमं भवेत् ।
शते सहस्रे लक्षे वा कोटिजापे न तत्फलम् ॥
हृदये ग्रन्थिभेदश्च सर्व्वावयववर्द्धनम् ।
आनन्दाश्रूणि पुलको देहावेशः कुलेश्वरि ! ॥
गद्गदोक्तिश्च सहसा जायते नात्र संशयः ।
सकृदुच्चरितेऽप्येवं मन्त्रे चैतन्यसंयुते ॥
दृश्यन्ते प्रत्यया यत्र पारम्पर्य्यं तदुच्यते ॥ * ॥
मासमात्रं जपेन्मन्त्रं भूतलिप्या तु संपुटम् ।
क्रमोत्क्रमात् सहस्रञ्च तस्य सिद्धो भवेन्मनुः ॥”
तत्र भूतलिपिः ।
“पञ्च ह्रस्वाः सन्धिवर्णा व्योमाराग्निजलन्धराः ।
नाक्षतैर्हस्तपर्व्वैर्वा न धान्यैर्न च पुष्पकैः ।
न चन्दनैर्म्मृत्तिकया जपसङ्ख्यान्तु कारयेत् ॥
लाक्षाकुशीदसिन्दूरं गोमयञ्च करीषकम् ।
विलोड्य गुटिकां कृत्वा जपसङ्ख्यान्तु कारयेत् ॥”
पुरश्चरणचन्द्रिकायाञ्च ।
“ततो जपदशांशेन होमं कुर्य्याद्दिने दिने ।
अथवा लक्षसङ्ख्यायां पूर्णायां होममाचरेत् ॥”
तथा । होमाद्यशक्तौ च सनत्कुमारीये ।
“यद्यदङ्गं भवेद्भग्नं तत्सङ्ख्याद्विगुणो जपः ।
होमाभावे जपः कार्य्यो होमसङ्ख्याचतुर्गुणः ॥
विप्राणां क्षत्त्रियाणाञ्च रससङ्ख्यागुणः स्मृतः ।
वैश्यानां वसुसङ्ख्याकमेषां स्त्रीणामयं विधिः ॥
यं वर्णमाश्रितः शूद्रः स च तस्य विधिञ्चरेत् ।
अनाश्रितस्य शूद्रस्य दिक्सङ्ख्याकः समीरितः ।
शूद्रस्य विप्रभृत्यस्य तत्पत्न्याः सदृशो जपः ॥”
अत्राप्यशक्तश्चेत् योगिनीहृदये ।
“होमकर्म्मण्यशक्तानां विप्राणां द्विगुणो जपः ।
इतरेषान्तु वर्णानां त्रिगुणादिः समीरितः ॥”
त्रिगुणादिः होमसङ्ख्यात्रिगुणजपः क्षत्त्रियेण कार्य्यः । वैश्येन चतुर्गुणः । शूद्रेण पञ्चगुणः ।
तदुक्तं कुलार्णवे ।
“यद्वदङ्गं विहीनं स्यात् तत्सङ्ख्याद्विगुणो जपः ।
कुर्व्वीत त्रिचतुःपञ्च यथासङ्ख्यं द्विजादयः ॥”
एतेन स्त्रीशूद्राणां होमाधिकारः । तथा च ।
“बणिजामर्द्धशशाङ्ककोणंत्र्यस्रं भवति शूद्राणाम् ।”
विप्रभोजनमात्रेण व्यङ्गं साङ्गं भवेत् ध्रुवम् ॥
यत्र भुङ्क्ते द्विजस्तस्मात्तत्र भुङ्क्ते हरिः स्वयम् ॥”
तथा अगस्त्यसंहितायाम् ।
“यदि होमेऽप्यशक्तः स्यात् पूजायां तर्पणेऽपि वा ।
तावत्सङ्ख्यजपेनैव ब्राह्मणाराधनेन च ॥
भवेदङ्गद्वयेनैव पुरश्चरणमार्य्य वै ॥” * ॥
वीरतन्त्रे ।
“नियमः पुरुषे ज्ञेयो न योषित्सु कथञ्चन ।
न न्यासो योषितामत्र न ध्यानं न च पूजनम् ॥
केवलं जपमात्रेण मन्त्राः सिद्ध्यन्ति योषिताम् ॥”
ततश्च ।
“गुरवे दक्षिणां दद्यात् भोजनाच्छादनादिभिः ।
गुरुसन्तोषमात्रेण मन्त्रसिद्धिर्भवेत् ध्रुवम् ॥” * ॥
तथा च योगिनीहृदये ।
“गुरोरभावे पुत्राय तत्पत्न्यै वा निवेदयेत् ।
तयोरभावे देवेशि ! ब्राह्मणेभ्यो निवेदयेत् ॥
सम्यक्सिद्धैकमन्त्रस्य पञ्चाङ्गोपासनेन च ।
सर्व्वमन्त्राश्च सिद्ध्यन्ति त्वत्प्रासादात् कुलेश्वरि ! ॥
गुरुमूलमिदं सर्व्वमित्याहुस्तन्त्रवेदिनः ।
एकग्रामे स्थितो नित्यं गत्वा वन्देत वै गुरुम् ॥
गुरुरेव परं ब्रह्म तस्मादादौ तमर्च्चयेत् ।
तदन्ते महतीं पूजां कुर्य्यात् साधकसत्तमः ॥
सुभाषिणीं कुमारीञ्च भूषणैरपि भूषयेत् ।
मिष्टान्नं बहुशः कार्य्यं भुञ्जीत बन्धुभिः सह ॥
एवं सिद्धमनुर्म्मन्त्री साधयेत् सकलेप्सितान् ॥” * ॥
अथ ग्रहणपुरश्चरणम् ।
तन्त्रे ।
“अथवान्यप्रकारेण पुरश्चरणमुच्यते ।

अन्त्यमाद्यं द्वितीयञ्च चतुर्थं मध्यमं क्रमात्
॥
पञ्चवर्गाक्षराणि स्युर्व्वान्तश्वेतेन्दुभिः सह ।
एषा भूतलिपिः प्रोक्ता द्विचत्वारिंशदक्षरैः ॥
मन्त्रस्तु ।
अ इ उ ऋ ऌ ए ऐ ओ औ ह य र व ल ङ
क ख घ ग ञ च छ झ ज ण ट ठ ढ ड न त
थ ध द म प फ भ व श ष साः ।
अतः परं मन्त्रमुच्चार्य्य पुनः क्रमेणोल्लेख्यम्
॥ * ॥
गौतमीये ।
"एवं जपं पुरा कृत्वा तेजोरूपं समपयेत् ।
देवस्य दक्षिणे हस्ते कुशपुष्पार्घ्यवारिभिः
॥
सफलं तद्विभाव्यैवं प्राणायामं समाचरेत् ।
जपस्वादौ जपान्ते च त्रितयं त्रितयं चरेत्
॥" * ॥
शक्तिविषये देव्या वामहस्ते । तथा च ।
"एवं जपं पुरा कृत्वा गन्धाक्षतकुशोदकैः ।
जपं समर्पयेद्देव्या वामहस्ते विचक्षणः ॥ *
॥
जपान्ते प्रत्यहं मन्त्री होमयेत्तद्दशांशतः ।
तर्पणञ्चाभिषेकञ्च तत्तद्दशांशतो मुने ! ॥
प्रत्यहं भोजयेद्विप्रान् न्यूनाधिकप्रशान्तये ।
अथवा सर्व्वपूर्त्तौ च होमादिकमथाचरेत् ॥
सम्पूर्णायां प्रतिज्ञायां तर्पणादिकमाचरेत्
॥"
मुण्डमालायाम् ।
"यस्य यावान् जपः
प्रोक्तस्तद्दशांशमनुक्रमात् ।
तत्तद्द्रव्यैर्जपस्यान्ते होमं कुर्य्याद्दिने दिने
॥"
जपसङ्ख्यायां विशेषमाह मुण्डमालायाम् ।

इति नागभट्टनिबन्धे ॥
शूद्राणां त्र्यस्रमिति कुण्डप्रकरणे सारदायाम्
॥
स्त्रीणां होमाधिकारश्च तत्र ।
"लाजैस्त्रिमधुरोपेतैर्होमः कन्यां प्रयच्छति ।
अनेन विधिना कन्या वरमाप्नोति
वाञ्छितम् ॥"
अतः स्त्रीणां होमाधिकारः । तच्च ब्राह्मण-
द्वारा । तथा च तन्त्रे ।
"ओङ्कारोच्चारणाद्धोमात्
शालग्रामशिलार्च्चनात् ।
ब्राह्मणीगमनाच्चैव शूद्रश्चाण्डालतां व्रजेत्
॥"
इति साक्षान्निषेधात् ।
तथा स्त्रीणामपि सर्व्ववैदिककर्म्मसु
शूद्रतुल्यत्व-
प्रतिपादनात् ।
स्त्रीशूद्रकरसंस्पर्शो वज्रपातसमो मम ॥
इति भगवद्वचनाच्च ॥ तथा च
नारायणकल्पे ।
"अष्टाक्षरो महामन्त्रः सप्तार्णः शूद्रयोषितोः ।
प्रणवादिश्च यो मन्त्रो न स्त्रीशूद्रे प्रशस्यते
॥"
इति सर्व्वत्र स्त्रीणां शूद्रवद्व्यवहारः ॥ * ॥
शूद्रस्यापि स्वकर्त्तृकहोमः । तथा च
वाराही-
तन्त्रे ।
"यदि कामी भवत्येव शूद्रोऽपि होमकर्म्मणि
।
वह्निजायां परित्यज्य हृदयान्तेन होमयेत्
॥"
सर्व्वेषां वा द्विगुणो जपः । तथा च वाशिष्ठे ।
"यद्यदङ्गं विहीयेत तत्सङ्ख्याद्विगुणो जपः
।
कर्त्तव्यश्चाङ्गसिद्ध्यर्थं तदशक्तेन भक्तितः
॥
न चेदङ्गं विहीयेत तद्विशिष्टमताप्नुयात् ।

ग्रहणेऽर्कस्य चेन्दोर्व्वा शुचिः पूर्ब्बमुपोषितः
॥
नद्यां समुद्रगामिन्यां नाभिमात्रोदके स्थितः ।
स्पर्शाद्विमुक्तिपर्य्यन्तं जपेन्मन्त्रमनन्यधीः
॥" * ॥
यदि नक्रादिदूषिता नदी भवति तदा यत्
कर्त्तव्यं तदाह रुद्रयामले ।
"अपि शुद्धोदकैः स्नात्वा शुचौ देशे
समाहितः ।
ग्रासाद्विमुक्तिपर्य्यन्तं जपेन्मन्त्रमनन्यधीः ॥
इति कृत्वा न सन्देहो जपस्य फलभाग्भवेत्
॥"
नद्यभावे ।
"यद्वा पुण्योदकैः स्नात्वा शुचिः
पूर्ब्बमुपोषितः ।
ग्रहणादिविमोक्षान्तं जपेन्मन्त्रमनन्यधीः ॥"
* ॥
उपवासासमर्थे तु तत्रैव ।
अथवान्यप्रकारेण पौरश्चारणिको विधिः ।
चन्द्रसूर्य्योपरागे च स्नात्वा प्रयतमानसः ॥
स्पर्शनादिविमोक्षान्तं जपेन्मन्त्रं समाहितः ।
जपाद्दशांशतो होमं तथा होमात्तु तर्पणम् ।
एवं कृत्वा तु मन्त्रस्य जायते सिद्धिरुत्तमा
॥" * ॥
गोपालमन्त्रतर्पणे तु होमसमसङ्ख्यत्वं
यथा, --
"इह गोपालमन्त्रस्य तर्पणं होमसङ्ख्यया ।
वर्णानामिह सर्व्वेषामित्यागमविदो विदुः ॥
दृष्ट्वा स्नात्वा सुसङ्कल्प्य विमोक्षान्तं
जपञ्चरेत् ।
तावद्यज्ञादिकं कुर्य्याद्ग्रहणान्तेशुचिः पुमान्
॥
एवं जपान्मन्त्रसिद्धिर्भवत्येव न संशयः ॥"
* ॥

ग्रहणे जपस्य आवश्यकत्वम्।
"श्राद्धादेरनुरोधेन यदि जप्यं त्यजेन्नरः
।
स भवेद्देवताद्रोही पितॄन् सप्त
नयत्यधः ॥"
इति सनत्कुमारीयवचनात्॥
वस्तुतस्तु
आरब्धपुरश्चरणविषयमिदम्।
तथाहि ।
"आरब्धे पुरश्चरणे यदि च ग्रहणं
भवेत्
तदा श्राद्धाद्यनुरोधेन जपं न त्यजेत् ।
एवं
रात्रावपि पुरश्चरणविशेषे बोद्धव्यम् ।"
इति
सर्व्वसमञ्जसम् ॥ * ॥ योगिनीहृदये ।
"कल्पोक्तविधिना मन्त्री
कुर्य्याद्धोमादिकन्ततः ।
अथवा तद्दशांशेन होमादींश्च
समाचरेत् ॥"
तथा ।
"अनन्तरं दशांशेन
क्रमाद्धोमादिकञ्चरेत् ।
तदन्ते महतीं पूजां
कुर्य्याद्ब्राह्मणभोजनम्॥
ततो मन्त्रस्य सिद्ध्यर्थं गुरुं सम्पूज्य
तोषयेत् ।
एवञ्च मन्त्रसिद्धिः स्यात् देवता च
प्रसीदति ॥"
अत्र ब्राह्मणभोजनमावश्यकम्च ।
"सर्व्वथा भोजयेद्विप्रान्
कृतसाङ्गत्वसिद्धये ।
विप्राराधनमात्रेण व्यङ्गं साङ्गं
भवेद्ध्रुवम् ॥"
क्रियासारे ।
"दीक्षाहीनान् पशून् यस्तु भोजयेद्वा
स्वमन्दिरे ।
स याति परमेशानि !
नरकानेकविंशतिम् ॥

अथ पुरश्च रणप्रयोगः ।
तत्र तावत् भूमेः परिग्रहं कृत्वा
पुरश्चरणप्राक्
तृतीयदिवसे क्षौरादिकं विधाय
वेदिकाया-
श्चतुर्द्दिक्षु क्रोशं क्रोशद्वयं वा क्षेत्रं
चतुरस्रम्
आहारादिविहारार्थं परिकल्प्य तत्र कूर्म्म-
चक्रानुरूपं मण्डलं विधाय एकभक्तं
कुर्य्यात् ।
ततः परदिने स्नानादिकं विधाय शुद्धः
सन्
वेदिकायाश्चतुर्द्दिक्षु
अश्वत्थोडुम्बरप्लक्षाणामन्य-
तमस्य वितस्तिमात्रान् दश कीलकान्,
ॐ
नमः सुदर्शनाय अस्त्राय
फडितिमन्त्रेणाष्टोत्तर-
शताभिमन्त्रितान् वेदिकाया दशदिक्षु
ॐ ये चात्र विघ्नकर्त्तारो भुवि
दिव्यन्तरी-
क्षगाः ।
विघ्नभूताश्च ये चान्ये मम मन्त्रस्य
सिद्धिषु ॥
मयैतत् कीलितं क्षेत्रं परित्यज्य विदूरतः
।
अपसर्पन्तु ते सर्व्वे निर्व्विघ्नं सिद्धिरस्तु
मे ॥
इत्यनेन निखन्य तेषु ॐ नमः सुदर्शनाय
अस्त्राय फडितिमन्त्रेणास्त्रं संपूज्य
पूर्ब्बादि-
क्रमेण इन्द्रादिलोकपालान् पूजयेत् ।
तद्यथा ।
ॐ भूर्भुवःस्वरिन्द्रलोकपाल इहागच्छ
इत्या-
वाह्य पञ्चोपचारैरन्यांश्च पूजयेत् । तथा
च
मुण्डमालायाम् ।
"पुण्यक्षेत्रादिकं गत्वा कुर्य्याद्भूमेः
परिग्रहम् ।

"प्रातः स्नात्वा तु गायत्र्याः सहस्रं प्रयतो
जपेत् ।
ज्ञाताज्ञातस्य पापस्य क्षयार्थं प्रथमं ततः ॥"
इति विद्याधराचार्य्यः ॥ * ॥
यत्तु प्रातः स्नात्वा तु गायत्र्या अयुतं प्रयतो
जपेत् इति । तत् पुनरत्यन्तपापशङ्कया । ॐ
अद्येत्यादि अमुकगोत्रः श्रीअमुकदेवशर्म्मा
ज्ञाताज्ञातपापक्षयकामोऽष्टोत्तरसहस्रगायत्री
जपमयुतगायत्रीजपं वा अहं करिष्ये । इति
सङ्कल्प्य जपेत् । तत उपवासं हविष्यं वा
कुर्य्यात् ॥ * ॥
तत्परदिने उषसि स्नानादिकं कृत्वा स्वस्ति-
वाचनपूर्ब्बकं सङ्कल्पं कुर्य्यात् । यथा विष्णुः
ओम् अद्येत्यादि अमुकगोत्रः श्रीअमुकदेवशर्म्मा
अमुकदेवताया अमुकमन्त्रसिद्धिप्रतिबन्धकता-
शेषदुरितक्षयपूर्व्वकतन्मन्त्रसिद्धिकामोऽद्यारभ्य
यावता कालेन सेत्स्यति तावत्कालममुकदेव-
ताया अमुकमन्त्रस्य इयत्संख्यजपतद्दशांश-
होमतद्दशांशतर्पण-तद्दशांशाभिषेक-तद्दशांश-
ब्राह्मणभोजनरूपपुरश्चरणमहंकरिष्ये । इति
सङ्कल्प्य भूतशुद्धिप्राणायामादिकं कृत्वा स्वस्व-
मुद्रां बद्ध्वा स्वस्वपूजापद्धत्युक्तक्रमेण देवतां
संपूज्य
दीपे प्रज्वलिते देवतां हृदये प्रातःकालं समा-
रभ्य मध्यंदिनं यावत् जपं कुर्य्यात् । ततस्तद्द-
शांशहोम-तद्दशांश-तर्पण-तद्दशांशाभिषेक-त-
द्दशांशब्राह्मणभोजनङ्कुर्य्यात् । तथा च । सनत्-
कुमारतन्त्रे ।
"प्रणवं तत्सदद्येति मासपक्षतिथावपि ।
अमुकासुकगोत्रोऽहं मूलमुच्चार्य्य तत्परम् ॥
सिद्धिकामोऽस्य मन्त्रस्य इयत्सङ्ख्यं जपन्ततः ।
दशांशं हवनं होमाद्दशांशं तर्पणं ततः ॥
दशांशं मार्ज्जनं तस्माद्दशांशं विप्रभोजनम् ।
पुरश्चरणमेवं हि करिष्ये प्रागुदङ्मुखः ॥"
तथा ।
"दीपस्य ज्वलितस्याथ जपकर्म्म प्रशस्यते ।
तद्दीपस्थानमाश्रित्य वातातपसहां कुटिम् ॥
निर्म्माय विधिवत् कुर्य्यात् जपं तत्र शुभे दिने ॥"
ततो होमस्ततस्तर्पणम् ॥ * ॥
तन्त्रान्तरे ।

एवं यः कुरुते देवि ! पुरश्चरणकं
प्रिये ! ।
सर्व्वपापविनिर्म्मुक्तो
देवीसायुज्यमाप्नुयात् ॥”
यद्यपि पुरश्चरणपदं पञ्चाङ्गपरम् ।
तथा च ।
“जपहोमौ तर्पणञ्चाभिषेको
विप्रभोजनम् ।
पञ्चाङ्गोपासनं लोके पुरश्चरणमुच्यते
॥”
तथापि ग्रहणादौ पुरश्चरणपदं गौणं
जपमात्र-
परम् ।
“सूर्य्योदयं समारभ्य यावत्
सूर्य्योदयान्तरम् ॥”
इत्यादौ तथादर्शनात् तत्र
होमादेरभावात् ।
तर्हि कथं ग्रहणपुरश्चरणे होमादि इति
चेत्
वचनादेव । न च पुरश्चरणस्य
पञ्चाङ्गत्वात्
सर्व्वत्र तदेव स्यादिति वाच्यम् । ग्रहणे
पुन-
स्तद्विधानमनर्थकं स्यात् । किञ्च ग्रहणे
होमादि-
नियमात् नान्यत्र होमादिः ।
ग्रहणपुरश्चरणे
होमादिविधानन्तु
प्रकृतीभूतपञ्चाङ्गपुरश्चरण-
तुल्यताबोधनाय । अतएव ग्रहणे
पञ्चाङ्ग-
स्वरूपपुरश्चरणे कृते
मुख्यप्रयोगेऽप्यधिकार इति
प्रकटीकृतम् । तदकरणे पुनः
केवलजपमात्र-
पुरश्चरणे कृते नाधिकार इति
सर्व्वसम्मतमिति ।
पुरश्चरणकालस्तु वाराहीये ।
“चन्द्रतारानुकूले च शुक्ले पक्षे
शुभेऽहनि ।
आरभेत पुरश्चर्य्यां हरौ सुप्ते न
चाचरेत् ॥”

तथा ह्यमुकमन्त्रस्य पुरश्चरणसिद्धये ।
मयेयं गृह्यते भूमिर्म्मन्त्रोऽयं सिध्यतामिति
॥”
तथा ।
“ग्रामे क्रोशमितं स्थानं नद्यादौ स्वेच्छया
मतम् ।
नगरादावपि क्रोशं क्रोशयुग्ममथापि वा ॥
क्षेत्रं वा यावदिष्टन्तु विहारार्थं प्रकल्पयेत्
।
आहारादिविहारार्थं तावतीं भूमिमाक्रमेत्
॥
क्षीरिवृक्षोद्भवान् कीलान्
अस्त्रमन्त्राभिमन्त्रि-
तान् ।
निखनेद्दशदिग्भागे तेष्वस्त्रञ्च प्रपूजयेत् ॥
लोकपालान् पुनस्तेषु गन्धाद्यैः पूजयेत्
सुधीः ।
ततो मध्यस्थाने क्षेत्रपालं वास्त्वीशञ्च
संपूज्य
सर्व्वविघ्नविनाशार्थं गणपतिं पूजयेत् ।
ॐ
अद्येत्यादि अमुकगोत्रः
श्रीअमुकदेवशर्म्मा मत्-
कर्त्तव्यामुकमन्त्रपुरश्चरणकर्म्मणि
सर्व्वविघ्नविना-
शार्थं गणेशपूजामहं करिष्ये । इति
सङ्कल्प्य
वेदिकामध्ये पञ्चोपचारैर्गणेशं पूजयेत् ।
तदुक्तम् ।
“क्षेत्रपालादिकं तत्र पूजयेत् विधिवत्ततः
।
क्षेत्रेशं वास्तुनामानं विघ्नराजं समर्च्चयेत्
॥
दिक्पालेभ्यो वलिं दद्यात् ततः क्षेत्रं समा-
विशेत् ॥”
ततो माषभक्तादिना पूजितदेवताभ्यो
वलिं
दद्यात् । ततः ।
“ॐ ये रौद्रा रौद्रकर्म्माणो
रौद्रस्थाननिवासिनः ।
मातरोऽप्युग्ररूपाश्च गणाधिपतयश्च ये ॥

“तर्पणन्तु ततः कुर्य्यात्तीर्थोदैश्चन्द्रमिश्रितैः ।
जले देवं समावाह्य पाद्याद्यैरुदकात्मकैः ॥
सम्पूज्य विधिवद्भक्त्या परिवारसमन्वितम् ।
एकैकमञ्जलिं तोयं परिवारान् प्रतर्पयेत् ॥
ततो होमदशांशेन तर्पयेत् परदैवतम् ।
संपूर्णायान्तु सङ्ख्यायां पुनरेकैकमञ्जलिम् ।
अङ्गादिपरिवारेभ्यो दत्त्वा देवं विसर्ज्जयेत् ॥” * ॥
तर्पणवाक्यन्तु मूलमुच्चार्य्य श्रीअमुकं तर्पयामि
नमः । इति विष्णुविषयम् । तथा च गौतमीये ।
“आदौ मन्त्रं समुच्चार्य्य श्रीपूर्ब्बं कृष्णमित्यपि ।
तर्पयामि पदञ्चोक्त्वा नमोऽन्तं तर्पयेन्नरः ॥”
अन्यत्र मूलमुच्चार्य्य अमुकदेवतां तर्पया-
माति ।

| | | |
|---|---|---|
| प्रतिप्रसवः । रुद्रयामले ।<br>“कार्त्तिकाश्विनवैशाखमाघेऽथ मार्गशीर्षके ।<br>फाल्गुने श्रावणे दीक्षा पुरश्चर्य्या प्रशस्यते ॥”<br>ग्रस्तास्ते ग्रस्तोदये च दीक्षापुरश्चरणयोर्निषेध-माह तन्त्रान्तरे ।<br>“ग्रस्तास्ते ह्युदिते नैव कुर्य्याद्दीक्षां जपं प्रिये ! ।<br>कृते नाशो भवेदाशु आयुःश्रीसुतसम्पदाम् ॥” | विघ्नभूताश्च ये चान्ये दिग्विदिक्षु समाश्रिताः ।<br>सर्व्वे ते प्रीतमनसः प्रतिगृह्णन्त्विमं वलिम् ॥”<br>इत्यनेन दशदिक्षु भूतेभ्यो वलिं दद्यात् । ततो गायत्त्रीं जपेत् । तथा च । | |

तथा च ।
“तर्पयामि पदञ्चोक्त्वा मन्त्रान्ते स्वेषु नामसु ।
द्वितीयान्तेषु चेत्येवं तर्पणस्य मनुर्म्मतः ॥”
शक्तिविषये पुनर्म्मूलमुच्चार्य्य अमुकीं तर्पयामि स्वाहा । होमतर्पणयोः स्वाहेति तत्तत्तन्त्र-
वचनात् । नीलतन्त्रे ।
“मन्त्रान्ते नाम चोच्चार्य्य तर्पयामि ततः परम्
।
कुर्य्याच्चैव वरारोहे ! स्वाहान्तं तर्पणे मतम्
॥”
इत्यादि ॥ विशुद्धेश्वरतन्त्रे ।
“विद्यां पूर्ब्बं समुच्चार्य्य तदन्ते देवताभिधाम् ।
तर्पयामीति सम्प्रोक्त्वा स्वाहान्तस्तर्पणो मतः
॥”
अभिषेकवाक्यन्तु । नमोऽन्तं मूलमुच्चार्य्य असुक-
देवतामहमभिषिञ्चामि इति कलसमुद्रया स्वमूर्द्ध्नि अभिषिञ्चेत् । तथा च । गौतमीये ।
“नमोऽन्तं मूलमुच्चार्य्य तदन्ते देवताभिधाम् ।
द्वितीयान्तामहं पश्चादभिषिञ्चाम्यनेन तु ॥
अभिषिञ्चेत् स्वमूर्द्धानं तोयैः कुम्भाख्यमुद्रया
॥”
शक्तिविषये नीलतन्त्रे ।
“मन्त्रान्ते नाम चोच्चार्य्य सिञ्चामीति नमः पदम् ॥”
इति । ततो ब्राह्मणान् भोजयित्वा पूजां कुर्य्यात् ॥ * ॥ ततो दक्षिणा । अद्येत्यादि कृतै-
तदमुकमन्त्रपुरश्चरणकर्म्मणः साङ्गतार्थं दक्षिणा-
मिदं काञ्चनं वह्निदैवतं अमुकगोत्राय गुरवे तुभ्यमहं सम्प्रददे । ततोऽच्छिद्रावधारणं कुर्य्यात् ॥
अथ ग्रहणपुरश्चरणसङ्कल्पः ।
तद्यथा, --
ओम् अद्येत्यादि राहुग्रस्ते निशाकरे दिवाकरे वा असुकगोत्रःश्रीअमुकदेवशर्म्मा अमुकदेवताया
अमुकमन्त्रसिद्धिकामोग्रासाद्विमुक्तिपर्य्यन्तं अमुकदेवताया अमुकमन्त्रजपरूपपुरश्चरणमहं

प्रजपेत् प्रयतो नित्यं पुरश्चरणमुच्यते ॥
कर्कटे च यदा मन्त्री सहस्रं प्रत्यहं जपेत्
।
तेन सर्व्वार्थसिद्धिः स्यात्
पुरश्चरणकृद्भवेत् ॥
सिंहे च सर्व्वमन्त्राणामयुतानां द्वयं जपेत्
।
धर्म्मार्थकाममोक्षाणां फलभाग्भवति
ध्रुवम् ॥
कन्यायाञ्च यदा मन्त्री मन्त्रं मन्त्रपरायणः
।
सहस्रं द्वादशञ्चैव जपेन्नियतमानसः ॥
पुरश्चरणमेतद्धि सर्व्वकामार्थसाधनम् ।
इह लोके सुखं भुक्त्वा चान्ते देवीपदं
व्रजेत् ॥
तुलायां प्रत्यहं मन्त्री सहस्रं साधको
जपेत् ।
अनेन विधिना देवि ! पुरश्चरणकृद्भवेत्
॥
वृश्चिके चायुतं मन्त्रं शय्यायां प्रजपेत्
सुधीः ।
तेन सर्व्वार्थसिद्धिः स्यात् पुरश्चर्य्याफलं
भवेत् ॥
धनुषि च यदा मन्त्रं जपेदयुतमादरात् ।
इहैव कन्दर्पसमो धनवान् वलवान् सुखी
॥
मकरे च यदा मन्त्रं जपेत् साधकसत्तमः
।
चतुर्णामयुतं देवि ! प्रत्यहं यतमानसः ॥
धर्म्मार्थे भावयेन्नित्यं पुरश्चरणमुच्यते ॥
कुम्भ चैव यदा मन्त्रं जपेदयुतमादरात् ।
तेन सर्व्वार्थसिद्धिः स्यात् पुरश्चरणकृद्
भवेत् ॥
मीने चैव यदा देवि ! प्रजपेदयुतं द्वयम् ।
तेन पुरश्चरणमित्याहुः
सर्व्वागमविशारदाः ॥
सर्व्वत्र जपनं ज्ञेयं रात्रौ वा मैथुनेऽपि वा ।
शय्यायान्तु विशेषेण परयोषित्समागमे ॥
हविष्याशी तदा देवि ! जपेन्नियतमानसः
।

अश्लेषायां यदा देवि ! मन्त्री मन्त्रं
समाहितः ।
सहस्रषष्ठकञ्चैव जपेत् सर्व्वार्थसिद्धये ॥
दशसहस्रं मघायाञ्च जप्त्वा मन्त्रं समाहितः
।
पुरन्दरसमो भूत्वा साधको विचरेत् भुवि ॥
एकादशसहस्रन्तु पूर्ब्बत्रये जपेत् सुधीः ।
कुवेर इव वित्ताढ्यो जायते नात्र संशयः ॥
उत्तरत्रितये देवि ! सहस्रं द्वादशं तथा ।
जप्यते साधकैर्नित्यं सर्व्वकामार्थसिद्धये ॥
हस्तायाञ्च जपेद्देवि ! सहस्रञ्च त्रयोदश ।
सूर्य्यस्यैव समो भूत्वा विचरेत् भुवि
साधकः ॥
चित्रायाञ्च जपेन्मन्त्रं द्विसहस्रञ्च साधकैः ।
नानाभोगसमायुक्तो भवेद् भुवि पुरन्दरः ॥
स्मृत्वा सर्व्वार्थसिद्धिः स्यात् द्विसहस्रस्य
जाप-
नात् ।
साधकोऽव्याहतगतिर्जायतेनात्र संशयः ॥
विशाखायां यदा मन्त्रं चतुःसहस्रकं प्रिये !
।
जपेच्च साधको नित्यं सोमवत् प्रियदर्शनः
॥
अनुराधायां यदा देवि ! मन्त्री मन्त्रं सदा
जपेत् ।
पुत्त्रपोत्त्रसमायुक्तः खेचरो जायते ध्रुवम् ॥
ज्येष्ठायाञ्च यदा मन्त्रं द्विसहस्रं विचक्षणः ।
प्रजपन् लभते सिद्धिं नात्र कार्य्या विचारणा
॥
मूलायाञ्च जपेन्मन्त्रं सहस्रं पञ्चकं प्रिये ! ।
नानासिद्धिमवाप्नोति साधको नात्र संशयः
॥
वरुणेन समो भूत्वा जायते साधको भुवि ।
शतभिषायां यदा मन्त्रं द्विःसहस्रं जपेत्
सुधीः ॥
महापातकान्मुच्येत फलभाग्भवति ध्रुवम् ।
रेवत्याञ्च यदा मन्त्रं चत्वारि सहस्रकं तथा
॥
जप्त्वा स्तुत्वा सदा देवि !
सोमलोकमवाप्नुयात् ।

करिष्ये । इति सङ्कल्प्य जपेत् । ततस्तद्दिने
तत्परदिने वा स्नानादिकं विधाय ॐ अद्ये-
त्यादि अमुकदेवताया अमुकमन्त्रस्य कृतैतत्
ग्रहणकालीन-इयत्सङ्ख्यजपतद्दशांशहोमतद्द
शांशतर्पण-तद्दशांशाभिषेक-तद्दशांशब्राह्मण-
भोजनकर्म्माण्यहं करिष्ये । इति सङ्कल्प्य
होमादिकं कुर्य्यात् । दक्षिणादिकन्तु पूर्ब्बवत्
।”
इति कृष्णानन्दकृततन्त्रसारः ॥ * ॥
(अथ रहस्य पुरश्चरणम् ।
श्रीपार्व्वत्युवाच ।
“कथयस्व महादेव ! सिद्धिकारणमुत्तमम् ।
येन सिद्धिं समायान्ति सर्व्वतन्त्राश्च सिद्धिदाः
॥
येषु येषु च कालेषु पुरश्चर्य्या भवेद्ध्रुवम् ॥
श्रीशिव उवाच ।
कथयामि समासेन श्रूयतां पर्व्वतात्मजे ! ।
मेषराशौ दशसहस्रं प्रजपेन्मन्त्रमुत्तमम् ॥
पुरश्चरणमेतद्धि श्रूयतां सुरवन्दिते ! ॥
वृषराशौ यदा मन्त्री द्व्ययुतं प्रजपेत् सुधीः ।
तेन तत्र सुसिद्धः स्यान् नात्र कार्य्या विचा-
रणा ॥
मिथुने च यदा मन्त्री त्र्ययुतं मन्त्रमुत्तमम् ।
एवंविधं जपं कृत्वा दशांशञ्च तदाचरेत् ॥
दक्षिणां गुरवे दत्त्वा सिद्धिभाग् भवति
ध्रुवम् ।
अथवान्यप्रकारेण पुरश्चरणमुच्यते ॥
रविवारादिसर्व्वेषु वारसंख्यासहस्रकम् ।
जप्त्वा मन्त्रं सदा देवि ! साधकः
सिद्धिभाग्
भवेत् ॥
पुरश्चरणमेतद्धि नात्र कार्य्या विचरणा ॥
एवंविधं समाचर्य्य दशांशञ्च तदाचरेत् ।
गुरवे दक्षिणां दत्त्वा सर्व्वकाममवाप्नुयात्
॥
केवलं जपमात्रेण पुरश्चरणमुच्यते ।
येषु येषु च नक्षत्रेषु जायते सिद्धिरुत्तमा
॥
कथयामि समासेन श्रूयतां पर्व्वतात्मजे !
।
अश्विन्यां जप्यते मन्त्रं साधकैश्च
सहमकम् ॥
तेन सिद्धिमवाप्नोति साधको नात्र
संशयः ।
द्विसहस्रं जपेन्मन्त्रं भरण्याञ्च यदा सुधीः
॥
यमलोकं परित्यज्य धनेन च धनाधिपः ।
कृत्तिकायां जपेन्मन्त्रं त्रिसहस्रञ्च
साधकः ॥
रोहिण्याञ्च यदा मन्त्रं जपेत्
साधकसत्तमः ।
सहस्रं वा शतं वापि
सर्व्वकामार्थमाप्नुयात् ॥
मृगशीर्षे यदा मन्त्रं नियतं प्रजपेत् सुधीः
।
सहस्रपञ्चकञ्चैव बृहस्पतिसमो भवेत् ॥
आर्द्रायां जप्यते मन्त्रं साधकैः
सुसमाहितैः ।
षट्सहस्रं यदा देवि ! सर्व्वकामार्थसिद्धये
॥
पुनर्व्वसुसमायोगे यदा सहस्रमुत्तमम् ।
जप्यते साधको नित्यं लभते च
सुरोत्तमम् ॥
पुष्यायाञ्च जपेन्मन्त्रं सप्तानाञ्च
सहस्रकम् ।
रात्रौ वा मैथुने वापि शय्यायाञ्च व्यवस्थितः
॥
प्रजपेत् साधको नित्यं साधयेदात्मनो
हितम् ।
सर्व्वदा प्रजपेन्मन्त्रं हविष्याशी दिवा शुचिः
॥
दक्षिणां गुरवे दद्यात् यथा विभवविस्तरम् ।
अथवान्यप्रकारेण पुरश्चरणमुच्यते ॥
आदित्यादिवारयोगे नन्दादितिथियोगतः ।
ततस्तत्र जपेन्मन्त्रं सहस्रपञ्चकं प्रिये ! ॥
तेन सर्व्वार्थसिद्धिः स्यात् पुरश्चरणकृद्
भवेत् ।
प्रतिपत्तिथिमारभ्य कुहूर्य्यावत् भवेत् प्रिये !
॥
तिथिसंख्यां समासाद्य वर्द्धयेच्च सहस्रकम्
।
जप्त्वा मन्त्रं सदा मन्त्री
सर्व्वकाममवाप्नुयात् ॥
पुरश्चरणमेतद्धि कथितं ते वरानने ! ।
प्रतिपत्तिथिमारभ्य राका यावद् भवेत्
प्रिये ! ॥
तावन्मन्त्रं प्रजपेत तिथिसंख्याक्रमेण तु ।
सर्व्वभावसमायुक्तो जायते भावसाधकः ॥
एतेनैव सुसिद्धिः स्यात् नात्र कार्य्या
विचारणा ।
अथवान्यप्रकारेण पुरश्चरणमुच्यते ॥
ववादिकरणे देवि ! जप्त्वा विद्यामनन्यधीः
।
करणानुसारेणैव वर्द्धयेच्च सहस्रकम् ॥
पुरश्चरणमेतद्धि सर्व्वतन्त्रे च गोपितम् ।
साधकस्य हितार्थाय कथितं तद्वरानने ! ॥
अथवान्यप्रकारेण पुरश्चरणमुच्यते ।
विष्कुम्भादिषु योगेषु यो जपेत् योगसंख्यया
॥

सहस्रं साधको नित्यं सर्व्वसिद्धिपरायणः
।
पुरश्चरणमेतद्धि तन्त्रे तन्त्रे निरूपितम् ॥
संक्रान्त्यादिषु सर्व्वासु विषुवादिषु
पार्व्वति ! ।
संक्रान्त्यनुसारेणैव वर्द्धयेच्च सहस्रकम् ॥
पूर्ब्बमुखो जपेन्मन्त्रं धनार्थी सर्व्वदा
प्रिये ! ।
शत्रुनाशाय सततं दक्षिणाभिमुखो जपेत्
॥”
इति स्वतन्त्रे तन्त्रे हरगौरीसंवादे
रहस्यपुर-
श्चरणविधिः ॥ * ॥) अत्र
आगमकल्पद्रुमोक्त-
कूर्म्मचक्रंतच्छब्दे द्रष्टव्यम् ।
हरिभक्तिविलासीय-
पुरश्चरणन्तु तद्ग्रन्थे सप्तदशविलासे
दर्शनीयम् ॥

**पुरश्छदः**, पुं, (पुरश्छदति छादयतीति । छद् + अच्
।
यद्वा, पुरोऽग्रतश्छदाः पत्राण्यस्य ।)
तृणविशेषः ।
उलु इति भाषा । तत्पर्य्यायः । दर्भः २
शष्पः ३
सोमषत्रः ४ परात्प्रियः ५ । इति शब्द-
चन्द्रिका ॥

**पुरस्कारः**, पुं, (पुरस्करणमिति + पुरस् + कृ +
भावे घञ् ।) पुरस्क्रिया । अभिशापः ।
अरि-
ग्रहणम् । अग्रकरणम् । (पुरः
क्रियतेऽनेनेति ।)
पूजनम् । (“तस्य बहुमानपुरस्कारं कृत्वा
।”
इति हितोपदेशः ॥) स्वीकारः । सेकः ।
इति
पुरस्कृतशब्दार्थदर्शनात् ॥

**पुरस्कृतः**, त्रि, (पुरः क्रियते स्मेति । पुरस् + कृ +

**पुरा**, स्त्री, (पुरतीति । पुर + क + टाप् ।) पूर्ब्ब-
दिक् । सुगन्धिद्रव्यविशेषः । तत्पर्य्यायः ।
गन्ध-
वती २ दिव्या ३ गन्धाढ्या ४ गन्धमादिनी ५
सुरभिः ६ भूरिगन्धा ७ कुटी ८ गन्धकुटी ९ ।
अस्या गुणाः । तिक्तत्वम् । कटुत्वम् । शीत-
त्वम् । कषायत्वम् । कफपित्तश्वासास्रविष-
दाहार्त्तिभ्रममूर्च्छातृषानाशित्वञ्च। इति राज-
निर्घण्टः ॥

**पुराकृतं**, त्रि, (पुरा पूर्ब्बं पूर्ब्बस्मिन् काले वा
कृतम् ।) प्रारब्धकर्म्म । पूर्ब्बकालकृतपुण्यादि
।
यथा, --
“अकाले दर्शनं विष्णोर्हन्ति पुण्यं पुराकृतम् ॥”
इति स्मृतिः ॥

**पुराणं**, क्ली, (पुरा भवमिति । पुरा + “सायं-
चिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ।” ४ ।
३ ।
२३ । इति ट्युः ।
“पूर्ब्बकालैकसर्व्वजरत्पुराणनव-
केवलाः समानाधिकरणेन ।” २ । १ । ४९ ।
इति
निपातनात् तुडभावः । यद्वा, “पुराणप्रोक्तेषु
ब्राह्मणकल्पेषु ।” ४ । ३ । १०५ । इति निपा-
तितः । यद्वा, पुरा नीयते इति । नी + ड ।
णत्वञ्च ।) व्यासादिमुनिप्रणीतवेदार्थवर्णित-
पञ्चलक्षणान्वितशास्त्रम्। तत्पर्य्यायः ।
पञ्चलक्ष-
णम् २ । इत्यमरः । १ । ६ । ५ ॥
पञ्चलक्षणानि
यथा, सर्गः १ प्रतिसर्गः २ वंशः ३ मन्वन्तरम्
४
वंशानुचरितम् ५ ॥ महापुराणस्य दश लक्ष-
णानि । यथा, सर्गः १ विसर्गः २ वृत्तिः ३ रक्षा
४
अन्तरम् ५ वंशः ६ वंश्यानुचरितम् ७ संस्था
८ हेतुः ९ अपाश्रयः १० ॥ अथाष्टादशमहा-
पुराणानि तेषां श्लोकसंख्यानि च तथा । ब्राह्मं
दशसहस्रम् १ पाद्मं पञ्चपञ्चाशत्सहस्रम् २

सृष्टिश्चापि विसृष्टिश्च स्थितिस्तेषाञ्च
पालनम् ।
कर्म्मणां वासना वार्त्ता मनूनाञ्च क्रमेण च
॥
वर्णनं प्रलयानाञ्च मोक्षस्य च निरूपणम् ।
उत्कीर्त्तनं हरेरेव देवानाञ्च पृथक् पृथक् ॥
दशाधिकं लक्षणञ्च महतां परिकीर्त्तितम् ।
संख्यानञ्च पुराणानां निबोध कथयामि ते
॥
परं ब्रह्मपुराणञ्च सहस्राणां दशैव च ।
पञ्चोनषष्टिसाहस्रं पाद्ममेव प्रकीर्त्तितम् ॥
त्रयोविंशतिसाहस्रं वैष्णवञ्च विदुर्बुधाः ।
चतुर्विंशतिसाहस्रं शैवमेव निरूपितम् ॥
ग्रन्थोऽष्टादशसाहस्रं श्रीमद्भागवतं विदुः ।
पञ्चविंशतिसाहस्रं नारदीयं प्रकीर्त्तितम् ॥
मार्कण्डं नवसाहस्रं पुराणं पण्डिता विदुः ।
चतुःशताधिकं पञ्चदशसाहस्रमेव च ॥
परमग्निपुराणञ्च रुचिरं परिकीर्त्तितम् ।
चतुर्द्दशसहस्रानी परं पञ्चशताधिकम् ॥
पुराणप्रवरञ्चैव भविष्यं परिकीर्त्तितम् ।
अष्टादशसहस्रञ्च ब्रह्मवैवर्त्तमीप्सितम् ॥
सर्व्वेषाञ्च पुराणानां सारमेव विदुर्बुधाः ।
एकादशसहस्रञ्च परं लिङ्गपुराणकम् ॥
चतुर्व्विंशतिसाहस्रं वाराहं परिकीर्त्तितम् ।
एकाशीतिसहस्रञ्च परमेव शताधिकम् ॥
वरं स्कन्दपुराणञ्च सद्भिरेवं निरूपितम् ।
वामनं दशसाहस्रं कौर्म्मं सप्तदशैव तु ॥
मात्स्यं चतुर्द्दशं प्रोक्तं पुराणं पण्डितैस्तथा
।
ऊनविंशतिसाहस्रं गारुडं परिकीर्त्तितम् ॥
परं द्वादशसाहस्रं ब्रह्माण्डं परिकीर्त्तितम् ।
एवं पुराणसंख्यानं चतुर्लक्षमुदाहृतम् ॥
अष्टादशपुराणानामेवमेव विदुर्बुधाः ।
एवञ्चोपपुराणानामष्टादशप्रकीर्त्तिताः ॥ *
॥
इतिहासो भारतञ्च वाल्मीकं काव्यमेव च ।
पञ्चकं पञ्चरात्राणां कृष्णमाहात्म्यपूर्ब्बकम्
।
वाशिष्ठं नारदीयञ्च कापिलं गौतमीयकम् ।
परं सनत्कुमारीयं पञ्चरात्रञ्च पञ्चकम् ॥

क्तः ।) अभिशस्तः । अरिग्रस्तः ।
अग्रकृतः ।
पूजितः । इति मेदिनी । ते, २१३ ॥
स्वीकृतः ।
सिक्तः । इति हेमचन्द्रः ॥

**पुरस्तात्**, व्य, (पूर्ब्बस्मिन् पूर्ब्बस्यां पूर्ब्बस्मात्
पूर्ब्बस्वाः वा पूर्ब्बः पूर्ब्बा वेति । पूर्ब्ब +
"दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्-
देशकालेष्वस्तातिः ।" ५ । ३ । २७ । इति
अस्तातिः । "अस्ताति च ।" ५ । ३ । ४० ।
इति पूर्ब्बस्य पुरादेशः ।) प्राच्यां दिशि । यथा,
पुरस्तात् सूर्य्य उदेति । प्रथमे काले । यथा,
पुरस्ताद्भुङ्क्ते । पुरार्थे । अतीते । यथा, पुर-
स्ताद्रामोऽभूत् । अग्रतः अग्रे देशे । यथा,
पुरस्तादायाति । इत्यमरभरतौ ॥ (यथा च
रघौ । २ । ४४ ।
"मान्यः स मे स्थावरजङ्गमानां
सर्गस्थितिप्रत्यवहारहेतुः ।
गुरोरपीदं धनमाहिताग्ने-
र्नश्यत् पुरस्तादनुपेक्षणीयम् ॥")

**पुरा**, व्य, (पुरति अग्रे गच्छतीति । पुर + बाहु-
लकात् का ।) प्रबन्धः । वाक्यरचना पुराणादिः ।
यथा, पुराविदः । चिरम् । चिरन्तनम् । पुराण-
मित्यर्थान्तरम् । अतीतम् । भूतम् । चिरातीत-
मित्येकम् । यथा इतिहासः पुरावृत्तमिति
केचित् ॥ निकटः । सन्निहितः । आगामिकम् ।
अनागतम् । निकटागामिकः । भविष्यदासत्तिः ।
इति केचित् ॥ इत्यमरभरतौ ॥ भीरुः । इति
शब्दरत्नावली ॥ (प्राक् । इति हेमचन्द्रः ।

वैष्णवं त्रयोविंशतिसहस्रम् ३ शैवं चतुर्व्विंशति-
सहस्रम् ४ भागवतम् अष्टादशसहस्रम् ५ नार-
दीयं पञ्चविंशतिसहस्रम् ६ मार्कण्डेयं नवसह-
स्रम् ७ आग्नेयं चतुःशताधिकपञ्चदशसहस्रम्
८ भविष्यं पञ्चशताधिकचतुर्द्दशसहस्रम् ९
ब्रह्मवैवर्त्तम् अष्टादशसहस्रम् १० लैङ्गं एका-
दशसहस्रम् ११ वाराहं चतुर्व्विंशतिसहस्रम्
१२ स्कान्दं शताधिकैकाशीतिसहस्रम् १३
वामनं दशसहस्रम् १४ कौर्म्मं सप्तदशसहस्रम्
१५ मात्स्यं चतुर्द्दशसहस्रम् १६ गारुडं ऊन-
विंशतिसहस्रम् १७ ब्रह्माण्डं द्वादशसहस्रम्
१८ ।
समुदायेन चतुलक्षश्लोकाः । इति श्रीभागवतीय-
द्वादशस्कन्धः ॥ (अपि च देवीभागवते १ स्कन्धे
३ अध्याये तथा मत्स्यपुराणे ५३ अध्याये
एतद्विवरणं द्रष्टव्यम् ॥) अपि च ।
सूत उवाच ।
"विस्तराणि पुराणानि चेतिहासश्च शौनक ! ।
संहितां पञ्चरात्राणि कथयामि यथागमम् ॥
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं विप्र ! पुराणं पञ्चलक्षणम् ॥
एतदुपपुराणानां लक्षणञ्च विदुर्बुधाः ।
महताञ्च पुराणानां लक्षणं कथयामि ते ॥ * ॥

पञ्चम्यः संहितानाञ्च कृष्णभक्तिसमन्विताः ।
ब्रह्मणश्च शिवस्यापि प्रह्लादस्य तथैव च ॥
गौतमस्य कुमारस्य संहिताः परिकीर्त्तिताः ।
इति ते कथितं सर्व्वं क्रमेण च पृथक् पृथक् ॥
अस्त्येवं विपुलं शास्त्रं ममापि च यथागमम् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १३२ अः ॥
पद्मपुराणमते तु ।
"निस्ताराय तु लोकानां स्वयं नारायणः प्रभुः ।
व्यासरूपेण कृतवान् पुराणानि महीतले ॥
पठनाच्छ्रवणाद्येषां नृणां पापक्षयो भवेत् ।
घर्म्माघर्म्मपरिज्ञानं सदाचारप्रवर्त्तनम् ॥
गतिश्च परमा तद्वद्भक्तिर्भगवति प्रभौ ।
तानि ते कथयिष्यामि सप्रमाणानि भूतले ॥" * ॥
पुराणसंख्यान्तरमाह ।
"पुराणानि चतुर्लक्षाण्येतानि धरणीतले ।
तथा महाभारतञ्च लक्षसंख्यं प्रकीर्त्तितम् ॥
पञ्चलक्षमिदं राजन् ! कथितं ब्रह्म केवलम् ।
वेदः पञ्चमनामैष लोकनिस्तारकः परः ॥

| ६ । १७१ ॥ यथा, पञ्चदश्याम् । २ । १४ ।<br>“इदं सर्व्वं पुरा सृष्टेरेकमेवाद्वितीयकम् ।<br>सदेवासीन्नामरूपे नास्तामित्यारुणेर्व्वचः ॥”) | | |
|---|---|---|

तत्र पद्मपुराणञ्च प्रथमं स प्रणीतवान् ।
ततोऽन्यानि पुराणानि कृत्वा षोडश तु क्रमात्
॥
अष्टादशं भागवतं सारमाकृष्य सर्व्वतः ।
कृतवान् भगवान् व्यासः शुकञ्चाध्यापयत्
सुतम् ॥”
इति पातालखण्डे ७१ अध्यायः ॥ * ॥
आख्यानादिभिः सह व्यासः पुराणं चक्रे ।
यथा, --
“आख्यानैश्चाप्युपाख्यानैर्गाथाभिः
कल्पशुद्धिभिः ।
पुराणसंहितां चक्रे पुराणार्थविशारदः ॥
प्रख्यातो व्यासशिष्योऽभूत् सूतो वै लोमहर्षणः
।
पुराणसंहितां तस्मै ददौ व्यासो महामुनिः ॥”
अस्य टीका यथा, --
आख्यानादिभिः सह पुराणं चक्रे व्यास इत्य-
न्वयः । तत्र च ।
स्वयं दृष्टार्थकथनं प्राहुराख्यानकं बुधाः ।
श्रुतस्यार्थस्य कथनमुपाख्यानं प्रचक्षते ॥
गाथास्तु पितृपृथ्वीप्रभृतिगीतयः । कल्पशुद्धिः
श्राद्धकल्पादिनिर्णयः ॥ * ॥
“सुमतिश्चाग्निवर्च्चाश्वमित्रायुः शांशपायनः ।
अकृतव्रणोऽथ सावर्णिः षट् शिष्यास्तस्य
चाभ-
वन् ॥”
टीका । सुमत्यादयस्तु रोमहर्षणस्य
षट्शिष्या-
स्तत्कृताः षट् संहिता जगृहुः ॥ * ॥
“काश्यपः संहिताकर्त्ता सावर्णिः शांशपायनः ।
लौमहर्षणिका चान्या तिसृणां मूलसंहिता ॥”
टीका । अकृतव्रण एव काश्यपः काश्यपो
ह्यकृतव्रण इति वायूक्तेः । रौमहर्षणिका चान्या
रोमहर्षणेन पुनः संक्षेपेण प्रोक्ता ॥ * ॥
“चतुष्टयेनाप्येतेन संहितानामिदं मुने ! ।”
टीका । एतासां काश्यपादिकृतानां संहिताना-
मर्थचतुष्टयेनापि मूलभूतेन तत्सारोद्धारा-
त्मकं इदं श्रीविष्णुपुराणं सुने ! मैत्रेय ! मया
कृतमिति शेषः ॥ * ॥
“आद्यं सर्व्वपुराणानां पुराणं ब्राह्ममुच्यते ।
तथैव तामसा देवि ! निरयप्राप्तिहेतवः ॥”
इति पाद्मोत्तरखण्डे ४३ अध्यायः ॥ * ॥
अष्टादशोपपुराणानि यथा, --
“आद्यं सनत्कुमारोक्तं नारसिंहमथापरम् ।
तृतीयं स्कान्दमुद्दिष्टं कुमारेण तु भाषितम् ॥
चतुर्थं शिवधर्म्माख्यं साक्षान्नन्दीशभाषितम् ।
दुर्व्वाससोक्तमाश्चर्य्यं नारदोक्तमतः परम् ॥
कापिलं वामनञ्चैव तथैवोसनसेवितम् ।
ब्रह्माण्डं वारुणञ्चाथ कालिकाह्वयमेव च ॥
माहेश्वरं तथा शाम्बं सौरं सर्व्वार्थसञ्चयम् ।
पराशरोक्तमपरं मारीचं भार्गवाह्वयम् ॥”
इति गारुडे २२७ अध्यायः ॥ * ॥
कौर्म्मोक्तान्येतानि उपपुराणशब्दे द्रष्टव्यानि
॥
पुराणपाठक्रमस्तु पारायणशब्दे पाठशब्दे च
द्रष्टव्यः ॥ अथाष्टादशमहापुराणानामनुक्रम-
णिका अर्थात् तेषां
श्लोकपर्व्वखण्डभागोपाख्यान-
श्रवणदानफलानि लिख्यन्ते ।
सूत उवाच ।
“एतच्छ्रुत्वा नारदस्तु कुमारस्य वचो मुदा ।
पुनरप्याह सुप्रीतो जिज्ञासुः श्रेय उत्तमम् ॥
नारद उवाच ।
साधु साधु महाभाग ! सर्व्वलोकोपकारकम् ।
महातन्त्रं त्वया प्रोक्तं सर्व्वतन्त्रोत्तमोत्तमम् ॥
अधुना श्रोतुमिच्छामि पुराणाख्यानमुत्तमम् ।
यस्मिन् यस्मिन् पुराणे तु यद्यदाख्यानकं
मुने ! ।
तत्तत् सर्व्वं समाचक्ष्व सर्व्वज्ञस्त्वं यतो मतः
॥
तच्छ्रुत्वा वचनं विप्रा नारदस्य शुभावहम् ।
पुराणाख्यानसंप्रश्नं कुमारः प्रत्युवाच ह ॥
सनत्कुमार उवाच ।
पुराणाख्यानकं विप्र ! नानाकल्पसमुद्भवम् ।
नानाकथासमायुक्तमद्भुतं बहुविस्तरम् ॥
ऋषिः सनातनश्चायं यथा वेद तथापरः ।
न वेद तस्मात् पृच्छ त्वं बहुकल्पविदांवरम् ॥
श्रुत्वेत्थं नारदो वाक्यं कुमारस्य महात्मनः ।
प्रणम्य विनयोपेतः सनातनमथाब्रवीत् ॥
ब्रह्मन् ! पुराणविच्छ्रेष्ठ ! ज्ञानविज्ञानतत्पर ! ।
मरीच्यादिऋषिभ्यस्तु
पुत्रस्नेहावृतात्मना ॥
एकदा ब्रह्मणः पुत्रो मरीचिर्नाम विश्रुतः
।
स्वाध्यायश्रुतसम्पन्नो वेदवेदाङ्गपारगः
॥
उपसृत्य स्वपितरं ब्रह्माणं लोकभावनम्
।
प्रणम्य भक्त्या पप्रच्छ इदमेव
मुनीश्वर ! ।
पुराणाख्यानममलं यत्त्वं पृच्छसि
मानद ! ॥
मरीचिरुवाच ।
भगवन् ! देवदेवेश ! लोकानां
प्रभवाप्यय ! ।
सर्व्वज्ञ ! सर्व्वकल्याण सर्व्वाध्यक्ष
नमोऽस्तु ते ॥
पुराणबीजमाख्याहि मह्यं शुश्रूषते
पितः ! ।
लक्षणञ्च प्रमाणञ्च वक्तारं पृच्छकं तथा
॥
ब्रह्मोवाच ।
शृणु वत्स ! प्रवक्ष्यामि पुराणानां
समुच्चये ।
यस्मिन् ज्ञाते भवेज्ज्ञातं वाङ्मयं
सचराचरम् ॥
पुराणमेकमेवासीत् सर्व्वकल्पेषु
मानद ! ।
चतुर्व्वर्गस्य बीजञ्च शतकोटिप्रविस्तरम्
॥
प्रवृत्तिः सर्व्वशास्त्राणां
पुराणादभवत्ततः ॥
कालेनाग्रहणं दृष्ट्वा पुराणस्य महामतिः
।
हरिर्व्यासस्वरूपेण जायते च युगे युगे ॥
चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ।
तदष्टादशधा कृत्वा भूर्लोके
निर्द्दिशत्यपि ॥
अद्यापि देवलोके तु शतकोटि
प्रविस्तरम् ।

अष्टादशपुराणानि पुराणज्ञाः प्रचक्षते ॥”
इति विष्णुपुराणे ३ अंशे ६ अध्यायः ॥ * ॥
तेषां नामोच्चारणादिमाहात्म्यंयथा, --
“अष्टादशपुराणानां नामधेयानि यः पठेत् ।
त्रिसन्ध्यं जपते नित्यं सोऽश्वमेधफल लभेत्
॥”
इति मार्कण्डेयपुराणम् ॥ * ॥
तामसपुराणानि यथा, --
“मात्स्यं कौर्म्मं तथा लैङ्गं शैवं स्कान्दं तथैव
च ।
आग्नेयञ्च षडेतानि तामसानि निबोधत ॥”
सात्त्विकपुराणानि यथा, --
“वैष्णवं नारदीयञ्च तथा भागवतं शुभम् ।
गारुडञ्च तथा पाद्मं वाराहं शुभदर्शने ! ।
सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै ॥”
राजसपुराणानि यथा, --
“ब्रह्माण्डं ब्रह्मवैवर्त्तं मार्कण्डेयं तथैव च ।
भविष्यं वामनं ब्राह्मं राजसानि निबोधत ॥
सात्त्विका मोक्षदाः प्रोक्ता राजसाः स्वर्गदाः
शुभाः ।

पुराणानां विभागं मे साकल्येनानुकीर्त्तय ॥
यस्मिन् श्रुते श्रुतं सर्व्वं ज्ञाते ज्ञातं कृते कृतम्
।
वर्णाश्रसाचारधर्म्मं साक्षात्कारत्वमेष्यति ॥
कियन्ति च पुराणानि कियत् सङ्ख्यानि
मानतः ।
किं किमाख्यानयुक्तानि तद्वदस्व मम प्रभो !
॥
चातुर्वर्ण्याश्रया नाना व्रतादीनां कथास्तथा ।
सृष्टिक्रमेण वंशानां कथाः सम्यक् प्रकाशय ॥
त्वत्तोऽधिको न चान्योऽस्ति
पुराणाख्यानवित्
प्रभो ! ।
तस्मादाख्याहि मह्य त्वं सर्व्वसन्देहभञ्जनम्
॥
ततः सनातनो विप्राः श्रुत्वा नारदभाषितम् ।
नारायणं क्षणं ध्यात्वा प्रोवाचाथ विदांवरः ॥
सनातन उवाच ।
साधु साधु मुनिश्रेष्ठ ! सर्व्वलोकोपकारक ! ।
पुराणाख्यानविज्ञाने यज्जाता नैष्ठिकी मतिः
॥
तुभ्यं समभिधास्यामि यत् प्रोक्तं ब्रह्मणा पुरा
।

अस्त्येव तस्य सारस्तु चतुर्लक्षेण
वर्ण्यते ॥ * ॥
ब्राह्मम् १ पाद्मम् २ वैष्णवञ्च ३
वायवीयम् ४
तथैव च ।
भागवतम् ५ नारदीयम् ६ मार्कण्डेयञ्च
७
कीर्त्तितम् ॥
आग्नेयञ्च ८ भविष्यञ्च ९ ब्रह्मवैवर्त्त-१०
लिङ्गके ११ ।
वाराहञ्च १२ तथा स्कान्दम् १३
वामनम् १४
कूर्म्म-१५ संज्ञकम् ।
मात्स्यञ्च १६ गारुडम् १७
तद्वद्ब्रह्माण्डाख्य-१८
मिति त्रिषट् ॥
एकं कथानकं सूत्रं वक्तुः श्रोतुः
समाह्वयम् ।
प्रवक्ष्यामि समासेन निशामय
समाहितः ॥” * ॥
तत्र प्रथमं ब्रह्मपुराणम् ।
“ब्राह्मं पुराणं तत्रादौ सर्व्वलोकहिताय
व ।
व्यासेन वेदविदुषा समाख्यातं
महात्मना ॥
तद्वै सर्व्वपुराणाग्र्यं धर्म्मकामार्थमोक्षदम्
।
नानाख्यानेतिहासाढ्यं
दशसाहस्रमुच्यते ॥ * ॥
तत्पूर्ब्बभागे ।
“देवानामसुराणाञ्च यत्रोत्पत्तिः
प्रकीर्त्तिता ।
प्रजापतीनाञ्च तथा दक्षादीनां
मुनीश्वर ! ॥
ततो लोकेश्वरस्यात्र सूर्य्यस्य
परमात्मनः ।
वंशानुकीर्त्तनं पुण्यं महापातकनाशनम्
॥
यत्रावतारः कथितः परमानन्दरूपिणः
।
श्रीमतो रामचन्द्रस्य चतुर्व्यूहावतारिणः
॥

| | | |
|---|---|---|
| | | ततश्च सोमवंशस्य कीर्त्तनं यत्र वर्णितम् ।<br>कृष्णस्य जगदीशस्य चरितं कल्मषापहम् ॥<br>द्वीपानाञ्चैव सिन्धूनां वर्षाणां चाप्यशेषतः ।<br>वर्णनं यत्र पातालस्वर्गाणाञ्च प्रदृश्यते ॥<br>नरकाणां समाख्यानं सूर्य्यस्तुतिकथानकम् । |

पार्व्वत्याश्च तथा जन्म विवाहश्च निगद्यते ॥
दक्षाख्यानं ततः प्रोक्तमेकाम्रक्षेत्रवर्णनम् ।
पूर्ब्बभागोऽयमुदितः पुराणस्यास्य मानद !
॥” * ॥
तदुत्तरभागे ।
“अस्योत्तरे विभागे तु पुरुषोत्तमवर्णनम् ।
विस्तरेण समाख्यातं तीर्थयात्राविधानतः ॥
अत्रैव कृष्णचरितं विस्तारात् समुदीरितम् ।
वर्णनं यमलोकस्य पितृश्राद्धविधिस्तथा ॥
वर्णाश्रमाणां धर्म्माश्च कीर्त्तिता यत्र
विस्तरात् ।
विष्णुधर्म्मयुगाख्यानं प्रलयस्य च वर्णनम् ॥
योगानाञ्च समाख्यानं साङ्ख्यानाञ्चापि
वर्णनम् ।
ब्रह्मवादसमुद्देशः पुराणस्य च शंसनम् ॥
एतद्ब्रह्मपुराणान्तु भागद्वयसमाचितम् ।
वर्णितं सर्व्वपापघ्नं सर्व्वसौख्यप्रदायकम् ॥”
* ॥
तत्फलश्रुतिः ।
“सूतशौनकसंवादं भुक्तिमुक्तिप्रदायकम् ।
लिखित्वैतत् पुराणं यो वैशाख्यां हेमसंयुतम्
॥
जलधेनुयुतञ्चापि भक्त्या दद्याद्द्विजातये ।
पौराणिकाय सम्पूज्य वस्त्रभोज्यविभूषणैः ।
स वसेद्ब्रह्मणो लोके यावच्चन्द्रार्कतारकम्
॥
यः पठेच्छृणुयाद्वापि ब्राह्मानुक्रमणीं द्विज ! ।
सोऽपि सर्व्वपुराणस्य श्रोतुर्वक्तुः फलं लभेत्
॥
शृणोति यः पुराणन्तु ब्राह्मं सर्व्वं जितेन्द्रियः ।
हविष्याशी च नियमात् स लभेद् ब्रह्मणः
पदम् ॥
किमत्र बहुनोक्तेन यद्यदिच्छति मानवः ।
तत् सर्व्वं लभते वत्स ! पुराणस्यास्य
कीर्त्तनात् ॥”
इति श्रीनारदीयपुराणे पूर्ब्बभागे बृहदुपा-
ख्याने चतुर्थपादे ९२ अध्यायः ॥ १ ॥
द्वितीयं पद्मपुराणम् ।
श्रीब्रह्मोवाच ।
“शृणु पुत्र ! प्रवक्ष्यामि पुराणं पद्मसंज्ञिकम् ।
राज्ञा जैमिनिसंवादो बह्वाश्चर्य्यकथायुतः ॥
कथा ह्यशोकसुन्दर्य्या हुण्डदैत्यवधाचिता ।
कामोदाख्यानकं तत्र विहुण्डवधसंयुतः ॥
कुञ्जलस्य च संवादश्च्यवनेन महात्मना ।
सिद्धाख्यानं ततः प्रोक्तं खण्डस्यास्य
फलोहनम् ॥
सूतशौनकसंवादं भूमिखण्डमिदं स्मृतम् ॥”
* ॥
तृतीये स्वर्गखण्डे ।
“ब्रह्माण्डोत्पत्तिरुदिता यत्रर्षिभिश्च सौतिना
।
सभूमिलोकसंस्थानं तीर्थाख्यानं ततः परम्
॥
नर्म्मदोत्पत्तिकथनं तत्तीर्थानां कथा पृथक् ।
कुरुक्षेत्रादितीर्थानां कथाः पुण्याः
प्रकीर्त्तिताः ॥
कालिन्दीपुण्यकथनं काशीमाहात्म्यवर्णनम्
॥
गयायाश्चैव माहात्म्यं प्रयागस्य च पुण्यकम्
।
वर्णाश्रमानुरोधेन कर्म्मयोगनिरूपणम् ॥
व्यासजैमिनिसंवादः पुण्यकर्म्मकथाचितः ।
समुद्रमथनाख्यानं व्रताख्यानं ततः परम् ॥
ऊर्ज्जपञ्चाहमाहात्म्यं स्तोत्रं सर्व्वापराधनुत्
।
एतत्स्वर्गाभिधं विप्र ! सर्व्वपातकनाशनम्
॥”
चतुर्थे पातालखण्डे ।
“रामाश्वमेधे प्रथमं रामराज्याभिषेचनम् ।
अगस्त्याद्यागमश्चैव पौलस्त्याचयकीर्त्तनम्
॥
अश्वमेधोपदेशश्च हयचर्य्या ततः परम् ।
नानाराजकथाः पुण्या जगन्नाथानुवर्णनम् ॥
वृन्दावनस्य माहात्म्यं सर्व्वपापप्रणाशनम् ।
नित्यलीलानुकथनं यत्र कृष्णावतारिणः ॥
माधवस्नानमाहात्म्ये स्नानदानार्च्चने फलम्
।
धरावराहसंवादो यमब्राह्मणयोः कथा ॥
संवादो राजदूतानां कृष्णस्तोत्रनिरूपणम् ।
परीक्षणञ्च भृगुणा श्रीविष्णोर्वैभवस्य च ।
इत्येतदुत्तरं खण्डं पच्चमं सर्व्वपुण्यदम्
॥” * ॥
तत्फलश्रुतिः ।
“पञ्चखण्डयुतं पाद्मं यः शृणोति नरोत्तमः
।
स लभेद्वैष्णवं धाम भुक्त्वा
भोगानिहेप्सितान् ॥
एतद्वै पञ्चपञ्चाशत्सहस्रं पद्मसंज्ञकम् ।
पुराणं लेखयित्वा वै ज्यैष्ठ्यां
स्वर्णाज्यसंयुतम् ॥
यः प्रदद्यात् सुसत्कृत्य पुराणज्ञाय
मानद ! ।
स याति वैष्णवं नाम सर्व्वदेवनमस्कृतः ॥
पद्मानुक्रमणीमेतां यः पठेत् शृणुयात् तथा
।
सोऽपि पद्मपुराणस्य लभेत् श्रवणजं
फलम् ॥”
इति श्रीनारदीयपुराणे पूर्ब्बभागे
बृहदुपाख्याने
चतुर्थपादे ९३ अध्यायः ॥ २ ॥
तृतीयं विष्णुपुराणम् ।
श्रीब्रह्मोवाच ।
“शृणु वत्स ! प्रवक्ष्यामि पुराणं वैष्णवं
महत् ।
त्रयोविंशतिसाहस्रं सर्व्वपातकनाशनम् ॥
यत्रादिभागे निर्द्दिष्टाः षडंशाः शक्तृजेन ह ।
मैत्रेयायादिमे तत्र पुराणस्यावतारिकाः ॥”
तत्र प्रथमभागस्य प्रथमांशे ।
“आदिकारणसर्गश्च देवादीनाञ्च सम्भवः
।
समुद्रमथनाख्यानं दक्षादीनां ततोचयाः ॥
ध्रुवस्य चरितं चैव पृथोश्चरितमेव च ।
प्राचेतसं तथाख्यानं प्रह्लादस्य कथानकम्
॥
पृथग्राज्याधिकाराख्या प्रथमोऽंश इती-
रितः ॥”
प्रथमभागस्य द्वितीयांशे ।
“प्रियव्रताचयाख्यानं द्वीपवर्षनिरूपणम् ।
पातालनरकाख्यानं सप्तस्वर्गनिरूपणम् ।

महत्पुण्यप्रदं नृणां शृण्वतां पठतां मुदा ॥
यथा पञ्चेन्द्रियः सर्व्वः शरीरीति निगद्यते ।
तथेदं पञ्चभिः खण्डैरुदितं पापनाशनम् ॥”
* ॥
तत्र प्रथमे सृष्टिखण्डे ।
“पुलस्त्येन तु भीष्माय सृष्ट्यादिक्रमतो द्विज ! ।
नानाख्यानेतिहासाद्यैर्यत्रोक्तो धर्म्मविस्तरः ॥
पुष्करस्य च महात्म्यं विस्तरेण प्रकीर्त्तितम् ।
ब्रह्मयज्ञविधानञ्च वेदपाठादिलक्षणम् ॥
दानानां कीर्त्तनं यत्र वृत्तानाञ्च पृथक् पृथक् ।
विवाहः शैलजायाश्च तारकाख्यानकं महत् ॥
माहात्म्यञ्च गवादीनां कीर्त्तिदं सर्व्वपुण्यदम् ।
कालकेयादिदैत्यानां वधो यत्र पृथक् पृथक् ॥
ग्रहाणामर्च्चनं दानं यत्र प्रोक्तं द्विजोत्तम ! ।
तत्सृष्टिखण्डमुद्दिष्टं व्यासेन सुमहात्मना ॥”
* ॥
द्वितीये भूमिखण्डे ।
“पितृमात्रादिपूज्यत्वे शिवशर्म्मकथा पुरा ।
सुव्रतस्य कथा पश्चात् वृत्रस्य च वधस्तथा ॥
पृथोर्वेणस्य चाख्यानं धर्म्माख्यानं ततः परम् ।
पितृशुश्रूषणाख्यानं नहुषस्य कथा ततः ॥
ययातिचरितञ्चैव गुरुतीर्थनिरूपणम् ॥
शिवसम्भुसमायोगो दधीच्याख्यानकन्ततः ॥
भस्ममाहात्म्यमतुलं शिवमाहात्म्यमुत्तमम् ।
देवरातसुताख्यानं पुराणज्ञप्रशंसनम् ॥
गौतमाख्यानकञ्चैव शिवगीता ततः स्मृता ।
कल्पान्तरी रामकथा भरद्वाजश्रमास्थितौ ॥
पातालखण्डमेतद्धि शृण्वतां ज्ञानिनां सदा ।
सर्व्वपापप्रशमनं सर्व्वाभीष्टफलप्रदम् ॥”
पञ्चमे उत्तरखण्डे ।
“पर्व्वताख्यानकं पूर्ब्बं गौर्य्यै प्रोक्तं शिवेन वै ।
जालन्धरकथा पश्चाच्छ्रीशैलाद्यनुकीर्त्तनम् ॥
सगरस्य कथा पुण्या ततः परमुदीरितम् ।
गङ्गाप्रयागकाशीनां गयायाश्चाधिपुण्यकम् ॥
आम्रादिदानमाहात्म्यं तन्महाद्वादशीव्रतम् ।
चतुर्व्विंशैकादशीनां माहात्म्यं पृथगीरितम् ॥
विष्णुधर्म्मसमाख्यानं विष्णुनामसहस्रकम् ।
कार्त्तिकव्रतमाहात्म्यं माघस्नानफलन्ततः ॥
जम्बुद्वीपस्य तीर्थानां माहात्म्यं पापनाशनम् ।
साभ्रमत्याश्च माहात्म्यं नृसिंहोत्पत्तिवर्णनम् ॥
देवशर्म्मादिकाख्यानं गीतमाहात्म्यवर्णने ।
भक्त्याख्यानञ्च माहात्म्यं श्रीमद्भागवतस्य ह ॥
इन्द्रप्रस्थस्य माहात्म्यं बहुतीर्थकथाचितम् ।
मन्त्ररत्नाभिधानञ्च त्रिपाद्भूत्यनुवर्णनम् ॥
अवतारकथा पुण्या मत्स्यादीनामतः परम् ।
रामनामशतं दिव्यं तन्माहात्म्यञ्च वाडव ! ॥
सूर्य्यादिचारकथनं पृथग्लक्षणसंयुतम् ॥
चरितं भरतस्याथ मुक्तिमार्गनिदर्शनम् ॥
निदाघऋभुसंवादो द्वितीयोऽंश उदाहृतः ॥”
प्रथमभागस्य तृतीयांशे ।
“मन्वन्तरसमाख्यानं वेदव्यासावतारकम् ।
नरकोद्धारकं कर्म्म गदितञ्च ततः परम् ॥
सगरस्यौर्व्वसंवादे सर्व्वधर्म्मनिरूपणम् ।
श्राद्धकल्पं तथोद्दिष्टं वर्णाश्रमनिवन्धने ।
सदाचारश्च कथितो मायामोहकथा ततः ।
तृतीयोऽंशोऽयमुदितः सर्व्वपापप्रणाशनः ॥”
प्रथमभागस्य चतुर्थांशे ।
“सूर्य्यवंशकथा पुण्या सोमवंशानुकीर्त्तनम् ।
चतुर्थेऽंशे मुनिश्रेष्ठ ! नानाराजकथाचितम् ॥”
प्रथमभागस्य पञ्चमांशे ।
“कृष्णावतारसंप्रश्नो गोकुलीया कथा ततः ।
पूतनादिवधो बाल्ये कौमारेऽघादिहिंसनम् ॥
कैशोरे कंसहननं माथुरं चरितं तथा ।
ततस्तु यौवने प्रोक्ता लीला द्वारवतीभवा ॥
सर्व्वदैत्यवधो यत्र विवाहाश्च पृथग्विधाः ।
यत्र स्थित्वा जगन्नाथः कृष्णो योगेश्वरेश्वरः ॥
भूभारहरणं चक्रे परस्वहननादिभिः ।
अष्टावक्रीयमाख्यानं पञ्चमोऽंश इतीरितः ॥”

प्रथमभागस्य षष्ठांशे ।
“कलिजं चरितं प्रोक्तं चातुर्व्विध्यं लयस्य च ।
ब्रह्मज्ञानसमुद्देशः खाण्डिक्यस्य निरूपितः ॥
केशिध्वजेन चेत्येष षष्ठोऽंशः परिकीर्त्तितः ॥”
तस्य द्वितीयभागे ।
“अतःपरन्तु सूतेन शौनकादिभिरादरात् ।
पृष्टेन चोदिताः शश्वद्विष्णुधर्म्मोत्तराह्वयाः ॥
नानाधर्म्मकथाः पुण्या व्रतानि नियमा यमाः ।
धर्म्मशास्त्रं चार्थशास्त्रं वेदान्तं ज्योतिषं तथा ॥
वंशाख्यानं प्रकरणात् स्तोत्राणि मनवस्तथा ॥
नानाविद्याश्रयाः प्रोक्ताः सर्व्वलोकोपकारकाः ।
एतद्विष्णुपुराणं वै सर्व्वशास्त्रार्थसंग्रहम् ॥ * ॥
तत्फलश्रुतिः ।
“वाराहकल्पवृत्तान्तं व्यासेन कथितं त्विह ।
यो नरः पठते भक्त्या यः शृणोति च सादरम् ।
तावुभौ विष्णुलोकं हि व्रजेतां भुक्तभोगकौ ॥
तल्लिखित्वा च यो दद्यादाषाढ्यां घृतधेनुना ।
सहितं विष्णुभक्ताय पुराणार्थविदे द्विज ! ।
स याति वैष्णवं धाम विमानेनार्कवर्च्चसा ॥
यश्च विष्णुपुराणस्य समनुक्रमणीं द्विज ! ।
कथयेच्छणुयाद्वापि स पुराणफलं लभेत् ॥”

पञ्चत्रिंशत्तमः प्रोक्तो रेवासागरसङ्गमः ॥
सङ्गमैः सहितान्येवं रेवातीरद्वयेऽपि च ।
चतुःशतानि तीर्थानि प्रसिद्धानि च सन्ति हि ।
षष्टितीर्थसहस्राणि षष्टिकोट्यो मुनीश्वर ! ।
सन्ति चान्यानि रेवायास्तीरयुग्मे पदे पदे ॥
संहितेयं महापुण्या शिवस्य परमात्मनः ।
नर्म्मदाचरितं यत्र वायुना परिकीर्त्तितम् ॥”
तत्फलश्रुतिः ।
“लिखित्वेदं पुराणन्तु गुडधेनुसमाचितम् ।
श्रावण्यां यो ददेद्भक्त्या ब्राह्मणाय कुटुम्बिने ॥
रुद्रलोकें वसेत् सोऽपि यावदिन्द्राश्चतुर्द्दश ।
यः श्रावयेद्वा शृणुयाद्वायवीयमिदं नरः ।
नियमेन हरिष्याशी स रुद्रो नात्र संशयः ॥
यश्चानुक्रमणीम्ेतां शृणोति श्रावयेत वा ।
सोऽपि सर्व्वपुराणस्य फलं श्रवणजं लभेत् ॥”
इति श्रीनारदीयपुराणे पूर्ब्बभागे बृहदुपाख्याने चतुर्थपादे ९५ अध्यायः ॥ ४ ॥
पञ्चमं श्रीभागवतपुराणम् ।
ब्रह्मोवाच ।
“मरीचे ! शृणु वक्ष्यामि वेदव्यासेन यत् कृतम् ।
श्रीमद्भागवतं नाम पुराणं ब्रह्मसम्मितम् ॥
तदष्टादशसाहस्रङ्कीर्त्तितंपापनाशनम् ।
सुरपादपरूपोऽयं स्कन्धैर्द्वादशभिर्युतः ॥
भगवानेव विप्रेन्द्र ! विश्वरूपी क्षमीरितः ॥”
तस्यप्रथमस्कन्धे ।
“तत्र तु प्रथमे स्कन्धे सूतर्षीणां समागमः ।
व्यासस्य चरितं पुण्यं पाण्डवानां तथैव च ॥
पारीक्षितमुपाख्यानमितीदंसमुदाहृतम् ॥”
द्वितीयस्कन्धे ।
“परीक्षिच्छुकसंवादे सृतिद्वयनिरूपणम् ।
ब्रह्मनारदसंवादेऽवतारचरितामृतम् ॥
पुराणलक्षणञ्चैव सृष्टिकारणसम्भवः ।
द्वितीयोऽयं समुदितः स्कन्धो व्यासेन धीमता ॥”
तृतीयस्कन्धे ।
“चरितं विदुरस्याथ मैत्रेयेणास्य सङ्गमः ।
सृष्टिप्रकरणं पश्चाद्ब्रह्मणः परमात्मनः ॥

अष्टमस्कन्धे ।
“गजेन्द्रमोक्षणाख्यानं मन्वन्तरनिरूपणम् ।
समुद्रमथनञ्चैव वलिवैभवबन्धनम् ॥
मत्स्यावतारचरितमष्टमोऽयंप्रकीर्त्तितः ॥” * ॥
नवमस्कन्धे ।
“सूर्य्यवंशसमाख्यानं सोमवंशनिरूपणम् ।
वंश्यानुचरिते प्रोक्तो नवमोऽयं महामते ! ॥”
दशमस्कन्धे ।
“कृष्णस्य बालचरितं कौमारञ्च व्रजस्थितिः ॥
कैशोरं मथुरास्थानं यौवनं द्वारकास्थितिः ।
भूभारहरणञ्चात्र निरोधे दशमः स्मृतः ॥”
एकादशस्कन्धे ।
“नारदेन तु संवादो वसुदेवस्य कीर्त्तितः ।
यदोश्च दत्तात्रेयेण श्रीकृष्णेनोद्धवस्य च ॥
यादवानां मिथोऽन्तश्च मुक्तावेकादशः स्मृतः ॥”
द्वादशस्कन्धे ।
“भविष्यकलिनिर्द्देशो मोक्षो राज्ञः परीक्षितः ॥
वेदशाखाप्रणयनं मार्कण्डेयतपः स्मृतम् ।
सौरी विभूतिरुदिता सात्वती च ततः परम् ॥
पुराणसङ्ख्याकथनमाश्रयेद्वादशो ह्ययम् ।
इत्येवं कथितं वत्स ! श्रीमद्भागवतं तव ॥” * ॥
तत्फलश्रुतिः ।
“वक्तुः श्रोतुश्चोपदेष्टुरनुमोदितुरेव च ।
साहाय्यकर्त्तुर्गदितं भक्तिभुक्तिविमुक्तिदम् ॥
प्रौष्ठपद्यां पूर्णिमायां हेमसिंहसमाचितम् ।
देयं भागवतायेदं द्विजाय प्रीतिपूर्ब्बकम् ॥
संपूज्य वस्त्रहेमाद्यैर्भगवद्भक्तिमिच्छता !
योऽप्यनुक्रमणीम्ेतां श्रावयेच्छ्णुयात्तथा ।
स पुराणश्रवणजं प्राप्नोति फलमुत्तमम् ॥” * ॥
इति श्रीनारदीयपुराणे पूर्ब्बभागे बृहदुपाख्याने चतुर्थपादे ९६ अध्यायः ॥ ५ ॥
षष्ठं नारदीयपुराणम् ।

इति श्रीनारदीयपुराणे पूर्ब्बभागे
बृहदुपाख्याने
चतुर्थपादे ९४ अध्यायः ॥ ३ ॥
चतुर्थं वायुपुराणम् ।
ब्रह्मोवाच ।
“शृणु विप्र ! प्रवक्ष्यामि पुराणं
वायवीयकम् ।
यस्मिन् श्रुते लभेद्धाम रुद्रस्य परमात्मनः
॥
चतुर्व्विंशतिसाहस्रं तत् पुराणं प्रकीर्त्तितम्
।
श्वेतकल्पप्रसङ्गेन धर्म्माण्यत्राह मारुतः
॥
तद्वायवीयमुदितं भागद्वयसमाचितम् ॥”
* ॥
तस्य पूर्ब्बभागे ।
“स्वर्गादिलक्षणं यत्र प्रोक्तं विप्र !
सविस्तरम् ॥
मन्वन्तरेषु वंशाश्च राज्ञां ये यत्र
कीर्त्तिताः ।
गयासुरस्य हननं विस्तराद्यत्र कीर्त्तितम्
॥
मासानाञ्चैव माहात्म्यं माघस्योक्तं
फलाधिकम् ।
दानधर्म्मा राजधर्म्मा
विस्तरेणोदितास्तथा ॥
भूपातालककुब्व्योमचारिणां यत्र निर्णयः
।
व्रतादीनाञ्च पूर्ब्बोऽयं विभागः समुदाहृतः
॥”
तदुत्तरभागे ।
“उत्तरे तस्य भागे तु नर्म्मदातीर्थवर्णनम्
।
शिवस्य संहिताख्या वै विस्तरेण
मुनीश्वर ! ॥
यो देवः सर्व्वदेवानां दुर्व्विज्ञेयः सनातनः
।
स तु सर्व्वात्मना यस्यास्तीरे तिष्ठति
सन्ततम् ॥
इदं ब्रह्मा हरिरिदं साक्षाच्चेदं परो हरः ।
इदं ब्रह्म निराकारं कैवल्यं नर्म्मदाजलम्
॥

कापिलं साङ्ख्यमप्यत्र तृतीयोऽयमुदाहृतः
॥”
चतुर्थस्कन्धे ।
“सत्याश्चरितमादौ तु ध्रुवस्य चरितं ततः ।
पृथोः पुण्यसमाख्यानं ततः प्राचीनवर्हिषः ।
इत्येष तुर्य्यो गदितो विसर्गे स्कन्ध उत्तमः ॥”
पञ्चमस्कन्धे ।
“प्रियव्रतस्य चरितं तद्वंश्यानाञ्च पुण्यदम् ।
ब्रह्माण्डान्तर्गतानाञ्च लोकानां वर्णनन्ततः ॥
नरकस्थितिरित्येष संस्थाने पञ्चमो मतः ॥”
षष्ठस्कन्धे ।
“अजामिलस्य चरितं दक्षसृष्टिनिरूपणम् ॥
वृत्राख्यानं ततः पश्चान्मरुतां जन्म पुण्यदम्
।
षष्ठोऽयमुदितः स्कन्धो व्यासेन परिपोषणे ॥”
सप्तमस्कन्धे ।
“प्रह्लादचरितं पुण्यं वर्णाश्रमनिरूपणम् ।
सप्तमो गदितो वत्स ! वासनाकर्म्मकीर्त्तने ॥”

श्रीब्रह्मोवाच ।
“शृणु विप्र ! प्रवक्ष्यामि पुराणं नारदीयकम् ।
पञ्चविंशतिसाहस्रं बृहच्चित्रकथाश्रयम् ॥” *
॥
तत्र पूर्ब्बभागे प्रथमपादे ।
“सूतशौनकसंवादः सृष्टिसंक्षेपवर्णनम् ।
नानाधर्म्मकथाः पुण्याः प्रवृत्ते समुदाहृताः
॥
प्राग्भागे प्रथमे पादे सनकेन महात्मना ॥”
पूर्ब्बभागे द्वितीयपादे ।
“द्वितीये मोक्षधर्म्माख्ये मोक्षोपायनिरूपणम्
।
वेदाङ्गानाञ्च कथनं शुकोत्पत्तिश्च विस्तरात्
।
सनन्दनेन गदिता नारदाय महात्मने ॥” *
॥
पूर्ब्बभागे तृतीयपादे ।
“महातन्त्रे समुद्दिष्टं पशुपाशविमोक्षणम् ।
मन्त्राणां शोधनं दीक्षा मन्त्रोद्धारश्च पूजनम्
॥
प्रयोगाः कवचं नामसहस्रं स्तोत्रमेव च ।
गणेशसूर्य्यविष्णूनां शिवशक्त्योरनुक्रमात् ॥
सनत्कुमारमुनिना नारदाय तृतीयके ॥”
पूर्ब्बभागे चतुर्थपादे ।
“पुराणलक्षणञ्चैव प्रमाणं दानमेव च ॥
पृथक् पृथक् समुद्दिष्टं दानकालपरःसरम्

| | | |
|---|---|---|
| ध्रुवं लोकहितार्थाय शिवेन स्वशरीरतः ।<br>शक्तिः कापि सरिद्रूपा रेवेयमवतारिता ॥<br>ये वसन्त्युत्तरे कूले रुद्रस्यानुचरा हि ते ।<br>वसन्ति याम्यतीरे ये लोकं ते यान्ति वैष्णवम् ॥<br>ओंकारेश्वरमारभ्य यावत् पश्चिमसागरम् ।<br>सङ्गमाः पञ्च च त्रिंशन्नदीनां पापनाशनाः ॥<br>दशैकमुत्तरे तीरे त्रयोविंशति दक्षिणे । | | |

चैत्रादिसर्व्वमासेषु तिथीनाञ्च पृथक्
पृथक् ॥
प्रोक्तं प्रतिपदादीनां व्रतं
सर्व्वाघनाशनम् ।
सनातनेन मुनिना नारदाय चतुर्थके ॥
पूर्ब्बभागोऽयमुदितो
बृहदाख्यानसंज्ञितः ॥”
तदुत्तरभागे ।
“अस्योत्तरे विभागे तु प्रश्न
एकादशीव्रते ॥
वशिष्ठेनाथ संवादो मान्धातुः
परिकीर्त्तितः ।
रुक्माङ्गदकथा पुण्या
मोहिन्युत्पत्तिकर्म्म च ॥
वसुशापश्च मोहिन्यै
पश्चादुद्धरणक्रिया ।
गङ्गाकथा पुण्यतमा
गयायात्रानुकीर्त्तनम् ॥
काश्या माहात्म्यमतुलं
पुरुषोत्तमवर्णनम् ।
यात्राविधानं क्षेत्रस्य
बह्वाख्यानसमन्वितम् ॥
प्रयागस्याथ माहात्म्यं कुरुक्षेत्रस्य
तत्परम् ।
हरिद्वारस्य चाख्यानं कामोदाख्यानकं
तथा ॥
वदरीतीर्थमाहात्म्यं
कामाख्यायास्तथैव च ।
प्रभासस्य च माहात्म्यं पुराणाख्यानकं
ततः ॥
गौतमाख्यानकं
पश्चाद्वेदपादस्तवस्ततः ।
गोकर्णक्षेत्रमाहात्म्यं लक्ष्मणाख्यानकं
तथा ॥
सेतुमाहात्म्यकथनं नर्म्मदातीर्थवर्णनम्
।
अवन्त्याश्चैव माहात्म्यं मथुरायास्ततः
परम् ॥
वृन्दावनस्य महिमा वसोर्ब्रह्मान्तिके
गतिः ।

वन्सप्रीस्थाने वत्सध्नी च पाठः ।
“खनित्रस्य ततः प्रोक्ता कथा पुण्या
महात्मनः ॥
अविक्षिच्चरितं चैव किमिच्छव्रतकीर्त्तनम् ।
नरिष्यन्तस्य चरितं इक्ष्वाकुचरितं ततः ॥
तुलस्याश्चरितं पश्चाद्रामचन्द्रस्य सत्कथा
।
कुशवंशसमाख्यानं सोमवंशानुकीर्त्तनम् ॥
पुरूरवःकथा पुण्या नहुषष्य कथाद्भुता ।
ययातिचरितं पुण्यं यदुवंशानुकीर्त्तनम् ॥
श्रीकृष्णबालचरितं माथुरं चरितं ततः ।
द्वारकाचरितञ्चाथ कथा सर्व्वावतारजा ॥
ततः साङ्ख्यसमुद्देशः प्रपञ्चासत्त्वकीर्त्तनम्
।
मार्कण्डेयस्य चरितं पुराणश्रवणे फलम् ॥”
* ॥
तत्फलश्रुतिः ।
“यः शृणोति नरो भक्त्या पुराणमिदमादरात्
।
मार्कण्डेयाभिधं वत्स ! स लभेत् परमां
गतिम् ॥
यस्तु व्याकुरुते चैतच्छैवं स लभते पदम् ॥
तत् प्रयच्छेल्लिखित्वा यः सौवर्णकरिसंयुतम्
।
कार्त्तिक्यां द्विजवर्य्याय स लभेद्ब्रह्मणः
पदम् ॥
शृणोति श्रावयेद्वापि यश्चानुक्रमणीमिमाम् ।
मार्कण्डेयपुराणस्य स लभेद्वाञ्छितं फलम्
॥”
इति श्रीनारदीयपुराणे पूर्ब्बभागे
बृहदुपाख्याने
चतुर्थपादे ९८ अध्यायः ॥ ७ ॥
अष्टमं अग्निपुराणम् ।
श्रीब्रह्मोवाच ।
“अथातः संप्रवक्ष्यामि तवाग्नेयपुराणकम् ।
ईशानकल्पवृत्तान्तं वशिष्ठायानलोऽब्रवीत् ॥
तत् पञ्चदशसाहस्रं नाम्नां चरितमद्भुतम् ।
पठतां शृण्वताञ्चैव सर्व्वपापहरं नृणाम् ॥
प्रश्नपूर्ब्बं पुराणस्य कथा सर्व्वावतारजा ।
सृष्टिप्रकरणं चाथविष्णुपूजादिकं ततः ॥

गायत्र्यर्थस्य निर्द्देशो लिङ्गस्तोत्रं ततः परम् ।
राजाभिषेकमन्त्रोक्तिर्धर्म्मकृत्यञ्च भूभुजाम् ॥
स्वप्नाध्यायस्ततः प्रोक्तः शकुनादिनिरूपणम् ।
मण्डलादिकनिर्द्देशो रणदीक्षाविधिस्ततः ॥
रामोक्तनीतिनिर्द्देशो रत्नानां लक्षणं ततः ।
धनुर्व्विद्या ततः प्रोक्ता व्यवहारप्रदर्शनम् ॥
देवासुरविमर्द्दाख्या ह्यायुर्व्वेदनिरूपणम् ।
गजादीनां चिकित्सा च तेषां शान्तिस्ततः परम्
॥
गोनसादिचिकित्सा च नानापूजास्ततः परम् ।
शान्तयश्चापि विविधा छन्दःशास्त्रमतः परम् ॥
साहित्यञ्च ततः पश्चादेकार्णादिसमाह्वयाः ।
सिद्धशिष्टानुशिष्टिश्च कोषः स्वर्गादिवर्गके ॥
प्रलयानां लक्षणञ्च शारीरकनिरूपणम् ।
वर्णनं नरकाणाञ्च योगशास्त्रमतः परम् ॥
ब्रह्मज्ञानं ततः पश्चात् पुराणश्रवणे फलम् ।
एतदाग्नेयकं विप्र ! पुराणं परिकीर्त्तितम ॥”
तत्फलश्रुतिः ।
“तल्लिखित्वा तु यो दद्यात् सुवर्णकमलाचितम् ।
तिलधेनुयुतं वापि मार्गशीर्ष्यां विधानतः ।
पुराणार्थविदे सोऽथ स्वर्गलोके महीयते ॥
एषानुक्रमणी प्रोक्ता तषाग्नेयस्य भक्तिदा ।
शृण्वतां पठताञ्चैव नृणाञ्चेह परत्र च ॥” * ॥
इति श्रीनारदीयपुराणे पूर्ब्बभागे बृहदुपाख्याने
चतुर्थपादे ९९ अध्यायः ॥ ८ ॥
नवमं भविष्यपुराणम् ।
श्रीब्रह्मोवाच ।
“अथ ते संप्रवक्ष्यामि पुराणं सर्व्वसिद्धिदम् ।
भविष्यं भरतः सर्व्वलोकाभीष्टप्रदायकम् ॥
यत्राहं सर्व्वदेवानामादिकर्त्ता समुद्यतः ।
सृष्ट्यर्थं तत्र सञ्जातो मनुः स्वायम्भुवः पुरा ॥
स मां प्रणम्य पप्रच्छ धर्म्मं सर्व्वार्थसाधकम् ।
अहं तस्मै तदा प्रीतः प्रावोचं धर्म्मसंहिताम् ॥
पुराणानां यदा व्यासो व्यासञ्चक्रे महामतिः ।
तदा तां संहितां सर्व्वां पञ्चधा व्यभजन्मुनिः ॥
अघोरकल्पवृत्तान्तनानाश्चर्य्यकथाचिताम् ॥”
तत्र प्रथमपर्व्वणि ।
“तत्रादिमं स्मृतं पर्व्व ब्राह्म्यं यत्रास्त्युपक्रमः ।
सूतशौनकसंवादे पुराणप्रश्नसंक्रमः ।
आदित्यचरितः प्रायःसर्व्वाख्यानसमाचितः ॥

मोहिनीचरितं पश्चादेवं वै नारदीयकम्
॥” * ॥
तत्फलश्रुतिः ।
“यः शृणोति नरो भक्त्या श्रावयेद्वा
समाहितः ।
स याति ब्रह्मणो धाम नात्र कार्य्या
विचारणा ॥
यस्त्वेतदिषपूर्णायां धेनूनां
सप्तकाचितम् ।
प्रदद्याद्द्विजवर्य्याय स लभेन्मोक्षमेव
च ॥
यश्चानुक्रमणीमेतां नारदीयस्य वर्णयेत्
।
शृणुयाद्वैकचित्तेन सोऽपि स्वर्गगतिं
लभेत् ॥”
इति श्रीनारदीयपुराणे पूर्ब्बभागे
बृहदुपाख्याने
चतुर्थपादे ९७ अध्यायः ॥ ६ ॥
सप्तमं मार्कण्डेयपुराणम् ।
श्रीब्रह्मोवाच ।
“अथ ते संप्रवक्ष्यामि मार्कण्डेयाभिधं
मुने ! ।
पुराणं सुमहत् पुण्यं पठतां शृण्वतां
सदा ॥
यत्राधिकृत्य शकुनीन्
सर्व्वधर्म्मनिरूपणम् ।
मार्कण्डेयेन मुनिना जैमिनेः प्राक्
समीरितम् ॥
पक्षिणां धर्म्मसंज्ञानां ततो
जन्मनिरूपणम् ।
पूर्ब्बजन्मकथा चैषां विक्रिया च
दिवस्पतेः ॥
तीर्थयात्रा बलस्यातो
द्रौपदेयकथानकम् ।
हरिश्चन्द्रकथा पुण्या
युद्धमाडीवकाभिधम् ॥
पितापुत्त्रसमाख्यानं दत्तात्रेयकथा
ततः ।
हैहयस्याथ चरितं
महाख्यानसमाचितम् ॥
मदालसाकथात्रोक्ता
ह्यलर्कचरिताचिता ।

अग्निकार्य्यं ततः पश्चान्मन्त्रमुद्रादिलक्षणम्
।
सर्व्वदीक्षाविधानञ्च अभिषेकनिरूपणम् ॥
लक्षणं मण्डलादीनां कुशाया मार्ज्जनं ततः
।
पवित्रारोपणविधिर्द्देवालयविधिस्ततः ॥
शालग्रामादिपूजा च मूर्त्तिलक्ष्म पृथक् पृथक्
।
न्यासादीनां विधानञ्च प्रतिष्ठा पूर्त्तका ततः
॥
विनायकादिदीक्षाणां विधिर्ज्ञेयस्ततः परम् ।
प्रतिष्ठा सर्व्वदेवानां ब्रह्माण्डस्य निरूपणम्
॥
गङ्गादितीर्थमाहात्म्यं जम्ब्वादिद्वीपवर्णनम् ।
ऊद्‌र्ध्वाधोलोकरचना
ज्योतिश्चक्रनिरूपणम् ॥
ज्योतिषञ्च ततः प्रोक्तं शास्त्रं युद्धजयार्णवम्
।
षट्‌कर्म्म च ततः प्रोक्तं मन्त्रयन्त्रौषधीगणः
॥
कुब्जिकादिसमर्च्चा च
षोढान्यासविधिस्तथा ।
कोटिहोमविधानञ्च तदन्तरनिरूपणम् ॥
ब्रह्मचर्य्यादिधर्म्माश्च श्राद्धकल्पविधिस्ततः
।
ग्रहयज्ञस्ततः प्रोक्तो वैदिकस्मार्त्तकर्म्म च ॥
प्रायश्चित्तानुकथनं तिथीनाञ्च व्रतादिकम् ।
वारव्रतानुकथनं नक्षत्रव्रतकीर्त्तनम् ॥
मासिकव्रतनिर्द्देशो दीपदानविधिस्तथा ।
नवव्यूहार्च्चनं प्रोक्तं नरकाणां निरूपणम् ॥
व्रतानाञ्चापि दानानां निरूपणमिहोदितम् ।
नाडीचक्रसमुद्देशः सन्ध्याविधिरनुत्तमः ॥

सृष्ट्यादिलक्षणोपेतः शास्त्रसर्व्वस्वरूपकः ।
पुस्तलेखकलेखानां लक्षणञ्च ततः परम् ॥
संस्काराणाञ्च सर्व्वेषां लक्षणञ्चात्र कीर्त्तितम् ।
पक्षत्यादितिथीनाञ्च कल्पाः सप्त च कीर्त्तिताः ॥
अष्टम्याद्याः शेषकल्पा वैष्णवे पर्व्वणि स्मृताः ।
शैवे च कामतो भिन्नाः सौरे चान्त्यकथाचयः ॥
प्रतिसर्गाह्वयं पश्चान्नानाख्यानसमाचितम् ।
पुराणस्योपसंहारसहितं पर्व्व पञ्चमम् ॥
एषु पञ्चसु पूर्ब्बस्मिन् ब्रह्मणो महिमाधिकः ॥”
द्वितीयतृतीयचतुर्थपञ्चमपर्व्वसु ।
“धर्म्मे कामे च मोक्षे तु विष्णोश्चापि शिवस्य च
।
द्वितीये च तृतीये च सौरो वर्गचतुष्टये ॥
प्रतिसर्गाह्वयं त्वन्त्यं प्रोक्तं सर्व्वकथाचितम् ।

| सृष्टिसंकीर्त्तनं पुण्यं नवधा परिकीर्त्तितम् ॥ कल्पान्तकालनिर्द्देशो यक्षसृष्टिनिरूपणम् । रुद्रादिसृष्टिरप्युक्ता द्वीपवर्षानुकीर्त्तनम् ॥ मनूनाञ्च कथा नाना कीर्त्तिताः पापहारिकाः । तासु दुर्गाकथात्यन्तं पुण्यदा चाष्टमेऽन्तरे ॥ तत्पश्चात् प्रणवोत्पत्तिस्त्रयीतेजःसमुद्भवः । मार्त्तण्डस्य च जन्माख्या तन्माहात्म्यसमाचिता ॥ वैवस्वताचयश्चापि वत्सप्र्यश्चरितं ततः ॥” | | |
|---|---|---|

सभविष्यं विनिर्द्दिष्टं पर्व्व व्यासेन धीमता ।
चतुर्द्दशसहस्रन्तु पुराणं परिकीर्त्तितम् ।
भविष्यं सर्व्वदेवानां साम्यं यत्र प्रकीर्त्तितम् ॥
गुणानां तारतम्येन समं ब्रह्मेति हि श्रुतिः ॥”
तत्फलश्रुतिः ।
“तल्लिखित्वा तु यो दद्यात् पौष्यां विद्वान्
विम-
त्सरः ।
गुडधेनुयुतं हेमवस्त्रमाल्यविभूषणैः ॥
वाचकं पुस्तकञ्चापि पूजयित्वा विधानतः ।
गन्धाद्यैर्भाज्यभक्ष्यैश्च कृत्वा नीराजनादिकम्
।
यो वै जितेन्द्रियो भूत्वा सोपवासः समाहितः
॥
अथ वै यो नरो भक्त्या कीर्त्तयेच्छृणुयादपि ।
स मुक्तः पातकैर्घोरैः प्रयाति ब्रह्मणः पदम् ॥
योऽप्यनुक्रमणीमेतां भविष्यस्य निरूपिताम् ।
पठेद्वा शृणुयाच्चैतौ भुक्तिं मुक्तिञ्च विन्दतः ॥”
इति श्रीनारदीयपुराणे पूर्ब्बभागे बृहदुपाख्याने
चतुर्थपादे १०० अध्यायः ॥ ९ ॥
दशमं ब्रह्मवैवर्त्तपुराणम् ।
श्रीब्रह्मोवाच ।
“शृणु वत्स ! प्रवक्ष्यामि पुराणं दशमं तव ।
ब्रह्मवैवर्त्तकं नाम वेदमार्गानुदर्शकम् ॥
सावर्णिर्यत्र भगवान् साक्षाद्देवर्षयेऽर्थितः ।
नारदाय पुराणार्थं प्राह सर्व्वमलौकिकम् ॥
धर्म्मार्थकाममोक्षाणां सारः प्रीतिर्हरौ हरे ।
तयोरभेदसिद्ध्यर्थं ब्रह्मवैवर्त्तमुत्तमम् ॥
रथन्तरस्य कल्पस्य वृत्तान्तं यन्मयोदितम् ।
शतकोटिपुराणे तत् संक्षिप्य प्राह वेदवित् ॥
व्यासश्चतुर्द्धा संव्यस्य ब्रह्मवैवर्त्तसंज्ञितम् ।
अष्टादशसहस्रन्तत् पुराणं परिकीर्त्तितम् ॥
ब्रह्मप्रकृतिविघ्नेशकृष्णखण्डसमाचितम् ।
तत्र सूतर्षिसंवादे पुराणीयक्रमो मतः ॥”
तत्र प्रथमे ब्रह्मखण्डे ।
“सृष्टिप्रकरणं त्वाद्यं ततो नारदवेधसोः ।
विवादः सुमहान् यत्र द्वयोरासीत् पराभवः ॥
शिवलोकगतिः पश्चाज्ज्ञानलाभः शिवान्-
मुनेः ।

चतुर्थे श्रीकृष्णजन्मखण्डे ।
“श्रीकृष्णजन्मसंप्रश्नो जन्माख्यानं
ततोऽद्भुतम् ।
गोकुले गमनं पश्चात् पूतनादिवधोऽद्भुतः ॥
बाल्यकौमारजा लीला विविधास्तत्र
वर्णिताः ।
रासक्रीडा च गोपीभिः शारदी समुदाहृता ।
रहस्ये राधया क्रीडा वर्णिता बहुविस्तरा ॥
सहाक्रूरेण तत्पश्चान्मथुरागमनं हरेः ।
कंसादीनां वधे वृत्ते साद्यस्य
द्विजसंस्कृतिः ॥
काश्यसान्दीपनेः पश्चाद्विद्योपादानमद्भुतम्
।
यवनस्य वधः पश्चाद्द्वारकागमनं हरेः ॥
नरकादिवधस्तत्र कृष्णेन विहितोऽद्भुतः ।
कृष्णखण्डमिदं विप्र ! नृणां
संसारखण्डनम् ॥”
तत्फलश्रुतिः ।
“पठितञ्च श्रुतं ध्यातं पूजितं चाभिवर्णितम्
।
इत्येतद्ब्रह्मवैवर्त्तं पुराणं चात्यलौकिकम् ॥
व्यासोक्तं चादिसम्भूतं पठन् शृण्वन्
विमुच्यते ।
विज्ञानज्ञानशमनात् घोरात् संसारसागरात्
॥
लिखित्वेदञ्च यो दद्यान्माघ्यां
धेनुसमाचितम् ।
ब्रह्मलोकमवाप्नोति स
मुक्तोऽज्ञानबन्धनात् ॥
यश्चानुक्रमणीं वापि पठेद्वा शृणुयादपि ।
सोऽपि कृष्णप्रसादेन लभते वाञ्छितं
फलम् ॥”
इति श्रीनारदीयपुराणे पूर्ब्बभागे
बृहदुपाख्याने
चतुर्थपादे १०१ अध्यायः ॥ १० ॥
एकादशं लिङ्गपुराणम् ।
श्रीब्रह्मोवाच ।
“शृणु पुत्र ! प्रवक्ष्यामि पुराणं
लिङ्गसंज्ञितम् ।
पठतां शृण्वताञ्चैव भक्तिमुक्तिप्रदायकम् ॥

सनत्कुमारनन्दीशसंवादश्च पुनर्मुने ! ॥
शिवमाहात्म्यसंयुक्तस्नानयागादिकं ततः ।
सूर्य्यपूजाविधिश्चैव शिवपूजा च मुक्तिदा ॥
दानानि बहुधोक्तानि श्राद्धप्रकरणन्ततः ।
प्रतिष्ठा तत्र गदिता ततोऽघोरस्य कीर्त्त नम्
॥
व्रजेश्वरी महाविद्या गायत्रीमहिमा ततः ।
त्र्यम्बकस्य च माहात्म्यं पुराणश्रवणस्य च
॥
एतस्योपरिभागस्ते लैङ्गस्य कथितो मया ।
व्यासेन हि निबद्धस्य रुद्रमाहात्म्यसूचिनः
॥”
तत्फलश्रुतिः ।
“लिखित्वैतत् पुराणन्तु
तिलधेनुसमाचितम् ।
फाल्गुन्यां पूर्णिमायां यो दद्याद्भक्त्या
द्विजातये ।
स लभेच्छिवसायुज्यं जरामरणवर्ज्जितः
॥
यः पठेच्छृणुयाद्वापि लैङ्गं पापापहं नरः ।
स भुक्तभोगो लोकेऽस्मिन्नन्ते शिवपुरं
व्रजेत् ॥
लिङ्गानुक्रमणीमेतां पठेद् यः शृणुयात् तथा
।
तावुभौ शिवभक्तौ तु लोकद्वितयभोगिनौ ।
जायेतां गिरिजाभर्त्तुः प्रसादान्नात्र संशयः
॥”
इति श्रीनारदीयपुराणे पूर्ब्बभागे
बृहदुपाख्याने
चतुर्थपादे १०२ अध्यायः ॥ ११ ॥
द्वादशं वराहपुराणम् ।
श्रीब्रह्मोवाच ।
“शृणु वत्स ! प्रवक्ष्यामि वाराहं वैपुराणकम्
।
भागद्वययुतं शश्वद्विष्णुमाहात्म्यसूचकम् ॥
मानवस्य तु कल्पस्य प्रसङ्गं मत्कृतं पुरा ।
निबबन्ध पुराणेऽस्मिंश्चतुर्व्विंशसहस्रके ॥
व्यासो हि विदुषां श्रेष्ठः साक्षान्नारायणो
भुवि ।

शिववाक्येन तत्पश्चात् मरीचे ! नारदस्य च
॥
मननञ्चैव सावर्णेर्ज्ञानार्थं सिद्धसेविते ।
आश्रमे सुमहत्पुण्ये त्रैलोक्याश्चर्य्यकारिणि ।
एतद्धि ब्रह्मखण्डं हि श्रुतं पापविनाशनम् ॥"
द्वितीये प्रकृतिखण्डे ।
"ततः सावर्णिसंवादो नारदस्य समीरितः ।
कृष्णमाहात्म्यसंयुक्तो नानाख्यानकथोत्तरः ॥
प्रकतेरं शभूतानां कलानाञ्चापि वर्णितम् ।
माहात्म्यं पूजनाद्यञ्च विस्तरेण यथास्थितम् ॥
एतत्प्रकृतिखण्डं हि श्रुतं भूतिविधायकम् ॥"
तृतीये गणेशखण्डे ।
"गरोशजन्मसंप्रश्नः सपुण्यकमहाव्रतम् ।
पार्व्वत्याः कार्त्तिकेयेन सह विघ्नेशसम्भवः ॥
चरितं कार्त्तवीर्य्यस्य जामदग्न्यस्य चाद्भुतम् ।
विवादः सुमहान् पश्चाज्जामदग्न्यगणेशयोः ॥
एतद्विघ्नेशखण्डं हि सर्व्वविघ्नविनाशनम् ॥"

यच्च लिङ्गाभिधं तिष्ठन् वह्निलिङ्गे
हरोऽभ्यधात् ।
मह्यं धर्म्मादिसिद्ध्यर्थं
अग्निकल्पकथाश्रयम् ॥
तदेव व्यासदेवेन भागद्वयसमाचितम् ।
पुराणं लिङ्गमुदितं बह्वाख्यानविचित्रितम् ॥
तदेकादशसाहस्रं हरमाहात्म्यसूचकम् ।
परं सर्व्वपुराणानां सारभूतं जगत्त्रये ॥
पुराणोपक्रमे प्रश्नः सृष्टिसंक्षेपतः पुरा ॥"
तत्र पूर्ब्बभागे ।
"योगाख्यानं ततः प्रोक्तं कल्पाख्यानं
ततःपरम् ॥
लिङ्गोद्भवस्तदर्च्चा च कीर्त्तिता हि ततः
परम् ।
सनत्कुमारशैलादिसंवादश्चाथ पावनः ॥
ततो दधीचिचरितं युगधर्म्मनिरूपणम् ।
ततो भुवनकोषाख्या सूर्य्यसोमान्वयस्ततः
॥
ततश्च विस्तरात् सर्गस्त्रिपुराख्यानकं
तथा ।
लिङ्गप्रतिष्ठा च ततः पशुपाशविमोक्षणम् ॥
शिवव्रतानि च तथा सदाचारनिरूपणम् ।
प्रायश्चित्तान्यरिष्टानि काशीश्रीशैलवर्णनम्
॥
अन्धकाख्यानकं पश्चाद्वाराहचरितं पुनः ।
नृसिंहचरितं पश्चाज्जलन्धरवधस्ततः ॥
शैवं सहस्रनामाथ दक्षयज्ञविनाशनम् ।
कामस्य दहनं पश्चात् गिरिजायाः करग्रहः
॥
ततो विनायकाख्यानं नृत्याख्यानं शिवस्य
च ।
उपमन्युकथा चापि पूर्ब्बभाग इतीरितः ॥"
* ॥
तदुत्तरभागे ।
"विष्णुमाहात्म्यकथनमम्बरीषकथाततः ।

तत्रादौ शुभसंवादः स्मृतो भूमिवराहयोः
॥"
तत्र पूर्ब्बभागे ।
"अथादिकृतवृत्तान्ते रभ्यस्य चरितं ततः
।
दुर्ज्जयाय च तत्पश्चाच्छ्राद्धकल्प
उदीरितः ॥
महातपस आख्यानं गौर्य्युत्पत्तिस्ततः
परम् ।
विनायकस्य नागानां सेनान्यादित्ययोरपि
॥
गणानाञ्च तथा देव्या धनदस्य वृषस्य च ।
आख्यानं सत्यतपसो
व्रताख्यानसमन्वितम् ॥
अगस्त्यगीता तत्पश्चाद्रुद्रगीता प्रकीर्त्तिता
।
महिषासुरविध्वंसे माहात्म्यञ्च त्रिशक्तिजम्
॥
पर्व्वाध्यायस्ततः श्वेतोपाख्यानं
गोप्रदानिकम् ।
इत्यादिकृतवृत्तान्तं प्रथमोद्देशनामकम् ॥
भगवद्धर्म्मके पश्चाद्व्रततीर्थकथानकम् ।
द्वात्रिंशदपराधानां प्रायश्चित्तं शरीरकम् ॥
तीर्थानाञ्चापि सर्व्वेषां माहात्म्यं
पृथगीरितम् ।
मथुराया विशेषेण श्राद्धादीनां विधिस्ततः
॥
वर्णनं यमलोकस्य ऋषिपुत्त्रप्रसङ्गतः ।
विपाकः कर्म्मणाञ्चैव विष्णुव्रतनिरूपणम्
॥
गोकर्णस्य च माहात्म्यं कीर्त्तितं
पापनाशनम् ।
इत्येष पूर्ब्बभागोऽस्य पुराणस्य निरूपितः
॥"
उत्तरभागे ।
"उत्तरे प्रविभागे तु पुलस्त्यकुरुराजयोः ।
संवादे सर्व्वतीर्थानां
माहात्म्यंविस्तारात्पृथक् ॥
अशेषधर्म्माश्चाख्याताः पौष्करं पुण्यपर्व्व
च ।
इत्येवं तव वाराहं प्रोक्तं पापविनाशनम् ॥"

तत्फलश्रुतिः ।
“पठतां शृण्वताञ्चैव भगवद्भक्तिवर्द्धनम्
।
काञ्चनं गरुडं कृत्वा
तिलधेनुसमाचितम् ॥
लिखित्वैतच्च यो दद्याच्चैत्र्यां विप्राय
भक्तितः ।
स लभेद्वैष्णवं धाम देवर्षिगणवन्दितः
॥
यो वानुक्रमणीमेतां शृणोत्यपि पठत्यपि
।
सोऽपि भक्तिं लभेद्विष्णौ
संसारोच्छेदकारि-
णीम् ॥” * ॥
इति श्रीनारदीयपुराणे पूर्ब्बभागे
बृहदुपाख्याने
चतुर्थपादे १०३ अध्यायः ॥ १२ ॥
त्रयोदशं स्कन्दपुराणम् ।
श्रीब्रह्मोवाच ।
“शृणु वक्ष्ये मरीचे ! च पुराणं
स्कन्दसंज्ञितम् ।
यस्मिन् प्रतिपदं साक्षान्महादेवो
व्यवस्थितः ॥
पुराणे शतकोटौ तु यच्छैवं वर्णितं मया
।
लक्षितस्यार्थजातस्य सारो व्यासेन
कीर्त्तितः ॥
स्कन्दाह्वयस्तत्र खण्डाः सप्तैव
परिकल्पिताः ।
एकाशीतिसहस्रन्तु स्कान्दं
सर्व्वाघकृन्तनम् ॥
यः शृणोति पठेद्वापि स तु साक्षाच्छिवः
स्थितः ।
यत्र माहेश्वरा धर्म्माः षण्मुखेन
प्रकाशिताः ॥
कल्पे तत्पुरुषे वृत्ताः
सर्व्वसिद्धिविधायकाः ॥”
तत्र प्रथमे माहेश्वरखण्डे ।
“तस्य माहेश्वरश्चाद्यः खण्डः
पापप्रणाशनः ॥

द्वितीये वैष्णवखण्डे ।
“द्वितीयो वैष्णवः खण्डस्तस्याख्यानानि मे
शृणु ।
प्रथमं भूमिवाराहं समाख्यानं प्रकीर्त्तितम् ॥
यत्र वोचककुध्रस्य माहात्म्यं पापनाशनम् ।
कमलायाः कथा पुण्या
श्रीनिवासस्थितिस्ततः ॥
कुलालाख्यानकं चात्र सुवर्णमुखरीकथा ।
नानाख्यानसमायुक्ता भारद्वाजकथाद्भुता ॥
मतङ्गाञ्जनसंवादः कीर्त्तितः पापनाशनः ।
पुरुषोत्तममाहात्म्यं कीर्त्तितं चोत्कले ततः
॥
मार्कण्डेयसमाख्यानमम्बरीषस्य भूपतेः ।
इन्द्रद्युम्नस्य चाख्यानं विद्यापतिकथा शुभा
॥
जैमिनेः समुपाख्यानं नारदस्यापि वाडव ! ।
नीलकण्ठसमाख्यानं नारसिंहोपवर्णनम् ॥
अश्वमेधकथा राज्ञो ब्रह्मलोकगतिस्तथा ।
रथयात्राविधिः
पश्चाज्जन्मस्नानविधिस्तथा॥
दक्षिणामूर्त्युपाख्यानं गुण्डिचाख्यानकं ततः
।
रथरक्षाविधानञ्च शयनोत्सवकीर्त्तनम् ॥
श्वेतोपाख्यानमत्रोक्तं वह्न्युत्सवनिरूपणम्
।
दोलोत्सवो भगवतो व्रतं सांवत्सराभिधम् ॥
पूजा च कामिभिर्विष्णोरुद्दालकनियोगकः ।
मोक्षसाधनमत्रोक्तं नानायोगनिरूपणम् ॥
दशावतारकथनं स्नानादिपरिकीर्त्तनम् ।
ततो वदरिकायाश्च माहात्म्यं पापनाशनम्
॥
अग्न्यादितीर्थमाहात्म्यं वैनतेयशिलाभवम् ।
कारणं भगवद्वासे तीर्थं कापालमोचनम् ॥
पञ्चधाराभिधं तीर्थं मेरुसंस्थापनं तथा ।
ततः कार्त्तिकमाहात्म्ये माहात्म्यं
मदनालसम् ॥
धूम्रकेशसमाख्यानं दिनकृत्यानि कार्त्तिके ।
पञ्चभीष्मव्रताख्यानं कीर्त्तिदं भुक्तिमुक्तिदम्
॥

गोप्रचारञ्च दुग्धोदं गुरुकुण्डादिपञ्चकम् ॥
घोषार्कादीनि तीर्थानि त्रयोदश ततः परम् ।
गयाकूपस्य माहात्म्यं सर्व्वाघविनिवर्त्तकम् ॥
माण्डव्याश्रमपूर्ब्बाणि तीर्थानि तदनन्तरम् ।
अजितादिमानसादितीर्थानिगदितानि च ॥
इत्येष वैष्णवः खण्डो द्वितीयः परिकीर्त्तितः ॥”
तृतीये ब्रह्मखण्डे ।
“अतःपरं ब्रह्मखण्डं मरीचे ! शृणु पुण्यदम् ।
यत्र वै सेतुमाहात्म्ये फलं स्नानेक्षणेद्भवम् ॥
गालवस्य तपश्चर्य्या राक्षसाख्यानकं ततः ।
चक्रतीर्थादिमाहात्म्यं देवीपतनसंयुतम् ॥
वेतालतीर्थमहिमा पापनाशादिकीर्त्तनम् ।
मङ्गलादिकमाहात्म्यं ब्रह्मकुण्डादिवर्णनम् ।
हनूमत्कुण्डमहिमागस्त्यतीर्थभवं फलम् ॥
रामतीर्थादिकथनं लक्ष्मीतीर्थनिरूपणम् ।
शङ्खादितीर्थमहिमा तथा साध्यामृतादिजः ॥
धनुष्कोट्यादिमाहात्म्यं क्षीरकुण्डादिजं तथा ।
गायत्र्यादिकतीर्थानां माहात्म्यं चात्र कीर्त्ति-
तम् ॥
रामनाथस्य महिमा तत्त्वज्ञानोपदेशनम् ।
यात्राविधानकथनं सेतौ मुक्तिप्रदं नृणाम् ॥
धर्म्मारण्यस्य माहात्म्यं ततः परमुदीरितम् ।
स्थाणुः स्कन्दाय भगवाम् यत्र तत्त्वमुपादिशत् ॥
धर्म्मारण्यसुसंभूतिस्तत्पुण्यपरिकीर्त्तनन् ।
कर्म्मसिद्धेः समाख्यानं ऋषिवंशनिरूपणम् ॥
अप्सरातीर्थमुख्यानां माहात्म्यं यत्र कीर्त्ति-
तम् ।
वर्णानामाश्रमानाञ्च धर्म्मतत्त्वनिरूपणम् ॥
देवस्थानविभागश्च वकुलार्ककथा शुभा ।
छत्रा नन्दा तथा शान्ता श्रीमाता च मतङ्गिनी ॥
पुण्यदात्र्यः समाख्याता यत्र देव्यः समास्थिताः
।
इन्द्रेश्वरादिमाहात्म्यं द्वारकादिनिरूपणम् ॥
लोहासुरसमाख्यानं गङ्गाकूपनिरूपणम् ।
श्रीरामचरितञ्चैव सत्यमन्दिरवर्णनन् ॥
जीर्णोद्धारस्य कथनं शासनप्रतिपादनम् ।
जातिभेदप्रकथनं स्मृतिधर्म्मनिरूपणम् ॥
ततस्तु वैष्णवा धर्म्मा नानाख्यानैरुदीरिताः ।
चातुर्म्मास्ये ततः पुण्ये सर्व्वधर्म्मनिरूपणम् ॥
दानप्रशंसा तत्पश्चाद्व्रतस्य महिमा ततः ।

किञ्चिन्न्यूनार्कसाहस्रो बहुपुण्यो
बृहत्कथः ।
सुचरित्रिशतैर्युक्तः
स्कन्दमाहात्म्यसूचकः ॥
यत्र केदारमाहात्म्ये पुराणोपक्रमः पुरा
।
दक्षयज्ञकथा पश्चाच्छिवलिङ्गार्च्चने
फलम् ॥
समुद्रमथनाख्यानं देवेन्द्र चरितं ततः ।
पार्व्वत्याः समुपाख्यानं
विवाहस्तदनन्तरम् ॥
कुमारोत्पत्तिकथनं ततस्तारकसङ्गरः
।
ततः पशुपताख्यानं
चण्ड्याख्यानसमाचितम् ॥
द्यूतप्रवर्त्तनाख्यानं नारदेन समागमः ।
ततः कुमारमाहात्म्ये
पञ्चतीर्थकथानकम् ॥
धर्म्मवर्म्मनृपाख्यानं
नदीसागरकीर्त्तनम् ।
इन्द्रद्युम्नकथा
षश्चान्नाडीजङ्घकथाचिता ॥
प्रादुर्भावस्ततो मह्याः कथा दमनकस्य
च ।
महीसागरसंयोगः कुमारेशकथा ततः
॥
ततस्तारकयुद्धञ्च
नानाख्यानसमाचितम् ।
वधश्च तारकस्याथ
पञ्चलिङ्गनिवेशनम् ॥
द्वीपाख्यानं ततः पुण्यं
ऊद्‌र्ध्वलोकव्यवस्थितः ।
ब्रह्माण्डस्थितिमानञ्च
वर्करेशकथानकम् ॥
महाकालसमुद्भूतिः कथा चास्य
महाद्भुता ।
वासुदेवस्य माहात्म्यं कोरितीर्थं ततः
परम् ॥
नानातीर्थसमाख्यानं गुप्तक्षेत्रे
प्रकीर्त्तितम् ।
पाण्डवानां कथा पुण्या
महाविद्याप्रसाधनम् ॥

तद्‌व्रतस्य च माहात्म्ये विधानं स्नानजं
तथा ।
पुण्ड्रादिकीर्त्तनं चात्र मालाधारणपुण्यकम् ॥
पञ्चामृतस्नानपुण्यं घण्टानादादिजं फलम् ।
नानापुष्पार्च्चनफलं तुलसीदलजं फलम् ॥
नैवेद्यस्य च माहात्म्यं हरिवासरकीर्त्तनम् ।
अखण्डैकादशीपुण्यं तथा जागरणस्य च ॥
मत्स्योत्सवविधानञ्च नाममाहात्म्यकीर्त्तनम्
।
ध्यानादिपुण्यकथनं माहात्म्यं मथुराभवम् ॥
मथुरातीर्थमाहात्म्यं पृथगुक्तं ततः परम् ।
वनानां द्वादशानाञ्च माहात्म्यं कीर्त्तितं ततः
॥
श्रीमद्भागवतस्यात्र माहात्म्यं कीर्त्तितं परम् ।
वज्रशाण्डिल्यसंवादं अन्तर्लीलाप्रकाशकम्
॥
ततो माघस्य माहात्म्यं स्नानदानजपोद्भवम्
।
नानाख्यानसमायुक्तं दशाध्याये निरूपितम्
॥
ततो वैशाखमाहात्म्ये शय्यादानादिजं
फलम् ।
जलदानादिविधयः कामाख्यानमतः परम् ॥
श्रुतदेवस्य चरितं व्याधोपाख्यानमद्भुतम् ।
तथाक्षयतृतीयादेर्व्विशेषात् पुण्यकीर्त्तनम् ॥
ततस्त्वयोध्यामाहात्म्येचक्रब्रह्माह्वतीर्थके ।
ऋणपापविमोक्षाख्ये तथाधारसहस्रकम् ॥
स्वर्गद्वारं चन्द्रहरिधर्म्महर्य्युपवर्णनम् ।
स्वर्णवृष्टेरुपाख्यानं तिलोदा सरयूयुतिः ॥
सीताकुण्डं गुप्तहरिः सरयूर्घर्घराचयः ।

तपसश्चैव पूजायाः सच्छिद्रकथनं ततः ॥
प्रकृतीनां भिदाख्यानं शालग्रामनिरूपणम् ।
तारकस्य वधोपायो त्र्यक्षार्च्चा महिमा तथा ॥
विष्णोः शापश्च वृक्षत्वं पार्व्वत्यनुनयस्ततः ।
हरस्य ताण्डवं नृत्यं रामनामनिरूपणम् ॥
हरस्य लिङ्गपतनं कथायै जवनस्य च ।
पार्व्वतीजन्मचरितं तारकस्य वधोऽद्भुतः ॥
प्रणवैश्वर्य्यकथनं तारकाचरितं पुनः ।
दक्षयज्ञसमाप्तिश्च द्वादशाक्षररूपणम् ॥
ज्ञानयोगसमाख्यानं महिमा द्वादशार्णजः ।
श्रवणादिकपुण्यञ्च कीर्त्तितं शर्म्मदं नृणाम् ॥”
तृतीये ब्रह्मखण्डस्योत्तरभागे ।
“ततो ब्रह्मोत्तरे भागे शिवस्य महिमाद्भुतः ।

| | | |
|---|---|---|
| तीर्थयात्रासमाप्तिश्च<br>कौमारमिदमद्भुतम् ।<br>अरुणाचलमाहात्म्ये सनकब्रह्मसंकथा<br>॥<br>गौरीतपःसमाख्यानं<br>तत्तत्तीर्थनिरूपणम् ।<br>महिषासुरजाख्यानं वधश्चास्य<br>महाद्भुतः ॥<br>शोणाचले शिवास्थानं नित्यदा<br>परिकीर्त्तितम् ।<br>इत्येष कथितः स्कान्दे खण्डो<br>माहेश्वरोऽद्-<br>भुतः ॥” | | |

पञ्चाक्षरस्य महिमा गोकर्णमहिमा ततः ॥
शिवरात्रेश्च महिमा प्रदोषव्रतकीर्त्तनम् ।
सोमवारव्रतञ्चापि सीमन्तिन्याः कथानकम् ॥
भद्रायूत्पत्तिकथनं सदाचारनिरूपणम् ।
शिववर्म्मसमुद्देशो भद्रायूद्वाहवर्णनम् ॥
भद्रायुमहिमा चापि भस्ममाहात्म्यकीर्त्तनम् ।
शवराख्यानकञ्चैव उमामाहेश्वरव्रतम् ॥
रुद्राक्षस्य च माहात्म्यं रुद्राध्यायस्य पुण्यकम् ।
श्रवणादिकपुण्यञ्च ब्रह्मखण्डोऽयमीरितः ॥" * ॥
चतुर्थे काशीखण्डे ।
"अतः परं चतुर्थन्तु काशीखण्डमनुत्तमम् ।
विन्ध्यनारदयोर्य्यत्र संवादः परिकीर्त्तितः ॥
सत्यलोकप्रभावश्चागस्त्यावासेसुरागमः ।
पतिव्रताचरित्रञ्च तीर्थचर्य्याप्रशंसनम् ॥
ततश्च सप्तपुर्य्याख्या संयमिन्या निरूपणम् ।
व्रध्नस्य च तथेन्द्राग्न्योर्लोकाप्तिः शिवशर्म्मणः ॥
अग्नेः समुद्भवश्चैव क्रव्याद्वरुणसम्भवः ।
गन्धवत्यलकापुर्य्योरीश्वर्य्याश्चसमुद्भवः ॥
चन्द्रोडुबुधलोकानां कुजेज्यार्कभुवां क्रमात् ।
सप्तर्षीणां ध्रुवस्यापि तपोलोकस्य वर्णनम् ॥
ध्रुवलोककथा पुण्या सत्यलोकनिरीक्षणम् ।
स्कन्दागस्त्यसमालापो मणिकर्णीसमुद्भवः ॥
प्रभावश्चापि गङ्गाया गङ्गानामसहस्रकम् ।
वाराणसीप्रशंसा च भैरवाविर्भवस्ततः ॥
दण्डपाणिज्ञानवाप्योरुद्भवःसमनन्तरम् ।
ततः कलावत्याख्यानं सदाचारनिरूपणम् ॥

महाकालवनाख्यानं ब्रह्मशीर्षच्छिदा ततः ॥
प्रायश्चित्तविधिश्चाग्नेरुत्पत्तिश्चसुरागमः ।
देवदीक्षा शिवस्तोत्रं नानापातकनाशनम् ॥
कपालमोचनाख्यानं महाकालवनस्थितिः ।
तीर्थं कलकलेशस्य सर्व्वपापप्रणाशनम् ॥
कुण्डमप्सरसंज्ञञ्च सर्गे रुद्रस्य पुण्यदम् ।
कुटुम्बेशञ्च विद्याध्रमर्कटेश्वरतीर्थकम् ॥
स्वर्गद्वारं चतुःसिन्धुतीर्थं शङ्खवापिका ।
सकरार्कगन्धवतीतीर्थम्पापप्रणाशनम् ॥
दशाश्वमेधैकानंशातीर्थ च हरिसिद्धिदम् ।
पिशाचकादियात्रा च हनूमत्कयमेश्वरौ ॥
महाकालेशयात्रा च वल्मीकेश्वरतीर्थकम् ॥
शुक्रेशभेशोपाख्यानं कुशस्थल्याः प्रदक्षिणम् ।
अक्रूरमन्दाकिन्धङ्कपादचन्द्राकवैभवम् ॥
करभेशकुक्कुटेशलड्डुकेशादितीर्थकम् ।
मार्कण्डेशं यज्ञवापी सोमेशं नरकान्तकम् ॥
केदारेश्वररामेशसौभाग्येशनरार्क्कम् ।
केशार्कं शक्तिभेदञ्च स्वणक्षरमुखानि च ॥
ओङ्कारेशादितीर्थानि अन्धकस्तुतिकीर्त्तनम् ।
कालारण्ये लिङ्गसङ्ख्या स्वर्णशृङ्गाभिधानकम् ॥
कुशस्थल्या अवन्त्याश्चोज्जयिन्या अभिधानकम् ।
पद्मावती कुमुद्वत्यमरावतीतिनामकम् ॥
विशालाप्रतिकल्पाभिधानेच ज्वरशान्तिकम् ।
शिप्रास्नानादिकफलं नागोन्मीता शिवस्तुतिः ॥
हिरण्याक्षवधाख्यानं तीर्थं सुन्दरकुण्डकम् ।
नीलगङ्गा पुष्कराख्यं बिन्ध्यावासनतीर्थकम् ॥
पूरुषोत्तमाधिमासं तत्तीर्थञ्चाघनाशनम् ।
गोमतीवामने कुण्डे विष्णोर्नामसहस्रकम् ॥
वीरेश्वरसरः कालभैरवस्य च तीर्थके ।
महिमा नागपञ्चम्यां नृसिंहस्य जयन्तिका ॥
कुठुवेश्वरयात्रा च देवसाधककीर्त्तनम् ।
कर्कराजाख्यतीर्थञ्च विघ्नेशादिसुरोहनम् ॥
रुद्रकुण्डप्रभृतिषु बहुतीर्थनिरूपणम् ।
यात्राष्टतीर्थजा पुण्या रेवामाहात्म्यमुच्यते ॥
धर्म्मपुण्यस्य वैराग्ये मार्कण्डेयेन सङ्गमः ।
प्राग्लयानुभवाख्यानं अमृतापरिकीर्त्तनम् ॥

आपित्येश्वरतीर्थञ्च शक्रतीर्थं करोटिकम् ।
कुमारेशमगस्त्येशं च्यवनेशञ्च मातृजम् ॥
लोकेशं धनदेशञ्च मङ्गलेशञ्च कामजम् ।
नागेशञ्चापि गोपारं गौतमं शङ्खचूडजम् ॥
नारदेशं नन्दिकेशं वरुणेश्वरतीर्थकम् ।
दधिस्कन्दादितीर्थानि हनूमन्तेश्वरन्ततः ॥
रामेश्वरादितीर्थानि सोमेशं पिङ्गलेश्वरम् ।
ऋणमोक्षं कपिलेशं पूतिकेशं जलेशयम् ॥
चण्डार्क्यमतीर्थञ्च कह्लोडीशञ्च नान्दिकम् ।
नारायणञ्च कोटीशं व्यासतीर्थं प्रभासिकम् ॥
नागेशं सङ्कर्षणकं मन्मथेश्वरतीर्थकम् ।
एरण्डीसङ्गमं पुण्यं सुवर्णाशिलतीर्थकम् ॥
करञ्जं कामहं तीर्थं भाण्डीरं रोहिणीमवम् ।
चक्रतीर्थं धौतपापं स्कान्दमाङ्गिरसाह्वयम् ॥
कोटितीर्थमयोन्याख्यमङ्गाराख्यं त्रिलोचनम् ।
इन्द्रेशं कम्बुकेशञ्च सोमेशं कोहनेशकम् ॥
नार्म्मदं चार्कमाग्नेयं भार्गवेश्वरसत्तमम् ।
ब्राह्मं दैवञ्च भागेशमादिवाराहणं कवे ॥
रामेशमथ सिद्धेशमाहल्यं कङ्कटेश्वरम् ।
शाक्रं सौम्यञ्च नान्देशं तापेशं रुक्मिणीभवम् ॥
योजनेशं वराहेशं द्वादशीशिवतीर्थके ।
सिद्धेशं मङ्गलेशञ्च लिङ्गवाराहतीर्थकम् ॥
कुण्डेशं श्वेतवाराहं भार्गवेशं रवीश्वरम् ।
शुक्लादीनि च तीर्थानि हूँकारस्वामितीर्थकम् ॥
सङ्गमेशं नारकेशं मोक्षं सार्पञ्च गोपकम् ।
नागं शाम्बञ्च सिद्धेशं मार्कण्डाक्रूरतीर्थके ॥
कामोदशूलारोपाख्ये माण्डव्यं गोपकेश्वरम् ।
कपिलेशं पिङ्गलेशं भूतेशं गाङ्गगौतमे ॥
आश्वमेधं भृगुकच्छं केदारेशञ्च पापनुत् ।
खनखलेशं जालेशं शालग्रामं वराहकम् ॥

ब्रह्मचारिसमाख्यानं ततः स्त्रीलक्षणानि च ।
कृत्याकृत्यविनिर्द्देशो ह्यविमुक्तेशवर्णनम् ॥
गृहस्थयोगिनोर्धर्म्माः कालज्ञानं ततः परम् ।
दिवोदासकथा पुण्या काशीवर्णनमेव च ॥
योगिचर्च्चा च लोलार्कोत्तरशाम्बार्कजा कथा ।
द्रुपदार्कस्य ताक्ष्यार्ख्यारुणार्कस्योदयस्ततः ॥
दशाश्वमेधतीर्थ्याख्या मन्दराच्च गणागमः ।
पिशाचमोचनाख्यानं गणेशप्रेषणन्ततः ॥
मायागणपतेश्चाथ भुवि प्रादुर्भवस्ततः ।
विष्णुमायाप्रपञ्चोऽथ दिवोदासविमोक्षणम् ॥
ततः पञ्चनदोत्पत्तिर्बिन्दुमाधवसम्भवः ।
ततो वैष्णवतीर्थाख्या शूलिनः काशिकागमः ॥
जैगीषव्येण संवादो ज्येष्ठेशाख्या महेशितुः ।
क्षेत्राख्यानं कन्दुकेशव्याघ्रेश्वरसमुद्भवः ॥
शैलेशरत्नेश्वरयोः कृत्तिवासस्य चोद्भवः ।
देवतानामधिष्ठानं दुर्गासुरपराक्रमः ॥
दुर्गाया विजयश्चाथ ओङ्कारेशस्य वर्णनम् ।
पुनरोङ्कारमाहात्म्यं त्रिलोचनसमुद्भवः ॥
केदाराख्या च धर्म्मेशकथा विश्वभुजोद्भवा ।
वीरेश्वरसमाख्यानं गङ्गामाहात्म्यकीर्त्तनम् ॥
विश्वकर्म्मेशमहिमा दक्षयज्ञोद्भवस्तथा ।
सतीशस्यामृतेशादेर्भुजस्तम्भः पराशरेः ॥
क्षेत्रतीर्थकदम्बश्च मुक्तिमण्डपसंकथा ।
विश्वेशविभवश्चाथ ततो यात्रापरिक्रमः ॥" * ॥
पञ्चमे अवन्तीखण्डे ।
"अतः परं त्ववन्त्याख्यं शृणु खण्डञ्च पञ्चकम् ।
कल्पे कल्पे पृथक् नाम नर्म्मदायाः प्रकीर्त्तितम् ।
स्तवमार्षं नार्म्मदञ्च कालरात्रिकथा ततः ॥
महादेवस्तुतिः पश्चात् पृथक्कल्पकथाद्भुता ।
बिशल्याख्यानकं पश्चाज्जालेश्वरकथा तथा ॥
गौरीव्रतसमाख्यानं त्रिपुरज्वालनन्ततः ।
देहपातविधानञ्च कावेरीसङ्गमस्ततः ॥
दारुतीर्थं ब्रह्मवर्ज्जं यत्रेश्वरकथानकम् ।
अग्नितीर्थं रवितीर्थं मेघनादं दिदारुकम् ॥
देवतीर्थं नर्म्मदेशं कपिलाख्यं करञ्जकम् ।
कुण्डलेशं पिप्पलादं विमलेशञ्च शूलभित् ॥
शचीहरणमाख्यातमन्धकस्यवधस्ततः ।
शूलभेदोद्भवो यत्र दानधर्म्माः पृथग्विधाः ॥
आख्यानं दीर्घतपस ऋष्यशृङ्गकथा ततः ।
चित्रसेनकथा पुण्या काशिराजस्य मोक्षणम् ॥
ततो देवशिलाख्यानं शवरीचरिताचितम् ।
व्याधाख्यानं ततः पुण्यं पुष्करिण्यर्क्कतीर्थकम् ॥
चन्द्रप्रभासमादित्यं श्रीपत्याख्यञ्च हंसकम् ।
मूलस्थानञ्च शूलेशमाग्नायाचित्रदैवकम् ॥
शिखीशं कोटितीर्थञ्च दशकन्यं सुवर्णकम् ।
ऋणमोक्षं भारभूतिरत्रास्ते पुंखमुण्डिमम् ॥
आमलेशं कपालेशं शृङ्गेरण्डीभवन्ततः ।
कोटितीर्थं लोटनेशं फलस्तुतिरतः परम् ॥
दृमिजङ्गलमाहात्म्ये रोहिताश्वकथा ततः ।
धुन्धुमारसमाख्यानं वधोपायस्ततोऽस्य च ॥
वधो धुन्धोस्ततः पश्चात् ततश्चित्रवहोद्भवः ।
महिमास्य ततश्चण्डीशप्रभावो रतीश्वरः ॥
केदारेशो लक्षतीर्थं ततो विष्णुपदीभवम् ।
मुखारं च्यवनान्धाख्यं ब्रह्मणश्च सरस्ततः ॥
चक्राख्यं ललिताख्यानं तीर्थञ्च बहुगोमथम् ।
रुद्रावर्त्तञ्च मार्कण्डं तीर्थं पापप्रणाशनम् ॥
रावणेशं शुद्धपटं देवान्धुप्रेततीर्थकम् ।
जिह्वोदतीर्थसम्भूतिः शिवोद्भेदं फलस्तुतिः ॥
एष खण्डो ह्यवन्त्याख्यः शृण्वतां पापनाशनः ॥
षष्ठे नागरखण्डे ।
"अतः परं नागराख्यः खण्डः षष्ठोऽभिधीयते ॥
लिङ्गोत्पत्तिसमाख्यानं हरिश्चन्द्रकथा शुभा ।
विश्वामित्रस्य माहात्म्यं त्रिशङ्कुस्वर्गतिस्तथा ॥
हाटकेश्वरमाहात्म्ये वृत्रासुरवधस्तथा ।

नागविलं शङ्खतीर्थमचलेश्वरवर्णनम् ॥
चमत्कारपुराख्यानं चमत्कारकरं परम् ।
गयशीर्षं बालशाख्यं बालमण्डं मृगाह्वयम् ॥
विष्णुपादञ्च गोकर्णं युगरूपं समाश्रयः ।
सिद्धेश्वरं नागसरः सप्तार्षेयं ह्यगस्त्यकम् ॥
भ्रूणगर्त्तं नलेशञ्च भीष्मं दूर्व्वैरमर्ककम् ।
सार्म्मिष्ठं शोभनाथञ्च दौर्गमानर्जकेश्वरम् ॥
जमदग्निवधाख्यानं नैःक्षत्रियकथानकम् ।
रामह्रदं नागपुरं जडलिङ्गञ्च यज्ञभूः ॥
मुण्डीरादित्रिकार्कञ्च सतीपरिणयस्तथा ।
वालखिल्यञ्च यागेशं वालखिल्यञ्च गारुडम् ॥
लक्ष्मीशापः साप्तविंशः सोमप्रासादमेव च ।
अम्बावृद्धं पादुकाख्यमाग्नेयं ब्रह्मकुण्डकम् ॥
गोमुखं लोहयष्ट्याख्यमजापालेश्वरी तथा ।
शानैश्चरं राजवापी रामेशो लक्ष्मणेश्वरः ॥
कुशेशाख्यं लवेशाख्यं लिङ्गं सर्व्वोत्तमोत्तमम् ।
अष्टषष्टिसमाख्यानं दमयन्त्यास्त्रिजातकम् ॥
ततोऽम्बा रेवती चात्र भट्टिकातीर्थसम्भवम् ।
क्षेमङ्करी च केदारं शुक्लतीर्थं मुखारकम् ॥
सत्यसन्धेश्वराख्यानं तथा कर्णोत्पलाकथा ।
अटेश्वरं याज्ञवल्क्यं गौर्य्यं गाणेशमेव च ॥
ततो वास्तुपदाख्यानमजागहकथानकम् ॥

सिद्धेश्वरादिकाख्यानं पृथगत्र प्रकीर्त्तितम् ॥
अग्नितीर्थं कपर्द्दीशं केदारेशं गतिप्रदम् ।
भीमभैरवचण्डीशभास्कराङ्गारकेश्वराः ॥
बुधेज्यभृगुसौरेन्दुशिखीशा हरविग्रहाः ।
सिद्धेश्वराद्याः पञ्चान्येरुद्रास्तत्र व्यवस्थिताः ॥
वरारोहा ह्यजापाला मङ्गला ललितेश्वरी ।
लक्ष्मीशो वाडवेशश्चार्घीशः कामेश्वरस्तथा ॥
गौरीशवरुणेशाख्यमुषीशञ्च गणेश्वरम् ।
कुमारेशञ्च शाकल्यं शकुलोतङ्कगौतमम् ॥
दैत्यघ्नेशं चक्रतीर्थं सन्निहत्याह्वयं तथा ।
भूतेशादीनि लिङ्गानि आदिनारायणाह्वयम् ॥
ततश्चक्रधराख्यानं शाम्बादित्यकथानकम् ।
कथा कण्टकशोधिन्या महिषघ्न्यास्ततः परम् ॥
कपालीश्वरकोटीशबालब्रह्माह्वसत्कथा।
नरकेशसम्बर्त्तेशनिधीश्वरकथाततः ॥
बलभद्रेश्वरस्याथ गङ्गाया गणपस्य च ।
जाम्बवत्याख्यसरितः पाण्डुकूपस्य सत्कथा ॥
शतमेधलक्षमेधकोटिमेधकथा तथा ।
दुर्व्वासार्क्यदुस्थानहिरण्यासङ्गमोत्कथा ॥
नगरार्कस्य कृष्णस्य सङ्कर्षणसमुद्रयोः ।
कुमार्य्याः क्षेत्रपालस्य ब्रह्मेशस्य कथा पृथक् ॥
पिङ्गलासङ्गमेशस्य शङ्करार्कघटेशयोः ।
ऋषितीर्थस्य नन्दार्कत्रितकूपस्य कीर्त्तनम् ॥
शशोपानस्य पर्णार्कन्यङ्कुमन्त्योः कथाद्भुता ।
वाराहस्वामिवृत्तान्तं छायालिङ्गाख्यगुल्फयोः ॥
कथा कनकनन्दायाः कुन्तीगङ्गेशयोस्तथा ।
चमसोद्भेदविदुरत्रिलोकेशकथा ततः ॥
मङ्कणेशत्रैपुरेशषण्डतीर्थकथा तथा ।
सूर्य्यप्राचीत्रीक्षणयोरुमानाथकथातथा ॥
भूद्वारशूलस्थलयोश्च्यवनार्केशयोस्तथा ।
अजापालेशबालार्ककुवेरस्थलजा कथा ॥
ऋषितोयाकथा पुण्या सङ्गालेश्वरकीर्त्तनम् ।
नारदादित्यकथनं नारायणनिरूपणम् ॥
तप्तकुण्डस्य माहात्म्यं मूलचण्डीशवर्णनम् ।

नागतीर्थस्य च कथा वशिष्ठाश्रमवर्णनम् ॥
भद्रंकर्णस्य माहात्म्यं त्रिनेत्रस्य ततः परम् ।
केदारस्य च माहात्म्यं तीर्थागमनकीर्त्तनम् ॥
कोटीश्वररूपतीर्थह्रषीकेशकथा ततः ।
सिद्धेशशुक्रेश्वरयोर्म्मणिकर्णीशकीर्त्तनम् ॥
पङ्गुतीर्थयमतीर्थवाराहतीर्थवर्णनम् ।
चन्द्रप्रभासपिण्डोदश्रीमाताशुक्लतीर्थजम् ॥
कात्यायन्याश्च माहात्म्यं ततः पिण्डारकस्य च ।
ततः कनखलस्याथ चक्रमानुषतीर्थयोः ॥
कपिलाग्नितीर्थकथा तथा रक्तानुबन्धजा ।
गणेशपार्थेश्वरयोर्यात्रायामुद्गलस्यच ॥
चण्डीस्थानं नागभवशिरःकुण्डमहेशजा ।
कामेश्वरस्य मार्कण्डेयोत्पत्तेश्च कथा ततः ॥
उद्दालकेशसिद्धेशगततीर्थकथा पृथक् ।
श्रीदेवमातोत्पत्तिश्च व्यासगौतमतीर्थयोः ॥
कुलसन्तारमाहात्म्यं रामकोट्याह्वतीर्थयोः ।
चन्द्रोद्भेदेशानशृङ्गब्रह्मस्थानोद्भवोहनम् ॥
त्रिपुष्कररुद्रह्रदगुहेश्वरकथा शुभा ।
अविमुक्तस्य माहात्म्यमुमामाहेश्वरस्य च ॥
महौजसः प्रभावश्च जम्बुतीर्थस्य वर्णनम् ।
गङ्गाधरमिश्रकयोः कथा चाथ फलस्तुतिः ॥
द्वारकायाश्च माहात्म्ये चन्द्रशर्म्मकथानकम् ।
जागराद्याख्यव्रतञ्च व्रतमेकादशीभवम् ॥
महाद्वादशिकाख्यानं प्रह्लादर्षिसमागमः ।
दुर्व्वाससः उपाख्यानं यात्रोपक्रमकीर्त्तनम् ॥
गोमत्युत्पत्तिकथनं तस्यां स्नानादिजं फलम् ।
चक्रतीथस्य माहात्म्यं गोमत्युदधिसङ्गमः ॥
सनकादिह्रदाख्यानं नृगतीर्थकथा ततः ।
गोप्रचारकथा पुण्या गोपीनां द्वारकागमः ॥
गोपीसरःसमाख्यानं ब्रह्मतीर्थादिकीर्त्तनम् ।
पञ्चनद्यागमाख्यानं नानाख्यानसमाचितम् ॥
शिवलिङ्गमहातीर्थकृष्णपूजादिकीर्त्तनम् ।
त्रिविक्रमस्य मूर्त्याख्या दुर्व्वासःकृष्णसंकथा ॥
कुशदैत्यवधोऽर्च्चाख्या विशेषार्च्चनजं फलम् ।
गोमत्यां द्वारकायाञ्च तीर्थागमनकीर्त्तनम् ॥
कृष्णमन्दिरसंप्रेक्षा द्वारवत्यभिषेचनम् ।
तत्र तीर्थावासकथा द्वारकापुण्यकीर्त्तनम् ॥

सौभाग्यान्धुकशूलेशं
धर्म्मराजकथानकम् ।
मिष्टान्नदेश्वराख्यानं गाणपत्यत्रयं ततः
॥
जावालिचरितञ्चैव मकरेशकथा ततः ।
कालेश्वर्य्यन्धकाख्यानं
कुण्डमाप्सरसन्तथा ॥
पुष्यादियं रौहिताश्वं
नागरोत्पत्तिकीर्त्तनम् ।
भार्गवं चरितं चैव वैश्वामैत्रं ततः परम् ॥
सारस्वतं पैप्पलादं कंसारीशञ्च
पैण्डिकम् ।
ब्रह्मणो यज्ञचरितं
सावित्र्याख्यानसंयुतम् ॥
रैवतं भर्त्तृयज्ञाख्यं मुख्यतीर्थनिरीक्षणम्
।
कौरवं हाटकेशाख्यं प्रभासं क्षेत्रकत्रयम्
॥
पौष्करं नैमिषं धार्म्ममरण्यत्रितयं स्मृतम्
।
वाराणसी द्वारकाख्यावन्त्याख्येति
पुरीत्रयम् ॥
वृन्दावनं खाण्डवाख्यमद्वैकाख्यं
वनत्रयम् ।
कल्पः शालस्तथा नन्दो
ग्रामत्रयमनुत्तमम् ॥
असिशुक्लपितृसंज्ञं तीर्थत्रयमुदाहृतम् ।
श्यर्व्वुदौ रैवतश्चैव पर्व्वतत्रयमुत्तमम् ॥
नदीनां त्रितयं गङ्गा नर्म्मदा च सरस्वती
।
सार्द्धकोटित्रयफलमेकैकञ्चैषु कीर्त्तितम्
॥
कूपिका शङ्कतीर्थञ्चामरकं बालमण्डनम्
।
हाटकेशक्षेत्रफलप्रदं प्रोक्तं चतुष्टयम् ॥
शाम्बादित्यं श्राद्धकल्पं
यौधिष्ठिरमथान्धकम् ।
जलशायि चतुर्म्मास्यमशून्यशयनव्रतम्
॥
मङ्कणेशं शिवरात्रिस्तुलापुरुषदानकम् ।
पृथ्वीदानं वाणकेशं कपालमोचनेश्वरम्
॥

चतुर्व्वक्त्रगणाध्यक्षकलम्बेश्वरयोः कथा ॥
गोपालस्वामिवकुलस्वामिनोर्म्मरुतीकथा ।
क्षेमार्कोन्नतविघ्नेशजलस्वामिकथा ततः ॥
कालमेघस्य रुक्मिण्या ऊर्व्वशीश्वरभद्रयोः ।
शङ्खावर्त्तमोक्षतीर्थगोष्पदाच्युतसद्मनाम् ॥
जालेश्वरस्य हूँकारकूपचण्डीशयोः कथा ।
आशापुरस्थविघ्नेशकलाकुण्डकथाद्भुता ॥
कपिलेशस्य च कथा जरद्गवशिवस्य च ।
नलकर्कोटेश्वरयोर्हाटकेश्वरजा कथा ॥
नारदेशमन्त्रभूषा दुर्गकूटगणेशजा ।
सुपर्णेलाख्यभैरव्योर्भल्लतीर्थभवा कथा ॥
कीर्त्तनं कर्द्दमालस्य गुप्तसोमेश्वरस्य च ॥
बहुस्वर्णेशशृङ्गेशकोटीश्वरकथा ततः ॥
मार्कण्डेश्वरकोटीशदामोदरगृहोत्कथा।
स्वर्णरेखा ब्रह्मकुण्डं कुन्तीभीमेश्वरौ तथा ॥
मृगीकुण्डञ्च सर्व्वस्वं क्षेत्रे वस्त्रापथे स्मृतम् ।
दुत्राविल्वेशगङ्गेशरैवतानां कथाद्भुता ॥
ततोऽर्व्वुदे श्वभ्रकथा अचलेश्वरकीर्त्तनम् ।

इत्येष सप्तमः प्रोक्तः खण्डः प्राभासिको
द्विज ! ।
स्कान्दे सर्व्वोत्तरकथा शिवमाहात्म्यवर्णने ॥”
तत्फलश्रुतिः ।
“लिखित्वैतत्तु यो दद्याद्धेमशूलसमाचितम् ।
माघ्यां सत्कृत्य विप्राय स शैवे मोदते पदे ॥”
इति श्रीनारदीयपुराणे पूर्ब्बभागे बृहदुपाख्याने
चतुर्थपादे १०४ अध्यायः ॥ १३ ॥
चतुर्द्दशं वामनपुराणम् ।
श्रीब्रह्मोवाच ।
“शृणु वत्स ! प्रवक्ष्यामि पुराणं वामनाभिधम् ।
त्रिविक्रमचरित्राढ्यं दशसाहस्रसङ्ख्यकम् ॥
कूर्म्मकल्पसमाख्यानं वर्गत्रयकथानकम् ।
भागद्वयसमायुक्तं वक्तृश्रोतृशुभावहम् ॥” * ॥
तत्र पूर्ब्बभागे ।
“पुराणप्रश्नः प्रथमं ब्रह्मशीर्षच्छिदा ततः ।

| पापपिण्डं साप्तलैङ्गं युगमानादिकीर्त्तनम् ।<br>निम्बेशशाकम्भर्य्याख्या रुद्रैकादशकीर्त्तनम् ॥<br>दानमाहात्म्यकथनं द्वादशादित्यकीर्त्तनम् ।<br>इत्येष नागरः खण्डः प्रभासाख्योऽधुनोच्यते ॥”<br>सप्तमे प्रभासखण्डे ।<br>“सोमेशो यत्र विश्वेशोऽर्कस्थलं पुण्यदं महत् । | | |
|---|---|---|

कपालमोचनाख्यानं
दक्षयज्ञविर्हिंसनम् ॥
हरस्य कालरूपाख्या कामस्य दहनं
ततः ।
प्रह्लादनारायणयोर्युद्धं देवासुराह्वयम्
॥
सुकेश्यर्कसमाख्यानं ततो
भुवनकोषकम् ।
ततः काम्यव्रताख्यानं श्रीदुर्गाचरितं
ततः ॥
तपतीचरितं पश्चात् कुरुक्षेत्रस्य
वर्णनम् ।
सरोमाहात्म्यमतुलं
पार्व्वतीजन्मकीर्त्तनम् ॥
तपस्तस्या विवाहश्च
गौर्य्युपाख्यानकं ततः ।
ततः कौशिक्युपाख्यानं
कुमारचरितं ततः ॥
ततोऽन्धकवधाख्यानं
साध्योपाख्यानकं ततः ।
जावालिचरितं पश्चादरजायाः
कथाद्भुता ॥
अन्धकेश्वरयोर्युद्धं गणत्वं
चान्धकस्य च ।
मरुतां जन्मकथनं वलेश्च चरितं
ततः ॥
ततस्तु लक्ष्म्याश्चरितं त्रैविक्रममतः
परम् ।
प्रह्लादतीर्थयात्रायां प्रोच्यन्ते
तत्कथाः शुभाः ॥
ततश्च धुन्धुचरितं प्रेतोपाख्यानकं
ततः ।
नक्षत्रपुरुषाख्यानं श्रीदामचरितं
ततः ॥
त्रिविक्रमचरित्रान्ते ब्रह्मप्रोक्तः
स्तवोत्तमः ।
प्रह्लादवलिसंवादे सुतले हरिशंसनम्
॥
इत्येष पूर्ब्बभागोऽस्य पुराणस्य
तवोदितः ॥”

तत्पूर्ब्बभागे ।
“तत्र पूर्ब्बविभागे तु पुराणोपक्रमः पुरा ।
लक्ष्मीप्रद्युम्नसंवादः कूर्म्मर्षिगणसङ्कथा ॥
वर्णाश्रमाचारकथा जगदुत्पत्तिकीर्त्तनम् ।
कालसङ्ख्या समासेन लयान्ते स्तवनं विभोः ॥
ततः सङ्क्षेपतः सर्गः शाङ्करं चरितं तथा ।
सहस्रनाम पार्व्वत्या योगस्य च निरूपणम् ॥
भृगुवंशसमाख्यानं ततः स्वायम्भुवस्य च ।
देवादीनां समुत्पत्तिर्दक्षयज्ञाहतिस्ततः ॥
दक्षसृष्टिकथा पश्चात् कश्यपान्वयकीर्त्तनम् ।
आत्रेयवंशकथनं कृष्णस्य चरितं शुभम् ॥
मार्कण्डकृष्णसंवादो व्यासपाण्डवसंकथा ।
युगधर्म्मानुकथनं व्यासजैमिनिकी कथा ॥
वाराणस्याश्च माहात्म्यं प्रयागस्य ततः परम् ।
त्रैलोक्यवर्णनञ्चैव वेदशाखानिरूपणम् ॥” * ॥
तदुत्तरभागे ।
“उत्तरेऽस्य विभागे तु पुरा गीतैश्वरी ततः ।
व्यासगीता ततः प्रोक्ता नानाधर्म्मप्रबोधनी ॥
नानाविधानां तीर्थानां माहात्म्यञ्च पृथक्
ततः ।
नानाधर्म्मप्रकथनं ब्राह्मीयं संहिता स्मृता ॥
अतः परं भगवती संहितार्थनिरूपणे ।
कथिता यत्र वर्णानां पृथग्वृत्तिरुदाहृता ॥”
तदुत्तरभागीयभगवत्याख्यद्वितीयसंहितायाः
पञ्चपादेषु ।
“पादेऽस्याः प्रथमे प्रोक्ता ब्राह्मणानां व्यव-
स्थितिः ।
सदाचारात्मिका वत्स ! भोगसौख्यविवर्द्धनी ॥
द्वितीये क्षत्त्रियाणान्तु वृत्तिः सम्यक् प्रकी-
र्त्तिता ।
यया त्वाश्रितया पापं विधूयेह व्रजेद्दिवम् ॥
तृतीये वैश्यजातीनां वृत्तिरुक्ता चतुर्व्विधा ।
यया चरितया सम्यक् लभते गतिमुत्तमाम् ॥
चतुर्थेऽस्यास्तथा पादे शूद्रवृत्तिरुदाहृता ।
यया सन्तुष्यति श्रीशो नृणां श्रेयोविवर्द्धनः ॥
पञ्चमेऽस्यास्ततः पादे वृत्तिः सङ्करजोदिता ।
यया चरितयाप्नोति भाविनीमुत्तमां जनिम् ॥
इत्येषा पञ्चपद्युक्ता द्वितीया संहिता मुने ! ।
तृतीयात्रोदिता सौरी नृणां कामविधायिनी ॥
षोढा षट्कर्म्मसिद्धिं सा बोधयन्ती च कामि-

षोडशं मत्स्यपुराणम् ।
श्रीब्रह्मोवाच ।
“अथ मात्स्यं पुराणं ते प्रवक्ष्ये द्विजसत्तम ! ।
यत्रोक्तं सत्यकल्पानां वृत्तं सङ्क्षिप्य भूतले ॥
व्यासेन वेदविदुषा नरसिंहोपवर्णनम् ।
उपक्रम्य तदुद्दिष्टं चतुर्द्दशसहस्रकम् ॥
मनुमत्स्यसुसंवादो ब्रह्माण्डवर्णनन्ततः ।
ब्रह्मदेवासुरोत्पत्तिर्म्मारुतोत्पत्तिरेव च ॥
मदनद्वादशी तद्वत् लोकपालाभिपूजनम् ।
मन्वन्तरसमुद्देशो वैश्याराज्याभिवर्णनम् ॥
सूर्य्यवैवस्वतोत्पत्तिर्व्बुधसङ्गमनं तथा ।
पितृवंशानुकथनं श्राद्धकालस्तथैव च ॥
पितृतीर्थप्रचारश्च सोमोत्पत्तिस्तथैव च ।
कीर्त्तनं सोमवंशस्य ययातिचरितं तथा ॥
कार्त्तवीर्य्यस्य चरितं सृष्टं वंशानुकीर्त्तनम् ।
भृगुशापस्तथा विष्णोर्दशधा जन्म च क्षितौ ॥
कीर्त्तनं पुरुवंशस्य वंशो हौताशनः परः ।
क्रियायोगस्ततः पश्चात् पुराणं परिकीर्त्तितम्
व्रतं नक्षत्रपुरुषं मार्त्तण्डशयनं तथा ।
कृष्णाष्टमीव्रतं तद्वद्रोहिणीचन्द्रसंज्ञितम् ॥
तडागविधिमाहात्म्यं पादपोत्सर्ग एव च ।
सौभाग्यशयनं तद्वदगस्त्यव्रतमेव च ॥
तथानन्ततृतीयाया रसकल्याणिनीव्रतम् ।
तथैवानन्दकर्य्याश्च व्रतं सारस्वतं पुनः ॥
उपरागाभिषेकश्च सप्तमीशयनं तथा ।
भीमाख्या द्वादशी तद्वदनङ्गशयनं तथा ॥
अशून्यशयनं तद्वत् तथैवाङ्गारकव्रतम् ।
सप्तमीसप्तकं तद्वद्विशोकद्वादशीव्रतम् ॥
मेरुप्रदानं दशधा ग्रहशान्तिस्तथैव च ।
ग्रहस्वरूपकथनं तथा शिवचतुर्द्दशी ॥
तथा सर्व्वफलत्यागः सूर्य्यवारव्रतं तथा ।
संक्रान्तिस्नपनं तद्वद्विभूतिद्वादशीव्रतम् ॥
षष्टिव्रतानां माहात्म्यं तथा स्नानविधिक्रमः ।
प्रयागस्य तु माहात्म्यं द्वीपलोकानुवर्णनम् ॥
तथान्तरीक्षचारश्च ध्रुवमाहात्म्यमेव च ।
भवनानि सुरेन्द्राणां त्रिपुरोद्योतनं तथा ॥
पितृप्रवरमाहात्म्यं मन्वन्तरविनिर्णयः ।
चतुर्युगस्य सम्भूतिर्युगधर्म्मनिरूपणम् ॥
वज्राङ्गस्य तु सम्भूतिस्तारकोत्पत्तिरेव च ।
तारकासुरमाहात्म्यं ब्रह्मदेवानुकीर्त्तनम् ॥

तदुत्तरे भागे बृहद्वामनाख्ये।
“शृणु तस्योत्तरं भागं
बृहद्वामनसंज्ञकम्॥
माहेश्वरी भागवती सौरी गाणेश्वरी
तथा।
चतस्रः संहिताश्चात्र पृथक्
साहस्रसङ्ख्यया॥
माहेश्वर्य्यान्तु कृष्णस्य तद्भक्तानाञ्च
कीर्त्तनम्।
भागवत्यां जगन्मातुरवतारकथाद्भुता
॥
सौर्य्यां सूर्य्यस्य महिमा गदितः
पापनाशनः।
गाणेश्वर्य्यां गणेशस्य चरितञ्च
महेशितुः॥
इत्येतद्वामनं नाम पुराणं
सुविचित्रकम्।
पुलस्त्येन समाख्यातं नारदाय
महात्मने॥
ततो नारदतः प्राप्तं व्यासेन
सुमहात्मना।
व्यासात्तु लब्धवान् वत्स!
तच्छिष्यो रोमहर्षणः॥
स चाख्यास्यति विप्रेभ्यो
नैमिषीयेभ्य एव च।
एवं परम्पराप्राप्तं पुराणं वामनं शुभम्
॥” * ॥
तत्फलश्रुतिः।
“ये पठन्ति च शृण्वन्ति तेऽपि
यान्ति परां गतिम्।
लिखित्वैतत् पुराणन्तु यः
शरद्विषुवेऽर्पयेत्॥
विप्राय वेदविदुषे घृतधेनुसमाचितम्
।
स समुद्धृत्य नरकान्नयेत् स्वर्गं
पितॄन् स्वकान्।
देहान्ते भुक्तभोगोऽसौ याति विष्णोः
परं
पदम्॥”
इति श्रीनारदीयपुराणे पूर्ब्बभागे
बृहदुपाख्याने

नाम्।
चतुर्थी वैष्णवी नाम मोक्षदा परिकीर्त्तिता॥
चतुष्पदी द्विजादीनां साक्षाद्ब्रह्मस्वरूपिणी।
ताः क्रमात् षट्चतुद्द्वीषुसाहस्राः परि-
कीर्त्तिताः॥”
तत्फलश्रुतिः।
“एतत्कूर्म्मपुराणन्तु चतुर्व्वर्गफलप्रदम्।
पठतां शृण्वतां नृणां सर्व्वोत्कृष्टगतिप्रदम्॥
लिखित्वैतत्तु यो भक्त्या हेमकूर्म्मसमन्वितम्।
ब्राह्मणायायने दद्यात् स याति परमां गतिम्॥”
इति श्रीनारदीयपुराणे पूर्ब्बभागे बृहदुपाख्याने
चतुर्थपादे १०६ अध्यायः॥ १५॥

पार्व्वतीसम्भवस्तद्वत्तथा शिवतपोवनम्।
अनङ्गदेहदाहश्च रतिशोकस्तथैव च॥
गौरीतपोवनं तद्वच्छिवेनाथ प्रसादनम्।
पार्व्वतीऋषिसंवादस्तथैवोद्वाहमङ्गलम्॥
कुमारसम्भवस्तद्वत् कुमारविजयस्तथा।
तारकस्य वधो घोरो नरसिंहोपवर्णनम्॥
पद्मोद्भवविसर्गस्तु तथैवान्धकघातनम्।
वाराणस्यास्तु माहात्म्यं नर्म्मदायास्तथैव च
प्रवरानुक्रमस्तद्वत् पितृगाथानुकीर्त्तनम्।
तथोभयमुखीदानं दानं कृष्णाजिनस्य च॥
ततः सावित्र्युपाख्यानं राजधर्म्मास्तथैव च।
विविधोत्पातकथनं ग्रहशान्तिस्तथै च॥

| | | |
|---|---|---|
| चतुर्थपादे १०५ अध्यायः ॥ १४ ॥<br>पञ्चदशं कूर्म्मपुराणम् ।<br>श्रीब्रह्मोवाच ।<br>“शृणु वत्स ! मरीचेऽद्य पुराणं कूर्म्मसंज्ञितम् ।<br>लक्ष्मीकल्पानुचरितं यत्र कूर्म्मवपुर्हरिः ॥<br>धर्म्मार्थकाममोक्षाणां माहात्म्यञ्च पृथक् पृथक् ।<br>इन्द्रद्युम्नप्रसङ्गेन प्राहर्षिभ्यो दयान्तिकम् ॥<br>तत्सप्तदशसाहस्रं सुचतुःसंहितं शुभम् ।<br>यत्र ब्राह्म्यां पुरा प्रोक्ता धर्म्मा नानाविधा मुने ! ॥<br>नानाकथाप्रसङ्गेन नृणां सद्गतिदायकाः ॥” * ॥ | | |

यात्रानिमित्तकथनं स्वप्नमङ्गलकीर्त्तनम् ॥
वामनस्य तु माहात्म्यं वाराहस्य ततः परम् ॥
समुद्रमथनं तद्वत् कालकूटाभिशान्तनम् ।
देवासुरविमर्द्दश्च वास्तुविद्या तथैव च ॥
प्रतिमालक्षणं तद्वद्देवतास्थापनं तथा ।
प्रासादलक्षणं तद्वन्मण्डपानाञ्च लक्षणम् ॥
भविष्यराज्ञामुद्देशो महादानानुकीर्त्तनम् ।
कल्पानुकीर्त्तनं तद्वत् पुराणेऽस्मिन् प्रकीर्त्तितम् ॥”
तत्फलश्रुतिः ।
“पवित्रमेतत् कल्याणमायुःकीर्त्तिविवर्द्धनम् ।
यः पठेच्छृणुयाद्वापि स याति भवनं हरेः ॥
लिखित्वैतत्तु यो दद्याद्धेममत्स्यगवाचितम् ।
विप्रायाभ्यर्च्चर्य्य विषुवे स याति परमं पदम् ॥”
इति श्रीनारदीयपुराणे पूर्व्वभागे बृहदुपाख्याने चतुर्थपादे १०७ अध्यायः ॥ १६ ॥
सप्तदशं गुरुडपुराणम् ।
श्रीब्रह्मोवाच ।
“मरीचे शृणु वच्म्यद्य पुराणं गारुडं शुभम् ।
गरुडायाब्रवीत् पृष्टो भगवान् गरुडासनः ॥
एकोनविंशसाहस्रं ताक्ष्र्य कल्पकथाचितम् ॥”
तत्र पूर्व्वखण्डे ।
“पुराणोपक्रमो यत्र सर्गसङ्क्षेपतस्ततः ।
सूर्य्यादिपूजनविधिर्दीक्षाविधिरतःपरम् ॥
श्यादिपूजा ततः पश्चान्नवव्यूहार्च्चनं द्विज ! ।
पूजाविधानञ्च तथा वैष्णवं पञ्जरं ततः ॥
योगाध्यायस्ततो विष्णोर्नामसाहस्रकीर्त्तनम् ।
ध्यानं विष्णोस्ततः सूर्य्यपूजा मृत्युञ्जयार्च्चनम् ॥
मालामन्त्राः शिवार्च्चाथ गणपूजा ततः परम् ।
गोपालपूजा त्रैलोक्यमोहनश्रीधरार्च्चनम् ॥
विष्णवर्च्चा पञ्चतत्त्वार्च्चा चक्रार्च्चा देवपूजनम् ।
न्यासादिसन्ध्योपास्तिश्चदुर्गार्च्चाथ सुरार्च्चनम् ॥
योगशास्त्रं विष्णुभक्तिर्नमस्कृतिफलं हरेः ॥
माहात्म्यं वैष्णवञ्चाथ नारसिंहस्तवोत्तमम् ।
ज्ञानामृतं गुह्याष्टकं स्तोत्रं विष्णवर्च्चनाह्वयम् ॥
वेदान्तसाङ्ख्यसिद्धान्तं ब्रह्मज्ञानं तथात्मकम् ।
गीतासारफलोत्कीर्त्तिः पूर्व्वखण्डोऽयमीरितः ॥”
उत्तरखण्डे प्रेतकल्पे ।
“अथास्यैवोत्तरे खण्डे प्रेतकल्पः पुरोदितः ।
यत्र तार्क्षेण संपृष्टो भगवानाह वाडव ! ॥
धर्म्मप्रकटनं पूर्व्वयोनीनां गतिकारणम् ।
दानाधिकं फलञ्चापि प्रोक्तमत्रौर्द्ध्वदेहिकम् ॥
यमलोकस्य मार्गस्य वर्णनञ्च ततः परम् ।
षोडशश्राद्धफलकं वृत्तानाञ्चात्र वर्णितम् ॥
निष्कृतिर्यममार्गस्य धर्म्मराजस्य वैभवम् ।
प्रेतपीडाविनिर्द्देशः प्रेतचिह्ननिरूपणम् ॥
प्रेतानां चरिताख्यानं कारणं प्रेततां प्रति ।
प्रेतकृत्यविचारश्च सपिण्डीकरणोक्तयः ॥
प्रेतत्वमोक्षणाख्यानं दानानि च विमुक्तये ।
आवश्यकोत्तमं दानं प्रेतसौख्यकरं हितम् ॥
शारीरकविनिर्द्देशो यमलोकस्य वर्णनम् ।
प्रेतत्वोद्धारकथनं कर्म्मकर्त्तृविनिर्णयः ॥
मृत्योः पूर्व्वक्रियाख्यानं पश्चात् कर्म्मनिरूपणम् ।
मानसीसृष्टिकथनं रुद्रप्रसववर्णनम् ॥
महादेवविभूतिश्च ऋषिसर्गस्ततः परम् ।
अग्नीनां विचयश्चाथ कालसद्भाववर्णनम् ॥
प्रियव्रताचयोद्देशः पृथिव्यायामविस्तरः ।
वर्णनं भारतस्यास्य ततोऽन्येषां निरूपणम् ॥
जम्ब्वादिसप्तद्वीपाख्या ततोऽधोलोकवर्णनम् ।
ऊर्द्ध्वलोकानुकथनं ग्रहचारस्ततः परम् ॥
आदित्यव्यूहकथनं देवग्रहानुकीर्त्तनम् ।
नीलकण्ठाह्वयाख्यानं महादेवस्य वैभवम् ॥
अमावास्यानुकथनं युगतत्त्वनिरूपणम् ।
यज्ञप्रवर्त्तनं चाथ युगयोरन्त्ययोः कृतिः ॥
युगप्रजालक्षणञ्च ऋषिप्रवरवर्णनम् ।
वेदानां व्यसनाख्यानं स्वायम्भुवनिरूपणम् ॥
शेषमन्वन्तराख्यानं पृथिवीदोहनन्ततः ।
चाक्षुषेऽद्यतने सर्गो द्वितीयोऽङ्घ्रिः पुरोदले ॥”
मध्यमभागे उपोद्धातपादे ।
“अथोपोद्धातपादे तु सप्तर्षिपरिकीर्त्तनम् ।
प्राजापत्यचयस्तस्माद्देवादीनांसमुद्भवः ॥
ततो जयाभिव्याहारौ मरुदुत्पत्तिकीर्त्तनम् ।
काश्यपेयानुकथनमृषिवंशनिरूपणम् ॥
पितृकल्पानुकथनं श्राद्धकल्पस्ततः परम् ।
वैवस्वतसमुत्पत्तिः सृष्टिस्तस्य ततः परम् ॥
मनुपुत्त्राचयश्चातो गान्धर्व्वस्य निरूपणम् ।
इक्ष्वाकुवंशकथनं वंशोऽत्रेः समहात्मनः ॥
अमावसोराचयश्च रजेश्चरितमद्भुतम् ।
ययातिचरितञ्चाथ यदुवंशनिरूपणम् ॥
कार्त्तवीर्य्यस्य चरितं जामदग्न्यं ततः परम् ।
वृष्णिवंशानुकथनं सगरस्याथ सम्भवः ॥
भार्गवस्यानुचरितं तथा कार्य्यवधाश्रयम् ।
समरस्याथ चरितं भार्गवस्य कथा पुनः ॥
देवासुराहवकथा कृष्णाविर्भाववर्णने ।
इनस्य च स्तवः पुण्यः शुक्रेण परिकीर्त्तितः ॥
विष्णुमाहात्म्यकथनं वलिवंशनिरूपणम् ।
भविष्यराजचरितं संप्राप्तेऽथ कलौ युगे ॥
एवमुद्धातपादोऽयं तृतीयो मध्यमे दले ॥”
उत्तरभागे उपसंहारपादे ।
“चतुर्थमुपसंहारं वक्ष्ये खण्डे तथोत्तरे ।
वैवस्वतान्तराख्यानं विस्तरेण यथातथम् ॥
पूर्व्वमेव समुद्दिष्टं सङ्क्षेपादिह कथ्यते ।
भविष्याणां मनूनाञ्च चरितं हि ततः परम् ॥

पूजा माहेश्वरी चातः पवित्रारोहणार्च्चनम् ।
मूर्त्तिध्यानं वास्तुमानं प्रासादानाञ्च लक्षणम्
॥
प्रतिष्ठा सर्व्वदेवानां पृथक्पूजाविधानतः ।
योगोऽष्टाङ्गो दानधर्म्मः प्रायश्चित्तं
निधिक्रिया ॥
द्वीपेशनरकाख्यानं सूर्य्यव्यूहश्च ज्योतिषम् ।
सामुद्रिकं स्वरज्ञानं नवरत्नपरीक्षणम् ॥
माहात्म्यमथ तीर्थानां गयामाहात्म्यमुत्तमम् ।
ततो मन्वन्तराख्यानं पृथक् पृथग्विभागशः
॥
पित्राख्यानं वर्णधर्म्मा द्रव्यशुद्धिः समर्पणम् ।
श्राद्धं विनायकस्यार्च्चा ग्रहयज्ञस्तथाश्रमाः
॥
मननाख्या प्रेताशौचं नीतिसारो व्रतोक्तयः ।
सूर्य्यवंशः सोमवंशोऽवतारकथनं हरेः ॥
रामायणं हरिवंशो भारताख्यानकन्ततः ।
आयुर्व्वेदे निदानं प्राक् चिकित्साद्रव्यजा
गुणाः ॥
रोगघ्नं कवचं विष्णोर्गारुडं त्रैपुरो मनुः ।
प्रश्नचूडामणिश्चान्ते हयायुर्व्वेदकीर्त्तनम् ॥
औषधीनामकथनं ततो व्याकरणोहनम् ।
छन्दःशास्त्रं सदाचारस्ततः स्नानविधिः
स्मृतः ॥
तर्पणं वैश्यदेवञ्च सन्ध्या पार्व्वणकर्म्म च ।
नित्यश्राद्धं सपिण्डाख्यं
धर्म्मसारोऽघनिष्कृतिः ॥
प्रतिसंक्रम उक्तोऽस्माद्युगधर्म्माः कृतेः फलम्
।
मध्यं षोडशकं श्राद्धं
स्वर्गप्राप्तिक्रियोहनम् ॥
सूतकस्याथ सङ्ख्यानं
नारायणवलिक्रिया ।
वृषोत्सर्गस्य माहात्म्यं
निषिद्धपरिवर्ज्जनम् ॥
अपमृत्युक्रियोक्तिश्च विपाकः कर्म्मणां
नृणाम् ।
कृत्याकृत्यविचारश्च विष्णुध्यानं
विमुक्तये ॥
स्वर्गतौ विहिताख्यानं
स्वर्गसौख्यनिरूपणम् ।
भूर्लोकवर्णनञ्चैव सप्तधा लोकवर्णनम् ॥
पञ्चोर्द्ध्वलोककथनं
ब्रह्माण्डस्थितिकीर्त्तनम् ।
ब्रह्माण्डानेकचरितं ब्रह्मजीवनिरूपणम्
॥
आत्यन्तिकलयाख्यानं
फलस्तुतिनिरूपणम् ।
इत्येतद्गारुडं नाम पुराणं भुक्तिमुक्तिदम्
॥"
तत्फलश्रुतिः ।
"कीर्त्तितं पापशमनं पठतां शृण्वतां
नृणाम् ।
लिखित्वैतत् पुराणन्तु विषुवे यः
प्रयच्छति ॥
सौवर्णं हंसयुग्माढ्यं विप्राय स दिवं
व्रजेत् ॥" * ॥
इति श्रीनारदीयपुराणे पूब्बभागे
बृहदुपाख्याने
चतुर्थपादे १०८ अध्यायः ॥ १७ ॥
अष्टादशं ब्रह्माण्डपुराणम् ।
श्रीब्रह्मोवाच ।
"शृणु वत्स ! प्रवक्ष्यामि ब्रह्माण्डाख्यं
पुरातनम् ।
यच्च द्वादशसाहस्रं
भाविकल्पकथायुतम् ॥
प्रकृयाख्योऽनुषङ्गाख्य
उपोद्घातस्तृतीयकः ।
चतुर्थ उपसंहारः पादाश्चत्वार एव हि
॥
पूर्ब्बपादद्वयं पूर्ब्बो भागोऽत्र समुदाहृतः ।
कल्पप्रलयनिर्द्देशः कालमानं ततः परम् ।
लोकाश्चतुर्द्दश ततः कथिता मानलक्षणैः ॥
वर्णनं नरकाणाञ्च विकर्म्माचरणैस्ततः ।
मनोमयपुराख्यानं लयः प्राकृतिकस्ततः ॥
शैवस्याथ पुरस्यापि वर्णनञ्च ततः परम् ।
त्रिविधाद्गुणसम्बन्धाज्जन्तूनांकीर्त्तिता गतिः
।
अनिर्द्देश्याप्रतर्क्यस्य ब्रह्मणः परमात्मनः ।
अन्वयव्यतिरेकाभ्यां वर्णनं हि ततः परम् ॥
इत्येष उपसंहारः पादो वृत्तः स चोत्तरः ।
चतुष्पादं पुराणं ते ब्रह्माण्डं समुदाहृतम् ॥
अष्टादशमनौपम्यं सारात्सारतरं द्विज ! ।
ब्रह्माण्डञ्च चतुर्लक्षं पुराणत्वेन पठ्यते ॥

| | | |
|---|---|---|
| | तृतीयो मध्यमो भागश्चतुर्थस्तूत्तरो मतः ॥” * ॥<br>तत्र पूर्ब्बभागे प्रक्रियापादे ।<br>“आदौ कृत्यसमुद्देशो नैमिषाख्यानकं ततः ।<br>हिरण्यगर्भोत्पत्तिश्च लोककल्पनमेव च ॥<br>एष वै प्रथमः पादो द्वितीयं शृणु मानद ! ॥”<br>पूर्ब्बभागे अनुषङ्गपादे ।<br>“कल्पमन्वन्तराख्यानं लोकज्ञानं ततः परम् । | |

तदेव व्यस्य गदितमत्राष्टादशधा पृथक् ।
पाराशर्य्येण मुनिना सर्व्वेषामपि मानद ! ॥
वस्तुद्रष्ट्राथ तेनैव मुनीनां भावितात्मनाम् ।
मत्तः श्रुत्वा पुराणानि लोकेभ्यः प्रचकाशिरे ॥
मुनयो धर्म्मशीलास्ते दीनानुग्रहकारिणः ।
मया चेदं पुराणन्तु वशिष्ठाय पुरोदितम् ॥
तेन शक्त्रिसुतायोक्तं जातूकर्णाय तेन च ।
व्यासो लब्ध्वा ततश्चैतत्
प्रभञ्जनमुखोद्गतम् ॥
प्रमाणीकृत्य लोकेऽस्मिन्
प्रावर्त्तयदनुत्तमम् ॥”
तत्फलश्रुतिः ।
“य इदं कीर्त्तयेद्वत्स ! शृणोति च समाहितः ।
स विधूयेह पापानि याति लोकमनामयम् ॥
लिखित्वैतत् पुराणन्तु
स्वर्णसिंहासनस्थितम् ।
पत्रेणाच्छादितं यस्तु ब्राह्मणाय प्रयच्छति ॥
स याति ब्रह्मणो लोकं नात्र कार्य्या
विचारणा ॥
मरीचेऽष्टादशैतानि मया प्रोक्तानि यानि ते ।
पुराणानि तु सङ्क्षेपाच्छ्रोतव्यानि च
विस्तरात् ॥
अष्टादशपुराणानि यः शृणोति नरोत्तमः ।
कथयेद्वा विधानेन नेह भूयः स जायते ॥
सूत्रमेतत् पुराणानां यन्मयोक्तं तवाधुना ।
तन्नित्यं शीलनीयं हि पुराणफलमिच्छता ॥
न दाम्भिकाय पापाय देवगुर्व्वनुसूयवे ।
देयं कदापि साधूनां द्वेषिणे न शठाय च ॥
शान्ताय रामचित्ताय शुश्रूषाभिरताय च ।
निर्म्मत्सराय शुचये देयं सद्वैष्णवाय च ॥”
इति श्रीनारदीयपुराणे पूर्ब्बभागे
बृहदुपाख्याने
चतुर्थपादे १०९ अध्यायः ॥ १८ ॥ * ॥
इत्यष्टादशमहापुराणानुक्रमणिकासमाप्ता ॥ * ॥
(अष्टादशमहापुराणानां निरुक्तिर्यथा शिव-
पुराणे उत्तरखण्डे मध्यमेश्वरमाहात्म्ये ।
तत्तु स्कान्दं समाख्यातम् १३ वामनस्य तु
वामनम् ॥ १४ ॥
कौर्म्मं कूर्म्मस्य चरितम् १५ मात्स्यं मत्स्यस्य
कीर्त्तितम् । १६ ।
गरुडस्तु स्वयं वक्ता यत्तद् गारुडसंज्ञ-
कम् ॥ १७ ॥
ब्रह्माण्डचरितोक्तत्वात् ब्रह्माण्डं परिकी-
र्त्तितम् ॥” १८ ॥
पुराभवः वेदः । सृष्ट्यादिप्रतिपादकोग्रन्थः ।
यथा, शतपथब्राह्मणे । १४ । ६ । १० । ६ ।
“ऋग्वेदो यजुर्व्वेदः सामवेदोऽथर्व्वाङ्गिरस
इतिहासः पुराणं विद्या उपनिषदः श्लोकाः
सूत्राण्यनुव्याख्यानानि व्याख्यानानि ॥”
तथा च बृहदारण्यकोपनिषदि ।
“अस्य महतो भूतस्य निश्वसितमेतद् यदृग्वेदो
यजुर्व्वेदः सामवेदोऽथर्व्वाङ्गिरस इतिहासः
पुराणम् ॥”
“इदं वा अग्रेणव किञ्चिदासीदित्यादिकं जगतः
प्रागवस्थामुपक्रम्य सर्गप्रतिपादकं वाक्यजातं
पुराणम् ।” इति ऋग्वेदोपोद्घाते ॥ * ॥)

**पुराणः**, पुं, (पुरा पुर्ब्बस्मिन् काले भव इति ।
पुरा + “सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युष्ट्युलौ
तुट्च ।” ४ । ३ । २३ । इति ष्ट्युः निपातनात्
तुडभावः ।) पणः । (शिवः । यथा, महा-
भारते । १३ । १७ । १०६ ।
“बलवांश्चोपशान्तश्च पुराणः पुण्यचञ्चुरी ॥”)
पुरातने, त्रि । (यथा, मनुः । ५ । २३ ।
“बभूवुर्हि पुरोडाशा भक्ष्याणां मृगपक्षिणाम् ।
पुराणेष्वपि यज्ञेषु ब्रह्मक्षत्रसवेषु च ॥”)
कार्षापणे, पुं, क्ली । इति शब्दरत्नावली ॥
(यथा, मनुः । ८ । १३६ ।
“ते षोडश स्याद्धरणं पुराणश्चैव राजतम् ।
कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः ॥”)

**पुराणगः**, पुं, (पुराणैर्गीयते इति । गै + घञर्थे
कः । यद्वा, पुराणं वेदं गायतीति । गै +
“आतोऽनुपेति ।” ३ । २ । ३ । इति कः ।)
ब्रह्मा । इति हेमचन्द्रः । २ । १२६ ॥ पुराण-
गायके, त्रि ॥

**पुरातनः**, त्रि, (पुरा पूर्ब्बस्मिन् काले भवः । पुरा
+ “सायंचिरेति ।” ४ । ३ । २३ । इति
ष्ट्युस्तुट्
च ।) पूर्ब्बकालभवः । पुराण इति भाषा ।
तत्पर्य्यायः । पुराणः २ प्रतनः ३ प्रत्नः
४ चिर-
न्तनः ५ । इत्यमरः । ३ । १ । ७७ ॥
चिरत्नः ६ ।
इति जटाधरः ॥ (यदुक्तं नीतिशास्त्रे ।
“नवं वस्त्रं नवं छत्रं नव्या स्त्री नूतनं गृहम् ।
सवत्र नूतनं शस्तं सेवकान्ने पुरातने ॥”)

**पुराध्यक्षः**, त्रि, (पुरस्य पुराधिकृतो वा अध्यक्षः ।)
नगराधिकृतः । (यथा, महाभारते । १३ ।
१३५ । ११ ।
“चिकित्सकः कान्तपृष्ठः पुराध्यक्षः
पुरोहितः ।
सांवत्सरो वृथाध्यायी सर्व्वे ते
शूद्रसम्मिताः ॥”)
अन्तःपुराध्यक्षलक्षणम् । यथा, --
“बृद्धः कुलोद्भतः शक्तः पितृपैतामहः
शुचिः ।
राज्ञामन्तःपुराध्यक्षो विनीतश्च तथेष्यते ॥”
इति युक्तिकल्पतरुः ॥

**पुरारिः**, पुं, (पुरस्य त्रिपुरस्य अरिः शत्रुः ।)
शिवः । इति त्रिकाण्डशेषः ॥ (यथा,
अध्यात्म-
रामयणे १ । १ । ५ ।
पुरारिगिरिसम्भूता श्रीरामार्णवसङ्गता ।
अध्यात्मरामगङ्गेयं पुणाति भुवनत्रयम् ॥”)

**पुरार्द्धविस्तरः**, पुं, (पुरार्द्धे पूर्ब्बार्द्धे
विस्तरोविस्तृति-
रस्येति ।) खेटः । इति हेमचन्द्रः । ४ ।
३८ ॥

**पुरावसुः**, पुं, (पुरा पूर्ब्बकाले उत्पत्तेः प्रागित्यर्थः

"यत्र वक्ता स्वयं तण्डे ! ब्रह्मा साक्षात् चतु-
र्म्मुखः ।
तस्माद्ब्राह्मं समाख्यातं पुराणं प्रथमं
मुने ! ॥" १ ॥
तण्डे इति मुनिसम्बोधनम् ।
"पद्मकल्पस्य माहात्म्यं तत्र
यस्मादुदाहृतम् ।
तस्मात् पाद्मं समाख्यातं पुराणञ्च द्विती-
यकम् ॥ २ ॥
पराशरकृतं यत्तु पुराणं विष्णुबोधकम् ।
तदेव व्यासकथितं पुत्त्रपित्त्रोरभेदतः ॥ ३
॥
यत्र पूर्ब्बोत्तरे खण्डे शिवस्य चरितं बहु ।
शैवमेतत् पुराणं हि पुराणज्ञा वदन्ति च ॥
४ ॥
भगवत्याश्च दुर्गायाश्चरितं यत्र विद्यते ।
तत्तु भागवतं प्रोक्तं नतु देवीपुराणकम् ॥ ५
॥
नारदोक्तं पुराणन्तु नारदीयं प्रचक्षते ॥ ६ ॥
यत्र वक्ताभवत्तण्डे ! मार्कण्डेयो महामुनिः
।
मार्कण्डेयपुराणं हि तदाख्यातञ्च सप्तमम् ॥
७ ॥
अग्नियोगात्तदाग्नेयं ८ भविष्योक्तेर्भविष्यकम्
। ९ ।
विवर्त्तनात् ब्रह्मणस्तु ब्रह्मवैवर्त्तमुच्यते ॥
१० ॥
लिङ्गस्य चरितोक्तत्वात् पुराणं लिङ्गमुच्यते
। ११ ।
वराहस्य च वाराहं पुराणं द्वादशं मुने ! ॥
१२ ॥
यत्र स्कन्दः स्वयं श्रोता वक्ता साक्षात्
महेश्वरः ।

**पुराणपुरुषः**, पुं, (पुराणैर्वेदादिभिरुपस्तुतः पुरुषः
इति मध्यपदलोपिसमासः । यद्वा, पुराणः
पुरुषः इति कर्म्मधारयः ।) विष्णुः । इति
इति हेमचन्द्रः । २ । १२८ ॥ (यथा, पाद्मो-
त्तरखण्डे १११ अध्याये
विष्णोरष्टोत्तरशतनाम-
कीर्त्तने ।
"पुराणपुरुषो नन्दात्मजः श्रीवत्सलाञ्छनः ॥")

**पुरातनः**, पुं, (पुरा भवः । पुरा + ष्ट्युस्तुट् च ।)
पुराणः । तद्वैदिकपर्य्यायः । प्रत्नम् १ प्रदिवः
२ प्रवयाः ३ सनेमि ४ पूर्ब्बम् ५ अह्नाय ६ ।
इति षट्पुराणनामानि । इति वेदनिघण्टौ ३
अध्यायः ॥ (विष्णुः । यथा, महाभारते । १३ ।
१४९ । ६६ ।
"उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ॥")

वसुः ।) भीष्मः । इति त्रिकाण्डशेषः ॥

**पुरावृत्तं**, क्ली, (पुरा पुराणं वृत्तं चरित्रं यत्र ।)
पूर्ब्बवृत्तान्तनिबन्धनम् । तत्पर्य्यायः ।
इतिहासः
२ । इत्यमरः । १ । ६ । ४ ॥
पूर्ब्बचरितम् ३ ।
इति स्वामी ॥ (यथा, महाभारते । ७ ।
२८ । २४ ।
"शृणु गुह्यमिदं पार्थ ! पुरावृत्तं यथानघ !
॥")

**पुरासिनी**, स्त्री, (पुरं नगरमस्यति त्यजतीति ।
अस + णिनिः + ङीप् ।) सहदेवीलता ।
इति
राजनिर्घण्टः ॥

**पुरासुहृत्**, [द्] पुं, (पुरस्य त्रिपुरस्य असुहृत्
शत्रुः ।) शिवः । इति हेमचन्द्रः । २ ।
११४ ॥

**पुरिः**, स्त्री, (पूर्य्यते इति । पॄ + "कॄगॄशॄपॄ-
कुटीति ।" उणा० ४ । १४२ । इति इः
। स च
कित् ।) पुरी । इत्यमरटीकायां भरतः ॥
नदी ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥
(शरी-
रम् । इति पुरीतत्-शब्दटीकायां भरतः
॥)

**पुरिः**, पुं, (पूर्य्यते यशआदिभिरिति । पॄ + इः ।
सच कित् ।) राजा । इति
सिद्धान्तकौमुद्य
मुणादिवृत्तिः ॥ (सन्न्यासिविशेषः ।
शङ्कराचार्य्य-
शिष्यतोटकस्य शिष्येषु
अन्यतमशिष्याणा-
मुपाधिविशेषः । इति केचित् ॥ तल्लक्षणं
यथा,
प्राणतोषिण्यामवधूतप्रकरणे ।
"ज्ञानतत्त्वेन संपूर्णः पूर्णतत्त्वपदे स्थितः
।
परब्रह्मरतो नित्यं पुरिनामा स उच्यते ॥"

| | | |
|---|---|---|
| | | तथा च मुण्डमालातन्त्रे २ पटले ।<br>"देवतायाः सदा ध्यानं श्रीगुरोः पूजनं तथा ।<br>अन्तर्यागेषु यो निष्ठः स वीरः पुरिरेव च ॥") |

**पुरी**, स्त्री, (पुरि + वा ङीष् ।) नगरी । इत्य-
मरः । २ । २ । १ ॥ (यथा, श्रीधरस्वामिधृत-
भृगुवचनम् ।
"नृपावासः पुरी प्रोक्ता विशां पुरमपीष्यते ॥")
अस्या लक्षणादि पुरशब्दे नगरशब्दे च
लिखितम् । तद्वर्णनं यथा, महाभारते ।
३ । १५ । ५ -- ८ ।
"पुरी समन्ताद्विहिता सपताका सतोरणा ।
सचक्रा सहुडा चैव सयन्त्रखनका तथा ॥
सोपशल्यप्रतोलीका साट्टाट्टालकगोपुरा ।
सचक्रग्रहणी चैव सोल्कालातावपोथिका ॥
सोष्ट्रिका भरतश्रेष्ठ ! सभेरीपणवानका ।
सतोरणाङ्कुशा राजन् ! सशतघ्नीकलाङ्गला ॥
सभुशुण्ड्यश्मगुडका सायुधा सपरस्वधा ।
लोहचर्म्मवती चापि साग्निः सगुडशृङ्गिका ॥"
"पताका ध्वजाञ्चलः । तोरणानि बहिर्द्वाराणि ।
चक्राणि योधगणाः । हुडास्तदाश्रयस्थानानि
भाषायां बुरुज्संज्ञानि । अन्ये तु विण्मूत्रोत्-
सर्ज्जनशृङ्गाणि हुडा इत्याहुः उदाहरन्ति च ।
'कल्यन्ते हुडशृङ्गाणि रथस्योपरि सूरिभिः ।
विण्मूत्रस्पर्शशुद्ध्यर्थं करादिस्पर्श उद्यते ॥'
इति ॥
यन्त्राण आग्नेयौषधबलेन दृषत्पिण्डोत्क्षेप-
णानि महान्ति भाषायां कामान्संज्ञकानि ।
क्षुद्राणि सीसगुलिकोत्क्षेपणयन्त्राणि
वन्दुक्संज्ञ-
कानि । खनकाः सुरङ्गद्वारा गुप्तमार्गकर्त्तारः ॥
उपशल्याः लोहमुखाः कीलाः तद्युक्ताः
प्रतोल्यो
रथ्यामार्गा यस्यां सा । अट्टालकाः उभरिगृहाः
।
गोपुराणि पुरद्वाराणि । साट्टानि अट्टेन अन्नेन
सहितानि अट्टालकादीनि यस्यां सा । साट्टेति
विशेषणं उपशल्यस्य ग्रामान्तस्य रथ्यायाश्चा-
वृत्या सम्बध्यते । चक्रग्रहणी सन्यनिग्राहिका
मोर्च्चा इति म्लेच्छप्रसिद्धा । सोल्कालाताव-
पोथिका सोल्कमलातं ज्वालासहितमुल्मुकं
यस्यां सा सोल्कालाता इति केचित् ।
अवबद्धाः
पोथिका यन्त्रबद्धाः काष्ठपाषाणादयो रिपूणा-

**पुरीतत्**, पुं, क्ली, (पुरीं शरीरं तनोतीति । तन
दुञ् विस्तारे + क्विप् । "गमः क्वौ ।" ६
। ४ । ४० ।
इत्यत्र "गमादीनामिति वक्तव्यम् ।" इति
वार्त्तिकोक्त्या अनुनासिकलोपः ।
तुगागमश्च ।
पुरिं तनोतीति वाक्ये
"नहिवृतिवृषिव्यधि-
रुचिसहितनिषु क्वौ ।" ६ । ३ । ११६ ।
इति
पूर्ब्बपदस्य दीर्घः ।) अन्त्रम् । आँत इति
ख्यातम् । अन्तति वध्नाति
कालखण्डादि अन्त्रं
अतिबन्धे नाम्नीतिरः । पुरिः शरीरं
तनोतीति
पुरीतत् क्विप् वनतनाद्यनिमामिति
नलोपे स्वस्य
तनिति तन् निपातनादिकारस्य दीर्घः ।
अन्त्र-
साहचर्य्यात् क्लीवत्वम् ।
पुरीतदस्त्रियामिति
वाचस्पतिः । इत्यमरभरतौ ॥

**पुरीमोहः**, पुं, (पुरीं शरीरं मोहयतीति ।
मुह + णिच् + "कर्म्मण्यण् ।" ३ । २ । १
। इत्यण् ।)
धुस्तूरः । इति शब्दमाला ॥

**पुरीषं**, क्ली, (पिपर्त्ति शरीरमिति । पॄ + "शॄ-
पॄभ्यां किच्च ।" उणा० ४ । २७ । इति
ईषन् । स च
कित् ।) विष्ठा । इत्यमरः । २ । ६ । ६९
॥
तदुत्सर्गविधिर्यथा, --
"मुहूर्त्ते ब्राह्म उत्थाय रात्रिवासं
परित्यजेत् ।
परिधायापरं वस्त्रं शयनस्थानतोऽन्वहम्
॥
मुखाङ्घ्रिहस्तान् प्रक्षाल्य द्विराचम्य ततो
द्विजः ।
प्रातश्च मैत्रं सायाह्ने दक्षिणाभिमुखो निशि
।
योगिनान्तु यथा स्त्रीणां शूद्रादीनामयं क्रमः
॥
न देवायतने वृक्षमूले च न जले नदे ।
न नदीकूपमार्गेषु न वापीगोष्ठभस्मसु ॥
न चिताग्निश्मशानेषु नोषरे न द्विजालये ।
नाम्भःसमीपे न पुण्ड्रे नाकाशे न च शाद्वले
॥
न समुद्रे न काम्ये च न तीर्थे न द्विजालये ।
न यज्ञवृक्षमूलेषु नोपद्वारे चतुष्पथे ॥
न शस्यक्षेत्रे न खले पुष्पोद्याने न चत्वरे ।
सोपानत्को न नग्नश्च न रथ्यासेव्यभूतले
॥
न वैष्णवालये गोत्रे न सूर्य्याभिमुखस्तथा ।
न फालकृष्टकेदारे न तिष्ठंश्च कदाचन ॥
न गच्छन्न च वल्मीके न च पर्व्वतमस्तके ।
न जलं न दिशो भागान्नाकाशमवलोकयन्
॥
न गोव्रजे नदीतीरे नित्यस्थाने न गोमये ।
न यज्ञभूमौ न गृहे न पंवित्रीकृतस्थले ॥
द्विजो न देहच्छायायां शकृन्मूत्रविसर्जनम् ।
कुर्य्याद्यज्ञेष्टकाकूटे न च सप्राणिगर्त्तके ॥
उद्धृताम्भोमृत्तिकाभ्यामित्थंनारद !
यत्नतः ।
कृत्वोत्सर्गं ततः कुर्य्यात् शौचं मूत्रपुरीषयोः
॥
शुष्ककाष्ठेन लोष्ट्रेणायज्ञीयेन तृणेन वा ।
प्रमार्ज्य गुह्यमुत्तिष्ठेत् शिश्नञ्चैव विशेषतः
॥
विधृत्य वामहस्तेन शिश्नन्तूपविशेन्निशि ।
चेद्दक्षिणामुखः सन्ध्यां दिवोत्तरमुखस्तदा
॥
पूतिगन्धिजलं दुष्टं सफेनञ्च सबुद्बुदम् ।
तीर्थोदकं सलवणं पाथो वर्णान्तरन्तथा ॥
समुद्रगानदीवारः सासुद्रञ्च सकर्द्दमम् ।
यवनान्त्यजखाताम्भः समुद्रगनगोदकम् ॥
धान्यक्षेत्रस्य सलिलं सकीटञ्च परित्यजेत्
।

मुपरिपातनाय वस्यामिति प्राञ्चः ।
उल्केवोल्का
प्राणहरत्वात् यन्त्रोत्क्षिप्तो गोलः । अलातं सकाष्ठदण्डलोहमयमाग्नेयंप्रहरणं बाण इति भाषायां प्रसिद्धम् । तयोरप्रत्याख्येयगत्योरपि पोथिका पातयित्र्यः मन्त्रमय्यः शक्तयः कर्णायेन्द्रदत्तशक्तिसदृशा तद्युक्ताः सोल्कालातावपोथिका ॥ * ॥ उष्ट्रिका मृच्चर्म्ममयानि भाण्डानि । सर्ष्टिकेति पाठे ऋष्टय आयुधविशेषाः ॥ * ॥ अश्मगुडकाः वर्त्तुलीकृताः पाषाणाः । लोहमयानि चर्म्माणि कमठपृष्ठाकाराणि प्रहारवारकाणि ढाल इति प्रख्यातानि । साग्निः आग्नेयौषधसहिता गुडाः गोलकाः । शृङ्गिकास्तदुत्क्षेपकयन्त्राणि । शत्रूणामुपरि पातनाय तप्तो गुडो द्रवीभूतो यत्र शिखरे स्थाप्यते तत्सहितेत्यन्ये ॥” इति नीलकण्ठकृतभारतभावदीपनामटीका ॥

कृष्ण कृष्ण स्मृतिं कृत्वा खनित्वा नैरृतीं दिशम् ॥
खनित्रखननेनैव द्वादशाङ्गुल्यधोमृदम् ।
गृहीत्वोदकपात्रञ्च मितं गच्छेद्धनुःशतम् ॥
ग्रामाद्वा शरविक्षेपमात्रामनुदिते रवौ ।
मैत्रमावश्यकं कर्त्तुं नगराच्च चतुर्गुणाम् ॥
तत्त्रिमुष्ट्यायतं गर्त्तं तथा कृत्वा गभीरकम् ।
कृत्वा त्वद्भिः खनित्रेण कुशैराच्छाद्य तत्तृणम् ॥
शुष्कैः काष्ठैरयज्ञीयैर्भूगर्त्तमवगुण्ठितः ।
संवीताङ्गो वेणुदलैः पत्रैर्मृण्मयभाजनैः ॥
छत्रं खनित्रं संस्थाप्य वारिपात्रमुपानहौ ।
ततो द्विजस्तूपविशेद्वस्त्रेणाच्छाद्य मस्तकम् ॥
यज्ञोपवीतं कर्णेऽथ धृत्वा मौनी च दक्षिणे ।
आगतो द्विजमग्निं नोपश्यन् सन्तञ्च भास्करम् ॥
गुरुं समीरणं सर्व्वदेवतामूर्त्तिमेव च ।
मातरं पितरं चन्द्रं सर्व्वं गुरुजनं स्त्रियम् ॥ * ॥
उदङ्मुखस्त्रिसन्ध्यासु दिवसे च यदा निशि ।
दक्षिणामुख उत्सर्गं कुर्य्यान्मूत्रपुरीषयोः ॥
पूर्ब्बाह्णे तु द्विजः कुर्य्यात् पश्चिमाभिमुखोऽथवा ।
अपराह्णे पूर्ब्बमुखी मूत्रगूथविसर्जनम् ॥
मध्याह्ने प्रयतः कुर्य्याद्यतवागुत्तरामुखः ।
दक्षिणाभिमुखो रात्रौ द्विजो मैत्रं प्रयत्नतः ॥
निशायामन्धकारे तु छायायां दिवसे तथा ।
यथेच्छसुमुखो भूत्वा मैत्रं कुर्य्यात् द्विजो भयात् ॥
दिग्भ्रमाच्च मनोदुःखाद्विण्मूत्रस्य विसर्ज्जनम् ।
मोहाद्वाधोमुखः कुर्य्याद्यतवाक् प्रयतो द्विजः ॥
सन्न्यासी ब्रह्मचारी च वानप्रस्थो गृही द्विजः ।

मानवो देवखाताम्भः सकले शौचकर्म्मणि ॥ * ॥
मृदः सकीटास्तीर्थानां देवायतनगोष्ठयोः ।
नदोदधिनदीदेवखाततीरस्य मृत्तिकाः ॥
महीतलोद्भवाः क्षेत्रकूड्ययोः सिकताश्च याः ।
अन्तर्जला धूलिमृदो वल्मीकस्य च कर्द्दमाः ॥
ऊषराश्च हलोत्ख्याता मृत्तिका भवनस्य च ।
अश्वत्थतुलसीधात्रीमूलादीनाञ्चया मृदः ॥
श्मशानभूमेः शैलस्य तथा पूतस्थलस्य च ।
शौचावशिष्टमार्गस्य आखूत्खाताश्च मृत्तिकाः ॥
यज्ञस्थानस्य विप्राणां साधूनामालयस्य च ।
मृत्तिका वर्जयेदेता देवर्षे ! शौचकर्म्मणि ॥
पवित्रस्थानतो ग्राह्या द्वादशाङ्गुल्यधोमृदः ।
द्विजैः सकलशौचार्थं शर्करादिविवर्जिताः ॥ * ॥
प्रथमेऽद्भिर्नरः शौचं कुर्य्यान्मृद्भिरतः परम् ।
पुनर्जलैः पुरीषस्य यथा गन्धक्षयो भवेत् ॥
मृत्तिका प्रथमा शौचे त्वर्द्धप्रसृतिसम्मिता ।
पूर्णप्रसृतिमात्रा तु द्वितीया सजला तथा ॥
तृतीया प्रमिता शौचे सार्द्धप्रसृतिमृत्तिका ।
चतुर्थ्याद्या क्रमादेवमर्द्धप्रसृतिवर्द्धिता ॥
यया मृत्तिकया पूर्य्यं त्रिपर्व्व शौचकारिणः ।
अर्द्धप्रसृतिमात्रा सा मुनिभिः परिकीर्त्तिता ॥
गुदे दद्यान्मृदस्तिस्रः पञ्च वा सप्त वा तथा ।
मृदमेकां तथा शिश्ने तिस्रो वा मृत्तिका द्वयम् ॥

| | | |
|---|---|---|
| | शाखाध्यायी च वेदानां सर्व्वयज्ञेषु दीक्षितः ॥<br>मुनिश्च सर्व्वधर्म्मज्ञो दान्तः शान्त उदारधीः ।<br>सदोत्तरमुखः कुर्य्याद्वैष्णवो नान्य एव च ॥ | |

सप्त वामकरे दद्यान्मृदस्त्रिंशच्चतुर्द्दश ।
तिस्रो वा हस्तयोः सप्त चतुर्द्दश च षोडश ॥
पाण्योरेकां मृदं पृष्ठे षड्वा तिस्रश्च मृत्तिकाः ।
हस्तद्वयनखेष्वेकां तिस्रश्च षड्मृदस्तथा ॥ * ॥
मैथुने रेतःस्खलने मूत्रोत्सर्गे च मृद्द्वयम् ।
दद्यात्तिस्रश्च शिश्नैकां तिस्रो वामकरे मृदः ॥
हस्ते च मृद्द्वयं प्रक्षेत्तिस्रो वा शुद्धितत्परः ।
पदैकैके द्विजस्तिस्रो गृहीत्थं शौचमाचरेत् ॥
गृहिणो द्विगुणं शौचं यत्नतो ब्रह्मचारिणाम् ।
गृहस्थवानप्रस्थानां प्रोक्तं त्रिगुणमेव च ॥
सन्न्यासिनां वैष्णवानां शौचं सेव्यं चतुर्गुणम् ।
हस्तपाद्वारिपात्रन्तु मृद्भिरद्भिश्च गोमयैः ॥
दिवा यद्विहितं शौचं निशायामर्द्धकं भवेत् ।
एतदर्द्धमशौचे तु जातके मृतकेऽपि च ॥
चौरादिवाधिते मार्गे शौचमस्यार्द्धमाचरेत् ।
योषितामेतदर्द्धन्तु शूद्रादीनाञ्च नारद ! ॥
व्याधिभिश्चातुरो मर्त्य आर्त्तो यदि यथाबलम् ।
शौचं कुर्य्यात् कृतं यत्र तत् स्थानं शोधयेज्जलैः ॥
वेदस्मृतिपुराणानि धर्म्मशास्त्राणि नैत्यिकम् ।
मैत्रादिकर्म्म यः कुर्य्याद्विहाय मन्दधीर्द्विजः ॥

**पुरीषमः**, पुं, (पुरीषं मिमीते इति । मा + कः ।) माषः । इति त्रिकाण्डशेषः ॥

**पुरुः**, पुं, (पिपर्त्ति पूर्य्यते वेति । पॄ + “पॄभिदि-व्यधिगृधिधृषिदृशिभ्यः ।” उणा० १ । २४ । इति कुः । “उदोष्ठ्यपूर्ब्बस्य ।” ७ । १ । १०२ । इति उत्वम् । “उरण्रपरः ।” १ । १ । ५१ । इति रपरत्वम् ।) देवलोकः । नृपभेदः । स च ययातेः कनिष्ठपुत्त्रः । (आद्यूदन्तोऽपि पाठः ।) परागः । इति मेदिनी । रे, ५८ ॥ दैत्यः । इत्युणादिकोषः ॥ नदीभेदे, त्रि । इति शब्दरत्नावली ॥ (राजविशेषः । यथा, महाभारते । २ । ४ । २७ ।
“सुकर्म्मा चेकितानश्च पुरुश्चामित्रकर्षणः ॥”
चाक्षुषमनोः पुत्त्रभेदः । यथा, मार्कण्डेये । ७६ । ५५ ।
“उरुपुरुशतद्युम्नप्रमुखाः सुमहाबलाः ।
चाक्षुषस्य मनोः पुत्त्राः पृथिवीपतयोऽभवन् ॥”
पर्व्वतभेदः । यथा, महाभारते । ३ । ९० । २२ ।
“पर्व्वतश्च पुरुर्नाम यत्र जातः पुरूरवाः ।
भृगुर्यत्र तपस्तेपे महर्षिगणसेविते ॥”
शरीरम् । यथा, शङ्करविजये । १३ अध्याये ।
“पुरुसंज्ञे शरीरेऽस्मिन् शयनात् पुरुषो हरिः ।
शकारस्य षकारोऽयं व्यत्ययेन प्रयुज्यते ॥”)
प्रचुरे, त्रि । इत्यमरः । ३ । १ । ६३ ॥ (यथा, नैषधे । १९ । ५ ।
“स्फुरति तिमिरस्तोमः पङ्कप्रपञ्च इवोच्चकैः
पुरुसितगरुच्चञ्चच्चञ्चूपुटस्फुटचुम्बितः ॥”)

**पुरुकुत्सवः**, पुं, इन्द्ररिपुविशेषः । यथा, --
“इन्द्रो विपश्चिद्देवानां तद्रिपुः पुरुकुत्सवः ।
जघान हस्तिरूपेण भगवान्मधुसूदनः ॥”
इति गारुडे ८७ अध्यायः ॥

**पुरुदंशकः**, पुं, (पुरु बहुलं यथा स्यात्तथा दशतीति । दन्श + ण्वुल् ।) हंसः । इति त्रिकाण्डशेषः ॥

**पुरुदंशाः**, [स्] पुं, (पुरुं दैत्यविशेषं दशति हिनस्तीति । दन्श + असुन् ।) इन्द्रः । इति

“मृदुवचनसुशीलः कोमलाङ्गः सुकेशः सकलगुणनिधानः सत्यवादी शशोऽयम् । १ ।
वदति मधुरवाणीं दीर्घनेत्रोऽतिभीरुश्चपलमतिसुदेहः शीघ्रवेगो मृगोऽयम् ॥ २ ॥
बहुगुणबहुबन्धुः शीघ्रकामो नताङ्गः सकलरुचिरदेहः सत्यवादी वृषोऽयम् । ३ ।
उदरकटिकृशः स्यादुग्रकण्ठाधरौष्ठो दशनवदननासाश्रोत्रदीर्घोहि वाजी ॥” ४ ॥
इति रतिमञ्जरी ॥ * ॥
तस्य पञ्चलक्षणत्वं यथा, --
“पात्रे त्यागी गुणे रागी भोगी परिजनैः सह ।
शास्त्रे बोद्धा रणे योद्धा पुरुषः पञ्चलक्षणः ॥”
इति प्राचीनाः ॥
जितेन्द्रियस्य पुरुषत्वं यथा, --
“सा श्रीर्या न मदं कुर्य्यात् स सुखी तृष्णयोज्झितः ।
तन्मित्रं यत्र विश्वासः पुरुषः स जितेन्द्रियः ॥”
इति गारुडे १६ अध्यायः ॥ * ॥
(अस्य लक्षणादिकं यथा, --
“उन्मानमानगतिसंहतिसारवर्ण-स्नेहस्वरप्रकृतिसत्त्वमनूकमादौ ।
क्षेत्रं मृजाञ्च विधिवत् कुशलोऽवलोक्य सामुद्रविद्वदति यातमनागतञ्च ॥
अस्वेदनौ मृदुतलौ कमलोदराभौ श्लिष्टाङ्गुली रुचिरताम्रनखौ सुपार्ष्णी ।
उष्णौ शिराविरहितौ सुनिगूढगुल्फौ कूर्म्मोन्नतौ च चरणौ मनुजेश्वरस्य ॥
शूर्पाकारविरूक्षपाण्डुरनखौ वक्रौ शिरासन्ततौ
संशुष्को विरलाङ्गुली च चरणौ दारिद्र्यदुःख-प्रदौ ।
मार्गायोत्कटकौ कषायसदृशौ वंशस्य विच्छि-त्तिदौ

प्रतिप्रज्ञानमायुश्च प्रज्ञां हन्ति यशः श्रियम् ।
बलमाचारहीनस्य सदा तस्यापवित्रता ॥ * ॥
सात्वताश्चेद्द्विजा भूपा वैश्यशूद्रान्त्यजाः स्त्रियः ।
कुर्व्वन्ति शौचं यत्नेन यावच्चेतःपवित्रता ॥
येषां कृष्णस्य मननं तथा नामप्रजल्पनम् ।
सदैव स्मरणं भागवतानां साधुसेवनम् ॥
भक्तिप्रधौतमनसां गोविन्दार्पितकर्म्मणाम् ।
बाह्यान्तःकृष्णचित्तानां शुचिता तदहर्न्निशम् ॥
मृद्गोमयजलैः शौचमनेकैः कुरुते यदि ।
मनोऽपवित्रता यस्य कदाचिन्नैव न शुध्यति ॥
गोविन्ददासता नास्ति यस्य लोकस्य जन्मनि ।
सोऽपि देहाशुचिः कृत्वा शौचं मैत्रादिकर्म्मसु ॥
शतधा यदि देवर्षे शौचं कुर्य्यात् सहस्रधा ।
मृद्वारिगोमयैर्लोको भावदुष्टो न शुध्यति ॥
सदा चित्तापवित्रत्वमकार्ष्णोभुवि यो नरः ।
तस्य तु स्यान्न मैत्रादिशौचेनैव स शुध्यति ॥
पर्व्वताकारकूटैश्च गोविट्सर्व्वनदीजलैः ।
शौचं कृत्वा न शुध्येत दुष्टचित्तो भवेद्यदि ॥"
इति पाद्मोत्तरखण्डे १०९ अध्यायः ॥
(उदकम् । इति निघण्टुः । १ । १२ ॥ "पूरयति जगत् प्रलयकाले पूर्य्यते अनेन तडाकादि पालकं जटाधरः ॥

**पुरुषः**, पुं, (पुरति अग्रे गच्छतीति । पुर + "पुरः कुषन् ।" उणा० ४ । ७४ । इति कुषन् ।) पिपर्त्ति पूरयति बलं यः पुर्षु शेते य इति वा । पुमान् । (यथा, मनौ । १ । ३२ ।
"द्विधा कृत्वात्मनो देहमर्द्धेन पुरुषोऽभवत् ।
अर्द्धेन नारी तस्यां स विराजमसृजत् प्रभुः ॥")
तत्पर्य्यायः । पूरुषः २ ना ३ नरः ४ पञ्चजनः ५ पुमान् ६ अर्थाश्रयः ७ अधिकारी ८ कर्म्मार्हः ९ जनः १० अर्थवान् ११ । इति राजनिर्घण्टः ॥
मनुष्यः १२ मानवः १३ मर्त्यः १४ मानुषः १५ मनुः १६ । इति शब्दरत्नावली ॥ रसिकराजः १७ घनकामधामा १८ मदनशायकाङ्कः १९ मन्मथशायकलक्ष्यः २० । इति कविकल्पलता ॥
स चतुर्विधः । यथा, --
"शशो मृगोवृषश्चाश्वो नृणां जातिचतुष्टयम् ॥"
शशादीनां लक्षणं यथा, --

ब्रह्मघ्नौ परिपक्वमृद्द्युतितलौ पीतावगम्यारतौ ॥
प्रविरलतनुरोमवृत्तजङ्घा द्विरदकरप्रतिमैर्वरोरुभिश्च ।
उपचितसमजानवश्च भूपा धनरहिताः श्वशृगालतुल्यजङ्घाः ॥
रोमैकैकं कूपके पार्थिवानां द्वे द्वे ज्ञेये पण्डितश्रोत्रियाणाम् ।
त्र्याद्यैर्निःस्वा मानवा दुःखभाजः केशाश्चैवं निन्दिताः पूजिताश्च ॥
निर्मांसजानुर्म्रियते प्रवासे सौभाग्यमल्पैर्विकटैर्दरिद्राः ।
स्त्रीनिर्जिताश्चापि भवन्ति निम्नै राज्यं समांसैश्च महद्भिरायुः ॥
लिङ्गेऽल्पे धनवानपत्यरहितः स्थूले विहीनो धनै-
र्मेढ्रे वामनते सुतार्थरहितो वक्रेऽन्यथा पुत्र-वान् ।
दारिद्र्यं विनते त्वधोऽल्पतनयो लिङ्गे शिरास-
न्तते ।
स्थूलग्रन्थियुते सुखी मृदु करोत्यन्तं प्रमेहा-दिभिः ॥

वा जगतः शस्योत्पत्तिहेतुत्वात् ।
प्रीणातेर्वा
बाहुलकात् कीषन्प्रत्ययः
ईकारस्योकारा-
देशः स च पकारात् परो द्रष्टव्यः ।”
इति तत्र
देवराजयज्वा ॥ यथा, ऋग्वेदे । १ ।
१६३ । १ ।
“यदक्रन्दः प्रथमं जायमान
उद्यन्त्समुद्राद्रुत वा पुरीषात् ॥”
“पुरीषात् सर्व्वकामानां पूरकादुदकात्
॥”
इति तद्भाष्ये सायनः ॥)

**पुरीषणः**, पुं, (पुर्य्यां देहात् इष्यते त्यज्यते इति ।
पुरी + इष + कर्म्मणि ल्युट् ।) पुरीषम्
। इति
त्रिकाण्डशेषः ॥

कोशनिगूढैर्भूपा दीर्घैर्भग्नैश्च वित्तपरिहीनाः ।
ऋजुवृत्तशेफसो लघुशिरालशिश्नाश्च
धनवन्तः ॥
जलमृत्युरेकवृषणो विषमैः स्त्रीचञ्चलः समैः
क्षितिपः ।
ह्रस्वायुश्चोद्बद्धैः प्रलम्बवृषणस्य शतमायुः ॥
रक्तैराढ्यामणिभिर्निर्द्रव्याः
पाण्डुरैश्चमलिनैश्च ।
सुखिनः सशब्दमूत्रा निःस्वा निःशब्दधाराश्च
॥
द्वित्रिचतुर्धाराभिः प्रदक्षिणावर्तवलितमूत्राभिः
।
पृथ्वीपतयो ज्ञेया विकीर्णमूत्राश्च धनहीनाः ॥
एकैव मूत्रधारा वलिता रूपप्रधानसुतदात्री ।
स्निग्धोन्नतसममणयो धनवनितारत्नभोक्तारः
॥
मणिभिश्च मध्यनिम्नैः कन्यापितरो भवन्ति
निःस्वाश्च ।
बहुपशुभाजो मध्योन्नतैश्च नात्युल्वणैर्धनिनः
॥
परिशुष्कबस्तिशीर्षैर्धनरहिता दुर्भगाश्च
विज्ञेयाः ।
कुसुमसमगन्धशुक्रा विज्ञातव्या महीपालाः ॥
मधुगन्धे बहुवित्ता मत्स्यसगन्धे
बहून्यपत्यानि ।
तनुशुक्रः स्त्रीजनको मांससगन्धो महाभोगी ॥
मदिरागन्धे यज्वा क्षारसगन्धे च रेतसि
दरिद्रः ।
शीघ्रं मैथुनगामी दीर्घायुरतोऽन्यथाल्पायुः ॥
निःस्वोऽतिस्थूलस्फिक्समांसलस्फिक्
सुखा-
न्वितो भवति ।
व्याघ्रान्तोऽध्यर्धस्फिग्मण्डूकस्फिग्नराधिपतिः
॥
सिंहकटिर्मनुजेन्द्रः कपिकरभकटिर्धनैः परि-
त्यक्तः ।
समजठरा भोगयुता घटपिठरनिभोदरा
निःस्वाः ॥
अविकलपार्श्वा धनिनो निम्नैर्वक्रैश्च भोगस-
न्त्यक्ताः ।

सुभगा भवन्त्यनुद्बद्धचूचुका निर्धना
विषमदीर्घैः ।
पीनोपचितनिमग्नैः क्षितिपतयश्चूचुकैः
सुखिनः ॥
हृदयं समुन्नतं पृथु न वेपनं मांसलं च नृप-
तीनाम् ।
अधमानां विपरीतं खररोमचितं शिरालञ्च
॥
समवक्षसोऽर्थवन्तः पीनैः
शूरास्त्वकिञ्चना-
स्तनुभिः ।
विषमं वक्षो येषां ते निःस्वाः
शस्त्रनिधनाश्च ॥
विषमैर्विषमो
जत्रुभिरर्थविहीनोऽस्थिसन्धि-
परिणद्धैः ।
उन्नतजत्रुर्भागी निम्नैर्निःस्वोऽर्थवान् पीनैः
॥
चिपिटग्रीवो निःस्वः शुष्का सशिरा च
यस्य
वा ग्रीवा ।
महिषग्रीवः शूरः शास्त्रान्तो वृषसमग्रीवः ॥
कम्बुग्रीवो राजा प्रलम्बकण्ठः प्रभक्षणो
भवति ।
पृष्ठमभग्नमरोमशमर्थवतामशुभदमतोऽन्यत्
॥
अस्वेदनपीनोन्नतसुगन्धिसमरोमसङ्कुलाः
कक्षाः ।
विज्ञातव्या
धनिनामतोऽन्यथार्थैर्विहीनानाम् ॥
निर्मांसौ रोमचितौ भग्नावल्पौ च निर्धन-
स्यांसौ ।
विपुलावव्युच्छिन्नौ सुश्लिष्टौ
सौख्यवीर्य्यवताम् ॥
करिकरसदृशौ वृत्तावाजान्ववलम्बिनौ
समौ
पीनौ ।
बाहू पृथिवीशानामधमानां रोमशौ ह्रस्वौ
॥
हस्ताङ्गुलयो दीर्घाश्चिरायुषामवलिताश्च

मीनयुगाङ्कितपाणिर्नित्यं सत्रप्रदो भवति ॥
वज्राकारा धनिनां विद्याभाजान्तु मीनपुच्छ-
निभाः ।
शङ्खातपत्रशिविकागजाश्वपद्मोपमानृपतेः ॥
कलशमृणालपताकाङ्कुशोपमाभिर्भवन्ति
निधि-
पालाः ।
दामनिभाभिश्चाढ्याः
स्वस्तिकरूपाभिरैश्वर्य्यम् ॥
चक्रासिपरशुतोमरशक्तिधनुःकुन्तसन्निभा
रेखाः ।
कुर्व्वन्ति चमूनाथं यज्वानमुलूखलाकाराः
॥
मकरध्वजकोष्ठागारसन्निभाभिर्महाधनोपेताः
।
वेदीनिभेन चैवाग्निहोत्रिणो ब्रह्मतीर्थेन ॥
वापीदेवकुलाद्यैर्धर्मं कुर्व्वन्ति च त्रिकोणाभिः
।
अङ्गुष्ठमूलरेखाः पुत्राः स्युर्दारिकाः सूक्ष्माः
॥
रेखाः प्रदेशिनीगाः शतायुषां कल्पनीय-
मूनाभिः ।
छिन्नाभिर्द्रुमपतनं बहुरेखारेखिणो निःस्वाः
॥
अतिकृशदीर्घैश्चिवुकैर्निर्द्रव्या
मांसलैर्धनोपेताः ।
विम्बोपमैरवक्रैरधरैर्भूपास्तनुभिरस्वाः ॥
ओष्ठैः स्फुटितविखण्डितविवर्णरूक्षैश्च
धन-
परित्यक्ताः ।
स्निग्धा घनाश्च दशनाः सुतीक्ष्णदंष्ट्राः
समाश्च
शुभाः ॥
जिह्वा रक्ता दीर्घा श्लक्ष्णा सुसमा च भोगिनां
ज्ञेया ।
श्वेता कृष्णा परुषा निर्द्रव्याणां तथा तालु ॥
वक्त्रं सौम्यं संवृतममलं श्लक्ष्णं समञ्च
भूपानाम् ।
विपरीतं क्लेशभुजां महामुखं दुर्भगाणाञ्च ॥
स्त्रीमुखमनपत्यानां शाठ्यवतां मण्डलं परि-

समकुक्षा भोगाढ्या निम्नाभिर्भोगपरिहीनाः॥
उन्नतकुक्षाः क्षितिपाः कुटिलाः स्युर्मानवा
विषमकुक्षाः ।
सर्पोदरा दरिद्रा भवन्ति बह्वाशिनश्चैव ॥
परिमण्डलोन्नताभिर्विस्तीर्णाभिश्च नाभिभिः
सुखिनः ।
स्वल्पा त्वदृश्यनिम्ना नाभिः क्लेशावहा
भवति ॥
वलिमध्यगता विषमा शूलावाधं करोति
नैःख्यञ्च ।
शाठ्यं वामावर्त्ता करोति मेधां प्रदक्षिणतः ॥
पार्श्वायता चिरायषमुपरिष्टाच्चेश्वरं गवा-
ढ्यमधः ।
शतपत्रकर्णिकाभा नाभिर्मनुजेश्वरं कुरुते ॥
शस्त्रान्तं स्त्रीभोगिनमाचार्य्यं बहुसुतं यथा-
सङ्ख्यम् ।
एकद्वित्रिचतुर्भिर्वलिभिर्विद्यान्नृपं त्ववलिम् ॥
विषमवलयो मनुष्या भवन्त्यगम्याभिगामिनः
पापाः ।
ऋजुवलयः सुखभाजः परदारद्वेषिणश्चैव ॥
मांसलमृदुभिः पार्श्वैः प्रदक्षिणावर्त्तरोमभि-
र्भूपाः ।
विपरीतैर्निर्द्रव्याः सुखपरिहीनाः परप्रेष्याः ॥

सुभगानाम् ।
मेधाविनाञ्च सूक्ष्माश्चिपिठाः
परकर्म्मनिरता-
नाम् ॥
स्थूलाभिर्धनरहिता बहिर्नताभिश्च शस्त्र-
निर्याणाः ।
कपिसदृशकरा धनिनो व्याघ्रोपमपाणयः
पापाः ॥
मणिबन्धनैर्निगूढैर्दृढैश्च
सुश्लिष्टसन्धिभिर्भूपाः ।
हीनैर्हस्तच्छेदः श्लथैः सशब्दैश्च
निर्द्रव्याः ॥
पितृवित्तेन विहीना भवन्ति निम्नेन
करतलेन
नराः ।
संवृतनिम्नैर्धनिनः प्रोत्तानकराश्च दातारः
॥
विषमैर्विषमा निःस्वाश्च
करतलैरीश्वरास्तु
लाक्षाभैः ।
पीतैरगम्यवनिताभिगामिनो निर्धना रूक्षैः
॥
तुषसदृशनखाः क्लीवाश्चिपिटैः
स्फुटितैश्च
वित्तसन्त्यक्ताः ।
कुनखविवर्णैः परतर्कुकाश्च ताम्रैश्च
भूपतयः ॥
अङ्गुष्ठयवैराढ्याः सुतवन्तोऽङ्गुष्ठमूलगैश्च
यवः ।
दीर्घाङ्गुलिपर्वाणः सुभगा दीर्घायुषश्चैव ॥
स्निग्धा निम्ना रेखा धनिनां तद्व्यत्ययेन
निःस्वानाम् ।
विरलाङ्गुलयो निःस्वा धनसञ्चयिनो घना-
ङ्गुलयः ॥
तिस्रो रेखा मणिबन्धनोत्थिताः
करतलोपगा
नृपतेः ।

ज्ञेयम्
दीर्घं निर्द्रव्याणां भीरुमुखाः पापकर्माणः ॥
चतुरश्रं धूर्तानां निम्नं वक्त्रञ्च तनयरहिता-
नाम् ।
कृपणानामतिह्रस्वं सम्पूर्णं भोगिनां कान्तम्
॥
अस्फुटिताग्रं स्निग्धं श्मश्रु शुभं मृदु च सन्न-
तञ्चैव ।
रक्तैः परुषैश्चौराः श्मश्रुभिरल्पैश्च विज्ञेयाः
॥
निर्मांसैः कर्णैः पापमृत्यवश्चर्पटैः
सुबहुभोगाः ।
कृपणाश्च ह्रस्वकर्णाः शङ्कुश्रवणाश्च
भूपतयः ॥
रोमशकर्णा दीर्घायुषस्तु धनभागिनो विपुल-
कर्णाः ।
क्रूराः शिरावनद्धैर्व्यालम्बैर्मांसलैः सुखिनः
॥
भोगी त्वनिम्नगण्डो मन्त्री सम्पूर्णमांसगण्डो
यः ।
सुखभाक् शुकसमनासश्चिरजीवी
शुष्कनासश्च ॥
छिन्नानुरूपयागम्यगामिनोदीर्घया तु सौभा-
ग्यम् ।
आकुञ्चितया चौरः स्त्रीमृत्युः स्याच्चिपिट-
नासः ॥
धनिनोऽग्रवक्रनासा दक्षिणवक्राः प्रभक्षणाः
क्रूराः ।
ऋज्वी स्वल्पच्छिद्रा सुपुटा नासा
सभाम्या-
नाम् ॥

धनिनां क्षुतं सकृद् द्वित्रिपिण्डितं ह्लादि
सान-
नादञ्च ।
दीर्घायुषां प्रमुक्तं विज्ञेयं संहतञ्चैव ॥
पद्मदलाभैर्धनिनो रक्तान्तविलोचनाः
श्रियो-
भाजः ।
मधुपिङ्गलैर्महार्था मार्जारविलोचनाः
पापाः ॥
हरिणाक्षा मण्डललोचनाश्च जिह्मैश्च
लोचनै-
श्चौराः ।
क्रूराः केकरनेत्रा गजसदृशदृशश्च
भूपतयः ॥
ऐश्वर्य्यं गम्भीरैर्नीलोत्पलकान्तिभिश्च
विद्वांसः ।
अतिकृष्णतारकाणामक्ष्णामुत्पाटनं
भवति ॥
मन्त्रित्वं स्थूलदृशां श्यावाक्षाणाञ्च
भवति
सौभाग्यम् ।
दीना दृग्निःस्वानां स्निग्धा
विपुलार्थभोगव-
ताम् ॥
अभ्युन्नताभिरल्पायुषो
विशालोन्नताभिरति-
सुखिनः ।
विषमभ्रुवो दरिद्रा बालेन्दुनतभ्रुवः
सधनाः ॥
दीर्घासंसक्ताभिर्धनिनः
खण्डाभिरर्थपरिहीनाः ।
मध्यविनतभ्रुवो ये ते सक्ताः
स्त्रीष्वगम्यासु ॥
उन्नतविपुलैः शङ्खैर्धन्या निम्नैः
सुतार्थसन्त्यक्ताः ।
विषमललाटा विधना
धनवन्तोऽर्धेन्दुसदृशेन ॥
शुक्तिविशालैराचार्य्यता
शिरासन्ततैरधर्म्म-
रताः ।

बहुमूलविषमकपिलाः
स्थूलस्फुटिताग्रपरुष-
ह्रस्वाश्च ।
अतिकुटिलाश्चातिघनाश्च मूर्धजा
वित्तहीना-
नाम् ॥
यद्यद्गात्रं रूक्षं मांसविहीनं शिरावनद्धञ्च ।
तत्तदनिष्टं प्रोक्तं विपरीतमतः शुभं सर्व्वम् ॥
त्रिषु विपुलो गम्भीरस्त्रिष्वेव
षडन्नतश्चतुर्ह्रस्वः ।
सप्तसु रक्तो राजा पञ्चसु दीर्घश्च सूक्ष्मश्च ॥
नाभिः स्वरः सत्त्वमिति प्रदिष्टं
गम्भीरमेतत्त्रितयं नराणाम् ।
उरो ललाटं वदनञ्च पुंसां
विस्तीर्णमेतत्त्रितयं प्रशस्तम् ॥
वक्षोऽथ कक्षा नखनासिकास्यं
कृकाटिका चेति षडुन्नतानि ।
ह्रस्वानि चत्वारि च लिङ्गपृष्ठं
ग्रीवा च जङ्घे च हितप्रदानि ॥
नेत्रान्तपादकरताल्वधरोष्ठजिह्वा
रक्ता नखाश्च खलु सप्त सुखावहानि ।
सूक्ष्माणि पञ्च दशनाङ्गुलिपर्वकेशाः
साकं त्वचा कररुहाश्च न दुःखितानाम् ॥
हनुलोचनबाहुनासिकाः
स्तनयोरन्तरमत्र पञ्चमम् ।
इति दीर्घमिदं तु पञ्चकं
न भवत्येव नृणामभूभृताम् ॥
इति क्षेत्रम् ॥
छाया शुभाशुभफलानि निवेदयन्ती
लक्ष्या मनुष्यपशुपक्षिषु लक्षणज्ञैः ।
तेजोगुणान् बहिरपि प्रविकाशयन्ती
दीपप्रभा स्फटिकरत्नघटस्थितेव ॥
स्निग्धद्विजत्वङ्नखरोमकेश-
छाया सुगन्धा च महीसमुत्था ।
तुष्ट्यर्थलाभाभ्युदयान् करोति
धर्म्मस्य चाहन्यहनि प्रवृत्तिम् ॥
स्निग्धा सिताच्छहरिता नयनाभिरामा
सौभाग्यमार्दवसुखाभ्युदयान् करोति ।
सर्व्वार्थसिद्धिजननी जननीव चाप्या
छाया फलं तनुभृतां शुभमादधाति ॥

गर्दभजर्जररूक्षस्वराश्च धनसौख्यसन्त्यक्ताः ॥
इति स्वरः ॥
सप्त भवन्ति च सारा मेदोमज्जात्वगस्थि-
शुक्राणि ।
रुधिरं मांसं चेति प्राणभृतां तत्समासफलम् ॥
ताल्वोष्ठदन्तपालीजिह्वानेत्रान्तपायुकरचरणैः
रक्तैस्तु रक्तसारा बहुसुखवनितार्थपुत्त्रयुताः ॥
स्निग्धत्वक्का धनिनो मृदुभिः सुभगा विच-
क्षणास्तनुभिः ।
मज्जामेदःसाराः सुशरीराः पुत्त्रवित्तयुक्ताः ॥
स्थूलास्थिरस्थिसारो बलवान् विद्यान्तगः सुरू-
पश्च ।
बहुगुरुशुक्राः सुभगा विद्वांसो रूरवन्तश्च ॥
उपचितदेहो विद्वान् धनी सुरूपश्च मांस-
सारो यः ।
इति सारः ॥
सङ्घात इति च सुश्लिष्टसन्धिता सुखभुजो ज्ञेया
॥
इति संहतिः ॥
स्नेहः पञ्चसु लक्ष्यो वाग्जिह्वादन्तनेत्रनखसंस्थः
।
सुतधनसौभाग्ययुताः स्निग्धैस्तैर्निर्धना रूक्षैः ॥
इति स्नेहः ॥
द्युतिमान्वर्णः स्निग्धः क्षितिपानां मध्यमः
सुतार्थ-
वताम् ।
रूक्षो धनहीनानां शुद्धः शुभदो न सङ्कीर्णः ॥
इति वर्णः ॥
साध्यमनूकं वक्त्राद्गोवृषशार्दूलसिंहगरुडमुखाः
।
अप्रतिहतप्रतापा जितरिपवो मानवेन्द्राश्च ॥
वानरमहिषवराहाजतुल्यवदनाःसुतार्थसुख-
भाजः ।
गर्दभकरभप्रतिमैर्मुखैः शरीरैश्च निःस्वसुखाः ॥
इत्यनूकम् ॥
अष्टशतं षण्णवतिः परिमाणं चतुरशीरिति
पुंसाम् ।
उत्तमसमहीनानामङ्गुलसङ्ख्यास्वमानेन ॥
इत्युन्मानम् ॥
भारार्धतनुः सुखभाक् तुलितोऽतो दुःखभाग्

उन्नतशिराभिराढ्याः
स्वस्तिकवत्संस्थिताभिश्च ॥
निम्नललाटा वधबन्धभागिनः
क्रूरकर्म्मनिर-
ताश्च ।
अभ्युन्नतैश्च भूपाः कृपणाः स्युः
सङ्कटललाटाः ॥
रुदितमदीनमनश्रु स्निग्धञ्च शुभावहं
मनुष्या-
णाम् ।
रूक्षं दीनं प्रचुराश्रु चैव न शुभप्रदं
पुंसाम् ॥
हसितं शुभदमकम्पं
सनिमीलितलोचनञ्च
पापस्य ।
हृष्टस्य हसितमसकृत्
सोन्मादस्यासकृत्प्रान्ते ॥
तिस्रो रेखाः शतजीविनां ललाटायताः
स्थिता
यदि ताः ।
चतसृभिरवनीशत्वं नवतिश्चायुः
सपञ्चाब्दा ॥
विच्छिन्नाभिश्चागम्यगामिनो
नवतिरप्यरेखेण ।
केशान्तोपगताभी रेखाभिरशीतिवर्षायुः
॥
पञ्चभिरायुः
सप्ततिरेकाग्रावस्थिताभिरपि षष्टिः ।
बहुरेखेण शतार्धं चत्वारिंशच्च वक्राभिः
॥
त्रिंशद्भ्रूलग्नाभिर्विंशतिकश्चैव
वामवक्राभिः ।
क्षुद्राभिः स्वल्पायुर्न्यूनाभिश्चान्तरे
कल्प्यम् ॥
परिमण्डलैर्गवाढ्याश्छत्राकारैः
शिरोभिरव-
नीशाः ।
चिपिटैः पितृमातृघ्नाः करोटिशिरसां
चिरा-
न्मृत्युः ॥
घटमूर्धा ध्वानरुचिर्द्विमस्तकः
पापकृद्धनैस्त्यक्तः ।

चण्डाधृष्या पद्महेमाग्निवर्णा
युक्ता तेजोविक्रमैः सप्रतापैः ।
आग्नेयीति प्राणिनां स्याज्जयाय
क्षिप्रं सिद्धं वाञ्छितार्थस्य धत्ते ॥
मलिनपरुषकृष्णा पापगन्धानिलोत्था
जनयति वधबन्धव्याध्यनर्थार्थनाशान् ।
स्फटिकसदृशरूपा भाग्ययुक्तात्युदारा
निधिरिव गगनोत्था श्रेयसां स्वश्छवर्णा ॥
छायाः क्रमेण कुजलाग्न्यनिलाम्बरोत्थाः
केचिद्वदन्ति दश ताश्च यथानुपूर्ब्व्या ।
सूर्य्याब्जनाभपुरुहूतयमोडुपानां
तुल्यास्तु लक्षणफलैरिति तत्समासः ॥
इति मृजा ॥
करिवृषरथौघभेरीमृदङ्गसिंहाब्दनिःस्वना
भूपाः ।

भवत्यूनः ।
भारोऽतीवाढ्यानामध्यर्घः सर्व्वधरणीशः ॥
विंशतिवर्षा नारी पुरुषः खलु पञ्चविंशतिभि-
रब्दैः ।
अर्हति मानोन्मानं जीवितभागे चतुर्थे वा ॥
इति मानम् ॥
भूजलशिख्यनिलाम्बर
सुरनररक्षःपिशाचकतिरश्चाम्।
सत्त्वेन भवति पुरुषो
लक्षणमेतद्भवत्येषाम् ॥
महीस्वभावः शुभपुष्पगन्धः
सम्भोगवान् सुश्वसनः स्थिरश्च ।
तोयस्वभावो बहुतोयपायी
प्रियाभिलाषी रसभोजनश्च ॥
अग्निप्रकृत्या चपलोऽतितीक्ष्ण-
श्चण्डः क्षुधालुर्बहुभोजनश्च ।

| निम्नन्तु शिरो महतां वहुनिम्नमनर्थदं भवति ॥<br>एकैकभवैः स्निग्धैः<br>कृष्णैराकुञ्चितैरभिन्नाग्रैः ।<br>मृदुभिर्न चातिवहुभिः केशैः सुखभाग् नरेन्द्रो<br>वा ॥ | | |
|---|---|---|

वायोः स्वभावेन चलः कृशश्च
क्षिप्रं च कोपस्य वशं प्रयाति ॥
खप्रकृतिर्निपुणो विवृतास्यः
शब्दगतेः कुशलः सुषिराङ्गः ।
त्यागयुतो पुरुषो मृदुकोपः
स्नेहरतश्च भवेत्सुरसत्त्वः ॥
मर्त्यसत्त्वसंयुतो गीतभूषणप्रियः ।
संविभागशीलवान्नित्यमेव मानवः ॥
तीक्ष्णप्रकोपः खलचेष्टितश्च
पापश्च सत्त्वेन निशाचराणाम् ।
पिशाचसत्त्वश्चपलो मलाक्तो
बहुप्रलापी च समुल्वणाङ्गः ॥
भीरुः क्षुधालुर्बहुभुक् च यः स्यात्
ज्ञेयः स सत्त्वेन नरस्तिरश्चाम् ।
एवं नराणां प्रकृतिः प्रदिष्टा
यल्लक्षणज्ञाः प्रवदन्ति सत्त्वम् ॥
इति प्रकृतिः ॥
शार्दूलहंससमदद्विपगोपतीनां
तुल्या भवन्ति गतिभिः शिखिनाञ्च भूपाः ।
येषाञ्च शब्दरहितं स्तिमितञ्च यातं
तेऽपीश्वरा द्रुतपरिप्लुतगा दरिद्राः ॥
इति गतिः ॥
श्रान्तस्य यानमशनञ्च बुभुक्षितस्य
पानं तृषापरिगतस्य भयेषु रक्षा ।
एतानि यस्य पुरुषस्य भवन्ति काले
धन्यं वदन्ति खलु तं नरलक्षणज्ञाः ॥
पुरुषलक्षणमुक्तमिदं मया
मुनिमतान्यवलोक्य समासतः ।
इदमधीत्य नरो नृपसम्मतो
भवति सर्व्वजनस्य च वल्लभः ॥"
इति श्रीवराहमिहिरकृतौबृहत्संहितायां पुरुष-
लक्षणं नामाष्टषष्टितमोऽध्यायः ॥ * ॥)
कृष्णभक्तपुरुषस्य गोविन्दपदाश्रयत्वं यथा, --
"स्त्रियो वा पुरुषो वापि ह्याततायी नपुंसकः
।
भक्तत्वे गणनीयश्चेद्गोविन्दपदमाश्रयेत् ॥"
इति पाद्मोत्तरखण्डे ९९ अध्यायः ॥
पुरुषाणां मध्ये गुरवो यथा, --
"गुरूणामपि सर्व्वेषां पूज्याः पञ्च विशेषतः ।

विष्णुः । इति शब्दरत्नावली ॥ (स हि
पुराण-
पुरुष एव । यथा, हरिवंशे । १२८ । २० ।
"एवं पुराणः पुरुषो विष्णुर्वेदेषु पठ्यते ।
अचिन्त्यश्चाप्रमेयश्च गुणेभ्यश्च परस्तथा
॥"
शिवः । यथा, महाभारते । १४ । ८ । १४ ।
"याम्यायाव्यक्तरूपाय सद्वृत्ते शङ्कराय च ।
क्षेम्याय हरिकेशाय स्थाणवे पुरुषाय च ॥"
जीवः । यथा, शिवपुराणे वायुसंहितायां
पूर्ब्ब-
भागे । ४ । १६ ।
"प्रकृतिः क्षरमित्युक्तं पुरुषोऽक्षर उच्यते ।
ताविमौ प्रेरयत्यन्यः स परः परमेश्वरः ॥")
दुर्गा । यथा, --
"महानिति च योगेषु प्रधानश्चैव कथ्यते ।
त्रिगुणा व्यतिरिक्ता सा पुरुषश्चेति चोच्यते
॥"
इति देवीपुराणे ४५ अध्यायः ॥
तस्य पञ्चविंशतितत्त्वात्मकत्वं जडत्वञ्च
यथा, --
"एभिः सम्पादितं भुङ्क्ते पुरुषः पञ्चविंशकः
।
ईश्वरेच्छावशः सोऽपि जडात्मा कथ्यते
बुधैः ॥"
इति मात्स्ये तत्त्वकथनावसारे ७ अध्यायः
॥
(अश्वस्थानकभेदः । यथा, माघे । ५ । ५६
।
श्लोकटीकायां मल्लिनाथधृतवचनम् ।
"पश्चिमेनाग्रपादेन भुवि स्थित्वाग्रपादयोः ।
ऊर्द्ध्वप्रेरणया स्थानमश्वानां पुरुषः स्मृतः
॥")
मेषमिथुनसिंहतुलाधनुःकुम्भराशयः ।
यथा, --
"क्रूरोऽथ सौम्यः पुरुषोऽङ्गना च
ओजोऽथ युग्मं विषमः समश्च ।
चरस्थिरद्व्यात्मकनामधेया
मेषादयोऽमी क्रमशः प्रदिष्टाः ॥"
पुरुषग्रहा यथा, --

नान्नमित ऊर्द्ध्वावस्थितोऽग्रकायः
पूर्ब्बकायो यस्य
स तथोक्तः ।" इति तट्टीकायां मल्लिनाथः
॥)

**पुरुषकारः**, पुं, (पुरुषस्य कारः करणम् ।) पुरु-
षस्य कृतिः । पौरुषम् । चेष्टा । यथा, --
मनुरुवाच ।
"दैवे पुरुषकारे च किं ज्यायस्तं ब्रवीहि मे
।
अत्र मे संशयो देव छेत्तुमर्हस्यशेषतः ॥
मत्स्य उवाच ।
स्वमेव कर्म्म दैवाख्यं विद्धि
देहान्तरार्जितम् ।
तस्मात् पौरुषमेवेह श्रेष्ठमाहुर्मनीषिणः ॥
प्रतिकूलन्तथा दैवं पौरुषेण विहन्यते ।
मङ्गलाचारयुक्तानां नित्यमुत्थानशीलिनाम्
॥
येषां पूर्ब्बकृतं कर्म्म सात्त्विकं मनुजोत्तम !
।
पौरुषेण विना तेषां केषाञ्चिद्दृश्यते फलम्
॥
कर्म्मणा प्राप्यते लोके राजसस्य तथा
फलम् ।
कृच्छ्रेण कर्म्मणा विद्धि तामसस्य तथा
फलम् ॥
पौरुषेणाप्यते राजन् ! मार्गितव्यं फलं नरैः
।
दैवमेव विजानन्ति नराः पौरुषवर्ज्जिताः
॥
तस्मात्त्रिकालसंयुक्तं दैवं न सफलं भवेत्
।
पौरुषं दैवदम्पत्या काले फलति पार्थिव !
॥
दैवं पुरुषकारश्च कालश्च मनुजोत्तम ! ।
त्रयमेतन्मनुष्यस्य पिण्डितं स्यात्
फलावहम् ॥
कृषेर्वृष्टिसमायोगाद्दृश्यन्ते फलसिद्धयः ।
तास्तु काले प्रदृश्यन्ते नैवाकाले कथञ्चन
॥

तेषामाद्यास्त्रयः श्रेष्ठास्तेषां माता सुपूजिता ॥
यो भावयति या सूते येन विद्योपदिश्यते ।
ज्येष्ठभ्राता च भर्त्ता च पञ्चैते गुरवः स्मृताः ॥”
इति कौर्म्मे उपविभागे ११ अध्यायः ॥
आत्मा । इत्यमरः । ३ । ३ । २१८ ॥
(यथा,
भागवते । ७ । १४ । ३७ ।
“पुराण्यनेन सृष्टानि नृतिर्य्यगृषिदेवताः ।
शेते जीवेन रूपेण पुरेषु पुरुषो ह्यसौ ॥”
यथा च शङ्करविजये १३ अध्याये ।
“पुरुसंज्ञे शरीरेऽस्मिन् शयनात् पुरुषो हरिः ।
शकारस्य षकारोऽयं व्यत्ययेन प्रयुज्यते ॥”)
साङ्ख्यतत्त्वज्ञः । पुन्नागपादपः । इति मेदिनी ।
षे, ४१ ॥ (तत्पर्य्यायो यथा,
वैद्यकरत्नमालायाम् ॥
“कुम्भीकः पुरुषस्तुङ्गः पुन्नागो रक्तकेशरः ॥”)

“भौमार्कजीवाः पुरुषाः क्लीवौ सोमजभानुजौ ।
स्त्र्याख्यौ भार्गवचन्द्रौ द्वौ तत्पतित्वात्तथोच्यते ॥”
पुरुषनक्षत्राणि यथा, --
“हस्तो मूलश्रवणपुनर्व्वसूमृगशिरस्तथा पुष्यः ।
गर्भाधानादिकार्य्येषु पुन्नामायं गणः शुभदः ॥”
इति ज्योतिस्तत्त्वम् ॥
तद्वैदिकपर्य्यायः । मनुष्याः १ नरः २ धवाः ३
जन्तवः ४ विशः ५ क्षितयः ६ कृष्णयः ७ चर्ष-
ण्यः ८ नहुषः ९ हरयः १० मर्य्याः ११ मर्त्त्याः
१२ मर्त्ताः १३ व्राताः १४ तुर्व्वशाः १५ ह्रुह्यवः
१६ आयवः १७ यदवः १८ अनवः १९ पूरवः
२० जगतः २१ तस्थुषः २२ पञ्चजनाः २३
विवस्वन्तः २४ पृतनाः २५ । इति वेदनिघण्टौ
२ अध्यायः ॥

**पुरुषकं**, क्ली, पुं, (पुरुष एवेति । पुरुष + स्वार्थे कन् ।)
घोटकानामूद्र्ध्वस्थितिः । इति त्रिकाण्डशेषः ॥
शीखपाँओ इति हिन्दीभाषा ॥ (यथा, माघे ।
५ । ५६ ।
“श्रीवृक्षकी पुरुषकोन्नमिताग्रकायः ॥”
“पुरुषकोऽश्वानां स्थानकभेदः । यदुक्तम्, --
‘पश्चिमेनाग्रपादेन भुवि स्थित्वाग्रपादयोः ।
ऊर्द्ध्वप्रेरणया स्थानमश्वानां पुरुषः स्मृतः ॥’
पुरुष एव पुरुषकस्तेन पुरुषकेण स्थानके-

तस्मात् सदैव कर्त्तव्यं सधर्म्मं पौरुषं नृभिः ।
एवन्ते प्राप्नुवन्तीह परलोकफलं ध्रुवम् ॥
लालसाः प्राप्नुवन्त्यर्थान्न च दैवपरायणाः ।
तस्मात् सर्व्वप्रयत्नेन पौरुषे यत्नमाचरेत् ॥
त्यक्त्वालसान् दैवपरान् मनुष्या-
नुत्थानयुक्तान् पुरुषान् हि लक्ष्मीः ।
अन्विष्य यत्नाद्वृणुते नृपेन्द्र !
तस्मात् सदोत्थानवता हि भाव्यम् ॥”
इति मात्स्ये दैवपुरुषकारको नाम १९५ अध्यायः ॥
(यथा च नीतिशास्त्रे ।
“यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् ।
तथा पुरुषकारेण विना दैवं न सिध्यति ॥”)

**पुरुषकुञ्जरः**, पुं, (पुरुषेषु कुञ्जरः श्रेष्ठ इति । पुरुषः कुञ्जर इवेत्युपमितसमासो वा ।)
पुरुषश्रेष्ठः ।
यथा, अमरे । ३ । १ । ५९ ।
“स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः ।
सिंहशार्द्दूलनागाद्याः पुंसिश्रेष्ठार्थवाचकाः ॥”
(यथा, रामायणे । २ । १० । ५ ।
“हन्तानार्य्ये ! ममामित्रे ! सकामा भव केकयि ! ।
मृते मयि गते रामे वनं पुरुषकुञ्जरे ॥”)

**पुरुषत्रा**, व्य, (द्वितीयासप्तम्यर्थवृत्तेः पुरुषशब्दात्
“देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्यो-
र्बहुलम् ।” ५ । ४ । ५६ । इति त्रा ।)
पुरुषम् ।
पुरुषौ । पुरुषान् । पुरुषे । पुरुषयोः । पुरुषेषु ॥
देवादेर्द्वीप्त्योस्त्राजितिसूत्रेण त्राच्प्रत्ययनिष्प-
न्नम् । देवादिस्तु देवमनुष्यपुरुषपुरुमर्त्त्यबहु
इत्यादि । इति मुग्धबोधटीकायां दुर्गादासः ।

**पुरुषत्वं**, क्ली, पुरुषस्य भावः । पुरुषवृत्तिरसाधा-

रणधर्म्मः । पुरुषशब्दात् भावार्थे त्वप्रत्ययः । (यथा, महाभारते । ५ । १८९ । १३ ।
"हनिष्यसि रणे विप्रं पुरुषत्वञ्च लप्स्यसे ॥")
पुंस्त्वञ्च ॥

**पुरुषदघ्नः**, त्रि, पुरुषपरिमाणः । पुरुषशब्दात्

परिमाणार्थे दघ्नट्प्रत्ययः । इति व्याकरणम् ॥

**पुरुषदन्तिका**, स्त्री, (पुरुषस्य दन्त इव आकृति-

र्यस्याः । कप् । कापि अत इत्वम् ।) मेदा । इति राजनिर्घण्टः ॥ (मेदाशब्देऽस्या विवरणं ज्ञातव्यम् ॥)

**पुरुषद्वयसः**, त्रि, पुरुषपरिमाणः । पुरुषशब्दात्

परिमाणार्थे द्वयसट्प्रत्ययनिष्पन्नः । इति व्या-करणम् ॥

**पुरुषद्वेषी**, [न्] त्रि, पुरुषद्वेषशीलः । पुरुष-

शब्दोपपदाद्द्विषधातोर्णिन्प्रत्ययनिष्पन्नः । इति व्याकरणम् ॥

**पुरुषनागः**, पुं, (पुरुषो नाग इव ।) पुरुषश्रेष्ठः ।

इत्यमरः । ३ । १ । ५९ ॥

**पुरुषपुङ्गवः**, पुं, (पुरुषः पुङ्गव इव ।) पुरुषश्रेष्ठः ।

इत्यमरः । ३ । १ । ५९ ॥

**पुरुषपुण्डरीकः**, पुं, (पुरुषेषु पुण्डरीकः श्रेष्ठ

इत्यर्थः । यद्वा, पुरुषः पुण्डरीको व्याघ्र इवेत्युप-मितसमासः ।) पुरुषव्याघ्रः । नरश्रेष्ठः । इत्य-मरः । ३ । १ । ५९ ॥ जिनराजविशेषः । इति हेमचन्द्रः । ३ । ३६० ॥

**पुरुषमात्रः**, त्रि, पुरुषपरिमाणः । पुरुषशब्दात्

परिमाणार्थे मात्रट्प्रत्ययः । इति व्याकरणम् ॥ (यथा, तैत्तिरीयसंहितायाम् । ५ । २ । ५ । १ ।
"पुरुषमात्रेण वि मीमिते यज्ञेन वै पुरुषः सम्मितः ॥")

**पुरुषर्षभः**, पुं, (पुरुष ऋषभ इव ।) पुरुषश्रेष्ठः ।

इत्यमरः । ३ । १ । ५९ ॥

**पुरुषव्याघ्रः**, पुं, (पुरुषो व्याघ्र इव ।) पुरुषश्रेष्ठः ।

इत्यमरः । ३ । १ । ५९ ॥ (यथा, महाभारते । ६ । १९ । ४३ ।
धनञ्जयः ॥ (पुरुषेषु जीवेषु आद्यः प्रथमः । पुरुषाणामाद्य इति वा ।) विष्णुः ॥

**पुरुषाधमः**, पुं, (पुरुषेषु अधमोऽतिनिकृष्टः ।)

निकृष्टनरः । यथा, शान्तिशतके ।
"नाथे श्रीपुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा
सेव्ये स्वस्य पदस्य दातरि सुरे नारायणे तिष्ठति ।
यं कञ्चित् पुरुषाधमं कतिपयग्रामेशमल्पार्थदं
सेवायै मृगयामहे नरमहो मूढा वराका वयम् ॥"

**पुरुषार्थः**, पुं, (पुरुषस्य अर्थः ।) पुरुषस्य प्रयो-

जनम् । स च चतुर्विधः । यथा, अग्निपुराणे ।
"धर्म्मार्थकाममोक्षाश्च पुरुषार्था उदाहृताः ॥"
(यथा, मनुः । ७ । १०० ।
"एतच्चतुर्व्विधं विद्यात् पुरुषार्थप्रयोजनम् ॥")
गोस्वामिमते भक्तिः पञ्चमपुरुषार्थः ॥ (पुरुष-कारः । यथा, महाभारते । ३ । १७९ । २७ ।
"दैवं पुरुषकारेण को वञ्चयितुमर्हति ।
दैवमेव परं मन्ये पुरुषार्थो निरर्थकः ॥")

**पुरुषास्थिमाली**, [न्] पुं, (पुरुषाणामस्थीनि

तेषां मालास्त्यस्येति । पुरुषास्थिमाला + व्रीह्यादित्वात् इनिः ।) शिवः । इति हेम-चन्द्रः । २ । १११ ॥

**पुरुषोत्तमः**, पुं, (पुरुषेषु उत्तमः ।) विष्णुः । इत्य-

मरः । १ । १ । २१ ॥ (यथा, रघुः । ३ । ४९ ।
"हरिर्यथैकः पुरुषोत्तमः स्मृतः
महेश्वरस्त्र्यम्बक एव नापरः ।
तथा विदुर्म्मां मुनयः शतक्रतुं
द्वितीयगामी न हि शब्द एष नः ॥"
एतन्निरुक्तिर्यथा, महाभारते । ५ । ७० । १० ।
"पुराणात् सदनाच्चापि ततोऽसौ पुरुषो-त्तमः ॥")
जिनराजविशेषः । तत्पर्य्यायः । सोमभूः २ । इति हेमचन्द्रः । ३ । ३५९ ॥ पुरुषेषु मध्ये उत्तमः । यथा, धर्म्मपुराणे ।
"विशेषसमभावस्य पुरुषस्यानघस्य च ।
अरिमित्रेऽप्युदासीने मनो यस्य समं व्रजेत् ॥
समो धर्म्मः समः स्वर्गः समो हि परमं तपः ।

**पुरुहूतः** पुं, (पुरु प्रचुरं हूतमाह्वानं यज्ञेषु

यस्य । पुरु यथा स्यात्तथा हूयते यज्वभिरिति वा । यद्वा, पुरूणि बहूनि हूतानि नामानि यस्य ।) इन्द्रः । इत्यमरः । १ । १ । ४४ ॥ (यथा, महाभारते । १ । १२६ । २५ ।
"पुरुहूतादयं जज्ञे कुन्त्यामेव धनञ्जयः ॥"
प्रचुरनामविशिष्टे, त्रि । यथा, भागवते । ८ । १ । १३ ।
"स विश्वकायः पुरुहूत ईशः
सत्यः स्वयंज्योतिरजः पुराणः ॥"
स्त्री, भगवती । सा तु पुष्करे पीठस्थाने विरा-जते । यथा, देवीभागवते । ७ । ३० । ५९ ।
"विश्वे विश्वेश्वरीं प्राहुः पुरुहूताञ्च पुष्करे ॥")

**पुरूरवाः** [स्] पुं, (पुरु प्रचुरं यथा स्यात्तथा

रौतीति । "पर्व्वतश्च पुरुर्नाम यत्र यज्ञे पुरू-रवाः ।" ३ । ९० । २२ । इति महाभारतोक्तवचनात्
पुरौ पर्व्वते रौतीति वा । पुरु + रु + "पुरू-रवाः ।" उणा० ४ । २३१ । इति असिप्रत्य-येन निपातनात् साधुः ।) बुधस्य पुत्त्रः । स तु चन्द्रवंशीयादिराजः । तत्पर्य्यायः । बौधः २ ऐलः ३ उर्व्वशीरमणः ४ । इति हेमचन्द्रः ॥
यथा, अग्निपुराणे ।
"ततो बुधाश्रमं प्रायादिडा रूपाश्रिता सती ।
बुधेनान्तरमासाद्य मैथुनायोपमन्त्रिता ॥
सोमपुत्राद्बुधाद्राजन् ! तस्या जज्ञे पुरूरवाः ।
जनयित्वा ततः सा तं पुनः सुद्युम्नतां गता ॥"
अपि च ।
"इलोदरे च धर्म्मिष्ठं बुधः पुत्त्रमजीजनत् ।

"एवन्ते पुरुषव्याघ्राः पाण्डवा युद्धनन्दिनः ॥")

**पुरुषशार्दूलः**, पुं, (पुरुषः शार्दूल इव ।) पुरुष-

श्रेष्ठः । इत्यमरः । ३ । १ । ५९ ॥ (यथा, महा-
भारते । ३ । ९१ । ६ ॥
"तव च भ्रातरं वीरमपश्यं सव्यसाचिनम् ।
शक्रस्यार्द्धासनगतं तत्र मे विस्मयो महान् ।
आसीत् पुरुषशार्दूल ! दृष्ट्वा पार्थं तथागतम् ॥")

**पुरुषसिंहः**, पुं, (पुरुषः सिंह इव पुरुषेषु सिंहः

श्रेष्ठो वा ।) पुरुषश्रेष्ठः । इत्यमरः । ३ । १ । ५९ ॥
जिनराजविशेषः । तत्पर्य्यायः । शैविः २ । इति
हेमचन्द्रः । ३ । ३६० ॥

**पुरुषाद्यः**, पुं, (पुरुषाणां जिनपुरुषाणामाद्यः

प्रथमः ।) आदिनाथनामा जिनविशेनः । इति

यस्यैवं मानसं नित्यं स नरः पुरुषोत्तमः ॥"
(पुरुषोत्तमो जगन्नाथोऽस्त्यत्रेति । अच् ।
उत्कलखण्डैकदेशः । स तु
पीठस्थानानामन्य-
तमः । तत्र भगवती विमलारूपेण विराजते ।
यथा, देवीभागवते । ७ । ३० । ६४ ।
"गयायां मङ्गला प्रोक्ता विमला पुरुषोत्तमे ॥"
ग्रन्थकर्त्तृविशेषः । स तु
प्रयोगरत्नमालाव्याकर-
णस्य द्विरूपैकाक्षरहारावलीकोषाणां अन्ये-
षाञ्च कतिपयग्रन्थानां प्रणेता ॥)

**पुरुहं**, त्रि, (पुरुं प्रचुरं हन्ति गच्छतीति ।

पुरु + हन गतौ + अन्येभ्योऽपीति डः ।) प्रचु-
रम् । इत्यमरः । ३ । १ । ६३ ॥

**पुरुहु**, त्रि, (पुरुं प्रचुरं हन्ति गच्छतीति । हन

गतौ + बाहुलकात् डुः ।) प्रचुरम् । इत्यमर-
टीदायां स्वामी ॥ (पुरुहूरित्यपि पाठः ॥)

अश्वमेधशतं साग्रमकरोद्यः स्वतेजसा ॥
पुरूरवा इति ख्यातः सर्व्वलोकनमस्कृतः
।
हिमवच्छिखरे रम्ये आराध्य स जनार्द्दनम्
।
लोकैश्वर्य्यमगाद्राजा सप्तद्वीपपतिस्तदा ॥
केशिप्रभृतयो दैत्यास्तस्य भृत्यत्वमागताः
।
उर्व्वशी यस्य पत्नीत्वमगात् सद्रूपमोहिता
॥
सप्तद्वीपा वसुमती सशैलवनकानना ।
धर्म्मेण पालिता तेन सर्व्वलोकहितैषिणा ॥
चामरग्राहिणी कीर्त्तिः सम्पन्नैकाङ्गवाहिका
।
विष्णुप्रसादाद्देवेन्द्रो ददावर्द्धासनन्तदा ॥
धर्म्मार्थकामान्धर्म्मेण सममेवाभ्यपालयत्
।
धर्म्मार्थकामास्तं द्रष्टुमाजग्मुः कौतुकात्
पुरा ॥"
इति मात्स्ये २४ अध्यायः ॥
(अस्य विशेषविवरणन्तु हरिवंशे २६
अध्याये
द्रष्टव्यम् ॥ * ॥) विश्वदेवः । इति
जटाधरः ॥
पार्व्वणश्राद्धदेवः । यथा, --
"पुरूरवा माद्रवाश्च पार्व्वणे समुदाहृतौ ॥"
इति श्राद्धतत्त्वे बृहस्पतिः ॥

**पुरोगः** त्रि, (पुरोऽग्रे गच्छतीति । पुरस् + गम +

डः ।) अग्रगामी । इत्यमरः । २ । ८ । ७२
॥
(यथा, रघुः । ६ । ५५ ।
"ज्याघातरेखे सुभुजो भुजाभ्यां
बिभर्त्ति यश्चापभृतां पुरोगः ॥")
प्रधानः । इति हेमचन्द्रः । ६ । ७४ ॥

**पुरोगतिः**, पुं, (पुरोऽग्रे गतिर्गमनमस्य ।) कुक्कुरः ।
इति धरणिः ॥ अग्रगे, त्रि ॥

**पुरोगमः**, त्रि, (पुरोऽग्रे गच्छतीति । गम +
अच् ।) अग्रगामी । इत्यमरः । २ । ८ । ७२ ॥
(यथा, महाभारते । ६ । १९ । १० ।
"यं दृष्ट्वा पार्थिवाः सर्व्वे दुर्य्योधनपुरोगमाः ।
निवर्त्तिष्यन्ति संत्रस्ताः सिंहं क्षुद्रमृगा यथा ॥"
कुक्कुरे, पुं । इति हेमचन्द्रटीका ॥)

**पुरोगामी**, [न्] त्रि, (पुरोऽग्रे गच्छतीति । गम +
णिनिः ।) अग्रगामी । तत्पर्य्यायः । पुरोगः २
अग्रेसरः ३ प्रष्ठः ४ अग्रतःसरः ५ पुरःसरः ६
पुरोगमः ७ । इत्यमरः । २ । ८ । ७२ ॥ नासीरः ८
प्रग्रसरः ९ । इति शब्दरत्नावली ॥

**पुरोटिः**, पुं, (पुरोऽटतीति । अट + इन् ।) पत्र-
झङ्कारः । इति त्रिकाण्डशेषः ॥ रायभाटि इति
भाषा ॥ (पुरसंस्कारः । इति हारावली । १६४ ॥)

**पुरोडाः**, [श्] पुं, (पुर आदौ दाश्यते दीयते
इति । पुरस् + दाशृ दाने + क्विप् । निपात-
नात् दस्य डः ।) हविः । इति मुग्धबोध-
व्याकरणम् ॥

**पुरोडाशः**, पुं, (पुरोऽग्रे दाश्यते दीयते इति ।
दाश + कर्म्मणि घञ् । निपातनात् दस्य डः ।)
हविर्भेदः । स तु यवचूर्णनिर्म्मितरोटिका-
विशेषः । (यथा, मनुः । ६ । ११ ।
"वासन्तशारदैर्मेध्यैर्मुन्यन्नैः स्वयमाहृतैः ।
पुरोडाशांश्चरूंश्चैव विधिवन्निर्वपेत् पृथक् ॥")
पिष्टकचमसी । हुतशेषः । इति मेदिनी । शे, ३८ ॥
कारकः ३ । इति शब्दरत्नावली ॥ तस्य लक्षणं
यथा, चाणक्ये ।
"वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायणः ।
आशीर्व्वादवचोयुक्त एष राजपुरोहितः ॥"
तस्य वर्ज्जनीयलक्षणं यथा, --
"काणं व्यङ्गमपुत्रं वानभिज्ञमजितेन्द्रियम् ।
न ह्रस्वं व्याधितं वापि नृपः कुर्य्यात् पुरोहितम् ॥"
इति कालिकापुराणम् ॥ * ॥
पुरोहिते वर्णनीयानि यथा, --
"पुरोहितो हितो वेदस्मृतिज्ञः सत्यवाक् शुचिः ।
ब्रह्मण्यो विमलाचारः प्रतिकर्त्तापदामृजुः ॥"
इति कविकल्पलता ॥
(यथा च ।
"दोषागन्तुजमृत्युभ्यो रसमन्त्रविशारदौ ।
रक्षेतां नृपतिं नित्यं यत्नाद्वैद्यपुरोहितौ ॥
ब्रह्मा वेदाङ्गमष्टाङ्गमायुर्व्वेदमभाषत ।
पुरोहितमते तस्माद्वर्त्तेत भिषगात्मवान् ॥"
इति सुश्रुते सूत्रस्थाने चतुस्त्रिंशेऽध्याये ॥)

**पुर्व्व**, पूर्त्तौ । पूर्णीकरणे । इति कविकल्पद्रुमः ॥
(भ्वा०-पर०-सक०-सेट् ।) पञ्चमस्वरी । पूः
पुरौ पुरः । पुर्व्वति पयसा कुम्भं चेटी । इति
दुर्गादासः ॥

**पुल**, क उच्छ्रितौ । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-अक०-सेट् ।) उच्छ्रितिरुच्चीभावः । क,
पोलयति पर्व्वतः । इति दुर्गादासः ॥

**पुल**, ज महत्त्वे । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-अक०-सेट् ।) ज, पोलः पुलः । पोलति ।
इति दुर्गादासः ॥

**पुल**, श महत्त्वे । इति कविकल्पद्रुमः ॥ (तुदा०-
पर०-अक०-सेट् ।) श, पुलति पुलिनं शरदि
महत् स्यादित्यर्थः । पोलिता । इति दुर्गादासः ॥

**पुलः**, पुं, (पोलति उच्छ्रितो भवतीति । पुल +
कः ।) पुलकः । विपुले, त्रि । इति मेदिनी । ले, २३ ॥

**पुलकं**, क्ली, (पुलतीति । पुल + कः । ततः संज्ञायां
कन् ।) कङ्कुष्टम् । तच्च पर्व्वतीयमृत्तिका-
विशेषः । इति राजनिर्घण्टः ॥

**पुलकः**, पुं, (पुल + स्वार्थे कन् ।) रोमाञ्चः ।
संस्थापिताश्च नखरा भुजगैः प्रकाशं
संपूज्य दानवपतिं प्रथिते प्रदेशे ॥
दाशार्णवागदवमेकलकालगादौ
गुञ्जाञ्जनक्षौद्रमृणालवर्णाः ।
गन्धर्व्ववह्निकदलीसदृशावभासा
एते प्रशस्ताः पुलकाः प्रसूताः ॥
शङ्खाब्जभृङ्गार्कविचित्रभङ्गा
शूद्रैरुपेताः परमाः पवित्राः ।
मङ्गल्ययुक्ता बहुभक्तिचित्रा
वृद्धिप्रदास्ते पुलका भवन्ति ॥
काकश्वरासभशृगालवृकोग्ररूपै-
गृध्रैः समांसरुधिरार्द्रमुखैरुपेताः ॥
मृत्युप्रदास्तु विदुषा परिवर्ज्जनीया
मूल्यं पलस्य कथितञ्च शतानि पञ्च ॥"
इति गारुडे ७७ अध्यायः ॥
मणिदोषविशेषः । हरितालम् । गजान्नपिण्डम् ।
गन्धर्व्वविशेषः । इति मेदिनी । के, १२१ ॥
असुराजी । गल्वर्कः । इति हेमचन्द्रः ॥

**पुलकी**, [न्] पुं, (पुलकोऽस्त्यस्येति । पुलक +
इनिः ।) धाराकदम्बः । इति राजनिर्घण्टः ॥

**पुलस्तिः**, पुं, (पुल महत्त्वे + क्विप् । पुलं महत्त्वं
असते गच्छतीति । अस् + तिः । इत्युज्ज्वलदत्तः ।
४ । १७९ ।) पुलस्त्यमुनिः । इत्युणादिकोषः ॥

**पुलस्त्यः**, पुं, सप्तर्षीणां मध्ये ऋषिविशेषः । इति
शब्दरत्नावली ॥ स ब्रह्मणः कर्णाभ्यां जातः ।
तस्य भार्य्या हविर्भूः कर्द्दमकन्या । तस्य पुत्त्रः
अगस्त्यः विश्रवाश्च । इति श्रीभागवतम् ॥
यथा, हरिवंशे । ७ । ८ ।
"मरीचिरत्रिर्भगवानङ्गिराः पुलहः क्रतुः ।
पुलस्त्यश्च वशिष्ठश्च सप्तैते ब्रह्मणः सुताः ॥"

**पुलहः**, पुं, सप्तर्षीणां मध्ये ऋषिविशेषः । इति
शब्दरत्नावली ॥ स च ब्रह्मणो नाभितो जातः
तस्य भार्य्या कर्द्दममुनिकन्या गतिः । तस्य
पुत्त्राः कर्म्मश्रेष्ठः यवीयान् सहिष्णुश्च । इति
श्रीभागवतम् ॥

सोमरसः । इति हेमचन्द्रः ॥

**पुरोडाश्यं**, त्रि, (पुरोडाशाय हितमिति । पुरो-

डाश + यत् ।) पुरोडाशीयम् । हविर्योग्यम् । पुरोडाशाय हितम् । यथा, भट्टिः । ५ । १२ ।
"आमिक्षीयं दधि क्षीरं पुरोडाश्यं तथौषधम् ।
हविर्हैयङ्गवीनञ्च नाप्युपघ्नन्ति राक्षसाः ॥"

**पुरोद्भवा**, स्त्री, (पुरे उद्भवो यस्याः ।) महा-

मेदा । इति रत्नमाला ॥

**पुरोधाः**, [स्] पुं, (पुरोऽग्रे दधाति मङ्गल-

मिति । पुरस् + धा + "पुरसि च ।" उणा० ४ ।
२३० । इति असिः । स च डित् ।) पुरोहितः ।
इत्यमरः । २ । ८ । ५ ॥ (यथा, रघुः । ३ । १८ ।
"स जातकर्म्मण्यखिले तपस्विना
तपोवनादेत्य पुरोधसा कृते ॥")

**पुरोभागी**, [न्] त्रि, (पुरः पूर्ब्बमेव भजते इति ।

पुरस् + भज + णिनिः ।) दोषमात्रदर्शी । इत्य-
मरः । ३ । १ । ४६ ॥ (यथा, राजतर-
ङ्गिण्याम् । ६ । ८३ ।
"कुपितोऽपि स यत्रैनां न्यवधीद्रागमोहितः ।
तेनैवागात् पुरोभागिवितर्कातङ्कपात्रताम् ॥")
अग्रांशी च ॥

**पुरोहितः**, पुं, पुरो दृष्टादृष्टफलेषु कर्म्मसु धीयते

आरोप्यते यः । (यद्वा, पुर आदावेव हितं
मङ्गलं यस्मात् ।) शान्त्यादिकर्त्ता । तत्पर्य्यायः ।
पुरोधाः २ । इत्यमरः । २ । ८ । ५ ॥ धर्म्मकर्म्मादि-
तत्पर्य्यायः । रोमोद्भेदः २ त्वक्पुष्पम् ३ त्वग-
ङ्कुरः ४ । इति त्रिकाण्डशेषः ॥ (यथा, आर्य्या-
सप्तशत्याम् । ३७९ ।
"प्रेमलघूकृतकेशववक्षोभरविपुलपुलककुच-
कलसा ।
गोवर्द्धनगिरिगुरुतां मुग्धबधूर्निभृतमुप-
हसति ॥")
शरीरान्तर्ब्बहिर्भवकीटः । इति हेमचन्द्रः ॥
(तुच्छधान्यम् । यथा, पञ्चतन्त्रे । ३ । ९९ ।
"पुलका इव धान्येषु पूतिका इव पक्षिषु ।
मशका इव मर्त्येषु येषां धर्म्मो न कारणम् ॥")
प्रस्तरविशेषः । तस्य परीक्षा यथा, --
"पुण्येषु पर्व्वतवरेषु च निम्नगासु
स्थानान्तरेषु च तथोत्तरदेशगत्वात् ।

**पुलाकः**, पुं, (पोलति उच्छ्रितो भवतीति । पुल +

"बलाकादयश्च ।" इति आकप्रत्ययेन निपा-
तनात् साधुः ।) तुच्छधान्यम् । आगडा इति
ख्यातम् ॥ (यथा, मनुः । १० । १२५ ।
"पुलाकाश्चैव धान्यान्यां जीर्णाश्चैव
परिच्छदाः ॥")
संक्षेपः । अल्पत्वम् । भक्तसिक्थकम् । भक्त-
गुलिका । इत्यमरभरतौ ॥ क्षिप्रम् । यथा पुलाक-
कारी । इति स्वामी ॥

**पुलाकी**, [न्] पुं, (पुलाकः क्षिप्रता वृद्धौ विषये

अस्त्यस्येति । पुलाक + इनिः ।) वृक्षः । इति
हेमचन्द्रः । ४ । १८० ॥

**पुलायितं**, क्ली, (पुल + क्यच् + क्तः ।) अश्वगतिः ।

तत्पर्य्यायः । विक्रान्तिः २ । इति त्रिकाण्डशेषः ॥

**पुलिनं**, क्ली, (पोलतीति । पुल महत्त्वे + "तलि-

पुलिभ्याञ्च ।" उणा० २ । ५३ । इति इनन् । स
च कित् ।) तोयोत्थिततटम् । इत्यमरः । १ ।
१० । ९ ॥ चर इति चडा इति च भाषा ॥

(यथा, रामायणे । २ । ९५ । ९ ।
“क्वचिन्मणिनिकाशोदांक्वचित्
पुलिनशालिनीम् ।
क्वचित् सिद्धजनाकीर्णां पश्य मन्दाकिनीं
नदीम् ॥”)
जलादचिरोत्थितं तटम् । इति भरतः ॥ तत्-
क्षणतोययुक्तद्वीपम् । इति सुभूतिः ॥ क्रमेणो-
त्थितं तटम् । इति स्वामी ॥
जलमध्यस्थमुत्थितं
तटम् । इति पञ्जिका ॥ द्वीपम् । इति त्रिकाण्ड-
शेषः ॥ (यक्षविशेषे, पुं । यथा, महाभारते ।
१ । ३२ । १९ ।
“उलूकश्वसनाभ्याञ्च निमिषेण च पक्षिराट् ।
प्ररुजेन च संग्रामं चकार पुलिनेन च ॥”)

**पुलिन्दः**, पुं, (पुल महत्त्वे + “कुणिपुल्योः किन्दच् ।”
उणा० ४ । ८५ । इति किन्दच् ।) चण्डाल-
भेदः । स च म्लेच्छशब्दवाच्यः ।
इत्यमरभरतौ ॥
तस्योत्पत्तिर्यथा, --
पुलस्त्य उवाच ।
“एवं गतेषु त्रैलोक्यं दानवेषु पुरन्दरः ।
जगाम ब्रह्मसदनं सह देवैः शचीपतिः ॥
तत्रापश्यत् स देवेशं ब्रह्माणं कमलोद्भवम् ।
ऋषिभिः सार्द्धमासीनं पितरं स्वञ्च कश्यपम् ॥
ततो ननाम शिरसा शक्रः सुरगणैः सह ।
ब्रह्माणं कश्यपञ्चैव तांश्च सर्व्वांस्तपोधनान् ॥
प्रोवाचेन्द्रः सुरैः सार्द्धं देवनाथं पितामहम् ।
पितामह ! हृतं राज्यं बलिना वलिना मम ॥
ब्रह्मा प्रोवाच शक्रैतत् भुज्यते स्वकृतं फलम् ।
शक्रः पप्रच्छ भो ब्रूहि किं मया दुस्कृतं कृतम्
॥
कश्यपोऽप्याह देवेश ! भ्रूणहत्या कृता त्वया ।
दित्युदरात्त्वया गर्भः कृतो वै बहुधा बलात् ॥
पितरं प्राह देवेन्द्रो मातुर्दूषणतो विभो ! ।
कर्त्तनं प्राप्तवान् गर्भो यदशौचा हि साभवत् ॥
ततोऽब्रवीत् कश्यपस्तु मातुर्दोषे सदासताम् ।
गतस्ततो विनिहतो दोषोऽपि कुलिशेन भोः ॥
तच्छ्रुत्वा कश्यपवचः प्राह शक्रः पितामहम् ।
विनाशं पाप्मनो ब्रूहि प्रायश्चित्तं विभो ! मम ॥
ब्रह्मा प्रोवाच देवेशं वशिष्ठः कश्यपस्तथा ।
हितं सर्व्वस्य जगतः शक्रस्यापि विशेषतः ॥
शङ्खचक्रगदापाणिर्माधवः पुरुषोत्तमः ॥
ख्यातिं जगामाथ गदाधरेति
महाघवृन्दस्य शितः कुठारः ॥
यस्मिन् द्विजेन्द्राः श्रुतिशास्त्रसंयुताः
समानतां यान्ति पितामहेन ।
मरुत्पितॄन् यत्र च संप्रपूज्य
भक्त्या त्वनन्ये नहि चेतसैव ।
फलम्महामेधमखस्य मानवा
लभन्त्यनन्त्यं भगवत्प्रसादात् ॥
महानदी यत्र सुरर्षिकन्या
बालापदेशाद्धिमशैलमेत्य ।
चक्रे जगत् पापविनिष्टमग्र्यं
सन्दर्शनप्राशनमज्जनेन ॥”
तत्र शक्रः समभ्येत्य महानद्यास्तटेऽद्भुते ।
आराधनाय देवस्य कृत्वाश्रममवस्थितः ॥
प्रातःस्नायी त्वधःशायी एकभक्तिर्ह्ययाचितः
।
तपस्तेपे सहस्राक्षः स्तुवन् देवं गदाधरम् ॥
तस्यैवं तप्यतः सम्यक् जितसर्व्वेन्द्रियस्य च
।
कामक्रोधविहीनस्य साग्रः संवत्सरो गतः ॥
ततो गदाधरः प्रीतो वासवं प्राह नारद ! ।
गच्छ प्रीतोऽस्मि भवतो मुक्तपापोऽसि साम्प्र-
तम् ॥
निजं राज्यञ्च देवेश ! प्राप्स्यसि त्वचिराद्विवः
।
यतिष्यामि यथा शक्र ! भाविश्रेयो यथा तव
॥
इत्येवमुक्तोऽथ गदाधरेण
विसर्जितः स्नाप्य मनोहरायाम् ।
स्नातस्य देवस्य ततः पुरस्तात्
संप्रोचुरस्माननुशासयस्व ॥
प्रोवाच तान् भीषणकर्म्मकारान्
नाम्ना पुलिन्दा मम पापसम्भवाः ।
वसध्वमेवान्तरमद्रिमुख्ययो-
र्हिमाद्रिकालाञ्जरयोः पुलिन्दाः ॥
इत्येवमुक्त्वा सुरराट् पुलिन्दान्
विमुक्तपापः सुरसिद्धयक्षैः ।
संपुज्यमानोऽनुजगाम चाश्रमं
मातुस्तदा धर्म्मनिवासमाद्यम् ॥”
इति वामने ७३ अध्यायः ॥

**पुलोमजा**, स्त्री, (पुलोम्नो दैत्यात् जायते इति ।
पुलोमानं जघानाजौ जामाता सन् शत-
क्रतुः ॥”)

**पुलोमारिः**, पुं, (पुलोम्नोऽरिः शत्रुः ।) इन्द्रः ।
इति त्रिकाण्डशेषः ॥

**पुष**, पुष्टौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) पोषति तातः पुत्त्रम् । इति
दुर्गादासः ॥

**पुष**, ॡ य औ पुष्टौ । पोषणे । इति कविकल्प-
द्रुमः ॥ (दिवा०-पर०-सक०-अनिट् ।) ॡ,
अपुषत् । य, पुष्यति । औ, पोष्टा । इति
दुर्गादासः ॥

**पुष**, क धृतौ । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-
सक०-सेट् ।) क, पोषयति । इति दुर्गादासः ॥

**पुष**, ग पुष्टौ । इति कविकल्पद्रुमः ॥ (क्र्या०-पर०-
सक०-सेट् ।) ग, पुष्णाति पुषोष । इति
दुर्गादासः ॥

**पुषा**, स्त्री, (पुष्णातीति । पुष पुष्टौ + कः । तत-
ष्टाप् ।) लाङ्गलिकीवृक्षः । इति शब्दचन्द्रिका ॥

**पुषितं**, त्रि, (पुष्यते स्मेति । पुष + क्तः । भ्वादि-
गणीयत्वात् इट् ।) पुष्टम् । कृतपोषणपक्षि-
मृगादि । इत्यमरः । ३ । १ । ९७ ॥

**पुष्करं**, क्ली, (पुष्णातीति । पुष पुष्टौ + “पुषः
कित् ।” उणा० ४ । ४ । इति करन् । स च
कित् ।) हस्तिशुण्डाग्रम् । (यथा, माघे । ५ । ३०
।
“आलोलपुष्करसुखोल्लसितैरभीक्ष्ण-
मुक्षाम्बभूवुरभितो वपुरम्बुवर्षैः ॥”)
वाद्यभाण्डमुखम् । (यथा, रघुः । १७ । ११ ।
“नदद्भिः स्निग्धगम्भीरं तूर्य्यैराहतपुष्करैः ॥” * ॥
“पुष पुष्टौ । पुषः कित् । इति करन्प्रत्ययः ।
पुषिरत्रान्तर्नीतण्यर्थः । पोषयति भूतान्यवकाश-
प्रदानेन उदकदानाद्युपकारेण च । पुष्कं वारि
रातीति पुष्करं इति क्षीरस्वामी । पुषेरन्त-
र्ण्यर्थात् सृमृभृशुषियुधिभ्यः कित् । इति
विहितः करन्प्रत्ययो बाहुलकात् भवति ।
हृदृकृसृपृवीचीपुषिमुषिमूङ्शूभ्यः कित् । इति
करु इति श्रीभोजदेवः । पोषयति भूतानीति ।

तं प्रपद्यस्व शरणं स ते श्रेयो विधास्यति ॥
सहस्राक्षोऽपि वचनं गुरूणां स निशम्य वै ।
प्रोवाच स्वल्पकालेन कस्मिन् प्राप्यो बहूदयः ॥
ता ऊचुर्देवता मर्त्ये स्वल्पकाले बहूदयः ॥
“इत्येवमुक्तः सुरराड्विरिञ्चिना
मरीचिपुत्त्रेण च कश्यपेन ।
तथैव मित्रावरुणात्मजेन
वेगान्महीपृष्ठमवाप्य तस्थौ ॥
कालञ्जरस्योत्तरतः सुपुण्य-
स्तथा हिमाद्रेरपि दक्षिणस्याम् ।
कुशस्थलात् पूर्ब्बत एव विश्रुतो
वसोः पुरात् पश्चिमतोऽवतस्थे ॥
यत्राथ चक्रे भगवान् मुरारिं-
र्वास्तव्यमव्यक्ततनुस्त्वमूर्त्तिः ।

जन + डः ।) शची । इत्यमरः । १ । १ । ४८ ॥
(यथा, काशीखण्डे १० अध्याये ।
“निष्प्रत्यूहं क्रतुशतं यः कश्चित् कुरुतेऽवनौ ।
जितेन्द्रियोऽमरावत्यां स प्राप्नोति पुलोमजाम् ॥”)

**पुलोमजित्**, पुं, (पुलोमानं जयतीति । जि + क्विप् तुगागमश्च ।) इन्द्रः । इति केचित् ॥

**पुलोमद्विट्**, [ष्] पुं, (पुलोम्नो दैत्यविशेषस्य द्विट् शत्रुः ।) इन्द्रः । इति हेमचन्द्रः । २ । ८८ ॥

**पुलोमभित्**, [द्] पुं, (पुलोमानं भिनत्तीति । भिद् + क्विप् ।) इन्द्रः । इति भूरिप्रयोगः ॥

**पुलोमा**, [न्] पुं, असुरविशेषः । स इन्द्रस्य श्वशुरः । इति पुलोमजाशब्दटीकायां भरतः ॥
(अयं खल्विन्द्रेण निपातितः । यथा, हरि-वंशे । २० । १३४ ।
“कृत्वा सम्बन्धकं चापि विश्वसेच्छत्रुणा नहि ।

पुष्कोपपदाद्रातेः आतोऽनुपसर्गे कः । यद्वा, वपुरित्युदकनाम तत् कर्त्तुं शीलमस्येति । कृञो हेतुताच्छील्यानुलोम्येषु । इति टः । वपुष्करं सत् वकारलोपेन पुष्फरम् । पृषोदरादिः ।” इति निघण्टौ देवराजयज्वा ॥) जलम् । (यथा, शत-पथब्राह्मणे । ६ । ४ । २ । २ ।
“आपो वै पुष्करं प्राणोऽथर्वा प्राणो वा ॥”)
व्योम । (यथा, हारीते प्रथमस्थाने चतुर्थेऽध्याये ।
“मेघाः सूर्य्यशिलासमानरुचयो ह्यल्पस्रवाल्प-स्वना
हंसालीकमलालिमण्डितजलःपद्माकरः शोभनः ।
तीव्रस्निग्धमयखचन्द्रविमलास्वानन्दिनी कौमुदी
चित्रा घर्म्मविपक्वतोयसुरसा स्यान्निर्म्मलं पुष्करम् ॥”)

खड्गफलम् । पद्मम् । (यथा, रामायणे । २ । ९५ । १४ ।
"सखीवच्च विगाहस्व सीते ! मन्दाकिनीं नदीम् ।
कमलान्यवमज्जन्ती पुष्कराणि च भामिनि ! ॥")
तीर्थभेदः । (यथा, महाभारते । १ । ३६ । ३ ।
"गोकर्णे पुष्करारण्ये तथा हिमवतस्तटे ॥"
अस्य अन्यद्विवरणं पुंलिङ्गान्तपुष्करशब्दे द्रष्ट-
व्यम् ॥) कुष्ठौषधम् । इत्यमरः । ३ । ३ । १८५ ॥
(यथास्य पर्य्यायः ।
"उक्तं पुस्करमूलन्तु पौष्करं पुष्करञ्च तत् ।
पद्मपत्रञ्च काश्मीरं कुष्ठभेदमिमं जगुः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
खड्गकोषः । इत्यमरटीकायां मथुरेशः ॥
काण्डम् । द्वीपभेदः । इति मदिनी । रे, १८७ ॥
(अस्य विवरणं पुंलिङ्गान्तपुष्करशब्दे द्रष्टव्यम् ॥)
युद्धम् । इति नानार्थरत्नमाला ॥ * ॥

**पुष्करः**, पुं, (पुष + "पुषः कित् ।" उणा० ४ । ४ ।
इति करन् । स च कित् ।) रोगविशेषः । नाग-
विशेषः । सारसपक्षी । नृपभेदः । स तु नल-
राजभ्राता । (यथा, महाभारते । ३ । ५९ । ४ ।
"स समाविश्य च नलं समीपं पुष्करस्य च ।
गत्वा पुष्करमाहेदमेहि दीव्य नलेन वै ॥"
अयं हि कलिसाहाय्येन अक्षद्यूते नलं विजित्य
निषधाधिपोऽभवत् । एतद्वृत्तान्तं महा-
भारते वनपर्व्वणि ५९ अध्याये द्रष्टव्यम् ॥)

निरामया विशोकाश्च रागद्वेषविवर्ज्जिताः ।
सत्यानृते न तत्रास्तां नोत्तमाधममध्यमाः ॥
न वर्णाश्रमधर्म्माश्च न नद्यो न च पर्व्वताः ।
परेण पुष्करस्याथ समावृत्य स्थितो महान् ॥
स्वादूदकः समुद्रस्तु समन्ताद्द्विजसत्तमाः ।
परेण तस्य महती दृश्यते लोकसंस्थितिः ॥"
इति कौर्म्मे ४७ अध्यायः ॥ * ॥
पुष्करद्वीपस्थराजा । तस्य रथः । यथा, --
"लोकेश्वरः सोऽपि नृभिर्मुनीन्द्रै-
र्दैवैः सहेन्द्रैरथ ब्रह्मचारी
द्वीपे शुभे पुण्यजनैरुपेते
उवास राजा स तु पुष्करस्थः ॥
तेनैव नाम्ना स तु पुष्करोऽपि
सदोच्यते देवगणैः ससिद्धैः ।
तेनैव यानेन तथाम्बुजेन
बभूव नाम्ना तमथाह्वयन्ति ॥"
इत्यग्निपुराणम् ॥ * ॥
ब्रह्मकृततीर्थविशेषः । तस्य नामान्तरम् । रूप-
तीर्थम् २ मुखदर्शनम् ३ । तत्र ज्येष्ठपुष्कर-
मध्यमपुष्करकनिष्ठपुष्करनामकास्त्रयोह्रदाः ।
तस्य परिमाणं शतयोजनमण्डलम् । इति पद्म-
पुराणम् ॥ * ॥ योगविशेषे गङ्गादीनां पुष्करत्वं
यथा, --
"मकरस्थो यदा भानुस्तदा देवगुरुर्यदि ।
पूर्णिमायां भानुवारे गङ्गा पुष्कर ईरितः ॥
गङ्गोत्तर्य्यां प्रयागे च कोटिसूर्य्यग्रहैः समः ।
सिंहसंस्थे दिनकरे तथा जीवेन संयुते ॥
पूर्णिमायां गुरोर्व्वारे गोदावर्य्यास्तु पुष्करः ।
तत्र स्नानञ्च दानञ्च सर्व्वं कोटिगुणं भवेत् ॥
मेषसंस्थे दिवानाथे देवानाञ्च पुरोहिते ।
सोमवारे सिताष्टम्यां कावेरी पुष्करो मतः ॥
कर्क्कटस्थे दिवानाथे तथा जीवेन्दुवासरे ।
अमायां पूर्णिमायां वा कृष्णा पुष्कर उच्यते ॥"
इति स्कन्दपुराणे पुष्करखण्डे श्रीशैलमाहात्म्यम् ॥
मेघनायकविशेषः । तत्परिज्ञानं यथा, --
"त्रियुते शाकवर्षे तु चतुर्भिः शेषिते क्रमात् ।
आवर्त्तं विद्धि सम्बर्त्तं पुष्करं द्रोणमम्बुदम् ॥"
इति ज्योतिस्तत्त्वम् ॥
तस्य फलम् । यथा, --
"पुष्करे दुष्करं वारि शस्यहीना वसुन्धरा ।
विग्रहोपहता लोकाः पुष्करे जलदाधिपे ॥"
इति ज्योतिषम् ॥ * ॥

अतस्तद्दोषशान्त्यर्थं होमयेदयुतं बुधः ।
अशक्तश्च सुवर्णादिदानं कुर्य्याद्यथाविधि ॥"
समर्थश्चेद् वराहसंहितोक्तं अयुतहोमादिकं
कुर्य्यात् । वाक्यं यथा, --
श्रीविष्णुरोम् तत् सदद्यामुके मास्यमुकपक्षेऽमुक-
तिथौ अमुकगोत्रः श्रीअमुकदेवशर्म्मा अमुक-
गोत्रस्य प्रेतस्यामुकदेवशर्म्मणस्त्रिपुष्करयोग-
कालीनमरणजन्यदोषशमनकामःइदं काञ्चनं
श्रीविष्णुदैवतं यथासम्भवगोत्रनाम्ने ब्राह्मणायाहं
ददे । ततो दक्षिणां दद्यात् । अन्यत्र पूजाहोम-
कर्म्मणी करिष्ये । इति विशेषः । एतत् सर्व्व-
मशौचेऽपि कर्त्तव्यम् । यथा दक्षः ।
सुस्थकाले त्विदं सर्व्वं सूतकं परिकीर्त्तितम् ।
आपद्गतस्य सर्व्वस्य सूतकेऽपि न सूतकम् ॥"
इति शुद्धिकारिका ॥ * ॥
अपि च ।
"पुनर्व्वसूत्तराषाढा कृत्तिकोत्तरफल्गुनी ।
पूर्ब्बभाद्रं विशाखा च षडेते वै त्रिपुष्कराः ॥
द्वितीया सप्तमी चैव द्वादशी तिथिरेव च ।
शनिर्भौमो रविश्चैव वाराश्चैते त्रिपुष्कराः ॥
एते त्रिपुष्करा ज्ञेयास्तथा द्वादशमासिके ।
द्विमासे च तथा प्राप्ते षण्मासे च चतुर्थके ॥
षोडशे मासि संपूर्णे कुटुम्बं पीडयेद्ध्रुवम् ।
अन्तेऽप्युपान्ते मध्ये च पुष्करो हन्ति नान्यथा ॥
तद्दोषप्रशमार्थन्तु होमयेदयुतं बुधः ।
तिलब्रीहियवांश्चैव कृत्वाज्येन समन्तथा ॥
क्षीरेणैव तथाचार्य्यो जुहुयाद्भक्तिभावतः ।
चरुञ्च श्रपयेत्तत्र प्रास्ते कुर्य्याद्बलिन्तथा ॥
वैकङ्कोडुम्बराश्वत्थैः प्रत्येकाष्टोत्तरं शतम् ।
एकैकं त्रित्रिसंयुक्तं दर्भेण परिवेष्टितम् ॥
यमाय वकङ्कतेन धर्म्मायोडुम्बरेण च ।
अश्वत्थैश्चित्रगुप्ताय जुहुयात् क्रमशस्तथा ॥
तद्वद् घृततिलांश्चैव तथा समिधमेव च ।
एकीकृत्य समं सर्व्वं चरुमाश्रित्य होमयेत् ॥
यवव्रीहितिलैर्य्युक्तं तण्डुलं श्रपयेच्चरुम् ।
दधिमध्वाज्यसंयुक्तं होमः सहस्रसंख्यया ॥
वैकङ्कोडुम्बराश्वत्थैर्होमयेद्विधिपूर्ब्बकम् ।
यमं धर्म्मं चित्रगुप्तं पुष्करं पुरुषं तथा ॥
तिथिं वारं तथा ऋक्षं पूजयित्वा तु होमयेत् ।
पञ्चवर्णेन चूर्णेन कुर्य्याद्धि पद्ममण्डलम् ॥
यमं धर्म्मं चित्रगुप्तं स्थापयेत् क्रमशस्ततः ।
तिलप्रपूरिते पात्रे लौहे च कृष्णवाससा ॥
वेष्टयित्वा यमं तत्र स्थापयेल्लौहनिर्म्मितम् ।

वरुणपुत्त्रः । इति मेदिनी । रे, १८७ ॥
(वाद्य-
विशेषः । यथा, मार्कण्डेये । १०६ । ६१
।
"प्रावाद्यन्त ततस्त्रत्र वेणुवीणादिदर्द्दुराः ।
पणवाः पुष्कराश्चैव मृदङ्गाः पटहानकाः
॥")
पर्व्वतविशेषः । इति शब्दरत्नावली ॥ * ॥
सप्तद्वीपानां मध्ये द्वीपविशेषः ।
पुष्करद्वीपवर्णनं
यथा, --
सूत उवाच ।
"शाकद्वीपस्य विस्ताराद्द्विगुणेन
समन्ततः ।
क्षीरार्णवं समावृत्य द्वीपः पुष्करसंज्ञितः ॥
एक एवात्र विप्रेन्द्राः पर्व्वतो मानसोत्तरः ।
योजनानां सहस्राणि चोद्‌र्ध्वं
पञ्चाशदुच्छ्रितः ॥
तावदेव च विस्तीर्णः सर्व्वत्र परिमण्डलः ।
स एव द्वीपो यश्चार्द्धमानसोत्तरसंज्ञितः ॥
एक एव महासानुः सन्निवेशाद्द्विधाकृतः ।
तस्मिन्द्वीपे स्मृतौ तु द्वौ पुण्यौ जनपदौ
शुभौ ॥
अपरौ मानवस्याथ पर्व्वतस्यानुमण्डलौ ।
महावीतं स्मृतं वर्षं धातकीषण्डमेव च ॥
स्वादूदकेनोदधिना पुष्करः परिभावितः ।
तस्मिन्द्वीपे महावृक्षो न्यग्रोधोऽमरपूजितः
॥
तस्मिन्निवसति ब्रह्मा विश्वात्मा
विश्वभावनः ।
तत्रैव मुनिशार्दूलाः शिवनारायणालयम् ॥
वसन्त्यत्र महादेवो हरार्द्धो हरिरव्ययः ।
संपूज्यमानो ब्रह्माद्यैः कुमाराद्यैश्च
योगिभिः ॥
गन्धर्व्वैः किन्नरैर्यक्षैरीश्वरः कृष्णपिङ्गलैः ।
सुस्थास्तत्र प्रजाः सर्व्वा ब्राह्मणाः
सदृशत्विषः ॥

क्रूरवार-भद्रातिथि-भग्नपादनक्षत्र-घटिताशुभ-
जनकयोगविशेषः । यथा, --
"पुनर्व्वसूत्तराषाढा कृत्तिकोत्तरफल्गुनी ।
पूर्ब्बभाद्रं विशाखा च रविभौमशनैश्चराः ॥
द्बितीया सप्तमी चैव द्बादशी तिथिरेव च ।
एतेषामेकदा योगे भवतीति त्रिपुष्करः ॥ * ॥
जाते तु जारजो योगो मृते भवति पुष्करः ।
त्रिगुणं फलदो वृद्धौ नष्टे हृते मृते तथा ॥
प्रथमे मासि वर्षे वा कुटुम्बमपि पीडयेत् ।
देवोऽपि यदि वा रक्षेत् तस्य पुत्त्रो न जीवति ॥

घृतप्रपूरिते पात्रे कांस्यपात्रे निरञ्जनम् ॥
रौप्याकृतिं शुक्लवस्त्रवेष्टितं तत्र पूजयेत् ।
गुडप्रपूरिते पात्रे ताम्रपात्रे च मन्त्रिणम् ॥
स्वर्णाकृतिं रक्तवस्त्रवेष्टितं तत्र पूजयेत् ।
क्षीरप्रपूरिते पात्रे प्रस्तरपात्रे च पुष्करम् ॥
कृष्णाकृतिं कृष्णवस्त्रवेष्टितं तत्र पूजयेत् ।
सुवर्णतुल्यमर्द्धं वा अथवा शक्तिभावतः ॥
प्रतिमाश्च समाः सर्व्वाः क्रमात्तत्र नियोजिताः
व्रीहौ यवे तथा धान्ये क्रमात् पात्रत्रयन्ततः ॥

नूतने च क्रमात् पीठे स्थापयेद्विधिपूर्ब्बकम् ।
मण्डलस्य चतुर्द्दिक्षु चतुःकुम्भांश्च स्थापयेत् ॥
दधिगुडक्षीरपूर्णान् प्रकल्प्य संयुतेऽन्ततः ।
अथवा तन्मूलदेशे सचूतपल्लवांस्तथा ॥
पीतवस्त्रेण संयुक्तं कुर्य्याद्घटचतुष्टयम् ।
चन्द्रातपं तदुपरि विचित्रं परिकल्पितम् ॥
कुम्भानाञ्च चतुःपार्श्वे यवतिलैर्युक्ततण्डुलान् ।
स्थापयेयुः क्रमात्तत्र पूजाकाले द्विजोत्तमाः ॥
मण्डलस्य तथा पूर्ब्बे वारुणं घटमर्पयेत् ।
नानादेवान् गणेशादीन् ग्रहादींश्च समर्चयेत् ॥
हुत्वा यथाक्रमं तत्र वलिं दद्याद्विचक्षणः ।
पयोघृतेन क्षीरेण स्नापयित्वा यथाक्रमम् ॥
स्वेन स्वेनैव मन्त्रेण पूजयित्वा च होमयेत् ॥
एवं विधिप्रकारेण यः प्रेतं न तु होमयेत् ।
पुष्करारिष्टदोषस्तु चतुष्पात्तस्य सम्भवेत् ॥
संवत्सरे तथा पूर्णे षोडशे मासि वै तथा ।
षण्मासाभ्यन्तरे तस्य सुतहानिं विनिर्द्दिशेत् ॥
अथवा स्वामिनं हन्ति द्वितीयं भ्रातरन्तथा ।
तृतीयं सर्व्वहानिः स्यात् सुतवित्तविनाशनम् ॥
प्रेतारिष्टविनाशाय यमादीन् यो न होमयेत् ।
सर्व्वाणि तस्य नश्यन्ति गोमहिषादीनि सर्व्वतः ॥
एवंविधिकृतं होमं यः कर्त्तुमक्षमो भवेत् ।
होमं कृत्वा यथाशक्त्या धेनुमेकां प्रदापयेत् ॥
अस्मिन् कृते न सन्देहः प्रेतारिष्टं न पीडयेत् ।
न विघ्नो यजमानस्य न चारिष्टं प्रजायते ॥
एतद्धोमं विनिर्द्दिष्टं यत्नतो न करोति यः ।
न रक्षति यमस्तस्य एभिर्मासैश्च वंशजम् ॥
सुतो भ्राता तथा जाया पतिः श्वशुर एव च ।
माता पिता स्वसा वापि पितृव्यो भगिनीपतिः ॥
ज्येष्ठभ्राता पतिश्चापि स्वामी चापत्यमेव च ।
एकैकं वर्षसंपूर्णे कुटुम्बं पीडयेदध्रुवम् ॥
षोडशे मासि संपूर्णे बान्धवान् परिपीडयेत् ॥
बान्धवानामभावे च वास्तुवृक्षो न जीवति ॥
त्रिपुष्करे तथा दोषे यः प्रेतं न तु होमयेत् ।

इत्वम् ।) स्थलपद्मिनी । इति राजनिर्घण्टः ॥ (स्थलपद्मिनीशब्देऽस्या गुणादयो ज्ञातव्याः ॥)

**पुष्करनाडी**, स्त्री, (पुष्करं पद्मं नाडयति सौन्दर्य्येण भ्रंशयतीति । नाड + अच् । ततो ङीष् ।) स्थलपद्मिनी । इति राजनिर्घण्टः ॥

**पुष्करमूलं**, क्ली, (पुष्करस्य मूलमिव मूलमस्य । पुष्करजातं मूलं वा ।) पुष्करदेशप्रसिद्धौषधिविशेषः । अस्य स्थाने कुष्ठं योजयन्ति । तस्य-पर्य्यायः । मूलम् २ पुष्करम् ३ पद्मपत्रकम् ४ पुष्करिणी ५ वीरम् ६ पौष्करम् ७ पुष्कराह्वयम् ८ काश्मीरम् ९ ब्रह्मतीर्थम् १० श्वासारिः ११ मूलपुष्करम् १२ पुष्करजटा १३ पुष्करशिफा १४ । अस्य गुणाः । कटुत्वम् । उष्णत्वम् । कफवातज्वरश्वासारोचककाशशोफपाण्डुनाशित्वञ्च । इति राजनिर्घण्टः ॥ "विशेषात् पार्श्वशूलनुत् ।" इति भावप्रकाशः ॥ (व्यवहारोऽस्य यथा, --
"भार्गीं पुष्करमूलञ्च रास्नां विल्वं यमानिकाम् ।
नागरं दशमूलञ्च पिप्पलीञ्चाप्सु साधयेत् ॥"
इति वैद्यकचक्रपाणिसंग्रहे ज्वराधिकारे भार्ग्यादिक्वाथे ॥)

**पुष्करमूलकं**, क्ली, (पुष्करस्य कुष्ठस्य मूलम् । ततः संज्ञायां कन् ।) कुष्ठवृक्षस्य मूलम् । इति त्रिकाण्डशेषः ॥ (कुष्ठशब्देऽस्य विवरणं ज्ञातव्यम् ॥)

**पुष्करशिफा**, स्त्री, (पुष्करस्य शिफा जटेव ।) पुष्करमूलम् । इति राजनिर्घण्टः ॥

**पुष्करस्रजौ**, पुं, (पुष्करस्य पद्मस्य स्रक् ययोरिति ।) अश्विनीकुमारौ । द्विवचान्तोऽयम् । इति शब्दरत्नावली ॥ (अश्विनीकुमारतुल्ये, त्रि । यथा, वाजसनेयसंहितायाम् । २ । ३३ ।
"आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् ।
यथेह पुरुषोऽसत् ॥"
"किम्भूतं कुमारं पुष्करस्रजं पुष्कराणां पद्मानां स्रक् माला ययोस्तौ पुष्करस्रजौ अश्विनौ अश्विनीकुमारौपुष्करस्रजौ पद्ममालिनौ देवानां भिषजौ । तत्तुल्यः कुमारः पुष्करस्रक् तम् । अश्विसाम्यकथनेन रोगहीनं सुन्दरञ्च पुत्त्रमधत्तेति सूचितम् ॥" इति तत्र वेददीपः ॥)

**पुष्कराह्वयं**, क्ली, (पुष्करं आह्वयो यस्य ।) पुष्करमूलम् । इति राजनिर्घण्टः ॥ (यथा, --
"क्षुद्रामृता नागरपुष्कराह्वयैः
कृतः कषायः कफमारुतोद्भवे ।
सश्वासकासारुचिपार्श्वरुक्करे
ज्वरे त्रिदोषप्रभवे च शस्यते ॥"
इति वैद्यकचक्रपाणिसंग्रहे ज्वराधिकारे ॥)

**पुष्करिणी**, स्त्री, (पुष्करवत् आकृतिरस्त्यस्या इति । पुष्कर + इनिः । ततो ङीप् ।) स्थलपद्मिनी । पुष्करमूलम् । इति राजनिर्घण्टः ॥ (पुष्करं शुण्डादण्डस्तदस्त्यस्याइति । इनिः ।) हस्तिनी । सरोजिनी । (पुष्कराणि पद्माणि सन्त्यत्रेति ।) जलाशयः । इति मेदिनी । णे, १०४ ॥ शतधनुःपरिमितसमचतुरस्रजलाधारः । पुकुर इति पुखरि इति च भाषा । तत्पर्य्यायः । खातम् २ । इत्यमरः । १ । १० । २७ ॥ जलकूपी ३ । इति जटाधरः ॥ पौष्करिणी ४ । इति शब्दरत्नावली ॥ * ॥ सा तु दक्षिणोत्तरायता कार्य्या । यथा, --
"कूपवापीपुष्करिण्यो दीर्घिका द्रोण एव च ।
तडागः सरसी चैव सागरश्चाष्टमो मतः ॥
सद्भिर्जलाशयः कार्य्यो यत्नाद्याम्योत्तरायतः ॥"
इति कल्पतरौ वायुपुराणम् ॥ * ॥ तस्या लक्षणं यथा ।
"पुष्करिणीतडागावाह वशिष्ठसंहितायाम् ।
'चतुर्विंशाङ्गुलो हस्तो धनुस्तच्चतुरुत्तरः ।
शतधन्वन्तरञ्चैव तावत् पुष्करिणी मता ।

देवता यदि वा रक्षेत् तस्य पुत्त्रो न जीवति ॥
यत्किञ्चिद्दानमुत्सृज्य शुद्धो भवति मानवः ।
न रक्षति यमस्तस्य यदि होमं न कारयेत् ॥
तस्मात् विधिप्रकारेण पुष्करारिष्टशान्तये ।
यमं धर्म्मं चित्रगुप्तं पूजयित्वा च होमयेत् ॥
मण्डले घटमारोप्य पूजयित्वा यथाक्रमम् ।
विधिपूर्ब्बं तथा हुत्वा प्रान्ते दद्याद्वलिं बुधः ॥
प्रभाते च तथा रात्रावशौचान्तदिने तथा ।
आचार्य्यश्च प्रकुर्व्वीत श्रपयेच्च चरुं ततः ॥
विप्रक्षत्त्रिययोर्द्दर्भैः पिष्टैर्वैश्यस्य निर्म्मितम् ।
शूद्रस्य गोमयेनापि प्रतिमां दापयेत्ततः ॥
दत्त्वा मधुघृताक्तञ्च चरुं पश्चाच्च दापयेत् ।
ततोऽरिष्टः प्रशान्तः स्यात्ततो होमं समापयेत् ॥
संकल्प्य विधिना पूर्ब्बं वस्त्रयुग्मेन यत्नतः ।
आचार्य्यं वृणुयात्तत्र पश्चादृत्विजमेव च ॥”
इति वराहसंहितोक्तपुष्करशान्तिप्रमाणम्॥

**पुष्करकर्णिका**, स्त्री, (पुष्करं पद्मं कर्णयति सादृश्येन प्राप्नोतीति । कर्ण + ण्वुल । टापि अत

**पुष्कराक्षः**, पुं, (पुष्करवदक्षिणी यस्य । “अक्ष्णोऽदर्शनात् ।” ५ । ४ । ७६ । इति अच् ।)
विष्णुः । यथा, तिथ्यादितत्त्वे ।
“पुष्कराक्ष ! निमग्नोऽहं मायाविज्ञानसागरे ।
त्राहि मां देवदेवेश त्वत्तो नान्योऽस्ति रक्षिता ॥”
(श्रीकृष्णः । यथा, महाभारते । १ । २२० । १६ ।
“अथाब्रवीत् पुष्कराक्षः प्रहसन्निव भारत ! ॥”)

**पुष्कराह्वः**, पुं, (पुष्करस्य आह्वा आह्वा यस्य ।)
सारसपक्षी । इत्यमरः । २ । ५ । २२ ॥ (पुष्करं आह्वा यस्य । पुष्करमूलम् । यथा, सुश्रुते चिकित्सितस्थाने ५ अध्याये ।
“तुम्बुरुपुष्कराह्वहिङ्गम्लवेतसपथ्यालवणत्रयं यवक्वाथेन पातुं प्रयच्छेत् ॥”)

एतत्पञ्चगुणः प्रोक्तस्तडाग इति निश्चयः ॥
तेन चतुर्द्दिक्षु विंशतिहस्तान्यूनतायां चतुःशत-
हस्तान्यूनाभ्यन्तरत्वेन पुष्करिणी । एतज्जला-
शयाधारपरं न तु उपरितटम् । शतेन धनुर्भिः
पुष्करिणी । इति नव्यवर्द्धमानधृतो वशिष्ठः ॥ * ॥
तत्करणे वास्तुयागः कर्त्तव्यः । महाकपिल-
पञ्चरात्रम् ।
‘जलाधारगृहार्थञ्च यजेद्वास्तुं विशेषतः ।
ब्रह्माद्यदितिपर्य्यन्ताः पञ्चाशत्त्रयसंयुताः ।
सर्व्वेषां किल वास्तूनां नायकाः परिकीर्त्तिताः ॥
असंपूज्य हि तान् सर्व्वान् प्रासादादीन्न कार-
येत् ।
अनिष्पत्तिर्व्विनाशः स्यादुभयोर्धर्म्मधर्म्मिणोः ॥’
ब्रह्माद्यदितिपर्य्यन्ता इति कल्पान्तरम् । देवी-
पुराणोक्त ईशादिकल्प एव व्यवह्रियते । धर्म्म-
धर्म्मिणोस्तडागादितत्कर्त्रोः । आरम्भदिने
तदकरणे उत्सर्गादिनेऽपि आदौ तत्करणम् ।
यथा, --
‘प्रासादभवनोद्यानप्रारम्भेपरिवर्त्तने ।
पुरवेश्मप्रवेशेषु सर्व्वदोषापनुत्तये ॥
वास्तूपशमनं कृत्वा ततः सूत्रेण वेष्टयेत् ।
वास्तुपूजामकुर्व्वाणस्तवाहारो भविष्यति ॥’
इति मत्स्यपुराणे पुरवेश्मप्रवेशे वास्तुयागप्राप्तेः
पूर्ब्बोक्तवचने प्रासादधर्म्मातिदेशादत्र वाप्यादि-
प्रतिष्ठादिनेऽपि वास्तुयागकरणम् ॥ * ॥

तदारम्भे नक्षत्रादि दीपिकायाम्।
‘पुष्यामित्रकरोत्तरस्ववरुणब्रह्माम्बुपित्रैन्दुभिः
शस्तेऽर्के शुभयोगवारतिथिषु क्रूरेष्ववीर्य्येषु च ।
पुष्टेन्दौ जलराशिगे दशमगे शुक्रे शुभांशोदये
प्रारम्भः सलिलाशयस्य शुभदो जीवेन्दुपुत्त्रोदये
॥’
पुष्यानुराधा-हस्तोत्तरात्रय-धनिष्ठा-शतभिषा-
रोहिणी-पूर्ब्बाषाढा-मघा-मृगशिरोभिर्भैः ॥
मात्स्ये ।
‘चन्द्रादित्यबलं लब्धा लग्नं शुभनिरीक्षितम्।
स्तम्भोच्छ्रायादि कर्त्तव्यमन्यत्र परिवर्जयेत् ॥
अश्विनी रोहिणी मूलमुत्तरात्रयमैन्दवम्।
स्वाती हस्तानुराधा च गृहारम्भे प्रशस्यते ॥
वज्रव्याघातशूले च व्यतीपातातिगण्डयोः।
विष्कम्भगण्डपरिघवर्जं योगेषु कारयेत् ॥
आदित्यभौमवर्ज्जन्तु सर्व्वे वाराः शुभावहाः ।
प्रासादेऽप्येवमेव स्यात् कूपवापीषु चैव हि ॥’
ज्योतिषे । गुरोर्भृगोरस्तबाल्ये इत्यभिधाय
प्रतिष्ठारम्भणे देवकूपादेर्वर्जयन्ति हि ॥ * ॥
उत्सर्गफलमाह । कपिलपञ्चरात्रे ।
‘संक्षेपात्तु प्रवक्ष्यामि जलदानफलं शृणु ।
पुष्करिण्यादिदानेन विष्णुः प्रीणाति विश्वधृक् ॥’
जलाशयकरणार्थभूमिदानफलमाह चित्रगुप्तः ।
‘जलाशयार्थं यो दद्यात् वारुणं लोकमाप्नुयात् ॥’
भूमिमिति शेषः ॥ * ॥ तत्प्रतिष्ठाकालमाह।
मत्स्यपुराणम्।
‘शृणु राजन् ! महाबाहो ! तडागादिषु यो
विधिः ।
चैत्रे वा फाल्गुने वापि ज्यैष्ठे वा माधवे तथा ॥
माघे वा सर्व्वदेवानां प्रतिष्ठा शुभदा भवेत् ।
प्राप्य पक्षं शुभं शुक्लमतीते चोत्तरायणे ॥
पुण्येऽह्नि विप्रकथिते कृत्वा ब्राह्मणवाचनम् ॥’
अतीते प्रवृत्ते । तथा च प्रतिष्ठासमुच्चये।
‘माघेऽथ फाल्गुने वापि चैत्रवैशाखयोरपि ।
ज्यैष्ठाषाढकयोर्वापि प्रवृत्ते चोत्तरायणे ॥’
ब्राह्मणवाचनं पुण्याहस्वस्तिऋद्धिवाचनम्॥ * ॥
‘पञ्चमी च द्वितीया च तृतीया सप्तमी तथा ।
दशमी पौर्णमासी च तथा श्रेष्ठा त्रयोदशी ।
आसु प्रतिष्ठा विधिवत् कृत्वा बहुफला भवेत् ॥
आषाढे द्वे तथा मूलमुत्तरात्रयमेव च ।
ज्येष्ठाश्रवणरोहिण्यः पूर्ब्बभाद्रपदा तथा ॥
हस्ताश्विनी रेवती च पुष्यो मृगशिरस्तथा।
अनुराधा तथा स्वाती प्रतिष्ठादिषु शस्यते ॥ * ॥

दशमी त्रयोदशी चैव पौर्णमासी च कीर्त्तिता
॥
सोमो बृहस्पतिश्चैव शुक्रश्चैव तथा बुधः ।
एते सौम्यग्रहाः प्रोक्ताः प्रतिष्ठायागकर्म्मणि
॥’
प्रतिष्ठाधिकारे व्यवहारसमुच्चयः।
‘कृष्णपक्षे च पञ्चम्यामष्टम्याञ्चैव शस्यते ॥’
दीपिकायाम्।
‘पुष्याश्विशक्रभगत्वाष्ट्रवासवेषु
सौम्यानिलेशमघरोहिणिमूलहस्ते।
पौष्णानुराधहरिभेषु पुनर्व्वसौ च
कार्य्याभिषेकतरुभूतपतिप्रतिष्ठा ॥’
वासवं धनिष्ठा । ईश आर्द्रा । आर्द्रायाञ्चैव
सौभाग्यमिति प्रतिष्ठासारसमुच्चयात्॥ *
॥
वापीत्यादीनां पूर्त्तत्वाभिधानात्
शूद्रस्याधिकार-
माह जातूकर्णः ।
‘वापीकूपतडागादि देवतायतनादि च ।
अन्नप्रदानमारामाः पूर्त्तमित्यभिधीयते ॥
अग्निहोत्रं तपः सत्यं वेदानामनुपालनम्।
आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते ॥
ग्रहोपरागे यद्दानं पूर्त्तमित्यभिधीयते।
इष्टापूर्त्तं द्विजातीनां धर्म्मः सामान्य उच्यते
॥
अधिकारी भवेत् शूद्रः पूर्त्ते धर्म्मे न वैदिके
॥’
वैदिके वेदाध्ययनसाध्ये अग्निहोत्रादाविति
रत्ना-
करः ॥ एवं स्त्रीणामपि पूर्त्ताधिकारः । यथा,
नारीत्यनुवृत्तौ बृहस्पतिः ।
‘पितृव्यगुरुदौहित्रान् भर्त्तुः
स्वस्रीयमातुलान्।
पूजयेत् कव्यपूर्त्ताभ्यां वृद्धानाथातिथीन्
स्त्रियः ॥’
अस्य पूर्त्तत्वात् वृद्धिश्राद्धमप्यादौ कर्त्तव्यम्
।
यथा, गोभिलः । ‘वृद्धिः पूर्त्तेषु युग्मा
नाशयेत्
प्रदक्षिणमुपचारः । यवैस्तिलार्थ इति ॥’ *
॥
हयशीषपञ्चरात्रे ।
‘वापीकूपतडागानां पश्चिमे यागमण्डपम्।

‘सौवर्णौ कूर्म्ममकरौ राजतौ मत्स्यडुण्डुभौ ।
ताम्रौ कुलीरमण्डूकावायसः शिशुमारकः ॥
एवमासाद्य तान् सर्व्वानादौ चैव विशाम्पते ! ।
शुक्लमाल्याम्बरधरः शुक्लगन्धविलेपनः ॥
सर्व्वौषध्युदकस्नानस्नापितो वेदपुङ्गवः ।
यजमानः सपत्नीकः पुत्त्रपौत्त्रसमन्वितः।
पश्चिमं द्वारमाश्रित्य प्रविशेद्यागमण्डपम् ॥
ततो मङ्गलशब्देन भेरीणां निःस्वनेन च ।
रजसा मण्डलं कुर्य्यात् पञ्चवर्णेन तत्त्ववित् ॥
षोडशारं ततश्चक्रं पद्मगर्भं चतुर्मुखम् ।
चतुरस्रञ्च परितो वृत्तं मध्ये सुशोभनम् ॥
वेद्याश्चोपरि तत् कृत्वा ग्रहाँल्लोकपतींस्तथा।
विन्यसेन्मन्त्रतः सर्व्वान् प्रतिदिक्षु विचक्षणः ।
झसादीन् स्थापयेन्मध्ये वारुणं मन्त्रमाश्रितः
॥’
झसादीन् कूर्म्मादीन्।
‘ब्रह्माणञ्च शिवं विष्णुं तत्रैव स्थापयेद्बुधः ।
विनायकन्तु विन्यस्य कमलामम्बिकान्तथा ॥’
पूजयेदिति शेषः । तथा, --
‘नवग्रहमखं कृत्वा ततः कर्म्म समारभेत् ।
अन्यथा फलदं पुंसां न काम्यं जायते क्वचित्
॥’
ग्रजपूजामण्डलं शान्तिदीपिकायाम्।
‘वर्त्तलो भास्करः कार्य्यो ह्यर्द्धचन्द्रो निशाकरः
।
अङ्गारकस्त्रिकोणस्तु बुधश्चापाकृतिस्तथा ॥
पद्माकृतिर्गुरुः कार्य्यश्चतुष्कोणस्तु भार्गवः ।
खड्गाकृतिः शनिः कार्य्यो राहुस्तु मकराकृतिः
।
सर्पाकृतिस्तथा केतुः कार्य्यो मण्डलपूजने ॥’
मत्स्यपुराणे ।
‘देवतानां ततः स्थाप्या विंशतिर्द्वादशाधिका।
सूर्य्यः सोमस्तथा भौमो बुधजीवसितार्कजाः ॥
राहुः केतुरिति प्रोक्ता ग्रहा लोकहिते रताः ।
मध्ये तु भास्करं विद्याल्लोहितं दक्षिणेन तु ॥
उत्तरेण गुरुं विद्याद्बुधं पूर्ब्बोत्तरेण तु ।
पूर्ब्बेण भार्गवं विद्यात् सोमं दक्षिणपूर्ब्बके ॥
पश्चिमेन शनिं विद्याद्राहुं पश्चिमदक्षिणे।
पश्चिमोत्तरतः केतुं स्थापयेत् शुक्लतण्डुलैः ॥
* ॥
भास्करस्येश्वरं विद्यादुमाञ्च शशिनस्तथा।
स्कन्दमङ्गारकस्यापि बुधस्यापि तथा हरिम् ॥
ब्रह्माणञ्च गुरोर्व्विद्यात् शुक्रस्यापि प्रजापतिम्।

बुधो बृहस्पतिः शुक्रस्त्रय एते शुभावहाः ।
एतन्निरीक्ष्य तं लग्नं नक्षत्रञ्च प्रशस्यते ॥
ग्रहताराबलं लब्ध्वा ग्रहपूजां विधाय च ।
निमित्तं सकलं ज्ञात्वा वर्जयित्वाद्भुतादिकम् ॥
शुभयोगे शुभगृहे क्रूरग्रहविवर्जिते ।
लग्ने ऋक्षे च कुर्व्वीत प्रतिष्ठादिकमुत्तमम् ॥ * ॥
अयने विषुवे तद्वत् षडशीतिमुखे तथा ।
एतेषु स्थापनं कार्य्यं विधिदृष्टेन कर्म्मणा ॥'
भविष्ये ।
'प्रतिपच्च द्वितीया च तृतीया पञ्चमी तथा ।

कुर्य्याद्यथाक्रमेणैव कन्यसं मध्यमुत्तमम् ॥
कन्यसं दशहस्तन्तु कूपे शस्तं तथानघ ! ।
द्विषट्कं कारयेद्वाप्यां पुष्करिण्यां चतुर्द्दश ।
द्विरष्टहस्तं कुर्व्वीत तडागे मण्डपं शुभम् ॥'
कन्यसं कनीयांसम् ॥ * ॥
सङ्कल्पविधिमाह
भविष्ये ।
'गृहीत्वौडुम्बरं पात्रं वारिपूर्णं गुणान्वितम् ।
दर्भत्रयं साग्रमूलं फलपुष्पसमन्वितम् ॥
जलाशयारामकूपे सङ्कल्पे पूर्ब्बदिङ्मुखः ।
साधारणे चोत्तरास्य ऐशान्यां निक्षिपेत् पयः
॥'
मत्स्यपुराणे ।
'प्रागुदक्प्रवणे देशे तडागस्य समीपतः ।
चतुर्हस्तां शुभां वेदीं चतुरस्रां चतुर्मुखीम् ॥'
कारयेदित्यर्थः । तथा, --
'सर्व्वतः समवर्णाः स्युः पताका
ध्वजसंयुताः ॥'
समवर्णा वक्ष्यमाणलोकपालवर्णाः।
'अश्वत्थोडुम्बरप्लक्षवटशाखायुतानि च ।
मण्डपस्य प्रतिदिशं द्वाराण्येतानि कारयेत्
॥'
तथा ।
'कुलशीलसमापन्नः स्थापकः
स्याद्द्विजोत्तमः ॥'
स्थापक आचार्य्य इति रत्नाकरः ॥ * ॥

शनैश्चरस्य तु यमं राहोः कालन्तथैव च ।
केतूनाञ्चित्रगुप्तञ्च सर्व्वेषामधिदेवताः ॥ * ॥
अग्निरापः क्षितिर्विष्णुरिन्द्र ऐन्द्री च देवताः ।
प्रजापतिश्च सर्पश्च ब्रह्मा प्रत्यधिदेवताः ॥ *
॥
विनायकं तथा दुर्गां वायुमाकाशमेव च ।
आवाहयेद्व्याहृतिभिस्तथैवाश्विकुमारकौ ॥
संस्मरेद्रक्तमादित्यमङ्गारकसमन्वितम्।
सोमशुक्रौ तथा श्वेतौ बुधजीवौ च पिङ्गलौ ॥
मन्दराहू तथा कृष्णौ धूम्रं केतुगणं विदुः ।
ग्रहवर्णानि देयानि वासांसि कुसुमानि च ॥
धूपामोदोऽत्र सुरभिरुपरिष्टाद्वितानकम्।
शोभनं स्थापयेत् प्राज्ञः फलपुष्पसमन्वितम्॥
गुडौदनं रवेः कुर्य्यात् सोमाय घृतपायसम् ।
संयावकं कुजे दद्यात् क्षीरान्नं सोमसूनवे ॥

दध्योदनन्तु जीवाय शुक्राय च घृतोदनम् ।
शनैश्चराय कृषरमाजमांसञ्च राहवे ।
चित्रोदनन्तु केतुभ्यः सर्व्वभक्षैः समर्च्चयेत् ॥'
स्कन्दपुराणम् ।
'जन्मभूर्गोत्रमेतेषां वर्णस्थानमुखानि च ।
योऽज्ञात्वाकुरुते शान्तिं ग्रहास्तेनावमानिताः ॥
उत्पन्नोऽर्कः कलिङ्गेषु यमुनायाञ्च चन्द्रमाः ।
अङ्गारकस्त्ववन्त्यान्तु मगधे तु हिमांशुजः ॥
सैन्धवेषु गुरुर्जातः शुक्रो भोजकटे तथा ।
शनैश्चरस्तु सौराष्ट्रे राहुर्वैराटिकापुरे ।
अन्तर्वेद्यां तथा केतुरित्येता ग्रहभूमयः ॥
आदित्यः काश्यपो गोत्र आत्रेयश्चन्द्रमा
भवेत् ।
भारद्वाजो भवेद्भौमस्तथात्रेयश्च सोमजः ॥
सुरपूज्योऽङ्गिरोगोत्रः शुक्रो वै भार्गवस्तथा ।
शनिः काश्यप एवायं राहुः पैठीनसिस्तथा ।
केतवो जैमिनेयाश्च ग्रहा लोकहिते रताः ॥'
कात्यायनः ।
'तद्गोत्रजाती अज्ञात्वा होमं यः कुरुते नरः ।
न तस्य फलमाप्नोति न सन्तुष्यन्ति देवताः ॥
न हुतं न च संस्कारो न च यज्ञफलं लभेत् ।
ब्राह्मणौ भार्गवाचार्य्यौ क्षत्त्रियावर्कलोहितौ ॥
वैश्यौ सोमबुधौ चैव शेषान् शूद्रान् विनि-
र्द्दिशेत् ॥'
शान्तिदीपिकायाम् ।
'शुक्रार्कौ प्राङ्मुखौ स्थाप्यौ शशाङ्कार्की च
दक्षिणौ ।
उत्तरास्यौ गुरुबुधौ पश्चिमास्यास्तथापरे ॥'
अग्निप्रणयनानन्तरं ग्रहावाहनमाह वैशम्पा-
यनः ।
'अग्निप्रणयनं कृत्वा पश्चादावाहयेत् सुरान् ।
मध्ये तु भास्करं विद्याल्लोहितं दक्षिणेन तु ॥'
यद्यपि ग्रहादीनां बहवः शब्दा वाचकाः सन्ति
शब्दोपहितश्चार्थोऽर्थोपहितःशब्दो वा देवता
उभयथापि शब्दनियमात् अविनिगमकः स्यात्
तथापि बहुषु दृष्टत्वात् सूर्य्यादिशब्देन ग्रहाणां
देवतात्वम् । तेन सूर्य्यसोमकुजबुधबृहस्पतिशुक्र-
शनैश्चरराहुकेतुपदैर्देवतात्वम् । अधिदेयता-
नान्तु त्र्यम्बकोमास्कन्दविष्णुब्रह्मेन्द्रयमकाल-
चित्रगुप्तानामेभिरेव पदैः । तथा प्रत्यधिदेव-
तानाञ्च अग्न्यप्पृथिवीविष्ण्विन्द्रशचीप्रजापति
ब्रह्मणामेभिरेव पदैः । तथा विनायकदुर्गावा-

निरृतिस्तु पुमान् कृष्णः सर्व्वरक्षोऽधिपो
महान् ।
खड्गहस्तो महासत्त्वस्तस्मै नित्यं नमो नमः
॥
वरुणो धवलो जिष्णुः पुरुषो निम्नगाधिपः ।
पाशहस्तो महाबाहुस्तस्मै नित्यं नमो नमः ॥
वायुश्च सर्व्ववर्णोऽयं सर्व्वगन्धवहः शुभः ।
पुरुषो ध्वजहस्तश्च तस्मै नित्य नमो नमः ॥
गौरो यस्तु पुमान् सौम्यः सर्व्वौषधिसमन्वितः
।
नक्षत्राधिपतिः सोमस्तस्मै नित्यं नमो नमः ॥
ईशानः पुरुषः शुक्लः सर्व्वविद्याधिपो महान् ।
शूलहस्तो विरूपाक्षस्तस्मै नित्यं नमो नमः ॥
पद्मयोनिश्चतुर्मूर्त्तिर्हेमवासाः पितामहः ।
यज्ञाध्यक्षश्चतुर्व्वक्त्रस्तस्मै नित्यं नमो नमः ॥
योऽसावनन्तरूपेण ब्रह्माण्डं सचराचरम् ॥
पुष्पवद्धारयेन्मूर्द्ध्नि तस्मै नित्यं नमो नमः ।
ॐकारपूर्व्वका ह्येते न्यासे बलिनिवेदने ।
मन्त्राः स्युः सर्व्वकार्य्याणां बृद्धिपुष्टिफलप्रदाः
॥'
हयशीर्षपञ्चरात्रे ।
'अथवा कामतः कुर्य्यात्
सूक्ष्मरत्नादिनिर्म्मितम् ।
द्विभुजं हंसपृष्ठस्थं दक्षिणेनाभयप्रदम् ॥
वामेन नागपाशन्तु धारयन्तं सुभोगिनम् ।
मौलिनं वा महाभागं कारयेद्यादसां पतिम् ॥
वामे तु कारयेद्वृद्धिं दक्षिणे पुष्करं शुभम् ।
नागैर्नदीभिर्यादोभिः समुद्रैः परिवारितम् ॥
कृत्वैवं व्नरुणं देवं प्रतिष्ठाविधिमाचरेत् ॥'
पुष्करं तत्पुत्त्रम् । तथा प्रसन्नवदनमिति ध्यानं
वक्ष्यते । वरुणमन्त्रोद्धारस्तु तत्रैव ।
'अष्टाविंशान्तबीजेन चतुर्द्दशयुतेन च ।
अर्द्धेन्दुविन्दुयुक्तेन प्रणवोद्दीपितेन च ॥'
तेन ॐ वौं इति मन्त्रः ।
'प्रतिमायां स्थितिं कृत्वा प्रणवेन निरोधयेत् ।
पूजयेत् गन्धपुष्पाद्यैः सान्निध्यं पाशमुद्रया ॥'
स्थितिं प्राणप्रतिष्ठाम् । निरोधयेत् अन्तर्गता-
ङ्गुष्ठमुष्टिभ्यां निरोधमुद्रां दर्शयेत् । दानकल्प-
तरुरत्नाकरयोर्बह्वृचगृह्यपरिशिष्टम् ॥ अथातो
वरुणविधिं वापीकूपतडागयज्ञं व्याख्यास्यामः
।
पुण्ये तिथिकरणे शुभे नक्षत्रे प्रतीचीं दिश-
मास्थाय प्राक्प्रवणे उदक्प्रवणे वा उदक्-

उत्थापयेत् । सुयवसा भगवतीह भूया इति
हिं कृतञ्चेत् तदा हिं कृण्वती वसुमती वसूना-
मिति जपेत् । तां सचेलकण्ठां कनकशृङ्गीं
वृषप्रजां रूप्यखुरां कांस्योपदोहां विप्राय
साम-
गाय दद्यात् इतरां वा । यथाशक्ति दक्षिणा च
देया इति । तत उत्सर्गं कुर्य्यात् । देवपितृ-
मनुष्याः प्रीयन्तां इत्याह शौनकः । यजमानो
ब्राह्मणान् भोजयित्वा स्वस्ति वाचयीतेति ।
अस्यार्थः । तिथ्यादीनां शुभत्वं
पूर्ब्बवचनेभ्यो
ज्ञेयम् । एष एव विधिर्गोभिलपारस्करगृह्योक्त-
कर्म्मानुष्ठातृभ्यामनुष्ठीयते ।
'यन्नाम्ना तं स्वशाखायां परोक्तमविरोधि च ।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्म्मवत् ॥'
इति छन्दोगपरिशिष्टात् ॥
ततश्च अग्निमुपसमाधायेति
स्वस्वगृह्योक्तविधि-
नाग्निं संस्थाप्य वारुणं वरुणदेवताकं
चरुं निष्पाद्य आज्यभागान्तं हुत्वा इति
छन्दोगेतरपरम् । स तु विरूपाक्षजपान्तां
कुशण्डिकां समाप्य महाव्याहृतीर्हुत्वा प्रकृतं
कर्म्म कुर्य्यात् । तत्र प्रथमतः पिङ्गभ्रूश्मश्रु
इत्यादि पुराणीयं ध्यात्वा अग्ने त्वं वरुणनामा-
सीति नाम कुर्य्यात् ।
'प्रतिष्ठायां रोहितश्च वास्तुयुगे प्रजापतिः ।
जलाशयप्रतिष्ठायां वरुणः समुदाहृतः ॥'
इति स्मृतेः ।
तत आवाह्य पूजयित्वा समित्प्रक्षेपानन्तरं
महाव्याहृतिहोमं कृत्वा समुद्रा ज्येष्ठा इत्यादि
चतुर्भिर्मन्त्रैश्चतस्र आहुतीर्जुहुयात् । ॐ
तद्वा-
यामीति ॐ तदिदन्नक्तमिति ॐ शुनःशेफो-
हीति ॐ अवते हेलौ वरुण इति ॐ डदु-
त्तममिति पञ्चभिः ॐ त्वन्नोऽग्ने इति द्वाभ्यां
ॐ इमां वरुण इत्येकेन एवं
स्थानत्रयोक्तैर्ब्बह्वृ-
चोक्तैः प्रत्येकमष्टभिर्मन्त्रैश्चरुं चतुरावर्त्तं भृगु-
गोत्रो भार्गवप्रवरश्च पञ्चावर्त्तं स्रुचा जुहुयात् ।
अग्नये स्विष्टिकृते च । ततः कुशण्डिकोक्त-
विधिना शेषं समापयेत् । नव वै प्राणा इति
नवाहुतिस्तुतिः । मार्जनान्त इति
यजमानाभि-

य्वाकाशाश्विनामेभिरेव । इति कृत्यप्रदीपः ॥ * ॥

शान्तिदीपिकोक्तध्यानानिप्रयोगे वक्ष्यन्ते ।

लोकपालमन्त्रानाह भविष्ये ।

‘न्यासमन्त्रानहं वक्ष्ये लोकपालात्मकानिह ।

इन्द्रस्तु महसा दीप्तः सर्व्वदेवाधिपो महान् ।

वज्रहस्तो महासत्त्वस्तस्मै नित्यं नमो नमः ॥

आग्नेयः पुरुषो रक्तः सर्व्वदेवमयोऽव्ययः ।

धूमकेतुरनाधृष्यस्तस्मै नित्यं नमो नमः ॥

यमश्चोत्पलवर्णाभः किरीटी दण्डधृक् सदा ।

धर्म्मसाक्षी विशुद्धात्मा तस्मै नित्यं नमो नमः ॥

समीपे अग्निमुपसमाधाय वारुणं श्रपयित्वा आज्यभागान्तं हुत्वा चतस्र आज्याहुतीर्जुहु-यात् । समुद्रज्येष्ठा इति प्रत्यृचं ततो हविषा अष्टभिर्जुहुयात् । तद्वायामि ब्राह्मणा वन्द-मानः इति पञ्च । त्वन्नोऽग्ने वरुणस्य विद्वा-निति द्वे इमं मे वरुणं स्रग्वी हवेति च स्विष्टि-कृतञ्च नवमं नव वै प्राणाः प्राण इव आप-स्तस्मादापो नवभिर्जुहोति ॥ * ॥ मार्जनान्ते धेनुमवतारयेत् । अवतार्य्यमाणान्तामनुमन्त्र-येत् । इदं सलिलं पवित्रं कुरुष्व शुद्धः पूतो मृतः सन्तु नित्यं तारयन्ती सर्व्वतीर्थाभिषिक्तं लोकालोकं तरते तीर्य्यते च । इत्यनेन पुच्छाग्रे यजमानः स्वयं लग्न आचार्य्येणान्वारब्ध उत्तीर्य्य

आपोऽस्मान्मातरः शुन्धयन्त्विति ऐशान्यां दिशि

षेकः । तद्विधानन्तु मत्स्यपुराणे ।

‘गजाश्वरथ्यावल्मीकसङ्गमात्ह्रदगोकुलात् ।

मृदमादाय कुम्भेषु प्रक्षिपेच्चत्वरात्तथा ॥

गोरोचनाञ्च सिद्धार्थान् गन्धान् गुग्गुलुमेव च ।

स्नपनं तस्य कर्त्तव्यं पञ्चभङ्गसमन्वितम् ।

पूर्त्तकर्त्तुर्महामन्त्रैरेवं कृत्वा विधानतः ॥’

पञ्चभङ्गाश्च शान्तिकपौष्टिककल्पतरूक्ताः ।

‘अश्वत्थोडुम्बरप्लक्षवटचूतस्य पल्लवाः ॥’

महामन्त्रैः । सुरास्त्वामभिषिञ्चन्त्वित्यादिभिः ।

एतत्पर्य्यन्तं कूपेऽपि । कापिले ।

‘ऐशान्यां स्थापयेद्यूपं स्वातात् पञ्चकरान्तरम् ।

यूपवृक्षेतिमन्त्रेण सर्पाकारं सुशोभनम् ।

पूजयित्वा तु वस्त्राद्यैस्ततो यष्टिं प्रचालयेत् ॥’

मात्स्ये ।

‘त्र्यरत्निमात्रो यूपः स्यात्

क्षीरिवृक्षविनिर्म्मितः ।

यजमानप्रमाणो वा संस्थाप्यो भूतिमिच्छता ॥'
क्षीरिवृक्षोऽश्वत्थादिः । ततो धेनुं सचेलकण्ठां कांस्याद्युक्तविशेषणयुक्तां जलाशयेऽवतारयेत् ।
तथा हयशीर्षपञ्चरात्रे ।
'गां सवत्स्यां समानीय सुशीलाञ्च पयस्विनीम् ।
कांस्योपदोहां घण्टादिवस्त्रपुष्पोपशोभिताम्।
स्वर्णशृङ्गीं रौप्यखुरां ताम्रपृष्ठां सुशोभनाम् ॥
लाङ्गूलन्यस्तहस्तोऽसौ यजमानः सबान्धवः ।
शनैः सन्तारयित्वा तामाचार्य्याय निवेदयेत् ॥'
कांस्योपदोहां कांस्यक्रोडामिति यावत् ।
कापिले ।
'अजले जलमुत्पाद्य यजमानः सभार्य्यकः ।
तरेद्वै प्राङ्मुखो भूत्वा कृतगोलाङ्गूलाङ्गुलिः ॥'
इदं सलिलं पवित्रं इतिमन्त्रेणावतार्य्यमाणा-मनुमन्त्रयेत् । ततः प्राङ्मुखः सन्नवतारयेत् ।
सा च गौः पश्चिमतोऽवतार्य्या । ततः कूल-समीपं गत्वा तर्पयेत् । यथा कापिलम् ।
'पुनः पुच्छोदकेनाथ सतिलेन कुशेन तु ।
भुग्नेनैवापसव्येन पितृतीर्थेन तर्पयेत् ॥
गताश्चात्रागमिष्यन्ति ये कुले मम बान्धवाः ।
ते सर्व्वे तृप्तिमायान्तु मया दत्तजलेन वै ।
ततो मुञ्चामि मन्त्रेण मुञ्चेद्गां वत्ससंयुताम् ॥'
आचार्य्येणान्वारब्ध उत्तीर्य्य
आपोऽस्मान्मातरः
शुन्धयन्त्वितिमन्त्रेण ऐशान्यामुत्थापयेत् ।
सुय-
वसा भगवतीह भूया इति ब्रयात् । सा यदि हिंकारं करोति तदा हिं कृण्वतीत्यादि जपेत् ।
तत उक्तविशेषणयुक्तां धेनुमाचार्य्याय
सामगाय
दद्यात् । ततो यथाशक्ति दक्षिणाञ्च दद्यात् ।
एतत्पर्य्यन्तं न कूपे व्यवह्रियतेऽसम्भवात् ॥ * ॥
तत उत्सर्गं कुर्य्यात् । अत्र विशेषमाह रत्ना-करधृतमत्स्यपुराणम्।
'फलान्याचिन्त्य मनसा विविधानि शुभानि च ।
प्रदद्यात् सर्व्वभूतेभ्यो जलपूर्णं जलाशयम् ॥'

स्वत्वमिति । ततश्चास्य यागवदुत्तराप्रतिपत्तेर-श्रुतत्वात् साधारणजनस्य परिग्रहमात्रेण गोत-मोक्तेन स्वामित्वश्रुतेर्यजमानस्यापि तथात्वेन स्वामित्वात् तत्र स्नानादावदोष इति तत्त्वम् ।
यथा गोतमः । स्वामी रिक्थक्रयसम्विभाग-परिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्त्रि-यस्य विजितं निर्द्दिष्टं वैश्यशूद्रयोरिति । परि-ग्रहोऽनन्यपूर्ब्बस्य जलतृणकाष्ठादेः स्वीकार इति मिताक्षरा ॥ ऋक्थाधिकारे व्यक्तमाहा-पस्तम्बः । दायाद्यं शिलोञ्छौ चान्यच्चापरि-गृहीतमिति । अपरिगृहीतमन्यास्वीकृतमस्वा-मिकमिति यावत् । निर्व्विष्टं वेतनलब्धं निर्वेशो भृतिभोगयोरित्यमरकोषजिकाण्डशेषयोः ॥
हयशीर्षे ।
'आपोहिष्ठेति तिसृभिः पञ्चगव्यं विनिःक्षिपेत् ।
तीर्थतोयं तथा पुण्यं शान्तितोयं द्विजैः कृतम् ॥
गोकुलं पाययेत् पश्चात् द्विजान् वेदविदस्तथा ।
ततोऽन्नं भोजयेद्विप्रान् दद्यात्तेभ्यश्च दक्षिणाम् ॥'
एतत्पर्य्यन्तं कूपेऽपि ॥ * ॥ कापिले ।
'नागानामष्ट नामानि लिखितानि पृथक् पृथक् ।
ततः कुम्भे च निःक्षिप्य गायत्र्या च विलोड्य वै ॥
उद्धरेत् पत्रिकामेकां तत्रैव नागमीक्षयेत् ।
यस्य नामोद्धरेद्वत्स स वै जलाधिपः स्मृतः ॥
तञ्च संपूज्य गन्धाद्यैर्दद्यात् क्षीरञ्च पायसम् ॥'
पत्र्याण्याम्रस्य योगीश्वरधृतवचनाद्यथा।
'अष्टौ नामान्याम्रपत्रे कृत्वा चैव प्रयत्नतः ॥'
तानि च गारुडे ।
'अनन्तो वासुकिः पद्मो महापद्मोऽथ तक्षकः ।
कुलीरः कर्कटः शङ्खो ह्यष्टौ नागाः प्रकीर्त्तिताः ॥'
एतानि नामानि आम्रपत्रे लिखित्वा कलस-मध्ये निःक्षिप्य गायत्र्या छन्दसा मथ्नामि इति रघुनाथधृतमन्त्रेणालोड्ययस्य नामोत्तिष्ठति तं यष्ट्यां समावाह्यानेन नागेनास्य जलस्य रक्षा कर्त्तव्या इति ब्राह्मणान् श्रावयेत् । हयशीर्षे ।
'वैणुकं वारुणञ्चैव पुन्नागं नागकेशरम् ।
वकुलं चम्पकञ्चैव निम्बञ्चैवाथ खादिरम् ॥
एतेषामेव दारूणां नागयष्टिः प्रकीर्त्तिता ।
सवक्रकोटरं त्यक्त्वा तस्मात् कुर्य्याद्यथेप्सितम् ॥'
तथा च बृहस्पतिः ।
'शूलचक्राङ्कितां कृत्वा स्थापयित्वा जलाशये ।
द्वादशाङ्गुलमानन्तु वापीचक्रं प्रकल्पयेत् ॥

याः फलिनीरिति फलोदकेन ॐ युवासुवासा इति क्षुद्रघण्टिकायुतां पताकां यष्ट्यां बध्नीयात् ।
ॐ यष्ट्यै नमः इतिमन्त्रेण पूजयेत् ।
पुष्पाद्यल-
ङ्कृतां यष्टिं कन्दरसमीपं नयेत् । गुरुस्तु
शङ्खादि-
निःस्वनै राजतवरुणप्रतिमां उत्तिष्ठेति
समुत्थाय
प्रदक्षिणत्रयं कृत्वा आपोहिष्ठा इत्यादिना मन्त्रेण वरुणस्योत्तम्भनमसि इतिमन्त्रेण च जले क्षिपेत् । ततस्तत्रैव खाते शाद्वलगोमय-दधिमधुकुशमहानदीजलपञ्चरत्नानिॐ येते-वापी रोचने दिव इतिमन्त्रेण क्षिपेत् । ॐ ध्रुवं ध्रुवेण मनसा इतिमन्त्रेण यष्टिमभिमन्त्र्य ॐ यूपवृक्षेतिमन्त्रेण जलमध्ये आरोपयेत् । ततो जलमातृः पूजयेत् । यथा ह्रीं पूर्ब्बस्याम् ।
श्रियं आग्नेय्याम् । शचीं दक्षिणस्याम् । मेधां नैरृत्याम् । श्रद्धां पश्चिमायाम् । विद्यां वाय-व्याम् । लक्ष्मीं उत्तरस्याम् । सरस्वतीं ऐशा-न्याम् । अधो विद्याम् । ऊर्द्ध्वे लक्ष्मीम् ।
पाद्या-
दिभिः संपूज्य अग्निं प्रदक्षिणीकृत्य सूर्य्यादि-द्वात्रिंशद्देवताः पूजयेत् । क्षमस्वेति वरुणं क्षामयेत् । कापिलम् ।
'शङ्खतूर्य्यादिनिनदैस्तथा वै क्षीरधारया ॥'
जलाशयं प्रवेष्टयेदिति शेषः । प्रतिष्ठानन्तरं मात्स्ये ।
ततः सहस्रं विप्राणामथवाष्टशतन्तथा।
भोजयेच्च यथाशक्त्या पञ्चाशद्वाथ विंशतिम् ॥"
इति जलाशयोत्सर्गतत्त्वम् ॥

**पुष्करी**, [न्] पुं, (पुष्करमस्यास्तीति । पुष्कर + इनिः ।) हस्त्री । इति त्रिकाण्डशेषः ॥

**पुष्कलं**, क्ली, (पुष्यति पुष्टिं गच्छत्यनेनेति । पुष + "कलंश्च ।" उणा ० ४ । ५ । इति कलन् स च
कित् ।) ग्रासचतुष्टयात्मकभिक्षा । यथा, --
"भिक्षामाहुर्ग्रासमात्रमन्नं तस्माच्चतुर्गुणम् ।
पुष्कलं हन्तकारन्तु तच्चतुर्गुणमुच्यते ॥"
इति कौर्म्मे उपविभागे १७ अध्यायः ॥

कापिलञ्च ।
'ततस्तत्पश्चिमं तीरं गत्वा पूर्ब्बाननस्थितः ।
जलोत्मर्गं प्रकुर्व्वीत सर्व्वसत्त्वार्थकं ध्रुवम् ॥'
सर्व्वसत्त्वार्थकं सर्व्वभूतप्रयोजनकम् ।
सर्व्वभूतेभ्य
उत्सृजेदित्यर्थः । देवपितृमानुष्याः प्रीयन्ता-
मिति पठेदिति शेषः । उत्सृज्य यजमानो
ब्राह्मणान् स्वस्ति वाचयीतेति दक्षिणाभिरिति
शेषः । एतत्पर्य्यन्तं कूपेऽपि ।
जलाशयोत्सर्गस्य
सर्व्वभूतोद्देश्यकत्वेन
अपकृष्टचेतनोद्देश्यकत्वेऽपि
त्यागत्त्वमपि । ततश्च कीटादेर्ममेदमिति
स्वीका-
रायोग्यत्वेन
वेदमेयोद्देश्यगतस्वत्वाजनकत्यागरू
पत्वात् अस्य यागत्वम् । अतएव जलाशयोत्-
सर्गमुपक्रम्य मत्स्यपुराणेऽपि । प्राप्नोति तद्-
यागबलेन भूय इति यागत्वेनाभिहितम् ।
ततश्च
तज्जलं स्वस्वत्वदूरीकरणेन नद्यादिवत्
साधा-
रणीकृतम् । अतएव
'सामान्यं सर्व्वभूतेभ्यो मया दत्तमिदं जलम् ।
रमन्तु सर्व्वभूतानि स्नानपानावगाहनैः ॥'
इति मन्त्रलिङ्गेन उपादानं विना कस्यापि न
षोडशं पुष्करिण्यान्तु विंशतिञ्च सरोवरे ।
सागरे हस्तमात्रन्तु लौहं ताम्रन्तु पैत्तलम् ॥
चक्रञ्च विविधं प्रोक्तं कुर्य्यात्तेषां यथेप्सितम् ।
शतहस्ता भवेद्वापी द्विगुणा पुष्करिण्यपि ॥
त्रिगुणन्तु सरोमानमत ऊर्द्ध्वन्तु सागरः ॥'
ततो द्वादशपञ्चदशविंशत्येकविंशत्यन्यतमकनि-
ष्ठाङ्गुल्यवच्छिन्नहस्तप्रमाणांयष्टिं वक्ष्यमाण-
मन्त्रेण स्थापयेत् । ॐ गन्धद्वारेति गन्धवारिणा
ॐ भद्रं कर्णेभिरिति तैलहरिद्रया ॐ काण्डात्
काण्डादिति दूर्व्वाभिः ॐ द्रुपदादिव इत्यादिना
सप्तमृत्तिकादिभिः ॐ मधुवातेति पञ्चामृतेन
अष्टकुञ्चिपरिमाणम् । यथा, प्रायश्चित्ततत्त्वे ।
"अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलम्
।
पुष्कलानि च चत्वारि आढकः परिकीर्त्तितः
॥"
(नगरविशेषः । यथा, रामायणे । ७ । ११४ ।
११ ।
"हतेषु तेषु सर्व्वेषु भरतः केकयीसुतः ।
निवेशयामास तदा समृद्धे द्वे पुरोत्तमे ॥
तक्षं तक्षशिलायान्तु पुष्कलं पुष्कलावते ।
गन्धर्व्वदेशे रुचिदे गान्धारविषये च सः ॥")

**पुष्कलः**, त्रि, (पुष्कं महत्त्वं लातीति । ला + कः ।

यद्वा, पुष्कं पुष्टिर्महत्त्वमिति यावत् तदस्त्य-
स्येति । पुष्क + "सिध्मादिभ्यश्च ।" ५ । २
। ९७ ।
इति लच् ।) श्रेष्ठः । इत्यमरः । ३ । १ । ४८
॥
बहुः । इति हेमचन्द्रः ॥ (यथा, महा-
भारते । ३ । ३ । १० ।
"राजानो हि महात्मानो योनिकर्म्मविशो-
धिताः ।
उद्धरन्ति प्रजाः सर्व्वास्तप आस्थाय
पुष्कलम् ॥")
उपस्थितः । इति जटाधरः ॥

**पुष्टं**, त्रि, (पुष + क्तः ।) कृतपोषणम् । तत्-

पर्य्यायः । पुषितम् २ । इत्यमरः । ३ । १ । ९७ ॥

पतम् ३ । इति जटाधरः ॥ (यथा, मनुः । ७ । १७१ ।

"यदा मन्येत भावेन हृष्टं पुष्टं बलं स्वकम् ।
परस्य विपरीतञ्च तदा यायाद्रिपुं प्रति ॥")

**पुष्टिः**, स्त्री, (पुष + भावे क्तिन् ।) पोषणम् ।

वृद्धिः । इति मेदिनी । टे, २३ ॥ (यथा, मार्कण्डेये । २२ । ११ ।

"वैदिकैर्व्वारणैर्मन्त्रैः प्रजानां पुष्टिहेतुकैः ॥")
अश्वगन्धा । इति राजनिर्घण्टः ॥ षोडश-
मातृकान्तर्गतदेवताविशेषः । इति श्राद्धतत्त्वम् ॥

(सा तु दक्षकन्यानामन्यतमा । यथा, मार्क-
ण्डेये ।

"प्रसूत्याञ्च तथा दक्षश्चतस्रो विंशतिस्तथा ।
ससर्ज्ज कन्यास्तासाञ्च सम्यङ्नाभानि मे शृणु ॥
श्रद्धा लक्ष्मीर्धृतिस्तुष्टिः पुष्टिर्मेधा क्रिया तथा ॥"
गणपतेः पत्नी । यथा, ब्रह्मवैवर्त्तपुराणे । २ । १ । ९९ ।

"पुष्टिर्गणपतेः पत्नी पूजिता जगतीतले ।
यया विना परिक्षीणाः पुमांसो योषितोऽपि च ॥"
खट्वाविशेषः । यथाह भोजः ।

"मङ्गला विजया पुष्टिः क्षमा तुष्टिः सुखासनम् ।
प्रचण्डा सर्व्वतोभद्रा खट्वानामाष्टकं विदुः ॥"
तन्त्रोक्तचन्द्रकलाया नामान्तरम् । यथा, रुद्र-
यामले ।

"अमृता मानदा पूषा पुष्टिस्तुष्टी रतिर्धृतिः ।
शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीति-
रङ्गदा ।
पूर्णापूर्णामृताकामदायिम्यःशशिनः कलाः ॥")

**पुष्टिका**, स्त्री, (पुष्ट्यै कं जलं यस्याः ।) जल-

शुक्तिः । इति राजनिर्घण्टः ॥

**पुष्टिकान्तः**, पुं, (पुष्टेः कान्तः ।) गणेशः । इति

वराह उवाच ।
"अकर्म्मण्येन पुष्पेण यो मामर्च्चयते भुवि ।
पातनं तस्य वक्ष्यामि तच्छृणु त्वं वसुन्धरे ! ॥
नाहं तत् प्रतिगृह्णामि न च ते वै मम प्रियाः ।
मूर्खैर्भागवतैर्द्दत्तं मम विप्रियकारिणः ॥
पतन्ति नरके घोरे रौरवे तदनन्तरम् ।
अज्ञातस्य च दोषेण दुःखान्यनुभवन्ति च ॥
वानरो दश वर्षाणि मार्जारश्च त्रयोदश ।
मूषकः पञ्च वर्षाणि वलीवर्द्दश्च द्वादश ॥
छागश्चैवाष्ट वर्षाणि मासं वै ग्रामकुक्कुटः ।
त्रीणि वर्षाणि महिषो भवत्येव न संशयः ॥
एतत्ते कथितं भद्रे ! पुष्पं यन्मे न रोचते ।
अकर्म्मण्यं विशालाक्षि ! पुष्पं ये न ददन्ति वै ॥"
इति वराहपुराणम् ॥ * ॥
देवीप्रियपुष्पाणि यथा, --
"पुष्पाणि देव्या वैष्णव्याः प्रियाणि शृणु संप्रति ।
वकुलैश्चैव मन्दारैः कुन्दपुष्पकुरुण्टकैः ॥
करवीरार्कपुष्पैश्च शाल्मलैश्चापराजितैः ।
दमनैः सिन्धुवारैश्च सुरभीमरुवकैस्तथा ॥
लताभिर्ब्रह्मवृक्षैश्च दूर्व्वाङ्कुरैश्च कोमलैः ।
मञ्जरीभिः कुशानाञ्च विल्वपत्रैः सुशोभनैः ॥
पूजयेद्वैष्णवीं देवीं कामाख्यां त्रिपुरां तथा ।
अन्याश्च याः शिवाप्रीत्यैः जायन्ते पुष्पजातयः ॥
ता इमाः शृणु कीर्त्त्यन्ते मया वेतालभैरव ! ।
मालती मल्लिका जाती यूथिका माधवीलता ॥
पाटला करवीरश्च जवा तर्क्कारिका तथा ।
कुब्जकं तगरश्चैव कर्णिकारोऽथ रोचनः ॥
चम्पकाम्रातकौ वाणो वर्व्वरा मल्लिका तथा ।
अशोको लोध्रतिलकौ वटरूषशिरीषकौ ॥
शमीपुष्पञ्च द्रोणञ्च पद्मोत्पलवकारुणाः ।
श्वेतारुणे त्रिसन्ध्ये च पलाशः खदिरस्तथा ॥
वनमालाथ सेवन्ती कुमुदोऽथ कदम्बकः ।
चक्रं कोकनदञ्चैव भण्डिलो गिरिकर्णिका ॥
नागकेशरपुन्नागौ केतक्यञ्जलिका तथा ।
दोहदा बीजपूरश्च नमेरुः शालमेव च ॥
त्रपुषी चण्डविन्धश्च झिण्टी पञ्चविधा तथा ।
एवमाद्युक्तकुसुमैः पूजयेत् वरदां शिवाम् ॥" * ॥
वर्ज्जनीयपुष्पं यथा, --
"पुष्पञ्च कृमिसम्भिन्नं विशीर्णं भग्नमुद्गतम् ।

पद्मान्यम्बुसमुत्थानि रक्तनीले तथोत्पले ।
सितोत्पलञ्च कृष्णस्य दयितानि सदा नृप ! ।
तानि पुष्पाणि देयानि विष्णवे प्रभविष्णवे ॥"
इत्यग्निपुराणम् ॥ * ॥
अपि च ।
"जाती शताह्वा सुमना कुन्दं बहुपुटं तथा ।
वाणञ्च पङ्कजाशोकं करवीरञ्च यूथिका ॥
पारिभद्रं पाटला च वकुलं गिरिशालिनी ।
तिलकं वनजञ्चैव पीतकं तगरन्त्वपि ॥
एतानि हि प्रशस्तानि कुसुमान्यच्युतार्च्चने ।
सुरभीणि तथान्यानि वर्ज्जयित्वा तु केतकीम् ॥
येषामपि हि पुष्पाणि प्रशस्तान्यच्युतार्च्चने ।
पल्लवान्यपि तेषां स्युः प्रशस्तानि महासुर ! ॥
वीरुधानां प्रधानेन वर्हिषाञ्चार्च्चयेत्तथा ।
नानारूपैश्चाम्बुभवैः कमलेन्दीवरादिभिः ॥
प्रवालैः शुचिभिः शुद्धैर्जलप्रक्षालितैर्वले ! ।
वनस्पतीनामर्च्चेत तथा दूर्व्वाग्रपल्लवैः ॥"
इति वामने ९१ अध्यायः ॥ * ॥
विष्णौ पुष्पविशेषदानस्य फलं यथा, --
"आरामप्रभवैः पुष्पैरच्छिद्रैः कीटवर्जितैः ।
तथापर्य्युषितैस्तद्वत् कार्त्तिके विष्णुमर्च्चयेत् ॥
वर्णानां हि यथा विप्रस्तीर्थानां जाह्नवी यथा ।
देवानाञ्च यथा विष्णुः पुष्पाणां मालती तथा ॥
मालतीमालया देवं योऽर्च्चयेद्गरुडध्वजम् ।
जन्मदुःखजरारोगैः कर्म्मभिर्मुक्तिमाप्नुयात् ॥
मालतीमालया येन पूजितः कार्त्तिके हरिः ।
पापलक्षायुतं तस्य वत्स ! शौरिः प्रमार्जति ॥
मालतीपुष्पमालाभिः कार्त्तिके पुष्पमण्डपम् ।
विष्णोर्गृहे कृतं यैस्तु ते यान्ति परमां गतिम् ॥
जातिपुष्पैर्विरचितां मालां यः संप्रयच्छति ।
विष्णवे विधिवद्भक्त्या तस्य पुण्यफलं शृणु ॥
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।
वसेद्विष्णुपुरे श्रीमान् विष्णुतुल्यपराक्रमः ॥
यः स्वर्णकेतकीपुष्पैः पूजयेद्गरुडध्वजम् ।
अब्दकोटिशतं यावत्तुष्टः स्यात्तस्य वै हरिः ॥
दामोदरं पूजयेद्यः कुसुमैः केतकोद्भवैः ।
स वसेद्विष्णुनिलये देवेन सह मोदते ॥
मल्लिकाकुसुमैर्द्देवं योऽर्च्चयेत्त्रिदशेश्वरम् ।
कार्त्तिके परया भक्त्या दहेत् पापं त्रिधार्जितम् ॥
सुगन्धैर्मल्लिकापुष्पैरच्युतं योऽर्च्चयेन्मुने ! ।
स सर्व्वपापनिर्मुक्तो विष्णुलोके महीयते ॥
वेदधर्म्मेण केनात्र संप्राप्ते मधुमाधवे ।
योऽर्च्चयेत् स मुनिश्रेष्ठ ! लभते वैष्णवं पदम् ॥

शब्दरत्नावली ॥

**पुष्टिदा**, स्त्री, (पुष्टिं ददातीति । दा + कः ।)

अश्वगन्धा । वृद्धिः । इति राजनिर्घण्टः ॥
पुष्टि-
दात्री च ॥

**पुष्प**, य फुल्लने । इति कविकल्पद्रुमः ॥ (दिवा०-

पर०-अक०-सेट् ।) पञ्चमस्वरी ।
मूर्द्धन्योपधः ।
पुल्लनं विकसनम् । य, पुष्प्यति कुन्दकोरकम्
।
इति दुर्गादासः ॥

**पुष्पं**, क्ली, पुष्प्यति विकसति यः । (पुष्प फुल्लने +

अच् ।) तरुलतादीनां प्रसवः । फुल इति
भाषा । तत्पर्य्यायः । प्रसूनम् २ । कुसुमम् ३
सुमनसः ४ । इत्यमरः । २ । ४ । १७ ॥
सूनम् ५
प्रसवः ६ सुमनः ७ । इति शब्दरत्नावली ॥
स्वहस्तपुष्पचयनफलं यथा, --
"उपहार्य्याणि पुष्पाणि मम कर्म्मपरायणः ।
यो मामुपानयेद्भूमे मम कर्म्मपथे स्थितः ॥
पुष्पाणि तत्र यावन्ति मम मूर्द्धनि धारयेत् ।
स कृत्वा पुष्कलं कर्म्म मम लोकाय गच्छति
॥"
अकर्म्मण्यपुष्पदाने दोषो यथा, --

सकेशं मूषिकाधूतं यत्नेन परिवर्ज्जयेत् ॥
याचितं परकीयञ्च तथा पर्य्युषितञ्च यत् ।
अन्त्यस्पृष्टं पदास्पृष्टं यत्नेन परिवर्ज्जयेत् ॥"
इति कालिकापुराणे । ६८ । ५४ । अध्यायौ ॥
केशवपूजने प्रशस्तपुष्पाणि यथा, --
"मालती मल्लिका चैव यूथिका चातिमुक्तकः ।
पाटला करवीरञ्च जया सेवतिरेव च ॥
कुब्जकस्त्वगुरुश्चैव कर्णिकारः कुरुण्टकः ।
चम्पकस्तगरः कुन्दो वाणा वर्व्वरमल्लिका ॥
अशोकस्तिलकश्चम्पस्तथाचैवाटरूषकः ।
अमी पुष्पप्रकारास्तु शस्ताः केशवपूजने ॥
केतकीपत्रपुष्पञ्च पुष्पं भृङ्गारकस्य च ।
तुलस्यामलकी चैव सद्यस्तुष्टिकरं हरेः ॥

यः पुनः पाटलापुष्पैरर्च्चयेद्गरुडध्वजम् ।
सुपुण्यात्मा परं स्थानं स प्रयाति हरेर्मुने ! ॥
अगस्त्यपुष्पैर्देवेशं येऽर्च्चयन्ति जनार्द्दनम् ।
देवर्षे ! दर्शनात्तेषां नरकाग्निः प्रणश्यति ॥
न तत् करोति विप्रेन्द्र ! तपसा तोषितो हरिः ।
यत् करोति हृषीकेशो मुनिपुष्पैरलङ्कृतः ॥
विहाय सर्व्वपुष्पाणि मुनिपुष्पे ण केशवम् ।
कार्त्तिके योऽर्च्चयेद्भक्त्या वाजिमेधफलं लभेत्
॥
मुनिपुष्पकृतां मालां ये यच्छन्ति जनार्द्दने ।

शक्रोऽपि तैः समं वत्स ! कुरुते
ह्यभिभाषणम् ॥
ददात्यभीप्सितान् कामान्
वृक्षचिन्तामणिर्यथा ।
कार्त्तिके मुनिपुष्पेण पूजितो गरुडध्वजः
॥
गवामयुतदानेन यत्फलं कार्त्तिके मुने ! ।
मुनिपुष्पेण चैकेन कार्त्तिक्यां तत् फलं
स्मृतम् ॥
येऽर्च्चयन्ति सुराध्यक्षं करवीरैः
सितासितैः ।
तेषां वर्षशतं यावत् प्रभुर्भवति केशवः ॥
वकुलाशोककुसुमैर्येऽर्च्चयन्ति
जगत्पतिम् ।
निःशङ्कास्ते भवन्तीह
यावच्चन्द्रदिवाकरौ ॥
अशोककुसुमै रम्यैर्जन्मशोकभयापहम् ।
पूजयित्वा हरिं याति पदं विष्णोरनामयम्
॥
शुभगन्धैः सितैर्वत्स ! कुसुमैः
पङ्कजोद्भवैः ।
अधोक्षजं समभ्यर्च्च्य नरो याति हरेः
पदम् ॥
अभ्यर्च्च्य कौसुमैः पुष्पैः केशयं
क्लेशनाशनम् ।
प्रयाति भवनं विष्णोर्व्वन्दितं त्रिदशैरपि
॥
अटरूषकपुष्पैश्च पूजयेद्यो जगत्पतिम् ।
स पुण्यवान्नरो याति तद्विष्णोः परमं
पदम् ॥
कार्त्तिके योऽर्च्चयेद्विष्णुं
तुलसीविल्वपङ्कजैः ।
त्रिदशैरपि पूज्यः स न शक्यो
यमकिङ्करैः ॥
माधवे योऽर्च्चयेद्विष्णुं
तुलसीविल्वपङ्कजैः ।
त्रिदशैरपि पूज्यः स वक्तं शक्यो न
किङ्करैः ॥
माधवे योऽर्च्चयेद्विष्णुं
सुपुष्पैस्तिलकोद्भवैः ।
धूतपापो निरातङ्कः स विष्णोर्याति तत्
पदम् ॥

योऽर्च्चयेत् परमं विष्णुं संसारे न पुनर्व्विशेत् ॥
कुन्दपुष्पैश्च विप्रर्षे ! योऽर्च्चयेद्गरुडध्वजम् ।
कोटिजन्मार्जितं पापं तत्क्षणादेव नश्यति ॥
शमीपुष्पैश्च देवेशं पूजयेदसुरद्विषम् ।
यमं न पश्येद्विप्रर्षे ! न याति दुर्गतिं नरः ॥”
इति पाद्मोत्तरखण्डे १३१ अध्यायः ॥ * ॥
लक्ष्मीतुल्यप्रियपुष्पाणियथा, नारदीयसप्तम-
सहस्रे ।
“मालतीवकुलाशोकशेफालिनवमालिकाः ।
अम्लानतगराङ्कोठमल्लिकामधुपिण्डिकाः॥
यूथिमष्टापदं कुन्दं कदम्बं मधुपिप्पलम् ।
पाटला चम्पकं कृष्णं लवङ्गमतिमुक्तकम् ॥
केतकं कुरुवकं विल्वं कह्लारकरकं द्विजम् ।
पञ्चविंशतिपुष्पाणि लक्ष्मीतुल्यप्रियाणि मे ॥”
केशवार्च्चने निषिद्धपुष्पाणि यथा,
विष्णुधर्म्मोत्तरे ।
“उग्रगन्धीन्यगन्धीनि कुसुमानि न दापयेत् ।
अन्यायतनजातानि कण्टकीनि तथैव च ॥
रक्तानि यानि धर्म्मज्ञ ! चैत्यवृक्षोद्भवानि च ।
श्मशानजातान्यन्यानि यानि चाकालजानि च
॥”
तथा ।
“कुटजं शाल्मलीपुष्पं शिरीषञ्च जनार्द्दने ।
निवेदितं भयं रोगं निःस्वत्वञ्च प्रयच्छति ॥
बन्धुजीवकपुष्पाणि रक्तान्यपि च दापयेत् ।
अनुक्तरक्तकुसुमदानात् दौर्भाग्यमाप्नुयात् ॥”
परारोपितवृक्षस्य पुष्पग्रहणे दोषः । अगस्त्यः ।
“परारोपितवृक्षेभ्यः पुष्पाण्यानीय योऽर्च्चयेत् ।
अविज्ञाप्य च तस्यैव निष्फलं तस्य पूजितम् ॥”
एतद्द्विजेतरपरम् ।
“द्विजस्तृणैधःपुष्पाणि सर्व्वतः स्ववदाहरेत् ॥”
इति याज्ञवल्क्यात् ॥
“देवाद्यर्थन्तु कुसुममस्तेयं मनुरब्रवीत् ॥”
इति वचनात् ॥
“गोऽग्न्यर्थे तृणमेधांसि वीरुद्वनस्पतीनाम् ।
पुष्पाणि स्ववदाददीत फलानि चापरिबृंहि-
तानि ॥”
इति गोतमवचनाच्च ॥
द्विजेतरस्य दण्डोऽपि ।
“तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलम् ।
अप्रयच्छन्निगृह्णानो हस्तच्छेदनमर्हति ॥”
इति स्मृतेः ॥ * ॥
देवोपरि धृतं मस्तकोपरि धृतं अधोवस्त्रधृतं

शूद्रानीतैः क्रयक्रीतैः कर्म्म कुर्व्वन् पतत्यधः ॥”
क्रये प्रतिप्रसवमाह ब्रह्मपुराणम् ।
“पुष्पैर्धूपैश्च नैवेद्यैर्वीरक्रयक्रियाहृतैः ॥”
वीरक्रयो वीरवत् याच्ञाशून्येन विक्रेतुरुपन्यस्त-
मूल्येन क्रयः ॥ * ॥ पुष्पदानप्रकारो ज्ञान-
मालायाम् ।
“पुष्पं वा यदि वा पत्रं फलं नेष्टमधोमुखम् ।
पुष्पाञ्जलिविधिं हित्वा यथोत्पन्नं तथार्पणम् ॥”
मध्याह्नस्नानानन्तरं पुष्पचयनस्य दोषो यथा, --
“स्नानं कृत्वा तु ये केचित् पुष्पं गृह्णन्ति वै
द्विजाः ।
देवतास्तन्न गृह्णन्ति भस्मीभवति दारुवत् ॥”
एतत्तु द्वितीयस्नानाभिप्रायम् । इति रत्नाकरः ॥
व्यक्तं मत्स्यसूक्ते ।
“स्नात्वा मध्याह्नसमये न छिन्द्यात् कुसुमं नरः ।
तत्पुष्पस्यार्च्चने देवि ! रौरवे परिपच्यते ॥”
पुष्पाभावे देयानि यथा, विष्णुधर्म्मोत्तरे ।
“पुष्पाभावेऽपि देयानि पत्राणि च जनार्द्दने ।
पत्राभावे जलं दद्यात्तेन पुण्यमवाप्यते ॥” * ॥
पुष्पदानमाहात्म्यं यथा, --
“न रत्नैर्न सुवर्णेन न वित्तेन च भूरिणा ।
तथा प्रसादमायाति यथा पुष्पैर्जनार्द्दनः ॥ * ॥
देवताविशेषे वर्ज्जनीयपुष्पं यथा, शातातपः ।
“शिवे विवर्ज्जयेत् कुन्दमुन्मत्तञ्च हरेस्तथा ।
देवीनामर्कमन्दारौ सूर्य्यस्य तगरन्तथा ॥” * ॥
पुष्पविशेषाणां कालिकपर्य्युषितत्वम् । भविष्ये ।
“पद्मानि सितरक्तानि कुमुदान्युत्पलानि च ।
एषां पर्य्युषिताशङ्का कार्य्या पञ्चदिनोत्तरम् ॥”
पुष्पविशेषस्यापर्य्युषितत्वं यथा, --
“तुलस्यगस्त्यविल्वानां न च पर्य्युषितात्मता ॥”
योगिवीतन्त्रे ।
“विल्वपत्रञ्च माध्यञ्च तमालामलकीदलम् ।
कह्लारं तुलसीञ्चैव पद्मञ्च मुनिपुष्पकम् ।
एतत् पर्य्युषितं न स्यात् यच्चान्यत् कलिका-
त्मकम् ॥”
कलिकात्मकं प्रस्फुटनयोग्यम् । इत्येकादशी-
तत्त्वम् ॥ राघवभट्टमते पुष्पविशेषाणां कालिक-
पर्य्युषितत्वं यथा, --
“विल्वापामार्गजातीतुलसिशमिशताकेतकीभृङ्ग-
दूर्व्वा
मन्दाम्भोजाहिदर्भा मुनितिलतगरब्रह्मकह्लार-
मल्ली ।
चम्पाश्वारातिकुम्भीदमनमरुवका विल्वतो-

समित्पुष्पकुशादीनि श्रोत्रियः स्वयमाहरेत् ।
शूद्रोपनीतैश्च हरेः पूजां कुर्व्वन् व्रजत्यधः ॥
तस्माद्विप्रो मुनिश्रेष्ठ ! शिष्येण स्वयमेव वा ।
पुष्पादीनि समाहृत्य पूजयेत् परमेश्वरम् ॥
विप्रो दूर्व्वामयैः पुष्पैस्तथा काशकुशोद्भवैः ।
तुलसीविल्वपत्रैश्च पूजयेद्देवताः पितॄन् ॥
नार्च्चयेत्तगरैः सूर्य्यं घूर्त्तपुष्पेण केशवम् ।
देवीं लकुचपुष्पैश्च शङ्करं नागकेशरैः ॥”
कालविशेषे तस्य पर्य्युषितत्वम् यथा, --
“प्रहरं तिष्ठते जाती प्रहरार्द्धन्तु मल्लिका ।
त्रियामं मुनिपुष्पञ्च करवीरमहर्निशम् ॥”
आम्रमञ्जरीविल्वपत्रदानफलंयथा, --
“मञ्जरीं सहकारस्य ये प्रयच्छन्ति वैष्णवाः ।
कार्त्तिके सफलास्ते स्युर्गोकोटिफलभागिनः ॥
कार्त्तिके योऽर्च्चयेद्भक्त्या विल्वपत्रेण केशवम् ।
दद्याद्यज्ञायुतफलं केशवस्तस्य वै मुने ! ॥
विल्वपत्रेण ये कृष्णं कार्त्तिके कलिमर्द्दनम् ।
पूजयन्ति महाभक्त्या मुक्तिस्तेषां करे स्थिता ॥
नागकेशरपुष्पैर्यः पूजयेद्गरुडध्वजम् ।
स याति वैष्णवं स्थानं यत्र गत्वा न शोचते ॥
कदम्बकुसुमैर्यो वै पूजयेन्मधुसूदनम् ।
जन्मायुतार्जितं पापं स्फोटितं तेन नारद ! ॥
न तथा केतकीपुष्पैर्मालतीकुसुमैस्तथा ।
तोषमायाति देवेशः कदम्बकुसुमैर्यथा ॥
दृष्ट्वा कदम्बपुष्पाणि तोषमायाति माधवः ।
किं पुनः पूजितो देवः सर्व्वकामप्रदो हरिः ॥
अन्तर्जलक्षालितञ्च पुष्पं दुष्टमिति हरिभक्तिनामके ग्रन्थे ॥ अभिवाद्याभिवादककरस्थपुष्पं प्रोक्षणात् कर्म्मण्यम् । इति केचित् ॥ * ॥
याचितादिपुष्पदानस्य निष्फलत्वम् । याचितं निष्फलं पुष्पं क्रयक्रीतञ्च निष्फलमिति वदन्ति ।
वामहस्तचितादिपुष्पस्याग्राह्यत्वं यथा, --
“न पुष्पच्छेदनं कार्य्यं देवार्थं वामहस्ततः ।
न दद्यात्तानि देवेभ्यः संस्थाप्य वामहस्ततः ॥”
समित्पुष्पादीनां स्वयमाहरणीयत्वं हारीतशातातपौ ।
“समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत् ।
ऽहानि शस्तास्त्रिंशत्त्र्येकार्य्यरीशोनिधिनिधिवसु-भू-भू-यमा भूय एवम् ॥”
अस्यार्थः । शता शतावरी । मन्दः मन्दारः । अहिर्नागकेशरः । मुनिरगस्त्यः । अश्वारातिः करवीरः । कुम्भी पाटला । विल्वमारभ्य अहिपर्य्यन्तं गणयित्वा दर्भमारभ्य पुनस्त्रिंशदादि गणयेत् । एतद्दिनोत्तरं पर्य्युषितानीत्यर्थः । इति पदार्थादर्शः ॥ * ॥ पुष्पक्रीडायां वर्णनीयानि यथा,

| हरिं किंशुकपुष्पैर्यः पूजयेत्त्रिदशाधिपम्<br>।<br>वैकुण्ठे रमते शश्वत् विष्णुना सह<br>वैष्णवः ॥<br>वर्षाकाले च देवेशं कुमुदैश्चन्दनाचितैः । | | |
|---|---|---|

पुष्पचयनम् १ पुष्पार्पणे दयितार्थिता २
माला ३
गोत्रस्खलनेर्ष्या ४ वक्रोक्तिः ५
सम्भ्रमाश्लेषः ६ ।
इति कविकल्पलता ॥
(घोटकलक्षणविशेषः ।
यथा, अश्ववैद्यके । ३ । ८२ -- ९२ ।
"आगन्तवस्तुरङ्गस्य ये
भवन्त्यन्यवर्णगाः ।
विन्दवः पुष्पसंज्ञास्तु ते
हिताहितसंज्ञकाः ॥
तेषां प्रदेशभेदेन लक्षणं यद् व्यवस्थितम्
।
तत्तथैव समासेन विस्पष्टं कोर्त्त्यतेऽधुना
॥
अपाने च ललाटे च भ्रुवोर्मर्द्धनि कर्णयोः ।
निगाले चैव केशान्ते पुष्पं धन्यतमं
स्मृतम् ॥
स्कन्धे वक्षसि कक्षे च
मुष्कयोर्बाह्णुकेशयोः ।
हन्वोः पृष्ठे च वाहानां पुष्पं स्वामिहित-
प्रदम् ॥
नाभौ केशे तथा कण्ठ दन्ते चव हि
वाजिनाम् ।
पुष्पं धन्यतमं प्रोक्तं भर्त्तुः
सर्व्वार्थसाधकम् ॥
अप्रशस्तानि दृष्टानि मुनिभिर्यानि
वाजिनाम् ।
तानि सम्यक् प्रवक्ष्यामि
पुष्पाण्यागमदर्शनात् ॥
अधरोष्ठे कठे प्रोथे उत्तरौष्ठे तथैव च ।
घोणायां गण्डयोश्चैव शङ्खयोश्च तथा
भ्रुवोः ॥
ग्रीवायाञ्च वहे चैव सृक्कणोः स्थूरके
स्फिचि ।
पायौ क्रोडे च पुष्पाणि निन्दितानीति
निश्चयः ॥
रक्तं पीतं तथा कृष्णं पुष्पं सर्व्वत्र नेष्यते
।
शुभप्रदेशसञ्जातं भवेत् साधारणं ततः ॥
पुत्रलाभं धनप्राप्तिमारोग्यं विजयं तथा ।
विन्द्यात् पुष्पैः शुभैर्भर्त्तुरशुभैश्च
विपर्य्ययम् ॥
प्रतिकृतौ ।" ५ । ३ । ९६ । इति कन् ।)
धनदस्य विमानम् । (कालपर्य्ययेण घनदं
विजित्य रावणेन हृतेऽस्मिन् रावणस्यैव जातम् ।
यथा, रघौ । १० । ४६ ।
"वैमानिकाः पुण्यकृतः त्यजन्तु मरुतां पथि ।
पुष्पकालोकसं क्षोभं मेघावरणतत्पराः ॥")
नेत्ररोगः । रत्नकङ्कणम् । रसाञ्जनम् । लोह-
कांस्यम् । मृदङ्गारशकटी । इति मेदिनी ॥
कासीसम् । इति हेमचन्द्रः ॥ (पुष्प + स्वार्थे
कन् । पुष्पम् । यथा, गारुडे १८२ अध्याये ।
"सप्ताभिमन्त्रितं कृत्वा करवीरस्य पुष्पकम् ।
स्त्रीणामग्रे भ्रामयेच्च क्षणाद्वै सा वशा भवेत् ॥"
पुं, निर्व्विषसर्पजातिभेदः । यथा, सुश्रुते कल्प-
स्थाने । ४ अध्याये ।
"निर्व्विषास्तु गलगोली शूकपत्रोऽजगरो
दिव्यको वर्षहिकः पुष्पशकली ज्योतीरथः
क्षीरिकः पुष्पकोऽतिपताकोऽन्धाहिकोगौरा-
हिको वृक्षेशय इति ॥" * ॥ पर्व्वतभेदः । यथा,
मार्कण्डेये । ५५ । १३ ।
"स्वर्णशृङ्गी शातशृङ्गी पुष्पको मेघपर्व्वतः ॥"
प्रासादस्य मण्डपभेदः । यथा विश्वकर्म्मप्रकाशे
।
६ अध्याये ।
"अथातः संप्रवक्ष्यामि मण्डपानाञ्च लक्षणम् ।
मण्डपान् प्रवरान् वक्ष्ये प्रासादस्यानुरूपतः ॥
विविधा मण्डपाः कार्य्याः श्रेष्ठमध्यकनीयसः ।
नामतस्तान् प्रवक्ष्यामि शृणुध्वं द्विजसत्तमाः ॥
पुष्पकः पुष्पभद्रश्च सुवृतो मृतनन्दनः ।
कौशल्यो बुद्धिसंकीर्णो गजभद्रो जयावहाः ॥")

**पुष्पकरण्डकं**, क्ली, (पुष्पाधार करण्ड इव काय-
तीति । कै + कः । बहुतरमनोरमपुष्पाधारक-
त्वादस्य तथात्वम् ।) उज्जयन्यां शिवस्य उद्या-
नम् । यथा, शब्दमाला ।
"महाकालस्योज्जयनी विशालावन्तिका तथा ।
तस्य उद्यानकं ज्ञेयं नाम्ना पुष्पकरण्डकम् ॥"

**पुष्पकरण्डिनी**, स्त्री, (पुष्पकरण्डकं शिवोद्यान-
मस्त्यस्या इति । इनिः । स्त्रियां ङीप् ।)
उज्जयिनी । यथा, हेमचन्द्रः । ४ । ४१ ॥
"उज्जयिनी स्याद्विशालावन्ती पुष्पकरण्डिनी
॥"

**पुष्पकासीसं**, क्ली, (पुष्पमिव कासीसम् ।) पीत-

**पुष्पकीटः**, पुं, (पुष्पप्रियः कीटः ।) भ्रमरः । इति
त्रिकाण्डशेषः ॥ कुसुमकृमिमात्रञ्च ॥

**पुष्पकेतनः**, पुं, (पुष्पं केतनं ध्वजो यस्य ।)
कामदेवः । इति हेमचन्द्रः । २ । १४२ ॥

**पुष्पकेतु**, क्ली, (पुष्पस्य नेत्ररोगविशेषस्य केतुरिव
विनाशकत्वात् ।) कुसुमाञ्जनम् । इत्यमरः ।
२ । ९ । १०३ ॥

**पुष्पघातकः**, पुं, (हन्तीति । हन + ण्वुल् । घातकः ।
पुष्पाणां पुष्पवृक्षाणां घातकः नाशकः ।) वंशः ।
इति शब्दमाला ॥

**पुष्पचापः**, पुं, (पुष्पमेव पुष्पमयो वा चापोऽस्य ।)
कामदेवः । इति हेमचन्द्रः । २ । १४१ ॥ (यथा,
कथासरित्सागरे । १४ । २९ ।
"सा संमोहनवायव्यवारुणास्त्रैर्निरन्तरैः ।
विद्धेव पुष्पचापेन तत्क्षणं समलक्ष्यत ॥"
पुष्पाणां चापः । पुष्पधनुः । यथा, रघौ । ११ ।
४५ ।
"आततज्यमकरोत् स संसदा
विस्मयस्तिमितनेत्रमीक्षितः ।
शैलसारमपि नातियत्नतः
पुष्पचापमिव पेशलं स्मरः ॥")

**पुष्पचामरः**, पुं, (पुष्पं चामर इवास्य ।) दमन-
वृक्षः । इति त्रिकाण्डशेषः ॥ केतकवृक्षः । इति
शब्दमाला ॥

**पुष्पदः**, पुं, (पुष्पं ददातीति । दा + कः ।) वृक्षः ।
इति हेमचन्द्रः । ४ । १८० ॥ पुष्पदातरि,
त्रि ॥

**पुष्पदन्तः**, पुं, (पुष्पमिव शुक्लो दन्तोऽस्य ।) वायु-
कोणस्थदिग्गजः । इत्यमरः । १ । ३ । ४ ॥
विद्याधर-
विशेषः । इति मेदिनी । ते, २१३ ॥ जिनभेदः ।
इति हेमचन्द्रः ॥ नागभेदः । इति धरणिः ॥
(यथा, महाभारते । ७ । २०० । ७० ।
"अर्णीं कृत्वैलपुत्त्रञ्च पुष्पदन्तञ्च त्र्यम्बकः ॥"
पार्व्वतीप्रदत्तः कार्त्तिकेयस्यानुचरविशेषः । यथा,
महाभारते । ९ । ४५ । ४९ ।
"उन्मादं पुष्पदन्तञ्च शङ्कुकर्णं तथैव च ।
प्रददावग्निपुत्राय पार्व्वती शुभदर्शना ॥"

सर्व्वाङ्गपुष्पितो वाजी परित्याज्जो न संशयः ॥”)
स्त्रीरजः । (यथा, मार्कण्डेये । ५१ । ४२ ।
“स्त्रीणां पुष्पं हरत्यन्या प्रवृत्तं सा तु कन्यका ॥”)
विकाशः । इति मेदिनी । पे, ८ ॥ धनदस्य विमानम् । नेत्ररोगविशेषः । इति हेमचन्द्रः ॥
फुली इति भाषा ॥ अस्यौषधं यथा, --
“हरीतकी वचा कष्ठं पिप्पली मरिचानि च ।
विभीतकस्य मज्जा च शङ्खनाभिर्म्मनःशिला ।
सर्व्वमेतत् समं कृत्वा छागीक्षीरेण पेषयेत् ॥
नाशयेत्तिमिरं कण्डू पटलान्यर्व्वुदानि च ।
अधिकानि च मांसानि यश्च रात्रौ न पश्यति ॥
अपि द्विवार्षिकं पुष्पं मासेनैकेन साधयेत् ।
वर्त्तिश्चन्द्रोदया नाम नृणां दृष्टिप्रसादनी ॥”
इति चक्रपाणिदत्तः ॥
(अस्य चिकित्सान्तरं यथा, --
“पूर्ब्बाहारविहारैस्तु नेत्रे पुष्पञ्च जायते ।
प्रथमं सुखसाध्यं स्यात् द्वितीयं कष्टसाध्यकम् ॥
तृतीयं शस्त्रसाध्यन्तु चतुर्थन्तदसाध्यकम् ।
शङ्खपुष्पं तथा रोघ्रं शङ्खनाभिर्म्मनःशिला ॥
काञ्जिकेन तु संपेष्य छायाशुष्का भिषग्वर ! ।
वातिके काञ्जिकेनापि पैत्तिके पयसा हिता ॥
श्लैष्मिके मूत्रसंयुक्ता पुष्पस्याञ्जनतो हिता ।”
इति हारीते चिकित्सितस्थाने चतुश्चत्वारिंश-त्तमेऽध्याये ॥)

**पुष्पकं**, क्ली, (पुष्पमिव पुर्य्यैर्व्वा कायति प्रकाशते वर्णकासीसम् । यथा, भावप्रकाशे ।
“अथ कासीसं भस्मवन्मृत्तिकाम्लम् ।
कासीसं धातुकासीसं पांशुकासीसमित्यपि ।
तदेव किञ्चित् पीतन्तु पुष्पकासीसमुच्यते ॥
कासीसमम्लमुष्णञ्च तिक्तञ्च तुवरं तथा ।
वातश्लेष्महरं केश्यं नेत्र्यं कण्डूविषप्रणुत् ।
मूत्रकृच्छ्राश्मरीश्वित्रनाशनं परिकीर्त्तितम् ॥”
तत्पर्य्यायः । कंसकम् २ नेत्रौषधम् ३ । इति हेमचन्द्रः ॥ वत्सकम् ४ मलीमसम् ५ ह्रस्वम् ६ विषदम् ७ नीलमृत्तिका ८ । अस्य गुणाः । तिक्तत्वम् । शीतत्वम् । नेत्रामयापहत्वम् । लेपेन पामाकुष्ठादिनानात्वग्दोषनाशित्वञ्च । इति राजनिर्घण्टः ॥ विष्णोरनुचरविशेषः । यथा, भागवते । ८ । २१ । १७ ।
“जयन्तः श्रुतदेवश्च पुष्पदन्तोऽथ सात्वतः ॥”
शिवगणभेदः । यथा, कथासरित्सागरे । १ । ४९ ।
“प्रसादवित्तकः शम्भोः पुष्पदन्तो गणोत्तमः ।
न्यषेधि च प्रवेशोऽस्य नन्दिना द्वारि तिष्ठता ॥”)

**पुष्पदन्तकः**, पुं, गन्धर्व्वविशेषः । स च महिम्नः स्तवकर्त्ता । इति शब्दरत्नावली ॥

**पुष्पद्रवः**, पुं, (पुष्पाणां द्रवः ।) पुष्परसः । तत्-पर्य्यायः । पुष्पसारः २ पुष्पस्वेदः ३ पुष्पजः ४ पुष्पनिर्यासकः ५ पुष्पाम्बुजः ६ । अस्य गुणाः । सुरभित्वम् । शीतत्वम् । कषायत्वम् । गौल्य-त्वम् । दाहभ्रमार्त्तिवमिमोहमुखामयतृष्णार्त्ति पित्तकफदोषचिरारोचकनाशित्वम् । सरत्वम् । सन्तर्पणत्वञ्च । इति राजनिर्घण्टः ॥

**पुष्पधन्वा**, [न्] पुं, (पुष्पं धनुरस्येति । “धनु-पश्च ।” ५ । ४ । १३२ । इति अनङादेशः ।)

कामदेवः । इत्यमरः । १ । १ । २७ ॥ (यथा, कुमारसम्भवे । २ । ६४ ।
"सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः
शतमखमपतस्थे प्राञ्जलिः पुष्पधन्वा ॥")

**पुष्पनिक्षः**, पुं, (पुष्पं निक्षति चुम्बतीति । पुष्प + निक्ष + "कर्म्मण्यण् ।" ३ । २ । १ । इत्यण् ।) भ्रमरः । इति शब्दचन्द्रिका ॥

**पुष्पन्धयः**, पुं, (पुष्पं धयतीति । धेट पाने + खश् ।
"अरुर्द्विषदजन्तस्य मुम् ।" ६ । ३ । ६७ । इति मुम् ।)
भ्रमरः । इति राजनिर्घण्टः ॥
पुष्परसपानकर्त्तरि,
त्रि । पुष्पशब्दाद्धेटधातोः कर्त्तरि खशप्रत्यय-निष्पन्नत्वात् । इति मुग्धबोधच्याकरणम् ॥

**पुष्पपथः**, पुं, (पुष्पस्य स्त्रीरजसः पन्थाः सरणिः ।) योनिः । इति त्रिकाण्डशेषः ॥

**पुष्पपुरं**, क्ली, (पुष्पवत् पाटलिपुष्पयुक्तं तद्वत् शोभाजनकं वा पुरम् ।) पाटलिपुत्त्रनगरम् । इति भूरिप्रयोगः ॥ (यथा, रघौ । ६ । २४ ।
"अनेन चेदिच्छसि गृह्यमाणं
पाणिं वरेण्येन कुरु प्रवेशे ।
प्रासादवातायनसंश्रितानां
नेत्रोत्सवं पुष्पपुराङ्गनानाम् ॥"
"पुष्पपुराङ्गनानां पाटलिपुराङ्गनानाम् ।" इति तट्टीकायां सल्लिनाथः ॥)

**पुष्पफलः**, पुं, (पुष्पयुक्तं फलं यस्य ।) कुष्माण्डः । इति शब्दमाला ॥ कपित्थः । इत्यमरः । २ । ४ । २१ ॥

**पुष्पमासः**, पुं, (पुष्पानां मासः पुष्पप्रधानो मासो वा ।) वसन्तः । इति राजनिर्घण्टः ॥ (यथा, हरिवंशे । ५६ । ४ ।
"मासान् वै पुष्पमासादीन् गणयन्तु मम स्त्रियः ।
परिणामे तु गर्भस्य शेषं ज्ञास्यामहे वयम् ॥")

**पुष्परक्तः**, पुं, (पुष्पे पुष्पावच्छेदे रक्तं रक्तवर्ण-मस्य । यद्वा, पुष्पं रक्तमस्य ।) सूर्य्यमणि-वृक्षः । इति शब्दचन्द्रिका ॥

**पुष्परसः**, पुं, (पुष्पाणां रसः ।) मकरन्दः । इत्य-

अम्लत्वम् । शीतत्वम् । वातनाशित्वम् । दीपन-त्वञ्च ॥ * ॥ तस्य धारणगुणः । आयुःश्रीप्रज्ञा-कारित्वम् ॥ * ॥ तस्य लक्षणं यथा, --
"सुच्छायपीतगुरुगात्रसुरङ्गशुद्धं
स्निग्धञ्च निर्म्मलमतीव सुवृत्तशीतम् ।
यः पुष्परागसकलं कलयेदमुष्य
पुष्णाति कीर्त्तिमतिशौर्य्यसुखायुरथान् ॥" * ॥
तस्य कुलक्षणं यथा, --
"कृष्णविन्द्वङ्कितं रूक्षं धवलं मलिनं लघु ।
विच्छायं शर्करागारं पुष्परागं सदोषकम् ॥"
तस्य परीक्षालक्षणे यथा, राजनिर्घण्टे ।
"घृष्टो विकाशयेत् पुष्परागमधिकमात्मीयम् ।
न खलु पुष्परागो जात्यतया परीक्षकैरुक्तः ॥"
तस्योत्पत्त्यादि यथा, --
सूत उवाच ।
"पतिता या हिमाद्रौ हि त्वचस्तस्य सुरद्विषः ।
प्रादुर्भवन्ति ताभ्यस्तु पुष्परागा महागुणाः ॥
आपीतपाण्डुरुचिरः पाषाणः पुष्परागसंज्ञस्तु ।
कौरुण्टकनामा स्यात् स एव यदि लोहितापीतः ॥
आलोहितस्तु पीतः स्वच्छः काषायकः स एवोक्तः ।
आनीलशुक्लवर्णः स्निग्धः सोमालकः स्वगुणैः ॥
अत्यन्तलोहितो यः स एव खलु पद्मरागसंज्ञः स्यात् ।
अपि चेन्द्रनीलसंज्ञः स एवं कथितः सुनीलः सन् ॥
मूल्यं वैदुर्य्यमणेरिव गदितं ह्यस्य रत्नशास्त्र-विदा ।
धारणफलञ्च तद्वत् किन्तु स्त्रीणां सुतप्रदो भवति ॥"
इति गारडे ७५ अध्यायः ॥ * ॥
प्रकारान्तरम् ।
"शणपुष्पसमः कान्त्या स्वच्छभावस्तु चिक्कणः ।
पुत्त्रदो धनदः पुण्यः पुष्परागमणिर्धृतः ॥
दैत्यधातुसमुद्भूतः पुष्परागमणिर्द्विधा ।
पद्मरागाकरे कश्चित् कश्चित्तार्क्ष्योपलाकरे ॥
ईषत्पीतच्छविच्छायास्वच्छंकान्त्या मनो-हरम् ॥
पुष्परागमिति प्रोक्तं रङ्गसोममहीभुजा ॥
ब्रह्मादिजातिभेदेन तद्विज्ञेयं चतुर्विधम् ।

इत्यण् ।) मालाकारः । इति जटाधरः ॥ (स्त्रियां ङीष् । मालाकारपत्नी । यथा, मेघदूते । २८ ।
"गण्डस्वेदापनयनरुजा
क्लान्तकर्णोत्पलानां
छायादानक्षणपरिचितः पुष्पलावीमुखानाम् ॥")

**पुष्पलावी**, [न्] पुं, (पुष्पं लुनातीति । लूञ्-च्छिदि + णिनिः ।) मालाकारः । इति हेम-चन्द्रः । ३ । ५६४ ॥

**पुष्पलिट्**, [ह्] पुं, (पुष्पं लेढीति । लिह + क्विप् ।) भ्रमरः । इत्यमरः । २ । ५ । २९ ॥

**पुष्पवती**, स्त्री, (पुष्पमस्त्यस्या इति । पुष्प + मतुप् । मस्य वः । ततो ङीप् ।) रजस्वला । इत्यमरः । २ । ६ । २० ॥ (यदुक्तं, --
"कालमेही भवेत् सोऽपि पुष्पवत्याश्च धर्षणात् ॥"
तीर्थविशेषः । यथा, महाभारते । ३ । ८५ । १२ ।
"पुष्पवत्यामुपस्पृश्य त्रिरात्रोपषितो नरः ।
गोसहस्रफलं लब्ध्वा पुनाति स्वकुलं नृप ! ॥")
पुष्पविशिष्टे, त्रि ॥ (यथा, रामायणे । २ । ९४ । १० ।
"पुष्पवद्भिः फलोपेतैश्छायावद्भिर्मनोरमैः ॥")

**पुष्पवन्तौ**, पुं, (पुष्प विकासे + भावे घञ् । पुष्पो विकासोऽस्त्यनयोरिति । पुष्प + मतुप् । मस्य वः ।) एकयोक्त्या चन्द्रसूर्य्यौ । इत्यमरः । १ । ४ । १० ॥
"एकया उक्त्या अपृथग्वचनेन चन्द्रार्कौ पुष्प-वच्छब्दवाच्यौ न तु पुष्पवानिन्दुः सूर्य्यो वेत्यभि-धीयते । साञ्चे । एकयोक्त्येति भिन्नप्रयोगे नैवे-त्यर्थः । अतएव द्व्यर्थकत्वात् सदा द्विवचन-

मरः । २ । ४ । १७ ॥ (यथा, भावप्रकाशे कासाधिकारे ।
"पलं पलञ्चापि कटुत्रयञ्च
तथा चतुर्जातफलं विचूर्ण्य ।
पलानि षट् पुष्परसस्य चापि
विनिःक्षिपेत्तत्र विमिश्रयेच्च ॥")

**पुष्परसाह्वयं**, क्ली, (पुष्परस इत्याह्वय आख्या यस्य ।) मधु । इति राजनिर्घण्टः ॥

**पुष्परागः**, पुं, (पुष्पस्येव रागो वर्णोऽस्य ।) मणिविशेषः । पुखराज इति भाषा । तत्-पर्य्यायः । मञ्जुमणिः २ वाचस्पतिवल्लभः ३ । इति भावप्रकाशः ॥ पीतः ४ पीतस्फटिकः ५ पीतरक्तः ६ पीताश्म ७ गुरुरत्नम् ८ पीत-मणिः ९ पुष्पराजः १० ॥ (यथा, रघौ । १८ । ३२ ।
"तस्य प्रभा निर्ज्जितपुष्परागं
पौष्यान्तिमौ पुष्यमसूत पत्नी ॥"
"प्रभया निर्ज्जितः पुष्परागो मणिविशेषो येन ।"
इति तट्टीकायां मल्लिनाथः ॥) अस्य गुणाः ।
छाया चतुर्व्विधा तस्य सिता पीता सिता-सिता ॥"
इति युक्तिकल्पतरुः ॥

**पुष्परेणुः**, पुं, (पुष्पाणां रेणुः ।) परागः । इति शब्दरत्नावली ॥ (यथा, रघौ । १ । ३८ ।
"सेव्यमानौ सुखस्पर्शैः शालनिर्यासगन्धिभिः ।
पुष्परेणूत्किरैर्वातैराधूतवनराजिभिः ॥")

**पुष्परोचनः**, पुं, (पुष्पं रोचनेवास्य । पुष्पेषु रोचनः रुचिप्रदो वा ।) नागकेशरः । इति त्रिकाण्डशेषः ॥

**पुष्पलावः**, पुं, (पुष्पं लुनाति अवचिनोति माला-द्यर्थमिति । पुष्प + लू + "कर्म्मण्यण् ।" ३ । २ । १ ।
मित्यर्थः । पुष्पो विकाशस्तद्योगाद्वतुः । पुष्प-वन्तशब्दोऽदन्तो रूढोऽपि रविशशिनौ पुष्प-वन्ताख्याविति नाममाला ।" इति तट्टीकायां भरतः ॥

**पुष्पवाटी**, स्त्री, (पुष्पाणां वाटी ।) पुष्पोद्यानम् । फुलवागान इति भाषा ॥ यथा, हेमचन्द्रः । ४ । १७९ ॥
"वाटी पुष्पाद्वृक्षाच्चासौ क्षुद्रारामः प्रसेविका ॥"

**पुष्पवाहनः**, पुं, (पुष्पं पुष्करं वाहनमिव यस्य ।) पुष्करराजः । यथा, अग्निपुराणे ।
"राजा यथोक्तञ्च पुनरकरोत् पुष्पवाहनः ।
विभूतिद्वादशीं कृत्वा स गतः परमां गतिम् ॥"

**पुष्पशकटी**, स्त्री, आकाशवाणी । यथा, --
"चित्रोक्तिः पुष्पशकटी दैवप्रश्न उपश्रुतिः ॥"
इति त्रिकाण्डशेषः ॥

**पुष्पशरः**, पुं, (पुष्पाणि शरा यस्य ।) कन्दर्पः । कुसुमेषुदर्शनात् ॥

**पुष्पशरासनः**, पुं, (पुष्पं शरासनं धनुर्यस्य ।) कन्दर्पः । पुष्पधन्वदर्शनात् ॥

**पुष्पशून्यः**, पुं, (पुष्पेण शून्यः ।) उदुम्बरः । इति राजनिर्घण्टः ॥ कुसुमरहिते, त्रि ॥

**पुष्पसमयः**, पुं, (पुष्पाणां समयः ।) वसन्तः । इत्यमरः ॥

**पुष्पसारः**, पुं, (पुष्पस्य सारः ।) पुष्पद्रवः । इति राजनिर्घण्टः ॥ (पुष्पश्रेष्ठे, त्रि । यथा, ब्रह्म-वैवर्त्ते प्रकृतिखण्डे ।
"पुष्पसारां नन्दिनीञ्च तुलसीं कृष्णजीवनीम् ॥")

**पुष्पसौरभा**, स्त्री, (पुष्पे सौरभं यस्याः । तीव्र-

गन्धवत्त्वादेव तथात्वम् ।) कलिकारीवृक्षः ।
इति राजनिर्घण्टः ॥

**पुष्पस्वेदः**, पुं, (पुष्पाणां स्वेदः ।) पुष्पद्रवः । इति

राजनिर्घण्टः ॥

**पुष्पहासा**, स्त्री, (पुष्पं स्त्रीरजः हास इव यस्याः ।)

रजस्वला । इति शब्दरत्नावली ॥

**पुष्पहीना**, स्त्री, (पुष्पेण हीना ।) उडुम्बर-

वृक्षः । इति शब्दचन्द्रिका ॥ निष्कला । रजः-
शून्या । इति हेमचन्द्रः ॥

**पुष्पा**, स्त्री, (पुष्पं अभिधेयत्वेनास्त्यस्या इति ।

अच् । टाप् ।) कर्णपुरी । अधुना भागलपुर
इति ख्याता । तत्पर्य्यायः । चम्पा २ मालिनी
३ ।
इति त्रिकाण्डशेषः ॥

**पुष्पाजीवः**, पुं, (पुष्पैराजीवति जीविकां निर्व्वा-

हयतीति । आ + जीव + अच् ।) मालाकारः
।
इति हेमचन्द्रः । ३ । ५६४ ॥

**पुष्पाजीवी**, [न्] पुं, (पुष्पैराजीवतीति । आ +

जीव + णिनिः ।) मालाकारः । इति जटाधरः
॥

**पुष्पाञ्जनं**, क्ली, (पुष्पस्य नेत्ररोगविशेषस्य अञ्ज-

नम् ।) अञ्जनभेदः । तत्पर्य्यायः । पुष्पकेतु २
कौसुम्भम् ३ कुसुमाञ्जनम् ४ रीतिकम् ५
रीति-
पुष्पम् ६ पौष्पकम् ७ । तस्य गुणाः । हिम-
त्वम् ।
पित्तहिक्कास्रदाहविषकासार्त्तिसर्व्वनेत्रा-
मयनाशित्वञ्च । इति राजनिर्घण्टः ॥

**पुष्पाञ्जलिः**, पुं, (पुष्पाणामञ्जलिः ।) कुसुमा-

ञ्जलिः । प्रसूनाञ्जलिः । यथा, --
“पञ्च पुष्पाञ्जलीन्दत्त्वा परिवारार्च्चनञ्चरेत् ॥”
इति तन्त्रसारधृतभट्टः ॥

**पुष्पावचायी**, [न्] पुं, (पुष्पं अवचिनोतीति ।

अव + चि + णिनिः ।) मालाकारः । इति

**पुष्पिताग्रा**, स्त्री, (पुष्पितं विकसितमिवाग्रं यस्याः ।)

छन्दोविशेषः । तस्य लक्षणम् । यथा, --
“अयुजि नयुगरेफतो यकारो
युजि च नजौ जरगाश्च पुष्पिताग्रा ॥”
उदाहरणम् ।
“करकिसलयशोभया विभान्ती
कुचफलभारविनम्रदेहयष्टिः ।
स्मितरुचिरविलासपुष्पिताग्रा
व्रजयुवतिव्रतती हरेर्मुदेऽभूत् ॥”
इति छन्दोमञ्जरी ॥

**पुष्पेषुः**, पुं, (पुष्पं इषुर्यस्य ।) कामदेवः । इति

हेमचन्द्रः । २ । १४१ ॥ (यथा, कथासरित्-
सागरे । ७ । १६ ।
“तुल्याभिलाषामालोक्य स चैकां मुनिकन्यकाम् ।
ययावकस्मात् पुष्पेषुशराघातरसज्ञताम् ॥”)

**पुष्यः**, पुं, (पुष्यन्त्यस्मिन्नर्था इति । पुष + “पुष्य-

सिद्धौ नक्षत्रे ।” ३ । १ । ११६ । इति क्यप् ।)
अश्विन्यादिसप्तविंशतिनक्षत्रान्तर्गताष्टमनक्षत्रम् ।
तत्तु बाणाकारैकतारात्मकम् । इति ज्योति-
षम् ॥ तत्पर्य्यायः । सिध्यः २ तिष्यः ३ । इत्य-
मरः । १ । ३ । २२ ॥ पुष्या ४ । इति भरतः ॥
(यथा, मनुः । ४ । ९६ ।
“पुष्ये तु छन्दसां कुर्य्याद्बहिरुत्सर्ज्जनं द्विजः ॥”)
तस्य स्वरूपं यथा, --
“बालपीठकठिनीरजःप्रभे
मध्यमाश्रितविहायसे गुरौ ।
तौलिकात् पृषतशावलोचने
लोचनाद्रिकुमितागताः कलाः ॥” २ । ५२ ॥
इति कालिदासकृतरात्रिलग्ननिरूपणम् ॥ * ॥
तत्र जातस्य फलम् ।
“प्रसन्नगात्रः पितृमातृभक्तः
स्वधर्म्मयुक्तोऽभिनयाभियुक्तः ।
भवेन्मनुष्यः खलु पुष्यजन्मा
सम्मानचामीकरवाहनाढ्यः ॥”
इति कोष्ठीप्रदीपः ॥
तन्नक्षत्रे गङ्गास्नानफलं यथा, --
“संक्रान्तिषु व्यतीपाते ग्रहणे चन्द्रसूर्य्ययोः ।
पुष्ये स्नात्वा तु जाह्नव्यां कुलकोटीः समुद्धरेत् ॥”
इति ब्रह्माण्डपुराणम् ॥ * ॥
पौषमासः । कलियुगः । इति मेदिनी । ये, ३८ ॥

भवति किन्तु यात्रोत्सवादौ सः । तत्पर्य्यायः
।
चक्रयानम् २ । इत्यमरः । २ । ८ । ५१ ॥
(यथा,
माघे । ३ । २२ ।
“महारथः पुष्यरथं रथाङ्गी
क्षिप्रं क्षपानाथ इवाधिरूढः ॥”)

**पुष्यलकः**, पुं, (पुष्पं पुष्टिं लकति लाकयति वा ।

लक + अच् ।) गन्धमृगः । (यथा, --
“केशेषु चमरीं हन्ति सीम्नि पुष्यलको हतः
॥”
इति व्याकरणम् ॥)
क्षपणकः । कीलः । इति मेदिनी । के, १९९
॥

**पुष्यस्नानं**, क्ली, (पुष्ये पुष्यनक्षत्रकाले स्नानम् ।)

पुष्याभिषेकः । तस्य विधिर्यथा, --
और्व्व उवाच ।
“शृणु राजन् ! प्रवक्ष्यामि
पुष्यस्नानविधिक्रमम् ।
येन विज्ञातमात्रेण विघ्ना नश्यन्ति सन्ततम्
॥
पौषे पुष्यर्क्षगे चन्द्रे पुष्यस्नानं नृपश्चरेत् ।
सौभाग्यकल्याणकरं दुर्भिक्षमरकापहम् ॥
विष्ट्यादिदुष्टकरणे व्यतीपाते च वैधृतौ ।
वज्रे शूले हर्षणादौ योगे यदि न लभ्यते ॥
तृतीयायुक्तपुष्यर्क्षं रविसौरिकुजेऽहनि ।
तदा समस्तदोषाणां तत्स्नानं हानिकारकम्
॥
ग्रहदोषाश्च जायन्ते यदि राज्येषु चेतयः ।
तदा पुष्यर्क्षमात्रे तु कुर्य्यान्मासान्तरेऽपि तत्
॥
इयन्तु ब्रह्मणा शान्तिरुद्दिष्टा गुरवे पुरा ।
शक्रार्थं सर्व्वदेवानां शान्त्यर्थञ्च जगत्पते ! ॥
* ॥
तुषकेशास्थिवल्मीककीटदेशादिवर्ज्जिते ।
शर्कराकृमिभस्मादिदोषेण परिवर्जिते ॥
काकोलूककङ्कैश्च काकोलैर्गृध्रश्येनकैः ।
वर्जिते कण्टकिवनविभीतकविवर्जिते ॥
शिग्रुश्लेष्मातकाभ्याञ्च जलौकाद्यैर्विवर्जिते ।
सुस्थाने चम्पकाशोकवकुलादिविभूषिते ॥
हंसकारण्डवाकीर्णे सरस्तीरेऽथवा शुचौ ।

हेमचन्द्रः । ३ । ५६४ ॥

**पुष्पासवं**, क्ली, (पुष्पस्य आसवम् ।) मधु । इति

राजनिर्घण्टः ॥ (यथा, ऋतुसंहारे । ५ । ५ ।
"गृहीतताम्बूलविलेपनस्रजः
पुष्पासवामोदितवक्त्रपङ्कजाः॥")

**पुष्पास्त्रः**, पुं, (पुष्पमस्त्रमस्य ।) कन्दर्पः । इति

शब्दरत्नावली ॥

**पुष्पाह्वा**, स्त्री, (पुष्पैराह्वयते स्पर्द्धते इति । आ +

ह्वे + कः । ततष्टाप् ।) शतपुष्पा । इति राज-
निर्घण्टः ॥

**पुष्पिका**, स्त्री, (पुष्प्यति विकसतीवेति । पुष्प +

ण्वुल् । टापि अत इत्वम् ।) दन्तमलम् । इति
हारावली । १९५ ॥ लिङ्गमलम् । इति हेम-
चन्द्रः । ३ । २९८ ॥ अध्यायान्ते तत्प्रति-
पादितोक्तिः ॥

**पुष्पितः**, त्रि, (पुष्प + क्तः । पुष्पं जातमस्येति ।

पुष्प + तारकादित्वात् इतच् वा ।) जातपुष्पः
।
पुष्पविशिष्टः । कुसुमितः । यथा, --
"एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना ।
वासितं तद्वनं सर्व्वं सुपुत्त्रेण कुलं यथा ॥"
इति चाणक्यः ॥

(सूर्य्यवंशीयनृपविशेषः । यथा, रघुः । १८ । ३२
।
"तस्य प्रभानिर्ज्जितपुष्परागं
पौष्यां तिथौ पुष्यमसूत पत्नी ।
तस्मिन्नपुष्यन्नुदिते समग्रां
पुष्टिं जनाः पुष्य इव द्बितीये ॥"
पुष + भावे क्यप् । पुष्टिः । यथा, ऋग्वेदे । १ ।
१९१ । १२ ।
"त्रिः सप्त विष्पुलिङ्गका विषस्य पुष्यमक्षन् ॥"
"विषस्यास्मदावरकस्य पुष्यं पोषमक्षन् ।" इति
तद्भाष्ये सायनः ॥)

**पुष्यरथः**, पुं, (पुष्य इव रथः । पुष्ये यात्रोत्-

सवादौ रथो वा ।) यत् चक्रयानं युद्धार्थं न

पुष्यस्नानाय नृपतिर्गृह्णीयात् स्थानसुत्तमम्
॥
ततः पुरोहितो राजा नानावादित्रनिःस्वनैः ।
प्रदोषसमये गच्छेत्तत्स्थानं पूर्ब्बवासरे ॥
तस्य स्थानस्य कौवेर्य्यां दिशि स्थित्वा
पुरोहितः ।
सुगन्धचन्दनैः पानैः कर्पूराद्यधिवासितैः ॥
गोरोचनाभिः सिद्धार्थैरक्षतैश्च फलादिभिः ।
गन्धद्वारेत्यादिभिस्तु मन्त्रैः सर्व्वाधिवासिकैः
।
अधिवास्य तु तत् स्थानं पूजयेत्तत्र देवताः ॥
गणेशं केशवं शक्रं ब्रह्माणञ्चापि शङ्करम् ।
उमया सहितं देवं सर्व्वाश्च गणदेवताः ।
मातृश्च पूजयेत्तत्र नृपतिः सपुरोहितः ॥
मङ्गलान् सकलान् कृत्वा नानानैवेद्यसञ्चयम्
।
प्रदद्यात् पायसं स्वादु फलं मोदकयावकौ ॥
अधिवास्य तु तत् स्थानं
दूर्व्वासिद्धार्थकाक्षतैः ।
तस्मात् स्थानात्तु
भूतान्निःसारयेन्मन्त्रमीरयन् ॥
अपसर्पन्तु ते भूता ये भूता भूमिपालकाः ।
भूतानामविरोधेन स्नानमेतत् करोम्यहम् ॥
ततः करौ पुटीकृत्य मन्त्रेणानेन पार्थिवः ।
आवाहयेदिमान्देवान् पूज्यान् पुष्याभिषेकतः
॥
आगच्छन्तु सुराः सर्व्वे येऽत्र पूजाभिलाषिणः
।

दिशोऽभिपालकाः सर्व्वे ये चान्येऽप्यंशभागिनः ।
ततः पुष्पाञ्जलिं दत्त्वा पुनर्मन्त्रं पठेदिमम् ॥
अद्य तिष्ठन्तु विबुधाः स्थानमासाद्य मामकम् ।
श्वः पूजां प्राप्य यातारो दत्त्वा शान्तिं मही-
भुजे ॥
तत्र तां नृपती रात्रिं नयेत्तु सपुरोहितः ।
स्वप्ने शुभाशुभं विद्यान्नृपस्तु सपुरोहितः ॥
कृत्वा पूजान्तु देवानां रात्रौ स्थाने नृपः स्वपेत् ।
शुभाशुभफलं स्वप्ने ज्ञेयं दोषज्ञसम्मते ॥
दुःस्वप्नदर्शनं चेत् स्यात्तदा पुष्याभिषेचने ।
होमं चतुःशतं कुर्य्याद्दद्याद्वापि गवां शतम् ॥
गोवाजिकुञ्जराणाञ्च प्रासादस्य गिरेस्तरोः ।
आरोहणं शुभकरं राज्यश्रीवृद्धिकारकम् ॥
दधिदेवसुवर्णानां भुजगस्य च दर्शनम् ।
वीणादूर्व्वाक्षतफलपुष्पच्छदविलेपनम् ॥
शितांशुच्छत्रशङ्खानां पद्मस्य सुहृदां तथा ।
लाभः क्षयकरः शत्रोरलङ्कारस्य भूभृतः ॥
दर्शनञ्चोपरागस्य निगडेनास्य बन्धनम् ।
मांसस्य भोजनञ्चैव पर्व्वतस्य विवर्त्तनम् ॥
नाभिमध्ये तरूत्पत्तिर्मृतं प्रत्यनुरोदनम् ।
अगम्यागमनं कूपपङ्कगर्त्तावतीर्णता ॥
पर्व्वतस्य तथा नद्याः प्रोत्तारः शत्रुकर्त्तनम् ।
स्वपुत्त्रमरणञ्चैव पानं रुधिरमद्ययोः ॥
भोजनं पायसस्यापि मनुष्यारोहणं तथा ।
कल्याणसुखसौभाग्यराज्यशत्रुक्षयांस्तथा।
एते स्वप्नाश्च कुर्व्वन्ति नृपस्य नृपसत्तम ! ॥
खरोष्ट्रमहिषाणान्तु आरोहो राज्यनाशकः ।
नृत्यं गीतं तथा हास्यं पाठश्चाप्यशुभप्रदः ॥
रक्तवस्त्रपरीधानं रक्तमाल्यानुरञ्जनम् ।
रक्तां कृष्णां स्त्रियञ्चैव कामयन् मृत्युमाप्नुयात् ॥
कूपान्तरे प्रवेशश्च दक्षिणाशागतिस्तथा।
पङ्के निमज्जनं स्नानं भार्य्यापुत्त्रविनाशनम् ॥
नाभौ यस्य भवेत् स्वप्ने तरूत्पत्तिर्नृपस्य च ।
आदाय गर्भनाडीन्तु शकुनो याति खं द्रुतम् ।
स तु राज्यान्तरं प्राप्य महाकल्याणमाप्नुयात् ॥
दीर्घं विंशतिहस्तन्तु हस्तषोडशविस्तृतम् ।
कुर्य्यात्तु लक्षणोपेतं यज्ञमण्डलमुत्तमम् ॥
ततोऽपरेऽह्नि पूर्ब्बह्नि मातृणां पूजनञ्चरेत् ।
कुड्यलग्नां वसोर्धारां वृद्धिश्राद्धं तथैव च ॥
चन्दनागुरुकस्तूरीधूपकर्पूरचूर्णकैः ।
सम्पूज्य मण्डलस्थानं तस्मिन् ह्रौं शम्भवे नमः
॥
अस्त्राय हुं फडित्येवं लिखेन्मन्त्रद्वयं बुधः ।

प्रत्येकद्वारमध्ये तु पद्मञ्चैवाष्टपत्रकम् ॥
कुर्य्यान्मण्डलभागे तु चूर्णैरेव पृथक् पृथक् ।
चूर्णैस्तु मण्डलं कृत्वा सूत्राण्युत्सारयेत्ततः ॥
उत्सार्य्य सूत्रं प्रथमं मण्डलं पूजयेत्ततः ।
भवनाय नम इति ततो हस्तं वियोजयेत् ॥
सव्यावलम्बहस्तस्तु रजःपातं समारभेत् ।
मध्यमानामिकाङ्गुष्ठैरुपरिष्टाद्यथेच्छया ॥
अधोमुखाङ्गुलिं कृत्वा पातयेत् सुविचक्षणः ।
समरेखा तु कर्त्तव्या विच्छिन्ना पुञ्जवर्जिता ।
अङ्गुष्ठपर्व्वनैपुण्यात् समा कार्य्या विजानता ॥
संसक्तं विषमं स्थूलं विच्छिन्नं कृशरावृतम् ।
पर्य्यन्तमर्पितं ह्रस्वमालिखेन्न कदाचन ।
संसक्ते कलहं विद्याद्रूक्षरेखे तु विग्रहम् ॥
अतिस्थूले भवेद्व्याधिर्नित्यपीडा विमिश्रिते
॥
विन्दुभिर्भयमाप्नोति शत्रुपक्षान्न संशयः ।
कृशायां चार्थहानिः स्याच्छिन्नायां मरणं
ध्रुवम् ॥
वियोगो वा भवेत्तस्य इष्टद्रव्यसुतस्य वा ॥
अविदित्वा लिखेद्यस्तु मण्डलन्तु यथेच्छया ।
सर्व्वदोषानवाप्नोति ये दोषाः पूर्ब्बभाषिताः ॥
सितसर्षपदूर्व्वाढ्या रेखाः कार्य्याः प्रमाणतः
।
विमलं विजयं भद्रं विमानं शुभदं शिवम् ॥
वर्द्धमानञ्च देवञ्च रताख्यं कामदायकम् ।
रुचकं स्वस्तिकाख्यञ्च द्वादशैते तु मण्डलाः
॥
यथास्थानं यथायज्ञं योजनीया विचक्षणैः ॥
सागरे मथ्यमाने तु पीयूषार्थं सुरासुरैः ।
पीयूषधारणार्थाय निर्म्मिता विश्वकर्म्मणा ॥
कलां कलान्तु देवानामसित्वा ते पृथक् पृथक्
।
यतः कृतास्तु कलसास्ततस्ते परिकीर्त्तिताः
॥
नवैव कलसाः प्रोक्ता नामतस्तान्निबोधत ।
गोह्योपगोह्यो मरुतो मयूखश्च तथापरः ॥
मनोहा त्वसिभद्रश्च विरुजस्तनुशोषकः ।
इन्द्रियघ्नोऽथ विजयो नवमः परिकीर्त्तितः ॥
तेषामेव क्रमाद्भूप ! नव नामानि यानि तु ।
शृणु तान्यपराण्येव शान्तिदानि सदैव हि ॥
क्षितीन्द्रः प्रथमः प्रोक्तो द्वितीयो जलसम्भवः
।
पवनाग्नी ततो द्वौ तु यजमानस्ततः परः ॥

कुक्षौ तु सागराः सप्त सप्तद्वीपाश्च संस्थिताः ।
नक्षत्राणि ग्रहाः सव्व तथैव कुलपर्व्वताः ॥
गङ्गाद्याः सरितः सर्व्वा वेदाश्चत्वार एव च ।
कलसेषु स्थिताः सर्व्वे तेषु तानपि चिन्तयेत् ॥
रत्नानि सर्व्वबीजानि पुष्पाणि च फलानि च ।
वज्रमौक्तिकव दूर्य्यमहापद्मन्द्रस्फाटिकैः ॥
सर्व्वधाममयं विल्वं नागरोडम्बरं तथा ।
बीजपूरकजम्बीरकाश्मीराम्रातदाडिमान् ॥
यवं शालिञ्च नीवारं गोधूमं सितसर्षपम् ।
कुङ्कुमागुरुकस्तूरीमदनं रोचनं तथा ॥
चन्दनञ्च तथा मांसीमेलां कुष्ठं तथैव च ।
कर्परं पत्रचण्डञ्च जलं निर्यासकाम्बुदम् ॥
शैलेयं वदरं जातीपत्रपुष्पे तथैव च ।
कालशाकं तथा पृक्का देवी पूर्णकमेव च ॥
वचां धात्रीं समञ्जिष्ठां तुरुष्कं मङ्गलाष्टकम् ।
दूर्व्वां मोहनिकां भद्रां शतमूलीं शतावरीम् ॥
पर्णानां सवलां क्षुद्रां सहदेवां गजाह्वयाम् ।
पूर्णकोषां सितां पाठां गुञ्जां शिरसिकानलौ ॥
व्यामकं गजदन्तञ्च शतपुष्पां पुनर्नवाम् ।
ब्राह्मीं देवीं शिवां रुद्रां सर्व्वसन्धानिकां तथा ।
समाहृत्य शुभानेतान् कलसेषु निधापयेत् ॥
कलसस्य यथादेशं विधिं शम्भुं गदाधरम् ।
यथाक्रमं पूजयित्वा शम्भं मुख्यतया यजेत् ॥
प्रासादेन तु मन्त्रेण शम्भतन्त्रेण शङ्करम् ।
प्रथमं पूजयेन्मध्ये नानानैवेद्यवेदनैः ।
दिक्पालानां घटेष्वेव दिक्पालानपि पूजयेत् ॥
पूर्ब्बं बहिःस्थापितेषु ग्रहाणां कलसेषु च ।
नवग्रहान् पूजयेत्तु मातर्मातृघटेषु च ॥
सर्व्वे देवा घटे पूज्या घटस्तेषां पृथक् पृथक् ।
नवैव तत्र पूर्ब्बोक्ताः सदा मुख्यतमा नृप ! ॥ *
॥
भक्ष्यैर्भोज्यैश्च पेयैश्च पुष्पैर्नानाविधैः फलैः ।
यावकैः पायसैश्चापि यथासम्भवयोजितैः ।
पुष्यस्नानाय नृपतिः पूजयेत् सकलान् सुरान्
॥
दक्षिणे मण्डलस्याथ कुण्डं निर्म्माय पायसैः ।
समिद्भिः शालिसिद्धार्थैर्घृतैर्दर्वाक्षतैस्तथा ।
केवलैश्च तथैवाज्यः पूजयेत सकलान् सुरान्
॥
होमान्ते तोषयेद्द्रव्यैर्नृपः सार्द्धं पुरोहितम् ॥
होमान्ते मण्डलोदीच्यां वेदिकायां सपट्टकम् ।
रोचनाख्यमलङ्कारान् तथा सर्व्वान्नियोजयेत् ॥
वृद्ध्या ह्यङ्गुलमङ्गुष्ठं द्विर्दशाङ्गुलयावधि ।

| | | |
|---|---|---|
| मन्त्रविन्मण्डलज्ञश्च सूत्रैः कम्बलसम्भवैः ॥<br>कौषेयैर्व्वा स्वस्तिकाख्यं प्रथमं मण्डलं लिखेत्<br>।<br>चतुर्हस्तप्रमाणन्तु मण्डलं विलिखेत्ततः ॥<br>हस्तप्रमाणं पद्मन्तु मण्डलस्य प्रकीर्त्तितम् ।<br>द्वाराणि सार्द्धहस्तानि कर्णिकाकेशरोज्ज्वलम् ॥<br>सितं रक्तञ्च पीतञ्च कृष्णं हरितमेव च ।<br>शालिचूर्णैस्तु कौसुम्भैर्हारिद्रैर्हरिद्रुद्भवैः ॥<br>कुर्य्यात्तथाञ्जनैश्चूर्णै राजा मण्डलवृद्धये ।<br>पद्मात्ततः समारभ्य नालां पश्चिमगामिनीम् ॥<br>पश्चिमद्वारमध्येन शतहस्तां विनिर्द्दिशेत् । | कोषसम्भवनामा तु षष्ठः स परिकीर्त्तितः ।<br>सोमस्तु सप्तमः प्रोक्तश्चादित्यस्तु तथाष्टमः ॥<br>विजयो नाम कलसो योऽसौ नवम उच्यते ।<br>स तु पञ्चमुखः प्रोक्तो महादेवस्वरूपधृक् ॥<br>घटस्य पञ्चवक्त्रेषु पञ्चवक्त्रः स्वयन्तथा ।<br>यथाकाष्ठास्थितः सम्यक् वामदेवादिनामतः ।<br>मण्डलस्य च पद्मान्तः पञ्चवक्त्रं घटं न्यसेत्<br>॥<br>क्षितीन्द्रं पूर्ब्बतो न्यस्य पश्चिमे जलसम्भवम्<br>।<br>वायव्ये वायवं न्यस्य आग्नेये ह्यग्निसम्भवम् ॥<br>नैरृत्यां यजमानन्तु ऐशान्यां कोषसम्भवम् ।<br>सोममुत्तरतो न्यस्य सौरं दक्षिणतो न्यसेत् ॥<br>न्यस्यैवं कलसांश्चैव तेषु चतान् विचिन्तयेत्<br>।<br>कलसानां मुखे ब्रह्मा ग्रीवायां शङ्करः स्थितः ॥<br>मूले तु संस्थितो विष्णुर्मध्ये मातृगणाः<br>स्थिताः ॥<br>दिक्पाला देवताः सर्व्वा वेष्टयन्ति दिशो दश ॥ | वृत्तं वा चतुरस्रं वा पद्मकत्रिकसंहितम् ।<br>रत्नेशान् पद्ममध्ये तु गोस्वस्तिकविनायकैः ॥<br>श्रीः श्रीवृक्षो वरारोहा स्वामी देषी शुभान्विता ।<br>रत्नैः सर्व्वैरलङ्कारैः पट्टं कार्य्यं द्विहस्तकम् ।<br>हस्तविस्तारमुच्छ्रयं कर्त्तव्यन्तु दशाङ्गुलम् ॥<br>स्नानार्थं सार्द्धहस्तन्तु पट्टं वृत्तासनान्वितम् ।<br>शय्या चतुर्गुणा दीर्घा धनुर्मानन्तु पीठकम् ॥<br>गजसिंहकृताटोपं हेमरत्नविभूषितम् ।<br>सिंहाख्यं साद्धविस्ताराद्दण्डासनमथापिवा ॥<br>व्याघ्रचित्रकपट्टैर्वा उपधानानि कारयेत् ।<br>अन्यैर्वा निर्म्मितैश्चर्म्ममृदुतूलवकपूरितान् ॥<br>शय्या दैर्घ्यार्द्धविस्तीर्णा चतुर्हस्ता सुलक्षणा । |

वितस्त्यधिकमिच्छन्ति नृपस्य गुरुविद्यया ॥
अर्द्धचन्द्रसमं कुर्य्यादासनं चतुरस्रकम् ।
उपधानानि शय्यायाः कर्णादिमूलदेशतः ॥
षोडशैवात्र कार्य्याणि वर्णचित्रयुतानि च ।
यानं सिंहासनं पट्टं शय्योपकरणादिकम् ॥
राज्ञो नूतनयोग्यं तद्वेद्या उत्तरतो न्यसेत् ।
तेषान्तु पश्चिमे स्वर्णरत्नौघनिचिते वरे ॥
पर्य्यङ्के यज्ञदार्व्वौषनिर्म्मिते महदास्तरे ।
ऊर्द्ध्वाच्छादनसंयुक्त चर्म्मावृत्या चतुष्टयम् ॥
वृषभस्य तथोर्णायाः सिंहशार्दूलयोरपि ।
पादपीठे रत्नयुते पादावारोप्य पार्थिवः ॥
तस्मिन् पर्य्यङ्कपृष्ठस्थे चर्म्मखण्डचतुष्टये ।
नानालङ्कारभूषाढ्यं नृपतिं रत्नमालिनम् ॥
स्नापयेद्ब्राह्मणैः सार्द्धं राजानं सुखसङ्गतम् ।
संवीतकम्बलं कृष्णं रत्नवस्त्रावशोभितम् ॥
कलसैर्ब्बलिपुष्पाद्यैः शालिचूर्णैश्च स्नापयेत् ॥
अष्टौ षोडशविंशाष्टशतमष्टाधिकञ्च वा ।
कलसानां समाख्याता अधिकस्योत्तरोत्तरम् ॥
जयकल्याणदैर्मन्त्रैमङ्गलोत्थैश्च शाम्भवैः ।
वैष्णवैरथ दिक्पालैर्ग्रहमन्त्रैश्च मातृकैः ॥
आज्यं तेजः समुद्दिष्टमाज्यं पापहरं परम् ।
आज्यं सुराणामाहारमाज्ये लोकाः प्रतिष्ठिताः ॥
भौमान्तरीक्षं दिव्यं वा यत्ते कल्मषमागतम् ।
सर्व्वं तदाज्यसंस्पर्शात् प्रणाशमुपगच्छतु ॥
ततोऽपनीय गात्रात्त कम्बलं वस्त्रमेव च ।
कलसैः स्नापयेद्भूपं पुष्यस्नानार्थपूरितैः ।
एभिर्मन्त्रैर्नरश्रेष्ठ ! तत्त्वतत्त्वार्थसाधकैः ॥ * ॥
सुरास्त्वामभिषिञ्चन्तु ये च सिद्धाः पुरातनाः ।
ब्रह्मा विष्णुश्च रुद्रश्च साध्याश्च समरुद्गणाः ॥
आदित्या वसवो रुद्रा आश्विनेयौ भिषग्वरौ ।
अदितिर्देवमाता च स्वाहा लक्ष्मीः सरस्वती ॥
कीर्त्तिर्लक्ष्मीर्धृतिः श्रीश्च सिनीवाली कुहूस्तथा ।
सशिष्यास्तेऽभिषिञ्चन्तु सदाराश्च तपोधनाः ॥
पर्व्वतास्तरवो नद्यः पुण्यान्यायतनानि च ।
प्रजापतिः क्षितिश्चैव गावो विश्वस्य मातरः ॥
वाहनानि च दिव्यानि सर्व्वे लोकाश्चराचराः ।
अग्नयः पितरस्तारा जीमूताः खं दिशो जलम् ॥
एते चान्ये च बहवः पुण्यसंकीर्त्तनाः शुभाः ।
तोयैस्त्वामभिषिञ्चन्तु सर्व्वोत्पातनिवर्हणाः ॥
इत्येवं शुभदैवतैर्मन्त्रैर्दिव्यैस्तथापरैः ।
शैवैर्नारायणै रौद्रैर्ब्रह्मशक्रसमुद्भवैः ॥
आपोहिष्ठा हिरण्येति सम्भवेति सुरेति च ।
मानस्तोकेतिमन्त्रेण गन्धद्वारेत्यनेन च ॥
सर्व्वमङ्गलमङ्गल्यैः श्रीश्च ते ग्रहयोगिभिः ।
इत्येवं स्नानमासाद्य गात्रमावृत्य कम्बलैः ॥
सर्व्वमङ्गलमन्त्रेण वस्त्रं कार्पासकं ध्रियात् ।
आचम्य च ततो देवान् गुरुं विप्रांश्च पूजयेत् ॥
ध्वजं छत्रं चामरञ्च घण्टामश्वान् गजांस्तथा ।
मन्त्रं जप्त्वा धारयेत्तु ततो गच्छेद्धुताशनम् ॥
तत्र गत्वा वह्निमध्ये वह्निश्रीर्वीक्ष्य पार्थिवः ।
अनिमित्तनिमित्तानि लक्षयेत्तत्र विन्दुभिः ॥
दैवज्ञकञ्चुकामात्यवन्दिपौरजनैर्वृतः ।
वादित्रघोषैस्तुमुलैस्तथा तौर्य्यत्रिकैः शुभैः ॥
कृत्वा शेषे पुनः शान्तिमाशीर्व्वाच्य च वै द्विजान् ।
पूर्णां विधाय विधिवद्दक्षिणां कनकान्युत ॥
धान्यानि चाथ वासांसि दत्त्वा कुर्य्याद्विसर्ज्जनम् ।
ततः शेषजलैः सर्व्वानमात्यादीन् पुरोहितः ।
सेचयेच्चतुरङ्गञ्च बलञ्चापि सराष्ट्रकम् ॥
एबं कृत्वा नृपः पश्चात्त्रिरात्रं संयतो भवेत् ।
मांसमैथुनहीनश्च कुर्य्यान्मङ्गल्यसेवनम् ॥
पुष्यनक्षत्रयुक्ता तु तृतीया यदि लभ्यते ।
तस्यां पूज्या सदा देवी चण्डिका शङ्करेण ह ॥
पञ्चालिकाविवाहाद्यैः शिशूनां कौतुकैस्तथा ।
वैवाहिकेन विधिना मोदयेच्चण्डिकां शिवाम् ॥
चतुष्पथेषु सर्व्वेषु देवदेवीगृहेषु च ।
पताकाभिरलङ्कुर्य्यादिवं कुर्व्वन्न सीदति ॥
एवं कृत्वा शान्तियागं तथा पुष्याभिषेचनम् ।
चतुरङ्गैः समं राजा भार्य्याभिस्तनयैः सह ।
राज्यमण्डलसंयुक्तः परत्रेह न सीदति ॥
नातः परतरो यज्ञो नातः परतरोत्सवः ।
नातः परतरा शान्तिर्नातः परतरं शिवम् ॥
"अश्विनीमृगमूलाश्च पुष्या पुनर्वसुस्तथा ।
वश्याकर्षञ्च कर्त्तव्यं कारयेच्च सदा बुधः ॥")

**पुस्त**, क, बन्धे । इति कविकल्पद्रुमः ॥ (चुरा०-उभ०-सक०-सेट् ।) पञ्चमस्वरी । दन्त्योपधः । क, पुस्तयति । इति दुर्गादासः ॥

**पुस्तं**, क्ली, (पुस्त्यते इति । पुस्त बन्धादरादौ + घञ् ।) लेप्यादिशिल्पकर्म्म । आदिना काष्ठ-पुत्तलिकाखनित्रखननादिकर्म्म गृह्यते । इति सुभूत्यादयः ॥
मृदा वा दारुणा वाथ वस्त्रेणाप्यथ चर्म्मणा ।
लोहरत्नैः कृतं वापि पुस्तमित्यभिधीयते ॥"
इत्यमरटीकायां भरतः ॥
(यथा, वाभटे सूत्रस्थाने । ३ ।
"पुस्तस्त्रीस्तनहस्तास्यप्रवृत्तोशीरवारिणि॥"
पुस्त्यते बध्यते ग्रथ्यते इत्यर्थः आद्रियते वेति + पुस्त + घञ् ।) पुस्तकम् । इति मेदिनी ॥ (पुस्त + गौरादित्वात् ङीष् ।) स्त्रियां पुस्ती ॥

**पुस्तकम्**, क्ली, स्त्री, (पुस्त + स्वार्थे कन् ।) पुस्तम् । पुति इति भाषा । (यथा, हरि-वंशे । २५६ । ७६ ।
"शुक्लाम्बरधरः श्रीमान् शुचिर्भूत्वा स्वलङ्कृतः ।
अर्च्चयेत यथान्यायं गन्धमालैः पृथक् पृथक् ॥
संहितापुस्तकान् राजन् ! प्रयतः शिष्टसम्मतः ॥")
तस्य परिमाणं यथा, --
"मानं वक्ष्ये पुस्तकस्य शृणु देवि ! समासतः ।
मानेनापि फलं विन्द्यादमाने श्रीर्हता भवेत् ॥
हस्तमात्रं मुष्टिमात्रमाबाहुद्वादशाङ्गुलम् ।
दशाङ्गुलं तथाष्टौ च ततो हीनं न कारयेत् ॥"
तस्य वेधो यथा, --
"वेधद्वयं मुष्टिहस्तं बाहुमात्रे चिरन्तकम् ।
समभागे महेशानि ! हस्तादौ रूपरन्ध्रकम् ॥
अष्टाङ्गुलं परित्यज्य भध्ये वेधं न कारयेत् ।
प्रादेशादौ भवेद्रन्ध्रो द्व्यङ्गुले वा समाचरेत् ॥
पुस्तकस्य च आद्यन्ते यन्त्रवेधं विकल्पयेत् ।
भार्य्याहानिर्भवेदाशु धनानां वा क्षयो भवेत् ॥
दग्धरन्ध्रे भवेत् पीडा वर्त्तुलं शुभदं भवेत् ।"
चतुष्कोणे विप्लवस्तु त्रिकोणे मरणं भवेत् ॥
पुस्तककरणपत्रं यथा, --
"भूर्जे वा तेजपत्रे वा ताले वा ताडिपत्रके ।
अगुरुणापि देवेशि ! पुस्तकं कारयेत् प्रिये ! ॥
सम्भवे स्वर्णपत्रे च ताम्रपत्रे च शङ्करि ! ।

दितिश्च सुरसा चैव विनता कद्रुरेव च ॥
देवपत्न्यश्च याः प्रोक्ता देवमातर एव च ।
सर्व्वास्त्वामभिषिञ्चन्तु सर्व्वे चाप्सरसां गणाः ॥
नक्षत्राणि सुहूर्त्ताश्च पक्षाहोरात्रसन्धयः ।
संवत्सरो दिवा रात्रिः कलाः काष्ठाः क्षणा लवाः ॥
सर्व्वे त्वामभिषिञ्चन्तु कालस्यावयवाश्च ये ।
वैमानिकाः सुरगणा मनवः सागरैः सह ॥
सरितश्च महानागा यक्षाः किंपुरुषास्तथा ।
वैखानसा महाभागा द्विजा वैहायसास्तथा ॥
सप्तर्षयः सदाराश्च ध्रुवस्थानानि यानि तु ।
मरीचिरत्रिः पुलहः पुलस्त्यो भृगुरङ्गिराः ॥
क्रतुः सनत्कुमारश्च सनकोऽथ सनन्दकः ।
सनातनश्च दक्षश्च जेगीषव्योऽथ नन्दनः ॥
एकतश्च द्वितश्चैव त्रितो जावालिकाश्यपौ ।
दुर्व्वासा दुर्व्विनीतश्च कण्वः कात्यायनस्तथा ॥
मार्कण्डेयो दीर्घतपाः शुनःशेफो विदूरथः ।
और्व्वः सम्बर्त्तकश्चैव च्यवनोऽत्रिः पराशरः ॥
द्वैपायनो यवक्रीतो देवरातः सहानुजः ।
एते चान्ये च वहवो देवव्रतपरायणाः ॥

अनेनैव विधानेन नृपतेरभिषेचनम् ।
युवराज्याभिषेकञ्च कुर्य्याद्राजपुरोहितः ॥
नृपाभिषेककरणमादौ यदि समाचरेत् ।
अनेनैव विधानेन स्थिरः स्यान्नृपतिस्तदा ॥
अयं यज्ञः समुद्दिष्टः शक्रार्थं ब्रह्मणा पुरा ।
एवं यज्ञं नृपो दृष्ट्वा परत्रेह न सीदति ॥”
इति कालिकापुराणे पुष्याभिषेकः ८६ अध्यायः ॥

**पुष्या**, स्त्री, (पुष्णाति कार्य्याणीति । पुष् + क्यप् यत् वा । निपातनात् साधुः । ततष्टाप् ।) पुष्य-नक्षत्रम् । इति शब्दरत्नावली ॥ (यथा, इन्द्र-जालतन्त्रसंग्रहे ।

अन्यवृक्षत्वचि देवि ! तथा केतकिपत्रके ॥
मार्त्तण्डपत्रे रौप्ये वा वटपत्रे वरानने ! ।
अन्यपात्रे वसुदले लिखित्वा यः समभ्यसेत् ।
स दुर्गतिमवाप्नोति धनहानिर्भवेद्ध्रुवम् ॥”
पुस्तके वेदलिखननिषेधो यथा, --
“वेदस्य लिखनं कृत्वा यः पठेद्ब्रह्महा भवेत् ।
पुस्तकंवा गृहे स्थाप्यं वज्रपातो भवेद्ध्रुवम् ॥”
युगभेदे पुस्तकाक्षरस्थदेवा यथा, --
“सत्येऽक्षरे स्थितः शम्भुः शूलपाणिस्त्रिलोचनः ।
प्रजापतिर्द्वापरे च त्रेतायां सूर्य्य एव च ।
कृते युगे पिनाकी च कलौ लिप्यक्षरे हरिः ॥”

तल्लेखकपूजाफलं यथा, --
"आरम्भे च समाप्तौ च लेखकं प्रतिपूजयेत्
।
हरिञ्च गन्धपुष्पाद्यैर्वस्त्रैश्च सुमनोहरैः ॥
यावदक्षरसंख्यानं प्रतिपत्रे च सुन्दरि ! ।
तावद्युगसहस्राणि ब्रह्मलोके वसेच्चिरम् ॥"
वेतनग्रहणे लेखकस्य दोषो यथा, --
"वेतनं यस्तु गृह्णीयात् लिखित्वा पुस्तकं
स तु ।
यावदक्षरसंख्यानं तावच्च नरके वसेत् ॥"
भूमौ पुस्तकलेखनस्थापननिषेधो यथा, --
"न भूमौ विलिखेद्वर्णं मन्त्रं न पुस्तकं
लिखेत् ।
न मुक्त्वा पुस्तकं स्थाप्यं न मुक्तमाहरेत्तु
तत् ॥
भूकम्पग्रहणे चैव अक्षरं वाथ पुस्तकम् ।
भूमौ तिष्ठति देवेशि ! जन्मजन्मसु मूर्खता
।
तदा भवति देवेशि ! तस्मात्तत्
परिवर्ज्जयेत् ॥"
इति योगिनीतन्त्रे तृतीयभागे सप्तमपटलः
॥ * ॥
तस्य दानफलं यथा, --
विप्राय पुस्तकं दत्त्वा धर्म्मशास्त्रस्य च
द्विज ! ।
पुराणस्य च यो दद्यात् स
देवत्वमवाप्नुयात् ॥
शास्त्रदृष्ट्या जगत् सर्व्वं सुश्रुतञ्च
शुभाशुभम् ।
तस्मात् शास्त्रं प्रयत्नेन दद्याद्विप्राय
कार्त्तिके ॥
वेदविद्याञ्च यो दद्यात् स्वर्गे कल्पत्रयं वसेत्
।
आत्मविद्याञ्च यो दद्यात्तस्य संख्या न
विद्यते ॥
त्रीणि तुल्यप्रदानानि त्रीणि तुल्यफलानि च
।
शास्त्रं कामदुघा धेनुः पृथिवी चैव शाश्वती
॥"
इति पाद्मोत्तरखण्डे ११७ अध्यायः ॥ *
॥
वेदशास्त्रादिदानफलं यथा, --
"पिण्डखर्ज्जूरं जातिश्च एला चैव हरीतकी ।
नारिकेलं तथा पूगं रम्भापक्वफलन्तथा ।
तत्र मुख्यं प्रदातव्यं तालस्य फलमुत्तमम्
॥")

**पूगः**, पुं, (पूयतेऽनेनेति । पूञ् + "छापूखण्डिभ्यः
कित् ।" उणा० । १ । १२३ । इति गन् । स
च
कित् ।) गुवाकः । समूहः । इत्यमरः ॥
(यथा,
महाभारते । ६ । २१ । १४ ।
"अनन्ततेजा गोविन्दः शत्रुपूगेषु निर्व्यथः ।
पुरुषः सनातनतमो यतः कृष्णस्ततो जयः
॥")
छन्दः । भावः । कण्टकिवृक्षः । इति शब्द-
रत्नावली ॥

**पूगपात्रं**, क्ली, (पूगस्य दन्तचर्व्वितपूगरसस्य
आधारभूतं पात्रम् ।) पूगपीठम् । पिकदानी ।
इति भाषा । तत्पर्य्यायः । फरुवकम् २ ।
इति
हारावली ॥

**पूगपीठं**, क्ली, (पूगस्य दन्तचर्व्वितपूगरसस्य
पीठमाधारपात्रम् ।) पूगपात्रम् । तत्पर्य्यायः ।
कटकोलः २ पतद्ग्रहः ३ । इति त्रिकाण्ड-
शेषः ॥

**पूगपुष्पिका**, स्त्री, (पूगसहितं पुष्पमत्रेति । पूग-
पुष्प + कप् । कापि अत इत्वम् ।) विवाह-
सम्बन्धिपुष्पताम्बूलम् । तत्पर्य्यायः ।
कुहलिः २ ।
इति त्रिकाण्डशेषः ॥

**पूगफलं**, क्ली, (पूगस्य गुवाकस्य फलम् ।) गुवा-
कफलम् । तत्पर्य्यायः । पूगम् २ चिक्कणी
३
चिक्का ४ चिक्कणम् ५ सोष्णकम् ६
उद्वेगम् ७
क्रमुकफलम् ८ । इति राजनिर्घण्टः ॥ (यथा,
सुश्रुते सूत्रस्थाने ४६ अध्याये ।
"कषायमीषन्मधुरं किञ्चित् पूगफलं सरम्
॥")

**पूगरोटः**, पुं, (पूगवृक्ष इव रोटयति दीप्यते प्रका-
काम्पिल्ये ब्रह्मदत्तस्य अन्तःपुरनिवासिनी ।
पूजनी नाम शकुनिर्दीर्घकालं सहोषिता ॥
रुतज्ञा सर्व्वभूतानां यथा वे जीवजीवकः ।
सर्व्वज्ञा सर्व्वतत्त्वज्ञा तिर्य्यग्योनिं गतापि सा ॥
अभिप्रजाता सा तत्र पुत्त्रमेकं सुवर्च्चसम् ।
समकालञ्च राज्ञोऽपि देव्यां पुत्त्रो व्यजायत ॥
तयोरर्थे कृतज्ञा सा खेचरी पूजनी सदा ।
समुद्रतीरं सा गत्वा आजहार फलद्वयम् ॥
पुष्टार्थञ्च स्वपुत्त्रस्य राजपुत्त्रस्य चैव ह ॥
फलमेकं सुतायादाद्राजपुत्त्राय चापरम् ।
अमृतास्वादसदृशं बलतेजोऽभिवर्द्धनम् ॥
आदायादाय सैवाशु तयोः प्रादात् पुनःपुनः ।
ततोऽगच्छत् परां वृद्धिं राजपुत्त्रः फला-
शनात् ॥"
इत्यादि तत्रैवाध्याये विस्तरशो द्रष्टव्यम् ॥)

**पूजा**, स्त्री, (पूजनमिति । पूज + "चिन्तिपूजि-
कथिकुम्बिचर्च्चश्च ।" ३ । ३ । १०५ । इति अङ् ।
ततष्टाप् ।) पूजनम् । तत्पर्य्यायः । नमस्या २
अपचितिः ३ सपर्य्या ४ अर्च्चा ५ अर्हणा ६ ।
इत्यमरः । २ । ७ । ३५ ॥ नुतिः ७ । इति
शब्दरत्नावली ॥ (यथा, रामायणे । १ । ५१ । ५ ।
"अपि रामे महाभागा मम माता यशस्विनी ।
वन्यैरुपाहरत् पूजां पूजार्हे सर्व्वदेहिनाम् ॥")
तस्याः सामान्यानुष्ठानं यथा, --
"आदावृष्यादिकन्यासः करशुद्धिस्ततः परम् ।
अङ्गुलिव्यापकन्यासौ हृदादिन्यास एव च ॥
तालत्रयञ्च दिग्बन्धः प्राणायामस्ततः परम् ।
ध्यानं पूजा जपश्चैव सर्व्वतन्त्रेष्वयं विधिः ॥"
इति तन्त्रसारे यामलः ॥
शक्तिविषये चतुःषष्टिरुपचारा यथा, --
आसनारोपणम् १ सुगन्धितैलाभ्यङ्गः २ मज्जन-
शालाप्रवेशनम् ३ मज्जनमणिपीठोपवेशनम्
४ दिव्यस्नानीयम् ५ उद्वर्त्तनम् ६ उष्णोदक-
स्नानम् ७ कनककलसस्थितसकलतीर्थाभिषेकः
८ धौतवस्त्रपरिमार्ज्जनम् ९ अरुणदुकूलपरि-
धानम् १० अरुणदुकूलोत्तरीयम् ११ आलेप-
मण्डपप्रवेशनम् १२ आलेपमणिपीठोपवेशनम्
१३ चन्दनागुरुकुङ्कुमकर्पूरकस्तूरीरोचनादिव्य-
गन्धसर्व्वाङ्गानुलेपनम् १४ केशभारस्य काला-
गुरुधूपमल्लिकामालतीजातीचम्पकाशोकशत
पत्रपूगकुहरीपुन्नागकह्बारयूथीसर्व्वर्त्तुकुसुम-
मालाभूषणम् १५ भूषणमण्डपप्रवेशनम् १६ भूषण-

"वेदार्थयज्ञशास्त्राणि धर्म्मशास्त्राणि चैव हि ।
मूल्येन लेखयित्वा यो दद्याद्याति स वैदिकम् ॥
इतिहास्पुराणानि लिखित्वा यः प्रयच्छति ।
ब्रह्मदानसमं पुण्यं प्राप्नोति द्बिगुणीकृतम् ॥"
इति गारुड २१५ अध्यायः ॥ * ॥
भागवतदानविधानं तु पारायणशब्दे द्रष्टव्यम् ॥

**पुस्तकर्म्मा**, त्रि, (पुस्तं लिखनादिकं कर्म्म यस्य ।) लेप्यादिशिल्पकर्म्मकर्त्ता । इति हलायुधः ॥

**पू**, ङ शोधे । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट् ।) शोध इह शुद्धीकरणम् । ङ, पवते पापिनं गङ्गा । इति दुर्गादासः ॥

**पू**, ङ य शोधे । इति कविकल्पद्रुमः ॥ (दिवा०-आत्म०-सक०-सेट् ।) अयं कैश्चिन्न मन्यते । ङ य, पूयते । इति दुर्गादासः ॥

**पू**, ञ गि शोधे । इति कविकल्पद्रुमः ॥ (क्र्या०-प्वा०-उभ०-सक०-सेट् ।) ञ गि, जाह्नवी नः पुनातु । पुनीते । क्वचित् श्नाप्रत्ययस्यापि प्वादित्वात् ह्रस्व इति वररुचिः । तेन ।
"स्मरणात् पुनते पापं धारणात् पूर्ब्बसञ्चितम् ।
दर्शनाल्लभते मोक्षमेतद्योगस्य लक्षणम् ॥"
इति दुर्गादासः ॥

**पूगं**, क्ली, (पूयते मुखमनेनेति । पू ञ पवने + "छापूखण्डिभ्यः कित् ।" उणा० । १ । १२३ । इति गन् किच्च ।) गुवाकफलम् । इत्यमरटीकायां रायमुकुटः ॥ (यथा, भविष्यपुराणे । तालनवमीव्रतकथायाम् ।
शते इति । रुट् + अच् ।) हिन्तालवृक्षः । इति त्रिकाण्डशेषः ॥

**पूज**, क पूजे । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-सक०-सेट् ।) षष्ठस्वरी । क, पूजयति गुरु लोकः । इति दुर्गादासः ॥

**पूजकः**, त्रि, (पूजयतीति । पूज + ण्वुल् ।) पूजाकर्त्ता । यथा, तिथ्यादितत्त्वे ।
"यत्रैव भानुस्तु वियत्युदेति
प्राचीति तां वेदविदो वदन्ति
तथा पुरः पूजकपूज्ययोश्च
तदागमज्ञाः प्रवदन्ति तान्तु ॥"

**पूजनं**, क्ली, (पूज + भावे ल्यट् ।) पूजा । अर्च्चनम् । यथा, --
"क्रुद्धेन न च कर्त्तव्यं लोभेन त्वरया न च ।
मत्पूजनं विधानेन यदीच्छेत् परमां गतिम् ॥"
इति वराहपुराणम् ॥

**पूजनी**, स्त्री, (पूज्यते इति । पूज + कर्म्मणि ल्युट् । ङीप् ।) चटका । इति भरतः ॥ (ब्रह्मदत्तगृहस्थितशकुनिविहङ्गमस्त्रीविशेषः । यथा, महाभारते । १२ । १३९ । ४ -- १० ।
"शृणुष्व राजन् ! यद्बृत्तं ब्रह्मदत्तनिवेशने ।
पूजन्या सह संवादं ब्रह्मदत्तस्य भूपतेः ॥

मणिपीठोपवेशनम् १७ नवमणिमुकुटम् १८ चन्द्रशकलम् १९ सीमन्तसिन्दूरम् २० तिलकरत्नम् २१ कालाञ्जनम् २२ कर्णपालीयुगलम् २३ नासाभरणम् २४ अधरयावकः २५ ग्रथनभूषणम् २६ कनकचित्रपदकम् २७ महापदकम् २८ मुक्तावलिः २९ एकावलिः ३० देवच्छन्दकः ३१ केयूरयुगलचतुष्टयम् ३२ वलयावलिः ३३ ऊर्म्मिकावलिः ३४ काञ्चीदाम ३५ कटिसूत्रम् ३६ शोभाख्याभरणम् ३७ पादकटकम् ३८ रत्ननूपुरम् ३९ पादाङ्गुरीयकम् ४० एककरे

पाशः ४१ अन्यकरेऽङ्कुशम् ४२ इतरकरे पुण्ड्रेक्षु-चापः ४३ अपरकरे पुष्पबाणाः ४४ श्रीमन्मा-णिक्यपादुका ४५ स्वसमानवेशास्त्रावरणदेव-ताभिः सह सिंहासनारोहणम् ४६ कामेश्वर-पर्य्यङ्कोपवेशनम् ४७ अमृताशनचषकम् ४८ आचमनीयम् ४९ कर्पूरवटिका ५० आनन्दो-ल्लासविलासहासम् ५१ मङ्गलारात्रिकम् ५२ श्वेतच्छत्रम् ५३ चामरयुगलम् ५४ दर्पणः ५५ तालवृन्तम् ५६ गन्धः ५७ पुष्पम् ५८ धूपः ५९ दीपः ६० नैवेद्यम् ६१ पुनराचमनीयम् ६२ ताम्बूलम् ६३ वन्दनञ्च ६४ । इति तन्त्रसारे सिद्धयामलः ॥ * ॥ षट्त्रिंशदुपचारा यथा, --

"आसनाभ्यञ्जने तद्वदुद्वर्त्तननिरूक्षणे ।
सम्मार्जनं सर्पिरादिस्नपनावाहने तथा ॥
पाद्यार्घ्याचमनीयञ्च स्नानीयमधुपर्क्कौ ।
पुनराचमनीयञ्च वस्त्रयज्ञोपवीतके ॥
अलङ्कारो गन्धपुष्पधूपदीपास्तथैव च ।
ताम्बूलादिकनैवेद्यं पुष्पमाला तथैव च ॥
अनुलेपनञ्च शय्या च चामरव्यजनन्तथा ।
आदर्शदर्शनञ्चैव नमस्कारोऽथ नर्त्तनम् ॥
गीतवाद्ये च गानानि स्तुतिहोमप्रदक्षिणम् ।
दन्तकाष्ठप्रदानञ्च ततो देवविसर्जनम् ।
उपचारा इमे ज्ञेयाः षट्त्रिंशत् सुरपूजने ॥"
इत्येकादशीतत्त्वम् ॥

अष्टादशोपचारा यथा, --
"आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ।
स्नानं वस्त्रोपवीतञ्च भूषणानि च सर्व्वशः ॥
गन्धं पुष्पं तथा धूपं दीपमन्नञ्च दर्पणम् ।
माल्यानुलेपनञ्चैव नमस्कारविसर्ज्जने ॥
अष्टादशोपचारैस्तु मन्त्री पूजां समाचरेत् ॥"

अथ षोडशोपचाराः ।
"पाद्यमर्घ्यं तथाचामं स्नानं वसनभूषणे ।
गन्वपुष्पधूपदीपनैवेद्याचमनन्ततः ॥
ताम्बूलमर्च्चना स्तोत्रं तर्पणञ्च नमस्क्रिया ।
प्रपूजयेत् प्रपूजायां उपचारांस्तु षोडश ॥"
(अन्यप्रकारषोडशोपचारायथा, --
"आसनं स्वागतं पाद्यमर्घमाचमनीयकम् ।
मधुपर्काचमनीस्नानंवसनाभरणानिच ।
गन्धपुष्पधूपदीपनैवेद्यं वन्दनन्तथा ॥")

अथ दशोपचाराः ।
"पाद्यमर्घ्यं तथाचामं मधुपर्काचमनन्तथा ।
गन्धादयो नैवेद्यान्ता उपचारा दश क्रमात् ॥"

अथ पञ्चोपचाराः ।

लोतके च समुत्पन्ने क्षुरकर्म्मणि मैथुने ।
धूमोद्गारे तथा वान्तौ नित्यकर्म्माणि संत्यजेत् ॥
द्रव्ये भुक्ते त्वजीर्णे च नैव भुक्त्वा च किञ्चन ।
कर्म्म कुर्य्यान्नरो नित्यं सूतके मृतके तथा ॥
पत्रं पुष्पञ्च ताम्बूलं भेषजत्वेन कल्पितम् ।
कणादिपिप्पल्यन्तञ्च फलं भुक्त्वा न चाचरेत् ॥
जलस्यापि नरश्रेष्ठ ! भोजनाद्वेषजादृते ।
नित्यक्रिया निवर्त्तेत सह नैमित्तिकैः सदा ॥
जलौकां गूढपादञ्च कृमिगण्डूपदादिकम् ।
कामाद्दम्भेन संस्पृश्य नित्यकर्म्माणि संत्यजेत् ॥
विशेषतः शिवापूजां प्रमीतपितृको नरः ।
यावद्वत्सरपर्य्यन्तं मनसापि न चाचरेत् ॥
महागुरुनिपाते तु काम्यं किञ्चिन्न चाचरेत् ।
आर्त्विज्यं ब्रह्मयज्ञञ्च श्राद्धं देवयुतञ्च यत् ॥
गुरुमाक्षिप्य विप्रञ्च प्रकृत्यैव च पाणिना ।
न कुर्य्यान्नित्यकर्म्माणि रेतःपाते च भैरव ! ॥
आसनञ्चार्घ्यपात्रञ्च भग्नमासादयेन्न यत् ।
ऊषरे कृमिसंयुक्ते स्थाने वृष्टेऽपि नार्च्चयेत् ॥
नीचैरासाद्य तत्स्थानं शुचिः प्रयतमानसः ।
अर्च्चयेच्चण्डिकां देवीं देवमन्यञ्च भैरव ! ॥
दिग्विभागे तुकौवेरी दिक् शिवाप्रीतिकारिणी ।
तस्मात्तन्मुखमासीनःपूजयेच्चण्डिकां सदा ॥"

पूजास्थानानि यथा, --
"लिङ्गस्थां पूजयेद्देवीं पुस्तकस्थां तथव च ।
स्थण्डिलस्थां महामायां पादुके प्रतिमासु च ॥
चित्रे च त्रिशिखे खड्गे जलस्थां वापि पूजयेत् ।
पञ्चाशदङ्गुलं खड्गं त्रिशिखञ्च त्रिशूलकम् ॥
शिलायां पर्व्वतस्याग्रे गङ्गायामपि तत्समा ।
आर्य्यावर्त्ते मध्यदेशे तथा पर्व्वतगह्वरे ॥
देवीं संपूजयेन्नित्यं भक्तिश्रद्धासमन्वितः ।
वाराणस्यां सदा पूजा सम्पूर्णफलदायिनी ॥
ततस्तु द्विगुणा प्रोक्ता पुरुषोत्तमसन्निधौ ।

पूजासनानि तत्फलानि च यथा, --
"उपविश्यासने रम्ये कृष्णाजिनकुशोत्तरे ।
राङ्कवे कम्बले वापि काशादौ व्याघ्रचर्म्मणि ॥
न कुर्य्यादर्च्चनं विष्णोः शिवे काष्ठासनादिषु ।
काष्ठासने वृथा पूजा पाषाणे रोगसम्भवः ॥
भूम्यासने गतिर्नास्ति वस्त्रासने दरिद्रता ।
कुशासने ज्ञानवृद्धिः कम्बले सिद्धिरुत्तमा ॥
कृष्णाजिने धनी पुत्री मोक्षः स्याद्व्याघ्रचर्म्मणि ।
मन्त्रयोगं प्रकुर्व्वीत भोगार्थं सुखमासने ॥"
इति पाद्मोत्तरखण्ड ७४ अध्यायः ॥

पूजाधिकारिता प्रयोजकदेवषट्कपूजा यथा, --
"गणेशञ्च दिनेशञ्च वह्निं विष्णं शिवं शिवाम् ।
संपूज्य देवषट्कञ्च सोऽधिकारी च पूजने ॥
गणेशं विघ्ननाशाय निष्पापाय दिवाकरम् ।
वह्निं शुद्धाय विष्णुञ्च मुक्तये पूजयेन्नरः ॥
शिवं ज्ञानाय ज्ञानेशं शिवाञ्च बुद्धिवृद्धये ।
संपूज्य तान् लभेत् प्राज्ञो विपरीतमतोऽन्यथा ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ८ अध्यायः ॥

द्वादशमासे विष्णुपूजाविधिर्यथा, --
"प्रत्यहं कार्त्तिके मासि जातीपुष्पैः समर्च्चयेत् ।
दद्यादखण्डदीपञ्च नियतात्मा दृढव्रतः ।
ब्राह्मणान् भोजयित्वाथ सहसायुज्यमाप्नुयात् ॥
मार्गशीर्षे नवान्नेन वकपुष्पैश्च केशवम् ।
समर्च्च्य भोजयेद्विप्रान् वैकुण्ठपदमाप्नुयात् ॥
धनुष्युषसि देवेशं मासमेकं निरन्तरम् ।
अर्च्चयेदुपवासैश्च करवीरैः सितासितैः ॥
धूपैर्दीपैश्च नैवेद्यैर्यथाशक्त्या निवेदयेत् ।
समाप्तौ भोजयेद्विप्रान् महाभागवतोत्तमान् ॥
अश्वमेधसहस्रस्य फलमाप्नोत्यसंशयः ॥
तपोमास्युदिते भानौ स्नात्वा नद्यां विशेषतः ।
अर्च्चयेन्माधवीपुष्पैरुत्पलैश्च शुभानने ! ॥
पायसं विविधं दिव्यं भक्त्या तत्र निवेदयेत् ।
मासान्ते वैष्णवान् विप्रान् भोजयेत् शक्तितो द्विजः ॥
तपस्ये च तथा देवि ! माधवैः कुसुमः शुभैः ।
स्नात्वा संपूजयेद्विष्णुं मासमेकं निरन्तरम् ॥
शर्करान्बु घृतं नित्यमपूपांश्च निवेदयेत् ।
वैष्णवान् भोजयेच्छक्त्या मासान्ते शुभदर्शने ! ॥
मधुमासि तथा नित्यं वकुलैश्चम्पकैरपि ।
पूजयेज्जगतामीशं गुडान्नञ्च ! निवेदयेव् ॥

"गन्धादयो नैवेद्यान्ताः पूजाः पञ्चोपचारिकाः ॥"
इति तन्त्रसारः ॥
अशुच्यादेः पूजानिषेधमाह ।
"अशुचिर्न महामायां पूजयेत्तु कदाचन ।
अवश्यन्तु स्मरेन्मन्त्रं सोऽतिभक्तियुतो नरः ॥
दन्तरक्ते समुत्पन्न स्मरणञ्च न विद्यते ।
सर्व्वेषामेव मन्त्राणां स्मरणान्नरकं व्रजेत् ॥
जानूद्र्ध्वे क्षतजे जाते नित्यकर्म्म न चाचरेत् ।
नैमित्तिकञ्च तदधःस्रवद्रक्तो न चाचरेत् ॥

ततोऽपि द्विगुणा प्रोक्ता द्वारवत्यां विशेषतः ॥
सर्व्वक्षेत्रेषु तीर्थेषु पूजा द्वारवतीसमा ।
बिन्ध्ये शतगुणा प्रोक्ता गङ्गायामपि तत्समा ॥
आर्य्यावर्त्ते मध्यदेशे ब्रह्मावर्त्ते तथैव च ।
बिन्ध्यवत्फलदा पूजा प्रयागे पुष्करे तथा ॥
ततश्चतुर्गुणं प्रोक्तं करतोयानदीजले ।
तस्याच्चतुर्गुणफला नन्दिकुण्डे च भैरव ! ॥
तस्माच्चतुर्गुणा प्रोक्ता जल्पीशेश्चरसन्निधौ ।
तत्र सिद्धेश्वरीयोनौ ततोऽपि द्विगुणा स्मृता ॥
ततश्चतुर्गुणा प्रोक्ता लौहित्यनदपाथसि ।
तत्समा कामरूपे तु सर्व्वत्रैव जले स्थले ॥
सर्व्वश्रेष्ठो यथा विष्णुर्लक्ष्मीः सर्व्वोत्तमा यथा ।
देवीपूजा तथा शस्ता कामरूपे सुरालये ॥
देवीक्षेत्रं कामरूपं विद्यतेऽन्यन्न तत्समम् ।
अन्यत्र विरला देवी कामरूपे गृहे गृहे ॥
ततः शतगुणं प्रोक्तं नीलकूटस्य मस्तके ।
ततोऽपि द्विगुणं प्रोक्तं हेरुके शिवलिङ्गके ॥
ततोऽपि द्विगुणा प्रोक्ता शैलपुत्त्रादियोनिषु ।
ततः शतगुणं प्रोक्तं कामाख्यायोनिमण्डले ॥"
इति कालिकापुराणे । ५४ । ५७ । अध्यायौ ॥

मासान्ते वैष्णवान् विप्रान् भोजयेत् सुसमाहितः ।
सहस्रवार्षिकं पूजाफलं नित्यमवाप्नुयात् ॥
माधवे पूजयेद्विष्णुं शतपत्रैर्म्महोत्पलैः ।
पूजयित्वा विधानेन दध्यन्नफलसंयुतम् ॥
गुडोदकञ्च भक्त्या वै तस्मिन् देवि ! निवेदयेत् ।
लक्ष्म्या युक्तो जगन्नाथः प्रीतो भवति पार्व्वति ! ॥
ज्यैष्ठे तु शुक्लकमलैः पाटलैः कुमुदोत्पलैः ।
अर्च्चयित्वा हृषीकेशमन्नं चूतफलैर्युतम् ॥
निवेदयित्वा भक्त्या वै गवां कोटिप्रदो भवेत् ॥
वैष्णवान् भोजयेन्नित्यं मासान्ते भक्तसत्तमः ।
ब्राह्मणांश्च शिवे ! सर्व्वं फलमानन्त्यमश्नुते ॥

आषाढे देवताधीशं लक्ष्मीभर्त्तारमच्युतम्
।
श्रीपुष्पैरर्च्चयेन्नित्यं पायसान्नं निवेदयेत्
॥
मासान्ते भोजयेद्विप्रान्
महाभागवतोत्तमान् ।
षष्टिवर्षसहस्रस्य पूजां प्राप्नोत्यसंशयम्
॥
नभोमास्यर्च्चयेद्विष्णुं पुन्नागैः
केतकीदलैः ।
अर्च्चयित्वाच्युतं भक्त्या न भूयो
जन्मभाग्भवेत् ॥
दद्याद्वै पिष्टकान् भक्त्या
शर्कराघृतमिश्रितान् ।
ब्राह्मणान् भोजयित्वा तु
सर्व्वमानन्त्यमश्नुते ॥
नभस्यप्यर्च्चयेदीशं कुन्दैः कुरुवकैरपि ।
क्षीरान्नं गुडमिश्रन्तु भक्त्या तत्र निवेदयेत्
।
गवां कोटिप्रदानस्य प्रत्यहं समवाप्नुयात्
॥
इषे नीलोत्पलैर्मासि पूजयेन्मधुसूदनम् ।
भक्त्या निवेदयेत्तस्मिन्
क्षीरमाज्यविमिश्रितम् ॥
कन्याकोटिसहस्राणि कन्याकोटिशतानि
च ।
वैष्णवं लोकमाप्नोति मुदितः
स्वजनैर्युतः ॥
ऊर्ज्जमासे स्वयं देवि !
कोमलैस्तुलसीदलैः ।
पूजयित्वाच्युतं भक्त्या
तत्सायुज्यमवाप्नुयात् ॥”
इति पाद्मोत्तरखण्डे ७५ अध्यायः ॥
द्वादशमासादौ दुर्गापूजादि देवीपुराणे
द्रष्ट-
व्यम् ॥
अथ देवपूजाविधिः ।
स्नातः स्नानासामर्थ्ये आर्द्रवाससा
कृतगात्र-
मार्ज्जनादिर्गृ हसमीपं गत्वा प्राङ्मुख
उदङ्मुखो वा
प्रक्षालितपादः शुचिर्द्विवासाः कुशहस्तः

कृत्य वमिति वरुणबीजेन चतुःषष्टिवारजप्तेन
जलाधिपध्यानरूपया जलाधिपधारणया
चन्द्र-
मण्डलादमृतं स्रावयित्वा तेनाप्लाव्य प्रणवेन
सर्व्वाङ्गं संघटितं पुनर्नवीभूतं चिन्तयित्वा
वाय्वादिभूतानि व्योमादिभ्यो व्युत्क्रमेण बहिः
कृत्वा हंस इति मन्त्रेण परमात्मतो जीवं नाभि-
पद्मे न्यसेत् ॥ * ॥
तत ऋष्यादिन्यासः ।
गोपालमन्त्रे तु नारदाय ऋषये नमः शिरसि ।
गायत्रीच्छन्दसे नमो मुखे । श्रीकृष्णाय देवाय
नमो हृदि । एवमन्यत्रोहनीयम् ॥ * ॥
ततः प्राणायामः ।
तत्तन्मूलमन्त्रेण षोडशवारजप्तेन अङ्गुष्ठेन
दक्षिणनासापुटं धृत्वा वामनासया वायुं पूर-
येत् । अङ्गुष्ठानामिकाभ्यां नासापुटौ धृत्वा
चतुःषष्टिवारजप्तेन वायुं कुम्भयेत् ।
वामनासाम-
नामिकया धृत्वा दक्षिणनासया द्वात्रिंशद्वार-
जप्तेन वायुं त्यजेत् । पुनर्दक्षिणनासया पूरयेत्
।
उभाभ्यां कुम्भयेत् । वामनासया रेचयेत् ।
पुनर्वामया पूरयेत् । उभाभ्यां कुम्भयेत् । दक्षि-
णया रेचयेदिति ॥ * ॥
ततो वाह्यमातृकान्यासः । न्यासशब्दे द्रष्टव्यः
॥
अनेकदेवपूजने तु भूतशुद्धिमातृकान्यासयोर-
विशेषात् सकृद्देवानुष्ठानम् ॥ * ॥
ततः करन्यासः ।
यथा गोपाले । ॐ क्लां अङ्गुष्ठाभ्यां नमः अङ्गु-
ष्ठयोः । ॐ क्लीं तर्जनीभ्यां स्वाहा तर्ज्जन्योः
।
ॐ क्लूं मध्यमाभ्यां वषट् मध्यमयोः । ॐ
क्लैं
अनामिकाभ्यां हूं अनामिकयोः । ॐ क्लौं
कनिष्ठाभ्यां वौषट् कनिष्ठयोः । ॐ क्लः
करतल-
पृष्ठाभ्यां फट् करतलपृष्ठयोः ।
एवमन्यत्राप्यूह्यम् ॥
ततोऽङ्गन्यासः ।
ॐ क्लां हृदयाय नमः हृदये हस्ततलेन । ॐ
क्लीं शिरसे स्वाहा अङ्गुष्ठाङ्गुलिभिः शिरसि ।
ॐ क्लूं शिखायै वषट् अधोमुखाङ्गुलिमुष्टिना

धनान्तदेवतानाम्ना इहागच्छेत्यावाह्य स्थाप-
यित्वा मूलेन चतुर्थ्यन्तनाम्ना आसनं दत्त्वा
सम्बोधनान्तनाम्ना स्वागतं ते इति पृच्छेत् ।
दीक्षितस्तु मूलमन्त्रमुच्चार्य्य प्रणवादिचतुर्थ्यन्त-
नाम्ना नमोऽन्तेन दद्यादिति विशेषः । एवं
पाद्यार्घ्याचमनीयादीनि दद्यात् । पाद्यार्घ्ययोः
पौर्ब्बापर्य्ये त्वनियमः । ततो घृतमधुदधिमेलक-
पलमितं कांस्यपात्रस्थं पिहितञ्च मधुपर्कं पुन-
राचमनीयञ्च दद्यात् । ततो लौकिकषष्ट्यधिक-
शतत्रयतोलकान्यूनवैदिकाष्टोत्तरशतपलान्यून-
जलेन तदभावे षष्टिरक्तिकमासद्वयाधिकत्रयो-
दशतोलकरूपवैदिकपलचतुष्टयान्यूनजलेन इदं
स्नानीयं एवं दुग्धादिनापि । घृतादिस्नाने तु
गन्धद्रव्यचूर्णकविरूक्षणमुष्णोदकेन क्षालनं चाङ्गं
ततः पुनराचमनीयं वाससी पुनराचमनीयं
दद्यात् । प्रत्येकमलङ्कारं यज्ञोपवीतं गन्धं पुष्पं
धूपं दीपं नैवेद्यं पुनराचमनीयं ताम्बूलं दत्त्वा
मूलमन्त्रं यथाशक्ति जप्त्वा समर्प्यत्रिः प्रदक्षिणी-
कृत्य अष्टाङ्गप्रणिपातेन पञ्चाङ्गप्रणिपातेन वा
शिरसि करद्वयसंयोगेन च प्रणम्य स्तुत्वा प्रण-
वादिसम्बोधनान्तनाम्ना क्षमस्वेति विसर्ज्जयेत् ।
यत्र यदुपचारद्रव्यासम्भवस्तदर्थं जलं देयम् ।
प्रतिष्ठितस्थिरतरप्रतिमायां तत्तदावाहनविस-
र्ज्जने न स्तः । एवं शालग्रामे जले वा सर्व्व-
देवपूजनेऽपि यथालाभं पाद्यादिदशोपचारैः ।
गन्धपुष्पधूपदीपनैवेद्यैः पञ्चोपचारैः गन्ध-
पुष्पाभ्यां वा केवलेन पुष्पेण केवलेनाक्ष-
तेन केवलेन जलेन मानसिकेन वा पूज-
येत् । तत्र सामान्यदेवताधूपः शारदायाम् ।
सगुग्गुल्वगुरूशीरशर्करामधुचन्दनैः ।
धूपयेदाज्यसंमिश्रैर्नीचैर्देवाय देशिकः ॥
एतैर्मिलितैर्यथालाभं वा । इति सर्व्वदेवता-
साधारणो विधिः ॥ * ॥
ततः प्रथमं सूर्य्यपूजा ।
ॐ सूर्य्यायनमः इति पूजयेत् । तत्र गन्धाः ।
चन्दनागुरुकर्पूरवीरणमूलपद्मकाष्ठरक्तचन्द-
नानि । पुष्पाणि । मल्लिकामालतीकरवीरचम्पक-
पाटलावकुलतगरपीतझिण्टीकुन्दनवमल्लिका-
शोकपद्मागस्त्यजवापुष्पाणिविहितानि । तुलसी-
कृष्णतुलसीदूर्व्वाविल्वपत्राणि राजिताकाञ्च्येक-
दलतगरमुद्गलानि निषिद्धानि । धूपाश्च । गुग्-
गुल्वगुरुदेवदारुविल्वानि । दीपस्तु घृतेन तैलेन
वा । नैवेद्यानि विविधभक्ष्याणि ॥ * ॥

स्वाचान्तः सर्व्वत्र वीरासनोपविष्टः
प्राङ्मुखः
रात्रावुदङ्मुख एव मौनी ध्यानपरायणः
काम-
रागभय-द्वन्द्वक्रोध-मात्सर्य्यत्वरा-
रहितस्तन्मनाः
सुमना वा शुचौ
समुपविष्टोऽनिष्टशब्दगन्ध-
रहिते देशे दक्षिणपार्श्वे
नैवेद्याद्युपकरणानि
च वामपार्श्वे जलं पुरतो धूपदीपौ
ताम्रादि-
पात्रञ्च यथासन्निवेशं
पाद्यार्घ्याचमनीयपात्रं
जलादिपूर्णमग्रतः स्थापयित्वा यथालाभं
यज्ञोप-
वीतवस्त्रालङ्करणादि संस्थाप्य ।
ॐ अपसर्पन्तु ते भूता ये भूता
भूमिपालकाः ।
भूतानामविरोधेन पूजाकर्म्म करोम्यहम्
॥
इत्युच्चार्य्य अस्त्राय फडिति
तर्ज्जन्यङ्गुष्ठयोग-
ध्वनिच्छोटिकया दशदिग्बन्धनं कुर्य्यात्
॥ * ॥
नादेवो देवमर्च्चयेदित्यनुरोधात्
सर्व्वदेवार्च्चनेषु
भूतशुद्धिमाहुरागमिकाः । सा यथा, --
सोऽहमिति मन्त्रेण जीवात्मानं नाभितो
हृदिस्थ-
परमात्मनि संयोज्य ततः पृथिवीं जले
जलं
तेजसि तेजो वायौ ततो वायुमाकाशे
प्रवेश्य
दक्षिणाङ्गुष्ठेन दक्षिणनासापुटं धृत्वा
यमिति
वायुबीजेन षोडशवारजप्तेन
वाय्वाकर्षणरूप-
पूरकसंज्ञया वायुचिन्तनरूपया
वायव्याधार-
णया देहं शोषयित्वा ततो
नासापुटावङ्गुष्ठा-
नामिकाभ्यां धृत्वा रमिति वह्निबीजेन
चतुः-

शिखायाम् । ॐ क्लैं कवचाय हूं व्यस्तकर-
तलाभ्यां आशिरःपादपर्य्यन्तरूपसर्व्वाङ्गे । ॐ
क्लौं नेत्राभ्यां वौषट् तर्जनीमध्यमाभ्यां नेत्रयोः
।
ॐ क्लः अस्त्राय फट् ऊर्द्ध्वाधस्तालत्रयं
छोटि-
काभिर्दशदिग्बन्धनञ्च कुर्य्यात् ।
एवमन्यत्राप्यूह-
नीयम् । आगमोक्तादिपूजने तु भूतशुद्ध्यादि-
नियमः अन्यत्र त्वनियमः ॥ * ॥
ततोऽर्घ्यस्थापनम् ।
वामतोऽर्घ्यपाद्याद्याचमनीयपात्राणि संस्थाप्य
अर्घ्यपात्रं जलगन्धपुष्पैः संपूज्य तत्तद्देवता-
मूलमन्त्रं सर्व्वदेवतासाधारणे तु प्रणवं वा
अष्टधा जप्त्वा धेनुमुद्रया अमृतीकृत्य तदुदकं
पात्रान्तरे किञ्चित् कृत्वा तेनोदकेनात्मानं
पूजोपकरणञ्चाभ्युक्षयेत् । प्रणवादितत्तद्देवता-
चतुर्थ्यन्तनाम्ना नमोऽन्तेन मूलमन्त्रेण वा
आत्मानं गन्धादिभिरभ्यर्च्य तद्रूपं ध्यात्वा
तत-
स्ताम्रपात्रे चन्दनादिरचिताष्टदलपद्मे सम्बो-

अथ गणेशपूजा ।
तदावाहने । ॐ भूर्भुवःस्वर्गणेश इहागच्छ
इति दूर्व्वापुष्पाक्षतैरावाह्य ॐ गणेशाय नम
इत्यनेन पूजयेत् । तत्र तुलसी निषिद्धा । रक्त-
चन्दनरक्तपुष्पादिकं विहितम् । देवतान्तरप्रसिद्धं
अन्यत् मुकुलादिकं न देयम् ॥ * ॥
अथ दुर्गापूजा ।
ॐ भूर्भुवःस्वर्दुर्गे इहागच्छ इति पुष्पाक्षतैरा-
वाह्य ॐ दुर्गायै नम इत्यनेन पूजयेत् । तत्र

| | | |
|---|---|---|
| षष्टिवारजप्तेन स्तम्भनरूपकुम्भकसंज्ञया अग्नि-<br>चिन्तनरूपया आग्नेय्या धारणया देहं दाह-<br>यित्वा लमितीन्द्रबीजेन द्वात्रिंशद्वारजप्तेन<br>दक्षिणनासापुटेन वायुनिःसारणरूपया रेचक-<br>संज्ञया ऐन्द्रध्यानरूपया ऐन्द्र्याधारणया स्थिरी- | | |

गन्धाः चन्दनागुरुकर्पूरकुङ्कुमानि । पुष्पाणि मल्लिकोत्पलपुन्नागशमीचम्पकाशोककर्णिकार-करवीरतुलसीविल्वपत्रादीनिविहितानि । मुकुलार्कमन्दारपुष्पाणि निषिद्धानि । धूपाः कृष्णागुरुसहितघृतमहिषाक्षगुग्गुलुविल्वान्यतमानि वीरणमूलचन्दनेऽपि । दीपस्तु घृतेन तैलेन वा । नैवेद्यानि आम्रनारिकेलखर्ज्जूर-कदलीबीजपूरादीनि । क्वथितं विद्धं फलं निषि-
द्धम् । यत्नपक्वकदलीफलमपिविहितम् ॥ * ॥

अथ शिवपूजा ।

उदङ् मुखः ॐ नमः शिवाय नमः इति मन्त्रेण पूजयेत् । तत्र गन्धः अगुरुचन्दने । पुष्पाणि च अर्ककरवीरजातीवकुलपाटलाश्वेतमन्दारनाग-केशरचम्पक-धुस्तूरविल्वामलक-
तुलसीपत्राणि
विहितानि । केतकीमाधवीपुष्पकुन्दयूथीमद-न्तिकाशिरीषसर्जबन्धूकमुकुलमात्राणि निषि-द्धानि । धूपस्तु घृतगुग्गुलुविल्वफलानि उशीरा-
गुरुचन्दनानि च । दीपस्तु घृतेन तैलेन सर्षपा-दिना वा । नैवेद्यानि
गुडखण्डघृतपक्वमातुलुङ्ग
फलादीनि ॥ * ॥

अथ पार्थिवशिवलिङ्गपूजाविधिः ।

ॐ हराय नम इति मृदाहरणम् । ॐ महे-श्वराय नम इति घटनम् । ॐ शूलपाणे इह सुप्रतिष्ठितो भव इति प्रतिष्ठा । आचारात् ध्यायेन्नित्यमित्यादिना शारदोक्तं ध्यायेत् । पिनाकधृक् इहागच्छ इत्यावाहनम् । ॐ पशु-पतये नम इति स्नपनम् । एतत् पाद्यं ॐ नमः शिवाय नम इति पाद्यादिभिः संपूज्य वामावर्त्तेन वेद्यां प्राच्यादिषु ॐ सर्व्वाय क्षिति-मूर्त्तये नमः ॐ भवाय जलमूर्त्तये नमः ॐ रुद्राय अग्निमूर्त्तये नमः ॐ उग्राय वायुमूर्त्तये नमः ॐ भीमाय आकाशमूर्त्तये नमः ॐ पशु-पतये यजमानमूर्त्तये नमः ॐ महादेवाय सोममूर्त्तये नमः ॐ ईशानाय सूर्य्यमूर्त्तये नमः ।
इत्यष्टमूर्त्तीः पुष्पैः पूजयेत् । ततो मुखवाद्यं कृत्वा
महादेव क्षमस्वेति संहारमुद्रया विसर्ज्जयेत् । योस्तु पौर्ब्बापर्य्येण नियमः । आचमनीये सुगन्धि-द्रव्ययुक्तजलं केवलं वा प्रशस्तजलम् । घृतमधु-दध्यात्मको मधुपर्कः तदभावे केवलं वा मधु । पूर्ब्बवदिदमाचमनीयं इदं स्नानीयं तत्र लौकिक-षष्ट्यधिकशतत्रयतोलकान्यूनं जलम् । पुनराच-मनीयं इदं वस्त्रं पुनराचमनीयं इदमाभरणं पुनराचमनीयं गन्धस्तु अङ्गुष्ठयुक्तकनिष्ठया गन्ध-मुद्रया तत्र चन्दनागुरुकर्पूरकुङ्कुमवीरणमूल-पद्मकाष्ठसिह्लकरक्तचन्दनकस्तूरिकाजातीफलानि घृष्टानि एतच्चूर्णानि वा एतद्वाहाकृष्टरसो वा पुष्पाणि च तर्ज्जन्यङ्गुष्ठयोगरूपपुष्पमुद्रया तत्र मल्लिका-मालतीजाती-केतक्यशोक-चम्पकनाग-केशरवकुल-पद्मोत्पलतुलसी-विल्वकरवीरपारि-भद्रपाटलाश्वेतापराजिताबह्वदलतगरश्वेतजवा-रक्ताशोकशणपुष्पभूमिचम्पकशेफालीनवमालि-कायूथिकाकदम्बकुन्दलवङ्गमाधवीपुष्पवकबन्धूक-कुरुवकविल्वपुष्प-बहुवारक-कह्लारद्रोणपलाश-पुष्पाणि विहितानि । नरसिंहेतरावतारे केतकी निषिद्धा । पर्य्युषितमच्छिद्राप्रोक्षितस्वयम्पतितोप-हतमध्याह्नस्नानोत्तरत्रुटितपद्मचम्पेकनारकलि-कातुलसीतरशुष्कपत्रपरिहित-पुष्पविहितेतर-रक्तपुष्पचैत्यवृक्षोद्भवश्मशानजात-कुटज-शा-ल्मलीशिरीषपुष्पाणि निषिद्धानि । ब्राह्मणेतरस्य वनोद्भवानि च । विहितपत्राणि तुलसीविल्व-शमीभृङ्गराजतमालामलककेतकीपत्राणि । पद्म-कुन्दोत्पलानि पञ्चदिनात् परतः पर्य्युषितानि । तुलस्यगस्त्यविल्वानि कदापि न पर्य्युषितानि । धूपस्थानञ्च देवस्य वामे पुरतो वा । तर्ज्जन्यङ्गुष्ठ-योगरूपधूपमुद्रया वामहस्तेन घण्टां वादयन् देयः । स च भूमौ न देयः । धूपश्च जटामांसी-महिषाक्षगुग्गुलुकर्पूरागुरुसिह्लकदेवदारुजाती-फलशारदोक्तमिश्रितगुग्गुल्वादयः । दीपस्थानं देवस्य दक्षिणतः पुरतो वा । मध्याङ्गुष्ठयोगरूप-दीपमुद्रया एष दीपः घृतेन तैलेन वा भूमौ न देयः । नैवेद्यस्थानञ्च देवपृष्ठेतरदेशः । अना-मिकाङ्गुष्ठयोगरूपनैवेद्यमुद्रया एतन्नैवेद्यं तत्र कदली-पनस-जम्बूलवनी-करमर्दक-हविःसंस्कृत-तिलमाषमुद्गयवगोधूमव्रीहिशाल्यन्नंविहितम् । निषिद्धन्तु अजामहिषीक्षीरदधिघृतंपञ्चनख वराह-मत्स्य-मृग-च्छागेतरमांस-हिरण्योदक-स्पर्शेतरश्वचाण्डालदृष्टविडालाद्युच्छिष्टस्नेहाक्त-पर्य्युषितेतरभक्ष्यम् । खण्डादीनि यवगोधूमक्षीर-विकाराश्च न पर्य्युषिताः । ततः पुनराचमनीयं भृत्यार्त्तिहं प्रणतपालभवाब्धिपोतं
वन्दे महापुरुष ! ते चरणारविन्दम् ॥
त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं
धर्म्मिष्ठ ! आर्य्यवचसा यदगादरण्यम् ।
मायामृगं दयितयेप्सितमन्वधाव-
द्वन्दे महापुरुष ! ते चरणारविन्दम् ॥
इति स्तुत्वा ॐ प्रसीद भगवन्निति दण्डवत् प्रणमेत् ।
ॐ यत् किञ्चित् क्रियते देव मया सुकृतदुष्कृ-
तम् ।
तत् सर्व्वं त्वयि संन्यस्तं त्वत्प्रयुक्तः करोम्यहम् ॥
इत्यनेन सर्व्वं समर्पयेत् ॥
मन्त्रहीनं क्रियाहीनं भक्तिहीनं जनार्द्दन ।
यत् पूजितं मया देव ! परिपूर्णं तदस्तु मे ॥
इति प्रार्थयेत् ॥ ततः संहारमुद्रया निर्म्माल्य-
पुष्पमादाय भूमौ त्यजेत् विसर्ज्जनसत्त्वे ॐ भगवन् विष्णो क्षमस्वेति विसर्ज्जयेत् तदसत्त्वे
निर्म्माल्यपुष्पमादाय ।
ॐ तिष्ठ देव परे स्थाने स्वस्थाने परमेश्वर ।
यत्र ब्रह्मादयः सर्व्वे सुरास्तिष्ठन्ति मे हृदि ॥
इति मन्त्रेण देवं हृदि स्थापयेत् । तत ॐ विष्वक्सेनाय नम इति गन्धपुष्पनैवेद्याग्रं दद्यात् । ततो वैष्णवाय तन्निर्म्माल्यं अनुलेपनं
नैवेद्यञ्च किञ्चिद्दत्त्वा शिरसि निर्म्माल्यं धार्य्यं
सर्व्वाङ्गेष्वनुलेपनं कृत्वा यथाकालं पादोदकं
नैवेद्यञ्चोपभुञ्जीत । तत्र पादोदकग्रहणे मन्त्रः ।
ॐ कृष्ण कृष्ण महावाहो भक्तानामार्त्तिनाशन ।
सर्व्वपापप्रशमनं पादोदकं प्रयच्छ मे ॥
ततस्तत्पानादौ परोदितेष्टदेवतानाम श्रुत्वा स्वयं त्रिरुच्चार्य्य पादोदकं पीत्वा तच्छेषम् ।
अकालमृत्युशमनं सर्व्वव्याधिविनाशनम् ।

स्त्रीशूद्रस्तु नमः शिवायेति मन्त्रेण पूजयेत् ॥ * ॥
अथ विष्णुपूजा ।
शङ्खाद्यर्घ्यपात्रं पुरतो निधाय त्रिभागजलेना-पूर्य्य वमिति धेनुमुद्रया अमृतीकृत्य ॐ विष्णवे नम इत्यष्टधा जपित्वा तेनोदकेनात्मानं पूजोप-करणञ्चाभ्युक्षेत् । दीक्षितस्तु तन्मन्त्रमुच्चार्य्य तन्नाम्ना पूजयेत् अङ्गाद्यावरणञ्च पूजयेत् शाल-
ग्रामे मणौ प्रतिमाष्टदलपद्मजलादिषु। तत्र शालग्रामे आवाहनविसर्ज्जने न स्तः । ध्येयः सदेत्यादिना ध्यात्वा ॐ भगवन् विष्णो इहा-गच्छेत्याद्यक्षतपुष्पैरावाह्य इदमासनं ॐ श्रीविष्णवे नमः ॐ विष्णो स्वागतमिति पृच्छेत् एतत् पाद्यं ॐ विष्णवे नमः सामगस्तु इदमर्घ्यं ॐ विष्णवे नमः इति वदेत् । तदितरस्तु एषो-ऽर्घ इति विशेषः । तत्र द्रव्याणि कुशपुष्पाक्षत-सिद्धार्थचन्दनतोयानि यथालाभं वा अर्घ्यपाद्य-

ताम्बूलञ्च दत्त्वा अष्टोत्तरसहस्रं शतं दश वा उत्तरीयवस्त्रेण छादितहृद्देशे स्थिततिर्य्यग्भूत-दक्षिणकरः यथाशक्ति मूलमन्त्रं जपित्वा
ॐ गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देव ! त्वत्प्रसादात् त्वयि स्थिते ॥
इत्यर्घ्योदकेन देवहस्ते जलं दद्यात् । ततोऽर्घ्य-शङ्खं गृहीत्वा त्रिः प्रदक्षिणीकृत्य,
ध्येयं सदा परिभवघ्नमभीष्टदोहं
तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ।

विष्णोः पादोदकं पुण्यं शिरसा
धारयाम्यहम् ॥
इति शिरसि धारयेत् ॥ नैवेद्यभक्षणे मन्त्रः ।
ॐ उच्छिष्टभोजिनस्तस्य
वयमुच्छिष्टकाङ्क्षिणः ।
येन लीलावराहेण हिरण्याख्यो निपातितः ॥
इत्युच्चार्य्य भक्षयेत् ॥ * ॥ यथालाभं दशोपचारेण
वा पूजयेत् । तत्र दशोपचाराः ।
अर्घ्यपाद्याचम-नीयमधुपर्काचमनगन्धपुष्पधूपदीपनैवेद्यानि ।
पञ्चोपचाराः । गन्धपुष्पधूपदीपनैवेद्यानि । गन्ध-
पुष्पाभ्यां वा केवलपुष्पेण केवलजलेन वा पूज-
येत् ततोऽग्निब्रह्मसरस्वतीलक्ष्मीणांपूजनम् ।
इत्याह्निकप्रयोगतत्त्वम् ॥ * ॥
तन्त्रोक्तसामान्य-
पूजा कलावतीशब्दे द्रष्टव्या ॥

**पूजार्हः**, त्रि, (पूजामर्हतीति । पूजा + अर्ह + "अर्हः ।" ३ । २ । १२ । इत्यच् ।) पूजा-योग्यः । मान्यः । इति शब्दरत्नावली ॥ (यथा,
मनुः । ९ । २६ ।
"प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः ।
स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥")

**पूजितः**, त्रि, (पूज + क्तः ।) प्राप्तपूजः । अर्च्चितः ।

तत्पर्य्यायः । अञ्चितः २ । इत्यमरः । ३ । १ । ९८ ॥
(यथा, भट्टिः । ४ । १ ।
"निवृत्ते भरते धीमानत्रे
रामस्तपोवनम् ।
प्रपेदे पूजितस्तस्मिन्
दण्डकारण्यमीयिवान् ॥")

**पूजितव्यः**, त्रि, पूजनीयः । पूजधातोः कर्म्मणि

तव्यप्रत्ययनिष्पन्नः ॥

**पूजिलः**, पुं, (पूज्यते इति । पूज + "गुपादिभ्यः

कित् ।" उणा० १ । ५७ । इति
इलच् । स च
कित् ।) देवता । इति
संक्षिप्तसारोणादि-
वृत्तिः ॥ पूज्ये, त्रि । इत्युणादिकोषः ॥

**पूज्यः**, पुं, (पूजयितुमर्हः । पूज + "अर्हे कृत्य-

तृचश्च ।" ३ । ३ । १६९ । इति
यत् ।) श्वशुरः ।
पूजनीये, त्रि । तत्पर्य्यायः ।
प्रतीक्ष्यः २ । इत्य-
मरः । ३ । ३ । १५० ॥ यथा, --
"अहं हि पूर्ब्बो वयसा भवद्भ्य-
स्तेनाभिवादं भवतां न युक्तम् ।
यो विद्यया तपसा जन्मना वा
वृद्धः स पूज्यो भवति द्बिजानाम् ॥
अष्टक उवाच ।
अवादीश्चेद्वयसास्मि प्रवृद्ध
इति वैराजाभ्यधिकः कथञ्चित् ।
यो वै विद्वांस्तपसा स वृद्धः
स एव पूज्यो भवति द्बिजानाम् ॥"
इति मात्स्ये ३९ अध्यायः ॥

**पूण**, क संघाते । राशीकरणे । इति कविकल्प-

**पूततृणम्**, क्ली, (पूतं पवित्रं तृणमिति नित्यकर्म्म-

धारयः ।) श्वेतकुशः । इति राजनिर्घण्टः ॥

**पूतद्रुः**, पुं, (पूतः पवित्रो द्रुः ।) पलाशवृक्षः ।

इति राजनिर्घण्टः ॥

**पूतधान्यं**, क्ली, (पूतं धान्यमिति नित्यकर्म्म-

धारयः ।) तिलः । इति राजनिर्घण्टः ॥

**पूतना**, स्त्री, (पूतं करोतीति । तत्करोतीति णिच् ।

ततो बहुलमन्यत्रापीति युच् ।) हरीतकी ।
इत्यमरः । २ । ४ । ४९ ॥ सिन्धुदेशजा
स्वल्पत्वक् बृह-
दस्थिहरीतकी लेपने प्रशस्ता । इति
राजवल्लभः ॥
(उत्पत्तिस्थानञ्चाकृतिश्चास्या यथा, --
"पूतना मगधोद्भवा ।" "पूतना चतुरस्रका ।"
"पूतना चतरङ्गुला -- ।"
इति हारीते कल्पस्थान प्रथमेऽध्याये ॥)
गन्धमांसी । इति राजनिर्घण्टः ॥
दानवीभेदः ।
सा वकासुरभगिनी जिघांसया स्तनकाल-
कूटप्रदानात् श्रीकृष्णेन हता ।
(एतद्वृत्तान्तस्तु
हरिवंशे ६२ अध्याये द्रष्टव्यः ॥) रोगभेदः ।
इति मेदिनी । ने, ९३ ॥ स च अहिपूतना-
नामबालरोगः । तस्य निदानं यथा, --
"पद्मवर्णो महापद्मो बाले दोषत्रयोद्भवः ।
शङ्खाभ्यां हृदयं यो वा हृदयाद्वा गुदं व्रजेत् ॥
क्षुद्ररोगे च कथिते अजगल्ल्यहिपूतने ॥"
क्षुद्ररोगोक्तं यथा, --
"शकृन्मूत्रसमायुक्तेऽशौचेऽपाने शिशोर्भवेत् ।
स्विन्ने वा स्नाप्यमाने वा
कण्डूरक्तकफोद्भवा ॥

शून्यागाराश्रिता देवी दारकं पातु पूतना ।
दुर्द्दर्शना सुदुर्गन्धा कराला मेघकालिका ॥
भिन्नागाराश्रया देवी दारकं पातु पूतना ॥"
इति चोत्तरतन्त्रे द्वात्रिंशत्तमेऽध्याये सुश्रुतेनो-
क्तम् ॥) बालमातृकाविशेषः । यथा, --
"तृतीये दिवसे मासे वर्षे वा गृह्णाति पूतना
नाम मातृका । तया गृहीतमात्रेण प्रथमं भवति
ज्वरः ॥ गात्रमुद्वेजयति स्तन्यं न गृह्णाति दृष्टिं
बध्नाति क्रन्दति ऊर्द्ध्वं निरीक्षते । वलिन्तस्य प्रव-
क्ष्यामि येन सम्पद्यते शुभम् ।
नद्युभयतटमृत्तिकां
गृहीत्वा गन्धं ताम्बूलं रक्तपुष्पं रक्तचन्दनं रक्त-
सप्तध्वजाः सप्तप्रदीपाः सप्तस्वस्तिकाः मत्स्य-
मांससुराः अग्रभक्तञ्च दक्षिणस्यां दिशि मध्याह्ने
चतुष्पथे वलिर्दातव्यः शिवनिर्म्माल्यगुग्गुलु-
सर्षपनिम्बपत्रमेषशृङ्गैर्दिनत्रयं धूपयेत् । ॐ
नारायणाय नमः हन हन मुञ्च मुञ्च हुं फट्
त्रायस्व स्वाहा । चतुर्थे दिवसे ब्राह्मणं भोजयेत्
ततः सम्पद्यते शुभम् ।" इति चक्रपाणिदत्तः ॥

**पूतनारिः**, पुं, (पूतनाया अरिः शत्रुः ।) श्रीकृष्णः ।

इति शब्दरत्नावली ॥

**पूतनासूदनः**, पुं, (पूतनां सूदयति सूदितवानिति

वा । सूद + ल्युः ।) श्रीकृष्णः । इति त्रिकाण्ड-
शेषः ॥

**पूतनाहा**, [न्] पुं, (पूतनां हन्तीति । हन +

क्विप् ।) श्रीकृष्णः । इति हेमचन्द्रः ॥

**पूतफलः**, पुं, (पूतानि पवित्राणि फलान्यस्य ।)

पनसः । इति राजनिर्घण्टः ॥ (पनसशब्देऽस्य
विवरणं व्याख्यातम् ॥)

**पूता**, स्त्री, (पूत + टाप् ।) दूर्व्वा । इति राज-

निर्घण्टः ॥

**पूतात्मा**, [न्] पुं, (पूतः पवित्र आत्मा स्वभावः ।)

पवित्रस्वभावः । (पूत आत्मा स्वरूपं यस्य

द्रुमः ॥ (चुरा०-पर०-सक०-सेट् ।) षष्ठस्वरी ।

क, पूणयति धान्यं लोकः । राशीकरोतीत्यर्थः । इति दुर्गादासः ॥

**पूतं**, क्ली, (पूयते स्मेति । पू + कर्म्मणि क्तः ।)

अपनीततुषधान्यम् । वओलान धान इति भाषा ॥ तत्पर्य्यायः । बहुलीकृतम् २ । इत्यमरः । २ । ९ । २३ ॥

**पूतः**, त्रि, (पूञ शोधे + क्तः ।) व्रतादिना शुद्धः ।

तत्पर्य्यायः । पवित्रः २ प्रयतः ३ । इत्यमरः । २ । ७ । ४५ ॥ शुद्धः । यथा, --
"दधिगोमयादि सामान्यं पवित्रं स्वभावपवित्रं वा ।" इति भरतः ॥ तत्पर्य्यायः । पवित्रम् २ । मेध्यम् ३ । इत्यमरः । ३ । १ । ५५ ॥ यथा, --
"चक्षुःपूतं न्यसेत् पादं वस्त्रपूतं जलं पिबेत् ।
सत्यपूतं वदेद्वाक्यं बुद्धिपूतं विचिन्तयेत् ॥"
इति मार्कण्डेयपुराणम् ॥ सत्यम् । इति जटाधरः ॥

**पूतः**, पुं, (पूयते स्म येनेति । पू + करणे क्तः ।

यद्वा, पवते स्मेति गत्यर्थेति कर्त्तरि क्तः ।) शङ्खः । श्वेतकुशः । विकङ्कतवृक्षः । इति राजनिर्घण्टः ॥

**पूतक्रतायी**, स्त्री, (पूतक्रतोरिन्द्रस्य स्त्री । पूत-

क्रतु + "पूतक्रतोरै च ।" ४ । १ । ३६ । इति

कण्डूयनात्ततः क्षिप्रं स्फोटः स्रावश्च जायते ।
एकीभूतं व्रणं घोरं तं विद्यादहिपूतनम् ॥"
इति माधवकरः ॥ * ॥
(लक्षणान्तरमस्या यथा, --
"स्रस्ताङ्गः स्वपिति सुखं दिवा न रात्रौ
विड्भिन्नं सृजति च काकतुल्यगन्धिः ।
छर्द्यार्त्तो हृषिततनूरुहः कुमार-
स्तृष्णालुर्भवति च पूतनागृहीतः ॥"
इति सुश्रुतेनोत्तरतन्त्रे सप्तविंशेऽध्याय उक्तम् ॥
चिकित्सास्या यथा, --
"कपोतवङ्कारलुको वरुणः पारिभद्रकः ।
आस्फोता चैव योज्याः स्युर्बालानां परिषेचने ॥
वचा वयस्था गोलोमी हरितालं मनःशिला ।
कुष्ठं सर्ज्जरसश्चैव तैलार्थे वर्ग इष्यते ॥
हितं घृतं तुगाक्षीर्य्या सिद्धं मधुरकेषु च ।
कुष्ठतालीशखदिरं चन्दनस्यन्दने तथा ॥
देवदारु वचाहिङ्गु कुष्ठं गिरिकदम्बकः ।
एलाहरेणवश्चापि योज्या तद्धूपने सदा ॥
गन्धनाकुलिकुम्भीका मज्जानो वदरस्य च ।
कर्कटास्थि घृतञ्चैव धूपनं सर्षपैः सह ॥
काकादनीं चित्रफलां विम्बीं गुञ्जाञ्च धारयेत् ।
मत्स्यौदनञ्च कुर्व्वीत कृशरां पललन्तथा ॥
शरावसम्पुटे कृत्वा वलिं शून्यगृहे हरेत् ।
उच्छिष्टेनाभिषेकेन शिरसि स्नानमिष्यते ॥
पूज्या च पूतना देवी वलिभिः सोपहारकैः ।
मलिनाम्बरसंवीता मलिनारूक्षमूर्द्धजा ॥

विष्णुः । यथा, महाभारते । १३ । १४९ । १५ ।
"पूतात्मा परमात्मा च मुक्तानां परमागतिः ॥")
शुद्धदेहे, त्रि । यथा, --
"शाम्बोऽपि स्तवराजेन स्तुत्वा सप्ताश्ववाहनम् ।
पूतात्मा नीरुजः श्रीमांस्तस्माद्रोगाद्विमुक्तवान् ॥"
इति शाम्बपुराणे सूर्य्यस्तवः ॥

**पूति**, क्ली, (पुनातीति । पू + कर्त्तरि क्तिच् ।)

रोहिषतृणम् । इति राजनिर्घण्टः ॥

**पूतिः**, स्त्री, (पू + भावे क्तिन् ।) पवित्रता ।

दुर्गन्धः । इत्यमरटीकायां रायमुकुटः ॥ (यथा, गारुडे १८० अध्याये ।
"मेषमूत्रसैन्धवाभ्यां कर्णयोर्भरणात् शिव ।
कर्णयोः पूतिनाशः स्यात् कृमिस्रावो विनश्यति ॥")
खट्टाशमुष्कः । खाटाशी इति भाषा । तस्यानुलेपनगुणः । परमालक्ष्मीरक्षोज्वरनाशित्वम् । इति राजवल्लभः ॥ (अस्या विशोधनं यथा, --
"यथालाभमपामार्गस्नुह्यादिक्षारलेपितम् ।
वास्पस्वेदेन संस्विद्य पूतिं निर्लोमतां नयेत् ॥
दोलापाकं पचेत् पश्चात् पञ्चपल्लववारिणा ।
खलः साधुमिवोत्पीड्य ततो निस्नेहतां नयेत् ॥

ङीप् ऐकारादेशश्च ।) इन्द्रपत्नी । शची । इति जटाधरः ॥

**पूतक्रतुः**, पुं, (पूतः क्रतुर्येन ।) इन्द्रः । इति जटा-धरः ॥

**पूतगन्धः**, पुं, (पूतः पवित्रो गन्धो यस्य ।) वर्व्वरः । इति राजनिर्घण्टः ॥

आजशोभाञ्जनजलैर्भावयेच्च पुनः पुनः ।
शिग्रुमूलेन केतक्याः पुष्पपत्रपुटे च तम् ॥
पचेदेवं विशुद्धः सन् मृगनाभिसमो भवेत् ॥”
इति वैद्यकचक्रपाणिसंग्रहे वातव्याध्यधिकारे ॥
दुर्गन्धविशिष्टे, त्रि । यथा, भगवद्गीतायाम् ।
१७ । १० ।
“यातयामं गतरसं पूति पर्य्युषितञ्च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥”)

**पूतिकं**, क्ली, (पूत्या दुर्गन्धेन कायतीति । कै +

कः ।) विष्ठा । इति राजनिर्घण्टः ॥ (दुर्गन्ध-
विशिष्टे, त्रि । यथा, महाभारते । १३ । ९ । ११ ।
“किं त्वया पापकं पूर्ब्बं कृतं कर्म्म सुदारुणम् ।
यस्त्वं श्मशाने मृतकान् पूतिकानत्सि कुत्सि-
तान् ॥”)

**पूतिकः**, पुं, (पूत्या कायतीति । कै + कः ।)

पूतिकरञ्जवृक्षः । इत्यमरः । २ । ४ । ४८ ॥
(अस्य पर्य्यायादिकं पूतिकरञ्जशब्दे द्रष्टव्यम् ॥)

**पूतिकरजः**, पुं, (पूतियुक्तः करजः ।) करञ्जभेदः ।

इत्यमरः । २ । ४ । ४८ ॥ यथा, “अथ
कटुकरञ्ज-
घोराकरञ्जनामगुणाः ।
करञ्जो नक्तमालश्च करजश्चिरविल्वकः ।
घृतपूर्णकरञ्जोऽन्यः प्रकीर्य्यः पूतिकोऽपि च ॥
स चोक्तः पूतिकरजः सोमवल्कश्च स स्मृतः ।
करञ्जः कटुकस्तीक्ष्णो वीर्य्योष्णो योनिदोषहृत् ॥
कुष्ठोदावर्त्तगुल्मार्शोव्रणकृमिकफापहः ।
तत्पत्रं कफवातार्शःकृमिशोथहरं परम् ॥
भेदनं कटुकं पाके वीर्य्योष्णं पित्तलं लघु ।
तत्फलं कफवातघ्नं मेहार्शःकृमिकुष्ठजित् ॥
घृतपूर्णकरञ्जोऽपि करञ्जसदृशो गुणैः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**पूतिकरञ्जः**, पुं, (पूतियुक्तः करञ्जः ।) करञ्ज-

विशेषः । नाटाकरञ्ज इति भाषा । कठकरेज
इति हिन्दी भाषा । तत्पर्य्यायः । प्रकीर्य्यः २
पूतिकरजः ३ पूतीकरजः ४ पूतिकः ५ पूतीकः
६ कलिकारकः ७ कलिमालकः ८ कलह-
नाशनः ९ । इत्यमरभरतौ ॥ प्रकीर्णः १०

सामान्यं कर्म्म कुर्व्वीत योगान् वैशेषिकानपि
॥
सर्ज्जिकाचूर्णसंयुक्तबीजपूररसं क्षिपेत् ।
कर्णस्रावरुजा दाहास्तेन नश्यन्त्यसंशयम् ॥
१ ॥
आम्रजम्बुप्रवालानां मधुकस्य वटस्य च ।
एभिस्तु साधितं तैलं पूतिकर्णगदं हरेत् ॥ २
॥
जातीपत्ररसे तैलं विपक्वं पूतिकर्णजित् ॥ ३
॥
घृष्टं रसाञ्जनं नार्य्याः क्षीरेण क्षौद्रसंयुतम् ।
प्रशस्यते चिरोत्थे तत् सास्रावे पूतिकर्णके ॥
४ ॥
कुष्ठहिङ्गुवचादारुशताह्वाविश्वसैन्धवैः ।
पूतिकर्णापहं तैलं वस्तमूत्रेण साधितम् ॥
कुष्ठादितैलम् ॥ ५ ॥
“शम्बूकस्य तु मांसेन कटुतैलं विपाचयेत् ।
तस्य पूरणमात्रेण कर्णनाडी प्रशाम्यति ॥ ६ ॥
चूर्णेन गन्धकशिलारजनीभवेन
मुष्ट्यंशकेन कटुतैलपलाष्टके तु ।
धत्तूरपत्ररसतुल्यमिदं विपक्वं
नाडीं जयेच्चिरभवामपि कर्णजाताम् ॥
मुष्टिः पलम् ॥ ७ ॥
कृमिकर्णविनाशाय कृमिघ्नीं कारयेत् क्रियाम्
।
वार्त्ताकुधूमश्च हितः सार्षपस्नेह एव च ॥
पूरणं हरितालेन गव्यमूत्रयुतेन च ।
धूपने कर्णदौर्गन्ध्ये गुग्गुलुः श्रेष्ठ उच्यते ॥”
इति भावप्रकाशः ॥
(चिकित्सास्य यथा, --
“निर्गुण्डी स्वरसे तैलं सिन्धुधूमरजो गुडः ।
पूरणः पूतिकर्णस्य शमनो मधुसंयुतः ॥”
इत्युत्तरतन्त्रे एकविंशेऽध्याये सुश्रुतेनोक्तम् ॥)

**पूतिकर्णकः**, पुं, (पूतिः कर्णो यस्मात् । कप् ।)

कर्णरोगभेदः । तस्य लक्षणम् । यथा, --
“कर्णविद्रधिपाकाद्वा जायते चाम्बुपूरणात् ।
पूयं स्रवति वा पूति स ज्ञेयः पूतिकर्णकः ॥”
इति माधवकरः ॥
(लक्षणान्तरमस्य यथा, --

(कीटविशेषः । यथा, पञ्चतन्त्रे ।
३ । ९९ ।
“पुलका इव धान्येषु पूतिका इव
पक्षिषु ।
मशका इव मर्त्त्येषु येषां धर्म्मो न
कारणम् ॥”)
लताशाकविशेषः ।
इत्यमरटीकायां भरतः ॥
पुँइ इति भाषा ॥ अस्याः
पर्य्यायगुणौ
उपोदकीशब्दे द्रष्टव्यौ ॥ द्वादश्यां
तद्भक्षणे
दोषो यथा । पूतिका
ब्रह्मघातिका । यदपि ।
‘कुसुम्भं नालिकाशाकं वृन्ताकं
पौतिकीन्तथा ।
भक्षयन् पतितस्तु स्यादपि
वेदान्तगो द्विजः ॥’
इत्युशनसा
सामान्यतोऽभिहितम् । अत्र
नालिका श्वेतकलम्बीति
कल्पतरुः । पूतिका च
द्वादश्यामधिकदोषाय
शूद्रविषयिका वा ।” इति
तिथितत्त्वम् ॥ (इयं हि
सोमांशुतो जातेति
सोमस्यालाभे प्रतिनिधित्वेन
ग्राह्या । यथा,
महाभारते । ३ । ३५ । ३३ ।
“अस्ति मासः प्रतिनिधिर्यथा
प्राहुर्मनीषिणः ।
पूतिकामिव सोमस्य तथेदं
क्रियतामिति ॥”)

**पूतिकामुखः**, पुं, (पूतिकाया मुखमिव मुखं यस्य ।)

शम्बूकः । इति शब्दमाला ॥
(शम्बूकशब्देऽस्य
विषयो ज्ञेयः ॥)

रजनीपुष्पः ११ सुमनाः १२ पूतिकर्णिकः १३ कैडर्य्यः १४ कलिमाल्यः १५ । अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । विषवातार्त्ति-कण्डूविचर्च्चिकाकुष्ठस्पर्शत्वग्दोषनाशित्वञ्च । इति राजनिर्घण्टः ॥ (अस्य पर्य्यायान्तरं यथा,
"स चोक्तः पूतिकरजः सोमवल्कश्च स स्मृतः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**पूतिकर्णः**, पुं, (पूतिर्दुर्गन्धः कर्णो यस्मात् ।) कर्ण-

रोगविशेषः । तल्लक्षणं यथा, --
पूतिकर्णमाह ।
"कर्णविद्रधिपाकाद्वा म कर्णो वारिपूरणात् ।
पूयं स्रवति यत् पूति स ज्ञेयः पूतिकर्णकः ॥"
कर्णस्रावाद्भेदार्थमाह ।
पूतीति नियमेन पूति यथा स्यादेवं स्रवति ॥
तच्चिकित्सा यथा, --
"कर्णस्रवे पूतिकर्णे तथैव कृमिकर्णके ।
"स्थिते कफे स्रोतसि पित्ततेजसा
विलाप्यमाने भृशसम्प्रतापवान् ।
अवेदनो वाप्यथवा सवेदनो
घनं स्रवेत् पूति स पूतिकर्णकः ॥"
इत्युत्तरतन्त्रे विंशेऽध्याये सुश्रुतेनोक्तम् ॥)
औषधं यथा, --
"निर्गुण्डी स्वरसे तैलं सिन्धुधूमरजो गुडः ।
पूरणात् पूतिकर्णस्य शमनो मधुसंयुतः ॥"
अथवा ।
"वरुणार्द्रकपित्थाम्रजम्बूपल्लवसाधितम् ।
पूतिकर्णापहं तैलं जातीपत्ररसेन वा ॥"
इति चक्रपाणिदत्तः ॥
(चिकित्सास्य यथा, --
"घृष्टं रसाञ्जनं नार्य्याः क्षीरेण क्षौद्रसंयुतम् ।
प्रशस्यते चिरोत्थेऽपि सास्रावे पूतिकर्णके ॥"
इति चोत्तरतन्त्रे एकविंशतितमेऽध्याये सुश्रुतेनोक्तम् ॥)

**पूतिका**, स्त्री, (पूत्या कायतीति । कै + कः ।

टाप् ।) मार्जारी । इति राजनिर्घण्टः ॥

**पूतिकाष्ठं**, क्ली, (पूति काष्ठमिति कर्म्मधारयः ।)

देवदारु । सरलवृक्षः । इत्यमरः । २ । ४ । ५४,
२ । ४ । ६० ॥ पवित्रदारु च ॥

**पूतिकाष्ठकं**, क्ली, (पूतिकाष्ठ + स्वार्थे कन् ।)

सरलवृक्षः । इति शब्दचन्द्रिका ॥

**पूतिगन्धं**, क्ली, (पूतिर्गन्धो यस्य ।) रङ्गम् । इति

राजनिर्घण्टः ॥

**पूतिगन्धः**, पुं, (पूतिर्गन्धो यस्य ।) गन्धकः । इङ्गु-

दीवृक्षः । इति राजनिर्घण्टः ॥
दुर्गन्धे, त्रि ॥
(यथा, मनुः । ४ । १०७ ।
"नित्यानध्याय एव स्यात् ग्रामेषु नगरेषु च ।
धर्म्मनैपुण्यकामानां पूतिगन्धे च सर्व्वदा ॥")

**पूतिगन्धिः**, त्रि, (पूतिर्गन्धो यस्य । "गन्धस्ये-

दुत्पूतिसुसुरभिभ्यः ।" ५ । ४ । १३५ । इति
इः ।) दुर्गन्धः । इत्यमरः । १ । ५ । १२ ॥
पूतिर्विट् पूतिरिव गन्धोऽस्य । इति रायमुकुटः ॥
(यथा, महाभारते । २ । ६० । २९ ।
"अव्याधिजं कटुजं तीक्ष्णमुष्णं
यशोमुषं परुषं पूतिगन्धि ।
सतां पेयं यन्न पिबन्त्यसन्तो
मन्युं महाराज ! पिब प्रशाम्य ॥")

**पूतिगन्धिकः**, त्रि, (पूतिगन्धि + स्वार्थे कन् ।)

दुर्गन्धः । इति हेमचन्द्रः । ६ । २७ ॥

**पूतिगन्धिका**, स्त्री, (पूतिगन्धोऽस्त्यस्या इति ।

पूतिगन्ध + ठन् ।) वाकुची ।

इति राज-

निर्घण्टः ॥

**पूतितैला**, स्त्री, (पूति दुर्गन्धं तैलं यस्याः ।)

ज्योतिष्मती । इति रत्नमाला ॥

नयाफट्की

इति भाषा ॥ (पर्य्यायोऽस्या

यथा, --

"पारावतपदी पिण्या

नगणास्फुटबन्धनी ।

ज्योतिष्मती पूतितैला

केचित्तामिङ्गुदीं विदुः ॥"

इति वैद्यकरत्नमालायाम् ॥)

**पूतिनस्यः**, पुं, (पूतिर्दुर्गन्धो नस्यः नासिकाभवो रोगः ।) नासारोगभेदः । तस्य लक्षणम् । यथा,
"दोषैर्विदग्धैर्गलतालुमूले
संमूर्च्छितो यस्य समीरणस्तु ।
निरेति पूतिर्मुखनासिकाभ्यां
तं पूतिनस्यं प्रवदन्ति रोगम् ॥"
इति माधवकरः ॥
औषधं यथा, --
"व्याघ्रीदन्तीवचाशिग्रुस्वरसव्योषसम्भवैः ।
पाचितं लावणं तैलं पूतिनासागदं जयेत् ॥"
अथवा ।
"त्रिकटुविडङ्गकसैन्धवबृहतीफलशिग्रुस्वरस-दन्तीभिः ।
तैलं गोजलसिद्धं नस्यं स्यात् पूतिनस्यस्य ॥"
इति चक्रपाणिदत्तः ॥
(अस्य व्याख्याने श्रीकण्ठदत्तेन यद्विदेहवचन-माहृतं तद्यथा । "नासिका भवो नस्यः पूति-र्नस्यो वायुर्यत्र तं पूतिनस्यम् ।" इहैव विदेहः ।
"कफपित्तमसृङ्मिश्रं सञ्चितं मूर्द्ध्नि देहिनाम् ।
विदह्यमुष्मणोद्गाढं रुजां कृत्वाक्षिशङ्खजाम् ॥
ततः प्रस्यन्दते घ्राणात् सरक्तं पूति पीतकम् ।
पूतिनस्यन्तु तं विद्याद्घ्राणकण्डूव्रणप्रदम् ॥"
चिकित्सान्तरमस्य यथा, --
"पूर्ब्बोद्दिष्टे पूतिनस्ये च जन्तोः
स्नेहस्वेदौ छर्द्दनं श्रंसनञ्च ।
युक्तं भक्तं तीक्ष्णमल्पं लघुस्या-
दुष्णं तोयं धूमपानञ्च काले ॥"
इत्युत्तरतन्त्रे त्रयोविंशेऽध्याये सुश्रुतेनोक्तम् ॥)

**पूतिपत्रः**, पुं, (पूति पत्रं यस्य ।) श्योनाकप्रभेदः । इति राजनिर्घण्टः ॥
पूतिवातोऽथ माङ्गल्यो मालूरश्च महाफलम् ॥"
इति वैद्यकरत्नमालायाम् ॥
(पूतिर्वातः ।) दुर्गन्धवायुश्च ॥

**पूतिवृक्षः**, पुं, (पूतिर्वृक्षः ।) श्योनाकः । इति रत्नमाला ॥ पवित्रदुर्गन्धौ तरू च ॥

**पूतिशारिजा**, स्त्री, (पूतिः शारिरिव जायते इति । जन + डः । टाप् ।) खट्टाशी । इति त्रिकाण्ड-शेषः ॥

**पूतीकः**, पुं, (पुति + वा ङीष् । तद्वत् कायतीति । कै + कः ।) पूतिकरञ्जः । इत्यमरटीकायां भरतः ॥ (यथास्य पर्य्यायः ।
"पूतीकरञ्जः पूतीकः प्रकीर्य्यश्च सकण्टकः ।"
इति वैद्यकरत्नमालायाम् ॥
यथा च सुश्रुते । १ । ३६ ।
"पूतीकश्चित्रकः पाठा विडङ्गैलाहरेणवः ॥")
गन्धमार्जारः । इति राजनिर्घण्टः ॥

**पूतीकरञ्जः**, पुं, (पुतीयुक्तः करञ्जः ।) पूति-करञ्जः । इति रत्नमाला ॥ नाटा इति भाषा ॥
(पर्य्यायोऽस्य यथा, --
"पूतीकरञ्जः पूतीकः प्रकीर्य्यश्च सकण्टकः ॥"
इति वैद्यकरत्नमालायाम् ॥)

**पूतीका**, स्त्री, (पूत्या दुर्गन्धेन कायतीति । कै + कः ।) पूतिका । इत्यमरटीकायां भरतः ॥
आद्या पूपैः सदा कार्य्या मांसैरन्या भवेत्तथा ।
शाकैः कार्य्या तृतीया स्यादेष द्रव्यगतो विधिः ॥"
इति तिथितत्त्वम् ॥

**पूपिका**, स्त्री, (पूपः पूपाकारोऽस्त्यस्या इति ठन् । ततष्टाप् ।) पूलिका । इति हेमचन्द्रः । ३ । ६२ ॥

**पूय**, ई ङ दुर्गन्धे । शीर्ण्याम् । इति कविकल्प-द्रुमः ॥ (भ्वा०-आत्म०-अक०-सक० च-सेट् । निष्ठायामनिट् ।) षष्ठस्वरी । ई, पूतः । ङ, पूयते मत्स्यः दुर्गन्धः स्यादित्यर्थः । शीर्णिर्भेद-नम् । इति दुर्गादासः ॥

**पूयं**, क्ली, (पूयते दुर्गन्धो भवतीति । पूय + अच् ।) पक्वव्रणादिसम्भवघनीभूतशुक्लवर्णविकृतरक्तम् । पूँय इति भाषा । तत्पर्य्यायः । क्षतजम् २ मल-जम् ३ पूयनम् ४ । प्रसितम् ५ । इति शब्द-चन्द्रिका ॥ (यथा, महाभारते । ३ । १९९ । ५४ ।
"ये च दुष्कृतकर्म्माणः पूयं तेषां विधीयते ॥")
पूयवर्द्धनद्रव्याणि यथा, --
नवधान्यमाषतिलकलायकुलत्थनिष्पावहरितक-शाकाम्ललवणकटुकगुडपिष्टविकृतिवल्लूरशुष्क-शाकाजाविकानूपौदकमांसवसाशीतोदककृश-रापायसदधिदुग्धतक्रप्रभृतीन् परिहरेत् ।
"तक्रान्तैर्नवधान्यादिर्योऽयं वर्ग उदाहृतः ।
दोषसंजननो ह्येष विज्ञेयः पूयवर्द्धनः ॥"
इति सुश्रुतः ॥
(अस्य विषयो यथा, --
"वातादृते नास्ति रुजा न पाकः
पित्तादृते नास्ति कफाच्च पूयः ॥"
इति सुश्रुते सूत्रस्थाने सप्तदशेऽध्याये ॥)

**पूयनं**, क्ली, (पूयतेऽनेनेति । पूय + ल्युट् ।) पूयम् । इति शब्दचन्द्रिका ॥

**पूयरक्तः**, पुं, (पूयविशिष्टं रक्तमस्मिन् ।) नासा-रोगभेदः । तस्य लक्षणम् । यथाह माधवकरः ।
"दोषैर्विदग्धैरथवापि जन्तो-

**पूतिपुष्पिका**, स्त्री, (पूति पुष्पमस्याः । कापि अत

इत्वम् ।) मातुलुङ्गा । इति रत्नमाला ॥
मखुर-
लेवु इति मौटा वा इति च भाषा ॥ (गुणा-
दयोऽस्या मातुलुङ्गशब्दे ज्ञातव्याः ॥)

**पूतिफला**, स्त्री, (पूति फलं यस्याः ।) सोमराजी ।

इति रत्नमाला ॥

**पूतिफली**, स्त्री, (पूति फलं यस्याः । ङीष् ।)

सोमराजी । इत्यमरः । २ । ४ । ९६ ॥
(अस्याः
पर्य्यायो यथा, --
"अवल्गुजो वाकुची स्यात् सोमराजी सुप-
र्णिका ।
शशिलेखा कृष्णफला सोमा पूतिफलीति च
॥
सोमवल्ली कालमेषी कुष्ठघ्नी च प्रकीर्त्तिता
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**पूतिमयूरिका**, स्त्री, (पूतिर्म्मयूरीव । ततः स्वार्थे

कन् ह्रस्वश्च ।) अजगन्धा । इति
राजनिर्घण्टः ॥

**पूतिमेदः**, पुं, (पूतिर्मेदोऽस्य ।) अरिमेदः । इति

राजनिर्घण्टः ॥ (विशेषोऽस्य अरिमेदशब्दे
बोद्धव्यः ॥)

**पूतिवातः**, पुं, (पूतये पावित्र्याय वातो यस्य ।)

विल्ववृक्षः । इति रत्नमाला ॥ (पर्य्यायोऽस्य
यथा,
"विल्वो महाकपित्थाख्यः श्रीफलो
गोहरीतकी ।

**पूत्यण्डः**, पुं, (पूति दुर्गन्धमण्डमस्य ।) गन्धकीटः ।

गँदोपोका इति भाषा ॥ (यथा,
महाभारते ।
१२ । ३२२ । ७ ।
"पुलाका इव धान्येषु पूत्यण्डा
इव पक्षिषु ।
तद्विधास्ते मनुष्येषु येषां धर्म्मो न
कारणम् ॥")
जन्तुभेदः । इति मेदिनी । डे,
३२ ॥ खटाशी
इति भाषा ॥

**पूनः**, त्रि, (पू + क्तः । "पूञो विनाशे ।" ८ । २ ।

४४ । इत्यस्य वार्त्तिकोक्त्या
तस्य नः ।) नष्टः ।
इति मुग्धबोधव्याकरणम् ॥

**पूपः**, पुं, (पू + क्विप् । पुवं पवित्रं पाति रक्ष-

तीति । पा + कः ।) पिष्टकः ।
इत्यमरः । २ । ९ ।
४८ ॥ (यथा, मार्कण्डेये । १५ ।
२४ ।
"मधुहृत्वा नरो दंशः पूपं हृत्वा
पिपीलिकः ॥"
(पिष्टकशब्दऽस्य विवृतिर्ज्ञेया ॥)

**पूपली**, स्त्री, (पूपं तदाकारं लातीति । ला +

कः ।) पोलिका । इति हेमचन्द्रः
। ३ । ६३ ॥

**पूपाली**, स्त्री, (पूपाय अलतीति । अल + अच् ।

गौरादित्वात् ङीष् ।) पोली । इति
त्रिकाण्ड-
शेषः ॥

**पूपाष्टका**, स्त्री, (पूपद्रव्यसाधनी अष्टका अष्टमी ।)

अग्रहायणीपूर्णिमायाः परतः
कृष्णाष्टमी ।

र्ललाटदेशेऽभिहतस्य तैस्तैः ।
नासा स्रवेत् पूयमसृग्विमिश्रं
तं पूयरक्तं प्रवदन्ति रोगम् ॥"
(क्लीवलिङ्गेऽपि दृश्यते । यथा, --
"निचयादभिघाताद्वा पूयासृङ्नासिका स्रवेत् ।
तत् पूयरक्तमाख्यातं शिरोदाहरुजाकरम् ॥"
इति वाभटे उत्तरस्थाने ऊनविंशेऽध्याये ॥
चिकित्सास्य यथा, --
"वक्ष्यामूर्द्ध्वं रक्तपित्तोपशान्तिं
नाडीवत्स्यात् पूयरक्ते चिकित्सा ।
वान्ते सम्यक् चावपीडं वदन्ति
तीक्ष्णं धूमं शोधनञ्चात्र नस्यम् ॥"
इत्युत्तरतन्त्रे त्रयोविंशेऽध्याये सुश्रुतेनोक्तम् ॥)

**पूयारिः**, पुं, (पूयानामरिः तद्विनाशकत्वात् ।)

निम्बवृक्षः । इति शब्दचन्द्रिका ॥ (विवरणमस्य
निम्बशब्दे ज्ञातव्यम् ॥)

**पूयालसः**, पुं, (पूयः अलस इव यत्र । सान्द्रत्वेन

चिरान्निर्गमनादेव तथात्वम् ।) सन्धिगतरोग-
भेदः । तस्य लक्षणं यथा, --

|  |  |  |  |
| --- | --- | --- | --- |
|  |  | तद्विवरणं अष्टकाशब्दे द्रष्टव्यम् ।<br>“तत्र नित्यं<br>श्राद्धं पूपाङ्गकं कर्त्तव्यम् । यथा<br>गोभिलः ।<br>अष्टका<br>योद्ध्र्वमाग्रहायण्यास्तमिस्राष्टमी<br>। ब्रह्म-<br>पुराणे ।<br>पित्र्यदानाय मूले स्युरष्टकास्तिस्र<br>एव च ।<br>कृष्णपक्षे वरिष्ठा हि पूर्ब्बा चैन्द्री<br>विभाव्यते ॥<br>प्राजापत्या द्वितीया स्यात्<br>तृतीया वैश्वदेवकी ॥ |  |

"पक्वः शोफः सन्धिजः संस्रवेद्यः
सान्द्रं पूयं पूतिपूयालसः सः ॥"
इति सुश्रुतः ॥
("पूयालसः सोपनाहः स्रावाश्चत्वार
एव च ।
पर्व्वणीकालजी जन्तुर्ग्रन्थिसन्धौ न
वामयाः ॥"
"पूयालसन्तु तं विद्यात् सन्धौ
कानीनके नृणा-
मिति वचनात् ॥" इति भावप्रकाशस्य
मध्यखण्डे
चतुर्थे भागे ॥)

**पूर**, ई य ङ पूर्त्तौ । इति कविकल्पद्रुमः ॥ (दिवा०-

आत्म०-सक०-सेट् । निष्ठायामनिट् ।)
दीर्घी ।
ई, पूर्णः । य ङ, पूर्य्यन्ते पितरस्तञ्चेति
हला-
युधः । पूर्त्तिरिहाप्यायनम् । इति
दुर्गादासः ॥

**पूर**, क पूर्त्तौ । इति कविकल्पद्रुमः ॥ (चुरा०-

पर०-सक०-सेट् ।) दीर्घी । क, पितॄन्
पूरयति
श्राद्धे हव्यैः कव्यैश्च यः सदा । इति
हलायुधः ॥
इति दुर्गादासः ॥

**पूरं**, क्ली, (पूरयति सौगन्धेनेति । पूर + कः ।)

दाहागुरु । इति राजनिर्घण्टः ॥

**पूरः**, पुं, (पूरयतीति । पूर + कः ।) जलसमूहः ।

(यथा, रघौ । ३ । १७ ।
"महोदधेः पूर इवेन्दुदर्शनात्
गुरुः प्रहर्षः प्रबभूव नात्मनि ॥")
व्रणसंशुद्धिः । खाद्यविशेषः । इति
मेदिनी । रे,
६० ॥ (प्राणायामादिकर्त्तुर्नासारन्ध्रेण
बहिः-

प्रत्योङ्कारसमायुक्तं तथा तत् सवितुः पदम् ॥
ॐ आपो ज्योतिरित्येतच्छिरः पश्चात्तु योज-
येत् ।
त्रिरावर्त्तनयोगात्तु प्राणायामस्तु शब्दितः ॥
पूरकः कुम्भको रेच्यः प्राणायामास्त्रलक्षणः ।
नासिकाकृष्ट उच्छ्वासो ध्मातुः पूरक उच्यते ॥
कुम्भको निश्चलः श्वासो मुच्यमानस्तु रेचकः ॥
मोचनं विशेषयति विष्णुपुराणम् ।
नासंवृतमुखो जृम्भेद्धासकाशौ च वर्ज्जयेत् ।
नोच्चेर्हसेत् सशब्दञ्च न मुञ्चेत् पवनं बुधः ॥"
इत्याह्निकाचारतत्त्वम् ॥
षोडशचतुरन्यतरसंख्यकप्रणवबीजान्यतरजपै-
नैकनासापुटकरणकप्राणायामाङ्गवायुपूरणम् ।
यथा, मूलमन्त्रस्य बीजस्य प्रणवस्य वा षोडश-
वारजपेन वामनासापुटे वायुपूरकं कुर्य्यादिति
तन्त्रसारः ॥ * ॥ क्ली, प्रेतदेहनिष्पादकाशौच-
कालदेयदशपिण्डम् । यथा, --
"पूरकेण तु पिण्डेन देहो निष्पाद्यते यतः ।
कृतस्य करणायोगात् पुनर्नावर्त्तयेत् क्रियाम् ॥"
इति वायुपुराणम् ॥
ऋष्यशृङ्गः ।
"न स्वधाञ्च प्रयुञ्जीत प्रेतपिण्डे दशाहिके ।
भाषेतैतच्च वै पिण्डं यज्ञदत्तस्य पूरकम् ॥"
अत्र भाषणविधौ एतत्पिण्डं यज्ञदत्तस्य पूरक-
मित्येतावन्मात्रश्रुतेः शिरःपूरकमित्यादिविशे-
षोल्लेखे प्रमाणं नास्ति । इति स्मार्त्तभट्टा-
चार्य्याः ॥ प्रेतपिण्डैस्तथा दत्तैर्देहमाप्नोति भार्ग-
वेति विष्णुधर्म्मोत्तरे देहश्रुतेर्देहपूरकमिति
प्रयोगापत्तेश्च । तस्मादनिरुद्धभट्टाद्युक्तः केवल-
पूरकप्रयोग एव युक्त इति । शातातपः ।
"भर्त्तुः पिण्डप्रदाने तु साध्वी स्त्री चेद्रजस्वला ।
वस्त्रं त्यक्त्वा पुनः स्नात्वा सैव दद्याच्च पूरकम् ॥"
इति शुद्धितत्त्वम् ॥ * ॥
पूरणकर्त्तरि, त्रि । इति शब्दरत्नावली ॥ (यथा,
मनुः । ९ । २८९ ।
"प्राकारस्य च भेत्तारं परिखाणाञ्च पूरकम् ।
द्वाराणाञ्चैव भङ्क्तारं क्षिप्रमेव प्रवासयेत् ॥")

**पूरणं**, क्ली, (पूर्य्यते अनेनेति । पूर + करणे

ल्युट् ।) पिण्डप्रभेदः । इति मेदिनी । णे, ६४ ॥

**पूरणी**, स्त्री, (पूर्य्यते अनयेति । पूरि + ल्युट् +

ङीप् ।) शाल्मलिवृक्षः । इत्यमरः ।
२ । ४ । ४६ ॥
(अस्या पर्य्यायान्तरं यथा,
भावप्रकाशस्य पूर्ब्ब-
खण्डे प्रथमे भागे ।
"शाल्मलिस्तु भवेन्मोचा पिच्छिला
पूरणीतिच ।
रक्तपुष्पा स्थिरायुश्च कण्टकाढ्या
च तूलिनी ॥")
पूर्य्यतेऽनया पूरणी । यथा पञ्चानां
पूरणी पञ्चमी ॥

**पूराम्लं**, क्ली, (पूरं पूरकमम्लमत्र ।) वृक्षाम्लम् ।

इति राजनिर्घण्टः ॥

**पूरिका**, स्त्री, (पूर्य्यते इति । पूरि + कः । स्त्रियां

ङीप् । पूरी । ततः स्वार्थे कन् । टाप्
पूर्ब्ब-
ह्रस्वश्च ।) पिष्टकभेदः । पूरी इति
कचुरी इति
च भाषा । यथा, --
"माषाणां पिष्टिकां
युञ्ज्याल्लवणार्द्रकहिङ्गुभिः ।
तया पिष्टिकया पूर्णा समिता
कृतपोलिका ।
ततस्तैले विपक्वा सा पूरिका
कथिता बुधैः ॥"
अस्या गुणाः ।
"रुच्या स्वाद्वी गुरुः स्निग्धा
वातपित्तास्रदूषिका ।
चक्षुस्तेजोहरी चोष्णा पाके
वातविनाशिनी ॥
तथैव घृतपक्वापि चक्षुष्या
रक्तपित्तहृत् ॥"
इति भावप्रकाशः ॥
(अस्या गुणान्तरं यथा, --
"पूरिकाघृतपूरन्तु त्रिदोषशमनं परम्
।

पवनाकर्षणम् । यथा, भागवते । ३ । २८ । ९ ।
"प्राणस्य शोधयेन्मार्गं
पूरकुम्भकरेचकैः ।
प्रतिकूलेन वा चित्तं
यथास्थिरमचञ्चलम् ॥"
बीजपूरः । तत्पर्य्यायो यथा, --
"बीजपूरो मातुलुङ्गः सुफलः
फलपूरकः ।
लुङ्गधः पूरकः पूरो बीजपूर्णोऽम्बुकेशरः ॥"
इति वैद्यकरत्नमालायाम् ॥)

**पूरकः**, पुं, (पूरयतीति । पूरि + ण्वुल् ।) वीज-
पूरः । इति राजनिर्घण्टः ॥ (अस्य पर्य्यायो
यथा, --
"बीजपूरो मातुलुङ्गः सुफलः
फलपूरकः ।
लुङ्गुषः पूरकः पूरो बोजपूर्णोऽम्बुकेशरः ॥"
इति वैद्यकरत्नमालायाम् ॥)
गुणकाङ्कः । इति लीलावती ॥
ध्यानादिकर्त्तृ-
नासिकागतोच्छ्वासः ।
ब्रह्मध्यानपूर्ब्बकप्राणाया-
माङ्गतत्तन्मन्त्रं जपन् वामनासिकया वायुना
देहपूरणम् । (यथा,
हठयोगप्रदीपिकायाम् ।
२ । ७१ ।
"प्राणायामस्त्रिधा प्रोक्तो
रेचपूरककुम्भकैः ।
सहितः केवलश्चेति कुम्भको द्विविधो
मतः ॥")
यथाच व्यासः ।
"आदानं रोधमुत्सर्गं वायोस्त्रिस्त्रिः
समभ्यसेत् ।
ब्रह्माणं केशवं शम्भुं
ध्यायेद्देवाननुक्रमात् ॥
पूर्ब्बवचने त्रिर्जपमात्राभिधानादत्र
त्रिस्त्रिरिति
वृष्टिः । कुटन्नटम् । इति शब्दमाला ॥ अङ्कानां
गुणनम् । इति शुभङ्करः ॥ वापतन्तुः । इति
हेमचन्द्रः ॥

**पूरणः**, पुं, (पूर्य्यतेऽनेनेति । पूरि + करणे ल्युट् ।)
विष्णुतैलम् । इति धरणिः ॥ सेतुः । इति हारा-
वली ॥ (पूरयतीति । पूरि + कर्त्तरि ल्युः ।)
समुद्रः । इति संक्षिप्तसारोणादिवृत्तिः ॥ पूरके,
त्रि । इति मेदिनी । णे, ६३ ॥ (यथा, हरि-
वंशे । १२९ । ५२ ।
"आसन्नः सन्नतरः साधनानां
श्रद्धावतां श्राद्धवृत्तिप्रणेता ।
पतिर्गणानां महतां सत्कृतीनां
पायान्मेशः पूरणः षड्गुणानाम् ॥")
वृष्यं संवृं हणं स्वादु
क्षतक्षयनिवारणम् ॥"
इति हारीते प्रथमे स्थाने
द्वादशेऽध्याये ॥)

**पूरितं**, त्रि, (पूर्य्यते स्मेति । पॄ पूरि वा + क्तः ।
"वा दान्तशान्तपूर्णेति ।" ७ । २ । २७ । इति
पक्षे इट् ।) कृतपूरणम् । तत्पर्य्यायः । पूर्णम्
२ । इत्यमरः । ३ । १ । ९८ ॥
गुणितञ्च ॥

**पूरुषः**, पुं, (पुरति अग्रे गच्छतीति । पुर + "पुरः
कुषन् ।" उणा० ४ । ७४ । इति
कुषन् । "अन्येषा-
मपि दृश्यते ।" ६ । ३ । १३७ ।
इति निपातनात्
दीर्घः ।) पुरुषः । पुमान् । इत्यमरः ।
२ । ६ । १ ॥
अथ पूरुषलक्षणम् ।
"पञ्चदीर्घं चतुर्ह्रस्वं पञ्चसूक्ष्मं
षडुन्नतम् ।
सप्तरक्तं त्रिगम्भीरं त्रिविशालं
प्रशस्यते ॥
बाहुनेत्रद्वयं कुक्षिद्वौ तु नासा तथैव
च ।
स्तनयोरन्तरञ्चैव पञ्चदीर्घं प्रशस्यते ॥
ग्रीवाथ कर्णौ पृष्ठञ्च ह्रस्वे जङ्घे
सुपूजिते ।
चत्वारि यस्य ह्रस्वानि पूजां
प्राप्नोति नित्यशः ॥
सूक्ष्माण्यङ्गुलिपर्व्वाणि
दन्तकेशनखत्वचम् ।
पञ्च सूक्ष्माणि येषां हि ते नरा
दीर्घजीविनः ॥
नासा नेत्रञ्च दन्ताश्च ललाटञ्च
शिरस्तथा ।
हृदयञ्चैव विज्ञेयमुन्नतं षट् प्रशस्यते ॥

| | | |
|---|---|---|
| वीप्सा सन्ध्यात्रयापेक्षया ।<br>ब्रह्माणं केशवं शम्भुं ध्यायन् मुच्येत बन्धनात् ॥<br>इति योगियाज्ञवल्क्यः ।<br>‘भूर्भुवःस्वर्महर्जनस्तपः सत्यं तथैव च । | | पाणिपादतलौ रक्तौ नेत्रान्तरनखानि च ।<br>तालुकोऽधरजिह्वा च सप्तरक्तं प्रशस्यते ॥<br>स्वरो बुद्धिश्च नाभिश्च त्रिगम्भीरमुदाहृतम् ।<br>उरः शिरो ललाटञ्च त्रिविस्तीर्णं प्रशस्यते ॥ * ॥<br>कटिर्विशाला बहुपुत्त्रभागी विशालहस्तो नरपुङ्गवः स्यात् ।<br>उरो विशालं धनधान्यभागी शिरो विशालं नरपूजितः स्यात् ॥ |

न श्रीस्त्यजति रक्ताक्षं नार्थः
कनकपिङ्गलम् ।
दीर्घबाहुं न चैश्वर्य्यं न
मांसोपचितांसकम् ॥
कदाचिद्दन्तुरो मूर्खः कदाचिल्लोमशः
सुखी ।
कदाचित्तुन्दिलो दुःखी
कदाचिच्चञ्चला सती ॥
नेत्रस्नेहेन सौभाग्यं दन्तस्नेहेन
भोजनम् ।
हस्तस्नेहेन चैश्वर्य्यं पादस्नेहेन
वाहनम् ॥
अकर्म्मकठिनौ हस्तौ पादावध्वनि
कोमलौ ।
यस्य पाणितलौ रक्तौ तस्य राज्यं
विनिर्द्दिशेत् ॥
दीर्घलिङ्गेन दारिद्र्यं स्थूललिङ्गेन
निर्धनः ।
कृशलिङ्गेन सौभाग्यं ह्रस्वलिङ्गेन
भूपतिः ॥
रेखाभिर्ब्बहुभिर्दुःखं
स्वल्पाभिर्धनहीनता ।
रक्ताभिः श्रियमाप्नोति
कृष्णाभिर्लोकपूजितः ॥
अङ्गुष्ठोदरमध्ये तु यवो यस्य
विराजितः ।
उन्नतं भोजनं तस्य शतं जीवति
मानवः ॥
अङ्कुशं कुलिशं छत्रं यस्य पाणितले
भवेत् ।
ऐश्वर्य्यञ्च
विनिर्द्दिष्टमशीत्यायुर्भवेद्ध्रुवम् ॥
धनुर्यस्य भवेत् पाणौ पङ्कजं वाथ
तोरणम् ।
तस्यैश्वर्य्यञ्च राज्यञ्च
अशीत्यायुर्भवेद्ध्रुवम् ॥
कनिष्ठातर्ज्जनीं यावत् रेखा भवति
चाक्षता ।

प्रकारान्तरम् ।
“दन्ताश्च विरला यस्य गण्डे कूपोऽपि जायते ।
परस्त्रीरमणो नित्यं परवित्तेन वित्तवान् ॥
दीर्घलिङ्गे च सौभाग्यं सूक्ष्मलिङ्गे नृपो भवेत् ।
वक्रास्यकठिनैर्लिङ्गैः प्रमाणान्निर्गतः सदा ॥
रमते च सदा दास्यां निर्घनो भवति ध्रुवम् ।
कृशलिङ्गेन सूक्ष्मेण रक्तवर्णेन भूपतिः ।
बहुस्त्रीरमणो नित्यं नारीणां वल्लभो भवेत् ॥
कृशलिङ्गेन रक्तेन लभते चोत्तमाङ्गनाम् ।
राज्यं सुखञ्च दिव्याङ्ग्याः कन्यकायाः पतिर्भवेत्
॥
यस्य पादतले पद्मं चक्रं वाप्यथ तोरणम् ।
अङ्कुशं कुलिशं वापि स राजा भवति ध्रुवम् ॥
कृशनिर्लोमशा ये स्युः केकराक्षाः कुचेलकाः ।
कातरा व्यालजिह्वाश्च ते दरिद्रा न संशयः ।
कपिला मलिनाङ्गाश्च ह्रस्वाश्चैव बृहन्नखाः ॥
कृशातिदीर्घा मनुजास्ते दरिद्रा न संशयः ।
चिवुके श्मश्रुशून्या ये निर्लोमहृदयाश्च ये ।
ते धूर्त्ता नैव सन्देहः समुद्रवचनं यथा ॥
सूचीमुखा भग्नपृष्ठाः कृष्णदन्ताः कुचेलकाः ।
वक्रनासा वज्रनासास्ते नरा दुष्टमानसाः ॥
दयालवश्च दातारो रूपवन्तो जितेन्द्रियाः ।
परोपकारिणश्चैव तेऽपूर्ब्बा मानवाः स्मृताः ॥”
इति सामुद्रके पुरुषलक्षणम् ॥ * ॥
दानवीरदयावीरयुद्धवीरसत्यवीरसंज्ञकपुरुष-
लक्षणन्तु पुरुषपरीक्षाग्रन्थे द्रष्टव्यम् ॥

**पूर्णः**, त्रि, (पूर्य्यते स्मेति । पृ पूरि वा + क्तः ।

“वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ।” ७ ।
२ । २७ । इति इडभावो निपात्यते च ।)
पूरितः । सकलः । इत्यमरः । ३ । ३ । ९८ ॥
(यथा, पञ्चदश्याम् । ७ । ७७ ।
“तदर्थस्य च पारोक्ष्यं यद्येवं किं ततः शृणु ।
पूर्णानन्देकरूपेण प्रत्यग्बोधोऽवतिष्ठते ॥”)
शक्तः । इति मेदिनी । णे, २२ ॥ स्वीयसुखेच्छा-
वदन्यः । इति गदाधरभट्टाचार्य्यः ॥ (प्रधायाः
पुत्त्रभेदः । यथा, महाभारते । १ । ६५ । ४७ ।
“सिद्धः पूर्णश्च बर्हो च पूर्णायुश्च महायशाः ॥”
नागभेदः । यथा, महाभारते । १ । ५७ । ५ ।
“कोटिशो मानसः पूर्णः शलः पालो हली-

लिभ्यां हस्ताभ्यां परशिरसः पीडनं
पूर्णकुम्भः ।
इति नीलकण्ठः ॥ यथा, महाभारते । २
।
२३ । १४ ।
“बाहुपाशादिकं कृत्वा पादाहतशिरावुभौ
।
उरोहस्तं ततश्चक्रे पूर्णकुम्भौ प्रयुज्य
तौ ॥”)

**पूर्णकोष्ठा**, स्त्री, (पूर्णं कोष्ठमस्याः ।) नागर-

मुस्ता । इति राजनिर्घण्टः ॥

**पूर्णपात्रं**, क्ली, (पूर्णञ्च तत् पात्रञ्चेति नित्यकर्म्म-

धारयः ।) वस्तुपूर्णपात्रम् । बर्द्धापकः ।
इति
मेदिनी । रे, २८४ ॥ उत्सवकाले हर्षात्
गृहीतवस्त्रालङ्कारादि । तत्पर्य्यायः ।
पूर्णा-
लकम् २ । यथा, --
“हर्षादुत्सवकाले यदलङ्कारांशुकादिकम्
।
आकृष्य गृह्यते पूर्णपात्रं पूर्णालकञ्च तत्
॥”
इति जटाधरः ॥
(यथा, अनर्घराघवे । ३ । ४५ ।
“शाम्भवं चापमारोप्य
योऽस्मानानन्दयिष्यति ।
पूर्णपात्रमियं तस्मै मैथिली कल्पयिष्यते
॥”)
होमकर्म्मणि ब्रह्मदक्षिणा । यथा,
गोभिलेनापि
दर्शादियागमभिधाय पूर्णपात्रो दक्षिणा
ब्रह्मणे
दद्यादित्युक्तम् । त्रान्तत्वेऽपि पुंस्त्वं
छान्दसम् ।
तस्य प्रमाणन्तु गृह्यसंग्रहे
यज्ञपार्श्वपरिशिष्टयोः ।
अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च
पुष्कलम् ।

विंशत्यब्दाधिकशतं नरा
जीवन्त्यनामयाः ॥
कनिष्ठामध्यमां यावत् रेखा भवति
चाक्षता ।
शताब्दं वाथ वाशीतिर्नरो जीवेन्न
संशयः ॥
कनिष्ठानामिकायाञ्चेत्रेखा भवति
चाक्षता ।
षष्टिं पञ्चाशदब्दं वा नरा
जीवन्त्यसंशयम् ॥
रेखया भिद्यते रेखा स्वल्पायुश्च
भवेन्नरः ।
कनिष्ठायां स्थिता रेखा संख्या
यावतिका स्मृता ।
तावती पुरुषाणान्तु नारी भवति
निश्चितम् ॥
करमध्यगता रेखा ध्रुवा
ऊर्द्ध्वम्भवेद्यदि ।
नृपो वा नृपतुल्यो वा चिरं
ख्यातोऽर्थवान्
भवेत् ॥
मत्स्यपुच्छप्रकीर्णेन
विद्यावित्तसमन्वितः ।
पितामहस्य वा किञ्चित् धनञ्च लभते
ध्रुवम् ॥
मध्यमायां यदि यवा
दृश्यन्तेऽत्यन्तशोभनाः ।
तदान्यसञ्चितं वित्तं प्राप्नोत्यङ्गुष्ठके
यवे ॥
यस्याथ चक्रमङ्गुष्ठे यवादूर्द्ध्वञ्च
दृश्यते ।
तदा वै पामरादीनामज्जितं
धनमाप्नुयात् ॥
तर्ज्जन्यामथ चक्रञ्च मित्रद्वारा
धनम्भवेत् ।
तेनैव विपरीतन्तु व्ययो भवति
निश्चितम् ॥
मध्यमायां स्थिते चक्रे देवद्वारा धनं
लभेत् ।
तेनैव विपरीतन्तु व्ययो भवति
निश्चितम् ॥

मकः ॥”)

**पूर्णकः**, पुं, (पूर्ण + “संज्ञायां कन् ।” ५ । ३ ।
७५ । इति कन् ।) स्वर्णचूडपक्षी । इति मेदिनी ।
के, १२५ ॥ (देवयोनिविशेषः । यथा, महा-
भारते । ७ । ५५ । ४ ।
“नटनर्त्तकगन्धर्व्वैः पूर्णकैर्वर्द्धमानकैः ।
नित्योद्योगैश्च क्रीडद्भिस्तत्र स्म परिहर्षिताः ॥”)

**पूर्णकुम्भः**, पुं, (सलिलादिभिः पूर्णः कुम्भः ।)
जलपूरितघटः । तत्पर्य्यायः । भद्रकुम्भः २ ।
इत्यमरः । २ । ८ । ३२ ॥ (यथा, मनुः । ११ ।
१८७ ।
“प्रायश्चित्ते तु चरिते पूर्णकुम्भमपां नव ।
तेनैव सार्द्धं प्रास्येयुः स्नात्वा पुण्ये जलाशये ॥”)
पूर्णकलसादिश्च । इति भरतः ॥ (ग्रथिताङ्ग-

पुष्कलानि च चत्वारि पूर्णपात्रं विधीयते
॥
अत्र षट्पञ्चाशदधिकशतद्वयमुष्टिमितं
पूर्ण-
पात्रम् । असम्भवे तु छन्दोगपरिशिष्टम् ।
यावता बहुभोक्तुस्तु तुष्टिः पूर्णेन जायते
।
नावरार्द्धमतः कुर्य्यात् पूर्णपात्रमिति
स्थितिः ॥”
इति संस्कारतत्त्वम् ॥

**पूर्णबीजः**, पुं, (पूर्णं बीजं यस्य ।) बीजपूरः ।
इति राजनिर्घण्टः ॥ (विवृतिरस्य
बीजपूरशब्दे
ज्ञातव्या ॥)

**पूर्णमा**, स्त्री, (पूर्णं कलापूर्णञ्चन्द्रं पूरणं वा
मातीति । मा + कः । टाप् । पूर्णिमा ।
इत्य-
मरटीकायां भरतः ॥

**पूर्णमासः**, पुं, (पूर्णमासी पूर्णिमा साधनत्वेनास्त्य-
स्येति । अच् ।) पौर्णमासयागः । इति
जटा-
धरः ॥ (यथा, तैत्तिरीयसंहितायाम् । २
। २ ।
१० । २ ।
“वै तिष्यः सोमः पूर्णमासः साक्षादेव
ब्रह्म-
वर्च्चसमवरुन्धे ॥”)
पूर्णो मासो यत्रेति । पूर्णिमा । यथा,
महा-
भारते । १२ । २९ । ११४ ।
“दर्शे च पूर्णमासे च चातुर्मास्ये पुनः
पुनः ।
अयजद्धयमेधेन सहस्रं परिवत्सरान् ॥”)

**पूर्णमासी**, स्त्री, (पूर्णो मासश्चान्द्रमासो यत्र ।
गौरादित्वात् ङीष् ।) पूर्णिमा । इति
शब्द-
माला ॥

**पूर्णा**, स्त्री, (पूर्ण + टाप् ।) पञ्चमी । दशमी ।

| | | |
|---|---|---|
| अनामायां भवेत् चक्रं सर्व्वद्वारा भवेद्धनम् ।<br>तेनैव विपरीतन्तु व्ययो भवति निश्चितम् ॥<br>कनिष्ठायां भवेच्चक्रं बाणिज्येन धनं भवेत् ।<br>तेनैव विपरीतन्तु व्ययो भवति निश्चितम् ॥ * ॥<br>ललाटे दृश्यते यस्य चक्ररेखाचतुष्टयम् ।<br>अशीत्यायुः समाप्नोति पञ्चरेखाः शतं समाः ॥<br>यस्योन्नतं ललाटञ्च ताम्रकर्णञ्च दृश्यते ।<br>रेखाहीनश्च कक्षश्च स चोन्मत्तो महीं भ्रमेत् ॥<br>यस्य जिह्वा भवेद्दीर्घा नासाग्रं लेढि सर्व्वदा ।<br>भोगी भवति निर्व्वाणः पृथ्वीं भ्रमति सर्व्वदा ॥<br>दन्ताश्च विरला यस्य नीचवन्नीचकर्म्मकृत् ।<br>प्रगल्भो दन्तुरः सत्यं वेदान्तपारगो भवेत् ॥” | | पूर्णिमा । अमावस्या । यथा, --<br>“नन्दा भद्रा जया रिक्ता पूर्णा प्रतिपदः क्रमात् ॥” |

तत्र स्त्रीसंसर्गनिषेधो यथा, --
"पूर्णासु योषित् परिवर्ज्जनीया ॥"
इति तिथितत्त्वम् ।
"गुरौ पूर्णा च संयुक्ता सिद्धियोगाः प्रकी-
र्त्तिताः ॥"
इति ज्योतिःसारसंग्रहः ॥

**पूर्णालकं**, क्ली, वार्द्धयिनाप्तम् । तत्पर्य्यायः । पूर्ण-
पात्रम् २ । इति त्रिकाण्डशेषः । पूर्णानक-
मपि पाठः ॥

**पूर्णावतारः**, पुं, (पूर्णः अवतारः ।) नृसिंहः ।
रामः । यथा, --
"पूर्णो नृसिंहो रामश्च श्वेतद्वीपविराड्विभुः ।
परिपूर्णतमः कृष्णो वैकुण्ठे गोलके स्वयम् ॥
वैकुण्ठे कमलाकान्तो रूपभेदश्चतुर्भुजः ।
गोलोके गोकुले राधाकान्तोऽयं द्विभुजः स्वयम् ॥
तस्यैव तेजो नित्यञ्च चिन्तां कुर्व्वन्ति योगिनः ।
भक्ताः पादाम्बुजं तेजः कुतस्तेजस्विना विना ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ९ अध्यायः ॥

**पूर्णिका**, स्त्री, नासाच्छिन्नीनामकपक्षी । इति
त्रिकाण्डशेषः ॥

**पूर्णिमा**, स्त्री, (पूर्णिः पूरणम् । पूर्णिं मिमीते इति ।
मा + कः । टाप् ।) पञ्चदशी तिथिः । तत्-
पर्य्यायः । पौर्णमासी २ । निशाकरे कलाहीने
सा चतुर्द्दशीयुक्ता ग्राह्या युग्मात् । यमः ।
"पक्षान्ते स्रोतसि स्नायात्तेन नायाति मत्-
पुरम् ॥"
विष्णुः ।
"दृश्येते सहितौ यस्यां दिवि चन्द्रबृहस्पती ।
पौर्णमासी तु महती ज्ञेया संवत्सरे तु सा ॥
तस्यां स्नानोपवासाभ्यामक्षयं परिकीर्त्तितम् ॥"
सहितौ माससंज्ञाविशेषनिमित्तकृत्तिकादि-
नक्षत्रगतौ । महाकार्त्तिक्यादिदर्शनात् । तथा
च राजमार्त्तण्डे ।
"माससंज्ञे यदा ऋक्षे चन्द्रः संपूर्णमण्डलः ।
गुरुणा याति संयोगं सा तिथिर्महती स्मृता ॥"
स्कान्दमात्स्ययोः ।
"पौर्णमासीषु चैतासु मासर्क्षसहितासु च ।
एतासां स्नानदानाभ्यां फलं दशगुणं स्मृतम् ॥"
वैशाखीमधिकृत्य यमः ।
"गौरान् वा यदि वा कृष्णांस्तिलान् क्षौद्रेण संयुतान् ।
प्रीयतां धर्म्मराजेति पितॄन्देवांश्च तर्पयेत् ॥
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ।
अब्दायुतञ्च तिष्ठेच्च स्वर्गलोके न संशयः ॥" * ॥
ब्रह्मपुराणे ।
"महाज्यैष्ठ्यान्तु यः पश्येत् पुरुषः पुरुषोत्तमम् ।
विष्णुलोकमवाप्नोति मोक्षं गङ्गाम्बुमज्जनात् ॥ * ॥
ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा ।
पूर्णिमा गुरुवारेण महाज्यैष्ठी प्रकीर्त्तिता ॥"
अनुराधास्थगुरावपि ।
"ऐन्द्रे मैत्रे यदा जीवस्तत्पञ्चदशके रविः ।
पूर्णिमा शक्रचन्द्रेण महाज्यैष्ठी प्रकीर्त्तिता ॥"
अनुराधास्थचन्द्रेऽपि । व्याघ्रभूतिः ।
विष्णुधर्म्मोत्तरे ।
"पौर्णमासी तथा माघी श्रावणी च नरोत्तमः ।
प्रौष्ठपद्यामतीतायां तथा कृष्णा त्रयोदशी ॥
एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजा-
पतिः ॥"
तत्र पूर्ब्बदिने सङ्गवलाभे रौहिणलाभे वा पर-
दिने सङ्गवालाभे पूर्ब्बदिने श्राद्धम् ।
"कृष्णपक्षस्य पूर्ब्बाह्णे श्राद्धं कुर्य्याद्विचक्षणः ।
कृष्णपक्षापराह्णे तु रौहिणन्तु न लङ्घयेत् ॥"
इति वायुपुराणवचनात् ॥
उभयदिने सङ्गवलाभे परदिने ।
"शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः ॥"
इति विष्णुधर्म्मोत्तरात् ॥
एवमक्षयतृतीयादावपि ॥ * ॥ आषाढकार्त्तिक-
माघपौर्णमासीषु दानमावश्यकम् । तथा चायो-
ध्याकाण्डे भरतशपथे ।
"आषाढी कार्त्तिकी माघी तिथयः पुण्यसम्भवाः ।
अप्रदानवतो यान्तु यस्यार्य्योऽनुमतो गतः ॥"
अप्रदानवतो दानरहितस्यैतास्तिथयो यान्तु
आर्य्यः श्रीरामचन्द्रो गतो यस्यानुमतः इत्य-
न्वयः । उत्तरवाक्ये यच्छब्दान्न तच्छब्दापेक्षा ॥
अथ कोजागरकृत्यम् । कल्पतरौ ब्रह्मपुराणम् ।
"आश्वयुज्यां पौर्णमास्यां निकुम्भो वालुका-
र्णवात् ।
आयाति सेनया सार्द्धं कृत्वा युद्धं सुदारुणम् ॥
तस्मात्तत्र नरैर्मार्गाः स्वगेहस्य समीपतः ।
शोधितव्याः प्रयत्नेन भूषितव्याश्च भूषणैः ॥
पुष्पार्घ्यफलमूलान्नसर्षपप्रकरैस्तथा ।
वेश्मानि भूषितव्यानि नानावर्णैर्विशेषतः ॥
सुस्नातैरनुलिप्तैश्च नरैर्भाव्यं सबान्धवैः ।
दिवा तत्र न भोक्तव्यं मनुष्यैश्च विवेकिभिः ॥
स्त्रीबालवृद्धमूर्खैश्च भोक्तव्यं पूजितैः सुरैः ॥"
पूजितैः सुरैरिति विशेषणे तृतीया । तेन पूजित-
सुरैरित्यर्थः ।
"पूज्याश्च सफलैः पत्रैस्तथा द्वारोर्द्धभित्तयः ।
द्वारोपान्ते सुदीप्तस्तु संपूज्यो हव्यवाहनः ॥
यवाक्षतघृतोपेतैस्तण्डुलैश्च सुतर्पितः ।

सा अनुमतिः ३ पूर्णे निशाकरे सा राका ४ ।
इत्यमरः । १ । ४ । ७-८ ॥ पित्र्या ५ चान्द्री ६ पूर्ण-
मासी ७ अनन्ता ८ चन्द्रमाता ९ निरञ्जना १० ।
इति वाचस्पतिः ॥ पूर्णिमा ११ । इति हड्ड-
चन्द्रः ॥ ज्योत्स्नी १२ इन्दुमती १३ सिता १४ ।
इति राजनिर्घण्टः ॥ सा द्विविधा । यथा, --
"राका चानुमती चैव द्विविधा पूर्णिमा मता ।
पूर्ब्बोदितकलाहीने पौर्णमास्या निशाकरे ।
पूर्णिमानुमती ज्ञेया पश्चास्तमितभास्करे ॥
यस्मात्तामनुमन्यन्ते देवताः पितृभिः सह ।
तस्मादनुमती नाम पूर्णिमा प्रथमा स्मृता ॥
यदा चास्तमिते सूर्य्ये पूर्णचन्द्रस्य चोद्गमः ।
युगपत् सोत्तरा रागात्तदानुमतिपूर्णिमा ॥
राकान्तामनुमन्यन्ते देवताः पितृभिः सह ।
रञ्जनाच्चैव चन्द्रस्य राकेति कवयोऽब्रुवन् ॥"
इति देवीपुराणम् ॥ * ॥
सा चन्द्रस्य तिथिः । यथा, --
"तस्य ब्रह्मा ददौ प्रीतः पौर्णमासीं तिथिं
प्रभुः ।
तस्यामुपोषयेद्राजंस्तमर्थं प्रतिपादयेत् ॥
न चान्नाहारश्च भवेत्तस्य ज्ञानं प्रयच्छति ।
कान्तिं पुष्टिञ्च राजेन्द्र ! धनं धान्यञ्च केवलम् ॥"
"ऐन्द्रर्क्षे त्वथवा मैत्रे गुरुचन्द्रौ यदा स्थितौ ।
पूर्णिमा ज्यैष्ठमासस्य महाज्यैष्ठी प्रकीर्त्तिता ॥"
राजमार्त्तण्डे ।
"ज्यैष्ठे संवत्सरे चैव ज्यष्ठमासस्य पूर्णिमा ।
ज्येष्ठामेन समायुक्ता महाज्यैष्ठी प्रकीर्त्तिता ॥"
ज्यैष्ठसंवत्सरश्च ।
"ज्येष्ठामूलोपगे जीवे वर्षं स्याच्छक्रदैवतम् ॥"
इति विष्णुधर्म्मोत्तरोक्तो ग्राह्यः । संवत्सरोऽत्र
वत्सरो बोध्यः । न तु संवत्सरादिपञ्चकान्तर्गत-
वर्षविशेषः । ज्यैष्ठ इति विशेषणस्य वैयर्थ्या-
पत्तेः । संवत्सरे यदि स्यात्त्विति पाठः काल्प-
निकः । प्रपञ्चस्तु मलमासतत्त्वेऽनुसन्धेयः ॥ * ॥
विष्णुधर्म्मोत्तरब्रह्मपुराणयोः ।
"मासि ज्यैष्ठे तु संप्राप्ते नक्षत्रे शक्रदैवते ।
पौर्णमास्यां तदा स्नानं सर्व्वपापं हरेद्द्विजाः ॥
तस्मिन् काले तु ये मर्त्याः पश्यन्ति पुरुषोत्तमम् ।
बलभद्रं सुभद्राञ्च ते यान्ति पदमव्ययम् ॥"
स्कन्दपुराणे ।
"ज्यैष्ठ्यामहञ्चावतीर्णस्तत्पुण्यं जन्मवासरम् ।
तस्यां मे स्नपनं कुर्य्यान्महास्नानविधानतः ॥
ज्यैष्ठ्यां प्रातःस्नानकाले ब्रह्मणा सहितञ्च माम् ।
रामं सुभद्रां संस्नाप्य मम लोकमवाप्नुयात् ॥"
संपूजितव्यः पूर्णेन्दुः पयसा पायसेन च ॥
रुद्रः सभार्य्यः स्कन्दश्च तदा नन्दीश्वरो मुनिः ।
गोमद्भिः सुरभिः पूज्या छागवद्भिर्हुताशनः ॥
उरभ्रवद्भिर्वरुणो गजवद्भिर्विनायकः ।
पूज्यः साश्वैश्च रेवन्तो यथाविभवविस्तरैः ॥
ततः पूज्यो निकुम्भोऽपि समाषैस्तिलतण्डुलैः ।
सुगन्धिभिर्घृतोपेतैः कृशराद्यैश्च भूरिभिः ॥
ब्राह्मणान् भोजयित्वा तु भोक्तव्यं मांसवर्जितम् ।
वह्निपार्श्वगतैर्नेया दृष्ट्वा क्रीडाः पृथग्विधाः ॥"
ततश्च द्वारोर्द्धभित्तिहव्यवाहनपूर्णेन्दुसभार्य्यरुद्र-
स्कन्दनन्दीश्वरमुनयः सर्व्वैरेव पूज्याः । द्वारोद्र्ध्व-
भित्तिशब्दोऽत्र बहुवचनान्तः । नन्दीश्वरमुनि-
रेकः । गोमता सुरभिः । छागवता हुताशनः ।
मेषवता वरुणः । हस्तिमता विनायकः । अश्व-

| | | |
|---|---|---|
| इति वराहपुराणे सोमोत्पत्तिरहस्यम् ॥ * ॥<br>तस्यां जातफलम् ।<br>“कन्दर्पतुल्यो युवतीप्रियश्च<br>न्यायाप्तवित्तः सततं सहर्षः ।<br>शूरो बली शास्त्रविचारदक्ष-<br>श्चेत् पूर्णिमा जन्मनि यस्य जन्तोः ॥”<br>इति कोष्ठीप्रदीपः ॥ * ॥ | | |

वता रेवन्तः । सर्व्वैरेव निकुम्भः पूज्यः । महा-
र्णवे लिङ्गपुराणम् ।
"आश्विने पौर्णमास्यान्तु चरेज्जागरणं निशि ।
कौमुदी सा समाख्याता कार्य्या लोकविभूतये ॥
कौमुद्यां पूजयेल्लक्ष्मीमिन्द्रञ्चैरावतस्थितम्।
सुगन्धिर्निशि सद्वेशो अक्षैर्जागरणञ्चरेत् ॥"
तथा, --
"निशीथे वरदा लक्ष्मीः को जागर्त्तीतिभाषिणी ।
तस्मै वित्तं प्रयच्छामि अक्षैः क्रीडां करोति यः ।
नारिकेलैश्चिपिटकैः पितॄन् देवान् समर्च्चयेत् ।
बन्धूंश्च प्रीणयेत्तेन स्वयं तदशनो भवेत् ॥"
अत्र निशीति निशीथ इति चाभिधानाद्रात्रि-
कृत्यमिदम् ।
"ततः प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा ।
प्रदोषोऽस्तमयाद्धूर्ध्वं घटिकाद्वयमिष्यते ॥"
इति संवत्सरप्रदीपधृतवत्सवचनात्॥
यद्दिने प्रदोषनिशीथोभयव्यापिनीपौर्णमासी
तद्दिने कोजागरकृत्यम् । उभयव्याप्त्यनुरोधात्।
यदा तु पूर्ब्बदिने निशीथव्याप्तिः परदिने प्रदोष-
व्याप्तिस्तदा परेद्युस्तत्कृत्यम् । प्रधानपूजाकाल-
व्याप्त्यनुरोधात् । यदा पूर्ब्बेद्युर्निशीथव्याप्तिः
परेद्युर्न प्रदोषव्याप्तिस्तदा सुतरां पूर्ब्बेद्युस्तत्-
कृत्यम् ।
"अहःसु तिथयः पुण्याः कर्म्मानुष्ठानतो दिवा ।
नक्तादिव्रतयोगे तु रात्रियोगो विशिष्यते ॥"
इति वचनात् ॥
वर्जयेदित्यनुवृत्तौ मत्स्यसूक्ते ।
"महालक्ष्म्यास्तु तुलसीं झिण्टिकां काञ्चन-
न्तथा ॥"
लक्ष्मीध्यानमादित्यपुराणे।
"पाशाक्षमालिकाम्भोजसृणिभिर्याम्यसौम्ययोः।
पद्मासनस्थां ध्यायेच्च श्रियं त्रैलोक्यमातरम्॥
गौरवर्णां सुरूपाञ्च सर्व्वालङ्कारभूषिताम्।
रौक्मपद्मव्यग्रकरां वरदां दक्षिणेन तु ॥"
पाशेति । दक्षिणे पाशाक्षमालाभ्यां वामे पद्मा-
ङ्कुशाभ्यां भूषितां वामकरे हेमपद्मं दक्षिणकरे
वरं दधतीत्यर्थः । ततः पाद्यादिभिः संपूज्य, --
"ॐ नमस्ते सर्व्वदेवानां वरदासि हरिप्रिये ।

अत्र प्रदोषे सर्व्वेषां पूजेति
रुद्रधरप्रभृतयः ॥ न
च निकुम्भपर्य्यन्तानां पूर्ब्बाह्ण एव
पूजनं निरप-
वादमिति वाच्यम् । दिवा तत्र न
भोक्तव्यं
इत्युपक्रम्य पूज्याश्च सफलैः
पत्रैरित्यादिना
विशिष्य पूजामभिधाय
भोक्तव्यमित्यभिधानात्
रात्रावेव पूजाभोजने अवगम्येते ।
अतएवा-
शक्तानामेव भोक्तव्यं पूजितैः
सुरैरित्यनेन
विशिष्य दिवा पूजाभोजने विहिते ॥
* ॥
योगिनीतन्त्रे ।
"विरिञ्चेस्तु गृहे ढक्कां घण्टां
लक्ष्मीगृहे त्यजेत् ।
सर्व्ववाद्यमयीं घण्टां वाद्याभावे तु
वादयेत् ॥" * ॥
लक्ष्मीवाक्यम् ।
"प्रकीर्णभाण्डामनवेक्ष्य कारिणीं
सदा च भर्त्तुः प्रतिकूलवादिनीम् ।
परस्य वेश्माभिरतामलज्जा-
मेवंविधां स्त्रीं परिवर्जयामि ॥"
मार्कण्डेयः ।
"शिरः सपुष्पं चरणौ सुपूजितौ
वराङ्गनासेवनमल्पभोजनम् ।
अनग्नशायित्वमपर्व्वमैथुनं
चिरप्रनष्टां श्रियमानयन्ति षट् ॥
मानुषास्थि गृहे यत्र अहोरात्रञ्च
तिष्ठति ।
तत्रालक्ष्मि ! तवावासस्तथान्येषाञ्च
रक्षसाम् ॥
सूर्पदात्रादिकं यत्र
पदाकर्षेत्तथासनम् ॥"
हरिवंशे ।

स्कन्दपुराणीयपुरुषोत्तममाहात्म्ये
ऊनत्रिंशा-
ध्याये ।
"फाल्गुन्यां क्रीडनं कुर्य्यात् दोलायां मम
भूमिप ! ॥"
इति तिथितत्त्वम् ॥ * ॥
तस्याः पर्व्वत्वं पर्व्वशब्दे द्रष्टव्यम् ॥

**पूर्त्तं**, क्ली, (पॄ पालने + भावे क्तः । "न ध्याख्या-
पॄमूर्च्छिमदाम् ।" ८ । २ । ५७ । इति
निष्ठा-
तस्य न नत्वम् ।) पालनम् । इति
शब्दरत्ना-
वली ॥ (पिपर्त्ति पालयत्यनेन जीवानिति
।
पॄ + करणे क्तः ।) खातादिकर्म्म ।
इत्यमरः । २ ।
७ । २८ ॥ आदिना देवकुल्यादि ।
तदुक्तम् ।
"पुष्करिण्यः सभा वापी देवतायतनानि
च ।
आरामश्च विशेषेण पूर्त्तं कर्म्म
विनिर्द्दिशेत् ॥"
इति भरतः ॥
तत्करणफलम् ।
"इष्टापूर्त्तं द्विजातीनां प्रथमं धर्म्मसाधनम्
।
इष्टेन लभते स्वर्गं पूर्त्ते मोक्षञ्च विन्दति ॥
वापीकूपतडागानि देवतायतनानि च ।
पतितान्युद्धरेद्यस्तु स पूर्त्तफलमश्नुते ॥"
इति वराहपुराणम् ॥ * ॥
वापीत्यादीनां पूर्त्तत्वाभिधानात्
शूद्रस्याधिकार-
माह जातूकर्णः ।
"वापीकूपतडागादि देवतायतनानि च ।
अन्नप्रदानमारामाः पूर्त्तमित्यभिधीयते ॥
ग्रहोपरागे यद्दानं पूर्त्तमित्यभिधीयते।
इष्टापूर्त्तं द्विजातीनां धर्म्मः सामान्य
उच्यते ।

या गतिस्त्वत्प्रपन्नानां सा मे मूयात् त्वदर्च्चनात्
॥”
इत्यनेन पुष्पाञ्जलित्रयं दत्त्वा प्रणमेत् ॥
इन्द्रध्यानमादित्यपुराणे।
“चतुर्द्दन्तगजारूढो वज्रपाणिः पुरन्दरः ।
शचीपतिश्च ध्यातव्यो नानाभरणभूषितः ॥”
पाद्यादिभिः संपूज्य, --
“ॐ विचित्रैरावतस्थाय शश्वत्कुलिशपाणये ।
पौलोम्यालिङ्गिताङ्गाय सहस्राक्षाय ते नमः ॥”
इति पुष्पाञ्जलित्रयं दत्त्वा प्रणमेत् । ततः कुवेरः
संपूज्यः । इति रुद्रधरः ॥ तं पाद्यादिभिः
संपूज्य, --
“ॐ धनदाय नमस्तुभ्यं निधिपद्माधिपाय च ।
भवन्तु त्वत्प्रसादान्मे धनधान्यादिसम्पदः ॥”
इति प्रणमेत् ॥

“यत्र ह्रीः श्रीः स्थिता तत्र यत्र
श्रीस्तत्र सम्मतिः ।
सम्मतिर्ह्रीस्तथा श्रीश्च नित्यं कृष्णे
महात्मनि ॥”
मत्स्यपुराणे ।
“स्थिरो हि यो हि पुरुषः
स्थिरश्रीरेव जायते ।
रक्षितुं नैव शक्नोति चपलश्चपलां
श्रियम् ॥”
तथा, --
“अवश्यमुद्योगवतां श्रीरपारा भवेत्
सदा ।
ब्रह्मप्रोत्साहिता देवा ममन्थुः
पुनरम्बुधिम् ॥”
कृत्यकौमुद्याम् ।
“नारिकेलोदकं पीत्वा अक्षैर्जागरणं
निशि ।
तस्मै वित्तं प्रयच्छामि को जागर्त्ति
महीतले ॥”
अक्षक्रीडायां व्यासयुधिष्ठिरसंवादः
प्रचरति ।
तत्क्रीडा चतुरङ्गशब्दे द्रष्टव्या ॥ * ॥
वैष्णवा-
मृते स्कन्दपुराणम् ।
“पौष्यान्तु समतीतायां यावद्भवति
पूर्णिमा ।
माघमासस्य देवेन्द्र ! पूजा
विष्णोर्विधीयते ॥”
इति । पौर्णमास्यन्तमासमुपक्रम्य ।
“पितणां देवतानाञ्च मूलकं नैव
दापयेत् ।
ददन्नरकमाप्नोति भुञ्जीत ब्राह्मणो
यदि ॥
ब्राह्मणो मूलकं भुक्त्वा
चरेच्चान्द्रायणव्रतम् ।
अन्यथा नरकं याति क्षत्त्रो विट् शूद्र
एव च ॥
वरं भक्ष्यमभक्ष्यञ्च पिबेद्वा गर्हितञ्च
यत् ।
वर्ज्जनीयं प्रयत्नेन मूलकं
मदिरासमम् ॥” * ॥

अधिकारी भवेत् शूद्रः पूर्त्ते धर्म्मे न
वैदिके ॥”
वैदिके वेदाध्ययनसाध्ये
अग्निहोत्रादाविति रत्ना-
करः ॥ एवं स्त्रीणामपि पूर्त्ताधिकारः ।
यथा
नारीत्यनुवृत्तौ बृहस्पतिः ।
“पितृव्यगुरुदौहित्रान् भर्त्तुः
स्वस्रीयमातुलान् ।
पूजयेत् कव्यपूर्त्ताभ्यां वृद्धानाथातिथीन्
स्त्रियः ॥”
इति जलाशयतत्त्वम् ॥
(पूर्त्तं खातादिकर्म्म अङ्गत्वेनास्त्यस्येति
। अच् ।
धर्म्मविशेषे, पुं, । यथा, मार्कण्डेये । १३
। १५ ।
“यतस्ते विमुखा यान्ति निश्वस्यं
गृहमेधिनः ।
तस्मादिष्टिश्च पूर्त्तश्च धर्म्मौ द्वावपि
नश्यतः ॥”)

**पूर्त्तः**, त्रि, (पॄ + कर्म्मणि क्तः ।) पूरितः । छन्नः ।
इति विश्वः ॥ (यथा, भागवते । ३ । २४
। ३१ ।
“ऐश्वर्य्यवैराग्ययशोऽवबोध-
वीर्य्यश्रिया पूर्त्तमहं प्रपद्ये ॥”)

**पूर्त्तिः**, स्त्री, पूरणम् । पॄधातोर्भावे क्तिः । इति
व्याकरणम् ॥ (यथा, ऋग्वेदे । ६ । १३ ।
६ ।
“विश्वाभिर्गीभिरभि पूर्त्तिमश्यां
मदेम शतहिमाः सुवीराः ॥”)

**पूर्व्व**, क निकेतने । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-निमन्त्रणे सक०-निवासे अक०-
सेट् ।)
षष्ठस्वरी । निकेतनमिह निमन्त्रणं
निवासो वा ।
क, पूर्व्वयति द्विजान् भोक्तुं गृही ।
पूर्व्वयति
तीर्थेषु साधुः । इति दुर्गादासः ॥
वर्ग्यबान्तो-

|  | फाल्गुने दोलयात्रामाह तीर्थचिन्तामणौ ब्रह्म-<br>पुराणम् ।<br>“नरो दोलागतं दृष्ट्वा गोविन्दं पुरुषोत्तमम् ।<br>फाल्गुन्यां संयतो भूत्वा गोविन्दस्य पुरं व्रजेत् ॥” | ऽयम् ॥ |
| --- | --- | --- |

**पू(र्व्व)र्ब्बः**, त्रि, (पूर्व्व निमन्त्रणे निवासे वा + अच् ।) प्रथमः । (यथा, कुमारे । १ । ५३ ।
"यदैव पूर्ब्बे जनने शरीरं
सा दक्षरोषात् सुदती ससर्ज्ज ।
तदा प्रभृत्येव विमुक्तसङ्गः
पतिः पशूनामपरिग्रहोऽभूत् ॥"
यथाच मनुः । २ । १८४ ।
"गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु ।
अलाभे त्वन्यगेहानां पूर्ब्बं पूर्ब्बं विवर्ज्जयेत् ॥")
आदिः । (यथा, मनुः । २ । ७४ ।
"ब्राह्मणः प्रणवं कुर्य्यादादावन्ते च सर्व्वदा ।
स्रवत्यनोङ्कृतं पूर्ब्बं पुरस्ताच्च विशीर्य्यति ॥")
प्राग्दिग्-देशकालाः । इत्यमरः ॥ (यथा,
मनुः । ५ । ९२ ।
"दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत् ।
पश्चिमोत्तरपूर्ब्बैस्तु यथायोगं द्विजन्मनः ॥")
समग्रम् । इति तट्टीकायां स्वामी ॥ अग्रः ।
इति हलायुधः ॥ (यथा, मनुः । २ । ५० ।
"त्रिराचामेदपः पूर्ब्बं द्विः प्रमृज्यात्ततो मुखम् ।
खानि चैव स्पृशेदद्भिरात्मानं शिर एव च ॥")

**पूर्व्वगङ्गा**, स्त्री, (पूर्व्वा चासौ गङ्गा चेति ।) नर्म्मदानदी । इति हेमचन्द्रः । ४ । १४९ ॥

**पूर्व्वजः**, पुं, (पूर्व्वे जायते इति । पूर्व्व + जन + डः ।) न्तोऽयम् । यथा, महाभारते । ५ । ४९ । ५ ।
"तेषां मनश्च तेजश्चाप्याददानाविवौजसा ।
पूर्ब्बदेवौ व्यतिक्रान्तौ नरनारायणावृषी ॥")

**पूर्व्वदेशः**, पुं, (पूर्व्वो देशः ।) प्राचीदिगवस्थित-जनपदः । तत्पर्य्यायः । वर्त्तनिः २ । इति त्रिकाण्डशेषः ॥ यथा, --
"प्राच्यां मागधशोणौ च वारेन्द्रीगौडराढकाः ।
वर्द्धमानतमोलिप्तप्राग्ज्योतिषोदयाद्रयः ॥"
इति ज्योतिस्तत्त्वम् ॥

**पूर्व्वपक्षः**, पुं, (पूर्व्वः पक्षः ।) शुक्लपक्षः । इत्य-मरः ॥ (यथा, मनुः । ३ । २७८ ।
"यथा चैवापरः पक्षः पूर्ब्बपक्षाद्विशिष्यते ॥")
शास्त्रीयप्रश्नः । सिद्धान्तविरुद्धकोटिः । तत्-पर्य्यायः । चोद्यम् २ । इति त्रिकाण्डशेषः ॥ देश्यम् ३ फक्किका ४ । इति शब्दरत्नावली ॥ (यथा, मार्कण्डेये । १ । ३ ।
"पूर्ब्बपक्षोक्तिसिद्धान्तपरिनिष्ठासमान्वतम् ॥"
अधिकरणावयवभ्दो व्यवहारविशेषः । यथा, याज्ञवल्क्ये । २ । १७ ।
"पूर्ब्बपक्षेऽधरीभूते भवन्त्युत्तरवादिनः ॥")

**पूर्व्वपक्षपादः**, पुं, (पूर्व्वपक्ष एव पादः ।) चतु-ष्पादव्यवहारान्तर्गतः प्रथमः पादः । तस्य संज्ञान्तरम् । भाषा २ प्रतिज्ञा ३ पक्षः ४ । इति मिताक्षरा ॥ तत्र बृहस्पतिः ।
"पूर्ब्बपक्षः स्मृतः पादो द्विपादश्चोत्तरः स्मृतः ।
क्रियापादस्तथा चान्यश्चतुर्थो निर्णयः स्मृतः ॥
मिथ्योक्तौ च चतुष्पात् स्यात् प्रत्यवस्कन्दने तथा ।
प्राङ्न्याये च स विज्ञेयो द्विपात् संप्रतिपत्तिषु ॥"
यद्यपि संप्रतिपत्तावपि निर्णयोऽस्ति तथाप्युत्तर-वादिनैव भाषार्थस्याङ्गीकृतत्वेन क्रियासाध्यो न भवतीति द्विपादतोक्ता ॥ * ॥
अथ भाषापादः । तत्र भाषास्वरूपमाहतुः कात्यायनबृहस्पती ।
"प्रतिज्ञादोषनिर्मुक्तं साध्य सत्कारणान्वितम् ।
निश्चितं लोकसिद्धञ्च पक्षं पक्षविदो विदुः ॥
स्वल्पाक्षरः प्रभूतार्थो निःसन्दिग्धो निराकुलः ।
भेदाभिधानम् । अतएव उपसंहारे च एवंविधः
पक्ष इति मिताक्षरायान्तु भाषा प्रतिज्ञापक्ष इति नार्थान्तरमित्युक्तम् । भाषार्थमुक्त्वा भाषा-
स्वरूपप्रपञ्चमाह स्वल्पाक्षर इति । निराकुलः
पौर्ब्बापर्य्यविपर्य्यासादिशून्यः ।
"अत्र द्यूते च व्यवहारे च प्रव्रते यज्ञकर्म्मणि ।
यानि पश्यन्त्युदासीनाः कर्त्ता तानि न पश्यति ॥"
इति गृह्यसंग्रहवचनादुदासीनेभ्यो ज्ञात्वा शोध-
येत् । तच्छोधनमाह बृहस्पतिः ।
"न्यूनाधिकं पूर्ब्बपक्षं तावद्वादी विशोधयेत् ।
न दद्यादुत्तरं यावत् प्रत्यर्थी सभ्यसन्निधौ ॥"
तल्लिखनप्रकारमाह व्यासः ।
"पाण्डुलेख्येन फलके भूमौ वा प्रथमं लिखेत् ।
ऊनाधिकन्तु संशोध्य पश्चात् पत्रे निवेशयेत् ॥"
फलकं काष्ठादिपट्टकम् । कात्यायनः ।
"पूर्ब्बपक्षं स्वभावोक्तं प्राड्विवाकोऽथ लेखयेत् ।
पाण्डुलेख्येन फलके ततः पत्रेऽभिलेखयेत् ॥
शोधयेत् पूर्ब्बपक्षन्तु यावन्नोत्तरदर्शनम् ।
उत्तरेणावरुद्धस्य निवृत्तिः शोधनं भवेत् ॥
अन्यदुक्तं लिखेद्योऽन्यदर्थिप्रत्यर्थिनोर्वचः ।
चौरवच्छासयेत्तन्तु धार्म्मिकः पृथिवीपतिः ॥"
स्वभावोक्तमकृत्रिमम् । एतच्च स्वरविशेषादिना
सुज्ञेयम् । अतएव याज्ञवल्क्यः ।
"छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः ।

ज्येष्ठभ्राता । इत्यमरः । २ । ६ ।
४३ ॥ (पूर्ब्बकालोत्-
पन्ने, त्रि । यथा, महाभारते । १ ।
१०५ । २६ ।
"तामद्भिः परिषिच्यार्त्तां
महर्षिरभिवाद्य च ।
मातरं पूर्ब्बजः पुत्त्रो व्यासो
वचनमब्रवीत् ॥")

**पूर्व्वजाः**, पुं, (पूर्व्वे पूर्व्वस्मिन् काले जायन्ते इति ।
जन + डः ।) दिव्यपितृगणः ।
तत्पर्य्यायः ।
पितरः २ चन्द्रगोलस्थाः ३
न्यस्तशस्त्राः ४
स्वधाभुजः ५ कव्यवालादयः ६ ।
बहुवचनान्तो-
ऽयम् । इति त्रिकाण्डशेषः ॥

**पूर्व्वजा**, स्त्री, (पूर्व्वे जायते इति । जन + डः ।
टाप् ।) अग्रजा । ज्येष्ठा भगिनी ।
पूर्ब्बज
इत्यमरदर्शनात् ॥

**पूर्व्वजिनः**, पुं, (पूर्व्वो जिनः ।) अतीतजिनविशेषः ।
तत्पर्य्यायः । मञ्जुश्रीः २
ज्ञानदर्पणः ३ मञ्जुभद्रः
४ मञ्जुघोषः ५ कुमारः ६
अष्टारचक्रवान् ७
स्थिरचक्रः ८ वज्रधरः ९
प्रज्ञाकायः १० आदि-
राट् ११ नीलोत्पली १२
महाराजः १३
नीलः १४ शार्द्दूलवाहनः १५
धियाम्पतिः १६
खड्गी १७ दण्डी १८ विभूषणः
१९ वालव्रतः २०
पञ्चचीरः २१ सिंहकेलिः २२
शिखाधरः २३
वागीश्वरः २४ । इति
त्रिकाण्डशेषः ॥

विरोधिकारणैर्मुक्तो विरोधिप्रतिरोधकः ॥
यदा त्वेवंविधः पक्षः कल्पितः पूर्ब्बवादिना ।
दद्यात्तत्पक्षसम्बद्धं प्रतिवादी तदोत्तरम् ॥"
प्रतिज्ञा साध्याभिधायिका वाक् । तस्या दोषैः
परस्परविरुद्धार्थपदादिभिस्त्यक्तम् । साध्यं
साधनार्हाभिमतार्थं पक्षं विदुः । अन्यथा
प्रतिज्ञादोषेण साध्यदोषः स्यात् । अतएवोक्तम् ।
"वचनस्य प्रतिज्ञात्वं तदर्थस्य च पक्षता ।
असङ्करेण वक्तव्ये व्यवहारषु वादिभिः ॥"
वक्तव्ये पक्षप्रतिज्ञे पूर्ब्बोक्ते । नारदेनापि ।
"सारस्तु व्यवहाराणां प्रतिज्ञा समुदाहृता ।
तद्धानौ हीयते वादी तरंस्तामुत्तरो भवेत् ॥"
उत्तरो विजयी यद्यप्यन्यत्र साध्यं ज्ञाप्यं तद्वि-
शिष्टधर्म्मी पक्ष इति भेदः । तथाप्यत्र वाक्-
प्रत्याय्यर्णादिधर्म्मविशेषविशिष्टस्य पक्षतया
धर्म्मिणोऽधमर्णादेरेव साध्यत्वात् साध्यपक्षयोर-

भूतमप्यनुपन्यस्तं हीयते व्यवहारतः ॥"
भूतं तत्त्वार्थसम्बद्धम् । यदाह नारदः ।
"भूतं तत्त्वार्थं सम्बद्धं प्रमादाभिहितं छलम्
।
किन्तु राज्ञा विशेषेण स्वधर्म्ममभिरक्षता ॥
मनुष्यचित्तवैचित्र्यात् परीक्ष्या
साध्वसाधुता ।
सर्व्वेष्वर्थविवादेषु वाक्छलेनावसीदति ॥
पशुस्त्रीभूम्यृणादाने शास्योऽप्यर्थान्न हीयते
॥"
सर्व्वेषु अर्थविवादेषु प्रमादाभिधानेऽपि
नावसी-
दति । अत्रोदाहरणं पशुस्त्रीत्यादि ।
अर्थविवाद-
ग्रहणान्मन्युकृतविवादेषु प्रमादाभिधाने
प्रकृ-
तार्थाद्धीयत इति गम्यते । यथाहमनेन
शिरसि
पादेन ताडित इत्यभिधाय केवलं हस्तेन
ताडित
इति वदन् न केवलं दण्ड्यः पराजीयते च
।
तथा च त्वं शतं मह्यं ऋणं धारयसि मत्त
ऋण-
त्वेन गृहीततावद्धनकत्वादित्यादि
भाषाशरीरं
एतच्च संस्कृतदेशभाषान्यतरेण यथाबोधं
वक्तव्यं
लेख्यं वा मूर्खाणामपि
वादिप्रतिवादित्वदर्श-
नात् । अतएवाध्यापनेऽपि तथोक्तम् ।
विष्णु-
धर्म्मोत्तरे ।
"संस्कृतैः प्राकृतैर्व्वाक्ययः
शिष्यमनुरूपतः ।
देशभाषाद्युपायाद्यैर्बोधयेत् स गुरुः स्मृतः
॥"
इति व्यवहारतत्त्वम् ॥

**पूर्व्वपदं**, क्ली, (पूर्व्वं पदम् ।) परपदप्राग्वर्त्ति-
विभक्त्यन्तप्रकृतिः । यथा पूर्ब्बपदात्
संज्ञाया-

**पूर्व्वदिक्**, स्त्री, (पूर्व्वा दिक् ।) प्राची दिक् ।

यस्यान्दिशि सूर्य्य उदेति ।

तदधिपतिरिन्द्रः ।

तस्याः पर्य्यायादिः पूर्ब्बाशब्दे

द्रष्टव्यः ॥

**पूर्व्वदिक्पतिः**, पुं, (पूर्व्वदिशः पतिरधिपतिः ।)

इन्द्रः । इति हेमचन्द्रः । २ । ८७

॥

**पूर्व्वदेवः**, पुं, (पूर्व्वश्चासौ देवश्चेति । यद्वा, पूर्व्वं देव

इति सुप्सुपेति समासः ।) असुरः ।

इत्यमरः ।

१ । १ । १२ ॥ (नरनारायणावृषी

। तत्र द्विवचना-

मगः । इति व्याकरणम् ॥

**पूर्व्वपर्व्वतः**, पुं, (पूर्व्वः पूर्व्वदिक्स्थः पर्व्वतः ।

इति नित्यकर्म्मधारयः ।) उदयाचलः ।

इत्य-

मरः । २ । ३ । २ ॥

**पूर्व्वफल्गुनी**, स्त्री, (पूर्व्वा फल्गुनीति कर्म्मधारयः ।)
अश्विन्यादिसप्तविंशतिनक्षत्रान्तर्गतैकादशनक्ष-
त्रम् । तत्तु खट्वाकृतितारकाद्वयात्मकम् ।
तस्याधिष्ठात्री देवता भगः । इति मुहूर्त्त-
चिन्तामणिः ॥ अपि च ।
“दक्षिणोत्तरगते द्वितारके
योनिभे मिलति मस्तकोपरि ।
कीटतः स्फुटसरोरुहानने !
निःसृता २६८ गजरसाक्षिलिप्तिकाः ॥”
द० ४ । २८ । इति कालिदासकृतरात्रिलग्न-
निरूपणम् ॥ * ॥ तत्र जातफलम् ।
“शूरस्त्यागी साहसी भूमिभर्त्ता
कोपाक्रान्तः स्याच्छिरालोऽतिदक्षः ।
धूर्त्तः क्रूरोऽत्यन्तवाताधिकः प्राक्-
फल्यश्चेज्जन्मकाले च यस्य ॥”
इति कोष्ठीप्रदीपः ॥

**पूर्व्वफल्गुनीभवः**, पुं, (पूर्व्वफल्गुन्यां भवतीति ।
भू + अच् ।) बृहस्पतिः । इति शब्दमाला ॥

**पूर्व्वभद्रपदः**, पुं, अश्विन्यादिसप्तविंशतिनक्ष
त्रान्तर्गतपञ्चविंशनक्षत्रम् ।
तत्पर्य्यायः । प्रोष्ठपदाः २ ।
इत्यमरः ॥ “द्वे पूर्ब्बभाद्रपदोत्तरभाद्रपदासु ।
प्रोष्ठो गौः भद्रश्च गौः तस्येव याद आसां
तास्तथा । ग्रहपतिरिव भद्रपादानुगतो राजे-
त्याश्चर्य्यमञ्जरी श्लेषाद्भद्रपदाशब्दो ह्रस्वादिः
भाद्रपदाशब्दोदीर्घादिरपीतिकचित् । दीर्घादि-
पाठः प्रामादिक इति मुकुटादयः ॥ पूर्ब्बे प्रोष्ठ-
पदे द्वे उत्तरे तु भद्रपदे द्वे समुदायश्चासां
चतुःसंख्य इति बहुवचनम् । कदा पूर्ब्बे प्रोष्ठ-
पदे कदा उत्तरे प्रोष्ठपदे इति तारकयोर्द्वित्वात्
द्विवचनम् । फल्गुनीप्रोष्ठपदाशब्दो द्वित्वे बहुत्वे
च भद्रपदा द्वेऽपीति केचित् भद्रपदेन युक्तः
काल इति प्रयोगात् पुंलिङ्गोऽपि भद्रपद इति
केचित् ।” इति तट्टीकायां भरतः ॥ * ॥

**पूर्व्वभद्रपदाः**, स्त्री, अश्विन्यादिसप्तविंशतिनक्ष
त्रान्तर्गतपञ्चविंशनक्षत्रम् ।
तत्पर्य्यायः । प्रोष्ठपदाः २ ।
पर्य्यायः । मणिभद्रः २ जम्भलः ३
जलेन्द्रः ४ ।
इति त्रिकाण्डशेषः ॥

**पूर्व्वरङ्गः**, पुं, (पूर्व्वं रज्यतेऽस्मिन्निति । रञ्ज +
अधिकरणे घञ् ।) नाट्योपक्रमः ।
इति हेम-
चन्द्रः । २ । १९६ ॥ तत्पर्य्यायः ।
प्राक्संगीतम्
२ गुणनिका ३ । इति जटाधरः ॥
(अस्य लक्षणं
यथा, साहित्यदर्पणे । ६ । १० ।
“यन्नाट्यवस्तुनः पूर्ब्बं
रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्व्वन्ति पूर्ब्बरङ्गः स
उच्यते ॥”)

**पूर्व्वरागः**, पुं, (पूर्व्वः पूर्व्वजातो रागोऽनुरागः ।)
नायकनायिकयोर्द्दशाविशेषः । यथा,
--
“श्रवणाद्दर्शनाद्वापि
मिथःसंरूढरागयोः ।
दशाविशेषो योऽप्राप्तौ पूर्ब्बरागः स
उच्यते ॥”
इति साहित्यदर्पणम् ॥

**पूर्व्वरात्रः**, पुं, (रात्रेः पूर्व्वो भागः । अच् समासे
।
“रात्राह्नाहाः पुंसि ।” २ । ४ । २९ ।
इति
पुंस्त्वम् ।) रात्रेः पूर्ब्बभागः । इति
मुग्धबोध-
व्याकरणम् ॥

**पूर्व्वरूपं**, क्ली, (पूर्व्वं रूपमिति कर्म्मधारयः ।)
पूर्ब्बलक्षणम् । वैद्यके
भाविव्याधिबोधकचिह्नम् ।
यथा, --
“--प्राग्रूपं येन लक्ष्यते ।
उत्पित्सुरामयो
दोषविशेषेणानधिष्ठितः ।
अन्ये तु पूर्ब्बरूपलक्षणमाहुः ।
स्थानसंश्रयिणः क्रुद्धा
भाविव्याधिप्रबोधकम् ।
दोषाः कुर्व्वन्ति यल्लिङ्गं पूर्ब्बरूपं तदुच्यते
॥ इति ॥
संक्षेपतस्तु लक्षणं भाविव्याधिबोधकमेव
लिङ्गं
पूर्ब्बरूपम् ।” इति माघवकरविजयरक्षितौ
॥

**पूर्व्ववादः**, पुं, (पूर्व्वो वादः ।) व्यवहारे राजादि-
समीपे प्रागावेदनम् । यथा, --
“पूर्ब्बवादम्परित्यज्य योऽन्यमालम्बते पुनः
।
पदसंक्रामणाज्ज्ञेयो हीनवादी स वै नरः ॥”
इति मिताक्षरा ॥

**पूर्व्ववादी**, [न्] पुं, (पूर्व्ववादोऽस्त्यस्येति ।
पूर्ब्बवाद + इनिः ।) प्रागभियोक्ता । प्रथम-
विवादी । यथा, --
“प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्द्दिशेत्
क्रियाम् ।
मिथ्योक्तौ पूर्ब्बवादी तु प्रतिपत्तौ न सा
भवेत् ॥”
इति मिताक्षरा ॥

**पूर्व्वशैलः**, पुं, (पूर्व्वः पूर्व्वदेशस्थितो वा शैलः ।)
उदयपर्व्वतः । इति जटाधरः ॥

**पूर्व्वसरः**, त्रि, (पूर्व्वः सन् सरतीति । पूर्व्व +
सृ + “पूर्ब्बे कर्त्तरि ।” ३ । २ । १९ । इति
टः ।)
अग्रगामी । यथा, भट्टिः । ५ । ९७ ।
“द्विषन् वनेचराग्राणां त्वमादाय चरो वने ।
अग्रेसरो जघन्यानां माभूत् पूर्ब्बसरो मम
॥”

**पूर्व्वसारः**, त्रि, पूर्व्वं देशं सरतीति कर्त्तरि षण्
(अण्)प्रत्ययः । पूर्ब्बसरः । इति
व्याकरणम् ॥

**पूर्व्वा**, स्त्री, (पूर्व्व + टाप् ।) पूर्व्वदिक् । तत्-

इत्यमरः ॥ “द्वे पूर्ब्बभाद्रपदोत्तरभाद्रपदासु।
प्रोष्ठो गौः भद्रश्च गौः तस्येव याद आसां
तास्तथा । ग्रहपतिरिव भद्रपादानुगतो राजे-
त्याश्चर्य्यमञ्जरी श्लेषाद्भद्रपदाशब्दो ह्रस्वादिः
भाद्रपदाशब्दोदीर्घादिरपीतिकचित्। दीर्घादि-
पाठः प्रामादिक इति मुकुटादयः ॥ पूर्ब्बे प्रोष्ठ-
पदे द्वे उत्तरे तु भद्रपदे द्वे समुदायश्चासां
चतुःसंख्य इति बहुवचनम् । कदा पूर्ब्बे प्रोष्ठ-
पदे कदा उत्तरे प्रोष्ठपदे इति तारकयोर्द्वित्वात्
द्विवचनम् । फल्गुनीप्रोष्ठपदाशब्दो द्वित्वे बहुत्वे
च भद्रपदा द्वेऽपीति केचित् भद्रपदेन युक्तः
काल इति प्रयोगात् पुंलिङ्गोऽपि भद्रपद इति
केचित् ।” इति तट्टीकायां भरतः ॥ * ॥

**पूर्व्वभाद्रपदाः**, स्त्री, अश्विन्यादिसप्तविंशतिनक्ष

त्रान्तर्गतपञ्चविंशनक्षत्रम् ।
तत्पर्य्यायः । प्रोष्ठपदाः २ ।
इत्यमरः ॥ “द्वे पूर्ब्बभाद्रपदोत्तरभाद्रपदासु।
प्रोष्ठो गौः भद्रश्च गौः तस्येव याद आसां
तास्तथा । ग्रहपतिरिव भद्रपादानुगतो राजे-
त्याश्चर्य्यमञ्जरी श्लेषाद्भद्रपदाशब्दो ह्रस्वादिः
भाद्रपदाशब्दोदीर्घादिरपीतिकेचित् । दीर्घादि-
पाठः प्रामादिक इति मुकुटादयः ॥ पूर्ब्बे प्रोष्ठ-
पदे द्वे उत्तरे तु भद्रपदे द्वे समुदायश्चासां
चतुःसंख्य इति बहुवचनम् । कदा पूर्ब्बे प्रोष्ठ-
पदे कदा उत्तरे प्रोष्ठपदे इति तारकयोर्द्वित्वात्
द्विवचनम् । फल्गुनीप्रोष्ठपदाशब्दो द्वित्वे बहुत्वे
च भद्रपदा द्वेऽपीति केचित् भद्रपदेन युक्तः
काल इति प्रयोगात् पुंलिङ्गोऽपि भद्रपद इति
केचित् ।” इति तट्टीकायां भरतः ॥ * ॥
तां तु दक्षिणोत्तरवर्त्तिखड्गाकृतितारकाद्वया-
त्मिकाः । भाराकृतिताराद्वयरूपा वा । तदधि-
देवता अजपादः आसां जघन्यगुणः । इति
ज्योतिषम् ॥ अपि च ।
“भारमूर्त्तिभृतिकोपरिस्थिते
पूर्ब्बभाद्रपदभे द्वितारके ।
लिप्तिकाः करिकराक्षि २२८ संमिता
निःसरन्ति वृषभोदयात् प्रिये ! ॥”
द० ३ । ४८ । इति कालिदासकृतरात्रिलग्न-
निरूपणम् ॥ * ॥
तत्र जातफलम् ।
“जितेन्द्रियः सर्व्वकलासु दक्षो

लिङ्गमव्यक्तमल्पत्वाद्व्याधीनां
तद्यथायथम् ॥”
द्विविधं हि पूर्ब्बरूपं भवति । सामान्यं
विशि-
ष्टञ्च । सामान्यं येन
दोषदूष्यसंमूर्च्छनावस्था-
जनितेन भाविज्वरादिव्याधिमात्रं
प्रतीयते न
तु वातादिजनितत्वादिविशेषः । यथा
। श्रमो
रतिर्व्विवर्णत्वमिति । तथा
बालगुरुवाक्यप्रद्वे-
ऽषादि । सामान्याभिप्रायेणैव
तन्त्रान्तरं यथा ।
व्याधेर्जातिर्व्बुभूषा च पूर्ब्बरूपेण
लक्ष्यते ।
भावः किमात्मकत्वञ्च लक्ष्यते
लक्षणेन तु इति ॥
तथाह पराशरः । पूर्ब्बरूपं नाम येन
भावि-
व्याधिविशेषो लक्ष्यते न तु दोषविशेष
इति ।
विशिष्टं यथा । उरःक्षतादौ लिङ्गान्येव
वाता-
दिजान्यव्यक्तानि । यदुक्तं तत्रैव ।
अव्यक्तं
लक्षणं तेषां पूर्ब्बरूपमिति स्मृतमिति
। तथाह
सुश्रुतः ।
सामान्यतो विशेषात्तु जृम्भात्यर्थं
समीरणात् ।
पित्तान्नयनयोर्द्दाहः
कफान्नान्नाभिनन्दनमिति ॥
हारीतेऽप्युक्तम् । इति पूर्ब्बरूपमष्टानां
ज्वराणां
सामान्यतो विशेषात्तु
जृम्भाङ्गमर्द्दभूयिष्टं हृद-
योद्वेगि वातजमिति । प्राग्रूपं येन
लक्ष्यते इत्य-
स्यार्थमाह रक्षितः । येन श्रमादिना
उत्पित्सुः

पर्य्यायः । प्राची २ पुरा ३ माघोनी ४ ऐन्द्री
५
माघवती ६ । तद्दिग्भववायुगुणाः ।
“पूर्ब्बस्तु मधुरो वातः स्निग्धः
कटुरसान्वितः ।
गुरुर्विदाहशमनो वातदः पित्तनाशनः ॥”
इति राजनिर्घण्टः ॥
अपि च । राजवल्लभः ।
“प्राग्वातो मधुरः क्षारो वह्निमान्द्यकरो गुरुः
।
वैरस्यगोरवौष्ण्यानि करोत्यप्स्वोषधीषु च
॥
भग्नोत्पिष्टक्षताद्येषु रागश्वयथुदाहकृत् ।
सन्निपातज्वरश्वासत्वग्दोषार्शोविषक्रिमीन्
॥
कोपयेदामवातञ्च घनसंघातकारणम् ॥” ॥
* ॥
तद्दिगधिपतयः मेषसिंहधनूराशयः । यथा,
--
“प्रागादिककुभां नाथा यथासंख्यं
प्रदक्षिणम् ।
मेषाद्या राशयो ज्ञेयास्त्रिरावृत्तिपरिभ्रमात् ॥
इति ज्योतिस्तत्त्वम् ॥

**पूर्व्वाः**, पुं, पूर्व्वजाः । पूर्व्वपुरुषाः । बहुवचनान्तो-

ऽयम् । इत्यमरः । ३ । ३ । १३३ ॥
(यथा, रधुः । १ । ६७ ।
“मत्परं दुर्लभं मत्वा नूनमावर्ज्जितं मया ।
पयः पूर्ब्बैः स्वनिश्वासैः कवोष्णमुपभुज्यते
॥”)

**पूर्व्वाद्रिः**, पुं, (पूर्व्वः पूर्व्वदिक्स्थितो वा अद्रिः

पर्व्वतः ।) उदयाचलः । तत्पर्य्यायः ।
दिन-
मूर्द्धा २ । इति त्रिकाण्डशेषः ॥ (यथा,
कथा-
सरित्सागरे । १ । १८ ।
“पिङ्गोत्तुङ्गजटाजूटगतोयस्याश्नुते नवः ।
सन्ध्यापिशङ्गपूर्ब्बाद्रिशृङ्गसङ्गसुखंशशी
॥”)

| | | |
|---|---|---|
| जितारिपक्षः खलु तस्य नित्यम् ।<br>भवेन्महीयान् सुतरामपूर्ब्बा<br>पूर्ब्बा यदा भाद्रपदा प्रसूतौ ॥”<br>इति कोष्ठीप्रदीपः ॥<br>**पूर्व्वयक्षः**, पुं, (पूर्व्वश्चासौ यक्षश्चेति । पूर्व्वे पूर्व्व-<br>स्मिन् काले यक्षो वा ।) जिनविशेषः । तत्- | सामग्रीसाकल्यादुत्पादेच्छरामयो<br>रोगः दोष-<br>विशेषेण<br>वातादिजन्यासाधारणक्लेथ्वादिना<br>अन-<br>धिष्ठितोऽसम्बद्धो लक्ष्यते ज्ञायते<br>तत्प्राग्रूपमिति ।<br>लिङ्गमव्यक्तमल्पत्वादित्यस्यार्थमाह<br>स एव ।<br>प्राग्रूपमित्यनेन पूर्ब्बोक्तेन सम्बन्धः<br>लिङ्गं लक्ष-<br>णम् अव्यक्तं नात्यभिव्यक्तं तत्र<br>हेतुरल्पत्वात् न<br>त्वावरणादियोगादव्यक्तत्वमित्यर्थः<br>यथायथं यस्य<br>व्याधेर्यद्रूपं तदेवाव्यक्तं तस्य<br>पूर्ब्बमित्यर्थः । | |

**पूर्व्वाषाढा**, स्त्री, (पूर्व्वा चासावाषाढा चेति ।)
अश्विन्यादिसप्तविंशतिनक्षत्रान्तर्गतविंशनक्ष-
त्रम् । सा सूर्पाकृतिचतुस्तारात्मिका । गज-
दन्ताकृतिद्वितारात्मिका वा । अस्या अधिष्ठातृ-
देवता तोयम् । इति ज्योतिषम् ॥ अपि च ।
“सूर्पमूर्त्तिनि शिरोगते चतु-
स्तारके करिकरोरुवारिभे ।
अन्त्यभादमृतवाणि ! निर्गताः
खेचराम्बरशशाङ्कलिप्तिकाः ॥”
द० १ । ४९ ॥ इति कालिदासकृतरात्रिलग्ननिरू-
पणम् ॥ * ॥ तत्र जातफलम् ।
“भूयो भूयस्तूयमानान्नक्तो
भक्तो देवे बन्धुमान्योऽतिदक्षः ।
पूर्ब्बाषाढा जन्मकाले यदि स्या-
दाषाढः स्याद्वैरिवर्गे नितान्तम् ॥”
इति कोष्ठीप्रदीपः ॥

**पूर्व्वाह्णः**, पुं, (अह्नः पूर्व्वम् । पूर्व्वापराधरेत्येक-
देशिसमासः । “राजाहःसखिभ्यष्टच् ।” ५ ।
४ । ९१ । इति टच् । “अह्नोऽह्न एतेभ्यः ।”
५ । ४ । ८८ । इति अह्नादेशः । “अह्नोऽ-
दन्तात् ।” ८ । ४ । ७ । इति णत्वम् । “रात्रा-
ह्नाहाः पुंसि ।” २ । ४ । २९ । इति पुंस्त्वम् ।)
त्रिधाविभक्तदिनप्रथमभागः । स च त्रिंशद्दण्ड-
दिनमाने सूर्य्योदयावधिदशदण्डकालः । यथा,
पूर्ब्बाह्णो वै देवानां मध्यन्दिनं मनुष्याणा-
मपराह्णः पितृणाम् । इति श्रुतिः ॥ अपि च ।
त्रिधाविभक्तदिनभागाभिप्रायेण तु लोकाक्षिः ।
“पूर्ब्बाह्णे मध्यमे वापि यदि पर्व्व समाप्यते ।
तदोपवासः पूर्ब्बेद्युस्तदहर्यागं इष्यते ॥
अपराह्णेऽथवा रात्रौ यदि पर्व्व समाप्यते ।
उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते ॥”
उपोष्येति नाहोरात्राभोजनपरं किन्तु कृते
अग्न्याधाने देवा यजमानस्य समीपमुपवसन्तीति
उपवासशब्देनाग्न्याधानमुच्यते । सूर्य्योदयाव-
धिप्रहरद्वयम् । द्विधाविभक्तदिनपूर्ब्बभागः ।
यथा । पूर्ब्बाह्णापराह्णरूपद्विधाविभक्तदिनस्याव-
वधित्वेनावर्त्तनमाह स्कन्दपुराणम् ।
“आवर्त्तनात्तु पूर्ब्बाह्णो ह्यपराह्णस्ततः परः ॥”
धर्म्मवासरः । इति मेदिनी ।
अव्ययसे, ८४ ॥
(यथा, मनौ । ३ । १८७ ।
“पूर्ब्बेद्युरपरेद्युर्वा
श्राद्धकर्म्मण्युपस्थिते ।
निमन्त्रयेत त्र्यवरान् सम्यग्विप्रान्
यथोदि-
तान् ॥”)

**पूर्व्व**, क निकेतने । इति कविकल्पद्रुमः ॥ (चुरा०-
परं०-निमन्त्रणे सक०-निवासे
अक०-सेट् ।)
षष्ठस्वरी । निकेतनमिह निमन्त्रणं
निवासो
वा । क, पूर्व्वयति द्विजान् भोक्तुं गृही
। पूर्व्व-
यति तीर्थेषु साधुः । इति दुर्गादासः ॥
अन्त्य-
वान्तोऽयम् ॥

**पूल**, कि संहतौ । इति कविकल्पद्रुमः ॥ (चुरा०-
पक्षे भ्वा०-परं-सकं-सेट् ।) षष्ठस्वरी
। कि,
पूलयति पूलति । संहती राशीकरणम्
। इति
दुर्गादासः ॥

**पूष**, वृद्धौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
अक०-सेट् ।) षष्ठस्वरी । पूषति ।
इति दुर्गा-
दासः ॥

**पूषः**, पुं, (पूषति वर्द्धते इति । पूष + कः ।) ब्रह्म-
दारुवृक्षः । इत्यमरः । २ । ४ । ४१
॥ तुत इति
भाषा ॥ (ब्रह्मदारुशब्देऽस्य विषयो
ज्ञेयः ॥)

**पृ**, श ङ व्यायामके । इति कविकल्पद्रुमः ॥ (तुदा०-
आत्म०-अक०-अनिट् ।) व्यायामको
व्यापारः ॥
श ङ, धर्म्मे व्याप्रियते सुधीः । इति
दुर्गादासः ॥

**पृक्का**, स्त्री, (स्पृश्यते इति । स्पृश् + बाहुलकात्
कक् । पृषोदरादित्वात् साधुः ।)
शाकविशेषः ।
पिडिं इति भाषा ॥ तत्पर्य्यायः ।
मरुन्माला २
पिशुना ३ देवी ४ लता ५ लघुः ६
समुद्रान्ता ७
वधूः ८ कोटिवर्षा ९ लङ्कायिका १० ।
इत्य-
मरः ॥ मरुत् ११ माला १२ स्पृक्का
१३ कोटी
१४ वर्षा १५ लङ्कापिका १६
वर्षालङ्कायिका
१७ । इति तट्टीकायां भरतः ॥ तस्करः
१८
चोरकः १९ चण्डः २० । इति
रत्नमाला ॥ अस्य
गुणाः । पाके मधुरत्वम् । हृद्यत्वम् ।
पित्त-
कफनाशित्वञ्च । इति राजवल्लभः ॥

**पृक्तं**, क्ली, (पृच्यते स्म संबध्यते स्मेति । पृच्
रम्पर्के + क्तः ।) धनम् । इति हेमचन्द्रः
। २ ।
१०६ ॥ सम्पर्कयुक्ते, त्रि ॥ (यथा, रघौ
। २ । १३ ।
“पृक्तस्तुषारैर्गिरिनिर्झराणा-
मनोकहाकम्पितपुष्पगन्धी ॥”)

**पृक्तिः**, स्त्री, (पृच् + भावे क्तिन् ।) सम्पर्कः ।
स्पर्शः । तत्पर्य्यायः । स्पृष्टिः २ ।
इत्यमरः ।
३ । २ । ९ ॥

आवर्त्तनात् वासरस्य छायापरिवर्त्तनात् प्रागि-
तिशेषः अतएवोक्तम् ।
“अश्वत्थं वन्दयेन्नित्यं पूर्ब्बाह्णे प्रहरद्वये ।
अत ऊर्द्ध्वं न वन्देत अश्वत्थन्तु कदाचन ॥”
इति मलमासतत्त्वम् ॥

**पूर्व्वाह्णेतनः**, त्रि, (पूर्व्वाह्णे भव इति । पूर्व्वाह्ण +
“विभाषा पूर्ब्बाह्णापराह्णाभ्याम् ।” ४ । ३ । २४ ।
इति ट्युट्युलौ तुट् च । “घकालतनेषु काल-
नाम्नः ।” ६ । ३ । १७ । इति विभाषया सप्तम्या
अलुक् ।) पूर्ब्बाह्णे भवः । इति सिद्धान्तकौमुदी ॥

**पूर्व्वेद्युः**, [स्] व्य, (पूर्व्वस्मिन्नहनीति । पूर्व्व +
“सद्यःपरुत्परार्य्यैषमः परेद्यव्यद्यपूर्ब्बेद्युरन्येद्यु-
रिति ।” ५ । ३ । २२ । इत्येद्युस्प्रत्ययो निपात्यते
।)
पूर्ब्बदिनम् । इत्यमरः । ३ । ४ । २१ ॥
प्रातःकालः ।

**पूषकः**, पुं, (पूष + स्वार्थे कन् ।) ब्रह्मदारुवृक्षः
।
इति राजनिर्घण्टः ॥ पलाशपिपल
इति हिन्दी-
भाषा ॥ अस्य पर्य्यायगुणाः तूलशब्दे
द्रष्टव्याः ॥

**पूषभाषा**, स्त्री, (पूषेव सूर्य्य इव भासते इति ।
भास + अच् । टाप् ।) इन्द्रनगरी ।
तत्पर्य्यायः ।
सुरपुरी २ । इति शब्दरत्नावली ॥

**पूषासुहृत्**, [द्] पुं, (पूष्णोऽसुहृत् । शिवो
हि स्वांशजवीरभद्रेणास्य
दन्तमुत्पाटयामास
अतोऽस्य तथात्वम् ।) शिवः । इति
हेमचन्द्रः ।
२ । ११४ ॥

**पूषा**, [न्] पुं, (पूषतीति । पूष वृद्धौ + “श्वन्-
उक्षन् पूषन् प्लीहन्निति ।” उणा० १
। १५८ ।
इति कनिन्प्रत्ययान्तो निपात्यते ।)
सूर्य्यः ।
इत्यमरः । १ । ३ । २९ ॥ (यथा,
मार्कण्डेये ।
१०९ । ६४ ।
“आदित्यं भास्करं भानुं सवितारं
दिवाकरम् ।
पूषाणमर्य्यमाणञ्च स्वर्भानुं
दीप्तदीधितिम् ॥”
स तु द्वादशादित्यानामन्यतमः ।
यथा, महा-
भारते । १ । ६५ । १५ -- १६ ।
“धाता मित्रोऽर्य्यमा शक्रो वरुणस्त्वंश
एव च ।
भगो विवस्वान् पूषा च सविता
दशमस्तथा ॥
एकादशस्तथा त्वष्टा द्वादशो
विष्णुरुच्यते ।
जघन्यजस्तु सर्व्वेषामादित्यानां
गुणाधिकः ॥”)

**पृच**, ई ल ङ सम्पर्के । इति कविकल्पद्रुमः ॥
(अदा०-आत्म०-अक०-सेट् ।
निष्ठायामनिट् ।)
ई, पृक्तः । ल ङ, पृक्ते । परीपृच्यते । स
चेह
सम्पृक्तीभावः । सम्पृक्ते नाभिशस्तैर्य
इति हला-
युधः । सम्पृक्ते मधुना चूर्णं भिषगिति तु
अन्त-
र्भूतण्यर्थत्वादिति चतुर्भुजः । इति
दुर्गादासः ॥

**पृच**, कि संयमने । सम्पर्के । इति कविकल्पद्रुमः
॥
(चुरा० पक्षे भ्वा०-पर०-सक० सेट् ।)
संयमनं
बन्धनम् । कि, पर्च्चयति पर्च्चति दुष्टं
राजा ।
इति दुर्गादासः ॥

**पृच**, ध ई सम्पर्के । इति कविकल्पद्रुमः ॥
(रुधा०-
पर०-सक०-अक० च-सेट् ।
निष्ठायामनिट् ।)
सम्पके इह संपृक्तीकरणं
सम्पृक्तीभावश्च ।
ध, पृणक्ति धनुषा बाणम् । संपृणक्ति न
पापिभिर्य इति हलायुधः । ई, पृक्तः ।
पपर्च्च ।
इति दुर्गादासः ॥

**पृच्छा**, स्त्री, (प्रच्छ जिज्ञासायाम् + “गुरोश्च
हलः ।” ३ । ३ । १०३ । इति अः ।)
प्रश्नः ।
इत्यमरः । १ । ६ । १० ॥ (यथा,
नैषधचरिते ।
१९ । ६० ।
“इह किमुषसि पृच्छाशंसिकिंशब्दरूप-
प्रतिनियमितवाचा वायसेनैष पृष्टः ।
भण फणिभवशास्त्रे तातङः
स्थानिनौका
वितिविहिततुहीवागुत्तरः कोकिलोऽभूत्
॥”

**पॄ**, क पूर्त्तौ । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-

सक०-सेट् ।) पूर्त्तिः पूर्णीकरणम् । क, पारयति

पयसा कुम्भं लोकः । इति दुर्गादासः ॥

**पॄ**, न प्रीतौ । इति कविकल्पद्रुमः ॥ (स्वा०-पर०-

सक०-अनिट् ।) न, अतिथीन् पृणोति । इति

दुर्गादासः ॥

**पॄ**, लि पालने । इति कविकल्पद्रुमः ॥ (ह्वा०-पर०-

सक०-अनिट् ।) लि, पिपर्त्ति । इति दुर्गादासः ॥

"पृच्छा तन्त्रात् यथाम्नायं विधिना प्रश्न उच्यते ॥"

इति च वैद्यकचरके सूत्रस्थाने त्रिंशेऽध्याये ॥)

**पृज**, इ ल ङ सम्पर्के । इति कविकल्पद्रुमः ॥

(अदा०-आत्म०-अक०-सेट् ।) सप्तमस्वरी । इ,

पृञ्ज्यते । ल ङ, पृङ्क्ते । अयं कैश्चिन्न मन्यते ।

इति दुर्गादासः ॥

**पृड**, श मुदि । इति कविकल्पद्रुमः ॥ (तुदा०-पर०-
सक०-सेट् ।) मुदि हृष्टीकरणे । श, पृडति
दीनं दाता । पर्डिता । इति दुर्गादासः ॥

**पृण**, श तृपि । इति कविकल्पद्रुमः । (तुदा०-पर०-
सक०-सेट् ।) तृपि तृप्तीकरणे । श, अग्निं
पृणति यो द्विजः । पर्णिता । इति दुर्गादास्रः ॥

**पृतना**, स्त्री, (प्रियते इति । पृङ् व्यायामे + बाहु-
लकात् तनन् गुणाभावश्च ।) सेना । सेना-
भेदः । इति मेदिनी । ने, ९४ ॥ वाहिनीत्रयम्
।
अत्र गजास्त्रिचत्वारिंशदधिकशतद्वयम् २४३
।
रथास्त्रिचत्वारिंशदधिकशतद्वयम् २४३ ।
अश्वा
ऊनत्रिंशदधिकसप्तशतम्७२९ । पदातिकाः
पञ्चदशाधिकशतद्वयाधिकसहस्रम्१२१५ ।
समु-
दायेन त्रिंशदधिकचतुःशताधिकसहस्रद्वयम्
२४३० । इत्यमरभरतौ ॥ (यथा, महाभारते
।
१ । २ । २१ ।
‘त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः ।
स्मृतास्तिस्रस्तु वाहिन्यः पृतनेति विचक्षणैः
॥”
“व्याप्रियन्तेऽत्र योद्धारः इति । पृङ् व्यायामे ।
‘पृपूसां कित् ।’ इति तनन्प्रत्ययः ।” इति
निघण्टौ देवराजयज्वा ॥ संग्रामः । इति
निघण्टुः ॥ यथा, ऋग्वेदे । १ । ८५ । ८ ।
“शूरा इवेद्युयुधयो न जग्मयः
श्रवस्य वो न पृतनासु येतिरे ॥”
“पृननासु संग्रामेषु येतिरे ।” इति तद्भाष्ये
सायनः ॥)

**पृतनाषाट्**, [साह्] पुं, (पृतनां सहते इति ।
सह + “छन्दसि सहः ।” ३ । २ । ६३ । इति
ण्विः । सहेरिति षः ।) इन्द्रः । इति त्रिकाण्ड-
शेषः ॥

**पृथ**, क प्रक्षेपे । इति कविकल्पद्रुमः ॥ (चुरा०-

“पृथक्त्वं निरूपयति संख्यावदिति
पृथक्प्रत्यया-
साधारणकारणं पृथक्त्वम् । तन्नित्यतादिकं
संख्यावत् यथा हि नित्येषु एकत्वं नित्यं
अनित्ये
अनित्यम् आश्रयद्वितीयक्षणे चोत्पद्यते
आश्रय-
नाशान्नश्यति तथा एकपृथक्त्वमपि
द्वित्वादिवत्
द्विपृथक्त्वादिकमपीत्यर्थः ।” इति
सिद्धान्तमुक्ता-
वली ॥

**पृथक्त्वचा**, स्त्री, (पृथक् त्वग् यस्याः । टाप् ।)
मूर्व्वा । इति रत्नमाला ॥ (विषयोऽस्या
मूर्व्वा-
शब्दे ज्ञातव्यः ॥)

**पृथक्पर्णी**, स्त्री, (पृथक् पर्णानि यस्याः । “पाक-
कर्णपर्णपुष्पफलेति ।” ४ । १ । ६४ । इति
ङीष् ।)
क्षद्रवृक्षविशेषः । चाकुल्या इति भाषा ॥ तत्-
पर्य्यायः । पृश्निपर्णी २ चित्रपर्णी ३ अङ्घ्रि-
वल्लिका ४ । इत्यमरः । २ । ४ । ९२ ॥
(यथा,
सुश्रुते । १ । ३६ ।
“पृथक्पर्ण्यात्मगुप्ता च हरिद्रे मालती सिता ।
काकोल्यादिश्च योज्यः स्यात्प्रशस्तो रोपणे
घृते ॥”
पर्य्यायान्तरमस्या यथा, वैद्यकरत्नमालायाम्
।
“पृश्निपर्णी पृथक्पर्णी लाङ्गुली क्रोष्टुपुच्छिका
।
धावनिः कलशी तन्वी गूहाक्रोष्टुकमेखला ॥
दीर्घा शृगालविन्नासा श्रीपर्णी सिं हपुच्छिका
।
दीर्घपत्रा त्वतिलुहा घृतिला चित्रपर्णिका ॥”)

**पृथगात्मता**, स्त्री, (पृथक् आत्मा स्वरूपं यस्य ।

पिता शूरस्तु कुन्तिनृपाय
निजबान्धवायापुत्त्रा-
यैनां कृतकन्यकारूपेण दत्तवान् ।
तत्र कुन्ति-
राजवेश्मनि निवसन्ती दुर्व्वाससं
सन्तोष्य
तस्मात् मन्त्रवरं लब्ध्वा
कन्यावस्थायामेव सूर्य्यात्
कर्णं वीरवरं प्रसूतवती । ततो
गच्छति काले
कुरुवंशावतंसः पाण्डुनृपतिरेनां
परिणीतवान् ।
भर्त्रादिष्टा धर्म्मात् युधिष्ठिरं
वायोर्भीमं इन्द्रा-
दर्ज्जुनं प्रसूतवती । अनन्तरं
भर्त्रादेशेन सपत्न्यै
मद्रसुतायै तन्मन्त्रं प्रदत्तवती तेन
माद्री अश्वि-
भ्यां नकुलसहदेवौ लेभे । इत्येषा
कथा भागवते
९ स्कन्धे २४ अध्याये द्रष्टव्या ॥)

**पृथाजः**, पुं, (पृथाया जायते इति । जन + डः
।)
कुन्तीपुत्त्रः ॥ अर्ज्जुनवृक्षः । इति
राजनिर्घण्टः ॥

**पृथापतिः**, पुं, (पृथायाः पतिः ।) पाण्डुराजः ।
इति त्रिकाण्डशेषः ॥

**पृथिका**, स्त्री, शतपदी । इति शब्दमाला ॥

**पृथिविः**, स्त्री, (पृथिवी । ङीषो वा ह्रस्वः ।)
पृथिवी । इति संक्षिप्तसारोणादिवृत्तिः
॥

**पृथिवी**, स्त्री, (प्रथते विस्तारं यातीति । प्रथ +
“प्रथेः षिवन् संप्रसारणञ्च ।” उणा०
१ । १५० ।
इति षिवन् सम्प्रसारणञ्च । ङीष् ।)
मर्त्त्याद्यधि-

पर०-सक०-सेट् ।) क, पर्थयति गुडमौषधे जनः । इति दुर्गादासः ॥

**पृथक्**, व्य, (प्रथयतीति । प्रथ विक्षेपे + "प्रथः कित्

सम्प्रसारणञ्च ।" उणा० १ । १३६ । इति अजिः
कित् सम्प्रसारणञ्च धातोः ।) भिन्नम् । तत्-पर्य्यायः । विना २ अन्तरेण ३ ऋते ४ हिरुक् ५ नाना ६ वर्ज्जनम् ७ । इत्यमरः । ३ । ४ । ३ ॥
(यथा, मार्कण्डेये । १४ । ६६ ।
"तेषामेतैः सितैः शास्त्रैर्मुहुर्विलपतां त्वचः ।
पृथक् कुर्व्वन्ति वै याम्याः शरीरादति-दारुणाः ॥")

**पृथक्क्षेत्राः**, पुं, (पृथक् भिन्नं क्षेत्रं उत्पत्तिस्थानं

येषामिति ।) एकस्मान्नानावर्णस्त्रीजातपुत्त्राः । इति मिताक्षरा ॥

**पृथक्त्वं**, क्ली, (पृथगित्यस्य भावः । पृथक् + भावे

त्व ।) चतुर्व्विंशतिगुणान्तर्गतसप्तमगुणः । तस्य
लक्षणम् । पृथक्प्रत्ययासाधारणकारणत्वम्।
यथा, भाषापरिच्छेदे ।
"संख्यावच्च पृथक्त्वं स्यात् पृथक्प्रत्ययकारणम्।
अन्योन्याभावतो नास्य चरितार्थत्वमुच्यते ॥
अस्मात् पृथगियं नेति प्रतीतिर्हि विलक्षणा ॥"

तस्य भावः । तल् ।) विवेकः । इत्यमरः । २ । ७ । ३८ ॥

**पृथगात्मिका**, स्त्री, (पृथक् आत्मा स्वरूपं यस्याः ।

कापि अत इत्वम् ।) व्यक्तिः । यथा, --
"जातिर्जातञ्च सामान्यं व्यक्तिस्तु पृथगा-त्मिका ॥"
इति जनुर्जननजन्मानीत्यादिश्लोकोत्तरं क्वचिद-
मरकोषे पाठः ॥

**पृथग्जनः**, पुं, (पृथक् सज्जनेभ्यो विभिन्नो जनः ।)

मूर्खः । नीचः । इत्यमरः । २ । १० । १६ ॥ (यथा,
मनुः । ७ । १३७ ।
"यत्किञ्चिदपि वर्षस्य दापयेत् करसंज्ञितम् ।
व्यवहारेण जीवन्तं राजा राष्ट्रे पृथक्जनम् ॥")
पापी । इति शब्दरत्नावली ॥ भिन्नलोकश्च ॥

**पृथग्बीजः**, पुं, (पृथक् विभिन्नानि बीजानि

यस्य ।) भल्लातकः । इति राजनिर्घण्टः ॥

**पृथग्विधः**, त्रि, (पृथक् विभिन्नलक्षणा विधा

प्रकारो यस्य ।) नानारूपः । इत्यमरः । ३ । १ । ९३ ॥ (यथा, मनुः । १ । ४० ।
"सर्व्वञ्च दंशमशकं स्थावरञ्च पृथग्विधम् ॥")

**पृथवी**, स्त्री, (प्रथते विस्तारमेतीति । प्रथ + "प्रथेः

षिवन् सम्प्रसारणञ्च ।" उणा० १ । १५० ।
इत्यत्र 'षवन् इत्येके ।' इत्युज्ज्वलदत्तोक्त्या षवन्
सम्प्रसारणञ्च । षित्त्वात् ङीष् ।) पृथिवी । यथा,
"पृथवी पृथिवी पृथ्वी धरा सर्व्वंसहा रसा ॥"
इति भरतधृतवाचस्पतिः ॥

**पृथा**, स्त्री, कुन्ती । इति जटाधरः ॥ (इयं हि

शूरस्य कन्या वसुदेवस्य भगिनी । अस्याः

ष्ठानभूता । तत्पर्य्यायः । भूः २ भूमिः ३ अचला
४ अनन्ता ५ रसा ६ विश्वम्भरा ७ स्थिरा ८
धरा ९ धरित्री १० धरणी ११ क्षौणी १२ ज्या
१३ काश्यपी १४ क्षितिः १५ सर्व्वंसहा १६
वसुमती १७ वसुधा १८ उर्व्वी १९ वसुन्धरा
२० गोत्रा २१ कुः २२ पृथ्वी २३ क्ष्मा २४
अवनिः २५ मेदिनी २६ मही । इत्यमरः । २ ।
१ । २ -- ३ ॥ भूर् २८ भूमी २९ धरणिः ३०
क्षोणिः ३१ क्षोणी ३२ क्षौणिः ३३ क्ष्मा ३४
अवनी ३५ महिः ३६ रत्नगर्भा ३७ सागराम्बरा
३८ अब्धिमेखला ३९ भूतधात्री ४० रत्नावती ४१
देहिनी ४२ पारा ४३ विपुला ४४ मध्यमलोक-
वर्त्मा ४५ । इति भरतः ॥ धरणीधरा ४६
धारणी ४७ महाकान्ता ४८ जगद्वहा ४९
गन्धवती ५० खण्डनी ५१ गिरिकर्णिका ५२
धारयित्री ५३ धात्री ५४ सागरमेखला ५५
सहा ५६ अचलकीला ५७ गौः ५८ अब्धिद्वीपा
५९ द्विरा ६० इडा ६१ इडिका ६२ इला ६३
इलिका ६४ । इति शब्दरत्नावली ॥ उदधि-
वस्त्रा ६५ इरा ६६ आदिमा ६७ ईला ६८

|  |  |  |
| --- | --- | --- |
|  |  | वरा ६९ उर्व्वरा ७० आद्या ७१ जगती ७२ पृथुः ७३ भुवनमाता ७४ निश्चला ७५ बीज-प्रसूः ७६ श्यामा ७७ क्रोडकान्ता ७८ । इति राजनिर्घण्टः ॥ खगवती ७९ अदितिः ८० । इति जटाधरः ॥ * ॥ (पृथवी ८१ । इति शब्दार्णषः ॥) न्यायमते अस्या धर्म्मः । रूप-द्रवत्वप्रत्यक्षयोगित्वम् । इयं गुर्व्वी रसयुक्ता च । अस्या द्रवत्वं नैमित्तिकम् । अस्या गुणाः । स्पर्शः १ संख्या २ परिमितिः ३ पृथक्त्वम् ४ संयोगः ५ विभागः ६ परत्वम् ७ अपरत्वम् ८ वेगः ९ द्रवत्वम् १० गुरुत्वम् ११ रूपम् १२ |

रसः १३ गन्धः १४ । इयं गन्धकारणं नाना-
रूपवती षड्रसयुक्ता । गन्धस्तु द्विविधः सौरभं
असौरभम् । तस्याः स्पर्शः अनुष्णाशीत-
पाकजः । सा द्विविधा नित्या अनित्या च । पर-
माणुस्वरूपा नित्या सावयवा अनित्या । सा
त्रिविधा देहेन्द्रियविषयरूपा । देहरूपा योनि-
जादिः इन्द्रियात्मिका घ्राणरूपा विषयात्मिका
द्व्यणुकादिब्रह्माण्डपर्य्यन्ता । यथा, --
“रूपद्रवत्वप्रत्यक्षयोगि स्यात् प्रथमत्रिकम् ।
गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः ॥”
“स्पर्शादयोऽष्टौ वेगश्च द्रवत्वञ्च गुरुत्वकम् ।
रूपं रसस्तथा स्नेहो वारिण्येते चतुर्द्दश ॥
स्नेहहीना गन्ध युता क्षितावेते चतुर्द्दश ।
तत्र क्षितिर्गन्ध हेतुर्नानारूपवती मता ॥
षड्विधस्तु रसस्तत्र गन्धोऽपि द्विविधो मतः ।
स्पर्शस्तु तस्या विज्ञेयो ह्यनुष्णाशीतपाकजः ॥
नित्यानित्या च सा द्वेधा नित्या स्यादणुलक्षणा ।
अनित्या तु तदन्या स्यात् सैवावयवयोगिनी ॥
सा च त्रिधा भवेद्देह इन्द्रियं विषयस्तथा ।
योनिजादिर्भवेद्देहमिन्द्रियं घ्राणलक्षणम् ॥
विषयो द्व्यणुकादिस्तु ब्रह्माण्डान्त उदाहृतः ॥”
इति भाषापरिच्छेदे । २८ -- ३८ ॥
तस्या अध्यात्मादि यथा, --
“पृथिवी पञ्चमं भूतं घ्राणश्चाध्यात्ममुच्यते ।
सप्तसागरसंयुक्ता सप्तद्वीपमिता सती ॥
हिमाद्रिमेरुसंयुक्ता ग्रहचन्द्रार्कसंयुता ।
ब्रह्मविष्णुशिवाद्यैश्च सुरैर्लोकैस्तदालये ॥
पुण्यतीर्थसमायुक्ता पुण्यभारतसंयुता ।
पातालसप्ततदधस्तदूर्द्धे ब्रह्मलोककः ॥
ब्रह्मलोकश्च तत्रैव सर्व्वविश्वञ्च तत्र वै ।
एवं सर्व्वाणि विश्वानि पृथिव्यां निर्म्मितानि च ।
ऊद्ध्वौं गोलोकवैकुण्ठौ नित्यौ विश्वपरौ च तौ ॥
नश्वराणि च विश्वानि सर्व्वाणि कृत्रिमाणि च ।
प्रलये प्राकृते ब्रह्मन् ! ब्रह्मणश्च निपातने ।
महाविराडादिसृष्टौ सृष्टः कृष्णेन चात्मना ॥
नित्यैः स्थिता च प्रलये काष्ठाकाशेश्वरैः सह ।
क्षित्यधिष्ठातृदेवी सा वाराहे पूजिता सुरैः ॥
सुनिभिर्म्मनुभिर्विप्रैर्गन्धर्व्वादिभिरेव च ।
विष्णोर्व्वराहरूपस्य पत्नी सा श्रुतिसम्मता ।
तत्पुत्रो मङ्गलो ज्ञेयो घण्टेशो मङ्गलात्मजः ॥
नारद उवाच ।
पूजिता केन रूपेण वाराहे च सुरैर्मही ।
वराहेण च वाराही सर्व्वैः सर्व्वाश्रया सती ॥
तस्याः पूजाविधानञ्चाप्यधश्चोद्धरणक्रमम्।
मङ्गलं मङ्गलस्यापि जन्म व्यासं वद प्रभो ! ॥
श्रीनारायणं उवाच ।
वाराहे च वराहश्च ब्रह्मणा संस्तुतः पुरा ।
उद्दधार महीं हत्वा हिरण्याक्षं रसातलात् ॥
जले तां स्थापयामास पद्मपत्रं यथा ह्रदे ।
तत्रैव निर्म्ममे ब्रह्मा सर्व्वं विश्वं मनोहरम् ॥
दृष्ट्वा तदधिदेवीञ्च सकामां कामुको हरिः ।
वराहरूपी भगवान् कोटिसूर्य्यसमप्रभः ॥
कृत्वा रतिकरीं शय्यां मूर्त्तिञ्च सुमनोहराम्।
क्रीडाञ्चकार रहसि दिव्यं वर्षमहर्निशम् ॥
सुखसम्भोगसंस्पर्शात् मूर्च्छां संप्राप सुन्दर ।
विदग्धाया विदग्धेन सङ्गमोऽतिसुखप्रदः ॥
विष्णुस्तदङ्गसंस्पर्शात् बुबुधे न दिवानिशम् ।
वर्षान्ते चेतनां प्राप्य कामी तत्याज कामुकीम् ॥
पूर्ब्बरूपञ्च वाराहं दधार चावलीलया ।
गोरोचनां चन्दनञ्च शालग्रामजलं विना ।
एतान् वोढुमशक्ताहं क्लिष्टा च भगवन् !
शृणु ॥
श्रीभगवानुवाच ।
द्रव्याण्येतानि मूढा ये अर्पयिष्यन्ति सुन्दरि ! ।
ते यास्यन्ति कालसूत्रं दिव्यं वर्षशतं त्वयि ॥
इत्येवमुक्त्वा भगवान् विरराम च नारद ! ।
बभूव तेन गर्भेण तेजस्वी मङ्गलग्रहः ॥
पूजां चक्रुः पृथिव्याश्च ते सर्व्वे चाज्ञया हरेः ।
काण्वशाखोक्तध्यानेन तुष्टुबुः स्तवनेन च ॥
ददुर्मूलेन मन्त्रेण नैवेद्यादिकमेव च ।
संस्तुता विष्णुलोकेषु पूजिता सा बभूव ह ॥
नारद उवाच ।
किं ध्यानं स्तवनन्तस्या मूलमन्त्रञ्च किं वद ।
गूढं सर्व्वपुराणेषु श्रोतुं कौतूहलं मम ॥
श्रीनारायण उवाच ।
आदौ च पृथिवी देवी वराहेण च पूजिता ।
ततः सर्व्वैर्मुनीन्द्रैश्च मनुभिर्मानवादिभिः।
ध्यानञ्च स्तवनं मन्त्रं शृणु वक्ष्यामि नारद ! ॥ * ॥
ॐ श्रीं ह्रीं क्लीं वसुन्धरायै स्वाहा ।
इत्यनेनैव मन्त्रेण पूजिता विष्णुना पुरा ॥
श्वेतचम्पकवर्णाभां शतचन्द्रसमप्रभाम् ।
चन्दनोक्षितसर्व्वाङ्गीं रत्नभूषणभूषिताम्॥

अधिभूतं तथा गन्धो वायुस्तत्राधिदैवतम्
॥”
इति महाभारते आश्वमेधिकपर्व्व ॥
(यथा, मार्कण्डेये । ५४ । ४ ।
“शतार्द्धकोटिविस्तारो पृथिवी कृत्स्नशो
द्बिज ! ।
तस्या हि स्थानमखिलं कथयामि शृणुष्व
तत् ॥”)
तस्या उत्पत्तिकारणं यथा, --
“श्रूयतां वसुधाजन्म सर्व्वमङ्गलकारणम् ।
विघ्ननिघ्नकरं पापनाशनं पुण्यवर्द्धनम् ॥
अहो केचिद्वदन्तीति मधुकैटभमेदसा ।
बभूव वसुधाजन्म तदविरुद्धमतं शृणु ॥
ऊचतुस्तौ पुरा विष्णुं तुष्टौ युद्धेन तेजसा ।
आवां वध न यत्रोर्व्वी पाथसा संवृतेति च
॥
तयोर्जीवनकालेन प्रत्यक्षा साभवत्
स्फुटम् ।
ततो बभूव मेदश्च मरणस्यान्तरन्तयोः ॥
मेदिनीति च विख्यातेत्युक्ता यैस्तन्मतं
शृणु ।
जलधौता कृशा पूर्ब्बं बर्द्धिता मेदसा यतः
॥
कथयामि च तज्जन्म सार्थकं
सर्व्वसम्मतम् ।
पुरा श्रुतं यत् श्रुत्युक्तं धर्म्मवक्त्राच्च
पुष्करे ॥
महाविराट्शरीरस्य जलस्थस्य चिरं
स्फुटम् ।
मलो बभूव कालेन सर्व्वाङ्गव्यापको ध्रुवम्
॥
स च प्रविष्टः सर्व्वेषां तल्लोम्नां विवरेषु च ।
कालेन महता तस्माद्बभूव वसुधा मुने ! ॥
प्रत्येकं प्रतिलोम्नाञ्च कूपेषु सा स्थिरा
स्थिता ।
आविर्भूता तिरोभूता सा जले च पुनः पुनः
॥
आविर्भूता सृष्टिकाले
तज्जलोपर्य्यवस्थिता ।
प्रलये च तिरोभूता जलाभ्यन्तरवस्थिता
॥
पूजाञ्चकार भक्त्या च ध्यात्वा च धरणीं
सतीम् ॥
धूपैर्दीपैश्च नैवेद्यैः सिन्दूरैरनुलेपनैः ।
वस्त्रैः पुष्पैश्च वलिभिः संपूज्योवाच तां हरिः
॥
श्रीमहावराह उवाच ।
सर्व्वाधारा भव शुभे ! सर्व्वैः संपूजिता सुखम्
।
मुनिभिर्मनुभिर्देवैः सिद्धैश्च मानवादिभिः ॥
अम्बुवाचीत्यागदिने गृहारम्भप्रवेशने ।
वापीतडागारम्भे च गृहे च कृषिकर्षणे ॥
तव पूजां करिष्यन्ति मद्वरेण सुरादयः ।
मूढा ये न करिष्यन्ति यास्यन्ति नरकञ्च ते ॥
वसुधोवाच ।
वहामि सर्व्वं वाराहरूपेणाहं तवाज्ञया ।
लीलामात्रेण भगवन् ! विश्वञ्च सचराचरम् ॥
मुक्तां शुक्तिं हरेरर्च्चां शिवलिङ्गं शिलां तथा ।
शङ्खं प्रदीपं मन्त्रञ्च माणिक्यं हीरकं मणिम् ॥
यज्ञसूत्रञ्च पुष्पञ्च पुस्तकं तुलसीदलम् ।
जपमालां पुष्पमालां कर्पूरञ्च सुवर्णकम् ॥
रत्नाधारां रत्नगर्भां
रत्नाकरसमन्विताम् ।
वह्निशुद्धांशुकाधानां सस्मितां वन्दितां
भजे ॥
ध्यानेनानेन सा देवी सर्व्वैश्च पूजिता
भवेत् ।
स्तवनं शृणु विप्रेन्द्र !
काण्वशाखोक्तमेव च ॥
श्रीविष्णुरुवाच ।
जये जये जयाकारे जयशीले जयप्रदे !
।
यज्ञशूकरजाये च जयं देहि जयावहे ॥
मङ्गले मङ्गलाधारे मङ्गल्ये मङ्गलप्रिये ।
मङ्गलाढ्ये मङ्गलेशे मङ्गलं देहि मे भवे
॥
सर्व्वाधारे सर्व्वबीजे
सर्व्वशक्तिसमन्विते ।
सर्व्वकामप्रदे देवि सर्व्वेष्टं देहि मे भवे ॥
पुण्यस्वरूपे पुण्यानां बीजरूपे
सनातनि ।
पुण्याश्रये पुण्यवतामालये पुण्यदे भवे
॥
रत्नाधारे रत्नगर्भे रत्नाकरसमन्विते ।
स्त्रीरत्नरूपे रत्नाढ्ये रत्नसारप्रदे भवे
॥
सर्व्वशस्यालये सर्व्वशस्याढ्ये
सर्व्वशस्यदे ।
सर्व्वशस्यहरे काले सर्व्वशस्याधिके
भवे ॥
भूमे भूमिपसर्व्वस्वे भूमिपानां परायणे ।
भूपाहङ्काररूपेण भूमिं देहि च भूमिपे ॥
इदं पुण्यं महास्तोत्रं तां संपूज्य च यः
पठेत्
कोटि कोटि जन्म जन्म स
भवेद्भूमिपेश्वरः ॥
मदानकृतं पुण्यं लभते पाठनाज्जनः ।
भूमिदानहरात् पापान्मुच्यते नात्र
संशयः ॥
अम्बुवाचीभूखनने पापात् स मुच्यते
ध्रुवम् ।

| प्रतिविश्वेषु वसुधा शैलकाननसंयुता । | | अन्यकूपे कूपदजात् पापात् स मुच्यते ध्रुवम् ।<br>परभूश्राद्धजात् पापान्मुच्यते नात्र संशयः ॥<br>भूमौ वीर्य्यपरित्यागात् भूमौ दीपादिस्थापनात्<br>पापेन मुच्यते प्राज्ञः स्तोत्रस्य पठनान्मुने ! ।<br>अश्वमेधशतं पुण्यं लभते नात्र संशयः ॥ |
|---|---|---|

नारद उवाच ।
भूमिदानकृतं पुण्यं पापं तद्धरणे च यत् ।
परभूमौ श्राद्धपापं कूपे कूपदजं तथा ॥
अम्बुवाचीभूखननं वीर्य्यत्यागजमेव च ।
दीपादिस्थापनात् पापं श्रोतुमिच्छामि यत्नतः ॥
अन्यं वा पृथिवीजन्यं पापं मत्प्रश्नतः परम् ।
यदस्ति तत्प्रतीकारं वद वेदविदांवर ! ॥
श्रीनारायण उवाच ।
वितस्तिमानां भूमिञ्च यो ददाति च भारते ।
सन्ध्यापूताय विप्राय स याति विष्णुमन्दिरम् ॥
भूमिञ्च सर्व्वशस्याढ्यां ब्राह्मणाय ददाति यः ।
भूमिरेणुप्रमाणञ्च वर्षं विष्णुपदे स्थितिः ॥
ग्रामं भूमिञ्च धान्यञ्च यो ददात्याददाति च ।
सर्व्वपापविनिर्मुक्तौ चोभौ वैकुण्ठवासिनौ ॥
भूमिं दातुञ्च यत्काले यः साधुश्चानुमोदते ।
स च याति च वैकुण्ठं मित्रगोत्रसमन्वितः ॥
स्वदत्त्वां परदत्तां वा ब्रह्मवृत्तिं हरेत्तु यः ।
स तिष्ठति कालसूत्रे यावच्चन्द्रदिवाकरौ ॥
तत्पुत्त्रपौत्त्रप्रभृतिर्भूमिहीनः श्रिया हतः ।
पुत्त्रहीनो दरिद्रश्चैवान्ते याति च रौरवम् ॥
भूकम्पे ग्रहणे यो हि करोति खननं भुवः ।
जन्मान्तरे महापापी सोऽङ्गहीनो भवेद्ध्रुवम् ॥
भवनं यत्र सर्व्वेषां भूर्भूमिस्तेन कीर्त्तिता ।
वसुरत्नं या दधाति वसुधा सा वसुन्धरा ।
हरेरूरौ च या जाता सा चोर्व्वी परिकीर्त्तिता ॥
धरा धरित्री धरणी सर्व्वेषां धारणात्तु या ।
इज्या च यागाधाराच्च क्षौणी क्षीणालये च या ।
महालये क्षयं याति क्षितिस्तेन प्रकीर्त्तिता ॥
काश्यपी कश्यपस्येयमचला स्थिररूपतः ।
विश्वम्भरा तद्धरणाच्चानन्तानन्तरूपतः ॥
पृथिवी पृथुकन्यात्वाद्विस्तृतत्वान्महामुने! ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे पृथिव्युपाख्यानं ७ अध्यायः ॥ * ॥
तस्या भारा यथा, --
क्षितिरुवाच ।
“कृष्णभक्तिविहीना ये ये च तद्भक्तनिन्दकाः ।
तेषां महापातकिनामशक्ता भारवाहने ॥
स्वधर्म्माचारहीना ये नित्यकृत्यविवर्जिताः ।
श्रद्धाहीनाश्च वेदेषु तेषां भारेण पीडिता ॥
पितृमातृगुरुस्त्रीणां पोषणं पुत्रपोष्ययोः ।
ये न कुर्व्वन्ति तेषाञ्च न शक्ता भारवाहने ॥
ये मिथ्यावादिनस्तात! दयासत्यविहीनकाः ।
निन्दका गुरुदाराणां तेषां भारेण पीडिता ॥
मित्रद्रोही कृतघ्नश्च मिथ्यासाक्षिप्रदायकः ।
विश्वासघ्नः स्थाप्यहारी तेषां भारेण पीडिता ॥
कल्याणयुक्तनामानि हरेर्नामैकमङ्गलम् ।
कुर्व्वन्ति विक्रयं ये वै तेषां भारेण पीडिता ॥
जीवघाती गुरुद्रोही ग्रामयाजी च लुब्धकः ।
शवदाही शूद्रभोजी तेषां भारेण पीडिता ॥
पूजायज्ञोपवासानि व्रतानि नियमानि च ।
ये येमूढा विहन्तारस्तेषां भारेण पीडिता ॥
त्वयि ये स्थापयिष्यन्ति मूढाश्चैतानि सुन्दरि ! ।
पच्यन्ते कालसूत्रे च वर्षाणामयुतं ध्रुवम् ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ४ अध्यायः ॥
तस्या रूपान्तरं यथा, --
“इति तस्य वचः श्रुत्वा जनकस्य तदा क्षितिः ।
मुनीनां सन्निधौ रूपं दर्शयामास भूभृते ॥
नीलोत्पलदलश्यामामक्षमालाब्जधारिणीम्।
बाहुयुग्मेन शुभ्रेण मृणालायतशोभिना।
सुन्दरीं लोकधात्रीं तां दृष्ट्वा शश्वन्नृपोऽलयत् ॥”
इति कालिकापुराणे ३६ अध्यायः ॥
पृथिव्यां ग्रामशस्याद्युत्पत्तिकारणंयथा, --
प्रजा ऊचुः ।
“अराजके नृपश्रेष्ठ ! धरित्र्या सकलौषधीः ।
ग्रस्तास्ततः क्षयं यान्ति प्रजाः सर्व्वाः प्रजेश्वर ! ॥
त्वं नो वृत्तिप्रदो धात्रा प्रजापालो निरूपितः ।
देहि नः क्षुत्परीतानां प्रजानां जीवनौषधीः ॥
श्रीपराशर उवाच ।
ततोऽथ नृपतिर्दिव्यमादायाजगवं धनुः ।
शरांश्च दिव्यान् कुपितः सोऽभ्यधावद्वसुन्धराम् ॥
ततो ननाश त्वरिता गौर्भूत्वा तु वसुन्धरा ।
सा लोकान् ब्रह्मलोकादींस्तत्त्रासादगमन्मही।
यत्र यत्र ययौ देवी सा तदा भूतधारिणी ।
तत्र तत्र तु सा वैण्यं ददर्शाभ्युद्यतायुधम् ॥
ततस्तं प्राह वसुधा पृथुं पृथुपराक्रमम् ।
प्रवेपमाना तद्बाणपरित्राणपरायणा॥
पृथिव्युवाच ।
स्त्रीवधे त्वं महापापं किं नरेन्द्र ! न पश्यसि ।
येन मां हन्तुमत्यर्थं प्रकरोषि नृपोद्यमम् ॥
श्रीपृथुरुवाच ।
एकस्मिन् यत्र निधनं प्रापिते दुष्टकारिणि ।
बहूनां भवति क्षेमस्तस्य पुण्यप्रदो वधः ॥
पृथिव्युवाच ।
प्रजानामुपकाराय यदि मां त्वं हनिष्यसि ।
आधारः कः प्रजानान्ते नृपश्रेष्ठ ! भविष्यति ॥

गवां मार्गं विनिष्कृष्य यश्च शस्यं ददाति च ।
दिव्यं वर्षशतञ्चैव कुम्भीपाकेषु तिष्ठति ॥
गोष्ठं तडागं निष्कृष्य मार्गं शस्यं ददाति च ।
स च तिष्ठत्यसिपत्रे यावदिन्द्राश्चतुर्द्दश ॥
न पञ्चपिण्डमुद्धृत्य परकूपे च स्नाति यः ।
प्राप्नोति नरकं नैव स्नानजं फलमेव च ॥
कामी भूमौ च रहसि वीर्य्यत्यागं करोति यः ।
स्निग्धरेणुप्रमाणञ्च वर्षं तिष्ठति रौरवे ॥
अम्बुवाच्यां भूखननं यः करोति च मानवः ।
स याति कृमिदंशञ्च स्थितिस्तत्र चतुर्युगम् ॥
परकीयलुप्तकूपे कूपं मूढः प्रयच्छति ।
पुष्करिण्याञ्च लुप्तायां पुष्करिणीं यो ददाति च ॥
सर्व्वं फलं परस्यैव तप्त मूर्म्मि व्रजेत्तु सः ।
तत्र तिष्ठति सन्तप्तो यावदिन्द्राश्चतुर्द्दश ॥
परकीयतडागे च पङ्कमुत्सृज्य नोत्सृजेत् ।
रेणुप्रमाणवर्षञ्च ब्रह्मलोके वसेन्नरः ॥
पिण्डं पित्रे भूमिभर्त्तुर्न प्रदाय च मानवः ।
श्राद्धं करोति यो मूढो नरकं याति निश्चितम् ॥
भूमौ दीपं योऽर्पयति स चान्धः सप्तजन्मनि ।
भूमौ शङ्खञ्च संस्थाप्य कुष्ठं जन्मान्तरे लभेत् ॥

सदा द्विषान्त ये पापा गोविप्रसुरवैष्णवान् ।
हरिं हरिकथां भक्ति तषां भारेण पीडिता ॥
शङ्खादीनाञ्च भारेण पीडिताहं यथा विधे ! ।
ततोऽधिकेन दैत्यानां तेषां भारेण पीडिता ॥
इत्येबमुक्त्वा वसुधा रुरोद च मुहुर्मुहुः ।
ब्रह्मा तद्रोदनं दृष्ट्वा तामुवाच कृपानिधिः ॥
भारं तवापनेष्यामि दस्यूनामप्युपायतः ।
उपायतोऽपि कार्य्याणि सिध्यन्त्येव वसुन्धरे ! ॥
मन्त्रं मङ्गलकुम्भञ्च शिवलिङ्गञ्च कुङ्कुमम् ।
मधुकाष्ठं चन्दनञ्च कस्तूरीं तीर्थमृत्तिकाम् ॥
खड्गं गण्डकखड्गञ्च स्फटिकं पद्मरागकम् ।
इन्द्रनीलं सूर्य्यमणिं रुद्राक्षं कुशमूलकम् ॥
शालग्रामशिलाशङ्खतुलसीप्रतिमाजलम्।
शङ्खप्रदीपमालाञ्च शिलाच्चर्चातुलसीं तथा ॥
निर्म्माल्यञ्चैव नैवेद्यं हरिद्विर्णमणिन्तथा ।
ग्रन्थियुक्तं यज्ञसूत्रं दर्पणं श्वेतचामरम् ॥
गोरोचनाञ्च मुक्ताञ्च शुक्तिं माणिक्यमेव च ।
पुराणसंहितां वह्निं कर्पूरं परशं तथा ॥
रंजतं काञ्चनञ्चैव प्रवालं रत्नमेव च ।
कुशद्विजं तीर्थतोयं गव्यं गोमूत्रगोमयम् ॥

पृथुरुवाच ।
त्वां हत्वा वसुधे ! बाणैर्मच्छासनपराङ्मुखीम् ।
आत्मयोगबलेनेमा धारयिष्याम्यहं प्रजाः ॥
श्रीपराशर उवाच ।
ततः प्रणम्य वसुधा तं भूयः प्राहं पार्थिवम् ।
प्रवेपिताङ्गी परमं साध्वसं समुपागता ॥
उपायतः समारब्धाः सर्व्वे सिध्यन्त्युपक्रमाः ।
तस्माद्वदाम्युपायन्ते त्वं कुरुष्व यदीच्छसि ॥
समस्तास्ता मया जीर्णा नरनाथ ! महौषधीः ।
यदीच्छसि प्रदास्यामि ताः क्षीरपरिणामिनीः ॥
तस्मात् प्रजाहितार्थाय मम धर्म्मभृतांवर ! ।
तन्तु वत्सं प्रयच्छस्व क्षरेयं येन वत्सला ॥
समाञ्च कुरु सर्व्वत्र येन क्षीरं समन्ततः ।
वरौषधीबीजभूतं वीर ! सर्व्वत्र भावये ॥
श्रीपराशर उवाच ।
तत उत्सारयामास शैलान् शतसहस्रशः ।
घनुष्कोट्या तदा वैण्यस्तेन शैला विवर्द्धिताः ॥
नहि पूर्ब्बविसर्गे वै विषमे पृथिवीतले ।

| | | |
|---|---|---|
| मुक्तामाणिक्यहीरञ्च सुवर्णञ्च मणिन्तथा ।<br>यश्च संस्थापयेद्भूमौ स तिष्ठेन्नरके युगम् ॥<br>जपमालां पुष्पमालां कर्पूरं रोचनान्तथा ।<br>यो मूढश्चार्पयेद्भूमौ स याति नरकं ध्रुवम् ॥<br>मुने ! चन्दनकाष्ठञ्च रुद्राक्षं कुशमूलकम् ।<br>संस्थाप्य भूमौ नरके वसेन्मन्वन्तरावधि ॥<br>पुस्तकं यज्ञसूत्रञ्च भूमौ संस्थापयेत्तु यः ।<br>न भवेद्विप्रयोनौ च तस्य जन्मान्तरे जनिः ॥<br>ब्रह्महत्यासमं पापममुत्र च लभेद्ध्रुवम् ।<br>ग्रन्थियुक्तं यज्ञसूत्रं पूज्यञ्च सर्व्ववर्णकैः ॥<br>यज्ञं कृत्वा च यो भूमिं क्षीरेण नहि सिञ्चति ।<br>स याति तप्तभूर्म्मिञ्च सन्तप्तः सप्तजन्मसु ॥ | | |

प्रतिभागः पुराणां वा ग्रामाणां वा पुराभवत्
॥
न शस्यानि न गोरक्ष्यं न कृषिर्न
बणिक्पथः ।
वैण्यात् प्रभृति मैत्रेय ! सर्व्वस्यैतस्य
सम्भवः ॥
यत्र यत्र समं त्वस्या
भूमेरासीद्द्विजोत्तम ! ।
तत्र तत्र प्रजानां हि निवासं समरोचयत् ॥
आहारः फलमूलानि प्रजानामभवत्तदा ।
कृच्छ्रेण महता सोऽपि प्रनष्टास्वोषधीषु वै
॥
स कल्पयित्वा वत्सन्तु मनुं स्वायम्भुवं
प्रभुम् ।
स्वे पाणौ पृथिवीनाथो दुदोह पृथिवीं पृथुः
॥
शस्यजातानि सर्व्वाणि प्रजानां
हितकाम्यया ।
तेनान्नेन प्रजास्तात ! वर्त्तन्तेऽद्यापि
नित्यशः ॥
प्राणप्रदानात् स पृथुर्यस्माद्भूमेरभूत् पिता
।
ततस्तु पृथिवीसंज्ञामवापाखिलधारिणी ॥
ततश्च देवैर्मुनिभिर्द्दैत्यै रक्षोभिरद्रिभिः ।
गन्धर्व्वैरुरगैर्यक्षैः पितृभिस्तरुभिस्तथा ॥
तत्तत्पात्रमुपादाय तत्र दुग्ध्वा मुने ! पयः ।
वत्स ! दोग्धृविशेषाच्च तेषां
तद्योनयोऽभवन् ॥
सैषा धात्री विधात्री च धारणी पोषणी
तथा ।
सर्व्वस्य जगतः पृथ्वी विष्णुपादतलोद्भवा
॥
एवंप्रभावः स पृथुः पुत्त्रो वेणस्य
वीर्य्यवान् ।
जज्ञे महीपतिः पूर्ब्बो राजाभूज्जनरञ्जनात्
॥”
इति श्रीविष्णुपुराणे १ अं शे पृथुचरितं
१३
अध्यायः ॥ * ॥

पृथुरप्यवदद्वाक्यमीप्सितंदेहि सुव्रते ! ।
सर्व्वस्य जगतः शीघ्रं स्थावरस्य चरस्य च
॥
तथैव चाब्रवीद्भूमिदुंदोह च नराधिपः ।
स्वे स्वे पाणौ पृथुर्वत्सं कृत्वा स्वायम्भुवं
मनुम् ॥
तदन्नमभवत् शुद्धं प्रजा जीवन्ति तेन वै ।
ततस्तु ऋषिभिर्दुग्धा वत्सः
सोमस्तदाभवत् ॥
दोग्धा बृहस्पतिरभूत् पात्रं वेदस्तपो रसः ।
वेदैश्च वसुधा दुग्धा दोग्धा मित्रस्तदाभवत्
॥
इन्द्रो वत्सः समभवत् क्षीरमूर्ज्जस्करं
बलम् ।
देवानां काञ्चनं पात्रं पितृणां राजतन्तदा ॥
अन्तकश्चाभवद्दोग्धा यमो वत्सः सुधारसः
।
अलावुपात्रं नागानां तक्षको वत्सकोऽभवत्
॥
विषं क्षीरं ततो दोग्धा धृतराष्ट्रोऽभवत् पुनः
।
असुरैरपि दुग्धेयमायसे शक्रपीडनीम् ॥
पात्रे मायामभूद्वत्सः प्रह्लादिश्च विरोचनः ।
दोग्धा द्विमूर्द्धा तत्रासीन्माया येन प्रवर्त्तिताः
॥
यक्षैश्च वसुधा दुग्धा पुरान्तर्द्धानमीप्सुभिः
।
कृत्वा वैश्रवणं वत्समामपात्रे महीपते ! ॥
प्रेतरक्षोगणैर्दुग्धा धरा रुचिरमुल्वणम् ।
रौप्यलाभोऽभवद्दोग्धा सुमाली वत्स एव तु
॥
गन्धर्व्वैश्च पुनर्दुग्धा वसुधा चाप्सरोगणैः ।
वतसं चैत्ररथं कृत्वा गन्धान् पद्मदले तथा
॥
दोग्धा च सुरुचिर्नाम नाट्यवेदस्य पारगः ।
गिरिभिर्वसुधा दुग्धा रत्नानि विविधानि च
॥
औषधानि च दिव्यानि दोग्धा मेरुर्महाबलः
।

ततो भृत्यांश्च पौरांश्च जिगीषन्ते तथा
रिपून् ॥
क्रमेणानेन जेष्यामो वयं पृथ्वीं ससागराम् ।
इत्यासक्तधियो मृत्युं न पश्यन्त्यविदूरगम्
॥
समुद्रावरणं याति मन्मण्डलमथो वशम् ।
कियदात्मजयादेतन्मुक्तिरात्मजये फलम् ॥
उत्सृज्य पूर्ब्बे यां याता यां नादाय गतः
पिता ।
तां मामतिविमूढत्वाज्जेतुमिच्छन्ति
पार्थिवाः ॥
मत्कृते पितृपुत्त्राणां भ्रातॄणाञ्चापि विग्रहाः ।
जायन्तेऽत्यन्तमोहेन ममत्वादृतचेतसाम् ॥
पृथ्वी ममेयं सकला ममेयं
ममेति चैषा मम शाश्वतेयम् ।
यो यो मृतेऽन्यत्र बभूव राजा
कुबुद्धिरासीद्रिति तस्य तस्य ॥
दृष्ट्वा ममत्वादृतचित्तमेकं
विहाय मां मृत्युपथं व्रजन्तम् ।
तस्यान्वयस्तत्र कथं ममत्वं
हृद्यास्पदं मत्प्रभवं करोति ॥
पृथ्वी ममैषाशु परित्यजैनां
वदन्ति ये दूतमुखैः स्वशत्रून् ।
नराधिपास्तेषु ममातिहासः
पुनश्च मूढेषु दयाभ्युपैति ॥
श्रीपराशर उवाच ।
इत्येते धरणीगीताः श्लोका मैत्रेय यैः श्रुताः
।
ममत्वं विलयं याति तापन्यस्तं यथा हिमम्
॥”
इति विष्णुपुराणे ४ अंशे २४ अध्यायः ॥

**पृथिवीपतिः**, पुं, (पृथिव्याः पतिः ।) राजा ।

(यथा, मनुः । ७ । १७७ ।
“सर्व्वोपायैस्तथा कुर्य्यात् नीतिज्ञः
पृथिवीपतिः ।
यथास्याभ्यधिका न स्युर्मित्रोदासीनशत्रवः
॥”)
ऋषभनामौषधिः । इति मेदिनी । ते, २३१
॥

तस्या नामगोरूपदोहनानां कारणानि
यथा, --
ऋषय ऊचुः ।
"बहुभिर्धरणी भुक्ता भूपालैः श्रूयते पुरा ।
पार्थिवाः पृथिवीयोगात् पृथिवी कस्य
योगतः ॥
किमर्थञ्च कृता संज्ञा भूमिः किं
पारिभाषिकी ।
गौरितीयञ्च विख्याता सूत !
कस्माद्ब्रवीहि नः ॥
सूत उवाच ।
वंशे स्वायम्भुवे ह्यासीदङ्गो नाम
प्रजापतिः ।
मृत्योस्तु दुहिता तेन परिणीतातिदुर्म्मुखी
॥
सुतीर्था नाम तस्यास्तु वेणो नाम सुतः
पुरा ।
अधर्म्मनिरतः कामी बलवान् वसुधाधिपः
॥
लोकेऽप्यधर्म्मकृज्जातः
परभार्य्यापहारकः ।
धर्म्माचारप्रसिद्ध्यर्थं जगतोऽस्य
महर्षिभिः ॥
अनुनीतोऽपि न ददावनुज्ञां स यदा ततः ।
शापेन मारयित्वैनमराजकभयार्द्दिताः ।
ममन्थुर्ब्राह्मणास्तस्य बलाद्देहमकल्मषाः
॥
तत्कायान्मथ्यमानात्तु
निष्पेतुर्म्लेच्छजातयः ॥
शरीरे मार्तुरंशेन कृष्णाञ्जनसमप्रभाः ।
पितुरङ्गस्य चांशेन धार्म्मिको धर्म्मचारिणः
॥
उत्पन्नो दक्षिणाद्धस्तात् सधनुः सशरो
गदी ।
दिव्यतेजोमयवपुः सरत्नकवचाङ्गदः ॥
पृथुरेवाभवद्यस्मात्ततः पृथरजायत ।
स विप्रैरभिषिक्तश्च तपः कृत्वा सुदुश्चरम्
॥
विष्णोर्व्वरेण सर्व्वस्य प्रभुत्वमगमत् प्रभुः
।
वत्सोऽभूद्धिमवांस्तत्र पात्रं शैलमयं पुनः ॥
वृक्षैश्च वसुधा दुग्धा क्षीरं छिन्नप्ररोहणम् ।
पालाशपात्रे दोग्धा तु सालः पुष्पदलाकुलः
॥
प्लक्षोऽभवत्ततो वत्सः सर्व्ववृक्षगणाधिपः ।
एवमन्यैश्च वसुधा तथा दुग्धा यथेप्सितम्
॥"
इति मत्स्यपुराणे १० अध्यायः ॥ * ॥
अन्यद्विवरणं भूगोलशब्दे द्रष्टव्यम् ॥ पृथ्वी
।
तद्वैदिकपर्य्यायः । गौः १ ग्मा २ ज्मा ३
क्ष्मा
४ क्षा ५ क्षामा ६ क्षोणी ७ क्षितिः ८
अवनिः
९ ऊर्व्वी १० पृथ्वी ११ मही १२ रिपः
१३
अदितिः १४ इला १५ निरृतिः १६ भूः
१७
भूमिः १८ पूषा १९ गातुः २० गोत्रा २१ ।
इत्येकविंशतिपृथिवीनामधेयानि । इति
वेद-
निघण्टौ १ अध्यायः ॥ (अन्तरिक्षम् । इति
निघण्टुः । १ । ३ ॥ यथा, ऋग्वेदे । १० ।
१२१ । १ ।
"स दाधार पृथिवीं द्यामुतेमां
कस्मै देवाय हविषा विधेम ॥"
"पृथिवीत्यन्तरिक्षनाम ।" इति तद्भाष्ये
सायनः ॥)

**पृथिवीगीता**, स्त्री, (पृथिव्या गीता ।) पृथिवी-
कथा । यथा, --
"मैत्रेय ! पृथिवीगीताः श्लोकाश्चात्र
निबोध
तान् ।
यानाह धर्म्मध्वनिने जनकायासितो मुनिः
॥
श्रीपृथिव्युवाच ।
कथमेष नरेन्द्राणां मोहो बुद्धिमतामपि ।
येन केन सधर्म्माणोऽप्यतिविश्वस्तचेतसः
॥
पूर्ब्बमात्मजयं कृत्वा जेतुमिच्छन्ति
मन्त्रिणः ।
यमः । इति हेमचन्द्रः ॥

**पृथिवीपालः**, पुं, (पृथिवीं पालयतीति । पृथिवी +
पालि + अण् ।) राजा । यथा, --
"बुभुजे पृथिवीपालः पृथिवीमेव केवलाम्
॥"
इति रघुः ॥

**पृथिवीशक्रः**, पुं, (पृथिव्यां शक्र इव ।) राजा ।
इति हेमचन्द्रः । ३ । ३५३ ॥

**पृथुः**, पुं, (प्रथते विख्यातो भवतीति । प्रथ +
"प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च ।
उणा० १ । २९ । इति कुः सम्प्रसारणञ्च
।)
त्रेतायुगे सूर्य्यवशीयपञ्चमनृपः । वेणनृपस्य
दक्षिणकरमथनाज्जातः । प्रजारञ्जनात्
आद्ये
राजापार्धि प्राप्तः । यथा, --
"अथ ते ऋषयः सर्व्वे प्रसन्नमनसस्ततः ।
गतकल्मषमेवं तं जातं वेणं नृपोत्तमम् ॥
ममन्थुर्दक्षिणं पाणिं तस्यैव च महात्मनः ।
मथिते तस्य पाणौ च सञ्जातं स्वेदमेव हि ॥
पुनर्ममन्थुस्ते विप्रा दक्षिणं पाणिमेव च ।
स्वकरात् पुरुषो जज्ञे द्वादशादित्यसन्निभः
॥
तप्तकाञ्चवर्णाङ्गो दिव्यमाल्याम्बरावृतः ।
दिव्याभरणशोभाङ्गो दिव्यगन्धानुलेपनः ॥

| निःस्वाध्यायवषट्कारं निर्धनं वीक्ष्य भूतलम् ॥<br>दग्धुमेवोद्यतः कोपाच्छरेणामितविक्रमः ।<br>ततो गोरूपमास्थाय भूः पलायितुमुत्सहेत् ॥<br>पृष्ठतोऽनुगतस्तस्याः पृथुर्दीप्तशरासनः ।<br>ततः स्थित्वैकदेशे तु किं करोमीति साब्रवीत् ॥ | | |
|---|---|---|

मुकुटेन सुवर्णेन कुण्डलाभ्यां विराजते ॥
महाकायो महाबाहू रूपेणाप्रतिमो भुवि ।
खड्गबाणधरो धन्वी कवची च महाप्रभः ॥
सर्व्वलक्षणसम्पन्नः सर्व्वालङ्कारभूषितः ।
तेजसा रूपभावेन साक्षादग्निरिव ज्वलन् ॥
आद्यमाजगवं नाम धनुर्गृह्य महावरम् ।
इन्द्रो दिवि यथा भाति भुवि वेणात्मजस्तथा ॥
तस्मिन् जाते महाभागे देवाश्च ऋषयोऽमलाः ।
उत्सवं चक्रिरे सर्व्वे वेणस्य तनयं प्रति ॥
दीप्यमानः स्ववपुषा वर्णैरेव महामतिः ।
शरांश्च दिव्यान्रक्षार्थं कवचञ्च महाप्रभम् ॥
ददाविन्द्रः सहस्राक्षो मालाञ्चाम्लानपुष्पिकाम्॥
जाते तस्मिन्महाभागे पृथौ वीरे महात्मनि ॥
संप्रहृष्टानि भूतानि समस्तानि द्विजोत्तमाः ।
सर्व्वतीर्थानि तोयानि पुण्यानि विविधानि च ॥
स्थावराणि चराण्येव अभ्यषिञ्चन्नराधिपम्।
महावीरं प्रजापालं पृथुमेवं द्विजोत्तमाः ॥
पृथुं वैण्यं वङ्गराज्ये अभिषिक्तं चराचरैः ।
देवैर्विप्रैस्तथा सर्व्वैरभिषिक्तो महामनाः ॥
राज्ञाञ्चैवाधिकारे वै पृथुर्वैण्यः प्रतापवान् ।
शिखण्डी च हविर्द्धानमन्तर्द्धानाद्व्यजायत ॥”
अरेणाभूराज्ञः पुत्त्रः । यथा, अग्निपुराणे ।
“अयोधस्तस्य पुत्त्रोऽभूत् ककुत्स्थो नाम वीर्य्य-
वान् ।
ककुत्स्थस्य अरेणाभूस्तस्य पुत्त्रः पृथुः स्मृतः ॥”
अग्निः । इति मेदिनी । थे, १० ॥ (प्रियव्रत-
वंशोद्भवस्य विभोः पुत्त्रः । यथा, विष्णुपुराणे ।
२ । १ । ३८ ।
“भुवस्तस्मात् तथोद्गीथः प्रस्तारस्तत्सुतो विभुः ।
पृथुस्ततोऽभवन्नक्तो नक्तस्यापि गयः सुतः ॥”
तामसमन्वन्तरे ऋषिविशेषः । यथा, मार्कण्डेये ।
७४ । ५९ ।
“ज्योतिर्धामा पृथुः काव्यश्चैत्रोऽग्निर्वलकस्तथा ।
पीवरश्च तथा ब्रह्मन् ! सप्त सप्तर्षयोऽभवन् ॥”)

**पृथुः**, स्त्री, (प्रथते विस्तारमेतीति । प्रथ + कुः
सम्प्रसारणञ्च ।) कृष्णजीरकः । इत्यमरः । २ ।
९ । ३७ ॥ (एतत्पर्य्यायो यथा, --
“कृष्णजीरः सुगन्धश्च तथैवोद्गारशोधनः ।
कालाजाजी तु सुषवी कालिका चोपकालिका ॥
पृथ्वीका कारवी पृथ्वी पृथुः कृष्णोपकुञ्चिका ।
उपकुञ्ची च कुञ्ची च बृहज्जीरक इत्यपि ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
चाक्षुषमन्वन्तरे देवगणभेदः । यथा, हरि-
वंशे । ७ । ३२ ।
“आद्या प्रभूता ऋभवः पृथुकाश्च दिवौकसः ॥”)

**पृथुकः**, त्रि, (प्रथते इति । प्रथ + “अर्भकपृथुक-
पाका वयसि ।” उणा० ५ । ५३ । इति कुकन्
सम्प्रसारणञ्च । यद्वा, पृथु यथा स्यात् तथा
कायति शब्दायते इति । कै शब्दे + कः ।)
बालकः । इति मेदिनी । के, १२६ ॥ (यथा,
माघे । ३ । ३० ।
“प्रक्रीडितान् रेणुभिरेत्य तूर्णं
निन्युर्जनन्यः पृथुकान् पथिभ्यः ॥”)

**पृथुका**, स्त्री, (पृथुः स्थूलैव । पृथु + कन् +
टाप् ।) हिङ्गुपत्री । इति शब्दचन्द्रिका ॥
(अस्याः पर्य्यायो यथा, --
“हिङ्गुपत्री तु कवरी पृथ्विका पृथुका पृथुः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
बालिका च ॥

**पृथुकोलः**, पुं, (पृथुः कोलः ।) राजवदरः । इति
राजनिर्घण्टः ॥

**पृथुच्छदः**, पुं, (पृथवश्छदाः पत्राणि यस्य ।) हरि-
दर्भः । इति राजनिर्घण्टः ॥ बृहत्पत्रे, त्रि ॥

**पृथुपत्रः**, पुं, (पृथूनि पत्राणि यस्य ।) रक्त-
लशुनः । इति राजनिर्घण्टः ॥

**पृथुपलाशिका**, स्त्री, (पृथूनि पलाशानि यस्याः ।
कप् । टापि अत इत्वम् ।) शटी । इति
राजनिर्घण्टः ॥ (पर्य्यायोऽस्या यथा, --
“शटी पलाशी षड्ग्रन्था सुव्रता गन्धमूलिका ।
गन्धारिका गन्धवधूर्वधूः पृथुपलाशिका ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**पृथुरोमा**, [न्] पुं, (पृथूनि रोमाणि लोम-
स्थानीयानि शल्कान्यस्येति ।) मत्स्यः । इत्य-
मरः । १ । १० । १७ ॥ बृहल्लोमयुक्ते, त्रि ॥

तदा पित्रा प्रजाः सर्व्वाः कदा नैवानुरञ्जिताः ॥
तेनानुरञ्जिताः सर्व्वाः सुखैर्मुमुदिरे तदा ।
अनुरागात्तु वीरस्य नाम राजेत्यभाषत ॥
प्रयातस्य सुधीरस्य समुद्रस्य द्विजोत्तमाः ।
आपस्तस्तम्भिरे सर्व्वा भयात्तस्य महात्मनः ॥
प्रयातस्य रथस्यापि तस्यैव च महात्मनः ।
दुर्गमार्गं विलोक्यैव स्वमार्गं पर्व्वता ददुः ॥
ध्वजभङ्गं न चक्रुस्ते गिरयः सर्व्व एव ते ।
अकृष्टपच्या पृथिवी सर्व्वत्र कामधेनवः ॥
पर्जन्यः कामवर्षी च वेदयज्ञान् महोत्सवान् ।
कुर्व्वन्ति ब्राह्मणाः सर्व्वे क्षत्त्रियाश्च तथापरे ॥
सर्व्वकामफला वृक्षास्तस्मिन् शासति राजनि ।
न दुर्भिक्षं न च व्याधिर्नाकालमरणं नृणाम् ॥
सर्व्वे सुखेन जीवन्ति लोका धर्म्मपरायणाः ।
तस्मिन् शासति दुर्द्धर्षे राजराजे महात्मनि ॥”
इति पाद्मोत्तरखण्डे २९ अध्यायः ॥ * ॥
तस्य माहात्म्यं यथा, --
“पृथुना प्रविभक्ता च शोभिता च वसुन्धरा ।
शस्यरत्नवती स्फीता पुरपत्तनशालिनी ॥
एवं प्रभावो वैण्यश्च राजासीद्राजसत्तमः ।
नमस्यश्चैव पूज्यश्च भूतिकामैर्नरोत्तमैः ॥
त्वक्पर्णी । हिङ्गुपत्री । इति मेदिनी । थे, १० ॥
(पर्य्यायोऽस्या यथा, --
“हिङ्गुपत्री तु कवरी पृथ्विका पृथुका पृथुः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
अहिफेनः । इति शब्दरत्नावली ॥

**पृथुः**, त्रि, (प्रथ + कुः सम्प्रसारणञ्च ।) महत् ।
इत्यमरः । ३ । १ । ६० ॥ (यथा, आर्य्यासप्तशत्याम् । ११७ ।
“उल्लसितभ्रूधनुषा तव पृथुना लोचनेन रुचिराङ्गि ! ।
अचला अपि न महान्तः के चञ्चलभावमानीताः ॥”)
निपुणः । इति शब्दरत्नावली ॥

**पृथुकः**, पुं, (पृथुरेव । पृथु + संज्ञायां कन् । यद्वा,
प्रथते इति । प्रथ + “अर्भकपृथुकेति ।” उणा० ५ । ५३ । इति कुकन् संप्रसारणञ्च ।) त्तिपिटकः । इत्यमरः ॥ क्लीवलिङ्गोऽप्ययम् । यथा, --
“द्विःस्विन्नमन्नं पृथुकं शुद्धं देशविशेषके ।
नात्यन्तशस्तं विप्राणां भक्षणे च निवेदने ॥
अभक्ष्यञ्च यतीनाञ्च विधवाब्रह्मचारिणाम् ॥”
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे २७ अध्यायः ॥
(यथास्य गुणाः ।
“पृथुका गुरवो वल्या कफविष्टम्भकारिणः ॥”
इति वाभटे सूत्रस्थाने षष्ठेऽध्याये ॥
“पृथुका गुरवो भृष्टान् भक्षयेदल्पशस्तु तान् ।
यावा विष्टभ्य जीर्य्यन्ति सतुषा भिन्नवर्च्चसः ॥”
इति चरके सूत्रस्थाने सप्तविंशेऽध्याये ॥

**पृथुलं**, त्रि (पृथुं पृथुत्वमस्यास्तीति । पृथु +
सिध्मादित्वात् लच् । यद्वा, पृथुं लातीति । ला + कः ।) महत् । इत्यमरः । ३ । १ । ६० ॥ (यथा,
माघे । १० । ६५ ।
“श्रोणिषु प्रियकरः पृथुलासु
स्पर्शमाप सकलेन तलेन ॥”)

**पृथुला**, स्त्री, (पृथुल + टाप् ।) हिङ्गुपत्री । इति
जटाधरः ॥ (गुणादयोऽस्या हिङ्गुपत्रीशब्दे ज्ञातव्याः ॥)

**पृथुशिम्बः**, पुं, (पृथुः शिम्बा यस्याः ।) श्योनाक-
प्रभेदः । इति राजनिर्घण्टः ॥ (पर्य्यायान्तरमस्य यथा, --
“श्योनाकः शोषणश्च स्यान्नटकट्वङ्गटुण्डुकाः ।
मण्डूकपत्रपत्रोर्णशुकनासकुटन्नटाः ॥
दीर्घवृन्तोऽरलुश्चापि पृथुशिम्बः कटम्भरः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**पृथुशेखरः**, पुं, (पृथु महत् शेखरं शृङ्गं यस्य ।)
पर्व्वतः । इति त्रिकाण्डशेषः ॥

**पृथुस्कन्धः**, पुं, (पृथुः स्थूलः स्कन्धो यस्य ।) शूकरः ।
इति राजनिर्घण्टः ॥

| | | |
|---|---|---|
| ब्राह्मणैर्व्वेदकामैश्च पृथुर्वैण्यः<br>प्रतापवान् ।<br>आदिकर्त्ता रणानाञ्च योधानां प्रथमो<br>नृपः ॥<br>यो हि योद्धा रणं याति कीर्त्तयित्वा पृथुं<br>नृपम् ।<br>घोररूपान् स संग्रामान् क्षेमी तरति<br>कीर्त्ति-<br>मान् ॥<br>वैश्यैरपि हि शूद्रैश्च स्वाः स्वा<br>वृत्तीरनुश्रितैः ।<br>पृथुरेव नमस्कार्य्यः सर्व्वसिद्धिकरस्तु<br>सः ॥<br>एवं पृथुरभूत् पूर्ब्बं प्रसादाच्चक्रपाणिनः<br>।<br>सार्व्वभौमो महातेजा दुर्व्विषह्यः<br>सुरासुरैः ॥”<br>तस्य पुत्त्रौ द्वौ । यथा, --<br>“पृथोः पुत्त्रौ तु धर्म्मज्ञौ<br>जज्ञातेऽन्तर्द्धिपाणिनौ । | “पृथुका गुरवः स्निग्धा बृंहणा कफवर्द्धनाः<br>।<br>बल्याः सक्षीरभावात्तु वातघ्ना<br>भिन्नवर्च्चसः ॥”<br>इति सुश्रुते सूत्रस्थाने ४६ अध्याये ॥ | |

**पृथूदकं**, क्ली, (पृथु पुण्यप्रदत्वात् महदुदकं यस्य ।)

तीर्थभेदः । यथा, --
"ते श्रुत्वा ऋषयः सर्व्वे
तीर्थमाहात्म्यमुत्तमम् ।
कपालमोचनमिति नाम चक्रुः समागताः
॥
तत्रापि सुमहत्तीर्थं विश्वामित्रस्य
विश्रुतम् ।
ब्राह्मण्यं लब्धवान् यत्र विश्वामित्रो
महामुनिः ॥
तस्मिंस्तीर्थवरे स्नात्वा ब्राह्मण्यं लभते
ध्रुवम् ।
ब्राह्मणस्तु विशुद्धात्मा परं
पदमवाप्नुयात् ॥
ततः पृथूदकं गच्छेन्नियतो नियताशनः ।
तत्र सिद्धस्तु ब्रह्मर्षी रुषद्गुर्नाम नामतः
॥
जातिस्मरो रुषद्गुस्तु गङ्गाद्वारे तदा
स्थितः ।
अन्तकालं ततो दृष्ट्वा पुत्त्रान्
वचनमब्रवीत् ॥
इह श्रेयो न पश्यामि नयध्वं मां पृथूदकम्
।
विज्ञाय तस्य तद्भावं रुषद्गोस्ते
तपोधनाः ॥
तं वै तीर्थमुपानिन्युः
सरस्वत्यास्तपोधनम् ।
स तैः पुत्त्रैः समानीतः सरस्वत्या
समाप्लुतः ॥
स्मृत्वा तीर्थगुणान् सर्व्वान्
प्राहेदमृषिसत्तमः ।
सरस्वत्यास्तु तीरे यः
संत्यजेदात्मनस्तनुम् ॥
पृथूदके जप्यपरो नैनं श्वो मरणं लभेत् ।
तत्रैव ब्रह्मयोन्यस्ति ब्रह्मणा यत्र निर्म्मिता
॥
पृथूदकं समाश्रित्य सरस्वत्यास्तटे
स्थितः ।

"मधुकैटभयोर्मेदसंयोगोत् मेदिनी स्मृता
।
धारणाच्च धरा प्रोक्ता पृथ्वी
विस्तारयोगतः ॥")
पृथोर्दुहितृत्वस्वीकाराद्वेतन्नाम । यथा,
अग्नि-
पुराणे ।
"दुहितृत्वमनुप्राप्ता देवी पृथ्वी तथोच्यते
॥"
हिङ्गुपत्री । कृष्णजीरकः । इत्यमरः । २
। ९ ।
३७, २ । ९ । ४० ॥ (एतस्याः पर्य्यायो
यथा, --
"कृष्णजीरः सुगन्धश्च
तथैवोद्गारशोधनः ।
कालाजाजीतु सुषवी कालिका
चोपकालिका ॥
पृथ्वीका कारवी पृथ्वी पृथुः
कृष्णोपकुञ्चिका ।
उपकुञ्ची च कुञ्ची च बृहज्जीरक इत्यपि
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)
वृत्तार्हन्माता । इति हेमचन्द्रः ॥ पुनर्नवा
।
स्थूलैला । इति राजनिर्घण्टः ॥
(सप्तदशाक्षर-
पादकश्च्छन्दोभेदः । इति छन्दोमञ्जरी ॥
अस्य
लक्षणादिकं छन्दःशब्दे द्रष्टव्यम् ॥)

**पृथ्वीका**, स्त्री, (पृथ्वी + स्वार्थे कन् ।) बृहदेला ।

इत्यमरः । २ । ४ । १२५ ॥ (अस्याः
पर्य्यायो यथा, --
"एलास्थूला च बहुला पृथ्वीका त्रिपुटापि
च ।
भद्रैला बृहदेला च चन्द्रबाला च निष्कुटिः
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**पृश्निः**, स्त्री, (स्पृपति द्रव्यजातं स्पृश्यते इति वा ।

स्पृश + "घृणिस्पृश्नीति ।" उणा० ४ । ५२ ।
इति नि
निपातनात् साधुः ।) रश्मिः । इति शब्दरत्ना-
वली ॥ (अन्नम् । वेदाः । जलम् । अमृतम् ।
इति महाभारतम् । १२ । ३४१ । ४४ ॥)
सुत-
पोराजपत्नी । सैव जन्मान्तरे देवकी भूता ।
इति श्रीभागवते १० स्कन्धः ॥

**पृश्निका**, स्त्री, (पृश्नौ जले कायति शोभते इति ।

कै + कः । यद्वा, पृश्नि स्वल्पं कं जलं यत्र ।)
कुम्भिका । इति शब्दमाला ॥

**पृश्निगर्भः**, पुं, (पृश्निर्वेदादयो गर्भे यस्य । यद्वा,

पृश्निः जन्मान्तरजातद्देवकी तस्याः गर्भ उत्-
पत्तिस्थानत्वेनास्त्यस्येति । अच् ।)
श्रीकृष्णः ।
इति हारावली । ९ ॥ (अस्य निरुक्तिर्यथा
महाभारते । १२ । ३४१ । ४४ ।
"पृश्निरित्युच्यते चान्नं वेदा आपोऽमृतं
तथा ।
ममैतानि सदा गर्भः पृश्निगर्भस्ततोऽस्म्यहम्
॥")

**पृश्निपर्णी**, स्त्री, (पृश्नि स्वल्पं पर्णमस्याः । ङीष् ।)

लताविशेषः । चाकुलिया इति भाषा । चक-
रौत् इति हिन्दी भाषा । तत्पर्य्यायः । पृथक्-
पर्णी २ चित्रपर्णी ३ अङ्घ्रिवल्लिका ४ क्रोष्टु-
विन्ना ५ सिंहपुच्छी ६ कलशिः ७ धावनिः ८
गुहा ९ । इत्यमरः । २ । ४ । ९२ ॥ केचित्तु
पृश्निपर्ण्यादिचतुष्कं चाकुलिया इति ख्याता-
याम् । क्रोष्टुविन्नादिपञ्चकं विरालछाँड़ इति
ख्यातायामित्याहुः । एतत्तु वैद्या न श्रद्दधते ।
ते
हि कलश्यादिशब्देन पृश्निपर्णीमेव गृह्णन्ति ।
पृश्निपर्णी सिंहपुच्छी चित्रपर्णी कटुसिंह-
पुच्छी अनयोरल्पभेदान्नवैवैकार्था इति केचित्
।
इति भरतः ॥ अपि च ।

चतुर्व्वर्णस्य
सृष्ट्यर्थमात्मज्ञानपरोऽभवत् ॥
तस्याभिध्यायतः सृष्टिं
ब्रह्मणोऽव्यक्तजन्मनः ।
मुखतो ब्राह्मणा जाता बाहुभ्यां
क्षत्त्रियास्तथा ॥
ऊरुभ्यां वैश्य जातीयाः पद्भ्यां
शूद्रास्ततोऽभवन् ।
चातुर्व्वर्ण्यं ततो दृष्ट्वा आश्रमस्थान्
सुतांस्ततः ॥
एवं प्रतिष्ठितं तीर्थं ब्रह्मयोनीतिसंज्ञितम्
।
तत्र स्नात्वा मुक्तिकामः पुनर्योनिं न
पश्यति ॥”
इति वामनपुराणे ३८ अध्यायः ॥
(यथा च महाभारते । ३ । ८३ । १३२ -
- १३९ ।
“ततो गच्छेत राजेन्द्र ! तीर्थं
त्रैलोक्यविश्रुतम् ।
पृथूदकमिति ख्यातं कार्त्तिकेयस्य वै
नृप ! ॥
तत्राभिषेकं कुर्व्वीत पितृदेवार्च्चने रतः ।
अज्ञानात् ज्ञानतो वापि स्त्रिया वा
पुरुषेण वा ॥
यत्किञ्चिदशुभं कर्म्म कृतं मानुषबुद्धिना
।
तत् सर्व्वं नश्यते तत्र स्नानमात्रस्य
भारत ! ॥
अश्वमेधफलञ्चापि लभते स्वर्गमेव च ।
पुण्यमाहुः कुरुक्षेत्रं कुरुक्षेत्रात् सरस्वती
॥
सरस्वत्याश्च तीर्थानि तीर्थेभ्यश्च
पृथूदकम् ।
उत्तमं सर्व्वतीर्थानां
यस्त्यजेदात्मनस्तनुम् ॥
पृथूदके जप्यपरो न तस्य मरणं भवेत् ।
गीतं सनत्कुमारेण व्यासेन च महात्मना
॥
वेदे च नियतं राजन्नधिगच्छेत् पृथूदकम्
।

सूक्ष्मैला । कृष्णजीरकः । इति रत्नमाला
॥

हिङ्गुपत्री । इति राजनिर्घण्टः ॥

**पृथ्वीकुरवकः**, पुं, (पृथ्व्यां भूमौ कुरवक इव ।)

श्वेतमन्दारकः । इति राजनिर्घण्टः ॥

**पृथ्वीजं**, क्ली, (पृथ्व्यां जायते इति । जन + डः
।)

गडलवणम् । इति राजनिर्घण्टः ॥

**पृदाकुः**, पुं, (पर्दते इति । पर्द अपानशब्दे +

“पर्द्देर्नित् सम्प्रसारणमल्लोपश्च ।” उणा०
३ ।
८० । इति काकुः रेफस्य सम्प्रसारणं
अल्लो-
पश्च ।) सर्पः । इत्यमरः । १ । ८ । ६ ॥
(यथा,
महाभारते । ६ । १७८ । २७ ।
“स भीमं सहसाभ्येत्य पृदाकुः कुपितो
भृशम् ।
जग्राहाजगरो ग्राहो भुजयोरुभयोर्बलात्
॥”)
वृश्चिकः । व्याघ्रः । चित्रकः । इति
मेदिनी ।
के, १२५ ॥ कुञ्जरः । वृक्षः । इति
संक्षिप्तसारो-
णादिवृत्तिः ॥

**पृश्निः**, त्रि, (स्पृश्यते इति । स्पृश संस्पर्शे +
“घृणि-

पृश्नीति ।” उणा० ४ । ५२ । इति नि
निपातनात्
साधुः ।) अल्पतनुः । इत्यमरः । २ । ६
। ४८ ॥
(यथा, महाभारते । १३ । २६ । ८६ ।
“दक्षां पृश्निं बृहतीं विप्रकृष्टां
शिवामृद्धां भगिनीं सुप्रसन्नाम् ।
विभावरीं सर्व्वभूतप्रतिष्ठां
गङ्गां गता ये त्रिदिवं गतास्ते ॥”)
खर्व्वदुर्ब्बलाल्पास्थिः । इति भरतः ॥
(शुक्ल-
वर्णः । यथा, ऋग्वेदे । १ । १६० । ३ ।

पिष्टपर्णी १० लाङ्गली ११ क्रोष्टुपुच्छिका १२
पूर्णपर्णी १३ कलशी १४ क्रोष्टुकमेखला १५
दीर्घा १६ शृगालवृन्ता १७ त्रिपर्णी १८ सिंह-
पुच्छिका १९ दीर्घपत्रा २० अतिगुहा २१
घृष्ठिला २२ चित्रपर्णिका २३ । इति साङ्गे
रत्नमाला ॥ महागुहा २४ शृगालविन्ना २५
घमनी २६ मेखला २७ लाङ्गूलिका २८ पृष्टि-
पर्णी २९ दीर्घपर्णी ३० । इति राजनिर्घण्टः ॥
अङ्घ्रिपर्णी ३१ धावनी ३२ । इति भावप्र-
काशः ॥ अस्या गुणाः । कटुत्त्वम् ।
अतीसारकास-
वातरोगज्वरोन्मादव्रणदाहनाशित्वञ्च। इति
राजनिर्घण्टः ॥ त्रिदोषघ्नत्वम् । वृष्यत्वम् ।
मधु-
रत्वम् । सरत्वम् । श्वासरक्तातीसारतृड्वमि-
नाशित्वञ्च । इति भावप्रकाशः ॥ ग्राहित्वम् ।
इति राजवल्लभः ॥

**पृश्निभद्रः**, पुं, (पृश्नौ भद्रं यस्य ।) श्रीकृष्णः ।

इति शब्दमाला ॥

**पृश्निशृङ्गः**, पुं, (पृश्निर्वेदादयः शृङ्गमिवास्य ।)

विष्णुः । इति शब्दमाला ॥ (पृश्नि स्वल्पं
शृङ्ग-
मिव शुण्डाग्रं यस्य ।) गणेशः । इति त्रिकाण्ड-
शेषः ॥

पृथूदकात् तीर्थतमं नान्यत्तीर्थं कुरूद्वह !
॥
तन्मेध्यं तत् पवित्रञ्च पावनञ्च न संशयः
।
तत्र स्नात्वा दिवं यान्ति येऽपि पापकृता
नराः ।
पृथूदके नरश्रेष्ठ ! एवमाहुर्मनीषिणः ॥”)

**पृथूदरः**, पुं, (पृथु महदुदरं यस्य ।) मेषः । इति
हारावली । ८० ॥ बृहत्कुक्षौ, त्रि ॥

**पृथ्वी**, स्त्री, (पृथुः स्थूलत्वगुणयुक्ता । “वोतो गुण-
वचनात् ।” ४ । १ । ४४ । इति ङीष् ।)
पृथिवी ।
(यथा, देवीभागवते । ३ । १३ । ८ ।

“धेनुञ्च पृश्निं वृषभं सुरेतसम् ॥”
“पृश्निं शुक्लवर्णां धेनुम् ।” इति तद्भाष्ये
सायनः ॥
प्राप्ततेजाः । यथा, ऋग्वेदे । १० । १८९
। १ ।
“आयं गौः पृश्निरक्रमीदसदन्मातरंपुरः
॥”)

**पृश्नी**, स्त्री, (स्पृशति जलमिति । स्पृश + निः ।
ततो वा ङीष् ।) वारिपर्णी । इति
शब्दरत्ना-
वली ॥ (विवरणमस्या वारिपर्णीशब्दे
ज्ञात-
व्यम् ॥) कुम्भिका । इति भूरिप्रयोगः ॥

**पृष**, उ सेके । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् । क्त्वावेट् ।) उ, पर्षित्वा
पृष्ट्वा ।
इति दुर्गादासः ॥

**पृषत्**, क्ली, (पर्षति सिञ्चतीति । पृष सेचने
+ "वर्त्तमाने पृषद्बृहन्महदिति ।" उणा०
२ ।
८४ । इति । अतिप्रत्ययो गुणाभावश्च
निपात्यते ।
शतृवदस्य कार्य्यं विज्ञेयम् ।) जलविन्दुः
। इत्य-
मरः । १ । १० । ६ ॥ यथा,
"पृषदपरुषविषाणाग्रेण
लुठति ।" इति श्रीभागवते ५ स्कन्धे ८
अध्यायः ॥
"पृषत् जलविन्दुस्तद्वत् अपरुषेण मृदुना
विषाणा-
ग्रेण लुठति सङ्घट्टयति ।" इति तट्टीकायां
श्रीधर-
स्वामी । इदं द्विवचनबहुवचनान्तमपि
भवति ॥

**पृषतः**, पुं, (पर्षतीति । पृषि सेके + "पृषिरञ्जिभ्यां
कित् ।" उणा० ३ । १११ । इति अतच्
। स च
कित् ।) विन्दुः । इत्यमरः । १ । १० । ६
॥ (यथा,
रघौ । ३ । ३ ।
"करीव सिक्तं पृषतैः पयोमुचां
शुचिव्यपाये वनराजिपल्वलम् ॥")
श्वेतविन्दुयुक्तमृगः । इति मेदिनी । ते,
१३५ ॥

**पृषत्कः**, पुं, (पृष्यते सिच्यते क्षिप्यते इति । पृष +
अतिः । ततः संज्ञायां कन् ।) बाणः ।
इत्य-
मरः । २ । ८ । ८६ ॥ (यथा, रघौ । ७ ।
४५ ।
"अप्यर्द्धभागे परबाणलूना
धनुर्भृतां हस्तवतां पृषत्काः ॥")

**पृषदश्वः**, पुं, (पृषन् मृगविशेषोऽश्व इव वाहको
यस्य ।) वायुः । इत्यमरः । १ । १ । ६५
॥
(यथा, ऋग्वेदे । १ । ८७ । ४ ।
"स हि स्वसृत् पृषदश्वो युवा गणोऽया
ईशान-
स्तवीषिभिरावृतः ॥"
राजर्षिभेदः । यथा, महाभारते । २ । ८ ।
१२ ।
"व्यश्वः सदश्वो वध्र्यश्वः पृथुवेगः
पृथुश्रवाः ।
पृषदश्वो वसुमनाः क्षुपश्च सुमहाबलः
॥"
विरूपस्य पुत्त्रः । यथा, भागवते । ९ ।
६ । १ ।
"विरूपः केतुमान्
शम्भुरम्बरीषसुतास्त्रयः ।
विरूपात् पृषदश्वोऽभूत् तत्पुत्त्रस्तु
रथीतरः ॥")

**पृषदाज्यं**, क्ली, (पृषद्भिः दधिविन्दुभिः सहित-
माज्यम् ।) सदध्याज्यम् ।
दधिमिश्रितघृतम् ।
इत्यमरः । २ । ७ । २४ ॥ (यथा, ऋग्वेदे
।
१० । ९० । ८ ।
"तस्माद्यज्ञात् सर्व्वहुतः सम्भृतं
पृषदाज्यम् ।
पशूंन्तांश्चक्रे वायव्यानारण्यान्
ग्र्याम्याश्च ये ॥"
"पृषदाज्यं दधिमिश्रमाज्यम् ।" इति
तद्भाष्ये

**पृषोद्यानं**, क्ली, क्षुद्रोपवनम् । मनीषादित्वात् पृषत-
स्तकारलोपः । इति मुग्धबोधटीकायां दुर्गा-
दासः ॥

**पृष्ठं**, क्ली, (पृष्यते सिच्यते इति । पृष "तिथपृष्ठ-
गूथयूथप्रोथाः ।" उणा० २ । १२ । इति
थक्-
प्रत्ययेन निपातनात् सिद्धम् ।) शरीरपश्चा-
द्भागः । इत्यमरः । २ । ६ । ७८ ॥ पीठ इति
भाषा ॥ (यथा, मनौ । ४ । ७२ ।
"न विगर्ह्य कथां कुर्य्याद्बहिर्माल्यं न धारयेत्
।
गवाञ्च यानं पृष्ठेन सर्व्वथैव विगर्हितम् ॥")
चरममात्रम् । इति मेदिनी । ठे, ७ ॥
(स्तोत्रविशेषः । यथा, शतपथब्राह्मणे । ८ ।
१ । १ । ५ ।
"त्रिवृतस्तोमाद्रथन्तरं पृष्ठं निरमिमीत ॥")

**पृष्ठग्रन्थिः**, पुं, (पृष्ठस्य ग्रन्थिः ।) गडुः । इति
हेमचन्द्रः । ३ । ४४६ ॥ कुँज इति भाषा ॥

**पृष्ठतः**, [स्] व्य, (पृष्ठ + "प्रतियोगे पञ्चम्या-
स्तसिः ।" ५ । ४ । ४४ । इत्यस्य
"आद्यादिभ्य
उपासंख्यानम् ।" इति वार्त्तिकोक्त्या तसिः
।)
पश्चात् । यथा, भट्टिः । १ । २४ ।
"तं पृष्ठतः प्रष्ठमियाय नम्रो
हिंस्रेषु दीप्रास्त्रधरः कुमारः ॥"
पृष्ठदेशे । (यथा, मनौ । ८ । ३०० ।
"पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथञ्चन ।
अतोऽन्यथा तु प्रहरन् प्राप्तः स्यात् चौर-
किल्विषम् ॥")

**पृष्ठदृष्टिः**, पुं, (पृष्ठे दृष्टिर्दर्शनं यस्य ।) भल्लूकः ।
इति राजनिर्घण्टः ॥

**पृष्ठमांसादः**, त्रि, (पृष्ठे परोक्षे मांसाद इव ।
असमक्षमनिष्टजनकवाक्यकथनादस्य
तथात्वम् ।)

तत्पर्य्यायः । रङ्कुः २ शवलपृष्ठकः ३ । इति
राजनिर्घण्टः ॥ (यथा, सुश्रुते सूत्रस्थाने ४६ अध्याये ।
“हरिणर्ष्यकुरङ्गकरालकृतमाल-
शरभश्वदंष्ट्रा
पृषतचारुस्करमृगमातृकाप्रभृतयो
जङ्गाला मृगाः । कषाया मधुरा लघवो वात-
पित्तहरास्तीक्ष्णा हृद्या वस्तिशोधनाश्च ॥” * ॥
द्रुपदराजस्य पिता । यथा, महाभारते । १ ।
१३१ । १७ ।
“भरद्वाजसखा चासीत् पृषतो नाम पार्थिवः ।
तस्यापि द्रुपदो नाम तदा समभवत् सुतः ॥”
मण्डलिसर्पान्तर्गतसर्पविशेषः । यथा, --
“आदर्शमण्डलः श्वेतमण्डलो रक्तमण्डलश्चित्र-
मण्डलः पृषतो रोध्रपुष्प इत्यादिषु ॥” इति
सुश्रुते कल्पस्थाने चतुर्थेऽध्याये ॥)

**पृषताम्पतिः**, पुं, (पृषतां विन्दूनां पतिर्नेता इत्यलुक्

समासः ।) वायुः । इति जटाधरः ॥ (यथा,
माघे । ६ । ५५ ।
“गजपतिद्वयसीरपि हैमन-
स्तुहिनयन् सरितः पृषताम्पतिः ।
सलिलसन्ततिमध्वगयोषिता-
मतनुतातनुतापकृतं दृशाम् ॥”)

**पृषताश्वः**, पुं, (पृषतो मृगविशेषोऽश्व इव गति-

साधनं वाहनो वा यस्य ।) वायुः । इत्यमर-
टीकायां भरतः ॥

**पृषती**, स्त्री, (पृषत + स्त्रियां ङीप् ।) श्वेतविन्दु-

युक्ता मृगी । इति मेदिनी । ते, १३५ ॥ (यथा,
सायनः ॥)

**पृषद्बलः**, पुं, (पृषदेव बलमस्य ।) वाय्वश्वः ।

यथा, --
“धुवित्रमरुदान्दोलः कुचैवश्चामरानिलः ।
पृषद्बलस्तु वाय्वश्वः कुवेरे तु प्रमोदितः ॥”
इति शब्दमाला ॥

**पृषन्तिः**, पुं, (पर्षति सिञ्चतीति । पृष सेचने +

अतिप्रत्ययः । निपातनात् साधुः ।)
विन्दुः ।
यथा, --
“पयःपृवन्तिभिः स्पृष्टा वान्ति वाताः शनैः
शनैः ॥”
इति भरतधृतजाम्बवतीविजयकाव्यम्॥

**पृषभाषा**, स्त्री, (पर्षतीति । पृष सेके + कः । पृषा-

मृतवर्षिणी भाषा यत्र ।) अमरावती । इति
शब्दरत्नावली ॥

**पृषाकरा**, स्त्री, (पृष + भावे क्विप् । पृषे सेचनाय

आकीर्य्यते इति । आ + क + अप् + टाप् ।
प्रातः सन्ध्यायाञ्चास्या उपरि जलसेचनादेव
तथात्वम् ।) क्षुद्रशिला । इति शब्दचन्द्रिका ॥
वाट्खारा इति भाषा ॥

**पृषातकं**, क्ली, (पृषन्तं पृषदाज्यम् आतकते हस-

तीति । तक + अच् । पृषोदरादित्वात् साधुः ।)
दधियुक्तघृतम् । इति हेमचन्द्रः ॥

**पृषोदरः**, त्रि, पृषदुदरं यस्य । (“पृषोदरादीनि

यथोपदिष्टम् ।” ६ । ३ । १०९ । इति तलोपः ।)
मनीषादित्वात् तलोपः । इति दुर्गादासः ॥
वाक्याभिधायी । इति त्रिकाण्डशेषः ॥ चोगोल-
खोर इति पारस्यभाषा । (पृष्ठमांसमत्तीति ।
अण् । पृष्ठमांसभक्षके, त्रि ॥)

**पृष्ठमांसादनं**, क्ली, (पृष्ठे परोक्षे मांसादनं

मांसभक्षणमिव कीर्त्तनस्यास्यानिष्टजनकत्वात् ।)
परोक्षे दोषकीर्त्तनम् । इति हेमचन्द्रः । ३ ।
२६५ ॥ तद्वति, त्रि ॥ (पृष्ठमांस + अद् +
कर्त्तरि ल्युः । पृष्ठमांसभक्षके, त्रि ।)

**पृष्ठवंशः**, पुं, (पृष्ठस्य वंशः वश इव दण्ड इत्यर्थः ।)

पृष्ठास्थि । पिठेर दाँडा इति शाषा ॥ तत्-
पर्य्यायः । रीढकः २ । इति हेमचन्द्रः ॥ (यथा,
सुश्रुते शारीरस्थाने ६ अध्याये ।
“तत्र पृष्ठवंशमुभयतः प्रतिश्रोणी काण्डमस्थिनी
कटीतरुणे नाम मर्म्मणी ।”) स तु मासमा-
त्रेण भवति । इति सुखबोधः ॥

**पृष्ठवाट्**, [ह्] पुं, (पृष्ठं युगपार्श्वं वह-

तीति । वह + ण्वि ।) युगपार्श्वग-
वृषः । पाँटे वाँधा गरु इति भाषा । इत्यमरः ॥
(पृष्ठं पृष्ठभागं वहतीति । वह + ण्वि । पश्चा-
द्भागवाहकः । यथा, हरिवंशे भविष्यपर्व्वणि ।
५५ । ३१ ।

**पृष्ठवाड्**, [ह्] पुं, (पृष्ठं युगपार्श्वं वह-

तीति । वह + ण्वि ।) युगपार्श्वग-
वृषः । पाँटे वाँधा गरु इति भाषा । इत्यमरः ॥
(पृष्ठं पृष्ठभागं वहतीति । वह + ण्वि । पश्चा-
द्भागवाहकः । यथा, हरिवंशे भविष्यपर्व्वणि ।
५५ । ३१ ।
“दारुकं पृष्ठवाहन्तु कृत्वा केशव शश्वरः ।

| रघुः । ८ । ५९ ।<br>“पृषतीषु विलोलमीक्षितं<br>पवनाधूतलतासु विभ्रमाः ॥”) | “भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्य्ययात्<br>।<br>वर्णदिशाच्च गूढात्मा वर्णलोपात् पृषोदरः<br>॥”<br>इति गोयीचन्द्रधृतकारिका ॥ | |
|---|---|---|

आग्नेयमस्त्रं संयोज्य शरे
कस्मिंश्चिदीश्वरः ।
अनेन त्वां दहाम्यद्य यदि शक्तोऽसि
वारय ॥”)

**पृष्ठवाह्यः**, पुं, (पृष्ठे वाह्यं वहनीयद्रव्यमस्य ।)
भारवाहकवृषः । तत्पर्य्यायः ।
स्थौरी २ पृष्ठ्यः
३ । इति हेमचन्द्रः । ४ । ३२९ ॥

**पृष्ठशृङ्गः**, पुं, (पृष्ठे शृङ्गमस्य । शृङ्गस्य वक्रभावेन
पृष्ठगमनात् तथात्वम् ।) वनच्छागः ।
इति
हेमचन्द्रः । ४ । ३४४ ॥

**पृष्ठशृङ्गी**, [न्] पुं, (पृष्ठे शृङ्गमिव अस्यास्तीति ।
शृङ्ग + इनिः ।) भीमसेनः ।
नपुंसकम् ।
महिषः । इति मेदिनीशब्दरत्नावल्यौ
॥

**पृष्ठोदयः**, पुं, (पृष्ठेनोदयोऽस्य ।) मेषवृषकर्कट-
धनुर्म्मकरमीनलग्नाः । यथा,
ज्योतिस्तत्त्वे ।
“अजो गोपतियुग्मञ्च
कर्क्किधन्विमृगास्तथा ।
निशासंज्ञाः स्मृताश्चैते शेषाश्चान्ये
दिनात्मकाः ॥
निशासं ज्ञा विमिथुनाः स्मृताः
पृष्ठेदयास्तथा ।
शेषाः शीर्षोदया ह्येते
मीनश्चोभयसंज्ञकः ॥”

**पृष्ठ्यं**, क्ली, (पृष्ठानां स्तोत्रविशेषाणां समूह
इति । पृष्ठ + “ब्राह्मणमाणववाडवाद्
यत् ।”
४ । २ । ४२ । इत्यस्य
“पृष्ठादुपसंख्यानम् ।”
इति वार्त्तिकोक्त्या यत् ।) पृष्ठानां
समूहः ।

घर्घरः ११ काकभीरुः १२ नक्तचारी
१३ ।
इति त्रिकाण्डशेषः ॥ निशाचरः १४
कौशिकः
१५ रूपनाशनः १६ पेचः १७
रक्तनासिकः १८
भीरुकः १९ । इति शब्दरत्नावली ॥
करिपुच्छ-
मूलोपान्तः ।
गुदाच्छादकमांसपिण्डविशेषः ।
इत्यमरः । ३ । ३ । ६ ॥ पर्य्यङ्कः । यूकः
। इति
विश्वः ॥ मेघः । इति शब्दरत्नावली ॥

**पेचकी**, [न्] पुं, (पेचकोऽस्यास्तीति । पेचक +
इनिः ।) हस्ती । इति शब्दरत्नावली ॥

**पेचिलः**, पुं, (पच + बाहुलकात् इलच् अत
इच्च ।) हस्ती । इति त्रिकाण्डशेषः ॥

**पेचु**, क्ली, (पच्यते इति । पच + उन् । अत
इत्वञ्च ।) पेचुली । इति त्रिकाण्डशेषः ॥

**पेचुली**, स्त्री, (पच्यते इति । पच + उलच् । अत-
इत्वं गौरादित्वात् ङीष् ।) शाकभेदः ।
कचु
इति ख्यातः । यथा, --
“केचुकं पेचुली पेचु नाडीचो विश्वरोचनः
॥”
इति त्रिकाण्डशेषः ॥

**पेटः**, पुं, (पेटतीति । पिट् + अच् ।) प्रहस्तः ।
इति राजनिर्घण्टः ॥ पेटके, स्त्री ।
इत्यमरः ।
२ । १० । ३० ॥

**पेटकः**, पुं, (पेटतीति । पिट + ण्वुल् ।) वंश-
वेत्रादिमयसमुद्गकप्रायः । पेटारी इति
पेटी
इति पेडा इति च ख्यातः । तत्पर्य्यायः ।

“सिंह्यं चित् पेत्वेना जघान ॥”
“पेत्वेन छागेन जघान घातयामास ।” इति
तद्भाष्ये सायनः ॥)

**पेयं**, क्ली, (पीयते यदिति । पा पाने + कर्म्मणि
यत् । “ईद्यति ।” ६ । ४ । ६५ । इति आत
ईत् ततो गुणः ।) जलम् । इति मेदिनी । ये,
३९ ॥ दुग्धम् । इति शब्दचन्द्रिका ॥ अष्टविधा-
न्नान्तर्गतान्नविशेषः । यथा, --
“भोज्यं पेयं तथा चूष्यं लेह्यं खाद्यञ्च चर्वणम् ।
निष्पेयञ्चैव भक्ष्यं स्यादन्नमष्टविधं स्मृतम् ॥”
इति राजनिर्धण्टः ॥
पातव्ये, त्रि । इति मेदिनी । ये, ३९ ॥ (यथा,
महाभारते । १४ । ४४ । १० ।
“सर्व्वेषां भक्ष्यभोज्यानामन्नं परममुच्यते ।
द्रवाणाञ्चैव सर्व्वेषां पेयानामाप उत्तमाः ॥”)

**पेया**, स्त्री, (पीयते इति । पा + यत् । ततष्टाप् ।)
सिक्थसमन्वितपेयद्रव्यम् । अस्या गुणाः ।
“पेया स्वदाग्निजननी वातवर्चोऽनुलोमनी ।
क्षुत्तृष्णाग्लानिदौर्ब्बल्यकुक्षिरोगविनाशिनी ॥”
इति राजवल्लभः ॥
मिश्रेया । इति शब्दचन्द्रिका ॥ श्राणा । अच्छ-
मण्डम् । इति मेदिनी । ये, ३९ ॥

**पेयूषः**, पुं, क्ली, (पीय पाने + “पीयेरूषन् ।”
उणा० ४ । ७६ । इति ऊषन् बहुलवचनात्
गुणः ।) अभिनवं पयः । इत्यमरः ॥ नव-
प्रसूताया गोः सप्तदिनाभ्यन्तरीणदुग्धम् । यथा,
“आसप्तरात्रप्रभवं क्षीरं पेयूष उच्यते ॥”
इति हारावली ॥
“पीयते पेयूषः पीङ् पाने नाम्नीति यूषः मूर्द्ध-
न्यान्तः क्लीवञ्च । पीयूषञ्च अथ पीयूषपेयूषे नवं
सप्तदीनावधीति शब्दार्णवः ॥” इति तट्टीकायां
भरतः ॥ (यथा, मनुः । ५ । ६ ।
“शेलुं गव्यञ्च पेयूषं प्रयत्नेन विवर्ज्जयेत् ॥”)
अमृतम् । अभिनवसर्पिः । इत्युणादिकोषः ॥

**पेरुः**, पुं, (पीयते रसानिति । पीङ् पाने + “मि-
पीभ्यां रुः ।” उणा० ४ । १०१ । इति रुः ।)
वह्निः । सूर्य्यः । इत्युणादिकोषः ॥ समुद्रः । इति

इत्यमरः । ३ । २ । ४२ ॥

**पृष्ठ्यः**, पुं, (पृष्ठेन वहतीति । पृष्ठ + यत् ।)

पृष्ठेन भारवाहकाश्वः । तत्पर्य्यायः । स्थौरी
२ । इत्यमरः । २ । ८ । ४६ ॥ (यथा, महा-
भारते । १ । २२२ । ४९ ।
"पृष्ठ्यानामपि चाश्वानां वाह्लिकानां जनार्द्दनः ।
ददौ शतसहस्राणि कन्याधनमनुत्तमम् ॥"
धारके, त्रि । यथा, ऋग्वेदे । ४ । ३ । १० ।
"ऋतेन हि ष्मा वृषभश्चिदक्तः
पुमाँ अग्निः पयसा पृष्ठ्येन ॥"
"पृष्ठ्येन धारकेण पयसाक्तः ।" इति तद्भाष्ये
सायनः ॥)

**पृष्णिः**, त्रि, (पृश्निः । पृषोदरादित्वात् साधुः ।)

प्रश्निः । इत्यमरटीकायां भरतः ॥ पार्ष्णिः ।
तत्र स्त्रीलिङ्गः । इत्युणादिकोषः ॥

**पॄ**, क पूर्त्तौ । इति कविकल्पद्रुमः ॥ (चुरा०-

पर०-सक०-सेट् ।) क, पारयति । इति दुर्गा-
दासः ॥

**पॄ**, ञि गि लि पालने । पूर्त्तौ । इति कविकल्प-

द्रुमः ॥ (क्र्या०-ह्वा० च-पर०-सक०-सेट् ।) ञि,
पूर्त्तोऽस्ति । सूल्वाद्योदिदित्यत्र पृवर्ज्जनान्न
निष्ठातस्य नः । गि, पृणाति । क्तौ तु पूर्त्ति-
रित्येव मनीषादित्वान्न निः । लि, पिपर्त्ति ।
इति दुर्गादासः ॥

**पेचकः**, पुं, (पचति पच्यते वा । पच +

पिटकः २ पेडा ३ मञ्जूषा ४ । इत्यमरः । २ ।
१० । ३० ॥ आद्यौ स्वल्पपेटिकायाम् । परौ
महापेठिकायामिति स्वामी ॥ समूहः । इति
मेदिनी । के, ११७ ॥

**पेटाकः**, पुं, (पेटक + पृषोदरादित्वात् साधुः ।)

पेटकः । इति भरतद्विरूपकोषः ॥

**पेटिका**, स्त्री, (पिटतीति । पिट + ण्वुल् । कापि

अत इत्वम् ।) वृक्षविशेषः । पेटारि इति
भाषा । तत्पर्य्यायः । कुवेराक्षी २ कुलिङ्गाक्षी
३ कृष्णवृन्तिका ४ । इति रत्नमाला ॥ (यथा, --
"पेटिकामूललेपाच्च योनिर्भिन्ना प्रशास्यति ॥"
इति वैद्यकचक्रपाणिसंग्रहे योनिव्यापदधि-
कारे ॥)

**पेटी**, त्रि, (पेट + गौरादित्वात् ङीष् ।) पेटकः ।

इत्यमरः । २ । १० । ३० ॥

**पेडा**, स्त्री, (पेटा । पृषोदरादित्वात् साधुः ।)

मञ्जूषा । महापेटिका । इत्यमरभरतौ ॥

**पेण**, ऋ पेषे । गतौ । श्लेषे । इति कविकल्पद्रुमः ॥

(भ्वा०-पर०-सक०-श्लेषे अक०-सेट् ।) ऋ,
अपिपेणत् । पिपेणतुः । इति दुर्गादासः ॥

**पेत्वं**, क्ली, (पीयते इति । पा पाने + "अन्येभ्यो

ऽपि दृश्यन्ते ।" उणा० ४ । १०५ । इति
इत्वन् ।) अमृतम् । घृतम् । इत्युणादिकोषः ॥
(पुं, पतनशीलः पशुः । छागः । यथा, वाज-
सनेयसंहितायाम् । २९ । ५८ ।
"सावित्रो वारुणः कृष्ण एकशितिपात् पेत्वः ॥"

त्रिकाण्डशेषः ॥ (त्रि, रक्षकः । यथा, ऋग्वेदे ।
९ । ७४ । ४ ।
"नरो हितमवमेहन्ति पेरवः ॥"
"नरो नेतारः पेरवः । पा रक्षणे । मापोरित्वे
रुन्निति रुन्प्रत्ययः । सर्व्वस्य रक्षकाः ।" इति
तद्भाष्ये सायनः ॥ पूरकः । यथा, ऋग्वेदे ।
५ । ८४ । २ ।
"प्र या वाजं न हेषन्तं पेरुमस्यस्यर्जुनि ॥")

**पेरोजं**, क्ली, उपरत्नविशेषः । पीरोजा इति यवन-

भाषा । तत्पर्य्यायः । हरिताश्मम् २ पेरजम्
३ । तद्द्विविधम् । भस्माङ्गं हरितञ्च । तस्य
गुणाः ।
"पेरजं सुकषायं स्यान्मधुरं दीपनं परम् ।
स्थावरं जङ्गमञ्चैव संयोगाच्च यथा विषम् ॥
तत् सर्व्वं नाशयेत् शीघ्रं शूल भूतादिदोषजम् ॥"

| “पचिमच्योरिच्च।” उणा० ५ । ३७ । इति वुन् । उपधाया अत इच्च ।) पक्षिविशेषः । पेँचा इति भाषा । तत्पर्य्यायः । उलूकः २ वायसारातिः ३ । इत्यमरः । २ । ५ । १५ ॥ शक्राख्यः ४ दिवान्धः ५ वक्रनासिकः ६ हरि- नेत्रः ७ दिवाभीतः ८ नखाशी ९ पीयुः १० | “पेत्वः पतनशीलो वेगवान् पशुः ॥” इति तद्भाष्ये महीधरः ॥ तथाच ऋग्वेदे । ७ । १८ । १७ । | |
|---|---|---|

पाठान्तरं यथा, --
"पिरजं सुकषायं स्यान्मधुरं दीपनं द्वयोः ।
स्थावरादिविषघ्नं स्याद्धरितञ्चापरं शृणु ॥
शीताङ्गं नाशयेच्छीघ्रं शूलं तिमिरभूतजम् ॥"
इति राजनिर्घण्टः ।

**पेल**, ऋ चाले । गतौ । इति कविकल्पद्रुमः ॥
(भ्वा०-पर०-चाले अक०-गतौ सक०-सेट् ।) ऋ, अपिपेलत् पिपेलतुः । चालः कम्पः । इति दुर्गादासः ॥

**पेलं**, क्ली, (पेलति सदा चलतीति । पेल + अच् ।) अण्डकोषः । इति हेमचन्द्रः । ३ । २७५ ॥

**पेलवं**, त्रि, (पेलं कम्पनं वातीति । वा + कः ।) विरलम् । अत्र सावकाशत्वं प्रकारः । इत्यमर-भरतौ ॥ कृशः । इति हेमचन्द्रः । ३ । ११३ ॥ कोमलम् । इति त्रिकाण्डशेषः ॥ (यथा, कुमारे । ५ । ४ ।
"पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः ॥")

**पेव**, ऋ ङ सेवने । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट् ।) ऋ, अपिपेवत् । ङ, पेवते । इति दुर्गादासः ॥

**पेशलः**, त्रि, (पिश अवयवे + भावे घञ् । पेशं लातीति । ला + कः । यद्वा, पेशोऽस्यास्तीति ।
"धमनीस्रोतोऽस्थितद्विवरपेशीप्रभृतिषु वा शरीर-प्रदेशेषु ॥") सुपक्वकलिका । (यथा, सुश्रुते उत्तरतन्त्रे । ४० अध्याये ।
"मधुकं विल्वपेश्यश्च शर्करामधुसंयुताः ।
अतीसारं निहन्युश्च शालीषष्टिकयोः कणाः ॥")
मांसी । खड्गपिधानकम् । मांसपिण्डी । इति मेदिनी । शे, १२ ॥ (यथा, महाभारते । १ । ११५ । १२ ।
"तां स मांसमयीं पेशीं ददर्श जपतां वरः ॥"
(अस्याः संख्यावस्थानादयो यथा, --
"पञ्च पेशीशतानि भवन्ति । तासां चत्वारि-शतानि शाखासु । कोष्ठे षट्षष्टिः । ग्रीवां प्रत्यूर्द्ध्वञ्चतुस्त्रिंशत् । एकैकस्यान्तु पादाङ्गुल्यां तिस्रस्तिस्रस्ताः पञ्चदश । दश प्रपदे । पादोपरि कूर्च्चसन्निविष्टास्तावत्य एव । दश गुल्फतलयोः । गुल्फजान्वन्तरे विंशतिः । पञ्च जानुनि । विंशति-रूरौ । दश वङ्क्षणे । शतमेवमेकस्मिन् सक्थ्नि भवन्ति । एतेनेतरसक्थि बाहू च व्याख्यातौ । तिस्रः पायौ । एका मेढ्रे । सेवन्याञ्चापरा । द्वे वृषणयोः । स्फिचोः पञ्च पञ्च । द्वे वस्ति शिरसि । पञ्चोदरे । नाभ्यामेका । पृष्ठोर्द्ध-संनिविष्टाः पञ्च पञ्च दीर्घाः । षट् पार्श्वयोः । दश वक्षसि । अक्षकांसौ प्रति समन्तात् सप्त । द्वे हृदयामाशययोः । षट् यकृत्प्लीहोण्डकेषु ॥ ग्रीवायाञ्चतस्रः । अष्टौ हन्वोः । एकैका काक-लकगलयोः । द्वे तालुनि । एका जिह्वायाम् । ओष्ठयोर्द्वे । घोणायां द्वे । द्वे नेत्रयोः । गण्डयो-श्चतस्रः । कर्णयोर्द्वे । चतस्रो ललाटे । एका शिरसीत्येवमेतानि पञ्च पेशीशतानि ।
सिरास्नाय्वस्थिपर्व्वाणिसन्धयश्च शरीरिणाम् ।
पेशीभिः संवृतान्यत्र बलवन्ति भवन्त्यतः ॥
स्त्रीणान्तु विंशतिरधिकाः । दश तासां स्तनयो-रेकैकस्मिन् पञ्च पञ्च यौवने तासां परिवृद्धिः । अपत्यपथे चतस्रस्तासां प्रसृतेऽभ्यन्तरतो द्वे मुखाश्रिते वाह्ये च प्रवृत्ते द्वे । गर्भच्छिद्र-संश्रितास्तिस्रः । शुक्रार्त्तव प्रवेशिन्यस्तिस्र एव । पित्तपक्वाशयमध्ये गर्भाशयो यत्र गर्भस्तिष्ठति । तासां बहलपेलवस्थूलाणुपृथुवृत्तह्रस्वदीर्घस्थिर-मृदुश्लक्ष्णकर्कशभावाः सन्ध्यस्थिशिरास्नायु-
तप्तकुम्भे निपतति ततो यास्यति पेषणम् ॥")
खलम् । शतगुप्ता । इति शब्दचन्द्रिका ॥
तेकांटासिज इति भाषा ॥

**पेषणिः** स्त्री, (पिष्यतेऽनयेति । पिष + करणे अणिः । वा ङीष् ।) पेषणशिला । शिल इति भाषा । तत्पर्य्यायः । पेषणी २ पट्टः ३ गृहाश्मा ४ गृहकच्छपः ५ । इति शब्दरत्नावली ॥ (यथा, मनुः । ३ । ६८ ।

**पेषणी** स्त्री, (पिष्यतेऽनयेति । पिष + करणे अणिः । वा ङीष् ।) पेषणशिला । शिल इति भाषा । तत्पर्य्यायः । पेषणी २ पट्टः ३ गृहाश्मा ४ गृहकच्छपः ५ । इति शब्दरत्नावली ॥ (यथा, मनुः । ३ । ६८ ।
"पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः ।
फल्गुणी चोदकुम्भश्च वध्यते यास्तु वाहयन् ॥")

**पेषलः**, त्रि, (पेषोऽस्यास्तीति । पेष + सिध्मादित्वात् लच् ।) पेशलः । इत्यमरटीकायां भरत-रमानाथौ ॥

**पेषाकः**, पुं, (पिष + आकन् ।) पेषणिः । इत्यु-णादिकोषः ॥

**पेस**, ऋ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) ऋ, अपिपेसत् पिपेसतुः । इति दुर्गादासः ॥

**पेसलः**, त्रि, (पेशलः । पृषोदरादित्वात् शस्य

सिध्मादित्वात् लच् ।) चारुः । (यथा, देवी-
भागवते । ५ । ९ । ५९ ।
“महिषस्य वचः श्रुत्वा पेशलं मन्त्रिसत्तमः ।
जगाम तरसा कामं गजाश्वरथसंयुतः ॥”)
सुन्दरः । (यथा, रघुः । ९ । ४० ।
“युवतयः कसुमं दधुराहितं
तदलके दलकेसरपेशलम् ॥”)
दक्षः । चतुरः । कोमलः । इत्यमरभरतौ ॥
(यथा, मुकुन्दमालायाम् । २१ ।
“इदं शरीरं परिणामपेशलं
पतत्यवश्यं श्लथसन्धि जर्जरम् ।
किमौषधैः क्लिश्यसि मूढ दुर्म्मते !
निरामयं कृष्णरसायनं पिब ॥”)
घूर्त्तः । इति शब्दरत्नावली ॥

**पेशस्कृत्**, पुं, (पेशो रूपान्तरं करोतीति ।
पेशस् + कृ + क्विप् । “ह्रस्वस्य पिति कृति तुक् ।”
६ । १ । ७१ । इति तुगागमः । अनेन गृहीतस्य
कीटस्य रूपान्तरं भवति इत्यतोऽस्य तथात्वम् ।)
कीटविशेषः । कुमिरके इति भाषा । यथा, --
“कीटः पेशस्कृतं ध्यायन् कुड्यां तेन प्रवेशितः ।
याति तत्सात्मतां राजन् ! पूर्ब्बरूपमसंत्यजन् ॥”
इति श्रीभागवते । ११ । ९ । २३ ॥

**पेशिः**, पुं, (पिश + “हृपिशीति ।” उणा० ४ ।
११८ । इति इन् ।) शतकोटिः । इत्युणादिकोषः ॥
अण्डे माषविदले च स्त्री । इति संक्षिप्तसारे
कृदन्तपादः ॥

**पेशी**, स्त्री, (पिश + इन् । वा ङीष् ।) अण्डम् ।
प्रच्छादका यथादेशं स्वभावत एव भवन्ति ॥
भवति चात्र ।
पुंसां पेश्यः पुरस्ताद्याः प्रोक्ता लक्षणमुष्कजाः ।
स्त्रीणामावृत्य तिष्ठन्ति फलमन्तर्गतं हि ताः ॥”
इति सुश्रुते शारीरस्थाने पञ्चमेऽध्याये ॥)
नदीभेदः । पिशाचीविशेषः । राक्षसीविशेषः ।
इति शब्दरत्नावली ॥ (वाद्यविशेषः । यथा,
महाभारते । ६ । ४२ । ३ ।
“तथा भेर्य्यश्च पेश्यश्च क्रकचा गोविषाणिकाः ।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥”)

**पेषणं**, क्ली, पिषधातोभवि ल्युट्प्रत्ययनिष्पन्नम् ।
चूर्णनम् । (यथा, मार्कण्डेये । १४ । ८७ ।
“अयं कृतघ्नो मित्राणामपकारी सुदुर्म्मतिः ।
सत्वम् ।) पेशलः । इत्यमरटीकायां भरतः ॥

**पै**, शोषे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-अनिट् ।) पायति धान्यमातपेन । इति
दुर्गादासः ॥

**पैङ्गूषः**, पुं, (पिङ्गूषे साधुः । अण् ।) कर्णः । इति
हेमचन्द्रः । ३ । २३७ ॥

**पैठरं**, त्रि, (पिठरे संस्कृतं पक्वम् । पिठर +
अण् ।) स्थालीपक्वमांसादि । इत्यमरः । २ । ९ ।
४५ ॥ (यथा, गो० रामायणे । २ । १०० । ६३ ।
“प्रतप्तैः पैठरैश्चैव मार्गमायूरतैत्तिरैः ॥”)

**पैठीनसिः**, पुं, मुनिविशेषः । स च स्मृतिगोत्रयोः
कारकः । इति पुराणम् ॥

**पैण्डिन्यं**, क्ली, (पिण्डं परपिण्डं भक्ष्यतयास्त्य-
स्येति । पिण्ड + इन् । ततः ष्यञ् ।) भैक्ष-
जीविका । इति त्रिकाण्डशेषः ॥

**पैतामहं**, त्रि, (पितामहस्येदम् । पितामह +
“तस्येदम् ।” ४ । ३ । १२० । इत्यण् ।) पितामह-
सम्बन्धिधनादि । यथा, कात्यायनः ।
“पैतामहञ्च पित्र्यञ्च यच्चान्यत् स्वयमर्ज्जितम् ।
दायादानां विभागेषु सर्व्वमेतद्विभज्यते ॥”
बृहस्पतिः ।
“पैतामहं हृतं पित्रा स्वशक्त्या यदुपार्ज्जितम् ।
विद्याशौर्य्यादिना प्राप्तं तत्र स्वाम्यं पितुः स्मृतम् ॥”
इति दायभागः ॥

**पैतृकं**, त्रि, (पितुरागतं पितुरिदं वेति । पितृ +

| | | |
|---|---|---|
| इत्यमरः । २ । ५ । ३७ ॥<br>(गर्भविष्टनचर्म्ममयकोषः ।<br>यथा, सुश्रुते । १ । २६ । | | ठञ् ।) पितृसम्बन्धि । इति शब्दमाला ॥<br>यथा, मनुः ।<br>“ऊद्‌र्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम् ।<br>भजेरन् पैतृकं रिकथमनीशास्ते हि जीवतोः ॥”<br>मनुविष्णू ।<br>“पैतृकन्तु यदा द्रव्यमनवाप्तमवाप्नुयात् ।<br>न तत् पुत्रैर्भजेत् सार्द्धमकामः स्वयमर्ज्जितम् ॥” |

पैठीनसिः ।
"पैतृके विभज्यमाने दायाद्ये समो विभागः ॥"
नारदः ।
"शौर्य्यभार्य्याधने हित्वा यच्च विद्याधनं भवेत् ।
त्रीण्येतान्यविभाज्यानि प्रसादो यश्च पैतृकः ॥"
इति दायभागः ॥

**पैतृकभूमिः**, स्त्री, (पैतृकी पितृसम्बन्धिनी भूमिः ।) पितृसम्बन्धिस्थानम् । तस्या माहात्म्यं
यथा, --
श्रीभगवानुवाच ।
"भवांश्च यादवैः सार्द्धं प्रविश द्वारकापुरीम् ।
मत्पित्रा मातृभिः सार्द्धं माहेन्द्रे च क्षणे नृप ! ॥
उग्रसेन उवाच ।
वासुदेव न यास्यामि भूमिं तां पैतृकीं पुनः ।
सर्व्वतीर्थपरां शुद्धां दैवे कर्म्मणि पैतृके ॥
पारक्ये भूमिदेशे च पितृणां निर्व्वपेत्तु यः ।
तद्भूमिस्वामिपितृभिः श्राद्धकर्म्म निहन्यते ॥
पितृणां निष्फलं श्राद्धं देवानामपि पूजनम् ।
किञ्चित्फलप्रदञ्चैव सम्पूर्णं पैतृके स्थले ॥
पुत्त्रपौत्त्रकलत्रेभ्यः प्राणेभ्यः प्रेयसी सदा ।
दुर्ल्लभा पैतृकी भूमिः पितुर्मातुर्गरीयसी ॥
तत् शस्यञ्च पवित्रञ्च दैवे कर्म्मणि पैतृके ।
क्रीतञ्च तदृते दानं परदत्तमशुद्धकम् ॥
म्रियते पैतृकीभूम्यां तीर्थतुल्यफलं लभेत् ।
(यथा, चरके चिकित्सास्थाने २२ अध्याये ।
"प्रततं कासमानश्च ज्योतींषीव च पश्यति ।
श्लेष्माणं पित्तसंसृष्टं निष्ठीवति च पैत्तिके ॥")

**पैत्रं**, क्ली, (पितुरिदमिति । पितृ + अण् ) पितृतीर्थम् । अङ्गुष्ठतर्ज्जन्योर्मध्यम् । इत्यमरः ।
२ । ७ । ५१ ॥ पितृसम्बन्धिनि, त्रि । (यथा,
महाभारते । ७ । १९९ । ७१ ।
"ऐन्द्रं याम्यं वारुणं वैत्तपाल्यं
पैत्रं त्वाष्ट्रं कर्म्म सौम्यञ्च तुभ्यम् ।
रूपं ज्योतिः शब्दमाकाशवायुः
स्पर्शः स्वाद्यं सलिलं गन्ध उर्व्वी ॥")

**पैत्राहोरात्रः**, पुं, (पैत्रः अहोरात्रः ।) पितृलोकस्य दिवारात्रिः । स तु मनुष्यमाने मासैकेन भवति । यथा, --
"मासेन स्यादहोरात्रः पैत्रो वर्षेण दैवतः ॥"
इत्यमरः । १ । ४ । २१ ॥

**पैलः**, पुं, (पीलाया अपत्यमिति । पीला + "पीलाया वा ।" ४ । १ । ११८ । इति अण् ।)
मुनिविशेषः । स च ऋग्वे दी यथा, --
"तत्रर्ग् वेदधरः पैलः सामगो जैमिनिः कविः ।
वैशम्पायन एवैको निष्णातो यजुषमुत ॥
अथर्व्वाङ्गिरसामासीत् सुमन्तुर्दारुणो मुनिः ।
इतिहासपुराणानां पिता मे रोमहर्षणः ॥"
इति श्रीभागवते १ स्कन्धे ४ अध्यायः ॥

**पैशाचः**, पुं, (पिशाचस्यायमिति । पिशाच + अण् ।) अष्टप्रकारविवाहान्तर्गताष्टमविवाहः ।
यथा याज्ञवल्क्यः । "पैशाचः कन्यका छलात् ।"
त्यये स्निग्धपैष्टिकादि मृदु मद्यं हेतुविपरीतमेव ॥ इति विजयरक्षितः ॥ (यथा च सुश्रुते सूत्रस्थाने ४६ अध्याये ।
"पाललाः श्लेष्मजननाः शष्कुल्यः कफपित्तलाः ।
वीर्य्योष्णाः पैष्टिका भक्ष्याः कफपित्तप्रकोपणाः ॥")

**पैष्टी**, स्त्री, (पिष्टेन निर्वृत्तेति । पिष्ट + अण् + ङीप् ।) विविधधान्यविकारजा मदिरा । तस्या
गुणाः ।
"पैष्टी कट्वम्लतीक्ष्णा स्यादीषद्गौडीसमापरा ।
वातहृत् कफकृत्त्वीषत्पित्तकृन्मोहनी च सा ॥"
इति राजनिर्घण्टः ॥
(यथा च हारीते प्रथमे स्थाने एकादशेऽध्याये ।
"गौडी माध्वी तथा पैष्टी निर्यासा कथितापरा ।
इति चतुर्व्विधा ज्ञेयाः सुरास्तासां प्रभेदकाः ॥"
"पैष्टी सन्दीपनी रुच्या कफकृद्वातनाशिनी ।
पित्तला पाण्डुरोगाणां कारिणी बहुधा मता ॥")

**पोगण्डः**, पुं, (पुनातीति । पू + विच् । पौः शुद्धो गण्डो यस्य ।) दशवर्षीयबालकः । यथा, --
"रोगी वृद्धस्तु पोगण्डः कुर्व्वन्त्यन्यैर्व्रतं सदा ॥"
इति प्रायश्चित्ततत्त्वे ब्रह्मपुराणम् ॥

**पोगण्डः**, त्रि, (पौः गण्ड एकदेशोऽस्य ।) अपोगण्डः । स्वभावतो न्यूनाधिकाङ्गः । ऊनविंशत्यङ्गुलीकैकविंशत्यङ्गुलीकादिजनः । यथा ।

गङ्गाजलसमं पूतं पितृखातोदकं हरे ॥
तत्र स्नात्वा जले पूते गङ्गास्नानफलं लभेत् ।
पितॄणां तर्पणं तत्र पवित्रं देवपूजनम् ॥
पैतृकी जन्मभूमिश्चेत् फलं तद्द्विगुणं लभेत् ।
पैतृकीभूमितुल्या च दानभूमिः सतामपि ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १०३ अध्यायः ॥

**पैतृष्वस्रेयः**, पुं, स्त्री, (पितृष्वसुरपत्यमिति । पितृ-
ष्वसृ + "ढकि लोपः ।" ४ । १ । १३३ । इति ज्ञापकत्वात् ढक् अन्तलोपश्च ।) पितृ-
भगिनीपुत्त्रः । इत्यमरः । २ । ६ । २५ ॥ पिस्-
तुतभाइ इति भाषा ॥ (स्त्रियां ङीप् । पितृ-
भगिनीपुत्री । यथा, मनुः । ११ । १७२ ।
"पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च ।
मातुश्च भातुस्तनयां गत्वा चान्द्रयणञ्चरेत् ॥")

**पैतृष्वस्रीयः**, पुं, स्त्री, (पितृष्वसुरपत्यमिति । "पितृ-
ष्वसुश्छण् ।" ४ । १ । १३२ । इति छण् ।)
पितृभगिनीपुत्त्रः । इत्यमरः । २ । ६ । २५ ॥
पिस्तुत भाइ इति भाषा ॥

**पैत्तः**, त्रि, (पित्तात् आगतं पित्तस्य शमनं
कोपनं वेति । पित्त + अण ।) पित्तजव्याधिः ।
इति राजनिर्घण्टः ॥ (यथा, माधवनिदाने
गुल्माधिकारे ।
"कट्वम्लतीक्ष्णोष्णविदाहिरूक्ष-
क्रीधातिमद्यार्कहुताशसेवा ।
छलमाह मनुः । ३ । ३४ ।
"सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति ।
स पापिष्ठो विवाहानां पैशाचः कथितोऽष्टमः ॥"
इत्युद्वाहतत्त्वम् ॥
पिशाचसम्बन्धिनि, त्रि ॥ (राजसकायान्तर्गत-
कायविशेषः । तल्लक्षणं यथा, --
"उच्छिष्टाहारता तैक्ष्ण्यं साहसप्रियता तथा ।
स्त्रीलोलुपत्वं नैर्लज्यं पैशाचकायलक्षणम् ॥"
इति सुश्रुते शारीरस्थाने चतुर्थेऽध्याये ॥)

**पैशुन्यं**, क्ली, (पिशुनस्य भावः । पिशुन + ब्राह्म-
णादित्वात् ष्यञ् ।) पिशुनता । खलता । तच्च
दशविधपापान्तर्गतवाङ्मयपापविशेषः । इति
तिथितत्त्वम् ॥ यथा, --
"पैशुन्यं साहसं द्रोह ईर्षासूयार्थदूषणम् ।
वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥")
इति मनौ । ६ । ४८ ॥
अस्य विवरणं पातकशब्दे द्रष्टव्यम् ॥

**पैष्टः**, त्रि, (पिष्टस्येदमिति । पिष्ट + अण् ।)
पिष्ठसम्बन्धी । यथा, --
"यद्यपदन्तकः पूषा पैष्टमत्ति सदा चरुम् ।
अग्नीन्द्रेश्वरसामान्यात्तण्डुलोऽत्र विधीयते ॥"
इति तिथ्यादितत्त्वम् ॥

**पैष्टिकं**, क्ली, (पिष्ट + ठञ् ।) पिष्टानां समूहः ।
इति आपूपिकशब्दटीकायां भरतः ॥ मद्य-
विशेषः । यथा । रूक्षमाध्वीकादिजनिते मदा-
पोगण्डो विकलाङ्गः स्यादिति हलायुधः ।
पोगण्डो विकलाङ्गकः । इति रत्नकोषः । इत्य-
मरटीकायां भरतः ॥

**पोटः**, पुं, (पुटत्यत्रेति । पुट संश्लेषे + आधारे
घञ् ।) वेश्मभूमिः । इति जटाधरः ॥ (पुट-
श्लेषे + भावे घञ् ।) संश्लेषः । इति पोटगल-
शब्दटीकायां भरतः ॥

**पोटगलः**, पुं, (पोटेन संश्लेषेण गलतीति । गल +
अच् ।) नलः । काशः । इत्यमरः । २ । ४ । १६२ ॥
(अस्य पर्य्यायो यथा, --
"पोटगलो बृहत्काशः काकेक्षुः स च खड्-
गकः ॥"
इति वैद्यकरत्नमालायाम् ॥)
मत्स्यः । इति मेदिनी । ले, १५७ ॥ (सर्पजात्यन्त-
र्गतवैकरञ्जसर्पप्रभेदः ॥ "राजिलेन गोनस्यां
वैपरीत्येन वा जातः पोटगलः ।" इति सुश्रुते
कल्पस्थाने चतुर्थेऽध्याये ॥)

**पोटलिका**, स्त्री, (पोटेन संश्लेषेण लीयते इति ।
ली + डः । ततः स्वार्थे कन् टाप् अत इत्वञ्च ।)
संश्लिष्टवस्त्रादि । इति केचित् ॥ पुँटुलि
इति भाषा ॥

| आमाभिघातो रुधिरञ्च दुष्टं पैत्तस्य गुल्मस्य निमित्तमुक्तम् ॥”)<br>**पैत्तिकः**, त्रि, (पित्तेन निर्वृत्त इति । पित्त + ठञ् ।) पित्तजन्माधिः । इति राजनिर्घण्टः ॥ | | |
|---|---|---|

**पोटा**, स्त्री, (पुटति स्त्रीपुरुषस्वरूपं संश्लिष्य-
तीति । पुट + अच् । टाप् च ।) स्त्रीपुंस-
लक्षणा । इत्यमरः । २ । ६ । १५ ॥
स्त्रीपुंसयो-
र्लक्षणं चिह्नं स्तनश्मश्वादिरूपं यस्यां सा
।
इति भरतः ॥

**पोटिकः**, पुं, (पोटः संश्लोषोऽस्त्यस्येति ठन् ।)
विष्फोटकः । इति केचित् ॥
(विस्फोटकशब्दे-
ऽस्य विवृतिर्ज्ञातव्या ॥)

**पोट्टली**, स्त्री, (पोटेन संश्लेषेण लीयते इति ।
ली + डः । पृषोदरादित्वात् साधुः ।
ङीप् ।)
पोट्टलिका । वस्त्रबद्धद्रव्यम् । पुँटुलि
इति
भाषा । यथा, --
"शुद्ध्यर्थं त्रिफलाक्वाथे गुडुच्याः
क्वाथ एव वा ।
दोलायन्त्रे पुरः पाच्यः पोट्टल्या
वस्त्रबद्धया ॥"
इति वैद्यकम् ॥

**पोड्डः**, पुं, (पुडतीति । पुड + उन् ।) कपाला-
स्थितलम् । इति राजनिर्घण्टः ॥

**पोतः**, पुं, स्त्री, (पुनातीति । पू + "हसिमृग्रिण्-
वामिदमिलूपूधूर्व्विभ्यस्तन् ।" उणा० ३
। ८६ ।
इति तन् ।) शिशुः । इत्यमरः । २ । ५
। ३८ ॥
(यथा, कथासरित्सागरे । १२ । १३३
।
"तत्रस्थात् स्वर्णमूलाख्याद् गिरेः
संप्रेष्य राक्ष-
सान् ।
आनाययत् पक्षिपोतं
गरुडान्वयसम्भवम् ॥")

**पोतः**, पुं, (पुनाति इति । पू + "हसीति ।"
सांयात्रिकः २ । इत्यमरः । १ । १० । १२ ।
समुद्रयानचारी ३ । इति जटाधरः ॥ नौ-
बाणिज्यकरः ४ । इति शब्दरत्नावली ॥

**पोतरक्षः**, पुं, (पोतं रक्षतीति । रक्ष + "कर्म्म-
ण्यण् ।" ३ । २ । १ । इत्यण् ।) केनिपातकः ।
इति शब्दमाला ॥ हालि इति भाषा ॥

**पोतलकप्रियः**, पुं, (पोतलकः पर्व्वतविशेषः प्रियो-
ऽस्य ।) बुद्धविशेषः । इति त्रिकाण्डशेषः ॥

**पोतवाहः**, पुं, (पोतं नावं वहतीति । वह +
"कर्म्मण्यण् ।" ३ । २ । १ । इत्यण् ।) वहित्र-
वाहकः । दाँडि इति भाषा । तत्पर्य्यायः ।
नियामकः २ । इत्यमरः । १ । १० । १२ ॥

**पोता**, [ऋ] पुं, (पुनातीति । पू + "नप्तृनेष्टृ-
त्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ ।"
उणा० २ । ९६ । इति तृन्प्रत्ययेन निपात्यते ।)
विष्णुः । इति संक्षिप्तसारोणादिवृत्तिः ॥
ऋत्विक् । इति भूरिप्रयोगः ॥ (यथा, ऋग्वेदे ।
४ । ९ । ३ ।
"स सद्म परि णीयते होता मन्द्रो दिविष्टिषु ।
उत पोता नि षीदति ॥")

**पोताच्छादनं**, क्ली, (पोतमिवाच्छादयतीति । आ +
छादि + ल्युः ।) वस्त्रकुट्टिमम् । इति हारावली ॥

**पोताधानं**, क्ली, (आधीयतेऽत्रेति । ल्युट् । आधा-
नम् । पोतानां अण्डजमत्स्यानामाधानम् ।)
क्षुद्राण्डमत्स्यसंघातः । इत्यमरः । १ । १० ।
१९ ॥
पोना इति भाषा । अस्य गुणाः । सुस्निग्धत्वम् ।
लघुत्वम् । रोचनत्वञ्च । इति राजवल्लभः ॥

**पोतिका**, स्त्री, (पोतोऽस्त्यस्या इति । पोत + ठन् ।
यद्वा, पूतिका पृषोदरादित्वात् साधुः ।) पूतिका ।
इत्यमरटीकायां भरतः ॥ शतपुष्पा ॥ मूल-
पोती । इति राजनिर्घण्टः ॥

**पोतासः**, पुं, (पोतेभ्यः शिशुभ्यः अस्यते क्षिप्यते
इति । अस + घञ् ।) कर्पूरविशेषः । इति

**पोलिन्दः**, पुं, (पोतस्य अलिन्द इवेति । पृषो-
दरादित्वात् साधुः ।) नौकावयवभेदः ।
तत्-
पर्य्यायः । पादारकः २ । इति
त्रिकाण्डशेषः ॥

**पोलिका**, स्त्री, (पोली + स्वार्थे कन् टाप् । पूर्ब्ब-
ह्रस्वश्च ।) पिष्टकविशेषः । पात्ला रोटी
इति
हिन्दी भाषा । यथा, --
"कुर्य्यात् समितयातीव तन्वी पर्पटिका
ततः ।
स्वेदयेत्तप्तके तान्तु पोलिकां तां
जगुर्बुधाः ॥
तां खादेल्लप्सिकायुक्तां तस्यां
मण्डकवद्गुणाः ।
तप्तकं तावा इति लोके ।" इति
भावप्रकाशः ॥
तत्पर्य्यायः । पूलिका २ पौलिः ३
पूपिका ४
पूपला ५ । इति हेमचन्द्रः ॥

**पोली**, स्त्री, (पोलति महत्त्वं गच्छतीति । पुल् +
ज्वलादित्वात् णः । ङीष् ।)
पिष्टकविशेषः ।
तत्पर्य्यायः । पूपाली २ चर्पटी ३ । इति
त्रिकाण्डशेषः ॥

**पोषः**, पुं, पोषणम् । पुषधातोभवि घञ् प्रत्यय-
निष्पन्नः । यथा, भट्टिः ।
"यः सर्व्वदास्मानपुषत् स्वपोषम् ॥"
(यथा, च भागवते । ३ । ३० । १० ।
"अर्थैरापादितैर्गुर्व्व्या हिंसयेतस्ततश्च
तान् ।
पुष्णाति येषां पोषेण शेषभुयात्यधः
स्वयम् ॥")

**पोषणं**, क्ली, (पुष् + ल्युट् ।) पुष्टिः । धृतिः ।
पुषधातोभविऽनट् प्रत्ययनिष्पन्नः ॥
(यथा, मार्क-
ण्डेये । २८ । ८ ।

उणा० ३ । ८६ । इति तन् ।) वहित्रम् । गृहस्थानम् । पोता इति भाषा । वस्त्रम् । इति
मेदिनी । ते, ३७ ॥ दशवर्षीयहस्ती । इति
हेमचन्द्रः ॥ समुद्रयानम् । जाहाज इति भाषा ॥
(यथा, देवीभागवते । १ । ३ । ४२ ।
"सम्प्राप्य मानुषभवं सकलाङ्गयुक्तं
पोतं भवार्णवजलोत्तरणाय कामम् ।
सम्प्राप्य वाचकमहो न शृणोति मूढः
सो वञ्चितोऽत्र विधिना सुहृदं पुराणम् ॥")
यथा, --
"समुद्रयाने रत्नानि महामौल्यानि साधुभिः ।
रत्नपारीक्षकैः सार्द्धमानयिष्ये बहूनि च ॥
शुकेन सह संप्राप्तो महान्तं लवणार्णवम् ।
पोतारूढास्ततः सर्व्वे
पोतवाहैरुपासिताः ।
अपारे दुस्तरेऽगाधे यान्ति वेगेन नित्यशः ॥"
इति वाराहे गोकर्णमाहात्म्याध्यायः ॥

**पोतकी**, स्त्री, (पोत इवेति । पोत + इवार्थे कन् । स्त्रियां ङीप् ।) पूतिका । इति शब्दमाला ॥
(अस्याः पर्य्यायो गुणाश्च यथा, --
"पोतक्युपोदिका सा तु
मालवामृतवल्लरी ।
पोतकी शीतला स्निग्धा श्लेष्मला वातपित्तनुत् ॥
अकण्ठ्या पिच्छिला निद्राशुक्रदा रक्तपित्तजित् ।
बलदा रुचिकृत् पथ्या बृंहनी तृप्तिकारिणी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
श्यामापक्षी । इति राजनिर्घण्टः ॥

**पोतजः**, पुं, (पोतः सन् न तु डिम्बादिरूप इति राजनिर्घण्टः ॥

**पोत्रं**, क्ली, (पूयतेऽनेनेति । पू + "हलशूकरयोः पुवः ।" ३ । २ । १८३ । इति ष्ट्रन् ।) शूकर-मुखाग्रम् । लाङ्गलमुखाग्रम् । वज्रम् । इति मेदिनी । रे, ६१ ॥ वहित्रम् । इति संक्षिप्तसारो-णादिवृत्तिः ॥ (पोतृनामर्त्विजः पात्रभेदः । यथा, ऋग्वेदे । १ । १५ । २ ।
"मरुतः पिबत ऋतुना पोत्राद्यज्ञं पुनीतन ।
यूयं हि ष्ठा सुदानवः ॥" "पोत्रात् पोतृनाम-कस्य ऋत्विजः पात्रात् सोमं पिबत ।" इति तद्भाष्ये सायनः ॥)

**पोत्रायुधः**, पुं, (पोत्रं तन्मुखाग्रमेव आयुधं यस्य ।) शूकरः । इति राजनिर्घण्टः ॥

**पोत्रिरथा**, स्त्री, (पोत्री शूकरः रथ इव गति-साधकोऽस्याः ।) जिनशक्तिविशेषः । इति त्रिकाण्डशेषः ॥

**पोत्री**, [न्] पुं, (पोत्रमस्थास्तीति । पोत्र + इनिः ।) शूकरः । इत्यमरः । २ । ५ । २ ॥ पोत्रविशिष्टे, त्रि ॥

"तद्वद्द्विजातिशुश्रूषा पोषणं क्रयविक्रयी ।
वर्णधर्म्मास्त्विमे प्रोक्ताः
श्रूयन्तामाश्रमाश्रयाः ॥")

**पोषयित्नुः**, पुं, (पोषयतीति । पुष + णिच् + "स्तनिहृषिपुषिगदिमदिभ्योणेरित्नुच् ।"
उणा० २ । २९ । इति इत्नुच् ।)
कोकिलः ।
भर्त्ता । इति संक्षिप्तसारोणादिवृत्तिः ॥ पोषण-
कर्त्तरि, त्रि ॥

**पोष्टा**, [ष्टृ] पुं, (पुष्णातीति । पुष + तृच् ।)
पूतीकः । इति शब्दचन्द्रिका ॥ काँटाकरञ्ज
इति भाषा ॥ पोषणकर्त्तरि, त्रि ॥ (यथा, हरि-
वंशे । २५ । १७ ।
"ताभिर्धार्य्यास्त्रयो लोकाः प्रजाश्चैव चतुर्विधाः ।
पोष्टा हि भगवान् सोमो जगतो जगतीपते ! ॥")

**पोष्टृवरः**, त्रि, पोषकश्रेष्ठः । पोष्टृषु वर इति सप्तमी तत्पुरुषसमासः ॥

**पोष्यः**, त्रि, (पुष्यते इति । पुष + ण्यत् ।) पोष-णीयः । पोषितव्यः । पुषधातोः कर्म्मणि यप्रत्यय-
निष्पन्नः ॥ (यथा, राधातन्त्रे चतुर्द्दशपटले ।
"नन्दगोपस्य देवेशि ! कृष्णस्तु सर्व्वदा प्रियः ।
आत्मना जायते यस्तु आत्मजः स उदाहृतः ।
पोष्यः पुत्र इति ख्यातो नन्दस्य वरवर्णिनि ! ॥")

**पोष्यपुत्रः**, पुं, (पोष्यः पुत्रः । पोष्यत्वेनैव पुत्रत्वं प्राप्त इत्यर्थः ।) पालनादिना सुतत्वप्राप्तः यथा, ब्रह्मवैवर्त्ते गणपतिखण्डे १४ अध्याये ।

मावः । जायते इति । जन + डः ।)
कुञ्ज-
रादिः । यथा, हेमचन्द्रः । ४ । ४२१ ।
“अण्डजाः पक्षिसर्पाद्याः पोतजाः
कुञ्जरा-
दयः ॥”

**पोतबणिक्**, पुं, (पोतेन बणिक् ।) वहित्रेण

बाणिज्यकर्त्ता । नौबाणिज्यकरः ।
तत्पर्य्यायः ।

“अधुना कृत्तिकानाञ्च षण्णां
तत्पोष्यपुत्त्रकः ।
तन्नाम चक्रुस्ताः प्रेम्णा कार्त्तिकश्चेति
कौतु-
कात् ॥”

अथ तस्य व्यवस्था ।
“तत्राह मनुः ।
‘अपुत्त्रेण सुतः कार्य्यो यादृक् तादृक् प्रयत्नतः ।
पिण्डोदकक्रियाहेतोर्नामसंकीर्त्तनाय च ॥’
अत्रिश्च ।
‘अपुत्रेणैव कर्त्तव्यः पुत्त्रप्रतिनिधिः सदा ।
पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात् प्रयत्नतः ॥’
शौनकः ।
‘अपुत्त्रो मृतपुत्त्रो वा पुत्त्रार्थं समुपोष्य च ॥’
इति । तेन पुत्त्रोत्पत्त्या ।
‘ज्येष्ठेन जातमात्रेण पुत्त्री भवति मानवः ।
पितॄणामनृणश्चैव स तस्माल्लब्धुमर्हति ॥’
इति मनुवचनावगत ऋणपरिहारेऽपि तत्पुत्त्र-
मरणे पिण्डोदकाद्यर्थं पुनः पुत्त्रकरणमावश्यकम् ।
अत्र पुत्त्रपदं पौत्त्रप्रपौत्त्रयोरप्युपलक्षणम् । तयो-
रपि पिण्डदातृत्ववंशकरत्वाविशेषात् । अन्यथा
सत्यपि पौत्त्रे मृतपुत्त्रस्य निर्निमित्तपुत्त्रपरि-
ग्रहापत्तिरतः पुत्त्रपौत्त्रप्रपौत्त्ररहितस्यैव पुत्त्री-
करणमवगम्यते ॥ * ॥ स्त्रिया भर्त्तुरनुज्ञया तदधिकारः । यथाह वशिष्ठः । ‘न स्त्री पुत्त्रं
दद्यात् प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानाद्भर्त्तुः ।’
इति ॥ * ॥ प्रतिनिधिरिति स च क्षेत्रजादि-
रेकादशविधः । यथाह मनुः ।
‘क्षेत्रजादीन् सुतानेतानेकादश यथोदितान् ।
पुत्त्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥’
बृहस्पतिः ।
‘माता पिता वा दद्यातां यमद्भिः पुत्त्रमापदि ।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुतः ॥’
आपदि पुत्त्रप्रतिग्रहीतुरपुत्त्रत्वे सदृशं सजा-
तीयं । व्यक्तमाह वृद्धयाज्ञवल्क्यः ।
‘सजातीयः सुतो ग्राह्यः पिण्डदाता स ऋक्थ-
भाक् ।
तदभावे विजातीयो वंशमात्रकरः स्मृतः ॥’
ग्रासाच्छादनमात्रन्तु स लभेत तदृक्थिन इति ।
दौहित्रं भागिनेयञ्चेति दौहित्रभागिनेयनिषेधः
शूद्रातिरिक्तविषयः । तथा च शौनकः ।
‘क्षत्त्रियाणां स्वजातौ च गुरुगोत्रसमेऽपि वा ।
वैश्यानां वैश्यजातेषु शूद्राणां शूद्रजातिषु ॥
सर्व्वेषामेव वर्णानां जातिष्वेव न चान्यतः ।
दौहित्रो भागिनेयश्च शूद्रैस्तु क्रियते सुतः ॥
ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित् ॥’
जातिष्वेव न चान्यत इति नियमः सजातीय-
सम्भवे विजातीयनिषेधार्थः । अन्यथा प्रागुक्त-
कात्यायनविरोधः स्यात् ॥ * ॥ तत्रापि सन्नि-
हितसपिण्डेषु सति भ्रातृपुत्त्रे स एव पुत्त्रीकार्य्य
इत्याह मनुः ।
‘सर्व्वेषामेकजातानामेकश्चेत् पुत्त्रवान् भवेत् ।
सर्व्वे ते तेन पुत्त्रेण पुत्त्रिणो मनुरब्रवीत् ॥’
बृहस्पतिः ।
“यद्येकजाता बहवो भ्रातरश्च सहोदराः ।
राज्ञो विप्रकृष्टत्वे ग्रामस्वामिनम् ।
‘बन्धूनाहूय सर्व्वांस्तु ग्रामस्वामिनमेव च । इतिस्मरणात् ।
द्विजानिति बहुत्वं त्रित्वपर्य्यवसितं कपिञ्जल-
न्यायात् ।
‘वर्हिः कुशमयञ्चैव पालाशञ्चेध्ममेव च ।
एतानाहृत्य बन्धूंश्च ज्ञातीनाहूय यत्नतः ॥
बन्धूनन्नेन सम्भोज्य ब्राह्मणांश्च विशेषतः ।
अग्न्याधानादिकं तत्र कृत्वाज्योत्पवनान्तकम् ॥
दातुः समक्षं गत्वा च पुत्त्रं देहीति याचयेत् ।
दाने समर्थो दातास्मै यो यज्ञेनेति पञ्चभिः ॥’
दद्यादिति शेषः । बन्धून् आत्ममातृपितृबन्धून् ।
ज्ञातीन् सपिण्डान् । तथा ।
‘देवस्यत्वेतिमन्त्रेण हस्ताभ्यां परिगृह्य च ।
अङ्गादङ्गेत्यृचं जप्त्वा आघ्राय शिशुमूर्द्धनि ।
वस्त्रादिभिरलङ्कृत्य पुत्त्रच्छायावहं सुतम् ॥’
पुत्त्रच्छाया पुत्त्रसादृश्यं नियोगादिना स्वयमुत्-
पादनयोग्यवमिति यावत् । तथा ।
‘नृत्यगीतैश्च वाद्यैश्च स्वस्तिशब्दैश्च संयुतम् ।
गृहमध्ये तमाधाय चरुं कृत्वा विधानतः ॥
यस्त्वाहृतेत्यृचा चैव तुभ्यमग्ने त्यृचैकया ॥
सोमो ददादित्येताभिः प्रत्यचं पञ्चभिस्तथेति ।’
वृद्धगौतमः ।
‘पायसं तत्र साज्यञ्च शतसंख्यञ्च होमयेत् ।
प्रजापते न त्वदेतानित्युद्दिश्य प्रजापतिम् ॥’
इति ॥
वशिष्ठः । ‘पुत्त्रं प्रतिगृहीष्यन् बन्धूनाहूय राजनि
निवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा अदूर-
बान्धवं बन्धुसन्निकृष्टमेव गृह्णीयात् । सन्देहे
चोत्पन्ने दूरबान्धवं शूद्रमिव स्थापयेत् । विज्ञा-

‘पुत्रास्त्रयोदश प्रोक्ता मनुना येऽनुपूर्ब्बशः ।
सन्तानकारणं तेषामौरसः पुत्त्रिका तथा ॥
आज्यं विना यथा तैलं सद्भिः प्रतिनिधीकृतम् ।
तथैकादश पुत्रास्तु पुत्त्रिकौरसयोर्व्विना ॥’
तत्रापि कलौ न सर्व्वेषामभ्यनुज्ञानम् ।
‘अनेकधा कृताः पुत्त्रा ऋषिभिर्य्यैः पुरातनैः ।
न शक्यास्तेऽधुना कर्त्तुं शक्तिहीनतया नरैः ॥’
इति वचनात् ॥
‘दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रहः ।’
इत्याद्यभिधाय ।
‘इमान् धर्म्मान् कलियुगे वर्ज्ज्यानाहुर्म्मनीषिणः ।’
इति दत्तकेतरप्रतिनिधिनिषेधात् ॥ * ॥ अतो
दत्तकविधिर्व्विविच्यते । तत्र शौनकः ।
‘ब्राह्मणनां सपिण्डेषु कर्त्तव्यः पुत्रसंग्रहः ।
तदभावेऽसपिण्डे वा अन्यत्र तु न कारयेत् ॥’
सपिण्डेष्विति सामान्यश्रवणात् समानासमान-
गोत्रेष्वित्यर्थः । तथा च सपिण्डाभावेऽसपिण्डः
सगोत्रस्तदभावे भिन्नगोत्रोऽपि ग्राह्य इत्याह
शाकलः ।
‘सपिण्डापत्यकञ्चैव सगोत्रजमथापि वा ।
अपुत्त्रको द्विजो यस्मात् पुत्त्रत्वे परिकल्पयेत् ॥
समानगोत्रजाभावे पालयेदन्यगोत्रजम् ।
दौहित्रं भागिनेयञ्च मातृष्वसृसुतं विना ॥’ इति
अन्यत्र तु न कारयेदिति ब्राह्मणातिरिक्त-
क्षत्त्रियादिरसमानजातीयोदत्तको व्यावर्त्त्यते ।
यदाह मनुः ।
एकस्यापि सुते जाते सर्व्वे ते पुत्त्रिणः स्मृताः ॥”
इति । अत्र वचनद्वयेऽपि भ्रातृसुते च पुत्त्र-
प्रतिनिधितया कथञ्चित् सम्भवत्यन्यो न प्रति
निधिः कार्य्य इत्यवगम्यते ॥ * ॥ भर्त्तृवंशमन्तरेण
चास्या वंशान्तरासम्भवेन तस्यैव स्ववंशकरत्व-
ञ्चेत् यतः समस्तस्यापि पुत्त्रप्रयोजनस्य सम्भवेन
सति सपत्नीपुत्त्रे न दत्तकाद्युपादानम् ॥ * ॥
केन पुत्त्रो देय इत्याह शौनकः ।
‘नैकपुत्त्रेण कर्त्तव्यं पुत्त्रदानं कदाचन ।
बहुपुत्त्रेण कर्त्तव्यं पुत्त्रदानं प्रयत्नतः ॥’
द्विपुत्त्रस्यापि पुत्त्रदाने अपरपुत्त्रनाशे वंश-
विच्छेदमाशङ्क्याह बहुपुत्त्रेणेति । स्त्रियास्तु
जीवति भर्त्तरि तदनुमते प्रोषिते मृते वा तद-
नुज्ञां विनापि । यथा वशिष्ठः । ‘न स्त्री पुत्त्रं
दद्यात् प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानाद्भर्त्तुः ।’
इति । अनुमतिश्चाप्रतिषेधेऽपि भवति । अप्रति-
षिद्धं परमनुमतं भवतीतिन्यायात् ॥ * ॥ निर-
पेक्षदानमाह याज्ञवल्क्यः ।
‘दद्यान्माता पिता वा यं स पुत्त्रो दत्तको भवेत् ॥’
तथा ‘मातापितृभ्यामुत्सृष्टस्तयोरन्यतरेण वेति ॥’
अथ पुत्त्रपरिग्रहविधिमाह शौनकः ।
‘शौनकोऽहं प्रवक्ष्यामि पुत्त्रसंग्रहमुत्तमम् ।
अपुत्त्रो मृतपुत्त्रो वा पुत्त्रार्थं समुपोष्य च ॥’
उपोष्य ग्रहणात् पूर्ब्बदिने कृतोपवासः । वृद्ध-
गोतमः ।
यते ह्येकेन बहूं स्त्रायत इति ।’ निवेशनं गृहम् ।
सन्देह इति दूरावस्थितबान्धवस्यात्यन्तदेश-
भाषाविप्रकर्षादिना कुलशीलादिसन्देहो भव-
त्येव तथात्वे निर्णयपर्य्यन्तं न व्यवहरेत् तत्र
हेतुरेकेनेति । बन्धून् पित्रादीन् । एतदन्यतर-
विधिरावश्यकः ॥ * ॥ ततश्च शौनकः ।
‘दक्षिणां गुरवे दद्याद्यथाशक्ति द्विजोत्तमः ।
नृपो राज्यार्द्धमेवाथ वैश्यो वित्तशतत्रयम् ।
शूद्रः सर्व्वस्वमेवापि अशक्तश्चेद्यथाबलम् ॥’
राज्यार्द्धमर्द्धराज्योत्पन्नमेकवर्षीयद्रव्यम् । प्रद-
द्यादर्द्धराज्योत्थमेकवर्षाहृतं धनमिति वृद्धगौतम-
स्मरणात् । उत्तममध्यमाधमभेदेन वित्तानां
सुवर्णरजतताम्राणामिति ज्ञेयम् ।
‘शतत्रयं नाणकानां सौवर्णमथ राजतम् ।
प्रदद्यात्ताम्रमथवा उत्तमादिव्यवस्थया ॥’
इति वृद्धगौतमस्मरणात् ॥
सर्व्वस्वमेकवर्षभृतिलब्धमिति यावत् ॥ * ॥
तैत्तिरीयाणान्तु विधिविशेषमाह बौधायनः ।
अथ पुत्रपरिग्रहविधिं व्याख्यास्यामः । प्रति-
ग्रहीष्यन्नुपकल्पयते द्वे वाससी द्वे कुण्डले अङ्गु-
लीयकमाचार्य्यञ्च वेदपारगं कुशमयं वर्हिः-
पर्णमयमिध्ममित्यथ बन्धूनाहूय निवेशनस्य मध्ये
राजनि निवेद्य परिषदि वागारमध्ये ब्राह्मणं

|  | ‘वाससी कुण्डले दत्त्वा उष्णीषं चाङ्गुलीयकम् ।<br>आचार्य्यं धर्म्मसंयुक्तं वैष्णवं वेदपारगम् ॥<br>मधुपर्केण संपूज्य राजानञ्च द्विजान् शुचीन् ॥’ |  |
|---|---|---|

वागालम्भेन उपवेश्य पुण्याहस्वस्तिऋद्धिमिति वाचयित्वा यद्देवयजनोल्लेखप्रभृति आप्रणी-ताभ्यः कृत्वा दातुः समक्षं गत्वा मे पुत्रं देहीति भेक्षेत् ददानीतीतर आह तं परिगृह्णीत धर्म्माय त्वा परिगृह्णामि सन्तत्यै त्वा परिगृह्णा-मीत्यथैनं वस्त्रकुण्डलादिभिरलङ्कृत्य परिधान-प्रभृत्यग्निमुखं कृत्वा पक्त्वा जुहोति यस्त्वा हृदा कीरिणा मन्यमान इति पुरोऽनुवाक्यमनुद्य यस्यैवं सुकृते जातवेद इति याज्यया जुहोति अथ व्याहृतिभिर्हुत्वा स्विष्टिकृत्प्रभृति सिद्ध-माधेनुवरप्रदानात् दक्षिणां ददात्येते च वाससी एते कुण्डले एतच्चाङ्गुरीयकमेवं त्वौरस उत्प-द्यते तुरीयभागे सम्भवतीति आहस्म बौधायन इति ॥ * ॥ एवमुक्तविध्यभावे परिगृहीतस्य तु विवाहोचितधनमात्रभागित्वंन त्वंशभागि-त्वमित्यग्रे वक्ष्यते । तथा च मनुः ।

'गोत्रऋक्थे जनयितुर्न हरेद्दत्त्रिमः सुतः ।
गोत्रऋक्थानुगः पिण्डो व्यपैति ददतः स्वधेति ॥'

एतेन दातृधने दानादेव पुत्त्रत्वनिवृत्तिद्वारा दत्त्रिमस्य स्वत्वनिवृत्तिर्द्दातृगोत्रनिवृत्तिश्च भव-तीत्युच्यते । तथा च गोत्रादिनिवृत्तेरेव दर्शनात् संस्कुर्य्यात् स्वसुतान् पितेति स्मरणात् ग्रहणा-नन्तरसम्भाव्यमाना एव दत्तकस्य संस्काराः प्रतिग्रहीत्रा कार्य्या न पुनर्जनकेन कृतपूर्ब्बा अपि निवर्त्तनीयाः ॥ * ॥ यदि च तत्पूर्ब्ब-भाविनोऽपि संस्कारा जनकेन न कृतास्तदा बीजगर्भदोषनाशावश्यकत्वेन क्रमानुरोधेन च प्रतिग्रहीत्रैव ते समाधेयाः ॥ * ॥ एवमुप-नयनमात्रकरणेऽपि प्रतिग्रहीतुर्दत्तकपुत्त्रसिद्धिः ।

'अन्यशाखोद्भवो दत्तः पुत्त्रश्चैवोपनायितः ।
स्वगोत्रेण स्वशाखोक्तविधिना स स्वशाखभाक् ॥'

इति वशिष्ठस्मरणात् ॥
एतच्चाष्टमाब्दरूपतन्मुख्यकालाभ्यन्तरवर्त्ति परिग्रहे बोध्यम् । अन्यथा मुख्यकाले अधिकार-

'पिण्डदोऽशहरश्चैषां पूर्ब्बाभावे परः परः ।'

इति याज्ञवल्क्यवचनाच्च । अन्यत्र सर्व्वत्रौरस-वत् । क्षयाहे तु विशेषो यथा जातूकर्णः ।

'औरसक्षेत्रजौ पुत्त्रौ विधिना पार्व्वणेन तु ।
प्रत्यब्दमितरे कुर्य्युरेकोद्दिष्टं सुता दश ॥'

इतरे दत्तकादयः ॥ * ॥ अथ दत्तकाशौचादि-निर्णयः । तत्र शुद्धदत्तकस्य तु जनककुले पर-स्परमशौचं नास्त्येव गोत्रनिवृत्त्याशौचनिवृत्ते-रर्थसिद्धत्वात् । द्व्यामुष्यायणस्य तु उभयत्रैवा-शौचमिति । ब्रह्मपुराणे ।

'दत्तकश्च स्वयं दत्तः कृत्रिमः क्रीत एव च ।
अपविद्धाश्च ये पुत्त्रा भरणीयाः सदैव ते ॥
भिन्नगोत्राः पृथक्पिण्डाः पृथग्वंशकराः स्मृताः ।
जनने मरणे चैव त्र्यहाशौचस्य भागिनः ॥'

पराशरः ।

'भिन्नगोत्रः सगोत्रो वा नीतः संस्कृत्य चेच्छया ।
जनने मरणे तस्य त्र्यहाशौचं विधीयते ॥'

तथा ।

'औरसं वर्जयित्वा च सर्व्ववर्णेषु सर्व्वदा ।
क्षेत्रजादिषु पुत्त्रेषु जातेषु च मृतेषु च ।
अशौचन्तु त्रिरात्रं स्यात् समानमिति निश्चयः ॥'

अथ दत्तकविभागः । मनुः ।

'पुत्त्रान् द्वादश यानाह नृणां स्वायम्भुवो मनुः ।
तेषां षड्बन्धुदायादाः षडदायादबान्धवाः ॥
औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ।
गूढोत्पन्नोऽपबिद्धश्च दायादा बान्धवास्तु षट् ॥

यनवचने तृतीयांशग्रहणविधिरित्युत्कृष्टगुण-दत्तकविषयो वाच्यः ।

'उपपन्नो गुणैः सर्व्वैः पुत्त्रो यस्य हि दत्त्रिमः ।
स हरेतैव तदृकथं सम्प्राप्तोऽप्यन्यगोत्रतः ॥'

इति मनुवचनैकवाक्यत्वात् । गुणैर्जातिविद्या-चारैः । तथा केनापि मुनिना दत्तकस्य बन्धु-दायादत्वमन्येन चादायादत्वमुक्तं तत् गुणवद-गुणवद्भेदेन समाधेयं एवं दत्तकस्य धनग्रहणादौ मुनिभेदेन पूर्ब्बापरोक्तिवैषम्यं गुणागुणविवेके-नापास्तं एतेनौरसस्य भ्रात्रादिधने येनैव भ्रातृ-त्वादिना सम्बन्धेन अधिकारित्वं तादृशेनैव सम्बन्धेन तादृशदत्तकस्यापि यथासम्भवमुचि-तांशभागित्वमवधेयम् । एवं धनिनः पुत्त्रान्तर-सत्त्वे मृतपितृकदत्तकपौत्त्रस्यापि दत्तको-चितांशभागित्वम् । तदसत्त्वे सर्व्वहरत्वमपीति । न च पौत्त्रस्य स्वपितृयोग्यांशभागित्वं नियमात् दत्तकग्रहीतुः पितामहौरससत्त्वे तादृशपितृव्य-तुल्यस्यैवांशस्य तद्योग्यत्वात् दत्तकपौत्त्रः पितृव्यतुल्यमेवांशं लभतामिति वाच्यम् । पुत्त्र-कस्य दत्तकत्वे चतुर्थांशः पौत्त्रस्य तु तथात्वे

योग्यत्वाभावे गौणकाले अनधिकारान्न
तत्सिद्धि-
रिति ॥ * ॥ अत्र च जनकप्रतिग्रहीत्रोरुभयो-
रपि पुत्राभिसन्धाने सति दत्तकस्य
द्व्यामुष्या-
यणत्वेनोभयगोत्रभागित्वं विशेषतो वक्ष्यते ।
'चूडाद्या यदि संस्कारा निजगोत्रेण वै कृताः ।
दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते ॥'
एवञ्च चूडाद्या इत्यतद्गुणसंविज्ञानबहु-
ब्रीहिणा द्विजातीनामुपनयनलाभः शूद्रस्य
विवाहलाभः ॥ * ॥ तथा पैठीनसिः । अथ
दत्तकक्रीतकृत्रिमपुत्रिकापुत्राः परपरिग्रहेणा-
र्षेण येऽत्र जातास्तेऽसङ्गतकुलीना द्व्यामुष्या-
यणा भवन्तीति । आर्षेण ऋष्युक्तेन परि-
ग्रहेण । जनकग्रहीत्रोः स्वीकारेण द्व्यासुष्या-
यणा भवन्तीत्यर्थः ॥ * ॥ अथ तत्कर्त्तृक-
श्राद्धनिर्णयः । तत्र पितुः सपिण्डीकरणान्त-
षोडशश्राद्धे दत्तकस्य पूर्ब्बगृहीतत्वेऽपि सत्यौ-
रसे नाधिकारः । औरसे पुनरुत्पन्ने तेषु ज्यैष्ठं
न विद्यते । इति देवलेन ज्येष्ठत्वप्रतिषेधात् ।

कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा
।
स्वयं दत्तश्च शौद्रश्च षडदायादबान्धवाः
॥'
बौधायनः ।
'औरसं पुत्रिकापुत्रं क्षेत्रजं दत्तकृत्रिमौ ।
गूढञ्चैवापविद्धञ्च रिक्थभाजः प्रचक्षते ॥
कानीनञ्च सहोढञ्च क्रीतं पौनर्भवन्तथा ।
स्वयं दत्तं निषादञ्च गोत्रभाजः प्रचक्षते ॥'
औरस पुत्रिकापुत्र-क्षेत्रज-कानीन-
गूढोत्पन्ना-
पविद्ध-सहोढ-पौनर्भव-दत्तक-
स्वयमुपागत-
कृतक-क्रीतानभिधाय देवलः ।
'एते द्वादश पुत्रास्तु सन्तत्यर्थमुदाहृताः ।
आत्मजाः परजाश्चैव लब्धा
यादृच्छिकास्तथा ॥
तेषां षड्बन्धुदायादाः पूर्ब्बेऽन्ये पितुरेव षट्
।
विशेषं वापि पुत्राणामानुपूर्ब्बी विशिष्यते ॥
सर्व्वे ह्यनौरसस्यैते पुत्रा दायहराः स्मृताः
।
औरसे पुनरुत्पन्ने तेषु ज्यैष्ठं न विद्यते ॥
तेषां सवर्णा ये पुत्रास्ते तृतीयांशभागिनः ।
हीनास्तमुपजीवेयुर्ग्रासाच्छादनसम्भृताः
॥' * ॥
वशिष्ठः । तस्मिंश्चेत् प्रतिगृहीते औरस
उत्-
पद्यते स चतुर्थभागभागी यदि
नाभ्युदयिकेषु
प्रथुक्तं स्यात् । स प्रतिगृहीतपुत्रः
आभ्युदयि-
केषु यज्ञादिषु यदि औरसेन प्रयुक्तं न
स्यात्
प्रभूतं धनमिति शेषः । अतश्च
दत्तकग्रहणा-
नन्तरमौरसोत्पत्तौ
तदौरसचतुर्थांशविधिर्विशि-
ष्टोक्तो दत्तकविषयो ज्ञेयः । तथा
देवलकात्या-

समानांश इति वैषम्यात् । ततश्च
स्वसमान-
रूपस्य पितुर्यादृशांशः
शास्त्रसिद्धस्तस्यैव
स्वपितृयोग्यांशतेति यथोक्तमेव साधु ।
एवं
रीतिः प्रपौत्रेऽप्यनुस्मर्त्तव्येति ॥ * ॥
'औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च
।
गूडोत्पन्नोऽपविद्धश्च भागार्हास्तनया
इमे ॥
कानीनश्च सहोढश्च क्रीतः
पौनर्भवस्तथा ।
स्वयंदत्तश्च दासश्च षडिमे
पुत्रपांसनाः ॥
अभावे पूर्ब्बपूर्ब्बेषां परान् समभिषेचयेत्
।
पौनर्भवं स्वयंदत्तं दासं राज्ये न
योजयेत् ॥'
तथा ।
'न क्षेत्रजादींस्तनयान् राजा
राज्येऽभिषेचयेत् ।
पितॄणां शोधयेन्नित्यमौरसे तनये सति
॥' इति ।
एतावता प्रबन्धेनाभिहितो योऽयं
क्षेत्रजदत्त-
कादीनामौरसेन सह विभागप्रकारः स
तु
शूद्रस्य न सम्भवति तस्य तु ।
'दास्यां वा दासदास्यां वा यः शूद्रस्य
सुतो
भवेत् ।
सोऽनुज्ञातो हरेदंशमिति धर्म्मो
व्यवस्थितः ॥'
इति मनुवचनेन जातोऽपि दास्यां शूद्रेण
कामतोऽशहरो भवेत् ।
'मृते पितरि कुर्य्युस्तं
भ्रातरस्त्वर्द्धभागिनम् ।
अभ्रातृको हरेत् सर्व्वं दुहितणां सुतादृते
॥'
इति याज्ञवल्क्येन च
दासीपुत्रस्याप्यौरसेन

| | | |
|---|---|---|
| | | समांशाभिधानेन पितुरनन्तरं<br>भ्रातृरहितस्य<br>तस्यैव दौहित्रेण सह विभागदर्शनेन च<br>दण्डा-<br>पूपायितं सति पितरि<br>क्षेत्रजदत्तकादीना-<br>मौरसेन समांशोऽसति तु तदर्द्धांशः<br>अन्यशा यत्र<br>च क्षत्रजदत्तकादीनामौरसचतुर्थांशित्वं<br>तत्र<br>तदपेक्षया अत्यन्तविप्रकृष्टाधिकारस्य<br>दासी-<br>पुत्रस्यौरससमांशित्वमितिमहद्वैषम्यं<br>स्यात्<br>एवं सत्सु क्षेत्रजादिषु सम्नोश्च<br>पत्नीकन्ययो- |

दौहित्राधिकारे
कॢप्ताधिकारविधिवाधापत्ति-
स्तेन
दौहित्रपर्य्यन्ताधिकारिशृङ्खलायां
तदेक-
तमे सत्यपि न दासीपुत्त्रस्य
सर्व्वहरत्वं किन्तु
तत्समांशः । अतएव ।
‘दत्तपुत्रे यथा जाते कदाचित्त्वौरसो
भवेत् ।
पितुर्वित्तस्य सर्व्वस्य भवेतां
समभागिनौ ॥’
इत्यपि वचनं शूद्रविषय एव
योजनीयम् ॥ * ॥
अथान्धपङ्गुप्रभृतिपुत्त्राणां
धनानधिकारितया
तदौरसक्षेत्रजयोरेव
पितामहधनभागित्वश्रुतेर्न
तद्गृहीतदत्तकपुत्राद्रेः
पितामहधनाधिकारः
किन्तु भरणमात्रं अन्धादिभार्य्याणां
भरणविधा-
नेन तद्भरणस्य दण्डापूपायितत्वात् ।
तथा अन्ध-
पङ्ग्वादीननधिकारिपुत्त्रानभिधायाह
।
‘औरसक्षेत्रजास्त्वेषां निर्द्दोषा
भागहारिणः ।
अपुत्त्रयोषितश्चैषां भर्त्तव्याः
साधुवृत्तयः ॥
सुताश्चैषां प्रभर्त्तव्या यावन्न भर्त्तृसात्
कृताः ॥’
एवं दत्तकग्रहणानन्तरोत्पन्नौरसेन
सह दत्त-
कस्य विभागदर्शनात् सत्यौरसे
गृहीतस्य तु
नांशभागित्वमिति । तथा विधानं
विना परि-
गृहीतस्यापि नांशभागित्वमित्याह ।

“पौंस्नं वपुर्द्दर्शयानमनन्यसिद्धै-
रौत्पत्तिकैः समगृणन् युतमष्टभोगैः ॥”
स्त्रियां ङीप् । पुरुषयोग्या । पुरुषहिता । यथा,
भट्टिः । ५ । ९१ ।
“सङ्गच्छ पौंस्नि ! स्त्रैणं मां युवानं तरुणी शुभे ॥”)

**पौगण्डं**, क्ली, (पोगण्डस्य भावः । पोगण्ड +
अण् ।) अवस्थाविशेषः । यथा, --
“कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि ।
कैशोरमापञ्चदशात् यौवनञ्च ततः परम् ॥”
इतिदशमस्कन्धीयद्वादशाध्यायस्थसप्तत्रिंशश्लोक
टीकायां श्रीधरस्वामिधृतवचनम् ॥ (पोगण्डा-
वस्थावति तदवस्थासम्बन्धिनि च त्रि । यथा,
भागवते । ३ । ३१ । २८ ।
“इत्येवं शैशवं भुक्त्वा दुःखं पौगण्डमेव च ॥”)

**पौण्डरीकं**, क्ली, (पुण्डरीकमिव । पुण्डरीक +
“शर्करादिभ्योऽण् ।” ५ । ३ । १०७ । इत्यण् ।)
प्रपौण्डरीकम् । इति राजनिर्घण्टः ॥ (कुष्ठ-
विशेषः । यथा, सुश्रुते निदानस्थाने ५ अध्याये ।
“तत्र वातेनारुणं पित्तेनौडुम्बर्य्यजिह्वकपाल-
काकणकानि । श्लेष्मणा पौण्डरीकं दद्रुकुष्ठ-
ञ्चेति ॥” पुं, यज्ञविशेषः । यथा, महा-
भारते । १३ । १०७ । ३६-३७ ।
“यस्तु संवत्मरं क्षान्तो भुङ्क्ते ऽहन्यष्टमे नरः ।
देवकार्य्यपरो नित्यं जुह्वानो जातवेदसम् ॥
पौण्डरीकस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम् ।
पद्मवर्णनिभञ्चैव विमानमधिरोहति ॥”)

**पौण्डर्य्यं**, क्ली, (पुण्डर्य्यमेव । स्वार्थे अण् ।) पुण्ड-
र्य्यम् । इत्यमरटीकायां भरतः ॥ (यथास्य
पर्य्यायो गुणाश्च ।
“प्रपौण्डरीकं पौण्डर्य्यं चक्षुष्यं पौण्डरीयकम् ।
पौण्डर्य्यं मधुरं तिक्तं कषायं शुक्रलं हिमम् ।
चक्षुष्यं मधुरं पाके वर्ण्यं पित्तकफप्रणुत् ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**पौण्ड्रः**, पुं, देशभेदः । चन्देल इति ख्यातः । इति
शब्दरत्नावली ॥ (सोऽस्य अभिजनस्तस्य राजा
वा । अण् । तद्देशनृपः । यथा, हरिवंशे ।
“पाण्ड्यं पौण्ड्रं कलिङ्गञ्च मात्स्यञ्चैव जनार्द्दनः ।

नैपालो दीर्घपत्रश्च नीलपोरोऽथ
कोशकृत् ।
इत्येता जातयः स्थौल्याद्गुणान्
वक्ष्याम्यतः-
परम् ॥”
इति सुश्रुते सूत्रस्थाने १५ अध्याये ॥)
अस्य गुणाः । शीतलत्वम् । वृष्यत्वम् ।
स्निग्ध-
त्वम् । मधुरत्वम् । बृहणत्वञ्च । इति
राजवल्लभः ॥
(गुणान्तरमस्य यथा, --
“वातपित्तप्रशमनो मधुरो रसपाकयोः ।
सुशीतो बृंहणो बल्यः पौण्ड्रको
भीरुकस्तथा ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये
भागे ॥
पौण्ड्रदेशीयनृपः । यथा, महाभारते । २ ।
३४ । १० ।
“पौण्ड्रको वासुदेवश्च वङ्गः
कालिङ्गकस्तथा ॥”)
जातिविशेषः । पुँडो इति भाषा । स च
शौण्डि-
कायां वैश्याज्जातः । इति
ब्रह्मवैवर्त्तपुराणम् ॥
(पौण्ड्रदेशोद्भवक्षत्त्रियविशेषः । स तु
क्रियालोपा-
दिना शूद्रत्वमापन्नः । यथा, मनुः । १० ।
४४ ।
“पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा
जवनाः
शकाः ॥”)

**पौण्ड्रवर्द्धनः**, पुं, (पौण्ड्राणामिक्षुविशेषाणां वर्द्धनं
यत्र ।) देशभेदः । इति शब्दरत्नावली ॥
वेहार इति ख्यातः ॥ (यथा,
कथासरित्सागरे ।
१९ । १७ ।
“अभवत्तस्य भार्य्या च नगरात्
पौण्ड्रवर्द्धनात् ॥”)

**पौण्ड्रिकः**, पुं, (पुण्ड्र + स्वार्थे ठञ् ।) इक्षुभेदः ।

'तस्मिन् जाते सुते दत्ते न कृते च विधानके ।
तत्सुतस्तस्य वित्तस्य यः स्वामी पितुरञ्जसा ॥'
मनुः ।
'अविधाय विधानं यः परिगृह्णाति पुत्त्रकम् ।
विवाहविधिभाजं तं न कुर्य्याद्धनभाजनम् ॥'
इति ।
अन्यजातीयदत्तकस्यापि नांशभागित्वमित्याह
'यदि स्यादन्यजातीयो गृहीतोऽपि सुतः क्वचित् ।
अंशभाजं न तं कुर्य्यात् शौनकस्य मतं हि तत् ॥'
इत्युक्तप्रायमित्यास्तां विस्तारः ॥"
इति दत्तक-
चन्द्रिका ॥

**पोष्यवर्गः**, पुं, (पोष्याणां प्रतिपालनीयानां वर्गः ।)
प्रतिपालनीयगणः । स तु मात्रादिः । यथा, --
"माता पिता गुरुः पत्नी त्वपत्यानि समाश्रिताः ।
अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्गा अमी नव ॥"
इति काशीखण्डम् ॥
अपि च ।
"माता पिता गुरुर्भ्राता प्रजा दीनः समाश्रिताः ।
अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः ॥
भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम् ।
नरकं पीडने चास्य तस्माद्यत्नेन तं भरेत् ॥"
इति गारुडे २१५ अध्यायः ॥

**पौंसवनं**, क्ली, (पुंसवनमेव । स्वार्थे अण् ।) पुंस-
वनसंस्कारः । इति भूरिप्रयोगः ॥

जघान सहितान् सर्व्वान् -- ॥"
पौण्ड्रदेशोद्भवे, पुंभूम्नि । यथा, हरिवंशे । ११६ । ५२ ।
"अङ्गवङ्गकलिङ्गैश्च सार्द्धं पौण्ड्रैश्च वीर्य्यवान् ।
निर्य्ययौ चेदिराजस्तु भ्रातृभिः स महारथैः ॥")
भीमसेनस्य शङ्खः । यथा, --
"पौण्ड्रं दध्मौ महाशङ्खं भीमकर्म्मा वृकोदरः ॥"
इति श्रीभगवद्गीतायाम् । १ । १५ ॥
(पुडि खण्डने + "स्फायितञ्चीति ।" उणा० २ । १३ । इति रक् । ततःप्रज्ञाद्यण् ।) इक्षुभेदः ।
इति रत्नमाला ॥ पुँडि इति भाषा ॥

**पौण्ड्रकः**, पुं, (पौण्ड्र एव । स्वार्थे कन् ।) इक्षु-
भेदः । पुँडि आक् इति भाषा । (यथा, --
"पौण्ड्रको भीरुकश्चैव वंशकः शतपोरकः ।
कातारस्तापसेक्षुश्च काष्ठेक्षुः सूचिपत्रकः ॥

पुँडि इति भाषा । तत्पर्य्यायः । पुण्ड्रेक्षुः २
पुण्ड्रः ३ सेव्यः ४ अतिरसः ५ मधुः ६ । इति
शब्दमाला ॥

**पौतवं**, क्ली, परिमाणम् । इति यौतवशब्दटीकायां
भरतः ॥

**पौत्तिकं**, क्ली, (पुत्तिकाभिर्म्मधुमक्षिकाविशेषैः
कृतम् । पुत्तिका + "संज्ञायाम् ।" ४ । ३ ।
११७ । इति ठन् ।)
पिङ्गलवर्णपुत्तिकाख्यबृहन्मक्षिकाहृतघृतवर्णमधु । इति जटाधररत्न-
माले ॥ (यथा, सुश्रुते । १ । ४५ ।
"पौत्तिकं भ्रामरं क्षौद्रं माक्षिकं छात्रमेव च ।
आर्घ्यमौद्दालिकं दालमित्यष्टौ मधुजातयः ॥")

**पौ(त्र)त्त्रः**, पुं, (पुत्त्रस्यापत्यम् । पुत्त्र + "अनृष्या-
नन्तर्य्ये विदादिभ्योऽञ् ।" ४ । १ । १०४ । इति
अञ् ।) पुत्त्रस्य पुत्त्रः । नाति इति भाषा ॥
तत्पर्य्यायः । नप्ता २ । इति हेमचन्द्रः ॥ यथा, --
"पुत्त्रेण लोकाञ्जयति पौत्त्रेणानन्त्यमश्नुते ।
अथ पुत्त्रस्य पौत्त्रेण ब्रध्नस्याप्नोति पिष्टपम् ॥"
इति
दायभागधृतमनुशङ्खलिखितवशिष्ठहारीतवचनम् ॥

**पौत्त्री**, स्त्री, (पुत्त्रस्यापत्यं स्त्री । पुत्त्र + अञ् ।
ङीप् ।) पुत्त्रात्मजा । तत्पपर्य्यायः । नप्त्री २ ।
इत्यमरः । २ । ६ । २९ ॥

**पौनःपुनिकः**, त्रि, (पुनः पुनर्भवः । पुनःपुनः +

**पौंस्नं**, क्ली, (पुंस इदम् । पुंस् + "स्त्रीपुंसाभ्यां

नञ्स्नञौ भवनात् ।" ४ । १ । ८७ ।

इति

स्नञ् ।) पुंस्त्वम् । इति शब्दमाला ॥

(धैर्य्यम् ।

यथा, भागवते । ४ । २६ । २६ ।

"का देवरं वशगतं कुसुमास्त्रवेग-

विस्रस्त पौंस्नमुशती न भजेत कृत्ये

॥"

त्रि, पुंसु भवः । पुंस आगतः । यथा,

भाग-

वते । ३ । १५ । ४५ ।

ठञ् । टिलोपः ।) पुनःपुनर्भवः । इति

मुग्ध-

बोधव्याकरणम् ॥

**पौनःपुन्यं**, व्य, (पुनःपुनः + स्वार्थे व्यञ् । टिलोपः ।

पुनर्व्वारम् । तत्पपर्य्यायः । वारवारम् २

मुहुः ३

शश्वत् ४ असकृत् ५ पुनःपुनः ६
वारंवारेण
७ अभीक्ष्णम् ८ प्रतिक्षणम् ९ । इति
शब्द-
रत्नावली ॥

**पौनर्भवः**, पुं, (पुनर्भुवोऽपत्यमिति । पुनर्भू +
"अनृष्यानन्तर्य्ये विदादिभ्योऽञ् ।" ४ ।
१ ।
१०४ । इति अञ् ।)
द्वादशविधपुत्त्रान्तर्गत-
पुत्त्रविशेषः । इति जटाधरः ॥
पुनर्भूपुत्त्रः ।
स तु
भर्त्तृपरित्यक्तविधवयोरन्येनोत्पादितः ।
तस्य लक्षणं यथा, --
"वा पत्या वा परित्यक्ता विधवा वा
स्वयेच्छया ।
उत्पादयेत् पुनर्भूत्वा स पौनर्भव उच्यते
॥"
इति मानवे । ९ । १७५ ॥
"येति । या भर्त्रा परित्यक्ता मृतभर्त्तृका
वा
स्वेच्छया अन्यस्य पुनर्भार्य्या भूत्वा
यमुत्पादयेत्
स उत्पादकस्य पौनर्भवः पुत्त्र उच्यते
।" इति
तट्टीकायां कुल्लूकभट्टः ॥ * ॥
भर्त्तृविशेषः ।
अक्षतयोन्योर्भर्त्तृपरित्यक्तविधवयोः
पौनर्भवेन
भर्त्रा सह विवाहविधिः एवं कौमारं
पति-
मुत्सृज्यान्यमाश्रित्यपुनरागतायास्तेन
कौमा-
रेण भर्त्रा सह विवाहविधिर्यथा, --
"सा चेदक्षतयोनिः स्याद्गतप्रत्यागतापि
वा ।
पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति
॥"

पूरः पूरक एव । स्वार्थे अण् । उदरपूरके,
त्रि । यथा, तत्रैव । २ । ११ । ११ ।
"पृणन्तस्ते कुक्षी वर्द्धयन्त्वित्था सुतः पौर
इन्द्र-
माव ॥")

**पौरकः**, पुं, (पौर इव कायतीति । कै + कः ।)
गृहबाह्योपवनम् । यथा, --
"निष्कुटस्तु गृहारामो बाह्यारामस्तु
पौरकः ॥"
इति हेमचन्द्रः । ४ । १७८ ॥

**पौरवः**, पुं, (पुरोरपत्यमिति । पुरु + अण् ।)
पुरुवंशः । यथा, --
"द्रुह्योस्तु तनया भोजा अनोस्तु
म्नेच्छजातयः ।
पुरोस्तु पौरवो वंशो यत्र जातोऽसि
पार्थिव ! ॥"
इति मात्स्ये ३४ अध्यायः ॥
(देशविशेषः । यथा, मार्कण्डेये । ५८ ।
५२ ।
"त्रिनेत्राः पौरवाश्चैव गन्धर्व्वाश्च
द्विजोत्तम ! ।
पूर्ब्बोत्तरन्तु कूर्म्मस्य पादमेते समाश्रिताः
॥"
पुरुवंशीये, त्रि ॥ (यथा, शकुन्तलायां
प्रथमे
अङ्के ।
"कः पौरवे वसुमतीं शासति शासितरि
दुर्विनीतानाम् ।
अयमाचरत्यविनयं मुग्धासु
तपस्विकन्यकासु ॥")

**पौरस्त्यः**, त्रि, (पुरो भवः । पुरस् + "दक्षिणा-
पश्चात्पुरसस्त्यक् ।" ४ । २ । ९८ । इति
त्यक् ।) प्रथमः । इत्यमरः । ३ । १ । ८०
॥
(पूर्ब्बदिग्भवः । यथा, रघुः । ४ । ३४ ।
"पौरस्त्यानेवमाक्रामन् तान् तान्
जनपदान्
जयी ॥")

**पौरुषेयः**, पुं, (पुरुष + "सर्व्वपुरुषाभ्यां णढञौ ।"
५ । १ । १० । इत्यत्र "पुरुषाद्वधविकारसमूह-
तेन कृतेषु" एष्वर्थेषु ढञ् ।) समूहः । (यथा,
माघः । २ । ४ ।
"एकाकिनोऽपि परितः पौरुषेयवृता इव ॥")
वधः । पुरुषस्य पदान्तरम् । इति मेदिनी ॥

**पौरुषेयः**, त्रि, (पुरुष + ढञ् ।) पुरुषकृतः ।
पुरुषविकारः । इति मेदिनी ॥ (पुरुषसम्ब-
न्धिनि । यथा, ऋग्वेदे । १० । ८७ । १६ ।
"यः पौरुषेयेण क्रविषा समंक्ते ॥")

**पौरोगवः**, पुं, स्त्री, (पुरोऽग्रे गौर्नेत्रं यस्येति ।
पुरोगुः । ततः प्रज्ञाद्यण् ।) पाकशालाध्यक्षः ।
इत्यमरः । २ । ९ । २७ ॥ (यथा, हरिवंशे ।
१४६ । ५८ ।
"वृक्षाम्लसौवर्च्चलचुक्रपूर्णान्
पौरोगवोक्तानुपजह्रुरेषाम् ॥")

**पौरोडाशः**, पुं, (पुरोडाश एव । प्रज्ञाद्यण् ।)
पुरोडाशः । पुरोडाशसहचरितो मन्त्रः । इति
सिद्धान्तकौमुदी ॥

**पौरोडाशिकः**, पुं, (पुरोडाशसहचरितो मन्त्रः
पुरोडाशः स एव पौरोडाशः । तस्य व्याख्यान-
स्तत्र भवो वा । "पौरोडाश-पुरोडाशात्
ष्ठन् ।" ४ । ३ । ७० । इति ष्ठन् ।) पुरो-
डाशिकः । इति सिद्धान्तकौमुदी ॥

**पौर्णमासः**, पुं, (पौर्णमास्यां भवः । पौर्णमासी +
"सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ।" ४ । ३ । १६
।
इत्यण् ।) यागविशेषः । इत्यमरः । २ । ७ ।
४८ ॥ (यथा, मनुः । ४ । २५ ।
"दर्शेन चार्द्धमासान्ते पौर्णमासेन चैव हि ॥")
तथा हि । अमावस्यायां अमावस्यया यजेत
पौर्णमास्यां पौर्णमास्या यजेत इति श्रुति-
विहितदर्शपौर्णमासयागयोः कर्म्मस्वरूपज्ञाप-
कयोरुत्पत्तिश्रुतीः समामनन्ति । यथा ।
आग्नेयाष्टाकपालोऽमावस्यायांपौर्णमास्याञ्चा-

इति मानवे । ९ । १७६ ॥
"सा चेदिति । सा स्त्री यद्यक्षतयोनिः
सती
अन्यमाश्रयेत्तदा तेन पौनर्भवेन भर्त्त्रा
पुनर्व्विवा-
हाख्यं संस्कारमर्हति । यद्वा कौमारं
पतिमुत्-
सृज्यान्यमाश्रित्य पुनस्तमेव प्रत्यागता
भवति
तदा तेन कौमारेण भर्त्त्रा पुनर्व्विवाहाख्यं
संस्कारमर्हति ।" इति तट्टीकायां
कुल्लूकभट्टः ॥ * ॥
कन्याविशेषे, स्त्री । सप्तविधपौनर्भवाः
कन्या
वर्ज्जनीयाः । यथा, --
"सप्त पौनर्भवाः कन्या वर्ज्जनीयाः
कुलाधमाः ।
वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला
॥
उदकस्पर्शिता या च या च
पाणिगृहीतिका ।
अग्निं परिगता या च पुनर्भूप्रभवा च या ।
इत्येताः काश्यपेनोक्ता दहन्ति
कुलमग्निवत् ॥
कृतकौतुकमङ्गला बद्धकङ्कणा ।
उदकस्पर्शिता
उदकपूर्ब्बं दत्तेति रत्नाकरः ।"
इत्युद्वाह-
तत्त्वम् ॥

**पौरं**, क्ली, (पुरे भवम् । पुर + "तत्र भवः ।" ४ ।
३ । ५३ । इत्यण् ।) रोहिषतृणम् ।
इत्यमरः ।
२ । ४ । १६६ ॥ रामकर्पूर इति
ख्यातम् ॥
(अस्य पर्य्यायो यथा, --
"कत्तृणं रौहिषं देवजग्धं सौगन्धिकन्तथा
।
भूतीकं व्यासपौरञ्च श्यामकं
धूमगन्धिकम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**पौराणिकः**, त्रि, (पुराणमधीते वेद वा । पुराण +
"आख्यानाख्यायिकेतिहासपुराणेभ्यश्च
।" ४ ।
२ । ६० । इत्यस्य वार्त्तिकोक्त्या ठक् ।)
पुराणवेत्ता । इति सिद्धान्तकौमुदी ॥
(यथा,
महाभारते । १ । ४ । १ । "लोमहर्षणपुत्त्र
उग्रश्रवाः सौतिः पौराणिको शौनकस्य
कुलपते-
र्द्वादशवार्षिके सत्रे ऋषीनभ्यागतानुपतस्थे
॥"
यथा च भागवते । १२ । ७ । ५ ।
"त्रय्यारुणिः कश्यपश्च सावर्णिरकृतव्रणः
।
वैशम्पायनहारीतौ षड्वै पौराणिका इमे
॥")

**पौरुषं**, क्ली, (पुरुष + अण् ।) पुरुषस्य भावः ।
पुरुषस्य कर्म्म । पुरुषस्य तेजः । इति
मेदिनी ॥
"क्लीवा हि दैवमेवैकं प्रशंसन्ति न पौरुषम्
।
दैवं पुरुषकारेण घ्नन्ति शूराः सदोद्यमाः
॥"
इत्यग्निपुराणम् ॥
"उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
र्दैवेन देयमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः
॥"
इति हितोपदेशः ॥

**पौरुषं**, त्रि, (पुरुष + अण् ।) ऊर्द्ध्वविस्तृतदोः-
पाणिनृमाणम् । पुरुषपरिमाणम् । इत्यमरः
।
३ । ३ । २२२ ॥ (पुरुषवाह्यः । यथा,
मनुः ।
८ । ४०४ ।
"पणं यानं तरे दाप्यं पौरुषोऽर्द्धपणं तरे
॥")

च्युतो भवति । उपांशुयाजमन्तरा यजति
ताभ्या-
मेवाग्नीसोमीयमेकादशकपालं पौर्णमास्या-
मेव प्रायच्छत् ऐन्द्रं दधि भवत्यमावास्याया-
मैन्द्रं पयो भवत्यमावास्यायामिति । ताभ्या-
माग्नेयाष्टाकपालोपांशुयाजाभ्याम् । तेन आग्ने-
याष्टाकपालोपांशुयाजाग्नीसोमीयैकादशकपा-
लास्त्रयः पौर्णमास्याम् । आग्नेयाष्टाकपा-
लैन्द्रदधियागैन्द्रपयोयागास्त्रयोऽमावास्याया-
मित्यर्थः । आसु श्रुतिषु अमावास्यापौर्णमासी-
पदानि प्रतिपत्सहिततदुभयपराणि । तत्र
पूर्ब्बयोर्यागारम्भः प्रतिपदोर्यागः । तथा च द्वे-
ह वै पौर्णमास्यौ द्वे अमावास्ये तस्मात् प्रति-
पद्युपवसन् यजेतापरेद्युरिति श्रुतिः । अस्यार्थः
।
यावज्जीविकयोर्द्दर्शपौर्णमासयोः प्रकृतिभूतयो
र्व्विकृतिभूतौ दर्शपौर्णमासौ कौण्डपायिनामय-
नीयौ पक्षादौ कर्त्तव्यौ ।" इति मलमासतत्त्वम्
॥

**पौर्णमासी**, स्त्री, (पूर्णो मासोऽस्यां वर्त्तते इति ।
पूर्णमासादण् वक्तव्य इत्यण् । ततो ङीप् ।)
पूर्णिमा । इत्यमरः । १ । ४ । ७ ॥

| | | |
|---|---|---|
| पुरोद्भूते, त्रि । इति मेदिनी ॥ (यथा, रघुः । ६ । ८५ ।<br>"इति समगुणयोगप्रीतयस्तत्रपौराः<br>श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥"<br>पुं, पुरुराजपुत्त्रः । यथा, ऋग्वेदे । ८ । ३ । १२ ।<br>"शग्धी नो अस्य बद्ध पौरमाविथ धिय इन्द्र<br>सिषासतः ॥" | | |

**पौर्ब्बाह्णिकः**, त्रि, (पूर्ब्बाह्ण + “विभाषा पूर्ब्बाह्णा-
पराह्णाभ्याम् ।” ४ । ३ । २४ । इति ठञ् ।)
पूर्ब्बाह्णे भवः । पूर्ब्बाह्णसम्बन्धी । इति
सिद्धान्त-
कौमुदी ॥

**पौलस्ती**, स्त्री, (पुलस्तेः स्त्र्यपत्यम् । पुलस्त +
यञ् । ङीप् । यलोपः ।) सूर्पणखा । इति
व्याकरणम् ॥

**पौलस्त्यः**, पुं, (पुलस्तेरपत्यमिति । पुलस्ति + गर्गादि-
त्वात् यञ् ।) कुवेरः । इत्यमरः । १ । १ ।
७२ ॥
रावणः । इति मेदिनी ॥ (यथा, हरिवंशे ।
३३ । ३५ ।
“मुमोच रक्षः पौलस्त्यं पुलस्त्येनानुयाचितः
॥”)
विभीषणः । इति शब्दरत्नावली ॥

**पौलिः**, पुं, (पोलतोति । पुल महत्त्वे + ज्वलादि-
त्वात् णः । पौलेन निर्वृत्तः । सुतङ्गमादित्वात्
इञ् ।) पाकावस्थागतकलायादिः । आरब्ध-
पाकयवसर्षपादिः । वह्निना ईषद्दग्धचुट्चुट्-
शब्दवान् । इति केचित् । दरदग्धः । इति
श्रीधरः । इति भरतः ॥ तत्पर्य्यायः ॥ आप-
क्वम् २ अभ्यूषः ३ । इत्यमरः ॥ अभ्युषः ४
अभ्योषः ५ । इति भरतः ॥

**पौलोमी**, स्त्री, (पुलोम्नोऽपत्यमिति । पुलोमन् +
अण् । अनो लोपः ।) शची । इति हेमचन्द्रः ॥
(यथा, भागवते । ५ । ७ । ६ ।
“विराजमानः पौलोम्या सहार्द्धासनया भृशम्
॥”)

**पौषः**, पुं, (पौषी पौर्णमास्यस्मिन्निति । सास्मिन्
पौर्णमासीत्यण् ।) वैशाखादिद्वादशमासान्त-
र्गतनवममासः । पुष्यनक्षत्रयुक्ता पौर्णमासी
यत्र मासे सः । तत्पर्य्यायः । तैषः २ सहस्यः
३ ।
इत्यमरः ॥ पौषिकः ४ हैमनः ५ । इति राज-
अस्य प्रतिनिधिर्यथा, --
“पौष्कराभावतः कुष्ठम् ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**पौष्करमूलं**, क्ली, (पौष्करं मूलम् ।) पुष्कर-
मूलम् । यथा, --
“मूले पुष्करकाश्मीरपद्मपत्राणिपौष्करे ।”
इत्यमरः ॥
“त्रीणि पुष्करमूले । पुष्करं सुगन्धिद्रव्यं
बणिक्-
ख्यातं तस्य इदं पौष्करं ष्णः पौष्करे मूले
पुष्करादीत्यन्वयः ।” इति भरतः ॥

**पौष्करिणी**, स्त्री, (पौष्करं पुष्कराणां समूहोऽस्या
अस्तीति । पौष्कर + इनि । स्त्रियां ङीप्
।)
पुष्करिणी । इति शब्दरत्नावली ॥

**पौष्टिकं**, क्ली, (पुष्ट्यै वृद्ध्यै हितमिति । पुष्टि +
ठञ् ।) क्षौरसमये गात्राच्छादनवस्त्रविशेषः
।
कावाइ इति भाषा ॥ अस्य गुणाः ।
धनचिह्न-
त्वम् । आयुष्यत्वम् । शुचित्वम् ।
रूपविराजन-
त्वञ्च । इति राजवल्लभः ॥ धन्यं धनचिह्नम्
।
बल्यमिति वा पाठः । पुष्टिर्धनजनादीनां
वृद्धि-
रित्यभिधीयते । तद्धेतुभूत्रं कर्म्म । इति
दुर्ग-
भञ्जः ॥ (पुष्टिहिते, त्रि । यथा, महाभारते ।
१२ । २९६ । २९ ।
“सतां वृत्तमधिष्ठाय निहीनानुज्जिहीर्षवः ।
मन्त्रवर्ज्जं न दुष्यन्ति कुर्व्वाणाः पौष्टिकीः
क्रियाः ॥”)

**पौष्पं**, त्रि, (पुष्पेण निर्वृत्तम् । पुष्पस्येदं वेति ।
पुष्प + अण् ।) पुष्पनिर्म्मितम् ।
पुष्पसम्बन्धि ।
तच्च खण्डत्रयं पौष्यो यथास्थानं
नियोज्य च ।
एकं पिण्डं चकाराशु तत्र पुत्त्रो व्यजायत
॥
तस्य नामाकरोद्राजा ब्राह्मणैः स्वैः
पुरोहितैः ।
चन्द्रशेखर इत्येवं कान्त्या चन्द्रमसः
समः ॥
ब्रह्मावर्त्ताह्वये रम्ये करवीराह्वये पुरे ।
दृशद्वतीनदीतीरे राजा भूत्वा मुमोद ह ॥”
इति कालिकापुराणे ४६ अध्यायात्
सङ्कलितः ॥
(नृपभेदः । स तु गुरुदक्षिणार्थमागताय
उत-
ङ्काय कुण्डले दत्तवान् । यथा, महाभारते
।
१ । ३ । ११२ ।
“तमुतङ्कं पौष्यः प्रत्युवाच भगवंश्चिरेण
पात्र-
मासाद्यते भवांश्च गुणवानतिथिस्तदिच्छे
श्राद्धं
कर्त्तुं क्रियतां क्षण इति ॥”
एतद्विशेषविवरणन्तु
तत्रैव द्रष्टव्यम् ॥)

**प्याट्**, व्य, हे । भोः । इत्यमरः । ३ । ४ । ७ ॥

**प्याय**, ओ ई ङ वृद्धौ । इति कविकल्पद्रुमः ॥
(भ्वा०-आत्म०-अक०-सेट् ।) ओ ई,
पीनं
मुखम् । उपसर्गात्तु प्रप्यानम् । अस्वाङ्गे तु
प्यानः
पीनः स्वेदः । ङ, प्यायते । इति
दुर्गादासः ॥

**प्युष**, क उत्सृजि । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-सक०-सेट् ।) अन्तःस्थाद्ययुक्तः ।
उत्-
सृजि उत्सर्गे । क, प्योषयति धनं दाता ।
इति दुर्गादासः ॥

**प्युष**, य इर् भागे । दहि । इति कविकल्पद्रुमः ॥

निर्घण्टः ॥ तिष्यः ६ तिष्यकः ७ । इति शब्द-
रत्नावली ॥ अयं धनुःस्थरविप्रारब्धशुक्लप्रति-
पदादिदर्शान्तिरूपो मुख्यचान्द्रः । कृष्णप्रति-
पदादिपौर्णमास्यन्तरूपो गौणचान्द्रः । धनू-
राशिस्थरविकः सौरः । इति स्मृतिः ॥ * ॥
तत्र जातफलम् । यथा, कोष्ठीप्रदीपे ।
"निगूढमन्त्रः सुकृशाङ्गयष्टिः
परोपकारी पितृवित्तहीनः ।
कष्टान्वितार्थव्ययकृद्विधिज्ञः
पौषप्रसूतः पुरुषः सुधीरः ॥"

**पौषी**, स्त्री, (पुष्य + "नक्षत्रेण युक्तः ।" इत्यण् ।
तिष्यपुष्येति यलोपः ।) पुष्ययुक्ता पौर्णमासी ।
इत्यमरः ॥ पुष्येण युक्ता रात्रिः । इति मुग्ध-
बोधव्याकरणम् ॥

**पौष्करं**, क्ली, (पुष्करस्येदमिति । पुष्कर + अण् ।)
पुष्करमूलम् । इति राजनिर्घण्टः ॥ (अस्य
पर्य्यायो गुणाश्च यथा, --
"उक्तं पुष्करमूलन्तु पौष्करं पुष्करञ्च तत् ।
पद्मपत्रञ्च काश्मीरं कुष्ठभेदमिमं जगुः ॥
पौष्करं कटुकन्तिक्तमुक्तं वातकफज्वरान् ।
हन्ति शोथारुचिश्वासान् विशेषात् पार्श्वशूल-
नुत् ॥"
यथा, कालिकापुराणे ६७ अध्याये ।
"आसनं प्रथमं दद्यात् पौष्पं दारुजमेव वा ।
वास्त्रं वा चार्म्मणं कौशं मण्डलस्योत्तरे
सृजेत् ॥"

**पौष्पकं**, क्ली, (पुष्पेण कायतीति । कै + कः । पुष्पक
+ स्वार्थे अण् ।) कुसुमाञ्जनम् । इत्यमरः ॥

**पौष्पी**, स्त्री, (पुष्पस्य इयं इति । पुष्प + अण् ।
गौरादित्वात् ङीष् । पुष्पाख्यया प्रसिद्धत्वात्
तथात्वम् ।) देशविशेषः । यथा, --
"अथ पुष्पपुरं पौष्पी तथा पाटलिपुत्त्रकम् ॥"
इति शब्दरत्नावली ॥

**पौष्यः**, पुं, (पूष्णोऽपत्यमिति । पूषन् + ष्यञ् ।)
पूषपुत्त्रः । स च करवीरपुरस्य राजा । तस्य
पुत्त्रः शिवांशजश्चन्द्रशेखरः । यथा, --
"पूष्णः पुत्त्रोऽभवत् पौष्यः सर्व्वशास्त्रार्थपारगः ।
स पुत्त्रहीनो राजाभूत् पौष्यो नृपतिसत्तमः ॥
ततः पुत्त्रार्थिनं भूपं प्रसन्नो वृषभध्वजः ।
ब्रह्मदत्तफलं हस्ते कृत्वेदं तमुवाच ह ॥
इदं फलं ब्रह्मदत्तं विभज्य नृपते ! त्रिधा ।
भोजयेस्ताः स्वजायास्त्वं प्रहृष्टः शुद्धमानसः ॥
ततः फले स्वयं देवः प्रविवेश वृषध्वजः ।
तत्क्षणात्तत् फलं भूतं त्रिभागं स्वयमेव हि ॥
ततः समुचिते काले प्राप्ते ताभिस्तु भक्षितम् ।
तत् फलं नृपशार्द्दूल ! गर्भाश्चाप्याहिताः शुभाः ॥
सम्पूर्णे गर्भकाले तु गर्भेभ्यः समजायत ।
खण्डत्रयं पृथक् राजा यथा भर्गेण भाषितम् ॥

**प्युष**, य इर् विभागे । इति कविकल्पद्रुमः ॥ (दिवा०-
पर०-सक०-सेट् ।) अन्तःस्थाद्ययुक्तः । य, पुष्यति धनं दायादः । इर्, अप्युषत् अप्यो-
षीत् । अस्मात् पुषादित्वान्नित्यं ङ इत्यन्ये ।
इति दुर्गादासः ॥

**प्युस**, य इर् विभागे । इति कविकल्पद्रुमः ॥ (दिवा०-
पर०-सक०-सेट ।) अन्तःस्थाद्ययुक्तः । य,
प्युस्यति धनं दायादः । इर्, अप्युसत् अप्योसीत् ।
अस्मात् पुषादित्वात् नित्यं ङ इत्यन्ये । इति
दुर्गादासः ॥

**प्यै**, ङ वृद्धौ । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-
अक०-अनिट् ।) अन्तःस्थाद्ययुक्तः । ङ, प्यायते ।
इति दुर्गादासः ॥

**प्र**, व्य, (प्रथयतीति । प्रथ + डः ।) विंशत्युप-
सर्गान्तर्गतप्रथमोपसर्गः । अस्यार्थाः । गतिः ।
आरम्भः । उत्कर्षः । सर्व्वतोभावः । प्राथ-
म्यम् । ख्यातिः । उत्पत्तिः । व्यवहारः । इति
दुर्गादासधृतपुरुषोत्तमः ॥

**प्रकटं**, त्रि, (प्रकटतीति । प्र + कट + अच् ।)
स्पष्टम् । अस्य पर्य्यायः प्रकाशशब्दे द्रष्टव्यः ।
"प्रकटाप्रकटा चेति लीला सेयं द्विधोच्यते ।"
इति भागवतामृतम् ॥
(यथा च, देवीभागवते । १ । ७ । ३८ ।
"जानन्ति ये न तव देवि ! परं प्रभावं
ध्यायन्ति ते हरिहरावपि मन्दचित्ताः ।
ज्ञातं मयाद्य जननि ! प्रकटं प्रमाणं
यद्विष्णुरप्यतितरां विवशोऽथ शेते ॥")

| | | **प्रकटितं**, त्रि, (प्र + कट + क्त ।) प्रकाशितम् । इति हेमचन्द्रः ॥ (यथा, देवोभागवते । १ । ७ । ४४ । |
|---|---|---|

"सृष्ट्वात्र मां भगवति ! प्रविनाशितुं चे-
न्नेच्छास्ति ते कुरु दयां परिहृत्य मौनम् ।
कस्मादिमौ प्रकटितौ किल कालरूपौ
यद्वा भवानि ! हसितुं नु किमिच्छसे त्वम् ॥")

**प्रकम्पनः**, पुं, (प्रकम्पयतीति । प्र + कपि + णिच् +
ल्यु ।) वायुः । इति हेमचन्द्रः ॥ (यथा,
माघे । १ । ६१ ।
"निशान्तनारीपरिधानधूनन-
स्फुटागसाप्यूरुषु लोलचक्षुषः ।
प्रियेण तस्यानपराधबाधिताः
प्रकम्पनेनानुचकम्पिरे सुराः ॥")
नरकविशेषः । इति शब्दरत्नावली ॥ (राक्षस-
विशेषः । इति रामायणम् ॥ प्र + कपि + ल्युट् ।)
कम्पातिशये, क्ली ॥

**प्रकरं**, क्ली, (प्रकीर्य्यते इति । प्र + कृ + कर्म्मणि
अप् ।) अगुरु । इति मेदिनी । रे, १७९ ॥

**प्रकरः**, पुं, (प्रकिरतीति । प्र + कृ + अच् ।)
समूहः । (प्रकीर्य्यते इति । प्र + कृ + "ऋदो
रप् ।" ३ । ३ । ५७ । इति अप् ।) विकीर्ण-
कुसुमादिः । इति मेदिनी । रे, १७८ ॥ (यथा,
अम्बाष्टके । ३ ।
"यत्राशयो लगति तत्रागजा वसतु कुत्रापि
निस्तुलशुका
सुत्रामकालमुखसत्राशनप्रकरसुत्राणकारि
चरणा ।
छत्रानिलातिरयपत्राभिरामगुणमित्रामरीसमबधूः
कुत्रासहन्मणिविचित्राकृतिः स्फुरितपुत्रादि-
दाननिपुणा ॥")

**प्रकरणं**, क्ली, (प्रक्रियते अस्मिन्निति । प्र + कृ +
आधारे ल्युट् ।) प्रस्तावः । (वृत्रान्तः । इत्यमरः ।
३ । ३ । ६३ ॥ यथा, महाभारते । ३ । २०४ ।
२१ ।
"एतत्प्रकरणं राजन्नधिकृत्य युधिष्ठिर ! ।
पतिव्रतानां नियतं धर्म्मञ्चावहितः शृणु ॥")
अभिनेयप्रकारः । रूपकभेदः । इति हेमचन्द्रः ॥
ग्रन्थसन्धिः । इति त्रिकाण्डशेषः ॥ पादः । स
तु एकार्थावच्छिन्नसूत्रसमूहः । इति मुग्धबोध-

**प्रकरी**, स्त्री, (प्रकीर्य्यते अत्रेति । प्र + कृ +
अप् ।
गौरादित्वात् ङीष् ।) नाट्याङ्गम् ।
चत्वरभूमिः ।
इति शब्दरत्नावली ॥

**प्रकर्षः**, पुं, (प्र + कृष् + भावे घञ् ।) उत्कर्षः
।
यथा, काव्यप्रकाशे ।
"गुणप्रकर्षेण जनोऽनुरज्यते
जनानुरागप्रभवा हि सम्पदः ॥"
(यथा च महाभारते । १ । १५६ ।
३४ ।
"बालोऽपि यौवनं प्राप्य मानुषेषु
विशाम्पते ! ।
सर्व्वास्त्रेषु परं वीरः प्रकर्षमगमद्बली
॥")

**प्रकाण्डः**, पुं, क्ली, (प्रकृष्टः काण्डः इति
प्रादिसमासः ।) मूलादारभ्य
शाखावधिवृक्ष-
भागः । गुँडी इति भाषा ॥
तत्पर्य्यायः ।
स्कन्धः २ । इत्यमरः । २ । ४ ।
१० ॥ काण्डम् ३ ।
इति शब्दरत्नावली ॥ दण्डः ४ ।
इति राज-
निर्घण्टः ॥ विटपः । शस्तः । इति
मेदिनी ।
डे, ३१ ॥ (यथा, अमरे । १ । ४ ।
२७ ।
"मतल्लिका मतर्च्चिका
प्रकाण्डमुद्धतल्लजौ ।
प्रशस्तवाचकान्यमून्ययःशुभावहो
विधिः ॥")
प्रकाण्ड + स्वार्थे कन्प्रत्ययेन
प्रशस्तार्थे । यथा,
भट्टौ । ५ । ६ ।
"दण्डकामध्यवार्त्तायौ वीर !
रक्षःप्रकाण्डकौ ।

चन्द्रः ॥ प्रव्यक्तम् ७ उद्रिक्तम् ८ । इति
जटा-
घरः ॥ प्रहासः । इति मेदिनी । शे, २४
॥
अतिप्रसिद्धः । इति शब्दरत्नावल्यमरौ ॥

**प्रकाशकः**, त्रि, प्रकाशकर्त्ता । प्रकाशयतीत्यर्थे
(ण्वुल्) णकप्रत्ययः ॥ (यथा,
भगवद्गीतायाम् ।
१४ । ६ ।
"तत्र सत्त्वं निर्म्मलत्वात्
प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ !
॥")

**प्रकाशकज्ञाता**, [ऋ] पुं, (प्रकाशकस्य आत-
पतस्य ज्ञाता ।) कुक्कुटः । इति
शब्दचन्द्रिका ॥
प्रकाशकज्ञातरि, त्रि ॥

**प्रकाशात्मा**, [न्] पुं, (प्रकाश आत्मा स्वरूपं
देहो वा यस्य ।) सूर्य्यः । इति
शब्दचन्द्रिका ॥
व्यक्तस्वभावे, त्रि ॥

**प्रकाशितं**, त्रि, (प्रकाशो जातोऽस्येति । प्रकाश +
तारकादित्वात् इतच् । यद्वा, प्र + काश
+
णिच् + क्त ।) प्रकाशविशिष्टम् ।
तत्पर्य्यायः ।
दर्शितम् २ आविष्कृतम् ३ प्रकटितम् ४
। इति
हेमचन्द्रः ॥

**प्रकीर्णं**, क्ली, (प्रकीर्य्यते स्मेति । प्र + कृ विक्षेपे
+
क्तः ।) ग्रन्थविच्छेदः । इति जटाधरः ॥
चा-
मरम् । इति त्रिकाण्डशेषः ॥

**प्रकीर्णः**, पुं, (प्रकीर्य्यते दुर्गन्धमनेनेति । प्र + कृ +
क्तः ।) पूतिकरञ्जः । इति राजनिर्घण्टः ॥

टीकायां दुर्गादासः ॥ (नाटकोक्तप्रकरणं तद्भेदादिर्यथा, साहित्यदर्पणे । ६ । २४० -- २४१ ।
"भवेत् प्रकरणे वृत्तं लौकिकं कविकल्पितम् ।
शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा बणिक् ॥
सापायधर्म्मकामार्थपरो धीरप्रशान्तकः ॥
विप्रनायकं यथा मृच्छकटिकम् । अमात्यनायकं मालतीमाधवम् । बणिङ्नायकं पुष्पभूषितम् ।
नायिका कुलजा क्वापि वेश्या क्वापि द्वयं क्वचित् ।
तेन भेदास्त्रयस्तस्य तत्र भेदस्तृतीयकः ॥
कितवद्यूतकारादिविटचेट्कसङ्कुलः ॥
कुलस्त्री पुष्पभूषिते । वेश्या तु रङ्गदत्ते । द्वे अपि मृच्छकटिके । अस्य नाटकप्रतिकृतित्वात् शेषं नाटकवत् ॥")

नृभ्र्यां संख्येऽकृषातां तौ सभृत्यौ भूमिवर्द्धनौ ॥"
"रक्षःप्रकाण्डकौ प्रशस्तौ राक्षसौ ।"
इति
तट्टीकायां जयमङ्गलः ॥)

**प्रकाण्डरः**, पुं, (प्रकाण्डं राति गृह्लातीति । रा + कः ।) वृक्षः । इति शब्दचन्द्रिका ॥

**प्रकामं**, त्रि, (प्रगतं काममिति प्रादिसमासः ।) यथेप्सितम् । इत्यमरः ॥ (यथा, महाभारते ।
४ । १३ । २९ ।
"चित्रमाल्याम्बरधरा
सर्व्वाभरणभूषिता ।
कामं प्रकामं सेव त्वं मया सह
विलासिनि ! ॥")

**प्रकारः**, पुं, (प्रभेदकरणं प्रकृष्टकरणं वेति । प्र + कृ + घञ् ।) भेदः । (यथा, पञ्चदश्याम् । ७ । १४४ ।
"अश्नाति वा नवाश्नाति भुङ्क्ते वा स्वेच्छया-
न्यथा ।
येन केन प्रकारेण क्षुधामपनिनीषति ॥")
सादृश्यम् । इत्यमरः । २ । ९ । ५७ ॥

**प्रकाशं**, क्ली, (प्रकाशते इति । प्र + काश + अच् ।) कांस्यम् । इति हेमचन्द्रः ॥ (दीप्तिः ।
यथा, महाभारते । ३ । १७१ । २७ ।
"पुनः प्रकाशमभवत् तमसा ग्रस्यते पुनः ।
भवत्यदर्शनो लोकः पुनरप्सु निमज्जति ॥")

**प्रकाशः**, पुं, (प्रकाशते इति । प्र + काश + अच् ।)

**प्रकीर्णः**, त्रि, (प्रकीर्य्यते स्मेति । प्र + कॄ + क्तः ।) विक्षिप्तः । विस्तृतः । यथा, --
"प्रकीर्णभाण्डामनवेक्ष्यकारिणीं
सदैव भर्त्तुः प्रतिकूलवादिनीम् ।
परस्य वेश्माभिरतामलज्जा-
मेवंविधां स्त्रीं परिवर्ज्जयामि ॥"
इति लक्ष्मीचरित्रम् ॥
नानाप्रकारमिश्रितः । यथा, --
"प्रकीर्णः पुष्पाणां हरिचरणयोरञ्जलिरयम् ॥"
इति वेणीसंहारः ।

**प्रकीर्णकं**, क्ली, (प्रकीर्ण + स्वार्थे कन् ।) चामरम् । इत्यमरः । २ । ८ । ३१ ॥ विस्तारः । इति
मेदिनी । के, १९६ ॥ ग्रन्थविच्छेदः । इति हेम-
चन्द्रः ॥ पापविशेषः । तथा विष्णुः । यदनुक्तं
तत् प्रकीर्णकम् ।
"प्रकीर्णपातके ज्ञात्वा गुरुत्वमथ लाघवम् ।
प्रायश्चित्तं बुधः कुर्य्यात् ब्राह्मणानुमते सदा ॥"
अनुक्तं अनुक्तनिष्कृतिकं पापम् ।
"अतिपातकाद्यन्यतमत्क्वे
विशेषतोऽनुक्तकम् ॥"
इति प्रायश्चित्तविवेकः ॥

**प्रकीर्णकः**, पुं, (प्रकीर्ण + संज्ञायां कन् ।) तुरङ्गमः । इति मेदिनी । के, १९६ ॥ (यथा, महाभारते ।
७ । ३५ । ३७ ।
"आरूढान् शिक्षितैर्योधैः शक्तृष्टिपाश-
योधिभिः ।
विध्वस्तचामरकुथान्
विप्रबिद्धप्रकीर्णकान् ॥")

**प्रकीर्त्तितं**, त्रि, (प्रकीर्त्त्यते स्मेति । प्र + कत् + क्तः ।) कथितम् । यथा, --

| | | |
|---|---|---|
| | रौद्रः । तत्पर्य्यायः । द्योतः २ आतपः ३ । इत्यमरः । १ । ४ । ३४ ॥ राजनिर्घण्टोक्त-पर्य्यायाः प्रभाशब्दे द्रष्टव्याः ॥ (यथा, पञ्च-दश्याम् । २ । ३८ । "निर्ज्जगद्व्योमदृष्टञ्चेत् प्रकाशतमसी विना । क्व दृष्टं किञ्च ते पक्षे न प्रत्यक्षं वियत् स्वलु ॥") प्रदीप्तः । तत्पर्य्यायः । स्फुटम् २ स्पष्टम् ३ प्रकटम् ४ उल्वणम् ५ व्यक्तम् ६ । इति हेम- | |

"प्रभूतमल्पं कार्य्यं वा यो नरः
कर्त्तुमिच्छति ।
सर्व्वारम्भेण तत् कुर्य्यात् सिंहादेकं
प्रकीर्त्तितम् ॥"
इति चाणक्यसंग्रहः ॥

**प्रकीर्य्यः**, पुं, (प्रकीर्य्यते इति । प्र + कॄ + अघ्न्यादि-
त्वात् यक् ।) करञ्जभेदः । इत्यमरः ॥ नाटाक-
रञ्ज इति भाषा ॥ घृतकरञ्जः । रीठाकरञ्जः ।
इति राजनिर्घण्टः ॥ (अस्य पर्य्यायो यथा, --
"घृतपूर्णकरञ्जोऽन्यः प्रकीर्य्यः पूतिकोऽपि च ।
स चोक्तः पूतिकरञ्जः सोमवल्कश्च स स्मृतः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**प्रकुलं**, क्ली, (प्रकर्षेण कोलति राशीकरोति
मैत्रीकरोति वेति । प्र + कुल + कः ।) प्रशस्त-
वपुः । इति त्रिकाण्डशेषः ॥

**प्रकृतः**, त्रि, (प्रक्रियते स्मेति । प्र + कृ + क्त ।) प्रक-
रणप्राप्तः । यथा । प्रकृतमनुसरामः । प्रकर्षेण
कृतः । अविकृतः । प्रपूर्ब्बककृधातोः कर्म्मणि
क्तप्रत्ययः ॥ (प्रक्रान्तः । यथा, माघे । ११ । ४२ ।
"प्रकृतजपविधीनामास्यमुद्रश्मिदन्त-
म्मुहुरपि हितमौष्ठ्यैरक्षरैर्लक्ष्यमन्यैः ॥")

**प्रकृतिः**, स्त्री, (प्रक्रियते कार्य्यादिकभनयेति ।
प्र + कृ + क्तिन् ।) स्वभावः । (यथा चरके
विमानस्थाने प्रथमेऽध्याये ।
"तत्र प्रकृतिरुच्यते स्वभावो यः स पुनराहा-

"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहोः ययेदं धार्य्यते जगत् ॥" ५ ॥
इति श्रीभगवद्गीतायां ७ अध्यायः ॥
"एवं श्रोतारमभिमुखीकृत्य इदानीं प्रकृतिद्वारा
सृष्ट्यादिकर्त्तृत्वेन ईश्वरतत्त्वं प्रतिज्ञातं निरू-
पयिष्यन् परापरभेदेन प्रकृतिद्वयमाह भूमिरिति
द्वाभ्याम् । भूम्यादीनि पञ्चभूतसूक्ष्माणि मनः-
शब्देन तत्कारणभूतोऽहङ्कारः बुद्धिशब्देन
तत्कारणं महत्तत्त्वं अहङ्कारशब्देन तत्-
कारणमविद्या इत्येवमष्टधा भिन्ना । यद्वा
भूम्यादिशब्दैः पञ्च महाभूतानि सूक्ष्मैः सह
एकीकृत्य गृह्यन्ते । अहङ्कारशब्देनैवाहङ्कारं
तेनैव तत्कार्य्याणि इन्द्रियाण्यपि गृह्यन्ते बुद्धि-
रिति महत्तत्त्वम् । मनःशब्देन तु मनसैवोन्नेयं
अव्यक्तस्वरूपं प्रधानमित्यनेन प्रकारेण मे
प्रकृतिर्म्मायाख्या शक्तिरष्टधा भिन्ना विभागं
प्राप्ता ।
चतुर्विंशतिभेदभिन्नाप्यष्टस्वेवान्तर्भाव-
विवक्षयाष्टधा भिन्नेत्युक्तम् । तथा च क्षेत्राध्याये
इमामेव प्रकृतिं चतुर्विंशतितत्त्वात्मना प्रपञ्चयि-
ष्यति ।
'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचरा ॥'
इति ॥ ४ ॥
अपरामिमां प्रकृतिमुपसंहरन् परां प्रकृति-
माह अपरेयमिति । अष्टधा प्रकृतिरुक्ता
इयमपरा निकृष्टा जडत्वात् परार्थत्वाच्च । इतः

"गणेशजननी दुर्गा राधा लक्ष्मीः सरस्वती ।
सावित्री च सृष्टिविधौ प्रकृतिः पञ्चमी स्मृता ॥" * ॥
तस्या व्युत्पत्तिर्यथा, --
"प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः ।
सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्त्तिता ॥
गुणे प्रकृष्टे सत्त्वे च प्रशब्दो वर्त्तते श्रुतौ ।
मध्यमे रजसि कृश्च तिशब्दस्तामसः स्मृतः ॥
त्रिगुणात्मस्वरूपा या सर्व्वशक्तिसमन्विता ।
प्रधाना सृष्टिकरणे प्रकृतिस्तेन कथ्यते ॥
प्रथमे वर्त्तते प्रश्च कृतिश्च सृष्टिवाचकः ।
सृष्टेराद्या च या देवी प्रकृतिः सा प्रकी-
र्त्तिता ॥" * ॥
तासां उत्पत्तिः स्वरूपश्च यथा, --
"योगेनात्मा सृष्टिविधौ द्विधारूपो बभूव सः ।
पुंमांश्च दक्षिणार्द्धाङ्गात् वामाङ्गात् प्रकृतिः स्मृता ॥
सा च ब्रह्मस्वरूपा च या या नित्या सनातनी ।
यथात्मा च यथाशक्तिर्यथाग्नौ दाहिका स्मृता ॥
अतएव हि योगीन्द्रः स्त्रीपुंभेदं न मन्यते ।
सर्व्वं ब्रह्ममयं ब्रह्मन् ! शश्वत् पश्यति नारद ! ॥
स्वेच्छामयं स्वेच्छया च श्रीकृष्णस्य सिसृक्षया ।
साविर्ब्भूव सहसा मूलप्रकृतिरीश्वरी ।
तदाज्ञया पञ्चविधा सृष्टिकर्म्मणि वेदतः ॥"
दुर्गाप्रकृतिर्यया, --
"अथ भक्तानुरोधाद्वा भक्तानुग्रहविग्रहा ।
गणेशमाता दुर्गा या शिवरूपा शिवप्रिया ॥
नारायणी विष्णुमाया पूर्णब्रह्मस्वरूपिणी ।
ब्रह्मादिदेवैर्मुनिभिर्म्मनुभिः पूजिता स्तुता ॥
सर्व्वाधिष्ठातृदेवी सा सर्व्वरूपा सनातनी ।
धर्म्मसत्यपुण्यकीर्त्तियशोमङ्गलदायिनी॥
सुखमोक्षहर्षदात्री शोकार्त्तिर्दुर्गनाशिनी ।
शरणागतदीनार्त्तपरित्राणपरायणा॥

रौषधद्रव्याणां स्वभाविको
गुर्व्वादिगुणयोगः ।
तद्यथा माषमुद्गयोः शूकरैणयोश्च ।”)
योनिः ।
लिङ्गम् ॥ स्वामी । अमात्यः । सुहृत् ।
कोषः ।
राष्ट्रम् । दुर्गम् । बलम् । (यथा, मनौ । ९ ।
२९४ ।
“स्वाम्यमात्यौ पुरं राष्ट्रं कोषदण्डौ
सुहृत्तथा ।
सप्त प्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते
॥”
धर्म्माध्यक्षादिसप्तप्रकृतयो यथा, --
“धर्म्माध्यक्षो धनाध्यक्षः कोषाध्यक्षश्च
भूपतिः ।
दूतः पुरोधा दैवज्ञः सप्त प्रकृतयोऽभवन्
॥”)
पौराणां श्रेणयः । इत्यमरः । २ । ८ । १८
॥
(यथा, मार्कण्डेये । १९ । २० ।
“प्रणिपत्य ततस्तस्मै दत्तात्रेयाय
सोऽर्ज्जुनः ।
आनाप्य प्रकतीः सम्यगभिषेकमगृह्णत ॥”
स्वरूपावस्था । यथा, हितोपदेशे । २ ।
१९६ ।
“स्वेदितो मर्द्दितश्चैव रज्जुभिः परिवेष्टितः
।
सुक्तो द्वादशभिर्वर्षैः श्वपुच्छः प्रकृतिं गतः
॥”)
शिल्पी । इति हेमचन्द्रः ॥ शक्तिः । (यथा,
--
“प्रधानं प्रकृतिः
शक्तिर्नित्याचातिकृतिस्तथा ।
एतानि तस्या नामानि शिवमाश्रित्य याः
स्थिताः ॥”
इति पूर्ब्बखण्डे पञ्चमेऽध्याये
शार्ङ्गधरेणोक्तम् ॥)
योषित् । इति शब्दरत्नावली ॥ परमात्मा
। इति
धरणिः । पञ्चभूतानि । करणम् । गुह्यम् ।
जन्तुः ।

सकाशात् परां प्रकृष्टामन्यां जीवभूतां जीव-
स्वरूपां मे प्रकृतिं जानीहि । परत्वे हेतुः
यया
चेतनया क्षेत्रज्ञस्वरूपया स्वकर्म्मद्वारेणेदं
जग-
द्धार्य्यते ॥” ५ ॥ इति तट्टीकायां
श्रीधरस्वामी ॥
सत्त्वरजस्तमसां साम्यावस्था । यथा, --
“सत्त्वं रजस्तमश्चैव गुणत्रयमुदाहृतम् ।
साम्यावस्थितिरेतेषां प्रकृतिः परिकीर्त्तिता
॥
केचित् प्रधानमित्याहुरव्यक्तमपरे जगुः ।
एतदेव प्रजासृष्टिं करोति विकरोति च ॥”
इति मात्स्ये ३ अध्यायः ॥
तत्पर्य्यायः । प्रधानम् २ । इत्यमरः ॥
माया ३
शक्तिः ४ चैतन्यम् ५ । इति राजनिर्घण्टः ॥
तस्या नामान्तराणि यथा, --
“तमोऽव्यक्तं शिवो धाम रजो योनिः
सनातनः ।
प्रकृतिर्विकारः प्रलयः प्रधानं प्रभवाप्ययौ ॥
अनुद्रिक्तमनूनं वाप्यकम्पमचलं ध्रुवम् ।
सदसच्चैव तत्सर्व्वमव्यक्तं त्रिगुणं स्मृतम् ।
ज्ञेयानि नामधेयानि नरैरध्यात्मचिन्तकैः ॥
अव्यक्तनामानि गुणांश्च तत्त्वतो
यो वेद सर्व्वाणि गतीश्च केवलाः ।
विमुक्तदेहः प्रविभागतत्त्ववित्
स मुच्यते सर्व्वगुणैर्निरामयः ॥”
इति महाभारते आश्वमेधिकपर्व्व ॥ * ॥
सा पञ्चविधा ।

तेजःस्वरूपा परमा तदधिष्ठातृदेवता ।
सर्व्वशक्तिस्वरूपा च शक्तिरीशस्य सन्ततम्
॥
सिद्धेश्वरी सिद्धरूपा सिद्धिदा सिद्धिदेश्वरी
।
बुद्धिर्निद्रा क्षुत्पिपासा छाया तन्द्रा दया
स्मृतिः ॥
जातिः शान्तिश्च क्षान्तिश्च
कान्तिर्भ्रान्तिश्च
चेतना ।
तुष्टिः पुष्टिस्तथा लक्ष्मीर्व्वृत्तिर्माता तथैव च
॥
सर्व्वशक्तिस्वरूपा सा कृष्णस्य परमात्मनः
।
उक्तः श्रुतौ श्रुतिगुणश्चातिस्वल्पं यथागमम्
॥
गुणोऽस्त्यनन्तोऽनन्तायाअपराञ्च निशामय
॥” १
लक्ष्मीप्रकृतिर्यथा, --
“शृणु सत्त्वस्वरूपा या पद्मा च परमात्मनः ।
सर्व्वसम्पत्स्वरूपा सा तदधिष्ठातृदेवता ॥
कान्ता दान्ता च शान्ता च सुशीला सर्व्व-
मङ्गला ।
लोभमोहकामरोषाहङ्कारपरिवर्ज्जिता ॥
भक्तानुरक्ता पत्युश्च सर्व्वाभ्यश्च पतिव्रता ।
प्राणतुल्या भगवतः प्रेमपात्री प्रियंवदा ॥

| | | |
|---|---|---|
| एकविंशत्यक्षरपादच्छन्दोविशेषः । माता । इति नानार्थरत्नमाला ॥ प्रत्ययात् प्रथमः । स च द्विधा धातुर्नाम च । इत्यजयपालः ॥ (प्रकर्षेण सृष्ट्यादिकं करोतीति । प्र + कृ + कर्त्तरि क्तिच् ।) भगवतो मायाख्या शक्तिः । सा च परापरभेदेन द्विधा । यथा, -- | | |

सर्व्वशस्यात्मिका सर्व्वजीवनोपायरूपिणी
।
महालक्ष्मीश्च वैकुण्ठे पाताले वरदा सती
॥
स्वर्गे च स्वर्गलक्ष्मीश्च मर्त्यानां
गृहिणान्तथा ।
सर्व्वप्राणिषु द्रव्येषु शोभारूपा मनोहरा ॥
प्रीतिरूपा पुण्यवतां प्रभारूपा नृपेषु च ।
बाणिज्यरूपा बणिजां पापिनां कलहाङ्कुरा
॥
दयामयी भक्तिमतो भक्तानुग्रहकातरा ।
चपले चपला भक्ता सम्पदे च धनाय च ॥
जगज्जीवं मृतं सर्व्वं यया देव्या विना
मुने ! ।
शक्तिर्द्धितीया कथिता वेदोक्ता सर्व्वसम्मता
॥
सर्व्वपूज्या सर्व्ववन्द्या चान्यां मत्तो निशा-
मय ॥" २ ॥ * ॥
सरस्वतीप्रकृतिर्यथा, --
"वाग्बुद्धिविद्याज्ञानाधिष्ठिता परमात्मनः ।
सर्व्वविद्या सर्व्वरूपा सा च देवी सरस्वती
॥
स्वबुद्धिकविता मेधा प्रतिभा स्मृतिदा
सताम् ।
नानाप्रकारसिद्धान्तभेदार्थकल्पनाप्रदा ॥
व्याख्या बोधस्वरूपा च
सर्व्वसन्देहभञ्जिनी ।
विचारकारिणी ग्रन्थकारिणी शक्तिरूपिणी
॥
स्वरसङ्गीतसन्धानतालकारणरूपिणी।
विषयज्ञानवाग्रूपा प्रतिविश्वेषु जीविनाम् ॥
व्याख्या मुद्राकरा शान्ता
वीणापुस्तकधारिणी ।
शृणु सत्त्वस्वरूपा च सुशीला श्रीहरिप्रिया
॥
हिमचन्दनकुन्देन्दुकुमुदाम्भोजसन्निभा ।
जपन्ती परमात्मानं श्रीकृष्णं रत्नमालया
॥
तपःस्वरूपा तपसां फलदात्री तपस्विनी ।

रासेश्वरी सुरसिका रासवासनिवासिनी ।
गोलोकवासिनी देवी गोपीवेशविधायिका ॥
परमाह्लादरूपा च सन्तोषहर्षरूपिणी ।
निर्गुणा च गुणाकारा निर्लिप्तात्मस्वरूपिणी
॥
निरीहा निरहङ्कारा भक्तानुग्रहविग्रहा ।
वेदानुसारध्यानेन विज्ञाता सा विचक्षणैः ॥
दृष्टिदृष्टा लसद्वेशा सुरेन्द्रैर्मुनिपुङ्गवैः ।
वह्निशुद्धांशुकाधाना रत्नालङ्कारभूषिता ॥
कोटिचन्द्रप्रभाजुष्टपुष्टश्रीयुक्तविग्रहा ।
श्रीकृष्णभक्तिदा सैव दात्री च सर्व्वसम्पदाम्
॥
अवतारे च वाराहे वृषभानुसुता च या ।
यत्पादपद्मसंस्पर्शपवित्रा च वसुन्धरा ॥
ब्रह्मादिभिरदृष्टा या सर्व्वदृष्टा च भारते ।
स्त्रीरत्नसारसंभूता कृष्णवक्षःस्थलोज्ज्वला
॥
यथा घने नवघने लोला सौदामिनी मुने ! ।
षष्टिवर्षसहस्राणि प्रतप्तं ब्रह्मणा पुरा ॥
यत्पादपद्मनखरदृष्टये चात्मशुद्धये ।
न च दृष्टापि स्वप्नेऽपि प्रत्यक्षस्यापि का
कथा ॥
तेनैव तपसा दृष्टा भुवि वृन्दावने वने ।
कथिता पञ्चमी देवी सा राधा परिकीर्त्तिता
॥
अंशरूपा कलारूपा कलांशांशसमुद्भवा ।
प्रकृतिः प्रतिविश्वेषु देव्यश्च सर्व्वयोषितः
॥
परिपूर्णतमा पञ्चविधा देवी प्रकीर्त्तिता ।
या याः प्रधानांशरूपा वर्णयामि निशामय
॥" ५ ॥
गङ्गा यथा, --
"प्रधानांशस्वरूपा या गङ्गा भुवनपावनी ।
विष्णुविग्रहसंभूता हररूपा सनातनी ॥
पापिपापेन्धदाहाय ज्वलदिन्धनरूपिणी ।
सुखस्पर्शस्नानपाने निर्व्वाणपददायिनी ॥
गोलोके स्थानप्रस्थानसुखसोपानरूपिणी।
पवित्ररूपा तीर्थानां सरिताञ्च परा वरा ॥
शम्भुमौलिजटामेरुमुक्तापंक्तिस्वरूपिणी ।

नागेश्वरस्यानन्तस्य भगिनी नागपूजिता ।
नागेश्वरी नागमाता सुन्दरी नागवाहिनी ॥
नागेन्द्रगणयुक्ता सा नागभूषणभूषिता ।
नागेन्द्रैर्व्वन्दिता सिद्धयोगिनी नागशायिनी
॥
विष्णुरूपा विष्णुभक्ता विष्णुपूजापरायणा ।
तपःस्वरूपा तपसां फलदात्री तपस्विनी ॥
दिव्यं त्रिलक्षवर्षञ्च तपस्तप्तं यया हरेः ।
तपस्विनीषु पूज्या च तपस्विना च भारते ॥
सर्पमन्त्राधिदेवी च ज्वलन्ती ब्रह्मतेजसा ।
ब्रह्मस्वरूपा परमा ब्रह्मभावेन तत्परा ॥
जरत्कारुमुनेः पत्नी कृष्णांशस्य पतिव्रता ।
आस्तीकस्य मुनेर्म्माता प्रवरस्य तपस्वि-
नाम् ॥" ३ ॥
षष्ठी यथा, --
"प्रधानांशस्वरूपा या देवसेना च नारद ! ।
मातृकासु पूज्यतमा सा च षष्ठी प्रकीर्त्तिता
॥
शिशूनां प्रतिविश्वेषु प्रतिपालनकारिणी ।
तपस्विनी विष्णुभक्ता कार्त्तिकेयस्य
कामिनी ।
षष्ठांशरूपा प्रकृतेस्तेन षष्ठी प्रकीर्त्तिता ॥
पुत्त्रपौत्त्रप्रदात्री च धात्रीति जगतां सती ।
सुन्दरी युवती रम्या सन्ततं भर्त्तुरन्तिके ॥
स्थाने शिशूनां परमा वृद्धरूपा च योगिनी ।
पूजा द्वादशमासेषु यस्या विश्वेषु सन्ततम् ॥
पूजा च सूतिकागारे परा षष्ठदिने शिशोः ।
एकविंशतिमे चैव पूजा कल्याणहेतुकी ॥
शश्वन्नियमिता चैषा नित्या काम्या हुतिः
परा ।
मातृरूपा दयारूपा शश्वद्रक्षणरूपिणी ॥
जले स्थले चान्तरीक्षे शिशूनां स्वप्नगोचरे
॥" ४ ॥
मङ्गलचण्डी यथा, --
"प्रधानांशस्वरूपा च देवी मङ्गलचण्डिका ।
प्रकृतेर्मुख्यसंभूता सर्व्वमङ्गलदा सदा ॥
सृष्टौ मङ्गलरूपा च संहरे कोपरूपिणी ।
तेन मङ्गलचण्डी सा पण्डितैः परिकीर्त्तिता
॥
प्रतिमङ्गलवारेषु प्रतिविश्वेषु वन्दिता ।

बुद्धिविद्यास्वरूपा च सर्व्वसिद्धिप्रदा सदा
॥
यया विना च विश्वौघो मूको मृतसमः सदा
।
देवी तृतीया गदिता श्रुत्युक्ता जगदम्बिका
॥
यथागमं यथाकिञ्चिदपरां संनिबोध मे ॥”
३ ॥ * ॥
सावित्री प्रकृतिर्यथा, --
“माता चतुर्णां वेदानां वेदज्ञानञ्च छन्दसाम्
।
सन्ध्यावन्दनमन्त्राणां तन्त्राणाञ्च विचक्षणा
॥
द्विजातिजातिरूपा च जपरूपा तपस्विनी
।
ब्रह्मण्यतेजोरूपा च सर्व्वसंस्कारकारिणी
॥
पवित्ररूपा सावित्री गायत्री ब्रह्मणः प्रिया ।
तीर्थानि यस्याः संस्पर्शं दर्शं वाञ्छन्ति
शुद्धये ॥
शुद्धस्फटिकसङ्काशा शुद्धसत्त्वस्वरूपिणी
।
परमानन्दरूपा च परमा च सनातनी ॥
परब्रह्मस्वरूपा च निर्व्वाणपददायिनी ।
ब्रह्मतेजोमयी शक्तिस्तदधिष्ठातृदेवता ॥
यत्पादरजसा पूतं जगत् सर्व्वञ्च नारद ! ।
देषी चतुर्थी कथिता पञ्चमीं वर्णयामि ते
॥” ४ ॥
राधाप्रकृतिर्यथा, --
“प्रेमप्राणाधिका देवी या पञ्चप्राणरूपिणी ।
प्राणाधिकप्रियतमा सर्व्वाभ्यः सुन्दरी वरा
॥
सर्व्वसौभाग्ययुक्ता च मानिनी गौरवान्विता
।
वामार्द्धाङ्गस्वरूपा च गुणेन तेजसा समा ॥
परा वरा सारभूता परमाद्या सनातनी ।
परमानन्दरूपा च धन्या मान्या च पूजिता
॥
रासक्रीडाधिदेवी च कृष्णस्य परमात्मनः ।
रासमण्डलसंभूता रासमण्डलमण्डिता ॥

तपःसन्तापिनी सद्यो भारते च तपस्विनाम्
॥
चन्द्रपद्मक्षीरनिभा शृणु सत्त्वस्वरूपिणी ।
निर्म्मला निरहङ्कारा साध्वी नारायण-
प्रिया ॥” १ ॥
तुलसी यथा, --
“प्रधानांशस्वरूपा च तुलसी विष्णुकामिनी
।
विष्णुभूषणरूपा च विष्णुपादस्थिता सती ॥
तपःसङ्कल्पपूजादिसद्यःसम्पादिनीमुने ! ।
सारभूता च पुष्पाणां पवित्रा पुण्यदा सदा ॥
दर्शनस्पर्शनाभ्याञ्च सद्योनिर्व्वाणदायिनी ।
कलौ कलुषशुष्केध्मदाहायाग्निस्वरूपिणी ॥
यत्पादपद्मसंस्पर्शसद्यःपूता वसुन्धरा ।
यत्स्पर्शदर्शं वाञ्छन्ति तीर्थानि चात्मशुद्धये
॥
यया विना च विश्वेषु
सर्व्वकर्म्मातिनिष्फलम् ।
मोक्षदा या मुमुक्षूणां कामिनां सर्व्वकामदा ॥
कल्पवृक्षस्वरूपा च भारते ब्रह्मरूपिणी ।
त्राणाय भारतानाञ्च प्रजानां परदेवता ॥” २
॥
मनसा यथा, --
“प्रधानांशस्वरूपा या मनसा कश्यपात्मजा
।
शङ्करप्रियशिष्या च महाज्ञानविशारदा ॥

पञ्चोपचारैर्योषिद्भिर्भक्त्या च परिपूजिता ॥
पुत्त्रपौत्त्रधनैश्वर्य्ययशोमङ्गलदायिनी ।
लोकसन्तापपापार्त्तिदुःखदारिद्र्नाशिनी ॥
परितुष्टा सर्व्ववाञ्छाप्रदात्री सर्व्वयोषिताम् ।
रुष्टा क्षणेन संहर्त्तुं शक्ता विश्वं महेश्वरी ॥”
५ ॥
काली यथा, --
“प्रधानांशस्वरूपा च काली कमललोचना ।
दुर्गाललाटसम्भूता रणे शुम्भनिशुम्भयोः ॥
दुर्गार्द्धांशस्वरूपा सा गुणेन तेजसा समा ।
कोटिसूर्य्यप्रभाजुष्टपुष्टजाज्वल्यविग्रहा ॥
प्रधाना सर्व्वशक्तीनां वरा बलवती परा ।
सर्व्वसिद्धिप्रदा देवी परमा सिद्धयोगिनी ॥
कृष्णभक्ता कृष्णतुल्या तेजसा विक्रमैर्गुणैः ।
कृष्णभावनया शश्वत् कृष्णवर्णा सनातनी
॥
संहर्त्तुं सर्व्वब्रह्माण्डं शक्ता निश्वासमात्रतः ।
रणं दैत्यैः समं तस्याः क्रीडया लोकरक्षया
॥
धर्म्मार्थकाममोक्षाश्च दातुं शक्ता च पूजिता
।
ब्रह्मादिभिः स्तूयमाना मुनिभिर्मनुभिर्नरैः ॥”
६ ॥

वसुन्धराप्रकृतिर्यथा, --
“प्रधानांशस्वरूपा च प्रकृतेश्च वसुन्धरा
।
आधाररूपा सर्व्वेषां सर्व्वशस्यप्रसूतिका
॥
रत्नाकरा रत्नगर्भा सर्व्वरत्नाकरालया ।
प्रजाभिश्च प्रजेशैश्च पूजिता वन्दिता
सदा ॥
सर्व्वोपजीव्यरूपा च सर्व्वसम्पद्विधायिनी
।
यया विना जगत् सर्व्वं निराधारं चराचरम्
॥ ७ ॥
प्रकृतेश्च कला या यास्ता निबोध
मुनीश्वर ! ।
यस्य यस्य च याः पत्न्यस्ताः सर्व्वा
वर्णयामि ते ॥
स्वाहा देवी वह्निपत्नी त्रिषु लोकेषु
पूजिता ।
यया विना हविर्दानं न ग्रहीतुं सुराः क्षमाः
॥ १
दक्षिणा यज्ञपत्नी च दीक्षा सर्व्वत्र पूजिता
।
यया विना च विश्वेषु सर्व्वं कर्म्म च
निष्फलम् ॥ २ ॥
स्वधा पितॄणां पत्नी च मुनिभिर्मनुभिर्नरैः
।
पूजिता पितृदानञ्च निष्फलञ्च यया विना
॥ ३ ॥
स्वस्तिदेवी वायुपत्नी प्रतिविश्वेषु
पूजिता ।
आदानञ्च प्रदानञ्च निष्फलञ्च यया विना
॥ ४ ॥
पुष्टिर्गणपतेः पत्नी प्रतिविश्वेषु पूजिता ।
यया विना परिक्षीणाः पुमांसो योषितो
भवेत् ॥ ५ ॥
अनन्तपत्नी तुष्टिश्च पूजिता वन्दिता
भवे ।
यया विना न सन्तुष्टाः सर्व्वे लोकाश्च
सन्ततम् ॥ ६

मूर्त्तिश्च धर्म्मपत्नी सा कान्तिरूपा
मनोहरा ।
परमा सा च विश्वौघा निराधारा यया
विना ॥
सर्व्वत्र शोभारूपा सा लक्ष्मीर्मूर्त्तिमती
सती ।
श्रीरूपा मूर्त्तिरूपा च मान्या धन्या च
पूजिता
॥ २२ ॥
कालाग्निरुद्रपत्नी च निद्रा सा
सिद्धयोगिनी ।
सर्व्वलोकाः समाच्छन्ना
मायायोगेनरात्रिषु ॥ २३ ॥
कालस्य तिस्रो भार्य्याश्च सन्ध्या-२४
रात्रि-२५
दिनानि च २६ ।
याभिर्व्विना विधात्रा च संख्यां कर्त्तुं न
शक्यते ॥
क्षुत्-२७ पिपासे २८ मनोभार्य्ये धन्ये
मान्ये
सुपूजिते ।
याभ्यां व्याप्तं जगत् सर्व्वं
युक्तचिन्तितमेव च ॥
प्रभा च २९ दाहिका ३० चैव द्वे भार्य्ये
तेजस-
स्तथा ।
याभ्यां विना जगत् स्रष्टुं विधातापि
नहीश्वरः ॥
कालकन्ये मृत्यु-३१ जरे ३२ प्रज्वरस्य
प्रिये
प्रिये ।
याभ्यां जगत् समुच्छन्नं विधात्रा निर्म्मितं
विधौ ॥
निद्राकन्या च तन्द्रा ३३ सा प्रीति-३४
रन्या
सुखप्रिये ।
याभ्यां व्याप्तं जगत् सर्व्वं
विधिपुत्रविधेर्व्विधौ ॥
वैराग्यस्य हि जाये च श्रद्धा-३५ भक्ती
३६ च

रेवती ६९ सत्यभामा ७० च कालिन्दी ७१
लक्ष्मणा ७२ तथा ॥
जाम्बवती ७३ नाग्नजिती ७४ मित्रबिन्दा ७५
तथापरा ।
लक्ष्मणा ७६ रुक्मिणी ७७ सीता ७८ स्वयं-
लक्ष्मीः प्रकीर्त्तिता ॥
कला योजनगन्धा च ७९ व्यासमाता महासती
।
बाणपुत्त्री तथोषा ८० च चित्रलेखा च ८१
तत्सखी ॥
प्रभावती ८२ भानुमती ८३ तथा मायावती ८४
सती ।
रेणुका ८५ च भृगोर्माता हलिमाता च
रोहिणी ८६ ॥
एकानंशा ८७ च दुर्गांशा श्रीकृष्णभगिनी सती ।
बह्व्यः सन्ति कलाश्चैव प्रकृतेरेव भारते ॥
या याश्च ग्रामदेव्यस्ताः सर्व्वाश्च प्रकृतेः कलाः
।
कलांशांशसमुद्भूताः प्रतिविश्वेषु योषितः ॥ * ॥
योषितामपमानेन प्रकृतेश्च पराभवः ।
ब्राह्मणी पूजिता येन पतिपुत्त्रवती सती ॥
प्रकृतिः पूजिता तेन वस्त्रालङ्कारचन्दनैः ।
कुमारी चाष्टवर्षीया वस्त्रालङ्कारचन्दनैः ।
पूजिता येन विप्रस्य प्रकृतिस्तेन पूजिता ॥ * ॥
सर्व्वाः प्रकृतिसम्भूता उत्तमाधममध्यमाः ।
सत्वांशाश्चोत्तमा ज्ञेयाः सुशोलाश्च पतिव्रताः
॥
मध्यमा राजसाश्चांशास्ताश्च भोग्याः प्रकी-
र्त्तिताः ।
सुखसम्भोगवश्याश्च स्वकार्य्ये तत्पराः सदा ।
अधमास्तामसाश्चांशा अजातकुलसम्भवाः ॥
दुर्मुखाः कुलटा धूर्त्ताः स्वतन्त्राः कलहप्रियाः ।
पृथिव्यां कुलटा याश्च स्वर्गे चाप्सरसां गणाः ॥
प्रकृतेस्तामसांशांशाः पुंश्चल्यः परिकीर्त्तिताः ।
एवं निगदितं सर्व्वं प्रकृतेः परिकीर्त्तनम् ॥ * ॥
ताश्च सर्व्वाः पूजिताश्च पुण्यक्षेत्रे च भारते ।
पूजिता सुरथेनादौ दुर्गा दुर्गतिनाशिनी ॥
द्वितीये रामचन्द्रेण रावणस्य वधार्थिना ॥
तत्पश्चाज्जगतां माता त्रिषु लोकेषु पूजिता ।
जातादौ दक्षपत्न्याञ्च निहत्य दैत्यदानवान् ॥

ईशानपत्नी सम्पत्तिः पूजिता च सुरैर्नरैः
।
सर्व्वलोका दरिद्राश्च विश्वेषु च यया
विना ॥ ७ ॥
धृतिः कपिलपत्नी च सर्व्वैः सर्व्वत्र
पूजिता ।
सर्व्वलोका अधैर्य्याः स्युर्ज्जगत्सु च यया
विना ॥ ८
यमपत्नी क्षमा साध्वी सुशीला
सर्व्वपूजिता ।
समुन्मत्ताश्च रुष्टाश्च सर्व्वलोका यया
विना ॥ ९ ॥
कीडाधिष्ठातृद्देवी च कामपत्नी रतिः
सती ।
केलिकौतुकहीनाश्च सर्व्वलोका यया
विना ॥ १०
सत्यपत्नी सती मुक्तिः पूजिता जगतां
प्रिया ।
यया विना भवे लोका बन्धुतारहिताः
सदा ॥ ११
मोहपत्नी दया साध्वी पूजिता च
जगत्प्रिया ।
सर्व्वे लोकाश्च सर्व्वत्र निष्फुराश्च यया
विना ॥ १२
पुण्यपत्नी प्रतिष्ठा सा पुण्यरूपातिपूजिता
।
यया विना जगत् सर्व्वं जीवन्मृतपरं मुने !
॥ १३
सुकर्म्मपत्नी कीर्त्तिश्च धन्या मान्या च
पूजिता ।
यया विना जगत् सर्व्वं यशोहीनं मृतं यथा
॥ १४
क्रिया उद्योगपत्नी च पूजिता
सर्व्वसम्मता ।
यथा विना जगत् सर्व्वमुच्छन्नमिव
नारद ! ॥ १५ ॥
अधर्म्मपत्नी मिथ्या सा सर्व्वधूर्त्तैश्च
पूजिता ।
यया विना जगन्मुक्तमुच्छन्नं
विधिनिर्म्मितम् ॥
सत्ये चादर्शना या च त्रेतायां
सूक्ष्मरूपिणी ।
पूजिते ।
याभ्यां शश्वज्जगत् सर्व्वं जीवन्मुक्तमिदं
मुने ! ॥
अदिति-३७ र्द्देवमाता च सुरभी २८ च
गवां
प्रसूः ।
दितिश्च ३९ दैत्यजननी कद्रुश्च ४०
विनता ४१
दनुः ४२ ॥
उपयुक्ताः सृष्टिविधौ एताश्च प्रकृतेः
कलाः ॥ *
कलाश्चान्याः सन्ति बह्व्यस्तासु
काश्चिन्निबोध मे ॥
रोहिणी ४३ चन्द्रपत्नी च संज्ञा ४४
सूर्य्यस्य
कामिनी ।
शतरूपा ४५ मनोर्भार्य्या शचीन्द्रस्य च
गेहिनी
४६ ॥
तारा ४७ बृहस्पतेर्भार्य्या वशिष्ठस्य
त्वरु-
न्धती ४८ ।
अहल्या ४९ गौतमस्त्री तु सानसूया ५०
त्रिका-
मिनी ॥
पितॄणां मानसी कन्या मेनका ५१
साम्बिका-
प्रसूः ।
लोपामुद्रा ५२ तथा भूती ५३
कुवेरकामिनी
तथा ॥
वरुणानी ५४ यमस्त्री च
वलेर्ब्बिन्ध्यावली ५५
तथा ।
कुन्ती च ५६ दयमन्ती च ५७ यशोदा
५८
दैवकी ५९ सती ॥
गान्धारी ६० द्रौपदी ६१ सव्या ६२
सावित्री ६३
सत्यवत्प्रिया ।
वृषभानुप्रिया साध्वी राधामाता
कलावती ६४ ॥
ततो देहं परित्यज्य यज्ञे भर्त्तुश्च निन्दया ।
जज्ञे हिमवतः पत्न्यां लेभे पशुपतिं पतिम् ॥
गणेशश्च स्वयं कृष्णः स्कन्दो विष्णुकलोद्भवः ।
बभूवतुस्तौ तनयौ पश्चात्तस्याश्च शौनक ! ॥
लक्ष्मीर्म्मलयभूपेन प्रथमे परिपूजिता ।
त्रिषु लोकेषु तत्पश्चाद्देवतामुनिमानवैः ॥
सावित्री चाश्वपतिना प्रथमे परिपूजिता ।
तत्पश्चात्त्रिषु लोकेषु देवतामुनिमानवैः ॥
आदौ सरस्वती देवी ब्रह्मणा परिपूजिता ।
तत्पश्चात्त्रिषु लोकेषु देवतामुनिमानवैः ॥
प्रथमे पूजिता राधा गोलोके रासमण्डले ।
पौर्णमास्यां कार्त्तिकस्य कृष्णेन परमात्मना ॥
गोपिकाभिश्च गोपैश्च बालिकाभिश्च बालकैः ।
गवां गणैः सुरभ्या च तत्पश्चान्मायया हरेः ॥
तदा ब्रह्मादिभिर्द्देवैर्म्मुनिभिर्मनुभिस्तथा ।
पुष्पधूपादिभिर्भक्त्या पूजिता वन्दिता सदा ॥

| | | |
|---|---|---|
| अर्द्धावयवरूपा च द्वापरे संवृता भिया ॥<br>कलौ महाप्रमत्ता च सर्व्वत्र व्यापिका<br>बलात् ।<br>कपटेन समं भ्रात्रा भ्रमत्येव गृहे गृहे ॥<br>१६ ॥<br>शान्ति-१७ र्लज्जा १८ च भार्य्ये द्वे<br>सुशीलस्य<br>च पूजिता ।<br>याभ्यां विना जगत् सर्व्वमुन्मत्तमिव<br>नारद ! ॥<br>ज्ञानस्य भार्य्यास्तिस्रश्च बुद्धि-१९ र्मेधा<br>२०<br>स्मृति-२१ स्तथा ।<br>याभिर्व्विना जगत् सर्व्वं मूढं मृतसमं तदा<br>॥ | मन्दोदरी ६५ च कौशल्या ६६ सुभद्रा<br>६७<br>कैटभी ६८ तथा । | |

पृथिव्यां प्रथमे देवी सुयज्ञेनैव पूजिता ।
शङ्करेणोपदिष्टेन पुण्यक्षेत्रे च भारते ॥
त्रिषु लोकेषु तत्पश्चादाज्ञया परमात्मनः ।
पुष्पधूपादिभिर्भक्त्या पूजिता मुनिभिः सुरैः ॥
कलया याः समुद्भूताः पूजितास्ताश्च भारते ।
पूजिता ग्रामदेव्यश्च ग्रामे च नगरे मुने ! ॥
एवं ते कथितं सर्व्वं प्रकृतेश्चरितं शुभम् ।
यथागमं लक्षणञ्च किं भूयः श्रोतुमिच्छसि ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे प्रकृतिचरितं
नामानुक्रमः प्रथमोऽध्यायः ॥ * ॥
पुरुषनाम्नो-
ऽग्रे प्रकृतेर्न्नाम्नि उच्चार्य्यता यथा, --
नारद उवाच ।
"आदौ राधांसमुच्चार्य्य पश्चात्कृष्णं
विदुर्ब्बुधाः ।
निमित्तमस्य मां भक्त वद भक्तजनप्रिय ! ॥
श्रीनारायण उवाच ।
निमित्तमस्य त्रिविधं कथयामि निशामय ।
जगन्माता च प्रकृतिः पुरुषश्च जगत्पिता ।
गरीयसीति जगतां माता शतगुणैः पितुः ॥
राधाकृष्णेति गौरीशेत्येवं शब्दः श्रुतौ श्रुतः ।
कृष्णराधेशगौरीति लोके न च कदा श्रुतः ॥
प्रसीद रोहिणीचन्द्र गृहाणार्घ्यमिदं मम ।
गृहाणार्घ्यं मया दत्तं संज्ञया सह भास्कर ! ॥
प्रसीद कमलाकान्त गृहाण मम पूजनम् ।
इति दृष्टं सामवेदे कौथुमे मुनिसत्तम ! ॥
राशब्दोच्चारणाद्देव स्फीतो भवति माधवः ।
धाशब्दोच्चारतः पश्चाद्धावत्येव ससम्भ्रमः ॥
आदौ पुरुषमुच्चार्य्य पश्चात् प्रकृतिमुच्चरेत् ।
स भवेन्मातृगामी च वेदातिक्रमणे मुने ! ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ५०
अध्यायः ॥

**प्रकृष्टं**, त्रि, (प्रकृष्यते इति । प्र + कृष + क्त ।)

प्रकर्षयुक्तम् । तत्पर्य्यायः । मुख्यम् २
प्रमुखम् ३
प्रवर्हम् ४ वर्य्यम् ५ वरेण्यम् ६ प्रवरम् ७
पुरो-
गम् ८ अनुत्तरम् ९ प्राग्रहरम् १० प्रवेकम् ११
प्रधानम् १२ अग्रेसरम् १३ उत्तमम् १४
गृहद्वारपिण्डकम् । वीथी इति विहोन्द
इति
च ख्यातम् । इति प्रघाणशब्दटीकायां
भरत-
मुकुटमथुरेशाः ॥ (यथा, मानवे । ७ ।
२२३ ।
श्लोकटीकायां कुल्लूकभट्टः ।
"ततः सन्ध्योपासनं कृत्वा तस्मात्
प्रदेशात्
कक्षान्तरं
विविक्तप्रकोष्ठावकाशमन्यद्गत्वा
गृहाभ्यन्तरे धृतशस्त्रो रहस्याभिधायिनां
चराणां स्वव्यापारं शृणुयात् ॥")

**प्रक्खरः**, पुं, (प्रक्षर + पृषोदरादित्वात् साधुः ।)

अश्वकवचः । इति शब्दमाला ॥ प्रखर
इति च
पाठः ॥

**प्रक्रन्ता**, [न्तृ] त्रि (प्र + क्रम + तृच् ।) उपक्रम-

कर्त्ता । आरम्भकर्त्ता । इति व्याकरणम् ॥

**प्रक्रमः**, पुं, (प्र + क्रम + भावे घञ् ।) क्रमः ।

अवसरः । इति मेदिनी । मे, ४९ ॥
प्रथमारम्भः ।
तत्पर्य्यायः । उपक्रमः २ । इत्यमरः । ३
। २ । २६ ॥
(यथा, कथासरित्सागरे । १८ । ६३ ।
"पूर्ब्बजैरपि हि प्राची प्रक्रमेण जिता दिशः
।
गङ्गोपकण्ठे वासश्च विहितो हस्तिनापुरे
॥")

**प्रक्रान्तः**, त्रि, (प्र + क्रम + क्तः ।) प्रकरणस्थः ।

आरब्धः । यथा, भट्टिः । ४ । ११ ।
"आतिष्ठद्गु जपन् सन्ध्यां
प्रक्रान्तामायतीगवम् ।
प्रातस्तरां पतत्रिभ्यः प्रबुद्धः प्रणमन्नविम्
॥"

**प्रक्रिया**, स्त्री, (प्र + कृ + शः ।) नृपदीनां चामर-

"प्रक्षेपः पादिकः क्वाथ्यात् स्नेहे
कल्कसमो मतः ।
षोडशाष्टचतुर्भागं वातपित्तकफार्त्तिषु ॥
क्षौद्रं कषाये दातव्यं विपरीता तु शर्करा ।
मात्रा क्षौद्रघृतादीनां स्नेहे क्वाथे च
चूर्णवत् ॥
माषिकं हिङ्गु सिन्धूत्थं जरणाद्यास्तु
शाणिकाः ॥"
इति वैद्यकपरिभाषा ॥
विक्षेपः । यथा, "समित्प्रक्षेपान्तं कर्म्म
कृत्वा ।"
इति भवदेवभट्टः ॥ (प्रहरणम् । यथा,
भाग-
वते । ४ । २९ । १९ ।
"मनोरश्मिर्बुद्धिसूतो हृन्नीडो द्वन्द्वकूवरः ।
पञ्चेन्द्रियार्थप्रक्षेपः सप्तधातुवरूथकः ॥")

**प्रक्षेपणं**, क्ली, (प्र + क्षिप् + ल्युट् ।) प्रकर्षेण

क्षेपः । निक्षेपणम् । (यथा, याज्ञवल्क्ये ।
२ । २६४ ।
"अर्घप्रक्षेपणात् विंशं भागं शुल्कं नृपो
हरेत् ॥")

**प्रक्ष्वेडनः**, पुं, (प्रक्ष्वेडतीति । प्र + क्ष्विड अव्यक्त-

शब्दे + ल्युः ।) नाराचः । इत्यमरः । २ ।
८ । ८७ ॥

**पक्ष्वेडना**, स्त्री, (प्रक्ष्वेडन + टाप् । यद्वा, प्रक्ष्वे-

डनं अव्यक्तशब्दोऽस्त्यस्या इति । अच् ।
टाप् ।)
नाराचः । इत्यमरटीकायां भगीरथः ॥

**प्रक्ष्वेदनः**, पुं, (प्रक्ष्वेदतीति । प्र + क्ष्विद अव्यक्त-

शब्दे + ल्युः ।) नाराचः । इत्यमरटीकायां
भगी-
रथः ॥

**प्रक्ष्वेदना**, स्त्री, (प्रक्ष्वेदन + टाप् ।) नाराचः ।

इत्यमरटीकायां भगीरथः ॥

**प्रखरः**, पुं, (प्रकृष्टः खरः ।) हयसन्नाहः । कुक्कुरः ।

अग्रम् १५ ग्रामणीः १६ अग्रणीः १७ अग्रि-
मम् १८ जात्यम् १९ अग्र्यम् २० अनुत्तमम्
२१
अनवराद्ध्र्यम् २२ प्रेष्ठम् २३ पराद्ध्र्यम् २४
परम् २५ । इति हेमचन्द्रः । ६ । ७४ ॥
(यथा,
मनुः । ७ । १७० ।
"यदा प्रकृष्टा मन्येत सर्व्वास्तु प्रकृतीर्भृशम् ।
अत्युच्छ्रितं तथात्मानं तदा कुर्व्वीत विग्रहम्
॥"
आकृष्टम् । यथा, देवीभागवते । १ । ९ । ८२
।
"रथाङ्गेन तदा च्छिन्ने विष्णुना प्रभविष्णुना ।
जघनोपरि वेगेन प्रकृष्टे शिरसी तयोः ॥")

**प्रकोष्ठः**, पुं, (पुकुष्यतेऽनेनेति । प्र + कुष निष्कर्षे +

"उषिकुषीति ।" उणा० २ । ४ । इति स्थन्
।)
कफोणेरधोमणिबन्धपर्य्यन्तहस्तभागः ।
इत्य-
मरः । २ । ६ । ८० ॥ (यथा, रघुः । ३ । ५९
।
"ततः प्रकोष्ठ हरिचन्दनाङ्किते
प्रमथ्यमानार्णवधीरनादिनीम् ।
रघुः शशाङ्कार्द्धमुखेन पत्रिणा
शरासनज्यामलुनाद्बिडौजसः ॥")

धूननच्छत्रधारणादिव्यापारः ।
तत्पर्य्यायः ।
अधिकारः २ । इत्यमरः । २ । ८ । ३१
॥
अधीकारः ३ नियतविधिः ४ । इति
शब्दरत्ना-
वली ॥ प्रकृष्टकार्य्यम् ॥ (यथा, महाभारते
।
१२ । १११ । ५८ ।
"नोच्छ्रितं सहते कश्चित् प्रक्रिया
वैरकारिका ।
शुचेरपि हि युक्तस्य दोष एव निपात्यते
॥")

**प्रक्लिन्नः**, त्रि, (प्र + क्लिद् + क्त ।) तृप्तः । इति

जटाधरः ॥ प्रकर्षेण क्लेदयुक्तश्च ॥

**प्रक्वणः**, पुं, (प्र + क्वण शब्दे + "क्वणो वीणायाञ्च
।"

३ । ३ । ६५ । इति अप् ।) बीणायाः
क्वणितः ।
बीणाशब्दः । तत्पर्य्यायः । प्रक्वाणः २ ।
इत्य-
मरः । १ । ६ । २४ ॥ सुक्वाणः ३
सुक्वणः ४ उप-
क्वाणः ५ उपक्वणः ६ । इति भरतः ॥

**प्रक्वाणः**, पुं, (प्र + क्वण + घञ् ।) प्रक्वणः ।
इत्य-

मरः । १ । ६ । २४ ॥

**प्रक्षरः**, पुं, (प्रकर्षेण क्षरति सञ्चलतीति । प्र +

क्षर + अच् ।) अश्वसन्नाहः । इति
हेमचन्द्रः ।
४ । ३१७ ॥

**प्रक्षालनं**, क्ली, (प्र + क्षालि + ल्युट् ।) धावनम् ।

मार्ज्जनम् । यथा, --
"धर्म्मार्थं यस्य वित्तेहा वरं तस्य
निरीहता ।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्
॥"
इति हितोपदेशे १ परिच्छेदः ॥

**प्रक्षालितः**, त्रि, (प्र + क्षालि + क्तः ।) धौतः ।

अश्वतरः । अत्यन्तखरे, त्रि । इति मेदिनी
॥

**प्रख्यः**, त्रि, (प्रख्यातीति । प्र + ख्या ख्यातौ +

कः ।) उत्तरपदे तुल्यार्थवाचकः यथा, --
"स्युरुत्तरपदे प्रख्यः प्रकारः प्रतिमो निभः
॥"
इति हेमचन्द्रः ॥
(यथा, महाभारते । १ । २०८ । ३१ ।
"द्विपक्षगरुडप्रख्यैर्द्वारैः सौधैश्च शोभितम्
।
गुप्तमभ्रचयप्रख्यैर्गोपुरैर्म्मन्दरोपमैः ॥"
श्रेष्ठः । यथा, तत्रैव । १२ । २०४ । ८ ।
"ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य
कर्म्मणः ।
यथादर्शतले प्रख्ये पश्यत्यात्मानमात्मनि
॥")

**प्रख्यातः**, त्रि, (प्र + ख्या + क्त ।) प्रकृष्टख्याति-

युक्तः । विख्यातः । यथा, --
"यस्य व्याकरणे वरेण्यघटनास्फीताः
प्रबन्धा दश
प्रख्याता नव वैद्यकेऽपि तिथिनिर्द्धारार्थ-
मेकोऽद्भुतः ॥"
इति मुग्धबोधशेषे तच्छिष्यपदम् ॥

**प्रख्यातवप्तृकः**, पुं, (प्रख्यातो वप्ता जनयिता यस्य ।

कप् ।) विख्यातपितृकः । यथा, --
"स्यादामुष्यायणोऽमुष्यपुत्त्रः
प्रख्यातवप्तृकः ॥"
इति हेमचन्द्रः । ३ । १६६ ॥

**प्रख्यातिः**, स्त्री, प्रकृष्टकीर्त्तिः । विख्यातिः ।
प्रपूर्ब्ब-

ख्याधातोः क्तिन्प्रत्ययनिष्पन्ना ॥

**प्रगण्डः**, पुं, (प्रत्यासन्नो गण्डो ग्रन्थिर्यस्य ।)

कुर्परोपरिकक्षपर्य्यन्तभागः । इत्यमरः । २
। ६ । ८० ॥
कनुइ अवधि वगल पर्य्यन्त इति भाषा ॥

| | मार्ज्जितः । इति हलायुधः ॥<br>**प्रक्षेपः**, पुं, (प्र + क्षिप + घञ् ।) औषधादिषु क्षेपणीयद्रव्यम् । यथा, -- | |
|---|---|---|

**प्रगण्डी**, स्त्री, (प्रगण्ड + गौरादित्वात् ङीष् ।)
बहिःप्राकारः । दुर्गप्राकारभित्तौ शूराणां उप-
वेशनस्थानानि । (यथा, महाभारते । १२ ।
६९ । ४३ ।
“प्रगण्डीः कारयेत् सम्यगाकाशजननीस्तदा
॥”)

**प्रगतजानुः**, त्रि, (प्रगते संश्लिष्टे जानुनी यस्य ।)
प्रगतजानुकः । इत्यमरटीकायां रमानाथः ॥

**प्रगतजानुकः**, त्रि, (प्रगते जानुनी यस्य । कप् ।)
यस्य जानुनोर्म्मध्ये नित्यं कादाचित्कं वा
मह-
दन्तरालं सः । पाफाराक् व्यक्ति इति भाषा
॥
तत्पर्य्यायः । प्रज्ञुः २ । इत्यमरः । २ । ६ ।
४७ ॥
प्रज्ञः ३ प्रगतजानुः ४ । इति भरतः ॥

**प्रगन्धः**, पुं, (प्रकृष्टो गन्धो यस्य ।) पर्पटः । इति
राजनिर्घण्टः ॥

**प्रगल्भः**, त्रि, (प्रगल्भते इति । प्र + गल्भ धाष्टर्य्ये +
पचाद्यच् ।) प्रत्युत्पन्नमतिः । तत्पर्य्यायः ।
प्रतिभान्वितः २ । इत्यमरः । ३ । १ । २५
॥
(यथा, महाभारते । १२ । ६८ । ५८ ।
“प्रज्ञा प्रगल्भं कुरुते मनुष्यं
राजा कृशान् वै कुरुते मनुष्यान् ॥”)

**प्रगल्भता**, स्त्री, प्रगल्भस्य भावः । (प्रगल्भ + तल् ।)
प्रागल्भ्यम् । तत्पर्य्यायः । उत्साहः २
अभि-
योगः ३ उद्यमः ४ प्रौढिः ५ उद्योगः ६
किय-
देतिका ७ अध्यवसायः ८ ऊर्ज्जः ९ । इति
हेमचन्द्रः । २ । २१३ ॥ तस्य लक्षणम् ।
यथा,
“निःशङ्कत्वं प्रयोगेषु बुधैरुक्ता प्रगल्भता ॥”
इत्युज्ज्वलनीलमणिः ॥
(यथा, कुमारे । ६ । ३२ ।
धीराधीराया रतावौदास्यं तर्ज्जनादि च
कोपस्य प्रकाशकम् । प्रौढाधीरा यथा, --
“नो तल्पं भजसे न जल्पसि
सुधाधारानुकारा
गिरो
दृक्पातं कुरुषे न वा परिजने कोपप्रकाश-
च्छलात् ।
इत्थं केतकगर्भगौरि दयिते कोपस्य
संगोपनं
किं स्यादेव नचेत् पुनः सहचरी कुर्व्वीत
साचि
स्मितम् ॥”
प्रगल्भा अधीरा यथा, --
“प्रतिफलमवलोक्य स्वीयमिन्दोः कलायां
हरशिरसि परस्या वासमाशङ्कमाना ।
गिरिशमचलकन्या तर्ज्जयामास कम्प
प्रचलबलयवेल्लत्कान्तिभाजा करेण ॥”
प्रगल्भा धीराधीरा यथा, --
“तल्पोपान्तमुपेयुषि प्रियतमे
साचीकृतग्रीवया
काकुव्याकुलवाचि
साचिहसितस्फुर्जत्कपोल-
श्रिया ।
हस्तन्यस्तकरे पुनर्मृगदृशा
लाक्षारसक्षालित-
प्रोष्ठीपृष्ठमयूखमांसलरुचो विस्फारिता
दृष्टयः ॥”
इति रसमञ्जरी ॥
(तल्लक्षणञ्च यथा साहित्यदर्पणे । ३ ।
१०१ ।
“स्मरान्धा गाढतारुण्या समस्तरतकोविदा
।
भावोन्नता दरव्रीडा प्रगल्भाक्रान्तनायका
॥”
तस्या उदाहरणभेदादिकं तत्रैव विशेषतो
द्रष्ट-
व्यम् ॥)

**प्रगाढं**, त्रि, (प्रकर्षेण गाह्यते स्मेति । प्र + गाह

**प्रगृह्यं**, त्रि, (प्रगृह्यते इति । प्र + ग्रह + “पदास्वै-
रिबाह्यापक्ष्येषु च ।” ३ । १ । ११९ ।
इति क्यप् ।
“ग्रहिज्येति । ६ । १ । १६ । इति
सम्प्रसार-
णम् ।) सन्धिरहितं पदम् । इति मुग्धबोध-
व्याकरणम् ॥ पदपक्षपरतन्त्रबहिर्भूतेषु
गृह्यपदं
निपात्यते । यथा, प्रगृह्यं पदं यत् स्वरेण न
समुन्नीयते । इति दुर्गादासः ॥ “आप्रगृह्यः
स्मृतौ वाक्ये ।” इत्यमरः ॥ प्रगृह्यः
पाणिन्यादि-
कृतप्रगृह्यसंज्ञो ङानुबन्धरहितः आशब्दः
योऽचा न सन्धीयते स इत्यर्थः । स्मृतौ
स्मरणे
यथा । आ ज्ञातं स जटायुरेषः । वाक्ये
यथा ।
आ एवं मन्यसे । इति भरतः ॥

**प्रगे**, व्य, (प्रकर्षेण गीततेऽत्रेति । प्र + गै + के ।)
प्रातः । इत्यमरः । ३ । ४ । १९ ॥ (यथा,
माघे । १२ । १ ।
“इत्थं रथाश्वेभनिषादिनाम्प्रगे
गणो नृपाणामथ तोरणाद्बहिः ।
प्रस्थानकालक्षमवेशकल्पना
कृतक्षणक्षेपमुदैक्षताच्युतम् ॥”)

**प्रगेतनः**, त्रि, (प्रगे प्रातर्भव इति । प्रगे + “साय-
ञ्चिरमिति ।” ४ । ३ । २३ । इति ट्यु तुट्
च ।)
प्रगे भवः । प्रातर्भवः । तत्पर्य्यायः ।
श्वस्तनः
२ । इति राजनिर्घण्टः ॥

**प्रग्रहः**, पुं, (प्रगृह्यते इति प्रगृह्णात्यनेनेति वा ।
प्र + ग्रह + “प्रे वणिजाम् ।” ३ । ३ । ५२
। “रश्मौ
च ।” ३ । ३ । ५३ । इति घञभावपक्षे
“ग्रह-
वृदृनिश्चिगमश्च ।” ३ । ३ । ५८ । इति
अप् ।)

“आर्य्याप्यरुन्धती तत्र व्यापारं कर्त्तुमर्हति ।
प्रायेणैवंविधे कार्य्ये पुरन्ध्रीणां प्रगल्भता ॥”)

**प्रगल्भा**, स्त्री, (प्रगल्भते धृष्टा भवतीति । प्र +

गल्भ धाष्टर्ये + पचादित्वादच् । ततष्टाप् ।)
नायिकाभेदः । अस्या लक्षणम् । पतिमात्र-
विषयकेलिकलापकोविदा । अस्याश्चेष्टा
रति-
प्रीतिः । आनन्दादात्मसंमोहः । रतिप्रीति-
र्यथा, --
“संस्पृश्य स्तनमाकलय्य वदनं संश्लिष्य
कण्ठस्थलं
निष्पीयाधरविम्बमम्बरमपाकृष्य
व्युदस्यालकम् ।
देवस्याम्बुजिनीपतेः समुदयं जिज्ञासमाने
प्रिये
वामाक्षी वसनाञ्चलैः श्रवणयोर्नीलोत्पलं
निह्नुते ॥”
आनन्दादात्मसंमोहो यथा, --
“नखाङ्कितमुरःस्थलेऽधरतले रदस्य क्षतं
च्युता वकुलमालिका विगलिता च मुक्तावली
।
रतान्तसमये मया सकलमेतदालोचितं
स्मृतिः क्व च पतिः क्व च क्व च
तवालिशिक्षा-
विधिः ॥”
सा मानावस्थायां त्रिविधा । धीरा अधीरा
धीराधीरा च । व्यङ्ग्यकोपप्रकाशा धीरा ।
अव्यङ्ग्यकोपप्रकाशा अधीरा ।
व्यङ्ग्याव्यङ्ग्यकोप-
प्रकाशा धीराधीरा । प्रौढाधीरायास्तु रता-
वौदास्यम् । अधीरायास्तर्ज्जनताडनादि ।
+ क्तः । “यस्य विभाषा ।” ७ । २ । १५ ।
इति
न इट् ।) भृशम् । कृच्छ्रम् । इत्यमरः । ३ ।
३ । ४४ ॥ (यथा, महाभारते । ४ । ५९ ।
२६ ।
“अहमिन्द्राद्दृढां मुष्टिं ब्रह्मणः
कृतहस्तताम् ।
प्रगाढे तुमुलं चित्रमभ्यशिक्षं प्रजापतेः ॥”)
दृढम् । इति भरतः ॥ (यथा, महाभारते ।
७ । ९७ । ४८ ।
“तत्रान्तरीक्षे बाणानां प्रगाढानां विशाम्पते
।
संघर्षेण महार्च्चिष्मान् पावकः समजायत
॥”)
घनम् । यथा, सुश्रुते चिकित्सितस्थाने ५
अः ।
“तूणीप्रतूण्योः स्नेहलवणमुदकेन पाययेत्
पिप्पल्यादिचूर्णं वा हिङ्गुयवक्षारप्रगाढं
सर्पि-
र्वर्त्तिभिश्चैनमुपक्रमेत् ॥”)

**प्रगाता**, [ृ] त्रि, (प्र + गै + तृच् ।) उत्तम-

गायकः । इति शब्दरत्नावली ॥ (यथा,
महा-
भारते । ३ । २३९ । ८ ।
“ततो गोपाः प्रगातारः कुशला नृत्यवादिते
।
धार्त्तराष्ट्रमुपातिष्ठन् कन्याश्चैव स्वलङ्कृताः
॥”)

**प्रगुणः**, त्रि, (प्रकर्षेण गुणो यत्र ।) ऋजुः ।

इत्यमरः । ३ । १ । ७२ ॥ (प्रकृष्टगुणवति,
त्रि ।
यथा, रघौ । ९ । ४९ ।
“परिचयं चललक्ष्यनिपातने
भयरुषोश्च तदिङ्गितबोधनम् ।
श्रमजयात् प्रगुणाञ्च करत्यसौ
तनुमतोऽनुमतः सचिवैर्ययौ ॥”)
तुलासूत्रम् । अश्वादिरश्मिः । वन्दी ।
इत्य-
मरः । ३ । ३ । २३६ ॥ नियमनम् ॥
(यथा,
महाभारते । ३ । १७९ । १६ ।
“नहि मे मुच्यते कश्चित् कथञ्चित् प्रग्रहं
गतः ।
गजोवा महिषो वापि षष्ठे काले नरोत्तम !
॥”)
भुजः । रश्मिः । (यथा, गोलाध्याये । ८ ।
“इन्दोः प्राच्यां भवति तरणेः प्रग्रहः किं
प्रती-
च्याम् ॥”)
सुवर्णालुमहीरुहः । इति मेदिनी ॥
कर्णिकार-
वृक्षः । इति राजनिर्घण्टः ॥ (तत्पर्य्यायो
यथा,
“आरेवतो राजवृक्षः प्रग्रहश्चतुरङ्गुलः ।
आरग्वधोऽथ सम्पाकः कृतमालः
सुवर्णकः ॥”
इति वैद्यकरत्नमालायाम् ॥
प्र + ग्रह + भावे अप् । इन्द्रियादीनां
निग्रहः ।
यथा, हरिवंशे भविष्यपर्व्वणि । ८ । ७८ ।
“व्यर्थो हि केवलं तस्य प्रग्रहो वाह्यगोचरः
।
तस्मात् सर्व्वप्रयत्नेन चित्तं रक्ष जनार्द्दन !
॥”
धारणम् । यथा, हरिवंशे भविष्यपर्व्वणि ।
२२ । ४ ।
“उद्धवोऽथ महाबुद्धिरुग्रसेनो महाबलः ।
अन्ये च यादवाः सर्व्वे कवचप्रग्रहे रताः
॥”
अवलम्बनम् । यथा, हरिवंशे । ४१ ।
१६९ ।
“नृपेष्वथ प्रनष्टेषु जगत्यप्रग्रहाः प्रजाः ।
क्षणेन निर्वृते चैवं हत्वा चान्योन्यमाहवे ॥
परस्परहृतस्वाश्च निराक्रन्दाः
सुदुःखिताः ।

एवं कष्टमनुप्राप्ताः कलिसन्ध्यांशके तदा ॥”
विष्णुः । यथा, महाभारते । १३ । १४९ । ९४ ।
“प्रग्रहो निग्रहो व्यग्रोऽनेकशृङ्गो गदाग्रजः ॥”
प्रकृष्टाधिष्ठानादौ, त्रि । यथा, रामायणे । २ । ८२ । १ ।
“तामार्य्यगणसम्पूर्णां भरतः प्रग्रहां सभाम् ।
ददर्श बुद्धिसम्पन्नः पूर्णचन्द्रां निशामिव ॥”
“प्रग्रहा प्रकृष्टैर्व्विशिष्टादिभिर्ग्रहोऽधिष्ठानं यस्यां सा ।” इति तट्टीका ॥ उद्यतबाहुः । यथा, रामायणे । ७ । ९५ । १४ ।
“एवमुक्तस्तु मुनिना प्राञ्जलिः प्रग्रहो नृपः ।
अभ्यवादयत प्राज्ञस्तमृषिं सत्यशालिनम् ॥”)

**प्रग्राहः**, पुं, (प्रगृह्यते इति । प्र + ग्रह + “प्रे बणि-जाम् ।” ३ । ३ । ५२ । “रश्मौ च ।” ३ । ३ । ५३ । इति च घञ् ।) प्रग्रहः । इत्यमरः । ३ । ३ । २३६ ॥ (“प्रे लिप्सायाम् ।” ३ । ३ । ४६ । इति घञ् । प्रग्रहणम् । “पात्रप्रग्राहेण चरति भिक्षुः ।” इति सिद्धान्तकौमुदी ॥)

**प्रग्रीवः**, पुं क्ली, (प्रकृष्टा ग्रीवा ग्रीवाकृतिरस्य ।) गृहादौ प्रान्ते धारणं दारुपङ्क्तिः । वाता-यनम् । इति सुभूतिः । सुखशाला । इत्येके । अश्वशाला । इति केचित् । द्रुमशीर्षकम् । इति

अपसरदरिध्वान्तप्रत्यग्वियत्पथमण्डली
लगनफलदश्रान्तस्वर्णाचलभ्रमविभ्रमः ॥”)

**प्रघातः**, पुं, (पकर्षेण हन्यते यत्रेति । प्र + हन् + घञ् ।) युद्धम् । इति हेमचन्द्र-टीका ॥

**प्रघानः**, पुं, (प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यते इति । प्र + हन + अप् । वृद्धिः । न नत्वम् ।) प्रघणः । इति मुकुटः ॥

**प्रघूर्णः**, पुं, (प्रघूर्णति भ्रमतीति । प्र + घूर्ण + अच् ।) अतिथिः । इति हेमचन्द्रः ॥ प्रकृष्टघूर्ण-युक्ते, त्रि ॥

**प्रघोषकः**, पुं, (प्र + घुष् + भावे घञ् । ततः कन् ।) ध्वनिः । इति जटाधरः ॥

**प्रचक्रं**, क्ली, (प्रगतञ्चक्रमिति प्रादिसमासः ।) चलितसैन्यम् । प्रस्थितसेना । इत्यमरः । २ । ८ । ९६ ॥

**प्रचक्षाः**, [स्] पुं, (प्रकर्षेण चक्षते वक्तीति । प्र + चक्ष + असिः । न ख्यादेशः ।) बृह-स्पतिः । इत्युणादिकोषः ॥

**प्रचण्डः**, पुं, (प्रकर्षेण चण्डः उग्रगुणत्वात् ।) श्वेतकरवीरः । इति मेदिनी ॥ (वत्सप्रीनाम-नृपतेः सुनन्दागर्भजातः पुत्त्रभेदः । यथा, मार्कण्डेये । ११८ । २ ।
“वलीवलाकश्चण्डश्च प्रचण्डश्च सुविक्रमः ॥”)

**प्रचण्डः**, त्रि, (प्रकर्षेण चण्डः ।) दुर्व्वहः । दुर्धर्षः । प्रगल्भः । (यथा, आर्य्यासप्तशत्याम् । ३३० ।
“नाहं वदामि सुतनु त्वमशीला वा प्रचण्ड-चरिता वा ।

**प्रचरः**, पुं, (प्रचरत्यस्मिन्निति । प्र + चर + आधारे अप् ।) पन्थाः । इति धरणिः ॥ प्रकर्षेण गमनञ्च ॥

**प्रचरद्रूपः**, त्रि, व्यक्तरूपः । प्रचारविशिष्टः । प्रच-रत् प्रकाशमानं रूपं स्वरूपं यस्य सः ॥

**प्रचलाकः**, पुं, (प्रकर्षेण चलतीति । प्र + चल + आकन् ।) शराघातः । शिखण्डः । भुजङ्गमः । इति मेदिनी । के, १९६ ॥

**प्रचलाकी**, [न्] पुं, (प्रचलाकः शिखण्डोऽस्या स्तीति । प्रचलाक + इनिः ।) मयूरः । इति मेदिनी ॥ (यथा, उत्तररामचरिते । २ अङ्के ।
“कूजत्कुञ्जकुटीरकौशिकघटाघुत्कारवत् कीचक-
स्तम्बाडम्बरमूकमौकुलिकुलक्रौञ्चावतोऽयं गिरिः ।
एतस्मिन् प्रचलाकिनां प्रचलतामुद्वेजिताः कूजितै-
रुद्वेल्लन्ति पुराणचन्दनतरुस्कन्धेषु कुम्भीनसाः ॥”)

**प्रचलायितं**, त्रि, (प्रचल इवाचरतीति । “कर्त्तुः क्यङ् सलोपश्च ।” ३ । १ । ११ । इति क्यङ् । प्रचलाय-नामधातोः कर्त्तरि क्तः ।) निद्रादिना घूर्णितम् । इत्यमरः । ३ । १ । ३२ ॥

**प्रचारः**, पुं, (प्रचरणमिति । प्र + चर + भावे घञ् ।) प्रचरणम् । व्यक्तः । प्रकाशः । यथा,
“दमनकतरुशाखालम्बिछोलङ्गयुग्मं
तुहिनकिरणविम्बे खञ्जरीटप्रचारः ॥”
इति शङ्कराचार्य्यः ॥
(प्रचरत्यस्मिन्निति । प्र + चर + आधारे घञ् । गवादेश्चरणस्थानम् । यथा, महाभारते । १ । ४० । १८ ।
“परिश्रान्तः पिपासार्त्त आससाद मुनिं वने ।
गवां प्रचारेष्वासीनं फेनमापिबतां पयः ॥”
अश्वानां नेत्ररोगविशेषः । तच्चिकित्सादिकं

गोवर्द्धनः । इत्यमरटीकायां भरतः ॥

**प्रघटावित्**, [द्] त्रि, (प्रघटां आडम्बरं

वेत्तीति । प्रघटा + विद् + क्विप् ।)
शास्त्रगण्डः ।
इति त्रिकाण्डशेषः ॥

**प्रघणः**, पुं, (प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यते

इति । प्र + हन + "अगारैदेशे प्रघणः प्रघा-
णश्च ।" ३ । ३ । ७९ । इति कर्म्मणि अप् ।
नत्वञ्च ।) बहिर्द्वारप्रकोष्ठकम् ।
तत्पर्य्यायः ।
प्रघाणः २ अलिन्दः ३ । इत्यमरः । २ । २ । १२ ॥
आलिन्दः ४ । इति भरतः ॥
ताम्रकुम्भः ।
लौहमुद्गरः । इति मेदिनी । णे, ६० ॥ (गृहा-
भ्यन्तरशय्यार्थपिण्डिका । यथा, --
"प्रघाणप्र घणालिन्दा द्वारबाह्यप्रकोष्ठके ।
गृहाभ्यन्तरशय्यार्थपिण्डिकायामपि त्रयम् ॥"
इति शब्दरत्नावली ॥)

**प्रघनः**, पुं, (प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यते

इति । प्र + हन + अप् । न नत्वम् ।)
प्रघणः ।
इति मुकुटः ॥

**प्रघसः**, पुं, (प्रकर्षेण अत्तीति । प्र + अद + अप् ।

"घञपोश्च ।" २ । ४ । ३८ । इति घस्ला-
देशः ।) असुरः । दैत्यः । इति त्रिकाण्डशेषः ॥
(राक्षसभेदः । यथा, महाभारते । ३ । २८४ । २ ।
"पर्व्वणः पूतनो जम्भः खरः क्रोधवशो हरिः ।
प्ररुजश्चारुजश्चैव प्रघसश्चैवमादयः ॥")

प्रेमस्वभावसुलभं भयमुदयति मम तु
हृदयस्य ॥")
प्रतापी । इति मेदिनी नानार्थरत्नमाला च ॥
(यथा, भागवते । १ । ७ । २१ ।
"ततः प्रादुष्कृतं तेजः प्रचण्डं सर्व्वतोदिशम् ।
प्राणापदमभिप्रेक्ष्य विष्णुं जिष्णुरुवाच ह ॥")

**प्रचण्डमूर्त्तिः**, स्त्री, (प्रचण्डा मूर्त्तिर्यस्य ।) वरुण-

वृक्षः । इति शब्दचन्द्रिका ॥ प्रतापयुक्तशरी-
रश्च ॥

**प्रचण्डा**, स्त्री, (प्रकर्षेण चण्डा ।) दुर्गाया अष्ट-

नायिकान्तर्गतनायिकाभेदः । इति कालीपुरा-
णम् ॥ (सा तु छगलण्डे पीठस्थाने विराजते ।
यथा, देवीभागवते । ७ । ३० । ७३ ।
"छगलण्डे प्रचण्डा तु चण्डिकामरकण्टके ॥")
श्वेतदूर्व्वा । इति राजनिर्घण्टः ॥

**प्रचयः**, पुं, (प्रचीयते इति । प्र + चिञ चयने +

"एरच् ।" ३ । ३ । ५६ । इत्यच् ।) समूहः । इति
शब्दचन्द्रिका ॥ शिथिलाख्यसंयोगः । स च
परिमाणजनकः । यथा, --
"संख्यातः परिमाणाच्च प्रचयादपि जायते ।
प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते ।
परिमाणन्तूलकादौ नाशस्त्वाश्रयनाशतः ॥"
इति भाषापरिच्छेदः ॥
(यष्ट्यादिकरणकपुष्पफलादीनांचयने । यथा,
"वृक्षाग्रस्थानां फलानां यष्ट्या प्रचयं करोति ।"
इति सिद्धान्तकौमुदी । ३ । ३ । ४० ॥)

यथा, अश्ववैद्यके । ३० । ३१ -- ३६ ।
"प्रच्छादयति यद्दृष्टिं मांसं पर्य्यन्तवर्ज्जितम् ।
प्रचारकाख्यं तं विन्द्यात् नेत्ररोत्रं कफात्मकम् ॥
क्षितौ निपात्य तुरगं ततो नेत्रं प्रसारयेत् ।
कृतकर्म्मा भिषग् विद्वान् वडिशेनाक्षिवर्त्मनि ॥
ततस्तीक्ष्णेण शस्त्रेण छिन्द्यात् प्रावरकं बुधः ।
तारकस्य यथा पीडा जायेत न मनागपि ॥
शुद्धं तत् पूरयेन्नेत्रं मधुना सैन्धवेन वा ।
प्रक्षाल्य चोत्थाय ततः शङ्खजां वेधयेत् शिराम् ।
कुष्ठेन वचया चव्या तथा त्रिकटुकेन च ।
प्रतिपानं प्रदातव्यं सुरया लवणैः सह ॥
निर्व्वातं विहितं स्थानं ग्रासे दूर्व्वा च पूजिता ।
गुरुभक्ष्यं न दातव्यं मधुरञ्च विशेषतः ॥")

**प्रचुरं**, त्रि, (प्रचोरतीति । प्र + चुर + "इगुपध-

ज्ञेति ।" ३ । १ । १३५ । इति कः । यद्वा, प्रगत-
ञ्चुराया इति प्रादिसमासः ।) अनेकम् । तत्-
पर्य्यायः । प्रभूतम् २ प्राज्यम् ३ अदभ्रम् ४
बहुलम् ५ बहु ६ पुरुहम् ७ पुरु ८ भूयिष्ठम् ९
स्फिरम् १० भूयः ११ भूरि १२ । इत्यमरः ।
३ । १ । ६३ ॥ (यथा, भागवते । ५ । १३ ।
२१ ।

| | | |
|---|---|---|
| **प्रघाणः**, पुं, (प्रहन्यते इति । प्र + हन् + “अगा- रैकदेशे प्रघणः प्रघाणश्च ।” ३ । ३ । ७९ । अप् । पक्षे वृद्धिश्च ।) प्रघणः । इत्यमरः । २ । २ । १२ ॥ (यथा, नैषधे । १९ । ११ । “नयति भगवानम्भोजस्यानिबन्धनबान्धवः किमपि मघवत्प्रासादस्य प्रघाणमुपघ्नताम् । | | |

"अहो नृजन्माखिलजन्मशोभनं
किं जन्मभिस्त्वपरैरप्यमुष्मिन् ।
न यत् हृषीकेशयशःकृतात्मनां
महात्मनां वः प्रचुरः समागमः ॥")

**प्रचुरपुरुषः**, पुं, (प्रचोरतीति । प्र + चुर कि स्तेये + कः । प्रचुरश्चासौ पुरुषश्चेति ।) चौरः । इति त्रिकाण्डशेषः ॥ (प्रचुरो बहुलः पुरुषश्चेति कर्म्मधारये ।) बहुनरश्च ॥

**प्रचेतसी**, स्त्री, (प्रचेतयति मूर्च्छितमिति । प्र + चित् + णिच् + असच् । गौरादित्वात् ङीष् ।) कट्फलः । इति राजनिर्घण्टः ॥ प्रचेतसः कन्या च ॥

**प्रचेता**, [तृ] पुं, (प्रचेतति युद्धादिस्थाने वीरान् सञ्चिनोतीति । प्र + चित् + तृच् ।) सारथिः । इति हेमचन्द्रः ॥

**प्रचेताः**, [स्] पुं, (प्रचेततीति । प्र + चित + असुन् ।) वरुणः । इत्यमरः । १ । १ । ६४ ॥ (यथा, रघौ । १ । ८० ।
"हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतसः ।
भुजङ्गपिहितद्वारं पातालमधितिष्ठति ॥"
मुनिविशेषः । (यथा, मनौ । १ । ३५ ।
"मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ।
प्रचेतसं वशिष्ठञ्च भृगुं नारदमेव च ॥"
प्रकृष्टं चेतोऽस्य ।) प्रकृष्टहृदि, त्रि । इति मेदिनी ॥ प्राचीनवर्हिराजपुत्त्रः । यथा, --

**प्रचोदितः**, त्रि, (प्र + चुद् + क्तः ।) प्रेरितः ।
यथा, --
"प्रचोदिता येन पुरा सरस्वती ।"
इति श्रीभागवते २ स्कन्धे ४ अध्यायः ॥

**प्रच्छ**, औ श ज्ञीप्से । इति कविकल्पद्रुमः ॥ (तुदा०-पर०-द्विक०-अनिट् ।) ज्ञीप्सा ज्ञातुमिच्छा । ज्ञप क्म इत्यस्यैव ज्ञानपक्षे निष्पादनात् । औ, अप्राक्षीत् । श, पृच्छति वार्त्तां गुरुं शिष्यः । इति दुर्गादासः ॥

**प्रच्छदः**, पुं, (प्रच्छाद्यतेऽनेनेति । प्र + छद + णिच् + करणे घः ।
"छादेर्घेऽद्व्युपसर्गस्य ।"
६ । ४ । ९६ । इति उपधाया ह्रस्वः ।) आच्छादनम् । इति शब्दरत्नावली ॥ (यथा, रघुः । १९ । २२ ।
"प्रच्छदान्तगलिताश्रुबिन्दुभिः
क्रोधभिन्नवलयैर्व्विवर्त्तनैः ॥")

**प्रच्छदपटः**, पुं, प्रकर्षेण छाद्यतेऽनेन स चासौ पटश्चेति । आच्छादनपटः । पाछुडिइति ख्यातः । तत्पर्य्यायः । निचोलः २ । इत्यमरः । २ । ६ । ११६ ॥ निचुलः ३ । इति व्याडिः ॥ निचोलम् ४ । इति रभसः ॥ निचोली ५ । इति राजदेवः ॥ इत्यमरटीकायां भरतः ॥ (यथा, साहित्यदर्पणे ३ परिच्छेदे ।
"वलीभङ्गाभोगैरलकपतितैः शीर्णकुसुमः

डे प्रजः पतिः ।" इति प्रजावतीशब्दटीकायां भरतः ॥

**प्रजनः**, पुं, (प्रजायतेऽनेनेति । प्र + जन् + करणे घञ् । "जनिवध्योश्च ।" ७ । ३ । ३५ । इति न वृद्धिः ।) उपसरः । इत्यमरः । ३ । २ । २५ ॥ द्वे स्त्रीगव्यादिषु पुङ्गवादीनां प्रथमगर्भाधानाय मैथुनाभियोगः । प्रजनं क्लीवमिति केचित् ॥ पशूनां गर्भग्रहणकालः । इति स्वामी ॥ गवां प्रथमगर्भग्रहणाभियोगः । इति सुभूतिः ॥ स्त्रीगवीषु पुङ्गवानां प्रथमगमनमिति सर्व्वस्वम् ॥ किन्तु वीनामुपसरं दृष्ट्वेति भट्टिः । इत्यमरटीकायां भरतः ॥ (मैथुनसाधनोपस्थेन्द्रियम् । यथा, मनुः । १२ । १२१ ।
"वाच्यग्निं मित्रमुत्सर्गे प्रजने च प्रजापतिम् ॥"
प्र + जन् + भावे घञ् । पुत्त्रोत्पादनम् । यथा, मनुः । ९ । १२१ ।
"उपसर्ज्जनं प्रधानस्य धर्म्मतो नोपपद्यते ।
पिता प्रधानं प्रजने तस्माद्धर्म्मेण तं भजेत् ॥"
जनयितरि, त्रि । यथा, भागवते । ८ । ५ । ३४ ।
"ईशो नगानां प्रजनः प्रजानां
प्रसीदतां नः स महाविभूतिः ॥"
तथा, भगवद्गीतायाम् । १० । २८ ।
"प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥")

**प्रजननं**, क्ली, (प्रजायतेऽनेनेति । प्र + जन् + ल्युट् ।) योनिः । (यथा, सुश्रुते । १ । २३ ।
"स्फिक्पायुप्रजननललाटगण्डौष्ठपृष्ठकर्णफल-कोषोदरजत्रुमुखाभ्यन्तरसंस्थाः सुखरोपणीयव्रणाः ॥" प्र + जन् + भावे ल्युट् ।) जन्म । इति मेदिनी । ने, १९१ ॥ (यथा, राजतरङ्गिण्याम् । २ । ६१ ।
"वेधाः परां धुरमुपैति परीक्षकाणामिक्षोः फलप्रजननेन कृतश्रमो यः ॥"
धात्रीकर्म्म । यथा, सुश्रुते शारीरस्थाने । १० अध्याये । "ततः कृतोपधाने मृदुविस्तीर्णे शयने स्थितामाभुग्नसक्थीमुत्तानामशङ्कनीयाश्चतस्रः स्त्रियः परिणतवयसः प्रजननकुशलाः कर्त्तितनखाः परिचरेयुरिति ॥") प्रगमः । इति विश्वः ॥ (यथा, महाभारते । १ । १२० । ३७ ।

“प्राचीनवर्हिर्भगवान् सर्व्वशस्त्रभृतांवरः
।
समुद्रतनयायां वै दश पुत्त्रानजीजनत्
॥
प्रचेतसस्ते विख्याता राजानः
प्रथितौजसः ॥”
इति कौर्म्मे १२ अध्यायः ॥
अपि च ।
“प्राचीनवर्हिस्तत्पुत्त्रः
पृथिव्यामेकराड्बभौ ।
उपयेमे समुद्रस्य लवणस्य स वै सुताम्
॥
तस्मात् सुषाव सामुद्री दश
प्राचीनवर्हिषः ।
सर्व्वे प्रचेतसो नाम धनुर्व्वेदस्य पारगाः
॥
अपृथग्धर्म्मचरणास्तेऽतप्यन्त महत्तपः
।
दश वर्षसहस्राणि समुद्रसलिले शयाः
॥
प्रजापतित्वं संप्राप्य भार्य्या तेषाञ्च
मारिषा ।
अभवद्भयशापेन तस्यां दक्षोऽभवत्
ततः ॥”
इति गारुडे ६ अध्यायः ॥
(पकृष्टज्ञानयुक्ते, त्रि । यथा, ऋग्वेदे ।
२ । २३ । २ ।
“देवाश्चित् ते असुर्य्यप्रचेतसो
बृहस्पते यज्ञियं
भागमानशुः ॥”
“हे बृहस्पते ! प्रचेतसः प्रकृष्टज्ञानास्ते
त्वदीया
देवाश्चिद् देवा अपि ।” इति तद्भाष्ये
सायनः ॥)

**प्रचेलं**, क्ली, (प्रचेलतीति । प्र + चेल् + अच् ।)
पीतकाष्ठम् । इति शब्दचन्द्रिका ॥

**प्रचेलकः**, पुं, (प्रकर्षेण चेलति गच्छतीति । प्र +
चेल् + ण्वुल् ।) घोटकः । इति
शब्दमाला ॥

**प्रचोदनी**, स्त्री, (प्रचोद्यते रोगो ययेति । प्र +
स्त्रियाः सर्व्वावस्थं कथयति रतं
प्रच्छदपटः ॥”)

**प्रच्छना**, स्त्री, (प्रच्छ + बाहुलकात् युच् । टाप्
।)
आमन्त्रणा । इति जटाधरः ॥

**प्रच्छन्नं**, क्ली, (प्र + छद् + क्त ।) अन्तर्द्वारम् ।
इत्यमरः । २ । २ । १४ ॥ आच्छन्ने,
त्रि ॥
(यथा, महाभारते । ३ । ७१ । ३१ ।
“प्रच्छन्ना हि महात्मानश्चरन्ति
पृथिवीमि-
माम् ॥”)

**प्रच्छर्द्दिका**, स्त्री, (प्र + छर्द्द वमने +
“रोगाख्यायां
ण्वुल् बहुलम् ।” ३ । ३ । १०८ । इति
ण्वुल् ।
स्त्रियां टापि अत इत्वम् ।) वमिः ।
इत्यमरः ।
२ । ६ । ५५ ॥ (वमनकारके, त्रि ॥)

**प्रच्छादनं**, क्ली, (प्रच्छाद्यतेऽनेनेति । प्र + छद्
+
णिच् + ल्युट् ।) उत्तरीयवस्त्रम् ।
तत्पर्य्यायः ।
प्रावरणम् २ संव्यानम् ३ उत्तरीयकम्
४ ।
इति हेमचन्द्रः । ३ । ३३५ ॥
(नेत्रच्छदम् ।
यथा, अश्ववैद्यके । २ । १० ।
“प्रच्छादनं भवेद्वर्त्म चाक्षिकूटमतः
परम् ॥”
“वर्त्म नेत्रच्छदं प्रच्छादनं
प्रच्छादनापरनामकं
भवेत् । वर्त्म नेत्रच्छदेऽध्वनीत्यमरः ॥”
इति
तट्टीका ॥ भावे ल्युट् । गोपनम् । यथा,
महा-
भारते । १ । १९१ । १७ ।
“आत्मप्रच्छादनार्थं वै
बाहुवीर्य्यमुपाश्रितः ।
“तस्मात् प्रहेष्याम्यद्य त्वां हीनः प्रजननात्
स्वयम् ।
सदृशात् श्रेयसो वा त्वं विद्ध्यपत्यं यशस्विनि !
॥”
प्रजनयतीति । प्र + जन + ल्युः । प्रजोत्पादके,
त्रि । यथा, वाजसनेयसंहितायाम् । १९ । ४८ ।
“इदं हविः प्रजननं मेऽस्तु ॥”)

**प्रजनिका**, स्त्री, (प्रजनयतीति । प्र + जन +
णिच् + ण्वल् । टापि अत इत्वम् ।) माता ।
इति जटाधरः ॥

**प्रजल्पः**, पुं, (प्र + जल्प + भावे घञ् ।) वाक्य-
विशेषः । यथा, --
“असूयेर्ष्यामदयुजा योऽवधीरणमुद्रया ।
प्रियस्य कौशलोद्गारः प्रजल्पः स तु कथ्यते ॥”
इत्युज्ज्वलनीलमणिः ॥

| | | |
|---|---|---|
| चुद् + णिच् + ल्युट् । ङीप् ।)<br>कण्टकारी ।<br>इत्यमरः । २ । ४ । ९४ ॥ | विप्ररूपं विधायेदं मन्ये मां प्रति युध्यसे ॥”)<br>**प्रच्छादितं**, त्रि, (प्र + छद + णिच् + क्तः ।) आ-च्छादितम् । इति हलायुधः ॥<br>**प्रजः**, पुं, (प्रजायते जायागर्भे इति । प्र + जन् + डः ।) पतिः । “जायायां प्रविश्य पुनर्जायते इति | |

(वहुभाषणम् । यथा, हठयोगप्रदीपिकायाम् । १ । १५ ।
“अत्याहारः प्रयासश्च प्रजल्पो नियमग्रहः ।
जनसङ्गश्च लौल्यञ्च षड्भिर्योगो विनश्यति ॥”)

**प्रजवः**, पुं, (प्रजवनमिति । प्र + जु वेगगतौ + “ऋदोरप् ।” ३ । ३ । ५७ । इति भावे अप् ।) प्रकृष्टवेगः ।
प्रपूर्ब्बजुधातोभविऌप्रत्ययनिष्पन्नः ॥
(यथा, ऋग्वेदे । ७ । ३३ । ८ ।
“वातस्येव प्रजवो नान्येन स्तोमो वसिष्ठा अन्वे-
तवे वः ॥”)

**प्रजवी**, त्रि, (प्रजवतीति । प्र + जु वेगगतौ + “प्रजोरिनिः ।” ३ । २ । १५६ । इति इनिः ।) प्रकृष्टवेगयुक्तः । इत्यमरः । २ । ८ । ७३ ॥

**प्रजा**, स्त्री, (प्रजायते इति । प्र + जन् + “उप-सर्गे च संज्ञायाम् ।” ३ । २ । ९९ । इति डः ।)
सन्ततिः । पितृमातृगुणदोषेण प्रजा विभिन्ना भवति । यथा, अग्निपुराणे ।
“मातृणां शीलदोषेण पितृशीलगुणेन च ।
विभिन्नास्तु प्रजाः सर्व्वा भवन्ति भवशीलि-नाम् ॥”
जनः । इत्यमरः । ३ । ३ । ३२ ॥ (यथा, रघुः । १ । २४ ।
“प्र जानां विनयाघानात् रक्षणात् भरणादपि ।
स पिता पितरस्तासां केवलं जन्महेतवः ॥”
उत्पत्तिः । यथा, ऋग्बेदे । १० । ७२ । ९ ।
“प्रजायै मृत्यवे त्वत्पुनमार्त्ताण्डमाभरत् ॥”)

**प्रजागरः**, पुं, (प्र + जागृ + “ऋदोरप् ।” ३ । ३ । ५७ । इति भावे अप् ।) प्रकर्षेण जागरणम् । इति हलायुधः ॥ यथा, अग्निपुराणे ।
“देवतानां पितृणाञ्च घोरं कृत्वा प्रजागरम् ।
त्रेतायुगे चतुर्थांशे रावणस्तपसः क्षयात् ।
रामं दाशरथिं प्राप्य सगणः क्षयमीयिवान् ॥”
अश्वविशेषे, पुं । यथा, कात्यायनश्रौतसूत्रे । २० । ३ । २० ।
“प्रजाते वायव्यम् ।” “वडवायां कृतरेतःस्कन्दनः
प्रजात इत्युच्यते ॥” इति तद्भाष्यम् ॥)

**प्रजादा**, स्त्री, (प्रजां गर्भदोषनिवारणेन सन्ततिं ददातीति । दा + कः । टाप् ।) गर्भदात्रीक्षुपः । इति राजनिर्घण्टः ॥ प्रजादातरि, त्रि ॥

**प्रजादानं**, क्ली, (प्रजातो जन्मतो दानं शुद्धिरस्य ।)
रजतम् । इति शब्दचन्द्रिका ॥ (प्रजाया दाने
आदाने अदाने च ॥)

**प्रजानन्ती**, स्त्री, (प्रजानातीति । प्र + ज्ञा + शतृ + ङीप् ।) पण्डिता । प्राज्ञी । इति हेम-
चन्द्रः । ३ । १८६ ॥ (विशेषवेत्त्रिर, त्रि । यथा, रामायणे । २ । ७२ । १४ ।
“तं प्रत्युवाच कैकेयी प्रियवद्धोरमप्रियम् ।
अजानन्तं प्रजानन्ती राज्यलोभेन मोहिता ॥”)

**प्रजापः**, पुं, (प्रजाः पातीति । पा रक्षणे + कः ।) राजा । इति हेमचन्द्रः । ३ । ३५४ ॥

**प्रजापतिः**, पुं, (प्रजानां पतिः ।) ब्रह्मा । इत्य-मरः । १ । १ । १७ ॥ (यथा, महाभारते । १ । १ । ३२ ।
“यस्मात् पितामहो जज्ञे प्रभुरेकः प्रजापतिः ।
ब्रह्मा सुरगुरुः स्थाणुर्म्मनुः कः परमेष्ठ्यथ ॥”)
दक्षादिः । (यथा, --
पिता । यथा, --
“जनको जन्मदानाच्च रक्षणाच्च पिता नृणाम् ।
ततो विस्तीर्णकरणात् कलया स प्रजापतिः ॥”
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ४४ अध्यायः ॥ * ॥
स्वनामख्यातकीटविशेषश्च ॥

**प्रजावती**, स्त्री, (प्रजास्त्यस्या इति । प्रजा + मतुप् । मस्य वः । स्त्रियां ङीप् ।)
भ्रातृजाया । इत्यमरः । २ । ६ । ३० ॥
ज्येष्ठभ्रातृपत्नी । इति केचित् । इति भरतः ॥ (यथा, रघुः । १४ । ४५ ।
“प्रजावती दोहदशंसिनी ते
तपोवनेषु स्पृहयालुरेव ।
स त्वं रथी तद्व्यपदेशनेयां
प्रापय्य वाल्मीकिपदं त्यजैनाम् ॥”
प्रियव्रतपत्नी । यथा, मार्कण्डेये । ५३ । १३ ।
“प्रियव्रतात् प्रजावत्यां वीरात् कन्या व्यजायत ॥”)
सन्तानविशिष्टा ॥ (यथा, मार्कण्डेये । ९७ । १८ ।
“साम्प्रतं सर्गकर्त्तृत्वमादिष्टं ब्रह्मणा मम ।
सोऽहं पत्नीमभिप्सामि धन्यां दिव्यां प्रजा-वतीम् ॥”)

**प्रजाहितं**, क्ली, (प्रजायै हितम् ।) जलम् । इति शब्दमाला ॥ प्रजोपकारे, त्रि ॥

**प्रजिनः**, पुं, (प्रकर्षेण जयतीति । प्र + जि + बाहुलकात् नक् ।) वायुः । इति शब्दमाला ॥

**प्रजेश्वरः**, पुं, (प्रजानामीश्वरः ।) राजा । इति त्रिकाण्डशेषः ॥ (यथा, रघुः । ३ । ६८ ।
“तमभ्यनन्दत् प्रथमं प्रबोधितः
प्रजेश्वरः शासनहारिणा हरेः ॥”)

(विष्णुः । यथा, महाभारते । १३ । १४९ । ११५ ।
"आधारनिलयो धाता पुष्पहासः प्रजागरः ॥"
"नित्यबुद्धस्वरूपत्वात् प्रजागरः ।" इति तद्-भाष्यम् ॥ प्राणः । यथा, भागवते । ४ । २७ । १५ ।
"ते चण्डवेगानुचराः पुरञ्जनपुरं यदा ।
हर्त्तुमारेभिरे तत्र प्रत्यषेधत् प्रजागरः ॥"
"प्रजागरः प्राणः ।" इति तट्टीकायां स्वामी ॥)

**प्रजाता**, स्त्री, (प्रजातं प्रजननं सुतादीनामुत्पत्ति-रित्यर्थः । तदस्या अस्तीति । अच् । ततष्टाप् ।)
जातापत्या । प्रसूता । इत्यमरः । २ । ६ । १६ ॥
(यथा, सुश्रुते निदानस्थाने ९ अध्याये ।
"स्त्रीणामपप्रजातानां प्रजातानां तथाहितैः ।
दाहज्वरकरो घोरो जायते रक्तविद्रधिः ॥"
"ततोऽनन्तरं बलवत्तरमिति तस्याञ्च प्रवाह-माणायां स्त्रियः शब्दं कुर्य्युः प्रजाता प्रजाता धन्यं धन्यं पुत्त्रमिति तथास्या हर्षेणाप्यायन्ते प्राणाः । यदा च प्रजाता स्यात् तदैनामवेक्षेत काचिदस्या अमरा प्रपन्ना वाप्रपन्ना वेति ॥"
इति चरके शारीरस्थाने ऽष्टमेऽध्याये ॥

"द्वितीये हि युगे
सर्व्वमक्रोधव्रतमास्थितम् ।
दिव्यं सहस्रवर्षाणामसुरा अभिदुद्रुवुः ॥
तपोविघ्नं शमीकर्त्तुन्तपोविघ्नं महात्मनाम् ।
पश्यन् समर्थश्चोपेक्षाञ्चक्रे दक्षः प्रजापतिः ॥
पुनर्महेश्वरं भागं ध्रुवं दक्षप्रजापतिः ।
प्रायो न कल्पयामास प्रोच्यमानः सुरैरपि ॥"
इति चरके चिकित्सास्थाने
तृतीयेऽध्याये ॥)
महीपालः । इति मेदिनी । ते, २०८ ॥
(इन्द्रः ।
यथा, महाभारते । ३ । १८५ । १६ ।
"अयमेव विधाता हि तथैवेन्द्रः प्रजापतिः ॥")
जामाता । दिवाकरः । वह्निः । त्वष्टा । इति हेम-चन्द्रः ॥ (यथा, वाजसनेयसंहितायाम् । १२ । ६१ ।
"तां विश्वैर्देवैरृतुभिः संविदानः
प्रजापतिर्विश्वकर्म्मा विमुञ्चतु ॥"
मनुः । यथा, मनौ । १० । ७८ ।
"न तौ प्रति हि तान् धर्म्मान् मनुराह प्रजा-पतिः ॥")
दश प्रजापतयो यथा, आह्निकतत्त्वे ।
"मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ।
प्रचेतसं वशिष्ठञ्च भृगुं नारदमेव च ।
देवान् सर्व्वानृषीन्
सर्व्वांस्तर्पयेदक्षतोदकैः ॥"
एकविंशतिप्रजापतयो यथा, --
"ब्रह्मा स्थाणुर्मनुर्दक्षो भृगुर्धर्म्मस्तथा व्यमः ।
मरीचिरङ्गिरात्रिश्च पुलस्त्यः पुलहः क्रतुः ॥
वशिष्ठः परमेष्ठी च विवस्वान् सोम एव च ।
कर्द्दमश्चापि यः प्रोक्तः क्रोधोऽर्व्वाक् क्रीत एव च ॥

**प्रज्ञः**, त्रि, (प्रकर्षेण जानातीति । प्र + ज्ञा + "आतश्चोपसर्गे ।" ३ । १ । १३६ । इति कः ।)
पण्डितः । इति प्राज्ञशब्दटीकायां भरतः ॥
(यथा, माण्डूक्योपनिषदि । ७ ।
"नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम् ॥")
प्रगतजानुकः ।
इति प्रज्ञुशब्दटीकायां भरतः धरणिश्च ॥

**प्रज्ञप्तिः**, स्त्री, (प्र + ज्ञा + णिच् + क्तिन् ।)
सङ्केतम् । इति त्रिकाण्डशेषः ॥ (यथा, सर्व्वदर्शनसंग्रहे पूर्णप्रज्ञदर्शनम् ।
"विष्णोः प्रज्ञप्तिरेवैका शब्दैरेतैरुदीर्य्यते ।
प्रज्ञप्तिरूपो हि हरिः सा च स्वानन्दलक्षणा ॥"
ज्ञानम् । ज्ञापनम् । यथा, भागवते । ३ । २५ । १ ।
"कपिलस्तत्त्वसंख्याता भगवानात्ममायया ।
जातः स्वयमजः साक्षादात्मप्रज्ञप्तये नृणाम् ॥"
जिनविद्यादेवीविशेषः । इति हेमचन्द्रः । २ । १५३ ॥)

**प्रज्ञप्ती**, स्त्री, (प्रज्ञप्ति + वा ङीष् ।) जिनविद्या-देवीविशेषः । इति हेमचन्द्रः । २ । १५३ ॥

**प्रज्ञा**, स्त्री, (प्र + ज्ञा + कः । टाप् ।) बुद्धिः ।
(यथा, रघुः । १ । १५ ।
"आकारसदृशप्रज्ञः प्रज्ञया सदृ शागमः ॥"
एकाग्रता । यथा, पञ्चदश्याम् । ७ । १०६ ।
"तमेव धीरो विज्ञाय प्रज्ञां कुर्व्वीतब्राह्मणाः ॥")
प्राज्ञी । प्रकर्षेण जानाति या । इत्यमरः ॥

| | | |
|---|---|---|
| | एकविंशतिरुत्पन्नास्ते प्रजापतयः स्मृताः ॥”<br>इति महाभारते मोक्षधर्म्मः ॥ * ॥ | |

सरस्वती । इति शब्दरत्नावली ॥
बुद्धिवैदिक-
पर्य्यायः । केतुः १ केतः २ चेतः ३
चित्तम् ४
क्रतुः ५ असुः ६ धीः ७ शचीः ८ माया
९
वयुनम् १० अभिख्या ११ ।
इत्येकादशप्रज्ञा-
नामानि । इति वेदनिवण्टौ ३ अध्यायः
॥

**प्रज्ञाकायः**, पुं, (प्रज्ञा काय इवास्य ।) मञ्जुघोषः ।
इति त्रिकाण्डशेषः ॥

**प्रज्ञाचक्षुः**, पुं, (प्रज्ञा एव चक्षुर्य्यस्य ।) धृत-
राष्ट्रः । इति शब्दरत्नावली ॥ (यथा,
महा-
भारते । १ । १ । १४७ ।
"श्रुत्वा तु मम वाक्यानि बुद्धियुक्तानि
तत्त्वतः ।
ततो ज्ञास्यसि मां सौते
प्रज्ञाचक्षुषमित्युत ॥")

**प्रज्ञानं**, क्ली, (प्रज्ञायतेऽनेनेति । प्र + ज्ञा + ल्युट्
।)
बुद्धिः । (यथा, महाभारते । ३ । १८५ ।
१६ ।
"त्वमेव मुह्यसे मोहात् न प्रज्ञानं
तवास्ति ह ॥")
चिह्नम् । इत्यमरः । ३ । ३ । ११२ ॥
(यथा, महा-
भारते । ५ । ३३ । २६ ।
"नासं पृष्टो ह्युपयुक्ते परार्थे
तत् प्रज्ञानं पथमं पण्डितस्य ॥"
चैतन्यम् । तल्लक्षणं यथा, पञ्चतन्त्रे । ५
। १ ।
"येनेक्षते शृणोतीदं जिघ्रति व्याकरोति च
।
स्वाद्वसादू विजानाति तत्
प्रज्ञानमुदीरितम् ॥")
पण्डिते, त्रि । इति भरतद्विरूपकोषः ॥

पातः २ अनुनयः ३ । इति हेमचन्द्रः ॥
(यथा,
रघौ । ११ । ८९ ।
"राघवोऽपि चरणौ तपोनिधेः
क्षम्यतामिति वदन् समस्पृशत् ।
निर्ज्जितेषु तरसा तरस्विनां
शत्रुषु प्रणतिरेव कीर्त्तये ॥")

**प्रणयः**, पुं, (प्रणयनम् । प्र + णी + "एरच् ।"
३ । ३ । ५६ । इति अच् ।) प्रीत्या प्रार्थनम् ।
तत्पर्य्यायः । प्रश्रयः २ । इत्यमरः । ३ । २ ।
२५ ॥
प्रसरः ३ । इति भरतः ॥ (यथा, रघौ । २ ।
५८ ।
"सम्बन्धमाभाषणपूर्ब्बमाहु-
र्वृत्तः स नौ सङ्गतयोर्व्वनान्ते ।
तद्भूतनाथानुग ! नार्हसि त्वं
सम्बन्धिनो मे प्रणयं विहन्तुम् ॥")
प्रेम । (यथा, भगवद्गीतायाम् । ११ । ४ ।
"सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण हे यादव हे सखेति ।
अजानता महिमानं तवेदं
मया प्रमादात् प्रणयेन वापि ॥")
याच्ञा । विश्रम्भः । निर्व्वाणः । इति मेदिनी
।
ये, ८९ ॥

**प्रणयी**, पुं, (प्रणयोऽस्यास्तीति । प्रणय + इनिः ।)
स्वामी । इति हेमचन्द्रः ॥ प्रणययुक्ते, त्रि ।
(यथा, --
"प्रणयिनि निजनाथे लज्जया मौनभावां
प्रति किमिह नवोढां रौति विर्वोकथाक ॥"
इत्युद्भटः ॥)

**प्रणयिनी**, स्त्री, (प्रणयिन् + ङीप् ।) भार्य्या ।
इति हेमचन्द्रः ॥

**प्रणवः**, पुं, (प्रकर्षेण नूयते स्तूयते आत्मा स्वेष्ट-
देवता वानेनेति । प्र + णुल स्तुतौ + "ऋदो-
रप् ।" ३ । ३ । ५७ । इति अप् । "उपसर्गा-

(यथा, महानिर्व्वाणतन्त्रे । ३ । ३२ ।
"अकारेण जगत्पाता संहर्त्ता स्यादुकारतः ।
मकारेण जगत्स्रष्टा प्रणवार्थ उदाहृतः ॥"
यथा च ।
"अकारो विष्णुरुद्दिष्ट उकारस्तु महेश्वरः ।
मकारेणोच्यते ब्रह्मा प्रणवेण त्रयो मताः ॥"
वेदस्याध्ययनारम्भे अध्ययनसमाप्तौ च
ब्राह्म-
णस्य ॐकारोच्चारकर्त्तव्यत्वमुक्तंयथा
मनौ ।
२ । ७४ ।
"ब्राह्मणः प्रणवं कुर्य्यादादावन्ते च सर्व्वदा ।
स्रवत्यनोङ्कृतं पूर्ब्बं परस्ताच्च विशीर्य्यते
॥")
अस्योद्धारक्रमो यथा, --
"एकमेवाद्वयं ब्रह्म मायया तु चतुष्टयम् ।
रोहिणीतनयो रामः अकाराक्षरसम्भवः ॥
तैजसात्मकप्रद्युम्न उकाराक्षरसम्भवः ।
प्रज्ञात्मको निरुद्धो वै मकाराक्षरसम्भवः ।
अर्द्धमात्रात्मकः कृष्णो यस्मिन् विश्वं
प्रतिष्ठि-
तम् ॥"
इति गोपालतापनीयोपनिषत् ॥ * ॥
स च माङ्गलिकः । यथा, --
"ॐकारश्चाथ शब्दश्च द्वावेतौ ब्राह्मणः पुरा
।
कण्ठं भित्त्वा विनिर्ज्जातौ तेन
माङ्गलिकावुभौ ॥"
इति मुग्धबोधटीकायां दुर्गादासः ॥ * ॥
अस्य माहात्म्यं यथा, --
"विश्वपादशिरोग्रीवं विश्वेशं विश्वभावनम् ।
यत्प्राप्तये महापुण्यमोमित्येकाक्षरं जपेत् ॥
तदेवाध्ययनं तस्य स्वरूपं शृण्वतः परम् ।
अकारश्च तथोकारो मकारश्चाक्षरत्रयम् ॥
एतास्तिस्रः स्मृता मात्राः
सात्वराजसतामसाः ।
निर्गुणा योगिगम्यान्या अर्द्धमात्रा तु सा
स्मृता ॥
गान्धारीति च विज्ञेया गान्धारस्वरसंश्रया ।

**प्रज्ञी**, [न्] त्रि, (प्रज्ञास्त्यस्येति । प्रज्ञा + इनिः ।)

पण्डितः । इति भरतद्विरूपकोषः ॥

**प्रज्ञुः**, पुं, (प्रगते जानुनी यस्य । "प्रसम्भ्यां जानु-

नोर्ज्ञुः ।" ५ । ४ । १२९ । इति ज्ञुः ।)
प्रगत-
जानुकः । इत्यमरः । २ । ६ । ४७ ॥
यस्य
जानुनोर्मध्ये नित्यं कादाचित्कं वा
महदन्त-
रालं तस्मिन् द्वयम् । इति भरतः ॥

**प्रज्वलितः**, त्रि, (प्र + ज्वल + क्तः ।)
प्रकृष्टज्वलन-

विशिष्टः । यथा, --
"अग्निं प्रज्वलितं वन्दे जातवेदं
हुताशनम् ।
सुवर्णवर्णममलं समिद्धं सर्व्वतोमुखम् ॥"
इति भवदेवभट्टः ॥

**प्रडीनं**, क्ली, (प्र + डी नभोगतौ + क्तः ।) पक्षिणां

गतिविशेषः । इत्यमरः । २ । ५ । ३७ ॥
प्रथम-
डीनं प्रडीनं उड्डयनाय क्रमबन्धः ।
तिर्य्यग्-
गमनम् । इत्यन्ये । इति भरतः ॥

**प्रणः**, पुं, (प्र + "नश्च पुराणे प्रात् ।" ५ । ४ । ५

इत्यस्य वार्त्ति० इति नः ।) पुराणः ।
"पुरा-
णार्थे वर्त्तमानात् प्रशब्दात् नो वक्तव्यः
।" इति
सिद्धान्तकौमुदी ॥

**प्रणतः**, त्रि, (प्र + णम + क्तः ।) प्रकर्षेण नतः ।

प्रणतिविशिष्टः । यथा, --
"ध्येयं सदा परिभवघ्नमभीष्टदोहं
तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ।
भृत्यार्त्तिहं प्रणतपालभवाब्धिपोतं
वन्दे महापुरुष ! ते चरणारविन्दम् ॥"
इति श्रीभागवतम् ॥

**प्रणतिः**, स्त्री, (प्रकृष्टं नमनमिति । प्र + णम +

दसमासेऽपि णोपदेशस्य ।" ८ । ४ । १४ ।
इति
णत्वम् । यद्वा, ब्रह्मविष्णुमहेशरूपत्वात् प्रण-
म्यते इति । प्र + णम + कर्म्मणि घञ् ।
संज्ञा-
पूर्ब्बकत्वात् वृद्ध्यभावः । पृषोदरादित्वात्
मस्य
वः ।) ॐकारः । इत्यमरः । १ । ६ । ४ ॥
तस्य पर्य्यायो यथा, --
"ॐकारः प्रणवस्तारो वेदादिर्व्वर्त्तुलो ध्रुवः ।
त्रैगुण्यं त्रिगुणो ब्रह्म सत्यो मन्त्रादिरव्ययः ॥
ब्रह्मबीजं त्रितत्त्वञ्च पञ्चरश्मिस्त्रिदैवतः ॥"
इति बीजवर्णाभिधानम् ॥
अपि च ।
"ॐकारो वर्त्तुलस्तारो वामश्च हंसकारणम् ।
मन्त्राद्यः प्रणवः सत्यं बिन्दुशक्तिस्त्रिदैवतम् ॥
सर्व्वजीवोत्पादकश्च पञ्चदेवो ध्रुवस्त्रिकः ।
सावित्री त्रिशिखो ब्रह्म त्रिगुणो गुणजीवकः ॥
आदिबीजं वेदसारो वेदबीजमतः परम् ।
पञ्चरश्मिस्त्रिकूटे च त्रिभवे भवनाशनः ॥
गायत्त्री बीजपञ्चांशौ मन्त्रविद्याप्रसूः पभुः ।
अक्षरं मातृकासूश्चानादिद्वैतमोक्षदौ ॥"
इति तन्त्रम् ॥ * ॥

पिपीलिकागतिस्पर्शाप्रयुक्ता मूर्द्धिर्न
लक्ष्यते ॥
यदा प्रयुक्त ॐकारः प्रतिनिर्य्याति मूर्द्धनि ।
तदोङ्कारमयो योगी अक्षरे त्वक्षरो भवेत् ॥
प्राणो धनुः शरश्चात्मा ब्रह्म वेध्यमुदाहृतम् ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥
ओमित्येते त्रयो देवास्त्रयो लोकास्त्रयोऽग्नयः
।
विष्णुक्रमास्त्रयश्चैव ऋक्सामानि यजूंषि च
॥
मात्राश्चार्द्धञ्चतस्रस्तु विज्ञेयाः परमार्थतः ।
तत्र युक्तश्च यो योगी स तल्लयमवाप्नुयात् ॥
अकारस्तत्र भूर्लोक उकारश्चोच्यते भुवः ।
सव्यञ्जनो मकारश्च स्वर्लोकः परिकल्प्यते
॥
व्यक्ता तु प्रथमा मात्रा द्वितीयाव्यक्तसंज्ञिका
।
मात्रा तृतीया चिच्छक्तिरर्द्धमात्रा परं पदम् ॥
अनेनैव क्रमेणैता विज्ञेया योगभूमयः ।
ओमित्युच्चारणात् सर्व्वं गृहीतं सदसद्भवेत्
॥
ह्रस्वा तु प्रथमा मात्रा द्वितीया दीर्घसंयुता ।
तृतीया तु प्लुतार्द्धाख्या वचसः सात्त्वगोचरे
॥
इत्येतदक्षरं ब्रह्म परमोङ्कारसंज्ञितम् ।
यस्तं वेद नरः सम्यक् तथा ध्यायति वा
पुनः ॥
संसारचक्रमुत्सृज्य त्यक्तत्रिविधबन्धनः ।
प्राप्नोति ब्रह्मनिलयं परमं परमात्मनि ॥

अक्षीणकर्म्मवन्धस्तु ज्ञात्वा
मृत्युमुपस्थितम् ।
उत्क्रान्तिकाले संस्मृत्य पुनर्योगित्वमृच्छति
॥
तस्मादसिद्धयोगेन सिद्धयोगेन वा पुनः ।
ज्ञेयान्यरिष्टानि सदा येनोत्क्रान्तौ न
सीदति ॥"
इति श्रीमार्कण्डेयपुराणे ॐकारमाहात्म्यम्
॥ * ॥
"यन्न्यूनञ्चातिरिक्तञ्च यच्छिद्रं यदयज्ञियम् ।
यदमेध्यमशुद्धञ्च यातयामञ्च यद्भवेत् ।
तदोङ्कारप्रयुक्तेन सर्व्वञ्चाविकलं भवेत् ॥"
इति तिथ्यादितत्त्वम् ॥ * ॥
"ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम्
॥"
इति श्रीभगवद्गीतायाम् । ८ । १३ ॥

**प्रणादः**, पुं, (प्रणदनमिति । प्र + णद + घञ् ।)
अनुरागजशब्दः । इत्यमरः । १ । ६ । ११
॥
"प्रीतिजनितो मुखकण्ठादिशब्दः । प्रीतिजं
शीत्कृतम् । 'अनुरागकृते शब्दे प्रणादः
शीत्कृतं नृणाम् ।' इति शब्दार्णवः ॥ गुणा-
नुरक्तलोकप्रभवः शब्दः । इति मधुमाधवः ।
अनुरागजन्मा जनशब्दः । इति कलिङ्गः ।"
इत्यमरटीकायां भरतः ॥ तारशब्दः ।
(यथा,
रामायणे । २ । ३८ । २ ।
"तेन तत्र प्रणादेन दुःखितः स महीपतिः ।
चिच्छेद जीविते श्रद्धां धर्म्मे यशसि चात्मनः
॥")
श्रवणामयः । इति मेदिनी । दे, ३६ ॥
शेषस्य
नामान्तरं कर्णनादः । यथा, --
"कर्णस्रोतःस्थिते वाते शृणोति विविधान्
स्वरान् ।
भेरीमृदङ्गशङ्खानां कर्णनादः स उच्यते ॥"
इति माधवकरः ॥

**प्रणामः**, पुं, (प्र + णम + भावे घञ् ।) प्रणतिः ।
जानुभ्याञ्चैव बाहुभ्यां शिरसा वचसा
धिया ।
पञ्चाङ्गकः प्रणामः स्यात् पूजासु
प्रवराविमौ ॥"
इति ॥ * ॥
"गरुडं दक्षिणे कृत्वा कुर्य्यात्तत्पृष्ठतो
बुधः ।
अवश्यञ्च प्रणामांस्त्रीन्
शक्तश्चेदधिकाधि-
कान् ॥" * ॥
तथा च नारदपञ्चरात्रे ।
"सन्धिं वीक्ष्य हरिं चाद्यं गुरून्
स्वगुरुमेव च ।
द्विचतुर्व्विंशदथवा चतुर्व्विंशत्तदर्द्धकम्
॥
नमेत्तदर्द्धमथवा तदर्द्धं सर्व्वदा नमेत्
॥" * ॥
विष्णुधर्म्मोत्तरे ।
"देवार्च्चादर्शनादेव प्रणमेन्मधुसूदनम्
।
स्थानापेक्षा न कर्त्तव्या दृष्ट्वार्च्चां
द्विजसत्तमाः ॥
देवार्च्चादृष्टिपूतं हि शुचि सर्व्वं
प्रकीर्त्तितम् ॥" * ॥
अथ नमस्कारमाहात्म्यम् । नारसिंहे ।
"नमस्कारः स्मृतो यज्ञः सर्व्वयज्ञेषु
चोत्तमः ।
नमस्कारेण चैकेन नरः पूतो हरिं
व्रजेत् ॥"
स्कान्दे ।
"दण्डप्रणामं कुरुते विष्णवे
भक्तिभावतः ।
रेणुसङ्ख्यां वसेत् स्वर्गे मन्वन्तरशतं
नरः ॥"
तत्रैव ब्रह्मनारदसंवादे ।
"प्रणम्य दण्डवद्भूमौ नमस्कारेण
योऽर्च्चयेत् ।
स यां गतिमवाप्नोति न तां
क्रतुशतैरपि ।
पातितं पातकं कृत्स्नं नोत्तिष्ठति पुनः सह ॥"
स्कान्दे देवहूतविकुण्डलसंवादे ।
"तपस्तप्त्वा नरो घोरमरण्ये नियतेन्द्रियः ।
यत् फलं स समाप्नोति तन्नत्वा गरुडध्वजम् ॥
कृत्वापि बहुशः पापं नरो मोहसमन्वितः ।
न याति नरकं नत्वा सर्व्वपापहरं हरिम् ॥"
तत्रैव वेदनिधिस्तुतौ ।
"अपि पापं दुराचारं नरं त्वत्प्रणतं हरे ।
नेक्षन्ते किङ्करा याम्या उलूकास्तपनं यथा ॥"
विष्णुपुराणे श्रीयमस्य निजभटानुशासने ।
"हरिममरगणार्च्चिताङ्घ्रिपद्मं
प्रणमति यः परमार्थतो हि मर्त्यः ।
तमपगतसमस्तपापबन्धं
व्रज परिहृत्य यथाग्निमाज्यसिक्तम् ॥"
ब्रह्मवैवर्त्ते ।
"शरणागतरक्षणोद्यतं
हरिमीशं प्रणमन्ति ये नराः ।
न पतन्ति भवाम्बुधौ स्फुटं
पतितानुद्धरति स्म तानसौ ॥"
अष्टमस्कन्धे च बलिवाक्ये ।
"अहो प्रणामाय कृतः समुद्यमः
प्रपन्नभक्तार्थविधौ समाहितः ।
यल्लोकपालैस्तदनुग्रहोऽमरै-
रलब्धपूर्ब्बोऽपसदेऽसुरेऽर्पितः ॥"
अतएव नारायणव्यूहस्तवे ।
"अहो भाग्यमहो भाग्यमहो भाग्यं नृणामिदम् ।
येषां हरिपदाब्जाग्रे शिरो न्यस्तं यथा तथा ॥"
किञ्च । नारसिंहे श्रीयमोक्तौ ।
"तस्य वै नारसिंहस्य विष्णोरमिततेजसः ।
प्रणामं ये प्रकुर्व्वन्ति तेषामपि नमो नमः ॥"
भविष्योत्तरे च जलधेनुप्रसङ्गे ।
"विष्णोर्द्देवजगद्धातुर्ज्जनार्द्दनजगत्पतेः ।
प्रणामं ये प्रकुर्व्वन्ति तेषामपि नमो नमः ॥"
इत्यादि ॥ * ॥
अथ प्रणामनित्यता । बृहन्नारदीये लुब्ध-
कोपाख्यानारम्भे ।
"सकृद्वा न नमेद्यस्तु विष्णवे शर्म्मकारिणे ।
शबोपमं विजानीयात् कदाचिदपि नालपेत् ॥"
किञ्च । पाद्मे वैशाखमाहात्म्ये यमब्राह्मण-
संवादे ।

प्रणिपातः । भक्तिश्रद्धातिशययुक्तनमस्कारः
।
स तु स्वापकर्षबोधकव्यापारविशेषः । इति
मुग्ध-
बोधटीकायां दुर्गादासः ॥ स चतुर्व्विधः ।
अभि-
वादनम् १ अष्टाङ्गः २ पञ्चाङ्गः ३ करशिरः-
संयोगश्च ४ । प्रथमस्य लक्षणं तच्छब्दे
द्रष्ट-
व्यम् ॥ द्बितीयो यथा, --
“पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा
दृशा ।
वचसा मनसा चैव प्रणामोऽष्टाङ्ग ईरितः ॥”
तस्य फलम् ।
“भूमौ निपत्य यः कुर्य्यात् कृष्णेऽष्टाङ्गनतिं
सुधीः ।
सहस्रंजन्मजं पापं त्यक्त्वा
वैकुण्ठमाप्नुयात् ॥”
तृतीयो यथा, --
“बाहुभ्याञ्चैव जानुभ्यां शिरसा वचसा दृशा
।
पञ्चाङ्गोऽयं प्रणामः स्यात् पूजासु प्रवरा-
विमौ ॥” * ॥
प्रकर्षेण नमनम् । तद्बिधिर्यथा,
कालिकापुराणे ।
“शिरोमत्पादयोः कृत्वा बाहुभ्याञ्च परस्परम्
।
प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात् ॥”
किञ्चागमे ।
“दोर्भ्यां पद्भ्याञ्च जानुभ्यामुरसा शिरसा
दृशा ।
मनसा वचसा चेति प्रणामोऽष्टाङ्ग ईरितः ॥
* ॥
नमस्कारेण चैकेन नरः पूतो हरिं
व्रजेत् ॥”
तत्रैव श्रीशिवोमासंवादे ।
“भूमिमापीड्य जानुभ्यां शिर आरोप्य
वै
भुवि ।
प्रणमेद्यो हि देवेशं सोऽश्वमेधफलं
लभेत् ॥”
तत्रैवान्यत्र ।
“तीर्थकोटिसहस्राणि
तीर्थकोटिशतानि च ।
नारायणप्रणामस्य कलां नार्हन्ति
षोडशीम् ॥
शाठ्येनापि नमस्कारं कुर्व्वतः
शार्ङ्गधन्वने ।
शतजन्मार्ज्जितं पापं तत्क्षणादेव
नश्यति ॥
रेणुमण्डितगात्रस्य कणा देहे भवन्ति
ये ।
तावद्वर्षसहस्राणि विष्णुलोके महीयते
॥”
विष्णुधर्म्मोत्तरे ।
“अभिवाद्य जगन्नाथं कृतार्थश्च तथा
भवेत् ।
नमस्कारक्रिया तस्य
सर्व्वपापप्रणाशिनी ॥
जानुभ्याञ्चैव पाणिभ्यां शिरसा च
विचक्षणः ।
कृत्वा प्रणामं देवस्य सर्व्वान्
कामानवाप्नुयात् ॥”
विष्णुपुराणे ।
“अनादिनिधनं देवं दैत्यदानवदारणम्
।
ये नमन्ति नरा नित्यं न हि पश्यन्ति ते
यमम् ॥
ये जना जगतां नाथं नित्यं नारायणं
द्बिजाः ।
नमन्ति न हि ते विष्णोः स्थानादन्यत्र
गामिनः ॥”
नारदीये ।
“एकोऽपि कृष्णस्य कृतः प्रणामो
दशाश्वमेधावभृथैर्न तुल्यः ।
“पश्यन्तो भगवद्द्वारं नाम शस्त्रपरिच्छदम् ।
अकृत्वा तत्प्रणामादि यान्ति ते नरकौकसः ॥”
* ॥
अथ नमस्कारे निषिद्धानि । विष्णुस्मृतौ ।
“जन्मप्रभृति यत्किञ्चित् पुमान् वै धर्म्ममा-
चरेत् ।
सर्व्वं तन्निष्फलं याति एकहस्ताभिवादनात् ॥”
वाराहे ।
“वस्त्रप्रावृतदेहस्तु यो नरः प्रणमेत माम् ।
श्वित्री स जायते मूर्खः सप्तजन्मनि भामिनि !
॥”
किञ्चान्यत्र ।
“अग्रे पृष्ठे वामभागे समीपे गर्भमन्दिरे ।
जपहोमनमस्कारान्न कुर्य्यात् केशवालये ॥”

|  | दशाश्वमेधी पुनरेति जन्म<br>कृष्णप्रणामी न पुनर्भवाय ॥"<br>हरिभक्तिसुधोदये।<br>"विष्णोर्द्दण्डप्रणामार्थं भक्तेन पतता<br>भुवि। |  |
| --- | --- | --- |

अपि च ।
"सकृद्भूमौ निपतितो न शक्तः प्रणमेन्मुहुः ।
उत्थायोत्थाय कर्त्तव्यं दण्डवत् प्रणिपातनम् ॥"
इति श्रीहरिभक्तिविलासे ८ विलासः ॥
नतिविशेषस्तु यामले ।
"त्रिकोणाकारा सर्व्वत्र नतिः शक्तेः समीरिता ।
दक्षिणाद्वायवीं गत्वा दिशं तस्याश्च शाम्भवीम् ॥
ततश्च दक्षिणां गत्वा नमस्कारस्त्रिकोणवत् ॥" * ॥
एकहस्तप्रणामनिषेधो यथा, --
"एकहस्तप्रणामश्च एकं वापि प्रदक्षिणम् ।
अकाले दर्शनं विष्णोर्हन्ति पुण्यं पुराकृतम् ॥"
इति तन्त्रसारः ॥ * ॥
कायिकवाचिकमानसम्भेदेन प्रत्येकं त्रिविधः ।
यथा, कालिकापुराणे ७० अध्याये ।
"कायिको वाग्भवश्चैव मानसन्त्रिविधः स्मृतः ।
नमस्कारस्तु तत्त्वज्ञैरुत्तमाधममध्यमः ॥
प्रसार्य्य पादौ हस्तौ च पतित्वा दण्डवत् क्षितौ ।
जानुभ्यामवनीं गत्वा शिरसा स्पृश्य मेदिनीम् ॥
क्रियते यो नमस्कार उत्तमः कायिकस्तु सः ।
जानुभ्यां क्षितिं संस्पृष्ट्वा शिरसा स्पृश्य मेदि-
नीम् ॥
क्रियते यो नमस्कारो मध्यमः कायिकस्तु सः ।
पुटीकृत्य करौ शीर्षे दीयते यद्यथा तथा ॥
अस्पृष्ट्वा जानुशीर्षाभ्यां क्षितिं सोऽधम उच्यते ॥
यः स्वयं गद्यपद्याभ्यां घटिताभ्यां नमस्कृतिः ।
क्रियते भक्तियुक्तैर्व्वा वाचिकस्तूत्तमः स्मृतः ॥

पयनाला इति भाषा ॥ (यथा, रामायणे । २ । ६२ । १० ।
"तद्वाक्यं करुणं राज्ञः श्रुत्वा दीनस्य भाषितम् ।
कौशल्या व्यसृजद्बाष्पं प्रणालीव नवोदकम् ॥")

**प्रणिधानं**, क्ली, (प्रणिधीयतेऽनेनेति । प्र + नि + धा + ल्युट् ।) प्रयत्नः । (यथा, महाभारते । ५ । १०३ । २१ ।
"प्रणिधानेन धैर्य्येण रूपेण वयसा च मे ।
मनःप्रविष्टो देवर्षे ! गुणकेश्याः पतिर्व्वरः ॥")
समाधिः । (यथा, रघुः । १ । ७४ ।
"सोऽपश्यत् प्रणिधानेन सन्ततेः स्तम्भकार-
णम् ॥")
पवेशनम् । इति मेदिनी । ने, १९३ ॥ (यथा, सुश्रुते शारीरस्थाने ८ अध्याये ।
"बहुशः क्षता हीनशस्त्रप्रणिधानेनापविद्धा ॥")

**प्रणिधिः** पुं, (प्रणिधीयते इति । प्र + नि + धा + किः ।) चरः । (यथा, देवीभागवते । ५ । ३ । ९ ।
"प्रणिधिं प्रेषयामास हयारिस्तु शचीपतिम् ॥")
प्रार्थनम् । इत्यमरः । ३ । ३ । ९९ ॥ अवधानम् ।
इति भरतः ॥ (बृहद्रथपुत्त्रः । यथा, महा-
भारते । ३ । २१९ । ९ ।
"बृहद्रथस्य प्रणिधिः कश्यपस्य बृहत्तरः ।
भानुरङ्गिरसो धीर ! पुत्त्रो वर्च्चस्य सौरभः ॥")

**प्रणिपातः**, पुं, (प्र + नि + पत + घञ् ।) प्रणतिः ।
इति हेमचन्द्रः ॥ (यथा, कुमारे । ३ । ६१ ।
"तस्याः सखीभ्यां प्रणिपातपूर्ब्बं

**प्रततिः**, स्त्री, (प्रतनोतीति । प्र + तन + क्तिच् ।) विस्तृतिः । वल्ली । इति मेदिनी । ते, १२९ ॥

**प्रतती**, स्त्री, (प्रतति + ङीष् ।) व्रतती । इत्य-
मरटीकायां भरतः ॥

**प्रतनः**, त्रि, (प्र + "नश्च पुराणे प्रात् ।" ५ । ४ । २५ । इत्यस्य वार्त्ति० इति चकारात् ट्यु तुट्
च ।) पुरातनः । इत्यमरः । ३ । १ । ७७ ॥

**प्रतर्कणं**, क्ली, (प्र + तर्क + भावे ल्युट् ।) वितर्कः ।
तत्पर्य्यायः । तर्कः २ वितर्कः ३ व्यूहः ४ वहः ५
ऊहः ६ वितर्कणम् ७ अध्याहारः ८ अध्या-
हरणम् ९ ऊहनम् १० । इति शब्दरत्नावली ॥

**प्रतलं**, क्ली, (प्रकृष्टं तलम् ।) पातालभेदः । इति मेदिनी । ले, १०६ ॥

**प्रतलः**, पुं, (प्रकृष्टं तलमस्य ।) विस्तृताङ्गुलि-
पाणिः । चपेटः । इत्यमरः । २ । ६ । ८४ ॥

**प्रतानः**, पुं, विस्तृतः । प्रपूर्ब्बतनधातोर्घञ्प्रत्यय-
निष्पन्नः ॥ (तन्तुः । यथा, रघुः । २ । ८ ।
"लताप्रतानोद्ग्रथितैः स केशै-
रधिज्यधन्वा विचचार दावम् ॥")
वायुरोगविशेषः । तस्य संज्ञान्तरं अपतान-
कम् । यथा, --
"दृष्टिं संस्तभ्य संज्ञाञ्च हत्वा कण्ठेन कूजति ।
हृदि मुक्ते नरः स्वास्थ्यं याति मोहं वृते पुनः ।
वायुना दारुणं प्राहुरेके तदपतानकम् ॥"
इति माधवकरः ॥

**प्रतानिनी**, स्त्री, (प्रतानो विस्तारोऽस्त्यस्या इति ।

पौराणिकैर्वैदिकैर्व्वा मन्त्रैर्य्या क्रियते नतिः ।
मध्यमोऽसौ नमस्कारो भवेद्वाचनिकः सदा ।
स वाचिकोऽधमो ज्ञेयो नमस्कारेषु पुत्त्रकौ ॥
*
इष्टमध्यानिष्टगतैर्मनोभिस्त्रिविधं पुनः ।
मननं मानसं प्रोक्तमुत्तमाधममध्यमम् ॥
त्रिविधे च नमस्कारे कायिकश्चोत्तमः स्मृतः ।
कायिकैस्तु नमस्कारैर्देवास्तुष्यन्ति नित्यशः ॥
अयमेव नमस्कारो दण्डादिप्रतिपत्तिभिः ।
प्रणाम इति विज्ञेयः स पूर्ब्बं प्रतिपादितः ॥" * ॥
शूद्रपूजितदेवताप्रणामनिषेधो यथा, --
"यः शूद्रेणार्च्चितं लिङ्गं विष्णुं वा प्रणमेद्यदि ।
निष्कृतिस्तस्य नास्त्येव प्रायश्चित्तायुतैरपि ॥"
इति कर्म्मलोचनम् ॥

**प्रणाय्यः**, त्रि, (प्रणीयते इति । प्र + णी + ण्यत् ।
"प्रणाय्योऽसम्मतौ ।" ३ । १ । १२८ । इति साधुः ।) असम्मतः । (यथा, भट्टिः । ६ । ६६ ।
"न प्रणाय्यो जनः कश्चित् निकाय्यं तेऽधि-तिष्ठति ॥")
अभिलाषविवर्ज्जितः । इति मेदिनी । ये, ९३ ॥
साधुः । इति त्रिकाण्डशेषः ॥ प्रियः । इति मुग्धबोधव्याकरणम् ॥

**प्रणालः**, पुं, (प्रणल्यते जलादिर्निःसार्य्यतेऽनेनेति ।
प्र + णल + घञ् ।) जलनिःसरणमार्गः । इत्य-
मरः । १ । १० । ३५ ॥ पयनाला इति भाषा ॥

**प्रणाली**, स्त्री, (प्रणाल + गौरादित्वात् ङीष् ।)
जलनिःसरणमार्गः । इत्यमरः । १ । १० । ३५ ॥

स्वहस्तलूनः शिशिरात्ययस्य ।
व्यकीर्य्यत त्र्यम्बकपादमूले
पुष्पोच्चयः पल्लवभङ्गभिन्नः ॥")

**प्रणिहितं**, त्रि, (प्र + नि + धा + क्तः ।) स्थापि-
तम् । प्राप्तम् । समाहितम् । इति मेदिनी । ते, २०३ ॥ (मिलितम् । यथा, रामायणे । ४ । २५ । ३४ ।
"ततः प्रणिहिताः सर्व्वा वानर्य्योऽस्य वशानुगाः ।
चुक्रुशुर्व्वीरवीरेति भूयः क्रोशन्ति ताः प्रियम् ॥")

**प्रणीतं**, त्रि, (प्र + णी + क्त ।) उपसम्पन्नम् ।
पाकेन रूपरसादिसम्पन्नव्यञ्जनादि। इत्यमर-
भरतौ । क्षिप्तम् । विहितम् । प्रवेशितम् । इति
मेदिनी । ते, १२४ ॥ कृतम् । इति हेमचन्द्रः ॥

**प्रणीतः**, पुं, (प्रणीयते इति । प्र + णी + क्त ।)
संस्कृतानलः । यज्ञे मन्त्रादिना संस्कृताग्निः ।
इत्यमरः । २ । ७ । २० ॥

**प्रणीता**, स्त्री, (प्रणीत + टाप् ।) यज्ञपात्र-
विशेषः । इति मेदिनी । ते, १२४ ॥

**प्रणुतं**, त्रि, (प्र + णु + क्त ।) स्तुतम् । इत्यमरः ।
३ । १ । १०९ ॥

**प्रणेयः**, त्रि, (प्रकर्षेण नेतुं शक्यः । प्र + णी +
"अचो यत् ।" ३ । १ । ९७ । इति यत् ।) वश्यः । इत्यमरः । ३ । ३ । २५ ॥ (यथा, महाभारते । १२ । ५६ । ६० ।
"अस्मत्प्रणेयो राजेति लोकांश्चैव वद-न्त्युत ॥")

प्रतान + इनिः ।) प्रतानवती ।
विस्तृतलतादिः ।
इत्यमरभरतौ ॥

**प्रतापः**, पुं, (प्र + तप् + घञ् ।) कोषदण्डज-
तेजः । कोषो धनं दण्डो दमः तद्धेतुत्वात् सैन्य-
मपि दण्डः ताभ्यां यत्तेजो जायते सः । इति
भरतः ॥ तत्पर्य्यायः । प्रभावः २ । इत्यमरः ।
२ । ८ । २० ॥ (यथा, मनुः । ९ । ३१० ।
"प्रतापयुक्तस्तेजस्वी नित्यं स्यात् पापकर्म्मसु ॥"
पौरुषम् । यथा, रामायणे । १ । १ । ११ ।
"समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान् ॥"
"प्रतापः स्मृतिमात्रेण रिपुहृदयविदारणक्षमं पौरुषं तद्वान् । 'प्रतापौ पौरुषातपौ ।' इति कोषः ।" इति तट्टीकायां रामानुजः ॥)
तापः ।
(यथा, रघुः । ४ । १२ ।
"यथा प्रह्लादनाच्चन्द्रः प्रतापात् तपनो यथा ।
तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥")
तेजः । इति मेदिनी । पे, २० ॥ अर्कवृक्षः । इति
राजनिर्घण्टः ॥ (युवराजस्य छत्रे, क्ली । यथा,
भोजराजकृतयुक्तिकल्पतरौ ।
"नीलो दण्डश्च वस्त्रञ्च शिरःकुम्भस्तु कानकः ।
सौवर्णं युवराजस्य प्रतापं नाम विश्रुतम् ॥")

**प्रतापनं**, क्ली, (प्र + तप + णिच् + भावे ल्युट् ।)
पीडनम् । इति शब्दरत्नावली ॥ (यथा, सुश्रुते । १ । २६ ।
"कानकं राजतं ताम्रं रैतिकं त्रपु सीसकम् ।

**प्रतापनः**, पुं, (प्रतापयतीति । प्र + तप् + णिच् + ल्युः ।) नरकविशेषः । इति शब्दरत्नावली ॥
स च कुम्भीपाकः । इति श्रीभागवतम् ॥ (क्लेश-
दायके, त्रि । यथा, सुश्रुते उत्तरतन्त्रे ३९ अध्याये ।
"रुद्रकोपाग्निसम्भूतः सर्व्वभूतप्रतापनः ॥")

**प्रतापसः**, पुं, (प्रतापं चक्षुस्तेजः स्यति नाशय-तीति । सो + कः ।) शुक्लार्कवृक्षः । इत्यमरः ।
२ । ४ । ८१ ॥ (यथा, भावप्रकाशे ।
"श्वेतार्को गणरूपः स्यान्मन्दारो वसुकोऽपि च ।
श्वेतपुष्पो सदापुष्पः सबालार्कः प्रतापसः ॥"
प्रकृष्टस्तापसश्च ॥)

**प्रतारकः**, त्रि, (प्रतारयतोति । प्र + तॄ + णिच् + ण्वुल् ।) वञ्चकः । धूर्त्तः । यथा । यो यस्य
प्रतारकः स तस्याध्यापकः ॥ (यथा च ब्रह्मवैवर्त्ते
प्रकृतिखण्डे २७ अध्याये ।
"शश्वन्नास्तीति वादी यो मिथ्यावादी प्रतारकः ।
देवद्वेषी गुरुद्वेषी स गोहत्यां लभेद्ध्रुवम् ॥")

**प्रतारणं**, क्ली, (प्र + तॄ + णिच् + भावे ल्युट् ।) प्रतारणा । तत्पर्य्यायः । वञ्चनम् २ व्यलीकम् ३
अभिसन्धानम् ४ । इति हेमचन्द्रः । ३ । ४३ ॥
(यथा, राजतरङ्गिण्याम् । १ । १५७ ।
"सूदे दामोदरीये यत्तस्यासीत् स्वकृतं पुरम् ।
इत्यस्य वार्त्तिकोक्त्या टिठन् । कार्षापणिकः ।
इति सिद्धान्तकौमुदी ॥

**प्रतिकर्म्म**, [न्] क्ली, (प्रत्यङ्गं प्रतिख्यातं वा कर्म्म । शाकपार्थिवादिवत् समासः ।) प्रसा-धनम् । वेशः । इत्यमरः । २ । ६ । ९९ ॥ (यथा,
माघे । ५ । २७ ।
"आस्तीर्णतल्पपरचितावसथः क्षणेन
वेश्याजनः कृतनवप्रतिकर्म्मकाम्यः ॥"
प्रतीकारः । यथा, महाभारते । ४ । ५६ । १८ ।
"उषिताः स्मो वने वासं प्रतिकर्म्मचिकीर्षवः ।
कोपं नार्हसि नः कर्त्तुं सदा समरदुर्ज्जय ! ॥"
अङ्गसंस्कारः । इति क्वचिदमरे । २ । ६ । १२१ ॥)

**प्रतिकायः**, पुं, (प्रतिगतः कायो यत्र ।) शर-व्यम् । प्रतिरूपकम् । इति जटाधरः ॥

**प्रतिकारः**, पुं, (प्रति + कृ + घञ् ।) प्रतीकारः । इति शब्दरत्नावली ॥ (यथा, रघुः । ८ । ४० ।
"प्रतिकारविधानमायुषः
सति शेषे हि फलाय कल्पते ॥")

**प्रतिकाशः**, त्रि, (प्रति + काश + घञ् ।) प्रती-काशः । इत्यमरटीकायां भानुदीक्षितः ॥

**प्रतिकासः**, त्रि, (प्रति + कास + घञ् ।) प्रती-काशः । इत्यमरटीकायां रमानाथः ॥

**प्रतिकूपः**, पुं, (प्रतिरूपः कूपः ।) परिखा । इति हारावली । १७४ ॥

**प्रतिकूलं**, त्रि, (प्रतीपं कूलादिति ।) अननुकूलम् । विपक्षः । तत्पर्य्यायः । प्रसव्यम् २ अपसव्यम् ३
अपष्ठु ४ । प्रतीपम् । इत्यमरः । ३ । १ । ८४ ॥
(यथा, मनुः । ९ । २७५ ।

**प्रतिक्षिप्तः**, त्रि, (प्रतिक्षिप्यते स्मेति । प्रति + क्षिप + क्तः ।) वारितः । प्रेषितः । इति
मेदिनी । ते, २०५ ॥ अधिक्षिप्तः । इत्यमरः ।
३ । १ । ४२ ॥ "द्वे कृताधिक्षेपे । स्पर्द्धया पर-
गुणं प्रति दुर्व्वचनमधिक्षेपः अधिक्षिप्यते स्म
अधिक्षिप्तः क्तः एवं प्रतिक्षिप्तः । कस्यचित्
शौर्य्यादिकं प्रति स्पर्द्धमानेन दुर्व्वचनमधिक्षेपः
स यस्य कृतः सोऽधिक्षिप्तः । इति मुकुटोऽपि ।
केचित्तु । द्वे प्रेषिते । आहूय प्रेषितो यस्तु
प्रतिक्षिप्तः स उच्यते । इति कृष्णदासः ।
इत्याहुः ।" इति भरतः ॥

**प्रतिगतं**, क्ली, (प्रतिमुखं गतं गमनम् ।) पक्षि-गतिविशेषः । यथा, --
"गतागतप्रतिगतसम्पताद्याश्चपक्षिणाम् ।
गतिभेदाः पक्षिगृहं कुलायो नीडमस्त्रियाम् ॥"
इति जटाघरः ॥
(प्रति + गम + कर्त्तरि क्तः । प्रतियाते, त्रि ॥)

**प्रतिग्रहः**, पुं, (प्रतिग्रहणमिति । प्रति + ग्रह + "ग्रहवृदृनिश्चिगमश्च ।" ३ । ३ । ५८ । इति
भावे अप् ।) स्वीकरणम् । सैन्यपृष्ठम् । (प्रति-
गृह्णाति निष्ठीवनादिकमिति । प्रति + ग्रह +
"विभाषा ग्रहः ।" ३ । १ । १४३ । इति पक्षे
अच् ।) पतद्ग्रहः । (प्रतिगृह्यते इति । प्रति
+ ग्रह + अप् ।) द्विजेभ्यो विधिवद्देयम् । तद्-

सेतुना तेन तत्रैच्छत् कर्त्तुं
सोऽम्भःप्रता-
रणम् ॥”)

**प्रतारणा**, स्त्री, (प्र + तॄ + णिच् + युच् । टाप् ।)
बञ्चना । यथा, --
“यदीच्छसि वशीकर्त्तुं जगदेकेन
कर्म्मणा ।
उपास्यतां कलौ कल्पलता देवी
प्रतारणा ॥”
इत्युद्भटः ॥

**प्रतारितः**, त्रि, (प्र + तॄ + णिच् + क्त ।) कृत-
प्रतारणः । तत्पर्य्यायः । व्यंसितः २ ।
इति
त्रिकाण्डशेषः ॥

**प्रति**, व्य, (प्रथते इति । प्रथ विख्यातौ + बाहु-
लकात् इति ।)
विंशत्युपसर्गान्तर्गतपञ्चदशो-
पसर्गः । वोपदेवेनास्य गिसंज्ञा कृता ।
अस्यार्थाः ।
प्रतिनिधिः । मुख्यसदृशः । यथा
प्रद्युम्नः केश-
वात् प्रति ॥ वीप्सा । प्याप्तुमिच्छा ।
यथा वृक्षं
वृक्षं प्रति सिञ्चति ॥ लक्षणम् । चिह्नम् ।
यथा
वृक्षं प्रति विद्योतते विद्युत् ॥
इत्थम्भूताख्यानम् ।
कथञ्चित् प्रकारमापन्नं इत्थम्भूतं
तस्याख्यानम् ।
यथा साधुर्विप्रो मातरं प्रति ॥ भागः ।
स्वीक्रिय-
माणोऽशः । यथा हरं प्रति हलाहलम् ॥
प्रतिदानम् । गृहीतस्य प्रतिदानम् ।
यथा भक्तेः
प्रत्यमृतं शम्भोः । तिलेभ्यः प्रति
माषान् यच्छति ।
तिलान् गृहीत्वा माषान् ददातीत्यर्थः ॥
स्तोकम् ।
“राज्ञः कोषापहर्त्तॄंश्च प्रतिकूलेषु च स्थितान्
।
घातयेद्विविधैर्द्दण्डैररीणाञ्चोपजापकान् ॥”)

**प्रतिकृतिः**, स्त्री, (प्रकृष्टा कृतिः ।) प्रतिमा । इत्य-
मरः । २ । १० । ३६ ॥ प्रतिनिधिः । (यथा,
रघुः । ८ । ९२ ।
“तेनाष्टौ परिगमिताः समाः कथञ्चित्
बालत्वादवितथसूनृतेन सूनोः ।
सादृश्यप्रतिकृतिदर्शनैः प्रियायाः
स्वप्नेषु क्षणिकसमागमोत्सवैश्च ॥”
प्रति + कृ + भावे क्तिन् ।) प्रतिकारः । इति
मेदिनी । ते, २१० ॥ (यथा, हरिवंशे । २५७
। २३ ।
“शृणुध्वं देवताः सर्व्वाः शत्रुप्रतिकृतिं पराम् ।
अवध्या दानवाः सर्व्वे ऋते शङ्करमव्ययम् ॥”)

**प्रतिकृष्टं**, त्रि, (प्रति कृष्यते स्मेति । प्रति + कृष् +
क्तः ।) गर्ह्यम् । द्विरावृत्त्याकर्षितम् । इति
मेदिनी । टे, ६४ ॥

**प्रतिक्षणं**, व्य, (क्षणं क्षणं प्रति ।) पौनःपुन्यम् ।
इति शब्दरत्नावली ॥ (यथा, कुमारे । ५ ।
१० ।
“प्रतिक्षणं सा कृतरोमविक्रियां
व्रताय मौञ्जीं त्रिगुणां बभार याम् ।
अकारि तत्पूर्ब्बनिबद्धया तया
सरागमस्या रशनागुणास्पदम् ॥”)

**प्रतिक्षयः**, पुं, (प्रतिक्षिणोति हिनस्ति विपक्षा-
दीनिति । प्रति + क्षि + अच् ।) रक्षकः । इति
शब्दरत्नावली ॥
ग्रहः । ग्रहभेदः । इति मेदिनी । हे, ३१ ॥
* ॥
ब्राह्मणस्यार्थः प्रतिग्रहार्ज्जितः । यथा, --
“प्रतिग्रहार्जिता विप्रे क्षत्त्रिये
शस्त्रनिर्जिताः ।
वैश्ये न्यायार्जिताश्चार्थाः शूद्रे
शुश्रूषयार्जिताः ॥”
अयाचितप्रतिग्रहे दोषाभावो यथा, --
“अयाचितोपपन्ने तु नास्ति दोषः प्रतिग्रहे
।
अमृतं तं विदुर्द्देवास्तस्मात्तन्नैव निर्णुदेत् ॥
* ॥
गुरुभृत्यांश्चोज्जिहीर्षुरर्च्चिष्यन्
देवतातिथीन् ।
सर्व्वतः प्रतिगृह्णीयात् न तु तृप्येत् स्वयं
ततः ॥
साधुतः प्रतिगृह्णीयादथवासाधुतोद्विजः ।
गुणवानल्पदोषश्च निर्गुणो हि निमज्जति
॥
एवं तस्करवृत्त्या वा कृत्वा भरणमात्मनः ।
कुर्य्याद्विशुद्धिं परतः प्रायश्चित्तं
द्विजोत्तमः ॥”
इति गारुडे २१५ अध्यायः ॥ * ॥
तीर्थे प्रतिग्रहनिषेधो यथा, --
“सुवर्णमथ युक्तात्मा तथैवान्यप्रतिग्रहम् ।
स्वकार्य्ये पितृकार्य्ये वा देवताभ्यर्च्चनेऽपि
वा ॥
निष्फलं तस्य तत्तीर्थं यावत्तद्धनमश्नुते ।
अतस्तीर्थे न गृह्णीयात् पुण्येष्वायतनेषु च
॥”
इति कौर्म्मे ३३ अध्यायः ॥ * ॥
राजादितः प्रतिग्रहनिषेधो यथा, --
“न राज्ञः प्रतिगृह्णीयान्न शूद्रपतितादपि ।
न चान्यस्मादशक्तश्च निन्दितान् वर्जयेद-
बुधः ॥”
इति कौर्म्मे उपविभागे १५ अध्यायः ॥ *
॥
विद्यारहितस्य प्रतिग्रहनिषेधो यथा, --
“हेम भूमिं तिलान् गाश्च अविद्वानाददाति
यः ।

| | | |
|---|---|---|
| अल्पम् । यथा । शाकप्रति सूपप्रति । क्षेपः । निश्चयः । इत्यमरभरतमेदिनीकाराः ॥ व्यावृत्तिः । प्रशस्तिः । विरोधः । समाधिः । इति मुग्धबोध- टीकायां दुर्गादासः ॥ अभिमुख्यम् । स्वभावः । इति शब्दरत्नावली ॥<br>**प्रतिकः**, त्रि, कार्षापणेन क्रीतः । "कार्षापणाट्टि- ठन् वक्तव्यः प्रतिरादेशश्च वा ।" ५ । १ । २५ । | | भस्मीभवति सोऽह्नाय दातुः स्यान्निष्फलञ्च तत् ॥ |

तस्मादविद्वान्नादद्यादल्पशोऽपिप्रतिग्रहम् ।
विषमन्त्रापरिज्ञानी विषेणाल्पेन नश्यति ॥”
* ॥
गर्हितप्रतिग्रहादिर्यथा, --
“हस्तिकृष्णाजिनाद्यास्तु गर्हिता ये
प्रतिग्रहाः ।
सद्भिप्रास्तान्न गृह्णीयुर्गृह्णन्तस्तु पतन्ति ते ॥
कृष्णाजिनप्रतिग्राही हयानां शुक्रविक्रयी ।
नवश्राद्धस्य भोक्ता च न भूयः पुरुषो भवेत्
॥” * ॥
आपदि गर्हितप्रतिग्रहकर्त्तव्यता यथा, --
“प्रोक्तप्रतिग्रहाभावे प्रोक्तायां बृहदापदि ।
विप्रोऽश्नन् प्रतिगृह्णन् वा यतस्ततोऽपि
नाघभाक् ॥
गुर्व्वादिपोष्यवर्गार्थं देवाद्यर्थञ्च सर्व्वशः ।
प्रत्याददद्याद्द्विजो यस्तु भृत्यर्थमात्मनोपि
च ॥
दधिक्षीराज्यमांसानि
गन्धपुष्पाम्बुमत्स्यकान् ।
शय्याशनासनं शाकं प्रत्याख्येयं न
कर्हिचित् ॥
अपि दुष्कृतकर्म्मभ्यः समादद्यादयाचितम्
।
पतितेभ्यस्तथान्येभ्यः प्रतिग्राह्यमसंशयम्
॥” * ॥
प्रतिग्रहीतुं शक्तस्य लभ्यमानपरित्यागेन
स्वर्गो
भवति । यथा, --
“शक्तः प्रतिग्रहीतुं यो वेदवृत्तः सुसंयतः ।
लभ्यमानं न गृह्णाति स्वर्गस्तस्य
सुनिश्चितम् ॥ * ॥
प्रतिग्रहमृणं वापि याचितं यो न यच्छति ।
तत्कोटिगुणितग्रस्तो मृतो दासत्वमृच्छति
॥ * ॥
दाता च न स्मरेद्दानं प्रतिग्राही न याचते ।
तावुभौ नरकं यातौ दाता चैव प्रतिग्रही ॥ *
॥
वदन्ति कवयः केचिद्दानप्रतिग्रहौ प्रति ।
प्रत्यक्षं लिङ्गमेवेह दातृयाचकयोर्ब्बलम् ॥

वाजिप्रदानेन प्रतिग्रहे वा
दातृग्रहीत्रोरपि येन पुण्यम् ।
स्वर्गं प्रजायेत शृणुध्वमेतत्
गृहीतयोर्वै विधिवद्द्विजेन्द्र ॥
कुर्य्यादसौ पञ्चदिनानि पूर्ब्बं
पञ्चोपचारैर्युतविष्णुपूजाम् ।
कुष्माण्डमन्त्रैर्घृतदुग्धहोमं
यद्ग्राम इत्यादि मरुत्त्वतीयम् ॥
सोङ्कारपूर्ब्बादिभिरन्वितंतं
प्रत्येकमष्टौ जुहुयाद्द्विजेन्द्रः ।
सूर्य्येण मन्त्रेण च तद्वदष्टौ
षष्ट्या प्रयुक्तं त्रिशतं जुहोति ॥
कुर्य्याच्च गायत्रिजपं सहस्रं
पश्चात् प्रगृह्यं तुरगं द्विजाग्र्यः ।
तद्वत्तथात्मानमयं नयेद्धि
दातापि चैतद्व्रतमाविदध्यात् ॥
द्विजाग्र्यवत् प्राक्तनपापशुद्ध्यै
द्वावप्यमू सूर्य्यजनं लभेताम् ॥”
इति बृहत्पाराशरे । ४ । ८ । अध्यायः ॥ *
॥
अपि च । विष्णुधर्म्मोत्तरे ।
“बीजानां मुष्टिमादाय रत्नान्यादाय सर्व्वतः
।
वस्त्रं दशान्तमादद्यात् परिधाय तथा पुनः
॥
आरुह्योपानहौ चैव यानमारुह्य पादुके ।
प्रतिग्रहीता सावित्रीं सर्व्वत्रैव प्रकीर्त्तयेत् ॥
ततस्तु सार्द्धं द्रव्येण तस्य द्रव्यस्य दैवतम्
।
समापयेत्ततः पश्चात् कामस्तुत्या
प्रतिग्रहम् ॥
विधिं धर्म्मयमथो ज्ञात्वा यस्तु कुर्य्यात्
प्रतिग्रहम् ।
दात्रा सह तरत्येव नानादुर्गाण्यसौ द्विजः
॥”
ब्रह्मपुराणे ।
“ब्राह्मणः प्रतिगृह्णीयात् वृत्त्यर्थं
साधुतस्तथा ।

“प्रतिग्रहं समर्थो हि कृत्वा विप्रो
यथाविधि ।
निस्तारयति दातारमात्मानञ्च स्वतेजसा
॥”
स्कान्दे ।
“वेदाङ्गपारगो विप्रो यदि कुर्य्यात्
प्रतिग्रहम् ।
न स पापेन लिप्येत पद्मपत्रमिवाम्भसा
॥”
महाभारते ।
“तीर्थे न प्रतिगृह्णीयात् पुण्येष्वायतनेषु च
।
निमित्तेषु च सर्व्वेषु न प्रमत्तो भवेन्नरः ॥”
प्रतिग्रहसमर्थस्य तदकरणे फलाधिक्यं
यथा ।
याज्ञवल्क्यः ।
“प्रतिग्रहसमर्थो हि नादत्ते यः प्रतिग्रहम् ।
ये लोका दानशीलानां स तानाप्नोति
पुष्क-
लान् ॥”
अपवादमाह स एव ।
“कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं
दधि
क्षितिः ।
मांसं शय्यासनं धानाः प्रत्याख्येयं न वारि
च ॥”
अन्यच्च ।
“शय्यां गृहान् कुशान् गन्धानपः पुष्पं
मणीन्
दधि ।
मत्स्यान् धानाः पयो मांसं शाकञ्चैव न
निर्णुदेत् ॥”
मणीन् विषादिनिवारकान् ।
“एधोदकं फलं मूलमन्नमभ्युद्धृतञ्च यत्
॥”
अभ्युद्धृतमभ्यर्थ्य दत्तम् ।
“सर्व्वतः प्रतिगृह्णीयात्
मध्वथोभयदक्षिणाम् ॥”
किमिति न प्रत्याख्येयमित्याह मनुः ।

दातृहस्तो भवेदूद्र्ध्वमधस्तिष्ठेत् प्रतिग्रही ।
यद्दानं प्रतिगृह्णीयात् प्रतिग्राही ब्रजत्यधः
॥” * ॥
प्रतिग्रहप्रकारो यथा, --
“भूमेः प्रतिग्रहं कुर्य्याद्भूमिं कृत्वा प्रदक्षिणम्
।
करे गृह्य तथा कन्यां दासदास्यौ तथा
द्विजाः ॥
करं हि हृदि विन्यस्य धर्म्म्यो ज्ञेयः
प्रतिग्रहः ।
आरुह्य च गजस्योक्तः कर्णे चाश्वस्य
कीर्त्तितः ॥
तथा चैकशफानाञ्च सर्व्वेषामविशेषतः ।
प्रतिगृह्णीत गां शृङ्गे पुच्छे कृष्णाजिनं तथा
॥
आरण्याः पशवः सर्व्वे ग्राह्याः पुच्छे
विचक्षणैः ।
प्रतिग्रहमथोष्ट्रस्य आरुह्यैव तु पादुके ॥
ईशायान्तु रथो ग्राह्यश्च्छत्रे दण्डन्तु
धारयेत् ।
द्रुमाणामथ सर्व्वेषां मूले न्यस्तकरो भवेत् ॥
आयुधानि समादाय तथा भूष्य विभूषणम् ।
धर्म्मध्वजौ तथा स्पृष्ट्वा प्रविश्य च तथा
गृहम् ॥
अवतीर्य्य तु सर्व्वाणि जलस्थानानि चैव हि
।
उपविश्य च शय्यायां स्पर्शयित्वा करेण वा
॥
द्रव्याण्यन्यान्यथादाय स्पृष्ट्वा वा ब्राह्मणं
पठेत् ।
कन्यादाने न तु पठेद्द्रव्याणि च पृथक्
पृथक् ॥
प्रतिग्रहा द्विजश्रेष्ठ तत्रैवान्तर्भवन्ति ते ।
द्रव्याणामथ सर्व्वेषां द्रव्यसंश्रयणान्नरः ॥
वाचयेज्जलमादाय करेण च प्रतिग्रहम् ।
प्रतिग्रहस्य यो धर्म्मं न जानाति द्विजो
विधिम् ॥
स द्रव्यस्तैन्यसंयुक्तो नरकं प्रतिपद्यते ।
अथापि हि प्रवक्ष्यामि विधिं सर्व्वं विशेष-
णात् ॥ * ॥
अव्यश्वमपि मातङ्गतिललौहांश्च वर्ज्जयेत्
॥
कृष्णाजिनतिलग्राही न भूयः पुरुषो भवेत्
॥
शय्यालङ्कारवस्त्रादि प्रतिगृह्य मृतस्य च ।
नरकान्न निवर्त्तन्ते धेनुं तिलमयीं तथा ॥”
तथा ।
“ब्रह्महत्या सुरापानमपि स्तेयं तरिष्यति ।
आतुराद्यद्गृहीतन्तु तत् कथं वै तरिष्यति
॥”
एतदादिद्रव्यदानं प्रतिग्रहीतुर्दोषजनकम् ॥
* ॥
एतदनिच्छवे विद्यादिरहितत्वेनासमर्थाय च
दातुरपि दोषजनकमाह दक्षः ।
“न केवलं हि तद्याति शेषमस्य च नश्यति
।”
तद्दत्तद्रव्यम् । अतएव याज्ञवल्क्यः ।
“विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः
।
ग्रह्णन् प्रदातारमधो नयत्यात्मानमेव च ॥”
अधो नरकम् ॥ * ॥
एतद्दानप्रतिग्रहोत्तरमुक्त-
तपोजपादिभिरात्मतरणक्षमायस्वेच्छया
प्रति-
गृह्णते दानं न दोषाय इत्याह विष्णुः ।
“एतानि प्रतिगृह्णाति स्वेच्छयाभ्यर्थितो न
तु ।
तस्मै दाने न दोषोऽस्ति यस्त्वात्मानन्तु
तारयेत् ॥”
तारणप्रकारमाह हारीतः ।
“मणिवासोगवादीनां प्रतिग्रहे
सावित्र्यष्टसहस्रं
जपेत् ॥” * ॥ देवलः ।
“अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्म्मणः
।
अन्यत्र कुलटाषण्डपतितेभ्यस्तथा द्विषः
॥”
प्रतिग्रहमात्रे प्रयोगसारे ।
“प्रतिग्रहं न गृह्णीयादात्मभोगविधित्सया ।
देवतातिथिपूजार्थं यत्नाद्धनमुपार्ज्जयेत्
॥”
अङ्गिराः ।
“कुटुम्बार्थे द्विजः शूद्रात् प्रतिगृह्णीत
याचितम् ।
क्रत्वर्थमात्मने चैव न हि याचेत कर्हिचित्
॥”
यज्ञार्थं याचने निन्दामाह याज्ञवल्क्यः ।
“चाण्डालो जायते
यज्ञकरणाच्छूद्रभिक्षितात् ॥”
इति शुद्धितत्त्वम् ॥

**प्रतिग्राहः**, पुं, (प्रतिगृह्णाति निष्ठीवनादिकमिति

प्रति + ग्रह् + “विभाषा ग्रहः ।” ३ । १ ।
१४३ ।
इति णः ।) पतद्ग्रहः । इत्यमरः । २ । ६
। १३९ ॥
(प्रति + ग्रह् + भावे घञ् ।) प्रतिग्रहणञ्च
॥

**प्रतिघः**, पुं, (पतिहन्त्यनेनेति । प्रति + हन् + डः ।

न्यङ्क्वादित्वात् कुत्वम् ।) क्रोधः ।
इत्यमरः ।
१ । ७ । २६ ॥ (यथा, माघे । १५ । ५३
।
“प्रतिघः कुतोऽपि समुपेत्य
नरपतिगणं समाश्रयत् ॥”
प्रतिहननमिति ।) प्रतिघातः । इति
मेदिनी ।
घे, १० ॥ मूर्च्छा । इति शब्दरत्नावली ॥

**प्रतिघातनं**, क्ली, (प्रति + हन् + णिच् + भावे

ल्युट् ।) मारणम् । इत्यमरः । २ । ८ ।
११४ ॥

**प्रतिघ्नं**, क्ली, (प्रतिहन्त्यस्मिन्निति । प्रति + हन्
+

**प्रतिच्छन्दः**, [स्] क्ली, (छन्दोऽभिप्रायः । प्रति-
गतं छन्दः इति प्रादिसमासः ।) प्रतिरूपम् ।
इति त्रिकाण्डशेषः ॥ (अकारान्तोऽपि
दृश्यते ।
यया, राजतरङ्गिण्याम् । ३ । ७७ ।
"रक्षःशिरःप्रतिच्छन्दैः स्थिरप्रणतिसूचकः
।
सनाथशिखरान् प्रादात् तस्मै रक्षःपति-
र्ध्वजान् ॥")

**प्रतिच्छाया**, स्त्री, (प्रतिगता छायामिति ।) प्रतिकृतिः
।
मूर्त्तिसदृशमृच्छिलादिनिर्म्मितप्रतिरूपम् ।
इत्य-
मरभरतौ ॥ (यथा, हरिवंशे । १५१ । ३० ।
"माययास्य प्रतिच्छाया दृश्यते हि नटालये
।
देहार्द्धेन तु कौरव्य ! सिषेवे च प्रभावतीम्
॥")

**प्रतिजङ्घा**, स्त्री, (प्रतिगता जङ्घाम् ।) अग्रजङ्घा ।
इति हेमचन्द्रः । ३ । ६१५ ॥

**प्रतिजल्पः**, पुं, (प्रतिगतो जल्पम् ।) वाक्यविशेषः ।
यथा, --
"दुस्त्यजद्वन्द्वभावेऽस्मिन्
प्राप्तिर्नार्हत्यनुद्धतम् ।
दूतसम्माननेनोक्तं यत्र स प्रतिजल्पकः ॥"
इत्युज्ज्वलनीलमणिः ॥

**प्रतिजागरः**, पुं, (प्रतिजागरणमिति । प्रति +
जागृ + घञ् । "जाग्रोऽवीति ।" ७ । ३ ।
८५ ।
इति गुणः ।) प्रत्यवेक्षणम् । तत्पर्य्यायः ।
अवेक्षा २ । इत्यमरः । ३ । २ । २८ ॥
जागर-
प्रतिनिधिः प्रतिजागरः । द्वे गृहमवेक्षस्व
इत्यादिनियोगस्य इति रायमुकुटः ॥

**प्रतिजिह्वा**, स्त्री, (प्रतिरूपा जिह्वा ।) तालु-
मूलस्थक्षुद्रजिह्वा । आल्जिव इति भाषा ।

**प्रतिज्ञातं**, त्रि, (प्रतिज्ञायते स्मेति । प्रति + ज्ञा +
क्तः ।) अङ्गीकृतम् । इत्यमरः । ३ । २
। १०८ ॥
(यथा, मनुः । ८ । १३९ ।
"ऋणे देये प्रतिज्ञाते पञ्चकं शतमर्हति ।
अपह्नवे तद्द्विगुणं तन्मनोरनुशासनम्
॥")

**प्रतिज्ञानं**, क्ली, (प्रति + ज्ञा + ल्युट् ।) प्रतिज्ञा
।
इत्यमरः । १ । ५ । ५ ॥

**प्रतिज्ञेयः**, पुं, (प्रतिजानात्यनेनेति । प्रति + ज्ञा
+
यव ।) स्तुतिपाठकः । इति भूरिप्रयोगः
॥ (प्रति-
ज्ञातुं शक्यः ।) प्रतिज्ञातव्ये, त्रि ॥

**प्रतितालः**, पुं, (प्रतिगतस्तालम् ।) तालविशेषः ।
यथा, सङ्गीतदामोदरे ।
"कान्तारः समराख्यश्च वैकुण्ठो
वाञ्छितस्तथा ।
कथिताः शङ्करेणैव चत्वारः
प्रतितालकाः ॥
कान्तारो यथा, --
कान्तारः प्रतितालस्तु चन्द्रक्रीडे
द्रुतद्वयम् ।
दशाक्षरपदेनायं शृङ्गारे वर्त्तते रसे ॥ १
॥
समराख्यो यथा, --
लघुद्रुतौ लघुश्चान्ते नृपताल उदाहृतः
।
रुद्रसंख्याक्षरपदः समरे वीरके रसे ॥ २
॥
वैकुण्ठो यथा, --
रुद्रत्रयस्तु वैकुण्ठे प्रतिताले समीरितः
।
अर्कसंख्याक्षरैः पादो हास्ये
त्रिपुटतालके ॥ ३ ॥
वाञ्छितो यथा, --

शब्दरत्नावली ॥ (यथा, नैषधे । १९ । १०
।
"वदनकुहरेष्वध्येतॄणामयं तदुदञ्चति
श्रुतिपदमयस्तेषामेव प्रतिध्वनिरध्वनि ॥")

**प्रतिध्वानं**, क्ली, (प्रतिध्वननमिति । प्रति + ध्वन
+ घञ् ।) प्रतिध्वनिः । इत्यमरः । १ । ६ ।
२५ ॥

**प्रतिनप्ता**, [ऋ] पुं, (प्रतिरूपो नप्ता नप्तुः सदृश
इत्यर्थः ।) प्रपौत्रः । इति हेमचन्द्रः ॥

**प्रतिनवं**, त्रि, (प्रतिगतं नवं नवतामिति ।) नूतनम् ।
इति जटाधरः ॥ (यथा, मेघदूते । ३८ ।
"पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीनः
सान्ध्यं तेजः प्रतिनवजवापुष्परक्तं दधानः
॥")

**प्रतिनिधिः**, पुं, (प्रतिनिधीयते सदृशीक्रियते इति ।
प्रति + नि + धा + "उपसर्गे धोः किः ।" ३
। ३ ।
९२ । इति किः ।) प्रतिमा । इत्यमरः । २ ।
१० । ३६ ॥
सदृशः । (यथा, रघौ । १ । ८१ ।
"सुतां तदीयां सुरभेः कृत्वा प्रतिनिधिं शुचिः
।
आराधय सपत्नीकः प्रीता कामदुघा हि सा
॥")
तस्य विवेचनं यथा । "अत्यन्तासामर्थ्येषु
स्कन्द-
पुराणम् ।
'पुत्त्रं वा विनयोपेतं भगिनीं भ्रातरं तथा ।
एषामभाव एवान्यं ब्राह्मणं विनियोजयेत् ॥'
गरुडपुराणे ।
'भार्य्या भर्त्तृव्रतं कुर्य्यात् भार्य्यायाश्च
पतिस्तथा ।
असामर्थ्ये तयोस्ताभ्यां व्रतभङ्गो न जायते
॥'
वराहपुराणे ।
'पितृमातृपतिभ्रातृश्वश्रूगुर्व्वादिभूभुजाम् ।

तत्पर्य्यायः । प्रतिजिह्विका २ माध्वी ३ रसन-
काकुः ४ अलिजिह्विका ५ । इति शब्दरत्नावली ॥

**प्रतिजिह्विका**, स्त्री, (प्रतिजिह्वा + स्वार्थे कन् । टापि अत इत्वम् ।) प्रतिजिह्वा । इति त्रिकाण्डशेषः ॥

**प्रतिज्ञा**, स्त्री, (प्रतिज्ञायते इति । प्रति + ज्ञा + "आतश्चोपसर्गे ।" ३ । ३ । १०६ । इति अङ् । टाप् ।)
कर्त्तव्यत्वप्रकारकज्ञानानुकूलव्यापारः । इत्यनुमितिगादाधरी ॥ साध्यनिर्द्देशः । इति गोतमसूत्रम् ॥ साध्याभिधायिका वाक् । इति
व्यवहारतत्त्वम् ॥ तत्पर्य्यायः । आम् २ प्रति-
ज्ञानम् ३ अङ्गीकारः ४ पतिश्रवः ५ ॐ ६ समाधिः ७ संवित् ८ आगूः ९ आश्रवः १० संश्रवः ११ नियमः १२ अभ्युपगमः १३ वाढम्
१४ आत्मा १५ । इति शब्दरत्नावली ॥ सन्धा
१६ सङ्गरः १७ संश्रावः १८ उररीकारः १९
श्रवः २० । इति जटाधरः ॥ * ॥ (यथा, गो०
रामायणे । २ । ११० । ४ ।
"पूर्ब्बन्तु रामस्तमिहानुयुज्य
श्रुत्वा च वाक्यं भरतस्य तस्य ।
चिकीर्षमाणो रघुनन्दनस्तां
पितुः प्रतिज्ञां स बभूव तूष्णीम् ॥")
प्रतिज्ञारोधो न कर्त्तव्यः । यथा, --
"त्वयास्य दैत्याधिपते वाच्यं साम यतो फलम् ।
प्रतिज्ञा नावरोद्धव्या स्वल्पकेऽपि च वस्तुनि ॥"
इत्यग्निपुराणम् ॥

वाञ्छितस्तृतीये ताले लघुरेको द्रुतस्तथा ।
त्रयोदशाक्षरैर्युक्तो रसेऽद्भुते प्रकीर्त्तितः ॥" ४ ॥

**प्रतिताली**, स्त्री, (प्रतिगता तालमिति । गौरादि-त्वात् ङीष् ।) तालकोद्घाटनयन्त्रम् । इति
हेमचन्द्रः ॥ चावि इति भाषा ॥

**प्रतिदानं**, क्ली, (प्रतिकृत्य दानं पतिरूपं दानं वा ।) विनिमयः । न्यस्तार्पणम् । इत्यमरः ।
२ । ९ । ८१ ॥

**प्रतिदारणं**, क्ली, (प्रतिदार्य्यतेऽस्मिन्निति । प्रति + दॄ + णिच् + आधारे ल्युट् ।) युद्धम् । इति शब्दमाला ॥

**प्रतिदिनं**, क्ली, दिनं दिनं प्रति । प्रत्यहम् । यथा,
"ततः प्रतिदिनं वेला वर्द्धते
त्रिपलात्मिका ॥"
इति सत्कृत्यमुक्तावली ॥

**प्रतिदिवा**, [न्] पुं, (प्रतिदीव्यतीति । प्रति + दिव + "कनिन्
युवृषितक्षिराजिधन्विद्युप्रति-
दिवः ।" उणा० १ । १५६ । इति कनिन् ।)
सूर्य्यः । इति त्रिकाण्डशेषः ॥
प्रतिदिनञ्च ॥

**प्रतिदीवा**, [न्] पुं, (प्रतिदिवन् । पृषोदरादित्वात् साधुः ।) सूर्य्यः । इति शब्दरत्नावली ॥

**प्रतिदेयं**, त्रि, (प्रति + दा + यत् ।) क्रीतद्रव्यस्य दुष्क्रीतबुद्ध्या परावृत्य दानम् । यथा, --
"क्रीत्वा मूल्येन यः पण्यं दुष्क्रीतं मन्यते क्रयी ।
विक्रेतुः
प्रतिदेयन्तत्तस्मिन्नेवाह्न्यविक्षतम् ॥"

अदृष्टार्थमुपोषित्वा स्वयञ्च फलभागभवेत् ॥'
अत्रैव विषये कात्यायनः ।
'दक्षिणा नात्र कर्त्तव्या शुश्रूषा विहिता च या ।'
ननु प्रतिनिधौ ममेह शर्म्माद्यङ्गमन्त्रस्थफलं कुत्रान्वेति चेत् प्रधान एव । तथा च शारी-
रिकभाष्ये श्रुतिः । 'यां वै काञ्चनयज्ञऋत्विज
आशिषमाशासते यजमानायैव तामाशासते इति होवाच इति ।' ब्राह्मणसर्व्वस्वे तु यज-
मानायेत्यादौ यजमानस्यैव सेतिं पाठे विशेषः ।
तथा च सरलायां सूत्रम् । 'यां वै काञ्चनयज्ञ-
ऋत्विगाशिषमाशास्ते सा यजमानस्यैवेति ।'
ऋत्विग्यजमानपदे प्रतिनिधिप्रधानपरे आका-
ङ्क्षितत्वादिति । अतएव प्रतिनिधिपुत्रादिनाप्या-
यान्तु नः पितर इत्यादिवदनूह एव पठ्यते वाक्यस्य काल्पनिकत्वात्तत्र न तथेति ॥ * ॥
अत्र प्रतिनिधिप्रसङ्गेन स्मृत्यनुसारात् किञ्चि-
ल्लिख्यते । कालमाधवीये ।
'काम्ये प्रतिनिधिर्नास्ति नित्यनैमित्तिके हि सः ।
काम्येषूपक्रमादूर्द्ध्वमन्ये प्रतिनिधिं विदुः ॥'
अस्यार्थस्तु माधवाचार्य्येणाभिहितः । यथा
नित्यनैमित्तिकं प्रतिनिधिनाप्युपक्रम्य कारयेत् ।
काम्यन्तु स्वसामर्थ्यं परीक्ष्य स्वयमेव उपक्रम्य
कुर्य्यात् । असामर्थ्ये तु उपक्रमादूर्द्ध्वं प्रतिनिधि-
नापि तत्कारयेत् । एतच्च काम्यं श्रौतपरम् ।

| | इति मिताक्षरा ॥<br>**प्रतिध्वनिः**, पुं, (प्रतिरूपो ध्वनिरिति ।) प्रति-<br>नादः । गुम्रन् इति भाषा ॥ तत्पर्य्यायः । प्रति-<br>शब्दः २ प्रतिश्रुत् ३ प्रतिध्वानम् ४ । इति | काम्यस्मार्त्तन्तु अन्यद्वाराप्युपक्रम्य कुर्य्यात् । तथा<br>च पराशरभाष्ये शातातपः । |
|---|---|---|

'श्रौतं कर्म्म स्वयं कुर्य्यादन्योऽपि
स्मार्त्तमाचरेत् ।
अशक्तौ श्रौतमप्यन्यः
कुर्य्यादाचारमन्ततः ॥'
अन्ततः उपक्रमात् परतः । अन्यथा
नित्य-
नैमित्तिकमात्रपरत्वे
श्रौतस्मार्त्तभेदेनोपादानं
व्यर्थं स्यात्तयोरविशेषादेव
प्रतिनिधिलाभात् ।
अतएव भारतपाठादौ तथा समाचारः ॥
* ॥
स्मृत्यर्थसारे ।
'नाभावस्य प्रतिनिधिरभावान्तरमिष्यते
।'
सजातीयमप्यभावान्तरमभावस्य
प्रतिनिधि-
र्नेष्यते । भावस्तु कदाचित् ।
यथोपवासादौ-
ब्राह्मणभोजनादि ।
'नापि प्रतिनिधातव्यं निषिद्धं वस्तु
कुत्रचित् ।
श्रोत्रियाणामभोज्यञ्च यद्द्रव्यं तदशेषतः
।
ग्राह्यं प्रतिनिधित्वेन होमकार्य्ये न
कुत्रचित् ॥
द्रव्यं वैकल्पिकं किञ्चिद्यत्र सङ्कल्पितं
भवेत् ।
तदलाभे सदृग्ग्राह्यं न तु वैकल्पिकान्तरम्
॥
उपात्ते तु प्रतिनिधौ मुख्यार्थो लभ्यते
यदि ।
तत्र मुख्यमनादृत्य गौणेनैव समापयेत् ॥
संस्काराणामयोग्योऽपि मुख्य एव हि
गृह्यते ।
न तु संस्कारयोग्योऽन्यो गृह्यते
प्रतिरूपकः ॥
मुख्ये कार्य्यासमर्थे तु लब्धेऽप्येतस्य
नादरः ।
'अभावे चैव धातूनां हरितालं प्रशस्यते ।
बीजानामप्यलाभे तु यव एको विधीयते ॥
ओषधीनामलाभे तु सहदेवा प्रशस्यते ।
रत्नानामप्यलाभे तु मुक्ताफलमनुत्तमम् ॥
लौहानामप्यलाभे तु हेमपात्रं प्रकल्पयेत् ।'
लौहानां तैजसमात्राणाम् । न्यायप्राप्तप्रति-
निधिमधिकृत्य जैमिनिः ।
'न देवताग्निशब्दक्रियाणामिति ।' अस्यार्थः ।
देवताया अग्नेश्च आहवनीयादेः शब्दस्य
मन्त्रस्य क्रियायाः
प्रजाद्यदृष्टार्थकर्म्मणश्चादृष्ट-
मात्रार्थकत्वेन आरादुपकारकत्वान्न प्रति-
निधिः । व्रीह्यादीनान्तु सन्निपत्योपकारकाणां
पुरोडाशसाधनं दृष्टमेव प्रयोजनमिति तत्र
प्रतिनिधिरुचित इत्युक्तम् ।" इत्येकादशी-
तत्त्वम् ॥ * ॥ "आरब्धकार्त्तिकादिस्नाने तु
व्याध्यादिनासामर्थ्ये पुत्रादिभिः प्रतिनिधिना
कारयितव्यं नानुकल्पविधिना नित्यस्नान एव
तद्विधानादिति ।" इति मलमासतत्त्वम् ॥ * ॥
स्वयंकरणासामर्थ्ये अन्यद्वारा । यथा, --
"दक्षः ।
'स्वयं होमे फलं यच्च तदन्येन न जायते ।
ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्-
पतिः ।
एभिरेव हुतं यत्तु तद्धुतं स्वयमेव हि ॥'
विट्पतिर्ज्जामाता । एवञ्च ऋत्विगादीतरत्र
फलन्यूनता ॥ * ॥ अत्राशौचाशङ्कया बोधन-
दिनात् पूर्ब्बं
शुचितत्कालजीवित्वरूपाधिकारा-
भावेऽपि यद्वरणादिकं क्रियते तत् कर्म्मकाले
तस्य नारदोक्तस्वयं प्रवर्त्तनवत् प्रवर्त्तनाय न
तु
तदानीं प्रतिनिधीयते । अथवा ।
'निःक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजन्तथा
।
प्रवसेत् कार्य्यवान् विप्रो वृथैव न चिरं वसेत्
॥'
इति छन्दोगपरिशिष्टवदन्यत्रापिप्रतिनिधी-
यते । एवं वरणं विनापि क्वचिद्यदि ऋत्विक्

**प्रतिपत्,** [द्] स्त्री, (प्रतिपद्यते उपक्रम्यते-
ऽनयेति । प्रति + पद् + करणे क्विप् ।)
द्रगड-
वाद्यम् । इति त्रिकाण्डशेषः ॥ बुद्धिः ।
तिथि-
विशेषः । तत्पर्य्यायः । पक्षतिः २ ।
इत्यमरः ।
१ । ४ । १ ॥ सा च चन्द्रस्य
प्रथमकलाक्रियारूपा ।
वृद्धिरूपा चेत् शुक्ला १ एकाङ्कबोधिता
। ह्रास-
रूपा चेत् कृष्णा १७ सप्तदशाङ्कबोधिता
॥ * ॥
तस्या व्यवस्था यथा । "सा च कृष्णा
द्वितीया-
युक्ता ग्राह्या प्रतिपत् सद्वितीया
स्यादित्याप-
स्तम्बीयात् । शुक्ला अमावास्यायुता
ग्राह्या ।
प्रतिपदाप्यमावास्येति वचनात् ।
त्रिसन्ध्यव्यापि-
नीत्वे तु सर्व्वत्र न युग्मादरः । तथा च
परा-
शरः ।
'त्रिसन्ध्यव्यापिनी या तु सैव पूज्या
सदा तिथिः ।
न तत्र युग्मादरणमन्यत्र हरिवासरात् ॥'
* ॥
कृष्णापि उपवासे द्वितीयायुता न ग्राह्या
।
तथा च वृद्धवशिष्ठः ।
'द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी
।
चतुर्द्दशी चोपवासे हन्युः पूर्ब्बोत्तरे तिथी
॥'
द्वितीया वेधात् योगात् प्रतिपत्तृतीये
हन्तीत्यर्थः ।
एवमन्यत्र । अत्रोपवासपरेण
विशेषविधानात्

प्रतिरूपमुपादाय शक्तमेवोपयुज्यते ॥
काष्ठै रूपैस्तथा पर्णैः क्षीरैः पुष्पैः
फलैस्तथा ।
गन्धै रसैः सदृग्ग्राह्यं सर्व्वालाभे परं परम्
॥
ग्राम्याणान्तु
भवेद्ग्राम्यमारण्यानामरण्यजम्।
यवाभावे तु गोधूमास्तथा वेणुयवादयः ॥
हविष्ये गोघृतं ग्राह्यं तदलाभे तु माहिषम्
।
आजं वा तदलाभे तु साक्षात्तैलं प्रयुज्यते
॥
तैलाभावे ग्रहीतव्यं तैलजं तिलसम्भवम्
॥'
तैलजं तिलसम्भवं तैलभृष्टतिलपिष्टम् ।
'तदभावे तु सस्नेहं कौसुम्भं सर्षपोद्भवम्
॥
वृक्षस्नेहोऽथ वा ग्राह्यः पूर्ब्बाभावे परः
परः ।
तदभावे गवादीनां क्रमात् क्षीरं विधीयते
॥
तदलाभे दधि ग्राह्यमलाभे तिल इष्यते ।
यत्र मुख्यं दधि क्षीरं तत्रापि तदलाभतः ॥
अजादेः क्षीरदध्यादि तदलाभे तु गोघृतम्
।
मुख्यासन्नोऽथवा ग्राह्यः
कार्य्यकारणसन्ततौ ॥
अतएव घृताभावे पूर्ब्बं दधि ततः पयः ॥'
तथा ।
'सर्व्वत्र गौणकालेषु कर्म्मचोदितमाचरेत्
।
प्रायश्चित्तं वाहृतिभिर्हुत्वा कर्म्म
समाचरेत् ॥'
मात्स्ये ।
'घृतं न लभ्यते यत्र शुष्कक्षीरेण होमयेत्
।
क्षीरस्य च दधि ज्ञेयं मधुनश्च गुडो भवेत्
॥'
आयुर्व्वेदेऽपि ।
'मधु यत्र न विद्येत तत्र जीर्णगुडो भवेत्
॥'

प्रवर्त्तते तथापि तत्कर्म्मसिद्धिः । दक्षिणा च
तस्मै शुचिकाले दातव्येति । तथा च नारदः ।
'ऋत्विक् च त्रिविधो दृष्टः पूर्ब्बैर्जुष्टः स्वयंकृतः
।
यदृच्छया वा यः कुर्य्यादार्त्विज्यं
प्रीतिपूर्ब्बकम् ॥'
यदृच्छया स्वेच्छया ।" इति तिथ्यादितत्त्वम् ॥

**प्रतिपः**, पुं, (प्रतिपाति पालयतीति । प्रति +
पा + कः ।) शान्तनुराजपिता । इति शब्द-
रत्नावली ॥

**प्रतिपक्षः**, पुं, (प्रतिकूलः पक्ष इति प्रादि-
समासः ।) शत्रुः । इति हेमचन्द्रः । ३ । ३९२
।
(यथा, मृच्छकटिके १० अङ्के ।
"अन्योन्यं प्रतिपक्षसंहतिमिमां लोकस्थितिं
बोधय-
न्नेष क्रीडति कूपयन्त्रघटिकान्यायप्रसक्तो
विधिः ॥")
सादृश्यम् । यथा, --
"प्रतिबन्धिप्रतिनिधिप्रतिपक्षविडम्बकाः।"
इति काव्यचन्द्रिका ॥
प्रतिवादी च ॥

आपस्तम्बीयसामान्यवचनस्यसङ्कोचः
॥ * ॥
कार्त्तिकशुक्लप्रतिपदमधिकृत्य बलिं
प्रति भग-
वद्वाक्यम् ।
'वीर ! प्रतिपदा नाम तव भावी
महोत्सवः ।
अत्र त्वां नरशार्द्दूल ! हृष्टाः पुष्टाः
स्वलङ्कृताः ।
पुष्पदीपप्रदानेन पूजयिष्यन्ति मानवाः
॥'
तत्र मन्त्रः ।
'बलिराज ! नमस्तुभ्यं विराचनसुत
प्रभो ।
भविष्येन्द्र सुराराते पूजेयं प्रतिगृह्यताम्
॥'
प्रतिपदा प्रतिपत्तिथ्या । अत्र प्रतिपदि ।
ब्रह्म
पुराणे तु बलिराजेतिमन्त्रस्य पूर्ब्बम् ।
'मन्त्रेणानेन राजेन्द्र ! समन्त्री
सपुरोहितः ।'
इत्यर्द्धम् ॥
पश्चादपि ।
'एवं पूजां नृपः कृत्वा रात्रौ जागरणं
ततः ।'
इत्यक्तमिति ॥
पुनर्ब्रह्मपुराणे ।
'शङ्करश्च पुरा द्यूतं ससर्ज सुमनोहरम् ।
कार्त्तिके शुक्लपक्षे च प्रथमेऽहनि
भूपते ! ॥
जितश्च शङ्करस्तत्र जयं लेभे च पार्व्वती
।
अतोऽर्थाच्छङ्करोदुःखी नित्यं गौरी
सुखोषिता ॥
तस्मात् द्यूतं प्रकर्त्तव्यं प्रभाते तत्र
मानवैः ।
तस्मिन् द्यूते जयो यस्य तस्य संवत्सरः
शुभः ॥
पराजयो विरुद्धश्च लब्धनाशकरो भवेत्
॥'
द्यूतञ्चाप्राणिभिः क्रीडनम् । यथा मनुः ।

| | | |
|---|---|---|
| पैठीनसिः ।<br>‘काण्डमूलपर्णपुष्पफलप्ररोहरस-<br>गन्धादीनां सादृश्येन प्रतिनिधिं कुर्य्यात्<br>। सर्व्वा<br>लाभे यवः प्रतिनिधिर्भवति ।’ काण्डं<br>नालं<br>प्ररोहोऽङ्कुरः । ‘सर्व्वालाभे यव’ इति<br>कल्पतरुः ॥<br>अवयव इति नारायणोपाध्यायाः ॥<br>शान्ति-<br>दीपिकायां नारदीयपञ्चरात्रम् । | | ‘अप्राणिभियत् क्रियते तल्लोके<br>द्यूतमुच्यते ॥’ * ॥<br>तत्तिथिमधिकृत्य भविष्योत्तरे ।<br>‘यो यो यादृशभावेन तिष्ठत्यस्यां<br>युधिष्ठिर ! ।<br>हर्षदैन्यादिना तेन तस्य वर्षं प्रयाति हि<br>॥’<br>तथा ।<br>‘महापुण्या तिथिरियं<br>बलिराज्यप्रवर्द्धिनी । |

स्नानं दानं शतगुणं कार्त्तिक्यऽस्यां तिथौ भवेत् ॥’
प्रतिपद्रोहिणीयोगो यथा । भविष्ये ।
‘रोहिण्या प्रतिपद्युक्ता मार्गे मासि सितेतरा ।
गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समा ॥’ * ॥
तस्याः संज्ञा नन्दा । तत्राभ्यङ्गनिषेधो यथा, --
‘नन्दासु नाभ्यङ्गमुपाचरेच्च
क्षौरञ्च रिक्तासु जयासु मांसम् ।
पूर्णासु योषित् परिवर्ज्जनीया
भद्रासु सर्व्वाणि समाचरेच्च ॥’ * ॥
नन्दादिक्रममाह ज्योतिषे ।
‘नन्दा भद्रा जया रिक्ता पूर्णा प्रतिपदः क्रमात् ॥’
प्रतिपदादिपञ्चदशतिथिषु पञ्चदशद्रव्यभक्षण-
निषेधमाह स्मृतिः ।
‘कुष्माण्डे चार्थहानिः स्यात् बृहत्यां न स्मरे-
द्धरिम् ।
बहुशत्रुः पटोले स्याद्धनहानिश्च मूलके ॥
कलङ्की चायते विल्वे तिर्य्यग्योनिश्च निम्बके ।
ताले शरीरनाशः स्यान्नारिकेले च मूर्खता ॥
तुम्बी गोमांसतुल्या स्यात् कलम्बी गोवधात्मिका ।
शिम्बी पापकरी प्रोक्ता पूतिका ब्रह्मघातिका ॥
वार्त्ताकौ सुतहानिः स्याच्चिररोगी च माषके ।
महापापकरं मांसं प्रतिपदादिषु वर्ज्जयेत् ॥’ * ॥
तत्र क्षौरनिषेधो यथा । क्षौरं विशाखाप्रति-
पत्सु वर्ज्यम् ।” इति तिथ्यादितत्त्वम् ॥ * ॥
तत्र जातफलम् ।
“मणिकनकविभूषासंयुतश्चारुकान्ति-
र्निजकुलकमलोद्धाटमार्त्तण्डविम्बः ।
प्रतिपदि शशिपूर्णो लब्धजन्मा प्रतापी
भवति विमलवेशश्चारुकेशः प्रजेशः ॥”
य इदं शृणुयान्नित्यं प्रातरुत्थाय मानवः ।
अग्रेर्जन्म स पापेभ्यो मुच्यते नात्र संशयः ॥”
इति वराहपुराणे महातपोपाख्याने अग्न्युत्-
पत्तिनामाध्यायः ॥ * ॥ प्रतिपदि चन्द्रदर्शन-
कारणम् । यथा, ज्योतिषे ।
“अमावस्याघटीशोध्या
षष्ट्याहर्मानसंयुता ।
सूर्य्यराहुघटीभ्यश्चेदधिका दृश्यते
शशी ॥”

**प्रतिपत्तिः**, स्त्री, (प्रतिपदनमिति । प्रति + पद् + क्तिन् ।) प्रवृत्तिः । (यथा, कुमारे । ५ । ४२ ।
“मनस्विनीनां प्रतिपत्तिरीदृशी ॥”)
प्रागल्भ्यम् । गौरवम् । (यथा, युक्तिकल्पतरौ
चारलक्षणे ।
“सुभक्तो राजसु तथा कार्य्याणां
प्रतिपत्तिमान् ॥”)
संप्राप्तिः । (यथा, रघुः । १ । १ ।
“वागार्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्व्वतीपरमेश्वरौ ॥”)
प्रबोधः । (यथा, भागवते । ३ । ६ । १४ ।
“चक्षुषांशेन रूपाणां प्रतिपत्तिर्यतो भवेत् ॥”)
पदप्राप्तिः । इति मेदिनी । ते, २०९ ॥ मीमां-
सकमते फलशून्यकर्म्माङ्गम् । यथा । देव-
तोद्देशेन यागादौ त्यक्तहविरादेरग्नौ निःक्षेपः ।
पूजितप्रतिमादेर्जले विसर्जनमित्यादि । श्राद्धादौ

**प्रतिपत्तूर्य्यं**, क्ली, (प्रतिपदे संविदे तूर्य्यम् ।) द्रगडवाद्यम् । इति त्रिकाण्डशेषः ॥

**प्रतिपत्रफला**, स्त्री, (प्रतिपत्रं फलमस्याः ।) क्षुद्र-कारवेल्ली । इति राजनिर्घण्टः ॥

**प्रतिपन्नं**, त्रि, (प्रतिपद्यते स्मेति । प्रति + पद् + क्तः ।) अवगतम् । इत्यमरः । ३ । २ । १०८ ॥
(यथा, कुमारे । ४ । ३३ ।
“प्रमदाः पतिवर्त्मगा इति
प्रतिपन्नं हि विचेतनैरपि ॥”)
अङ्गीकृतम् । इति मेदिनी । ने, १९४ ॥
विक्रान्तः । इति हेमचन्द्रः ॥

**प्रतिपर्णशिफा**, स्त्री, (प्रतिपर्णं शिफा जटा अस्याः ।) द्रवन्ती । इति राजनिर्घण्टः ॥

**प्रतिपादकः**, त्रि, (प्रतिपादयतीति । प्रति + पद् + णिच् + ण्वुल् ।) प्रतिपत्तिजनकः । बोधकः ।
(यथा, सर्व्वदर्शनसंग्रहे पूर्णप्रज्ञदर्शने । “ननु
सजातीयविजातीयस्वगतनानात्वशून्यं ब्रह्मतत्त्व-
मिति प्रतिपादकेषु वेदान्तेषु जागरूकेषु कथ-
मशेषगुणत्वमिति ॥”) यथा च । प्रतिपाद्यप्रति-
पादकभावश्च सम्बन्धः । इति दिनकरी ॥

**प्रतिपादनं**, क्ली, (प्रति + पद् + णिच् + भावे ल्युट् ।) दानम् । प्रतिपत्तिः । बोधनम् । इति मेदिनी । ने, २३९ ॥ (निष्पादनम् । यथा, महाभारते । १२ । १४१ । १४ ।
“त्रेता विमोक्षसमये द्वापरप्रतिपादने ॥”)

**प्रतिपालकः**, त्रि, (प्रति + पा + णिच् + ण्वुल् ।) पालनकर्त्ता । प्रतिपालयतीति प्रतिपूर्ब्ब-ण्यन्तपाधातोर्ण्वकप्रत्ययनिष्पन्नः ॥

**प्रतिपालनं**, क्ली, (प्रति + पा + णिच् + भावे ल्युट् ।)

इति कोष्ठीप्रदीपः ॥ * ॥
सा अग्नेर्ज्जन्मतिथिः । यथा, --
महातपा उवाच ।
“विष्णोर्व्विभूतिमाहात्म्यं कथितं ते प्रसङ्गतः ।
तिथीनां शृणु महात्म्यं कथ्यमानं मया नृप ! ॥
इत्थम्भूतो महानग्निर्ब्रह्मक्रोधोद्भवो महान् ।
उवाच देवं ब्रह्माणं तिथिर्मे दीयतां प्रभो ! ।
यस्यामहं समस्तस्य जगतः ख्यातिमाप्नुयाम् ॥
ब्रह्मोवाच ।
देवानामथ यक्षाणां गन्धर्व्वाणाञ्च सत्तम् ! ।
आदौ प्रतिपदा येन त्वमुत्पन्नोऽसि पावक ! ॥
त्वत्पदात् प्रातिपदिकं संभविष्यन्ति देवताः ।
अतस्ते प्रतिपन्नाम तिथिरेषा भविष्यति ॥
तस्यां तिथौ हविष्येण प्राजापत्येन मूर्त्तिना ।
होष्यन्ति तेषां प्रीताः स्युः पितरः सर्व्वदेवताः ॥
चतुर्विधानि भूतानि मनुष्याः पशवोऽसुराः ।
देवाः सर्व्वे सगन्धर्व्वाः प्रीताः स्युस्तर्पिते त्वयि ॥
यश्चोपवासं कुर्व्वीत त्वद्भक्तः प्रतिपद्दिने ।
क्षाराशनो वा वर्त्तेत शृणु तस्य फलं महत् ॥
चतुर्युगानि षट्त्रिंशत्त्वल्लोकेशो महीयते ।
तेजस्वी रूपसम्पन्नो द्रव्यवान् जायते नरः ॥
इह जन्मन्यसौ राजा स्वर्गलोके महीयते ।
तूष्णीम्बभूव सोऽप्यग्निर्ब्रह्मदत्ताश्रयं ययौ ॥
सर्व्वशेषाङ्गकर्म्म यथा ।
प्रतिपत्तिरूपकर्म्माङ्ग एव प्रतिपाद्याभावे तन्निवृत्तिः । इति तिथ्यादि-तत्त्वम् ॥ * ॥
निर्व्वाहिताङ्गकद्रव्यकरणकाङ्गत्वं प्रतिपत्तिरूपकर्म्माङ्गत्वम् । प्रतिपत्तिकर्म्म उत्तरा क्रिया । यत्र एकेन द्रव्येण कर्म्म-द्वयं निर्व्वाह्यते तत्र उत्तरं कर्म्म प्रतिपत्तिकर्म्म ।
तन्निर्व्वाहकञ्च प्रतिपाद्यम् । इति तट्टीकायां काशीरामवाचस्पतिः ॥ * ॥ अथ प्रतिपत्त्यधि-करणम् । शकृन्निरस्यति लोहितं निर-स्यति गुदेनोपयजति सर्व्वं जुहोति । इत्य-ग्नीसोमीयपशौ श्रूयते । शकृन्निरस्यतीति दृष्टा-न्तार्थम् । यथा पशोरुदरवर्त्तिशकृत् त्यजति तथा लोहितमपि त्यजति । अन्यत्र पशोः शीर्षमांसोपक्रमेण होमः । अत्र तु गुदमांसोप-क्रमेणेति । तत्र च यज्ञशेषमृत्विग्भ्यो ददातीति परिभाषया मांसस्योत्तरा प्रतिपत्तिः प्राप्ता । अत्र सर्व्वहवनेन प्रतिपत्त्यभावात् कर्म्मवैगुण्यं स्यादिति । अत्र सिद्धान्तः । यदिकारादुपपत्ति-रिति । यदि प्रतिपाद्यं स्यात् तदा प्रतिपत्ति-रङ्गमित्यर्थः । इति रामकृष्णीयाधिकरण-कौमुदी ॥ * ॥ अपि च ।
“उपांशुयाजद्रव्येण शेषकार्य्यं भवेन्न वा ।
रक्षणम् । पोषणम् । यथा । “कुन्त्या प्रसूतस्य कर्णस्य राधाप्रतिपालनात् राधेयत्वं सङ्गच्छते ।”
इति दुर्गादासः ॥

**प्रतिपाल्यं**, त्रि, (प्रति + पा + णिच् + कर्म्मणि यत् ।) प्रतिपालनीयम् । प्रतिपालितव्यम् । प्रतिपूर्व्वञ्यन्तपालरक्षण इत्यस्मात् कर्म्मणि यप्रत्ययेन निष्पन्नम् ॥ (यथा, महाभारते । १३ । ४५ । २ ।
“या पुत्त्रकस्य ऋद्धस्य प्रतिपाल्या तदा भवेत् ।
अथचेन्नाहरेत् शुल्कं क्रीता शुक्लप्रदस्य सा ॥”)

**प्रतिप्रसवः**, पुं, (प्रति प्रतिषिद्धं प्रसूते इति । प्रति + प्र + सू + अप् ।) निषिद्धस्य पुनर्विधा-नम् । यथा, प्रायश्चित्ततत्त्वे ।
“रविशुक्रदिने चैव द्वादश्यां श्राद्धवासरे ।
इत्यादिना निषिद्धस्य तिलतर्पणस्य तीर्थेतरत्र प्रतिप्रसवमाह स्मृतिः ।
अयने विषुवे चैव संक्रान्त्यां ग्रहणेषु च ॥”

**प्रतिप्रसूतः**, त्रि, (प्रतिप्रसूते स्मेति । प्रति + प्र + सू + क्तः ।) प्रतिप्रसवविशिष्टः । इति मल-मासतत्त्वम् ॥ पुनःसम्भावितः । यथा, --
“उक्तानि प्रतिसिद्धानि पुनःसम्भावितानि च ।
सापेक्षनिरपेक्षाणि मीमांस्यानीह कोविदैः ॥”
इति सत्कृत्यमुक्तावली ॥

| | | |
|---|---|---|
| | भवेद्धविर्भ्यः सर्व्वेभ्य इत्युक्त्या प्रापितत्वतः ॥ उक्ताज्यद्रव्यशेषस्तु भाव्युपस्तरणादिकृत् । अतो न प्रतिपत्त्यर्हः शेषकार्य्यं ततः कथम् ॥" इति माधवीयाधिकरणमालायाम्५ पादे प्रथ- माधिकरणम् ॥ **प्रतिपत्तिपटहः**, पुं, (प्रतिपत्तये पटहः ।) वाद्य- विशेषः । नागरा इति भाषा । तत्पर्य्यायः । लम्पापटहः २ । इति हारावली ॥ | |

**प्रतिफलं**, क्ली, (प्रतिफलतीति । प्रति + फल् +

अच् ।) प्रतिविम्बम् । यथा, --
"प्रतिफलमवलोक्य स्वीयमिन्दोः कलायां
हरशिरसि परस्या वासमाशङ्कमाना ॥"
इति रसमञ्जरी ॥
तुल्यफलम् । फलं फलञ्च ॥

**प्रतिफलनं**, क्ली, (प्रति + फल् + ल्युट् ।) प्रति-

विम्बम् । यथा, --
"न विम्बं त्वद्बिम्बप्रतिफलनलाभादरुणितं
तुलामध्यारोढुं कथमपि न लज्जेत कलया ॥"
इत्यानन्दलहरी । ६२ ॥

**प्रतिफलितं**, त्रि, (प्रति + फल् + क्त ।) प्रति-

विम्बितम् । यथा, --
"मोहातीतो विशुद्धो मुनिभिरभिहितो मोह-
संक्रान्तमूर्त्तिः
साक्षी स्वान्ते तदुत्थे प्रतिफलितवपुः -- ॥"
इत्यादि मुक्तिवादगादाधरी ॥

**प्रतिफुल्लकः**, त्रि, (प्रतिफुल्लति विकसतीति ।

प्रति + फुल्ल + ण्वुल् ।) प्रफुल्लः । इति शब्द-
चन्द्रिका ॥

**प्रतिबद्धः**, त्रि, प्रतिबन्धविशिष्टः । प्रतिपूर्ब्बबन्ध-

धातोः कर्म्मणि क्तप्रत्ययेन निष्पन्नः ॥

**प्रतिबध्यः**, त्रि, (प्रति + बन्ध + यत् ।) पतिबन्ध-

नीयः । प्रतिबन्धार्हः । यथा । वस्तुतो हेतु-
मन्निष्ठाभावप्रतियोगितावच्छेदकत्वप्रकारिता-
शून्यज्ञानवृत्तिप्रकारितानवच्छेद्यत्वेनैव प्रति-
बध्यत्वं निवेश्यमिति व्याप्त्यनुगमजागदीशी ॥

**प्रतिबन्धः**, पुं, (प्रति + बन्ध + घञ् ।) कार्य्यप्रति

धातः । तत्पर्य्यायः । प्रतिष्टम्भः २ । इत्यमरः ।
३ । २ । २७ ॥ (यथा, रघौ । ८ । ८० ।
"स तपःप्रतिबन्धमन्युना
प्रमुखाविष्कृतचारुविभ्रमाम् ।
अशपद्भव मानुषीति तां
शमवेलाप्रलयोर्म्मिणा भुवि ॥")

**प्रतिबन्धकः**, पुं, (प्रतिबध्नातीति । प्रति + बन्ध +

"दिशश्च प्रदिशश्चैव बभूवुः
शरसङ्कुलाः ।
तमसा पिहितं सर्व्वमासीत् प्रतिभयं
महत् ॥")
भये, क्ली । इति मेदिनी । ये,
१२२ ॥

**प्रतिभा**, स्त्री, (प्रतिभाति शोभते इति । प्रति +

भा + कः । टाप् ।) बुद्धिः । इति
हेमचन्द्रः ॥
प्रत्युत्पन्नमतित्वम् । इति
प्रतिभान्वितशब्द-
टीकायां भरतः ॥
नवनवोन्मेषशालिनी प्रज्ञा ।
यथाह, रुद्रः ।
"प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा
मता ॥"
(यथा च, महाभारते । १२ । २५९
। १ ।
"सूक्ष्मं साधु समुद्दिष्टं नियतं
ब्रह्मलक्षणम् ।
प्रतिभा त्वस्ति मे काचित् तां
ब्रूयामनुमानतः ॥"
प्रतिभायते इति । प्रति + भा +
"आतश्चोप-
सर्गे ।" ३ । ३ । १०६ । इति अङ्
।) दीप्तिश्च ॥

**प्रतिभान्वितः**, त्रि, (प्रतिभया अन्वितः ।) प्रगल्भः ।

प्रत्युत्पन्नमतियुक्तः । इत्यमरः । ३
। १ । २५ ॥

**प्रतिभामुखः**, त्रि, (प्रतिभान्वितं मुखमस्य ।)

प्रगल्भः । इति हेमचन्द्रः । ३ । ७
॥

**प्रतिभावान्**, [त्] त्रि, (प्रतिभा विद्यतेऽस्य ।

प्रतिभा + मतुप् । मस्य वः ।)
प्रतिभान्वितः ।

उत्तरपदस्थे सदृशवाचकः । यथा, --
"स्युरुत्तरपदे प्रख्यः प्रकारः प्रतिमो निभः
॥"
इति हेमचन्द्रः ॥
(यथा, रामायणे । २ । ४० । १३ ।
"आयसं हृदयं नूनं राममातुरसंशयम् ।
यद्देवगर्भप्रतिमे वनं याति न भिद्यते ॥")

**प्रतिमा**, स्त्री, (प्रतिमीयते इति । प्रति + मा +

अङ् । टाप् ।) अनुकृतिः । गजदन्तस्य
वन्धः ।
इति मेदिनी । मे, ४८ ॥ (प्रतिविम्बम् ।
यथा,
रघुः । ७ । ६४ ।
"निमीलितानामिव पङ्कजानां
मध्ये स्फुरन्तं प्रतिमाशशाङ्कम् ॥"
तथा च कुमारे । ७ । ३६ ।
"आत्मानमासक्तगणोपनीते
खड्गे निषक्तप्रतिमं ददर्श ॥"
प्रतिमीयते अनयेति करणे अङ् ।) मूर्त्ति-
सदृशमृच्छिलादिनिर्म्मितप्रतिरूपकम् ।
तत्-
पर्य्यायः । प्रतिमानम् २ प्रतिविम्बम् ३
प्रति-
यातना ४ प्रतिच्छाया ५ प्रतिकृतिः ६
अर्च्चा ७ प्रति-
निधिः ८ । इत्यमरः । २ । १० । ३६ ॥
प्रतिच्छन्दः ९
प्रतिकायः १० प्रतिरूपम् ११ । इति हेम-
चन्द्रः ॥ * ॥ (यथा, महाभारते । १ ।
१७२ । २७ ।
"गिरिपृष्ठे तु सा तस्मिन् स्थिता
स्वसितलोचना ।
विभ्राजमाना शुशुभे प्रतिमेव हिरण्मयी ॥")
देवप्रतिमाघटनप्रमाणादियथा, --
"विष्णोस्तावत् प्रवक्ष्यामि यादृग्रूपं
प्रशस्यते ।
शङ्खचक्रधरं शान्तं पद्महस्तं गदाधरम् ॥
छत्राकारं शिरस्तस्य कम्बुग्रीवं शुभेक्षणम् ।
तुङ्गनासं शुक्तिकर्णं प्रशान्तोरुभुजक्रमम् ॥

ण्वुल् ।) विटपः । इति शब्दचन्द्रिका ॥ प्रति-
रोधके, त्रि ॥ (यथा, राजतरङ्गिण्याम् । ३ ।
१९९ ।
"त्यागिनो निष्कलङ्कस्य को दोषोऽस्य महीपतेः ।
ममापुण्यन्तु तन्निन्द्यं यच्छेयःप्रतिबन्धकम् ॥")

**प्रतिबन्धिः**, पुं, (प्रतिबध्नात्यन्येनेति । प्रति +

बन्ध + इन् ।) अनिष्टान्तरप्रसञ्जकं वाक्यम् ।
प्रतिबन्धः । यथा । प्रतिबन्धेरनुत्तरत्वादाहेति
विशेषव्याप्तिजागदीशी ॥

**प्रतिबलः**, त्रि, (प्रतिगतं बलमस्य ।) समर्थः ।

शक्तः । इति त्रिकाण्डशेषः ॥ (प्रतिरूपं
बलमस्य ।) तुल्यबलः ॥ (यथा, महाभारते ।
१ । १५४ । ८ ।
"नायं प्रतिबलो भीरु ! राक्षसापसदो मम ।
सोढुं युधि परिस्पन्दमथवा सर्व्वराक्षसाः ॥")

**प्रतिभयं**, त्रि, (प्रतिगतं भयं यत्र ।) भयङ्करम् ।

इत्यमरः । १ । ७ । २० ॥ (यथा, रामायणे ।
६ । ९० । ३५ ।

प्रागल्भ्ययुक्तः ।
प्रतिभाशब्दादस्त्यर्थे वतुप्रत्य-
येन निष्पन्नः ॥ (यथा,
कथासरित्सागरे । ४ । ३२ ।
"आगच्छन्तीञ्च सायन्तां
कुमारसचिवो हठात् ।
अग्रहीदथ साप्येनमवोचत्
प्रतिभावती ॥")

**प्रतिभाहानिः**, स्त्री, (प्रतिभाया हानिः ।) बुद्धि-

नाशः । इति शब्दमाला ॥

**प्रतिभूः**, पुं, (प्रतिरूपः प्रतिनिधिर्वा भवतीति ।

प्रति + भू + "भुवः संज्ञान्तरयोः
।" ३ । २ ।
१७९ । इति क्विप् ।
"धनिकाधमर्णयोरन्तरे यस्ति-
ष्ठति विश्वासार्थं स प्रतिभूः ।" इति
सिद्धान्त-
कौमुदी ॥) लग्नकः । इत्यमरः । २
। १० । ४४ ॥
जामिन् इति पारस्यभाषा ॥ (यथा,
प्रद्युम्न-
विजये । १ अङ्के ।
"यश्चैकः प्रतिभूः फलेषु कृतिनां
यज्ञेषु यज्ञेश्वरो
विघ्नस्तोमतमःसमूहतपनःसोऽयं
स्वयं
श्रीहरिः ॥")
तस्य कर्त्तव्यत्वं यथा, --
"सभापतेः कर्त्तव्यमाह कात्यायनः
।
'अथ चेत् प्रतिभूर्नास्ति
वादयोग्यस्तु वादिनोः ।
स रक्षितो दिनस्यान्ते दद्याद्भृत्याय
वेतनम् ॥'
प्रतिभवति तत्कार्य्ये तद्वद्भवतीति
प्रतिभूर्लग्नकः ।
वादयोग्यः विवादफलस्य
साधितधनादिदानस्य

क्वचिदष्टभुजं विद्याच्चतुर्भुजमथापि वा ।
द्विभुजं वापि कर्त्तव्यं भवनेषु पुरोधसा ॥"
* ॥
देयमष्टभुजस्यास्य यथास्थानं निबोध मे ।
खड्गो गदा शरः पद्मं देयं दक्षिणतो हरेः ।
धनुश्च खेटकञ्चैव शङ्खचक्रे च वामतः ॥ *
॥
चतुर्भुजस्य वक्ष्यामि यथैवायुधसंस्थितिः ।
दक्षिणेन गदां पद्मं वासुदेवस्य कारयेत् ॥
वामतः शङ्खचक्रे च कर्त्तव्ये भूतिमिच्छता ।
कृष्णावतारे तु गदा वामहस्ते प्रशस्यते ॥
यथेच्छया शङ्खचक्रमुपरिष्टात् प्रकल्पयेत् ।
अधस्तात् पृथिवी तस्य कर्त्तव्या
पादमध्यतः ।
दक्षिणे प्रणतं तद्वत् गरुत्मन्तं निवेशयेत् ।
वामतस्तु भवेल्लक्ष्मीः पद्महस्ता सुशोभना
।
गरुत्मानग्रतो वापि संस्थाप्यो
भूतिमिच्छता ॥
श्रीश्च पुष्टिश्च कर्त्तव्ये पार्श्वयोः पद्मसंयुते
।
तोरणञ्चोपरिष्टाच्च विद्याधरसमन्वितम् ॥
देवदुन्दुभिसंयुक्तं गन्धर्व्वमिथुनान्वितम् ।
पत्रवल्लीसमोपेतं सिंहव्यालसमन्वितम् ।
तथा कल्पलतोपेतं स्तुवद्भिरमरेश्वरैः ।
एवंविधो भवेद्विष्णुस्त्रिभागेनास्य पीठिका ॥
नवतालप्रमाणास्तु देवदानवकिन्नराः ।
अतःपरं प्रवक्ष्यामि मानोन्मानं विशेषतः ॥
* ॥
जालान्तरप्रविष्टानां भानूनां यद्रजः स्फुटम्
।

| | | |
|---|---|---|
| | दण्डदानस्य च क्षमः । वादिनोः भाषावादिनः उत्तरवादिनश्च । तथा च याज्ञवल्क्यः । ‘उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्य्यनिर्णये । प्रतिभुवस्त्वभावे च राज्ञा संज्ञपनं तयोः ॥’ राज्ञा संज्ञपनं दण्डतुल्याधिकरणम् । निर्णयस्य कार्य्ये धनादिदाने राजदन्तादित्वात् कार्य्य-शब्दस्य पूर्ब्बनिपातः । भृत्यस्तद्रक्षको राज-नियुक्तः ।” इति व्यवहारतत्त्वम् ॥<br><br>**प्रतिमः**, त्रि, (प्रतिमातीति । प्रति + मा + “आत-श्चोपसर्गे ।” ३ । १ । १३६ । इति कः ।) | |

त्र्यसरेणुः स विज्ञेयो वालाग्रन्तैरथाष्टभिः ॥
तदष्टकेन लिख्या तु यूका लिख्याष्टकैर्म्मता ।
यवो यूकाष्टकं तद्वदष्टभिस्तैस्तदङ्गुलम् ॥
स्वकीयाङ्गुलमानेन मुखं स्याद्द्वादशाङ्गुलम् ।
मुखमानेन कर्त्तव्या सर्व्वावयवकल्पना ॥ * ॥
सौवर्णी राजती वापि ताम्री रत्नमयी शुभा ।
शैलदारुमयी वापि लौहसीसमयी तथा ॥
रीतिका धातुयुक्ता वा ताम्रकांस्यमयी तथा ।
शुभदारुमयी वापि देवतार्च्चा प्रशस्यते ॥ * ॥
अङ्गुष्ठपर्व्वादारभ्य वितस्तिर्यावदेव तु ।
गृहेषु प्रतिमा कार्य्या नाधिका शस्यते बुधैः ॥
आषोडशात्तु प्रासादे कर्त्तव्या नाधिका ततः ।
मध्यमेन कनिष्ठा तु कार्य्या वित्तानुसारतः ॥
द्वारोच्छ्रायस्य यन्मानमष्टधा तन्तु कारयेत् ।
भागद्वयेन प्रतिमा त्रिभागीकृत्य तत् पुनः ॥
पीठिका भागतः कार्य्या नातिनीचा न चोच्छ्रिता ।
प्रतिमामुखमानेन नव भागान् प्रकल्पयेत् ॥
चतुरङ्गुला भवेद्ग्रीवा भागेन हृदयं पुनः ।
नाभिस्तस्मादधः कार्य्या भागेनैकेन शोभिता ॥
निम्नत्वे विस्तरत्वे च अङ्गुलं परिकीर्त्तितम् ॥
नाभेरधस्तथा मेढ्रं भागेनैकेन कल्पयेत् ।
त्रिभागमायतावूरू जानुनी चतुरङ्गुले ॥
जङ्घे द्विभागे विख्याते पादौ तु चतुरङ्गुलौ ।
चतुर्द्दशाङ्गुलस्तद्वन्मौलिरस्य प्रकीर्त्तितः ॥

अष्टाङ्गुला भवेद्ग्रीवा पृथुत्वेन विशिष्यते ॥
स्तनग्रीवान्तरं प्रोक्तमेकतालं स्वयम्भुवा ।
स्तनयोरन्तरं तद्वद्द्वादशाङ्गुलमिष्यते ॥
स्तनयोर्मण्डलं तद्वद्द्व्यङ्गुलं परिकीर्त्तितम् ।
चूचुके मण्डलस्यान्तर्य्यवमात्रे उभे स्मृते ॥
द्वितालञ्चापि विस्ताराद्वक्षःस्थलमुदाहृतम्।
कक्षे षडङ्गुले प्रोक्ते बाहुमूलस्तनान्तरे ॥
चतुर्द्दशाङ्गुलौ पादावङ्गुष्ठस्तु त्रिरङ्गुलः ।
पञ्चाङ्गुलपरीणाहमङ्गुष्ठाग्रं तथोन्नतम् ॥
अङ्गुष्ठकसमा तद्वदायामे स्यात् प्रदेशिनी ।
तस्याः षोडशभागेन हीयते मध्यमाङ्गुली ॥
अनामिकाष्टभागेन कनिष्ठा चापि हीयते ।
पर्व्वत्रयेण चाङ्गुल्यो गुल्फौ द्व्यङ्गुष्ठकौ मतौ ॥
पार्ष्णिर्द्व्यङ्गुलमात्रा तु कलयोच्चा प्रकीर्त्तिता ।
द्विपर्व्वाङ्गुष्ठकः प्रोक्तः परीणाहश्च द्व्यङ्गुलः ॥
प्रदेशिनीपरीणाहस्त्र्यङ्गुलः समुदाहृतः ।
अन्यासामष्टभागेन हीयते क्रमशो द्विजाः ॥
अङ्गुलेनोच्छ्र्यः कार्य्यः अङ्गुष्ठस्य विशेषतः ।
तदर्द्धेन तु शेषाणामङ्गुलीनान्तथोच्छ्र्यः ॥
जङ्घाग्रे परिणाहस्तु अङ्गुलानि चतुर्द्दश ।
जङ्घामध्ये परीणाहस्तथैवाष्टादशाङ्गुलः ॥
जानुमध्ये परीणाह एकविंशतिरङ्गुलः ।

पर्व्वार्द्धेन नखान् विद्यादङ्गलीषु समन्ततः ।
स्निग्धं श्लक्ष्णं प्रकुर्व्वीत ईषद्रक्तं तथाग्रजम् ॥
निम्नपृष्टं भवेन्मध्ये पार्श्वतः कलयोच्छ्रितम् ।
तथैव केशपर्य्यन्तः स्कन्धोपरि दशाङ्गुलः ॥
स्त्रियः कार्य्यास्तु तद्विज्ञैस्तनोरुजघनाधिकाः।
चतुर्द्दशाङ्गलायाममुदरं तासु निर्द्दिशेत् ॥
नानाभरणसम्पन्नाः किञ्चित्श्लक्ष्णभुजास्ततः ।
किञ्चिद्दीर्घं भवेद्वक्त्रमलकावलिरुत्तमा॥
नासा ग्रीवा ललाटञ्च निर्द्दिष्टाश्चतुरङ्गुलाः ।
अर्द्धार्द्धाङ्गुलिविस्तारः शस्यतेऽधरपल्लवः ॥
अधिकं नेत्रयुग्मन्तु चतुभर्गिन निर्द्दिशेत् ।
ग्रीवाबलिश्च कर्त्तव्या किञ्चिदर्द्धाङ्गुलोच्छ्र्या ॥
एवं नारीषु सर्व्वासु देवानां प्रतिमासु च ।
नवतालमिदं प्रोक्तं लक्षणं पापनाशनम् ॥ * ॥
अतः परं प्रवक्ष्यामि देवाकारान् विशेषतः ।
दशतालः स्मृतो रामो बलिर्वैरोचनिस्तथा ॥
वराहो नरसिंहश्च सप्ततालश्च वामनः ।
मत्स्यकूर्म्मौ तु निर्द्दिष्टौ यथाशोभं स्वयम्भुवा ॥
अतः परं प्रवक्ष्यामि रुद्राद्याकारमुत्तमम्।
आपीनोरुभुजस्कन्धस्तप्तकाञ्चनसप्रभः॥
शुक्लार्करश्मिसंघातचन्द्राङ्कितजटो विभुः ।
जटासुकुटधारी च द्विरष्टवत्सराकृतिः ॥
बाहुवारणहस्ताभो वृत्तजङ्घोरुमण्डलः।
ऊर्द्धकेशस्तु कर्त्तव्यो दीर्घायतविलोचनः॥
व्याघ्रचर्म्मपरीधानः कटिसूत्रत्रयान्वितः।
हारकेयूरसम्पन्नो भुजङ्गाभरणस्तथा॥
बाहवश्चापि कर्त्तव्या नानाभरणभूषिताः।
पीनोरुगण्डफलकः कुण्डलाभ्यामलङ्कृतः ॥
आजानुलम्बबाहुश्च सौम्यमूर्त्तिः सुशोभनः ।
खेटकं वामहस्ते तु खड्गञ्चैष तु दक्षिणे ॥
शक्तिं दण्डं त्रिशूलञ्च दक्षिणे तु निवेशयेत् ।
कपालं वामपार्श्वे तु नागं खट्वाङ्गमेव च ॥
एकश्च वरदो हस्तस्तथाक्षवलयोऽपरः।

ऊर्द्ध्वमानमिदं प्रोक्तं पृथुत्वञ्च निबोधत ।
सर्व्वावयवमानेषु विस्तरं शृणुत द्विजाः ॥ * ॥
चतुरङ्गुलं ललाटं स्यादूद्ध्वं नासा तथैव च ।
द्विरङ्गुलं हनु ज्ञेयमोष्ठश्चाङ्गुलसम्मितः ॥
अष्टाङ्गुलं ललाटन्तु तावन्मात्रे भ्रुवौ मते ।
अर्द्धाङ्गुला भ्रुवोर्लेखा मध्ये धनुरिवानता ॥
उन्नताग्रा भवेत् पार्श्वे श्लक्ष्णा तीक्ष्णा प्रशस्यते ।
अक्षिणी द्व्यङ्गुलायमि तदर्द्धञ्चैव विस्तरे ॥
उन्नतोदरमध्ये तु रक्तान्ते शुभलक्षणे ।
तारका च त्रिभागेन दृष्टिः स्यात् पञ्चभागिकी ॥
द्विरङ्गुलं भ्रुवोर्मध्यं नासामूलमथाङ्गुलम् ।
नासाग्रविस्तरं तद्वत् पुटद्वयमथानतम् ॥
नासापुटविलं तद्वदर्द्धाङ्गुलमुदाहृतम् ।
कपोले द्व्यङ्गुले तद्वत् कर्णमूलाद्विनिर्गते ॥
हन्वग्रमण्डलं तद्वद्विस्तारो द्व्यङ्गुलो भवेत् ।
अर्द्धाङ्गुला भ्रुवो राजी मृणालसदृशी समा ॥
अर्द्धाङ्गुलः समस्तद्वदुत्तरोष्ठस्तु विस्तरे ।
निष्पावसदृशं तद्वन्नासापुटदलम्भवेत् ॥
सृक्कणी ज्योतिस्तुल्ये च कर्णमूलात् षडङ्गुले ।
कर्णौ तु भ्रूसमौ ज्ञेयावूद्र्ध्वन्तु चतुरङ्गुलौ ॥
द्व्यङ्गुलौ कर्णपाशौ तु मात्रामेकान्तु विस्तृतौ ।
कर्णयोरुपरिष्टाच्च मस्तकं द्वादशाङ्गुलम् ।
ललाटं पृष्ठतोऽर्द्धेन प्रोक्तमष्टादशाङ्गुलम् ।
षट्त्रिंशदङ्गुलश्चास्य परिणाहः शिरोगतः ॥
सकेशनिचयश्चास्य द्विचत्वारिंशदङ्गुलः ।
केशान्ताद्धनुके तद्वदङ्गुलानि तु षोडश ॥
ग्रीवामध्यपरीणाहश्चतुर्व्विंशतिरङ्गुलः ।
जानूच्छ्रयोऽङ्गुलः प्रोक्तो मण्डलं त्र्यङ्गुलं पुनः ॥
ऊरुमध्ये परीणाहश्चाष्टाविंशतिकाङ्गुलः ।
एकत्रिंशोपरिष्टाच्च वृषणौ त्र्यङ्गुलौ पुनः ॥
त्र्यङ्गुलञ्च तथा मेढ्रं परीणाहे षडङ्गुलम् ।
मणिबन्धोदयां विद्यात् केशरेखां तथैव च ॥
मणिकोषपरीणाहश्चतुरङ्गुल इष्यते ।
विस्तारेण भवेत्तद्वत् कटिरष्टादशाङ्गुला ।
द्वाविंशतिस्तथा स्त्रीणां स्तनौ च द्वादशाङ्गुलौ ॥
नाभिमध्ये परीणाहो द्विचत्वारिंशदङ्गुलः ।
पुरतः पञ्चपञ्चाशत् कट्याश्चैव तु वेष्टनम् ॥
कक्षयोरुपरिष्टात्तु स्कन्धौ प्रोक्तौ षडङ्गुलौ ।
अष्टाङ्गुलाञ्च विस्तारे ग्रीवाञ्चैव तु निर्द्दिशेत् ॥
परीणाहे तथा ग्रीवां कला द्वादश निर्द्दिशेत् ।
आयामो भुजयोस्तद्वद्द्विचत्वारिंशदङ्गुलः ॥
कार्य्यन्तु बाहुशिखरं प्रमाणे षोडशाङ्गुलम् ।
ऊद्र्ध्वं यद्बाहुपर्व्वान्तं विद्यादष्टादशाङ्गुलम् ॥
तथैकाङ्गुलहीनन्तु द्वितीयं पर्व्वमुच्यते ।
बाहुमध्ये परीणाहो भवेदष्टादशाङ्गुलः ॥
षोडशोक्तः प्रबाहुस्तु षट्कलोग्रकरो मतः ।
सप्ताङ्गुलं करतलं पञ्चमध्याङ्गुली मता ॥
अनामिका मध्यमायाः सप्तभागेन हीयते ।
तस्यास्तु पञ्चभागेन कनिष्ठा परिहीयते ॥
वैशाखन्तानकं कृत्वा नृत्याभिनयसंस्थितः ॥
नृत्ये दशभुजः कार्य्यो गजासुरवधे तथा ।
तथा त्रिपुरदाहे च बाहवः षोडशैव तु ॥
शङ्खञ्चक्रं गदा शार्ङ्गं घण्टा तत्राधिका भवेत् ।
तथा धनुः पिनाकञ्च शरो विष्णुमयस्तथा ॥
चतुर्भुजोऽष्टबाहुर्व्वा ज्ञानयोगेश्वरो मतः ।
तीक्ष्णनासाग्रदशनः करालवदनो महान् ॥
भैरवः शस्यते लोके प्रत्यायतनसंस्थितः ।
न मूलायतने कार्य्यो भैरवस्तु भयङ्करः ॥
नारसिंहो वराहो वा तथान्येऽपि भयङ्कराः ।
न हीना नाधिकाङ्गा च कर्त्तव्या देवता क्वचित् ॥
स्वामिनं घातयेन्न्यूना करालवदना तथा ।
अधिका शिल्पिनं हन्यात् कृशा चैवार्थनाशिनी ॥
कृशोदरी तु दुर्भिक्षं निर्म्मांसा धननाशिनी ।
वक्रनासा तु दुःखाय संक्षिप्ताङ्गी भयङ्करी ॥
चिपिटा दुःखशोकाय अनेत्रा नेत्रनाशिनी ।
दुःखदा हीनवक्त्रा तु पाणिपादकृशा तथा ॥
हीनाङ्गा हीनजङ्घा च भ्रमोन्मादकरी नृणाम् ।
वक्रवक्त्रा च राजानं कटिहीना च या भवेत् ॥

| | | |
|---|---|---|
| | मध्यमायास्तु हीना वै पञ्चभागेन तर्ज्जनी ।<br>अङ्गुष्ठतर्ज्जनीमूलादधः प्रोक्तस्तु तत्समः ॥<br>अङ्गुष्ठपरिणाहस्तु विज्ञेयश्चतुरङ्गुलः ।<br>शेषाणामङ्गुलीनान्तु भागो भागेन हीयते ॥<br>मध्यमामध्यपर्व्वन्तु अङ्गुलद्वयमायतम् ।<br>यवो यवस्तु सर्व्वासां तस्यां तस्यां प्रहीयते ॥<br>अङ्गुष्ठपर्व्वमध्यन्तु तर्ज्जन्या सदृशं भवेत् ।<br>यवद्वयाधिकं तद्वदग्रपर्व्वमुदाहृतम् ॥ | |

पाणिपादविहीनायां जायते मरको महान् ।
जङ्घाजानुविहीना च शत्रुकल्याणकारिणी ॥
पुत्त्रमित्रविनाशाय हीना वक्षःस्थलैस्तु या ।
सम्पूर्णावयवा या तु आयुर्लक्ष्मीप्रदा सदा ।
एवं लक्षणमासाद्य कर्त्तव्यः परमेश्वरः ॥ *
॥
स्तूयमानः सुरैः सर्व्वैः समन्ताद्दर्शयेद्भवम् ।
शक्रेण नन्दिना चैव महाकालेन शङ्करम् ॥
प्रणता लोकपालाश्च पार्श्वे तु गणनायकाः ।
नृत्यद्भृङ्गिरिटिश्चैव भूतवेतालसंवृतः ।
सर्व्वे हृष्टाश्च कर्त्तव्याः स्तुवन्तः परमेश्वरम्
॥
गन्धर्व्वविद्याधरकिन्नराणा-
मथाप्सरोगुह्यकनायकानाम्।
गणैरनेकैः शतशो महेन्द्र-
मुनिप्रवीरैरभिनन्द्यमानम् ॥
धृताक्षसूत्रैः शतशः प्रबाल-
पुष्पोपहारप्रचयं ददद्भिः ।
संस्तूयमानं भगवन्तमीड्यं
नेत्रत्रयेणामरमर्त्यपूज्यम् ॥ * ॥
सूत उवाच ।
अधुना संप्रवक्ष्यामि अर्द्धनारीश्वरं परम् ।
अर्द्धेन देवदेवस्य नारीरूपं सुशोभनम् ॥
ईशार्द्धे तु जटाभारो बालेन्दुकलया युतः ।
उमार्द्धे तु प्रदातव्यौ सीमन्ततिलकावुभौ ॥
वासुकिं दक्षिणे कर्णे वामे कुण्डलमादिशेत् ।
बालिका चोपरिष्टात्तु कपालं दक्षिणे करे ॥
त्रिशूलं वापि कर्त्तव्यं देवदेवस्य शूलिनः ।
वामतो दर्पणं दद्यादुत्पलं वा विशेषतः ॥
वामबाहुश्च कर्त्तव्यः केयूरबलयान्वितः ।
उपवीतञ्च कर्त्तव्यं मणिमुक्तामयन्तथा ॥
स्तनभारमथार्द्धे तु वामे पीनं प्रकल्पयेत् ।
हारार्द्धमुज्ज्वलं कुर्य्यात् श्रोण्यर्द्धन्तु तथैव च
॥
लिङ्गार्द्धमूद्र्ध्वं कर्त्तव्यं
व्याघ्राजिनकृताम्बरम् ।
वामे लम्बपरीधानं कटिसूत्रत्रयान्वितम् ॥
नानारत्नसमोपेतं दक्षिणं भुजगान्वितम् ।
देवस्य दक्षिणं पादं पद्मोपरिसमास्थितम् ॥

दक्षिणन्तु बहिः कृत्वा बाहुं
दक्षिणतोऽथवा ॥
स्कन्धे वा दक्षिणे कुक्षौ
स्पृशत्यङ्गुलिजैः क्वचित् ।
वामे च दर्पणं दद्यादुत्पलं वा
सुशोभनम् ॥
कटिसूत्रत्रयञ्चैव नितम्बे स्यात्
प्रलम्बकम् ।
जया च विजया चैव
कार्त्तिकेयविनायकौ ॥
पार्श्वयोर्द्दर्शयेत्तत्र सतोरणमगुह्यकम् ।
मालाविद्याधरांस्तत्र
बीणावानप्सरोगणः ।
एतद्रूपमुमेशस्य कर्त्तव्यं भूतिमिच्छता
॥ * ॥
शिवनारायणं वक्ष्ये सर्व्वपापप्रणाशनम्
।
वामार्द्धे माधवं कुर्य्याद्दक्षिणे
शूलपाणिनम् ॥
बाहुद्वयञ्च कृष्णस्य मणिकेयूरभूषितम्
।
शङ्खचक्रधरं शान्तमारक्ताङ्गुलिविभ्रमम्
॥
चक्रस्थाने गदाञ्चापि पाणौ
दद्यादधस्तले ।
शङ्खञ्चैवेतरे दद्यात्कूट्यर्थं भूषणोज्ज्वलम्
॥
पीतवस्त्रपरीधानं चरणं मणिभूषितम् ।
दक्षिणार्द्धे जटाभारमर्द्धेन्दुकृतलक्षणम्
॥
भुजङ्गहारवलयं वरदं दक्षिणं करम् ।
द्वितीयञ्चापि कुर्व्वीत
त्रिशूलवरधारिणम् ॥
व्यालोपवीतसंयुक्तं कट्यर्द्धं
कृत्तिवाससम् ।
मणिरत्नैश्च संयुक्तपादं नागविभूषितम्
।
शिवनारायस्यैवं कल्पयेद्रूपमुत्तमम् ॥
* ॥

मृगचर्म्मधरञ्चापि दिव्ययज्ञोपवीतिनम् ।
आज्यस्थालीं न्यसेत् पार्श्वे वेदांश्च चतुरः
पुनः ॥
वामपार्श्वे तु सावित्री दक्षिणे च सरस्वती ।
अग्रे च ऋषयस्तद्वत् कार्य्याः पैतामहे पदे ॥
* ॥
कार्त्तिकेयं प्रवक्ष्यामि तरुणादित्यसन्निभम् ।
कमलोदरवर्णाभं सुकुमारं कुमारकम् ॥
गेण्डुकैश्चीरकैर्युक्तं मयूरवरवाहनम् ।
स्थानीयखेटनगरे भुजान् द्वादश कल्पयेत् ॥
चतुर्भुजः कर्व्वटे स्याद्वने ग्रामे द्विबाहुकः ॥
शक्तिः पाशस्तथा खड्गः शरः शूलन्तथैव च
।
वरदश्चैव हस्तः स्यादथवाभयदो भवेत् ॥
एते दक्षिणतो ज्ञेयाः केयूरकटकोज्ज्वलाः ।
धनुः पताका मुष्टिश्च तर्ज्जनी च प्रसारिता ॥
खेटकं ताम्रचूडश्च वामहस्ते प्रशस्यते ।
द्विभुजस्य करे शक्तिर्वामे स्यात् कुक्कुटोऽपरे
॥
चतुर्भुजे शक्तिपाशौ वामतो दक्षिणे त्वसिः ।
वरदोऽभयदो वापि दक्षिणः स्यात् तुरीयकः
॥ * ॥
विनायकं प्रवक्ष्यामि गजवक्त्रं त्रिलोचनम् ।
लम्बोदरं चतुर्बाहुं व्यालयज्ञोपवीतिनम् ॥
स्वस्तिकर्णं बृहच्छुण्डमेकदंष्ट्रं पृथूदरम् ।
स्वं दन्तं दक्षिणकरे उत्पलञ्च तथापरे ॥
लड्डूकं परशुञ्चैव वामतः परिकल्पयेत् ।
बृहत्संक्षिप्तगमनं पीनस्कन्धाङ्घ्रिपाणिनम् ।
युक्तं बुद्धिकुबुद्धिभ्यामधस्तान्मूषिकान्वितम्
॥ * ॥
कात्यायन्याः प्रवक्ष्यामि रूपं दशभुजन्तथा ।
त्रयाणामपि देवानामनुकारानुकारिणीम् ॥
जटाजूटसमायुक्तामर्द्धेन्दुकृतशेखराम् ।
लोचनत्रयसंयुक्तां पूर्णेन्दुसदृशाननाम् ॥
अतसीपुष्पवर्णाभां सुप्रतिष्ठां सुलोचनाम् ।
नवयौवनसम्पन्नां सर्व्वाभरणभूषिताम् ॥
सुचारुदशनां तद्वत् पीनोन्नतपयोधराम् ।
त्रिभङ्गस्थानसंस्थानां महिषासुरमर्द्दिनीम् ॥
त्रिशूलं दक्षिणे दद्यात् खड्गञ्चक्रन्तथैव च ।

किञ्चिदूर्ध्वन्तथा वामं भूषितं नूपुरेण च ।
रत्नैर्विभूषितान् कुर्य्यादङ्गुलीष्वङ्गुलीयकान्
॥
सालक्तकं तथा पादं पार्व्वत्या दर्शयेत् सदा
।
अर्द्धनारीश्वरस्येदं रूपमस्मिन्नुदाहृतम्॥ *
॥
उमामहेश्वरस्यापि लक्षणं शृणुत द्विजाः ।
संस्थानन्तु तयोर्वक्ष्ये लीलाललितविभ्रमम्
॥
चतुर्भुजं द्विबाहुं वा जटाभारेन्दुभूषितम् ।
लोचनत्रयसंयुक्तमुमैकस्कन्धपाणिनम्॥
दक्षिणेनोल्वणं शूलं वामं कुचभरं करम् ।
द्वीपिचर्म्मपरीधानं नानारत्नोपशोभितम्॥
सुप्रतिष्ठं सुवेशञ्च तथार्द्धेन्दुहुताशनम् ।
वामे तु संस्थिता देवी तस्योरौ बाहुगूहिता ॥
शिरोभूषणसंयुक्तैरलकैर्ललितानना ।
सबालिका कर्णवती ललाटतिलकोज्ज्वला॥
मणिकुण्डलसंयुक्ता कर्णिकाभरणा क्वचित्
।
हारकेयूरबहुला हरवक्त्रावलोकिनी॥
वामांशं देवदेवस्य स्पृशन्ती लीलया
क्वचित् ।

महावराहं वक्ष्यामि पद्महस्तं गदाधरम्
।
तीक्ष्णदंष्ट्राग्रघोरास्यं मेदिनीवामकुर्परम्
॥
दंष्ट्राग्रेणोद्धृतां दान्तां
धरणीमुत्पलान्विताम्
विस्मयोत्फुल्लनयनामुपरिष्टात्
प्रकल्पयेत् ॥
दक्षिणं कटिसंस्थन्तु करन्तस्य
प्रकल्पयेत् ।
कूर्म्मोपरि तथा पादमेकं नागेन्द्रमूर्द्धनि
।
संस्तूयमानं लोकेशैः समन्तात्
परिकल्पयेत् ॥ * ॥
नारसिंहञ्च कर्त्तव्यं
भुजाष्टकसमन्वितम्।
रौद्रसिंहासनं तद्वद्विदारितमुखेक्षणम् ॥
स्तब्धपीनशटाकीर्णं दारयन्तं दितेः
सुतम् ।
विनिर्गतान्त्रजालञ्च दानवं
परिकल्पयेत् ॥
वमन्तं रुधिरोद्गारं
भ्रुकुटीकुटिलेक्षणम् ।
युध्यमानञ्च कर्त्तव्यं क्वचित्
करणबन्धनैः ॥
परिश्रान्तेन दैत्येन तर्ज्यमानं मुहुर्मुहुः
।
दैत्यं प्रदर्शयेत्तत्र खड्गखेटकधारिणम्
।
स्तूयमानं तथा विष्णुं दर्शयेदमराधिपैः
॥ * ॥
तथा त्रिविक्रमं वक्ष्ये
ब्रह्माण्डाक्रमणोल्वणम्।
वामपार्श्वे तथा राहुमुपरिष्टात्
प्रकल्पयेत् ॥
अघस्ताद्वामनं तावत् कल्पयेत्
सकमण्डलुम्।
दक्षिणे छत्रिकां विद्यान्मुखं दीनं
प्रदर्शयेत् ।
भृङ्गारधारिणं तद्वद्बलिन्तस्यैव
पार्श्वतः ॥

तीक्ष्णबाणं तथा शक्तिं दक्षिणे सन्निवेशयेत् ॥
खेटकं पूर्णचापञ्च पाशमङ्कुशमेव च ।
घण्टां वा परशुं वापि वामतः सन्निवेशयेत् ॥
अधस्तान्महिषं तद्वद्विशिरस्कं प्रदर्शयेत् ।
शिरश्छेदोद्भवं तद्वद्दानवं खड्गपाणिनम् ॥
हृदि शूलेन् निर्भिन्नं निर्य्यदन्त्रविभूषितम् ।
रक्तरक्तीकृताङ्गञ्च रक्तविष्फुरितेक्षणम् ॥
वेष्टितं नागपाशेन भ्रुकुटीभीषणाननम् ।
सपाशवामहस्तेन धृतकेशञ्च दुर्गया ॥
वमद्रुधिरवक्त्रञ्च देव्याः सिंहं प्रदर्शयेत् ।
देव्यास्तु दक्षिणं पादं समं सिंहोपरिस्थितम् ॥
किञ्चिदूर्ध्वं तथा वाममङ्गुष्ठं महिषोपरि ।
स्तूयसानञ्च तद्रूपममरैः सन्निवेशयेत् ॥ * ॥
इदानीं सुरराजस्य रूपं वक्ष्ये विशेषतः ।
सहस्रनयनं देवं मत्तवारणसंस्थितम् ॥
पृथूरुवक्षोवदनं सिंहस्कन्धं महाभुजम् ।
किरीटकुण्डलधरं पीवरोरुभुजेक्षणम् ॥
वज्रोपलधरं तद्वन्नानाभरणभूषितम्।
पूजितं देवगन्धर्व्वैरप्सरोगणसंस्तुतम् ॥

| | | |
|---|---|---|
| | बन्धनञ्चापि कुर्व्वन्तं गरुडन्तस्य दर्शयेत् ॥ * ॥<br>मत्स्यरूपं तथा मात्स्यं कौर्म्मं कूर्म्माकृतिं न्यसेत् ।<br>एवं रूपस्तु भगवान् कार्य्यो नारायणो हरिः ॥ * ॥<br>ब्रह्मा कमण्डलुधरः कर्त्तव्यः स चतुर्मुखः ॥<br>हंसारूढः क्वचित् कार्य्यः क्वचिच्च कमलासनः ।<br>वर्णेन पद्मगर्भाभश्चतुर्ब्बाहुः शुभेक्षणः ॥<br>कमण्डलुं वामकरे स्रुचं हस्ते च दक्षिणे ।<br>वामे दण्डधरं तद्वत् स्रुचञ्चापि प्रदर्शयेत् ॥<br>मुनिभिर्द्देवगन्धर्व्वैः स्तूयमानं समन्ततः ।<br>कुर्व्वाणमिव लोकांस्त्रीन् शुक्लाम्बरधरं विभुम् ॥ | |

छत्रचामरधारिण्यौ स्त्रियौ पार्श्वेतु कारयेत्
।
सिंहासनगतं वापि गन्धर्व्वगणसंयुतम् ॥
इन्द्राणीं वामतस्तस्य
कुर्य्यादुत्पलधारिणीम् ॥
सूत उवाच ।
प्रभाकरस्य प्रतिमामिदानीं शृणुत द्विजाः
।
रथस्थं कारयेद्देवं पद्महस्तं सुलोचनम् ॥
सप्ताश्वञ्चैकचक्रञ्च रथन्तस्य प्रकल्पयेत्
।
मुकुटेन विचित्रेण पद्मगर्भसमप्रभम् ॥
नानाभरणभूषाढ्यं भुजाभ्यां धृतपुस्करम्
।
स्कन्धस्थे पुष्करे ते तु लीलयैव धृते सदा
॥
चोलकच्छन्नवपुषं क्वचिच्चित्रेषु दर्शयेत् ।
वस्त्रयुग्मसमोपेतं चरणौ तेजसावृतौ ॥
प्रतीहारौ च कर्त्तव्यौ पार्श्वयोर्दण्डपिङ्गलौ
।
कर्त्तव्यौ खड्गहस्तौ च पार्श्वयोः
पुरुषावुभौ ॥
लेखनीकृतहस्तञ्च पार्श्वे धातारमव्ययम् ।
नानादेवगणैर्युक्तमेवं कुर्य्याद्दिवाकरम् ॥
अरुणः सारथिस्तस्य पद्मिनीपत्रसन्निभः
।
अश्वौ च बलिसुग्रीवावन्तस्थौ तस्य
पार्श्वयोः ॥
भुजङ्गरश्मिभिर्बद्धाः सप्ताश्वा
रश्मिसंयुताः ।
पद्मस्थं वा हयस्थं वा पद्महस्तं
प्रकल्पयेत् ॥ * ॥
अग्नेस्तु लक्षणं वक्ष्ये सर्व्वकामफलप्रदम् ।
दीप्तं सुवर्णवपुषमर्द्धचन्द्रासनस्थितम् ॥
बालार्कसदृशन्तस्य वसनञ्चापि दर्शयेत् ।
यज्ञोपवीतिनं देवं लम्बकूर्च्चधरन्तथा ॥
कमण्डलुं वामकरे दक्षिणे त्वक्षसूत्रकम् ।
ज्वालावितानसंयुक्तमजवाहनमुज्ज्वलम् ।

मातृणां लक्षणं वक्ष्ये यथावदनुपूर्ब्बशः ।
ब्रह्माणी ब्रह्मसदृशी चतुर्वक्त्रा चतुर्भुजा ।
हंसाधिरूढा कर्त्तव्या साक्षसूत्रकमण्डलुः ॥ *
॥
महेश्वरस्य रूपेण तथा माहेश्वरी मता ।
जटामुकुटसंयुक्ता वृषस्था चन्द्रशेखरा ।
कपालशूलखट्वाङ्गवरदाथचतुर्भुजा ॥ * ॥
कुमाररूपा कौमारी मयूरवरवाहना ।
रक्तवस्त्रधरा तद्वच्छूलशक्तिधरा तथा ॥
हारकेयूरसम्पन्ना कृकवाकुधरा तथा ॥ * ॥
वैष्णवी विष्णुसदृशी गरुत्मति समास्थिता ।
चतुर्बाहुश्च वरदा शङ्खचक्रगदाधरा ।
सिंहासनगता वापि बालकेन समन्विता ॥ *
॥
वाराहीञ्च प्रवक्ष्यामि महिषोपरिसंस्थिताम् ।
वराहसदृशीं देवीं घण्टाचामरधारिणीम् ।
गदाचक्रधरान्तद्वद्दानवेन्द्रविनाशिनीम् ॥ * ॥
इन्द्राणीमिन्द्रसदृशीं वज्रशूलगदाघराम् ।
गजासनगतान्देवीं लोचनैर्बहुभिर्वृताम् ।
तप्तकाञ्चनबर्णाभां सर्व्वाभरणभूषिताम् ॥ * ॥
तीक्ष्णखड्गधरान्तद्वद्वक्ष्येयोगीश्वरीमिमाम् ।
दीर्घजिह्वामूद्र्ध्वकेशीमस्थिखण्डैश्च
मण्डिताम् ।
दंष्ट्राकरालवदनां कुर्य्याच्चैव कृशोदरीम् ॥ *
॥
कपालमालिनीं देवीं मुण्डमालाविभूषिताम् ।
कपालं वामहस्ते तु मांसशोणितपूरितम् ॥
सकेशन्तु शिरो न्यस्य शस्त्रिका दक्षिणे तथा
।
गृध्रस्था वायसस्था वा निर्म्मांसा विगतोदरी ।
करालवदना तद्वत् कर्त्तव्या सा त्रिलोचना ॥
* ॥
चामुण्डा बद्धघण्टा च द्वीपिचर्म्मधरा शिवा ।
दिग्वासा कालिका तद्वद्रासभस्था कपालिनी
॥
सुरक्तपुष्पाभरणा वर्द्धनी ध्वजसंयुता ।
विनायकञ्च कुर्व्वीत मातृणामन्तिके सदा ॥
वीरेश्वरश्च भगवान् वृषारूढो जटाधरः ।

पिशाचा राक्षसाश्चैव भूतवेतालजातयः
॥
निर्मांसाश्चैव ते सर्व्वे रौद्रा
विकृतरूपिणः ।
क्षेत्रपालश्च फर्त्तव्यो जटिलो
विकृताननः ॥
दिग्वासा जटिलस्तद्वत्
श्वगोमायुनिषेवितः ।
कपालं वामहस्ते तु शिरः केशसमावृतम्
।
दक्षिणे शस्त्रिकां दद्यादसुरक्षयकारिणीम्
॥ * ॥
अथातः संप्रवक्ष्यामि द्विभुजं
कुसुमायुधम् ।
पार्श्वे चाश्वमुखं तस्य
मकरध्वजसंयुतम् ॥
दक्षिणे पुष्पबाणञ्च वामे पुष्पमयं धनुः ।
प्रीतिः स्याद्दक्षिणे तस्य
भोजनोपस्करान्विता ॥
रतिस्तु वामपार्श्वे च
शयनोपस्करान्विता ।
पटश्च पटहश्चैव खरः कामातुरस्तथा
॥
पार्श्वतो जलवापी च वनं नन्दनमेव च ।
सुशोभनश्च कर्त्तव्यो भगवान्
कुसुमायुधः ॥
संस्थानमीषद्रक्तं स्याद्विस्मयं
विश्वनेत्रकम् ।
एतदुद्देशतः प्रोक्तं प्रतिंमालक्षणं मया ॥
विस्तरेण न शक्नोति बृहस्पतिरपि
द्विजाः ॥”
इति मत्स्यपुराणे देवार्च्चानुकीर्त्तने
प्रतिमा-
लक्षणं नाम २३२ । २३३ । २३४ ।
२३५
अध्यायाः ॥ * ॥ सा द्विविधा ।
स्थापनरूपा
स्वयं व्यक्तरूपा च । यथा, --
श्रीसदाशिव उवाच ।

कुण्डस्थञ्चापि कुर्व्वीत मूर्द्ध्नि सप्तशिखान्वितम् ॥ *
तथा यमं प्रवक्ष्यामि दण्डपाशधरं विभुम् ।
महामहिषमारूढं कृष्णाञ्जनचयोपमम् ॥
सिंहासनगतञ्चापि दीप्ताग्निसमलोचनम् ।
महिषं चित्रगुप्तञ्च करालान् किङ्करांस्तथा ॥
समन्ताद्दर्शयेत्तस्य सौम्यासौम्यांस्तथा सुरान् ॥
राक्षसेन्द्रं तथा वक्ष्ये लोकपालञ्च नैरृ तम् ।
नरारूढं महाकायं रक्षोभिर्ब्बहुभिर्वृतम् ॥
खड्गहस्तं महानीलं कज्जलाचलसन्निभम् ।
नरयुक्तविमानस्थं पीताम्बरविभूषितम् ॥ * ॥
वरुणञ्च प्रवक्ष्यामि पाशहस्तं महाबलम् ।
शङ्खस्फटिकवर्णाभं हारकेयूरसंवृतम् ॥
मृगाधिरूढं वरदं पताकाध्वजसंयुतम् ।
भूषणावगतं शान्तं किरीटवरधारिणम् ॥ * ॥
वायुरूपं प्रवक्ष्यामि धूम्रञ्च मृगवाहनम् ।
चित्राम्बरधरं शान्तं युवानं कुञ्चितभ्रुवम् ।
मृगाधिरूढं वरदं पताकाध्वजसंयुतम् ॥ * ॥
कुवेरञ्च प्रवक्ष्यामि कुण्डलाभ्यामलङ्कृतम् ।
हारकेयूररचितं सिताम्बरधरं सदा ॥
गदाधरञ्च कर्त्तव्यं वरदं मुकुटान्वितम् ।
नरयुक्तविमानस्थं मेषस्थं वापि कारयेत् ॥
वर्खेन पीतवर्णेन गुह्यकैः परिवारितम् ।
महोदरं महाकायं ऋद्ध्यष्टकसमन्वितम् ॥
गुह्यकैर्बहुभिर्युक्तं धनव्यग्रकरैस्तथा ॥ * ॥
तथैवेशं प्रवक्ष्यामि धवलं धवलेक्षणम् ।
त्रिशूलपाणिनं देवं त्र्यक्षं वृषगतं विभुम् ॥ * ॥

वीणाहस्तस्त्रिशूली च मातृणामग्रतो भवेत् ॥ * ॥
श्रियन्देवीं प्रवक्ष्यामि नवे वयसि संस्थिताम् ।
सुयौवनां पीनगण्डां रक्तोष्ठीं कुञ्चितभ्रुवम् ॥
पीनोन्नतस्तनतटां मणिकुण्डलधारिणीम् ।
सुमण्डलं मुखं तस्याः शिरः सीमन्तभूषितम् ॥
पद्मस्वस्तिकशङ्खैर्वा भूषितां कुन्तलालकैः ।
कञ्चुकाबद्धगात्रौ च हारभूषौ पयोधरौ ॥
नागहस्तोपमौ बाहू केयूरकटकोज्ज्वलौ ।
पद्मं हस्ते च दातव्यं श्रीफलं दक्षिणे करे ॥
मेखलाभरणान्तद्वत्तप्तकाञ्चनसुप्रभाम् ।
नानाभरणसम्पन्नां शोभनाम्बरधारिणीम् ।
पार्श्वे तस्याः स्त्रियः कार्य्याश्चामरव्यग्रपाणयः
पद्मासनोपविष्टान्तु पद्मसिंहासनस्थिताम् ॥
करिभ्यां स्नाप्यमाना सा भृङ्गाराभ्यामनेकशः ।
प्रतिपालयन्तौ करिणौ भृङ्गाराभ्यां तथापरौ ॥
स्तूयमाना च लोकेशैस्तथा गन्धर्व्वगुह्यकैः ॥ * ॥
तथैव यक्षिणी कार्य्या सिद्धासुरनिषेविता ।
पार्श्वयोः कलसौ तस्यास्तोरणे देवदानवाः ॥
नागाश्चैव तु कर्त्तव्याः खड्गखेटकधारिणः ।
अधस्तात्प्रकृतिस्तेषां नाभेरूर्द्धञ्च पौरुषी ॥
फणाश्च मूर्द्धि कर्त्तव्या द्विजिह्वा बहवः समाः ।

“शृणु देवि ! प्रवक्ष्यामि तदंशावसथं हरेः ।
स्थापनञ्च स्वयं व्यक्तं द्विविधं तत् प्रकीर्त्तितम् ॥
शिलामृद्दारुलौहाद्यैः कृत्वा प्रतिकृतिं हरेः ।
श्रौतस्मार्त्तागमैः प्रोक्ता क्रियासंस्थापना हि तत ॥
तत्स्थापनमिति प्रोक्तं स्वयं व्यक्तं हि मे शृणु ।
यस्मिंस्तु निहितो विष्णुः स्वयमेव नृणां भुवि ॥
पाषाणदार्व्वोरात्मेशः स्वयं व्यक्तं हि तत् स्मृतम् ।
स्वयं व्यक्ते स्थापने वा पूजयेन्मधुसूदनम् ॥
देवतानां महर्षीणामर्च्चनार्थं सनातनः ।
स्वयमेव जगन्नाथः सान्निध्यं याति केशवः ॥
यस्य यद्विग्रहे भाग्यं तदेवाविरभूद्भुवि ।
तदेव पूजयेन्नित्यन्तस्मिन्नेव रमेत् सदा ॥
श्रियोऽङ्कशायी देवेशो विधेरर्च्च्यः शुभानने ! ।
स एवेक्ष्वाकुनाथानां तपसाविरभूद्भुवि ॥
मयापि काश्यां संपूज्यो माधवः कलुषापहः ।
दक्षिणोदधितीरे तु नीलाद्रौ पुरुषोत्तमे ॥
दारुरूपी जगन्नाथो ब्रह्मणा स्थापितः स्वयम् ।
स एव पूज्यः सर्व्वेषां लोकानां स्वलु पार्व्वति ! ॥
नरनारायणः साक्षात् पूज्यो वदरिकाश्रमे ।
गदाधरो गयायान्तु प्रयागे माधवस्तथा ॥
माधवो विधिवत् पूज्यो गङ्गासागरसङ्गमे ।
कपालमोचने तीर्थे कलिङ्गेऽच्च्यो हरिस्तथा ॥

| | | |
|---|---|---|
| | | विष्णुश्च बहिरङ्गे तु भीममूर्त्तिः शिवे यतः ।<br>द्वारकायां वासुदेवः कुरुक्षेत्रे रणेश्वरः ॥<br>नारायणो व्यङ्कटाद्रौ पूज्यो नित्यं सनातनः ।<br>स्वयं श्रीभगवान् कृष्णो धाम्नि वृन्दावने शुभे ॥<br>गोविन्दः केशवो नन्दयशोदानन्दनो विभुः ।<br>पूज्यो मदनगोपालगोवर्द्धनधरादिकः॥<br>चतुरशीतिके क्रोशे ब्रह्माण्डातीतके शिवे ! । |

कलिन्दनन्दिनीतीरे
महाप्रलयवर्ज्जिते ॥
सदैव कार्ष्णैरभ्यर्च्यः
श्रीगोपीजनवल्लभः ।
यत्र यत्र हरेरर्च्चा स्वयं व्यक्ता
शुभानने ! ॥
स्थानं तीर्थं तथा क्षेत्रं
यज्ञदानमहोत्सवम् ।
संकीर्त्तनं सर्व्वभक्तिस्तथा
कार्ष्णादिकं जनम् ॥
कायेन मनसा वाचा भक्त्या
देवि ! पुनः पुनः ।
तत्र तत्र समागम्य रमेऽहं
संव्यवस्थितः ॥
नाष्टाङ्गयोगजं ज्ञानमर्च्चायां
विन्दते नृणाम् ।
चक्षुषोर्विषयं प्राप्य ददाति
फलमीप्सितम् ॥
सर्व्वावस्थासु सौरभ्यमर्च्चायां
लभते नरः ।
अङ्गानामपि सान्निध्यं सर्व्वदा
पृथिवीतले ॥
जम्बुद्वीपे महापुण्ये वर्षे वै भारते
शुभे ।
अर्च्चायां सन्निधिर्विष्णोर्नेतरेषु
कदाचन ॥
तस्माद्वै भारतं वर्षं
मुनिभिस्त्रिदशैरपि ।
सेवितं सततं सुभ्रु !
तपोयज्ञक्रियादिभिः ॥
भारतेऽस्मिन् महावर्षे नित्यं
सन्निहितो हरिः ।
इन्द्रद्युम्ने तथा कौर्म्मे सिंहाद्रौ
वदरीवने ॥
काश्यां प्रयागे सोमे च
शालग्रामाचले तथा ।
नारायणाचले सोमे वराहे
वामनाश्रमे ।

देवीमन्नमयीं पुण्यामग्निर्यजति भावितः ।
अग्नित्वं प्राप्तवांस्तेन तेजोरूपसमन्वितम् ।
ताम्रां देवीं सदाकालं भक्त्या देवो दिवाकरः
।
अर्च्चते तत्र सम्प्राप्तं तेन सूर्य्यत्वमुत्तमम् ॥
मुक्ताशैलमयीं देवीं सोमः पूजयते सदा ।
तेन सोमोऽपि संप्राप्तः सोमत्वं सततोज्वलम्
॥
प्रवालकमयीं देवीं यजन्ते पन्नगोत्तमाः ।
तेन नागास्तु भोगाढ्याः प्रयान्त्येते परं पदम्
॥
कृष्णायसमयीं देवीं पूजयन्त्यसुरोत्तमाः ।
राक्षसाश्च महात्मानस्तेन तेऽमितविक्रमाः ॥
त्रपुसीसमयीं देवीं पिशाचाः पूजयन्ति ताम् ।
तेन ऋद्धिबलोपेताः प्रयान्ति परमं पदम् ॥
त्रैलोहिकां सदा देवीं यजन्ते गुह्यकादयः ।
तेन भोगबलोपेताः प्रयान्तीश्वरमन्दिरम् ॥
वज्रलौहमयीं देवीं यजन्ते मातरः सदा ।
मातृत्वं प्राप्य ताः सर्व्वाः प्रयान्ति परमं पदम्
॥
एवं देवाः सगन्धर्व्वाः पिशाचोरगराक्षसाः ।
पूजयन्ते सदाकालं चर्च्चिकां सुरनायिकाम्
॥
तथा त्वमपि देवेन्द्र ! यदीच्छसि परां गतिम्
।
शिवां मणिमयीं पूज्य लभसे मनसेप्सितान् ॥
कामान् सुरवराध्यक्ष ! कामिकैः पूजिता सदा
।
ददाति सर्व्वलोकानां चिन्तामणिर्यथा शिवा
॥”
अपि च ।
“हेमताम्ना च मृद्वार्क्षी शैलाचित्रायसापि वा ।
शक्तिशूले स्थिता देवी सर्व्वकामफलप्रदा ॥
यो यस्य आयुधः प्रोक्तस्तस्मिंस्तां
प्रतिपूजयेत् ।
देवी शक्त्यर्च्चिता पुंसां
कामायुःसुतसौख्यदा ॥
शूले संपूजिता वत्स ! सर्व्वं भवति पूजितम् ।
वार्क्षीं वा शैलजां वापि रत्नधातुमयीमपि ॥

अपि च ।
“अग्नौ क्रियावतामस्मि हृदि चाहं मनीषिणाम् ।
प्रतिमा स्वल्पबुद्धीनां ज्ञानिनामस्मि सर्व्वतः ॥ *
॥
प्रतिमां लक्षणवतीं यः कुर्य्याच्चैव मानवः ।
केशवस्य परं लोकमक्षयं प्रतिपद्यते ॥
षष्टिवर्षसहस्राणां सहस्राणि महामुने ! ॥
क्रीडते देववत्तत्र अप्सरोभिः सकिन्नरैः ॥
यः स्थापयेद्धरेरर्च्चां सुप्रशस्ते निवेशने ।
पुरुषः कृतकृत्यत्वान्नैनञ्च मरणं नयेत् ॥ * ॥
संस्थाप्य प्रतिमां विष्णोर्हेमरूप्यसुशैलजाम् ।
रत्नजां रैतिकीं वापि बहिस्तीर्थे गृहेऽपि वा ॥
महास्नानेन गोविन्दं सम्यक् संस्नाप्य मानवः ।
यं यं कामयते कामं तं तं प्राप्नोत्यसंशयम् ॥”
इत्यग्निपुराणम् ॥

**प्रतिमानं**, क्ली, (प्रतिमीयतेऽनेनेति । प्रति + मि मा
वा + ल्युट् ।) प्रतिविम्वम् । वाहित्थस्याधोभागः
।
इत्यमरः । २ । १० । ३६, २ । ८ । ३९ ।
“अस्य
वाहित्थस्याधोभागो दन्तयोर्मध्यं प्रतिमान-
मुच्यते प्रतिमीयते अनेन प्रतिमानं डु मिञ
न क्षेपे अनट्मिम्योरिति ङा । प्रतिमानं प्रति-
च्छाया गजदन्तान्तरालयोरितिरुद्रः ।” इति
भरतः ॥ (यथा, महाभारते । ८ । २८ । २९ ।
“प्रतिमानेषु कुम्भषु दन्तवेष्टेषु चापरे ।
निगृहीता भृशं नागाः प्रासतोमर-
शक्तिभिः ॥”
हस्तिललाटद्देशः । इति महाभारतटीकायां
नीलकण्ठः । ६ । ४५ । २७ ॥ * ॥ सादृश्यम् ।
यथा, ऋग्वेदे । १ । ३२ । ७ ।
“वृष्णो वध्रिः प्रतिमानं बुभूषन् ।
पुरुत्रा वृत्रो अशयद्व्यस्तः ॥”
“प्रतिमानं सादृश्यम् ।” इति तद्भाष्ये सायनः ॥
प्रतिनिधिः । यथा, ऋग्वेदे । ६ । १८ । १२ ।
“नास्य शत्रुर्न प्रतिमानमस्ति ।”
“प्रतिमानं प्रतिनिधिर्नास्ति ।” इति तद्भाष्ये
सायनः ॥ * ॥ दृष्टान्तम् । यथा, भागवते ।
७ । ४ । ३५ ।

एवमाद्याः स्वयं व्यक्ताः
सर्व्वकामफलप्रदाः ॥
स्वयमेव हि सान्निध्यं यस्मिन्
याति जनार्द्दनः ।
तस्मिन्नेव स्वयं व्यक्तं वसन्ति
मुनयः शुभाः ॥
महाभागवतश्रेष्ठो विधिना स्थाप्य
केशवम् ।
मन्त्रेण कुर्य्यात् सान्निध्यं स्थापनं
तद्विशिष्यते ॥
न तु शाक्तादिभिः कार्य्यं
मुकुन्दस्थापनादिकम् ।
श्रीहरेरर्च्चनं कर्म्म
यात्रोत्सवमथाध्वरम् ॥
यत्किञ्चिद्वैष्णवैः कार्य्यमपरं
मन्दिरादिकम् ।
ध्रुवं विष्णुर्न गृह्णाति
कृतमेतद्बहिर्मुखैः ॥”
इति पाद्मोत्तरखण्डे ७३
अध्यायः ॥ * ॥
भगवत्याः
प्रतिमाराधनविधिर्य्यथा, --
ब्रह्मोवाच ।
“शृणु तस्याः सुराध्यक्ष !
आराधनविधिं परम् ।
यथा सा तोषिता पूर्ब्बं शङ्कराद्यैः
फलेप्सुभिः ॥
कर्म्मयज्ञेन देवेश ! तथा त्वमपि
पूजय ॥
शम्भुः पूजयते देवीं
मन्त्रशक्तिमयीं शुभाम् ।
अक्षमालाकरो नित्यं तेनासौ
विभुरीश्वरः ॥
अहं शैलमयीं देवीं यजामि
सुरसत्तम ! ।
तेन ब्रह्मत्वमेवेदं मया प्राप्तं
सुदुर्लभम् ॥
इन्द्रनीलमयीं देवीं विष्णुरर्च्चयते
सदा ।
विष्णुत्वं प्राप्तवांस्तेन अद्भुतैकं
सनातनम् ॥

विधिना शास्त्रदृष्टेन दशवाहुस्त्रिलोचनाम् ।
कारयेद्भक्तिमान् यस्तु देवीं शास्त्रविशारदः
॥”
स्थापनविधिर्य्यथा, --
“सर्व्वशैलेष्टकाष्ठोत्थं गृहं वास्तुविभाजितम् ।
वलभीमण्डपं वत्स ! तासान्तु स्थापने शुभम्
॥
गन्धनैवेद्यधूपेन बलिमाल्यविभूषणैः ।
अधिवासनपूर्ब्बास्तु स्थापनीयास्तु तद्विदैः
॥
वेदध्वनिमहाघोषैः स्त्रीसङ्गीतोपशोभितम् ।
कर्त्तव्यं स्थापनं तासां बहुवादित्रनादितम् ॥
रात्रौ जागरणं तत्र देव्याः पूजार्थवृद्धये ।
सर्व्वलक्षणसम्पूर्णं सर्व्वोपकरणान्वितम् ॥
वापीकूपतडागादिवाटिकावनशोभितम् ।
वेश्यातूर्य्योपसम्पन्नं ध्वजच्छत्रविभूषितम् ॥
घण्टादर्पणदीपादि देयं द्रव्यं निरूपितम् ।
घण्टिका तत्र षष्ट्यादि दिनसंख्यार्थसिद्धये
॥
कर्त्तव्या एकमेकं वा यथाकालपरिच्छिदे ।
अनेन विधिना यस्तु मातरः स्थापयेन्नरः ।
इहात्र पूजनीयस्तु मृतो याति परां गतिम् ॥”
इति देवीपुराणे मातृप्रतिष्ठामहाभाग्यम् ॥ * ॥
अल्पबुद्धीनां प्रतिमासु देवत्वं यथा, --
“अग्नौ क्रियावतां देवो हृदि देवो मनीषि-
णाम् ।
प्रतिमा स्वल्पबुद्धीनां ज्ञानिनां सर्व्वतो हरिः
॥”

“यं साधुगाथासदसि रिपवोऽपि सुरा नृप ! ।
प्रतिमानं प्रकुर्व्वन्ति किमुतान्ये भवादृशाः ॥”
तथा च महाभारते । ९ । २ । ३६ ।
“उग्रायुधश्च विक्रान्तः प्रतिमानं धनुष्मताम् ॥”
धान्यादिपरिमाणनिर्द्धारार्थप्रस्थद्रोणादिकम् ।
यथा, याज्ञवल्क्ये । २ । १०० ।
“तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः ।
प्रतिमानसमीभूतो रेखां कृत्वावतारितः ॥”
मनुसंहितायान्तु । ८ । ४०३ । श्लोके प्रतीमानं
इत्येव दृश्यते ॥)

**प्रतिमार्गकः**, पुं, (प्रतिदिशं मार्गो गमनपन्था
यस्य । कप् ।) पुरविशेषः । यथा, --
“व्योमचारिपुरं शौभमुद्रङ्कः प्रतिमार्गकः ॥”
इति जटाधरः ॥
“हरिश्चन्द्रपुरं शौभमुद्रङ्कः प्रतिमार्गकः ॥”
इति त्रिकाण्डशेषश्च ॥

| | | |
|---|---|---|
| देवीं हेममयीं कान्तां<br>धनदोऽर्च्चयते सदा ।<br>तेनासौ धनदो देवो<br>धनेशत्वमवाप्तवान् ॥<br>विश्वेदेवा महात्मानो रौप्यां देवीं<br>मनोहराम् ।<br>यजन्ति विधिवद्भक्त्या तेन<br>विश्वत्वमाप्नुयुः ॥<br>वायुः पूजयते भक्त्या देवीं<br>पित्तलसम्भवाम् ।<br>वायुत्वं तेन तत् प्राप्तमनौपम्यं<br>गुणावहम् ॥<br>वसवः कांसिकां देवीं पूजयन्ते<br>विधानतः ।<br>प्राप्नवन्तो महात्मानो वसुत्वं<br>सुमहोदयम् ॥<br>अश्विनौ पार्थिवीं देवीं पूजयन्तौ<br>विधानतः ।<br>तेन तावश्विनौ देवौ दिव्यदेहं<br>गतावुभौ ॥<br>स्फाटिकां शोभनां देवीं<br>वरुणोऽर्च्चयते सदा ।<br>वरुणत्वं हि संप्राप्तं तेन ऋद्ध्या<br>समन्वितम् ॥ | | |

**प्रतिमुक्तः**, त्रि, (प्रतिमुच्यते स्मेति । प्रति +
मुच् + क्तः ।) परिहितवस्त्रादिः । इत्यमरः ।
२ । ८ । ६५ ॥ (परित्यक्तः । यथा, रघुः । ४ ।
४३ ।
“गृहीतप्रतिमुक्तस्य स धर्म्मविजयी नृपः ।
श्रियं महेन्द्रनाथस्य जहार न तु मेदिनीम् ॥”
बद्धः । यथा, भागवते । ३ । १८ । १० ।
“न मृत्युपाशैः प्रतिमुक्तस्य वीरा
विकत्थनं तव गृह्णन्त्यभद्र ॥”
प्रतिनिवृत्तः । विच्युतः । यथा, मार्कण्डेये । १५
। १ ।
“नरकात् प्रतिमुक्तस्तु कृमिः पतितयाजकः ॥”
प्रत्यर्पितः । यथा, रघुः । १६ । ५९ ।
“तद्बध्नतीभिर्म्मदरागशोभां
विलोचनेषु प्रतिमुक्तमासाम् ॥”)

**प्रतियत्नः**, पुं, (प्रतियत्यते इति । प्रति + यत्
प्रयत्ने + “यजयाचयतरिच्छप्रच्छरक्षोनङ् ।” ३
।
३ । ९० । इति नङ् ।) लिप्सा । वाञ्छा । उप-
ग्रहः । वन्दी । इत्यमरः । ३ । ३ । १०६ ॥
निग्रहादिः । सतो गुणान्तराधानम् । इति भरतः
॥
संस्कारः । इति स्वामी ॥ (यथा, माघे । ३ । ५४
।
“सुगन्धितामप्रतियत्नपूर्ब्बां
विभ्रन्ति यत्र प्रमदाय पुंसाम् ॥”
“यत्र पुरि न प्रतियत्नः संस्कारः पूर्ब्बो यस्या-
स्ताम् ।” इति तट्टीकायां मल्लिनाथः ॥) ग्रह-
णादिः । इति रामाश्रमः ॥ प्रतिग्रहः । इति
मुकुटः ॥
“प्रतियत्नस्तु संस्कारलिप्सोपग्रहणेषु च ॥”
इति मेदिनी । ने, १९६ ॥
रचना । इति जटाधरः ॥ प्रयत्नवति, त्रि । इति
त्रिकाण्डशेषः ॥

**प्रतियातना**, स्त्री, (प्रतियात्यते अनया इति ।
प्रति + यत् + णिच् + “ण्यासश्रन्थो युच् ।”
३ । ३ । १०७ । इति युच् ।) प्रतिमा । इत्य-

**प्रतिरम्भः**, पुं, (प्रति + लम्भ + भावे घञ् । लस्य
रः ।) प्रतिलम्भः । इति द्विरूपकोषः
॥

**प्रतिरूपं**, क्ली, (प्रतिगतं प्रतिकृतं वा रूपमिति
प्रादिसमासः ।) प्रतिमा । इति
त्रिकाण्डशेषः ॥
(यथा, भागवते । ७ । १० । २१ ।
“भवान् मे खलु भक्तानां सर्व्वेषां
प्रतिरूप-
धृक् ॥”
त्रि, प्रतिगतं रूपमस्य । अनुरूपः ।
यथा,
महाभारते । १ । १०२ । ६१ ।
“आत्मनः प्रतिरूपोऽसौ लब्धः
पतिरिति स्थिते ।
बिचित्रवीर्य्यं कल्याण्यौ
पूजयामासतुः शुभे ॥”
दानवविशेषे, पुं । यथा, महाभारते ।
१२ ।
२२७ । ५१ ।
“विश्वजित् प्रतिरूपश्च वृषाण्डो
विष्करो मधुः ॥”)

**प्रतिरूपकं**, क्ली, (प्रतिरूप + स्वार्थे कन् ।) प्रति-
विम्बम् । इति जटाधरः ॥ (यथा,
महाभारते ।
१२ । ५९ । ४९ ।
“अग्निदैर्गरदैश्चैव प्रतिरूपककारकैः
।
श्रेणीमुख्योपजापेन वीरुधश्छेदनेन
च ॥”)

**प्रतिरोधः**, पुं, (प्रतिरुध्यते अनेनेति । प्रति +
रुध् + करणे घञ् ।) तिरस्कारः ।
इति व्युत्-
थानशब्दटीकायां भरतः ॥ (प्रति +
रुध् +

“संकीर्णयोनयो ये तु प्रतिलोमानुलोमजाः
।
अन्योन्यव्यतिषक्ताश्च तान्
प्रवक्ष्याम्यशेषतः ॥”
इति मानवे १० अध्याये ॥

**प्रतिवचः**, [स्] क्ली, (प्रतिरूपं वचः ।) प्रत्युत्त-
रम् । इति हेमचन्द्रः ॥ (यथा, देवीभागवते
।
१ । ११ । ५४ ।
“सोमः शक्रवचः श्रुत्वा किञ्चित्
क्रोधसमाकुलः ।
भङ्ग्या प्रतिवचः प्राह शक्रदूतं तदा शशी
॥”)

**प्रतिवचनं**, क्ली, (प्रतिरूपं वचनम् ।) प्रतिवाक्यम्
।
उत्तरम् । इति त्रिकाण्डशेषः ॥ (यथा,
कला-
विलासे । २ । ९ ।
“न ददाति प्रतिवचनं विक्रयकाले शठो
बणिग्
मौनी ।
निक्षेपपाणिपुरुषं दृष्ट्वा सम्भाषणं कुरुते
॥”
प्रतिनिर्द्देशः । इति निरुक्तम् । ६ । ३ । ६
॥)

**प्रतिवसथः**, पुं, (प्रतिवसत्यस्मिन्निति । प्रति +
वस् + बाहुलकात् अथ ।) ग्रामः । इति
हेम-
चन्द्रः । ४ । २७ ॥

**प्रतिवाक्**, [च्] स्त्री, (प्रतिरूपा वाक् ।) उत्त-
रम् । इति शब्दरत्नावली ॥ (यथा, महा-
भारते । ५ । ७२ । ७१ ।
“लाङ्गुलचालनं क्ष्वेडा प्रतिवाचो
विवर्त्तनम् ।
दन्तदर्शनमारावस्ततो युद्धं प्रवर्त्तत ॥”)

**प्रतिवाक्यं**, क्ली, (प्रतिरूपं वाक्यम् ।) उत्तरम् ।

मरः । २ । १० । ३६ ॥ (यथा, माघे । ३ । ३४ ।
“अनिर्व्विदा या विदधे विधात्रा
पृथ्वी पृथिव्या प्रतियातनेव ॥”)
तुल्ययातना च ॥

**प्रतियोगः**, पुं, प्रतियुज्यत इति । प्रति + युज् +
भावे घञ् ।) विरोधः । (पुनरुद्योगः । यथा,
भागवते । ४ । १० । २२ ।
“इति ब्रुवंश्चित्ररथः स्वसारथिं
यत्तः परेषां प्रतियोगशङ्कितः ।
शुश्राव शब्दं जलधेरिवेरितं
नभस्वतो दिक्षु रजोऽन्वदृश्यत ॥”
“प्रतियोगः पुनरुद्योगः ।” इति तट्टीकायां
श्रीधरस्वामी ॥)

**प्रतियोगी**, [न्] त्रि, (प्रतिरूपं युज्यते इति ।
प्रति + युज् + घिनुण् ।) विरोधी । यथा, --
“साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यम् । इति चिन्तामणिः ॥ सत्प्रतिपक्षः ।
यथा, --
“प्रतियोगिनं दृष्ट्वा प्रतियोगी निवर्त्तते ।” इति
प्राचीनकारिका ॥

कर्त्तरि अच् ।) सत्प्रतिपक्षः । यथा । पक्ष-
साध्यसाधनाप्रसिद्धिस्वरूपा सिद्धिवाधप्रतिरो-
धानां निरासः । इति सव्यभिचारशिरोमणिः ॥

**प्रतिरोधकः**, पुं, (प्रतिरुणद्धि प्रतिरुध्य चौर्य्यं करो-
तीति । प्रति + रुध् + ण्वुल् ।) चोरः । इति
हेमचन्द्रः । ३ । ४५ ॥

**प्रतिरोधी**, [न्] पुं, (प्रतिरुणद्धीति । प्रति +
रुध् + णिनिः । प्रतिरोधस्तिरस्कारोऽस्त्यस्येति
वा । प्रतिरोध + इनिः ।) चौरः । इत्यमरः ।
२ । १० । २५ ॥

**प्रतिलम्भः**, पुं, (प्रति + लम्भ + भावे घञ् ।)
लाभः । तत्पर्य्यायः । लम्भनम् २ । इति हेम-
चन्द्रः ॥ यथा, श्रीहर्षः ।
“नैव नः प्रियतमोभयथासौ
यद्यमुं न वृणुते वृणुते वा ।
एकतो हि धिगमूमगुणज्ञा-
मन्यतः कथमदःप्रतिलम्भः ॥”

**प्रतिलोमः**, त्रि, (प्रतिगतं लोम आनुकूल्यं यस्मा-
दिति । “अच् प्रत्यन्ववपूर्ब्बात्सामलोम्नः ।” ५ ।
४ । ७५ । इति समासान्तोऽच्प्रत्ययः ।) वामः ।
इति हेमचन्द्रः ॥ (यथा, हरिवंशे ।
१२७ । १४ ।
“बहूनि प्रतिलोमानि पुरा स कृतवान् मयि ।
कृष्णो नारद ! सोढानि भ्रातेतिस्म मयानघ ! ॥”)
विलोमः । यथा, --

इत्यमरः । १ । ६ । १० ॥

**प्रतिवाणिः**, स्त्री, (प्रतिरूपा वाणिः ।) प्रत्युक्तिः ।
प्रत्युत्तरम् । इति भूरिप्रयोगः ॥

**प्रतिवादी**, [न्] त्रि, (प्रतिवादोऽस्यास्तीति
इनिः । यद्वा, प्रतिकूलं वदतीति । प्रति + वद् +
णिनिः ।) प्रतिपक्षः । यथा, --
“यदा त्वेवंविधः पक्षः कल्पितः पूर्ब्बवादिना ।
दद्यात्तत्पक्षसम्बन्धं प्रतिवादी तदोत्तरम् ॥”
इति व्यवहारतत्त्वे बृहस्पतिवचनम् ॥

**प्रतिवासरः**, पुं, (प्रतिगतो वासरम् ।) प्रति-
दिनम् । तद्दिनम् । इति हारावली । १६९ ॥
(क्ली, वासरं वासरं प्रतीति समासे । प्रति-
दिनम् । यथा, राजतरङ्गिण्याम् । २ ।
१२७ ।
“भूतेशबर्द्धमानेशविजयेशानपश्यतः ।
नियमो राजकार्य्येषु तस्याभूत् प्रतिवासरम् ॥”)

**प्रतिवासी**, [न्] त्रि, (प्रत्यासन्नं वसतीति ।
प्रति + वस् + णिनिः ।) आसन्नगृही । निकट-
स्थायी । पडसि इति भाषा । प्रतिवसतीति
ग्रहादित्वाण्णिन्प्रत्ययनिष्पन्नः ॥

**प्रतिविम्बं**, क्ली, (प्रतिरूपं विम्बमिति । “कुगति-
प्रादयः ।” २ । २ । १८ । इति समासः ।)
प्रतिमा । प्रतिच्छाया । इत्यमरः । २ ।
१० । ३६ ॥
(यथा, पञ्चदश्याम् । १ । १५ ।
“चिदानन्दमयब्रह्मप्रतिबिम्बसमन्विता।
तमोरजःसत्त्वगुणा प्रकृतिर्द्विविधा च सा ॥”)

**प्रतिविषा**, स्त्री, (प्रतीपं विषं यस्याः ।) अति-

| | | |
|---|---|---|
| | "तावुभावप्यसंस्कार्य्याविति धर्म्मो<br>व्यवस्थितः ।<br>वैगुण्याज्जन्मनः पूर्ब्ब उत्तरः<br>प्रतिलोमतः ॥"<br>इति मानवे । ९ । ६८ ॥<br>**प्रतिलोमजः**, त्रि, (प्रतिलोमात् जायते इति । प्रति-<br>लोम + जन् + डः ।) प्रतिलोमजातः<br>। उत्तम-<br>वर्णायां अधमवर्णाज्जातः । यथा, -- | विषा । इत्यमरः । २ । ४ । ९९ ॥<br>आतैस इति<br>भाषा ॥ (यथा, सुश्रुते उत्तरतन्त्रे । ४०<br>अः । |

"महौषधं प्रतिविषा मुस्तं चेत्यामपाचनाः ॥"
अस्याः पर्य्यायो यथा, --
"विषा त्वतिविषा विश्वा शृङ्गी प्रतिविषारुणा ।
शुक्लकन्दा चोपविषा भङ्गरा धुणवल्लभा ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**प्रतिविष्णु**, क्ली, विष्णुं विष्णुं प्रति । इति मुग्धबोध-
व्याकरणम् ॥

**प्रतिविष्णुकः**, पुं, (प्रतिगतो विष्णुर्यस्मिन्निति । प्रति-
विष्णुर्मुचुकुन्दो नृपतिः । तन्नाम्ना कायति प्रका-
शते इति । कै + कः ।) मुचुकुन्दवृक्षः । इति
राजनिर्घण्टः ॥ (पर्य्यायोऽस्य यथा, --
"मुचुकुन्दः क्षत्रवृक्षश्चित्रकः प्रतिविष्णुकः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**प्रतिवेशः**, पुं, (प्रत्यासन्नो वेशो निवेशः । प्रति-
विशत्यत्रेति आधारे घञ् वा ।) प्रतिवासिगृहम् ।
आसन्नगृहिणां गृहम् । इति शब्दरत्नावली ॥
(त्रि, आसन्नवर्त्ती । यथा, ऋग्वेदे । १० । ६६ । १३ ।
"क्षेत्रस्य पतिं प्रतिवेशमीमहे ।"
"प्रतिवेशं समीपे वर्त्तमानम् ।" इति तद्भाष्ये
सायनः ॥)

**प्रतिवेशवासी**, [न्] त्रि, (प्रतिवेशे वसतीति ।
वस् + णिनिः ।) प्रतिवासी । यथा, --
"नो जाने प्रतिवेशवासिनि गुरोः किं भावि सम्भावितम् ।"
इत्यलङ्कारकौस्तुभम् ॥

**प्रतिवेशी**, [न्] त्रि, (प्रतिवेश आसन्नवर्त्तिगृह-
मस्यास्तीति । इनिः ।) प्रतिवासी । इति शब्द-
नासाग्रपाकज्वरवक्त्रशोष
तृष्णोष्णपीतस्रवणानि पित्तात् ।
कासारुचिस्रावनयनप्रसेकाः
कफाद्गुरुः स्रोतसि चापि कण्डूः ॥
सर्व्वाणि रूपाणि तु सन्निपातात्
स्युः पीनसे तीव्ररुजेऽतिदुःखे ।
सर्व्वोऽतिवृद्धोऽहितभोजनात्तु
दुष्टप्रतिश्याय उपेक्षितः स्यात् ॥"
इति चरके चिकित्सास्थाने षड्विंशेऽध्याये ॥)

**प्रतिश्रयः**, पुं, (प्रतिश्रीयते अस्मिन्निति । प्रति +
श्रि + आधारे अच् ।) यज्ञशाला । इति जटा-
धरः ॥ सभा । आश्रयः । इति मेदिनी ।
ये, १२२ ॥ ओकः । इति हेमचन्द्रः ॥ (यथा,
महाभारते । १ । १६६ । ४ ।
"स सम्यक् पूजयित्वा तं विप्रं विप्रषभस्तदा ।
ददौ प्रतिश्रयन्तस्मै सदा सर्व्वातिथिव्रतः ॥"
निवासः । यथा, मनौ । १० । ५१ ।
"चण्डालश्वपचानान्तु बहिर्ग्रामात् प्रतिश्रयः ॥"
"प्रतिश्रयो निवासः ।" इति मेधातिथिः ॥)

**प्रतिश्रवः**, पुं, (प्रति + श्रु + "ऋदोरप् ।" ३ । ३ ।
५७ । इति अप् ।) अङ्गीकारः । इत्यमरः ॥
(यथा, राजतरङ्गिण्याम् । ३ । ४२४ ।
"इति सोऽभीष्टसंप्राप्तौ कारयित्वा प्रतिश्रवम् ।
दूरमुत्क्रान्तमर्य्यादः सङ्गमं तमयाचत ॥")

**प्रतिश्रुत्**, स्त्री, (प्रतिरूपं श्रूयते इति । प्रति +
श्रु + सम्पदादित्वात् क्विप् ।) प्रतिध्वनिः । इत्य-
मरः । १ । ६ । २५ ॥ (यथा, रघौ । १३ । ४० ।

**प्रतिष्कः**, पुं, (प्रतिष्कन्दति प्रतिगच्छतीति । प्रति
+ स्कन्द + बाहुलकात् डः ।) दूतः । इति
शब्दरत्नावली ॥

**प्रतिष्कशः**, पुं, (प्रतिकशतीति । प्रति + कश् +
अच् । बाहुलकात् सुट् ।) सहायः । वार्त्ता-
हरः । पुरोगः । इति मेदिनी । शे, ३६ ॥

**प्रतिष्कषः**, पुं, (प्रतिकष्यतेऽनेनेति । प्रति + कष्
हिसांयाम् + अच् । बाहुलकात् सुट् ।) चर्म्म-
रज्जुः । इति जटाधरः ॥

**प्रतिष्कसः**, पुं, (प्रतिकसति प्रतिगच्छतीति ।
प्रति + कस् + अच् । सुट् ।) चरः । इत्रि
शब्दरत्नावली ॥

**प्रतिष्टम्भः**, पुं, (प्रतिष्टम्भनमिति । प्रति + स्तन्भ +
भावे घञ् । षत्वम् ।) प्रतिबन्धः । इत्यमरः ।
३ । २ । २७ ॥ (यथा, रघौ । २ । ३२ ।
"बाहुप्रतिष्टम्भविवृद्धमन्यु-
रभ्यर्णमागस्कृतमस्पृशद्भिः ॥")

**प्रतिष्ठः**, पुं, (प्रतिष्ठा अस्यास्तीति । अच् ।)
सुपार्श्वनामकवृत्तार्हत्पिता । इति हेमचन्द्रः ।
१ । ३६ ॥ प्रतिष्ठायुक्ते, त्रि ॥ (यथा, महा-
भारते । ५ । ४६ । ३० ।
"आत्मैव स्थानं मम जन्म चात्मा
ओतप्रोतोऽहमजरः प्रतिष्ठः ॥)

**प्रतिष्ठा**, स्त्री, (प्रतितिष्ठतीति । प्रति + स्था +
"आतश्चोपसर्गे ।" ३ । ३ । १०६ । इति भावादौ
अङ् । टाप् ।) गौरवः । (यथा, कथासरित्-

रत्नावली ॥ (यथा, मृच्छकटिके ३ अङ्के ।
"दृष्ट्वा प्रभातसमये प्रतिवेशिवर्गो
दोषांश्च मे वदति कर्म्मणि कौशलञ्च ॥")

**प्रतिशासनं**, क्ली, (प्रति + शास् + भावे ल्युट् ।)

आहूय भृत्यादीनां कार्य्ये प्रेरणम् । इत्यमरः ॥

**प्रतिशिष्टं**, त्रि, (प्रतिगतं शिष्टमवशिष्टम् ।)

प्रत्याख्यातम् । (प्रति + शास् + क्तः ।) प्रेषि-
तम् । इति त्रिकाण्डशेषः ॥

**प्रतिश्या**, स्त्री, (प्रतिश्यायते इति । प्रति + श्यैङ

गतौ + "आतश्चोपसर्गे ।" ३ । १ । १३६ । इति
कः । टाप् ।) प्रतिश्यायः । इति शब्दरत्नावली ॥

**प्रतिश्यायः**, पुं, (प्रतिक्षणं श्यायते इति । प्रति +

श्यै + "श्याद्व्यधास्रुसंस्रतीणेति ।" ३ । १ । १४१ ।
इति णः ।) पीनसरोगः । इत्यमरः । २ । ६ । ५१ ॥
(यथा, सुश्रुते सूत्रस्थाने ४५ अध्याये ।
"पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे ॥"
अस्य सकारणलक्षणं सम्प्राप्तिश्च यथा, --
"सन्धारणाजीर्णरजोऽतिभाष्य-
क्रोधर्त्तुवैषम्यशिरोऽभितापैः ।
प्रजागरातिस्वपनाम्बुशीतै-
रवश्यया मैथुनवाष्पधूमैः ॥
संस्त्यानदोषे शिरसि प्रवृद्धो
वायुः प्रतिश्यायमुदीरयेत्तु ।
घ्राणार्त्तितोदैः श्वयथुर्जलाभः
स्रावोऽनिलात् सस्वनमूर्द्ध्वरोगः ॥
"यस्यायमन्तर्हितसौधभाजः
प्रसक्तसङ्गीतमृदङ्गघोषः ।
वियद्गतः पुष्पकचन्द्रशालाः
क्षणं प्रतिश्रुन्मुखराः करोति ॥")

**प्रतिश्रुतः**, त्रि, (प्रतिश्रूयते स्मेति । प्रति + श्रु +

क्तः ।) अङ्गीकृतः । इत्यमरः । ३ । २ । १०९ ॥

**प्रतिषिद्धः**, त्रि, (प्रति + सिध् + क्तः ।) प्रतिषेध-

विषयः । निषिद्धः । यथा ।
अप्रतिषिद्धमनुमतं
भवतीति दत्तकचन्द्रिका ॥ (यथा च, --
"सर्व्वर्त्तुषु दिवास्वापः प्रतिषिद्धोऽन्यत्र
ग्रीष्मात् ॥"
इति सुश्रुते शारीरस्थाने चतुर्थेऽध्याये ॥)

**प्रतिषेद्धा**, [ऋ] त्रि, (प्रति + सिध् + तृच् ।)

प्रतिषेधकर्त्ता । तत्पर्य्यायः । माशब्दिकः २ ।
इति त्रिकाण्डशेषः ॥ (यथा, महाभारते । १ । १८१ । १० ।
"यदा तु प्रतिषेद्धारं पापो न लभते क्वचित् ।
तिष्ठन्ति बहवो लोकास्तदा पापेषु कर्म्मसु ॥")

**प्रतिषेधः**, पुं, (प्रति + सिध् + भावे + घञ् ।)

निषेधः । यथा, मलमासतत्त्वे ।
"प्राधान्यन्तु विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्य्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥"

**प्रतिषेधकः**, त्रि, (प्रतिषेधतीति प्रति + सिध् +

ण्वुल् ।) प्रतिषेधकर्त्ता । यथा अग्निपुराणे ।
"षष्टिवर्षसहस्राणां सहस्राणि वसेद्दिवि ।
योऽनुमन्तापि भवति निरये प्रतिषेधकः ॥"
सागरे । २ । ६९ ।
"किञ्च व्याकरणं लोके प्रतिष्ठां
प्रापयिष्यति ॥")
क्षितिः । स्थानम् । (यथा, रघुः । १६ । ३५ ।
"वेदिप्रतिष्ठान् वितताध्वराणां
यूपानपश्यच्छतशो रघूणाम् ॥"
आश्रयः । यथा, मार्कण्डेये । ८४ । १० ।
"गौरी त्वमेव शशिमौलिकृतप्रतिष्ठा ॥")
यागनिष्पत्तिः । चतुरक्षरपद्यम् । इति मेदिनी ।
ते, १३ ॥ * ॥ (स्थितिः । यथा, हरिवंशे । २८ । ३७ ।
"य इदं च्यावनं स्थानात्प्रतिष्ठाञ्च शतक्रतोः ।
शृणुयाद्धारयेद्वापि न स दौरात्म्यमाप्नुयात् ॥"
शरीरम् । यथा, ऋग्वेदे । १० । ७३ । ६ ।
"साकं प्रतिष्ठा हृद्या जघंथ ॥")
संस्कारविशेषः । (यथा, आर्य्यासप्तशत्याम् । ३८६ ।
"पूजा विना प्रतिष्ठां नास्ति न मन्त्रं विना प्रतिष्ठा च ।
तदुभयविप्रतिपन्नः पश्यतु गीर्व्वाणपाषाणम् ॥")
तद्दिनादि यथा, --
मत्स्यपुराणे ।
"चैत्रे वा फाल्गुने वापि ज्यैष्ठे वा माधवे तथा ।
समयः सर्व्वदेवानां प्रतिष्ठा शुभदा भवेत् ॥
प्राप्य पक्षं शुभं शुक्लमतीते चोत्तरायणे ।
पञ्चमी च द्वितीया च तृतीया सप्तमी तथा ॥
दशमी पौर्णमासी च तथा श्रेष्ठा त्रयोदशी ।
आसु प्रतिष्ठा विधिवत् कृता बहुफला भवेत् ॥ *

प्रतिष्ठा सर्व्वदेवानां केशवस्य विशेषतः ।
उतरायणमापन्ने शुक्लपक्षे शुभे दिने ॥
कृष्णपक्षे च पञ्चम्यामष्टम्याञ्चैव शस्यते ॥' *
॥
भुजबलभीमे ।
'युगादावयने पुण्ये कर्त्तव्यं विषुवद्वये ।
चन्द्रसूर्य्यग्रहे वापि दिने पुण्येऽथ पर्व्वसु ॥
या तिथिर्यस्य देवस्य तस्यां वा तस्य
कीर्त्तिता ।
गृह्यागमविशेषेण प्रतिष्ठा मुक्तिदायिनी ॥' *
॥
पद्मपुराणे ।
'प्रतिपद्धनदस्योक्ता पवित्रारोपणे तिथिः ।
श्रिया देव्या द्वितीया तु तिथीनामुत्तमा स्मृता
॥
तृतीया तु भवान्याश्च चतुर्थी तत्सुतस्य च ।
पञ्चमी सोमराजस्य षष्ठी प्रोक्ता गुहस्य च ॥
सप्तमी भास्करस्योक्ता दुर्गायाश्चाष्टमी तथा
।
मातृणां नवमी प्रोक्ता दशमी वासुकेस्तथा ॥
एकादशी ऋषीणाञ्च द्वादशी चक्रपाणिनः ।
त्रयोदशी त्वनङ्गस्य शिवस्योक्ता चतुर्द्दशी ।
मम चैव मुनिश्रेष्ठ ! पौर्णमासी तिथिः स्मृता
॥'
कल्पतरौ देवीपुराणम् ।
'महिषासुरहन्त्र्याश्च प्रतिष्ठा दक्षिणायने ।
यस्य देवस्य यः कालः प्रतिष्ठाध्वजरोपणे ॥
गर्त्तापूरशिलान्यासे शुभदस्तस्य पूजितः ॥'
यस्य देवस्य प्रतिष्ठाध्वजरोपणे यः कालः
शुभद-
स्तस्य गर्त्तापूरशिलान्यासे गृहारम्भे स
कालः
पूजित इत्यर्थः ॥ * ॥ प्रतिष्ठासमुच्चये ।
'माघे वा फालगुने वापि चैत्रवैशाखयोरपि ।
ज्यैष्ठाषाढकयोर्वापि प्रतिष्ठा शुभदा भवेत् ॥'
* ॥
भविष्ये ।
'सोमो वृहस्पतिश्चैव शुक्रश्चैव बुधस्तथा ।

ब्राह्मणानामलाभे तु क्षत्रियो वैश्यशूद्रयोः
॥
क्षत्रियाणामलाभे तु वैश्यः शूद्रस्य
कल्पितः ।
कदाचिदपि शूद्रस्तु न च कार्य्यार्थमर्हति
॥' * ॥
बृहन्नारदीये ।
'प्रणमेच्छूद्रसंस्पृष्टं लिङ्गं वा हरिमेव वा ।
स सर्व्वयातनाभोगी यावदाहूतसंप्लवम्
॥'
यावदाहूतसंप्लवं प्रलयपर्य्यन्तम् ॥ तथा
।
'स्त्रीणामनुपनीतानां शूद्राणाञ्च जनेश्वर !
।
स्पर्शने नाधिकारोऽस्ति विष्णौ वा
शङ्करेऽपि
वा ॥' * ॥
प्रतिष्ठाप्रकारस्तु मत्स्यपुराणादावुक्तः ।
तद-
सम्भवे विद्याकरवाजपेयिप्रभृतिसम्मतो
भवि-
ष्याद्युक्तः । यथा भविष्यपुराणम् ।
'स्नपनादि यथाशक्ति कृत्वा
तन्मूलमन्त्रकम् ।
विन्यसेद्धृदयाम्भोजे प्रतिमासु कृता
भवेत् ॥'
आदिपदात् पूजोत्सवहोमादि
महाकपिल-
पञ्चरात्रोक्तकर्म्म च कर्त्तव्यम् । तद्यथा, -
-
'सपुष्पं सकुशं पाणिं न्यसेद्देवस्य मस्तके
।
पञ्चवारं जपेन्मूलमष्टोत्तरशतोत्तरम् ॥
ततो मूलेन मूर्द्धादिपीठान्तं संस्पृशेदिति
।
तत्त्वन्यासं लिपिन्यासं मन्त्रन्यासञ्च
विन्यसेत् ॥
पूजाञ्च महतीं कुर्य्यात् स्वमन्त्रोक्तां
यथाविधि ।

सबिन्दुताख्यापनाय ।
अङ्कुशवाय्वनलावनि-
वरुणबीजानीत्युक्तम् । अत्र
वायुवीजस्यैकत्वं
बीजत्वेन सर्व्वेषां सबिन्दुत्वं व्यक्तम् ।
राघयभट्टो-
ऽप्येवम् । अन्यस्तु वाणीविन्दुविभूषिता
इति
पठित्वा नादविन्दुविभूषिता इति
व्याख्यातं
याद्या इत्यस्य विशेषणं वदति । व्योम
हकारः
सत्य ओकारः इन्दुर्विन्दुः तेन हों ।
अतएव
पाशाङ्कुशान्तरितशक्तिमनोः
परस्तादुच्चार्य्य
यादिवसुवर्णगुणं सहंसमिति
प्रपञ्चसारप्रति-
पाद्यगुणमित्यनेन होमिति
पद्मपादाचार्य्यैर्व्या-
ख्यातम् । अग्निवधूः स्वाहा । तेनायं मन्त्रः
।
आं ह्रीं क्रों यं रं लं वं शं षं सं हों हं सः
अमुष्य प्राणा इह प्राणाः आमित्यादि
अमुष्य
जीव इह स्थितः आमित्यादि अमुष्य
सर्व्वेन्द्रि-
याणि आमित्यादि अमुष्य
वाङ्मनश्चक्षुश्रोत्र-
घ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु
स्वाहा ।
अमुष्य इति षष्ठ्यन्तदेवतानामोपलक्षणम्
।
'अदःपदं हि यद्रूपं यत्र मन्त्रे हि दृश्यते ।
अमुष्याभिधानं तद्रूपं तत्र स्थाने
नियोजयेत् ॥'
इति नारदीयात् ॥
वशिष्ठसंहितायाम् ।

एते सौम्यग्रहाः प्रोक्ताः प्रतिष्ठा यज्ञकर्म्मणि ॥
मत्स्यपुराणम् ।
'आषाढे द्वे तथा मूलमुत्तरात्रयमेव च ।
ज्येष्ठाश्रवणरोहिण्यः पूर्ब्बभाद्रपदस्तथा ॥
हस्ताश्विनी रेवती च पुष्या मृगशिरस्तथा ।
अनुराधा तथा स्वाती प्रतिष्ठादौ प्रशस्यते ॥'
दीपिकायाम् ।
'प्राजेशवासवकरादितिभाश्विनीषु
पौष्णामरेज्यशशिभेषु तथोत्तरेषु ।
कर्त्तुः शुभे शशिनि केन्द्रगते च जीवे
कार्य्या हरेः शुभतिथौ विधिवत् प्रतिष्ठा ॥
प्राजेशादयः ।
रोहिणीज्येष्ठाहस्तापुनर्व्वस्वश्वि-
नीरेवतीपुष्यामृगशिरौत्तरफल्गुन्युत्तराषाढो-
त्तरभाद्रपन्नक्षत्राणि ॥ * ॥
सर्व्वमङ्गलादृष्टान्ते
देवीपुराणम् ।
'यथा द्वादशमे जीवे अष्टमे वाथ भास्करे ।
प्रतिष्ठा कारिता विष्णोर्महाभयकरी मता ॥'
कल्पतरौ देवीपुराणम् ।
'चतुर्व्वर्णैस्तथा विष्णुः प्रतिष्ठाप्यः सुखार्थिभिः ।'
प्रतिष्ठा ब्राह्मणद्वारैव कर्त्तव्या ।
'कर्त्तुमिच्छति यः पुण्यं मम मूर्त्तिप्रतिष्ठया ॥
अन्वेषणीयस्त्वाचार्य्यस्तेन लक्षणसंयुतः ॥
ब्राह्मणः सर्व्ववर्णानां पञ्चरात्रविशारदः ।

प्राणप्रतिष्ठामन्त्रेण प्राणस्थापनमाचरेत् ॥'
लिपिन्यासस्तु मातृकान्यासः । उक्तञ्च ।
'जपादौ सर्व्वमन्त्राणां विन्यसेन्न लिपिं विना ।
कृतं तन्निष्फलं विद्यात्तस्मात् पूर्ब्बं लिपिं न्यसेत् ॥
कादिमतेऽपि ।
'मातृकायाः षडङ्गञ्च मातृकान्यासमेव च ।
सर्व्वासां प्रथमं कृत्वा पश्चात्तन्त्रोदितं न्यसेत् ॥
एतद्वचनाच्च मातृकान्यासः पूर्ब्बं पश्चात्तत्त्व-
न्यासः ॥'
क्रमदीपिकायामप्येवं क्रमः ।
मन्त्रन्यासश्च तत्त-
न्मन्त्रविशेषोक्तपदवर्ण्णन्यासः । तदभावे मूल-
मन्त्रेण शिरसि हस्तन्यासः ।
तत्त्वन्यासस्तु
विष्णुविषयक एव । न्यासप्रमाणानि सारदाक्रम-
दीपिकोक्तान्यनुसन्धेयानि ॥ * ॥
प्राणप्रतिष्ठा-
मन्त्रस्तु सारदात्रयोविंशतिपटलोक्तः ।
यथा, --
'पाशाङ्कुशपुटाशक्तिर्वाणीबिन्दुविभूषितः ।
याद्याः सप्त सकारान्ता
व्योमसत्येन्दुसंयुतम् ॥
समन्ते हंसमन्त्रः स्यात्ततोमुष्यपदं भवेत् ।
प्राणा इति वदेत् पश्चात् इह प्राणास्ततः परम् ॥
अमुष्य जीव च इह स्थितोऽमुष्यपदं भवेत् ।
सर्व्वेन्द्रियाण्यमुष्यान्ते
वाङ्मनश्चक्षुरन्ततः ॥
श्रोत्रघ्राणपदे प्राणा इहागत्य सुखं चिरम् ।

'हृदि हस्तं सन्निधाय प्राणस्थापनमाचरेत् ॥' * ॥
प्रागुक्तभविष्यपुराणवचनेन तन्मूलमन्त्रकं तत्तद्-
देवतामन्त्रकं स च वैदिकस्तान्त्रिकश्च ।
'ओङ्कारादिसमायुक्तं
नमस्कारान्तकीर्त्तितम् ।
स्वनाम सर्व्वसत्त्वानां मन्त्र इत्यभिधीयते ॥'
ब्रह्मपुराणे ।
'ओङ्कारादिनमोऽन्तेन
चतुर्थ्यन्ततत्तद्देवतानाम-
रूपो वा ।"
कालिकापुराणे ।
'प्रतिमायाः कपोलौ द्वौ स्पृष्ट्वा
दक्षिणपाणिना ।
तथैव हृदयेऽङ्गुष्ठं दत्त्वा शश्वच्च मन्त्रवित् ॥
एभिर्मन्त्रैः प्रतिष्ठान्तु हृदयेऽपि समाचरेत् ।
अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च ।
अस्यै देवत्वसंख्यायै स्वाहेति यजुरीरयन् ॥
अङ्गमन्त्रैरङ्गिमन्त्रैर्वैदिकैरित्यनेन च ।
प्राणप्रतिष्ठां सर्व्वत्र प्रतिमासु समाचरेत् ॥'
अङ्गमन्त्रैः अङ्गन्यासमन्त्रैः । अङ्गिमन्त्रैः मूल-
मन्त्रैः वैदिकैर्मनोज्योतिरित्यादिभिः ॥ * ॥
स्नपनात् पूर्ब्बं
बल्मीकमृत्तिकादिभिस्तिसृभिः
क्षालनमाह हयशीर्षपञ्चरात्रम् ।
'वल्मीकमृत्तिकाभिस्तु गोमयेन
स्वभस्मना ।
क्षालयेच्छिल्पिसंस्पर्शदोषाणामुपशान्तये ॥
स्नापयेद्गन्धतोयेन शुद्धवत्या तु देशिकः ॥
नमस्तेऽस्तु सुरेशानि प्रणीते विश्वकर्म्मणा ।

| | | |
|---|---|---|
| | तिष्ठन्त्वग्निवधूरन्ते प्राणमन्त्रोऽयमीरितः ॥<br>प्रत्यमुष्यपदात् पूर्ब्बं पाशाद्यानि प्रयोजयेत् ।<br>प्रयोगेषु समाख्यातः प्राणमन्त्रो मनीषिभिः ॥'<br>पाशाङ्कुशपुटाशक्तिरित्यनेन प्रथमं पाशवीजं<br>आं ततः शक्तिबीजं ह्रीं ततोऽङ्कुशबीजं क्रों<br>वाणी यकारः बिन्दुविभूषितो यं । याद्याः सप्त सकारान्ताः उद्धृतयकारानुवादेन सप्त<br>तद्भिन्नं बीजं पूर्ब्बं पृथगुद्धारस्तु सप्तानामपि | प्रभाविताशेषजगद्धात्रि ! तुभ्यं नमो नमः ॥<br>त्वयि संपूजयामीशे नारायणमनामयम् ।<br>रहिता शिल्पिदोषैस्त्वमृद्धियुक्ता सदा भव ॥' * ॥<br>तेन यथाशक्ति<br>स्नपनादिपूर्ब्बकप्रतिमाहृदये<br>तन्मूलमन्त्रविन्यासेन देवताया<br>विशेषसन्निधिः<br>प्रतिष्ठेति ।<br>राघवभट्टधृतमहाकपिलपञ्चरात्रेऽपि । |

'प्रतिष्ठाशब्दसंसिद्धिः प्रतिपूर्ब्बाच्च तिष्ठतेः ।
बह्वर्थत्वान्निपातानां संस्कारादौ प्रतेः स्थितिः ॥
अर्थस्तदयमेतस्य गीयते शाब्दिकैर्जनैः ।
विशेषसन्निधिर्य्या तु क्रियते व्यापकस्य तु ॥
सन्मूर्त्तौ भावनामन्त्रैः प्रतिष्ठा साभिधीयते ॥' * ॥
स्वभस्मना गोमयभस्मना ।
'अष्टोत्तरं पलशतं स्नाने देयञ्च सर्व्वदा ॥'
पलमाह मनुः ।
'पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश ।'
पलं सुवर्णाश्चत्वारः । तेनाष्टरक्तिकाधिक-लौकिकमाषद्वयाधिकतोलकत्रयेण पलं भवति
एवंविधाष्टोत्तरपलशतेन लौकिकषष्ट्यांधकशत-त्रयतोलका इति । एवं वल्मीकमृदादिक्षालने
गायत्र्या वल्मीकमृदा स्नापयेत् । तत्रापि अष्टोत्तरशतपलं शूलपाणिलिखितन्यायात् ।
गायत्र्या मूलमन्त्रेण वा गन्धोदकस्नाने शुद्धवत्या
एतोन्विन्द्रमित्यादि ऋक्त्रयात्मिकया देशिको
गुरुर्यजमानो वा विज्ञः नमोऽस्तु इत्यादिमन्त्रौ
देवतान्तरे च तत्तद्देवतानामोहः । शिवलिङ्ग-स्याप्यर्च्चात्वात् स्त्रीलिङ्गमविरुद्धम् ॥ * ॥
यमः ।
'कृत्वा देवकुलं सर्व्वं प्रतिष्ठाप्य च देवताम् ।
विधाय विविधं चित्रं तल्लोकं विन्दते ध्रुवम् ॥'
नारसिंहे ।
'प्रतिमां लक्षणोपेतां नरसिंहस्य कारयेत् ।
मृत्तिका करिदन्तस्य पर्व्वताश्वखुरस्य च ।
कुशवल्मीकसम्भूतं मृदां पञ्चकमीरितम् ॥ * ॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
कुर्य्यात् प्राणप्रतिष्ठाञ्च होमं कुर्य्याद्यथाविधि ।
दक्षिणां विधिवद्दद्यात् पूर्णार्थं तदनन्तरम् ॥'
इति भविष्यपुराणे तृतीयभागे ९ अध्यायः ॥ * ॥
'चतुरङ्गुलविस्तारा दीर्घा हस्तद्वयावधि ।
पताका लोकपालानां दशानां परिकीर्त्तिताः ।
पञ्चहस्ताश्च वै दण्डाः पताकानां प्रकीर्त्तिताः ॥'
ज्योतिषे ।
'दुग्धं सशर्करञ्चैव धृतं दधि तथा मधु ।
पञ्चामृतमिदं प्रोक्तं विधेयं सर्व्वकर्म्मसु ॥' * ॥
प्रतिष्ठानन्तरं मात्स्ये ।
'ततः सहस्रं विप्राणामष्टोत्तरशतन्तथा ।
भोजयेच्च यथाशक्त्या पञ्चाशद्वाथ विंशतिम् ॥'
षोडशोपचाराः आसनमित्यादि । दशोप-चाराः पाद्यादि । पञ्चोपचारा गन्धादि ।
'सर्व्वोपचारवस्तूनामलाभभावनैव हि ।
निर्म्मलेनोदकेनानुपूर्णतेत्याह नारदः ॥' * ॥
नारसिंहे ।
'स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम् ॥'
कालिकापुराणम् ।
'यद्दीयते च देवेभ्यो गन्धपुष्पादिकं तथा ।
तत्त्वन्यासं लिपिन्यासं मन्त्रन्यासञ्च विन्यसेत् ॥
प्राणप्रतिष्ठामन्त्रेण प्राणस्थापनमाचरेत् ।
पूजाञ्च महतीं कुर्य्यात् स्वतन्त्रोक्तां यथाविधि ।
यागहोमादिषु प्रायः संक्षेपोऽयं विधिः स्मृतः ॥'
अस्पृश्यस्पर्शने तु बौधायनः । तासां द्रव्यवत्
कृतशौचानां देवार्च्चानां भूयः प्रतिष्ठापयेत् ।
तासामस्पृश्यस्पर्शानाम् । प्रकृतिद्रव्यस्य ताम्रादे-र्यथेष्टशौचं कृत्वा पुनः प्रतिष्ठां कारयेदिति
रत्नाकरः । तदा पूज्यत्वमित्याहू रत्नाकरा-दयः ॥ * ॥ आदित्यपुराणे ।
'खण्डिते स्फुटिते दग्धे भ्राजमानविवर्जिते ।
योगहीने पशुस्पृष्टे पतिते दुष्टभूमिषु ॥
अन्यमन्त्रार्च्चिते चैव पतितस्पर्शदूषिते ।
दशस्वेतेषु नो चक्रुः सन्निधानं दिवौकसः ॥
इति सर्व्वगतो विष्णुः परिभाषाञ्चकार ह ॥'
उपचारद्रव्याणि सारदातिलके ।
'पाद्यं श्यामाकदूर्व्वाब्जविष्णुक्रान्ताभिरिष्यते ।'
तद्युक्तजलमिति शेषः ।
'गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपैः ।
सदूर्व्वैः सर्व्वदेवानामर्घ्यमेतदुदीरितम् ॥
जातीलवङ्गकक्कोलैर्जलमाचमनीयकम् ।
आज्यं दधिमधून्मिश्रं मधुपर्कं निवेदयेत् ॥
कात्यायनः ।
'मधुपर्कं दधिमधुघृतसर्षपसहितं कांस्ये कांस्येन ।'
गन्धश्चन्दनकर्पूरकालागुरुभिरीरितः ।
पुष्पाणि देवदेयानि ।
'गुग्गुल्वगुरुशीरशर्करामधुचन्दनैः ।
धूपयेदाज्यसंमिश्रैर्नीचैर्देवस्य देशिकः ।
तत्र तत्र जलं दद्यादुपचारान्तरान्तरे ॥'
अत्र वृद्धिहोमौ त्वनावश्यकौ यथाशक्ति इत्य-

सर्व्वपापानि सन्त्यज्य स तु विष्णुपुरं व्रजेत् ॥
प्रतिष्ठा नरसिंहस्य यः करोति यथाविधि ।
निष्कामो नरशार्द्दूल ! देहबन्धात् प्रमुच्यते ।
सकामो नरसिंहस्य पुरं प्राप्य प्रमोदते ॥
विधिवत् स्थापयेद्यस्तु कारयित्वा जनार्द्दनम् ।
न जातु निर्गमस्तस्य विष्णुलोकात् कथञ्चन ॥'
माधवमानसोल्लासे ।
'देवस्य प्रमितायान्तु यावन्तः परमाणवः ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥'
राजमार्त्तण्डे ।
'पुत्त्रोत्पत्तौ सदा श्राद्धमन्नप्राशनिके तथा ।
चूडाकार्य्ये व्रते चैव नाम्नि पुंसवनेऽपि च ॥
पाणिग्रहे प्रतिष्ठायां प्रवेशे नववेश्मनः ।
एतद्वृद्धिकरं नाम गृहस्थस्य विधीयते ॥'
सूत उवाच ।
'कलौ चैकाहसाध्येन प्रतिष्ठां मन्त्रवित्तवान् ।
मध्यमेनाधमेनापि प्रकुर्य्यात्तान्त्रिकैर्मतैः ॥'
तथा ।
'नित्यं निर्व्वर्त्य मतिमान् कुर्य्यादभ्युदयं ततः ।
विप्रान् संपूजयित्वाथ ततो यागपुरं व्रजेत् ॥
गणेशग्रहदिक्पालान् प्रतिकुम्भेषु पूजयेत् ।
स्थण्डिल विधिवद्विष्णुं परिवारगणं यजेत् ॥
स्नापयेत् प्रथमं देवं तोयैः पञ्चविधैरपि ।
पञ्चामृतैः पञ्चगव्यैः पञ्चमृत्पिण्डकैरपि ॥
तिलतैलैश्च स्नेहैश्च कषायैरपि सत्तमाः ।
पञ्चपुष्पोदकैर्व्वाथ त्रिपत्रैरपि सत्तमाः ॥
तुलसीकुन्दमालूरपत्राण्याहुस्त्रिपत्रकम् ।
चम्पकाम्रशमीपद्मकरवीरञ्चपञ्चमम् ॥
अर्घ्यपात्रस्थितैस्तोयैरभिषिच्य तमुत्सृजेत् ॥'
देवीपुराणम् ।
'होमो ग्रहादिपूजायां शतमष्टोत्तरं भवेत् ।
अष्टाविंशतिरष्टौ वा यथाशक्ति विधीयते ॥'
कात्यायनः ।
'आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते ॥'
अत्र नीराजनमाह पूजारत्नाकरे देवीपुराणम् ।
'शङ्खभेर्य्यादिनिनदैर्जयशब्दैश्च पुष्कलैः ।
यावतो दिवसान् वीर ! देव्या नीराजनं कृतम् ।
तावत्कल्पसहस्राणि स्वर्गलोके महीयते ॥
भक्त्या पिष्टप्रदीपाद्यैश्चूताश्वत्थादिपल्लवै ।
ओषधीभिश्च मेध्याभिः सर्व्वबीजैर्यवादिभिः ॥
नवम्यां पर्व्वकालेषु यात्राकाले विशेषतः ।
यः कुर्य्याच्छ्रद्धया वीर ! देव्या नीराजनं नरः ।
यस्तु कुर्य्यात् प्रदीपेन सूर्य्यलोकं स गच्छति ॥'
पर्व्वकाल उत्सवकालः । देव्या इति स्त्रीत्वम-
विवक्षितं वहुशो निबन्धकारैर्व्याख्यातत्वात् आचाराच्च ॥ * ॥ अथ प्रतिष्ठितमूर्त्तौ कदा-
चित् पूजाभावेन महाकपिलपञ्चरात्रम् ।
'एकाहपूजाविहतौ कुर्य्याद्द्विगुणमर्च्चनम् ।
त्रिरात्रे च महापूजा संप्रोक्षणमतः परम् ॥
मासादूर्द्ध्वमनेकाहपूजा यदि विहन्यते ।
प्रतिष्ठैवेष्यते कैश्चित् कैश्चित् संप्रोक्षणक्रमः ॥'
भिधानात् ॥ * ॥ तथा चाल्पधनानां यज्ञ-
मण्डपेन विनापि पूजामाह विष्णुधर्म्मोत्तर-
प्रथमकाण्डम् ।
'पूजा कार्य्या बहिर्वेद्यां श्रद्धया भृगुमन्दन ! ।
न त्वल्पदक्षिणैर्यज्ञैर्यजेदिह कदाचन ॥
विष्णुं देवनिकायस्थं यथाश्रद्धमरिन्दम ! ।
तपसा पूजयेन्नित्यं तस्मादल्पधनो नरः ॥"
* ॥
यद्येकाहे देवप्रतिष्ठावास्तुयागगृहोत्सर्गास्तदा
तन्त्रेण वृद्धिश्राद्धं कुर्य्यात् । गणशः क्रियमाणे
त्वितिवचनात् ॥ * ॥ तथा एकस्मिन्नपि अग्नौ
होमद्वयं विघेयम् । एकाग्नावनेकहोमकरण-
पक्षे तन्त्रेण परिसमूहनादिकमाह गोभिलः ।
गणेष्वेकं परिसमूहनमिध्मो वर्हिःपर्य्युक्षण-
माज्यभागाविति ॥ * ॥ पूजादिकन्तु प्रत्येकमेव ।
ब्रह्मपुराणे ।
देवानां प्रतिमा यत्र घृताभ्यङ्गक्षमा भवत् ।
पलानि तस्यै देयानि श्रद्धया पञ्चविंशतिः ॥
अष्टोत्तरशतपलं स्नाने देयञ्च सर्व्वदा ॥'
नारसिंहे ।
यवगोधूमजैश्चूर्णैरुद्वर्त्योष्णेन वारिणा ।
प्रक्षाल्य देवदेवेशं वारुणं लोकमाप्नुयात् ॥

|  |  |  |
| --- | --- | --- |
|  | संप्रोक्षणं ॐ देवस्य त्वेत्यादिना ।<br>'गवां रसैश्च संस्नाप्य दर्भतोयैर्विशोध्य च ।<br>प्रोक्षयेत् प्रोक्षणीतोयैर्मूलेनाष्टोत्तरं शतम् ॥<br>सपुष्पं सकुशं पाणिं न्यसेद्देवस्य मस्तके ।<br>पञ्चवारं जपेन्मूलमष्टोत्तरशतोत्तरम् ॥<br>ततो मूलेन मूर्द्धादिपीठान्तं संस्पृशेदिति । |  |

पादपीठन्तु यो दद्यात् विल्वपत्रनिघर्षणम् ।
उष्णाम्बुना च प्रक्षाल्य सर्व्वपापैः प्रमुच्यते ॥”
इति प्रतिष्ठातत्त्वम् ॥ * ॥
प्रकारान्तरं गारुडे ४८ अध्याये मत्स्यपुराणे च द्रष्टव्यम् ॥

**प्रतिष्ठानं**, क्ली, (प्रतितिष्ठत्यत्रेति । प्रति + स्था + अधिकरणे ल्युट् ।) नगरविशेषः । विठोर इति ख्यातः । तत्र पुरूरवा राजचक्रवर्त्ती आसीत् । इति महाभारतम् ॥ (यथा, देवी-भागवते । १ । १३ । १-२ ।
“सुद्युम्ने तु दिवं याते राज्यं चक्रे पुरूरवाः ।
सगुणश्च सुरूपश्च प्रजारञ्जनतत्परः ॥
प्रतिष्ठाने पुरेरम्ये राज्यं सर्व्वनमस्कृतम् ।
चकार सर्व्वधर्म्मज्ञः प्रजारक्षणतत्परः ॥”
इदं हि गङ्गातीरस्थम् । यथा, हरिवंशे । २६ । ४७ -- ४८ ।
“एवं प्रभावो राजासीदैलस्तु पुरुषोत्तमः ।
देशे पुण्यतमे चैव महर्षिभिरभिष्टुते ।
राज्यं स कारयामास प्रयागे पृथिवीपतिः ।
उत्तरे जाह्नवीतीरे प्रतिष्ठाने महायशाः ॥”)

**प्रतिष्ठितः**, त्रि, (प्रतिष्ठा जातास्येति । तारका-दित्वात् इतच् ।) प्रतिष्ठायुक्तः । (यथा, देवी-भागवते । ३ । ६ । ७३ ।
“सदुद्भूतस्त्वहङ्कारस्तेनाहं कारणं शिवा ।
अहङ्कारश्च मे कार्य्यं त्रिगुणोऽसौ प्रतिष्ठितः ॥”)
गौरवान्वितः । यथा, --
“प्रतिष्ठितानाञ्चाकीर्त्तिर्म्मरणादतिरिच्यते ॥”
इति ब्रह्मवैवर्त्ते गणेशखण्डे ३४ अध्यायः ॥
निष्पन्नयागः । संस्कृतः । इति प्रतिष्ठाशब्दार्थ-

**प्रतिसरः**, पु, (प्रतिसरतीति । प्रति + सृ + अच् ।) मन्त्रभेदः । माल्यम् । कङ्कणम् । ब्रणशुद्धिः । चमूपृष्ठम् । इति मेदिनी । रे, २७६ ॥ प्रातः-कालः । इति शब्दमाला ॥

**प्रतिसरः**, पुं क्ली, (प्रतिसरतीति । प्रति + सृ +

विष्णुं रवीणामधिपं वसूना-
मग्निञ्च लोकाधिपतिञ्चकार ।
प्रजापतीनामधिपञ्च दक्षं
चकार शक्रं मरुतामधीशम् ॥
दैत्याधिपानामथ दानवानां
प्रह्लादमीशञ्च यमं पितॄणाम् ।
पिशाचरक्षःपशुभूतयक्ष-
वेतालराजन्त्वथ शूलपाणिम् ॥
प्रालेयशैलञ्च पतिं गिरीणा-
मीशं समुद्रं ससरिन्नदानाम् ।
गन्धर्व्वविद्याधरकिन्नराणा-
मीशं पुनश्चित्ररथञ्चकार ॥
नागाधिपं वासुकिमुग्रवीर्य्यं
सर्पाधिपं तक्षकमादिदेश ।
दिग्वारणानामधिपञ्चकार
गजेन्द्रमैरावतनामधेयम् ॥
सुपर्णमीशं पतताममथाश्व-
राजानमुच्चैःश्रवसञ्चकार ।
सिंहं मृगाणां वृषभं गवाञ्च
प्लक्षं पुनः सर्व्ववनस्पतीनाम् ॥
पितामहः पूर्ब्बमथाभ्यषिञ्च-
देतान् पुनः पूर्ब्बदिगाधिनाथान् ।
पूर्ब्बेण दिक्पालमथाभ्यषिञ्च-
न्नाम्ना सुधर्म्माणमरातिकेतुम् ॥
ततोऽधिपन्दक्षिणतश्चकार
सर्व्वेश्वरं शङ्खपदाभिधानम् ।
सकेतुमन्तं दिगधीशमीश-
ञ्चकार पश्चाद्भुवनाण्डगर्भः ॥
हिरण्यरीमाणमुदग्दिगीशं
प्रजापतिं मेरुसुतञ्चकार ।
अद्यापि कुर्व्वन्ति दिशामधीशाः
शब्दं वहन्तस्तु भुबोऽभिरक्षाम् ॥
चतुर्भिरेभिः पृथुनामधेयो
नृपोऽभिषिक्तः प्रथमं पृथिव्याम् ।
मन्वन्तरे चापि गते त एव
वैवस्वतञ्चक्रुरिमं पृथिव्याम् ॥
गतेऽन्तरे चाक्षुषनामधेये
वैवस्वताख्ये च पुनः प्रवृत्ते ।
प्रजापतिः सोऽस्य चराचरस्य

चाक्षुषश्च महातेजा विवस्वान् परतस्तथा ॥
यक्षरक्षःपिशाचांश्च नागगन्धर्व्वकिन्नरान् ।
विद्याधरानप्सरसः सिद्धान् भूतगणान् बहून् ॥
मेघान् सविद्युतो वृक्षान् लतागुल्मतृणादिकान् ।
मत्स्यान् पशूंश्च कीटांश्च जलजान् स्थलजां-
स्तथा ॥
एतादृशानि सर्व्वा मनुः स्वायम्भुवः सुतैः ।
सहितः ससृजे सोऽस्य प्रतिसर्गः प्रकीर्त्तितः ॥
अन्ये षण्मनवो ये वै तेऽपि स्वे स्वेऽन्तरेऽन्तरे ।
प्रतिसर्गं स्वयं कृत्वा प्राप्नुवन्ति चराचरम् ॥
यज्ञस्य संभृतं यज्ञान् यूपं प्राग्वंशमेव च ।
धर्म्माधर्म्मौ गुणान् सर्व्वान् वराहः सृष्टवान् पुरा ॥
सुतान् बहून् समुत्पाद्य दक्षो देवर्षिसत्तमान् ।
महर्षीन् सोमपार्दींश्च बहून् पितृगणांस्तथा ॥
सृष्टिं प्रवर्त्तयामास प्रतिसर्गोऽस्य स स्मृतः ।
अजायन्त मुखाद्विप्राः क्षत्त्रिया बाहुयुग्मतः ॥
ऊर्व्वोर्व्वैश्याः पदः शूद्राश्चतुर्वेदाश्चतुर्मुखात् ।
ब्रह्मणः प्रतिसर्गोऽयं ब्राह्मः सर्गस्ततः स्मृतः ॥
मरीचेः कश्यपो जातः कश्यपात् सकलं जगत् ।
देवा दैत्या दानवाश्च तस्य सर्गः प्रकीर्त्तितः ॥
अत्रेर्नेत्रादभूच्चन्द्रश्चन्द्रवंशस्ततोऽभवत् ।
तेन सर्व्वं जगद्व्याप्तं सोमसर्गः प्रकीर्त्तितः ॥
अथर्व्वाङ्गिरसी कृत्वा पुत्राश्च बहुशोऽपरे ।
मन्त्रयन्त्रादयो ये वै ते सर्व्वेऽङ्गिरसः स्मृताः ॥
आज्यपाख्याः पुलस्त्यस्य पुत्राश्चान्ये च राक्षसाः ।
प्रतिसर्गाः पुलस्त्यस्य बलवीर्य्यसमन्विताः ॥
काद्रवेया गजा अश्वाः प्रजा बहुतरास्तथा ।
ससृजे पुलहेनैष सर्गस्तस्य प्रकीर्त्तितः ॥
क्रतोः पुत्रा वालिखिल्लाः सर्व्वज्ञा भूरितेजसः ।
अष्टाशीतिसहस्राणि ज्वलद्भास्करसन्निभाः ॥

अच् ।) मण्डलम् । आरक्षम् । करसूत्रम् । नियोज्ये, त्रि । इति मेदिनी । रे, २७६ ॥

**प्रतिसर्गः**, पुं, (प्रतिरूपः सर्गः ।) ब्रह्मणः सृष्ट्य-नन्तरं दक्षादीनां सृष्टिः । स च पुराणपञ्च-लक्षणान्तर्गतलक्षणविशेषः । यथा, --

ऋषय ऊचुः ।

"आदिसर्गस्त्वया सूत ! कथितो विस्तरेण च ।

प्रतिसर्गश्च ये येषामधिपास्तान् वदस्व नः ॥

सूत उवाच ।

यदाभिषिक्तः सकलाधिराज्ये

पृथुर्धरित्र्यामधिपो बभूव ।

तदौषधीनामधिपञ्चकार

यज्ञव्रतानां तपसाञ्च सोमम् ॥

नक्षत्रताराद्विजवृक्षगुल्म-

लतावितानस्य च रुक्मगर्भः ।

अपामधीशं वरुणं धनानां

राज्ञां प्रभुं वैश्रवणञ्च तद्वत् ॥

बभूव सूर्य्यान्वयवंशचिह्नः ॥"

इति मात्स्ये आधिपत्यसेचनं मन्वन्तराधिपत्यं नाम ८ अध्यायः ॥ * ॥ अपि च ।

मार्कण्डेय उवाच ।

"वाराहोऽयं श्रुतः सर्गो वराहाधिष्ठितो यतः ।

प्रतिसर्गः स्मृतः सोवै दक्षाद्यैर्यः कृतः पृथक् ॥

रुद्रो विराड् मनुर्दक्षो मरीच्याद्यास्तु मानसाः ।

यं यं सर्गं पृथक् चक्रुः प्रतिसर्गः स स स्मृतः ॥

विराट्सुतोऽसृजद्वंश्यान्मनून् यैर्विततं जगत् ।

मनुः सप्त मनून् सृष्ट्वा चकार बहुशः प्रजाः ॥

प्रजाः सिसृक्षुः स मनुर्योऽसौ स्वायम्भुवाह्वयः ।

असृजत् प्रथमं षड्वै मनून् षडपरान् सुतान् ॥

स्वारोचिषश्चोत्तमिश्च तामसो रैवतस्तथा ।

प्रचेतसः सुताः सर्व्वे ये वै प्राचेतसाः स्मृताः ।

षडशीतिसहस्राणि पावकोपमतेजसः ॥

सुकालिनो वशिष्ठस्य पुत्राश्चान्येऽथ योगिनः ।

आरुन्धतेयाः पञ्चाशद्वाशिष्ठः सर्ग उच्यते

भृगोश्च भार्गवा जाता ये वै दैत्यपुरोधसः ।

कवयस्ते महाप्राज्ञास्तैर्व्याप्तमखिलं जगत् ॥

नारदात्तारका जाता विमानानि तथैव च ।

प्रश्नोत्तरास्तथैवान्ये नृत्यं गीतञ्च कौतुकम् ॥

एते दक्षमरीच्याद्याः कृतदारान् बहून् सुतान्

उत्पाद्योत्पाद्य पृथिवीं दिवञ्च समपूरयन् ॥

तेषां सुतेभ्यश्च सुतास्तत्सुतेभ्यः परे सुताः ।

समुत्पन्नाः प्रवर्त्तन्ते येऽद्यापि भुवनेषु वै ॥

विष्णोस्तु चक्षुषः सूर्य्यो मनसश्चन्द्रमाः स्मृतः ।

श्रोत्राद्वायुः समुद्भूतो मुखादग्निरजायत ॥

प्रतिसर्गो ह्ययं विष्णोस्तथा चापि दिशो दश ।

सृष्ट्यर्थञ्चन्द्रमाः पश्चादत्रिनेत्रादवातरत् ॥

भास्करः कश्यपाज्जातो भार्य्ययास्य समर्च्चितः ।

रुद्राश्च बहवो जाता भूतग्रामाश्चतुर्व्विधाः ॥

श्ववराहोष्ट्ररूपाश्च प्लवगोमायुगोमुखाः ।

ऋक्षमार्जारवदनाः सिंहव्याघ्रमुखाः परे ॥

नानाशस्त्रधराः सर्व्वे नानारूपा
महाबलाः ।
एष वः प्रतिसर्गोऽपि कथितो
द्बिजसत्तमाः ॥”
इति कालिकापुराणे २६ अध्यायः ॥

**प्रतिसव्यं**, त्रि, (गतिगतं सव्यं वाममिति ।) प्रति-
कूलम् । इति जटाधरः ॥

**प्रतिसान्धानिकः**, पुं, (प्रतिसन्धानं प्रयोजनमस्येति ।
प्रतिसन्धान + ठक् ।) मागधः ।
स्तुतिपाठकः ।
इति शम्दरत्नावली ॥

**प्रतिसीरा**, स्त्री, (प्रतिसिनोति प्रतिबध्नातीति ।
प्रति + सि + “शुसिचिमिञ्ञां दीर्घश्च ।” उणा०
२ । २५ । इति क्रन् दीर्घश्च । ततष्टाप् ।)
यवनिका । व्यवधायकपटः । इत्यमरः ।
२ । ६ । १२० ॥

**प्रतिसूर्य्यः**, पुं, (प्रतिरूपः सूर्य्य इति प्रादि-
समासः ।) कृकलासः । इति
त्रिकाण्डशेषः ॥
(यथा, सुश्रुते । कल्पस्थानेऽष्टमाध्याये ।
“प्रतिसूर्य्यः पिङ्गभासो बहुवर्णो
महाशिराः ॥”
उपसूर्य्यकमण्डलम् । यथा,
बृहत्संहितायाम् ।
३७ । २ ।
“प्रतिसूर्य्यानां माला
दस्युभयातङ्कनृपहन्त्री ॥”)

**प्रतिसूर्य्यकः**, पुं, (प्रतिसूर्य्य + स्वार्थे कन् ।) कृक-
लासः । (यथा, उत्तररामचरिते
द्बितीयेऽङ्के ।
“सीमानः प्रदरोदरेषु
विलसत्स्वल्पाम्भसो

“मनोहतः प्रतिहतः प्रतिबद्धो हतश्च
सः ॥”
इति मुद्राङ्कितामरकोषे पाठः । ३ । १
। ४१ ॥

**प्रतिहस्तकः**, पुं, (प्रतिरूपः हस्तोऽवलम्बनरूपो
यस्य । कप् ।) प्रतिनिधिः । यथा, --
“आश्रितानां भृतौ स्वामिसेवायां
धर्म्मसेवने ।
पुत्त्रस्योत्पादने चैव न सन्ति
प्रतिहस्तकाः ॥”
इति हितोपदेशे नीतिशास्त्रे सुहृद्भेदो
नाम
द्बितीयकथासंग्रहः परिच्छेदः ॥

**प्रतिहारः**, पुं, (प्रतिविषयं प्रत्येकं वा हरति
स्वामिसमीपमानयतीति । प्रति + हृ +
अण् ।)
द्बारपालः (यथा, देवीभागवते । १ ।
१७ । ३० ।
“ज्ञातो हि प्रतिहारेण ज्ञानी कश्चिद्
द्बिजो-
त्तमः ॥”
प्रति + हृ + आधारे घञ् ।) द्बारः ।
इति
शब्दरत्नावली ॥ (यथा, रघौ । ६ ।
२० ।
“ततो नृपाणां श्रुतवृत्तवंशा
पुंवत्प्रगल्भा प्रतिहाररक्षी ।
प्राक्सन्निकर्षं मगधेश्वरस्य
नीत्वा कुमारीमवदत् सुनन्दा ॥”
प्रतिरूपं हरतीति । हृ + अण् ।)
माया-
कारः । इत्यमरटीकायां भरतः । २ ।
१० । ११ ॥
(परमेष्ठिनः पुत्त्रः । यथा, विष्णु पुराणे
। २ । १ । ३७ ।
“परमेष्ठी ततस्तस्मात्
प्रतिहारस्तदन्वथः ॥”)

**प्रतीकाशः**, पुं, (प्रतिकाशते इति । प्रति + काश्
+ घञ् । उपसर्गस्य दीर्घः ।) उपमा ।
इत्यमरः । २ । १० । ३८ ॥ (यथा, महाभारते ।
१ । १५४ । ३२ ।
“अद्य त्वां भगिनी रक्षः कृष्यमाणं मयासकृत् ।
द्रक्ष्यत्यद्रिप्रतीकाशं सिंहेनेव महाद्बिपम् ॥”)

**प्रतीक्षा**, स्त्री, (प्रति + ईक्ष + अङ् ।) प्रती-
क्षणम् । अपेक्षा । प्रतिपूर्ब्बेक्षधातोर्भावे अप्र-
त्ययेन निष्पन्नः ॥ (यथा, महाभारते । ८ । ४० ।
५२ ।
“मित्रप्रतीक्षया शल्य धार्त्तराष्ट्रस्य चोभयोः ।
अपवादतितिक्षाभिस्त्रिभिरेतैर्हि जीवसि ॥”)

**प्रतीक्ष्यः**, त्रि, (प्रतीक्ष्यते इति । प्रति + ईक्ष +
एयत् ।) पूज्यः । इत्यमरः । ३ । १ । ५ ॥ (यथा,
रघौ । ५ । १४ ।
“भक्तिः प्रतीक्ष्येषु फुलोचिता ते
पूर्ब्बान् महाभाग ! तयातिशेषे ।
व्यतीतकालस्त्वहमभ्युपेतः
त्वामर्थिभावादिति मे विषादः ॥”)
प्रतीक्षणीयः ॥ (यथा, माघे । २ । १०८ ।
“प्रतीक्ष्यं तत्प्रतीक्षायै प्रतिष्वस्रे प्रतिश्रुतम् ॥”)

**प्रतीची**, स्त्री, (प्रतिदिनान्तं प्रतिदिनान्ते इत्यर्थः
अञ्चति सूर्य्यमिति । अञ्चु गतिपूजनयोः +
“ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च ।”
३ । २ । ५९ । इति क्विन् अन्लोपो दीर्घश्च ।
“उगितश्च ।” ४ । १ । ६ । इति ङीप् ।)
पश्चिम-
दिक् । इत्यमरः । १ । ३ । १ ॥ (यथा, महा-
भारते । ४ । ४१ । १८ ।
“येनासौ व्यजयत् कृत्स्नां प्रतीचीं दिशमाहवे ।
कलापो ह्येष तस्यासीन्माद्रीपुत्त्रस्य धीमतः ॥”
त्रि, पश्चिमाभिमुखी । यथा, ऋग्बेदे । १ । ९२ ।
९
“विश्वानि देवी भुवनाभिचक्ष्या
प्रतीची चक्षुरुर्विया वि भाति ।
विश्वं जीवं चरसे बोधयन्ती
विश्वस्य वाचमविदन् मनायोः ॥”

या स्वयं
तृष्यद्भिः प्रतिसूर्य्यकैरजगरस्वेदद्रवः
पीयते ॥”
तद्दष्टस्य चिकित्सा सुश्रुते कल्पस्थाने
८
अध्याये उक्ता । यथा, --
“प्रतिसूर्य्यकदष्टानां सर्पदष्टवदाचरेत्
॥”)
उपसूर्य्यकमण्डलम् । इति विश्वः ॥
(अस्य शुभा-
शुभलक्षणम् । यथा, बृहत्संहितायाम् ।
३७ । १-३ ।
“प्रतिसूर्य्यकः प्रशस्तो
दिवसकृदृतुवर्णसप्रभः स्निग्धः ।
वैदूर्य्यनिभः स्वच्छः
शुक्लश्च क्षेमसौभिक्षः ॥
पीतो व्याधिं जनय-
त्यशोकरूपश्च शस्त्रकोपाय ।
प्रतिसूर्य्याणां माला
दस्युभयातङ्कनृपहन्त्री ॥
दिवसकृतः प्रतिसूर्य्यो
जलकृदुदग्दक्षिणे स्थितोऽनिलकृत् ।
उभयस्थः सलिलभयं
नृपमुपरि निहन्त्यधो जनहा ॥”)

**प्रतिसृष्टः**, त्रि, (प्रति + सृज् + कर्म्मणि क्तः ।)

प्रेषितः । प्रत्याख्यातः । इति मेदिनी ।
टे, ६५ ॥
दत्तः । इति धरणिः ॥

**प्रतिसोमा**, स्त्री, (प्रतिरूपः सोमः सोमवल्ली

यस्याः ।) महिषवल्ली । इति
राजनिर्घण्टः ॥

**प्रतिस्पर्द्धा**, स्त्री, (प्रति + स्पर्द्ध + भावे अङ् ।)

प्रतिकक्षा । स्पर्द्धा । इति शब्दरत्नावली
॥

**प्रतिहतः**, त्रि, (प्रतिहन्यते स्मेति । प्रति + हन् +

क्तः ।) द्विष्टः । प्रतिस्खलितः । रुद्धः ।
इति ।
मेदिनी । ते, २०५ ॥ निराशः । यथा, -
-

**प्रतिहारकः**, पुं, (प्रतिरूपं हरतीति । हृ +

एवुल् ।) मायाकारः । इत्यमरटीकायां
भरतः ।
२ । १० । ११ ॥

**प्रतिहासः**, पुं, (प्रतिरूपो हासो यस्य ।) कर-

वीरः । इत्यमरः । २ । ४ । ७६ ॥
हासकम्प्रति
हास्यञ्च ॥

**प्रतीकः**, पुं, (प्रतीयते प्रत्येति वा इति । प्रति +

इ + अलीकादयश्चेति ईकन्प्रत्ययेन
साधुः ।)
एकदेशः । अङ्गम् । (यथा, ऋग्वेदे । ७
।
३६ । १ ।
“वि सानुना पृथिवी सस्र उर्व्वी पृथु
प्रतीक
मध्येधे अग्निः ॥”
“तथाग्निः पृथु विस्तीर्णं प्रतीकं
पृथिव्या अव-
यवम् ॥” इति तद्भाष्ये सायनः ॥)
स्वाङ्गवाद्य-
निषेधो यथा, कौर्म्मे १५ अध्याये ।
“न स्वाङ्गनखवाद्यं वै कुर्य्यान्नाञ्जलिना
पिबेत् ॥”
अपि च, लक्ष्मीचरित्रे ।
“स्वाङ्गे पीठे च वाद्यं हरति धनपतेः
केशव-
स्यापि लक्ष्मीम् ॥”
प्रतिकूले, त्रि । इत्यमरः । १ । ६ ।
७० ॥ विलोमः ।
इति मेदिनी । के, ११२ ॥

**प्रतीकारः**, पुं, (प्रतिकरणमिति । प्रति + कृ +

घञ् । उपसर्गस्येति पक्षे दीर्घः ।)
कृतापकारस्य
प्रत्यपकारः । तत्पर्य्यायः । वैरशुद्धिः
२ वैर-
निर्यातनम् ३ । इत्यमरः । २ । ८ ।
११० ॥
(यथा, देवीभागवते । ३ । २५ । ३ ।

“भुवना भुवनानि भूतजातान्यभिचक्ष्याभि-
प्रकाश्य प्रकाशवन्ति कृत्वानन्तरं प्रतीची
प्रत्यङ्-
मुखी सती ।” इति तद्भाष्ये सायनः ॥ प्रति-
निवृत्तमुखी । यथा, ऋग्वेदे । १ । १२४ । ७ ।
“अभ्रातेव पुंस एति प्रतीची गर्त्तारुगिव सनये
धनानाम् ॥”
“अभ्रातेव भ्रातृरहितेव पुंसः पित्रादीन् प्रतीची
स्वकीयस्थानात् प्रतिनिवृत्तमुखी ।” इति तद्-
भाष्ये सायनः ॥)

**प्रतीचीनं**, त्रि, (प्रतीचि भवम् । प्रत्यच् +

“विभाषाञ्चेरदिक् स्त्रियाम् ।” ५ । ४ । ८ । इति
खः । अल्लोपो दीर्घश्च ।) प्रत्यक् । प्रतीच्यां
भवः । इति हेमचन्द्रः । २ । ८२ ॥ (पराङ
मुखम् । यथा, ऋग्वेदे । ३ । ५५ । ८ ।
“शूरस्येव युध्यतो अन्तमस्य प्रतीचीनं ददृशे
विश्वमायत् ॥”
“विश्वं भूतजातं प्रतीचीनं पराङ् मुखं ददृशे ।”
इति तद्भाष्ये सायनः ॥)

| | “दुर्गया तौ हतौ संख्ये नापराधो ममात्र बै ।<br>अवश्यम्भाविभावेषु प्रतीकारो न विद्यते ॥”)<br>चिकित्सा । इति शब्दमाला ॥ | |
|---|---|---|

**प्रतीच्यः**, त्रि, प्रतीच्यां भवः । प्रतीचीशब्दाद्भवार्थे-

ष्ण्यप्रत्ययनिष्पन्नः ॥ पश्चिमदिग्जातः ।
(यथा,
महाभारते । २ । ३२ । १२ ।
"रामठान् हारहूणांश्च प्रतीच्याश्चैव ये
नृपाः ।
तान् सर्व्वान् स्ववशे चक्रे शासनादेव
पाण्डवः ॥")

**प्रतीतः**, त्रि, (प्रतीयते स्म प्रत्येकमगाद्वेति । प्रति

+ इण् + कर्म्मणि कर्त्तरि वा क्तः ।) ख्यातः
।
इत्यमरः । ३ । १ । ९ ॥ (यथा, रामायणे ।
२ । ८ । १० ।
"प्राप्तां वसुमतीं प्रीतिं प्रतीतां हतविद्विषम् ।
उपस्थास्यसि कौशल्यां दासीवत्त्वं कृता-
ञ्जलिः ॥")
सादरः । ज्ञातः । हृष्टः । इति मेदिनी । ते,
१२५ ॥ (पुं, विश्वेदेवानामन्यतमः । यथा,
महा-
भारते । १३ । ९१ । ३२ ।
"अनुकर्म्मा प्रतीतश्च प्रदाताथांशुमांस्तथा
॥")

**प्रतीतिः**, स्त्री, (प्रति + इण् + भावे क्तिन् ।)

ज्ञानम् । इति जटाधरः ॥ (यथा, भाषापरि-
च्छेदे । ११४ ।
"अन्योन्याभावतो नास्य चरितार्थत्वमुच्यते
।
अस्मात् पृथगिदं नेति प्रतीतिहि विलक्षणा
॥")
ख्यातिः । आदरः । हर्षः । इति
प्रतीतशब्दार्थ-
दर्शनात् ॥

**प्रतीपं**, त्रि, (प्रतिकूला आपो यस्मिन् । "ऋक्-

पूरब्धूःपथामानक्षे ।" ५ । ४ । ७४ । इति
अप्रत्ययः । "द्व्यन्तरुपसर्गेभ्योऽप ईत् ।"
६ । ३ ।
९३ । इति ईत् ।) प्रतिकूलम् । इति हेम-

यथा, --
अहमेव गुरुः सुदारुणाना-
मिति हालाहल ! तात ! मास्म
दृप्यः ।
ननु सन्ति भवादृशानि भूयो
भुवनेऽस्मिन् वचनानि
दुर्ज्जनानाम् ॥
अत्र प्रथमपादे उत्कर्षातिशय
उक्तः । तदनुक्तौ
तु नायमलङ्कारः ॥")

**प्रतीपः**, पुं, चन्द्रवंशीय ऋक्षराजपुत्त्रः । शान्तनु-

राजपिता च । इति पुराणं
शब्दरत्नावली च ॥
(यथा, महाभारते । १ । ९७ ।
२० ।
"प्रतीपः शान्तनुं पुत्त्रं यौवनस्थं
ततोऽन्वशात् ॥"
एतस्य विवरणं तत्रैवाध्याये
विस्तरशो द्रष्टव्यम् ॥)

**प्रतीपदर्शिनी**, स्त्री, (प्रतीपं प्रतिकूलं वामं वा

पश्यतीति । दृश् + णिनिः । ङीप्
।) स्त्रीमा-
त्रम् । इत्यमरः । २ । ६ । २ ॥

**प्रतीरं**, क्ली, (प्रतीरयति जलगतिकर्म्मसमाप्तिं

नयतीति । प्र + तीर कर्म्मसमाप्तौ
+ कः ।)
तटम् । इत्यमरः । १ । १० । ७
॥

**प्रतीवापः**, पुं, (प्रत्युप्यते प्रक्षिप्यते अथवा निषि-

च्यतेऽस्मिन्निति । प्रति + वप
निषेकादौ + घञ् ।)
गलितस्य
स्वर्णादेर्द्रव्यान्तरेणावचूर्णनम् ।
इति

**प्रतीहारी**, [न्] त्रि, (प्रतिहरति स्वामिसमीपे

सर्व्वविषयमिति । प्रति + हृ + णिनिः । उप-
सर्गस्य दीर्घः । यद्वा, प्रतीहारो रक्षणीयत्वेना-
स्यास्तीति । इनिः ।) द्वारी । द्वारार्थकप्रती-
हारशब्दादस्त्यर्थे इन्प्रत्ययेन निष्पन्नः ॥

**प्रतीहारी**, स्त्री, (प्रतीहारोऽस्या अस्तीति ।

अच् । गौरादित्वात् ङीष् ।) द्वाःस्थिता । इति
मेदिनी । रे, २८० ॥

**प्रतीहासः**, पुं, (प्रतिरूपो हासोऽस्य । उपसर्गस्य

दीर्घः ।) करवीरः । इत्यमरः । २ । ४ । ७६ ॥

**प्रतुदः**, पुं, (प्रतुदतीति । प्र + तुद् + कः ।)

गृध्रादिः । आदिना श्येनः । कङ्कः । काकः ।
द्रोणकाकः । उलूकः । मयूरः । इति राज-
निर्घण्टः ॥ अस्यमांसगुणाः ।
"लावाद्या विष्किरो वर्गः प्रतुदा जाङ्गला मृगाः ।
लघवः शीतमधुराः कषायाश्च हिता नृणाम् ॥"
इति राजवल्लभः ॥
(यथा च चरके सूत्रस्थाने सप्तविंशाध्याये ।
"शतपत्रो भृङ्गराजः कोयष्टी जीवजीवकः ।
कैरातः कोकिलोऽत्यूहो गोपापत्रः प्रियात्मजः ॥
लट्वा लट्वाषको वभ्रुर्वटहा डिण्डिमानकः ।
जटी दुन्दुभिवाक्कावलोहपृष्ठकुलिङ्गकाः ॥
कपोतशुक्लशारङ्गश्चिरिटीकङ्कुयष्टिकाः ।
शारिकाकलविङ्कश्च चटकोऽङ्गारचूडकः ॥
पारावतः पाण्डविक इत्युक्ताः प्रतुदा द्विजाः ॥"
यथा च सुश्रुते सूत्रस्थाने ४६ अध्याये ।
"कपोतपारावतभृङ्गराजपरभृतकोयष्टिककुलिङ्ग-
गृहकुलिङ्गगोक्षोडकडिण्डिमानकशतपत्रकमा-
तृनिन्दकभेदाशिशुकसारिकावल्गुलीगिरिशाल-
ट्वालदूषकसुगृहीखञ्जरीटकहारीतदात्यूहप्रभृ-
तयः प्रतुदाः ॥")

**प्रतोदः**, पुं, (प्रतुद्यतेऽनेनेति । प्र + तुद् +

करणे घञ् ।) अश्वादिताडनदण्डः । चावुक्
इति भाषा । तत्पर्य्यायः । प्राजनम् २ प्रवयणम् ३
तोत्रम् ४ तोदनम् ५ । इति जटाधरः ॥ (यथा,
महाभारते । २ । ५४ । ८ ।

चन्द्रः । ६ । १०१ ॥ (यथा, भागवते । ३ । १ । १४ ।
"क एनमत्रोपजुहाव जिह्मं
दास्याः सुतं यद्बलिनैव पुष्टः ।
तस्मिन् प्रतीपः परकृत्य आस्ते
निर्व्वास्यतामाशु पुराच्छ्वसानः ॥"
क्ली, अर्थालङ्कारभेदः । तस्य लक्षणादिवं साहित्यदर्पणे १० परिच्छेदे उक्तम् । यथा, --
"प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम् ।
निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते ॥
क्रमेण उदाहरणं यथा, --
यत्त्वन्नेत्रसमानकान्तिसलिलेमग्नं तदिन्दीवरं
मेघैरन्तरितं प्रिये ! तव मुखच्छायानुकारी शशी ।
येऽपि त्वद्गमनानुकूलगतयस्ते राजहंसा गता-
स्तत्सादृश्यविनोदमात्रमपिमे दैवेन न क्षन्यते ॥
तद्वक्त्रं यदि मुद्रिता शशिकथा हा हेम सा चेद्द्युति-
स्तच्चक्षुर्यदि हारितं कुवलयैस्तच्चेत् स्मितं का सुधा ।
धिक्कन्दर्पधनुर्भ्रुवौ यदि च ते किंवा बहु ब्रूमहे
यत्सत्यं पुनरुक्तवस्तुविमुखः सर्गक्रमो वेधसः ॥
अत्र वक्त्रादिभिरेव चन्द्रादीनां शोभातिवहनात् तेषां निष्फलत्वम् ।
उक्त्वा चात्यन्तमुत्कर्षमत्युत्कृष्टस्य वस्तुनः ।
कल्पितेऽप्युपमानत्वे प्रतीपं केचिदूचिरे ॥
स्वामी ॥ न्यसनम् ।
निःक्षेपणमिति यावत् ।
इति सुभूतिः ॥ उपद्रवः । इति मुकुटः ॥
"आवापस्तु प्रतीवापो
मारीरीतिरुपद्रवः ॥"
इति राजनिर्घण्टः ॥
इत्यातञ्चनशब्दटीकायां भरतः ॥ पानीयौषध-
विशेषः । यथा, --
"उषकादि प्रतीवापं पिबेत्
संशमनाय वै ॥"
इति विद्रधिचिकित्सायां
चक्रपाणिदत्तः ॥
(यथा च सुश्रुते सूत्रस्थाने । ४३ अध्याये ।
"मदनफलमज्जक्वाथं वा
पिप्पल्यादि प्रतीवापं
तच्चूर्णं वा निम्बरूपिका
कषाययोरन्यतरेण सन्त-
र्पणं कफजव्याधिहरम् ॥")

**प्रतीवेशः**, पुं, (प्रतिविश्यते इति । प्रति + विश् +
घञ् । उपसर्गस्य दीर्घः ।)
प्रतिवेशः । इति
शब्दरत्नावली ॥

**प्रतीवेशी**, [न्] स्त्री, (प्रतीवेशोऽस्यास्तीति ।
प्रतिवेश + "अत इनिठनौ ।" ५ । २ । ११५ ।
इति इनिः ।) प्रतिवेशी । इति
शब्दरत्नावली ॥

**प्रतीहारः**, पुं, (प्रतिह्रियते अत्रेति । प्रति + हृ +
घञ । उपसर्गस्य दीर्घः ।) द्वारः । (प्रतिहर-
त्यनेनेति । करणे घञ् ।)
द्वारपालः । इत्य-
मरः । २ । ८ । ६ ॥ तस्य
लक्षणम् । यथा, --
"प्रकालयेद्दिशः सर्व्वाः प्रतोदेनेव सारथिः ।
प्रत्यमित्रश्रियं दीप्तां जिघृक्षुर्भरतर्षभ ! ॥")

**प्रतोली**, स्त्री, (प्रतुल्यते परिमीयते इति । प्र +
तुल् परिमाणे + घञ् । गौरादित्वात् ङीष् ।)
रथ्या । इत्यमरः । २ । २ । ३ ॥ (यथा, रामायणे । २ । ८० । १८ ।
"बहुपांशुचयाश्चापि परिखापरिवारिताः ।
तत्रेन्द्रनीलप्रतिमाः प्रतोलीवरशोभिताः ॥")
अभ्यन्तरमार्गः । नाछ इति ख्याते । कुली इति
च ख्याते । हट्टादिमध्यनिर्म्मिते पथीति साञ्जः ।
दुर्गनगरद्वारे इति केचित् । इति तट्टीकायां
भरतः ॥

**प्रत्तं**, त्रि, (प्रदीयते स्मेति । प्र + दा + क्तः ।
"अच उपसर्गात् तः ।" ७ । ४ । ४७ । इति
तादेशः ।) दत्तम् । इति मुग्धबोधव्याक-
रणम् ॥

| | | |
|---|---|---|
| | "इङ्गिताकारतत्त्वज्ञो बलवान् प्रियदर्शनः ।<br>अप्रमादी सदा दक्षः प्रतीहारः स उच्यते ॥"<br>इति चाणक्यसंग्रहः ॥<br>अपि च । मात्स्ये १८९ अध्यायः ।<br>"प्रांशुः सुरूपो दक्षश्च प्रियवादी न चोद्धतः ।<br>चित्तग्राहश्च सर्व्वेषां प्रतीहारो विधीयते ॥"<br>सन्धिविशेषः । यथा, हारावली ।<br>"मयास्योपकृतं पूर्ब्बमयञ्चोपकरिष्यति ।<br>इति यः क्रियते सन्धिः प्रतीहारः स उच्यते ॥" | |

**प्रत्नः**, त्रि, (प्र + "नश्च पुराणे प्रात् ।" इति

चकारात् त्नप् ।) पुरातनः । इत्यमरः । ३ । १ ।
७७ ॥ (यथा, भागवते । ५ । २० । ५ ।
"प्रत्नस्य विष्णो रूपं यत् सत्यस्यर्त्तस्य ब्रह्मणः ।
अमृतस्य च मृत्योश्च सूर्य्यमात्मानमीमहि ॥")

**प्रत्यक्** [च्] त्रि, (प्रत्यञ्चतीति । प्रति + अनच्

+ क्विन् ।) पश्चिमदिक् । पश्चिमदेशः । (यथा,
मनुः । २ । २१ ।
"हिमवद्विन्ध्ययोर्मध्यं यत् प्राग्विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः ॥")
पश्चिमकालः । इति मेदिनी । चे, १६ ॥ (व्य,
प्रतीच्यां दिशि प्रतीच्या दिशः प्रतीची दिग्वा
एवं देशे काले च । "दिक्शब्देभ्यः सप्तमी-
पञ्चमीप्रथमाभ्यो दिक्देशकालेष्वस्तातिः ।"
५ । ३ । २७ । इति अस्तातिः । "अञ्चेर्लुक् ।"
५ । ३ । ३० । इति अस्तातेर्लुक् । "लुक्
तद्धितलुकि ।" १ । २ । ४९ । इति लुक् । दिक्-
देशकाले । इति मेदिनी । चे, १६ ॥ प्रति-
लोमम् । यथा, भागवते । ४ । २२ । ३७ ।
"यः क्षेत्रवित्तपतया हृदि विष्वगाविः
प्रत्यक् चकास्ति भगवांस्तमवेहि सोऽस्मि ॥"
प्रतिकूलम् । यथा, महाभारते । ५ । ८४ । ६ ।
"प्रत्यगूहुर्महानद्यः प्राङ्मुखाः सिन्धुसत्तमाः ।
विपरीता दिशः सर्व्वा न प्राज्ञायत किञ्चन ॥")

**प्रत्यक्पर्णी**, स्त्री, (प्रत्यञ्चि पर्णानि अस्याः ।

पाककर्णेति ङीष् ।) अपामार्गः । इत्यमरः ।
२ । ४ । ८९ ॥ (अस्याः पर्य्यायो यथा, भाव-
प्रकाशस्य पूर्ब्बखण्डे १ भागे ।
"रक्तोऽन्यो वशिरो वृत्तफलो धामार्गवोऽपि च ।
प्रत्यक्पर्णी केशपर्णी कथिता कपिपिप्पली ॥")
द्रवन्ती । इति राजनिर्घण्टः ॥ (अस्याः पर्य्यायो
यथा, भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ।
"द्रवन्ती सावरी चित्रा प्रत्यक्पर्ण्यर्कपर्ण्यपि ।
चित्रोपचित्रान्यग्रोधी प्रत्यक्श्रेर्ण्याखुकर्ण्यपि ॥"

**प्रत्यक्पुष्पी**, स्त्री, (प्रत्यञ्चि पुष्पाण्यस्याः । पाक-

कर्णेति ङीष् ।) अपामार्गः । इत्यमरः । २ ।
८४ । ८ ॥ (यथा, सुश्रुते । १ । ४३ ।
त्वात् अच् ।) इन्द्रियग्राह्यम् ।
तत्पर्य्यायः ।
ऐन्द्रियकम् २ । इत्यमरः । ३ । १ ।
७९ ॥ (यथा,
ब्रह्मवैवर्त्ते । २ । १ । ५२ ।
"यत्पादपद्मनखरदृष्टये चात्मशुद्धये
।
न च दृष्टञ्च स्वप्नेऽपि प्रत्यक्षस्यापि
का कथा ॥")
अनुभवविशेषः । तत् षड्विधम् ।
घ्राणजम् १
रासनम् २ श्रावणम् ३ चाक्षुषम् ४
स्पार्श-
नम् ५ मानसम् ६ ।
निर्व्विकल्पकसविकल्पक-
भेदेन प्रत्येकं द्विविधम् ।
निर्व्विकल्पकन्तु अती-
न्द्रियम् । सविकल्पकं मनोग्राह्यम् ।
षड्विध-
प्रत्यक्षे आश्रयस्य महत्त्वं कारणम् ।
इन्द्रियं
करणम् । विषयेण सह
इन्द्रियसन्निकर्षः । अस्य
व्यापारः । यथा, भाषापरिच्छेदे ।
"घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं
मतम् ।
घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि
स्मृतः ।
तथा रसो रसज्ञायास्तथा शब्दोऽपि
च श्रुतेः ॥
उद्भूतरूपं नयनस्य गोचरो
द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये ।
विभागसंयोगपरापरत्व-
स्नेहद्रवत्वं परिमाणयुक्तम् ॥
क्रियां जातिं योग्यवृत्तिं समवायञ्च
तादृशम् ।
गृह्णाति
चक्षुःसम्बन्धादालोकोद्भूतरूपयोः ॥

**प्रत्यक्षवादी**, [न्] पुं, (प्रत्यक्षमेव प्रमाणत्वेन

वदतीति । वद् + णिनिः ।) बौद्धः ।
नाप्रत्यक्षं
प्रमाणमिति तन्मतम् ॥ (प्रत्यक्षं वदति
यस्तत्र,
त्रि ॥)

**प्रत्यक्षी**, [न्] त्रि, (प्रत्यक्षमस्त्यस्येति । प्रत्यक्ष

+ इनिः ।) व्यक्तदृष्टार्थः । इति
त्रिकाण्डशेषः ॥

**प्रत्यगाशापतिः**, पुं, (प्रत्यगाशायाः पश्चिमस्या

दिशः अधिपतिः ।) वरुणः । इति
हलायुधः ॥

**प्रत्यग्रः**, त्रि, (प्रतिगतमग्रं श्रेष्ठं प्रथमदर्शनं

वास्येति ।) नूतनः । इत्यमरः । ३ । १ ।
७७ ॥
(यथा, महाभारते । ८ । ३८ । १८ ।
"दासीनां निष्ककण्ठीनां मागधीनां शतं
तथा ।
प्रत्यग्रवयसां दद्यां यो मे ब्रूयाद्धनञ्जयम्
॥")
शोधितः । इति जटाधरः ॥ (पुं,
उपरिचरस्य
वसोः पुत्राणामन्यतमः । यथा, भागवते
। ९ ।
२२ । ६ ।
"वसुस्तस्योपरिचरो बृहद्रथमुखास्ततः
।
कुशाम्बमत्स्यप्रत्यग्राश्चेदिपाद्याश्च
चेदिपाः ॥")

**प्रत्यग्रथः**, पुं, (प्रतीचां रथ इव ।) अहिच्छत्र-

देशः । इति हेमचन्द्रः । ४ । २६ ॥

**प्रत्यङ्**, [ञ्] त्रि, (प्रत्यञ्चतीति । प्रति + अनच्

+ क्विन् ।) पश्चिमदिक् । पश्चिमदेशः ।
पश्चिम-
कालः । प्रतिपूर्ब्बाञ्चधातोः कर्त्तरि
विचप्रत्ययेन

"प्रत्यक्पुष्पीसदापुष्पीनिम्बकषायाणामन्यतमेना-
लोड्य मधुसैन्धवयुक्तां मात्रां पाययित्वा
वामयेत् ॥" पर्य्यायान्तरमस्याः । यथा, --
"स्थलमञ्जर्य्यपामार्गः प्रत्यक्पुष्पी मयूरकः ।
क्षारमध्यस्त्वधोघण्टा शिखरी खरमञ्जरी ॥"
इति वैद्यकरत्नमालायाम् ॥)

**प्रत्यक्श्रेणी**, स्त्री, (प्रतीची श्रेणी यस्याः । समा-
सान्तविधेरनित्यत्वात् न कप् ।) दन्तीवृक्षः ।
मूषिकपर्णी । इत्यमरः । २ । ४ । ८८ ॥ (अस्याः
पर्य्यायो यथा, --
"प्रत्यक्श्रेणी द्रवन्ती च पुत्त्रश्रेण्याखुपर्णिका ।
वृषपर्ण्याखुपर्णी च मूषिका काञ्जिपत्रिका ॥"
इति वैद्यकरत्नमालायाम् ॥)

**प्रत्यक्षं**, त्रि, (प्रतिगतमक्षि इन्द्रियं यत्र । समासे
अच् । यद्वा, प्रत्यक्षमस्त्यस्येति । अर्श आदि-
उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च
त्वचः ।
रूपान्यच्चक्षुषो योग्यं रूपमत्रापि
कारणम् ॥
द्रव्याध्यक्षे त्वचो योगो मनसा
ज्ञानकारणम् ।
मनोग्राह्यं सुखं दुःखमिच्छा
द्वेषोमतिः कृतिः ॥
ज्ञानं यन्निर्व्विकल्पाख्यं
तदतीन्द्रियमिष्यते ।
महत्त्वं षड्विधे हेतुरिन्द्रियं करणं
मतम् ॥
विषयेन्द्रियसम्बन्धो व्यापारः
सोऽपि षड्विधः ॥"
(यथा, विद्वन्मोदतरङ्गिण्याम् ।
"देवानर्च्चय सञ्चय प्रतिदिनं
पुण्यानि जन्मा-
न्तरे
भोगाय प्रयतो महाक्रतुविधौ स्वर्गाय
हिंसां
कुरु ।
इत्थं वञ्चकवञ्चनोत्पथगता
बुद्धिस्तदेया-
चिरा-
दप्रत्यक्षपदार्थसार्थरहितं
पन्थानमारोहतु ॥"
व्य, अक्षि अक्षि प्रतीति वीप्सायां
यथार्थत्वेन
समासः । अक्ष्णोराभिमुख्यमित्यर्थे
। "लक्षणे-
नाभिप्रती आभिमुख्ये ।" २ । १ ।
१४ । इत्य-
व्ययीभावः । "अव्ययीभावे
शरत्प्रभृतिभ्यः ।"
५ । ४ । १०७ । इत्यत्र
"प्रतिपरसमनुभ्यो-
ऽक्ष्णः ।" इति टच् । इन्द्रियलक्षणम्
। अप-
रोक्षम् । यथा, मनुः । ९ । ५२ ।
"फलन्त्वनभिसन्धाय क्षेत्रिणां
बीजिनान्तथा ।
निष्पन्नः । इति व्याकरणम् ॥ (यथा,
शतपथ-
ब्राह्मणे । १२ । ८ । २ । ३५ ।
"ऋतवः सर्व्वे पराञ्चः सर्व्वे प्रत्यञ्चः ॥"
प्रतिगतः । अभिमुखः । यथा, ऋग्वेदे ।
१ । ५० । ५ ।
"प्रत्यङ्देवानां विशः प्रत्यङ्ङुदेषि
मानुषान् ।
प्रत्यङ् विश्वं स्वर्दृशे ॥"
"हे सूर्य्य त्वं देवानां विशो मरुन्नामकान्
देवान् । मरुतो वै देवानां विश इति
श्रुत्य-
न्तरात् । तान् मरुत्संज्ञकान् देवान्
प्रत्यङ्ङु-
देषि । तान् प्रतिगच्छन्नुदयं प्राप्नोषि ।
तेषा-
मभिमुखं यथा भवति तथेत्यर्थः । तथा
मानु-
षान् मनुष्यान् प्रत्यङ्ङुदेषि । तेऽपि
यथास्म-
दभिमुखमेव सूर्य्य उदतीति मन्यन्ते ।
तथा
विश्वं व्याप्तं स्वः स्वर्लोकं दृशे द्रष्टुं
प्रत्यङ्ङु-
देषि । यथा स्वर्लोकवासिनो जनाः
सर्व्वेऽपि
स्वस्वाभिमुख्येन सूर्य्यं पश्यन्तीति ।"
इति
तद्भाष्ये सायनः ॥ अन्तर्यामी । इति
श्रीधर-
स्वामी ॥ यथा, भागवते । ६ । ९ । २०
।
"प्रत्यञ्चमादिपुरुषमुपतस्थुःसमाहिताः
॥")

**प्रत्यङ्गं**, क्ली, (प्रतिगतमङ्गमिति ।) अवयव-
विशेषः । यथा, शब्दचन्द्रिकायाम् ।
"प्रत्यङ्गं
कर्णनासाक्षिलिङ्गाङ्गानिकरादिकम् ॥"
(यथा, रामायणे । २ । ७४ । १४ ।
"अङ्गप्रत्यङ्गजः पुत्त्रो हृदयाच्चापि
जायते ।

प्रत्यक्षं क्षेत्रिणामर्थो
बीजाद्योनिर्गरीयसी ॥”)

**प्रत्यक्षदर्शनं**, त्रि, (प्रत्यक्षं पश्यतीति । प्रत्यक्ष +
दृश् + ल्युः । प्रत्यक्षं दर्शनं यस्येति वा ।)
साक्षी । इति शब्दमाला ॥ (क्ली, प्रत्यक्षं दर्श-
नम् । यथा, महाभारते । ३ । ५७ । ३६ ।
“प्रत्यक्षदर्शनं यज्ञे गतिञ्चानुत्तमां शुभाम् ।
नैषधाय ददौ शक्रः प्रीयमाणः शचीपतिः ॥”)

तस्मात् प्रियतरो मातुः प्रिया एव तुबान्धवाः ॥”
“अतः परं प्रत्यङ्गानि वक्ष्यन्ते ।
मस्तकोदर-
पृष्ठनाभिललाटनासाचिवुकवस्तिग्रीवा इत्येता
एकैकाः ।
कर्णनेत्रनासाभ्रूशङ्खांसगण्डकक्षस्तन-
वृषपार्श्वस्फिग्जानुबाहूरुप्रभृतयो द्वे द्वे विंशति-

रङ्गुलयः । स्रोतांसि च वक्ष्यमाणानि । एष-
प्रत्यङ्गविभाग उक्तः ॥” इति सुश्रुते शारीर-
स्थाने पञ्चमेऽध्याये ॥ अप्रधानम् । यथा,
निरुक्ते । ७ । १ । ५ ।
“एक आत्मा बहुधा स्तूयते एकस्यात्मनोऽन्ये
देवाः प्रत्यङ्गानि भवन्त्यपि ॥” अङ्गं अङ्गं प्रति ।
यथा, गीतगोविन्दे । ११ । ११ ।
“ध्वान्तं नीलनिचोलचारुसुदृशां प्रत्यङ्गमालि-
ङ्गति ॥”
तथा च मनुः । ८ । २०८ ।
“यस्मिन् कर्म्मणि यास्तु स्युरुक्ताः प्रत्यङ्ग-
दक्षिणाः ।
स एव ता आददीत भजेरन् सर्व्व एव वा ॥”
नृपविशेषे, पुं, । यथा, महाभारते । १ । १ । २३५ ।
“महापुराणसम्भाव्यः प्रत्यङ्गः परहा श्रुतिः ।
एते चान्ये च राजानः शतशोऽथ सहस्रशः ।
श्रूयन्तेऽयुतशश्चान्ये संख्याताश्चैव पद्मशः ॥”)

**प्रत्यङ्गिरा**, स्त्री, देवीविशेषः । तस्या ध्यानम् ।
यथा, --
“शवोपरिसमासीनां रक्ताम्बरतनुच्छदाम् ।
सर्व्वाभरणसंयुक्तां गुञ्जाहारविभूषिताम् ॥
षोडशाब्दाञ्च युवतीं पीनोन्नतपयोधराम् ।
कपालकर्त्तृकाहस्तां परमानन्दरूपिणीम् ।
“गुप्तौ मूलं स्वनिवासस्थानं प्रत्यन्तः प्राप्तदुर्गञ्च
येन सः ।” इति तट्टीकायां मल्लिनाथः ॥
तद्देशजाते, त्रि ॥ यथा, वराहसंहितायाम् । ४ । २१ ।
“प्रत्यन्तान् कुनृपांश्च हन्त्युडुपतिः शृङ्गे कुजेना-
हते ॥”)
सन्निकृष्टे च त्रि ॥

**प्रत्यन्तपर्व्वतः**, पुं, (प्रत्यन्तः सन्निकृष्टः पर्व्वतः ।)
महापर्व्वतसमीपवर्त्तिक्षुद्रपर्व्वतः । इत्यमरः ।
२ । ३ । ७ ॥

**प्रत्यभियोगः**, पुं, (प्रतिरूपोऽभियोगः ।) प्रत्यप-
राधः । यथा, --
“अभियोगमनिस्तीर्य्य नैनं प्रत्यभियोजयेत् ।
अभियुक्तञ्च नान्येन नोक्तं विप्रकृतिं नयेत् ॥”
“अभियुज्यत इति अभियोगोऽपराधस्तमभियोग-
मनिस्तीर्य्यापहृत्यैनमभियोक्तारं न प्रत्यभियोज-
येदपराधेन न संयोजयेत् । यद्यपि प्रत्यभि-
स्कन्दनं प्रत्यभियोगरूपन्तथापि स्वापराधपरि-
हारात्मकत्वान्नास्य प्रतिषेधस्य विषयः । अतः
स्वाभियोगानुपमर्द्दनरूपस्य प्रत्यभियोगस्यायं
निषेधः ।” इति मिताक्षरा ॥

**प्रत्यभिवादः**, पुं, (प्रति + अभि + वद् + णिच् +
भावे घञ् ।) अभिवाद्यस्य गुरोराशीर्व्वच-
नम् । इति गोयीचन्द्रः ॥

**प्रत्यभिवादनं**, पुं, (प्रति + अभि + वद् + णिच् +
भावे ल्युट् ।) अभिवाद्यस्य गुरोराशीर्व्वचनम् ।

**प्रत्ययकारिणी**, स्त्री, (प्रत्ययस्य विश्वासस्य
कारिणी ।) मुद्रा । इति त्रिकाण्डशेषः ॥
मोहर इति पारस्यभाषा ॥

**प्रत्ययितः**, त्रि, (प्रत्ययो विश्वासः सञ्जातोऽस्येति ।
प्रत्यय + “तदस्य सञ्जातं तारकादिभ्य इतच् ।”
५ । २ । ३६ । इति इतच् ।) आप्तः । विश्वस्तः ।
इत्यमरः । २ । ८ । १३ ॥ (यथा, कथासरित्-
सागरे । १५ । ६८ ।
“तत् श्रुत्वा व्यसृजद्राजा सोऽथ प्रत्ययितान्
द्विजान् ॥”)

**प्रत्यर्थी**, [न्] त्रि, (प्रतिशोधं प्रतिकूलं वा अर्थ-
यते इति । प्रति + अर्थ + णिनिः ।) शत्रुः ।
इत्यमरः । २ । ८ । ११ ॥ (यथा, साहित्य-
दर्पणे । ३ परिच्छेदे ।
“नेत्रे खञ्जनगञ्जने सरसिजप्रत्यर्थि पाणिद्वयं
वक्षोजौ करिकुम्भविभ्रमकरीमत्युन्नतिं गच्छतः ॥”)
पुं, प्रतिवादी । इति शब्दरत्नावली ॥ (यथा,
मनुः । ८ । ७९ ।
“सभान्तः साक्षिणः प्राप्तानर्थिप्रत्यर्थिसन्निधौ ।
प्राड्विवाकोऽनुयुञ्जीत विधिनानेन सान्त्व-
यन् ॥”)
अर्थिप्रतिपक्षः । यथा, --
“प्रत्यर्थिनोऽग्रगतो लेख्यं यथावेदितमर्थिना ।
समामासतदर्द्धाहर्नामजात्यादिचिह्नितम् ॥”
“अर्थ्यत इत्यर्थः साध्यः । सोऽस्यास्तीत्यर्थी ।
तत्प्रतिपक्षः प्रत्यर्थी ।” इति मिताक्षरा ॥

**प्रत्यर्पितं**, त्रि, (प्रति + ऋ + णिच् + क्तः ।) प्रति-
दत्तम् । यथा । “अर्थव्यवहारोऽपि एकस्मिन्
वत्सरे यत्संख्याकं यद्द्रव्यं यतो येन गृहीतं
प्रत्यर्पितञ्चेति । पुनरन्यस्मिन् वत्सरे तद्द्रव्यं
तत्संख्याकं ततस्तेन गृहीतं याच्यमानोऽपि
यदि ब्रूयात् सत्यं गृहीतं प्रत्यर्पितञ्चेति वत्स-
रान्तरे गृहीतं प्रत्यर्पितञ्च नास्मिन् वत्सर
इत्युपयुज्यते ।” इति मिताक्षरा ॥

**प्रत्यवसानं**, क्ली, (प्रति + अव + सो + ल्युट् ।)

वामदक्षिणयोगेन
ध्यायेन्मन्त्रविदुत्तमाम् ॥”
इति प्रत्यङ्गिरास्तोत्रान्तर्गतम् ॥

**प्रत्यनीकः**, पुं, (प्रतिगतः अनीकं युद्धमिति ।)
शत्रुः । इति हेमचन्द्रः । ३ । ३९२ ॥
(प्रति-
पक्षः । विरोधी । यथा, महाभारते ।
७ ।
१० । ३६ ।
“यस्य यन्ता हृषीकेशो योद्धा यस्य
धनञ्जयः ।
रथस्य तस्य कः संख्ये प्रत्यनीको
भवेद्रथः ॥”
यथा च सुश्रुते सूत्रस्थाने ४६
अध्याये ।
“अतीवायतयामास्तु क्षपा येष्वृतुषु
स्मृताः ।
तेषु तत्प्रत्यनीकाढ्यं भुञ्जीतप्रातरेव
तु ॥”
क्ली, प्रतिपक्षसैन्यम् । यथा,
भगवद्गीतायाम् ।
११ । ३२ ।
“ऋतेऽपि त्वां न भविष्यन्ति सर्व्वे
येऽवस्थिताः प्रत्यनीकेषु योधाः ॥”
अलङ्कारविशेषः । यदुक्तं
काव्यप्रकाशे ।
“प्रतिपक्षमशक्तेन प्रतिकर्त्तुं
तिरष्क्रिया ।
या तदीयस्य तत्स्तुत्यै प्रत्यनीकं
तदुच्यते ॥”
उदाहरणं यथा, --
“त्वं विनिर्ज्जितमनोभवरूपः
सा च सुन्दर ! भवत्यनुरक्ता ।
पञ्चभिर्युगपदेव शरैस्तां
तापयत्यनुशयादिव कामः ॥”)

**प्रत्यन्तः**, पुं, (प्रतिगतोऽन्तमिति । अत्यादयः
क्रान्ताद्यर्थे । इति समासः ।)
म्लेच्छदेशः । इत्य-
मरः । २ । १ । ७ ॥ (प्रान्तदुर्गम् ।
यथा, रघुः ।
इति गोयीचन्द्रः ॥

**प्रत्ययः**, पुं, (प्रति + इण् + भावकरणादौ यथा-
यथं अच् ।) अधीनः । शपथः । ज्ञानम् ।
(यथा, गारुडे २३६ अध्याये ।
“जाग्रत्संस्कारसम्भूतः प्रत्ययो
विषयान्वितः ॥”)
विश्वासः । (यथा, कुमारे । ४ । ४५ ।
“इत्थं रतेः किमपि भूतमदृश्यरूपं
मन्दीचकार मरणव्यवसायबुद्धिम् ।
तत्प्रत्ययाच्च कुसुमायुधबन्धुरेना-
माश्वासयत् सुचरितार्थपदैर्वचोभिः ॥”)
हेतुः । (यथा, रघुः । १० । ३ ।
“अतिष्ठत् प्रत्ययापेक्षसन्ततिः स चिरं
नृपः ॥”)
रन्ध्रम् । शब्दः । इत्यमरः । ३ । ३ ।
१४७ ॥
प्रथितत्वम् । आचारः । इति मेदिनी । ये,
८९ ॥
निश्चयः । (यथा, मनुः । ८ । २५३ ।
“यदि संशय एव स्यात् लिङ्गानामपि दर्शने
।
साक्षिप्रत्यय एव स्यात् सीमावादविनिर्न्नयः
॥”)
स्वादुः । इति हेमचन्द्रः ॥
प्रकृत्युत्तरजायमानः ।
वोपदेवेनास्य त्यसंज्ञा कृता ।
प्रत्याययन्तीति
सुप्तिङ्कृत्तद्धिताः प्रत्ययाः । इति
संक्षिप्तसार-
व्याकरणम् ॥ (यथा, रघुः । ११ । ५६ ।
“ता नराधिपसुता नृपात्मजै-
स्ते च ताभिरगमन् कृतार्थताम् ।
सोऽभवद्वरबधूसमागमः
प्रत्ययप्रकृतियोगसन्निभः ॥”)
सहकारी । इति त्रिकाण्डशेषः ॥
भोजनम् । इति हेमचन्द्रः । ३ । ८७ ॥
(पर्य्यायान्तरमस्य यथा, --
“जग्धिः प्रत्यवसानञ्च भक्षणं भोजनाशने ॥”
इति वैद्यकरत्नमालायाम् ॥)

**प्रत्यवसितं**, त्रि, (प्रति + अव + सो + क्तः ।) भक्षि-
तम् । इत्यमरः । ३ । २ । ११० ॥

**प्रत्यवस्कन्दः**, पुं, (प्रति + अव + स्कन्द + घञ् ।)
चतुर्व्विधोत्तरान्तर्गतोत्तरविशेषः ॥

**प्रत्यवस्कन्दनं**, क्ली, (प्रति + अव + स्कन्द + ल्युट् ।)
चतुर्व्विधोत्तरान्तर्गतोत्तरविशेषः । यथा, --
“प्रत्यवस्कन्दनं नाम सत्यं गृहीतं प्रतिदत्तं
प्रतिग्रहलब्धमिति वा । यथाह नारदः ।
अर्थिना लेखितो योऽर्थः प्रत्यर्थी यदि
तन्तथा ।
प्रपद्य कारणं ब्रूयात् प्रत्यवस्कन्दनं स्मृतम् ॥”
इति मिताक्षरा ॥

| | | |
|---|---|---|
| ४।२६।<br>“स गुप्तमूलप्रत्यन्तः<br>शुद्धपार्ष्णिरयान्वितः।<br>षड्विधं बलमादाय प्रतस्थे<br>दिग्जिगीषया॥” | | |

अपि च ।
“अर्थिनाभिहितो योऽर्थः प्रत्यर्थी यदि तन्तथा ।
प्रपद्य कारणं ब्रूयात् प्रत्यवस्कन्दनं हि तत् ॥”
इति व्यवहारतत्त्वे बृहस्पतिवचनम् ॥

**प्रत्यवस्थाता**, [ऋ] त्रि, (प्रतिपक्षतया अव-
तिष्ठते इति । प्रति + अव + स्था + तृच् ।)
शत्रुः । इति हेमचन्द्रः । ३ । ३९२ ॥

**प्रत्यवायः**, पुं, (प्रत्यवाय्यते इति । प्रति + अव +
अय गतौ + घञ् ।) पापम् । दुरदृष्टम् । यथा,
“क्षयं केचिदुपात्तस्य दुरितस्य प्रचक्षते ।
अनुत्पत्तिं तथा चान्ये प्रत्यवायस्य मन्वते ॥”
इत्येकादशीतत्त्वे जावालवचनम् ॥

**प्रत्यश्मा**, [न्] पुं, (प्रतिरूपः अश्मा ।) गैरि-
कम् । इति त्रिकाण्डशेषः ॥

**प्रत्यहं**, व्य, (अहः अहः प्रति । “नपुंसकादन्य-
तरस्याम् ।” ५ । ४ । १०९ । इति टच् ।)
प्रतिदिनम् । यथा, कुमारसम्भवे ।
“गिरिशमुपचचार प्रत्यहं सा सुकेशी ॥”

**प्रत्याकारः**, पुं, (प्रतिरूपः खड्गेन सदृश आकारो
यस्य ।) खड्गकोपः । इति हेमचन्द्रः । ३ ।
४४७ ॥ खाप् इति भाषा ॥

**प्रत्याख्यातः**, त्रि, (प्रति + आ + ख्या + क्तः ।)
दूरीकृतः । तत्पर्य्यायः । प्रत्यादिष्टः २ निरस्तः ३
प्रसङ्गनिवारणम् । इति कुल्लूकभट्टः ॥
यथा,
मनुः । ८ । ३३४ ।
“येन येन यथाङ्गेन स्तेनो नृषु विचेष्टते ।
तत्तदेव हरेत्तस्य प्रत्यादेशाय पार्थिवः ॥”)
भक्तं प्रति देवानामादेशश्च ॥

**प्रत्याध्मानः**, पुं, (प्रतिगतमाध्मानमीषत्-शब्दो
यत्र ।) वातव्याधिविशेषः । तस्य लक्षणमाह ।
“विमुक्तपार्श्वहृदयं तदेवामाशयोत्थितम् ।
प्रत्याध्मानं विजानीयात् कफव्याकुलितानिलम् ॥”
विमुक्तपार्श्वहृदयं पार्श्वे हृदये विहाय जातं
तदेवाध्मानम् । कफव्याकुलितानिलं कफेनाव-
रुद्धवातम् ॥ * ॥ अथ तस्य चिकित्सा ।
“प्रत्याध्माने समुत्पन्ने कुर्य्यात् वमनलङ्घने ।
दीपनादि नियुञ्जीत पूर्ब्बवद्वस्तिकर्म्म च ॥”
इति भावप्रकाशः ॥

**प्रत्यालीढं**, क्ली, (प्रति + आ + लिह + क्तः ।)
धन्विनां पादसंस्थानविशेषः । तत्रोर्द्ध्वस्य वाम-
पादप्रसारे दक्षिणपादसङ्कोचः । इत्यमर-
टीकायां भरतः ॥
धन्विनामवस्थानविशेषः । यथा, --
“स्यात् प्रत्यालीढमालीढं समं पादं तथापरम् ।
वैशाखं मण्डलञ्चेति धन्विनां स्थानपञ्चकम् ॥

**प्रत्याहरणं**, क्ली, (प्रति + आ + हृ + भावे ल्युट् ।)
प्रत्याहारः । इति शब्दरत्नावली ॥

**प्रत्याहारः**, पुं, (प्रति + आ + हृ + भावे घञ् ।)
स्वस्वविषयेभ्य इन्द्रियाकर्षणम् । तत्पर्य्यायः ।
उपादानम् २ । इत्यमरः ॥ प्रत्याहरणम् ३ । इति
शब्दरत्नावली ॥ स च योगाङ्गविशेषः । यथा,
“प्रत्याहारश्च तर्कश्च प्राणायामस्तृतीयकः ।
समाधिर्धारणं ध्यानं षडङ्गो योगसंग्रहः ॥”
इति तट्टीकायां भरतः ॥
प्रत्याहारमाह ।
“शब्दादिष्वनुरक्तानि निगृह्याक्षाणि योगवित् ।
कुर्य्याच्चित्तान्तकारीणि प्रत्याहारपरायणः ॥”
इति विष्णुपुराणे ६ अंशे ७ अध्यायः ॥
अपि च ।
“इन्द्रियाणीन्द्रियार्थेभ्यः समाहृत्य स्थितो हि सः ।
मनसा सह बुद्ध्या च प्रत्याहारेषु संस्थितः ॥”
इति गारुडे २४० अध्यायः ॥
(यथा च पातञ्जले साधनपादे ।
“यमनियमासनप्राणायामप्रत्याहारधारणा-
ध्यानसमाधयोऽष्टावङ्गानि ॥” २९ ॥
“स्वस्वविषयसंप्रयोगाभावे चित्तस्वरूपानुकार
इन्द्रियाणां प्रत्याहारः ॥” ५४ ॥)
अल्पेन बहूनां ग्रहणम् । यथा, अच् इति
द्व्यक्षरेण सर्व्वस्वराणां ग्रहणम् । इति भरतः ॥

**प्रत्युक्तिः**, स्त्री, (प्रतिवचनमिति । प्रति + वच् +
भावे क्तिन् । प्रतिरूपा उक्तिरिति वा ।) प्रत्यु-
त्तरम् । इति शब्दरत्नावली ॥

**प्रत्युत**, व्य, (प्रति च उत च इति द्वन्द्वः ।) वैप-
रीत्यम् । यथा । बुधादिवाक्यं तु न नियामकं
प्रमाणाभावात् प्रत्युत फलश्रुतेर्गुणफलबोधक-
मिति । इति तिथ्यादितत्त्वे जन्माष्टमीप्रकरणम् ॥
(यथा, मार्कण्डेये । ९५ । २० ।
“विहिताकरणात् पुंभिरसद्भिः क्रियते तु यः ।
संयमो मुक्तये सोऽन्ते प्रत्युताधोगतिप्रदः ॥”)

**प्रत्युत्क्रमः**, पुं, (प्रत्युत्क्रमणमिति । प्रति + उत् +
क्रम् + घञ् ।) प्रधानप्रयोजनानुकूलप्रयो-

निराकृतः ४ निकृतः ५ विप्रकृतः ६ । इत्य-
मरः । ३ । १ । ४० ॥ क्वचित्
पुस्तके प्रत्यादिष्टेत्यादि-
श्लोकमेकमधिकं दृश्यते
तत्राद्यचतुष्कं प्रत्या-
दिष्टे । परचतुष्कं तिरस्कृते । इति
तट्टीकासार-
सुन्दरी ॥ (यथा, महाभारते । १ ।
१५६ । ८ ।
"वीरेणाहं तथानेन त्वया वापि
यशस्विनि ! ।
प्रत्याख्याता न जीवामि
सत्यमेतद्ब्रवीमि ते ॥")

**प्रत्याख्यानं**, क्ली, (प्रति + आ + ख्या + भावे
ल्युट् ।) निराकरणम् । तत्पर्य्यायः । निर-
सनम् २ प्रत्यादेशः ३ निराकृतिः ४ । इत्य-
मरः । ३ । २ । ३१ ॥ (यथा,
मार्कण्डेये । ६१ । ७२ ।
"प्रत्याख्यानादहं मृत्युं त्वञ्च
पापमवाप्स्यसि ॥")

**प्रत्यागमः**, पुं, (प्रत्यागमनमिति । प्रति + आ +
गम् + अप् ।) प्रत्यागमनम् । फिरे
आसा इति
भाषा ॥ यथा, --
"तीर्थयात्रासमारम्भे तीर्थप्रत्यागमेषु
च ॥"
इति प्रायश्चित्ततत्त्वम् ॥
(यथा, हरिवंशे भविष्यपर्व्वणि । ३९ । २४ ।
"किमर्थं ब्रूहि विप्रेन्द्र ! अस्मिन्
प्रत्यागमो हि
वः ॥")

**प्रत्यादिष्टः**, त्रि, (प्रत्यादिश्यते स्मेति । प्रति +
आ + दिश् + क्तः ।)
प्रत्यादेशविशिष्टः । तत्-
स्याद्दक्षपादसङ्कोचात्
वामपादप्रसारणात् ।
प्रत्यालीढमिति प्रोक्तमालीढं
तद्विपर्य्ययात् ॥
तुल्यं पादयुगं यत्र समपादमुदाहृतम् ।
वितस्त्यन्तरितं पादयुगं वैशाखमुच्यते ।
मण्डलाकारपादाभ्यां मण्डलं
स्थानमीरितम् ॥"
इति शब्दरत्नावली ॥
(यथा च यादवः ।
"स्थानानि धन्विनां पञ्च तत्र
वैशाखमस्त्रियाम् ।
वितस्त्यन्तरगौ पादौ मण्डलं
तोरणाकृती ॥
समानौ स्यात् समपदमालीढं पदमग्रतः
।
दक्षिणं वाममाकुञ्च्य प्रत्यालीढं
विपर्य्ययः ॥")
अशिते, त्रि । इति मेदिनी । ढे, १२ ॥

**प्रत्याशा**, स्त्री, (प्रति किञ्चित् वस्तु लक्षीकृत्य
आ समन्तात् अश्नुते व्याप्नोतीति ।
प्रति + आ
+ अश् + अच् । ततष्टाप् ।) आकाङ्क्षा ।
यथा,
शान्तिशतके ।
"मूढोऽन्यत्र मरीचिकासु पशुवत्
प्रत्याशया
घावति ॥"

**प्रत्यासन्नः**, त्रि, (प्रति + आ + सद् + क्तः ।)
निकटवर्त्ती । इति जटाधरः ॥ (यथा,
प्रबोध-
चन्द्रोदये २ अङ्के ।
"आर्य्य ! प्रत्यासन्नो महाराजः ।
तत्प्रत्युद्गम-
नेन संभाव्यतामार्य्येण ॥")

**प्रत्यासरः**, पुं, (प्रत्यास्रियते इति । प्रति + आ +
सृ + "ऋदोरप् ।" ३ । ३ । ५७ ।
इत्यप् ।)
सैन्यपृष्ठः । इति शब्दरत्नावली ॥
जनानुष्ठानम् । तत्पर्य्यायः । प्रयोगार्थः २ ।
इत्यमरः ॥ प्रकृष्टयोगः । इति केचित् । प्रकृष्ट-
यद्धार्थमुपक्रमः प्रयोगः तद्वाच्यः । इति केचित् ।
प्रयोगो युद्धं तदभिधेय इति केचित् । प्रत्युत्-
क्रमो युद्धार्थ इति भागुरिः । युद्धार्थं प्रथमा-
क्रान्तिः । इत्यपरे । कर्म्मारम्भे प्रथमयुक्तिः
प्रयोगः । इत्यपरे ॥ इति भरतः ॥

**प्रत्युत्क्रान्तिः**, स्त्री, (प्रति + उत् + क्रम् + क्तिन् ।)
प्रत्युत्क्रमः । इत्यमरटीकायां क्षीरस्वामी ॥

**प्रत्युत्तरं**, क्ली, (प्रतिरूपमुत्तरम् ।) उत्तरं प्रति
उत्तरम् । यथा । ममेयं भूमिः क्रमागतत्वात्
इति वाद्युक्ते ममेयं भूमिर्दशवर्षोपभुज्यमान-
त्वात् इति प्रत्युत्तरम् । इति व्यवहारतत्त्वम् ॥

**प्रत्युत्थानं**, क्ली, (प्रत्युत्थीयते इति । प्रति + उत् +
स्था + ल्युट् ।) अभ्युत्थानम् । गात्रोत्थानम् ।
यथा, --

पर्य्यायः । निरस्तः २ प्रत्याख्यातः ३ निराकृतः ४ निकृतः ५ विप्रकृतः ६ । इत्यमरः । ३ । १ । ४० ॥

**प्रत्यादेशः**, पुं, (प्रत्यादेशनमिति । प्रति + आ + दिश् + घञ् ।) निराकरणम् । प्रत्याख्यानम् । इत्यमरः । ३ । २ । ३१ ॥ (यथा, मेघदूते । ९६ । "प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविला- सम् ॥"

**प्रत्यासारः**, पुं, (प्रत्यास्रियते इति । प्रति + आ + सृ + घञ् ।) व्यूहस्य पश्चाद्भागः । व्यूहस्य पश्चाद्‌ब्यूहान्तरम् । तत्पर्य्यायः । व्यूहपार्ष्णिः २ । इत्यमरभरतौ ॥

"दीव्यन्तमक्षैस्तत्रापि प्रियया चोद्धवेन च ।
पूजितः परया भक्त्या प्रत्युत्थानासनादिभिः ॥"
इति श्रीभागवते । १० । ६९ । २० ॥

**प्रत्युत्पन्नः**, त्रि, (प्रति + उत् + पद् + क्तः ।)
उत्पत्तिविशिष्टः । प्रत्युत्पूर्ब्बपद्धातोः कर्त्तरि क्तप्रत्ययेन निष्पन्नः ॥

**प्रत्युत्पन्नमतिः**, त्रि, (प्रत्युपन्ना मतिर्यस्य ।) सूक्ष्म-
बुद्धियुक्तः । तत्पर्य्यायः । कुशाग्रीयमतिः २ सूक्ष्मदर्शी ३ तत्कालधीः ४ । इति हेमचन्द्रः ॥
प्रतिभान्वितः । इति जटाधरः ॥ (यथा, --
"प्रत्युत्पन्नमतिर्धीमान् व्यवसायी विशारदः ।
सत्यधर्म्मपरो यश्च स भिषक्पाद उच्यते ॥"
इति सुश्रुते सूत्रस्थाने ३४ अध्यायः ॥)

**प्रत्युद्गमनीयं**, क्ली, (प्रति + उत् + गम् + अनी-
यर् ।) धौतांशुकद्वयम् । इति मेदिनी । ये, १३४ ॥
(यथा, कुमारे । ७ । ११ ।
"सा मङ्गलस्नानविशुद्धगात्री
गृहीतप्रत्युद्गमनीयवस्त्रा ॥"
क्वचित् पत्युद्गमनीयवस्त्रा इत्यपि पाटः ॥)
समुपस्थानयोग्ये पूजनीये च, त्रि । इति शब्द-
रत्नावली ॥

**प्रत्युद्गमः**, पुं, (प्रति + उत् + गम् + अप् ।) प्रत्यु-
त्थानम् । यथा, साहित्यदर्पणे तृतीयपार-
च्छेदे । ७३ ।
"एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद्-
दूरतः ॥"

**प्रत्युद्गमनं**, क्ली, (प्रति + उत् + गम् + ल्युट् ।)
प्रत्युत्थानम् । (यथा, प्रबोधचन्द्रोदये २ अङ्के ।
"आर्य्य ! प्रत्यासन्नो महाराजः । तत्प्रत्युद्गम-
नेन संभाव्यतामार्य्येण ॥")

आपो ध्रुवश्च सोमश्च
धरश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभावश्च वसवो नामभिः
स्मृताः ॥")

**प्रत्यूषः**, [स्] क्ली, (प्रति + ऊष् + असिः ।)
प्रभातम् । इत्यमरटीकायां भरतः ॥ (यथा,
सुश्रुते । १ । २१ ।
"प्रत्यूषस्यपराह्णे तु जीर्णेऽन्ने च
प्रकुप्यति ॥")

**प्रत्यूहः**, पुं, (प्रत्यूहनमिति । प्रति + ऊह् +
घञ् ।) विघ्नः । इत्यमरः । ३ । २ । १९ ॥
(यथा, मार्कण्डेये । १६ । ५५ ।
"भर्त्तृशुश्रूषणाद्वै मया प्राप्तं महत् फलम् ।
सर्व्वकामफलावाप्त्या प्रत्यूहाः
परिवर्त्तिताः ॥")

**प्रत्येकं**, क्ली, एकं एकं प्रति । यथा, कर्पू राख्य-
स्तोत्रे ।
"प्रत्येकं वा द्वयं वा त्रयमपि च परं बीज-
मत्यन्तगुह्यम् ॥"
(यथा च कुमारे । २ । ३१ ।
"एवं यदात्थ भगवन्नामृष्टं नः परैः पदम् ।
प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि
प्रभो ! ॥")

**प्रथ**, क प्रक्षेपे । ख्यातौ । इति कविकल्पद्रुमः ॥
(चुरा०-पर०-सक०-अक०-च सेट् ।) रेफयुक्तः ।
क, प्राथयति । इति दुर्गादासः ॥

**प्रथ**, म ष ङ ख्यातौ । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-अक०-सेट् ।) रेफयुक्तः । म, प्रथ-
यति । ष, प्रथा । ङ, प्रथते गुणी प्रसिद्धः
स्यादित्यर्थः । इति दुर्गादासः ॥

**प्रथिमा**, [न्] पुं, (पृथोर्भावः । "पृष्वादिभ्य इम-
निज्वा ।" ५ । १ । १२२ । इति इमनिच् । "ऋतो-
हलादेर्लघोः ।" ६ । ४ । १६१ । इति रः । "टेः ।"
६ । ४ । १५५ । इति टेर्लोपः ।) पृथोर्भावः ।
पृथुत्वम् । इति सिद्धान्तकौमुदी ॥ यथा, --
"प्रथिमानन्दधानेन घनेन जघनेन सा ॥"
इति भट्टिः । ४ । १७ ॥
त्रि, अतिशयेन पृथुः । पृथुशब्दादतिशयार्थे
इमन्प्रत्ययेन निष्पन्नः । इति व्याकरणम् ॥

**प्रथिमिनी**, स्त्री, (प्रथिमास्त्यस्या इति । प्रथिमन्
+ "संज्ञायां मन्माभ्याम् ।" ५ । २ । १३७ ।
इति इनिः ।) प्रथिमयुक्तस्त्री । इति सिद्धान्त-
कौमुदी ॥

**प्रथिष्ठः**, त्रि, अतिशयेन पृथुः । (पृथु + इष्ठन् ।)
अतिबृहत् । इति मुग्धबोधव्याकरणम् ॥

**प्रथुकः**, पुं, पृथूकः । इत्यमरटीकायां रायमुकुटः ॥

**प्रदः**, त्रि, प्रकर्षेण ददाति यः । (प्र + दा + कः ।)
प्रदाता । इति सिद्धान्तकौमुदी ॥ (कर्म्मण्युप-
पदे तु "प्रे दाज्ञः ।" ३ । २ । ६ । इति कः ।
यथा, मनुः । ४ । २३२ ।
"यानशय्याप्रदो भार्य्यामैश्वर्य्यमभयप्रदः ॥")

**प्रदक्षिणं**, क्ली, पुं, (प्रगतं दक्षिणमिति । "तिष्ठद्गु-
प्रभृतीनि च ।" २ । १ । १७ । इति समासः ।)
दक्षिणावर्त्तेन देवादिकमुद्दिश्य भ्रमणम् । यथा,

**प्रत्युषः**, पुं, (प्रतोषति विनाशयति अन्धकार-

मिति । प्रति + उष् दाहे + “इगुपधज्ञेति ।”

३ । १ । १३६ । इति कः ।) प्रत्यूषः । प्रातः

।

इत्यमरटीकायां मथुरेशः ॥ (यथा, पञ्चतन्त्रे ।

१ । २१२ ।

“प्रत्युषे च स्वगृहमभ्युपेत्य

द्वारदेशस्थितोऽपि

विविधपौरकृत्योत्सुकतया तामाहेति ॥”)

**प्रत्युषः**, [स्] क्ली, (प्रत्योषति नाशयत्यन्धकार-

मिति । प्रति + उष् + “उषः कित् ।” उणा०

४ । २३३ । इति असिः । स च कित् ।)

प्रत्यूषः । इत्यमरः । १ । ४ । २ ॥ यथा,

भरत-

धृतसूर्य्यशतके ।

“याति व्यक्तिं पुरस्तादरुणकिसलये प्रत्युषः-

पारिजातः ॥”

**प्रत्यूषः**, पुं, (प्रत्यूषति रुजति कामुकानिति ।

प्रति + ऊष् रोगे + कः ।) प्रभातम् । इत्य-

मरः । १ । ४ । २ ॥ (यथा, मेघदूते । ३३ ।

“दीर्घीकुर्व्वन् पटुमदकलं कूजितं सारसानां

प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ॥”)

सूर्य्यः । इति शब्दरत्नावली ॥ वसुभेदः ।

इति

जटाधरः ॥ (यथा, विष्णुपुराणे । १ । १५ ।

१११ ।

“वसवोऽष्टौ समाख्यातास्तेषां वक्ष्यामि

विस्तरम् ।

**प्रथमः**, त्रि, (प्रथते प्रसिद्धो भवतीति । प्रथ् +

“प्रथेरमच् ।” उणा० ५ । ६८ । इति

अमच् ।)

प्रधानम् । (यथा, रघुः । १० । ६७ ।

“राम इत्यभिरामेण वपुषा तस्य चोदितः

।

नामधेयं गुरुश्चक्रे जगत्प्रथममङ्गलम्

॥”)

आदिमः । तत्पर्य्यायः । आदिः २ पूर्ब्बः

३

पौरस्त्यः ४ आद्यः ५ । इत्यमरः ॥

अग्रिमः ६

इति जटाघरः ॥ प्राक् ७ । इत्यव्ययवर्गे

अमरः ॥

(यथा, विष्णुपुराणे । १ । ११ । ५२ ।

“बाह्यार्थानखिलांश्चित्तं त्याजयेत्प्रथमं

नरः ॥”)

**प्रथा**, स्त्री, (प्रथ् + “षिद्भिदादिभ्योऽङ् ।” ३ । ३ । १०४ ।

इत्यङ् । ततष्टाप् ।) ख्यातिः । इत्यमरः

। ३ ।

२ । ९ ॥ (यथा, राजतरङ्गिण्याम् । १ ।

१२ ।

“या प्रथामगमन्नैति सापि वाच्यप्रकाशने

॥”)

**प्रथितः**, त्रि, (प्रथ् + क्तः ।) ख्यातः । इत्यमरः ।

३ । १ । ९ ॥ (यथा, रघुः । ९ । ७६ ।

“तेनावतीर्य्य तुरगात् प्रथितान्वयेन

पृष्टान्वयः स जलकुम्भनिषण्णदेहः ॥”

स्वारोचिषमनोः पुत्त्रे, पुं । यथा, हरिवंशे

।

७ । १४ ।

“हविध्रः सुकृतिर्ज्योतिरापो मूर्त्तिरयः

स्मृतः ।

प्रथितश्च नभस्यश्च नभ ऊर्ज्जस्तथैव

च ।

स्वारोचिषस्य पुत्त्रास्ते मनोस्तात !

महात्मनः ॥”)

**प्रथितिः**, स्त्री, (प्रथ् + “पदिप्रथिभ्यां नित् ।”

“एकं देव्यां रवौ सप्त त्रीणि कुर्य्याद्विनायके

।

चत्वारि केशवे कुर्य्यात् शिवे

चार्द्धप्रदक्षिणम् ॥”

इति कर्म्मलोचनम् ॥

सर्व्वदेवतातुष्टिदप्रदक्षिणं यथा, --

“प्रसार्य्य दक्षिणं हस्तं स्वयं नम्रशिराः

पुनः ।

दक्षिणं दर्शयन् पार्श्वं मनसापि च दक्षिणः

॥

सकृत्त्रिर्व्वा वेष्टयेत्ता देव्याः प्रीतिः

प्रजायते ।

स च प्रदक्षिणो ज्ञेयः सर्व्वदेवौधतुष्टिदः ॥

सर्व्वान् कामान् समामाद्य

पश्चान्मोक्षमवा-

प्नुयात् ॥

मनसापि च यो दद्याद्देव्यै भक्त्या

प्रदक्षिणम् ।

प्रदक्षिणाद्यमगृहे नरकाणि न पश्यति ॥”

इति कालिकापुराणे ७० अध्यायः ॥ * ॥

अपि च । तन्त्रसारे ।

“दक्षिणाद्वायवीं गत्वा दिशं तस्याश्च

शाम्भवीम्

ततश्च दक्षिणां गत्वा

नमस्कारस्त्रिकोणवत् ॥

अर्द्धचन्द्रं महेशस्य पृष्ठतश्च समारितम् ।

शिवप्रदक्षिणे मन्त्री अर्द्धचन्द्रक्रमेण तु ॥

सव्यासव्यक्रमेणैव सोमसूत्रं न लङ्घयेत्

॥”

सोमसूत्रं जलनिःसरणस्थानम् ।

“प्रसार्य्य दक्षिणं हस्तं स्वयं नम्रशिराः

पुनः ।

दर्शयेद्दक्षिणं पार्श्वं मनसापि च दक्षिणः ॥

त्रिधा च वेष्टयेत् सम्यक् देवतायाः

प्रदक्षिणम् ॥

एकहस्तप्रणामश्च एकं वापि प्रदक्षिणम् ।

अकाले दर्शनं विष्णोर्हन्ति पुण्यं पुराकृतम्

॥”

(समर्थे, त्रि । यथा, रामायणे । ३ । ४३ ।

५१ ।

“प्रदक्षिणेनातिबलेन पक्षिणा

**प्रदक्षिणा**, स्त्री, (प्रगता दक्षिणमिति । “तिष्ठद्गु

प्रभृतीनि च । २ । १ । १७ ।” इति समासः ।)
प्रदक्षिणम् । यथा, --
अथ प्रदक्षिणा ।
“ततः प्रदक्षिणां कुर्य्याद्भक्त्या भगवतो हरेः ।
नामानि कीर्त्तयन् शक्तौ ताञ्च साष्टाङ्गवन्द-
नाम् ॥”
प्रदक्षिणासङ्ख्या चोक्ता नारसिंहे ।
“एकां चण्ड्यां रवेः सप्त तिस्रो दद्याद्विनायके ।
चतस्रः केशवे दद्यात् शिवे त्वर्द्धप्रदक्षिणाम् ॥”
प्रदक्षिणामाहात्म्यं वाराहे ।
“प्रदक्षिणां ये कुर्व्वन्ति भक्तियुक्तेन चेतसा ।
न ते यमपुरं यान्ति यान्ति पुण्यकृतां गतिम् ॥
यस्त्रिः प्रदक्षिणं कुर्य्यात् साष्टाङ्गकप्रणामकम् ।
दशाश्वमेधस्य फलं प्राप्नुयान्नात्र संशयः ॥”
स्कान्दे ब्रह्मनारदसंवादे ॥
“विष्णोर्विमानं यः कुर्य्यात् सकृद्भक्त्या प्रदक्षि-
णम् ।
अश्वमेधसहस्रस्य फलमाप्नोति मानवः ॥”
तत्रैव चातुर्मास्यमाहात्म्ये ।
“चतुर्व्वारं भ्रमीभिस्तु जगत् सर्व्वं चराचरम् ।
क्रान्तं भवति विप्राग्र्य ! तत्तीर्थगमनाधिकम्
॥”
तत्रैवान्यत्र ।
“प्रदक्षिणं तु यः कुर्य्याद्धरिं भक्त्या समन्वितः
।
हंसयुक्तविमानेन विष्णुलोकं स गच्छति ॥”
नारसिंहे ।
“प्रदक्षिणेन चैकेन देवदेवस्य मन्दिरे ।
कृतेन यत् फलं नृणां तच्छृणुष्व नृपात्मज ! ।
पृथ्वीप्रदक्षिणफलं यत्तत् प्राप्य हरिं व्रजेत् ॥”
अन्यत्र च ।
“एवं कृत्वा तु कृष्णस्य यः
कुर्य्याद्द्विप्रदक्षिणम् ।
सप्तद्वीपवतीपुण्यं लभते तु पदे पदे ॥
पठन्नामसहस्रन्तु नामान्येवाथ केवलम् ॥”
भक्तिसुधोदये ।
“विष्णुं प्रदक्षिणीकुर्व्वन् यस्तत्रावर्त्तते पुनः ।
तदेवावर्त्तनं तस्य पुनर्नावर्त्तते भवे ॥”
तथा चोक्तम् ।
“प्रदक्षिणं न कर्त्तव्यं विमुखत्वाच्च
कारणम् ॥”
इति श्रीहरिभक्तिविलासे ८ विलासः ॥

**प्रदत्तं**, त्रि, (प्र + दा + क्तः ।) प्रकर्षेण दत्तम् ।

इति मुग्धबोधव्याकरणम् ॥

**प्रदरः**, पुं, (प्र + दॄ विदारणे + “ऋदोरप् ।”

३ । ३ । ५७ । इति भावादौ यथायथं
अप् ।)
भङ्गः । बाणः । इत्यमरः ॥ विदारः ।
नारी-
रुग्भेदः । इति मेदिनी ॥ * ॥ अस्य
नामान्तरं
असृग्दरम् । तत्तु फलितयोन्या
रक्तादिधातु-
क्षरणम् । अस्य निदानम् । यथा, --
“विरुद्धमद्याध्यशनादजीर्णाद्
गर्भप्रपातादतिमैथुनाच्च ।
यानाध्वशोकादतिकर्षणाच्च
भाराभिघाताच्छयनाद्दिवाच ॥
असृग्दरं भवेत् सर्व्वं साङ्गमर्द्दं सवेदनम्
॥
तस्यातिवृद्धौ दौर्ब्बल्यं श्रमो मूर्च्छा
मदस्तृषा ।
दाहः प्रलापः पाण्डुत्वं तन्द्रा रोगाश्च
वातजाः ॥”
स च चतुर्व्विधो यथा, --
“तं श्लेष्मपित्तानिलसन्निपातै-
श्चतुःप्रकारं प्रदरं वदन्ति ॥”
श्लैष्मिकस्य तस्य लक्षणम् ।
“आमं सपिच्छाप्रतिमं सपाण्डु-
पुलाकतोयप्रतिमं कफात्तु ॥”
पैत्तिकस्य तस्य लक्षणम् ।
“सपीतनीलासितरक्तमुष्णं
पित्तार्त्तियुक्तं भृशवेगि पित्तात् ॥”
वातिकस्य तस्य लक्षणम् ।
“रूक्षारुणं फेनिलमल्पमल्पं
वातार्त्तिवातात् पिशितोदकाभम् ॥”
रसाञ्जनं तण्डुलकस्य मूलं
क्षौद्रान्वितं तण्डुलतोयपीतम् ।
असृग्दरं सर्व्वभवं निहन्ति
यासञ्च भार्गी सह नागरेण ॥ * ॥
अशोकवल्कलक्वाथशृतंदुग्धं
सुशीतलम् ।
यथाबलं पिबेत् प्रातस्तीव्रासृग्दरनाशनम्
॥”
अशोकवल्कलपलं द्वात्रिंशत्पलसंमितेन
जलेन
निष्क्वाथ्य शेषेण पलाष्टकक्वाथेन सह
क्षीरं
पलाष्टकमितं विपचेत् तत्तु दुग्धावशेषं
कर्त्तव्यं
तन्मध्ये पलचतुष्टयमितं दुग्धं पेयं
वह्निबला-
पेक्षया वा ॥ * ॥
“कुशमूलं समुद्धृत्य पेषयेत्तण्डुलाम्बुना ।
एतत् पीत्वा त्र्यहं नारी प्रदरात्
परिमुच्यते ॥”
इति भावप्रकाशः ॥
(तथास्य चिकित्सान्तरं यथा, --
“काकजानुकमूलं वा मूलं कार्पासमेव वा
।
पाण्डुप्रदरशान्त्यर्थं पिबेत्तण्डुलवारिणा
॥”
“कुशमूलं समुद्धृत्य पेषयेत्तण्डुलाम्बुना ।
एतत् पीत्वात्र्यहान्नारी प्रदरात्
परिमुच्यते ॥”
“प्रदरं हन्ति वलायामूलं दुग्धेन मधुयुतं
पीतम् ॥”
“गुडेन वदरीचूर्णं मोचमामं तथा पयः ।
पीता लाक्षा च सघृता पृथक्प्रदरनाशनाः
॥”
इति चक्रपाणिसंग्रहेऽसृग्दराधिकारे ॥)

**प्रदर्शितः**, त्रि, (प्र + दृश् + णिच् + क्तः ।) आलो-

कितः । यथा, --
“क्रियावाचित्वमाख्यातुं प्रसिद्धोऽर्थः
प्रदर्शितः ।

बृहन्नारदीये यमभगीरथसंवादे ।
"प्रदक्षिणत्रयं कुर्य्यात् यो विष्णोर्मनुजेश्वर ! ।
सर्व्वपापविनिर्मुक्तो देवेन्द्रत्वं समश्नुते ॥"
तत्रैव प्रदक्षिणमाहात्म्ये सुधर्म्मोपाख्यानारम्भे
।
"भक्त्या कुर्व्वन्ति ये विष्णोः प्रदक्षिणचतुष्टयम्
।
तेऽपि यान्ति परं स्थानं सर्व्वलोकोत्तमोत्तमम्
॥
तत् ख्यातं यत् सुधर्म्मस्य पूर्ब्बस्मिन्
गृध्रजन्मनि ।
कृष्णप्रदक्षिणाभाषान्महासिद्धिरभूदिति॥"
अथ प्रदक्षिणायां निषिद्धं विष्णुस्मृतौ ।
"एकहस्तप्रणामश्च एका चैव प्रदक्षिणा ।
अकाले दर्शनं विष्णोर्हन्ति पुण्यं पुराकृतम् ॥"
अकाले भोजनादिसमये । किञ्च ।
"कृष्णस्य पुरतो नैव सूर्य्यस्यैव प्रदक्षिणाम् ।
कुर्य्याद्भ्रमरिकारूपं वैमुख्यापादनीं प्रभौ ॥"

तस्य त्रैदोषिकस्य लक्षणम् ।
"सक्षौद्रसर्पिर्हरितालवर्णं
मज्जप्रकाशं कुणपं त्रिदोषात् ।
तञ्चाप्यसाध्यं प्रवदन्ति तज्ज्ञा
न तत्र कुर्व्वीत भिषक् चिकित्साम् ॥"
इति माधवकरः ॥ * ॥
अस्यौषधं यथा, --
"घृततुल्या रुद्रलाक्षा पीता क्षीरेण वै
सहा ।
प्रदरं हरते रोगं नात्र कार्य्या विचारणा
॥"
इति गारुडे १९६ अध्यायः ॥ * ॥
अपि च ।
"दध्ना सौवर्च्चलाजाजीमधूकं
नीलमुत्पलम् ।
पिबेत् क्षौद्रयुतं नारी वातासृग्दरशान्तये
॥
एषां प्रत्येकं माषद्वयम् । सर्व्वमेकीकृत्य
दध्ना
कर्षचतुष्टयेन पिष्ट्वा तत्र माषाष्टकं मधु
निःक्षिप्य
पेयम् ॥ * ॥
"मधुकं कर्षमेकन्तु चतुष्कर्षां
सितान्तथा ।
तण्डुलोदकसंपिष्टां लोहिते प्रदरे पिबेत्
॥
वला कङ्कतिलाख्या या तस्या मूलन्तु
चूर्णितम् ।
लोहिते प्रदरे खादेच्छर्करामधुसंयुतम् ॥
* ॥
शुचिस्थाने व्याघ्रनख्या
मूलमुत्तरदिग्भवम् ।
नीतसुत्तरफल्गुन्यां कटिबद्धं हरेदसृक्
॥ * ॥

प्रयोगतोऽन्ये मन्तव्या अनेकार्था हि
धातवः ॥"
इति मुग्धबोधटीकायां दुर्गादासः ॥

**प्रदलः**, पुं, (प्रकर्षेण दलति दालयतीत्यर्थः ।
प्र + दल् + अच् ।) बाणः । इति
जटाधरः ॥

**प्रदानं**, क्ली, (प्र + दा + भावे ल्युट् ।) दानम् ।
इति शब्दरत्नावली ॥ प्रकृष्टदानञ्च ।
(यथा,
मनौ । ३ । २४० ।
"होमे प्रदाने भोज्ये च यदेभिरभिवीक्ष्यते
॥")

**प्रदिक्**, [श्] स्त्री, (प्रगता दिग्भ्यः ।) विदिक् । इति
जटाधरः ॥ (यथा, महाभारते । १ ।
१७४ । ३९ ।
"ततो विभ्रान्तमनसो
जनाःक्षुद्भयपीडिताः ।
गृहाणि संपरित्यज्य वभ्रमुः प्रदिशो
दिशः ॥"
प्रकृष्टा दिक् । (यथा, हरिवंशे । १६३ ।
८ ।
"प्रदिशो विदिशश्चैव शरधारासमावृताः
।
अन्धकारीकृतं व्योम दिनेशो नैव दृश्यते
॥")

**प्रदिग्धं**, क्ली, (प्र + दिह् + कर्म्मणि क्तः ।)
मांसव्यञ्जनभेदः । यथा,
शब्दचन्द्रिकायाम् ।
"मांसं बहुघृतैर्भृष्टं सिक्त्वा चोष्णाम्बुना
मुहुः ।
जीरकाद्यैः समायुक्तं परिशुष्कं तदुच्यते
॥
तदेव घृततक्राढ्यं प्रदिग्धं सत्रिजातकम्
॥"
त्रि, प्रलिप्तः ॥ (रूषितः । यथा, रामायणे
।
५ । ५ । २८ ।
"अव्यक्तरेखामिव चन्द्रलेखां

|  |  |  |
|---|---|---|
|  |  | पांशुप्रदिग्धामिव हेमरेखाम् ॥”)<br>**प्रदीपः**, पुं, (प्रकर्षेण दीपयति प्रकाशयति प्रदी-<br>प्यते इति वा । प्र + दीप् + णिच् वा + कः ।) |

दीपः । इत्यमरः । २ । ७ । १६८ ॥
तत्पर्य्यायः ।
स्नेहादीपकः २ कज्जलध्वजः ३
शिखातरुः ४
गृहमणिः ५ ज्योत्स्नावृक्षः ६ दशेन्धनः ७
दोषातिलकः ८ दोषास्यः ९ नयनोत्सवः
१० ।
इति शब्दरत्नावली ॥ (यथा, रघौ । ५ ।
३७ ।
"रूपं तदोजस्वि तदेव वीर्य्यं
तदेव नैसर्गिकमुन्नतत्वम् ।
न कारणात् स्वाद्बिभिदे कुमारः
प्रवर्त्तितो दीप इव प्रदीपात् ॥")
दीपमाहात्म्यम् । यथा, --
"दीपेन लोकान् जयति दीपस्तेजोमयः
स्मृतः ।
चतुर्व्वर्गप्रदो दीपस्तस्माद्दीपं यजेत् प्रिये !
॥"
सप्तप्रकारा दीपा यथा, --
"घृतप्रदीपः प्रथमस्तिलतैलोद्भवस्ततः ।
सार्षपः फलनिर्यासजातो वा राजिकोद्भवः
॥
दधिजश्चान्नजश्चैव प्रदीपाः सप्त
कीर्त्तिताः ॥"
तस्य पञ्चप्रकारा वर्त्तिका यथा, --
"पद्मसूत्रभवा दर्भगर्भसूत्रभवाथवा ।
सालजा वादरी वापि फलकोषोद्भवाथवा
॥
वर्त्तिका दीपकृत्येषु सदा पञ्चविधाः
स्मृताः ॥"
दीपपात्राणि यथा, --
"तैजसं दारवं लौहं मार्त्तिक्यं
नारिकेलजम् ।
तृणध्वजोद्भवं वापि दीपपात्रं प्रशस्यते ॥"
* ॥
दीपवृक्षे दीपस्थापनं भूमौ तन्निषेधश्च
यथा, --
"दीपवृक्षाश्च कर्त्तव्यास्तैजसाद्यैश्च
भैरव ! ।
कृष्णपक्षे विशेषेण तत्र पञ्च दिनानि तु ।
पुण्यानि तेषु यद्दत्तमक्षयं सर्व्वकामिकम्
॥
एकादश्यां हरिमुद्दिश्य दीपं प्रज्वाल्य
मूषिका ।
मानुष्यं दुर्लभं प्राप्य परां गतिमवाप सा
॥
द्वादश्यां तस्करो रात्रिदीपमुद्बोध्य
चौर्य्यतः ।
कारणात् परमं प्राप्तो लोकं विष्णोः
सनातनम् ॥
श्वपचोऽपि त्रयोदश्यां दीपान् दत्त्वापरैः
कृतान् ।
वेश्या लीलावती भूत्वा जगाम
स्वर्गमक्षयम् ॥
लुब्धकोऽपि चतुर्द्दश्यां पूजयित्वा
जनार्द्दनम् ।
निर्भक्तिः परसंगत्या विष्णुलोकं जगाम
सः ॥
गोपः कश्चिदमावास्यां पूजां दृष्ट्वाथ
शार्ङ्गिणः ।
सुदुर्जयस्त्वजापालो
राजराजेश्वरोऽभवत् ॥
तस्माद्दीपाः प्रदातव्या रात्रावस्तमिते
रवौ ।
गृहेषु सर्व्वगोष्ठेषु चैत्येष्वायतनेषु च ॥
देवानाञ्चैव रथ्यासु श्मशानेषु सरःसु च
॥"
इत्यग्निपुराणम् ॥

**प्रदीपनः**, पुं, (प्रदीपयतीति । प्र + दीप् + णिच् +
ल्युः ।) स्थावरविषभेदः । इत्यमरः । १
। ८ । १० ॥
(अस्य पर्य्यायो यथा,
वैद्यकरत्नमालायाम् ।
"काकोलो गरलः क्ष्वेडो वत्सनाभः
प्रदीपनः ।
शौक्लिकेयो ब्रह्मपुत्रो विषं स्याद्गरलो
विषः ॥")
तस्य लक्षणम् यथा, --
कार्य्यं साधनीयमिति यद्दीयते धुती इति
ख्याते
इत्याहुः । किन्तु षट्कमेकार्थमेवेति बहवः ।
उपायनमुपग्राह्यं प्राभृतञ्चोपदा स्त्रियामित्य-
मरमाला । इति भरतः ॥

**प्रदेशनी**, स्त्री, (प्रदिश्यते अनयेति । प्र + दिश् +
करणे ल्युट् ।) तर्ज्जनी । इत्यमरटीकायां
भरतः ॥

**प्रदेशिनी**, स्त्री, (प्रदिशतीति । प्र + दिश् +
णिनिः ङीप् ।) तर्ज्जनी । इत्यमरः । २ । ६
। ८१ ॥
(यथा, महाभारते । १ । ८३ । १६ ।
"तेऽदर्शयन् प्रदेशिन्या तमेव नृपसत्तमम् ।
शर्म्मिष्ठां मातरञ्चैव तथाचख्युश्च दारकाः ॥"
"स्वैरङ्गुलैः पादाङ्गुष्ठप्रदेशिन्यौ द्व्यङ्गुलायते
।
प्रदेशिन्यास्तु मध्यमानामिका कनिष्ठिका
यथो-
त्तरं पञ्चमभागहीना ।" इति सुश्रुते सूत्र-
स्थाने ३५ अध्याये ॥)

**प्रदेहः**, पुं, (प्रदिह्यते इति । प्र + दिह् लेपने +
घञ् ।) प्रलेपः । इति वैद्यकम् ॥ (यथा,
सुश्रुते
सूत्रस्थाने । १३ अध्याये ।
"इन्द्रवज्राग्निदग्धेऽपि जीवति प्रतिकारयेत् ।
स्नेहाभ्यङ्गपरीषेकैः प्रदेहैश्च तथा भिषक् ॥"
यथा च "प्रदेहो वातश्लेष्मप्रशमनः सन्धानः
शोधनो रोपणः शोफवेदनापहश्च
तस्योपयोगः
क्षताक्षतेषु ।" इति सुश्रुते सूत्रस्थानेऽष्टादशे-
ऽध्याये ॥ व्यञ्जनविशेषः । तद्यथा --
"सूदः सूपौदनं दद्यात् प्रदेहांश्च सुसंस्कृतान्
॥"
इति च तत्र सूत्रस्थाने ४६ अध्याये ॥)

**प्रदोषः**, पुं, (दोषा रात्रिः । प्रारम्भो दोषाया
इति प्रादिसमासः । प्रक्रान्ता दोषा रात्रि-

वृक्षे च दीपो दातव्यो न तु भूमौ कदाचन ॥
सर्व्वंसहा वसुमती सहते न त्विदं द्वयम् ।
अकार्य्यपादघातञ्च दीपतापन्तथैव च ॥
तस्माद्यथा तु पृथिवी तापं नाप्नोति वै तथा ।
दीपं दद्यान्महादेव्यै अन्येभ्योऽपि च भैरव ! ॥
कुर्व्वन्तं पृथिवीतापं यो दीपमुत्सृजेन्नरः ।
स ताम्रतापं नरकमाप्नोत्येव शतं समाः ॥ * ॥
सुवृत्तवर्त्तिः सस्नेहः पात्रेऽभग्ने सुदर्शने ।
सूच्छ्राये वृक्षकोटौ तु दीपं दद्यात् प्रयत्नतः ॥
लभ्यते यस्य तापस्तु दीपस्य चतुरङ्गुलात् ।
न स दीप इति ख्यातो ह्योघवह्निस्तु स श्रुतः ॥
नेत्राह्लादकरः सर्व्वभूमितापविवर्ज्जितः ।
सुशिखः शब्दरहितो निर्धूमो नातिह्रस्वकः ॥
दक्षिणावर्त्तवर्त्तिस्तु प्रदीपः श्रीविवृद्धये ।
दीपवृक्षस्थिते शुद्धस्नेहेनैव प्रपूरिते ॥
दक्षिणावर्त्तवर्त्त्या तु चारुदीपः प्रदीपकः ।
उत्तमः प्रोच्यते पुत्त्र ! सर्व्वतुष्टिप्रदायकः ॥
वृक्षेण वर्ज्जितो दीपो मध्यमः परिकीर्त्तितः ।
विहीनः पात्रतैलाभ्यामधमः परिकीर्त्तितः ॥”
इति कालिकापुराणे ६८ अध्यायः ॥ * ॥
कार्त्तिके तद्दानफलं यथा, --
“कार्त्तिके मासि यो दद्यात् प्रदीपं सर्पिरादिना ।
आकाशे मण्डले वापि स चाक्षयफलं लभेत् ॥”
इति कर्म्मलोचनम् ॥ * ॥
अपि च ।
“समभ्यर्च्च्य हरिं भक्त्या दीपं दत्त्वा दिवानिशम् ।
“वर्णतो लोहितो यः स्यात् दीप्तिमान् दहन-
प्रभः ।
महादाहकरः पूर्ब्बैः कथितः स प्रदीपनः ॥”
इति राजनिर्घण्टः ॥
प्रकाशके, त्रि ॥

**प्रदेशः**, पुं, (प्रदिश्यते इति । प्र + दिश् + “हल-
श्च ।” ३ । ३ । १२३ । इति घञ् । “उप-
सर्गस्य घञ्यमनुष्ये बहुलम् ।” ६ । ३ । १२२ ।
इति पाक्षिको दीर्घाभावः ।) देशमात्रम् ।
(यथा, हरिवंशे भविष्यपर्व्वणि । ५ । ३६ ।
“गरुडादवरुह्याथ दीपिकादीपिते तदा ।
प्रदेशे पुण्डरीकाक्षो स्थितस्तावत्सहामरैः ॥”)
तत्पर्य्यायः । आस्थानम् २ आस्था ३ भूः ४
अवकाशः ५ स्थितिः ६ पदम् ७ । इति राज-
निर्घण्टः ॥ तर्जन्यङ्गुष्ठसम्मितः । भित्तिः । इति
मेदिनी । शे, २५ ॥ (संज्ञा । इति निरुक्तम् ।
१ । ४ । २ ॥ तन्त्रयुक्तिप्रकारविशेषः । यथा, --
“प्रकृतस्यातिक्रान्तेन साधनं प्रदेशः । यथा
देवदत्तस्यानेन शल्यमुद्धृतं तस्माद्यज्ञदत्तस्याप्यय-
मेवोद्धरिष्यतीति ।” इत्युत्तरतन्त्रे पञ्चषष्टितमे-
ऽध्याये सुश्रुतेनोक्तम् ॥)

**प्रदेशनं**, क्ली, (प्रदिश्यते अनेनेति । प्र + दिश् +
करणे ल्युट् ।) नृपादेरुपढौकनम् । भेटी इति
ख्यातम् । तत्पर्य्यायः । प्राभृतम् २ उपायनम् ३
रत्रेति वा ।) रजनीमुखम् । इत्यमरः । १ । ४ । ६ ॥
तत्तु रात्रेः प्रथमदण्डचतुष्टयम् । यथा, --
“प्रदोषोऽस्तमयादूर्द्ध्वं घटिकाद्वयमिष्यते ॥”
इति तिथ्यादितत्त्वम् ॥
(यथा, कुमारे । ५ । ४४ ।
“वद प्रदोषे स्फुटचन्द्रतारका
विभावरी यद्यरुणाय कल्पते ॥”)
दोषः । इति हेमचन्द्रः ॥ (प्रकृष्टो दोषो
यस्येति । दुष्टे, त्रि । यथा, माघे । २ । ९८ ।
“ये चान्ये कालयवनशाल्वरुक्मिद्रुमादयः ।
तमःस्वभावास्तेऽप्येनं प्रदोषमनुयायिनः ॥”
“ये चान्ये कालयवनशाल्वरुक्मिद्रुमादयो
राजानस्तमःस्वभावाः तमोगुणात्मकाः अतएव
तेऽपि प्रदोषं प्रकृष्टदोषम् । प्रदोषो दुष्टरात्रांशा
विति वैजयन्ती । तामसमेवैनं चैद्यमनुयायिनः
अनुयास्यन्ति सादृश्यादिति भावः ॥” इति
तट्टीकायां मल्लिनाथः ॥)

**प्रद्यु**, क्ली, प्रकृष्टा द्यौः स्वर्गो यस्मात् तत् । पुण्यम् ।
इति मुग्धबोधटीकायां दुर्गादासः ॥

**प्रद्युम्नः**, पुं, (प्रकृष्टं द्युम्नं बलं यस्य ।) कन्दर्पः ।
इत्यमरः । १ । १ । २६ ॥ स वासुदेवस्य चतु-
र्थांशः । यथा, --
“एकदेवं चतुष्पादं चतुर्धा पुनरच्युतः ।
बिभेद वासुदेवोऽसौ प्रद्युम्नो हरिरव्ययः ॥

| | | |
|---|---|---|
| तत्र पापविशुद्धात्मा नरो याति दिवं नृप ! ॥ | उपग्राह्यम् ४ उपहारः ५ उपदा ६ । इत्यमरः । २ । ८ । २७ ॥ केचित्तु देवताभ्यो भक्त्या मित्रा- दिभ्यश्च प्रीत्या यत् प्रशस्तं लड्डुकादि दीयते तत् इत्याहुः । केचिच्च प्राभृतादि द्वयं श्रद्धया देवताब्राह्मणराजादिभ्यो यद्दीयते तत्र । उपा- यनादि चतुष्कं तुभ्यमिदं दीयते त्वयैतत् मम | |

कृष्णद्वैपायनो व्यासो विष्णुर्नारायणः स्वयम् ।
अपां तरतमाः पूर्ब्बं स्वेच्छया ह्यभवद्धरिः ॥”
इति कौर्म्मे ४८ अध्यायः ॥
अपि च ।
“अनिरुद्धः स्वयं ब्रह्मा प्रद्युम्नः काम एव च ।
वलदेवः स्वयं शेषः कृष्णश्च प्रकृतेः परः ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ११६ अध्यायः ॥
(नड्वलागर्भजातो मनोरपत्यभेदः । यथा, भाग-
वते । ४ । १३ । १५ -- १६ ।
“मनोरसूत महिषी विरजान् नड्वला सुतान् ।
पुरुं कुत्सं मृतं दुम्नं सत्यवन्तं मृतं व्रतम् ॥
अग्निष्टोममतीरात्रं प्रद्युम्नं शिवमुल्मुकम् ॥”)

**प्रद्योतः**, पुं, (प्रकृष्टो द्योतः ।) रश्मिः । इति
हलायुधः ॥ (यक्षभेदः । यथा, महाभारते ।
२ । १० । १५ ।
“कशेरको गण्डकण्डुः प्रद्योतश्च महाबलः ॥”)

**प्रद्योतनः**, पुं, (प्रद्योतते इति । प्र + द्युत् + “अनु-
दात्तेतश्च हलादेः ।” ३ । २ । १४९ । इति युच् ।)
सूर्य्यः । इति हलायुधः ॥ (भावे ल्युट् ।) द्युतौ,
क्ली ॥

**प्रद्रावः**, पुं, (प्र + द्रु + “प्रे द्रुस्तुस्रुवः ।” ३ । ३ । २७ ।
इति घञ् ।) पलायनम् । इत्यमरः । २ । ८ । १११ ॥

**प्रधानः**, पुं, (प्रधत्ते इति । प्र + धा + ल्युः ।)
महामात्रः । सेनापत्यादिः । महामात्रः
प्रधानः स्यादिति पुंस्काण्डे वोपालितः । इत्य-
मरटीकायां भरतः ॥ (राजर्षिभेदः । यथा,
महाभारते । १२ । २३० । १८१ ।
“प्रधानो नाम राजा च व्यक्तं ते श्रोत्रमागतः ।
कुले तस्य समुत्पन्नां सुलभां नाम विद्धि माम् ॥”)

**प्रधिः**, पुं, (प्रधीयते अनेनेति । प्र + धा + “उप-
सर्गे धोः किः ।” ३ । ३ । ९२ । इति किः ।)
नेमिः । इत्यमरः । २ । ८ । ५६ ॥ (यथा, महा-
भारते । ५ । ५१ । ५८ ।
“मन्ये पर्य्यायधर्म्मोऽयं कालस्यात्यन्तगामिनः ।
चक्रे प्रधिरिवासक्तो नास्य शक्यं पलायितुम् ॥”)

**प्रधीः**, त्रि, (प्रकृष्टा धीर्बुद्धिर्यस्य ।) प्रकृष्टबुद्धि-
युक्तः । (प्रकृष्टा धीः ।) प्रकृष्टबुद्धौ, स्त्री । इति
मुग्धबोधव्याकरणम् ॥

**प्रधूपिता**, स्त्री, (प्रकर्षेण धूपिता ।) क्लेशिता ।
सूर्य्यगन्तव्यदिक् । इति मेदिनी । ते, २०७ ॥
प्रकर्षेण तप्ते दीप्ते च त्रि ॥

**प्रनष्टः**, त्रि, (प्र + नश् + क्तः ।) प्रकर्षेण नाश-
युक्तः ।

“भूमौ विपरिवर्त्तेत तिष्ठेद्वा प्रपदैर्दिनम् ।
स्थानासनाभ्यां विहरेत् सवनेषूपयन्नपः ॥”)

**प्रपन्नः**, त्रि, (प्रपद्यते स्मेति । प्र + पद् + क्तः ।)
शरणागतः । यथा, --
“गोविन्दं पुण्डरीकाक्षमनन्तमजमव्ययम् ।
केशवञ्च प्रपन्नोऽस्मि किन्नो मृत्युः करिष्यति ॥”
इति मार्कण्डेयपुराणे मृत्युजयो नाम ७ अध्यायः ॥

**प्रपन्नाडः**, पुं, (प्रपन्नं अलति भूषयतीति । प्रपन्न +
अल् + “कर्म्मण्यण् ।” ३ । २ । १ । इत्यण् ।
डलयोरैक्यम् ।) प्रपुन्नाडः । चक्रमर्द्दकः ।
इति रत्नमाला ॥ (विवृतिरस्य चक्रमर्द्दकशब्दे ज्ञेया ॥)

**प्रपा**, स्त्री, (प्रकर्षेण पिबन्त्यस्यामिति । प्र + पा +
“आतश्चोपसर्गे ।” ३ । ३ । १०६ । इत्यङ् ।
घञर्थे को वा ।) पानीयशालिका । इत्यमरः ।
२ । २ । ७ ॥ (यथा, मनुः । ८ । ३१९ ।
“यस्तु रज्जुं घटं कूपाद्धरेद्भिन्द्याच्च यः प्रपाम् ।
स दण्डं प्राप्नुयान्माषं तञ्च तस्मिन् समाहरेत् ॥”)
यज्ञशाला । यथा, रामायणे । १ । ७३ । २० ।
“विश्वामित्रं पुरस्कृत्य शतानन्दञ्च धार्म्मिकम् ।
प्रपामध्ये तु विधिवद्वेदिं कृत्वा महातपाः ॥”
“प्रपामध्ये यज्ञशालामध्ये इति कतकः ॥” इति
तट्टीकायां रामानुजः ॥)

**प्रपाणिः**, पुं, (प्रकृष्टः पाणिः । प्रादिसमासः ।)
करस्याधोदेशः । पाणितलम् । इति राज-
निर्घण्टः ॥ (विषयोऽस्य यथा, “पञ्चदशाङ्गुलौ
प्रपाणी ।” इति चरके विमानेऽष्टमेऽध्याये ॥)

**प्रपातः**, पुं, (प्रपतत्यस्मादिति । प्र + पत् + “अक-
र्त्तरि च कारके संज्ञायाम् ।” ३ । ३ । १९ ।
इति घञ् ।) निरवलम्बनपर्व्वतादिपार्श्वम् ।
आरडि इति ख्यातम् । यस्मात् पतने अव-
स्थानक्रियाविशेषो नास्ति । तत्पर्य्यायः ।
अतटः २ भृगुः ३ । इत्यमरः । २ । ३ । ४ ॥
(यथा, देवीभागवते । ४ । ७ । ४९ ।
“मधु पश्यति मूढात्मा प्रपातं नैव पश्यति ।
करोति निन्दितं कर्म्म नरकात् न बिभेति च ॥”)

**प्रधनं**, क्ली, (प्रदधातीति । प्र + धा + “कृपवृजि
मन्दिनिधाञः क्युः ।” उणा० २ । ८१ । इति
वाहुलकात् क्युः आतो लोपश्च ।) युद्धम् ।
इत्यमरः । २ । ८ । १०३ ॥ (यथा, देवीभाग-
वते । ४ । ७ । ५३ ।
“वैरं भवति वित्तार्थं दारार्थं वा परस्परम् ।
एषणारहितौ कस्मात् चक्रतुः प्रधनं महत् ॥”)
दारणम् । इति मेदिनी । ने, ८३ ॥ (प्रकृष्टं
धनमस्येति विग्रहे प्रभूतधनविशिष्टे, त्रि ॥)

**प्रधानं**, क्ली, (प्रधत्ते सर्व्वमात्मनीति । प्र + धा +
युच् ।) प्रकृतिः । (यथा, विष्णुपुराणे । १ । १ । २ ।
“सदक्षरं ब्रह्म य ईश्वरः पुमान्
गुणोर्म्मिसृष्टिस्थितिकालसंलयः ।
प्रधानबुद्ध्यादिजगत्प्रपञ्चसूः
स नोऽस्तु विष्णुर्गतिभूतिमुक्तिदः ॥”
महामात्रः । (यथा, मनुः । ७ । २०२ ।
“प्रमाणानि च कुर्व्वीत तेषां धर्म्म्यान् यथो-
दितान् ।
रत्नैश्च पूजयेदेनं प्रधानपुरुषैः सह ॥”
प्रधत्तेऽनेनास्मिन् वा । प्र + धा + ल्युट् ।)
परमात्मा । बुद्धिः । त्रि, प्रशस्तम् । तत्पर्य्यायः ।
प्रमुखम् २ प्रवेकम् ३ अनुत्तमम् ४ उत्तमम् ५
मुख्यम् ६ वर्य्यम् ७ वरेण्यम् ८ प्रवर्हम् ९
अनवराद्र्ध्यम् १० पराद्र्ध्यम् ११ अग्रम् १२ प्राग्र-
हरम् १३ प्रग्र्यम् १४ अग्र्यम् १५ अग्रीयम् १६
“कश्चिदज्ञानसम्भूतःप्रनष्टस्ते
धनञ्जय ! ॥”
इति श्रीभगद्गीतायाम् १८ अध्यायः ॥

**प्रनिघातनं**, क्ली, (प्र + नि + हन् + णिच् + भावे
घञ् ।) प्रणिघातनम् । वधः । इति हेमचन्द्रः ॥

**प्रपञ्चः**, पुं, (प्रपञ्च्यते इति । प्र + पचि व्यक्तीकरणे
+ घञ् ।) विपर्य्यासः । विस्तरः । इत्यमरः ॥
“विपर्य्यासो वैपरीत्यं भ्रमो वा मायेति स्वामी ॥”
इति भरतः ॥ सञ्चयः । प्रतारणम् । इति
मेदिनी । चे, १५ ॥ संसारः । यथा, --
“पादुकापञ्चकस्तोत्रं पञ्चवक्त्राद्विनिर्गतम् ।
षडाम्नायफलोपेतं प्रपञ्चे चातिदुर्लभम् ॥”
इति गुरुपादुकास्तोत्रम् ॥

**प्रपञ्चितं**, त्रि, (प्रपञ्च्यते स्मेति । प्र + पचि +
क्तः ।) विस्तृतम् । भ्रमयुक्तम् । यथा, --
“आत्मानमेवात्मतया विजानतां
तेनैव जातं निखिलं प्रपञ्चितम् ।
ज्ञानेन भूयोऽपि च तत् प्रलीयते
रज्ज्वामहेर्भोगभवाभवौ यथा ॥”
इति श्रीभागवते । १० । १४ । २५ ॥

**प्रपथः**, त्रि, (प्रकृष्टः पन्था यत्र ।) शिथिलः ।
इति भूरिप्रयोगः ॥ (प्रकृष्टः पन्था इति प्रादि-
समासः । प्रकृष्टमार्गः । यथा ऋग्वेदे ।
१० । १७ । ४ ।
निर्झरः । इति मेदिनी । ते, १२७ ॥ (भावे
घञ् ।) अभ्यवस्कन्दः । कूलम् । इति हेम-
चन्द्रः ॥ (उड्डीनगतिविशेषः । यथा, पञ्च-
तन्त्रे । २ । ५७ । “अहं सम्पातादिकानष्टा-
वुड्डीनगतिविशेषान् वेद्मि । उक्तञ्च ।
सम्पातञ्च प्रपातञ्च महापातं निपातनम् ।
चक्रं तिर्य्यक् तथा चोद्र्ध्वमष्टमं लघुसंज्ञकम् ॥”
प्रपातनम् । यथा, सुश्रुते चिकित्सितस्थाने ।
४० अध्याये ।
“तत्तु नस्यं देयं वाताभिभूते शिरसि दन्तकेश-
श्मश्रुप्रपातदारुणकर्णशूलकर्णक्ष्वेडतिमिरस्वरो-
पघातनासारोगस्य शोषापबाहुकाकालज-
वलीपलितप्रादुर्भावदारुणप्रवाधेषु इति ॥”)

**प्रपायी**, [न्] त्रि, (प्रपिबतीति । प्र + पा +
णिनिः ।) पानकर्त्ता । रक्षणकर्त्ता । इति
मुग्धबोधव्याकरणम् ॥

अग्रिमम् १७ । इत्यमरः । ३ । १ । ५७ ॥ (यथा,
मनुः । ९ । १२१ ।
"उप्रसर्ज्जनं प्रधानस्य धर्म्मतो
नोपपद्यते ।
पिता प्रधानं प्रजने तस्माद्धर्म्मेण तं
भजेत् ॥"

"आयुर्विश्वायुः परिपासति त्वा
पूषा त्वा पातु प्रपथे पुरस्तात् ॥")

**प्रपथ्या**, स्त्री, (प्रकृष्टा पथ्येति प्रादिसमासः ।)

हरीतकी । इति राजनिर्घण्टः ॥
(हरीतकी-
शब्देऽस्या विवरणं ज्ञातव्यम् ॥)

**प्रपदं**, क्ली, (प्रारब्धं प्रगतं वा पदमिति प्रादि-

समासः ।) पादाग्रम् । इत्यमरः ।
२ । ६ । ७१ ॥
(यथा, मनौ । ६ । २२ ।

**प्रपावनं**, क्ली, (प्रपेव कामपूरकं वनम् । यद्वा,
प्रकर्षेण पावयतीति । पू + णिच् + कर्त्तरि
ल्युः ।) वनभेदः । कामारण्यम् । इति शब्द-
माला ॥

**प्रपितामहः**, पुं, (प्रकर्षेण पितामहः पितामह-
स्यापि पिता ।) ब्रह्मा । इति त्रिकाण्डशेषः ॥
(यथा, मार्कण्डेयपुराणे । १०१ । २२ ।
"तद्बिभेद तदन्तःस्थो भगवान् प्रपितामहः ।
पद्मयोनिः स्वयं ब्रह्मा यः स्रष्टा जगतां प्रभुः ॥")
पितामहपिता । इत्यमरः । २ । ६ । ३३ ॥
(यथा, मनौ । ३ । २२१ ।
"पिता यस्य तु वृत्तः स्याज्जीवेद्वापि पितामहः ।
पितुः स नाम संकीर्त्त्य कीर्त्तयेत्प्रपितामहम् ॥")

**प्रपितामही**, स्त्री, (प्रपितामह + स्त्रियां ङीष् ।)
प्रपितामहपत्नी । यथा, --
"स्वेन भर्त्रा सह श्राद्धं माता भुङ्क्ते स्वधामयम् ।
पितामही च स्वेनैव स्वेनैव प्रपितामही ॥"
इति दायभागः ॥

**प्रपुनाडः**, पुं, (पुंमांसं नाडयतीति । नड भ्रंशे +
अण् । प्रकृष्टः पुन्नाडः इति प्रादिसमासः ।
पृषोदरादित्वात् साधुः ।) प्रपुन्नाडः । इत्यमर-
टीकायां भरतः ॥ (अस्य शाकगुणा यथा, --
तिक्तत्वम् । शीतलत्वम् । पित्तरक्तव्रणज्वर-
दाहतृषानाशित्वञ्च । इति राजनिर्घण्टः ॥
अपि च ।
"पौण्डर्य्यं मधुरं तिक्तं कषायं शुक्रलं हिमम् ।
चक्षुष्यं मधुरं पाके वर्ण्यं पित्तकफास्रनुत् ॥"
इति भावप्रकाशः ॥

**प्रपौत्रः**, पुं, (प्रकर्षेण पौत्रः । पौत्रस्यापि पुत्रत्वात्
तथात्वम् ।) पौत्रस्य पुत्रः । तत्पर्य्यायः । प्रतिनप्ता
२ । इति हेमचन्द्रः ॥ (यथा, मार्कण्डेयपुराणे ।
११० ।-१५ ।
"पुत्रान् पौत्रान् प्रपौत्रांश्च तथान्यानिष्टबान्ध-
वान् ।
पश्यतो मे मृतान् दुःखं किमल्पं हि भवि-
ष्यति ॥")

**प्रपौत्री**, स्त्री, (प्रपौत्र + ङीष् ।) पौत्रस्य कन्या ।
इति स्मृतिः ॥

**प्रफुल्लः**, त्रि, (फलतीति । ञि फलाविसरणे + क्तः ।
"आदितश्चेति ।" ७ । २ । १६ । इति इड-
भावः । "तिच ।" ७ । ४ । ८९ । इति उत् ।
"अनुपसर्गात् फुल्लक्षीवेति ।" ८ । २ । ५५ ।
इति निष्ठातस्य लः । ततः प्रादिसमासः । यद्वा,
प्रफुल्लतीति । प्र + फुल्ल विकसने + अच् ।)

**प्रबला**, स्त्री, (प्रकृष्टं बलमस्याः ।) प्रसारिणी ।
इति राजनिर्घण्टः ॥ प्रकृष्टबलवती च ॥ (यथा,
रघौ । ८ । ५० ।
"सहतां हतजीवितं मम
प्रबलामात्मकृतेन वेदनाम् ॥")

**प्रबालः**, पुं, क्ली, (प्रबलतीति । प्र + बल् प्राणने +
"ज्वलितिकसन्तेभ्यो णः ।" ३ । १ । १४० ।
इति णः । यद्वा, प्र + बल् + णिच् + अच् ।)
रक्तवर्णवर्त्तुलाकाररत्नविशेषः । पला इति
मुङ्गा इति च भाषा ॥ तस्याधिष्ठात्री देवता
मङ्गलः । इति ज्योतिषम् ॥ तत्पर्य्यायः । विद्रुमः
२ । इत्यमरः । २ । २ । ९३ ॥ अङ्गारकमणिः ३
अम्भोधिवल्लभः ४ भौमरत्नम् ५ रक्ताङ्गः ६ रक्ता-
कारः ७ लतामणिः ८ । अस्य गुणाः । मधु-
रत्वम् । अम्लत्वम् । कफपित्तादिदोषनाशित्वम् ।
स्त्रीणां वीर्य्यकान्तिकरत्वम् । धृते मङ्गलदायि-
त्वञ्च । इति राजनिर्घण्टः ॥ * ॥ अपि च ।
सारकत्वम् । शीतत्वम् । कषायत्वम् । स्वादु-
त्वम् । वान्तिकारित्वम् । चक्षुर्हितत्वम् । धारणे
पापालक्ष्मीनाशित्वञ्च ॥ इति राजवल्लभः ॥ * ॥
तस्य शुभलक्षणं यथा, --
"शुद्धं दृढं घनं वृत्तं स्निग्धं गात्रसुरङ्गकम् ।
समं गुरु सिराहीनं प्रबालं धारयेत् शुभम् ॥"
तस्याशुभलक्षणं यथा, --
"गौरं रङ्गजलाक्रान्तं वक्रसूक्ष्मं सकोटरम् ।
रूक्षकृष्णं लघु श्वेतं प्रबालमशुभं त्यजेत् ॥"
इति राजनिर्घण्टः ॥ * ॥
तस्योत्पत्त्यादि यथा, --
सूत उवाच ।
"आदाय शेषस्तस्यान्त्रं यमस्याकम्बलादिषु ।
चिक्षेप तत्र जायन्ते विद्रुमाः सुमहागुणाः ॥
तत्र प्रधानं शशलोहिताभं
गुञ्जाजवापुष्पनिभं प्रदिष्टम् ।
सनीसकं देवकरोमकञ्च
स्थानानि तेषु प्रभवं सुरागम् ॥

"कफापहं शाकमुक्तं वरुणप्रपुनाडयोः ।
रूक्षं लघु च शीतञ्च
वातपित्तप्रकोपणम्॥"
इदि सुश्रुते सूत्रस्थाने ४६ अध्यायः ॥)

**प्रपुन्नडः**, पुं, (प्रपुन्नाडः । पृषोदरादित्वात् ह्रस्वः ।)
प्रपुन्नाडः । इत्यमरभरतौ ॥

**प्रपुन्नाटः**, पुं, (पुमांसं नाटयतीति । नट् + णिच् +
अण् । प्रकृष्टः पुन्नाट इति प्रादिसमासः ।)
चक्रमर्द्दः । इति राजनिर्घण्टः ॥

**प्रपुन्नाडः**, पुं, (पुमांसं नाडयतीति । नड् + अण् ।
प्रकृष्टः पुन्नाड इति प्रादिसमासः ।) चक्र-
मर्द्दकः । चाकुन्दिया इति भाषा । इत्यमरः ।
२ । ४ । १४७ ॥ (विवृतिरस्य चक्रमर्द्दकशब्दे
ज्ञेया ॥)

**प्रपुन्नालः**, पुं, (प्रपुन्नाडः । डस्य लत्वम् ।) प्रपु-
न्नाडः । इति भरतद्विरूपकोषः ॥

**प्रपूरिका**, स्त्री, (प्रपूर्य्यते कण्टकैरिति । प्र + पूर
+ कर्म्मणि घञ् । स्वार्थे कन् । यद्वा, प्रपूरय-
तीति । प्र + पूर + ण्वुल् । टाप् । कापि अत
इत्वम् ।) कण्टकारी । इति शब्दचन्द्रिका ॥

**प्रपौण्डरीकं**, क्ली, (पुण्डरीक + स्वार्थे अण् । प्रकृष्टं
पौण्डरीकस्येव पुष्पं यस्य ।) हस्तिनां मनुष्याणाञ्च
चक्षुष्यः क्षुद्रविटपः । शालपर्णीपत्रतुल्यपत्रः ।
विकाशयुक्तः । तत्पर्य्यायः । उत्फुल्लः २ संफुल्लः ३
व्याकोषः ४ विकचः ५ स्फुटः ६ फुल्लः ७ विक-
सितः ८ । इत्यमरः । २ । ४ । ७ ॥ प्रबुद्धः ९
जृम्भः १० स्मितः ११ उन्मिषितः १२ दलितः १३
स्फुटितः १४ उच्छ्वसितः १५ विजृम्भितः १६ स्मेरः
१७ विनिद्रः १८ उन्निद्रः १९ विमुद्रः २० हसितः
२१ । इति हेमचन्द्रः ॥ (यथा, रघौ । २ । २९ ।
"स पाटलायां गवि तस्थिवांसं
धनुर्धरः केशरिणं ददर्श
अधित्यकायामिव धातुमय्यां
लोध्रद्रुमं सानुमतः प्रफुल्लम् ॥")

**प्रबन्धः**, पुं, (प्रबध्यते इति । प्र + बन्ध + घञ् ।)
सन्दर्भः । इति त्रिकाण्डशेषः ॥ (प्र + बन्ध +
भावे घञ् ।) काव्यादिग्रथनम् । यथा, --
"प्रबन्धोऽयं बन्धोरखिलजगतान्तस्य सरसाम् ॥"
इति हंसदूतः ॥

**प्रबन्धकल्पना**, स्त्री, प्रबन्धस्य कल्पना रचना
बह्वनृता स्तोकसत्या कथा ।
"प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञाः कथां विदुः ।
परस्पराश्रया या स्यात् सा मताख्यायिका
क्वचित् ॥"
इति कोलाहलाचार्य्यः ।
इत्यमरटीकायां भरतः ॥

**प्रबलः**, पुं, (प्रकृष्टं बलतीति । प्र + बल् प्राणने +
अच् ।) पल्लवः । इति शब्दमाला ॥ (प्रकृष्टं
बलमस्य ।) प्रकृष्टबलयुक्ते, त्रि । यथा, मार्क-
अन्यत्र जातञ्च न तत् प्रधानं
मूल्यं भवेच्छिल्पिविशेषयोगात् ॥
प्रसन्नं कमलं स्निग्धं सुरागं विद्रुमं हि तत् ।
धनधान्यकरं लोके विषार्त्तिभयनाशनम् ॥
परीक्षा पुलकस्योक्ता रुधिराख्यस्य वै मणेः ।
स्फटिकस्य विद्रुमस्य रत्नज्ञानाय शौनक ! ॥"
इति गारुडे ८० अध्यायः ॥ * ॥
अथ विद्रुमपरीक्षा ।
"श्वेतसागरमध्ये तु जायते वल्लरी तु या ।
विद्रुमा नाम रत्नाख्या दुर्लभा वज्ररूपिणी ॥
पाषाणं प्रभजत्येषा प्रयत्नात् क्वथिता सती ।
विद्रुमं नाम यद्रत्नमामनन्ति मनीषिणः ॥ * ॥
ब्रह्मादिजातिभेदेज तच्चतुर्व्विधमुच्यते ।
अरुणं शशरक्ताख्यं कोमलं स्निग्धमेव च ।
प्रबालं विप्रजातिः स्यात् सुखवंध्यं मनोरमम् ॥
जवाबन्धूकसिन्दूरदाडिमीकुसुमप्रभम् ।
कठिनं दुर्व्वेध्यमस्निग्धं क्षत्त्रजातिं तदुच्यते ॥

| | | |
|---|---|---|
| पुण्डरिया ख्यातः । इत्यमरभरतौ ॥ तत्पर्य्यायः । चक्षुष्यम् २ शीतम् ३ श्रीपुष्पम् ४ पुण्डरी ५ । इति रत्नमाला ॥ पुण्डर्य्यम् ६ पुण्डरीयकम् ७ पौण्डरीयम् ८ सुपुष्पम् ९ सानुजम् १० अनु-<br>जम् ११ ॥ (यथा, सुश्रुते सूत्रस्थाने १६ अध्याये । "प्रपौण्डरीकं मधुकं समङ्गां धवमेव च । तैलमेभिश्च सम्पक्वं शृणु कण्डूमतः क्रियाम् ॥" अस्य गुणाः । चक्षुर्हितत्त्वम् । मधुरत्वम् । | ण्डेयपुराणे । ८१ । ६ । "आक्रान्तः स महाभागस्तैस्तदा प्रबला-<br>रिभिः ॥" प्रकृष्टबले क्लीवञ्च ॥ | |

पलाशकुसुमाभासं तथा
पाटलसन्निभम् ।
वैश्यजातिर्भवेत् स्निग्धं वर्णाढ्यं
मन्दकान्तिभम् ॥
रक्तोत्पलदलाकारं कठिनं न चिरद्युति
।
विद्रुमं शूद्रजातिः स्याद्वायुवेध्यं तथैव
च ॥ * ॥
रक्तता स्निग्धता दार्य्यं चिरद्युतिः
सुवर्णता ।
प्रबालानां गुणाः प्रोक्ता धनधान्यकराः
पराः ॥
हिमाद्रौ यत्तु संजातं तद्रक्तमतिनिष्ठुरम्
।
तत्र लिप्तो भवेन्निम्बकल्कोऽतिमधुरः
स्थितः ।
तस्य धारणमात्रेण विषवेगः प्रशाम्यति
॥ * ॥
विवर्णता तु खरता प्रबाले दूषणद्वयम् ।
रेखाकाकपदौ बिन्दुर्यथा वज्रेषु
दोषकृत् ।
तथा प्रबाले सर्व्वत्र वर्जनीयं विचक्षणैः
॥
रेखा हन्याद्यशो लक्ष्मीमावर्त्तः
कुलनाशनः ।
पट्टलो रोगकृत् ख्यातो
बिन्दुर्धनविनाशकृत् ॥
त्रासः संजनयेत्त्रासं नीलिका
मृत्युकारिणी ।
मूल्यं शुद्धप्रबालस्य रूप्यद्विगुणमुच्यते
॥
धारणेऽस्यापि नियमो जातिभेदेन
पूर्ब्बवत् ॥" * ॥
तथाहि ।
"विरूपजातिं विषमं विवर्णं
खरप्रबालं प्रवहन्ति ये ये ।
ते मृत्युमेवात्मनि वै वहन्ति
सत्यं वदत्येष कृती मुनीन्द्रः ॥"

"प्रबुद्धपुण्डरीकाक्षं बालातपनिभांशुकम् ।
दिवसं शारदमिव प्रारम्भसुखदर्शनम् ॥")
जागरितः । यथा, भट्टिः । ४ । १४ ।
"प्रातस्तरां पतत्रिभ्यः प्रबुद्धः प्रणमन्नविम्
॥"

**प्रबोधः**, पुं, (प्र + बुध्यौ ङ अपगमे + भावे
घञ् ।) विनिद्रत्वम् । इति हेमचन्द्रः ॥
(यथा,
मार्कण्डेये । ८१ । ६७ ।
"प्रबोधञ्च जगत्स्वामी नीयतामच्युतो लघु ।
बोधश्च क्रियतामस्य हन्तुमेतौ महासुरौ ॥")
प्रकृष्टज्ञानञ्च । यथा, --
"तावत् सत्यं जगद्भाति प्रबोधे सत्यसद्भवेत्
॥"
इत्यात्मबोधग्रन्थः ॥
(यथा च रघुः । ५ । ६५ ।
"सूतात्मजाः सवयसः प्रथितप्रबोधं
प्राबोधयन्नुषसि वाग्भिरुदारवाचः ॥")

**प्रबोधनं**, क्ली, (प्र + बुध् + ल्युट् ।) न्यूनपूर्ब्ब-
गन्धस्य चन्दनादेः प्रयत्नविशेषेण पुनः
पूर्ब्ब-
सौगन्ध्योत्पादनम् । तत्पर्य्यायः । अनुबोधः
२ ।
इत्यमरभरतौ । बोधजननञ्च ॥ (जागरणम् ।
यथा, हरिवंशे । १७७ । ७१ ।
"ततस्तूर्य्यनिनादैश्च शङ्खानाञ्च महास्वनैः ।
प्रबोधनं महाबाहोः कृष्णस्याक्रियतालये ॥"
विकाशः । यथा, पञ्चतन्त्रे कथामुखे ।
"तदेतेषां बुद्धिप्रबोधनं यथा भवति तथा
केनाप्युपायेनानुष्ठीयतामिति ॥" तथा च
ऋतु-
संहार । ५ । १० ।
"सुगन्धिनिःश्वासविकम्पितोत्पलं
मनोहरं कामरतिप्रबोधनम् ॥")

**प्रबोधनी**, स्त्री, (प्रबोध्यतेऽनयेति । प्र + बुध् +
णिच् + ल्युट् + ङीप् ।) दुरालभा । इति
राज-

मेरुमन्दरतुल्यानि पापान्यत्युर्जितान्यपि ।
एकेनैवोपवासेन दहते हरिबोधनी ॥
पृथिव्यां यानि दानानि दत्त्वा यत्
फलमाप्नुते ।
एकेनैवोपवासेन ददाति हरिबोधनी ॥"
किञ्च ।
"जातः स एव सुकृती कुलं तेनैव पावितम् ।
कार्त्तिके मुनिशार्द्दूल ! कृता येन प्रबोधनी ॥
यानि कानि च तीर्थानि त्रैलोक्ये सम्भवन्ति
च ।
तानि तस्य गृहे सम्यक् यः करोति
प्रबोधनीम् ॥
सर्व्वं कृत्यं परित्यज्य तुष्ट्यर्थं चक्रपाणिनः
।
उपोष्यैकादशी सम्यक् कार्त्तिके हरिबोधनी
॥
किं तस्य बहुभिः कृत्यैः परलोकप्रदैर्मुने ! ।
सकृच्चोपोषिता येन कार्त्तिके हरिबोधनी ॥
स ज्ञानी स हि योगी च स तपस्वी जिते-
न्द्रियः ।
स्वर्गमोक्षौ च तस्यास्तामुपास्ते
हरिबोधनीम् ॥
विष्णोः पियतमा ह्येषा धर्म्मसारस्य दायिनी
।
इमां सकृदुपोष्यैव मुक्तिभागी भवेन्नरः ॥
प्रबोधनीमुपोष्यैव न गर्भं विशते नरः ।
सर्व्वधर्म्मान् परित्यज्य तस्मात् कुर्व्वीत
नारद ! ॥
स्नानं दानं तपो होमः समुद्दिश्य जनार्द्दनम्
।
नरैर्यत् क्रियते विप्र ! प्रबोधन्यां तदक्षयम् ।
महाव्रतमिदं पुत्त्र ! महापापौघनाशनम् ।
प्रबोधवासरं विष्णोर्विधिवत् समुपोषयेत् ॥
ब्रतेनानेन देवेशं परितोष्य जनार्द्दनम् ।
विराजयन् दिशो दीप्त्या प्रयाति भुवनं हरेः
॥"
पाद्मे च तत्रैव ।
"दुग्धाब्धिभोगिशयने भगवाननन्तो
यस्मिन्दिने स्वपिति चाथ विबुध्यते च ।

इति युक्तिकल्पतरौ प्रबालपरीक्षा ॥ *
॥
(अस्य संशोधनादिकं यथा, --
"कुमार्य्या तण्डुलीयेन तुल्येन च निषेचयेत् ।
प्रत्येकं सप्तवारांश्च तप्ततप्तानि कृत्स्नशः ॥
मौक्तिकानि प्रबालानि तथा रत्नान्यशेषतः ।
क्षणाद्विविधवर्णानि म्रियन्ते नात्र संशयः ॥
श्रीदुग्धेन प्रवालञ्च भावयित्वा तु हण्डिके ।
मध्येऽपि तक्रसहितं स्थापयेत्तन्निरोधयेत् ।
चुल्ल्यामग्निप्रतापेन म्रियते प्रहरद्वये ॥
इति प्रबालमारणम् ॥"
इति वैद्यकरसेन्द्रसंग्रहे जारणमारणाधिकारे ॥)
किशलयः । (यथा, कुमारे । १ । ४४ ।
"पुष्पं प्रबालोपहितं यदि स्यात्
मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्य्याद्विशदस्य तस्या-
स्ताम्रौष्ठपर्य्यस्तरुचः स्मितस्य ॥")
वीणादण्डः । इति मेदिनी । ले, १०७
॥

**प्रबालफलं**, क्ली, (प्रबालवद्रक्तं फलं यस्य ।) रक्त-
चन्दनम् । इति भावप्रकाशः ॥

**प्रबालिकः**, पुं, (प्रबालोऽस्त्यस्य बाहुल्येनेति । प्रबाल
+ "अत इनिठनौ ।" ५ । २ । ११५ । इति
ठन् ।) जीवशाकः । इति राजनिर्घण्टः
॥

**प्रबाहुः**, पुं, (प्रगतो बाहुमिति ।) कुर्परस्याधो-
भागः । यथा, विष्णुपुराणे ५ । ५ । १९
।
"मुखं बाहुप्रबाहू च मनः सर्व्वेन्द्रियाणि च ।
निर्घण्टः ॥ (प्रबुध्यते हरिरत्रेति ।) श्रीहरे-
रुत्थानैकादश्यादिः ।
अथ प्रबोधनीकृत्यम् ।
"शयन्यामिव कृत्यास्यां
क्षीराम्भोधिमहोत्सवम् ।
प्रबोध्य कृष्णं संपूज्य विधिनारोहयेद्रथम् ॥"
अथ प्रबोधनीकृत्यनित्यता ।
स्कान्दे तत्रैव ।
"जन्मप्रभृति यत् पुण्यं नरेणोपार्जितं भुवि ।
वृथा भवति तत्मर्व्वं न कृत्वा बोधवासरम्
॥"
अथ प्रबोधनीमाहात्म्यम् । तत्रैव ।
"प्रबोधन्याश्च माहात्म्यं पापघ्नं पुण्यवर्द्धनम्
।
मुक्तिदं कृतबुद्धीनां शृणु त्वं मुनिसत्तम ! ॥
तावद्गर्जति विप्रेन्द्र ! गङ्गा भागीरथी क्षितौ ।
यावन्नायाति पापघ्नी कार्त्तिके हरिबोधनी ॥
तावद्गर्जन्ति तीर्थानि आसमुद्रसरांसि च ।
यावत् प्रबोधनी विष्णोस्तिथिर्नायाति कार्त्तिके ॥
वाजपेयसहस्राणि अश्वमेधशतानि च ।
एकेनैवोपवासेन प्रबोधन्यां लभेन्नरः ॥
दुर्लभञ्चैव दुष्प्रापं त्रैलोक्ये सचराचरे ।
तदपि प्रार्थितं विप्र ! ददाति हरिबोधनी ॥
ऐश्वर्य्यं सन्ततिं प्रज्ञां राज्यञ्च सुखसम्पदः ।
ददात्युपोषिता विप्र ! हेलया हरिबोधनी ॥
तस्मिन्ननन्यमनसामुपवासभाजां
पुंसां ददात्यभिमतं गरुडाङ्कशायी ॥"
वाराहे च ।
"उपवासासमर्थानां सदैव पृथुलोचने ! ।
एका सा द्वादशी पुण्या समुपोष्या प्रबोधनी
॥
तस्यामाराध्य विश्वेशं जगतामीश्वरेश्वरम् ।
प्राप्नोति सकलं तद्धि द्वादशद्वादशीव्रतम् ॥
उत्तराङ्गारकयुता यदि सा भवति प्रिये ! ।
तदा सा महती पुण्या कोटिकोटिगुणोत्तरा ॥
शयने बोधने चेव कटिदाने च सुन्दरि ! ।
उपोष्यैव विधानेन यान्ति मल्लयतां नराः ॥
एकादशी सोमयुता कार्त्तिके मासि भाविनि !
उत्तराभाद्रसंयोगे अनन्ता सा प्रकीर्त्तिता ॥
तस्यां यत् क्रियते भद्रे !
सर्व्वमानन्त्यमश्नुते ।
अनन्तपुण्यफलदा तेनानन्ता स्मृता फले
॥"
तत्रैव श्रीयमनारदसंवादे ।
"अन्यच्च ते प्रवक्ष्यामि गुह्याद्गुह्यतरं मुने !
।
कार्त्तिकेऽमलपक्षे तु साक्षादेकादशी स्मृता
॥
भक्तिप्रदा हरेः सा तु नाम्ना ख्याता प्रबोधनी ।
या सा विष्णोः परा मूर्त्तिरव्यक्तानेकरूपिणी
॥
सा क्षिप्ता मानुषे लोके द्वादशी मुनिपुङ्गव !
॥"
श्रीमथुरायाञ्च विशेषतः पाद्मे तत्रैव ।
"तावद्गर्ज्जन्ति तीर्थानि वाजिमेधादयो मखाः ।

| | | |
|---|---|---|
| रक्षत्वव्याहतैश्वर्य्यस्तव<br>नारायणोऽव्ययः ॥”<br><br>**प्रबाहुकम्**, व्य, समानकाले । ऊर्द्ध्वार्थे । प्रवाहिकेति<br>पाठान्तरम् । इति कौमुदीटीका<br>तत्त्वबोधिनी ॥<br><br>**प्रबुद्धः**, त्रि, (प्र + बुध + क्तः ।) पण्डितः । प्रफुल्लः ।<br>इति हेमचन्द्रः ॥ (यथा, रघुः । १० ।<br>९ । | | |

मथुरायां प्रिया विष्णोर्यवन्नायाति
बोधनी ॥
संसारदावतप्तानां
कामसौख्यपिपासिनाम्।
श्रीकृष्णपादपद्मस्य सान्निध्यं शीतलं
गृहम् ॥
भवपान्थजनानां वै प्रापिकेयं प्रबोधनी ।
कथं न सेव्यते मूढैर्मथुरायां किमन्यतः
॥” * ॥
अथ विशेषतः प्रबोधन्यां
श्रीभगवत्पूजादि-
माहात्म्यम्। स्कान्दे तत्रैव
प्रबोधनीमाहात्म्ये।
“येऽर्च्चयन्ति नरास्तस्यां भक्त्या
देवन्तु माधवम्।
समुपोष्य प्रमुच्यन्ते पापैस्ते
समुपार्ज्जितैः ॥
बाल्ये यच्चार्ज्जितं वत्स ! यौवने
बार्द्धके च यत्।
सप्तजन्मकृतं पापं स्वल्पं वा यदि वा बहु
॥
शुष्कार्द्रं मुनिशार्द्दूल ! सुगुह्यमपि
नारद ! ।
तत् क्षालयति गोविन्दस्तिथौ तस्यां
प्रपूजितः ॥”
किञ्च ।
“प्रबोधवासरे विष्णोः कुरुते च हरेः
कथाम्।
सप्तद्वीपावनीदाने यत् फलं तद्भवेन्मुने !
॥”
वाराहे च ।
“कौमुदस्य तु मासस्य या सिता द्वादशी
भवेत्।
अर्च्चयेद्यस्तु मां तत्र तस्य पुण्यफलं
शृणु ॥
यावल्लोका हि वर्त्तन्ते यावत्त्वञ्चैव
माधवि ! ।
मद्भक्तो जायते तावदत्यभक्तो न जायते
॥” * ॥

पाद्मे ।
“पौष्णशेषो यदा नाह्नि मैत्राद्यमपि नो
निशि ।
द्वादश्यामपि तत् कुर्य्यादुत्थानं शयनं
हरेः ॥
निशि स्वापो दिवोत्थानं सन्ध्यायां
परिवर्त्तनम्।
अन्यत्र पादयोगेऽपि द्वादश्यामेव कारयेत्
॥”
वाराहे च ।
“अपादनियमस्तत्र स्वापे वा परिवर्त्तने ।
पादयोगो यदा न स्यादृक्षेणापि तदा
भवेत् ॥”
किञ्च स्कान्दे ।
“रेवत्यन्तो यदा रात्रौ द्वादश्या च
समन्वितः ।
तदा विबुध्यते विष्णुर्दिनान्ते प्राप्य
रेवतीम् ॥
रेवत्यादिरथान्तो वा द्वादश्या च विना
भवेत् ।
उभयोरप्यभावे तु सन्ध्यायाञ्च महोत्सवः
॥”
वाराहे च ।
“द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे
।
आ-भा-का-सितपक्षेषु
शयनावर्त्तनादिकम् ॥”
अतएव पुष्करपुराणे ।
“यस्य यस्य तु देवस्य यन्नक्षत्रं तिथिश्च
या ।
तस्य देवस्य तस्मिंश्च
शयनावर्त्तनादिकम् ॥” * ॥
अथ भगवत्प्रबोधनविधिः।
“शयन्यामिव निष्पाद्य महापूजां जलाशये
।
कृष्णं नीत्वाथ सङ्कल्पं कृत्वा तञ्च
प्रबोधयेत् ॥”
तत्र मन्त्रः ।
“ब्रह्मेन्द्ररुद्राग्निकुवेरसूर्य्य-

उत्थाय विश्वविजयाय च नो विषादं
माध्व्या गिरापनयतात् पुरुषः पुराणः ॥”
इति ।
“ततः पुष्पाञ्जलिं दत्त्वा संस्थाप्य विधिवत्
प्रभुम्।
नीराज्य न्यासपूर्ब्बञ्च वस्त्रादीनि समर्पयेत् ॥”
तथा च ब्राह्मे ।
“एकादश्यान्तु शुक्लायां कार्त्तिके मासि
केशवम्।
प्रसुप्तं बोधयेद्रात्रौ भक्तिश्रद्धासमन्वितः ॥
नृत्यैर्गीतैस्तथा वाद्यैरृग्यजुःसाममङ्गलैः ।
विना पणवशब्दैश्च पुराणश्रवणेन च ॥
वासुदेवकथाभिश्च स्तोत्रैरन्यैश्च वैष्णवैः ।
सुभाषितैरिन्द्रजालैर्भूमिशोभाभिरेव च ॥
पुष्पैर्धपैश्च नैवेद्यैर्दीपवृक्षैः सुशोभनैः ।
होमैर्भक्षैरपूपैश्च फलैः शाकैश्च पायसैः ॥
इक्षोर्विकारैर्मधुना द्राक्षाक्षौद्रैः सदाडिमैः ।
कुठेरकस्य मञ्जर्य्या मालत्या नवनेन च ॥”
नवनं पुष्पविशेषः ।
“हृद्याभ्यां श्वेतरक्ताभ्यां चन्दनाभ्याञ्च सर्व्वदा
।
कुङ्कुमालक्तकाभ्याञ्च रक्तसूत्रैः सकुङ्कुमैः ॥
तथा नानाविधैः पुष्पैर्द्रव्यैर्वीरक्रयाहृतैः ॥”
एवमेव प्रायः पाद्मे च ! तथा स्कान्दे च ।
“बहुपुष्पैर्बहुफलैः कर्पूरागुरुकुङ्कुमैः ॥
हरेः पूजा विधातव्या कार्त्तिके बोधवासरे ॥”
इति ॥
“इत्थं कृत्वा महापूजां महानीराजनं तथा ।
स्वव्रतान्यर्पयेत् कृष्णे सपुष्पाक्षतवारिणा ॥
वेदस्तुत्यादिना स्तुत्वा स्वस्त्यस्त्वित्यादिना
प्रभुम्।
संप्रार्थ्य गीतवाद्यादिघोषैरारोहयेद्रथम् ॥”
तथा च भविष्योत्तरे श्रीकृष्णयुधिष्ठिरसंवादे ।
“महातूर्य्यरवै रात्रौ भ्रामयेत् स्यन्दने स्थितम्
॥
उत्थितं देवदेवेशं नगरे पार्थिवः स्वयम्।
दीपोद्योतकरे मार्गे नृत्यगीतसमाकुले ॥”
अथ रथयात्रामाहात्म्यं भविष्योत्तरे तत्रैव ।
“यं यं दामोदरः पश्येदुत्थितो धरणीधरः ।

तस्या अनुष्ठानं यथा, --
ब्रह्मोवाच ।
“शृणु मे भक्तितः पुत्र ! बोधन्येकादशी हरेः ।
उपोष्या येन विधिना तं विप्र ! प्रवदामि ते ॥
कार्त्तिके शुक्लपक्षे तु दशम्यां नियतः शुचिः ।
स्नात्वा देवार्च्चनं कृत्वा वह्निकार्य्यं यथाविधि ॥
आचान्तः सुप्रसन्नात्मा हविष्यान्नं सुसंस्कृतम् ।
भुक्त्वाचम्य स्वपेत् सम्यक् कृत्वा शौचञ्च पादयोः ॥
रात्रेश्च पश्चिमे यामे समुत्थाय यथाविधि ।
कृत्वा मूत्रपुरीषे तु शौचं कुर्य्यादतन्द्रितः ॥
कृत्वाष्टाङ्गुलमात्रन्तु क्षीरवृक्षसमुद्भवम् ।
भक्षयेद्दन्तकाष्ठञ्च स्नात्वाचामेत् प्रयत्नतः ॥
मृष्ट्वाङ्गानि तथाद्भिश्च चिरं ध्यायेज्जनार्द्दनम् ।
अतसीपुष्पसङ्काशं कमलाक्षं चतुर्भुजम् ॥
शङ्खचक्रगदाशार्ङ्गपीतवस्त्रं किरीटिनम् ।
प्रसन्नवदनं देवं सर्व्वलक्षणलक्षितम् ॥
ततश्चानुदये वारिहस्तेन परिगृह्य च ।
कुशान्वितं प्रगृह्णीयात् नियमं विष्णुतुष्टये ॥
ध्यात्वा जलं गृहीत्वा तु भानुरूपं जनार्द्दनम् ।
दृष्ट्वार्घ्यं दापयेत् पश्चात् करतोयेन मानवम् ॥
एवमुच्चारयेद्वाचं तस्मिन् काले महामुने ! ।
एकादश्यां निराहारः स्थित्वा चैवापरेऽहनि ।
भोक्ष्येऽहं पुण्डरीकाक्ष ! शरणं मे भवाच्युत ! ॥
सोमादिभिर्वन्दितपादपद्मः ।
बुध्यस्व देवेश जगन्निवास !
मन्त्रप्रभावेण सुखेन देव ! ॥”
इत्यन्तु द्वादशी देव प्रबोधार्थं विनिर्म्मिता ।
त्वयैव सर्व्वलोकानां हितार्थं शेषशायिना ॥
उत्तिष्ठोत्तिष्ठ गोविन्द ! त्यज निद्रां जगत्पते ! ।
त्वयि सुप्ते जगत् सुप्तमुत्थिते चोत्थितं भवेत् ॥
गता मेघा वियच्चैव निर्म्मलं निर्म्मला दिशः ।
शारदानि च पुष्पाणि गृहाण मम केशवेति ॥”
उत्तिष्ठोत्तिष्ठेत्यत्र क्वचिच्चैवम् ।
“त्वयि सुप्ते जगन्नाथे जगत् सुप्तं भवेदिदम् ।
उत्थिते चेष्टते सर्व्वमुत्तिष्ठोत्तिष्ठ माधवेति ॥”
वाराहे च ।
“ब्रह्मेन्द्ररुद्रैरवितर्क्यभावो
भवानृषिर्वन्दितवन्दनीयः ।
प्राप्ता तव द्वादशी कौमुदाख्या
जागृष्व जागृष्व च लोकनाथ ! ॥
मेघा गता निर्म्मलपूर्णचन्द्रः
शारद्यपुष्पाणि च लोकनाथ ! ।
अहं ददानीति च भक्तिहेतो-
र्जागृष्व जागृष्व च लोकनाथ ! ॥”
श्रुतिश्च । “इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं
समूढमस्य पांशुले” इत्यादि ।
“ततस्तल्पात् समुत्थाप्य कृष्णं घण्टादिनिस्वनैः ।
तीरे सुखं निवेश्याथ प्रार्थयेत्तदनुग्रहम् ॥
तथा हि तृतीयस्कन्धे श्रीब्रह्मस्तुतौ ।
“सोऽसावदभ्रकरुणो भगवान् विवृद्ध-
प्रेमस्मितेन नयनाम्बुरुहं विजृम्भन् ।
तं तं प्रदेशं राजेन्द्र ! सर्व्वं स्वर्गाय कल्पयेत् ॥”
किञ्च ।
“यावत्पदानि कृष्णस्य रथस्याकर्षणं नरः ।
करोति क्रतुभिस्तानि तुल्यानि नरनायक ! ॥
रथस्थं ये निरीक्षन्ते कौतुकेनापि केशवम् ।
देवतानां गणाः सर्व्वे भवन्ति श्वपचादयः ॥
स्त्रियोऽपि मुक्तिमायान्ति रथयात्रापरायणाः
पितृमातृभर्त्तृकुलं नयन्ति हरिमन्दिरम् ॥
कुर्व्वन्ति नर्त्तकीरूपं रथाग्रे कौतुकान्वितम् ।
अप्सरोभिः सह क्रीडां कुर्व्वन्तीन्द्राश्चतुर्द्दश ॥
ये रथाग्रे प्रकुर्व्वन्ति गीतवाद्यादि मानवाः ।
देवलोकात् परिभ्रष्टा जायन्ते मण्डलेश्वराः ॥
मौल्येन स्यन्दनस्याग्रे गायमानाश्च गायकाः ।
वादकैः सह राजेन्द्र ! प्रयान्ति हरिमन्दिरम्
रथोत्सवे मुकुन्दस्य येषां हर्षोऽपि जायते ।
तेषां न नारकी पीडा यावदिन्द्राश्चतुर्द्दश ॥
रथोत्सवस्य माहात्म्यं कलौ वितनुत हि यः ।
पुण्यबुद्ध्या विशेषेण लोभेनाप्यथवा नरः ॥

| | | |
|---|---|---|
| एवमुक्त्वा ततः सम्यक् नित्यकर्म्म सुकर्म्मधीः ।<br>समर्पयेद्विधानेन विष्णुं संपूजयेन्मुने ! ॥<br>सहस्रसंख्यया सुस्थः सावित्रीं संजपेद्द्विजः ।<br>सर्व्वपापक्षयकरीं ब्रतस्य परिपूर्त्तये ॥”<br>इति पाद्मोत्तरखण्डे १२६ अध्यायः ॥<br>* ॥<br>अथ प्रबोधकालनिर्णयः । भविष्ये ।<br>“आ-भा-का-सितपक्षेषु मैत्रश्रवणरेवती ।<br>आदिमध्यावसानेषु प्रस्वापावर्त्तनादिकम् ॥” | | |

सप्तद्वीपसमुद्रान्ता रत्नधान्यसमन्विता।
सशैलवनपुष्पाढ्या तेन दत्ता मही भवेत् ॥”
अन्यत्र च ।
“बोधनी जगदाधारा कार्त्तिके शुक्लपक्षतः ।
रथस्थो यत्र भगवांस्तुष्टो यच्छति वाञ्छितम्
॥
भजन्ते ये रथारूढं देवं सर्व्वेश्वरेश्वरम् ।
तेषां यात्रा कृता नृणां कामानिष्टान् प्रयच्छति
॥
श्रीकृष्णरथशोभां ये प्रकुर्व्वन्ति प्रहर्षिताः ।
तेषां मनोरथावाप्तिं यच्छते पुरुषोत्तमः ॥
कृष्णस्य रथशोभां ये प्रकुर्व्वन्ति स्वशक्तितः
।
वाञ्छितं तेभ्यो यच्छन्ति नित्यं सूर्य्यादयो
ग्रहाः ॥
कृष्णस्य रथशोभां ये प्रकुर्व्वन्ति सुहर्षिताः ।
पदे पदे तथा पुत्र ! पुण्यं तेषां प्रयागजम् ॥
रथयात्रास्थिते कृष्णे जयेति प्रवदन्ति ये ।
जयेति च पुनर्ये वै शृणु पुण्यं वदाम्यहम् ॥
गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे ॥
वाराणस्यादितीर्थेषु देवानाञ्चैव दर्शने ।
यत् पुण्यं कविभिः प्रोक्तं कार्त्स्न्येन च
नरेश्वर ! ॥
जयशब्दे कृते विष्णौ रथस्थे तत् फलं
स्मृतम् ।
रथस्थितो नरैर्यस्तु पूजितो धरणीधरः ।
यथालाभोपपन्नैश्च पुष्पैर्भक्त्या समर्च्चितः ॥
ददाति वाञ्छितान् कामानन्ते च परमं
पदम् ।
मङ्गलं ये प्रकुर्व्वन्ति धूपदीपांस्तथा स्तवम् ॥
नैवेद्यं वस्त्रपूजाञ्च भक्त्या नीराजनं हरेः ।
रथारूढस्य कृष्णस्य संप्राप्ते हरिवासरे ॥
फलं न तन्मया ज्ञातं जानाति यदि केशवः ।
ब्रह्मस्वहारी गोघ्नश्च भ्रूणहा ब्रह्मनिन्दकः ॥
महापातकयुक्तोऽपि ब्रह्महा गुरुतल्पगः ।
मद्यपः सर्व्वपापोऽपि कलिकालेन मोहितः ॥
रथाग्रतः पदैकेन मुच्यते सर्व्वपातकैः ॥”
किञ्चान्यत्र ।

हेमैः कुम्भैः पताकाशिवतररुचिभिर्भूषितः
केतुमुख्यै-
श्छत्रैर्ब्रह्मेशवन्द्यो दुरितहरहरेः पातु जैत्रो
रथो वः ॥
मोदन्तां सुजना ह्यनिन्दितधियः
स्रस्ताखिलो-
पद्रवाः
स्वस्थाः सुस्थिरबुद्धयः प्रतिहतामित्रा
रमन्तां
मुखम् ।
रेदैत्या गिरिगह्वराणि गहनान्याशु व्रजध्वं
भया-
द्दैत्यारिर्भगवानयं यदुपतिर्यानं समारोहति ॥
पलायध्वं पलायध्वं रे रे दितिजदानवाः ।
संरक्षणाय लोकानां रथारूढो नृकेशरी ॥
ततो विचित्रगद्यानि पठित्वाथ महाप्रभोः ।
महाप्रसादमालाञ्च स्वीकुर्य्यात् परया मुदा
॥”
तन्माहात्म्यञ्चोक्तम् ।
“भक्त्या गृह्णाति यो मालां वैष्णवीं मङ्गला-
श्रयाम् ।
न तेषां दुर्लभं किञ्चिदिह लोके परत्र च ॥
तस्मात् सर्व्वप्रयत्नेन सर्व्वकामसमृद्धये ।
मालामेतां प्रगृह्णीयात् सौख्यमोक्षप्रदायि-
नीम् ॥”
इति ॥
“संचिन्त्याकृष्यमाणञ्च श्रीप्रह्लादादिभी रथम्
।
आकृष्य प्रेरयन् पूर्य्यां भ्रामयेद्वैष्णवैः सह ॥”
तथा च भविष्योत्तरे तत्रैव ।
“नृत्यमानैर्भागवतैर्गीतवादित्रनिस्वनैः ।
भ्रामयेत् स्यन्दनं विष्णोः पुरमध्ये समन्ततः
॥”
किञ्च ।
“प्रबोधवासरे प्राप्ते कार्त्तिके पाण्डुनन्दन ! ।
देवालयेषु सर्व्वेषु पुर्मध्ये समन्ततः ॥
भ्रामयेत्तूर्य्यनिघोषै रथस्थं धरणीधरम् ॥”
किञ्च ।
“रथागमे मुकुन्दस्य पुरशोभान्तु कारयेत् ।

अन्यत्र ।
“नानुव्रजति यो मोहाद्व्रजन्तं
जगदीश्वरम् ।
ज्ञानाग्निदग्धकर्म्मापि स
भवेद्ब्रह्मराक्षसः ॥”
इति ॥
“अथ स्वमन्दिरं नीत्वा पूर्ब्बवत्
पूजयेत् प्रभुम् ।
रात्रौ जागरणं कुर्य्याद्विधिवद्वैष्णवैः
समम् ॥”
अथ प्रबोधनीजागरणमाहात्म्यम् ।
स्कान्दे तत्रैव ।
“पूर्ब्बजन्मसहस्रेषु पापं यत्
समुपार्ज्जितम् ।
जागरेण प्रबोधन्यां दह्यते तूलराशिवत्
॥
कृत्वापि पातकं घोरं ब्रह्महत्यादिकं
नरः ।
कृत्वा जागरणं विष्णोर्धूतपापो
भवेन्मुने ! ॥
कर्म्मणा मनसा वाचा पापं यत्
समुपार्ज्जितम् ।
क्षालयेत्तच्च गोविन्दः प्रबोधन्यान्तु
जागरे ॥
दुष्प्राप्यं यत् फलं
विप्रैरश्वमेधादिभिर्मखैः ।
प्राप्यते तत् सुखेनैव प्रबोधन्यान्तु
जागरे ॥
आप्लुत्य सर्व्वतीर्थानि दत्त्वा गां
काञ्चनीं महीम् ।
न तत् फलमवाप्नोति यत् कृत्वा
जागरं हरेः ॥
चन्द्रसूर्य्योपरागे तु यत् फलं
परिकीर्त्तितम् ।
तत्सहस्रगुणं पुण्यं प्रबोधन्यान्तु जागरे
॥
स्नानं दानं तपो होमः
स्वाध्यायश्चार्च्चनं हरेः ।

"रथारूढे महाविष्णौ ये कुर्व्वन्ति जयस्वनम्
।
पूजाञ्चाखिलपापेभ्यो मुक्ता यान्ति हरेः पदम्
॥"
किञ्च ।
"रथस्याकर्षणं पूर्ब्बं कुरुते दैत्यनायकः ।
ततः सुराः सिद्धसङ्घा यक्षा गन्धर्व्वमानवाः ॥
इत्थञ्च रथयात्राया विधिर्व्यक्तः स्वतोऽभवत्
।
तथापि कश्चित्तत्रान्यो विशेषोऽपि वितन्यते
॥"
अथ रथयात्राविधिः ।
"श्रीकृष्णे तु रथारूढे कृत्वा जयजयध्वनिम्
।
निष्पाद्य च महापूजामाशीर्वाक्यानिकीर्त्त-
येत् ॥"
तथा च विष्णुधर्म्मे ।
"वक्त्रं नीलोत्पलरुचि लसत्कुण्डलाभ्यां
सुमृष्टं
चन्द्राकारं रचिततिलकं चन्दनेनाक्षतैश्च ।
गत्या लीलां जनसुखकरीं प्रेक्षणेनामृतौघं
पद्मावासां सततमुरसा धारयन् पातु विष्णुः ॥
युक्तः शैलादिवाहैर्मधुरतररणत्किङ्किणीजाल-
मालै-
रत्नौघैर्मौक्तिकानामविरतमणिभिःसंभृतैश्चैव
हारैः ।

सर्व्वतो रमणीयन्तु पताकैरुपशोभितम् ॥
तोरणैर्बहुभिर्युक्तैः रम्भास्तम्भैश्च शोभितम् ।
स्थाने स्थाने महीपाल ! कर्त्तव्यं
पुण्यसंयुतम् ॥
विचित्ररथशोभा च कर्त्तव्या भावितैर्नरैरिति
॥
रथेन गच्छन् भगवाननुगम्योऽखिलैर्जनैः ।
स्वस्वगेहागतश्चाच्च्योऽन्यथा दोषो महान्
भवेत् ॥" * ॥
अथ रथानुगमननित्यता । तत्रैव ।
"रथेन सह गच्छन्ति पार्श्वतः पृष्ठतोऽग्रतः ।
विष्णुनैव समाः सर्व्वे भवन्ति श्वपचादयः ॥
रथस्थं ये न गच्छन्ति भ्रममाणं जनार्द्दनम् ।
विप्राध्ययनसम्पन्ना भवन्ति श्वपचाधमाः
॥"
किञ्च ।
"येषां गृहागतो याति रथस्थो मधुसूदनः ।
पूजा तैस्तैः प्रकर्त्तव्या
वित्तशाठ्यविवर्ज्जितैः ॥
अनर्च्चितो यदा याति गृहाद्यस्य महीधरः ।
पितरस्तस्य विमुखा वर्षाणां दश पञ्च च ॥
यः पुनः कुरुते पूजां गृहायाते तु माधवे ।
वसते श्वेतद्वीपे तु यावदिन्द्राश्चतुर्द्दश ॥"

तत् सर्व्वं कोटिगुणितं प्रबोधन्यान्तु
जागरे ॥
समतीतं भविष्यञ्च वर्त्तमानं
कुलायुतम् ।
विष्णुलोकं नयत्याशु जागरेण
प्रबोधनी ॥
चलन्ति पितरो हृष्टा
विष्णुलोकमलङ्कृताः ।
विमुक्ता नारकैर्दुःखैः कर्त्तुः
कृष्णप्रजागरम् ॥
भार्य्यापक्षे तु ये जाता मातृतः
पितृतस्तथा ।
तारयेन्नात्र सन्देहः प्रबोधन्यां तु जागरे
॥"
किञ्च ।
"फलैर्नानाविधैर्द्रव्यैः प्रबोधन्यान्तु
जागरे ।
शङ्खे तोयं समादाय अर्घ्यं
दद्याज्जनार्द्दने ॥
यत् फलं सर्व्वदानेषु सर्व्वतीर्थेषु यत्
फलम् ।
तत् सर्व्वं कोटिगुणितं दत्त्वार्घ्यं
बोधवासरे ॥"
पाद्मे च तत्रैव ।
"अन्यत्रापि प्रिया विष्णोर्जागरे स्यात्
प्रबो-
धनी ।
किं पुनर्मथुरायां सा ततो वै
जन्मसद्मनि ॥
एकेवैकादशी कृष्णजन्मगेहे कृता नरैः
।
ततोऽधिकं न कर्त्तव्यं लोके किञ्चन
विद्यते ॥
रात्रौ जागरणं तत्र प्रीत्या कुर्व्वन्ति ये
नराः ।
संसारे मोहस्वप्नान्ते सदा जाग्रति
जाग्रति ॥"
किञ्च तत्रैव श्रीराधिकोपाख्यानान्ते।
"सुबोधनीजागरपुण्यवैभवात्
प्रसन्न ईशो विधिवाक्यसत्यकृत् ।
चकार रासोत्सवनर्त्तनं सह

| | | |
|---|---|---|
| | | वृन्दावनेऽन्याभिरपीह राधया ॥<br>सा नृत्यमानाद्भुतगोपरूपिणा<br>कृष्णेन जन्मान्तरवाञ्छितेन ।<br>राधा महाप्रेमजवाकुलेन्द्रिया<br>निन्येऽन्यलोकं कथया कृतार्थताम् ॥<br>तस्मात् सुबोधनीं कृत्वा रात्रौ कृत्वा<br>च जागरम् ।<br>सुप्तोत्थितं हरिं दृष्ट्वा का भीः<br>संसारजा द्विजाः ॥ |

मथुरायान्तु किं वाच्यं जागरे हरिसन्निधौ ।
कार्त्तिके वोधनीं प्राप्य ततः श्रेयः परं न हि ॥
मथुरायां प्रबोधन्यां कृतजागरणस्य हि ।
क्षणार्द्धदानतो वैश्योऽमोचयद्‌ब्रह्मराक्षसम्॥
जागरस्य च माहात्म्यं गीतवादित्रनर्त्तनम्।
हरेः प्रीतिकरं रात्रौ वक्तुं मे नैव शक्यते ॥
यस्तु गायति कृष्णाग्रे कौमुदीं द्वादशीं क्षणम् ।
सर्व्वलोकान् परित्यज्य विष्णुलोकं स गच्छति ॥”
अतएवोक्तं तत्रैव ।
“राज्यमन्यत्र संत्यज्य स्फीतं निहतकण्टकम्।
कार्त्तिके मथुरायां वै कौमुद्यां जागरं चरेत् ॥”
अथ पारणादिनकृत्यम् ।
“प्रातर्नित्यक्रियां कृत्वा शक्त्या संभोज्य भूसुरान् ।
गृह्णन् कृतव्रताच्छैद्रं प्रदद्याद्दक्षिणादिकम्॥
दानं यथाव्रतं तेभ्यो दत्त्वा पारणमाचरेत् ।
प्रवर्त्तयेच्च संत्यक्तं चातुर्मास्यव्रतेषु यत् ॥”
तथा च भविष्योत्तरे तत्रैव ।
“प्रभाते विमले स्नात्वा भोजयेदन्नविस्तरैः ॥
घृतक्षीरदधिक्षौद्रकासारगुडमोदकैः ।
अर्च्चयेच्चन्दनैश्चूर्णैः पुष्पैर्गन्धैर्द्विजोत्तमान् ॥
आचान्तेभ्यस्ततो दद्यात्त्यक्तं यत्किञ्चिदेव हि ।
प्राप्नोति सकलं तद्धि द्वादशद्वादशीं नरः ॥
जलपूर्णं तदा कुम्भं स्थापयित्वा विचक्षणः ।
पञ्चरत्नसमोपेतं घृतपात्रयुतं तथा ॥
तस्यां स्कन्धे तु धरितं मत्स्यरूपं जनार्द्दनम् ।
माषकेण सुवर्णेन सुतप्तेन वरानने ! ॥
स्नापयित्वा विधानेन कुङ्कुमेन विलेपितम् ।
पीतवस्त्रयुगच्छन्नं छत्रोपानद्युगान्वितम्॥
पूजयेत् कमलैर्देवि ! मद्भक्तः संजितेन्द्रियः ।
मत्स्यं कूर्म्मं वराहञ्च नारसिंहञ्च वामनम् ॥
रामं रामञ्च कृष्णञ्च बुद्धञ्चैव तु कल्किनम् ।
एवं दशावतारांश्च पूजयेद्भक्तिसंयुतः ॥
पुष्पैर्धूपैस्तथा दीपैर्नैवेद्यैर्विविधैरपि ।
संपूज्यैवमलङ्कारैर्विविधैः पूजनञ्चरेत् ॥
ततस्तस्याग्रतो देयं नैवेद्यं पाचितं चितम् ।
एवं संपूज्य गोविन्दं दिवापि कमलेक्षणम् ॥
रात्रौ चोत्थापनं कार्य्यं देवदेवस्य सुव्रते ! ।
प्रभाते विमले स्नात्वा भक्त्या संपूज्य केशवम् ॥
पुष्पधूपादिनैवेद्यैः फलैर्नानाविधैः शुभैः ।
ततस्तु पूजयेद्विद्वानाचार्य्यं भक्तिसंयुतः ॥
अलङ्कारोपहारैश्च वस्त्राद्यैश्च स्वशक्तितः ।
पूजयित्वा विधानेन तं देवं प्रतिपादयेत् ॥
जगदादे जगद्रूप अनादे जगदादिकृत् ।
जलशायिन् जगद्योने प्रीयतां मे जनार्द्दन ! ॥
अनेनैव विधानेन कुर्य्यादेकादशीं नरः ।
तस्य पुण्यं भवेद्यत्तु तच्छृणुष्व वसुन्धरे ! ॥
यदि वक्त्रसहस्राणां सहस्राणि भवन्ति हि ।
संख्यातुं नैव शक्यन्ते प्रबोधिन्यास्तथा गुणाः ॥
तथाप्युद्देशमात्रेण शक्त्या वक्ष्यामि तच्छृणु ।
चन्द्रतारार्कसङ्काशमधिष्ठायानुजीविभिः॥
“राजा प्रभञ्जनो नाम कुलेऽस्मिन् सम्बभूव ह ।
अपुत्त्रः प्रसवेनार्थी तपस्तेपे स उत्तमम् ॥”)
भञ्जनकर्त्तरि, त्रि ॥ (यथा, हरिवंशे । २४५ । १३ ।
“प्रभञ्जनो यो लोकानां युगान्ते सर्व्वनाशनः ॥”
यथा च महाभारते । १ । १२३ । १२ ।
“सा सलज्जा विहस्याह पुत्त्रं देहि सुरोत्तम ! ।
बलवन्तं महाकायं सर्व्वदर्पप्रभञ्जनम् ॥”)

**प्रभद्रः**, पुं, (प्रकृष्टं भद्रं यस्मात् ।) निम्बः । इति राजनिर्घण्टः ॥ (प्रकृष्टो भद्र इति प्रादि-समासः । श्रेष्ठे, त्रि ॥)

**प्रभद्रा**, स्त्री, (प्रकृष्टं भद्रं यस्मात् । टाप् ।) प्रसारिणी । इति राजनिर्घण्टः ॥

**प्रभवः**, पुं, (प्रभवत्यस्मादिति । प्र + भू + “अक-र्त्तरि च कारके” इत्यधिकारात् अपादानार्थे । “ऋदोरप् ।” ३ । ३ । ५७ । इति अप् ।) जन्महेतुः । पित्रादिः । आद्योपलब्धिस्थानम् ।
आद्योपलब्धये प्रथमज्ञानार्थं यत् स्थानं देशः सः । यथा । वाल्मीकिः श्लोकप्रभवः । हिमवान्
गङ्गाप्रभवः । इत्यमरभरतौ ॥ अपां मूलम् । मुनिभेदः । इति हेमचन्द्रः ॥ पराक्रमः । इति मेदिनी । वे, ४१ ॥ जन्म । इति शब्दरत्नावली ॥
(यथा, कुमारे । ५ । ८१ ।
“विवक्षता दोषमपि च्युतात्मना
त्वयैकमीशं प्रति साधु भाषितम् ।
यमामनन्त्यात्मभुवोऽपि कारणं
कथं स लक्ष्यप्रभवो भविष्यति ॥”
सृष्टिः । यथा, देवीभागवते । १ । १६ । २ ।
“महाशक्त्या प्रभावेन त्वं मां विस्मृतवान् पुरा ।
प्रभवे प्रलये जाते भूत्वा भूत्वा पुनः पुनः ॥”

सुवाचा सुमनोऽभीष्टपत्रपुष्पफलादिकम् ॥
चतुरो वार्षिकान्मासान् नियमं यस्य यत् कृतम् ।
कथयित्वा द्विजेभ्यस्तद्दद्याद्भक्त्या सुदक्षिणाम् ॥”
एवमेव पाद्मे । तत्रैव किञ्चाधिकम् ।
“चातुर्म्मास्यव्रते विप्राः पश्चादच्छिद्रवाचनम् ॥”
इति श्रीहरिभक्तिविलासे १६ विलासः ॥

**प्रबोधिनी**, स्त्री, (प्रबोधयति हरिमिति । प्र + बुध् + णिच् + णिनिः । ङीप् ।) प्रबोधनी । उत्थानैकादशी । यथा, --
वराह उवाच ।
“उपवासासमर्थानां सदैव पृथुलोचने ! ।
एका सा द्वादशी पुण्या उपोष्या या प्रबोधिनी ॥
तस्यामाराध्य विश्वेशं जगतामीश्वरेश्वरम् ।
प्राप्नोति सकलं तद्धि द्वादशद्वादशीफलम् ॥
पूर्ब्बभाद्रपदा योगे सैव वा द्वादशी भवेत् ।
अतीव महती तस्यां सर्व्वकृत्यमथाक्षयम् ॥
उत्तराङ्गारसहिता यदि चैकादशी भवेत् ।
तदा कोटिगुणं पुण्यं केशवाल्लभते फलम् ॥
सकृदेवार्च्चिते तस्यां सर्व्वं कृतमिहाक्षयम् ।
यथा प्रबोधिनी पुण्या तथा यस्यां स्वपेद्धरिः ॥
उपोष्या हि महाभागे ! अनन्तफलदा हि सा ।
शयने बोधने चैव हरेस्तु परिवर्त्तने ॥
उपोष्यैव विधानेन नरो निर्म्मलतां ब्रजेत् ।
सहैव यानमागच्छेन्मम लोकं वसुन्धरे ! ।
ततः कल्पसहस्रान्ते सप्तद्वीपेश्वरो भवेत् ॥
आयुरारोग्यसम्पन्नो जन्मातीतो भवेत्ततः ।
ब्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पगः ॥
पापान्येतानि सर्व्वाणि श्रवणेनैव नाशयेत् ॥
पश्येच्च धीमानधनोऽपि भक्त्या स्पृशेन्मनुष्य इह धीयमानः ।
शृणोति भक्तस्य मतिं ददाति विकल्मषः सोऽपि दिवं प्रयाति ॥
दुःस्वप्नं प्रशममुपैति पठ्यमाने माहात्म्ये भवभयहारके नरस्य ।
यः कुर्य्याद्व्रतवरमेतदव्ययाया बोधिन्याः किमुत फलन्तु तस्य वाच्यम् ॥
ते धन्यास्ते कृतार्थाश्च तैरेव सुकृतं कृतम् ।
तैरात्मजन्म सफलं कृतं ये व्रतकारकाः ॥”
इति वराहपुराणे प्रबोधिनीमाहात्म्यम् ॥

**प्रभञ्जनः**, पुं, (प्रकर्षेण भनक्ति वृक्षादीनिति । प्र + भन्ज् + युच् ।) वायुः । इत्यमरः । १ । १ । ६६ ॥
(यथा, महाभारते । ७ । १५४ । ७८ ।
“घटोत्कचसुतः श्रीमान् भिन्नाञ्जनचयोपमः ।
रुरोध द्रौणिमायान्तं प्रभञ्जनमिवाद्रिराट् ॥”
मणिपुराधिपतिराजविशेषः । यथा, महाभारते । १ । २१७ । १९ ।
साध्यभेदः । यथा, हरिवंशे । १९६ । ४४ ।
“धर्म्माल्लक्ष्म्युद्भवः कामः साध्यासाध्यान् व्यजायत ।
प्रभवं च्यवनञ्चैवमीशानं सुरभीन्तथा ॥”
त्रि, प्रभूतः । यथा, ऋग्वेदे । २ । ३८ । ५ ।
“नानौकांसि दुर्य्यो विश्वमायुर्वि तिष्ठते प्रभवः शोको अग्नेः ॥”
“प्रभवः प्रभूतो अग्नेः शोकस्तेजः ।” इति तद्भाष्ये सायनः ॥)

**प्रभविष्णुः**, पुं, (प्रभवितुं शीलमस्येति । प्र + भू + “भुवश्च ।” ३ । २ । १३८ । इति इष्णुच् ।) वटुक-भैरवस्याष्टोत्तरशतनामान्तर्गतनामविशेषः । यथा । “प्रभविष्णुः प्रभाववान् ।” इत्यादि विश्वसारतन्त्रे आपदुद्धारकल्पः ॥ प्रभुः । यथा,
“न भर्त्ता नैव च सुतो न पिता भ्रातरो न च ।
आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः ॥”
इति दायभागः ॥
प्रकर्षेण भवनशीले, त्रि ॥

**प्रभविष्णुता**, स्त्री, प्रभुता । प्रभविष्णुशब्दात् भावार्थे तप्रत्ययेन पदं निष्पन्नम् ॥ (यथा, राजतरङ्गिण्याम् । २ । ४७ ।
“यद्यसाध्यानि दुःखानि च्छेत्तुं न प्रभविष्णुता ।
तन्महीपाल ! महतां महत्त्वस्य किमङ्कनम् ॥”)

| तस्मात् सर्व्वप्रयत्नेन द्वादशीं समुपोषयेत् ॥<br>यदीच्छेत विशालाक्षि ! शाश्वतीं गतिमात्मनः ।<br>एकादशी सोमयुक्ता कार्त्तिके मासि भामिनि ! ।<br>उत्तराभद्रसंयोगे अनन्ता सा प्रकीर्त्तिता ॥<br>तस्यां यत् क्रियते भद्रे ! सर्व्वमानन्त्यमश्नुते ।<br>अनन्तपुण्यफलदा तेनानन्ता स्मृता प्रिये ! ॥<br>एकादशी भौमयुता यदा स्याद्भूतधारिणि ! ॥<br>स्नात्वा देवं समभ्यर्च्च्य प्राप्नोति परमं फलम् । | | |
|---|---|---|

**प्रभा**, स्त्री, (प्रकर्षेण भातीति । प्र + भा + “आत-
श्चोपसर्गे ।” ३ । ३ । १०६ । इति अङ् ।)
कुवेरपुरी । इति हेमचन्द्रः । २ । १०४ ॥ (प्र +
भा + भावे अङ् ।) दीप्तिः । तत्पर्य्यायः ।
रोचिः २ द्युतिः ३ शोचिः ४ त्विषा ५ ओजः ६
भाः ७ रुचिः ८ विभा ९ आलोकः १०
प्रकाशः ११ तेजः १२ रुक् १३ । इति राज-
निर्घण्टः ॥ * ॥ (यथा, रामायणे । २ । ३९ ।
१८ ।
“व्यराजयत वैदेही वेश्म तत् सुविभूषिता ।
उद्यतोऽंशुमतः काले खं प्रभेव विवस्वतः ॥”
तथा च महाभारते । ४ । १३ । १७ ।
“रतीव रूपिणी किन्त्वमनङ्गाङ्गविहारिणी ।
अतीव भ्राजसे सुभ्रु ! प्रभेवेन्दोरनुत्तमा ॥”)
गोपीविशेषः । यथा, --
“दृष्टस्त्वं प्रभया गोप्या युक्तो वृन्दावने वने ।
सद्योमत्शब्दमात्रेण तिरोधानं कृतं त्वया ॥
प्रभा देहं परित्यज्य जगाम सूर्य्यमण्डलम् ।
ततस्तस्याः शरीरञ्च तीव्रं तेजो बभूव ह ॥
संविभज्य त्वया दत्तं प्रेम्णाश्रु रुदता पुरा ।
विमृज्य चक्षुषोर्लोहं लज्जया मद्भयेन च ॥
हुताशनाय किञ्चिच्च नृपेभ्यश्चापि किञ्चन ।
किञ्चित् पुरुषसिंहेभ्यो देवेभ्यश्चापि किञ्चन ॥
किञ्चिद्दस्युजनेभ्यश्च नागेभ्यश्चापि किञ्चन ।
ब्राह्मणेभ्यो मुनिभ्यश्च तपस्विभ्यश्च किञ्चन ॥
स्त्रीभ्यः सौभाग्ययुक्ताभ्यो यशस्विभ्यश्च
किञ्चन ।
तच्च दत्वा तु सर्व्वेभ्यः पूर्ब्बं रोदितुमुद्यतः ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे । ११ । ५७ --
६२ ॥
दुर्गा । यथा, --
“यमस्य भगिनी जाता यमुना तेन सा मता ।
प्रभा प्रसादशीलत्वात् ज्योत्स्ना चन्द्रार्क-
मालिनी ॥”
इति देवीपुराणे ४५ अध्यायः ॥ * ॥
(इयं हि सूर्य्यविम्बे एतनाम्ना कीर्त्यते । यथा,
देवीभागवते । ७ । ३० । ८२ ।
“देवलोके तथेन्द्राणी ब्रह्मास्येषु सरस्वती ।
सूर्य्यविम्बे प्रभा नाम मातृणां वैष्णवी मता ॥”)
“तावतीत्य रथानीकं विमुक्तौ
पुरुषार्यभौ ।
ददृशाते यथा राहोरास्यान्मुक्तौ
प्रभाकरौ ॥”
“प्रभाकरौ चन्द्रसूर्य्यौ ॥”) समुद्रः ।
इति शब्द-
रत्नावली ॥ अर्कवृक्षः । इत्यमरः । १
। ३ । २८ ॥
(अष्टममन्वन्तरे देवगणभेदः । यथा,
मार्कण्डेय-
पुराणे । ८० । ६ ।
“तपस्तप्तश्च शक्रश्च द्युतिर्ज्योतिः
प्रभाकरः ॥”
अत्रिवंशीयमुनिविशेषः । यथा, हरिवंशे
।
३१ । १० ।
“ऋषिर्जातोऽत्रिवंशे तु तासां भर्त्ता
प्रभाकरः ।
भद्रायां जनयामास सुतसोमं
यशस्विनम् ॥”
नाभभेदः । यथा, महाभारते । १ ।
३५ । १५ ।
“कुठरः कुञ्जरश्चैव तथा नागः
प्रभाकरः ॥”
मीमांसकप्रभेदः । स च गुरुत्वेन
प्रसिद्धः ।
तस्य मतं दर्शनशास्त्रादौ
प्राभाकरमतमिति
प्रसिद्धम् । यदुक्तं वेदान्तसारे । ५३ ।
“प्राभाकर-
तार्किकौ तु‘अन्योऽन्तरात्मा
आनन्दमय’इत्यादि-
श्रुतेः सुषुप्तौ बुद्ध्यादीनामज्ञाने
लयदर्शनात्
अहमज्ञोऽहं ज्ञानीत्याद्यनुभवाच्च
अज्ञान-
मात्मेति वदतः ॥” क्ली,
कुशद्वीपस्थवर्षभेदः ।
यथा, मात्स्ये । १२१ । ६८ ।
तेजः । इति हेमचन्द्रः । ३ । ४०४ ॥
(यथा,
रामायणे । २ । २३ । ३८ ।
“अद्य मेऽस्त्रप्रभावस्य प्रभावः
प्रभविष्यति ।
राज्ञश्चाप्रभुतां कर्त्तुं प्रभुत्वञ्च तव प्रभो !
॥”)
शान्तिः । इति मेदिनी । वे, ४० ॥
(प्रभागर्भ-
जातः सूर्य्यपुत्त्रः । इति मात्स्ये । ११ ।
३ ॥
कलावत्यां जातः स्वरोचिषो मनोः
पुत्त्रविशेषः ।
यथा, मार्कण्डेये । ६६ । ५ ।
“ततश्च जज्ञिरे तस्य त्रयः पुत्त्राः
स्वरोचिषः ।
विजयो मेरुनन्दश्च प्रभावश्च महाबलः
॥”)

**प्रभावजः**, पुं, (प्रभावात् जायते इति । जन् +
डः ।) शक्तिविशेषः । प्रभावो वीर्य्याधिक्यं
तज्जातः । इत्यमरटीकासारसुन्दरी॥
प्रभुत्व-
साधकत्वात् दण्डकोषौ प्रभुशक्तिः । इति
भरतः ॥
(प्रभावजाते, त्रि । यथा, --
“रसादिसान्ये यत् कर्म्म विशिष्टं तत्
प्रभावजम् ।”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**प्रभावान्**, [त्] त्रि, (प्रभा अस्त्यस्येति । प्रभा +
मतुप् मस्य वः ।) प्रभायुक्तः । प्रभाशब्दा-
दस्त्यर्थे वतुप्रत्ययेन निष्पन्नम् ॥

**प्रभावती**, स्त्री, (प्रभावत् + ङीप् ।) मालिनाम-
कोनविंशवृत्तार्हन्माता । गणानां बीणा ।
इति
हेमचन्द्रः । २ । २०३ ॥
त्रयोदशाक्षरच्छन्दः ।

सूर्य्यपत्नी । यथा, --

सूत उवाच ।

"विवस्वान् कश्यपात् पूर्ब्बमदित्यामभवत् पुरा ।

तस्य पत्नीत्रयन्तद्वत् संज्ञा राज्ञी प्रभा तथा ॥

रेवतस्य सुता राज्ञी रेवन्तं सुषुवे सुतम् ।

प्रभा प्रभावं सुषुवे त्वाष्ट्री संज्ञा तथा मनुम् ॥"

इति मात्स्ये । ११ । २ -- ३ ॥

(द्वादशाक्षरवृत्तिविशेषः । तल्लक्षणं यथा, वृत्त-

रत्नाकरटीकायाम् ।

"वसुयुगविरतिर्न्नौ रौ प्रभा ॥")

**प्रभाकरः**, पुं, (प्रभां करोतीति । कृ + "दिवा-

विभानिशाप्रभेति ।" ३ । २ । २१ । इति टः ।)

सूर्य्यः । (यथा, रघौ । १० । ७४ ।

"कृशानुरपधूमत्वात् प्रसन्नत्वात् प्रभाकरः ।

रक्षोविप्रकृतावास्तामपविद्धशुचाविव ॥")

अग्निः । चन्द्रः । (यथा, महाभारते । ७ । ९९ ।

५ ।

"महिषं महिषस्यापि पुनश्चापि

प्रभाकरम् ॥")

**प्रभाकीटः**, पुं, (प्रभान्वितः कीट इति मध्यलोपी

समासः ।) खद्योतः । इति

राजनिर्घण्टः ॥

**प्रभाञ्जनः**, पुं, शोभाञ्जनः । इति हेमचन्द्रः ॥

**प्रभातं**, क्ली, (प्रकर्षेण भातुं प्रवृत्तमिति । प्र +

भा + आदिकर्म्मणि क्तः । यद्वा, प्रकृष्टं

भातं

दीप्तिरत्रेति ।) प्रातःकालः ।

तत्पर्य्यायः ।

प्रत्यूषः २ अहर्मुखम् ३ कल्यम् ४

उषः ५

प्रत्युषः ६ । इत्यमरः । १ । ४ । ३ ॥

दिनादिः ७

निशान्तम् ८ व्युष्टम् ९ प्रगे १० प्राह्णम्

११ ।

इति राजनिर्घण्टः ॥ गोसः १२

गोसङ्गः १३

ऊषः १४ ऊषकम् १५ उषा १६

ऊषा १७

विभातम् १८ । इति शब्दरत्नावली ॥

* ॥

(यथा, --

"प्रभाते यः स्मरेन्नित्यं दुर्गा

दुर्गाक्षरद्वयम् ।

आपदस्तस्य नश्यन्ति तमः सूर्य्योदये

यथा ॥"

इति धर्म्मशास्त्रम् ॥)

तत्र दर्शनीया यथा, --

"वैद्यः पुरोहितो मन्त्री दैवज्ञोऽथ

चतुर्थकः ।

प्रभातकाले द्रष्टव्यो नित्यं

स्वश्रियमिच्छता ॥"

इति राजवल्लभः ॥

**प्रभावः**, पुं, (प्र + भू + घञ् ।) कोषदण्डजतेजः ।

तत्पर्य्यायः । प्रतापः २ । इत्यमरः ।

२ । ८ । २० ॥

यथा, श्रुतबोधे । ३ । २ ।

"यस्यां प्रिये ! प्रथमकमक्षरद्वयं

तुर्य्यन्तथा गुरु नवमं दशान्तिमम् ।

सान्त्यं भवेद्यतिरपि चेद्युगग्रहैः

सालक्ष्यताममृतरुते ! प्रभावती ॥"

(सूर्य्यपत्नी । यथा, महाभारते । ५ ।

११७ । ८ ।

"रेमे स तस्यां राजर्षिः प्रभावत्यां यथा

रविः ॥"

कुमारानुचरमातृगणविशेषः । यथा, तत्रैव ।

९ । ४६ । ३ ।

"प्रभावती विशालाक्षी पलिता गोनसी

तथा ॥"

वज्रनाभासुरस्य कन्या । सा तु प्रद्युम्नेन

विवा-

हिता । यथा, हरिवंशे । १४८ । ४१ ।

"तस्यास्ति कन्यारत्नं हि त्रैलोक्यातिशयं

शुभम् ।

नाम्ना प्रभावती नाम चन्द्राभेव प्रभावती ॥"

अङ्गेश्वरचित्ररथस्य स्वनामख्याता

भार्य्या ।

यथा, महाभारते । १३ । ४२ । ८ ।

"तस्या हि भगिनी तात ! ज्येष्ठा नाम्ना

प्रभावती ।

भार्य्या चित्ररस्थास्य बभूवाङ्गेश्वरस्य च ॥")

**प्रभाषः**, पुं, (प्रभाषते यः सः । प्र + भाष् + अच् ।)

वसुभेदः । इति जटाधरः ॥ (यथा, महा-

मारते । १ । ६६ । १८ ।

"प्रत्यूषश्च प्रभाषश्च वसवोऽष्टाविति

स्मृताः ॥"

प्र + भाष् + भावे घञ् ।) प्रकृष्टकथनञ्च ॥

**प्रभासः**, पुं, (प्रभासते शोभते इति । प्र + भास् +

अच् ।) सोमतीर्थम् । इति त्रिकाण्डशेषः ॥

(यथा, महाभारते । ३ । ८२ । ५६ --

५७ ।

|  |  |  |
|---|---|---|
|  | “कोषो धनं दण्डो दमः तद्धेतुत्वात् सैन्यमपि दण्डः ताभ्यां यत्तेजो जायते स प्रतापः प्रभा- वश्च कथ्यते ।” इति भरतः ॥ शक्तिः । (यथा, -- “प्रभावतो यथा धात्री लकुचस्य रसादिभिः । समापि कुरुते दोषत्रितयस्य विनाशनम् ॥ क्वचित्तु केवलं द्रव्यं कर्म्म कुर्य्यात् प्रभावतः । ज्वरं हन्ति शिरोबद्धा सहदेवी जटा यथा ॥” इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥) | “ततो गच्छेत राजेन्द्र ! प्रभासं तीर्थमुत्तमम् । तत्र सन्निहितो नित्यं स्वयमेव हुताशनः । देवतानां मुखं वीर ! ज्वलनोऽनिलसारथिः ॥ |

तस्मिंस्तीर्थे नरः स्नात्वा शुचिः
प्रयतमानसः ।
अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति
मानवः ॥”)
जैनगणाधिपविशेषः । इति हेमचन्द्रः ।
१ । ३२ ॥
(वसुभेदः । यथा, मात्स्ये । ५ । २१ ।
“प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ
प्रकीर्त्तिताः ॥”)

**प्रभिन्नः**, पुं, (प्र + भिद् + क्त ।) क्षरन्मदहस्ती ।

तत्पर्य्यायः । गर्ज्जितः २ मत्तः ३ ।
इत्यमरः ।
२ । ८ । ३६ ॥ भ्रान्तः ४ मदकलः ५
। इति
राजनिर्घण्टः ॥ (यथा, रामायणे । २ ।
१५ । ४६ ।
“ततो महामेघमहीधराभं
प्रभिन्नमत्यङ्कुशमत्यसह्यम् ।
रामोपवाह्यं रुचिरं ददर्श
शत्रुञ्जयं नागमुदग्रकायम् ॥”
तथा च महाभारते । ७ । २७ । २० ।
“यथा नलवनं क्रुद्धः प्रभिन्नः
षष्टिहायनः ।
मृद्नीयात्तद्वदायस्तः
पार्थोऽमृद्नाच्चमून्तव ॥”)
प्रकृष्टभेदविशिष्टे, त्रि ॥ (यथा,
ऋतुसंहारे । २ । ५ ।
“प्रभिन्नवैदूर्य्यनिभैस्तृणाङ्कुरैः
समाचिता प्रोत्थितकन्दलीदलैः ॥”)

**प्रभुः**, पुं, (प्रभवतीति । प्र + भू + डुः ।) विष्णुः
।

इति शब्दरत्नावली ॥ (शिवः । यथा,
महा-
भारते । १३ । १७ । ३१ ।
“हरश्च हरिणाक्षश्च सर्व्वभूतहरः प्रभुः
॥”)
पारदः । इति राजनिर्घण्टः ॥ शब्दः ।
इति

“तत्राभूदभिभूतप्रभूतमायानिकायशतधूर्त्तः ।
सकलकलानिलयानां धुर्य्यः श्रीमूलदेवाख्यः
॥”)
उद्गतम् । इति मेदिनी । ते, १२१ ॥ भूतम् ।
उन्नतम् । इति शब्दरत्नावली ॥

**प्रभूष्णुः**, त्रि, (प्रभवतीति । प्र + भू + “ग्लाजि-

ख्यश्च ग्स्नुः ।” ३ । १ । १३९ । इति ग्स्नुः ।)
क्षमः । शक्तः । इति हेमचन्द्रः । ३ । १५५ ॥

**प्रभृति**, व्य (प्र + भृ + क्तिच् ।) तदादिः । यथा,

“तबःप्रभृति पितरः पिण्डसंज्ञान्तु लेभिरे ॥”
इति तिथ्यादितत्त्वम् ॥

**प्रभेदः**, पुं, (प्र + भिद् + घञ् ।) भेदः । तत्-

पर्य्यायः । प्रकारः २ विशेषः ३ भिदा ४
अन्तरम् ५ । इति जटाधरः ॥ (यथा, सुश्रुते
निदानस्थाने १० अध्याये ।
“पित्तात्मको द्रुतगतिर्ज्वरदाहपाक-
स्फोटप्रभेदबहुलः क्षतजप्रकाशः ॥”
स्फोटनम् । यथा, रघुः । ३ । ३७ ।
“बभूव तेनातितरां सुदुःसहः
कटप्रभेदेन करीव पार्थिवः ॥”)

**प्रभ्रष्टकं**, क्ली, (प्र + भ्रंश् + क्तः । ततः स्वार्थे

कन् ।) शिखालम्बिमाल्यम् । चूडातो लम्बमान-
माल्यम् । इत्यमरभरतौ । २ । ६ । १३५ ॥

**प्रमत्तः**, त्रि, (प्रमाद्यति स्मेति । प्र + मद् + गत्य-

र्थेति क्तः । नध्याख्येति नत्वाभावः ।) प्रमादी ।
अनवधानतायुक्तः । यथा, --
“मत्तं प्रमत्तमुन्मत्तं सुप्तं बालं स्त्रियं जडम् ।
प्रपन्नं विरथं भीतं न रिपुं हन्ति धर्म्मवित् ॥”
इति श्रीभागवते १ स्कन्धे ७ अध्यायः ॥
“मत्तं मद्यादिना । प्रमत्तमनवहितम् । उन्मत्तं
ग्रहवातादिना । जडं अनुद्यमम् । प्रपन्नं शरणा-
गतम् । विरथं भग्नरथम् ।” इति श्रीधरस्वामी ॥
अपरप्रमत्तो यथा, --
“सन्ध्यापूजाविहीनश्च प्रमत्तः पतितः स्मृतः ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २७ अध्यायः ॥
स च राज्ञा नाह्वानयितव्यः । यथा, --

तदैव ते पारिषदाः सर्व्वे संबेष्टयन्ति तम्
॥
ते षोडश समाख्याताः कोटयो ये
धृतव्रताः ।
सिंहव्याघ्रादिसारूप्या
अणिमादिसमायुताः ॥ * ॥
अपरे कामिनः शम्भोः सुनर्म्मसचिवाः
स्मृताः ।
विचित्ररूपाभरणा जटाचन्द्रार्द्धमण्डिताः
॥
हरस्य तुल्या रूपेण विशदा
वृषभध्वजाः ।
उमासदृशरूपाभिः प्रमदाभिः समागताः
॥
विचित्रमाल्याभरणा
दिव्यस्रग्गन्धभूषणाः ।
उमासहायं क्रीडन्तमनुगच्छन्ति
भूषिताः ।
शृङ्गारवेशाभरणा अष्टौ ते कोटयो गणाः
॥ * ॥
अर्द्धनारीश्वराश्चान्ये ह्यर्द्धनारीश्वरं
हरम् ।
अनुयान्ति महाभागास्तुल्यरूपा हरस्य
ये ॥
उमासहायो हि यदा रमते स्म सुखं हरः
।
अर्द्धनारीशरीरास्तु द्वारपाला भवन्ति ते
॥
आकाशमार्गे गच्छन्तमनुगच्छन्ति
नित्यशः ।
ध्यानस्थं परिचर्य्यन्ति
सलिलादिभिरीश्वरम् ॥
नानाशस्त्रधराः शम्भोर्गणास्तु प्रमथाः
स्मृताः ।
प्रमथ्नन्ति च युद्धेषु
युध्यमानान्महावलान् ।
ते वै महाबलाः शूराः संख्यया
नवकोटयः ॥ * ॥
अपरे गायनास्तालमृदङ्गपणवादिभिः ।

धरणिः ॥

**प्रभुः**, त्रि, (प्रभवतीति । प्र + भू + "विप्रसंभ्यो

ड्वसंज्ञायाम् ।" ३ । २ । १८० । इति डुः ।)
अधिपतिः । तत्पर्य्यायः । स्वामी २ ईश्वरः ३
पतिः ४ ईशिता ५ अधिभूः ६ नायकः ७
नेता ८ परिवृढः ९ अधिपः १० । इत्यमरः ।
३ । १ । ११ ॥ पालकः ११ । इति शब्दरत्ना-
वली ॥ (यथा, भगवद्गीतायाम् । ५ । १४ ।
"न कर्त्तृत्वं न कर्म्माणि लोकस्य सृजति प्रभुः ।
न कर्म्मफलसंयोगं स्वभावस्तु प्रवर्त्तते ॥")
नित्यः । इति धरणिः ॥ शक्तः । इति नानार्थ-
रत्नमाला ॥ (यथा, कुमारे । ३ । ४० ।
"आत्मेश्वराणां न हि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति ॥"
श्रेष्ठः । यथा, मनौ । १० । ३ ।
"वैश्येष्यात् प्रकृतिश्रैष्ठ्यात् नियमस्य च धार-
णात् ।
संस्कारस्य विशेषाच्च वर्णानां ब्राह्मणः प्रभुः ॥")

**प्रभुता**, स्त्री, (प्रभोर्भावः । प्रभु + तल् ।) प्रभु-

त्वम् । ऐश्वर्य्यम् । इति हलायुधः । ४ । १०० ॥

**प्रभुभक्तः**, पुं, (प्रभोर्भक्तः ।) उत्तमघोटकः । यथा,

"प्रभुभक्ता भक्तिलाश्च कुलीनेषु कुलोत्कटाः ॥"
इति शब्दचन्द्रिका ॥
स्वाम्यनुरक्ते, त्रि । यथा, चाणक्यसंग्रहे ।
"मत्तोन्मत्तप्रमत्तार्त्तभृत्यान्नाह्वानयेन्नृपः ॥"
इति मिताक्षरा ॥

**प्रमथः**, पुं, (प्रमथतीति । प्र + मथ् + अच् ।)

षोटकः । शिवपारिषदः । इति शब्दरत्ना-
वली ॥ स च षट्त्रिंशत्कोटिसंख्यकः । यथा,
"षट्त्रिंशत्तु सहस्राणि प्रमथा द्विजसत्तमाः ।
तत्रैकत्र सहस्राणि भागे षोडश संस्थिताः ॥
नानारूपधरा ये वै जटाचन्द्रार्द्धमण्डिताः ।
ते सर्व्वे सकलैश्वर्य्ययुक्ता ध्यानपरायणाः ॥
योगिनो मदमात्सर्य्यदम्भाहङ्कारवर्ज्जिताः ।
क्षीणपापा महाभागाः शम्भोः प्रीतिकराः पराः ॥
न ते परिग्रहं रागं काङ्क्षन्ति स्म कदाचन ।
संसारविमुखाः सर्व्वे यतयो योगतत्पराः ॥
ध्यानावस्थं महादेवं परिवार्य्य धृतव्रताः ।
कृत्वा परिवदं रुच्या तिष्ठन्ति विगतक्लमाः ॥
यदैव परमं ज्योतिश्चिन्तयत्यम्बिकापतिः ।
नृत्यन्ति वाद्यं कुर्व्वन्तो गायन्ति मधुरस्वरम् ॥
नानारूपधरास्ते वै संख्यया कोटयास्त्रयः ।
सततं चानुगच्छन्ति विचरन्तं महेश्वरम् ॥
सर्व्वे मायाविनः शूराः सर्व्वे शास्त्रार्थपारगाः ।
सर्व्वे सर्व्वत्र सर्व्वज्ञाः सर्व्वे सर्व्वत्रगाः सदा ॥
मुहूर्त्तात् सर्व्वभुवनं गत्वा यान्ति पुनः पुनः ।
अनिमाद्यष्टकैश्वर्य्ययुक्तास्ते वै महाबलाः ॥
अपरे रुद्रनामानो जटाचन्द्रार्द्धमण्डिताः ।
देवेन्द्रस्य नियोगेन वर्त्तन्ते त्रिदिवे सदा ॥
तेषां संख्या चैककोटिस्ते सर्व्वे बलवत्तराः ।
कुर्व्वन्ति हि सदा सेवां हरस्य सततं गणाः ॥
विस्मयन्ति च पापिष्ठान् धर्म्मिष्ठान् पालयन्ति
च ।
अनुगृह्णन्ति सततं धृतपाशुपतव्रतान् ॥
विघ्नांश्च सततं हन्ति योगिनां प्रयतात्मनाम् ।
षट्त्रिंशत् कोटयश्चैते हरस्य सकला गणाः ॥
वराहगणनाशार्थं हिताय जगतां तथा ।
शङ्करस्य च सेवायै समुत्पन्ना इमे गणाः ॥
वराहस्य गणान् दृष्ट्वा नरसिंहं तथा हरिम् ।
स्वयं सरभरूपः सन् ध्यायन् नादं यतोऽकरोत् ॥
तच्छीकराम्बुतो जातास्तत्तेषां बहुरूपता ।
क्रूरदृष्ट्या क्रूरयुद्धैः क्रूरकृत्यैरिमान् गणान् ॥

“बह्वाशी स्वल्पसन्तुष्टः सुनिद्रः शीघ्रचेतनः ।
प्रभुभक्तश्च शूरश्च ज्ञातव्याः षट् शुनो गुणाः ॥”

**प्रभूतं**, त्रि, (प्र + भू + क्तः ।) प्रचुरम् । इत्य-

मरः । ३ । १ ६३ ॥ (यथा, कलाविलासे । १ । ९ ।

वराहस्य हतेत्येवं यतः प्रोक्तं कपर्द्दिना ।
ततस्ते क्रूरकर्म्माणः प्रताजाश्च भयङ्कराः ॥
न सदा क्रूरकर्म्माणि ते कुर्व्वन्ति महौजसः ।
दृष्टिमात्रस्य ते क्रूराः क्रूरक्रूराश्च कार्य्यतः ॥
फलं जलं तथा पुष्पं पत्रं मूलं तथैव च ।
निवेदितानि भुञ्जन्ति वनपर्व्वतसानुषु ॥
आहृत्यापि च भुजन्ति पत्रं पुष्पादिकञ्च यत् ।
भवेद्वर्गस्य यद्भोग्यं तद्भोगास्ते महौजसः ॥
आमिषं नापि चाश्नन्ति हित्वा चैत्रचतुर्द्दशीम् ।
तत्रामिषं हरो भुङ्क्ते चतुर्द्दश्यां मधौ सदा ॥

ततः सर्व्वे गणास्तत्र भुञ्जन्ते पललान्यपि ।
हते वराहस्य गणे भर्गमासाद्य ते गणाः ।
चतुर्भागाः स्वयं भूत्वा भूतं कर्म्मेति वै जगुः ॥
भूतत्वमभवत्तेषां चतुर्भागवतां तदा ।
वचनात् पद्मजातस्य भूतग्रामास्ततो मताः ॥
यो लोकविदितः पूर्ब्बं भूतग्रामश्चतुर्व्विधः ।
यतस्तेभ्योऽधिका यत्नैस्तद्दृढग्राम उच्यते ॥
इति वः सर्व्वमाख्यातं भूताः शम्भुगणा यथा ।
यदाहारा यदाकारा यत्कृत्यास्ते महौजसः ॥
य इदं शृणुयान्नित्यमाख्यानं योगमुत्तमम् ।
स दीर्घायुः सदोत्माही योगयुक्तश्च जायते ॥"
इति कालिकापुराणे पारिषदोत्पत्तिर्नाम २९ अध्यायः ॥
(धृतराष्ट्रपुत्त्राणामन्यतमः । यथा, महाभारते । १ । ११७ । १२ ।
"प्रमथश्च प्रमाथी च दीर्घरोमश्च वीर्य्यवान् ॥")

**प्रमथनं**, क्ली, (प्र + मथ + भावे ल्युट् ।) वधः ।
इत्यमरः । २ । ८ । ११५ ॥ (यथा, रामायणे । १ । ३ । २४ ।
"वालिप्रमथनञ्चैव सुग्रीवप्रतिपादनम् ॥"
क्लेशनम् । विलोडनम् । इति मथधात्वर्थदर्श-
प्रमदावनम् । इत्यमरटीकायां भरतः । २ । ४ । ३ ॥

**प्रमदवनं**, क्ली, (प्रमदानां वनमिति । "ङ्यापो-
रिति ।" ६ । ३ । ६३ । इति ह्रस्वः ।) राज्ञो-ऽन्तःपुरोचितवनम् । इत्यमरः । २ । ४ । ७ ॥

**प्रमदा**, स्त्री, (प्रमदयति पुरुषमिति । प्र + मद
हर्षे + णिच् + अच् । यद्वा, प्रमदो हर्षोऽस्त्यस्या इति अच् । टाप् ।) उत्तमयोषित् । इति मेदिनी । दे, ५ ॥ (यथा, कुमारे । ४ । १२ ।
"नयनान्यरुणानि घूर्णयन्
वचनानि स्खलयन् पदे पदे ।
असति त्वयि वारुणीमदः
प्रमदानामधुना विडम्बना ॥")
चतुर्द्दशाक्षरवृत्तिविशेषः । तल्लक्षणं यथा, वृत्त-रत्नाकरटीकायाम् ।
"नजभजला गुरुश्च भवति प्रमदा ॥")

**प्रमदाकाननं** क्ली, (प्रमदानां काननम् ।) प्रमद-
वनम् । इत्यमरटीकायां भरतः । २ । ४ । ३ ॥

**प्रमदावनं**, क्ली, (प्रमदानां वनम् ।) प्रमदवनम् ।
इति शब्दरत्नावली ॥

**प्रमनाः**, [स्] त्रि, (प्रकृष्टं मनोऽस्य ।) हर्ष-
युक्तः । इत्यमरः । ३ । १ । ७ ॥ (यथा, महा-भारते । ८ । ३७ । ४१ ।
"इति बहुपरुषं प्रभाषति
प्रमनसि मद्रपतौ रिपुस्तवम् ॥")

**प्रमयः**, पुं, (प्र + मी वधे + भावे अच् ।) वधः ।
इति हेमचन्द्रः । ३ । ३४ ॥ (यथा, राजतर-ङ्गिण्याम् । १ । ९ ।
"दृष्टं दृष्टं नृपोदन्तं बद्ध्वा प्रमयमीयुषाम् ।
अर्व्वाक्कालभवैर्व्वार्त्ता यत्प्रबन्धेषु पूर्य्यते ॥")

**प्रमा**, स्त्री, (प्रमीयते इति । प्र + माङ् माने
+ "आतश्चोपसर्गे ।" ३ । ३ । १०६ । इति अङ् । टाप् ।) यथार्थज्ञानम् । तत्पर्य्यायः । प्रमितिः २ । इत्यमरः । ३ । २ । १० ॥ प्रमा-णम् ३ । इति शब्दरत्नावली ॥ (यथा, प्रबोध-
पक्षे साध्यविशिष्टे च परामर्शो गुणो भवेत् ।
शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः ।
शाब्दवोधे योग्यतायास्तात्पर्य्यस्याथ वा प्रमा ॥
गुणः स्याद्भ्रमभिन्नन्तु ज्ञानमत्रोच्यते प्रमा ।
अथवा तत्प्रकारं यत् ज्ञानं तद्वद्विशेष्यकम् ॥"
इति भाषापरिच्छेदे । १३१-१३५ ॥
("दोषः इति । अप्रमां प्रति दोषः कारणं प्रमां प्रति गुणः कारणं तत्रापि पित्तादिरूपा दोषा अननुगताः तेषां कारणत्वम् अन्वयव्यतिरेका-भ्यामेव सिद्धम् । गुणस्य प्रमाजनकत्वन्तु अनु-मानात् सिद्धम् । यथा प्रमाज्ञानसाधारण-कारणभिन्नकारणजन्याजन्यज्ञानत्वात्अप्र-मावत् । न च दोषाभाव एव कारणमस्त्विति वाच्यम् । पीतः शङ्ख इति ज्ञानस्थले पित्तदोष-सत्त्वात् शङ्खप्रमानुत्पत्तिप्रसङ्गात् विनिगमना-विरहात् अनन्तदोषाभावस्य कारणत्वमपेक्ष्य गुणकारणताया न्याय्यत्वात् । न च गुणसत्त्वेऽपि पित्तप्रतिबन्धात् शङ्खे न सैत्यज्ञानमतः पित्तादि-दोषाभावानां कारणत्वमवश्यं वाच्यं तथा च किं गुणस्य हेतुत्वकल्पनयेति वाच्यं तथाप्यन्वयव्यति-रेकाभ्यां गुणस्यापि हेतुत्वसिद्धेः । एवं भ्रमं प्रति गुणाभावः कारणमित्यस्यापि सुवचत्वाच्च । तत्र दोषाः के इत्याकाङ्क्षायामाह पित्तेति । क्वचित् पीत्तादिभ्रमे पित्तं दोषः क्वचित् चन्द्रादेः स्वल्प-परिमाणभ्रमे दूरत्वं दोषः । क्वचिच्च वंशोरग-

नात् ॥ (प्रकर्षेण मथतीति । प्र + मथ् + ल्युः ।
प्रमाथके, त्रि । यथा, महाभारते । १ । १०२ । ६२ ।
"स चाश्विरूपसदृशो देवतुल्यपराक्रमः ।
सर्व्वासामेव नारीणां चित्तप्रमथनो रहः ॥")

**प्रमथा**, स्त्री, (प्रमथत्ति त्रिदोषानिति । प्र + मथ् + अच् ।) हरीतकी । इति मेदिनी । थे, २१ ॥
(गुणादिकमस्य हरीतकीशब्दे ज्ञातव्यम् ॥)

**प्रमथाधिपः**, पुं, (प्रमथानां अधिपः ।) शिवः । इत्यमरः । १ । १ । ३३ ॥

**प्रमथितं**, क्ली, (प्रकर्षेण मथितम् ।) निर्जल-तक्रम् । इति राजनिर्घण्टः ॥

**प्रमदः**, पुं, (प्र + मद् + "प्रमदसंमदौ हर्षे ।" ३ । ३ । ६८ । इति अप् ।) हर्षः । इत्यमरः ।
१ । ४ । २४ ॥ (यथा, कथासरित्सागरे । ६ । १६२ ।
"तच्छ्रुत्या मम राज्ञश्च विषादप्रमदौ द्वयोः ।
अभूतां मेघमालोक्य हंसचातकयोरिव ॥"
प्रमाद्यत्यनेनेति । प्र + मद् + करणे अप् ।)
धुस्तूरफलम् । इति शब्दचन्द्रिका ॥ (दानव-विशेषः । यथा, हरिवंशे । ३ । ८७ ।
"प्रमदो मयः कुपयो हयग्रीवश्च वोर्य्यवान् ॥"
वशिष्ठतनयानामन्यतमः । स तु उत्तममन्वन्तरे
चन्द्रोदये । २ य अङ्के ।
"प्रत्यक्षादिप्रमासिद्धविरुद्धार्थाभिधायिनः।
वेदान्ता यदि शास्त्राणि वौद्धैः किमपराध्यते ॥"
यथा च ऋग्वेदे । १० । १३० । ३ ।
"कासीत्प्रमा प्रतिमा किम् ॥"
"यज्ञस्य प्रमा प्रमाणमियत्ता का कथम्भूतासीत् ।"
इति तद्भाष्ये सायनः ॥) न्यायमते तद्वति तत्प्रकारकज्ञानम् । भ्रमभिन्नज्ञानम् । अस्याः कारणं गुणः । स च प्रत्यक्षे विशेष्ये विशे-षणस्य सम्बन्धः । अनुमितौ साध्यविशिष्टपक्षे परामर्शः । शाब्दबोधे योग्यतायाः तात्पर्य्यस्य वा यथार्थज्ञानम् । उपमितौ शक्ये सादृश्य-बुद्धिः । यथा, --
"दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत् ।
पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः ॥
प्रत्यक्षे तु विशेष्येण विशेषणवता समम् ।
सन्निकर्षो गुणस्तु स्यादथ त्वनुमितौ पुनः ॥
भ्रभे मण्डूकवसाञ्जनमित्येवं दोषा भ्रान्तिजनका
इत्यर्थः । अथ के गुणा इत्याकाङ्क्षायां प्रत्य-क्षादौ क्रमशो गुणान् दर्शयति प्रत्यक्षेत्विति ।
प्रत्यक्षे विशेषणवत् विशेष्यसन्निकर्षो गुणः अनु-मितौ साध्यवति साध्यव्याप्यवैशिष्ट्यज्ञानं गुण
इति एवमग्रेऽप्यूह्यः । प्रमां निरूपमति भ्रम-भिन्नमिति । ननु यत्र शुक्तिरजतयोरिमे रजते इति ज्ञानं जातं तत्र रजतांशेऽपि प्रमा न स्यात् तज्ज्ञानस्य भ्रमभिन्नत्वाभावात् अत आह अथवेति । तद्वद्विशेष्यकं तत्प्रकारकं ज्ञानं
प्रमा इत्यर्थः । इदन्तु बोध्यम् । येन सम्बन्धेन
तद्वत्ता तेन सम्बन्धेन तद्वद्विशेष्यकं तेन सम्बन्धेन
प्रकारकत्वं वाच्यम् । तेन कपालादौ संयोगा-दिना घटादिज्ञाने नातिव्याप्तिः ॥" * ॥)

**प्रमाणं**, क्ली, (प्रमीयते विश्वमनेनेति । प्र + मा + ल्युट् ।) विष्णुः । यथा, --
"प्रमाणं प्राणनिलयः प्राणभृत् प्राणजीवनः ॥"
इति महाभारते शान्तिशर्व्वणि दानधर्म्मः ॥
नित्यम् । मर्य्यादा । शास्त्रम् । (यथा, --
"आप्ता ह्यवितर्कस्मृतिविभागविदो निष्प्री-त्युपतापदर्शिनश्च । तेषामेवङ्गुणयोगात् यद्व-चनं तत् प्रमाणम् । अप्रमाणं पुनर्मर्त्तोन्मत्त-मूर्खरक्तदुष्टादुष्टवचनमिति ।" इति चरके विमानस्थाने चतुर्थेऽध्याये ॥) सत्यवादी ।
(प्र + मा + भावे ल्युट् ।) इत्यत्ता । हेतुः ।
(प्रमिणोतीति । प्र + मा + कर्त्तरि ल्युः ।)
प्रमाता । इति मेदिनी । णे, ६१ ॥ प्रमा ।

| | | |
|---|---|---|
| सप्तर्षिप्रभेदः । यथा, भागवते । ८ । १ । २४ ।<br>“वसिष्ठतनयाः सप्त ऋषयः प्रमदादयः ।<br>सत्या वेदश्रुता भद्रा देवा इन्द्रस्तु सत्यजित् ॥”)<br>प्रमाद्यतीति । प्र + मद् + कर्त्तरि अच् । यद्वा<br>प्रकर्षेण मदोऽस्य ।) मत्ते, त्रि । इति मेदिनी ।<br>दे, ७५ ॥ (यथा, रवौ । १९ । ३७ ।<br>“प्राविपि प्रमदवर्हिणेष्वभूत्<br>कृत्रिमाद्रिषु विहारविभ्रमः ॥”)<br>**प्रमदकाननं** क्ली, (प्रमदानां काननम् । “ङ्यापोः<br>मंज्ञाच्छन्दसोर्ब्बहुलम् ।” ६ । ३ । ६३ । इति<br>ह्रस्वः । यद्वा, प्रमदाय हर्षाय यत् काननम् ।) | | |

इति शब्दरत्नावली ॥ नित्यक्लीवैकत्ववानयं शब्दः । यथा वेदाः प्रमाणं स्मृतयः प्रमाण- मित्यादि ॥ प्रमायाः करणम् । न्याये तु प्रत्यक्षा- नुमानोपमानशब्दाः प्रमाणानि । इत्यत्र बहु- वचनान्तोऽपि ॥ (यथा, मनौ । २ । १३ ।
"अर्थकामेष्वसक्तानां धर्म्मज्ञानं विधीयते ।
धर्म्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ॥"
वेदान्तसारे च । "वेदान्तो नाम उपतिषत् प्रमाणं तदुपकारीणि शारीरिकसूत्रादीनि च ॥"
"उपनिषच्छब्दो ब्रह्मात्मैक्यसाक्षात्कारविषयः ।
सैव उपनिषत् प्रमाणं तस्याः प्रमारूपायाः करणभूता ।" इति विद्वन्मनोरञ्जनीटीका ॥)

**प्रमाणवाधितार्थकः**, पुं, (प्रमाणेन वाधितः अर्थो यस्य । ततः कप् ।) तर्कविशेषः । तस्य लक्ष- णम् । आत्माश्रयादिचतुष्कान्यप्रसङ्गत्वम्। स द्विविधः । व्याप्तिग्राहकः विषयपरिशोधकश्च । तत्राद्यो यथा । धूमो यदि वह्निव्यभिचारी स्यात्तदा वह्निजन्यो न स्यात् । द्वितीयस्तु पर्व्वतो यदि निर्वह्निः स्यात्तदा निर्धूमः स्यात् । इति तर्कजागदीशी ॥

**प्रमातामहः**, पुं, (प्रकृष्टो मातामहस्तस्यापि जनकत्वादिति । प्रादिसमासः ।) मातामह- पिता । यथा, अमरे ।
"पितामहः पितृपिता तत्पिता प्रपितामहः ।
मातुर्मातामहाद्येवं सपिण्डास्तु सनाभयः ॥"

**प्रमातामही**, स्त्री, (प्रकृष्टा मातामही ।) प्रमाता- महपत्नी । इति स्मृतिः ॥

**प्रमाथः**, पुं, (प्र + मथ् + भावे घञ् ।) प्रम- थनम् । बलात् हरणम् । इति पुराणम् । (निपात्य भूमौ पेषणम् । यथा, महाभारते । ४ ।

**प्रमादः**, पुं, (प्र + मद् + भावे + घञ् ।) अनव- धानता । इत्यमरः । १ । ७ । ३० ॥ यथा, --
"लोभप्रमादविश्वासैः पुरुषो नश्यते त्रिभिः ।
तस्माल्लोभो न कर्त्तव्यः प्रमादो न न विश्वसेत् ॥"
इति गारुडे नीतिसारे ११५ अध्यायः ॥

**प्रमादवान्**, [त्] त्रि, (प्रमादोऽस्त्यस्यास्मिन्वा । प्रमाद + मतुप् । मस्य वः ।) प्रमादयुक्तः । तत्- पर्य्यायः । जाल्मः २ असमीक्ष्यकारी ३ खद्वा- रूढः ४ । इति जटाधरः ॥ (यथा, याज्ञ- वल्क्ये । ३ । १३९ ।
"निद्रालुः क्रूरकृल्लुब्धो नास्तिको याचकस्तथा ।
प्रमादवान् भिन्नवृत्तो भवेत्तिर्य्यक्षु तामसः ॥")

**प्रमादिका**, स्त्री, (प्रमादोऽनवधानतास्त्यस्या इति । प्रमाद + ठन् । टाप् ।) दूषिता कन्या । तत्पर्य्यायः । संवेदा २ दूषिता ३ धर्षकारिणी ४ । इति शब्दरत्नावली ॥

**प्रमादी**, [न्] त्रि, (प्रमादोऽस्त्यस्येति । प्रमाद + इनिः ।) प्रमादविशिष्टः । अनवधानतायुक्तः । यदुक्तम् ।
"कुरङ्गमातङ्गपतङ्गभृङ्ग- मीना हताः पञ्चभिरेव पञ्च ।
एकः प्रमादी स कथं न हन्यते यः सेवते पञ्चभिरेव पञ्च ॥"

**प्रमापणं**, क्ली, (प्र + मी ञ हिंसायाम् + स्वार्थे

"यानेव हत्वा न जिजीविषाम- स्येऽवस्थिताः प्रमुखे धार्त्तराष्ट्राः ॥")

**प्रमुखः**, पुं, (प्रकृष्टं मुखं अग्रभागो यस्य ।) पुन्नागवृक्षः । इति शब्दचन्द्रिका ॥ समूहः । इति शब्दरत्नावली ॥

**प्रमुखः**, त्रि, (प्रकृष्टं मुखमाद्यं यस्य ।) प्रधा- नम् । (यथा, कुमारसम्भवे । २ । ३८ ।
"ज्वलन्मणिशिखाश्चैनं वासुकिप्रमुखा निशि ।
स्थिरप्रदीपतामेत्य भुजङ्गाः पर्य्युपासते ॥")
श्रेष्ठः । इत्यमरः । ३ । १ । ५७ ॥ (यथा, हितोपदेशे । ३ । १२४ ।
"बलेषु प्रमुखो हस्ती न तथान्यो महीपतेः ॥")
प्रथमः । इति मेदिनी । खे, १० ॥ (यथा, महाभारते । २ । ६ । २ ।
"नारदप्रमुखास्तस्यामन्तर्व्वेद्यां महात्मनः ।
समासीनाः शुशुभिरे सह राजर्षिभिस्तथा ॥")
मान्यः । इति शब्दरत्नावली ॥

**प्रमुत्**, [द्] त्रि, (प्रकृष्टामुत् प्रीतिर्यस्य ।) हृष्टः । इत्यमरः । ३ । १ । १०३ ॥ (प्रकृष्टा मुदिति विग्रहे प्रकृष्टानन्दे, स्त्री । यथा, महाभारते । १४ । ७ । ६ ।
"श्रुत्वा तु पार्थिवस्यैतत् सम्बर्त्तः प्रमुदं गतः ॥")

**प्रमुदितः**, त्रि, (प्र + मुद् + क्तः । "उदुपधा- दिति ।" १ । २ । २१ । इति पक्षे कित् ।) हृष्टः । इत्यमरः । ३ । १ । १०३ ॥ (यथा, देवीभागवते । १ । १२ । ४७ ।
"वाञ्छत्यहो हरिरशोक इवातिकामं पादाहतिं प्रमुदितः पुरुषः पुराणः ॥")

**प्रमेहः**, पुं, (प्रकर्षेण मेहति क्षरति वीर्य्यादिरने- नेति । प्र + मिह क्षरणे + करणे घञ् ।)

१२ । २७ ।
"कृतप्रतिकृतैश्चित्रैर्बाहुभिश्च सुशङ्कटैः ।
सन्निपातावधूतैश्च प्रमाथोन्माथनैस्तथा ॥"
अस्य टीकायां नीलकण्ठेन मल्लशास्त्रात् एत-
ल्लक्षणमुद्धृतम् । यथा, --
"निपात्य पेषणं भूमौ प्रमाथ इति कथ्यते ॥"
कुमारस्यानुचरभेदः । यथा, महाभारते । ९ ।
४५ । २९ ।
"ततः प्रादादनुचरौ यमः कालोपमाबुभौ ।
उन्माथञ्च प्रमाथञ्च महावीर्य्यौ महाद्युती ॥"
शिवपारिषद्प्रमथगणः । यथा, हरिवंशे ।
१७८ । ५३ ।
"ते प्रदीप्तप्रहरणा दैत्यदानवराक्षसाः ।
प्रमाथगणमुख्याश्च प्रायुध्यन् कृष्णमव्ययम्
॥")

**प्रमाथी**, [न्] त्रि, प्रपूर्ब्बमथधातोः कर्त्तरि णिन् ।
पीडनकर्त्ता । मारणकर्त्ता । प्रमथनशीलः ।
देहेन्द्रियक्षोभक इत्यर्थः । इति श्रीधरस्वामी
॥
यथा, --
"चञ्चलं हि मनः कृष्ण ! प्रमाथि बलवद्दृढम्
॥"
अपि च ।
"इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥"
इति श्रीभगवद्गीता ॥

णिच् + भावे ल्युट् ।) मारणम् ।
इत्यमरः ।
३ । ८ । ११२ ॥ (यथा, मनुः । ११ ।
१४१ ।
"अस्थिमतान्तु सत्त्वानां सहस्रस्य
प्रमापणे ।
पूर्णे चानस्यानस्थ्नान्तु
शूद्रहत्याव्रतञ्चरेत् ॥")

**प्रमितः**, त्रि, (प्र + मि + क्तः । यद्वा, प्र + मा +
क्तः । "द्यतिस्यतिमास्थेति ।" ७ । ४
। ४० ।
इतीत्वम् ।) ज्ञातः । इति जटाधरः ॥
(अल्प-
तमम् । इति विजयरक्षितः ॥ यथा,
निदाने
अर्शोरोगाधिकारे ।
"प्रमिताल्पाशनं तीक्ष्णं मद्यं
मैथुनसेवनम् ॥"
परिमितम् । यथा, बृहत्संहितायाम् ।
१०४ । ३७ ।
"प्रमिताक्षराणि वदन् ॥")

**प्रमितिः**, स्त्री, (प्र + मा वा मि + क्तिन् ।) प्रमा ।
इत्यमरः । ३ । २ । १० ॥

**प्रमीढः**, त्रि, (प्र + मिह सेचने + क्तः ।) घनः ।
मूत्रितः । इति मेदिनी । ढे, ८ ॥
(यथा, --
"त्वग्दोषिणां प्रमीढानां
स्निग्धाभिष्यन्दिवृंहि-
णाम् ।
शिशिरे लङ्घनं शस्तमपि
वातविकारिणाम् ॥"
इति चरके सूत्रस्थाने द्वाविंशेऽध्याये
॥)

**प्रमीतः**, त्रि, (प्र + मी ञ हिंसायाम् + क्तः ।)
मृतः । यज्ञार्थहतपशुः । इत्यमरः । २
। ८ । ११७ ॥

**प्रमीला**, स्त्री, (प्रमीलनमिति । प्र + मील संमी-

रोगविशेषः । तत्पर्य्यायः । मेहः २ मूत्रदोषः
३ ।
इति राजनिर्घण्टः ॥ बहुमूत्रता ४ । इति
हेमचन्द्रः । ३ । १३४ ॥ अस्य निदानम् ।
"आस्यासुखं स्वप्नसुखं दधीनि
ग्राम्यौदकानूपरसाः पयांसि ।
नवान्नपानं गुडवैकृतञ्च
प्रमेहहेतुः कफकृच्च सर्व्वम् ॥" * ॥
अस्य सम्प्राप्तिर्यथा, --
"मेदश्च मांसञ्च शरीरजञ्च
क्लेदं कफो वस्तिगतः प्रदूष्य ।
करोति मेहान् समुदीर्णमुष्णै-
स्तानेव पित्तं परिदूष्य चापि ॥" * ॥
वातिकस्य तस्य लक्षणम् ।
"क्षीणेषु दोषेष्ववकृष्य धातून्
सन्दूष्य मेहान् कुरुतेऽनिलश्च ॥" * ॥
तस्य कफजादिभेदेन साध्यादिलक्षणम् ।
यथा,
"साध्याः कफोत्था दश पित्तजाः षट्
याप्या न साध्याः पवनाच्चतुष्काः ।
समक्रियत्वाद्विषमक्रियत्वा-
न्महात्ययत्वाच्च यथाक्रमन्ते ॥
कफः सपित्तः पवनश्च दोषा
मेदोऽस्रशुक्राम्बुवसालसीकाः ।

| | | |
|---|---|---|
| | लने + "गुरोश्च हलः ।" ३ । ३ । १०३ । इत्यः । ततष्टाप् ।) तन्द्री । इत्यमरः । ३ । ३ । १७५ ॥<br>**प्रमुखं**, क्ली, (प्रकृष्टं मुखमारम्भः ।) तदात्वम् । तत्कालः । इति त्रिकाण्डशेषः ॥ (सम्मुखम् । यथा, भगवद्गीतायाम् । २ । ६ । | |

मज्जा रसौजः पिशितञ्च दूष्याः
प्रमेहिणां विंशतिरेव मेहाः ॥” * ॥
तस्य पूर्ब्बरूपम् ।
“दन्तादीनां मलाढ्यत्वं प्राग्रूपं
पाणिपादयोः ।
दाहश्चिक्कणता देहे तृट्
स्वाद्वास्यञ्च जायते ॥
सामान्यं लक्षणं तेषां
प्रभूताविलमूत्रता ।
दोषदूष्या विशेषेऽपि
तत्संयोगविशेषतः ।
मूत्रवर्णादिभेदेन भेदो मेहेषु
कल्प्यते ॥” * ॥
क्रमेण कफजानां दशानां लक्षणानि
।
“अच्छं बहुसितं शीतं
निर्गन्धमुदकोपमम् ।
मेहत्युदकमेहेन
किञ्चिदाविलपिच्छिलम् ॥
इक्षो रसमिवात्यर्थं मधुरं चेक्षुमेहतः
।
सान्द्री भवेत् पर्य्युषितं सान्द्रमेहेन
मेहति ॥
सुरामेही
सुरातुल्यमुपर्य्यच्छमधोघनम् ।
संहृष्टलोमा पिष्टेन पिष्टवद्बहुलं
सितम् ॥
शुक्राभं शुक्रमिश्रं वा शुक्रमेही
प्रमेहति ।
मूर्त्ताणून् सिकतामेही
सिकतारूपिणो मलान् ॥
शीतमेही सुबहुशो मधुरं
भृशशीतलम् ।
शनैः शनैः शनैर्म्मेही मन्दं मन्दं
प्रमेहति ॥
लालातन्तुयुतं मूत्रं लालामेहेन
पिच्छिलम् ॥”
क्रमेण पित्तजानां षण्णां लक्षणानि ।

क्षीणः क्षणात् क्षणात् पूर्णो भजते कृच्छ्र-
साध्यताम् ॥
मधुरं यच्च मेहेषु प्रायो मध्विव मेहति ।
सर्व्वेऽपि मधुमेहाख्या माधुर्य्याच्च
तनोरतः ॥ * ॥
प्रमेहिणो यदा मूत्रमनाविलमपिच्छलम् ।
विषदं तिक्तकटुकं तदारोग्यं प्रचक्षते ॥”
इति माघवकरः ॥
अस्य दशविधपिडकाः पिडकाशब्दे
द्रष्टव्याः ॥
अथ प्रमेहस्य चिकित्सा ।
“श्यामाककोद्रवोद्दाला गोधूमचणकावटी ।
कुलत्थाः कथिता भोज्ये पुराणा मेहिनां
हिताः ॥
यवान्नविकृतिर्मुद्गाः शालयः षष्ठिकास्तथा
।
तथा तिक्तानि शाकानि जाङ्गलाः पक्षिणो
मृगाः ॥
उद्दालो वनकोद्रवः ॥ * ॥
प्रमेही गुडदुग्धान्यतैलतक्रसुराः सदा ।
अम्लेक्षुरसपिष्टान्नानूपमांसानिवर्ज्जयेत् ॥
* ॥
मुस्ताहरीतकीलोध्रःकट्फलेन कृतं सृतम्
।
पीतं मधुयुतं हन्ति प्रमेहं कफहेतुकम् ॥ *
॥
पटोलनिम्बामलकामृतानां
पिबेत् कषायं मधुना समेतम् ।
उशीरलोध्रार्ज्जुनचन्दनानां
तथा पिबेत् पित्तनिमित्तमेही ॥ * ॥
पाठाशिरीषदुःस्पर्शाजातितिन्दुककिंशुकैः
।
कपित्थस्य भिषक् क्वाथं हस्तिमेहे
प्रयोजयेत् ॥
पाठादिभिः सहितस्य कपित्थस्य क्वाथम्
।
गुडूच्याः स्वरसः पेयो मधुना सर्व्वमेहजित्
।

प्रमेहपिडकानां प्राक् कार्य्यं रक्तविमोचनम् ।
पाटनञ्च विपक्वानां ततो व्रणविधिः स्मृतः ॥”
इति भावप्रकाशः ॥
(अस्य सकारणपूर्ब्बरूपसम्प्राप्तयस्तथोपद्रवश्च ।
यथा, --
“त्रिदोषकोपननिमित्ता विंशतिप्रमेहविकारा-
श्चापरेऽपरिसङ्ख्येयाः । तत्र यथा त्रिदोषप्रकोप-
प्रमेहानभिनिर्व्वर्त्तयति तथानुव्याख्यास्यामः ।

इह खलु निदानदोषदूष्यविशेषेभ्यो
विकाराणां

विघातभावाभावप्रतिविशेषा भवन्ति । यदा
ह्येते त्रयो निदानादिविशेषाः परस्परं नानु-
वध्नन्त्ययथाप्रकर्षादबलीयांसोवानुबध्नन्ति न
तदा विकाराभिनिर्वृत्तिः । चिराद्वाप्यभिनिर्व-
र्त्तन्ते तनवो भवन्त्यथवाप्ययथोक्तसर्व्वलिङ्गा
विपर्य्ययेण विपरीता इति सर्व्वविकारविघात-
भावाभावप्रतिविशेषाभिनिर्वृर्त्तिहेतुरुक्तः ।

तत्र इमे निदानादि विशेषाः
श्लेष्मनिमित्तानां

प्रमेहाणामाश्वमिनिवृत्तिकरास्तद्यथाहाय-
नकयवचीनकोद्दालकनैषधोत्कटमुकुन्दक महा-
व्रीहिप्रमोदकसुगन्धकानांनवानामतिवेलमति-
प्रमाणेनोपयोगः । तथा सर्पिष्मतां नवहरेणु-
माषसूपानां ग्राम्यानूपौदकानां मांसानां शाक-
तिलपललपिष्टान्नपायसकृशरविलेपीक्षुविका-
राणां क्षीरमन्दकदधिद्रवमधुरतरुणप्रायाणा-
मुपयोगो मृजाव्यायामवर्ज्जनस्वप्नशयनासन-
प्रसङ्गो यश्च कश्चिद्विधिरन्योऽपि श्लेष्ममेहो
मूत्रसञ्जननः सर्व्वः सनिदानविशेषः ।

बहुद्रवश्लेष्मा दोषविशेषः बहुबन्धं मेदः
मांसञ्च

शरीरक्लेदः शुक्रं शोणितञ्च वसामज्जालसीका
रसश्चौजः सङ्ख्याता इति दूष्यविशेषाः ।

त्रयाणामेषां निदानादिविशेषाणां
सन्निपाते

“गन्धवर्णरसस्पर्शैः क्षारेण क्षारतोयवत् ॥
नीलमेहेन नीलाभं कालमेही मसीनिभम् ।
हारिद्रमेही कटुकं हरिद्रासन्निभं दहत् ॥
विस्रं माञ्जिष्ठमेहेन मञ्जिष्ठासलिलोपमम् ।
विस्रमुष्णं सलवणं रक्ताभं रक्तमेहतः ॥” * ॥
क्रमेण वातजानां चतुर्णां लक्षणानि ।
“वसामेही वसामिश्रं वसाभं मूत्रयेन्मुहुः ।
मज्जाभं मज्जमिश्रं वा मज्जमेही मुहुर्मुहुः ॥
कषायं मधुरं रूक्षं क्षौद्रमेहं वदेद्बुधः ।
हस्ती मत्त इवाजस्रं मूत्रं वेगविवर्ज्जितम् ।
सलसीकं विबद्धञ्च हस्तिमेही प्रमेहति ॥” * ॥
कफजादिभेदेन तेषामुपद्रवाः ।
“अविपाकोऽरुचिच्छर्द्दिर्न्निद्रानाशः सपीनसः ।
उपद्रवाः प्रजायन्ते मेहानां कफजन्मनाम् ॥
वस्तिमेहनयोस्तोदो मुष्कावदरणं ज्वरः ।
दाहस्तृष्णाम्लिका मूर्च्छा विड्भेदाः पित्तजन्म-नाम् ॥
वातजानामुदावर्त्तः कम्पहृद्ग्रहलोलताः ।
शूलमुन्निद्रता शोषः कासः श्वासश्च जायते ॥”
अरिष्टलक्षणम् ।
“यथोक्तोपद्रवारिष्टमतिप्रस्रुतमेव च ।
पिडकापीडितं गाढं प्रमेहो हन्ति मानवम् ॥

हरिद्राचूर्णयुक्तो वा रसो धात्र्याः समाक्षिकः ॥
मधुना त्रैफलं चूर्णमथवाश्मजतूद्भवम् ।
लोहजं वाभयोत्थं वा लिह्यान्मेहनिवृत्तये ॥ * ॥
चन्द्रप्रभावचामुस्ताभूनिम्बसुरदारवः ।
हरिद्रातिविषा दार्व्वी पिप्पलीमूलचित्रकम् ॥
त्रिवृद्दन्ती पत्रकञ्च त्वगेला वंशलोचना ।
प्रत्येकं कर्षमात्राणि कुर्य्यादेतानि बुद्धिमान् ॥
धान्यकं त्रिफला चव्यं विडङ्गं गजपिप्पली ।
सुवर्णमाक्षिकं व्योषं द्वौ क्षारौ लवणत्रयम् ॥
एतानि टङ्कमात्राणि संगृह्णीयात् पृथक् पृथक् ।
द्विकर्षहतलोहं स्याच्चतुष्कर्षा सिता भवेत् ॥
शिलाजत्वष्टकर्षं स्यादष्टौ कर्षाश्च गुग्गुलोः ।
विधिना योजितैरेतैः कर्त्तव्या गुटिका शुभा ॥
चन्द्रप्रभातिविख्याता सर्व्वरोगप्रणाशिनी ।
निहन्ति विंशतिं मेहान् कृच्छ्रमष्टविधं तथा ॥
चतस्रश्चाश्मरीस्तद्वन्मूत्राघातांस्त्रयोदश ।
अण्डवृद्धिं पाण्डुरोगं कामलाञ्च हलीमकम् ॥
कासं श्वासं तथा कुष्ठमग्निमान्द्यमरोचकम् ।
वातपित्तकफव्याधीन् बल्या वृष्या रसायनी ॥
समाराध्य शिवं तस्मात् प्रयत्नाद्गुटिकामिमाम् ।
प्राप्तवांश्चन्द्रमा यस्मात् तस्माच्चन्द्रप्रभा स्मृता ॥
चन्द्रप्रभाकचूर इति लोके । व्योषं त्रिकटु । द्वौ
क्षारौ सर्जिकायवक्षारौ । लवणत्रयम् । सैन्धवं
रुचकञ्चापि विडञ्च लवणत्रयमिति चन्द्र-

क्षिप्रं श्लेष्माप्रकोपमापद्यते प्रागतिभूयस्त्वात् । स प्रकुपितः क्षिप्रमेव शरीरे विसृप्तिं लभते । शरीरशैथिल्यात् स विसर्पं शरीरे मेदसैवा-दितो मिश्रीभावं गच्छति । मेदसश्चैव बहु-बन्धत्वान्मेदसश्च गुणानां गुणैः समानगुणभूयि-ष्ठत्वात् स मेदसा मिश्रीभावं गच्छन् दूषयत्येत-द्विकृतत्वात् स धिकृतो दुष्टेन मेदसोपहितः शरीरक्लेदमांसाभ्यां संसर्गं गच्छति । क्लेद-मांसयोरतिप्रमाणाभिवृद्धित्वात्स मांसे मांस-प्रदोषात् पूतिमांसपिडकाः शराविका कच्छपि-काद्याः सञ्जनयत्यप्रकृतिभूतत्वात् शरीरक्लेदं पुनर्दूषयन् मूत्रत्वेन परिणमयति । मूत्रवहानां स्रोतसां वङ्क्षणवस्तिप्रभवानां मेदःक्लेदोपहि-तानि गुरूणि मुखान्यासाद्य प्रतिरुध्यते । ततः स्थैर्य्यं साध्यतां वा जनयति प्रकृतिविकृति-भूतत्वात् ।

> शरीरक्लेदस्तु श्लेष्ममेदोमिश्रः प्रविशन् मूत्राशये

मूत्रत्वमापद्यमानः श्लैष्मिकैरेभिर्दशभिर्गुणैरुप-सृज्यते वैषम्यहानिवृद्धियुक्तैस्तद्यथा श्वेतशीत मूर्त्तपिच्छिलाच्छस्निग्धगुरुमधुरसान्द्रप्रसादमर्द्दै स्तत्र येन गुणेनैकेनानेकेन वा भूयस्तरमुप-

| | | |
|---|---|---|
| जातः प्रमेही मधुमेहिनो वा<br>न साध्यरोगः स हि बीजदोषात् ।<br>ये चापि केचित् कुलजा विकारा<br>भवन्ति तांश्च प्रवदन्त्यसाध्यान् ॥<br>* ॥<br>सर्व्व एव प्रमेहास्तु<br>कालेनाप्रतिकारिणः ।<br>मधुमेहत्वमायान्ति तदासाध्या<br>मवन्ति हि ॥<br>मधुमेहे मधुसमं जायते स किल<br>द्विधा ।<br>क्रुद्धे धातुक्षयाद्वायौ<br>दोषावृतपथेऽथवा ॥<br>आवृतो दोषलिङ्गानि सोऽनिमित्तं<br>प्रदर्शयन् । | प्रभादिर्वटिका ॥ * ॥ | |

सृज्यते । तत्समाख्यं गौणं नामविशेषं प्राप्नोति ।

ते तु खल्विमे दशप्रमेहा नाम विशेषेण

भवन्ति । तथा उदकमेहश्चेक्षुरालिकारसमेहश्च
सान्द्रमेहश्च सान्द्रप्रसादमेहश्च शुक्लमेहश्च शुक्र-
मेहश्च शीतमेहश्च सिकतामेहश्च शनैर्मेहश्च
लालामेहश्चेति ।

ते दशप्रमेहाः साध्याः समानगुणमेदःस्थानत्वात्

कफस्य प्रधान्यात् समानक्रियत्वाच्च ।”

“उष्णाम्ललवणक्षारकटुकाजीर्णभोजनोपसेवि-

नस्तथातितीक्ष्णातपाग्निसन्तापश्रमक्रोधविषम
हारोपसेविनश्च तषात्मकशरीरस्यैव क्षिप्रं
पित्तं प्रकोपमापव्यते ।

तत् प्रकुपितं तत्रैवानुपूर्व्व्या प्रमेहानिमान् षट्

क्षिप्रमभिनिर्व्वर्त्तयति । तेषामपि च पित्तगुण-
विशेषेण नामविशेषाः । तद्यथा, -- क्षारप्रमेहश्च
कालमेहश्च नीलमेहश्च लोहितमेहश्च मञ्जिष्ठा-
मेहश्च हारिद्रमेहश्चेति ते षड्भिरेव क्षाराम्ल-
लवणकटुकविस्रोष्णैः पित्तगुणैः पूर्ब्बवत् सम-
न्विताः । सर्व्व एव ते याप्याः संसृष्टदोषमेदः-
स्थानत्वात् विरुद्धोपक्रमत्वाच्चेति ।”

“कटुककषायतिक्तरुक्षलघुशीतव्यवायव्यायाम

वमन-विरेचनास्थापन-शिरोविरेचनातियोग-
सन्धारणानशनाभिघातातपोद्वेगशोकशोणितम
तिसेकजागरणविषमशरीरन्यासानुपसेवमानस्य
तथात्मकशरीरस्यैव क्षिप्रं वायुः प्रकोपमाप-
द्यते । स प्रकुपितस्तथात्मके शरीरे विसर्पन्
यदा वसामादाय मूत्रवहानि स्रोतांसि प्रति-
पद्यते तदा वसामेहमभिनिर्व्वर्त्तयति ॥ * ॥
यदा पुनर्मज्जानं मूत्रवस्तावाकर्षति तदा मज्ज-
मेहमभिनिर्व्वर्त्तयति ॥ * ॥ यदा लसीकां मूत्रा-
शयेऽभिवहन् मूत्रमनुबध्नंश्च्योतयति । लसी-
कातिबहुत्वाद्विक्षेपणाच्च वायोः खल्वस्याति-
मूत्रप्रवृत्तिसङ्गं करोति । तदा स मत्त इव
गजः क्षरत्यजस्रं मूत्रमवेगं तं हस्तिमेहिनमा-

अलजीविद्रध्यादयश्च तत्
प्रसङ्गाद्भवन्ति ।
तत्र साध्यान् प्रमेहान्
संशोधनोपशमनैर्यथार्ह-
मुपपादयेच्चिकित्सेदिति ।”
इति चरके निदान-
स्थाने चतुर्थेऽध्याये ॥)

**प्रमोचनी**, स्त्री, (प्रकर्षेण मुच्यतेऽनयेति । प्र +
मुच् + ल्युट् + ङीप् ।) गवाक्षी
। गोडुम्बा ।
इति जटाधरः ॥
प्रकृष्टमोचनकर्त्तरि, त्रि ॥
(यथा, महाभारते । ३ । ८४ ।
५० ।
“महाश्रमे वसेद्रात्रिं
सर्व्वपापप्रमोचने ॥”)

**प्रमोदः**, पुं, (प्र + मुद् हर्षे + भावे घञ् ।) हर्षः ।
इत्यमरः । १ । ४ । २४ ॥
(यथा, देवीभाग
वते । ४ । २४ । ५५ ।
“उत्पाद्य पुत्त्रजननप्रभवं
प्रमोदं
दत्त्वा पुनर्विरहजं किल
दुःखभारम् ।
त्वं क्रीडसे सुललितैः स्वलु
तैर्विहारै-
र्नोचेत् कथं मम
सुताप्तिरतिर्वृथा स्यात् ॥”
आमोदः । स तु गन्धविशेषः ।
यथा, भाग-
वते । २ । ६ । २ ।
“अश्विनोरोषधीनाञ्च घ्राणो
मोदप्रमोदयोः ॥”
“मोदप्रमोदयोः
सामान्यविशेषगन्धयोः घ्राणे-
न्द्रियं परमायनम् ।” इति
तट्टीकायां श्रीधर-

“बुद्ध्वा च सर्व्वं तत्त्वेन
परराजचिकीर्षितम् ।
तथा प्रयत्नमातिष्ठेद्यथात्मानंन
पीडयेत् ॥”)
न्यायमते स च त्रिविधः । यथा, --
“प्रवृत्तिश्च निवृत्तिश्च तथा
जीवनकारणम् ।
एवं प्रयत्नत्रैविध्यं तान्त्रिकैः
परिदर्शितम् ॥
चिकीर्षा
कृतिसाध्येऽष्टसाधनत्वमतिस्तथा ।
उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं
भवेत् ॥
निवृत्तिस्तु भवेद्द्वेधा
द्विष्टसाधनताधियः ।
यत्नो जीवनयोनिस्तु सर्व्वदातीन्द्रियो
भवेत् ॥
शरीरे प्राणसञ्चारे कारणं तत्
प्रकीर्त्तितम् ॥”
इति भाषापरिच्छेदः ॥
(तल्लक्षणं यथा, साहित्यदर्पणे ।
“प्रयत्नस्तु फलावाप्त्यै
व्यापारोऽतित्वरान्वितः ॥”)

**प्रयत्नवान्**, [त्] त्रि, (प्रयत्नोऽस्त्यस्येति । प्रयत्न
+ मतुप् । मस्य वः ।)
प्रकृष्टयत्नविशिष्टः ।
तत्पर्य्यायः । प्रतियत्नः २ । इति
त्रिकाण्डशेषः ॥

**प्रयस्तं**, त्रि, (प्र + यस् प्रयत्ने + क्तः ।) घृतचतु-
र्ज्जातादिना द्रव्येण
प्रयत्नसुसंस्कृतव्यञ्जनादि ।
इत्यमरः । २ । ९ । ४५ ॥

**प्रयागः**, पुं, (प्रकृष्टो यागो यत्र । यत्र यज्ञः प्रकर्षेण
भवतीत्यर्थः ।) तीर्थभेदः । (प्रकृष्टो
यागः ।)

चक्षते ॥ * ॥ ओजः पुनर्मधुरस्वभावं तद्रौ-
क्ष्याद्वायुः कषायत्वेनाभिसंसृज्य मूत्राशयेऽभि-
वहति तदा मधुमेहं करोति ॥ * ॥

तानिमांश्चतुरः प्रमेहान् वातजानसाध्याना-

चक्षते । महात्ययिकत्वाद्विप्रतिषिद्धोपक्रमत्वात्
तेषामपि च पूर्ब्बवत् गुणविशेषेण नामविशेषाः ।
तद्यथा, -- वसामेहश्च मज्जमेहश्च हस्तिमेहश्च
मधुमेहश्चेति ।"
"त्रयस्तु दोषाः प्रकुपिताः प्रमेहानभिनिर्व्वर्त्तयि-
ष्यन्त इमानि पूर्ब्बरूपाणि दर्शयन्ति । तद्-
यथा, -- जटिलीभावं केशेषु माधुर्य्यमास्ये कर-
पादयोः सुप्ततां दाहः मुखतालुकण्ठशोषं
पिपासामालस्यं मलञ्च काये कायच्छिद्रेषूपदेहं
परिदाहं सुप्ततां चाङ्गेषु षट्पदपिपीलिकाभिः
शरीरमूत्राभिसरणं मूत्रे च मूत्रदोषान्वितं
शरीरगन्धं निद्रां तन्द्राञ्च सर्व्वकालमिति ।

उपद्रवास्तु खलु प्रमेहिणां तृष्णातीसारज्वर-

दाहदौर्ब्बल्यारोचकाविपाकाः पूतिमांसपिडका

स्वामी ॥ नागविशेषः । यथा,
महाभारते ।
१ । ५७ । ११ ।
"विहङ्गः शरभो मेदः प्रमोदः
संहतापनः ॥"
स्कन्दानुचरविशेषः । यथा,
तत्रैव । ९ । ४५ । ६३ ।
आनन्दश्च प्रमोदश्च
स्वस्तिको ध्रुवकस्तथा ॥")

**प्रमोदितः**, पुं, (प्र + मुद् हर्षे + क्तः । "उदुपधा-
दिति ।" १ । २ । २१ । इति
किदभावः ।
प्रमोदोऽस्य जातः इति
तारकादित्वात् इतच्
वा ।) कुवेरः । इति शब्दमाला
॥ प्रमोदयुत्रे,
त्रि ॥

**प्रमोदिनी**, स्त्री, (प्रमोदयतीति । प्र + मुद् +
णिच् + णिनिः । ङीप् ।)
जिङ्गिनीवृक्षः । इति
भावप्रकाशः ॥ प्रकृष्टहर्षयुक्ता
च ॥

**प्रम्लोचा**, स्त्री, (प्रम्लोचति तापसादीन् प्रति
गच्छतीति । प्र + म्लुच् गतौ +
अच् । टाप् ।)
अप्सरोविशेषः । यथा, गारुडे
९० अध्याये ।
"तत्र तस्मान्नदीमध्यात्
समुत्तस्थौ मनोरमा ।
प्रम्लोचा नाम तन्वङ्गी
तत्समीपे वराप्सराः ॥"

**प्रयतः**, त्रि, (प्र + यम् + क्तः । यद्वा, प्रयतते
धर्म्माद्यर्थमिति । प्र + यत् +
अच् ।) पवित्रः ।
इत्यमरः । २ । ७ । ४५ ॥
(यथा, मनुः । २ ।

यज्ञः । (प्रकृष्टा यागाः यज्ञा यस्य
यस्माद्वा ।)
इन्द्रः । अश्वः । इति मेदिनी । गे, ४१
॥ * ॥
अथ प्रयागमाहात्म्यम् ।
"ततो गच्छेत धर्म्मज्ञ !
प्रयागमृषिसम्मतम् ।
यत्र ब्रह्मादयो देवा दिशश्च
सदिगीश्वराः ॥
लोकपालाश्च सिद्धाश्च निरताः
पितरस्तथा ।
सनत्कुमारप्रमुखास्तथैव च महर्षयः ॥
तथा नागाः सुपर्णाश्च सिद्धाश्च
क्रतवस्तथा ।
गन्धर्व्वाप्सरसश्चैव सरितः
सागरास्तथा ॥
हरिश्च भगवानास्ते प्रजापतिभिरावृतः
।
तत्र त्रीण्यग्निकुण्डानि तयोर्मध्ये तु
जाह्नवी ॥
प्रयागात् समतिक्रान्ता
सर्व्वतीर्थपुरस्कृता ।
तपनस्य सुता तत्र त्रिषु लोकेषु विश्रुता
॥
यमुना गङ्गया सार्द्धं सङ्गता
लोकभाविनी ।
गङ्गायमुनयोर्म्मध्ये पृथिव्या जघनं
स्मृतम् ॥
प्रयागं जघनस्यान्तमुपस्थमृषयो विदुः
।
प्रयागं सप्रतिष्ठानं कम्बलाश्वतराबुभौ
॥
तीर्थं भोगवती चैव वेदी प्रोक्ता
प्रजापतेः ! ।
तत्र वेदाश्च यज्ञाश्च मूर्त्तिमन्तो
महामते !
प्रजापतिमुपासन्ते ऋषयश्च महाव्रताः
।
यजन्ते क्रतुभिर्द्देवास्तथा चक्रधराः
सदा ॥

१८३ ।

"ब्रह्मचार्य्याहरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहम् ॥"

नम्रः । इति रामायणटीकायां रामानुजः ॥

यथा, रामायणे । १ । २ । २४ ।

"वाल्मीकिरथ तं दृष्ट्वा सहसोत्थाय वाग्यतः ।

प्राञ्जलिः प्रयतो भूत्वा तस्थौ परमविस्मितः ॥"

प्रयत्नविशिष्टे च ॥)

**प्रयत्नः**, पुं, (प्र + यत यत्ने + "यजयाचयतविच्छ-

प्रच्छरक्षो नङ् ।" ३ । ३ । ९० । इति नङ् ।)

प्रकृष्टयत्नः । (यथा, मनुः । ७ । ६८ ।

ततः पुण्यतमं नास्ति त्रिषु लोकेषु सूतज ! ।

प्रयागं सर्व्वतीर्थेभ्यः प्रवदन्त्यधिकं द्विजाः ॥

श्रवणात् तस्य तीर्थस्य नामसङ्कीर्त्तनादपि ।

मृत्तिकालभनाद्वापि सर्व्वपापैः प्रमुच्यते ॥

तत्राभिषेकं यः कुर्य्यात् सङ्गमे संशितव्रतः ।

पुण्यं स महदाप्नोति राजसूयाश्वमेधयोः ॥

एषा यजनभूमिर्हि देवानामपि सतकृता ।

दत्तं तत्र स्वल्पमपि महद्भवति सूतज ! ॥

न वेदवचनात्तात ! न लोकवचनादपि ।

मतिरुत्क्रमणं याति प्रयागमरणं प्रति ॥

दशतीर्थसहस्राणि षष्टिकोट्यस्तथापराः ।
तेषां सान्निध्यमत्रैव कीर्त्तितं सूतनन्दन ! ॥
यत् पुण्यं त्रिषु लोकेषु वेदविद्यासु यत् फलम्
।
स्नातमात्रस्य तत् पुण्यं गङ्गायमुनसङ्गमे ॥”
इति पाद्मे भूमिखण्डे १२७ अध्यायः ॥ * ॥
अपि च ।
“पुत्त्रकामः प्रयागे हि स्नायात् पुण्ये
सितासिते ॥
धनकामः पुरा शक्रः स्नातो ह्यत्र द्विजोत्तम !
॥
धनदस्य निधीन् सर्व्वान् तस्माज्जहार
मायया ।
नारायणो नरेणैव वर्षाणामयुतं पुरा ॥
अनाहारः प्रयागेऽस्मिन् कृतवान् पुण्यमुत्तमम्
।
सिद्धिञ्च साधका यान्ति प्रयागेऽस्मिन् द्विजो-
त्तम ! ॥”
इति पाद्मोत्तरखण्डे २३ अध्यायः ॥ * ॥
अपि त्त ।
युधिष्ठिर उवाच ।
“भगवन् ! श्रोतुमिच्छामि प्रयागगमनं फलम् ।
मृतानां का गतिस्तत्र स्नातानामपि किं फलम्
॥
ये वसन्ति प्रयागे तु ब्रूहि तेषान्तु किं फलम् ।
भवता विदितं ह्येतत् तन्मे ब्रूहि नमोऽस्तु ते ॥
मार्कण्डेय उवाच ।
कथयिष्यामि ते वत्स ! या चेष्टा यच्च तत्
फलम् ।
पृष्ट्वा महर्षिभिः सम्यक् कथ्यमानं मया श्रुतम्
॥
यत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः
।
यत्र ब्रह्मादयो देवा रक्षां कुर्व्वन्ति सङ्गताः ॥
बहून्यन्यानि तीर्थानि सर्व्वपापहराणि च ।
कथितुं नेह शक्नोमि बहुवर्षशतैरपि ॥
संक्षेपेण प्रवक्ष्यामि प्रयागस्येह कीर्त्तनम् ।
षष्टिर्धन्विसहस्राणि यक्षा रक्षन्ति जाह्नवीम् ॥
यमुनां रक्षति सदा सविता सप्तिवाहनः ।
यावन्न स्मरते जन्म तावत् स्वर्गे
महीयते ॥
तस्मात् स्वर्गात् परिभ्रष्टः क्षीणकर्म्मा
नरोत्तमः ।
हिरण्यरत्नसंपूर्णे समृद्धे जायते कुले ॥
तदेव स्मरते तीर्थं स्मरणात्तत्र गच्छति
।
देशस्थो यदि वारण्ये विदेशे यदि वा
गृहे ॥
प्रयागं स्मरमाणस्तु यस्तु प्राणान्
परित्यजेत् ।
ब्रह्मलोकमवाप्नोति वदन्ति
मुनिपुङ्गवाः ॥
सर्व्वकामफला वृक्षा मही यत्र
हिरण्मयी ।
ऋषयो मुनयः सिद्धास्तत्र लोके स
गच्छति ॥
स्त्रीसहस्राकुले रम्ये मन्दाकिन्यास्तटे
शुभे ।
मोदते मुनिभिः सार्द्धं स्वकृतेनेह
कर्म्मणा ॥
सिद्धचारणगन्धर्व्वैः पूज्यते दिवि
दैवतैः ।
अथ स्वर्गात् परिभ्रष्टो
जम्बुद्वीपपतिर्भवेत् ॥
अतः शुभानि कर्म्माणि चिन्त्यमानः
पुनः पुनः ।
गुणवान् वित्तसम्पन्नो भवतीह न
संशयः ॥
कर्म्मणा मनसा वाचा
सत्यधर्म्मप्रतिष्ठितः ॥
गङ्गायमुनयोर्मध्ये यस्तु ग्रामं प्रयच्छति
।
सुवर्णमणिमुक्तां वा तथैवान्यत्
प्रतिग्रहम् ॥
स्वकार्य्ये पितृकार्य्ये वा
देवताभ्यर्च्चनेऽपि वा ।
निष्फलं तस्य तत्तीर्थं यावत्
तद्धनमश्नुते ॥
वर्णनीयानि यथा । भेरीनिस्वनः १ भूकम्पः
२
बलधूलिः ३ करभः ४ वृषः ५ ध्वजः ६
छत्रम्
७ बणिक् ८ शकटम् ९ रथः १० । इति
कवि-
कल्पलता ॥

**प्रयातः**, पुं, (प्रकर्षेण यातः । प्र + या + कर्त्तरि
क्तः ।) सौप्तिकः । भृगुः । इति हेमचन्द्रः ॥
गते, त्रि ॥ (क्ली, भावे क्तः । गमनम् ।
प्रस्था-
नम् । यथा, छन्दोमञ्जर्य्याम्
“मया क्लेशितः कालियेत्थं कुरु त्वं
भुजङ्ग ! प्रयातं द्रुतं सागराय ॥”)

**प्रयामः**, पुं, (प्र + यम् + घञ् ।) नीवाकः । इत्य-
मरः । ३ । २ । २३ ॥
महार्घ्यहेतोर्धान्यादिषु
जनानामादरातिशये तुलाधरणाधिक्यम् ।
इति
केचित् । क्रयादरः । इति केचित् ।
मूल्याधिक्य-
हेतोर्निश्चयेन परिच्छेदनम् । इति केचित् ।
इति भरतः ॥

**प्रयासः**, पुं, (प्र + यस प्रयत्ने + भावे घञ् ।)
प्रयत्नः । तत्पर्य्यायः । श्रमः २ क्लमः ३
क्लेशः ४
परिश्रमः ५ आयासः ६ व्यायामः ७ । इति
हेमचन्द्रः । २ । २३४ ॥ (यथा,
हठयोगप्रदीपि-
कायाम । १ । १५ ।
“अत्याहारः प्रयासश्च प्रजल्पो नियमग्रहः
।
जनसङ्गश्च लौल्यञ्च षड्भिर्योगो विनश्यति
॥”)

**प्रयुक्तं**, त्रि, (प्र + युज् + क्तः ।) प्रकर्षेण युक्तम् ।
यथा, --
“गुणप्रयुक्ताः परमर्म्मभेदिनः

प्रयागन्तु विशेषेण स्वयं रक्षति वासवः ॥
मण्डलं रक्षति हरिः सर्व्वदेवैश्च सम्मितम् ।
न्यग्रोधं रक्षते नित्यं शूलपाणिर्म्महेश्वरः ॥
स्थानं रक्षन्ति वै देवाः सर्व्वे पापहरं शुभम् ।
स्वकर्म्मणावृता लोका नैव गच्छन्ति तत्पदम् ॥
स्वल्पमल्पतरं पापं यदा तस्य नराधिप ! ।
प्रयागं स्मरमाणस्य सर्व्वमायाति संक्षयम् ॥
दर्शनात्तस्य तीर्थस्य नामसंकीर्त्तनादपि ।
मृत्तिकालभनाद्वापि नरः पापात् प्रमुच्यते ॥
पञ्चकुण्डानि राजेन्द्र ! येषां मध्ये तु जाह्नवी ।
प्रयागं विशतः पुंसः पापं नश्यति तत्क्षणात् ॥
योजनानां सहस्रेषु गङ्गां यः स्मरते नरः ।
अपि दुष्कृतकर्म्मासौ लभते परमां गतिम् ॥
कीर्त्तनाम्मुच्यते पापात् दृष्ट्वा भद्राणि पश्यति ॥
व्याधितो यदि वा हीनः क्रुद्धो वापि भवेन्नरः ।
गङ्गायमुनमासाद्य त्यजेत् प्राणान् प्रयत्नतः ॥
दीप्तकाञ्चनवर्णाभैर्विमानैर्भानुवर्णिभिः ।
ईप्सितान् लभते कामान् वदन्ति मुनिपुङ्गवाः ॥
सर्व्वरत्नमयैर्द्दिव्यैर्नानाध्वजसमाकुलैः ।
वराङ्गनासमाकीर्णैर्मोदन्ते शुभलक्षणैः ॥
गीतवादित्रनिर्घोषैः प्रसुप्तः प्रतिबुध्यते ।
अतस्तीर्थे न गृह्णीयात् पुण्येष्वायतनेषु च ॥
कपिलां पाटलाभान्तु यस्तु घेनुं प्रयच्छति ।
यावद्रोमाणि तस्या वै सन्ति गात्रेषु सत्तम ! ।
तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥”
इति कौर्म्मे प्रयागमाहात्म्ये ३३ अध्यायः ॥ * ॥
तत्र मुण्डनविधिर्यथा, --
“गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरौ मृते ।
आधाने सोमपाने च वपनं सप्तसु स्मृतम् ॥”
इति स्मृतिसमुच्चयलिखितवचनं प्रयागावच्छिन्न-
गङ्गायां विधायकम् । भास्करक्षेत्रं प्रयागः ।
अपि च । प्रयागमधिकृत्य ।
“केशानां यावती संख्या छिन्नानां जाह्नवीजले ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥”
प्रयागे स्त्रीणामपि मुण्डनं न तु केशानां द्व्यङ्गुल-
च्छेदनमात्रम् । यथा, --
“केशमूलमुपाश्रित्य सर्व्वपापानि देहिनाम् ।
तिष्ठन्ति तीर्थस्नानेन तस्मात्तान्यत्र वापयेत् ॥”
प्रयागे मुण्डनाकरणे दोषोऽपि ।
“गङ्गायां भास्करक्षेत्रे मुण्डनं यो न कारयेत् ।
स कोटिकुलसंयुक्त आकल्पं रौरवे वसेत् ॥”
इति प्रायश्चित्ततत्त्वम् ॥

**प्रयागभयः**, पुं, (प्रयागात् प्रकृष्टयागकारिजनात् विभेति स्वपदपरिग्रहशङ्कयेति । भी + अच् ।) इन्द्रः । इति शब्दरत्नमाला ॥

शरा इवावंशभवा भवन्ति हि ।
तथाविधा ये तु विशुद्धवंशजा
व्रजन्ति चापा इव तेऽतिनम्रताम् ॥”
इत्युद्भटः ॥
प्रकृष्टस्नमाधियुक्तम् । प्रकृष्टसंयोगविशिष्टम् ।
प्रकृष्टनिन्दायुक्तम् । प्रकृष्टसंयमविशिष्टम् ।
प्रपूर्ब्बयुगधात्वर्थदर्शनात् । हेतौ क्ली । यथा । न
च समवायिनिमित्ताभावप्रयुक्तो नियमेन कार्य्याभावः
किन्त्वसमवायिकारणाभावप्रयुक्तो-
ऽपि । इति रक्षितः ॥

**प्रयुक्तिः**, स्त्री, प्रयोजनम् । प्रपूर्ब्बयुजघातोभवि क्तिः (क्तिन्) । यथा, --
“तरुण्यो वृषली भार्य्या प्रवीरं पुत्त्रकान्यति ।
ऋद्धस्य राजमातङ्गा इति न स्युः प्रयुक्तयः ॥”
इति प्राञ्चः ॥
(प्रयोगः । यथा, ऋग्वेदे । १ । १५१ । ८ ।
“युवां यज्ञैः प्रथमा गोभिरञ्जत ऋतावाना मनसो न प्रयुक्तिषु ॥”
“प्रयुक्तिषु प्रयोगेषु ।” इति तद्भाष्ये सायनः ॥)

**प्रयुतं**, क्ली, (प्रकर्षेण युतम् ।) नियतम् । इति हेमचन्द्रः । ३ । ५३७ ॥ (दशलक्षसंख्या । “एक-
दशशतसहस्रायुत लक्षप्रयुतकोटयः क्रमशः ।”
इति लीलावती ॥ यथा च महाभारते । १ । ३५ । १९ ।
“बहूनीह सहस्राणि प्रयुतान्यर्व्वुदानि च ।
अशक्यान्येव संख्यातुं पन्नगानां तपोधन ! ॥”)

**प्रयाणं**, क्ली, (प्र + या + ल्युट् । णत्वम् ।) गमनम् ।

इति हलायुधः । २ । २९७ ॥ यथा, --

"उद्घाटितनवद्वारे पञ्जरे विहगोऽनिलः ।

यत्तिष्ठति तदाश्चर्य्यं प्रयाणे विस्मयः कुतः ॥"

इत्युद्भटः ॥

तत्पर्य्यायः । प्रस्थानम् २ गमनम् ३ व्रज्या ४

अभिनिर्य्याणम् ५ प्रयाणकम् ६ । इति हेम-

चन्द्रः । ३ । ४५३ ॥ अत्र राज्ञां युद्धादिप्रयाणे

**प्रयुद्धार्थः**, पुं, (प्रयुद्धः अर्थो यस्य सः ।) प्रत्युत्-
क्रमः । इति प्रयोगार्थशब्दटीकायां
रमानाथः ।
३ । २ । २६ ॥

**प्रयोक्ता**, [ऋ] पुं, (प्रयुनक्तीति । प्र + युज् +
तृच् ।) उत्तमर्णः । यथा, --
"उत्तमर्णाधमर्णौ द्वौ प्रयोक्तृग्राहकौ
क्रमात् ॥"
इत्यमरः । २ । ९ । ५ ॥
त्रि, प्रयोगकर्त्ता । (यथा, रघुः । ५ । ५७
।
"संमोहनं नाम सखे ! ममास्त्रं
प्रयोगसंहारविभक्तमन्त्रम् ।
गान्धर्व्वमादत्स्व यतः प्रयोक्तु-
र्नचारिहिंसा विजयश्च हस्ते ॥"
अनुष्ठाता । यथा, रघुः । ६ । ७६ ।
"पुत्त्रो रघुस्तस्य पदं प्रशास्ति
महाक्रतोर्विश्वजितः प्रयोक्ता ॥"
नियोगकर्त्ता । यथा, महाभारते । १३ ।
२३ । ६२ ।
"परदाराभिहर्त्तारः परदाराभिमर्षिणः ।
परदारप्रयोक्तारस्ते वै निरयगामिनः ॥"
नाट्याचार्य्यः । यथा, रघुः । १९ । ३६
।
"स प्रयोगनिपुणः प्रयोक्तृभिः
सञ्जघर्ष सह मित्रसन्निधौ ॥")

**प्रयोगः**, पुं, (प्र + युज् + भावकर्म्मादौ यथायथं
घञ् ।) कार्म्मणम् । वशीकरणम् ।
प्रयुक्तिः ।
(यथा, रघुः । २ । ४२ ।
"प्रत्यब्रवीच्चैनमिषुप्रयोगे
तत्पूर्ब्बभङ्गे वितथप्रयत्नः ॥")
निदर्शनम् । इति मेदिनी । गे, ४४ ॥
(यथा,
पञ्चदश्याम् । ६ । ४३ ।
"स्वयमात्मेति पर्य्यायस्तेन लोके तयोः
सह ।
इति सुपद्मव्याकरणम् ॥ (यथा, राजतर-
ङ्गिण्याम् । ६ । ११९ ।
"यान् द्रोहभीरून् सम्भाव्य संविभेजे यशस्करः
।
तस्य तत्तनयोच्छेदे त एवासन् प्रयोजकाः ॥"
नियन्ता । यथा, याज्ञवल्क्ये । १ । ५ । ०
"शातातपो वशिष्ठश्च धर्म्मशास्त्रप्रयोजकाः
॥")

**प्रयोजनं**, क्ली, (प्रयुज्यते इति । प्र + युज् + ल्युट् ।)
कार्य्यम् । (प्रयुज्यतेऽनेनेति । प्र + युज् +
करणे
ल्युट् ।) हेतुः । इति मेदिनी । ने, १९३ ॥
यथा,
"सर्व्वस्यैव हि शास्त्रस्य कर्म्मणो वापि
कस्यचित् ।
यावत् प्रयोजनं नोक्तं तावत् केन प्रगृह्यते ॥
सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते ।
ग्रन्थादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥"
इति प्राञ्चः ॥
("प्रयोजनञ्च द्विविधं मुख्यं गौणञ्च । तत्र
अन्ये च्छानधीनेच्छाविषयत्वं
मुख्यप्रयोजनत्वम् ।
अन्येच्छाधीनेच्छाविषयत्वं गौणप्रयोजनत्वम् ।
तत्राद्यं सुखं तद्भोगो दुःखाभावश्च द्वितीयं
तदुपकारि शयनभोजनादि । तस्य मुख्यप्रयो-
जनेच्छयैव जन्याया इच्छाया विषयत्वात्तथा-
त्वम् ।" इति मुक्तिवादे गदाधरः ॥ उद्देशः ।
यथा,
"अथ प्रयोजनम् । प्रयोजनं नाम
यदर्थमारभ्यन्त
आरम्भाः । यथा यद्यकालमृत्युरस्ति ततोऽह-
मात्मानमायुष्यैरुपचरिष्याम्यनायुष्यैः परिहरि-
ष्यामि कथं न मामकालमृत्युः प्रसहेतेति !"
इति चरके विमानस्थानेऽष्टमेऽध्याये ॥)

**प्रयोज्यः**, त्रि, (प्र + युज् + ण्यत् । "प्रयोज्य-
नियोज्यौ शक्यार्थे ।" ७ । ३ । ६८ । इति
निपा-
तनात् साधुः ।) प्रयोक्तुं शक्यः । इति मुग्ध-
नन्दीवृक्षः । तत्पर्य्यायो यथा, --
"नन्दीवृक्षोऽश्वत्थभेदः प्ररोहो
गजपादपः ।
स्थालीवृक्षः क्षयतरुः क्षीरी च
स्याद्वनस्पतिः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे
भागे ॥)

**प्रलपितः**, त्रि, प्रपूर्व्वलपधातोः कर्म्मणि क्तः ।
कथितः । यथा, काव्यप्रकाशे ।
"जनस्थाने भ्रान्तं
कनकमृगतृष्णान्वितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम्
॥"

**प्रलम्बः**, पुं, (प्रलम्बते इति । प्र + लम्ब + अच् ।
अतिदीर्घत्वादेव तथात्वम् ।) दैत्यभेदः
। स च
दनुपुत्त्रः मनुष्यवध्यः । यथा, --
"एकाक्ष ऋषभोऽरिष्टः प्रलम्बनरकौ
तथा ।
इन्द्रवाधनकेशी च पुरः शङ्कोऽथ धेनुकः
॥
गवेष्टिको गवाक्षश्च तालकेतुश्च
वीर्य्यवान् ।
एते मनुष्यवध्यास्तु दनोः पुत्त्रान्वयाः
स्मृताः ॥"
इत्यग्निपुराणम् ॥
(अयं हि बलदेवेन निहतः । यथा,
भागवते ।
१० स्कन्धे १८ । अध्याये ।
"तत्रोपाहूय गोपालान् कृष्णः प्राह
विहार-
वित् ।
हे गोपा विहरिष्यामो द्वन्द्वीभूय
यथायथम् ॥
तत्र चक्रुः परिवृढौ गोपा रामजनार्द्दनौ ।
कृष्णसङ्घट्टिनः केचिदासन् रामस्य
चापरे ॥

प्रयोगो नास्त्यतः
स्वत्वमात्मत्वञ्चान्यवारकम् ॥”)
घोटकः । इति शब्दमाला ॥ (सामाद्युपा-
यानुष्ठानम् । यथा, माघे । ११ । ६ ।
“क्षणशयितविबुद्धाः कल्पयन्तः प्रयोगा-
नुदधिमहति राज्ये काव्यवद्दुर्विगाहे ॥”
अभिनयः । यथा, रघुः । १९ । ३६ ।
“स प्रयोगनिपुणः प्रयोक्तृभिः
सञ्जघर्ष सह मित्रसन्निधौ ॥”
वृद्ध्यै ऋणदानम् । स तु
धनप्राप्त्युपायेषु अन्य-
तमः । यथा, मनुः । १० । ११५ ।
“सप्त वित्तागमा धर्म्म्या दायो लाभः
क्रयो जयः ।
प्रयोगः कर्म्मयोगश्च सत्प्रतिग्रह एव च
॥”)

**प्रयोगार्थः**, पुं, (प्रयोगः अर्थः प्रयोजनं यस्य ।)
प्रधानप्रयोगानुकूलं प्रयोजनानुष्ठानम् ।
तत्-
पर्य्यायः । प्रत्युत्क्रमः २ । इत्यमरः । ३
। २ । २६ ॥

**प्रयोगी**, [न्] त्रि, (प्रयोगोऽस्त्यस्येति । प्रयोग +
“अत इनिठनौ ।” ५ । २ । ११५ । इति
इनिः ।)
प्रयोगयुक्तः । (यथा, अमरे । २ । ७ ।
२० ।
“समूह्यः परिचाय्योपचाय्यावग्नौ
प्रयोगिणः ॥”)

**प्रयोजकः**, त्रि, (प्रयुनक्ति प्रेरयति कार्य्यादौ
भृत्यादीनिति । प्र + युज् + ण्वुल् ।)
प्रयोग-
कर्त्ता । नियोगकर्त्ता ।
स्वतन्त्रतत्प्रयोजकौ कर्त्ता ।
बोधव्याकरणम् ॥ (यथा, मनुः । ३ । १५९ ।
“वाक् चैव मधुरा श्लक्ष्णा प्रयोज्या धर्म्म-
मिच्छता ॥”)
मूलधने, क्ली ॥

**प्ररूढः**, पुं, (प्ररोहत्यत्रेति । प्र + रुह + क्तः ।)
जठरम् । इति मेदिनी । ढे, ८ ॥ (क्वचित् जर-
ठोऽपि पाठः ॥)

**प्ररूढः**, त्रि, (प्र + रुह् + क्तः ।) बद्धमूलः ।
इति मेदिनी । ढे, ८ ॥ (यथा, भागवते । ४ ।
१३ । १ ।
“प्ररूढभावो भगवत्यधोक्षजे
प्रष्टुं पुनस्तं विदुरः प्रचक्रमे ॥”)
जातः । (यथा, रघुः । १३ । ६ ।
“नाभिप्ररूढाम्बुरुहासनेन
संस्तूयमानः प्रथमेन धात्रा ॥”)
प्रवृद्धः । इति शब्दरत्नावली ॥

**प्ररोहः**, पुं, (प्ररोहतीति । प्र + रुह् + अच् ।)
अङ्कुरः । इति हेमचन्द्रः । ४ । १८५ ॥ (यथा,
कुमारे । ५ । ६० ।
“द्रुमेषु सख्या कृतजन्मसु स्वयं
फलं तपःसाक्षिषु दृष्टमेष्वपि ।
न च प्ररोहाभिमुखोऽपि दृश्यते
मनोरथोऽस्याः शशिमौलिसंश्रयः ॥”
आचेरुर्विविधाः क्रीडा
वाह्यवाहकलक्षणाः ।
यत्रारोहन्ति जेतारो वहन्ति च
पराजिताः ॥”
“उवाह कृष्णो भगवान् श्रीदामानं
पराजितः ।
वृषभं भद्रसेनस्तु प्रलम्बो रोहिणीसुतम्
॥
अविषह्यं मन्यमानः कृष्णं दानवपुङ्गवः
।
वहन् द्रुततरं प्रागादवरोहणतः परम् ॥”
“अथागतस्मृतिरभयो रिपुं बलो
विहायसार्थमिव हरन्तमात्मनः ।
रुषाहनच्छिरसि दृढेन मुष्टिना
सुराधिपो गिरिमिव वज्ररंहसा ॥
स आहतः सपदि विशीर्णमस्तको
मुखाद्वमन् रुधिरमपस्मृतोऽसुरः ।
महारवं व्यसुरपतत् समीरयन्
गिरिर्य्यथा मघवत आयुधाहतः ॥”)
त्रपुषः । पयोधरः । लताङ्कुरः । शाखा ।
हार-
भेदः । (भावे घञ् ।) प्रलम्बनम् । इति
मेदिनी । बे,
१३ ॥ (देशविशेषः । यथा, रामायणे ।
२ । ६८ । १२ ।
“न्यन्तेनापरतालस्य प्रलम्बस्योत्तरं
प्रति ।
निषेवमाणास्ते जग्मुर्नदीं मध्येन
मालिनीम् ॥”
लम्बमाने, त्रि । यथा, महाभारते । १ ।
१९५ । १० ।
“गूढोत्तरांसान् भुजगेन्द्रभोग-
प्रलम्बबाहून् पुरुषप्रवीरान् ॥”)

**प्रलम्बघ्नः**, पुं, (प्रलम्बं हन्तीति । हन् + कः ।)
बलरामः । इत्यमरः । १ । १ । २४ ॥

**प्रलम्बभित्**, पुं, (प्रलम्बं भिनत्तीति । भिद् + क्विप् ।)
बलरामः । इति हेमचन्द्रः । २ । १३८
॥

**प्रलम्बाण्डः**, पुं, (प्रलम्बो लम्बमानः अण्डो यस्य ।)

|  |  | दीर्घाण्डकोषविशिष्टः। तत्पर्य्यायः।<br>पुष्करः २।<br>इति हेमचन्द्रः। ३। १२१॥ |
| --- | --- | --- |

**प्रलम्बितः**, त्रि, प्रपूर्ब्बलम्बधातोः कर्त्तरि क्तः ॥

प्रकर्षेण लम्बितमाल्यादिः ॥

**प्रलयः**, पुं, (प्रलीयते क्षीयते जगदस्मिन्निति । प्र +

ली + "एरच् ।" ३ । ३ । ५६ । इत्यच् ।)
प्रक्षयः । तत्पर्य्यायः । संवर्त्तः २ कल्पः ३
क्षयः ४ कल्पान्तः ५ । इत्यमरः । १ । ४ ।
२२ ॥
लयः ६ संक्षयः ७ विलयः ८ । इति
शब्दरत्ना-
वली ॥ प्रतिसर्गः ९ प्रतिसञ्चरः १० । स च
नित्यनैमित्तिकप्राकृतात्यन्तिकभेदेन चतुर्धा ।
यथा, --
कूर्म्म उवाच ।
"नित्यं नैमित्तिकञ्चैव प्राकृतात्यन्तिकौ तथा ।
चतुर्धायं पुराणेऽस्मिन् प्रोच्यते प्रतिसञ्चरः ॥"
*
नित्यो यथा, --
"योऽयं संदृश्यते नूनं नित्यं लोके क्षयन्त्विह ।
नित्यं संकीर्त्त्यते नाम्ना मुनिभिः प्रतिसञ्चरः
॥"
नैमित्तिको यथा, --
"ब्राह्मो नैमित्तिको नाम कल्पान्ते यो भवि-
ष्यति ।
त्रैलोक्यस्यास्य कथितः प्रतिसर्गो मनीषिभिः
॥"
प्राकृतो यथा, --
"महदाद्यं विशेषान्तं यदा संयाति संक्षयम् ।
प्राकृतः प्रतिसर्गोऽयं प्रोच्यते कालचिन्तकैः
॥"
आत्यन्तिको यथा, --
"ज्ञानादात्यन्तिकः प्रोक्तो योगिनः परमात्मनि
।
प्रलयः प्रतिसर्गोऽयं कालचिन्तापरैर्द्विजैः ॥
आत्यन्तिकश्च कथितः प्रलयो लयसाधनः
॥" * ॥
नैमित्तिकप्रलयविस्तारोयथा, --
"नैमित्तिकमिदानीं वः कीर्त्तयिष्ये समासतः ॥
चतुर्युगसहस्रान्ते संप्राप्ते प्रतिसञ्चरे ।
आत्मसंस्थाः प्रजाः कर्त्तुं प्रतिपेदे प्रजापतिः ॥
चतुर्लोकमिदं कृत्स्नं निर्द्दहत्यात्मतेजसा ॥
ततः प्रलीने सर्व्वस्मिन् जङ्गमे स्थावरे
तथा ।
निर्वृक्षा निस्तृणा भूमिः कूर्म्मपृष्ठे प्रकाशते
॥
अम्बरीशमिवाभाति सर्व्वमापूरितं जगत् ।
सर्व्वमेव तदार्च्चिर्भिः पूर्णं जाज्वल्यते नभः
॥
पाताले यानि तीर्थानि महोदधिगतानि तु ।
तत्र तानि प्रलीयन्ते भूमित्वमुपयान्ति वै ॥
द्वीपांश्च पर्व्वतांश्चैव वर्षाण्यथ महोदधीन्
।
तान् सर्व्वान् भस्मसात् कृत्वा सप्तात्मा
पावकः
प्रभुः ॥
समुद्रेभ्यो नदीभ्यश्च पातालेभ्यश्च
सर्व्वशः ।
पिबन्नपः समिद्धोऽग्निः
पृथिवीमाश्रितोऽज्वलत् ॥
ततः सम्बर्त्तकः शैलानतिक्रम्य महांस्तथा
।
लोकान् दहति दीप्तात्मा
रुद्रतेजोविजृम्भितः ॥
स दग्ध्वा पृथिवीन्देवो रसातलमशोषयत् ।
अधस्तात् पृथिवीं दग्ध्वा दिवमूर्द्धं
दहिष्यति ॥
योजनानां शतानीह सहस्राण्ययुतानि च ।
उत्तिष्ठन्ति शिखास्तस्य वायुः
सम्बकर्त्तस्य च ॥
गन्धर्व्वांश्च पिशाचांश्च सयक्षोरगराक्षसान्
।
तदा दहत्यसौ दीप्तः कालरुद्रप्रचोदितः ॥
भूर्लोकञ्च भुवर्लोकं स्वर्लोकञ्च तथा महः ।
दहेदशेषं कालाग्निः कालो विश्वतनुः
स्वयम् ॥
व्युष्टेषु तेषु लोकेषु तिर्य्यगूर्द्धमथाग्निना ।
तत्तेजः समनुप्राप्य कृत्स्नं जगदिदं शनैः ॥
आयोगृहनिभं सर्व्वं तदेवैकं प्रकाशते ।
पुनः पतति तद्भूमौ पूर्य्यन्ते तेन
चार्णवाः ॥
ततः समुद्राः स्वां वेलामतिक्रान्तास्तु
कृत्स्नशः ।
पर्व्वताश्च विलीयन्ते मही चाप्सु
निमज्जति ॥
तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजङ्गमे
।
योगनिद्रां समास्थाय शेते देवः
प्रजापतिः ॥
चतुर्युगसहस्रान्तं कल्पमाहुर्म्महर्षयः ।
वराहो वर्त्तते कल्पो यस्य विस्तार
ईरितः ॥
असंख्यातास्तथा कल्पा
ब्रह्मविष्णुशिवात्मकाः ।
कथिता हि पुराणेषु मुनिभिः
कालचिन्तकैः ॥
सात्विकेष्वथ कल्पेषु
माहात्म्यमखिलं हरेः ।
तामसेषु शिवस्योक्तं राजसेषु
प्रजापतेः ।
सोऽयं प्रवर्त्तते कल्पो वाराहः
सात्विको मतः ।
अन्ये च सात्विकाः कल्पा मम तेषु
परिग्रहः ।
ध्यानन्तपस्तथा ज्ञानं लब्ध्वा तेष्वेव
योगिनः ॥
आराध्य गिरिशं यत्नात् याति तत्परमं
पदम् ।
सोऽहं स त्वं समाधाय मायी मायामयं
स्वयम् ॥
एकार्णवे जगत्यस्मिन् योगनिद्रां
व्रजानि तु ।
मां पश्यन्ति महात्मानः सुप्तं काले
महर्षयः ।
जनलोके वर्त्तमानास्तपसा योगचक्षुषा
।
अहं पुराणपुरुषो भूर्भुवःप्रभवो विदुः ॥

ततो भवत्यनावृष्टिस्तीव्रा सा शतवार्षिकी ।
भूतक्षयकरी घोरा सर्व्वभूतभयङ्करी ॥
ततो यान्यल्पसाराणि शस्यानि पृथिवीतले ।
तानि चाग्रे प्रलीयन्ते भूमित्वमुपयान्ति च ॥
सप्तरश्मिरथो भूत्वा समुत्तिष्ठन् दिवाकरः ।
असह्यरश्मिर्भवति पिबन्नम्भो गभस्तिभिः ॥
ततस्ते रश्मयः सप्त पिबन्त्यम्बु महार्णवे ।
तेनाहारेण ते सूर्य्या दीप्ताः सप्त भवन्ति हि ॥
तस्य ते रश्मयः सप्त सूर्य्या भूत्वा चतुर्द्दिशम् ।
चतुर्लोकमिदं कृत्स्नं दहन्ति शिखिनो यथा ॥
व्याप्नुवन्तश्च ते विप्रास्तूर्द्ध्वञ्चाधश्च रश्मिभिः
।
दीप्यन्ते भास्कराः सप्त दहन्तोऽग्निप्रतापिनः ॥
ते सूर्य्या वारिणा दीप्ता बहुसाहस्ररश्मयः ।
खं समावृत्य तिष्ठन्ति निर्द्दहन्तो वसुन्धराम् ॥
ततस्तेषां प्रतापेन दह्यमाना वसुन्धरा ।
साद्रिनद्यर्णवद्वीपा निःस्नेहा समपद्यत ॥
दीप्ताभिः सन्तताभिश्च ज्वालाभिश्च
समावृतः ।
अघश्चोर्द्धञ्च तिर्य्यक् च समावृत्य सहस्रशः ॥
सूर्य्याग्निना प्रसृष्टानां संहृष्टानां परस्परम् ।
एकत्वमुपजातानामेकज्वालो भवेत् प्रभुः ॥
सर्व्वलोकप्रणाशश्च सोऽग्निर्भूत्वात्मकुण्डली ।

ततो गजकुलोन्नादाः स्तनितैः समलङ्कृताः
॥
उत्तिष्ठन्ति तदा व्योम्नि घोराः संवर्त्तका
घनाः ।
केचिन्नीलोत्पलश्यामाः केचित्
कुमुदसन्निभाः ॥
धूम्रवर्णास्तथा केचित् तथा पीताः
पयोधराः ।
केचिद्रक्ताभ्रवर्णाश्च स्थूलाः
क्षारनिभास्तथा ॥
शङ्खकुन्दनिभाश्चान्ये जात्यञ्जननिभाः परे
।
मनःशिलानिभास्त्वन्ये कपोतसदृशाः परे
॥
केचिद्धुद्राक्षवर्णाभास्तथान्ये क्षीरसन्निभाः ।
तथा कर्व्वूरवर्णाभा भिन्नाञ्जननिभास्तथा ॥
इन्द्रगोपनिभाः केचिद्धरितालनिभास्तथा ।
काकाण्डकनिभाः केचिदुत्तिष्ठन्ति घना
दिवि ॥
केचित् पर्व्वतसङ्काशाः
केचिद्गजकुलोपमाः ।
कूटागारनिभाश्चान्ये केचिन्मीनकुलोद्वहाः
॥
बहुरूपा घोररूपा घोरस्वरनिनादिनः ।
तदा जलधराः सर्व्वे पूरयन्ति नभस्तलम्
॥
ततस्ते जलदा घोरा वारिणा
भास्करात्मजाः ।
सप्तधा संवृतात्मानस्तमग्निं शमयन्त्युत ॥
ततस्ते जलदा वर्षं वर्षन्तीह हिमौघवत् ।
सुघोरमशिवं सर्व्वं नाशयन्ति च पावकम् ॥
प्रवृत्तेन तदात्यर्थमम्भसा पूर्य्यते किल ।
अद्भिस्तेजोऽभिभूतत्वात्तदाग्निः प्रविशत्यपः
॥
नष्टे चाग्नौ वर्षशतैः पयोदा जलसम्भवाः ।
प्लावयन्तोऽथ भुवनं महाजलपरिस्रवैः ॥
धाराभिः पूरयन्तीदं चोद्यमानाः स्वयम्भुवा
।
उद्यन्तः सलिलौघैश्च वेला इव महोदधे ॥
साद्रिद्वीपा तथा पृथ्वी जलैः संछाद्यते
शनैः ॥

सहस्रचरणः श्रीमान् सहस्राक्षः
सहस्रपात् ।
मन्त्रोऽग्निर्ब्राह्मणा गावः कुशाश्च
समिधो ह्यहम् ॥
प्रोक्षणी च स्रुवश्चैव सोमो
घृतमयोऽस्म्यहम् ।
संवर्त्तको महानात्मा पवित्रं परमं यशः
॥
वेदवेद्यः प्रभुर्गोप्ता गोपतिर्ब्रह्मणो मुखम्
।
अनन्तस्तारको योगी गतिर्मतिमतां
वरः ॥
हंसः प्राणोऽथ कपिलो विश्वमूर्त्तिः
सनातनः ।
क्षेत्रज्ञः प्रकृतिः कालो
जगद्बीजमथामृतम् ॥
माता पिता महादेवो मत्तो ह्यन्यन्न
विद्यते ॥
आदित्यवर्णो भुवनस्य गोप्ता
नारायणः पूरुषो योगमूर्त्तिः ।
मां पश्यन्ति यतयो योगनिष्ठा
ज्ञात्वात्मानममृतत्वं व्रजन्ति ॥" * ॥
प्राकृतप्रलयविस्तारो यथा, --
कूर्म्म उवाच ।
"अतःपरं प्रवक्ष्यामि
प्रतिसर्गमनुत्तमम् ।
प्राकृतं प्रसमासेन शृणुध्वं गदतो मम
॥
गते परार्द्धद्वितये काले
लोकप्रकालकः ।
कालाग्निर्भस्मसात् कर्त्तुं करोति
निखिलं
मतिम् ॥
आत्मन्यात्मानमावेश्य भूत्वा देवो
महेश्वरः ।
दहेदशेषं ब्रह्माण्डं सदेवासुरमानुषम् ॥
तमाविश्य महादेवो
भगवान्नीललोहितः ।
करोति लोकसंहारं भीषणं
लोकमाश्रितः ॥

| | | |
|---|---|---|
| | आदित्यरश्मिभिः पीतं जलमभ्रेषु तिष्ठति । | प्रविश्य मण्डलं सौरं कृत्वासौ बहुधा पुनः ।<br>निर्दहत्यखिलं लोकं सप्तसप्तिस्वरूपधृक् ॥<br>स दग्ध्वा सकलं सत्त्वं मन्त्रं ब्रह्मशिरो महत् ।<br>देवतानां शरीरेषु क्षिपत्यखिलदाहकः ॥<br>दग्धेष्वशेषदेहेषु देवी गिरिवरात्मजा ।<br>एका सा साक्षिणः शम्भोस्तिष्ठते वैदिकी श्रुतिः ॥<br>शिरःकपालैर्देवानां कृतस्रग्वरभूषणः ।<br>आदित्यचन्द्रादिगणैः पूरयन् व्योममण्डलम् ॥ |

सहस्रनयनो देवः सहस्राकृतिरीश्वरः ।
सहस्रहस्तचरणः सहस्रार्च्चिर्महाभुजः ॥
दंष्ट्राकरालवदनः प्रदीप्तानललोचनः ।
त्रिशूली कृत्तिवसनो योगमैश्वरमास्थितः ॥
पीत्वा तत् परमानन्दं प्रभूतममृतं स्वकम् ।
करोति ताण्डवं देवीमालोक्य परमेश्वरः ॥
पीत्वा नृत्यामृतं देवी भर्त्तुः परममङ्गला ।
योगमास्थाय देवस्य देहमायाति शूलिनः ॥
स त्यक्त्वा ताण्डवरसं स्वेच्छयैव पिनाकधृक् ।
याति स्वभावं भगवान् दग्धा ब्रह्माण्डमण्डलम् ॥
संस्थितेष्वथ देवेषु ब्रह्मविष्णुपिनाकिषु ।
गुणैरनेकैः पृथिवी विलयं याति वारिषु ।
स वारितत्त्वं सगुणं ग्रसते हव्यवाहनः ॥
तैजसं गुणसंयुक्तं वायौ संयाति संक्षयम् ।
आकाशे सगुणो वायुः प्रलयं याति सत्तमाः ॥
भूतादौ च तथाकाशं लीयते गुणसंयुतम् ।
इन्द्रियाणि च सर्व्वाणि तैजसे यान्ति संक्षयम् ॥
वैकारिके देवगणाः प्रलयं यान्ति सत्तमाः ।
वैकारिकस्तैजसश्च भूतादिश्चेति सत्तमाः ॥
त्रिविधोऽयमहङ्कारो महति प्रलयं व्रजेत् ।
महान्तमेभिः सहितं ब्रह्माणममृतौजसम् ॥
अव्यक्तं जगतो योनिः संहरेदेकमव्ययम् ।
एवं संहृत्य भूतानि तत्त्वानि च महेश्वरः ॥
नियोजयत्यथान्योन्यं प्रधानं पुरुषं परम् ।
प्रधानपुंसोरजयोरेष संहार ईरितः ॥
महेश्वरेच्छाजनितो न स्वयं विद्यते लयः ।
गुणसाम्यं तदव्यक्तं प्रकृतिः परिगीयते ॥
प्रधानं जगतो योनिर्मायातत्त्वमचेतनम् ।
कूटस्थश्चिन्मयो ह्यात्मा केवलः पञ्चविंशकः ॥
गीयते मुनिभिः साक्षी महानेकः पितामहः ।
एवं संहारकरणी शक्तिर्माहेश्वरी ध्रुवा ॥
प्रधानाद्यं विशेषान्तं दहेद्रुद्र इति श्रुतिः ।
योगिनामथ सर्व्वेषां ज्ञानविन्यस्तचेतसाम् ।
आत्यन्तिकञ्चैव लयं विदधातीह शङ्करः ॥”
इति कौर्म्मे । ४२ । ४३ । अध्यायौ ॥ * ॥

तापो द्विजवरश्रेष्ठ ! कथ्यते चाधिदैविकः ॥
तदस्य त्रिविधस्यापि दुःखजातस्य पण्डितैः ।
गर्भजन्मजराद्येषु स्थानेषु प्रभविष्यतः ॥
निरस्तातिशयाह्लादसुखभावैकलक्षणा ।
भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकी मता ॥
तस्मात्तत्प्राप्तये यत्नः कर्त्तव्यः पण्डितैर्नरैः ।
तत्प्राप्तिहेतुर्ज्ञानञ्च कर्म्म चोक्तं महामुने ! ॥
आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते ।
शब्दब्रह्मागममयं परं ब्रह्म विवेकजम् ॥
अन्धन्तम इवाज्ञानं दीपवच्चेन्द्रियोद्भवम् ।
यथा सूर्य्यस्तथा ज्ञानं यद्विप्रर्षे विवेकजम् ॥
मनुरप्याह वेदार्थं स्मृत्वा यन्मुनिसत्तम ! ।
तदेतच्छ्रूयतामत्र सम्बन्धे गदतो मम ॥
द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परञ्च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥
द्वे विद्ये वेदितव्ये वै इति वाथर्व्वणी श्रुतिः ।
परया त्वक्षरप्राप्तिरृग्वेदादिमया परा ॥
यत्तदव्यक्तमजरमचिन्त्यमजमव्ययम्।
अनिर्द्देश्यमरूपञ्च पाणिपादाद्यसंयुतम् ॥
विभुं सर्व्वगतं नित्यं भूतयोनिमकारणम्।
व्याप्यव्याप्यं यतः सर्व्वं तं वै पश्यन्ति सूरयः ॥
तद्ब्रह्म तत् परं धाम तद्ध्येयं मोक्षकाङ्क्षि-णाम् ।
श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम् ॥
तदेव भगवद्वाच्यं स्वरूपं परमात्मनः ।
वाचको भगवच्छब्दस्तस्याद्यस्याक्षरात्मनः ॥
एवं निगदितार्थस्य सतत्त्वं तस्य तत्त्वतः ।
ज्ञायते येन तज्ज्ञानं परमन्यत्त्रयीमयम् ॥
अशब्दगोचरस्यापि तस्यैव ब्रह्मणो द्विज ! ।
पूजायां भगवच्छब्दः क्रियते ह्यौपचारिकः ॥
शुद्धे महाविभूत्याख्ये परे ब्रह्मणि वर्त्तते ।
मैत्रेय ! भगवच्छब्दः सर्व्वकारणकारणे ॥
सर्व्वाणि तत्र भूतानि वसन्ति परमात्मनि ।

सर्व्वेश्वरः सर्व्वदृक् सर्व्ववेत्ता
समस्तशक्तिः परमेश्वराख्यः ॥
स ज्ञायते येन तदस्तदोषं
शुद्धं परं निर्म्मलमेकरूपम् ।
संदृश्यते चाप्यवगम्यते वा
तज्ज्ञानमज्ञानमतोऽन्यदुक्तम् ॥”
इति विष्णुपुराणे ६ अंशे आत्यन्तिकप्रति-सञ्चारो नाम ५ अध्यायः ॥ * ॥
अपि च ।
नारद उवाच ।
“कृतं त्रेता द्वापरश्च कलिश्चेति चतुर्युगम् ।
दिव्यमेकयुगं ज्ञेयं तस्य या वैकसप्ततिः ॥
मन्वन्तरन्तु तज्ज्ञेयं ते तु यत्र चतुर्द्दश ।
स कल्पो नाम वै कालस्तदन्ते प्रलयस्तु यः ॥
सा ब्रह्मरात्री राजेन्द्र ! यत्र शेतेऽम्बुजासनः ।
त्रयो लोकास्तदा राजन् ! लीयन्ते तन्निमित्ततः ॥
नैमित्तिको लयो नाम दैनन्दिन इतीर्य्यते ॥
एवं दिनप्रमाणेन ब्रह्मणः शतवार्षिकम् ।
आयुः पूर्ब्बपरार्द्धे तु परार्द्धे द्वे प्रकीर्त्तिते ॥
द्विपरार्द्धे व्यतीते तु ब्रह्मणो जगदात्मनः ।
तदा प्रकृतयः सप्त प्रलयं यान्ति भूमिप ! ॥
लयः प्राकृतिको ह्येष लीने ब्रह्मणि भूपते ! ।
अण्डकोषेऽपि सकलः प्रलयं याति सर्व्वशः ॥
पूर्ब्बरूपन्तु वक्ष्यामि प्रलयस्यास्य भूपते ! ।

आत्यन्तिकप्रलयविस्तारोयथा, --
श्रीपराशर उवाच ।
“आध्यात्मिकादि मैत्रेय ! ज्ञात्वा तापत्रयं बुधः ।
उत्पन्नज्ञानवैराग्यः प्राप्नोत्यात्यन्तिकं लयम् ॥
आध्यात्मिको वै द्विविधः शारीरो मानसस्तथा ।
शारीरो बहुभिर्भेदैर्भिद्यते श्रूयताञ्च सः ॥
शिरोरोगप्रतिश्यायज्वरशूलभगन्दरैः ।
गुल्मार्शःश्वयथुश्वासच्छर्द्यादिभिरनेकधा ॥
तथाक्षिरोगातीसारकुष्ठाङ्गामयसंज्ञकैः ।
भिद्यते देहजस्तापो मानसं श्रोतुमर्हसि ॥
कामक्रोधभयद्वेषलोभमोहविषादजः।
शोकासूयावमानेर्ष्यामात्सर्य्यादिभवस्तथा॥
मानसोऽपि द्विजश्रेष्ठ ! तापो भवति नैकधा ।
इत्येवमादिभिर्भेदैस्तापो ह्याध्यात्मिकः स्मृतः ॥
मृगपक्षिमनुष्याद्यैः पिशाचोरगराक्षसैः ।
सरीसृपाद्यैश्च नृणां जन्यते चाधिभौतिकः ॥
शीतोष्णवातवर्षाम्बुवैद्युतादिसमुद्भवः ।

भूतेषु च स सर्व्वात्मा वासुदेवस्ततः स्मृतः ॥
खाण्डिक्यजनकायाह पृष्टः केशिध्वजः पुरा ।
नामव्याख्यायनन्तस्य वासुदेवस्य तत्त्वतः ॥
भूतेषु वसते सोऽन्तर्व्वसन्त्यत्र च तानि यत् ।
धाता विधाता जगतां वासुदेवस्ततः प्रभुः ॥
स सर्व्वभूतप्रकृतिर्विकार-
गुणांश्च दोषांश्च मुने ! व्यतीतः ।
अतीतसर्व्वावरणाखिलात्मा
तेनास्तृतं यद्भुवनान्तराणि ॥
समस्तकल्याणगुणात्मकोहि
स्वशक्तिलेशावृतभूतसर्गः ।
इच्छागृहीताभिमतोरुदेहः
संसाधिताशेषजगद्धितोऽसौ ॥
तेजोबलैश्वर्य्यमहान्वितश्च
स्ववीर्य्यशक्त्यादिगुणैकराशिः ।
परः पराणां सकला न यत्र
क्लेशादयः सन्ति परावरेशे ॥
स ईश्वरो व्यष्टिसमष्टिरूपो-
ऽव्यक्तस्वरूपः प्रकटस्वरूपः ।

शतवर्षाणि भूमौ हि पर्ज्जन्यो नैव वर्षति ॥
दुर्भिक्षे निर्जने लोके प्रजाः सर्व्वाः क्षुधार्द्दिताः ।
परस्परं भक्ष्यमाणाः क्षयं यास्यन्ति भूमिप ! ॥
समुद्रे च धरण्याञ्च वृक्षेषु च लतासु च ।
देहे च यो रसस्तं हि रविर्हरति रश्मिभिः ॥
ततः संवर्त्तको नाम ज्वालामाली हुताशनः ।
सङ्कर्षणमुखोत्पन्नो दहत्यनिलसारथिः ॥
सर्व्वं ब्रह्माण्डभाण्डं वै तत्कालक्षोभगर्ज्जितः ।
एवं दग्धं महाराज ! वह्न्यर्कांभ्यां समन्ततः ॥
दग्ध्वा गोमयपिण्डाभं ब्रह्माण्डं सारवर्ज्जितम् ।
प्रचण्डपवनो राजंस्ततो वर्षशतं पुनः ॥
संवर्त्तको नाम महान् ब्रह्माण्डं चालयिष्यति ।
ततो मेघा महाघोरा नानावर्णा अनेकशः ॥
शतं वर्षाणि वर्षन्ति गर्ज्जन्ति च महास्वनाः ।
एकोदकं ततो विश्वं निर्गुणं निर्व्विकारकम् ॥
भूमेर्गन्धगुणं राजन् ! ग्रसन्त्यापः समन्ततः ।
गुणनाशात् स्वयं पृथ्वी प्रलयं प्राप्स्यते तदा ॥
तेजस्त्वपां रसगुणं सगन्धं पिबते बलात् ।
ततः प्रलयमायान्ति राजन्नापोऽपि तत्क्षणात् ॥
तेजसस्तु ततो रूपं रसगन्धसमन्वितम् ।

| | | |
|---|---|---|
| | | वायुर्हरति चण्डात्मा<br>तेजःप्रलयमृच्छति ॥<br>आकाशस्तु ततो वायोः स्पर्शं<br>परगुणैः सह ।<br>समादत्ते महाराज ! अम्बरेऽथ<br>प्रलीयते ॥<br>आकाशस्य गुणं शब्दं गुणैरन्यैः<br>समन्वितम् ।<br>अहङ्कारः समादत्ते नभस्तस्मिन्<br>प्रलीयते ॥<br>तैजसेष्विन्द्रियाण्यङ्गदेवा वैकारिके<br>तथा ।<br>अहङ्कारे प्रलीयन्ते जगदेतच्चराचरम्<br>॥<br>अहङ्कारं भक्षयन्ति ततः सत्त्वादयो<br>गुणाः ।<br>ग्रसते तान् महाराज ! आद्या<br>प्रकृतिरुच्यते ॥ |

न तस्याः कालदोषेण परिणामो नरर्षभ ! ।
आद्यन्तरहिता सा हि नित्यं कारणमव्ययम्
॥
शक्तिर्भगवतः सा हि तदेकपरमा च सा ।
इत्युक्तः प्रलयो राजन् ! विश्वस्यास्य
महामते ! ॥
यथोत्पत्तिक्रमेणास्य व्युत्क्रमेण लयस्तथा
॥"
इति पाद्मे स्वर्गखण्डे ३९ अध्यायः ॥
(सात्त्विकविकारान्तर्गतविकारविशेषः ।
तल्ल-
क्षणं यथा, साहित्यदर्पणे । ३ । १६७ ।
"प्रलयः सुखदुःखाभ्यां
चेष्टाज्ञाननिराकृतिः ॥")

**प्रलापः**, पुं, (प्रलपनमिति । प्र + लप् + भावे
घञ् ।) प्रलपनम् । अनर्थकवाक्यम् ।
निष्पयो-
जनमुन्मत्तादिवचनम् । इत्यमरभरतौ । १
। ६
१५ ॥ रोगाणामुपसर्गोऽयम् ॥ (यथा,
भाव-
प्रकाशे ।
"मूर्च्छा प्रलापो वमथुः प्रसेकः सादनं भ्रमः
।
उपद्रवा भवन्त्येते मृतिश्च रसशेषतः ॥"
अस्य लक्षणं चिकित्सा च यथा, --
"स्वहेतुकुपिताद्वातादसम्बद्धन्निरर्थकम् ।
वचनं यन्नरो ब्रूते स प्रलापः प्रकीर्त्तितः ॥
सतगरवरतिक्ता रेवताम्भोदतिक्ता
नलदतुरगगन्धा भारती हारहूरा ।
मलयजदशमूलीशङ्खपुष्पीसुपक्वा
प्रलपनमपहन्युः पानतो नातिदूरात् ॥
वरतिक्तोऽत्र पर्पटः नलदमुशीरं भारती
ब्राह्मी
हारहूरा द्राक्षा ।" इति भावप्रकाशस्य
मध्य-
खण्डे प्रथमे भागे ॥)

**प्रलापहा**, [न्] पुं, (प्रलापं हन्तीति । हन् +

पूर्णप्रलेहस्तु ।
"मांसपूरणयोगेन कोष्ठाकारं विधाय
च ।
स्विन्नं कृत्तं धृते भृष्टं प्रलेहविधिना
पचेत् ॥
पूरणस्य प्रलेहोऽयं विज्ञेयो
वातनाशनः ।
श्लेष्मान्तकारकश्चैव
मुखवैरस्यहृद्‌गुरुः ॥"
शुक्लवर्णः प्रलेहः ।
"धृते
वेसरधान्याकहिङ्गुभृद्दधिसंयुते ।
वस्त्रपूतेऽर्द्धसम्पक्वे स्विन्नं मांसं
विनिःक्षिपेत् ॥"
पीतवर्णस्तु ।
"प्रलेहः पीतवर्णोऽपि कार्य्यः
शुक्लप्रलेहवत् ।
विशेषोऽत्र हरिद्रायाः संसर्गः
कुङ्कुमस्य वा ॥"
रक्तवर्णोऽपि ।
"तप्तस्नेहे क्षिपेद्धिङ्गुसंयुतं
कासमर्द्दकम् ।
धान्यकं लवणाजाजीधौतं मांसञ्च
तत् क्षिपेत् ॥
ततोऽर्द्धस्फुटिते मांसे
दाडिमीबीजसंयुते ।
सम्पक्वे चातिमृदुले तक्रं शुण्ठीञ्च
निःक्षिपेत् ॥
तत उत्तार्य्य वस्त्रेण
गालयेद्धूपयेदपि ।
रक्तवर्णप्रलेहस्य संसिद्ध्यर्थं
विनिःक्षिपेत् ॥
करमर्द्दं दाडिमस्य स्थाने शेषन्तु
पूर्ब्बवत् ॥"
हरितवर्णस्तु ।
"मेथिकाकासमर्दाम्लकल्केन
चलकारिते ।
घृते मांसं विनिःक्षिप्य
पचेच्छुष्कप्रलेहवत् ॥

**प्रवचनं**, क्ली, (प्रकर्षेण उच्यते इति । प्र + वच् +
ल्युट् । वेदः । (यथा, अमरकोषे । २ । ७ । १० ।
"अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः ।
लब्धानुज्ञः समावृत्तः सुत्वा त्वभिषवे कृते ॥"
वेदाङ्गम् । यथा, मनुः । ३ । १८४ ।
"अग्र्याः सर्व्वेषु वेदेषु सर्व्वप्रवत्तनेषु च ॥"
"प्रकर्षेणैव उच्यते वेदार्थ एभिरिति प्रवचना-
न्यङ्गानि तेषु अग्र्याः षडङ्गविदः ।" इति तत्र
कुल्लूकभट्टः ॥ तथा च हरिवंशे । १६७ । ६९ ।
"उवाच वेदांश्चतुरो मन्त्रप्रवचनार्च्चितान् ॥" *
॥
प्रकृष्टं वचनमिति कर्म्मधारयः ।) प्रकृष्टवाक्यम् ।
इति मेदिनी । ने, १९१ ॥ (यथा, मुण्डकोप-
निषदि । ३ । २ । ३ ।
"नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुधा श्रुतेन ।
येनैवैष वृणुते तेन लभ्य-
स्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥")

**प्रवचनीयः**, त्रि, (प्रवक्तीति । प्र + वच् + "भव्य-
गेयप्रवचनीयेति ।" ३ । ४ । ६८ । इति कर्त्तरि
अनीयर् ।) प्रवक्ता । (प्रोच्यते इति । प्र +
वच् + कर्म्मणि अनीयर् ।) प्रवाच्यः । इति
मेदिनी । ये, १३२ ॥

**प्रवणः**, पुं, (प्रवन्ते गच्छन्ति जना अनेनेति । प्रु
गतौ + करणे ल्युट् ।) चतुष्पथः । इत्यमरः ।
३ । ३ । ५६ ॥

**प्रवणः**, त्रि, (प्रवतेऽत्रेति । प्रु + अधिकरणे
ल्युट् ।) क्रमनिम्नभूमिः । (यथा, मनुः । ३ ।
२०६ ।
"दक्षिणाप्रवणञ्चैव प्रयत्नेनोपपादयेत् ॥")
उदरम् । प्रह्वः । इति मेदिनी । ने, ५९ ॥ (यथा,
मार्कण्डेये । २३ । ८९ ।
"धन्योऽहमतिपुण्योऽहं कोऽन्योऽस्ति सदृशो
मया ।
यत्तातो मामभिद्रष्टुं करोति प्रवणं मनः ॥")
आयतः । प्रगुणः । क्षणः । इति विश्वः ॥
प्लुतः । स्निग्धः । इति शब्दरत्नावली ॥

क्विप् ।) कुलत्थाञ्जनम् । इतिं
राजनिर्घण्टः ॥

**प्रलीनता**, स्त्री, (प्रलीनस्य निश्चेष्टस्य भावः ।

प्रलीन + तल् ।) प्रलयः । तत्पर्य्यायः ।
इन्द्रिय-
स्वापः २ चेष्टानाशः ३ । इति
राजनिर्घण्टः ॥

**प्रलेहः**, पुं, (प्रलिह्यते इति । प्र + लिह् + घञ् ।)

व्यञ्जनविशेषः । इति पाकराजेश्वरः ।
दम्पोख्त
कोरमा इत्यादि पारस्यभाषा ॥
(चिन्तामणौ
धृतः प्रलेहप्रकारो यथा, --
"स्थूलानि मांसखण्डानि क्षालितानि च
वारिणा ।
तप्तस्नेहे विनिःक्षिप्य दर्व्या सञ्चालयन्
पचेत् ॥
तप्तं तत्र विनिःक्षिप्य लावणं जलमल्पकम्
।
पचेत् पटपटाशब्दं तस्मिन् मांसे प्रकुर्वति
॥
प्रक्षिपेद्दाडिमीनीरं बहुलेन पचेत् पुनः ।
मांसपिण्डेषु सिद्धेषु देया शुण्ठी सजीरका
॥
ततश्चोत्तार्य्य तन्मांसं पृथक् कुर्य्यात्
प्रलेहतः ।
प्रलेहं दाससा पूतं स्थापयेदन्यभाजने ॥
हिङ्गुना घृतयुक्तेन धूपेन तञ्च धूपयेत् ॥"
गौडदेशीयप्रलेहस्तु ।
"हिङ्ग्वार्द्रबीजपूरैलालवणैः सम्भृतेन तु ।
कुट्टितामिषपिष्टेन तत्र दाडिमबीजतः ॥
सोषणावेसवारश्च प्रलेहो गौडदेशजः ॥
प्रलेहो रुचिदो बल्यः कफानिलरुजापहः ।
संग्राही पित्तकृत् किञ्चिच्छिलाध्मानगदान्
जयेत् ॥
सिद्धे च गालयेद्वस्त्रे कृत्वा
वर्णप्रयोजनम् ।
ताम्बूलं कष्टजङ्गारं देयं हरितहेतुना
॥
अरुचौ रुचिदः सद्यो
नानावर्णप्रसाधितः ।
प्रलेहः कफवातघ्नः किञ्चित्
पित्तकरो लघुः ॥"
वटकप्रलेहोऽपि ।
"माषस्य पिष्टिका सूक्ष्मा वेसवारेण
संयुता ।
बहुधा क्रियते तस्या
वटिकावटकादिकम् ॥
आम्रविम्बीफलाकारं
लड्डुकावटकादिकम् ।
शृङ्गाटकफलाकारं
यथायुद्धिप्रकारजम् ॥
कृत्वा हि बहुधाधारे स्वेदितं
घृतभार्ज्जितम् ।
सवेसवारजे तक्रे क्वथिते च
मनोरमे ॥
निःक्षिप्य
चालयेदीषदुत्तार्य्यैलादिवासिते ।
एवन्तु बहुधा कार्य्यो
माषमुद्गप्रलेहकः ॥
प्रलेहो वातजिद्बल्यः शुक्रमांसप्रदो
रसः ।
प्रीणनः प्राणयुक्तानां शुक्रदः
क्षीणरेतसाम् ॥"
मत्स्यप्रलेहस्तु ।
"मांसप्रलेहवत्कार्य्यः प्रलेहो
मत्स्यसम्भवः ।
आदौ तैले परं पक्वं सर्व्वमन्यत्तु
पूर्ब्बवत् ॥
वर्णस्य करणे देयं पूर्ब्बोक्तं द्रव्यकं
हि यत् ।
उद्धूलनं सुगन्धाय दातव्यं
पूर्ब्बसम्भवम् ॥"
मत्स्यखण्डप्रलेहस्तु ।
"सम्यक् प्रक्षालितं मत्स्यं
वेसवारेण वेष्टितम् ।
आसक्तः । इति हेमचन्द्रः । ३ । ४९ ॥ (यथा,
विष्णुपुराणे । ६ । १ । ११ ।
"प्रजास्ता ब्रह्मणा सृष्टाश्चातुर्व्वर्ण्यव्यवस्थितौ ।
सम्यक्श्रद्धासमाचारप्रवणामुनिसत्तम ! ॥")
क्षीणः । इति धरणिः ॥

**प्रवत्स्यत्पतिका**, स्त्री, (प्रवत्स्यन् प्रवासं गमि-

ष्यन् पतिर्यस्याः । कप् ।) नायिकाभेदः । अस्या
लक्षणम् । यस्याः पतिरग्रिमक्षणे देशान्तरं
यास्यत्येव सा । अस्याश्चेष्टा काकुवचनकातर-
प्रेक्षणगमनविघ्नोपदर्शननिर्व्वेदसन्तापसम्मोह-
निश्वासवास्पादयः ॥ मुग्धा प्रवत्स्यत्पतिका
यथा, --
"प्राणेश्वरे किमपि जल्पति निर्गमाय
क्षामोदरी वदनमानमयाञ्चकार ।
आली पुनर्निभृतमेत्य लतानिकुञ्ज-
मुन्मतकोकिलकलध्वनिमाततान॥" १ ।

| | तप्ततैले क्षिपेत् खण्डं<br>हिङ्गुसैन्धवमिश्रितम् ॥<br>प्रलेहविधिवत् साध्यो<br>मत्स्यखण्डप्रलेहकः ॥”)<br><br>**प्रवक्ता**, [ऋ] त्रि, प्रकर्षेण वक्ति यः । (प्र +<br>वच् + तृच् ।) वेदादिवाचकः ।<br>यथा, --<br>“जातिमात्रोपजीवी वा कामं<br>स्याद्ब्राह्मण-<br>ब्रुवः ।<br>धर्म्मप्रवक्ता नृपतेर्न तु शूद्रः<br>कदाचन ॥”<br>इति मानवे ७ अध्यायः ॥ | |
|---|---|---|

मध्या प्रवत्स्यत्पतिका यथा, --
"गन्तुं प्रिये ! वदति निःश्वसितं न दीर्घ-
मासीन्न वा नयनयोर्ज्जलमाविरासीत् ।
आयुर्लिपिं पठितुमेणदृशः परन्तु
भालस्थलीं किमु करः समुपाजगाम ॥"
२ ॥
प्रौढा प्रवत्स्यत्पतिका यथा, --
"नायं मुञ्चति सुभ्रुवामपि तनुत्यागे
वियोगज्वर-
स्तेनाहं विहिताञ्जलिर्यदुपते ! पृच्छामि
सत्यं वद ।
ताम्बूलं कुमुमं पटीरमुदकं
यद्बन्धुभिर्दीयते
तत् स्यादत्र परत्र वा किमु
विषज्वालावली-
दुःसहम् ॥" ३ ॥
परकीया प्रवत्स्यत्पतिका यथा, --
"न्यस्तं पन्नगमूर्द्ध्नि पादयुगलं
भक्तिर्विमुक्ता गुरौ
त्यक्ता नीतिरकारि किं न भवतो
हेतोर्मया
दुष्कृतम् ।
अङ्गानां शतयातना नयनयोः कोपक्रमो
रौरवः
कुम्भीपाकपराभवश्च मनसो युक्तं त्वयि
।
प्रस्थिते ॥" ४ ॥
सामान्यप्रवत्स्यत्पतिकायथा, --
"मुद्रां प्रदेहि बलयाय भवद्वियोग-
मासाद्य यास्यति बहिः सहसा यदेतत् ।
इत्थं निगद्य विगलन्नयनाम्बुधारा
वाराङ्गना प्रियतमं करयोर्बभार ॥" ५ ॥
इति रस्नमञ्जरी ॥

**प्रवयणं**, क्ली, (प्रवीयतेऽनेनेति । प्र + अज गतौ
क्षेपणे च + ल्युट् । "वा यौ ।" २ । ४ ।
५७ ।
इति वी । "कृत्यचः ।" ८ । ४ । २९ ।
इति
गोत्रस्य अत्र्यात्रेयशातातपाः । गोतमगोत्रस्य
गोतमवशिष्ठबार्हस्पत्याः । वशिष्ठगोत्रस्य
वशिष्ठः । केषाञ्चित् वशिष्ठात्रिसाङ्कृतयः ।
काश्यपगोत्रस्य काश्यपाप्सारनैध्रुवाः ।
अगस्त्य-
गोत्रस्य अगस्तिदधीचिजैमिनयः ।
सौकालिन-
गोत्रस्य सौकालिनाङ्गिरसबार्हस्पत्याप्सार-
नैध्रुवाः । मौद्गल्यगोत्रस्य और्व्वच्यवनभार्गव-
जामदग्न्याप्नुवतः । पराशरगोत्रस्य पराशर-
शक्त्रिवशिष्ठाः । बृहस्पतिगोत्रस्य
बृहस्पतिकपिल-
पार्व्वणाः । काञ्चनगोत्रस्य अश्वत्थदेवलदेव-
राजाः । विष्णुगोत्रस्य विष्णुवृद्धिकौरवाः ।
कौशिकगोत्रस्य कौशिकात्रिजमदग्नयः ।
कात्या-
यनगोत्रस्य अत्रिभृगुवशिष्ठाः । आत्रेयगोत्रस्य
आत्रेयशातातपसांख्याः । काण्वगोत्रस्य
काण्वा-
श्वत्थदेवलाः । कृष्णात्रेयगोत्रस्य कृष्णात्रेया-
त्रेयावासाः । साङ्कृतिगोत्रस्य अव्याहारात्रि-
साङ्कृतयः । कौण्डिल्यगोत्रस्य कौण्डिल्यस्ति-
मिककौत्सः । गर्गगोत्रस्य गार्ग्यकौस्तुभ-
माण्डव्याः । आङ्गिरसगोत्रस्य आङ्गिरस-
वशिष्ठबार्हस्पत्याः । अनावृकाक्षभोत्रस्य गार्ग्य-
गौतमवशिष्ठाः । अव्यगोत्रस्य अव्यबलिसार-
स्वताः । जैमिनिगोत्रस्य
जैमिन्युतथ्यसाङ्कृतयः ।
वृद्धिगोत्रस्य कुरुवृद्धाङ्गिरोबार्हस्पत्याः ।
शाण्डिल्यगोत्रस्य शाण्डिल्यासितव्वेलाः ।
वात्स्यगोत्रसावर्णगोत्रयोः और्व्वच्यवनभार्गव-
जामदग्न्याप्नुवतः । आलम्ब्यायनगोत्रस्य
आल-
म्ब्यायनशालङ्कायनशाकटायनाः। वैयाघ्रपद्य-
गोत्रस्य साङ्कृतिः । घृतकौशिकगोत्रस्य
कुशिक-
कौशिकघृतकौशिकाः । केषाञ्चित् कुशिक-
कौशिकबन्धुलाः । शक्त्रिगोत्रस्य
शक्त्रिपराशर-
(यथा च देवीभागवते । १ । १४ । ४२ ।
"प्रथमं पठिता वेदा मया विस्तारिताश्च
ते ।
हिंसामयास्ते पठिताः
कर्म्ममार्गप्रवर्त्तकाः ॥"
प्रयोजकः । यथा, भागवते । ९ । १७ ।
४ ।
"धन्वन्तरिर्दीर्घतमस आयुर्वेदप्रवर्त्तकः
।
यज्ञभुग् वासुदेवांशः
स्मृतिमात्रार्त्तिनाशनः ॥")

**प्रवर्त्तनं**, क्ली, (प्र + वृत् + णिच् + ल्युट् ।) प्रवृत्तिः ।
यथा, --
"तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गञ्च
भुञ्जते ।
इतरार्थग्रहे येषां कवीनां स्यात् प्रवर्त्तनम्
॥"
इति काव्यप्रकाशः ॥
आरम्भः । यथा, --
"मृते तु स्वामिनि पुनस्तद्वंश्ये वापि
मानवे ।
राजानमामन्त्र्य ततः कुर्य्यात्
सेतुप्रवर्त्तनम् ॥"
इति मिताक्षरा ॥

**प्रवर्त्तना**, स्त्री, (प्र + वृत् + णिच् + युच् ।) प्रवृत्ति
प्रेरणम् । यथा, नैषधे । २ । ६१ ।
"अथवा भवतः प्रवर्त्तना
न कथं पिष्टमियं पिनष्टि न ।
स्वत एव सतां परार्थता
ग्रहणानां हि यथा यथार्थता ॥"

**प्रवर्त्तितः**, त्रि, (प्र + वृत् + णिच् + क्तः ।) जातः ।
यथा, रघुवंशे । ५ । ३७ ।
"रूपं तदोजस्वि तदेव वीर्य्यं
तथैव नैसर्गिकमुन्नतत्वम् ।
न कारणात् स्वात् विभिदे कुमारः
प्रवर्त्तितो दीप इव प्रदीपात् ॥"

णत्वम् ।) प्रतोदः । इति हेमचन्द्रः । ३ । ५५७ ॥
(प्र + वय गतौ + भावे ल्युट् । प्रकर्षेण गमनम् ।
इति केचित् ॥)

**प्रवयाः**, [स्] त्रि, (प्रगतं वयो यस्य ।) वृद्धः ।

इत्यमरः । २ । ६ । ४२ ॥ (यथा, रघुः । ८ । १८ ।
“नृपतिः प्रकृतीरवेक्षितुं
व्यवहारासनमाददे युवा ।
परिचेतुमुपांशुधारणां
कुशपूतं प्रवयास्तु विष्टरम् ॥”
पुराणः । इति निघण्टुः । ३ । २७ ॥
यथा,
ऋग्वेदे । २ । १७ । ४ ।
“अघा यो विश्वा भुवनानि
मज्मनेशानकृत्-
प्रवया अभ्यवर्धत ॥”)

**प्रवरं**, क्ली, (प्रव्रियते इति । प्र + वृ + अप् ।)

अगुरु । इति भावप्रकाशः ॥ गोत्रम् ।
श्रेष्ठे,
त्रि । इति मेदिनी । रे, १७६ ॥ (यथा,
मनुः ।
१० । २७ ।
“एते षट् सदृशान् वर्णान् जनयन्ति
स्वयोनिषु ।
मातृजात्यां प्रसूयन्ते प्रवरासु च योनिषु ॥”)

**प्रवरः**, पुं, (प्र + वृ + अप् ।) सन्ततिः । इति

मेदिनी । रे, १७६ ॥
गोत्रप्रवर्त्तकमुनिव्याव-
र्त्तको मुनिगणः । तथा च यमदग्निगोत्रस्य
प्रवराः यमदग्न्यौर्व्वबशिष्ठाः ।
भरद्वाजगोत्रस्य
भरद्वाजाङ्गिरसबार्हस्पत्याः ।
विश्वामित्र-
गोत्रस्य विश्वामित्रमरीचिकौषिकाः।
अत्रि-
वशिष्ठाः । काण्वायनगोत्रस्य
काण्वायनाङ्गिरस-
वार्हस्पत्यभरद्वाजाजमीढाः । वासुकिगोत्रस्य-
अक्षोभ्यानन्तवासुकयः । गौतमगोत्रस्य गौत-
माप्सराङ्गिरसबार्हस्पत्यनैध्रुवाः । केषाञ्चित्
गौतमाङ्गिरसावासाः । शुनकगोत्रस्य शुनक-
शौनकगृत्समदाः । सौपायनगोत्रस्य प्रवराः
और्व्वच्यवनभार्गवजामदग्न्याप्नुवतः । इति
धन-
ञ्जयकृतधर्म्मप्रदीपे गोत्रप्रवरविवेकः ॥

**प्रवर्गः**, पुं (प्रवृज्यते निःक्षिप्यते हविरादिक-

मस्मिन्निति । प्र + वृज् + अधिकरणं घञ् ।)
होमाग्निः । इति हेमचन्द्रः । ३ । ५०० ॥
(यथा,
हरिवंशे । ४१ । ३४ ।
“दक्षिणाहृदयो योगी महासत्रमयो महान् ।
उपाकर्म्मोष्ठरुचकः प्रवर्गावर्त्तभूषणः ॥”
प्रवर्ग्य इति पाठोऽपि दृश्यते ॥)

**प्रवर्त्तकः**, त्रि, (प्रवर्त्तयतीति । प्र + वृत् + णिच् +

ण्वुल् ।) प्रवर्त्तनकारी । प्रवृत्तिजनकः । यथा,
“प्रवर्त्तकं वाक्यमुवाच चोदनां
निवर्त्तकं नैवमुवाच भाष्यकृत् ।
ततश्च विद्धो नहि चोदनास्ति सा
प्रवर्त्तिका या न भवेदिति स्थितिः ॥”
इति संक्षेपशारीरकम् ॥

**प्रवर्द्धनं**, क्ली, प्रपूर्ब्बवृधधातोर्भावे अनट् (ल्युट् ।)

विवर्द्धनम् । कर्त्तरि (ल्यु) अनप्रत्यये,
वृद्धिकारके,
त्रि ॥ (यथा, सुश्रुते सूत्रस्थाने ४६
अध्याये ।
“रुरुमांसं समधुरं कषायानुरसं स्मृतम् ।
वातपित्तोपशमनं गुरु शुक्रप्रवर्द्धनम् ॥”)

**प्रवर्हः**, त्रि, (प्रवर्हति प्रवर्द्धते इति । प्र + वृह् +

अच् ।) प्रधानम् । श्रेष्ठः । इत्यमरः । ३ । १ । ५७ ॥

**प्रवलाकी**, पुं, भुजङ्गः । चित्रमेखलकः । इति

विश्वः ॥

**प्रवहः**, पुं, (प्र + वह् + भावे + अच् ।) गृह-

नगरादेर्ब्बहिर्गमनम् । इत्यमरः । ३ । १ । १८ ॥
(प्रवहतीति । प्र + वह् + अच् ।) वायुः ।
इति हेमचन्द्रः ॥
सप्तवाय्वन्तर्गतद्वितीयवायुः ।
स तु आवहवायोरूर्द्ध्वस्थितः । इति
सिद्धान्त-
शिरोमणिः ॥
“यस्माज्जोतींषि वहति प्रवहस्तेन स
स्मृतः ॥”
इति विष्णुपुराणे २ अंशे १२ अध्यायः ॥
अस्य टीका । “यस्माज्ज्योतींषि प्रकर्षेण
वहति
तेन स वायुः प्रवहः स्मृतः प्रवहस्यैव
भेदाः सर्व्वे
वायुस्कन्धाः ॥” (मेघविशेषः । यथा,
स्कान्दे
सह्याद्रिखण्डे । ५ । ६ ।
“आवहः प्रवहश्चैव उदहासो महांस्तथा ।
परीवहः पञ्चमश्च विनहश्च परावहः ॥”)

**प्रवहणं**, क्ली, (प्रोह्यते अनेनेति । प्र + वह् +

करणे ल्युट् ।) कर्णीरथः ।
स्त्रीरत्नवहनार्थ-

मुपरि वस्त्राच्छादितमनुष्यवाह्ययानविशेषः ।
इत्यमरभरतौ । २ । ८ । ५२ ॥ (यथा, मृच्छ-
कटिकनाटके चतुर्थेऽङ्के । "प्रविश्य सप्रवहण-
श्चेटः इति ॥")

**प्रवह्लिः**, स्त्री, (प्रवह्लते आच्छादयतीति । प्र +
वह्ल + इन् ।) प्रवह्लिका । इत्यमरटीकायां
भरतः ॥

**प्रवह्लिका**, स्त्री, (प्र + वह्ल् + ण्वुल् । टाप् अत
इत्वम् ।) प्रहेलिका । इत्यमरः । १ । ६ । ६ ॥

**प्रवह्ली**, स्त्री, (प्रवह्लि + पक्षे ङीष् ।) प्रवह्लिका ।
इति भरतः ॥

**प्रवाक्**, [च्] त्रि, (प्रकृष्टा वाग् यस्य ।) वाचो
युक्तिपटुः । यथा, --
"वाचो युक्तिपटुर्वाग्मी वचोज्ञः प्रवचाः प्रवाक् ॥"
इति जटाधरः ॥
(स्त्री, प्रकृष्टा वागिति प्रादिसमासः ।) प्रकृष्ट-
वाक्यञ्च ॥

**प्रवाचकः**, त्रि, (प्रकृष्टं वक्तीति । प्र + वच् +
ण्वुल् ।) प्रकृष्टवक्ता । प्रपूर्ब्बवचधातोः कर्त्तरि
णकप्रत्ययः ॥

**प्रवाणिः**, स्त्री, (प्रकर्षेण ऊयतेऽनयेति । प्र +
वे + करणे ल्युट् । ङीप् । निपातनात् ङीपो
ह्रस्वः ।) तन्त्रशलाका । इति निष्प्रवाणिशब्द-
टीकायां भरतः ॥ माकु इति भाषा ॥

**प्रवाणी**, स्त्री, (प्र + वे + ल्युट् + ङीप् ।) तन्त्र-
शलाका । इति निष्प्रवाणिशब्दटीकायां

**प्रवासः**, पुं, (प्रवसन्त्यस्मिन्निति । प्र + वस् +
"हलश्च ।" ३ । ३ । १२१ । इति घञ् ।)
विदेशः । विदेशस्थितिः । यथा, --
"कर्णेजपैराहितराज्यलोभा
स्त्रैणेन नीता विकृतिं लघिम्ना ।
रामप्रवासे व्यमृषन्नदोषं
जनापवादं सनरेन्द्रमृत्युम् ॥"
इति भट्टिः । ३ । ७ ॥ * ॥
द्वादशवर्षाश्रुतवार्त्तकप्रोषितस्य तत्प्रवासाद्य-
दिने श्राद्धं कर्त्तव्यम् । यथा, --
"प्रवासवासरे ज्ञेयं तन्मासेन्दुक्षयेऽथवा ॥"
इति मिताक्षरा । ३ । ७ ॥ * ॥
प्रवासागतेन गुर्व्वाद्यभिवादनं कर्त्तव्यम् । यथा,
"विप्रोष्य पादग्रहणमन्वहञ्चाभिवादनम् ।
गुरुदारेषु कुर्व्वीत सतां धर्म्ममनुस्मरन् ॥
मातृष्वसा मातुलानी श्वश्रूश्चाथ पितुः स्वसा ।
प्रपूज्या गुरुपत्नीव समास्ता गुरुभार्य्यया ॥
भ्रातृभार्य्योपसंग्राह्या सवर्णाहन्यहन्यपि ।
विप्रोष्य भूप ! संग्राह्या ज्ञातिसम्बन्धियोषितः ॥
पितुर्भगिन्यां मातुश्च ज्यायस्याञ्च स्वसर्य्यपि ।
मातृवद्वृत्तिमातिष्ठेन्माता ताभ्यो गरी-
यसी ॥"
इति कौर्म्मे उपविभागे १३ अध्यायः ॥

**प्रवासनं**, क्ली, (प्र + वास च्छेदे + ल्युट् ।) वधः ।
इत्यमरः ॥ (प्र + वस् + णिच् + ल्युट् ।) प्रवा-
सना । यथा, उत्तररामचरित्रे ।

**प्रवाहिका**, स्त्री, (प्रवहति मुहुर्मुहुः प्रवर्त्तते
इति । प्र + वह् + ण्वुल् । टाप् अत इत्वम् ।)
ग्रहणीरुक् । इत्यमरः । २ । ६ । ५५ ॥ (यथा,
सुश्रुते सूत्रस्थाने । ३१ अध्याये ।
"प्रवाहिका शिरःशूलं कोष्ठशूलञ्च दारुणम् ।
पिपासाबलहानिश्च तस्य मृत्युरुपस्थितः ॥"
अस्या निदानं ग्रहणीशब्दे द्रष्टव्यम् । अस्याः
स्वरूपमाह चरकः ।
"अग्न्यधिष्ठानमन्नस्य ग्रहणाद्ग्रहणी मता ।
अपक्वं धारयेत् तत्र पक्वं त्यजति वाप्यधः ॥"
सुश्रुतोऽपि ।
"षष्ठी पित्तधरा नाम या कला परिकीर्त्तिता ।
आमपक्वाशयान्तःस्थाग्रहणी साभिधीयते ॥
ग्रहण्या बलमग्निर्हि स चापि ग्रहणीश्रितः ।
तस्मादग्नौ प्रदुष्टे तु ग्रहण्यपि विदुष्यति ॥
तस्मात् कार्य्यः परीहारो ह्यतीसारे विरिक्त-
वत् ॥" * ॥
अतीसारे द्रवधातुप्रवृत्तिः ग्रहण्यान्तु बद्धस्यापि
मलस्य प्रवृत्तिरिति तयोर्भेदः ॥ * ॥ ग्रहणी-
रोगस्य भेदं संग्रहग्रहणीरोगमाह ।
"द्रवं घनं सितं स्निग्धं सकटीवेदनं शकृत् ।
आमं बहुसपैच्छिल्यं सशब्दं मन्दवेदनम् ॥
पक्षान्मासाद्दशाहाद्वा नित्यञ्चापि विमुञ्चति ।
अन्त्रकूजनमालस्यं दौर्ब्बल्यं सदनं भवेत् ॥
दिवा प्रकोपो भवति रात्रौ शान्तिञ्च गच्छति ।
दुर्व्विज्ञेया दुर्निवारा चिरकालानुबन्धिनी ॥
सा भवेदामवातेन संग्रहग्रहणी मता ॥"
अथ घटीयन्त्राख्यं ग्रहणीरोगमाह ।
"प्रसुप्तिः पार्श्वयोः शूलं तथा जलघटीध्वनिः ।
तं वदन्ति घटीयन्त्रमसाध्यं ग्रहणीगदम् ॥"
अथ ग्रहणीरोगस्यारिष्टमाह ।
"यैर्लक्षणैः सिध्यति नातिसार-
स्तैः स्यान्न साध्यो ग्रहणीगदोऽपि ।
वृद्धस्य जायेत यदा गदोऽयं
देहं तदा तस्य विनाशमृच्छेत् ॥" * ॥

भरतः ॥ माकु इति माषा ॥

**प्रवादः**, पुं, (प्रकृष्टो वादः । प्र + वद् + घञ् वा ।)

परस्परवाक्यम् । यथा, भट्टिः । २ । ३६ ।
"इत्थं प्रवादं युधि संप्रहारं
प्रचक्रतू रामनिशाविहारौ ।
तृणाय मत्वा रघुनन्दनोऽथ
बाणेन रक्षः प्रधनान्निरास्थत् ॥"
जनरवः । यथा, --
"प्रेयांस्तेऽहं त्वमपि च मम प्रेयसीति
प्रवाद-
स्त्वं मे प्राणा अहमपि तवास्मीति हन्त
प्रलापः ।
त्वं मे तेऽस्यामहमपि च यत्तच्च नो साधु
राधे !
व्याहारे नौ नहि समुचितो
युष्मदस्मत्प्रयोगः ॥"
इत्यलङ्कारकौस्तुभः ॥

**प्रवारः**, पुं, (प्रवृणोत्यनेनेति । प्र + वृ + करणे

घञ् ।) प्रवरः । वस्त्रम् । प्रपूर्ब्बवृधातोर्घण्
।
इति संक्षिप्तसारव्याकरणम् ॥

**प्रवारणं**, क्ली, (प्र + वृ + णिच् + ल्युट् ।) काम्य-

दानम् । इत्यमरः । ३ । २ । ३ ॥
काम्यस्य कम-
नीयस्य वस्तुनो वरस्त्रीरत्नादिनो दानम् ।
काम्येन कामनया वा दानं प्रवारणमुच्यते ।
काम्यशब्दोऽत्र तन्त्रेणाभयार्थः । प्रकर्षेण
वार्य्यते
संगृह्यत प्रवारणं तच्च महादानम् । प्रवारणं
महादानमिति त्रिकाण्डशेषः । इति
तट्टीकायां
भरतः ॥ (प्रकर्षेण वारणमिति ।) निषेधः ।
इति मेदिनी । ने, १०१ ॥

"सीताप्रवासनपटोः करुणा कुतस्ते ॥"

**प्रवासी**, त्रि, (प्रवसितुं शीलमस्येति । प्र + वस् +

"प्रे लपसुद्रुमथवदवसः ।" ३ । २ ।
१४५ । इति
घिनुण् ।) प्रवासविशिष्टः । प्रोषितः ।
विदे-
शस्थः । यथा, --
"अध्वनीनोऽध्वगोऽध्वन्यः पान्थः
पथिकदेशिकौ ।
प्रवासी तद्गणो हारिः पाथेयं सम्बलं
समे ॥"
इति हेमचन्द्रः । ३ । १५७ ॥
(यथा, मार्कण्डेये । १८ । ५१ ।
"लक्ष्मीर्लक्ष्मीवतां श्रेष्ठा कण्ठस्था
कण्ठभूषणम् ।
अभीष्टबन्धुदारैश्च तथाश्लेषं
प्रवासिभिः ॥")

**प्रवाहः**, पुं, (प्र + वह् + भावे घञ् ।) प्रवृत्तिः ।

(यथा, भागवते । ७ । ९ । ८ ।
"सत्त्वैकतानगतयो वचसां प्रवाहैः ॥"
जलस्रोतः । इति मेदिनी । हे, २१ ॥
(यथा,
रघौ । ५ । ४६ ।
"पूर्ब्बं तदुत्पीडितवारिराशिः
सरित्प्रवाहस्तटमुत्ससर्प ॥")
व्यवहारः । इति विश्वः ॥ प्रकृष्टाश्वः ।
इति
नानार्थरत्नमाला ॥ (पुरीषादेर्निर्गमः ।
यथा,
सुश्रुते उत्तरतन्त्रे । ४० अध्याये ।
"प्रवाहेण गुदभ्रंशे मूत्राघाते कटिग्रहे ।
मधुराम्लशृतं तैलं सर्पिर्वाप्यनुबासनम्
॥")

**प्रवाहकः**, पुं, (प्रवहतीति । प्र + वह् + ण्वुल् ।)

राक्षसः । इति शब्दमाला ॥
प्रकृष्टवहनकर्त्तरि,
त्रि ॥

अथ सामान्यग्रहणीरोगस्य चिकित्सामाह ।
"ग्रहणीमाश्रितं रोगमजीर्णवदुपाचरेत् ।
लङ्घनैर्द्दीपनीयैश्च मन्दातीसारभेषजैः ॥
दोषं सामं निरामञ्च विद्यादत्रातिसारवत् ।
अतीसारोक्तविधिना तस्यामञ्च विपाचयेत् ॥
पेयादि पट्टु लघ्वन्नं पञ्चकोलादिभिर्युतम् ।
दीपनानि च तक्रञ्च ग्रहण्यां योजयेद्भिषक् ॥
कपित्थविल्वचाङ्गेरीतक्रदाडिमसाधिता ।
यवागूः पाचयत्यामं शकृत् संवर्त्तयत्यपि ॥"
संवर्त्तयति घनीकरोति ॥
अथ खड्यूषः ।
"मुद्गयूषं रसं तक्रं धान्यजीरकसंयुतम् ।
सैन्धवेनान्वितं दद्यात् स्वड्यूषमिति कीर्त्ति-
तम् ॥"
रसं लघुग्राहिकमांसभवम् ॥ * ॥
"कर्षं गन्धकमर्द्धपारदमुभे कुर्य्याच्छुभां
कज्जलीं
त्र्यक्षं त्र्यूषणतश्च पञ्चलवणं सार्द्धञ्च कर्षं
पृथक् ।

भृष्टं हिङ्गु च जीरकद्वययुतं सर्व्वार्द्धभागान्वितं
खादेट्टङ्कमितं प्रवृत्तिगदवांस्तक्रस्य विल्वेन च
॥
लघुनायिकाचूर्णमित्यर्थः ॥ इति
लघुलाईचूर्णम् ॥
“त्रिकटु त्रिफला चैव विडङ्गं जीरकद्वयम् ।
भल्लातकं यवानी च हिङ्गुलवणपञ्चकम् ॥
गृहधूमो वचा कुष्ठं रसो गन्धकमभ्रकम् ॥
क्षारत्रयाजमोदे च चित्रकं गजपिप्पली ॥
मुस्ता मोचरसं पाठा लवङ्गं जातिपत्रकम् ।
समभागकृतञ्चैषां चूर्णं श्लक्ष्णं विनिर्म्मितम् ॥
शक्राशनस्य चूर्णन्तु चूर्णतुल्यं प्रदापयेत् ।
मन्दाग्निकासदुर्नामप्लीहपाण्ड्वरुचिज्वरान्॥
विष्टम्भं संग्रहं शूलं हन्यान्नानातिसारजित्।
आमवातापहं बल्यं सूतिकादोषनाशनम्॥
वर्ज्जयेन्माषमम्लञ्च स्नानं पिशितभोजनम्।
पथ्यं काञ्जिकमत्रापि दधितक्रमथापि वा ॥
बृहल्लाईचूर्णमिदं लाईभाषितमुत्तमम् ॥”
इति बृहल्लाईचूर्णम् । बृहन्नायिकाचूर्णमिति
प्रसिद्धम् ॥ * ॥
“जातीफललवङ्गैलापत्रत्वङ्नागकेशरैः ।
कर्पूरचन्दनतिलत्वक्क्षीरीतगरामलैः ॥
तालीशपिप्पलीपथ्यास्थूलजीरकचित्रकैः ।
शुण्ठीविडङ्गमरिचैः समभागविचूर्णितैः ॥
यावन्त्येतानि सर्व्वाणि दद्याद्भङ्गाञ्च तावतीम् ।
सर्व्वचूर्णसमानांशा प्रदेया शुभ्रशर्करा ॥
कर्षमात्रमिदं खादेन्मधुना प्लावितं जनः ।
नाशयेद्ग्रहणीं कासं क्षयं श्वासमरोचकम् ॥”
इति जातीफलादिचूर्णम् ॥ * ॥
“चित्रकं पिप्पलीमूलं क्षारौ लवणपञ्चकम् ।
व्योषं हिङ्ग्वजमोदाञ्च चव्यञ्चैकत्र चूर्णयेत् ॥
वटिका मातुलुङ्गस्य रसैर्वा दाडिमस्य वा ।
कृता विपाचयत्यामं प्रदीपयति चानलम् ॥”
क्षारौ सर्जिका यवक्षारश्च । लवणपञ्चकमिति ।
“सैन्धवं रुचकञ्चैव विडं सामुद्रकंगडम् ॥”
इति ॥
व्योषं शुण्ठीपिप्पलीमरिचानि । अजमोदात्र
यवानिका । मातुलुङ्गं बीजपूरकम् । इति चित्र-
कादिवटिका ॥ * ॥

सर्जः रालः । सर्जरसचूर्णम् ॥ * ॥
“विल्वाब्दशक्रयवबालकमोचसिद्ध
माजं पयः पिबति यो दिवसत्रयेण ।
सोऽतिप्रवृद्धचिरजग्रहणीविकारं
सामं सशोणितमसाध्यमपि क्षिणोति ॥”
मोचो मोचरसः । क्षिणोति हन्ति ॥ * ॥
“प्रस्थत्रये त्वामलकीरसस्य
शुद्धस्य दत्त्वार्द्धतुलां गुडस्य ।
चूर्णीकृतैर्ग्रन्थिकजीरचव्य-
व्योषेभकृष्णाहवुषाजमोदैः ॥
विडङ्गसिन्धुत्रिफलायवानी-
पाठाग्निधान्यैश्च पलप्रमाणैः ।
दत्त्वा त्रिवृच्चूर्णपलानि चाष्टा-
वष्टौ च तैलस्य पचेद्यथावत् ॥
तं भक्षयेदक्षफलप्रमाणं
यथेष्टचेष्टस्त्रिसुगन्धियुक्तम् ।
अनेन सर्व्वे ग्रहणीविकाराः
सश्वासकासस्वरभेदशोथाः ॥
शाम्यन्ति चायं चिरमन्तरग्ने-
र्हतस्यं पुंस्त्वस्य च वृद्धिहेतुः ।
स्त्रीणान्तु बन्ध्यामयनाशनः स्यात्
कल्याणको नाम गुडः प्रसिद्धः ॥
तैले मनाक् त्रिवृद्भृष्ट्वा त्रिसुगन्धि पलं
पलम् ।
सिद्धे निधेयमत्रैव गुडे कल्याणपूर्ब्बके
॥”
इति कल्याणकगुडः ॥ * ॥
“पिप्पली पिप्पलीमूलं चित्रकं
गजपिप्पली ।
धान्यकञ्च विडङ्गानि यवानी मरिचानि
च ॥
त्रिफला चाजमोदा च नलिनी
जीरकस्तथा ।
सैन्धवं रौमकञ्चापि सामुद्रं रुचकं विडम्
॥
आरग्वधश्च त्वक्पत्रं सूक्ष्मैला
चोपकुञ्चिका ।
शुण्ठीशक्रयवाश्चैव प्रत्येकं
कर्षसम्मिताः ॥

आमलक्या रसस्यात्र प्रस्थत्रयमुदीरितम्
।
तावत् पाकं प्रकुर्व्वीत मृदुना वह्निना
भिषक् ॥
यावद्दर्व्वीप्रलेपः स्यात्तदैनमवतारयेत् ।
औडुम्बरञ्चामलकं वादरं वा यथा फलम्
॥
तावन्मात्रमिदं खादेद्भक्षयेद्वा यथानलम् ।
अनेनैव विधानेन प्रयुक्तश्च दिने दिने ॥
निहन्ति ग्रहणीरोगान्
कुष्ठान्यर्शोभगन्दरान्।
ज्वरमानाहहृद्रोगगुल्मोदरविसूचिकाः॥
कामलां पाण्डुरोगञ्च प्रमेहांश्चैव विंशतिम्
।
वातशोणितवीसर्पद्द्रुयक्ष्महलीमकान्॥
वातपित्तकफान् सर्व्वान् दुष्टान् शुद्धान्
समा-
चरेत् ।
व्याधिक्षीणा वयःक्षीणाः स्त्रीषु क्षीणाश्च ये
नराः ॥
तेभ्यो हितो गुडोऽयं स्याद्बन्ध्यानामपि
पुत्रदः ।
वृष्यो बल्यो बृंहणश्च वयसः स्थापनः
परः ॥”
इति कुष्माण्डकल्याणकगुडः ॥ * ॥
अतीसाराधिकारलिखितं विल्वतैलञ्चात्र
हितम् । इति भावप्रकाशे
ग्रहणीरोगाधिकारः ॥
(चिकित्सान्तरमस्या यथा, --
“बालं विल्वं गुडं तैलं पिप्पली
विश्वभेषजम् ।
लिह्याद्वाते प्रतिहते सशूले सप्रवाहिके ॥
पयसा पिप्पलीकल्कः पीतो वा
मरिचोद्भवः ।
त्र्यहात् प्रवाहिकां हन्ति
चिरकालानुबन्धि-
नीम् ॥
कल्कः स्याद्बालविल्वानां तिलकल्कश्च
तत्समः ।

"श्रीफलशलाटुकल्को नागरचूर्णेन मिश्रितः
सगुडः ।
ग्रहणीगदमत्युग्रं तक्रभुजाशीलितो जयति ॥"
श्रीफलशलाटुः विल्वस्यामं फलम् । गुडस्यात्र
भागद्वयम् । इति विल्वकल्कः ॥ * ॥
"चतुष्पलं सुधाकाण्डं त्रिपलं लवणत्रयम् ।
वार्त्ताकोः कुडवञ्चार्कमूलाद्विल्वे तथानलात् ॥
दग्ध्वा द्रवेण वार्त्ताकोर्गुटिका भोजनोत्तरम् ।
भुक्ता भुक्तं पचत्याशु नाशयेद्ग्रहणीगदम् ॥
कासं श्वासं तथार्शांसि विसूचीञ्च हृदामयम्
॥"
इति वार्त्ताकुगुटिका ॥ * ॥
"मुस्तकातिविषाविल्वकौटजंसूक्ष्मचूर्णितम् ।
मधुना च समालीढं ग्रहणीं सर्व्वजां त्यजेत् ॥"
कौटजं इन्द्रयवः । मुस्तकादिचूर्णम् ॥ * ॥
"श्वेतो वा यदि वा रक्तः सुपक्वो ग्रहणीगदः ।
गुडेनाधिकसर्जेन भक्षितेनाशु नश्यति ॥"

मृद्वीकायाः पलान्यत्र चत्वारि
कथितानि हि ।
त्रिवृतायाः पलान्यष्टौ गुडस्यार्द्धतुला
तथा ॥
तिलतैलपलान्यष्टावामलक्या रसस्य तु
।
प्रस्थत्रयमिदं सर्व्वं शनैर्मृद्वग्निना पचेत् ॥
औडम्बरं चामलकं वादरं वा यथा
फलम् ।
तावन्मात्रमिदं खादेद्भक्षयेद्वा यथानलम्
॥
निखिलान् ग्रहणीरोगान् प्रमेहांश्चैव
विंशतिम् ।
उरोघातं प्रतिश्यायं दौर्ब्बल्यं
वह्निसंक्षयम् ॥
ज्वरानपि हरेत् सर्व्वान् कुर्य्यात् कान्तिं
मतिं
स्वरम् ।
पिचुपाठान्वयाद्धन्ति रक्तपित्तञ्च
विड्ग्रहम् ॥
धातुक्षीणो वयःक्षीणः स्त्रीषु क्षीणः क्षयी
च यः ।
तेभ्यो हितश्च बन्ध्यायै महाकल्याणको
गुडः ॥"
इति महाकल्याणकगुडः ॥ * ॥
"कुष्माण्डानां सुपक्वानां स्विन्नानां
निष्कुलत्वचाम् ।
सर्पिःप्रस्थे पलशतं ताम्रपात्रे शनैः पचेत्
॥
पिप्पली पिप्पलीमूलं चित्रकं
गजपिप्पली ।
धान्यकानि विडङ्गानि नागरं मरिचानि
च ॥
त्रिफला चाजमोदा च
कलिङ्गाजाजिसैन्धवम् ॥
एकैकस्य पलञ्चैकं त्रिवृतोऽष्टौ पलानि च
।
तैलस्य च पलान्यष्टौ गुडात् पञ्चाशदेव
तु ॥

दध्नः सराम्लः स्नेहाढ्यः खडो हन्यात्
प्रवाहि-
काम् ॥"
इति वैद्यकचक्रपाणिसंग्रहेऽतीसाराधिकारे
॥)

**प्रवाही**, स्त्री, (प्रोह्यते इति । प्र + वह् +
घञ् । गौरादित्वात् ङीष् ।) वालुका ।
इति
राजनिर्घण्टः ॥

**प्रविख्यातिः**, स्त्री, (प्र + वि + ख्या + क्तिन् ।)
अतिप्रसिद्धिः । तत्पर्य्यायः । विश्रावः २
। इत्य-
मरः । ३ । २ । २८ ॥

**प्रविदारणं**, क्ली, (प्रविदारयन्त्यत्रेति । प्र + वि +
दॄ + णिच् + आधारे ल्युट् ।) युद्धम् ।
इत्यमरः ।
२ । ८ । १०३ ॥ (प्र + वि + दॄ + णिच्
+ भावे
ल्युट् ।) अवदारणम् । इति मेदिनी । णे,
११३ ॥
आकीर्णम् । इति शब्दरत्नावली ॥ (प्र +
वि +
दॄ + णिच् + कर्त्तरि ल्युः । प्रविदारके, त्रि
॥)

**प्रविरः**, पुं, पीतकाष्ठम् । इति शब्दचन्द्रिका ॥

**प्रविश्लेषः**, पुं, (प्रकृष्टो विश्लेषो यस्य ।) प्रकृष्ट-
विश्लेषः । तत्पर्य्यायः । विधुरम् २ ।
इत्यमरः ।
३ । २ । १० ॥ यथा, --
"वैक्लव्येऽपि प्रविश्लेषे विधुरं विकले
त्रिषु ॥"
इति भरतधृतत्रिकाण्डशेषः ॥

**प्रविषा**, स्त्री, (प्रहतं बिषमनया ।) अतिविषा ।
इति क्वचिदमरे । २ । ४ । ९९ ॥
(अतिविषा-
शब्देऽस्य विवरणं ज्ञातव्यम् ॥)

**प्रविष्टः**, त्रि, (प्र + विश् + कर्त्तरि क्तः ।) प्रवेश-

| | | विशिष्टः । यथा, --<br>“स तं प्रविष्टं वृतमाततायिभि-<br>र्भटैरनेकैरवलोक्य माधवः ॥”<br>इति श्रीभागवते बाणयुद्धे ६२ अध्यायः ॥ |
|---|---|---|

**प्रवीणः**, त्रि, (प्रकृष्टा संसाधिता वीणास्य । यद्वा,
प्रवीणयति वीणया प्रगायतीति । प्र + वीण +
णिच् + अच् । वीणया गायकस्य नैपुण्यप्रसिद्धे-
स्तत्तुल्यनैपुण्यात् तथात्वम् ।) प्रकृष्टं वेत्ति यः ।
तत्पर्य्यायः । निपुणः २ अभिज्ञः ३ विज्ञः ४
निष्णातः ५ शिक्षितः ६ वैज्ञानिकः ७ कृत-
मुखः ८ कृती ९ कुशलः १० । इत्यमरः । ३ ।
१ । ४ ॥ (यथा, कुमारे । १ । ४८ ।
"विश्वावसुप्राग्रहरैः प्रवीणैः
सङ्गीयमानत्रिपुरावदानः ।
अध्वानमध्वान्तविकारलङ्घ्य-
स्ततार ताराधिपखण्डधारी ॥")

**प्रवीरः**, पुं, (प्रकृष्टो वीरः ।) सुभटः । (यथा,
कथासरित्सागरे । २५ । १४५ ।
"इति तस्या वचः श्रुत्वा स प्रवीरोऽप्युवाच ताम् ॥"
भौत्यस्य मनोः पुत्त्रभेदः । यथा, हरिवंशे । ७ । ८८ ।
"अभिमानी प्रवीरश्च जिष्णुः संक्रन्दनस्तथा ॥"
अत्र क्वचित् प्रवीणोऽपि पाठः ॥ पुरुवंशीयस्य
प्रचिन्वतः पुत्त्रः । यथा, तत्रैव । ३१ । ५ ।
"प्रचिन्वतः प्रवीरोऽभून्मनस्युस्तस्य चात्मजः ॥"
धर्म्मनेत्रस्य उपदानवीगर्भजातः पुत्त्रभेदः ।
यथा, तत्रैव । ३२ । ७ -- ८ ।
"तंसोः सुरोधो राजर्षिर्धर्म्मनेत्रः प्रतापवान् ।
ब्रह्मवादी पराक्रान्तस्तस्य भार्य्योपदानवी ॥
उपदानवी सुतान् लेभे चतुरस्तान् सुयोधतः ।

**प्रवृत्तिः**, स्त्री, (प्रवर्त्तते इति । प्र + वृत् + क्तिन् ।)
प्रवाहः । उदन्तः । (यथा, मेघदूते । ४ ।
"प्रत्यासन्ने नभसि दयिताजीवितालम्बनार्थी
जीमूतेन स्वकुशलमयीं हारयिष्यन् प्रवृत्तिम् ॥"
प्रवर्त्तनमिति । प्र + वृत् + क्तिन् ।) प्रवर्त्तनम् ।
(यथा, महाभारते । १२ । ३० । १६ ।
"ववृधे हि ततस्तस्य हृदि कामो महात्मनः ।
यथा शुक्लस्य पक्षस्य प्रवृत्तौ चन्द्रमाः शनैः ॥"
प्रवर्त्तते व्याप्नोति प्रसिद्धत्वेनेति । प्र + वृत् +
क्तिच् । यज्ञादिव्यापारः । यथा, महाभारते ।
१ । १ । २५५ ।
"असच्च सदसच्चैव यस्माद्विश्वं प्रवर्त्तते ।
सन्ततिश्च प्रवृत्तिश्च जन्ममृत्युपुनर्भवाः ॥"
"सन्ततिर्ब्रह्मादिः । प्रवृत्तिर्यज्ञादिः ॥" इति
तट्टीकायां नीलकण्ठः ॥") अवन्त्यादिदेशः ।
इति मेदिनी । ते, १३० ॥ हस्तिमदः । इति
हेमचन्द्रः । ४ । २९० ॥ न्यायमते यत्नविशेषः ।
अस्याः कारणम् । चिकीर्षा । कृतिसाध्यता-
ज्ञानम् । इष्टसाधनताज्ञानम् । उपादानप्रत्य-
क्षम् । यथा, --
"प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ।
एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिदर्शितम् ॥
चिकीर्षा कृतिसाध्येष्टसाधनत्वमतिस्तथा ।
उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत् ॥"
इति भाषापरिच्छदः ॥
(यथा, पञ्चदश्याम् । ६ । १७३ ।
"देहादिपञ्जरं यन्त्रं तदारोहोऽभिमानिता ।
विहितप्रतिषिद्धेषु प्रवृत्तिर्भ्रमणं भवेत् ॥"
प्रयत्नसहितादन्तःकरणात्प्रवृत्तिर्जायते ।
यदुक्तं कामन्दकीये नीतिसारे । १ । ३३ -- ३५ ।
"आत्मा मनश्च तद्विद्यैरन्तःकरणमुच्यते ।
बहिःकरणप्रवृत्तिरपि अध्यवसायलक्षणात्
प्रयत्नादेवेति दर्शितं भवति एतदेव समर्थ-
यन्नाह । उभे एते हीति । उभे एते अनन्त-
रोक्ते हि स्फुटं करणे अन्तर्बहिःकरणसंज्ञके
यत्नानन्तर्य्यके प्रयत्नानन्तरं वर्त्तेते प्रयत्नप्रेर-
णादित्यर्थः । तस्मादिति । यस्मादेवं तस्मात्
प्रवृत्तिसंरोधात् उभयात्मकस्य प्रयत्नस्यैव संरोधं
कृत्वा निर्म्मनस्कतां भावयेत् निर्मनस्कभावं अभ्य-
स्येत् यावत् प्रयत्न एव निरुद्धो भवति ताव-
दात्मा मनसा न युज्यते ततश्च विद्यमानमपि
मनो नास्त्येव मनःकार्य्याकरणात् । अन्तः-
करणविश्लेषात् प्रवृत्तिर्नोपपद्यते । एवमन्तः-
करणप्रवृत्त्यभावात् बहिःकरणप्रवृत्तेरप्यभावः ।
तदभावात् इन्द्रियाणां विषयैः सम्बन्ध एव न
स्यात् इति भावः ।" इति तट्टीका ॥)

**प्रवृत्तिज्ञः**, पुं, (प्रवृत्तिं वृत्तान्तं जानातीति । ज्ञा +
कः ।) चारभेदः । तत्पर्य्यायः । वार्त्तिकः २
वार्त्तायनः ३ । इति त्रिकाण्डशेषः ॥

**प्रवृद्धः**, त्रि, (प्रवर्द्धते स्मेति । प्र + वृध् + क्तः ।)
वृद्धियुक्तः । तत्पर्य्यायः । प्रौढः २ एधितः ३ ।

दुष्मन्तमथ सुष्मन्तं प्रवीरमनध तथा ॥”
चण्डालपुरुषविशेषः । यथा, मार्कण्डेये । ८ । ८६ ।
“चण्डालोऽहमिहाख्यातः प्रवीरेति पुरोत्तमे ।
विख्यातो वध्यवधको मृतकम्बलहारकः ॥”)
उत्तमे, त्रि । इति धरणिः ॥ (यथा, देवी-भागवते । २ । ५ । २० ।
“कुरुप्रवीरं कुरु मां पतिं त्वं
वृथा न गच्छेन्ननु यौवनं ते ॥”)

**प्रवृत्तः**, त्रि, (प्रवर्त्तते स्मेति । प्र + वृत् + क्तः ।)

प्रवृत्तिविशिष्टः । यथा, --
“ववृत्त एव स्वयमुज्झितश्रमः
क्रमेण पेष्टुं भुवनद्विषामसि ।
तथापि वाचालतया युनक्ति मां
मिथस्त्वदाभाषणलोलुपंमनः ॥”
इति शिशुपालबधे । १ । ४० ॥
आरम्भः । यथा, --
“प्रवृत्तमन्यथा कुर्य्यात् यदि मोहात् कथञ्चन ।
यतस्तदन्यथा भूतं तत एव समापयेत् ॥”
इति छन्दोगपरिशिष्टम् ॥
प्रकृष्टवर्त्तनविशिष्टश्च ॥ (यथा, रामायणे । ७ । ८० । १ ।
“अथ रात्र्यां प्रवृत्तायां शत्रुघ्नो भृगुनन्दनम् ।
पप्रच्छ च्यवनं विप्रं लवणस्य यथा बलम् ॥”)

आभ्यान्तु सप्रयत्नाभ्यां सङ्कल्प उपजायते ॥
आत्माबुद्धीन्द्रियाण्यर्थाबहिष्करणमुच्यते ।
सङ्कल्पाध्यवसायाभ्यां सिद्धिरस्य प्रकीर्त्तिता ॥
उभे एते हि करणे यत्नानन्तर्य्यके स्मृते ।
तस्मात् प्रवृत्तिसंरोधाद्भावयेन्निर्मनस्कताम् ॥”
“आत्ममनोबुद्धिकर्म्मेन्द्रियाणां लक्षणमभिधाय
बुद्धेरन्तःपरिकल्पनया कारणविभागमभिधातु-
माह । आत्मा मनश्चेति । अभिहितेन लक्ष-
णेनेति प्रतिपाद्यते यया विद्यया साऽन्वयविद्या
सा विद्यते येषां ते तद्विद्याः कणादाक्षपादा-
दयः तैः तद्विद्यैः आत्मा मनश्च अन्तःकरण-
मुच्यते । आभ्यां आत्ममनोभ्यां प्रयत्नसहिताभ्यां
सङ्कल्पः प्रवृत्तिः । इन्द्रियप्रवर्त्तनं उपजायते ।
बहिःकरणमभिधातुमाह । आत्मा बुद्धीति ।
आत्मा उक्तलक्षणः । बुद्धिः मनः । इन्द्रियाणि
बाह्यरूपाणि । अर्थाः शब्दादयः । कर्म्मे-
न्द्रियाणां हि उत्सर्गादिका अर्थाः प्रयोजनानि ।
एतत् सर्व्वं बहिःकरणम् । सङ्कल्पः सम्यग्-
भूतार्थकल्पनं अध्यवसायः प्रयत्नविशेषः ताभ्यां
अस्य आत्मनः सुखानुभवलक्षणा सिद्धिः प्रकी-
र्त्तिता । तदेवं अन्तःकरणप्रवृत्तिः प्रयत्नादेव

प्रसारितः । तत्पर्य्यायः । प्रसृतः २ । इत्यमरः ।
३ । १ । ७६ ॥ (यथा, देवीभागवते । ३ । ८ । २९ ।
“सत्त्वं समुत्कटं जातं प्रवृद्धं शास्त्रदर्शनात् ।
वैराग्यं तत्फलं जातं तामसार्थेषु नारद ! ॥”)

**प्रवेकः**, त्रि, (प्रविच्यते पृथक् क्रियते इति ।

प्र + विच् + कर्म्मणि घञ् ।) उत्तमः । प्रधा-
नम् । इत्यमरः । ३ । १ । ५७ ॥ (यथा, भाग-
वते । २ । ९ । ११ ।
“श्यामावदाताः शतपत्रलोचनाः
पिशङ्गवस्त्राः सुवचः सुपेशसः ।
सर्व्वे चतुर्बाहव उन्मिषन्मणि-
प्रवेकनिष्काभरणा सुवर्च्चसः ॥”)

**प्रवेटः**, पुं, (प्रवीयते खाद्यते इति । प्र + वी +

बाहुलकात् टः ।) यवः । इति त्रिकाण्डशेषः ॥

**प्रवेणिः**, स्त्री, (प्रकर्षेण वीयते इति । प्र + वी गतौ

+ “वीज्याज्वरिभ्यो निः ।” उणा० ४ । ४८ ।
इति निः । णत्वम् । यद्वा, प्रवेणति सौन्दर्य्यं प्राप्नो-
तीति । प्र + वेण गतौ + इन् ।) कुथः । वेणी ।
इति मेदिनी । णे, ६३ ॥

**प्रवेणी**, स्त्री, (प्रकर्षेण वीयते इति । प्र + वी गतौ

+ “वीज्याज्वरिभ्यो निः ।” उणा० ४ । ४८ ।
इति निः । णत्वम् । कृदिकारादिति पाक्षिको
ङीष् ।) वेणी । (यथा, रघौ । १५ । ३० ।
“तत्र सौधगतः पश्यन् यमुना चक्रवाकिणीम् ।

| | | |
|---|---|---|
| | | हेमभक्तिमतीं भूमेः प्रवेणीमिव पिप्रिये ॥”)<br>गजपृष्ठस्थचित्रकम्बलम्। इत्यमरः। २ । ६ । ९८ ॥<br>(यथा, महाभारते। १५ । २७ । १३ ।<br>“अजितानि प्रवेणीश्च स्रुक् स्रुवञ्च महीपतिः।<br>कमण्डलूंश्च स्थालीश्च पिठराणि च भारत ! ॥<br>नदीविशेषः। यथा, महाभारते। ३ । ८८ । ११ ।<br>“प्रवेण्युत्तरमार्गे तु पुण्ये कण्वाश्रमे तथा ।<br>तापसानामरण्यानि कीर्त्तितानि यथाश्रुति ॥”) |

**प्रवेलः**, पुं, (प्र + वेल् + अच् ।) पीतमुद्गगः । इति हेमचन्द्रः । ४ । २३८ ॥

**प्रवेशः**, पुं, (प्र + विश् + "हलश्च ।" ३ । ३ । १२१ । इति भावे घञ् ।) अन्तर्विगाहनम् । इति हेमचन्द्रः । ६ । १०६ ॥ (यथा, काम-न्दकीये नीतिसारे । ७ । ३९ ।
"निर्गमे च प्रवेशे च राजमार्गं समन्ततः ।
प्रोत्सारितजनं गच्छेत् सम्यगाविष्कृतो-न्नतिः ॥")

**प्रवेशनं**, क्ली, (प्रविश्यतेऽनेनेति । प्र + विश् + करणे ल्युट् ।) सिंहद्वारम् । इति हेमचन्द्रः । ४ । ५९ ॥ (प्र + विश् + भावे ल्युट् ।) प्रवेशः । (यथा, हरिवंशे । १७४ । ११२ ।
"तव योगप्रभावेन शक्यं तत्र प्रवेशनम् ।
किं मे बहुविलापेन श्रूयतां सखि ! कारणम् ॥")

**प्रवेष्टः**, पुं, (प्रवेष्टते इति । वेष्ट् वेष्टने + अच् ।) बाहुः । इत्यमरः । २ । ६ । ८० ॥ बाहुनीच-भागः । इति शब्दचन्द्रिका ॥ हस्तिदन्तमांसम् । इति हारावली । ३० ॥ गजपृष्ठतल्पनम् । इति त्रिकाण्डशेषः ॥

**प्रव्यक्तं**, त्रि, (प्रव्यज्यते स्मेति । प्र + वि + अन्ज् + क्तः ।) स्फुटम् । इत्यमरः । ३ । १ । ८१ ॥ (यथा, सुश्रुते निदानस्थाने द्वितीयाध्याये ।
"जातेष्वेतानि रूपाणि प्रव्यक्ततराणि भवन्ति ॥")

**पव्रजितः**, पुं, (प्र + व्रज् + क्तः ।) बुद्धभिक्षु-मल्लिनाथः ॥ वृथाप्रव्रज्याश्रितानां निन्दनीयत्व-मुक्तम् । यथा, मनौ । ५ । ८९ ।
"वृथासङ्करजातानां प्रव्रज्यासु च तिष्ठताम् ।
आत्मनस्तागिनाञ्चैव निवर्त्ततोदकक्रिया ॥"
क्ली, प्रव्रजनम् । यथा, महाभारते । ४ । १७ । ११ ।
"कोऽहि राज्यं परित्यज्य सर्व्वस्वं चात्मना सह ।
प्रव्रज्यायैव दीव्येत विना दुर्द्यूतदेविनम् ॥")

**प्रव्रज्यावसितः**, पुं, (प्रव्रज्याया अवसितो विच्युतः ।) सन्न्यासभ्रष्टः । यथा, --
"तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥"
इति दायभागवचनव्याख्यायां क्रमसंग्रहः ॥ (यथा, कात्यायनवचनम् ।
"प्रव्रज्यावसिता यत्र त्रयो वर्णा द्विजोत्तमाः ।
निर्वासं कारयेद्विप्रं दासत्वं क्षत्रवैश्ययोः ॥")

**प्रशंसा**, स्त्री, (प्र + शन्स + भावे अः । स्त्रियां टाप् ।) प्रशंसनम् । तत्पर्य्यायः । वर्णना २ ईडा ३ स्तवः ४ स्तोत्रम् ५ स्तुतिः ६ नुतिः ७ श्लाघा ८ अर्थवादः ९ । इति हेमचन्द्रः । २ । १८४ ॥ (यथा, मनुः । १० । १२७ ।
"धर्म्मेप्सवस्तु धर्म्मज्ञाः सतां वृत्तिमनुष्ठिताः ।
मन्त्रवर्ज्जं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च ॥")
आत्मप्रशंसानिषेधो यथा, --
"न चात्मानं प्रशंसेद्वा परनिन्दाञ्च वर्जयेत् ।

**प्रशस्यः**, त्रि, प्रशंसनीयः । प्रपूर्ब्बशन्सधातोः कर्म्मणि क्यप्प्रत्ययेन निष्पन्नः ॥ (यथा, काम-न्दकीयनीतिसारे । ११ । ५५ ।
"अपश्चात् तापकृत्सम्यगनुरक्तिफलप्रदः ।
अदीर्घकालोऽभीष्टश्च प्रशस्यो मन्त्र इष्यते ॥")

**प्रशान्**, [म्] त्रि, प्रकर्षेण शाम्यति यः । (प्र + शम् + क्विप् । "अनुनासिकस्य क्विझलोः क्ङिति ।" ६ । ४ । १५ । इति दीर्घः ।) शान्तः । इति मुग्धबोधव्याकरणम् ॥ (सामर्थ्ये नान्तोऽव्ययोऽयम् ॥)

**प्रशान्तः**, त्रि, (प्रकर्षेण शान्तः ।) प्रकृष्टशमता-विशिष्टः । यथा, --
"प्रशान्तश्वापदाकीर्णं मुनिशिष्योपशोभितम् ॥"
इति मार्कण्डेयपुराणे । ८१ । ९ ।

**प्रशास्ता**, [ऋ] त्रि, (प्रशास्तीति । प्र + शास् + तृच् । "ग्रसितस्कभितेति ।" ७ । २ । ३४ । इति निपातनादिडभावः । यद्वा, "तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायाञ्चानिटौ ।" उणा० २ । ९४ । इति तृण् इट् च न ।) ऋत्विक् । मित्रम् । इति संक्षिप्तसारोणादिवृत्तिः ॥ शासनकर्त्ता ॥ (यथा, कामन्दकीयनीतिसारे । १३ । ४५ ।
"प्रशास्त्रध्यक्षसेनानां मन्त्र्यमात्यपुरोधसाम् ।
सम्यक्प्रचारविज्ञानं दुष्टानाञ्चावबोधनम् ॥")

**प्रश्नः**, पुं, (प्रच्छनमिति । प्रच्छ + "यजयाच-यतेति ।" ३ । ३ । ९० । इति नङ् । "च्छ्वोः शूडिति ।" ६ । ४ । १९ । इति शः । "प्रश्ने चेति ।" ३ । २ । ११७ । इति ज्ञापकात् न सम्प्रसारणम् ।) जिज्ञासा । तत्पर्य्यायः । अनु-

शिष्यः । तत्पर्य्यायः । चेलुकः २
श्रामणेरः ३
महापाशकः ४ गोमी ५ । इति
त्रिकाण्डशेषः ॥
त्रि प्रव्रज्याश्रमविशिष्टः ॥ (यथा,
पराशर-
संहितायाम् । ४ । २६ ।
"नष्टे मृते प्रव्रजिते क्लीवे च पतिते पतौ
।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते
॥"
प्र + व्रज् + भावे क्तः । क्ली, सन्न्यासः
। यथा,
महाभारते । ५ । १७६ । ५ ।
"अलं प्रव्रजितेनेह भद्रे ! शृणु हितं वचः
।
इतो गच्छस्व भद्रन्ते पितुरेव निवेशनम्
॥")

**प्रव्रजिता**, स्त्री, (प्रव्रजितस्य लिङ्गमिव जटादिक-

मस्त्यस्या इति । अच् । टाप् ।) मांसी ।
मुण्डीरी । (प्रव्रजित + टाप् ।) तापसी ।
इति
मेदिनी । ते, २१० ॥

**प्रव्रज्या**, स्त्री, (प्र + व्रज + "व्रजयजोभवि क्यप् ।"

५ । ३ । ९८ । इति भावे क्यप्प्रत्ययः
।) सन्न्यासः ॥
(यथा, महाभारते । ३ । १७७ । ७ ।
"बाणवेगं हि कस्तस्य शक्तः सोढुं
महात्मनः ।
प्रव्रज्यायां हि मे हेतुः स एव पुरुषर्षभः
॥"
यथा च कुमारे । ६ । ६ ।
"मुक्तायज्ञोपवीतानि विभ्रतो
हैमवल्कलाः ।
रत्नाक्षसूत्राः प्रव्रज्यां कल्पवृक्षा
इवाश्रिताः ॥"
"अत्र चतुर्थाश्रमवाचिना प्रव्रज्याशब्देन
वान-
वेदनिन्दां देवनिन्दां प्रयत्नेन विवर्ज्जयेत्
॥"
इति कौर्म्मे उपविभागे १५ अध्यायः ॥

**प्रशमः**, पुं, (प्रशमनमिति । प्र + शम् + भावे

घञ् ।) शमता । उपशमः । यथा, --
"एतानि दशपापानि प्रशमं यान्तु जाह्नवि !
॥"
इति तिथ्यादितत्त्वम् ॥
(यथा च हरिवंशे । ९८ । ८१ ।
"स तेन वारिणा वह्निस्तत्क्षणात्प्रशमं ययौ
॥")

**प्रशमनं**, क्ली, (प्र + शम् + णिच् + ल्युट् ।) मार-

णम् । वधः । इति हेमचन्द्रः ॥ (प्र + शम् +
ल्युट् ।) शमता । प्रशान्तिः । यथा, --
"सर्व्वाबाधाप्रशमनं
त्रैलोक्यस्याखिलेश्वरि ! ।
एवमेव त्वया कार्य्यमस्मद्वैरिविनाशनम् ॥"
इति मार्कण्डेयपुराणम् । ९१ । ३५ ॥
(प्रतिपादनम् । दानम् । इति कुल्लूकभट्टः ॥
यथा, मनुः । ७ । ५६ ।
"तैः सार्द्धं चिन्तयेन्नित्यं सामान्यं
सन्धिविग्रहम् ।
स्थानं समुदयं गुप्तिं लब्धप्रशमनानि च ॥"
स्थिरीकरणम् । प्रशमनेन स्थिरीकरणेन ।
यथा,
रघुः । ४ । १४ ।
"लब्धप्रशमनस्वस्थमथैनं समुपस्थिता ।
पार्थिवश्रीर्द्वितीयेव शरत्पङ्कजलक्षणा ॥")
इति मल्लिनाथः ॥

**प्रशस्तं**, त्रि, (प्रशस्यते स्मेति । प्र + शन्स +

क्तः ।) क्षेमम् । इति शब्दरत्नावली ॥ प्रशं-
सनीयम् । अतिश्रेष्ठम् । इति मतल्लिकादि-
शब्दटीकायां भरतः ॥ (यथा, रघुः । ५ ।
२५ ।
"स त्वं प्रशस्ते महिते मदीये
वसंश्चतुर्थोऽग्निरिवाग्न्यगारे ॥")
योगः २ पृच्छा ३ । इत्यमरः । १ । ६ । १०
॥
(यथा, मनुः । १ । ११५ ।
"साक्षिप्रश्नविधानञ्च धर्म्मं स्त्रीपुंसयोरपि
॥"
"पृच्छा तन्त्राद्यथाम्नायं विधिना प्रश्न
उच्यते ॥"
इति चरके सूत्रस्थाने त्रिंशेऽध्याये ॥)

**प्रश्नदूती**, स्त्री, (प्रश्नस्य दूतीव ।) प्रहेलिका ।

इति त्रिकाण्डशेषः ॥

**प्रश्नी**, स्त्री, (पृश्निः पृषोदरादित्वात् रः । वा

ङीष् ।) कुम्भिका । इति त्रिकाण्डशेषः ॥

**प्रश्रयः**, पुं, (प्रश्रयणमिति । प्र + श्रि + भावे

अच् ।) प्रणयः । इत्यमरः । ३ । २ । २५ ॥
(यथा, कामन्दकीयनीतिसारे । ८ । ८ ।
"अदीर्घसूत्रताक्षौद्रं प्रश्रयः स्वप्रधानता ।
प्रकृतिस्फीतता चेति विजिगीषुगुणाः स्मृताः
॥")

**प्रश्रितः**, त्रि, (प्र + श्रि + क्तः ।) विनीतः । इत्य-

मरः । ३ । १ । २५ ॥ (यथा, रामायणे । १
।
१३ । २ ।
"अब्रवीत् प्रश्रितं वाक्यं प्रसवार्थं द्विजोत्तमम्
॥")

**प्रश्लथः**, त्रि, (प्रकृष्टः श्लथः ।) शिथिलः । इति

त्रिकाण्डशेषः ॥

**प्रष्टा**, [ऋ] त्रि, (पृच्छतीति । प्रच्छ + तृच् ।

"व्रश्चेति ।" ८ । २ । ३६ । इति षः ।)
प्रश्न-
कर्त्ता । तत्पर्य्यायः । कथंकथिकः २ । इति

| | | |
|---|---|---|
| प्रस्थाश्रमो लक्ष्यते ‘जहुः परिग्रहव्रीडां प्राजा- पत्यास्तपस्विनः’ इति सपत्नीकत्वाभिधानात् ‘सुतविन्यस्तपत्नीकः तया वानुगतोऽपि सन्’ इति वानप्रस्थस्योभयथा स्मरणात् ॥” इति तत्र | | |

त्रिकाण्डशेषः ॥ (यथा, मार्कण्डेये । ७५ । २९ ।
"विवेश वह्निशालां वै प्रष्टारं प्राह हव्यभुक् ॥")

**प्रष्ठः**, त्रि, (प्रतिष्ठते अग्रतो गच्छतीति । प्र + स्था + "सुपि स्थः ।" ३ । २ । ४ । इति कः । "प्रष्ठो-ऽग्रगामिनि ।" ८ । ३ । ९२ । इति षत्वम् ।)
अग्रगामी । इत्यमरः । २ । ८ । ७२ ॥ (थथा,
रघुः । १५ । १० ।
"आदिष्टवर्त्मा मुनिभिः स गच्छंस्तपतां वरः ।
विरराज रथप्रष्ठैर्बालखिल्यैरिवांशुमान् ॥")

**प्रष्ठवाट्**, [ह्] पुं, (प्रष्ठः अग्रगामी सन् वह-तीति । प्रष्ठ + वह् + "वहश्च ।" ३ । २ । ६४ ।
इति ण्विः ।) युगपार्श्वगः । इत्यमरः । २ । ९ ।
६३ ॥ शिक्षार्थं युगवाहिपार्श्वयोजितः । इति
भरतः ॥ योजितं युगपार्श्वे दमनार्थं यं हालिका
भ्रामयन्ति सः । इति मधुः ॥ युवा गौर्दमनाय
योजितः । इत्यन्ये ॥

**प्रष्ठी**, स्त्री, (प्रष्ठ + ङीष् ।) प्रष्ठभार्य्या । अग्र-गामिपत्नी । इति जटाधरः ॥

**प्रष्ठौही**, स्त्री, (प्रष्ठवाह् + "वाहः ।" ४ । १ । ६१ । इति ङीष् ।) बालगर्भिणी । प्रथमगर्भ-
वती गौः । प्रष्ठं प्रथमगर्भं वहति या सा ।
बाला सती गर्भिणी प्रथमगर्भेत्यर्थः । इति
भरतः ॥ (यथा, महाभारते । १३ । ९३ । ३३ ।

चार्य्यः ॥ * ॥ ("प्रकरणान्तरेण समापनं प्रसङ्गः ।
यथा प्रकारान्तरितो योऽर्थोऽसकृदुक्तः समा-
प्यते स प्रसङ्गः । यथा ।
महाभूतशरीरिसम-
वायः पुरुषस्तस्मिन् सोऽधिष्ठानमिति वेदोत्-
पत्तावभिधाय भूतविद्यायां पुनरुक्तं यतोऽभि-
हितं पञ्च महाभूतशरीरिसमवायःपुरुष इति
स खल्वेवं कर्म्म
पुरुषश्चिकित्सायामधिकृतः ॥"
इत्युत्तरतन्त्रे पञ्चषष्टितमेऽध्याये सुश्रुतेनोक्तम् ॥)
अन्योद्देशेन प्रवृत्तावन्यस्यापि सिद्धिः ।
यथा, --
"दृष्टा तु हरते पापं स्पृष्टा तु त्रिदिवं नयेत् ।
प्रसङ्गेनापि या गङ्गा मोक्षदा ह्यवगाहिता ॥"
इति प्रायश्चित्ततत्त्वम् ॥ * ॥
(यथा च देवीभागवते । ३ । ९ । ४२ ।
"अस्पष्टमपि तन्नाम प्रसङ्गेनापि भाषितम् ।
ददाति वाञ्छितानर्थान् दुर्ल्लभानपि सर्व्वथा ॥")
प्रसक्तिः । यथा, --
"आनीता भवता यदा पतिरता साध्वी धरत्रीसुता
स्फुर्ज्जद्राक्षस्रमायया न च कथं रामाङ्गमङ्गी-
कृतम् ।
कर्त्तुं चेतसि पुण्डरीकनयनं दूर्व्वादलश्यामलं
तुच्छं ब्रह्मपदं भवेत् परबधूसङ्गप्रसङ्गः कुतः ॥"
इति नाटकम् ॥ * ॥

**प्रसन्नः**, त्रि, (प्रसीदतीति । प्र + सद् + गत्यर्थेति क्तः ।) निर्म्मलः । तत्पर्य्यायः । अच्छः २ ।
इत्यमरः । १ । १० । १४ ॥ (यथा, महाभारते ।
४ । २७ । २४ ।
"रसाः स्पर्शाश्च गन्धाश्च शब्दाश्चापि गुणा-
न्विताः ।
दृश्यानि च प्रसन्नानि यत्र राजा युधिष्ठिरः ॥")
सन्तुष्टः । इति मेदिनी । ने, ८६ ॥ (यथा,
रघुः । ५ । १० ।
"अपि प्रसन्नेन महर्षिणा त्वं
सम्यग्विनीयानुमतो गृहाय ॥")

**प्रसन्नता**, स्त्री, (प्रसन्न + तल् ।) प्रसन्नस्य भावः । तत्पर्य्यायः । प्रसादः २ । इत्यमरः । १ । ३ । १६ ॥
(यथा, हठयोगप्रदीपिकायाम् । २ । ७८ ।
"वपुः कृशत्वं वदने प्रसन्नता
नादस्फुटत्वं नयने सुनिर्म्मले ॥")

**प्रसन्ना**, स्त्री, (प्रसन्न + टाप् ।) सुरा । इत्यमरः । २ । १० । ४० ॥ मद्यविशेषः । तस्य गुणाः ।
"प्रसन्ना गुल्मवातार्शोविबन्धानाहनाशिनी।
शूलप्रवाहिकाटोपकफवातार्श्सां हिता ॥"
इति राजवल्लभः ॥
प्रसादविशिष्टा । यथा, मार्कण्डेये । ८१ । ४३ ।
"सैषा प्रसन्ना वरदा नृणां भवति मुक्तये ॥"

**प्रसन्नेरा**, स्त्री, (प्रसन्ना निर्म्मला इरा जलमिव । मदिरा । इत्यमरटीकायां भरतः । २ । १० । ४० ॥)

**प्रसभः**, पुं, (प्रगता सभा सभाधिकारो यस्मात् ।) बलात्कारः । इत्यमरः । २ । ८ । १०८ ॥
(यथा, श्रीकण्ठचरिते । ५ । ४२ ।
"यस्मिन् विनिर्म्मितवति प्रसभं प्रकोपा-

"प्रष्ठौहीनां पीवराणाञ्च तावद्
अग्र्या गृष्ट्यो धेनवः सुव्रताश्च ॥")

**प्रस**, म ष ङ प्रसवे । ततौ । इति कविकल्पद्रुमः ॥

(भ्वा०-आत्म०-सक०-सेट् ।)
रेफयुक्ताद्यः । म,
प्रसयति । ष, प्रसा । ङ, प्रसते कीर्त्तिं
विद्या ।
प्रसते विस्तारयति वेत्यर्थः । इति
दुर्गादासः ॥

**प्रसक्तं**, क्ली, (प्न + सन्ज + क्त ।) नित्यम् । इति

जटाधरः ॥ (यथा,
माधवकृतरुग्विनिश्चयस्य
कासाधिकारे ।
"प्रसक्तवेगस्तु समीरणेन
भिन्नस्वरः कासति शुष्कमेव ॥"
"प्रसक्तवेगः स्रततकासवेगः ।" इति
तट्टी-
कायां विजयरक्षितः ।) तद्वति, त्रि ॥
(आसक्तः ।
यथा, गीतायाम् । १६ । १६ ।
"अनेकचित्तविभ्रान्ता मोहजालसमावृताः
।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ
॥")

**प्रसक्तिः**, स्त्री, (प्र + सन्ज + भावे क्तिन् ।) प्रसङ्गः
।

(यथा, किराते । ५ । ५० ।
"मा भूवन्नपथहरास्तवेन्द्रियाश्वाः
सन्तापे दिशतु शिवः शिवां प्रसक्तिम् ॥")
अनुमितिः । आपत्तिः । इति सव्यभिचार-
शिरोमणिः ॥

**प्रसङ्गः**, पुं, (प्र + सन्ज + घञ् ।) सङ्गतिविशेषः ।

यथा, --
"स प्रसङ्ग उपोद्घातो हेतुतावसरस्तथा ।
निर्व्वाहकैककार्य्यत्वे षोढासङ्गतिरिष्यते
॥"
तस्य लक्षणम् । स्मृतस्योपेक्षानर्हत्वम् ।
तद-
प्रस्तावः । यथा, --
"तत्रैव गङ्गा यमुना च तत्र
गीदावरी तत्र सरस्वती च ।
सर्व्वाणि तीर्थानि वसन्ति तत्र
यत्राच्युतोदारकथाप्रसङ्गः ॥"
इति पौराणिकाः ॥ * ॥
मैथुनम् । यथा ।
प्रसङ्गनित्यद्रुतपृष्ठयानादिति
रुग्विनिश्चयवचनटीकायांविजयरक्षितः
॥
(यथा च देवीभागवते । १ । १२ । २० ।
"ऋषयोऽपि तयोर्वीक्ष्य प्रसङ्गं रममाणयोः
।
परिवृत्य ययुस्तूर्णं नरनारायणाश्रमम् ॥")

**प्रसज्यप्रतिषेधः**, पुं, (प्रसज्य प्रवृत्तिं सम्पाद्य प्रति-

षेधो निषेधः ।) निषेधविशेषः । तल्लक्षणं
यथा,
"अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्
॥"
अस्योदाहरणम् । भोजराजः ।
"पौषे चैत्रे कृष्णपक्षे नवान्नं नाचरेद्बुधः ।
भवेज्जन्मान्तरे रोगी पितॄणां नोपतिष्ठते
॥"
अत्र रोगीतिनिन्दाश्रवणात्प्रसज्यता ।
नोप-
तिष्ठते इति श्रषणात् पर्य्युदासता । इति
मल-
मासतत्त्वम् ॥

**प्रसत्तिः**, स्त्री, (प्र + सद् + क्तिन् ।) प्रसन्नता ।

नैर्म्मल्यम् । इति जटाधरः ॥

**प्रसत्वरी**, स्त्री, (प्रसत्वन् + "वनो रच ।" ४ ।

१ । ७ । इति ङीब्रौ ।) प्रतिपत्तिः । इति
संक्षिप्तसारोणादिवृत्तिः ॥

**प्रसत्वा**, [न्] पुं, (प्रसीदतीति । प्र + स्रद् +

क्वनिप् ।) धर्म्मः । प्रजापतिः । इति
संक्षिप्त-
सारोणादिवृत्तिः ॥

दत्युग्रनिग्रहनवानुभवोपदेशम् ॥")

**प्रसरः**, पुं, (प्र + सृ + भावादौ यथायथं अप् ।)

तन्तुव्रणविटपादेर्व्विसर्पणम् । प्रकर्षेण
निकटे
सरणं सर्पणम् । तत्पर्य्यायः । विसर्पः २ ।
इत्य-
मरभरतौ । ३ । २ । २३ ॥ (यथा, रघुः ।
१६ । २० ।
"तिरस्क्रियन्ते कृमितन्तुजालै-
र्विच्छिन्नधूमप्रसरा गवाक्षाः ॥")
प्रणयः । वेगः । इति मेदिनी । रे, १८२ ॥
(यथा, कलाविलासे । १ । २१ ।
"इति विनयनम्रशिरसा तेन घचो युक्तमुक्त-
मवधार्य्य ।
तमुवाच मूलदेवः प्रीतिप्रसरैः प्रसारितौ-
ष्ठाग्रः ॥")
समूहः । इति शब्दरत्नावली ॥ (यथा,
आर्य्या-
सप्तशत्याम् । ५८९ ।
"स्तननूतननखलेखालम्बी तव घर्म्मविन्दु-
सन्दोहः ।
आभाति पट्टसूत्रे प्रविशन्निव मौक्तिकप्रसरः
॥"
प्रकृष्टसञ्चरणम् । यथा, --
"अत ऊर्द्ध्वं प्रसरं वक्ष्यामः ।
तेषामेभिरातङ्क-
विशेषैः प्रकुपितानां
पर्य्युषितकिण्वोदकपिष्ट-
समवाय इवोद्रिक्तानां प्रसरो भवति तेषां
वायु-
र्गतिमत्त्वात् प्रसरणहेतुः सत्यप्यचैतन्ये स
हि

| | | |
|---|---|---|
| र्थस्तु स्मृतिविषयतापन्नत्वे सति द्वेषविषयता-नापन्नत्वम् । इत्यनुमितिग्रन्थे गदाधरभट्टा- | | |

रजोभूयिष्ठो रजश्च प्रवर्त्तकं सर्व्वभावानाम् । यथा महानुदकसञ्चयोऽतिवृद्धः सेतुमवदार्य्या-परेणोदकेन व्यामिश्रः सर्व्वतः प्रधावत्येवं दोषाः कदाचिदेकशो द्विशः समस्ताः शोणितसहिता वानेकधा प्रसरन्ति ।” इति सुश्रुते सूत्रस्थाने २१ अध्यायः ॥) युद्धम् । इति विश्वः । नाराचः । इति भूरिप्रयोगः ॥

**प्रसरणं**, क्ली, (प्र + सृ + भावे ल्युट् ।) सैन्यानां सर्व्वतो व्याप्तिः । तत्पर्य्यायः । आसारः २ । इत्यमरः । २ । ८ । ९६ ॥ प्रसरणी ३ प्रस-रणिः ४ प्रसारणी ५ । इति रामाश्रमः ॥ सैन्यानां तृणकाष्ठादिहेतवे इतस्ततो गमनम् । इति हेमचन्द्रः । ३ । ४५५ ॥ (गमनमात्रम् । यथा, मृच्छकटिके । ३ अङ्के ।
“माज्जर्ारः क्रमणे मृगः प्रसरणे श्येनो गृहा-लुञ्चने
सुप्तासुप्तमनुष्यवीर्य्यतुलने श्वा सर्पणे पन्नगः ॥”
अभ्युत्थानादिकम् । यथा, भागवते । ५ । १ । २९ ।
“वर्हिष्यत्याश्चानुदिनमेधमानप्रमोदप्रसरण-यौषिण्यव्रीडाप्रमुषितहासावलोकरुचिरक्ष्वेल्यादिभिरिति ॥”)

**प्रसरणी**, स्त्री, (प्र + सृ + “अर्त्तिसृध्रित्यनिः ।” इति अनिः । कृदिकादिति वा ङीष् ।) प्रस-रणम् । इत्यमरटीकायां भरतः । २ । ८ । ९६ ॥

**प्रसर्पणं**, क्ली, (प्र + सृप् + ल्युट् ।) गमनम् । प्रस रणम् । प्रपूर्ब्बसृपधातोर्भावेऽनट्प्रत्ययः ॥ (यथा, महाभारते । ३ । १२९ । ६ ।
“प्रसर्पणं महीपाल ! रौप्यायाममितौजसः ॥”
गतिसाधने, त्रि । यथा, ऋग्वेदे । १० । ६० । ७ ।
“इद तव प्रसर्पणं सुबन्धवेहि निरिहि ॥”
“वर्त्तमानेदं तव शरीरं तव प्रसर्पणं प्रकर्षेण सर्पणसाधनम् ॥” इति तद्भाष्ये सायनः ॥)

**प्रसवः**, पुं, (प्र + सू + “ऋदोरप् ।” ३ । ३ । ५७ ।
“प्रसवैः सप्तपर्णानां मदगन्धिभिराहताः ।
असूययेव तन्नागाः सप्तधैव प्रसुस्रुवुः ॥”
आज्ञा । यथा, वाजसनेयसंहितायाम् । १० । २१ ।
“मरुतां प्रसवेन जय ।” “हे धुर्य्य मरुतां देवानां
प्रसवेनाज्ञया त्वं जय शत्रूनिति शेषः ॥” इति
तद्भाष्ये महीधरः ॥) प्रसवस्य मासनियमो यथा, --
“नवमे दशमे मासि नारी गर्भं प्रसूयते ।
एकादशे द्वादशे वा ततोऽन्यत्र विकारतः ॥”
इति भावप्रकाशः ॥ * ॥
प्रसूतिकारकौषधादि यथा, --
“पीतन्तु काञ्जिकं रुद्र ! क्वथितं शरपुङ्खया ।
हिङ्गुसैन्धवसंयुक्तं शीघ्रं स्त्रीणां प्रसूतिकृत् ॥
मातुलुङ्गस्य वै मूलं कटिबद्धं प्रसूतिकृत् ।
अपामार्गस्य वै मूलं योनिस्थञ्च प्रसूतिकृत् ॥
अपामार्गस्य वै मूले गर्भवत्यास्तु नामतः ।
उत्पाट्यमाने सकले पुत्त्रः स्यादन्यथा सुता ॥
अपामार्गस्य वै मूले नारीणां शिरसि स्थिते ।
गर्भशूलं विनश्येत नात्र कार्य्या विचारणा ॥”
इति गारुडे १९६ अध्यायः ॥ * ॥
अपि च ।
“पाठालाङ्गलिसिंहास्यमयूरकजटैः पृथक् ।
नाभिवस्तिभगालेपात् सुखं नारी प्रसूयते ॥
पाठायास्तु शिफा योनौ या नारी संप्रधारयेत् ।
उषः प्रसवकाले तु सा सुखेन प्रसूयते ॥
तुषाम्बुपरिपिष्टेन मूलेन परिलेपयेत् ।
हीनाङ्गा अधिकाङ्गाश्च जायन्ते यदि वा
स्त्रियः ॥
पशवः पक्षिणश्चैव तथैव च सरीसृपाः ।
विनाशं तस्य देशस्य कुलस्य च विनिर्द्दिशेत् ॥
निर्व्वासयेत्तां नृपतिः स्वराष्ट्रात्
स्त्रियञ्च पूज्याश्च ततो द्विजेन्द्राः ।
किमिच्छकैर्ब्राह्मणतर्पणञ्च
लोके ततः शान्तिमुपैति पापम् ॥”
इति मात्स्ये
अद्भुतशान्तिस्त्रीप्रसवविकृत्तो नाम २०९ अध्यायः ॥ * ॥
प्रसवाद्भुतत्वं यथा, --
“एको वृषस्त्रयो गावः सप्ताश्वा नवदन्तिनः ।
सिंहप्रसूतिकाश्चैव कथिताः स्वामिघातकाः ॥”
तिस्र इति वक्तव्ये छान्दसत्वात् त्रय इत्युक्तम् ।
सिंहप्रसूताश्च स्त्रियो बोध्याः ।
“भानौ सिंहगते चैव यस्य गौः संप्रसूयते ।
मरणं तस्य निर्द्दिष्टं षड्भिर्मासैर्न संशयः ॥ * ॥
अत्र शान्तिं प्रवक्ष्यामि येन सम्पद्यते शुभम् ।
प्रसूतां तत्क्षणादेव तां गां विप्राय दापयेत् ॥
ततो होमं प्रकुर्व्वीत घृताक्तै राजसर्षपैः ।
आहुतीनां घृताक्तानामयुतं जुहुयात्ततः ॥”
व्याहृतिभिश्चायं होमः ।
“सोपवासः प्रयत्नेन दद्याद्विप्राय दक्षिणाम् ॥”
अपि च ।

इत्यप् ।) गर्भमोचनम् । तत्पर्य्यायः । प्रसूतिः २ ।
इत्यमरः । ३ । २ । १० ॥ (यथा, रघुः । ३ । १२ ।
"पतिः प्रतीतः प्रसवोन्मुखीं प्रियां
ददर्श काले दिवमभ्रितामिव ॥"
गर्भग्रहणम् । यथा, मनुः । ९ । ७० ।
"यथाविध्यभिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् ।
मिथो भजेताप्रसवात् सकृत्सकृदृतावृतौ ॥")
उत्पादः । (जन्म । यथा, रघुः । १ । २२ ।
"ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्य्ययः ।
गुणागुणानुबन्धित्वात्तस्य सप्रसवा इव ॥"
"सह प्रसवो जन्म येषां ते सप्रसवाः सोदरा इव ।" इति तट्टीकायां मल्लिनाथः ॥) अप-
त्यम् । (यथा, रघुः । ८ । ३० ।
"ऋषिदेवगणस्वधाभुजां
श्रुतयागप्रसवैः स पार्थिवः ।
अनृनत्वमुपेयियान् बभौ
परिधेर्मुक्त इवोष्णदीधितिः ॥")
फलम् । कुसुमम् । इति मेदिनी । वे, ४२ ॥
(यथा, रघुः । ४ । २३ ।
लाङ्गल्याश्चरणौ सूते क्षिप्रमेतेन गर्भिणी ॥
मातुलुङ्गस्य मूलानि मधुकं मधुसंयुतम् ।
घृतेन सह पातव्यं सुखं नारी प्रसूयते ॥"
इति चक्रपाणिदत्तः ॥ * ॥
सुखप्रसवमन्त्रो यथा, --
"अस्ति गोदावरीतीरे जन्भला नाम राक्षसी ।
तस्याः स्मरणमात्रेण विशल्या गर्भिणी भवेत् ॥"
सुखप्रसवचक्रं यथा, --
"पञ्चरेखाः समुल्लिख्य तिर्य्यगूद्र्ध्वक्रमेण हि ।
पदानि षड्दशापाद्य त्वेकमाद्ये मुनौ त्रयम् ॥
नवमे सप्त दद्यात्तु बाणं पञ्चदशे तथा ।
द्वितीयेऽष्टावष्टमे षट्दिशि द्वौ षोडशे श्रुतिः ॥
एकादिना समं ज्ञेयमिच्छाङ्कार्द्धं त्रिकोणके ।
तदा द्वात्रिंशदादिः स्याच्चतुष्कोष्ठेषु सर्व्वतः ॥
दर्शनाद्धारणात्तासां शुभं स्यादेषु कर्म्मसु ।
द्वात्रिंशत् प्रसवे नार्य्याश्चतुस्त्रिंशद्गमे नृणाम् ॥
भूताविष्टेषु पञ्चाशन्मृतापत्यासु वै शतम् ।
द्वासप्ततिस्तु बन्ध्यायां चतुःषष्टी रणाध्वनि ॥
विषे विंशो धान्यकीटेष्वधाविंशतिरेव च ।
चतुरष्टौ च बालानां रोदने परिकीर्त्तिताः ॥"
इति ज्योतिस्तत्त्वम् ॥ * ॥
तस्य वैकृतं यथा, --
गर्ग उवाच ।
"अकालप्रसवा नार्य्यः
कालातीतप्रजास्तथा ।
विकृतप्रसवाश्चैव युग्मप्रसवनास्तथा ॥
अमानुषा अवण्डाश्च न
जातव्यञ्जनास्तथा ।
"सिंहराशौ गते सूर्य्ये गोप्रसूतिर्यदा भवेत् ।
पौषे च महिषी सूते दिवैवाश्वतरी तथा ॥
तदानिष्टम्भवेत् किञ्चित् तच्छान्त्यै शान्तिकञ्चरेत् ।
अस्य वामेतिसूक्तेन
तद्विष्णोरितिमन्त्रतः ॥
जुहुयाच्च तिलाज्येन
शतमष्टोत्तराधिकम् ।
मृत्युञ्जयविधानेन जुहुयाच्च तथायुतम् ।
श्रीसूक्तेन ततः स्नायात्
शान्तिसूक्तेन वा पुनः ॥"
इत्यद्भुतसागरे नारदः ॥

**प्रसवकः**, पुं, (प्रसवेन पुष्पादिना कायति शोभते इति । कै + कः ।) पियालवृक्षः । इति शब्द-
माला ॥ (विवृतिविशेषोऽस्य पियालशब्दे ज्ञातव्यः ॥)

**प्रसवबन्धनं**, क्ली, (प्रसवानां पुष्पफलानां बन्धनं यत्र ।) वृन्तम् । इत्यमरः । २ । ४ । १५ ॥

**प्रसवस्थली**, स्त्री, (प्रसवस्य स्थलीव ।) माता ।
यथा, महानाटके ।
"इयमियं मयदानवनन्दिनी
त्रिदशनाथजितः प्रसवस्थली ॥"

**प्रसविता**, [ऋ] पुं, (प्रसूते जनयतीति । प्र + सू + तृच् ।) पिता । इति शब्दरत्नावली ॥
(अनुज्ञाकर्त्तरि, त्रि । यथा, ऋग्वेदे । ७ । ६३ । २ ।
"उद्वेति प्रसविता जनानां महान् केतुरर्णवः
सूर्य्यस्य ।"

| | | “जनानां सर्व्वेषां प्रसविता सर्व्वेषु कर्म्मसु अनु-<br>ज्ञाता ॥” इति तद्भाष्ये सायनः ॥)<br>**प्रसवित्री**, स्त्री, (प्रसूते इति । प्र + सू + तृच् +<br>ङीप् ।) जनयित्रौ । (यथा, महाभारते ।<br>१२ । २६३ । ८ ॥ |
|---|---|---|

"सावित्री प्रसवित्री च बहिर्वाक् मनसी
ततः ॥")
माता । प्रपूर्ब्बकसूधातोः कर्त्तरि तृण् ईप्
च ॥

**प्रसव्यं**, त्रि, (प्रगतं सव्यादिति ।) प्रतिकूलम् ।
इत्यमरः । ३ । १ । ८४ ॥ (प्रदक्षिणम् ।
यथा,
रामायणे । २ । ७३ । २० ।
"प्रसव्यञ्चापि तञ्चक्रुरृ त्विजोऽग्निचितं
नृपम् ॥"
प्र + सू + कर्म्मणि यत् । प्रसवनीये च ॥)

**प्रसहः**, पुं, (प्रसहतीति । प्र + सह् + अच् ।)
बलात्कारेण भक्षकपक्षी । स च कुरर-
श्येनादिः । यथा, --
"प्रसह्य भक्षयन्त्येते प्रसहास्तेन कीर्त्तिताः
॥"
अस्य मांसगुणाः ।
"गुरूष्णमधुराः स्निग्धा वातघ्नाः
शुक्रवर्द्धनाः ।"
इति राजवल्लभः ।
अपि च भावप्रकाशे ।
"काको गृध्र उलूकश्च चिल्लश्च
शशघातकः ।
चाषो भासश्च कुरर इत्याद्याः प्रसहाः
स्मृताः ॥
शशघातकः वाज इति लोके ।
प्रसहाः कीर्त्तिता एते प्रसह्य छिद्य
भक्षणात् ।
प्रसहाः खलु वीर्य्योष्णास्तन्मांसं
भक्षयन्ति ये ॥
ते शोषभस्मकोन्मादैः शुक्रक्षीणा भवन्ति
हि ॥"

**प्रसहनः**, पुं, (प्रगतं सहनं सह्यगुणो यस्मात् ।)
हिंस्रपशुः । यथा, --
"शार्द्दूलसिंहशरभर्क्षतरक्षुमुख्या
येऽन्यान् प्रसह्य विनिहत्य निवर्त्तयन्ते ।
ते कीर्त्तिताः प्रसहनाः पललं तदीय-
सूक्ष्मधान्यम् । इति रत्नमाला ॥ (यथा, मार्क-
ण्डेये । ३२ । ९ ।
"श्यामाकराजश्यामाकौ तद्वच्चैव प्रसातिकाः
।
नीवाराः पौष्कलाश्चैव धान्यानां पितृतृप्तये
॥")

**प्रसादः**, पुं, (प्र + सद् + घञ् ।) प्रसन्नता ।
नैर्म्मल्यम् । इत्यमरः । १ । ३ । १६ ॥ (यथा,
प्रबोधचन्द्रोदये प्रस्तावनायाम् ।
"कल्पान्तवातसंक्षोभलङ्घिताशेषभूभृतः ।
स्थैर्य्यप्रसादमर्य्यादास्ता एव हि महोदधेः ॥")
अनुग्रहः । (यथा, रघुः । २ । ६८ ।
"तस्याः प्रसन्नेन्दुमुखः प्रसादं
गुरुर्नृपाणां गुरवे निवेद्य ।
प्रहर्षचिह्नानुमितं प्रियायै
शशंस वाचा पुनरुक्तयेव ॥")
काव्यप्राणः । स्वास्थ्यम् । प्रसक्तिः । इति
मेदिनी । दे, ३५ ॥ वैदर्भीरीतियुक्तकाव्यगुणः
।
तस्य लक्षणम् । ग्राम्यशब्दभिन्नव्यक्तार्थपद-
वत्त्वम् । यथा, --
"ओजःप्रसादमाधुर्य्यगुणत्रितयभेदतः ।
गौडवैदर्भपाञ्चाला रीतयः परिकीर्त्तिताः ।
व्यक्तार्थपदमग्राम्यं प्रसादः परिकीर्त्तितः ॥"
इति काव्यचन्द्रिका ॥ * ॥
(तथा च साहित्यदर्पणे ८ परिच्छेदे ।
"चित्तं व्याप्नोति यः क्षिप्रं
शुष्केन्धनमिवानलः ।
स प्रसादः समस्तेषु रसेषु रचनासु च ॥")
देवनिवेदितद्रव्यं गुरूणां भुक्तावशेषश्च । यथा,
"आसीद्वंशध्वजो राजा प्रजापालनतत्परः ।
प्रसादं सत्यदेवस्य त्यक्त्वा दुःखमवाप सः
॥"
इति स्कान्दे रेवाखण्डे सत्यनारायणव्रतकथा
॥

**प्रसादनं**, क्ली, (प्रसादयतीति । प्र + सद् + णिच्
+ ल्युः ।) अन्नम् । इति त्रिकाण्डशेषः ॥ (प्र +
"प्रसाधनी दिङ्नवनागसप्त-
सङ्ख्याभिरुक्ताङ्गुलिभिः क्रमेण ।
चतुर्व्विधानां पृथिवीपतीनां
सम्पत्तिसौभाग्ययशःसमृद्धिदा॥"
काष्ठजा धातुजा चैव शृङ्गजा च
यथाक्रमम् ॥
जाङ्गलानूपसामान्यदेशजानां
महीभुजाम् ॥
छत्रदण्डवद्न्नेयः काष्ठजाया
विनिश्चयः ।
कनकं रजतं ताम्रं पित्तलं सीसकं तथा
॥
लौहं सर्व्वञ्च
सर्व्वार्द्धमादित्यादिदशाभुवाम्।
राज्ञामेवोपयुज्येत कालकीर्त्तिप्रसाधनी
॥
मृगाणां महिषाणाञ्च सिंहजाता
प्रसाधनी ।
गजदन्तसमुद्भूता राज्ञामेवोपयुज्यते ॥
अत्रापि रत्नविन्यासो
ज्ञेयश्चामरदण्डवत् ॥"
इति युक्तिकल्पतरुः ॥

**प्रसाधिका**, स्त्री, (प्रसाध्यति निष्पादयतीति ।
प्र + साध् + ण्वुल् । टापि अत इत्वम्
।)
नीवारः । यथा, --
"प्रसाधिका तु नीवारस्तृणान्तमिति च
स्मृतम् ॥"
अस्या गुणाः ।
"नीवारः शीतलो ग्राही पित्तघ्नः
कफवातकृत् ॥"
इति भावप्रकाशः ॥
(प्रसाधयति अलङ्करोतीति । प्र + साध्
+ णिच्
+ ण्वुल् ।) वेशकारिणी । यथा, --
"प्रसाधिकालम्बितमग्रपाद-
माक्षिप्य काचित् द्रवरागमेव ॥"
इति कुमारसम्भवे सप्तमः सर्गः ॥
(धान्यविशेषः यथा । "अग्रव्रीहिः प्रसा-

मर्शःप्रमेहजठरामयजाड्यहारि ॥”
इति राजनिर्घण्टः ॥
आलिङ्गने, क्ली । यथा, --
“परस्परप्रसहनचुम्बनादिकाः
शुचौ सुखे बहुलविधा भिदा मताः ॥”
इति काव्यप्रकाशटीकाधृतकाव्यकौमुदी॥
(प्र + सह् + भावे ल्युट् ।) सहने, क्ली ।
तद्वति, त्रि ॥

**प्रसहा**, स्त्री, (प्र + सह् + अच् । टाप् ।) बृह-
तिका । इति रत्नमाला ॥ (गुणादयोऽस्या
बृहतीशब्दे ज्ञातव्याः ॥)

**प्रसह्य**, व्य, (प्रकर्षेण सोढ्वा इति । प्र + सह् +
क्त्वाचो ल्यप् ।) हठार्थकम् ।
बलात्कारार्थम् ।
इत्यमरः । ३ । ४ । १० ॥ (यथा, माघे ।
१ । २७ ।
“प्रसह्य तेजोभिरसङ्ख्यताङ्गतै-
रदस्त्वया नुन्नमनुत्तमं तमः ॥”
प्रसोढुं शक्य इति । प्र + सह् + यत् ।
प्रकर्षेण
सोढुं शक्ये, त्रि । यथा, रघुः । १४ । ६२
।
“ममैव जन्मान्तरपातकानां
विपाकविस्फूर्ज्जथुरप्रसह्यः ॥”)

**प्रसह्यचौरः**, पुं, (प्रसह्य बलात्कारेण चौरः ।)
हठात् चौर्य्यकारी । डाकाइत इति लुटेरा
इति च भाषा ॥ तत्पर्य्यायः । वन्दीकारः
२
माचलः ३ चिल्लाभः ४ । इति
त्रिकाण्डशेषः ॥

**प्रसातिका**, स्त्री, (सो नाशे + भावे क्तिन् । प्रगता
सातिर्नाशो यस्याः । कप् ।) अणुव्रीहिः ।
सद् + णिच् + ल्युट् ।) प्रसन्नताकारकम् ।
यथा,
बलवर्णप्रसादनमिति राजवल्लभः ॥ (यथा च
महाभारते । ४ । ६९ । २२ ।
“प्रसादनं पाण्डवस्य प्राप्तकालं हि रोचये ॥”)

**प्रसादना**, स्त्री, (प्र + सद् + णिच् + युच् + टाप् ।)
सेवा । परिचर्य्या । इति हेमचन्द्रः । ३ । १६०
॥

**प्रसाधनं**, क्ली, (प्रसाध्यतेऽनेनेति । प्र + साध् +
ल्युट् ।) वेशः । इत्यमरः । २ । ६ । ९९ ॥
(यथा, मनुः । २ । २११ ।
“अभ्यञ्जनं स्थापनञ्च गात्रोत्सादनमेव च ।
गुरुपत्न्या न कार्य्याणि केशानाञ्च प्रसाधनम्
॥”)
कङ्कतिका । इति भरतधृतामरमाला ॥ प्रकृष्ट-
निष्पत्तिश्च ॥ (प्र + साध् + णिच् + ल्युः ।
प्रसा
धयितरि, त्रि । यथा, ऋग्वेदे । १० । ५७ । २
।
“यो यज्ञस्य प्रसाधनस्तंतुर्देवेष्वाततः ॥”)

**प्रसाधनी**, स्त्री, (प्रसाध्यतेऽनयेति । प्र + साध् +
ल्युट् । ङीप् ।) सिद्धिः । इति मेदिनी । ने,
१९५ ॥
कङ्कतिका । इत्यमरः । २ । ६ । १३९ ॥
(यथा,
सुश्रुते चिकित्सितस्थाने । २४ ।
“केशप्रसाधनी केश्या रजोजन्तुमलापहा ॥”)
तद्युक्तिर्यथा, --
धिका ।” इति वैद्यकरत्नमायाम् ॥)

**प्रसाधितः**, त्रि, (प्र + साधि + क्तः । अलङ्कृतः ।
इत्यमरः । २ । ६ । १०० ॥
प्रकृष्टनिष्पन्नः
निष्पादितः । यथा, सारसंग्रहे ।
“ततः प्रस्थमितं कल्कं दत्त्वा
तोयचतुर्गुणे ।
क्षीरे प्रसाधितं तैलं ग्रहघ्नो बलवर्णकृत्
॥”

**प्रसारः**, पुं, (प्र + सृ + घञ् ।) प्रसरणम् । इति
हेमचन्द्रः ३ । ४९९ ॥ (यथा, सुश्रुते ।
१ । २६ ।
प्रसाराकुञ्चनान्नूनं निःशल्यमिति
निर्द्दिशेत् ॥”)

**प्रसारणं**, क्ली, (प्र + सृ + णिच् + ल्युट् ।) पञ्च-
विधकर्म्मान्तर्गतकर्म्मविशेषः । स तु
विस्तार-
रूपः । यथा, भाषापरिच्छेदे ।
“उत्क्षेपणं ततोऽवक्षेपणमाकुञ्चनन्तथा
।
प्रसारणञ्च गमनं कर्म्माण्येतानि पञ्च च
॥”
(परिवर्द्धनम् । यथा,
कामन्दकीयनीतिसारे।
१३ । ३५ ।
“मित्रामित्रहिरण्यानां भूमीनाञ्च
प्रसारणम् ॥”)

**प्रसारणी**, स्त्री, (प्रसार्य्यते इति । प्र + सारि +
ल्युट् । ङीप् ।) लताविशेषः ।
गन्धभादालिया
इति भाषा ॥ अस्य गुणाः ।
वातपित्तनाशि-
त्वम् । उष्णत्वम् । बलशुक्रकारित्वञ्च ।
इति
राजवल्लभः ॥ सैन्यानां सर्व्वतो व्याप्तिः
। इति
प्रसरणशब्दटीकायां भरतः ॥

**प्रसारिणी**, स्त्री, (प्रसरतीति । प्र + सृ + णिनिः

लिया इति भाषा ॥ तत्पर्य्यायः । सुप्रसरा २ सारिणी ३ प्रसरा ४ सरा ५ चारुपर्णी ६ राजबला ७ भद्रपर्णी ८ प्रतानिका ९ प्रबला १० राजपर्णी ११ चन्द्रपर्णी १२ भद्रबला १३ चन्द्र-वल्ली १४ प्रभद्रा १५ । अस्या गुणाः । गुरु-त्वम् । उष्णत्वम् । तिक्तत्वम् । वातार्शःश्वयथु-मलविष्टम्भनाशित्वञ्च । इति राजनिर्घण्टः ॥

**प्रसारी**, [न्] त्रि, (प्रसरतीति । प्र + सृ + णिनिः ।) प्रसरणशीलः । तत्पर्य्यायः । विसृत्वरः २ विसृ-मरः ३ विसारी ४ । इत्यमरः । ३ । १ । ३१ ॥ (यथा, शिशुपालवधे । १७ । ४४ । "प्रसारिणी सपदि नभस्तले ततः समीरणभ्रमितपरागरूषिता ॥")

**प्रसितं**, क्ली, (प्र + सो + क्तः ।) पूयम् । इति शब्द-चन्द्रिका ॥ आसक्ते, त्रि । इत्यमरः । ३ । १ । ९ ॥ (यथा, रघौ । ८ । २३ । "इति शत्रुषु चेन्द्रियेषु च प्रतिषिद्धप्रसरेषु जाग्रतौ । प्रसितावुदयापरवर्ग्गयो-रुभयीं सिद्धिमुभाववापतुः ॥")

**प्रसितिः**, स्त्री, (प्रसिनोति बध्नात्यनयेति । प्र + सि + करणे क्तिन् ।) बन्धनसाधनरज्जुनिग-डादिः । इत्यमरः । ३ । २ । १४ ॥ (ज्वाला । यथा, ऋग्वेदे । २ । २५ । ३ ।

**प्रसूतं**, क्ली, (प्रसूयते इति । प्र + सू + क्त ।) कुसुमम् । इति मेदिनी । ते, १२४ ॥

**प्रसूतः**, त्रि, (प्र + सू + क्तः ।) सञ्जातः । (यथा, रघुः । १ । १२ । "तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः । द्विलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ॥") सूतः । इति मेदिनी । ते, १२४ ॥

**प्रसूता**, स्त्री, (प्रसूते स्म इति । प्र + सू + कर्त्तरि क्तः ।) जातसन्ताना । तत्पर्य्यायः । जाता-पत्या २ प्रजाता ३ प्रसूतिका ४ । इत्यमरः । २ । ६ । १६ ॥ (यथा, सुश्रुते चिकित्सित-स्थाने । ३१ । "अकाले च प्रसूता स्त्री स्नेहपानं विवर्ज्जयेत् ॥" यथा च हरिवंशे । ८४ । १०१ । "श्रूयन्ते हि स्त्रियो बह्व्यो व्यभिचारव्यतिक्रमैः । प्रसूता देवसङ्काशान् पुत्रानमितविक्रमान् ॥")

**प्रसूतिः**, स्त्री, (प्रसूयते इति । प्र + सू + क्तिन् ।) प्रसवः । इत्यमरः । ३ । २ । १० ॥ (यथा, -- "कृष्णा वचा चापि जलेन पिष्टा सैरण्डतैला खलु नाभिलेपात् । सुखं प्रसूतिं कुरुतेऽङ्गनानां निपीडितानां बहुभिः प्रमादैः ॥" इति भावप्रकाशस्य मध्यखण्ड चतुर्थे भागे ॥ प्र + सू + भावे क्तिन् ।) उद्भवः । (यथा,

**प्रसूनेषुः**, पुं, (प्रसूनं पुष्पं इषुर्वाणो यस्य ।) काम-देवः । इति त्रिकाण्डशेषः ॥

**प्रसृतं**, क्ली, (प्र + सृ + क्तः ।) पलद्वयम् । इति शब्दमाला ॥ (यथा, सुश्रुते चिकित्सितस्थाने । ६ । "कृष्णतिलप्रसृतं प्रकुञ्चं वा प्रातः प्रातरनुसेवेत शीतोदकानुपानम् ॥" "पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतञ्च निगद्यते ॥" इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥)

**प्रसृतः**, पुं, (प्र + सृ + क्तः ।) निकुब्जपाणिः । अर्द्धाञ्जलिः । इत्यमरः । २ । ६ । ८५ ॥ (यथा, शतपथब्राह्मणे । ४ । ५ । १० । ७ । "यद्यनुलभेरन् प्रसृतमात्रं वाञ्जलिमात्रं वा ॥")

**प्रसृतः**, त्रि, (प्र + सृ + क्तः ।) प्रवृद्धः । प्रसा-रितः । इत्यमरः । ३ । १ । ८८ ॥ (यथा, देवी-भागवते । १ । १४ । ५ । "न शशाक नियन्तुञ्च स व्यासः प्रसृतं मनः ॥") विनीतः । वेगितः । इति मेदिनी । ते, १२३ ॥ गतः । इति त्रिकाण्डशेषः ॥ नियुक्तः । इति हलायुधः । २ । ३६० ॥

**प्रसृता**, स्त्री, (प्र + सृ + क्तः । टाप् ।) जङ्घा । इति मेदिनी । ते, १२३ ॥ (विवरणमस्या जङ्घा-शब्दे ज्ञातव्यम् ॥)

**प्रसृतिः**, स्त्री, (प्र + सृ + क्तिन् ।) प्रसृतः । आ-कुञ्चितपाणिः । इति रायमुकुटः राज-निर्घण्टश्च ॥ (यथा, याज्ञवल्क्ये । २ । ११२ । "देवानुग्रान् समभ्यर्च्च्य तत्स्नानोदकमाहरेत् । संश्राव्य पाययेत्तस्माज्जलात्स प्रसृतित्रयम् ॥" सन्ततिः । यथा, महाभारते । ५ । १०१ । ३ । "वर्द्धितानि प्रसृत्या वै विनताकुलकर्त्तृभिः ॥" प्रसूत्या इति वा पाठः ॥ पलद्वयम् । तद्यथा, "पलाभ्यां प्रसृतिर्ज्ञेया -- ॥" इति पूर्ब्बखण्डे प्रथमेऽध्याये शार्ङ्गधरेणोक्तम् ॥)

**प्रसेकः**, पुं, (प्रसेचनमिति । प्र + सिच् + घञ् ।) सेचनम् । च्युतिः । इति मेदिनी । के, १११ ॥

"अग्नेरिव प्रसितिर्नाह वर्त्तवे ।"
"प्रसीयते बध्यतेऽनयेति ।
प्रसितिर्ज्वाला ।"
इति तद्भाष्ये सायनः ॥ * ॥ भावे क्तिन्
। प्रबन्ध-
नम् । यथा, ऋग्वेदे । ६ । ६ । ५ ।
"शूरस्येव प्रसितिः क्षातिरग्नेः ॥")

**प्रसिद्धः**, त्रि, (प्रसिध्यतीति । प्र + सिध् + गत्य-

र्थेति क्तः ।) भूषितः । ख्यातः । इति
मेदिनी ।
धे, ३४ ॥ (यथा, पञ्चदश्याम् । ४ । ५७
।
"काम्यादिदोषदृष्ट्याद्याः
कामादित्यागहेतवः ।
प्रसिद्धा मोक्षशास्त्रेषु तानन्विष्य सुखी
भव ॥")

**प्रसिद्धिः**, स्त्री, (प्र + सिध् + क्तिन् ।) टङ्कारः ।

ख्यातिः । इति त्रिकाण्डशेषः ॥ (यथा,
काम-
न्दकीयनीतिसारे । २ । ६ ।
"विद्याश्चतस्र एवैता इति नो गुरुदर्शनम्
।
पृथक् पृथक् प्रसिद्ध्यर्थं यासु लोको
व्यव-
स्थितः ॥")
भूषा । इति प्रसिद्धशब्दार्थदर्शनात् ॥

**प्रसूः**, स्त्री, (प्रसूते इति । प्र + सू + "सत्सू-

द्विषेति ।" ३ । २ । ६१ । इति क्विप् ।)
माता ।
इत्यमरः । २ । ६ । २९ ॥ (यथा,
ब्रह्मवैवर्त्ते ।
२ । १ । १२८ ।
"पितॄणां मानसी कन्या मेनका
साम्बिकाप्रसूः ॥")
घोटकी । इत्यमरः । ३ । ३ । २२८ ॥
कदली ।
वीरुत् । इति मेदिनी । से, ४ ॥
(प्रसवकर्त्री ।
यथा, सुश्रुते उत्तरतन्त्रे ३८ अध्याये ।
शकुन्तलायाम् ४ अङ्के ।
"आद्ये वः कुसुमप्रसूतिसमये यस्या
भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं
सर्व्वैरनु-
ज्ञायताम् ॥")
तनयः । दुहिता । इति मेदिनी । ते,
१२९ ॥
(सन्ततिः । यथा, रघुः । ५ । ७ ।
"कच्चिन्मृगीणामनघा प्रसूतिः ॥"
कारणम् । यथा, रघुः । २ । ६३ ।
"न केवलानां पयसां प्रसूति-
मवेहि मां कामदुघां प्रसन्नाम् ॥"
उत्पत्तिस्थानम् । यथा, महाभारते ।
१ ।
२३३ । १४ ।
"त्वं सर्व्वस्य भुवनस्य प्रसूति-
स्त्वमेवाग्ने ! भवसि प्रतिष्ठा ॥"
दक्षपत्नी । सा तु सतीजननी । यथा,
ब्रह्म-
वैवर्त्ते । २ । १ । १२८ ।
"देवहूतिः कर्द्दमस्य
प्रसूतिर्दक्षकामिनी ॥")

**प्रसूतिका**, स्त्री, (प्रसूतः सूतोऽस्या अस्तीति ।

ठन् ।) प्रसूता । इत्यमरः । २ । ६ ।
१६ ॥

**प्रसूतिजं**, क्ली, (प्रसूतेरुद्भवमारभ्येत्यर्थः जायते

इति । जन् + डः ।) दुःखम् ।
इत्यमरः । १ । ९ । ३ ॥

**प्रसूनं**, क्ली, (प्रसूयते स्मेति । प्र + सू + क्तः । ओदि-

त्त्वात् निष्ठातस्य नः ।) पुष्पम् ।
(यथा,
रघुः । २ । १० ।
"अवाकिरन् बाललताः प्रसूनै-
राचारलाजैरिव पौरकन्याः ॥")
फलम् । इत्यमरः । ३ । ४ । १७ ॥
जाते, त्रि ।
इति मेदिनी । ने, ८७ ॥
(यथा, ऋतुसंहारे । ३ । ६ ।
"मत्तद्विरेफपरिपीतमधुप्रसेक-
श्चित्तं विदारयति कस्य न कोविदारः ॥"
रागविशेषः । यथा, सुश्रुते । १ । ४६ ।
"श्वासकासप्रतिश्यायप्रसेकारोचकज्वरान् ।
हन्ति मूलकयूषस्तु कफमेदोगलामयान् ॥")

**प्रसेदिका**, स्त्री, क्षुद्रारामः । इति हेमचन्द्रः ।

४ । १७९ ॥ (प्रसीदिका इति क्वचित्पाठः ॥)

**प्रसेदिवान्**, [स्] त्रि, प्रसन्नः । प्रपूर्ब्बसदधातोः

कर्त्तरि क्वसुप्रत्ययनिष्पन्नः ॥

**प्रसेवः**, पुं, (प्रसीव्यते स्मेति । प्र + सिव + "अ-

कर्त्तरि चेति ।" ३ । ३ । १९ । इति घञ् ।)
वीणाङ्गम् । स्यूतः । इति मेदिनी । वे, ४३ ॥

**प्रसेवकः**, पुं, (प्र + सिव + ण्वुल् । यद्वा, प्रसेव

एव । स्वार्थे कन् ।) वीणाप्रान्तवक्रकाष्ठम् ।
दण्डाधः शब्दगाम्भीर्य्यार्थं दारुमयं भाण्डं यच्च-
र्म्मणा आच्छाद्य दीयते सः । इत्यन्ये । वीणा-
स्थितालावूफलम् । इत्यपरे । इति भरतः ॥

| | | |
|---|---|---|
| “प्रस्रंसिनी स्पन्दते तु क्षोभिता<br>दुःप्रसूश्च या ॥”)<br>**प्रसूका**, स्त्री, (प्रसूरेव । प्रसू + स्वार्थे कन् ।)<br>वाजिनी । इति राजनिर्घण्टः ॥ | | |

तत्पर्य्यायः । ककुभः २ । इत्यमरः । १ । ७ । ७ ॥
सूत्ररचितभाण्डम् । धोकडा इति ख्यातः । तत्पर्य्यायः । स्यूनः २ स्योनः ३ धौतकटः ४ स्योतः ५ स्यूतः ६ । इति भरतः ॥ (यथा, सुश्रुते । १ । ९ ।
"दृतिवस्तिप्रसेवकप्रभृतिषूदकपङ्कपूर्ण्षु भेद्य-योग्याम् ॥") प्रकृष्टतन्तुसन्तानकर्त्ता च ॥

**प्रस्कण्वः**, पुं, (प्रगतं कण्वं पापं यस्मादिति । "प्रस्कण्व-हरिश्चन्द्रावृषी ।" ६ । १ । १५३ । इति सुट् ।) ऋषिविशेषः । स च वैदिकसन्ध्यान्तर्गतसूर्य्योप-स्थानमन्त्रस्य ऋषिः । (यथा, ऋग्वेदे । १ । ४४ । ६ ।
"प्रस्कण्वस्य प्रतिरन्नायुर्जीवसे नमस्या दैव्यं जनम् ॥")

**प्रस्कन्दनं**, क्ली, (प्र + स्कन्द + ल्युट् ।) विरेकः । इति रत्नमाला ॥ (यथा, महाभारते । १ । ८४ । २६ ।
"अग्निप्रस्कन्दनपरस्त्वञ्चाप्येष्यं भविष्यसि ॥")

**प्रस्कन्नः**, त्रि, (प्रकर्षेण स्कन्नः ।) पतिते, त्रि । इति हेमचन्द्रः ॥

**प्रस्तरः**, पुं, (प्रस्तृणाति आच्छादयति यः । (प्र + स्तॄ + पचाद्यच् ।) शिला । पातर इति भाषा । तत्पर्य्यायः । ग्रावा २ पाषाणः ३ उपलः ४ अश्मा ५ दृशत् ६ दृषत् ७ पारारुकः ८ पारटीटः ९ मृन्मरुः १० काचकः ११ शिला १२ ॥ पल्लवादिरचितशय्या । यथा, --
"पल्लवाद्यैर्व्विरचिते शयनीये तु संस्तरः ।
प्रस्तरः प्रस्तिरश्चेति प्रस्तारोऽपि च कुत्रचित् ॥"
इति शब्दरत्नावली ॥
(यथा, मनुः । २ । २०४ ।
"गोऽश्वोष्ट्रयानप्रासादप्रस्तरेषु कटेषु च ।
आसीत गुरुणा सार्द्धं शिलाफलकनौषु च ॥")
मणिः । इति मेदिनी । रे, १८१ ॥

**प्रस्तरिणी**, स्त्री, (प्रस्तरस्तदाकारोऽस्त्यस्याइति । प्रस्तार दर्शयति । प्रथमं गुरोरधःस्थाने लघुकं स्थापय आत्मबुद्ध्या सदृशी सदृशी पंक्तिरुद्-वृत्तौ गुरुलघू देहि सदृशी पंक्तिर्दक्षिणे कार्य्या वामे गुरुलघुभिः पूरणं कार्य्यं इदन्तु मात्रा-प्रस्तारविषयं तत्रापि गुरोर्लिखनयोग्यत्वे गुरु-र्लेख्यः अपरत्र लघुर्देयः । वर्णप्रस्तारे तु गुरुणैव पूरणं कार्य्यं तत्रायं प्रकारः आदौ गुरुर्लेख्यः तत्र प्रथमं गुरोरधःस्थाने लघुर्लेख्यः तद्दक्षिणे चोपरिस्थितपंक्तेः सदृशी कार्य्या वामे च गुरु-लघुभिः पूरणं कार्य्यं वामे चैक एकलघुः पतति वर्णप्रस्तारे तु वामे लघुस्पर्शो नास्ति यथा त्रिकलप्रस्तारे । ६६ । प्रथमगुरोरधो लघु-र्वामतश्च कलार्द्धपूरणं गुरुणैव कार्य्यं दक्षिणे च पंक्त्यभावः ततो गुरोरधो लघुर्लेख्यः दक्षिणे च लघोरधो लघुर्लेख्यः वामे च कलापूरणं एकेन लघुना कार्य्यं एवं चतुष्कला-६६ दावपि बोध्यं यथा अक्षरच्छन्दसि ६६ एवमन्यत्रापि बोध्यम् ॥
अथ सकलप्रस्तारसंख्या । दव्वीसा सत्तस-आतैं सत्तावह सहज्जाइ वाआलिसह लक्खं तेरहकोडी समग्गाइं । अस्य टीका । नटीविदूषकादीनां परस्परविचित्रभाषणम् तस्या लक्षणम् । यथा, --
"नटी विदूषको वापि पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्व्वते ॥
चित्रैर्व्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्म्मिथः ।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ॥"
इति साहित्यदर्पणम् ॥

**प्रस्तिरः**, पुं, (प्रस्तरः । निपातनात् इत्वम् ।) पल्लवादिरचितशय्या । इति शब्दरत्नावली ॥

**प्रस्तीतः**, त्रि, (प्र + स्त्यै + क्तः । "प्रस्त्योऽन्य-तरस्याम् ।" ८ । २ । ५४ । इति निष्ठातस्य मो वा ।) संहतः । ध्वनितः । प्रपूर्ब्बस्त्यैधातोः कर्म्मणि क्तप्रत्ययः । इति मुग्धबोधव्याकरणम् ॥

**प्रस्तीतः**, त्रि, (प्र + स्त्यै + क्तः । "प्रस्त्योऽन्य-तरस्याम् ।" ८ । २ । ५४ । इति निष्ठातस्य मो वा ।) संहतः । ध्वनितः । प्रपूर्ब्बस्त्यैधातोः कर्म्मणि क्तप्रत्ययः । इति मुग्धबोधव्याकरणम् ॥

**प्रस्तुतः**, त्रि, (प्रस्तूयते स्मेति । प्र + स्तु + क्तः ।) प्रकरणप्राप्तः । यथा, --
"अप्रस्तुतप्रशंसा सा या चैव प्रस्तुताश्रया ॥"
इति काव्यप्रकाशः ॥

प्रस्तर + इनिः । ङीप् ।) गोलोमिका । इति राजनिर्घण्टः ॥ (विषयोऽस्या गोलोमिकाशब्दे ज्ञेयः ॥)

**प्रस्तारः**, पुं, (प्र + स्तॄ + घञ् ।) तृणवनम् । तत्-

पर्य्यायः । तृणाटवी २ ऋषः ३ । इति हेम-चन्द्रः । ४ । १७७ ॥ पल्लवादिविरचितशय-नीयम् । इति शब्दरत्नावली ॥ शय्या । इति हारावली ॥ छन्दःप्रभृतीनां प्रभेदज्ञापकसङ्केत-विशेषः । यथा, --

"पादे सर्व्वगुरावाद्यात् लघु न्यस्य गुरोरधः ।
यथोपरि तथा शेषं भूयः कुर्य्यादमुं विधिम् ॥
ऊने दद्याद्गुरूनेव यावत् सर्व्वलघुर्भवेत् ।
प्रस्तारोऽयं समाख्यातश्छन्दोविचितिवेदिभिः ॥"

इति वृत्तरत्नावली ॥ * ॥

अपि च । अहपत्थार । पढम गुरु हेट्ठ ठाणे लहुआ परिठवौ अप्पबुद्धी ए । सरिसा सरिसा पन्ती उव्वरिआ गुरुलहू देहु ॥ अस्य टाका । एतद्भेदज्ञानं प्रस्तारज्ञानाधीनमिति

अत्र चैकाक्षरमारभ्य षड्विंशत्यवधिवर्ण-वृत्तानां प्रस्तारे कियती संख्येत्यत आह ।

१३४, २१७, ७२६ षड्विंशतिः सप्त तानि तथा
सप्तदशसहस्राणि
द्विचत्वांशल्लक्षास्त्रयोदश-
कोट्यः समग्राणि अङ्कस्य वामा
गतिरित्यङ्काः
स्थाप्याः । इति पिङ्गलः
शीघ्रबोधभूषणश्च ॥

**प्रस्तार्य्यर्म्म**, [न्] क्ली, नेत्ररोगभेदः । तस्य

लक्षणम् ।

"प्रस्तार्य्यर्म्म तनुस्तीर्णं श्यावं रक्तनिभं सिते ॥"

इति माधवकरः ॥

अपि च ।

"समन्ताद्विस्तृतः श्यावो रक्तो वा मांससञ्चयः ।
सन्निपातेन दोषाणां प्रस्तार्य्यर्म्म तदुच्यते ॥"

इति रक्षितधृतनिमिः ॥

तस्यौषधम् ।

"कतकस्य फलं शङ्खं त्र्यूषणं सैन्धवान्वितम् ।
फेनो रसाञ्जनं क्षौद्रं विडङ्गानि मनःशिला ॥
कुक्कटाण्डकपालानि वर्त्तिरेषा व्यपोहति ।
तिमिरं पटलं काचमर्म्मशुक्रं तथव च ॥
कण्डूक्लेदावूदं हन्ति मलमाशु सुखावती ॥"

इति चक्रपाणिदत्तः ॥

**प्रस्तावः**, पुं, (प्र + स्तु + "प्रे द्रुस्तुस्रुवः ।" ३ । ३ ।

२७ । इति घञ् ।) अवसरः । इत्यमरः । ३ । २ । २४ ॥ प्रसङ्गस्तुतिः । इति भरतः ॥ प्रसङ्गः ।

प्राकरणिकः । प्रासङ्गिकः । इत्यलङ्कार-कौस्तुभः ॥ निष्पन्नः । यथा ।

प्रस्तुतवृत्तेर्म्मयट् ।
अन्नं प्रस्तुतं अन्नमयम् । यवागूः प्रस्तुता यवागू-मयी । इति कलापतद्धितः ॥ प्रकर्षस्तुति-युक्तः । प्रपूर्ब्बस्तुधातोः कर्म्मणि क्तः । उप-स्थितः । प्रतिपन्नः । उद्युक्तः । इति लोकव्यव-हारदर्शनात् ॥

**प्रस्तृतः**, त्रि, (प्र + स्तृ + क्तः ।) अन्तरितः ।

इति त्रिकाण्डशेषः ॥

**प्रस्थः**, पुं, (प्रकर्षेण तिष्ठतीति । प्र + स्था +

"आतश्चोपसर्गे ।" ३ । १ । १३६ । इति कः ।
यद्वा, प्रतिष्ठतेऽस्मिन्ननेन वेति घञर्थे कः ।)
परिमाणविशेषः । स तु चतुःकुडवरूपः । इत्य-मरभरतौ ॥ आढकचतुर्थांशः । इति लीला-वती ॥ द्विशरावपरिमाणम् । इति वैद्यक परिभाषा ॥ (यथा, सुश्रुते शारीरस्थाने । ८ । अध्याये ।

"बलिनो बहुदोषश्च वयःस्थस्य शरीरिणः ।
परं प्रमाणमिच्छन्ति प्रस्थं शोणितमोक्षणे ॥")

**प्रस्थः**, पुं, क्ली, (प्र + स्था + कः ।) अद्रेः सम-

भूभागः । अद्रेरेकदेशः । इति भरतः ॥ तत्-पर्य्यायः । स्नुः २ सानुः ३ । इत्यमरः । २ । ३ । ५ ॥ (यथा, कुमारे । १ । ५४ ।

इति भानुदीक्षितः ॥ (यथा, मृच्छकटिके ।
९ अङ्के । “प्रस्तावेनाधिकरणिकस्त्वां द्रष्टुमिच्छ-
तीति ॥”) प्रकरणम् । यथा, --
“प्रस्तावदेशकालादेर्वैशिष्टात् प्रतिभाजुषाम् ॥”
इत्यस्यार्थे काव्यप्रकाशः ॥

**प्रस्तावना**, स्त्री, (प्रस्तावयति विज्ञापयति कार्य्या-

दिकमिति । प्र + स्तु + णिच् + युच् । टाप् ।)
आरम्भः । इति जटाधरः ॥ सूत्रधारेण सह

“प्रस्थं हिमाद्रेर्मृगणाभिगन्धि
किञ्चित् क्वणत्किन्नरमध्युवास ॥”)
उन्मितवस्तु । इति मेदिनी ॥
विस्तारः । यथा,
“दीर्घे प्रस्थे समानञ्च न
कुर्य्यान्मन्दिरं बुधः ॥”
इति ब्रह्मवैवर्त्ते जन्मखण्डे १०३ अध्यायः ॥
प्रकृष्टस्थितिविशिष्टे, त्रि ॥

**प्रस्थपुष्पः**, पुं, (प्रस्थमितं पुष्पमस्य ।) मरुवक

इत्यमरः । २ । ४ । ७९ ॥
(तत्पर्य्यायो यथा, --
भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ।
“मारुतोऽसौ मरुवको मरुन्मरुरपि स्मृतः ।
फणी फणिज्झकश्चापि प्रस्थपुष्पः समीरणः ॥”)

स्वल्पपत्रतुलसी । जम्बीरभेदः ।
इति केचित् ॥
जम्बीरसामान्यम् । इति केचित् ।
इति तट्टी-
कायां भरतः ॥

**प्रस्थानं**, क्ली, (प्र + स्था + ल्युट् ।) विजिगीषोः

प्रयाणम् । इत्यमरः । २ । ८ । ९५
॥ (यथा,
देवीभागवते । ५ । ४ । १२ ।
"सेनाभियोगं प्रस्थानं बलसंख्या
यथार्थतः ।
धीराणाञ्च परिज्ञानं कृत्वा यान्तु
त्वरान्वितः ॥")
गमनमात्रम् । यथा, पदाङ्कदूते ।
"प्रस्थानन्ते कुलिशकलनान्निश्चितं
पण्डिताग्र्यैः ॥"

**प्रस्थानविघ्नः**, पुं, (प्रस्थानस्य विघ्नः ।) गमन-

व्याघातः । यथा । यः
पुनर्व्विवाहावसरे
मङ्गलवति वासरे प्रतिष्ठमानस्य
तत्प्रस्थानौप-
यिकं कर्म्म प्रागङ्गीकृत्य तदानीं न
करिष्या-
मीति प्रस्थानविघ्नमाचरति तदासौ
द्विगुणां
भृतिं दाप्यः । इति मिताक्षरा ॥

**प्रस्थापितः**, त्रि, (प्र + स्था + णिच् + क्तः ।)

प्रेषितः । इति हेमचन्द्रः ॥ प्रकर्षेण
स्थापितश्च ॥

**प्रस्थिका**, स्त्री, (प्रस्थस्तदाकारोऽस्त्यस्या इति ।

प्रस्थ + ठन् ।) अम्बष्ठा । इति
भावप्रकाशः ॥

**प्रस्फुटः**, त्रि, (प्रस्फुटति विकशतीति । प्र +

यथा, वराहपुराणे ।
"प्रस्रावेण तु यः स्नायात् रोहिण्यां
मानवो
द्विज ! ।
सर्व्वपापकृतान्दोषान् दहत्याशु न
संशयः ॥"
(गुणादयोऽस्य मूत्रशब्दे ज्ञातव्याः ॥)

**प्रस्वानः**, पुं, उच्चैःशब्दः । प्रपूर्ब्बस्वनधातोर्घञ्-

प्रत्ययेन निष्पन्नः ॥

**प्रस्वेदः**, पुं, (प्र + स्विद् घर्म्मच्युतौ + घञ् ।) अति-

शयघर्म्मः । (यथा, मार्कण्डेये । १२४ ।
१३ ।
"नरेन्द्रपुत्त्राः प्रस्वेदजलक्लिन्नाननाः
समम् ॥")
तस्यौषधं यथा, --
"चन्दनं कुङ्कुमं मांसी कर्पूरो
जातिपत्रिका ।
जातीकक्कोलपूगानां लवङ्गस्य फलानि
च ॥
अगुरुशीरकाश्मर्य्यः कुष्ठं तगरनालिका
।
गोरोचना प्रियङ्गुश्च चोलं मदनकं नखम्
॥
सरलः सप्तपर्णश्च लाक्षा चामलकी
तथा ।
कर्व्वूरकः पद्मकञ्च एतैस्तैलं प्रसाधितम्
॥
प्रस्वेदमलदौर्गन्ध्यकण्डूकुष्ठहरं परम् ।
पुमान् युवा स्यात् शुक्राढ्यः
स्त्रीणाञ्चात्यन्त-
वल्लभः ॥
स्त्रीशतं गच्छते रुद्र ! बन्ध्यापि लभते
सुतम् ॥"
इति गारुडे १९८ अध्यायः ॥
(विषयोऽस्य यथा, --
"स्तैमित्यं मधुरास्यता च जडता निद्रा
च

यामः २ । इत्यमरः । १ । ४ । ६ ॥ (यथा,
कथासरित्सागरे । ४ । ३७ ।
"सङ्केतकं द्वितीयेऽस्मिन् प्रहरे पर्य्यकल्प्यत ॥")

**प्रहरकुटुवी**, स्त्री, (प्रहरस्य कुटुवी कुटुम्बिनीव ।)

कुटुम्बिनीक्षुपः । इति राजनिर्घण्टः ॥

**प्रहरणं**, क्ली, (प्रह्रियतेऽनेनेति । प्र + हृ +

करणे ल्युट् ।) अस्त्रम् । इत्यमरः । २ । ८ । ८२ ॥
(यथा, महाभारते । १२ । १६६ । २ ।
"धनुः प्रहरणं श्रेष्ठमतीवात्र पितामह ! ॥")
कर्णीरथः । इति तट्टीकासारसुन्दरी ॥ (यथा,
भागवते । ४ । २६ । २ ।
"पञ्चप्रहरणं सप्रवरूथं पञ्चविक्रमम् ॥"
प्रह्रियतेऽस्मिन्निति ।) युद्धम् । इति हलायुधः ।
२ । २९८ ॥ (प्र + हृ + भावे ल्युट् ।) प्रहारः ॥
(यथा, महाभारते । ४ । ४ । ७ ।
"याने प्रहरणे चेव तथैवाग्निषु भारत ! ॥")

**प्रहरी**, [न्] त्रि, यामिकः । प्रहरो विद्यते

अस्येतिप्रहरशब्दादस्त्यर्थे इन्प्रत्ययेन निष्पन्नः ॥

**प्रहर्षणः**, पुं, (प्रहर्षयतीति । प्र + हृष् + णिच् +

ल्युः ।) बुधग्रहः । इति त्रिकाण्डशेषः ॥ हर्ष-
विशिष्टे, हर्षकारके च, त्रि ॥ (यथा, महा-
भारते । १ । २७ । ९ ।
"नानापक्षिरुतं रम्यं कद्रुपुत्त्रप्रहर्षणम् ॥"
प्र + हृष + भावे ल्युट् । आनन्दे, क्ली ।
यथा, महाभारते । १२ । ३३६ । २५ ।
"अथ व्रतस्यावभृते वागुवाचाशरीरिणी ।
स्निग्धगम्भीरया वाचा प्रहर्षणकरी विभो ! ॥")

**प्रहर्षणी**, स्त्री, (प्रहर्षयतीति । प्र + हृष् + णिच् +

ल्युः । ङीष् ।) हरिद्रा । इति हारावली ।
त्रयोदशाक्षरपादच्छन्दोभेदः । तस्या लक्षणं
यथा । छन्दोमञ्जर्य्याम् । "त्र्याशाभिर्म्मनजरगाः
प्रहर्षणीयम् ।" तस्या उदाहरणं यथा, --
"गोपीनामधरसुधारसस्य पानै-
रुत्तुङ्गस्तनकलसोपगूहनैश्च ।
आश्चर्य्यैरपि रतिविभ्रमैर्मुरारेः
संसारे मतिरभवत् प्रहर्षणीह ॥"

स्फुट् + कः ।) प्रफुल्लः । इति शब्दरत्नावली ॥
(सुस्पष्टः । यथा, मार्कण्डेये । २७ । २१ ।
“निष्कृष्य शासनं तस्माद्ददृशे प्रस्फुटाक्षरम् ॥”)

**प्रस्फोटनं**, क्ली, (प्रस्फोट्यतेऽनेनेति । प्र + स्फुट् +
णिच् + करणे ल्युट् ।) सूर्पम् । इत्यमरः ।
२ । ९ । २६ ॥ (प्र + स्फुट् + भावे ल्युट् ।)
ताडनम् । विकाशनम् । इति मेदिनी । ने,
१९२ ॥ पवनम् । तुषादिशोधनम् । इति हेम-
चन्द्रः । ४ । ८३ ॥

**प्रस्रवणं**, क्ली, (प्रस्रवति जलमस्मादस्मिन्निति वा ।
प्र + स्रु + अपादाने अधिकरणे वा ल्युट् ।) यत्र
स्थाने स्रुत्वा जलं गलति तत् । इति भरतः ॥
अविच्छेदेन स्रवज्जलं यत्र स्थाने पतति यत्र
निपत्य च बहुलीभवति तत् । इति स्वाम्या-
दयः ॥ गिरेरुपरि निर्झरादिप्रभवजलसंघातः ।
इवि साङ्गः ॥ (यथा, हरिवंशे । ९ । ५४ । ११ ।
“पुण्यं तीर्थवरं दृष्ट्वा विस्मयं परमं गतः ।
प्रभावञ्च सरस्वत्याः प्लक्षप्रस्रवणं बलः ॥”)
अजस्रं मन्दवेगेन स्रवज्जलम् । इति कोक्कटः ॥
तत्पर्य्यायः । उत्सः २ । इत्यमरः । २ । ३ । ५ ॥
जलप्रस्रावः ३ । (यथा, मनुः । ४ । २०३ ।
तन्द्रा भृशं
गात्राणां गुरुताऽरुचिर्व्विमता रोमोद्गमः शीतता ।
प्रस्वेदः श्रुतिबाधनञ्च कुरुते नेत्रे च पाण्डुच्छवि-
र्व्विष्टब्धामलवृत्तिका च वमनं श्लेष्मज्वरे वै विदुः ॥”
इति हारीते चिकित्सितस्थाने द्बितीयेऽध्याये ॥)

**प्रहतं**, त्रि, (प्रहन्यते स्मेति । प्र + हन् + क्त ।)
विततम् । क्षुण्णम् । इति शब्दरत्नावली ॥ प्रक-
र्षेण हिंसितम् । (यथा, महाभारते । ८ । ३० । ६ ।
“प्रहतरथनराश्वकुञ्जरं
प्रतिभयदर्शनमुल्वणव्रणम् ।
तदहितहतमावभौ बलं
पितृपतिराष्ट्रमिव प्रजाक्षये ॥”)
प्रकर्षेण गतञ्च ॥ (विताडितम् । यथा, भाग-
वते । १० । ७२ । ३८ ।
“इत्थं तयोः प्रहतयोर्गदयोर्नृवीरौ
क्रुद्धौ स्वमुष्टिभिरयःस्पर्शैरपिष्टाम् ॥”
वादितम् । यथा, रघुः । १९ । १४ ।
“स स्वयं प्रहतपुष्करः कृती
लोलमाल्यबलयो हरन् मनः ।
नर्त्तकीरभिनयातिलङ्घिनीः
पार्श्ववर्त्तिषु गुरुष्वलज्जयत् ॥”)

**प्रहनेमिः**, पुं, (ग्रहाणां नेमिरिव । निपातनात्
ग्रस्य प्रः ।) चन्द्रः । इति त्रिकाण्डशेषः ॥
(ग्रहनेमिरिति वा पाठः ॥)

**प्रहरः**, पुं, (प्रह्रियते ढक्कादिरस्मिन्निति । प्र +
हृ + घः । अप् वा ।) वासरस्याष्टभागैक-
भागः । पहर इति हिन्दीभाषा । तत्पर्य्यायः ।

**प्रहसनं**, क्ली, (प्र + हस् + भावे ल्युट् ।) प्रहासः ।
(प्रहसत्यत्रानेन वा । प्र + हस् + आधारे
करणे वा ल्युट् ।) रूपकभेदः । परिहासः ।
इति मेदिनी । ने, १९० ॥ आक्षेपः । इति
हेमचन्द्रः ॥ रूपकभेदस्य लक्षणं यथा, --
“भाणवत्सन्धिसन्ध्यङ्गलास्याङ्गाङ्कैर्व्विनिर्म्मिते ।
भवेत् प्रहसने वृत्तं निन्द्यानां कविकल्पितम् ॥
तत्र नारभटीनापि विस्कम्भकप्रवेशकौ ।
अङ्गी हास्यरसस्तत्र वीथ्यङ्गानां स्थितिर्न वा ॥
तपस्विभगवद्बिप्रप्रभृतिष्वत्रनायकः ।
एको यत्र भवेद्दृष्टो हास्यं तच्छद्धमुच्यते ॥”
इति साहित्यदर्पणम् ॥

**प्रहसन्ती**, स्त्री, (प्रहसति प्रकर्षेण विकशतीति ।
प्र + हस् + शतृ + ङीप् ।) यूथी । इति
त्रिकाण्डशेषः ॥ वासन्ती । इति राजनिर्घण्टः ॥
प्रकृष्टाङ्गारधानी च ॥

“स्नानं समाचरेन्नित्यं गर्त्तप्रस्रवणेषु च ॥”)

अस्य गुणाः । प्रस्रवणजलं स्वच्छं लघु मधुरं

रोचनञ्च दीपनकृत् ॥ इति राजनिर्घण्टः ॥

(प्र + स्रु + भावे ल्युट् ।) प्रकर्षेण क्षरणम् ॥

**प्रस्रवणः**, पुं, (प्रस्रवति जलमस्मादिति । प्र + स्रु +

अपादाने ल्युट् ।) माल्यवत्पर्व्वतः । इति हेम-

चन्द्रः । ४ । ९५ ॥ स्वेदः । इति त्रिकाण्डशेषः ॥

**प्रस्रावः**, पुं, (प्रस्रूयते इति । प्र + स्रु + “प्रेद्रुस्तु-

स्रुवः ।” ३ । ३ । २७ । इति घञ् ।) मूत्रम् ।

इत्यमरः । २ । ६ । ६७ ॥ गोप्रस्रावमाहात्म्यं

**प्रहस्तः**, पुं, (प्रततः प्रसृतो वा हस्तो यत्र ।)
विस्तृताङ्गुलिपाणिः । चपेटः । इत्यमरः । २ ।
६ । ८४ ॥ रावणसेनापतिविशेषः । यथा, --
"ततो नीलाम्बुदप्रख्यं प्रहस्तो नाम राक्षसः ।
अब्रवीत् प्राञ्जलिर्व्वाक्यं शूरः सेनापतिस्तदा ॥"
इति रामायणे लङ्काकाण्डे ८ सर्गः ॥

**प्रहारः**, पुं, (प्रहरणमिति । प्र + हृ + घञ् ।)
आघातः । यथा, मार्कण्डेये ।
"करप्रहारेण शिरश्चामरस्य पृथक् कृतम् ॥"

**प्रहारणं**, क्ली, (प्र + हृ + णिच् + ल्युट् ।) काम्य-
दानम् । इति प्रवारणशब्दटीकायां सार-
सुन्दरी ॥

**प्रहारवल्ली**, स्त्री, (प्रहारोपशमा आघातजन्य-
वेदनादिनाशिका वल्ली लता । शाकपार्थिवादि-
त्वात् मध्यपदलोपः ।) मांसरोहिणी । इति
भावप्रकाशः ॥ (पर्य्यायोऽस्या यथा, --
"मांसरोहिण्यतिरुहा वृत्ता चर्म्मकरी कृशा ।
प्रहारवल्ली विकशा वीरवत्यपि कथ्यते ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**प्रहासः**, पुं, (प्रकृष्टो हासो यस्य ।) शिवः ।
इति त्रिकाण्डशेषः ॥ (कार्त्तिकेयस्य अनुचर-
विशेषः । यथा, महाभारते । ९ । ४५ । ६६ ।
"प्रहीणपूर्ब्बध्वनिनाधिरूढ-
स्तुलामधारेण शरद्घनेन ॥"
इति रघुकाव्यम् ॥

**प्रहुतं**, क्ली, (प्रहूयते स्मेति । प्र + हु + क्तः ।)
भूतयज्ञः । इति जटाधरः ॥ (यथा, मनुः । ३ । ७३ -- ७४ ।
"अहुतञ्च हुतञ्चैव तथा प्रहुतमेव च ।
ब्राह्म्यं हुतं प्राशितञ्च पञ्च यज्ञान् प्रचक्षते ॥
जपोऽहुतो हुतो होमः प्रहुतो भौतिको वलिः ।
ब्राह्म्यं हुतं द्विजाग्र्याच्चा प्राशितं पितृतर्प-
णम् ॥")

**प्रहेणकं**, क्ली, (प्रहेलकम् । पृषोदरादित्वात् लस्य
णः ।) पिष्टकविशेषः । तत्पर्य्यायः । वाचनम् २
व्रतोपायनम् ३ । इति त्रिकाण्डशेषः ॥ प्रहे-
लकम् ४ वाचनकम् ५ । इति हारावली । १५२ ॥

**प्रहेलकं**, क्ली, (प्रहिलति स्वादादिना अभिप्रायं
सूचयतीव । प्र + हिल भावसूचने + ण्वुल् ।
प्रहेलति वेष्टयतीति । प्र + हेल + ण्वुल् वा ।)
प्रहेणकम् । इति हारावली । १५२ ॥

**प्रहेलिका**, स्त्री, (प्रहिलति अभिप्रायं सूचय-
तीति । प्र + हिल अभिप्रायसूचने + क्वुन् ।
टापि अत इत्वम् ।) दुर्विज्ञानार्थप्रश्नः । कूटार्थ-
भाषिता कथा । हेयालि इति भाषा । तत्-
पर्य्यायः । प्रवल्हिका २ । इत्यमरः । १ । ६ । ६ ॥
प्रवह्लिका ३ प्रवह्लिः ४ प्रवह्ली ५ प्रहेलिः ६ ।
इति भरतः ॥ प्रश्नदूती ७ प्रवह्लीका ८ । इति

**प्रह्लत्तिः**, स्त्री, (प्र + ह्लाद् + क्तिन् । ह्रस्वः ।)
प्रीतिः । ("ह्लादेः स्वः क्तौ च ।") इति मुग्ध-
बोधव्याकरणम् ॥

**प्रह्लन्नः**, त्रि, (प्र + ह्लाद + क्त । "ह्लादो निष्ठा-
याम् ।" ६ । ४ । ९५ । इति ह्रस्वः ।) प्रीतः ।
इत्यमरः । ३ । १ । १०३ ॥

**प्रह्लादः**, पुं, (प्रह्लादयतीति । प्र + ह्लाद् + णिच् +
अच् ।) प्रह्लादः । स च पूर्ब्बजन्मनि शिव-
शर्म्मणः पुत्त्रः सोमशर्म्मनामाभूत् ततो दैत्य-
भावनया मृतः अनन्तरं कमलायां हिरण्य-
कशिपोः सकाशाद्दैत्यभाक्येन जातः । यथा,
सूत उवाच ।
"स लोष्टेन समं मेने काञ्चनं भूषणं पुनः ।
जिताहारः स धर्म्मात्मा निद्रया परिवर्जितः ॥
विषयान् स परित्यज्य एकान्तमपि सेवते ।
योगासनसमारूढो निराशो निष्परिग्रहः ॥
तस्य वेलां सुसंप्राप्य मृत्युकालः समागतः ।
आगतान् दानवान् विप्रः सोमशर्म्मा व्यलो-
कयत् ॥
मृत्युकाले तु संप्राप्ते प्राणयात्राप्रवर्त्तके ।
शालग्रामे महाक्षेत्रे ऋषीणामेव सन्निधौ ॥
केचिद्वदन्ति वै दैत्याः केचिद्वदन्ति दानवाः ।
एवंविधो महाशब्दः कर्णरन्ध्रगतस्तदा ॥
तस्यैव विप्रवर्य्यस्य सुविप्राः सोमशर्म्मणः ।
ज्ञानध्यानात् प्रचलतः प्रविष्टं दैत्यजं भयम् ॥
तेन ध्यानेन तस्यापि दैत्यभूतेन वै तदा ।
सत्वरं तस्य वै प्राणा गतास्तस्य महात्मनः ॥
दैत्यभावेन संयुक्तः स हि मृत्युवशं गतः ।
तस्माद्दैत्यगृहे जातो हिरण्यकशिपोस्तदा ॥
देवासुरे महायुद्धे निहतश्चक्रपाणिना ।
युध्यमानेन तेनापि प्रह्लादेन महात्मना ॥
सुभृशं वासुदेवं तद्विश्वरूपं विचिन्तितम् ।
योगाभ्यासेन पूर्ब्बेण ज्ञानमासीन्महात्मनः ॥
सस्मार पौर्ब्बिकं सर्व्वं चरित्रं शिवशर्म्मणः ।
सोऽप्यहं सोमशर्म्मा वै प्रविष्टो दानवीं तनुम् ॥
कस्य कायं कदा पुण्यं केवलं ध्यानमुत्तमम् ।
प्रयामि च महापुण्यैर्ज्ञानाख्यैर्मोक्षदायिभिः ॥

"रणोत्कटः प्रहासश्च श्वेतसिद्धश्च
नन्दकः ॥"
नागविशेषः । यथा, तत्रैव । १ । ५७ ।
१५ ।
"पूर्णाङ्गदः पूर्णमुखः प्रहासः
शकुनिर्दरिः ॥"
प्रकृष्टो हासो यस्मात् ।) नटः । इति
धरणिः ॥
(प्रकृष्टो हासः प्रकाशो यस्य ।)
सोमतीर्थम् ।
इति जटाधरः ॥ (प्रकृष्टो हास इति ।)
अट्ट-
हासः । इति शब्दरत्नावली ॥ (यथा,
कामन्दकीये । ५ । २० ।
"न नर्म्मसचिवैः सार्द्धं किञ्चिदप्यप्रियं
वदेत् ।
ते हि मर्म्माण्यभिघ्नन्ति प्रहासेनापि
संसदि ॥")

**प्रहासी**, [न्] पुं, प्रकृष्टं हासयति हसति च पः ।

(प्र + हस् + णिच् वा + णिनिः ।)
हासकारकः ।
भाँड इति भाषा । तत्पर्य्यायः ।
वासन्तिकः २
केलिकिलः ३ वैहासिकः ४ विदूषकः
५ प्रीतिदः
६ । इति हेमचन्द्रः । २ । २४५ ॥
(हास-
कारिणि, त्रि । यथा, अथर्व्ववेदे । ८ ।
६ । १४ ।
"आपाकेस्थाः प्रहासिनस्तम्बे ये
कुर्व्वते ॥")

**प्रहिः**, पुं, (प्रकर्षेण ह्रियतेऽत्रेति । प्र + हृ +

"प्रहरतेः कूपे ।" उणा० ४ । १३४ ।
इति
इण् । स च डित् ।) कूपः । इत्यमरः ।
१ । १० । २६ ॥

**प्रहितं**, क्ली, (प्रधीयते स्मेति । प्र + धा + क्तः ।)

मृपः । इति हेमचन्द्रः । ३ । ६१ ॥ (प्र
+ हि

शब्दरत्नावली ॥ तस्य लक्षणम् ।
"व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य
गोपनात् ।
यत्र बाह्यान्तरावर्थौ कथ्येते सा प्रहेलिका
॥
सा द्विधार्थी च शाब्दी च विख्याता
प्रश्नशासने ।
आर्थी स्यादर्थविज्ञानात् शाब्दी शब्दस्य
भङ्गतः ॥"
आर्थी । यथा, --
"तरुण्यालिङ्गितः कण्ठे
नितम्बस्थलमाश्रितः ।
गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुः
॥"
पानीयकुम्भ इति ॥ शाब्दी यथा, --
"सदारिमध्यापि न वैरियुक्ता
नितान्तरक्ताप्यसितैव नित्यम् ।
यथोक्तवादिन्यपि नैव दूती
का नाम कान्तेति निवेदयन्ति ॥"
सारिका । इति विदग्धमुखमण्डनम् ॥

**प्रह्लादः**, पुं, (प्रह्लादते इति । प्र + ह्लाद शब्दे +

अच् । यद्वा, प्रह्लादयतीति । प्र + ह्लाद +
णिच् + अच् । रलयोरैक्यम् ।) प्रह्लादः । स
च हिरण्यकशिपोः पुत्त्रः परमवैष्णवः ।
(यथा,
हरिवंशे । ३ । ७१ ।
"हिरण्यकशिपोः पुत्त्राश्चत्वारः
प्रथितौजसः ।
अनुह्लादश्च ह्लादश्च प्रह्लादश्चैव वीर्य्यवान्
॥")
तस्य चरित्रादिकं प्रह्लादशब्दे द्रष्टव्यम् ॥
(जनपदविशेषः । यथा, महाभारते । ६ । ९
। ४६ ।
"मल्लाः सुदेष्णाः प्रह्लादा माहिषाः शशिका-
स्तथा ॥")

समरे प्रीयमाणेन प्रह्लादेन महात्मना ।
एवं चिन्ता कृता पूर्ब्बं श्रूयतां द्विजसत्तम ! ॥
एतत्ते सर्व्वमाख्यातं सर्व्वसन्देहनाशनम् ॥"
सूत उवाच ।
"प्रह्लादे तु हते संख्ये देवदेवेन चक्रिणा ।
संह्लादे च महावीर्य्ये तस्मिंश्च कालनेमिनि ॥
प्रह्लादस्य तु या माता हिरण्यकशिपोः प्रिया ।
प्रह्लादस्य महाशोकैर्दिवा रात्रौ प्रशोचति ॥
पतिव्रता महाभागा कमला नाम दुःखिता ।
खिद्यमाना दिवा रात्रौ नारदस्तामुवाच ह ॥
मा शुचस्त्वं महाभागे पुत्त्रार्थं पुण्यभागिनि ! ।
निहतो वासुदेवेन तव पुत्त्रः समेष्यति ॥
तद्रूपलक्षणोपेतस्तवोदरे महामतिः ।
प्रह्लादेति च वै नाम पुनरस्य भविष्यति ॥
विहीन आसुरैर्भावैर्वैष्णवेन समन्वितः

| | | |
|---|---|---|
| प्रेरणे + क्त ।) क्षिप्ते, त्रि । इति निरस्तशब्द- टीकायां भरतः ॥ **प्रहीणः**, त्रि, (प्र + ओ हा त्यागे + क्त । "घुमा- स्थागेति ।" ६ । ४ । ६६ । इति आत ईत् । "ओदितश्च ।" ८ । २ । ४५ । इति निष्ठातस्य नः । ततो णत्वम् ।) परित्यक्तः । प्रपूर्ब्बहा- धातोः कर्म्मणि क्तः । इति मुग्धबोधव्याक- रणम् ॥ यथा, -- | | |

इन्द्रत्वं भोक्ष्यते भद्रे !
सर्व्वदेवैर्नमस्कृतः ॥
सुखीभव महाभागे ! पुत्त्रेण तेन वै सदा ।
न प्रकाश्या त्वया देवि ! स्ववार्त्तेयञ्च कस्यचित् ॥
कर्त्तव्यमज्ञानभावैः सुगोप्यं त्वं सदा कुरु ।
एवमुक्त्वा गतो विप्र नारदो मुनिसत्तमः ॥
कमलायाश्चोदरे वै आसीत् तज्जन्म चोत्तमम् ।
पुनः प्रह्लादो वै नाम तस्यां जातो महात्मनः ॥
बाल्यभावं गतो विप्र कृष्ण एवं विचिन्त्य च ।
नरसिंहप्रसादेन देवराजोऽप्यभूत् स हि ॥"
इति पाद्मे भूमिखण्डे ५ अध्यायः ॥ * ॥
(अनेन सह नरनारायणयोर्युद्धमासीत् । एतद्-
विवरणन्तु देवीभागवते चतुर्थस्कन्धे नवमा-
ध्याये द्रष्टव्यम् ॥) प्रमोदः । इति विश्वः ॥
(यथा, महाभारते । १ । ७० । ३ ।
"मनःप्रह्लादजननं दृष्टिकान्तमतीव च ॥")
शब्दः । इति धरणिः ॥ (नागविशेषः । यथा,
महाभारते । २ । ९ । १० ।
"प्रह्लादो मूषिकादश्च तथैव जनमेजयः ॥")

**प्रह्वः**, त्रि, (प्रहूयते इति । प्र + ह्वे + "सर्व्वनि-
घृष्वरिष्वेति ।" उणा० १ । १५३ । इति वन् ।
आलोपश्च ।) नम्रः । इत्युणादिकोषः ॥ (यथा,

**प्राकाम्यं**, क्ली, (प्रकामस्य भावः । प्रकाम + ष्यञ् ।)
शिवस्याष्टविधैश्वर्य्यान्तर्गतैश्वर्य्यविशेषः ।
तच्च इच्छानभिघातः । इत्यमरटीकायां भरतो
हेमचन्द्रश्च । २ । ११६ ॥ (यथा, तत्त्वकौमुद्याम् ।
"अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा ।
ईशित्वञ्च वशित्वञ्च तथा कामावसायिता ॥")
स्वाच्छन्द्यानुमतिः । तत्पर्य्यायः । अवसर्गः २
स्वाच्छन्द्यानुमननम् ३ । इति त्रिकाण्डशेषः ॥
(यथा, कुमारे । २ । ११ ।
"व्यक्तो व्यक्तेतरश्चासि प्राकाम्यं ते विभूतिषु ॥")

**प्राकारः**, पुं, (प्रक्रियते इति । प्र + कृ + घञ् ।
उपसर्गस्य घञीति दीर्घः ।) वप्रोपरि अन्यत्र
वा इष्टकादिरचितवेष्टनम् । (यथा, महा-
भारते । १ । २०८ । २९ ।
"प्राकारेण च सम्पन्नं दिवमावृत्य तिष्ठता ॥")
तत्पर्य्यायः । वरणः २ सालः ३ । इत्यमरः । २ ।
२ । ३ ॥ शालः ४ । इति भरतः ॥ वप्रः ५ । यथा, --
"प्राकाररोधसोर्व्वप्रः पितृकेदारयोरपि ॥"
इति रत्नकोषः ॥
तस्य परिमाणं यथा, --
"ऊर्द्ध्वं षोडशहस्तेभ्यो नैव कुर्य्याद्गृहं गृही ।
ऊर्द्ध्वं विंशतिहस्तेभ्यः प्राकारं न शुभप्रदम् ॥"
तस्य द्वारमानम् ।
"प्रस्थे हस्तद्वयात् पूर्ब्बं दीर्घे हस्तत्रयन्तथा ।
गृहिणां शुभदं द्वारं प्राकारस्य गृहस्य च ॥
न मध्यदेशे कर्त्तव्यं किञ्चिन्न्यूनाधिके शुभम् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १०३ अध्यायः ॥

**प्राकृतः**, त्रि, (प्रकृष्टमकृतमकार्य्यं यस्य ।) नीचः ।
इत्यमरः ॥ (यथा, देवीभागवते । १ । १५ । ३१ ।

आगतं वा प्राकृतम् । संस्कृतानन्तरं प्राकृत-
मधिक्रियते । संस्कृतानन्तरं प्राकृतस्यानुशास-
नम् । सिद्धसाध्यमानभेदसंस्कृतयोनेरेव तस्य
लक्षणं न देश्यस्य इति ज्ञापनार्थम् । संस्कृत-
समन्तु संस्कृतलक्षणेनैव गतार्थम् । प्राकृते
प्रकृतिप्रत्ययलिङ्गकारकसमाससंज्ञादयः संस्कृत-
वद्वेदितव्याः । लोकादिति च वर्त्तते । तेन ऋ
ॠ ऌ ॡ ऐ औ ङ ञ श ष विसर्ज्जनीयप्लुतवर्जो
वर्णसमाम्नायो लोकादवगन्तव्यः । ङञौ स्ववर्ग्य-
संयुक्तौ भवत एव । ऐदौ तौ च केषाञ्चित् ।
कैतवं कैअवम् । सौदर्य्यं सौअरिअम् । कौरवाः
कौअवा । तथा स्वरव्यञ्जनं द्विवचनं चतुर्थी-
बहुवचनञ्च न तु भवति । अबहुलं बहुल-
मित्यधिकृतं वेदितव्यमाशास्त्रपरिसमाप्तेः ।
ततश्च क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्-
विभाषा क्वचिदन्यदेव भवति । इति हेमचन्द्र-
कृतशब्दानुशासनवृत्तौ अष्टमाध्यायस्य चतुर्थः
पादः ॥ * ॥ (यथा च प्राकृतचन्द्रिकायाम् ।
"प्रकृतिः संस्कृतं तत्र भवत्वात् प्राकृतं स्मृतम् ।
तद्भवं तत्समं देशीत्येवमेतत् त्रिधा मतम् ॥"
चण्डाचार्य्यादयस्तु आर्षप्राकृतभेदेन प्राकृतं
द्विविधं कल्पयन्ति । जैनबौद्धानां शास्त्रेषु

रघुः । १६ । ८० ।
“विभूषणप्रत्युपहारहस्त-
मुपस्थितं वीक्ष्य विशाम्पतिस्तम् ।
सौपर्णमस्त्रं प्रतिसञ्जहार
प्रह्वेष्वनिर्बन्धरुषो हि सन्तः ॥”)
आसक्तिः । इति हेमचन्द्रः । ३ ।
४९ ॥

**प्रा**, ल पूर्त्तौ । (अदा०-पर०-सक०-अनिट् ।)
ल, प्राति घटं जलेन लोकः । इति दुर्गा-
दासः ॥

**प्राक्**, व्य, पूर्ब्बदिग्देशकालाः । इत्यमरः । ३ ।
४ । २३ ॥ प्राची दिक् प्राङ् देशः काली वा
प्राक् । एवं प्राच्या दिशः प्राचो देशात्
कालाद्वा आगतः प्रागागतः । एवं प्राच्यां
दिशि प्राचि देशे वा वसति प्राग्वसति । दिक्-
शब्दाद्दिग्देशकाले इति प्रथमापञ्चमीसप्तमीनां
स्तात् अचो लुगिति स्तातो लुक् । इति तट्टी-
कायां भरतः ॥ (“दिक्छब्देभ्यः सप्तमीपञ्चमी-
प्रथमाभ्यो दिक्देशकालेष्वस्तातिः ।” ५ । ३ । २७ ।
इति अस्तातिः । “अञ्चेर्लुक् ।” ५ । ३ । ३० ।
अस्तातेर्लुक् । “लुक् तद्धितलुकि ।” १ । २ ।
४९ । इति स्त्रीप्रत्ययस्य लुक् ।) पूर्ब्बम् । (यथा,
मनुः । २ । २९ ।
“प्राक् नाभिवर्द्धनात् पुंसो जातकर्म्म विधीयते ॥”)
प्रभातम् । अवान्तरम् । अतीतम् । अग्रम् ।
इति हेमचन्द्रः मेदिनी च । चे, ७ ॥ क्रम-
“अश्रुपातं करोत्यद्य विवशः प्राकृतो यथा ॥”
अविकारकः । यथा, भावप्रकाशे अजीर्ण-
रोगाधिकारे ।
“वदन्ति षष्ठं चाजीर्णं प्राकृतं प्रतिवासरम् ॥
प्राकृतं अविकारकम् ॥” * ॥) प्रकृतिसम्बन्धी ।
यथा, --
“इत्युक्त्वासीद्धरिस्तूष्णीं भगवानात्ममायया ।
पित्रोः संपश्यतोः सद्यो बभूव प्राकृतः शिशुः ॥”
इति श्रीभागवते दशमस्कन्धे ३ अध्यायः ॥
(यथाच मार्कण्डेये । ४५ । ७३ ।
“इत्येष प्राकृतः सर्गः क्षेत्रज्ञाधिष्ठितस्तु सः ॥”
यथा च मनौ । ११ । १५९ ।
“स कृत्वा प्राकृतं कृच्छ्रं व्रतशेषं समापयेत् ॥”
“प्राकृतं प्राजापत्यं प्रकृतौ भवं प्राकृतं सर्व्व-
कृच्छ्राणां प्रकृतित्वादेवमुच्यते ।” इति तद्भाष्ये
मेधातिथिः ॥ * ॥ प्रकृतौ भवस्तत आगतो वा ।
प्रकृति + “तत्र भवः ।” ४ । ३ । ५३ । “तत
आगतः ।” ४ । ३ । ७४ । इति वा अण् ।)
भाषाभेदे, क्ली । स च संस्कृतप्रकृतिकः । यथा ।
अथ प्राकृतम् । अथशब्द आनन्तर्य्यार्थोऽधि-
कारार्थश्च । प्रकृतिः संस्कृतं तत्र भवं तत
प्राचीनतमनाटकादिषु च आर्षप्राकृतप्रयोगः
प्रायशो दृश्यते ॥ कानिचित् विशेषलक्ष्याणि
प्राकृतचन्द्रिकायामुक्तानि । यथा, --
“तच्चार्षं मागधी शौरसेनी पैशाचिकी तथा ।
चूलिका पैशाचिकञ्चापभ्रंशश्चेति षड्विधम् ॥
महाराष्ट्रोद्भवां भाषां प्रकृष्टं प्राकृतं विदुः ।
आकरः सूक्तिरत्नानां सेतुबन्धादि यन्मयम् ॥”
नाटकादौ उत्तमस्यापि नायकादेः कदाचितु
मत्तादिदोषोपहतस्य प्राकृतकथनं नैव दोषाय ।
यदुक्तं तत्रैव ।
“ऐश्वर्य्यादिप्रमत्तस्य दारिद्रोपप्लुतस्य च ।
उत्तमस्यापि पठतः प्राकृतं नैव दूष्यति ॥
क्रीडार्थं नृपतेरिष्टं प्राकृतञ्च द्विजन्मनाम् ।
भरतेनोदितं प्राज्यमबाधितमिदं वचः ॥”
नाटकादौ बालस्त्रीवृद्धादीनामगुणान्वितानां
प्राकृतकथनमेव युक्ततरम् । यथाह भरद्वाजः ।
“गाथासु तु महाराष्ट्र्या अन्या नाट्याश्रया मताः ।
बालस्त्रीवृद्धभिक्षूणां श्रावकव्याजलिङ्गिनाम् ।
ग्रहोपसृष्टमत्तानां प्राकृतं षण्डरूपिणाम् ॥” * ॥
प्रलयविशेषे, पुं । यथा, विष्णुपुराणे । १ । ७ ।
३८ -- ३९ ।
“नैमित्तिकः प्राकृतिकस्तथैवात्यन्तिकी द्विज ! ।
नित्यश्च सर्व्वभूतानां प्रलयोऽयं चतुर्व्विधः ॥
ब्राह्मो नैमित्तिकस्तत्र यच्छेते जगतः पतिः ।
प्रयाति प्राकृते चैव ब्रह्माण्डं प्रकृतौ लयम् ॥”)

| | | |
|---|---|---|
| प्राप्तिः । इति शब्दरत्नावली ॥<br>**प्राकषिकः**, पुं, (प्राकषति हिनस्तीति । प्र + आ + कष हिंसायाम् + “प्राङि पनिकषः ।” उणा० २ । १४ । इति किकन् ।) षिड्गः । मायानर्त्तकः । इत्युणादिकोषः ॥ (परदारोपजीवी । इत्युज्ज्वलदत्तः ॥) | | **प्राकृतज्वरः**, पुं, (प्राकृतः प्रकृतिसम्बन्धी ज्वरः ।) वर्षाशरद्वसन्तेषु त्रिषु ऋतुषु क्रमेण वातपित्तकफज्वरः । यथा, माधवकरः । “वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात् ॥” |

**प्राकृतदोषः**, पुं, (प्राकृतो दोषः ।) वर्षाशरद्-
वसन्तेषु क्रमेण कुपितो वातः पित्तं
कफश्च ।
यथा, रक्षितः ।
"चयप्रकोपप्रशमाः पित्तस्य
प्रावृडादिषु ।
श्लेष्मणः शिशिराद्येषु
वायोर्घर्म्मादिषु त्रिषु ॥"

**प्राकृतप्रलयः**, पुं, (प्राकृतः प्रकृतिसम्बन्धी प्रलयः ।)
प्रकृतेर्लयः । तस्य विवरणम् । यथा,
--
"निर्गुणस्य च नित्यस्य
चाद्यन्तरहितस्य च ।
निमेषाणां सहस्रेण प्रकृतेर्द्दण्ड
उच्यते ॥
षष्टिदण्डात्मकस्तस्य वासरश्च
प्रकीर्त्तितः ।
मासस्त्रिंशद्दिवारात्रैर्व्वर्षं
द्वादशमासकैः ॥
एवं गते शताब्दे च श्रीकृष्णे
प्रकृतेर्लयः ।
प्रकृत्याञ्च प्रलीनायां तदैवं प्राकृतो
लयः ॥
सर्व्वाः संहृत्य सा चैका महाविष्णोः
प्रसूश्च या ।
कृष्णवक्षसि लीना च
मूलप्रकृतिरीश्वरी ॥
शाक्ता वदन्ति तां दुर्गां विष्णुमायां
सनातनीम् ।
सर्व्वशक्तिस्वरूपाञ्च परां नारायणीं
सतीम् ॥
बुद्ध्यधिष्ठातृदेवीञ्च कृष्णस्य
त्रिगुणात्मिकाम् ।
यन्मायया मोहिताश्च
ब्रह्मविष्णुशिवादयः ॥
वैष्णवास्तां महालक्ष्मीं परां राधां
वदन्ति ते ।
"सखा गरोयान् शत्रुश्च कृत्रिमस्तौ हि
कार्य्यतः ।
स्यातामामित्रौ मित्रे च सहजप्राकृतावपि ॥"
अस्य टीका । "ननु क्षुद्रोऽयं चैद्यः किं नः
करिष्यतीत्याशङ्क्य तस्य बलवत्तां वक्तुं
मित्रा-
मित्रबलाबलविवेक्कं तावत् करोति । सखेति ।
क्रियया उपकारापकारान्यतररूपयानिर्वृत्तः
कृत्रिमः सखा सुहृत् गरीयान् बलवान् एवं
शत्रुश्च कृत्रिमो गरीयान् कुतः हि यस्मात्तौ
कृत्रिममित्रशत्रू च कार्य्यतः उपकारापकार-
रूपकार्य्यवशात् निर्वृत्ताविति शेषः ।
उक्तकार्य्यो-
पाधेर्यावज्जीवमनपायादनयोर्म्मित्रामित्रभावो-
ऽपि अनपायीति गरीयस्त्वमिति भावः ।
सहज-
प्राकृतौ तु नैवमित्याह । स्यातामिति । सह-
जातः सहजः एकशरीरावयवत्वात् तत्र सहजं
मित्रं मातृष्वसेयपितृष्वसेयादि सहजशत्रुस्तु
पितृव्यतत्पुत्रादिः प्रकृत्या सिद्धः प्राकृतः
पूर्ब्बोक्तसहजकृत्रिमलक्षणरहित इत्यर्थः । तत्र
विषयान्तरः प्राकृतः शत्रुः तदनन्तरः प्राकृतं
मित्रं अपि त्वर्थे तौ सहजप्राकृतौ शत्रुमित्रे च
स्यातां न
त्वात्मकार्य्यवशादनियमेनोभयरूपता-
मापद्येते न कृत्रिमशत्रुमित्रे कृत्रिमशत्रुः शत्रु-
रेव मित्रञ्च मित्रमेवेति कृत्रिमावेव मित्रामित्रौ
गरीयांसौ न तु सहजौ नापि प्राकृतावित्यर्थः ।
अनेन कृत्रिमत्वं सर्व्वापवादीति सिद्धम् ।"
इति
मल्लिनाथः ॥

**प्राकृतशत्रुः**, पुं, (प्राकृतः स्वाभाविकः शत्रुः ।)
स्वदेशाव्यवहितदेशावस्थितराजादिः । यथा ।
"विषयान्तरः प्राकृतः शत्रुः ।" इति माघ-
टीकायां मल्लिनाथः ॥

**प्राकृतिकः**, त्रि, (प्रकृति + ठञ् ।) प्रकृति-
विकारः । प्रकृतिसम्बन्धी । यथा, --

**प्राक्फल्गुनी**, स्त्री, (प्राची फल्गुनी ।) पूर्ब्ब-
फल्गुनी । यथा ।
प्राक्फल्गुन्यश्चेज्जन्मकाले च
यस्य । इति कोष्ठीप्रदीपः ॥

**प्राक्फल्गुनीभवः**, पुं, (प्राक्फल्गुन्यां भव उत्-
पत्तिर्यस्य ।) बृहस्पतिः । इति हारावली ।
३६ ॥
पूर्ब्बफल्गुन्यां जाते, त्रि ॥

**प्राक्फाल्गुनः**, पुं, (प्राक्फल्गुन्यां भव इति ।
प्राक्फल्गुन + अण् ।) बृहस्पतिः । इति
शब्द-
रत्नावली ॥

**प्राक्फाल्गुनेयः**, पुं, (प्राक्फल्गुन्यां भव इति ।
प्राक्फल्गुन + ढञ् ।) बृहस्पतिः । इति
त्रिकाण्डशेषः ॥

**प्राखर्य्यं**, (प्रखरस्य भावः । प्रखर + ष्यञ् ।) प्रखर-
त्वम् । तीक्ष्णता । प्रखरशब्दात् भावार्थे
ष्ण्यप्र-
त्ययः ॥

**प्रागभावः**, पुं, (प्राग्वर्त्ती अभावः ।) संसर्गा-
भावविशेषः ॥ (यथा, भाषापरिच्छेदे । १२ --
१३ ।
"अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः ।
प्रागभावस्तथाध्वंसोऽप्यत्यन्ताभाव एव च ॥
एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते ॥")
तस्य लक्षणम् । विनाश्यभावत्वम् । इति
सिद्धान्तमुक्तावली ॥

**प्रागल्भ्यं**, क्ली, (प्रगल्भस्य भावः । प्रगल्भ +
ष्यञ् ।) प्रगल्भता । यथा, --
"प्रागल्भ्यहीनस्य नरस्य विद्या
शस्त्रं यथा कापुरुषस्य हस्ते ।
न तृप्तिमुत्पादयते शरीरे
वृद्धस्य दारा इव दर्शनीयाः ॥"
इति ज्योतिस्तत्त्वम् ॥
स्त्रीणामयत्नजभावविशेषः । यथा, --

यदर्द्धाङ्गा महालक्ष्मीः प्रिया नारायणस्य च ॥
प्राणाधिष्ठातृदेवीञ्च प्रेम्णा प्राणाधिकां वराम् ।
शश्वत् प्रेममयीं शक्तिं निर्गुणां निर्गुणस्य च ॥
नारायणश्च शम्भुश्च संहृत्य स्वगणान् बहून् ।
शुद्धसत्त्वस्वरूपी च कृष्णे लीनश्च निर्गुणे ॥
गोपा गोप्यश्च गावश्च सुरभ्यश्च नराधिप ! ।
सर्व्वे लीनाः प्रकृत्याञ्च प्रकृतिः प्रकृतीश्वरे ! ॥
महाविष्णौ विलीनाश्च सर्व्वे ते क्षुद्रविष्णवः ।
महाविष्णुः प्रकृत्याञ्च सा चैवं परमात्मनि ॥
प्रकृतिर्योगनिद्रा च श्रीकृष्णनेत्रपद्मयोः ।
अधिष्ठानं चकारैवं मायया चेश्वरेच्छया ॥
प्रकृतेर्व्वासरं यावन्मितं कालं प्रकीर्त्तितम् ।
तावद्वृन्दावने निद्रा कृष्णस्य परमात्मनः ॥
अमूल्यरत्नतल्पे च वह्निशुद्धांशुकार्च्चिते ।
गन्धचन्दनमाल्याढ्ये वायुना सुरभीकृते ॥
पुनः प्रजागरे तस्य सर्व्वसृष्टिर्भवेत् पुनः ।
एवं सर्व्वे प्राकृतिकाः श्रीकृष्णं निर्गुणं विना ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५१ अध्यायः ॥ * ॥
अपि च ।
"प्रकृतौ संस्थितो यस्मात् सर्व्वस्तन्मात्रसञ्चयः ।
अहङ्कारमहत्तत्त्वगतो यत् प्राकृतो लयः ॥
"एवं सर्व्वे प्राकृतिकाः श्रीकृष्णं निर्गुणं विना ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५१ अध्यायः ॥
(प्रलयविशेषे, पुं । यथा, विष्णुपुराणे । १ । ७ । ३८ ।
"नैमित्तिकः प्राकृतिकस्तथैवात्यन्तिको द्बिज ! ।
नित्यश्च सर्व्वभूतानां प्रलयोऽयं चतुर्व्विधः ॥")

**प्राक्तनः**, त्रि, (प्राक् प्राचि काले देशे प्राच्यां दिशि वा भवः । प्राक् + कालवाचिनोऽव्ययात् ट्युट्युलौ ।) प्राग्भवः । यथा ।
"प्रपेदिरे प्राक्तनजन्मविद्याः ॥" इति कुमारसम्भवम् ॥
अन्यच्च ।
"प्राक्तनेन शुभं सर्व्वं सुखञ्च विभवश्चिरम् ।
दुःखं शोकः प्राक्तनेन विपत् सम्पच्च साम्प्रतम् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १४ अध्यायः ॥
अपि च । तत्रैव १२९ अध्याये ।
"विधाता लिखितं कर्म्म प्राक्तनं केन वार्य्यते ।
मा भुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि ॥"

**प्राक्तनकर्म्म**, क्ली, (प्राक्तनं पुराभवं कर्म्म अत्रास्य तज्जनकत्वादपि तज्जन्यत्वारोपः ।) भाग्यम् ।
अदृष्टम् । इति जटाधरः ॥ पुराकृतकार्य्यञ्च ॥

**प्राक्फलः**, पुं, (प्राक् फलं यस्य ।) पनसः । इति जटाधरः ॥

"प्रागल्भ्यौदार्य्यमाधुर्य्यशोभाधीरत्वकान्तयः ।
दीप्तिश्चायत्नजा भावहावहेलास्त्रयोऽङ्गजाः ॥"
इति हेमचन्द्रः । ३ । १७३ ॥
(यथा च साहित्यदर्पणे । ३ । १०२ ।
"निःसाध्वसत्वं प्रागल्भ्यम् ॥" यथा, --
"समाश्लिष्टाः समाश्लेषैश्चुम्बिताश्चुम्बनैरपि ।
दष्टाश्च दंशनैः कान्तं दासीकुर्व्वन्ति योषितः ॥")

**प्रागुदीची**, स्त्री, (प्राची उदीची च दिगिति कर्म्मधारयः ।) पूर्ब्बोत्तरदिक् । ईशानकोणः । यथा,
"तत्रोत्कीर्णमृत्तिकाः प्रागुदीच्यां दिशि क्षिपेत् ॥"
इति भवदेवभट्टः ॥

**प्राग्ज्योतिषः**, पुं, (प्राक् ज्योतिषं नक्षत्रं यत्र । तदुक्तं कालिकापुराणे ।
"अत्रैव हि स्थितो ब्रह्मा प्राङ् नक्षत्रं ससर्ज ह ।
ततः प्राग्ज्योतिषाख्येयं पुरी शक्रपुरीसमा ॥")
कामरूपदेशः । इति हेमचन्द्रः । ४ । २२ ॥
स तु नरकराजपुरम् । यथा, --
श्रीभगवानुवाच ।
"करतोया सत्यगङ्गा पूर्ब्बभागावधिश्रिता ।
यावल्ललितकान्तास्ति तावद्देशं पुरं तदा ॥
तत्र देवी महामाया योगनिद्रा जगत्प्रसूः ।
कामाख्यारूपमादाय सदा तिष्ठति शोभना ॥

प्रकृतौ संस्थितो

व्यक्तमतीतप्रलयस्तु यत् ।

तस्मात् प्राकृतसंज्ञोऽयमुच्यते

प्रतिसञ्चरः ॥

अयं यः कथितो विप्राः प्राकृताख्यो

महालयः ॥”

इति कालिकापुराणे २४ अध्यायः

॥

**प्राकृतमानुषः**, पुं, (प्राकृतः सामान्यो मानुषः ।)

सामान्यमनुष्यः । यथा, महाभारते

गदापर्व्वणि ।

“एकादशचमूनाथं भीम ! पादेन मा

स्पृश ।

पञ्चानामपि यो भर्त्ता नासौ

प्राकृतमानुषः ॥”

**प्राकृतमित्रं**, क्ली, (प्राकृतं स्वाभाविकं मित्रं

सुहृत् ।)

स्वदेशव्यवहितदेशावस्थितराजादिः

।

यथा, माघे । २ । ३६ ।

अत्रास्ति नदराजोऽयं लौहित्यो ब्रह्मणः सुतः ।
अत्रैव दशदिक्पालाः स्वे स्वे पीठे व्यवस्थिताः ॥
अत्र स्वयं महादेवो ब्रह्मा चाहञ्च सर्व्वदा ।
चन्द्रः सूर्य्यश्च सततं वसतेऽत्रैव पुत्त्रक ! ॥
सर्व्वे क्रीडार्थमायाता रहस्यदेशमुत्तमम् ।
अत्र श्रीः सर्व्वतो भद्रा भोग्यमत्र सदा बहु ॥
अत्रैव हि स्थितो ब्रह्मा प्राङ्नक्षत्रं ससर्ज्ज ह ।
ततः प्राग्ज्योतिषाख्येयं पुरी शक्रपुरीसमा ॥
अत्र त्वं वस भद्रन्ते ह्यभिषिक्तो मया स्वयम् ।
ततो विदर्भराजस्य पुत्त्रीं मायाह्वयां हरिः ।
पुत्त्रार्थे वरयामास नरकस्य समां गुणैः ॥"
इति कालिकापुराणे ३७ अध्यायः ॥
(इदानीं प्रसिद्धमासामप्रदेशकियदंशकुचविहार-कामरूपं पुरा प्राग्ज्योतिषाख्ययाभिहितम् ॥")

**प्राग्भारः**, पुं, (प्रकृष्टो भारो यत्र ।) पर्व्वताग्र-भागः । इति त्रिकाण्डशेषः ॥ कुत्रचित् प्राग्-भाव इति च पाठः ॥

**प्राग्रहरः**, त्रि, (प्राग्रं प्रकृष्टमग्रं ह्रियतेऽनेनेति । हृ + अप् ।) श्रेष्ठः । इत्यमरः । ३ । १ । ५८ ॥
(यथा, रघौ । १६ । २३ ।
"तथेति तस्याः प्रणयं प्रतीतः
प्रत्यग्रहीत्प्राग्रहरो रघूणाम् ।
पूरप्यभिव्यक्तमुखप्रसादा
शरीरबन्धेन तिरोबभूव ॥")

**प्राग्राटं**, क्ली, (प्राग्रे अटतीति । अट् + अच् ।) अघनदधि । इति त्रिकाण्डशेषः ॥

**प्राग्र्यं**, त्रि, (प्रकर्षेणाग्रे भव इति । प्राग्र + यत् ।) श्रेष्ठः । इत्यमरः । ३ । १ । ५८ ॥ (यथा, महाभारते । ९ । ५८ । ११ ।
"कृत्वा हि सुमहत् कर्म्म हत्वा भीष्ममुखान् कुरून् ।
जयः प्राप्तो यशःप्राग्र्यं वैरञ्च प्रतियाचितम् ॥")

**प्राग्वंशः**, पुं, (प्राञ्चतीति । प्र + अञ्च + क्विन् । प्राक् ।

यथा, पञ्चतन्त्रे चतुर्थतन्त्रे ।
"तदागच्छ प्राघुणकन्यायेनास्मदावासम् ॥")

**प्राघुणिकः**, पुं, (प्राघुण + स्वार्थे ठक् ।) अतिथिः ।
यथा, नैषधे । २ । ५६ ।
"अमितं मधु तत्कथा मम
श्रवणप्राघुणिकीकृता जनैः ।
मदनानलबोधनेऽभवत्
खग धाय्या धिगधैर्य्यधारिणः ॥"

**प्राघूर्णिकः**, पुं, (प्र + आ + घूर्ण + भावे घञ् । प्राघूर्णो भ्रमणम् । तत्र साधु इति ठञ् ।) अतिथिः । इति हेमचन्द्रः । २ । ३३४ ॥

**प्राङ्**, त्रि, (प्रकर्षेण अञ्चतीति । प्र + अन्च् + "ऋत्विग्दधृक्स्रगिति ।" ३ । २ । ६९ । इति क्विन् । "अनिदितां हल उपधायाः क्ङिति ।" ६ । ४ । २४ । इति नलोपः । "उगिदचाम् ।" इति नुम् । संयोगान्तस्य लोपः । नुमो नकारस्य । "क्विन् प्रत्ययस्य कुः ।" ८ । २ । ६२ । इति कुत्वेन ङकारः ।) पूर्ब्बदिक । पूर्ब्बदेशः । पूर्ब्बकालः । इति मेदिनी । चे, ७ ॥

**प्राङ्गः**, पुं, (प्रकृष्टमङ्गं यस्य ।) पणववाद्यम् । इति शब्दरत्नावली ॥

**प्राङ्गणं**, क्ली, (प्रकृष्टमङ्गनमङ्गं यस्य ।) पणव-वाद्यम् । इति शब्दरत्नावली ॥ (प्रकर्षेण अङ्गनं गमनं यत्र । णत्वम् ।) गृहभूमिः । आङ्गिना इति उठान इति च भाषा । तत्-

"देवाग्रे स्वस्य चाप्यग्रे प्राची प्रोक्ता गुरुक्रमैः ॥"
इति ।
"यत्रैव भानुस्तु वियत्युदेति
प्राचीति तां वेदविदो धदन्ति ।
तथा पुरः पूजकपूज्ययोश्च
सदागमज्ञाः प्रवदन्ति तन्त्रे ॥"
इति तिथ्यादितत्त्वम् ॥

**प्राचीनः**, त्रि, (प्रागेवेति । प्राक् + "विभाषाञ्चेर-दिक् स्त्रियाम् ।" ५ । ४ । ८ । इति खः खस्ये-नादेशः ।) पूर्ब्बदिग्देशकालभवः । तत्पर्य्यायः । प्राक् २ । (यथा, आर्य्यासप्तशत्याम् । ३५१ ।
"प्राचीनाचलमौलेर्यथा शशी गगनमध्यमधि-वसति ।
त्वां सखि ! पश्यामि तथा छायामिव संकुचन्मा-नाम् ॥"
यथा च भागवते । ४ । २४ । १० ।
"प्राचीनाग्रैः कुशैरासीदास्तृतं वसुधातलम् ॥"
प्रागग्रम् । यथा, ऋग्वेदे । १ । १८८ । ४ ।
"प्राचीनं वर्हिरोजसा सहस्रवीरमस्तृणन् ॥"
"प्राचीनं प्रागग्रम् ।" इति तद्भाष्ये सायनः ॥
प्रकृष्टगन्ता । अपराङ्मुखः । यथा, ऋग्वेदे । १ । ५४ । ५ ।
"प्राचीनेन मनसा बर्हणावता ।"
"प्राचीनेन प्रकर्षेण गन्त्रा अपराङ्मुखेनेत्यर्थः ॥"
इति तद्भाष्ये सायनः ॥)
पुं, प्राचीरम् । तत्पर्य्यायः । आवेष्टकः २ वृतिः ३ ।

प्राक् वंशः सपत्नीकयजमानादिसमूहोऽत्र।)
हविषां होतव्यानां आधारो यद्गृहं ततः
प्राक् पूर्ब्बदेशे यजमानसदस्यादिस्थित्यर्थं
गृहम्।
इत्यमरभरतौ॥ (यथा, हरिवंशे। ४१। ७।
"यूपं समित्कुशं दर्व्वीं चमसोलूखलानि च।
प्राग्वंशं यज्ञभूमिञ्च होतारं चयनञ्च यत्॥"
प्राक्चासौ वंशश्चेति कर्म्मधारयः॥) पूर्ब्ब-
कुलञ्च॥

**प्राघातः**, पुं, (प्रकृष्ट आघातोऽस्मिन्। यद्वा, प्राह-
न्यतेऽस्मिन्निति। प्र + आ + हन् + आधारे
घञ्।) युद्धम्। इति हेमचन्द्रः। ३। ४६१॥

**प्राघारः**, पुं, (प्राघरणमिति। प्र + घृ प्रस्रवणे +
घञ्। "उपसर्गस्य घञ्यमनुष्ये बहुलम्।"
६। ३। १२२। इत्युपसर्गस्य दीर्घः।)
घृतादि-
क्षरणम्। तत्पर्य्यायः। श्च्योतः २। इत्यमरः
।
३। २। १०॥

**प्राघुणः**, पुं, (प्राघोणते भ्राम्यतीति। प्र + आ +
घुण + कः।) अतिथिः। इति त्रिकाण्डशेषः॥
(प्राघुण + स्वार्थे कन्। प्राघुणकस्तत्रार्थे।
पर्य्यायः। अजिरम् २ चत्वरम् ३
अङ्गनम् ४।
इति हेमचन्द्रः। ४। ७०॥ (यथा,
भविष्यो-
त्तरे।
"प्रदोषसमये स्त्रीभिः पूज्यो
जीमूतवाहनः।
पुष्करिणीं विधायाथ प्राङ्गणे
चतुरस्त्रिकाम्॥")
सूर्य्यविद्धस्य तस्य दोषो यथा, --
"अभद्रदं सूर्य्यवेधं प्राङ्गणञ्च तथैव च
॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे
१०३ अः॥

**प्राङ्न्यायः**, पुं, (प्राक् न्यायः।) चतुर्थोत्तरान्त-
र्गतोत्तरविशेषः। यत्राभियुक्त एवं
ब्रूयादस्मि-
न्नर्थे अनेनाहमभियुक्तस्तु तत्र चायं
व्यवहार-
मार्गेण पराजित इति। उक्तञ्च
कात्यायनेन।
"आचारेणावसन्नोऽपि पुनर्लेखयते यदि
।
सोऽभिधेयो जितः पूर्ब्बं प्राङ्न्यायश्च
स उच्यते॥"
इति मिताक्षरा॥

**प्राचिका**, स्त्री, (प्राञ्चतीति। प्र + अञ्च + क्वुन्।
टापि अत इत्वञ्च।) वनमक्षिका।
इत्यमर-
भरतौ। ३। ५। ८॥ डाश इति भाषा
॥

**प्राची**, स्त्री, (प्रथमं अञ्चति सूर्य्यं प्राप्नोतीति।
प्र + अञ्च + "ऋत्विग्दधृक्स्रगिति।"
३। २। ५९।
इत्यादिना क्विन्। "उगितश्च।" ४।
१। ६।
इति ङीप्।) पूर्ब्बा दिक्। इत्यमरः। १
। ३। १॥
(यथा, महाभारते। १। ९५। १२।
इति हेमचन्द्रः। ४। ४८॥

**प्राचीनपनसः**, पुं, (प्राचीनः पनस इति नित्यकर्म्म-
धारयः।) विल्वम्। इति त्रिकाण्डशेषः॥

**प्राचीनवर्हिः**, [स्] पुं, इन्द्रः। इति हेमचन्द्रः।
२। ८५॥ (यथा, रघौ। ४। २८।
"स ययौ प्रथमं प्राचीं तुल्यः प्राचीनवर्हिषा
।
अहिताननिलोद्धूतैस्तर्ज्जयन्निव केतुभिः
॥")
राजविशेषः। (यथा, महाभारते। १२।
२०८। ६।
"अत्रिवंशे समुत्पन्नो ब्रह्मयोनिः सनातनः
।
प्राचीनवर्हिर्भगवांस्तस्मात् प्रचेतसो दश
॥")
यथा च।
"हविर्द्धानात् षडाग्नेयी पुत्त्रानजनयद्व्रतम्
।
प्राचीनवर्हिषं शुक्रं गयं कृष्णं प्रजाजिनौ॥
प्राचीनवर्हिर्भगवान् महानासीत् प्रजापतिः
।
हविर्द्धानात् द्विजश्रेष्ठ! येन संवर्द्धिताः
प्रजाः॥
प्राचीनाग्राः कुशास्तस्य पृथिव्यां विश्रुता
मुने!।
प्राचीनवर्हिर्भगवान् ख्यातो भुवि महाबलः
॥
समुद्रतनयायान्तु कृतदारो महीपतिः।
महतस्तपसः पारे सुवर्णायां महीपतिः॥
सुषुवे दश पुत्त्रांश्च शुष्मिणां वै प्रचेतसः।
दशवर्षसहस्राणि समुद्रसलिलेशयाः॥"
इति वह्निपुराणे वरसर्गो नामाध्यायः॥

**प्राचीना**, स्त्री, (प्राचीन + टाप्।) वनतिक्तिका।
इत्यमरः। २। ४। ८५॥ आकनादि
इति भाषा॥
रास्ना। इति शब्दचन्द्रिका॥ (प्राचि
भवेति।
प्राच् + खः। टाप्।) प्राग्भवा च॥ (पाठा
।

| | “जनमेजयः खल्बनन्तां नामोपयेमे माधवीं<br>तस्यामस्य जज्ञे प्राचिन्वान् । यः प्राचीं दिशं<br>जिगाय यावत् सूर्य्योदयात् ततस्तस्य प्राचि-<br>न्वत्त्वम् ॥”) पूजकपूज्ययोरग्रम् । यथा, -- | |
|---|---|---|

तत्पर्य्यायो यथा, --
"पाठाम्बष्ठावष्ठकी च प्राचीना
पाचचेलिका ।
एकष्ठीला रसा प्रोक्ता पाठिका वरतिक्तिका
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**प्राचीनामलकं**, क्ली, (प्राचीनमामलकमिति नित्य-
कर्म्मधारयः ।) पानीयामलकम् । पानी
आमला
इति भाषा । तत्पर्य्यायः । वारिवदरम् २ ।
इति त्रिकाण्डशेषः ॥ (यथा, महाभारते ।
१ ।
२०८ । ४१ ।
"प्राचीनामलकैर्लोध्रैरङ्कोलैश्च सुपुष्पितैः
॥")
अस्य गुणः । दोषत्रयगरनाशित्वम् । इति
भाव-
प्रकाशः ॥ (यथा च ।
"गरदोषहरं नीपं प्राचीनामलकन्तथा ॥"
इति सुश्रुते सूत्रस्थाने ४६ अध्यायः ॥)

**प्राचीनावीतं**, क्ली, (प्राचीनं प्रदक्षिणं आवीयते
स्मेति । आ + वी गत्यादौ + क्तः । यद्वा,
प्राचीनं आवेतीति । "गत्यर्थेति ।" क्तः ।)
श्राद्धादौ वामकरे बहिष्कृते सति
दक्षिणस्कन्धा-
र्पितयज्ञसूत्रम् । इत्यमरभरतौ । २ । ७ ।
५० ॥
तथाहि कौर्म्मे उपविभागे १० अध्याये ।
"सव्यं बाहुं समुद्धृत्य दक्षिणे तु धृतं
द्विजाः ।
प्राचीनावीतमित्युक्तं पित्रे कर्म्मणि
योजयेत् ॥"

**प्राचीनावीती**, [न्] पुं, (प्राचीनावीतमस्त्यस्येति ।
प्राचीनावीत + इनिः ।)
प्राचीनावीतविशिष्टः ।
तत्र जयाख्यस्य दीर्घस्य वास्तुखण्डस्य
निर्णयः ।
तद्यथा, --
"राजच्छत्रान्तरे पञ्च राजद्वारे महीपतेः ।
राजदण्डत्रये सार्द्धे जयद्वारे प्रतिष्ठिताः ॥
अद्वारे राजदण्डार्द्धे प्राचीराः पृथिवीपतेः ।
एवं व्यवस्थिते स्थाने मध्यमे तद्धि
तिष्ठति ॥
राजच्छत्रद्वयं सार्द्धमायामे जयवास्तुनि ।
परिणाहे पञ्च राजदण्डास्तिष्ठन्ति मध्यतः
॥
राजपट्टाभिधानेन स्थानमेतन्निगद्यते ।
अस्मिन् गृहं नृपः कृत्वा सुचिरं
सुखमश्नुते ॥
अज्ञानाद्दम्भतो राजा योऽन्यत्र गृहमारभेत्
।
सोऽचिरान्मृत्युमाप्नोति रोगं शोकं
भयन्तथा ॥
यमदण्डोदयदण्डौ कोणाहतिरुपप्लवः ॥
ये चान्ये वास्तुदोषाः स्युः स्थाने दोषाश्च
ये पुनः ॥
न स्पृश्यते राजपट्टस्तैः सर्पैर्गरुडो यथा ।
द्विगुणादिरतोऽपि स्यात्
क्रमाद्वङ्गादिवास्तुषु ॥
राजच्छत्रमितेऽप्येवं प्राचीरे गुणदोषकौ ॥"
इति युक्तिकल्पतरुः ॥

**प्राचेतसः**, पुं, (प्रत्तेतसोऽपत्यमिति । प्रचेतस् +
अण् ।) वाल्मीकिमुनिः । इति हेमचन्द्रः ।
३ । ५१० ॥ (यथा, रघुः । १५ । ६३ ।
"अथ प्राचेतसोपज्ञं रामायणमितस्ततः ।
मैथिलेयौ कुशलवौ जगतुर्गुरुचोदितौ ॥"
प्रचेतसोऽपत्यमात्रम् । विष्णुः । यथा,
हरिवंशे ।
२०३ । १४ ।
"प्रज्ञया तेजसा योगात्तस्मात् प्राचेतसः
प्रभुः ।
विष्णुरेव महायोगी कर्म्मणामन्तरङ्गतः ॥"
दक्षः । यथा, महाभारते । १ । ७५ । ५ ।

**प्राजकः**, पुं, (प्राजयति प्रकर्षेण गमयति घोट-
कादीनिति । प्र + अज् + णिच् + ण्वुल् ।)
सारथिः । यथा, मनुवचने । ८ । २९३ ।
"यत्रापवर्त्तते युग्यं वैगुण्यात् प्राजकस्य च ।
तत्र स्वामी भवेद्दण्ड्यो हिंसायां द्विशतं दमम्
॥"
"यत्र सारथेरकौशल्याद्यानमन्यथा गच्छति
तत्र हिंसायां अशिक्षितसारथिनियोगात्
स्वामी द्विशतं दण्डं दण्ड्यः स्यादिति
कुल्लूक-
भट्टः ।" इति प्रायश्चित्ततत्त्वम् ॥

**प्राजनं**, क्ली, (प्रवीयतेऽनेनेति । प्र + अज् +
ल्युट् । "वा यौ ।" २ । ४ । ५७ । इति पक्षे
व्यभावः ।) तोदनम् । इत्यमरः । २ । ९ ।
१२ ॥
पाचनीवाडी इति भाषा ॥

**प्राजापत्यं**, क्ली, (प्रजापतिर्द्देवतास्येति । प्रजापति
+
"दित्यदित्यादित्यपत्युत्तरपदात् ण्यः ।" ४
। १ ।
८५ । इति ण्यः ।)
द्वादशाहसाध्यव्रतविशेषः ।
तत्र दिवसत्रयं रात्रिमात्रभोजनम् २२ ग्रासाः
।
दिवसत्रयं दिवामात्रभोजनम् २६ ग्रासाः ।
दिवसत्रयं अयाचितभोजनम् २४ ग्रासाः ।
दिवसत्रयं उपवासः । यथा, --
"त्र्यहं सायं त्र्यहं प्रातस्त्र्यहमद्यादयाचि-
तम् ।
त्र्यहं परन्तु नाश्नीयात् प्राजापत्यं चरन्
द्विजः ॥"
ग्राससंख्या पराशरेणोक्ता ।
"सायं द्वाविंशतिर्ग्रासाः प्रातः
षड्विंशतिस्तथा
अयाचिते चतुर्व्विंशः परञ्चानशनं स्मृतम् ॥"
इति प्रायश्चित्ततत्त्वम् ॥ * ॥
तत्तु अगम्यागमनादिप्रायश्चित्तम् । यथा, --
"अगम्यागमनं कृत्वा मद्यगोमांसभक्षणम् ।

यथा । सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणे-
ऽशे प्रतिष्ठापयति सव्यं कक्षमवलम्बं भवति
एवं प्राचीनावीती भवतीति । इति गोभिलः ॥
प्रतिष्ठापयति यज्ञोपवीतमिति शेषः । इत्या-
ह्निकतत्त्वम् ॥

**प्राचीपतिः**, पुं, (प्राच्याः पूर्ब्बस्या दिशः पतिः ।)

इन्द्रः । इति त्रिकाण्डशेषः ॥

**प्राचीरं**, क्ली, (प्राचीयते इति । प्र + आ +

चि ञ्न चयने + "शुसिचिमिञां दीर्घश्च ।" उणा०
२ । २५ । इति क्रन् दीर्घश्च ।) प्रान्ततोवृतिः ।
इत्यमरः । २ । २ । ३ ॥ पाँचील इति भाषा ॥
दुर्गार्थं नगरादेः प्रान्तभागे वेणुकण्टकवेत्रादि-
मयी वृतिर्वेष्टनिका । इति भरतः ॥ मृण्मय्या-
मपि वृतौ प्राचीरमुपचारादिति स्वाम्यादयः ॥
तत्पर्य्यायः । वृतिः २ । इति भट्टः ॥ प्राची-
नम् ३ । इति मुकुटः ॥
"प्राचीरं प्रावरोऽपि ४ स्यात् प्रावृतिः ५ प्रान्ततो-
वृतिः ६ ।
इष्टकामृत्तिकाद्यैश्च गृहवाट्यादिवेष्टने ॥"
इति शब्दरत्नावली ॥ * ॥ अथ प्राचीरनिर्णयः ।
"गजैरभेद्या मनुजैरलङ्घ्याः
प्राचीरखण्डा नृपतेर्भवन्ति ॥
राजदण्डोन्नताः सर्व्वे प्राचीराः पृथिवीभुजः ।
विशतिस्ते तु पञ्चाग्रे पार्श्वयोः पञ्च पञ्च च ॥
"वीरिण्या सह सङ्गम्य दक्षः प्राचेतसो मुनिः ।
आत्मतुल्यानजनयत् सहस्रं संशितव्रतान् ॥")

**प्राचेतसः**, [स्] पुं, प्राचीनवर्हीराजपुत्त्राः ।

सान्तनित्यबह्वचनान्तोऽयम् । यथा, --
"एवमुक्तास्तु ते पुत्त्रास्ततः प्राचेतसो दश ।
पयोधिसलिले मग्नास्तपस्तेपे सुदारुणम् ॥
पतत्रिराजमारूढं नीलोत्पलदलच्छविम् ।
दृष्ट्वा प्राचेतसः सर्व्वे शिरोभिरवनीं गताः ॥"
इति वह्निपुराणम् ॥

**प्राच्यः**, पुं, (प्राचि भवः । प्राच् + "द्युप्रागपागु-

दक्प्रतीचो यत् ।" ४ । २ । १०१ । इति यत् ।)
शरावत्याः प्राग्दक्षिणदेशः । इत्यमरः । २ ।
१ । ७ ॥ (पूर्ब्बदिग्भवे, त्रि । यथा मार्कण्देये ।
५७ । ४२ -- ४४ ।
"--प्राच्यान् देशान् निबोध मे ।
अध्रारका सुदकरा अन्तर्गिर्य्या वहिर्गिराः ॥
यथा प्रवङ्गा वङ्गेया मालदा मालवर्त्तिकाः ।
ब्राह्मोत्तराः प्रविजया भार्गवा ज्ञेयमल्लकाः ॥
प्राग्ज्योतिषाश्च मद्राश्च विदेहास्ताम्रलिप्तकाः ।
मल्ला मगधगोमन्ताः प्राच्या जनपदाः स्मृताः ॥")
पूर्ब्बदेशीये च, त्रि ॥ (यथा, महाभारते ।
८ । ४५ । २८ ।
"प्राच्या दासा वृषला दाक्षिणात्याः
स्तेना वाहीकाः सङ्करा वै सुराष्ट्राः ॥")
शुध्येच्चान्द्रायणाद्विप्रः प्राजापत्येन भूमिपः ।
वैश्यः शान्तपनाच्छूद्रः पञ्चाहोभिर्व्विशुध्यति ॥
प्रायश्चित्ते कृते दद्याद्गवां ब्राह्मणभोजनम् ॥"
इति गारुडे २२६ अध्यायः ॥ * ॥
रोहिणीनक्षत्रम् । यथा, --
"ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा ।
पूर्णिमा गुरुवारेण महाज्यैष्ठी प्रकीर्त्तिता ॥"
इति प्रायश्चित्ततत्त्वम् ॥
(प्रजापतेरपत्यमिति । ण्यः । प्रजपतिपुत्त्रः ।
यथा, कुमारे । ६ । ३४ ।
"तस्मिन् संयमिनामाद्ये जाते परिणयोन्मुखे ।
जहुः परिग्रहव्रीडां प्राजापत्यास्तपस्विनः ॥"
प्रजापतेरिदमिति । प्रजापतिसम्बन्धिनि, त्रि ।
यथा, मार्कण्डेये । ४९ । ७७ ।
"प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रिया-
वताम् ।
स्थानमैन्द्रं क्षत्त्रियाणां संग्रामेष्वपलायिनाम् ॥")

**प्राजापत्यः**, पुं, (प्रजापतेरयमिति । प्रजापति +

ण्यः । "प्रजापतेर्यज्ञ आसीत् प्रयागे ।" इति
महाभारतीय- । १ । ५५ । १ । वचनात् तथा-
त्त्वम् ।) प्रयागः । इति त्रिकाण्डशेषः ॥ जैन-
राजभेदः । तत्पर्य्यायः । त्रिपृष्ठः २ । इति
हेमचन्द्रः । ३ । ५९ ॥ कायनामकविवाहः ।

| | | |
|---|---|---|
| पञ्चात् पञ्च च विज्ञेयाः प्राचीराः पृथिवीभुजः । सर्व्वप्रान्ते त्वावरणो नाम प्राचीर उच्यते ॥ प्रतिप्राकारनं स्थानं द्वारं नाभिमुखस्थितम् ॥ * ॥ | | |

सह धर्म्मं चरतां इति नियमं कृत्वा कन्या-
दानम् । यथा, --
“इत्युक्त्वा चरतां धर्म्मं सहजा दीयतेऽर्थिने ।
स कायः पावयेत्तज्जः षट् षड्वंश्यान् सहा-
त्मना ॥”
इति मिताक्षरा ॥
कायः कः प्रजापतिर्द्देवता अस्येति प्राजापत्य
इत्यर्थः । इत्युद्वाहतत्त्वम् ॥ (तथा च मनुः ।
३ । ३० ।
“सहोभौ चरतां धर्म्ममिति वाचानुभाष्य च ।
कन्याप्रदानमभ्यर्च्च्य प्राजापत्यो विधिः स्मृतः ॥”)

**प्राजापत्या**, स्त्री, (प्रजापतिर्द्देवतास्या इति ।
प्राजापति + ण्यः । स्त्रियां टाप् ।) प्रव्रज्या-
श्रमपूर्ब्बकर्त्तव्यप्रजापतिद्देवताकसर्व्वस्वदक्षिणा
इष्टिः । यथा, मानवे ६ अध्याये ।
“प्राजापत्यां निरूप्येष्टिं सर्व्ववेदसदक्षिणाम् ।
आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्-
गृहात् ॥”

**प्राजिता**, [ऋ] पुं, (प्राजतीति । प्र + अज् +
तृच् । वीभावाभावः ।) सारथिः । इत्यमरः ।
२ । ८ । ५९ ॥ प्रकृष्टगन्तरि, त्रि ॥

**प्राज्ञः**, पुं, (प्रकर्षेण जानातीति । प्र + ज्ञा +
कः । ततः प्रज्ञ एव स्वार्थे अण् ।) कल्कि-
देवस्य ज्येष्ठभ्राता । यथा, --
“कल्किं द्रष्टुं हरेरंशमाविर्भूतञ्च शम्भले ।
कविं प्राज्ञं सुमन्तञ्च पुरस्कृत्य महाप्रभम् ॥”
इति कल्किपुराणे २ अध्यायः ॥
पण्डितः । इत्यमरः । २ । ७ । ५ ॥ (यथा, --
“पण्डिते च गुणाः सर्व्वे मूर्खे दोषा हि केवलम् ।
तस्मान्मूर्खसहस्रेषु प्राज्ञ एको विशिष्यते ॥”
इत्युद्भटः ॥)
राजशुकः । इति राजनिर्घण्टः ॥ (प्रकर्षेण
अज्ञः इति विग्रहे मूर्खोऽपि ॥)

**प्राज्ञः**, त्रि, (प्रज्ञ + स्वार्थे अण् । यद्वा, प्रज्ञा-
स्त्यस्येति । अच् ।) पण्डितः । (यथा, महा-
भारते । १ । १४६ । १९ ।
“पौरेषु विनिवृत्तेषु विदुरः सर्व्वधर्म्मवित् ।
“प्रज्ञा प्राज्ञा धरा ज्ञप्तिः पण्डा
संवेदनं विदा ॥”
इति रायमुकुटघृतशब्दार्णवः ॥

**प्राज्ञी**, स्त्री, (प्रज्ञ + स्वार्थे अण् । ङीप् ।) स्वयं
ज्ञात्री । तत्पर्य्यायः । पज्ञा २ ।
इत्यमरः । २ ।
६ । १२ ॥ पण्डितपत्नी । इति
प्राज्ञशब्दटीकायां
भानुदीक्षितः ॥

**प्राज्यं**, त्रि, (प्रवीयते इति । प्र + अज् + ण्यत् ।
वीभावाभावः ।) प्रचुरम् । इत्यमरः ।
३ । १ । ६३ ॥
(यथा, कुमारे । २ । १८ ।
“स्वागतं स्वानधीकारान्
प्रभावैरवलम्ब्य वः ।
युगपद्युगबाहुभ्यः प्राप्तेभ्यः
प्राज्यविक्रमाः ॥”
प्रभूतं आज्यं घृतं यस्येति विग्रहे
प्रचुरघृत-
सम्पन्नः । प्रकृष्टमाज्यमिति विग्रहे
प्रकृष्ट-
घृते, क्ली ॥)

**प्राञ्जलः**, त्रि, (प्र + अञ्ज + बाहुलकात् अलच् ।)
सरलः । यथा, --
“ऋजावजिह्मप्रगुणौ प्राञ्जलः
सरलोऽपि च ।
इति जटाधरः ॥

**प्राट्**, [छ्] पुं, पृच्छति यः । (प्रच्छ + “क्विप्
वचिप्रच्छीति ।” उणा० २ । ५७ ।
इति क्विप्
दीर्घः सम्प्रसारणाभावश्च ।)
प्रश्नकर्त्ता । इति
मुग्धबोधव्याकरणम् ॥

**प्राड्विवाकः**, पुं, (पृच्छतीति प्राट् विविच्य वक्तीति
वर्त्ती वायुः । इति वेदान्तसारः ॥
तस्य
कर्म्मबहिर्गमनम् । इति श्रीधरस्वामी
॥ तस्य
रूपं स्थानानि च यथा, --
“इन्द्रनीलप्रतीकाशं प्राणरूपं
प्रकीर्त्तितम् ।
आस्यनासिकयोर्म्मध्ये हृन्मध्ये
नाभिमध्यगे ॥
प्राणालय इति प्राहुः पादाङ्गुष्ठेऽपि
केचन ॥”
इति योगार्णवः ॥
(यथा, महाभारते । १२ । ३२८ ।
३५ ।
“प्राणिनां सर्व्वतो वायुश्चेष्टां वर्त्तयते
पृथक् ।
प्राणनाच्चैव भूतानां प्राण
इत्यभिधीयते ॥”)
पञ्चप्राणविवरणं
बहुवचनान्तप्राणशब्दे द्रष्ट
व्यम् ॥ धातुः पुत्त्रः । यथा, --
“आयतिर्नियतिश्चैव मेरोः कन्ये
महात्मनः ।
भार्य्ये धातृविधात्रोस्ते तयोर्जातौ
सुतावुभौ ॥
प्राणश्चैव मृकण्डुश्च पिता मम
महायशाः ॥”
इति मार्कण्डेये रुद्रसर्गाध्यायः ॥
(धरपुत्त्रविशेषः । यथा, मत्स्यपुराणे
। ५ । २३-२४ ।
“द्रविणो हव्यवाहश्च नरपुत्त्रावुभौ
स्मृतौ ।
कल्यानिन्यां ततः प्राणो रमणः
शिशिरोऽपि च ॥
मनोहरा धरात् पुत्त्रानवापाथ हरेः
सुता ॥”)

**प्राणकः**, पुं, (प्राणैः प्राणेन वा कायतीति । कै
+

बोधयन् पाण्डवश्रेष्ठमिदं वचनमब्रवीत् ॥
प्राज्ञः प्राज्ञं प्रलापज्ञः प्रलापज्ञमिदं वचः ॥”)
दक्षः । इति शब्दरत्नावली ॥ (विज्ञः । यथा,
मनुः । २ । १२३ ।
“नामधेयस्य ये केचिदभिवादं न जानते ।
तान् प्राज्ञोऽहमिति ब्रूयात् स्त्रियः सर्व्वास्तथैव
च ॥”)

**प्राज्ञमानी**, [न्] त्रि, (आत्मानं प्राज्ञं मन्यते

इति । प्राज्ञ + मन् + णिनिः ।) पण्डिताभि
मानी । यथा, चरके ।
“दुःखिताय शयानाय श्रद्दधानाय रोगिणे ।
यो भेषजमविज्ञाय प्राज्ञमानी प्रयच्छति ॥”

**प्राज्ञा**, स्त्री, (प्रज्ञास्त्यस्या इति । अच् । टाप् ।)

बुद्धिमती । तत्पर्य्यायः । धीमती २ । इत्य-
मरः । २ । ६ । १२ ॥ बुद्धिः । यथा, --

विवाकः । ततः कर्म्मधारयः ।)
व्यवहारद्रष्टा ।
जज् इति इङ्गरेजी भाषा । तत्पर्य्यायः
। अक्ष-
दर्शकः २ । इत्यमरः । २ । ८ । ५ ॥
व्यवहार-
दर्शी ३ । इति शब्दरत्नावली ॥ द्वे
व्यव-
हाराणां ऋणादानादिविवादानांद्रष्टरि
निर्णे-
तरि धर्म्माध्यक्षे इत्यर्थः । पृच्छति
वादिप्रति-
वादिवाक्यं प्राट् ददृज्जुहूवाक्
प्राडिति निपातः ।
विविच्य वक्ति विवाकः कभावेऽमी
इति घञ्
प्राट् चासौ विवाकश्चेति प्राड्विवाकः
।
“विवादानुगतं पृष्ट्वा पूर्ब्बवाक्यं
प्रयत्नतः ।
विचारयति येनासौ प्राड्विवाकस्ततः
स्मृतः ॥”
इति स्मृतिः । इति भरतः ॥
अपि च । अर्थिप्रत्यर्थिनौ पृच्छतीति
प्राट्
तयोर्व्वचनं विरुद्धाविरुद्धञ्च सभ्यैः
सह विवि-
नक्ति विवेचयति वेति विवाकः प्राट्
चासौ
विवाकश्चेति प्राड्विवाकः । उक्तञ्च ।
“विवादानुगतं पृष्ट्वा ससभ्यस्तत्
प्रयत्नतः ।
विचारयति येनासौ प्राड्विवाकस्ततः
स्मृतः ॥”
इति मिताक्षरा ॥

**प्राणः**, पुं, (प्राणिति जीवति बहुकालमिति ।

प्र + अन + अच् । प्राणित्यनेनेति
करणे घञ्
वा ।) ब्रह्मा । इति त्रिकाण्डशेषः ॥
हृन्मा-
रुतः । (यदुक्तम् ।

कः ।) सत्त्वजातीयः । प्राणिमात्रम् ।
जीवक-
द्रुमः । चोलः । इति मेदिनी । के,
११५ ॥

**प्राणथः**, पुं, (प्राणित्यनेनेति । प्र + अन प्राणने

+ “शीङ्शपिरुगमीति ।” उणा० ३ ।
११३ ।
इति अथः ।) वायुः । (प्राणितीति ।
कर्त्तरि
अथः ।) बलवान् । इत्युणादिकोषः
॥ प्रजा-
पतिः । तीर्थम् । इति
संक्षिप्तसारोणादिवृत्तिः ॥

**प्राणदं**, क्ली, (प्राणं प्राणनं बलं वा ददातीति ।

प्राण + दा + “आतोऽनुपेति ।” ३ ।
२ । ३ ।
इति कः ।) जलम् । रक्तम् । इति
हेमचन्द्रः ।
४ । १३६ ॥ (प्राणदातरि, त्रि ।
यथा, कथा-
सरित्सागरे । २८ । ९ ।
“अर्थप्रदानमेवाहुः संसारे सुमहत्
तपः ।
अर्थदः प्राणदः प्रोक्तः प्राणा ह्यर्थेषु
कीलिताः ॥”)

**प्राणदः**, पुं, (प्राणं ददातीति । दा + कः ।)

जीवकवृक्षः । इति राजनिर्घण्टः ॥

**प्राणदा**, स्त्री, (प्राणं जीवनं बलं वा ददातीति ।

दा कः । टाप् ।) ऋद्धिबृक्षः ।
हरीतकी ।
इति राजनिर्घण्टः ॥ (प्राणदात्री ।
यदुक्तम् ।
“यशोहरे किमाश्चर्य्यं प्राणदा
यमदूतिका ॥”)

**प्राणनं**, क्ली, (प्र + अन प्राणने + ल्युट् ।)
जीव-

नम् । इति जटाधरः ॥ (यथा,
भागवते । ३ ।

| | | |
|---|---|---|
| | “हृदिप्राणो गुदेऽपानः समानो<br>नाभिसंस्थितः ॥”)<br>वोलः । काव्यजीवः । अनिलः ।<br>बलम् । (यथा,<br>हरिवंशे । ८६ । ३६ ।<br>“बाहुप्राणेन शूराणां<br>समाजोत्सवसन्निधौ ॥”)<br>पूरिते, त्रि । इति मेदिनी ॥<br>सूक्ष्मशरीरसम-<br>ष्ट्युपहितचैतन्यम् ॥ प्राग्गमनवान्<br>नासाग्रस्थान | २६ । ४१ ।<br>“क्लेदनं पिण्डनं तृप्तिः<br>प्राणनाप्यायनोन्दनम् ।<br>तापापनोदो भूयस्त्वमम्भसो<br>वृत्तयस्त्विमाः ॥”<br>चेष्टनम् । यथा, ऋग्वेदे । १ । ४८ ।<br>१० ।<br>“विश्वस्य हि प्राणनं जीवनं त्वे<br>वियदुच्छसि<br>सूनरि ॥”<br>“हे सूनरि उषोदेवि विश्वस्य सर्व्वस्य<br>प्राणि-<br>जातस्य प्राणनं चेष्टनं जीवनं<br>प्राणधारणञ्च ।” |

इति तद्भाष्ये सायनः ॥ प्राणित्यनेनेति ।
करणे
ल्युट् ।) गले, पुं । इति शब्दचन्द्रिका ॥

**प्राणनाथः**, पुं, (प्राणानां नाथः ।) पतिः । इति

शब्दरत्नावली ॥ (यथा, साहित्यदर्पणे ३
परिच्छेदे ।
"चाटुकारमपि प्राणनाथं रोषादपास्य या ।
पश्चात्तापमवाप्नोति कलहान्तरिता तु सा
॥"
स्त्रियां टाप् । पत्नी । यथा, विष्णुस्तोत्रे । ९ ।
"धात्रीं स्थात्रीं जनित्रीं प्रकृतिमविकृतिं
विश्व-
शक्तिं विधात्रीं
विष्णोर्व्विश्वात्मनस्तां विपुलगुणमयीं
प्राणनाथां
प्रणौमि ॥")

**प्राणन्तः**, पुं, (प्राणित्यनेनेति । प्र + अन + "रुहि-

नन्दिजीविप्राणिभ्यः षिदाशिषि ।" उणा ० ३
।
१२७ । इति झच् ।) वायुः । इति सिद्धान्त-
कौमुद्यामुणादिवृत्तिः ॥ रसाञ्जनम् ।
इत्युणादि-
कोषः ॥

**प्राणन्ती**, स्त्री, (प्र + अन् झच् । स च षित् ।

षित्त्वात् ङीष् ।) क्षुत् । हिक्का । इत्युणादि-
कोषः ॥

**प्राणप्रदा**, स्त्री, (प्राणं प्रददातीति । प्र + दा + कः ।)

ऋद्धिनामकौषधम् । इति रत्नमाला ॥ (प्राण-
दातरि, त्रि । यथा, कथासरित्सागरे । २२ ।
८९ ।
"त्वाञ्च दृष्ट्वाधुनात्मीयो देवि ! प्राणप्रदः
सुहृत् ।
सार्थवाहसुतः श्रीमान् वसुदत्तो मया स्मृतः
॥")

**प्राणभास्वान्**, [त्] पुं, (प्राणेन वायुना जलेन

वा भास्वान् उद्दीप्तः ।) समुद्रः । इति शब्द-

"द्वे अङ्गसन्निहितेषु पञ्चवायुषु । अस्यन्ते
असवः
नाम्नीति उः । प्राणिति एभिः प्राणाः घञ् ।
एवमिति असुवत् प्राणा अपि पुं बहुत्वे
इत्यर्थः ।
असुप्राणशब्दाभ्यां बहुवचनान्ताभ्यां
पञ्चप्राणा-
दय उच्यन्ते न पुनरेकैकाभिधाने बहुवचनम्
अतएव प्राणोऽपान इत्युक्तं हृदि प्राणो गुदे-
ऽपान इत्यादि च दृश्यते ।" इति तट्टीकायां
भरतः ॥ (यथा हितोपदेशे । १ । ७३ ।
"प्राणा यथात्मनोऽभीष्टा भूतानामपि ते
तथा ।
आत्मौपम्येन भूतानां दयां कुर्व्वन्ति साधवः
॥"
शरीरस्थपञ्चप्राणा यथा, --
"प्राणोऽपानः समानश्चोदानव्यानौ च
वायवः ॥"
शरीरस्था इमे -- ॥"
इत्यमरः । १ । १ । ६७ ॥
"इमे प्राणादयः पञ्च वायवः शरीरे तिष्ठन्ति
ते
च नियतस्थानस्थाः ॥ यदाहुः ।
'हृदि प्राणो गुदेऽपानः समानो नाभि-
संस्थितः ।
उदानः कण्ठदेशे च व्यानः सर्व्वशरीरगः ॥'
एवं तद्व्यापाराश्च यथा, --
अन्नप्रवेशनं मूत्राद्युत्सर्गोऽन्नविपाचनम् ।
भाषणादिनिमेषादितद्ब्यापाराः क्रमादमी
॥"
इति च भरतः ॥
प्राणकराणि यथा, --
"सद्योमांसं नवान्नञ्च बालास्त्री क्षीरभोजनम्
।
घृतमुष्णोदकञ्चैव सद्यः प्राणकराणि षट् ॥"
प्राणहराणि यथा, --
"शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं
दधि ।
प्रभाते मैथुनं निद्रा सद्यःप्राणहराणि षट् ॥"

तत एतेन मन्त्रेण दद्याद्वै मधुपर्ककम् ।
पुरुषो मृत्युकाले तु परलोकसुखावहम्
॥
एवं विनिःसृतात् प्राणात् संसारञ्च न
गच्छति ।
नष्टसंज्ञं समुद्दिश्य ज्ञात्वा मृत्युवशं
गतम् ॥
महावनस्पतिं गत्वा गन्धांश्च
विविधानपि ॥
घृततैलसमायुक्तं कृत्वा वै देहशोधनम्
॥
तेजोव्ययकरं वास्य तत्सर्व्वं परिकल्प्य
च ।
दक्षिणायां शिरः कृत्वा सलिले तं
निधाय च ॥
तीर्थाद्यावाहनं कृत्वा स्नापनं तस्य
कारयेत् ॥
गयादीनि च तीर्थानि ये च पुण्याः
शिलो-
च्चयाः ।
कुरुक्षेत्रञ्च गङ्गा च यमुना च सरिद्वरा ॥
कौशिकी च पयोष्णी च
सर्व्वपापप्रणाशिनी ।
गण्डकी भद्रनामा च सरयूर्बलदा तथा
॥
वनानि नववाराहं तीर्थं पिण्डारकं तथा
।
पृथिव्यां यानि तीर्थानि चत्वारः
सागरास्तथा ।
सर्व्वाणि मनसा ध्यात्वा स्नानमेवन्तु
कारयेत् ॥
प्राणाद्गतन्तु तं ज्ञात्वा चितां कृत्वा
विधानतः ।
तस्या उपरि तं स्थाप्य दक्षिणाग्रं
शिरस्तथा ॥
देवानग्निमुखान् ध्यात्वा गृह्य हस्ते
हुताशनम् ।
प्रज्वाल्य विधिवत्तत्र मन्त्रमेतदुदाहरेत्
॥"

रत्नावली ॥

**प्राणमयकोषः**, पुं, (प्राणमयः कोषः आच्छादकः ।)

कर्म्मेन्द्रियसहितप्राणादिपञ्चकम् । इति वेदान्त-
सारः ॥

**प्राणसंयमः**, पुं, (प्राणानां संयमः ।) प्राणा-

यामः । यथा, "तदशक्तौ तच्चतुर्थमेवं प्राणस्य
संयमः ॥" इति तन्त्रसारः ॥

**प्राणसद्म**, [न्] क्ली, (प्राणानां सद्म गृहम् ।)

शरीरम् । इति केचित् ॥

**प्राणसमा**, स्त्री, (प्राणानां समा ।) पत्नी । इति

हेमचन्द्रः । ३ । १८० ॥ (यथा, गीतगोविन्दे ।
१ । ३८ ।
"नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षण-
प्राप्तपाणसमासमागमरसोल्लासैरमी वासराः ॥"
प्राणतुल्ये, त्रि । यथा, रामायणे । १ । १ । २६ ।
"रामस्य दयिता भार्य्या नित्यं पाणसमा हिता ॥"
तथा च तत्रैव । २ । ३१ । १० ।
"प्रियः प्राणसमो वश्यो विधेयश्च सखा च मे ॥"
पत्यौ, पुं । इति हेमचन्द्रः । ३ । १८० ॥)

**प्राणहारकं**, क्ली, (प्राणान् हरतीति । हृ +

ण्वुल् ।) वत्मनाभः । इति राजनिर्घण्टः ॥
असुनाशके, त्रि ॥

**प्राणाः**, पुं, (प्राणित्येभिरिति । प्र + अन + करणे

घञ् ।) असवः । इत्यमरः । २ । ९ । ११९ ॥

इति चाणक्यकर्म्मलोचने ॥
प्राणवियोगकालकर्त्तव्यंयथा, --
"कण्ठस्थानं गते जीवे भीतिविभ्रान्तमानसः ।
ज्ञात्वा च विह्वलं तत्र शीघ्रं निःसारयेद्गृहात् ॥
कुशास्तरणशायी च दिशः सर्व्वा न पश्यति ।
लब्धस्मृतिर्म्मुहूर्त्तात्तु यावज्जीवो न नश्यति ॥
वाचयेत् स्नेहभावेन भूमे देवा द्विजातयः ।
सुवर्णञ्च हिरण्यञ्च यथोत्पन्नेन माधवि ॥
परलोकहितार्थाय गोप्रदानं विशिष्यते ।
सर्व्वदेवमया गाव ईश्वरेणावतारिताः ॥
अमृतं क्षरयन्त्यश्च प्रचरन्ति महीतले ।
एतासाञ्चैव दानेन शीघ्रं मुच्येत किल्विषात् ॥
पश्चात् श्रुतिपथं दिव्यमुत्कर्णेन च श्रावयेत् ॥
यावत्प्राणान् प्रमुच्येत कृत्वा कर्म्म सुदुष्करम् ॥
दृष्ट्वा सुविह्वलं ह्येनं मम मार्गानुसारिणम् ।
प्रयाणकाले तु नरो मन्त्रेण विधिपूर्ब्बकम् ॥
मन्त्रेणानेन कर्त्तव्यं सर्व्वसंसारमोक्षणम् ।
मधुपर्कं त्वरन् गृह्य इदं मन्त्रमुदाहरेत् ॥"
मन्त्रः ।
"गृहाण चेमं मधुपर्कमाद्यं संसारनाशनकरं त्वमृतेन तुल्यम् ।
नारायणेन रचितं भगवत्-प्रियाणां दाहे च शान्तिकरणं सुरलोकपूज्यम् ॥
मन्त्रः ।
"कृत्वा तु दुष्करं कर्म्म जानता वाप्यजानता ।
मृत्युकालवशं प्राप्य नरः पञ्चत्वमागतः ॥
धर्म्माधर्म्मसमायुक्तो लोभमोहसमावृतः ।
दहेयं तस्य गात्राणि दैवलोकाय गच्छतु ॥
एवमुक्त्वा ततः शीघ्रं कृत्वा चैव प्रदक्षिणम् ।
ज्वलमानं तदा वह्निं शिरःस्थाने प्रदापयेत् ॥
चातुर्व्वर्ण्येषु संस्कारमेवम्भवति पुत्त्रक ! ।
गात्राणि वाससी चैव प्रक्षाल्य विनिवर्त्तयेत् ॥
मृतनाम तथोद्दिश्य दद्यात् पिण्डं महीतले ।
तदाप्रभृति चाशौचं दैवकर्म्म न कारयेत् ॥"
इति वराहपुराणे श्राद्धोत्पत्तिनामाध्यायः ॥

**प्राणा**, स्त्री, (प्राणिति बहुकालमिति । प्र + अन

+ अच् । टाप् ।) पक्षिणीविशेषः । सा
चारुणगरुडयोः श्वश्रूः । यथा, --
"पुलहस्त्यात्मजः सर्गः प्राणायास्तु निबोधत ।
कन्याः षडिति विख्याताः प्राणाया वै विजज्ञिरे ॥
श्येनी भासी तथा क्रौञ्ची धृतराष्ट्री शुनी शुकी ।
अरुणस्य भार्य्या श्येनी वीर्य्यवन्तौ महाबलौ ॥
सम्पातिश्च जटायुश्च प्रसूतौ पक्षिसत्तमौ ।
सम्पातिर्जनयन् गृध्रान् काकाः पुत्त्रा जटायुषः ॥
भार्य्या गरुत्मतश्चापि भासी क्रौञ्ची शुनी शुकी ॥"
इत्यग्निपुराणम् ॥

|  |  |  |
|---|---|---|
|  |  | **प्राणाधिनाथः**, पुं, (प्राणानामधिनाथः ।) पतिः । इति हलायुधः । २ । ३४२ ॥ **प्राणापानौ**, पुं, (प्राणश्च अपानश्च तौ । तदा- ख्यकौ वायू । यथा, विष्णुपुराणे । ६ । ७ । ४१ । "परस्परेणाभिभवं प्राणापानौ यदानिलौ ॥") अश्विनीकुमारौ । यथा, -- "प्राणापानौ कथं देवावश्विनौ संबभूवतुः ॥" इति प्रजापालप्रश्ने । |

महातपा उवाच ।
"तस्यां त्वाष्ट्र्यामश्वरूप्यां मार्त्तण्डस्तीव्रतेजसा ।
बीजं निर्व्वापयामास तज्जलं तद्द्विधापतत् ॥
तत्र प्राणस्त्वपानश्च योनौ चात्मजितौ पुरा ।
वरदानेन च पुनर्मूर्त्तिमन्तौ बभूवतुः ॥
तौ त्वाष्ट्र्यामश्वरूपिण्यां जातौ येन नरोत्तमौ ।
ततस्तावश्विनौ देवौ कीर्त्त्येते रविनन्दनौ ॥"
इति वाराहे अश्विनोत्पत्तिनामाध्यायः ॥

**प्राणायामः**, पुं, (प्राणस्य वायुविशेषस्य आयामो रोधः । यद्वा, प्राण आयम्यतेऽनेनेति । आ + यम् + करणे घञ् ।) योगाङ्गविशेषः । (यथा, भागवते । ३ । २८ । ११ ।
"प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्वि-षान् ।
प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान् गुणान् ॥")
तत्राङ्गुलिनियमो ज्ञानार्णवे ।
"कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम् ।
प्राणायामः स विज्ञेयस्तर्जनीमध्यमे विना ॥"
स द्विविधः । सगर्भो निर्गर्भश्च । तथा च ।
सगर्भो मन्त्रजापेन निर्गर्भो मात्रया भवेदिति ।
मात्रा च ।
"वामजानुनि तद्धस्तभ्रामणं यावता भवेत् ।
कालेन मात्रा सा ज्ञेया मुनिभिर्व्वेदपारगैः ॥"
अथ प्राणायामः । मूलमन्त्रस्य बीजस्य प्रणवस्य वा षोडशवारजपेन वामनासापुटे वायुं पूरयेत् ।
तस्य चतुःषष्टिवारजपेन वायुं कुम्भयेत् । तस्य द्वात्रिंशद्वारजपेन वायुं रेचयेत् । पुनर्द्दक्षिणे-नापूर्य्य उभाभ्यां कुम्भयित्वा वामेन रेचयेत् ।
पुनर्वामेनापूर्य्य उभाभ्यां कुम्भयित्वा दक्षिणेन रेचयेत् । तथा च कालीहृदये ।
"प्राणायामत्रयं कुर्य्यान्मूलेन प्रणवेन वा ।
अथवा मन्त्रबीजेन यथोक्तविधिना सुधीरिति ॥"
णेन पूरयेत् । उभाभ्यां कुम्भयेत् । पुनर्द्दक्षिणेन रेचयेत् । वामेनापूर्य्य उभाभ्यां कुम्भयेत् ।
तथा च ।
"एकेन रेचयेत् कामबीजेनैव पृथक् पृथक् ।
पूरयेत् सप्तजप्तेन विंशत्या तेन धारयेत् ॥
सर्व्वेषु कृष्णमन्त्रेषु बीजेनानेन रेचयेत् ॥"
यद्वा मूलमन्त्रेणैव प्राणायामः । तथा च ।
"पवनसंयमनन्त्वमुनाचरेत् यमिह जप्तुमसौ मनुमिच्छति ।"
यदि दशाक्षरं जपति तदा दशाक्षरेण चेत्तत्र चाष्टाविंशतिवारं रेचयेत् ।
"पूरयेद्वामया तद्वद्धारयेत्तत्प्रमाणतः ।
प्राणायामो भवेदेको रेचपूरककुम्भकैः ॥
अष्टादशाक्षरेण चेत् द्वादशैवं समाचरेत् ॥"
अन्यमनुभिर्वर्णानुरूपमित्युक्तत्वात् ।
तत्तन्मन्त्रवर्णसंख्याकै रेचकादित्रयं कुर्य्यात् ।
क्रमदीपिकायाम् । रेचयेन्मारुतं दक्षया दक्षिणः । पूरयेद्वामया मध्यनाड्या पुनर्धारये-दित्यादि । एतत्तु श्रीकृष्णमन्त्रविषयं नान्यत्र ।
इति तन्त्रसारः ॥ * ॥ अपि च ।
"आसनं पद्मकाद्युक्तं प्राणायामो मरुज्जयः ।
मन्त्रध्यानयुतो गर्भो विपरीतो ह्यगर्भकः ॥
अगर्भात्तु सगर्भस्थः प्राणायामस्ततोऽधिकः ।
एवं द्विधा त्रिधाप्युक्तः पूरणात् पूरकः स च ॥
कुम्भको निश्चलत्वात् स रेचनाद्रेचकस्त्रिधा ।
लघुर्द्वादशमात्रः स्याच्चतुर्व्विंशतिकः परः ॥
षट्त्रिंशन्मात्रिकः श्रेष्ठः प्रत्याहारश्च रोधनम् ॥"
इति गारुडे ४९ अध्यायः ॥ * ॥
तस्य फलं यथा, --
तस्माद्युक्तः सदा योगी प्राणायामपरो भवेत् ।
श्रूयतां मुक्तिफलदं तस्यावस्थाचतुष्टयम् ॥
ध्वस्तिः प्राप्तिस्तथा सम्बित्प्रसादश्च महीपते ! ।
स्वरूपं शृणु चैतेषां कथ्यमानमनुक्रमात् ॥
कर्म्मणामिष्टदुष्टानां जायते फलसंक्षयः ।
चेतसो विकषायत्वं यत्र सा ध्वस्तिरुच्यते ॥"
इष्टदुष्टानां पुण्यपापानाम् ।
"ऐहिकामुष्मिकान् कामान् लोभमोहात्मकांश्च यान् ।
निरुध्यास्ते सदा योगी प्राप्तिः सा सार्व्व-कामिकी ॥
अतीतानागतानर्थान् विप्रकृष्टतिरोहितान् ।
विजानन्तीन्दुसूर्य्यर्क्षग्रहाणां ज्ञानसम्पदा ॥
तुल्यप्रभावस्तु यदा योगी प्राप्नोति सम्बिदम् ।
तदा सम्बिदिति ख्याता प्राणायामस्य सा स्थितिः ॥
यान्ति प्रसादं येनास्य मनः पञ्च च वायवः ।
इन्द्रियाणीन्द्रियार्थाश्च स प्रसाद इति स्मृतः ॥
शृणुष्व च महीपाल ! प्राणायामस्य लक्षणम् ।
युञ्जतश्च यथायोगं यादृग्विहितमानसम् ॥"
इति मार्कण्डेयपुराणे योगिचिकित्सानामा-ध्यायः ॥ * ॥ अन्यच्च ।

सारसमुच्चयेऽपि ।
“विपरीतमतो विदधीत बुधः
पुनरेव तु तद्विपरीतकमिति ॥”
यौगिके पुनर्मात्रानियमः । तथा च गौतमीये ।
“मन्त्रः प्राणायामः प्रोक्तो यौगिकं कथयामि ते
।
पूरयेद्वामया विद्वान् मात्राषोडशसंख्ययेति ॥”
यद्वा, चतुःषोडशाष्टवारजपेन पूरकादिकं
कुर्य्यात् । अथवा एकचतुर्द्विवारेण । तथा च
तन्त्रान्तरे ।
“पूरयेत् षोडशभिर्व्वायुं धारयेत्तच्चतुर्गुणैः ।
रेचयेत् कुम्भकार्द्धेन अशक्त्या तत्तुरीयकैः ॥”
तदशक्तौ तच्चतुर्थमेव प्राणस्य संयमः । अस्य
नित्यत्वमाह तत्रैव ।
“प्राणायामं विना मन्त्रपूजने नहि योग्यता ॥”
गोपाले तु विशेषो यथा, --
कामबीजस्यैकवारजपेन दक्षिणनासया वायुं
रेचयेत् । पुनः सप्तवारजपेन वामनासया वायुं
पूरयेत् । नासापुटौ धृत्वा विंशतिवारजपेन
वायुं कुम्भयेत् । पुनर्वामेन रेचयेत् । दक्षि-

“प्रथमे जनयेत् स्वप्नं मध्यमेन च वेपथुम् ।
विपाकं हि तृतीयेन जयेद्दोषाननुक्रमात् ॥”
इति तत्रैव २३० अध्यायः ॥ * ॥
अन्यच्च ।
“यथा पर्व्वतधातूनां ध्मातानां दह्यते मलम्
।
तथेन्द्रियकृता दोषा दह्यन्ते प्राणनिग्रहात् ॥
प्रथमं साधनं कुर्य्यात् प्राणायामस्य
योगवित् ।
प्राणापाननिरोधस्तु प्राणायाम उदाहृतः ॥
लघुमध्योत्तरीयाख्यः प्राणायामस्त्रिधोदितः
।
तस्य प्रमाणं वक्ष्यामि तदलर्क ! शृणुष्व मे
॥
लघुर्द्वादशमात्रस्तु द्विगुणः स तु मध्यमः ।
त्रिगुणाभिश्च मात्राभिरुत्तरीय उदाहृतः ॥
निमेषोन्मेषणे मात्रा तालो लघ्वक्षरो मतः ।
प्राणायामस्य संख्यार्थं स्मृतो द्वादशमात्रकः
॥
प्रथमे जनयेत् स्वेदं मध्यमेन तु वेपथुम् ।
विषादं हि तृतीयेन जयेद्दोषाननुक्रमात् ॥
मृदुत्वं सेव्यमानास्तु सिंहशार्द्दूलकुञ्जराः ।
यथा यान्ति तथा प्राणो वश्यो भवति
योगिनः ॥
वश्यं सन्तं यथेच्छातो नागं नयति हस्तिपः
।
तथैव योगी छन्देन प्राणं नयति साधितम् ॥
यथा हि साधितः सिंहो मृगान् हन्ति न
मानुषान् ।
तद्वन्निषिद्धः पवनः किल्विषं न नृणां तनुम्
॥

“प्राणाख्यमनिलं वश्यमभ्यासात्
कुरुते तु यत् ।
प्राणायामः स विज्ञेयः सबीजोऽबीज
एव च ॥
परस्परेणाभिभवं प्राणापानौ यदानिलौ
।
कुरुतः सद्विधानेन तृतीयः संयमात्
तयोः ॥
तस्य चालम्बनवतः स्थूलरूपं
द्विजोत्तम ! ।
आलम्बनमनन्तस्य योगिनोऽभ्यसतः
स्मृतम् ॥”
एतेषां टीका । प्राणायाममाह
प्राणाख्यमिति ।
सबीजः सालम्बनो
भगवन्मूर्त्तिध्यानमन्त्रजप-
सहितः । द्विविधस्यापि तस्य
पुनस्त्रैविध्यमाह
परस्परेणेति । उच्छ्वासेन
मुखनासिकाभ्यां
बहिर्निर्गच्छति वायुः स प्राणः ।
निश्वासेनान्तः
प्रविशति यः सोऽपानः । तत्र
प्राणवृत्त्यापान-
वृत्तेरभिभवो निरोधो रेचकाख्यः
प्राणायामः ।
एवमपानवृत्त्या प्राणवृत्तेरभिभवः
पूरकाख्यः ।
एवमनेन परस्पराभिभवप्रकारद्वयेन स
प्राणा-
यामो द्विधा । तयोर्युगपत्संयमात्
कुम्भकाख्य-
स्तृतीयः प्राणायामः । यद्वा ।
सद्विधानेनेत्येक-
मेव पदम् । तत्र चायमर्थः ।
सद्विधानेन सद्-
गुरूपदिष्टमार्गेण रेचकपूरकाभ्यां यत्
पर-
स्पराभिभूतं द्वयं यश्च कुम्भकेनोभयोः
सहाभि-

| | | |
|---|---|---|
| | | भवः । एवमभिभवत्रयेणैव प्राणायाम इति । सबीजस्यालम्बनमाह। तस्य चेति । स्थूलं वक्ष्यमाणं हिरण्यगर्भादिरूपम्।" इति विष्णु- पुराणे ६ अंशे ७ अध्यायः ॥ * ॥ गायत्री- प्राणायामो यथा, -- "सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह । त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ प्राणायामत्रयं कृत्वा प्राणायामैस्त्रिभिस्त्रिभिः। अहोरात्रकृतात् पापान्मुच्यते नात्र संशयः ॥ सर्व्वपापहरं प्रोक्तं प्राणायामं द्विजन्मनाम्। |

ततस्त्वभ्यधिकं नास्ति तपः
परमपावनम् ॥
प्राणसंधारणं मासं कुशाग्रच्युतबिन्दुना ।
यः कुर्य्यात् प्रयतो नित्यं प्राणायामस्तु
तत्समः ॥
निरोधाज्जायते वायुस्तस्मादग्निस्ततो
जलम् ।
त्रिभिः शरीरं सकलं प्राणायामेन
शुद्ध्यति ॥
आकेशादानखाग्राच्च तपस्तप्येत्
सुदारुणम् ।
आत्मानं शोधयेद्यस्तु प्राणायामैः पुनः
पुनः ॥
श्रावण्यां पौर्णमास्याञ्च सोपवासो
जितेन्द्रियः ।
प्राणायामशतं कृत्वा मुच्यते
सर्व्वकिल्विषैः ॥”
इत्यग्निपुराणम् ॥

**प्राणिद्यूतं**, क्ली, (प्राणिभिर्मेषादिभिः कृतं द्यूत-
मिति मध्यपदलोपी समासः ।)
पणपूर्ब्बकमेष-
कुक्कुटादियुद्धम् । तत्पर्य्यायः ।
समाह्वयः २ ।
इत्यमरः । २ । १० । ४६ ॥ साह्वयः ३
। इति
शब्दरत्नावली ॥

**प्राणिमाता**, स्त्री, (प्राणिनां मातेव गर्भदातृ-
त्वात् ।) गर्भदात्रीक्षुपः । इति
राजनिर्घण्टः ॥

**प्राणिहिता**, स्त्री, (प्राणिनां हिता ।) पादुका ।
इति त्रिकाण्डशेषः ॥ लोकहितकारिणी
च ॥

**प्राणी**, [न्] त्रि, (प्राणाः सन्त्यस्येति । प्राण +
“अत इनिठनौ ।” ५ । २ । ११५ । इति
इनिः ।)
प्राणविशिष्टः । मनुष्यादिः । तत्पर्य्यायः
। चेतनः

उषःकालेऽथ संप्राप्ते कृत्वा चावश्यकं
बुधः ।
स्नायान्नदीषु शुद्धासु शौचं कृत्वा
यथाविधि ॥
प्रातःस्नानेन शुध्यन्ति येऽपि पापकृतो
जनाः ।
तस्मात् सर्व्वप्रयत्नेन प्रातःस्नानं
समाचरेत् ॥
प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं शुभम्
।
ऋषीणां शुचिता नित्यं प्रातःस्नानान्न
संशयः ॥
मुखे सुप्तस्य सततं लालाद्याः प्रस्रवन्ति
हि ।
ततो नैवाचरेत् कर्म्माण्यकृत्वा
स्नानमादितः ॥
अलक्ष्मीः कालकर्णी च दुःस्वप्नं
दुर्विचिन्तितम् ।
प्रातःस्नानेन पापानि पूयन्ते नात्र संशयः
॥
न च स्नानं विना पुंसां पावनं प्रत्यहं
स्मृतम् ।
होमे जप्ये विशेषेण तस्मात् स्नानं
समाचरेत् ॥
अशक्तावशिरस्कं वा स्नानमस्य
विधीयते ।
आर्द्रेण वाससा चाथ मार्जनं कायिकं
स्मृतम् ॥
अप्रायत्ये समुत्पन्ने स्नानमेव समाचरेत् ।
ब्राह्मादीनि यथाशक्तौ
स्नानान्याहुर्म्मनीषिणः ॥
ब्राह्ममाग्नेयमुद्दिष्टं वायव्यं दिव्यमेव च ।
वारुणं यौगिकं तद्वत षोढास्नानं
प्रकीर्त्तितम् ॥
ब्राह्मन्तु मार्ज्जनं मन्त्रैः कुशैः
सोदकबिन्दुभिः ।
आग्नेयं भस्मना पादमस्तकादिविधूननम्
॥

अनन्यचेतसः शान्ता ब्राह्मणा वेदपारगाः ।
उपास्य विधिषत् सन्ध्यां प्राप्ताश्च परमां
गतिम् ॥
योऽन्यत्र कुरुते यत्नाद्धर्म्मकार्य्यं द्विजोत्तमः ।
विहाय सन्ध्याप्रणतिं स याति नरकायुतम् ॥
तस्मात् सर्व्वप्रयत्नेन सन्ध्योपासनमाचरेत् ।
उपासितो भवेत्तेन देवो योगतनुः परः ॥
सहस्रपरमां नित्यं शतमध्यां दशावराम् ।
सावित्रीं वै जपेद्विद्वान् प्राङ्मुखः प्रयतः स्थितः
॥
अथोपतिष्ठेदादित्यमुदयन्तंसमाहितः ।
मन्त्रैस्तु विविधैः सौरैरृग्यजुःसामसम्भवैः ॥
उपस्थाय महायोगं देवदेवं दिवाकरम् ।
कुर्व्वीत प्रणतिं भूमौ मूद्ध‍र्ना नित्यञ्च मन्त्रतः
॥ * ॥
ॐ खं खखोल्काय शान्ताय कारणत्रयहेतवे ।
निवेदयामि चात्मानं नमस्ते ज्ञानरूपिणे ॥
नमस्ते घृणये तुभ्यं सूर्य्याय ब्रह्मरूपिणे ।
त्वमेव ब्रह्म परममापो ज्योती रसोऽमृतम् ॥
भूर्भुवः स्वस्त्वमोङ्कारः सर्व्वे रुद्राः सनातनाः
।
पुरुषः सन्महोऽतस्त्वां प्रणमामि कपर्द्दिनम् ॥
त्वमेव विश्वं बहुधा सदसत् सूयसे च यत् ।
नमो रुद्राय सूर्य्याय त्वामहं शरणं गतः ॥
प्राचेतसे नमस्तुभ्यमुमायाः पतये नमः ।
नमोऽस्तु नीलग्रीवाय नमस्तुभ्यं पिनाकिने ॥
विलोहिताय भर्गाय सहस्राक्षाय ते नमः ।
नम उमापतये तुभ्यमादित्याय नमोऽस्तु ते ॥
नमस्ते बहुहस्ताय त्र्यम्बकाय नमोऽस्तु ते ।
प्रपद्ये त्वां विरूपाक्ष ! महान्तं परमेश्वरम् ॥
हिरण्मये गृहे गुप्तमात्मानं सर्व्वदेहिनाम् ।
नमस्यामि परं ज्योतिर्ब्रह्माणं त्वां परामृतम् ॥
विश्वं पशुपतिं भीमं नरनारीशरीरिणम् ।
नमः सूर्य्याय रुद्राय भास्वते परमेष्ठिने ।
उग्राय सर्व्वभक्ष्याय त्वां प्रपद्ये सदैव हि ॥ *
॥
एतद्वै सूर्य्यहृदयं जप्त्वा स्तवमनुत्तमम् ।
प्रातःकालेऽथ मध्याह्ने नमस्कुर्य्याद्दिवाकरम्
॥

२ जन्मी ३ जन्तुः ४ जन्युः ५ शरीरी ६ । इत्य-
मरः । १ । ४ । ३० ॥ (यथा, मनौ । १ । २२ ।
"कर्म्मात्मनाञ्च देवानां सोऽसृजत् प्राणिनां
प्रभुः ।
साध्यानाञ्च गणं सूक्ष्मं यज्ञञ्चैव सनातनम् ॥")

**प्राणीत्यं**, क्ली, (प्रणीतस्य प्रयोजितस्य भावः ।
प्रणीत + ष्यञ् ।) ऋणम् । यथा, त्रिकाण्डशेषः ।
"प्राणीत्यमृणमर्थानां प्रयोगः स्यात् कला-
म्बिका ॥"

**प्राणेशः**, पुं, (प्राणानामीशः ।) पतिः । इति
जटाधरः ॥ (यथा, साहित्यदर्पणे ३ परिच्छेदे ।
"स्वामिन् ! भङ्गुरयालकं सतिलकं भालं विला-
सिन् ! कुरु
प्राणेश ! त्रुटितं पयोधरतटे हारं पुन-
र्योजय ॥")

**प्राणेशा**, स्त्री, (प्राणानामीशा ।) भार्य्या । इति
हेमचन्द्रः ॥

**प्रातः**, [र्] व्य, (प्राततीति । प्र + अत् + "प्रातते
ररन् ।" उणा० ५ । ५९ । इति अरन् ।)
प्रभातम् । तत्पर्य्यायः । प्रगे २ । इत्यमरः ।
३ । ४ । १९ ॥
सूर्य्योदयावधित्रिमुहूर्त्तकालः । यथा, --
"प्रातःकालो मुहूर्त्तांस्त्रीन्
सङ्गवस्तावदेव तु ॥"
इति तिथ्यादितत्त्वम् ॥
(यथा, रघौ । १ । ९० ।
"प्रयता प्रातरन्वे तु सायं प्रत्युद्व्रजेदपि
॥")

गवां हि रजसा प्रोक्तं वायव्यं स्नानमुत्तमम् ।
यत्तु सातपवर्षेण स्नानन्तद्दिव्यमुच्यते ॥
वारुणञ्चावगाह्यन्तु मानसन्त्वात्मवेदनम्
।
यौगिकं स्नानमाख्यातं योगो विष्णुविचिन्तनम् ॥
आत्मतीर्थमिति ख्यातं सेवितं ब्रह्मवादिभिः ॥
मनःशुचिकरं पुंसां नित्यन्तत्स्नानमाचरेत् ।
शक्तश्चेव्वारुणं विद्वान् प्राजापत्यन्तथैव
च ॥ * ॥
प्रक्षाल्य दन्तकाष्ठं वै भक्षयित्वा विधानतः ।
आचम्य प्रयतो नित्यं स्नानं प्रातः समाचरेत् ॥
मध्याङ्गुलसमस्थौल्यं द्वादशाङ्गुलसम्मितम् ।
सत्वचं दन्तकाष्टं स्यात्तस्याग्रेण च धावयेत् ॥
क्षीरिवृक्षसमुद्भूतं मालतीसम्भवं शुभम् ।
अपामार्गञ्च विल्वञ्च करवीरं विशेषतः ॥
वर्ज्जयित्वा निन्दितानि गृहीत्वैनं यथोदितम् ।
परिहृत्य दिनं पापं भक्षयित्वा विधानतः
॥
नोत्पाटयेद्दन्तकाष्ठं नाङ्गुल्या धावयेत् क्वचित् ।
प्रक्षाल्य भुक्त्वा तज्जह्याच्छुचौ देशे समाहितः ॥
स्नात्वा सन्तर्पयेद्देवानृषीन् पितृगणांस्तथा ।
सम्मार्ज्य मन्त्रै रात्मानं कुशैः सोदकबिन्दुभिः ॥
आपोहिष्ठाव्याहृतिभिः सावित्र्या वारुणैः
शुभैः ।
ओँकारयाहृतियुतां गायत्रीं देवमातरम् ।
जप्त्वा जलाञ्जलिं दद्याद्भास्करं प्रति तन्मनाः ॥

इदं पुत्राय शिष्याय धार्म्मिकाय द्विजातये ।
प्रदेयं सूर्य्यहृदयं ब्रह्मणा तु प्रदर्शितम् ॥
सर्व्वपापप्रशमनं वेदसारं समुद्धृतम् ।
ब्राह्मणानां हितं पुण्यं ऋषिसंघैर्निषेवितम् ॥
यस्तु नित्यं पठेद्धीमान् प्रेक्षन्नादित्यमण्डलम् ।
महापातकयुक्तोऽपि पूयते नात्र संशयः ॥
क्षयापस्मारकुष्ठाद्यैर्व्याधिभिः पीडितोऽपि सन्
।
जप्त्वा शतगुणं स्तोत्रं स श्लाघ्यो भवति द्रुतम्
॥
भूतग्रहपिशाचातिबीजव्यसनकर्षिभिः ।
स्तुवन् ध्यात्वा हरिं विप्रो मुच्यते महतो भयात् ॥
अथागत्य गृहं विप्रः समाचम्य यथाविधि ।
प्रज्वाल्य वह्निं विधिवज्जुहुयाज्जातवेदसम् ॥
ऋत्विक्पुत्रोऽथ पत्नी वा शिष्यो वापि सहो-
दरः ।
प्राप्यानुज्ञां विशेषेण जुहुयुर्व्वा यथाविधि ॥
पवित्रपाणिः पूतात्मा शुक्लाम्बरधरोत्तरः ।
अनन्यमानसो भूत्वा जुहुयात् संयतेन्द्रियः ॥
विना दर्भेण यत् कर्म्म विना मन्त्रेण वा पुनः ।
राक्षसं तद्भवेत् सर्व्वं नामुत्रेह फलप्रदम् ॥ * ॥

**प्रातःकृत्यं**, क्ली, (प्रातः प्रभातकालस्य कृत्यं कर्त्तव्या

क्रिया ।) प्रभातकर्त्तव्यकर्म्म । तदनुष्ठानं यथा,

"ब्राह्मे मुहूर्त्ते उत्थाय धर्म्ममर्थञ्च चिन्तयेत् ।

कायक्लेशन्तदुद्भूतं ध्यायेत्तु मनसेश्वरम् ॥

प्राक्कूलेषु समासीनो दर्भेषु सुसमाहितः ।

प्राणायामत्रयं कृत्वा ध्यायेत् सन्ध्यामिति स्मृतिः ॥

या सन्ध्या सा जगत्सूतिर्म्मायातीता च निष्कला ।

ऐश्वरी तु परा शक्तिस्तत्तन्मन्त्रसमुद्भवा ॥

ध्यात्वार्कमण्डलगतां सावित्रीं वै जपन् बुधः ।

प्राङ्मुखः सततं विप्रः सन्ध्योपासनमाचरेत् ॥

सन्ध्याहीनोऽशुचिर्न्नित्यमनर्हः सर्व्वकर्म्मसु ।

यदन्यत् कुरुते किञ्चित् न तस्य फलमाप्नुयात् ॥

दवतानि नमस्कुर्य्याद्दियमारान्निवेदयेत् ।
दद्यात् पुष्पादिकं तेषां वृद्धांश्चैवाभिवादयेत् ॥
गुरुञ्चैवाभ्युपासीत हितञ्चास्य समाचरेत् ।
वेदाभ्यासं ततः कुर्य्यात् प्रयत्नाद्भक्तितो द्विजः ॥
जपेदध्यापयेच्छिष्यान् श्रावयेच्च विधारयेत् ।
अवेक्षेत च शास्त्राणि धर्म्मादीनि द्विजोत्तमः ॥
वैदिकांश्चैव नियमान् वेदाङ्गानि विशेषतः ।
उपेयादीश्वरञ्चाथ योगक्षेमप्रसिद्धये ॥
साधयेद्विविधानर्थान् कुटम्बार्थे ततो द्विजः ॥”
इति कौर्म्मे उपविभागे १७ अध्यायः ॥ * ॥
अपि च ।
“प्रातः शिरसि शुक्लाब्जे द्विनेत्रं द्विभुजं गुरुम् ।
प्रसन्नवदनं शान्तं स्मरेत्तन्नामपूर्ब्बकम् ॥”
ॐ नमो गुरवे तस्मा इष्टदेवस्वरूपिणे ।
यस्य वाक्यामृतं हन्ति विषं संसारसंज्ञकम् ॥”
इति पठेत् ॥
“अहं देवो न चान्योऽस्मि ब्रह्मैवास्मि न शोक-भाक् ।
सच्चिदानन्दरूपोऽहं नित्यमुक्तस्वभाववान् ॥”
इति भावयेत् ।
“लोकेश ! चैतन्यमयादिदेव
श्रीकान्त विष्णो भवदाज्ञयैव ।
प्रातः समुत्थाय तव प्रियार्थं
संसारयात्रामनुवर्त्तयिष्ये ॥
जानामि धर्म्मं न च मे प्रवृत्ति-
र्जानाम्यधर्म्मं न च मे निवृत्तिः ।
त्वया हृषीकेश ! हृदि स्थितेन
यथा नियुक्तोऽस्मि तथा करोमि ॥”
विष्णुपुराणे ।
“प्रबुद्धश्चिन्तयेद्धर्म्ममर्थञ्चास्याविरोधिनम् ।
अपीडया तयोः काममुभयोरपि चिन्तयेत् ॥”
धर्म्मलक्षणन्तु भविष्ये ।
“धर्म्मः श्रेयः समुद्दिष्टं श्रेयोऽभ्युदयसाधनम् ॥”
अतएव जैमिनिः । चोदनालक्षणोऽर्थो धर्म्म इति । तेन वैदिकलिङ्प्रतिपाद्योऽर्थो धर्म्मः । कोऽर्थो योऽभ्युदयाय इति तु भविष्ये ॥ * ॥
ततः ॐ प्रियदत्तायै भुवे नमः । इति नमस्कृत्य दक्षिणं चरणं न्यसेत् । छन्दोगपरिशिष्टम् ।

कल्यं प्रातः ॥ * ॥
अथ विण्मूत्रोत्सर्गः । विष्णुधर्म्मोत्तरे ।
“निद्रां जह्याद्गृही राम !
नित्यमेवारुणोदये ।
वेगोत्सर्गं ततः कृत्वा दन्तधावनपूर्ब्बकम् ॥
स्नानं समाचरेत् प्रातः
सर्व्वकल्मषनाशनम् ॥”
अरुणोदयकालमाह स्कन्दपुराणम् ।
“उदयात् प्राक् चतस्रस्तु नाडिका
अरुणोदयः ।
तत्र स्नानं प्रशस्तं स्यात्तद्धि पुण्यतमं स्मृतम् ॥”
नाडिका दण्डः । विष्णुधर्म्मोत्तरे ।
“वेगरोधं न कर्त्तव्यमन्यत्र क्रोधवेगतः ।”
आयुर्व्वेदीयेऽपि । न
वेगितोऽन्यकार्य्यसिद्धिः
स्यान्नाजित्वा साध्यमामयम् । अङ्गिराः ।
“उत्थाय पश्चिमे रात्रेस्तत आचम्य
चोदकम् ।
अन्तर्द्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा ॥
वाचं नियम्य यत्नेन
ष्ठीवनोच्छासवर्ज्जितः ॥
कुर्य्यान्मूत्रपुरीषे तु शुचौ देशे समाहितः ॥”
विष्णुपुराणम् ।
“ततः कल्यं समुत्थाय कुर्य्यान्मैत्रं
नरेश्वर ! ।
नैरृत्यामिषुविक्षेपमतीत्याभ्यधिकं भुवः ॥
तिष्ठेन्नातिचिरं तत्र नैव किञ्चिदुदीरयेत् ॥”
कल्यमुषःकालम् । मैत्रं
मित्रदेवताकपायुसम्ब-
न्धात् पुरीषोत्सर्गः ।
नैरृत्यामुत्थानदेशमारभ्य
उत्थायेत्यनेन उपस्थितेः
इषुप्रक्षेपयोग्यदेशा-
द्बहिः । तद्देशपरिमाणमाह पितामहः ।

कृत्वा पृष्ठलम्बितं स्कन्धे इत्यर्थः ।
एकवस्त्रता-
पक्षे व्यवस्थामाह सांख्यायनः ।
यद्येकवस्त्रो
यज्ञोपवीतं कर्णे कृत्वा अवगुण्ठित
इति । कर्णे
दक्षिणे । पवित्रं दक्षिणे कर्णे
विण्मूत्रमाचरे-
दिति स्मृतौ तथा दर्शनात् ।
अवगुण्ठितः कृत-
शिरोऽवगुण्ठनः । मनुः ।
“छायायामन्धकारे वा रात्रावहनि वा
द्विजः ।
यथासुखमुखः कुर्य्यात् प्राणवाधभयेषु
च ॥”
महाभारते ।
“प्रत्यादित्यं प्रतिजलं प्रति गाञ्च प्रति
द्विजम् ।
मेहन्ति ये च पथिषु ते भवन्ति
गतायुषः ॥”
प्रतिः सांमुख्ये ॥ * ॥ मनुः ।
“न मूत्रं पथि कुर्व्वीत न भस्मनि न
गोव्रजे ।
न फालकृष्टे न जले न चित्यां न च
पर्व्वते ॥
न जीर्णदेवायतने न वल्मीके कदाचन
।
न ससत्त्वेषु गर्त्तेषु न गच्छन्नापि
संस्थितः ॥
न नदीतीरमासाद्य न च पर्व्वतमस्तके
।
गवाग्निविप्रानादित्यमपः पश्यंस्तथैव
च ॥
न कदाचन कुर्व्वीत विण्मूत्रस्य
विसर्ज्जनम् ।
ससत्त्वेषु प्राणिमत्सु । संस्थित
उत्थितः
पर्व्वतनिषेधादेव मस्तकनिषेधे सिद्धे
पुनर्निषेधं

“श्रोत्रियं सुभगामग्निं गाञ्चैवाग्निचितं तथा ।
प्रातरुत्थाय यः पश्येदापद्भ्यः स विमुच्यते ॥
पापिष्ठं दुर्भगां मद्यं नग्नमुत्कृत्तनासिकम् ।
प्रातरुत्थाय यः पश्येत्तत् कलेरुपलक्षणम् ॥”
अतएव व्यासः ।
“धनिनः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः ।
पञ्च यत्र न विद्यन्ते तत्र वासं न कारयेत् ॥”
महाभारते ।
“कर्कोटकस्य नागस्य दमयन्त्या नलस्य च ।
ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनम् ॥”
मात्स्ये ।
“कार्त्तवीर्य्यार्ज्जुनो नाम राजा बाहुसहस्रभृत् ।
योऽस्य संकीर्त्तयेन्नाम कल्यमुत्थाय मानवः ॥
न तस्य वित्तनाशः स्यान्नष्टञ्च लभते पुनः ॥”

“मध्यमेन तु चापेन प्रक्षिपेत्तु शरत्रयम् ।
हस्तानाञ्च शते सार्द्धे लक्ष्यं कृत्वा
विचक्षणः ॥”
आपस्तम्बः ।
“मूत्रपुरीषोत्सर्गं कुर्य्याद्दक्षिणां दिशं
दक्षिणा-
परां वेति ।” दक्षिणापरां नैरृतीम् । मनुः ।
“मूत्रोच्चारसमुत्सर्गं दिवा कुर्य्यादुदङ्मुखः
।
दक्षिणाभिमुखो रात्रौ सन्ध्ययोश्च यथा
दिवा ॥”
यत्तु यमवचनम् ।
“प्रत्यङ्मुखश्च पूर्ब्बाह्णे त्वपराह्णे च
प्राङ्मुखः ।
उदङ्मुखस्तु मध्याह्ने निशायां
दक्षिणामुखः ॥”
इति तदिच्छाविकल्पार्थं
सूर्य्याभिमुखनिरा-
सार्थञ्च न तु नियमार्थं
देवलवचनविरोधात् ।
तथा च देवलः ।
“सदैवोदङ् मुखः प्रातः सायाह्ने
दक्षिणामुखः ।
विण्मूत्रमाचरेन्नित्यं सन्ध्यायां
परिवर्ज्जयेदिति ॥”
अत्र प्रातःसायाह्नशब्दौ दिवारात्रिपरौ
पूर्ब्बोक्तमनुवचनैकवाक्यत्वात् ।
सन्ध्यायां परि-
वर्ज्जयेदिति तु पीडितेतरपरम् ॥ * ॥
यमः ।
“कृत्वा यज्ञोपवीतन्तु पृष्ठतः
कण्ठलम्बितम् ।
विण्मूत्रे च गृही कुर्य्याद्यद्वा कर्णे
समाहितः ॥”
पृष्ठतः पृष्ठे कण्ठलम्बितं निवीतं तत् पृष्ठ-
लम्बितं निवीतमापृष्ठदेशावलम्बं
ग्राम्यधर्म्मेष्विति
निगमपरिशिष्टवचनात् ।
“नियम्य प्रयतो वाचं
संवीताङ्गोऽवगुण्ठितः ॥”
इति मनुवचनाच्च ॥

यत्र पर्व्वतोऽशक्यपरीहारस्तत्रापि
मस्तकवर्ज्ज
नार्थः । अथवा ।
पर्व्वतमस्तकनिषेधोऽधिक
दोषाय ॥ * ॥ वशिष्ठः ।
“आहारनिर्हारविहारयोगाः
सुसंवृता धर्म्मविदा तु कार्य्याः ।
वाग्बुद्धिगुप्ती च तपस्तथैव
धनायुषी गुप्ततमे तु कार्य्ये ॥”
निर्हारो मूत्रपुरीषोत्सगः । विहारः
स्त्रीसं-
भोगः । योगः समाधिः ।
वाग्गुप्तिरशुभालाप-
त्यागः । बुद्धिगुप्तिरनिष्टचिन्तात्यागः।
हारीतः ।
“आहारन्तु रहः कुर्य्यान्निर्हारञ्चैव
सर्व्वदा ।
गुप्ताभ्यां लक्ष्म्यपेतः स्यात् प्रकाशे
हीयते तथा ॥”
विष्णुपुराणम्
“सोमाग्न्यर्काम्बुवायूनां पूज्यानाञ्च न
संमुखम् ।
कुर्य्यात् ष्ठीवनविण्मूत्रसमुत्सर्गञ्च
पण्डितः ॥”
आपस्तम्बः । “न च सोपानत्को
मूत्रपुरीषे
कुर्य्यादिति ।” बृहन्मनुः ।
“करगृहीतपात्रेण कृत्वा मूत्रपुरीषके ।
मूत्रतुल्यन्तु पानीयं पीत्वा
चान्द्रायणञ्चरेत् ॥”
भरद्वाजः ।
“अथावकृष्यविण्मूत्रं
लोष्टकाष्ठतृणाद्विना ।
उदस्तवासा उत्तिष्ठेद्दृढं विधृतमेहनः
॥” * ॥
उदस्तवासाः
कटिदेशादूर्द्ध्वक्षिप्तवस्त्रः ।
अथ शौचम् । देवलः ।
“धर्म्मविद्दक्षिणं हस्तमधःशौचे न
योजयेत् ।

|  | अत्र संवीतं निवीतं संवीतं मानुष इति तैत्ति-<br>रीयश्रुतेः । मानुषे सनकादिकृत्ये । पृष्ठलम्बितं<br>निवीती वेति वौधायनीयाच्च । ततश्च हारवत् | तथैव वामहस्तेन नाभेरुद्ध्वं न शोधयेत् ।<br>प्रकृतिस्थितिरेषा स्यात् कारणादुभयक्रिया ॥"<br>कारणाद्रोगादेः । ब्रह्माण्डपुराणम् ।<br>"उद्धृतोदकमादाय मृत्तिकाञ्चैव वाग्यतः ।<br>उदङ्मुखो दिवा कुर्य्याद्रात्रौ चेद्दक्षिणामुखः ॥<br>सुनिर्णिक्ते मृदं दद्यान्मृदन्ते त्वप एव च ॥" |
|---|---|---|

कुर्य्याच्छौचमिति शेषः । सुनिर्निक्ते भरद्वाजोक्त-
लोष्टादिप्रमृष्टे गुदे । उदकपात्राभावे करेण जलाशयात् उदकग्रहणमाह
आदित्यपुराणम् ।
"रत्निमात्रं जलं-त्यक्त्वा कुर्य्याच्छौचमनुद्धृते ।
पश्चाच्च शोधयेत्तीर्थमन्यथा न शुचिर्भवेत् ॥"
तस्मिन् देशे शौचं कर्त्तव्यं यस्माद्रत्निमात्रव्यव-
हितं जलं तत्स्थलमेव तीर्थं जलसमीपत्वात् ॥ * ॥
विष्णुपुराणम् ।
"वल्मीकमूषिकोत्खातां मृदमन्तर्जलान्तथा ।
शौचावशिष्टां गेहाच्च नादद्याल्लेपसम्भवाम् ॥
अन्तःप्राण्यवपन्नाञ्च हलोत्खातां सकर्द्दमाम् ॥"
मनुदक्षौ ।
"एका लिङ्गे गुदे तिस्रस्तथा वामकरे दश ।
उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता ॥"
उभयोः करयोः । वामहस्ते दशदानानन्तरं तत्पृष्ठे षड्दानमाह हारीतः । दशमध्ये च षट् पृष्ठे इति । शङ्खदक्षौ ।
"तिस्रस्तु मृत्तिका देयाः कृत्वा तु नखशोधनम् ।
तिस्रस्तु पादयोर्देयाः शुद्धिकामेन नित्यशः ॥"
नखशोधनं तृणादिना नखान्तर्मलशोधनम् ।
तिस्र इति हस्तयोरिति शेषः ॥ * ॥
पादप्रक्षालनं न कांस्ये कर्त्तव्यमित्याह विष्णु-
धर्म्मोत्तरम् ।
"दर्भैर्न मार्ज्जयेत् पादौ न च कांस्ये प्रधावयेत् ॥"
ब्रह्मपुराणे ।
"न यावदुपनीयेत द्विजः शूद्रस्तथाङ्गना ।
गन्धलेपक्षयकरं शौचं तेषां विधीयते ॥
प्रमाणं शौचसंख्या वा न शिष्टैरुपदिश्यते ।
यावच्च शुद्धिं मन्येत तावत शौचं समाचरेत् ॥"
दक्षः ।
"न्यूनाधिकं न कर्त्तव्यं शौचं शुद्धिमभीप्सता ।
प्रायश्चित्तं प्रसज्जेत विहितातिक्रमे कृते ॥
शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः ॥"
गन्धलेपक्षये सत्यधिकं न कर्त्तव्यं पूर्ब्बोक्तयाज्ञ-
वल्क्यविरोधात् । गन्धलेपाक्षये त्वधिकसंख्य-
यापि । याज्ञवल्क्यवचनमनुपनीतादिपरं वा
पूर्ब्बोक्तब्रह्मपुराणैकवाक्यत्वात् ॥ * ॥
"एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।
त्रिगुणन्तु वनस्थानां यतीनाञ्च चतुर्गुणम् ॥"
इदन्तु द्वैगुण्यादिकं संख्यामात्रे तदनन्तराभि-
धानात् । व्याघ्रपादः ।
"शौचन्तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ।
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथापरम् ॥
गङ्गातोयेन कृत्स्नेन मृद्भारैश्च नगोपमैः ।
आमृत्योः स्नातकश्चैव भावदुष्टो न शुध्यति ॥"
स्मृतिः ।
"धावन्तञ्च प्रमत्तञ्च मूत्रोच्चारकृतन्तथा ।
सव्यं पादं प्रक्षालयेत् । दक्षिणं पादमवनेनिज इति दक्षिणं पादं प्रक्षालयेदिति अर्हणीये तथादर्शनात् सर्व्वत्र तथा कल्प्यते ।
पारस्करः ।
सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयतीति सूत्रेण
प्राक् सव्यपादप्रक्षालने सिद्धे सव्यं प्रक्षाल्य दक्षिणं प्रक्षालयतीत्यत्र सव्यग्रहणं सामान्यार्थं
तेनान्यस्यापि पादप्रक्षालने सव्यस्यैव प्राथम्यम्
अन्यार्थं पुनर्व्वचनमिति न्यायात् । अन्यार्थमधि-
कार्थम् । ब्राह्मणश्चेद्दक्षिणं प्रथममिति सूत्रं तस्य पादौ यदि ब्राह्मणः प्रक्षालयति तदा दक्षिणं प्रथममिति न सव्यम् । यथा प्रक्षाल-
यतीत्यनुवृत्तौ आश्वलायनः । दक्षिणमग्रे ब्राह्म-
णाय प्रयच्छेत् सव्यं शूद्रायेति । स्वयं प्रक्षालने
सव्यस्यैव प्राथम्यमिति एवं हरिशर्म्मापि ।
आचमने पाणिपादप्रक्षालनं मूत्राद्युत्सर्गे ।
यथा वृद्धपराशरः ।
"कृत्वाथ शौचं प्रक्षाल्य हस्तौ पादौ च मृज्जलैः ।
निबद्धशिख आसीनो द्विज आचमनञ्चरेत् ॥
कृत्वोपवीतं सव्यांशे वाङ्मनःकायसंयतः ॥"
आपस्तम्बः ।
"इत्येवमद्भिराजानु प्रक्षाल्य चरणौ पृथक् ।
हस्तौ चामणिबन्धाभ्यां पश्चादासीत संयतः ॥"
आजानु आमणिबन्धाभ्यामित्यवध्युपादानं तत्-
पर्य्यन्ताशुचित्वशङ्कायां अध्वश्रमापनोदनाय अतिशयशौचाय वा । अतएवोक्तं अङ्गप्रकर्षात्
फलप्रकर्ष इति ॥ * ॥ शिखाबन्धने विशेषमाह
ब्रह्मपुराणम् ।

दक्षः ।
“लिङ्गे तत्र समाख्याता त्रिपर्व्वी पूर्य्यते यया ।
अर्द्धप्रसृतिमात्रा तु प्रथमा मृत्तिका स्मृता ॥
द्बितीया च तृतीया च तदर्द्धं परिकीर्त्तितम् ॥”
यदा तु उक्तप्रमाणया मृदा गन्धलेपक्षयो न भवति तदा अधिकयापि कर्त्तव्यम् ।
“गन्धलेपक्षयकरं शौचं कुर्य्यादतन्द्रितः ॥”
इति याज्ञवल्क्यवचनात् ॥
गुदादन्यत्र परिमाणमाह यमः ।
“मृत्तिका तु समुद्दिष्टा त्रिपर्व्वी पूर्य्यते यया ।”
त्रिपर्व्वी
तर्ज्जनीमध्यमानामिकानामग्रपर्व्व त्रयम् ॥ * ॥ मूत्रमात्रे तु स्मृतिः ।
“एकां लिङ्गे मृदं दद्यात् वामहस्ते तु मृत्त्रयम् ।
उभयोर्हस्तयोर्द्वे तु मूत्रशौचं प्रकीर्त्तितम् ॥”
ब्रह्मपुराणे ।
“पादयोर्द्वे गृहीत्वा च सुप्रक्षालितपाणिमान् ।
द्विराचम्य ततः शुद्धः स्मृत्वा विष्णुं सनातनम् ॥”
पादयोर्द्वे एकैका । इदं मूत्रे पुरीषोत्सर्गे तिसृणां विधानात् ॥ * ॥ दक्षः ।
“यथोदितं दिवा शौचमर्द्धं रात्रौ विधीयते ।
आतुरे च तदर्द्धं स्यात् तदर्द्धन्तु पथि स्मृतम् ॥”
यथोक्तकरणाशक्ताक्वेदं न तु निशादिपुरस्कारे-
णैव वाक्यस्यादृष्टार्थतापत्तेः ॥ * ॥
आपस्तम्बः ।
“पथि पादस्तु विज्ञेय आर्त्तः कुर्य्याद्यथाबलम् ।”
एतयोर्व्विरोधस्तु आर्त्तानार्त्ताभ्यां परिहर-
णीयः । दक्षः ।
भुञ्जानमाचमानञ्च नास्तिकं नाभिवादयेत् ॥
जन्मप्रभृति यत्किञ्चित् चेतसा धर्म्ममाचरेत् ।
सर्व्वं तन्निष्फलं याति एकहस्ताभिवादनात् ॥”
ऋष्यशृङ्गः ।
“यस्मिन् स्थाने कृतं शौचं वारिणा तद्विशो-
धयेत् ।
न शुद्धिस्तु भवेत्तस्य मृत्तिकां यो न शोधयेत् ॥”
शौचानन्तरं हारीतः । गोमयेन मृदा वा कमण्डलुं प्रमृज्य पूर्ब्बवदुपस्पृश्य आदित्यं सोम-
मग्निं वा वीक्षेतेति । अत्र मार्जनानन्तरं क्षलनं अन्यत्र तथादर्शनात् । आचमनान-
न्तरं आदित्यादिदर्शनं यथासम्भवम् । शौचं कृत्वा मूत्रोच्चारं न पश्येत् दृष्ट्वादित्यमग्निं सोमं वा पश्येदिति ॥ * ॥ अथाचमनविधिः । दक्षः ।
“प्रक्षाल्य पाणी पादौ च त्रिः पिबेदम्बु वीक्षि-
तम् ।
संवृत्याङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततो मुखम् ॥
संहत्य तिसृभिः पूर्ब्बमास्यमेवमुपस्पृशेत् ।
अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम् ॥
अङ्गुष्ठानामिकाभ्याञ्च चक्षुःश्रोत्रे पुनः पुनः ।
नाभिं कनिष्ठाङ्गुष्ठेन हृदयन्तु तलेन वै ॥
सर्व्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत् ॥”
पादप्रक्षालनं विशेषयति देवलः ।
“प्रथमं प्राङ्मुखः स्थित्वा पादौ प्रक्षालयेत् शनैः ।
“गायत्त्र्या तु शिखां बद्ध्वा नैरृत्यां ब्रह्मरन्ध्रतः ।
जुटिकाञ्च ततो बद्ध्वा ततः कर्म्म समाचरेत् ॥” * ॥
पिबेदित्यत्रान्तर्जान्विाह याज्ञवल्क्यः ।
“अन्तर्जानु शुचौ देशे उपविष्ट उदङ्मुखः ।
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥”
अन्तर्जानु जानुनोर्म्मध्ये हस्तौ कृत्वेति शेषः ।
वाशब्दादीशानाभिमुखः ।
“ईशानाभिमुखो भूत्वोपस्पृशेत्तु यथाविधि ॥”
इति मरीच्युक्तेः ॥
ब्राह्मेण तीर्थेन अङ्गुष्ठमूलेन ।
“कनिष्ठदेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ।
प्रजापतिपितृब्रह्मक्वेतीर्थान्यनुक्रमात् ॥”
इति याज्ञवल्क्यात् ॥
देशिनी तर्ज्जनी । करस्य दक्षिणस्य । यथा मार्कण्डेयपुराणम् ।
“अङ्गुष्ठोत्तरतो रेखा या पाणेर्दक्षिणस्य च ।
एतद्ब्राह्ममिति ख्यातं तीर्थमाचमनाय वै ॥”
अत्र द्विजो न स्त्रीशूद्राविति मिताक्षरा ॥
अतएव ।
“स्त्रियास्त्रैदशिकं तीर्थं शूद्रजातेस्तथैव च ।
सकृदाचमनाच्छुद्धिरेतयोरेव चोभयोः ॥”
ब्राह्मतीर्थावरोधे तु मनुः ।
“कायत्रैदशिकाभ्यां वा न पैत्र्येण कदाचन ।”
उक्ततीर्थत्रयस्य ब्रणादिनावरोधे करमध्यात्म-

| | | |
|---|---|---|
| “देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम् ।<br>उपपत्तिमवस्थाञ्च ज्ञात्वा शौचं प्रकल्पयेत् ॥” | उदङ्मुखो वा दैवत्ये पैतृके दक्षिणामुखः ॥”<br>शनैरत्वरः । दैवपैतृकेतरत्रापस्तम्बः । प्रत्यक्-<br>पादावसेचनमिति । प्रत्यक् पश्चिमाभिमुखः ।<br>क्रममाह गोभिलः । सव्यं पादमवनेनिज इति | |

काग्रेयेनापि । एवञ्च सर्व्वाविरोधे सुवर्णादि-
पात्रेणाप्याचमनं कार्य्यं स्वयमसामर्थेऽन्येनाच-
मनं कारयितव्यम् । याज्ञवल्क्यः ।
"अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनवुद्बुदः ।
हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः ॥
शुध्येरन् स्त्री च शूद्रश्च सकृत् स्पृष्टाभिरन्ततः ॥"
अन्ततः ओष्ठोपान्ते । उत्तरोत्तरमुपकर्षात् ।
अतएव स्पृष्टाभिरित्युक्तं न तु भक्षिताभिरिति ।
स्त्री शूद्रो वाथ नित्याम्भः क्षालनाच्च करोष्ठयो-
रिति ब्रह्मपुराणाच्च । आचमनार्थे पाणिपाद-
प्रक्षालनमेवेत्येके । इति शूद्राधिकारे गोतमो-
क्तेश्च । आचमनार्हजलाभावे इदमित्याचारा-
ध्यायः । मनुः ।
"हृद्गाभिः पूयते विप्रः कण्ठगाभिश्च भूमिपः ।
वैश्योऽद्भिः प्राशिताभिश्च शूद्रः स्पृष्टाभिर-
न्ततः ॥"
अत्र वश्यावधिप्राशनमुक्तम् । अनुपनीतानान्तु
स्त्रीशूद्रवदाचमनं न यावदुपनीयेत । इति
प्रागुक्तशौचे तथादर्शनात् मिताक्षरादयो-
ऽप्येवम् । अम्बु विशेषयति वौधायनः । पाद-
प्रक्षालनाच्छेषेण नाचामेत यद्याचामेत् भूमौ
स्रावयित्वाचामेदिति । उशनाः ।
"कांस्यायसेन पात्रेण त्रपुसीसकपित्तलः ।
आचान्तः शतकृत्वोऽपि न कदाचिच्छुचि-
र्भवेत् ॥"
कांस्यादिपात्रकरणकाचमनंकांस्यायसेनेत्या-
दिना निषिद्धमिति केचित् । हस्तेनाचमनेऽपि
कांस्यादिपात्रावर्ज्जितं तन्निषिद्धमित्यपरे ।
आचमनजलनिषेधे शङ्खलिखितौ । न शूद्रा
शुच्येकपाण्या वर्ज्जितेनेति अत्राशुचिपदम्
आचमनकर्त्तृभिन्नपरम् । शूद्रसाहचर्य्यात् एक
पाणिपदमपि आचमनकर्त्तृभिन्नपाणिपरम् ।
तेन स्वीयवामपाण्यावर्ज्जितमनिषिद्धम् । तथा
च कमण्डल्वधिकारे बौधायनः । मूत्रपुरीषे
कुर्व्वन् दक्षिणहस्तेन गृह्णाति सव्येनाचमनीय-
मिति । गृह्णाति जलपात्रमिति शेषः । आचा-
मेदित्यनुवृत्तौ देवलः ।
"शिखां बद्धा वसित्वा द्वे निर्न्निक्ते वाससी शुभे ।
तूष्णीं भूत्वा समादाय नोद्गच्छन्नविलोकयन् ॥"

गोस्तर्पणाय स्युर्न वर्णरसदुष्टाभिर्याश्च
स्युरशु-
भागमा इति । प्रदरो विदीर्णभूभागः ।
अशु-
भागमाः अशुचिदेशादागताः । यस्मिन्
देशे
वर्णादिदुष्टमेव तोयं तत्र तदपि ग्राह्यम् ।
तथा
च मरीचिः ।
"येषु स्थानेषु यच्छौचं धर्म्माचारश्च
यादृशः ।
तत्र तन्नावमन्येत धर्म्मस्तत्रैव तादृशः ॥
येषु स्थानेषु ये देवा येषु देशेषु ये द्विजाः
।
येषु स्थानेषु यत्तोयं या च यत्रैव मृत्तिका
॥"
आचमने उदकग्रहणप्रकारं परिमाणञ्चाह
भरद्वाजः ।
"आयतं पर्व्वणां कृत्वा गोकर्णाकृतिवत्
करम् ।
संहताङ्गुलिना तोयं गृहीत्वा पाणिना
द्विजः ॥
मुक्ताङ्गुष्ठकनिष्ठाभ्यां शेषेणाचमनञ्चरेत् ।
माषमज्जनमात्रास्तु संगृह्य त्रिः पिबेदपः
॥"
पाणिना दक्षिणेन । त्रिः पिबेद्दक्षिणेनापि
इत्यादिपुराणोक्तेः । मार्कण्डेयः ।
"सपवित्रेण हस्तेन
कुर्य्यादाचमनक्रियाम् ।
नोच्छिष्टं तत्पवित्रन्तु भुक्तोच्छिष्टन्तु
वर्ज्जयेत् ॥"
मदनपारिजाते हारीतः ।
"ग्रन्थिर्यस्य पवित्रस्य न तेनाचमनञ्चरेत्
॥"
ग्रन्थनाद्ग्रन्थिरिति समुद्रकरेऽपि ।
आचमना-
नुवृत्तौ देवलः ।
"न गच्छन्न शयानश्च न चलन्न परान्
स्पृ शन् ।

कृतावसक्थिको यस्तु प्रौढपादः स
उच्यते ॥"
आसनारूढपादः
आसनारोपितपादतलः ।
जानुनोर्जङ्घयोः कृतावसक्थिको
वस्त्रादिना
कृतपृष्ठजानुजङ्घाबन्धः । तुद्वयेन
भेदप्रतीतेः
प्रौढपादस्य द्विविधत्वं प्रतीयते ॥ *
॥ अत्र च
अनेकोद्वाह्ये दारुशिले भूमिसमे
इष्टकाश्च
सङ्कीर्णोभूता इति
वौधायनवचनात्तथाविधे
आरूढपादोऽपि कुर्य्यात् । व्यासः ।
"शिरः प्रावृत्य कण्ठं वा
मुक्तकच्छशिखोऽपि
वा ।
अकृत्वा पादयोः
शौचमाचान्तोऽप्यशुचि-
र्भवेत् ॥"
तथा ।
"अपः पाणिनखाग्रेण आचामेद्यस्तु
ब्राह्मणः ।
सुरापानेन तत्तुल्यमित्येवमृषिरब्रवीत्
॥"
संवृत्येति मुखं संवृत्य
अलोमकोष्ठस्पर्शो यथा
न भवतीति तात्पर्य्यम् । तथा च
वशिष्ठः ।
"आचान्तः पुनराचामेद्वासो
विपरिधाय च ।
ओष्ठौ च संस्पृश्य तथा यत्र
स्यातामलोमकौ ॥"
एवञ्च प्रागुक्तहारीतवचने
ओष्ठयोर्म्मार्जनमुक्तं
तत् सलोमकयोरेवेति । एतदनन्तरं
वामहस्तं

एकवस्त्राः प्राचीनावीतिन इत्यादिपारस्कर-
दर्शनात् यत्र प्रेतस्नानतर्पणादौ एकवस्त्रत्वं
विहितं तत्र तदङ्गत्वादेकवासा एवाचमनं
कुर्य्यात् । प्रचेताः ।
“अनुष्णाभिरफेनाभिः पूताभिर्वीक्ष्य चक्षुषा ।
हृद्गताभिरशब्दाभिस्त्रिश्चतुर्व्वाद्भिराचमेत् ॥”
चतुर्व्वेति भावशुद्ध्यपेक्षया विकल्पः । न तु
फलभूयस्त्वार्थं कल्पनागौरवापत्तेः । वीक्षणा-
नुष्णयोर्भट्टभाष्यमाधवाचार्य्यकृतपराशरभाष्य-
योरपवादमाह यमः ।
“रात्राववीक्षितेनापि शुद्धिरुक्ता मनीषिभिः ।
उदके नातुराणाञ्च तथोष्णेनोष्णपायिनाम् ॥”
आचामेदित्यनुवृत्तौ वशिष्ठः । प्रदरादपि या

न हसन्नैव संजल्पन्नात्मानञ्चैव वीक्षयन्
॥”
चलन् कम्पमान इति रत्नाकरः ॥
आत्मानं
आत्मस्थानं हृदयम् । वीक्षयन्निति
स्वार्थे णिच् ।
“केशान्नीवीमधःकायं न स्पृशन्
धरणीमपि ।
यदि स्पृशति चैतानि भूयः प्रक्षालयेत्
करम् ॥”
अधःकायं नाभेरधःप्रदेशम् । करं
दक्षिणम् ।
आचमनानुवृत्तौ गोभिलः ।
“नान्तरीयैकदेशेन
कल्पयित्वोत्तरीयकम् ॥”
अन्तरीयमधःपरीधानं तदेकदेशमुत्तरीयं
कृत्वा
मरीचिः ।
“न बहिर्जानुस्त्वरया नासनस्थो न
चोत्थितः ।
न पादुकास्थोऽन्यचित्तः शुचिः
प्रयतमानसः ॥
उपस्पृश्य द्विजो नित्यं शुद्धः पूतो
भवेन्नरः ।
भुक्त्रासनस्थो नाचामेन्नान्यकाले
कदाचन ॥
जलस्थलोभयकर्म्मानुष्ठानार्थन्तु
जलस्थलैकचर-
णेनाचमनं कर्त्तव्यमित्याह पैठीनसिः ।
अन्त-
रुदके आचान्तोऽन्तरेव शुद्धः स्यात्
तस्मा-
दन्तरेकं बहिरेकञ्च कृत्वा पादमाचामेत्
सर्व्वत्र
शुद्धो भवतीति । जले तूत्तिष्ठन्नाचामेत् ।
जानो-
रुद्ध्वं जले तिष्ठन्नाचान्तः
शुचितामियात् ।
अधस्तात् शतकृत्वोऽपि समाचान्तो न
शुध्य-
तीति विष्णूक्तेः । हारीतः ।

पादौ शिरश्च दक्षिणेन
पाणिनाभ्युक्षयेत् ।
तथा च कामधेनावापस्तम्बः ।
त्रिराचामेत्
हृद्गाभिस्त्रिरोष्ठौ परिमृजेत्
द्विरित्येके दक्षिणेन
पाणिना सव्यं प्रोक्ष्य पादौ शिरश्चेति
।
गोभिलः । त्रिराचामेत् द्विः
परिमृजीत पादा-
वभ्युक्ष्य शिरोऽभ्युक्षयेदिति
इन्द्रियाण्यद्भिः
स्पृशेत् अक्षिणी नासिके कर्णाविति
। इन्द्रि-
याणि इन्द्रियायतनानि
इन्द्रियाणाममूर्त्तत्वात् ।
तिसृभिरिति
तर्ज्जनीमध्यमानामिकाभिः ॥ * ॥
सर्व्वत्राङ्गुष्ठयोगेन आचमनकारणमाह
पैठी-
नसिः । अग्निरङ्गुष्ठस्तस्मात्तेनापि
सर्व्वाणि
स्थानानि स्पृशेत् ।
निष्ठीवनादावाचमनं
यथा । वायुपुराणे ।
“निष्ठीवने तथाभ्यङ्गे तथा
पादावसेचने ।
उच्छिष्टस्य च
सम्भाषादशुच्युपहतस्य च ॥
सन्देहेषु च सर्व्वेषु शिखां मुक्त्वा
तथैव च ।
विना यज्ञोपवीतेन नित्यमेव उपस्य
शेत् ॥
उष्ट्रवायससंस्पर्शे दर्शने
चान्त्यवासिनाम् ॥”
हारीतः ।
“स्त्रीशूद्रोच्छिष्टसंभाषणे
मूत्रपुरीषोत्सर्गदर्शने
देवमभिगन्तुकाम आचामेदिति ।”
याज्ञवल्क्यः ।

|  |  |  |
|---|---|---|
|  | “आर्द्रवासा जले कुर्य्यात्तर्पणाचमनं जपम् ।<br>शुष्कवासाः स्थले कुर्य्यात्तर्पणाचमनं जपम् ॥”<br>कात्यायनः ।<br>“स्नानमाचमनं होमं भोजनं देवतार्च्चनम् ।<br>प्रौढपादो न कुर्व्वीत स्वाध्यायं पितृतर्पणम् ॥<br>आसनारूढपादस्तु जानुनोर्जङ्घयोस्तथा । | “स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे ।<br>आचान्तः पुनराचामेद्वासो विपरिधाय च ॥”<br>ब्रह्मपुराणे ।<br>“होमे भोजनकाले च सन्ध्ययोरुभयोरपि ।<br>आचान्तः पुनराचामेदन्यत्रापि सकृत् सकृत् ॥<br>द्विराचम्य ततः शुद्धः स्मृत्वा विष्णुं सनातनम् ॥”<br>स्मृतिः ।<br>“क्षुते निष्ठीविते सुप्ते परिधानेऽश्रुपातने ।<br>कर्म्मस्थ एषु नाचामेत् दक्षिणं श्रवणं स्पृ शेत् ॥” |

अत्र हेतुमाह पराशरः ।
"प्रभासादीनि तीर्थानि गङ्गाद्याः सरितस्तथा
।
विप्रस्य दक्षिणे कर्णे वसन्ति मनुरब्रवीत् ॥"
सांख्यायनः ।
"आदित्या वसवो रुद्रा वायुरग्निश्च धर्म्मराट्
।
विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति देवतः
॥"
पुराणसारवायुपुराणयोः ।
"यः कर्म्म कुरुते मोहादनाचन्यैव नास्तिकः
।
भवन्ति हि वृथा तस्य क्रियाः सर्व्वा न
संशयः ॥" * ॥
अथ दन्तधावनम् । वृद्धशातातपः ।
"मुखे पर्य्युषिते नित्यं भवत्यप्रयतो नरः ।
तस्मात् सर्व्वप्रयत्नेन भक्षयेद्दन्तधावनम् ॥"
श्राद्धदिनादौ तस्य वर्ज्यत्वं यथा । विष्णुः ।
"श्राद्धे जन्मदिने चैव विवाहेऽजीर्णसम्भवे ।
व्रते चैवोपवासे च वर्ज्जयेद्दन्तधावनम् ॥"
दन्तधावनमद्यादुदङ्मुखः प्राङ्मुखो वेति ॥ * ॥
दन्तलग्नस्य दन्ततुल्यत्वं यथा । गोतमः ।
दन्तश्लिष्टे दन्तवदन्यत्र जिह्वाभिधर्षणात्
प्राक्
च्युतेरित्येके । च्युतेरास्रावविद्यान्निगरन्नेव
तच्छुचिरिति । जिह्वाभिघर्षणायोग्यं दन्तलग्नं
अशौचजनकं न भवतीत्यर्थः ।
इदञ्चानुलभ्य-
मानरसविषयम् । दन्तवद्दन्तलग्नेषु रसवर्ज-
मिति शङ्खवचनात् । जिह्वाभिघर्षणेऽपि अश-
क्योद्धरणे न दोषः ।
"भोजने दन्तलग्नानि निर्हत्याचमनञ्चरेत् ।
दन्तलग्नमसंहार्य्यं लेपं मन्येत दन्तवत् ॥
न तत्र कुर्य्याद्बहुशो यत्नमुद्धरणे पुनः ।
भवेदशौचमत्यर्थं तृणवेधाद्व्रणे कृते ॥"
इति देवलवचनात् ॥
च्युतेरित्युपलभ्यमानरसविषयम् । आस्रावो
लाला तद्वन्निगरन्नित्यर्थः । अतएव शोणितं
यथा न भवति तथा तृणादिना दन्तलग्न-

भक्षयेत् शास्त्रदृष्टानि पर्व्वस्वपि च वर्जयेत् ॥"
तिथिविशेषे तस्य वर्ज्जनं यथा । नृसिंहपुरा-
णम् ।
"प्रतिपद्दर्शषष्ठीषु नवम्याञ्चैव सत्तमाः ।
दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम् ॥
अलामे दन्तकाष्ठानां प्रतिषिद्धदिने तथा ।
अपां द्वादशगण्डूषैर्मुखशुद्धिर्विधीयते ॥"
गण्डूषस्य दन्तकाष्ठकार्य्यकारित्वेऽपि न तत्र
मन्त्रान्वयः । शातातपः ।
"प्रतिपद्दर्शषष्ठीषु नवम्यां दन्तधावनम् ।
पत्रैरन्यत्र काष्ठैश्च जिह्वोल्लेखः सदैव हि ॥"
गुवाकादिपत्रैर्द्दन्तधावनं निषिद्धं यथा । क्रिया-
कौमुद्यां वशिष्ठः ।
"गुवाकतालहिन्तालास्तथाताडी च केतकी ।
खर्ज्जूरनारिकेलौ च सप्तैते तृणराजकाः ॥
तृणराजशिरापत्रैर्यः कुर्य्याद्दन्तधावनम् ।
तावद्भवति चाण्डालो यावद्गां नैव पश्यति ॥"
पराशरभाष्ये याज्ञवल्क्यः ।
"नेष्टकालोष्टपाषाणैरितराङ्गुलिभिस्तथा ।
त्यक्त्वा अनामिकाङ्गुष्ठौ वर्ज्जयेद्दन्तधावनम्
॥"
प्रचेताः ।
"मध्याह्नस्नानकाले तु यः कुर्य्याद्दन्तधावनम्
।
निराशास्तस्य गच्छन्ति देवाः पितृगणैः सह
॥"
स्मृतिः ।
"वमन्तं जम्भमाणञ्च कुर्व्वन्तं दन्तधावनम् ।
अभ्यक्तशिरसञ्चैव स्नातं नैवाभिवादयेत् ॥"
हारीतः ।
"शुचिं देवाभिरक्षन्ति पितरः शुचिमन्वियुः ।
शुचेर्बिभ्यति रक्षांसि ये चान्ये दुष्टचारिणः ॥"
तथा ।
"स्नानं दानं तपस्त्यागो मन्त्रकर्म्मविधिक्रियाः
।
मङ्गलाचारनियमाः शौचभ्रष्टस्य निष्फलाः ॥
शौचन्तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरन्तथा ।
मृज्जलाभ्यां भवेत् बाह्यं भावशुद्धिस्तथापरम्
॥"

ब्रह्माण्डपुराणे ।
"कर्म्मादौ तिलकं कुर्य्याद्रूपं
तद्वैष्णवं परम् ।
गोप्रदानं जपो होमः स्वाध्यायः
पितृतर्पणम्
भस्मीभवति तत्सर्व्वमूद्र्ध्वपुण्ड्रं
विना कृतम् ॥"
ब्राह्मे ।
"अङ्गुष्ठः पुष्टिदः प्रोक्तो
मध्यमायुष्करी भवेत्
अनामिकार्थदा नित्यं मुक्तिदा च
प्रदेशिनी ॥
व्यासः ।
"जाह्नवीतीरसम्भूतां मृदं मूद्र्ध्ना
बिभर्त्ति यः ।
बिभर्त्ति रूपं सोऽर्कस्य तमोनाशाय
केवलम् ॥"
गीपीचन्दनमाह शातातपः ।
"गोमतीतीरसम्भूतां
गोपीदेहसमुद्भवाम् ।
मृदं मूद्र्ध्ना वहेद्यस्तु सर्व्वपापैः
प्रमुच्यते ॥"
ब्रह्माण्डपुराणे ।
"ऊद्र्ध्वपुण्ड्रं मृदा कुर्य्यात् त्रिपुण्ड्रं
भस्मना सदा ।
तिलकं वै द्विजः कुर्य्यात् चन्दनेन
यदृच्छया ॥
ऊद्र्ध्वपुण्ड्रं द्विजः कुर्य्यात्
क्षत्त्रियश्च त्रिपुण्ड्रकम् ।
अर्द्धचन्द्रञ्च वैश्यश्च वर्त्तुलं
शूद्रयोनिजः ॥" * ॥
आतुराणान्तु ।
"अशिरस्कं भवेत स्नानं
स्नानाशक्तौ च कर्म्मि-
णाम् ।
आर्द्रेण वाससा वापि मार्ज्जनं
दैहिकं विदुः ॥"
इति जावालवचनात् शिरो विहाय
गात्रप्रक्षा-

निःसारणाचरणम् ॥ * ॥ छन्दोगपरिशिष्टम् ।
“नारदाद्युक्तवार्क्षेयमष्टाङ्गुलमपाटितम् ।
सत्वचं दन्तकाष्ठं स्थात्तदग्रेण प्रधावयेत् ॥
उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः ॥
परिजप्य तु मन्त्रेण भक्षयेद्दन्तधावनम् ॥
आयुर्बलं यशो वर्च्चः प्रजा पशुवसूनि च ।
ब्रह्मप्रज्ञाञ्च मेधाञ्च त्वन्नो धेहि वनस्पते ॥”
शुचिर्भूत्वा द्विराचमनेनेति शेषः ॥ * ॥ नर-
सिंहपुराणम् ॥
“दन्तकाष्ठस्य वक्ष्यामि समासेन प्रशस्तताम्
।
सर्व्वे कण्टकिनः पुण्याः क्षीरिणश्च
यशस्विनः ॥”
प्रमाणं स्थौल्यञ्चाह विष्णुः ।
“कनीन्यग्रनिभस्थौल्यं सकूर्च्चं द्वादशाङ्गुलम्
।
प्रातर्भूत्वा च यतवाक् भक्षयेद्दन्तधावनम् ॥
प्रक्षाल्य भुक्त्वा तज्जह्याच्छुचौ देशे
समाहितः ॥”
सकूर्च्चं दलिताग्रम् । द्वादशाङ्गुलन्तु
छन्दोगेत-
रेषाम् ।
“द्वादशाङ्गुलन्तु विप्राणां क्षत्त्रियाणां
नवाङ्गुलम् ।
अष्टाङ्गुलन्तु वैश्यानां शूद्राणान्तु षडङ्गुलम् ।

अथ प्रातःस्नानसन्ध्ये । ब्रह्मपुराणम् ।
“प्रातःस्नानं ततः कृत्वा संक्षेपेण यथोदितम् ।
सन्ध्याञ्चापि तथा कुर्य्यात् नित्यनैमित्तिके
तथा ॥”
कात्यायनः ।
“यथाहनि तथा प्रातर्नित्यं स्नायादनातुरः ।
दन्तान् प्रक्षाल्य नद्यादौ गेहे चेत्तदमन्त्रवत् ॥”
दन्तान् प्रक्षाल्य प्रातरनातुरः स्नायात् ॥ * ॥
आतुरं विशेषयति आयुर्व्वेदीये ।
“स्नानमर्द्दितनेत्रास्यकर्णरोगातिसारिषु ।
आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितम् ॥”
तत्कालमाह विष्णुः । प्रातःस्नाय्यरुणकिरण-
ग्रस्तां प्राचीमवलोक्य स्नायात् । इति समुद्र-
करधृतम् ॥ * ॥
“मृत्तिकातिलकं कुर्य्यात् स्नात्वा हुत्वा च
भस्मना ।
दृष्टदोषविधातार्थं चाण्डालाद्यादिदर्शने ॥”
उशनाः ।
“अभावे तूदकेनापि पितृदैवतमर्च्चयेत् ॥”

लनम् । तदशक्तावार्द्रवाससा
गात्रमार्जनं
कुर्य्यात् तदनन्तरं सन्ध्यां कुर्य्यात्
। एतत्परमेव
प्रातःसन्ध्यां ततः कुर्य्यात्
दन्तधावनपूर्ब्बकमिति
याज्ञवल्क्यवचनम् ।
इत्याह्निकाचारतत्त्वम् ॥

**प्रातःसन्ध्या**, स्त्री, (सन्धौ भवा । यत्
प्रत्ययः । टाप्

प्रातः प्रथमार्द्धीया सन्ध्या ।)
सन्ध्यादेहपूर्ब्बार्द्धम् ।
तदुत्पत्तिर्यथा ।
“तस्मिन् गिरौ चन्द्रभागे
बृहल्लोहिततीरगाम्
सन्ध्यां दृष्ट्वाथ पप्रच्छ वशिष्ठः
सादरन्तदा ॥
वशिष्ठ उवाच ।
किमर्थमागता भद्रे ! निर्जनं त्वं
महीधरम् ।
कस्य वा तनया गौरि ! किं वा तव
चिकीर्षितम् ॥
एतदिच्छाम्यहं श्रोतुं यदि गुह्यं न ते
भवेत् ।
वदनं पूर्णचन्द्राभं निश्रीकं वा कथं
तव ॥
श्रीमार्कण्डेय उवाच ।
तत् श्रुत्वा वचनं तस्य वशिष्ठस्य
महात्मनः ।
दृष्ट्वा च तन्महात्मानं ज्वलन्तमिव
पावकम् ॥
शरीरधृग्ब्रह्मचर्य्यसदृशं तं जटाधरम्
।
सादरं प्रणिपत्याथ सन्ध्योवाच
तपोधनम् ॥
सन्ध्योवाच ।
यदर्थमागता शैलं सिद्धं तन्मे
तपोधन ! ।
तव दर्शनमात्रेण तन्मे सेत्स्यति वा
विभो ! ॥

|  |  | तपः कर्त्तुमहं ब्रह्मन् ! निर्जनं शैलमागता ।<br>ब्रह्मणोऽहं मनोजाता सन्ध्या नाम्ना च विश्रुता ।<br>नोपदेशमहं जाने तपसो मुनिसत्तम ! ।<br>यदि ते युज्यते गुह्यं मां त्वं समुपदेशय ॥<br>एतच्चिकीर्षितं गुह्यं नान्यत् किञ्च न विद्यते<br>अज्ञात्वा तपसो भावं तपोवनमुपस्थिता ॥<br>चिन्तया परिशुष्येऽहं वेपते च मनः सदा ॥ |

श्रीमार्कण्डेय उवाच ।
आकर्ण्य तस्या वचनं वशिष्ठो ब्रह्मणः सुतः ।
स्वयं स सर्व्वकृत्यज्ञो नान्यत् किञ्चन पृष्टवान् ॥
अथ तां नियतात्मानं तपसेऽतिधृतोद्यमाम् ।
वशिष्ठो मन्त्रयाञ्चक्रे गुरुवत् शिष्यवत्तदा ॥
वशिष्ठ उवाच ।
परमं यो महत्तेजः परमं यो महत्तपः ।
परमः परमाराध्यो विष्णुर्म्मनसि धीयताम् ॥
मन्त्रेणानेन देवेशं विष्णुं भज शुभानने ! ।
ॐ नमो वासुदेवाय इत्यनेन च सन्ततम् ॥
मार्कण्डेय उवाच ।
उपदिश्य वशिष्ठोऽथ सन्ध्यायै तपसः क्रियाम् ।
तामाभाष्य यथान्यायं तत्रैवान्तर्दधे मुनिः ॥
यथोक्तन्तु वशिष्ठेन मन्त्रं तपसि साधनम् ।
व्रतेन तेन गोविन्दं पूजयामास भक्तितः ॥
प्रसन्नस्तेन रूपेण यद्रूपं चिन्तितं तया ।
पुरः प्रत्यक्षतां यातस्तस्यां विष्णुर्जगत्पतिः ॥
निमीलिताक्ष्यास्तस्यास्तुप्रविश्य हृदयं हरिः ।
दिव्येङ्गितं ददौ तस्यै वाचं दिव्ये च चक्षुषी ॥
दिव्यं ज्ञानं दिव्यचक्षुर्दिव्यां वाचमवाप्य सा ।
प्रत्यक्षं वीक्ष्य गोविन्दं तुष्टाव जगतां पतिम् ॥
अथ तस्याः शरीरन्तु वल्कलाजिनसंवृतम् ।
उदेति सायंसन्ध्यापि पितॄणां मोदकारिणी ॥”
इति कालिकापुराणे २२ अध्यायः ॥
प्रातःकालकर्त्तव्यवैदिकतान्त्रिकोपासनाविशेषः । वैदिके तदनुष्ठानानि यथा । मार्जनम् १ प्रार्थ-नम २ प्राणायामः ३ आचमनम् ४ आपो-मार्जनम् ५ अघमर्षणम् ६ सूर्य्योपस्थानम् ७ देवतर्पणम् ८ सावित्र्यावाहनम् ९ सावित्री-ध्यानम् १० सावित्रीजपः ११ सावित्रीविस-र्जनम् १२ आदित्यशुक्रप्रीणनम् १३ आत्मरक्ष-णम् १४ रुद्रोपस्थानम् १५ ब्रह्मादिभ्यो जल-दानम् १६ सूर्य्यार्घदानम् १७ सूर्य्यनतिः १८ ॥ तान्त्रिके तदनुष्ठानानि यथा । मन्त्राचमनम् १ जलशुद्धिः २ करन्यासः ३ अङ्गन्यासः ४ अघ-मर्षणम् ५ हस्तक्षालनम् ६ आचमनम् ७ सूर्य्यार्घदानम् ८ गायत्र्या जलदानम् ९ तर्पणम् १० गायत्रीध्यानम् ११ गायत्रीजपः १२ जल-समर्पणम् १३ इष्टदेवध्यानम् १४ प्राणायामः १५ मूलमन्त्रजपः १६ जलसमर्पणम् १७ प्राणा-यामः १८ नमस्कारः १९ । इति स्मृतितन्त्रे ॥

**प्रातःस्नानं**, क्ली, (प्रातः प्रभातकाले यत् स्नानम् ।) प्रभातकर्त्तव्यावगाहनादि । यथा, गारुडे ५० अः ।
“उषःकाले तु संप्राप्ते कृत्वा चावश्यकं बुधः ।
स्नायान्नदीषु शुद्धासु शौचं कृत्वा यथाविधि ॥
प्रातःस्नानेन पूयन्ते येऽपि पापकृतो जनाः ।
तस्मात् सर्व्वप्रयत्नेन प्रातःस्नानं समाचरेत् ॥
प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं हि तत् ।
मुखे सुप्तस्य सततं लालाद्याः संस्रवन्ति हि ॥
अतो नैवाचरेत् कर्म्माण्यकृत्वा स्नानमादितः ।
अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्विचिन्तितम् ॥
प्रातःस्नानेन पापानि पूयन्ते नात्र संशयः ।
न च स्नानं विना पुंसां प्राशस्त्यं कर्म्म संस्मृ-तम् ।
होमे जप्ये विशेषेण तस्मात् स्नानं समाचरेत् ॥
अशक्तावशिरस्कन्तु स्नानमस्य विधीयते ॥”
अपि च गारुडे २१५ अध्याये ।
“प्रातःसंक्षेपतः स्नानं मध्याह्ने विधिविस्तरम् ।
प्रातर्मध्याह्नयोः स्नानं वानप्रस्थगृहस्थयोः ॥
यतेस्त्रिसवनं प्रोक्तं सकृत्तु ब्रह्मचारिणः ॥”
अपि च ।
२ । इति हेमचन्द्रः ॥ प्रातर्भोजनम् ३ । इति त्रिकाण्डशेषः ॥ कल्यजग्धिः ४ । इति जटा-धरः ॥ (यथा, भागवते । ३ । २ । २ ।
“यः पञ्चहायनो मात्रा प्रातराशाय याचितः ।
तन्नेच्छद्रचयन् यस्य सपर्य्यां बाललीलया ॥”)

**प्रातर्गेयः**, पुं, प्रातःकाले गेय ईश्वरादिर्यैः । स्तुति-पाठकः । तत्पर्य्यायः । स्तुतिव्रतः २ । इति त्रिकाण्डशेषः ॥ प्रभातगातव्ये, त्रि ॥

**प्रातर्भोक्ता**, [ऋ] पुं, (प्रातर्भुङ्क्ते इति । भुज् + तृच् ।) काकः । इति शब्दचन्द्रिका ॥ प्रभाते भोजनकर्त्तरि, त्रि ॥

**प्रातर्भोजनं**, क्ली, (प्रातः प्रभातकाले भोजनम् ।) प्रातराशः । इति जटाधरः ॥

**प्रातिका**, स्त्री, (प्रातताति । प्र + अत् + ण्वुल् + टाप् । अत इत्वम् ।) जवा । इति राज-निर्घण्टः ॥

**प्रातिपदिकः**, पुं, (प्रतिपदि तिथौ भव इति । प्रतिपद् + “कालात् ठञ् ।” ४ । ३ । ११ । इति ठञ् ।) अग्निः । यथा, --
“इत्थम्भूतो महानग्निर्ब्रह्मक्रोधोद्भवो महान् ।
उवाच देवं ब्रह्माणं तिथिर्मे दीयतां प्रभो ! ॥

परिक्षीणं जटाव्रातैः पवित्रं मूद्ध्नि राजितम् ॥
निरीक्ष्य कृपयाविष्टो हरिः प्रोवाच तामिदम् ॥
श्रीभगवानुवाच ।
यः पश्यति सकामस्त्वां पाणिग्राहमृते तव ।
स सद्यः क्लीवतां प्राप्य दुर्ब्बलत्वं गमिष्यति ॥
पतिस्तव महाभागस्तपोरूपसमन्वितः ।
सप्तकल्पान्तजीवी च भविष्यति सह त्वया ॥
अन्यच्च ते वदिष्यामि पूर्ब्बं यन्मनसि स्थितम् ।
अग्नौ शरीरत्यागस्ते पूर्ब्बमेव प्रतिश्रुतः ॥
स च मेधातिथेर्यज्ञे मुनेर्द्वादशवार्षिके ।
घृतप्रज्वलिते वह्नौ न चिरात् क्रियतां त्वया ॥
तत्र गत्वा स्वयं छन्नं मुनिभिर्नोपलक्षिता ।
मत्प्रसादाद्वह्निजाता तस्य पुत्री भविष्यसि ॥
यस्ते वा वाञ्छनीयोऽस्ति स्वामी मनसि कश्चन ।
तन्निधाय निजस्वान्ते त्यज वह्नौ वपुः स्वकम् ॥
नारायणः स्वयं सन्ध्यां पस्पर्शाथाग्रपाणिना ।
ततः पुरोडाशमयं तत् शरीरमभूत् क्षणात् ॥
समिद्धेऽग्नौ महायज्ञे मुनिभिर्नोपलक्षिता ।
तदा विष्णोः प्रसादेन सा विवेश विधेः सुता ॥
वह्निस्तस्याः शरीरं तद्दग्ध्वा सूर्य्यस्य मण्डले ।
शुद्धं प्रवेशयामास विष्णोरेवाज्ञया पुनः ॥

"उषस्युषसि यत् स्नानं सन्ध्यायामुदिते रवौ ।
प्राजापत्येन तत्तुल्यं महापातकनाशनम् ॥
यत् फलं द्वादशाब्दानि प्राजापत्यैः कृतैर्भवेत् ।
प्रातःस्नायी तदाप्नोति वर्षेण श्रद्धयान्वितः ॥
य इच्छेद्विपुलान् भोगान् चन्द्रसूर्य्यग्रहोपमान् ।
प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ ॥
षट्तिली माघमासन्तु प्रातःस्नायी हविष्यभुक् ।
अतिपापं महाघोरं मासादेव व्यपोहति ॥
मातरं पितरञ्चापि भ्रातरं सुहृदं गुरुम् ।
समुद्दिश्य निमज्जेत द्वादशांशं लभेत्तु सः ॥"

**प्रातराशः**, पुं, (अशनमिति । अश् + भावे घञ् ।
आशः । प्रातः प्रातःकाले आशो भोजनम् ।)
प्रातःकालीनभोजनम् । तत्पर्य्यायः । कल्यवर्त्तः

यस्यामहं समस्तस्य जगतः ख्यातिमाप्नुयाम् ॥
ब्रह्मोवाच ।
देवानामथ यक्षाणां गन्धर्व्वाणाञ्च सत्तम ! ।
आदौ प्रतिपदा येन त्वमुत्पन्नोऽसि पावक ! ॥
त्वत्पदात् प्रातिपदिकं सम्भविष्यन्ति देवताः ।
अतस्ते प्रतिपन्नाम तिथिरेषा भविष्यति ॥"
इति वराहपुराणम् ॥
(प्रतिपदे धातुभिन्नपदे भव इति । प्रति-
पद + ठक् ।) नाम्नि, क्ली । यथा । अधातुविभ-
क्त्यर्थवत् प्रातिपदिकम् । इति सुपद्मव्याकरणम् ॥

**प्रातिभाव्यं**, क्ली, (प्रतिभू + ष्यञ् । द्विपदवृद्धिः ।)
प्रतिभुवो भावः । जामिनी इति भाषा । यथा,
"साक्षित्वं प्रातिभाव्यञ्च दानं ग्रहणमेव च ।
विभक्ता भ्रातरः कुर्य्युर्नाविभक्ताः परस्परम् ॥"
इति दायभागः ॥

**प्रातिस्विकं**, त्रि, (प्रतिस्वं भवः । प्रतिस्व + ठक् ।)
असाधारणम् । तत्पर्य्यायः । अन्यासाधार-
णम् २ आवेशिकम् ३ । इति त्रिकाण्डशेषः ॥

**प्रातिहारः**, पुं, (प्रतिहार एव । स्वार्थे अण् ।)
प्रातिहारिकः । इत्यमरटीकायां भरतः ॥

**प्रातिहारकः**, पुं, (प्रतिहारक एव । स्वार्थे
अण् ।) प्रातिहारिकः । इत्यमरटीकायां भरतः ॥

| | | |
|---|---|---|
| सूर्य्यो द्विधा विभज्याथ तत् शरीरं तदा रथे ।<br>स्वके संस्थापयामास प्रीतये पितृदेवयोः ॥<br>यदूद्र्ध्वभागस्तस्यास्तु शरीरस्य द्विजोत्तमाः ।<br>प्रातः सन्ध्याभवत् सा तु अहोरात्रादिमध्यगा ॥<br>यच्छेषभागस्तस्यास्तु अहोरात्रान्तमध्यगः ।<br>सा सायमभवत् सन्ध्या पितृप्रीतिप्रिया सदा ॥<br>सूर्य्योदयाच्च प्रथमं यदा स्यादरुणोदयः ।<br>प्रातःसन्ध्या तदोदेति देवानां प्रीतिकारिणी ॥<br>अस्तं गते ततः सूर्य्ये शोणपद्मनिभा सदा । | | **प्रातिहारिकः**, पुं, (प्रतिहारः प्रतिहरणं व्याज इत्यर्थः । स प्रयोजनमस्येति । प्रतिहार + "प्रयोजनम् ।" ५ । १ । १०९ । इति ठञ् ।) मायाकारः । इत्यमरः । २ । १० । ११ ॥<br>**प्रातीपः**, पुं, (प्रतीपस्यापत्यं प्रतीपस्यायमिति वा । प्रतीप + अण् ।) प्रतीपपुत्त्रः । शान्तनु-राजः । इति त्रिकाण्डशेषः ॥ (यथा, महा-भारते । ५ । १४८ । २ । "प्रातीपः शान्तनुस्तात ! कुलस्यार्थं यथोत्थितः ॥") |

**प्राथमकल्पिकः**, पुं, (प्रथमकल्प आद्यारम्भः
प्रयोजनं यस्य । "प्रयोजनम् ।" ५ । १ । १०९ ।
इति ठञ् । यद्वा, प्रथमकल्पमधीते इति ।
विद्यालक्षणकल्पान्ताच्चेति वक्तव्यमिति ठक् ।)
प्रथमारब्धवेदाध्ययनः । प्रथमं शिक्षणीयं कल्पं
शास्त्रमधीते यः इत्यर्थे ष्णिकः । तत्पर्य्यायः ।
शैक्षः २ । इत्यमरभरतौ ॥

**प्राथमिकः**, त्रि, (प्रथमे भवः । प्रथम + ठञ् ।)
प्रथमभवः । यथा । यत्राविरलक्रमेण सिद्धि-
सिषाधयिषानुमितयस्तत्रद्वितीयक्षणे पक्षता-
सम्पत्त्यर्थं द्वितीयः सिषाधयिषाविरहो विशे-
षणमस्तु सिद्धेः प्राथमिकस्तु किमर्थम् । इति
पक्षताशिरोमणिः ॥

**प्राथम्यं**, त्रि, (प्रथम + ष्यञ् ।) प्रथमस्य भावः ।
यथा, "अस्माभिरेव प्राथम्येन नानामुनीनां
वचनैरेवंविधो निबन्धः क्रियते ।" इति विजय-
रक्षितः ॥

**प्रादुः**, [स्] व्य, (प्रात्तीति । प्र + अद् + "बाहु-
लकाददेरप्युसिप्रत्ययः ।" उणा० २ । ११८ ।
इत्यत्र उज्ज्वलदत्तोक्त्या उसिः ।) नाम ।
प्राकाश्यम् । स्फुटत्वम् । तत्पर्य्यायः । आविः २ ।
यथा । प्रादुरासीत् । आविर्भूतः । इत्यमर-
भरतौ ॥ (यथा, रघुः । ११ । १५ ।
"ज्यानिनादमथ गृह्णती तयोः
प्रादुरास बहुलक्षपाच्छविः ।
ताडका चलकपालकुण्डला
कालिकेव निविडा वलाकिनी ॥")
प्रकाशः । सम्भाव्यम् । वृत्तिः । इति शब्दरत्ना-
वली ॥

**प्रादुर्भावः**, पुं, (प्रादुस् + भू + भावे घञ् ।)
आविर्भावः । यथा, --
"वपुः प्रादुर्भावादनुमितमिदं जन्मनि पुरा ॥"
इति कुवलयानन्दः ॥

**प्रादेशः**, पुं, (प्रदिश्यते इति । प्र + दिश् + हल-
श्चेति घञ् । "उपसर्गस्य घञि" इति दीर्घः ।)
तर्ज्जनीसहितविस्तृताङ्गुष्ठः । इत्यमरः । २ । ६ ।
८३ ॥ (यथा, महाभारते । ५ । ५१ । १९ ।
"प्रमाणतो भीमसेनः प्रादेशेनाधिकोऽर्ज्जुनात् ॥"
प्रदेश एव । स्वार्थे अण् ।) देशमात्रम् । यथा,
"प्रादेशो देशमात्रे च तर्ज्जन्यङ्गुष्ठसम्मिते ॥"
इति मेदिनी ॥
"अङ्गुष्ठस्य प्रदेशिन्या व्यासः प्रादेश उच्यते ॥"
इति देवीपुराणञ्च ॥

**प्रादेशनं**, क्ली, (प्र + आ + दिश् + ल्युट् ।) दानम् ।
इत्यमरः । २ । ७ । ३० ॥

**प्रादोषः**, त्रि, (प्रदोषस्यायमिति । प्रदोष + अण् ।)
प्रदोषसम्बन्धी । इति सिद्धान्तकौमुदी ॥ (प्रदोषे
व्याहरतीति । "व्याहरति मृगः ।" ४ । ३ । ५१ ।
इति अण् । प्रादोषो मृगः । प्रदोषसहचरितं
अध्ययनं सोढमस्य । "तदस्य सोढम् ।" ४ ।
३ । ५२ । इति अण् । प्रादोषः शिष्यः । इति
व्याकरणम् ॥)

**प्रादोषिकः**, त्रि, (प्रदोषस्यायमिति । प्रदोष +
"निशाप्रदोषाभ्याञ्च ।" ४ । ३ । १४ । इति
ठञ् ।) प्रदोषसम्बन्धी । इति सिद्धान्तकौमुदी ॥

**प्राधान्यं**, क्ली, प्रधानस्य भावः । (प्रधान + भावे
ष्यञ् ।) प्रधानत्वम् । यथा, धर्म्मदीपिकायाम् ।
"वेदार्थोपनिबन्धृत्वात् प्राधान्यं हि मनोः
स्मृतम् ॥"

**प्राध्वं**, व्य, (प्राध्वनतीति । प्र + आ + ध्वन +
डम् ।) अनुकूलम् । इत्यमरः । ३ । ४ । ४ ॥
(यथा, रघुः । १३ । ४३ ।
"सभाजने मे भुजमूर्द्ध्वबाहुः
सव्येतरं प्राध्वमितः प्रयुङ्क्ते ॥")

**प्राध्वः**, त्रि, (प्रगतोऽध्वानमिति । "उपसर्गाद-
ध्वनः ।" ५ । ४ । ८५ । इति अच् ।) बहुदूर-
गामि-रथादिः । इति वोपदेवः ॥ दूरपथः ।
प्रह्वः । बन्धः । इति हेमचन्द्रः ॥ (यथा, महा-
भारते । ३ । १६२ । २७ ।
"ततः शक्तिं गदां खड्गं धनुश्च भरतर्षभः ।
प्राध्वं कृत्वा नमश्चक्रे कुवेराय वृकोदरः ॥")

**प्रान्तः**, पुं, (प्रकृष्टोऽन्तः ।) अन्तभागः । शेष-
सीमा । यथा, कुमारे । ३ । ४३ ।
"प्रान्तेषु संसक्तनमेरुशाखं
ध्यानास्पदं भूतपतेर्विवेश ॥"

**प्रान्ततः**, [स्] व्य, (प्रान्त + तसिल् ।) प्रान्त-
भागे । यथा, प्राचीरं प्रान्ततो वृतिः । इत्य-
मरः । २ । २ । ३ ॥

**प्रान्तरं**, क्ली, (प्रकृष्टमन्तरमवकाशो व्यवधानं वा
यत्र ।) दूरशून्योऽध्वा । इत्यमरः । २ । १ । १७ ॥
छायातरुजलादिरहिते पथि प्रान्तरं दूरं शून्यो
दूरशून्यः दूरश्चासौ शून्यश्चेति वा दूरशून्यो
जलादिवर्जितत्वात् ईदृक् योऽध्वा स प्रान्तर-
मित्यन्वयः । प्रकृष्टमन्तरं व्यवधानमवकाशो वा
अत्रेति प्रान्तरम् । इति भरतः ॥ (यथा, महा-
निर्व्वाणतन्त्रे । १ । ६४ ।
"ह्रदे गर्त्ते प्रान्तरे च प्रासादात् पर्व्वतादपि ।
पतिष्यन्ति मरिष्यन्ति मनुजा मदविह्वलाः ॥")
विपिनम् । कोटरम् । इति मेदिनी ॥

**प्रान्तशून्यं**, क्ली, (प्रान्ते शून्यमस्य ।) दूरशून्य-
पथः । छायादिरहितपथः । इति शब्दरत्ना-
वली ॥

**प्रापणं**, क्ली, (प्र + आप् + ल्युट् ।) नयनम् ।
प्राप्तिः । (यथा, मनुः । २ । ९५ ।
"प्रापणात् सर्व्वकामानां परित्यागो विशि-
ष्यते ॥"
प्राप्तिप्रेरणा । प्रकर्षेण व्यापनम् । ज्यन्ता-
दज्यन्ताद्वा प्रपूर्ब्बापधातोभवि अनट् प्रत्ययः ॥

**प्रापणिकः**, पुं, (प्रापणाय्यते इति । प्र + आ + पण
व्यवहारे + "प्राङि पणिकषः ।" उणा० २ । ४१ ।
इति किकन् ।) पण्यविक्रयी । इति सिद्धान्त-
कौमुद्यामुणादिवृत्तिः ॥ (यथा, माघे । ४ । ११ ।
"आढ्यादिव प्रापणिकादजस्रं
जग्राह रत्नान्यमितानि लोकः ॥")

**प्रापणीयं**, त्रि, प्राप्यते यत् । (प्र + आप् + अनी-
यर् ।) प्राप्यम् । (यथा, मेघदूते । ५ ।
"धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः
सन्देशार्थाः क्व पटुकरणैः प्राणिभिः प्राप-
णीयाः ॥")

**प्रापेयः**, पुं, गन्धर्व्वगणविशेषः । यथा, अग्निपुराणे ।
"प्रवाच्य जनयत् पुत्त्रान् दिव्यान् वै गायनो-
त्तमान् ।
चतुर्द्दश देवगन्धर्व्वाः प्रापेयाः परिकीर्त्तिताः ॥"

**प्राप्तः**, त्रि, (प्र + आप् + क्त ।) प्रस्थापितः ।
तत्पर्य्यायः । प्रणिहितः २ । लब्धः । तत्पर्य्यायः ।
विन्नः २ भावितः ३ आसादितः ४ भूतः ५ ।
इत्यमरः । ३ । १ । ८६, ३ । १ । १०४ ॥
(उत्पन्नः । समुपस्थितः । यथा, मनुः । ११ । १२२ ।
"एतस्मिन्नेनसि प्राप्ते वसित्वा गर्द्दभाजिनम् ।
सप्तागारांश्चरेद्भैक्ष्यं स्वकर्म्म परिकीर्त्तयन् ॥")

**प्राप्तपञ्चत्वं**, त्रि, (प्राप्तं पञ्चत्वम् मरणं येन ।)
मृतम् । इत्यमरः । २ । ८ । ११७ ॥

**प्राप्तभावः**, पुं, (प्राप्तो भावो येन ।) जातोक्षः ।
इति शब्दचन्द्रिका ॥ (प्राप्तभार इत्यपि क्वचित्
पाठः ॥) लब्धसत्तादौ, त्रि ॥

**प्राप्तरूपः**, त्रि, (प्राप्तं रूपं येन ।) पण्डितः ।
मनोज्ञः । इत्यमरः । ३ । ३ । १३१ ॥ रूपवांश्च ॥

**प्राप्तव्यं**, त्रि, प्राप्यते यत् । प्रपूर्ब्बापधातोः कर्म्मणि
तव्यप्रत्ययः । प्राप्यम् । (यथा, रामायणे । २ ।
२९ । १० ।
"आदेशो वनवासस्य प्राप्तव्यः स मया किल ॥")

**प्राप्तिः**, स्त्री, (प्र + आप् + क्तिन् ।) उदयः ।
(यथा, महाभारते । १४ । ४८ । ३ ।
"गच्छत्यात्मप्रसादेन विदुषां प्राप्तिमव्ययाम् ॥")
धनादिवृद्धिः । अधिगमः । लाभः । इत्यमर-
भरतौ ॥ प्रापणम् । (यथा, मनुः । ९ । १०३ ।
"एष स्त्रीपुंसयोरुक्तो धर्म्मो वो रतिसंहितः ।
आपद्यपत्यप्राप्तिश्च दायभागं निबोधत ॥")
संहतिः । इति शब्दरत्नावली ॥ अणिमाद्यष्टैश्व-
र्य्यान्तर्गतैश्वर्य्यविशेषः । स च अभीप्सितप्राप-
णम् । इति हेमचन्द्रो भरतश्च ॥

**प्राप्यं**, त्रि, (प्र + आप् + ण्यत् ।) प्राप्तव्यम् ।
तत्पर्य्यायः । गम्यम् २ समासाद्यम् ३ । इत्य-
मरः । ३ । १ । ९२ ॥ (यथा, मार्कण्डेये । ६२ । २० ।
"मयैषा सानुरागेण बहुशः प्रार्थिता सती ।
निराकृतवती सेयमद्य पाप्या भविष्यति ॥"
व्य, प्र + आप् + ल्यप् । यथा, मेघदूते ।
"प्राप्यावन्तीमुदयनकथाकोविदग्रामवृद्धान् ॥")

**प्राबोधिकः**, पुं, (प्रबोधाय हितः । प्रबोध + ठक् ।)
उषःकालः । इति शब्दमाला ॥ प्राबोधकोऽपि
पाठः ॥

**प्राभवं**, क्ली, (प्रभोर्भावः । प्रभु + अण् ।) श्रेष्ठ-
त्वम् । इति शब्दचन्द्रिका ॥

**प्राभाकरः** पुं, (प्रभाकरस्यायं तन्मतं वेत्तीति ।
प्रभाकर + अण् ।) मीमांसकविशेषः । यथा,
"व्याप्तिस्वरूपं निरूप्य परमतनिराकरणपूर्ब्बकं

स्वमतेन तद्ग्रहीपायमभिधातुं प्रथमं प्राभा-
करमतमुपदर्श्यति सेयमित्यादिना।” इति
व्याप्तिग्रहोपायशिरोमणिः॥ प्राभाकरमते
व्याप्तेः सकृद्दर्शनगम्यत्वं यथा तस्मात् परिशेषेण
सकृद्दर्शनगम्या सा। इति व्याप्तिग्रहोपाय-
चिन्तामणिः॥

**प्राभृतं**, क्ली, (प्राभ्रियते स्मेति। प्र + आ + भृ +
क्त।) उपढौकनम्। इत्यमरः॥ (यथा, कथा-
सरित्सागरे। १७। १६४।
“तं दत्तप्राभृतं दूतं स संमान्य व्यसर्जयत्॥”)

**प्राभृतकं**, क्ली, (प्राभृत + स्वार्थे कन्।) पाभृतम्।
तत्पर्य्यायः। कौशलिका २। इति हारावली।
१५९॥

**प्रामाद्यः**, पुं, (प्रमाद्यत्यनेनेति। प्र + मद् + ण्यत्।)
वासकः। इति शब्दचन्द्रिका॥ स्वार्थे ष्ण्ये
प्रमादः। तस्य भावे, क्ली॥

**प्रामाणिकः**, त्रि, (प्रमाणादागतः। प्रमाण +
ठक्।) हैतुकः। मर्य्यादार्हः। शास्त्रज्ञः। परि-
च्छेदकः। प्रमाणकर्त्ता। इति प्रमाणशब्दात्
कर्त्तरि ष्णिकप्रत्ययः॥

**प्रामाण्यं**, क्ली, (प्रमाणस्य भावः। प्रमाण +
ष्यञ्।) प्रमाकरणत्वम्। प्रमाणशब्दाद्भावार्थे
ष्ण्यप्रत्ययः॥ (यथा, मार्कण्डेये। १५। ४३।
“सत्यं भूतहितार्थोक्तिर्व्वेदप्रामाण्यदर्शनम्।
गुरुदेवर्षिसिद्धर्षिपूजनं साधुसङ्गमः॥”)

**प्रामाण्यवादः**, पुं, (प्रामाण्यस्य वादः कथनम्।)
प्रमाकरणताकथनम्। तद्वति तत्प्रकारकत्व-
प्रमात्वकथनम्। चिन्तामणिन्यायग्रन्थविशेषः।
इति पूर्ब्बाचार्य्याः॥ स यथा। अथ जगदेव
पङ्कनिमग्नमुद्दिधीर्षुरष्टादशसु विद्यास्थानेष्वभ्य-
र्हिततमामान्वीक्षिकीं परमकारुणिको मुनिः
प्रणिनाय। तत्र प्रेक्षावत् प्रवृत्त्यर्थं प्रमाणादि-
पदार्थतत्त्वज्ञानान्निःश्रेयसाधिगम इत्यादावसूत्र-
यत्। तेषु प्रमाणाधीना सर्व्वेषां व्यवस्थितिरिति
प्रमाणतत्त्वमत्र विविच्यते। इत्यादि गङ्गेशो-
पाध्यायः॥

**प्रामीत्यं**, क्ली, (प्रमयनमिति। प्र + मी वधे +
भावे क्त। तत्र प्रमीते मरणे साधु इति ष्यञ्।
अस्य वधतुल्यत्वात्तथात्वम्।) ऋणम्। इति
त्रिकाण्डशेषः। (प्रमीतस्य भाव इति। प्रमीत +
ष्यञ्।) मृतत्वञ्च॥

**प्रायः**, पुं, (प्रकृष्टमयनमिति। प्र + अय + घञ्।
यद्वा, प्र + इ + “एरच्।” ३। ३। ५६।
इत्यच्।) मरणम्। मरणार्थमनशनम्। (यथा,
रामायणे। ४। ५३। १२।
“अहं वः प्रतिजानामि न गमिष्याम्यहं पुरीम्।
इहैव प्रायमासिष्ये श्रेयो मरणमेव च॥”)
तुल्यम्। बाहुल्यम्। इति मेदिनी। ये, ३६॥
(यथा, साहित्यदर्पणे। ३। १११।
“तस्कराः पण्ड्का मूर्खाः सुखप्राप्तधनास्तथा।
लिङ्गिनश्छन्नकामाद्या आसां (वेश्यानाम्) प्रायेण
वल्लभाः॥”)

वयः। इति हेमचन्द्रः॥ (पापम्। तपः। इति
स्मृतिः॥ क्ली, प्रवेशः। युद्धम्। यथा, ऋग्वेदे।
२। १८। ८।
“उप ज्येष्ठे वरूथे गभस्तौ
प्राये प्राये जिगीवांसः स्याम॥”
“किञ्च प्राये प्राये सोमपानार्थमिन्द्रस्य यज्ञ-
शालायां प्रवेशे प्रवेशे जिगीवांसः शत्रूणां
जेतारो भवेम। यद्वा, प्राये प्राये प्रकर्षेण
इयते गम्यते योद्धृभिरिति प्रायं युद्धम्। तस्मिन्
युद्धे जिगीवांसः शत्रून् जितवन्तो भवेम॥”
इति तद्भाष्ये सायनः॥ त्रि, गमकः। यथा,
मनौ। ३। २६४।
“प्रक्षाल्यहस्तावाचम्य ज्ञातिप्रायं प्रकल्पयेत्।
ज्ञातिभ्यः सत्कृतं दत्त्वा बान्धवानपि भोजयेत्॥”
“प्रक्षाल्येति। तदनुहस्तौ प्रक्षाल्याचम्य ज्ञाति-
प्रायमन्नं कुर्य्यात्। ज्ञातीन् प्रैति गच्छतीति
ज्ञातिप्रायं कर्म्मण्यण्। ज्ञातीन् भोजये-
दित्यर्थः॥” इति कुल्लूकभट्टः॥)

**प्रायः**, [स्] व्य, (प्र + अय गतौ + असुन्।)
बाहुल्यम्। इत्यमरः। ३। ४। १७॥ (यथा,
कथासरित्सागरे। ६। १२३।
“ततोऽहं शर्म्मवर्म्मा च ज्ञातवन्तौ क्रमेण ताम्।
अत्रान्तरे स च प्रायः पर्य्यहीयत वासरः॥”)

**प्रायश्चित्तं**, क्ली, (प्रायस्य पापस्य चित्तं विशोधनं
यस्मात्। यदुक्तं स्मृतौ।
“प्रायः पापं समुद्दिष्टं चित्तं तस्य विशोधनम्॥”
यद्वा, प्रायस्य तपसः चित्तम् निश्चय इति।
“पारस्करप्रभृतीनि च संज्ञायाम्।” ६। १।
१५७। इत्यत्र। “प्रायस्य चित्तिचित्तयोः।”
इति वार्त्तिकोक्त्या सुट् निपात्यते च। निरु-
क्तिस्तु निम्ने द्रष्टव्या।) पापक्षयमात्रसाधनं
कर्म्म। यथा, हारीतः। प्रयतत्वाद्वोपचित-
मशुभं नाशयतीति प्रायश्चित्तम्॥ * ॥ (“प्राय-
श्चित्तमिति। यत्तपःप्रभृतिकं कर्म्म उपचितं
सञ्चितमशुभं पापं नाशयतीति कृतत्तत्-
कर्म्मभिः कर्त्तुः प्रयतत्वाद्वा शुद्धत्वाद्वे तत्-
प्रायश्चित्तम्। तथाच पुनर्हारीतः। यथा,
क्षारोपस्वेदचण्डनिर्णोदनप्रक्षालनादिभिर्वासांसि
शुध्यन्ति एवं तपोदानयज्ञैः पापकृतः शुद्धि-
मुपयान्ति। शुद्धिं पापक्षयम्। यथा, महा-
भारते।
‘अद्भिर्गात्रान् मलमिव तमा ह्यग्निभयाद्यथा।
दानेन तपसा चैव सर्व्वपापमपोहति॥’
तेन पापक्षयमात्रसाधनत्वेन विधिबोधितं
कर्म्म प्रायश्चित्तम्। मात्रार्थलाभस्तु प्रयतत्वाद्-
वेत्येवकारार्थकवाशब्दात्। तथाच विश्वः।
‘वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये।’
एवञ्च।
‘अश्वमेधेन शुध्यन्ति महापातकिनस्त्विमे।’
इति विष्णूक्तस्याश्वमेधस्यापि प्रायश्चित्तत्वम्।
पापक्षयस्वर्गोभयसाधकस्यतु तस्यापि न प्राय-
श्चित्तत्वम्। प्रायश्चित्तस्य स्वध्वं सादिजनकत्वेऽपि
तदंशे विधिबोधितत्वाभावान्नासम्भवः॥ इति
प्रायश्चित्ततत्त्वम्॥) तस्य व्युत्पत्तिर्य्यथा।
अङ्गिराः।
“प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते।
तपोनिश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम्॥”
निश्चयसंयुक्तम्पापक्षयसाधनत्वेन निश्चित-
मित्यर्थः॥ * ॥ पापन्तु वैदिकप्रतिपाद्योऽनर्थः।
अनर्थश्चानिष्टसाधनम्। पापकारणमुक्तं याज्ञ-
वल्क्येन। यथा, --
“विहितस्याननुष्ठानान्निन्दितस्यच सेवनात्।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति॥” * ॥
पापविशेषेणावस्थाविशेषमाह मनुः।
“शरीरजैः कर्म्मदोषैर्याति स्थावरतां नरः।
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्॥
इह दुश्चरितैः केचित् केचित् पूर्ब्बकृतैस्तथा।
प्राप्नुवन्ति दुरात्मानो नरा रूपविपर्य्ययम्॥”
यमः।
“सुरापो ब्रह्महा गोघ्नः सुवर्णस्तेयकृन्नरः।
पतितैः संप्रयुक्तश्च कृतघ्नो गुरुतल्पगः।
एते पतन्ति सर्व्वेषु नरकेष्वनुपूर्ब्बशः॥” * ॥
प्रायश्चित्तमाहात्म्यं यथा। अङ्गिराः।
“उद्यच्छन् यद्वदादित्यस्तमः सर्व्वं व्यपोहति।
तद्वत् कल्याणमातिष्ठन् सर्व्वं पापं व्यपोहति॥
पापञ्चेत् पुरुषः कृत्वा कल्याणमभिपद्यते।
मुच्यते पातकैः सर्व्वैर्महाभ्रैरिव चन्द्रमाः॥”
कल्याणं प्रायश्चित्तम्॥ * ॥ तस्यावश्यकर्त्तव्यत्व-
माह यमः।
“तपसोऽन्ते विशुध्यन्ति कर्म्मणां वा परिक्षयात्।
तस्मात् कर्त्तव्यमेतैस्तु प्रायश्चित्तं विशुद्धये॥”
कर्म्मणां भोगेन परिक्षयादित्यर्थः॥ * ॥ प्राय-
श्चित्तार्हत्वमाह मनुः।
“अकुर्व्वन् विहितं कर्म्म निषिद्धन्तु समाचरन्।
प्रसजंश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः॥ * ॥
अज्ञानाद्यदि वा ज्ञानात् कृत्वा कर्म्म विग-
र्हितम्।
तस्माद्विमुक्तिमन्विच्छन् द्वितीयं न समाचरेत्॥”
प्रायश्चित्तस्य काम्यत्वं नैमित्तिकत्वं नित्यत्वञ्च
यथा। जावालः।
“काम्यानां सफलार्थञ्च दोषघातार्थमेव च।
अतः काम्यं नैमित्तिकञ्च प्रायश्चित्तमिति
स्थितिः॥
चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये।
निन्द्यैश्च लक्षणैर्युक्ता जायन्ते निष्कृतैनसः॥ * ॥
ज्ञानाज्ञानकृतपापयोः प्रायश्चित्तभेदो यथा।
अङ्गिराः।
“अकामतः कृते पापे प्रायश्चित्तं न कामतः।
स्यात्त्वकामकृते यत्तु द्विगुणं बुद्धिपूर्ब्बके॥” * ॥
अथ प्रायश्चित्तिनस्पर्षदुपस्थानम्।
तत्राङ्गिराः।
“कृते निःसंशये पापे न भुञ्जीतानुपस्थितः।
भुञ्जानो वर्द्धयेत् पापमसत्यं पर्षदि ब्रुवन्॥
सचेलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः।

उपस्थाय ततः शीघ्रमार्त्तिमान् धरणीं गतः ।
गात्रैश्च शिरसा चैव न च किञ्चिदुदाहरेत् ॥”
उपस्थानञ्च ब्राह्मणान् वस्त्रादिना तोषयित्वा
कार्य्यम् । महत्सु पापेषु राज्ञोऽप्युपस्थितिः
कार्य्येत्याह देवलः ।
“स्वयं वा ब्राह्मणैः कृच्छ्रमल्पदोषे विधीयते ।
राज्ञा च ब्राह्मणैश्चैव महत्सु परिचक्षते ॥” * ॥
परिषदमाहाङ्गिराः ।
“एकविंशतिसंख्याकैर्मीमांसावेदपारगैः ।
वेदाङ्गकुशलैश्चैव परिषत् संप्रकल्पयेत् ॥
चातुर्विद्यो विकल्पी च अङ्गविद्धर्म्मपाठकः ।
त्रयश्चाश्रमिणो वृद्धाः पर्षत् स्यात्तु दशावरा ॥”
मनुः ।
“त्रैविद्यो हेतुकस्तर्की नैरुक्तो धर्म्मपाठकः ।
त्रयश्चाश्रमिणः पूर्ब्बे पर्षत् स्यात्तु दशावरा ॥”
अङ्गिराः ।
“एषा तु लघुकार्य्येषु मध्यमेषु तु मध्यमा ।
महापातकिशोध्येषु शतशो भूय एव वा ॥”
प्रदर्शनार्थमिदम् । यावद्भिरेव निरूपणं ताव-
द्भिरेव परिषत् । दृष्टार्थत्वादेव तस्याः । तथा च
यमः ।
“एको द्वौ वा त्रयो वापि यद्ब्रूयुर्धर्म्मपाठकाः ।
स धर्म्म इति विज्ञेयो नेतरेषां सहस्रशः ॥ *” ॥
प्रायश्चित्ताकथने दोषो यथा, --
“आर्त्तानां मार्गमाणानां प्रायश्चित्तानि ये
द्विजाः ।
जानन्तो न प्रयच्छन्ति तेऽपि तद्दोषभागिनः ॥
अनर्च्चितैरनाहूतैरपृष्टैश्चैव संसदि ।
प्रायश्चित्तं न वक्तव्यं जानद्भिरपि जल्पतः ॥
न्यायतो मार्गमाणस्य क्षत्रियादेः प्रणामिनः ।
अन्तरा ब्राह्मणं कृत्वा व्रतमेतत् समादिशेत् ॥”
हारीतः ।
“यथावयो यथाकालं यथाप्राणञ्च ब्राह्मणे ।
प्रायश्चित्तं प्रदातव्यं ब्राह्मणैर्धर्म्मपाठकैः ॥
तस्मात् कृच्छ्रमथाप्यर्द्धं पादं वापि विधानतः ।
ज्ञात्वा बलाबलं कालं प्रायश्चित्तं प्रकल्पयेत् ॥”
अशक्तावनुग्रहमाह पराशरः ।
“दुर्ब्बलेऽनुग्रहः कार्य्यस्तथा वै शिशुवृद्धयोः ।
अतोऽन्यथा भवेद्दोषस्तस्मान्नानुग्रही भवेत् ॥”
स्नेहादिनानुग्रहे दोषो यथा, --
“स्नेहाद्वा यदि वा लोभात् मोहादज्ञानतो-
ऽपि वा ।
कुर्व्वन्त्यनुग्रहं ये तु तत् पापं तेषु गच्छति ॥”
शास्त्रीयप्रायश्चित्तमुदाहृत्यपश्चादनुग्रहः कार्य्य
इत्याहाङ्गिराः ।
“कृत्वा पूर्ब्बमुदाहारं यथोक्तं धर्म्मवक्तृभिः ।
पश्चात् कार्य्यानुसारेण शक्त्या कुर्व्वन्त्यनुग्रहम् ॥”
वृद्धत्वादिभेदात् प्रायश्चित्तं यथा, --
“अशीतिर्य्यस्य वर्षाणि बालो वाप्यूनषोडशः ।
प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव च ॥”
अथ पापनिष्क्रमणादिः ।
तत्र मनुः ।
“ख्यापनेनानुतापेन तपसाध्ययनेन च ।
पापकृन्मुच्यते पापात्तथा दानेन चापदि ॥”
आपदीत्यनेन अध्ययनतपसोर्दानमनुकल्पइत्यु-
क्तम् । एतद्धिंसाव्यतिरिक्तविषयम् । हिंसा-
यान्तु दानं मुख्यम् । यथा, भविष्ये ।
“हिंसात्मकानां सर्व्वेषां कीर्त्तितानां मनीषिभिः ।
प्रायश्चित्तकदम्बानां दानं प्रथम उच्यते ॥”
तथा मनुः ।
“दानेन वधनिर्णेकं सर्पादीनामशक्नुवन् ।
एकैकशश्चरेत् कृच्छ्रं द्विजः पापापनुत्तये ॥” * ॥
सामान्यप्रायश्चित्तानियथा, संवर्त्तः ।
“हिरण्यदानं गोदानं भूमिदानं तथैव च ।
नाशयन्त्याशु पापानि महापातकजान्यपि ॥”
यमः ।
“शोषणेन शरीरस्य तपसाध्ययनेन च ।
पापकृन्मुच्यते पापात् दानेन च दमेन च ॥”
मनुः ।
“कृत्वा पापं हि सन्तप्य तस्मात् पापात्प्रमुच्यते ।
नैतत् कुर्य्यात् पुनरिति निवृत्त्या पूयते नरः ॥”
विष्णुपुराणम् ।
“प्रायश्चित्तान्यशेषाणि तपःकर्म्मात्मकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥”
यमः ।
“गवाह्निका देवपूजा वेदाभ्यासः सरित्प्लवः ।
नाशयन्त्याशु पापानि महापातकजान्यपि ॥”
गीतमः । “हिरण्यं गौर्व्वासोऽश्वो भूमिस्तिला
घृतमन्नमिति देयानि । एतान्येवानादेशे विक-
ल्पेन क्रियेरन् एनसि लघुनि लघूनि गुरुणि
गुरूणि ।” विष्णुपुराणम् ।
“एवं विषयभेदाद्वै व्यवस्थाप्यानि पुत्रक ! ।
प्रायश्चित्तानि सर्व्वाणि गुरूणि च लघूनि च ॥
अन्यथा हि महाबाहो ! लघूनामुपदेशतः ।
गुरूणामुपदेशो हि निष्प्रयोजनतां व्रजेत् ॥”
महाभारते ।
“यद्यकार्य्यशतं कृत्वा कृतं गङ्गाभिषेचनम् ।
सर्व्वं दहति गङ्गाम्भस्तूलराशिमिवानलः॥”
व्रतानि शुद्धिकारणान्याह विश्वामित्रः ।
“कृच्छ्रं चान्द्रायणादीनि शुद्ध्यभ्युदयकारणम् ।
प्रकाशे वा रहस्ये वा संशयेऽनुक्तके स्फुटे ॥
प्राजापत्यः शान्तपनः शिशुकृच्छ्रः पराककः ।
अतिकृच्छ्रः पर्णकृच्छ्रः सौम्यः कृच्छ्रातिकृच्छ्रकः ॥
महाशान्तपनः शुद्ध्यै तप्तकृच्छ्रस्तु पावनः ।
जलोपवासकृच्छ्रश्च ब्रह्मकूर्च्चस्तु शोधकः ॥
एते समस्ता व्यस्ता वा प्रत्येकमेकशोऽपि वा ।
पातकादिषु सर्व्वेषु पापकेषु प्रयत्नतः ॥
कार्य्याश्चान्द्रायणैर्युक्ताः केवला वा विशुद्धये ।
शिशुचान्द्रायणं प्रोक्तं यतिचान्द्रायणं तथा ॥
यवमध्यं तथा प्रोक्तं तथा पिपीलिकाकृति ।
उपवासस्त्रिरात्रं वा मासः पक्षस्तदर्द्धकम् ॥
षडहद्वादशाहादि कार्य्यं शुद्धिफलार्थिना ।
उपपातकयुक्तानामनादिष्टेषु चैव हि ॥
प्रकाशे च रहस्ये च अभिसन्ध्याद्यपेक्षया ।
जातिशक्तिगुणान् दृष्ट्वा सकृद्बुद्धिकृतं तथा ॥
अनुबन्धादिकं दृष्ट्वा सर्व्वं कार्य्यं यथाक्रमम् ॥”
प्रकाशकृते पापे व्रतानि मुख्यानि । रहस्यकृते
जपादीनि । यथा प्राजापत्यादीन्यभिधायमनुः ।
“एतैर्द्विजातयः शोध्या व्रतैराविष्कृतैनसः ।
अनाविष्कृतपापांस्तु मन्त्रैर्होमस्तु शोधयेत् ॥”
देवलः ।
“प्रकाश उक्तं यत्किञ्चित् विंशभागो रहस्यके ।
त्रिंशभागः षष्टिभागः कल्प्यो जात्याद्यपेक्षया ॥”
इति प्रायश्चित्तविवेकः ॥
अथ प्रायश्चित्तपूर्ब्बाहकृत्यम् । शङ्खलिखितौ ।
“वाप्य केशनखान् पूर्ब्बं घृतं प्राश्य बहिर्निशि ।
प्रत्येकं नियतं कालमात्मनो व्रतमादिशेत् ।
प्रायश्चित्तमुपासीनो वाग्यतस्त्रिसवनं स्पृशेत् ॥”
केशधारणेच्छायां द्विगुणव्रतादिकमाह हारीतः ।
“राजा वा राजपुत्त्रो वा ब्राह्मणो वा बहुश्रुतः ।
केशानां वपनं कृत्वा प्रायश्चित्तं समाचरेत् ॥
केशानां धारणार्थन्तु द्विगुणं व्रतमाचरेत् ।
द्विगुणे तु व्रते चीर्णे द्विगुणा दक्षिणा भवेत् ॥”
विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनम् ।
ऋते महापातकिनो गोहन्तुश्चावकीर्णिनः ॥”
सधवास्त्रीणां विशेषमाह भवदेवभट्टधृतं वच-
नम् ।
“वपनं नैव नारीणां नानुव्रज्या जपादिकम् ।
न गोष्ठे शयनं तासां न च दद्याद्गवाजिनम् ॥
सर्व्वान् केशान् समुद्धृत्य छेदयेदङ्गुलिद्वयम् ।
सर्व्वत्रैवं हि नारीणां शिरसो मुण्डनं स्मृतम् ॥”
अथ धेनुमूल्यव्यवस्था । तत्र संवर्त्तः ।
“प्राजापत्यव्रताशक्तौ धेनुं दद्यात् पयस्विनीम् ।
धेनोरभावे दातव्यं तुल्यं मूल्यं न संशयः ॥”
पयस्विनीमिति विशेषणं दुग्धोपयोगाय । स च
वत्सं विना न सम्भवति । अतः सवत्साया एव
दानं मुख्यम् । तदभावे यथोचितं मूल्यम् । तद-
सम्भवे पुराणत्रयम् । द्वात्रिंशत्पणिका गावो
वत्सः पौराणिको भवेदिति कात्यायनवचनात् ।
षट्त्रिंशन्मतमिति कृत्वा पठन्ति ।
“धेनुः पञ्चभिराढ्यानां मध्यानां त्रिपुराणिकी ।
कार्षापणैकमूल्या हि दरिद्राणां प्रकीर्त्तिता ॥”
प्रायश्चित्तोत्तरकर्त्तव्याणि । यथा । भविष्ये ।
“क्रियते शुद्धये यत्तु ब्राह्मणानान्तु भोजनम् ।
शुद्ध्यर्थमिति तत् प्रोक्तं वैनतेय ! मनीषिभिः ॥”
जावालः ।
“आरम्भे सर्व्वकृच्छ्राणां समाप्तौ च विशेषतः ।
आज्येनैव हि शालाग्नौ जुहुयादाहुतीः पृथक् ।
श्राद्धं कुर्य्याद्व्रतस्यान्ते गोहिरण्यान्नदक्षिणम् ॥”
प्रायश्चित्तानन्तरं गोभ्यो यवसं दद्यात् । यदि तु
गावस्तद्दत्ततृणं न गृह्णीयुस्तदा पुनस्तत्प्राय-
श्चित्तमनुतिष्ठेत् । यथा हारीतः । स्वशिरसा
यवसमादाय गोभ्यो दद्यात् यदि ताः प्रमुदिता
गृह्णीयुरथैनं प्रवर्त्तयेयुः । एनं कृतप्रायश्चित्तम् ।
इतरथा न । इति प्रायश्चित्ततत्त्वम् ॥ * ॥

**अथ प्रायश्चित्तविवेकोक्तनवविधपापानां प्रायश्चित्तानि लिख्यन्ते ।**

| अथातिपातकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
|---|---|---|---|---|
| ब्राह्मणस्य मातृगमनं दुहितृगमनं स्नुषागमनञ्च। | अज्ञानतो द्विगुणद्वादशवार्षिकव्रतम्। तत्तु महापातके द्रष्टव्यम्। ज्ञानत एतद्द्विगुणम्। | ३६० धेनवः। | १०८० कार्षापणाः। तल्लभ्यस्वर्णादि वा। | २०० गावः। अशक्तौ २०० कार्षापणाः। |
| क्षत्रियवैश्यशूद्राणां मातृदुहितृस्नुषागमनम्। | हुताशनप्रवेशेन मरणम्। चतुर्व्विंशतिवार्षिकव्रतं वा। एतत्तु अकामतः कामतस्तद्द्वैगुण्यम्। मातृदुहितृस्नुषाणामपि एतद्व्रतादिकं करणीयम्। | ३६० धेनवः। | १०८० कार्षापणाः। तल्लभ्यस्वर्णादि वा। | २०० गावः। अशक्तौ २०० कार्षापणाः। |
| अथ महापातकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
| अकामतो ब्राह्मणकर्त्तृकब्रह्मवधः। | द्वादशवार्षिकव्रतम्। यथा मनुः। "ब्रह्महा द्वादशाब्दानि कुटों कृत्वा वने वसेत्। भैक्ष्याण्यात्मविशुद्ध्यर्थं कृत्वा शवशिरोध्वजम्। भिक्षाशी विचरेद्ग्रामं वन्यैर्यदि न जीवति॥" | १८० धेनवः। | ५४० कार्षापणाः। तल्लभ्यहिरण्यादिकं वा। | १०० गावः। तदशक्तौ १०० कार्षापणाः। |
| कामतो ब्राह्मणकर्त्तृकब्रह्मवधः। | याज्ञवल्क्योक्तप्रकारेण मरणम्। तथा। लोमभ्यः स्नाहीति ऋचा लोमप्रभृति वै तनुम्। मज्जान्तां जुहुयाद्वापि मन्त्रैरेभिर्यथाक्रमम्। एतत्तु कलौ ब्राह्मणेतरपरम्। तदशक्तौ द्विगुणद्वादशवार्षिकव्रतम्। | ३६० धेनवः। | १०८० कार्षापणाः। तल्लभ्यस्वर्णादि वा। | २०० गावः। अशक्तौ २०० कार्षापणाः। |
| ज्ञानतो ब्राह्मणकर्त्तृकब्राह्मणीगर्भवधः। | ब्रह्मवधप्रायश्चित्तम्। अज्ञानत एतदर्द्धम्। अनुपनीतबालकवधेऽप्येवम्। | ३६० धेनवः। | १०८० कार्षापणाः। तल्लभ्यस्वर्णादि वा। | २०० गावः। अशक्तौ २०० कार्षापणाः। |
| अकामतः सवनस्थब्राह्मणवधः। | द्विगुणद्वादशवार्षिकव्रतम्। | ३६० धेनवः। | १०८० कार्षापणाः। तल्लभ्यस्वर्णादि वा। | २०० गावः। अशक्तौ २०० कार्षापणाः। |
| कामतः सवनस्थब्राह्मणवधः। | तद्द्वैगुण्यम्। ४८ अष्टचत्वारिंशद्वार्षिकव्रतम्। | ७२० धेनवः। | २१६० कार्षापणाः। तल्लभ्यस्वर्णादि वा। | ४०० गावः। अशक्तौ ४०० कार्षापणाः। |
| ब्राह्मणकर्त्तृकमातृसोदरभ्रातृगुरुश्रोत्रियाहिताग्नीनांवधः। | ४८ अष्टचत्वारिंशद्वार्षिकव्रतम्। एतच्च कामतः। अकामत एतदर्द्धम्। | ७२० धेनवः। | २१६० कार्षापणाः। तल्लभ्यस्वर्णादि वा। | ४०० गावः। अशक्तौ ४०० कार्षापणाः। |
| ज्ञानतो ब्राह्मणकर्त्तृकवेदपारगाततायिब्राह्मणवधः। | १२ वार्षिकव्रतम्। | १८० धेनवः। | ५४० कार्षापणाः। तल्लभ्यस्वर्णादि वा। | १०० गावः। अशक्तौ १०० कार्षापणाः। |
| अज्ञानतस्तस्य वधः। | तदर्द्धम्। ६ वार्षिकव्रतम्। | ९० धेनवः। | २७० कार्षापणाः। | ५० गावः |

| | | | | । तदशक्तौ ५० कार्षापणाः । |
|---|---|---|---|---|
| ज्ञानतोऽज्ञानतो वा ब्राह्मणकर्त्तृकपतितब्राह्मणवधः। | तथा । | तथा । | तथा । | तथा । |
| अकामत आग्रहारिकादिब्राह्मणवधः। | एकवार्षिकव्रतम् । | १५ धेनवः । | ४५ कार्षापणाः । | ९ गावः । तदशक्तौ ८ । ६ ॥। कार्षापणाः । |
| कामतस्तस्य वधः । | तद्द्विगुणम् । | तद्द्विगुणम् । | तद्द्विगुणम् । | तद्द्विगुणम् । |
| अकामतः क्षत्रियकर्त्तृकब्रह्मवधः । | ब्राह्मणकर्त्तृकवधप्रायश्चित्तद्विगुणम्। तच्च २४ वार्षिकव्रतम् । | ३६० धेनवः । | १०८० कार्षापणाः । तल्लभ्यस्वर्णादि वा । | २०० गावः । अशक्तौ २०० कार्षापणा । |
| अथ महापातकानि । | प्रायश्चित्तानि । | तदशक्तौ धेनुदानम् । | तदशक्तौ चूर्णीदानम् । | दक्षिणा । |
| कामतस्तद्वधः । | तद्द्विगुणम् । | तद्द्विगुणम् । | तद्द्विगुणम् । | तद्द्विगुणम् । |
| अकामतो वैश्यकर्त्तृकब्रह्मवधः । ब्राह्मणकर्त्तृकवधप्रायश्चित्तत्रिगुणम्। तच्च ३६ वार्षिकव्रतम् । | ५४० धेनवः । | १६२० कार्षापणाः । | ३०० गावः । अशक्तौ ३०० कार्षापणाः । | |
| कामतो वैश्यकर्त्तृकब्रह्मवधः । | ७२ वार्षिकव्रतम् । | १०८० धेनवः । | ३२४० कार्षापणाः । | ६०० गावः । अशक्तौ ६०० कार्षापणाः । |
| अकामतः शूद्रकर्त्तृकब्रह्मवधः । | ब्राह्मणकर्त्तृकवधप्रायश्चित्तचतुर्गुणम् । तच्च ४८ वार्षिकव्रतम् । | ७२० धेनवः । | २१६० कार्षापणाः । | ४०० गावः । अशक्तौ ४०० कार्षापणाः । |
| कामतस्तद्वधः । | तद्द्विगुणम् । | तद्द्विगुणम् । | तद्द्विगुणम् । | तद्द्विगुणम् । |
| अकामतो ब्राह्मणकर्त्तृकब्राह्मणीवधः । | ब्रह्मवधप्रायश्चित्तार्द्धम् । तच्च ६ वार्षिकव्रतम् । | ९० धेनवः । | २७० कार्षापणाः । | ५० गावः । अशक्तौ ५० कार्षापणाः । |
| कामतस्तद्वधः । | तद्द्विगुणम् । क्षत्रियस्य ब्राह्मणीवधे ब्राह्मणकर्त्तृकवधप्रायश्चित्तद्विगुणम् । वैश्यस्य त्रिगुणम् । शूद्रस्य चतुर्गुणम् । अनेकब्राह्मणवधे प्रायश्चित्तस्यैकत्वम् । यदेव साक्षाद्वधकर्त्तुः प्रायश्चित्तं तदेव स्वल्पप्रहर्त्तुरनग्राहकस्य अप्रवृत्तप्रवर्त्तकरूपप्रयोजकस्यच पादहीनम् । बध्यप्रतिरोधकस्य अनुग्राहकस्य प्रवृत्तप्रवर्त्तकरूपप्रयोजकस्यच अर्द्धम् । अनुमन्तुर्निमित्तिनश्च पादः । अशक्तौ स्त्रीबालवृद्धानां सर्व्वत्रार्द्धम् । | तद्द्विगुणम् । | तद्द्विगुणम् । | तद्द्विगुणम् । |
| ज्ञानतो ब्राह्मणस्य पैष्टीसुरापानम् । द्विरभ्यस्तगौडीमाध्वीपानञ्च। | अग्निसमस्पर्शानां सुरागोमूत्रजलदुग्धघृतगोमयरसानामन्यतमस्यामरणात्पानम् । चतुर्विंशतिवार्षिकव्रतं वा । | ३६० धेनवः । | १०८० कार्षापणाः । तल्लभ्यस्वर्णादि वा । | २०० गावः । अशक्तौ २०० कार्षापणाः । |
| अज्ञानतो ब्राह्मणस्य तासां पानम् । | एतदर्द्धम् । तत्तु द्वादशवार्षिकव्रतम् । | १८० धेनवः । | ५४० कार्षापणाः । तल्लभ्यस्वर्णादि वा । | १०० गावः । |

|  |  |  |  | अशक्तौ १०० कार्षापणाः । |
|---|---|---|---|---|
| अज्ञानतः क्षत्त्रियस्य पैष्टीसुरापानम् । | नववार्षिकव्रतम् । ज्ञानत एतद्द्विगुणम् । | १३५ धेनवः । | ४०५ कार्षापणाः । तल्लभ्यस्वर्णादि वा । | ७५ गावः । अशक्तौ ७५ कार्षापणाः । |
| अज्ञानतो वैश्यस्य पैष्टीसुरापानम् । | षाड्वार्षिकव्रतम् । ज्ञानत एतद्द्विगुणम् । स्त्रीबालवृद्धानामर्द्धादिकम् । | ९० धेनवः । | २७० कार्षापणाः । तल्लभ्यस्वर्णादि वा । | ५० गावः । अशक्तौ ५० कार्षापणाः । |
| अज्ञानतो ब्राह्मणकर्त्तृकब्राह्मणस्वामिकाशीतिरक्तिकापरिमितसुवर्णस्तेयम् । | अपहृतद्रव्यं तस्यानुरूपं मूल्यं वा स्वामिने दत्त्वा द्वादशवार्षिकव्रतं करणीयम् । | १८० धेनवः । | ५४० कार्षापणाः । तल्लभ्यस्वर्णादि वा । | १०० गावः । अशक्तौ १०० कार्षापणाः । |
| ज्ञानतस्तत्कर्त्तृकतत्स्तेयम् । | एतद्द्विगुणं २४ वार्षिकव्रतम् । गुणवद्ब्राह्मणकर्त्तृके तु सर्व्वत्रार्द्धम् । | ३६० धेनवः । | १०८० कार्षापणाः । | २०० गावः । अशक्तौ २०० कार्षापणाः । |
| ज्ञानतः क्षत्त्रियवैश्यशूद्रकर्त्तृकब्राह्मणस्वामिकाशीतिरक्तिकापरिमितसुवर्णस्तेयम् । | राजकर्त्तृकमुषलाघातेन मरणम् । चतुर्विंशतिवार्षिकव्रतं वा । | ३६० धेनवः । | १०८० कार्षापणाः । तल्लभ्यस्वर्णादि वा । | २०० गावः । अशक्तौ २०० कार्षापणाः । |
| अथ महापातकानि । | प्रायश्चित्तानि । | तदशक्तौ धेनुदानम् । | तदशक्तौ चूर्णीदानम् । | दक्षिणा । |
| अज्ञानतस्तत्कर्त्तृकतत्स्वामिकतत्सुवर्णस्तेयम् । | द्वादशवार्षिकव्रतं स्त्रीबालवृद्धानामर्द्धम् । एकस्योभयधर्म्मवत्त्वे पादः । | १८० धेनवः । | ५४० कार्षापणाः । तल्लभ्यस्वर्णादि वा । | १०० गावः । अशक्तौ १०० कार्षापणाः । |
| ज्ञानतो गुर्व्वङ्गनागमनम् । अर्थात् विमातृगमनम् । शूद्रस्य ब्राह्मणीगमनञ्च । | गुरुतल्पगः पापमभिभाष्य तप्ते लौहमये सुप्यात् । ज्वलन्तीं लौहप्रतिमां मृण्मयीं प्रतिमां वा आलिङ्ग्य म्रियेत । स्वयं वा शिश्नवृषणावुत्कृत्य अञ्जलौ निधाय आमरणात् नैरृतीन्दिशमातिष्ठेत् । चतुर्विंशतिवार्षिकव्रतं वा कुर्य्यात् । गुर्व्वङ्गनयापि एतत् करणीयम् । | ३६० धेनवः । | १०८० कार्षापणाः । तल्लभ्यस्वर्णादि वा । | २०० गावः । अशक्तौ २०० कार्षापणाः । |
| अज्ञानतो गुर्व्वङ्गनागमः । | द्वादशवार्षिकव्रतम् । बालवृद्धयोरर्द्धम् । एतच्चातुर्वर्ण्यविषयम् । | १८० धेनवः । | ५४० कार्षापणाः । तल्लभ्यस्वर्णादि वा । | १०० गावः । अशक्तौ १०० कार्षापणाः । |
| चतुर्णां महापातकिनां संसर्गः । | ज्ञानतः सकृत् प्रथमसंसर्गिणोऽष्टादशवार्षिकव्रतम् । | २७० धेनवः । | ८१० कार्षापणाः । तल्लभ्यस्वर्णादि वा । | १५० गावः । अशक्तौ १५० कार्षापणाः । |

| | | | | |
|---|---|---|---|---|
| तत्र गुरुसंसर्गो यथा। पतिताचार्य्यात् वेदाध्ययनम्। १। पतितशिष्याय वेदाध्यापनम्। २। पतितेन ऋत्विजा ज्योतिष्टोमादियजनम्। ३। पतितस्य ज्योतिष्टोमादिनिष्पादनरूपयाजनम्। ४। पतितेन पतितया वा परिणयनम्। ५। स्तेयादिपतितान्यब्राह्मणीगमनम्। ६। पतितान्नस्य पतितेन सहैकपात्रे भोजनम्। ७। | अज्ञानतः सकृत्प्रथमसंसर्गिणो नववार्षिकव्रतम्। | १३५ धेनवः। | ४०५ कार्षापणाः। | ७५ गावः। अशक्तौ ७५ कार्षापणाः। |
| ज्ञानतो द्वितीयसंसर्गिणः नववार्षिकव्रतम्। | १३५ धेनवः। | ४०५ कार्षापणाः। | ७५ गावः। अशक्तौ ७५ कार्षापणाः। | |
| | अज्ञानतो द्वितीयसंसर्गिणः सार्द्धचतुर्वार्षिकव्रतम्। | ६८ धेनवः। | २०२॥० कार्षापणाः। | ३८ गावः। अशक्तौ ३७॥० कार्षापणाः। |
| ज्ञानतस्तृतीयसंसर्गिणः षाड्वार्षिकव्रतम्। | ९० धेनवः। | २७० कार्षापणाः। | ५० गावः। अशक्तौ ५० कार्षापणाः। | |
| अज्ञानतस्तृतीयसंसर्गिणस्त्रैवार्षिकव्रतम्। | ४५ धेनवः। | १३५ कार्षापणाः। | २५ गावः। अशक्तौ २५ कार्षापणाः। | |
| | ज्ञानाज्ञानतश्चतुर्थसंसर्गिणः प्रायश्चित्ताभावः। ब्रह्मघातिनां क्षत्रियवैश्यशूद्राणां ज्ञानाज्ञानतः संसर्गे तु क्रमेण एतस्य द्विगुणं त्रिगुणंचतुर्गुणं ज्ञेयम्। | | | |
| तत्र लघुसंसर्गो यथा। उपनयनं बिना पतिताय वेदाध्यापनम्। १। पतितांत्तादृशाध्ययनम्। २। पतितयजमानस्य अष्टकादियज्ञयाजनम्। ३। पतितेन ऋत्विजाष्टकादियज्ञयजनम्। ४। पतितस्वब्राह्मणीगमनम्। ५। पतितशूद्रागमनम्। ६। अपतितान्नस्य पतितेन सहैकपात्रे भोजनम्। ७। पतितोच्छिष्टभोजनम्। ८। | ज्ञानतः षण्माससंसर्गे प्रथमसंसर्गिणोऽष्टादशवार्षिकव्रतम्। | २७० धेनवः। | ८१० कार्षापणाः। | १५० गावः। अशक्तौ १५० कार्षापणाः। |
| | अज्ञानतः षण्माससंसर्गे प्रथमसंसर्गिणो नववार्षिकव्रतम्। | १३५ धेनवः। | ४०५ कार्षापणाः। | ७५ गावः। अशक्तौ ७५ कार्षापणाः। |
| | ज्ञानतः षण्माससंसर्गे द्वितीयसंसर्गिणो नववार्षिकव्रतम्। | १३५ धेनवः। | ४०५ कार्षापणाः। | ७५ गावः। अशक्तौ ७५ कार्षापणाः। |
| | अज्ञाततः षण्माससंसर्गे द्वितीयसंसर्गिणः सार्द्धचतुर्वार्षिकव्रतम्। | ६८ धेनवः। | २०२॥० कार्षापणाः। | ३८ गावः। अशक्तौ ३७॥० कार्षापणाः। |
| | ज्ञानतः षण्माससंसर्गे तृतीयसंसर्गिणः षाड्वार्षिकव्रतम्। | ९० धेनवः। | २७० कार्षापणाः। | ५० गावः। अशक्तौ ५० कार्षापणाः। |
| | अज्ञानतः षण्माससंसर्गे तृतीयसंसर्गिणस्त्रैवार्षिकव्रतम्। | ४५ धेनवः। | १३५ कार्षापणाः। | २५ गावः। अशक्तौ २५ कार्षापणाः। |
| चतुर्थसंसर्गिणो ज्ञानाज्ञानतः प्रायश्चित्ताभावः। | | | | |
| अथ महापातकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
| महापातकिनां लघुतरसंसर्गो यथा। एकशय्याशनयानादिः। ततो लघुतर आलापस्पर्शनिःश्वासादिः। | एभिश्च त्रिभिर्लघुतरसंसर्गैरेको लघुसंसर्गः। | | | |
| | ज्ञानतस्त्रिभिर्लघुसंसर्गैर्वत्सरेण साम्यम्। तेनाष्टादशवार्षिकव्रतम्। | २७० धेनवः। | ८१० कार्षापणाः। तल्लभ्यस्वर्णादि वा। | १५० गावः। अशक्तौ |

| | | | | |
|---|---|---|---|---|
| | | | | १५० कार्षापणाः । |
| | अज्ञानतो वत्सरद्वयेन । | तथा । | तथा । | तथा । |
| | ज्ञानत एकैकशो वत्सरत्रयेण । | तथा । | तथा । | तथा । |
| | अज्ञानाद्वत्सरषट्केन । | तथा । | तथा । | तथा । |
| | संलापादीनां त्रयाणां एकैकयानादिसमानत्वात्ज्ञानतो वत्सरत्रयेण पातः । | तथा । | तथा । | तथा । |
| | संलापादीनां त्रयाणां एकैकयानादिसमानत्वादज्ञानाद्वर्षषट्केन पातः । तेनाष्टादशवार्षिकव्रतम् । | २७० धेनवः । | ८१० कार्षापणाः । तल्लभ्यस्वर्णादि वा । | १५० गावः । अशक्तौ १५० कार्षापणाः । |
| | ज्ञानादेकैकशो वत्सरनवकेन । | तथा । | तथा । | तथा । |
| | अज्ञानादेकैकशोऽष्टादशवत्सरैः पातः ॥ * ॥ नवविधपापान्वितानां मध्यात् येन पापीयसा यः संसृष्टः स तस्य व्रतं पादहीनं कुर्य्यात् ॥ एतच्च प्रथमसंसर्गिणाम् । द्वितीयसंसर्गिणां द्विपादहीनम् । तृतीयसंसर्गिणां त्रिपादहीनं सर्व्वत्र ज्ञेयम् ॥ * ॥ संसर्गाणामुक्तकालन्यूनाधिक्ये भागहारेण प्रायश्चित्तन्यूनाधिक्यं ज्ञेयम् ॥ * ॥ रघुनन्दनभट्टाचार्य्यमते कलौ लघुसंसर्गेषु प्रतिग्रहादिषु पातित्याभावात् तत्प्रायश्चित्ताभावः ॥ | तथा । | तथा । | तथा । |
| पतितोत्पन्नत्वमपि महापातकिसंसर्गविशेषः । | यस्य पतितस्य यत् प्रायश्चित्तं तस्य पातित्यदशायां जातस्य पुत्त्रस्य तत् तृतीयभागप्रायश्चित्तम् । तदानीं तज्जातायाः कन्यायाः पतितोत्पन्नपुत्त्रप्रायश्चित्ततृतीयभागप्रायश्चित्तम्। | | | |
| अथानुपातकानि । | प्रायश्चित्तानि । | तदशक्तौ धेनुदानम् । | तदशक्तौ चूर्णीदानम् । | दक्षिणा । |
| समुत्कर्षे अनृतम् । तत्तु समुत्कर्षिनिमित्तं वाचा क्रियया वा अन्यथा प्रतिपादनं यथा शूद्रस्य ब्राह्मणोऽहमिति वचनं यज्ञोपवीतधारणञ्च । अथवा परस्य सम्यग्जातिविद्योत्कर्षे सति नायं ब्राह्मणो न च किञ्चिदयं जानीते इत्यनृतवचनम् । १ । राजगामिपैशुनम् । तत्तु राजनि निर्द्दोषस्य दोषख्यापनम् । २ । गुरोरलीकनिर्ब्बन्धः । स तु गुरोर्जन्मदातुर्मृषादोषाभियोगः । ३ । | द्वादशवार्षिकव्रतम् । एतच्च ज्ञानात्यन्ताभ्यासतः ॥ * ॥ एतन्मध्याद्यदुपपातके दृश्यते तदज्ञानादिना लघुविषयञ्चेत्यादिव्यवस्थेयम् ॥ * ॥ यच्च वशिष्ठवचनं ब्रह्मोज्झः कृच्छ्रं द्वादशरात्रं चरित्वा पुनरुपयुञ्जीत वेदमाचार्य्यात् । विष्णुः । समुत्कर्षानृते गुरोश्चालीकनिर्ब्बन्धे तदाक्षारणे च मासं पयसा वर्त्तेत । आक्षारणं परदारगमनाभिशापः । वशिष्ठः । गुरोश्चालीकनिर्ब्बन्धे सचेलस्नातो गुरुं प्रसादयेत् प्रसादात् पूतो भवति । एतानि प्रमादादिकृते बोध्यानि । | १८० धेनवः । | ५४० कार्षापणाः । | १०० गावः । अशक्तौ १०० कार्षापणाः । |
| अथानुपातकानि । | प्रायश्चित्तानि । | तदशक्तौ धेनुदानम् । | तदशक्तौ चूर्णीदानम् । | दक्षिणा । |
| एतानि त्रीणि ज्ञानतः अत्यन्ताभ्यासे अज्ञानकृतब्रह्महत्यासमानि । यागस्थयोः क्षत्त्रियवैश्ययोर्व्वधः । ४ । गर्भिणीवधः । ५ । रजस्वलावधः । ६ । अत्रिगोत्रावधः । ७ । ब्राह्मणव्यतिरिक्ताविज्ञातगर्भवधः । ८ । शरणागतवधः । ९ । एतानि च अज्ञानकृतब्रह्महत्यासमानानि । | | | | |
| ब्रह्मोज्झता । सा च असच्छास्त्राभियोगेन अधीतवेदविस्मरणम् । १ । वेदनिन्दा । अर्थतो ग्रन्थतश्च । २ । कौटसाक्ष्यम् । ३ । सुहृद्वधः । स च ब्राह्मणव्यतिरिक्तमित्रवधः । ४ । गर्हितान्नजग्धिः । सा च ज्ञानतोऽत्यन्ताभ्यासेन अन्त्यजान्नभोजनम् । ५ । गर्हिताद्यजग्धिः । ज्ञानतोऽत्यन्ताभ्यासेन छत्राकलशुनादिभोजनम् । ६ । एतानि षट् अज्ञानकृतसुरापानसमानि । | द्वादशवार्षिकव्रतम् । | १८० धेनवः । | ५४० कार्षापणाः । तल्लभ्यस्वर्णादि वा । | १०० गावः । अशक्तौ १०० कार्षापणाः । |
| ब्राह्मणसम्बन्धिनिःक्षेपहरणम् । १ । नरा २ श्व ३ रजत ४ भूमि ५ वज्र ६ मणीना ७ ञ्चाभ्यासेन हरणम् । एतानि सप्त ब्राह्मणस्वामिकाशीतिरक्तिकापरिमितसुवर्णस्तेयसमानि । | ज्ञानतो द्वादशवार्षिकव्रतम् । अज्ञानतस्तदर्द्धम् । | १८० धेनवः । | ५४० कार्षापणाः । तल्लभ्यस्वर्णादि वा । | १०० गावः । अशक्तौ १०० कार्षापणाः । |
| सपिण्डस्त्रीगमनम् । १ । ब्राह्मणकुमारीगमनम् । २ । चाण्डालादिस्त्रीगमनम् । ३ । सवर्णमित्रस्त्रीगमनम् । ४ । पुत्त्रस्यासवर्णस्त्रीगमनम् । ५ । औरसेतरपुत्त्रभार्य्यागमनम् । ६ । पितृष्वसृगमनम् । ७ । मातृष्वसृगमनम् । ८ । गन्तारमपेक्ष्य हीनवर्णपितृपत्नीगमनम् । ९ । पितृव्यपत्नीगमनम् । १० । मातामहपत्नीगमनम् । ११ । मातुलपत्नीगमनम् । १२ । श्वश्रूगमनम् । १३ । स्वसृगमनम् । १४ । ज्येष्ठभ्रातृपत्नीगमनम् । १५ । राजपत्नीगमनम् । १६ । श्रोत्रिय- | ज्ञानतो महापातकोक्तप्रकारेण मरणं तद्वैकल्पिकं चतुर्विंशतिवार्षिकव्रतम् । | ३६० धेनवः । | १०८० कार्षापणाः । तल्लभ्यस्वर्णादि वा । | २०० गावः । अशक्तौ २०० कार्षापणाः । |
| | अज्ञानतो द्वादशवार्षिकव्रतम् । | १८० धेनवः । | ५४० कार्षापणाः । तल्लभ्यस्वर्णादि वा । | १०० गावः । |

| | | | | |
|---|---|---|---|---|
| | | | | अशक्तौ १०० कार्षापणाः । |
| | पञ्चपुरुषाधिकगामिनीनामासांगमने चान्द्रायणम् । | ८ धेनवः । | २२ ॥ ० कार्षापणाः । सार्द्धसप्तधेनुसंकलनात् । | यथाशक्ति । |
| | अभ्यासव्यभिचारिण्याःसकृद्गमने अर्थात् सप्तमपुरुषगामिन्यागमने पराकः । | ५ धेनवः । | १५ कार्षापणाः । | यथाशक्ति । |
| | अष्टमादिपुरुषगामिन्यागमने तप्तकृच्छ्रम् । | ४ धेनवः । | ११ । ० कार्षापणाः । पादोनधेनुचतुष्टयस्य ग्राह्यत्वात् । | यथाशक्ति । |
| अथानुपातकानि । | प्रायश्चित्तानि । | तदशक्तौ धेनुदानम् । | तदशक्तौ चूर्णीदानम् । | दक्षिणा । |
| पत्नीगमनम् । १७ । ऋत्विक्पत्नीगमनम् । १८ । उपाध्यायपत्नीगमनम् । १९ । शिष्यपत्नीगमनम् । २० । स्वसृसखीगमनम् । २१ । असवर्णाजातदुहितृगमनम् । २२ । आचार्य्यपत्नीगमनम् । २३ । शरणागतागमनम् । २४ । प्रव्रजितागमनम् । २५ । धात्रीगगनम् । २६ । साध्वीगमनम् । २७ । निःक्षप्तस्त्रीगमनम् । २८ । वर्णोत्तमागमनम् । २९ । एतानिगुरुतल्पगमनसमानि । * । इति चतुःप्रकाराण्यनुपातकानिमिलित्वा एकपञ्चाशत्संख्येयानि ॥ | अज्ञानादारोहणमात्रे सम्बन्धविप्रकर्षे वा पराकस्तप्तकृच्छ्रो वा । | | | |
| | ज्ञानतो महापातकोक्तप्रकारेण मरणम् । तद्वैकल्पिकं चतुर्विंशतिवार्षिकव्रतम् । | ३६० धेनवः । | १०८० कार्षापणाः । तल्लभ्यस्वर्णादि वा । | २०० गावः । अशक्तौ २०० कार्षापणाः । |
| | अज्ञानतो द्वादशवार्षिकव्रतम् । | १८० धेनवः । | ५४० कार्षापणाः । तल्लभ्यस्वर्णादि वा । | १०० गावः । अशक्तौ १०० कार्षापणाः । |
| | पञ्चपुरुषाधिकगामिनीनामासांगमने चान्द्रायणम् । | ८ धेनवः । | २२ ॥ ० कार्षापणाः । सार्द्धसप्तधेनुसंकलनात् । | यथाशक्ति । |
| | अभ्यासव्यभिचारिण्याःसकृद्गमने अर्थात् सप्तमपुरुषगामिन्यागमने पराकः । | ५ धेनवः । | १५ कार्षापणाः । | यथाशक्ति । |
| | अष्टमादिपुरुषगामिन्यागमने तप्तकृच्छ्रम् । | ४ धेनवः । | ११ । ० कार्षापणाः । पादोनधेनु-चतुष्टयस्य ग्राह्यत्वात् । | यथाशक्ति । |
| अथोपपातकानि । | प्रायश्चित्तानि । | तदशक्तौ धेनुदानम् । | तदशक्तौ चूर्णीदानम् । | दक्षिणा । |
| ब्राह्मणक्षत्त्रियवैश्यकर्त्तृकज्ञानकृतब्राह्मणस्वामिकगवीवधः । | त्रैमासिकव्रतम् । तद्यथा । कृतसशिखवपनो व्यापादिताया गोश्चर्म्मणा कृतपरिधानोत्तरावगुण्ठनोमासमेकं गोमूत्रेण यवागूकृतान् यवान् पिबन् गोष्ठे वसेत् । अपरमासद्वये उपोष्यापरदिने सायं स्वल्पं भुञ्जीत । जितेन्द्रियो गोमूत्रेण स्नानं चरेत् । दिवा गवानुगमनं ऊदर्ध्वं तिष्ठन् गोरजःपानञ्च चरेत् । गोः शुश्रूषां नमस्कारञ्च कुर्य्यात् । रात्रौ वीरासनं वसेत् । तिष्ठन्तीषु गोष्वनुतिष्ठेत् । व्रजन्तीषु तास्वनुव्रजेत् । आसीनासु तास्वासीनः । वीतमत्सरः । आतुरामभिशस्तां पतितां पङ्कलग्नां भयनिमित्तैश्चौरव्याघ्रादिभिराक्रान्ताङ्गां सर्व्वशक्तिभिर्विमोचयेत् । ग्रीष्मवर्षाशीतेषु मारुते भृशं वाति वा गोस्त्राणमकृत्वा आत्मत्राणं न कुर्य्यात् । आत्मनः अन्येषां वा गृहक्षेत्रखलेषु भक्षयन्तीं पिबन्तं वत्सञ्च निवारणाभिप्रायेण न कथयेत् । एतद्विधानेन यो गामनुगच्छति स गोहत्याकृतपापात् प्रमुच्यते । एकं वृषं दश गाश्च दक्षिणां दद्यात् । एतदशक्तौ वेदविद्भ्यः सर्व्वस्वं दद्यात् । एतच्चतुर्हायण्यादिविषयम् । स्त्रीशूद्रबालवृद्धानामर्द्धम् । | १२ धेनवो भवदेवभट्टसम्मताः । | ३६ कार्षापणाः । तल्लभ्यस्वर्णादि वा । | १ वृषः १० गावः । अशक्तौ १५ कार्षपणाः । |
| | | १७ धेनवो बहुसम्मताः । | ५१ कार्षापणाः । | तथा । |
| अथोपपातकानि । | प्रायश्चित्तानि । | तदशक्तौ धेनुदानम् । | तदशक्तौ चूर्णीदानम् । | दक्षिणा । |
| ब्राह्मणक्षत्त्रियवैश्यकर्त्तृकब्राह्मणस्वामिकाज्ञानकृतगवीवधः । | सार्द्धमासिकव्रतम् । तद्यथा । गोष्ठे गोसमीपे गोघ्नः स्थितिं कुर्य्यात् । तत्रैव क्षितौ शयनञ्च । शक्तुयावकपयोदधिसरगोमयानांभक्षणं क्रमशः कुर्य्यात् । | ६ धेनवो भवदेवभट्टसम्मताः । | १८ कार्षापणाः । तल्लभ्यस्वर्णादि वा । २५ ॥ | १ गौः । अशक्तौ १ |

|  |  |  |  |  |
|---|---|---|---|---|
|  | नखरोमविवर्जितस्त्रिसवनस्नानञ्चरेत् । जितेन्द्रियो वीतमत्सरश्च भवेत् । यथाशक्ति गायत्रीञ्च जपेत् । सार्द्धमासे पूर्णे सति विप्रान् भोजयेत् । गां तन्मूल्यं वा दक्षिणां दद्यात् । अनेन विधानेन गोघ्नः पापान्मुच्येत । एतद्व्रतं गोस्वामिने तत्प्रतिरूपं गवान्तरं यथोक्तमूल्यं वा दत्त्वा कर्त्तव्यम् । स्त्रीशूद्रबालवृद्धानामर्द्धं प्रायश्चित्तम् । | ९ धेनवो बहुसम्मताः । | ० कार्षापणाः । बहुसम्मताः । सार्द्धाष्टधेनुसंकलनात् । | कार्षापणः । स्मार्त्तमते ७ ॥ ० कार्षापणाः । |
| ज्ञानकृतशूद्रकर्त्तृक-ब्राह्मणस्वामिकगवीवधः। | त्रैमासिकव्रतार्द्धम् । अज्ञानतस्तदर्द्धम् । | ६ धेनवो भवदेवभट्टसम्मताः । ९ धेनवो बहुसम्मताः । | १८ कार्षापणाः । २५ ॥ ० कार्षापणाः । बहुसम्मताः । तल्लभ्यस्वर्णादि वा । | १ गौः । अशक्तौ १ कार्षापणः |
| ज्ञानकृतब्राह्मणक्षत्त्रियवैश्यकर्त्तृकक्षत्त्रियस्वामिकगवीवधः। | षाण्मासिकव्रतम् । तद्यथा । षण्मासान् तच्चर्म्मणा परिवृतो गोग्रासाहर्त्ता गोव्रतो यवाशी गोभिरेव सञ्चरन् तत्पापात् विमुच्येत । | १२ धेनवः । | ३६ कार्षापणाः । तल्लभ्यस्वर्णादि वा । | यथाशक्ति । |
| ब्राह्मणक्षत्त्रियवैश्यकर्त्तृकाज्ञानकृतक्षत्त्रियस्वामिकगवीवधः। | षाण्मासिकव्रतार्द्धम् । | ६ धेनवः । | १८ कार्षापणाः । तल्लभ्यस्वर्णादि वा । | यथाशक्ति । |
| शूद्रकर्त्तृकज्ञानकृतक्षत्त्रियस्वामिकगवीवधः। | षाण्मासिकव्रतार्द्धम् । | ६ धेनवः । | १८ कार्षापणाः । तल्लभ्यस्वर्णादि वा । | यथाशक्ति । |
| तत्कर्त्तृकाज्ञानकृततत्स्वामिकगवीवधः। | एतद्व्रतार्द्धम् । स्त्रीशूद्रबालवृद्धानां सर्व्वत्रार्द्धम् । | ३ धेनवः । | ९ कार्षापणाः । तल्लभ्यस्वर्णादि वा । | यथाशक्ति । |
| ब्राह्मणक्षत्त्रियवैश्यकर्त्तृकज्ञानकृतवैश्यस्वामिकगवीवधः। | द्विगुणं मासव्रतम् । मासव्रतं यथा । मासैकं पञ्चगव्यपानं गोष्ठे वासः गवानुगमनं गोमतीजपः । | १० धेनवः । | ३० कार्षापणाः । तल्लभ्यस्वर्णादि वा । | यथाशक्ति । |
| तत्कर्त्तृकाज्ञानकृततत्स्वामिकगवीवधः। | एतदर्द्धम् । | ५ धेनवः । | १५ कार्षापणाः । तल्लभ्यस्वर्णादि वा । | यथाशक्ति । |
| ब्राह्मणक्षत्त्रियवैश्यकर्त्तृकज्ञानकृतशूद्रस्वामिकगवीवधः। | ४ प्राजापत्यानि । | ४ धेनवः । | १२ कार्षापणाः । तल्लभ्यस्वर्णादि वा । | यथाशक्ति । |
| ब्राह्मणक्षत्त्रियवैश्यकर्त्तृकाज्ञानकृतशूद्रस्वामिकगवीवधः। | २ प्राजापत्ये । स्त्रीशूद्रबालवृद्धानां सर्व्वत्राद्धम् । एकस्य स्त्रीत्वशूद्रत्वाद्युमयधर्म्मवत्त्वे प्रायश्चित्तपादः । | २ धेनू । | ६ कार्षापणाः । तल्लभ्यस्वर्णादि वा । | यथाशक्ति । |
| ब्राह्मणस्वामिकगर्भिणीकपिलादोग्ध्रीहोमधेनुसुव्रतानां गवां ब्राह्मणक्षत्त्रियवैश्यकर्त्तृकज्ञानकृतवधः । | द्विगुणं त्रैमासिकव्रतम् । अज्ञानतस्तदर्द्धम् । | २४ धेनवो भवदेवभट्टसम्मताः । ३४ धेनवो बहुसम्मताः । | ७२ कार्षापणाः । १०२ कार्षापणा बहुसम्मताः । | २ वृषौ २० गावः । अशक्तौ ३० कार्षापणाः । |
| ब्राह्मणस्वामिकगर्भिणीकपिलादोग्ध्रीहोमधेनुसुव्रतानां गवां शूद्रकर्त्तृकज्ञानकृतवधः । | त्रैमासिकव्रतम् । अज्ञानतस्तदर्द्धम् । | १२ धेनवः । १७ धेनवो बहुसम्मताः । | ३६ कार्षापणाः । ५१ कार्षापणा बहुसम्मताः । | १० वृषः १० गावः । अशक्तौ १५ कार्षापणाः । |
| अथोपपातकानि । | प्रायश्चित्तानि । | तदशक्तौ धेनुदानम् । | तदशक्तौ चूर्णीदानम् । | दक्षिणा । |
| क्षत्त्रियस्वामिकगर्भिणीकपिलादोग्ध्रीहोमधेनुसुव्रतानां गवां ब्राह्मणक्षत्त्रियवैश्यकर्त्तृकज्ञानकृतबधः । | द्विगुणं षाण्मासिकव्रतम् । अज्ञानतस्तदर्द्धम् । | २४ धेनवः । | ७२ कार्षापणाः । | यथाशक्ति । |
| क्षत्त्रियस्वामिकगर्भिणीकपिलादोग्ध्रीहोमधेनुसुव्रतानां गवां शूद्रकर्त्तृकज्ञानकृतवधः । | षाण्मासिकव्रतम् । अज्ञानतस्तदर्द्धम् । | १२ धेनवः । | ३६ कार्षापणाः । | यथाशक्ति । |
| वैश्यस्वामिकगर्भिणीकपिलादोग्ध्रीहोमधेनुसुव्रतानां गवां ब्राह्मणक्षत्त्रियवैश्यकर्त्तृकज्ञानकृतवधः । | चतुर्गुणं मासिकव्रतम् । अज्ञानतस्तदर्द्धम् । | २० धेनवः । | ६० कार्षापणाः । | यथाशक्ति । |
| वैश्यस्वामिकगर्भिणीकपिलादोग्ध्रीहोमधेनुसुव्रतानां गवां शूद्रकर्त्तृकज्ञानकृतवधः । | द्विगुणं मासिकव्रतम् । अज्ञानतस्तदर्द्धम् । | १० धेनवः । | ३० कार्षापणाः । | यथाशक्ति । |
| शूद्रस्वामिकगर्भिणीकपिलादोग्ध्रीहोमधेनुसुव्रतानां गवां ब्राह्मणक्षत्त्रियवैश्यकर्त्तृकज्ञानकृतवधः । | ८ प्राजापत्यानि । अज्ञानतस्तदर्द्धम् । | ८ धेनवः । | २४ कार्षापणाः । | यथाशक्ति । |
| शूद्रस्वामिकगर्भिणीकपिलादोग्ध्रीहोमधेनुसुव्रतानां गवां शूद्रकर्त्तृकज्ञानकृतवधः । | ४ प्राजापत्यानि । अज्ञानतस्तदर्द्धम् । | ४ धेनवः । | १२ कार्षापणाः । | यथाशक्ति । |
| ज्ञानकृतब्राह्मणक्षत्त्रियवैश्यकर्त्तृकाधमशूद्रस्वामिकगवीवधः। | २ प्राजापत्ये । अज्ञानतस्तदर्द्धम् । | २ धेनू । | ६ कार्षापणाः । | यथाशक्ति । |
| ज्ञानकृतशूद्रकर्त्तृकाधमशूद्रस्वामिकगवीवधः। | १ प्राजापत्यम् । अज्ञानतस्तदर्द्धम् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति |

| | | | | । |
|---|---|---|---|---|
| अधमशूद्रस्वामिकगर्भिणीकपिलादोग्ध्रीहोमधेनुसुव्रतानां गवां ब्राह्मणक्षत्रियवैश्यकर्तृकज्ञानकृतवधः । | ४ प्राजापत्यानि । अज्ञानतस्तदर्द्धम् । | ४ धेनवः । | १२ कार्षापणाः । | यथाशक्ति । |
| अधमशूद्रस्वामिकगर्भिणीकपिलादोग्ध्रीहोमधेनुसुव्रतानां गवां शूद्रकर्तृकज्ञानकृतवधः । | २ प्राजापत्ये । अज्ञानतस्तदर्द्धम् । | २ धेनू । | ६ कार्षापणाः । | यथाशक्ति । |
| ब्राह्मणस्वामिकाया गोरुत्पन्नमात्रगर्भस्य ब्राह्मणक्षत्रियवैश्यकर्तृकज्ञानकृतवधः । | त्रैमासिकव्रतपादः । अज्ञानतस्तदर्द्धम् । | ५ धेनवः । | १२ ॥ ० कार्षापणाः । सपादधेनुचतुष्टयसङ्कलनात् । | ३ ॥ ० कार्षापणाः । |
| ब्राह्मणस्वामिकाया गोर्गात्रसम्मितगर्भस्य ब्राह्मणक्षत्रियवैश्यकर्तृकज्ञानकृतवधः । | त्रैमासिकव्रतपादद्वयम् । अज्ञानतस्तदर्द्धम् । स्त्रीशूद्रबालवृद्धानामर्द्धम् | ९ धेनवः । | २५ ॥ ० कार्षापणाः । सार्द्धाष्टधेनुसङ्कलनात् । | ७ ॥ ० कार्षापणाः । |
| ब्राह्मणस्वामिकाया गोर्निष्पन्नसकलगात्रचैतन्यरहितगर्भस्य ब्राह्मणक्षत्रियवैश्यकर्तृकज्ञानकृतवधः । | त्रैमासिकव्रतपादत्रयम् । अज्ञानतस्तदर्द्धम् । स्त्रीशूद्रबालवृद्धानामर्द्धम् । चैतन्ययुक्तगर्भवधे कृत्स्नमेव प्रायश्चित्तम् । | १३ धेनवः । | ३८ । ० कार्षापणाः । पादोनत्रयोदशधेनुसङ्कलनात् । | ११ । ० कार्षापणाः । |
| क्षत्रियस्वामिकाया गोरुत्पन्नमात्रगर्भस्य ब्राह्मणक्षत्रियवैश्यकर्तृकज्ञानकृतवधः । | षाण्मासिकव्रतपादः । अज्ञानतस्तदर्द्धम् । | ३ धेनवः । | ९ कार्षापणाः । | यथाशक्ति । |
| अथोपपातकानि । | प्रायश्चित्तानि । | तदशक्तौ धेनुदानम् । | तदशक्तौ चूर्णीदानम् । | दक्षिणा । |
| क्षत्रियस्वामिकाया गोर्गात्रसम्मितगर्भस्य ब्राह्मणक्षत्रियवैश्यकर्तृ कज्ञानकृतवधः । | षाण्मासिकव्रतपादद्वयम् । अज्ञानतस्तदर्द्धम् । स्त्रीशूद्रबालवृद्धानामर्द्धम् । | ६ धेनवः । | १८ कार्षापणाः । | यथाशक्ति । |
| क्षत्रियस्वामिकाया गोर्निष्पन्नसकलगात्रचैतन्यरहितगर्भस्य ब्राह्मणक्षत्रियवैश्यकर्तृकज्ञानकृतवधः । | षाण्मासिकव्रतपादत्रयम् । अज्ञानतस्तदर्द्धम् । स्त्रीशूद्रबालवृद्धानामर्द्धम् । चैतन्ययुक्तगर्भवधे कृत्स्नमेव प्रायश्चित्तम् । | ९ धेनवः । | २७ कार्षापणाः । | यथाशक्ति । |
| वैश्यस्वामिकाया गोरुत्पन्नमात्रगर्भस्य ब्राह्मणक्षत्रियवैश्यकर्तृकज्ञानकृतवधः । | द्विगुणमासव्रतस्य पादः । अज्ञानतस्तदर्द्धम् । | ३ धेनवः । | ७ ॥ ० कार्षापणाः । सार्द्धद्वयधेनुसङ्कलनात् । | यथाशक्ति । |
| वैश्यस्वामिकाया गोर्गात्रसम्मितगर्भस्य ब्राह्मणक्षत्रियवैश्यकर्तृकवधः । | द्विगुणमासव्रतस्य पादद्वयम् । अज्ञानतस्तदर्द्धम् । स्त्रीशूद्रबालवृद्धानामर्द्धम् । | ५ धेनवः । | १५ कार्षापणाः । | यथाशक्ति । |
| वैश्यस्वामिकाया गोर्निष्पन्नसकलगात्रचैतन्यरहितगर्भस्य ब्राह्मणक्षत्रियवैश्यकर्तृकज्ञानकृतवधः । | द्विगुणमासव्रतस्य पादत्रयम् । अज्ञानतस्तदर्द्धम् । स्त्रीशूद्रबालवृद्धानामर्द्धम् । | ८ धेनवः । | २२ ॥ ० कार्षापणाः । सार्द्धसप्तधेनुसङ्कलनात् । | यथाशक्ति । |
| शूद्रस्वामिकाया गोरुत्पन्नगर्भस्य अर्थात् गर्भग्रहणदिनात् सावनमासद्वयानतिक्रान्तगर्भस्य ब्राह्मणक्षत्रियवैश्यकर्तृकज्ञानकृतवधः । | १ प्राजापत्यम् । अज्ञानतस्तदर्द्धम् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| शूद्रस्वामिकाया गोर्गात्रसम्मितगर्भस्य अर्थात् मासद्वयोपरिसावनमासद्वयानतिक्रान्तगात्राद्यवयवोत्पन्नगर्भस्य ब्राह्मणक्षत्रियवैश्यकर्तृकज्ञानकृतवधः । | २ प्राजापत्ये । अज्ञानतस्तदर्द्धम् । स्त्रीशूद्रबालवृद्धानामर्द्धम् । | २ धेनू । | ६ कार्षापणाः । | यथाशक्ति । |
| शूद्रस्वामिकाया गोर्निष्पन्नसकलगात्रचैतन्यरहितगर्भस्य अर्थात् चतुर्थमासोपरि सावनमासद्वयानतिक्रान्तगर्भस्य ब्राह्मणक्षत्रियवैश्यकर्तृकज्ञानकृतवधः । | ३ प्राजापत्यानि । अज्ञानतस्तदर्द्धम् । स्त्रीशूद्रबालवृद्धानामर्द्धम् । चैतन्ययुक्तगर्भवधे कृत्स्नमेव प्रायश्चित्तम् । | ३ धेनवः । | ९ कार्षापणाः । | यथाशक्ति । |
| ब्राह्मणस्वामिकानामतिवृद्धातिकृशातिबालातिरोगिणीनांगवां ब्राह्मणक्षत्रियवैश्यकर्तृकज्ञानकृतवधः । | त्रैमासिकव्रतार्द्धम् । अज्ञानतस्तदर्द्धम् । स्त्रीशूद्रबालवृद्धानामर्द्धम् । | ९ धेनवः । | २५ ॥ ० कार्षापणाः । सार्द्धाष्टधेनुसङ्कलनात् । | ७ ॥ ० कार्षापणाः । |
| क्षत्रियस्वामिकानामतिवृद्धातिकृशातिबालातिरोगिणीनांगवां ब्राह्मणक्षत्रियवैश्यकर्तृकज्ञानकृतवधः । | षाण्मासिकव्रतार्द्धम् । अज्ञानतस्तदर्द्धम् । स्त्रीशूद्रबालवृद्धानामर्द्धम् । | ६ धेनवः । | १८ कार्षापणाः । | यथाशक्ति । |
| वैश्यस्वामिकानामतिवृद्धातिकृशातिबालातिरोगिणीनांगवां ब्राह्मणक्षत्रियवैश्यकर्तृकज्ञानकृतवधः । | १ मासव्रतम् । अज्ञानतस्तदर्द्धम् । स्त्रीशूद्रबालवृद्धानामर्द्धम् । | ५ धेनवः । | १५ कार्षापणाः । | यथाशक्ति । |
| शूद्रस्वामिकानामतिवृद्धातिकृशातिबालातिरोगिणीनां | २ प्राजापत्ये । अज्ञानतस्तदर्द्धम् । | २ धेनू । | ६ कार्षापणाः । | यथाशक्ति । |
| अथोपपातकानि । | प्रायश्चित्तानि । | तदशक्तौ धेनुदानम् । | तदशक्तौ चूर्णीदानम् । | दक्षिणा । |
| गवां ब्राह्मणक्षत्रियवैश्यकर्तृकज्ञानकृतवधः । | स्त्रीशूद्रबालवृद्धानामर्द्धम् । | | | |
| ब्राह्मणस्वामिकानां बहूनां गवां ब्राह्मणक्षत्रियवैश्यकर्तृकैकप्रयत्ननिष्पन्नज्ञानकृतवधः । | द्विगुणत्रैमासिकव्रतम् । अज्ञानतस्तदर्द्धम् । स्त्रीशूद्रबालवृद्धानामर्द्धम् । | ३४ धेनवः । | १०२ कार्षापणाः । | २ वृषौ २० गावः । अशक्तौ ३० कार्षापणाः । |
| क्षत्रियस्वामिकानां बहूनां गवां ब्राह्मणक्षत्रियवैश्यकर्तृकैकप्रयत्ननिष्पन्नज्ञानकृतवधः | द्विगुणषाण्मासिकव्रतम् । अज्ञानतस्तदर्द्धम् । स्त्रीशूद्रबालवृद्धानामर्द्धम् । | २४ धेनवः । | ७२ कार्षापणाः । | यथाशक्ति |

| । | | | | । |
|---|---|---|---|---|
| वैश्यस्वामिकानां बहूनां गवां ब्राह्मणक्षत्रियवैश्यकर्तृकैकप्रयत्ननिष्पन्नज्ञानकृतवधः। | चतुर्गुणमासव्रतम्। अज्ञानतस्तदर्द्धम्। स्त्रीशूद्रबालवृद्धानामर्द्धम्। | २० धेनवः। | ६० कार्षापणाः। | यथाशक्ति । |
| शूद्रस्वामिकानां बहूनां गवां ब्राह्मणक्षत्रियवैश्यकर्तृकैकप्रयत्ननिष्पन्नज्ञानकृतवधः। | ८ प्राजापत्यानि। अज्ञानतस्तदर्द्धम्। स्त्रीशूद्रबालवृद्धानामर्द्धम्। स्त्रीत्वाद्युभयधर्म्मवत्त्वे पादः। प्रयत्नभेदे प्रायश्चित्तावृत्तिः। | ८ धेनवः। | २४ कार्षापणाः। | यथाशक्ति । |
| ज्ञानकृतबहुकर्तृकब्राह्मणस्वामिकैकगवीवधः। | प्रत्येकं त्रैमासिकव्रतपादः। अज्ञानतस्तदर्द्धम्। | ५ धेनवः। | १२ ॥। ० कार्षापणाः। सपादधेनुचतुष्टयसङ्कलनात्। | ३ ॥। ० कार्षापणाः । |
| ज्ञानकृतबहुकर्तृकक्षत्रियस्वामिकैकगवीवधः। | प्रत्येकं षाण्मासिकव्रतपादः। अज्ञानतस्तदर्द्धम्। | ३ धेनवः। | ९ कार्षापणाः। | यथाशक्ति । |
| ज्ञानकृतबहुकर्तृकवैश्यस्वामिकैकगवीवधः। | प्रत्येकं द्विगुणमासव्रतपादः। अज्ञानतस्तदर्द्धम्। | ३ धेनवः। | ७ ॥ ० कार्षापणाः। सार्द्धद्वयधेनुसङ्कलनात्। | यथाशक्ति । |
| ज्ञानकृतबहुकर्तृकशूद्रस्वामिकैकगवीवधः। | प्रत्येकं प्राजापत्यम्। अज्ञानतस्तदर्द्धम्। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति । |
| द्वाभ्यामेकगवीवधः। | यद्यत्स्वामिकाया गोर्वधे यद्यत्प्रायश्चित्तमुक्तं प्रत्येकं संपूर्णं तत्तत् प्रायश्चित्तम्। | | | |
| द्वाभ्यामेकप्रयत्ननिष्पन्नबहुगवीवधः। | यद्यत्स्वामिकाया गोर्वधे यद्यत्प्रायश्चित्तं प्रत्येकं तद्द्वैगुण्यम्। | | | |
| एकप्रयत्ननिष्पन्नबहुकर्तृकबहुगवीवधः। | प्रत्येकं तत्तद्वधोक्तव्रतपादद्वयम्। | | | |
| एकप्रयत्ननिष्पन्नाभ्यासकृतबहुकर्तृकबहुगवीवधः। | प्रत्येकं तत्तद्वधोक्तव्रतद्विपादप्रायश्चित्तावृत्तिः। | | | |
| ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकब्राह्मणस्वामिकैकहायनगवीवधः। | त्रैमासिकव्रतपादः। अज्ञानतस्तदर्द्धम्। स्त्रीशूद्रबालवृद्धानामर्द्धम्। | ५ धेनवः। | १२ ॥। ० कार्षापणाः। सपादधेनुचतुष्टयसङ्कलनात्। | ३ ॥। ० कार्षापणाः । |
| ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकब्राह्मणस्वामिकद्विहायनगवीवधः। | त्रैमासिकव्रतार्द्धम्। अज्ञानतस्तदर्द्धम्। स्त्रीशूद्रबालवृद्धानामर्द्धम्। | ९ धेनवः। | २५ ॥ ० कार्षापणाः। सार्द्धाष्टधेनुसङ्कलनात्। | ७ ॥ ० कार्षापणाः । |
| ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकब्राह्मणस्वामिकत्रिहायणगवीवधः। | पादन्यूनत्रैमासिकव्रतम्। अज्ञानतस्तदर्द्धम्। स्त्रीशूद्रबालवृद्धानामर्द्धम्। | १३ धेनवः। | ३८ । ० कार्षापणाः। पादोनत्रयोदशधेनुसङ्कलनात् । | ११ । ० कार्षापणाः । |
| ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकक्षत्रियस्वामिकैकहायनगवीवधः। | षाण्मासिकव्रतपादः। अज्ञानतस्तदर्द्धम्। स्त्रीशूद्रबालवृद्धानामर्द्धम्। | ३ धेनवः। | ९ कार्षापणाः। | यथाशक्ति । |
| अथोपपातकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
| ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकक्षत्रियस्वामिकद्विहायनगवीवधः। | षाण्मासिकव्रतपादद्वयम्। अज्ञानतस्तदर्द्धम्। स्त्रीशूद्रबालवृद्धानामर्द्धम्। | ६ धेनवः। | १८ कार्षापणाः। | यथाशक्ति । |
| ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकक्षत्रियस्वामिकत्रिहायणगवीवधः। | पादन्यूनषाण्मासिकव्रतम्। अज्ञानतस्तदर्द्धम्। स्त्रीशूद्रबालवृद्धानामर्द्धम्। | ९ धेनवः। | २७ कार्षापणाः। | यथाशक्ति । |
| ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकवैश्यस्वामिकैकहायनगवीवधः। | मासैकव्रतार्द्धम्। अज्ञानतस्तदर्द्धम्। | ३ धेनवः। | ७ ॥ ० कार्षापणाः। सार्द्धद्वयधेनुसङ्कलनात्। | यथाशक्ति । |
| ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकवैश्यस्वामिकद्विहायनगवीवधः। | मासव्रतम्। अज्ञानतस्तदर्द्धम्। स्त्रीशूद्रबालवृद्धानामर्द्धम्। | ५ धेनवः। | १५ कार्षापणाः। | यथाशक्ति । |
| ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकवैश्यस्वामिकत्रिहायणगवीवधः। | पादोनं द्विगुणमासव्रतम्। अज्ञानतस्तदर्द्धम्। स्त्रीशूद्रबालवृद्धानामर्द्धम्। | ८ धेनवः। | २२ ॥ ० कार्षापणाः। सार्द्धसप्तधेनुसङ्कलनात्। | यथाशक्ति । |
| ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकशूद्रस्वामिकैकहायनगवीवधः। | १ प्राजापत्यम्। अज्ञानतस्तदर्द्धम्। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति । |
| ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकशूद्रस्वामिकद्विहायनगवीवधः। | २ प्राजापत्ये। अज्ञानतस्तदर्द्धम्। स्त्रीशूद्रबालवृद्धानामर्द्धम्। | २ धेनू। | ६ कार्षापणाः। | यथाशक्ति । |
| ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकशूद्रस्वामिकत्रिहायणगवीवधः। | ३ प्राजापत्यानि। अज्ञानतस्तदर्द्धम्। स्त्रीशूद्रबालवृद्धानामर्द्धम्। | ३ धेनवः। | ९ कार्षापणाः। | यथाशक्ति । |
| क्षीणाया गोरक्षीणत्वभ्रमेणाहारप्रचारनिर्गमरोधनिमित्तवधः। | प्राजापत्यपादः। | १ धेनुः। | ॥। ० पणाः। धेनुपादसङ्कलनात्। | यथाशक्ति । |
| | क्षैण्यज्ञाने प्रायिकमरणं ज्ञात्वा प्रवृत्तस्य चान्द्रायणपदः। इदन्तु सर्व्वस्वामिकायाः सर्व्ववयस्काया गोः सर्व्वकर्तृकवधे बोद्धव्यम्। | २ धेनू। | ५ ॥ ० कार्षापणाः। पादार्द्धोनधेनुद्वयसङ्कलनात्। | यथाशक्ति । |
| क्षीणाया गोरक्षीणत्वभ्रमेण अकालबन्धनायथाबन्धननिमित्तवधः। | प्राजापत्यपादद्वयम्। | १ धेनुः। | १ ॥ ० कार्षापणाः। धेन्वर्द्ध | यथाशक्ति |

| | | | सङ्कलनात्। | । |
|---|---|---|---|---|
| | क्षैण्यज्ञाने तु प्रायिकमरणं ज्ञात्वा प्रवृत्तस्य चान्द्रायणपादद्वयम्। एतदपि सर्व्वस्वामिकायाः सर्व्ववयस्काया गोः सर्व्वकर्त्तृकवधे बोद्धव्यम्। | ४ धेनवः। | ११।० कार्षापणाः। पादोनधेनुचतुष्टयसङ्कलनात्। | यथाशक्ति । |
| क्षीणाया गोरक्षीणत्वभ्रमेण हलशकटादियोजननिमित्तवधः। | प्राजापत्यपादत्रयम्। | १ धेनुः। | २।० कार्षापणाः। पादोनधेनुसङ्कलनात्। | यथाशक्ति । |
| | क्षैण्यज्ञाने तु चान्द्रायणपादत्रयम्। | ६ धेनवः। | १६॥।० कार्षापणाः। पादोनसार्द्धसप्तधेनुसङ्कलनात्। | यथाशक्ति । |
| क्षीणाया गोरक्षीणत्वभ्रमेण कूपावटादिषु भयादिना निपातनेन शास्त्रीयदण्डनिपातनेन च वधः। | प्राजापत्यम्। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति । |
| | क्षैण्यज्ञाने प्रायिकमरणं ज्ञात्वा प्रवृत्तस्य चान्द्रायणम्। एतदपि सर्व्वस्वामिकादिविषयम्। यद्यत्स्वामिकयद्यत् | | | |
| अथोपपातकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
| कर्त्तृकयद्यद्गववधे यद्यत्प्रायश्चित्तमुक्तं अप्रवृत्तप्रवर्त्तकरूपप्रयोजकस्यतत्तत् प्रायश्चित्तस्य पादत्रयम्। प्रवृत्तप्रवर्त्तकरूपप्रयोजकस्यपादद्वयम्। स्वल्पप्रहर्त्तृरूपानुग्राहकस्यपादत्रयम्। वध्यप्रतिरोधकरूपानुग्राहकस्यपादद्वयम्। | ८ धेनवः। | २२॥० कार्षापणाः। सार्द्धसप्तधेनुसङ्कलनात्। | यथाशक्ति। | |
| ब्राह्मणक्षत्रियवैश्यकर्त्तृकशूद्रेतरस्वामिकगवापालननिमित्तवधः। | सेतिकर्त्तव्यताकप्राजापत्यम्। स्त्रीशूद्रबालवृद्धानामर्द्धम्। इति कर्त्तव्यता यथा। सशिखं वपनं कार्य्यं त्रिसन्ध्यमवगाहनम्। शृङ्गैर्वापि खुरैर्युक्तं लाङ्गूलश्रवणादिभिः ॥ आर्द्रमेव हि तच्चर्म्म परिधाय स गां व्रजेत्। तासां मध्ये वसेद्रात्रौ दिवा ताभिः समं व्रजेत् ॥ ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः। प्रायश्चित्ते ततश्चीर्णे कुर्य्याद्‌ब्राह्मणभोजनम्॥ अनडुत्सहितां गाञ्च दद्याद्विप्राय दक्षिणाम् ॥ इति पराशरोक्ता। | २ धेनू। | ६ कार्षापणाः। | १ वृषः १ गौः। अशक्तौ ६ कार्षापणाः। |
| ब्राह्मणक्षत्रियवैश्यकर्त्तृकशूद्रस्वामिकगवापालननिमित्तवधः। | प्राजापत्यद्वयम्। स्त्रीशूद्रबालवृद्धानामर्द्धम्। | २ धेनू। | ६ कार्षापणाः। | यथाशक्ति । |
| ब्राह्मणक्षत्रियवैश्यशूद्रकर्त्तृकशूद्रेतरस्वामिकाप्राप्तदम्यावस्थगोवत्सापालननिमित्तवधः। अप्राप्तदम्यावस्था तु त्रिहायणपर्य्यन्तम्। | सेतिकर्त्तव्यताकप्राजापत्यपादः। | धेनोरर्द्धस्यासम्भवात् १ एका धेनुः। | १॥० कार्षापणाः। | १॥० कार्षापणाः। |
| ब्राह्मणक्षत्रियवैश्यशूद्रकर्त्तृकशूद्रस्वामिकाप्राप्तदम्यावस्थगोवत्सापालननिमित्तवधः। | प्राजापत्यव्रतद्वयपादः। | धेनोरर्द्धस्यासम्भवात् १ एका धेनुः। | १॥० कार्षापणाः। | यथाशक्ति । |
| उत्सृष्टवृषवत्सतर्य्योर्वधः। | भूतपूर्ब्बस्वामिकगववधप्रायश्चित्तद्विगुणम्। पूर्ब्बस्वाम्यज्ञाने ब्राह्मणस्वामिकगववधद्विगुणप्रायश्चित्तम्। | | | |
| गवां शृङ्गभङ्गास्थिभङ्गचर्म्मनिर्म्मोचनलाङ्गूलच्छेदनम्। | दशरात्रं वज्रव्रतम्। मासार्द्धयवपानम्। प्राजापत्यं वा। वज्रव्रतं यथा। गोमूत्रेण समायुक्तं यावकञ्चोपयोजयेत्। एकाहे नैव कृच्छ्रोऽयमुक्तश्चाङ्गिरसा स्वयम्। सर्व्वपापहरो दिव्यो नाम्ना वज्र इति स्थितः ॥ * ॥ शृङ्गभङ्गादिना षण्मासाभ्यन्तरे गोर्मरणे अन्यूनं वधप्रायश्चित्तं करणीयम्। गुरुणा समेन वा तेन प्रायश्चित्तेन शृङ्गभङ्गादिप्रायश्चित्तसिद्धिः। षण्मासोत्तरमरणे शृङ्गभङ्गादिप्रायश्चित्तमात्रंकर्त्तव्यम् ॥ | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति । |
| गवां मुष्कमोषः। | यत्कर्त्तृकयत्स्वामिकगववधेयत्प्रायश्चित्तमुक्तं तत्कर्त्तृकतत्स्वामिकगवमुष्कमोषे तत्प्रायश्चित्तम्। मृत्युलिङ्गच्छेदयोस्तुल्यत्वाभिधानात्। अत्र प्रयोजकभेदस्यार्द्धं पादोनञ्च। | | | |
| अथोपपातकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
| वृषस्य स्वयं ब्राह्मणकर्त्तृकहलशकटादियोजनम्। | प्राजापत्यद्वयम्। | २ धेनू। | ६ कार्षापणाः। | यथाशक्ति । |
| योषिद्गवां ब्राह्मणकर्त्तृकहलशकटादियोजनम्। | ४ प्राजापत्यानि। ब्राह्मणेतरेषां प्राजापत्यद्वयम्। | ४ धेनवः। | १२ कार्षापणाः। | यथाशक्ति । |
| उत्सृष्टवृषस्य कपिलायाश्च ब्राह्मणकर्त्तृ कहलशकटादियोजनम्। | यतिचान्द्रायणद्वयम्। ब्राह्मणेतरेषां यतिचान्द्रायणैकम्। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति । |
| गोमांसखादके गोविक्रयविनिमयादिः। | विक्रयादिमात्रे अज्ञानकृततत्तत्कर्त्तृकतत्तत्स्वामिकगववधप्रायश्चित्तार्द्धम्। गोमांसखादककर्त्तृकतद्गववधेतु अज्ञानकृततत्तत्कर्त्तृकतत्तत्स्वामिकगववधोक्तसंपूर्णप्रायश्चित्तम्। | | | |

**अथ गोवधापवादः। तत्र पराशरः।**

"धूर्य्येषु वहमानेषु दण्डेनाभिहतेषु च। काष्ठेन लेष्टुना वापि पाषाणेन तु ताडितः ॥ मूर्च्छितः पतितश्चैव मृतो वा सद्य एव च। एवंगतानां धूर्य्याणां प्रवक्ष्यामि यथाविधि ॥ उत्थितन्तु पदं गच्छेत् पञ्च सप्त दशापि वा। ग्रासं वा यदि गृह्णाति तोयं वा पिबति स्वयम्। पूर्ब्बव्याधिविनष्टानां प्रायश्चित्तं न विद्यते ॥" सम्बर्त्तः।

“यन्त्रणे गोचिकित्सायां मूढगर्भविमोचने । यत्ने कृते विपत्तिः स्यात् प्रायश्चिचं न विद्यते ॥ औषधं स्नेहमाहारं ददद्गोब्राह्मणेषु च । प्राणिनां प्राणवृत्त्यर्थं प्रायश्चित्तं न विद्यते ॥ दाहच्छेदसिराभेदप्रयत्नैरुपकुर्व्वताम् । द्विजानां गोहितार्थं वा प्रायश्चित्तं न विद्यते ॥” याज्ञवल्क्यः ।

“क्रियमाणोपकारे तु मृते विप्रे न पातकम् । विपाके गोवृषाणाञ्च भेषजाग्निक्रियासु च ॥” मिताक्षराधृतपराशरवचनम् ।

“कूपे खाते च धर्म्मार्थे गृहदाहे च ये मृताः । ग्रामदाहे तथा घोरे प्रायश्चित्तं न विद्यते ॥” भवदेवभट्टधृतवचनम् ।

“शृङ्गभङ्गेऽस्थिभङ्गेच कटिभङ्गे तथैव । यदि जीवति षण्मासान् प्रायश्चित्तं न विद्यते ॥” सम्बर्त्तः ।

“देवद्रोण्यां विहारे च कूपेष्वायतनेषु च । एषु गोषु प्रपन्नासु प्रायश्चित्तं न विद्यते ॥” देवद्रोणी स्वयम्भूलिङ्गाद्यवस्थानगह्वरम् । विहारो गवां मैथुनम् । आयतनं सीमानिबन्धनस्थानम् । अत्र कूपायतनकर्त्तुर्दोषाभावो न तु गोस्वामिनः । इति

प्रायश्चित्तविवेकप्रायश्चित्ततत्त्वस्मृतिसारमौर्खहसम्मतं गोवधप्रायश्चित्तं समाप्तम् ॥ * ॥

| अथोपपातकानि। | प्रायश्चित्तानि। |
|---|---|
| ब्राह्मणक्षत्रियकर्त्तृकज्ञानकृतक्षत्रियवधः। | अज्ञानकृतब्रह्महत्याप्रायश्चित्तपादः। स तु त्रैवार्षिकव्रतरूपः। |
| ब्राह्मणक्षत्रियकर्त्तृकाज्ञानकृतक्षत्रियवधः। | सार्द्धवार्षिकव्रतम्। |
| वैश्यकर्त्तृकज्ञानकृतक्षत्रियवधः। | षाड्वार्षिकव्रतम्। |
| वैश्यकर्त्तृकाज्ञानकृतक्षत्रियवधः। | त्रैवार्षिकव्रतम्। |
| शूद्रकर्त्तृकज्ञानकृतक्षत्रियवधः। | नववार्षिकव्रतम्। |
| शूद्रकर्त्तृकाज्ञानकृतक्षत्रियवधः। | सार्द्धचतुर्वार्षिकव्रतम्। |
| ब्राह्मणक्षत्रियवैश्यकर्त्तृकज्ञानकृतवैश्यवधः। | ब्रह्महत्याव्रताष्टमभागः। स च सार्द्धवार्षिकव्रतरूपः। |
| ब्राह्मणक्षत्रियवैश्यकर्त्तृकाज्ञानकृतवैश्यवधः। | ब्रह्महत्याव्रतषोडषभागः। स च नवमासिकव्रतरूपः। |
| अथानुपातकानि। | प्रायश्चित्तानि। |
| शूद्रकर्त्तृकज्ञानकृतवैश्यवधः। | ब्रह्महत्याव्रतचतुर्थभागः। स च त्रैवार्षिकव्रतरूपः। |
| शूद्रकर्त्तृकाज्ञानकृतवैश्यवधः। | ब्रह्महत्याव्रताष्टमभागः। स च सार्द्धवार्षिकव्रतरूपः। |
| ब्राह्मणक्षत्रियवैश्यशूद्रकर्त्तृकज्ञानकृतशूद्रवधः। | ब्रह्महत्याव्रतषोडशभागः। स च नवमासिकव्रतरूपः। |
| ब्राह्मणक्षत्रियवैश्यशूद्रकर्त्तृकाज्ञानकृतशूद्रवधः। | ब्रह्महत्याव्रतद्वात्रिंशत्तमभागः। स च सार्द्धचतुर्म्मासिकव्रतरूपः। सर्व्वत्र बालवृद्धस्त्रीणामर्द्धम्। एकस्य बालत्वादिधर्म्मद्वयवत्त्वे पादः। |
| ब्राह्मणक्षत्रियवैश्यशूद्रकर्त्तृकज्ञानकृतवृत्तिस्थशूद्रवधः। | ब्रह्महत्याव्रतद्वादशभागः। स च वार्षिकव्रतरूपः। अज्ञानतस्त्वेतदर्द्धम्। |
| सर्व्ववर्णकर्त्तृकज्ञानकृतप्रतिलोमजातवधः अर्थात् अपकृष्टशूद्रवधः। | चान्द्रायणव्रतम्। |
| सर्व्ववर्णकर्त्तृ काज्ञानकृतापकृष्टशूद्रवधः। | पराकव्रतम्। सर्व्वत्र बालवृद्धस्त्रीणामर्द्धम्। एकस्य बालत्वादिधर्म्मद्वयवत्त्वे पादः। |
| ब्राह्मणकर्त्तृकज्ञानकृतब्राह्मणीवधः। | षाड्वार्षिकं महाव्रतम्। अज्ञानतस्त्वेतदर्द्धम्। |
| क्षत्रियकर्त्तृकज्ञानकृतब्राह्मणीवधः। | द्वादशवार्षिकव्रतम्। अज्ञानतस्त्वेतदर्द्धम्। |
| वैश्यकर्त्तृकज्ञानकृतब्राह्मणीवधः। | अष्टादशवार्षिकव्रतम्। अज्ञानतस्त्वेतदर्द्धम्। |
| शूद्रकर्त्तृकज्ञानकृतब्राह्मणीवधः। | चतुर्व्विंशतिवार्षिकव्रतम्। अज्ञानतस्त्वेतदर्द्धम्। सर्व्वत्र बालवृद्धस्त्रीणामर्द्धम्। एकस्य |

| | |
|---|---|
| | बालत्वाद्युभयधर्म्मवत्त्वे पादः । |
| ब्राह्मणक्षत्रियकर्तृकज्ञानकृतक्षत्रियावधः । | त्रैवार्षिकव्रतम् । अज्ञानतस्त्वेतदर्द्धम् । |
| वैश्यकर्तृकज्ञानकृतक्षत्रियावधः । | षाड्वार्षिकव्रतम् । अज्ञानतस्त्वेतदर्द्धम् । |
| शूद्रकर्तृकज्ञानकृतक्षत्रियावधः । | नववार्षिकव्रतम् । अज्ञानतस्त्वेतदर्द्धम् । सर्व्वत्र बालवृद्धस्त्रीणामर्द्धम् । एकस्य बालत्वाद्युभयधर्म्मवत्त्वे षादः । |
| ब्राह्मणक्षत्रियवैश्यकर्तृकज्ञानकृतवैश्यावधः । | वार्षिकव्रतम् । अज्ञानतस्त्वेतदर्द्धम् । |
| शूद्रकर्तृकज्ञानकृतवैश्यावधः । | द्विवार्षिकव्रतम् । अज्ञानतस्त्वेतदर्द्धम् । स्त्रीबालवृद्धानामर्द्धम् । एकस्य स्त्रीत्वाद्युभयधर्म्मवत्त्वे पादः । |
| ब्राह्मणक्षत्रियवैश्यशूद्रकर्तृकशूद्रावधः । | वार्षिकव्रतम् । अज्ञानतस्तु एतदर्द्धम् । स्त्रीबालवृद्धानामर्द्धम् । एकस्य स्त्रीत्वाद्युभयधर्म्मवत्त्वे पादः । |
| आत्रेयीवधः । | यत्कर्त्तृकयद्वर्णस्त्रीवधे यत्प्रायश्चित्तं तद्द्वैगुण्यम् । |
| आत्रेयी त्रिविधा । अत्रिगोत्रा ऋतुस्नाता गर्भिणी च | |
| अथोपपातकानि । | प्रायश्चित्तानि । |
| ब्राह्मणकर्तृकज्ञानकृतसकृत्सवर्णव्यभिचरितब्राह्मणीवधः । | वार्षिकव्रतम् । अज्ञानतस्त्वेतदर्द्धम् । |
| क्षत्रियकर्तृकज्ञानकृतसकृत्सवर्णव्यभिचरितब्राह्मणीवधः । | द्विवार्षिकव्रतम् । अज्ञानतस्त्वेतदर्द्धम् । |
| वैश्यकर्तृकज्ञानकृतसकृत्सवर्णव्यभिचरितब्राह्मणीवधः । | त्रैवार्षिकव्रतम् । अज्ञानतस्त्वेतदर्द्धम् । |
| शूद्रकर्तृकज्ञानकृतसकृत्सवर्णव्यभिचरितब्राह्मणीवधः । | चतुर्वार्षिकव्रतम् । अज्ञानतस्त्वेतदर्द्धम् । बालवृद्धस्त्रीणामर्द्धम् । एकस्य उभयधर्म्मवत्त्वे पादः । |
| ब्राह्मणकर्तृकाज्ञानकृतो भूयो व्यभिचरिताया अधमवर्णव्यभिचरितायाश्च ब्राह्मण्या वधः । | दृतिदानम् । ज्ञानकृते तु द्वैगुण्यम् । क्षत्रियस्य एतद्द्विगुणम् । वैश्यस्य त्रिगुणम् । शूद्रस्य चतुर्गुणम् । |
| ब्राह्मणक्षत्रियकर्तृ काज्ञानकृतो भूयो व्यभिचरिताया अधमवर्णव्यभिचरितायाश्च क्षत्रियाया वधः । | धनुर्दानम् । कामतो द्वैगुण्यम् । वैश्यस्य एतद्द्विगुणम् । शूद्रस्य त्रिगुणम् । |
| ब्राह्मणक्षत्रियवैश्यकर्तृ काज्ञानकृतो भूयो व्यभिचरिताया अधमवर्णव्यभिचरितायाश्च वैश्याया वधः । | छागदानम् । कामतस्त्वेतद्द्विगुणम् । शूद्रस्य एतद्द्विगुणम् । |
| ब्राह्मणक्षत्रियवैश्यशूद्रकर्तृ काज्ञानकृतो मूयो व्यभिचरिताया अधमवर्णव्यभिचरितायाश्च शूद्राया वधः । | मेषदानम् । ज्ञानतो द्वैगुण्यम् । सर्व्वत्र स्त्रीबालवृद्धानामर्द्धम् । एकस्य उभयधर्म्मवत्त्वे पादः । प्रयोजकादीनां पादपादहानिः । |
| ब्राह्मणकर्तृ कज्ञानकृतब्राह्मणीगर्भवधः । | द्वादशवार्षिकव्रतम् । अज्ञानतोऽर्द्धम् । |
| ब्राह्मणकर्तृ कज्ञानकृतक्षत्रियागर्भवधः । | त्रैवार्षिकव्रतम् । अज्ञानतोऽर्द्धम् । |
| ब्राह्मणकर्तृ कज्ञानकृतवैश्यागर्भवधः । | सार्द्धवार्षिकव्रतम् । अज्ञानतोऽर्द्धम् । |
| ब्राह्मणकर्तृ कज्ञानकृतशूद्रागर्भवधः । | नवमासिकव्रतम् । अज्ञानतोऽर्द्धम् । |

| | |
|---|---|
| क्षत्रियकर्त्तृकज्ञानकृतब्राह्मणीगर्भवधः। | चतुर्विंशतिवार्षिकव्रतम्। अज्ञानतोऽर्द्धम्। |
| क्षत्रियकर्त्तृकज्ञानकृतक्षत्रियागर्भवधः। | त्रैवार्षिकव्रतम्। अज्ञानतोऽर्द्धम्। |
| क्षत्रियकर्त्तृकज्ञानकृतवैश्यागर्भवधः। | सार्द्धवार्षिकव्रतम्। अज्ञानतोऽर्द्धम्। |
| क्षत्रियकर्त्तृकज्ञानकृतशूद्रागर्भवधः। | नवमासिकव्रतम्। अज्ञानतोऽर्द्धम्। |
| वैश्यकर्त्तृकज्ञानकृतब्राह्मणीगर्भवधः। | षट्त्रिंशद्वार्षिकव्रतम्। अज्ञानतोऽर्द्धम्। |
| अथोपपातकानि। | प्रायश्चित्तानि। |
| वैश्यकर्त्तृकज्ञानकृतक्षत्रियागर्भवधः। | षाड्वार्षिकव्रतम्। अज्ञानतोऽर्द्धम्। |
| वैश्यकर्त्तृकज्ञानकृतवैश्यागर्भवधः। | सार्द्ध वार्षिकव्रतम्। अज्ञानतोऽर्द्धम्। |
| वैश्यकर्त्तृकज्ञानकृतशूद्रागर्भवधः। | नवमासिकव्रतम्। अज्ञानतोऽर्द्धम्। |
| शूद्रकर्त्तृकज्ञानकृतब्राह्मणीगर्भवधः। | अष्टचत्वारिंशद्वार्षिकव्रतम्। अज्ञानतोऽर्द्धम्। |
| शूद्रकर्त्तृकज्ञानकृतक्षत्रियागर्भवधः। | नववार्षिकव्रतम्। अज्ञानतोऽर्द्धम्। |
| शूद्रकर्त्तृकज्ञानकृतवैश्यागर्भवधः। | त्रैवार्षिकव्रतम्। अज्ञानतोऽर्द्धम्। |
| शूद्रकर्त्तृकज्ञानकृतशूद्रागर्भवधः। | नवमासिकव्रतम्। अज्ञानतोऽर्द्धम्। ब्राह्मण्यादिगर्भे पुंस्त्वेन ज्ञाते विशेषेणाज्ञाते चोक्तं प्रायश्चित्तम्। स्त्रीत्वेन ज्ञाते सर्व्वत्रार्द्धं प्रायश्चित्तं ज्ञेयम्। सर्व्वत्र स्त्रीबालवृद्धानामर्द्धम्। प्रयोजकादीनां पादपादहानिः। |
| यद्यपि गजाश्वादिवधः सङ्करीकरणपापमिदं तथापि हिंसासाजात्यादुपपातकप्रकरणे तत्प्रायश्चित्तं निरूप्यते। | |
| वृथासामान्यपशुघातः। वृथेतिग्रहणात् यागाद्यर्थे प्रायश्चित्ताद्यभावः। | प्राजापत्यम्। |
| राजसम्बन्ध्युत्तमगजवधः। | पञ्चनीलवृषदानम्। |
| अत्यन्तोत्तमवाजिरासभवधः। | चान्द्रायणम्। |
| अश्ववधः। | वासोयुगदानम्। एतच्च ज्ञानतः। अज्ञानतस्तदर्द्धम्। |
| मृगमहिषवराहकुञ्जरगण्डतरक्षुऋक्षवानरसिंहव्याघ्रपृषतचमररुरुकादीनांवधः। | अहोरात्रोपवासान्ते घृतघटदानम्। एतच्चाज्ञानतः सकृद्वधविषयम्। ज्ञानतो द्वैगुण्यम्। |
| अजाव्यादिवधः। | त्रिरात्रोपवासः। एतदज्ञानतोऽत्यन्तधार्म्मिकब्राह्मणकर्त्तृकसकृद्वधे वेदितव्यम्। |
| | शक्तस्य एकहायनवृषदानम्। |
| | अशक्तस्य धेनुदानम्। तदशक्तौ प्राजापत्यव्रतम्। |
| | अभ्यासे मासं यावकपानम्। |
| | अत्यन्ताभ्यासे कृच्छ्रातिकृच्छ्रम्। |

| | |
|---|---|
| मार्जारगोधानकुलमण्डूकश्वपतत्रिमूषिकसर्पवधः। पतत्री गृहपक्षी। | त्र्यहं क्षीरपानम्। पादिककृच्छ्रं वा। एतत्सकृदज्ञानविषयम्। |
| | ज्ञानतोऽभ्यासे द्वादशरात्रं कृच्छ्रम्। स्त्रीशूद्रबालवृद्धानामर्द्धम्। |
| अथोपपातकानि। | प्रायश्चित्तानि। |
| कृष्णसर्पवधे तीक्ष्णाग्रलौहकीलिकादानमादौकर्त्तव्यम्। सर्पजातीयषण्डवधे पलालभारः सीसकमाषश्च दातव्यः। एतज्ज्ञानतः। एतदशक्तौ व्रतादिकं कर्त्तव्यम्। | |
| अथ सामान्यपक्षिवधः। | नक्तव्रतम्। द्विरक्तिपरिमितरौप्यदानं वा। |
| | कामतोऽत्यन्ताभ्यासे शूद्रहत्याव्रतम्। गुरुगोवधव्रतं वा। स्त्रीशूद्रबालवृद्धानामर्द्धम्। एकस्य स्त्रीत्वाद्युभयधर्म्मवत्त्वे पादः। |
| अथ विशेषपक्षिवधः। वकवलाका-हंससारसकारण्डवचक्रवाककुररगृध्रश्येनखञ्जरीटटिट्टिभोलूक-शुकशारिकातित्तिरिमयूरकाककलविङ्ककालञ्जकमद्गुकपोतपारावतादीनांवधः। | अहोरात्रोपवासः सर्व्वबीजदानञ्च। एतदज्ञानविषयम्। |
| | ज्ञानकृते त्र्यहोपवासः। शक्तस्य गोदानम्। तत्रायं विशेषः। शुकवधे द्विहायनगवदानम्। क्रौञ्चवधे त्रिहायणगवदानम्। क्रौञ्चशुकभासमयूरश्येनगृध्रवधे वत्सतरीदानम्। अत्र वृषदानवत्सतरीदानयोर्व्यवस्था शक्ताशक्तविषयिका। एतद्दानाशक्तानां व्रतादिकम्। |
| कोकिलशुककपोतकपिञ्जलकुक्कुटटिट्टिभखर्ज्जूरखञ्जरीटानां पुरुषभारपरिमितानां वधः। | उत्कृष्टशूद्रहत्याव्रतम्। |
| मत्समण्डूकमकरशिशुमारादिजलचरवधः। | सप्तरात्रब्रह्महत्याव्रतम्। एतदज्ञानतः सकृद्वधे। |
| | अहोरात्रोपवासः यथाशक्तिलवणदानञ्च। एतत् कामतः सकृत्। अभ्यासात्यन्ताभ्यासयोस्तुमलावहप्रायश्चित्ते दर्शयिष्यते। |
| अथ सास्थ्यनस्थिप्राणिवधः। | |
| सहस्रसंख्यकानां अस्थिमतां कृकलासादीनां ज्ञानकृतवधः। | आब्दिकं शूद्रहत्याव्रतम्। अज्ञाने षाण्मासिकम्। |
| अनस्थ्नां क्रमिकीटपतङ्गभ्रमरदंशमशकमक्षिकादीनां शकटपूरितमितानां ज्ञानकृतवधः। | आब्दिकं शूद्रहत्याव्रतम्। अज्ञाने षाण्मासिकम्। |
| अस्थिमतां प्रत्येकं वधः। | पणदानम्। |
| अनस्थ्नां प्रत्येकं वधः। | प्राणायामः। पणदानं वा। |
| अन्नशक्त्रादिगुडादिसर्व्वरसफलपुष्पजातप्राणिवधः। | दिनमेकं घृतमात्रभोजनम्। एतदज्ञाने। ज्ञाने तद्द्वैगुण्यम्। |
| | अभ्यासे तप्तकृच्छ्रम्। |
| | अत्यन्ताभ्यासे कृच्छ्रातिकृच्छ्रम्। |
| फलवद्वृक्षलतागुल्मच्छेदनम्। | प्राजापत्यम्। |
| अथोपपातकानि। | प्रायश्चित्तानि। |
| अफलवतामेतेषां छेदनम्। | अष्टाहसाध्यवृद्धकृच्छ्रम्। |
| अत्यन्तोत्कृष्टफलवद्वृक्षच्छेदनम्। | चान्द्रायणम्। |
| अभ्यासादत्यन्तोत्कृष्टफलवद्वृक्षच्छेदनम्। | आब्दिकव्रतम्। |
| चैत्यवृक्षश्मशानसीमपुण्यस्थानसुरालयजातवृक्षच्छेदनम्। विंशतिसंख्यकोपजीव्यवृक्षच्छेदनम्। ख्यातवृक्षच्छेदनञ्च। | पूर्व्वोक्तवृक्षच्छेदनप्रायश्चित्तद्वैगुण्यादि। सर्व्वत्र स्त्रीशूद्रबालवृद्धानामर्द्धम्। |
| वापीकूपारामसेतुसभातडागवप्रदेवतायतनभेदनम्। | ब्राह्मणेभ्यो निवेद्य चतस्र आहुतीर्ज्जुहुयात्। इदं विष्णुरिति प्रथमां मानस्तोके इति द्वितीयां विष्णोः कर्म्माणीति तृतीयां पादोऽस्यान्त्यामिति चतुर्थीं यां देवतामुत्सादयति तस्यै देवतायै। ब्राह्मणान् भोजयेत्। एतत् सकृदल्पोपघातविषयम्। अभ्यासे महोपघाते च प्राजापत्यम्। दण्डश्च। यथा। सकृदल्पोपघाते प्रथमसाहसः २५० पणाः। अभ्यासे महोपघाते उत्तमसाहसः। १००० पणाः। |
| देवताया उत्कृष्टप्रतिमाभेदनच्छेदनदहनहरणानि। | चान्द्रायणम्। वाप्यादिभेदनोक्ताश्चतस्र आहुतयः। उत्तमसाहसो दण्डश्च। १००० पणाः। |

| | |
|---|---|
| देवताया अपकृष्टप्रतिमाभेदनच्छेदनदहनहरणानि। | प्राजापत्यम्। पूर्ब्बोक्तचतुराहुत्यादिदानम्। प्रथमसाहसो दण्डश्च। २५० पणाः। |
| अथाभिचारः। स तु परहिंसार्थं जपहोमादिकर्म्म। | अतिकृच्छ्रम्। एतत् सकृदाचरणे। अभ्यासे प्रायश्चित्तावृत्तिः। इति हिंसाप्रायश्चित्तम्॥ * ॥ |
| व्रात्ययाजनम्। | प्राजापत्यम्। |
| मूल्येन मृतस्य दहनवहनादिकम्। | सान्तपनम्। |
| अथाभक्ष्यभक्षणम्। अभक्ष्यं षड्विधम्। जातिदुष्टम् १ क्रियादष्टम् २ कालाश्रयविदूषितम् ३ संसर्गाश्रयदुष्टम् ४ सहृल्लेखम् ५ स्वभावतो दुष्टम् ६ । जातिदुष्टं लशुनगृञ्जनपलाण्डुच्छत्राकश्वेतवार्त्ताकीलालिकावर्त्तुलाकारालावूरूपम्१ क्रियादुष्टं पतितसंस्पृ ष्टम् २ कालदुष्टं ह्यस्तनं चिरसंस्थितञ्च ३ संसर्गदुष्टं सुरालशुनपेयूषादियुक्तम् ४ सहृल्लेख विचिकित्सितान्नम् ५ स्वभावदुष्टं पुरीषादि ६ । | चान्द्रायणम्। एतद्गुरुतरविषयम्। विशेषानिर्द्देशे ज्ञेयम्। |
| अथोपपातकानि। | प्रायश्चित्तानि। |
| अपरञ्च। संघातान्नम्। शूद्रोपनीतान्नम्। पतितोपनीतान्नम्। शूद्रवेश्मस्थान्नञ्च। | |
| शूद्रस्य पक्वान्नभक्षणम्। | ब्राह्मणस्य त्र्यहोपवासः। एतदज्ञानतः। |
| | ज्ञानतः प्राजापत्यम्। आपदि भक्षणे मनस्तापः द्रुपदां शतजपो वा। क्षत्त्रियादीनां पादपादहानिः। |
| अभ्यासात् शूद्रस्य पक्वान्नभक्षणम्। | ब्राह्मणस्य मासयाधकपानम्। क्षत्त्रियादीनां पादपादहानिः। |
| शूद्रस्यामान्नभक्षणम्। | उक्तप्रायश्चित्ततुरीयभागः। आपदि भक्षणे प्रायश्चित्ताभावः। |
| अथ रजकशैलूषवेणुचर्म्मोपजीविकैवर्त्ताद्यन्त्यजान्नभक्षणम्। | चान्द्रायणम्। एतत् ज्ञानाभ्यासविषयम्। अज्ञाने त्वर्द्धम्। |
| | ज्ञानतोऽष्टधाभ्यासे कृच्छ्राब्दव्रतम्। |
| | अज्ञानतोऽष्टधाभ्यासे एतदर्द्धम्। एतत्तु ब्राह्मणविषयम्। क्षत्त्रियादीनां पादपादहानिः। |
| सकृदज्ञानकृतान्त्यजोत्सृष्टाशनम्। | ब्राह्मणस्य चान्द्रायणम्। |
| | क्षत्त्रियस्य तप्तकृच्छ्रम्। |
| | वैश्यस्य तप्तकृच्छ्रार्द्धम्। |
| | शूद्रस्य तप्तकृच्छ्रपादः। |
| | ज्ञानत एतद्द्वैगुण्यम्। |
| कापालिकान्नभक्षणम्। | ज्ञानात् कृच्छ्राब्दम्। |
| | अज्ञानात् चान्द्रायणद्वयम्। एतदष्टधाभ्यस्तविषयम्। एतत् सर्व्वं ब्राह्मणस्य। क्षत्त्रियादौ पादपादहानिः। |
| चाण्डालश्वपचक्षत्तृसूतवैदेहकमागधायोगवानामन्त्यावसायिनामन्नभक्षणम्। | ब्राह्मणस्य कामतः सकृद्भोजने चान्द्रायणम्। |
| | अज्ञानतस्तप्तकृच्छ्रम्। |
| | बलाद्भोजने पराकः। |
| | अज्ञानतोऽष्टचत्वारिंशद्वारभोजने द्वादशवार्षिकव्रतम्। ज्ञानतश्चतुर्व्विंशतिवारभोजने एतदेव। |
| | ज्ञानतोऽष्टचत्वारिंशद्वारभोजने चतुर्व्विंशतिवार्षिकव्रतं अव्यवहार्य्यता च। |
| | सकृदज्ञानत आमान्नभोजने त्रिरात्रोपवासः। सर्व्वत्र क्षत्त्रियादीनां पादपादहानिः। |
| | आपदि पक्वान्नभोजने क्षत्त्रियस्य सान्तपनम्। |
| | वैश्यस्य षड्रात्रम्। |
| | शूद्रस्य त्रिरात्रम्। |
| चाण्डालपतितादीनामुत्सृष्टान्नभक्षणम्। | द्विजस्य पराकः। |

| | |
|---|---|
| | शूद्रस्य कृच्छ्रम् । |
| | एतत् सकृदज्ञानविषयं ज्ञानतो द्वैगुण्यादिकम् । |
| अथोपपातकानि । | प्रायश्चित्तानि । |
| अथ सामान्याभोज्यान्नभोजनम् । | त्र्यहोपवासः । एतत् सकृदज्ञानविषयम् । |
| | ज्ञाने प्राजापत्यम् । क्षत्रियादीनां पादपादहानिः । |
| अभोज्यान्नानि यथा । अनधीतवेदारब्धयज्ञान्नम् । ग्रामयाजिहोतृकयज्ञान्नम् । स्त्रीक्लीवहुतयज्ञान्नम् । मत्तक्रुद्धातुराणामन्नम् । केशेन कीटेन वा सह पक्वमन्नम् । कामतः पादस्पृ ष्टमन्नम् । भ्रूणघ्नादिपतितावेक्षितान्नम् । रजस्वलास्पृ ष्टान्नम् । पतत्रिणावलीढमन्नम् । शुना स्पृष्टमन्नम् । गवाघ्रातमन्नम् । घुष्टान्नम् । घोषणया दत्तमन्नमित्यर्थः । गणान्नम् । मठब्राह्मणसंघान्नमित्यर्थः । गणिकान्नम् । विद्वज्जुगुप्सितान्नम् । स्तेनान्नम् । गायनान्नम् । तक्षान्नम् । वार्द्धुषिकान्नम् । दीक्षितान्नम् । दीक्षणीययागानन्तरं यज्ञसमाप्तिपर्य्यन्तं तद्यागकर्त्तुरन्नमित्यर्थः । कदर्य्यस्यान्नम् । रज्ज्वादिनाबद्धस्यान्नम । अयोनिगडयुक्तस्यान्नम् । अभिशस्तस्यान्नम् । क्लीवान्नम् । पुंश्चल्यन्नम् । दाम्भिकान्नम् । छद्मना धर्म्मचारिणोऽन्नमित्यर्थः । शुक्तान्नम् । पर्य्युषितान्नम् । शूद्रोच्छिष्टान्नम । चिकित्सकान्नम् । व्याधान्नम् । क्रूरान्नम् । उच्छिष्टभोजिनामन्नम् । उग्रस्यान्नम् । दारुणकर्म्मणो जातिविशेषस्य वा अन्नमित्यर्थः । सूतिकोद्देशेन पक्वमन्नम् । पर्य्याचान्तम् । आचमनव्यवहितान्नमित्यर्थः । एकपंक्तिस्थानन्यानवमन्य यत्रान्ने भुज्यमाने केनचिदाचमनं क्रियते तत् पर्य्याचान्तमिति कुल्लूकभट्टः । अनर्च्चितान्नम् । अर्च्चार्हस्यावज्ञया दत्तमन्नमित्यर्थः । वृथामांसम् । अवीरान्नम् । द्विषदन्नम् । नगराधिपान्नम् । | एतेषामभोज्यानामन्यतमानां भक्षणे पूर्ब्बोक्तस्त्र्यहोपवासः । एष सकृदज्ञानविषयः । |
| | ज्ञाने प्राजापत्यम् । क्षत्रियादीनां पादपादहानिः । |
| अथोपपातकानि । | प्रायश्चित्तानि । |
| पतितान्नम् । अवक्षुतान्नम् । क्षवथुसहितान्नमित्यर्थः । पिशुनान्नम् । अनृतिनामन्नम् । कूटसाक्ष्याद्यन्नमित्यर्थः । यज्ञफलविक्रायकान्नम् । शैलूषान्नम् । तुन्नवायान्नम् । कृतघ्नान्नम् । कर्म्मारान्नम् । निसादान्नम् । रङ्गावतारकान्नम् । स्वर्णकारान्नम् । वेणुजीविनामन्नम् । लौहविक्रायकान्नम् । श्ववतामन्नम् । आखेटकाद्यर्थं शुनः पोषकाणामन्नमित्यर्थः । शौण्डिकवृत्तिद्विजान्नम् । चेलनिर्णेजकस्यान्नम् । वस्त्रधावकस्यान्नमित्यर्थः । रञ्जकान्नम् । कुसुम्भादिना वस्त्ररागकारकस्यान्नमित्यर्थः । नृशंसान्नम् । गृहस्थितोपपतिकान्नम् । उपपतिमर्षकान्नम् । गेहे ज्ञातं भार्य्याजारं ये सहन्ते तेषामन्नमित्यर्थः । स्त्रीजितान्नम् । अनिर्द्दशं प्रेतान्नम् । अनिर्गताशौचञ्च सूतिकान्नमित्यर्थः । अतुष्टिकरान्नञ्च ॥ ७० ॥ | एतेषामभोज्यानामन्यतमानां भक्षणे पूर्ब्बोक्तस्त्र्यहोपवासः । एष सकृदज्ञानविषयः । |
| | ज्ञाने प्राजापत्यम् । क्षत्रियादीनां पादपादहानिः । |
| चाण्डालादिपतितस्पृष्टान्नभक्षणम् । अत्र पतितपदं सर्व्वधर्म्मबहिष्कृतवाचि यवनादिम्लेच्छपरं उच्छिष्टान्नभोजनप्रकरणेतथा लिखनात् अतएव चाण्डालस्पृ ष्टान्नभक्षणप्रतिज्ञायां पतितपदं पृथक् न लिखितम् । | प्राजापत्यम् । एतत्सकृदज्ञाने ब्राह्मणविषयम् । ज्ञाने द्वैगुण्यम् । अभ्यासे तु प्रायश्चित्तावृत्तिः । क्षत्रियादीनां पाद-पादहानिः । एतत्कुण्यादिष्वभ्यासे ज्ञेयम् । रजकादिस्पृ ष्टान्नभक्षणे तु एतदर्द्धम् । |
| पतितस्पर्शे अकृतस्नातस्य भोजनम् । | याज्ञवल्क्योक्त चतुरहःसाध्यं तप्तकृच्छ्रम् । |
| | अज्ञानत एतदर्द्धम् । अभ्यासे प्रायश्चित्तावृत्तिः । |
| | अत्यन्ताभ्यासे चान्द्रायणम् । क्षत्रियादीनां पादपादहानिः । चाण्डालादिस्पर्शे एतद्बोधितव्यम् । |
| शूद्रादिस्पृ ष्टान्नस्य केशकीटोपहतान्नस्य च भक्षणम् । | एकोपवासः । |
| वृथापाकान्नभक्षणम् । तत्तु देवतापित्रतिथिभक्षणवर्ज्जितान्नम् । | प्राणायामत्रयम् घृतमात्रभोजनञ्च । एतदज्ञानतः । ज्ञानतो द्वैगुण्यम् । |
| अथोपपातकानि । | प्रायश्चित्तानि । |
| वृथामांसभक्षणम् । तत्तु पितृदेवार्च्चनरहितं मांसम् । | प्राजापत्यव्रतम् । एतद्ब्राह्मणस्य । क्षत्रियादीनां पादपादहानिः । अभ्यासे प्राजापत्यावृत्तिः । एतत् रोगिदैवपितृकर्म्मनिमन्त्रितेतरविषयम् । |
| सामान्याभक्ष्यमांसभक्षणम् । | सप्तरात्रयवागूपानम् । एतत् सकृदज्ञाने । ज्ञानतो द्वैगुण्यम् । क्षत्रियादीनां पादपादहानिः । एतदभ्यासे प्रायश्चित्तावृत्तिः । |
| अश्वगोकुञ्जरोष्ट्रशशकादिपञ्चनखातिरिक्तपञ्चनखक्रव्यादग्राम्युक्कुटानां मांसभक्षणम् । विड्वराहनरमांसभक्षणञ्च । | ब्राह्मणानां सकृदज्ञानतः प्राजापत्यम् । पुनरुपनयनञ्च । ज्ञाने तु द्वैगुण्यम् । अभ्यासे उपनयनसहितप्रायश्चित्तावृत्तिः । उपनयनाशक्तौ चान्द्रायणं तदशक्तौ धेन्वष्टकम् । क्षत्रियादीनां पादपादहानिः । |
| हंसमद्गुकाकोलकाकखञ्जरीटमत्स्यादवलाकाशुकसारिकाचक्रवाकप्लवकोककलविङ्करज्जुवालसारसदात्यूहभासकोकिलमण्डूकभुजगानामन्यतमस्य मांसभक्षणम् । | विप्रस्याज्ञानतः सकृद्भोजने त्रिरात्रोपवासः । ज्ञानतो द्वैगुण्यम् । ज्ञानाभ्यासे प्रायश्चित्तावृत्तिः । क्षत्रियादीनां पादपादहानिः । |
| मत्स्यभक्षणम् । | विप्रस्य कामतस्त्र्यहोपवासः । अकामत एतदर्द्धम् । क्षत्रियादीनां पादपादहानिः । |
| पृष्ठमांस-गर्भशय्याभूम्यन्तर्गतपक्वमांसजीर्षपक्वमांससूनामांसशुष्कमांसानामन्यतमस्यभक्षणम् । सूना घातनस्थली तद्भवं मांसम् । | कामतः सकृद्भक्षणे त्र्यहोपवासः । अकामत एतदर्द्धम् । अभ्यासे प्रायश्चित्तावृत्तिः । एतत् ब्राह्मणस्य । क्षत्रियादीनां पादपादहानिः । |
| वृथापायससपूपशस्कुलीकृशरसंयावशिग्रुलोहितवृक्षनिर्यासाग्र्यप्रभवानां भक्षणम् । | कामतस्त्र्यहोपवासः । अज्ञानतस्तदर्द्धम् । एतद्ब्राह्मणस्य । क्षत्रियादीनां पादपादहानिः । |
| एकाकिमिष्टान्नभक्षणम् । | एकाहोपवासः । अभ्यासे द्वैगुण्यम् । |
| अस्नेहाक्तपर्य्युषितान्नदधिवर्ज्जशुक्तक्षारलवणभक्षणम् । | अज्ञानत एकाहोपवासः । |
| | ज्ञानतस्त्र्यहोपवासः । अभ्यासे द्वैगुण्यम् । |
| वाग्दुष्टभावदुष्टभाजनपक्वद्रव्यभक्षणम् । | अभ्यासे त्रिरात्रयावकपानम् । |
| शूद्रभाजने भिन्नकांस्ये च भो जनम् । | अहोरात्रोपवासः पञ्चगव्यपानञ्च । |
| | |

| कुम्भीभक्षणम् । | द्वादशरात्रं पयःपानम् । |
|---|---|
| अथोपपातकानि । | प्रायश्चित्तानि । |
| लशुणपलाण्डुगृञ्जनभक्षणम् । रुपरसादिभिर्लशुनादितुल्यद्रव्यभक्षणञ्च । | ज्ञानतश्चान्द्रायणम् । |
| | अज्ञानात्तप्तकृच्छ्रम् । |
| | चिरतराभ्यासे संवत्सरयावकपानम् । एतदुभयत्र पुनरुपनयनमपि शूद्राणामुपनयनतुल्यचान्द्रायणेन सह प्रकृतव्रतस्य पादः । |
| सजातीयमृतसूतकिनां पक्वान्नभक्षणम् । | ज्ञानतः प्राजापत्यम् । |
| | अज्ञानात् त्र्यहोपवासः । अभ्यासे द्वैगुण्यादिकम् । |
| मृतसूतकिनां ब्राह्मणक्षत्रियवैश्यशूद्राणामामान्नस्य ब्राह्मणकर्तृकभक्षणम् । | विप्रस्यामान्ने प्राणायामः । क्षत्रियस्यामान्ने शतगायत्रीजपः । वैश्यस्यामान्ने पञ्चशतगायत्रीजपः । शूद्रस्यामान्ने अष्टसहस्रगायत्रीजपः । अभ्यासे द्वैगुण्यम् । |
| मृतकिसूतकिजलपानम् । | ब्राह्मणस्य पञ्चगव्यं पीत्वा उपवासः । एतत् सकृदज्ञाने ज्ञाने तु द्वैगुण्यम् । अभ्यासे त्वावृत्तिः । तज्जलस्पर्शे स्नानमात्रम् । क्षत्रियादीनां पादपादहानिः । |
| नवश्राद्धान्नभोजनम् । नवश्राद्धन्तु साग्नीनां चतुर्थपञ्चमनवमैकादशाहक्रियमाणं निरग्नीनान्तु आद्यश्राद्धमात्रम् । | चान्द्रायणम् । |
| प्रथममासिकश्राद्धान्नभोजनम् । | पराकः । |
| त्रिपक्षे प्रेतश्राद्धान्नभोजनम् । | अतिकृच्छ्रम् । |
| द्विमासादिषण्मासपर्य्यन्तं प्रेतश्राद्धान्नभोजनम् । | प्राजापत्यम् । |
| षण्मासादूर्द्ध्वमब्दपर्य्यन्तं प्रेतश्राद्धान्नभोजनम् । | पादकृच्छ्रम् । |
| पुनराब्दिकश्राद्धान्नभोजनं अर्थात् सपिण्डीकरणान्नभोजनम् । एतत् स्मार्त्तमतं शूलपाणिमते तु द्वितीयसांवत्सरिकान्नभोजनम् । | एकाहोपवासः । |
| पत्राद्यनन्तरितहस्तदत्तानांएकहस्तदत्तानां शूद्रादत्तानाञ्चघृततैललवणव्यञ्जनपानीयपायसमाक्षिकफाणितगोरसशाकानांभक्षणम् । | द्व्यहसाध्यसान्तपनम् । एतत् ज्ञानतः । अज्ञानादर्द्धम् । लौहपात्रेण परिवेशनेऽप्येतदेव प्रायश्चित्तं ज्ञेयम् । एतद् ब्राह्मणस्य । क्षत्रियादीनां पादपादहानिः । |
| अकृतापोशानस्य अकृतमौनस्य च भोजनम् । | अष्टोत्तरशतगायत्रीजपःएतद्द्विजानामनापद्विषयम् । |
| अकृताचमनस्य पानभोजनम् । | अष्टोत्तरसहस्रगायत्रीजपःउपवासो वा । अभ्यासे द्विगुणादि । एतत् कटुकषायताम्बूलेक्षुव्यतिरिक्तभोजनविषयम् । |
| अथोपपातकानि । | प्रायश्चित्तानि । |
| यज्ञोपवीतरहितकर्त्तृकान्नभोजनम् । | स्नानं शतगायत्रीजपः उपवासश्च । |
| रेतोमूत्रपुरीषाणामन्यतमस्यभक्षणम् । | ज्ञानतश्चान्द्रायणम् । |
| अज्ञानतस्तप्तकृच्छ्रम् । | पादोनधेनुचतुष्टयासम्भवात् ४ धेनवः । |
| बलात्कारे प्राजापत्यम् । सर्व्वत्र द्विजातीनां पुनः संस्कारश्च । | १ धेनुः । |
| विण्मूत्रादिदूषितफलादिभक्षणम् । | संसर्गमात्रे कृच्छ्रपादः । |
| | सन्निकृष्टे अर्थात् महत्संसर्गे कृच्छ्रार्द्धम् । एतत् रसास्वादनानुपलम्भनपक्षे अज्ञानतः सकृद्विषयम् । ज्ञानतो द्वैगुण्यम् । |
| | रसाद्युपलम्भे तु गोतमोक्ततप्तकृच्छ्रं द्वादशाहसाध्यम् । अज्ञानत उपलम्भे अर्द्धम् । क्षत्रियादीनां पादपादहानिः । |
| मृल्लोष्टभोजनम् । | अहोरात्रोपवासः । |
| | अभ्यासे याज्ञवल्क्योक्तचतुरहसाध्यतप्तकृच्छ्रम् । |
| ब्रह्मचारिणां मधुमांसभोजनम् । | ज्ञानतः प्राजापत्यम् । अज्ञानात् अर्द्धम् । |
| ब्रह्मचारिणामामिषभाण्डपक्वान्नभोजनम् । | त्र्यहं कुशमूलविपक्वक्षीरपानमात्रम् । एतदज्ञानतः । |
| | ज्ञानतो द्वैगुण्यम् । |
| देवतातिथिभृत्यादिवर्ज्जनभोजनम् । | अभ्यासे प्राजापत्यम् । |
| अस्थ्यादिदूषितान्नभोजनम् । अस्थिशब्दोऽत्राभक्ष्यास्थिमात्रवचनम् । | स्नात्वार्कमर्च्चयित्वा घृतमात्राशनम् । |
| मत्स्यकण्टकशम्बूकशङ्खशुक्तिकपर्द्दकभक्षणम् । | पञ्चगव्यमात्रभक्षणम् । |
| पुंसवनसीमन्तोन्नयनकर्म्मणि भोजनम् । | ज्ञानाभ्यासे चान्द्रायणम् । |
| | अज्ञानाभ्यासे तदर्द्धम् । |
| | सकृदज्ञाने विष्णूक्तकृच्छ्रपादः । |
| | |

| | |
|---|---|
| | सकृज्ज्ञाने द्वैगुण्यं कृच्छ्रार्द्धम्। |
| जातकर्म्मादिसंस्कारान्नभोजनम्। | अज्ञानतोऽसपिण्डानां द्व्यहसाध्यं सान्तपनम्। |
| | ज्ञानतो द्वैगुण्यम्। |
| भोजनकाले गुदस्रवः। | अहोरात्रमुषित्वा पञ्चगव्यपानम्। एतत् सकृन्निगीर्णग्रासे। |
| | अत्यन्तग्रासाशने त्रिरात्रोपवासः। |
| भोजनकाले मृतसूतकाद्यशौचे तदन्नभक्षणम्। | ग्रासभोजने एकोपवासः। |
| | सकलान्नभोजने त्रिरात्रोपवासः। अभोजने स्नानमात्रम्। |
| तैलाभ्यङ्गादिस्नानार्हस्याकृतस्नानस्य भोजनम्। | स्नात्वा अष्टोत्तरसहस्रगायत्रीजपः। अभ्यासे प्रायश्चित्तावृत्तिः। |
| अथोपपातकानि। | प्रायश्चित्तानि। |
| परिहितनीलीवस्त्रस्य भोजनम्। | अज्ञानतस्त्रिरात्रोपवासः। |
| | ज्ञानात् द्वैगुण्यम्। |
| स्वकीयोच्छिष्टभोजनम्। | कृच्छ्रपादः। एतत् सकृदज्ञानतः। अभ्यासे द्वैगुण्यादिकम्। त्यक्तभाजने भोजनेऽप्येवम्। |
| ब्राह्मणकर्तृकब्राह्मणोच्छिष्टभोजनम्। | महाव्याहृतिभिरामन्त्र्य जलं पीत्वा उपवसेत्। एतत् सकृदज्ञानतः। |
| | ज्ञानात् द्वैगुण्यम्। |
| ब्राह्मणकर्तृकक्षत्त्रियोच्छिष्टभोजनम्। | सकृदज्ञाने त्र्यहं ब्राह्मीरसविपक्वक्षीरपानमात्रम्। |
| | ज्ञाने द्वैगुण्यम्। |
| ब्राह्मणकर्तृकवैश्योच्छिष्टभोजनम्। | सकृदज्ञाने त्र्यहोपवासः ब्रह्मसुवर्च्चलापानञ्च। |
| | ज्ञानात् द्वैगुण्यम्। |
| ब्राह्मणकर्तृकशूद्रोच्छिष्टभक्षणम्। | सकृदज्ञाने षड्रात्रोपवासः। ज्ञानात् द्वैगुण्यम्। |
| | ज्ञानाभ्यासे चान्द्रायणम्। क्षत्त्रियादीनां पादपादहानिः। एतन्मातृपितृज्येष्ठभ्रातृणामुच्छिष्टव्यतिरिक्तविषयंतेषामुच्छिष्टस्य भोज्यत्वात्। |
| विडालकाकमूषिकनकुलश्वगवां उच्छिष्टभोजनम्। | त्र्यहोपवासः। |
| | एनत् सकृज्ज्ञानतः। अज्ञाने ब्रह्मसुवर्च्चलां पीत्वोपवासः। ब्रह्मसुवर्च्चला तु पीतकुसुमसूर्य्यावर्त्तः। |
| | अत्यन्ताभ्यासे अतिकृच्छ्रम्। |
| ब्राह्मणस्य कुत्सितपङ्क्तौ भोजनम्। पङ्क्तेः कुत्सितत्वन्तु निन्दितब्राह्मणाद्युपवेशनेन जलादिना पङ्क्तिभेदमन्तरेण च भवति। | अहोरात्रोपवासः स्नानं पञ्चगव्यपानञ्च। एतत् ज्ञानतः। |
| | क्षत्त्रियपङ्क्तौ भोजने नक्तव्रतम्। |
| | वैश्यपङ्क्तौ एकरात्रोपवासः। |
| | शूद्रपङ्क्तौ त्रिरात्रोपवासः। |
| पङ्क्तिषु एकस्योत्थाने भोजनम्। | द्व्यहसाध्यसान्तपनम्। एतद्ब्राह्मणस्य। क्षत्त्रियादीनां पादपादहानिः। एतज्ज्ञानतः सकृत्। अज्ञानतोऽर्द्धम्। |
| सुराभाजनस्थजलपानम्। | पक्षं यावकपानम्। एतज्ज्ञानतः। अज्ञानतोऽर्द्धम्। |
| मद्यभाण्डस्थजलपानम्। | सप्तरात्रं यावकपानम्। एतज्ज्ञानतः। अज्ञानतोऽर्द्धम्। |
| | सुरासंस्पृष्टरेतोमूत्रादिदूषितजलादिपाने तु चतुरहसाध्यं तप्तकृच्छ्रम्। एतदपि स्वाद्वनुपलब्धावभ्यासे। |
| चण्डालकूपभाण्डोदकपानम्। | ब्राह्मणस्य सान्तपनम्। |
| | क्षत्त्रियस्य प्राजापत्यम्। |
| | वैश्यस्य प्राजापत्यार्द्धम्। |
| | शूद्रस्य प्राजापत्यपादः। |
| | एतत् सर्व्वं ज्ञानतः। |
| | अज्ञानादेतस्यार्द्धम्। |
| | आपत्काले तु पूर्व्वेद्युरुपोष्य पञ्चगव्यपानम्। |
| अथोपपातकानि। | प्रायश्चित्तानि। |
| चण्डालस्पृष्टक्षीरजलादिपानम्। | त्रिरात्रमुपोष्य पञ्चगव्यपानम्। एतत् ज्ञानतः। |
| | अज्ञानात् द्व्यहसाध्यसान्तपनम्। |

| | |
|---|---|
| अन्त्यजखानितकूपादिजलपानम्। | उपवासपूर्ब्बकपञ्चगव्यपानम्। एतदज्ञानतः। |
| | ज्ञातात् द्वैगुण्यम्। |
| अन्त्यजभाण्डस्थजलादिपानम्। | ब्राह्मणस्य द्व्यहसाध्यं ब्रह्मकूर्च्चव्रतम्। एतत् अज्ञानतः। ज्ञानतो द्वैगुण्यम्। |
| | शूद्रस्य नोपवासः पञ्चगव्यपानमात्रम्। ब्रह्मकूर्च्चं यथा। "अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः। पञ्चगव्यं पिबेत् प्रातर्ब्रह्मकूर्च्चविधिः स्मृतः॥" पञ्चगव्यं यथा। "गोशकृत् द्विगुणं मूत्रं सर्पिर्विद्याच्चतुर्गुणम्। क्षीरमष्टगुणञ्चैव पञ्चगव्ये तथा दधि॥" अथवा। "गोमूत्रमाषकास्त्वष्टौ गोमयस्य तु षोडश। क्षीरस्य द्वादश प्रोक्ता दध्नस्तु दश कीर्त्तिताः॥ गोमूत्रवद्घृतस्योक्तास्तदर्द्धेन कुशोदकम्॥" |
| शूद्रोदकपानम्। | उपोष्य विल्वपद्मपलाशकुशानामुदकमात्रपानम्। एतद्द्व्यहसाध्यं ज्ञानतः सकृत्पाने। अज्ञानादर्द्धम्। नवभाण्डोदकपाने प्रायश्चित्ताभावः। |
| पीतशेषपानीयपानम्। केवलवामहस्तेन जलपानञ्च। | त्रिरात्रोपवासः। एतच्च ज्ञानतः। |
| | अज्ञानतोऽर्द्धम्। एतत् प्रायश्चित्तं ग्रासशेषाशनादिष्वपि ज्ञेयम्। |
| | शूद्रपीतशेषजलपाने तु ब्राह्मणस्य चान्द्रावणम्। |
| प्रपादिजलपानम्। आदिना कूपजलाहरणार्थघटस्यजलं द्रोणीजलं खड्गादिकोषस्थजलञ्च। | सचेलस्नानम। उपवासश्च। एतत् सकृज्ज्ञानतः। आपदि दोषाभावः। |
| विण्मूत्रसंस्पृ ष्टकूपजलपानम्। | त्रिरात्रोपवासः। एतदज्ञानतः। |
| | ज्ञानतः सान्तपनम्। |
| विण्मूत्रसंस्पृ ष्टकुम्भस्थजलपानम्। | अज्ञानतः सान्तपनम्। ज्ञानतो द्वैगुण्यम्। |
| शवदूषितजलपानम्। एतत्मानुषेतराभक्ष्यपञ्चनखशवदूषितकूपजलपानपरम्। | ब्राह्मणस्य त्रिरात्रोपवासः। |
| | क्षत्त्रियस्य द्व्यहोपवासः। |
| | वैश्यस्यैकाहोपवासः। |
| | शूद्रस्य नक्तम्। सर्व्वेषां व्रतान्ते पञ्चगव्यपानम्। एतत् ज्ञानतः। अज्ञानतोऽर्द्धम्। एतदक्लिन्नशवे। |
| | ज्ञानतः क्लिन्ने षड्रात्रोपवासः। एतत् सर्व्वं मानुषशवेतरपरम्। मानुषशये द्विगुणम्। |
| | कामाभ्यासे पराकः। |
| | अत्यन्ताभ्यासे चान्द्रायणम्। |
| अथोपपातकानि। | प्रायश्चित्तानि। |
| अपेयक्षीरपानम्। तत्क्षीरविकारपानञ्च। अपेयक्षीरं यथा। अनिर्द्दशानां गोमहिषीच्छागीनां क्षीरम्। औष्ट्रं ऐकशफं आविकञ्च। सन्धिनीक्षीरम्। सन्धिनी वृषाक्रान्ता। विवत्साक्षीरम्। अरण्यमृगीक्षीरम्। स्त्रीक्षीरम्। स्रवद्दुग्धाक्षीरम्। यमसूक्षीरम्। विवत्साया अन्यवत्सायाश्च क्षीरम्। मथितक्षीरम्। छागवर्ज्जं द्विस्तनीक्षीरम्। अमेध्यभुजः क्षीरम्। व्रणादिदूषितस्तनीक्षीरञ्च। | ज्ञानतोऽभ्यासे पक्षं यावकपानम्। अज्ञानतोऽर्द्धम्। क्षत्त्रियादौ पादपादहानिः। अत्र उष्ट्रीक्षीरमानुषीक्षीरपाने पुनरुपनयनञ्च। इति अभक्ष्यभक्षणप्रायश्चित्तम्॥ * ॥ |
| अथ स्तेयम्। मणिमुक्ताप्रवालाश्ममयलौहकांस्योपलानांहरणम्। | द्वादशाहं कणभक्षणम्। तत् षडुपवासात्मकम्। अपहृतद्रव्यं स्वामिने दत्त्वैतत् करणीयम्। अत्र च सकृदभ्यासकालदेशद्रव्यस्वाम्यपहर्त्तृगुणक्याद्यपेक्षया उत्कृष्टापकृष्टद्रव्ययोर्वैषम्यदोषः समर्थनीयः। |
| रजताश्वगोभूमिकन्यानांसकृत् हरणम्। एतत् ब्राह्मणासम्बन्धिविषयम्। अत्र कन्यापदं अधमकन्यापरम्। | चान्द्रायणम्। |
| उक्तेतरक्षुद्रपशुहरणम्। | प्राजापत्यम्। |
| | अभ्यासे चान्द्रायणम्। |
| धान्यान्नधनानां हरणम्। अन्नं कृतान्नम्। धनं गवादि। | अब्दकृच्छ्रम्। एतत् ब्राह्मणकर्त्तृकब्राह्मणस्वामिकदशकुम्भाधिकधान्यस्तेये ज्ञेयम्। कुम्भपरिमाणं यथा। दशद्रोणं भवेत् खारी कुम्भोऽपि द्रोणविंशतिः। |
| | द्विकालभोजनोचितभक्ष्यभोज्यान्नहरणेत्रिरात्रं पञ्चगव्यपानमात्रम्। भक्ष्यं मोदकादि। भोज्यं शक्त्वादि। |
| | एककालभोजनोचितान्नहरणेएकरात्रं पञ्चगव्यमात्रपानम्। धनमपि एतत्परिमाणधान्यमूल्यमवसेयम्। |
| मनुष्यादिस्तेयम्। तत्तु दासदासीक्षेत्रगृहकूपवापीजलानां हरणम्। | चान्द्रायणम्। क्षेत्रादीनान्तु उपयोगातिशयाद्यभ्यासाद्यपेक्षयास्त्येव प्रायश्चित्तं गुरुलाघवमिति। |
| गुडादिस्तेयम्। आदिना कार्पाससर्पिर्लवणधान्यपक्वान्नौषधतैलशय्यावस्त्रोपानत्कांस्यलोहताम्रसीसकादयः। | कृच्छ्रपादः। एतत् सकृद्धरणविषयम्। अभ्यासे द्वैगुण्यम्। अत्र किञ्चिदधिकद्रोणत्रयस्य धान्यस्य तावद्धान्यमूल्यानाञ्चान्येषाञ्च हरणे एतद्वेदितव्यम्। |
| अथोपपातकानि। | प्रायश्चित्तानि। |
| तृणादिस्तेयम्। आदिना काष्ठद्रुमचेलचर्म्मामिषेक्षुतक्रमूलपुष्पक्वदलसूत्रगन्धानां ग्रहणम्। वैदलं वेणुघटितभाण्डम्। गन्धः कस्तूर्य्यादिः। अत्रापवादः। अस्तेयमग्नये काष्ठमस्तेयञ्च तृणं गवे। | त्रिरात्रोपवासः। तृणादीनां हरणे मासैकव्रतम्। मासार्द्धव्रतञ्च। शङ्खमुनिना यदुक्तं तत् कालदेशापहर्त्तृस्वामिगुणदौर्गत्याभ्यासानभ्यासकामाकामापेक्षया उत्कृष्टापकृष्टद्रव्यापहारे च |

| | |
|---|---|
| | वेदितव्यम् । |
| जीविकाहरणम् । | यस्य यस्य वर्णस्य वृत्तिच्छेदः तत्तद्वर्णवधोक्तं प्रायश्चित्तं कर्त्तव्यम् । |
| | अल्पवृत्त्यपहारे चान्द्रायणम् । अत्र चोत्तमाधमत्वे प्रयोजकादिकं सकृदभ्यासौ ज्ञानाज्ञाने च संवीक्ष्य वधोक्तपादार्द्धादिव्यवस्थोहनीया। |
| देवद्विजद्रव्यापहरणम् । | संवत्सरमप्सु मज्जनं अघमर्षणावर्त्तनञ्च । यच्चात्र गुरुप्रायश्चित्तं मुन्यन्तरोक्तं तदत्यन्ताभ्यास उत्तमसम्बन्धादपेक्षया समूह्यम् । इति स्तेयप्रायश्चित्तम् ॥ * ॥ |
| अथ अगम्यागमनम् । तत्र सवर्णासु अस्वजनस्त्रीगमनम् । तत्र ब्राह्मणस्य श्रोत्रियभार्य्यागमनम् । | सकृद्गमने त्रैवार्षिकव्रतम् । द्वितीये षाड्वार्षिकं तृतीये नववार्षिकं चतुर्थे संपूर्णं द्वादशवार्षिकम् । |
| | अश्रोत्रियनिर्गुणभार्य्यागमने द्वैवार्षिकव्रतम् । एतज्ज्ञानतः । अज्ञानादर्द्धम् । |
| क्षत्त्रियस्य क्षत्त्रियभार्य्यागमनम् । | द्वैवार्षिकव्रतम् । एतज्ज्ञानतः । अज्ञानादर्द्धम् । अभ्यासे द्वैगुण्यादिकम् । |
| वैश्यस्य वैश्यभार्य्यागमनम् । | वार्षिकव्रतम् । एतज्ज्ञानतः । अज्ञानादर्द्धम् । |
| शूद्रस्य पञ्चयज्ञानुष्ठायिन्यायवृत्तशूद्रभार्य्यागमनम्। | वार्षिघ्रव्रतम् । एतज्ज्ञानतः । अज्ञानादर्द्धम् । |
| शूद्रस्यान्यशूद्रागमनम् । | षाण्मासिकव्रतम् । एतज्ज्ञानतः । अज्ञानादर्द्धम् । |
| ब्राह्मणस्य क्षत्त्रियागमनम् । | सार्द्धवार्षिकव्रतम् । एतत् सकृज्ज्ञानतः । अज्ञानादर्द्धम् । |
| ब्राह्मणस्य वैश्यागमनं विशिष्टशूद्रागमनञ्च । | षाण्मासिकव्रतम् । एतत् सकृज्ज्ञानतः । अज्ञानादर्द्धम् । |
| ब्राह्मणस्याधमशूद्रागमनम् । | सार्द्धमासिकव्रतम् । एतत् सकृज्ज्ञानतः । अज्ञानादर्द्धम् । |
| क्षत्त्रियश्य वैश्यभार्य्यागमनं सच्छूद्रागमनञ्च । | नवमासिकव्रतम् । एतत् सकृज्ज्ञानतः । अज्ञानादर्द्धम् । |
| क्षत्त्रियस्याधमशूद्रागमनम् । | त्रैमासिकव्रतम् । एतत् सकृज्ज्ञानतः । अज्ञानादर्द्धम् । |
| वैश्यस्य सच्छूद्रागमनम् । | वार्षिकव्रतम् । एतजज्ञानतः । अज्ञानादर्द्धम् । |
| वेश्यस्याधमशूद्रागमनम् । | सार्द्धचातुर्मासिकव्रतम् । एतज्ज्ञानतः । अज्ञानादर्द्धम् । |
| अथ प्रतिलोमस्त्रीगमनम् । तत्र शहस्याज्ञानतो ब्राह्मणीगमनम् । | द्वादशवार्षिकव्रतम् । ज्ञानात् गुर्व्वङ्गनागमनोक्तप्रकारेण मरणम् । |
| अथोपपातकानि । | प्रायश्चित्तानि । |
| | वैकल्पिकं चतुर्विंशतिवार्षिकव्रतम् । एतद्ब्राह्मण्यापि करणियम् । |
| | |

| | |
|---|---|
| वैश्यस्याज्ञानतो ब्राह्मणीगमनम् । | नववार्षिकव्रतम् । ज्ञानाद्द्वैगुण्यम् । ब्राह्मण्यापि एतत् कार्य्यम् । |
| क्षत्रियस्याज्ञानतो ब्राह्मणीगमनम् । | षाड्वार्षिकव्रतम् । ज्ञानाद्द्वैगुण्यम् । ब्राह्मण्यापि एतत् कार्य्यम् । |
| यद्यपि शूद्रस्य ब्राह्मणीगमनं महापातकत्वेन तथा क्षत्रियवैश्ययोर्ब्राह्मणीगमनमनुपातकत्वे चोक्तं तथाप्यनुलोमगमनं तावदुपपातकमेव तत्प्रसङ्गादसवर्णत्वेन प्रतिलोमस्त्रीगमनप्रायश्चित्तमप्युक्तमतो न वैषम्यमिति । | |
| शूद्रस्याज्ञानतः क्षत्रियागमनम् । | नववार्षिकव्रतम् । ज्ञानाद्द्वैगुण्यम् । क्षत्रियाया अप्येतत् । |
| वैश्यस्याज्ञानतः क्षत्रियागमनं शूद्रस्याज्ञानतो वैश्यागमनञ्च । | नवमासाधिकषाड्वार्षिकव्रतम् । ज्ञानाद्द्वैगुण्यम् । क्षत्रियाया वैश्यायाश्चाप्येतत् । |
| अथ समोत्तमवर्णद्वित्रिपुरुषव्यभिचरितसवर्णासवर्णस्त्रीगमनम् । | |
| तत्र ब्राह्मणस्य समोत्तमवर्णद्वित्रिपुरुषव्यभिचरितशूद्रागमनम्। | सकृद्गमने मासार्द्धं गोमूत्रसिद्धयावकपानम्। |
| | अभ्यासे मासं गोमूत्रसिद्धयावकपानम्। |
| ब्राह्मणस्य समोत्तमवर्णद्वित्रिपुरुषव्यभिचरितक्षत्रियागमनम्। तथाविधवैश्यागमनञ्च । | सकृद्गमने सान्तपनम् । अभ्यासे प्रायश्चित्तावृत्तिः । |
| अथ चातुवर्ण्यस्वैरिणीगमनम् । स्वैरिणीचतुःपुरुषगामिनी । सा द्विविधा । केनचिदनवरुद्धा अवरुद्धा च । | ब्राह्मणस्य स्वैरिण्या ब्राह्मण्या गमने त्रिरात्रोपवासः ब्राह्मणाय मृगाजिनदानञ्च । |
| | तथाविधक्षत्रियाया गमने त्रिरात्रोपवासः धनुर्दानञ्च । |
| | तथाविधवैश्याया गमने त्रिरात्रोपवासः अथःशिलादानञ्च । |
| | तथाविधशूद्राया गमने त्रिरात्रोपवासः उदकुम्भदानन्तथा संमार्जनीदानञ्च । |
| ब्राह्मणस्य शूद्रान्त्यजादिगामिस्वैरिणीगमनम् । | द्वादशवार्षिकव्रतम् । क्षत्रियादौ पादपादहानिः ।<br>विमातृस्वैरिणीचाण्डालस्वैरिणीगमनेऽप्येवम् । सर्व्वत्राभ्यासे द्वैगुण्यम् । |
| ब्राह्मणबन्धकीगमनम्। बन्धकी चात्र स्वभर्त्तृव्यतिरिक्तपञ्चपुरुषगामिनी। | कमण्डलुदानम्। |
| क्षत्रियबन्धकीगमनम्। | आयुधदानम् । |
| अथोपपातकानि । | प्रायश्चित्तानि । |
| वैश्यबन्धकीगमनम् । | प्रतोददानम् । |
| शूद्रबन्धकीगमनम् । | स्नानपुरःसरप्राणायामः । एतानि बन्धकीगमनप्रायश्चित्तानि सवर्णानुलोमप्रतिलोमविषयाणि॥ * ॥ |
| अथ व्युत्क्रमविवाहः । तत्र ब्राह्मणस्य प्रथमतः क्षत्रियादिविवाहः । | दारव्यतिक्रमी खराजिनं वहिर्लोम परिधाय दारव्यतिक्रमिणे भिक्षां देहीति सप्तागाराणि चरेत् । सा वृत्तिः षण्मासान् । दारव्यतिक्रमी ब्राह्मणक्षत्रियवैश्यकन्याविवाहमकृत्वा यो ब्राह्मणः शूद्राविवाहं करोति स उच्यते । एतदनापदि सकृदज्ञानविषयम् । |
| | आपदि त्वाह शातातपः । ब्राह्मणो राजन्यापूर्ब्बी द्वादशरात्रं चरित्वा निर्व्विशेत् ताञ्चैवोपगच्छेत् । |
| | वैश्यापूर्ब्बी तप्तकृच्छ्रम् । |
| | शूद्रापूर्ब्बी कृच्छ्रातिकृच्छ्रम् । |
| | अनापदि ज्ञानाभ्यासे मनूक्तत्रैवार्षिकव्रतम् । |
| वेश्यागमनम् । | प्राजापत्यम् । |
| पञ्चाधिकपुरुषगामिनीवेश्या । | अभ्यासे चान्द्रायणम् । |
| रजस्वलागमनम् । | त्रिरात्रोपवासः । घृतप्राशनञ्च । एतत् कामतः सकृद्गमने । अभ्यासे तु द्वैगुण्यादिकम् । |
| ऋतौ भार्य्यानभिगमनम् । | त्रिरात्रोपवासः । |
| | ज्ञानाभ्यासे प्राजापत्यम् । |
| पर्व्वसु स्त्रीगमनम् । | एकोपवासः । |
| श्राद्धदिने मैथुनम् । | एकोपवासः । |
| दिवामैथुनम् । | एकाहं यावकपानम् । नग्नस्य स्नाने नग्नपरस्त्रीदर्शनेऽप्येवं प्रायश्चित्तम् । अभ्यासे |

| | |
|---|---|
| | प्रायश्चित्तावृत्तिः ॥ * ॥ |
| अथ स्त्रीव्यभिचारः। | समोत्तमवर्णेसु सकृदुपगमे प्राजापत्यम्। |
| | द्विरभ्यासे पराकः। |
| | त्रिरभ्यासे चान्द्रायणम्। |
| अन्त्यजागमनम्। अर्थात् रजकचर्म्मकारनटवरुडकैवर्त्तमेदभिल्लवेणुजीविशैलूषाणां स्त्रीषु गमनम्। | अज्ञानतश्चान्द्रायणम्। ज्ञानाद्द्वैगुण्यम्। |
| | चतुर्व्विंशतिवारगमने द्वादशवार्षिकव्रतम्। एतदज्ञानतः। ज्ञानतो द्वैगुण्यम्। अव्यवहार्य्यता च। |
| कापालिकस्त्रीगमनम्। | ज्ञानादब्दकृच्छ्रम्। |
| | अज्ञानाच्चान्द्रायणद्वयम्। |
| अथ तिर्य्यग्योनिगमनम्। तत्र गोवर्ज्जपशुगमनम्। | सचेलस्नानपूर्ब्बकं गोभ्यो यवसभारदानम्। इदं सकृद्गमने। |
| गोगमनम्। | गोवधोक्तमासिकव्रतम्। एतत् सकृद्गमने। |
| अभ्यासे संवत्सरं प्राजापत्यम्। | ३० धेनवः। |
| अथोपपातकानि। | प्रायश्चित्तानि। |
| | अत्यन्ताभ्यासे द्वादशवार्षिकव्रतम्। इत्युपपातके अगम्यागमनप्रायश्चित्तं समाप्तम्॥ * ॥ |
| अथ परिवेदनादि। | ज्येष्ठेऽनिर्व्विष्टे कनीयान्निर्व्विशन् परिवेत्ता। परिविण्णो ज्येष्ठः। परिवेदनीया कन्या। परिदायी दाता। परिकर्त्ता याजकः। ते सर्व्वे पतिताः। एतेषां प्रायश्चित्तम्। |
| | संवत्सरं प्राजापत्यम्। एतत् कामतः। अकामतोऽर्द्धम्। अत्रापवादः। “देशान्तरस्थक्लीवैकवृषणानसहोदरान्। वेश्याभिसक्तपतितशूद्रतुल्यातिरोगिणः॥ जडमूकान्धवधिरकुब्जवामनकुण्ठकान्। अतिवृद्धानभार्य्यांश्च कृषिसक्तान्नृपस्य च। धनवृद्धिप्रसक्तांश्च कामतः कारिणस्तथा। कुलटोन्मत्तचौरांश्च परिविन्दन्न दुष्यति॥” |
| व्रात्यत्वम्। अर्थात् सावित्रीपतितत्वम्। पञ्चदशाब्दपर्य्यन्तमुपनयनाभावे ब्राह्मणस्य व्रात्यत्वम्। एकविंशतिवर्षपर्य्यन्तमुपनयनाभावे क्षत्त्रियस्य व्रात्यत्वम्। त्रयोविंशतिवर्षपर्य्यन्तमुपनयनाभावे वैश्यस्य व्रात्यत्वम्। | पितृमातृरहितनिःस्वजनस्यसावित्रीपाते प्राजापत्यत्रयम्। यथाविध्युपनयनञ्च। आलस्यानवधानादिना सावित्रीपाते तु व्रात्यस्तोमयागः। |
| | तद्वैकल्पिकं दिनत्रयाधिकमासचतुष्टयसमाप्यमुद्दालकव्रतम्। तद्व्रतं यथा। द्वौ मासौ यावकेन वर्त्तयेत् मासं पयसा अर्द्धमासमामिक्षया अष्टरात्रं घृतेन षड्रात्रमयाचितं त्रिरात्रमब्भक्ष्यः अहोरात्रमुपवसेत्। |
| | देशोपप्लवादिनासावित्रीपतनेएकविंशतिरात्रं प्रसृतिमितयावकपानम्। तत उपनयनम्। |
| अथावकीर्णम्। अर्थाद्ब्रह्मचारिणो योषिद्गमनम्। | षण्मासं ब्रह्महत्याव्रतम्। खरचर्म्मपरिधानञ्च। |
| | अभ्यासे संवत्सरं ब्रह्महत्याव्रतम्। |
| पितृष्वसृसुतादिपरिणयनम्। आदिना मातृष्वसृसुतामातुलसुतामातामहसपिण्डासगोत्रासमानप्रवरादीनांग्रहणम्। | चान्द्रायणम्। त्यागानन्तरं मातृवद्भरणम्। एतत्ज्ञानतः। |
| | अज्ञाने कृच्छ्राब्दपादः। |
| अग्न्युत्सादनम्। अर्थात् अग्निहोत्रिणामग्नित्यागः। | कामतः संवत्सरोत्सन्ने चान्द्रायणम्। |
| | द्विवर्षोत्सन्ने सोमायनचान्द्रायणे। एतदनुसारेणोनाधिककालयोरुह्यम्। |
| गृहस्थस्य चिरतरकालानग्नित्वम्। | गोवधोक्तत्रैमासिकव्रतम्। अल्पकाले अनाधाने च चान्द्रायणम्। |
| अथोपपातकानि। | प्रायश्चित्तानि। |
| ब्राह्मणस्य वेदानध्ययनं यज्ञाकरणं पुत्त्रानुत्पादनञ्च। | त्रैमासिकं गोव्रतम्। |
| अनाश्रमित्वम्। | संवत्सरे प्राजापत्यम्। |

| | |
|---|---|
| | वर्षद्वये अतिकृच्छ्रम् । |
| | वर्षत्रये कृच्छ्रातिकृच्छ्रम् । |
| | अत ऊद्र्ध्वं चान्द्रायणम् । |
| सूर्य्योदयास्तकालयोः शयनम् । | सकृदाचरणे स्नानम् । अभ्यासे प्राजापत्यम् । |
| ब्रह्मचारिणः सन्ध्यादीनामतिक्रमः । आदिना अग्नीन्धनाकरणं भैक्ष्यचर्य्याकरणञ्च । | अरोगिणो निरन्तरं सप्तरात्रमकरणे अवकीर्णिव्रतम् । तत्तु खरचर्म्मपरिधानपूर्ब्बकषाण्मासिकं ब्रह्महत्याव्रतम् । एतदूने ऊनं अधिके अधिकम् । |
| अनातुरगृहस्थस्य सन्ध्यास्नानाह्निकनित्यक्रियापातः। | दिनैकनित्यक्रियातिपाते एकाहोपवासः । |
| | दिनत्रयक्रियातिपाते कृच्छ्रार्द्धम् । |
| | वर्षैकनित्यक्रियातिपाते एकदिनक्रियातिपातप्रायश्चित्तानुसरणेन प्रायश्चित्तम् । |
| शूद्रव्यतिरिक्तायाज्ययाजनम्। अयाज्याश्च निन्दितप्रतिग्रहादिना निन्दितब्राह्मणादयः । | शतगायत्रीजपः । |
| | अभ्यासे सहस्राधिकं चान्द्रावणं वा । दक्षिणात्यागाच्च पूतो भवति । |
| शूद्रयाजनम् । | लोभादिना याजने अर्जितभुक्तावशिष्टधनस्यागाधजलेप्रक्षेपपूर्ब्बकं ब्रह्मचारिणे दानपूर्ब्बकं वा चान्द्रायणं पुनरुपनयनञ्च । अक्षारलवणब्रह्मसुवर्च्चलापानञ्च । एतदशक्तौ तद्धनं परित्यज्य त्रिंशत्पुराणाः प्रदातव्याः । |
| | स्नेहादनुप्रसङ्गादिना याजने द्रव्यत्यागपूर्ब्बकं प्राजापत्यम् । अज्ञानतः प्राणायामसहस्रम् । |
| शूद्रप्रतिग्रहः । | सकृत्प्रतिग्रहे त्रिसहस्रगायत्रीजपः । |
| | अभ्यासे चान्द्रायणम् । एतच्च द्रव्यत्यागपूर्ब्बकं कार्य्यम् । |
| उच्छास्त्रवर्त्तिक्षत्रियनृपतिप्रतिग्रहः। | षष्ठे काले क्षीराशनं मासैकं जलवासः प्रचुरतरद्विजतर्पणञ्च । मासोपवासेनैवास्य सङ्कलनम् । |
| अथान्त्यजप्रतिग्रहः । स च अयाचितपुष्पफलशाकतृणकाष्ठधान्यपयोमांसदधिशय्यगिहुब्भगन्धमणिमत्स्यादीतरविषयः। | ज्ञानादष्टचत्वारिंशद्वाराभ्यासात् द्वादशवार्षिकव्रतम् । |
| | अज्ञानात् द्विरभ्यासे तप्तकृच्छ्रम् । |
| | ज्ञानात् द्विरभ्यासे चान्द्रायणम् । |
| चाण्डालप्रतिग्रहः । | अज्ञानात् अष्टचत्वारिंशद्वाराभ्यासात् द्वादशवार्षिकव्रतम् । |
| | अज्ञानात् सकृत्कृते तप्तकृच्छ्रम् । |
| | ज्ञानात् सकृत्कृते चान्द्रायणम् । |
| पतितप्रतिग्रहः । | ज्ञानात् सकृत्कृते चान्द्रायणम् । अज्ञानात्तदर्द्धम् । |
| अथोपपातकानि । | प्रायश्चित्तानि । |
| प्रायश्चित्तद्रव्यग्रहणम्। | त्रिसहस्रगायत्रीजपः मासैकं गोष्ठे पयःपानं वा । एतत् लघुतरपापप्रायश्चित्तद्रव्यग्रहणे। |
| स्वभावाग्राह्यकृष्णाजिनोभयतोमुखीमण्यादिप्रतिग्रहः। | उत्तममण्यादिप्रतिग्रहेदशसहस्रगायत्रीजपः । मध्यमे पञ्चसहस्रगायत्रीजपः । अधमे अष्टोत्तरसहस्रसावित्रीजपः । द्वादशरात्रं पयोव्रतञ्च । अत्यन्तनिषिद्धकृष्णाजिनोभयतोमुखीप्रतिग्रहेलक्षगायत्रीजपः । |
| अथ ब्राह्मणस्य क्षत्रियवैश्यवृत्त्या धनार्जनम् । | संवत्सरे चान्द्रायणम् । संवत्सराभ्यन्तरे मासैकद्विकदौ चान्द्रायणभागहारः कल्प्यः । संवत्सराद्रूद्र्ध्वं द्वैगुण्यत्रैगुण्यादिकं कल्प्यम् । आपत्काले दोषाभावः । |
| ब्राह्मणस्य सेवावृत्तिधनार्ज्जनम् । | प्राजापत्यत्रयं पुनरुपनयनञ्च । द्रव्यत्यागपूर्ब्बकं करणीयम् । |
| ब्राह्मणस्य गीतादिना धनार्जनम् । | चान्द्रायणम् । कृतप्रायश्चित्तस्याप्यव्यवहार्य्यत्वम् । |
| ब्राह्मणस्य शूद्रसेवनम् । | चान्द्रायणम् । |
| | चिरतरकालाभ्यासे त्रैवार्षिकव्रतम् |
| अविक्रेयविक्रयः । ब्राह्मणस्याविक्रेयद्रव्यानि यथा । लवण पक्वान्न मधु क्षीर दधि घृतोदक सर्व्वगन्धोपल लाक्षा रक्तवासः गुडतैल ग्राम्यपशु एकशफ केशि सर्व्वारण्यपशु विद्या याग खात गो शङ्ख ऊर्णा रस विष तिल शस्त्र नीली कौषेयवासः चर्म्म तक्राममांस सुरा सोम केश गोधूम कन्या हिङ्गु गुग्गुलु सर्जरस हरिताल मनःशिलाञ्जन गैरिक क्षार मणि मौक्तिक प्रवाल दन्त नख आर्द्रौषधि शुक्ति वेणु वैणव मृण्मयपात्र पुष्प मूल तुष कार्पास भस्मास्थि पिण्याक त्रपु सीसक कृष्णलोहोडुम्बर खड्गपात्राणि इत्यविक्रेयाणि । | सकृत्कृते त्रिरात्रोपवासः । |
| | द्विरभ्यासे प्राजापत्यम् । |

|  |  |
|---|---|
|  | अत्यन्ताभ्यासे चान्द्रायणम् । |
|  | निखिलविक्रये बहुतरकालाभ्यासे वा त्रिसवनस्नानाधःशयनचतुर्थकालभोजनरूपसंवत्सरव्रतम् । शूद्रस्यात्यन्तापदि दोषाभावः । |
| अथोपपातकानि । | प्रायश्चित्तानि । |
| निन्दितदेशगमनम् । तत्तु तीर्थयात्राव्यतिरेकेण । निन्दितदेशा यथा । कारस्करकलिङ्गोड्रान्ध्रशबरयुगन्धरभूमिलयसिन्धुसौराष्ट्रसौवीरप्रत्यन्तदेशाङ्गवङ्गकलिङ्गादयः । | एतान् गत्वा तत्रैव चिरमुसित्वा गङ्गादिगमनम् । तदशक्तौ पुनरुपनयनम् । |
|  | अतिचिरवासे पुनरुपनयनं चान्द्रायणञ्च । |
| असत्याभिधानम् । | सकृदसत्यभाषणे कृष्णानुस्मरणम् । |
|  | अत्यन्ताभ्यासे तप्तकृच्छ्रम् । |
|  | अतिबहुतरकालाभ्यासे माससाध्यचान्द्रायणम् । साक्षिणोऽसत्यभाषणे ज्ञानाज्ञानतो द्वादशवार्षिकव्रतमित्युक्तमनुपातके । विवाहभयमैथुनबालप्रतारणपरीहासगोब्राह्मणहितस्त्रीराजस्वप्राणात्ययसर्वधनापहारविषयेषु मिथ्याकथने दोषाभावः । |
| उच्छिष्टस्य चाण्डालादिदर्शनम् । | दर्शने एकरात्रोपवासः । |
|  | सम्भाषणे द्विरात्रोपवासः । |
|  | संस्पर्शे त्रिरात्रोपवासः । सहगमने सचेलस्नानम् । अनुच्छिष्टस्य दर्शने सूर्य्यादिदर्शनम् । सम्भाषणे ब्राह्मणसम्भाषणम् । इदं ज्ञाने । |
| उच्छिष्टस्य सूर्य्यादिदर्शनम् । आदिना नक्षत्रचन्द्रौ । कामत इदम् । | एकोपवासः । |
| तैलाभ्यक्तादिमूत्रोच्चारसमुत्सर्गः । आदिना अनाचान्तश्मश्रुकर्म्मिमैथुनिनः । | एकोपवासः । |
| विप्राग्न्यादिमध्यगमनम् । आदिना दम्पतीगवोर्ग्रहणम् । | कामतोऽत्यन्ताभ्यासे चान्द्रायणम् । |
|  | सकृदभ्यासादिषु तु स्नातकव्रतलोपप्रायश्चित्तम् । एकदिनाभोजनम् । तदावृत्तिश्चोहनीया । |
| अग्नौ पादप्रतापनम् । कुशेन पादसम्मार्जनञ्च । | एकोपवासः । इदं सकृत्करणे । अभ्यासे द्वैगुण्यादिकम् । |
| गुरोर्ब्राह्मणस्य च तिरस्कारः । | दर्पेण हुङ्कारे त्वहङ्कारे वादेन जये वाससा बन्धने तृणेन ताडने च क्षिप्रं प्रसाद्य दिनमेकमुपवासः । एतदीषत्संरम्भतः सकृज्ज्ञेयम् । |
|  | शास्त्रीयविवादे दर्पात् पुनः पुनर्जये स्नात्वा प्रणिपत्य त्रिरात्रोपवासः । |
|  | प्रमादतः पादेन स्पर्शे एकरात्रोपवासः अभिवादनं प्रसादनञ्च । |
|  | क्रोधादिना अनुबन्धापेक्षया त्र्यहप्राजापत्यादिकं कल्प्यम् । |
|  | महापातकेन ब्राह्मणस्य विरुद्धाभिधाने कृच्छ्रातिकृच्छ्रम् । |
| अथोपपातकानि । | प्रायश्चित्तानि । |
|  | उपपातकेन ब्राह्मणस्य विरुद्धाभिधाने प्राजापत्यम् । जातिभ्रंशकरपातकोपपातकादन्यत्राक्रोशस्यलघुगुरुभावं प्रतिसन्धाय एकरात्रत्रिरात्रषड्रात्रोपवासाः । |
|  | प्रतिश्रुत्यादानादौ अल्पत्वबहुत्वाभ्याम् एकरात्रत्रिरात्रषड्रात्रोपवासाः । |
|  | देवर्षिगोब्राह्मणाचार्य्यमातृपितृनरेन्द्राणां प्रति ष्ठीवनाक्रोशे उल्मुकेन जिह्वा दाहो हिरण्यदानञ्च । गुरुब्राह्मणभिन्ने प्रत्याक्रोशने प्रतिताडने च दोषाभावः । |
| मिथ्याब्राह्मणशपथः । यावज्जीवसुकृतशपथश्च । | विप्रस्य वधसंयुक्तमिथ्याशपथे चान्द्रायणम् । |
|  | यावज्जीवसुकृतशपथे प्राजापत्यम् । |
| अभिशापकरणम् । | मासमब्भक्षणम् । गायत्र्या वशिष्ठोक्तशुद्धवतीनां वा शतजपश्च । एतत् सकृन्महापातकाद्यभिशापे । उपपातके त्वभ्यासतो ज्ञेयम् । मृषामहापातकाभिशापाभ्यासे त्वावृत्तितारतम्यात् प्रायश्चित्ततारतम्यं कल्प्यम् । महापातकादन्यत्र एकविंशतिरात्रं सुवर्च्चलापानम् । हीनवर्णेन उत्तमवर्णाभिशापे प्रतिलोमोक्तदण्डव्यवस्थया प्रायश्चित्तं कल्प्यम् । |
| अनृताभिशस्तता । | मासं कृच्छ्रम् । |
|  | महापातकाभिशापे द्विमासं कृच्छ्रम् । एतदभिशापकालातिक्रमेज्ञेयम् । |
|  | अभिशापकालनिर्णयप्रवृत्तस्य उपपातकादिना अभिशस्तस्य कृच्छ्रम् । |
| आरूढपतितत्वम् । व्याधिक्रोधादिना सन्न्यासवाक्यमुच्चार्य्ययो गृहस्थाश्रममाश्रयितुमिच्छतिस आरूढपतितः तस्य भावः । | षण्मासान् प्राजापत्यम् । एतत् सन्न्यासग्रहणान्तरनिवृत्तानाम् । |

| | |
|---|---|
| | चिरतरकालसन्न्यासनिवृत्तस्यब्राह्मणस्य श्वपदाङ्कनपूर्व्वकनिर्व्वासनम्। क्षत्रियविशोर्दास्यकरणम्। |
| | यावज्जीवव्रतानुष्ठानप्रवृत्तयोःब्रह्मचारिवाणप्रस्थयोः स्वधर्म्मनिवृत्तयोश्चान्द्रायणम्। |
| जलाग्न्यादिभ्रष्टता। आदिना उद्बन्धनप्रव्रज्यानशनविषप्रपतनप्रायोपेवशशस्त्रघातेभ्यो भ्रंशनम्। | चान्द्रायणं तप्तकृच्छ्रद्वयं वा। अभ्यासे त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि च। जातकर्म्मादिसंस्काराश्च। |
| | चिताभ्रष्टायाः प्राजापत्यम्। |
| व्रणकृम्यत्पपत्तिः | त्रिसन्ध्यं गोमयगोमूत्राभ्यां स्नानम्। त्र्यहं पञ्चगव्यकुशोदकमात्रपानञ्च। इदञ्च नाभ्यधोदेशदंशविषयम्। |
| | नाभेरूदर्ध्वं क्रम्युत्पत्तौ षड्रात्रमुपवासः। |
| अथोपपातकानि। | प्रायश्चित्तानि। |
| | शिरसि क्रिमिदंशने वृषदक्षिणायुक्तसान्तपनं तप्तकृच्छ्रं वा। |
| श्वादिदंशः। आदिना शृगालखरग्राम्यक्रव्यान्नराश्वोष्ट्रवराहपुंश्चलीवानरवायसानां दंशनम्। | पादयोररुधिरदर्शने जले प्राणायामः घृतप्राशनञ्च। पादयोरतिगाढदंशने नद्यां १६ प्राणायामाः। नाभेरधोगाढदंशने ब्रह्मचारिणस्त्र्यहं सायं पयःपानम्। |
| | गृहस्थस्य त्रिरात्रमुपवासः। |
| | एकाहमग्निहोत्रिणः। नाभ्यूदर्ध्वं दंशने एतद्द्वैगुण्यम्। बाह्वोश्चतुर्गुणम्। मूर्ध्नि षोडशगुणम्। इदं सरुधिरदंशने। नाभेरूदर्ध्वमतिगाढदंशने सागरगनदीस्नानपूर्व्वकोपवासः शतं प्राणायामावर्त्तनञ्च। |
| | व्रतस्थस्य श्वादिदंशने त्रिरात्रोपवासः सघृतयावकपानञ्च। बालस्याज्ञत्वे अशक्तत्वेवा तदीयपापक्षयं संकल्प्य पित्रादिः प्रायश्चित्तं कुर्य्यात्। दष्टस्थानस्य गायत्र्यष्टसहस्राभिमन्त्रणपूर्व्वकमुल्मुके न दहनम्। चतुर्भिः कलसैर्नदीसङ्गमे वा स्नानम्। स्त्रियास्तु विशेषः। उदितसोमनक्षत्रदर्शनं समुद्रदर्शनं वा। कृष्णपक्षे चन्द्रगमनदिग्दर्शनम्। |
| विप्रादिहते चात्मघातमृते वा अश्रुपातजलादिदानम्। | दहनवहनकटक्रियातर्पणश्राद्धादौ तप्तकृकृच्छ्रम्। |
| | तच्छवस्य केवलस्पर्शे अश्रुपाते वा एकाहोपवासः। |
| | अभ्यासे अनडुत्सहितगोदक्षिणायुक्ततप्तकृच्छ्रम्। |
| | आत्मघातिनः स्नेहात् दाहादिकरणे तप्तकृच्छ्रसहितचान्द्रायणम्। बलात्कारेण उद्बन्धनमृतस्य पाशच्छेदनदहनवहनेषु मासं भैक्ष्यभक्षणं त्रिसवनस्नानञ्च। वेतनेन दहनवहनादिकरणे असम्बन्धिनां कृच्छ्रपादः। |
| | दहनवहनव्यतिरेकेण कामतः सर्व्वाङ्गीनानभ्यासस्पर्शे प्राजापत्यम्। |
| | तथैवाभ्यासे तप्तकृच्छ्रम्। द्विजस्य शूद्रशवानुगमने त्रिरात्राशौचं तदन्ते समुद्रगां नदीं गत्वा प्राणायामशतं कृत्वा घृतप्राशनम्। श्रवन्तीमासाद्य १००८ गायत्रीजपो वा। द्विजस्य द्विजशवानुगमने १०८ गायत्रीजपः। शूद्रस्य सर्व्वशवानुगमने स्नानम्। |
| वलातुकारितम्लेच्छदास्याशुभकर्म्म। | म्लेच्छैश्चाण्डालाद्यैर्दस्युभिः उच्छिष्टमार्ज्जनोच्छिष्टभक्षणखरोष्ट्रविड्वराहमांसभक्षणम्लेच्छस्त्रीसङ्गतदीयस्त्रीसहभोजना |
| अथोपपातकानि। | प्रायश्चित्तानि। |
| | दिकुत्सितकर्म्म बलान्मासैकं कारितस्य निरग्निद्विजातेः प्राजापत्यम्। |
| | साग्नेश्चान्द्रायणम्। |
| | क्षत्रियवैश्ययोः पराकः। |
| | शूद्रस्य मासार्द्धं यावकपानम्। वत्सरादूदर्ध्वं वर्षचतुष्टयं यावत् भागहारेण प्रायश्चित्तमूहनीयम्। तदूदर्ध्वं तत्समत्वात् पतितत्वेन प्रायश्चित्तान्तराभावान्मरणम्। |
| अनुदकमूत्रपुरीषकरणम्। | सचेलस्नानं गोस्पर्शश्च। अभ्यासे एकोपवासः सचेलस्नानञ्च। |
| जलाग्न्योरशुचिद्रव्यप्रक्षेपः। | मासं यावकपानम्। एतदभ्यासे। |
| | ज्ञानत ईषदार्त्तस्य त्रिरात्रोपवासः। इदमापः प्रहरत इति जपश्च। |
| | अनार्त्तस्य कौतूहलादिना तप्तकृच्छ्रम्। |
| अन्योन्यानुक्तद्वेषोत्पादनम्। अर्थान्मैत्र्यच्छेदकरणम्। | अहोरात्रमनश्नन् भूत्वा पयःपानम्। |
| शक्रधनुःपलाशाग्निदर्शकत्वम्। | इदं शक्रधनुरिति व्यपदिश्य कामतो दर्शयित्वाहोरात्रोपवासः। |
| श्राद्धनिमन्त्रितब्राह्मणानाह्वानम्। | यतिचान्द्रायणम्। |

| | |
|---|---|
| देवागारकृतेष्टकाकाष्ठशिलादिना गृहकरणम् । | प्राजापत्यम् । |
| निष्ठीवनादि । आदिना वातकर्म्मदन्तश्लिष्टानृतक्षुत्पतितसम्भाषणवासःपरिधानानि। | आचमनम् । गोपृष्ठस्पर्शः । अर्कदर्शनम् । दक्षिणश्रवणस्पर्शो वा । अत्र पूर्ब्बाभावे ततः परम् । इन्द्रियप्रसृष्टामेध्यस्य मुखस्पर्शे स्नानम् । |
| यतीनां व्रतोपव्रतभङ्गः । व्रतानि यथा । अहिंसासत्यास्तेयमैथुनवर्ज्जनानि । उपव्रतानि यथा । अक्रोधगुरुशुश्रूषाप्रमादशौचाहारशुद्धीनि। | अहोरात्रोपवासपूर्ब्बकचान्द्रायणम् । |
| | रमणेच्छया स्त्रीसमीपगमने प्राणायामशतपूर्ब्बकसान्तपनम् । |
| | असद्वादे उपवासः प्राणायामशतञ्च । |
| | अकामतः पशुक्रिमिहिंसायां कृच्छ्रातिकृच्छ्रम् । |
| | चान्द्रायणं वा । इन्द्रियदौर्बल्यात् स्त्रीदर्शनात् स्कन्दने षोडशप्राणायामाः । स्त्रियं विना कामतो दिवास्कन्दने त्रिरात्रोपवासः प्राणायामशताचरणञ्च । रात्रौ स्कन्दने स्नानपूर्ब्बकद्वादशप्राणायामाः । |
| | एकान्नमधुमांसामश्राद्धप्रत्यक्षलवणानामभोन्यानोश्चैकस्य भोजने प्राजापत्यम् । योगिनां प्रमादे योगेन शुद्धिः । ज्ञानिनां ज्ञानमेव शुद्धिकारणम् । ब्रह्मचारिणोऽकामतः स्वप्ने रेतस्खलने स्नानम् । अर्कार्च्चनम् । त्रिः पुनर्मामित्यृचो जपश्च । |
| अथोपपातकानि । | प्रायश्चित्तानि । |
| व्रतभङ्गः । | लोभान्मोहात् प्रमादाद्वा व्रतभङ्गे उपवासत्रयं केशमुण्डनञ्च । |
| उष्ट्रासभयानम् । | कामतः सकृदारोहणे नग्नस्नाने च प्राणायामः । |
| | अभ्यासे त्रिरात्रोपवासः । अव्यवधानेनारोहणे नग्नस्य ईषदभ्यस्तस्नानभोजनेच प्राणायामशतम् । अत्र उपपातकगणपठितेषु यत्र प्रायश्चित्तं नोक्तं तत्रोपपातकसामान्यप्रायश्चित्तमेव ग्राह्यम् । तत्तु मनूक्तं त्रैमासिकं गोव्रतं चान्द्रायणं वा । याज्ञवल्क्योक्तं मासं पयःपानं पराको वा । एतान्येव प्रायश्चित्तानि पापस्य गुरुलाघवमवगम्य व्यवस्थेयानि ॥ * ॥ |
| अथ जातिभ्रंशकरपापानि । | प्रायश्चित्तानि । |
| ब्राह्मणपीडाकरणम् । | कामतः सान्तपनम् । |
| लशुनादिमद्ययोर्घ्राणम् । मित्रे कौटिल्यम् । पुंसि मैथुनञ्च । | अकामतः प्राजापत्यम् । एतच्चाभ्यासे । अत्रायं विशेषः । |
| | ब्राह्मणावगोरणे प्राजापत्यम् । |
| | ब्राह्मणे दण्डादिनिपातने अतिकृच्छ्रम् । |
| | ब्राह्मणस्य शोणितोत्पादने कृच्छ्रातिकृच्छ्रम् । |
| | ब्राह्मणाङ्गच्छेदने कृच्छ्रातिकृच्छ्रम् । |
| | चान्द्रायणम् । दशगोदानञ्च । |
| अथ सङ्करीकरणपापानि । | प्रायश्चित्तानि । |
| खराश्वोष्ट्रमृगहस्तिच्छागमेषमीनाहिमहिषाणां वधरूपाणि । | सकृत्करणे मासं यावकपानम् । |
| | अभ्यासे कृच्छ्रातिकृच्छ्रम् । |
| | अत्यन्ताभ्यासे चान्द्रायणम् । |
| अथापात्रीकरणपापानि । | प्रायश्चित्तानि । |
| निन्दितेभ्यो धनादानम् । बाणिज्यम् । शूद्रसेवनम् । असत्यभाषणञ्च । | सकृत्करणे चतुरहसाध्यं तप्तकृच्छ्रं शीतकृच्छ्रं वा । |
| | अभ्यासे महासान्तपनम् । |
| | अत्यन्ताभ्यासे चान्द्रायणम् । |
| अथ मलावहपापानि । | प्रायश्चित्तानि । |
| कृमिकीटपक्षिणां हननम् । मद्या नुगतद्रव्यभोजनम् । फलकाष्ठपुष्पाणां स्तेयम् । अधैर्य्यम् । तच्च गीतश्रवणादि । अल्पेऽपचये अत्यन्तवैकृत्यञ्च । | सकृदाचरणे त्र्यहयावकपानम् । |
| | अभ्यासे तप्तकृच्छ्रम् । |
| | अत्यन्ताभ्यासे कृच्छ्रातिकृच्छ्रम् । एषु चतुर्षु यत्र यत्र प्रायश्चित्तविशेषो नोक्तस्तत्रैव बोध्यम् । |
| अथ प्रकीर्णकानि । | प्रायश्चित्तानि । |
| यदनुक्तं तत्प्रकीर्णकम् । इतिवचनात् अतिपातकाद्यष्टान्यतमत्वेन विशेषतोऽनुक्तानि पापानि । | चान्द्रायणम् । पराकः । तुलापुरुषः । गवानुगमनम् । प्राजापत्यम् । एतानि सर्व्वपापप्रणाशकानि । पापस्य गुरुलाघवं वीक्ष्य प्रायश्चित्तान्येतानि शिष्टैर्व्यवस्थेयानि । |
| अथास्पृश्यस्पर्शनम् । तच्च चाण्डालरजस्वलापतितसूतिकाशवशवस्पृष्टिव्यङ्गोन्मत्तासूयिकग्राम्याश्वकुक्कुटवराहादीनां स्पर्शनम् । | अनुच्छिष्टस्य चाण्डालादिस्पर्शे अकामतः सचेलं सशिरस्कं स्नानम् । कामतः सचेलस्नानम् । महाव्याहृतिभिर्होमः । घृतप्राशनञ्च । चिताधूमस्पर्शे ऋतुकालीनमैथुने |

| | |
|---|---|
| | दुःस्वप्ने वमने विरेके श्मश्रुकर्म्मणि यूपभक्ष्यपञ्चनखशवसस्नेहतदस्थ्नां स्पर्शे स्नानपूर्ब्बकं प्रक्षालितवस्त्रपरिधानम्। अनृतौ मैथुने मूत्रपुरीषत्यागवच्छुद्धिः। |
| | सर्व्वाङ्गस्पर्शे त्रिरात्रोपवासः। रात्रौ शववर्जास्पृ श्यस्पर्शने सुवर्णं प्रक्षिप्य अग्निं सन्निधाप्य दिवाहृतजलैः स्नानम्। सर्व्वत्र प्रागन्नप्राशनात् शिशोरभ्युक्षणम्। प्राक् चूडाकरणात् बालस्याचमनम्। प्रागुपनयनात् कुमारस्य स्नानम्। |
| अथोच्छिष्टस्य चाण्डालादिस्पर्शः। आदिना पतितरजस्वलान्त्यजश्वशूकरमद्यभाण्डानांग्रहणम्। | सद्यः स्नात्वा परदिने प्रायश्चित्तं करणीयम्। |
| | ऊद्ध्वोच्छिष्टस्य प्राजापत्यम्। |
| | कामाभ्यासे सान्तपनम्। |
| | अज्ञाने त्रिरात्रोपवासः। पञ्चगव्यपानञ्च। |
| | अर्द्धोच्छिष्टस्य अर्थादनिगीर्णग्रासस्य आमाशनोच्छिष्टस्य च प्राजापत्यपादः। |
| | आपदि ज्ञानात् विशेषो यथा। |
| | मूत्रत्यागाशौचिनः शवादिस्पर्शे एकोपवासः। |
| | पुरीषत्यागाशौचिनः शवादिस्पर्शे दिनद्वयमुपवासः। |
| | मैथुनाशौचिनः शवादिस्तर्शे दिनत्रयमुपवासः। |
| | पानाशुचीनां शवादिस्पर्शे दिनचतुष्टयमुपवासः। |
| अथ तलाभ्यक्तस्य चाण्डालादिस्पर्शः। | उपवासः। पञ्चगव्यपानञ्च। चाण्डालोदकसंस्पृ ष्टस्य स्नानम्। |
| | उच्छिष्टस्य चाण्डालोदकस्पर्शे त्रिरात्रोपवासः। |
| अथ प्रकीर्णकानि। | प्रायश्चित्तानि। |
| अथरजकादिस्पर्शः। आदिना चर्म्मारिवेणधीवरनटानां ग्रहणम्। | अनुच्छिष्टस्य द्विजस्य रजकादिभिरकामतः स्पर्शे आचमनम्। कामतः शिरोव्यतिरिक्ताङ्गस्पर्शे तदङ्गप्रक्षालनपूर्ब्बकमाचमनम्। शिरःस्पर्शे स्नानम्। उच्छिष्टस्य तु ब्राह्मणस्यानुच्छिष्टचर्म्मकारादिस्पर्शे एकरात्रं पयःपानम्। |
| | उच्छिष्टचर्म्मकारादिकर्त्तृकस्पर्शे त्रिरात्रोपवासान्ते घृतप्राशनम्। ज्ञानत ऊद्ध्वोच्छिष्टविषयञ्चेदम्। |
| | अज्ञानतस्तदर्द्धम्। |
| अथोच्छिष्टस्य ब्राह्मणस्योच्छिष्टसच्छूद्रस्पर्शः। | एकोपवासानन्तरं पञ्चगव्यपानम्। कामत इदम्। |
| | अकामेऽधोच्छिष्टे च नक्तम्। शुनः स्पर्शेऽप्येवम्। |
| अथोच्छिष्टोच्छिष्टसवर्णस्पर्शः। | द्वयोरेवोच्छिष्टयोर्ब्राह्मणयोरन्योन्यस्पर्शेतदन्नत्यागपूर्ब्बकं स्नानम्। अत उच्छिष्टस्य विप्रस्यानुच्छिष्टविप्रस्पर्शेदोषाभाव एव। एतदकामतः। |
| | कामतो नक्तपूर्ब्बं घृताशनम्। |
| | उच्छिष्टब्राह्मणस्योच्छिष्टक्षत्त्रस्पर्शेनक्तम्। |
| | तादृशवैश्यस्पर्शे उपवासः। भुञ्जानयोः सवर्णयोः परस्परस्पर्शे तदन्नत्यागपूर्ब्बकं स्नानं प्राणायामश्च। अज्ञानात्तदन्नभोजने परदिने नक्तं पञ्चगव्यपानम्। तदन्ते भोजने न दोषः। |
| | ज्ञानात् उपवासानन्तरं ब्रह्मकूर्च्चपानं हविष्यभोजनञ्च। |
| | शूद्रस्यापि विशेषाश्रवणादुच्छिष्टोच्छिष्टसंस्पर्शे एतदेव। नक्ताशक्तौ रजतरक्तिकाद्वयं देयम्। |
| अथ नीलीवस्त्रपरिधानम्। | अहोरात्रोपवासानन्तरंपञ्चगव्यपानम्। इदमज्ञाने। ज्ञाने द्वैगुण्यम्। |
| | पालनाद्विक्रयात्तद्वृत्तैरुपजीवनात् त्रीणि कृच्छ्राणि। नीलीवस्त्रधारिणां स्नानदानतपोहोमस्वाध्यायपितृतर्पणमहायज्ञानां वृथात्वम्। स्त्रीणां क्रीडार्थसंयोगे शयनीये न दोषः। |
| अथ पलाण्डुलशुनादिस्पर्शः। आदिना सुरामद्यशूद्रोच्छिष्टानांग्रहणम्। | ऊद्ध्वोच्छिष्टस्य द्विजस्य कामतः स्पर्शे त्र्यहं कुशजलपानं सावित्रीशतजपश्च। |
| | मूत्रोच्छिष्टस्य स्पर्शे नक्तम्। |
| | कृतपुरीषोत्सर्गस्य पलाण्डुलशुनादिस्पर्शे एकोपवासः। |
| | ऊद्ध्वोच्छिष्टस्य द्व्यहोपवासः। |
| | एतत्त्रयमकामतः। |
| | अनुच्छिष्टस्य स्पर्शे केवलं स्नानम्। |
| अथ प्रकीर्णकानि। | प्रायश्चित्तानि। |
| | अधोच्छिष्टस्य कामतः सुरेतरमद्यस्पर्शे अकामतः शूद्रोच्छिष्टस्य लशुलादीनाञ्च स्पर्शे अहोरात्रोपवासः। पञ्चगव्यपानञ्च। |

| | |
|---|---|
| | कामतः सुराया दर्शने स्नानं प्राणायामत्रयं घृतप्राशनञ्च । |
| | अकामतः सुरायाः स्पर्शने घ्राणे चाप्येवम् । |
| | कामतस्तस्याः स्पर्शे घ्राणे च जातिभ्रंशकरपापस्य प्रायश्चित्तं ज्ञेयम् । असोमपायिनां सुरापसम्बन्धिसुराघ्राणेउदकमज्जनं त्रिरघमर्षणं घृतप्राशनञ्च । |
| अथोच्छिष्टस्य नरादिपुरीषस्पर्शः । आदिना श्वकाककङ्कगृध्रादिग्रहणम्। | अधोच्छिष्टस्य सचेलस्नानम् । |
| | ऊर्द्ध्वोच्छिष्टस्योपवासः । पञ्चगव्यपानञ्च । |
| अथानुच्छिष्टस्य मलस्पर्शः । मला यथा । "वसाशुक्रमसृङ्मज्जामूत्रविट्कर्णविण्णखाः । श्लेष्माश्रुदूषिका स्वेदो द्वादशैते नृणां मलाः ॥" | पूर्ब्बेषां षण्णां नाभेरधः करद्वये च स्पर्शे मृज्जलाभ्यां क्षालनम् । उत्तरेषां षण्णां नाभेरधः करद्वये च स्पर्शे केवलजलेन क्षालनम् । नाभेरूर्द्ध्वं विण्मूत्रप्रभृतिस्पर्शे स्नानम् । चक्षुषि ओष्ठे बाहुकरयोश्च स्पर्शे मृत्तोयगोमयैस्तदङ्गक्षालनं स्नानं उपवासः पञ्चगव्यपानञ्च । |
| | भासवानरमार्जारखरोष्ट्रशूकराणाममेध्यस्पर्शे सचेलं स्नानम् । |
| | एतदपि अनुच्छिष्टस्य नाभ्यूर्द्ध्वलेपोपहतविषयम् । अध उच्छिष्टविषयञ्च । |
| | काकवलाहकाभ्यां विष्ठितस्य श्रोत्रमुखाप्रविष्टामेध्यलिप्तशरीरस्य च तदङ्गक्षालनं स्नानञ्च । अमेध्यानि यथा । "मानुषास्थि शवं विष्ठा रेतो मूत्रार्त्तवं वसा । स्वेदाश्रुदूषिका श्लेष्मा मद्यञ्चामेध्यमुच्यते ॥" एषां देहात् प्रच्युतानामेवामेध्यत्वम् । मद्यविण्मूत्रविप्रुषां मुखमण्डलस्पर्शे मृत्तिकागोमयैर्लेपनं स्नानं उपवासः । तदन्ते पञ्चगव्यपानञ्च । अत्र विशेषो यथा । परस्य मानुषस्यास्थिवसाविष्ठार्त्तवमूत्ररेतोमज्जशोणितानां स्पर्शे लेपमार्जनं स्नानं आचमनञ्च । आत्मसम्बन्धिनामेतेषां स्पर्शे परिमार्ज्जनमाचमनञ्च । |
| अथ मानुषास्थिस्पर्शः । | सस्नेहमानुषास्थिस्पर्शे स्नानम् । |
| | कामतः स्पर्शे स्नानं गायत्र्यष्टशतजपः । घृतप्राशनं त्रिराचमनञ्च । |
| | कामतोऽत्यन्ताभ्यासे त्रिरात्राशौचान्ते कृच्छ्रपादः । |
| | निःस्नेहस्य स्पर्शे आचमनं गोस्पर्शः अर्कदर्शनं वा । कामतोऽत्यन्ताभ्यासे अहोरात्राशौचान्ते एतानि कार्य्याणि । |
| अथ रुद्रनिर्म्माल्यस्पर्शः । | सचेलस्नानम् । |
| अथ रजस्वलायाः सवर्णासवर्णरजस्वलास्पर्शः । | रजस्वलाया ब्राह्मण्याः सवर्णरजस्वलास्पर्शे एकरात्रोपवासः । पञ्चगव्यपानञ्च । एतत् कामतः । |
| अथ प्रकीर्णकानि । | प्रायश्चित्तानि । |
| | अकामतस्तदर्द्धं अर्थान्नक्तव्रतम् । |
| | रजस्वलाया ब्राह्मण्याः शेषवर्णरजस्वलायाः अर्थात् क्षत्रियादिरजस्वलायाः स्पर्शे षड्रात्रोपवासः । एतच्च कामतः । अकामतस्तदर्द्धम् । |
| | रजस्वलायाः शूद्रायाः सवर्णरजस्वलास्पर्शे एकरात्रोपवासः पञ्चगव्यपानञ्च । |
| | सवर्णयो रजस्वलयोरन्योन्यस्पर्शेएकोपवासः पञ्चगव्यपानञ्च । |
| | अत्यन्ताधमरजक्यादिरजस्वलास्पर्शेद्व्यहसाध्यं ब्रह्मकूर्च्चव्रतम् । |
| | एतच्च कामतः । |
| | अकामतस्तदर्द्धम् । |
| | एतत् सर्व्वं शुद्धिकालानन्तरं अर्थात् पञ्चमे ऽहनि कार्य्यम् । |
| अथ रजस्वलायाः पतितचाण्डालादिस्पर्शः । आदिना अन्त्यजवायसयोर्ग्रहणम्। | प्रथमेऽह्नि स्पर्शे त्रिरात्रोपवासः । |
| | द्वितीयेऽह्नि द्व्यहोपवासः । |
| | तृतीयेऽह्नि अहोरात्रोपवासः । |
| | चतुर्थेऽह्नि विशुद्धिस्नानात् पूर्ब्बं स्पर्शे नक्तम् । |
| | एतच्चाकामतः । |
| | कामतः स्पर्शे सर्व्वत्र त्रिरात्रोपवासः । तदन्ते अजाघ्राता कारयितव्या च । |
| अथ रजस्वलाया उच्छिष्टशूद्राश्वशूकरादिस्पर्शः । आदिना जम्बूकखरग्राम्यकुक्कुटानां ग्रहणम् । | प्रथमद्वितीयदिनयोरुच्छिष्टशूद्रास्पर्शेद्व्यहोपवासः । |
| | तृतीयदिने स्पर्शे एकोपवासः । |
| | चतुर्थदिने स्पर्शे नक्तम् । |
| | कुक्कुटादिस्पर्शे सर्व्वत्र नक्तमेव । |
| | एतच्च प्रायश्चित्तं विशुद्धिस्नानानन्तरं कर्त्तव्यम् । |
| | एकवृक्षादौ रजस्वलायाश्चाण्डालस्पर्शेअहोरात्रोपवासः । पञ्चगव्यपानञ्च । |

| | |
|---|---|
| | रजस्वलाया उच्छिष्टचाण्डालादिस्पर्शे द्विजस्त्रीणां प्राजापत्यम्। |
| | शूद्राया धेनुदानम्। |
| | एषु प्रायश्चित्तेषु रजस्वलात्वमेव निमित्ततो न ब्राह्मण्यादिभ्यो विशेषः। अत्रापवादः। "तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे। नगरग्रामदाहे च स्पृष्टास्पृष्टि न दूष्यति॥" |
| अथ चाण्डालादिसङ्करः। आदिना श्वपाकपुक्कसयोर्ग्रहणम्। | संवत्सरैकचाण्डालसङ्करे मासैकं गोमूत्रयावकाहारः। एतत् प्रायश्चित्तं यौनादिवर्जितसंसर्गविषयम्। |
| | बालवृद्धस्त्रीशूद्राणामर्द्धम्। आषोडशाद्बालाः। सप्तत्यूद्दर्ध्वं स्थविराः। |
| | चीर्णे प्रायश्चित्ते ब्राह्मणभोजनम्। |
| | एतत् प्रायश्चित्तं ब्राह्मणक्षत्त्रियविशां तुल्यमेव। |
| अथ प्रकीर्णकानि। | प्रायश्चित्तानि। |
| | पूर्ब्बोक्तकालादल्पकालसङ्करे चान्द्रायणम्। |
| | स्वल्पतरे पराकः। |
| | अत्यन्तस्वल्पकाले कृच्छ्रद्वयम्। |
| | शूद्रस्यात्र प्राजापत्यम्। |
| | चाण्डालादिसङ्करे गृहादिशुद्धिर्यथा। भवनदहनं अर्थात् हुताशनज्वालासंस्पृष्टम्। पवनं अर्थात् पूर्ब्बमृत्तिकाकर्षणेन मृत्तिकान्तरदानम्। सर्व्वमृण्मयभाण्डभेदनम्। दारवाणां तक्षणम्। शङ्खशुक्तिरजतसुवर्णचेलानामद्भिः प्रक्षालनम्। कांस्यताम्राणामाकरे अर्थादग्नौ शुद्धिः। सौवीरपयोदधितक्राणांपरित्यागः। लाक्षादिरसधान्यादिद्रव्याणांरक्षणम्। घृतादीनां तापनञ्च। |
| | एकस्मिन्नेव कूपे द्विजानां चाण्डालानाञ्च सह जलपानं कुर्व्वतां संसर्गदुष्टानां उपवासः। पञ्चगव्यपानञ्च। |
| | बालापत्यारोगिगर्भिणीवृद्धानां नक्तम्। |
| | बालानां प्रहरद्वयमभोजनम्। |
| | चर्म्मकारादीनामविज्ञातसङ्करेतु चाण्डालसङ्करप्रायश्चित्तस्यषष्ठो भागः कर्त्तव्यः। संहतानां एकस्मिन्नुपहते तस्यैव शोधनम्। न तु तत्स्पृष्टिनां सर्व्वेषां शोधनम्। एकशाखापाषाणादौ चाण्डालादिभिः सहारोहणे ब्राह्मणस्य स्नानमात्रम्। |
| तत्र फलभोजने ब्राह्मणानुज्ञापनं सचेलस्नानं अहोरात्रोपवासः पञ्चगव्यपानञ्च। एतद्व्यवधाने। | ० |
| | सन्निधाने त्रिरात्रोपवासः। पञ्चगव्यपानञ्च। |
| | एतदुभयं ज्ञानविषयम्। अज्ञाने एकवृक्षादौ चाण्डालादिभिः सह फलभोजने अघमर्षणम्। एकावयविद्वारा परम्परास्पर्शेऽपि स्नानादिकम्। अत्रापवादः। "रथ्याकर्द्दमतोयानि नावः पन्थास्तृणानि च। स्पर्शनान्न प्रदूष्यन्ति पक्वेष्टरचितानि च॥" तृणानि तृणसमूहः। पक्वेष्टरचितानि मठादीनि। द्वितीयसंसर्गितृतीयसंसर्गिणोर्हस्तपादप्रक्षालनपूर्ब्बकमाचमनम्। चतुर्थसंसर्गे दोषाभावः। इत्यस्पृ श्यस्पर्शप्रायश्चित्तम्॥ * ॥ |
| अथ रहस्यपापानि। | रहस्यकृते पापे रहस्यप्रायश्चित्तं करणीयम्। अन्येनावेदितमित्यर्थः। तत्र यदि कर्त्ता स्वयं प्रायश्चित्तानभिज्ञस्तदा कस्यचिद्रहस्यपापस्य किं रहस्यप्रायश्चित्तमिति सामान्येन प्रायश्चित्ताभिज्ञं स्पृष्ट्वा रहस्यं प्रायश्चित्तं कुर्य्यात्। तत्र यदि |
| अथ प्रकीर्णकानि। | प्रायश्चित्तानि। |
| | मरणान्तिकं प्रायश्चित्तं तत्र रहस्यकृतेऽपि मरणमेव कर्त्तव्यम्। यत्र तु व्रतादिकं तत्र जातिशक्तिगुणसकृद्बुद्ध्याद्यपेक्षया प्रकाशकृतपापोक्तप्रायश्चित्तस्य विंशतिभागत्रिंशद्भागषष्टिभागाःकल्प्याः। |
| | अथवा महापातकेष्वकामतो मनूक्तमाब्दिकं व्रतं करणीयम्। |
| | कामतो द्वैगुण्यम्। |

अन्येषु पापेषु गुरुलाघवापेक्षया प्राणायामशतमेव एकाहद्व्यहत्र्यहक्रमेण मासं षण्मासं संवत्सरं वाभ्यसनीयम् । व्रतकरणाशक्तेनापि जपहोमध्यानतीर्थसेवादानवेदाभ्यासादयः कार्य्याः । इति रहस्यप्रायश्चित्तम् ॥ इति शूलपाणिकृतप्रायश्चित्तविवेकोक्तनवविधपापानां प्रायश्चित्तानि समाप्तानि ॥ * ॥



**प्रायिकं**, त्रि, (प्रायेण प्राये वा भवमिति । प्राय + ठक् ।) बाहुल्ये भवम् । यथा । "क्षैण्यज्ञाने तु प्रायिकमरणं ज्ञात्वा प्रवृत्तस्य चान्द्रायणादिकम् ।" इति प्रायश्चित्ततत्त्वम् ॥

**प्रायुद्धेषी**, [न्] पुं, (प्रायुधि प्रकृष्टयुद्धादिस्थाने हेषते शब्दायते इति । हेष् + णिनिः ।) घोटकः । इति शब्दचन्द्रिका ॥

**प्रायोज्यं**, त्रि, (प्र + आ + युज् + णिच् + यत् ।) प्रयोजनार्हम् । यथा । प्रायोज्यं न विभज्येत । यद्यस्य प्रयोजनार्हं पुस्तकादि तन्मूर्खैः सह न विभजनीयमिति दायभागः ॥

**प्रायोपविष्टः**, त्रि, (प्रायेण मरणार्थमनशनेन उपविष्टः ।) प्रायोपवेशविशिष्टः । यथा, --
"प्रायोपविष्टं गङ्गायां परीतं परमर्षिभिः ॥"
इति श्रीभागवतम् ।
"प्रायेण मृत्युपर्य्यन्तानशनेनोपविष्टम् ।" इति तट्टीकायां श्रीधरस्वामी ॥

**प्रायोपवेशः**, पुं, (प्रायेण मृत्युनिमित्तकानशनेन उपवेशः स्थितिः ।) सन्न्यासपूर्ब्बकानशनस्थितिः । यथा, --
"प्रायोपवेशो राजर्षेर्विप्रशापात् परीक्षितः ॥"
इति श्रीभागवते १२ स्कन्धः ॥

**प्रारब्धं**, क्ली, (प्रकृष्टमारब्धं स्वकार्य्यजननायेति ।) प्रालब्धम् । शरीरारम्भकादृष्टविशेषः । यथा, --
"प्रारब्धकर्म्मणां भोगादेव क्षयः ॥" इति स्मृतिः ।
"प्रारब्धमश्नन्नभिमानशून्यः ।"
इति श्रीभागवतम् ॥
"प्रारब्धकर्म्मविक्षेपाद्वासना तु न नश्यति ॥"
इति भगवद्गीतायां मधुसूदनसरस्वती च ॥
(प्र + आ + रभ् + कर्म्मणि क्तः । कृतारम्भे, त्रि । यथा, रघौ । १४ । ७ ।
"अथाभिषेकं रघुवंशकेतोः
प्रारब्धमानन्दजलैर्जनन्योः ।
निर्व्वर्त्तयामासुरमात्यवृद्धा-
स्तीर्थाहृतैः काञ्चनकुम्भतोयैः ॥")

**प्रारब्धिः**, स्त्री, (प्र + आ + रभ् + क्तिन् ।) गजबन्धनरज्जुः । इति हारावली ॥

**प्रारम्भः**, पुं, (प्र + आ + रभ् + भावे घञ् । मुम् च ।) प्रकर्षेण आरम्भः । यथा, स्मृतिः ।
"प्रारम्भे कर्म्मणां विप्रः पुण्डरीकं स्मरेद्धरिम् ॥"
(प्रारभ्यते इति । प्र + आ + रभ् + कर्म्मणि घञ् । मुम्च । कर्म्म । यथा, मार्कण्डेयपुराणे । ५१ । १७ ।
"शुभाशुभञ्च कुशलैः कुमारोऽन्यो ब्रवीति वै ।
तत्रापि दुष्टे व्याक्षेपः प्रारम्भत्याग एव च ॥"
प्रकृष्ट आरम्भो योगो यस्येति विग्रहे । योगी । यथा, रघुः । १० । ९ ।
"प्रबुद्धपुण्डरीकाक्षं बालातपनिभांशुकम् ।
दिवसं शारदमिव प्रारम्भसुखदर्शनम् ॥")

**प्रार्थनं**, क्ली, (प्र + अर्थ + ल्युट् ।) प्रकर्षेण याचनम् । तत्पर्य्यायः । याच्ञा २ अभिशस्तिः ३ याचना ४ अर्थना ५ प्रार्थना ६ । इति शब्दरत्नावली ॥ (यथा, महाभारते । ३ । १४९ । ३७ ।
"युगक्षयकृता धर्म्माः प्रार्थनानि विकुर्व्वते ।
एतत् कलियुगं नाम अचिराद् यत् प्रवर्त्तते ॥")

**प्रार्थना**, स्त्री, (प्र + अर्थ + णिच् + युच् ।) प्रकर्षेण याचनम् । (यथा, महाभारते । ३ । ३१२ । ८१ ।
"सन्तो दिग्जलमाकाशं गौरन्नं प्रार्थना विषम् ।
श्राद्धस्य ब्राह्मणः कालः कथं वा यक्ष ! मन्यसे ॥")

**प्रार्थनीयं**, क्ली, (प्रार्थ्यते इति । प्र + अर्थ + णिच् + अनीयर् ।) द्वापरयुगम् । इति शब्दरत्नावली ॥ प्रार्थनाविषये, त्रि ॥ (यथा, पञ्चतन्त्रे । २ । ११६ ।
"ततस्तयोः स्वभूपं बुद्ध्वा एकस्य वरः प्रार्थनीयः ॥")

**प्रार्थितः**, त्रि, (प्रार्थ्यते स्मेति । प्र + अर्थ + क्तः ।) याचितः । (यथा, देवीभागवते । २ । ६ । ५६ ।
"प्रार्थिता पतिना कुन्ती ददौ मन्त्रं दयान्विता ।
एकपुत्त्रप्रबन्धेन माद्री पतिमते स्थिता ॥")
शत्रुसंरुद्धः । अभिहितः । इति मेदिनी ॥ हतः । इति त्रिकाण्डशेषः ॥

**प्रालम्बं**, क्ली, (प्रालम्बते इति । लवि अवस्रंसने + अच् ।) कण्ठात् ऋजुलम्बमानमाल्यम् । इत्यमरः । २ । ६ । १३६ ॥ (यथा, रघौ । ६ । १४ ।
"विस्रस्तमंसादपरो विलासी
रत्नानुविद्धाङ्गदकोटिलग्नम् ।
प्रालम्बमुत्कृष्य यथावकाशं
निनाय साचीकृतचारुवक्त्वः ॥"
प्रकर्षेण लम्बमाने, त्रि ॥)

**प्रालम्बिका**, स्त्री, (प्रालम्बते इति । अच् । संज्ञायां कन् । टापि अत इत्वम् ।) स्वर्णरचितललन्तिका । सुवर्णहारः । इत्यमरः । २ । ६ । १०४ ॥

**प्रालेयं**, क्ली, (प्रकर्षेण लीयन्ते लीना भवन्ति पदार्था अत्रेति प्रलयो हिमालयस्तत आगतम् । प्रलय + अण् । "केकयमित्रयुप्रलयानां यादेरियः ।" ७ । ३ । २ । इति यस्येयादेशः ।) हिमम् । इत्यमरः । १ । ३ । १८ ॥ (यथा, देवीभागवते । ४ । ५ । १३ ।
"नरनारायणौ चैव चेरतुस्तप उत्तमम् ।
प्रालेयाद्रिं समागत्य तीर्थे वदरिकाश्रमे ॥")

**प्रालेयांशुः**, पुं, (प्रालेयाणि हिमानि तद्वत् शीता वा अंशवो यस्य ।) चन्द्रः । इति हलायुधः ॥ (यथा, माघे । ९ । ८७ ।
"इत्थं नारीर्घटयितुमलङ्कामिभिः काममासन् प्रालेयांशोः सपदि रुचयः शान्तमानान्तरायाः ॥")

**प्रावटः**, पुं, (प्र + अव + अट् + अच् । शकन्ध्वादित्वात् साधुः ।) यवः । इति जटाधरः ॥

**प्रावरः**, पुं, (प्रावृणोत्यनेनेति । प्र + आ + वृ + करणे अप् ।) प्राचीरम् । इति शब्दरत्नावली ॥

**प्रावरणं**, क्ली, (प्रावृणोत्यनेन गात्रमिति । प्र + आ + वृ + करणे ल्युट् ।) उत्तरीयवस्त्रम् । तत्पर्य्यायः । प्रच्छादनम् २ संव्यानम् ६ उत्तरीयकम् ४ । इति हेमचन्द्रः ॥ (यथा, राजतरङ्गिण्याम् । ४ । ६७४ ।
"बन्धकीपादमुद्राङ्कचारुप्रावरणादिसः ।
गौरवार्हान् दुराचारैः सचिवान् पर्य्यधापयत् ॥")
प्रकृष्टावरणञ्च ॥

**प्रावारः**, पुं, (प्राव्रियते गात्रमनेनेति । प्र + आ + वृ + करणे घञ् ।) उत्तरासङ्गः । उत्तरीयवस्त्रम् । इत्यमरः ॥ (यथा, महाभारते । २ । ४८ । ९ ।
"आच्छादयसि प्रावारानश्नासि पिशितौदनम् ।
आजानेयावहन्त्यश्वाः केनासि हरिणः कृशः ॥")

**प्रावारकीटः**, पुं, (प्रावारस्य कीटः ।) कीटविशेषः । तत्पर्य्यायः । कुणः २ । इति जटाधरः ॥

**प्रावृट्**, [ष्] स्त्री, (प्रकर्षेण आ सम्यक्प्रकारेण च वर्षतीति । प्र + आ + वृष् + क्विप् । प्रावर्षत्यत्रेति आधारे क्विप् वा । यद्वा, वर्षणमिति वृट् प्रकृष्टा वृडत्र । "नहिवृतिवृषिति ।" ६ । ३ । ११६ । इति पूर्ब्बपदस्य दीर्घः ।) वर्षाकालः । श्रावणभाद्रमासौ । इत्यमरः । १ । ४ । १९ ॥ (यथा, रघौ । ६ । ५१ ।
"अध्यास्य चाम्भः पृषतोक्षितानि
शैलेयगन्धीनि शिलातलानि ।
कलापिनां प्रावृषि पश्य नृत्यं
कान्तासु गोवर्द्धनकन्दरासु ॥")

**प्रावृडत्ययः**, पुं, (प्रावृषः अत्ययो नाशो यत्र ।) शरत्कालः । इति राजनिर्घण्टः ॥

**प्रावृतं**, त्रि, (प्राव्रियते स्मेति । प्र + आ + वृ + क्तः ।) प्रकृष्टावरणम् । ओडितवस्त्रम् । इति भरतः ॥ तत्पर्य्यायः । निवीतम् २ । इत्यमरः ॥ निवृतम् ३ । इति तट्टीकायां स्वामी ॥

**प्रावृतिः**, स्त्री, (प्रावृणोति प्रकर्षेण आच्छादयति दृष्टिपथमनयेति । प्र + आ + वृ + करणे क्तिन् ।) प्राचीरम् । इति शब्दरत्नावली ॥ (मलः । यथा, सर्व्वदर्शनसंग्रहे शैवदर्शने ।
"प्रावृतीशौ बलं कर्म्म मायाकार्य्यञ्चतुर्विधम् ।
पाशजालं समासेन धर्म्मनाम्नैव कीर्त्तिता ॥"
"अस्यार्थः । प्रावृणोति प्रकर्षेणाच्छादयत्यात्मनो दृक्क्रिये इति प्रावृतिः स्वाभाविक्यशुचिर्म्मल इति ॥")

**प्रावृषा**, स्त्री, (प्रावृष् + हलन्तात् टाप् वा ।) घनागमः । वर्षाकालः । इति त्रिकाण्डशेषः ॥

**प्रावृषायणी**, स्त्री, (प्रावृषायां अयनमुद्भवो यस्याः । गौरादित्वात् ङीष् ।) कपिकच्छुः । इत्यमरः । २ । ४ । ६ ॥ आलकुशी इति भाषा ॥

**प्रावृषिकः**, पुं, (प्रावृषि वर्षाकाले कायति शब्दायते इति । कै + कः । अलुक्समासः ।) मयूरः । इति धरणिः ॥ (प्रावृषि भवः । प्रावृष् + ठक् ।) प्रावृट्कालभवे, त्रि ॥

**प्रावृषेण्यः**, पुं, (प्रावृषि भवः प्रावृट् देवतास्य वेति । प्रावृष् + "कालेभ्यो भववत् ।" ४ । २ । ३४ । इति "प्रवृष एण्यः ।" ४ । ३ । १७ । इति एण्यः ।) कदम्बवृक्षः । इति मेदिनी ॥ कुटजवृक्षः । धाराकदम्बः । इति राजनिर्घण्टः ॥

**प्रावृषेण्यः**, त्रि, (प्रावृषि भव इति । प्रावृष् + एण्यः ।) प्रावृट्कालभवः । इति मेदिनी ॥ (यथा, रघौ । १ । ३६ ।
"स्निग्धगम्भीरनिर्घोषमेकं स्यन्दनमास्थितौ ।
प्रावृषेण्यं पयोवाहं विद्युदैरावताविव ॥")
प्राचुर्य्यम् । इति शब्दरत्नावली ॥

**प्रावृषेण्या**, स्त्री, (प्रावृषेण्य + टाप् ।) कपिकच्छुः । रक्तपुनर्नवा । इति राजनिर्घण्टः ॥

**प्रावृष्यं**, क्ली, (प्रावृषि भवमिति । यत् ।) वैदूर्य्यम् । इति राजनिर्घण्टः ॥ प्रावृषि भवे, त्रि ॥

**प्रावृष्यः**, पुं, (प्रावृषि भव इति । प्रावृष् + यत् ।) कुटजः । धाराकदम्बः । विकण्टकः । इति राजनिर्घण्टः ॥

**प्राशितं**, क्ली, (प्रकर्षेण अशितं यत्र ।) पितृयज्ञः । इति जटाधरः ॥ (प्र + अश् + कर्म्मणि क्तः ।) भक्षिते, त्रि ॥

**प्राश्निकः**, पुं, (प्रश्नाय तदुत्तरप्रदानाय साधुरिति । प्रश्न + ठक् ।) सभ्यः । इति त्रिकाण्डशेषः ॥ प्रश्नकर्त्तरि, त्रि ॥

**प्रासः**, पुं, (प्रास्यते क्षिप्यते इति । प्र + अस् + "हलश्च ।" ३ । ३ । १२१ । इति घञ् ।) कुन्तास्त्रम् । इत्यमरः । २ । ८ । ९३ ॥ कोँच इति भाषा ॥ (यथा, महाभारते । ६ । ६७ । २३ ।
"गदाभिरसिभिः प्रासैर्वर्णैश्चानतपर्व्वभिः ॥"
अस्य आकृतिलक्षणादिकं यदुक्तं शुक्रनीतौ तद्यथा, --
"प्रासास्त्रन्तु चतुर्हस्तं दण्डबुध्नं क्षुराननम् ॥"
यथाच ।
"प्रासस्तु सप्तहस्तः स्यादौन्नत्येन तु वैणवः ।
लौहशीर्षस्तीक्ष्णपादः कौशेयस्तवकाञ्चितः ॥
आकर्षश्च विकर्षश्च धूननं वेधनं तथा ।
चतस्र एता गतय उक्ताः प्रासं समाश्रिताः ॥")

**प्रासकः**, पुं, (प्रास + संज्ञायां स्वार्थे वा कन् ।) प्रासास्त्रम् । पाशकः । इति हेमचन्द्रः ॥

**प्रासङ्गः**, पुं, (प्रसज्यते इति । प्र + सन्ज + घञ् । उपसर्गस्येति दीर्घः) युगम् । इत्यमरः । २ । ८ । ५७ ॥ योयालि इति भाषा । "अनसः शकटस्य सम्बन्धि अनसि सम्बद्धं वा-यत् युगं ततोऽन्यत् यत् वत्सानां दमनकाले स्कन्धे आसज्यते तत् युगं प्रासङ्गः ।" इति भरतः ॥ (यथा, महाभारते । १३ । ६४ । १९ ।
"विशाखायामनड्वाहं धेनुं दत्त्वा च दुग्धदाम् ।
सप्रासङ्गञ्च शकट सधान्यं वस्त्रसंयुतम् ॥")

**प्रासङ्ग्यः**, पुं, (प्रासङ्गं वहतीति । प्रासङ्ग + "तद्वहति रथयुगप्रासङ्गम् ।" ४ । ४ । ७६ । इति यत् ।) युगवोढृवृषः । इत्यमरः । २ । ९ । ६४ ॥

**प्रासादः**, पुं, (प्रसीदन्त्यस्मिन्निति । प्र + सद् + "हलश्च ।" ३ । ३ । १२१ । इत्याधारे घञ् । "उपसर्गस्य घञ्यमनुष्ये बहुलम् ।" ६ । ३ । १२२ । इति उपसर्गस्य दीर्घः ।) देवभूभुजां गृहम् । इत्यमरः । २ । २ । ९ ॥ (यथा, देवीभागवते । २ । ९ । ४२ ।
"इत्युक्त्वा सचिवान् राजा कल्पयित्वा सुरक्षकान् ।
कारयित्वाथ प्रासादं सप्तभूमिकमुत्तमम् ॥")
तल्लक्षणादि यथा, --
सूत उवाच ।
"प्रासादानां लक्षणन्तु वक्ष्ये शौनक ! तच्छृणु ।
चतुःषष्टिपदं कृत्वा दिग्विदिक्षूपलक्षितम् ॥
चतुष्कोणं चतुर्भिश्च द्वाराणि सूर्य्यसंख्यया ।
चत्वारिंशाष्टभिश्चैव भित्तीनां कल्पना भवेत् ॥
ऊर्द्ध्वक्षेत्रसमा जङ्घा जङ्घार्द्धद्विगुणं भवेत् ।
गर्भविस्तारविस्तीर्णा शुकाघ्रा च विधीयते ॥
तत्त्रिभागेण कर्त्तव्या पञ्चभागेन वा पुनः ।
निर्गमस्तु शुकाघ्राया उच्छ्रयः शिखरार्द्धगः ॥
चतुर्धा शिखरं कृत्वा त्रिभागे वेदिबन्धनन् ।
चतुर्थे पुनरस्यैव कण्ठमामलसारकम् ॥ * ॥
अथवापि समं वास्तुं कृत्वा षोडशभागिकम् ।
तस्य मध्ये चतुर्भागमादौ गर्भन्तु कारयेत् ॥
भागद्वादशकां भित्तिं ततस्तु परिकल्पयेत् ।
चतुर्भागेण भित्तीनामुच्छ्रयः स्यात् प्रमाणतः ॥
द्विगुणः शिखरोच्छ्रायो भित्त्युच्छ्रायाच्च मानतः ।
शिखरार्द्धस्य चार्द्धेन विधेयास्तु प्रदक्षिणाः ॥
चतुर्द्दिक्षु तथा ज्ञेयो निर्गमस्तु तथा बुधैः ।
पञ्चभागेन संभज्य गर्भमानं विचक्षणः ॥
भागमेकं गृहीत्वा तु निर्गमं कल्पयेत् पुनः ।
गर्भसूत्रसमो भागादग्रतो मुखमण्डपः ॥
एतत् सामान्यमुद्दिष्टं प्रासादस्य हि लक्षणम् ।
लिङ्गमानमथो वक्ष्ये पीठो लिङ्गसमो भवेत् ॥
द्विगुणेन भवेद्गर्भः समन्ताच्चौनक ! ध्रुवम् ।
तद्विधा च भवेद्भित्तिर्जङ्घा तद्विस्तरार्द्धगा ॥
द्विगुणं शिखरं प्रोक्तं जङ्घायाश्चैव शौनक ! ।
पीठं गर्भावरं कर्म्म तन्मानेन शुकाघ्रकाम् ॥
निर्गमस्तु समाख्यातः शेषं मूलवदेव तु ।
लिङ्गमानः स्मृतो ह्येष द्वारमानमथोच्यते ॥ * ॥
कराग्रं वेदवत् कृत्वा द्वारं भागाष्टकं भवेत् ।
विस्तरेण समाख्यातं द्विगुणं वेच्छया भवेत् ॥
द्वारषत् पीठमध्ये तु शेषं शुषिरकं भवेत् ।
पादिकं शेषिकं भित्तिर्द्वारार्द्धेन परिग्रहात् ॥
तद्विस्तारसमा जङ्घा शिखरं द्विगुणं भवेत् ।

शुकाग्रा पूर्ब्बवज्ज्ञेया निर्गमोच्छ्रायकं भवेत् ॥
मण्डपे मानमेतत्तु स्वरूपञ्चापरं वदे । * ।
त्रैवेदं कारयेत् क्षेत्रं यत्र तिष्ठन्ति देवताः ॥
इत्थं कृतेन मानेन बाह्यभागविनिर्गतम् ।
नेमिः पादेन विस्तीर्णा प्रासादस्य समन्ततः ॥
गर्भन्तु द्विगुणं कुर्य्यात् नेम्या मानं भवेदिह ।
स एव भित्तेरुत्सेधो द्विगुणः शिखरो मतः ॥ * ॥
प्रासादानाञ्च वक्ष्यामि मानं योनिञ्च नामतः ।
वैराजः पुष्पकाख्यश्च कैलासो मालकाह्वयः ॥
त्रिपिष्टपश्च पञ्चैते प्रासादाः सर्व्वयोनयः ।
प्रथमश्चतुरस्रो हि द्वितीयस्तु तदायतः ॥
वृत्तो वृत्तायतश्चान्योऽष्टास्रश्चेह च पञ्चमः ।
एतेभ्य एव सम्भूताः प्रासादाः सुमनोहराः ॥
सर्व्वप्रकृतिभूतेभ्यश्चत्वारिंशिच्च एव च ।
मेरुश्च मन्दरश्चैव विमानश्च तथापरः ॥
भद्रकः सर्व्वतोभद्रो रुचको नन्दनस्तथा ।
नन्दिवर्द्धनसंज्ञश्च श्रीवत्सश्च नवेत्यमी ॥
चतुरस्रात् समुद्भूता वैराजादिति गम्यताम् । * ।
वडभी गृहराजश्च शालागृहञ्च मन्दिरम् ॥
विमानश्च तथा ब्रह्ममन्दिरं भवनं तथा ।
उत्तम्भं शिविका वेश्म नवैते पुष्पकोद्भवाः ॥ * ॥
वलयो दुन्दुभिः पद्मो महापद्मस्तथापरः ।
भद्रकः सर्व्वतोभद्रो रुचको नन्दनस्तथा ॥
गुवावृक्षस्तथान्यच्च वृत्ताः कैलाससम्भवाः । * ।
गजोऽथ वृषभो हंसो गरुडः सिंहनामकः ॥
भूमुखो भूधरश्चैव श्रीजयः पृथिवीधरः ।
वृत्तायतः समुद्भू तो नवैते मालकाह्वयात् ॥ * ॥
वज्रं चक्रं तथान्यच्च मुष्टिकं वभ्रुसंज्ञितम् ।
वक्रः स्वस्तिकखड्गौ च गदा श्रीवृक्ष एवच ॥
विजयो नामतः श्वेतस्त्रिपिष्टपसमुद्भवाः । * ।
त्रिकोणपत्रमर्द्धेन्दु चतुष्कोणं द्विरष्टकम् ॥
यत्र तत्र विधातव्यं संस्थानं मण्डपस्य तु ।
राज्यञ्च विजयश्चैवमायुर्व्वर्द्धनमेव च ॥
पुत्रलाभः श्रियः पिष्टिस्त्रिकोणादिक्रमाद्भवेत् ॥ * ॥
कुर्य्यात् ध्वजादिसंख्यां वा द्वारि गर्भगृहन्तथा ।
मण्डपः समसंख्याभिर्गुणितः सूत्रतस्तथा ।
मण्डपस्य चतुर्थांशाद्भद्रः कार्य्यो विजानता ॥
स्पर्द्धागवाक्षकोपेतो निर्गवाक्षोऽथवा भवेत् ।
सार्द्धभित्तिप्रमाणेन भित्तिमानेन वा पुनः ॥
भित्तेर्द्वैगुण्यतो वापि कर्त्तव्या मण्डपाः क्वचित् ।
प्रासादे मञ्जरी कार्य्या चित्रा विषमभूमिका ॥
परिमाणनिरोधेन रेखा वैषम्यभूमिका ।
आधारस्तु चतुर्द्वारश्चतुर्मण्डपशोभितः ॥
शतशृङ्गसमायुक्तो मेरुप्रासाद उत्तमः ।
मण्डपास्तस्य कर्त्तव्या भद्रैस्त्रिभिरलङ्कृताः ॥
घटनाकारमानानां भिन्ना भिन्ना भवन्ति ये ।
कियन्तो येषु साधारा निराधाराश्च केचन ॥
प्रतिच्छन्दकभेदेन प्रासादाः सम्भवन्ति ते ।
अन्योन्यसङ्करास्तेषां घटना नाम भेदतः ॥
देवतानाम् विशेषाय प्रासादा बहवः स्मृताः ।
यासादे नियमो नास्ति देवतानां स्वयम्भुवाम् ॥
तान्येव देवतानाञ्च पूर्ब्बमानेन कारयेत् ।

चतुरस्रायतास्तत्र चतुष्कोणसमन्विताः ॥
चन्द्रशालान्विताः कार्य्या भेरीशिखरसंयुताः ।
पुरतो वाहनानाञ्च कर्त्तव्या लघुमण्डपाः ॥
नाट्यशाला च कर्त्तव्या द्वारदेशसमाश्रया ।
प्रासादा देवतानाञ्च कार्य्या दिक्षु विदिक्ष्वपि ॥
द्वारपालाश्च कर्त्तव्या मुख्या गत्वा पृथक् पृथक् ।
किञ्चिद्विदूरतः कार्य्या मठास्तत्रोपजीविनाम् ॥
प्रावृता जगती कार्य्या फलपुष्पजलान्विता ।
प्रासादेषु सुरान् स्थाप्य पूजाभिः पूजयेन्नरः ॥
वासुदेवं सर्व्वदेवान् सर्व्वभाक् तद्गृहादिकृत् ॥"
इति गारुडे प्रासादकीर्त्तनं नाम ४७ अध्यायः ॥
(यथाच ।
"एतत् सामान्यमुद्दिष्टं प्रासादस्येह लक्षणम् ।
अथान्यच्च प्रवक्ष्यामि प्रासादं लिङ्गमानतः ॥
लिङ्गपूजाप्रमाणेन कर्त्तव्या पीठिका बुधैः ।
पीठिकार्द्धेन भागः स्यात्तन्मानेन तु भित्तयः ॥
बाह्यमिति प्रमाणेन उत्सेधस्तु भवेत्ततः ।
भित्युच्छ्रायात्तद्विगुणः शिखरस्य समुच्छ्रयः ॥
शिखरस्य चतुर्भागा कर्त्तव्या स्यात् प्रदक्षिणा ।
प्रदक्षिणायास्तु समस्त्वग्रतो मण्डपो भवेत् ॥
तस्य चार्द्धेन कर्त्तव्यस्त्वग्रतो मुखमण्डपः ।
प्रासादान्निर्गतौ कार्य्यौ कपोतौ गर्भमानतः ॥
ऊद्र्ध्वभित्युच्छ्रयात्तस्य मञ्जरीं तु प्रकल्पयेत् ।
मञ्जर्य्याश्चार्द्धभागेन शुकनासं प्रकल्पयेत् ॥
ऊर्द्ध तथार्द्धभागेन वेदिबन्धो भवेदिह ।
वेद्याश्चोपरि यच्छेषं कण्ठमामलसारकम् ॥
एवं विभज्य प्रासादं शोभनं कारयेद्बुधः ।
अथान्यच्च प्रवक्षामि प्रासादस्येह लक्षणम् ॥
गर्भमानेन प्रासादप्रमाणं शृणुत द्विजाः ।
विभज्य नवधा गर्भं मध्ये लिङ्गस्य पीठिका ॥
पादाष्टकञ्च रुचिरं पार्श्वतः परिकल्पयेत् ।
मानेनानेन विस्तारो भित्तीनान्तु विधीयते ॥
पादे पञ्चगुणं कृत्वा भित्तीनामुच्छ्रयो भवेत् ।
स एव शिखरस्यापि द्विगुणः स्यात् समुच्छ्रयः ॥
चतुर्धा शिखरं भज्य अर्द्धभागद्वयस्य वा ।
शुकनासं प्रकुर्व्वीत तृतीये वेदिका मता ॥
कण्ठमामलसारन्तु चतुर्थे परिकल्पयेत् ।
कपोलयोस्तु संहारो द्विगुणोऽस्य विधीयते ॥
शोभनैश्च प्रवल्लीभिरण्डकैश्च विभूषितः ।
प्रासादेषु तृतीयस्तु मया तुभ्यं निवेदितः ॥
सामान्यमपरं तद्वत् प्रासादं शृणुत द्विजाः ।
त्रैवेदं कारयेत् क्षेत्रं यत्र तिष्ठन्ति देवताः ॥
इत्थं कृत्वा तु मानेन बाह्यभागविनिर्गतम् ।
नेमिः पादेन विस्तीर्णा प्रासादस्य समन्ततः ॥
गर्भन्तु द्विगुणं कुर्य्यान्नेमिमानं भवेदिह ।
स एव भित्तेरुत्सेधो द्विगुणः शिखरो मतः ॥
प्राग्रीवपञ्चभागेन निश्वासस्तस्य चोच्यते ।
कारयेच्छिखरं तद्वत् प्राकारस्य विधानतः ॥
प्राग्रीवं तस्य मानेन निष्काशेन विशेषतः ।
कुर्य्याद्द्वयञ्च भागेन प्राग्रीवं कर्णमूलतः ॥
कारयेत् कनकं तत्र गर्भान्ते हारमूलतः ।
एवन्तु त्रिविधं कुर्य्यात् ज्येष्ठमध्यकनीयम्रम् ॥

लिङ्गमानात्तु भेदेन रूपभेदेन वा पुनः ।
एते सामान्यतः प्रोक्ता नामतः शृणुताधुना ॥
मेरुमन्दरकैलाशकुम्भसिंहगजास्तथा ।
विमानश्छन्दकस्तद्वच्चतुरस्रस्तथैवच ॥
अष्टयस्रः षोडशास्रश्च वर्त्तनः सर्व्वभद्रकः ।
बलभी नन्दनश्चैव नन्दिवर्द्धन एवच ॥
सिंहो वृषः सुपर्णश्च पद्मकोऽथ समुद्रकः ।
प्रासादानां मतः प्रोक्तो विभागं शृणुत द्विजाः
शतशृङ्गश्चतुर्द्वारो भूमिकाषोडशोच्छ्रितः ।
नानाविचित्रशिखरो मेरुप्रासाद उच्यते ॥
मन्दरो द्वादश प्रोक्तः कैलासो नवभूमिकः ।
विमानश्छन्दकस्तद्वदनेकशिखराततः ॥
स चाष्टभूमिकस्तद्वत् सप्तभिर्नन्दिवर्द्धनः ।
विंशाण्डकसमायुक्तो नन्दनः समुदाहृतः ॥
षोडशाण्डकसंयुक्तो नानारूपसमन्वितः ।
अनेकशिखरस्तद्वत् सर्व्वतोभद्र उच्यते ॥
चन्द्रशालासमापेतो विज्ञेयः पञ्चभूमिकः ।
वलभी छन्दकस्तद्वच्छुकनासत्रयान्वितः ॥
वृषस्योच्छ्रायतस्तुल्यो मण्डलश्च त्रिवर्ज्जितः ।
सिंहः सिंहगतिर्ज्ञेयो गजो गजसमस्तथा ॥
कुम्भः कुम्भाकृतिस्तद्वद्भूमिकानवकोच्छ्रयः ।
अङ्गुलीपुटसंस्थानपञ्चाण्डकविभूषितः ॥
षोडशास्रः समन्तात्तु विज्ञेयः स समुद्रकः ।
पार्श्वयोश्चन्द्रशालास्य उच्छ्रयो भूमिकाद्वयम् ॥
तथैकपद्मकः प्रोक्तः उच्छ्रयो भूमिकात्रयम् ।
षोडशास्रः स विज्ञेयो विचित्रशिखरः शुभः ॥
मृगराजस्तु विख्यातः चन्द्रशालाविभूषितः ।
प्राग्रीवेन विशालेन भूमिका स षड्त्तमाः ॥
अनेकचन्द्रशालस्तु गजप्रासाद उच्यते ।
पर्य्यन्तगृहराजो वै गरुडो नामनामतः ॥
सप्तभूम्युच्छ्रयस्तद्वच्चन्द्रशालात्रयान्वितः ।
भूमिकास्तु षडशीतिर्व्वाह्यतः सर्व्वतो भवेत् ॥
तथान्यो गरुडस्तद्वदुच्छ्रायो दशभूमिकः ।
पद्मकः षोडशास्रस्तु भूमिद्वयमथाधिकः ॥
पद्मतुल्यप्रमाणेन श्रीतुष्टक इति स्मृतः ।
पञ्चाण्डकस्त्रिभूमिस्तु गर्भे हस्तचतुष्टयः ॥
वृषो भवति नाम्ना यः प्रासादः सार्व्वकामिकः ।
सप्तकाः पञ्चकाश्चैव प्रासादा ये मयोदिताः ॥
सिंहस्य ते समा ज्ञेया ये चान्येऽन्यत्प्रमाणतः ।
चन्द्रशालैः समोपेताः सर्व्वे प्राग्रीवसंयुताः ॥
ऐष्टिका दारवाश्चैव शैलजाश्च सतोरणाः ।
मेरुश्च शतहस्तः स्यान्मन्दरः पञ्चहीनकः ॥
चत्वारिंशत्तु कैलासश्चतुस्त्रिंशद्विमानकः ।
नन्दिवर्द्धनकस्तद्वद्द्वात्रिंशत्समुदाहृतः ॥
त्रिंशद्भिर्नन्दनः प्रोक्तः सर्व्वतोभद्रकस्तथा ।
एते षोडशहस्ताः स्युश्चत्वारो देववल्लभाः ॥
कैलासो मृगराजस्तु विमानश्छन्दको गजः ।
एते द्वादशहस्ताः स्युरेतेषां सिंहनादकः ॥
गरुडोऽष्टकरो ज्ञेयः सिंहो दश उदाहृतः ।
एवमेव प्रमाणेन कर्त्तव्याः शुभलक्षणाः ॥
यक्षराक्षसनागानां मातृहस्तः प्रशस्यते ।
तथा मेर्व्वादयः सप्त ज्येष्ठलिङ्गाः शुभावहाः ॥

श्रीवृक्षकादयश्चाष्टौ मध्यमाश्च उदाहृताः ।
तथा सिंहादयः पञ्च कनिष्ठाः शुभदा मताः ॥"
इति विश्वकर्म्मप्रकाशे ५ अध्यायः ॥)

**प्रासादकुक्कुटः**, पुं, (प्रासादस्य देवभूभुजां गृहस्य कुक्कुट इव । सर्व्वदा प्रासादविचारित्वादस्य तथात्वम् ।) पारावतः । इति त्रिकाण्डशेषः ॥

**प्रासिकः**, पुं, (प्रासः प्रहरणमस्येति । प्रास + "प्रहरणम् ।" ४ । ४ । ५७ । इति ठक् ।) प्रासास्त्र-धारी । प्रासप्रहारी । तत्पर्य्यायः । कौन्तिकः २ । इत्यमरः । २ । ८ । ७० ॥

**प्रास्थिकः**, त्रि, (प्रस्थ + "सम्भवत्यवहरति पचति ।" ५ । १ । ५२ । इति ठञ् । प्रस्थपरिमितधान्यादे समावेशकः अवहारकः पाचकश्च ।) प्रस्थं सम्म-वति प्रास्थिकः कटाहः । प्रस्थं स्वस्मिन् समा-वेशयतीत्यर्थः । प्रास्थिकी ब्राह्मणी । प्रस्थमव-हरति पचति वेत्यर्थः । इति सिद्धान्तकौमुदी ॥ (प्रस्थं परिमाणमस्येति । "तदस्य परिमाणम् ।" ५ । १ । ५७ । इति ठञ् । प्रस्थपरिमितः । यथा, सुश्रुते चिकित्सितस्थाने । १२ अध्याये । "यवकोलकुलस्थांश्च प्रास्थिकान् सलिलद्रोणे निःक्वाथ्येति ॥" प्रस्थेन क्रीतमिति । "तेन क्रीतम् ।" ५ । १ । ३७ । इति ठञ् । प्रस्थक्रीतः ॥ प्रस्थस्य वापः । "तस्य वापः ।" ५ । १ । ४५ । इति ठञ् । प्रस्थपरिमितव्रीह्यादिवपनयोग्ये क्षेत्रे । यथा, शब्दरत्नावल्याम् ।
"द्रोणाढकखार्य्यर्द्धिपादौ द्रौणिकस्तथा ।
स्यादाढकिकखारीकौ उत्तमर्णादयस्त्रिषु ।
आदिभ्यां प्रास्थिकादिश्च पाकादौ द्रौणिको ऽपि च ॥")

**प्राहः**, पुं, नृत्योपदेशः । इति शब्दमाला ॥ निर्व्वि-सर्गश्चेत् प्रपूर्ब्बतिवन्तब्रूधातो रूपमप्येवम् ॥ (यथा, भट्टिः ।
"प्राह स्म रामं भरतोऽपि सम्यक् ॥")

**प्राह्णः**, पुं, (प्रथमञ्च तदहश्चेति । "राजाहःसखि-भ्यष्टच् ।" ५ । ४ । ९१ । इति टच् । "अहोह एतेभ्यः ।" ५ । ४ । ८८ । इति अह्नादेशः । "अह्नोऽदन्तात् ।" ८ । ४ । ७ । इति णत्वम् ।) पूर्ब्बाह्णः । इत्यमरः । १ । ४ । ३ ॥ (यथा, सुश्रुते । ६ । १८ ।
"अञ्जनानि यथोक्तानि प्राह्णसायाह्नरात्रिषु ॥"
तदभिमानिनी देवता च । यथा, भागवते । ७ । १५ । ५४ ।
"अग्निः सूर्य्यो दिवा प्राह्णः शुक्लो राकोत्तरं स्वराट् ॥" * ॥
प्रकृष्टमहर्यत्रेति विग्रहे । "तिष्ठद्गुप्रभृतीनि च ।" २ । १ । १७ । इत्यवयीभावः । प्रकृष्टदिन-युते, व्य ॥)

**प्राह्णे**, व्य, पूर्ब्बाह्णे । इति सिद्धान्तकौमुदी ॥

**प्राह्णेतनः**, त्रि, (प्राह्णे भवः । "सायंचिरंप्राह्णे प्रगेऽव्ययेभ्यष्टयुट्युलौ तुट् च ।" ४ । ३ । २३ । इति ट्यु तुट् च ।) पूर्ब्बाह्णसम्बन्धी । इति सिद्धान्त-कौमुदी ॥

**प्राह्णेतरां**, व्य, (द्वयोरतिशयेन प्राह्णे । प्राह्णे + "किमेत्त्याच्चाद्रव्ये चतरां चतमाम् ।" ४६५ । इति मुग्धबोधसूत्रात् चतराम् ।) अतिशय-पूर्ब्बाह्णे । इति मुग्धबोधव्याकरणम् ॥

**प्रियः**, पुं, (प्रीणातीति । प्री + "इगुपधज्ञाप्री-किरः कः ।" ३ । १ । १३५ । इति कः ।) भर्त्ता । इत्यमरः । २ । ६ । ३५ ॥ (यथा, आर्य्यासप्तशत्याम् । ३४७ ।
"प्रणमति पश्यति चुम्बति संश्लिष्यति पुलक-मुकुलितैरङ्गैः ।
प्रियसङ्गाय स्फुरितां वियोगिणी वामबाहु-लताम् ॥"
जामाता । यथा, मनुः । ३ । ११९ ।
"राजर्त्विक्स्नातकगुरून् प्रियश्वशुरमातुलान् ।
अर्हयेन्मधुपर्केण परिसंवत्सरात् पुनः ॥"
कार्त्तिकेयः । यथा, महाभारते स्कन्दनामानु-कीर्त्तने । ३ । २३१ । ५ ।
"अमोघस्त्वनघो रौद्रः प्रियश्चन्द्राननस्तथा ॥")
मृगविशेषः । इति जटाधरः ॥ जीवकौषधम् । इति राजनिर्घण्टः ॥ ऋद्धिनामौषधम् । हृद्ये, त्रि । इति मेदिनी ॥ (यथा, महाभारते ।
"सत्यं ब्रूयात् प्रियं ब्रूयात् नब्रूयात् सत्यमप्रियम् ।
प्रियञ्च नानृतं ब्रूयादेष धर्म्मः सनातनः ॥")
प्रियोऽप्रियश्च कार्य्यवशाद्भवति । यथा, --
"न हि कस्य प्रियः को वा विप्रियो वा जगत्त्रये ।
काले कार्य्यवशात् सर्व्वे भवन्त्येवाप्रियाः प्रियाः ॥"
इति श्रीकृष्णजन्मखण्डे ५ अध्यायः ॥

**प्रियंवदः**, पुं, (प्रियं वदतीति । वद् + "प्रियवशे वदः खच् ।" ३ । २ । ३८ । इति खच् । मुम् ।) खेचरः । गन्धर्व्वभेदः । (यथा, रघुः । ५ । ५३ ।
"अवेहि गन्धर्व्वपतेस्तनूजं
प्रियंवदं मां प्रियदर्शनस्य ॥")
प्रियभाषिणि, त्रि । इति शब्दरत्नावली ॥ तत्-कारणं यथा, दानसागरे शिवपुराणम् ।
"गोसहस्रप्रदातारो भूमिदातार एव च ।
ये सुवर्णप्रदातारस्तथा सर्व्वे प्रियंवदाः ॥"
(द्वादशाक्षरवृत्तौ, स्त्री । तल्लक्षणं यथा, वृत्तरत्नाकरे ।
"भुवि भवेन्नभजरैः प्रियंवदा ॥")

**प्रियकः**, पुं, (प्रिय + स्वार्थे संज्ञायां वा कन् ।) पीतशालकः । (यथा, रामायणे । २ । ७१ । १२-१३ ।
"तत्र रम्ये वने वासं कृत्वासौ प्राङ्मुखो ययौ ।
उद्यानमुज्जिहानायाः प्रियका यत्र पादपाः ॥
शालांस्तु प्रियकान् प्राप्य शीघ्रानास्थाय वाजिनः ।
अनुज्ञाप्याथ भरतो वाहिनीं त्वरितो ययौ ॥")
नीपः । (यथा, हरिवंशे । ७२ । १५ ।
"प्रियकैः पुष्पितैः गौरं श्यामं वाणासनैः क्वचित् ।
कठोरतृणमाभाति निर्म्मयूररुतं वनम् ॥")
चित्रमृगः । (यथा, माघे । ४ । ३२ ।
"रुचिरचित्रतनूरुहशालिभि-
र्व्विचलितैः परितः प्रियकव्रजैः ॥"
पक्षिविशेषः । यथा, महाभारते । ३ । १५८ । ५१ ।
"प्रियकैश्चातकैश्चैव तथान्यैर्व्विविधैः खगैः ॥")
अलिः । प्रियङ्गुः । कुङ्कुमम् । इति मेदिनी ॥ धाराकदम्बः । अशनवृक्षः । इति राजनिर्घण्टः ॥ (स्कन्दानुचरविशेषः । यथा, महाभारते । ९ । ४५ । ६२ ।
"प्रियकश्चैव नन्दश्च गोनन्दश्च प्रतापवान् ॥")

**प्रियङ्करः**, त्रि, (प्रियं करोतीति । प्रिय + कृ + "क्षेमप्रियमद्रेऽण् च ।" ३ । २ । ४४ । इति चकारात् खच् । मुम् ।) प्रियकारकः । यथा,
"महाकुलीन ऐक्ष्वाके वंशे दाशरथिर्म्मम ।
पितुः प्रियङ्करो भर्त्ता क्षेमकारस्तपस्विनाम् ॥"
इति भट्टिः । ५ । ७७ ॥
(दानवविशेषः । यथा, कथासरित्सागरे । ४७ । २४ ।
"महाबुद्ध्यचलाख्यौ च प्रियङ्करशुभङ्करौ ।
एते महारथा यज्ञरुचिधर्म्मरुची तथा ॥")

**प्रियङ्करी**, स्त्री, (प्रियङ्कर + गौरादित्वात् ङीष् ।) बृहज्जीवन्ती । श्वेतकण्टकारी । अश्वगन्धा । इति राजनिर्घण्टः ॥

**प्रियङ्गुः**, स्त्री, (प्रियं गच्छतीति । प्रिय + गम् + मृगय्वादित्वात् कुप्रत्ययेन साधुः ।) स्वनाम-ख्यातसुगन्धिवृक्षविशेषः । (यथा, महागणपति-स्तोत्रे । १० ।
"वामे चक्रगदाधरः स भगवान् क्रोडो प्रियङ्गो-स्तले
हस्तोद्यच्छुकशालिमञ्जरिकया देव्या धरण्या सह ॥")
तत्पर्य्यायः । श्यामा २ महिलाह्वया ३ लता ४ गोवन्दनी ५ गुन्द्रा ६ फलिनी ७ फली ८ विष्व-क्सेना ९ गन्धफली १० कारम्भा ११ प्रियकः १२ । इत्यमरः । २ । ४ । ५५ ॥ प्रियवल्ली १३ फलप्रिया १४ गौरी १५ वृत्ता १६ कङ्गुः १७ कङ्गुनी १८ भङ्गुरा १९ गौरवल्ली २० शुभगा २१ पर्णभेदिनी २२ शुभा २३ पीता २४ मङ्गल्या २५ श्रेयसी २६ । अस्या गुणाः । शीतलत्वम् । तिक्तत्वम् । दाहपित्तास्रदोषभ्रमवान्तिज्वरवक्त्रजाड्यनाशि त्वम् । इति राजनिर्घण्टः ॥ तुवरत्वम् । अनि-लनाशित्वम् । रक्तातियोगदौर्गन्ध्यस्वेदगुल्मतृड्-विषमोहनाशित्वञ्च । इति भावप्रकाशः ॥ * ॥ राजिका । पिप्पली । कङ्गुः । इति मेदिनी ॥ कटुकी । इति धरणिः ॥

**प्रियजनः**, पुं, (प्रियो जनः ।) हृद्यलोकः । (यथा, आर्य्यासप्तशत्याम् । ६१६ ।
"सखि । दुरवगाहगहनो विदधानो विप्रियं प्रियजनेऽपि ।
खल इव दुर्लक्ष्यस्तव विनतमुखस्योपरि स्थितः कोपः ॥")
प्रौढभावज्ञः । यथा, उज्ज्वलनीलमणिः ।
"प्रौढभावानुविज्ञो यस्तस्य प्रियजनोऽत्र सः ॥"

**प्रियजीवः**, पुं, (प्रियो जीवो यस्य यस्मिन् वा ।) श्योनाकवृक्षः । इति राजनिर्घण्टः ॥

**प्रियतमः**, पुं, मयूरशिखावृक्षः । इति शब्द-
चन्द्रिका ॥ (अयमेषामतिशयेन प्रियः । प्रिय +
तमप् ।) अतिशयप्रिये, त्रि ॥

**प्रियतरः**, त्रि, (अयमनयोरतिशयेन प्रियः । प्रिय
+ तरप् ।) अनयोरतिशयेन प्रियः । इति
व्याकरणम् ॥ (यथा, गो ० रामायणे । २ ।
३९ । ७ ।
"प्राणेभ्योऽपि प्रियतरो ज्येष्ठो भ्राता गुरुश्च ते ।
तस्मादस्य प्रयत्नैस्त्वं शरीरं प्रतिपालय ॥")

**प्रियता**, स्त्री, (प्रिय + तल् ।) प्रियस्य भावः ।
हार्द्दम् । इत्यमरः । १ । ७ । २७ ॥ (यथा, मनुः ।
५ । ५० ।
"न भक्षयति यो मांसं विधिं हित्वा पिशाचवत् ।
स लोके प्रियतां याति व्याधिभिश्च न पीड्यते ॥")

**प्रियतोषणः**, पुं, (प्रियस्य तोषणं यस्मात् । यद्वा,
प्रियं तोषयतीति । तुष् + णिच् + ल्युः ।)
षोडशबन्धातिरिक्तरतिबन्धविशेषः । तस्य
लक्षणं यथा, --
"नारी पादौ स्वहस्तेन धारयेज्जघनोपरि ।
स्तनापीडकरः कामी कामयेत् प्रियतोषणः ॥"
इति रतिमञ्जरी ॥
प्रियस्य तुष्टिकारिणि, त्रि ॥

**प्रियत्वं**, क्ली, (प्रियस्य भावः । प्रिय + त्व ।)
प्रियता । तत्पर्य्यायः । प्रेम २ प्रेमा ३ स्नेहः ४
प्रणयः ५ हार्द्दम् ६ प्रियता ७ स्निग्धता ८ ।
इति शब्दरत्नावली ॥

**प्रियदर्शनः**, त्रि, (प्रियं दर्शनं यस्य ।) सुदृश्यः ।
तत्पर्य्यायः । चक्षुष्यः २ । इति जटाधरः ॥
(यथा, रघुः । १ । ४७ ।
"तत्तद्भूमिपतिः पत्न्यै दर्शयन् प्रियदर्शनः ।
अपि लङ्घितमध्वानं बुबुधे न बुधोपमः ॥")

**प्रियदर्शनः**, पुं, (प्रियं दर्शनं यस्य ।) शुकपक्षी ।
क्षीरिकावृक्षः । इति जटाधरः ॥ (गन्धर्व्व-
विशेषः । यथा, रघुः । ५ । ५३ ।
"अवेहि गन्धर्व्वपतेस्तनूजं
प्रियंवदं मां प्रियदर्शनस्य ॥")

**प्रियप्रायं**, क्ली, (प्रियस्य प्रायो यत्र ।) प्रिय-
वाक्यम् । तत्पर्य्यायः । चटु २ चाटु ३ । इति
हेमचन्द्रः । २ । १७८ ॥

**प्रियप्रेप्सुः**, त्रि, (प्रियं प्रेप्सतीति । प्र + आप् +
सन् + उः ।) इष्टार्थोद्युक्तम् । उत्सुखः ।
इति जटाधरः ॥

**प्रियमधुः**, पुं, (प्रियं मधु मद्यं यस्य ।) बलरामः ।
इति हेमचन्द्रः । २ । १३८ ॥

**प्रियवर्णी**, स्त्री, (प्रियो वर्णो यस्याः । गौरादि-
त्वात् ङीष् ।) प्रियङ्गुः । इति जटाधरः ॥

**प्रियवल्ली**, स्त्री, (प्रिया मनोज्ञा वल्ली लता ।)
प्रियङ्गुः । इति राजनिर्घण्टः ॥

**प्रियवादी**, [न्] त्रि, (प्रियं मनोज्ञं वदतीति ।
वद् + णिनिः ।) मनोज्ञवक्ता । यथा, चाणक्ये ।
"कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः सविद्यानां कः परः प्रियवादिनाम् ॥"
(यथा च पञ्चतन्त्रे । २ । १७४ ।
"सुलभाः पुरुषा राजन् ! सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥")

**प्रियव्रतः**, पुं, (प्रियं व्रतं यस्य ।) स्वायम्भुवमनु-
पुत्त्रः । यथा, --
"प्रियव्रतोत्तानपादौ मनोः स्वायम्भुवस्य तु ।
द्वौ पुत्त्रौ सुमहावीर्य्यौ धर्म्मज्ञौ कथितौ तव ॥"
इत्यग्निपुराणम् ॥
(प्रियाणि व्रतानि यस्येति विग्रहे व्रतप्रिये,
त्रि । यथा, ऋग्वेदे । १० । १५० । ३ ।
"अग्ने देवानावह नः प्रियव्रतान्
मृळीकाय प्रियव्रतान् ॥")

**प्रियसखः**, पुं, (प्रियः सखा च हितकारित्वात् ।
"राजाहःसखिभ्यष्टच् ।" ५ । ४ । ९१ । इति टच् ।)
खदिरः । इति शब्दचन्द्रिका ॥ प्रियश्चासौ
सखा चेति । (प्रियबन्धुः । यथा, मेघदूते । १२ ।
"आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलम् ॥")
प्रियस्य सखा इति च । इति व्याकरणम् ॥

**प्रियसत्यं**, क्ली, (प्रियं सत्यमिति कर्म्मधारयः ।)
सुनृतवाक्यम् । इति हेमचन्द्रः । २ । १७८ ॥
(प्रियं सत्यं यस्येति विग्रहे सत्यप्रिये, त्रि ॥)

**प्रियसन्देशः**, पुं, (प्रियं सन्दिशतीति । प्रिय + सम्
+ दिश + अण् ।) चम्पकवृक्षः । इति शब्द-
चन्द्रिका ॥ (प्रियः सन्देश इति कर्म्मधारयः ।)
प्रियसंवादश्च ॥

**प्रियसालकः**, पुं, (प्रियः सालः । ततः स्वार्थे कन् ।)
असनवृक्षः । इति राजनिर्घण्टः ॥ पेयासाल
इति ख्यातः ॥

**प्रिया**, स्त्री, (प्रिय + टाप् ।) नारी । इति शब्द-
रत्नावली ॥ भार्य्या । इति हेमचन्द्रः ॥ (यथा,
कुमारे । ३ । ३८ ।
"पुष्पासवाघूर्णितनेत्रशोभि
प्रियामुखं किम्पुरुषश्चुचुम्बे ॥")
एला । इति शब्दचन्द्रिका । मल्लिका । मदिरा ।
इति राजनिर्घण्टः ॥ वार्त्ता । इति धरणिः ॥
(पञ्चाक्षरच्छन्दोविशेषः । इति छन्दोमञ्जरी ॥)

**प्रियाम्बुः**, पुं, (प्रियमम्बु यस्य ।) आम्रवृक्षः ।
इति राजनिर्घण्टः ॥ तत्फले हृद्यजले च क्ली ॥
(जलप्रिये, त्रि ॥)

**प्रियालः**, पुं, (प्रियाय हिताय अलति पर्य्याप्नो-
तीति । अल + अच् ।) वृक्षभेदः । पियाल
इति भाषा । अस्य बीजं चिरञ्जीति प्रसिद्धम् ।
तत्पर्य्यायः । चारः २ अखट्टः ३ खरस्कन्धः ४
ललनः ५ चारकः ६ बहुवल्कः ७ सन्नद्रुः ८
तापसप्रियः ९ स्नेहबीजः १० उपवटः ११ मक्ष-
बीर्य्यः १२ । इति राजनिर्घण्टः ॥ पियालः १३ ।
इत्यमरः । २ । ४ । ३५ ॥ बहुलवल्कलः १४ राजदनम्
१५ तापसेष्टः १६ सन्नकद्रुः १७ धनुःपटः १८ ।
अस्य गुणः । पित्तकफास्रनाशित्वम् ॥ तत्फल-
गुणाः । मधुरत्वम् । गुरुत्वम् । स्निग्धत्वम् । सर-
त्वम् । मरुत्पित्तदाहज्वरतृषापहत्वञ्च । तन्मज्ज-
गुणाः । मधुरत्वम् । वृष्यत्वम् । पित्तानिलाप-
हत्वम् । हृद्यत्वम् । दुर्ज्जरत्वम् । स्निग्धत्वम् ।
विष्टम्भित्वम् । आमवर्द्धनत्वञ्च । इति भाव-
प्रकाशः ॥ अपि च ।
"चारस्य च फलं पक्वं वृष्यं गौल्याम्लकं गुरु ।
तद्बीजं मधुरं वृष्यं पित्तदाहार्त्तिनाशनम् ॥"
इति राजनिर्घण्टः ॥

**प्रियाला**, स्त्री, (प्रियाय अलतीति । अल +
अच् + टाप् ।) द्राक्षा । इति राजनिर्घण्टः ॥

**प्रियोदितं**, त्रि, (प्रियाय प्रियेण वा यदुदितम् ।
प्रियमुदितमिति वा ।) चाटुवाक्यम् । इति
शब्दरत्नावली ॥ प्रियवाक्यविषयः ॥ (प्रिय-
कथितवाक्यञ्च ॥)

**प्री**, क तर्पणे । इति कविकल्पद्रुमः ॥ (चुरा०
पर०-सक०-अनिट् ।) क, यं प्राययन्ति कवि-
सूक्तिरसायनानि । इति हलायुधः ॥ प्रीणयत्य-
पीति केचित् । इति दुर्गादासः ॥

**प्री**, ङ य प्रीतौ । कान्तौ । इति कविकल्पद्रुमः ॥
(दिवा०-आत्म०-अक०-अनिट् ।) प्रीतिरिह
प्रीतीभावः । ङ य, यः प्रीयते प्रणयिषु । इति
हलायुधः । इति दुर्गादासः ॥

**प्री**, ञ तर्पणे । इति कविकल्पद्रुमः ॥ (भ्वा०-
उभ०-सक०-अनिट् ।) ञ, प्रयति प्रयते । इति
दुर्गादासः ॥

**प्री**, ञ ग कान्तौ । तर्पणे । इति कविकल्पद्रुमः ॥
(क्र्या०-उभ०-अक०-सक० च-अनिट् ।) तर्पण-
मिह प्रीतीभावः प्रीतीकरणञ्च । ञ ग, प्रभुः
प्रीणातु विश्वभुक् । प्रीणाति बान्धवजनानिति
हलायुधः । प्रीणीते । इति दुर्गादासः ॥

**प्रीः**, स्त्री, (प्री + क्विप् ।) प्रीतिः । इति कन-
धातुटीकायां दुर्गादासः ॥ प्रथमा विभक्तिः ।
यथा, "त्रिशः प्रीद्वीत्रीचीपीषीप्त्यः । स्यादीनि
त्रीणि त्रीणि क्रमात् प्रीद्वीत्रीचीपीषीप्ती-
संज्ञानि स्युः ।" इति मुग्धबोधव्याकरणम् ॥

**प्रीणः**, त्रि, (प्र + "नश्च पुराणे प्रात् ।" ५ । ४ । २५ ।
इत्यस्य वार्त्तिकोक्त्या खः ।) पुरातनः । इति
त्रिकाण्डशेषः ॥ प्रीतः । इति व्याकरणम् ॥

**प्रीणनं**, क्ली, (प्री + स्वार्थे णिच् + ल्युट् । धूञ्
प्रीञोरिति नुक् ।) तृप्तिकरणम् । तत्पर्य्यायः ।
तर्पणम् २ अवनम् ३ । इत्यमरः । ३ । २ । १ ॥
(यथा, महानिर्व्वाणतन्त्रे । २ । ४७ ।
"तस्मिंस्तुष्टे जगत्तुष्टं प्रीणिते प्रीणितं जगत् ।
तदाराधनतो देवि ! सर्व्वेषां प्रीणनं भवेत् ॥")

**प्रीणसः**, पुं, गण्डकः । इति राजनिर्घण्टः ॥

**प्रीतः**, त्रि, (प्रीञ् प्रीणने + क्तः ।) प्रीतियुक्तः ।
तत्पर्य्यायः । हृष्टः २ मत्तः ३ तृप्तः ४ प्रह्लन्नः ५
प्रमुदितः ६ । इत्यमरः । ३ । १ । १०३ ॥ हृषितः ७ ।
(यथा, महाभारते । ४ । ४० । २ ।
"प्रीतोऽस्मि पुरुषव्याघ्र ! न भयं विद्यते तव ।
सर्व्वांस्तुदामि ते शत्रून् रणे रणविशारद ! ॥")
क्ली, नर्म्म । इति मेदिनी । ते, ३३ ॥

**प्रीतिः**, स्त्री, (प्रीञ् तर्पणे + भावे क्तिन् ।) तृप्तिः ।
(यथा, रामायणे । १ । ६८ । १२ ।

"प्रतिज्ञां मम राजेन्द्र ! निर्व्वर्त्तयितुमर्हसि ।
पुत्त्रयोरुभयोरेव प्रीतिं त्वमुपलप्स्यसे ॥")
तत्पर्य्यायः । मुत् २ प्रमदः ३ हर्षः ४ प्रमोदः ५
आमोदः ६ सम्मदः ७ आनन्दथुः ८ आनन्दः ९
शर्म्म १० सातम् ११ सुखम् १२ । इत्यमरः ।
१ । ४ । २४ ॥ केचित्तु । मुदादिसप्तकं प्रीतौ ।
आनन्दथ्वादिपञ्चकं सुखे इत्याहुः इति भरतः ॥
इष्टदर्शनजन्यं सुखम् । इति मोक्षधर्म्मे नील-
कण्ठः ॥ कामपत्नी । इति मेदिनी । ते, ३४ ॥ सा
पुरा अनङ्गवती वेश्या आसीत् विभूतिद्वादशी-
व्रतं कृत्वा रत्याः सपत्नी जाता । यथा, --
"वेश्यानङ्गवती नाम विभूतिद्वादशीव्रतम् ।
समाप्य माघमासस्य द्वादश्यां लवणाचलम् ॥
निवेदयन्ती गुरवे शय्याञ्चोपस्करान्विताम् ।
अलंकृत्य हृषीकेशं सौवर्णामरपादपम् ॥
सा चानङ्गवती वेश्या कामदेवस्य साम्प्रतम् ।
पत्नी सपत्नी संजाता रत्याः प्रीतिरिति श्रुता ॥"
इति मात्स्ये ८२ अध्यायः ॥
विष्कम्भादिसप्तविंशतियोगान्तर्गत द्वितीययोगः ।
तत्र जातफलम् ।
"प्रसूतिकाले यदि प्रीतियोगो
नरो ह्यरोगः सुखवान् विनोदी ।
रक्तानुरक्तो विदुषां प्रपन्नः
संप्रार्थितो यच्छति वित्तमेव ॥"
इति कोष्ठीप्रदीपः ॥
प्रेम । इति मेदिनी । ते, ३४ ॥

**प्रीतिजुषा**, स्त्री, (प्रीतिं जुषते सेवते इति । जुष्
सेवने + कः । टाप्) अनिरुद्धपत्नी । उषा ।
इति शब्दरत्नावली ॥ (प्रीतिभाजि, त्रि ॥)

**प्रीतिदः**, पुं, (प्रीतिं ददातीति । दा + "आतो-
ऽनुपसर्गे कः ।" ३ । २ । ३ । इति कः ।) भण्डः ।
भाँड इति भाषा । तत्पर्य्यायः । वासन्तिकः २
केलिकिलः ३ वैहासिकः ४ विदूषकः ५
प्रहासी ६ । इति हेमचन्द्रः ॥ हर्षसुखप्रेम-
दातरि, त्रि ॥

**प्रीतिदत्तं**, क्ली, (प्रीत्या दत्तमिति ।) प्रीत्या दत्त-
वस्तु । यथा, मिताक्षरायाम् ।
"प्रीत्या दत्तन्तु यत् किञ्चित् श्वश्वा वा श्वशुरेण वा ।
पादवन्दनिकञ्चैव प्रीतिदत्तं तदुच्यते ॥"
भावे क्तप्रत्यये प्रीतिदानञ्च ॥

**प्रीतिभोज्यं**, त्रि, (प्रीत्या भोज्यम् ।) प्रीत्या
भक्षणीयमन्नादि । यथा, --
"अन्नानि प्रीतिभोज्यानि आपद्भोज्यानि वा
पुनः ।
न च संप्रीयसे राजन्न चैवापद्गता वयम् ॥"
इति महाभारते । ५ । ९१ । २५ ॥

**प्रु**, ङ सर्पणे । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-
सक०-अनिट् ।) रेफयुक्तः । ङ, प्रवते । इति
दुर्गादासः ॥

**प्रुष**, उ दहि । इति कविकल्पद्रुमः । (भ्वा०-पर०-
सक०-सेट् । उदित्त्वात् क्त्वावेट् ।) उ, प्रोषित्वा
प्रुष्ट्वा । दहि भस्मीकरणे । इति दुर्गादासः ॥

**प्रुष**, ग सेके । पूर्त्तौ । स्नेहे । इति कविकल्प-
द्रुमः ॥ (क्र्या०-पर०-सेके पूर्त्तौ च सक०-स्नेहे
अक०-सेट् ।) ग, प्रुष्णाति पुप्रोष । सेकस्थाने
मोचनमिति धातुप्रदीपभट्टमल्लौ । इति दुर्गा-
दासः ॥

**प्रुष्टः**, त्रि, (प्रुष् दहि + क्तः ।) दग्धः । इत्यमरः ।
३ । १ । ९९ ॥ (यथा, राजतरङ्गिण्याम् । ६ । १४४ ।
"सा यागज्वलने राजललना पीतसर्पिषि ।
पूर्णाहुत्या समं साध्वी जुहाव सहसा तनुम् ।
उपर्य्यस्या निरस्तासोः प्रुष्टाः कुसुमवृष्टयः ॥")

**प्रुष्वः**, पुं, (प्रुष्णाति स्निह्यति पिपर्त्ति वेति ।
प्रुष् + "अशूप्रुषिलटिकणिखटिविशिभ्यःक्वन् ।"
उणा० १ । १५१ । इति क्वन् टाप् ।) ऋतुः ।
(प्रोषति दहतीति ।) दिवाकरः । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**प्रुष्वा**, स्त्री, (प्रुष्णाति सिञ्चतीति । प्रुष् + "अशू-
प्रुषिलटिकणिखटिविशिभ्यःक्वन् ।" उणा० १ ।
१५१ । इति क्वन् । टाप् ।) जलबिन्दुः । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ (यथा, शतपथ-
ब्राह्मणे । ५ । ३ । ४ । १६ । "अथ प्रुष्वा गृह्णाति ॥")

**प्रेक्षणं**, क्ली, (प्रेक्षते पश्यत्यनेनेति । प्र + ईक्ष +
करणे ल्युट् ।) चक्षुः । इति शब्दरत्नावली ॥
(भावे ल्युट् ।) दर्शनम् । यथा, रसमञ्जरी ।
"सञ्चारो रतिमन्दिरावधि पदन्यासावधि
प्रेक्षणम् ॥"

**प्रेक्षणकूटः**, पुं, (प्रेक्षणस्य कूटः ।) चक्षुर्गोलकः ।
यथा, पाण्डुरोगपूर्व्वरूपे माधवकरः ।
"त्वक्‌स्फोटनष्ठीवनगात्रसाद-
मृद्भक्षणप्रेक्षणकूटशोथाः ॥"

**प्रेक्षा**, स्त्री (प्रकर्षेण ईक्षते ययेति । प्र + ईक्ष +
"गुरोश्च हलः ।" ३ । ३ । १०३ । इति अः ।
टाप् ।) प्रज्ञा । (यथा, महाभारते । ३ । १३६ । ७ ।
"सा तस्मै सर्व्वमाचष्ट यवक्रीभाषितं शुभा ।
प्रत्युक्तञ्च यवक्रीतं प्रेक्षापूर्व्वं तथात्मना ॥")
नृत्येक्षणम् । इत्यमरः । ३ । ३ । २२३ ॥ (यथा,
मनौ । ९ । ८४ ।
"प्रतिषिद्धापि चेद्या तु मद्यमभ्युदयेष्वपि ।
प्रेक्षासमाजं गच्छेद्वा सा दण्ड्या कृष्णलानि
षट् ॥"
प्र + ईक्ष् + भावे अः । टाप् ।) ईक्षणम् ।
इति भरतः ॥ (यथा, भागवते । ३ । १६ । ७ ।
"यत्सेवया चरणपद्मपवित्ररेणुं
सद्यःक्षताखिलमलं प्रतिलब्धशीलम् ।
न श्रीर्विरक्तमपि मां विजहाति यस्याः
प्रेक्षालवार्थमितरे नियमान् वहन्ति ॥")
शाखा । इति शब्दरत्नावली ॥ (शोभा । यथा,
भागवते । ३ । ८ । २५ ।
"प्रेक्षां क्षिपन्तं हरितोपलाद्रेः
सन्ध्याभ्रनीवेरुरुरुक्ममूर्द्ध्नः ।
रत्नोदधारौषधिसौमनस्य-
वनस्रजो वेणुभुजाङ्घ्रिपाङ्घ्रेः ॥"
"हरितोपलाद्रेर्म्मरकतशिलामयपर्व्वतस्य प्रेक्षां
शोभां क्षिपन्तं स्वलावण्यातिशयेन तिरस्कुर्व्व-
न्तम् ॥" इति तट्टीकायां स्वामी ॥)

**प्रेङ्खन्** [त्] त्रि, (प्र + इखि गतौ + शतृ ।) चलन-
विशिष्टः । संसक्तिविशिष्टः । यथा, --
"ज्याकृष्टिबद्धखटकामुखपाणिपृष्ठ-
प्रेङ्खन्नखांशुचयसंवलितोऽम्बिकायाः ॥"
इत्याद्यमरुशतके । १ ॥

**प्रेङ्खा**, स्त्री, (प्रेङ्ख्यते गम्यतेऽनयेति । प्र + इखि
गतौ + करणे घञ् । टाप् ।) दोला । इत्य-
मरः । २ । ८ । ५३ ॥ (यथा, सुश्रुते चिकित्-
सितस्थाने २४ अध्याये । "नाग्निगोगुरुब्राह्मण-
प्रेङ्खादम्पत्यन्तरेणाभियायात् ॥" * ॥) पर्य्यटनम् ।
अश्वगतिः । संवेशनान्तरम् । इति मेदिनी ।
खे, ३ ॥ नृत्यम् । इति धरणिः ॥

**प्रेङ्खितं**, त्रि, (प्र + इखि गतौ + क्तः ।) कम्पितम् ।
इत्यमरः । ३ । १ । ८७ ॥

**प्रेङ्खोल**, त् क चापले । इति कविकल्पद्रुमः ॥
(अदन्त चुरा०-पर०-अक०-सेट् ।) अन्तःस्थ-
तृतीयोपधः । अपिप्रङ्खोलत् । चापलं चञ्चली-
भावः । इति दुर्गादासः ॥

**प्रेङ्खोलनं**, क्ली, (प्रेङ्खोल्यते चल्यतेऽनेनेति ।
प्रेङ्खोल + करणे ल्युट् ।) दोला । इति हेम-
चन्द्रः ॥ (भावे ल्युट् । कम्पनम् । यथा, सुश्रुते
निदानस्थाने ८ अध्याये । "विरेचनप्रेङ्खोलनाजीर्ण-
गर्भशातनप्रभृतिभिर्विशेषैर्बन्धनान्मुच्यते गर्भः
फलमिव वृन्तबन्धनादभिघातविशेषैः ॥")

**प्रेङ्खोलितं**, त्रि, (प्रेङ्खोल + क्तः ।) दोलितम् । तत्-
पर्य्यायः । तरलितम् २ लुलितम् ३ प्रेङ्खितम् ४
धुतम् ५ चलितम् ६ कम्पितम् ७ धूतम् ८ वेल्लि-
तम् ९ आन्दोलितम् १० । इति हेमचन्द्रः ॥

**प्रेतः**, पुं, (प्र + इ गतौ + क्तः ।) नरकस्थप्राणी ।
इत्यमरः । ३ । ३ । ५९ ॥ भूतभेदः । मृते, त्रि ।
इति मेदिनी । ते, ३७ ॥ (यथा, मनुः । २ । २४७ ।
"आचार्य्ये तु खलु प्रेते गुरुपुत्त्रे गुणान्विते ।
गुरुदारे सपिण्डे वा गुरुवत् वृत्तिमाचरेत् ॥")
वैदिकविधानेन और्द्ध्वदेहिकाभावात् विष्णुद्वेषाच्च
बहुनरकभोगान्ते प्रेतशरीरं भवति । यथा, --
लोमश उवाच ।
"ततो बहुतिथे काले स राजा पञ्चतां गतः ।
वैदिकेन विधानेन न लेभे सौर्द्ध्वदेहिकम् ॥
विष्णुप्रद्वेषमात्रेण युगानां सप्तविंशतिम् ।
भुक्त्वा च यातनां यामीं निस्तीर्णनरको नृपः ॥
समया गिरिराजन्तु पिशाचोऽभूत्तदा
महान् ॥"
तस्य रूपं यथा, --
"देवद्युतिरधीयानः शुश्राव करुणामयः ।
समागत्य ततस्तत्र तं पिशाचं ददर्श सः ॥
विकरालमुखं दीनं पिशङ्गनयनं भृशम् ।
ऊर्द्ध्वमूर्द्धजकृष्णाङ्गं यमदूतमिवापरम् ॥
चलज्जिह्वञ्च लम्बोष्ठं दीर्घजङ्घशिराकुलम् ।
दीर्घाङ्घ्रिं शुष्कतुण्डञ्च गर्त्ताक्षं शुष्कपञ्जरम् ॥"
इति पाद्मोत्तरखण्डे १६ अध्यायः ॥ * ॥

प्रेतत्यादि जनककर्म्माणि यथा, --
"हविर्ज्जुह्वति नाग्नौ ये गोविन्दं नार्च्चयन्ति ये ।
लभन्ते नात्मविद्याञ्च सुतीर्थविमुखाश्च ये ॥
सुवर्णं वस्त्रताम्बूलं रत्नमन्नं फलं जलम् ।
आर्त्तेभ्यो न प्रयच्छन्ति सर्व्वे सुकृतदारकाः ॥
ब्रह्मस्वञ्च स्त्रीधनानि लोभादेव हरन्ति ये ।
बलेन छद्मना वापि धूर्त्ताश्च परवञ्चकाः ॥
नास्तिकाः कुहकाश्चौरा ये चान्ये वकवृत्तयः ।
बालवृद्धातुरस्त्रीषु निर्द्दयाः सत्यवर्ज्जिताः ॥
अग्निदा गरदा ये च ये चान्ये कूटसाक्षिणः ।
अगम्यागामिनः सर्व्वे ये चान्ये ग्रामयाजिनः ॥
व्याधाचरणसम्पन्ना वर्णादिधर्म्मवर्ज्जिताः ।
देवोपदेवदनुजरक्षोयक्षादिसेविनः ॥
सर्व्वदा मादकद्रव्यपानमत्ता हरिद्विषः ।
देवतोच्छिष्टपतितनृपश्राद्धान्नभोजिनः॥
असत्कर्म्मरता नित्यं सर्व्वपातकपापिनः ।
पाषण्डधर्म्माचरणाः पुरोधोवृत्तिजीविनः ॥
पितृमातृस्नुषापत्यस्वदारत्यागिनश्चये ।
ये कदर्य्याश्च लुब्धाश्च नास्तिका धर्म्मदूषकाः ॥
त्यजन्ति स्वामिनं युद्धे त्यजन्ति शरणागतम् ।
गवां भूमेश्च हर्त्तारो ये चान्ये रत्नदूषकाः ॥
महाक्षेत्रेषु सर्व्वेषु प्रतिग्रहरताश्च ये ।
परद्रोहरता ये च तथा ये प्राणिहिंसकाः ॥
परापवादिनः पापा देवतागुरुनिन्दकाः ।
कुप्रतिग्राहिणः सर्व्वे सम्भवन्ति पुनः पुनः ॥
प्रेतराक्षसपैशाच्यतिर्य्यग्वृक्षकुयोनिषु ।
न तेषां सुखलेशोऽस्ति इह लोके परत्र च ॥"
इति पाद्मोत्तरखण्डे १८ अध्यायः ॥ * ॥
पञ्चप्रेतोपाख्यानं यथा, --
ब्राह्मण उवाच ।
"प्रेतानां नाम जातीनां युष्माकं सम्भवः कथम् ।
किन्तत् कारणमुद्दिश्य यूयमीदृशनामकाः ॥
प्रेता ऊचुः ।
अहं स्वादु सदा भुक्त्वा दद्यां पर्य्युषितं सदा ।
एतत्कारणमुद्दिश्य नाम पर्य्युषितं मम ॥ १ ॥
सूचिता बहवोऽनेन विप्राद्या ह्यन्नकाङ्क्षिणः ।
एतत् कारणमुद्दिश्य सूचीमुखमिमं विदुः ॥ २ ॥
शीघ्रं गच्छति विप्रेण याचितः क्षुधितेन वै ।
पश्चाद्भुङ्क्ते द्विजः शिष्टमेष शीघ्रक उच्यते ॥ ३ ॥
गृहोपरि सदा भुङ्क्ते स्वादु द्विजभयेन हि ।
द्विजाय कुत्सितं दत्त्वा एष रोहक उच्यते ॥ ४ ॥
मौनेनापि स्थिरो नित्यं याचितो विलिखेन्महीम् ।
अस्माकमवि पापिष्ठो लेखको नाम एष वै ॥ ५ ॥
मेढ्रेण लेखको याति रोहकः पार्श्वतःशिराः ।
शीघ्रकः पङ्गुतां प्राप्तः सूची सूचीमुखोऽभवत् ॥"
प्रेतानामाहारो यथा, --
द्विज उवाच ।
"ये जीवा भुवि तिष्ठन्ति सर्व्वे आहारमूलकाः ।
युष्माकमपि आहारं ओतुमिच्छामि तत्त्वतः ॥
प्रेता ऊचुः ।
शृणु आहारमस्माकं सर्व्वसत्त्वविगर्हितम् ।
श्लेष्ममूत्रपुरीषेण योवितान्तु मलेन च ॥
गृहाणि त्यक्तशौचानि प्रेता भुञ्जन्ति तत्र वै ॥
स्त्रीभिर्जग्धानि जीर्णानि संकीर्णापहतानि च ।
मलेनातिजुगुप्सानि प्रेता भुञ्जन्ति तत्र वै ॥
भयलज्जाविहीनानि पतितैः सेवितानि च ।
अन्योन्यदस्युयुक्तानि प्रेता भुञ्जन्ति तत्र वै ॥
कलहान्वितशोकानि त्यक्तशोभानि मण्डनैः ।
सवर्च्चस्कानि भाण्डानि प्रेता भुञ्जन्ति तत्र वै ॥
वलिमन्त्रविहीनानि द्विजादृष्टानि यानि तु ।
नियमव्रतहीनानि प्रेता भुञ्जन्ति तत्र वै ॥
गुरवो नैव पूज्यन्ते स्त्रीजितानि मलानि च ।
सक्रोधान्यपवित्राणि प्रेता भुञ्जन्ति तत्र वै ॥
भुञ्जन्ति भिन्नभाण्डेषु मर्य्यादारहितेषु च ।
अन्योन्योच्छिष्टयुक्तेषु तत्र प्रेतास्तु भुञ्जते ॥
सकेशमाक्षिकोच्छिष्टं पूतिपर्य्युषितं तथा ।
सक्रोधञ्च सशोकञ्च तच्च प्रेतेषु भोजनम् ॥
सनग्नं भोजनं यच्च नोत्तरीयं पदासनम् ।
सोष्णीषं सासुरीकक्षं तच्च प्रेतेषु भोजनम् ॥
अर्द्धग्रासं महाग्रासं सोत्क्षिप्तं पतितं तथा ।
दुर्भुक्तं गोष्ठिकञ्चैव तच्च प्रेतेषु भोजनम् ॥
सौतिकं मृतकञ्चैव रजसं कलुषीकृतम् ।
निर्द्दीपं कृमिवच्चाग्रे यद्भुक्तं प्रैतिकन्तु तत् ॥
एतत्ते कथितं सर्व्वं यत् प्रेतेष्वेव भोजनम् ।
निर्व्विण्णाः प्रेतजात्या वै पृच्छामस्त्वां द्विजो-
त्तम ! ॥" * ॥
प्रेतत्वाभावकारणं यथा, --
"न प्रेतो जायते येन येन चैवेह जायते ।
एतत् सर्व्वं समासेन प्रब्रूहि वदतां वर ! ॥
ब्राह्मण उवाच ।
एकरात्रं त्रिरात्रं वा कृच्छं चान्द्रायणादिकम् ।
व्रतेष्वप्युषियो यस्तु न प्रेतो जायते नरः ॥
मिष्टान्नपानदाताथ सततं श्रद्धयान्वितः ।
देवपूजाकरो नित्यं न प्रेतो जायते नरः ॥
त्रिरग्निरेकपञ्चाग्निर्निरग्निर्वाप्युपासकः ।
सर्व्वभूतदयापन्नो न प्रेतो जायते नरः ॥
तुल्यमानापमानश्च तुल्यः काञ्चनलोष्टयोः ।
तुल्यः शत्री च मित्रे च न प्रेतो जायते नरः ॥
देवतातिथिपूजासु गुरुजातिषु नित्यशः ।
वेदशास्त्ररतो नित्यं न प्रेतो जायते नरः ॥
जितक्रोधो मदैश्वर्य्यतृष्णासङ्गविवर्ज्जितः ।
क्षमाक्रोधसुशीलश्च न प्रेतो जायते नरः ॥
देवतातिथिपूजास्तु पर्व्वतांश्च नदीस्तथा ।
पश्येद्देवालयांश्चैव न प्रेतो जायते नरः ॥" * ॥
प्रेतत्वकारणं यथा, --
"शूद्रान्नं यो द्विजो भुङ्क्ते यः क्रामति द्विजो-
त्तमम् ।
वृत्तिहा द्विजदेवेषु स प्रेतो जायते नरः ॥
मातरं पितरं वृद्धं ज्ञातिं साधुजनं तथा ।
लोभात् त्यजति यः स्नेहं स प्रेतो जायते नरः ॥
अयाज्ययाजकश्चैव याज्यञ्च परिवर्जयेत् ।
शूद्रानुग्रहकर्त्ता च स प्रेतो जायते नरः ॥
कुज्योतिषि कुविद्यस्तु कुजनेषु कुदेशकः ।
शूद्रसेवाकरो राज्ञा स प्रेतो जायते नरः ॥
सेवकायापद्गतो यः सेवकस्त्वपरिग्रहः ।
ताबुभावपि जायेते प्रेतौ कालान्नविक्रयः ॥
द्विजानुमन्त्रितो भुङ्क्ते शूद्रान्नं वा द्विजस्य तु ।
शूद्रेणैव द्विजः प्रेतो निरयानुपगच्छति ॥
गीतवाद्यरतो नित्यं मद्यपस्त्रीनिषेवणात् ।
द्यूतमांसप्रियो यस्तु स प्रेतो जायते नरः ॥
वृथारेतो वृथामांसो वृथावादी वृथामतिः ।
निन्दको द्विजदेवानां स प्रेतो जायते नरः ॥
वृद्धं बालं गुरुं विप्रं योऽवमन्य भुनक्ति वै ।
कन्यां ददाति शुल्केन स प्रेतो जायते नरः ।
न्यासापहर्त्ता मित्रध्रुक् परपाकरतस्तथा ।
विश्रम्भघाती कूटश्च स प्रेतो जायते नरः ॥
निर्द्दोपान् सुहृदो नारीस्त्यजेत् कालान्न
पाति यः ।
धनमीहेत यस्तेषां स प्रेतो जायते नरः ॥
हस्त्यश्वरथयानानि मृतशय्यासनादि यः ।
कृष्णाजिनञ्च गृह्णाति अनापत्सु गतो द्विजः ॥
तथोभयमुखीं कालं सशैलां मेदिनीं द्विजः ।
कुरुक्षेत्रस्य यद्दानं चाण्डालात् पतितात्तथा ।
मासिकेऽपि नवश्राद्धे भुञ्जन् प्रेतान्न मुच्यते ॥
ब्रह्महा गोवधी स्तेयी सुरापो गुरुतल्पगः ।
भूमिकन्यापहर्त्ता यः स प्रेतो जायते नरः ॥
लालासङ्करकृन्नित्यं वर्णसङ्करकृत्तथा ।
योनिसङ्करकृच्चापि स प्रेतो जायते नरः ॥
विक्रीणाति विषं शङ्खं तिलानां लवणस्य तु ।
गवां केशरिणां मोहात् विक्रयात् प्रेततां
व्रजेत् ॥
कूटमाप्ये च तौल्येन क्रयं क्रीणाति विक्रयात् ।
मद्यतक्रपयोदध्नां स प्रेतो जायते नरः ॥
स्त्रीरक्तो मद्यमाने तु मृगयामनुधावति ।
नित्यनैमित्तिकेऽदाता स प्रेतो जायते नरः ॥"
इत्यग्निपुराणम् ॥ * ॥
मनुष्याणां आतिवाहिकदेहानन्तरं प्रेतदेहो
भवति । यथा, विष्णुधर्म्मोत्तरे ।
"तत्क्षणादेव गृह्णाति शरीरमातिवाहिकम् ।
आतिवाहिकसंज्ञोऽसौ देहो भवति भार्गव ! ॥
केवलं तन्मनुष्याणां नान्येषां प्राणिनां क्वचित् ।
प्रेतपिण्डैस्ततो दत्तैर्देहमाप्नोति भार्गव ! ॥
भोगदेहमिति प्रोक्तं क्रमादेव न संशयः ।
प्रेतपिण्डा न दीयन्ते यस्य तस्य विमोक्षणम् ॥
श्माशानिकेभ्यो देवेभ्य आकल्पं नैव विद्यते ।
तत्रास्य यातना घोराः शीतवातातपोद्भवाः ॥
ततः सपिण्डीकरणे बान्धवैः स कृते नरः ।
पूर्णे संवत्सरे देहमतोऽन्यं प्रतिपद्यते ॥
ततः स नरके याति स्वर्गे वा स्वेन कर्म्मणा ॥"
इति शुद्धितत्त्वम् ॥

**प्रेतकार्य्यं**, क्ली, (प्रेताय प्रेतस्य वा कार्य्यम् ।)
नृतस्य दाहादिसपिण्डीकरणान्तंकर्म्म । यथा,
"अकृत्वा प्रेतकार्य्याणि प्रेतस्य धनहारकः ।
वर्णानां यद्वधे प्रोक्तं तद्व्रतं नियतश्चरेत् ॥"
इति दायतत्त्वम् ॥
(यथाच महाभारते । १ । १०२ । ६५ ।
"धर्म्मात्मा स तु गाङ्गेयश्चिन्ताशोकपरायणः ।
प्रेतकार्य्याणि सर्व्वाणि तस्य सम्यगकारयत् ॥")

**प्रेतगृहं**, क्ली, (प्रेतस्य गृहम् ।) श्मशानम् । इति

हेमचन्द्रः । ४ । ५५ ॥

**प्रेततर्पणं**, क्ली, (प्रेतस्य तर्पणम् ।) मरणावधि-

सपिण्डीकरणपर्य्यन्तं प्रेतशब्दोल्लेखेन जलदानम् ।
यथा । "अत्र प्रेततर्पणे तिलांस्त्विति विशेषो-
पादानात् सूर्य्यादिवारेणापि तिलैरेव तर्पणं
प्रतीयते ॥ तदनुष्ठानं यथा । अपः सर्व्वे शव-
स्पर्शिनो गत्वा पितृपदस्थाने प्रेतपदोहेन द्विती-
यान्तं तर्पयेयुः पितृशब्दोच्चारणेऽपि पितृहा
भवति । एतेन अमुकगोत्रं प्रेतं अमुकदेव-
शर्म्माणं तर्पयामि । इति सामगानां प्रयोगः ।
यजुर्व्वेदिनान्तु अमुकगोत्र प्रेत अमुकदेवशर्म्मन्
तृप्यस्व । इति सम्बोधनान्तवाक्यम् ।" इति
शुद्धितत्त्वम् ॥

**प्रेतदेहः**, पुं क्ली, (प्रेतस्य देहः ।) प्रेतशरीरम् ।

यथा, --
"कृते सपिण्डीकरणे नरः संवत्सरात् परम् ।
प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते ॥"
इति तिथ्यादितत्त्वधृतविष्णुधर्म्मोत्तरीयवचनम् ॥
पूरकपिण्डदानेन तदुत्पत्तिर्यथा, --
"शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते सदा ।
द्वितीयेन तु कर्णाक्षिनासिकास्तु समासतः ॥
गलांसभुजवक्षांसि तृतीयेन यथाक्रमात् ।
चतुर्थेन तु पिण्डेन नाभिलिङ्गगुदानि च ॥
जानुजङ्घे तथा पादौ पञ्चमेन तु सर्व्वदा ।
सर्व्वमर्म्माणि षष्ठेन सप्तमेन तु नाडयः ॥
दन्तलोमाद्यष्टमेन वीर्य्यश्च नवमेन तु ।
दशमेन च पूर्णत्वं तृप्तता क्षुद्विपर्य्ययः ॥"
इति शुद्धितत्त्वधृतकूर्म्मपुराणवचनम् ॥

**प्रेतनदी**, स्त्री, (प्रेततरणीया नदी ।) वैतरणी ।

इति शब्दरत्नावली ॥

**प्रेतपक्षः**, पुं, (प्रेतप्रियः पक्षः ।) गौणचान्द्रा-

श्विनकृष्णपक्षः । तत्र मृतस्य पार्व्वणविधिना
सांवत्सरिकं श्राद्ध्वं कर्त्तव्यम् । यथा, --
"आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे ।
यो वै श्राद्धं नरः कुर्य्यादेकस्मिन्नपि वासरे ॥
तस्य संवत्सरं यावत्तृप्ताः स्युः पितरो ध्रुवम् ॥
नभा वाथ नभस्यो वा मलमासो यदा भवेत् ।
सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः ॥" इति ।
तत्र मृतस्य ।
"सपिण्डीकरणादूर्द्ध्वं यत्र यत्र प्रदीयते ।
तत्र तत्र त्रयं कुर्य्याद्वर्ज्जयित्वा मृताहनि ॥
अमावास्यां क्षयो यस्य प्रेतपक्षेऽथवा पुनः ।
सपिण्डीकरणादूर्द्ध्वं तस्योक्तः पार्व्वणो विधिः ॥"
इति शङ्खोक्तेन प्रत्याब्दिकं पार्व्वणविधिना कर्त्त-
व्यम् । इति मलमासतत्त्वम् ॥ * ॥ तत्र निषिद्ध-
दिनेऽपि तिलतर्पणं कर्त्तव्यम् । यथा, स्मृतिः ।
"तीर्थे तिथिविशेषे च गङ्गायां प्रेतपक्षके ।
निषिद्धेऽपि दिने कुर्य्यात् तर्पणं तिलमिश्रितम् ॥"
इति च मलमासतत्त्वम् ॥

**प्रेतपटहः**, पुं, (प्रेतस्य पटहः ।) मरणकाले

वादनीयवाद्यविशेषः । तत्पर्य्यायः । भवरुत् २
मृत्युभङ्कुरकः ३ । इति त्रिकाण्डशेषः ॥

**प्रेतपतिः**, पुं, (प्रेतानां पतिः ।) यमः । इति

हलायुधः ॥ (यथा, मार्कण्डेये । १०८ । ४ ।
"दण्डः प्रेतपतेः शक्तिर्व्वैसेनापतेस्तथा ।
अन्येषाञ्चैव देवानामायुधानि स विश्वकृत् ।
चकार तेजसा भानोर्भासुराण्यरिशान्तये ॥")

**प्रेतपिण्डः**, पुं, (प्रेताय देयः पिण्डः ।) मरणावधि-

सपिण्डीकरणपर्य्यन्तं प्रेतसम्प्रदानकपिण्डाकारा-
न्नम् । यथा, --
"न स्वधाञ्च प्रयुञ्जीत प्रेतपिण्डे दशाहिके ।
भाषेतैतच्च वै पिण्डं यन्नदत्तस्य पूरकम् ॥" * ॥
तत्तत्पिण्डस्य प्रेताङ्गकरणत्वं यथा, ब्रह्मपुराणे ।
"शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते सदा ।
द्वितीयेन तु कर्णाक्षिनासिकास्तु समासतः ॥
गलांसभुजवक्षांसि तृतीयेन तथा क्रमात् ।
चतुर्थेन तु पिण्डेन नाभिलिङ्गगुदानि च ॥
जानुजङ्घे तथा पादौ पञ्चमेन तु सर्व्वदा ।
सर्व्वमर्म्माणि षष्ठेन सप्तमेन तु नाडयः ॥
दन्तलोमाद्यष्टमेन वीर्य्यञ्च नवमेन तु ।
दशमेन तु पूर्णत्वं तृप्तता क्षुद्विपर्य्ययः ॥" * ॥
तदकरणे दोषो यथा, --
"प्रेतपिण्डा न दीयन्ते यस्य तस्य विमोक्षणम् ।
श्माशानिकेभ्यो देवेभ्य आकल्पं नैव विद्यते ॥" * ॥
पूरकपिण्डदानेतिकर्त्तव्यता यथा । पार-
स्करः । प्रेताय पिण्डं दत्त्वा अवनेजनदान-
प्रत्यवनेजनेषु नामग्राहं मृण्मये तां रात्रिं
विहायसि क्षीरोदके निदध्युः प्रेतात्र स्नाहि
पिब चेदं क्षीरमित्युच्चार्य्येति । अत्र दानशब्देन
पिण्डदानमुक्तं बहुवचनात् । तेनावनेजनपिण्ड-
दानप्रत्यवनेजनेषु नामग्राहं नाम गृहीत्वा
प्रेतपिण्डानुष्ठानं समाप्यम् । विहायसि रात्रौ
क्षीरोदके प्रेतात्र स्नाहि पिब चेदं क्षीरमित्यु-
च्चार्य्य निदध्युः ।
"प्रथमेऽहनि यो दद्यात् प्रेतायान्नं समाहितः ।
यत्नान्नवसु चान्येषु स एव प्रददाव्यपि ॥" * ॥
प्रथमपिण्डकर्त्तृनियमवत्प्रथमपिण्डद्रव्यनियम-
माह शुनः पुच्छः ।
"प्रथमेऽहनि यद्द्रव्यं तदेव स्याद्दशाहिकम् ।
सद्यःशौचेऽपि दातव्याः सर्व्वेऽपि युगपत्तथा ॥
त्र्यहाशौचे प्रदातव्याः प्रथमे त्वेक एव हि ।
द्वितीयेऽहनि चत्वारस्तृतीये पञ्च चैव हि ॥
एकस्तोयाञ्जलिस्त्वेकं पात्रमेकञ्च दीयते ।
द्वितीये द्वौ तृतीये त्रीन् चतुर्थे चतुरस्तथा ॥
पञ्चमे पञ्च षष्ठे षट् सप्तमे सप्त एव च ।
अष्टमेऽष्टौ च नवमे नवैव दशमे दश ॥
येन स्युः पञ्चपञ्चाशत् तोनस्याञ्जलयः क्रमात् ।
तोयपात्राणि तावन्ति संयुक्तानि तिलादिभिः ॥"
इति शुद्धितत्त्वम् ॥

**प्रेतपुरं**, क्ली, (प्रेतानां पुरम् ।) यमालयः । यथा,

"यावश्च कन्यातुलयोः क्रमादास्ते दिवाकरः ।
तावत् श्राद्धस्य कालः स्यात् शून्यं प्रेतपुरं तदा ॥"
इति श्राद्धतत्त्वम् ॥

**प्रेतराक्षसी**, स्त्री, (प्रेतानां पिशाचभेदानां राक्ष-

सीवापसर्पणकारित्वात् ।) तुलसी । इति रत्न-
माला ॥

**प्रेतवनं**, क्ली, (प्रेतानां वनमिव ।) श्मशानम् ।

इति हेमचन्द्रः । ४ । ५५ ॥

**प्रेतवाहितः**, त्रि, (प्रेतेन वाहितः ।) भूताविष्टः ।

इति त्रिकाण्डशेषः ॥

**प्रेतशिला**, स्त्री, (प्रेतानां प्रेतेभ्यो वा या शिला ।)

पिण्डदानार्थगयास्थितप्रस्तरविशेषः । यथा, --
ब्रह्मोवाच ।
"येयं प्रेतशिला ख्याता गयायां सा त्रिधा स्थिता ।
प्रभासे प्रेतकुण्डे च गयासुरशिरस्यपि ॥
धर्म्मेण धारिता भूत्यै सर्व्वदेवमयी शिला ॥
प्रेतत्वं ये गता नृणां पित्राद्या बान्धवादयः ।
तेषामुद्धरणार्थाय यतः प्रेतशिला ततः ॥
अतोऽत्र मुनयो भूपा राजपत्न्यादयः सदा ।
तस्यां शिलायां श्राद्धादिकर्त्तारो ब्रह्मलोकगाः ॥
गयासुरस्य यन्मुण्डं तस्य पृष्ठे शिला यतः ।
मुण्डपृष्ठो गिरिस्तस्मात् सर्व्वदेवमयो ह्ययम् ॥
मुण्डपृष्ठस्य पादेषु यतो ब्रह्मसरोमुखाः ।
अरविन्दवनन्तेषु तेन चैवोपलक्षितः ॥
अरविन्दो गिरिर्नाम क्रौञ्चपादाङ्कितो यतः ।
तस्माद्गिरिः क्रौञ्चपदः पितृणां ब्रह्मलोकदः ॥
गदाधरादयो देवा आद्या आदौ व्यवस्थिताः ।
शिलारूपेण च व्यक्तास्तस्माद्देवमयी शिला ।
गयाशिरश्छादयित्वा गुरुत्वादास्थिता शिला ॥ * ॥
स्नात्वा प्रेतशिलादौ तु चरणाम्बुसृतेन च ।
पिण्डं दद्यादिमैर्म्मन्त्रैरावाह्य च पितॄन् परान् ॥
अस्मत्कुले मृता ये च गतिर्येषां न विद्यते ।
तेषामावाहयिष्यामि दर्भपृष्ठे तिलोदकैः ॥
पितृवंशे मृता ये च मातृवंशे च ये मृताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥
मातामहकुले ये च गतिर्येषां न जायते ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥
अजातदन्ता ये केचित् ये च गर्भेषु पीडिताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥
बन्धुवर्गाश्च ये केचिन्नामगोत्रविवर्ज्जिताः ।
स्वगोत्रे परगोत्रे या गतिर्येषां न विद्यते ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥
उद्बन्धनमृता ये च विषशस्त्रहताश्च ये ।
आत्मोपघातिनो ये च तेभ्यः पिण्डं ददाम्यहम् ॥
अग्निदाहे मृता ये च सिंहव्याघ्रहताश्च ये ।
दंष्ट्रिभिः शृङ्गिभिर्व्वापि तेषां पिण्डं ददाम्यहम् ॥
अग्निदग्धाश्च ये केचिन्नाग्निदग्धास्तथापरे ।
विद्युच्चौरहता ये च तेषां पिण्डं ददाम्यहम् ॥
रौरवे चान्धतामिस्रे कालसूत्रे च ये गताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥
असिपत्रवने घोरे कुम्भीपाके च ये गताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥
अन्येषां यातनास्थानां प्रेतलोकनिवासिनाम् ।

तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥
पशुयोनिगता ये च पक्षिकीटसरीसृपाः ।
अथवा वृक्षयोनिस्थास्तेभ्यः पिण्डं ददाम्यहम् ॥
असंख्ययातनासंस्था ये नीता यमशासने ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥
जात्यन्तरसहस्राणि भ्रमन्तः स्वेन कर्म्मणा ।
मानुष्यं दुर्लभं येषां तेभ्यः पिण्डं ददाम्यहम् ॥
ये बान्धबाबान्धवा वा येऽन्यजन्मनि बान्धवाः ।
ते सर्व्वे तृप्तिमायान्तु पिण्डदानेन सर्व्वदा ॥
ये केचित् प्रेतरूपेण वर्त्तन्ते पितरो मम ।
ते सर्व्वे तृप्तिमायान्तु पिण्डदानेन सर्व्वदा ॥
ये मे पितृकुले जाताः कुले मातुस्तथैव च ।
गुरुश्वशुरबन्धूनां ये चान्ये बान्धवा मृताः ॥
ये मे कुले लुप्तपिण्डाः पुत्त्रदारविवर्जिताः ।
क्रियालोपगता ये च जात्यन्धाः पङ्गवस्तथा ॥
विरूपास्त्वामगर्भा ये ज्ञाताज्ञाताः कुले मम ।
तेषां पिण्डं मया दत्तमक्षय्यमुपतिष्ठताम् ॥
साक्षिणः सन्तु मे देवा ब्रह्मेशानादयस्तथा ।
मया गयां समासाद्य पितणां निष्कृतिः कृता ॥
आगतोऽहं गयां देव ! पितृकार्य्ये गदाधर ! ।
तन्मे साक्षी भवस्वाद्य अनृणोऽहमृणत्रयात् ॥"
इति गारुडे गयामाहात्म्ये । ८५-८६ । अध्यायौ ॥

**प्रेतशौचं**, क्ली, (प्रेते सति प्रेतस्य वा शौचम् ।)
मृतसंस्कारादि । यथा, --
याज्ञवल्क्य उवाच ।
"प्रेतशौचं प्रवक्ष्यामि तच्छृणुध्वं यतव्रताः ।
ऊनद्विवर्षं निखनेन्न कुर्य्यादुदकन्ततः ॥
आश्मशानादनुव्रज्य इतरो ज्ञातिभिर्मृतः ।
यमसूक्तं तथा जप्यं जपद्भिर्लौकिकाग्निना ॥
स दग्धव्य उपेतश्चेदाहिताग्न्यावृतार्थवत् ।
सप्तमाद्दशमाद्वापि ज्ञातयो ह्युपयन्त्यपः ॥
अप नः शोशुचदघमनेन पितृदिङ्मुखाः ।
एवं मातामहाचार्य्यप्रेतानाञ्चोदकक्रियाः ॥
कामोदकाः सखिपुत्त्रस्वस्रीयश्वशुरर्त्विजः ।
नामगोत्रेण ह्युदकं सकृत् सिञ्चन्ति वाग्यताः ॥
पाषण्डपतितस्तेना न कुर्य्युरुदकक्रियाम् ।
न ब्रह्मचारिणो व्रात्या योषितः कामगास्तथा ॥
सुरापास्त्वात्मघातिन्योनाशौचोदकभाजनाः ।
अतो न रोदितव्यं हि त्वनित्या जीवसंसृतिः ॥
क्रिया कार्य्या यथाशक्ति ततो गच्छेद्गृहान्
प्रति ।
विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः ॥
आचम्याथाग्निमुदकं गोमयं गौरसर्षपान् ।
प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः ॥
प्रवेशनादिकं कर्म्म प्रेतसंस्पर्शिनामपि ।
ईक्षतां तत्क्षणाच्छुद्धिः परेषां स्नानसंयमात् ॥
क्रीतलब्धाशना भूमौ स्वपेयुस्ते पृथक् पृथक् ।
पिण्डयज्ञावृता देयं प्रेतायान्नं दिनत्रयम् ॥
जलमेकाहमाकाशे स्थाप्यं क्षीरञ्च मृण्मये ।
वैतालोपासनाः कार्य्याः क्रियाश्च श्रुतिचोदिताः ॥
आदन्तजन्मनः सद्य आचूडान्नैशिकी स्मृता ।
त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परम् ॥
त्रिरात्रं दशरात्रं वा शावमाशौचमुच्यते ।
ऊनद्विवर्ष उभयोः सूतकं मातुरेव हि ।
अन्तरा जन्ममरणे शेषाहोभिर्विशुद्ध्यति ॥
दश द्वादश वर्णानां तथा पञ्चदशैव च ।
त्रिंशद्दिनानि च तथा भवति प्रेतसूतकम् ॥
अहस्त्वदत्तकन्यासु बालेषु च विशोधनम् ।
गुर्व्वन्ते वास्यानूचानमातुलश्रोत्रियेषु च ॥
अनौरसेषु पुत्त्रेषु भार्य्यास्वन्यगतासु च ।
निवासराजनि तथा तदहः शुद्धिकारणम् ॥
हतानां नृपगोविप्रैरन्वक्षं चात्मघातिनाम् ।
विषाद्यैश्च हतानाञ्च नाशौचं पृथिवीपते ॥
सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदांतथा ।
दाने विवाहे यज्ञे च संग्रामे देशविप्लवे ।
आपद्यपि हि कष्टायां सद्यःशौचं विधीयते ॥
कालोऽग्निः कर्म्ममृद्वायुर्म्मनो ज्ञानं तपो जलम् ।
पश्चात्तपो निराहारः सर्व्वेषां शुद्धिहेतवः ॥"
इति गारुडे १०६ अध्यायः ॥

**प्रेतश्राद्धं**, क्ली, (प्रेताय प्रेतोद्देश्यकं वा श्राद्धम् ।)
प्रेतोद्देश्यकश्राद्धम् । तदनुष्ठानं यथा । तत्र
गोभिलः । अथैकोद्दिष्टमेकं पवित्रमेकोऽर्घ एकः
पिण्डो नावाहनं नाग्नौकरणं नात्र विश्वेदेवाः
स्वदितमिति तृप्तिप्रश्नः । उपतिष्ठतामित्यक्षय्य-
स्थाने अभिरम्यतामिति विसर्गोऽभिरतो-
ऽस्मीति प्रतिवचनमेतत् प्रेतश्राद्धमिति । इति
श्राद्धतत्त्वम् ॥ * ॥ तच्च नवश्राद्धं तत्तु साग्निक-
कर्त्तव्यं चतुर्थपञ्चमनवमैकादशाहेषु प्रेतश्राद्धम् ।
यथा यमः ।
"चतुर्थे पञ्चमे चैव नवमैकादशे तथा ।
तदत्र दीयते जन्तोस्तन्नवश्राद्धमुच्यते ॥"
इति श्राद्धविवेकः ॥ * ॥
साग्निनिरग्न्युभयकर्त्तव्यं आद्यश्राद्धादिसपिण्डी-
करणान्तं श्राद्धम् । यथा, --
"द्वादश प्रतिमास्यानि आद्यं षाण्मासिके तथा ।
सपिण्डीकरणञ्चैव इत्येतत् श्राद्धषोडशम् ॥"
इति श्राद्धतत्त्वम् ॥ * ॥
अम्बुघटश्राद्धम् । तत्तु संवत्सरं यावत् प्रत्यहं
प्रेतोद्देश्यकान्नजलदानरूपम् । यथा । पार-
स्करः । अहरहरन्नमस्मै ब्राह्मणायोदकुम्भञ्च
दद्यात् पिण्डमप्येके निगृणन्ति । ददतीत्यर्थः । इति
श्राद्धविवेकः ॥ * ॥ गयादितीर्थद्रव्यादिप्राप्ति-
निमित्तमेकोद्दिष्टश्राद्धम् । यथा, --
"पितृयज्ञन्तु निर्व्वर्त्त्य मासिके श्राद्ध एव तु ।
श्राद्धं प्रतिरुचौ चैव मातापित्रोर्मृताहनि ॥
असपिण्डीकृतं प्रेतमेकोद्दिष्टेन तर्पयेत् ॥
तेनाम्बुघटश्राद्धे मृताहविहितमासिके तथा
विशिष्टतीर्थद्रव्यादिप्राप्तौ प्रेतश्राद्धकरणेच्छायां
मातापित्रोर्म्मृताहनि च असपिण्डीकृतं प्रेत-
मेकोद्दिष्टेन तर्पयेत् ।" इति श्राद्धतत्त्वम् ॥

**प्रेता**, स्त्री, (प्रेत + स्त्रियां टाप् ।) प्रेतभावा-
पन्ना । यथा । विष्णुरोम् तत् सदित्यादि अमुक-
गोत्रायाः प्रेताया अमुकीदेव्या अशौचान्ता-
द्द्वितीयेऽह्नि अमुकगोत्रायाः प्रेतायाः प्रेतत्व-
विमुक्तिपूर्ब्बकस्वर्गलोकगमनकामः सोपकरण-
चन्दनाङ्कितधेनुदानमहं करिष्यामि । इति
मौर्खहा ॥ * ॥ मृता । यथा, --
"प्रेतायाः पुत्त्रिकाया न भर्त्ता धनमर्हत्य-
पुत्त्रायाः ।" इति दायभागे शङ्खलिखितौ ॥

**प्रेत्य**, व्य, (प्र + इ + ल्यप् ।) लोकान्तरम् । तत्-
पर्य्यायः । अमुत्र २ । इत्यमरः । ३ । ४ । ८ ॥
(यथा, मनुः । २ । ९ ।
"श्रुतिस्मृत्युदितं धर्म्ममनुतिष्ठन् हि मानवः ।
इह कीर्त्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ॥")

**प्रेम**, [न्] क्ली, पुं, (प्रियस्य भावः । प्रिय +
"पृथ्वादिभ्य इमनिज्वा ।" ५ । १ । १२२ ।
इति इमनिच् । "प्रियस्थिरेति ।" ६ । ४ । १५७ ।
इति प्रादेशः । प्री तर्पणे + मनिन् वा ।)
सौहार्द्दम् । तत्पर्य्यायः । प्रेमा २ प्रियता ३
हार्द्दम् ४ स्नेहः ५ । इत्यमरः । १ । ७ । २७ ॥
(यथा, देवीभागवते । १ । १४ । २४ ।
"दृष्ट्वा व्यासः शुकं प्राप्तं प्रेम्णोत्थाय ससम्भ्रमः ।
आलिलिङ्ग मुहुर्घ्राणं मूर्द्ध्नि तस्य चकार ह ॥")
नर्म्म । इति मेदिनी । ने, ९४ ॥

**प्रेमपातनं**, क्ली, (प्रेम्णः स्नेहस्य पातनं यस्मात् ।
प्रेम्णा पातनं यस्येति वा ।) रोदनम् । नेत्र-
जलम् । इति शब्दचन्द्रिका ॥

**प्रेमभक्तिः**, स्त्री, (प्रेम्णा भक्तिः ।) स्नेहयुक्त-
श्रीकृष्णसेवा । विष्ण्वैकान्तिकममता । तल्लक्षणं
यथा, नारदपञ्चरात्रे ।
"अनन्यममता विष्णौ ममता प्रेमसंप्लुता ।
भक्तिरित्युच्यते भीष्म ! प्रह्लादोद्धवनारदैरिति ॥
प्रेमभक्तेश्च माहात्म्यं भक्तेर्म्माहात्म्यतः परम् ।
सिद्धमेव यतो भक्तेः फलं प्रेमैव निश्चितम् ॥" * ॥
अथ प्रेमसम्पत्तिचिह्नानि यथा, भागवते ७ स्कन्धे
७ अध्याये श्रीप्रह्लादस्य बालानुशासने ।
"निशम्य कर्म्माणि गुणानतुल्यान्
वीर्य्याणि लीलातनुभिः कृतानि ।
यदातिहर्षोत्पुलकाश्रुगद्गदं
प्रोत्कण्ठ उद्गायति रौति नृत्यति ॥
यदा ग्रहग्रस्त इव क्वचिद्धस-
त्याक्रन्दते ध्यायति वन्दते जनम् ।
मुहुः श्वसन् वक्ति हरे जगत्पते
नारायणेत्यात्ममतिर्गतत्रपः ॥
तदा पुमान् मुक्तसमस्तबन्धन-
स्तद्भावभावानुकृताशयाकृतिः ।
निर्द्दग्धबीजानुशयो महीयसा
भक्तिप्रयोगेण समेत्यधोक्षजम् ॥"
इति श्रीहरिभक्तिविलासे ११ विलासः ॥

**प्रेमा**, [न्] पुं, (प्रिय + इमनिच् । प्री तर्पणे + मनिन्
वा ।) स्नेहः । इत्यमरः । १ । ७ । २७ ॥ अस्य
लक्षणं यथा, --
"सर्व्वथा ध्वंसरहितं सत्यपि ध्वंसकारणे ।
यद्भावबन्धनं यूनोः स प्रेमा परिकीर्त्तितः ॥"
इत्युज्ज्वलनीलमणिः ॥
वासवः । वायुः । इति मेदिनी । ने, ९४ ॥

**प्रेमालिङ्गनं**, क्ली, (प्रेम्णा यदालिङ्गनम् ।) स्नेहेन परिस्वङ्गः । नायकनायिकयोरालिङ्गनविशेषः । तल्लक्षणं यथा । नायककटिं नायिकयैकपादेन वेष्टयित्वा द्वितीयं पादं तस्य जङ्घोपरि स्थापयित्वा यदालिङ्गनं तत् । इति कामशास्त्रम् ॥

**प्रेमी**, [न्] त्रि, (प्रेम अस्यास्तीति । इनिः ।) प्रेमयुक्तः । स्नेहविशिष्टः । प्रेमशब्दादस्त्यर्थे इन्प्रत्ययेन निष्पन्नः । इति व्याकरणम् ॥

**प्रेयसी**, स्त्री, (इयमनयोरतिशयेन प्रिया । प्रिय + ईयसुन् । "प्रियस्थिरेति ।" ६ । ४ । १५७ । इपि प्रादेशः । स्त्रियां ङीप् ।) प्रियतमा नारी । तत्पर्य्यायः । दयिता २ कान्ता ३ प्राणेशा ४ वल्लभा ५ प्रिया ६ हृदयेशा ७ प्राणसमा ८ प्रेष्ठा ९ प्रणयिनी १० । इति हेमचन्द्रः ॥

**प्रेयान्** [स्] पुं, (अयमनयोरतिशयेन प्रियः । प्रिय + ईयसुन् । प्रादेशः ।) पतिः । तत्पर्य्यायः । दयितः २ कान्तः ३ प्राणेशः ४ वल्लभः ५ प्रियः ६ हृदयेशः ७ प्राणसमः ८ प्रेष्ठः ९ प्रणयी १० । इति हेमचन्द्रः ॥ अतिप्रिये, त्रि । इति जटाधरः ॥

**प्रेरणं**, क्ली, (प्र + ईर् + णिच् + ल्युट् ।) प्रेषणम् । पाठान इति भाषा । यथा, नैषधे । ३ । ५५ ।
"धिक् चापले वत्सिमवत्सलत्वं
यत्प्रेरणादुत्तरलीभवन्त्या ॥"

**प्रेरणा**, स्त्री, (प्र + ईर् + णिच् + "ण्यासश्रन्थो युच् ।" ३ । ३ । १०७ । इति युच् ।) चोदना । (यथा, मेघदूते । ७० ।
"ह्रीमूढानां भवति विफला प्रेरणा चूर्णमुष्टिः ॥")
फलभावना । विधिरिति यावत् । इति धर्म्मदीपिका ॥

**प्रेरितः**, त्रि, (प्र + ईर् + क्तः ।) प्रेषितः । यथा, --
"नपुंसकमिति ज्ञात्वा प्रियायै प्रेरितं मनः ।
मनस्तत्रैव रमते हताः पाणिनिना वयम् ॥"
इति प्राचीनाः ॥

**प्रेत्वा** [न्] पुं, (प्रकर्षेण ईर्त्ते इति । प्र + ईर् गतौ + "प्र ईरशदोस्तुट् च ।" उणा० ४ । ११६ । इति क्वनिप् तुडागमश्च ।) समुद्रः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**प्रेत्वरी**, स्त्री, (प्रकर्षेण ईर्त्ते इति । प्र + ईर् गतौ + "प्र ईरशदोस्तुट् च ।" उणा० ४ । ११६ । इति क्वनिप् तुट् च । "वनोरच ।" ४ । १ । ७ । इति ङीप् रश्चान्तादेशः ।) नदी । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**प्रेष**, ऋ गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ॥)

**प्रेषः**, पुं, (प्र + ईष् + घञ् ।) प्रेषणम् । पीडा । इति जटाधरः ॥

**प्रेषणं**, क्ली, (प्रेष् + भावे ल्युट् ।) प्रेरणम् । यथा,
"जानीयात् प्रेषणे भृत्यान् बान्धवान् व्यसनागमे ।
मित्रञ्चापदि काले च भार्य्याञ्च विभवक्षये ॥"
इति चाणक्यसंग्रहः ॥

**प्रेषितं**, त्रि, (प्रेष् + क्तः ।) प्रेरितम् । तत्पर्य्यायः । प्रस्थापितम् २ प्रातिशिष्टम् ३ प्रतिहतम् ४ । इति हेमचन्द्रः ॥ (यथा, देवीभागवते । १ । ११ । ४६ ।
"प्रेषितोऽहं महाभाग ! शक्रेण त्वं विवक्षया ।
कथितं प्रभुणा यच्च तद् ब्रवीमि महामते ! ॥")

**प्रेष्ठः**, त्रि, (अयमेषामतिशयेन प्रिय इति । प्रिय + इष्ठन् । प्रादेशः ।) अतिशयप्रियः । इत्यमरः । ३ । १ । ११९ ॥

**प्रेष्ठा**, स्त्री, (प्रेष्ठ + टाप् ।) प्रेयसी । इति हेमचन्द्रः ॥ जङ्घा । इति शब्दचन्द्रिका ॥

**प्रेष्यः**, त्रि, (प्र + ईष् + कर्म्मणि ण्यत् ।) दासः । इत्यमरः । २ । १० । १७ ॥ (यथा, मनौ । ३ । १५३ ।
"प्रेष्यो ग्रामस्य राज्ञश्च कुनखी श्यावदन्तकः ॥")
प्रेरणीयश्च ॥

**प्रैषः**, पुं, (प्र + इष् + घञ् । "प्रादूहोढोढ्येषैष्येषु ।" ६ । १ । ८९ । इत्यस्य वार्त्तिकोक्त्या वृद्धिः ।) क्लेशः । मर्द्दनम् । उन्मादः । प्रेषणम् । इति मेदिनी । षे, ९ ॥

**प्रैष्यः**, पुं, (प्र + इष् + कर्म्मणि ण्यत् । "प्रादूहोढोढ्येषैष्येषु ।" ६ । १ । ८९ । इत्यस्य वार्त्तिकोक्त्या वृद्धिः ।) प्रेष्यः । इत्यमरटीकायां भरतः ॥ (यथा, कुमारे । ६ । ५८ ।
"जङ्गमं प्रैष्यभावे वः स्थावरं चरणाङ्कितम् ।
विभक्तानुग्रहं मन्ये द्विरूपमपि मे वपुः ॥"
क्ली, प्रेष्यस्य भावः । दासकर्म्म । यथा, कथासरित्सागरे । ३० । ९५ ।
"गवादिरक्षकान् पुत्त्रान् भार्य्यां कर्म्मकरीं निजाम् ।
तस्य कृत्वा गृहाभ्यर्णे प्रैष्यं कुर्व्वन्नुवास सः ॥")

**प्रोक्तं**, त्रि, (प्रकर्षेण उच्यते स्मेति । प्र + वच् + क्तः ।) कथितम् । प्रकर्षेणोक्तम् । यथा, --
"अम्बरीशशुकप्रोक्तं नित्यं भागवतं शृणु ॥"
इति श्रीभागवतम् ॥

**प्रोक्षणं**, क्ली, (प्र + उक्ष सेचने + ल्युट् ।) यज्ञार्थपशुहननम् । इत्यमरः । २ । ७ । २६ ॥ (यथा, महाभारते । ५ । १७ । ९ ।
"य इमे ब्राह्मणाः प्रोक्ता मन्त्रा वै प्रोक्षणे गवाम् ।
एते प्रमाणं भवतः उताहा नेति वासव ! ॥"
श्राद्धाद्युचितसंस्कारः । यथा, भागवते । ९ । ६ । ८ ।
"चोदितः प्रोक्षणायाह दुष्टमेतदकर्म्मकम् ॥")
वधः । सेचनम् । इति मेदिनी । णे, ६४ ॥ (यथा, मनुः । ५ । ११८ ।
"अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम् ।
प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते ॥")

**प्रोक्षितं**, त्रि, (प्र + उक्ष + क्त ।) निहतम् । सिक्तम् । इति मेदिनी । ते, १३६ ॥ यज्ञार्थं मन्त्रैः संस्कृतमांसादि । यथा, --
"भक्षयेत् प्रोक्षितं मांसं सकृद्ब्राह्मणकाम्यया ।
दैवे नियुक्तः श्राद्धे वा नियमे तु विवर्ज्जयेत् ॥"
आरण्यानामिदानीन्तनप्रोक्षणापेक्षा नास्ति । यथा, महाभारते ।
"आरण्याः सर्व्वदैवत्याः प्रोक्षिताः सर्व्वशो मृगाः ।
अगस्त्येन पुरा राजन् ! मृगया येन पूज्यते ॥"
इति तिथ्यादितत्त्वम् ॥

**प्रोज्जासनं**, क्ली, (प्र + उद् + जस् हिंसायाम् + णिच् + ल्युट् ।) मारणम् । इति हेमचन्द्रः । ३ । ३४ ॥

**प्रोज्झितं**, त्रि, (प्र + उज्झ + कर्म्मणि क्तः ।) त्यक्तम् । यथा, श्रीभागवते । १ । १ । २ ।
"धर्म्मः प्रोज्झितकैतवोऽत्र परमो निर्म्मत्सराणां सताम् ॥"

**प्रोञ्छनं**, क्ली, (प्र + उञ्छ + ल्युट् ।) प्रवर्जनम् । लोपनम् । मोछा इति भाषा ॥ यथा, --
"प्रोञ्छनैर्वामपादेन दरिद्रो भवति ध्रुवम् ।
वैरिनाशकरं प्रोक्तं कवचं वश्यकारकम् ॥"
इति रुद्रयामले वैरिहरकालीकवचम् ॥

**प्रोण्ठः**, पुं, (प्रकर्षेण अण्ठते निष्ठीवनादिकं प्राप्नोतीति । प्र + अठि गतौ + अच् । पृषोदरादित्वात् अस्य उत्वम् ।) पतद्ग्रहः । पीग्दान इति भाषा । यथा, --
"स्यादाचमनकः प्रोण्ठः कटकोलः पतद्ग्रहः ॥"
इति हारावली । ४७ ॥

**प्रोतं**, क्ली, (प्र + वेञ् स्यूतौ + क्तः । यजादित्वात् सम्प्रसारणम् ।) वस्त्रम् । इति जटाधरः ॥

**प्रोतं**, त्रि, (प्र + वेञ् + क्तः । यजादित्वात् सम्प्रसारणम् ।) खचितम् । इति मेदिनी । ते, ३७ ॥ स्यूतम् । (यथा, श्रीकण्ठचरिते । १५ । २५ ।
"नीरन्ध्रमात्तपरिरम्भविजृम्भणस्य
रम्भोरुभिः सह विलासिजनस्य कामः ।
प्रोतं विधातुमिव चेतसि रागसूत्रं
रोमाञ्चसूचिनिचयं प्रचुरीचकार ॥")
गुम्फितम् । इति हेमचन्द्रः ॥

**प्रोतोत्सादनं**, क्ली, (प्रोते स्यूते सति प्रोतानां वस्त्राणां वा उत्सादनं उत्तोलनं उच्चालनं वा यत्र ।) वस्त्रकुट्टिमम् । छत्रम् । इति त्रिकाण्डशेषः ॥

**प्रोत्फलः**, पुं, (प्रकर्षेण उत्फलतीति । प्र + उत् + फल् + अच् ।) वृक्षविशेषः । तत्पर्य्यायः । सिंहलाङ्गूलः २ छडी ३ छटा पिञ्जा ५ । इति शब्दमाला ॥

**प्रोत्फुल्लं**, त्रि, (प्रकर्षेण उत्फुल्लम् । प्र + उत् + फुल्ल विकासे + कर्त्तरि अच् वा ।) विकसितम् । यथा, --
"ये वर्द्धिताः करिकपोलमदेन भृङ्गाः
प्रोत्फुल्लपङ्कजरजःसुरभीकृताङ्गाः ।
ते साम्प्रतं विधिवशादगमयन्ति कालं
निम्बेषु चार्ककुसुमेषु करीलकेषु ॥"
इति भामिनीविलासः ॥

**प्रोत्साहः**, पुं, (प्र + उत् + सह + घञ् ।) प्रकृष्टोत्साहः । "कर्म्मसु सुकरप्रत्यय उत्साह इति मधुः ॥ कर्म्मसु दृढयत्नकारको भावः उत्साह

इति रमानाथः ॥ कर्म्मसु प्रत्यय उत्साह इति नयनानन्दः । अशक्ये बलोद्यम उत्साह । इति केचित् ।" इत्यमरटीकायां भरतः ॥ (यथा, कथासरित्सागरे । १६ । ९७ ।
"सोऽस्याः प्रोत्साहविश्लेषदुःखं यावद्व्यपोहति ।
तावत् पद्मावतीपार्श्वं प्रययुस्ते महत्तराः ॥")

**प्रोथ**, ऋ ञ पर्य्याप्तौ । इति कविकल्पद्रुमः ॥ (भ्वा०-उभ०-अक०-सेट् ।) रेफयुक्तः । ऋ, अपुप्रोथत् । ञ, प्रोथति प्रोथते । पर्य्याप्तं सामर्थ्यम् । पुप्रोथास्मै न कश्चन । पर्य्याप्तं परिपूर्णता । इति गोविन्दभट्टः । इति दुर्गादासः ॥

**प्रोथः**, पुं, क्ली, (प्रवते इति । प्रुङ् गतौ + "तिथपृष्ठगूथयूथप्रोथाः ।" उणा० २ । १२ । इति थक् निपातनात् गुणः । यद्वा, प्रोथते इति । प्रोथ पर्य्याप्तौ + "पुंसि संज्ञायां घः प्रायेण ।" ३ । ३ । ११८ । इति घः ।) अश्वनासिका । इत्यमरः । २ । ८ । ४९ ॥ (यथा, माघे ११ । ११ ।
"रिरसयिषति भूयः शष्पमग्रे विकीर्णं
पटुतरचपलौष्ठः प्रस्फुरत्प्रोथमश्वः ॥"
शूकरनासिकापि । यथा, देवीभागवते । ५ । २८ । २५ ।
"वाराही शूकराकारा गूढप्रोथा सटाभृता ॥")

**प्रोथः**, पुं, (प्रोथते इति । प्रोथ पर्य्याप्तौ + "पुंसि संज्ञायां घः प्रायेण ।" ३ । ३ । ११८ । इति घः । यद्वा, प्रुङ् गतौ + "तिथपृष्ठगूथयूथप्रोथाः ।" उणा० २ । १२ । इति थक् । निपानात् गुणः ।) कटी । इति मेदिनी । थे, १० ॥ शाटकः । इति त्रिकाण्डशेषः ॥ स्त्रीगर्भः । इति विश्वः ॥ गर्त्तः । भीषणम् । स्फिक् । अश्वमुखम् । इति संक्षिप्तसारोणादिवृत्तिः ॥

**प्रोथः**, त्रि, (प्रवते इति । प्रुङ् गतौ + "तिथपृष्ठगूथयूथप्रोथाः ।" उणा ० २ । १२ । इति थक् । निपातनात् गुणः ।) अध्वगः । इति मेदिनी । थे, १० ॥ प्रथितः । इति त्रिकाण्डशेषः ॥ स्थापितः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**प्रोषः**, पुं, (प्रुष दाहे + भावे घञ् ।) सन्तापः । इति राजनिर्घण्टः ॥

**प्रोषितः**, त्रि, (वस् + क्त । इट् । सम्प्रसारणम् । प्रकृष्टदूरं उषितः ।) प्रवासगतः । यथा, --
"आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा ।
मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥"
इति शुद्धितत्त्वम् ॥
(दूरीभूतः । यथा, कलाविलासे । १ । १४ ।
"पिहितबृहस्पतिधिषणो
रुचिरः प्रज्ञामरीचिनिचयस्ते ।
तीक्ष्णांशोरिव सहजः
प्रोषिततिमिराः करोत्याशाः ॥")

**प्रोषितभर्त्तृका**, स्त्री, (प्रोषितो विदेशगतो भर्त्ता यस्याः । समसान्तकप्रत्ययः ।) विदेशस्थपतिका । इति जटाधरः ॥ स्वीयादिनायिकाभेदः । तस्या लक्षणं यथा । देशान्तरे गते भर्त्तरि सन्तापाकुला प्रोषितभर्त्तृका । अस्याश्चेष्टा दशावस्था । यथा । पत्यभिलाषः १ चिन्ता २ स्मृतिः ३ गुणोत्कीर्त्तनम् ४ उद्वेगः ५ विलापः ६ उन्मादः ७ व्याधिः ८ जडता ९ निधनम् १० । मुग्धा प्रोषितभर्त्तृका यथा, --
"दुःखं दीर्घतरं वहन्त्यपि सखीवर्गाय नो भाषते
शैवालैः शयनं सृजन्त्यपि पुनः शेते न वा लज्जया ।
कण्ठे गद्गदवाचमञ्चति दृशा धत्ते न वास्पोदकं
सन्तापं सहते यदम्बुजमुखी तद्वेद चेतोभवः ॥"
मध्या प्रोषितभर्त्तृका यथा, --
"वासस्तदेव वपुषो वलयन्तदेव
हस्तस्य सैव जघनस्य च रत्नकाञ्ची ।
वाचालभृङ्गसुभगे सुरतौ समस्त-
मद्याधिकं भवति तत् सखि किन्निदानम् ॥"
प्रगल्भा प्रोषितभर्त्तृका यथा, --
"माला बालाम्बुजदलमयी मौक्तिकी हारयष्टिः
काञ्ची स्थानात् प्रसरति हरौसुभ्रुवः प्रस्थितैव ।
अन्यद्ब्रूमः किमपि धमनी विद्यते वा नवेति
ज्ञातुं बाह्वोरहह वलयं पाणिमूलं प्रयाति ॥"
परकीया प्रोषितभर्त्तृका यथा, --
"श्वश्रूः पद्मदलं ददाति तदपि भ्रूसंज्ञया गृह्यते
सद्यो मर्म्मरशङ्कया न च तया संस्पृश्यते पाणिना ।
यातुर्व्वाचि सुहृज्जनस्य वचसा प्रत्युत्तरं दीयते
श्वासः किन्तु न मुच्यते हुतवहक्रूरः कुरङ्गीदृशा ॥"
सामान्यवनिता प्रोषितभर्त्तृका यथा, --
"विरहविदितमन्तःप्रेम विज्ञाय कान्तः
पुनरपि वसु तस्मादेत्य मे दास्यतीति ।
भरिचनिचयमक्ष्णोर्न्यस्य वास्पोदबिन्दून्
सृजति च पुरयोषिद्द्वारदेशोपविष्टा ॥"
इति रसमञ्जरी ॥
(अस्याः अकर्त्तव्यं यदुक्तं चिन्तामणौ तद्यथा,
"हास्यं परगृहे यानं समाजोत्सवदर्शनम् ।
क्रीडां शरीरसंस्कारं त्यजेत् प्रोषितभर्त्तृका ॥")

**प्रोष्ठः**, पुं, (प्रकृष्ट ओष्ठोऽस्येति । "ओत्वोष्ठयोः समासे वा ।" १ । १ । ६४ । इत्यस्य वार्त्तिकोक्त्या साधुः ।) प्रोष्ठीमत्स्यः । इत्यमरटीकायां रायमुकुटः ॥ (जनपदविशेषः । यथा, महाभारते । ६ । ९ । ६१ ।
"व्यूढकाः कोरकाः प्रोष्ठाः समवेगवशास्तथा ॥"
गौः । इति सिद्धान्तकौमुदी । ५ । ४ । १२० ॥)

**प्रोष्ठपदः**, पुं, (प्रोष्ठो गौस्तस्येव पादौ यस्य सः । "सुप्रातसुश्वसुदिवेति ।" ५ । ४ । १२० । इति अच् प्रत्ययेन साधुः । प्रोष्ठपदो नक्षत्रविशेषस्तद्युक्ता पौर्णमासी यत्र मासे । अण् । पक्षे न वृद्धिः ।) भाद्रमासः । इत्यमरः ॥ (नक्षत्रविशेषः । यथा, महाभारते । ६ । ३ । १४ ।
"शूक्रः प्रोष्ठपदे पूर्व्वे समारुह्य विरोचते ॥"
यथा च मार्कण्डेये । ३३ । १५ ।
"अजाविकं प्रोष्ठपदे विन्देद्धावांस्तथोत्तरे ॥"
गोतुल्यपदयुक्ते, त्रि । इति व्याकरणम् ॥)

**प्रोष्ठपदाः**, स्त्री, (प्रोष्ठो गौस्तस्येव पादा यासाम् । "सुप्रातसुश्वेति ।" ५ । ४ । १२० । इति बहुव्रीहावच् पद्भावश्च निपातितः ।) पूर्ब्बभाद्रपदनक्षत्रम् २५ । उत्तरभाद्रपदनक्षत्रम् २६ । तत्पर्य्यायः । भाद्रपदाः २ । इत्यमरः । १ । ३ । २२ ॥ द्वे पूर्ब्बभाद्रपदोत्तरभाद्रपदासु प्रोष्ठो गौः भद्रश्च गौः तस्येव पाद आसां तास्तथा । पूर्ब्बे प्रोष्ठपदे द्वे उत्तरे तु भाद्रपदे द्वे समुदायश्चासां चतुःसंख्य इति बहुवचनम् । कदा पूर्ब्बे प्रोष्ठपदे कदा उत्तरे प्रोष्ठप्रदे इति तारकयोर्द्वित्वाद्द्विवचनम् । इति भरतः ॥ भाद्रपदशब्देन तारकाविशेषाणां समुदाय उच्यते तिरोहितावयवभेदपक्षे एकवचनम् । प्रोष्ठपदाशब्दस्तूद्रिक्तावयवभेदपक्षे बहुवचनमिति मैत्रेयः । इति रायमुकुटः ॥

**प्रोष्ठपदी**, स्त्री, (प्रोष्टपदाभिर्युक्ता पौर्णमासी । अण् । स्त्रियां ङीप् ।) भाद्री पूर्णिमा । यथा, --
"प्रोष्ठपद्यामतीतायां तथा कृष्णा त्रयोदशी ।
एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः ॥"
इति तिथ्यादितत्त्वम् ॥
अपि च ।
"लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् ।
प्रोष्ठपद्यां पौर्णमास्यां स याति परमां गतिम् ॥"
इति श्रीभागवतटीकायां श्रीधरस्वामी ॥

**प्रोष्ठपादः**, त्रि, (प्रोष्ठपद + "सन्धिवेलेति ।" ४ । ३ । १६ । इत्यण् । "जे प्रोष्ठपदानाम् ।" ७ । ३ । १८ । इति उत्तरपदस्याचामादेरचो वृद्धिः ।) प्रोष्ठपदासु जातः । इति सिद्धान्तकौमुदी ॥

**प्रोष्ठी**, स्त्री, पुं, (प्रकृष्ट ओष्ठो यस्याः । "ओष्ठोत्वयोः समासे वा ।" नासिकोदरोष्ठेति जातेरिति वा ङीष् ।) मत्स्यभेदः । पुँटी माछ इति भाषा । तत्पर्य्यायः । शफरी २ शफरः ३ । इत्यमरः ॥ श्वेतकोलः ४ । इति शब्दरत्नावली ॥ तस्या गुणाः । तिक्तत्वम् । कटुत्वम् । स्वादुत्वम् । शुक्रकारित्वम् । कफवातनाशित्वञ्च । इति राजवल्लभः ॥ स्निग्धत्वम् । आस्यकण्ठरोगनाशित्वम् । श्रेष्ठत्वञ्च । इति राजनिर्घण्टः ॥

**प्रोहः**, पुं, (प्रोह्यते वितर्क्यते विस्मयाकुलितैरिति । प्र + ऊह् + घञ् ।) हस्तिचरणः । पर्व्व । इति विश्वमेदिन्यौ । हे, ५ । गजचरणपर्व्व । इति त्रिकाण्डशेषशब्दरत्नावल्यौ ॥

**प्रोहः**, त्रि, (प्रकर्षेण ऊहते वितर्कयतीति । प्र + ऊह + कः ।) निपुणः । (प्र + ऊह + भावे घञ् ।) तर्कः । इति मेदिनी । हे, ६ ॥

**प्रौढं**, त्रि, (प्रोह्यते स्मेति । प्र + वह् + क्तः । सम्प्रसारणम् । "प्रादूहोढोढ्येषैष्येषु ।" इति वृद्धिः ।) वर्द्धितम् । तत्पर्य्यायः । प्रवृद्धम् २ एधितम् ३ । इत्यमरः । ३ । १ । ७६ ॥ (यथा, मेघदूते । २७ ।
"त्वत्सम्पर्कात् पुलकितमिव प्रौढपुष्पैः कदम्बैः ॥")

प्रगल्भः । इति हेमचन्द्रः । ६ । १३१ ॥ (यथा, रघुः । ९ । ५८ ।
"त्रासातिमात्रचटुलैः स्मरतः सुनेत्रैः
प्रौढप्रिया नयनविभ्रमचेष्टितानि ॥")
निपुणः । इति राजनिर्घण्टः ॥ (यथा, भागवते । ३ । २ । ९ ।
"ईङ्गितज्ञाः पुरुप्रौढा एकारामाश्च सात्त्वताः ॥")
प्रकर्षेण ऊढश्च ॥

**प्रौढपादः**, पुं, (प्रौढः पादो यस्य ।) आसनारोपितपादतलः । आसनोपरिपादतलद्वयसंयोगपूर्ब्बकोपवेष्टा । वस्त्रादिना कृतपृष्ठजानुजङ्घाबन्धः । वस्त्रादिद्वारा पृष्ठजानुजङ्घाद्वयदृढबन्धनपूर्ब्बकोपवेष्टा । यथा, --
"आसनारूढपादस्तु जानुनोर्जङ्घयोस्तथा ।
कृतावसक्थिको यस्तु प्रौढपादः स उच्यते ॥
स्नानमाचमनं होमं भोजनं देवतार्च्चनम् ।
प्रौढपादो न कुर्व्वीत स्वाध्यायं पितृतर्पणम् ॥"
इति कात्यायनः ॥ * ॥
अनेकोद्वाह्ये दारुशिले भूमिसमे इष्टकाश्च संकीर्णीभूता इति बौधायनवचनात्तथाविधे आरूढपादोऽपि कुर्य्यात् । इत्याह्निकतत्त्वम् ॥

**प्रौढा**, स्त्री, (प्रौढ + टाप् ।) नायिकाभेदः । तत्पर्य्यायः । चिरिण्टी २ सुवयाः ३ श्यामा ४ दृष्टरजाः ५ । इति राजनिर्घण्टः ॥ यथा, --
"बाला तु तरुणी प्रौढा वृद्धा भवति नायिका ।
गुणयोगेन रन्तव्या नारी वश्या भवेत्तदा ॥"
त्रिंशद्वर्षादूर्द्धं पञ्चपञ्चाशद्वर्षपर्य्यन्तं प्रौढावस्था । यथा, --
"आषोडशी भवेद्बाला तरुणी त्रिंशता मता ।
पञ्चपञ्चाशती प्रौढा भवेद्वृद्धा ततः परम् ॥"
अस्या वश्यत्वकारणं यथा, --
"अलङ्कारादिभिर्ब्बाला तरुणी रतियोगतः ।
प्रेमदानादिभिः प्रौढा वृद्धा तु दृढताडनात् ॥"
तस्या रमणे दोषो यथा, --
"बाला तु प्राणदा प्रोक्ता तरुणी प्राणहारिणी ।
प्रौढा करोति वृद्धत्वं वृद्धा मरणदा भवेत् ॥"
इति रतिमञ्जरी ॥
मुग्धादित्रिविधान्तर्गतप्रगल्भा नायिका । तत्र प्रोढा खण्डिता यथा, --
"मामुद्वीक्ष्य विपक्षपक्ष्मलदृशः पादाम्बुजालक्तकैरालिप्ताननमानतीकृतमुखी चित्रार्पितेवाभवत् ।
रूक्षं नोक्तवती न वा कृतवती निश्वासकोष्णादृशः
प्रातर्मङ्गलमङ्गला करतलादादर्शमादर्शयत् ॥"
प्रौढा कलहान्तरिता यथा, --
"अकरोः किमु नेत्रशोणिमानं
किमकार्षीः करपल्लवे निरोधम् ।
कलहं किमधाः क्रुधा रसज्ञे
हितमर्थं न विदन्ति दैवदुष्टाः ॥"
प्रौढा उत्कण्ठिता यथा, --
"भ्रातर्निकुञ्जसखियूथिरश्चालबन्धो
मातस्तमस्विनि पितस्तिमिर प्रसीद ।
पृच्छामि किञ्च नवनीरधराभिरामो
दामोदरः कथय किं न समाजगाम ॥"
प्रौढा वासकसज्जा यथा, --
"कृतं वपुषि भूषणं चिकुरधोरणी धूपिता
कृता शयनसन्निधौ क्रमुकवीटिकासम्भृतिः ।
अकारि हरिणीदृशा भवनमेत्य देहत्विषा
स्फुरत्कनककेतकीकुसुमकान्तिभिर्दुर्द्दिनम् ॥"
प्रौढाभिसारिका यथा, --
"स्फुरदुरसिजभारभङ्गुराङ्गी
किसलयकोमलकान्तिनापदेन ।
अथ कथय कथं सहेत गन्तुं
यदि न निशासु मनोरथो रथः स्यात् ॥"
प्रौढा प्रवत्स्यत्पतिका यथा, --
"नायं मुञ्चति सुभ्रुवामपि तनुत्यागे वियोगज्वरस्तेनाहं विहिताञ्जलिर्यदुपते ! पृच्छामि सत्यं वद ।
ताम्बूलं कुसुमं पटीरमुदकं यद्बन्धुभिर्दीयते
तत् स्यादत्र परत्र वा किमु विषज्वालावलीदुःसहम् ॥"
इति रसमञ्जरी ॥
अन्यत् प्रगल्भाशब्दे द्रष्टव्यम् ॥

**प्रौढिः**, स्त्री, (प्र + वह + क्तिन् । प्रादूहेति वृद्धिः ।) सामर्थ्यम् । इति मुग्धबोधव्याकरणम् ॥ तत्पर्य्यायः । उत्साहः २ प्रगल्भता ३ अभियोगः ४ उद्यमः ५ उद्योगः ६ कियदेतिका ७ अध्यवसायः ८ ऊर्ज्जः ९ । इति हेमचन्द्रः । २ । २१४ ॥ (यथा, कथासरित्सागरे । १४ । ६३ ।
"यथा यथा च दम्पत्योः प्रौढिं परिचयो ययौ ।
तयोस्तथा तथा प्रेम नवीभावमिवाययौ ॥")

**प्रौणः**, त्रि, (प्र + ओण् अपनयने + अच् ।) निपुणः । इति केचित् ॥

**प्रौष्ठपदः**, पुं, (प्रोष्ठो गौस्तस्येव पादा यासामिति प्रोष्ठपदा नक्षत्रविशेषाः । तद्युक्ता पौर्णमासी । प्रोष्ठपद + "नक्षत्रेण युक्तः कालः ।" ४ । २ । ३ । इति अण् । ङीप् । प्रौष्ठपदी पौर्णमास्यस्मिन् । प्रौष्ठपदी + "सास्मिन् पौर्णमासीति ।" ४ । २ । २१ । इति अण् ।) भाद्रमासः । इत्यमरः । १ । ३ । २२ ॥ (यथा, महाभारते । १३ । १०६ । २८ ।
"प्रौष्ठपदन्तु यो मासमेकाहारो भवेन्नरः ।
धनाढ्यं स्फीतमचलमैश्वर्य्यं प्रतिपद्यते ॥"
प्रोष्ठपदासु भवे, त्रि । इति सिद्धान्तकौमुदी । ७ । ३ । १८ ॥)

**प्रौहः**, पुं, (प्र + ऊह + कः । प्रादूहेति वृद्धिः ।) प्रकर्षेणोहः । इति मुग्धबोधव्याकरणम् ।

**प्लक्ष**, ञ भक्षणे । इति कविकल्पद्रुमः ॥ (भ्वा०-उभ०-सक०-सेट् ।) अन्तःस्थतृतीययुक्तः । ञ, प्लक्षति प्लक्षते । इति दुर्गादासः ॥

**प्लक्षः**, पुं, (प्लक्ष्यते भक्ष्यते विहगादिभिरिति । प्लक्ष + कर्म्मणि घञ् ।) वृक्षविशेषः । पाकुड इति भाषा । तत्पर्य्यायः । जटी २ पर्कटी ३ । इत्यमरः ॥ पर्कटिः ४ प्लक्ष ५ प्लीक्षा ६ जटिः ७ । इति शब्दरत्नावली ॥ कपीतनः ८ क्षीरी ९ सुपार्श्वः १० कमण्डलुः ११ शृङ्गी १२ अवरोहशाखी १३ गर्द्दभाण्डः १४ कपीतकः १५ दृढप्ररोहः १६ प्लवकः १७ प्लवङ्गः १८ महाबलः १९ ॥ ह्रस्वप्लक्षपर्य्यायः । सूक्ष्मः २० सुशीतः २१ शीतवर्य्यकः २२ पुण्ड्रः २३ महावरोहः २४ ह्रस्वपर्णः २५ पिम्बरिः २६ भिदुरः २७ मङ्गलच्छायः २८ । अस्य गुणाः । कटुत्वम् । कषायत्वम् । शिशिरत्वम् । रक्तदोषमूर्च्छाभ्रमप्रलापनाशित्वञ्च । इति राजनिर्घण्टः ॥ व्रणयोनिगददाहपित्तकफशोथरक्तपित्तनाशित्वम् । पर्कटी च स्त्रियामपि । इति भावप्रकाशः ॥ कन्दरालवृक्षः । द्वीपभेदः । अश्वत्थवृक्षः । इति मेदिनी । षे, १७ ॥ पक्षकः । इति हेमचन्द्रः ॥

**प्लक्षद्वीपः**, पुं, (प्लक्षतरूपलक्षितो द्वीपः ।) सप्तद्वीपान्तर्गतद्वीपविशेषः । तस्य विवरणं यथा,
सूत उवाच ।
"जम्बुद्वीपस्य विस्ताराद्द्विगुणेन समन्ततः ।
संवेष्टयित्वा क्षीरोदं प्लक्षद्वीपो व्यवस्थितः ॥
प्लक्षद्वीपे च विप्रेन्द्राः सप्तासन् कुलपर्व्वताः ।
ऋज्वायताः सुपर्व्वाणः सिद्धसंघनिषेविताः ॥
गोमेरुः प्रथमस्तेषां द्वितीयश्चन्द्र उच्यते ।
नारदो दुन्दुभिश्चैव सोमश्च ऋषभस्तथा ॥
विभ्राजः सप्तमः प्रोक्तो ब्रह्मणोऽत्यन्तवल्लभः ।
तत्र देवर्षिगन्धर्व्वैः सिद्धैश्च भगवानजः ॥
उपास्यते स विश्वात्मा साक्षी सर्व्वस्य विश्वसृक ।
तेषु पुण्या जनपदा नाधयो व्याधयोऽपि च ॥
न तत्र पापकर्त्तारः पुरुषा वा कदाचन ।
तेषां नद्यः सप्त चैव वर्षाणान्तु समुद्रगाः ॥
तासु ब्रह्मर्षयो नित्यं पितामहमुपासते ।
अनुतप्ता शिखी चैव विपाशा त्रिदिवा कृता ॥
अनृता सुकृता चैव नामतः परिकीर्त्तिताः ।
क्षुद्रनद्यस्त्वसंख्याताः सरांसि सुबहून्यपि ॥
न वै तेषु युगावस्थाः पुरुषा वै चिरायुषः ।
आर्य्यकाः कुरवाश्चैव विदशा भाविनस्तथा ॥
ब्रह्मक्षत्त्रियविट्शूद्रास्तस्मिन्द्वीपे प्रकीर्त्तिताः ।
इज्यते भगवान् सोमो वर्णैस्तत्र निवासिभिः ॥
तेषाञ्च सोमसायुज्यं सारूप्यं मुनिपुङ्गवाः ।
सर्व्वे धर्म्मपरा नित्यं नित्यं मुदितमानसाः ॥
पञ्चवर्षसहस्राणि जीवन्ति च निरामयाः ॥"
इति कौर्म्मे भुवनकोषे ४६ अध्यायः ॥ * ॥
अपि च "ऋषिरुवाच । अतःपरं प्लक्षादीनां प्रमाणलक्षणसंस्थानतो वर्षविभाग उपवर्ण्यते । जम्बुद्वीपो यावत्प्रमाणविस्तारस्तावताक्षारोदधिना परिवेष्टितो यथा मेरुर्जम्ब्वाख्येन । लवणोदधिरपि ततो द्विगुणविशालेन प्लक्षाख्येन परिक्षिप्तो यथा परिखा बाह्योपवनेन । प्लक्षो जम्बुप्रमाणो द्वीपाख्यातिकरो हिरण्मय उत्थितो यत्राग्निरुपास्ते सप्तजिह्वः । तस्याधिपतिः प्रियव्रतात्मज इध्मजिह्वस्तं द्वीपं सप्तवर्षाणि विभज्य सप्तवर्षनामभ्य आत्मजेभ्य आकलय्य स्वयमात्मयोगेनोपरराम । शिवं वयसं सुभद्रं शान्तं क्षेम-

ममृतमभयमिति वर्षाणि । तेषु गिरयो नद्यश्च सप्तैवाभिज्ञाताः । मणिकूटो वज्रकूट इन्द्रसेनो ज्योतिष्मान् सुवर्णो हिरण्यष्ठीवो मेघमाल इति सेतुशैलाः । अरुणा नृमणा आङ्गिरसी सावित्री सुप्रभाता ऋतम्भरा सत्यम्भरेति महानद्यः । यासां जलोपस्पर्शनविधतरजस्तमसो हंसपतङ्गो-र्द्ध्वायनसत्याङ्गसंज्ञाश्चत्वारो वर्णाः सहस्रायुषो विबुधोपमसन्दर्शनप्रजननाः स्वर्गद्वारं त्रय्या विद्यया भगवन्तं त्रयीमयं सूर्य्यमात्मानं यजन्ते । प्रत्नस्य विष्णो रूपं यत् सत्यर्त्तस्य ब्रह्मणः । अमृ-तस्य च मृत्योश्च सूर्य्यमात्मानमीमहीति ॥ प्लक्षा-दिषु पञ्चसु पुरुषाणामायुरिन्द्रियमोजः सहो बलं बुद्धिर्विक्रम इति च सर्व्वेषामौत्पत्तिकी सिद्धिरविशेषेण वर्त्तते । प्लक्षश्च समानेनेक्षु रसोदेनावृतः ।” इति श्रीभागवते ५ स्कन्धे २० अध्यायः ॥

**प्लव**, ङ गत्याम् । (भ्वा०-आत्म०-सक०-सेट् ।)

अन्तःस्थतृतीययुक्तः । ङ, प्लवते । प्लु ङ इत्यने-नैवेष्टसिद्धे अस्य पाठः प्लविष्यते प्लव्यते इत्यादि सिद्ध्यर्थः । इति दुर्गादासः ॥

**प्लवं**, क्ली, (प्लवते इति । प्लु + अच् ।) कैवर्त्ती-

मुस्तकम् । (अस्याः पर्य्यायो यथा, --
“कुटन्नटं दासपुरं वालेयं परिपेलवम् ।
प्लवगोपुरगोनर्द्दकैवर्त्तीमुस्तकानि च ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
गन्धतृणम् । इति मेदिनी । वे, १८ ॥ प्लुतगे, त्रि ॥

**प्लवः**, पुं, (प्लु + “ऋदोरप् ।” ३ । ३ । ५७ । इत्यप् ।)

प्लवनम् । (यथा, हरिवंशे । १२२ । १०१ ।
“सागरानूपविपुलां प्रागुदक्प्लवशीतलाम् ।
सर्व्वतोदधिमध्यस्थामभेद्यां त्रिदशैरपि ॥”
प्लूयतेऽनेनेति करणे अप् ।) भेलः । (यथा, मुण्डकोपनिषदि । १ । २ । ७ ।
“प्लवा ह्येते अदृढा यज्ञरूपा
अष्टादशोक्तमवरं येषु कर्म्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा
जरामृत्युं ते पुनरेवापि यन्ति ॥”
प्लवते सन्तरतीति । प्लु + अच् ।) भेकः । अविः । श्वपचः । कपिः । जलकाकः । (यथा, सुश्रुते । १ । ४६ ।
“प्लवानामिक्षुरसासवः ॥”)
कुलकः । प्रवणः । पर्कटीद्रुमः । कारण्डवविहगः । शब्दः । प्रतिगतिः । इति मेदिनी । वे, १६ ॥ प्रेरणम् । शत्रुः । इति शब्दरत्नावली ॥ जलान्त-रम् । इति हेमचन्द्रः । ३ । ५४३ ॥ पलवः । इति त्रिकाण्डशेषः ॥ पोलो इति भाषा ॥ जलकुक्कुटः । इति मिताक्षरा ॥ (यथा, मनौ । ५ । १२ ।
“कलविङ्कं प्लवं हंसं चक्राङ्गं ग्रामकुक्कुटम् ।
सारसं रज्जुवालञ्च दात्यूहं शुकसारिके ॥”
वकविशेषः । यथा, रामायणे । २ । १०३ । ४३ ।
“रथाङ्गहंसा नत्यूहाः प्लवाः कारण्डवाः परे ।
तथा पुंस्कीकिलाः क्रौञ्चा विसंज्ञा भेजिरे
दिशः ॥”
“प्लवा वकविशेषाः ।” इति तट्टीकायां रामा-नुजः ॥) जलचरपक्षिमात्रम् । यथा, --
“हंससारसकाचाक्षवकक्रौञ्चसरारिकाः ।
नन्दीमुखी सकादम्बा वलाकाद्याः प्लवाः स्मृताः ॥
प्लवन्ते सलिले यस्मादेते तस्मात् प्लवाः स्मृताः ॥”
एतेषां मांसगुणाः ।
“प्लवाः पित्तहराः स्निग्धा मधुरा गुरवो हिमाः ।
वातश्लेष्मप्रदाश्चापि बलशुक्रकराः सराः ॥”
इति भावप्रकाशः ॥

**प्लवकः**, पुं, (प्लवते इवेति । प्लु + अच् । ततः स्वार्थे

संज्ञायां वा कन् ।) खड्गधारादिनर्त्तकः । तत्पर्य्यायः । केलकः २ । इति त्रिकाण्डशेषः ॥ केकलः ३ नर्त्तुः ४ केलिकोषः ५ कलायनः ६ । इति शब्दरत्नावली ॥ चण्डालः । इति हला-युधः ॥ (सन्तरणोपजीवी । यथा, महाभारते । १३ । २३ । १५ ।
“गायना नर्त्तकाश्चैव प्लवका वादकास्तथा ।
कथका योधकाश्चैव राजन्नार्हन्ति केतनम् ॥”)
भेकः । प्लक्षः । इति राजनिर्घण्टः ॥

**प्लवगः**, पुं, (प्लवेन प्लुतगत्या गच्छतीति । गम् +

“अन्येष्वपि दृश्यते ।” ३ । २ । १०१ । इति डः ।) वानरः । (यथा, रघुवंशे । १२ । ७० ।
“स सेतुं बन्धयामास प्लवगैर्लवणाम्भसि ।
रसातलादिवोन्मग्नं शेषं स्वप्नाय शार्ङ्गिनः ॥”)
भेकः । सूर्य्यसारथिः । इति मेदिनी । गे, ४२ ॥ प्लवपक्षी । इति शब्दरत्नावली ॥ शिरीषवृक्षः । इति राजनिर्घण्टः ॥

**प्लवगतिः**, पुं, (प्लवेन गतिर्यस्य ।) भेकः । इति

शब्दचन्द्रिका ॥ (प्लवस्य भेकादेर्गतौ प्लुतगतौ च, स्त्री ॥)

**प्लवङ्गः**, पुं, (प्लवेन प्लुतगत्या गच्छतीति । गम +

“गमश्च ।” ३ । २ । ४७ । इति खच् । “खच्च डिद्वा वाच्यः ।” इति डित् । डित्वात् टेर्लोपः । मुमागमः ।) वानरः । इत्यमरः । २ । ५ । ३ ॥ (यथा, रामायणे । २ । २५ । १८ ।
“प्लवङ्गा वृश्चिका दंशा मशकाश्चैव कानने ।
सरीसृपाश्च कीटाश्च माभूवन् गहने तव ॥”
“प्लवङ्गा वानराः ।” इति तट्टीकायां रामा-नुजः ॥) मृगः । इति शब्दचन्द्रिका ॥ प्लक्षवृक्षः । इति राजनिर्घण्टः ॥

**प्लवङ्गमः**, पुं, (प्लवेन गच्छतीति । गम् + “गमश्च ।”

३ । २ । ४७ । इति खच् । मुमागमः ।) भेकः । वानरः । इत्यमरः । ३ । ३ । १३७ ॥ (यथा, रामायणे । ४ । ६२ । ११ ।
“एष्यन्ति प्रेषितास्तत्र रामदूताः प्लवङ्गमाः ।
आख्येया राममहिषी त्वया तेभ्यो विह-ङ्गम ! ॥”)
प्लुतगतियुक्ते, त्रि ॥

**प्लवनः**, त्रि, (प्लवते इति । प्लु + ल्यु ।) प्रवलः ।

क्रमनिम्नभूम्यादिः । यथा, --
“प्रागुदक्प्लवनां भूमिं कारयेत् यत्नतो नरः ॥”
इति तिथ्यादितत्त्वे मत्स्यपुराणम् ॥
(क्ली, प्लु + ल्युट् । प्लवः । यथा, --
“शयनञ्चासनं वापि नेच्छेद्वापि द्रवोत्तरम् ।
नाम्न्यातपौ न प्लवनं न यानं नापि वाहनम् ॥”
इति सुश्रुते सूत्रस्थाने ४६ अध्यायः ॥)

**प्लाक्षं**, क्ली, (प्लक्षस्य फलम् । “प्लक्षादिभ्योऽण् ।”

४ । ३ । १६४ । इत्यण् । विधानसामर्थ्यात् तस्य फले न लुक् ।) प्लक्षवृक्षस्य फलम् । इत्यमरः । २ । ४ । १८ ॥ प्लक्षस्य विकारः । प्लक्षस्य समूहः । प्लक्षस्य भावः । प्लक्षस्येदम् । प्लक्षस्य हितम् । इत्यादि व्याकरणम् ॥ (प्लक्षसम्बन्धिनि, त्रि । यथा, --
“नैयग्रोध औदुम्बर आश्वत्थ प्लाक्ष इतीध्मो भवन्त्येते वै गान्धर्व्वाप्सरसां गृहाः स्म एव ॥”
इति तैत्तिरीयसंहितायाम् । ३ । ४ । ८ । ४ ॥)

**प्लावनं**, क्ली, (प्लु + णिच् + ल्युट् ।) द्रवद्रव्यस्योर्द्ध्व-

प्रापणम् । उथ्लन इति भाषा । यथा, --
“तापनं घृततैलानां प्लावनं गोरसस्य च ।
तन्मात्रमुद्धृतं शुद्ध्येत् कठिनन्तु पयो दधि ॥”
इति शुद्धितत्त्वम् ॥ * ॥
मज्जनम् । बहुतरजलसंयोगः । यथा, --
“एतत् श्रुत्वा वचो राजा प्रातिष्ठत भगीरथः ।
यत्र तानि शरीराणि सागराणां महात्मनाम् ॥
प्लावनार्थं नरश्रेष्ठ ! पुण्येन सलिलेन ह ॥”
इति महाभारते । ३ । ११० अध्यायः ॥

**प्लावितं**, त्रि, (प्लु + णिच् + क्तः ।) जलादिमग्न-

स्थानादि । यथा, --
“सुप्रसन्नां सुवदनां करुणार्द्रनिजान्तराम् ।
सुधाप्लावितभूपृष्ठामार्द्रगन्धानुलेपनाम् ॥”
इति गङ्गावाक्यावली ॥
(यथा च देवीभागवते । २ । ८ । १० ।
“पुरी सा वासुदेवस्य प्लावितोदधिना ततः ॥”)

**प्लिह**, ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) अन्तःस्थतृतीययुक्तः । ङ, प्लेहते । इति दुर्गादासः ॥

**प्लिहा**, [न्] पुं, (प्लेहते वृद्धिं गच्छतीति । प्लिह

+ कनिन् ।) प्लीहरोगः । यथा, यकृत्प्लिहा-न्त्राणि मुखादिव क्षिपन्निति वैद्यकम् । इत्यमर-टीकायां भरतः ॥ (यथा, याज्ञवल्क्ये । ३ । ९४ ।
“वपावसावहननं नाभिः क्लोम यकृत् प्लिहा ॥”)

**प्लीहघ्नः**, पुं, (प्लीहानं हन्तीति । हन + टक् ।)

वृक्षविशेषः । रोहडा इति ख्यातः । तत्पर्य्यायः । रोही २ रोहितकः ३ प्लीहशत्रुः ४ दाडिम-पुष्पकः ५ मांसदलनः ६ यकृद्वैरी ७ चलच्छदः ८ । इति शब्दचन्द्रिका ॥ रौहितेयः ९ रोहितः १० रोहीतकः ११ रौही १२ । इति शब्दरत्ना-वली ॥ (अस्य गुणाः रोहितकशब्दे द्रष्टव्याः ॥)

**प्लीहशत्रुः**, पुं, (प्लीहः शत्रुर्नाशकत्वात् ।) प्लीहघ्न-

वृक्षः । इत्यमरः । २ । ४ । ४९ ॥ (यथा, वैद्यकरत्नमालायाम् ।
“रोही रोहितकः प्लीहशत्रुर्दाडिमपुष्पकः ॥”)

**प्लीहा**, स्त्री, (प्लिह + कः । पृषोदरादित्वात् दीर्घः ।
स्त्रियां टाप् ।) प्लिहरोगः । यथा, यकृत्प्लीहे
च सम्बन्धे । इति बालकास्यः । इत्यमरटीकायां
भरतः ॥

**प्लीहा**, [न्] पुं, (प्लिह + "श्वनुक्षन्पूषन्प्लीह-
न्निति ।" उणा० १ । १५८ । इति कनिन्
प्रत्ययेन साधुः ।) कुक्षिवामपार्श्वस्थमांसखण्डम् ।
पिला इति ख्यातम् । तत्पर्य्यायः । गुल्मः २
प्लिहा ३ । इत्यमरभरतौ ॥ अस्य निदानम् ।
"विदाह्यभिष्यन्दिरतस्य जन्तोः
प्रदुष्टमत्यर्थमसृक् कफश्च ।
प्लीहाभिवृद्धिं कुरुतः प्रवृद्धौ
प्लीहोत्थमेतज्जठरं वदन्ति ॥
तद्वामपार्श्वे परिवृद्धिमेति
विशेषतः सीदति चातुरोऽत्र ।
मन्दज्वराग्निः कफपित्तलिङ्गै-
रुपद्रुतः क्षीणबलोऽतिपाण्डुः ॥"
इति माधवकरः ॥ * ॥
रक्तजस्य तस्य लक्षणम् ।
"क्लमो भ्रमो विदाहश्च वैवर्ण्यं गात्रगौरवम् ।
मोहो रक्तोदरत्वञ्च ज्ञेयं रक्तजलक्षणम् ॥" * ॥
पैत्तिकस्य तस्य लक्षणम् ।
"सज्वरः सपिपासश्च सदाहो मोहसंयुतः ।
पीतगात्रो विशेषेण प्लीहा पैत्तिक उच्यते ॥"
श्लैष्मिकस्य तस्य लक्षणम् ।
"प्लीहा मन्दव्यथः स्थूलः कठिनो गौरवान्वितः ।
अरोचकयुतः शीतः प्लीहा कफज उच्यते ॥"
वातिकस्य तस्य लक्षणम् ।
"नित्यमानद्धकोष्ठः स्यान्नित्योदावर्त्तपीडितः ।
वेदनाभिः परीतश्च प्लीहा वातिक उच्यते ॥
दोषत्रितयरूपाणि प्लीह्न्यसाध्ये भवन्ति हि ॥"
अथ तस्य चिकित्सा ।
"पातव्यो युक्तितः क्षारः क्षीरेणीदधिशुक्तिजः ।
तथा दुग्धेन पातव्याः पिप्पल्यः प्लीहशान्तये ॥ १ ॥
अर्कपत्रं सलवणं पुटदग्धं सुचूर्णितम् ।
निहन्ति मस्तुना पीतं प्लीहानमपि दारुणम् ॥ २ ॥
हिङ्गु त्रिकटुकं कुष्ठं यवक्षारञ्च सैन्धवम् ।
मातुलुङ्गरसोपेतं प्लीहशूलहरं रजः ॥ ३ ॥
पालाशक्षारतोयेन पिप्पली परिभाविता ।
प्लीहगुल्मार्त्तिशमनी वह्निमान्द्यहरी मता ॥ ४ ॥
रसेन जम्बीरफलस्य शङ्ख-
नाभीरजः पीतमवश्यमेव ।
शाणप्रमाणं शमयेदशेषं
प्लीहामयं कूर्म्मसमानमाशु ॥ ५ ॥
शरपुङ्खमूलकल्कस्तक्रेणालोडितः पीतः ।
प्लीहानं यदि न हरते शैलोऽपि तदा जले
प्लवते ॥ ६ ॥
सुपक्वसहकारस्य रसः क्षौद्रसमन्वितः ।
पीतः प्रशमयत्येव प्लीहानं नेह संशयः ॥ ७ ॥
सुस्विन्नं शाल्मलीपुष्पं निशापर्य्युषितं नरः ॥
राजिकाचूर्णसंयुक्तं खादेत् प्लीहोपशान्तये ॥" ८ ॥
इति भावप्रकाशः ॥ * ॥
"पिप्पलीमधुपानाच्च यथा मधुरभोजनात् ।
प्लीहा विनश्यते रुद्र इति ॥ ९ ॥
केतकीपत्रजं क्षारं घृतेन सह भक्षयेत् ।
तक्रेण शरपुङ्खाभ्यां पीत्वा प्लीहां विना-
शयेत् ॥" १० ॥
इति गारुडे १८७ । १८८ अध्यायौ ॥
("शोणितकफप्रसादजं हृदयं तदाश्रया हि
ध्वमन्यः प्राणवहाः । तस्याधो वामतः प्लीहा
फुप्फुसश्च ॥" इति सुश्रुते शारीरस्थाने चतुर्थे-
ऽध्याये ॥ अस्य सहेतुकलक्षणादीनि यथा, --
"अशितस्यातिसंक्षोभाद् यानयानाभिचेष्टितैः ।
अतिव्यवायभाराध्ववमनव्याधिकर्षणैः ॥
वामपार्श्वाश्रितः प्लीहा च्युतः स्थानात् प्रवर्द्धते ।
शोणितं वा रसादिभ्यो विवृद्धन्तं विवर्द्धयेत् ॥

इति तस्य प्लीहा कठिनोऽष्ठीलेवादौ वर्द्धमानः

कच्छपसंस्थान उपलभ्यते स चोपेक्षितः क्रमेण
कुक्षिं जठरमग्न्यधिष्ठानञ्च परिक्षिपन्नुदरमभि-
निर्व्वर्त्तयति ॥

तस्य रूपाणि । दौर्ब्बल्यारोचकाविपाकवर्च्चो-

मूत्रग्रहतमःपिपासाङ्गमर्द्दच्छर्द्दिमूर्च्छाङ्गसाद
कासश्वासमृदुज्वरानाहाग्निनाशकार्श्यास्यवैर-
स्यपर्व्वभेदकोष्ठवातशूलान्यपि चोदरमरुणवर्णं
विवर्णं वा नीलहरितहारिद्रराजिमद्भवति ।"
चिकित्सास्य यथा, --
"पिप्पलीं तिल्वकं हिङ्गु नागरं हस्तिपिप्प-
लीम् ।
भल्लातकं शिग्रुफलं त्रिफलां कटुरोहिणीम् ॥
देवदारुहरिद्रे द्वे सरलातिविषे वचाम् ।
कुष्ठं मुस्तं तथा पञ्च लवणानि प्रकल्प्य च ।
दधिसर्पिर्व्वसातैलमज्जयुक्तानि दाहयेत् ॥
अन्तर्धूममतः क्षारात् विडालपदकं पिबेत् ।
मदिरा दधिमण्डोष्णजलारिष्टसुरासवैः ॥
हृद्रोगं श्वयथुं गुल्मं प्लीहार्शो जठराणि च ।
विसूचिकामुदावर्त्तं वाताष्ठीलाञ्च नाशयेत् ॥"
इति चरके चिकित्सास्थानेऽष्टादशेऽध्याये ॥)

**प्लीहारिः**, पुं, (प्लीहाया अरिः शत्रुस्तन्नाशक-
त्वात् ।) अश्वत्थवृक्षः । इति शब्दचन्द्रिका ॥
(प्लीहनाशकवटिकौषधविशेषः । यथा, --
"द्विकर्षं लौहभस्मापि कर्षं ताम्रं प्रदापयेत् ।
शुद्धसूतं तथा गन्धं कर्षमानं भिषग्वरः ॥
मृगाजिनं पलं भस्म लिम्पाकाङ्घ्रित्वचः पलम् ।
एवं भागक्रमेणैव कुर्य्यात् प्लीहारिसंज्ञकम् ॥
नवगुञ्जामितं खादेदथ नित्यं हि पूतवान् ।
प्लीहानं यकृतं गुल्मं हन्त्यवश्यं न संशयः ॥"
इति प्लीहारिरसः ॥ * ॥
इति वैद्यकरसेन्द्रसंग्रहे प्लीहाधिकारे ॥)

**प्लीहाशत्रुः**, पुं, (प्लीहायाः शत्रुः ।) प्लीहशत्रुः ।
प्लीहघ्नवृक्षः । इति केचित् ॥

**प्लुक्षिः**, पुं, (प्लुष्यति दहतीति । प्लुष दाहे + "प्लुषि-
कुषिशुषिभ्यः क्सि ।" उणा० ३ । १५५ । इति
क्सिः ।) अग्निः । इत्युणादिकोषः । स्नेहः ।
गृहदाहः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**प्लु**, ङ सपणे । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-
अक०-अनिट् ।) अन्तःस्थतृतीययुक्तः । ङ,
प्लवते । इति दुर्गादासः ॥

**प्लुतं**, क्ली, (प्लु + क्तः ।) अश्वगतिविशेषः । स च
त्वरया झम्पेन गतिः । इत्यमरभरतौ ॥ (यथा,
अश्ववैद्यके । ३ । १३२ ।
"अथ यः पुच्छतोऽश्वस्य शनैरविशदो ध्वनिः ।
अन्तरुत्पद्यते कश्चित्तदश्वप्लुत उच्यते ॥")
तिर्य्यग्गतिः । इति कलिङ्गः ॥ (यथा, कथा-
सरित्सागरे । २७ । १५६ ।
"तिर्य्यञ्चस्तिर्य्यगेवास्य पेतुर्वक्रप्लुता मृगाः ॥")

**प्लुतः**, पुं, (प्लुतं प्लुतवद्गतिरस्यास्तीति । प्लुत +
अच् ।) त्रिमात्रवर्णः । इति मेदिनी । ते, ३५ ॥
यथा, --
"एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ।
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनञ्चार्द्धमात्रकम् ॥"
इति दुर्गादासादिधृतप्राचीनकारिका ॥
(तथाच ।
"दूराह्वाने च गाने च रोदने च प्लुतो मतः ॥"
इति च दुर्गादासधृतवचनम् ॥
प्लु + क्तः ।) झम्पगतियुक्ते, त्रि ॥ (यथा,
हरिवंशे । ९८ । ८४ ।
"रामादनन्तरं कृष्णः प्लुतो वै वीर्य्यवांस्ततः ।
ताभ्यामेव प्लुताभ्याञ्च चरणैस्ताडितो गिरिः ॥"
अन्तर्णिजर्थत्वात् प्लावितः । यथा, बृहत्संहिता-
याम् । ५ । ४४ ।
"सव्यगते तमसि जगज्जलप्लुतं भवति मुदित-
मभयञ्च ॥"
सिक्तः । यथा, याज्ञवल्क्ये । १ । २३५ ।
"अग्नौ करिष्यन्नादाय पृच्छत्यन्नं घृतप्लुतम् ॥"
व्याप्तः । यथा, भागवते । ३ । २ । १४ ।
"यस्यानुरागप्लुतहासरास-
लीलावलोकप्रतिलब्धमानाः ।
व्रजस्त्रियो दृग्भिरनुप्रवृत्त-
धियोऽवतस्थुः किल कृत्यशेषाः ॥")

**प्लुष**, उ दहि । भस्मीकरणे । इति कविकल्पद्रुमः ॥
(भ्वा०-पर०-सक०-सेट् । क्त्वावेट् ।) उ, प्लोषित्वा
प्लुष्ट्वा । इति दुर्गादासः ॥

**प्लुष**, ग सेके । पूर्त्तौ । स्नेहे । इति कविकल्प-
द्रुमः ॥ (क्र्या०-पर०-सक०-स्नेहे अक०-सेट् ।)
ग, प्लुष्णाति । इति दुर्गादासः ॥

**प्लुष**, य ऌ दहि । इति कविकल्पद्रुमः ॥ (दिवा०-
पर०-सक०-सेट् ।) अन्तःस्थतृतीययुक्तः । य,
प्लुष्यति । ऌ, अप्लुषत । पुप्लोष । इति दुर्गा-
दासः ॥

**प्लुषः**, पुं, दहनम् । इति प्लषधातोर्भवि अल्-
प्रत्ययः ॥

**प्लुष्टः**, त्रि, (प्लुष् + क्तः । "यस्य विभाषा ।" ७ ।
२ । १५ । इति इट् न ।) दग्धः । इत्यमरः ।
३ । १ । ९९ ॥ (यथा, ऋतुसंहारे । १ । २२ ।
"पटुतरवनदाहात् प्लुष्टशष्पप्ररोहाः
परुषपवनवेगात् क्षिप्तसंशुष्कपर्णाः ॥"

अस्य लक्षणं यथा, --
"तत्र यद्विवर्णं प्लुष्यतेऽतिमात्रं तत् प्लुष्टम् ॥
चिकित्सास्य यथा, --
"दग्धस्योपशमार्थाय चिकित्सां संप्रचक्षते ।
प्लुष्टस्याग्निप्रतपनं कार्य्यमुष्णन्तथौषधम् ॥
शरीरे स्विन्नभूयिष्ठे स्विन्नं भवति शोणितम् ॥
प्रकृत्या ह्युदकं शीतं स्कन्दयत्यतिशोणितम् ॥
तस्मात् सुखयति ह्युष्णं नतु शीतं कथञ्चन ॥"
इति सुश्रुते सूत्रस्थाने द्वादशेऽध्याये ॥)

**प्लुस**, इर् य दाहे । विभागे । इति कविकल्पद्रुमः ॥

(दिवा०-पर०-सक०-सेट् ।) अन्तःस्थतृतीय-
युक्तः । इर्, अप्लुसत् आप्लोसीत् । य, प्लुस्यति ।
इति दुर्गादासः ॥

**प्लेव**, ऋ ङ सेवने । इति कविकल्पद्रुमः । (भ्वा०-

आत्म०-सक०-सेट् ।) अन्तःस्थतृतीययुक्तः ।
ऋ, अपिप्लेवत् । ङ, प्लेवते । इति दुर्गादासः ॥

**प्लोषः**, पुं, (प्लुष दाहे + भावे घञ् ।) दाहः ।

इत्यमरः । ३ । २ । ९ ॥ (यथा, श्रीकण्ठचरिते ।
४ । १७ ।
"दरीषु किन्नरीलोकं धत्ते यः प्लोषविप्लवे ।
न्यासीकृतमनङ्गेन भाण्डागारमिव स्वकम् ॥"
पित्तविकारविशेषः । तद्यथा । "पित्तविकारा-
श्चत्वारिंशदत ऊद्‌ध्वं व्याख्यास्यन्ते । तद्यथा
ओषश्च प्लोषश्च दाहश्च दवथुश्च धूमकश्चाम्लकश्च
इत्यादिषु ॥" इति चरके सूत्रस्थाने विंशेऽध्याये ॥)

**प्सा**, ल भक्षणे । इति कविकल्पद्रुमः ॥ (अदा०-

पर०-सक०-अनिट् ।) ल, प्साति । इति
दुर्गादासः ॥

**प्सा**, स्त्री, (प्सा + भावे क्विप् ।) भक्षणम् । इति

त्रिकाण्डशेषः ॥

**प्सातं**, त्रि, (प्सा + क्तः ।) भक्षितम् । इत्यमरः ।

३ । १ । ११० ॥

**प्सानं**, क्ली, (प्सा + भावे ल्युट् ।) भोजनम् । इति

हेमचन्द्रः । ३ । ८८ ॥

फ

**फ**, फकारः । द्वाविंशतितमव्यञ्जनवर्णः । (पवर्गस्य
द्वितीयवर्णश्च ।) अस्योच्चारणस्थानंओष्ठः ।
इति व्याकरणम् ॥ (यदुक्तं सिद्धान्तकौमुद्याम्।
“उपूपध्मानीयानामोष्ठौ ॥”) तस्य तत्त्वं यथा, --
“फकारं शृणु चार्व्वङ्गि । रक्तविद्युल्लतोपमम्।
चतुर्व्वर्गप्रदं वर्णं पञ्चदेवमयं सदा ॥
पञ्चप्राणमयं वर्णं सदा त्रिगुणसंयुतम् ।
आत्मादितत्त्वसंयुक्तं त्रिबिन्दुसहितं सदा ॥”
इति कामधेनुतन्त्रे पञ्चमपटकः ॥ * ॥
“वक्रा वामगता रेखा ततोऽधःसङ्गता भवेत् ।
तस्मादूर्द्ध्वगता भूत्वा दक्षमारभ्य कुण्डली ॥
ब्रह्मा रुद्रश्च विष्णुश्च कुण्डली ब्रह्मरूपिणी ।
मात्रा वामाद्दक्षिणतः क्रमशः परिकीर्त्तिता ॥”
इति वर्णोद्धारतन्त्रम् ॥
तत्पर्य्यायः ।
“फकारश्च महेशानि ! शिखी चैव जनार्द्दनः ॥”
इति रुद्रयामलोक्तवर्णाभिधानम्॥
अस्य ध्यानं यथा, --
“प्रलयाम्बुदवर्णाभां ललज्जिह्वां चतुर्भुजाम् ।
भक्ताभयप्रदां नित्यां नानालङ्कारभूषिताम्॥
एवं ध्यात्वा फकारन्तु तन्मन्त्रं दशधा जपेत् ॥”
इति वर्णोद्धारतन्त्रम् ॥ * ॥
अस्य नामानि यथा, --
“फः सखी दुर्गिणी धूम्रा वामपार्श्वो जनार्द्दनः ।
जया पादः शिखा रौद्री फेत्कारः शाखिनी-
प्रियः ॥
उमा विहङ्गमः कालः कुब्जिनीप्रियपावकौ।
प्रलयाग्निर्नीलपादोऽक्षरःपशुपतिः शशी ॥
फुत्कारो यामिनी व्यक्ता पावनो मोहवर्द्धनः ।
निष्फलवागहङ्कारः प्रयागो ग्रामणीः फलम् ॥”
इति नानातन्त्रशास्त्रम् ॥
(पद्यादौ अस्य प्रयोगेन भयसम्भावना । यदुक्तं
वृत्तरत्नाकरटीकायाम्।
“दोधः सौख्यं मुदं नः सुखभयमरणक्लेशदुःखं
पवर्गः ॥”)

**फं**, क्ली, (फक्क असद्व्यवहारे + डः ।) रूक्षोक्तिः ।
फुत्कृतिः । निष्फलभाषणम्। इति मेदिनी । फे, १ ॥

**फञ्जिपत्रिका**, स्त्री, (भनक्ति रोगानिति भञ्जि ।
पृषोदरादित्वात् भस्य फः । फञ्जि रोगहारकं
पत्रं यस्याः । कप् । ठाप् । अत इत्वम् ।)
आखुपर्णी । इति रत्नमाला ॥ (विवृतिरस्या
आखुपर्णीशब्दे ज्ञातव्या ॥)

**फञ्जी**, स्त्री, (भनक्ति रोगानिति । भञ्ज + अच् ।
पृषोदरादित्वात् भस्य फः । गौरादित्वात् ङीष् ।)
भार्गी । इति राजनिर्घण्टः ॥ (यथा, वैद्यक-
चक्रपाणौ श्वासाधिकारे ।
“अमृता नागरफञ्जीव्याघ्रीपर्णाससाधितः
क्वाथः ।
पीतः सकणाचूर्णः कासश्वासौ निहन्त्याशु ॥”
तथाचास्या गुणाः हारीते प्रथमस्थाने दशमे-
ऽध्याये ।
“वत्सादनी तथा फञ्जी तैलपर्णी तु सिंहिका ।
चक्रमर्द्दक इत्यन्ये दुर्ज्जरा वातकोपनाः ॥”)

**फट्**, व्य, अनुकरणशब्दः । अस्त्रबीजम् । यथा ।
फडस्त्रं शस्त्रमायुधम् । इति बीजवर्णाभिधा-
नम् ॥ * ॥ शान्तिकुम्भक्षालने अर्घ्यपात्रक्षालने
अर्घ्यजलेन पूजोपकरणाभ्युक्षणे अन्तरीक्षग-
विघ्नोत्सारणे विकिरक्षेपणे गन्धपुष्पाभ्यां
करशोधने अघमर्षणे पापपुरुषताडने कराङ्ग-
न्यासे नैवेद्यप्रोक्षणे होमाग्नेः क्रव्यादांशत्यागे
होमाग्न्यावाहने तदग्निप्रोक्षणादौ च फडिति-
मन्त्रस्य प्रयोगः ॥ (यथा, भागवते । ६ । ८ । १० ।
“सविसर्गं फडन्तं तत् सर्व्वदिक्षु विनिर्द्दिशेत् ॥”
विशीर्णादौ, त्रि । यथा, वाजसनेयसंहितायाम् ।
७ । ३ । “देवां£शो यस्मै त्वेडे तत्सत्यमुपरि
प्रुता भङ्गेन हतोऽसौ फट् ॥”
“असौ द्वेष्यो हतो निहतः सन् फट् विशीर्णो
भवतु ञिफला विशरणे अस्य क्विबन्तस्यैतद्रूपम् ।
फलतीति फट् डलयोरैक्यम् । स्वाहाकारस्थाने
फडित्यभिचारे प्रयुज्यते ।” इति तद्भाष्ये वेद-
दीपे महीधरः ॥)

**फटः**, पुं स्त्री, (स्फुट विकसने + पचाद्यच । पृषो-
दरादित्वात् साधुः) फणा । इत्यमरजटाधरौ ॥

**फटा**, स्त्री, (फट + स्त्रियां टाप् ।) फणा ।

**फः**, पुं, यक्षसाधनम् । स्फानम् । झञ्झावातः ।

इति मेदिनी । फे, १ ॥ वर्द्धकः । जृम्भानिष्फारः ।
स्फुटः । फललाभः । इति विश्वः ॥ संज्ञाविशेषः ।
यथा । "हसोऽन्तः फः । हसो विरामश्च फसंज्ञः
स्यात् ।" इति मुग्धबोधव्याकरणम् ॥

**फक्क**, असद्व्यवहारे । शनैर्गतौ । इति कवि-

कल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट् ।) कोपधः ।
फक्कति खलः कुत्सितं व्यवहरतीत्यर्थः । फक्वति
वृद्धो मन्दं गच्छतीत्यर्थः । इति दुर्गादासः ॥

**फक्किका**, स्त्री, (फक्व + "धात्वर्थनिर्द्देशे ण्वुल्

वक्तव्यः ।" इति वार्त्तिकोक्त्या ण्वुल् । टापि अत
इत्वम् ।) असद्व्यवहारः । फाकि इति भाषा ।
तत्पर्य्यायः । चोद्यम् २ देश्यम् ३ पूर्ब्बपक्षः ४ ।
इति शब्दरत्नावली ॥ (यथा, नैषधे । २ ।
९५ ।
"फणिभाषितभाष्यफक्विका
विषमा कुण्डलनामवापिता ॥")
न्यायसम्बन्धिव्याख्या । यथा, --
"श्रीमता मथुरानाथतर्कवागीशधीमता ।
विषदीकृत्य दर्श्यन्ते द्वितीयमणिफक्विकाः ॥"
इत्यनुमानखण्डटीकारम्भेमथुरानाथः ॥

**फञ्जिका**, स्त्री, (भनक्ति रोगानिति । भञ्ज आम-

र्द्दने + ण्वुल् । पृषोदरादित्वात् भस्य फः । टापि
अत इत्वम् ।) ब्राह्मणयष्टिका । इत्य-
मरः । २ । ४ । ८९ ॥ (यथा, वैद्यकरसेन्द्रसार-
संग्रहे ज्वराधिकारे बृहच्चूडामणिरसे ।
"निर्गुण्डी फञ्जिका वासारविमूलत्रिकण्टकैः ॥"
"फञ्जिका ब्राह्मणयष्टिका ।" इति तट्टीका ॥)
देवताडः । दुरालभा । इति शब्दचन्द्रिका ॥

(यथा, पञ्चवन्त्रे । ३ । ८३ ।
"निर्व्विषेणापि सर्पेण कर्त्तव्या महती फटा ।
विषं भवति मा वास्तु फटाटोपो भयङ्करः ॥")
दम्भः । इति मेदिनी । टे, २३ ॥ कितवः ।
इति हेमचन्द्रः ॥ * ॥
"स्यात् पवर्गद्बितीयादि फटायान्तु स्फटापि
च ॥"
इतिभरतधृतशब्दभेदः ॥

**फडिङ्गा**, स्त्री, (फडिति शब्दं इङ्गति गच्छतीति ।

इङ्ग गतौ + अच् । टाप् ।) झिल्लिका । इति
शब्दचन्द्रिका ॥ फडिङ्ग इति भाषा ॥

**फण**, ण निःस्नेहे । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-अक०-सेट् ।) फेणतुः पफणतुः ।
निःस्नेहः अनायासेनोत्पत्तिः । फणति वाञ्छितं
श्रीमताम् । अनायासेन जातम् । अस्यैव ञ्यन्तस्य

निष्ठायां अनायासकृत्तं फाण्टं इत्यमरः ॥
अतएव रमानाथोऽपि घटादौ फण गतौ इत्यत्र गतेरन्यत्र । फाणयति जनोऽनायासेन
जनयतीत्यर्थ इत्याह । इति दुर्गादासः ॥

**फण**, मि ण गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।) मि, फणयति फाणयति ।
ण, फेणतुः पफणतुः । इति दुर्गादासः ॥

**फणः**, त्रि, (फनति विस्तृतिं गच्छतीति । फण +
अच् ।) सर्पस्य विस्तृतमस्तकम् । यथा । फटा-
यान्तु फणा द्वयोरित्यमरः ॥ शशोर्णं कारणं
फणम् । इति क्लीवकाण्डे चन्द्रगोमी ॥ तत्-
पर्य्यायः । फणा २ फणम् ३ फटा ४ फटः ५
स्फटः ६ स्फटा ७ । इत्यमरभरतौ ॥ दर्व्वी ८
भोगः ९ स्फुटः १० । इति हेमचन्द्रः । ४ । ३८१ ॥
स्फुटा ११ दर्व्विः १२ फटी १३ । इति शब्द-
रत्नावली ॥ (यथा, महाभारते । १२ । ११४ । १५ ।
"परिवादं ब्रुवाणो हि दुरात्मा वै महाजने ।
प्रकाशयति दोसांस्तु सर्पः फणमिवोच्छ्रितम् ॥"
जत्रूद्र्ध्वस्थमर्म्मविशेषः । यथा, सुश्रुते । ३ । ६ ।
"जत्रूद्र्ध्वं मर्म्माणि चतस्रो धमन्योऽष्टौ मातृकाः

**फणाभरः**, पुं, (बिभर्त्ति धरतीति । भृ + पचाद्यच् ।
फणाया भरः ।) सर्पः । इति हारावली । १५ ॥

**फणावान्**, [त्] पुं, (फणास्यास्तीति । फणा +
मतुप् । मस्य वः ।) सर्पः । इति शब्दरत्नावली ॥

**फणिकेसरं**, क्ली, (फणीव केसरोऽस्य ।) नाग-
केसरम् । इति राजनिर्घण्टः ॥ (गुणादयोऽस्य
नागकेसरशब्दे ज्ञातव्याः ॥)

**फणिखेलः**, पुं, (फणिना सह खेलतीति । खेल +
अच ।) भारतीपक्षी । इति त्रिकाण्डशेषः ॥
भारै इति भाषा ॥

**फणिचक्रं**, क्ली, (फण्याकारं चक्रम् ।) विवाहादि-
कर्म्मसु शुभाशुभज्ञानार्थं सप्तविंशतिनक्षत्र-
घटितसर्पाकारत्रिनाडिकचक्रम् । यथा, --
"अश्विन्यादि लिखेच्चक्रं सर्पाकारं त्रिनाडिकम् ।
तत्र वेधवशाज्ज्ञेयं विवाहादौ शुभाशुभम् ॥
त्रिनाडीवेधनक्षत्रमश्विन्यार्द्राय्युगोत्तराः ।
हस्तेन्द्रमूलवारुण्यः पूर्ब्बभाद्रपदास्तथा ॥
याम्यः सौम्यो गुरुर्योनिश्चित्रा मित्रजलाह्वयम् ।
धनिष्ठा चोत्तरा भाद्रा मध्यनाडीव्यवस्थिताः ॥
कृत्तिका रोहिणी सर्पो मघा स्वातीविशाखके ।
उत्तरा श्रवणा पौष्णं पृष्ठनाडीव्यवस्थिताः ॥
अश्वादिनाडीवेधर्क्षे षष्ठं द्वितीयकं क्रमात् ।
याम्यादितुर्य्यतुर्य्यञ्च कृत्तिकादिद्विषट्ककम् ॥
एवं निरीक्षयेद्वेधं कन्यामन्त्रे गुरौ सुरे ।
पण्यस्त्रीस्वामिमित्रेषु देशे ग्रामे पुरे गृहे ॥
एकनाडीस्थधिष्टानि यदि स्युर्व्वरकन्ययोः ।
तदा वेधं विजानीयाद्गुर्व्वादिषु तथैव च ॥
प्रकटं यस्य जन्मर्क्षं तस्य जन्मर्क्षतो व्यधः ।
प्रनष्टं जन्मभं यस्य तस्य नामर्क्षतो भवेत् ।
द्वयोर्जन्मभयोर्व्वेधे न कर्त्तव्यं कदाचन ॥
एकनाडीस्थिता चेत् स्याद्भर्त्तुर्नाशाय चाङ्गना ।
तस्मान्नाडीव्यधो वीक्ष्यो विवाहे शुभमिच्छता ॥
प्राङ्नाड्या वेधतो भर्त्ता भध्यनाड्यो भयन्तथा ।
मध्ये पृष्ठे भवति विवाहो बहुसुतवित्तमिति च मुनिराह ॥"
इति समयप्रदीपः ॥ * ॥
तस्य विन्यासो यथा, --
पृष्ठे १ ६ ७ १२ १३ १८ १९ २४ २५
मध्ये २ ५ ८ ११ १४ १७ २० २३ २६
क्रोडे ३ ४ ९ १० १५ १६ २१ २२ २७ ॥

**फणिजिह्वा**, स्त्री, (फणिजिह्वेव आकृतिरस्त्यस्या
इति अच् ।) महाशतावरी । महासमङ्गा ।
इति राजनिर्घण्टः ॥

**फणिज्झकः**, पुं, (फणिनामुज्झकः बहिष्कारक
उत्पादक इति यावत् । पृषोदरादित्वात् साधुः ।
फणितुल्यबहुपत्रपुष्पवत्त्वात् तथात्वम् ।) क्षुद्र-
पत्रतुलसी ॥ (रक्तवर्णतुलसी च । तत्पर्य्यायश्च
यथा, वैद्यकरत्नमालायाम् ।
"मुगन्धाको गन्धनामा तीक्ष्णगन्धः फणिज्-
झकः ॥")
जम्बीरभेदः । इति केचित् ॥ जम्बीरसामान्यः ।
इति केचित् ॥ तत्पर्य्यायः । समीरणः २ मरुवकः
३ प्रस्थपुष्पः ४ जम्बीरः ५ । इत्यमरभरतौ ॥
(यथा, --
"मारुतोऽसौ मरुवको मरुन्मरुरपि स्मृतः ।
फणी फणिज्झकश्चापि प्रस्थपुष्पः समीरणः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**फणितः**, त्रि, (फण गतौ + क्तः ।) गतः ।

द्वे कृकाटिके द्वे विधुरे द्वौ फणौ
द्वावपाङ्गौ
द्वावावर्त्तौ द्वावुत्क्षेपौ द्वौ शङ्खावेका
स्थपनी
पञ्च सीमन्ताश्चत्वारि
शृङ्गाटकान्येकोऽधिपति-
रिति ॥”)

**फणकरः**, पुं, (फणः कर इवास्येति । फणस्य करो

वा ।) भुजङ्गः । इति शब्दरत्नावली ॥

**फणधरः**, पुं, (धरतीति । धृ + अच् । फणस्य

धरः ।) सर्पः । इति शब्दरत्नावली ॥

**फणधरधरः**, पुं, (फणधरस्य सर्पस्य धरः ।) शिवः ।

इति कविकल्पलता ॥

**फणभृत्**, पुं, (फणं बिभर्त्तीति । भृ + क्विप् तुक् च ।)

सर्पः । इति हेमचन्द्रः । ४ । ३६९ ॥
(यथा,
राजेन्द्रकर्णपूरे । ४ ।
“व्याप्तव्योमतले मृगाङ्कधवले
निर्धौतदिङ्मण्डले
देवत्वद्यशसि प्रशान्ततमसि प्रौढे जगत्
प्रेयसि ।
कैलासन्ति महीभृतः फणभृतः शेषन्ति
पाथोधयः
क्षीरोदन्ति सुरद्विपन्ति करिणो हंसन्ति
पुंस्कोकिलाः ॥”)

**फणवान्**, [त्] पुं, (फणोऽस्यास्तीति । फण +

मतुप् । मस्य वः ।) सर्पः । इति
शब्दरत्नावली ॥

**फणा**, स्त्री, (फणति प्रसारसङ्कोचं गच्छतीति ।

फण गतौ + अच् । टाप् ।) सर्पफटा ।
इत्य-
मरः । १ । ८ । ९ ॥ (यथा,
अभिज्ञानशकु-
न्तले ६ अङ्के ।
“ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः
पन्नगः फणां

पृष्ठनाडीव्यधे कन्या म्रियते नात्र संशयः ॥
एकनाडीस्थिता यत्र गुरुर्मन्त्रश्च देवता ।
तत्र द्वेषं रुजं मृत्युं क्रमेण फलमादिशेत् ॥
समासन्ने वधे शीघ्रं दूरवेधे चिरेण तु ।
वेधान्तरभमानेन वर्षे दुष्टं प्रजायते ॥
प्रभुः पण्याङ्गना मित्रं देशो ग्रामः पुरं
गृहम् ।
एकनाडीगता भव्या अभव्या वेधवर्ज्जिताः ।
एकराश्यादियोगे तु नाडीदोषो न विद्यते ॥”
इति ज्योतिस्तत्त्वम् ॥
अपि च ।
“सर्पाकारो घटनविशेषः
कृत्तिकादियमदैवतशेषः ।
पृष्ठे सुतहतिसङ्कटरोगः
क्रोडे कान्तापुत्त्रवियोगः ।
मध्ये रेखे विहितविवाह
उभयोर्म्मरणं वदति वराहः ॥
क्रोडे पृष्ठे यश उद्दामम्
मध्ये क्रोडे बहुसम्मानम् ।

निःस्नेहितः ॥

**फणितल्पगः**, पुं, (फणी शेष एव तल्पं फणि-

तल्पं तस्मिन् गच्छतीति । गम + डः ।)
विष्णुः ।
सर्पशय्यायां गच्छति यः । इति व्युत्पत्तिः
॥

**फणिप्रियः**, पुं, (फणिनां प्रियः भक्ष्यत्वात् ।)

वायुः । इति शब्दरत्नावली ॥

**फणिफेनः**, पुं, (फणिनां फेन इव उग्रगुणत्वात् ।)

अहिफेनः । आफिं इति भाषा । यथा, --
“जातीफलं टङ्गणमभ्रकञ्च
हिङ्गूलगन्धं परिमर्द्द्य यामम् ।
भागद्वयं स्यात् फणिफेनकस्य
गान्धालिकापत्त्ररसेन मर्द्द्यम् ॥”
इति रत्नावली ॥

**फणिवल्ली**, स्त्री, (फणीव दीर्घा वल्ली ।) नाग-

वल्ली । इति राजनिर्घण्टः ॥

**फणिहन्त्री**, स्त्री, (फणिनो हन्त्रीति । हन् + तृच्

+ ङीप् ।) गन्धनाकुली । इति
राजनिर्घण्टः ॥

**फणिहृत्**, स्त्री, (फणिनो हरति स्वगन्धेन अपसा-

रयतीति । हृ + क्विप् । तुगागमश्च ।)
क्षुद्र-
दुरालभा । इति राजनिर्घण्टः ॥

**फणी**, [न्] पुं, (फणास्त्यस्येति । फणा + “ब्रीह्या-

दिभ्यश्च ।” ५ । २ । ११६ । इति इनिः
।) सर्पः ।
इत्यमरः ॥ (यथाच सुश्रुते कल्पस्थाने ४
अध्याये ।
“ज्ञेया दर्व्वीकराः सर्पाः फणिनः
शीघ्रगामिनः ।
मण्डलैर्विविधैश्चित्राः पृथवो मन्दगामिनः
॥”

| | | |
|---|---|---|
| कुरुते ।<br>तेजस्वी संक्षोभात् प्रायः प्रतिपद्यते तेजः ॥”)<br>**फणाकरः**, पुं, (करोतीति । कृ + अच् । फणाया करः ।) सर्पः । इति शब्दरत्नावली ॥<br>**फणाधरः**, पुं, (धरतीति । धृ + अच् । फणाया धरः ।) सर्पः । इति शब्दरत्नावली ॥ | | |

तद्दंशनप्रतीकारविधिर्य्यथा, --
"फणिनां विषवेगे तु प्रथमे शोणितं हरेत् ।
द्वितीये मधुसर्पिर्भ्यां पाययेतागदं भिषक् ॥
नस्यकर्म्माञ्जने युञ्ज्यात्तृतीये विषनाशने ।
वान्तं चतुर्थे पूर्ब्बोक्तां यवागूमथ दापयेत् ॥
शीतोपचारं कृत्वादौ भिषक्पञ्चमषष्ठयोः ।
दापयेच्छोधनं तीक्ष्णं यवागूञ्चापि कीर्त्तिताम् ॥
सप्तमे त्ववपीडेन शिरस्तीक्ष्णेन शोधयेत् ।
तीक्ष्णमेवाञ्जनं दद्यात्तीक्ष्णशस्त्रेण मूर्द्धि्न च ॥
कुर्य्यात्काकपदं चर्म्म सासृग्वा पिशितं क्षिपेत् ॥"
इति च सुश्रुते कल्पस्थाने पञ्चमेऽध्याये ॥)
सर्पिणीनामकौषधिः । इति राजनिर्घण्टः ॥
(केतुः । यथा, ग्रहभावप्रकाशे ।
"कविरत्यन्तधवलः फणी कृष्णः शनिस्तथा ॥"
सीसकं अस्य विषयो यथा, --
"रसो गन्धष्टङ्गणः सोषणोऽयं फणी पिप्पलीत्येष धुस्तूरपिष्ठः
जयेत् सन्निपातं द्विगुञ्जकानुपानं भवेदर्कमूलाम्बु सव्योषचूर्णम् ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे ज्वराधिकारे पञ्च-
वक्त्ररसे ॥ मरुवकनामौषधं यथा, --
"मारुतोऽसौ मरुवको मरुन्मरुरपि स्मृतः ।
फणी फणिज्झकश्चापि प्रस्थप्रष्पः समीरणः ॥"

**फल**, ञि आ भिदि । इति कविकल्पद्रुमः । (भ्वा०-
पर०-सक०-सेट् ।) ञि, फुल्लोऽस्ति । आ, फलितं
फुल्तं तेन । फलति काष्ठं कुठारः । इति दुर्गादासः ॥

**फलं**, क्ली, (फलतीति । फल निष्पत्तौ ञि फला
विशरणे वा + अच् ।) लाभः । (यथा, शकु-
न्तलायाम् । १ अङ्के ।
"शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य ।
अथवा भवितव्यानां द्वाराणि भवन्ति सर्व्वत्र ॥")
शस्यम् । (यथास्य भक्षणविधिः ।
"फलानि सर्व्वभक्ष्यांश्च प्रदद्याद्वै दलेषु च ॥"
"फलानि सर्व्वभक्ष्यांश्च परिशुष्काणि यानि च ।
तानि दक्षिणपार्श्वे तु भुञ्जानस्योपकल्पयेत् ॥"
इति सुश्रुते सूत्रस्थाने । ४६ अध्यायः ॥
यथा च शकुन्तलायाम् ।
"उदेति पूर्ब्बं कुसुमं ततः फलं घनीदयः प्राक् तदनन्तरं पयः ॥")
फलकम् । (शारिफलकार्थे यथा, महाभारते ।
४ । १ । २४ ।
"वैदूर्य्यान् काञ्चनान् दान्तान् फलैर्ज्योतीरसैः सह ।
कृष्णाक्षान् लोहिताक्षांश्च निर्व्वत्स्यामि मनो-
रमान् ॥")
हेतुकृतम् । इत्यमरः ॥ जातीफलम् । व्युष्टिः ।
त्रिफला । (यथा, --

दानफलं यथा, --
"यथा फलन्ति शस्यानि न्यूनानि वाधिकानि च ।
कृषकाणां क्षेत्रभेदे पात्रभेदे फलं तथा ॥
सामान्यदिवसे विप्रे दानं समफलं भवेत् ।
अमायां रविसंक्रान्त्यां फलं शतगुणं भवेत् ।
चातुर्मास्यां पौर्णमास्यामनन्तं फलमेव च ॥
ग्रहणे शशिनः कोटिगुणञ्च फलमेव च ।
सूर्य्यस्य ग्रहणे चापि ततो दशगुणं भवेत् ॥
अक्षयायामक्षयञ्चैवासंख्यं फलमुच्यते ।
एवमन्यत्र पुण्याहे फलाधिक्यं भवेदिह ॥
यथा दाने तथा स्नाने जपेऽन्यत्पुण्यकर्म्मसु ।
एवं सर्व्वत्र बोद्धव्यं नराणां कर्म्मणां फलम् ॥
सामान्यदेशे दानञ्च विप्रे समफलं भवेत् ।
तीर्थे देवगृहे चैव फलं शतगुणं स्मृतम् ॥
गङ्गायाञ्च कोटिगुणं क्षेत्रे नारायणे फलम् ।
एवं सर्व्वत्र बोद्धव्यं फलाधिक्यं क्रमेण च ॥
यथा चैव कोटिगुणं तथा च विष्णुमन्दिरे ।
केदारे च लक्षगुणं हरिद्वारे तथा फलम् ॥
पुष्करे भास्करक्षेत्रे दशलक्षगुणं फलम् ।
एवं सर्व्वत्र बोद्धव्यं फलाधिक्यं क्रमेण च ॥
सामान्यब्राह्मणे दानं सममेव फलं भवेत् ।
लक्षं त्रिसन्ध्यपूते च पण्डिते च जितेन्द्रिये ॥
विष्णुमन्त्रोपासके च बुधे कोटिगुणं भवेत् ।
एवं सर्व्वत्र बोद्धव्यं फलाधिक्यं गुणं भवेत् ॥
यथा दण्डेन सूत्रेण शरावेण जवेन च ।
कुम्भं निर्म्माति चक्रेण कुम्भकारो मृदा भुवि ।
तथैव कर्म्मसूत्रेण फलं धाता ददाति च ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ३४ अध्यायः ॥ * ॥
स्वप्रियफलस्य विष्णुदेयत्वम् यथा, --
"भक्ष्याणि यानि पेयानि भोज्यान्यभिमतानि च ।
फलञ्च वल्लभं यच्च तत्तद्देयं जनार्द्दने ॥"
इत्यग्निपुराणम् ॥ * ॥
इष्टकफलद्वारा फलपातननिषेधो यथा, --
"न पातयेदिष्टकाभिः फलानि वै फलेन तु ।
न म्ले च्छभाषां शिक्षेत नाकर्षेच्च पदासनम् ॥"
इति कौर्म्मे उपविभागे १६ अध्यायः ॥
कर्म्मजन्यशुभादृष्टदुरदृष्टसम्भवस्वर्गनरकादि ।
तत्त्रिविधं यथा, --

इति भावप्रकाशस्य पूर्ब्बखण्डे १ भागे ॥)

**फणीश्वरः**, पुं, (फणिनामीश्वरः ।) अनन्तः । इति शब्दरत्नावली ॥

**फण्डः**, पुं, (फणति । फण गतौ + "अमन्तात् डः ।" उणा० १ । ११३ । इति डः ।) जठरम् । इत्युणादिकोषः ॥

**फत्कारी**, पुं, (फत् इत्यव्यक्तशब्दं करोतीति । कृ + णिनिः ।) पक्षिमात्रम् । इति शब्दचन्द्रिका ॥

**फरं**, क्ली, (फलतीति । फल् + अच् । लस्य रत्यम् ।) फलकम् । इत्यमरटीकायां भरतः ॥

**फरुवकं**, क्ली, पूगपात्रम् । इति हारावली । १३७ ॥

**फर्फरीकः**, पुं, (स्फुरतीति । स्फुर स्फुरणे + "फर्फरीकादयश्च ।" उणा० ४ । २० । इति ईकन् धातोः फर्फरादेशश्च ।) चपेटः । मार्द्दवे, क्ली । इति मेदिनी । के, २०० ॥

**फर्फरीका**, स्त्री, (फर्फरीक + टाप् ।) पादुका । (स्फुरतीति ईकन् । टाप् । मनसि स्फुरणादेव तथात्वम् ।) मदनः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**फल**, निष्पत्तौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट् ।)
"इह नवशुककोमला मणीनां
रविकरसम्बलिताः फलन्ति भासः ॥
इति भारविः ॥
निष्पादनेऽपि वाल्मीकिः ।
फलति स्म यस्य चरितस्तोत्राय दिव्या गिरः ॥"
"हरीतकी चामलकी विभीतकमिदं त्रयम् ।
त्रिफला फलमित्युक्तं तच्च ज्ञेयं फलत्रिकम् ॥"
इति वैद्यकपरिभाषायाम् ॥) कक्कोलम् । इति मेदिनी । ले, ३३ ॥ वाणाग्रम् । आर्त्तवम् । इति शब्दरत्नावली ॥ फालः । इति हेमचन्द्रः ॥ दानम् । इति धरणिः ॥ मुष्कः । यथा, --
"अफलो भुज्यते मेषः सफलस्तु न भुज्यते ।"
इति रामायणम् ॥
(प्रमेयभेदः । यथा, --
"आत्मशरीरेन्द्रियार्थबुद्धिमनः प्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम् ॥"
इति गोतमसूत्रम् ।
तत्रैव फलसूत्रम् यथा ।
"प्रवृत्तिदोषजनितोऽर्थः फलम् ॥" "सुखदुःखसंवेदनं फलम् । सुखविपाकं कर्म्मदुःखविपाकञ्च तत् पुनर्देहेन्द्रियविषयबुद्धिषु सतीषु भवतीति सह देहादिभिः फलमभिप्रेतम् । तथाहि प्रवृत्तिदोषजनितोऽर्थः फलमेतत् सर्व्वं भवति तदेतत् फलमुपात्तमुपात्तं हेयं त्यक्तं त्यक्तमुपादेयमिति नास्य हानोपादानयोर्निष्ठा पर्य्यवसानं वास्ति स खल्वयं हानोपादानस्रोतसोह्यते लोकः ।" इति वात्स्यायनः ॥) जीवस्य कर्म्मफलभुक्तिर्यथा, --
"अनिष्टमिष्टं मिश्रञ्च त्रिविधं कर्म्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु सन्न्यासिनां क्वचित् ॥"
इति श्रीभगवद्गीतायाम् १८ अध्यायः ॥
"अनिष्टं नारकित्वम् । इष्टं देवत्वम् । मिश्रं मनुष्यत्वम् । एवं त्रिविधं पापस्य पुण्यस्य उभयमिश्रस्य च कर्म्मणो यत् फलं प्रसिद्धं तत् सर्व्वमत्यागिनामेव प्रेत्य परत्र भवति तेषां त्रिविधकर्म्मसम्भवात् न तु सन्न्यासिनां क्वचिदपि भवति ।" इति तट्टीकायां श्रीधरस्वामी ॥ * ॥ वेदादीनां फलम् । यथा, वह्निं प्रति मरीचिवाक्यम् ।
"स तं प्राह फलं ब्रूहि वेदस्य च धनस्य च ।
दारश्रुतस्य विप्रादेः स्वर्गापवर्गहेतवे ॥

| | | |
|---|---|---|
| इति दुर्गादासः ॥<br><br>**फल**, ज गतौ । इति कविकस्त्पद्रुमः ॥ (भ्वा०-पर०-<br>सक०-सेट् ।) ज, फालः फलः ।<br>इति दुर्गादासः ॥ | "जीवः कर्म्मफलं भुङ्क्ते आत्मा<br>निर्लिप्त एवच ।<br>आत्मनः प्रतिविम्बश्च देही जीवः स<br>एव च ॥"<br>इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २३<br>अध्यायः ॥ | |

वह्निरुवाच ।
अग्निहोत्रफला वेदा दत्तमुक्तफलं धनम् ।
रतिपुत्त्रफला दाराः शीलवृत्तफलं श्रुतम् ॥”
इति वह्निपुराणे नित्याह्निकस्नानविधिनामा-
ध्यायः ॥ * ॥ लवणादिसंयोगे फलस्यान्नत्वं
यथा,
“तण्डुलोम्ब्वग्निसंयोगाल्लवणयोगेन पिष्टकम् ।
फलं त्रितयसंयोगादन्नं भवति तत्क्षणात् ॥”
इति रामार्च्चनचन्द्रिकाधृतवचनमितिकेचित् ॥

**फलः**, पुं, (फलतोति । फल + अच् ।) कुटज-
वृक्षः । इति शब्दरत्नावली ॥ (यथा, सुश्रुते
सूत्रस्थाने ४६ अध्याये ।
“कण्टकारिकाफलपटोलवार्त्ताक्किारवेल्लक-
र्कटिकाकेबुकोरुवूकपर्प्पटककिराततिक्तकर्कोट-
कारिष्टकोशातकीवेत्रकरीराटरुषकार्कपुष्पीप्र-
भृतीनि ॥”)

**फलकं**, क्लो, पुं, (फल + संज्ञायां कन् ।) चर्म्म ।
इत्यमरः । २ । ८ । ९० ॥ ढाल इति भाषा ॥
(यथा, विष्णुपादादिकेशान्तवर्णनस्तोत्रे । ३३ ।
“शार्ङ्गं बाणं कृपाणं फलकमरिगदे पद्मशङ्खौ
सहस्रम्
विभ्राणाः शस्त्रजालं मम ददतु हरेर्बाहवो
मोहहानिम् ॥”)

**फलकः**, पुं, (फल + संज्ञायां कन् ।) अस्थिखण्डम् ।
इति जटाधरः ॥ नागकेशरम् । इति शब्द-
चन्द्रिका ॥ काष्ठादिफलकम् । यथा, --
“पाण्डुलेख्येन फलके भूमौ वा प्रथमं लिखेत् ।
ऊनाधिकन्तु संशोध्यं पश्चात् पत्रे निवेशयेत् ॥”
इति व्यवहारतत्त्वे व्यासः ॥
(यथा, मार्कण्डेये । ८७ । ५ ।
“भृकुटीकुटिलात्तस्या ललाटफलकाद्द्रुतम् ।
काली करालवदना विनिष्क्रान्तासिपाशिनी ॥”)
रजकपट्टम् । धोपार पाट इति भाषा । यथा,
“शाल्मले फलके श्लक्ष्णे निज्याद्वासांसि नेजकः
।
न च वासांसि वासोभिर्निर्हरेन्न च वासयेत् ॥”
इति मिताक्षरा ॥

**फलकेशरः**, पुं, (फले केशरा इवास्य ।) नारी-
केलवृक्षः । इति जटाधरः ॥

**फलकोषकः**, पुं, (फलं मुष्क एव कोषो यत्र । ततः
कन् ।) मुष्कः । इति त्रिकाण्डशेषः ॥
(विवृति-
रस्य मुष्कशब्दे ज्ञातव्या ॥)

**फलग्रहिः**, त्रि, (फलं गृह्णातीति । ग्रह + इन् ।)
फलेग्रहिः । यथासमयं फलधरवृक्षः
। इत्यमर-
टीकायां भरतः ॥

**फलग्राही**, [न्] पुं, (फलं गृह्णातीति । ग्रह +
णिनिः ।) वृक्षः । इति धरणिः ॥
फलग्रहण-
कर्त्तरि, त्रि ॥

**फलचमसः**, पुं, दधिमिश्रितवटत्वक्चूर्णम् । इति
श्राद्धतत्त्वम् ॥

**फलचोरकः**, पुं, (फलं चोर इवास्य कन् ।) चोरक-
नामगन्धद्रव्यम् । इति राजनिर्घण्टः
॥

**फलत्रयं**, क्ली, (फलस्य त्रयम् ।) द्राक्षापरूष-
काश्मर्य्यः । (यथा, --
“द्राक्षपरूषकाश्मर्य्यैः
फलत्रयमुदाहृतम् ॥”
इति वैद्यकपरिभाषायाम् ॥)
त्रिफला । इति शब्दचन्द्रिका ॥

**फलत्रिकं**, क्ली, (फलस्य त्रिकम् ।) त्रिफला ।
(यथा, --
“पथ्याविभीतधात्रीणां फलैः
स्यात्त्रिफला समैः ।
फलत्रिकञ्च त्रिफला सा वरा च
प्रकीर्त्तिता ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**फलपूरकः**, (फलपूर + स्वार्थे कन् ।) बीजपूरः ।
इति भावप्रकाशः ॥

**फलप्रदः**, त्रि, (फलं प्रददातीति । प्र + दा +
“आतश्चोपसर्गे ।” ३ । १ । १३६ ।
इति कः ।)
फलदाता । यथा, --
“क्रीणीहि भोः फलानीति श्रुत्वा
सत्वरमच्युतः ।
फलार्थी धान्यमादाय ययौ सर्व्वफलप्रदः
॥”
इति श्रीभागवते १० स्कन्धे ११
अध्यायः ॥

**फलप्रिया**, स्त्री, (फलेन प्रीणातीति । प्री + कः ।
टाप् ।) प्रियङ्गुः । इति राजनिर्घण्टः ॥
(गुणा-
दयोऽस्या प्रियङ्गुशब्दे ज्ञेयाः ॥)

**फलभाक्**, [ज्] त्रि, (फलं भजते इति । भज +
“भजो ण्विः ।” ३ । २ । ६२ । इति
ण्विः ।)
फलभागी । यथा, --
“मासपक्षतिथीनाञ्च निमित्तानाञ्च
सर्व्वशः ।
उल्लेखनमकुर्व्वाणो न तस्य फलभाग्भवेत्
॥”
इति
तिथ्यादितत्त्वधृतब्रह्माण्डभविष्यपुराण
वचनम् ॥

**फलभूमिः**, स्त्री, (फलाय कर्म्मफलभोगाय भूमिः
।)
कर्म्मफलभोगस्थानम् । यथा, --
“भरतान्यैरावतानि विदेहाश्च कुरून्
विना ।
वर्षाणि कर्म्मभूम्यः स्युः शेषाणि
फलभूमयः ॥”
इति हेमचन्द्रः । ४ । १२ ॥

**फलमुख्या**, स्त्री, (फलेन मुख्या श्रेष्ठा ।) अज-

**फलकपाणिः**, पुं, (फलकं पाणौ यस्य ।) चर्म्मी । इत्यमरः ॥ २ । ८ । ७१ ॥ ढाली इति भाषा ॥

**फलकर्क्कशा**, स्त्री, (फलेन कर्कशा ।) वनकोलिः । इति केचित् ॥

**फलकामः**, त्रि, (फलं कामयते इति । कम + अण् ।) कर्म्मफलकामी । यथा, --
"धर्म्मवाणिजिका मूढाः फलकामा नराधमाः ।
अर्च्चयन्ति जगन्नाथं ते कामान्नाप्नुवन्त्युत ॥"
इति मलमासतत्त्वधृतविष्णुधर्म्मात्तरीयतृतीयकाण्डीयवचनम् ।

**फलकी**, [न्] पुं, (फलकं फलकाकारोऽस्त्यस्येति । फलक + इनिः ।) मत्स्यभेदः । फलुइ इति भाषा । (गुणादिकमस्य फलिशब्दे ज्ञातव्यम् ।) फलकान्विते, त्रि । इति मेदिनी । ने, १९ ॥

**फलकृष्णः**, पुं, (फले फलावच्छेदे कृष्णः ।) पानीयामलकम् । इति शब्दचन्द्रिका ॥
शुण्ठीपिप्पलीमरिचानि । इत्यमरः । २ । ९ । १११ ॥

**फलदः**, पुं, (फलं ददातीति । दा + "आतोऽनुपसर्गे ।" ३ । २ । ३ । इति कः ।) वृक्षः । इति धरणिः ॥

**फलदः**, त्रि, (फलं ददातीति । दा + कः ।) फलदाता । यथा, --
"विशिष्टफलदा कन्या निष्कामाणां विमुक्तिदा ॥"
इति मलमासतत्त्वधृतविष्णुपुराणवचनम् ॥

**फलपञ्चाम्लं**, क्ली, अम्लपञ्चफलम् । इति राजनिर्घण्टः ॥

**फलपाकः**, पुं, (फलेषु पाकोऽस्य ।) करमर्द्दकः । इत्यमरटीकायां भरतः ॥ पानीयामलकम् । इति शब्दचन्द्रिका ॥

**फलपाकान्ता**, स्त्री, (फलपाकेनान्तो नाशो यस्याः ।) ओषधिः । धान्यकदल्यादिः । इत्यमरः । २ । ४ । ७ ॥

**फलपाकी**, [न्] पुं, (फलपाकोऽस्त्यस्येति । इनिः ।) गर्द्दभाण्डः । इति रत्नमाला ॥ (यथास्य पर्य्यायः ।
"नन्दीवृक्षस्ताम्रपाकी फलपाकी च पीतनः ।
गर्द्दभाण्डो गन्धमुण्डो द्वितीयः क्षिप्रपाक्यसौ ॥"
इति च वैद्यकरत्नमालायाम्)

**फलपुच्छः**, पुं, (फलं पुच्छ इव यस्य ।) वरण्डालुः । इति त्रिकाण्डशेषः ॥
मोदा । इति राजनिर्घण्टः ॥

**फलमुद्गरिका**, स्त्री, (फले फलावच्छेदे मुद्गरिका क्षुद्रमुद्गर इव ।) पिण्डखर्ज्जूरः । इति शब्दमाला ॥

**फललक्षणा**, स्त्री, (फलहेतुका लक्षणा ।) प्रयोजनवती लक्षणा । यथा, साहित्यदर्पणे ।
"व्यङ्ग्यस्य गूढागूढत्वाद्द्विधा स्युः फललक्षणाः ।"

**फलवर्त्तुलं**, क्ली, (फलं वर्त्तुलमस्य ।) कालिङ्गम् । इति राजनिर्घण्टः ॥

**फलवान्**, [त्] त्रि, (फलमस्यास्तीति । फल + मतुप् । मस्य वः ।) फलयुक्तवृक्षः । तत्पर्य्यायः । फलिनः २ फली ३ । इत्यमरः ॥ फलितः ४ । इति राजनिर्घण्टः ॥ (यथा, मनुः । १ । ४७ ।
"अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः ।
पुष्पिणः फलिनश्चैव वृक्षास्तूभयतः स्मृताः ॥")

**फलविक्रयिणी**, त्रि, (फलविक्रयोऽस्या अस्तीति । इनिः । ङीप् ।) फलविक्रेत्री । कुज्डायिनी इति हिन्दी भाषा । यथा, --
"फलविक्रयिणी तस्य च्युतधान्यकरद्वयम् ।
फलैरपूरयद्रत्नैः फलभाण्डमपूरि च ॥"
इति श्रीभागवते १० स्कन्धे ११ अध्यायः ॥

**फलवृक्षकः**, पुं, (फलप्रधानो वृज्ञः । संज्ञायां कन् ।) पनसः । इति राजनिर्घण्टः ॥ (पनसशब्देऽस्य विशेषो व्याख्यातः ॥)

**फलशाकं**, क्ली, (फलमेव शाकम् ।) षड्विधशाका-

| | | |
|---|---|---|
| | **फलपुष्पा**, स्त्री, (फलानि पुष्पाणीवास्याः ।) पिण्ड-<br>खर्ज्जूरी । इति राजनिर्घण्टः ॥<br>**फलपूरः**, पुं, (फलेन पूरः पूर्णः ।) बीजपूरः ।<br>इत्यमरः । २ । ४ । ७८ ॥<br>(विवरणमस्य बीज-<br>पूरशब्दे ज्ञातव्यम् ॥) | न्तर्गतफलरुपशाकम् । यथा, राजवल्लभे ।<br>"पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा ।<br>शाकं षड्विधमुद्दिष्टं गुरु विद्याद्यथोत्तरम् ॥" |

**फलशाडवः**, पुं, दाडिमः । इति त्रिकाण्डशेषः ॥

**फलशाली** [न्], त्रि, (फलेन शालते श्लाघते इति ।

शाल् + णिनिः ।) फलाश्रयः । यथा, --
"परसमवेतधात्वर्थजन्यफलशालित्वं
कर्म्मत्वम् ॥"
इति कर्म्मलक्षणे सारमञ्जरी ॥

**फलशैशिरः**, पुं, (शिशिरं प्राप्तमस्य अण् शैशिरम् ।

फलं शैशिरं यस्य ।) वदरवृक्षः । इति राज-
निर्घण्टः ॥

**फलश्रुतिः**, स्त्री, (फलस्य कर्म्मफलस्य श्रुतिः श्रव-

णम् ।) कर्म्मफलश्रवणम् । यथा, --
"फलशुतिरियं नृणां न श्रेयो रोचनं परम् ।
श्रेयो विवक्षया प्रोक्तं यथा भैषज्यरोचनम् ॥"
अपि च ।
"वेदोक्तमेव कुर्व्वाणो निःसङ्गोऽर्पितमीश्वरे ।
नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः
॥"
इति श्रीभागवते ११ स्कन्धः । इति
मलमासतत्त्वम् ॥

**फलश्रेष्ठः**, पुं, (फलानां फलवृक्षाणां श्रेष्ठः ।)

आम्रवृक्षः । इति शब्दचन्द्रिका ॥

**फलसः**, पुं, पनसवृक्षः । इत्यमरटीकायां भरतः ॥

**फलस्नेहः**, पुं, (फले स्नेहो यस्य ।) आखोटवृक्षः ।

इति राजनिर्घण्टः ॥

**फलहारी**, स्त्री, काली । फलं हरति या ढात्

षणिणिति कर्म्मोपपदहृञ् घातोः षणि
ईप्प्रत्यय-
निष्पन्नोऽयं शब्दः । सा ज्यैष्ठपञ्चदश्यां बहु-
फलाद्युपहारैः पूजनीया । यथा, --
"ज्यैष्ठे मासि अमायां वै मध्यरात्रे महेश्वरि !
।
पूजयेत् कालिकां देवीं नानाद्रव्योपहारकैः ॥
तत्रैव सितपक्षे तु पञ्चदश्यां निशार्द्धके ।
पूजयेच्च फलैर्लक्षैः शक्तितो वापि कालिकाम्
॥"

**फलाम्लः**, पुं, (फलमम्लमस्य ।) अम्लवेतसः ॥ इति

राजनिर्घण्टः ॥

**फलार्थी** [न्] त्रि, (फलं अर्थयते इति । अर्थ +

णिनिः ।) फलकामी । यथा, --
"सर्व्वसूक्तेषु कर्त्तव्या प्रतिष्ठा विधिना बुधैः ।
फलार्थिभिस्त्वप्रतिष्ठं यस्मान्निष्फलमुच्यते
॥"
इति मठप्रतिष्ठातत्त्वधृतहयशीर्षपञ्चरात्रीय-
सङ्कर्षणकाण्डीयवचनम् ॥

**फलाशनः**, पुं, (फलानश्नातीति । अश + ल्युः ।)

शुकपक्षी । इति त्रिकाण्डशेषः ॥ फलभक्षके,
त्रि ॥

**फलासङ्गः**, पुं, (फलेषु आसङ्गः ।) फलासक्तिः ॥

यथा, --
त्यक्त्वा कर्म्मफलासङ्गं नित्यतृप्तो निराश्रयः
।
कर्म्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति
सः ॥"
इति श्रीभगवद्गीतायां ४ अध्यायः ॥

**फलिः**, पुं, (फल + इन् ।) मत्स्यविशेषः । फलुइ

इति भाषा । अस्य गुणाः । स्वादुत्वम् । गुरु-
त्वम् । स्निग्धत्वम् । बलकारित्वम् ।
शुक्रबर्द्धन-
त्वञ्च । इति राजवल्लभः ॥

**फलिका**, स्त्री, (फलमस्या अस्तीति । फल + ठन् ।

टाप् ।) निष्पावी । इति राजनिर्घण्टः ॥
(फला
स्वार्थे कनि अत इत्वम् । शरादेरग्रभागः ।
यथा, आर्य्यासप्तशत्याम् । ३३५ ।
"न प्राप्यसे कराभ्यां हृदयान्नापैषि वितनुषे
बाधाम् ।
त्वं मम भग्नावस्थितकुसुमायुधविशिख-
फलिकेव ॥")

**फलितं**, त्रि, (फल + तारकादित्वात् इतच् ।)

**फली**, [न्] त्रि, (फलमस्यास्तीति । फल +
इनिः ।)

फलयुक्तवृक्षादिः । इत्यमरः । २ । ४
। ७ ॥

**फली**, स्त्री, (फलमस्त्यस्या इति अर्श
आदिभ्यः

अच् । स्त्रियां ङीप् ।) प्रियङ्गुवृक्षः ।
इत्यमरः ।
२ । ४ । ७ ॥ (यथा,
वैद्यकरत्नमालायाम् ।
"विश्वक्सेना प्रिया कान्ता प्रियङ्गुः
फलिनी-
फली ॥"
फलि + वा ङीष् ।) फलिमतस्यः ।
इति शब्द-
माला ॥

**फलूषः**, पुं, लताभेदः । इत्युणादिकोषः ॥

**फलेग्रहिः**, पुं, (फलं गृह्णातीति । फल + ग्रह +

"फलेगृहिरात्मम्भरिश्च ।" ३ । २ ।
२६ । इति उप-
पदस्य एदन्तत्वं ग्रहेरिन् प्रत्ययश्च
निपात्यते ।)
यथासमयं फलधरवृक्षः । ऋतुप्राप्तौ
फलानि
गृह्णाति घारयतीति फलेग्रहिः
शकृत्स्तम्बादि-
त्यादिना इः सूत्रे फले इति निर्द्देशात्
एकारः ।
किंवा फले गृह्णाति इति फलेग्रहिः
कर्म्मण्या-
धारविवक्षा निपातनात् सप्तम्या
अलुक् लुकि
फलग्रहिश्च फलेग्रहिः फलग्रहिरिति
वाच-
स्पतिः । इह ग्रहिर्धारणार्थः
स्वीकारार्थश्च
अत्र धारणार्थे वृक्ष एव रूढिः ।
स्वीकारार्थे

इति मायातन्त्रे १७ पटलः ॥

**फला**, स्त्री, झिञ्झिरिष्टाक्षुपः । इति राज-

निर्घण्टः ॥ (शमी । तत्पर्य्यायो यथा, --
"शमी शकुफला तुङ्गा केशहन्त्री फलाशिवा ।
मङ्गल्या च तथा लक्ष्मीः शमीरः साल्पिका
स्मृता ॥")

**फलाठ्या**, स्त्री, (फलेन आठ्या सम्पन्ना ।) काष्ठ-

कदली । इति राजनिर्घण्टः ॥

**फलाध्यक्षं**, क्ली, (फलानामध्यक्षमिव ।) राजा-

दनवृक्षः । इत्यमरः । २ । ४ । ४५ ॥
(क्वचित्,
पुं । अस्य पर्य्यायः ।
"राजादनः फलाध्यक्षोराजन्यः क्षीरिकापिच
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
फलानामधिकृते, त्रि ॥

**फलादनः**, पुं, (फलानामदनोभक्षकः । यद्बा,

फलानां अदनं भक्षणं यस्य ।) शुकपक्षी ।
इति हेमचन्द्रः । ४ । ४०१ ॥ फलभक्षके, त्रि
॥

**फलान्तः**, पुं, (फलेषु सत्सु अन्तो नाशो यस्य ।)

वंशः । इति शब्दमाला ॥

**फलाम्लं**, क्ली, (फलमम्लं यस्य ।) वृक्षाम्लम् । इति

राजनिर्घण्टः ॥ (यथा, सुश्रुते सूत्रस्थाने
४६अ ॥
"मद्यं मद्योचितानान्तु सर्व्वमांसेषु पूजितम् ।
अमद्यपानामुदकं फलाम्लं वा प्रशस्यते ॥")

फलमस्य जातम् । इति मुग्धबोधव्याकरणम्
॥
(यथा, देवीभागवते । १ । १७ । १२ ।
"संपश्यन् विविधान् देशान् लोकांश्च वित्त-
धर्म्मिणः ।
वनानि पादपांश्चैव क्षेत्राणि फलितानि च ॥")
वृक्षे, पुं । इति धरणिः ॥ शैलेये, क्ली । इति
राजनिर्घण्टः ॥

**फलिनः**, त्रि, (फलानि सन्त्यस्येति । फल +

"बहूलमन्यत्रापि ।" उणा० २ । ४९ । इति
इनच् ।) फलवान् । इत्यमरः । २ । ४ । ७ ॥
पनसे फलवति वृक्षे च पुं । इति राज-
निर्घण्टः ॥

**फलिनी**, स्त्री, (फलमस्या अस्तीति । इनिः ।

ङीप् ।) प्रियङ्गुवृक्षः ॥ (पर्य्यायोऽस्या यथा, --
"प्रियङ्गुः फलिनी कान्ता लता च महिलाह्वया
।
गुन्द्रा गुन्द्रफला श्यामा विष्वक्सेनाङ्गना
प्रिया ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
यथा, रघौ । ८ । ६१ ।
"मिथुनं परिकल्पित त्वया
सहकारः फलिनी च नन्विमौ
अविधाय विवाहसत्क्रिया-
मनयो र्गम्यत इत्यसाम्प्रतम् ॥")
अग्निशिखावृक्षः । इत्यमरः । २ । ४ । १३६
॥

तु क्रियाशब्दतैव यथा फलेग्रहीन्
हंसि वन-
स्पतीनामिति भट्टिः ॥ इति
रायमुकुटादयः ।
इत्यमरटीकायां भरतः ॥
फलग्रहणकर्त्तरि, त्रि ॥

**फलेग्राहिः**, पुं, (फले गृह्णातीति । ग्रह् + इन् ।

पृषोदरात् वृद्धिः । निपातनात्
सप्तम्या अलुक् ।)
फलेग्रहिः । इति शब्दरत्नावली ॥

**फलेन्द्रः**, पुं, (फलेन इन्द्रः ऐश्वर्य्यशालीव । बृहत्-

फलत्वादेवास्य तथात्वम् ।)
बृहज्जम्बुः । तत्-
पर्य्यायः । नन्दः २ राजजम्बुः ३
महाफला ४
सुरभिपत्रा ५ महाजम्बुः ६ । अस्य
गुणाः ।
स्वादुत्वम् । विष्टम्भित्वम् । गुरुत्वम् ।
रोचन-
त्वञ्च । इति भावप्रकाशः ॥

**फलेपुष्पा**, स्त्री, (फले फलमुखे पुष्पं यस्याः ।

सप्तम्या अलुक् ।) क्षुद्रक्षुपविशेषः ।
गूमा इति
हिन्दीभाषा । तत्पर्य्यायः । द्रोणा २
द्रोणपुष्पी
३ । अस्या गुणाः । गुरुत्वम् ।
स्वादुत्वम् ।
रूक्षत्वम् । उष्णत्वम् ।
वातपित्तकारित्वम् ।
क्षारत्वम् । लवणत्वम् ।
स्वादुपाकत्वम् । कटु-
त्वम् । भेदकत्वम् ।
कफामकामलाशोथतमक-
श्वासजन्तुनाशित्वञ्च । इति
भावप्रकाशः ॥

**फलेरुहा**, स्त्री, (फले रोहतीति । रुह + कः ।

सप्तस्या अलुक् ।) पाटलिवृक्षः ।
इत्यमरः ।

| | | |
|---|---|---|
| | | २ । ३ । ५४ ॥ (अस्याः पर्य्यायो यथा, --<br>"पाटलालिप्रिया स्थाली ताम्रपुष्पी फलेरुहा ।<br>कामदूती कुवेराक्षी कुम्भी तोयाधिवासिनी ॥"<br>इति वैद्यकरत्नमालायाम् ॥)<br>**फलेसक्तः**, त्रि, (फले सक्त आसक्तः ।) फलासक्तः ।<br>फलकामी । यथा, भगवद्गीतायाम् ।<br>"युक्तः कर्म्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठि-<br>कीम् ॥<br>अयुक्तः कामकारेण फलेसक्तो निबध्यते ॥" |

‘फलेसक्तः मम फलायेदं कर्म्म करोमीत्येवं फले-
सक्तो नितरां बन्धं प्राप्नोति ।’ इति मलमास-
तत्त्वम् ॥

**फलोत्तमा**, स्त्री, (फलेषु उत्तमा ।) काकली-
द्राक्षा । इति राजनिर्घण्टः ॥ (दुग्धिका । तत्-
पर्य्यायो यथा, --
“उत्तमा दुग्धिका दुग्धी फलोत्तमा फलिन्यपि ॥”
इति वैद्यकरत्नमालायाम् ॥)

**फलोत्पत्तिः**, पुं, (फलाय उत्पत्तिरस्य । प्रशस्त-
फलानां उत्पत्तिरत्र वा ।) आम्रवृक्षः । इति
शब्दचन्द्रिका ॥

**फलोदयः**, पुं, (फलस्य उदयो यत्र ।) लाभः ।
सुरालयः । हर्षः । इति शब्दरत्नावली ॥
(फलस्य उदयः ।) फलोत्पत्तिः । यथा, रघुः ।
“सोऽहमाजन्मशुद्धानामाफलोदयकर्म्मणाम् ।
आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् ॥”

**फल्कः**, पुं, (फल निष्पत्तौ + “कृदाधारार्च्चिफलिभ्यः
कः ।” उणा० ३ । ४० । इति कः । सूत्रेऽत्र
कलिभ्य
इति पाठस्य विकल्पितत्वात् बाहुलकात् क
इत्येके ।) विसारिताङ्गम् । इत्युणादिकोषः ॥

**फल्गु**, त्रि, (फल निष्पत्तौ + “फलिपाटिनमि-
मनिजनामिति ।” उणा० १ । १९ । इत्युः गुगा-
गमश्च ।) असारम् । इत्यमरः । ३ । १ । ५६ ॥
(यथा, माघे । ३ । ७६ ।
“तरीषु तत्रत्यमफल्गु भाण्डं
सांयात्रिकानावपतोऽभ्यनन्दत् ॥”)
निरर्थकम् । इति त्रिकाण्डशेषः ॥ (यथा,
देवीभागवते । ५ । १५ । ३२ ।
“न फल्गुवाक्यैः प्रतिबोधनीयो
राजा तु वीरैरिति नीतिशास्त्रम् ॥”)
सामान्यम् । क्षुद्रम् । यथा, भागवते । १ । १३ ।
४७ ।
“अहस्तानि सहस्तानामपदानि चतुष्पदाम् ।
फल्गूनि तत्र महतां जीवो जीवस्य जीवनम् ॥”)

**फल्गुः**, स्त्री, (फल निष्पत्तौ + उः । गुगागमश्च ।)
राजवल्लभः ॥ रेणुभेदः । फागु इति
प्रसिद्धः ।
मिथ्यावाक्यम् । इति शब्दरत्नावली
॥ वस-
न्तर्त्तुः । इति जटाधरः ॥

**फल्गुदा**, स्त्री, (फल्गुरिति नाम ददाति धारय
तीति । दा धारणे + कः ।) गयानदी
। यथा,
“तत्र देशे गया नाम
पुण्यदेशोऽतिविश्रुतः ।
नदी च फल्गुदा नाम पितॄणां
स्वर्गदायिनी ॥”
इति बृहद्धर्म्मपुराणे ५६ अध्यायः ॥

**फल्गुनः**, पुं, (फलति कार्य्यादिकमस्मादिति
।
फल निस्पत्तौ + “फलेर्गुक् च ।”
उणा० ३ ।
५६ । इति उनन् गुगागमश्च ।
फल्गुन्यां
फल्गुनीनक्षत्रे जातः इति वा ।
“श्रविष्ठा
फल्गुन्यनुराधेति ।” ४ । ३ । ३४ ।
इति जातार्थ-
प्रत्ययस्य लुक् । “लुक् तद्धितलुकि
।” १ । २ । ४९ ।
इति स्त्रीप्रत्ययस्य च लुक् ।
एतन्निरुक्तिस्तु
फाल्गुनशब्दे द्रष्टव्या ।) अर्ज्जुनः ।
फाल्गुन-
मासः । इत्यमरटीकायां भरतः ॥
(फल्गुनी-
भवे, त्रि । इति सिद्धान्तकौमुदी ॥)

**फल्गुनालः**, पुं, (फल्गुनेन अलतीति । अल्
+
अच् ।) फाल्गुनमासः । इति
भूरिप्रयोगः ॥

**फल्गुनी**, स्त्री, (फल्गुन + गौरादित्वात् ङीष्
।)
वृद्धिः । बर्द्धकः । यथा “फा वृद्धौ वर्द्धके
पुमान् ।” इति विश्वः ॥

**फाटकी**, स्त्री, (स्फुट + णुल् । ङीष् । पृषोदरा-
दित्वात् साधुः ।) स्फटी । इति
राजनिर्घण्टः ॥

**फाणिः**, स्त्री, (फाणयतीति । फण गतौ + णिच् +
इन् ।) गुडः । करम्भः । इत्युणादिकोषः
॥

**फाणितं**, क्ली, (फण गतौ + णिच् + क्तः ।) अर्द्धा-
वर्त्तितेक्षुरसः । फेणीति ख्यातम् ।
इत्यमर-
भरतौ ॥ (यथा, महाभारते । १३ । ६४ ।
२३ ।
फल्गुनी पूर्ब्बसमये ब्राह्मणानामुपोषितः ।
भक्ष्यान् फाणितसंयुक्तान् दत्त्वा सौभाग्य-
मृच्छति ॥”)
अस्य गुणाः । गुरुत्वम् । अभिष्यन्दित्वम्
।
बृंहणत्वम् । कफशुक्रलत्वम् ।
वातपित्तश्रमनाशि-
त्वम् । मूत्रवस्तिविशोधनत्वञ्च ॥ * ॥
“इक्षो रसस्तु यः पक्वः किञ्चिद्गाढो
बहुद्रवः ।
स एवेक्षुविकारेषु ख्यातः फाणितसंज्ञया
॥”
इति भावप्रकाशः ॥
(यथा च ।
“शिराहर्षेऽञ्जनं कुर्य्यात् फाणितं
मधुसंयुतम् ॥”
इति वैद्यकचक्रपाणिसंग्रहे नेत्ररोगाधिकारे
॥
“फाणितं शक्तवः सर्पि
र्दधिमण्डोऽम्लकाञ्जिकम् ।
तर्पणं मूत्रकृच्छ्रघ्नमुदावर्त्तहरं पिबेत् ॥”
इति चरके सूत्रस्थाने २३ अध्याये ॥)

**फाण्टं**, त्रि, (फण्यते स्मेति । फण गतौ + “क्षुब्ध-

गयास्थनदीभेदः । तस्या माहात्म्यादि यथा, --
सार्द्धक्रोशद्वयं मानं गयायां परिकीर्त्तितम् ।
पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः ॥
तत्र पिण्डप्रदानेन तृप्तिर्भवति शाश्वती ।
नगाज्जनार्द्दनाच्चैव कूपाच्चोत्तरमानसात् ॥
एतद्गयाशिरः प्रोक्तं फल्गुतीर्थं तदुच्यते ।
तत्र पिण्डप्रदानेन पितॄणां परमा गतिः ॥
पृथिव्यां यानि तीर्थानि ये समुद्राः सरांसि च ।
फल्गुतीर्थं गमिष्यन्ति वारमेकं दिने दिने ॥"
इति गारुडे ८३ अध्यायः ॥
अन्यत् गयाशब्दे द्रष्टव्यम् ॥ * ॥ काकोडम्बरिका ।
इत्यमरः ॥ काकडुमुर इति भाषा ॥ (अस्याः पर्य्यायो यथा, --
"भद्रा मलपूः फल्गुः स्यात् काकडुम्बरिका च सा ॥"
इति वैद्यकरत्नमालायाम् ॥)
अस्या गुणाः । गुरुत्वम् । ग्राहित्वम् । शीत-
लत्वम् । स्वादुत्वम् । तृप्तिकारित्वञ्च । इति
नक्षत्रविशेषः । तच्च पूर्ब्बफल्गुनी उत्तर-
फल्गुनी च । इति भरतधृतगोवर्द्धनानन्दः ॥
(यथा, महाभारते । ४ । ४२ । १६ ।
"उत्तराभ्याञ्च पूर्ब्बाभ्यां फल्गुनीभ्यामहं दिवा ।
जातो हिमवतः पृष्टे तेन मां फाल्गुनं विदुः ॥)
काकोदुम्बरिका । इति राजनिर्घण्टः ॥ (फल्-
गुन्यां जाता । श्रविष्ठाफल्गुनीति अणो लुकि
लुक्तद्धितलुकीति स्त्रीप्रत्ययस्य च लुकि फल्-
गुन्यषाढाभ्यां टानौ वक्तव्यौ इति वार्त्तिकोक्त्या
टः । टित्वात् ङीप् ॥)

**फल्गुवाटिका**, स्त्री, (फल्गूनां वाटीव इवार्थे कन् ।) काकोदुम्बरिका ॥ इति राजनिर्घण्टः ॥
("गुणादयोऽस्याः काकोदुम्बरिकाशब्दे ज्ञेयाः ॥")

**फल्गुवृन्ताकः**, पुं, (फल्गुना वृन्तेनाकायति शोभते इति । आ + कै + कः ।) श्योनाक-
प्रभेदः । इति राजनिर्घण्टः ॥

**फल्गूत्सवः**, पुं, (फल्गूनामुत्सवः ।) फल्गु-
करणकगोविन्दोत्सवः । दोलयात्रा इति
ख्यातः । यथा, दोलयात्रापद्धतिः ।
"गोविन्दानुगृहीतन्तु यात्राङ्गं तत् प्रकीर्त्तितम् ।
फल्गूत्सवं प्रकुर्व्वीत पञ्चाहानि त्र्यहाणि वा ॥"

**फल्यं**, क्ली, (फलाय हितमिति । फल + यत् ।)
कुसुमम् । इति शब्दचन्द्रिका ॥
स्यान्तध्वान्तेति ।" ७ । २ । १८ । इति निपा-
तनात् साधुः ।) अनायासकृतम् । इत्यमरः ।
७ । १ । ९४ ॥ कषायभेदः । यथा, --
"क्षिप्त्वोष्णतोये मृदितः फाण्ट इत्यमिधीयते ।"
अपि च ।
"क्षुण्णद्रव्यपले सम्यक् जलमुष्णं विनिःक्षिपेत् ।
पात्रे चतुःपलमिति ततस्तु स्रावयेज्जलम् ॥
सोऽयं चूर्णद्रवः फाण्टो भिषग्भिरभिधीयते ॥"
इति वैद्यकपरिभाषा ॥
(तथास्य प्रस्तुतविधिः ।
"सद्योऽभिष्णु पूतस्तु फाण्टन्तन्मानकल्पने ॥"
इति वाभटकल्पस्थाने षष्ठेऽध्याये ॥)

**फालं**, क्ली, (फलाय शस्याय हितम् । फल + अण् ।
यद्वा, फल्यते विदार्य्यते भूमिरनेनेति । फल +
घञ् ।) हलोपकरणम् । इति मेदिनी । ले, ३४ ॥

**फालः**, पुं, (फल्यते विदार्य्यते क्षेत्रमनेनेनि ।
फल + करणे घञ् ।) लाङ्गलस्थभूमिविदारक-
लौहः । फल्यते विशीर्य्यते मूमिरनेन सः ।
तत्पर्य्यायः । कृषिकः २ । इत्यमरः । २ । ९ । १३ ॥
कृषकः ३ । फलम् ४ । इति भरतः ॥ कृषि-
का ५ । फालम् ६ । इति मुकुटः ॥ कुशिकम् ७ ।
इति हेमचन्द्रः । ३ । ५५५ ॥ महादेवः । बल-
देवः । कार्पासवस्त्रे, त्रि । इति मेदिनी । ले, ३४ ॥

| | | |
|---|---|---|
| | **फल्लकी** [न्] पुं, (फल्लकः फलकस्तदाकारोऽस्त्य-<br>स्येति । इनिः ।) मत्स्यविशेषः । इति शब्द-<br>माला ॥ फलुइ इति भाषा ।<br><br>**फल्लफलः**, पुं, सूर्पवातः । इति जटाधरः ॥ कुलार<br>वातास इति भाषा ॥<br><br>**फाः**, पुं, सन्तापः । निष्फलभाषणम् । यथा, --<br>“फिः कोपे फाश्च सन्तापे तथा<br>निष्फलभाषणे ॥”<br>इति शब्दरत्नावली ॥ | नवविधदिव्यान्तर्गताष्टमदिव्यम् । तस्य विधि-<br>र्यथा । बृहस्पतिः ।<br>“आयसं द्वादशपलघटितं फालमुच्यते ।<br>अष्टाङ्गुलं भवेद्दीर्घं चतुरङ्गुलविस्तरम् ॥ |

अग्निवर्णं ततश्चौरो जिह्वया लेहयेत् सकृत् ।
न दग्धश्चेच्छुद्धिमियादन्यथा तु स हीयते ॥”
चौरोऽत्र गोचौरः । गोचौरस्य प्रदातव्यं तप्त-
फालावलेहनमिति स्मृतिरिति मैथिलाः ॥
अत्रापि त्वमग्ने इत्यादिमन्त्रानन्तरं आयसं
लेलिहानस्य जिह्वयापि समादिशेदिति पिता-
महोक्तेः
प्राड्विवाकशोध्याभ्यामग्न्यभिमन्त्रणं कार्य्यम् ॥ * ॥ तत्र प्रयोगः ।
लौकिकचत्वारिंशि-
त्तोलकमितं
लौहघटितमष्टयवमध्यात्मकाङ्गुलाष्ट-
दीर्घं तथाविधचतुरङ्गुलप्रस्तारं फालमग्नौ ताप-
येत् । तत्र प्राड्विवाको धर्म्मावाहनादिहवनान्तं
कर्म्म कृत्वा दक्षिणां दत्त्वा, --
‘ॐ त्वमग्ने वेदाश्चत्वारस्त्वञ्च यज्ञेषु हूयसे ।
त्वं मुखं सर्व्वदेवानां त्वं मुखं ब्रह्मवादिनाम् ॥
जठरस्थोऽसि भूतानां ततो वेत्सि शुभाशुभम् ।
पापं पुनासि वै यस्मात्तस्मात् पाधक उच्यते ॥
पापेषु दर्शयात्मानमर्च्चिष्मान् भव पावक ! ।
अथवा शुभभावेन शीतो भव हुताशन ! ॥
त्वमग्ने सर्व्वभूतानामन्तश्चरसि साक्षिवत् ।
त्वमेव देव जानीषे न विदुर्यानि मानवाः ॥

(फाल्गुनी पौर्णमासी अस्मिन्निनि । “विभाषा फल्गुनीश्रवणकार्त्तिकीचैत्रिभ्यः ।” ४ । २ । २३ । इति पक्षे अण् ।)

वैशाखादिद्वादशमासान्तर्गतैकादशमासः ।

फल्गुनीनक्षत्रयुक्ता पौर्णमासी यस्मिन् मासे सः । इति तु प्रायिकाभिप्रायम् । स च त्रिविधः । मुख्यचान्द्रो गौणचान्द्रः सौरश्च । यथा । कुम्भस्थरविप्रारब्धशुक्लप्रतिपदादिदर्शान्तोमासो मुख्यचान्द्रः । मुख्यचान्द्रफाल्गुनमासीयपौर्ण-मास्यन्तः कृष्णप्रतिपदादिको मासो गौण-चान्द्रः । कुम्भराशिस्थरविभोगोपलक्षितकाला-त्मको मासः सौरः । इति मलमासतत्त्वम् ॥ * ॥ तत्पर्य्यायः । तप्रस्यः २ फाल्गुनिकः ३ फल्गुनः ४ । इत्यमरभरतौ ॥ वत्सरान्तकः ५ । इति राजनिर्घण्टः ॥ * ॥ तत्र जातफलम् ।
“प्रियंवदः सज्जनवल्लभश्च
परोपकारी विमलाशयश्च ।
दाता नितान्तं प्रमदाभिलाषी
स्यात् फाल्गुने यस्य जनस्य जन्म ॥”
इति कोष्ठीप्रदीपः ॥
अथ फाल्गुनकृत्यम् । तत्र माघ्यनन्तरं फाल्गुनकृष्णाष्टम्यां कालशाकवास्तूकशाकोप-करणान्नेन श्राद्धं कर्त्तव्यम् ॥ * ॥ गौणचान्द्र-फाल्गुनकृष्णचतुर्द्दश्यां शिवरात्रिव्रतम् । यद्दिने प्रदोषनिशीथोभयव्यापिनीचतुर्द्दशी तद्दिने व्रतमुभयव्याप्त्यनुरोधात् । यदा पूर्ब्बेद्युर्निशीथ-व्यापिनी परेद्युः प्रदोषमात्रव्यापिनी तदा पूर्ब्बे-द्युर्व्रतं प्रधानकालव्याप्त्यनुरोधात् । यदा तु पूर्ब्बेद्युर्न निशीथव्याप्तिः परदिने प्रदोषव्यापिनी तदा परदिने प्रदोषव्यापिनीति वचनात् ॥ * ॥ मुख्यचान्द्रफाल्गुनशुक्लद्वादशीगोविन्दद्वादशी ।
“फाल्गुने शुक्लपक्षस्य पुष्यर्क्षे द्वादशी यदि ।
गोविन्दद्वादशी नाम महापातकनाशिनी ॥”
महापातकनाशकामो गङ्गायां स्नानमहं करिष्ये । अत्र पद्मपुराणीयो मन्त्रः ।
“महापातकसंज्ञानि यानि पापानि सन्ति मे ।
गोविन्दद्वादशीं प्राप्य तानि मे हर जाह्नवि ! ॥”
फाल्गुनपौर्णमास्यां दोलयात्रा । तीर्थचिन्ता

**फाल्गुनी**, स्त्री, (फल्गुनीभिर्युक्ता पौर्णमासी । “नक्षत्रेण युक्तः कालः ।” ४ । २ । ३ । इति अण् । ततो ङीप् ।) फाल्गुनमासस्य पूर्णिमा ।
इति मेदिनी । ने, ९६ ॥
पूर्ब्बफल्गुनीनक्षत्रम् ।
उत्तरफल्गुनीनक्षत्रम् ।
इत्यमरटीकायां भरतः ॥

**फिः**, पुं, पापः । निष्फलवाक्यम् । इत्येकाक्षर-कोषः । कोपः । इति शब्दरत्नावली ॥

**फिङ्गकः**, पुं, (फिङ्ग इति शब्देन कायति शब्दा-यते इति । कै + कः ।) पक्षिविशेषः । फिङ्गा इति भाषा । तत्पर्य्यायः । कुलिङ्गः २ कलिङ्गः ३ धूम्याटः ४ । इति शब्दमाला । भृङ्गः ५ । इत्यमरः ॥

**फिरङ्गः**, पुं, (फौ पापे क्रोधे वा रङ्गोऽनुरागो यस्य ।) स्वनामख्यातम्लेच्छदेशः । यथा, --
“पूर्ब्बाम्नाये नवशतं षडशीतिः प्रकीर्त्तिताः ।
फिरङ्गभाषया मन्त्रास्तेषां संसाधनाद्भुवि ॥
अधिपा मण्डलानाञ्च संग्रामेष्वपराजिताः ।
इंरेजा नव षट् पञ्च लण्ड्रजाश्चापि भाविनः ॥”
इति मेरुतन्त्रे २३ प्रकाशः ॥
रोगविशेषः । अथ फिरङ्गस्य निरुक्तिमाह ।

व्यवहाराभिशस्तोऽयं मानुषः
शुद्धिमिच्छति ।
तदेनं संशयादस्माद्धर्म्मतस्त्रातुमर्हसि
॥'
इत्येतैः फालस्थमग्निं अभिमन्त्रयेत् ।
शोध्यस्तु
प्रतिज्ञापत्रं शिरसि निधाय ।
'त्वमग्ने सर्व्वभूतानामन्तश्चरसि
पावक ! ।
साक्षिवत् पुण्यपापेभ्यो ब्रूहि सत्यं करे
मम ॥'
इत्यनेनाभिमन्त्र्य अग्निवर्णं फालं
जिह्वया सकृ-
ल्लिह्यात् न दग्धश्चेत्तदा शुद्धः ।" इति
दिव्य-
तत्त्वम् ॥

**फालकृष्टः**, त्रि, (फालेन कृष्टः ।) फालेन कर्षित-

भूम्यादिः । यथा, मानवे । ४ । ४६ ।
"न मूत्रं पथि कुर्व्वीत न भस्मनि न
गोव्रजे ।
न फालकृष्टे न जले न चित्यां न च
पर्व्वते ॥"

**फालाः**, पुं, (फालयन्तीति । फल + णिच् + अच् ।)

जम्बीरबीजानि । इति
दुर्गटीकाटिप्पनीकृत्-
कुलचन्द्रः ॥

**फाल्गुनः**, पुं, (फलति निष्पादयतीति । फल् +

"फलेर्गुक् च ।" उणा० ३ । ५६ । इति
उनन्
ततो गुक् । ततः प्रज्ञाद्यण् । यद्वा
फल्गुन्यां
फल्गुनीनक्षत्रे जातः फल्गुनः । स एव ।
अण्
एतन्निरुक्तिर्यथा, महाभारते । ४ । ४२
। १६ ।
"उत्तराभ्याञ्च पूर्ब्बाभ्यां फल्गुनीभ्यामहं
दिवा ।
जातो हिमवतः पृष्ठे तेन मां फाल्गुनं
विदुः ॥")
मणौ ब्रह्मपुराणम् ।
"नरो दोलागतं दृष्ट्वा गोविन्दं पुरुषोत्तमम् ।
फाल्गुन्यां संयतो भूत्वा गोविन्दस्य पुरं व्रजेत् ॥"
स्कन्दपुराणीयपुरुषोत्तममाहात्म्येत्रिंशाध्याये ।
"फाल्गुन्यां क्रीडनं कुर्य्यात् दोलायां मम
भूपते ! ॥"
इति कृत्यतत्त्वम् ॥

**फाल्गुनानुजः**, पुं, (फाल्गुनादनुपश्चात् जायते

इति । अनु + जन् + ड ।) वसन्तकालः । इति
हारावली ॥ अर्ज्जुनस्य कनिष्ठभ्राता च ॥

**फाल्गुनिकः**, पुं, (फाल्गुनी पौर्णमास्यस्मिन् मासे

इति । "विभाषा फाल्गुनीश्रवणेति ।" ४ । २ ।
२३ । इति ठक् ।) फाल्गुनमासः । इत्यमरः ।
१ । ४ । १५ ॥

"फिरङ्गसंज्ञके देशे बाहुल्येनैष
यद्भवेत् ।
तस्मात् फिरङ्ग इत्युक्तो
व्याधिर्व्याधिविशारदैः ॥"
तस्य विप्रकृष्टं निदानमाह ।
"गन्धरोगः फिरङ्गोऽयं जायते देहिनां
ध्रुवम् ।
फिरङ्गिणोऽतिसंसर्गात् फिरङ्गिण्याः
प्रसङ्गतः ॥
व्याधिरागरुजो ह्येष दोषाणामत्र
संक्रमः ।
भवेत्ता लक्षयेत्तेषां लक्षणैर्भिषजां
वरः ॥"
फिरङ्गिण्याः प्रसङ्गत इति
विशेषार्थम् ॥ * ॥
रूपमाह ।
"फिरङ्गस्त्रिविधो ज्ञेयो
वाह्याभ्यन्तरतस्तथा ।
बहिरन्तर्भवश्चापि तेषां लिङ्गानि च
ब्रुवे ॥
तत्र बाह्यः फिरङ्गः
स्याद्विस्फोटसदृशोऽल्परुक् ।
स्फुटितो व्रणवद्वेद्यः सुखसाध्योऽपि
स स्मृतः ॥
सन्धेश्चाभ्यन्तरः स
स्यादुभयोर्लक्षणैर्युतः ।
कष्टदोऽतिचिरस्थायी
कष्टसाध्यतमश्च सः ॥"
उपद्रवान् आह ।
"कार्श्यं बलक्षयो नासाभङ्गो वह्नेश्च
मन्दता ।
अस्थिशोषोऽस्थिवक्रत्वं
फिरङ्गोपद्रवा अमी ॥"
साध्यत्वादिकमाह ।
"बहिर्भवो भवेत् साध्यो नूतनो
निरुपद्रवः ।
आभ्यन्तरस्तु कष्टेन साध्यः
स्यादयमामयः ॥
बहिरन्तर्भवो जीर्णः
क्षीणस्योपद्रवैर्युतः ।

| | | |
|---|---|---|
| गुडाकेशः । नदीजवृक्षः । अर्ज्जुनवृक्षः । तपस्य<br>मासः ॥ यथा, --<br>“फाल्गुनस्तु गुडाकेशे<br>नदीजार्ज्जुनभूरुहे ।<br>तपस्यसंज्ञे मासे तत्पूर्णिमायान्तु<br>फाल्गुनी ॥”<br>इति दन्त्यनान्तवर्गे मेदिनी ॥<br>अतएव ।<br>“फाल्गुने गगने फेने णत्वमिच्छन्ति<br>वर्व्वराः ।”<br>इति कारिका समूलिका । अत्र<br>अणत्वमिच्छ-<br>न्तीति अकारप्रश्लेषो भ्रान्तानाम् ॥ * ॥ | | बोध्यो<br>व्याधिरसाध्योऽयमित्यूचुर्म्मुनयः<br>पुरा ॥”<br>अथ फिरङ्गस्य चिकित्सा ।<br>“फिरङ्गसंज्ञकं रोगं रसः<br>कर्पूरसंज्ञकः ।<br>अवश्यं नाशयेदेतदूचुः पूर्ब्बे<br>चिकित्सकाः ॥<br>लिख्यते रसकर्परप्राशने<br>विधिरुत्तमः ।<br>अनेन विधिना खादन्मुखे शीथं न<br>विन्दति ॥<br>गोघूमचूर्णं संनीय विदध्यात्<br>सूक्ष्मकूपिकाम् ।<br>तन्मध्ये निःक्षिपेत् सूतं चतुर्गुञ्जामितं<br>भिषक् ॥<br>ततस्तु गुटिकां कुर्य्याद्यथा न<br>स्याद्रसो बहिः । |

सूक्ष्णचूर्णं लवङ्गस्य तां
वटीमवधूलयेत् ॥
दन्तस्पर्शो यथा न स्यात्तथा
तामम्भसा गिलेत् ।
ताम्बूलं भक्षयेत्
पश्चाच्छाकाम्ललवणांस्त्यजेत्
॥
श्रममातपमध्वानं विशेषात्
स्त्रीनिषेवणम् ॥
इति कर्पूररसः ॥ १ ॥
पारदष्टङ्कमानः स्यात्
खदिरष्टङ्कसंमितः ।
आकारकरभश्चापि
ग्राह्यष्टङ्कद्वयोन्मितः ॥
टङ्कत्रयमितं क्षौद्रं खल्ले सर्व्वं
विनिःक्षिपेत् ।
संमर्द्य तस्य सर्व्वस्य कुर्य्यात्
सप्त वटीर्भिषक् ॥
स रोगी भक्षयेत्
प्रातरेकैकामम्बुना वटीम् ।
वर्जयेदम्ललवणौ फिरङ्गस्तस्य
नश्यति ॥
इति सप्तशाणिकावटी ॥ २ ॥
पारदः कर्षमात्रः स्यात्तावदेव हि
गन्धकः ।
तण्डुला अक्षमात्राः स्युस्तेषां
कुर्य्याच्च कज्ज-
लीम् ॥
तस्याः सप्त वटीः
कुर्य्यात्ताभिर्द्धूमं प्रयोजयेत् ।
दिनानि सप्त तेन स्यात्
फिरङ्गान्तो न संशयः ॥
इति धूमप्रयोगः ॥ ३ ॥
पीतपुष्पवलापत्ररसैष्टङ्कमितं
रसम् ।
हस्ताभ्यां मर्द्दयेत्तावत् यावत्
सूतो न दृश्यते ॥
ततः संस्वेदयेद्धस्तादेवं
वासरसप्तकम् ।

"गन्धरोगः फिरङ्गोऽयं जायते देहिनां ध्रुवम् ।
फिरङ्गिणोऽतिसंसर्गात् फिरङ्गिण्याः प्रसङ्गतः ॥"
इति भावप्रकाशः ॥

**फिरङ्गी** [न्] पुं, (फिरङ्ग + इनिः ।) फिरङ्ग-
देशोद्भवपुरुषः । अस्य प्रमाणं पूर्ब्बशब्दे
द्रष्टव्यम् ॥

**फुः**, पुं, मन्त्रकम् । तुच्छवाक्यम् । इति विश्वः ॥

**फुकः**, पुं, (फुनास्पष्टवाक्येन कायति शब्दायते इति ।
फु + कै + क ।) पक्षी । इति शब्दचन्द्रिका ॥

**फुटः**, त्रि, (स्फुटतीति । स्फुट + कः । पृषोदरा-
दित्वात् साधुः ।) सर्पफणा । इति हेमचन्द्रः ।
४ । ३८१ ॥

**फु(फू)त्**, व्य, अनुकरणशब्दः । इति फुत्कारशब्द-
दर्शनात् । (यथा, "बालः पयसा दग्धो दध्यपि
फुत्कृत्य भक्षयति ।" इति प्राञ्चः ॥) तुच्छ-
भाषणम् । इति केचित् ॥

**फुत्करः**, पुं, (फुदित्यव्यक्तशब्दं करोतीति । कृ +
टः ।) अग्निः । इति शब्दचन्द्रिका ॥

**फुत्कारः**, पुं, (कृ + भावे घञ् । फुदित्यव्यक्तशब्दस्य
कारः करणम् ।) फुत्करणम् । फु इति फुँक्
इति च भाषा । फुत्कारवति पावके आहुति-
निषेधो यथा, तिथ्यादितत्त्वे ।
"अल्पे रूक्षे सस्फुलिङ्गे वामावर्त्ते भयानके ।
आर्द्रकाष्ठैः समुतपन्ने फुत्कारवति पावके ॥
कृष्णार्च्चिषि सुदुर्गन्धे तथा लिहति मेदिनीम् ।
आहुतिं जुहुयाद्यस्तु तस्य नाशो भवेद्-
ध्रुवम् ॥"

**फुत्कृतिः**, स्त्री, (फुदित्यव्यक्तशब्दस्य कृतिः कर-
णम् ।) फुत्कारः । यथा, काव्यचन्द्रिका ।
"स्फुर्ज्जत्फुत्कृतिभीतिसम्भ्रमचमत्कारस्फुरत्-
सम्भ्रमा ॥"

**फुप्फुसः**, पुं, पुप्फुसः । कोष्ठविशेषः । स च हृदय-
नाडिकासंलग्नाशयविशेषः । फ्याप्डा फुल्का
कापासे इति च लोके । इति सुश्रुतः ॥ यथा, --

**फुल्ल**, विकासे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
अक०-सेट् ।) ह्रस्वी । लद्वयान्तः । विकास
इह कस ज गताविति दन्त्यान्तस्य घञि
रूपम् ।
विपूर्ब्बत्येनार्थान्तरवाचितया
विकसनमित्यर्थः ।
फुल्लति मल्लीकलिका । इति दुर्गादासः ॥

**फुल्लः**, त्रि, (फुल्लतीति । फुल्ल + अच् । यद्वा,
फलतीति । ञि फला विसरणे + क्तः ।
"आदि-
तश्च ।" ७ । २ । १६ । इति इडभावः । "ति
च ।"
७ । ४ । ८१ । इति उत्वम् । अनुपसर्गात् ।
फुल्लक्षीवेति ।" ८ । २ । ५५ । इति निष्ठा
तस्य लः ।)
विकसितः । इत्यमरः । २ । ४ । ८ ॥ (यथा,
महा-
भारते । १ । १२८ । ४१ ।
"जलञ्च शुशुभे च्छन्नं फुल्लैर्जलरुहैस्तथा ॥")
पुष्पम् । फुल इति भाषा । यथा, --
"श्रीपञ्चम्यां श्रियं देवीं फुल्लैः संपूजयेत् सदा
॥"
इति कालिकापुराणम् ॥

**फुल्लदाम**, [न्] क्ली, (फुल्लानां पुष्पाणां दाम इव ।)
छन्दोभेदः । यथा, --
"मो गौ नौ तौ गौ शरहयतुरगैः फुल्लदाम
प्रसिद्धम् ॥"
उदाहरणं यथा, --
"शश्वल्लोकानां प्रकटितकथनं
ध्वस्तमालोक्य कंसं
हृष्यच्चेतोभिस्त्रिदिववसतिभिर्व्योमसंस्थैर्वि-
मुक्तम् ।
मुग्धामोदेन स्थगितदशदिशाभोगमाहूतभृङ्गं
मौलौ दैत्यारेर्न्यपतदनुपमं स्वस्तरोः
फुल्लदाम ॥"
इति छन्दोमञ्जरी ॥

**फुल्लफालः**, पुं, (फुल्लं फलतीति । फल + अण् ।)

त्यजेल्लवणमम्लञ्च फिरङ्गस्तेन नश्यति ॥ ४ ॥
चूर्णयेन्निम्बपत्राणि पथ्यां निम्बाष्टमांसिकाम्।
धात्रीञ्च तावतीं रात्रिं निम्बषोडशभागिकाम्॥
शाणमानमिदं चूर्णमश्नीयादम्भसा सह ।
फिरङ्गं नाशयत्येव वाह्यमाभ्यन्तरं तथा ॥ ५ ॥
तोपचीनिभवं चूर्णं शाणमानं समाक्षिकम्।
फिरङ्गव्याधिनाशाय भक्षयेल्लवणं त्यजेत् ॥
लवणं यदि वा त्यक्तुं न शक्नोति तदा जनः ।
सैन्धवं स हि भुञ्जीत मधुरोपरसं हि तत् ॥ ६ ॥
अर्द्धकर्षमितं सूतं कुरण्टकरसैः सह ।
खल्ले विमर्द्दयेत्तत्र पलार्द्धं गुग्गुलुं क्षिपेत् ॥
तत्रार्क्करभं कुष्ठं त्रिफलाञ्च पृथक् पृथक् ।
अर्द्धकर्षमितं सर्व्वं चूर्णयित्वा तु निःक्षिपेत् ॥
तत् सर्व्वं मधुसर्पिर्भ्यां द्विपलाभ्यां पृथक् पृथक् ।
मर्द्दयेदथ तत् खादेदर्द्धकर्षमितं रसम् ॥
व्रणः फिरङ्गरोगोत्थस्तस्यावश्यं विनश्यति ।
अल्पोऽपि चिरजातोऽपि प्रशाम्यति महाव्रणः ॥
एतद्भक्षयतः शोथो मुखस्य च न जायते ।
वर्जयेदत्र लवणमेकविंशतिवासरान् ॥ ७ ॥
इति फिरङ्गाधिकारः ।” इति भावप्रकाशः ॥

**फिरङ्गरोटी**, स्त्री, (फिरङ्गप्रिया रोटी । फिर-
“स्थानान्यामाग्निपक्वानांमूत्रस्य रुधिरस्य च ।
हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते ॥”
इति माधवकरः ।
अस्य व्याख्या । “आमस्य स्थानं आमाशयः । नाभेरूर्द्धम् । अग्नेः स्थानं पच्यमानाशयः नाभिमध्यम् । पक्वस्य स्थानं पक्वाशयः नाभेरधः । मूत्रस्य स्थानं वस्तिः । रुधिरस्य स्थानं यकृत्प्लीहानौ । हृत् हृदयं इक्षुरसपाकमलवद्यः शोणितमलस्तज्जः उण्डुकः स चान्त्रदेशे व्यवस्थितः पुरीषाधानम् । फुप्फुसः हृदयस्य वामपार्श्वे फुप्फुण्ड इति ख्यातः ।” इति विजयरक्षितः ॥ (यथा च ।
“तद्वामे फुप्फुसः प्लीहा दक्षिणाङ्गे यकृन्मतम् ।
उदानवायोराधारः फुप्फुसः प्रोच्यते बुधैः ॥”
इति पूर्ब्बखण्डे पञ्चमेऽध्याये शार्ङ्गधरेणोक्तम् ॥)

**फुल्तिः**, स्त्री, (फल + क्तिन् । “ति च ।” ७ । ४ । ८९ । इति अत उत् ।) फलनम् । इति मुग्धबोधव्याकरणम् ॥

शूर्पवातः । इति त्रिकाण्डशेषः ॥

**फुल्लरीकः**, पुं, (फल + “फर्फरीकादयश्च ।” उणा० ४ । २० । इति ईकन्प्रत्ययेन निपातनात् साधुः ।) देशः । सर्पः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**फुल्ललोचनः**, पुं, (फुल्ले विकसिते लोचने यस्य ।) मृगविशेषः । इति शब्दचन्द्रिका ॥ प्रफुल्लनेत्रयुक्ते, त्रि ॥

**फुल्लिः**, स्त्री, विकाशः । इङ्धातुकथने तिङ्वत्तिङ् वा इति संक्षिप्तसारसूत्रात् भावे इङ्प्रत्ययेन निष्पन्नः ॥

**फेणः**, पुं, (स्फायते वर्द्धते इति । स्फाय + “फेनमीनौ ।” उणा० ३ । ३ । इति नक् फे-शब्दादेशश्च । मतान्तरे णत्वम् । दन्त्यनान्तपाठस्तु गरीयान् ।) फेनः । तरलद्रव्योपर्य्युत्थितबुद्बुदाकारवस्तु । फेना इति भाषा । यथा, --
“पयःफेणनिभा शय्या दान्ता रुक्मपरिच्छदा ॥”
इति पुराणम् ॥
हिण्डीरः । इत्यमरः । २ । ९ । १०५ ॥ समुद्रफेना इति भाषा । अस्य मूर्द्धन्यणान्तस्य प्रमाणं यथा, --
“हंसश्रेण्यो नदीतीरे निनदैः संप्रतीयिरे ।
यथा सारस्वता मन्त्रा अन्तरे फेणसङ्गता ॥”
इत्यमरटीकायां रघुनाथचक्रवर्त्ती ॥

| | | |
|---|---|---|
| ङ्गाणां रोटीति वा ।)<br>रोटिकाविशेषः ।<br>पाओरोटी इति पाँउरुटि इति च भाषा ।<br>सा तु तालस्याथवा खर्ज्जूरस्य रसेन मधुरिका-<br>जलेन वा मिश्रितां<br>गोधूमकणिकामधिक-<br>कालमुत्तमं संमर्द्द्य गोलाकारं<br>स्थूलं स्थूलं<br>निर्म्माय तन्दूरपाकेन निष्पादिता भवति । इति<br>पाकराजेश्वरः ॥<br>**फिरङ्गिणी**, स्त्री, (फिरङ्गदेशो जन्मस्थानत्वेना-<br>स्त्यस्या इति । फिरङ्ग + इनि ।<br>ङीप् ।)<br>फिरङ्गदेशोद्भवनारी । यथा, -- | | |

**फेण(न)पः**, पुं, स्वयंपतितफलादिजीविमुनिविशेषः ।

यथा, श्रीभागवते । ३ । १२ । ४३ ।
"वैखानसा वालिखिल्यौडुम्बराः फेणपा वने ।
न्यासे कुटीचकः पूर्ब्बं बह्वोदो हंसनिष्क्रियौ ॥"
"वने स्थिताश्चत्वारः । तत्र वैखानसाः अकृष्ट-
पच्यवृत्तयः । वालिखिल्याः नवेऽन्ने लब्धे पूर्ब्ब-
सञ्चितान्नत्यागिनः । औडुम्बराः प्रातरुत्थाय
यां दिशं प्रथमं पश्यन्ति तत आहृतैः फला-
दिभिर्ज्जीवन्तः । फेणपाः स्वयं पतितैः फला-
दिभिर्ज्जीवन्तः । कुटीचकः स्वाश्रमधर्म्मप्रधानः ।
बह्वोदः कर्म्मोपसर्ज्जनीकृत्य ज्ञानाभ्यासप्रधानः ।
हंसो ज्ञानाभ्यासनिष्ठः । निष्क्रयः प्राप्ततत्त्वः ।
एते च सर्व्वे यथोत्तरं श्रेष्ठाः ।" इति तट्टीकायां
श्रीधरस्वामी ॥ (फेणं पिबतीति । फेण + पा +
कः । फेनपानकर्त्तरि, त्रि । यथा, महा-
भारते । १ । ६४ । २२ ।
"फेनपांश्च तथा वत्सान्न दुहन्ति स्म मानवाः ॥")

**फेणी(नी)**, स्त्री, (स्फायते वर्द्धते इति । स्फाय +

नक् । गौरादित्वात् ङीष् ।) स्वनामख्यातमिष्टान्न-
विशेषः । यथा, जीर्णमञ्जरी ।
"वटो वेशवाराल्लवङ्गेन फेणी-
समं पर्पटः शिग्रुबीजेन याति ॥"

**फेत्कारिणी**, स्त्री, (फेत् करोतीति । कृ + णिनिः ।

तरलद्रव्योपरिसमुत्थितवुद्बुदाकारवस्तुमात्रम् ।
यथा, महाभारते । १ । ३ । ५२ ।
"भोः फेनं पिबामि यमिमे वत्सा मातॄणां
स्तनान् पिबन्त उद्गिरन्ति ॥" * ॥ उशद्रथस्य
पुत्त्रः । यथा, हरियंशे । ३१ । २९ ।
"उशद्रथो महाराज ! फेनस्तस्य सुतोऽभवत् ॥")

**फेनकः**, पुं, (फेन + स्वार्थे संज्ञायां वा कन् ।)

फेनः । इति त्रिकाण्डशेषः ॥ पिष्टकविशेषः ।
अस्य गुणाः । लघुत्वम् । रूक्षत्वम् । शुक्र-
कारित्वम् । पित्तवायुनाशित्वञ्च । इति राज-
वल्लभः ॥ (यथा च सुश्रुते । १ । ४६ ।
"हृद्याः पथ्यतमास्तेषां लघवः फेनकादयः ॥"
गात्रमार्ज्जनादिवत् क्रियाविशेषः । तस्य गुणा
यथा, सुश्रुते चिकित्सितस्थाने २४ अध्याये ।
"ऊर्व्वोः सञ्जनयत्याशु फेनकः स्थैर्य्यलाघवे ।
कण्डूकोठानिलस्तम्भमलरोगापहश्चसः ॥")

**फेनका**, स्त्री, (फेनेन कायतीति । कै + कः ।

टाप् ।) जलपक्वतण्डुलचूर्णम् । इति शब्द-
चन्द्रिका ॥

**फेनदुग्धा**, स्त्री, (फेन इव दुग्धं यस्याः ।) दुग्ध-

फेनीक्षुपः । इति राजनिर्घण्टः ॥

**फेनलः**, त्रि, (फेनोऽस्त्यस्येति । फेन + "फेना-

दिलच्च ।" ५ । २ । ९९ । इति चात् लच् ।)
फेनवान् । इति सिद्धान्तकौमुदी ॥

**फेनवान्**, [त्] त्रि, (फेनोऽस्त्यस्येति । "फेनादि-

लच्च ।" ५ । २ । ९९ । इत्यत्र अन्यतरस्या-
मित्यनुवृत्तेः पक्षे मतुप् । मस्य वः ।) फेनिलः ।
इति सिद्धान्तकौमुदी ॥ (यथा, महाभारते ।
३ । १४३ । २० ।
"तत्र सागरगा ह्यापः कीर्य्यमाणाः समन्ततः ।
प्रादुरासन् सुकलुषाः फेनवत्यो विशाम्पते ! ॥")

**फेनवाही**, [न्] पुं, (फेनवत् शुभ्रतां वहतीति ।

वह् + णिनिः ।) वस्त्रम् । इति शब्दमाला ॥

**फेना**, स्त्री, (फेनोऽस्ति बाहुल्येनास्याः । फेन +

अच् । टाप् ।) सातलाक्षुपः । इति राज-

यदि वृत्रं न हन्म्यद्य वञ्चयित्वा महाबलम् ।
न श्रेयो मम नूनं स्यात् सर्व्वथा रिपुरक्षणात् ॥
अपां फेनं तदापश्यत् समुद्रे पर्व्वतोपमम् ।
नायं शुष्को न चार्द्रोऽयं न च शस्त्रमिदं तथा ॥
अपां फेनं तदा शक्रो जग्राह किल लीलया ।
परां शक्तिञ्च सस्मार भक्त्या परमया युतः ॥
स्मृतमात्रा तदा देवी स्वांशं फेने न्यधापयत् ।
वज्रं तदावृतं तत्र चकार हरिसंयुतम् ॥
फेनावृतं पविं तत्र शक्रश्चिक्षेप तं प्रति ।
सहता निपपाताशु वज्राहत इवाचलः ॥")

**फेनिका**, स्त्री, (फेन इवाकृतिरस्त्यस्याः । फेन +

ठन् । टाप् ।) पक्वान्नविशेषः । खाजा इति
भाषा । यथा, --
"समितायाः घृताढ्याया वर्त्तीर्दीर्घाः समाचरेत् ।
तास्तु सन्निहिता दीर्घाः पीठस्योपरि धारयेत् ॥
वेल्लयेद् वेल्लनेनैता यथैका पर्पटी भवेत् ।
ततश्छुरिकया तान्तु संलग्नामेव कर्त्तयेत् ॥
ततस्तु वेल्लयेद्भूयः सट्टकेन च लेपयेत् ।
शालिचूर्णं घृतं तोयं मिश्रितं सट्टकं भवेत् ॥
ततः संवृत्य तां लोप्त्रीं विदधीत पृथक् पृथक् ।

ङीप् ।) तन्त्रविशेषः । यथा, --
"उन्मत्तभैरवं नारसिंहं डामरभैरवम् ।
शिवाकारं मलिन्याद्यमसिताङ्गादि
यामलम् ॥
सिद्धयोगेश्वरं तन्त्रं
योगिनीजालमम्बरम् ।
दृष्ट्वा कृत्था विधिं फेत्कारिणीतन्त्रं
विरच्यते ॥"
इति प्रथमश्लोकद्वयम् ॥
"फेत्कारिणीतन्त्र इयं मयोक्ता
कृत्या सभस्तागमसारभूता ।
शत्रोर्व्विनाशाय धनाय धर्म्म-
मोक्षाय सम्यक् प्रयतो नियोज्या ॥"
इति फेत्कारिणीतन्त्रस्य शेषश्लोकः ॥

**फेत्कारीयः**, पुं, तन्त्रविशेषः । तन्त्रसारादिसंग्रहे
फेत्कारीये इति शासनं लिखितम् ॥

**फेनः**, पुं, (स्फायते वर्द्धते इति । स्फाय + "फेन-
मीनौ ।" उणा० ३ । ३ । इति नक्
फेशब्दा-
देशश्च ।) फेणः । फेना इति भाषा ।
तत्-
पर्य्यायः । हिण्डीरः २ अब्धिकफः ३ ।
इत्य-
मरः । २ । ९ । १०५ । ॥ हिण्डिरः ४
। इति
शब्दरत्नावली ॥ समुद्रकफः ५
जलहासः ६
फेनकः ७ । इति त्रिकाण्डशेषः ॥
स्फायते
फेनः स्फायी ङ वृद्धौ नाम्नीति डेनः
निपात-
नात् सलुक् दन्त्यनान्तः ।
इत्यमरटीकायां
भरतः ॥ अस्य दन्त्यनान्तस्य
प्रमाणान्तरं यथा,
"वानीरं गगनं फेनमूनञ्च
दन्त्यनान्वितम् ।
आहुर्गगनमिच्छन्ति
केचिन्मूर्द्धन्यणान्वितम् ॥"
निर्घण्टः ॥

**फेनाग्रं**, क्ली, (फेनस्याग्रम् ।) वुद्बुदम् । इति
हारावली । २०५ ॥

**फेनायमानः**, त्रि, (फेनमुद्वमतीति । फेन + "फेना-
च्चेति वाच्यम् ।" ३ । १ । १६ । इत्यस्य वार्त्ति-
कोक्त्या क्यङ् । ततः शानच् ।) उत्थितफेन-
दुग्धादिः । फेन इव आचरति यः इत्यर्थे फेन-
शब्दात् ङ्यप्रत्ययानन्तरं शानप्रत्ययेन निष्पन्नः ॥
(यथा, महाभारते । ६ । ३ । ३४ ।
"प्रतिश्रोतोवहा नद्यः सरितः शोणितोदकाः ।
फेनायमानाः कूपाश्च नर्द्दन्ति वृषभा इव ॥")

**फेनाशनिः**, पुं, (फेन एवाशनिर्व्वज्रं यस्य । फेनेन
वृत्रासुरनाशनाद्वास्य तथात्वम् ।) इन्द्रः ।
इति शब्दमाला ॥ (एतद्वृत्तान्तो यथा, देवी-
भागवते । ६ । ६ । ५५ -- ५९ ।
"इति सञ्चिन्त्य मनसा कथं हन्यां रिपुं रणे ।
अजेयं सर्व्वदा सर्व्वदेवैश्च दानवैस्तथा ॥
पुनस्तां वेल्लयेत् लोप्त्रीं यथा
स्यान्मण्डलाकृतिः ॥
ततस्तां सुपचेदाज्ये भवेयुश्च पुटाः
स्फुटाः ।
सुगन्धया शर्करया तदुद्धूलनमाचरेत्
॥
सिद्ध्वैषा फेनिकानाम्नी मण्ठकेन
समा गुणैः ।
ततः किञ्चिल्लघुरियं
विशेषोऽयमुदाहृतः ॥"
इति भावप्रकाशः ॥

**फेनिलं**, क्ली, (फेनोऽस्त्यस्येति । फेन + "फेना-
दिलच्च ।" ५ । २ । ९९ । इति
इलच् ।) कोलि-
फलम् । (अस्य पर्य्यायो यथा, --
"पुंसि स्त्रियाञ्च कर्क्कन्धुर्व्वदरी
कोलमित्यपि ।
फेनिलं कुवलं घोठा सौवीरं वदरं
महत् ।
अजप्रिया कुहा कोली विषमो
भयकण्टका ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)
मदनफलम् । सफेने, त्रि । इति
मेदिनी ॥
(यथा, महाभारते । १ । १५३ ।
१० ।
"उष्णं नवं प्रपास्यामि फेनिलं
रुधिरं बहु ॥")

**फेनिलः**, पुं, (फेन + इलच् ।) अरिष्टवृक्षः ।
इत्यमरः । २ । ४ । ३१ ॥ हारिठा
इति ख्यातः ॥
(अस्य पर्य्यायो यथा, --
"अरिष्टकस्तु माङ्गल्यः
कृष्णवर्णोऽर्थसाधनः ।
रक्तबीजः पीतफेनः फेनिलो
गर्भपातबः ॥"
इति मावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

| | | |
|---|---|---|
| इति भरतसेनविरचितं सुखलेखनम् ॥ (यथा, रघुः । १३ । ११ । “मातङ्गनक्रैः सहसोत्पतद्भि- र्भिन्नान् द्विधा पश्य समुद्रफेनान् ॥” | | वदरवृक्षः । इति राजनिर्घण्टः ॥ (स्त्रियां टाप् । जलब्राह्मी । यथा, सुश्रुते उत्तरतन्त्रे ३९ अध्याये । “अम्लपिष्टैः सुशीतैश्च फेनिलापल्लवैस्तथा ॥”)<br>**फेरः**, पुं, (फे इति शब्दं राति गृह्णातीति । रा ग्रहणे + कः ।) शृगालः । इति शब्दरत्ना- वली ॥<br>**फेरण्डः**, पुं, (फे इत्यव्यक्तशब्देन रण्डतीति । रण्ड + अच् ।) शृगालः । इति हेमचन्द्रः । ४ । ३५५ ॥ |

**फेरवः**, पुं, (फे इति रवो यस्य ।) शृगालः ।

इत्यमरः । २ । ५ । ५ ॥ (यथा, कथासरित्सागरे ।
४७ । ५३ ।
“नृत्यतां तरतां रक्ते नदतां चोत्सवाय सः ।
शूराणां फेरवाणाञ्च भूतानाञ्चाभवद्रणः ॥”)
राक्षसः । इति मेदिनी । वे, ४४ ॥ धूर्त्ते हिंस्रे
च, त्रि । इति शब्दरत्नावली ॥

**फेरुः**, पुं, (फे इति शब्देन रौतीति । रु ल ध्वनी +

मितद्रूवादित्वात् डुः ।) शृगालः । इत्यमरः ।
२ । ५ । ५ ॥ (यथा, भागवते । ८ । १६ । ७ ।
“गृहेषु येष्वतिथयो नार्च्चिताः सलिलैरपि ।
यदि निर्यान्ति ते नूनं फेरुराजगृहोपमाः ॥”)

**फेल**, ऋ गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) ऋ, अपिफेलत् पिफेलतुः ।
इति दुर्गादासः ॥

**फेलं**, क्ली, (फेल्यते दूरे निक्षिप्यते इति । फेल +

घञ् ।) भुक्तसमुज्झितम् । उच्छिष्टम् । इति
शब्दरत्नावली ॥

**फेलकः**, पुं, (फेल + स्वार्थे संज्ञायां वा कन् ।)

भुक्तसमुज्झितम् । इति जटाधरः ॥

**फेला**, स्त्री, (फेल्यते इति । फेल + “गुरोश्च

हलः ।” ३ । ३ । १०३ । इति अः । टाप् ।)
भुक्तसमुज्झितम् । इत्यमरः । २ । ९ । ५६ ॥

**फेलिः**, स्त्री, (फेल + इन् ।) उच्छिष्टम् । इति

जटाधरः ॥

**फेलिका**, स्त्री, (फेलिरेव । स्वार्थे कन् ।) उच्छि-

ष्टम् । फेलाशब्दात् स्वार्थे ष्णिकप्रत्ययेन
निष्पन्ना ॥

**फेली**, स्त्री, (फेलि + “कृदिकारादक्तिनः ।” इति

पक्षे ङीष् ।) भुक्तसमुज्झितम् । इति शब्द-
रत्नावली ॥

**ब**

**ब**, बकारः । स च त्रयोविंशव्यञ्जनवर्णः । (पवर्गस्य तृतीयवर्णश्च ।) तस्योच्चारणस्थानं ओष्ठः । इति व्याकरणम् ॥ (यदुक्तं सिद्धान्तकौमुद्याम् । "उपूपध्मानीयानामोष्ठौ ॥") तस्य स्वरूपं यथा, कामधेनुतन्त्रे ।
"बकारं शृणु चार्व्वङ्गि ! चतुर्वर्गप्रदायकम् ।
शरच्चन्द्रप्रतीकाशं पञ्चदेवमयं सदा ॥
पञ्चप्राणात्मकं वर्णं त्रिबिन्दुसहितं सदा ॥"
(वङ्गीयवर्णमालायामस्य स्वरूपमाह ।)
"त्रिकोणरूपिणी रेखा विष्ण्वीशब्रह्मरूपिणी ।
मात्रा शक्तिः परा ज्ञेया ध्यानमस्य प्रचक्षते ॥"
अस्य ध्यानं यथा, --
"नीलवर्णां त्रिनयनां नीलाम्बरधरां पराम् ।
नागहारोज्ज्वलां देवीं द्विभुजां पद्मलोचनाम् ॥
एवं ध्यात्वा बकारन्तु तन्मन्त्रं दशधा जपेत् ॥"
तत्प्रणाममन्त्रो यथा, --
"त्रिशक्तिसहितं वर्णं विविधामृतलेपितम् ।
स्वयं कुण्डलिनीं देवीं सततं प्रणमाम्यहम् ॥"
इति वर्णोद्धारतन्त्रम् ॥ * ॥
अस्य नामानि यथा, --
"बो वनी भूधरो मार्गो घर्घरी लोचनप्रियः ।
प्रचेताः कलसः पक्षी स्थलगण्डः कपर्द्दिनी ॥
पृष्ठवंशो भयामातुः शिखिवाहो युगन्धरः ।
मुखबिन्दुर्ब्बली घण्टा योद्धा त्रिलोचनप्रियः ॥
क्लेदिनी तापिनी भूमिसुगणिन्द्रवलिप्रियः ।
सुरभिर्म्मुखविष्णुश्च संहारो वसुधाधिपः ॥
षष्ठापुरं चपेटा च मोदको गगनं प्रति ।
पूर्ब्बाषाढामध्यलिङ्गौ शनिः कुम्भतृतीयकौ ॥"
इति नानातन्त्रशास्त्रम् ॥

**बंहिष्ठः**, त्रि, (अयमेषामतिशयेन बहुलः । बहुल + "अतिशायने तमबिष्ठनौ ।" ५ । ३ । ५५ । इति इष्ठन् । "प्रियस्थिरेति ।" ६ । ४ । १५७ । इति बंहि-आदेशः ।) अतिशयबहुलः । इत्यमरः ॥ (यथा, महाभारते । १२ । ३२८ । ३९ ।
"योऽद्भिः संयोज्य जीमूतान् पर्य्यन्याय प्रयच्छति ।
उद्वहो नाम बंहिष्ठस्तृतीयः स सदागतिः ॥")

ख्यातपक्षिविशेषः । तत्पर्य्यायः । कह्वः २ । इत्यमरः । २ । ५ । २२ ॥ द्वारवलिभुक् ३ कक्षेरुः ४ शुक्लवायसः ५ दीर्घजङ्घः ६ बकोटः ७ गृहवलिप्रियः ८ । इति शब्दरत्नावली ॥ निशैतः ९ शिखी १० चन्द्रविहङ्गमः ११ । इति त्रिकाण्डशेषः ॥ तीर्थसेवी १२ तापसः १३ मीनघाती १४ मृषाध्यायी १५ निश्चलाङ्गः १६ दाम्भिकः १७ । इति राजनिर्घण्टः ॥ अस्य मांसस्य गुणाः ।
"शरारिबककाकाश्च दात्यूहाः पवनापहाः ॥"
इति रत्नावली ॥
अपि च ।
"हंससारसकाचाक्षवकक्रौञ्चशरारिकाः ।
नन्दीमुखीसकादम्बावलाकाद्याःप्लवाः स्मृताः ॥
प्लवन्ते सलिले यस्मात् एते तस्मात् प्लवाः स्मृताः ॥
कुलेचराः प्लवाश्चापि कोशस्थाः पादिनस्तथा ।
मत्स्या एते समाख्याताः पञ्चधानूपजातयः ॥
आनूपा मधुराः स्निग्धा गुरवो वह्निसादनाः ।
श्लेष्मलाः पिच्छलाश्चापि मांसपुष्टिप्रदा भृशम् ॥
तथाभिष्यन्दिनस्ते हि प्रायोऽपथ्यतमाः स्मृताः ॥"
इति भावप्रकाशः ॥
स्वनामख्यातपुष्पवृक्षः । तत्पर्य्यायः । शिववल्ली २ पाशुपतः ३ एकाष्ठीलः ४ वसुः ५ । इत्यमरः ॥ एकाष्ठीला ६ बुकः ७ वसुकः ८ वसूकः ९ । इति तट्टीका ॥ बकपुष्पः १० शिवमल्ली ११ । इति शब्दरत्नावली ॥ काकशीर्षः १२ स्थूलपुष्पः १३ शिवप्रियः १४ काकनामा १५ वसहट्टः १६ स्वपूरकः १७ रक्तपुष्पः १८ मुनितरुः १९ अगस्तिः २० वङ्गसेनकः २१ । इति रत्नमाला ॥ अगस्त्यः २२ शीघ्रपुष्पः २३ मुनिद्रुमः २४ व्रणारिः २५ दीर्घफलकः २६ वक्रपुष्पः २७ सुरप्रियः २८ ।
"सितपीतनीललोहितकुसुमभेदाच्चतुर्विधोऽगस्तिः ।
मधुरशिशिरदोषश्रमकासविनाशनश्चभूतघ्नः ॥"
तथा च ।
"अगस्ति शिशिरं गौल्यं त्रिदोषघ्नं श्रमापहम् ।
बलासकासवैवर्ण्यभूतघ्नञ्च बलावहम् ॥"

**बंहीयान्,** [स्] त्रि, (अयमनयोरतिशयेन बहुलः ।

बहुल + "द्विवचनविभज्योपपदे तरबीयसुनौ ।" ५ । ३ । ५७ । इति ईयसुन् । "प्रियस्थिर-स्फिरोरुबहुलेति ।" ६ । ४ । १५७ । इति बंहि-आदेशश्च ।) अतिशयवहुलः । अयमनयो-रतिशयेन बहुः इत्यर्थे बहुशब्दादीयसुप्रत्ययेन निष्पन्नः । इति मुग्धबोधमतम् ॥

**बः**, पुं, वरुणः । कुम्भः । इति शब्दरत्नावली ॥

"बः पुमान् वरुणे सिन्धौ भगे तोये गतेऽपि च ।
गन्धने तन्तुसन्ताने पुंस्येव वपने स्मृतः ॥"
इति मेदिनी । बे, १ ॥ * ॥
तस्य साङ्केतिकनामानि यथा । युगन्धरः १ सुरभिः २ मुखविष्णुः ३ संहारः ४ वसुधा-धिपः ५ । इति बीजवर्णाभिधानम् । भूधरः ६ दशगण्डः ७ । इति रुद्रयामलोक्तबीजाभिधानम्॥
अपि च ।
"बो वनी भूधरो मार्गो घर्घरी लोचनप्रियः ।
प्रचेताः कलसः पक्षी स्थलगण्डः कपर्द्दिनी ॥
पृष्ठवंशो भयामातुः शिखिवाहो युगन्धरः ।
मुखबिन्दुर्बली घण्टा योद्धा त्रिलोचनप्रियः ।
क्लेदिनी तापिनी भूमिसुगणिन्द्रवलिप्रियः ।
सुरभिर्मुखविष्णुश्च संहारो वसुधाधिपः ॥
षष्ठापुरं चपेठा च मोदको गगनं प्रति ।
पूर्ब्बाषाढामध्यलिङ्गौ शनिः कुम्भतृतीयकौ ॥"
इति तन्त्रान्तरम् ॥

**ब(व)क**, इ ङ कौटिल्ये । गतौ । इति कविकल्पद्रुमः ॥

(भ्वा०-आत्म०-अक०-सक० च-सेट् ।) कौटिल्य-मिह कुटिलीभावः कुटिलीकरणञ्च । इ, वङ्क्यते । ङ, वङ्कते काष्ठं कुटिलं स्यादित्यर्थः । वङ्कते काष्ठं कुटिलं करोतीत्यर्थः । इति दुर्गादासः ॥

**ब(व)कः**, पुं, (ब(व)ङ्कते कुटिलीभवतीति । वकि +

अच् । पृषोदरादित्वात् नलोपः ।) स्वनाम-

इति राजनिर्घण्टः ॥
अपि च ।
"अगस्तिकुसुमं शीतं चातुर्थकनिवारकम् ।
नक्तान्ध्यनाशनं तिक्तं कषायं कटुपाकि च ।
पीनसश्लेष्मपित्तघ्नं वातघ्न मुनिभिर्मतम् ॥"
इति भावप्रकाशः ॥
अन्यच्च ।
"वासकस्य च पुष्पा वङ्गसेनस्य चैव हि ।
कटुपाकानि तिक्तानि कासक्षयकराणि च ॥"
इति राजवल्लभः ॥
"बकः पाशुपतश्चैव शिवापीडश्च सुव्रतः ।
वसुकश्च शिवाङ्कश्च शिवेष्टः क्रमपूरकः ॥
शिवमल्लिः शिवाह्लादः शाम्भवो रविसंमितः ।

बकोऽतिशिशिरस्तिक्तो मधुरो मधुगन्धकः ॥
पित्तदाहकफश्वासश्रमहारीच दीपनः ॥”
इति च राजनिर्घण्टः ॥
“शिवमल्ली पाशुपत एकाष्ठीला वुको वसुः ।
वुकोऽनुष्णः कटुस्तिक्तः कफपित्तविषापहः
।
योनिशूलतृषादाहकुष्ठशोथास्रनाशनः ॥”
इत्यपि भावप्रकाशः ॥
तालव्यशकारः । यथा, --
“ -- शो वान्तो वपरो बकः ।”
इति बीजवर्णाभिधानम् ॥ * ॥
कुवेरः । रक्षोविशेषः । इति मेदिनी । के, ३०
॥ स
च भीमेन हतः । (यथा महाभारते । १ । ९५
। ७३ ।
“तस्यामप्येकचक्रायां बकं नाम राक्षसं हत्वा
पाञ्चालनगरमभिगताः ॥”) अत्र कोषे
पवर्गीय
बकारादौ पठितोऽयं शब्दः किन्तु अमर-
टीकायां भरतेन अन्तःस्थवकारादिवचवक-
धातुभ्यां क्रमेण घप्रत्ययेन अन्प्रत्ययेन च
साधितः ॥ * ॥ यन्त्रविशेषः । यथा, --
“जलकच्छपपातालदोलाभूधरवालुकाः।
बकाद्या यन्त्रभेदाः स्युर्व्वज्रान्धाद्याश्च
मूषिकाः ॥”
इति शब्दचन्द्रिका ॥
अस्य विवरणं यथा, वैद्यके ।
“दीर्घकण्ठकाचकूप्या गिलयेत्
स्वल्पभाण्डकम् ।
तिर्य्यक् कृत्वा पचेत् चुल्यां बकयन्त्रमिति
स्मृतम् ॥”
असुरविशेषः । स च श्रीकृष्णेन हतः । यथा,
--
“स्वं स्वं वत्सकुलं सर्व्वे पाययिष्यन्त एकदा
।
गत्वा जलाशयाभ्यासं पाययित्वा पपुर्जलम्
॥
ते तत्र ददृशुर्बाला महासत्त्वमवस्थितम् ।
तत्र सुवज्रनिर्भिन्नं गिरेः कूटमिव च्युतम् ॥
स वै बको नाम महानसुरो बकरूपधृक् ।

**ब(व)कपञ्चकं**, क्ली, (बकोपलक्षिताः पञ्च तिथयो
यत्र कप् । बकोऽपि तत्र नाश्नीयादिति
वचना-
देव तथात्वम् ।)
कार्त्तिकशुक्लैकादश्यादिपञ्च-
तिथ्यात्मकम् । यथा, --
“तत्रैकादश्यादितिथिपञ्चकेबकपञ्चकम् ।
बकोऽपि तत्र नाश्नीयान्मत्स्यञ्चैव
कदाचन ॥
इति वचनात् ।” इति कृत्यतत्वम् ॥
“किञ्च । कार्त्तिकमधिकृत्य ब्रह्मपुराणम् ।
‘एकादश्यादिषु तथा तासु पञ्चसु रात्रिषु ।
दिने दिने च स्नातव्यं शीतलासु नदीषु च
।
वर्ज्जितव्या तथा हिंसा मांसभक्षणमेव च
॥’
ततश्च मांसभक्षणनिषेधे
कार्त्तिकमासतच्छुक्ल-
पक्षतदेकादश्यादिपञ्चदिनानि
शक्ताशक्तभेदात्
पापतारतम्याद्वा निषिद्धानि ।” इति
तिथ्यादि-
तत्त्वम् । अपि च ।
“एकादशीं समारभ्य यावत् पञ्चदशी
भवेत् ।
बकोऽपि तत्र नाश्नीयान्मीनं मांसञ्च किं
नरः ॥”
इति संवत्सरकौमुदीधृतब्रह्मपुराणवचनम्
॥

**ब(व)कपुष्पः**, पुं, (बक इव वक्रं पुष्पं यस्य ।) बक-
वृक्षः । इति शब्दरत्नावली ॥ (वकस्य
पुष्पम् ।)
अगस्तिकुसुमे, क्ली ॥

**ब(व)कवृत्तिः**, पुं, (बकस्येव स्वार्थसाधिका वृत्ति-
र्यस्य ।) बकतुल्यवर्त्तनविशिष्टः । यथा, -
-
“पाषण्डिनो विकर्म्मस्थान्
वैडालव्रतिकान्

**ब(व)कुलः**, पुं, (ब(व)ङ्कते इति । ब(व)कि कौटिल्ये
+ “मद्गुरादयश्च ।” उणा० १ । ४२ ।
इति उरच् प्रत्ययरेफस्य लत्वं बङ्केर्नलोप-
श्चेत्युज्ज्वलदत्तः ।)
स्वनामख्यातपुष्पवृक्षः । तत्-
पर्य्यायः । केसरः २ । इत्यमरः । २ । ४
। ६४ ॥
केशरः ३ । इति भरतः ॥ बकूलः ४
सिंह-
केसरः ५ वरलब्धः ६ सीधुगन्धः ७
मुकूलः ८
मुकुलः ९ । इति शब्दरत्नावली ॥
स्त्रीमुख-
मधु १० दोहलः ११ मधुपुष्पः १२
सुरभिः १३
भ्रमरानन्दः १४ स्थिरकुसुमः १५
शारदिकः १६
करकः १७ सीसंज्ञः १८ विशारदः १९
गूढ-
पुष्पकः २० धन्वी २१ मदनः २२
मद्यामोदः
२३ चिरपुष्पः २४ ॥ (यथा, महाभारते ।
१ ।
६३ । ४२ ।
“पुन्नागैः कर्णिकारैश्च बकुलैर्दिव्यपाटलैः
॥”)
अस्य गुणाः । शीतलत्वम् । हृद्यत्वम् ।
विष-
दोषनाशित्वम् । मधुरत्वम् । कषायत्वम् ।
मदाढ्यत्वम् । हर्षदायकत्वञ्च ॥
तत्कुसुमगुणाः ।
रुच्यत्वम् । क्षीराढ्यत्वम् । सुरभित्वम् ।
शीत-
लत्वम् । मधुरत्वम् । स्निग्धत्वम् ।
कषायत्बम् ।
मलसंग्रहकारकत्वञ्च । इति राजनिर्घण्टः
॥
अपि च ।
“बकुलो मधुगन्धश्च सिंहकेसरकस्तथा ।

आगत्य तरसा कृष्णं तीक्ष्णतुण्डोऽग्रसद्बली ॥
कृष्णं महाबकग्रस्तं दृष्ट्वा रामादयोऽर्भकाः ।
बभूवुरिन्द्रियाणीव विना प्राणं विचेतसः ॥
तँतालुमूलं प्रदहन्तमग्निवद्
गोपालसूनुं पितरं जगद्गुरोः ।
चच्छर्द्द सद्योऽतिरुषाक्षतं बक-
स्तुण्डेन हन्तुं पुनरभ्यपद्यत ॥
तमापतन्तं स निगृह्य तुण्डयो-
र्दोर्भ्यां बकं कंससखं सतां गतिः ।
पश्यत्सु बालेषु ददार लीलया
मुदावहो वीरणवद्दिवौकसाम् ॥”
इति श्रीभागवते १० स्कन्धे ११ अध्यायः ॥

**ब(व)कचिञ्चिका**, स्त्री, मत्स्यविशेषः । तत्पर्य्यायः । बकाची २ । इति हारावली । १८८ ॥

**ब(व)कजित्**, पुं, (बकं जितवान् इति । जि + क्विप् ।) भीमसेनः । इति त्रिकाण्डशेषः ॥
श्रीकृष्णश्च ॥

**ब(व)कधूपः**, पुं, (बक इव शुभ्रवर्णो धूपः ।) वृक-धूपः । इत्यमरटीका ॥

**ब(व)कनिसूदनः**, पुं, (निसूदयति हन्तीति । सूदि + ल्युः । बकस्य निसूदनो घातकः ।) भीमसेनः ।
इति हेमचन्द्रः । ३ । ३७२ ॥ श्रीकृष्णश्च ॥

शठान् ।
हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्च्चयेत् ॥”
इति विष्णुपुराणे ३ अंशे १८ अध्यायः ॥
तस्य लक्षणं यथा, --
“अर्व्वाग्दृष्टिर्नैकृतिकः
स्वार्थसाधनतत्परः ।
शठो मिथ्याविनीतश्च वकवृत्तिरुदाहृतः ॥”
इति तट्टीकायां श्रीधरस्वामी ॥
अपि च ।
“अधोदृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः ।
शठः शिल्पी विनीतश्च बकवृत्तिरुदाहृतः ॥”
इति पाद्मोत्तरखण्डे ११५ अध्यायः ॥

**ब(व)कवैरी**, [न्] पुं, (बकस्य वैरी घातकत्वात् ।) भीमसेनः । इति जटाधरः ॥ श्रीकृष्णश्च ॥

**ब(व)कव्रती**, [न्] पुं, (बकव्रतमस्यास्तीति इनिः ।) मिथ्याविनीतः । बकवृत्तिः । इति जटाधरः ॥
तस्य लक्षणं यथा, --
“अधोदृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः ।
शठो मिथ्याविनीतश्च बकव्रतधरो द्विजः ॥”
इति दानसागरे मनुः ॥

**ब(व)काची**, स्त्री, बकचिञ्चिकामत्स्यः । इति हारावली । १८८ ॥

**ब(व)कारिः**, पुं, (बकस्य अरिः ।) श्रीकृष्णः । यथा,
“तदा बकारिं सुरलोकवासिनः
समाकिरन्नन्दनमल्लिकादिभिः।
समीडिरे चानकशङ्खसंस्तवै-
स्तद्वीक्ष्य गोपालसुता विसिस्मिरे ॥”
इति श्रीभागवते । १० । ११ । ५२ ॥
(भीमसेनश्च । बकराक्षसघातकत्वात् ॥)

बकुलस्तु वरोऽनुष्णः कटुः पाके रसे गुरुः ॥
कफपित्तविषश्वित्रकृमिदन्तगदापहः ॥”
इति भावप्रकाशः ॥
तत्फलगुणाः ।
“बकुलं मधुरं ग्राहि दन्तस्थैर्य्यकरं परम् ॥”
तत्पुष्पगुणाः ।
“पद्मं कषायं मधुरं शीतं पित्तकफास्रनुत् ।
तद्वत् बकुलपुन्नागकह्लारोत्पलपाटलम् ॥”
इति राजवल्लभः ॥
अस्योत्पत्तिर्यथा, --
“विचरन्तं तदा भूयो महेशं कुसुमायुधः ।
आरात् स्थित्याग्रतो धन्वी
सन्तापयितुमुद्यतः ॥
ततस्तमग्रतो दृष्ट्वा क्रोधाध्मातदृशा हरः ।
स्मरमालोकयामास
शिखाग्राच्चरणान्तिकम् ॥
आलोकितस्त्रिनेत्रेण मदनो द्युतिमानपि ।
प्रादह्यत तदा ब्रह्मन् ! पादादारभ्य
कक्ष्यवत् ॥
प्रदह्यमानौ चरणौ दृष्ट्वासौ कुसुमायुधः ।
उत्ससर्ज धनुः श्रेष्ठं तज्जगामाथ पञ्चधा ॥
यदासीन्मुष्टिबन्धन्तद्रुक्मपृष्ठंमहाप्रभम् ।
स चम्पकतरुर्जातः स्रग्गन्धाढ्यो
गुणाकृतिः ॥
नाहस्थानं शुभाकारं यदासीद्वज्रभूषितम् ।
तज्जातं केशवारण्यं बकुलं नामतो नगैः ॥
या च कोटी शुभा
ह्यासीदिन्द्रनीलविभूषिता।
जाता सा पाटला रम्या
भृङ्गराजिविराजिता ॥
नाहोपरि तथा मुष्टौ स्थानं चन्द्रमणिप्रभम् ।
पञ्चगुल्माभवज्जाती शशाङ्ककिरणोज्ज्वला ॥
ऊद्‌र्ध्वं मुष्ट्या अधः कोट्याः स्थानं
विद्रुमभूषितम् ।

|  |  | तस्मात् बहुपुटा मल्ली संजाता विविधा मुने ! ॥"<br>इति श्रीवामनपुराणे ६ अध्यायः ॥ |
| --- | --- | --- |

(शिवः । यथा, महाभारते तस्य सहस्रनाम-
कीर्त्तने । १३ । १७ । १०९ ।
“बणिको वर्द्धकी वृक्षो बकुलश्चन्दनश्छदः ।
सारग्रीवो महाजत्रुरलोलश्च महौषधः ॥”)

**ब(व)कुला**, स्त्री, (बकुल + टाप् ।) कटुका । इति
राजनिर्घण्टः ॥

**ब(व)कुली**, स्त्री, (बकुल + गौरादित्वात् ङीष् ।)
काकोली । इति शब्दचन्द्रिका ॥

**ब(व)कूलः**, पुं, (बकुल । पृषोदरादित्वात् दीर्घः ।)
बकुलवृक्षः । इति शब्दरत्नावली ॥

**ब(व)केरुका**, स्त्री, (बकानां बकसमूहानां ईरुकं
गतिर्यत्र ।) बलाका ।
वातावर्ज्जितशाखा । इति
मेदिनी । के, २०२ ॥

**बकोटः**, पुं, बकः । इति त्रिकाण्डशेषः ॥

**बठ**, पैन्ये । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
अक०-सेट् ।) पैन्यमिह सामर्थ्यम् । वठति
वीरो योद्धुं समर्थः स्यादित्यर्थः । इति
दुर्गादासः ॥

**ब(व)डवा**, स्त्री, (बलं वातीति । बल + वा + कः ।
टाप् । डलयोरैक्यात् लस्य डत्वम् ।) घोटकी ।
इत्यमरः । २ । ८ । ४३ ॥ (यथा, महाभारते ।
१ । २२२ । ४५ ।
“वडवानान्तु शुद्धानां चन्द्रांशुसमवर्च्चसाम् ।
ददौ जनार्द्दनः प्रीत्या सहस्रं हेमभूषितम् ॥”
दृष्ट्वा निर्विघ्नमनसो बभूवुः पूर्ब्बपीडिताः ॥
बडवां तां समादाय तदा ज्वालामुखीं विधिः ।
सागरं प्रययौ लोकहिताय जगतां प्रभुः ॥
गत्वाथ सागरं ब्रह्मा प्रोवाच परिपूजितः ।
यथावत्तेन विप्रेन्द्राः समयञ्च निदेशयन् ॥
अयं क्रोधो महेशस्य बडवारूपधृक् त्वया ।
ज्वालामुखः सदा धार्य्यो यावन्न विलयाम्यहम् ॥
यदा त्वामहमागम्य वदामि सरितांपते ! ।
तदा त्वया परित्याज्यः क्रोधोऽयं बडवामुखः ॥
भोजनं भवतस्तोयमेतस्य तु भविष्यति ।
यत्नादेव विधार्य्योऽयं यथा नो याति चान्तरम् ॥
इत्युक्तो ब्रह्मणा सिन्धुरङ्गीचक्रे तदा क्रुधम् ।
ग्रहीतुं बडवावक्त्रं शम्भोश्चाशक्यमप्यरम् ॥
ततः प्रविष्टो जलधौ पावको बडवामुखः ।
वार्य्योघविद्धहंसस्य ज्वालामालातिदीपितः ॥”
इति कालिकापुराणे ४१ अध्यायः ॥
(नदीविशेषः । यथा, महाभारते । ३ । २२१ । २४ ।
“तमसा नर्म्मदा चैव नदी गोदावरी तथा ।
वेण्णोपवेण्णा भीमा च बडवा चैव भारत ! ॥”
तीर्थभेदः । यथा, महाभारते । ३ । ८२ । ८८ ।
“ततो गच्छेत बडवां त्रिषु लोकेषु विश्रुताम् ।
पश्चिमायान्तु सन्ध्यायां उपस्पृश्य यथाविधि ॥”)

**ब(व)डवाकृतः** पुं, (बडवया दास्या कृतः ।)
पञ्चदशदासान्तर्गतदासविशेषः । यथा, --
“भक्तदासश्च विज्ञेयस्तथैव बडवाकृतः ॥”
इति नारदः ॥
बडवा दासी तल्लोभादङ्गीकृतदास्यः । इति
दायक्रमसंग्रहः ॥ कुत्रचित् बडवाभृतो बडवा-
हृतोऽपि पाठः ॥

उत्पन्नमात्रश्चोवाच पितरन्दीनया गिरा ।
क्षुधा मे वाधते तात ! जगद्भक्षे त्यजस्व माम् ॥
त्रिदिवारोहिभिर्ज्वालैर्जृम्भमाणो दिशो दश ।
निर्दहन् सर्व्वभूतानि ववृधे सोऽन्तकोऽनलः ॥
एतस्मिन्नन्तरे ब्रह्मा मुनिमौर्व्वं समागतः ।
उवाच वार्य्यतां पुत्रो जगतस्त्वं दयां कुरु ॥
अस्यापत्यस्य ते विप्र ! करिष्ये स्थानमुत्तमम् ।
तथ्यमेतन्मंम वचः शृणु त्वं वदतांवर ! ॥
और्व्व उषाच ।
धन्योऽस्म्यनुगृहीतोऽस्मियन्मेऽद्य भगवान् शिशोः ।
मतिमेतान्ददातीह परमानुग्रहाय वै ॥
प्रभातकाले संप्राप्ते काङ्क्षितव्ये समागमे ।
भगवंस्तर्पितः पुत्रः कैर्हव्यैः प्राप्स्यते सुखम् ॥
कुत्र वास्य निवासः स्याद्भोजनन्तु किमात्मकम् ।
विधास्यतीह भगवान् वीर्य्यतुल्यं महौजसः ॥
ब्रह्मोवाच ।
बडवामुखेऽस्य वसतिः समुद्रे वै भविष्यति ।
मम योनिर्जलं विप्र ! तत्र मे तोयदं मुखम् ॥
अत्राहमासे नियतं पिबन् वारिमयं हविः ।
तद्धविस्तव पुत्रस्य विसृजन्नानयंश्च तम् ॥
ततो युगान्ते भूतानां मेघवाहञ्च पुत्रक ! ।
सहितौ विचरिष्यावो निष्पुराणकराविह ॥
एषोऽग्निरन्तकाले तु सलिलाशी मया कृतः ।
दहनः सर्व्वभूतानां सदेवासुररक्षसाम् ॥
एवमस्त्विति तं सोऽग्निः संवृतज्वालमण्डलः ।
प्रविवेशार्णवमुखं विप्रनष्टान्तरप्रभम् ॥”
इति मात्स्ये १५० अध्यायः ॥
(मदनदहनाय हरनेत्रसमुद्भूतोऽग्निरपि बडवा-
नलः । अस्य प्रमाणादिकं बडवाशब्दे
द्रष्टव्यम् ॥)

अस्या दुग्धगुणा यथा, --
“रूक्षोष्णं बडवाक्षीरं बल्यं
शोषानिलापहम् ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये
भागे ॥
बडवारूपधारिणी सूर्य्यपत्नी संज्ञा ।
यथा,
मार्कण्डेयपुराणे । ७७ । २३ ।
“सूर्य्यतापमनिच्छन्ती तेजसस्तस्य
बिभ्यती ।
तपश्चचार तत्रापि बडवारूपधारिणी
॥”
अस्या विशेषविवरणन्तु तत्रैव विशेषतो
द्रष्टव्यम् ॥
तृतीया सूर्य्यपत्नी । इति केचित् ।
यथा, भाग-
वते । ८ । १३ । ८ -- ९ ।
“विवस्वतश्च द्वे जाये विश्वकर्म्मसुते
उभे ।
संज्ञा छाया च राजेन्द्र ! ये प्रागभिहिते
तव ॥
तृतीयां बडवामेके तासां
संज्ञासुतास्त्रयः ।
यमो यमी श्राद्धदेवश्छायायाश्च सुतान्
शृणु ॥”)
अश्विनीनक्षत्रम् । इति ज्योतिषम् ॥
(नारी-
विशेषः । इति हेमचन्द्रः ॥ दासी ।
यथाह नारदः ।
“भक्तदासश्च विज्ञेयस्तथैव बडवाकृतः
॥”
वासुदेवस्य स्वनामख्याता परिचारिका
। इति
हरिवंशः । ३५ । ३ ॥) बाडवाग्निः ।
अस्योत्-
पत्तिर्यथा, --
“अथाकाशगता देवाः क्रुद्धं दृष्ट्वा
महेश्वरम् ।
प्रसीद जगतां नाथ ! कामे क्रोधं
परित्यज ॥

**ब(व)डवाग्निः**, पुं, (बडवायाः समुद्रस्थितायाः
घोटक्या मुखस्थोऽग्निः ।) समुद्रस्थाग्निः ।
(अस्य
विवरणन्तु बडवानलशब्दे द्रष्टव्यम् ॥)

**ब(व)डवानलः**, पुं, (बडवाया अनलः ।) बडवाग्निः ।
तत्पर्य्यायः । सलिलेन्धनः २ बडवामुखः ३
काक-
ध्वजः ४ बाणिजः ५ स्कन्दाग्निः ६ तृणधुक्
७
काष्ठधुक् ८ । इति त्रिकाण्डशेषः ॥ और्व्वः
९ बाडवः १० । इत्यमरः । १ । १ । ५९ ॥
उर्व्वस्य
ऋषेरपत्यम् और्व्वः ष्णः । बडवायां
विद्यमानो
बाडवः ष्णः । बडवाया अनलो बडवानलः ।
आधाराधेयभावसम्बन्धः । पुरा किल
उर्व्वेण
मुनिना अयोनिजं पुत्त्रमिच्छता वक्षो मथितं
तत्र ज्वालामयः पुरुषो जातः स च समुद्रे
बडवामुखे अवस्थापितः । इति पौराणिकाः
॥
इति तट्टीकायां भरतः ॥ * ॥ तस्य विवरणं
यथा, --
“और्व्वस्तु तपसाविष्टो निवेश्योरुं हुताशने ।
ममन्थैकेन दर्भेण सुतस्य व्रतधारिणम् ॥
तस्योरुं सहसा भित्त्वा ज्वालामाली
ह्यनिन्दनः ।
जगतो दहनाकाङ्क्षी पुत्त्रोऽग्निः समपद्यत ॥
और्व्वस्योरुं विनिर्भिद्य और्व्वो नामान्तको-
ऽनलः ।
दिधक्षन्निव लोकांस्त्रीन् जज्ञे परमकोपनः ॥
लङ्काया दक्षिणे
पृथिव्याश्चतुर्थभागरूपस्थान-
विशेषः । इति सिद्धान्तशिरोमणिः ॥ (वटि-
कौषधविशेषः । यथा, --
“शुद्धताम्रस्य भागैकं मरिचस्य तथैव च ।
विषं तत्तु ल्यकं दद्यात् तत्सर्व्वं
श्लक्ष्णचूर्णितम् ॥
लाङ्गलीरससंयुक्तं तत्सर्व्वं पुटके पचेत् ।
रक्तिकाद्वितयं वापि त्रितयं वा प्रकल्पते ॥
दोषे व्योषसमायुक्तस्त्रिदोषशमनो भवेत् ।
भक्षयेत् पवने चोग्रे बडवानलसंज्ञितम् ॥
इति बडवानलो रसः ॥”
इति वैद्यकरसेन्द्रसारसंग्रहे ज्वराधिकारे ॥)

**ब(व)डवामुखः**, पुं, (बडवाया घोटक्या मुखमाश्रय-
त्वेनास्त्यस्य । अर्श आदित्वात् अच् ।)
बडवा-
नलः । इति हेमचन्द्रः ॥ (यथा, हरिवंशे ।
९७ । २२ ।
“सा यथैवार्णवगता तथैव बडवामुखे ॥”
महादेवस्य मुखमित्येके । यथा, महाभारते ।
७ । २०० । १११ ।
“तस्य देवस्य यद्वक्त्रं समुद्रे तदतिष्ठत ।
बडवामुखेति विख्यातं पिबत्तोयमयं हविः ॥”
महादेवस्य नामभेदः । यथा, महाभारते ।
१३ । १७ । ५५ ।

| | | |
|---|---|---|
| इति स्म वदतां तेषाममराणां तदानलः ।<br>ललाटचक्षुःसम्भूतो भस्माकार्षीन्मनोभवम् ॥<br>ब्रह्मा क्रोधानलं शम्भोर्धक्षन्तं सकलान् जनान् ।<br>बडवारूपिणं चक्रे देवानां पुरतस्तदा ॥<br>बडवां तां तदा देवाः सौम्वां ज्वालामुखीं शुभाम् । | | |

"विष्णुः प्रसादितो यज्ञः समुद्रो
बडवामुखः ॥"
कूर्म्मस्य दक्षिणकुक्षिस्थजनपदविशेषः ।
यथा,
मार्कण्डेये । ५८ । ३० ।
"कूर्म्मस्य दक्षिणे कुक्षौ
बाह्यपादस्तथापरम् ।
काम्बोजाः पह्लवाश्चैव तथैव बडवामुखाः
॥")
वटिकौषधविशेषः । यथा, --
"शुद्धसूतं समं गन्धं मृतताम्राभ्रटङ्गणम् ।
सामुद्रञ्च यवक्षारं स्वर्ज्जिसैन्धवनागरम् ॥
अपामार्गस्य च क्षारं पलाशवरुणस्य च ।
प्रत्येकं सूततुल्यं स्यादम्लयोगेन मर्द्दयेत्
॥
हस्तिशुण्डीद्रवैश्चाग्नौ मर्द्दयित्वा पुटेल्लघु ॥
माषमात्रः प्रदातव्यो रसोऽयं बडवामुखः ।
ग्रहणीं विविधां हन्ति संग्रहग्रहणीं ज्वरम् ॥
इति बडवामुखो रसः ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे ग्रहण्यधिकारे
॥)

**ब(व)डवासुतौ**, पुं, (बडवाया घोटकीरूपायाः त्वष्टृ-
सुतायाः संज्ञायाः सुतौ ।) अश्विनीकुमारौ
।
यथा, हेमचन्द्रः ।
"स्वर्वैद्यावश्विनीपुत्त्रावश्विनौबडवासुतौ
॥"
(तयोरुत्पत्तिकथा यथा, हरिवंशे । ९ ।
४९ -- ५३ ।
"गच्छ देव ! निजां भार्य्यां कुरूंश्चरति
सोत्त-
रान् ।
बडवारूपमास्थाय वने चरति शाद्वले ॥
स तथा रूपमस्थाय स्वभार्य्यारूपलीलया
।
ददर्श योगमास्थाय स्वां भार्य्यां बडवां
ततः ॥
अधृष्यां सर्व्वभूतानां तपसा नियमेन च ।
बडवावपुषा राजंश्चरन्तीमकुतोभयाम् ॥

**बणः**, पुं, (बणनमिति । बण् + अप् ।) शब्दः ।
इत्यमरटीकायां रमानाथः ॥

**ब(व)णिक्**, [ज्] पुं, (पणते क्रयविक्रयादिना व्यव-
हरतीति । पण + "पणेरादेश्च बः ।"
उणा०
२ । ७० । इति इजिः पस्य च बः ।) क्रय-
विक्रयकर्त्ता । बाणिज्यकारकः ।
तत्पर्य्यायः ।
वैदेहकः २ सार्थवाहः ३ नैगमः ४ बणिजः
५
पण्याजीवः ६ आपणिकः ७
क्रयविक्रयिकः
८ । इत्यमरः । २ । ९ । ७८ ॥ वैदेहः ९
विदेहः
१० बाणिजः ११ बाणिजिकः १२
क्रायिकः
१३ विक्रयिकः १४ । इति भरतादयः ॥
बाणि-
जकः १५ बाणिज्यकारः १६ । इति
शब्द-
रत्नावली ॥ (यथा, माघे । १२ । २६ ।
"स्थाणौ निषङ्गिण्यनसि क्षणम्पुरः
शुशोच लाभाय कृतक्रयो बणिक् ॥")
करणान्तरम् । इति मेदिनी । जे, २६ ॥
वैश्यः ।
इति राजनिर्घण्टः ॥ (बाणिज्ये
अधिकारा-
देवास्य तथात्वम् ॥ करणविशेषः । यथा,
बृहत्-
संहितायाम् । ९९ । ७ ।
"कृषिबीजगृहाश्रयजानि गरे
बणिजिध्रुवकार्य्यबणिग्युतयः ॥")

**ब(व)णिक्**, [ज्] स्त्री, (पण्यते व्यवह्रीयते इति ।
पण + इजि । पस्य बः । अभिधानात्
स्त्रीत्वम् ।)
बाणिज्यम् । इति मेदिनी । गे, २६ ॥

**ब(व)णिग्बन्धुः**, पुं, (बणिजः पण्याजीवस्य
बन्धुर्धन-

**बद**, स्थैर्य्ये । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
अक०-सेट् ।) बदति पर्व्वतः । आबादीत्
अबदीत् । हसादेः सेम इत्यादिना वा दीर्घः
।
व्रजवदेत्यादौ दन्त्यादिवदेग्रहणादिति
प्राञ्चः ।
इति दुर्गादासः ॥

**ब(व)दरं**, क्ली, (बदति स्थिरीभवति छिन्नेऽपि पुनः
प्ररोहतीति । बद + अर ।) सेविफलम् ।
इति
राजनिर्घण्टः ॥ (पर्य्यायोऽस्य यथा, --
"मुष्टिप्रमाणं बदरं सेवं सिवितिकाफलम्
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)
कार्पासफलम् । कोलिफलम् । इति
हेमचन्द्रः ॥
शृगालकोलिः । शेयाकुल इति भाषा ।
बदति
स्थिरीभवति छिन्नस्यापि पुनःप्ररोहणात् ।
बदरं
वृक्षफलेऽपि क्लीवम् । इति भरतः ॥ तत्-
पर्य्यायः । घोण्टा २ । इत्यमरः ॥
गोपघोण्टा
३ । इति सुभूतिः ॥ हस्तिकोलिः ४
गोपघण्टी
५ बदरीच्छदा ६ शृगालकोलिः ७ कर्कन्धुः
८ । इति रत्नकोषः ॥ बादिरम् ९ । इति
शब्दरत्नावली ॥ अस्य विवरणं कोलशब्दे
द्रष्ट-
व्यम् ॥ * ॥ बृहत्कोलिः । तत्पर्य्यायः ।
सौवीरम्
२ । इति रत्नमाला ॥ * ॥ कोलिमात्रम् ।
तत्प-
र्य्यायः । कर्कन्धुः २ वदरी ३ कोलम् ४
फेनिलम्
५ कुवलम् ६ घोण्टा ७ सौवीरम् ८
अजाप्रिया

सोऽश्वरूपेण भगवांस्तां मुखे समभावयत्
॥
मैथुनाय विचेष्टन्ती परपूरुषशङ्कया ।
सा तन्निरवमच्छुक्रं नासिकायां विवस्वतः
॥
देवौ तस्यामजायेतामश्विनौ भिषजां वरौ ।
नासत्यश्चैव दस्रश्च स्मृतौ
द्वावश्विनाविति ॥”)

**ब(व)डवाहृतः**, पुं, (बडवया दास्या हृतः ।) बडवा-
कृतः । पञ्चदशदासान्तर्गततदासविशेषः ।
यथा,
बडवागृहदासी तया हृतस्तल्लोभेन
तामुद्वाह्य
दासत्वेन प्रविष्टः । इति मिताक्षरा ॥

**बडिशं**, क्ली, (बलिनो मत्स्यान् श्यति नाशय-
तीति । शो + कः । लस्य डत्वम् ।)
मत्स्यधर-
णार्थं वक्रलौहकण्टकविशेषः । वँड्शी इति
भाषा । तत्पर्य्यायः । मत्स्यवेधनम् २ ।
इत्यमरः ।
१ । १० । १६ ॥ बलिशम् ३ बडिशी ४
बडिशा ५ ।
इति भरतः ॥ बलिशी ६ मत्स्यवेधनी ७ ।
इति
तट्टिकान्तरम् ॥ बलिसी ८ बलिसम् ९
वरिशी
१० बलिशिः ११ । इति शब्दरत्नावली ॥
मत्स्य-
भेदनम् १२ । इति जटाधरः ॥ (यथा,
महा-
भारते । १ । २८ । १० ।
“यस्ते कण्ठमनुप्राप्तो निगीर्णं बडिशं यथा
।
दहेदङ्गारवत् पुत्त्र ! तं विद्यात् ब्राह्मणर्षभम्
॥”)

**बडिशी**, स्त्री, (बडिश + गौरादित्वात् ङीष् ।)
बडिशम् । इति शब्दरत्नावली ॥

**बण**, शब्दे । इति कविकल्पद्रुमः ॥ (भ्वा० पर०-
अक०-सेट् ।) बणति । इति दुर्गादासः ॥
दत्वात् ।) नीलीवृक्षः । इति शब्दचन्द्रिका
॥

**बणिग्भावः**, पुं, (बणिजो भावः ।) बाणिज्यम् ।
बणिजां धर्म्मः । तत्पर्य्यायः । सत्यानृतम्
२ ।
इत्यमरः ॥ बाणिज्यम् ३ बाणिज्या ४
बणिक्
पथः ५ । इति जटाधरः ॥ बणिज्यम् ६ ।
इति शब्दरत्नावली ॥

**ब(व)णिग्वहः**, पुं, (वहतीति । वह + अच् । वहः ।
बणिजां बाणिज्यद्रव्याणां षहः ।) उष्ट्रः ।
इति
शब्दचन्द्रिका ॥

**ब(व)णिजः**, पुं, (वणिगेव । बणिज् + स्वार्थे अण् ।
अभिधानात् न वृद्धिः ।) बणिक् ।
इत्यमरः ।
२ । ९ । ७८ ॥
ववाद्येकादशकरणान्तर्गतषष्ठ-
करणम् । तज्जातफलं यथा, कोष्ठीप्रदीपे
।
“प्राज्ञः कृतज्ञो गुणवान् गुणज्ञो
बणिग्जनप्राप्तमनोरथः स्यात् ।
यस्य प्रसूतौ बणिजाभिधानं
भाण्डप्रधानं द्रविणं हि तस्य ॥”

**ब(व)णिज्यं**, क्ली, (बणिजो भावः कर्म्म वा ।
बणिज्
+ “दूतबणिग्भ्यां च ।” ५ । १ । १२६ ।
इत्यत्र
काशिकोक्तेर्य्यः ।) बाणिज्यम् ।
इत्यमरभरतौ ॥
(यथा, मार्कण्डेये । ५० । ७६ ।
“त्रिभिः पूर्ब्बगुणैर्युक्तं
पाशुपाल्यबणिज्ययोः ॥”)

**बणिज्या**, स्त्री, (बणिजां कर्म्म । बणिज् + य ।
टाप् । स्वभावात् स्त्रीलिङ्गोऽयम् ।)
बाणिज्यम् ।
(यथा, कथासरित्सागरे । १३ । ३८ ।
“ततः स तत्पिता तेन तनयेन समं ययौ ।
९ कुहा १० कोलिः ११ विषमः १२
भयकण्टकः
१३ । इति भावप्रकाशः ॥ सौवीरकः १४
गुड-
फलः १५ बालेष्टः १६ फलशैशिरः १७
दृढ-
बीजः १८ वृत्तफलः १९ कण्टकी २०
वक्र-
कष्टकः २१ सुरसः २२ सुफलः २३
स्वच्छः
२४ कर्कन्धूः २५ बदरः २६ कोला २७
कोली
२८ कुवली २९ स्वादुफला ३० गृध्रनखी
३१
पिच्छिला ३२ कुवलः ३३ । इति च
शब्दरत्ना-
वली ॥ (यथा, भागवते । ४ । ८ । ७२ ।
“त्रिरात्रान्ते त्रिरात्रान्ते कपित्थबदराशबः ।
आत्मवृत्त्यनुसारेण मासं निन्येऽर्चयन् हरिम्
॥”)
अस्य गुणाः । मधुरत्वम् । कषायत्वम् ।
अम्ल-
त्वञ्च ॥ परिपक्वस्य तस्य गुणाः ।
मधुराम्लत्वम् ।
उष्णत्वम् । कफकारित्वम् ।
पवनातिसाररक्त-
श्रमदोषार्त्तिविनाशित्वम् । रुच्यत्वञ्च । इति
राज-
निर्घण्टः ॥ राजबदरभूबदरलघुबदराणां
पर्य्याय-
गुणास्तत्तच्छब्दे द्रष्टव्याः ॥ * ॥ अथ
बदरविशे-
षाणां लक्षणानि गुणाश्च ।
“पच्यमानं सुमधुरं सौवीरं बदरं महत् ।
सौवीरं बदरं शीतं भेदनं गुरु शुक्रलम् ॥
बृंहणं पित्तदाहास्रक्षयतृष्णानिवारणम् । * ।
सौवीराल्लघु संपक्वं मधुरं कोलमुच्यते ॥
कोलन्तु बदरं दाहि रुच्यमुष्णञ्च वातहृत् ।
कफपित्तकरञ्चापि गुरु सारकमीरितम् ॥ *
॥
कर्कन्धुः क्षुद्रबदरं कथितं पूर्ब्बसूरिभिः ।

| | | |
|---|---|---|
| | द्वीपान्तरं स्नुषाहेतोर्बणिज्याव्यपदेशतः ॥”) | अम्लं स्यात् क्षुद्रबदरं कषायं मधुरं मनाक् ॥<br>स्निग्धं गुरु च तिक्तञ्च वातपित्तापहं स्मृतम् ।<br>शुष्कं भेद्यग्निकृत् सर्व्वं लघु तृष्णाक्लमास्रजित् ॥”<br>इति भावप्रकाशः ॥ |

**ब(व)दरः**, पुं, (बदति स्थिरीभवति छिन्नेऽपि पुनः
प्ररोहतीति । बद् + अर ।)
कोलिवृक्षः ।
तत्पत्रादिगुणाः ।
"बदरस्य पत्रलेपो
ज्वरदाहविनाशनः ।
त्वचा विस्फोटशमनी बीजं
नेत्रामयापहम् ॥"
इति राजनिर्घण्टः ॥
अस्य पर्य्यायः फलगुणाश्च
क्लीवलिङ्गबदरशब्दे
द्रष्टव्याः ॥ * ॥ देवसर्षपवृक्षः ।
इति राज-
निर्घण्टः ॥ कार्पासास्थि । इति
मेदिनी ॥ कापा
सेर विचि इति भाषा ॥ तत्र
अन्तःस्थवका-
रादिशब्दमध्ये गृहीतोऽयम् ॥

**ब(व)दरफली**, स्त्री, (बदरस्येव फलमस्याः । बदर-
फल + ङीप् ।) भूबदरी । इति
राजनिर्घण्टः ॥

**ब(व)दरवल्ली**, स्त्री, (बदरा बदरफलबहुला वल्ली
लता ।) भूबदरी । इति
राजनिर्घण्टः ॥

**बदरा**, स्त्री (बदति छिन्नायामपि पुनः प्ररोह-
णात् स्थिरीभवति या । बद् +
बाहुलकादरः ।
टाप् ।) वराहक्रान्तावृक्षः ।
(तत्पर्य्यायो यथा,
"वाराहीकन्द
एवान्यैश्चर्म्मकारालुको मतः ।
अनूपसम्भवे देशे वाराह इव
लोमवान् ।
विदारी स्वादुकन्दा च सा तु क्रोष्ट्री
सिता स्मृता ॥
पुण्यानामपि तत् पुण्यं तत्र ते
संशयोऽस्तु मा ॥
एतानि राजन् ! पुण्यानि पृथिव्यां
पृथिवीपते ! ।
कीर्त्तितानि नरश्रेष्ठ !
तीर्थान्यायतनानि च ॥
एतानि वसुभिः
साध्यैरादित्यैर्मरुदश्विभिः ।
ऋषिभिर्ब्रह्मकल्पैश्च सेवितानि
महात्मभिः ॥
चरन्नेतानि कौन्तेय !
सहितैर्ब्रह्मवादिभिः ।
भ्रातृभिश्च महाभागैरुत्कण्ठां
विहरिष्यसि ॥"
(तथा च भागवते । ७ । ११ । ६ ।
"योऽवतीर्य्यात्मनोऽंशेन दाक्षायण्यान्तु
धर्म्मतः ।
लोकानां स्वस्तयेऽध्यास्ते तपो
बदरिकाश्रमे ॥")

**बदरी**, स्त्री, (बदर + गौरादित्वात् ङीष् । बदरि
+ कृदिकारादिति पक्षे ङीष् वा ।)
कोलि-
वृक्षः । इत्यमरः । २ । ४ । ३६ ॥
(अस्याः पर्य्यायो
बदरशब्दे द्रष्टव्यः । यथा, भागवते । १
।
७ । ३ ।
"तस्मिन् स आश्रमे व्यासो
बदरीखण्डमण्डिते ॥")
कार्पासी । इति शब्दरत्नावली ॥
कपिकच्छुः ।
इति राजनिर्घण्टः ॥ (बदर्य्याः फलम्
हरी-
तक्यादिभ्यश्चेति विकारार्थस्य लुक् ।
बदरी-
फलम् ॥)

**बदरीच्छदा**, स्त्री, (बदर्य्याश्छदा इव च्छदा

**बद्धगुदं**, क्ली, (बद्धं गुदं पायुर्य्येन ।) उदररोग-
विशेषः । तस्य निदानं यथा, --
"यस्यान्त्रमन्नैरुपलेपिभिर्व्वा
बालाश्मभिर्वा पिहितं यथावत् ।
सञ्चीयते तस्य मलः सदोषात्
शनैः शनैः सङ्करवच्च नाड्याम् ॥
निरुध्यते तस्य गुदे पुरीषं
निरेति कृच्छ्रादपि चाल्पमल्पम् ।
हृन्नाभिमध्ये परिवृद्धिमेति
तस्योदरं बद्धगुदं वदन्ति ॥"
इति माधवकरः ॥ * ॥
तस्य चिकित्सा यथा । "स्निग्ध स्विन्नस्याभ्यक्त-
स्याधो नाभेर्वामतश्चतुरङ्गुलमपहाय रोम-
राज्या उदरं पाटयित्वा चतुरङ्गुलप्रमाण-
मन्त्राणि निष्कृष्य निरीक्ष्य बद्धगुदस्यान्त्रप्रति-
रोधकरमश्मानं बालं वापोह्य मलजातं वा
ततो मधुसर्पिर्भ्यामभ्यज्यान्त्राणि यथास्थानं
स्थापयित्वा वाह्यं व्रणमुदरस्य सीव्येत् द्विव्रणी-
योक्तेन विधानेन च रोपयेत् ।" इति सुश्रुते
चिकित्सितस्थाने १४ अध्यायः ॥ (तथास्य-
सकारणलक्षणम् ।
"पक्षवालैः सहान्नेन भुक्तैर्बद्धायने गुदे ।
उदावर्त्तस्तथार्शोभिरन्त्रसंमूर्च्छनेन वा ॥
अपानी मार्गसंरोधात् हत्वाग्निं कुपितोऽनिलः ।
वर्च्चःपित्तकफान् रुद्ध्वा जनयत्युदरं ततः ॥"
तस्य रूपाणि ।
"तृष्णादाहज्वरमुखतालुशोषोरुसादकासश्वास-
दौर्ब्बल्यारोचकाविपाकवर्च्चोमूत्रसङ्गाध्मानच्छर्दि
क्षवथुशिरोहृन्नाभिगुदशूलान्यपिचोदरंमूढवातं
स्थिरमरुणनीलराजीसिरावनद्धमवाजिंक्वा
प्रायो नाभ्युपरिगोपुच्छवदभिनिर्व्वर्त्तयति इत्येतत्
बद्धगुदोदरमिति विद्यात् ॥"
तथास्य चिकित्सा ।
"स्विन्नाय बद्धोदरिणे मूत्रं तीक्ष्णौषधान्वितम् ।
सतैललवणं दद्यात् निरूहं सानुवासनम् ॥"
इति चरके चिकित्सितस्थाने त्रयोदशेऽध्याये ॥)

**बद्धप्पि**, क्ली, बद्धपाणिः । मुष्टिः । इति पुराणा-
न्तरम् ॥ बद्धाप्पीति च पाठः ॥

इक्षुगन्धा क्षीरवल्ली क्षीरशुक्ला पयस्विनी ।
वाराहवदना गृष्टिर्बदरेत्यपि कथ्यते ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
कार्पासीवृक्षः । इत्यमरः । २ । ४ । ११६ ॥
एलापर्णी । इति मेदिनी । रे, २०७ ॥ विष्णु-
क्रान्ता । इति विश्वः ॥

**बदरामलकं**, क्ली, (बदरफलमिवामलकम् ।)
प्राचीनामलकम् । इति हारावली । १०२ ॥

**बदरिः**, स्त्री, (बद + बाहुलकादरिः ।) कोलि-
वृक्षः । इति शब्दचन्द्रिका ॥

**बदरिकाश्रमः**, पुं, क्ली, (बदरिकाचिह्नित आश्रमः ।)
तीर्थविशेषः । (असौ च हिमालयपर्व्वतैकदेशे श्रीनगरसमीपे अलकनन्दानद्याः पश्चिमस्थतीरे अवस्थितः ।) स तु नारायणस्य व्यासस्य
चाश्रमः । यथा, महाभारते । ३ धौम्यतीर्थ-
यात्रापर्व्वणि ९० । २३ -- ३३ ।
“नारायणो विभुर्विष्णुः शाश्वतः पुरुषोत्तमः ।
तस्यातियशसः पुण्यां विशालां वदरीमनु ॥
आश्रमः ख्यायते पुण्यस्त्रिषु लोकेषु विश्रुतः ।
उष्णतोयवहा गङ्गा शीततोयवहा पुरा ॥
सुवर्णसिकता राजन् ! विशालां वदरीमनु ।
ऋषयो यत्र देवाश्च महाभागा महौजसः ॥
यस्याः ।) हस्तिकोलिवृक्षः । शङ्खनखी । इति
रत्नमाला ॥

**बदरीपत्रः**, पुं, (बदर्य्याः पत्रमिव आकृतिर्यस्य ।)
नखीनामगन्धद्रव्यम् । इति राजनिर्घण्टः ॥
(यथा, --
“बदरीपत्रकल्कं वा घृतभृष्टं ससैन्धवम् ।
स्वरोपघाते कासे च लेहमेतत् प्रयोजयेत् ॥”
इति वैद्यकचक्रपाणिसंग्रहे स्वरभेदाधिकारे ॥)

**बदरीपत्रकं**, क्ली, (बदरीपत्र + स्वार्थे कन् ।)
नखीनामगन्धद्रव्यम् । इति जटाधरः ॥

**बदरीफला**, स्त्री, (बदर्य्याः फलमिव फलं यस्याः ।)
नीलशेफालिका । इति शब्दमाला ॥

**बदरीशैलः** पुं, (बदरीबहुलः शैलः पर्व्वतः ।)
हिमालयपर्व्वतैकदेशः । बदरीवनं बदरिका-
श्रम इति च ख्यातः । स तु श्रीनगराख्यदेशे अलकनन्दानदीपश्चिमतीरवर्त्तते । इति पुरा-
णान्तरम् ॥

**बद्धं**, त्रि, (बध्यते स्म इति । बन्ध + कर्म्मणि क्तः ।)
बन्धनयुक्तम् । बाँधा इति भाषा । तत्पर्य्यायः ।
सन्दानितम् २ मूर्णम् ३ उद्धितम् ४ सन्दितम् ५
सितम् ६ । इत्यमरः । ३ । १ । ९५ ॥ निग-
डितम् ७ नद्धम् ८ कीलितम् ९ यन्त्रितम् १०
संयतम् ११ । इति हेमचन्द्रः ॥ (यथा, मनुः ।

**बद्धफलः**, पुं, (बद्धानि फलानि यस्येति ।) करञ्ज-
वृक्षः । इति राजनिर्घण्टः ॥ (विवृतिरस्य करञ्ज-
शब्दे ज्ञातव्या ॥)

**बद्धमुष्टिः**, त्रि, (बद्धा दृढा दानान्निवृत्ता वा मुष्टि-
र्यस्येति ।) दृढमुष्टिः । कृपणः । यथा, नैषधे । ३ । ८५ ।
“सजीवमप्यर्थिमुदे ददद्भ्य-
स्तव त्रपा नेदृशबद्धमुष्टेः ॥”

**बद्धमूलं**, त्रि, (बद्धं मूलं यस्येति ।) दृढमूलम् ।
उत्पाटनानर्हमूलम् । यथा, माघे । २ । ३८ ।
“त्वया विप्रकृतश्चैद्यो रुक्मिणीं हरता हरे ! ।
बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः ॥”

**बद्धरसालः**, पुं, (बद्धो रसेन आवृतः अतएव
रसालः रसवान् ।) त्रिविधराजाम्रान्तर्गता-

| प्राप्य नित्यं नमस्यन्ति<br>नारायणमजं विभुम् ।<br>यत्र नारायणो देवः परमात्मा<br>सनातनः ॥<br>तत्र कृत्स्नं जगत् पार्य !<br>तीर्थान्यायतनानि च ।<br>तत् पुण्यं तत् परं ब्रह्म तत्तीर्थं<br>तत्तपोवनम् ॥<br>तत् परं परमं दैवं भूतानां<br>परमीश्वरम् ।<br>शाश्वतं परमञ्चैव धातारं परमं<br>पदम् ॥<br>यं विदित्वा न शोचन्ति विद्वांसः<br>शास्त्रदृष्टयः ।<br>तत्र देवर्षयः सिद्धाः सर्व्वे चैव<br>तपोधनाः ॥<br>आदिदेवो महायोगी यत्रास्ते<br>मधुसूदनः । | ९ । ३०८ ।<br>“वरुणेन यथा पाशैर्बद्ध एवाभिदृश्यते ।<br>तथा पापान्निगृह्णीयात् व्रतमेतद्धि<br>वारुणम् ॥”<br>तथा च मेघदूते । ७९ ।<br>“तन्मध्ये च स्फटिकफलका<br>काञ्चनीवासयष्टि-<br>र्मूले बद्धा मणिभिरनतिप्रौढवंशप्रकाशैः<br>॥”<br>तथा च शाकुन्तले २ अङ्के ।<br>“छायाबद्धकदम्बकं मृगकुलं<br>रोमन्थमभ्यस्यतु ॥”) | |
|---|---|---|

त्युत्तमाम्रः । तत्पर्य्यायः । चक्रतलाम्रः २
मध्वाम्रः ३ सितजाम्रकः ४ वनेज्यः ५
मन्मथा-
नन्दः ६ मदनेच्छाफलः ७ । तस्य
कोमलफल-
गुणाः । कटुत्वम् । अम्लत्वम् ।
पित्तदाहदत्वञ्च ।
तस्य सुपक्वफलगुणाः । स्वादुत्वम् ।
मधुरत्वम् ।
पुष्टिवीर्य्यबलप्रदत्वञ्च । इति राजनिर्घण्टः
॥

**बद्धशिखः**, त्रि, (बद्धा शिखा चूडा यस्येति ।)

शिशुः । इति मेदिनी । खे, १५ ॥
शिखाबन्धन-
विशिष्टः । यथा, प्रायश्चित्ततत्त्वधृतवचनम्
।
"सदोपवीतिना भाव्यं सदा बद्धशिखेन तु ।
विशिखो व्युपवीतश्च यत् करोति न तत्
कृतम् ॥"

**बद्धशिखा**, स्त्री, (बद्धा शिखा यस्याः ।) उच्चटा ।

इति मेदिनी । खे, १५ ॥ (बद्धा शिखा
केश-
कलापो यस्याः ।) सम्बद्धकेशा च ॥

**बध**, क बन्धे । इति कविकल्पद्रुमः ॥ (चुरा०-

पर०-सक०-सेट् ।) क, बाधयति । इति
दुर्गा-
दासः ॥

**बध**, ङ निन्दे । बन्धे । इति कविकल्पद्रुमः ॥

(भ्वा०-आत्म०-सक०-सेट् ।) ङ,
बीभत्सते खलं
लोकः । बधते तत्र त्यादयो न प्रयुज्यन्ते ।
इति
रमानाथः ।
'माबधिष्ठा जटायुं मां सीतां रामाहमैक्षिषि
।'
इति भट्टिः । ६ । ४१ ॥ इति दुर्गादासः ॥

क्षीरमत्राजं ग्राह्यम् । बिल्वतैलम् ॥ ४ ॥" इति
भावप्रकाशः ॥ यथा च ।
"शुष्कमूलकशुण्ठीनां क्षारो हिङ्गुलनागरम् ।
शुष्कं चतुर्गुणं दद्यात्तैलमेतैर्व्विपाचयेत् ॥
बाधिर्य्यं कर्णशूलञ्च पूयस्रावश्च कर्णयोः ।
क्रिमयश्च विनश्यन्ति तैलस्यास्य प्रपूरणात् ॥"
५
इति गारुडे १९७ अध्यायः ॥

**ब(व)धूः**, स्त्री, (बध्नाति प्रेम्णा या । बन्ध + ऊः

नलोपश्च । अन्तःस्थवादौ तु वहति संसारभारं
उह्यते भर्त्रादिभिरिति वा । वह + "वहेर्धश्च ।"
उणा० १ । ८५ । इति ऊः धश्चान्तादेशः ।)
नारी । स्नुषा । पृक्का । इत्यमरः । ३ । ३ ।
१०१,
२ । ४ । १३३ ॥ (अस्याः पर्य्यायो यथा, --
"पृक्का स्याद्ब्राह्मणी देवी मरुन्माला लता
लघुः ।
समुद्रान्ता बधूः कोटिवर्षालङ्कापिकेत्यपि ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे १ भागे ॥)
शारिवौषधिः । शटी । (अस्याः पर्य्यायो यथा,
"शटी पलाशी षड्ग्रन्था सुव्रता गन्धमूलिका ।
गन्धारिका गन्धबधूर्बधूः पृथुपलाशिका ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
नवोढा । (यथा, रघुः । ७ । ४ ।
"वरः स बध्वा सह राजमार्गं
प्राप ध्वजच्छायनिवारितोष्णम् ॥")
भार्य्या । इति मेदिनी । धे, १४ ॥ भरतेन
अमरकोषटीकायां पवर्गीयबकारादिबन्धधातुना
निष्पादितोऽयम् । मेदिनीकारेण तु अन्तःस्थ-
वकारादिशब्दमध्ये संगृहीतः ॥ अथ नवबध्वा
द्विरागमनयात्रा । तत्राष्टमदशमद्वादशषष्ठचतुर्थ-
वर्षाणि निषिद्धानि । मासाः मार्गशीर्षफाल्गुन-
वैशाखा विहिताः । पक्षः शुक्लः । पुष्यस्वाती
हस्ताधनिष्ठोत्तराषाढोत्तरफल्गुन्युत्तरभाद्रपद्-
रेवतीमृगशिरोरोहिणीपुनर्व्वसुपूर्ब्बाषाढा ए-
तानि नक्षत्राणि विहितानि । सोमबुधबृह-
स्पतिशुक्राणां वाराः विहिताः । तिथयो यात्रा-
प्रकरणोक्ताः । चन्द्रताराशुद्धौ कालशुद्धौ त्र्यह-
स्पर्शवारवेलादिक्शूलादीन् परित्यज्य कर्त्तव्या ।

"वातायनं गृहाक्षः
स्याद्वधूटशयनन्तथा ॥"
इति त्रिकाण्डशेषः ॥

**बधूटिः** स्त्री, (अल्पवयस्का बधूः । अल्पार्थे

टीः । पक्षे ङीष् । यद्वा, बधू +
"वयस्य-
चरम इति वाच्यम् ।" ४ । १ ।
२० । इत्यस्य
वार्त्ति० इति ङीप् ।) पुत्त्रभार्य्या ।
इति भरत
धृतरत्नकोषः । सुवासिनी । इति
हेमचन्द्रः ॥
अल्पा बधूः । यथा, --
"नूतनजलधररुचये
गोपबधूटीदुकूलचौराय ।
तस्मै नमः कृष्णाय
संसारमहीरुहस्य बीजाय ॥"
इति भाषापरिच्छेदः । १ ॥

**बधूटी**, स्त्री, (अल्पवयस्का बधूः । अल्पार्थे

टीः । पक्षे ङीष् । यद्वा, बधू +
"वयस्य-
चरम इति वाच्यम् ।" ४ । १ ।
२० । इत्यस्य
वार्त्ति० इति ङीप् ।) पुत्त्रभार्य्या ।
इति भरत
धृतरत्नकोषः । सुवासिनी । इति
हेमचन्द्रः ॥
अल्पा बधूः । यथा, --
"नूतनजलधररुचये
गोपबधूटीदुकूलचौराय ।
तस्मै नमः कृष्णाय
संसारमहीरुहस्य बीजाय ॥"
इति भाषापरिच्छेदः । १ ॥

**बधूत्सवप्रसवः**, पुं, (बध्वा उत्सव आर्त्तवः स इव

प्रसवः पुष्पादिर्यस्य ।)
रक्ताम्लानः । इति
राजनिर्घण्टः ॥

**बधिरः**, त्रि, (बध्नाति कर्णमिति । बन्ध + "इषिमदि-

मुदीति ।" उणा० १ । ५२ । इति किरच् ।)

श्रवणेन्द्रियरहितः । श्रुतिशक्तिहीनः । काला

इति भाषा । तत्पर्य्यायः । एडः २ । इत्य-

मरः । २ । ६ । ४८ ॥ कल्लः ३ श्रवणापटुः ४ ।

इति शब्दरत्नावली ॥ उच्चैःश्रवाः ५ । इति

संक्षिप्तसारोणादिवृत्तिः ॥ (यथा, मनुः । ११ । ५२ ।

"एवं कर्म्मविशेषेण जायन्ते सद्भिर्गर्हिताः ।

जडमूकान्धबधिराविकृताकृतयस्तथा ॥"

बाधिर्य्यनिदानं यथा, --

"यदा शब्दवहं वायुः श्रोत आवृत्य तिष्ठति ।

शुद्धः श्लेष्मान्वितो वापि बाधिर्य्यं तेन जायते ॥"

इति माधवकरः ॥

असाध्यबाधिर्य्यमाह ।

"बाधिर्य्यं बालवृद्धोत्थं चिरोत्थञ्च विवर्ज्जयेत् ।"

इति भावप्रकाशः ॥ * ॥

अस्यौषधम् ।

"कर्णशूले कर्णनादे बाधिर्य्ये क्ष्वेड एव च ।

चतुर्ष्वपि च रोगेषु सामान्यं भेषजं स्मृतम् ॥

शृङ्गवेरञ्च मधु च सैन्धवं तैलमेव च ।

कटूष्णं कर्णयोर्धार्य्यमेतत् स्याद्वेदनापहम् ॥ १ ॥

कर्णशूले कर्णनादे बाधिर्य्ये क्ष्वेड एव च ।

पूरणं कटुतैलेन हितं वातघ्नमौषधम् ॥ २ ॥

शिखरिक्षारजवारितत्कृतकल्केन साधितं तैलम् ।

अपहरति कर्णनादं वाधिर्य्यञ्चापि पूरणतः ॥

शिखरी अपामार्गः ॥ ३ ॥

गवां मूत्रेण विल्वानि पिष्ट्वा तैलं विपाचयेत् ।

सजलञ्च सदुग्धञ्च तद्बाधिर्य्यहरं परम् ॥

इति ज्योतिषम् ॥

"वृत्ते पाणिग्रहे गेहात् पितुः पतिगृहं प्रति ।

पुनरागमनं बध्वास्तद्द्विरागमनं विदुः ॥

विवाहमासि प्रथमं बध्वा नागमनं यदि ।

तदा सर्व्वमिदं चिन्त्यं युग्माद्यब्दं विचक्षणैः ॥

भुक्त्वा पितृगृहे नारी भुङ्क्ते स्वामिगृहे यदि ।

दौर्भाग्यं जायते तस्याः शपन्ति कुलनायिकाः ॥"

इति ज्योतिस्तत्त्वम् ॥

**बधूजनः**, पुं, (बधूरेव जनः ।) योषित् । इति

त्रिकाण्डशेषः ॥ (यथा, माघे । ३ । ५२ ।

"क्षितिप्रतिष्ठोऽपि मुखारविन्दै-

र्बधूजनश्चन्द्रमधश्चकार ॥")

**बधूटशयनं**, क्ली, (बधूटीनां शयनमिव । पृषो-

दरादिकारस्याकारः ।) गवाक्षः । यथा, --

**बध्रं**, क्ली, (बध्यतेऽनेनेति । बन्ध + "सर्व्वधातुभ्य-

ष्ट्रन् ।" उणा० ४ । १५८ । इति ष्ट्रन् ।) सीस-

कम् । इत्यमरः ॥ वप्रमिति पठति स्वामी ॥

(अस्य पर्य्यायो यथा, --

"सीसं बध्रञ्च वप्रञ्च योगेष्टं नागनामकम् ॥"

इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**बध्री**, स्त्री, (बध्यतेऽनया । बन्ध + "सर्व्वधातुभ्य-

ष्ट्रन् ।" उणा० ४ । १५८ । इति ष्ट्रन् षित्वात्

ङीष् ।) चर्म्मरज्जुः । इत्यमरः । २ । १० । १३ ॥

बध्री द्विरेफेति केचित् । बद्ध्र्यां चर्म्मबन्धे भवा

बाद्ध्री दीर्घादिरिति हड्डः ॥

**बन**, द ङ उ याचने । इति कविकल्पद्रुमः ॥

(तना०-आत्म०-द्विक०-सेट् । क्त्वावेट् ।) द ङ,

बनुते । उ, बनित्वा बत्वा । इति दुर्गादासः ॥

**बन्ध**, औ ग बन्धे । इति कविकल्पद्रुमः ॥ (क्र्या०-

पर०-सक०-अनिट् ।) औ, अबान्त्सीत् । ग,

बध्नाति । वस्त्रान्तं शठ मुञ्च मुञ्च शपथैः किं

धूर्त्त निर्ब्बन्धसे । इत्यपपाठः । निर्व्वध्यते इति

पाठ्यमिति रमानाथः । वस्तुतस्तु अस्य गण-

कृतानित्यतया ञेरभावे आत्मनेपदे च सिद्धम् ।

इति दुर्गादासः ॥

**बन्ध**, क बन्धे । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-

सक०-सेट् ।) क, बन्धयति । इति दुर्गादासः ॥

(यथा, रामायणे । २ । ८४ । ४ ।

"बन्धयिष्यति वा पाशैरथवास्मान् वधिष्यति ॥"

**बन्धः**, पुं, (बन्ध + हलश्चेति घञ् ।) आधिः ।

बन्धनम् । इति मेदिनी । धे, ९ ॥

शरीरम् ।

इति हेमचन्द्रः ॥

(कर्म्मजनितादृष्टवशात् देहा द्देहान्तरोत्पत्तेः शरीरस्य तथात्वम् ।) गृहादि

वेष्टनम् । इति शब्दरत्नावली ॥

तद्विवरणं यथा

"रूपाष्टकैर्विनिहतो भवनस्य बन्धः

कर्त्तुः स्वमृक्षमिह युग्मशरैकनिघ्नम् ।

एकीकृतं रसनिशाकरयुग्मभुक्त-

शेषं ततो भवति पिण्डपदं गृहस्य ॥

गृहभूमिसमाहृतपिण्डपदं

वसुलोचनरन्ध्रगजैर्गुणितम् ।

रविभूधरत्रिंशद्योगहृत-

मायव्ययस्थितिऋक्षपदम् ॥"

रूपाष्टकैरेकाशीत्या विनिहतः
पूरितो भव-

नस्य बन्धः दीर्घप्रस्तारमिलितहस्ताः
स्वमृक्षं
तत्संख्यानं युग्मशरैकनिघ्नं
द्विपञ्चाशदुत्तर-
शतपूरितम् एकीकृतं पूर्ब्बाङ्केन मिलितं
रस-
निशाकरयुग्मभुक्तशेषं
षोडशाधिकद्विशतहृता-
षशिष्टं तत्संख्यानं पिण्डपदसंज्ञं गृहस्य
भवति
तद्गृहभूमिसमाहृतपिण्डपदं
वसुलोचनरन्ध्र-
गजैः । अष्टद्विनवाष्टभिर्य्यथाक्रमं गुणितं
पूरितं
यथाक्रमं रविभूधरत्रिंशद्योगहृतं
द्वादशसप्त-
त्रिंशत्सप्तविंशतिभिर्हृतं गृहस्य
यथाक्रममाय-
व्ययस्थितिऋक्षपदं भवतीत्यर्थः ।
"रुद्रहस्तमिते बन्धे भरण्या योगतो यथा
।
आयादयो भवन्त्यत्र
वसुषट्तिथियुङ्किताः ॥
अत्र नक्षत्रं दीयते पश्चात्तदेवायाति ।
प्रत्यक्दक्षिणयोर्भं द्रविणाद्यं विदिक्षु
दहनादि ।
पूर्ब्बोत्तरयोर्गृहयोरश्विन्यादिभानि स्युः ।
यत्र तु शेषो नास्ति तत्र हारकाङ्कः शेषः
॥
शेषाङ्केन फले बोध्ये शेषाभावे तु
हारकात् ।
अङ्कादेव फलं बोध्यमिति
तन्त्रविदाम्मतम् ॥
इत्युक्तत्वात् ॥
व्ययाधिकं न कर्त्तव्यं गृहमायाधिकं
शुभम् ॥"
इति ज्योतिस्तत्त्वम् ॥ * ॥

बाहुभ्यां ताडयेद्गाढं क्षुब्धको बन्ध एव
सः ॥
सुप्तां स्त्रियं समालिङ्ग्य स्वयं सुप्तो रमेत्
पुनः ।
यल्लिङ्गं चालयेत् योनौ बन्धोऽयं धेनुकः
स्मृतः ॥
नारीपादौ च हस्तेन धारयेत् गलके पुनः ।
स्तनार्पितकरो कामी
बन्धश्चोत्कण्ठसंज्ञकः ॥
स्वयं जङ्घाद्वयं बाहौ कृत्वा योषित्पदद्वयम्
॥
स्तनौ धृत्वा रमेत् कामी बन्धः सिंहासनो
मतः ॥
पीडयेदुरुयुग्मेन कामुकः कामिनीं यदि ।
रतिर्नागः समाख्यातः कामिनीनां मनोहरः
॥
नार्य्याश्चोरुयुग्मं धृत्वा कराभ्यां ताडयेत्
पुनः ।
रमयेन्निर्भरं कामी बन्धो विद्याधरो मतः
॥"
इति ॥)
संज्ञाप्रभेदेन अन्योऽपि बन्धोऽस्ति ।
यथा, --
"कामप्रदी विपरीतो नागरो रतिपाशकः ।
केयूरः प्रियतोषश्च ततः समपदस्तथा ॥
ततश्चैकपदो ज्ञेयः
सम्पुटश्चोद्र्ध्वसम्पुटः ।
ततः स्तनभवश्चैव ततो नु रतिसुन्दरः ॥
ऊरुपीडस्मरचक्रौ ततश्चोरुक्रमः स्मृतः
।
वेष्टको हंसकीलस्तु ततो लीलासनस्तथा
॥
अष्टादशक्रमाद्बन्धाः स्त्रीणां बहुसुखप्रदाः
।
पुंसां सुखकराश्चैव कथितास्तु क्रमात्ततः
॥"
इति स्मरदीपिका ॥ * ॥
अनभिसन्धितकर्म्मकर्त्तुर्बन्धाभावो यथा,
--
"पञ्चार्णदानैरशुभं नुद्यतेऽनभिसन्धितैः ।

र्निरूप्यते । आधिर्नाम गृहीतस्य
द्रव्यस्योपरि
विश्वासार्थमधमर्णेनोत्तमर्णेऽधिक्रियते
आधी-
यत इत्याधिः । स च द्विधैव । कृतकालो-
ऽकृतकालश्च । पुनश्चैकैकशो द्विविधः
गोप्यो
भोग्यश्च । यथाह नारदः ।
"अधिक्रियत इत्याधिः स विज्ञेयो द्विलक्षणः
।
कृतकालापनेयश्च यावद्देयोद्यतस्तथा ॥
स पुनर्द्विविधः प्रोक्तो गोप्यो भोग्यस्तथैव
चेति ॥"
कृते काले आधानकाल एवामुस्मिन् काले
दीपोत्सवादौ मयायमाधिर्मोक्तव्योऽन्यथा
तवै-
वाधिर्भविष्यतीत्येवं निरूपिते कालेऽपनेयः
आत्मसमीपे नेतव्यो मोचनीय इत्यर्थः देयं
दानं
देयमनतिक्रम्य यावद्देयम् उद्यतो नियतः
स्थापित इत्यर्थः । यावद्देयम् उद्यतो
यावद्देयो-
द्यतः गृहीतधनप्रत्यर्पणावधिरनिरूपितकाल
इत्यर्थः । गोप्यो रक्षणीयः । एवञ्चतुर्विधस्या-
धेर्विशेषमाह ।
"आधिः प्रणश्येत् द्विगुणे धने यदि न मोच्यते
।
काले कालकृतो नश्येत् फलभोग्यो न
नश्यति ॥"
प्रयुक्ते धने स्वकृतया वृद्ध्या कालक्रमेण
द्विगुणी-
भूते यद्याधिरधमर्णेन द्रव्यदानेन मोच्यते
तदा
नश्यत्यधमर्णस्य धनं प्रयोक्तुः स्वम्भवति ।
काल-
कृतः कृतकालः आहिताग्न्यादिषु पाठात्
काल-
शब्दस्य पूर्ब्बनिपातः स तु काले निरूपिते
प्राप्ते

षोडशप्रकारा रतिबन्धा यथा,
रतिमञ्जर्य्याम् ।
४० -- ४१ ।
“पद्मासनो नागपदो लतावेष्टोऽर्द्धसम्पुटः
।
कुलिशं सुन्दरश्चैव तथा केशर एव च ॥
हिल्लोलो नरसिंहोऽपि विपरीतस्तथापरः
।
क्षुब्धो वै धेनुकश्चैव समुत्कण्ठस्ततः
परः ।
सिंहासनो रतिनागो विद्याधरस्तु षोडश
॥”
(एतेषां लक्षणानि तत्रैव । ४२-५७ ।
उक्तानि ।
यथा, --
“हस्ताभ्याञ्च समालिङ्ग्य नारीं
पद्मासनोपरि ।
रमेद्गाढं समाकृष्य बन्धोऽयं पद्मसंज्ञकः
॥
पादौ स्कन्धयुगे हस्तौ क्षिपेल्लिङ्गं भगे
लघु ।
प्ररमेत् कामुको नारीं बन्धो नागपदो
मतः ॥
बाहुभ्यां पादयुग्माभ्यां वेष्टयित्वा रमेत्
स्त्रियम् ।
लघु लिङ्गं ताडयेद् योनौ
लतावेष्टोऽयमुच्यते ॥
स्त्रीपादावन्तरीक्षे तु किञ्चिद्भूमौ च
जानुनि ।
स्तनयोर्म्मर्द्दनं पीडा बन्धोऽयं मर्द्दसंपुटः
॥
स्त्रीपादद्वयमास्फाल्य हठाल्लिङ्गस्य
ताडनम् ।
योनिमापीडयेत् कामी बन्धः
कुलिशसंज्ञकः ॥
नारीपादद्वयं कामी धारयेदूद्र्ध्वदेशतः ।
कुचौ धृत्वा पीबेद्वक्त्रं बन्धोऽयं
रतिसुन्दरः ॥
स्त्रियो जङ्घे समापीड्य दोर्भ्यां गात्रस्य
मर्द्दनम् ।
फलैस्तथोपभोगैश्च पूर्ब्बकर्म्मशुभाशुभैः ॥
एवं न बन्धो भवति कुर्व्वतः कारणं विना ।
न च बन्धाय तत् कर्म्म
भवत्यनभिसन्धितम् ॥”
इति मार्कण्डेयपुराणम् ॥
(हठयोगप्रदीपोक्ता योगसाधकबन्धा यथा,
तत्रैव । ३ । ५५ -- ५७ ।
अथोड्डीयानबन्धः ।
“बद्धो येन सुषुम्नायां प्राणस्तूड्डीयते यतः
।
तस्मादुड्डीयनाख्योऽपं योगिभिः
समुदाहृतः ॥
उड्डीनं कुरुते यस्मादविश्रान्तं महाखगः ।
उड्डीयानं तदेव स्यात् तत्र बन्धोऽभिधीयते
॥
उदरे पश्चिमं तानं नाभेरूद्र्ध्वञ्च कारयेत्
।
उड्डीयानो ह्यसौ बन्धो मृत्युमातङ्गकेशरी
॥”
अथ मूलबन्धः । तल्लक्षणादिकमुक्तं तत्रैव
३ । ६१ -- ६२ ।
“पार्ष्णिभागेन सम्पीड्य
योनिमाकुञ्चयेद्गुदम् ।
अपानमूद्र्ध्वमाकृष्य मूलबन्धोऽभिधीयते
॥
अधोगतिमपानं वा ऊद्र्ध्वगं कुरुते बलात्
।
आकुञ्चनेन तं प्राहुर्मूलबन्धं हि योगिनः
॥”
अथ जालन्धरबन्धः । अस्य
लक्षणादिकमुक्तं
तत्रैव । ३ । ७० -- ७१ ।
“कण्ठमाकुञ्च्य हृदये स्थापयेच्चियुकं
दृढम् ।
बन्धो जालन्धराख्योऽयं
जरामृत्युविनाशकः ॥
बध्नाति हि शिराजालमधोगामि
नभोजलम् ।
ततो जालन्धरो बन्धः
कण्ठदुःखौघनाशनः ॥”)

**बन्धकं**, क्ली, (बध्नातीति । बन्ध + ण्वुल् ।)
ऋणाय
नश्येत् द्वैगुण्यात् प्रागूद्र्ध्वं वा । फलभोग्यः
फलं
भोग्यं यस्यासौ फलभोग्यः क्षेत्रारामादिः स
न
कदाचिदपि नश्यति । कृतकालस्य गोप्यस्य
भोग्यस्य च तत्कालातिक्रमे नाश उक्तः ।
काले
कालकृतो नश्येदिति । अकृतकालस्य
भोग्यस्य
नाशाभाव उक्तः फलभोग्यो न नश्यतीति
पारिशेष्यादाधिः
प्रणश्येदित्येतदकृतकालगोप्या-
धिविषयमवतिष्ठते द्वैगुण्यातिक्रमेण
निरूपित-
कालातिक्रमेण च विनाशे चतुर्द्दशदिवसप्रती-
क्षणं कर्त्तव्यं बृहस्पतिवचनात् ।
“हिरण्ये द्विगुणीभूते पूर्णे काले कृतावधौ ।
बन्धकस्य धनी स्वामी द्विसप्ताहं प्रतीक्ष्य च
।
तदन्तराधनं दत्त्वा ऋणी बन्धमवाप्नुयादिति
॥”
किञ्च ।
“गोप्याधिभोगे नो वृद्धिः सोपकारेऽथ हापिते
।
नष्टो देयो विनष्टश्च दैवराजकृतादृते ॥”
गोप्याधेस्ताम्रकटाहादेरुपभोगेन वृद्धिर्भवति
।
अल्पेऽप्युपभोगे महत्यपि वृद्धिर्हातव्या सम-
यातिक्रमात् तथा सोपकारे उपकारकारिणि
बलीवर्द्दताम्रकटाहादौ भोग्याधौ सवृद्धिके
हापिते हानिं व्यवहाराक्षमत्वं गमिते नो
वृद्धिरिति सम्बन्धः । नष्टो विकृतिं
गतस्ताम्र-
कटाहादिश्छिद्रभेदादिना पूर्ब्बवत्कृत्वा देयः
तत्र
गोप्याधिर्नष्टश्चेत् पूर्ब्बवत् कृत्वा देयः ।
उपभुक्तो-
ऽपि चेत् वृद्धिरपि हातव्या भोग्याधिर्यदि नष्ट-
स्तदा पूर्ब्बवत् कृत्वा देयः । वृद्धिसद्भावे
वृद्धिर्वा

| | | |
|---|---|---|
| पुनः प्रपीडयेद् योनिं बन्धः केशरसंज्ञकः ॥<br>हृदि कृत्वा स्त्रियः पादौ कराभ्यां धारयेत् करौ ।<br>यथेष्टं ताडयेत् योनिं बन्धो हिल्लोलसंज्ञकः ॥<br>पादौ संपीड्य योनौ च हठाल्लिङ्गप्रवेशनम् ।<br>हस्तयोर्वेष्टनं गाढं बन्धो नृसिंहसंज्ञकः ॥<br>पादमेकमुरौ कृत्वा द्वितीयं कटिसंस्थितम् ।<br>नारीञ्च सुरमेत् कामी विपरीतस्तु बन्धकः ॥<br>पार्श्वोपरि पदौ कृत्वा योनौ लिङ्गेन ताडयेत् । | स्थापितं वस्तु । बाँधा इति भाषा । इति आधिशब्दनानार्थे अमरः ॥ इदानीमाधि- | हातव्या । विनष्ट आत्यन्तिकं नाशं प्राप्तः सोऽपि<br>देयो मूल्यादिद्वारेण तद्दाने सवृद्धिकं मूल्यं लभते |

यदि न ददाति तदा मूलनाशः ।
‘विनष्टे मूल-
नाशः स्याद्दैवराजकृतादृते ।’ इति
नारदवच-
नात् । दैवराजकृतादृते ।
दैवमग्न्युदकदेशो-
पप्लवादि । दैवकृताद्विनाशाद्विना ।
तथा स्वाप-
राधरहिताद्राजकृतात् । दैवराजकृते तु
विनाशे
सवृद्धिकं मूल्यं
दातव्यमधमर्णेनाध्यन्तरं वा
यथाह ।
“स्रोतसापहृते क्षेत्रे राज्ञा चैवापहारिते
।
आधिरन्योऽथ कर्त्तव्यो देयं वा धनिने
धनमिति ॥”
तत्र स्रोतसापहृत इति
दैवकृतोपलक्षणम् ।
अपि च ।
“आधेः स्वीकरणात् सिद्धी
रक्ष्यमाणोऽप्यसार-
ताम् ।
यातश्चेदन्य आधेयो धनभाग्वा धनी
भवेत् ॥
आधेर्गोप्यस्य भोग्यस्य च
स्वीकरणादुपभोगा-
दाधिग्रहणसिद्धिर्न साक्षिलिखनमात्रेण
नाप्यु-
द्देशमात्रेण यथाह नारदः ।
“आधिस्तु द्विविधः प्रोक्तो जङ्गमः
स्थावरस्तथा ।
सिद्धिरस्योभयस्यापि भोगो यद्यस्ति
नान्यथा ॥”
अस्य च फलम् ।
“आधौ प्रतिग्रहे क्रीते पूर्ब्बा तु
बलवत्तरेति ।”
या स्वीकारान्ता क्रिया सा पूर्ब्बा
बलवती

विक्रयादिव्यवस्थानिर्व्वाहणाययद्यङ्गुलीयकादि-
परहस्ते कृतं तद्व्यवस्थातिक्रमे द्विगुणं दातव्यं
तत्रापि येनाङ्गुलीयकाद्यर्पितं स एव चेद्व्यव-
स्थातिवर्त्ती तेन तदेव हातव्यम् । इतरश्चेद्व्यव-
स्थातिवर्त्ती तदा तदेवाङ्गुलीयकादिद्विगुणं प्रति-
दापयेदिति । किञ्च ।
“उपस्थितस्य मोक्तव्य आधिः स्तेनोऽन्यथा
भवेत् ।
प्रयोजकेऽसति धनं कुलेऽन्यस्याधिमाप्नुयात् ॥”
धनदानेनाधिमोक्षणायोपस्थितस्याधिर्मोक्तव्यो
धनिना वृद्धिलोभेन न स्थापयितव्यः । अन्यथा
अमोक्षणे स्तेनश्चौरवद्दण्ड्यो भवेत् असन्निहिते
पुनःप्रयोक्तरि कुले तदाप्तहस्ते सवृद्धिकं धनं
निधायाधमर्णः स्वीयं बन्धकं गृह्णीयात् । अथ
प्रयोक्ताप्यसन्निहितस्तदाप्ताश्चधनस्य ग्रहीतारो
न सन्ति यदि वा असन्निहिते प्रयोक्तरि आधि-
विक्रयेण धनदित्साधमर्णस्य तत्र किं कर्त्तव्य-
मित्यपेक्षित आह ।
“तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः ।”
तस्मिन् काले यत्तस्याधेर्मूल्यं तत् परिकल्प्य
तत्रैव धनिनि तमाधिं वृद्धिरहितं स्थापयेन्न तत
ऊर्द्ध्वं धनं वर्द्धते यावद्धनी धनं गृहीत्वा तमाधिं
मुञ्चति यावद्वा तन्मूल्यद्रव्यमृणिने प्रवेशयति ।
यदा तु द्विगुणीभूतेऽपि धने द्विगुणं घनमेव
ग्रहीतव्यं न त्वाधिनाश इति विचारितमृण-
ग्रहणकाल एव तदा द्विगुणीभूते द्रव्ये असन्नि-
हिते वाधमर्णे धनिना किं कर्त्तव्यमित्यत आह ।
“विनाधारणकाद्वापि विक्रीणीत ससाक्षिकम् ।”
धारणकादधमर्णाद्विना अधमर्णे असन्निहिते
साक्षिभिस्तदाप्तैश्च सह तमाधिं विक्रीय तद्धनं
गृह्णीयाद्धनी वाशब्दो व्यवस्थितविकल्पार्थः ।
यदर्णग्रहणकाले द्विगुणीभूतेऽपि धने धनमेव
ग्रहीतव्यं न त्वाधिनाश इति न विचारितम् ।
तदा आधिः प्रणश्येद्द्विगुण इत्यस्याधिनाशः ।
विचारिते त्वयं पक्ष इति ॥ * ॥ भोग्याधौ
विशेषमाह ।
“यदा तु द्विगुणीभूतमृणमाधौ तदा खलु ।
मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने ॥”
यदा प्रयुक्तं धनं स्वकृतया वृद्ध्या द्विगुणीभूतं

फलभोग्यं पूर्णकालं दत्त्वा द्रव्यञ्च
सामकम् ॥
यदि प्रकर्षितं तत् स्यात्तदा न
धनभाग्धनी ।
ऋणी च न लभेद् बन्धं परस्परमतं
विना ॥”
अस्यार्थः । फलं भोग्यं यस्यासौ
फलभोग्यो बन्ध
आधिः स च द्विविधः
सवृद्धिकमूल्यापाकरणार्थो
वृद्धिमात्रापाकरणार्थश्च तत्र च
वृद्धिमूल्यापा-
करणार्थं बन्धं पूर्णकालं पूर्णः कालो
यस्यासौ
पूर्णकालस्तमाप्नु यादृणी । यदा
सवृद्धिकं मूल्यं
फलद्वारेण धनिनः प्रविष्टन्तदा
बन्धमवाप्नुयादि-
त्यर्थः वृद्धिमात्रापाकरणार्थन्तु बन्धं
सामकं
दत्त्वाप्नुयादृणी । समं मूल्यं सममेव
सामकम् ।
अस्यापवादमाह । यदि प्रकर्षितं तत्
स्यात्त-
द्बन्धकं प्रकर्षितमतिशयितं
वृद्धेरभ्यधिकफलं
यदि स्यात्तदा न धनभाग्धनी । सामकं
न
लभेद्बन्धं मूल्यमदत्त्वैवर्णी
बन्धमवाप्नुयादिति
यावत् । अथाप्रकर्षितं तद्बन्धकं
वृद्ध्येऽप्य-
पर्य्याप्तन्तदा सामकं दत्त्वापि बन्धं
लभेताधमर्णः
वृद्धिशेषमदत्त्वैव लभेतेत्यर्थः ।
पुनरुभयत्राप-
वादमाह । परस्परमतं विना
उत्तमर्णाध-

स्वीकाररहिता तु पूर्ब्बापि न बलवतीति स
चाधिः प्रयत्नेन रक्ष्यमाणोऽपि कालवशेन यद्य-
सारतामविकृत्त एव सवृद्धिकमूल्यद्रव्यापर्य्याप्ततां
गतस्तदाधिरन्यः कर्त्तव्यः । धनिने वा धनं देयं
रक्ष्यमाणोऽप्यसारतामितिवदता आधिः प्रय-
त्नेन रक्षणीयो धनिनेति ज्ञापितम् । आधिः
प्रणश्येद्द्विगुण इत्यस्यापवादमाह ।
“चरित्रबन्धककृतं सवृद्ध्या दापयेद्धनम् ।
सत्यङ्कारकृतं द्रव्यं द्बिगुणं प्रतिदापयेत् ॥”
चरित्रं शोभनाचरितम् । चरित्रेण बन्धकं
चरित्रबन्धकम् । तेन यत् द्रव्यमात्मसात् कृतं
पराधीनं वा कृतम् । एतदुक्तं भवति धनिनः
स्वच्छाशयत्वेन बहुमूल्यमपि द्रव्यमाधीकृत्या-
धमर्णेनाल्पमेव द्रव्यमात्मसात् कृतम् । यदि वाध-
मर्णस्य स्वच्छाशयत्वेनाल्पमूल्यमाधिं गृहीत्वा
बहुद्रव्यमेव धनिनाधमर्णाधीनं कृतमिति तद्धनं
नृपो वृद्ध्या सह दापयेत् अयमाशयः एवंरूपं
बन्धकं द्बिगुणीभूतेऽपि द्रव्ये न नश्यति किन्तु
द्रव्यमेव द्बिगुणं दातत्वमिति । तथा सत्यङ्कार-
कृतं करणं कारः भावे घञ् सत्यस्य कारः
सत्यङ्कारः कारे सत्यागदस्येति मुम् सत्यङ्कारेण
तदाधौ कृते तदुत्पन्ने आध्युत्पन्ने द्बिगुणे धनिनः
प्रविष्टे धनिनाधिर्मोक्तव्यः । यदि वादावेवाधा
दत्ते द्बिगुणीभूते द्रव्ये त्वयाधिर्मोक्तव्य इति परि-
भाषया कारणान्तरेण वा भोगाभावेन तदा
द्बिगुणीभूतमृणन्तदाधौ भोगार्थं धनिनि प्रविष्टे
तदुत्पन्ने द्रव्ये द्बिगुणे सत्याधिर्मोक्तव्यः । अधि-
कोपभोगे तदपि देयम् । सर्व्वथा सवृद्धिकमूल्य-
र्णापाकरणार्थाध्युपभोगविषयमिदं वचनम् ।
तमेनं क्षयाधिमाचक्षते लौकिकाः यत्र तु
वृद्ध्यर्थ एवाध्युपभोग इति परिभाषा तत्र
द्वैगुण्यातिक्रमेऽपि यावन्मूल्यदानं तावदुप-
भुङ्क्ते एवाधिम् एतदेव स्पष्टीकृतं बृहस्पतिना
“ -- ऋणी बन्धमवाप्नु यात् ।
मर्णयोः परस्परानुमत्यभावे यदि प्रकर्षितं
इत्याद्युक्तम् । परस्परानुमतौ तूत्कृष्टमपि
बन्धकं यावन्मूल्यदानन्तावदुपभुङ्क्ते धनी निकृ-
ष्टमपि मूलमात्रदाने नैवाधमर्णो लभते । इति-
मिताक्षरा ॥

**बन्धकः**, पुं, (बन्ध + स्वार्थे कन् ।) विनिमयः ।
इति विश्वमेदिन्यौ ॥ आधिः । इति शब्दरत्ना-
वली ॥ रतहिण्डकः । इति नानार्थरत्नमाला ॥
(बध्नातीति । बन्ध + ण्वुल् । बन्धनकर्त्तरि, त्रि ।
यथा, देवीभागवते । ५ । १ । ३९ ।
“न नारी न धनं गेहं न पुत्रा न सहोदराः ।
बन्धनं प्राणिनां राजन्नहङ्कारस्तु बन्धकः ॥”)

**बन्धकी**, स्त्री, (बध्नाति मानसमिति । बन्ध + ण्वुल् ।
गौरादित्वात् ङीष् ।) पुंश्चली । इत्य-
मरः । २ । ६ । १० ॥ (यथा, मार्कण्डेय-
पुराणे । ३४ । ८८ ।
“न बन्धकीभिर्न न्यूनैर्बन्धकीपतिभिस्तथा ॥”)
इभी । इति मेदिनीहेमचन्द्रौ ॥ पञ्चपुरुष-
गामिनी । (यथा, महाभारते । १ । १२३ । ७४ ।
“नातश्चतुर्थं प्रसवमापत्स्वपि वदन्त्युत ।
अतःपरं स्वैरिणी स्याद्बन्धकी पञ्चमे भवेत् ॥”)

**बन्धनं**, क्ली, (बन्ध + भावे ल्युट् ।) बन्धनक्रिया ।

कृतं सत्यङ्कारकृतम् । अयमभिसन्धिः
। यदा
बन्धकार्पणसमय एव इत्थं परिभाषितं
द्विगुणी-
भूतेऽपि द्रव्ये मया द्विगुणं द्रव्यमेव
दातव्यम् ।
नाधिनाश इति तदा तद्द्विगुणं
दापयेदिति ।
अन्योऽर्थः । चरित्रशब्देन
गङ्गास्नानाग्नि-
होत्रादिजनितमपूर्ब्बमुच्यते यत्र
तदेवाधी-
कृत्य यत् द्रव्यमात्मसात् कृतम् । तत्र
तदेव
द्विगुणीभूतं दातव्यं नाधिनाश इति ।
आधि-
प्रसङ्गादन्यदुच्यते ।
सत्यङ्कारकृतमिति क्रय-

बाँधा इति भाषा । तत्पर्य्यायः ।
उद्दानम् २ ।
इत्यमरः । २ । ८ । २६ ॥ कङ्कनम् ३
बन्धः ४
संयमनम् ५ । इति शब्दरत्नावली ॥
(यथा,
हितोपदेशे । १ । ९५ ।
“आपदामापतन्तीनां हितोऽप्यायाति
हेतुताम् ।
मातृजङ्घा हि वत्सस्य स्तम्भीभवति
बन्धने ॥”)
वधः । इति मेदिनी । ने, ९७ ॥ हिंसा
।
इति शब्दरत्नावली ॥ रज्जुः । इति
हेम-
चन्द्रः ॥ बध्यतेऽनेनेति करणव्युत्पत्त्या
त्रि ॥
(बध्यतेऽस्मिन् इति अधिकरणे ल्युट्
। कारा-
गारम् । बन्धनस्थानम् । यथा,
भागवते । ३ । २ । २५ ।

“वसुदेवस्य देवक्यां जातो भोजेन्द्रबन्धने ॥”
बन्ध + कर्त्तरि ल्युः । महादेवस्य नामभेदे, पुं ।
यथा, महाभारते । १३ । १७ । १०० ।
“बन्धनो बन्धकर्त्ता च सुबन्धनविमोचनः ॥”
बन्धनकर्त्तरि, त्रि । यथा, तत्रैव । १३ । १७ । ६१ ।
“बन्धनस्त्वसुरेन्द्राणां युधि शत्रुविनाशनः ॥”)

**बन्धनवेश्म**, क्ली, (बन्धनाय बन्धनस्य वा वेश्म गृहम् ।) कारागारम् । इति हारावली । १९९ ॥

**बन्धनालयः**, पुं, (बन्धनाय बन्धनस्य वा आलयः ।) कारागारम् । इत्यमरः । २ । ८ । ११९ ॥

**बन्धस्तम्भः**, पुं, (बन्धाय स्तम्भः ।) हस्तिबन्धन-स्तम्भः । तत्पर्य्यायः । आलानम् २ । इत्य-मरः । २ । ८ । ४१ ॥ शङ्कुः ३ अक्षोडः ४ । इति शब्दरत्नावली ॥

**बन्धित्रं**, क्ली, (बन्ध + इत्र ।) कामदेवः । इत्यु-णादिकोषः ॥ चर्म्मव्यजनम् । इति संक्षिप्त-सारोणादिवृत्तिः ॥

**बन्धुः**, पुं, (बन्ध बन्धने + “शॄस्वृस्निहित्रपीति ।” उणा० १ । ११ । इति उः ।) स्नेहेन मनो बध्नाति यः । तत्पर्य्यायः । सगोत्रः २ बान्धवः ३ ज्ञातिः ४ स्वः ५ स्वजनः ६ । इत्यमरः । २ । ६ । ३४ ॥
दायादः ७ गोत्रः ८ । इति शब्दरत्नावली ॥

**बन्धुजीवकः**, पुं, (बन्धुवत् जीवयति रसादिना इति । बन्धु + जीव + ण्वुल् । यद्वा, बन्धुजीव एव । स्वार्थे कन् ।) बन्धूकवृक्षः । इत्य-मरः । २ । ४ । ७३ ॥

**बन्धुता**, स्त्री, (बन्धोर्भावः बन्धूनां समूहो वा इति । “ग्रामजनबन्धुभ्यस्तल् ।” ४ । २ । ४३ । इति तल् ।) बन्धूनां समूहः । बन्धोर्भावः । इत्य-मरः । २ । ६ । ३५ ॥ (यथा, ऋग्वेदे । ४ । ४ । ११ ।
“महो रुजामि बन्धुता वचोभिः ॥”)

**बन्धुदत्तम्**, क्ली, (बन्धुना दत्तम् ।) पितृमातृभ्यां दत्तं स्त्रीधनम् । यथा । याज्ञवल्क्यः ।
“बन्धुदत्तं यथा शुक्लमन्वाध्येयकमेव च ।
अप्रजायामतीतायां बान्धवास्तदवाप्नुयुः ॥”
बन्धुदत्तपदेन कन्यादशायां यत् पितृभ्यां दत्तं तदुच्यते । इति दायभागः ॥

**बन्धुरं**, क्ली, (बन्ध बन्धने + “मद्गुरादयश्च ।” उणा० १ । ४२ । इति उरप्रत्ययेन निपातनात् साधुः ।) मुकुटम् । इति शब्दरत्नावली ॥ (रथ-बन्धनम् । यथा, महाभारते । ३ । ३२ । ३१ ।
“अन्ये छत्रं वरूथञ्च बन्धुरञ्च तथापरे ।
गन्धर्व्वा बहुसाहस्रास्तिलशो व्यधमन्नथम् ॥”
तथा च भागवते । ४ । २६ । १ ।

**बन्धूकः**, पुं, (बध्नाति सौदर्य्येण चित्तमिति । बन्ध + “उलूकादयश्च ।” उणा० ४ । ४१ । इति ऊकः ।) पीतशालकः । इति मेदिनी । के, १२८ ॥
पुष्पवृक्षविशेषः । वाँदुली इति वङ्गभाषा । दोपहरिया इति हिन्दी भाषा । तत्पर्य्यायः । रक्तकः २ बन्धूजीवकः ३ । इत्यमरः । २ । ४ । ७३ ॥
बन्धुकः ४ बन्धुः ५ बन्धुलः ६ बन्धुजीवकः ७ बन्धुजीवः ८ बन्धूलिः ९ बन्धुरः १० । इति शब्दरत्नावली ॥ रक्तः ११ माध्याह्निकः १२ । इति भावप्रकाशः ॥ ओष्ठपुष्पः १३ अर्क-वल्लभः १४ मध्यन्दिनः १५ रक्तपुष्पः १६ राग-पुष्पः १७ हरिप्रियः १८ । अस्य गुणाः ।
“असितसितपीतलोहितपुष्पविशेषात् चतुर्व्विधो बन्धूकः ।
ज्वरहरो विविधारिग्रहपिशाचशमनःप्रसादनः सवितुः स्यात् ॥”
इति राजनिर्घण्टः ॥
“बन्धूकः कफकृद्ग्राही रक्तपित्तहरो लघुः ॥”
इति भावप्रकाशः ॥
खधूपे, क्ली । वन्दूक इति ख्यातम् । यथा, --
“बन्धूको बन्धुजीवे स्यात् खधूपे स्यान्नपुंसकम् ॥”
इति हड्डचन्द्रः ॥

**बन्धूकपुष्पः**, पुं, (बन्धूकस्य बन्धूजीवस्य पुष्पमिव पुष्पं यस्य ।) पीतशालः । इत्यमरः । २ । ४ । ४४ ॥
वीजकः । इति राजनिर्घण्टः ॥ (अस्य पर्य्यायो यथा, भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ।
“वीजकः पीतसारश्च पीतशालक इत्यपि ।
बन्धूकपुष्पः प्रियकः सर्ज्जकश्चासनः स्मृतः ॥”)

**बन्धूरः**, पुं, (बन्ध बन्धने । बन्ध + “मद्गुरादयश्च ।”

बन्धवश्च त्रिविधा । आत्मबन्धवः
पितृबन्धवो
मातृबन्धवश्चति । यथोक्तम् ।
"आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः
सुताः ।
आत्ममातुलपुत्राश्च विज्ञेया
ह्यात्मबान्धवाः ॥
पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः
सुताः ।
पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः
॥
मातुःपितृष्वसुः पुत्रा मातुर्मातृष्वसुः
सुताः ।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः
॥"
तत्रचान्तरङ्गत्वात् प्रथममात्मबन्धवो
धनभाज-
स्तदभावे पितृबन्धवस्तदभावे मातृबन्धव
इति
क्रमो वेदितव्यः । बन्धूनामभावे आचार्य्यः
।
इति मिताक्षरा ॥ * ॥ (यथा, मनुः । २ ।
१३६ ।
"वित्तं बन्धुर्वयः कर्म्म विद्या भवति पञ्चमी
।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम्
॥"
"बन्धुः पितृव्यादिः ।" इति तट्टीकायां
कुल्लूक-
भट्टः ॥) बन्धूकः । (यथा, अशोकवधे ।
२९ ।
"अभ्यर्च्य बन्धुपुष्पमालयेति ॥")
मित्रम् । (यथा, मेघदूते । ३४ ।
"बन्धुप्रीत्या
भवनशिखिभिर्द्दत्तनृत्योपहारः ॥")
भ्राता । इति मेदिनी ॥ (यथा, रघुः । १२
। १२ ।
"अथानाथाः प्रकृतयो
मातृबन्धुनिवासिनम् ।
मौलैरानाययामासुर्भरतं स्तम्भिताश्रुभिः
॥")

"द्वीषं द्विचक्रमेकाक्षं त्रिवेणुं
पञ्चबन्धुरम् ॥")

**बन्धुरः**, पुं, (बन्ध + "मद्गुरादयश्च ।" उणा० १ । ४२ ।

इति उरः निपातनात् साधुः ।)
स्त्रीचिह्नम् ।
तिलकल्कम् । बन्धूकः । वधिरः ।
हंसः । इति
मेदिनी । रे, १८९ ॥ विडङ्गः । इति
हेमचन्द्रः ॥
ऋषभौषधम् । इति राजनिर्घण्टः ॥
बकः ।
विहङ्गः । इति शब्दरत्नावली ॥

**बन्धुरः**, त्रि, (बन्ध + उर ।) रम्यम् । (यथा, महा-

गणपतिस्तोत्रे । १५ ।
"श्रेयः स्थेयः स देयान्मम विमलदृशो
बन्धुरं
सिन्धुरास्यः ॥")
नम्रम् । इति मेदिनी । रे, १८९ ॥
उन्नता-
नतम् । इत्यमरः ॥ (यथा, रघुः । १३
। ४७ ।
"बध्नाति मे बन्धुरगात्रि ! चक्षु-
र्दृप्तः ककुद्मानिव चित्रकूटः ॥")

**बन्धुरा**, स्त्री, (बन्धुर + टाप् ।) पण्ययोषा ।

इति मेदिनी । रे, १९० ॥

**बन्धुराः**, पुं, शक्तवः । इति मेदिनी । रे, १९० ॥

बहुवचनान्तोऽयम् ॥

**बन्धुलः**, पुं, (बन्धुं लातीति । बन्धु + ला + क ।)

असतीसुतः । इत्यमरः । २ । ६ ।
२६ ॥ (यथा,
मृच्छकटिकनाटके चतुर्थे अङ्के ।
"परगृहललिताः परान्नपुष्टाः
परपुरुषैर्जनिताः पराङ्गनासु ।
परधननिरता गुणेष्ववाच्या
गजकलभा इव बन्धुला नमामः ॥")
बन्धूकः । इति शब्दरत्नावली ॥

उणा० १ । ४२ । इत्यत्र
खर्ज्जूरादित्वादूरप्रत्य-
येन सिद्धम् इत्युज्ज्वलदत्तः ।) विवरम् । इत्यु-
णादिकोषः ॥

**बन्धूरः**, त्रि, (बन्ध + खर्ज्जूरादित्वादूरप्रत्ययः ।)

रम्यः । नम्रः । यथा, रभसे ।
"बन्धूरबन्धुरौ रम्ये नम्रे हंसे तु बन्धुरः ॥"
उन्नतानतम् । स्वभावात् यदुन्नतं उपाधि-
वशादीषन्नतं तत् । क्वचिदुन्नतं क्वचिदानतं
स्थलादिकम् । इति केचित् । इत्यमरटीकायां
भरतः ॥

**बन्धूलिः**, पुं, (बन्ध बन्धने । बन्ध + ऊलि ।) बन्धूक-

वृक्षः । इति शब्दरत्नावली ॥

**बन्ध्यः**, त्रि, (बन्ध + यक् ।) ऋतुप्राप्तावधिफल-

रहितवृक्षादिः । (यथा, रघुः । १ । ७० ।
"सिक्तं स्वयमिव स्नेहाद्बन्ध्यमाश्रमपादपम् ॥")
तत्पर्य्यायः । अफलः २ अवकेशी ३ ।
इत्यमरः ।
२ । ४ । ७ ॥ विफलः ४ निष्फलः ५ । इति
राजनिर्घण्टः ॥ बन्धनीयः । इति बन्धधातोः
कर्म्मणि यप्रत्ययः ॥ (यथा, याज्ञवल्क्यः । २ ।
२४६ ।
"अबन्ध्यं यश्च बध्नाति बद्धं यश्च प्रमुञ्चति ॥"
पुं, निवर्त्तितवारिः सेतुः । यथा, मिताक्षरायाम् ।
"सेतुश्च द्विविधो ज्ञेयः खेयो बन्ध्यस्तथैव च ।
तोयप्रवर्त्तनात् खेयो बन्ध्यः स्यात्तन्निवर्त्तनात्
॥")

**बन्धुकः**, पुं, (बन्ध + उकः । यद्वा, र्बन्धुर्बन्धूकवृक्ष एव । बन्धु + स्वार्थे कन् ।) बन्धूकवृक्षः । इति शब्दरत्नावली ॥

**बन्धुजीवः** । बन्धुरिव जीवयति रसादिनेति । बन्धु + जीव + अच् ।) बन्धूकवृक्षः । इति शब्दरत्नावली ॥ (यथा, रघुः । ११ । २५ । "वीक्ष्य वेदिमथ रक्तबिन्दुभि-र्बन्धुजीवपृथुभिः प्रदूषिताम् ॥")

**बन्धुलः**, त्रि, (बन्धून् लाति स्नेहेन गृह्लातीति । बन्धु + ला + क ।) सुन्दरः । नम्रः । इत्यजयपालः ॥

**बन्ध्या**, स्त्री, (बन्ध + "अघ्न्यादयश्च ।" उणा० ४ । १११ । इति यक् ।) अप्रजस्त्री । इति मेदिनी ॥
बाँजा इति भाषा ॥ (यथा, भागवते । ६ । १४ । १२ ।
"रूपौदार्य्यवयोजन्मविद्यैश्वर्य्यश्रियादिभिः ।
संपन्नस्य गुणैः सर्व्वैश्चिन्ता बन्ध्यापतेरभूत् ॥"
बन्ध्या स्त्री अष्टमे वर्षे अधिवेदनीया भवति
यथाह मनुः । ९ । ८१ ।
"बन्ध्याष्टमेऽधिवेद्याब्दे दशमे तु मृतप्रजा ॥")
अपत्यशून्यगौः । तत्पर्य्यायः । वशा २ । इत्य-
मरः । २ । ९ । ६९ ॥ बालाख्यगन्धद्रव्यम् । इति
शब्दचन्द्रिका ॥ वृषलीविशेषः । यथा, --
"बन्ध्या च वृषली ज्ञेया वृषली च मृतप्रजा ।
अपरा वृषली ज्ञेया कुमारी या रजस्वला ॥"
इति प्रायश्चित्तविवेके उशनसो वचनम् ॥ * ॥
योनिरोगविशेषः । यथा, --
"उदावर्त्ता तथा बन्ध्या विप्लुता च परिप्लुता ।
वातला योनिजो रोगो वातदोषेण पञ्चधा ॥"
तस्या लक्षणं यथा, --
"सा फेनिलमुदावर्त्ता रजःकृच्छ्रेण मुञ्चति ।
बन्ध्या निरार्त्तवा ज्ञेया विप्लुता नित्यवेदना ॥
परिप्लुता या भवति ग्राम्यधर्म्मे रुजा भृशम् ।
वातला कर्कशास्तब्धा शूलनिस्तोदपीडिता ॥"
तस्याश्चिकित्सा यथा, --
"बला सिता सातिबला मधूकं
वटस्य शुङ्गं गजकेशरञ्च ।
एतन्मधुक्षीरघृतैर्निपीय
बन्ध्या सुपुत्त्रं नियतं प्रसूते ॥
अश्वगन्धाकषायेण सिद्धं दुग्धं घृतान्वितम् ।
ऋतुस्नाताङ्गना प्रातः पीत्वा गर्भं दधाति हि ॥
पुष्पोद्धृतं लक्ष्मणाया मूलं दुग्धेन कन्यया ।
पिष्ट्वा पीत्वा ऋतुस्नाता गर्भं धत्ते न संशयः ॥
कुरुण्टमूलं धातक्याः कुसुमानि वटाङ्कुराः ।
नीलोत्पलं पयोयुक्तमेवं गर्भप्रदं ध्रुवम् ॥
या बला पिबति पार्श्वपिप्पलं
जीरकेण सहितं हिताशना ।
श्वेतया विशिखपुङ्खया युतं
सा सुतं जनयतीह नान्यथा ॥"

पथ्या ७ दिव्या ८ पुत्त्रदा ९ सकन्दा १०
श्रीकन्दा ११ कन्दवल्ली १२ ईश्वरी १३ सुगन्धा
१४ सर्पदमनी १५ विषकण्टकिनी १६ परा १७
कुमारी १८ भूतहन्त्री १९ । अस्या गुणाः ।
तिक्तत्वम् । कटुत्वम् । उष्णत्वम् । कफापहत्वम् ।
स्थावरादिविषघ्नत्वम् ।
रसायनत्वञ्च । इति
राजनिर्घण्टः ॥ तत्पर्य्यायगुणाः ।
"बन्ध्याकर्क्कोटकी देवी कन्या योगेश्वरीति च ।
नागारिर्भक्तदमनी विषकण्टकिनी तथा ॥
बन्ध्याकर्क्कोटकी लघ्वी कफनुद्व्रणशोधिनी ।
सर्पदर्पहरी तीक्ष्णा विसर्पविषहारिणी ॥"
इति भावप्रकाशः ॥

**ब(व)भ्र**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) ब(व)कारादिः ।
ओष्ठ्यवर्गचतुर्थो-
पधः । ब(व)भ्रति । इति दुर्गादासः ॥

**बभ्रवी**, स्त्री, (बभ्रोः शिवस्येयं पत्नी । बभ्रु + अण्
+ ङीप् । न वृद्धिः ।) दुर्गा । इति
भूरिप्रयोगः ॥

**बभ्रिः**, पुं, (बभ्र + इन् ।) वज्रम् । इति केचित् ॥
(भरणकर्त्तरि धारके च त्रि । यथा, ऋग्वेदे ।
६ । २३ । ४ ।
"गन्तेयान्ति सवना हरिभ्यां
बभ्रिर्वज्रं पपिः सोमं ददिर्गाः ॥")

"अक्षीणश्च शकुन्तश्च बभ्रुः
कालपथस्तथा ॥"
विश्वगर्भस्य पुत्त्रः । स तु
यादवानामन्यतमः ।
यथा, हरिवंशे । ९४ । ४८ ।
"वसुर्बभ्रुः सुषेणश्च सभाक्षश्चैव
वीर्य्यवान् ।
यदुप्रवीरा विख्याता लोकपाला इवापरे ॥"
यथा च माघे । २ । ४० ।
"आलप्यालमिदं बभ्रोर्यत्स
दारानपाहरत् ॥"
स च विनष्टप्राये यादवकुले पथि गच्छन् दस्युभि-
र्हतः । तत्कथा च महाभारते । १६ । मौषल-
पर्व्वणि द्रष्टव्या ॥ स्त्री, कपिला गौः । सा च
निशि अजानता पृषध्रेण खड्गेन हता । यथा,
भागवते । ९ । २ । ६ ।
"खड्गमादाय तरसा प्रलीनोडुगमे निशि ।
अजानन्नहनद्बभ्रोः शिरः शार्द्दूलशङ्कया ॥")

**बभ्रुः**, त्रि, (बिभर्त्तीति । भृ + "कुभ्रश्च ।" उणा०
१ । २३ । इति कुर्द्वित्वञ्च ।) पिङ्गलः । इत्य-
मरः ॥ (यथा, कुमारे । ५ । ८ ।
"बबन्ध बालारुणबभ्रुवल्कलं
पयोधरोत्सेधविशीर्णसंहतिः ॥"
यथा च रघुः । १५ । १६ ।
"धूमधूम्रो वसागन्धी
ज्वालाबभ्रुशिरोरुहः ॥")

**बभ्रुधातुः**, पुं, (बभ्रुः पिङ्गलो धातुः ।) सुवर्ण-
गैरिकम् । इति राजनिर्घण्टः ॥

**बभ्रुवाहनः**, पुं, मणिपुरस्य राजविशेषः । स च

इति भावप्रकाशः ॥

(चिकित्सान्तरमस्या यथा, --

"पिप्पल्यः शृङ्गवेरञ्च मरिचं केशरन्तथा ।

घृतेन सह पातव्यं बन्ध्यापि लभते सुतम् ॥"

इति वैद्यकचक्रपाणिसंग्रहे योनिव्यापदधिकारे ॥

"बला चातिबला यष्टिशर्करा मधुसंयुता ।

बन्ध्यागर्भकरी पीता नात्र कार्य्या विचारणा ॥"

इति भैषज्यधन्वन्तरौ स्त्रीरोगाधिकारे ॥)

**बन्ध्याकर्कोटकी**, स्त्री, (बन्ध्यायाः कर्कोटकी ।

पुत्त्रदातृतया बन्ध्यायाः उपकारिणी अतो-ऽस्यास्तथात्वम् ।) तिक्तकर्कोटकी । बाँझ-खखसा इति बाँझचठेल इति बाँझककरोल इति च हिन्दीभाषा । तत्पर्य्यायः । बन्ध्या २ देवी ३ नागारातिः ४ नागहन्त्री ५ मनोज्ञा ६

**बभ्रुः**, पुं, (बिभर्त्ति भरति वा । भृ + "कुभ्रश्च ।"

उणा० १ । २३ । इति कुर्द्वित्वञ्च ।) अग्निः ।

शिवः । (यथा, महाभारते १३ । महादेवस्य सहस्रनामकथने । १७ । १४८ ।

"शृङ्गीशृङ्गप्रियो बभ्रू राजराजो निरामयः ॥")

विष्णुः । (यथा, महाभारते १३ । विष्णोः सहस्रनामकथने । १४९ । २६ ।

"रुद्रो बहुशिरा बभ्रुर्व्विश्वयोनिः शुचिश्रवाः ॥")

विशालः । नकुलः । इति मेदिनी ॥ (यथा, मार्कण्डेये । १५ । ९ ।

"सञ्जायते महावक्त्रो मूषिको बभ्रुसन्निभः ॥")

मुनिविशेषः । इति हेमचन्द्रः ॥ देशभेदः । इति शब्दरत्नावली ॥ सितावरशाकः । इति राज-निर्घण्टः ॥ खलतिः । इति हेमचन्द्रः । ३ । ११७ ॥

(कपिलो वर्णः । इति मेधातिथिः ॥ तद्गुणयुक्ते तु वाच्यलिङ्गः । यथा, मनुः । ४ । १३० ।

"नाक्रामेत्कामतच्छायां बभ्रुणो दीक्षितस्य च ॥"

लोमपादसुतः । यथा, भागवते । ९ । २४ । १ ।

"रोमपादसुतो बभ्रुर्बभ्रोः कृतिरजायत ।"

देवावृधसुतः । यथा, तत्रैव । ९ । २४ । ९ ।

"वभ्रुर्देवावृधसुतस्तयोः श्लोकौ पठन्त्यमू ॥"

ययातिपुत्त्रस्य द्रुह्योः सुतः । यथा, तत्रैव । ९ । २३ । १४ ।

चित्राङ्गदायां अर्ज्जुनाज्जातः । यथा, --

"करेणुमत्यां नकुलो निरमित्रं तथार्ज्जुनः ।

इरावन्तमुलूप्यां वै सुतायां बभ्रुवाहनम् ॥

मणिपुरपतेः सोऽपि तत्पुत्त्रः पुत्त्रिकासुतः ॥"

इति श्रीभागवते । ९ । २२ । ३२ ॥

अपि च ।

वैशम्पायन उवाच ।

"श्रुत्वा तु नृपतिः प्राप्तं पितरं बभ्रुवाहनः ।

निर्ययौ विनयेनाथ ब्राह्मणार्थपुरःसरः ॥

मणिपुरेश्वरन्त्वेवमुपायातं धनञ्जयः ।

नाभ्यनन्दत् स मेधावी क्षात्त्रधर्म्ममनुस्मरन् ॥"

"भर्त्तारं निहतं दृष्ट्वा पुत्त्रञ्च पतितं भुवि ।

चित्राङ्गदा परित्रस्ता प्रविवेश रणाजिरे ॥"

इति महाभारते । १४ । ७९ अध्यायः ॥

(अस्यार्ज्जुनादिना युद्धादिकं तत्रैव विस्तरशो द्रष्टव्यम् ॥)

**बम्ब**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

सक०-सेट् ।) बम्बति । इति दुर्गादासः ॥

**बर्ब्ब**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

सक०-सेट् ।) बर्ब्बति । इति दुर्गादासः ॥

**बर्ब्बटः**, पुं, (बर्ब्ब + अटन् ।) राजमाषः । इति

त्रिकाण्डशेषः ॥ बर्ब्बटी इति ख्यातः ॥ (विवृति-रस्या राजमाषशब्दे ज्ञेया ॥)

**बर्ब्बटी**, स्त्री, (बर्ब्बट + गौरादित्वात् ङीष् ।)

पण्ययोषा । व्रीहिभेदः । इति मेदिनी । टे, ५१ ॥

**बर्ह**, ङ स्तृतौ । हिंसायाम् । दाने । वाचि ।

|  | “द्रुह्योश्च तनयो बभ्रुः<br>सेतुस्तस्यात्मजस्ततः ॥”<br>पञ्चगन्धर्व्वपतिषु अन्यतरः । यथा,<br>रामायणे ।<br>४ । ४१ । ४२ ।<br>“तत्र गन्धर्व्वपतयः पञ्च<br>सूर्य्यसमप्रभाः ।<br>शैलूषो ग्रामणीः शिक्षः शुको<br>बभ्रुस्तथैव च ॥”<br>विश्वामित्रपुत्त्रभेदः । यथा,<br>महाभारते । १३ ।<br>४ । ५० । | इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-<br>सक० |
|---|---|---|

सेट् ।) रेफोपधः । ङ, बर्हते । इति दुर्गा-
दासः ॥

**बल**, क ङ निरूपणे । इति कविकल्पद्रुमः ॥

(चुरा०-आत्म०-सक०-सेट् ।) क ङ,
बाल-
यते धर्म्मं धीरः । अयं कैश्चिन्न मन्यते ।
इति दुर्गादासः ॥

**बल**, क म जीवने । इति कविकल्पद्रुमः ॥

(चुरा०-पर०-अक०-सेट् ।) बलयति ।
इति
दुर्गादासः ॥

**बल**, ङ दाने । वधे । निरूपणे । इति कवि-

कल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट्
।) ङ,
बलते । इति दुर्गादासः ॥

**बल**, ज धान्यावरोधे । जीवने । इति
कविकल्पद्रुमः ॥

(भ्वा०-पर०-सक०-अक० च-सेट् ।)
बालः बलः ।
धनस्य भावो धान्यं समृद्धिस्तस्य
अवरोधः
प्रतिबन्धः धान्यावरोधः । बलति
पुण्यहीनं
विधिः । पुण्यहीनस्य समृद्धिं
प्रतिबध्नाति
इत्यर्थः । अयमर्थो अन्यैर्न्न मन्यते ।
बलत्य-
न्नेन लोकः । इति दुर्गादासः ॥

**ब(व)लं**, क्ली, (बलते विपक्षान् हन्तीति । बल +
पचा-

द्यच् ।) सैन्यम् । (यथा, भगवद्गीतायाम्
। १ । १० ।
"अपर्य्याप्तं तदस्माकं बलं
भीष्माभिरक्षितम् ।
पर्य्याप्तन्त्विदमेतेषां बलं भीमाभिरक्षितम्
॥")

बलकारकौषधं यथा, गारुडे । ११५ ।
१९६ अः ।
"शिवामलकचूर्णं वै मधुना उदकेन वा ।
बलानि कुर्य्यान्नासाया प्रत्युषे भक्षणं
शिव ! ॥"
पारिभाषिकबलानि । यथा, --
"विद्याभिजनमित्राणि वृद्धिसत्त्वधनानि
च ।
तपःसहायवीर्य्याणि दैवञ्च दशमं बलम्
॥"
इति महाभारते आपद्धर्म्मः ॥
अपि च ।
"अबलस्य बलं राजा बालस्य रुदितं
बलम् ।
बलं मूर्खस्य मौनन्तु तस्करस्यानृतं
बलम् ॥" * ॥
अपि च ।
"क्षत्त्रियाणां बलं युद्धं व्यापारश्च बलं
विशाम् ।
भिक्षा बलं भिक्षुकाणां शूद्राणां
विप्रसेवनम् ॥
हरौ भक्तिर्हरेर्दास्यं वैष्णवानां बलं हरिः
।
हिंसा बलं खलानाञ्च तपस्या च
तपस्विनाम् ॥
बलं वेशश्च वेश्यानां योषितां यौवनं
बलम् ।
बलं प्रतापो भूपानां बालानां रुदितं
बलम् ॥
सतां सत्यं बलं मिथ्या बलमेवासतां
सदा ।
अनुगानामनुगमः स्वल्पस्वानाञ्च
सञ्चयः ॥
विद्या बलं पण्डितानां बाणिज्यं बणिजां
बलम् ।
शश्वत्सुकर्म्मशीलानां गाम्भीर्य्यं साहसं
बलम् ॥
धनं बलञ्च धनिनां शुचीनाञ्च विशेषतः
।

रामपुत्त्रस्य कुशस्यान्वये जातस्य
पारियात्रस्य
पुत्त्रविशेषः । यथा, भागवते । ९ । १२ । २ ।
"देवानीकस्ततोऽनीहः पारियात्रोऽथ तत्सुतः
।
ततो बलः स्थलस्तस्माद्वज्रनाभोऽर्क्कसम्भवः
॥"
दनायुषः पुत्त्रविशेषः । यथा, महाभारते । १ ।
६५ । ३३ ।
"दनायुषः पुनः पुत्त्राश्चत्वारोऽसुरपुङ्गवाः ।
विक्षयो बलवीरौ च वृत्रश्चैव महामुरः ॥"
मेघः । इति निघण्टुः । १ । १० ॥) दैत्य-
विशेषः । इति मेदिनी । ले, ३७ ॥ तस्य
विवरणं यथा, --
"आसीद्दैत्यो बलो नाम महाबलपराक्रमः ।
देवगन्धर्व्वयक्षाणां चन्द्रेन्द्रभयकारकः ॥
येन विष्णुर्यमः सूर्य्यो भग्न आजौ प्रपीडिताः ।
अनिलानलरक्षश्च वरुणश्च वशीकृताः ॥
संयम्य येन नागेन्द्रा महाभोगा महाविषाः ।
गरुडश्च कृतो भृत्यः सदाज्ञामभिवर्त्तिनः ॥
येन संलिख्य शैलेन्द्रः कन्दुकाकारकारितः ।
क्रीडार्थं येन विप्रेन्द्र ! गिरयः प्रथिता भुवि ॥
तेन देवाः सब्रह्माद्या दिवः सर्व्वे पलायिताः ।
दत्तं स्थानन्तु पातालं समयं शरदां शतम् ॥
तथा ते भयमापन्ना मानं त्यक्त्वा गता गुरुम् ।
पृच्छन्ति विनयात् सर्व्वे शक्रस्य हितकारिणः
॥
केनोपायेन देवानां स्वर्गवासो भवेद्द्विज ! ।
भवान् हि नयवेत्ता च उपायं वद पृच्छताम् ॥
त्वमेव शास्त्रवेत्ता च हितः शक्रस्य नित्यशः ।
शङ्कोदधिनिमग्नानामतिपोतोभव द्विज ! ॥
एवं पृष्टः स देवैस्तु गुरुर्व्वचनमब्रवीत् ॥
बृहस्पतिरुवाच ।
यदयं दानवः शक्र ! न युद्धे भवतो वशः ।
रणे न क्षयमायाति अजेयः सङ्गरे यतः ॥
अतः कपटमास्थाय प्रार्थनीयः क्रतुं प्रति ।
दाता सत्त्वबलोपेतः स्वकायमर्थितेष्वपि ॥
अतस्तस्य प्रार्थयिता विष्णुर्म्मायामहोदधिः ।
द्विजरूपधरो भूत्वा याचनाय वधाय च ॥

स्थौल्यम् । सामर्थ्यम् । अत्र शेषस्य
पर्य्यायः ।
द्रविणम् २ तरः ३ सहः ४ शौर्य्यम् ५
स्थाम ६
शुष्मम् ७ शक्तिः ८ पराक्रमः ९ प्राणः
१० ।
इत्यमरः । २ । ८ । १०२ ॥ महः ११
शूष्म १२ । इति
शब्दरत्नावली ॥ ऊर्ज्जः १३ । इति
जटाधरः ॥
तद्वैदिकपर्य्यायः । ओजः १ पा(वा)जः २
शवः ३
तरः ४ तवः ५ त्वक्षः ६ शर्द्धः ७ बाधः ८
नृम्णम् ९ तविषी १० शुष्मम् ११ शुष्णम्
१२
शूषम् १३ दक्षः १४ वीळुः १५ च्यौत्नम्
१६
सहः १७ यहः १८ वधः १९ वर्गः २०
वृजनम् २१ वृक् २२ मज्मना २३
पौंस्यानि २४
धर्णसिः २५ द्रविणम् २६ स्यन्द्रासः २७
शम्बरम्
२८ । इत्यष्टाविंशतिर्ब्बलनामानि । इति
वेदनि-
घण्टौ । २ । ९ ॥ (यथा, मनुः । २ । ५५
।
"पूजितं ह्यशनं नित्यं बलमूर्जञ्च यच्छति
॥")
तत्तु गर्भस्थबालकस्य षष्ठे मासि भवति ।
इति
सुखबोधः ॥ गन्धरसः । रूपम् । इति
मेदिनी । ले,
३७ ॥ शुक्रम् । इति हेमचन्द्रः । ३ ।
२९३ ॥ (यथाह
सुश्रुतः । "धातूनां यत्परं तेजस्तत्
खल्वोज
स्त्रदेव बलमित्युच्यते ॥") वपुः । इति
जटाधरः ॥
(यथा, रामायणे । ७ । १ । ३३ ।
"कीदृशो वै प्रभावोऽस्य किं बलं कः परा-
क्रमः ॥")

बलं विवेकः शान्तानां गुणिनां
बलमेकता ॥
गुणो बलञ्च गुणिनां चौराणाञ्चौर्य्यमेव च
।
विप्रवाक्यञ्च कापट्यमधर्म्ममृणिनां
बलम् ॥
हिंसा च हिंस्रजन्तूनां सतीनां
पतिसेवनम् ।
वरशापौ सुराणाञ्च शिष्याणां गुरुसेवनम्
॥
बलं धर्म्मो गृहस्थानां भृत्यानां
राजसेवनम् ।
बलं स्तवः स्तावकानां ब्रह्म च
ब्रह्मचारिणाम् ॥
यतीनाञ्च सदाचारो न्यासः
सन्न्यासिनां बलम् ।
पापं बलं पातकिनां सुभक्तानां हरिर्बलम्
॥
पुण्यं बलं पुण्यवतां प्रजानां नृपतिर्बलम्
।
फलं बलञ्च वृक्षाणां जलधीनां जलं
बलम् ॥
जलं बलञ्च शस्यानां मत्स्यानाञ्च जलं
बलम् ।
शान्तिर्बलञ्च भूपानां विप्राणाञ्च
विशेषतः ॥"
इति ब्रह्मवैवर्त्ते गणेशखण्डे ३५
अध्यायः ॥

**ब(व)लः**, पुं, (बलते निरूपयति स्वेष्टमिति । बल
+

अच् । बलदेवपक्षे
नामैकदेशग्रहणाच्चापि
सिध्यति भीमादिवत् ।) काकः । (यथा,
महा-
भारते । ७ । ६ । २५ ।
"गृध्राः श्वेना बलाः कङ्का वायसाश्च
सहस्रशः ॥")
बलदेवः । इत्यमरः ॥ (यथा, भागवते ।
४ । ५ । १९ ।
"पूष्णो ह्यपातयत् दन्तान् कलिङ्गस्य
यथा बलः ॥")

गुरुणा चोदिता देवाः स्तुतास्ते निधनम्प्रति ।
गताः सर्व्वे ततः शान्ता यत्र देवो जनार्द्दनः ॥
माधवेन तदा देवा दृष्टा भयसमाकुलाः ।
क्रमार्घ्यासिनसंलापैः सर्व्वे ते संस्तुतां भृशम् ॥
संपृच्छितास्तदा सर्व्वे किमायातावदन् सुराः
॥
देवा ऊचुः ।
बलेन बलिना देव ! सर्व्वे षित्रासिता वयम् ।
मायावी त्वं वधे तस्य नान्योपायो भवेत्
क्वचित् ॥
षिष्णुरुवाच ।
करोमि भवतामिष्टं किन्त्वसौ बलसंयुतः ।
सात्विको नयवेत्ता च सर्व्वशास्त्रार्थपारगः ॥
गूढमन्त्रविचारी स्याद्धर्म्मैककृतनिश्चयः ।
तस्य मायां कथं कर्त्तुं शक्यते सुरसत्तमाः ॥
पुरैका भवते विद्या मम दत्ता तु शूलिना ।
मोहिनी नाम विख्याता मोहं सा कुरुते भृशम्
॥
ततोऽहं तस्य नाशाय स्मरामि परमेश्वरीम् ।
स्मरित्वा परमां विद्यां द्विजभावो जनार्द्दनः ॥

| | | |
|---|---|---|
| पल्लवम् । इति शब्दरत्नावली ॥ रक्तः । इति<br>शब्दचन्द्रिका ॥ (बलमस्यास्तीति । बल + अर्श<br>आद्यच् ।) बलयुक्ते, त्रि । इति मेदिनी ॥ * ॥<br>सद्योबलकराणि बलहराणि च यथा, --<br>"सद्योबलकरास्त्रीणि बालाभ्यङ्गं सुभोजनम् ।<br>सद्योबलहरास्त्रीणि अध्वानं मैथुनं ज्वरः ॥" | अस्य पत्न्यादीनां नामानि यथा, --<br>"रेवतीं नाम तनयां रेवतस्य महीपतेः ।<br>उपयेमे बलस्तस्यां जज्ञाते<br>निशठोल्मकौ ॥"<br>इति विष्णुपुराणे । ५ । २५ । १९ ॥<br>वरुणवृक्षः । इति शब्दचन्द्रिका ॥ (वायुना<br>प्रदत्तः कार्त्तिकेयानुचरभेदः । यथा, महा-<br>भारते । ९ । ४५ । ४२ ।<br>"बलञ्चातिबलञ्चैव महावक्त्रौ महाबलौ ।<br>प्रददौ कार्त्तिकेयाय वायुर्भरतसत्तम ! ॥" | |

मध्यकायसुवेशश्च वेदपाठी सविष्टरः
।
परिग्राही हुताशस्य क्षपयन्नो
व्रजेद्यजेत् ॥
यज्ञार्थं याचनां कस्य करोमि
कथ्यतां मम ।
तं दृष्ट्वा सूर्य्यतेजाभमुक्तो विप्रैर्व्रजन्
स च ॥
बलस्ते यज्ञनिष्पत्तिं करोति
द्विजसत्तम ! ।
हेमकूटे महाशैले तिष्ठते दानवोत्तमः
॥
सर्व्वज्ञोऽपि महामायी वञ्चनाय तदा
गतः ।
मोहिनीं जपमानस्तु विद्यां
परमसिद्धिदाम् ॥
विचित्रं दनुराजस्य पुरं सर्व्वपुरोत्तमम्
।
प्राविशद्वेदं वेदात्मा पठमानो
जनार्द्दनः ॥
दानवन्तु पुरं रम्यं जानासि त्वं
ग्रहोत्तम ! ।
द्वारं गतोऽसुरेन्द्रस्य कुर्य्यां प्राध्ययनं
तदा ॥
द्वारपालो वदत्येवं श्रुत्वा वेदध्वनिं
शुभम् ।
पुराणि रत्नानि शुभं ददामि याचतां
वर ! ॥
इष्टं दानं द्विजश्रेष्ठ ! दुर्लभञ्च
महामते ! ।
तेनोक्तं दर्शनं द्वाःस्थ दीयतां
दनुसत्तमे ॥
तदा स पूर्ब्बमादिष्टः प्रेषयामास तं
नृपम् ।
बलिनं बलसम्पन्नं दानवं सुरमर्द्दनम्
॥
दानोद्यतकरो भद्रं दृष्ट्वा
प्रीत्यावभाषत ।

**ब(व)लक्षः**, पुं, धवलः । इत्यमरः । १ । ५ । १३ ॥ बलतेः
क्विप् बलं अक्षत्यस्मिन् घञ् बलक्ष इति कष
संयोगवान् । इति रायमुकुटः ॥
अवलक्षते
इति वलक्षः घञ् अकारलोपः । इति स्वाम्या-
दयः ॥ एतन्मते अन्तःस्थवकारादिः ॥ (यथा,
माघे । ६ । ३४ ।
“द्विरददन्तबलक्षमलक्ष्यत
स्फु रितभृङ्गमृगच्छविक्त्तकम् ॥”)

**बलजं**, क्ली, (बलात् जायते इति । बल + जन +
ड ।) क्षेत्रम् । पुरद्वारम् । इत्यमरः । ३ ।
३ । ३१ ॥
शस्यम् । (धान्यराशिः । इति वैजयन्ती ॥ यथा,
माघे । १४ । ७ ।
“त्वं समीरण इव प्रतीक्षितः
कर्षकेण बलजान् पुपूषता ॥”)
युद्धम् । इति मेदिनी ॥ बलजन्ये, त्रि ॥

**बलजा**, स्त्री, (बलात् बलकृतसाहसयुद्धादिकात्
जायते या । बल + जन + ड + टाप् ।)
वरयोषा ।
यूथी । इति मेदिनी । जे, २६ ॥

**बलती**, स्त्री, प्रासादोपरिमण्डलिका । इति
पुराणम् ॥

**बलदः**, पुं, (बलं ददातीति । बल + दा + कः ।)
जीवकः । इति राजनिर्घण्टः ।
पौष्टिककर्म्माङ्ग-
होमाग्निः । यथा । पौष्टिके बलदः स्मृतः ।
इति तिथ्यादितत्त्वम् ॥ (वृषभः । यथा, कथा-
सरितसागरे । ३७ । १५३ ।
“अन्येद्युः प्रणयक्रीडाव्याजाच्च मम
सूत्रकम् ।
हालालोलं नीलवस्त्रं हेलावन्तं स्मरेत् परम् ॥”
इति कश्चिन्निबन्धः ॥
(अयं हि शेषसर्पस्यांशावतारः । यथा, महा-
भारते । १ । ६७ । १५१ ।
“शेषस्यांशश्च नागस्य बलदेवो महाबलः ॥”
नाम्नामस्य कारणानि बलभद्रशब्दे द्रष्टव्यानि ॥)
वायुः । इति मेदिनी । वे, ६२ ॥

**बलदेवा**, स्त्री, त्रायमाणौषधिः । इति मेदिनी ।
वे, ६२ ॥ (गुणादयोऽस्यास्त्रायमाणाशब्दे
ज्ञातव्याः ॥)

**बलप्रसूः**, स्त्री, (प्रसूते इति प्रसूर्जननी । बलस्य
बलदेवस्य प्रसूः ।) रोहिणी । बलराममाता ।
इति शब्दरत्नावली ॥

**बलभद्रः**, पुं, (बलं भद्रं श्रेष्ठमस्य । यद्वा, बलमस्या-
स्तीति बलः । अर्श आद्यच् । बलो बलवानपि
भद्रः सौम्यः ।) बलदेवः । इत्यमरः । १ । १ ।
२४ ॥
अनन्तः । बलशाली । इति हेमचन्द्रः । २ ।
१३९ ॥
लोध्रः । इति शब्दचन्द्रिका ॥ गवयः । इति
राजनिर्घण्टः ॥ बलदेवस्य नाम्नां कारणानि
यथा, --
“कृतं निरूपितं नाम्नां कनिष्ठस्य यथाश्रुतम् ।
ज्येष्ठस्य हलिनो नाम्नः सङ्केतं शृणु मन्मुखात् ॥
गर्भसङ्कर्षणादेव नाम्ना सङ्कर्षणः स्मृतः ।
नास्त्यन्तोऽस्यैव वेदेषु तेनानन्त इति स्मृतः ॥
बलदेवो बलोद्रेकाद्धली च हलधारणात् ।
सितिवासो नीलवासात् मुषली मुषलायुधात् ।
रेवतीसहसम्भोगाद्रेवतीरमणःस्वयम् ॥
रोहिणीगर्भवासात्तु रौहिणेयो महामतिः ।
इत्येवं ज्येष्ठपुत्रस्य श्रुतं नाम निवेदितम् ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १३ अध्यायः
॥
विष्णुपूजनोक्ताष्टदलपद्मस्थयोगिविशेषः । यथा,
“सर्व्वत्र मण्डलं कार्य्यं बासुदेवस्य पूजने ।
एवमेव नृपश्रेष्ठ ! निष्फलं चान्यथेतरत् ॥
बलभद्रश्च कामश्च अनिरुद्धस्तदुद्भवः ।

किमायातो भवांश्चात्र कार्य्यं विप्र !
तदुद्दिश ॥
मोहिनीं जपमानस्तु वदते
द्बिजकेशवः ॥
ब्रह्मोवाच ।
अहं संप्रेषयामास विद्धि मां
कश्यपात्मजम् ।
यज्ञाः सेन्द्रैः समारब्धा
ऋषिभिश्चासुरा-
धिप ! ॥
तस्य निष्पत्तये नाथ ! आगतोऽहं
तवान्ति-
कम् ।
दानं मे दीयतां राजन् ! सिध्यते येन
तन्मखः ॥
बल उवाच ।
येन संसिध्यते यज्ञो देवारब्धो
द्बिजोत्तम ! ।
तथा चाहं धनं दारान् शिरमद्य ददामि
ते ॥
ब्रह्मोवाच ।
येन संसिध्यते यज्ञो
देवानामसुराधिप ! ।
तद्देयं तच्च आदिष्टं सत्यमत्रावयोरपि
॥
बल उवाच ।
याच्यतां येन ते कार्य्यं सत्यं विप्र !
ददामि ते ।
संस्मृत्य मोहिनीं विद्यां वदते
द्बिजसत्तमः ॥
ब्राह्मण उवाच ।
न मे धनैः स्वदारैर्वा न भूम्या
गजवाजिभिः ।
रत्नैः कार्य्यं महाबाहो !
देवयज्ञोऽसुरा-
धिप ! ॥
येन निष्पाद्यते यज्ञः सुखदश्च
दिवौकसाम् ।
तमहं याचयिष्यामि दीयतां तद्व्रतं
तव ॥
गलेऽबध्नादहं दान्तस्तत्क्षणं
बलदोऽभवम् ॥”)
बलदातरि, त्रि ॥ (यथा, ऋग्वेदे । ३ ।
५३ । १८ ।
“बलं तोकाय तनयाय जीवसे त्वं हि
बलदा
असि ॥”)

**बलदा**, स्त्री, (बलद + टाप् ।) अश्वगन्धा । इति
राजनिर्घण्टः ॥ (अस्याः पर्य्यायो यथा, --
“गन्धान्ता वाजिनामादिरश्वगन्धा
हयाह्वया ।
बराहकर्णी बरदा बलदा कुष्ठगन्धिनी ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**बलदीनता**, स्त्री, (बलस्य दीनता ।) ग्लानिः ।
इति हेमचन्द्रः ॥

**बलदेवः**, पुं, (बलेन दीव्यतीति । दिव + अच् ।)
बलरामः । तत्पर्य्यायः । बलभद्रः २
प्रल-
म्बघ्नः ३ अच्युताग्रजः ४ रेवतीरमणः
५ रामः ६
कामपालः ७ हलायुधः ८ नीलाम्बरः ९
रौहि-
णेयः १० तालाङ्कः ११ मुषली १२ हली
१३
सङ्कर्षणः १४ सीरपाणिः १५ कालिन्दी-
भेदनः १६ बलः १७ । इत्यमरः । १ ।
१ । २४ ॥
रुक्मिदर्पः १८ मधुप्रियः १९ हलधरः
२०
हलभृत् २१ हालभृत् २२ सौनन्दी २३
गुप्त-
वरः २४ संवर्त्तकः २५ बली २६ । इति
शब्दरत्नावली ॥ (यथा भागवते । ९ । ३
। ३३ ।
“तद्गच्छ देवदेवांशो बलदेवो महाबलः
॥”)
अस्य ध्यानम् ।
“बलदेवं द्बिबाहुञ्च शङ्खकुन्देन्दुसन्निभम् ।
नारायणस्तथा ब्रह्मा विष्णुः षष्ठः प्रकीर्त्तितः ॥
नरसिंहो बराहश्च योगिनोऽष्टौ प्रकीर्त्तिताः ।
पूर्ब्बाद्यष्टदलेष्वेतान् वर्णतो मन्त्रतः पृथक् ॥
पूजयेत् कर्णिकामध्ये वासुदेवन्तु नायकम् ।
विमला नायिका तस्य वासुदेवस्य कीर्त्तिता ।
बलभ्रद्रमुखानान्तु योगिन्यः शृणु पार्थिव ! ॥
आदावुत्कर्षिणी ज्ञेया ज्ञाना पश्चात् क्रिया
परा ।
योगा प्रज्ञा तथेशानी अनुप्राती तथा स्तनी ॥
सर्व्वाश्चतुर्भुजाः प्रोक्ताः शङ्खचक्रगदाधराः ।
योगिन्यो बलभद्रन्तु कामं विधियुते तथा ॥
विधे रूपन्तु पूर्ब्बोक्तं हलञ्च मुषलन्तथा ।
शङ्खञ्चक्रञ्च धत्ते स गदां पार्श्वस्थितान्तथा ॥”
इति कालिकापुराणे ८२ अध्यायः ॥
(पर्व्वतविशेषः । यथा, भागवते । ५ । २० । २६
।
“एतेषां वर्षमर्य्यादा गिरयो नद्यश्च सप्त सप्तैव ।
ईशान उरुशृङ्गो बलभद्रः शतकेसरः सहस्र-
स्रोतो देवपालो महानस इति ॥”)

| | | |
|---|---|---|
| एतत् कार्य्यं मम भद्रं ऋषीणाञ्च विशेषतः ।<br>देवार्थं तव कायेन सिध्यते तन्मखोत्तमः ॥<br>तदा दत्ता तनुस्तेन दानवेन महात्मना ।<br>विष्णुनापि स्वचक्रेण शिरस्यभिहतोऽसुरः ॥<br>प्राकृतं देहमुत्सृज्य दिव्यकायस्त्वभूत्तदा ।<br>तस्यावयवसंजाता वज्राद्या रत्नजातयः ॥<br>लोचने सुरतेजांसि पद्मरागाणि चाभवन् ।<br>विशुद्धपात्रदानेन कायो रत्नाकरोऽभत् ॥”<br>इति देवीपुराणे ४७ अध्यायः ॥ | वामे हलायुधधरं मुषलं दक्षिणे करे ॥ | |

**बलभद्रा**, स्त्री, कुमारी । त्रायमाणा । इति

मेदिनी । दे, २८४ ॥ (अस्याः पर्य्यायो यथा, --
"बलभद्रा त्रायमाणा त्रायन्ती गिरिसानुजा ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**बलभद्रिका**, स्त्री, (बलभद्रैव । बलभद्रा + स्वार्थे

कन् । कापि अत इत्वम् ।) त्रायमाणा । इत्य-
मरः । २ । ४ । १५० ॥

**बलरामः**, पुं, (रम + भावे घञ् । बलेन रामो

रमणं यस्य ।) बलदेवः । यथा, --
"बलरामानुजः श्रीमान् गजेन्द्रस्तुतपादकः ॥"
इति नारदपञ्चरात्रे चतुर्थरात्रीयः ८ अध्यायः ॥
अस्य ध्यानम् ।
"अन्तरे दिव्य उद्याने हरिचन्दनसंज्ञके ।
तत्राधस्तात् स्वर्णपीठे विचित्रे मणिमण्डपे ॥
तन्मध्ये मणिमाणिक्यदिव्यसिंहासनोज्ज्वले ।
तत्रोपरि च रेवत्या सङ्कर्षणहलायुधम् ॥
ईश्वरस्याभयानन्तमभिन्नगुणरूपिणम्।
शुद्धस्फटिकसंकाशं रक्ताम्बुजदलेक्षणम् ॥
नीलचेलधरं स्निग्धं दिव्यगन्धानुलेपनम् ।
कुण्डलाश्लिष्टसद्गण्डं दिव्यमूषाम्बरस्रजम् ॥
मधुपाने सदासक्तं मदाघूर्णितलोचनम् ।
मुषलं दक्षिणे पाणौ बलरामं सदा स्मरेत् ॥"
इति कश्चिन्निबन्धः ॥

**बललः**, पुं, (बलं लातीति । बल + ला + क ।)

बलरामः । इत्यमरटीकायां भरतः ॥

**बलवत्**, व्य, (बलमस्यास्तीति । बल + मतुप् । मस्य

वः ।) अतिशयम् । इत्यमरः । ३ । ४ । १ ॥
(यथा,
शाकुन्तले प्रस्तावनायां सूत्रधारस्योक्तिः ।
"बलवदपि शिक्षितानामात्मन्यप्रत्ययंचेतः
॥")

**बलवान्** [त्], त्रि, (बलमस्यास्तीति । बल +

मतुप् । मस्य वः ।) बलविशिष्टः । तत्पर्य्यायः
।
स्थाने युद्धे च कुशलानभीरूनविकारिणः
॥
संहतान् योधयेदल्पान् कामं
विस्तारयेद्बहून् ।
सूच्या वज्रेण चैवैतान् व्यूहेन व्यूह्य
योधयेत् ॥")

**बलसूदनः**, पुं, (बलं तन्नाम्ना प्रसिद्धं असुरं

सूदयतीति । बल + सूद + ल्यु ।) इन्द्रः
।
इति हलायुधः ॥ (यथा, देवीभागवते ।
५ । ३ । १३ ।
"नोचेद्वज्रं गृहाणाशु युद्धाय बलसूदन !
॥"
विष्णुः । इति देवीपुराणे ४७ अध्यायः
॥)

**बलस्थितिः**, स्त्री, (बलानां स्थितिरवस्थानं यत्र ।

अभिधानात् स्त्रीत्वम् ।) शिविरम् । इति
त्रिकाण्डशेषः ॥

**बलहा**, [न्], पुं, (बलं सामर्थ्यं हन्तीति । बल +

हन् + क्विप् ।) श्लेष्मा । इति
शब्दरत्नावली ॥
(बलं तन्नामानमसुरं हन्तीति । इन्द्रः ॥
पर-
बलविनाशके, त्रि । यथा, हरिवंशे ।
११० । ४२ ।
"तत्राहं युध्यमानस्तु भ्रातास्य बलहा
बली ।
स्थितो ममाग्रतः शूरो गदापाणिर्हलायुधः
॥")

**ब(व)ला**, स्त्री, (कार्य्यकारित्वेन बलमस्त्यस्याः ।

बल + अर्श आद्यच् ततष्टाप् ।)
क्षुपविशेषः ।
बाला इति वाडियाला इति भाषा ।
तत्पर्य्यायः ।
वाठ्यालकः २ । इत्यमरः । २ । ४ ।
१०७ ॥ समङ्गा ३
"अध्यर्द्धयोजनं गत्वा सरय्वा दक्षिणे
तटे ।
रामेति मधुरां वाणीं
विश्वामित्रोऽभ्यभाषत ॥
गृहाण वत्स्य ! सलिलं माभूत्
कालविपर्य्ययः ।
मन्त्रग्रामं गृहाण त्वं बलामतिबलां तथा
॥
न श्रमो न ज्वरो वा ते न रूपस्य
विपर्य्ययः ।
न च सुप्तं प्रमत्तं वा धर्षयिष्यन्ति नैरृताः
॥
न बाह्वोः सदृशो वोर्य्ये पृथिव्यामस्ति
कश्चन ।
त्रिषु लोकेषु वा राम ! न भवेत्
सदृशस्तव ॥
बलामतिबलाञ्चैव पठतस्तात राघव ! ॥
न सौभाग्ये न दाक्षिण्ये न ज्ञाने
बुद्धिनिश्चये ।
नोत्तरे प्रतिबक्तव्ये समो लोके तवानघ !
॥
एतद्विद्याद्वये लब्धे न भवेत् सदृशस्तव ।
बला चातिबला चैव सर्व्वज्ञानस्य मातरौ
॥
क्षुत्पिपासे न ते राम ! भविष्येते
नरोत्तम ! ।
बलामतिबलाञ्चैव पठतस्तात राघव ! ॥
विद्याद्वयमधीयाने यशश्चाथ भवेद्भवि ॥
पितामहसुते ह्येते विद्ये तेजःसमन्विते ।
प्रदातुं तव काकुस्थ ! सदृशस्त्वं हि
पार्थिव ! ॥
कामं बहुगुणाः सर्व्वे त्वय्येते नात्र
संशयः ।
तपसा सम्भृते चैते बहुरूपे भविष्यतः ॥
ततो रामो जलं पृष्ट्वा प्रहृष्टवदनः शुचिः
प्रतिजग्राह ते विद्ये महर्षेर्भावितात्मनः ॥
विद्यासमुदितो रामः शुशुभे भीमविक्रमः
।

मांसलः २ अंशलः ३ । इत्यमरः । २ । ६ । ४४ ॥
वीर्य्यवान् ४ बली ५ । इति शब्दरत्नावली ॥
(यथा, मनुः १ । ७६ ।
"आकाशात्तु विकुर्व्वाणात् सर्व्वगन्धवहः शुचिः ।
बलवान् जायते वायुः स वै स्पर्शगुणो मतः ॥")

**बलवर्द्धिनी**, स्त्री (बलं वर्द्धयतीति । बल + वृध् + णिनिः । ङीप् ।) जीवकौषधिः । इति जटाधरः ॥

**बलविन्यासः**, पुं, (बलानां सैन्यानां विशेषेण दुर्भेद्यत्वेन न्यासः स्थापनम् ।) युद्धार्थं सैन्यस्य देशविशेषे विभज्य दुर्लङ्घ्यत्वनिमित्तं स्थापनम् ।
तत्पर्य्यायः । व्यूहः २ । इत्यमरः । २ । ८ । ७९ ॥
(बलविन्यासास्तु मकरपद्मादिभेदात् बहवः । तत्र संक्षेपतो मनुना युद्धयात्रार्थं केचिन्निर्द्दिष्टाः । यथा, मानवे । ७ । १८७ -- १९१ ।
"दण्डव्यूहेन तन्मार्गं यायात्तु शकटेन वा ।
वराहमकराभ्यां वा सूच्या वा गारुडेन वा ॥
यतश्च भयमाशङ्कृत् ततो विस्तारयेद्बलम् ।
पद्मेन चैव व्यूहेन निविशेत सदा स्वयम् ॥
सेनापतिबलाध्यक्षौ सर्व्वदिक्षु निवेशयेत् ।
यतश्च भयमाशङ्केत् प्राचीं तां कल्पयेद्दिशम् ॥
गुल्मांश्च स्थापयेदाप्तान् कृतसंज्ञान् समन्ततः ।

ओदनिका ४ भद्रा ५ भद्रोदनी ६ खरकाष्ठिका ७ कल्याणिनी ८ भद्रबला ९ मोटा १० पाटी ११ बलाढ्या १२ । इति राजनिर्घण्टः ॥
शीतपाकी १३ बाट्या १४ वाटी १५ विनया १६ वाट्यालो १७ वाटिका १८ । इति शब्दरत्नावली ॥ अपि च ।
"वाट्यालको बाठ्यपुष्पी समांसा विलला बला ।
श्वेतवाडियाला इति भाषा ॥
ऋष्यप्रोक्ता त्वतिबला पीतपुष्पी महाबला ।
पीतवाडीयाला ।" इति रत्नमाला ॥ अस्या गुणाः । अतितिक्तत्वम् । मधुरत्वम् । पित्तातिसारनाशित्वम् । बलवीर्य्यप्रदत्वम् । पुष्टिकफरोधविशोधनञ्च । इति राजनिर्घण्टः ॥ अथ बलाचतुष्टयनामादि ।
"बला वाट्यालिका वाट्या सैव वाट्यालकोऽपि च ।
महाबला पीतपुष्पा सहदेवी च सा स्मृता ॥
ततोऽन्यातिबला ऋष्यप्रोक्ता कङ्कतिकासह ।
गाङ्गेरुकी नागबला झषा ह्रस्वा गवेधुका ॥
बलाचतुष्टयगुणाः ।
बलाचतुष्टयं शीतं मधुरं बलकान्तिकृत् ।
स्निग्धं ग्राहि समीरास्रपित्तास्रक्षतनाशनम्॥
बलामूलत्वचश्चूर्णं पीतं सक्षीरशर्करम् ।
मूत्रातिसारं हरति दृष्टमेतन्न संशयः ॥"
इति भावप्रकाशः ॥
"स्निग्धायुष्या बला वृष्या ग्राहिणी वात-

सहस्ररश्मिर्भगवान् शारदीव दिवाकरः ॥")

**ब(व)लाकः**, पुं, (बलेन अकतीति । बल + अक + पचाद्यच् ।) बकजातिः । इति भरतः ॥ (पूरुपुत्त्रः । स च पीतगङ्गस्य जह्नोः पौत्रः । यथा, भागवते । ९ । १५ । ३ ।
"जह्नोस्तु पूरुस्तत् पुत्त्रो बलाकश्चात्मकोऽजकः ॥"
वत्सप्रीपुत्त्रभेदः । यथा, मार्कण्डेये । ११८ । २ ।
"तस्य तस्यां सुनन्दायां पुत्त्रा द्वादश जज्ञिरे ।
प्रांशुः प्रचीरः शूरश्च सुचक्रो विक्रमः क्रमः ॥
बली बलाकश्चण्डश्च प्रचण्डश्च सुविक्रमः ॥"
जातूकर्ण्यस्य मुनेः शिष्यविशेषः । यथा, श्रीभागवते । १२ । ६ । ५८ ।
"जातूकर्ण्यश्च तच्छिष्यः सनिरुक्तां स्वसंहिताम् ।
बलाकपैलजावालविरजेभ्यो ददौ मुनिः ॥"
राक्षसभेदः । यथा, मार्कण्डेये । ६९ । ६४ ।
"तां जहाराद्रितनयो बलाको नाम राक्षसः ॥"
स्वनामख्यातो व्याधविशेषः । यथा, महाभारते । ८ । ६९ । ४० ।
"मृगव्याध्योऽभवत् कश्चित् बलाको नामभारत ॥")

**ब(व)लाका**, स्त्री, (बलते इति । बल संवरणे + बलाकादयश्च ।" उणा० ४ । १४ । इति अक । यद्वा, बलेन अकतीति । बल + अक कुटिलगतौ +

| | | |
|---|---|---|
| | पित्तजित् ॥”<br>इति राजनिर्घण्टः ॥<br>(विद्याविशेषः । सा च ब्रह्मणः सुता ।<br>विश्वा-<br>मित्रेण रामाय प्रदत्ता । अस्याः प्रभावात्<br>क्षुधातृष्णादिजनितक्लेशो न भवेत् ।<br>यथा, रामा-<br>यणे । १ । २२ । ११ -- २२ । | पचाद्यच् ।) बकजातिविशेषः । (यथा,<br>मनुः ।<br>५ । १४ ।<br>“बकञ्चैव बलाकाञ्च काकोलं<br>खञ्जरीटकम् ॥”)<br>तत्पर्य्यायः । विषकण्ठिका २ ।<br>इत्यमरः । २ ।<br>५ । २५ ॥ विषकण्ठी ३ बलाकी ४ ।<br>इति<br>शब्दरत्नावली ॥ कारायिका ५<br>लिङ्गलिका ६ ।<br>इति जटाधरः ॥ विषकण्ठी ७ शुष्काङ्गा<br>८ |

दीर्घकन्धरा ९ धर्म्मान्ता १० कामुकी ११ श्येता
१२ मेघानन्दा १३ जलाश्रया १४ । बलेन शक्त्या
दूरमूर्द्धमकति । वल वल्ल संवरणे बलाकादय-श्चेत्याकन् वलाका । इति रायमुकुटकृतव्युत्पत्ति-
द्वयेन पवर्गीयबकारादिरन्त्यवकारादिश्चायं शब्दः ॥ * ॥ अस्या मांसगुणाः ।
वायुनाशित्वम् ।
स्निग्धत्वम् । सृष्टमलत्वम् । वृष्यत्वम् । कफपित्त-
हरत्वम् । हिमत्वञ्च । इति राजवल्लभः ॥ सारस-
हंसबलाकाचक्रक्रौञ्चादयोजले प्लवनात् प्लव-
संज्ञाः कथितास्ते तन्मांसं गुरूष्णञ्च बलदायि ।
अपि च ।
"अन्ये बकबलाकाद्या गुरवः प्राणिभक्षणात् ।"
इति राजनिर्घण्टः ॥
अन्यच्च ।
"हंससारसकाचाक्षबकक्रौञ्चसरारिकाः।
नन्दीमुखी सकादम्बा बलाकाद्याः प्लवाः स्मृताः ।
प्लवन्ते सलिले यस्मादेते तस्मात् प्लवाः स्मृताः ॥
प्लवाः पित्तहराः स्निग्धा मधुरा गुरवो हिमाः ।
वातश्लेष्मप्रदाश्चापि बलशुक्रकराः सराः ॥"
इति भावप्रकाशः ॥
(कामुकी । इति शाश्वतः ॥)

**बलाञ्चिता**, स्त्री, (बलेन अञ्चिता ।) रामवीणा ।
इति शब्दरत्नावली ॥

**बलाटः**, पुं, (बलेन अट्यते प्राप्यते इति । अट् +
घञ् ।) मुद्गः । इति हेमचन्द्रः ॥

**बलात्**, व्य, (बलमततीति । बल + अत् + क्विप् ।)
हठात् । बलादिति निपातो हठार्थे इति
सर्व्वग्रहप्रशमनी निःशेषविषनाशिनी ।
जयं सर्व्वत्र कुरुते धनदा सुमतिप्रदा ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ।)

**बलायः**, पुं, (अयतीति अयः प्रापकः । बलस्य
अयः ।) वरुणवृक्षः । इति शब्दचन्द्रिका ॥
(गुणादयोऽस्य वरुणशब्दे ज्ञातव्याः ॥)

**बलारातिः**, पुं, (बलस्य तन्नाम्ना प्रसिद्धस्यासुरस्य
अरातिः शत्रुः ।) इन्द्रः । इत्यमरः । १ । १ । ४६ ॥

**बलालकः**, पुं, (बलाय अलति समर्थो भवतीति ।
बल + अल् + ण्वुल् ।) पानीयामलकम् । इति
शब्दचन्द्रिका ॥

**बलाशः**, पुं, (बलमश्नातीति । बल + अश + अण् ।)
श्लेष्मा । इति हेमचन्द्रः । ३ । १२६ ॥ (यथा,
"बलाश एवायतमुन्नतञ्च
शोफं करोत्यन्नगतिं निवार्य्य ॥"
कण्ठगतरोगविशेषः । तल्लक्षणं यथा, --
"गले च शोफं कुरुतः प्रवृद्धौ
श्लेष्मानिलौ श्वासरुजोपपन्नम् ।
मर्म्मच्छिदं दुस्तरमेतमाहु-
र्ब्बलाशसंज्ञं निपुणा विकारम् ॥"
इति सुश्रुते निदानस्थाने षोडशेऽध्याये ॥
दन्त्यसान्तोऽप्ययं शब्दो दृश्यते ॥)

**बलासमः**, पुं, बुद्धः । इति त्रिकाण्डशेषः ॥

**ब(व)लाहकः**, पुं, (बलेन हीयते इति ।
बल + हा + क्वुन् । यद्वा, वारीणां वाहकः ।
जयद्रथस्य भ्रातृविशेषः । यथा, महाभारते ।
३ । २५४ । १२ ।
"जयद्रथो नाम यदि श्रुतस्ते
सौवीरराजः सुभगे ! स एषः ।
तस्यापरे भ्रातरोऽदीनसत्त्वा
बलाहकानीकविदारणाद्याः ॥"
नदविशेषः । स तु लवणसमुद्रगामी । यथा,
मात्स्ये । १२० । ७२ ।
"बलाहकश्च ऋषभश्चक्रो मैनाक एव च ।
विनिविष्टाः प्रतिदिशं निमग्ना लवणाम्बुधिम् ॥"
कुशद्वीपस्थपर्व्वतविशेषः । यथा, तत्रैव ।
१२१ । ५५ ।
"बलाहकस्तृतीयस्तु जात्यञ्जनमयो गिरिः ॥"
तारापीडस्य राज्ञः स्वनामख्यातो बलाधि-
कारी । यथा, कादम्बर्य्यां चन्द्रापीडविद्या-
भ्यासकथने । "चन्द्रापीडमानेतुं राजा बलाधि-
कृतं बलाहकनामानं आहूय बृहत्तुरगबल-
पदातिपरिवृतमतिप्रशस्तेऽहनि प्राहिणोत् ॥")

**बलाह्वकन्दः**, पुं, (बलं आह्वयतीति बलाह्वस्ता-
दृशः कन्दः ।) गुलञ्चकन्दः । इति
राजनिर्घण्टः ॥

**बलिः**, पुं, (बल्यते दीयते इति । बल दाने + "सर्व्व-
धातुभ्य इन् ।" उणा० ४ । ११७ । इतीन् ।)
करः । राजग्राह्यो भागः । (यथा, मनुः । ७ । ८० ।
"सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेद्बलिम् ॥"

स्वामी । इत्यमरटीकायां भरतः ॥ यथा, --
“बलात् संदूषयेद्यस्तु परभार्य्यां नरः क्वचित् ।
वधदण्डो भवेत्तस्य नापराधो भवेत् स्त्रियाः ॥”
इति मात्स्ये २०१ अध्यायः ॥

**बलात्कारः**, पुं, (बलात्करणम् । बलात् + कृ +

भावे घञ् ।) हठात्करणम् । तत्पर्य्यायः ।
प्रसभम् २ हठः ३ । इत्यमरः । २ । ८ । १०८
॥
हठात्कारः ४ प्रसभः ५ । इति शब्दरत्नावली
॥
“मत्ताभियुक्तस्त्रीबालबलात्कारकृतञ्च यत् ।
तदप्रमाणं लिखितं भयोपधिकृतन्तथा ॥”
इति ऋणादाने मिताक्षराधृतनारदवचनम्॥
(यथा, रघुः । १० । ४७ ।
“शापयन्त्रितपौलस्त्यबलात्कारकचग्रहै ॥”)

**बलात्मिका**, स्त्री, (बलमेव आत्मा स्वरूपं यस्याः ।)

हस्तिशुण्डीवृक्षः । इति शब्दरत्नावली ॥

**बलाद्या**, स्त्री, (बलाय आद्या श्रेष्ठा ।) बला ।

इति राजनिर्घण्टः ॥ (बलाशब्देऽस्या विवरणं
ज्ञातव्यम् ॥)

**बलानुजः**, पुं, (बलस्य बलरामस्य अनुजः कनिष्ठः ।)

श्राकृष्णः । इति पुराणम् ॥

**बलामोटा**, स्त्री, (बलमामोटयतीति । बल +

आ + मुट् + अच् । टाप् ।) नागदमनी । इति
भावप्रकाशः ॥ (यथास्या गुणाः ।
“बलामोटा कटुस्तिक्ता लघुः पित्तकफापहा ।
मूत्रकृच्छ्रव्रणान् रक्षो नाशयेज्जालगर्द्दभान् ॥

पृषोदरादित्वात् साधुः ।) मेघः ।
(यथा,
कुमारे । १ । ४ ।
“बलाहकच्छेदविभक्तरागा-
मकालसन्ध्यामिव धातुमत्ताम् ॥”)
मुस्तकः । इत्यमरः । १ । ३ । ६ ॥
पर्व्वतः ।
दैत्यविशेषः । नागविशेषः । इति
मेदिनी ॥
(यथा, महाभारते । २ । ९ । ९ ।
“कम्बलाश्वतरौ नागौ
धृतराष्ट्रबलाहकौ ॥”
बलाहकसर्पस्तु दर्व्वीकरणामन्तर्गतः ।
इति
सुश्रुते कल्पस्थाने ४ अध्यायः ॥)
रमागर्भोद्भवः
कल्किदेवपुत्त्रः । यथा, --
“तथा रमा सिते पक्षे वैशाखे
द्वादशीदिने ।
जामदग्न्याद्व्रतं चक्रे पूर्णं वर्षचतुष्टयम्
॥
पट्टसूत्रं करे बद्ध्वा भोजयित्वा द्विजान्
बहून् ॥
भुक्त्वा हविष्यं क्षीराक्तं सुमिष्टं
स्वामिना सह ॥
बुभुजे पृथिवीं सर्व्वामपूर्ब्बां स्वजनैर्वृता
।
सा पुत्त्रौ सुषुवे साध्वी
मेवमालबलाहकौ ॥
देवानामुपकर्त्तारौ यज्ञदानतपोव्रतौ ।
महोत्साहौ महावीर्य्यौ सुभगौ
कल्किसम्मतौ ॥”
इति कल्किपुराणे ३१ अध्यायः ॥
श्रीकृष्णरथाश्वविशेषः । यथा, --
“स्यन्दनस्तु शतानन्दः सारथिश्चास्य
दारुकः ।
तुरङ्गाः शैव्यसुग्रीवमेघपुष्पबलाहकाः
॥”
इति त्रिकाण्डशेषः ॥
(यथाच भागवते । १० । ५३ । ५ ।

“राजा शक्तैरमात्यैर्वर्षग्राह्यं धान्यादिभाग-
मानयेत् ।” इति कुल्लूकभट्टः ॥) उपहारः
।
पूजासामग्री । इत्यमरभरतौ ॥ (यथा,
मार्क-
ण्डेये । ९३ । ८ ।
“ददतुस्तौ बलिञ्चैव निजगात्रासृगुक्षितौ
॥”)
चामरदण्डः ।
बलिवैश्वनामकपञ्चमहायज्ञान्त-
र्गतभूतयज्ञः । इति हेमचन्द्रः । ३ ।
४८६ ॥ (गृहस्थो
हि पञ्चसूनापापेन प्रतिदिनं संबध्यते ।
तन्निष्कृ-
त्यर्थं प्रत्यहं पञ्च महायज्ञाः कर्त्तव्याः ।
यथाह
मनुः । ३ । ६८ -- ७१ ।
“पञ्चसूना गृहस्थस्य चुल्ली पेषण्युपस्करः
।
कण्डनी चोदकुम्भश्च बध्यते यास्तु
वाहयन् ॥
तासां क्रमेण सर्व्वासां निष्कृत्यर्थं
महर्षिभिः ।
पञ्च कॢप्ता महायज्ञा प्रत्यहं गृहमेधिनाम् ॥
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्
॥
पञ्चैतान् यो महायज्ञान् न हापयति
शक्तितः ।
स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते
॥”
“पशुवधस्थानं सूना । सूना इव सूना
हिंसा-
स्थानगुणयोगात् । चुल्ल्यादयः पञ्च
गृहस्थस्य
जीवहिंसास्थानानि । चुल्ली उद्धाहनी ।
पेषणी
दृषदुपलात्मिका । उपस्करः गृहोपकरण-
कुण्डसंमार्जन्यादिः । कण्डनी
उदूखलमूषले ।

|  | “स चाश्वैः<br>शव्यसुग्रीवमेघपुष्पबलाहकैः ।<br>युक्तं रथसुपानीय तस्थौ प्राञ्जलिरग्रतः<br>॥” | उदकुम्भो जलाधारकलशः ।” इति<br>तट्टीकायां<br>कुल्लूकभट्टः ॥ * ॥ गृहस्थानां<br>बलिरूपभूत-<br>यज्ञस्य प्रतिदिनकर्त्तव्यतया तस्य<br>विस्तृतिरुच्यते ।<br>गृहस्थः अनन्यचित्तो देवताध्यानपर एव<br>होमान् कृत्वा प्राच्यादिषु दिक्षु बलिं हरेत्<br>।<br>तत्प्रकरणमाह । प्राच्यां इन्द्राय नमः ।<br>इन्द्र- |

पुरुषेभ्यो नमः । दक्षिणस्यां यमाय नमः ।
यमपुरुषेभ्यो नमः । पश्चिमायां वरुणाय नमः ।
वरुणपुरुषेभ्यो नमः । उत्तरस्यां सोमाय
नमः । सोमपुरुषेभ्यो नमः । ननु मनौ । ३ । ८७
।
"इन्द्रान्तकाप्पतीन्दुभ्यः सानुगेभ्यो बलिं हरेत्
।"
इत्युक्तेः अन्तकाय नमः । अन्तकपुरुषेभ्यो नमः
इत्यादिप्रयोगः साधुः स्यात् । अत उच्यते
यद्यपि
शब्दावगम्यत्वाद्देवतात्वस्यान्तकाप्पतीन्दु
शब्दैरेवोद्देशो युक्तस्तथापि बह्वृचानुष्ठानसंवा-
दाद्बह्वृचगृह्ये च यमाय यमपुरुषेभ्यो वरु-
णाय वरुणपुरुषेभ्यो सोमाय सोमपुरुषेभ्य
इति प्रतिदिशमिति पाठात् यथोक्त एव
प्रयोगः । मरुद्भ्यो नमः इति द्वारे बलिं
दद्यात् । जले अद्भ्यो नमः । मुषलोलूखले वन-
स्पतिभ्यो नमः । वास्तुपुरुषस्य शिरःप्रदेशे
उत्तरपूर्ब्बस्यां दिशि श्रियै नमः इति बलिं
दद्यात् । वास्तुपुरुषस्य पाददेशे दक्षिणपश्चि-
मायां दिशि भद्रकाल्यै नमः । इत्यनेन दद्यात् ।
केचित्तु गृहस्थशयनस्य शिरःस्थान-भूप्रदेशे
श्रियै नमः । चरणभूप्रदेशे भद्रकाल्यै नमः
इत्याहुः । ततो गृहमध्ये ब्रह्मणे पतये नमः
बास्तोः पतये नमः इत्यनेन बलिं हरेत् । गृहा-
क्राशे विश्वेभ्यो देवेभ्यो नमः । दिवाचरेभ्यो
भूतेभ्यो नमः । दिवानक्तञ्चारिभ्यो भूतेभ्यो
नमः इत्यनेन दद्यात् । गृहस्योपरिस्थितगृहे
सर्व्वात्मभूतये नमः इत्यनेन बलिं दद्यात् ।
केचित् बलिदातुः पृष्ठदेशस्थभूभागे सर्व्वात्म-
भूतये नम इत्यनेन दद्यादित्याहुः । ततो बलि-
दात्रा प्राचीनावीतिना दक्षिणामुखेन च सता
उक्तबलिदानावशिष्टं सर्व्वमन्नं दक्षिणस्यां दिशि
पितृभ्यः स्वधा इत्यनेन देयम् । ततोऽन्यदन्नं
पात्रे समुद्धृत्य यथा रजसा न संगृह्यते तथा
भुवि शनकैः श्वपतितचाण्डालपापरोगिवायस-
कृमिप्रभृतिभ्यो दद्यात् । एवं नित्यं कुर्व्वन् परं
स्थानमभ्येतीति ॥ * ॥) यथा, --
"येऽर्च्चयन्ति सदा विष्णुं निश्चलेनान्तरात्मना ।

एवं गृहबलिं कृत्वा गृहे गृहपतिः शुचिः ।
आप्यायनाय भूतानां
कुर्य्यादुत्सर्गमादरात् ॥
श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यश्चावपेद्भु
वि ।
वैश्वदेवं हि नामैतत् सायं प्रातरुदाहृतम्
॥"
इति मार्कण्डेयपुराणम् ॥ * ॥
अथ बलिः । वैश्वदेवपश्चाद्भूमौ जलं
क्षिप्त्वा
तच्छेषान्नेन साङ्गुष्ठेन देवतीर्थेन ॐ
विश्वेभ्यो
देवेभ्यो नमः इति बलिं दद्यात् तदुपरि
जल-
मनेन मन्त्रेण दद्यात् एवं सर्व्वत्र
जलप्रक्षेपः ।
तदुत्तरे ॐ सर्व्वेभ्यो देवेभ्यो नमः ।
उभयो-
र्द्दक्षिणे प्राचीनावीती
पातितवामजानुर्द्दक्षिणा-
मुखो दक्षिणाग्रकुशत्रयोपरि सतिलमन्नं
भुग्न-
कुशत्रयेण पितृतीर्थेन ॐ पितृभ्यः
स्वधा । ततः
सर्व्वेषां बलीनामुपरि सर्व्वत्र प्रत्येकं
जल-
निषेकः । तत उपवीती देवतीर्थेन
बलिपात्र-
प्रक्षालनोदकेनान्नेन ऐशान्यां ॐ
यक्ष्मैतत्ते
नमस्तेऽस्तु मा माहिंसीः ॐ यक्ष्मणे
नमः इत्य-
नेन दद्यात् जलञ्च देयम् ॥
इत्यावश्यकबलिः ॥ * ॥
अथ काम्यबलिः । बलीनां पश्चिमे
जलेनोत्तराग्रां
रेखां कृत्वा भूमौ जलं दत्त्वा, --
"ॐ देवा मनुष्याः पशवो वयांसि
सिद्धाः सयक्षोरगदैत्यसंघाः ।

ततो जलं स्पृष्ट्वा अग्निं विसृज्य
नमस्कत्य
संप्राप्य जले क्रियमाणे बलीनग्नौ जले
वा
क्षिपेत् पिण्डवत् । अन्नाभावे
केवलजलेन
पात्रान्तरस्थजले कुर्य्यात् । ततः
कुशकुसुम-
सहितं जलपूर्णं ताम्रादिपात्रं हस्ते
निधाय
महावामदेव्य ऋषिर्विराड्गायत्री छन्द
इन्द्रो
देवता शान्तिकर्म्मणि जपे विनियोगः ।
ॐ
कयानश्चित्र आभूवदूती सदा वृधः
सखा कया
सचिष्ठया वृता । ॐ कस्त्वा सत्यो
मदाना-
मंहिष्ठो मत्सदन्धसः दृढाचिदारुजे
वसु । ॐ
अभीषूणः सखीनामविता जरितॄणां
शतम्भवा-
स्यूतये । इति वामदेव्यं गीत्वा
गानाशक्तौ त्रिः
पठित्वा ॐ स्वस्तिन इन्द्रो वृद्धश्रवाः
स्वस्तिनः
पूषा विश्ववेदाः ।
स्वस्तिनस्तार्क्ष्योऽरिष्टनेमिः
स्वस्तिनो बृहस्पतिर्द्धातु । ॐ
स्वस्तीति त्रिः
पठेत् । पार्व्वणश्राद्धादिकरणे
पार्व्वणादिकं
कृत्वैव वैश्वदेवादिकं कार्य्यं रात्रावपि
पाकसत्त्वे
यत्किञ्चिद्द्रव्यसत्त्वे वा
वैश्वदेववलिकर्म्मणी
कुर्य्यात् । शूद्रस्तु ब्राह्मणाभावे मन्त्रार्थं
भावयन्

न ते भूयोऽभिजायन्ते श्वेतद्वीपनिवासिनः ॥
एवं पूज्य विधानेन अतिथिं भोजयेत्ततः ।
सायं प्रातर्यदन्नं स्याद्धुत्वाग्निं तेन तद्बलिम् ॥"
इति वह्निपुराणम् ॥ * ॥
"ततोऽग्नेस्तर्पणं कुर्य्याद्दद्याच्च बलिमित्यथ ।
ब्रह्मणे गृहमध्ये तु विश्वेदेवेभ्य एव च ॥
धन्वन्तरिं समुद्दिश्य प्रागुदीच्यां वलिं क्षिपेत् ।
प्राच्यां शक्राय याम्यायां यमाय बलिमाहरेत् ॥
प्रतीच्यां वरुणायैव सोमायोत्तरतो बलिम् ।
दद्याद्धात्रे विधात्रे च बलिं द्वारे गृहस्य च ॥
अर्य्यम्णे च बलिं दद्यात् गृहेभ्यश्च समन्ततः ।
नक्तञ्चरेभ्यो भूतेभ्यो बलिमाकाशतो हरेत् ॥
पितृणां निर्व्वपेच्चैव दक्षिणाभिमुखः स्थितः ।
गृहस्थस्तत्परो भूत्वा सुसमाहितमानसः ॥
ततस्तोयमुपादाय तिष्ठेदाचमनाय वै ।
स्थानेषु निक्षिपेत् प्राक्षस्तास्ता उद्दिश्य देवताः ॥
प्रेताः पिशाचास्तरवः समस्ता
ये चान्नमिच्छन्ति मया प्रदत्तम् ॥
पिपीलिकाः कीटपतङ्गकाद्या
बुभुक्षिताः कर्म्मनिबन्धदेहाः ।
प्रयान्तु ते तृप्तिमिदं मयान्नं
तेभ्यो विसृष्टं सुखिनो भवन्तु ॥
येषां न माता न पिता न बन्धु-
र्नैवान्नसिद्धिर्न तथान्नमस्ति ।
तत्तृप्तयेऽन्नं भुवि दत्तमेतत्
प्रयान्तु तृप्तिं मुदिता भवन्तु ॥
ॐ भूतानि सर्व्वाणि तथान्नमेत-
दहञ्च विष्णुर्न यतोऽन्यदस्ति ।
तस्मादहं भूतनिकायभूत-
मन्नं प्रयच्छामि भवाय तेषाम् ॥
चतुर्द्दशो भूतगणो य एष
तत्र स्तिता येऽखिलभूतसंघाः ।
तृप्त्यर्थमन्नं हि मया विसृष्टं
तेषामिदन्तेऽमुदिता भवन्तु ॥"
इत्युच्चार्य्य बलिं दद्यात् ।
"ॐ ऐन्द्रवारुणवायव्याः सौम्या वै नैरृता-
स्तथा ।
वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं मयार्पितम् ॥"
ॐ वायसेभ्यो नम इति पुनर्जलं देयम् ।
भूमौ जलं दत्त्वा, --
"ॐ श्वानौ द्वौ श्यावशवलौ
वैवश्वतकुलोद्भवौ ।
ताभ्यां पिण्डं
प्रयच्छामिस्यातामेतावहिंसकौ ॥"
ॐ श्वभ्यां नमः ततः पुनर्जलं देयम् ।
भूमौ
जलं दत्त्वा ॐ
चण्डालपतितपापरोगिभ्योनमः
पुनर्जलं देयम् । भूमौ जलं दत्त्वा ॐ
धर्म्म-
राजचित्रगुप्ताभ्यां नमः ततः
पुनर्जलदानम् ।
नमो नम इति मन्त्रेण कुर्य्यात् ।
अषिभक्ताना-
मेककरणादेव सर्व्वेषां सिद्धिः ।
इत्याह्निका-
चारप्रयोगतत्त्वम् ॥ * ॥
नवग्रहबलिर्यथा, --
"गुडौदनं रवेर्दद्यात् सोमाय
घृतपायसम् ।
यावकं मङ्गलायैव क्षीरान्नं सोमसूनवे ॥
दध्योदनञ्च जीवाय शुक्राय तु
घृतौदनम् ।
शनैश्चराय कृशरमाजमांसञ्च राहवे ॥
चित्रौदनञ्च केतुभ्यः सर्व्वभक्ष्यैः
समर्च्चयेत् ॥"
सर्व्वभक्ष्यैस्तु तत्तद्द्रव्याभावे
यथालाभोपपन्नै-
र्भक्ष्यैः । इति ग्रहयज्ञतत्त्वम् ॥ * ॥
दैत्यभेदः । इति मेदिनी । (अयं
सावर्णस्य मनो-
रन्तरे इन्द्र आसीत् । यथा, मार्कण्डेये
। ८० । १० ।
"तेषामिन्द्रो भविष्यस्तु
बलिर्वैरोचनिर्मुने ! ॥")
स च दैत्यो विरोचनपुत्त्रः । तस्य
अशनायां
पत्न्यां वाणज्येष्ठं पुत्त्रशतं जातम् ।
इति
श्रीभागवतम् ॥ यथा, --
"विरोचनस्य पुत्त्रस्तु बलिरेकः
प्रतापवान् ।
बलेः पुत्त्रशतं जज्ञे राजानः सर्व्व एव
ते ॥
तेषां प्रधानाश्चत्वारो विक्रान्ताः
सुमहाबलाः ।
सहस्रबाहुर्ज्येष्ठश्च कन्ये द्वे च बलेः
शुभे ॥
बलेः पुत्त्राश्च पौत्त्राश्च शतशोऽथ
सहस्रशः ।
बालेयो नाम विख्यातो गणो
विक्रान्तपौरुषः ॥"
इत्यग्निपुराणम् ॥

| | | |
|---|---|---|
| | | तस्य पूर्ब्बजन्मवृत्तान्तो यथा, --<br>शुक्र उवाच ।<br>"धर्म्मध्वजो नाम बभूव राजा<br>विदेहदेशे निजधर्म्मशीलः ।<br>यज्वा सुवाग्मी शुभकर्म्मकर्त्ता<br>स विष्णुभक्तोऽनुदिनं महात्मा ॥<br>तस्य त्वमासीर्नृपतेः सुभृत्यो<br>द्वेष्टा द्विजानां पिशुनोऽविवेकी ।<br>द्वेष्टा गुरूणां सततं त्वदाता<br>नो साध्वसं ते वत पारलौक्यम् ॥ |

एवंविधस्त्वं वृपसत्तमेन
प्रोक्तः कुरुष्वाघविनाशनाय ।
स्नानं हरेर्येन सुखं हि लप्स्ये
लोके परे गव्यघृतेन वापि ॥
श्रुत्वा भवांस्तद्वचनञ्चकार
स्नानं ह्यनेनापि जनार्द्दनस्य ।
दानं तथा गोः कृतवान् विभक्त्या
तस्मात् फलं विद्धि तवाप्रमेयम् ॥
एवं त्वया प्राप्यमशेषराज्यं
देवासुराणामहतं विपक्षैः ।
संलप्स्यसे त्वं पुनरेव सर्व्वं
संपूजयन् भक्तियुतः सुरेशम् ॥"
इत्यग्निपुराणम् ॥
बलिराजयज्ञे वामनदेवभिक्षा ।
यथा, --
लोमहर्षण उवाच ।
"सपर्व्वतवनामुर्व्वीं दृष्ट्वा संक्षुभितां बलिः ।
पप्रच्छोशनसं शुक्रं प्रणिपत्य कृताञ्जलिः ॥
आचार्य्य क्षोभमायाति साब्धिभूभृद्वना मही ।
कस्माच्च नासुरान् भागान् प्रतिगृह्णन्ति वह्नयः ॥
इति पृष्टोऽथ बलिना काव्यो वेदविदांवरः ।
उवाच दैत्याधिपतिं चिरं ध्यात्वा महामतिः ॥
अवतीर्णो जगद्योनिः कश्यपस्य गृहे हरिः ।
वामनेनेह रूपेण परमात्मा सनातनः ॥
स नूनं यज्ञमायाति तव दानवपुङ्गव ! ।
तस्य पादप्रविक्षेपादियं प्रचलिता ही ॥
इत्यमस्य जगद्धातुर्माया कृष्णस्य सात्वती ।
तद्वदामि वृणुष्वेष्टं ममार्थी सततं प्रियः ॥
इत्युक्तो दैत्यपतिना प्रीतिगर्भान्वितं वचः ।
प्राह सस्मितगम्भीरं भगवान् वामनाकृतिः ॥
ममाग्निशरणार्थाय देहि भूमिं पदत्रयाम् ।
सुवर्णग्रामरत्नादि तदर्थिभ्यः प्रदीयताम् ॥
एतच्छ्रुत्वा तु गदितं वामनस्य महात्मनः ।
ददौ तस्मै महाबाहुर्व्वामनाय पदत्रयम् ॥
पाणौ तु पतिते तोये वामनोऽभूदवामनः ।
सर्व्वदेवमयं रूपं दर्शयामास तत्क्षणात् ॥
जित्वा लोकत्रयं कृत्स्नं हत्वा चासुरपुङ्गवान् ।
पुरन्दराय त्रैलोक्यं ददौ विष्णुरुरुक्रमः ॥
सुतलं नाम पातालमधस्ताद्वसुधातलम् ।
बलेर्द्दत्तं भगवता विष्णुना प्रभविष्णुना ॥
अथ दैत्येश्वरं प्राह विष्णुः सर्व्वेश्वरेश्वरः ।
यत्त्वया सलिलं दत्तं गृहीतं पाणिना मया ॥
कल्पप्रमाणं तस्मात्ते भविष्यत्यायुरुत्तमम् ।
वैवस्वते तथातीते बले ! मन्वन्तरे तथा ॥
सावर्णिके तु संप्राप्ते भवानिन्द्रो भविष्यति ।
इदानीं भुवनं दत्तं सर्व्वं शक्राय सर्व्वदा ॥
यदा सुरैश्च विप्रैश्च विरोधं त्वं करिष्यसि ।
बन्धिष्यति तदा पाशो वारुणो घोरदर्शनः ॥
बलिरुवाच ।
तत्रासतो मे पाताले भगवन् ! भवदाज्ञया ।
किं भविष्यत्युपादानमुपभोगोपयोगकम् ॥
श्रीभगवानुवाच ।
दानान्यविधिदत्तानि श्राद्धान्यश्रोत्रियाणि च ।
कृतान्यश्रद्धया यानि तानि दास्यन्ति ते फलम् ॥
अदक्षिणास्तथा यज्ञाः क्रियाश्चाविधिना कृताः ।
फलानि तव दास्यन्ति ह्यधीतान्यव्रतानि च ॥
उदकेन विना पूजा विना दर्भेण या क्रिया ।
आज्येन च विना होमं फलदास्ते च ते बले ! ॥"
इति वामनपुराणे ३१ अध्यायः ॥ * ॥
ययातिवंशोद्भवसुतपोराजपुत्त्रः । यथा, विष्णु-
छेदयेत्तेन खड्गेन बलिं पूर्ब्बमुखस्थितम् ।
अथवोत्तरवक्त्रञ्च स्वयं पूर्ब्बाननस्ततः ॥" * ॥
सकृत्प्रहारेण बलिहननं तदभावे दोषञ्चाह तत्रैव ।
"हन्यादेकप्रहारेण स्वयं वा चान्यतोऽपि वा ॥
यद्यप्येकेन घातेन बलिच्छेदो न जायते ।
तदब्दं व्याप्य च महान् कर्त्तुर्हानिः पदे पदे ॥"
तन्त्रान्तरे ।
"एकखड्गप्रहारेण पशुर्यत्र न हन्यते ।
तदा विघ्नं विजानीयात् कर्त्तुर्व्वा छेत्तुरेव वा ॥"
निबन्धेऽपि ।
"यशोहानिर्ज्ञानहानिश्चार्थहानिस्ततः परम् ।
पुत्त्रहानिः सुते सत्त्वे तदसत्त्वे निजक्षयः ॥
अतः सद्यो महेशानि ! तन्मांसैर्होमयेत् सुधीः ।
होमादेष भवेच्छान्तिर्म्महत्येव न संशयः ॥" * ॥
प्रकारान्तरशान्तिमाह तत्रैव ।
"हन्यादेकप्रहारेण चान्यथा दोषमावहेत् ॥
तच्छान्तये जपेद्विद्यां तारादेव्याः सहस्रकम् ।
सहस्रं जुहुयान्मांसैर्द्दद्याद्वा स्वर्णमाषकम् ॥
रुधिरं तत्तु पार्व्वत्यै न तु देयं कदाचन ।
बलिमन्यं समादाय भगवत्यै निवेदयेत् ॥" * ॥
निबन्धे ।
"यद्यप्येकेन घातेन महिषो नैव छिद्यते ।
तदब्दं महती हानिः कर्त्तुः पुत्त्रादिसम्पदाम् ॥
यस्मात् प्रजायते देवि ! ततः शान्तिं समाचरेत् ॥
आनीय महिषं तत्र घातयित्वा च तत्र वै ।
सास्थिभिर्लोमसहितैर्हुनेद्देवि ! यथार्थतः ॥
तच्छान्तये जपेद्विद्यां कालीं वा तारिणां पराम् ।
अयुतं परमेशानि ! सहस्रं वापि साधकः ॥
सहस्रं विल्वपत्रैस्तु जुहुयात् संस्कृतेऽनले ।
ब्राह्मणं वा गुरुं वापि वरयेद् वसुभिः प्रिये ! ॥
पण्डितं वरयेद्वाथ बहुमानपुरःसरः ।
ततः स्वर्णं ब्राह्मणाय तस्मै दद्यात् शुभाप्तये ॥
एवञ्चेद्यजमानस्य शान्तिर्भवति नित्यशः ।

तत्सन्निधानादसुरा भागार्हा
नासुरोत्तम ! ॥
भुञ्जते नासुरान् भागानपि तेन
त्रयोऽग्नयः ।
शुक्रस्य वचनं श्रुत्वा
हृष्टलोमाब्रवीद्बलिः ॥
धन्योऽहं कृतपुण्यश्च यतो
जगत्पतिः स्वयम् ।
यज्ञमभ्यागतो ब्रह्मन् ! मत्तः
कोऽन्योऽधिकः
पुमान् ।
यं योगिनः सदोद्युक्ताः
परमात्मानमव्ययम् ॥
द्रष्टुमिच्छन्ति देवोऽसौ
ममाध्वरमुपैष्यति ।
यन्मयाचार्य्य ! कर्त्तव्यं
तन्ममादेष्टुमर्हसि ॥
शुक्र उवाच ।
त्वयास्य दैत्याधिपते !
स्वल्पकेऽपि हि वस्तुनि ।
प्रतिज्ञा नैव वोढव्या वाच्यं साम
तथा फलम् ॥
बलिरुबाच ।
ब्रह्मन् ! कथमहं ब्रूयामन्येनापि हि
याचितः ।
नास्तीति किमु देवेशे
संसाराघौघहारिणि ॥
लोमहर्षण उवाच ।
इत्येवं वदतस्तस्य सम्प्राप्तः स
जनार्द्दनः ।
सर्व्वदेवमयोऽचिन्त्यो
मायावामनरूपधृक् ॥
तं दृष्ट्वा यज्ञवाटन्तु प्रविष्टमसुराः
प्रभुम् ।
जग्मुः प्रभावात् क्षोभन्ते तेजसा
तस्य निष्प्रभाः ॥
स चार्घ्यमादाय बलिः
प्रोद्भूतपुलकस्तदा ।
पूजयामास गोविन्दं प्राह चेदं
महासुरः ॥
बलिरुवाच ।

पुराणे । ४ । १८ । १ । "तिति क्षोरपि रुष-
द्रथः पुत्त्रोऽभूत् तस्यापि हेमः हेमस्य सुतपाः
सुतपसश्च बलिः ॥" (तथा च भागवते । ९ ।
२३ । ४ ।
"ततो होमोऽथ सुतपा बलिः सुतपसोऽभवत्
॥"
मुनिविशेषः । यथा, महाभारते । २ । ४ ।
१० ।
"अर्व्वावसुः सुमित्रश्च मैत्रेयः सुनको बलिः
॥")
देवतोद्देशेन घातार्थोपकल्पितच्छागादिः ।
यथा,
भविष्ये ।
"अजानां महिषाणाञ्च मेषाणाञ्च तथा वधात् ।
प्रीणयेद्विधिवत् दुर्गां मांसशोणिततर्पणैः ॥"
इति ।
पशुघातपूर्ब्बकरक्तशीर्षयोर्ब्बलित्वम् । यथा, -
-
"स्थाने नियोजयेद्रक्तं शिरश्च सप्रदीपकम् ।
एवं दत्त्वा बलिं पूर्णं फलं प्राप्नोति साधकः
॥"
इति च दुर्गोत्सवतत्त्वम् ॥ * ॥
तच्छेदनार्थखड्गलक्षणमाह निबन्धतन्त्रे ।
"द्वादशाङ्गुलिको मुष्ट्या दीर्घो द्वात्रिंशदङ्गुलः
।
षडङ्गुलस्तु विस्तारः खड्गः कार्य्यो
विधूपमः ॥

कुतस्तस्यैव शङ्का स्यात् वृद्धिस्तद्वत्सरावधि
॥ *
अथवा सर्व्वतोभद्रे नवकुम्भं निधापयेत् ।
सौवर्णं राजतं वापि ताम्रं वा तैजसन्तु वा ।
मार्त्तिक्यं वा चरेत्तत्र वित्तशाठ्यं न चाचरेत् ॥
तत्रैव कालिकां तारां तथा महिषमर्द्दिनीम् ।
यजेद्वा त्रिपुरां देवीं समस्तरश्मिमण्डिताम् ॥
कुलदीपैस्तथा वस्त्रैर्धनधान्यादिभिः प्रिये ! ।
पूजयेत् परमेशानीं वित्तशाठ्यविवर्ज्जितः ॥
बलिमन्यं छागलं वा तरुणञ्च सुलक्षणम् ।
घातयित्वा पुरोभागे चतुर्धा शोणितं न्यसेत् ॥
अपरं शोणितं तत्र राजते खर्परे न्यसेत् ।
असृग्भिस्तर्पयेद्देवीं वक्ष्यमाणविधानतः ॥
एकेन वटुकादींश्च तथैकेनापि भैरवान् ।
अपरेणापि क्षेत्रेशानन्येन योगिनीगणम् ॥
तर्पयित्वा ततः पश्चाद्देव्यास्तर्पणमाचरेत् ।
दक्षिणान्तं ततः कृत्वा पठेन्नामसहस्रकम् ॥
यथाशक्ति महेशानि ! भूयो देवीं घटे यजेत् ।
घटवक्त्रे वटाश्वत्थप्लक्षोडम्बरशाखिकाम् ॥

| | | |
|---|---|---|
| सुवर्णरत्नसंघातान्<br>गजाश्वमहिषांस्तथा।<br>स्त्रियो वस्त्राण्यलङ्कारान् गावः<br>कुप्यञ्च पुष्क-<br>लम्। | | |

ब्रह्मकूर्च्चञ्च निःक्षिप्य चषकं सफलाक्षतम्।
पिधाय कुम्भवक्त्रञ्च क्षौमेणाच्छादयेत् पुनः ॥
जप्त्वा नत्वा ततः साध्यं तत्रानीय सुहृद्वृतम्।
नदतसु पञ्चवाद्येषु मुहूर्त्ते शोभने सुधीः ॥
अभिषिञ्चेन्मातृकार्णैर्यजमानञ्च साधकः।
सुमङ्लाभिर्नारीभिः क्षिप्तपुष्पाक्षताञ्चितम्॥
अर्च्चितानां द्विजातीनामाशीर्व्वादपुरःसरम्।
करेणास्य शिरः स्पुष्ट्वा प्रयुञ्जीताशिषं पुनः ॥
भद्रमस्तु शिवञ्चास्तु महामाया प्रसीदतु।
रक्षन्तु त्वां सदा देवाः सम्पदः सन्तु सर्व्वदा ॥
अथोत्थायाभिषिक्तः सन् तोषयेद्ब्राह्मणान् धनैः।
एवञ्चेद्यजमानस्य शान्तिर्भवति नित्यदा ॥
प्रसङ्गाद्बलिविघ्नस्य शान्तिकर्म्म निरूपितम्।
सर्व्वसम्पत्करं पुंसां सर्व्वसौभाग्यसिद्धिदम्।
भूते च दुर्निमित्तादावप्येवं शान्तिमाचरेत् ॥"
इति निबन्धतन्त्रोक्तबलिविघ्नशान्तिसंग्रहः ॥ * ॥
अन्यच्च।
"एकखड्गप्रहारेण पशुर्यत्र न हन्यते।
तदा विघ्नं विजानीयाद्दातुर्व्वा च्छेत्तुरेव वा ॥"
प्रायश्चित्तमाह।
"हन्यादेकप्रहारेण अन्यथा दोषमावहेत्।
तच्छान्तये जपेद्विद्यां दुर्गाबीजसहसकम्।
सहस्रं जुहुयाद्देव्यै प्रदद्यात् स्वर्णमाषकम् ॥"
इति कृत्यमहार्णवे वाचस्पतिमिश्रैरुक्तम् ॥ * ॥
अपरञ्च कालिकापुराणे।
"चन्द्रहासेन कट्टारैश्छेदनं मुख्यमिष्यते।
हस्तेन च्छेदयेद्यस्तु प्रोक्षितं साधकः पशुम्।
पक्षिणं वाथ राजेन्द्र ! ब्रह्महत्यामवाप्नुयात् ॥"
मत्स्यसूक्ते।
"छेदयेत्तीक्ष्णखड्गेन प्रहारेण सकृद्बुधः ॥"
इति दुर्गोत्सवतत्त्वम् ॥
पश्वादिबलिदानविधिर्य्यथा, --
"बलिदानषिधानञ्च श्रूयतां मुनिसत्तम ! ।
मायातिं महिषं छागं दद्यान्मेषादिकन्तथा ॥
सहस्रवर्षं सा प्रीता दुर्गा मायातिदानतः।
महिषेण वर्षशतं दशवर्षञ्च छागलात् ॥
अथ नरबलिः।
"पितृमातृविहीनञ्च युवकं व्याधिवर्जितम्।
विवाहितं दीक्षितञ्च परदारविहीनकम् ॥
अजारिकं विशुद्धञ्च सच्छूद्रं मूलकं वरम्।
तद्बन्धुभ्यो धनं दत्त्वा क्रीतं मूल्यातिरेकतः ॥
स्नापयित्वा च तं धर्म्मी संपूज्य वस्त्रचन्दनैः।
माल्यैर्धूपैश्च सिन्दूरैर्दधिगोरोचनादिभिः ॥
तञ्च वर्षं भ्रामयित्वा चरद्वारेण यत्नतः।
वर्षान्ते च समुत्सृज्य दुर्गायै तं निवेदयेत् ॥
अष्टमीनवमीसन्धौ दद्यान्मायातिमेव च।
इत्येवं कथितं सर्व्वं बलिदानप्रसङ्गतः ॥" * ॥
अपि च।
"सप्तम्यां पूजनं कृत्वा बलिं दद्याद्विचक्षणः।
अष्टम्यां पूजनं शस्तं बलिदानविवर्ज्जितम् ॥
अष्टम्यां बलिदानेन विपत्तिर्जायते ध्रुवम्।
दद्याद्विचक्षणो भक्त्या नवम्यां विधिवद्बलिम् ॥
बलिदानेन विप्रेन्द्र ! दुर्गाप्रीतिर्भवेन्नृणाम्।
हिंसाजन्यञ्च पापञ्च लभते नात्र संशयः ॥
उत्सर्गकर्त्ता दाता च च्छेत्ता पोष्टा च रक्षकः।
अग्रपश्चान्निरोद्धा च सप्तैते वधभागिनः ॥
वर्षान् पञ्चशतान्येव तृप्तिमाप्नोति केवलाम् ॥
रोहितस्य तु मत्स्यस्य मांसैर्वार्द्धीनसस्य च।
तृप्तिमाप्नोति वर्षाणां शतानि त्रीणि मत्प्रिया ॥
त्रिःपिबंस्त्विन्द्रियक्षीणः श्वेतो वृद्धस्त्वजापतिः।
वार्द्धीनसः प्रोच्यतेऽसौ हव्ये कव्ये च सत्कृतः ॥
नीलग्रीवो रक्तशीर्षः कृष्णपादः शितच्छदः।
वार्द्धीनसः स्यात् पक्षीशो मम विष्णोरतिप्रियः ॥
नरेण वलिना देवी सहस्रं परिवत्सरान्।
विधिदत्तेन चाप्नोति तृप्तिं लक्षं त्रिभिर्नरैः ॥
नारेणैवाथ मांसेन त्रिसहस्राणि वत्सरान्।
तृप्तिं प्राप्नोति कामाख्या भैरवो मम रूपधृक् ॥
मन्त्रपूतं शोणितन्तु पीयूषं जायते सदा।
मस्तकञ्चापि तस्यात्ति मांसञ्चापि सदा शिवा ॥
तस्मात्तु पूजने दद्याद्बलेः शीर्षञ्च लोहितम्।
भोज्ये होमे च मांसानि नियुञ्जीयाद्विचक्षणः ॥
पूजासु नाम मांसानि द्द्याद्वै साधकः क्वचित्।
ऋते तु लोहितं शीर्षममृतं तत्तु जायते ॥ * ॥
कुष्माण्डमिक्षुदण्डञ्च मद्यमासवमेव च।
एते वलिसमाः प्रोक्तास्तृप्तौ छागसमाः सदा ॥
चन्द्रहासेन कर्त्र्या वा छेदनं मुख्यमिष्यते।
दात्रासिधेनुक्रकचसङ्कुलाभिस्तु मध्यमम्।
क्षुरक्षुरप्रभल्लैश्चैवाधमं परिकीर्त्तितम् ॥

वर्षमेकेन कुष्माण्डैः पक्षिभिर्हरिणैस्तथा ।
दशवर्षं कृष्णसारैः सहस्राब्दञ्च गण्डकैः ॥
कृत्रिमैः पिष्टनिर्म्माणैः षण्मासं पशुभिस्तथा ।
मासं सुशाखादिफलैरक्षतैरिति नारद ! ॥
युवकं व्याधिहीनञ्च सशृङ्गं लक्षणान्वितम् ।
विशुद्धमविकाराङ्गं सुवर्णं पुष्टमेव च ॥
शिशुना बलिना दातुर्हन्ति पुत्त्रञ्च चण्डिका ।
वृद्धेनैव गुरुजनं कृशेन बान्धवन्तथा ॥
कुलञ्चैवाधिकाङ्गेन हीनाङ्गेन प्रजान्तथा ।
कामिनीं शृङ्गभङ्गेन काणेन भ्रातरन्तथा ॥
घण्टिकेन भवेन्मृत्युर्विघ्नञ्च चित्रमस्तके ।
मृतं मित्रं ताम्रपृष्ठे भ्रष्टश्रीः पुच्छहीनके ॥
मायातीनाञ्च निर्णीतं श्रूयतां मुनिसत्तम् ! ।
वक्ष्याम्यथर्व्ववेदोक्तं फलहानिर्व्यतिक्रमे ॥" *
॥

योऽयं हन्ति स तं हन्ति चेति
वेदोक्तमेव च ।
कुर्व्वन्ति वैष्णवीं पूजां वैष्णवास्तेन
हेतुना ॥"
इति ब्र ह्मवैवर्त्ते प्रकृतिखण्डे ।
६१-६२ । अध्यायौ ॥
श्रीभगवानुवाच ।
"क्रमन्तु बलिदानस्य स्वरूपं
रुधिरादिभिः ।
यथा स्यात् प्रीतये सम्यक् तथा
वक्ष्यामि
पुत्त्रकौ ॥
वैष्णवीतन्त्रकल्पोक्तः क्रमः सर्व्वत्र
सर्व्वदा ।
साधकैर्व्वलिदानेषु ग्राह्यः सर्व्वसुरस्य
तु ॥
पक्षिणः कच्छपा ग्राहा मत्स्या नवविधा
मृगाः ।
महिषो गोधिका गावश्छागो बभ्रूश्च
शूकरः ॥
खड्गश्च कृष्णसारश्च गोधिका सरभो
हरिः ।
शार्द्दूलश्च नरश्चैव स्वगात्ररुधिरन्तथा
।
चण्डिकाभैरवादीनां बलयः
परिकीर्त्तिताः ॥
बलिभिः साध्यते मुक्तिं बलिभिः
साध्यते दिवम् ।
बलिदानेन सततं जयेत् शत्रून् नृपान्
नृपः ॥ * ॥
मत्सानां कच्छपानाञ्च रुधिरैः सततं
शिवा ।
मासैकन्तृप्तिमायाति ग्राहैर्मासांस्तु
त्रीनथ ॥
मृगाणां शोणितैर्देवी नराणामपि
शोणितैः ।
अष्टौ मासानवाप्नोति तृप्तिं कल्याणदा
च सा ॥
गोगोधिकानां रुधिरैर्व्वार्षिकीं
तृप्तिमाप्नुयात् ॥

एभ्योऽन्यैः शक्तिबाणाद्यैर्बलिश्छेद्यः
कदापि न ।
नात्ति देवी वलिं तन्तु दाता
मृत्युमवाप्नुयात् ॥
हस्तेन छेदयेद्यस्तु प्रोक्षितं साधकः पशुम्
।
पक्षिणं वा ब्रह्महत्यां सोऽवाप्नोति
सुदुःसहाम् ।
नामन्त्र्य खड्गन्तु बलिं नियुञ्जीत
विचक्षणः ॥
खडगस्यामन्त्रणे मन्त्रा यावन्तः कथिताः
पुरा ।
महामायाबलौ ते वै योज्यास्तत्रोदिता
बुधैः ॥
तैः सार्द्धमेते मन्त्रास्तु योज्याः
खड्गाभिमन्त्रणे ।
पूजने शारदादीनां कामाख्याया विशेषतः
॥
द्विः कालीति ततो देव्या
वज्रेश्वरिपदन्तथा ।
ततोऽनु लौहदण्डायै नमः शेषे तु योजयेत्
॥
संपूज्यानेन मन्त्रेण खड्गमादाय पाणिना ।
कालरात्र्यास्तु मन्त्रेण तं
खड्गमभिमन्त्रयेत् ॥
नेत्रबीजस्य मध्यन्तु द्विरावृत्य प्रयोजयेत्
।
ततोऽनु कालीति विकटदंष्ट्रेऽनु तत्पदम् ॥
हान्तादीनां तृतीयेन स्वरेणैकादशेन च ।
योजितो नादबिन्दुभ्यां द्वौ
तत्पश्चान्नियोजयेत् ॥
फेत्कारिणिपदं तस्मात् खादय छेदयेति च
।
सर्व्वदुष्टानिति ततो द्विर्मारय लुलापकम् ॥
खड्गेन छिन्धि च्छिन्धीति ततः किल
किलेति
वै ।
ततश्चिकि चिकीत्येव ततः पिब पिबेति च
॥
ततोऽनु रुधिरञ्चैव स्फौं स्फौं किरि
किरीति च ।

| | | |
|---|---|---|
| | कृष्णसारस्य रुधिरैः शूकरस्य च शोणितैः ।<br>आप्नोति सततं देवी तृप्तिं द्वादशवार्षिकीम् ॥<br>अजाविकानां रुधिरैः पञ्चविंशतिवार्षिकीम् ।<br>महिषाणाञ्च खड्गानां रुधिरैः शतवार्षिकीम् ।<br>तृप्तिमाप्नोति परमां शार्द्दूलरुधिरैस्तथा ॥<br>सिंहस्य सरभस्याथ स्वगात्रस्य च शोणितैः ।<br>देवी तृप्तिमवाप्नोति सहस्रं परिवत्सरान् ॥<br>मांसैरपि तथा प्रीती रुधिरैर्यस्य यावती ॥<br>कृष्णसारमृते खड्गं तथा मत्स्यञ्च रोहित्रम् ।<br>वार्द्धीनसयुगञ्चापि फलं तेषां पृथक् शृणु ॥ * ॥<br>कृष्णसारस्य मांसेन तथा खड्गेन चण्डिका । | कालिकायै नम इति कालरात्र्यास्तु मन्त्रकम् ॥<br>इत्यनेन तु मन्त्रेण करवालेऽभिमन्त्रिते ।<br>कालरात्रिः स्वयं तस्मिन् प्रसीदत्यरिहानये ॥ * ॥<br>बलेः पूर्ब्बोदिता मन्त्रा नित्यं ग्राह्यास्तु साधकैः ।<br>अयं मन्त्रस्तु वक्तव्यस्तस्य हत्याविहानये ॥<br>यज्ञार्थे पशवः सृष्टाः स्वयमेव स्वयम्भुवा ।<br>अतस्त्वां घातयिष्यामि तस्माद्यज्ञे वधोऽवधः ॥ |

ततो दैवतमुद्दिश्य काममुद्दिश्य चात्मनः ।
छेदयेत्तेन खड्गेन बलिं पूर्ब्बाननं तु तम् ॥
अथवोत्तरवक्तन्तं स्वयं पूर्ब्बमुखस्तथा ।
पूर्ब्बोक्तान् सैन्धवादींस्तु रक्ते वश्यं नियोजयेत् ॥
सौवर्ण राजतं ताम्रं रैत्यं पत्रपुटञ्च वा ।
माहेयं कांस्यमथवा यज्ञकाष्ठमयञ्च वा ।
पात्रं रुधिरदानाय कर्त्तव्यं विभवावधि ॥
न लौहे वाल्कले वापि रैत्ये वाङ्गेऽथ सैसके ।
दद्याद्रक्तं बलीनान्तु भूमौ स्रुचि स्रुवेऽथवा ॥
न घटे भूतले नापि न क्षुद्रे पानभाजने ।
रुधिराणि प्रदद्यात्तु भूतिकामो नरोत्तमः ॥
नरस्य तु सदा रक्तं माहेये तैजसेऽथवा ।
दद्यान्नरपतिस्तत्तु न पुटादौ कदाचन ॥ * ॥
हयमेधमृते दद्यान्न कदाचिद्धयं बलिम् ।
तथा दिक्पालमेधेषु गजं दद्यान्नराधिपः ॥
न कदाचित्तथा देव्यै प्रदद्याद्धयहस्तिनौ ।
हयाकर्षे चामरन्तु बलिं दद्यान्नराधिपः ॥
सिंहं व्याघ्रं नरञ्चापि स्वगात्ररुधिरन्तथा ।
न दद्याद्ब्राह्मणो मद्यं तथा देव्यै कदाचन ॥
सिंहव्याघ्रनरान्दत्त्वा ब्राह्मणो नरकं व्रजेत् ।
इहापि स्यात् स हीनायुः सुखसौभाग्यवर्जितः ॥
स्वगात्ररुधिरं दत्त्वा चात्महत्यामवाप्नुयात् ।
मद्यं दत्त्वा ब्राह्मणस्तु ब्राह्मण्यादेव हीयते ॥
न कृष्णसारं वितरेद्बलिन्तु क्षत्त्रियः क्वचित् ।
ददतः कृष्णसारन्तु ब्रह्महत्या भवेद्यतः ॥
यत्र सिंहस्य व्याघ्रस्य नरस्य विहितो वधः ।
ब्राह्मणोक्ते तु बल्यादौ तत्रायं विहितः क्रमः ॥
कृत्वा घृतमयं व्याघ्रं नरं सिंहञ्च भैरव ! ।
अथवा पूपविकृतं यवक्षोदमयञ्च वा ।
हरिस्त्वं हररूपेण यथा वहसि चण्डिकाम् ।
तथाशुभानि मे नित्यं बहुविघ्नांश्च सूदय ॥
त्वं हरिः सिंहरूपेण जगत्प्रत्यूहरूपिणम् ।
जघान येन सत्येन हिरण्यकशिपुं हरन् ।
इत्येवं सिंहपूजायां क्रम उक्तो मयानघ ! ॥ * ॥
नरे स्वगात्ररुधिरे पर्य्यायं शृणु भैरव ! ।
पीठे चेद्दीयते मर्त्यं बलिं दद्यात् श्मशानके ॥
श्मशानं हेरुकाख्यञ्च तत्पूर्ब्बं प्रतिपादितम् ।
कामाख्यानिलये शैले तन्त्रादौ विद्धि तत्क्रमम् ॥
मम रूपं श्मशानन्तु भैरवाख्यन्तु कथ्यते ।
तन्त्राङ्गत्वं तपःसिद्धौ त्रिभागन्तु भविष्यति ॥
पूर्ब्बांशे भैरवाख्ये तु समुत्सृष्टिर्नरस्य च ।
दक्षिणांशे शिरो दद्यात् भैरव्या मुण्डमालया ॥
रुधिरं पश्चिमांशे तु हेरुकाख्ये नियोजयेत् ।
दत्त्वा संपूज्य च नरं विसृज्यागमनक्रमे ॥
पीठश्मशानेषु बलिं नेक्षेत्तु बलिदापकम् ।
अन्यत्रापि यतो यत्र दीयतेऽयं महाबलिः ॥
तत्राप्यन्यत्र चोत्सृज्य छित्त्वान्यत्र शिरोऽमृ-
तम् ।
निवेदयेत् साधकस्तु विसृज्य न विलोकयेत् ॥ * ॥
सुस्नातं मनुजं दीप्तं पूर्ब्बाह्णे नियताशनम् ।
मांसमैथुनभोग्येन हीनं स्रक्चन्द्रनोक्षितम् ॥
कृत्तोत्तरामुखं तन्तु तदङ्गेषु च देवताः ।
पूजयेत्तञ्च नाम्ना तु दैवतेन च मानुषम् ॥
ब्रह्मरन्ध्रेषु ब्रह्माणं तन्नासायाञ्च मेदिनीम् ।
कर्णयोस्तु तथाकाशं जिह्वायां सर्व्वत्तोमुखम् ॥
ज्योतींषि नेत्रयोर्विष्णुं वदने परिपूजयेत् ।
ललाटे पूजयेच्चन्द्रं शक्रं दक्षिणगण्डतः ॥
तं बलिं नहि गृह्णाति कामाख्यान्यापि नामतः ॥
अन्येषां महिषादीनां बलीनामथ पूजनात् ।
कायो मेध्यत्वमायाति रक्तं गृह्णाति वै शिवा ॥
अन्येभ्योऽपि च देवेभ्यो यदा यद्यत् प्रदीयते ।
तदर्च्चितं प्रदद्यात्तु पूजिताय सुराय वै ॥ * ॥
काणं व्यङ्गञ्चातिवृद्धं रोगिणञ्च गलव्रणम् ।
क्लीवं हीनाङ्गमथवा वृद्धलिङ्गं गलद्व्रणम् ॥
श्वित्रिणञ्चातिह्रस्वञ्च महापातकिनन्तथा ।
अद्वादशकवर्षीयं शिशुं सूतकसंयुतम् ॥
ऊर्द्ध्वं संवत्सराच्चापि महागुरुनिपातिनम् ।
बलिकर्म्मणि चैतांस्तु वर्जयेत् पूजितानपि ॥
पशूनां पक्षिणाञ्चापि नराणाञ्च विशेषतः ।
स्त्रियं न दद्यात्तु बलिं दत्त्वा नरकमाप्नुयात् ॥ * ॥
संघातबलिदानेषु योषितं पशुपक्षिणोः ।
बलिं दद्यान्मानुषीन्तु त्यक्त्वा संघातपूजितम् ॥
न त्रिमासीयकान्न्यूनं पशुं दद्यात् शिवाबलिम् ।
न च त्रिपक्षकान्न्यनं प्रदद्याद्वै पतत्रिणम् ॥
काणव्यङ्गादिदुष्टन्तु न पशुं पक्षिणन्तथा ॥
देव्यै दद्याद्यथा मर्त्यं तथैव पशुपक्षिणौ ॥
छिन्नलाङ्गूलकर्णादि भग्नदन्तन्तथैव च ।
भग्नशृङ्गादिकञ्चापि न दद्यात्तु कदाचन ॥
न ब्राह्मणं बलिं दद्यात् चाण्डालमपि पार्थिव ! ।
नोत्सृष्टं द्विजदेवेभ्यो भूपतेस्तनयं तथा ॥
रणे न विजितं दद्यात्तनयं रिपुभूभृतः ।

घातयेच्चन्द्रहासेन तेन मन्त्रेण संस्कृतम् ॥ * ॥
प्रभूतबलिदाने तु द्वौ वा त्रीन् वाग्रतः कृताम् ।
पूजयेत् प्रमुखान् कृत्वा सर्व्वान् तन्त्रेण साधकः ।
सामान्यपूजा कथिता बलीनां पूर्ब्बतो मया ।
विशेषो यत्र यत्रास्ति तन्मत्तः शृणु भैरव ! ॥ * ॥
महिषं प्रददौ देव्यै भैरव्यै भैरवाय वा ।
अनेनैव तु मन्त्रेण तथा तं पूजयेद्बलिम् ॥
यथा वाहं भवान् द्वेष्टि यथा वहसि चण्डिकाम् ।
तथा मम रिपून् हिंस शुभं वह लुलापक ! ॥
यमस्य वाहनन्त्वन्तु वररूपधराव्यय ! ।
आयुर्व्वित्तं यशो देहि कासराय नमोऽस्तु ते ॥
खड्गस्य तु यदादानं क्रियते तत्र मन्त्रणम् ।
जलेनाभ्युक्ष्य कुर्व्वीत गुहाजातेति भाषयन् ॥
दैवे पित्रे च सुभगः खड्गस्त्वं खड्गसन्निभः ।
छिन्धि विघ्रान् महाभाग ! गुहाजात नमोऽस्तु ते ।
प्रदाने कृष्णसारस्य मन्त्रोऽयं परिकीर्त्तितः ।
कृष्णसार ! ब्रह्ममूर्त्ते ब्रह्मतेजोविवर्द्धन ।
चतुर्व्वेदमयः प्राज्ञः प्रज्ञां देहि यशो मम ॥ * ॥
तथा सरभपूजायां मन्त्रमेतत् प्रकीर्त्तितम् ।
त्वमष्टपादो विभ्रंशचन्द्रभागसमुद्भव ! ।
अष्टमूर्त्ते महाभाग भैरवाख्य नमोस्तु ते ॥
यथा भैरवरूपेण वराहो निहतस्त्वया ।
तथा सरभरूपेण रिपुं विघ्नान्निसूदय ॥

वामगण्डे तथा वह्निं ग्रीवायां समवर्त्तिनम् ।
केशाग्रे निरृतिं मध्ये भ्रु वोश्चापि प्रचेतसम् ॥
नासामूले च श्वसनं स्कन्धे चापि धनेश्वरम् ।
हृदये सर्पराजन्तु पूजयित्वा पठदिदम् ॥
नरवर्ज्य ! महाभाग सर्व्वदेवमयोत्तम् ।
रक्ष मां शरणापन्नं सपुत्त्रवसुबान्धवम् ॥
सराज्यं मां सहापत्यं चतुरङ्गसमन्वितम् ।
रक्षन् परित्यज प्राणान् मरणे नियते सति ॥
महातपोभिदर्निश्च यज्ञैर्यत् साध्यते नृणाम् ।
तन्मेदेहि महाभाग ! त्वञ्चापि प्राप्नुहि श्रियम् ॥
राक्षसाश्च पिशाचाश्च वेतालाद्याः सरीसृपाः ।
नृपाश्च रिपवश्चान्ये न मां ते घ्नन्तु त्वत्कृते ॥
त्वत्कण्ठनालगलितैः शोणितैरङ्गसंयुतैः ।
आप्यायस्वात्मवन्मृत्वामरणे नियते सति ॥
एवं संपूज्य विधिवत् पूर्व्वतन्त्रैश्च पूजयेत् ।
पूजितो मत्स्वरूपोऽयं दिक्पालाधिष्ठितो भवेत् ॥
अधिष्ठितस्तथान्यैश्च ब्रह्माद्यैः सकलैः सुरैः ।
कृतपापोऽपि मनुजो निष्पाप्मा स तु जायते ॥
तस्य निष्कलुषस्याशु पीयूषं शोणितं भवेत् ।
प्रीणाति च महादेवी जगन्माया जगन्मयी ॥
सोऽपि कायं परित्यज्य मानुषं न चिरान्मृतः ।
भवेद्गणानामधिपो मयापि बहुसत्कृतः ॥
इतोऽन्यथा पापयुतं मलमूत्रवसायुतम् ।

स्वपुत्त्रं भ्रातरं वापि पितरञ्च विरोधिनम् ॥
विट्पतिञ्च न दद्यात्तु भागिनेयञ्च मातुलम् ।
अनुक्तान्नापि दद्यात्तु तथाज्ञातान् मृगद्विजान् ॥
उक्तालाभे प्रदद्यात्तु गर्द्दभञ्चोष्ट्रमेव च ।
लाभेऽन्येषां न बितरेद्व्याघ्रमुष्ट्रं खरन्तथा ॥
सम्पूज्य विधिवन्मर्त्यं पशुं पक्षिणमेव वा ।
संछिद्य चापि मन्त्रेण मन्त्रेणैव निवेदयेत् ॥ * ॥
नारं सव्ये शिरोरक्तं देव्याः सम्यङ्निवेदयेत् ।
छागन्तु वामतो दद्यान्महिषं वितरेत् पुरः ॥
पक्षिणं वामतो दद्यादग्रतो देहशोणितम् ।
क्रव्यादानां पशूनान्तु पक्षिणाञ्च शिरोऽसृजम् ॥
वामे निवेदयेत् पार्श्वे जलजानाञ्च सर्व्वशः ।
कृष्णसारस्य कूर्म्मस्य खड्गस्य शशकस्य च ॥
ग्राहाणामथ मत्स्यानामग्र एव निवेदयेत् ।
सिंहस्य दक्षिणे दद्यात् खड्गिनोऽपि च दक्षिणे ॥
पृष्ठदेशे न दद्यात्तु शिरो वा रुधिरं बलेः ।
उपप्लवे रणे वापि यथेष्टं दितरेन्नरम् ॥
यः कश्चिद्राजपुरुषो नान्यस्त्वपि कदाचन ।
बलिदानदिनात् पूर्ब्बदिवसे तु बलिं नरम् ॥
मानस्तोकेतिमन्त्रेण देवीसूक्तत्रयेण च ।
गन्धद्वारेत्यनेनापि खड् गशीर्षे निधाय च ॥
तस्मिन् खड्गे च गन्धादि दत्त्वा तेनाधि-वासयेत् ॥
गन्धादिकन्तु खड् गस्थं गले तस्थ प्रदापयेत् ॥

| | | |
|---|---|---|
| | | अम्बेऽम्बिकाति मन्त्रेण रौद्रेण भैरवस्य च ।<br>एवन्तु संस्कृते मर्त्ये देवी रक्षति तं बलिम् ॥<br>न तस्य व्याधयश्चापि क्षुण्णता रजनौ न च । |

न सूतकं दूषयेत्तं ज्ञात्युत्पत्तिमृतादिकम् ॥
* ॥
छिन्नं नरस्य शीर्षन्तु पतितं यत्र यत्र च ।
यत् शुभञ्चाशुभं वापि पश्वादीनाञ्च तत् शृणु ॥
छिन्नं शिरस्तथैशान्यां नारं दिश्यथ राक्ससे ।
पतितं राज्यहानिञ्च विनाशञ्च विनिर्द्दिशेत् ॥
पूर्ब्बाग्नियाम्यवारुण्यवायव्यादिगतंक्रमात् ।
श्रियं पुष्टिं भयं लाभं पुत्त्रलाभं धनं तथा ॥
क्रमाद्विनिर्द्दिशेन्नारं छिन्नशीर्षन्तु भैरव ! ।
उत्तरादिक्रमाद्वे महिषस्यापि मस्तकः ॥
पतितो वायुकाष्ठान्तं सूचयेद्यत् शृणुष्व तत् ॥
भोग्यं हानिस्तथैश्वर्य्यं वित्तं रिपुजयो भयम् ।
राज्यलाभं श्रियञ्चापि क्रमात्तद्विद्धि भैरव ! ॥
पशूनाञ्चैव सर्व्वेषां छागादीनामशेषतः ।
एवं फलं क्रमाद्विद्यादृते जलभवाण्डजौ ॥
अन्यत्र तु श्रियं दद्यात् पतितं शातितं शिरः ॥
यः स्यात् कटकटाशब्दो दन्तानां छिन्नमस्तके ।
नराणां पशुपक्ष्यादिग्राहादीनाञ्चरोगदः ॥
लोतकं चक्षुषोर्जातं यदि स्रवति मस्तके ।
छिन्ने नरस्य राज्यस्य तदा हानिं विनिर्द्दिशेत् ॥
माहिषे मस्तके नेत्राद्यदि स्रवति लोतकम् ।
छिन्ने निवेदिते वैरिभूपमृत्युं तदादिशेत् ॥
अन्येषामथ पश्वादिबलीनां शिरसोऽर्द्दितात् ।
निर्गतं लोतकं धत्ते परां भीतिं गदन्तथा ॥
हसति च्छिन्नशीर्षञ्चेन्नारं स्यात्तु रिपुक्षयः ।
श्रीवृद्धिरायुषो वृद्धिः सदा दातुरसंशयः ॥
यद्यद्वाक्यं निगदति तथा भवति चाचिरात् ।
हूङ्काराद्राज्यहानिः स्यात् श्लेष्मस्रावाच्च पञ्चताम् ॥

प्राणप्रतिष्ठाञ्च रिपोः कुर्य्यात्तस्मिन् पशावथ ।
तस्मिन् क्षीणे रिपुप्राणाः क्षीयन्ते विपदा युताः ॥
आदौ विश्वरूपिणी च चण्डिकेति ततः परम् ।
वैरिणन्त्वमुकञ्चेति स्वाहेत्यम्बेति तं पुनः ॥
वह्निभार्य्यां ततः पश्चात् खड्गमन्त्रं प्रकीर्त्तितम् ।
स्वयं स वरी यो द्वेष्टि तमिमं पशुरूपिणम् ॥
विनाशय महामारि स्फें स्फें खादय खादय ॥
इत्यनेन तु मन्त्रण बलेः शिरसि पुष्पकम् ।
दद्यात्ततस्तद्रुधिरं द्व्यक्षराभ्यां निवेदयेत् ।
महानवम्यां शरदि यद्येवं दीयते बलिः ।
तदा तदाष्टाङ्गभवैर्मांसैर्होमं समाचरेत् ॥
दुर्गातन्त्रेण मन्त्रेण प्रणीते दहने शुचौ ।
एवं दत्त्वा बलिं मर्त्यो रिपुक्षयमवाप्नुयात् ॥ * ॥
नाभेरधस्ताद्रुधिरं पृष्ठभागस्य च प्रिये ! ।
स्वगात्ररुधिरं दद्यान्न कदाचन साधकः ॥
नोष्ठस्य चिबुकस्यापि नेन्द्रियाणाञ्च मानवः ।
कण्ठाधो नाभितश्चोद्‌र्ध्वं बाह्वोः पाणिमृते तथा ॥
प्रदद्याद्रुधिरं घातं नातिकुर्य्याच्च साधकः ।
गण्डयोश्च ललाटस्य भ्रुवोर्मध्यस्य शोणितम् ॥

महामाये ! जगन्नाथे ! सर्व्वकामप्रदायिनि ! ।
ददामि देहरुधिरं प्रसीद वरदा भव ॥
इत्युक्त्वा मूलमन्त्रेण नतिपूर्ब्बं विचक्षणः ।
स्वगात्ररुधिरं दद्यान्मानवः सिद्धसन्निभः ॥
येनात्ममांसं सत्यन ददामीश्वरि ! भूतये ।
निर्व्वाणं तेन सत्येन देहि हुं हुं नमो नमः ॥
इत्यनेन तु मन्त्रेण स्वमांसं वितरेद्बुधः ।
सौभाग्यं सुखसम्पन्नं प्रदीपं परमं शुचिम् ॥
दीपयन् मांसमिहजं दीपं ह्रौं ह्रौं नमो नमः ।
इत्यनेन तु मन्त्रेण दीपं दद्याद्विचक्षणः ॥
महानवम्यां शरदि रात्रौ स्कन्दविशाखयोः ।
यवचूर्णमयं कृत्वा रिपुं मृण्मयमेव वा ॥
शिरश्छित्त्वा बलिं दद्यात् कृत्वा तस्य तु मन्त्रतः ।
अनेनैव तु मन्त्रेण खड्गमामन्त्र्य यत्नतः ॥
रक्तं किलकिली घोरघोरा धारविहिंसकः ।
ब्रह्मशिख्याम्बिकाशिख्यममुकञ्चारिसत्तमम्॥
भान्तो विसर्गसहितः स च बिन्दुयुतोऽपरः ।
ब्रह्माग्नियोगश्चन्द्रेण बिन्दुना च समन्वितः ।
शिरश्छित्त्वा बलिं दद्यात् कृत्वा तस्य तु मन्त्रतः ॥
अनेनैव तु मन्त्रेण बिन्दुना च समन्वितः ।
फडन्तो बलिषु प्रोक्तः खड्गः स्कन्दविशाखयोः ॥
रक्तद्रवैः सेचयित्वा कृत्रिमं तं रिपुं बलिम् ।
कुचन्दनस्य तिलकं ललाटेऽभिनिवेशयेत् ॥
रक्तमाल्यधरं कृत्वा रक्तवस्त्रधरन्तथा ।
कण्ठे बद्ध्वा रक्तसूत्रैर्नाभौ शल्यञ्च कृत्रिमम् ।
दत्त्वोत्तरशिरः स्कन्धं कृत्वा खड्गेन छेदयेत् ॥
शिरस्तस्य ततो दद्यात् स्कन्दाय ते नमस्ततः ।
चतुर्द्दशस्वराग्निभ्यां संसक्तः स परः समः ॥
परतः परतः पूर्ब्बं चन्द्रबिन्दुसमन्वितः ।
स्कन्दस्य मूलमन्त्रोऽयं तेन तस्मै बलिं सृजेत् ॥
चतुर्द्दशस्वराग्निभ्यां पतृतीयन्तु पूर्ब्बवत् ।
प्रोक्तो विशाखमन्त्रोऽयं तेन तस्मै बलिं सृजेत् ॥
कुटिलाक्षौ कृष्णपिङ्गघर्णौ रक्तांशुधारिणौ ।
त्रिशूलं करवालञ्च पाणिभ्यां दक्षिणे तथा ॥
बिभ्रतौ नृकपालञ्च कर्त्तृकञ्चापि वामतः ।

देवानां यदि नामानि भाषते च्छिन्नमस्तकः ।
विभूतिमतुलां विन्द्यात् षण्मासाभ्यन्तरे तदा ॥
रुधिरादानकाले तु शकृन्मूत्रे यदि स्रवेत् ।
कायं तदाधश्चोद्‌र्ध्वं वा दातुः स्यान्मरणं तथा ॥
आक्षेपाद्वामपादस्य महारोगः प्रजायते ।
अन्यत्राक्षेपचरणैः कल्याणमुपजायते ॥ * ॥
महिषस्य तु रक्तस्य मानुषस्याथ साधकः ।
अङ्गुष्ठानामिकाभ्यान्तु किञ्चिदुद्धृत्य भूतले ॥
महाकौशिकमन्त्रेण निक्षिपेद्बलिमुत्तमम् ।
देवेभ्यः पूतनादिभ्यो नैरृत्यां दिशि पूर्ब्बतः ॥
महिषः पञ्चवर्षी यः पञ्चविंशतिवार्षिकः ।
बलिर्देयो नरो देव्यै तस्य रक्तन्तु भूतले ॥
नेत्रबीजत्रयं कामवीजं हान्तात् प्रजापतिः ।
वह्निबीजं षट्स्वराभ्यां संपृक्तश्च तथापरः ॥
स एवैतास्तथैतावदादिवर्गान्तसंयुतः ।
षष्ठस्वरशिखाबिन्दुचन्द्रयुक्तस्तथापरः ॥
द्विर्नासिकाबीजकान्तः कौशिकीत्यभिमन्त्रणम् ।
एष बलिः स्वाहेति च मन्त्रोऽयं कौशिकः स्मृतः ॥
नृपो वैरिबलिं दद्यात् खड् गमामन्त्र्य पूर्ब्बतः ॥
महिषं वाथवा च्छागं वैरिनाम्नाभिमन्त्र्य च ।
सूत्रेण वदनं बद्‌ध्वा त्रिधा तस्य च मन्त्रकैः ।
छित्त्वा तस्योत्तमाङ्गन्तु देव्यै दद्यात् प्रयत्नतः ॥
यदा यदा रिपोर्वद्धिर्ब्बलिदानं तदापरम् ।
दद्यात्तथा शिरश्छित्त्वा रिपोस्तस्य क्षयाय च ॥

कर्णाग्रस्य च बाह्वोश्च स्तनयोरुदरस्य च ।
कण्ठाधो नाभितश्चोद्‌र्ध्वं हृद्भागस्य यतस्ततः ।
पार्श्वयोश्चापि रुधिरं दुर्गायै विनिवेदयेत् ॥
न गुल्फतोऽसृक् प्रदद्यात् जत्रोर्नापि च साधकः ।
न च रोगाविलादङ्गान्नान्यघाताच्च भैरव ! ॥
तदर्थे च कृताघातात् सश्रद्धो क्षुब्धमानसः ।
सृतं रक्तं प्रदद्यात्तु पद्मपुष्पस्य पत्रके ॥
सौवर्णे राजते पात्रे कांस्ये फाले च मानवः ।
निधाय देव्यै दद्यात्तु तद्रक्तं चन्द्रमन्त्रकैः ॥
क्षणने छुरिकाखड्‌गं संकुलादि यदस्त्रकम् ।
घातेन बृहदस्त्रस्य महाफलमवाप्नुयात् ॥
पद्मपुष्पस्य पत्रन्तु यावद्गृह्णाति शोणितम् ।
तत्प्रमाणचतुर्भागाधिकंरक्तन्तु साधकः ।
न कदाचित् प्रदद्यात्तु नाङ्गच्छेदमथाचरेत् ॥
यः स्वहृदयसंजातं मांसं माषप्रमाणतः ।
तिलमुद्‌गप्रमाणाद्वा देव्यै दत्त्वा तु भक्तितः ।
षण्मासाभ्यन्तरे तस्मात् काममिष्टमवाप्नुयात् ॥
बाह्वोस्तु स्कन्धयोर्वापि यो दद्याद्दीपवर्त्तिकाम् ।
हृदये वा स्नेहपात्रं विना भक्त्या तु साधकः ।
क्षणमात्रेण तद्दीपप्रदानस्य फलं शृणु ॥

त्रिनेत्रौ नरमुण्डानां मालामुरसि बिभ्रतौ ॥
विकटो दशनैर्भीमैर्गणेशौ द्वारपालकौ ।
ध्यानेन चिन्तयेद्देव्याः पुरतः संस्थितौ सदा ॥
चैत्रे मासि सिते पक्षे चतुर्द्दश्यां विशेषतः ।
बलिभिर्महिषैश्छागैर्माञ्च भैरवरूपिणम् ।
तोषयेन्मधुभिर्मत्स्यैस्तेन तुव्याम्यहं सुतौ ॥
चण्डिकाबलिदानेन बलेः शीर्षं जलेन तु ।
अभिषिच्य तु मन्त्रेण मूलेनैव निवेदयेत् ॥
ईषत् प्राणन्तु बहुधा चालितं पूर्ब्बमर्च्चितम् ।
वीक्षेत् कामस्य सिद्धिन्तु सिद्‌ध्यभावञ्च साधकः ॥
सितप्रेतो रथस्थेऽयं योगपीठस्य सन्निभः ।
ध्यायेद्यस्मिन् महामाया सिद्धिं बोधयते नमः ॥
अनेनामन्त्रितं शीर्षं न चिराद्यदि वेपते ।
तत्कार्य्यस्य तदा सिद्धिरसिद्धिस्तु विपर्य्ययात् ॥
एवं ददद्बलिं वीरो यथोक्तविधिनामुना ।
बलिदानादेव चतुर्व्वर्गमाप्नोत्यसंशयम् ॥

| | | |
|---|---|---|
| | भुक्त्वा च विपुलान् भोगान् देवीगेहे यथेच्छया ।<br>कल्पत्रयन्तु संस्थाय सार्व्वभौमो नृपो भवेत् ॥<br>महिषस्य शिरश्छिन्नं सप्रदीपं शिवापुरः ।<br>हस्ताभ्यां यः समादाय अहोरात्रञ्च तिष्ठति ॥<br>स चिरायुः पूतमूर्त्तिरिह भुक्त्वा मनोरमान् ।<br>भोगांस्तेन मद्गृहगो गणानामधिपो भवेत् ॥<br>नरस्य शीर्षमादाय साधको दक्षिणे करे ।<br>वामे सरुधिरं पात्रं गृहीत्वा निशि चाग्रतः ॥<br>यावद्रात्रं स्थितो मर्त्यो राजा भवति चेह वै ।<br>मृते मम पुरं प्राप्य गणानामधिपो भवेत् ॥<br>क्षणमात्रं बलीनां यः शिरोरक्तं करद्वये ।<br>गृहीत्वा चिन्तयेद्देवीं पुरस्तिष्ठति मानवः ।<br>स कामानिह संप्राप्य देवीलोके महीयते । | |

एवं बलिप्रदानस्य क्रमो रूपन्तथैव च ।
कथितो रुधिराध्याय उपचारान् शृणुष्व मे
॥”
इति कालिकापुराणे ६ ६ अध्यायः ॥
बलिदाननिषेधो यथा, --
“जीवानुकम्पां विज्ञातुं ततो दुर्गां सदाशिवः
।
पप्रच्छ परमप्रीत्या गूढमेतद्वचो मुदा ॥
सर्व्वे विष्णुमया जीवास्त्वद्भक्ताश्च कथं
शिवे ! ।
श्रुतं मया तवोद्देशे कुर्य्युः कामनया वधम् ।
महान् सन्देह इति मे ब्रूहि भद्रे ! सुनिश्चितम्
॥
शङ्करी तद्वचः श्रुत्वा शिववक्त्रविनिर्गतम् ।
भीतात्यन्तं हि ब्रह्मर्षे ! प्रत्युवाच सदाशिवम्
॥
श्रीपार्व्वत्युवाच ।
ये ममार्च्चनमित्युक्त्वा प्राणिहिंसनतत्पराः ।
तत्पूजनं ममामेध्यं यद्दोषात्तदधोगतिः ॥
मदर्थे शिव ! कुर्व्वन्ति तामसा जीवघातनम्
।
आकल्पकोटिनिरये तेषां वासो न संशयः ॥
मम नाम्नाथवा यज्ञे पशुहत्यां करोति यः ।
क्वापि तन्निष्कृतिर्नास्ति
कुम्भीपाकमवाप्नुयात् ॥
दैवे पैत्रे तथात्मार्थे यः कुर्य्यात्
प्राणिहिंसनम् ।
कल्पकोटिशतं शम्भो ! रौरवे स वसेत् ध्रुवम्
॥
यो मोहान्मानसैर्देहिहत्यां कुर्य्यात्
सदाशिव ! ।
एकविंशतिकृत्वश्च तत्तद्योनिषु जायते ॥
यज्ञे यज्ञे पशून् हत्वा कुर्य्यात्
शोणितकर्द्दमम् ।
स पचेन्नरके तावद्यावल्लोमानि तस्य वै ॥
हन्ता कर्त्ता तथोत्सर्गकर्त्ता धर्त्ता तथैव च ।
तुल्या भवन्ति सर्व्वे ते ध्रुवं नरकगामिनः ॥
ममोद्देशे पशून् हत्वा सरक्तं पात्रमुत्सृजेत्
यो मूढः स तु पूयोदे वसेद्यदि न संशयः ॥
तावत्तन्नरके वासो यावच्चन्द्रदिवाकरौ ॥
निर्व्वह्निभस्मतुल्यं तत् बहुद्रव्येण यत् कृतम्
।
यस्मिन् यज्ञे प्रभो शम्भो ! जीवहत्या भवेद्
ध्रुवम् ॥
यज्ञमारभ्य चेत् शक्रः कुर्य्याद्वै पशुघातनम्
।
स तदाधोगतिं गच्छेदितरेषाञ्च का कथा ॥
आवयोः पूजनं मोहाद्ये कुर्य्युर्मांसशोणितैः ।
पतन्ति कुम्भीपाके ते भवन्ति पशवः पुनः
॥
फलकामास्तु वेदोक्तैः पशोरालभनं मखे ।
पुनस्तत्तत् फलं भुक्त्वा ये कुर्व्वन्ति
पतन्त्यधः ॥
स्वर्गकामोऽश्वमेधं यः करोति निगमाज्ञया ।
तद्भोगान्ते पतेद्भूयः स जन्मानि भवार्णवे ॥
ये हताः पशवो लोकैरिह स्वार्थेषु कोविदैः ।
ते परत्र तु तान् हन्युस्तथा खड्गेन शङ्कर !
॥
आत्मपुत्त्रकलत्रादिसुसम्पत्तिकुलेच्छया ।
यो दुरात्मा पशून् हन्यादात्मादीन् घातयेत्
स तु ॥
जानन्ति नो वेदपुराणतत्त्वं
ये कर्म्मठाः पण्डितमानयुक्ताः ।
लोकाधमास्ते नरके पतन्ति
कुर्व्वन्ति मूर्खाः पशुघातनञ्चेत् ॥
येऽज्ञानिनो मन्दधियोऽकृतार्था
भवे पशुं घ्नन्ति न धर्म्मशास्त्रम् ।
जानन्ति नाकं नरकं न मुक्तिं
गच्छन्ति घोरं नरकं नरास्ते ॥
शुद्धा अकार्ष्णा न विदन्ति शाक्ता
न धर्म्ममार्गं परमाथतत्त्वम् ।
पापं न पुण्यं पशुघातका ये
पूयोदवासो भवतीह तेषाम् ॥
जीवानुकम्पां न विदन्ति मूढा
भ्रान्ताश्च येऽसत्पथिनो न धर्म्मम् ।
स्मार्त्ता भव प्राणिवधं न कुर्य्यु-
स्ते यान्ति मर्त्त्याः खलु रौरवाख्यम् ॥
ततस्तु खलु जन्तूनां घातनं नो करिष्यति ।
नरकस्वर्गसेवार्थं संसाराय प्रवर्त्तितः ।
यतस्तत्कर्म्मभोगेन गमनागमनं भवेत् ॥
सत्येन सात्त्वतग्रन्थे स विधिर्नैव
शङ्कर ! ।
प्रवृत्तितो निवृत्तिस्तु यत्रापि सात्त्विकी
क्रिया ।
एवं नानाविधं कर्म्म पशोरालभनादिकम्
।
कामाशयः फलाकाङ्क्षी कृत्वाज्ञानेन
मानवः ॥
पश्चाज्ज्ञानासिना च्छित्त्वा भ्रान्त्याशां
तामसीं
सदा ।
यमभीतिहरं भक्त्या यदि
गोविन्दमाश्रयेत् ॥”
इति पाद्मोत्तरखण्डे । १०४ । १०५ ।
अध्यायौ ॥

**ब(व)लिः**, स्त्री, (बलति संवृणोतीति । बल
संवरणे + इन् ।) जरया श्लथचर्म्म ।
तत्-
पर्य्यायः । चर्म्मतरङ्गः २ त्वगूर्म्मिः ३
त्वक्-
तरङ्गः ४ । इति राजनिर्घण्टः ॥ जठरा-
वयवः । (यथा, कुमारे । १ । ३९ ।
“मध्येन सा वेदिविलग्नमध्या
बलित्रयं चारु बभार बाला ॥”)
गृहदारुप्रभेदः । इति मेदिनी । ले, ५ ॥
गुदा-
ङ्कुरः । यथा, --
“पञ्चात्मा मारुतः पित्तं कफो
गुदबलित्रयम् ।
सर्व्व एव प्रकुप्यन्ति गुदजानां समुद्भवे
॥
तस्मादर्शांसि दुःखानि
बहुव्याधिकराणि च ।
सर्व्वदेहोपतापीनि प्रायः कृच्छ्रतमानि
च ॥ * ॥
वाह्यायान्तु बलौ
जातान्येकदोषोल्वणानि च ।

देवतान्तरमन्नामव्याजेन स्वेच्छया तथा ।
हत्वा जीवांश्च यो भक्षेत् नित्यं
नरकमाप्नुयात् ॥
यूपे बद्ध्वा पशून् हत्वा यः
कुर्य्याद्रक्तकर्द्दमम् ।
तेन चेत् प्राप्यते स्वर्गो नरकं केन गम्यते ॥
उपदेष्टा वधे हन्ता कर्त्ता धर्त्ता च विक्रयी ।
उत्सर्गकर्त्ता जीवानां सर्व्वेषां नरकं भवेत् ॥
मध्यस्थस्य वधायापि प्राणिनां क्रयविक्रये ।
तथा द्रष्टुश्च सूनायां कुम्भीपाको भवेद्ध्रुवम्
॥
स्वयं कामाशयो भूत्वा योऽज्ञानेन विमोहितः
।
हन्त्यन्यान् विविधान् जीवान् कुर्य्यान्मन्नाम
शङ्कर ! ॥
तद्राज्यवंशसम्पत्तिज्ञातिदारादिसम्पदाम्।
अचिराद्वै भवेन्नाशो मृतः स नरकं व्रजेत् ॥
देवयज्ञे पितृश्राद्धे तथा माङ्गल्यकर्म्मणि ।
तस्यैव नरके वासो यः कुर्य्याज्जीवघातनम्
॥”
तथा ।
“मद्व्याजेन पशून् हत्वा यो भक्षेत् सह
बन्धुभिः ।
तद्गात्रलोमसंख्याब्दैरसिपत्रवने वसेत् ॥
आवयोरन्यद्देवानां नाम्ना च परकर्म्मणि ।
यः संपोष्य पशून् हन्यात् सोऽन्धतामिस्रमा-
प्नुयात् ॥
पशुन् हत्वा तथा त्वां मां योऽर्च्चयेन्मांसशो-
णितैः ।
शुद्धात्मा धर्म्मवान् ज्ञानी प्राणान्ते नेव
मानवः ॥
यदीच्छेदात्मनः क्षेमं त्यक्त्वा ज्ञानं तदा
नरः ।
त्जीवान् कानपि नो हन्यात् सङ्कटापन्न एव
चेत् ॥
सम्पत्तौ च विपत्तौ वा परलोकेच्छुकः पुमान्
।
कदाचित् प्राणिनो हत्यां न कुर्य्यात्तत्त्ववित्
सुधीः ॥
मानवो यः परत्रह तर्त्तुमिच्छेत् सदाशिव ! ।
सर्व्वविष्णुमयत्वेन न कुर्य्यात् प्राणिनां
वधम् ॥
वधाद्रक्षति यो मर्त्यो जीवान्
तत्त्वज्ञधर्म्मवित् ।
किं पुण्यं तस्य वक्ष्येऽहं ब्रह्माण्डं स तु रक्षति
॥
यो रक्षेत् घातनात् शम्भो ! जीवमात्रं दया-
परः ।
कृष्णप्रियतमो नित्यं सर्व्वरक्षां करोति सः ॥
एकस्मिन् रक्षिते जीवे त्रैलोक्यं तेन रक्षितम्
॥
बधात् शङ्कर ! वै येन तस्माद्रक्षेन्न घातयेत्
॥”
तथा, --
“पशुहिंसा विधिर्यत्र पुराणे निगमे तथा ।
उक्तो रजस्तमोभ्यां स केवलं तमसापि वा
॥
अर्शांसि सुखसाध्यानि न
चिरोत्पतितानि च ॥
द्वन्द्वजानि द्वितीयायां बलौ
यान्याश्रितान्यपि ।
कृच्छ्रसाध्यानि तान्याहुः
परिसंवत्सराणि च ॥
सहजानि त्रिदोषाणि यानि चाभ्यन्तरा
बलिम् ।
जायन्तेऽर्शांसि संश्रित्य तान्यसाध्यानि
निर्द्दि-
शेत् ॥”
इति माधवकरः ॥
(यथा च । “तत्र
स्थूलान्त्रप्रतिबद्धमर्द्धपञ्चाङ्गुलं
गुदमाहुस्तस्मिन्
बलयस्तिस्रोऽध्यर्द्धाङ्गुलान्तर-
भूताः प्रवाहणी विसर्ज्जनी संवरणी
चेति ।
चतुरङ्गुलायताः
सर्व्वास्तिर्य्यगेकाङ्गुलोच्छ्रिताः ।
शङ्खावर्त्तनिभाश्चापि उपर्य्युपरि
संस्थिताः ।
गजतालनिभाश्चापि वर्णतः
संप्रकीर्त्तिताः ॥”
इति सुश्रुते निदानस्थाने द्वितीयेऽध्याये
॥
गन्धकः । तत्पर्य्यायो यथा,
“गन्धको गन्धिकश्चापि गन्धपाषाण
इत्यपि ।
सौगन्धिकश्च कथितो बलिर्बलरसापि
च ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**बलिका**, स्त्री, (बलैव । बला + स्वार्थे कन् ।
टापि
अत इत्वञ्च ।) अतिबला । इति राज-
निर्घण्टः ॥

**बलिदानं**, क्ली (बलेः पूजोपकरणस्य देवतो-
द्देशेन संकल्पितच्छागादेर्व्वा दानम् ।)
श्रीकृष्ण-

| | | |
|---|---|---|
| | | पार्षदेभ्यस्तन्निवेदितनैवेद्यांशदानम्।<br>यथा, --<br>अथ बलिदानम्।<br>“ततो यवनिकां विद्वानपसार्य्य यथाविधि।<br>विश्वक्सेनाय भगवन्नैवेद्यांशं निवेदयेत् ॥<br>यथा च पञ्चरात्रे श्रीनारदवचनम्। |

विश्वक्सेनाय दातव्यं नैवेद्यं तच्छतांशकम् ।
पादोदकं प्रसादञ्च लिङ्गे चण्डेश्वराय च ॥ * ॥
तद्विधिश्चोक्तः ।
मुख्यादीशानतः पात्रान्नैवेद्यांशं समुद्धरेत् ।
सर्व्वदेवस्वरूपाय पराय परमेष्ठिने ॥
श्रीकृष्णसेवायुक्ताय विश्वक्सेनाय ते नमः ।
इत्युक्त्वा श्रीहरेर्वामे तीर्थक्लिन्नं समर्पयेत् ।
शतांशं वा सहस्रांशमन्यथा निष्फलं भवेत् ॥
पश्चाच्च बलिरित्यादिश्लोकायुच्चार्य्य वैष्णवः ।
सर्व्वेभ्यो वैष्णवेभ्यस्तं शतांशं विनिवेदयेत् ॥ * ॥
तौ च श्लोकौ ।
बलिर्व्विभीषणो भीमः कपिलो नारदोऽर्ज्जुनः ।
प्रह्लादश्चाम्बरीषश्च वसुर्वायुसुतः शिवः ॥
विश्वक्सेनोद्धवाक्रूराः सनकाद्याः शुकादयः ।
श्रीकृष्णस्य प्रसादोऽयं सर्व्वे गृह्णन्तु वैष्णवाः ॥ इति ।
इदं यद्यपि युज्येत दर्पणार्पणतः परम् ।
तथापि भक्तवात्सल्यात् कृष्णस्यात्रापि सम्भवेत् ॥
अथ बलिदानमाहात्म्यम् । नारसिंहे ।
ततस्तदन्नशेषेण पार्षदेभ्यः समन्ततः ।
पुष्पाक्षतैर्व्विमिश्रेण बलिं यस्तु प्रयच्छति ॥
बलिना वैष्णवेनाथ तृप्ताः सन्तो दिवौकसः ।
ब्रह्माण्डखण्डरूपस्तम्भेपशुं बन्धय बन्धय हः
फट् स्वाहा ॐ ह्रां ह्रीं ह्रूं चां चण्डिकायै इमं पशुं प्रोक्षामि स्वाहा । इति प्रोक्षणम् ।
ततः सशृङ्गाद्यवयवं पशुं मोक्षं कुरु कुरु
स्वाहेति मोक्षं कृत्वा क्षमस्वेति ललाटे सिन्दूरं
दत्त्वा ॐ छागपशवे नम इति पाद्यादिकं दत्त्वा
एतदधिपतये ॐ अग्नये नमः एतत्सम्प्रदानी-
यायै ह्रीं दुर्गायै नमः इति पुष्पं दत्त्वा पशो-
रङ्गदेवताः पूजयेत् । यथा, शिरसि ॐ रुधिर-
वदनायै नमः ललाटे ॐ शार्ङ्गिण्यै नमः भ्रूमध्ये
ॐ भृङ्गायै नमः चक्षुषोः ॐ त्रिनेत्रायै नमः
कर्णयोः ॐ पार्व्वत्यै नमः घ्राणे ॐ गौर्य्यै नमः
चिवुके ॐ चण्डिकायै नमः दन्तपङ्क्तौ ॐ
उग्रचण्डिकायै नमः जिह्वायां ॐ चण्डघण्टायै
नमः मुखे ॐ विरूपाक्षायै नमः ग्रीवायां ॐ
चण्डायै नमः । पृष्ठे ॐ महाभैरव्यै नमः उदरे
ॐ वैष्णव्यै नमः चतुष्पदे ॐ चण्डप्रियायै नमः
पार्श्वयोः ॐ सर्व्वेश्वर्य्यै नमः कटिदेशे ॐ विरू-
पाक्षायै नमः खुराग्रे ॐ कौशिक्यै नमः लाङ्गूले
ॐ प्रहर्षिण्यै नमः सर्व्वाङ्गेषु पश्वधिष्ठातृदेव-
इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा ।
नक्षत्रं कृत्तिका तुभ्यं गुरुर्देवो महेश्वरः ॥
हिरण्यञ्च शरीरन्ते धाता देवो जनार्द्दनः ।
पिता पितामहो देवस्त्वं मां पालय सर्व्वदा ॥
नीलजीमूतसङ्काशस्तीक्ष्णदंष्ट्रः कृशोदरः ।
भावशुद्धो मर्षणश्च अतितेजास्तथैव च ॥”
ॐ तीक्ष्णदंष्ट्राय नम इति पुष्पं दत्त्वा आं ह्रीं
फट् इति खड्गमादाय ॐ कालि कालि व्रजे-
श्वरि लौहदण्डायै नम इति जपित्वा छागस्य
ग्रीवायां खडग ! त्वं शीघ्रं छिन्धि छिन्धि फट्
फट् स्वाहा । इति पूर्ब्बाभिमुखं बलिं स्वयमुत्त-
रामुखः उत्तराभिमुखं बलिं स्वयं पूर्ब्बाभिमुखो
वा सकृत्प्रहारेण छिन्द्यात् । ततो मृण्मयादि-
पात्रे रुधिरमादाय चतुर्भागं कृत्वा ऐशान्यां
ॐ विदारिकायै नमः आग्नेय्यां ॐ पूतनायै
नभः नैरृत्यां ॐ पापराक्षस्यै नमः वायव्यां
ॐ कौशिक्यै नमः । ॐ तत् सदद्यामुके मासि
अमुकपक्षेऽमुकतिथौ वार्षिकशरत्कालीनदुर्गा-
महोत्सवे अमुकगोत्रस्य श्रीअमुकस्य दशवर्षा-
वच्छिन्नश्रीदुर्गाप्रीतिकामः श्रीदुर्गादेव्यै छागपशु-
रुधिरं दास्यामि इति सङ्कल्प्य ।
ॐ कालि कालि महाकालि कालिके पाप-
नाशिनि ।
शोणितञ्च बलिं गृह्ण वरदे वामलोचने ॥”
एष रुधिरबलिः ॐ दक्षयज्ञेति मन्त्रेण दद्यात् ।
ततः ऐं ह्रीं श्रीं कौशिकि रुधिरेणाप्यायता-
मिति वदेत् । ततः शिरसि ज्वलद्दशां दत्त्वा
ॐ तत् सदद्यामुके मास्यमुकपक्षेऽमुकतिथौ
वार्षिकशरत्कालीनदुर्गामहोत्सवे अमुकगोत्रस्य
श्रीअमुकस्य श्रीमद्दुर्गादर्शनाभिवन्दनस्पर्शना-
भिपूजनस्नपनतर्पणजनितपूर्ब्बपूर्ब्बाधिकपुण्य-
प्राप्तिकामो दुर्गादेव्यै सप्रदीपच्छागपशुशीर्षं
दास्यामीति सङ्कल्प्य एष सप्रदीपच्छागपशु-
शीर्षबलिः ह्रीं दुर्गायै नम इत्युत्सृजेत् ।
“ॐ जय त्वं सर्व्वभूतेशे सव्वभूतसमावृते ।
रक्ष मां निजभूतेभ्यो वलिं भुङ्क्ष्व नमो-
ऽस्तु ते ॥
ततः खड् गरुधिरमादाय ।
“ॐ यं यं स्पृशामि पादेन यं यं पश्यामि

शान्तिं तस्य प्रयच्छन्ति
श्रियमारोग्यमेव च ॥”
इति श्रीहरिभक्तिविलासे ८ विलासः
॥
देवोद्देशेन यथाविधिपूजोपहारत्यागः।
दुर्गादि-
देवतोद्देशेन
सङ्कल्पपूर्ब्बकच्छागादिपशुघात-
नम् । यथा, --
“बलिदानेन सततं जयेच्छत्रून् नृपान्
नृप ! ॥”
इति कालिकापुराणम् ॥
अस्य विधिनिषेधौ बलिशब्दे द्रष्टव्यौ
॥ * ॥
अथ बलिदानक्रमः ।
स्वयमुत्तराभिमुखः पूर्ब्बा-
भिमुखं बलिं अव्यग्रावयवं सुन्दरं
हृष्टपुष्टं
माल्यं कण्ठे वेष्टयित्वा स्नातं समानीय
कृता-
ञ्जलिः पठेत् ।
“ॐ वाराही यमुना गङ्गा करतोया
सरस्वती ।
कावेरी चन्द्रभागा च
सिन्धुभैरवसागराः ॥
पशुस्नानविधानाय सान्निध्यमिह
कल्पय ॥”
इति तीर्थान्यावाह्य ॐ अग्निः
पशुरासीत्तेना-
यजन्त स एतल्लोकमजयत्तस्मिन्नग्निः
स ते
लोको भविष्यति तं जेष्यसि पिबैता
अपः । ॐ
वायुः पशुरासीत्तेनायजन्त स
एतल्लोकमजय-
त्तस्मिन् वायुः स ते लोको भविष्यति
तं जेष्यसि
पिबैता अपः । ॐ सूर्य्यः
पशुरासीत्तेनायजन्त
स एतल्लोकमजयत् तस्मिन् सूर्य्यः स
ते लोको
ताभ्यो नमः । इति संपूज्य उत्सृजेत् ।
विष्णुः
ॐ तत् सदद्याश्विने मासि शुक्ले पक्षे
अमुक-
तिथौ वार्षिकशरत्कालीनदुर्गामहोत्सवे
अमुक-
गोत्रस्य श्रीअमुकस्य
दुर्गाप्रीतिकामनया दुर्गा-
देव्यै इमं पशुं वह्निदैवतं तुभ्यमहं
घातयिष्यामि
इत्युत्सृज्य कृताञ्जलिः पठेत् ।
“ॐ छाग ! त्वं बलिरूपेण मम
भाग्यादुप-
स्थितः ।
प्रणमामि ततः सर्व्वरूपिणं
बलिरूपिणम् ॥
यज्ञार्थे पशवः सृष्टाः स्वयमेव
स्वयम्भुवा ।
अतस्त्वां घातयिष्यामि तस्माद्यज्ञे
वधोऽवधः ॥
पशुयोनिप्रसूतोऽसि
पूजाहोमादिकर्म्मसु ।
तुष्टा भवतु सा देवी सरक्तपिशितैस्तव
॥
चण्डिकाप्रीतिदानेन दातुरापद्विनाशनः
।
चामुण्डाबलिरूपाय बले ! तुभ्यं
नमोऽस्तु ते ॥”
ततः “पगुपाशाय विद्महे शिरश्छेदाय
धीमहि ।
तन्नः पशुः प्रचोदयात् ।” इति कर्णे
जपेत् ।
ततः खड्गमानीत्र ह्रीं इति बीजाक्षरं
लिखित्वा ध्यायेत् ।
“कृष्णं पिणाकपाणिञ्च
कालरात्रिस्वरूपिणम्।
उग्रं रक्तास्यनयनं रक्तमाल्यानुलेपनम्
॥
रक्ताम्बरधरञ्चैव पाशहस्तं कुटुम्बिनम्
।
चक्षुषा ।
स स मे वश्यतां यातु यदि शक्रसमो भवेत् ॥”
इति ललाटे तिलकं कुर्य्यात् । मेषघाते तु मेषे-
त्यूहेन योज्यम् । मेषरुधिरदाने तु एकवर्षाव-
च्छिन्नदुर्गाप्रीतिकामः । प्रभूतबलिदाने तु द्वौ
वा त्रीन् वा अग्रतः कृत्वा संप्रोक्ष्य तत्तत्पशुभ्यो
नम इति संपूज्य छाग त्वमित्येकवत्तनानूहेन
प्रयोगः । पश्वन्तरेऽप्येवम् । वाक्ये तु एतान्
पशून् तुभ्यमहं घातयिष्ये । रुधिरदाने तु
एतान् रुधिरबलीन् दास्यामि इति सङ्कल्पा
प्रत्येकेन दद्यात् शीर्षदानमप्येवम् । ततो मूल-
मन्त्रं यथाशक्ति जप्त्वा समर्प्य प्रणमेदिति नन्दि-
केश्वरपुराणोक्तपद्धतिः ॥ * ॥

| | | |
|---|---|---|
| भविष्यति तं जेष्यसि पिबैता अपः । ॐ वाचन्ते शुन्धामि प्राणांस्ते शुन्धामि श्रोत्रन्ते शुन्धामि मेढ्रन्ते शुन्धामि पायुन्ते शुन्धामि । मनस्त आप्यायतां वाक् त आप्यायतां प्राणन्त आप्या- यतां चक्षुस्त आप्यायतां श्रोत्रन्त आप्यायतां यत्ते क्रूरं यदा स्थितं तत्त आप्यायतां तत्ते निष्ठायतां तत्ते शुध्यतु सुमहोभ्यः स्वाहा । इति मन्त्रैः स्नापयित्वा ॐ मेघाकारस्तम्भमध्ये पशुं बन्धय बन्धय सशृङ्गाद्यवयवं पशुं बन्धय बन्धय | पिबमानञ्च रुधिरं भुञ्जानं क्रव्यसंहतिम् ॥" एवं खड्गं ध्यात्वा गृहीत्वा, "ॐ रसनात्वं चण्डिकायाः सुरलोकप्रसाधकः ।" इत्यभिमन्त्र्य ऐँ ह्रीं खड् गाय नम इति पाद्यादिभिः संपूज्य पुनर्मुष्टौ ॐ महादेवाय नमः । धारे ॐ यमाय नमः । अग्रे ॐ ब्रह्मणे नमः । "ॐ असिर्विशसनः खड गस्तीक्ष्णधारो दुरा- सदः । श्रीगर्भो विजयश्चैव धर्म्मपाल ! नमोऽस्तु ते ॥ | |

अथ तान्त्रिकबलिदानविधिः । “तत्र सुलक्षणं पशुं देव्यग्रे संस्थाप्य वक्ष्यमाणविधिना उत्-
सृजेत् । तदुक्तं यामले ।
‘देव्यग्रे स्थापयित्वा तु पशुं लक्षणसंयुतम् ।
श्वेतसर्षपविक्षेपात् भूतानुत्सारयेत्ततः ॥’
अर्घ्योदकेन संप्रोक्ष्य अस्त्रेण संरक्ष्य कवचेनाव-
गुण्ठ्य धेनुमुद्रयामृतीकृत्य गन्धपुष्पाक्षतैः पशुं संपूज्य मूलेन सप्तधा तत्त्वमुद्रया प्रोक्षणं कृत्वा कर्णे इमं मन्त्रं पठेत् । पशुपाशाय विद्महे विश्वकर्म्मणे धीमहि तन्नो जीवः प्रचोदयात् । ततो ह्रीं कालि कालि वज्रेश्वरि लौहदण्डायै नम इति मन्त्रेण खड् गं पूजयेत् । ततः खड्-
गस्याग्रमध्यमूलं क्रमेण पूजयेत् । यथा हूं वागीश्वरीब्रह्मभ्यां नमः । हूं लक्ष्मीनारा-
यणाभ्यां नमः । हूं उमामहेश्वराभ्यां नमः । ततो ब्रह्मविष्णुशिवशक्तियुक्ताय खड् गाय नमः ।
इति सर्व्वत्र पूजयित्वा प्रणमेत् ।
‘खड्गाय खरशाणाय शक्तिकार्य्यार्थतत्पर ! ।
पशुश्छेद्यस्त्वया शीघ्रं खड् गनाथ ! नमोऽस्तु ते ॥’
ततो महावाक्यं अमुकदेवताप्रीतिकामः अमुकदेव्यै इमं पशुं तुभ्यमहं संप्रददे । ततो निवेदयेत् ।
‘यथोक्तेन विधानेन तुभ्यमस्तु समर्पितम् ॥’
ततो बलिं छिन्द्यात् । ततो रुधिरं समांसं देव्यै दद्यात् । ततोऽवशिष्टं वटुकादिभ्यो बलिं दद्यात् यथा हुं वां वटुकाय नमः । इति गन्धादिभिः संपूज्य पूर्ब्बवन्मन्त्रेण वायव्ये बलिं दद्यात् । हुं यां योगिनीभ्यो नमः इति संपूज्य पूर्ब्बवन्मन्त्रेण ईशाने बलिं दद्यात् । हुं क्षां क्षेत्रपालाय नमः इति संपूज्य पूर्ब्बवन्मन्त्रेण नैरृत्यां बलिं दद्यात् ।
हुं गां गणपतये नमः इति संपूज्य पूर्ब्बवन्म-
न्त्रेण आग्नेय्यां गणेशाय बलिं दद्यात् ।” इति तन्त्रसारः ॥ * ॥ (ननु “मा हिंस्यात् सर्व्वा-
भूतानि” “अहिंसा परमो धर्म्मः ।” इत्यादि वचनान्न कर्त्तव्यैव सर्व्वथा हिंसा कथं तर्हि मावक्ष्यति क्रतोश्चोपकरिष्यतीत्यन्तेन तदपि
सांख्यनये । मीमांसकमते तु विरोध एव तथाहि गुरुनये न खलु
सर्व्वभूतहिंसाभाव-
विषयकं कार्य्यं इति निषेधविध्यर्थस्य वाधं विना
अग्निषोमीयपश्वालम्भनविषयकं कार्य्यमिति
भावविध्यर्थ उपपद्यते । भट्टनये तु अङ्गे यथा
तथास्तु । न च मुख्यपशुयागे पुरुषार्थकपशु-
हिंसनस्यार्थसाधनत्वं अनर्थसाधनत्वञ्चोपपद्यते
विरोधात् । वस्तुतस्तु अङ्गेऽपि विरोधोऽस्त्येव
कुतो विधेरेष स्वभावो यः स्वविषयस्य साक्षात्
परम्परया वा
पुरुषार्थसाधनत्वमवगमयति
अन्यथाङ्गानां प्रधानोपकारकत्वमपि नाङ्गी-
क्रियेत । अर्थसाधनत्वं बलवदनिष्टाननुबन्धीष्ट-
साधनत्वं अनर्थसाधनत्वं बलवदनिष्टसाधनत्वं
न चानयोरेकत्र समावेश इति । अतएवोक्तं
‘तस्माद्यज्ञे वधोऽवधः’ इति । नन्वेवं ‘श्येनेना-
भिचरन् यजेत’ इत्यत्र श्येनस्य शत्रुवधरूपेष्ट-
साधनत्वमवगतं ‘अभिचारो मूलकर्म्म च ।’
११ । ६३ । इति मनुना उपपातकगणमध्ये पाठात्
अनिष्टसाधनत्वमवगतम्। तदेतत्कथमुपपद्य-

**ब(व)लिपोदकी**, स्त्री, (बलेः पोदकी उपोदकी ।) उपोदकी । इति राजनिर्घण्टः ॥

**ब(व)लिप्रियः**, पुं, (बलिमुपहारं प्रीणातीति । बलि + प्री + क ।) लोध्रवृक्षः । इति शब्द-
चन्द्रिका ॥ (बलिर्वैश्वदेवबलिः प्रियो यस्य इति व्युत्पत्त्या काकः । उपहारप्रिये वाच्यलिङ्गः ॥)

**ब(व)लिभः**, त्रि, (बलिश्चर्म्मसंकोचोऽस्त्यस्येति । बलि + “तुन्दिबलिवटेर्भः ।” ५ । २ । १३९ ।
इति भः ।) बलिनः । इत्यमरः । २ । ६ । ४५ ॥

**ब(व)लिभुक्**, [ज्] पुं, (बलिं वैश्वदेवबलिं गृहस्थ-
दत्तद्रव्यं वा भुङ्क्त इति । भुज् + क्विप् ।)
काकः । इत्यमरः । २ । ५ । २० ॥ (यथा,
भागवते । १ । १८ । ३३ ।
“अहो अधर्म्मः पालानां पीव्नां बलिभुजा-
मिव ॥”)

**ब(व)लिमन्दिरं**, क्ली, (बलेः स्वनामख्यातस्य राज्ञो
मन्दिरमालयः । बलिर्हि वामनरूपाय विष्णवे
सर्व्वस्वं दत्त्वा प्रह्लादेन सह पाताले निवसति इति
पौराणिकी कथात्रानुसन्धेया ।) अधोलोकः ।
पातालम् । इति शब्दमाला ॥

**ब(व)लिमान्**, [त्] त्रि, (बलिश्चर्म्मसंकोचोऽस्त्य-

हिंसाप्रवृत्तिः शुभादृष्टजनकत्वेन शास्त्रेषूप-
दिष्टा अतोऽत्रोच्यते । अथ वैधहिंसाविचारः ।
‘मा हिंस्यात् सर्व्वाभूतानि’ इत्यत्र
सर्व्वशब्दस्य
व्यापकार्थपरतया एतद्विधिमनुल्लङ्घ्य ‘वायव्यं
श्वेतमालभेत’ इत्यादि विधेर्विषयाप्राप्तेरगत्या
वैधातिरिक्तविषयत्वं सर्व्वाः सर्व्वाणि छन्दसि
वेत्यनेन तत्पदं सिद्धम् । यदपि नाना दर्शन-
टीकाकृद्भिर्वाचस्पतिमिश्रैस्तत्त्वकौमुद्याम्
अभि-
हितं न च ‘मा हिंस्यात् सर्व्वाभूतानि’
इति सामान्यशास्त्रं विशेषशास्त्रेण ‘अग्नि-
षोमीयं पशुमालभेत’ इत्यनेन वाध्येत इति
वाच्यं विरोधाभावात् । विरोधे हि बलीयसा
दुर्ब्बलं वाध्यते । न चास्ति विरोधः भिन्नषिषय-
त्वात् । तथाहि ‘मा हिंस्यात् इति निषेधेन
हिंसाया अनर्थहेतुभावो ज्ञाप्यते न पुनरक्रत्व-
र्थत्वमपि । न चानर्थहेतुत्वक्रतूपकारकत्वयोः
कश्चिदस्ति विरोधः । हिंसा हि पुरुषस्य दोष-

तामिति चेन्मैवं ‘आततायिनमायान्तं
हन्या-
देवाविचारयन् ।’ ८ । ३५० ।
इत्येकवाक्यतया
आततायिस्थले इष्टसाधनत्वं
अनाततायिस्थले
तूपपातकत्वेन
बलवदनिष्टसाधनत्वमित्यविरोध
एव ॥” इति तिथितत्त्वम् ॥)

**ब(व)लिध्वंसी**, [न्] पुं, (बलिं तदाख्यया प्रसिद्धं
दैत्यविशेषं ध्वंसयतीति । बलि + ध्वंस
+ णिनि ।
वामनरूपेण बलेः सर्व्वस्वग्रहणादस्य
तथा-
त्वम् । यद्वा, बलिना पूजोपहारेण अविद्यां
ध्वंसयितुं शीलमस्य ।) विष्णुः ।
इत्यमरः । १ ।
१ । २१ ॥ (भगवता वामनरूपधरेण
बलिकृत-
यज्ञगमनपूर्ब्बकं तत्सकाशात् सर्व्वस्वं
गृहीत-
मित्येतत्कथा बलिशब्दे द्रष्टव्या ॥)

**ब(व)लिनः**, त्रि, (बलिः शिथिलं चर्म्म अस्या-
स्तीति । बलि + पामादित्वान्नः ।)
बलिभः ।
जरया श्लथचर्म्मयुक्तः । इत्यमरः । २ ।
६ । ४५ ॥

**ब(व)लिनन्दनः**, पुं, (बलेस्तदाख्यया प्रसिद्धस्य
दैत्यस्य
नन्दनः पुत्त्रः ।) बाणासुरः । इति
शब्दरत्ना-
वली ॥ (अयं खलु यादवश्रेष्ठेन भगवता
कृष्णेन
सह युद्धमकरोत् । तपःप्रतापवशीकृतो
महा-
देवश्च स्वयमस्य दौवारिकत्वञ्चकार ।
तद्विव-
रणादिकं हरिवंशे १७३ अध्यायमारभ्य
१८३

स्येति । बलि + मतुप् ।) बलिनः ।
जरया श्लथ-
चर्म्मयुक्तः । इत्यमरटीका ॥ (बलिः
पूजोपहारं
विद्यतेऽस्येति व्युत्पत्त्या
उपहारविशिष्टः ।
यथा, रघुः । १४ । १५ ।
“वाष्पायमाणो बलिमन्निकेत-
मालेख्यशेषस्य पितुर्विवेश ॥”)

**ब(व)लिमुखः**, पुं, (बलिर्मुखे यस्य । यद्वा, बलि-
श्चर्म्मसङ्कोचस्तद्युक्तं मुखं यस्य ।)
वानरः ।
इत्यमरटीकायां रमानाथः ॥

**ब(व)लिष्ठः**, पुं, (अतिशयेन बलवान् + बलवत्
+
इष्ठन् । विन्मतोर्लुगिति मतुपो लुक् ।
प्रशस्त-
भारवाहकत्वादस्य तथात्वम् ।) उष्ट्रः ।
इति
राजनिघण्टः ॥
(धर्म्मसावर्णिकमन्वन्तरान्त-
र्गत ऋषिभेदः । यथा, मार्कण्डेये । ९४
। १९ ।
“हविष्मांश्च बलिष्ठश्च
ऋष्टिरन्यस्तथारुणिः ।
निश्चरश्चानघश्चैव विष्टिश्चान्यो
महामुनिः ॥
सप्तर्षयोऽन्तरे तस्मिन्नग्निदेवश्च सप्तमः
॥”
रलयोरैक्यात् क्वचित् वरिष्ठश्चेति
पाठो
दृश्यते ॥)

**ब(व)लिष्ठः**, त्रि, (अतिशयेन बलवान् । बलवत्
+
इष्ठन् । विन्मतोर्लुगिति मतुपो लुक् ।)
अति-
शयबलबान् । यथा, --
“प्रायश्चित्तं बिना पूता त्वमेष
शुद्धमानसा ।

| | | |
|---|---|---|
| | अध्यायपर्य्यन्तं द्रष्टव्यम् ॥ बलेः ययातिवंशीयस्य राज्ञः नन्दनः क्षेत्रजः पुत्त्रः इति व्युत्पत्त्या अङ्गवङ्गकलिङ्गाद्याः । यदुक्तं, विष्णुपुराणे । ४ । १८ । १ । "हेमात् सुतपास्तस्मात् बलिः यस्य क्षेत्रे दीर्घतमसा अङ्गवङ्गकलिङ्गसुह्म-पुण्ड्राख्यं बालेयं क्षत्त्रमजन्यत ॥")<br>**ब(व)लिनी**, स्त्री, (बलं देयत्वेनास्त्यस्या इति इनिः । ङीप् ।) वाट्यालकः । इति शब्दचन्द्रिका ॥<br>**ब(व)लिपुष्टः**, पुं, (वैश्वदेवेन बलिना पुष्टः ।) काकः । इत्यमरः । २ । ५ । २० ॥ | अकामा या बलिष्ठेन न स्त्री जारेण दुष्यति ॥"<br>इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५५ अध्यायः ॥<br>बलिष्ठा यथा । वायुः १ विष्णुः २ गरुडः ३ हनूमान् ४ यमः ५ महावराहः ६ सरभः ७ सत्प्रतिज्ञा ८ गजः ९ पृथुराजः १० बलरामः ११ वाली १२ बलिः १३ भीमः १४ सती १५ शेषः १६ पुराकृतम् १७ । इति कविकल्प-लता ॥ |

**बलिष्णुः**, त्रि, (बल्यते वध्यते इति । बल + इष्णुः ।)

अपमानितः । इत्युणादिकोषः ॥

**ब(व)लिसद्म**, [न्] क्ली, (बलेस्तदाख्यदत्यस्य सद्म

निकेतनम् ।) रसातलम् । इत्यमरः । १ । ८ । १ ॥

**ब(व)लिहा**, [न्] पुं, (बलिं हन्ति इति । बलि +

हन् + क्विप् । वामनरूपेण बलेः सर्व्वस्वग्रहणा-
दस्य तथात्वम् ।) विष्णुः । इति हेमचन्द्रः ॥

**ब(व)ली**, [न्] पुं, (बलमस्यास्तीति । बल + "बला-

दिभ्यो मतुबन्यतरस्याम् ।" ५ । २ । १३६ । इति
पक्षे इनिः ।) बलरामः । इति शब्दरत्नावली ॥
उष्ट्रः । महिषः । वृषभः । शूकरः । कफः ।
कुन्दवृक्षः । इति जटाधरः ॥ माषः । (स्वनाम-
ख्यातो वत्सप्रीपुत्त्रः । यथा, मार्कण्डेये । ११८ ।
२ ।
"बली बलाकश्चण्डश्च प्रचण्डश्च सुविक्रमः ॥")
बलयुक्ते, त्रि । तत्पर्य्यायः । अंशलः २ निर्द्दिग्धः
३ मांसलः ४ उपचितः ५ । इति हेमचन्द्रः ।
३ । ११२ ॥ (यथा, मार्कण्डेये । ३४ । ८९ ।
"सार्द्धं न बलिभिः कुर्य्यान्न च न्यूनैर्न निन्दितैः ॥")

**ब(व)ली**, स्त्री, (बलि + पक्षे ङीष् ।) बलिः । जरया

श्लथचर्म्म । इत्यमरटीकायां भरतः ॥ (यथा, --

यः ।) प्रधानधातुः । शुक्रम् । बलकरे, त्रि ।
इति मेदिनी । ये, ४० ॥ (यथा, --
"कट्वम्लवीर्य्यो लशुनो हितश्च
स्निग्धो गुरुस्वादुरसोऽथ बल्यः ॥"
इति हारीते कल्पस्थाने तृतीयेऽध्याये ॥)

**बल्यः**, पुं, (बलाय मुक्तये हितः । बल + यः ।)

बुद्धभिक्षुकः । इति त्रिकाण्डशेषः ॥

**बल्या**, स्त्री, (बलाय हिता । बल + "वुञ्छण्-

कठेति ।" ४ । २ । ८० । इति यः । ततष्टाप् ।)
अतिबला । अश्वगन्धा । शिम्रीडीक्षुपः ।
प्रसारिणी । इति राजनिर्घण्टः ॥

**बल्ह**, ङ स्तृतौ । हिंसायाम् । दाने । वाचि ।

इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-
सेट् ।) अन्तः स्थतृतीयोपधः । ङ, बल्हते ।
इति दुर्गादासः ॥

**बष्कयणी** स्त्री, (बष्कयस्तरुणवत्सः । सोऽस्ति

अस्याः । बष्कय + पामादित्वान्नः
पक्षे इनिः । अट्कुप्वाङिति णत्वम् । ततो
ङीष् ।) चिरप्रसूता गौः । इत्यमरभरतौ ॥
(यथा, सिद्धान्तकौमुद्याम् । २ । १ । ६५ ।
"पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्क-
यणीप्रवक्तृश्रोत्रियाध्यापकधूर्त्तैर्जातिः ॥")

**बष्कयिणी** स्त्री, (बष्कयस्तरुणवत्सः । सोऽस्ति

अस्याः । बष्कय + पामादित्वान्नः
पक्षे इनिः । अट्कुप्वाङिति णत्वम् । ततो
ङीष् ।) चिरप्रसूता गौः । इत्यमरभरतौ ॥
(यथा, सिद्धान्तकौमुद्याम् । २ । १ । ६५ ।
"पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्क-
यणीप्रवक्तृश्रोत्रियाध्यापकधूर्त्तैर्जातिः ॥")

**बहु**, त्रि, (बंहते इति । बहि वृद्धौ + "लङ्घिबंह्योर्न

लोपश्च ।" उणा० १ । ३० । इति कुर्नलोपश्च ।)
त्र्यादिसंख्या ॥ अनेकम् । विपुलः । इति
मेदिनी । हे, ६ ॥ तत्पर्य्यायः । प्रभूतम् २
प्रचुरम् ३ प्राज्यम् ४ अदभ्रम् ५ बहुलम् ६
पुरुहम् ७ पुरु ८ भूयिष्ठम् ९ स्फिरम् १० भूयः
११ भूरि १२ । इत्यमरः । ३ । १ । ६३ ॥ तद्-

**बहुकन्दः**, पुं, (बहवः कन्दा यस्य ।) शूरणः ।

इति राजनिर्घण्टः ॥

**बहुकन्दा**, स्त्री, (बहवः कन्दा यस्याः ।) कर्कटी ।

इति राजनिर्घण्टः ॥

**बहुकरः**, पुं, (बहु कार्य्यं करोतीति । बहु + कृ +

"दिवाविभानिशाप्रभेति ।" ३ । २ । २१ । इति
टः ।) उष्ट्रः । इति त्रिकाण्डशेषः ॥

**बहुकरः**, त्रि, (बहु करोति भुवं संमार्ष्टि इति ।

बहु + कृ + टः ।) मार्जनकारी । तत्पर्य्यायः ।
खलपूः २ । इत्यमरः । ३ । १ । १७ ॥ भूमि-
सम्मार्ज्जकः ३ । इति शब्दरत्नावली ॥ बहु-
कार्य्यकर्त्ता । यथा, भट्टिः । ५ । ७८ ।
"निहन्ता वैरकाराणां सतां बहुकरः सदा ।
पारश्वधिकरामस्य शक्तेरन्तकरो रणे ॥"

**बहुकरी**, स्त्री, (बहु करोति भुवं संमार्ष्टि इति ।

बहु + कृ + टः । ङीष् ।) सम्मार्ज्जनी । इति
हेमचन्द्रः । ४ । ८२ ॥

**बहुकर्णिका**, स्त्री, (बहवः कर्णा इव पत्राणि

यस्याः ।) आखुकर्णी । इति राजनिर्धण्टः ॥

**बहुकूर्च्चः**, पुं, (बहूनि कूर्च्चानि यस्य ।) मधुनालि-

केरिकः । इति राजनिर्घण्टः ॥

**बहुगन्धं**, क्ली, (बहुर्गन्धो यस्मिन् ।) त्वचम् ।

इति राजनिर्घण्टः ॥ (दारचिनी इति भाषा ॥)

**बहुगन्धः**, पुं, (बहुर्गन्धो यस्मिन् ।) कुन्दरुकः ।

"कुष्ठं सुचूर्णितं कृत्वा
घृतमाक्षिकसंयुतम् ।
भक्षणात् स्वप्नवेलायां
बलीपलितनाशनम् ॥"
इति वैद्यकभैषज्यधन्वन्तरौ
रसायनाधिकारे ॥)

**ब(व)लीकं**, क्ली, (बलति संवृणोतीति । बल संव-
रणे + "अलीकादयश्च ।" उणा ० ४ । २५ । इति
कीकन् ।) पटलप्रान्तम् । इत्यमरः । २ । २ ।
१४ ॥ छाँचि इति भाषा ॥ (यथा, माघे ।
३ । ५३ ।
"यस्यामसेवन्त नमद्वलीकाः
समं बधूभिर्वलभीर्युवानः ॥")

**ब(व)लीमुखः**, पुं, (बलीयुक्तं मुखं यस्य ।) वानरः ।
इत्यमरः । २ । ५ । ३ ॥

**ब(व)लीयान्**, [स्] त्रि, (अतिशयेन बलवान् । बल-
वत् + ईयसुन् ।) अतिशयबलयुक्तः । यथा, --
"आगमादेशयोर्मध्ये बलीयानागमो विधिः ॥"
इति दुर्गादासटीका ॥

**ब(व)लीवर्द्दः**, पुं, (ईर्लक्षीः वर् वरणम् । वर्
ईप्सायां क्विप् । ईश्च वर् च ईवरौ तौ ददातीति
ईवर्द्दः । बलमस्यास्तीति बली । ततो बली च
ईवर्द्दश्च इति ।) वृषः । इत्यमरः । २ । ९ । ५९ ॥
(यथा, कथासरित्सागरे । २० । २७ ।
"संयोज्याथ बलीवर्द्दयुगं रचितमङ्गलः ।
कृत्वा बलिं तस्य तरोरारेभे कृषिमत्र सः ॥")
तीर्थयात्रायां तदारूढस्य दोषो यथा, --
"बलीवर्द्दसमारूढः शृणु तस्यापि यत् फलम् ।
वैदिकपर्य्यायः । उरु १ तुवि २ पुरु ३ भूरि
४ शश्वत् ५ विश्वम् ६ परिणसा ७ व्यानसिः ८
शतम् ९ सहस्रम् १० सलिलम् ११ कुवित् १२ ।
इति द्वादश बहुनामानि । इति वेदनिघण्टौ ।
३ । १ ॥ (यथा, मनुः । ७ । ८६ ।
"अल्पं वा बहु वा प्रेत्य दानस्यावाप्यते फलम् ॥"
तथा, तत्रैव । ८ । ७७ ।
"एकोऽलुब्धस्तु साक्षी स्याद्बह्व्यः शुच्योऽपि न
स्त्रियः ॥"
बहुमतम् । बहुमानम् । यथा, रघुः । १२ । ८९ ।
"रामस्तुलितकैलासमरातिं बह्वमन्यत ॥")

**बहुकः** पुं, (बहु + संज्ञायां कन् ।) कर्कटः । अर्कः ।
दात्यूहः । जलखातकः । इति मेदिनी । के,
१२९ ॥ ("संख्यायाः अतिशदन्तायाः कन् ।" ५ ।
१ । २२ । इति कन् । बहुभिः क्रीते, त्रि ।)

**बहुकण्टकः**, पुं, (बहूनि कण्टकान्यस्य ।) क्षुद्र-
गोक्षुरः । यवासः । हिन्तालः । इति राज-
निर्घण्टः ॥

**बहुकण्टका**, स्त्री, (बहूनि कण्टकान्यस्याः ।)
अग्निदमनी । इति राजनिर्घण्टः ॥

**बहुकण्टा**, स्त्री, (बहवः कण्टाः कण्टकानि
यस्याः ।) कण्टकारी । इति राजनिर्घण्टः ॥
(विवृतिरस्याः कण्टकारीशब्दे ज्ञातव्या ॥)
इति राजनिर्घण्टः ॥ (उग्रगन्धे, त्रि ॥)

**बहुगन्धदा**, स्त्री, (बहुगन्धं ददाति या । बहु-
गन्ध + दा + क ।) कस्तूरी । इति
राजनिर्घण्टः ॥
(गुणादयोऽस्याः कस्तूरीशब्दे
ज्ञातव्याः ॥)

**बहुगन्धा**, स्त्री, (बहुर्गन्धो यस्याम् ।) चम्पक-
कलिः । यूथिका । कृष्णजीरकः ।
इति राज-
निर्घण्टः ॥

**बहुगर्ह्यवाक्**, [च्] त्रि, (बहु गर्ह्या बहु निन्दिता
वाग् यस्य ।) कुत्सितबहुवादी ।
इत्यमरः ॥

**बहुग्रन्थिः**, पुं, (बहवो ग्रन्थयो यस्य ।) झावुकः ।
इति शब्दचन्द्रिका ॥ (झाउ इति भाषा ॥)

**बहुच्छिन्ना**, स्त्री, (बहु यथा स्यात्तथा छिद्यते
स्मेति । बहु + छिद् + क्त ।)
कन्दगुडूची ।
इति राजनिर्घण्टः ॥

**बहुतः** [स्] व्य, (बहुभ्य इत्यर्थे बहुशब्दात् "पञ्चा-
म्यास्तसिल् ।" ५ । ३ । ७ । इति
तसिल्प्रत्ययः ॥)
बहुभ्यः ॥

**बहुतन्त्रिः**, त्रि, (बहवस्तन्त्रयो यस्य ।) बहुतन्त्र-
विशिष्टः । यथा । बहुतन्त्रिः कायः ।
बहुतन्त्री
ग्रीवा । बहुतन्त्रि गात्रम् । यथा च ।
विभज्य
नक्तं दिवमस्ततन्त्रिणेति किराते
ह्रस्वेकारान्त-
तन्त्रिशब्दस्य प्रयोगः । इति
संक्षिप्तसारः ॥

**बहुतन्त्रीः**, त्रि, (बहवस्तन्त्र्यो यस्मिन् ।) बहुतन्त्र-

नरके वसते षोरे गवां क्रोधे हि दारुणे ॥

सलिलञ्च न गृह्णन्ति पितरस्तस्य

देहिनः ॥”

इति मात्स्ये ८८ अध्यायः ॥

**ब(व)ल्यं**, क्ली, (बलाय हितम् । बल + “बुञ्छण्

कठजिलसेनिरढञ्ण्ययेति ।” ४ । २ ।

८० । इति

विशिष्टः । यथा । बहुतन्त्रीर्ग्रीवा

बहुतन्त्री-

र्धमनी । इति सिद्धान्तकौमुदी ॥ एवं

बहुतन्त्रीः

कायः । बहुतन्त्रि गात्रम् ॥

**बहुतन्त्रीकः**, त्रि, (बहुतन्त्री + स्वार्थे कन् ।) बहु-

तन्त्रविशिष्टः । यथा । बहुतन्त्रीका

वीणा ।

इति सिद्धान्तकौमुदी ॥ एवं बहुतन्त्रीकः पटः ।
बहुतन्त्रीकं वस्त्रम् ॥

**बहुतरकणिशः**, पुं, (बहुतराणि कणिशानि धान्य-शीर्षाणि यस्य ।) रागीधान्यम् । इति राज-निर्घण्टः ॥

**बहुता**, स्त्री, बहूनां भावः । बहुशब्दात् तत्वौ भावे इति तप्रत्ययः ॥

**बहुतिक्ता**, स्त्री, (बहुस्तिक्तो रसो यस्याः ।) काकमाची । इति राजनिर्घण्टः ॥

**बहुतिथः**, त्रि, (बहु + "बहुपूगगणसङ्घस्य तिथुक्" । ५ । २ । ५२ । इति तिथुक् । मुग्ध-
बोधमते "बहुगणपूगसंघातास्तिथट् तलोपश्च ।"
७ । ४२ । इति तिथट् ।) बहूनां पूरणः ।
इति व्याकरणम् ॥ (यथा, मार्कण्डेयपुराणे । २२ । १ ।
"ततः काले बहुतिथे गते राजा पुनः सुतम् ।
प्राह गच्छाशु विप्राणां त्राणाय चर मेदिनीम् ॥")

**बहुत्र**, व्य, (बहु + "सप्तम्यास्त्रल् ।" ५ । ३ । १० । इति त्रल् ।) बहुषु । इति सिद्धान्तकौमुदी ॥

**बहुत्वं**, क्ली, बहूनां भावः । बहुशब्दात् त्वप्रत्ययेन निष्पन्नम् ॥ (यथा, महाभारते । १ । ३५ । ४ ।
"बहुत्वान्नामधेयानि पन्नगानां तपोधन ! ॥")

**बहुत्वक्**, [च्] पुं, (बहवस्तचो यस्य ।) भूर्ज-वृक्षः । इति शब्दरत्नमाला ॥

**बहुत्वक्कः**, पुं, (बहुत्वगेव । बहुत्वच् + स्वार्थे कन् । भूर्जवृक्षः । इति हेमचन्द्रः । ४ । २१० ॥

**बहुदण्डिकः**, त्रि, (बहवो दण्डाः सन्त्यस्य । बहु-दण्ड + ठन् ।) बहुदण्डविशिष्टः । यथा । बहु-

**बहुधारं**, क्ली, (बह्वी धारा यस्य ।) वज्रम् । इति राजनिर्घण्टः ॥

**बहुनाडिकः**, त्रि, (बहुनाडि + कन् ।) कायः । इति सिद्धान्तकौमुदी ॥

**बहुनाडीकः**, त्रि, (बह्व्यो नाड्यो यस्मिन् । बहु-नाडी + कप् ।) दिवसः । इति संक्षिप्तसारः ॥
स्तम्भः । इति सिद्धान्तकौमुदी ॥

**बहुनादः**, पुं, (बहुर्महान् नादः शब्दो यस्य ।) शङ्खः । इति राजनिर्घण्टः ॥

**बहुपटुः**, त्रि, ईषदूनः पटुः । इति व्याकरणम् ॥ बहुषु कर्म्मसु दक्षश्च ।

**बहुपत्रं**, क्ली, (बहूनि पत्राण्यस्य ।) अभ्रकम् । इति राजनिर्घण्टः ॥

**बहुपत्रः**, पुं, (बहूनि पत्राणि दलान्यस्य ।) पलाण्डः । इति राजनिर्घण्टः ॥
अनेकपत्रयुक्ते, त्रि ॥

**बहुपत्रा**, स्त्री, (बहुपत्र + टाप् ।) तरुणी-पुष्पम् । इति राजनिर्घण्टः ॥
(भूम्यामलकी ।
तत्पर्य्यायो यथा, --
"भूम्यामलकिका प्रोक्ता शिवा तामलकीति च ।
बहुपत्रा बहुफला बहुवीर्य्याज्झटापि च ॥")
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**बहुपत्रिका**, (बहुपत्रा + संज्ञायां स्वार्थे वा कन् । टापि अत इत्वम् ।) भूम्यामलकी ।
मेथिका ।
(अस्थाः पर्य्यायो यथा,
"मेथिका मिथिनिर्मेथिर्दीपनी बहुपत्रिका ।
"वटो रक्तफलः शृङ्गी न्यग्रोधः स्कन्धजो ध्रुवः ।
क्षीरी वैश्रवणो वासो बहुपादो वनस्पतिः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
अनेकपादविशिष्टे, त्रि । यथा, भागवते । ४ । २९ । २ ।
"पुरुषं पुरञ्जनं विद्यात् यद्व्यनक्त्यात्मनः पुरम् ।
एकद्वित्रिचतुष्पादं बहुपादमपादकम् ॥"
तथा च महाभारते । १४ । ४२ । ३७ ।
"द्विपादबहुपादानि तिर्य्यग्गतिमतीनि च ॥")

**बहुपुत्त्रः**, पुं, (बहवः पुत्त्राः सन्ततयो यस्य ।) सप्तपर्णः । इति शब्दचन्द्रिका ॥ अनेकसुत-विशिष्टे, त्रि ॥ (यथा, हरिवंशे । ३ । ६४ ।
"बहुपुत्त्रस्य विदुषश्चतस्रो विद्युतः स्मृताः ॥")

**बहुपुत्त्री**, स्त्री, (बहवः पुत्त्राः पुत्त्रसदृशमूलानि यस्याः ।) शतमूली । इति रत्नमाला ॥ (शत-मूलीशब्देऽस्या विवरणं ज्ञातव्यम् ॥)

**बहुपुष्पः**, पुं, (बहूनि पुष्पानि यस्य ।) पारिभद्र-वृक्षः । इति राजनिर्घण्टः ॥

**बहुपुष्पिका**, स्त्री, (बहुपुष्पा + संज्ञायां कन् । अत इत्वम् ।) धातकी । इति राजनिर्घण्टः ॥

**बहुप्रजः**, पुं, (बह्व्यः प्रजा यस्य ।) मुञ्जतृणम् । इति राजनिर्घण्टः ॥ शूकरः । इति हेम-चन्द्रः । ४ । ३५४ ॥ बहुसन्ततिविशिष्टे, त्रि ॥
(छन्दसि तु "बहुप्रजाच्छन्दसि ।" ५ । ४ । १२२ ।
इति अस्भागान्तः । यथा, सिद्धान्तकौमुद्यां वैदिकप्रक्रिया ।
"बहुप्रजा निरृतिमाविवेश ॥")

**बहुप्रतिज्ञः**, त्रि, (बह्व्यः प्रतिज्ञाः यस्मिन् ।) अनेक-पदसङ्कीर्ण-पूर्ब्बपक्ष-विशिष्ट-व्यवहारः । यथा । "यत्तु अनेकपदसङ्कीर्णः पूर्ब्बपक्षो न सिद्ध्यतीति । तत्र यद्यनेकवस्तुसङ्कीर्ण इत्युच्यते
तदा न दोषः । मदीयमनेन हिरण्यं वासो

दण्डिका नगरी बहुदण्डिको ग्रामः । इति सिद्धान्तकौमुदी ॥

**बहुदुग्धः**, पुं, (बहूनि दुग्धानि अपक्वावस्थायां यस्य । यद्वा, बहूनि दुग्धानीव शुक्लवस्तून्यस्य ।) गोधूमः । इति राजनिर्घण्टः ॥

**बहुदुग्धा**, स्त्री, (बहु दुग्धं यस्याः ।) बहुक्षीरा गौः । तत्पर्य्यायः । व्यञ्जुला २ । इति हेमचन्द्रः । ४ । ३३५ ॥ (स्नुहीवृक्षः । बहुदुग्ध विशिष्टत्वात् ॥)

**बहुदुग्धिका**, स्त्री, (बहुदुग्धा + स्वार्थे कन् । टाप् । अत इत्वम् ।) स्नुहीवृक्षः । इति शब्द चन्द्रिका ॥

**बहुधा**, व्य, (बहु + "विभाषा बहोर्धा विप्रकृष्टकाले ।" ५ । ४ । २० । इति धा ।) बहुप्रकारम् । इति व्याकरणम् ॥ (यथा, ऋग्वेदं । १ । १६४ । ४६ ।
"एकं सद्विप्रा बहधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥"
तथा, गीतायाम् । ९ । १५ ।
"एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥"
"केचित्तु विश्वतो मुखं सर्व्वात्मकं मां बहुधा ब्रह्मरुद्गादिरूपेणोपासते ॥" इति तट्टीकायां श्रीधरस्वामी ॥)

बोधिनी बहुबीजा च जातिगन्धफला तथा ॥
वल्लरी चैव कामन्था मिश्रपुष्पा च कैरवी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
महाशतावरी । इति राजनिर्घण्टः ॥

**बहुपत्री**, स्त्री, (बहुपत्र + गौरादित्वात् ङीष् ।) लिङ्गिनी । गृहकन्या । तुलसी । जतुका । वृहती । गोरक्षदुग्धा । इति राजनिर्घण्टः ॥

**बहुपर्णः**, पुं, (बहूनि पर्णानि पत्राणि यस्य ।) सप्तच्छदवृक्षः । इति राजनिर्घण्टः ॥ अनेकपत्रयुक्ते, त्रि ॥

**बहुपर्णिका**, स्त्री, (बहुपर्ण + संज्ञायां कन् । टापि अत इत्वम् ।) आखुकर्णी । इति राजनिर्घण्टः ॥

**बहुपर्णी**, स्त्री, (बहुपर्ण + गौरादित्थात् ङीष् ।) मेथिका । इति राजनिर्घण्टः ॥ (यथा, --
"मेथिका मिथिनिर्मेथिर्दीपनी बहुपत्रिका ।
बोधिनी बहुबीजा च जातिगन्धफला तथा ॥
वल्लरी चैव कामन्था मिश्रपुष्पा च कैरवी ।
कुञ्जिका बहुपर्णी च पित्तजिद्वायुनुद्विधा ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डेप्रथमे भागे ॥)

**बहुपात्**, [द्] पुं, (बहवः पादो यस्य । अनेकशिफावत्त्वादस्य तथात्वम् ।) वटवृक्षः । इत्यमरः । २ । ४ । ३२ ॥

**बहुपादः**, पुं, (बहवः पादा यस्य । अनेकशिफावत्त्वादस्य तथात्वम् ।) वटवृक्षः । इति राजनिर्घण्टः ॥ (यथा, --

रूपकादि वापहृतमित्येवंविधस्यादुष्टत्वात् । ऋणादानपदसङ्करे पक्षाभास इति चेत् तदपि न मदीया रूपका अनेन वृद्ध्या गृहीताः सुवर्णञ्चास्य हस्ते निक्षिप्तं मदीयं क्षेत्रमपहरति चेत्यादीनां पक्षत्वमिष्यते एव । किन्तु क्रियाभेदात् क्रमेण व्यवहारो न युगपदित्येतावत् ।
यथाह कात्यायनः ।
'बहुप्रतिज्ञं यत् कार्य्यं व्यवहारेषु निश्चितम् ।
कामन्तदपि गृह्णीयाद्राजा तत्त्वबुभुत्सयेति ॥'
तस्मादनेकपदसङ्कीर्णः पूर्ब्बपक्षो युगपन्न सिध्यतीति तस्यार्थः ।" इति मिताक्षरा ॥ अनेकप्रतिज्ञायुक्ते, त्रि ॥

**बहुप्रदः**, त्रि, (प्रददातीति प्रदः । प्र + दा + क । बहूनां प्रदः ।) प्रचुरदाता । तत्पर्य्यायः । वदान्यः २ स्थूललक्ष्यः ३ दानशौण्डः ४ । इत्यमरः । ३ । १ । ६ ॥ स्थूललक्षः ५ दानवीरः ६ दानपूर्णः ७ । इति शब्दरत्नावली ॥ (पुं, महादेवः । यथा, महाभारते १३ । शिवसहस्रनामकथने । १७ । १०८ ।
"कुलहारी कुलकर्त्ता बहुविद्यो बहुप्रदः ॥")

**बहुप्रसूः**, स्त्री, (बहून् प्रसूते इति । बहु + प्र + सू + क्विप् ।) बहुसन्तानप्रसवकारिणी । तत्-
पर्य्यायः । कृमिला २ । इति हेमचन्द्रः । ३ । २२२ ॥

**बहुफलः**, पुं, (बहूनि फलानि यस्य ।) कदम्बवृक्षः । इति मेदिनी । ले, १५७ ॥ विकङ्कतः । तेजः-
फलः । इति राजनिर्घण्टः ॥

**बहुफला**, स्त्री, (बहूनि फलानि यस्याः ।) क्षविका । माषपर्णी । काकमाची । त्रपुसी । शशाण्डुली । क्षुद्रकारवेल्ली । इति राज-निर्घण्टः ॥ भूम्यामलकी । इति भावप्रकाशः ॥

**बहुफलिका**, स्त्री, (बहुफला + संज्ञायां कन् । अत इत्वम् ।) भूवदरी । इति राज-निर्घण्टः ॥

**बहुफली**, स्त्री, (बहुफल + ङीप् ।) मृगेर्व्वारुः । इति राजनिर्घण्टः ॥ आमलकी । इति मेदिनी । ले, १५७ ॥

**बहुफेना**, स्त्री, (बहुः फेनो यस्याः ।) सातला । इति राजनिर्घण्टः ॥

**बहुबलः**, पुं, (बहु अतिशयं बलं यस्य ।) सिंहः । इति राजनिर्घण्टः ॥ अतिशयबलयुक्ते, त्रि ॥

**बहुमञ्जरी**, स्त्री, (बह्व्यो मञ्जर्य्यो यस्याः ।) तुलसी । इति भावप्रकाशः ॥

**बहुमलः**, पुं, (बहूनि मलानि यस्य ।) सीसकम् । इति रत्नमाला ॥ अनेकमलयुक्ते, त्रि ॥

**बहुमार्गं**, क्ली, (बहवो मार्गा यस्मिन् । चतु-र्द्दिक्षु पथवत्त्वात् तथात्वम् ।) चत्वरम् । इति हेमचन्द्रः । ४ । ५४ ॥ अनेकपथयुक्ते, त्रि ॥

**बहुमूर्त्तिः**, स्त्री, (वह्वी मूर्त्तिर्यस्याः ।) वनका पर्सः । इति शब्दचन्द्रिका ॥ नानाकारश्च ॥ (बहुमूर्त्तिधरे त्रि । पुं, कृकलासवत् जन्तुवि-

**बहुमूली**, स्त्री, (बहुमूल + ङीप् ।) माकन्दी । इति राजनिर्घण्टः ॥

**बहुमूल्यं**, त्रि, (बहूनि मूल्यानि यस्य ।) महार्घवस्तु । तत्पर्य्यायः । महाधनम् २ । इत्यमरः । २ । ६ । ११३ ॥

**बहुरन्ध्रिका**, स्त्री, (बहूनि रन्ध्राणि यस्याः । बहु-रन्ध्र + टाप् । संज्ञायां कन् । टापि अत इत्वम् ।) मेदा । इति राजनिर्घण्टः ॥

**बहुरसा**, स्त्री, (बहू रसो यस्याः ।) महाज्योति-ष्मती । इति राजनिर्घण्टः ॥ (रसवती स्त्री ॥)

**बहुरुहा**, स्त्री, (बहु यथा तथा रोहतीति । रुह् + क । टाप् ।) कन्दगुडूची । इति राज-निर्घण्टः ॥

**बहुरूपः**, पुं, (बहूनि रूपाणि यस्य ।) सर्जरसः । इत्यमरः । २ । ६ । १२८ ॥ शिवः । विष्णुः ।
कामदेवः । सरटः । इति मेदिनी । के, २७ ॥
ब्रह्मा । केशः । इति शब्दरत्नावली ॥ (रुद्रः ।
यथा, भागवते । ६ । ६ । १८ ।
"अजैकपादहिर्व्रघ्नो बहुरूपो महानिति ॥"
प्रियव्रतपुत्त्रस्य मेधातिथेः पुत्त्रभेदो वर्षभेदश्च ।
यथा, भागवते । ५ । २० । २५ । "तस्यापि प्रैय-
व्रत एवाधिपतिर्नाम्ना मेधातिथिः सोऽपि विभज्य सप्त वर्षाणि पुत्त्रनामानि तेषु स्वात्म-
जान् पुरोजव-मनोजव-पवमान-धूम्रानीक-चित्ररेफ बहुरूप-विश्वाधारसंज्ञान् ।" इति ॥)
बुद्धविशेषः । इति त्रिकाण्डशेषः ॥ नानारूप-
युक्ते, त्रि ॥ (यथा, मनुः । १ । ४९ ।
"तमसा बहुरूपेण वेष्टिताः कर्म्महेतुना ॥")

**बहुलः**, पुं, (बहूनर्थान् लातीति । बहु + ला + क ।) अग्निः । कृष्णपक्षः । इति मेदिनी । ले, ११८ ॥
(यथा, कुमारे । ४ । १३ ।
"बहुलेऽपि गते निशाकर-
स्तनुतां दुःखमनङ्ग ! मोक्ष्यति ॥"
महादेवः । यथा, महाभारते । १३ । १७ । १२८ ।
"मन्थानो बहुलो वायुः सकलः सर्व्वलोचनः ॥")

**बहुलगन्धा** स्त्री, (बहुलो गन्धो यस्याः ।) एला । इति राजनिर्घण्टः ॥

**बहुलच्छदः**, पुं, (बहुलानि च्छदानि यस्य ।) रक्तशिग्रुः । इति राजनिर्घण्टः ॥

**बहुलवणं**, क्ली, (बहूनि लवणानि यस्मिन् ।) औषरकम् । इति राजनिर्घण्टः ॥

**बहुला**, स्त्री, (बहूनर्थान् लाति या । बहु + ला + क । टाप् ।) नीलिका । एला । (यथा,
"एला स्थूला च बहुला पृथ्वीका त्रिपुटापि च ।
भद्रैला बृहदेला च चन्द्रबाला च निष्कुटिः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
गौः । इति मेदिनी । ले, ११७ ॥
देवीविशेषः ।
यथा, --
"दृष्टा सा तेन मुनिना निःसृत्य रविमण्डलात् ।
बहुला ह्यागता तूर्णं प्रस्थं मानसभूभृतः ॥
प्रत्यहं तत्र सावित्री गायत्री वहुला तथा ।
सरस्वती च द्रुपदा पञ्चैता मानसाचले ॥"
इति कालिकापुराणे । २३ अध्यायः ॥
(नदीभेदः । यथा, मार्कण्डेये । ५७ । ३९ ।
"चीनाश्चैव तुखाराश्च बहुला वाह्यतो नराः ॥"
स्वनामख्याता उत्तमराजपत्नी । यथा, तत्रैव ।

शेषः । बहुरूपी इति ख्यातः ॥ विष्णुः । यथा,
महाभारते । १३ । १४९ । ९० ।
“अनेकमूर्त्तिरव्यक्तः शतमूर्त्तिः सनातनः ॥”

**बहुमूर्द्धा**, [न्] पुं, (बहवो मूर्द्धानो यस्य । “सहस्र-
शीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।” इति श्रुते-
स्तथात्वम् ॥) विष्णुः । इति शब्दरत्नावली ॥

**बहुमूलः**, पुं, (बहूनि मूलानि यस्य ।) इक्वटः ।
इति त्रिकाण्डशेषः ॥ (अस्य पर्य्यायो यथा, --
“इक्कटो बहुमूलश्च वाटीदीर्घः खरच्छदः ॥”
इति वैद्यकरत्नमालायाम् ॥)
शिग्रुः । स्थूलसरः । इति राजनिर्घण्टः ॥
अनेकमूलयुक्ते, त्रि ॥

**बहुमूलकं**, क्ली, (बहुमूल + कन् ।) उशीरम् ।
इति भावप्रकाशः ॥ (वीरणम् । तत्पर्य्यायो यथा, --
“स्याद्वीरणं वीरतरुर्वीरञ्च बहुमूलकम् ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**बहुमूलकः**, पुं, (बहुमूल एव । बहुमूल +
स्वार्थे कन् ।) इक्कटः । इति जटाधरभूरि-
प्रयोगौ ॥

**बहुमूला**, स्त्री, (बहुमूल + टाप् ।) शतावरी ।
इति राजनिर्घण्टः ॥

**बहुरूपकः**, पुं, (बहुरूप + स्वार्थे कन् ।) जाहक-
जन्तुः । इति राजनिर्घण्टः ॥

**बहुरूपा**, स्त्री, (बहुरूपस्य शिवस्य स्त्री । टाप् ।)
दुर्गा । यथा, --
“अरूपा परभावत्वाद्बहुरूपा क्रियात्मिका ।
जाता शैलेन्द्रगेहे सा शैलराजसुता ततः ॥”
इति देवीपुराणे ४५ अध्यायः ॥

**बहुरेखा** स्त्री, (बह्वी बहुला रेखा करस्थादि-
चिह्नम् ।) प्रचुरदीर्घचिह्नम् । बहुरेखायुक्तानां
दोषो यथा, --
“रेखाभिर्ब्बहुभिः क्लेशं स्वल्पाभिर्धनहीनताम् ।
रक्ताभिः सुखमाप्नोति कृष्णाभिः प्रेष्यतां व्रजेत् ॥”
इति गारुडे ६४ अध्यायः ॥

**बहुरेताः**, [स्] पुं, (बहु रेतो यस्य ।) ब्रह्मा ।
इति शब्दरत्नावली ॥

**बहुरोमा**, [न्] पुं, (बहूनि लोमानि यस्य ।)
मेषः । इति हारावली । ८० ॥ लोमशे, त्रि ॥

**बहुलं**, क्ली, (बंहते वृद्धिं गच्छतीति । बहि वृद्धौ
कुलच् । नलोपश्च ।) आकाशम् । इति
मेदिनी ॥ सितमरीचम् । इति राजनिर्घण्टः ॥

**बहुलं**, त्रि, (बहूनर्थान् लातीति । बहु + ला +
क ।) प्रचुरम् । (यथा, मनुः । ४ । ६० ।
“नाधार्म्मिके वसेद्ग्रामे न व्याधिबहुले भृशम् ॥”)
कृष्णवर्णः । इति मेदिनी । ले, ११८ ॥

६९ । ६ ।
“बाभ्रव्यां बहुलां नाम उपयेमे स धर्म्मवित् ।
उत्तानपादतनयः शचीमिन्द्र इवोत्तमः ॥”)

**बहुलाः**, स्त्री, कृत्तिकानक्षत्रम् । नित्यबहुवचना-
न्तोऽयं शब्दः । इति मेदिनी । ले, ११७ ॥

**बहुलीकृतं**, त्रि, (अवहुलं बहुलं कृतम् । अभू-
ततद्भावे च्विः ।) अपनीततुषधान्यादि । वओ-
लान इति भाषा । तत्पर्य्यायः । पूतम् २ । इत्य-
मरः । २ । ९ । २३ ॥ (विस्तृतीकृतम् । यथा,
मार्कण्डेये । २१ । ९२ ।
“पराक्रमवता वीर ! त्वया तद्बहुलाकृतम् ॥”)

**बहुवल्कः**, पुं, (बहूनि वल्कानि यस्य ।) प्रियालः ।
इति राजनिर्घण्टः ॥

**बहुवल्ली**, स्त्री, डोडिक्षुपः । इति राजनिर्घण्टः ॥

**बहुवारः**, पुं, (बहूनि वारयतीति । बहु + वृ +
णिच् + अण् ।) वृक्षविशेषः । बहुयार इति
ख्यातः । तत्पर्य्यायः । शेलुः २ शीतः ३ श्लेष्मातः
४ श्लेष्मातकः ५ उद्दालः ६ उद्दालकः ७ । इति
शब्दरत्नावली ॥ सेलुः ८ । इत्यमरटीकायां
भरतः ॥ अस्य फलगुणाः । हिमत्वम् । श्लेष्म-
लत्वम् । शुक्रकारित्वम् । गुरुत्वम् । दुर्जरत्वम् ।
मधुरत्वञ्च । इति राजवल्लभः ॥

**बहुवारकः**, पुं, (बहूनि रूक्षादीनि वारयतीति ।
बहु + वृ + णिच् + ण्वुल् ।) वृक्षविशेषः । (अस्य

गुणा बहुवारशब्दे उक्ताः । बहुयार इति ख्यातः । यथा, मनुसंहितायाः । ५ । ६ । श्लोकस्य
टीकायां कुल्लूकभट्टः । "शेलुं वहुवारकफलं
गोभवं पेयूषं नवप्रसूताया गोः क्षीरमग्निसंयो-
गात् कठिनं भवति एतान् यत्नतस्त्यजेत् ॥")

**बहुविधः**, त्रि, (बहवो विधा यस्य ।) नाना-

प्रकारः । तत्पर्य्यायः । विविधः २ नानारूपः
३ पृथग्विधः ४ । इत्यमरः । ३ । १ । ९३ ॥
(यथा, गीतायाम् । ४ । ३२ ।
"एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ॥")

**बहुविस्तीर्णा**, स्त्री, (बहु यथा स्यात् तथा

विस्तीर्णा ।) कुचिकावृक्षः । इति शब्द-चन्द्रिका ॥ कुचै इति भाषा ॥

**बहुवीजं**, क्ली, (बहूनि वीजानि यस्य ।) गण्ड-

गात्रम् । इति शब्दचन्द्रिका ॥ आता इति भाषा ॥ अस्य गुणा आतृप्यशब्दे द्रष्टव्याः ॥

**बहुवीर्य्यः**, पुं, (बहु वीर्य्यं तेजो यस्य ।) विभी-

तकः । इति जटाधरः ॥ तण्डुलीयशाकः । शाल्मलिवृक्षः । मरुवः । इति राजनिर्घण्टः ॥

**बहुवीर्य्या**, स्त्री, (बहु वीर्य्यं तेजो यस्याः ।)

भूम्यामली । इति राजनिर्घण्टः ॥

**बहुव्रीहिः**, पुं, षट्समासान्तर्गतसमासविशेषः ।

(मुग्धबोधमते ।) अस्य साङ्केतिकसंज्ञा हः ।
यथा, अन्यार्थानां दानां हसंज्ञः । उदाहरणं
लात् पूर्ब्बम् । सर्व्वश्वेतः । संख्यासर्व्वनाम्नोः संख्यापूर्ब्बं स्यात् । द्विपरः त्रिपूर्ब्बः । सप्तम्य-न्तमचन्द्रादेः । सप्तम्यन्तं पदं पूर्ब्बं स्यान्न चन्द्रादेः । धर्म्मे वृत्तिर्यस्यासौ धर्म्मवृत्तिः उरसि लोमा कण्ठेकाल इत्यादौ उरसिजवत् क्तेर-लुक् । चन्द्रादेस्तु चन्द्रशेखरः चन्द्रचूडः पद्म-नाभः शूलपाणिः कुशहस्तः । प्रियो वा । गुडप्रियः प्रियगुडः । किञ्च आरूढो वानरो यं स आरूढवानरो वृक्षः । दृष्टः कृष्णो येन स दृष्टकृष्णो भक्तः । दत्ता भूमिर्यस्मै स दत्त-भूमिर्व्विप्रः । निर्गताः पक्षिणो यस्मात् वृक्षात् स निर्गतपक्षी वृक्षः । चत्वारो भुजा यस्यासौ चतुर्भुजो विष्णुः । बहूनि नक्षत्राणि यत्र तद्बहु-नक्षत्रमाकाशम् । इति द्वितीयान्ताद्यन्य-पदार्था बहुव्रीहयः सर्व्वैर्मन्यन्ते । स्वमते तु प्रथमान्तान्यपदार्थोऽपियथा सह मात्रा वर्त्तते योऽसौ समातृकः एवं सपक्षकः सनामकं ब्राह्मणमानिनीत्यादि । इति दुर्गादासः ॥ * ॥ (बहवो ब्रीहयो यस्येति व्युत्पत्त्या) प्रचुर-धान्ययुक्ते, त्रि । यथा, --
"द्वन्द्वो द्विगुरपि चाहं मद्गेहे नित्यमव्ययी-भावः ।
तत्पुरुष ! कर्म्म धारय येनाहं स्यां बहुव्रीहिः ॥"
इति प्राचीनाः ॥

**बहुशत्रुः**, पुं, (बहवः शत्रवो यस्य ।) चटकः ।

इति शब्दचन्द्रिका ॥ (बहुशत्रुविशिष्टे, त्रि । तृतीयायां तिथौ पटोलभक्षणेन बहुशत्रुः स्यात् । यथा, तिथितत्त्वे ।
"कुष्माण्डे चार्थहानिः स्याद्बृहत्यां न स्मरे-द्धरिम् ।
बहुशत्रुः पटोले स्यात् धनहानिस्तु मूलके ॥")

**बहुशः**, व्य, (बहूनि ददाति करोत्यादि वा । बहु

+ "बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ।" ५ । ४ । ४२ । इति शस् ।) बहूनि । इति व्याक-रणम् ॥ (यथा, मार्कण्डेये । ५२ । २९ ।
"कथ्यन्ते बहुशश्चैते पिता पुत्त्रत्रयञ्च यत् ॥")

**बहुशल्यः**, पुं, (बहु शल्यं यस्य ।) रक्तखदिरः ।
विशिष्टे, त्रि । यथा, शतपथब्राह्मणे । ११ ।
७ । ३ । १ ॥ "स य एष बहुसारः ॥")

**बहुसुता**, स्त्री, (बहुः सुतः सन्ततिर्मूलं वा

यस्याः ।) शतमूली । इत्यमरः । २ । ४ । १५ ॥

**बहुसूः**, स्त्री, (बहून् सूते या । बहु + सू + क्विप् ।)

शूकरी । इति शब्दरत्नावली ॥ बहुप्रसवा च ॥

**बहुसूतिः**, स्त्री, (बहुः सूतिः प्रसवो यस्याः ।)

बह्वपत्या गौः । इत्यमरः । २ । ९ । ७ ॥ बहु-सन्तानप्रसवा च ॥

**बहुस्रवा**, स्त्री, (बहु यथा स्यात् तथा स्रवति या ।

बहु + स्रु + अच् । टाप् ।) शल्लकीवृक्षः । इति
शब्दचन्द्रिका ॥ अनेकक्षरणशीला च ॥

**बहुस्वनः**, पुं, (बहुः प्रचण्डः स्वनः शब्दो यस्य ।)

पेचकः । इति केचित् ॥ अनेकशब्दयुक्ते, त्रि ॥

**बह्वपत्यः**, पुं, स्त्री, (बहूनि अपत्यानि यस्य ।)

शूकरः । मूषकः । इति राजनिर्घण्टः ॥ बहु-सन्तानयुक्ते, त्रि ॥

**बह्वाशी**, [न्] त्रि, (बहु अश्नातीति । बहु +

अश् + णिनि ।) बहुभोजनशीलः । यथा, चाणक्ये । ६९ ।
"बह्वाशी स्वल्पसन्तुष्टः सुनिद्रः शीघ्रचेतनः ।
प्रभुभक्तश्च शूरश्च ज्ञातव्याः षट् शुनो गुणाः ॥"
(बह्वी आशा यस्य ।) बह्वाशाविशिष्टः ॥ (धृतराष्ट्रपुत्त्रविशेषे, पुं । यथा, महाभारते ।
१ । ११७ । १९ ।

यथा । पीतमम्वरं यस्यासौ पीताम्बरो हरिः ।
इति वोपदेवः ॥ स च तुल्याधिकरणानां पदानां
अन्यार्थत्वे स्यादिति बोध्यम् । यथा पीताम्बरादि ।
भिन्नाधिकरणानान्तु पुत्त्राय धनमस्य शिष्याय
विद्या अस्य इत्यादौ न स्यात् । समातृक इत्यु-
दाहरणेन कदाचिद्भिन्नाधिकरणानाञ्च स्यात्
धर्म्मे वृत्तिर्यस्यासौ धर्म्मवृत्तिः । एवं कामवृत्तिः
उरसि लोमा कण्ठे काल इत्यादि । एवं पीता-
म्बर इत्युदाहरता विशेषणविशेष्ययोः समासे
विशेषणमेव पूर्ब्बं स्यादिति सूचितम् । तेन
पीताम्बर इत्यत्र अम्बरपीत इति न स्यात् ।
एवं त्रिलोचनः चतुर्भुजः दीर्घकेशीत्यादि । एवं
पीताम्बर इत्युदाहरता क्वचित् क्तान्तविशेषणं
पूर्ब्बं स्यात् क्वचित् परं वा स्यात् इति सूचि-
तम् । तेन अव्याहतस्वैरगतेरिति । अथेप्सितं
भर्त्तुरुपस्थितोदयमिति । स वृत्तचूडश्चलकाक-
पक्षकैरित्यादि रघुः ॥ सुखजातः सुरापीतो
नृजग्धो माल्यधारक इति । एवं जातदन्तः
दन्तजातः जातश्मश्रुः श्मश्रुजातः पीततैलः
तैलपीतः पीतघृतः घृतपीतः ऊढभार्य्यः
भार्य्योढः गतभार्य्यः भार्य्यागतः गतार्थः अर्थ
गतः अग्न्याहितः आहिताग्निः पुत्त्रजातः
जातपुत्त्रः जातयामः यामजातः दुःखजातः

इति राजनिर्घण्टः ॥ अनेकशल्ययुक्ते, त्रि ॥

**बहुशालः**, पुं, (बहुभिः शालते इति । बहु +
शाल + अच् ।) स्नुही । इति राजनिर्घण्टः ॥

**बहुशिखा**, स्त्री, (बह्वी शिखा यस्याः ।) जल-
पिप्पली । इति राजनिर्घण्टः ॥ (बह्वी शिखा
इति कर्म्मधारयसमासः ।) अनेकशिखा च ॥

**बहुसन्ततिः**, पुं, (बह्वी सन्ततिर्विस्तारोऽन्वयो वा
यस्य ।) ब्रह्मयष्टिः । इति शब्दचन्द्रिका ॥
वेड़ुबाँश इति भाषा ॥ अनेकसन्तान-
युक्ते, त्रि ॥

**बहुसम्पुटः**, पुं, (बहुः सम्पुटो यस्य ।) विष्णुकन्दः ।
इति राजनिर्घण्टः ॥

**बहुसारः**, पुं, (बहुः सारः स्थिरांशो यस्य ।)
खदिरः । इति राजनिर्घण्टः ॥ (बहुसार-

"आदित्यकेतुर्बह्वाशी
नागदन्तोऽग्रयाय्यपि ॥")

**बह्वृक्**, स्त्री, ऋग्वेदः (बह्व्य ऋचो यस्मिन् ।)
सूक्ते, क्ली । इति मुग्धबोधव्याकरणम् ॥ "बह्व्य
ऋचोऽध्येतव्या येन इति व्युत्पत्त्या ऋग्वेदज्ञे
ब्राह्मणे, पुं । यथा, मनुः । ३ । १४५ ।
"यत्नेन भोजयेत् श्राद्धे बह्वृचं वेदपारगम् ॥"
केचित् बह्वृच इत्यकारन्तमिच्छन्ति ॥)

**बह्वृची**, स्त्री, (बह्वृचस्य ऋग्वेदज्ञस्य पत्नी । बह्वृच
+ ङीप् ।) ऋग्वेदवेत्तुः पत्नी । इति जटा-
धरः ॥ (बह्व्य ऋचोऽधेतव्या यया इति विग्रहे
अध्वर्य्युनामाध्येत्री स्त्री । अनृचबह्वृचावध्ये
तर्य्येवेति वचनात् । "ऋक्पूरब्धूःपथामानक्षे।"
५ । ४ । ७४ । इत्यप्रत्ययः समासान्तः । "गोत्रञ्च
चरणैः सह" इति जातित्वात् ङीष् । यद्यपि
स्त्रीणां स्वाध्यायाध्ययनं निषिद्धं तथापि पुरा
कल्पेष्वेतदासीत् । यथाह यमः ।
"पुराकल्पेषु नारीणां मौञ्जीबन्धनमिष्यते ।
अध्यापनञ्च वेदानां सावित्रीवचनं तथा ॥"
इति ॥)

**बा(वा)ड**, ऋ ङ आप्लावे । स्नाने । इति
कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-सेट् ।
आप्लावः उन्मज्जनम् । इति दुर्गादासः ॥)
वोपदेवेन अन्तःस्थवकारादौ गृहीतः ॥ (बाडते ।
ऋदित् चङि न ह्रस्वः । अबबाडयत् ॥)

| | | |
|---|---|---|
| जातदुःखः गड्डुकण्ठः कण्ठगड्डुः<br>इत्यादिबोध्यम् ।<br>एवमुद्यतचक्रः चक्रोद्यतः उद्यतासिः<br>अस्युद्यतः<br>उद्यतगदः गदोद्यतः उद्यतस्वड्गः<br>खड्गोद्यत<br>इति । आयुधेभ्यो नित्यं पूर्ब्बमिति जौमराः<br>॥<br>यथा उद्यतचक्र इत्यादि । एवं<br>सर्व्वनामसक- | | **बा(वा)डवं**, क्ली, (बडवानां समूहः । बडवा +<br>“खण्डिकादिभ्यश्च ।” ४ । २ । ४५ ।<br>इत्यञ् ।)<br>बडवासमूहः । इत्यमरः ॥ (बडवाया इद- |

मिति । बडवा + अण् । बडवासम्बन्धिनि, त्रि ।
यथा, सुश्रुते । १ । ४५ ।
“दीपनीयमचक्षुष्यं बाडवं दधि वातलम् ॥”)

**बा(वा)डवः**, पुं, (बाडं यज्ञान्तस्नानं वाति प्राप्नोतीति । बाड + वा + कः ।) ब्राह्मणः । (बडवायां घोटक्यां जातः । बडवा + अण् ।) बडवानलः । इत्यमरः ॥ तत्पर्य्यायः । और्व्वः २ संवर्त्तकः ३ अब्ध्यग्निः ४ बडवामुखः ५ । इति हेमचन्द्रः ॥ (यथा, मार्कण्डेये । ९९ । ६४ ।
“महोदधेर्जठरगतश्च बाडवो
भवान् विभूत्या परया करे स्थितः ॥”)

**बा(वा)डवाग्निः**, पुं, (बडवा समुद्रस्था घोटकी तत्सम्बन्ध्यग्निः ।) बडवानलः । इति जटाधरः ॥
(यथा, माघे । ११ । ४५ ।
“पयसि सलिलराशेर्नक्तमन्तर्निमग्नः
स्फुटमनिशमतापि ज्वालया बाडवाग्नेः ॥”)

**बा(वा)डवाग्र्यः**, पुं, (बाडवेषु ब्राह्मणेषु अग्र्यः श्रेष्ठः ।) ब्राह्मणश्रेष्ठः । यथा, --
“इत्याकर्ण्य वचस्तस्य बाडवाग्र्यस्य धीमतः ।
पप्रच्छ हृष्टमानस्कस्तीर्थयात्राविधिं मुनिम् ॥”
इति पाद्मे पातालखण्डे १९ अध्यायः ॥

**बा(वा)डवेयौ**, पुं, (बडवाया घोटकरूपधारिण्याः सूर्य्यपत्न्या अपत्ये पुमांसौ । बडवा + ढक् ।) अश्विनीकुमारौ । इति शब्दमाला ॥

**बा(वा)डव्यं**, क्ली, (बाडवानां ब्राह्मणानां समूहः । नाराचः ३ ॥ क्षिप्तबाणस्य पर्य्यायः । प्रहितः १ निरस्तः २ ॥ विषाक्तबाणस्य पर्य्यायः । तीक्ष्णः १ लिप्तकः २ दिग्धः ३ ॥ तीरो निष्फलसायके । इति शब्दरत्नावली ॥ * ॥ (यथा, ऋग्वेदे । ६ । ७५ । १७ ।
“यत्र बाणाः संपतन्ति कुमारा विशिखा इव ।
तत्रा नो ब्रह्मणस्पतिरदितिः शर्म्म यच्छतु
विश्वहा शर्म्म यच्छतु ॥”)
वलिराजस्य ज्येष्ठपुत्त्रः । यथा, --
“बलेः पुत्त्रशतं त्वासीद्बाणज्येष्ठन्ततो द्विजाः ।
बाणः सहस्रबाहुः स्यात् सर्व्वास्त्रगुणसंयुतः ॥
तपसा तोषितो यस्य पुरे वसति शूलधृक् ।
महाकालत्वमगमत् साम्यं यस्य पिणाकिनः ॥”
इति मत्स्यपुराणे ५ अध्यायः ॥
(अस्य जन्मादिविवरणन्तु बाणयुद्धशब्दे द्रष्टव्यम् । विस्तृतिस्तु हरिवंशे विष्णुपर्व्वणि १७३ अध्यायमारभ्य द्रष्टव्या ॥) गोस्तनः । केवलः । इति मेदिनी । णे, २७ ॥ अग्निः । इति त्रिकाण्डशेषः ॥ काण्डावयवः । इति विश्वः ॥ भद्रमुञ्जः । इति राजनिर्घण्टः ॥ (पुं, स्त्री, नीलझिण्टी । इति वैजयन्ती ॥ यथा, माघे । ६ । ४६ ।
“विकचबाणदलावलयोऽधिकं
रुरुचिरे रुचिरेक्षणविभ्रमाः ॥”
बण्यते शब्द्यते इति । बण शब्दे + “अकर्त्तरि च कारके संज्ञायाम् ।” ३ । ३ । १९ । इति घञ् । वाक् । इति निघण्टुः ॥
इक्ष्वाकुवंशीयोऽयोध्याराजः स्वनामख्यातो विकुक्षेः पुत्त्रः । यथा, रामायणे । १ । ७० । २२ -- २३ ।

इति वाराहे सोमेश्वरादिलिङ्गमहिमावमुक्तिक्षेत्रमहिमा त्रिवेण्यादिमहिमा नामाध्यायः ॥

**बा(वा)णदण्डः**, पुं, (बाणस्य दण्डः ।) वापदण्डः । तत्पर्य्यायः । वेमा २ । इति हेमचन्द्रः ॥

**बा(वा)णपुङ्खा**, स्त्री, (बाणस्य + पुङ्खा ।) शरपुङ्खा । इति राजनिर्घण्टः ॥

**बा(वा)णपुरं**, क्ली, (बाणस्य राज्ञः पुरं नगरम् ।) बाणराजनगरम् । तत्पर्य्यायः । देवीकोटः २ कोटीवर्षम् ३ ऊषावनम् ४ शोणितपुरम् ५ । इति त्रिकाण्डशेषः ॥ आग्नेयम् ६ उमावनम् ७ कोट्टवीपुरम् ८ । इति शब्दरत्नावली ॥

**बा(वा)णभट्टः**, पुं, ग्रन्थकारविशेषः । (स तु कादम्बर्य्यादिग्रन्थप्रणेता ।) “ननु मङ्गलं कथं क्रियते
मङ्गलाद्विघ्नध्वंसः विघ्नध्वंसात् प्रारिप्सितसिद्धिरिति चेन्न । बाणभट्टादेर्मङ्गले सत्यपि ग्रन्थसमाप्त्यभावात् माघादौ मङ्गलाभावेऽपि समाप्तिदर्शनात् ।” इति मुग्धबोधटीकायां दुर्गादासः ।

**बा(वा)णयुद्धं**, क्ली, (बाणेन सह युद्धम् ।) बाणराजेन सह श्रीकृष्णस्य संग्रामः । तस्य विवरणम् । यथा, --
श्रीशुक उवाच ।
“बाणः पुत्त्रशतज्येष्ठो बलेरासीन्महात्मनः ।
सहस्रबाहुर्वाद्येन ताण्डवेऽतोषयन्मृडम् ॥
भगवान् सर्व्वभूतेशः शरण्यो भक्तवत्सलः ।
वरेण च्छन्दयामास स तं वव्रे पुराधिपम् ॥
स एकदाह गिरिशं पार्श्वस्थं वीर्य्यदुर्म्मदः ।
किरीटेनार्कवर्णेन संस्पृशंस्तत्वदाम्बुजम् ॥
नमस्ये त्वां महादेव ! लोकानां गुरुमीश्वरम् ।
पुंसामपूर्णकामानां कामपुरामराङ्घ्रिपम् ॥
दोःसहस्रं त्वया दत्तं परं भाराय मेऽभवत् ।
त्रिलोक्यां प्रतियोद्धारं न लभे त्वदृते समम् ॥
कण्डूत्या निभृतैर्दोर्भिर्यु युत्सुर्दिग्गजानहम् ।

बाडव + "ब्राह्मणमानवबाडवाद्यत् ।" ४ । २ ।
४२ । इति यत् ।) ब्राह्मणसमूहः । इत्यमरः ॥

**बाडिङ्गनः**, पुं, (बाड् प्लावनं तस्मै इङ्गते इति ।
बाड् + इङ्ग + ल्यु ।) वार्त्ताकुः । इति रत्न-
माला ॥

**बाढं**, क्ली, (बाह प्रयत्ने + क्तः । "क्षुब्धस्वान्त-
ध्वान्तेति ।" ७ । २ । १८ । इति निपातनात्
साधुः ।) अतिशयः । (यथा, कथासरित्-
सागरे । २४ । ६८ ।
"बाढं मया सा नगरी दृष्टा विद्यार्थिना सता ॥")
प्रतिज्ञा । इत्यमरः । ३ । ३ । ४४ ॥ बाढमित्य-
व्ययमपीति वृद्धाः । इति भरतः ॥
"बाढं त्रिषु दृढे क्लीवमनुमत्यामथ त्रिषु ॥"
इति नानार्थरत्नमाला ॥
(सत्यम् । यथा, रघुः । १९ । ५२ ।
"बाढमेषु दिवषेषु पार्थवः
कर्म्म साधयति पुत्त्रजन्मने ॥")

**बा(वा)णः**, पुं, (बणनं बाणः शब्दस्तदस्यास्तीति ।
बाण + अच् ।) अस्त्रविशेषः । तिर इति
भाषा । तत्पर्य्यायः । पृषत्कः २ विशिखः
३ अजिम्भगः ४ खगः ५ आशुगः ६ कलम्बः
७ मार्गणः ८ शरः ९ पत्री १० रोपः ११
इषुः १२ । इत्यमरः । २ । ८ । ८६ ॥ चित्र-
पुङ्खः १३ शायकः १४ वीरतरः १५ तूणक्षेडः १६
काण्डः १७ विपर्षकः १८ शरुः १९ वाजी २०
पत्रवाहः २१ अस्त्रकण्टकः २२ ॥ लौहमय-
वाणस्य पर्य्यायः । प्रक्ष्वेडनः १ लोहनालः २

"इक्ष्वाकोस्तु सुतः श्रीमान् कुक्षिरित्येव विश्रुतः ।
कुक्षेरथात्मजः श्रीमान् विकुक्षिरुदपद्यत ॥
विकुक्षेस्तु महातेजा बाणः पुत्त्रः प्रतापवान् ।
बाणस्य तु महातेजा अनरण्यः प्रतापवान् ॥"
कादम्बरीप्रणेता कविविशेषः । यथा, कादम्बर्य्यां
कविवंशवर्णने ।
"सरस्वतीपाणिसरोजसम्पुट-
प्रमृष्टहोमश्रमसीकराम्भसः ।
यशोऽंशुशुक्लीकृतसप्तविष्टपात्
ततः सुरोबाण इति व्यजायत ॥
द्विजेन तेनाक्षत कण्ठकौण्ठ्यया
महामनोमोहमलीमसान्धया ।
अलब्धवैदग्ध्यविलासमुग्धया
धिया निबद्ध्वेयमतिद्वयी कथा ॥"
अयमेव हर्षचरितप्रणेता इति केचित् ॥)

**बा(वा)णगङ्गा**, स्त्री, (बाणेन प्रकटिता गङ्गा नदी-
विशेषः ।) रावणबाणनिर्भिन्नसोमेश्वरगिरि-
भवनदीविशेषः । यथा, --
"सोमेशाद्दक्षिणे भागे बाणेनाद्रिं विभिद्य वै ।
रावणेन प्रकटिता जलधारातिपुण्यदा ।
बाणगङ्गेति विख्याता या स्नानादघहारिणी ॥
स्नात्वा तु बाणगङ्गायां दृष्ट्वा बाणेश्वरं विभुम् ।
गङ्गास्नानफलं प्राप्य मोदते देववद्दिवि ॥"

आद्यायां चूर्णयन्नद्रीन् भीतास्तेऽपि प्रदुद्रुवुः ॥
तत् श्रुत्वा भगवान् क्रुद्धः केतुस्ते भज्यते यदा ।
तद्दर्पघ्नं भवेन्मूढ ! संयुगं मत्समेन ते ॥
इत्युक्तः कुमतिर्हृष्टः स्वगृहं प्राविशन्नृप ! ।
प्रतीक्षन् गिरिशादेशं स्ववीर्य्यनशनं कुधीः ॥
तस्योषा नाम दुहिता स्वप्ने प्राद्युम्निना रतिम् ।
कन्यालभत कान्तेन प्रागदृष्टश्रुतेन सा ॥
सा तत्र तमपश्यन्ती क्वासि कान्तेतिवादिनी ।
सखीनां मध्य उत्तस्थौ विह्वला व्रीडिता भृशम् ॥
बाणस्य मन्त्री कुम्भाण्डश्चित्रलेखा च तत्सुता ।
सख्यपृच्छत् सखीमूषां कौतूहलसमन्विता ॥
कं त्वं मृगयसे ! सुभ्रु ! कीदृशस्ते मनोरथः ।
हस्तग्राहं न तेऽद्यापि राजपुत्त्र्युपलक्षये ॥
ऊषोवाच ।
दृष्टः कश्चिन्नरः स्वप्ने श्यामः कमललोचनः ।
पीतवासा बृहद्बाहुर्योषितां हृदयङ्गमः ॥
तमहं मृगये कान्तं पाययित्वाधरं मधु ।
क्वापि यातः स्पृहयतीं क्षिप्त्वा मां वृजिनार्णवे ॥

चित्रलेखोवाच ।
व्यसनन्तेऽपनेष्यामि त्रिलोक्यां यदि भाव्यते ।
तमानेष्ये वरं यस्ते मनोहर्त्ता तमादिश ॥
इत्युक्त्वा देवगन्धर्व्वसिद्धचारणपन्नगान् ।
दैत्यविद्याधरान् यक्षान् मनुजांश्च यथालिखत् ॥
मनुजेषु च सा वृष्णीञ्छूरमानकदुन्दुभिम् ।
व्यलिखद्रामकृष्णौ च प्रद्युम्नं वीक्ष्य लज्जिता ॥
अनिरुद्धं विलिखितं वीक्ष्योषावाङ्मुखी ह्रिया ।
सोऽसावसाविति प्राह स्मयमाना महीपते ! ॥
चित्रलेखा तमाज्ञाय पौत्रं कृष्णस्य योगिनी ।
ययौ विहायसा राजन् ! द्वारकां कृष्णपालि-
ताम् ॥
तत्र सुप्तं सुपर्य्यङ्के प्राद्युम्निं योगमास्थिता ।
गृहीत्वा शोणितपुरं सख्यै प्रियमदर्शयत् ॥
सा च तं सुन्दरवरं विलोक्य मुदितानना ।
दुष्प्रेक्ष्ये स्वगृहे पुंभी रेमे प्राद्युम्निना समम् ॥
परार्द्ध्यवासः स्रग्गन्धधूपदीपासनादिभिः ।
पानभोजनभक्ष्यैश्च वाक्यैः शुश्रूषणार्च्चितः ॥
गूढः कन्यापुरे शश्वत् प्रवृद्धस्नेहया तया ।
नाहर्गणान् स बुबुधे ऊषयापहृतेन्द्रियः ॥
तां तथा यदुवीरेण भुज्यमानां हतत्रपाम् ।
हेतुभिर्लक्षयाञ्चक्रुराप्रीतां दुरवच्छदैः ॥
भटा आवेदयाञ्चक्रू राजंस्ते दुहितुर्व्वयम् ।
विचेष्टितं लक्षयामः कन्यायाः कुलदूषणम् ॥
अनपायिभिरस्माभिर्गुप्तायाश्च गृहे प्रभो ! ।
कन्याया दूषणं पुंभिर्दुष्प्रेक्षाया न विद्महे ॥

श्रीशुक उवाच ।
"अपश्यताञ्चानिरुद्धं तद्बन्धूनाञ्च भारत ! ।
चत्वारो वार्षिका मासा व्यतीयुरनुशोचताम् ॥
नारदात्तदुपाकर्ण्य वार्त्तां बद्धस्य कर्म्म च ।
प्रययुः शोणितपुरं वृष्णयः कृष्णदेवताः ॥
प्रद्युम्नो युयुधानश्च गदः शाम्बोऽथ शारणः ।
नन्दोपनन्दभद्राद्या रामकृष्णानुवर्त्तिनः ॥
अक्षौहिणीभिर्द्वादशभिः समेताः सर्व्वतो दिशम् ।
रुरुधुर्ब्बाणनगरं समन्तात् सात्वतर्षभाः ॥
भज्यमानपुरोद्यानप्रकाराट्टालगोपुरम्।
प्रेक्षमाणो रुषाविष्टस्तुल्यसैन्योऽभिनिर्य्ययौ ॥
वाणार्थं भगवान् रुद्रः ससुतः प्रमथैर्वृतः ।
आरुह्य नन्दिवृषभं युयुधे रामकृष्णयोः ॥
आसीत् सुतुमुलं युद्धमद्भुतं लोमहर्षणम् ।
कृष्णशङ्करयो राजन् ! प्रद्युम्नगुहयोरपि ॥
कुम्भाण्डकूपकर्णाभ्यां बलेन सह संयुगम् ।
शाम्बस्य बाणपुत्त्रेण बाणेन सह सात्यकेः ॥
ब्रह्मादयः सुराधीशाः मुनयः सिद्धचारणाः ।
गन्धर्व्वाप्सरसो यक्षा विमानैर्द्रष्टुमागमन् ॥
शङ्करानुचराञ्छौरिर्भूतप्रमथगुह्यकान् ।
डाकिनीर्यातुधानांश्च वेतालान् सविनायकान् ॥
भूतमातृपिशाचांश्च कुष्माण्डान् ब्रह्मराक्षसान् ।
द्रावयामास तीक्ष्णाग्रैः शरैः शार्ङ्गधनुश्च्युतैः ॥
पृथग्विध्यानि प्रायुङ्क्त पिणाक्यस्त्राणि शार्ङ्गिणे ।
प्रत्यस्त्रैः शमयामास शार्ङ्गपाणिरविस्मितः ॥
ब्रह्मास्त्रस्य च ब्रह्मास्त्रं वायव्यस्य च पार्व्वतम् ।
आग्नेयस्य च पार्ज्जन्यं नैजं पाशुपतस्य च ॥
मोहयित्वाथ गिरिशं जृम्भणास्त्रेण जृम्भितम् ।
बाणस्य पृतनां शौरिर्ज्जघानासिगदेषुभिः ॥
स्कन्दः प्रद्युम्नबाणौघैरर्द्यमानः समन्ततः ।
असृग्विमुञ्चन् गात्रेभ्यः शिखिना प्राद्रवद्रणात् ॥
कुम्भाण्डः कूपकर्णश्च पेततुर्मुषलार्द्दितौ ।
दुद्रुवुस्तदनीकानि हतनाथानि सर्व्वशः ॥
वीशीर्य्यमाणं स्वबलं दृष्ट्वा बाणोऽत्यमर्षितः ।
कृष्णमभ्यद्रवत् संख्ये रथी हित्वैव सात्यकिम् ॥

ज्वर उवाच ।
नमामि त्वानन्तशक्तिं परेशं
सर्व्वात्मानं केवलं ज्ञप्तिमात्रम् ।
विश्वोत्पत्तिस्थानसंरोधहेतुं
यत्तद्ब्रह्म ब्रह्मलिङ्गं प्रशान्तम् ॥
कालो दैवं कर्म्म जीवः स्वभावो
द्रव्यं क्षेत्रं प्राण आत्मा विकारः ।
तत्सं घातो बीजरोहप्रवाह-
स्त्वन्मायैषा तन्निषेधं प्रपद्ये ॥
नानाभावैर्लीलयैवोपपन्नै-
र्देवान् साधूँल्लोकसेतून् बिभर्षि ।
हंस्युन्मार्गान् हिंसया वर्त्तमानान्
जन्मैतत्ते भारहाराय भूमेः ॥
तप्तोऽहन्ते तेजसा दुःसहेन
शान्तोग्रेणात्युल्वणेन ज्वरेण ।
तावत्तापो देहिनां तेऽङ्घ्रिमूलं
नो सेवेरन् यावदाशानुबद्धाः ॥
श्रीभगवानुवाच ।
त्रिशिरस्ते प्रसन्नोऽहं व्येतु ते मज्ज्वराद्भयम् ।
यो नौ स्मरति संवादं तस्य त्वन्नो भवेद्भयम् ॥
इत्युक्तोऽच्युतमानम्य गतो माहेश्वरो ज्वरः ।
बाणस्तु रथमारूढः प्रागाद्योत्स्यन् जनार्द्द-
नम् ॥
ततो बाहुसहस्रेण नानायुधधरो नृपः ।
मुमोच परमक्रुद्धो वाणांश्चक्रायुधे नृप ! ॥
तस्यास्यतोऽस्त्राण्यसकृच्चक्रेण क्षुरनेमिना ।
चिच्छेद भगवान् बाहूंश्छाखा इव वनस्पतेः ॥
बाहुषु च्छिद्यमानेषु बाणस्य भगवान् भवः ।
भक्तानुकम्प्युपव्रज्य चक्रायुधमभाषत ॥
श्रीरुद्र उवाच ।
त्वं हि ब्रह्म परं ज्योतिर्गूढं ब्रह्मणि वाङ्मये ।
यं पश्यन्त्यमलात्मानमाकाशमिवकेवलम् ॥
नाभिर्नभोऽग्निर्म्मुखमम्बुरेतो
द्यौः शीर्षमाशाः श्रुतिरङ्घ्रिरुर्व्वी ।
चन्द्रो मनो यस्य दृगर्क आत्मा

ततः प्रव्यथितो बाणो दुहितुः श्रुतदूषणः ।
त्वरितः कन्यकागारं प्राप्तोऽद्राक्षीद्यदूद्वहम्
॥
कामात्मजं तं भुवनैकसुन्दरं
श्यामं पिशङ्गाम्बरमम्बुजेक्षणम् ।
बृहद्भुजं कुण्डलकुन्तलत्विषा
स्मितावलोकेन च मण्डितानन्नम् ॥
दीव्यन्तमक्षैः प्रिययाभिनृम्णया
तदङ्गसङ्गस्तनकुङ्कुमस्रजम् ।
बाह्वोर्दधानं मधुमल्लिकाश्रितां
तस्याग्र आसीनमवेक्ष्य विस्मितः ॥
स तं प्रविष्टं व्रतमाततायिभि-
र्भटैरनेकैरवलोक्य माधवः ।
उद्यम्य मौर्व्वं परिघं व्यवस्थितो
यथान्तको दण्डधरो जिघांसया ॥
जिघृक्षया तान् परितः प्रसर्पतः
शुनो यथा शूकरयूथपोऽहनत् ।
ते हन्यमाना भवनाद्विनिर्गता
निर्भिन्नमूर्द्धोरुभुजाः प्रदुद्रुवुः ॥
तं नागपाशैर्बलिनन्दनो बली
घ्नन्तं स्वसैन्यं रुषितो बबन्ध ह ।
ऊपा भृशं शोकविषादविह्वला
बद्धं निशम्याश्रुकलाक्ष्यरौत्सीत् ॥"
इति श्रीभायवते महापुराणे पारमहंस्यां
संहि-
तायां वैयासिक्यां दशमस्कन्धे बाणयुद्धे
द्विषष्टि-
तमोऽध्यायः ॥ * ॥

धनूंष्याकृष्य युगपद्बाणः पञ्चशतानि वै ।
एकैकस्मिन् शरौ द्वौ द्वौ सन्दधे रणदुर्म्मदः ॥
तानि चिच्छेद भगवान् धनूंषि युगपद्धरिः ।
सारथिं रथमश्वांश्च हत्वा शङ्खमपूरयत् ॥
तन्माता कोट्टवी नाम नग्ना मुक्तशिरोरुहा ।
पुरोऽवतस्थे कृष्णस्य पुत्त्रप्राणरिरक्षया ॥
ततस्तिर्य्यङ्मुखो नग्नामनिरीक्षन् गदाग्रजः ।
बाणश्च तावद्विरथश्छिन्नधन्वाविशत्पुरम् ॥
विद्राविते भूतगणे ज्वरस्तु त्रिशिरास्त्रिपात् ।
अभ्यधावत दाशार्हं दहन्निव दिशो दश ॥
अथ नारायणो देवस्तं दृष्ट्वा व्यसृजत् ज्वरम् ।
माहेश्वरो वैष्णवश्च युयुधाते ज्वरावुभौ ॥
माहेश्वरः समाक्रन्दन् वैष्णवेन बलार्द्दितः ।
अलब्ध्वा भयमन्यत्र भीतो माहेश्वरो ज्वरः ॥
शरणार्थी हृषीकेशं तुष्टाव प्रणताञ्जलिः ॥

अहं समुद्रो जठरं भुजेन्द्रः ॥
रोमाणि यस्यौषधयोऽम्बुवाहाः
केशा विरिञ्चो धिषणा विसर्गः ।
प्रजापतिर्हृदयं यस्य धर्म्मः
स वै भवान् पुरुषो लोककल्पः ॥
तवावतारोऽयमकुण्ठधामन्
धर्म्मस्य गुप्त्यै जगतो भवाय ।
वयञ्च सर्व्वे भवतानुभाविता
विभावयामो भुवनानि सप्त ॥
त्वमेक आद्यः पुरुषोऽद्वितीय-
स्तुर्य्यः सदृग्धेतुरहेतुरीशः ।
प्रतीयसेऽथापि यथा विकारं
स्वमायया सर्व्वगुणप्रसिद्ध्यै ॥
यथैव सूर्य्यः पिहितः स्वच्छायया
छायाञ्च रूपाणि च सञ्चकास्ति ।
एवं गुणेनापिहितो गुणांस्त्व-
मात्मप्रदीपो गुणिनश्च भूमन ॥

यन्मायामोहितधियः पुत्रदारगृहादिषु ।
उन्मज्जन्ति निमज्जन्ति प्रसक्ता वृजिनार्णवे
॥
देवदत्तमिमं लब्ध्वा नृलोकमजितेन्द्रियः ।
यो नाद्रियेत त्वत्पादौ स शोच्यो ह्यात्म-
वञ्चकः ॥
यस्त्वां विसृजते मर्त्य आत्मानं प्रियमी श्वरम्
।
विपर्य्ययेन्द्रियार्थार्थं विषमत्त्यमृतं त्यजेत् ॥
अहं ब्रह्माथ बिबुधा मुनयश्चामलाशयाः ।
सर्व्वात्मना प्रपन्नास्त्वामात्मानं प्रेष्ठमीश्वरम् ॥
तं त्वां जगत्स्थित्युदयान्तहेतुं
समं प्रशान्तं सुहृदात्मदैवम् ।
अनन्यमेकं जगदात्मकेतुं
भवापवर्गाय भजाम देवम् ॥
अयं ममेष्टो दयितोऽनुवर्त्ती
मयाभयं दत्तममुष्य देव ! ।
सम्पाद्यतां तद्भवतः प्रसादो
यथा हि ते दैत्यपतौ प्रसादः ॥
श्रीभगवानुवाच ।
यदात्थ भगवंस्तन्नः करवाम प्रियन्तव ।
भवतो यद्व्यवसितं तन्मे साध्वनुमोदितम् ॥
अवध्योऽयं ममाप्येष वैरोचनसुतोऽसुरः ।
प्रह्लादाय वरो दत्तो न वध्यो मे तवान्वयः ॥
दर्पोपशमनायास्य प्रकृत्ता बाहवो मया ।
सूदितञ्च बलं भूरि यच्च भारायितं भुवः ॥
चत्वारोऽस्य भुजाः शिष्टा भविष्यत्यजरामरः ।
पार्षदमुख्यो भवतो न कुतश्चिद्भयोऽसुरः ॥
इति लब्ध्वाभयं कृष्णं प्रणम्य शिरसासुरः ।
प्राद्युम्निं रथमारोप्य स बध्वा समुपानयत् ॥
अक्षौहिण्या परिवृतं सुवासःसमलङ्कृतम् ।
सपत्नीकं पुरस्कृत्य ययौ रुद्रानुमोदितः ॥
स राजधानीं समलङ्कृतां ध्वजै-
र्मनोरमैर्भूषितमार्गचत्वराम् ।
विवेश शङ्खानकदुन्दुभिस्वनै-
रभ्युद्यतः पौरसुहृद्द्विजातिभिः ॥
य एतत् कृष्णविजयं शङ्करेण च संयुगम् ।
संस्मरेत् प्रातरुत्थाय न तस्य स्यात् पराजयः
॥”
इति श्रीभागवते महापुराणे पारमहंस्यां

यतश्च सर्व्वलिङ्गेभ्यस्तद्धि पूज्यतमं
मतम् ॥
चतुरङ्गुलमुच्छ्रायं रम्यं वेदिकया युतम् ।
उत्तमं लिङ्गमाख्यातं पञ्चसूत्र सुसाधितम्
॥
तदर्द्धं मध्यमं प्रोक्तं तदर्द्धमवरं स्मृतम् ।
तस्य न्यूनं पूजनीयं न कदापि न
तत्फलम् ॥
रुद्राक्षं शिवलिङ्गञ्च स्थूलस्थूलं प्रशस्यते
।
शालग्रामो नार्म्मदञ्च सूक्ष्मसूक्ष्मो
विशिष्यते ॥”
पार्थिवादिलिङ्गापेक्षया बाणलिङ्गस्य
श्रेष्ठत्वम्
यथा, --
“कोमलेषु तु लिङ्गेषु पार्थिवं श्रेष्ठमुच्यते ।
कठिनेषु तु पाषाणं पाषाणात् स्फाटिकं
परम् ॥
स्फाटिकात् पद्मरागञ्च काश्मीरं
पद्मरागतः ।
काश्मीरात् पुष्परागोत्थमिन्द्रनीलोद्भवं
ततः ॥
इन्द्रनीलाच्च गोमेदं गोमेदाद्विद्रुमोद्भवम् ।
विद्रुमान्मौक्तिकं श्रेष्ठं तस्मात् श्रेष्ठन्तु
राजतम् ॥
हैरण्यं राजतात् श्रेष्ठं हैरण्याद्धीरकं वरम् ।
हीरकात् पारदं श्रेष्ठं बाणलिङ्गं ततः परम्
॥”
इति मेरुतन्त्रे ९ प्रकाशः ॥
अथ बाणलिङ्गलक्षणम् ।
वीरमित्रोदयधृत-
कालोत्तरे ।
“बाणलिङ्गं तथा ज्ञेयं भुक्तिमुक्तिप्रदायकम्
।
उत्पत्तिं बाणलिङ्गस्य लक्षणं शेषतः शृणु
॥
नर्म्मदादेविकायाश्च गङ्गायमुनयोस्तथा ।
सन्ति पुण्यनदीनाञ्च बाणलिङ्गानि
षण्मुख ! ॥

वैष्णवं शङ्खचक्राङ्कगदाब्जादिविभूषितम्
श्रीवत्सकौस्तुभाङ्कञ्च सर्व्वसिंहासनाङ्कितम्
।
वैनतेयसमाङ्कं वा तथा विष्णुपदाङ्कितम् ॥
वैष्णवं नाम तत् प्रोक्तं सर्व्वैश्वर्य्यफलप्रदम्
॥”
इति वैष्णवलिङ्गलक्षणम् ॥
“शालग्रामादिसंस्थन्तु शशाङ्कं श्रीविवर्द्धनम्
।
पद्माङ्कं स्वस्तिकाङ्कं वा श्रीवत्साङ्कं विभूतये
॥”
इत्यपि वैष्णवलिङ्गलक्षणम् ॥
हेमाद्रिधृतलक्षणकाण्डे ।
नारद उवाच ।
“अथ वक्ष्यामि ते विप्रचिह्नमेकादशं परम् ।
श्रवणाद्यस्य पापानि नाशमायान्ति तत्-
क्षणात् ॥
मधुपिङ्गलवर्णाभं कृष्णकुण्डलिकायुतम् ।
स्वयम्भुलिङ्गमाख्यातं सर्व्वसिद्धैर्निषेवितम्
॥
नानावर्णसमाकीर्णं जटाशूलसमन्वितम् ।
मृत्युञ्जयाह्वयं लिङ्गं सुरासुरनमस्कृतम् ॥
दीर्घाकारं शुभ्रवर्णं कृष्णबिन्दुसमन्वितम् ।
नीलकण्ठं समाख्यातं लिङ्गं पूज्यं सुरासुरैः
॥
शुक्लाभं शुक्लकेशञ्च नेत्रत्रयसमन्वितम् ।
त्रिलोचनं महादेवं सर्व्वपापप्रणोदनम् ॥
ज्वलल्लिङ्गं जटाजूटं कृष्णाभं स्थूलविग्रहम् ।
कालाग्निरुद्रमाख्यातं सर्व्वसत्त्वैर्निषेवितम् ॥
मधुपिङ्गलवर्णाभं श्वेतयज्ञोपवीतकम् ।
श्वेतपद्मसमासीनं चन्द्ररेखाविभूषितम् ।
प्रलयास्त्रसमायुक्तं त्रिपुरारिसमाह्वयम् ॥
शुभ्राभं पिङ्गलजटं मुण्डमालाधरं परम् ।
त्रिशूलधरमीशानं लिङ्गं सर्व्वार्थसाधनम् ॥
त्रिशूलडमरुधरं शुभ्ररक्तार्द्धभागतः ।
अर्द्धनारीश्वराह्वानं सर्व्वदेवैरभीष्टदम् ॥
ईषद्रक्तमयं कान्तं स्थूलं दीर्घं समुज्ज्वलम् ।
महाकालं समाख्यातं धर्म्मकामार्थमोक्षदम् ॥
एतत्तु कथितं तुभ्यं लिङ्गचिह्नं महेशितुः ।

संहितायां वैयासिक्यां दशमस्कन्धे बाणासुर-
संग्रामे श्रीकृष्णविजयस्त्रिषष्टितमोऽध्यायः॥

**बा(वा)णलिङ्गं**, क्ली, (बाणार्च्चनार्थं कृतं लिङ्गम्।

अन्यास्य निरुक्तिरुक्ता हेमाद्रौ। यथा, --
"बाणः सदाशिवो देवो बाणो बाणान्तरो-
ऽपि च।
तेन यस्मै कृतं तस्माद्बाणलिङ्गमुदाहृतम्॥")
नर्म्मदानद्युद्भवशिवलिङ्गम्। तस्य विवरणम्।
यथा, --
"नर्म्मदाजलमध्यस्थं बाणलिङ्गमिति स्मृतम्।
बाणलिङ्गे स्वयम्भूते चन्द्रकान्ताह्वयं स्थितम्
॥
चान्द्रायणशतं कार्य्यं शम्भोर्नैवेद्यभक्षणात्।
ग्राह्याग्राह्यविभागोऽयं बाणलिङ्गे न विद्यते।
तदर्पितं जलं वान्नं ग्राह्यं प्रसादसंज्ञया॥
शिवनाभमयं लिङ्गं सदा पूज्यं महर्षिभिः।
इन्द्रादिपूजितान्यत्र तच्चिह्नैर्विहितानि च
।
सदा सन्निहितस्तत्र शिवः सर्व्वार्थदायकः
।
इन्द्रलिङ्गानि तान्याहुः साम्राज्यार्थप्रदानि
च॥"
इतीन्द्रलिङ्गलक्षणम्॥
"आरुणं हित्यकीलालमुष्णस्पर्शं
करोत्यलम्।
आग्नेयं तच्छक्तिनिभमथवा
शक्तिलाञ्छितम्।
इदं लिङ्गवरं स्थाप्य तेजसाधिपतिर्भवेत्
॥"
इत्याग्नेयलिङ्गलक्षणम्॥
"दण्डाकारं भवेद् याम्यमथवा रसनाकृति
।
यद्यदुक्तं सह तैर्न निर्मिक्तं ज्ञायते तदा।
निषिक्तं निधनन्तेन क्रियते स्थापितेन तु
॥"
इति याम्यलिङ्गलक्षणम्॥
"राक्षसं खड्गसदृशं ज्ञानयोगफलप्रदम्।
कर्करादिप्रलिप्तन्तु कुण्ठकुक्षियुतं तथा।
राक्षसं निष्कृते लिङ्गं गार्हस्थे न सुखप्रदम्
॥"
इति नैरृ तलिङ्गलक्षणम्॥
"वारुणं वर्त्तुलाकारं पाशाङ्कं
चालिवर्च्चसम्।
वृद्धिं सुखादेर्वैस्वत्वसंभोगाप्तन्तु मध्यगे
॥"
इति वारुणलिङ्गलक्षणम्॥
"कृष्णं धूम्रं नवारुच्यं ध्वजाभं
ध्वजमूषलम्।
मस्तके स्थापितं तस्य
न्यूनन्यूनमितस्ततः॥"
इति वायुलिङ्गलक्षणम्॥
"तूणपाशगदाकारं गुह्यकेशस्य मध्यगम्
॥"
इति कुवेरलिङ्गलक्षणम्॥
"दिनं वाप्यथवा रात्रिं
शस्यावृद्धिकरैर्ब्बलम्।
अस्थिशूलाङ्कितं रौद्रं
हिमकुण्डलवर्च्चसम्॥"
इति रौद्रलिङ्गलक्षणम्॥
एकेनैव कृतार्थः स्यात् बहुभिः किमु सुव्रत!
॥"
इति बाणलिङ्गचिह्नानि॥
वीरमित्रोदयधृतकालोत्तरे।
"उक्ताङ्कं श्रेयसे योज्यं शीर्षमन्त्रं विवर्ज्जयेत्
।
यमवर्णन्तु यल्लिङ्गं यमाङ्कं वा कमण्डलुम्॥
दण्डाङ्कं सूत्रचिह्नं वा ब्रह्मज्ञानान्वितं मतम्।
शशिवर्णं महाकालं नन्दीशं पद्मरागवत्॥
पद्मरागनिभं सर्व्वं महाभं सिद्धिपूजितम्।
मौक्तिकाभं नीलनिभं रुद्रादित्यैः प्रपूजितम्
॥
वसुदैः सेन्द्रयक्षेशगुह्यकैर्यातुधानकैः।
नानावर्णमयं नीलं शशाङ्कमण्डलप्रभम्॥"
इति बाणलिङ्गलक्षणम्॥
वीरमित्रोदयधृतम्।
"इत्येतत् लक्षणं प्रोक्तं परीक्षातत्त्वकोविदैः।
त्रिःसप्तपञ्चवारं वा तुलासाम्यं न जायते।
तदा बाणं समाख्यातं शेषं पाषाणसम्भवम्
॥"
तुलाकरणन्तु तण्डुलेन। अपरतुलादिषु
तण्डुला
यद्यधिकाः स्युस्तदा तल्लिङ्गं गृहिणां पूज्य-
मवधार्य्यं लिङ्गञ्चेदधिकं तदोदासीनपूज्यन्त-

दिति किंवदन्तीति हेमाद्रिधृतलक्षणकाण्डे ॥
सूतसंहितायान्तु ।
“सप्तकृत्वस्तुलारूढं वृद्धिमेति न हीयते ।
बाणलिङ्गमिति ख्यातं शेषं नार्म्मदमुच्यते ॥
त्रिपञ्चवारं यस्यैव तुलासाम्यं न जायते ।
तदा बाणं समाख्यातं शेषं पाषाणसम्भवम्
॥”
वीरमित्रोदये ।
“नद्यां वा प्रक्षिपेद्भूयो यदा तदुपलभ्यते ।
बाणलिङ्गं तदा विद्धि न्यूनं सुखविवर्द्धनम् ॥”
इति बाणलिङ्गपरीक्षा ॥
बाणशब्दव्युत्पत्तिरपि तत्रैव ।
“अथ बाणं समाख्यातं यथा वक्ष्ये तथादितः
।
बाणः सदाशिवो देवो बाणो बाणान्तरोऽपि च
॥
तेन यस्मै कृतं तस्माद्बाणलिङ्गमुदाहृतम्।
सदा सन्निहितस्तत्र शिवः सर्व्वार्थदायकः ॥
कृतप्रतिष्ठं तल्लिङ्गं बाणाख्येन शिवेन च ।
पङ्कजस्य फलाकारं कुण्डलस्य समाकृति
॥”
पङ्कजफलं पद्मबीजम् ॥ पक्वजम्बुफलाकारं
कुक्कु-
टाण्डसमाकृतीति हेमाद्रिधृतलक्षणकाण्डे
पाठः ।
“भुक्तिमुक्तिप्रदञ्चैव बाणलिङ्गमुदाहृतम् ॥”
याज्ञवल्क्यसंहितायां देवीं प्रति शिववाक्यम्
।
“प्रशस्तं नार्म्मदं लिङ्गं पक्वजम्बुफलाकृति ।
मधुवर्णं तथा शुक्लं नीलं मरकतप्रभम् ॥
हंसडिम्बाकृति पुनः स्थापनायां प्रशस्यते ।
स्वयं संस्रवते लिङ्गं गिरितो नर्म्मदाजले ॥
पुरा बाणासुरेणाहं प्रार्थितो नर्म्मदातटे ।
अविवासं गिरौ तत्र लिङ्गरूपी महेश्वरः ।
बाणलिङ्गमपि ख्यातमतोऽर्थाज्जगतीतले ॥
अन्येषां कोटिलिङ्गानां पूजने यत् फलं लभेत्
।
तत् फलं लभते मर्त्यो बाणलिङ्गैकपूजनात्
॥”
तथा ।
चिपिटे पूजिते तस्मिन् गृहभङ्गो
भवेद्ध्रुवम् ॥
एकपार्श्वश्रिते धेनुपुत्त्रदारधनक्षयः ।
शिरसि स्फुटिते बाणे व्याधिर्म्मरणमेव च ॥
छिद्रलिङ्गेऽर्च्चिते बाणे विदेशगमनं भवेत् ।
लिङ्गे च कर्णिकां दृष्ट्वा व्याधिमान् जायते
पुमान् ।
अत्युन्नतिविलाग्रे तु गोधनानां क्षयो भवेत्
॥”
हेमाद्रिधृतम् ।
“तीक्ष्णाग्रं वक्रशीर्षञ्च त्र्यस्रलिङ्गं
विवर्ज्जयेत् ।
अतिस्थूलं चातिकृशं स्वल्पं वा
भूषणान्वितम् ।
गृही विवर्ज्जयेत्तादृक् तद्धि मोक्षार्थिनो
हितम् ॥”
इति दुष्टबाणलिङ्गलक्षणम् ॥
शुभलिङ्गमाह वीरमित्रोदये ।
“अर्थदं कपिलं लिङ्गं घनाभं
मोक्षकाङ्क्षिणाम् ।
लघु वा कपिलं स्थूलं गृही नैवार्च्चयेत्
क्वचित् ॥
पूजितव्यं गृहस्थेन वर्णेन भ्रमरोपमम् ।
तत्सपीठमपीठं वा मन्त्रसंस्कारवर्जितम् ।
सिद्धिमुक्तिप्रदं लिङ्गं सर्व्वप्रसादपीठगम्
॥”
इति शुभबाणलिङ्गलक्षणम् ॥
सूतसंहितायां भैरववाक्यम् ।
“बाणासुरः पुरा भद्रे ! शिवस्यातीव
बल्लभः ।
जितः क्रोधोऽनुरक्तश्च शिवपूजाविधौ
रतः ॥
वह्निज्ञो निपुणश्चैव शिल्पज्ञो
लक्षणान्वितः ।
दिने दिने स्वयं दत्त्वा लिङ्गं स्थाप्य
प्रपूजयेत् ॥
एवं वर्षशतं देवि ! दिव्यमानेन पूजयेत् ।
तदा तद्भक्तिसुलभः प्रत्यक्षः शङ्करो भवेत्
॥
शङ्कर उवाच ।
तस्मात्तेषु प्रदेशेषु पुण्यस्थानेषु तेषु वा ।
स्थितं तच्छिवसद्भावं शिवस्याकृतिविग्रहे ॥”
हेम्ना तदाकृतिलक्षणसमुच्चयेऽपि ।
“स्वयम्भुलिङ्गवद्बाणलिङ्गं भुक्त्यै स्वमुक्तये ।
सहस्रफलमन्यस्माद्यथास्थापनपूजने ॥
श्रीशैले कालिकागर्त्ते लिङ्गाद्रौ कन्यकाश्रमे ।
कन्यातीर्थे वने याने महेन्द्रे वा सुरेश्वरे ॥
स्थितानि बाणलिङ्गानि शिवेनैव कृतानि तु
॥”
सिद्धान्तशेखरे बाणलिङ्गान्यधिकृत्य ।
“तदनेकप्रकारं स्यादन्यवर्णमपीठकम् ।
लक्ष्ममूर्त्तिविहीनञ्च बाणं तत् पृथुलाग्रकम् ॥”
बाणलिङ्गेष्वावाहनादि न कर्त्तव्यम् । तदुक्तं
भविष्ये ।
“बाणलिङ्गानि राजेन्द्र ! स्थितानि भुवनत्रये ।
न प्रतिष्ठा न सं स्कारस्तेषामावाहनं न च ॥”
इति
योगसारे पञ्चमपरिच्छेदे ।
“ब्राह्म्ये मुहूर्त्ते चोत्थाय यः
स्मरेद्बाणलिङ्गकम् ।
सर्व्वत्र जयमाप्नोति सत्यं सत्यं महेश्वर ! ॥”
अथ बाणलिङ्गध्यानं तत्रैव ।
ॐ प्रमत्तं शक्तिसंयुक्तं बाणाख्यञ्च महाप्रभम् ।
कामबाणान्वितं देवं संसारदहनक्षमम् ॥
शृङ्गारादिरसोल्लासं बाणाख्यं परमेश्वरम् ।
एवं ध्यात्वा बाणलिङ्गं यजेत्तं परमं शिवम् ॥
मनसा गन्धपुष्पाद्यैः संपूज्यास्य मनुं स्मरेत्
॥”
तथा ।
“प्राणायामं ततः कृत्वा बाणलिङ्गन्तु तोषयेत्
।
तदिष्टदेवयोरैक्यं विभाव्य वाग्भवं जपेत् ॥
ततो जपं समाप्याथ स्तवेनानेन तोषयेत् ॥”
अथ स्तवः ।
“ॐ बाणलिङ्ग महाभाग संसारात्त्राहि मां
प्रभो ! ।
नमस्ते चोग्ररूपाय नमस्ते व्यक्तयोनये ॥
संसाराकारिणे तुभ्यं नमस्ते सूक्ष्मरूपधृक् ।
प्रमत्ताय महेन्द्राय कालरूपाय वै नमः ॥
दहनाय नमस्तुभ्यं नमस्ते योगकारिणे ।

“ताम्री वा स्फाटिकी स्वार्णी पाषाणी राजती तथा ।
वेदिका च प्रकर्त्तव्या तत्र संस्थाप्य पूजयेत् ॥
प्रत्यहं योऽर्च्चयेल्लिङ्गं नार्म्मदं भक्तिभावतः ।
ऐहिकं किं फलं तस्य मुक्तिस्तस्य करे स्थिता ॥”
इति प्रत्यहबाणलिङ्गपूजाफलम्॥
सूतसंहितायाम् ।
“संस्थाप्य श्रीबाणलिङ्गं रत्नकोटिगुणं भवेत् ।
रसलिङ्गे ततो बाणात् फलं कोटिगुणं स्मृतम् ॥
गुणांस्तु रसलिङ्गस्य वक्तुं शक्नोति शङ्करी ।
सिद्धयो रसलिङ्गे स्युरणिमाद्याः सुसंस्थिताः ॥”
केदारखण्डे ।
“रत्नधातुमयान्येव लिङ्गानि कथितान्यपि ।
पवित्राण्येव पूज्यानि सर्व्वकामप्रदानि च ॥
एतेषामपि सर्व्वेषां काश्मीरं हि विशिष्यते ।
काश्मीरादपि लिङ्गाच्च बाणलिङ्गं विशिष्यते ॥
बाणलिङ्गात् परं नान्यत् पवित्रमिह दृश्यते ।
ऐहिकामुष्मिकं सर्व्वं पूजाकर्त्तुः प्रयच्छति ॥”
इति बाणलिङ्गप्रशंसा ॥
निन्द्यलिङ्गमाह तत्रैव ।
“कर्कशे वाणलिङ्गे तु पुत्त्रदारक्षयो भवेत् ।

तुष्टोऽहं तव हे बाण ! वरं ब्रूहि किमिच्छसि ।
शङ्करस्य वचः श्रुत्वा बाणो वचनमब्रवीत् ॥
यदि तुष्टोऽसि हीनाय मह्यं त्वं मन्दभागिने ।
क्लिष्टोऽहं तव देवेश ! लिङ्गं कृत्वा दिने दिने ॥
तत्तल्लक्षणसं सिद्धलक्षणं शास्त्रनिर्म्मितम् ।
शास्तार्थौ दुर्ल्लभौ देव ! सिद्धश्चार्थश्च दुर्ल्लभः ॥
तस्मात्त्वं यदि मे तुष्टो लिङ्गं देदि सुलक्षणम् ।
सर्व्वकामकृतार्थञ्च सर्व्वसत्त्वानुकम्पनम् ।
सर्व्वेषाञ्च हितार्थाय प्रसादं कुरु शङ्कर ! ॥
इत्येवं वचनं तस्य शिवः परमकारणम् ।
श्रुत्वा कैलासमूद्धानं शङ्करेण विनिर्म्मिताः ॥
लिङ्गानां कोटिसंख्याश्च तथा चैव चतुर्द्दश ।
सिद्धलिङ्गं तदा तत्तत् सर्व्वं सदोदयं स्वयम् ॥
अयोज्यैवं सुसम्पूर्णं बाणस्य च समर्पितम् ॥
अक्षय्यफलदं बाणं स्थाप्यमानञ्च नित्यशः ।
संपूज्य बाणः सद्भावं कृत्वा प्रणयनन्तदा ॥
तद्भावं स्वपुरं नीत्वा नूनं चिन्तयते शुचिः ।
अक्षय्यं यदि संसिद्धं स्थाप्यमानं दिने दिने ॥
सत्त्वानां सिद्धिहेत्वर्थं बाणस्थाने सुसंरये ।
लिङ्गानां कालिकागर्त्ते सञ्चितास्तु त्रिकोटयः ॥
श्रीशैले कोटयस्तिस्रः कोट्येका कन्यकाश्रमे ।
माहेश्वरे च कोटिस्तु कन्यातीर्थे तु कोटिका ॥
महेन्द्रे चैव नेपाले एकैका कोटिरेव च ।

भोगिनां भोगकर्त्रे च मोक्षदात्रे नमो नमः ॥
नमः कामाङ्गनाशाय नमः कल्मषहारिणे ।
नमो विश्वप्रदात्रे च नमो विश्वस्वरूपिणे ॥
बाणस्य वरदात्रे च रावणस्य क्षयाय च ।
रामस्यानुग्रहार्थाय राज्याय भरतस्य च ॥
मुनीनां यीगदात्रे च राक्षसानां क्षयाय च ।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमो नमः ॥
ऐं दाहिकाशक्तियुक्ताय महामायाप्रियाय च ।
भगप्रियाय सर्व्वाय वैरिणां निग्रहाय च ॥
परित्राणाय योगिनां कौलिकानां प्रियाय च ।
कुलाङ्गनानां भक्ताय कुलाचाररताय च ॥
कुलभक्ताय योगाय नमो नारायणाय च ।
मधुपानप्रमत्ताय योगेशाय नमो नमः ॥
कुलनिन्दाप्रणाशाय कौलिकानां सुखाय च ।
कुलयोगाय निष्ठाय शुद्धाय परमात्मने ॥
परमात्मस्वरूपाय लिङ्गमूलात्मकाय च ।
सर्व्वेश्वराय सर्व्वाय शिवाय निर्गुणाय च ॥
इत्यतत् परमं गुह्यं बाणलिङ्गस्य शङ्कर ! ।

| | | |
|---|---|---|
| | बाणार्च्चार्थं कृतं लिङ्गं बाणलिङ्गमतः स्मृतम् ॥<br>बाणो वा शिव इत्युक्तस्तत्कृतं बाणमुच्यते ॥ | |

यः पठेत् साधकश्रेष्ठो गाणपत्यं लभेत
सः ॥
स्तवस्यास्य प्रसादेन योगी
योगित्वमाप्नुयात् ।
राज्यार्थिनां भवेद्राज्यं भोगिनां भोग
एव च ॥
साधूनां साधनं देव ! कौलिकानां कुलं
भवेत् ।
यं यं कामयते मन्त्री तं तमाप्नोति
लीलया ॥
बाणलिङ्गप्रसादेन सर्व्वमाप्नोति
सत्वरम् ।
किमन्यत् कथयामीह सर्व्वं वेत्सि
कुलेश्वर ! ।
महाभये समुत्पन्ने राजद्वारे कुलेश्वर !
॥
देशान्तरभये प्राप्ते दस्युचौरादिसङ्कुले ।
पठनात् स्तवराजस्य न भयं लभते
क्वचित् ॥
बाणलिङ्गस्य माहात्म्यं संक्षेपात्
कथितं मया ।
तस्य श्रवणमात्रेण नरो
मोक्षमवाप्नुयात् ॥
बाणलिङ्गं सदाराध्यं योगिनां
योगसाधने ।
कौलिकानां कुलाचारे पशूनां शत्रुनिग्रहे
॥
वेदज्ञानां वेदपाठे रोगिणां रोगनाशने ।
यो यो नाराधयेदेनं सर्व्वं तन्निष्फलं
भवेत् ॥"
इति श्रीयोगसारे सर्व्वागमोत्तमे
पार्व्वतीशिव-
संवादे वाणलिङ्गस्तोत्रं समाप्तम् ॥

**बा(वा)णवारः**, पुं, (बाणं परमुक्तशरं वारय-
तीति । वृ + णिच् + अण् ।)
भटादेश्चोलाकृति-
सन्नाहः । तत्पर्य्यायः । वारवाणः २
वारणः ३ ।
इति शब्दरत्नावली ॥ चोलकः ४ ।
इति हारा-

बणिक्पथः ४ । इति जटाधरः ॥ (यथा,
मार्कण्डेये । ५१ । ५४ ।
"कृष्यां बाणिज्यलाभे च शान्तिं कुर्व्वन्तु मे
सदा ॥")
क्रयविक्रयरूपस्य तस्य विवरणादि यथा, --
"मानेन तुलया वापि योऽशमष्टमकं हरेत् ।
दण्डं स दाप्यो द्विशतं वृद्धौ हानौ च कल्पि-
तम् ॥"
यः पुनर्बणिक् ब्रीहिकार्पासादेः पण्यस्याष्टम-
मंशं कूटमानेन कूटतुलया वान्यथापहरत्यसौ
पणानां द्विशतं दण्डनीयः । अपहृतस्य पुन-
र्द्रव्यस्य वृद्धौ हानौ च दण्डस्यापि वृद्धिहानी
कल्प्ये ॥
"भेषजस्नेहलवणगन्धधान्यगुडादिषु ।
पण्येषु प्रक्षिपन् हीनं पणान् दाप्यस्तु षोडश ॥"
मेषजमौषधद्रव्यं स्नेहो घृतादिः गन्धद्रव्यमुशी-
रादि आदिशब्दाद्धिङ्गुमरिचादि । एतेष्वसार-
द्रव्यं विक्रयार्थं मिश्रयतः षोडशपणो दण्डः ॥
किञ्च ।
"मृच्चर्म्ममणिसूत्रायःकाष्ठवल्कलवाससाम् ।
अजातौ जातिकरणे विक्रेयाष्टगुणो दमः ॥"
न विद्यते बहुमूल्या जातिर्यस्मिन् मृच्चर्म्मादिके
तदजातिः तस्मिन् जातिकरणे विक्रयार्थं गन्ध-
वर्णरसान्तरसञ्चारणेन बहुमूल्यजातीयसादृश्य-
सम्पादने यथा मल्लिकामोदसञ्चारणेन मृत्ति-
कायां सुगन्धामलकमिति । मार्जारचर्म्मणि
वर्णोत्कर्षापादनेन व्याघ्रचर्म्मेति स्फटिकमणौ
वर्णान्तरकरणेन पद्मराग इति कार्पासिके सूत्रे
गुणोत्कर्षाधानेन पट्टसूत्रमिति कार्ष्णायसे
वर्णोत्कर्षाधानेन रजतमिति विल्वकाष्ठे चन्द-
नामोदसञ्चारणेन चन्दनमिति कक्कोले त्वगाख्यं
लवङ्गमिति कार्पासिके वाससि गुणोत्कर्षा-
धानेन कौशेयमिति विक्रेयस्यापादितस्य दृश्य-
मृच्चर्म्मादेः पण्यस्याष्टगुणो दण्डो वेदितव्यः ॥
"समुद्गपरिवर्त्तञ्च सारभाण्डञ्च कृत्रिमम् ।
आधानं विक्रयं वापि नयतो दण्डकल्पना ॥
भिन्ने पणे तु पञ्चाशत् पणे तु शतमुच्यते ।
द्विपणे द्विशतो दण्डो मूल्यवृद्धौ च वृद्धिमान् ॥"
मुद्गं पिधानं मुद्गेन सह वर्त्तत इति समुद्गं
करण्डकम् । परिवर्त्तनं व्यत्यासः । योऽन्यदेव

राजनिरूपितार्घस्य ह्रासं वृद्धिं वा जानन्तो-
ऽपि बणिजः सम्भय मिलित्वा कारूणां
रजका-
दीनां शिल्पिनां चित्रकरादीनां सबाधं पीडा-
करमर्घान्तरं लाभलोभात् कुर्व्वन्तः
पणसहसं
दण्डनीयाः ॥ * ॥ किञ्च ।
"सम्भूय बणिजां पण्यमनर्घेणोपरुन्धताम् ।
विक्रीणतां वा विहितो दण्ड उत्तमसाहसः
॥"
ये पुनर्बणिजो मिलित्वा देशान्तरादागतं
पण्यमनर्घण हीनमूल्येन प्रार्थयमाना उप-
रुन्धन्ति महार्घण वा विक्रीणते तेषामुत्तम-
साहसो विहितो दण्ड्यो मन्वादिभिः ॥ * ॥
केन
पुनरर्घेण पणितव्यमित्याह ।
"राजनि स्थाप्यते योऽर्घः प्रत्यहं तेन
विक्रयः ।
क्रयो वा निस्रवस्तस्माद्बणिजां लाभकृत्
स्मृतः ॥"
राजनि सन्निहिते सति यस्तेनार्घः स्थाप्यते
निरूप्यते तेनार्घेण प्रतिदिनं क्रयो विक्रयो
वा
कार्य्यः । निर्गतः स्रषो निस्रवोऽवशेषः
तस्मा-
द्राजनिरूपिताद्यो निस्रवः स एव बणिजां
लाभकारी न पुनः स्वच्छन्दपरिकल्पितात्
।
मनुना चार्घ्यकरणे विशेषो दर्शितः ।
"पञ्चरात्रे पञ्चरात्रे पक्षे मासे तथा गते ।
कुर्व्वीत चैषां प्रत्यक्षमर्घसंस्थापनं नृप ! ॥"
इति ।
किञ्च ।
"स्वदेशपण्ये च शतं बणिक् गृह्णीत पञ्चकम्
।
दशकं पारदेश्ये तु यः सद्यः क्रयविक्रयी ॥"
स्वदेशप्राप्तपण्यं गृहीत्वा यो विक्रीणीतेऽसौ
पञ्चकं शतं पणशते पणपञ्चकं लाभं
गृह्णीयात् ।

वली । १९७ ॥ (क्लीवेऽपि दृश्यते ।
यथा,
सुश्रुते । ४ । २४ ।
"बाणवारं मृजावर्णतेजोबलविवर्द्धनम्
॥")

**बा(वा)णसुता**, स्त्री, (बाणस्य बाणासुरस्य सुता ।)

ऊषा । इति शब्दरत्नावली ॥

**बा(वा)णहा**, [न्] पुं, (वाणं बाणासुरं हन्तीति ।

हन् + क्विप् ।) विष्णुः । इति
हेमचन्द्रः ॥

**बा(वा)णा**, स्त्री, पुं, (बण्यते शब्द्यते इति ।

बण + घञ् । टाप् ।) नीलझिण्टी ।
इत्य-
मरः । २ । ४ । ७४ ॥

**बा(वा)णा**, स्त्री, बाणमूलम् । इति मेदिनी ।

णे, २७ ॥

**बा(वा)णारिः**, पुं, (बाणस्य बाणासुरस्य अरिः ।)

विष्णुः । इति केचित् ॥

**बा(वा)णाश्रयः**, पुं, (बाणस्याश्रयः ।) धनुः । इति

हलायुधः ॥

**बा(वा)णासनं**, क्ली, (बाणस्य आसनम् ।) धनुः ।

इति हलायुधः ॥

**बा(वा)णिजः**, पुं, (बणिगेव । बणिज् + अण् ।)

बणिक् । इत्यमरः ॥ बाडवाग्निः । इति
त्रिकाण्डशेषः ॥

**बा(वा)णिजिकः**, पुं, (बणिगेव । बणिज् + ठञ् ।)

बाडवाग्निः । बणिक् । इति मेदिनी ॥
(बाणिज-
कोऽप्यत्र । यथा, मनुः । ३ । १८१ ।
"यत्तु बाणिजके दत्तं नेह नामुत्र
तद्भवेत् ॥")
धूर्त्तः । इति शब्दरत्नावली ॥

**बा(वा)णिज्यं**, क्ली, (बणिजो भावः कर्म्म वा । बणिज्

मुक्तानां पूर्णं करण्डकं दर्शयित्वा हस्तलाघवे-
नान्यदेव स्फटिकानां पूर्णकरण्डकं समर्पयति
यश्च सारं भाण्डं कस्तूरिकादिकं कृत्रिमं कृत्वा
विक्रयमाधिं वा नयति तस्य दण्डकल्पना वक्ष्य-
माणा वेदितव्या । कृत्रिमकस्तूरिकादेर्मूल्य-
भूते पणे भिन्ने न्यूने न्यूनपणमूल्यमिति । यावत्त-
स्मिन् कृत्रिमे विक्रीयते पञ्चाशत्पणो दण्डः
पणमूल्ये पुनः शतं द्विपणमूल्ये द्विशतो दण्ड
इत्येवं मूल्यवृद्धौ दण्डवृद्धिरुन्नेया ॥ * ॥ बणिजः
प्रत्याह ।
"सम्भूय कुर्व्वतामर्घं सबाधङ्कारुशिल्पिनाम् ।
अर्घस्य ह्रासं वृद्धिं वा जानतां दम उत्तमः ॥"

परदेशप्राप्ते पुनः पण्ये शतपणमूल्ये
दशपणान्
लाभं गृह्णीयात् । यस्य पण्यग्रहणदिवस एव
विक्रयः सम्पद्यते । यः पुनः कालान्तरेऽपि
विक्रीणीते तस्य
कालोत्कर्षवशाल्लाभोत्कर्षः
कल्प्यः । एवञ्च यथार्घे निरूपिते पणशते
पञ्चपणो लाभो भवति तथैवार्घे राज्ञा
स्वदेश-
पण्यविषये स्थापनीयः ॥ * ॥ परदेशपण्ये
अर्घनिरूपणप्रकारमाह ।
"पण्यस्योपरि संस्थाप्य व्ययं
पण्यसमुद्भवम् ।
अर्घोऽनुग्रहकृत् कार्य्यः क्रेतुर्विक्रेतुरेव च
॥"
देशान्तरादागते पण्ये देशान्तरगमनप्रत्या-
गमनभाण्डग्रहणशुल्कादिस्थानेषु यावानुप-
युक्तोऽर्थस्तावन्तमर्थं परिगणय्य
पण्यमूल्येन सह
मेलयित्वा यथा पणशते दशपणो लाभः
सम्प-
द्यते तथा क्रेतृविक्रे त्रोरनुग्रहकार्य्योऽर्घो
राज्ञा
स्थापनीयः ॥ * ॥ प्रासङ्गिकं
परिसमाप्याधुना
विक्रीयासम्प्रदानम्प्रक्रमते । तत्स्वरूपं
नारदे-
नाभिहितम् ।
"विक्रीय पण्यं मूल्येन क्रेतुर्यन्न प्रदीयते ।
विक्रीयासम्प्रदानं तद्विवादपदमुच्यते ॥"
तत्र विक्रेयद्रव्यस्य चराचरभेदेन
द्वैविध्यमभि-
धाय पुनः षड् विधत्वं तेनैव प्रत्यपादि ।
"लोकेऽस्मिन् द्विविधं पण्यं जङ्गमं स्थावरं
तथा ।

| + ष्यञ् ।) वैश्यवृत्तिभेदः । इत्यमरः ॥ बणिजः कर्म्म भावो वा । बाणिज्येत्यपि दृश्यते । इति भरतः ॥ तत्पर्य्यायः । सत्यानृतम् २ बाणिज्या ३ | | |
|---|---|---|

षड्विधस्तस्य तु बुधैर्दानादानविधिः
स्मृतः ॥
गणिकं तुलिमं मेयं क्रियया रूपतः श्रिया
॥”
इति ॥
गणिकं क्रमुकफलादि । तुलिमं कुङ्कुमादि
।
मेयं शाल्यादि । क्रियया
वाहदोहादिरूपयो-
पलक्षितमश्वमहिष्यादि । रूपतः पण्याङ्ग-
नादि । श्रिया दीप्त्या मरकतपद्मरागादि
॥ * ॥
इत्येतत् षट्प्रकारमपि पण्यं
विक्रीयासंप्रय-
च्छतो दण्डमाह ।
“गृहीतमूल्यं यः पण्यं क्रेतुर्नैव प्रयच्छति
।
सोदयं तस्य दाप्योऽसौ दिग्लाभं वा
दिगागते ॥”
गृहीतं मूल्यं यस्य पण्यस्य विक्रेत्रा
तद्गृहीत-
मूल्यं तद्यदि विक्रेत्रा प्रार्थयमानाय
स्वदेश-
बणिजे क्रेत्रे न समर्पयति । तच्च पण्यं
यदि
क्रयकाले बहुमूल्यं सत्
कालान्तरेऽल्पमूल्येनैव
लभ्यते तदार्घह्रासकृतो य उदयो वृद्धिः
पण्यस्य
स्थावरजङ्गमात्मकस्य तेन सहितं पण्यं
विक्रेता
क्रेत्रे दापनीयः । यदा मूल्यह्रासकृतः
पण्य-
स्योदयो नास्ति किन्तु क्रयकाले यावदेव
यतो
मूल्यस्येयत्पण्यमिति प्रतिपन्नं तावदेव
तदा
तत् पण्यमादाय तस्मिन् देशे
विक्रीणानस्य यो

पण्यं राजदैविकेनोपहतं तदा
क्रेतुरेवासौ
हानिर्भवेत् । पण्याग्रहणरूपेण
क्रेतृदोषेण
नाशितत्वात् ॥ * ॥ अपि च ।
“राजदैवोपघातेन पण्ये दोषमुपागते ।
हानिर्विक्रेतुरेवासौ
याचितस्याप्रयच्छतः ॥”
यदा पुनः क्रेत्रा प्रार्थ्यमानमपि पण्यं
विक्रेता
न समर्पयति अजातानुशयोऽपि तच्च
राज-
दैविकेनोपहतं भवति तदासौ
हानिर्विक्रेतुरे-
वातोऽन्यदद्दुष्टं पण्यं विनष्टसदृक्षं क्रेत्रे
देयम् ॥
किञ्च ।
“अन्यहस्ते च विक्रीतं दुष्टं वा दुष्टवद्यदि
।
विक्रीणीते दमस्तत्र मूल्यात्तु द्विगुणो
भवेत् ॥”
यः पुनर्विनैवानुशयमेकस्य हस्ते
विक्रीतं पुन
रन्यस्य हस्ते विक्रीणीते सदोषं वा
पण्यं प्राच्छा-
दितदोषं विक्रीणीते तदा
तत्पण्यमूल्यात् द्विगुणो
दमो वेदितव्यः । * । नारदेनाप्यत्र
विशेषो
दर्शितः ।
“अन्यहस्ते तु विक्रीय योऽन्यस्मै
तत्प्रयच्छति ।
द्रव्यं तद्द्विगुणं दाप्यो विनयं तावदेव तु
॥
निर्द्दोषं दर्शयित्वा तु सदोषं यः
प्रयच्छति ।
स मूल्याद्द्विगुणं दाप्यो विनयं तावदेव
ते ॥”
इति ॥

तद्वृद्धिक्षयकारणत्रितयाभावेऽनुशयकालाभ्य-
न्तरेऽपि यद्यनुशयं करोति तदा पण्यषड् भागं
दण्डनीयः । अनुशयकारणसद्भावेऽपि अनुशय-
कालातिक्रमेणानुशयं कुर्व्वतोऽप्ययमेव दण्डः ।
उपभोगेनाविनश्वरेषु स्थिरार्थेष्वनुशयकालाति-
क्रमेणानुशयं कुर्व्वतो मनूक्तो दण्डो द्रष्टव्यः ।
“परेण तु दशाहस्य न दद्यान्नापि दापयेत् ।
आददानो ददच्चैव राज्ञा दण्ड्यः शतानि षाट् ॥”
इति मिताक्षरायां विक्रीयासम्प्रदानं नाम
प्रकरणम् ॥
अथ बृहस्पतिः ।
“कुषीदकृषिबाणिज्यं प्रकुर्व्वीतास्वयं कृतम् ।
आपत्काले स्वयं कुर्व्वन् नैनसा लिप्यते द्विजः ॥
लब्धलाभः पितॄन् देवान् ब्राह्मणांश्चैव पूजयेत् ।
ते तुष्टास्तस्य तं दोषं शमयन्ति न संशयः ॥
बणिक् कुषीदी दद्यात्तु वस्त्रगोकाञ्चनादिकम् ।
बणिक् कुषीद्यदोषः स्यात् ब्राह्मणानाञ्च पूज-
नात् ॥”
इत्याह्निकतत्त्वम् ॥

**बा(वा)णिज्या**, स्त्री, (बाणिज्य + टाप् । अभिधा-
नात् स्त्रीत्वम् ।) बाणिज्यम् । इति जटाधरः ॥

**बा(वा)ध**, ऋ ङ विहतौ । इति कविकल्पद्रुमः ॥
(भ्वा०-आत्म०-सक०-सेट् ।) ऋ, अवबाधत् ।
ङ, बाधते । ऊनं न सत्त्वेष्वधिको बबाधे । इति
रघुः ॥ २ । १४ ॥ इति दुर्गादासः ॥

**बा(वा)धः**, पुं, (बाधनमिति । बाध + भावे घञ् ।)
प्रतिबन्धकः । व्याघातः । (यथा, ऋग्वेदे । ६ ।
५१ । ४ ।
“यदीमर्भे महति वा हितासो बाधे मरुतो-
अह्वाम देवान् ॥”) न्यायमते साध्याभाववत्पक्षः ।
यथा । ह्रदो वह्निमान् । इति सामान्यनिरुक्ति-
गादाधरी ॥

**बा(वा)धकः**, पुं, (बा(वा)धते इति । बाध + ण्वुल् ।)
स्त्रीरोगविशेषः । यथा, --
“रक्तमाद्री तथा षष्ठी चाङ्कुरो जलकुमारकः ।
चतुर्विधो बाधकः स्यात् स्त्रीणां मुनिविभाषितः ॥
तेषां स्वभावं वक्ष्यामि यथाशास्त्रं विधानतः ।
एतेषां पूजनं कार्य्यं जनैः सन्तानकाङ्क्षिभिः ॥

लाभस्तेनोदयेन सहितं द्विकं
त्रिकमित्यादि
प्रतिपादितवृद्धिरूपोदयेन वा सहितं क्रेतृ-
वाञ्छावशाद्दापनीयः ॥ * ॥ यथाह
नारदः ।
"अर्घश्चेदवहीयेत सोदयं पण्यमावहेत् ।
स्थानिनामेष नियमो दिग्लाभं
दिग्विचारिणाम् ॥"
इति ॥
यदा त्वर्घमहत्त्वेन पण्यस्य न्यूनभावस्तदा
तस्मिन् पण्ये वस्त्रगृहादिके य उपभोगः
तदाच्छादनसुखनिवासादिरूपो
विक्रेतुस्तत्-
सहितं पण्यमसौ दाप्यः । यथाह नारदः ।
"विक्रीय पण्यं मूल्येन यः क्रेतुर्न
प्रयच्छति ।
स्थावरस्य क्षयं दाप्यो जङ्गमस्य
क्रियाफलम् ॥"
इति ॥
विक्रेतुरुपभोगः क्षय उच्यते । क्रेतुः
सम्बन्धि-
त्वेन क्षीयमाणत्वान्न पुनः
कुड्यपातशस्यघाता-
दिरूपः । तस्य तु ।
"उपहन्येत वा पण्यं दह्येतापह्रियेत वा ।
विक्रेतुरेव सोऽनर्थो विक्रीयासंप्रयच्छतः
॥"
इत्यनेनोक्तत्वात् ।
यदा त्वसौ क्रेता देशान्तरात्
पण्यग्रहणार्थ-
मागतस्तदा तत् पण्यमादाय देशान्तरे
विक्री-
णानस्य यो लाभस्तेन सहितं पण्यं
विक्रेता
क्रेत्रे दापयितव्यः । अयञ्च
क्रीतपण्यसमर्पण-
नियमोऽनुशयाभावे द्रष्टव्यः । सति
त्वनुशये
क्रीत्वा विक्रीय वा किञ्चिदित्यादि मनूक्तं
वेदितव्यम् ॥ * ॥ किञ्च ।
"विक्रीतमपि विक्रेयं पूर्ब्बक्रेतर्य्यगृह्णति ।
हानिश्चेत् क्रेतृदोषेण क्रेतुरेव हि सा भवेत्
॥"
सर्व्वश्चायं विधिर्दत्तमूल्ये पण्ये द्रष्टव्यः
। अदत्त-
मूल्ये पुनः पण्ये वाङ्मात्रक्रये
क्रेतृविक्रेत्रो-
र्नियमकारिणः समयादृते प्रवृत्तौ
निवृत्तौ वा न
कश्चिद्दोषः ॥ * ॥ यथाह नारदः ।
"दत्तमूल्यस्य पण्यस्य विधिरेष
प्रकीर्त्तितः ।
अदत्तेऽन्यत्र समयान्न विक्रेतुरविक्रयः
॥" इति ॥
विक्रयानुशयोऽभिहितः
क्रीतानुशयस्वरूपं तु
प्राक् प्रपञ्चितमधुना तदुभयसाधारणं
धर्म्म-
माह ।
"क्षयं वृद्धिं च बणिजा
पण्यानामविजानता ।
क्रीत्वा नानुशयः कार्य्यः कुर्व्वन्
षड्भागदण्ड-
भाक् ॥"
परीक्षितक्रीतपण्यानां क्रयोत्तरकालं
क्रय-
कालपरिमाणतोऽर्घकृतां वृद्धिमपश्यता
क्रेत्रा-
नुशयो न कार्य्यः । विक्रेत्रा च
महार्घनिबन्धनं
पण्यक्षयमपश्यता नानुशयितव्यम् ।
वृद्धिक्षय-
परिज्ञाने पुनः क्रेतृविक्रेत्रोरनुशयो
भवतीति
व्यतिरेकादुक्तम्भवति ।
अनुशयकालावधिश्च
नारदेनोक्तः ।
"क्रीत्वा मूल्येन यः पण्यं दुःक्रीतं
मन्यते क्रयी ।
विक्रेतुः प्रतिदेयं तत्
तस्मिन्नेवाह्न्यविक्षतम् ॥
द्बितीयेऽह्नि ददत् क्रेता
मूल्यात्त्रिंशांशमा-
वहेत् ।
द्बिगुणन्तु तृतीयेऽह्नि परतः क्रेतुरेव तत्
॥"
निःसारणं स्थापनञ्च बलिदानं जपस्तथा ।
कर्त्तव्यो गुरुवाक्येन यथाशास्त्रं विचक्षणैः ॥
चतुर्विधो बाधकस्तु जायते ऋतुकालतः ॥"
तस्य लक्षणं यथा, --
"व्यथा कट्यां तथा नाभेरधः पार्श्वे स्तनेऽपि
च ।
रक्तमाद्रीप्रदोषेण जायते फलहीनता ॥
मासमेकं द्वयं वापि ऋतुयोगो भवेद्यदि ।
रक्तमाद्रीप्रदोषेण फलहीना तदा भवेत् ॥"
इति रक्तमाद्र्याः ॥
"नेत्रे हस्ते भवेज्ज्वाला योनौ चैव विशेषतः ।
लालासंयुतरक्तञ्च षष्ठीबाधकयोगतः ॥
मासैकेन भवेद्यस्या ऋतुस्नानद्बयं तथा ।
मलिना रक्तयोनिः स्यात् षष्ठीबाधकयोगतः ॥"
इति षष्ठ्याः ॥

| | | |
|---|---|---|
| यदा पुनर्जातानुशयः क्रेता पण्यं न जिघृक्षति<br>तदा विक्रीतमपि पण्यं अन्यत्र विक्रे यम् । यदा<br>पुनर्विक्रेत्रा दीयमानं क्रेता न गृह्णाति तच्च | इति ॥<br>अपरीक्षितक्रयविक्रये पुनः पण्यवैगुण्यनिबन्ध-<br>नानुशयावधि दशैकपञ्चसप्ताहेत्यादिना दर्शित<br>एव । तदनया वाचो युक्त्या वृद्धिक्षयपरिज्ञान-<br>स्यानुशयकारणत्वमवगम्यते। यथा पण्यपरी-<br>क्षाविधिबलात् पण्यदोषाणां अतः पण्यदोषे | |

"उद्वेगो गुरुता देहे रक्तस्रावो भवेद्बहु ।
नाभेरधो भवेत् शूलं चाङ्कुरः स तु
बाधकः ॥
ऋतुहीना चतुर्म्मासं त्रिमासं वा
भवेद्यदि ।
कृशाङ्गी करपादे च ज्वाला
चाङ्कुरयोगतः ॥"
इति चाङ्कुरस्य ॥
"सशूला च सगर्भा च
शुष्कदेहाल्परक्तिका ।
जलकुमारस्य दोषेण जायते
फलहीनता ॥
या कृशाङ्गी भवेत् स्थूला
बहुकालऋतुस्तथा ।
गुरुस्तनी स्वल्परक्ता जलकुमारस्य
दूषणात् ॥"
इति जलकुमारस्य ॥
इति वैद्यकम् ॥ बाधाजनके, त्रि ॥
(यथा,
मार्कण्डेये । ३४ । १६ ।
"घर्म्मो धर्म्मानुबन्धार्थो धर्म्मो
नात्मार्थ-
बाधकः ॥")

**बा(वा)धनं**, क्ली, (बाध + ल्युट् ।) पीडा । इति
शब्दरत्नावली ॥ प्रतिवन्धकश्च ॥
(बाधते इति ।
बाध + ल्युः । पीडादातरि प्रतिबन्धके
च त्रि ।
यथा, हरिवंशे । ९५ । ५३ ।
"श्रूयतां कथयिष्यामि यत्रोभौ
शत्रुवाधनौ ॥")

**बा(वा)धा**, स्त्री, (बाध + टाप् ।) पीडा ।
इत्यमरः ।
१ । ९ । ३ ॥ (यथा, मार्कण्डेये । २२
। ३ ।
"दुर्व्वृत्ताः सन्ति शतशो दानवाः
पापयोनयः ।
तेभ्यो न स्यात् यथा बाधा मुनीनां त्वं
तथा
तदा नरस्याप्रतिकारसेविनो
भवेत्तु बाधिर्य्यमसंशयं खलु ॥"
इत्युत्तरतन्त्रे विंशतितमेऽध्याये
सुश्रुतेनोक्तम् ॥
अस्य चिकित्सा यथा, --
"सामान्यतो विशेषेण बाधिर्य्ये पूरणं शृणु
।
गवां मूत्रेण विल्वानि पिष्ट्वा तैलं
विपाचयेत् ॥
सजलञ्च सदुग्धञ्च बाधिर्य्ये कर्णपूरणम् ।
सितामधुकविम्बीभिः सिद्धं वाजे
पयस्यथ ॥
सिद्धं वा विल्वनिःक्वाथे शीतीभूतं
तदुद्धृतम् ।
पुनः पचेद्दशक्षीरं सितामधुकचन्दनैः ॥
विल्वाम्बु गाढं तत्तैलं बाधिर्य्ये
कर्णपूरणम् ।
वक्ष्यते यः प्रतिश्याये विधिः सोऽप्यत्र
पूजितः ।
वातव्याधिषु यश्चोक्तो विधिः स च हितो
भवेत् ॥"
इति च तत्रैकविंशतितमेऽध्याये
तेनैवोक्तम् ॥)

**बाध्यं**, त्रि, (बाध + ण्यत् ।) बाधनीयम् । बाधि-
तव्यम् । निवर्त्त्यम् । यथा ।
साङ्चितालिङ्ग-
दर्शनात् प्रकरणमिदं बाध्यम् । इति
ब्रह्मसूत्रस्य
समञ्जसावृत्तिः ॥ (यथा, मार्कण्डेये ।
६६ । ४० ।
"नाहं स्वारोचिषस्तुल्यः स्त्रीबाध्यो वा
जले-
चरि ! ॥")

**बाध्यता**, स्त्री, (बाध्यस्य भावः । बाध्य + तल् ।)
बाध्यत्वम् । बाध्यस्य भावः इत्यर्थे
तप्रत्यय-
निष्पन्नोऽयं शब्दः ॥

**बान्धकिनेयः**, त्रि, (बन्धक्या अपत्यं पुमान् ।
मिति वा । बृहस्पति + "दित्यदित्यादित्यपत्यु-
त्तरपदाण्ण्यः ।" ४ । १ । ८५ । इति ण्यः ।)
बृहस्पतिसम्बन्धिनि, त्रि ॥

**बालं**, क्ली, पुं, (बलतीति । बल + णः ।)
गन्धद्रव्यविशेषः । बाला इति ख्यातम् । इति
मेदिनी ॥ तत्पर्य्यायः । ह्रीवेरम् २ बर्हिष्ठम् ३
उदीच्यम् ४ केशनामकम् ५ अम्बुनामकम् ६ ।
इत्यमरः । २ । ४ । १२२ ॥ ह्रिवेरम् ७ वर्हि-
ष्ठम् ८ । इति भरतः ॥ बालकम् ९ बारिदम् १०
इति शब्दरत्नावली ॥ वरम् ११ ह्रीवेरकम् १२
केश्यम् १३ वज्रम् १४ पिङ्गम् १५ ललना-
प्रियम् १६ कुन्तलोशीरम् १७ कचामोदम् १८ ।
अस्य गुणाः । शीतलत्वम् । तिक्तत्वम् । पित्त-
वान्तितृषाज्वरकुष्ठातिसारश्वासव्रणनाशित्वम् ।
केशहितत्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
"बाला वाट्यालिका वाट्या सैव वाद्यालिका-
पि च ।
महाबला पीतपुष्पा सहदेवी च सा स्मृता ॥
ततोऽन्यातिबला ऋष्यप्रोक्ता कङ्कतिकासह ।
गाङ्गेरुकी नागबला झसा ह्रस्वा गवेधुका ॥
अस्य गुणाः ।
बलाचतुष्टयं शीतं मधुरं बलकान्तिकृत् ।
स्निग्धं ग्राहि समीरास्रपित्तास्रक्षतनाशनम् ॥
बालाचतुष्टयविशेषगुणाः ।
बलामूलत्वचश्चूर्णं पीतं सक्षीरशर्करम् ।
मूत्रातिसारं हरति दुष्टमेतन्न संशयः ॥
हरेन्महाबला कृच्छ्रं भवेद्वातानुलोमनी ।
हन्यादतिबला मोहं पयसा सितया सह ॥"
इति भावप्रकाशः ॥

**बालः**, त्रि, (बलतीति । बल प्राणने + "ज्वलि-
तिकसन्तेभ्यो णः ।" ३ । २ । १४० । इति णः ।)
मूर्खः ॥ (यथा, मनुः । २ । १५३ ।
"अज्ञो भवति वै बालः पिता भवति मन्त्रदः ।
अज्ञं हि बालमित्याहुः पितेत्येव तु मन्त्रदम् ॥"
"वैशब्दोऽवधारणे अज्ञ एव बालो भवति
नत्वल्पवयाः ।" इति तट्टीकायां कुल्लूकभट्टः ॥)
अर्भकः । इति मेदिनी । ले, ४० ॥ द्वितीयस्य
पर्य्यायः । माणवकः २ । इत्यमरः । २ । ६ । ४२ ॥
बालकः ३ माणवः ४ किशोरः ५ बटुः ६ मुष्टि-

कुरु ॥”)
निषेधः । इति हेमचन्द्रः ॥

**बा(वा)धितः**, त्रि, (बाध + क्त ।) बाधायुक्तः ।
निवर्त्तः । यथा ।
सकृद्गतविप्रतिषेधेन यद्बाधितं
तद्बाधितमेव । इति मुग्धबोधटीकायां
दुर्गा-
दासः ॥

**बाधिर्य्यं**, क्ली, (बधिरस्य भावः । बधिर + ष्यञ् ।)
बधिरस्य भावः । कर्णरोगविशेषः ।
तस्य
निदानम् । यथा, --
“यदा शब्दवहं वायुः स्रोत आवृत्य
तिष्ठति ।
शुद्धः श्लेष्मान्वितो वापि बाधिर्य्यं तेन
जायते ॥”
इति माधवकरः ॥
अस्यौषधं यथा, --
“शुष्कमूलकशुण्ठीनां क्षारो
हिङ्गुलनागरम् ।
शुक्रं चतुर्गुणं दद्यात्तैलमेतैर्विपाचयेत् ॥
बाधिर्य्यं कर्णशूलञ्च पूयस्रावश्च
कर्णयोः ।
क्रमयश्च विनश्यन्ति तैलस्यास्य
प्रपूरणात् ॥”
अपि च ।
“प्रस्थे द्वे गण्डमालानां
क्वाथयेद्द्रोणमम्भसाम् ।
चतुर्भागावशेषेण तैलप्रस्थं विपाचयेत्
।
काञ्जिकस्याढकं दत्त्वा पिष्टान्येतानि
दापयेत् ॥
पुनर्नवा गोक्षुरकं सैन्धवं त्र्युषणं वचा ।
सरलं सुरदारुश्च बृहती कण्टकारिका
॥
नस्यपानाद्धरत्येव कर्णशूलं हनुग्रहम् ।
बाधिर्य्यं सर्व्वरोगञ्च अभ्यङ्गाच्च
महेश्वर ! ॥”
इति गारुडे १९८ अध्यायः ॥
(ससम्प्राप्तिकारणमस्य यथा, --
“स एव शब्दाभिवहा यदा शिवाः
बन्धकी + “कल्याण्यादीनामिनङ् ।” ४
। १ । १२६ ।
इति ढक् इनङ् च ।) असतीसुतः ।
इत्य-
मरः । २ । ६ । २६ ॥

**बान्धवः**, पुं, (बन्धुरेव । बन्धु + “प्रज्ञादिभ्यश्च ।” ५ ।
४ । ३८ । इति स्वार्थे अण् ।) ज्ञातिः ।
इत्य-
मरः । २ । ६ । ३४ ॥ सुहृत् । इति
मेदिनी । वे, ४५ ॥
(यथा, मनुः । ५ । ७० ।
“नातिवर्षस्य कर्त्तव्या
बान्धवैरुदकक्रिया ॥”)
अस्य विवरणं बन्धुशब्दे द्रष्टव्यम् ॥

**बाभ्रवी**, स्त्री, (बभ्रोर्महादेवस्य पत्नी । बभ्रु +
अण् + ङीष् ।) दुर्गा । इति त्रिकाण्डशेषः
॥
(यथा, मार्कण्डेये । ९१ । २१ ।
“मेधे सरस्वति वरे भूति बाभ्रवि
तामसि ! ॥”)

**बारकीरः**, पुं, द्वारग्राही । बाडवः । यूका । वेणि-
वेधिनी । नीराजितहयः । इति मेदिनी ।
रे, २८६ ॥

**बार्ब्बटीरः**, पुं, त्रपु । आम्रास्थि । अङ्कुरः ।
गणिकासुतः । इति हेमचन्द्रः ॥

**बार्हस्पतं**, त्रि, बृहस्पतिसम्बन्धि । बृहस्पतेरिदं
इत्यर्थे (अण्) ष्णप्रत्ययेन निष्पन्नम् ॥

**बार्हस्पत्यः**, पुं, (बार्हस्पत्यं बृहस्पतिप्रोक्तं शास्त्रं
अधीयमानत्वेनास्त्यस्येति । अर्श
आदित्वा-
दच् ।) नास्तिकः । यथा, हेमचन्द्रः ।
“स्याद्वादवाद्यार्हतः स्याच्छून्यवादी तु
सौगतः ।
नैयायिकस्त्वक्षपादो योगः सांख्यस्तु
कापिलः ॥
वैशेषिकः स्यादौलूक्यो बार्हस्पत्यस्तु
नास्तिकः ।
न्धयः ७ बटुकः ८ किशोरकः ९ । इति शब्द-
रत्नावली ॥ पाकः १० गर्भः ११ हितकः १२
पृथुकः १३ शिशुः १४ शावः १५ अर्भः १६
डिम्भकः १७ डिम्बः १८ । इति राजनिर्घण्टः ॥
स तु षोडशवर्षपर्य्यन्तः प्रथमवयस्कः । यथा, --
“आषोडशाद्भवेद्बालस्तरुणस्तत उच्यते ।
वृद्धः स्यात् सप्ततेरूर्द्ध्वं वर्षीयान् नवतेः परम् ॥”
इति स्मृतिः । इति भरतः ॥
तस्य रक्षकाः सर्व्वदेवताः । यथा, --
“अनाथबालवृद्धानां रक्षकाः सर्व्वदेवताः ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ८६ अध्यायः ॥
अथ बालस्य परिचर्य्याविधिः ।
“बालमङ्के सुखं दध्यान्न चैनं तर्ज्जयेत् क्वचित् ।

| | | |
|---|---|---|
| कफानुयातो व्यनुसृत्य तिष्ठति । | चार्व्वाको लौकायतिकश्चैते षडपि तार्किकाः ॥”<br>(बृहस्पतिना प्रोक्तमिति । बृहस्पति + ण्यः ।)<br>नीतिशास्त्रे, क्ली । इति केचित् ॥<br>बृहस्पतेरिद- | |

सहसा बोधयेन्नैव नायोग्यमुपवेशयेत् ॥”
अयोग्यमुपवेशनासमर्थम् ।
“नाकृष्य स्थापयेत् क्रोडे न क्षिप्रं शयने क्षिपेत् ।
रोदयेन्न क्वचित् कार्य्य विधिमावश्यकं विना ॥”
आवश्यको विधिः
भेषजदानतैलाभ्यङ्गोद्वर्त्तनादि ॥
तच्चित्तमनुवर्त्तेत तं सदैवानुमोदयेत् ।
संसेवितमना एकं नित्यमेवाभिवर्द्धयेत् ॥
बालातपतडिद्वृष्टिधूमानलजलादितः ।
निम्नोच्चस्थानतश्चापि रक्षेद्बालं प्रयत्नतः ॥”
बालस्य स्वभावाद्धितान्याह ।
“अभ्यङ्गोद्वर्त्तने स्नानं नेत्रयो रञ्जनं तथा ।
वसनं मृदु यत्तच्च तथा मृद्वनुलेपनम् ॥
जन्मप्रभृति पथ्यानि बालस्यैतानि सर्व्वथा ॥”
बालस्य कवलादेः समयमाह ।
“कबलः पञ्चमाद्वर्षाद्विंशतेश्चैव मैथुनम् ॥”
बाल्यादेरवधिमाह सुश्रुतः ।
“वयस्तु त्रिविधं बाल्यं मध्यमं वार्द्धकं तथा ।
ऊनषोडशवर्षस्तु नरो बालो निगद्यते ॥
त्रिविधः सोऽपि दुग्धाशी दुग्धान्नाशी तथान्न-भुक् ॥
दुग्धाशी वषपर्य्यन्तं दुग्धान्नाशी शरद्द्वयम् ।
तदुत्तरं स्यादन्नाशी एवं बालस्त्रिधा मतः ॥
मध्ये षोडशसप्तत्योर्मध्यमः कथितो बुधैः ।
चतुर्धा मध्यमं प्राहुर्युवा द्वात्रिंशतो मतः ॥
चत्वारिंशत्समा यावत्तिष्ठेद्वीर्य्यादिपूरितः ।
ततः क्रमेण क्षीणः स्याद्यावद्भवति सप्ततिः ॥
वीर्य्यादीत्यादिशब्देन रसादिसर्व्वधात्विन्द्रिय-बलोत्साहा उच्यन्ते । क्षीणः सर्व्वधात्विन्द्रिय-बलोत्साहैर्हीनः ।
ततस्तु सप्तवेरूर्द्ध्वं क्षीणधातुरसादिकः ॥
क्षीयमाणेन्द्रियबलः क्षीणरेता दिने दिने ।
बलीपलितखालित्ययुक्तः कर्म्मसु चाक्षमः ॥
कासश्वासादिभिः क्लिष्टो वृद्धो भवति मानवः ॥
बाल्ये विवर्द्धते श्लेष्मा पित्तं स्यान्मध्यमाब्दिकम् ।
वार्द्धक्ये वर्द्धते वायुर्विचार्य्यैतदुपक्रमेत् ॥
शूद्रायाः कन्यापुत्रजनने त्रयोदशाहोत्तरं लौकिककर्म्माधिकारः वैदिककर्म्मणि तु मासो-त्तरस्नानात् शुद्धिः । एतत् सर्व्वं कन्यापुत्रयो-र्विद्यमानत्वे बोध्यम् ॥
जननाशौचोत्तरं षण्मासाभ्यन्तरमजातदन्त-मरणे मातापित्रोरेकाहः । सपिण्डानान्तु सद्यः शौचम् ॥ षण्मासाभ्यन्तरेऽपि जातदन्तस्य मरणे मातापित्रोस्त्र्यहः । सपिण्डानामेकाहः । षण्मासोपरिद्विवर्षपर्य्यन्तं पित्रोस्त्र्यहः । सपिण्डा-नामकृतचूडे एकाहः कृतचूडे त्र्यहः । द्विवर्षो-परिमासत्रयाधिकषड्वर्षपर्य्यन्तमनुपनीतबाल-कस्य मरणे मातापित्रादिसपिण्डानां त्र्यहः ॥
तन्मध्येऽप्युपनीतस्य मरणे दशाहः ।
मासत्रया-धिकषड्वर्षोपरि मरणे पित्रादिसपिण्डानां दशाहः ॥
शूद्रस्य षण्मासाभ्यन्तरे अनुत्पन्नदन्तस्य मरणे त्रिरात्रम् । उत्पन्नदन्तस्य पञ्चाहः । षण्मा-सोपरिद्विवर्षाभ्यन्तरे अकृतचूडमरणे पञ्चाहः । तत्रापि कृतचूडमरणे द्वादशाहः । द्विवर्षोपरि षड्वर्षाभ्यन्तरे मरणे द्वादशाहः । अत्रापि कृतोद्वाहेऽपि मासो व्यवह्रियते षड्वर्षोपरि-मासः ॥ * ॥ “बालकजननान्तरकर्त्तव्यमाह वैद्यके । यथा,--“अथबालं क्षौमपरिवृतं क्षौमवस्त्रास्तृतायां शय्यायां शाययेत् । पीलु-बदरीनिम्बपरूषकशाखाभिश्चैनं वीजयेत् । मूर्द्ध्नि चास्याहरहस्तैलपिचुमवचारयेत् । धूपयेच्चैनं रक्षोघ्नैर्धूपैः । रक्षोघ्नानि चास्य पाणिपादशिरोग्रीवास्ववसृजेत् तिलातसी-सर्षपकणांश्चात्र प्रकिरेत् । अधिष्ठाने चाग्निं प्रज्वालयेत् । व्रणितोपासनीयञ्चावेक्षेत ॥
ततो दशमेऽहनि मातापितरौ कृतमङ्गल-कौतुकौ स्वस्तिवाचनं कृत्वा नाम कुर्य्यातां यदभिप्रेतं नक्षत्रनाम वा ॥
ततो यथावर्णं धात्रीमुपेयान्मध्यमप्रमाणां मध्यमवयसमरोगां शीलवतीमचपलामलोलु-पामकृपामस्थूलां प्रसन्नक्षीरामलम्बौष्ठीमल-म्बोर्द्ध्वस्तनीमव्यङ्गामव्यसनिनीं जीवद्वत्सां दोग्ध्रीं
कासश्वासवमीप्रादुर्भावः । तस्मादेवं विधानं
स्तन्यं न पाययेत् ॥”
“बालं पुनर्गात्रंमुखं गृह्णीयान्न चैनं तर्ज्जयेत्
सहसा न प्रतिबोधयेद्वित्रासभयात् सहसा
नापहरेदुत्क्षिपेद्वा
वातादिविघातभयान्नोपवे-शयेत् कौब्ज्यभयात्
नित्यञ्चैनमनुवर्त्तेत प्रिय-शतैरजिघांसुः ।
एवमनभिहतमनास्त्वभिवर्द्धते
नित्यमुदग्रसत्त्वसम्पन्नो नीरोगः सुप्रसन्नमनाश्च
भवति ।
वातातपविद्युत्प्रभापादपलताशून्या-गारनिम्नस्थानगृहच्छायादिभ्यो दुर्ग्रहोपसर्ग-तश्च बालं रक्षेत् ।
नाशुचौ विसृजेद्बालं नाकाशे विषमे न च ।
नोष्ममारुतवर्षेषु रजोधूमोदकेषु च ॥
क्षीरसात्म्यतया क्षीरमाजं गव्यमथापि वा ।
दद्यादास्तन्यपर्य्याप्तेर्बालानां वीक्ष्यमात्रया ॥”
इति सुश्रुते शारीरस्थाने दशमेऽध्याये ॥)

**बा(वा)लः**, पुं, (बलति मस्तकं रक्षति संवृणोतीति
वा । बल + णः ।)
शिरोभवाच्छादनविशेषः ।
चुल इति भाषा । तत्पर्य्यायः । चिकुरः २ कचः
३ केशः ४ कुन्तलः ५ कुञ्जरः ६ शिरोरुहः ७
शिरसिरुट् ८ शिरोरुट् ९ शिरजः १० । इति

उपक्रमेत् चिकित्सेत् ॥ तन्त्रान्तरे तु ।
बाल्यं वृद्धिश्छविर्मेधा त्वग्दृष्टिः शुक्रविक्रमौ ।
बुद्धिः कर्म्मेन्द्रियं रेतो जीवितं दशतो ह्रसेत् ॥”
इति भावप्रकाशः ॥
(अथ बालाद्यशौचम् ।
“नवमादिमासजातबालस्याशौचकालाभ्यन्तर
मरणे मातापित्रोरस्पृश्यत्वं युक्तम् । तदेव
स्वजात्युक्तजननाशौचम् । ज्ञातीनान्त्वशौचं
नास्ति । नवमादिमासमृतजातयोस्तुकन्या-
पुत्त्रयोः पित्रादि सपिण्डानां मातुश्च जनना-
शौचम् । तच्च ब्राह्मणानां दशाहं शूद्राणां
मासः । पुत्त्रजन्मनि पितुः सचेलस्नानं
पुत्त्रमुख-
दर्शनात् परं पुनः सचेलस्नानम् ।
पुत्त्रकन्याजनने
ब्राह्मण्या दशाहानन्तरं लौकिककर्म्माधिकार ॥
पुत्त्रजनने ब्राह्मण्या विंशतिरात्रोत्तरस्नानात्
वैदिककर्म्माधिकारः । कन्याजनने तु ब्राह्मण्या
मासोत्तरस्नानात् वैदिककर्म्माधिकारः ।

वत्मलामक्षुद्रकर्म्मिणीं कुले जातामतो भूयि-
ष्ठैश्च गुणैरन्वितां श्यामामारोग्यब्रलवृद्धये
बालस्य । तत्रोर्द्ध्वस्तनी करालं कुर्य्यात् ।
लम्ब-
स्तनीं नासिकामुखं छादयित्वा मरणमापा-
दयेत् । ततः प्रशस्तायां तिथौ शिरःस्नात-
महतवाससमुदङ्मुखं शिशुमुपवेश्य धात्रीं
प्राङ्मुखीमुपवेश्य दक्षिणं स्तनं धौतमीषत्परि-
स्नुतमभिमन्त्र्य मन्त्रेणानेन पाययेत् ।
चत्वारः सागरास्तुभ्यं स्तनयोः क्षीरवाहिणः ।
भवन्तु सुभगे नित्यं बालस्य बलवृद्धये ॥
पयोऽमृतरसं पीत्वा कुमारस्ते शुभानने ।
दीर्घमायुरवाप्नोतु देवाः प्राश्यामृतं यथा ॥

अतोऽन्यथा
नानास्तन्योपयोगस्यासात्म्यात्

व्याधिजन्म भवति । अपरिस्नुतेऽप्यतिस्तब्ध-
स्तन्यपूर्णस्तनपानादुत्स्नुहितस्रोतसः शिशोः

शब्दरत्नावली ॥ घोटकशिशुः ।
तत्पर्य्यायः ।
किशोरः २ । इत्यमरः ॥ अश्वबालधिः
। करि-
बालधिः । नारिकेलः । इति मेदिनी ।
ले, ३९ ॥
पञ्चवर्षीयहस्ती । यथा, --
“पञ्चवर्षो गजो बालः स्यात् पोतो
दशवर्षकः ॥”
इति हेमचन्द्रः ॥
(यथा, भागवते । ९ । १० । ६ ।
“यो लोकवीरसमितौ धनुरैशमुग्रं
सीतास्वयंवरगृहे त्रिशतोपनीतम् ।
आदाय बालगजलील इवेक्षुयष्टिं
सज्यीकृतं नृप ! विकृष्य बभञ्ज मध्ये
॥”)
पुच्छः । इति शब्दरत्नावली ॥ (यथा,
कुमारे ।
१ । ४८ ।
“लज्जा तिरश्चां यदि चेतसि स्या-
दसंशयं पर्व्वतराजपुत्त्र्याः ।
तं केशपाशं प्रसमीक्ष्य कुर्य्यु-
र्बालप्रियत्वं शिथिलं चमर्य्यः ॥”)
मत्स्यविशेषः । इति शब्दचन्द्रिका ॥

**बालकं**, क्ली, (बाल + स्वार्थे कन् ।) ह्रीवेरम् ।

इति राजनिर्घण्टः ॥ (अस्य गुणा यथा,
--
“बालकं शीतलं रूक्षं
लघुदीपनपाचनम् ।
हृल्लासारुचिवीसर्पहृद्रोगामातिसारजित्
॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)
अङ्गुलीयकम् । पारिहार्य्यम् । इति
विश्वः ॥

**बालकः**, पुं, (बाल एव । बाल + स्वार्थे कन् ।)

शिशुः । (यथा, मार्कण्डेये । ५१ । ५३
।
“भूतानां मातृभिः सार्द्धं बालकानान्तु
शान्तये ॥”)
अज्ञः । हयबालधिः । हस्तिबालधिः ।
अङ्गुरी-

|  |  |  |
| --- | --- | --- |
|  |  | यकम् । ह्रीवेरम् । बलयम् । इति मेदिनी ।<br>के, १५७ ॥ केशः । इति विश्वः ॥ * ॥ |

बालाशौचं यथा, --
“अजातदन्ता ये बाला ये च
गर्भाद्विनिःसृताः ।
न तेषामग्निसंस्कारो न पिण्डं नोदकक्रिया ॥
यदि गर्भो विपद्येत स्रवते वापि योषितः ।
यावन्मासान् स्थितो गर्भस्तावद्दिनानि
सूतकम् ॥
आ नामकरणात् सद्य आ चूडान्तादहर्निशम्
।
आ व्रतस्थात्त्रिरात्रेण तदूद्र्ध्वं दशभिर्दिनैः
॥”
इति गारुडे १०६ अध्यायः ॥
वालकस्य रक्षा यथा, --
“आदाय कृष्णं संत्रस्ता यशोदापि ततो
द्विज ! ।
गोपुच्छभ्रामणेनाशु बालदोषमपाकरोत् ॥
गोपुरीषमुपादाय नन्दगोपोऽपि मस्तके ।
कृष्णस्य प्रददौ रक्षां कुर्व्वन्निदमुदीरयन् ॥
नन्द उवाच ।
रक्षतु त्वामशेषाणां भूतानां प्रभवो हरिः ।
यस्य नाभिसमुद्भूतपङ्कजादभवज्जगत् ॥
येन दंष्ट्राग्रविधृता धारयत्यवनी जगत् ।
वराहरूपधृक् देवः स त्वां रक्षतु केशवः ॥
नखाङ्कुरविनिर्भिन्नवैरिवक्षःस्थलो विभुः ।
नृसिंहरूपी सर्व्वत्र स त्वां रक्षतु केशवः ॥
वामनो रक्षतु सदा भवन्तं यः क्षणादभूत् ।
त्रिविक्रमः क्रमाक्रान्तत्रैलोक्यः स्फुरदायुधः
॥
शिरस्ते पातु गोविन्दः कण्ठं रक्षतु केशवः ।
गुह्यं सजठरं विष्णुर्जङ्घापादं जनार्द्दनः ॥
मुखं बाहू प्रबाहू च मनः सर्व्वेन्द्रियाणि च ।
रक्षत्वव्याहतैश्वर्य्यस्तव नारायणोऽव्ययः ॥
शार्ङ्गखड्गगदाचक्रशङ्खनादहताःक्षयम् ।
गच्छन्तु प्रेतकुष्माण्डा राक्षसा ये तवाहिताः
॥
त्वां पातु दिक्षु वैकुण्ठो विदिक्षु मधुसूदनः ।
हृषीकेशोऽम्बरे भूमौ रक्षतु त्वां महीधरः ॥
एवं कृतस्वस्त्ययनो नन्दगोपेन बालकः ।
शायितः शकटास्याधो बालपर्य्यङ्किकातले
॥”
अङ्गुष्ठपरिमितमुक्तमेतेषान्देहपरिमाणम् ।
यथा, महाभारते । १ । ३१ । ८ -- ९ ।
“अथापश्यदृषीन् ह्रस्वान् अङ्गुष्ठोदरवर्ष्मणः ।
पलाशवृन्तिकामेकां सहितान् वहतः पथि ॥
क्लिश्यमानान् मन्दबलान् गोष्पदे
संप्लुतोदके ॥”)

**बालगर्भिणी**, स्त्री, प्रथमगर्भवती गौः । तत्-
पर्य्यायः । प्रष्ठौही २ । इत्यमरः । २ । ९ ।
७० ॥
पलीक्नी ३ । इति जटाधरः ॥ बालगर्भ-
वती ४ । इति शब्दरत्नावली ॥

**बालगोपालः**, पुं, (बालः शिशुमूर्त्तिधरो गोपालः ।)
श्रीकृष्णमूर्त्तिविशेषः । यथा, --
“तीरपयोनिधिवृक्षनिवासं
हास्यकटाक्षजवंशिनिनादम् ।
श्यामलसुन्दरनृत्यविलापं
तं प्रणमामि च बालगोपालम् ॥”
इति नारदपञ्चरात्रे गोपालाष्टकम् ॥

**बालग्रहः**, पुं, (बालानां बालकानां ग्रहः ।)
बालकहन्तृग्रहविशेषः । (यथा, मार्कण्डेये ।
९२ । २७ ।
“बालग्रहाभिभूतानां बालानां शान्ति-
कारकम् ॥”)
एतेषां विवरणम् । यथा, --
“बाल ग्रहा अनाचारात् पीडयन्ति शिशुं यतः
।
तस्मात्तदुपसर्गेभ्यो रक्षेद्बालं प्रयत्नतः ॥”
अथ बालग्रहाणां नामान्याह ।
“स्कन्दग्रहस्तु प्रथमं स्कन्दापस्मार एव च ।
शकुनी रेवती चैव पूतना गन्धपूतना ॥
पूतना शीतपूर्व्वा च तथैव मुखमण्डिका ।
नवमो नैगमेयश्च प्रोक्ता बालग्रहा अमी ॥”
अथ ग्रहाणामुत्पत्तिमाह ।
“नवस्कन्दादयः प्रोक्ता बालानां ये ग्रहा अमी
।
श्रीमन्तो दिव्यवपुषो नारीपुरुषविग्रहाः ॥
एते स्कन्दस्य रक्षार्थं कृत्तिकोमाग्निशूलिभिः ।
सृष्टाः शरवणस्थस्य रक्षितस्य स्वतेजसा ॥
इत्यञ्जलिनमस्कारैर्जपहोमैस्तथैव च ॥
सम्यक् प्रयुक्तैश्च नराः प्रीणयन्त्यपि
देवताः ।
भागधेयं विभक्तञ्च शेषं किञ्चिन्न विद्यते ॥
तद्युष्माकं शुभा वृत्तिर्बालेष्वेव भविष्यति
॥”
अथ बालग्रहाणां बालग्रहणकारणमाह ।
“कुलेषु येषु नेज्यन्ते देवाः पितर एव च ।
ब्राह्मणाः साधवो वापि गुरवोऽतिथयस्तथा
॥
निवृत्तशौचाचारेषु तथा कुत्सितवर्त्तिषु ।
निवृत्तभिक्षावलिषु भग्नकांस्यगृहेषु च ॥
गृहेषु तेषु बालांस्तान् ग्रहा
हिंसन्त्यशङ्किताः ।
तत्र वो विपुला वृत्तिः पूजा चैव भविष्यति
॥
एवं ग्रहाः समुत्पन्ना बालान् हिंसन्ति
चाप्यथ ।
ग्रहोपसृष्टा बालाः
स्युर्दुश्चिकित्स्यतमास्ततः ॥”
अथ सामान्यग्रहजुष्टानां बालानां लक्षणा-
न्याह ।
“क्षणादुद्विजते बालः क्षणात्त्रस्यति
रोदिति ।
नखैर्दन्तैर्दारयति धात्रीमात्मानमेव च ॥
ऊद्र्ध्वं निरीक्षते दन्तान् खादेत् कूजति
जृम्भते ।
भ्रुवौ क्षिपति दन्तौष्ठः फेनं वमति वासकृत्
॥
क्षामोऽति निशि जागर्त्ति शूलाङ्गो
भिन्नविट्-
स्वरः ।
मत्स्यशोणितगन्धश्चन चाश्नाति यथा
पुरा ॥
दुर्ब्बलो मलिनाङ्गश्च नष्टसंज्ञोऽपि जायते
।
सामान्यग्रहजुष्टस्य लक्षणं समुदाहृतम् ॥”
अथ विशिष्टग्रहजुष्टानां लक्षणान्याह ।
“स्रस्ताङ्गः क्षतजसगन्धिकस्तनद्विट्-
वक्रास्यो हतचरणैकपक्षनेत्रः ।

इति विष्णुपुराणे । ५ । ५ ॥

**बालकप्रिया**, स्त्री, (बालकानां प्रिया ।) इन्द्र-

वारुणी । कदली । इति राजनिर्घण्टः ॥

**बालकृमिः**, पुं, (बालस्य केशस्य कृमिः ।) केश-

कीटः । इति जटाधरः ॥

**बालक्रीडनं**, क्ली, (बालस्य क्रीडनम् । क्रीड् +

भावे ल्युट् ।) बालखेला । यथा, --
"बालक्रीडनमिन्दुशेखरधनुर्भङ्गावधि प्रह्वता ॥"
इत्यादि महानाटकम् ॥

**बालक्रीडनकः**, पुं, (बालानां क्रीडनकः क्रीडन-

द्रव्यम् । बालका हि कपर्द्दकेन क्रीडन्तीति प्रसिद्धे-
स्तथात्वम् ।) कपर्द्दकः । इति राजनिर्घण्टः ॥

**बालखिल्यः**, पुं, बालखिल्यमुनिः । यथा, --

"विधिना निर्म्मिता पूर्ब्बं वेदी परमपावनी ।
अग्निवेश्यादिमुनयो बालखिल्यादयः स्थिताः ॥"
इति बृहद्रामायणे चित्रकूटमाहात्म्ये १ सर्गः ॥
(बालखिल्यास्तु अङ्गुष्ठपरिमिताः षष्टिसहस्र-
संख्यकाः । यथा, मार्कण्डेये । ५२ । २४ ।
"क्रतोश्च सन्ततिर्भार्य्या बालखिल्यानसूयत ।
षष्टिर्यानि सहस्राणि ऋषीणामूर्द्ध्वरेतसाम् ॥"

स्कन्दः सृष्टो भगवता देवेन त्रिपुरारिणा ।
बिभर्त्ति चापरां संज्ञां कुमार इति संग्रहः ॥"
अयं हि कार्त्तिकेयादन्यः ।
"स्कन्दापस्मारसंज्ञो यः सोऽग्निना तत्समद्युतिः ।
स च स्कन्दसखो नाम्ना विशाख इति चोच्यते ॥
ग्रहाः स्त्रीविग्रहा ये ते नानारूपाः प्रकीर्त्तिताः ।
देवानां कृत्तिकानां ते भागा राजसतामसाः ॥
नैगमेयस्तु पार्व्वत्या सृष्टो ह्येषां ततो ग्रहः ।
कुमारस्य हि देवस्य गुहस्यात्मसमोऽस्ति वै ॥
ततो भगवति स्कन्दे सुरसेनापतौ कृते ।
उपतस्थुर्ग्रहा ह्येते दीप्तशक्तिधरं गुहम् ॥
ऊचुः प्राञ्जलयश्चैनं वृत्तिर्नो दीयतामिति ।
तेषामर्थे ततः स्कन्दः शिवं देवमचोदयत् ॥
ततो ग्रहांस्तानुवाच भगवान् भगनेत्रहृत् ।
तिर्य्यग्योनिं मानुषञ्च दैवञ्च त्रितयं जगत् ॥
परस्परोपकारेण वर्त्तते धार्य्यते तथा ।
देवा नरान् प्रीणयन्ति तिर्य्यग्योनींस्तथैव च ॥
यथाकालं प्रवृत्तास्तु उष्मवर्षाहिमानिलैः ।

उद्विग्नः ससलिलचक्षुरल्परोदी
स्कन्दार्त्तो भवति च गाढमुष्टिबन्धः ॥
निःसंज्ञो भवति पुनर्लभेत संज्ञां
संस्तब्धः करचरणैश्च नृत्यतीव ।
विणमूत्रे सृजति विनद्य जृम्भमाणः
फेनं वा सृजति च तत्सखाभिजुष्टः ॥"
तत्सखाभिजुष्टः स्कन्दापस्मारयुक्तः ।
"स्रस्ताङ्गो भयचकितो विहङ्गगन्धिः
सास्रावव्रणपरिपीडितः समन्तात् ।
स्फोटैश्च प्रचिततनुः सदाहपाकै-
र्विज्ञेयो भवति शिशुः क्षतः शकुन्या ॥
रक्तास्यो हरितमलोऽतिपाण्डुदेहः
श्यावो वा मुखकरपाकवेदनार्त्तः ।
गृह्णातिव्यथिततनुश्च कर्णनासं
रेवत्या भृशमभिपी इतः कुमारः ॥
स्रस्ताङ्गः स्वपिति न वासरे न रात्रौ
विड्भिन्नं विसृजति काकतुल्याङ्गगन्धिः ।
च्छर्द्यार्त्तो हृषिततनूरुहः कुमार-
स्तृष्णालुर्भवति च पूतनागृहीतः ॥
यो द्वेष्टि स्तनमत्ति न कासहिक्का-
च्छर्द्दीभिर्ज्वरसहिताभिरर्द्यमानः ।
दुर्व्वर्णः सततमथापि योऽस्रगन्धि-
स्तं ब्रूयाद्भिषगथ गन्धपूतनार्त्तम् ॥
आक्रन्दन् परिचकितः सुवेपमानः
संलीनो भवति व्यथान्त्रकूजयुक्तः ।

स्रस्ताङ्गो भृशमतिसार्य्यते च यो वै
तं ब्रूयाद्भिषगथ शीतपूतनार्त्तम् ॥
म्लानाङ्गः सरुधिरपाणिपादवक्त्रो
वह्वाशी कलुषशिरावृतोदरो यः ।
स ज्ञेयः शिशुरथ रक्तमण्डिकार्त्तः
सोद्वेगो भवति च मूत्रतुल्यगन्धिः ॥
यः फेनं वमति विनम्यते च मध्ये
सोद्वेगो विहसति वोद्‌र्ध्वमीक्षमाणः ।
कूजेच्च प्रततमथो वसास्रगन्धि-
र्निसंज्ञो भवति स नैगमेयजुष्टः ॥”
अथ सामान्यग्रहजुष्टानां चिकित्सामाह ।
सहामुण्डतिकोदीच्यक्वाथस्नानंग्रहापहम् ।
सहा माषपर्णी ।
“सप्तच्छदामयनिशाचन्दनैश्चानुलेपयेत् ।
सर्पत्वक् लशुनं मूर्व्वा सर्षपारिष्टपल्लवाः ॥
विडालविडजालोममेषशृङ्गी वचा मधु ।
धपः शिशोर्ज्वरघ्नोऽयमशोषग्रहनाशनः ॥
बालशान्तीष्टकर्म्माणि कार्य्याणि ग्रहशान्तये ।
वचा कुष्ठं तथा ब्राह्मी सिद्धार्थकमथापि च ॥
सारिवा सैन्धवञ्चैव पिप्पली घृतमष्टमम् ।
सिद्धं घृतमिदं मेध्यं पिबेत् प्रातर्दिने दिने ॥
दृढस्मृतिः क्षिप्रमेधा कुमारो बुद्धिमान् भवेत् ।
न पिशाचा न रक्षांसि न भूता न च मातरः ॥
न भवन्ति कुमाराणां पिबतामष्टमङ्गलम् ॥”
अष्टमङ्गलं घृतम् ॥
अथ विशिष्टग्रहजुष्टानां चिकित्सामाह ।
“सोमबल्लीमिन्द्रवृक्षं बन्दाकं विषजं शमीम् ।
मृगादन्याश्च मूलानि ग्रथितानि विधारयेत् ॥”
तत्र स्कन्दग्रहजुष्टस्य चिकित्सामाह ।
“स्कन्दग्रहोपसृष्टस्य कुमारस्य प्रशस्यते ।
वातघ्नद्रुमपत्राणां क्वाथेन परिषेचनम् ॥
देवदारुणि रास्नायां मधुरेषु गणेषु च ।
सिद्धं सर्पिश्च सक्षीरं पातुमस्मै प्रदापयेत् ॥
सर्षपाः सर्पनिर्म्मोको वचा काकादनी घृतम् ।
उष्ट्राजाविगवाञ्चापि रोमाण्युद्धूपनं भवेत् ॥”
काकादनी श्वेतगुञ्जा ।
सोमवल्लीमिन्द्रवृक्षं वृन्ताकं विषजं शमीम् ।
मृगादन्याश्च मूलानि ग्रथितानि विधारयेत् ॥”
सोमबल्ली सोमलता । इन्द्रवृक्षं ककुभम् ।
मृगादनी इन्द्रवारुणी ।

ग्रहसेनापतिर्द्देवो देवसेनापतिर्विभुः ।
देवसेनारिपुहरः पातु त्वां भगवान् गुहः ॥
देवदेवस्य महतः पावकस्य च यः सुतः ।
गङ्गोमाकृत्तिकानाञ्च स ते शर्म्म प्रयच्छतु ॥
रक्तमाल्याम्बरधरो रक्तचन्दनभूषितः ।
रक्तदिव्यवपुर्द्देवः पातु त्वां क्रौञ्चसूदनः ॥”
अथ स्कन्दापस्मारग्रहजुष्टस्य
चिकित्सामाह ।
“विल्वः शिरीषो गोलोमी सुरसादिश्च यो
गणः ।
परिषेकः प्रयोक्तव्यः स्कन्दापस्मारशान्तये
॥”
गोलोमी श्वेता दूर्व्वा । सुरसादिगणो यथा,
--
“सुरसा श्वेतसुरसा पाठा फञ्जी
फणिज्झकः ।
सौगन्धिकं भूस्तृणको राजिका श्वेतवर्व्वरी
॥
कट्फलं खरपुष्पा च कासमर्द्दश्च शल्लकी ।
विडङ्गमथ निर्गुण्डी कर्णिकार उदुम्बरः ॥
बला च काकमाची च तथा च विषमुष्टिका ।
कफक्रिमिहरः ख्यातः सुरसादिरयं गणः
॥”
सुरसा कृष्णतुलसी । श्वेतसुरसा
श्वेततुलसी ।
फञ्जी भार्गी । फणिज्झकः मरुबकः । सौग-
न्धिकं कह्लारम् । भूस्तृणकः सुगन्धतृणम् ।
खरपुष्पा वर्वरी । कासमर्द्दः कसौदी । विष-
मुष्टिका वकाइनि ॥ * ॥
“अष्टमूत्रविपक्कञ्च तैलमभ्यञ्जने हितम् ।”
मूत्राष्टकमाह ।
“गोजाविमहिषाश्वानां खरोष्ट्रकरिणान्तथा
।
मूत्राष्टकमिति ख्यातं सर्व्वशास्त्रेषु सम्मतम्
॥
क्षीरीवृक्षकषायेण काकोल्यादिगणेन च ।
विपक्तव्यं घृतं पश्चाद्दातव्यं पयसा सह ॥
काकोल्यादिगणेन कल्कीकृतेन तैलं
पक्तव्यम् ।
काकोल्यादिगणो यथा, --

लोध्रप्रियङ्गुमञ्जिष्ठागैरिकैः प्रदिहेच्छिशुम्
॥”
प्रदिहेत् लिम्पेत् । रूपसिद्धिरार्ष्यत्वात् ।
“स्कन्दग्रहोक्ता धूपाश्च हिता अत्र भवन्ति
हि ।
स्कन्दापस्मारशमनं घृतमत्रापि पूजितम् ॥
शतावरीं मृगेर्व्वारुनागदन्तीनिदिग्धिकाः ।
लक्षणां सहदेवाञ्च वृहतीञ्चापि धारयेत् ॥”
मृगेर्व्वारुः वडी इन्द्रवारुणी । नागदन्ती
नाग-
हुली इति लोके प्रसिद्धा ।
“तिलतण्डुलकं माल्यं हरितालं
मनःशिलाम् ।
बलिरेष निकुञ्जेषु निवेद्यो नियतात्मना ॥
निकटे च प्रयोक्तव्यं स्नानमस्य यथाविधि
।
श्वेतशिरीषगन्धाष्टकुष्ठगुग्गुलुसर्षपैः ॥
सिद्धमभ्यञ्जने तैलं धारणं पूर्ब्बमेव तु ।
शकुनीग्रहशान्त्यर्थं प्रदेहं कारयेद्धितम् ॥
कुर्य्याच्च विविधां पूजां शकुन्याः कुसुमैः
शुभैः
निकुम्भोक्तेन विधिना स्नपयेत्तं ततः पठेत्
॥
अन्तरीक्षचरा देवी सर्व्वालङ्कारभूषिता ।
अधोमुखी सूक्ष्मतुण्डा शकुनी ते प्रसीदतु
॥
दुर्दर्शना महाकाया पिङ्गाक्षी भैरवस्वरा ।
लम्बोदरी शङ्कुकर्णी शकुनी ते प्रसीदतु ॥”
* ॥
अथ रेवतीग्रहजुष्टस्य चिकित्सामाह ।
“अश्वगन्धाजशृङ्गी च शारिवाथ पुनर्नवा ।
सहा विदारी ह्येतासां क्वाथेन परिषेचनम्
॥
अजशृङ्गी मेढाशृङ्गी । सहा
सेवतीपुष्पजातिः ।
तैलमभ्यञ्जने कार्य्यं कुष्ठे सर्जरसे तथा ।
पलङ्कषायां नलदे तथा गौरकदम्बके ॥
सर्जरसः रालः पलङ्कषा गुग्गुलुः । नलदं
लामज्जकमुशीरवत्पीतच्छविः ।
गौरकदम्बकः

रक्तानि माल्यानि तथा पताकां
रक्तांश्च गन्धा विविधांश्च भक्ष्यान् ।
घृतञ्च देवाय बलिं निवेद्य
सकुक्कुटं स्कन्दगृहे निधाय ॥
स्नानं त्रिरात्रं निशि चत्वरेषु
कुर्य्यात् परं शालियवैर्निवेद्य ।
गायत्रियुक्ताभिरथाद्भिरग्निं
प्रज्वालयेदाहुतिभिश्च धीमान् ॥
रक्षामतः प्रवक्ष्यामि बालानां पापनाशिनीम् ।
अहन्यहनि कर्त्तव्या याभिरद्भिरतन्द्रितैः ॥
तपसां तजसाञ्चैव यशसां वयसां तथा ।
निधानं योऽव्ययो देवः स ते स्कन्दः प्रसीदतु
॥

"काकोली क्षीरकाकोली
जीवकर्षभकस्तथा ।
ऋद्धिर्वृ द्धिस्तथा मेदा महामेदा गुडूचिका ॥
मुद्गपर्णी माषपर्णी पद्मकं वंशरोचना ।
शृङ्गी प्रपौण्डरीकञ्च जीवन्ती मधुयष्टिका ।
द्राक्षा चेति गणो नाम्ना
काकोल्यादिरुदीरितः ।
स्तन्यकृद्बृंहणो वृष्यः पित्तरक्तानिलापहः ।
उत्सादनं वचा हिङ्गुयुक्तमत्र प्रकीर्त्तितम् ॥
गृध्रोलूकपुरीषाणि केशा हस्तिनखो घृतम् ।
वृषभस्य च रोमाणि योज्यान्युद्धूपने सदा ॥
अनन्तां कुक्कुटीं विम्बीं मर्कटीञ्चापि
धारयेत् ॥"
अनन्ता यवासा इति लोके । कुक्कुटी
शाल्मली ।
"पक्वान्यामानि मांसानि प्रसन्नं रुधिरं पयः
।
मुद्गोदनं निवेद्याथ स्कन्दापस्मारिणे वटे
॥"
वटे वटतले बलिं निवेद्येत्यन्वयः ।
तेन स्कन्दापस्मारिणा स्नानं
कारयेदित्यन्वयः ।
"चतुष्पथे कारयेच्च स्नानं तेन ततः पठेत्
।
स्कन्दापस्मारसंज्ञो यः स्कन्दस्य दयितः
सखा ।
विशाखः स शिशोरस्य शिवायास्तु
शुभाननः ॥"
अथ शकुनीग्रहजुष्टस्य चिकित्सामाह ।
"शकुनीग्रहजुष्टस्य कार्य्यं वैद्येन जानता ।
वेतसाम्रकपित्थानां क्वाथेन परिषेचनम् ॥
ह्रीवेरमधुकोशीरसारिवोत्पलपद्मकैः ।

हारिद्रकः । हरदुया कदम्ब इति लोके ।
धवाश्वकर्णककुभशल्लकीतिन्दुकेषु च ।
काकोल्यादौ गणे चापि सिद्धं सर्पिः
पिबेच्छिशुः ॥
अश्वकर्णः शांखु इति लोके प्रसिद्धः ।
कुलत्थाः शङ्खचूर्णञ्च प्रदेहः साखगन्धिकः
।
गृध्रोलूकपुरीषाणि यवान् यवफले घृतम् ॥
सन्ध्ययोरुभयोः कार्य्यमेतदुद्धूपनं शिशोः
॥
यवफलो वंशाङ्कुरः ।
शुक्लाः सुमनसो लाजाः पयः शाल्योदनं
दधि ।
वलिर्निवेद्यो गोतीर्थे रेवत्यै प्रयतात्मना ॥
गोतीर्थे गोष्ठे ।
स्नानं धात्रीकुमाराभ्यां सङ्गमे कारयेद्भिषक्
।
नानावस्त्रधरा देवी चित्रमाल्यानुलेपना ॥
चलत्कुण्डलिनी श्यामा रेवती ते प्रसीदतु ।
उपासते यां सततं देव्यो विविधभूषणाः ॥
लम्बा करालाविनता तथैव बहुपुत्रिका ।
रेवती शुष्कनासा च तुभ्यं देवी प्रसीदतु ॥
* ॥
अथ पूतनाग्रहजुष्टस्य चिकित्सामाह ।
कपोतवङ्का श्योनाको वरुणः पारिभद्रकः
आस्फोता चैव योज्याः स्युर्ब्बालानां
परिषेचने ॥
कपोतवङ्का ब्राह्मी इति लोके । पारिभद्रो
निम्बः । आस्फोता अपराजिता ।
नवा पयस्या गोलोमी हरितालं मनःशिला
।
कुष्ठं सर्जरसश्चैव तैलार्थे कल्क इष्यते ॥

नवा पयस्या नूतना क्षीरविदारी। गोलोमी
श्वेतदूर्व्वा।
हितं घृतं तगाक्षीर्य्या संसिद्धं मधुकेऽपि च।
कुष्ठतालीसखदिराः स्यन्दनोऽर्जुन एव च॥
पनसः ककुभश्चापि मज्जानो वदरस्य च।
कुक्कुटास्थि घृतञ्चापि धूपनं सह सर्षपैः॥
स्यन्दनः स्यन्दन इत्येव नाम्ना प्रसिद्धः।
काकादनीं चित्रफलां विम्बीं गुञ्जाञ्च धारयेत्
।
काकादनी श्वेतगुञ्जा। चित्रफला बृहदिन्द्र-
वारुणी।
मत्स्यौदनं बलिं दद्यात् कृशरं पललं तथा।
सरावसंपुटं कृत्वा तस्यै शून्ये गृहे भिषक्।
उत्सृष्टान्नाभिषिक्तस्य शिशोः स्नपनमिष्यते
॥
कुष्ठतालीसखदिरं चन्दनं स्यन्दनं तथा।
देववारु वचा हिङ्गु कुष्ठं गिरिकदम्बकः।
एला हरेणवश्चापि योज्या उद्धूपने सदा॥
मलिनाम्बरसंवीता मलिना रूक्षमूर्द्धजा।
शून्यागाराश्रया देवी दारकं पातु पूतना॥ *
॥
अथ गन्धपूतनाग्रहजुष्टस्य चिकित्सामाह।
तिक्तद्रुमाणां पत्रेषु क्वाथं कार्य्योऽभिषेचने।
तिक्तद्रुमानाह।
निम्बः पटोलः क्षुद्रा च गुडूची वासकस्तथा
।
विसर्पकुष्ठनुत् ख्यातो गणोऽयं पञ्चतिक्तकः
॥
पिप्पली पिप्पलीमूलं वर्गो मधुरको मधु।
शालपर्णीबृहत्यौ च घृतार्थं सममाहरेत्॥
सर्व्वगन्धैः प्रदेहश्च गात्रे चाक्ष्णोश्च शीतलैः
॥
सर्व्वगन्धैः कुङ्कुमागुरुकर्पूरकस्तूरीचन्दनैः।
अक्ष्णोस्तु शीतलैः चन्दनकर्पूरैः न तु
कस्तूरी-
कुङ्कुमागुरुभिस्तेषामुष्णत्वात्।
पुराषं कौक्कुटं केशञ्चर्म्म सर्पभवन्तथा।
जीर्णञ्चाभीक्ष्णशो वासो धूपनायोपकल्पयेत्
॥

कपित्थं विल्वतर्कारीवासागन्धर्व्वहस्तकाः
।
कुवेराक्षी च योज्याः स्युर्बालानां परिषेचने
॥
तर्कारी गणियारि इति लोके।
गन्धर्व्वहस्तकः
श्वेत एरण्डः। कुवेराक्षी पाडरि इति लोके
।
स्वरसैर्भृङ्गवृक्षाणां तथैव हयगन्धया।
तैलं वचाञ्च संयोज्य पचेदभ्यञ्जनं शिशोः॥
भृङ्गवृक्षः भगरा इति लोके।
वचा सर्जरसं कुष्ठं सर्पिश्चोद्धूपने हितम्॥
वर्णकं चूर्णकं माल्यमञ्जनं पारदं तथा।
मनःशिलाञ्चोपहरेत् गोष्ठमध्ये बलिन्ततः॥
पायसं सपुरोडाशं तद्बल्यर्थमुपाहरेत्।
मन्त्रपूताभिरद्भिश्च तत्रैव स्नपनं हितम्॥
जलाभिमन्त्रणमन्त्रमाह।
अलङ्कृता कामवती सुभगा कामरूपिणी।
गोष्ठमध्यालयरता पातु त्वां मुखमण्डिका॥
* ॥
अथ नैगमेयग्रहजुष्टस्य चिकित्सामाह।
विल्वाग्निमन्थपूतीकैः कार्य्यं स्यात्
परिषेचनम्।
पूतीकः घोराकरञ्ज इति लोके प्रसिद्धः।
प्रियङ्गुशरलानन्ताशतपुष्पाकुटन्नटैः।
पचेत्तैलं सगोमूत्रं दधिमस्त्वम्लकाञ्जिकैः॥
कुटन्नटं वितुन्नकनाम्नो वृक्षविशेषस्य त्वक्
।
गुडतजी इति लोके प्रसिद्धा। मुस्ताकृतिः
श्योनाको वा।
वचां वयस्थां जटिलां गोलोमीं चापि
धारयेत्।
वयस्था आमलकी गुडूची वा।
उत्सादनं हितञ्चात्र स्कन्दापस्मारनाशनम्
॥
मर्कटोलूकगृध्राणां पुरीषाणि पितृगृहे।
धूमः सुप्तजने कार्य्यो बालस्य हितमिच्छता
॥
पितृगृहे नैगमेयगृहे।

लिकां कृत्वा शुक्लौदनः शुक्लपुष्पं
सप्तध्वजाः
सप्तप्रदीपाः सप्तस्वस्तिकाः सप्तवटकाः।
सप्त-
सष्कुलिकाः जम्बुडिका गन्धताम्बूलं
मत्स्यमांसं
सुरामग्रभक्तञ्च पूर्ब्बस्यान्दिशि चतुष्पथे
मध्याह्ने
बलिर्दातव्यः अश्वत्थपत्रं जलकुम्भे निक्षिप्य
शान्त्युदकेन स्नापयेत्। रसोनसिद्धार्थक
मेषशृङ्गनिम्बपत्रशिवनिर्म्माल्यैर्बालकं धूपयेत्
।
ॐ नमो नारायणाय अमुकस्य व्याधिं हन
हन मुञ्च मुञ्च स्वाहा एवं दिनत्रयं बलिं
दत्त्वा चतुर्थे दिवसे ब्राह्मणं भोजयेत्। ततः
सम्पद्यते शुभम्॥
द्वितीये दिवसे मासे वर्षे वा गृह्णाति सुनन्दा-
नाम मातृका। तया गृहीतमात्रस्य प्रथमं
भवति ज्वरः। चक्षुरुन्मीलयति
गात्रमुद्वेजयति
न शेते क्रन्दति स्तन्यं न गृह्णाति
आँत्कारश्च
भवति।
बलिन्तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।
तण्डुलं हस्तपृष्ठैकं गृहीत्वा
दधिगुडघृतमिश्रितं
शरावैकं गन्धताम्बूलं पीतपुष्पं पीतसप्त-
ध्वजाः। चत्वारः प्रदीपाः दशस्वस्तिकाः
मत्स्यमांससुरास्तिलचूर्णञ्च
पश्चिमस्यान्दिशि
चतुष्पथे बलिर्दातव्यः। दिनानि त्रीणि
त्रिसन्ध्यं
ततः शान्त्युदकेन स्नापयेत्।
शिवनिर्म्माल्य-
सिद्धार्थमार्ज्जाररोम उशीरबालकघृतैर्धूपं
दद्यात्। ॐ नमो नारायणाय अमुकस्य
व्याधिं
हन हन मुञ्च मुञ्च ह्रीं फट् स्वाहा। चतुर्थे
दिवसे ब्राह्मणान् भोजयेत् ततः सम्पद्यते
शुभम्।

कुक्कुटीं मर्कटीं विम्बीमनन्ताञ्चापि धारयेत्
।
मांसमामं तथा पक्वं शोणितञ्च चतुष्पथे ।
निवेद्यमन्तश्च गृहे शिशोः स्नपनमिष्यते ॥
कराला पिङ्गला मुण्डा कषायाम्बरसंवृता ।
देवी बालमिमं प्रीता रक्ष त्वं गन्धपूतने ॥” *
॥
अथ शीतपूतनाग्रहजुष्टस्य चिकित्सामाह ।
गोमूत्रं वस्तमूत्रञ्च मुस्ताञ्चामरदारु च ।
कुष्ठञ्च सर्व्वगन्धांश्च तेलार्थमवधारयेत् ॥
सर्व्वगन्धान् चन्दनादीन् ।
रोहिणीनिम्बखदिरपलाशककुभत्वचः ।
निःक्वाथ्य तस्मिन्निःक्वाथे सक्षीरे विपचेद्
घृतम् ॥
गृध्रोलूकपुरीषाणि वस्तिगन्धा महित्वचम् ।
निम्बपत्राणि च तथा धूपनार्थं समाहरेत् ॥
धारयेदपि गुञ्जाञ्च बलां काकादनीं तथा ।
नद्यां मुद्गौदनैश्चापि तर्पयेच्छीतपूतनाम् ॥
जलाशयान्ते बालस्य स्नपनञ्चोपदिश्यते ।
जलाशयान्ते जलाशयतीरे ।
देव्यै देयश्चौपहारो वारुणी रुधिरं तथा ॥
मुद्गौदनाशिनी देवी सुराशोणितपायिनी ।
जलाशयरता नित्यं पातु त्वां शीतपूतना ॥”
* ॥
अथ मुखमण्डिकाग्रहजुष्टस्य चिकित्सामाह
।

तिलतण्डुलकं माल्यं भक्ष्यांश्च
विविधानपि ।
कौमारपितृमेषाय प्लक्षमूले निवेदयेत् ॥
मेषाय नैगमेयग्रहाय ।
अधस्तात् क्षीरवृक्षस्य स्नपनञ्चोपदिश्यते
॥
अजाननश्चलाक्षिभ्रुः कामरूपी महायशाः ।
बालं पालयिता देवो नैगमेयोऽभिरक्षतु ॥”
इति भावप्रकाशः ॥
(तथास्य लक्षणान्तरं चिकित्सितञ्च यथा, -
-
“बलिशान्तीष्टकर्म्माणि कार्य्याणि
ग्रहशान्तये ।
मन्त्रश्चायं प्रयोक्तव्यस्तत्रादौ सर्व्वकामिकः
॥
ॐ नमो भगवते गरुडाय त्र्यम्बकाय
सद्यस्तर
स्तुत स्तुत स्वाहा । ॐ कं खं टं पं शं
वैनतेयाय
नमः । ॐ ह्रीं हुँ क्षं ।
बालदेहप्रमाणेन पुष्पमालान्तु सर्व्वतः ।
प्रगृह्य मुच्छिकाभक्तबलिर्द्देयस्तु शान्तिकः
।
ॐ कारी सुवर्णपक्षी बालकं रक्ष रक्ष स्वाहा
॥
ॐ नारायणाय नमः ॥”
“प्रथमे दिवसे मासे वर्षे वा गृह्णाति नन्दा
नाम मातृका तया गृहीतमात्रस्य प्रथमं
भवति
ज्वरः । चक्षुरुन्मीलयति गात्रमुद्वेजयति न
शेते क्रन्दति स्तन्यं न गृह्णाति ।
आँत्कारश्च
भवति । बलिन्तस्य प्रवक्ष्यामि येन
सम्पद्यते
शुभम् । नद्युभयतटमृत्तिकां गृहीत्वा पुत्त-

तृतीये दिवसे मासे वर्षे वा गृह्णाति
पूतनानाम-
मातृका तया गृहीतमात्रेण प्रथमं भवति
ज्वरः । गात्रमुद्वेजयति स्तन्यं न गृह्णाति
मुष्टिं बध्नाति क्रन्दति ऊर्द्ध्वं निरीक्षते ।
बलिन्तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम् ।
नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा
रक्तचन्दनं गन्धताम्बूलं रक्तसप्तध्वजाः ।
सप्त-
प्रदीपाः सप्तस्वस्तिकाः ।
पक्षिमांससुराग्रभक्तं
दक्षिणस्यान्दिशि अपराह्णे चतुष्पथे बलि-
र्दातव्यः ।
शिवनिर्म्माल्यगुग्गुलुसर्षपनिम्बपत्रमेष
शृङ्गैर्दिनत्रयं धूपयेत् । ॐ नमो नारायणाय
अमुकस्य व्याधिं हन हन मुञ्च मुञ्च स्वाहा ।
चतुर्थे दिवसे ब्राह्मणान् भोजयेत् ततः सम्प-
द्यते शुभम् ॥
चतुर्थे दिवसे मासे वष वा गृह्णाति मुख-
मुण्डिकानाम मातृका तया गृहीतमात्रेण
प्रथमं भवति ज्वरः । ग्रीवां नामयति चक्षुरु-
न्मीलयति स्तन्यं न गृह्णाति रोदिति स्वपिति
मुष्टिं बध्नाति बलिन्तस्य प्रवक्ष्यामि येन
सम्पद्यते
शुभम् । नद्युभयतटमृत्तिकां गृहीत्वा
पुत्तलिकां
कृत्वा उत्पलपुष्पं गन्धं ताम्बूलं दशध्वजाः
दीपाश्चत्वारः । त्रयोदश स्वस्तिकाः मत्स्य-
मांससुरामग्रभक्तञ्च उत्तरस्यां दिशि अपराह्णे
बलिर्देयः चतुष्पथे । ॐ नमो नारायणाय
अमु-
कस्य व्याधिं हन हन मथ मथ स्वाहा ।
चतुर्थे

दिवसे ब्राह्मणान् भोजयेत् ततः सम्पद्यते शुभम् ।

पञ्चमे दिवसे मासे वर्षे वा गृह्णाति कटपूतना

नाम मातृका । तया गृहीतमात्रेण प्रथमं भवति ज्वरः । गात्रमुद्वेजयति स्तन्यं न गृह्णाति
मुष्टिं बध्नाति । बलिन्तस्य प्रवक्ष्यामि येन सम्प-
द्यते शुभम् । कुम्भकारचक्रस्य मृत्तिकां गृहीत्वा पुत्तलिकां विधाय गन्धताम्बूलं शुक्ल-
पुष्पं शुक्लौदनं पञ्च ध्वजाः पञ्च प्रदीपाः पञ्च-
वटकाः ऐशान्यां दिशि बलिर्दातव्यः । शान्त्यु-
दकेन स्नापयेत् । शिवनिर्म्माल्यसर्पनिर्म्मोक गुग्गुलु निम्बपत्रबालकघृतैर्धूपं दद्यात् । ॐ नमो नारायणाय अमुकस्य व्याधिं चूर्णय
चूर्णय हन हन स्वाहा । चतुर्थे दिवसे ब्राह्मणान् भोजयेत् ततः सम्पद्यते शुभम् ॥
षष्ठे दिवसे मासे वर्षे वा गृह्णाति शकुनिकानाम
मातृका तया गृहीतमात्रेण प्रथमं भवति ज्वरः । गात्रभेदं दर्शयति दिवारात्रावुत्थानं भवति । ऊर्द्ध्वं निरीक्षते । बलिं तस्य प्रव-
क्ष्यामि येन सम्पद्यते शुभम् । पिष्टकेन पुत्तलिकां
कृत्वा शुक्लपीतरक्तपुष्पगन्धताम्बूलानि दश
दीपाः । दश पीतध्वजाः दश स्वस्तिकाः दश
वटकाः । क्षीरजम्बुडिकाः । मत्स्यमांससुरा
आग्नेय्यान्दिशि निष्क्रान्ते मध्याह्ने बलिर्दातव्यः ।

दिवसे ब्राह्मणान् भोजयेत् ततः सम्पद्यते शुभम् ।

नवमे दिवसे मासे वर्षे वा गृह्णाति सूतिका

नाम मातृका । तया गृहीतमात्रस्य प्रथमं भवति ज्वरः । नित्यं छर्द्दयति गात्रभेदं दर्शयति मुष्टिं बध्नाति । निद्रातितरा स्याद्बलिन्तस्य प्रव-
क्ष्यामि येनसम्पद्यते शुभम् । नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां निर्म्माय शुक्लवस्त्रेण वेष्ट-
येत् । शुक्लपुष्पं शुक्लोदनं गन्धताम्बूलं शुक्लाः त्रयोदश ध्वजाः त्रयोदश प्रदीपाः त्रयोदश स्वस्तिकाः त्रयोदश मत्स्यमांससुराः । उत्तर-
दिग्विभागे ग्रामनिष्काशे बलिं दापयेत् । शान्त्यु-
दकेन स्नापयेत् । गुग्गुलुनिम्बपत्रगोधूमगोशृङ्ग-
श्वेतसर्षपघृतैर्धूपं दद्यात् । ॐ नमो नारायणाय चतुर्भुजाय हन हन मुञ्च मुञ्च स्वाहा । चतुर्थ-
दिवसे ब्राह्मणान् भोजयेत्ततः सम्पद्यते शुभम् ।

दशमे दिवसे मासे वर्षे वा यदि गृह्णाति

निरृता नाम मातृका । तया गृहीतमात्रेण प्रथमं भवति ज्वरः । गात्रमुद्वेजयति आँत्कारं करोति पुरीषमूत्रञ्च बहु भवेत् । बलिन्तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम् । पारावारस्य मृत्तिकया पुत्तलिकां कृत्वा रक्तचन्दनगन्ध-
ताम्बूलादिभिर्भूषयित्वा पञ्च वर्णाः पञ्च ध्वजाः पञ्च प्रदीपाः पञ्च स्वस्तिकाः पञ्च पुत्तलिका मत्स्यमांससुराः वायव्यान्दिशि बलिन्दद्यात् । काकविष्ठागोमांसगोशृङ्गरसोनमार्ज्जाररोम निम्बपत्रघृतैर्धूपयेत् । ॐ नमो नारायणाय चूर्णितहस्ताय हन हन मुञ्च मुञ्च स्वाहा । चतुर्थे दिवसे ब्राह्मणान् भोजयेत्ततः सम्पद्यते शुभम् ॥

एकादशे दिवसे मासे वर्षे वा यदा गृह्णाति

पिलिपिच्छिका नाम मातृका । तया गृहीत-
मात्रस्य प्रथमं भवति ज्वरः । आहारं न गृह्णाति । ऊद्‌र्ध्वदृष्टिर्भवति गात्रभङ्गश्च भवति आँत्कारश्च भवति । बलिन्तस्य प्रवक्ष्यामि येन

करस्थेन दधिभक्तेन सर्व्वकर्म्मबलिं दद्यात्
शान्त्युदकेन स्नापयेत् । श्वेतसर्षपगुग्गुलुशिव-
निर्म्माल्यघृतैर्धूपयेत् । ॐ नमो नारायणाय
व्याधिं मुञ्च मुञ्च हन हन स्वाहा । चतुर्थ-
दिवसे विप्रान् भोजयेत् । ततः सम्पद्यते शुभम् ॥
इति रावणकृतं बालतन्त्रं समाप्तम् ॥
इति वैद्यकचक्रपाणिसंग्रहे बालरोगाधिकारे ॥)

**बालचर्य्यः**, पुं, (बालस्य बालकस्येव चर्य्या यस्य ।)

कार्त्तिकेयः । इति त्रिकाण्डशेषः ॥ बालकस्य
चरित्रे, क्ली ॥

**बालतनयः**, पुं, (बालानि नवोद्‌गतपत्रानि तनया-

इव यस्य ।) खदिरवृक्षः । इत्यमरः । २ । ४ । ४९ ॥
(गुणादयोऽस्य खदिरशब्दे ज्ञातव्याः ॥)
बालकपुत्त्रश्च ॥

**बालतन्त्रं**, क्ली, (बालाय बालकरक्षार्थं तन्त्रमुपायः

शास्त्रं वा ।) गर्भिणीचर्य्या । तत्पर्य्यायः । कुमारभृत्या २ गर्भिण्यवेक्षणम् ३ । इति त्रिकाण्डशेषः ॥ (अस्य विवरणन्तु सुश्रुते सूत्र-
स्थाने १ अध्याये । यथा, “शल्यं शालाक्यं
कायचिकित्सा भूतविद्या कौमारभृत्यमगद-
तन्त्रं वाजीकरणतन्त्रमिति ॥” कौमारभृत्यस्य
वा बालतन्त्रस्य लक्षणमाह तत्रैव । “कौमार-
भृत्यं नाम कुमारभवनधात्रीक्षीरदोषसंशोध-

शान्त्युदकेन स्नापयेत् ।
शिवनिर्म्माल्यरसोन-
गुग्गुलुसर्पनिर्म्मोकनिम्बपत्रघृतैर्धूपं दद्यात्
।
ॐ नमो नारायणाय अमुकस्य व्याधिं
चूर्णय
चूर्णय हन हन स्वाहा । चतुर्थे दिवसे
ब्राह्म-
णान् भोजयेत् ततः सम्पद्यते शुभम् ॥

सप्तमे दिवसे मासे वर्षे वा
गृह्णाति शुष्करेवती

नाम मातृका । तया गृहीतमात्रेण प्रथमं
भवति ज्वरः । गात्रमुद्वेजयति मुष्टिं
बध्नाति
रोदिति । बलिन्तस्य प्रवक्ष्यामि येन
सम्पद्यते
शुभम् । रक्तशुक्लपुष्पं
गन्धताम्बूलरक्तौदनं
कृशरास्त्रयोदश स्वस्तिकाः त्रयोदश
सष्कुलिका
जम्बुडिका मत्स्यमांससुराः त्रयोदश
ध्वजाः
पञ्च प्रदीपाः । पश्चिमस्यान्दिशि
ग्रामनिष्क्रा-
न्तेऽपराह्ने वृक्षमाश्रित्य बलिर्दातव्यः ।
शान्त्यु-
दकेन स्नापयेत् । गुग्गुलुमेषशृङ्गसर्षपोशीर
बालकघृतैर्धूपन्दद्यात् । ॐ नमो
नारायणाय
दीप्ततेजसे हन हन मुञ्च मुञ्च स्वाहा ॥
चतुर्थे
दिवसे ब्राह्मणान् भोजयेत् ततः सम्पद्यते
शुभम् ।
अष्टमे दिवसे मासे वर्षे वा गृह्णाति
अर्य्यका
नाम मातृका तया गृहीतमात्रेण प्रथमं
भवति
ज्वरः । गृध्रगन्धः पूतिगन्धश्च जायते ।
आहारं
न गृह्णाति गात्रमुद्वेजयति । बलिन्तस्य
प्रव-

सम्पद्यते शुभम् । पिष्टकेन पुत्तलिकां कृत्वा
रक्तचन्दनरक्तं तस्या मुखं दुग्धेन सिञ्चेत्
पीतपुष्पं गन्धताम्बूलं सप्त प्रदीपा अष्टौ वटका
अष्टौ सष्कुलिका अष्टौ पुरिका मत्स्यमांस-
सुराः पूर्ब्बस्यान्दिशि बलिर्दातव्यः । शान्त्यु-
दकेन स्नापयेत् । शिवनिर्म्माल्य गुग्गुलु
गोशृङ्गसर्पनिर्म्मोकघृतैर्धूपयेत् । ॐ नमो नारा-
यणाय मुञ्च मुञ्च स्वाहा । चतुर्थदिवसे विप्रान्
भोजयेत्तेन सम्पद्यते शुभम् ॥

द्वाशशे दिवसे मासे वर्षे वा यदा गृह्णाति

कामुका नाम मातृका । तया गृहीतमात्र
स्यादौ जायते ज्वरः । हसित्वा वदति अङ्गुल्या-
तर्ज्जयति क्रामति निःश्वसिति । मुहुर्मुहु-
श्छर्द्दयति । आहारं न करोति । बलिन्तस्य
प्रवक्ष्यामि येन सम्पद्यते शुभम् । क्षीरेण पुत्त-
लिकां कृत्वा शुक्लकुसुमं गन्धताम्बूलं शुक्लाः
सप्त ध्वजाः । सप्त सष्कुलिकाः ॥ सप्त प्रदीपाः ।

नार्थं दुष्टस्तन्यग्रहसमुत्थानाञ्च
व्याधीनामुप-
शमनार्थम् ॥” बालतन्त्राणि कानि
तान्याह
तत्रैव ३ अध्याये ।
“नवग्रहाकृतिज्ञानं स्कन्दस्य च
निषेधनम् ।
अपस्मारशकुन्योश्च रेवत्याश्च पुनः
पृथक् ॥
पूतनायास्तथान्धाया मण्डिका
शीतपूतना ।
नैगमेयचिकित्सा च ग्रहोत्पत्तिः
सयोनिजा ॥
कौमारतन्त्रमित्येतत् शारीरेषु प्रकीर्त्तितम्
॥”
एतेषां विवरणन्तु बालग्रहशब्दे द्रष्टव्यम्
॥)

**बालतृणं**, क्ली, (बालं नवजातं तृणम् ।) नवतृणम्
।

तत्पर्य्यायः । शष्पम् २ । इत्यमरः । २ ।
४ । २६७ ॥
(यथा, रघौ २ । २६ श्लोकटीकायां
मल्लिनाथः ।
गङ्गायाः प्रपातस्तस्यान्ते समीपे
विरूढानि
जातानि शष्पाणि बालतृणानि यस्मिन्
तत् ॥”)

**बालदलकः**, पुं, (बालानि दलानीव दलानि यस्य ।

यद्वा बाल इव क्षुद्रं दलं यस्य । ततः
स्वार्थे
कन् ।) खदिरवृक्षः । इत्यमरटीकायां
भरतः ॥

**बालधिः**, पुं, (बालाः केशाः धीयन्तेऽत्र । बाल +

धा + कि ।) केशयुक्तलाङ्गूलम् । इत्यमरः
। २ । ८
५० ॥ (यथा, किराते । १२ । ४७ ।
“चमरीगणैः शिवबलस्य
बलवति भयेऽप्युपस्थिते ।
वंशविततिषु विषक्तपृथु-
प्रियबालबालधिभिराददेधृतिः ॥”)

**बालपत्रः**, पुं, (बाल इव क्षुद्रं पत्रं यस्य ।) खदिर-

| | | |
|---|---|---|
| क्ष्याभि ततः सम्पद्यते शुभम् । रक्तपीतध्वजाः चन्दनं पीतपुष्पं सष्कुल्यः पर्पटिका मत्स्य- मांससुराः जम्बुडिकाः प्रत्यूषे बलिन्दद्यात् ॥ ॐ नमो नारायणाय त्रैलोक्यविद्रवणाय चतु- द्दिशामीक्षणाय व्याधिं हन हन मुञ्च मुञ्च ज्वल ज्वल दह दह ॐ ह्रीं फट् स्वाहा ॥ चतुर्थे | | वृक्षः । इत्यमरटीकायां भरतः ॥ यवासः । इति राजनिर्घण्टः ॥ (बालं पत्रमिति विग्रहे ।) क्ली । नूतनपर्णम् ॥ (यथास्य पर्य्यायः ॥ |

"खदिरो रक्तसारश्च गायत्री दन्तधावनः ।
कण्टकी बालपत्रश्च बहुशल्यश्च यज्ञियः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**बालपत्रकः**, पुं, (बालपत्र एव । स्वार्थे कन् ।) खदिरवृक्षः । इति त्रिकाण्डशेषः ॥

**बालपाश्या**, स्त्री, (बालपाशे केशसमूहे साधुः तत्र साधुरिति यत् ।) सीमन्तिकास्थितस्वर्णादि- रचितपट्टिका । सिँथी इति भाषा । तत्- पर्य्यायः । परितथ्या २ । इत्यमरः । २ । ६ । १०३ ॥ बालपाशस्थितमणिः । इति तट्टीकायां तर्क- वागीशः ॥

**बालपुष्पिका**, स्त्री, (बालानि क्षुद्राणि पुष्पाणि यस्याः । ततः स्वार्थे कन् कापि अत इत्वम् ।) यूथिका । इति राजनिर्घण्टः ॥ (विवृतिरस्या यूथिकाशब्दे निर्द्देश्या ॥)

**बालपुष्पी**, स्त्री, (बालानि क्षुद्राणि पुष्पाणि यस्याः सा ।) यूथिका । इति जटाधरः ॥

**बालभद्रकः**, पुं, (बालेऽपि भद्र इव । ततः स्वार्थे कन् ।) विषभेदः । तत्पर्य्यायः । शाम्भवः २ । इति शब्दचन्द्रिका ॥

**बालभैषज्यं**, क्ली, (बालं भैषज्यम् । यद्वा, बालस्य शिशोर्भषज्यम् ।) रसाञ्जनम् । इति राज- निर्घण्टः ॥ बालकस्यौषधञ्च ॥ (तद्यथा, --
बालानामपि ते तद्वद्बोद्धव्या भिषगुत्तमैः ॥
बालानामेव ये रोगा भवन्ति महतां न च ।
तालुकण्टकमुख्यांस्तानवधारययत्नतः ॥"
तत्रादौ तालुकण्टकमाह ।
"तालुमांसे कफः क्रुद्धः कुरुते तालुकण्टकम् ।
तेन तालुप्रदेशस्य निम्नता मूर्द्ध्नि जायते ॥
तालुपातात् स्तनद्वेषः कृच्छ्रात् पानं शकृद्- द्रवम् ।
तृडक्षिकण्ठास्यरुजा ग्रीवादुर्द्धरता वमिः ॥"
पानं स्तन्यस्य । शकृद्द्रवं द्रवरूपम् ॥
अथ महापद्ममाह ।
"विसर्पस्तु शिशोः प्राणनाशनः शीर्षवस्तिजः ।
पद्मवर्णो महापद्मरोगो दोषत्रयोद्भवः ।
शङ्खाभ्यां हृदयं याति हृदयाच्च गुदं ब्रजेत् ॥"
पद्मवर्णः लोहितवर्णः तत्र शीर्षजो विसर्पः शङ्खाभ्यां हृदयं याति हृदयात् गुदं व्रजेत् । एवं वस्तितो गुदं याति । गुदतो हृदयं हृदया- च्छिरो याति इति बोद्धव्यम् ॥
अथ कुकूणकमाह ।
'कुकूणकः क्षीरदोषात् शिशूनामेव वर्त्मनि ।
जायते तेन तन्नेत्रं कण्डुरं प्रस्रवेन्मुहुः ॥
शिशुः कुर्य्याल्ललाटाक्षिकूटनासाप्रघर्षणम् ।
शक्तो नार्कप्रभां द्रष्टं न वर्त्मोन्मीलनक्षमः ॥'
कुकूणकः कोथुया इति लोके ख्यातः ॥ * ॥
अथ तुण्डिगुदपाकमाह ।
'वातेनाघ्मापिता नाभिः सरुजा तुण्डिरुच्यते ।
बालस्य गुदपाकाख्यो व्याधिः पित्तेन जायते ॥'
अथाहिपूतनं आह ।
'शकृन्मूत्रसमायुक्तेऽधौतेऽपाने शिशोर्भवेत् ।
स्विन्ने वा स्नाप्यमानस्य कण्डू रक्तकफोद्भवा ॥
कण्डूयनात्ततः क्षिप्रं स्फोटाः स्रावश्च जायते ।
एकीभूतं व्रणं घोरं तं विद्यादहिपूतनम् ॥
स्विन्ने स्वेदिते ॥ * ॥ अथाजगल्लीमाह ।
स्निग्धा सवर्णा ग्रथिता निरुजा मुद्गसन्निभा ।
दाहादिकं विना अग्निदाहादिक्षारवमनविरे- चनशिराव्यधादिकं षिना । महाकष्टे चोत्पन्ने वमनबिरेकाद्यं दद्यात् । यत आह सुश्रुतः ।
विरेकवस्तिवमनान्यृते कुर्य्याच्च नात्ययादिति ।
अत्ययात् विनाशकरकष्टात् ऋते विना ॥
'त एव दोषा दूष्याश्च ज्वराद्या व्याधयश्च ते ।
अतस्तदेव भैषज्यं मात्रा त्वस्य कनीयसी ॥'
अस्य बालस्य । कनीयसीमात्रामाह विश्वा- मित्रः ।
'विडङ्गफलमात्रन्तु जातमात्रस्य भेषजम् ।
अनेनैव प्रमाणेन मासि मासि प्रवर्द्धयेत् ॥'
विडङ्गपरिमितं भेषजं चूर्णीकृत्य किंवा कल्की- कृत्याथवावलेहीकृत्य दद्यादित्यर्थः । तन्त्रान्तरे त्वन्यथाभिहितम् ।
'प्रथमे मासि बालाय देया भेषजरक्तिका ।
अवलेह्या तु कर्त्तव्या मधुक्षीरसिताघृतैः ॥
एकैकां वर्द्धयेत्तावद्यावत् संवत्सरो भवेत् ।
तदूर्द्ध्वं माषवृद्धिः स्याद्यावत् षोडशवत्सराः ॥'
एकैकां रक्तिकाम् तदूर्द्ध्वं वर्षोपरि माषवृद्धिः प्रतिवर्षं पञ्चगुञ्जात्मकस्य माषस्य वृद्धिर्भवति ।
गुञ्जाः पञ्चाद्यमाषक इत्यमरसिंहः ॥
'ततः स्थिरा भवेत्तावद्यावद्वर्षाणि सप्ततिः ।
ततो बालकवन्मात्रा ह्रासनीया शनैः शनैः ॥'
ततः षोडशवत्सरोपरि ।
'चूर्णकल्कावलेहानामियं मात्रा प्रकीर्त्तिता ।
कषायस्य पुनः सैव विज्ञातव्या चतुर्गुणा ॥
क्षीरपस्य शिशोर्देयमौषधं क्षीरसर्पिषा ।
धात्र्यास्तु केवलं देयं न क्षीरेणापि सर्पिषा ॥'
क्षीरान्नादस्य पूर्ब्बवत् क्षीरसर्पिषा । प्रकारा- न्तरेणौषधपानमाह सुशुतः ।
'येषां गदानां ये योगाः प्रवक्ष्यन्ते गदङ्कराः ।
तेषु तत्कल्कसंलिप्तौ पाययेत शिशुं स्तनौ ॥'
अवचनानां बालानामभ्यन्तरव्याधिज्ञानोपाय माह ।
'अङ्गप्रत्यङ्गदेशे तु रुजा यत्रास्य जायते ।
मुहुर्मुहुः स्पृशति तं स्पृश्यमानेन रोदिति ॥
निमीलिताक्षो मूर्द्धस्थे रोगे नो धारयेच्छिरः ।
वस्तिस्थे मूत्रसङ्गार्त्तो क्षुधातृडपि गच्छति ॥
विण्मूत्रसङ्गवैकल्याच्छर्द्याघ्मानान्त्रकूजनैः ।
कोष्ठे व्याधीन् विजानीयात् सर्व्वत्रस्थांश्च

"भैषज्यं पूर्ब्बमुद्दिष्टं नराणां यज्ज्वरादिषु ।
कार्य्यन्तदेव बालानां मात्रा तस्य कनीयसी ॥"
इति वैद्यकचक्रपाणिसंग्रहे बालरोगाधिकारे ॥)

**बालभोज्यः**, पुं, (बालानां भोज्यः ।) चणकः ।
इति राजनिर्घण्टः ॥ बालकभक्षणीये, त्रि ॥

**बालमूषिका**, स्त्री, (बाला क्षुद्रा मूषिका इन्दुरः ।)
क्षुद्रमूषिका । छिट्का इन्दुर इति भाषा ।
तत्पर्य्यायः । गिरिका २ । इत्यमरः । २ । ५ । १२ ॥
चिक्कः ३ वेश्मनकुलः ४ चिक्वा ५ । इति शब्द-
रत्नावली ॥

**बालयज्ञोपवीतकं**, क्ली, (बालं यज्ञोपवीतम् । ततः
स्वार्थे कन् ।) उपवीतिविशेषः ।
तत्पर्य्यायः ।
उरस्कटः २ पञ्चवटः ३ । इति त्रिकाण्डशेषः ॥

**बालराजं**, क्ली, (बालः स्वल्पोऽपि राजते इति ।
राज + पचाद्यच् ।) वैदूर्य्यम् । इति शब्दरत्ना-
वली ॥ बालकश्रेष्ठे, पुं ॥

**बालरोगः**, पुं, (बालस्य रोगः ।) बालकस्य
व्याधिः । तस्य निदानं लक्षणानि चाह ।
"धात्र्यास्तु गुरुभिर्भोज्यैर्विषमैर्दोषजैस्तथा ।
दोषा देहे प्रकुप्यन्ति ततः स्तन्यं प्रदूष्यति ॥
मिथ्याहारविहारिण्या दुष्टा वातादयः स्त्रियाः ।
दूषयन्ति पयस्तेन जायन्ते व्याधयः शिशोः ॥ * ॥
कफवातोत्थिता ज्ञेया बालानामजगल्लिका ॥'
ग्रथिता गुम्फितेव । मुद्गसन्निभा ।
मुद्गाकृतिः ॥
अथ पारगर्भिकमाह ।
'मातुः कुमारो गर्भिण्याः स्तन्यं प्रायः पिबन्नपि ।
कासाग्निसादवमथुतन्द्राकार्श्यारुचिभ्रमैः ॥
युज्यते कोष्ठवृद्ध्या च तमाहुः पारिगर्भिकम् ।
रोगं परिभवाख्यञ्च तत्र युञ्जीत दीपनम् ॥'
पिबन्नपीत्यपिशब्दादपिबन्नपिपारिगर्भिकः ।
अहीडी इति लोके ।
परिभवाख्यं परिभवेति नामान्तरम् ॥ * ॥
अथ दन्तोद्भेदकान् रोगानाह ।
'दन्तभेदः शिशोः सर्व्वरोगाणां कारणं स्मृतम् ।
विशेषाज्ज्वरविड्भेदकासच्छर्द्दिशिरोरुजम्॥
अभिष्यन्दस्य पोथक्या विसर्पस्य च जायते ॥'
कारणमित्यन्वयः । पोथक्याः वर्त्मरोगविशेषस्य ॥
अथ बालरोगाणां चिकित्सा ।
'भैषज्यं पूर्ब्बमुद्दिष्टं महतां यज्ज्वरादिषु ।
तदेव कार्य्यं बालानां किन्तु दाहादिकं विना ॥'
रोदनैः ॥'
अत्रादौ ज्वरस्य चिकत्सामाह ।
'सर्व्वं निवार्य्यते बाले स्तन्यं नैव निषार्य्यते ।
मात्रया लङ्घ्ययेद्धात्रीं शिशोरेतद्विलङ्घनम् ॥'
मात्रया लङ्घयेत् लघु भोजयेत् ।
'भद्रमुस्ताभयानिम्बपटोलमधुकैः कृतः ।
क्वाथः कोष्णः शिशोरेष निःशेषज्वरनाशनः ॥'
भद्रमुस्तादिक्वाथः सर्व्वज्वरेषु ॥ * ॥
'घनकृष्णारुणाशृङ्गीचूर्णं क्षौद्रेण संयुतम् ।
शिशोर्ज्वरातिसारघ्नं कासं श्वासं वमिं हरेत् ॥
अरुणा अतिविषा । चतुर्भद्रिका ज्वराति-
सारेषु ॥

| | | |
|---|---|---|
| वातदुष्टं शिशुः स्तन्यं पिबन् वातगदातुरः । क्षामस्वरः कृशाङ्गः स्याद्बद्धविण्मूत्रमारुतः ॥ स्विन्नो भिन्नमलो बालः कामलापित्तरोगवान् । तृष्णालुरुष्णसर्व्वाङ्गः पित्तदुष्टं पयः पिबन् ॥ श्लेष्मदुष्टं पिबन् क्षीरं लालालुः श्लेष्मरोगवान् । निद्रार्द्दितो जडः शूनवक्त्राक्षश्छर्द्दनः शिशुः ॥ ज्वराद्या व्याधयः सर्व्वे वक्ष्यन्ते महतान्तु ये । | | |

'विल्वञ्च पुष्पाणि च धातकीनां
जलं सलोध्रं गजपिप्पली च ।
क्वाथावलेहौ मधुना विमिश्रौ
बालेषु योज्यावतिसारितेषु ॥'
जलं बाला । विल्वादिक्वाथावलेहौ । अतीसारेषु ॥
'समङ्गाधातकीलोध्रसारिवाभिःसृतं जलम् ।
दुर्द्धरेऽपि शिशोर्देयमतीसारे समाक्षिकम् ॥'
समङ्गा लज्जालुमूलम् । समङ्गादिक्वाथो दुर्द्ध-रेऽतीसारे ॥ * ॥
'विडङ्गान्यजमीदा च पिप्पलीतण्डुलानि च ।
एवामालीढ्य चूर्णानि सुखं तप्तेन वारिणा ।
आमे प्रवृत्तेऽतीसारे कुमारं पाययेद्भिषक् ॥'
विडङ्गादिचूर्णमतीसारे ॥ * ॥
'मोचरसः समङ्गा च धातकी पद्मकेशरम् ।
पिष्टैरेतैर्यवागूः स्याद्रक्तातीसारनाशिनी ॥'
मोचरसलज्जालुमूलधात्कीफुलकमलकेशरसमुद्धि-ततोला १ तण्डुलकीखुदीतोला १ जलतोला ११ सर्व्वमेकीकृत्य यवागूः साधनीया । मोच-रसादियवागू रक्तातिसारे ॥ * ॥
'नागरातिविषामुस्ताबालकेन्द्रयवैः शृतम् ।
कुमारं पाययेत् प्रातः सर्व्वातीसारनाशनम् ॥'
नागरादिक्वाथः सर्व्वातीसारे ॥ * ॥
'लाजासयष्टिमधुका शर्करा क्षौद्रमेव च ।
तण्डुलोदकयोगेन क्षिप्रं हन्ति प्रवाहिकाम् ॥'
लाजादिचूर्णं प्रवाहिकायाम् ॥ * ॥
'रजनी सरलो दारुवृहती गजपिप्पली ।
शृङ्गिपर्णी शताहा च लीढं माक्षिकसर्पिषा ॥
दीपनं ग्रहणीं हन्ति मारुतार्त्तिसकामलाम् ।
ज्वरातीसारपाण्डुघ्नं बालानां सर्व्वरोगनुत् ॥'
रजन्यादिचूर्णं ग्रहण्यादौ ॥ * ॥
'पौष्करातिविषाशृङ्गीमागधीधन्वयासकै ।
कृतं चूर्णन्तु सक्षौद्रं शिशूनां पञ्चकासजित् ॥'
पौष्करादिचूर्णं कासेषु ॥ * ॥
'पौष्करातिविषावासाकणाशृङ्गीरसंलिहन् ।
मधुना मुच्यते बालः कासैः पञ्चभिरुच्छ्रितैः ॥'
मुस्तकादिरसः कासेषु ॥ * ॥
'व्याघ्रीकुसुमसंजातकेशरैरवलेहिका ।
मधुना चिरसंजातान् शिशोः कासान् व्यपो-हति ॥'

'पीतं पीतं वमेद्यस्तु स्तन्यं तं मधुसर्पिषा ।
द्विवार्त्ताकी फलरसं पञ्चकोलञ्च लेहयेत् ॥'
द्विवार्त्ताकी बृहतीद्वयम् ॥ * ॥
'पञ्चकोलानि पिप्पलीपिप्पली-मूलचव्यचित्रकनागराणि ॥'
क्षीरच्छर्द्याम् ॥ * ॥
'ह्रीवेरशर्कराक्षौद्रं लीढं तृष्णाहरं परम् ।
घृतेन
सिन्धुविश्वैलाहिङ्गुभार्गीरजोलिहन् ॥
आनाहं वातिकं शूलं हन्यात्तोयेन वा शिशुः ॥'
आनाहे वातशूले च ॥ * ॥
'कणोषणासिताक्षौद्रसूक्ष्मैलासैन्धवैः कृतः ।
मूत्रग्रहे प्रयोक्तव्यः शिशूनां लेह उत्तमः ॥'
मूत्राघाते ॥ * ॥
'यदा तु दुर्ब्बलो बालः खादन्नपि च वह्निमान् ।
विदारीकन्दगोधूमयवचूर्णंघृतप्लुतम् ॥
खादयेत्तदनुक्षीरं शृतं समधुशर्करम् ॥'
कार्श्ये ॥ * ॥
'मुस्तकुष्माण्डबीजानि भद्रदारुकलिङ्गकान् ।
पिष्ट्वा तोयेन संलिम्पेल्लेपोऽयं शोथहृच्छिशोः ॥'
शोथे ॥ * ॥
'पटोलत्रिफलारिष्टहरिद्राक्वथितंपिबेत् ।
क्षतवीसर्पविस्फोटज्वराणां शान्तये शिशुः ॥'
क्षतवीसर्पविस्फोटज्वरेषु ॥ * ॥
'गृहधूमनिशाकुष्ठराजिकेन्द्रयवैः शिशोः ।
लेपस्तक्रेण हन्त्याशु सिध्मपामविचर्च्चिकाम् ॥
सारिवातिललोध्राणां कषायो मधुकस्य च ।

रसाञ्जनं विशेषेण पानलेपनयोर्हितम् ॥
शङ्खयष्ट्यञ्जनैश्चूर्णं शिशूनां गुदपाकनुत् ॥'
अञ्जनं रसाञ्जनम् । गुदपाके ॥ * ॥
'शङ्खसौवीरयष्ट्याह्वैर्लेपो देयोऽहिपूतने ॥'
अहिपूतने ॥ * ॥
'पारिगर्भिकरोगे तु पूज्यते वह्निदीपनम् ॥'
पारिगर्भिके ॥ * ॥
'दन्तपालिन्तु मधुना चूर्णेन प्रतिसारयेत् ।
धातकीपुष्पपिप्पल्योर्धात्रीफलरसेन वा ॥
दन्तोत्थानभवा रोगाः पीडयन्ति न बालकम् ।
जाते दन्ते हि शाम्यन्ति यतस्तद्धेतुका गदाः ॥'
दन्तोद्भेदजरोगेषु ॥ * ॥
'सौवर्णं सुकृतं चूर्णं कुष्ठं मधु घृतं वचा ।
मत्स्याक्षकः शङ्खपुष्पी मधु सर्पिः सकाञ्चनम् ॥
अर्कपुष्पीमधु घृतं चूर्णितं कतकं वचा ।
सहेमचूर्णं कैटर्य्यं श्वेता दूर्व्वा घृतं मधु ॥
चत्वारोऽभिहिताः प्राशा अर्द्धश्लोकसमापनाः ।
कुमाराणां वपुर्मेधाबलपुष्टिकराः स्मृताः ॥'
सावर्णचूर्णम् । चतुर्ष्वपि योगेषु मारित-सुवर्णचूर्णम् । मत्स्याक्षकः ब्राह्मी इति लोके वकम इत्येके । अर्कपुष्पी अर्कसदृशपुष्पलता ।
कैटर्य्यं कट्फलम् । श्वेता दूर्व्वाविशेषणं वचेति
केचित् । संवत्सरं यावदेते योगाः प्रयोज्याः द्वादशवर्षाणीति केचित् ॥ * ॥
'बालानाञ्च वपुर्मेधाबलपुष्टिकराः स्मृताः ।
लाक्षारसे समे तैलं मस्तुन्यथ चतुर्गुणे ॥
रास्नाचन्दनकुष्ठाह्वावाजिगन्धानिशायुतैः ।
शताह्वादारुयष्ट्याह्वमुर्व्वातिक्ताहेणुभिः ॥
संसिद्धं ज्वररक्षोघ्नं बलवर्णकरं शिशोः ॥"
लाक्षादितैलं बालेषु ॥ * ॥ इति भावप्रकाशे बालरोगाधिकारः ॥

**बालवायजं** क्ली, (बालवाये वैदुर्य्यप्रभवे देश-

कासे ॥ * ॥
‘धान्यं शर्करया युक्तं तण्डुलोदकसंयुतम् ।
पानमेतत् प्रदातव्यं कासश्वासापहं शिशोः ॥’
धान्यादिपानं कासश्वासयोः ॥ * ॥
‘द्राक्षावासाभयाकृष्णाचूर्णं क्षौद्रेण सर्पिषा ।
लीढं श्वासं निहन्त्याशु कासञ्च तमकं तथा ॥’
तमकं श्वासभेदम् । द्राक्षादिचूर्णं कासश्वासयोः ॥
‘चूर्णं कटुकरोहिण्या मधुना सह योजयेत् ।
हिक्कां प्रशमयेत् क्षिप्रं छर्द्दिञ्चापि चिरो-
त्थिताम् ॥’
हिक्कायां छर्द्याञ्च ॥ * ॥
‘आम्रास्थिलाजसिन्धूत्थंसक्षौद्रं छर्द्दिनुद्भवेत् ॥’
छर्द्याम् ॥ * ॥

संस्राविणि मुखे शस्तो धावनार्थं शिशोः
सदा ॥’
मुखस्रावे ॥ * ॥
‘अश्वत्थत्वग्दलक्षौद्रैर्म्मुखपाके
प्रलेपनम् ॥’
मुखपाके ॥ * ॥
‘पिप्पलीत्रिफलाचूर्णं
घृतक्षौद्रपरिप्लुतम् ।
बालो रोदिति यस्तस्मै लेढुं दद्यात्
सुखा-
वहम् ॥’
रोदने ॥ * ॥
‘हरीतकी वचा कुष्ठं कल्कं
माक्षिकसंयुतम् ।
पीत्वा कुमारः स्तन्येन मुच्यते
तालुकण्टकात् ॥’
तालुकण्टके ॥ * ॥
‘फलत्रिकं लोध्रपुनर्नवे च
सशृङ्गवेरं बृहतीद्वयञ्च ।
आलेपनं श्लेष्महरं सुखोष्णं
कुकूणके कार्य्यमुदाहरन्ति ॥’
कुकूणके ॥ * ॥
‘मृत्पिण्डेनाग्नितप्तेन क्षीरसिक्तेन
सोष्मणा ।
स्वेदयेदुत्थितां नाभिं
शोथस्तेनोपशाम्यति ॥’
नाभिशोथे ॥ * ॥
‘नाभिपाके निशालोध्रप्रियङ्गुमधुकैः
शृतम् ।
तैलमभ्यञ्जने शस्तमेभिर्वाप्यवधूलनम्
॥
दग्धेन च्छागशकृता
नाभिपाकेऽवचूर्णनम् ।
त्वक्चूर्णैः क्षीरिणां वापि कुर्य्याच्चन्दन-
रेणुना ॥’
नाभिपाके ॥ * ॥
‘गुदपाके तु बालानां पित्तघ्नीं कारयेत्
क्रियाम् ।

विशेषे जायते इति । जन् + ड ।) वैदूर्य्यम्
।
इति त्रिकाण्डशेषः ॥ (विवृतिर्विशेषश्चास्य
वैदूर्य्यशब्दे ज्ञेयः ॥)

**बालवासः** [स्] क्ली, (बालानां लोम्नां बालै-
र्न्निर्म्मितं वा वासः ।) केशनिर्म्मितवस्त्रम् ।
बालकस्य वस्त्रञ्च । इति केचित् ॥

**बालवाह्यः** पुं, (बालाः शिशवो वाह्या यस्य ।
एते खलु कस्मिंश्चिदुपस्थिते भये शिशून्
पृष्ठे
निधाय पलायन्त इति प्रसिद्धेस्तथात्वम् ।)
वनच्छागः । इति हाराबली । ८१ ॥
बालक-
वहनीये त्रि ॥

**बालव्यजनं**, क्ली, (बालस्य चमरीपुच्छस्य वालेन
वा निर्म्मितं व्यजनम् ।) चामरम् ।
तत्पर्य्यायः ।
रोमगुच्छः २ प्रकीर्णकम् ३ । इति
हेमचन्द्रः ॥
(यथा, कुमारे । १ । १३ ।
“लाङ्गूलविक्षेपविसर्पिशोभै-
रितस्ततश्चन्द्रमरीचिगौरैः ।
यस्यार्थयुक्तं गिरिराजशब्दं
कुर्व्वन्ति बालव्यजनैश्चमर्य्यः ॥”)

बालकस्य व्यजनञ्च ॥
"बालव्यजनमोजस्यं मक्षिकादीन्
व्यपोहति ।"
इति द्रव्यगुणः ॥

**बालव्रतः**, पुं, मञ्जुघोषनामकपूर्ब्बजिनविशेषः ।
इति त्रिकाण्डशेषः ॥

**बालसन्ध्याभः**, पुं, (बालसन्ध्या इव आभा यस्य ।)
अरुणवर्णः । इति हेमचन्द्रः ॥

**बालसूर्य्यं**, क्ली, (बालः सूर्य्य इव) वैदूर्य्यमणिः ।
इति त्रिकाण्डशेषः ॥ प्रातःकालीनसूर्य्ये, पुं
॥

**बालसूर्य्यकं**, क्ली, (बालसूर्य्य एव । बालसूर्य्य +
स्वार्थे कन् ।) वैदूर्य्यम् । इति
शब्दरत्नावली ॥

**बालहस्तः**, पुं, (बाला हस्त इव मक्षिकादीनां
निवारकत्वात् ।) बालधिः ।
लोमयुक्तलाङ्गू-
लम् । इत्यमरः ॥ (केशानां हस्तः समूहः
त्रि ।
केशसमूहश्च इत्युज्ज्वलदत्तः ॥)

**बाला**, स्त्री, (बालाः केशा इव पदार्था विद्यन्ते
यस्याः । बाल + अर्श आद्यच् ततष्टाप् ।)
नारिकेलः । हरिद्रा । मल्लिकाभेदः ।
अलङ्कार-
भेदः । मेध्यम् । त्रुटिः । स्त्री । इति
मुद्राङ्किता
मेदिनी ॥ घृतकुमारी । ह्रीवेरम् । इति
शब्द-
चन्द्रिका ॥ अम्बष्ठा । नीलझिण्टी । इति
राज-
निर्घण्टः ॥ एकवर्षवयस्का गौः । यथा, --
"वर्षमात्रातुबाला स्यादतिबाला द्विवार्षिकी
।"
इति प्रायश्चित्ततत्त्वम् ॥
षोडशवर्षीया स्त्री । सा ग्रीष्मशरत्काले च
प्रशंसनीया हर्षदा च । इति राजवल्लभः ॥
"शुष्कमांसं स्त्रियो वृद्धा बालार्कस्तरुणं
दधि ।
प्रभाते मैथुनं निद्रा सद्यःप्राणहराणि षट् ॥"
इति चाणक्यम् ॥

**बालिः**, पुं, (बाले केशे जातः । बाल + इञ् ।)
कपिविशेषः । तत्पर्य्यायः । ऐन्द्रः २ बाली
३ ।
इति त्रिकाण्डशेषः ॥ (अयमेव श्रीरामेण
हतः ।
अस्य जन्मादिकविवृतिस्तु बालिन् शब्दे
द्रष्टव्या ।)

**बालिका**, स्त्री, (बाला एव । बाल + स्वार्थे कन् ।
टाप् अत इत्वम् ।) बाला । कन्या ।
बालुका ।
पत्रकाहला । कर्णभूषणम् । इति मेदिनी ।
के,
१३० ॥ एला । इति शब्दरत्नावली ॥
कन्या-
स्वरूपलक्षणे यथा, --
"कन्या देव्या स्वयं प्रोक्ता कन्यारूपा तु
शूलिनी ।
यावदक्षतयोनिः स्यात्तावद्देवी सुरारिहा ॥"
इति देवीपुराणम् ॥

**बालिखिल्याः**, पुं, पुलस्त्यकन्यायां सन्नत्यां क्रतोः
षष्टिसहस्रसंख्यकपुत्त्रा ऋषिविशेषाः ।
यथा, --
"प्रीत्यां पुलस्त्यो भगवान् दत्तात्रिमसृजत्
प्रभुः ।
पूर्ब्बजन्मनि सोऽगस्त्यः स्मृतः
स्वायम्भुवेऽन्तरे ॥
वेदबाहुं तथा कन्यां सन्नतिर्नाम नामतः ।
पुत्त्राणां षष्टिसाहस्रं सन्नतिः सुषुवे क्रतोः ॥
ते चोर्द्ध्वरेतसः सर्व्वे बालिखिल्या इति
स्मृताः ॥"
इति कौर्म्मे १२ अध्यायः ॥
अपि च ।
"क्रतोश्च सन्नतिर्भार्य्या
बालिखिल्यानसूयत ।

**बालिहन्ता**, पुं, (बालेर्बालिनो वा बानरराजस्य
हन्ता ।) श्रीरामचन्द्रः । इति शब्दरत्नावली ॥
(बालिवधकथा यथा, रामायणे । ४ । १६ ।
२७ -- ३६ ।
"सूर्य्यपुत्त्रो महावीर्य्यः सुग्रीवः परिहीयत ।
वालिना भग्नदर्पस्तु सुग्रीवो मन्दविक्रमः ॥
बालिनं प्रति सामर्षो दर्शयामास राघवम् ।
वृक्षैः सशाखैः शिखरैर्व्वज्रकोटिनिभैर्नखैः ॥
मुष्टिभिर्जानुभिः पद्भिर्बाहुभिश्च पुनः पुनः ।
तयोर्युद्धमभूद्घोरं वृत्रवासवयोरिव ॥
तौ शोणिताक्तौ युध्येतां वानरौ वनचारिणौ ।
मेघाविव महाशब्दैस्तर्जमानौ परस्परम् ॥
हीयमानमथापश्यत् सुग्रीवं वानरेश्वरम् ।
प्रेक्षमाणं दिशश्चैव राघषः स मुहुर्मुहुः ॥
ततो रामो महातेजा आर्त्तं दृष्ट्वा हरीश्वरम् ।
स शरं वीक्षते वीरो बालिनो वधकाङ्क्षया ॥
ततो धनुषि सन्धाय शरमाशीविषोपमम् ।
पूरयामास तच्चापं कालचक्रमिवान्तकः ॥
तस्य ज्यातलघोषेण त्रस्ताः पत्ररथेश्वराः ।
प्रदुद्रुवुर्मृगाश्चैव युगान्त इव मोहिताः ॥
मुक्तस्तु वज्रनिर्घोषः प्रदीप्ताशनिसन्निभः ।
राघवेण महाबाणो बालिवक्षसि पातितः ॥
ततस्तेन महातेजा वीर्य्ययुक्तः कपीश्वरः ।
वेगेनाभिहतो बाली निपपात महीतले ॥)
ओड्रदेशान्तर्गतग्रामविशेषश्च ॥

**बाली**, [न्] पुं, (बालः केश उत्पत्तिस्थानत्वेन
विद्यते यस्य । बाल + इनिः । नामनिरुक्तिश्च
यथा, रामायणे ।
"अमोघरेतसस्तस्य वासवस्य महात्मनः ।
बालेषु पतितं बीजं बाली नाम बभूव सः ॥")
इन्द्रपुत्त्रवानरराजविशेषः । स तु
श्रीरामचन्द्रेण
हतः । तस्योत्पत्तिर्यथा, --
"मेरुर्नगवरः श्रीमान् जाम्बूनदमयः शुभः ।
तस्य यन्मध्यमं शृङ्गं सर्व्वदैवतपूजितम् ॥
तस्मिन् दिव्या सभा रम्या ब्रह्मणः शतयोजना
।
तस्यामास्ते सदा देवः पद्मयोनिश्चतुर्मुखः ॥
योगमभ्यसतस्तस्य नेत्राभ्यां यदश्रु स्रवत् ।
तद्गृहीतं भगवता पाणिना चर्च्चितश्च तत् ॥

(यथा, रतिमञ्जर्य्याम् ।
"बाला स्त्री प्राणदा प्रोक्ता तरुणी प्राण-
हारिणी ।
प्रौढा करोति वृद्धत्वं वृद्धा मरणमादिशेत्
॥"
यथा, मेघदूते । ८३ ।
"गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु
बालां
जातां मन्ये शिशिरमथितां पद्मिनीं बाल्य-
रूपाम् ॥"
कन्यामात्रेऽपि । यथा, मार्कण्डये । २१ ।
२८ ।
"इयञ्च मूर्च्छामगत् कारणं यत् शृणुष्व तत्
।
त्वयि प्रीतिमती बाला दर्शनादेव मानद !
॥"
पञ्चवर्षा स्मृता बाला । इति हारीते । १ ।
५ ।)
ऊनद्विवार्षिकी कन्या ।
तस्यास्तद्वयस्कबालस्य
च अग्निसंस्कारादिनिषेधो यथा, --
"अजातदन्ता ये बाला ये च
गर्भाद्विनिःसृताः ।
न तेषामग्निसंस्कारो न पिण्डं नोदकक्रिया
॥"
इति गारुडे १०७ अध्यायः ॥

**बालाक्षी**, स्त्री, (बालाः केशा इवाक्षिसदृशं च
पुष्पं यस्याः ।) केशपुष्पावृक्षः ।
तत्पर्य्यायः ।
मानसी २ दुर्गपुष्पी ३ केशधारिणी ४ ।
इति
शब्दचन्द्रिका ॥

**बालार्कः**, पुं, (बालो नवोदितोऽर्कः सूर्य्यः ।)
प्रातःकालीनसूर्य्यः । यथा, --
"रक्तवस्त्रपरीधानां बालार्कसदृशीं तनूम् ॥"
इत्यादि विश्वसारे जगद्धात्रीध्यानम् ॥
कन्याराशिस्थसूर्य्यः । यथा, --
धष्ठियानि सहस्राणि ऋषीणामूर्द्ध्वरेतसाम्
॥"
इति मार्कण्डेयपुराणे रुद्रसर्गः । ५२ । २४
॥
तेषामङ्गुष्ठपरिमाणस्य प्रमाणं यथा, --
"अथापश्यदृषीन् ह्रस्वानङ्गुष्ठोदरवर्ष्मणः ।
पलाशवृन्तिकामेकां सहितान् वहतः पथि
॥
प्रलीनान् स्वेष्विवाङ्गेषु
निराहारांस्तपोधनान् ।
क्लिश्यमानान् मन्दबलान् गोष्पदे
संप्लुतोदके ॥"
इति महाभारते । १ । ३१ ॥
बालखिल्योऽपि पाठः । यथा,
"ऋग्वदान्तर्गत-
बालखिल्यमेकादशसूक्तं बालखिल्याः
शंसन्ति
प्राणा वै बालखिल्याः । इति
चरणव्यूहभाष्यम् ॥

**बालिनी**, स्त्री, अश्विनीनक्षत्रम् । इति हेमचन्द्रः ॥

**बालिशं**, क्ली, (बालाः सन्ति यस्य इति बाली
मस्तकस्तेन शेते यत्र । शी + आधारे ड ।)
उपधानम् । इति शब्दमाला ॥ (ब्राह्मणादि-
राकृतिगणः । इति पाणिनिः । ५ । १ ।
१२४ ॥)

**बालिशः**, त्रि, (बाड + इन् । डस्य लत्वं । बालिं
वृद्धिं श्यतीति । बालि + शो +
आतोऽनुपेति
कः ।) शिशुः । (यथा, भागवते । ४ । १४ ।
२३ ।
"बालिशा वत यूयं वा अधर्म्मे धर्म्ममानिनः
॥"
बालिशा शिशुवृत्तय इत्यर्थः ॥) मूर्खः ।
इति
मेदिनी । शे, २६ ॥ (यथा, मनुः । ३ ।
१७६ ।
"अपाङ्क्त्यो यावतः पाङ्क्त्यान्
भुञ्जानाननु-
पश्यति ।
तावतां न फलं तत्र दाता प्राप्नोति बालिशः
॥"
निःक्षिप्तमात्रं तद्भूमौ ब्रह्मणा लोककर्त्तृणा ।
तस्मिन्नश्रुकणे राम ! वानरः संबभूव ह ॥
उत्तरं मेरुशिखरं गतस्तत्र च दृष्टवान् ।
नानाविहगसंघुष्टं प्रसन्नसलिलं सरः ॥
आप्लुत्य चापतत्तस्मिन् ह्रदे वानरसत्तमः ॥
उत्प्लुत्य तस्मात् स ह्रदादुत्थितः प्लवगः
पुनः ॥
तस्मिन्नेव क्षणे राम ! स्त्रीत्वं प्राप स वानरः ॥
तद्रूपमद्भुतं दृष्ट्वा त्याजितौ धैर्य्यमात्मनः ।
ततस्तस्यां सुरेन्द्रेण स्कन्नं शिरसि पातितम्
॥
अनासाद्यैव तां नारीं सन्निवृत्तमथाभवत् ।
ततः सा वानरपतिं जज्ञे वानरमीश्वरम् ॥
अमोघरेतसस्तस्य वासवस्य महात्मनः ।
बालेषु पतितं बीजं बाली नाम बभूव ह ॥
भास्करेणापि तस्यां वै कन्दर्पवशवर्त्तिना ।

बीजं निषिक्तं ग्रीवायां विधानमनुवर्त्तत ।
ग्रीवायां पतितं बीजं सुग्रीवः समजायत ॥”
इति रामायणे उत्तरकाण्डे । ३७ सर्गः ॥
अपि च ।
“वानरेन्द्रं महेन्द्राभमिन्द्रो बालिनमात्मजम् ।
सुग्रीवं जनयामास तपनस्तपतां वरः ॥”
इति रामायणे बालकाण्डे १७ सर्गः ॥
“ततः शरेणाभिहतो रामेण रणकर्क्कशः ।
पपात सहसा बाली निकृत्त इव पादपः ॥”
इति किष्किन्ध्याकाण्डे १७ सर्गः ॥
(बालाः केशाः सन्त्यस्य ।) बालविशिष्टे, त्रि ॥

**बालीशः**, पुं, मूत्रकृच्छ्ररोगः । इति शब्दरत्नावली ॥

**बा(वा)लुः**, स्त्री, (बलते अनेन । बल प्राणने । बल + उण् ।) एलबालुकनामकगन्धद्रव्यम् । इत्युणादिकोषः ॥

**बा(वा)लुकं**, क्ली, (बालुरेव । स्वार्थे कन् ।) एलबालुकम् । इत्यमरः । २ । ४ । १२१ ॥

**बा(वा)लुकः**, पुं, पानीयालुः । इति राजनिर्घण्टः ॥

**बा(वा)लुका**, स्त्री, (बालुक + टाप् ।) रेणुविशेषः । बालि इति भाषा । तत्पर्य्यायः । सिकता २ सिक्ता ३ शीतला ४ सूक्ष्मशर्करा ५ प्रवाही ६

**बा(वा)लुकास्वेदः**, पुं, (बालुकाभिर्विहितः स्वेदः ।) तप्तबालुकाभिस्तापनम् । यथा, --
“वातश्लेष्मकृते स्वेदान् कारयेद्रुक्षनिर्म्मितान् ।
स्निग्धः स्वेदो निषिद्धोऽत्र विना केवलवातजान् ॥
खर्परभृष्टपटस्थितकाञ्जिकसंसिक्तबालुका स्वेदः ।
शमयति वातकफामयमस्तकशूलाङ्गभङ्गादीन्॥
स्रोतसां मार्द्दवं कृत्वा नीत्वा पावकमाशयम् ।
हत्वा वातकफस्तम्भं स्वदो ज्वरमपोहति ॥”
इति भावप्रकाशः ॥

**बा(वा)लुकी**, स्त्री, (बलति बालयति वा । बल-प्राणने + उक । स्त्रियां ङीप् ।) कर्कटीभेदः । तत्पर्य्यायः । बहुफला २ स्निग्धफला ३ क्षेत्रकर्कटी ४ क्षेत्ररुहा ५ काण्डिका ६ मूत्रला ७ । अस्या गुणाः ।
“बालुकी वातशमनी शीता हृद्या श्रमापहा ।
पित्तास्रशमनी रुच्या कुरुते कासपीनसौ ॥
“स्याद्वालुकी शरदि वर्षजदोषकर्त्री
हेमन्तजा च खलु पित्तहरा च रुच्या ।
क्षिप्रं करोति खलु पीनसमर्द्धपक्वा
पक्वा त्वतीवमधुरा फलकारिणी च ॥”
इति राजनिर्घण्टः ॥

**बा(वा)लुङ्की**, स्त्री, कर्कटी । इति त्रिकाण्डशेषः ॥

**बा(वा)लुङ्गिका**, स्त्री, कर्कटी । इति शब्दरत्नावली ॥

**बा(वा)लुङ्गी**, स्त्री, कर्कटी । इति शब्दरत्नावली ॥

**बा(वा)लूकः**, पुं, (बलते प्राणान् हन्ति यः । बल ङ वधे + ऊक ।) विषभेदः । इति हेमचन्द्रः । ४ । २ । ३ ॥

**बा(वा)लेयः**, पुं, (बलये उपकरणाय साधुः । बलि + “छदिरुपधिवलेर्ढञ् ।” ५ । १ । १३ । इति

अङ्गः प्रथमतो जज्ञे वङ्गः सुह्मस्तथैव च ।
पुण्ड्रः कलिङ्गश्च तथा बालेयं क्षत्त्रमुच्यते ॥
बालेया ब्राह्मणाश्चैव तस्य वंशकरा भुवि ।
बलेस्तु ब्रह्मणा दत्ता वराः प्रीतेन भारत ! ॥”)
अङ्गारवल्लरी । इति विश्वः ॥ चाणक्यमूलकम् । इति राजनिर्घण्टः ॥

**बालेयः**, त्रि, (बालाय हितः । बाल + ढञ् ।) मृदुः । बालहितः । इति मेदिनी ॥
(बलये उपहाराय हितः । बलि + छदिरुपधिबलेर्ढञ् ।” ५ । १ । १३ । इति ढञ् । तण्डुलः ॥ यथा, सिद्धान्तकौमुद्याम् । “बालेयास्तण्डुलाः ॥” बलियोग्यः । यथा, रघौ । १४ । ७७ ।
“पुष्पं फलञ्चार्त्तवमाहवन्त्यो
बीजञ्च बालेयमकृष्टरोहि ।
विनोदयिष्यन्ति नवाभिषङ्गा-
मुदारवाचो मुनिकन्यकास्त्वाम् ॥”
वितुन्नकनाम्नो वृक्षस्य त्वचि क्ली । तत्पर्य्यायो यथा, --
“कुटन्नटं दासपुरं बालेयं परिपेलवम् ।
प्लवगोपुरगोनर्द्दकैवर्त्तीमुस्तकानि च ॥
मुस्तावत् पेलवपुटं शुक्राभं स्याद्वितुन्नकम् ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**बालेयशाकः**, पुं, (बालेयः बलिहितः शाकः ।) ब्राह्मणयष्टिका । इत्यमरः । २ । ४ । ९० ॥

**बालेष्टः**, पुं, (बालानां इष्टः प्रियः ।) वदरः । इति राजनिर्घण्टः ॥ बालकाभिलषिते, त्रि ॥

**बालोपवीतं**, क्ली, (बालानां बालकानां उपवीतम् ।) बालकपरिधानवस्त्रम् । तत्पर्य्यायः । पञ्चावटम् २ उरस्कटम् ३ । इति हारावली । ४८ ॥ द्विजबालकानां यज्ञसूत्रञ्च ॥

**बाल्मीकिः**, पुं, बल्मीकस्यापत्यम् । (बल्मीक + इञ् ।) बल्मीकप्रभवो यस्मात् तस्माद्वाल्मीकिरित्यसौ इति ब्रह्मवैवर्त्तोक्तेः । बल्मीकप्रभवत्वेन गौणी पुत्रादिवद्गौणमस्य बल्मीकापत्यत्वं गृहीत्वैव साधुरपत्यार्थः । यद्वा बल्मीक इति ऋषिविशेषस्य संज्ञेत्याहुः ॥ मुनिविशेषः । यथा, --
“तपःस्वाध्यायनिरतं तपस्वी वाग्विदाम्बरम् ।

महासूक्ष्मा ७ सूक्ष्मा ८
पाणीयवर्णिका ९ ।
अस्या गुणाः । मधुरत्वम् । शीतत्वम्
। सन्ताप-
श्रमनाशित्वञ्च ।
"सेकप्रयोगतश्चैव
शाखाशेषानिलापहा ॥"
इति राजनिर्घण्टः ॥
शाखा हस्तपादादि ॥ कर्कटी । इति
जटा-
घरः ॥ कर्पूरः । यन्त्रविशेषः । इति
शब्द-
चन्द्रिका ॥

**बा(वा)लुकागडः**, पुं, (बालुकायाः गडतीति
तस्मात् क्षरति यः । बालुका +
गडक्षरणे +
पचाद्यच् । बालुकाजातत्वादस्य
तथात्वम् ।)
मत्स्यविशेषः । बालिया इति भाषा ।
तत्पर्य्यायः ॥
सिताङ्कः २ । इति हारावली । १९०
॥

**बा(वा)लुकात्मिका**, स्त्री, (बालुकावदात्मा
स्वरूपो
यस्याः । कन् अत इत्वम् ।) शर्करा ।
इति
शब्दचन्द्रिका ॥ (बालुका आत्मा
यस्य ।)
बालुकामये, त्रि ॥

**बा(वा)लुकाप्रभा**, स्त्री, (बालुकानामुष्णरेणूनां
प्रभा यस्याम् ।
अत्युष्णबालुकापरिव्याप्तत्वादस्य
तथात्वम् ।) नरकविशेषः । इति
हेमचन्द्रः ।
५ । ३ ॥

**बा(वा)लुकामयं**, त्रि, (बालुका + मयट् ।)
सिकता-
मयम् । इति सैकतशब्दटीकायां
भरतः ॥

**बा(वा)लुकायन्त्रं**, क्ली, (बालुकाया यन्त्रम् ।)

ढञ् ।) रासभः । इत्यमरः । २ । ९ । ७७ ॥
(यथा, मार्कण्डेये । ५० । ८५ ।
"एकच्छागं द्विबालेयं त्रिगवं पञ्चमाहिषम् ।
षडश्वं सप्तमातङ्गं गृहं यक्षाशु शोषय ॥"
बलेः स्वनामख्यातस्य दैत्यस्यापत्यं पुमान् ।
बलि
+ ढञ् ।) दैत्यविशेषः । इति धरणिः ॥
(बलिः
विरोचनपुत्त्रस्तस्य बाणज्येष्ठं पुत्त्रशतं
जातम्
ते च बालेयनाम्ना विख्याताः । यदुक्तमग्नि-
पुराणे ।
"विरोचनस्य पुत्त्रस्तु बलिरेकः प्रतापवान् ।
बलेः पुत्त्रशतं जज्ञे राजानः सर्व्व एव ते ॥
तेषां प्रधानाश्चत्वारो विक्रान्ताः सुमहावलाः
।
सहस्रबाहुर्ज्येष्ठश्च कन्य द्वे च बलेः शुभे ॥
बलेः पुत्त्रास्तु पौत्राश्च शतशोऽथ सहमशः ।
बालेयो नाम विख्यातो गणो विक्रान्तपौरुषः
॥"
जनमेजयवंशोद्भवस्य सुतपसो राज्ञः पुत्त्रो
बलिस्तस्य पञ्च पुत्त्राश्च बालेयाः । यथा,
हरि-
बंशे । ३१ । ३० -- ३३ ।
"फेनस्य सुतपा जज्ञे जज्ञे सुतपसो बलिः ।
जातो मानुषयोनौ तु स राजा काञ्चनेषुधिः ॥
महायोगी स तु बलिर्बभूव नृपतिः पुरा ।
पुत्त्रानुत्पादयामास पञ्च वंशकरान् भुवि ॥

नारदं परिपप्रच्छ बाल्मीकिर्मुनिपुङ्गवम् ॥"
इति रामायणप्रथमश्लोकः ॥
अपि च । ततस्तदनुग्रहलब्धं रामचरितं सर-
हस्यं निरवशेषं तत्प्रसादादेव सम्यक् विज्ञाय
भूलोकवर्त्तिनां चतुर्णां वर्णानां तापत्रयविमो-
चनाय ब्रह्मांशभूत एव भगवान् प्राचेतसो
बाल्मीकिः स्वकृतशतकोटिरामायणसारभूतं
चतुर्षिंशत्यक्षरगायत्र्याख्यापरब्रह्मविद्याविलास
भूतं रामायणं चतुर्विंशतिसहस्रश्लोकरूपं कुश-
लवाभ्यामग्राहयत् । इति तट्टीका ॥ अपि च ।
"नारायणात्मकाः सर्व्वे तेषां रामोऽग्रजोऽ-
भवत् ।
रावणान्तकरो राजा रघूणां वंशवर्द्धनः ॥
बाल्मीकिर्यस्य चरितं चक्रे भार्गवसत्तमः ॥")
इति मात्स्ये १३ अध्यायः ॥

| औषधपाकार्थयन्त्रविशेषः । यथा, --<br>“भाण्डे वितस्तिगम्भीरे मध्ये<br>निहितकूपके ।<br>कूपिकाकण्ठपर्य्यन्तं बालुकाभिश्च<br>पूरिते ॥<br>भेषजं कूपिकासंस्थं बह्निना यत्र<br>पच्यते ।<br>बालुकायन्त्रमेतद्धि यन्त्रतन्त्रबुधैः<br>स्मृतम् ॥”<br>इति भावप्रकाशः ॥ | | |
|---|---|---|

**बाल्यं**, (बालस्य भावः कर्म्म वा । बाल + “पत्यन्त-
पुरोहितादिभ्यो यक् ।” ५ । १ । १२८ । इति
यक् ।) बालस्य भावः । तत्पर्य्यायः । शिशु-
त्वम् २ शैशवम् ३ । इत्यमरः ॥ तच्च षोडश-
वर्षपर्य्यन्तम् । आषोडशाद् भवेद्बाल इत्युक्तेः ।
इति भरतः ॥ (यथा मनुः । ५ । १४८ ।
“बाल्ये पितुर्वशे तिष्ठेत् पाणिग्राहस्य यौवने ॥”
“वयस्तु त्रिविधं बाल्यं मध्यमं वार्द्धकन्तथा ।
ऊनषोडश वर्षस्तु नरो बालो निगद्यते ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**बा(वा)स्पः** (ष्पः) पुं, (बाधते नेत्रे इति । बाध +
“खष्पशिल्पशष्पबास्परूपपर्पतल्पाः ।” उणां ।
३ । २८ । इति पः । निपात्यते च ।) उष्म ।
अश्रु । इत्यमरः । ३ । ३ । १३० ॥ (यथा,
रघौ । ८ । ७० ।
“अकरोत् पृथिवीरुहानपि
स्रुतशाखारसबास्पदूषितान् ॥”)

**बाहः**, पुं, (बाहुरेव । पृषोदरादित्वात् साधुः ।)
बाहुः । इत्यमरटीकायां रमा-
नाथः ॥ (यथाह उज्ज्वलदत्तः । १ । १८ ।
“अकारान्तोऽपि बाहशब्दो भुजवाचकः ।
यथा च । बाहोऽश्वभुजयोः पुमानिति दामो-
दरः । टाववन्तोप्ययं । बाहुर्बाहा भुजाभुजः ।
सुबाहा इति वासवदत्तायां सुबन्धुश्लेषः ॥”)

**बाहा**, स्त्री, (बाहुरेव । पृषोदरादित्वात् साधुः ।)
बाहुः । इत्यमरटीकायां रमा-
नाथः ॥ (यथाह उज्ज्वलदत्तः । १ । १८ ।
“अकारान्तोऽपि बाहशब्दो भुजवाचकः ।
यथा च । बाहोऽश्वभुजयोः पुमानिति दामो-
दरः । टाववन्तोप्ययं । बाहुर्बाहा भुजाभुजः ।
सुबाहा इति वासवदत्तायां सुबन्धुश्लेषः ॥”)

**बाहाबाहवि**, व्य, बाहुभिर्बाहुभिः प्रवृत्तं यद् युद्धं
तत् । इति मुग्धबोधव्याकरणम् ॥

**बाहुः**, पुं, स्त्री, (बाधते शत्रून् इति । बाध +
“अर्जिदृशिकम्यमिपंसिबाधामृजिपशि तुक् धुक्
दीर्घहकाराश्च ।” उणा० १ । २८ । इति
कुप्रत्य-
पुरुषस्य दक्षिणबाहुस्पन्दने स्त्रियो
वामबाहु-
स्पन्दने शुभं तद्वीपरीते तु अशुभम् । यथा
शाकुन्तले १ अङ्के ।
“शान्तमिदमाश्रमपदं स्फुरति च बाहुः
कुतः
फलमिहास्य ।
अथवा भवितव्यानां द्वाराणि भवन्ति
सर्व्वत्र ॥”
बाहुर्दक्षिणबाहुः । फलं वरस्त्रीलाभरूपम्
॥
“वामेतरभुजस्पन्दो वरस्त्रीलाभसूचकः
॥”
इतिवचनात् ॥)
कूर्परस्य ऊर्द्धभागः । यथा, --
“मुखं बाहू प्रबाहू च मनः सर्व्वेन्द्रियाणि च
।
रक्षत्वव्याहतैश्वर्य्यस्तव नारायणोऽव्ययः
॥”
अस्य टीका । बाहू प्रबाहू च कूर्परस्य
ऊद्ध्वा-
धोभागौ । इति विष्णुपुराणे । ५ । ५ ॥

**बाहुकः**, पुं, नलराजा । तत्पर्य्यायः । पुण्यश्लोकः
२ अश्ववित् ३ नैषधः ४ । इति
त्रिकाण्डशेषः ॥
(पुष्करेण हृतराज्यो हि नलः ग्रहवैगुण्यात्
विपिने दमयन्तीमपहाय प्रगच्छन्
दावानल-
परीतमनलभयादाक्रोशन्तं
कर्क्कोटकनामानं
नागमवलोक्य तत उद्धृतवान् । अथ
प्रसन्न-
स्यास्य पन्नगस्योपदेशात् ऋतुपर्णस्य
राज्ञो
नगरं गत्वा बाहुक इत्यभिहितस्तस्यैव
राज्ञः
घोटकपरिचर्य्यायां नियुक्तोऽभवत् ।
यदुक्तं
महाभारते । ३ । ६७ । १-७ ।

**बाहुजः**, पुं, (ब्रह्मणो बाहुभ्यां जायते यः ।
बाहु + जन् + ड । “ब्राह्मणोऽस्य
मुखमासीत्
बाहू राजन्यः स्मृतः । ऊरुस्तदस्य यद्वैश्यः
पद्भ्यां
शूद्रोऽभ्यजायत ॥” इति श्रुतेस्तथात्वम् ।)
क्षत्रियः । इत्यमरः । २ । ८ । १ । (यथा, -
-
“वत्स ! वाराणसीं गच्छ त्वं
विश्वेश्वरवल्लभाम् ।
तत्र नाम्ना दिवोदासः काशिराजोऽस्ति-
बाहुजः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)
कीरः । स्वयंजाततिलः । इति मेदिनी । जे,
२७ ।
बाहुजाते त्रि ॥

**बाहुत्राणं** क्ली, (त्रै + भावे + ल्युट् । बाह्वोस्त्राणं
यस्मात् ।) अस्त्राघातनिवारणार्थबाहुबद्ध-
लौहादि । तत्पर्य्यायः । बाहुलम् २ । इति
हेमचन्द्रः । ३ । ४३३ ॥

**बाहुदन्ती**, [न्] पुं, (बहवो दन्ता यस्य स बहु-
दन्त ऐरावतः स एव बाहुदन्तः । स्वार्थे अण्
।
बाहुदन्तोऽस्यास्तीति इनिः ।) इन्द्रः । इति
भूरिप्रयोगः ॥

**बाहुदा**, स्त्री, (बाहू दत्तवती या । बाहु +
दा + आतोऽनुपसर्गेति ।” ३ । २ । १ । इति
कः ।
लिखितस्य मुनेर्बाहुप्रदानादस्यास्तथात्वम्
।)
नदीविशेषः । तत्पर्य्यायः । सैतवाहिनी २ ।
इत्य-
मरः ॥ कदाचिल्लिखिताख्यस्य
मुनेर्ज्येष्ठभ्रातुः
शङ्खस्य शून्याश्रमे फलभक्षणाद्राज्ञा बाहू
च्छिन्नौ तौ चास्यां नद्यां तपस्यतस्तस्य
पुन-
र्जाताविति । इत्यमरटीकायां भरतः ॥ * ॥

योऽन्तस्य हकारादेशश्च ।) कक्षाद्यङ्गुल्यग्र-
पर्य्यन्तावयवविशेषः । तत्पर्य्यायः । भुजः २
प्रवेष्टः ३ दोः ४ । इत्यमरः । २ । ६ । ८० ।
दोषः ५ बाहः ६ । इति जटाधरशब्दरत्ना-
वल्यौ ॥ तद्वैदिकपर्य्यायाः । आयती १ च्यवना
२
अनीशू ३ अप्लवाना ४ विनंगृसौ ५ गभस्ती ६
कवस्नौ ७ बाहू ८ भूरिजौ ९ क्षिपस्ती १०
शक्करी ११ भरित्रे १२ । इति द्वादश बाहु-
नामानि । इति वेदनिर्घण्टौ २ अध्यायः ॥ * ॥
(यथा ऋग्वेदे । ५ । ५७ । ६ ।
"ऋष्टयो वो मरुतो अंसयोरधि
सह ओजो बाह्वोर्वो बलं हितम् ॥"
नृपत्वसूचकबाहुलक्षणम् । यथा, --
"निर्मांसौ चैव भग्नाल्पौ श्लिष्टौ च विपुलौ भुजौ ।
आजानुलम्बिनौ बाहू वृत्तौ पीनौ नृपेश्वरे ॥"
इति गारुडे ६६ अध्यायः ॥
(अस्य शुभाशुभलक्षणमुक्तं यथा सामुद्रके ।
"उद्बद्धबाहुः पुरुषो वधबन्धनमाप्नुयात् ।
दीर्घबाहुर्भवेद्राजा समुद्रवचनं यथा ॥
प्रलम्बबाहुरैश्वर्य्यं प्राप्नुयाद्गुणसंयुतम् ।
ह्रस्वबाहुर्भवेद्दासः परप्रेष्यकरस्तथा ॥
वामावर्त्तभुजा ये तु ये च दीर्घभुजा नराः ।
संपूर्णबाहवो ये तु राजानस्ते प्रकीर्त्तिताः ॥

"तस्मिन्नन्तर्हिते नागे प्रययौ नैषधो नलः
।
ऋतुपर्णस्य नगरं प्राविशद्दशमेऽहनि ॥
स राजानमुपातिष्ठत् बाहुकोऽहमितिब्रुवन्
।
अश्वानां वाहने युक्तः पृथिव्यां नास्ति
मत्समः ॥
अर्थकृच्छ्रेषु चैवाहं प्रष्टव्यो नैपुणेषु च ।
अन्नसंस्कारमपि च जानाम्बन्यैर्विशेषतः
॥
यानि शिल्पानि लोकेऽस्मिन् यच्चैवान्यत्
सुदु-
ष्करम् ।
सर्व्वं यतिष्ये तत् कर्त्तुमृतुपर्ण ! भरस्व
माम् ॥
ऋतुपर्ण उवाच ।
वस बाहुक ! भद्रन्ते सर्व्वमेतत् करिष्यसि
।
शीघ्रयाने सदा बुद्धिर्ध्रियते मे विशेषतः ॥
स त्वमातिष्ठ योगं तं येन शीघ्रा हया मम ।
भवेयुरश्वाध्यक्षोऽसि वेतनं ते शतं शताः
॥
त्वामुपस्थास्यतश्चव नित्यं
वार्ष्णेयजीवलौ ।
एताभ्यां रंस्यसे सार्द्धं वस वै मयि
बाहुक ! ॥"
कौरव्यकुलोद्भवो नागभेदः । यथा महा-
भारते । १ । ५७ । १३ ।
"बाहुकः शृङ्गवेरश्च धूर्त्तकः प्रातरातकौ ।
कौरव्यकुलजास्त्वेते प्रविष्टा हव्यबाहनम्
॥")

**बाहुकुण्ठः**, त्रि, (बाहौ बाह्वोर्वावयवयोः कुण्ठः ।)
कुण्ठितबाहुयुक्तः । कोपा इति भाषा ।
तत्
पर्य्यायः । कुम्पः २ दोर्गडुः ३ इति
जटाधरः ॥

**बाहुकुन्थः**, पुं, (बाहुरिव कुथ्नाति आचरतीति ।
बाहु + कुन्थ + पचाद्यच् ।) पक्षः । यथा,
--
"गरुत्पक्षच्छदाः पत्रं पतत्रञ्च तनूरुहम् ।
देहधिर्देहकोषश्च बाहुकुन्थश्च कथ्यते
॥"

(एतत्कथा यथा, महाभारते । १२ । २३ ।
१७ -- ४० । व्यास उवाच ।
"अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शङ्खश्च लिखितश्चास्तां भ्रातरौ संशितव्रतौ
॥
तयोरावसथावास्तां रमणीयौ पृथक् पृथक् ।
नित्यं पुष्पफलैर्वृक्षैरुपेतौ बाहुदामनु ॥
ततः कदाचिल्लिखितः शङ्खस्याश्रममागतः ।
यदृच्छयाथ शङ्खोऽपि
निष्क्रान्तोऽभवदाश्रमात् ॥
सोऽभिगम्याश्रमं भ्रातुः शङ्खस्य
लिखितस्तदा ।
फलानि पातयामास सम्यक्परिणतान्युत ॥
अभ्युपादाय विश्रब्धो भक्षयामास स द्विजः ।
तस्मिंश्च भक्षयत्येव शङ्खोऽप्याश्रममागतः ॥
भक्षयन्तन्तु तं दृष्ट्वा शङ्खो भ्रातरमब्रवीत् ।
कुतः फलान्यवाप्तानि हेतुना केन खादसि ॥
सोऽब्रवीत् भ्रातरं ज्येष्ठमुपसृत्याभिवाद्य च ।
इत एव गृहीतानि मयेति प्रहसन्निव ॥
तमब्रवीत्तथा शङ्खस्तीव्ररोषसमन्वितः ।
स्तेयं त्वया कृतमिदं फलान्याददता स्वयम्
॥
गच्छ राजानमासाद्य स्वकर्म्म कथयस्व वै ।
अदत्तादानमेवं हि कृतं पार्थिवसत्तम ! ॥
स्तेनं मां त्वं विदित्वा च स्वधर्म्मनुपालयन्
।
शीघ्रं धारय चौरस्य मम दण्डं नराधिप ! ॥
इत्युक्तस्तस्य वचनात् सुद्युम्नं स नराधिपम्
।
अभ्यगच्छन् महाभागो लिखितः शंसितव्रतः
॥
सुद्युम्नस्त्वन्तपालेभ्यः श्रुत्वा
लिखितमागतम् ।

अभ्यगच्छत् सहामात्यः पद्भ्यामेव जनेश्वरः ॥
तमब्रवीत् समागम्य स राजा धर्म्मवित्तमम् ।
किमागमनमाचक्षु भगवन् ! कृतमेव तत् ॥
एवमुक्तः स विप्रर्षिः सुद्युम्नमिदमब्रवीत् ।
प्रतिश्रुत्य करिष्येति श्रुत्वा तत्कर्त्तुमर्हसि ॥
अनिसृष्टानि गुरुणा फलानि मनुजर्षभ ! ।
भक्षितानि महाराज ! तत्र मां शाधि मा चरम् ॥
सुद्युम्न उवाच ।
प्रमाणञ्चेन्मतो राजा भवतो दण्डधारणे ।
अनुज्ञायामपि तथा हेतुः स्याद्ब्राह्मणर्षभ ! ॥
स भवानभ्यनुज्ञातः शुचिकर्म्मा महाव्रतः ।
ब्रूहि कामानतोऽन्यांस्त्वं करिष्यामि हि ते वचः ॥
व्यास उवाच ।
स च्छन्द्यमानो ब्रह्मर्षिः पार्थिवेन महात्मना ।
नान्यं स वरयामास तस्माद्दण्डादृते वरम् ॥
ततः स पृथिवीपालो लिखितस्य महात्मनः ।
करौ प्रच्छेदयामास धृतदण्डो जगाम सः ॥
स गत्वा भ्रातरं शङ्खमार्त्तरूपोऽब्रवीदिदम् ।
धृतदण्डस्य दुर्बुद्धेर्भवांस्तत्क्षन्तुमर्हसि ॥
शङ्ख उवाच ।
न कुप्ये तव धर्म्मज्ञ ! न त्वं दूषयसे मम ।
धर्म्मस्तु ते व्यतिक्रान्तस्ततस्ते निष्कृतिः कृता ॥
स गत्वा बाहुदां शीघ्रं तर्पयस्व यथाविधि ।
देवानृषीन् पितॄंश्चैव मा चाधर्म्मे मनः कृथाः ॥
तस्य तद्वचनं श्रुत्वा शङ्खस्य लिखितस्तदा ।
अवगाह्यापगां पुण्यामुदकार्थं प्रचक्रमे ॥
प्रादुरास्तां ततस्तस्य करौ जलजसन्निभौ ।
ततः स विस्मितो भ्रातुर्दर्शयामास तौ करौ ॥”

“कृतप्रतिकृतैश्चित्रैर्बाहुभिश्च सकङ्कटैः ।
सन्निपातावधूतैश्च प्रमाथोन्मथनैस्तथा ॥
क्षेपणैर्मुष्टिभिश्चैव वराहोद्धूतनिस्वनैः ।
तलैर्वज्रनिपातैश्च प्रसृष्टाभिस्तथैव च ॥
शलाकानखपातैश्च पादोद्धूतैश्च दारुणैः ।
जानुभिश्चाश्मनिर्घोषैः शिरोभिश्चावघट्टनैः ॥
तद्युद्धमभवद्घोरमशस्त्रं बाहुतेजसा ।
बलप्राणेन शूराणां समाजोत्सवसन्निधौ ॥”
इति विराटपर्व्वणि १२ अध्यायः ॥
सकङ्कटः कङ्कटः करघर्षणजः किणस्तत्सहितैरित्यर्थः । कृतप्रतिकृतैः परप्रयुक्तिप्रतिकृतैः । चित्रैर्विचित्रैर्बन्धैरिति शेषः । सन्निपातेत्यादि । एते मल्लानां शिक्षाविशेषाः । सन्निपातैः परस्परसङ्घातैः । अवधूतैर्बद्धमुष्टिभुजाघातैः । प्रमाथैः पातयित्वा पेषणैः । उन्मथनैः अन्तरीक्षे भुजाभ्यां मथनैः । क्षेपणैः स्थानात् प्रच्यावनैः । बद्धाङ्गुलिकरो मुष्टिः ।
“अवाङ्मुखं स्कन्धगतं भ्रामयित्वा तथैव यः ।
क्षिप्तस्य शब्दः स भवेद्वराहोद्धूतनिस्वनः ॥
तर्जन्यङ्गुष्ठमध्यन प्रसारितकरो हि यः ।
सम्प्रहारस्तलाख्यस्तु संग्रहो वज्रमिष्यते ॥”
अर्द्धचन्द्रतुल्यमल्लमुष्टिर्वज्रमित्यर्थः ।
“प्रसृताङ्गुलिहस्तेन प्रसृष्टिः प्रहृतिः स्मृता ।
द्विगुणीकृतबाहुर्यस्तदीयार्थं यथाबलम् ॥
प्रहारः स शलाका स्यात् पादोद्धूतः पदाहतम् ॥”
जानुभिश्चाश्मनिघोषैः पाषाणघोरसदृशध्वनिभिः करणैर्यान्यवघट्टनानि तैः । बलप्राणेन बलोत्कर्षेण । इति तट्टीका ॥ (यथा, मार्कण्डेयपुराणे । ८३ । १३ ।
“ततः सिंहः समुत्पत्य गजकुम्भान्तरस्थितः ।
बाहुयुद्धेन युयुधे तेनोच्चैस्त्रिदशारिणा ॥”)

**बाहुलं**, क्ली, बाहुत्राणम् । इति हेमचन्द्रः । ३ । ४३३ ॥ (बहुल + अण् ।) बहुलभावश्च ॥

**बाहुलः**, पुं, अग्निः । इति शब्दरत्नावली ॥ (बहुला कृत्तिका तया युक्ता पौर्णमासी चिच्छेद । अस्य विवरणादिकं कार्त्तवीर्य्यशब्दे द्रष्टव्यम् ॥)

**बाहूबाहवि** व्य, बाहुभिर्बाहुभिर्यद् युद्धं वृत्तं तत् । हाताहाति इति भाषा । इति मुग्धबोधव्याकरणम् ॥

**बिद** इ अंशे । अवयव इत्यर्थः । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) इ बिन्द्यते । बिन्दुरितिशब्दव्युत्पत्त्यर्थमेवायं धातुपारायणम् । इति दुगादासीयटीका ॥

**बिल** क श विभेदने । इति कविकल्पद्रुमः ॥ (चुरा०-तुदा०-च-परं०-सक०-सेट् ।) क, बेलयति । श बिलति । इति दुर्गादासः ॥

**बिस** इर् य क्षेपे । इति कविकल्पद्रुमः । (दिवा०-पर०-सक०-सेट् ।) य विस्यति । इर् अविसत् अवेसीत् । अस्मात् पुषादित्वान्नित्यं ङ इत्यन्ये । इति दुर्गादासः ॥

**बीभत्सः**, पुं, (बीभत्स्यतेऽनेन । वध + सन् + करणे घञ् ।) अर्ज्जुनः । इति मेदिनी । से, २९ ॥

**बीभत्सः**, त्रि, (बीभत्सा घृणास्त्यत्र । अर्श-आद्यच् ।) क्रूरः ॥ (यथा महाभारते । १ । १ । २१० ।
“यदाश्रौषं द्रोणपुत्त्रादिभिस्तैर्हतान् पाञ्चालान् द्रौपदेयांश्च सुप्तान् ।
कृतं बीभत्समयशस्यञ्च कर्म्म
तदा नाशंसे विजयाय सञ्जय ! ॥”)
घृणात्मा ॥ (यथा, मार्कण्डेये । १६ । १८ ।
“तथापि प्रणता भार्य्या तममन्यत दैवतम् ।
तं तथाप्यतिबीभत्सं सर्व्वश्रेष्ठममन्यत ॥”)
विकृतिः । इति मेदिनी । से, २९ ॥ (यथा, --
“दुष्टैर्दोषैः पृथक्सर्व्वैर्बीभत्सालोकनादिभिः ।”
इति माधवकरकृतरुग्विनिश्चये छर्द्द्यधिकारे ॥

नदीयं पुरा प्रसेनजिद्भार्य्या गौरी नाम
आसीत् । ततः क्रुद्धेन भर्त्राभिशप्ता नदीरूपा
जाता । यथा, हरिबंशे । १२ । ५ ।
“लेभे प्रसेनजिद्भार्य्यां गौरीं नाम पतिव्रताम् ।
अभिशप्ता तु सा भर्त्रा नदी वै बाहुदा कृता ॥”
पूरुवंशोद्भवस्य परीक्षिन्नाम्नो नृपतेर्भार्य्येयं
बाहुदा । यथा, महाभारते । १ । ९५ । ४२ ।
“परीक्षित् खलु बाहुदामुपयेमे सुयशां नाम
तस्यामस्य जज्ञे भीमसेनः ॥) बाहुदात्री च ॥

**बाहुभूषा**, स्त्री, (बाह्वोर्भुजयोर्भूषा भूषणम् ।)
केयूरम् । इति हेमचन्द्रः । ३ । ३२६ ॥ बाहु-
भूषणमात्रञ्च ॥

**बाहुभेदी**, [न्] पुं, (बाहुं भिनत्तीति । बाहु +
भिद् + णिनिः ।) विष्णुः । इति भूरिप्रयोगः ।
बाहुभेदके त्रि ॥

**बाहुमूलं**, क्ली, (बाह्वो र्मूलम् ।) कक्षः । वगल
इति भाषा । इत्यमरः । २ । ६ । ३९ ॥ (यथा
साहित्यदर्पणे । ३ । १२३ ।
“कापि कुन्तलसंव्यानसंयमव्यपदेशतः ।
बाहुमूलं स्तनौ नाभिपङ्कजं दर्शयेत् स्फुटम् ॥”)

**बाहुयुद्धं**, क्ली, (बाह्वो र्बाहुभ्यां वा युद्धम् ।)
भुजाभ्यां संग्रामः । मल्लयुद्धम् । तत्पर्य्यायः ।
नियुद्धम् २ ॥ तस्य क्रमो यथा, --

बाहुली । बाहुली पौर्णमासी यस्मिन् । सास्मिन्
पौर्णमासीत्यण् ।) कार्त्तिकमासः । इत्यमरः ।
१ । ४ । १८ ॥

**बाहुलेयः**, पुं, (बहुलानां कृत्तिकादीनामपत्यं
पुमान् बहुला + ढक् ।) कार्त्तिकेयः । इत्य-
मरः । १ । १ । ४२ ॥

**बाहुसहस्रभृत्**, पुं, (बाहूनां सहस्रं बिभर्त्तीति ।
क्विप् । “ह्रस्वस्य पिति किति तुक् । ६ । १ ।
७१ । इति तुक् च ।) कार्त्तवीर्य्यार्ज्जुनः । इति
त्रिकाण्डशेषः ॥ (अस्य बाहुसहस्रप्राप्तिकथा
यथा, महाभारते । १३ । १५२ । ७-८ ॥
“स वरैश्छन्दितस्तेन नृपो वचनमब्रवीत् ।
सहस्रबाहुर्भूयां वै चमूमध्ये गृहेऽन्यथा ॥
मम बाहुसहस्रन्तु पश्यन्तां सैनिका रणे ।
विक्रमेण महीं कृस्नां जयेयं संशितव्रतः ॥”
परशुरामो हि अस्य बाहुसहस्रं परशुना

बीभत्सालोकनं विकृतिदर्शनमिति तट्टीकायां
विजयरक्षितेनोक्तम् ॥) पापी । इत्यजयः ॥
शृङ्गाराद्यष्टरसान्तर्गतषष्ठरसः । तत्पर्य्यायः ।
विकृतम् २ । इत्यमरः ॥ तस्य लक्षणादि यथा,
साहित्यदर्पणे । ३ । २६३ ।
“जुगुप्सा स्थायिभावस्तु बीभत्सः कथ्यते रसः ।
नीलवर्णो महाकालदैवतोऽयमुदाहृतः ॥
दुर्गन्धमांसपिशितमेदांस्यालम्बनं मतम् ।
तत्रैव कृमिपाताद्यमुद्दीपनमुदाहृतम् ॥
निष्ठीवनास्यबलननेत्रसङ्कोचनादयः ।
अनुभावास्तत्र मतास्तथास्युर्व्यभिचारिणः ॥
मोहोऽपस्मार आवेगो व्याधिश्च मरणादयः ॥”
अस्य रसस्योदाहरणं यथा तत्रैव ।
“उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोथ-
भूयांसि मांसा
न्यंसस्फिक्
पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
अन्तःपर्यस्तनेत्रः प्रकटीतदशनः प्रेतरङ्कः कराङ्का
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्र-
मत्ति ॥”)

वैकृतञ्च । यथा ।
अतिशीलितपारुष्यमभि-
शिक्षितवैकृतमित्यभिनन्दः । द्वयमिदं रसे
क्लीवम् । तदालम्बने तु मांसशोणितादौ
त्रिषु ।
इति तट्टीकायां भरतः ॥

**वीभत्सुः**, पुं, (बीभत्सतीति । वध + सन् + उ ।
युद्धे न्यायपथेन शत्रुहननादस्य तथात्वम्
।
एतन्निरुक्तिरुक्ता । यथा, महाभारते ४ ।
४२ । १८ ।
"न कुर्य्यां कर्म्म बीभत्सं युध्यमानः
कथञ्चन ।
तेन देवमनुष्येषु बीभत्सुरिति विश्रुतः ॥")
अर्ज्जुनः । यथा, --
अर्ज्जुनः फाल्गुनो जिष्णुः किरीटी श्वेत-
वाहनः ।
बीभत्सुर्विजयः कृष्णः सव्यसाची
धनञ्जयः ॥
इति महाभारते । ४ । ४२ । ९ ॥

**बुक्क**, कि श्वादिशब्दे । इति कविकल्पद्रुमः ॥
(चुरा०-पक्षे भ्वा०-पर०-सक०-पक्षे
अक०-
सेट् ।) पञ्चमस्वरी कोपधः । चुरादिपक्षे
कथने
भ्वादिपक्षे कुक्कुरादिशब्देऽयमिति
रमानाथः ।
कि, बुक्कयति वाचा बहुलोकः । बुक्कति
श्वा ।
इति दुर्गादासः ॥

**बुक्कं**, त्रि, (बुक्कयति बुक्बुक् इत्यव्यक्तशब्दं करो-
तीति । बुक्क + पचाद्यच् ।)
वक्षोऽभ्यन्तरमांस-
विशेषः । तत्पर्य्यायः । अग्रमांसम् २
हृदयम् ३
हृत् ४ । इत्यमरः । २ । ६ । ६४ ॥
केचित्तु
बुक्कात् पृथगेव हृदयान्तर्गतमांसविशेषे
पद्मा-

**बुक्कारः**, पुं, (बुक्क कि श्वादिशब्दे भावे घञ् ।
बुक्कं
निनादस्तस्य कारः करणम् ।
"एकवर्ग्यत्रयो
यत्र मध्यमस्तत्र लुप्यते" इति न्यायात्
मध्यस्थ
ककारस्य लोपः ।) सिंहध्वनिः । इति
हारा-
वली । १९४ ॥

**बुक्की**, स्त्री, (बुक्क + गौरादित्वात् ङीष् ।)
बुक्कम् ।
इत्यमरटीकायां भरतः ॥

**बुट**, कि हिंसे । इति कविकल्पद्रुमः ॥ (चुरा०-
पक्षे भ्वा०-पर०-सक०-सेट् ।) कि
बोटयति
बोटति । इति दुर्गादासः ॥

**बुड**, शि उत्सर्गे । संवृतौ । इति कविकल्प-
द्रुमः ॥ (कुटा०-तुदा०-पर०-सक०-सेट्
।)
शि बुडति अबुडीत् बुबोड इति दुर्गादासः
॥

**बुद**, इर् ञ उ निशामने । इति कविकल्पद्रुमः ॥
(भ्वा०-उभ०-सक०-सेट् ।) पञ्चमस्वरी
। इर्
अबुदत् अबोदीत् । ञ बोदति बोदते । उ
बोदित्वा बुत्त्वा निशामनमालोचनं प्रणि-
धानमिति यावत् । इति दुर्गादासः ॥

**बुद्धः**, पुं, (बुध्यते स्म इति । बुध + क्त । यद्वा भावे
क्त बुद्धं ज्ञानमस्यास्तीति अर्शआद्यच् ।)
भगवदवतारविशेषः । स तु
दशावतारान्तर्गत-
नवमावतारः । यथा, --
"ततः कलौ संप्रवृत्ते संमोहाय सुरद्विषाम्
।
बुद्धो नाम्नाञ्जनसुतः कीकटेषु भविष्यति
॥"
इति श्रीभागवते १ स्कन्धे ३ अध्यायः ॥

क्षणभङ्गुरत्वं नन्वस्तु क्षणभङ्गः पूर्ब्बपुञ्जाच्चोत्तर-
पुञ्जोत्पत्तिस्तथा च पुञ्जनिष्ठ एव कुर्व्वद्रूप-
त्वाख्यजातिविशेषः स्मरणजनकतावच्छेदक
इति न दोषः । इति कुसुमाञ्जलिप्रथमस्तवक-
टीकायां रामभद्रः ॥ * ॥ बुद्धानां दशविध
मतभेदमाह ।
"वदन्ति पुत्त्र आत्मेति १ दृढप्राकृतबुद्धयः ।
देह आत्मेति २ चार्व्वाका इन्द्रियाण्यपरे ३
च ते ॥
तेऽन्ये प्राण ४ स्ततोऽन्ये ते मन ५ आत्मेति
वादिनः ।
बुद्धिरात्मेति ६ बौद्धा वै शून्यमात्मेति ७ तेऽपरे ॥
याज्ञिका यज्ञपुरुषं सर्व्वज्ञं ८ स्त्रौगता विदुः ।
निरावरण ९ माहुर्यं दिगम्बरमतानुगाः ॥
चार्वाकाश्चापि लोकानां व्यवहारप्रसिद्ध-
कम् १० ॥"
इत्यात्मप्रकाशः ॥ * ॥
पण्डितः । बुधिते, त्रि । इति मेदिनी । धे, १० ॥
(बुद्धावतारस्य विवरणं यथा, --

इह खलु बौद्धशास्त्रसमूहेषु सम्प्रोक्ताः
पञ्चविंशतिर्बुद्धा दृश्यन्ते । तेषां शुद्धोदनौरसात्
मायादेवीगर्भजातः शाक्यसिंहसर्व्वार्थसिद्धार्क-
बन्धुगौतमेति नामचतुष्टयेन प्रसिद्धोऽन्तिम-
तमः लोकविश्रुतो बुद्धः कपिलवस्तुनगरे
कलेश्चतुःशतषडशीत्यधिकद्विसहस्रमितेषु गते-
ष्वब्देषु शुक्रवासरे सुरद्विषां सम्मोहनाय
साक्षाद् विवेकमूर्त्तिः स्वेच्छाविग्रहेण प्रादुर्बभूव ।

अथ स वयसा सह क्रमेण शीलगुणसाहस-
रूपौदार्य्यबलवीर्य्यादिभिर्व्वर्द्धते स्म । उदिते यौधने
पित्राज्ञया स शाक्यान्वयजां मनोज्ञां रूप-
लावण्यवतीं दण्डपाणितनयां गोपानाम्नीमनु-
मतामुपयेमे ।

जननसमयेऽस्य गणकाच्छ्रुतवान् नरेश्वरः
शुद्धोदनः व्याधिग्रस्तजराजर्ज्जरसन्न्यासिमृतजन-
दर्शनाज्जातवैराग्यः पुत्त्रस्ते गृहं सन्त्यक्ष्य-
तीति । तस्मात् सञ्जातशङ्को राजा शिल्पिभि-
रुपवनपरिवृतं सुगुप्तं रम्यं हर्म्म्यत्रयं भूभूषणं
निर्म्मापयामास । तत्रासौ युवतीजनपरिवेष्टित-

कारे हृदयादिद्वयमाहुः ।
धातोरनेकार्थत्वात्
बुक्क्यते स्वादुत्वात् मृग्यते बुक्कं बुक्क किं श्वादि-
शब्दे घञ् । नान्तः पुंलिङ्गोऽप्ययम् । स्त्रीलि-
ङ्गाऽपीत्येके । इति स्वामी ॥ बुक्का स्त्री बुक्कः
पुमानपि । शोणितेषु स्त्रियां बुक्का बुक्कस्तु
समये द्वयोरिति रभसात् । नदादित्वात् स्त्रियां
बुक्वीत्यन्ये । बुक्कनान्तं क्लीवमव्युत्पन्नमितिरुद्र-
कलिङ्गादयः ॥ उरस्यपि च बुक्कायां हृदयं
मानसेऽपि चेति त्रिकाण्डशेषः ॥ बुक्कशब्दस्य
उकारस्य ऋकारादेशे तथैव बृक्कादिरूपञ्च ।
अग्रञ्च तन्मांसञ्चेति अग्रमांसं बुक्कस्याग्रं
संमुखीभूतं मांसं बुक्काग्रमांसमित्येकं नामे-
त्यन्ये । इति तट्टीकायां भरतः ॥

**बुक्कः**, पुं, (बुक्कयति शब्दायते इति । बुक्क + अच् ।) छागः । इति त्रिकाण्डशेषः ॥ समये
पुं, स्त्री । इति रभसः ॥

**बुक्कनं**, क्ली, (बुक्क कि श्वादिशब्दे + भावे ल्युट् ।) कुक्कुरशब्दः । तत्पर्य्यायः । भषणम् २ । इति
हेमचन्द्रः । ६ । ४३ ॥

**बुक्का**, स्त्री, (बुक्क + टाप् ।) बुक्कम् । इत्य-
मरटीकायां भरतः । शोणितम् । इति रभसः ॥

**बुक्का**, [न्] (बुक्क + कनिन् ।) पुं, बुक्कम् । इत्यमर-
टीकायां भरतः ॥

**बुक्काग्रमांसं**, क्ली, (बुक्कस्याग्रमांसं ।) हृदयम् ।
अञ्जनस्य सुतः । अजिनसुत इति पाठे अजि-
नोऽपि स एव । कीटकेषु मध्ये गयाप्रदेशे ।
इति श्रीधरस्वामी ॥ तत्पर्य्यायः । सर्व्वज्ञः २
सुगतः ३ धर्म्मराजः ४ तथागतः ५ समन्त-
भद्रः ६ भगवान् ७ मारजित् ८ लोकजित् ९
जिनः १० षडभिज्ञः ११ दशबलः १२ अद्वय-
वादी १३ विनायकः १४ मुनीन्द्रः १५ श्रीघनः १६
शास्ता १७ मुनिः १८ । इत्यमरः । १ । १ । १३ ॥
धर्म्मः १९ त्रिकालज्ञः २० धातुः २१ बोधि-
सत्त्वः २२ महाबोधिः २३ आर्य्यः २४ पञ्च-
ज्ञानः २५ दशार्हः २६ दशभूमिगः २७ चतु-
स्त्रिंशज्जातकज्ञः २८ दशपारमिताधरः २९
द्वादशाक्षः ३० त्रिकायः ३१ संगुप्तः ३२ दया-
कूर्च्चः ३३ खजित् ३४ विज्ञानमातृकः ३५
महामैत्रः ३६ । इति हेमचन्द्रः । २ । १४६ ॥
धर्म्मचक्रः ३७ महामुनिः ३८ असमः ३९
खसमः ४० मैत्री ४१ बलः ४२ गुणाकरः ४३
अकनिष्ठः ४४ त्रिशरणः ४५ बुधः ४६ वक्री ४७
वागाशनिः ४८ जितारिः ४९ अर्हणः ५०
अर्हन् ५१ महासुखः ५२ । इति शब्दरत्ना-
वली ॥ महाबलः ५३ । इति जटाधरः ॥
* ॥
मुपच्छन्दितं विषयविमुग्धचेतसं तनयं निवृत्त-
निर्गमनम् स्वच्छन्देनान्ववासयत् । अथ गच्छति
कालेऽस्य शिथिलीबभूव भोगसन्तर्षः । ततः
कारागारमिव प्रतीयमानं निष्कुटनिकेतं विहा-
यास्य धरण्या नानास्थानं द्रष्टुमिच्छा सञ्जाता ।
ततः सोऽस्मै पित्रे शुद्धोदनाय सम्बोधया-
मास पर्य्यट्य नगरं प्रजानामृद्धिमवस्थाञ्च विलो-
कयितुं वासना मे बलवतीति । राजा प्रथमं
निवारयितुमियेष प्रलोभनेन । स नैव तु
ततो विरराम । अथ विज्ञाय निर्बन्धं पुत्त्रस्य
मन्त्रिणमादिदेश, कुमारे शाक्यसिंहे भ्रमितु-
मारब्धे राष्ट्रे मे जरातुरसन्न्यासिमृतमानवाः
केनापि कारणेन राजवर्त्मनि नोपतिष्ठन्तामिति
विघोषयेति । तथानुष्ठिते कुमारः रथमारुह्य

| | | |
|---|---|---|
| इत्यमरटीकायां रायमुकुटः ॥ | ईश्वरनिरूपणे बुद्धविशेषाणां मतमाह । सर्व्वज्ञ इति सौगताः । निरावरण इति दिगम्बराः । लोकव्यवहारसिद्ध इति चार्व्वाकाः । शरीराण्येव चेतनानि गौरोऽहं जानामीत्यादिज्ञानेन गौर वत्त्वज्ञानवत्त्वयोः सामानाधिकरण्यानुभवा- दिति चार्व्वाकाणां मतञ्च । तेषां मते जगतः | |

सारथिना सह बहिर्निर्गत्य
भ्रमितुमारब्ध-
वान् । ततश्चतुर्द्दिक्षु
प्रकृतिभिस्तारस्वरैर्जयोऽस्य
प्राघोषि । नगरं वीक्ष्यासौ मनसि परां
मुदं
प्राप्तवान् ।
अथ स जरया जर्ज्जरतनुं मानवमेकं
दृष्ट-
वान् । इतः प्राक् कदाचिदपि स
शाक्यसिंहो
जगतो दुःखं नानुभूतवान् इदानीं
निरीक्ष्य
प्रथमं तं जराग्रस्तं विवरणमस्य विज्ञातुं
कुतू-
हली सारथिं पप्रच्छ । तदुक्तं यथा, --
"किं सारथे ! पुरुष दुर्ब्बल अल्पस्थाम
उच्छुष्कमांस रुधिरत्वचस्नायुनद्धः ।
श्वेतशिरो विरलदन्तकृशाङ्गरूप
आलम्ब्य दण्ड व्रजतेऽसुखं स्खलन्त ॥
सारथिराह ।
एषो हि देव ! पुरुषो जरयाभिभूतः
क्षीणेन्द्रियः सुदुःखितो बलवीर्य्यहीनो ।
बन्धुजनेन परिभूत अनाथभूतः
कार्य्यासमर्थ अपविद्ध वनेव दारुः ॥
वोधिसत्त्व आह ।
कुलधर्म्म एष अयमस्य हितं भणाहि
अथवापि सर्व्वजगतोऽस्य ह्यवस्था ।
शीघ्रं भणाहि वचनं यथभूतमेत-
च्छ्रुत्वा तथार्थमिह योनि सञ्चिन्तयिष्ये
॥
सारथिराह ।
नैतस्य देव ! कुलधर्म्म न राष्ट्रधर्म्मः
सर्व्वे जगस्य जरयौवनधर्षयाति ।
तुभ्यंपि मातृपितृबान्धवज्ञातिसंघो
जरया अमुक्तं न हि अन्यगतिर्जनस्य ॥"
बोधिसत्त्व आह ।
धिक् सारथे ! अबुधबालजनस्य बुद्धि-
र्यद्यौवनेन मदत्त जरां न पश्यी ।
आवर्त्तयाश्विह रथं पुनरहं प्रवेक्ष्ये
किं मह्य क्रीडरतिभिर्जरयाश्रितस्य ॥"

अथ खलु भिक्षवो बोधिसत्त्वः प्रतिनिवर्त्त्य
रथवरं पुनरपि पुरवरे प्राविशत् ।
इति हि भिक्षवो बोधिसत्त्वोऽपरेण कालसम-
येन पश्चिमेन नगरद्वारेणोद्यानभूमिमभिनि
ष्क्रमन्महता व्यूहेन सोऽद्राक्षीत् पुरुषं मृतं
कालगतं मार्गे समारोपितं चेलवितानीकृतं
ज्ञातिसङ्घपरिवृतं सर्व्वैरुदद्भिः क्रन्दद्भिः परि-
देवमानैः प्रकीर्णकेशैः पार्श्वावकीर्णशिरोभि-
रुरांसि ताडयद्भिरुत्क्रोशद्भिः पृष्ठतोऽनुग-
च्छद्भिः । दृष्ट्वा च पुनर्बोधिसत्त्वो जानन्नेव
सारथिमिदमवोचत् ।
"किं सारथे ! पुरुष मञ्चोपरिगृहीतो
उद्धूत केशनख पांशु शिरे क्षिपन्ति ।
परिचारयित्व विहरन्तुरस्ताडयन्तो
नानाविलापवचनानि उदीरयन्तः ॥"
सारहिराह ।
"एषो हि देवपुरुषो मृतु जम्बुद्वीपे
न हि भूय मातृपितृ द्रक्ष्यति पुत्त्रदाराम् ।
अपहाय भोगगृहमातृपितृमित्रज्ञातिसङ्घं
परलोक प्राप्तु न हि द्रक्ष्यति भूय ज्ञातिम् ॥"
बोधिसत्त्व आह ।
"धिग्यौवनेन जरया समभिद्रुतेन
आरोग्य धिग्विविधव्याधिपराहतेन ।
धिग्जीवितेन पुरुषो न चिरस्थितेन
धिक्पण्डितस्य पुरुषस्य रतिप्रसङ्गैः ॥
यदि जर न भवेया नैव व्याधिर्न मृत्यु-
स्तथपि च महदुःखं पञ्चस्कन्धं धरन्तो
किं पुन जरव्याधिमृत्यु नित्यानुबद्धाः
साधु प्रतिनिवर्त्त्य चिन्तयिष्ये प्रमोचम् ॥
अथ खलु भिक्षवो बोधिसत्त्वः प्रतिनिवर्त्त्य तं
रथवरं पुनरपि पुरं प्राविशत् ॥ इति हि
भिक्षवो बोधिसत्त्वस्यापरेण कालसमयेनोत्तरेण
नगरद्वारेणोद्यानभूमिमभिनिष्क्रामतस्तेन देव
पुत्त्रैर्बोधिसत्त्वस्यानुभावेनैव तस्मिन् मार्गे
भिक्षुरभिनिर्म्मितोऽभूत् ॥ अद्राक्षीद्बोधिसत्त्वस्तं
भिक्षुं शान्तं दान्तं संयतं ब्रह्मचारिणमनति
क्षिप्तचक्षुर्युगमात्रप्रेक्षिणं प्रासादिकेनेर्य्यापथेन
सम्पन्नं प्रासादिकेनाभिक्रमप्रतिक्रमेण सम्पन्नं
प्रासादिकेनालोकितव्यवलोकितेन प्रासादिकेन
सङ्घाटीपिण्डपात्रचीवरधारणेन मार्गे स्थितम् ।
दृष्ट्वा च पुनर्बोधिसत्त्वो जानन्नेव सारथिमिद-

साधु सुभाषितमिदं मम रोचते च
प्रव्रज्य नाम विदुभिः सततं प्रशस्ता ।
हितमात्मनश्च परमत्त्वहितञ्च यत्र
सुखजीवितं सुमधुरममृतं फलञ्च ॥"
इति ललितविस्तरे १४ अः ।
ततः संक्षुब्धचित्तोऽसौ स्वकीयं शुद्धान्तं
विवेश । दिवसेऽस्मिन् राहुलनामा पुत्त्रोऽस्य
समजनि । राजा शुद्धोदनः स्वाङ्गजस्य भ्रमण-
वृत्तान्तं सर्व्वं निशम्यास्य सन्न्यासग्रहणं शङ्क-
मानः चतुर्षु नगरद्वारेषु सेनाव्यूहान् सन्निवेश-
यति स्म तस्य परिरक्षणार्थम् ।
रतिरसाभिज्ञान् युवतिजनानन्तःपुरेषु बहु-
तरान् प्रेषयामास बोधिसत्त्वस्य प्रमोहनाय ।
अथागता रजनी, सिद्धार्थस्य तु चित्तं व्याकु-
लितमतीव गेहात् प्रव्रज्य भैक्ष्यग्रहणार्थम् ।
ततो नृत्यादिप्रमोदात् परं निद्रिताः सर्व्वा
युवती
र्विलोक्य शयनात् शनैः शनैरुत्थितो
व्यलोकयत् ।

"तत्र काश्चिद्व्यपकृष्टवस्त्राः
काश्चिद्-

विधुतकेश्यः काश्चिद्विकीर्णाभरणाः काश्चिद्-
विभ्रष्टमुकुटाः काश्चिद्विहतैरंशैर्विगोपितगात्र्यः
काश्चिद्विसंस्थितमुखाः काश्चिद्विपरिवर्त्तित-
नयनाः काश्चित् प्रस्रवन्त्यो लालाभिः
काश्चि-
द्धसन्त्यः काश्चित् प्रहसन्त्यः
काश्चित्प्रलपन्त्यः
काश्चिद्दन्तान् कटकटायन्त्यः काश्चिद्विवर्ण-
वदनाः काश्चिद्विसंस्थितरूपाः काश्चित् प्रल-
म्बितबाहवः काश्चिद्विक्षिप्तवदनाः काश्चिदुद्-
घाटितशीर्षाः काश्चिदवगुण्ठितशीर्षाः काश्चि-
द्विपरीतवर्त्तितमुखमण्डलाः काश्चित्
प्रध्वस्त-
शरीराः काश्चिद्विभग्नगात्र्यः काश्चिन्निकुब्जाः
खुरुखुरायमानाः काश्चिन्मृदङ्गमुपगुह्य परि-
वर्त्तितशीर्षशरीराः काश्चिद्वीणावल्लक्याद्यपरि-
बुद्धपाणयः काश्चिद्वेणुं दन्तैः कटकटायन्त्यः
काश्चित्
किम्पलनकुलसम्पताडावकर्षितवाद्य-

इति ललितविस्तरे १४ अध्याये।

अथ शाक्यसिंहः सारथिं सन्दिदेश रथं

सञ्चालयेति। गत्वा नगरस्य दक्षिणे द्वारि
व्याधिग्रस्तं
यातनापरीतपुरुषमेकमीक्षाञ्चक्रे।
ततः स सारथिं पप्रच्छ। तदुक्तं यथा, --
"किं सारथे ! पुरुष रूपविवर्णगात्रः
सर्व्वेन्द्रियेभि विकलो गुरु प्रश्वसन्तः।
सर्व्वाङ्गशुष्क उदराकुल प्राप्तकृच्छ्रा
मूत्रे पुरीष स्वकि तिष्ठति कुत्सनीये॥"
सारथिराह।
एषो हि देवपुरुषः परमं गिलानो
व्याधीभयं उपगतो मरणान्तप्राप्तः।
आरोग्यतेजरहितो बलविप्रहीनो
अत्राणवीप्रशरणो ह्यपरायणश्च॥"
बोधिसत्त्व आह।
"आरोग्यता च भवते यथ स्वप्नक्रीडा
व्याधिर्भयञ्च इम ईदृश घोररूपम्।
को नाम विजपुरुषो इम दृष्ट्व यस्थां
क्रोडारतिञ्च जनयेच्छुभसंज्ञितां वा॥"

मवोचत्।
"किं सारथे ! पुरुष शान्त प्रशान्तचित्तो
नोत्क्षिप्तचक्षु व्रजते युगमात्रदर्शी।
काषायवस्त्रवसनो सुप्रशान्तचारी
पात्रं गृहीत्व न च उद्धत उन्नतो वा॥
सारथिराह।
एषो हि देवपुरुष इति भिक्षुनामा
अपहाय कामरतयः सुविनीतचारी।
प्रव्रज्यप्राप्तः सममात्मन एषमाणो
संरागद्वेषविगतो तिष्ठति पिण्डचर्य्या॥
बोधिमत्त्व आह।

भाण्डाः काश्चिन्निमेषोन्मेषपरिवर्त्तनयनाः काश्चि-
द्विवृत्तास्या एवं तद्विकृतं धरणीतलगतमन्तः-
पुरं निरीक्षमाणो बोधिसत्त्वः श्मशानसंज्ञा-
मुत्पादयति स्म।" तत्रेदमुच्यते।
"तां दृष्ट्व उद्विग्न स लोकनाथः
करुणं विनिश्वस्य इदं जगाद।
अहो वता कृच्छ्रगता व्रजेयं
कथं रतिं बिन्दति राक्षसीगणैः॥
अतिमोहतमावृते दुर्म्मति-
कामगुणैर्न्निर्गुणसंज्ञिनः।
विहगपञ्जरगत्रा यथा नहि
लभन्ति कदाचिद् विनिःसृतम्॥"
इति ललितविस्तरे। १५ अध्याये॥
अतीतेऽथ निशीथे सिद्धार्थाऽश्वपालमाहूयाह
"जरामरणपञ्जरनियतसत्त्वपरिमोचनस्यसम-
यो ह्युपस्थितो मे।" अतएव ग्रहीष्यामि
सन्न्यासम्। विस्मितोऽश्वपालोऽब्रवीत्राज-
पुत्रस्य ते सन्न्यासग्रहणमनुचितं न समर्थोऽसि
सन्न्यासाश्रमस्य कष्टानि सोढुम्।

सिद्धार्थ आह ।
“विवर्जिताः सर्पशिरा यथा बुधै-
र्विगर्हिता मीढघटा यथाशुचिः ।
विनाशकाः सर्व्वसुखस्य छन्दक
ज्ञात्वा हि कामान्न विजायते रतिः ॥”
छन्दक शृणु यानि दुःखशतामार्षिता पूर्व्व-
जन्मान्तरे ।
बन्धनारुन्धनास्ताडनास्तर्ज्जनाः कामहेतो-
र्मया नो च निर्व्विदभूत् ॥
संस्कृतमानसं प्रमदवसगतञ्च
मोहाकुलं दृष्टिजालावृतम् ।
अन्धभूतं पुरा आत्मसंज्ञा-
ग्रहाकारका वेदनावीतिवृत्ता इमे ॥
घर्म्माज्ञानतः सम्भूता चलचपलाऽ-
नित्यमेघैः समा विद्युद्भिः सदृशाः ।
ओसबिन्दूपमा ऋक्तुच्छा असाराः
अनात्मा च शून्यस्वभावा इमे सर्व्वशः ॥
स्वयमहमभिरुह्य नावामिमात्मानाऽवतीर्य्य
संसार ओघैरहं तारयिष्येऽनन्तं जगत् ।
शोकसंसारकान्ताररोषोर्म्मिरागग्रहा-
व्याकुले वैराकुले दुस्तरे एव चित्तं मम ॥
तदात्मनोत्तीर्य्य इदं भवार्णवं
सर्वैरदृष्टिर्ग्रहक्लेशराक्षसम् ।
स्वयं तरित्वा च अनन्तरं जगत्
स्थलेऽन्तरीक्षे अजरामरे शिवे ॥”
ललितविस्तरे १५ अध्याये ।
अतश्छन्दक ! प्रव्रजाम्यधुनैव
सत्वरमानयाश्वम् ।
तथानुष्ठिते सिद्धार्थोऽसौ स्त्रीतनयगुरुजनान्
सर्व्वान् राज्यमैश्वर्य्यञ्च विहायाश्वमारुह्य
निर्गतः । निजनगराद्द्वादशयोजनदूरस्थितं
मल्लराज्यं प्राप्य तत्रैव वशिष्ठाश्रमसन्निधौ
छन्दकमश्वसहितं विसृज्य कौषेयमपहाय
पिधाय बल्कलवाससमेकाकी वैशालीं नाम-
नगरीमुपतस्थे । तत्र आराढकालामनामा
जिनपुरुषस्त्रिशतकशिष्यैरवात्सीत्,
सिद्धार्थो-
ऽस्य शिष्योऽभूत् । आहैकदा गुरुः,
पवित्रचेता
ऋजुर्भक्तिमान् पुरुष एवालं ब्रह्मचर्य्यं
ग्रहीतुम्,

अत्रासौ कस्मिंश्चिद्दिवसे वदरीमेकिकां
कस्मिं-
श्चिद्वा तण्डुलमेकं कदाचिद्वैकमात्रं कलायं
भक्षयित्वा कस्मिंश्चिदुपोषणेन वा कालं
विलङ्घ्य शुष्कच्छविर्मसीवर्णो बभूव ।
ततोऽसौ
देहमित्थं निभज्य लब्धुं सम्बोधं न
समर्थोभवेय-
मिति विचिन्त्य पोषणकरमाहारं जग्राह ।
दिवसेऽस्मिन् शुद्धोदनः स्वप्नं ददर्श प्रियः
पुत्रो
मे मणिमुक्तादिविभूषितवारणरूपेण
उदुम्बर-
तरुमारुरोह । त्रैलोक्यलोकाः
पूजनायास्या-
गच्छन्तीव, यशोधरापि गोपापरनाम्नी
ददर्श
स्वप्नं विविधम् स्वयं शाक्यसिंहश्च पञ्च,
यथा जगदखिलं शय्या मे, विम्बफलमिव
सुमेरु-
शिखरमुपधानीभूतं मे, वामदक्षिणकरद्वयं
मे
प्राच्यपश्चिमसमुद्रोपरिपादावुभौ मे दक्षि-
णाब्धौ प्लवन्ते, नाभिकमलान् मे
समुत्थितैः
स्थिरिकातृणैश्चापूरितमखिलं नभः ।
ततश्चो-
त्थायासौ ऊरुविल्वोषितायाः
सुजातानामि-
काया नार्य्याः सकाशात् भिक्षां जग्राह ।

> इतः सिद्धार्थो ध्यानं दधार,
> निर्व्वाणे पथि तस्य

सततं परिपन्थी सन्नपि दुर्निवारो मारः
परा-
जितो ध्यानवीरेण योगिसिंहेन पलायनं
चक्रे ।
ततस्तस्यैव कन्दर्पस्य तनये यतेते तन्द्रा
रतिश्च
योगिप्रवरस्य मोहनाय, विफलानि तु
जाता-

संस्कारादागतं विज्ञानमतोऽस्य कारणं स
एवेति । संस्कारस्तर्हि कुत आयातः कारणं
वा किमस्य ? अविद्याया आगतः संस्कार
स्ततोऽस्य कारणमविद्यैवेति ।

> स्फुटमिदानीमविद्यैव कारणं
> जगतोऽखिलस्य ।

ततो विलोमेन प्रकटीभूतं यत् अविद्यायाः
संस्कारः संस्काराद् विज्ञानम्, विज्ञानान्नाम-
रूपे ताभ्यां नामरूपाभ्यां षडायतनम्, षडाय-
तनात् स्पर्शः, स्पर्शाद् वेदना, वेदनायास्तृष्णा
तृष्णाया उपादानम् उपादानात् संसारः
संसाराज्जातिः जातेर्जरामरणमिति ।

> प्रकारेणानेनोत्पन्नो दुःखद्रुमो
> जीवानाम् ।

तदिदानीं प्रतिभातं अविद्यैव मूलमस्य पाद-
पस्य निरस्तायामविद्यायां कुतो दुःखप्रसङ्गः
क्रमेण तस्मात् जन्मजरामरणं दुःखं चिन्ता-
क्लेशः पीडा च सर्व्वे दूरे पलायन्ते । एवं
जीवानामुदेति चित्ताकाशे धर्म्मालोकः ।
उदिते तस्मिन् मनःसंयोगेन ज्ञानं दर्शनं विद्या
स्मृतिर्बुद्धिश्च सर्व्वं प्रत्यक्षीभवति । तत
इदानीं
सिद्ध्वार्थो बुद्धः सञ्जातः ।
ततश्चागतोऽत्र म्बकानगर्य्या राजा बुद्धस्य
श्रीपादपद्मसन्दर्शनाय । सोऽस्मै ह्युपदिदेश
“अहिंसा परमो धर्म्मः ।” इत्यतस्त्वमनुतिष्ठ
तद्धर्म्मं निर्व्वाणमोक्षञ्चान्विष्येति ।

> ततोऽसौ बुद्धो नैरञ्जननाम्नीं नदीं
> क्षिरिका-

वनञ्च त्यक्त्वा उज्ज्वलमुपवनं प्रतस्थे । अत्र स
ऊनपञ्चाशद्वासरानुपोषणमङ्गीकृतवान् । तत
स्तस्मात् स्थानान्निर्गत्य गयां नाहालं बुन्दद्विरं
लोहितवस्तुकं गन्धपुरं सारथिपुरञ्च क्रमेण
गत्वा त्यक्त्वा च काशिकामुपतस्थे, अत्रास्य
कौण्डिन्यः सिद्धः शिष्योऽभूत् बुद्धस्तं नाम्ना
ज्ञानकौण्डिन्यं चकार । कालेऽस्मिन् बहु-
संख्यका लोका आगत्यागत्य बुद्धस्य शिष्या
अभवन् ।

लब्धुञ्च सर्व्वमैश्वर्य्यम् । हृदि यस्य विमलो
निर्व्वाणप्रदीपः प्रदीप्तस्तमः
स्तोमग्रसनपटुर्भवस्य ।
न तस्य सुखदमैश्वर्य्यविजृम्भितगुरुवचनम्।
ततः सप्तशतीं शिष्यततिन्दधानस्य
रुद्रकनाम्नः
साधोः समीपं गत्वा कृत्वानेन सम्भाषणं गय-
शीर्षं जगाम । तत्रोद्भावितमनेन यद् ब्राह्मणाः
श्रमणाश्च बोधस्वरूपं लब्घुमविशुद्धं
कायमानसं
नियोजयन्ति तदग्निमुत्पादयितुमार्द्रकाष्ठद्वय-
घर्षणमिव वैफल्यं भजते ।
शुष्ककाष्ठखण्डद्वय-
घर्षणेन यथा लब्धमनोरथा मानवास्तद्वत्
कायमनसोर्विशुद्धयोः सतोः स्वतश्च बोध-
लाभः शक्यः । ततःपरमसौ बोधिसत्त्वो
गत्या
ग्राममुरुविल्वाख्यं विजनं तत्रैवोषितुं मनो
दघे । परमयत्नेनात्रैव कायशुद्धिं चित्तशुद्धिञ्च
विधाय आस्फालनाख्यं दुर्द्धरं ध्यानं दधार ।

न्यनयोर्मनोरथानि । ततः सर्व्वेभ्यः
कृच्छ्रेभ्यो
विसुक्तः सिद्धार्थो बोधञ्च विमलं लेभे ।
तदासा-
वधिरूढयोगः मनस्यस्य मुकुरे
प्रतिफलितं
सकारणमखिलं जगत् । ततश्च
चिन्तयामास सः
जीवानां जन्म, तेषु च जीषस्य संयोगो
वियोग-
श्चैव दुःखदुःखान्येतानि । न जानीते
मानवस्तन्
मोहजालेनावृतो दुर्व्विषहं दुःखं सहत इति
।
ततः कस्मादागतं जरामरणमिति चेतसा
कृते
प्रश्नेतेनैव निश्चिनोति सः, यज्जन्मन
एवागच्छति
जरामरणमिति, कुतस्तर्हि ह्यागतं जन्म
किमस्य वा कारणम् ?
संसारादस्माज्जाति-
रतएव भव एव कारणमत्र । भवस्तर्हि कुत
आयतः किमस्य वा कारणं ?
उपादानादागतो
भवस्तदुपादानमेवास्य कारणम् ।
कस्मादुपा-
दानमायातन्तर्हि किमस्य वा कारणं ?
तृष्णाया
आगतमुपादानमतस्तृष्णैव कारणमस्येति
। तर्हि
कुत आयाता तृष्णा कारणं वा
किमस्याः ?
वेदनाया आगता तृष्णा अतो वेदनव
कारण-
मस्याः । कुत आयाता वेदना, अस्या वा
किं
कारणम् ? स्पर्शादायाता वेदना, अतः
स्पर्श
एव कारणं वेदनाया इति । स्पर्शस्तर्हि कुत
आयातः किं वा कारणमस्य ? ।
षडायतना
दागतः स्पर्शस्ततोऽस्य कारणं स एवेति ।

ततः काशीघाम्नः स ऊरुविल्वास्थितं
सेनानी-
नामकं ग्रामं प्रययौ तत्र नैरञ्जनतीरे नाम्ना
उरुविल्वाकाश्यपः शताधिकविंशतिवयाः
पञ्च-
शतशिष्यैरनुगतः प्रतिवसति स्म । लोका
जान-
न्त्यमुमहन्निति । बुद्धो गत्वास्य समीपं प्रदा-
यास्मै ज्ञानोपदेशं विमलं शिष्यं तं चकार ।
दृष्ट्वा शक्तिमलौलिकीं बहवो लोका विस्मिता
धर्म्मं बौद्धं गृहीतवन्तः ।
तदा विम्बसारो मगधराजः शुश्राव गयशीर्षं
बुद्धदेवः प्राप्त इति । गत्वा समीपं प्रपूज्य च
परमया भक्त्यास्य शिष्यत्वं स्वीचकार । ततो
मागधो स्वीयां नगरीं गन्तुं निमन्त्रयामास
तम् । जग्राहास्य प्रणयं बुद्धः । शारीपुत्त्रोऽत्र
मौद्गलायनोऽस्य शिष्योऽभवत् ।
श्रुतवान् कोशलपतिः प्रसेनजित् बुद्धो देवो
राजगृहे जेतवने प्रतिषसत्यधुनेति । गत्वा च
तत्र त्वरितं बुद्धसन्निधिमुवाच, पूर्णकाश्यपः
परिव्राजकगोशालः वैरापुत्त्रसञ्जयः
अजितकेशः

| | | |
|---|---|---|
| | कुत आयातं षडायतनं कारणं वा किमस्य ? नामरूपाभ्यामागतं षडायतनम् अतएवास्य कारणमेव तैति । कुतस्तर्ह्यायाते नामरूपे कारणं वा किमनयोः ? विज्ञानादागते नाम-रूपेऽतोऽनयोः कारणं विज्ञानमिति । कुत आयतं विज्ञानन्तर्हि कारणं वा किमस्य ? | |

कम्बल इत्यते अन्ये च बहवो बुद्धर्षयस्तिष्ठन्ति, न ते लोके कदापि बुद्धनाम्ना परिचाययितुं शेकुस्तर्हि भवान् किं न लज्जते अहं बुद्ध इत्यात्मानं परिचाययितुम् । बुद्धस्तम् ‘कुमार-दृष्टान्तसूत्रं, श्रावयामास तेनोन्मीलितचक्षुः शिष्योऽभूत्तस्य ततः प्रसेनजित् कोशलराजः । दीक्षिते राज्ञि कोशलेश्वरे बुद्धः शुद्धोदनाय संवादं प्रेषयामास “राजन् ! पुत्रस्ते पपावि-दानीं मृत्युनिवारणममृतम् । तेनैव सोऽखिलस्य जगतस्तृष्णां पापीयसीं वारयामास, शुद्धोदनः शाक्यपतिराकर्ण्य वृत्तान्तं परां मुदमवाप । आनेतुं पुत्रं कपिलवस्तुनगर्य्यामस्मैदूतं पुनः पुनः प्रेषितवान् यो यः प्रयाति दूतोऽस्य सकाशं न स पुनः प्रतिनिवृत्तः स्थितोऽस्य दोक्षितस्तत्रैव । शुद्धोदनः साधुं कालुदायीति-नामानं पत्रेण सह प्रेषितवान् । उदायी प्रागगमनादङ्गीचकार यदि चाहं दीक्षितोऽप्य-भविष्यम् वारमेकमपि प्रतिन्यवर्त्तिष्ये । उदायी बुद्धस्य समीपं गत्वैव दीक्षितः । बुद्धस्तं प्रतिज्ञा-
परिपूरणाय शुद्धोदनस्यान्तिकं प्रेषयामास । उदायी गत्वाह राजानं भो भूप ! देवो बुद्धो ऽत्राजिगमिषुर्न्नत्ववस्थातुमिच्छुर्न्नगर्य्याम् विहारे-ऽवस्थातुमियेष सः । राजा जेतवनस्थमिव न्यग्रोधारामं कपिलवस्तुनगरे विरचय्यागमन-मस्य प्रतीक्षाञ्चक्रे । तत्रागत्य बुद्ध्वो न्यग्रोधारामे
तस्मिन्नुवास । अत्रागत्य पितृव्यौ शुद्धोदनोऽमृ-तोदनश्चास्य लक्षं लक्षं शाक्यसन्ततयश्च शिष्या
अभूवन् । तत्रावस्थानसमये बुद्धस्य पालयित्री गौतमी वनिता यशोधरा च भैक्षाश्रमं गृहीत-वत्यौ पुत्रोऽपि राहुलोऽजातकनिष्ठो जनकेन दीक्षितः ।

ततो बुद्धो गृध्रकूटमागत्य वसतिञ्चक्रे । समये-

ऽस्मिन् देवदत्तोऽस्य ज्ञातिजः शत्रुः शिल्पिनं दाक्षिणात्यादानिनाय । तेन च निहन्तुं बुद्धं कूटयन्त्रं निरमायि । अनेनाहतो बुद्धो व्यथां प्राप निक्षेपणावसरे यन्त्रस्य तं बुद्धं रिरक्षिषुः कीभवन्ति । इत्थमुपदेशेन बुद्धस्य अजातशत्रो-
र्मानसं तत् क्षणादेव प्रवणं बभूव । योऽस्य जुगुप्सापात्रमासीत् स इदानीं भक्तिपात्रमस्या-
भूत् । अजातशत्रुर्बुद्धाद् दीक्षां जग्राह ।

गृध्रकूटाद्बुद्धः पाटलीग्राममाजगाम । कपि-

लनामात्र साधुर्ब्राह्मणोऽनेन व्यलोकि । सम्भाष्य
तं पथि गच्छन्नसौ चतुर्द्दिशं निरीक्षाञ्चक्रे, आनन्दोऽस्य परिचरो जिज्ञासयामास किमित्थं
निरीक्षसे व्यापारयंश्चक्षुषीति । बुद्ध आह आनन्द ! परिहास्येऽहमिमं लोकमिदानीम् । ततः स आम्रग्रामं जम्बुग्रामं भण्डग्रामं हस्ति-ग्रामम् अन्यांश्च वृजिनां मल्लानाञ्च ग्रामा-नतिक्रम्य भोजनगरं प्राप्तः । स्थानादस्माज्ज-
लुकाख्यमहावनमागत्यावस्थितः। अत्र कुण्ड-
नाम्नो धातुगालकाद् बणिग्विशेषादाहार्य्यं गृहीतवान् ।
ततोऽसावानन्दं सम्बोघयामास भो नगरीं कुशीं
गन्तास्मि । अतःपरं तथागतो नगरीं पावा-मतिक्रम्य नदीं हिरण्वतीं तीर्त्वा निविडं वनमेकं
प्राप्तः । अत्रानन्दं प्राह पार्श्वयोरहन्तीव्रवेदनया समाक्रान्तोऽस्मि, अतोऽहमत्रैव तिष्ठामीति । आनन्दो जलमानिनाय प्रक्षाल्य पादौ बुद्धो ध्यानं समाललम्बे । कालेऽस्मिन्नागत्य पुक्कशो
मल्लराजः पादौ बुद्धस्य प्रपूजयामास । बुद्धोऽस्य
दीक्षां चकार । सोऽस्मै दत्तवान् सौवर्णानल-ङ्कारान् प्रणम्य च प्रस्थितः । गते मल्लराजे आनन्दं प्राह बुद्धः प्रेयान् मे आनन्द ! त्वं परि-
मेव तदर्थं यतस्वेति । इत्थं परमकृपालुर्बुद्धदेवो निर्व्वाणं प्राप ।
इत्थं स हरेरवतारः --
“विकीर्य्य विज्ञानमयीं प्रभां प्रभु-
र्जगत्प्रदीपः प्रथितः प्रभाकरः ।
बुद्धः स राशिर्म्महसां महोज्ज्वलो
ज्वलंश्च निर्व्वाणपदं परं गतः ॥
प्रक्षाल्य त्रैलोक्यमलं मलीमसं
प्रवृद्धहिंसारसदूषितं विभुः ।
प्रबोधधाराधरभूरिवारिभी
रराज देवो भुवि बोधभास्करः ॥”
कुशीनगरस्थिते मुकुटबन्धनचैत्येऽस्य शिष्याः
देहं भस्मीभूतं चक्रुः । शिष्यव्यूहेनास्य पवित्र-
देहभस्मावशेषार्थं विवदमानेन निरणा भस्मभिरेभिरष्टप्रदेशेव्वष्टौ चैत्या निर्म्मिता भवन्त्विति ॥)

**बुद्धद्रव्यं**, क्ली, (बुद्धं स्तूपाकारतो ज्ञातं द्रव्यम् ।)
स्तौपिकम् । लोत् इति भाषा । इति त्रिकाण्ड-
शेषः ॥

**बुद्धिः**, स्त्री, (बुध्यतेऽनयेति । बुध् + क्तिन् ।)
निश्चयात्मिकान्तःकरणवृत्तिः। इति वेदान्त-
सारः ॥ सविकल्पकज्ञानम् । इति चण्डी-टीकायां नागभट्टः ॥ तत्पर्य्यायः । मनीषा २
धिषणा ३ धीः ४ प्रज्ञा ५ शेमुषी ६ मतिः ७
प्रेक्षा ८ उपलब्धिः ९ चित् १० सम्बित् ११
प्रतिपत् १२ ज्ञप्तिः १३ चेतना १४ । इत्यमरः ।
१ । ५ । १ ॥ धारणा १५ प्रतिपत्तिः १६ मेधा
१७ मननम् १८ मनः १९ ज्ञानम् २० बोधः

कुम्भीरस्तत्प्रहारेण प्राणांस्त्यत्याज।
कालेऽस्मिन् विम्बसारे मागधे पञ्चत्वं गते
अजातशत्रुर्लुब्धो दुर्द्दान्तो मगधं शशास, देव-
दत्तोऽस्य मित्रमासीत्। एकदाजातशत्रुर्बुद्ध-
सन्निधावागत्य पप्रच्छ तं "नानाकर्म्मसु
व्यासक्तो
मनुष्यो धनमभीष्टमुपार्ज्जयितुं यतते, प्राप्य
तु वाञ्छितं धनं सुखी च भवति, धर्म्मे तथा तु
निधाय मनस्तद्रूपं मुखं प्रत्यक्षमाप्नुयात् किम्?
बुद्धः प्रत्युवाच किं कर्म्मणा यागेन होमेन वा।
न्यायान्यायौ विफलौ अधमानामुत्तमानाञ्च
तिरस्कारपुरस्कारौ च तद्वन् निष्फलौ। पितरौ
नात्मीयौ च योऽस्मिन् जगति प्राप्तवान् महा-
सत्यम्, सत्ये पथि प्रविष्टवांश्च जानाति स एव
जन्मैव मृत्युरिति। सोऽस्मिन् जन्मन्येवाक्षयो-
ऽव्ययो निर्व्वाणं मोक्षं लभते न पुनरायाति सः।
पृथिव्यादिभूतचतुष्टयेऽस्य यथाक्रमं भूतान्ये-

धापयालङ्कारान् सौवर्णानङ्गेष्विति। तथानु-
ष्ठिते तदानीं देहस्य ज्योतिषास्याखिलं जगद्
व्यालोकितमिवासीत्। भक्तिभरेणानन्दः
प्राह
भगवन्! न दृष्टं कदापि मयात्रभवतामेतादृश-
मौज्ज्वल्यं देहस्य। दयस्व तावत् कथय
कारणञ्चात्रेति। चकार प्रत्युत्तरं बुद्धो देवो
निबोध आनन्द! निर्व्वास्यतः प्रदीपस्य
शिखे-
वाङ्गकान्तिर्मे व्युत्क्रान्तेत्यत्र कारणम्।
अनन्तरमुभौ मिलित्वा हिरण्वत्यास्तीरे
आज-
ग्मतुः। बुद्धस्तत्र स्वीयं समस्तं परिच्छदं
परि-
हायैकवसनो नद्या हिरण्वत्याः कुश्याश्च
नगर्य्या उभययोर्मध्यदेशस्थं वनं विविक्तं
विवेश।
पथि प्राह चानन्दं क्लान्तस्य मे शय्यां
विधत्-
स्वेति। आनन्दः शय्यां सज्जीचकार, सुप्तो-
त्थितो बुद्ध आनन्दाय भिक्षुकाणां कर्त्तव्यं
सूत्रान्तं विनयं मातृकादीनि धर्म्मतत्त्वाम्युप-
दिदेश। आनन्दस्तत्सर्व्वं समाहितेन मनसा
जग्राह। तत आनन्दमादिदेश सालमहि-
रुहयोर्मध्ये शय्यां स्थापय निशीथेऽद्य मे शेषं
विजानीहीति। ततो बुद्धस्तत्रैव
समाधिमाधाय
ह्यपार्थिवं ज्योतिरवलोकयामास ततोऽसौ
चिन्तयति स्म निर्व्वाणम्।

> भक्तः परमानन्दो रुरोद गण्डं
> संप्लाव्यास्य

विगलितश्चाश्रुप्रवाहोऽविरलधारयातमाह
बुद्ध आनन्द! संसारोऽयमसारः सारो
निर्व्वाण-

२१ हृल्लेखः २२ संख्या २३ प्रतिभा २४
। इति
राजनिर्घण्टः ॥ आत्मजा २५ पण्डा २६
विज्ञा-
नम् २७। इति शब्दरत्नावली ॥ * ॥
अस्याः
स्वरूपं यथा, --
"बुद्धिर्विवेचनारूपा सा ज्ञानजननी श्रुतौ
॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २३ अध्यायः
॥
अस्या अध्यात्माधिभूताधिदैवतानि यथा,
--
"अध्यात्मं बुद्धिरित्याहुः
षडिन्द्रियविचारिणी।
अधिभूतञ्च मन्तव्यं ब्रह्मा तत्राधिदैवतम्
॥"
इति महाभारते आश्वमेधिकपर्व्व ॥ * ॥
सा च सात्त्विकराजसतामसभेदेन त्रिविधा
।
सात्त्विकी यथा, --
"प्रवृत्तिञ्च निवृत्तिञ्च कार्य्याकार्य्ये
भयाभये।
बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थ!
सात्त्विकी ॥"
राजसी यथा, --
"यथा धर्म्ममधर्म्मञ्च कार्य्यञ्चाकार्य्यमेव
च।
अयथावत् प्रजानाति बुद्धिः सा पार्थ!
राजसी ॥"
तामसी यथा, --
"अधर्म्मं धर्म्ममिति या मन्यते तमसावृता
।
सर्व्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ!
तामसी ॥"
इति श्रीभगवद्गीता ॥

तस्याः पञ्च गुणा यथा, --
"इष्टानिष्टविपत्तिश्च व्यवसायः समाधिता ।
संशयः प्रतिपत्तिश्च बुद्धेः पञ्च गुणान् विदुः ॥"
इति महाभारते मोक्षधर्म्मः ।
इष्टानिष्टविपत्तिः इष्टानिष्टानां वृत्तिविशेषाणां
विपत्तिर्नाशः निद्रारूपा वृत्तिरित्यर्थः । व्यव-
सायः उत्साहः । समाधिता चित्तस्थैर्य्यं
चित्तवृत्तिनिरोध इत्यर्थः । संशयः
कोटिद्वयस्पृक्
ज्ञानम् । प्रतिपत्तिः प्रत्यक्षादिप्रमाणवृत्तिः ।
इति तट्टीका ॥ * ॥ तस्याः सप्त गुणा यथा --
"शुश्रूषा श्रवणञ्चैव ग्रहणं धारणन्तथा ।
ऊहोपोहोऽर्थविज्ञानं तत्त्वज्ञानञ्च धीगुणाः ॥"
इति हेमचन्द्रः ॥ * ॥
तस्या वृत्तिः पञ्चधा यथा । प्रमाणम् १ विप-
र्य्ययः २ विकल्पः ३ निद्रा ४ स्मृतिः ५ । इति
पातञ्जलम् ॥ * ॥ बुद्धिक्षयकरा यथा, --
"शोकः क्रोधश्च लोभश्च कामो मोहः परासुता
।
ईर्ष्या मानो विचिकित्सा कृपासूया जुगुप्सता ॥
द्वादशैते बुद्धिनाशहेतवो मानसा मलाः ।"
इति कालिकापुराणे १८ अध्यायः ॥ * ॥
अपि च ।
"बुद्धिक्षयकरा एते माषकासवमृत्तिकाः ॥"
बुद्धिबृद्धिकरा यथा, --
"निम्बाटरूषवृन्ताश्च बुद्धिवृद्धिकरा मताः ॥
बुद्धिक्षयकरान्नित्यं त्यजेद्राजा च भोजने ।
भोजयेदन्वहं बुद्धिबृद्धिहेतुं नृपोत्तम ! ॥"
इति कालिकापुराणे ८९ अध्यायः ॥ * ॥
न्यायमते सा विभुगुणः पुनर्द्विविधा अनुभूतिः
स्मृतिश्च । यथा, --
"विभुर्बुद्ध्यादिगुणवान् बुद्धिस्तु द्विविधा मता ।
अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्व्विधा ॥
प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे।"
इति भाषापरिच्छेदः ॥

**बुद्धिमान्,** [त्] त्रि, (बुद्धिर्विद्यते यस्य । बुद्धि +
मतुप् ।) बुद्धियुक्तः । ज्ञानवान् । यथा, --
"तद्भुज्यते यद्द्विजभुक्तशेषं
स बुद्धिमान् यो न करोति पापम् ॥"
इति गारुडे १५५ अध्यायः ॥

एकादशं मनो ज्ञेयं
स्वगुणेनोभयात्मकम् ।
यस्मिन् जिते जितावेतौ भवतः
पञ्चकौ गणौ ॥"

**बुद्बुदः**, पुं, वर्त्तुलाकारजलविकारः । जलविम्बुकी
इति भुड्भुडि इति च ख्यातः ।
बुद्बुदोऽम्बु-
ष्फोट इत्यरुणः । इत्यमरभरतौ ॥
अन्यच्च ।
"अब्भ्रच्छाया तृणादग्निर्नीचसेवा पथे
जलम् ।
वेश्यारागः खले प्रीतिः षडेते
बुद्बुदोपमाः ॥"
इति गारुडे १५ अध्यायः ॥
गर्भस्थावयवविशेषः । यथा, --
"पञ्चरात्रेण कलनं बुद्बुदाकारतां व्रजेत्
॥"
इति सुखबोधः ॥
(यदुक्तं यथा, --
"प्रथमेऽहनि रेतश्च संयोगात्
कललञ्च यत् ।
जायतेबुद्बुदाकारं शोणितञ्च दशाहनि
॥"
इति हारीते शारीरस्थाने प्रथमेऽध्याये
॥)

**बुध**, इर् ज ञ वेदने । इति कविकल्पद्रुमः ॥
(भ्वा०-उभ०-सक०-सेट् ।
ज्वलादिरयम् ।) इर्
अबुधत् अबोधीत् । ज बोधः बुधः ।
ञ बोधति
बोधते । इति दुर्गादासः ॥

**बुध**, औ विज्ञापने । इति कविकल्पद्रुमः । (भ्वा०-
पर०-सक०-अनिट् ।) औ बोद्ध्वा ।
बोधति
गुरुः । इति दुर्गादासः ॥

**बुध**, य ङ औ वेदने । इति कविकल्पद्रुमः ॥

वृत्तान्तं यथा । "मदावलेपाच्च सकलदेवगुरो-
र्बृहस्पतेस्तारां नाम पत्नीं जहार । बहुशस्तु
बृहस्पतिचोदितेन भगवता ब्रह्मणा चोद्यमानः
सकलैश्च देवर्षिभिर्याच्यमानोऽपि न मुमोच ।
तस्य बृहस्पतिद्वेषादुशना पार्ष्णिग्राहोऽभूत् ।
अङ्गिरसश्च सकाशादुपलब्धविद्यो भगवान्
रुद्रो बृहस्पतेः साहाय्यमकरोत् । यतश्चोशना
ततोहि जम्भकुम्भाद्याः समस्ता एव दैत्यदानव-
निकाया महान्तमुद्यमञ्चक्रुः । बृहस्पतेरपि
सकलदेवसैन्यसहायः शक्रोऽभवत् । एवं तयो
रतीवोग्रः संग्रामस्तारानिमित्तस्तारकामय-
नामाभवत् । ततश्च समस्तशस्त्राण्यसुरेषु रुद्र-
पुरोगमा देवाः देवेषु चाशेषदानवा मुमुचुः ।
एवञ्च देवासुराहवक्षोभक्षुब्धहृदयमशेषमेव
जगद् ब्रह्माणं शरणं जगाम । ततश्च भगवान-
प्युशनसं शङ्करमसुरान् देवांश्च निवार्य्य बृह-
स्पतये तारामदात् । ताञ्चान्तःप्रसवामवलोक्य
बृहस्पतिराह । नैष मम क्षेत्रे भवत्यान्यसुतो
धार्य्यत उत्सृजैनं अलमलमतिधाष्टर्येनेति ।
सा च तेनैवमुक्ता पतिव्रता भर्त्तृवचनात्तमिषी-
कास्तम्बे गर्भमुत्सर्ज । स चोत्सृष्टमात्र एवाति-
तेजसा देवानां तेजांस्याचिक्षेप । बृहस्पति-
मिन्दुञ्च तस्य कुमारस्यातिचारुतया साभि-
लाषौ दृष्ट्वा देवाः समुत्पन्नसन्देहास्तारां
पप्रच्छुः । सत्यं कथयास्माकमतिसुभगे! कस्या-
यमात्मजः सोमस्याथ बृहस्पतेरित्युक्तापि सा
तारा ह्रिया न किञ्चिदुवाच । बहुशोऽप्य-
भिहिता यदासौ देवेभ्यो नाचचक्षे ततः स
कुमारस्तां शप्तुमुद्यतः प्राह च । दुष्टाम्ब !
कस्मान्मम तातं नाख्यासि । अद्यैव ते अलीक-
लज्जावत्यास्तथा शास्तिमयमहं करोमि ।
यथा नैवमन्याप्यतिमन्थरवचनाभविष्यतीति ।
अथ भगवान् पितामहस्तं कुमारं सन्निवार्य्य
स्वयमपृच्छत्ताराम् । कथय वत्से ! कस्याय-
मात्मजः सोमस्याथ बृहस्पतेरित्येवमुक्ता लज्जा-
जडमाह सोमस्येति । ततः स्फुरदुच्छ्वसिता-
मलकपोलकान्तिर्भगवानुडुपतिरालिङ्ग्य कुमारं
साधु साधु वत्स ! प्राज्ञोऽसीति बुध इति नाम
चक्रे । इति विष्णुपुराणे ४ अंशे ६ अध्यायः ॥
मत्स्यपुराणे चतुर्व्विंशाध्याये विशेषश्चायम् ।
सूत उवाच ।

**बुद्धिसहायः**, पुं, (बुद्धौ बुद्ध्या कृते कार्य्ये इति

भावः । सहायः ।) मन्त्री । इति हलायुधः ॥

मत्याः साहाय्यकर्त्ता च ॥

**बुद्धीन्द्रियं**, क्ली, (बुद्धेर्बुद्ध्यात्मकं वा इन्द्रियम् ।)

ज्ञानेन्द्रियम् । यथा, --
"मनः कर्णौ तथा नेत्रे रसना त्वक् च नासिके ।
बुद्धीन्द्रियमिति प्राहुः शब्दकोशविचक्षणाः ॥"
इति शब्दरत्नावली ॥
(यथा मनुः । २ । ९०-९२ ।
"श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव
पञ्चमी ।
पायूपस्थं हस्तपादं वाक् चैव दशमी स्मृता ॥
बुद्धीन्द्रियाणि पञ्चैषां श्रोत्रादीन्यनुपूर्ब्बशः ।
कर्म्मेन्द्रियाणि पञ्चैषां पाय्वादीनि प्रचक्षते ॥

(दिवा०-आत्म०-सक०-अनिट् ।) य
ङ बुध्यते
शास्त्रं सुधीः । औ बोद्धा । इति
दुर्गादासः ॥
(जागरार्थे अकर्म्मकोऽपि । यथा, रघौ
। १० । ६ ।
"ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः
॥"
"आदिपुरुषो विष्णुश्च बुबुधे योगनिद्रां
जहौ
इत्यर्थः ॥" इति तट्टीका ॥)

**बुधः**, पुं, (बुध्यते यः । "बुध् +
इगुपधज्ञाप्रीकिरः

कः ।" ३ । १ । १३५ । इति कः ।)
पण्डितः ।
तत्पर्य्यायः । विद्वान् २ विपश्चित् ३
दोषज्ञः ४
सन् ५ सुधीः ६ कोविदः ७ धीरः ८
मनीषी ९
ज्ञः १० प्राज्ञः ११ संख्यावान् १२
पण्डितः १३
कविः १४ धीमान् १५ सूरिः १६
कृती १७
कृष्टिः १८ लब्धवर्णः १९ विचक्षणः
२० दूर-
दर्शी २१ दीर्घदर्शी २२ । इत्यमरः ।
२ । ७ ।
५ ॥ विदग्धः २३ दूरदृक् २४ सूरी
२५ वेदी
२६ वृद्धः २७ बुद्धः २८ विधानगः
२९ प्रज्ञिलः
३० । इति शब्दरत्नावली ॥ व्यक्तः
३१ प्राप्त-
रूपः ३२ सुरूपः ३३ अभिरूपः ३४
बुधानः ३५
कवितावेदी ३६ वप्ता ३७ विदितः
३८ कविः
२९ । इति जटाधरः ॥ (यथा,
नवरत्ने । १ ।
"अत्युग्रं स्तुतिभिर्गुरुं प्रणतिभिर्मूर्खं
कथाभि-
र्बुधं

"ततः संवत्सरस्यान्ते द्वादशादित्यसन्निभः ।
दिव्यपीताम्बरधरः पीताभरणभूषितः ॥
सर्व्वास्त्रशास्त्रविद्विद्वान् हस्तिशास्त्रप्रवर्त्तकः ।
राज्ञः सोमस्य पुत्त्रत्वाद्राजपुत्त्रो बुधः स्मृतः ॥
जातमात्रः स तेजांसि सर्व्वाण्येवाक्षिपद्बली ।
ब्रह्माद्यास्तत्र ते जग्मुर्देवा देवर्षिभिः सह ॥
बृहस्पतिगृहे सर्व्वं जातकर्म्मोत्सवं तदा ।
पप्रच्छुश्च सुरास्तारां केन जातः कुमारकः ॥
ततः सा लज्जिता तेषां न किञ्चिदवदत्तदा ।
पुनः पुनस्तदा पृष्टा लज्जयन्ती वराङ्गना ॥
सोमस्येति चिरादाह ततोऽगृह्णाद्विधुः सुतम् ।

|  | विद्याभी रसिकं रसेन सकलं शीलेन कुर्य्या-<br>द्वशम् ॥”)<br>नवग्रहान्तर्गतचतुर्थग्रहः । स च बृहस्पति-<br>भार्य्यातारागर्भे चन्द्राज्जातः ।<br>तत्पर्य्यायः ।<br>रौहिणेयः २ सौम्यः ३ । इत्यमरः । १ । ३ । २६ ।<br>हेमा ४ वित् ५ ज्ञः ६ बोधनः ७ इन्दुपुत्त्रः ८ ।<br>इति ज्योतिस्तत्त्वम् ॥ * ॥ तस्य जन्मादि- |  |
|---|---|---|

बुध इत्यकरोन्नाम प्रादाद्राज्यञ्च भूतले ॥
अभिषेकं ततः कृत्वा प्रधानमकरोद्विभुः ।
ग्रहसाम्यं प्रदायाथ ब्रह्मा ब्रह्मर्षिसंयुतः ॥
पश्यतां सर्व्वभूतानां तत्रैवान्तरधीयत ।
इलोदरे च धर्म्मिष्ठं बुधः पुत्त्रमजीजनत् ॥”
अन्यत् सर्व्वमाख्यानमेकमेव ॥ * ॥ अस्य वर्णः दूर्व्वाश्यामः । स च उत्तरदिङ्नपुंसकशूद्र-जात्यथर्व्ववेदरजोगुणमिश्रितरसमिथुनराशिमरकतमणिमगधदेशानामधिपतिः । अस्य मित्रं आदित्यः शुक्रश्च । अस्य शत्रुः शशी । अस्य राशिभोगः अष्टादश दिनानि । इति ज्योति-स्तत्त्वम् ॥ * ॥ स तु मगधदेशोद्भवः । अत्रि-वंशजातः । द्व्यङ्गुलदीर्घः । पीतवर्णः । वैश्य-जातिः । चतुर्भुजः । वामोर्द्ध्वक्रमतश्चर्म्मवर-खड्गगदाधारी । सूर्य्यास्यः । सिंहवाहनः । सौम्यः । पीतवस्त्रः । अस्याधिदेवता नारायणः । प्रत्यधिदेवता विष्णुः । धनिष्ठानक्षत्रयुक्तद्वादश्यां जातः । इति ग्रहयज्ञतत्त्वम् ॥ * ॥ स च ग्राम-चारी । शुभग्रहः । नीलवर्णः । सुवर्णद्रव्य-स्वामी । वर्त्तुलाकृतिः । शिशुः । इष्टकागृह-सञ्चारी । वातपित्तकफात्मकः । स्त्रीग्रहः । प्रातःकाले प्रबलः । पक्षिस्वामी । सकलरस-प्रियश्च । इति ज्योतिषम् । अस्य वारे जात-फलं यथा, --
“गुणी गुणज्ञः कुशलः क्रियादौ
विलासशाली मतिमान् विनीतः ।
मृदुस्वभावः कमनीयमूर्त्ति-
र्बुधस्य वारे प्रभवो मनुष्यः ॥”
इति कोष्ठीप्रदीपः ॥ * ॥
सूर्य्यवंशीयराजविशेषः । यथा, --
“तस्मात् कृतिरथस्तस्य देवामीढस्ततो बुधः ।
बुधाच्च विबुधश्चैव तस्मान्महाधृतिस्ततः ॥”
इत्यग्निपुराणम् ॥
(वेगवतो राज्ञः पुत्त्रः । यथा, भागवते । ९ । २ । ३० ।
“तत्सुतः केवलस्तस्मात् बन्धुमान् वेगवांस्ततः ।
बुधस्तस्याभवद् यस्य तृणबिन्दुर्महीपतिः ॥”)

**बुधचक्रं** क्ली (बुधस्य ग्रहविशेषस्य चक्रम् ।)
बधग्रहस्य स्वसञ्चारादष्टादशदिनोत्तरराश्यन्तरसञ्चारनक्षत्रावधिसप्तविंशतिनक्षत्रघटित-
यथा, --
“यैः कृता श्रावणे मासि अष्टमी रोहिणी-
युता ।
किं पुनर्बुधवारेण सोमेनापि विशेषतः ॥”
इति तिथ्यादितत्त्वम् ॥
(अस्मिन् जातफलं यथा, कोष्ठीप्रदीपे ।
“गुणी गुणज्ञः कुशलः क्रियादौ-
विलासशीलो मतिमान् विनीतः ।
मृदुस्वभावः कमनीयमूर्त्ति-
र्बुधस्य वारे प्रभवो मनुष्यः ॥)

**बुधसानुः**, पुं, पर्णम् । यज्ञपुरुषः । इति संक्षिप्त-सारोणादिवृत्तिः ॥

**बुधसुतः**, पुं, (बुधस्य सुतः पुत्त्रः ।) पुरूरवाः । इति पुराणम् ॥ (यदुक्तं हरिवंशे । २६ । १ ।
“बुधस्य तु महाराज ! विद्वान् पुत्त्रः पुरूरवाः ।
तेजस्वी दानशीलश्च यज्वा विपुलदक्षिणः ॥”
अयं हि इलागर्भसंभूतः ॥ बुधस्य बुद्धदेवस्य सुतः पुत्त्र इति विग्रहे । बुद्धपुत्त्रो राहुलः । स तु यशोधराया गर्भसम्भूतः ।)

**बुधा**, स्त्री, (बोधयति रोगिणं या । बुध् + “इगु-पधेति ।” ३ । १ । १३५ । इति कस्ततष्टाप् ।)
जटामांसी । इति शब्दचन्द्रिका ॥ (गुणादिकमस्या जटामांसीशब्दे ज्ञातव्यम् ॥)

**बुधानः**, पुं, (बोधयति बुध्यते वा । बुध बोधने + युधिबुधिदृशः किच्च ।” उणा० २ । ९० । इति आनच् किच्च ।) गुरुः । विज्ञः । इति मेदिनी ।

कलम्बिकाम्लिकोपेतं काम्यं तस्य फलं भवेत् ।
बुधं पञ्चोपचारेण पूजयित्वा जलाशये ॥
शक्तितो दक्षिणां दद्यात् कर्करीं तण्डुलान्विताम् ।
बुं बुधायेति बीजार्णैः स्वार्णे वा कमलादिके ॥
बाणचापधरं श्यामं दले चाङ्गानि मध्यतः ।
बुधाष्टमीकथा पुण्या श्रोतव्या व्रतिभिर्ध्रुवम् ॥ * ॥
पुरे पाटलिपुत्त्राख्ये वीरो नाम द्विजोत्तमः ।
रम्भा भार्य्या च तस्यासीत् कौशिकः पुत्त्र उत्तमः ॥
दुहिता विजया नाम घनपालो वृषोऽभवत् ।
गृहीत्वा कौशिकस्तञ्च ग्रीष्मे गङ्गागतोऽरमत् ॥
गोपालकैर्वृषश्चौरैः क्रीडव्यपहृतो बलात् ।
गङ्गातः स च उत्थाय वनं बभ्राम दुःखितः ॥
जलार्थं विजया चागात् भ्रात्रा सार्द्धञ्च साप्य-
गात् ।
पिपासितो मृणालार्थी आगतोऽथ सरोवरम् ।
दिव्यस्त्रीणाञ्च पूजादि दृष्ट्वा चाप्यथ विस्मितः ॥
स च गत्वा ययाचेऽन्नं सानुजोऽहं बुभुक्षितः ।
स्त्रियोऽब्रुवन् व्रतं कर्त्तुं दास्यामश्च कुरु व्रतम् ।
पश्वर्थमन्नपानार्थं पूजयामासतुर्बुधम् ।
पुटकद्वयं गृहीत्वान्नं बुभुजाते प्रदत्तकम् ॥
स्त्रियो गता गतौ तौ तु धनपालमपश्यताम् ।
चौरैर्हृतं गृहीत्वाथ प्रदोषे प्राप्तवान् गृहम् ॥
वीरञ्च दुःखितं नत्वा रात्रौ सुप्त्वा यथासुखम् ।
लग्नञ्च त्वरितं दृष्ट्वा कस्य देया सुता मया ।
यमायेत्यब्रवीद्दुःखात् स चायाद्व्रतसत्-फलात् ॥
स्वर्गं गतौ च पितरौ व्रतं राज्याय कौशिकः ।

नरशुभाशुभज्ञानार्थंनराकारचक्रम् । यथा, --
“भोगो मुखैकमथ मूद्र्ध्नि चतुर्षु रोगः
षट्पाणिभे सुखहतं सुखदं श्रुतेऽत्र ।
दुःखं पदाब्धिसुयशो हृदि सप्तराज्यं
नाभीन्दुभे द्विभगलेति धनं बुधस्य ॥”
इति समयामृतम् ॥

**बुधतातः**, पुं, (बुधस्य ग्रहविशेषस्य तातः पिता ।)
चन्द्रः । इति शब्दचन्द्रिका ॥

**बुधरत्नं**, क्ली, (बुधप्रियं रत्नम् । शाकपार्थिवा-
दित्वात् समासः ।) मरकतमणिः । इति राज-
निर्घण्टः ॥

**बुधवारः**, पुं, (बुधस्य वारः ।) बुधग्रहस्य वासरः ।
ने, २९ ॥ ब्रह्मवादी । प्रियवादी ।
इत्युणादि-
कोषः ॥ कविः । इति जटाधरः ॥

**बुधाष्टमी**, स्त्री, (बुधवारयुता अष्टमी । शाक-
पार्थिवादित्वात् समासः ।
“अष्टमीबुधवारेण पक्षयोरुभयोर्य्यदा ।
भविष्यति तदा तस्यां व्रतमेतत् कथा
पुरा ॥”
इति वचनादस्यास्तथात्वम् ।)
व्रतविशेषः यथा । बुधाष्टमीव्रतं
चैत्रपौषहरि-
शयनादीतरकाले कर्त्तव्यम् । यदाह
राज-
मार्त्तण्डः ।
“पतङ्गे मकरे याते देवे जाग्रति माधवे
।
बुधाष्टमीं प्रकुर्व्वीत वर्जयित्वा तु
चैत्रकम् ॥
प्रसुप्ते च जगन्नाथे सन्ध्याकाले मधौ
तथा ।
बुधाष्टमीं न कुर्व्वीत कृता हन्ति
पुराकृतम् ॥”
एतद्व्रतमारब्धमपि चैत्रादौ न
कर्त्तव्यमिति ।
यथा स्मृतिः ।
“मीने धनुषि देवेशे सुप्तेऽशुद्धदिने
तथा ।
बुधाष्टमीं न कुर्व्वीत पूर्ब्बविद्धामपि
क्वचित् ॥”
इति व्रतकालविवेकः ॥ * ॥
अपि च ।
“अष्टमी बुधवारेण पक्षयोरुभयोर्य्यदा ।
भविष्यति तदा तस्यां व्रतमेतत् कथा
पुरा ॥
तस्यां नियमकर्त्तारो न
स्युर्दुर्गतिभाजनाः ।
तण्डुलस्याष्टमुष्टीनां
वर्जयित्वाङ्गुलीद्वयम् ॥
भक्तं सद्भक्तिश्रद्धाभ्यां
कामनायुक्तमानवः ।
आम्रपत्रपुटे कृत्वा यो भुङ्क्ते
कुशवेष्टिते ॥
चक्रेऽयोध्यामहाराज्यं दत्त्वा च भगिनीं यमे
॥
यमोऽपि विजयामाह गृहस्था त्वं पुरान्तरम्
।
नोद्घाटयान्यत्र गते यमे सा न तथाकरोत् ॥
अपश्यन्मातरं स्वां सा यामिकां
पाशयातनाम् ।
अथोद्विग्ना कौशिकाय आचक्षाणा विमुक्ति-
दम् ।
व्रतं चक्रे ततो मुक्ता माता तस्माच्चरद्व्रतम्
॥”
इति गारुडे बुधाष्टभ्यादि १३३ अध्यायः ॥
* ॥
विस्तरस्तु ब्रह्मपुराणोक्तबुधाष्टमीव्रतपद्धतौ
द्रष्टव्यः ॥

**बुधितं**, त्रि, (बुध्यते स्म । सेट् बुध् + क्त ।)
बुद्धम् । ज्ञातम् । इत्यमरः । ३ । २ । १०८
॥

**बुधिलः**, त्रि, (बुध्यते यः । बुध् + किलच् ।)
विद्वान् । इत्युणादिकोषः ॥

**बुध्नः**, पुं, (बध्नातीति । बन्धबन्धने “बन्धेर्ब्रधिबधी
च ।” उणा० ३ । ५ । इति नक् बुधादेशश्च
।)
वृक्षमूलम् । इत्यमरः । २ । ४ । १२ ॥
(मूलदेशः ।
अग्रभागः । यथा, अथर्व्ववेदे । २ । १४ ।
४ ।
“गृहस्य बुध्न आसीनास्ता इन्द्रो
वज्रेणाधि-
तिष्ठतु ।”)
शिवः । यथा, --
“निवेश्य बुध्ने चरणं स्मिताानना
गुरुं समारोढु मथोपचक्रमुः ।”
इति हरविलासे राजशेस्वरः । इति भरतः
॥

**बुन्द**, इर् ञ उ निशामने। (इति कविकल्प-
द्रुमः। (भ्वा०-उभ०-सक०-सेट्।) पञ्चमस्वरी।
इर् अबुन्दीत्। ञ बुन्दति बुन्दते। निशामन-
मालोचनं प्रणिधानमिति यावत्। इति दुर्गा-
दासः॥ (यथा, भट्टिः। १४। ७२।
“सस्रंसे शरबन्धेन दिव्येनेति बुबुन्द सः॥”)

**बुन्ध**, इर् ञ उ निशामने। इति कविकल्प-
द्रुमः॥ (भ्वा०-उभ०-सक०-सेट्।) पञ्चम-
स्वरी। इर् अबुधत् अबुन्धीत्। ञ बुन्धति
बुन्धते। उ बुन्धित्वा बुद्धा। निशामनमालो-
चनं प्रणिधानमिति यावत्। इति दुर्गादासः॥

**बुन्ध**, क बन्धे। इति कविकल्पद्रुमः॥ (चुरा०-
पर०-सक०-सेट्।) पञ्चमस्वरी। क बुन्धयति॥
इति दुर्गादासः॥

**बुबुधानः**, पुं, आचार्य्यः। देवः। पण्डितः। इति
संक्षिप्तसारोणादिवृत्तिः॥ (यथा, ऋग्वेदे।
७। ४४। ३।
“दधिक्रावाणं बुबुधानो
अग्निमुपब्रुव उषसं सूर्य्यं गाम्॥”)

**बुभुक्षा**, स्त्री, (भोक्तुमिच्छा। भुज धौ भक्षे +
“धातोः कर्म्मणः समानकर्त्तृकादिच्छायांवा।”
३। १। ७। इति सन्। ततः “अः प्रत्ययात्।”
३। ३। १०२। इत्यस्ततष्टाप्।) क्षुधा। इत्य-
मरः। २। ९। ५४॥ (यथा, रामायणे। २।
२८। १८।
“अतीववातस्तिमिरं बुभुक्षा चास्ति नित्यशः।
भयानि च महान्त्यत्र ततो दुःखतरं वनम्॥”)

**बुभुक्षितः**, त्रि, (बुभुक्षा भोजनेच्छा सञ्जातास्य।
वुभुक्षा + “तदस्य संजातं तारकादिभ्य इतच्।”
५। २। ३६। इति इतच्।) क्षुधितः। इत्य-
मरः। ३। १। १०॥ (यथा, मनुः। १०। १०५।
“अजीगर्त्तः सुतं हन्तुमुपासर्पद्बुभुक्षितः।
न चालिप्यत पापेन क्षुत्प्रती कारमाचरन्॥”)

**बुल**, क मज्जने। इति कविकल्पद्रुमः॥ (चुरा०-
पर०-अक०-सेट्।) क बोलयति प्रस्तरः पयसि।
तालव्यवर्गाद्यादिरयमितिकेचित्। इति दुर्गा-
दासः॥

१३५। इति कः।) तुच्छधान्यम्।
आगडा इति
भाषा। तत्पर्य्यायः। कडङ्गरः २।
इत्य-
मरः। २। ९। २२॥ बुषम् २। इति
भरतः॥
बूषम् ४। इति शब्दरत्नावली॥
(उदकम्।
यथा, ऋग्वेदे। १०। २७। २४।
“आविः स्वः कुणुतेगृहते बुसम्॥”
“बुसमुदकम्॥” इति सायनः॥)

**बुस्त** क अनादरे। आदरे। इति कविकल्पद्रुमः॥
(चुरा०-पर०-सक०-सेट्।) क
बुस्तयति खलं
लोकः। बुस्तयति धीरं साधुः। इति
दुर्गादासः॥

**बुस्तं**, क्ली, (बुस्यते अनाद्रियते यत्। बुस्त क
अनादरे + घञ्। यद्वा बुस्यते
त्यज्यते स्म इति।
बुस्यैर उत्सर्गे कर्म्मणि क्तः।)
मांसपिण्डक-
विशेषः। स्थालीभृष्टमांसम्।
पनसादिफलस्या-
सारभामः। इत्यमरभरतौ॥ भौँता
इति ख्यातः॥

**बूक्कं**, त्रि, (बुक्कयति शब्दायते इति। बुक्क + अच्।
पृषोदरादित्वाद्दीर्घः।) बुक्कम्।
हृदयम्।
इत्यमरटीकायां रमानाथः॥

**बृक्कं**, त्रि, (बुक्कयति शब्दायते इति। बुक्क + अच्।
पृषोदरादित्वादृकारः।) बुक्कम्।
इत्यमर-
टीकायां सारसुन्दरी॥

**बृ** गि वृत्याम्। भृत्याम्। इति कविकल्पद्रुमः॥
(प्यादि, क्र्यादि०-पर०-सक०-सेट्।) गि बृणोति

बाधकोऽपि पाठः। बोधजनके त्रि॥ (यथा,
साहित्यदर्पणे। २। ४।
“वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः॥”)

**बोधकरः**, पुं, (करोतीति करः। कृ + ट। बोधस्य
प्रबोधस्य करः।) निशान्ते बोधकारकः॥
तत्पर्य्यायः। वैतालिकः २। इत्यमरः। २
। ८। ९७॥

**बोधज्ञः**, पुं, (बोधं अभिप्रायं जानातीति।।
बोध + ज्ञा + क।) अभिप्रायवेत्ता।
श्रीकृष्णः।
यथा, --
“सर्व्वभावविदां श्रेष्ठो वोधज्ञः
कामशास्त्रवित्।
कामिनीं बोधयामास वासयामास वक्षसि॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ५३
अध्यायः॥

**बोधनं**, क्ली, (बुध् + णिच् + ल्युट्।) गन्धदी-
पनम्। इति मेदिनी। ने, ९९॥ वेदनम्।
विज्ञापनम्। इति बुधधात्वर्थदर्शनात्॥
(उद्दी-
पनम्। यथा माघे। ९। ३४।
“समयेन तेन चिरसुप्तमनो-
भवबोधनं समबोधिषत॥”
“मनोभवस्य कामस्य बोधनं उद्दीपनं
यस्मिन्।”
इति तट्टिकायां मल्लिनाथः। ज्ञानम्। यथा,
रघौ। ९। ४९।
“परिचयं चललक्ष्यनिपातने
भयरुषोश्च तदिङ्गितवोधनम्॥”
“तेषां चललक्ष्याणां इङ्गितस्य चेष्टितस्य
भयादिलिङ्गभूतस्य बोधनं ज्ञानं च करोति।”
इति तट्टीकायां मल्लिनाथः॥) दुर्गाया बोधनं
यथा। देवीपुराणे।
“इषे मास्यसिते पक्षे कन्याराशिगते रवौ।
नवम्यां बोधयेद्देवीं क्रीडाकौतुकमङ्गलैः॥”

**बुलिः**, स्त्री, (बुल + इन् किच्च ।) भगम् । इति

हेमचन्द्रः । ३ । २७३ ।

**बुषं**, क्ली, (बुस्यते उत्सृज्यते यत् । बुस्यिर्

उत्सर्गे + "इगुपधेति ।" ३ । १ । १३५ । इति
कः । पृषोदरादित्वात् षत्वं विभाषया ।) बुसम् ।
तुच्छधान्यम् । आगडा इति भाषा । यथा, --
"उन्मेषमेषतुषतोषझषाभिलाषकुल्माषमाषवुष-
वेषतुषाररोषाः । इति मूर्द्धन्यमध्ये पुरुषोत्तमः ।
इति भरतः ॥

**बुस**, य इर् हानौ । इति कविकल्पद्रुमः । (दिवा०-

पर०-सक०-सेट् ।) य बुस्यति जलं मेघः त्यज-
तीत्यर्थः । इर् अबुसत् अबोसीत् । अस्मात्
पुषादित्वान्नित्यं ङ इत्यन्ये । इति दुर्गादासः ॥

**बुसं**, क्ली, (बुस्यते तुच्छत्वादुत्सृज्यते इति । बुस्य

इरुत्सर्गे + "इगुपधज्ञाप्रीकिरः कः ।" ३ । १ ।

बूर्णः बूर्णिः । इति दुर्गादासः ॥

**बेकटः**, पुं, मत्स्यभेदः । तरुणः । विदूषकः ।

इति शब्दरत्नावली ॥

**बोकडी**, स्त्री, वस्तान्त्री । इति राजनिर्घण्टः ॥

**बोद्धा**, त्रि, (बुध्यते यः । बुध् + तृच् ।) बोध-

कर्त्ता । यथा, --
"बोद्धारो मत्सरग्रस्ताः प्रभवः
स्मयदूषिताः ।
अज्ञानोपहताश्चान्ये जीर्णमङ्गे
सुभाषितम् ॥"
इति भर्त्तृहरिः ॥

**बोधः**, पुं, (बोधनमिति । बुध् + भावे घञ् ।)

ज्ञानम् । इति त्रिकाण्डशेषः ॥ (यथा
मार्क-
ण्डेये । २६ । १ ।
"वर्द्धमानं सुतं सा तु राजपत्नी दिने
दिने ।
तमुल्लापादिना
बोधमनयन्निर्म्ममात्मकम् ॥"
अयं हि बुद्धेर्जातः । तथाहि मार्कण्डेये
। ५० । २७ ।
"बोधं बुद्धिस्तथा लज्जा विनयं
वपुरात्मजम् ।
व्यवसायं प्रजज्ञे वै क्षेमं शान्तिरसूयत
॥"
ऋषिविशेषः । यथा मार्कण्डेये । ७६
। २८ ॥
"तयात्र मुक्तो हैमिन्या गृहीत्वा च
सुतञ्च सा ।
बोधस्य द्विजमुख्यस्य गृहे नीतवती
पुनः ॥"
सूर्य्यरूपभेदः । यथा, मार्कण्डेये ।
१०१ । १९ ।
"बोधश्चावगतिश्चैव स्मृतिर्विज्ञानमेव
च ।
इत्येतानीह रूपाणि तस्य रूपस्य
भास्वतः ॥"
जागरणकालः । चैतन्यम् । यथा,
मार्क-
ण्डेये । ८१ । ६७ ।

अत्र कृष्णादित्वादिषे इत्यपि
गौणाश्विनपरम् ।
अतएव कालकौमुद्यादिधृतम् । यथा, --
"कर्किण्यर्के हरौ सुप्ते शक्रध्वजक्रियाश्विने
।
तुलायां बोधयेद्देवीं वृश्चिके तु जनार्द्दनम्
॥"
इति ॥
बोधयेदिति शेषः । तत्रापि नवमीबोधनं
कन्यायामेव तथैव सम्भवात् तेन सिंहार्के
तुलार्केऽप्याश्विनत्वेन वाक्यरचनां । एवं
प्रति-
वर्षं कर्त्तव्यत्वादार्द्रादिनक्षत्रालाभेऽपि बोध-
नादिकार्य्यम् । नक्षत्रयोगस्तु फलातिशयाय
।
तथा च लिङ्गपुराणम् ।
"मूलाभावेऽपि सप्तम्यां केवलायां प्रवेशयेत्
।
तथा तिथ्यन्तरेष्वेवमृक्षेषु च फलोच्चयः
॥"
यथाह देवलः ।
"तिथिनक्षत्रयोर्योगे द्वयोरेवानुपालनम् ।
योगाभावे तिथिर्ग्राह्या देव्याः पूजनकर्म्मणि
॥"
कृष्णनवम्यामार्द्रायोगो विधौ मन्त्रे च श्रूयते
।
तथा च लिङ्गपुराणम् ।
"कन्यायां कृष्णपक्षे तु पूजयित्वार्द्रभे दिवा ।
नवम्यां बोधयेद्देवीं महाविभवविस्तरैः ॥"
चतुर्थपादे गीतवादित्रनिः स्वनैरिति
कालिका-
पुराणे पाठः ।
"इषे मास्यसिते पक्षे नवम्यामार्द्रयोगतः ।

| | | |
|---|---|---|
| | "प्रबोधञ्च जगत्स्वामी नीयतामच्युतो लघु ।<br>बोधश्च क्रियतामस्य हन्तुमेतौ महासुरौ ॥")<br>**बोधकः**, पुं, (बोधयतीति । बुध् + णिच् + ण्वुल् ।)<br>सूचकः । इति शब्दमाला ॥<br>पुस्तकान्तरे | |

श्रीवृक्षे बोधयामि त्वां यावत् पूजां करोम्यहम् ॥
ऐं रावणस्य वधार्थाय रामस्यानुग्रहाय च ।
अकाले ब्रह्मणा बोधो देव्यास्त्वयि कृतः पुरा ॥”
इति मन्त्रलिङ्गम् ॥
अकाल इति तु रात्रित्वेन दक्षिणायनस्य ।
तथाच श्रुतिः । तपस्तपस्यौ शैशिरावृतुः मधुश्च माधवश्च वासन्तिकावृतुः शुक्रश्च शुचिश्च ग्रैष्मावृतुः । अथैतदुत्तरायणं देवानां दिनं नभाश्च नभस्यश्च वार्षिकावृतुः इषश्च ऊर्जश्च शारदावृतुः सहाश्च सहस्यश्च हैमन्तिकावृतुः ।
अथैतद्दक्षिणायनं देवानां रात्रिरिति । एवञ्च ।
रात्रावेव महामाया ब्रह्मणा बोधिता पुरा ।
तथैव च नराः कुर्य्युः प्रतिसम्बत्सरं नृपेत्येत-द्विषयम् ॥ अतएव लिङ्गपुराणकालिकापुरा-णयोर्द्दिवेत्युक्तम् । एवञ्च कालिकापुराणे बोधने रात्राविति पदं देवतारात्रिपरम् । ततश्च पूर्ब्बाह्णे नवम्यामार्द्रायुक्तायां बोधनं पूर्ब्बाह्णेतरकाल एव आर्द्रालाभे दिवेत्यत्र दिवापदात्तत्रापि बोधनं अन्यथा दिवापदं व्यर्थं स्यात् । ज्योतिषा-र्णवे व्यक्तमुक्तं वराहेण ।
“कन्यादिमीनपर्य्यन्तं यत्र संप्राप्यते शिवः ।
दिने सायं षष्ठ्यलाभस्तदा परेऽहनि पूर्ब्बाह्णे षष्ठ्यां बोधनम् ।
“बोधयेद्बिल्वशाखायां षष्ठ्यां देवीं फलेषु च ।
षष्ठ्यां बोधने तु न क्षत्रानुपदेशान्न तदादरः ॥”
इति तिथ्यादितत्त्वम् ॥

**बोधनी**, स्त्री, (बुध् + भावे ल्युट् । ङीष् । बोधः ।

(बोध्यतेऽनया । बुध् + णिच् + करणे ल्युट् । अनया हि मूर्च्छितो बोध्यते अतोऽस्य तथा-त्वम् ।) पिप्पली । इति मेदिनी ॥
(बुध्यतेऽस्याम् ।
बुध् + अधिकरणे ल्युट् । स्त्रियां ङीप् । अस्यां हि योगनिद्राया हरेः प्रबोधनात्तथात्वम् ।) कार्त्तिकशुक्लैकादशी । सा तु उत्थानैकादशी ।
यथा, --
“शयनीबोधनीमध्ये या कृष्णैकादशी भवेत् ।
सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन ॥”
इति तिथ्यादितत्त्वम् ॥
अपि च ।
“तावद्गर्ज्जन्ति तीर्थानि वाजिमेधादयो मखाः ।
मथुरायां प्रिया विष्णोर्यावन्नायाति बोधनी ॥”
इति हरिभक्तिविलासे पद्मपुराणवचनम् ॥

**बोधनीयः**, त्रि, (बुध् + कर्म्मणि अनीयर् ।)

बोध्यः । बोधितव्यः । बोधयोग्यः ॥

**बोधवासरः**, पुं, (बोधस्य भगवतो मायानिद्रायाः

प्रबोधस्य वासरः ।) भगवतः प्रबोधदिनम् । उत्थानैकादशी । यथा, --
“जन्मप्रभृति यत् पुण्यं नरेणोपार्जितं भुवि ।
वृथा भवति तत् सर्व्वं न कृत्वा बोधवासरम् ॥”
इति हरिभक्तिविलासधृतस्कन्दपुराणवचनम्॥

**बोधानः**, पुं, (बुध्यते इति । बुध् + आनच् ।)

गीष्पतिः । विज्ञः । बुधभेदः । इति शब्दरत्ना-वली ॥

**बोधिः**, पुं, (बुध + “सर्व्वधातुभ्य इन् ।” ४ । ११७ ।

इति इन् ।) समाधिभेदः । पिप्पलवृक्षः । इति मेदिनी । धे, ११ ॥ (यथास्य पर्य्यायः ।

**बोधिसत्त्वं**, क्ली, (बोधि बोधवत् सत्त्वम् ।) बुद्ध-

विशेषः । इति हेमचन्द्रः । २ । १४६ ॥ (यथा, कथासरित्सागरे । २२ । ३५ ।
“दयालुर्बोधिसत्त्वांशः कोऽन्यो जीमूतवाहनात् ।
शक्नुयादर्थिसात् कर्त्तुमपि कल्पद्रुमं कृती ॥”)

**बौद्धं**, क्ली, (बुद्धेन प्रणीतम् । बुद्ध + अण् ।)

बुद्धकृतनिरीश्वरशास्त्रम् । तत् सर्व्वैः शास्त्र कारैः खण्डितं अग्राह्यम् । इति श्रीभागवतम् ।
बौद्धशास्त्रसंस्थापनकर्त्ता बृहस्पतिः । यथा, --
“प्राह वाचस्पतिं देवः पीडितोऽस्मि रजेः सुतैः ।
न यज्ञभागो राज्यं मे निर्जितश्च बृहस्पते ! ।
राज्यलाभाय मे यत्नं विधत्स्व धिषणाधिप ! ॥
ततो बृहस्पतिः शक्रमकरोद्बलदर्प्पितम् ।
ग्रहशान्तिविधानेन पौष्टिकेन च कर्म्मणा ॥
गत्वाथ मोहयामास राजपुत्रान् बृहस्पतिः ।
जिनधर्म्मं समास्थाय वेदवाह्यं स वेदवित् ॥
वेदत्रयीपरिभ्रष्टांश्चकार धिषणाधिपः ।
वेदवाह्यान् परिज्ञाय हेतुवादसमन्वितान् ।
जघान शक्रो वज्रेण सर्व्वधर्म्मबहिष्कृतान् ॥”
इति मात्स्ये २४ अध्यायः ॥
(बौद्धदर्शनं यथा, सर्व्वदर्शनसंग्रहे । “अत्र बौद्धैरभिधीयते यदभ्यध्यायि अविनाभावो दुर्बोध इति तदसाधीयः तादात्म्यतदुत्पत्तिभ्या-सविनाभावस्य सुज्ञानत्वात् । तदुक्तम्,
“कार्य्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।
अविनाभावनियमो दर्शनान्तरदर्शनात् ॥”
इति ॥
अन्वयव्यतिरेकावविनाभावनिश्चायकाविति पक्षे साध्यसाधनयोरव्यभिचारोदुरवधारणो भवेत् भूते भविष्यति वर्त्तमाने अनुपलभ्यमानेऽपि व्यभिचारशङ्काया अनिवारणात् । ननु तथा-विधस्थले तावकेऽपि मते व्यभिचारशङ्का दुष्परिहरेति चेत् मैवं वोचः विनापि कारणं कार्य्यमुत्पद्यतामिमेवंविधायाः शङ्काया व्याघा-तावधिकतया निवृत्तत्वात् । तदेव ह्याशङ्क्येत यस्मिन्नाशङ्क्यमाने व्याघातादयो नावतरेयुः तदुक्तं व्याघातावधिराशङ्केति । तस्मात्तदुत्पत्ति-निश्चयेन अविनाभावो निश्चीयते तदुत्पत्ति-निश्चयश्च कार्य्यहेत्वोः प्रत्यक्षोपलम्भानुपलम्भ-पञ्चकनिबन्धनः । कार्य्यस्योत्पत्तेः प्रागनुपलम्भः

तत्र बोधः प्रकर्त्तव्यो देव्या राज्ञां शुभप्रदः ॥”
शिव आर्द्रा । एवञ्चोभयदिने पूर्ब्बाह्णे नवमी-
लाभे परत्रार्द्रालाभे परत्र बोधनं न तु युग्मात्
पूर्ब्बत्र । युग्मबाधकपूर्ब्बाह्णस्य बाधकनक्षत्रानु-
रोधात् दिवा नक्षत्रालाभे तु पूर्ब्बाह्ण एव
नवम्यां उभयत्र पूर्ब्बाह्णलाभे पूर्ब्बदिन एव
युग्मात् । अत्र केवलनवम्यां बोधनविधेर्नक्षत्र-
स्यापि गुणफलत्वाच्च ।
“माघेऽथ फाल्गुने वापि भवेद्वै माघसप्तमी ।
माकरीति च यत्प्रोक्तं तत्प्रायोवृत्तिदर्शनात् ॥”
इति ॥
सौरागमात् माकर्य्यादिवत् आर्द्रायोग इत्यस्य
प्रायिकत्वेनाभिधानं प्रतीयते । ततश्चार्द्रारहित-
बोधने मन्त्रान्तरानुपदेशात् तन्मन्त्रः प्रणव-
युक्तत्वेन प्रयुज्यते ।
“यन्नयूनञ्चातिरिक्तञ्च यच्छिद्रं यदयज्ञियम् ।
यदमेध्यमशुद्धञ्च यातयामञ्च यद्भवेत् ।
तदोङ्कारप्रयुक्तेन सर्व्वञ्चाविफलं भवेत् ॥”
इति योगियाज्ञवल्क्यात् षष्ठ्यां बोधनेऽप्येवम् ॥
नवमीबोधनासामर्थ्ये तु षष्ठ्यां सायं बोधनम् ।
तथा भविष्ये ।
“षष्ठ्यां विल्वतरौ बाधं सायंसन्ध्यासु
कारयेत् ॥”
सन्ध्योक्ता वराहेण ।

“पिप्पलो बोधिरश्वत्थश्चैत्यवृक्षो गजाशनः ॥”
इति वैद्यकरत्नमालायाम् ॥)
बोधः । इति त्रिकाण्डशेषः ॥ ज्ञातरि, त्रि । इत्युणादिकोषः ॥

**बोधितं**, त्रि, (बुध् + णिच् + क्त ।) ज्ञापितम् ।

यथा, --
“रात्रावेव महामाया ब्रह्मणा बोधिता पुरा ॥”
इति तिथ्यादितत्त्वम् ॥

**बोधितरुः**, पुं, (बोधिरेव तरुः ।) अश्वत्थवृक्षः ।

इति हेमचन्द्रः । ४ । १९७ ॥ (गुणादयोऽस्या-श्वत्थशब्दे द्रष्टव्याः ॥)

**बोधितव्यं**, त्रि, (बुध + णिच् + तव्य ।) ज्ञापि-

तव्यम् । यथा । बोधितव्योऽयं पूर्ब्बपक्षः । इति शाङ्करभाष्यम् ॥

**बोधिद्रुमः**, पुं, (बोधिरेव द्रुमः ।) अश्वत्थवृक्षः ।

इत्यमरः । २ । ४ । २० ॥

**बोधिवृक्षः**, पुं, (बोधिरेव वृक्षः ।) अश्वत्थवृक्षः ।

इति राजनिर्घण्टः ॥

कारणोपलम्भे सत्युपलम्भः उपलब्धस्य पश्चात्
कारणानुपलम्भादनुपलम्भइति पञ्चकारण्या
धूमधूमध्वजयोः कार्य्यकारणभावो निश्चीयते
तथा तादात्म्यंनिश्चयेनाप्यविनाभावो निश्चीयते
यदि शिंशपा वृक्षत्वमतिपतेत् स्वात्मानमेव
जह्यादिति विपक्षे बाधकप्रवृत्तेः अप्रवृत्ते तु
बाधके भूयः सहभावोपलम्भेऽपि व्यभिचार-
शङ्कायाः को निवारयिता । शिंशपावृक्षयोश्च
तादात्म्यनिश्चयो वृक्षोऽयं शिंशपेति सामाना-
धिकरण्यबलादुपपद्यते । न ह्यत्यन्ताभेदे तत्
सम्भवति पर्य्यायत्वेन युगपदपि प्रयोगायोगात्
नाप्यत्यन्तभेदे गवाश्वयोरनुपलम्भात् । तस्मात्

| “अर्द्धास्तमयात् सन्ध्या व्यक्तीभूता न तारका यावत् ॥” षष्ठ्यां बोधने तु प्रागुक्त ऐं रावणस्य वधार्था- येति अहमप्याश्विने षष्ठ्यां सायाह्ने बोधयाम्यत इति पठेत् । यदा तु पूर्ब्बदिने सायं षष्ठीलाभः परदिने सायं विना षष्ठीलाभः तदा पूर्ब्बेद्यु- र्बोधनं परदिने सायमामन्त्रणम् । यदा तूभय- | | |
|---|---|---|

कार्य्यात्मानौ कारणमात्मानमनुमापयत
इति
सिद्धम्।
यदि कश्चित् प्रामाण्यमनुमानस्य
नाङ्गीकुर्य्यात्
तं प्रति ब्रूयात् अनुमानं प्रमाणं न
भवतीत्ये-
तावन्मात्रमुच्यते तत्र न किञ्चन
साधनमुप-
न्यस्यते उपन्यस्यते वा। न प्रथमः
एकाकिनी
प्रतिज्ञा हि प्रतिज्ञातं न साधयेदिति
न्यायात्।
नापि चरमः अनुमानं प्रमाणं न भवतीति
ब्रुवाणेन त्वया
अशिरस्कवचनस्योपन्यासेमम
माता बन्ध्येतिवद्व्याघातापातात्। किञ्च
प्रमाण-
तदाभासव्यवस्थापनं
तत्समानजातीयत्वादिति
वदता भवतैव स्वीकृतं स्वभावानुमानम्।
पर-
गता विप्रतिपत्तिस्तु वचनलिङ्गेनेति
ब्रुवता
कार्य्यलिङ्गकमनुमानम् अनुपलब्ध्या
कञ्चिदर्थं
प्रतिषेधयतानुपलब्धिलिङ्गकमनुमानम्।
तथा-
चोक्तं तथागतैः।
"प्रमाणान्तरसामान्यस्थितिरन्यधियां
गतेः।
प्रमाणान्तरसद्भावः प्रतिषेधाच्च
कस्यचित्॥"
इति॥
पराक्रान्तञ्चात्र सूरिभिरिति
ग्रन्थभूयस्त्वभया-
दुपरम्यते।
ते च बौद्धाश्चतुर्विधया भावनया
परमपुरुषार्थं
कथयन्ति। ते च
माध्यमिकयोगाचारसौत्रा-

योगात् यत् यदा यत्करणसमर्थं तत् तदा तत्-
करोत्येव यथा सामग्री स्वकार्य्यं समर्थश्चायं
भाव इति प्रसङ्गानुमानाच्च। द्वितीयेऽपि
कदापि न कुर्य्यात् सामर्थ्यमात्रानुबन्धित्वादर्थ-
क्रियाकारित्वस्य यत् यदा यन्न करोति तत्
तदा
तत्रासमर्थं यथा हि शिलाशकलमङ्कुरे न चैष
वर्त्तमानार्थक्रियाकरणकाले वृत्तवर्त्तिष्य माणे
अर्थक्रिये करोतीति तद्विपर्य्ययाच्च। ननु क्रम-
वत्सहकारिलाभात् स्थायिनः अतीतानागतयोः
क्रमेण क्रमणमुपपद्यते इति चेत् तत्रेदं भवान्
पृष्टो व्याचष्टां सहकारिणः किं भावस्योप-
कुर्व्वन्ति न वा न चेत् नापेक्षणीयास्ते अकि-
ञ्चित् कुर्व्वतां तेषां तादात्म्यायोगात्। उप-
कारकत्वपक्षे सोऽयमुपकारः किं भावाद्भिद्यते
न वा भेदपक्षे आगन्तुकस्यैव तस्य कारणत्वं
स्यात् न भावस्याक्षणिकस्य आगन्तुकातिशया-
न्वयव्यतिरेकानुविधायित्वात्। कार्य्यस्य।
तदु-
क्तम्।
"वर्षातपाभ्यां किं व्योम्नश्चर्म्मण्यस्ति तयोः
फलम्।
चर्म्मोपमश्चेत् सोऽनित्यः खतुल्यश्चेदसत्फलः
॥"
इति।
अथ भावस्तैः सहकारिभिः सहैव कार्य्यं करो-
तीति स्वभाव इति चेत् अङ्ग तर्हि सहकारिणो
न जह्यात् प्रत्युत पलायमानानपि गले पाशेन
बद्ध्वा कृत्यं कार्य्यं कुर्य्यात्
स्वभावस्यानपायात्।
किञ्च सहकारिजन्योऽतिशयः किमतिशया-
न्तरमारभते न वा उभयथापि प्रागुक्तदूषण-
पाषाणवर्षणप्रसङ्गः। अतिशयान्तरारम्भपक्षे
बहुमुखानवस्थादौस्थ्यमपिस्यात् अतिशये
जनयितव्ये सहकार्य्यन्तरापेक्षायां तत्परम्परा-
पात इत्येकानवस्थाऽऽस्थेया तथाहि सह-
कारिभिः सलिलपवनादिभिः पदार्थसार्थैराधी-
यमाने बीजस्यातिशये बीजमुत्पादकमभ्युपेयम्
अपरथा तदभावेऽप्यतिशयः प्रादुर्भवेत् बीज-
ञ्चातिशयमादधानं सहकारिसापेक्षमेवाधत्ते
अन्यथा सर्व्वदोपकारापत्तौ अङ्कुरस्यापि सदो-

सहकारिभिराधीयत इत्यभ्युपगम्यते तर्हि
प्राचीनो भावोऽनतिशयात्मा निवृत्तः
अन्यश्चा-
तिशयात्मा कुर्व्वद्रूपादिपदवेदनीया जायत
इति
फलितं ममापि मनोरथद्रुमेण।
तस्मादक्षणिकस्यार्थक्रिया दुर्घटा नाप्यक्रमेण
घटते विकल्पासहत्वात्। तथाहि युगपत-
सकलकार्य्यकरणसमर्थः स
भावस्तदुत्तरकालमनु-
वर्त्तते न वा। प्रथमे तत्कालवत्
कालान्तरेऽप्रि
तावत् कार्य्यकारणमापतेत्। द्वितीये स्थायि-
त्ववृत्याशा मूषिकभक्षितबीजादावङ्कुरादि-
जननप्रार्थनामनुहरेत्। यद्
विरुद्धधर्म्माध्यस्तं
तन्नाना यथा शीतोष्णे। विरुद्धधर्म्माध्यस्त-
श्चायमिति जलधरे प्रतिबन्धसिद्धिः। न
चाय-
मसिद्धो हेतुः स्थायिनि कालभेदेन
सामर्थ्यासा-
मर्थ्ययोः
प्रसङ्गतद्विपर्य्ययसिद्धत्वात्तत्रासामर्थ्य-
साधकौ प्रसङ्गतद्विपर्य्ययौ प्रागुक्तौ सामर्थ्य-
साधकावभिधीयेते यद्यदा यज्जननासमर्थं
तत्तदा तन्न करोति यथा शिलाशकलमङ्कुरम्
असमर्थश्चायं वर्त्तमानार्थक्रियाकरणकाले
अतीतानागतयोरथक्रिययोरितिप्रसङ्गः यद्-
यदा यत् करोति तत्तदा तत्र समर्थं यथा
सामग्री
स्वकार्य्ये करोति चायमतीतानागतकाले तत्-
कालवर्त्तिन्यावर्थक्रिये भाव इति
प्रसङ्गव्यत्ययः
विपर्य्ययः। तस्माद्विपक्षे क्रमयौगपद्यव्यावृत्त्या
व्यापकानुपलम्भेनाधिगतव्यतिरेकव्याप्तिकं
प्रसङ्ग-
तद्विपर्य्ययबलात् ग्रहीतान्वयव्याप्तिकं सत्त्वं
क्षणिकत्वपक्ष एव व्यवस्थास्यतीति सिद्धम्।
तदुक्तं ज्ञानश्रिया।
"यत् सत्तत् क्षणिकं यथा जलधरः सन्तश्च
भावा अमी

न्तिकवैभाषिकसंज्ञाभिः प्रसिद्धा बौद्धा यथा-
क्रमं सर्व्वशून्यत्व-वाह्यशून्यत्व-
बाह्यार्थानुमेयत्व-
वाह्यार्थप्रत्यक्षत्ववादानातिष्ठन्ते। यद्यपि भग-
वान् बुद्ध्व एक एव बोधयिता तथापि बोद्ध-
व्यानां बुद्धिभेदाच्चातुर्विध्यं यथा गतोऽस्तमर्क
इत्युक्ते जारचौरानूचानादयः स्वेष्टानुसारेणा-
भिसरणपरस्वहरणसदाचरणादिसमयं बुध्यन्ते ।
सर्व्वं क्षणिकं क्षणिकं दुःखं दुःखं स्वलक्षणं
स्वलक्षणं शून्यं शून्यमिति भावनाचतुष्टयमुप-
दिष्टं द्रष्टव्यम् । तत्र क्षणिकत्वं नीलादिक्षणानां
सत्त्वेनानुमातव्यं यत् सत् तत् क्षणिकं यथा
जलधरपटलं सन्तश्चामी भावा इति । न चाय-
मसिद्धो हेतुः अर्थक्रियाकारित्वलक्षणस्य सत्त्वस्य
नीलादिक्षणानां प्रत्यक्षासिद्धत्वात् व्यापक-
व्यावृत्त्या व्याप्यव्यावृत्तिन्यायेन व्यापकक्रमा-
क्रमव्यावृत्तावक्षणिकात् सत्त्वव्यावृत्तेः सिद्ध-
त्वाच्च । तच्चार्थक्रियाकारित्वं क्रमाक्रमाभ्यां
व्याप्तं न च क्रमाक्रमाभ्यामन्यः प्रकारः समस्ति
परस्परविरोधे हि न प्रकारान्तरस्थितिः ।
नैकतापि विरुद्धानामुक्तिमात्रविरोधत इति
न्यायेन व्याघातस्योद्भटत्वात् । तौ च क्रमाक्रमौ
स्थायिनः सकाशाद्व्यावर्त्तमानौ अर्थक्रियामपि

दयः प्रसज्येत । तस्मादतिशयार्थमपेक्षमाणैः
सहकारिभिरतिशयान्तरमाधेयं बीजे तस्मिन्न-
प्युपकारे पूर्ब्बन्यायेन सहकारिसापेक्षस्य
बीजस्य जनकत्वे सहकारिसम्पाद्यबीजगताति-
शयानवस्था प्रथमा व्यवस्थिता । अथोपकारः
कार्य्यार्थमपेक्षमाणोऽपि बीजादिनिरपेक्षं कार्य्यं
जनयति तत्सापेक्षो वा । प्रथमे बीजादेरहेतु-
त्वमापतेत् । द्वितीये अपेक्ष्यमाणेन बीजादिना
उपकारे अतिशय आधेयः एवं तत्र तत्रा-
पीति बीजादिजन्यातिशयनिष्ठातिशयपरम्परा-
पात इति द्वितीयानवस्था स्थिरा भवेत् । एव-
मपेक्ष्यमाणेनोपकारेण बीजादौ धर्म्मिण्युप-
कारान्तरमाधेयमित्युपकाराधेयबीजातिशया-
श्रयातिशयपरम्परापातइति तृतीयानवस्था
दुरवस्था स्यात् । अथ भावादभिन्नोऽतिशयः

सत्ताशक्तिरिहार्थक्रर्म्मणि मितेः सिद्धेषु सिद्धा न सा ।
नाप्येकैव विधान्यथा परकृतेनापि क्रियादिर्भवेत् ।
द्वेधापि क्षणभङ्गसङ्गतिरतः साध्ये च विश्रा-
म्यति ॥” इति ॥
न च कणभक्षाक्षचरणादिपक्षकक्षीकारेण
सत्तासामान्ययोगित्वमेव सत्वमिति मन्तव्यं
सामान्यविशेषसमवायानामसत्त्वप्रसङ्गात्। न च
तत्र स्वरूपसत्तानिबन्धनः सद्व्यवहारः प्रयो-
जकगौरवापत्तेः अनुगतत्वाननुगतत्वविकल्प-
पराहतेश्च सर्षपमहीधरादिषु विलक्षणेषु
क्षणेष्वनुगतस्याकारस्य मणिषु सूत्रवद्भूतकणेषु
गुणवच्चाप्रतिभासनाच्च। किञ्च सामान्यं सर्व्व-
गतं स्वाश्रयसर्व्वगतं वा प्रथमे सर्व्ववस्तुसङ्कर-
प्रसङ्गः अपसिद्ध्वान्तापत्तिश्चयतः प्रोक्तं प्रशस्त-
पादेन स्वविषयसर्व्वगतमिति । किञ्च विद्यमाने
घटे वर्त्तमानं सामान्यमन्यत्र जायमानेन
सम्बध्यमानं तस्मादागच्छत् सम्बध्यते अनाग-
च्छद्वा आद्ये द्रव्यत्वापत्तिः द्वितीये सम्बन्धानुप-
पत्तिः । किञ्च विनष्टे घटे सामान्यमवतिष्ठते
विनश्यति स्थानान्तरं गच्छति वा प्रथमे निरा-
धारत्वापत्तिः द्वितीये नित्यत्ववाचो युक्त्ययुक्तिः

| | | |
|---|---|---|
| व्यावर्त्तयन्तौ क्षणिकत्वपक्ष एव सत्त्वं व्यवस्था-<br>पयत इति सिद्धम् ।<br>नन्वक्षणिकस्यार्थक्रियाकारित्वं किं न स्यादिति<br>चेत् तदयुक्तं विकल्पासहत्वात् तथा हि वर्त्त-<br>मानार्थक्रियाकरणकाले अतीतानागतयोः<br>किमर्थक्रिययोः स्थायिनः सामर्थ्यमस्ति नो वा ।<br>आद्ये तयोरनिराकरणप्रसङ्गः समर्थस्य क्षेपा- | | |

ष्टतीये द्रव्यत्वप्रसक्तिः इत्यादि
दूषणग्रहग्रस्त-
त्वात् सामान्यमप्रामाणिकम्। तदुक्तम्
।
"अन्यत्र वर्त्तमानस्य
ततोऽन्यस्थानजन्मनि।
तस्मादचलतः
स्थानाद्वृत्तिरित्यतियुक्तता ॥
यत्रासौ वर्त्तते भावस्तेन सम्बध्यते न
तु ।
तद्देशिनञ्च व्याप्नोति
किमप्येतन्महाद्भुतम् ॥
न याति न च तत्रासीदस्ति
पश्चान्नचांशवत्।
जहाति पूर्ब्बं नाधारमहो
व्यसनसन्ततिः ॥"
इति ॥
अनुवृत्तप्रत्ययः किमालम्बन इति चेत्
अङ्ग
अन्यापोहालम्बन एवेति
सन्तोष्टव्यमायुष्मतेति
अलमतिप्रसङ्गेन ।

सर्व्वस्य संसारस्य
दुःखात्मकत्वं सर्व्वतीर्थकर-

सम्मतम् अन्यथा तन्निविवृत्सूनां तेषां
तन्निवृत्त्यु-
पाये प्रवृत्त्यनुपपत्तेः। तस्मात् सर्व्वं
दुःखं
दुःखमिति भावनीयम्। ननु किंवदिति
पृष्टे
दृष्टान्तः कथनीय इति चेन्मैवं
स्वलक्षणानां
क्षणानां क्षणिकतया सालक्षण्याभावात्
नैतेन
सदृशमपरमिति वक्तुमशक्यत्वात्।
ततः स्वल-
क्षणं स्वलक्षणमिति भावनीयम् एवं
शून्यं
शून्यमित्यपि भावनीयं स्वप्ने जागरणे
च न

व्यवहारश्च न स्वप्नव्यवहारवत् संवृत्या
सङ्ग-
च्छते। अत एवोक्तम्
"परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ
।
कुणपः कामिनी भक्ष्य इति तिस्रो
विकल्पना ॥"
इति ॥
तदेवं
भावनाचतुष्टयवशान्निखिलवासनानिवृत्तौ
परनिर्व्वाणं शून्यरूपं सेत्स्यतीति वयं
कृतार्थाः
नास्माकमुपदेश्यं किञ्चिदस्तीति।
शिष्यैस्ताब-
द्योगश्चाचारश्चेति द्वयं करणीयम्।
तत्राप्राप्त-
स्यार्थस्य प्राप्तये पर्य्यनुयोगो योगः
गुरूक्त-
स्यार्थस्याङ्गीकरणमाचारः
गुरूक्तस्याङ्गीकर-
णादुत्तमाः पर्य्यनुयोगस्याकरणादधमाश्च
अत-
स्तेषां माध्यमिका इति प्रसिद्धिः।
गुरूक्त-
भावनाचतुष्टयं वाह्यार्थस्य शून्यत्वं
चाङ्गीकृत्या-
न्तरस्य शून्यत्वञ्चाङ्गीकृतं कथमिति
पर्य्यनु-
योगस्य करणात् केषाञ्चिद् योगाचारप्रथा
।
एषा हि तेषां परिभाषा स्वयं वेदनं
तावदङ्गी-
कार्य्यम् अन्यथा जगदान्ध्यं प्रसज्येत ।
तत्
कीर्त्तितं धर्म्मकीर्त्तिना।
"अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः
प्रसिध्यतीति ॥"
वाह्यं ग्राह्यं नोपपद्यत एव
विकल्पानुपपत्तेः।
अर्थो ज्ञानग्राह्यो भावादुत्पन्नो भवति
अनुत्पन्नो

"अविभागोऽपि बुद्ध्यात्मा विपर्य्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥"
इति च ॥
न च रसवीर्य्यविपाकादि समानमाशामोदको-
पार्जितमोदकानां स्यादिति वेदितव्यं वस्तुतो
वेद्यवेदकाकारविधुराया अपि बुद्धेर्व्यवहर्तृपरि-
ज्ञानानुरोधेन विभिन्नग्राह्यग्राहकाकाररूप-
वत्तया तिमिराद्युपहताक्ष्णं केशेन्द्रनाडी-
ज्ञानभेदवदनाद्युपप्लववासनासामर्थ्याद्व्यवस्थोप
पत्तेः पर्य्यनुयोगायोगात्। यथोक्तम्
"अवेद्यवेदकाकारा यथा भ्रान्तैर्निरीक्ष्यते ।
विभक्तलक्षणग्राह्यग्राहकाकारविप्लवा॥
तथा कृतव्यवस्थेयं केशादिज्ञानभेदवत् ।
यदा तदा न सञ्चोद्या ग्राह्यग्राहकलक्षणा ॥"
इति ॥

तस्माद्बुद्धिरेवानादिवासनावशादनेकाकाराव-

भासत इति सिद्धम्। ततश्च प्रागुक्तभावना-
प्रचयबलान्निखिलवासनोच्छेदविगलितविविध-
विषयाकारोपप्लवविशुद्धविज्ञानोदयोमहोदय
इति। अन्ये तु मन्यन्ते यथोक्तं वाह्यं वस्तुजातं
नास्तीति तदयुक्तं प्रमाणाभावात्। न च
सहोपलम्भनियमः प्रमाणमिति वक्तव्यं वेद्यवेद-
कयोरभेदसाधकत्वेनाभिमतस्य तस्याप्रयोजक-
त्वेन सन्दिग्धविपक्षव्यावृत्तिकत्वात्। ननु भेदे
सहोपलम्भनियमात्मकं साधनं न स्यादिति चेन्न
ज्ञानस्यान्तर्मुखतया च भेदेन प्रतिभासमान-
तया एकदेशत्वैककालत्वलक्षणसहत्वनियमा-
सम्भवाच्च नीलाद्यर्थस्य ज्ञानाकारत्वे अहमिति
प्रतिभासः स्यात् नत्विदमिति प्रतिपत्तिः प्रत्यया
दव्यतिरेकात्। अथोच्यते ज्ञानस्वरूपोऽपि
नीलाकारो भ्रान्त्या बहिर्वद्भेदेन प्रतिभासत
इति न च तत्राहमुल्लेख इति। तथोक्तम्।
"परिच्छेदान्तराद्योऽयं भागो बहिरिव स्थितः ।
ज्ञानस्याभेदिनो भेदप्रतिभासोऽप्युपप्लवः ॥"
इति ॥
"यदन्तर्ज्ञेयतत्त्वं तद्बहिर्वदवभासते ॥"
इति च ॥
तदयुक्तं वाह्यार्थाभावे तदुत्पत्तिरहिततया
बहिर्वदित्युपमानोक्तेरयुक्तेर्न हि वसुमित्रो
बन्ध्यापुत्त्रवदवभासतइति प्रेक्षावानाचक्षीत

मया दृष्टमिदं रजतादीति
विशिष्टनिषेधस्यो-
पलम्भात्। यदि दृष्टं सत् तदा
तद्विशिष्टस्य
दर्शनस्येदन्ताया अधिष्ठानस्य च
तस्मिन्नध्यस्तस्य
रजतत्वादेस्तत्सम्बन्धस्य च
समवायादेः सत्त्वं
स्यात् न चैतदिष्टं कस्यचिद्वादिनः। न
चार्द्ध
जरतीयमुचितं न हि कुक्कुट्या एको
भागः
पाकाय अपरो भागः प्रसवाय
कल्प्यतामिति
कल्प्यते।
तस्मादध्यस्ताधिष्ठानतत्सम्बन्धदर्श्न-
द्रष्टॄणां मध्ये एकस्यानेकस्य वा असत्त्वे
निषेध-
विषयत्वेन सर्व्वस्यासत्त्वं
बलादापतेदिति भग-
वतोपदिष्टे माध्यमिकास्तावदुत्तमप्रज्ञा
इत्थम-
चीकथन् भिक्षुपादप्रसारणन्यायेन
क्षणभङ्गाद्य-
भिधानमुखेन
स्थायित्वानुकूलवेदनीयत्वानुगत-
सर्व्वसत्यत्वभ्रमव्यावर्त्तनेन
सर्व्वशून्यतायामेव पर्य्य
वसानम्। अतस्तत्त्वं
सदसदुभयानुभयात्मक-
चतुष्कोणविनिर्मुक्तं शून्यमेव तथाहि
यदि
घटादेः सत्त्वं स्वभावस्तर्हि
कारकव्यापारवैय-
र्थ्यम्। असत्त्वं स्वभाव इति पक्षे
प्राचीन एव
दोषः प्रादुःस्यात्। यथोक्तम्।
“न सतः कारणापेक्षा व्योमादेरिव
युज्यते।
कार्य्यस्यासम्भवो हेतुः
खपुष्पादेरिवासत॥”
इति॥

वा न पूर्ब्बः उत्पन्नस्य स्थित्यभावात्
नापरः
अनुत्पन्नस्यासत्त्वात्। अथ मन्येथाः
अतीत
एवार्थो ज्ञानग्राह्यः तज्जनकत्वादिति
तदपि
बालभाषितं वर्त्तमानतावभासविरोधात्
इन्द्रि-
यादेरपि ग्राह्यत्वप्रसङ्गाच्च। किञ्च ग्राह्यः
किं
परमाणुरूपोऽर्थः अवयविरूपो वा। न
चरमः
कृत्स्नैकदेशविकल्पादिना
तन्निराकरणात्। न
प्रथमः अतीन्द्रियत्वात् षट्केन
युगपद्योगस्य
बाधकत्वाच्च। यथोक्तम्
“षट्केन युगपद्योगात् परमाणोः षडंशता
।
तेषामप्येकदेशत्वे पिण्डः स्यादणुमात्रकः
॥”
इति॥
तस्मात्
स्वव्यतिरिक्तग्राह्यविरहात्तदात्मिका
बुद्धिः स्वयमेव स्वात्मरूपप्रकाशिका
प्रकाश-
वदिति सिद्धम्। तदुक्तम्
“नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या
नानुभवोऽ-
परः।
ग्राह्यग्राहकवैधुर्य्यात् स्वयं सैव प्रकाशते
॥”
इति॥
ग्राह्यग्राहकयोरभेदश्चानुमातव्यः यद्वेद्यते
येन
वेदनेन तत्ततो न भिद्यते यथा ज्ञानेनात्मा
वेद्यन्ते तैश्च नीलादयः। भेदे हि
सत्यधुना
अनेनार्थस्य सम्बन्धित्वं न स्यात्
तादात्म्यस्य
नियमहेतोरभावात्
तदुत्पत्तेरनियामकत्वात्

भेदप्रतिभासस्य भ्रान्तत्वे अभेदप्रतिभासस्य
प्रामाण्यं तत्प्रामाण्ये भेदप्रतिभासस्य भ्रान्तत्व-
मिति परस्पराश्रयप्रसङ्गाच्च अविसंवादान्नील-
तादिकमेव संविदाना वाह्यमेवोपाददते जगत्यु-
पेक्षन्तेऽवान्तरमिति व्यवस्थादर्शनाच्च। एव-
ञ्चायमभेदसाधको हेतुर्गोमयपायसीयन्यायवदा-
भासतां भजेत अतोबहिर्वदिति वदता वाह्यं
ग्राह्यमेवेति भावनीयमिति भवदीय एव बाणो
भवन्तं प्रहरेत्।
ननु ज्ञानाभिन्नकालस्यार्थस्य वाह्यत्वमनुपपन्न-
मिति चेत् तदनुपपन्नम् इन्द्रियसन्निकृष्टस्य
विषयस्योत्पाद्ये ज्ञाने स्वाकारसमर्पकतया

<table>
<tr>
<td>विरोधादितरौ पक्षावनुपपन्नौ तदुक्तं<br>भगवता<br>अलङ्कारावतारे<br>“बुद्ध्या विविच्यमानानां स्वभावो<br>नावधार्य्यते ।<br>अतो निरभिलप्यास्ते निःस्वभावाश्च<br>दर्शिताः ॥”<br>इति ॥<br>“इदं वस्तुवलायातं यद्वदन्ति<br>विपश्चितः ।<br>यथा यथार्थाश्चित्यन्ते विशीर्य्यन्ते<br>तथा तथा ॥”<br>इति च ॥<br>न क्वचिदपि पक्षे व्यवतिष्टत इत्यर्थः ।<br>दृष्टार्थ-</td>
<td>यश्चायं ग्राह्यग्राहकसंवत्तीनां<br>पृथगवभासः स<br>एकस्मिंश्चन्द्रमसि द्वित्वावभास इव भ्रमः<br>अत्रा-<br>प्यनादिरविच्छिन्नप्रवाहाभेद्वासनैव<br>निमित्तम् ।<br>यथोक्तम् ।<br>“सहोपलम्भनियमादभेद्रो नीलतद्धियोः<br>।<br>भेदश्च भ्रान्ति विज्ञानैर्दृ<br>श्येतेन्दाविवाद्वयः ॥” इति ॥</td>
<td></td>
</tr>
</table>

समर्पितेन चाकारेण
तस्यार्थस्यानुमेयतोपपत्तेः
अतएव पर्य्यनुयोगपरिहारौ समग्राहिषाताम्।
“भिन्नकालं कथं ग्राह्यमिति चेत् ग्राह्यतां विदुः
।
हेतुत्वमेव च व्यक्तेर्ज्ञानाकारार्पणक्षमम् ॥”
इति ॥
तथाच यथा पुष्ट्या भोजनमनुमीयते यथा च भाषया देशः यथा वा सम्भ्रमेण स्नेहः तथा ज्ञानाकारेण ज्ञेयमनुमेयम्। तदुक्तम्
“अर्द्धेन घटयत्येनां न हि मुक्त्वार्द्धरूपत्राम्।
तस्मात् प्रमेयाधिगतेः प्रमाणं मेयरूपता ॥”
इति ॥
न हि वित्तिसत्तैव तद्वेदना युक्ता तस्याः सर्व्वत्राविशेषात् तान्तु सारूप्यमाविशत् सरूप-
यितुं घटयेदिति च। तथाच बाह्यार्थसद्भावे प्रयोगः ये यस्मिन् सत्यपि कादाचित्काः ते सर्व्वे तदतिरिक्तसापेक्षाः यथा अविवक्षत्यजि-
गमिषति मयि वचनगमनप्रतिभासा विवक्षु-
जिगमिषुपुरुषान्तरसन्तानसापेक्षाः तथाच विवादाध्यासिताः प्रवृत्तिप्रत्ययाः सत्यप्यालय-
विज्ञाने कदाचिदेव नीलाद्युल्लेखना इति।
तत्रालयविज्ञानं नामाहमास्पदं विज्ञानं नीलाद्युल्लेखि च प्रवृत्तिविज्ञानम्। यथोक्तम्
“तत् स्यादालयविज्ञानं यद्भवेदहमास्पदम्।
तत् स्यात्प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेत्
॥”
इति ॥
तस्मादालयविज्ञानसन्तानातिरिक्तः कादाचित्कः
प्रवृत्तिविज्ञानहेतुर्वाह्योऽर्थो ग्राह्य एव न वासनापरिपाकप्रत्ययः कादाचित्कत्वात् कदा-
चिदुत्पाद इति वेदितव्यम्। विज्ञानवादिनये हि वासनानामेकसन्तानवर्त्तिनामालयविज्ञा-
नानां तत्तत्प्रवृत्तिजननशक्तिः तस्याश्च स्वका-
र्य्योत्पादं प्रत्याभिमुख्यं परिपाकः तस्य च

तित्वोपलम्भात्। एवं चित्तचेत्यात्मकानां सुखा-
दीनां चत्वारि कारणानि द्रष्टव्यानि एवं चित्त-
चैत्यात्मकस्कन्धः पञ्चविधः रूपविज्ञानवेदना-
संज्ञा संस्कारसंज्ञकः। तत्र रूप्यन्त एभिर्विषया
इति रूप्यन्त इति च व्युत्पत्त्या सविषयाणीन्द्रि-
याणि रूपस्कन्धः।
आलयविज्ञानप्रवृत्तिविज्ञान-
प्रवाहो विज्ञानस्कन्धः।
प्रागुक्तस्कन्धद्वयसम्बन्ध-
जन्यः सुखदुः खादिप्रत्ययप्रवाहो वेदनास्कन्धः।
गौरित्यादिशब्दोल्लेखिसविज्ञानप्रवाहः संज्ञा-
स्कन्धः। वेदनास्कन्धनिबन्धना रागद्वेषादयः
क्लेशा उपक्लेशाश्च मदमानादयो धर्म्माधर्म्मौ च
संस्कारस्कन्धः।

> तदिदं सर्व्वं दुःखं दुःखायतनं दुःखसाधन-

ञ्चेति भावयित्वा तन्निरोधोपायं तत्त्वज्ञानं सम्पादयेत्। अत एवोक्तं
दुःखसमुदायनिरोध-
मार्गाश्चत्वारः आर्य्यस्य बुद्धाभिमतानि तत्त्वानि।
तत्र दुःखं प्रसिद्धं ससुदायो दुःखकारणं तद्द्वि-
विधं प्रत्ययोपनिबन्धनो हेतूपनिबन्धनश्च। तत्र
प्रत्ययोपनिबन्धनस्य संग्राहकं सूत्रम् इदं कार्य्यं
ये अन्ये हेतवः प्रत्ययन्ति गच्छन्ति तेषामय-
मानानां हेतूनां भावः प्रत्ययत्वं कारणसमवायः

पायो मागः स च तत्त्वज्ञानं तच्च प्राचीन-
भावनाबलाद्भवतीति परमं रहस्यं सूत्रस्यान्तं पृच्छतां कथितं भवन्त्रश्च सूत्रस्यान्तं पृष्टवन्तः
सौत्रान्तिका भवन्त्विति भगवताभिहिततया सौत्रान्तिकसंज्ञा सञ्जातेति। केचन बौद्धा वाह्येषु गन्धादिषु आन्तरेषु रूपादिस्कन्धेषु सत्स्वपि तत्रानास्थामुत्पादयितुं सर्व्वं शून्य-
मिति प्राथमिकान् विनेयानचीकथत् भगवान्
द्वितीयांस्तु विज्ञानमात्रग्रहाविष्टान् विज्ञान-
मेवैकं सदिति तृतीयानुभवं सत्यमित्यास्थितान्
विज्ञेयमनुमेयमिति सेयं विरुद्धा भाषेति वर्ण-
यन्तो वैभाषिकाख्यया ख्याताः। एषा हि तेषां परिभाषा समुन्मिषति विज्ञेयानुमेयत्ववादे प्रात्यक्षिकस्य कस्यचिदप्यर्थस्याभावेन व्याप्ति-
संयेदनस्थानाभावेनानुमानप्रवृत्त्यनुपपत्तेः सकललोकानुभवविरोधश्च। ततश्चार्थो द्विविधः
ग्राह्योऽध्यवसेयश्च तत्र ग्रहणं निर्विकल्पकरूपं प्रमाणं कल्पनापोढत्वात् अध्यवसायः सविक-
ल्पकरूपोऽप्रमाणं कल्पनाज्ञानत्वात्।
तदुक्तम्।
“कल्पनापोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकम्।
विकल्पो वस्तुनिर्भासादसंवादादुपप्लवः ॥”
इति ॥
“ग्राह्यं वस्तुप्रमाणं हि ग्रहणं यदितोऽन्यथा।
न तद्वस्तु न तन्मानं शब्दलिङ्गेन्द्रियादिजम्
॥”
इति च ॥

> ननु सविकल्पकस्याप्रामाण्ये कथं ततः प्रवृत्त-

स्यार्थप्राप्तिः संवादश्चोपपद्येयातामिति चेन्न तद्भद्रं मणिप्रभाविषयमणिविकल्पन्यायेन पार-
पम्पर्य्येणार्थप्रतिलम्भसम्भवेन तदुपपत्तेः। अव-
शिष्टं सौत्रान्तिकप्रस्तावे प्रपञ्चितमिति नेह प्रतन्यते। न च विनेयाशयानुरोधेनोपदेशभेदः

प्रत्ययः कारणं स्वसन्तानवर्त्तिपूर्ब्बक्षणः
कक्षी-
क्रियते सन्तानान्तरनिबन्धनत्वानङ्गीकारात्
।
ततश्च
प्रवृत्तिज्ञानजननालयविज्ञानवर्त्तिवासना
परिपाकं प्रति सर्व्वेऽप्यालयविज्ञानवर्त्तिनः
क्षणाः समर्था एवेति वक्तव्यं न चेदेकोऽपि न
समर्थः स्यादालयविज्ञानसन्तानवर्त्तित्वाविशे
षात् । सर्व्वे समर्था इति पक्षे कार्य्यक्षेपानुप-
पत्तिः ततश्च कादाचित्कत्वनिर्व्वाहाय शब्द-
स्पर्शरूपरसगन्धविषयाः सुखादिविषयाः
षडपि
प्रत्ययाश्चतुरः प्रत्ययान् प्रतीत्योत्पद्यन्ते इति
चतुरेणानिच्छताप्यच्छमतिनास्वानुभवमना-
च्छाद्य परिच्छेत्तव्यम् । ते चत्वारः प्रत्ययाः
प्रसिद्धाः
आलम्बनसमनन्तरसहकार्य्यधिपति-
रूपाः तत्र ज्ञानपदवेदनीयस्य
नीलाद्यवभासस्य
चित्तस्य नीलालम्बनप्रत्ययात् नीलाकारता
भवति समनन्तरप्रत्ययात् प्राचीनज्ञानाद्बोध-
रूपता सहकारिप्रत्ययादालोकाच्चक्षुषोऽधि
पतिषत्ययाद्विषयग्रहणप्रतिनियमःविदितस्य
ज्ञानस्य रसादिसाधारण्यप्राप्तेर्न्नियामकं चक्षुर-
धिपतिर्भवितुमर्हति लोके नियामकस्याधिप-

तन्मात्रस्य फलं न चेतनस्य कस्यचिदिति
सूत्रार्थः यथा बीजहेतुरङ्कुरो धातूनां षण्णां
समवायाज्जायते । तत्र पृथिवी
धातुरङ्कुरस्य
काठिन्यं गन्धञ्च जनयति अब्धातुः स्नेहं
रसञ्च
जनयति तेजोधातू रूपमौष्ण्यञ्च वायुधातुः
स्पर्शनं चलनञ्च आकाशधातुरवकाशं
शब्दञ्च
ऋतुधातुर्यथायोगं पृथिव्यादिकम् ।
हेतूपनिव-
न्धनस्य च संग्राहकं सूत्रम् तत्पादाद्वा
तथा-
गतानामनुत्पादाद्वा स्थितैवैषां धर्म्माणां
धर्म्मता
धर्म्मस्थितिता धर्म्मनियामकता च प्रतीत्य
समुत्पादानुलोमतेति । तथागतानां बुद्धानां
मते धर्म्माणां कार्य्यकारणरूपाणां या
धर्म्मता
कार्य्यकारणभावरूपा
एषोत्पादादनुत्पादाद्वा
स्थिता यस्मिन् सति यदुत्पद्यते तत्तस्य
कारणस्य
कार्य्यमिति धर्म्मतेत्यस्य विवरणं धर्म्मस्य
कार्य्यस्य
कारणानतिकमेण स्थितिः
स्वार्थिकस्तल्प्रत्ययः
धर्म्मस्य कारणस्य कार्य्यं प्रति
नियामकता ।
नन्वयं कार्य्यकारणभावश्चेतनमन्तरेण न
सम्भव-
तीति अत उक्तं कारणे सति तत्प्रतीत्य
प्राप्य
समुत्पादे अनुलोमता अनुसारिता या सैव
धर्म्मता उत्पादादनुत्पादाद्वा धर्म्माणां
स्थिता
न चात्र कश्चिश्चेतनोऽधिष्ठातोपलभ्यत
इति
सूत्रार्थः । यथा प्रतीत्य समुत्पादस्य हेतूप-
निबन्धः बीजादङ्कुरोऽङ्कुरात् काण्डं
काण्डान्नालो
नालाद्गर्भस्ततः शूकं ततः पुष्पं ततः
फलं न चात्र

साम्प्रदायिको न भवतीति भणितव्यं यतो
भणितं
बोधचित्तविवरणे
"देशना लोकनाथानां सत्त्वाशयवशानुगाः ।
भिद्यन्ते बहुधा लोके उपायैर्बहुभिः किल ॥
गम्भीरोत्तानभेदेन क्वचिच्चोभयलक्षणाः ।
भिन्ना हि देशना भिन्ना शून्यताऽद्वयलक्षणा ॥"
इति ॥
द्वादशायतनपूजा श्रेयस्करीति वौद्धनये प्रसि-
द्धम् ।
"अर्थानुपार्ज्य बहुशो द्वादशायतनानि वै ।
परितः पूजनीयानि किमन्यैरिह पूजितैः ॥
ज्ञानेन्द्रियाणि पञ्चैव तथा कर्म्मेन्द्रियाणि च ।
मनो वुद्धिरिति प्रोक्तं द्वादशायतनं बुधैः ॥"
इति ॥
विवेकबिलासे बौद्धमतमित्थमभ्यधायि ।
"बौद्धानां सुगतो देवो विश्वञ्च क्षणभङ्गुरम् ।
आर्य्यसत्त्वाख्यया तत्त्वचतुष्टयमिदं क्रमात् ॥
दुःखमायतनञ्चैव ततः समुदयो मतः ।
मार्गश्चेत्यस्य च व्याख्या क्रमेण श्रूयतामतः ॥
दुःखं संसारिणः स्कन्धास्ते च पञ्च
प्रकीर्त्तिताः ।
विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च ॥

| | | |
|---|---|---|
| | वाह्ये समुदाये कारणं बीजादि कार्य्यमङ्कुरादि वा चेतीयते अहमङ्कुरं निर्वर्त्तयामि अहं बीजेन निर्वर्त्तित इति । एवमाध्यात्मिकेष्वपि कारण-द्वयमवगन्तव्यम् । पुरःस्थिते प्रमेयाब्धौ ग्रन्थ-विस्तरभीरुभिरुपरम्यते। तदुभयनिरोधः तद-नन्तरं विमलज्ञानोदयो वा मुक्तिः तन्निरोधो | |

पञ्चेन्द्रियाणि शब्दाद्या विषयाः पञ्च मानसम् ।
धर्म्मायतनमेतानि द्वादशायतनानि तु ॥
रागादीनां गणोऽयं स्यात् समुदेति नृणां हृदि ।
आत्मात्मीयस्वभावाख्यःस स्यात् समुदयः पुनः ॥
क्षणिकाः सर्व्वसंस्कारा इति या वासना स्थिरा ।
स मार्ग इति विज्ञेयः स च मोक्षोऽभिधीयते ॥
प्रत्यक्षमनुमानञ्च प्रमाणद्वितयं तथा ।
चतुःप्रस्थानिका बौद्धाः ख्याता वैभाषिकादयः ॥
अर्थो ज्ञानान्वितो वैभाषिकेण बहु मन्यते ।
सौत्रान्तिकेन प्रत्यक्षग्राह्योऽर्थो न बहिर्मतः ॥
आकारसहिता बुद्धिर्योगाचारस्य सम्मता ।
केवलां संविदं स्वस्थां मन्यन्ते मध्यमाः पुनः ॥
रागादिज्ञानसन्तानवासनाच्छेदसम्भवा ।
चतुर्णामपि बौद्धानां मुक्तिरेषा प्रकीर्त्तिता ॥
कृत्तिः कमण्डलुर्मौण्ड्यं चीरं पूर्ब्बाह्णभोजनम् ।
सङ्घो रक्ताम्बरत्वञ्च शिश्रिये बौद्धभिक्षुभिः ॥”
इति ॥
इति सर्व्वदर्शनसंग्रहे बौद्धदर्शनम् ॥)
(बुद्धेरिदमिति व्युत्पत्त्या वाच्यलिङ्गः । बुद्ध-सम्बन्धि वस्तु ॥)

**बौद्धः**, पुं, (बुद्धं बुद्धशास्त्रं वेत्तीति । बुद्ध + अण् ।)
बुद्धशास्त्रावलम्बी । तत्पर्य्यायः । भिन्नकः २ क्षपणः ३ अह्रीकः ४ वैनायिकः ५ । इति त्रिकाण्डशेषः ॥

**बौधः**, पुं, (बुधस्यापत्यं पुमान् । बुध + अण् ।)
बुधस्य पुत्त्रः । स च पुरूरवाः । इति हेम-चन्द्रः । ३ । ३६५ ॥

**ब्यध**, य औ ताडे । इति कविकल्पद्रुमः ॥ (दिवा०-पर०-सक०-अनिट् ।) य बिध्यति शत्रुं शूरः । औ अब्यात्सीत् । कश्चित्तु द्विर्भूतस्यानिकारी-भूतयकारस्य ब्यधेर्वकारो वर्ग्यः अन्यत्र दन्त्यः इति मन्वानः सनि विभ्यत्सतीत्याह । इति दुर्गादासः ॥

**ब्युष**, क उत्सृजि । उत्सर्गे । (चुरा०-पर०-सक०-सेट् ।) क ब्योषयति धनं दाता । ब्योषं वकारादौ लिखितोऽयं शब्दः ॥ (दिनम् । अश्वः । इति निघण्टुः ॥
चतुर्द्दशमनोर्भौत्यस्य पुत्त्रभेदः । यथा, मार्कण्डेये । १०० । ३२ ।
“गुरुर्गभीरो ब्रध्नश्च भरतोऽनुग्रहस्तथा ।
तेजस्वी सुबलश्चैव भौत्यस्यैते मनोः सुताः ॥”)
रोगविशेषः । तस्य लक्षणं यथा,
“अभ्यभिष्यन्दिगुर्वामसेवनान्निचयं गतः ।
करोति ग्रन्थिवच्छोथं दोषो वङ्क्षणसन्धिषु ॥
ज्वरशूलाङ्गसादाढ्यं तं ब्रध्नमिति निर्द्दिशेत् ॥”
इति माधवकरः ॥
तस्य चिकित्सा ।
“भृष्टश्चैरण्डतैलेन सम्यक् कल्कोऽभयाभवः ।
कृष्णासैन्धवसंयुक्तो ब्रध्नरोगहरः परः ॥
अजाजीहबुषाकुष्ठं गोमेदवदरान्वितम् ।
काञ्जिकेन तु संपिष्टं तल्लेपो ब्रध्नजित् परः ॥”
गोमेदं पत्रम् । तथा च निघण्टौ धन्वन्तरिः ।
“पत्रं दलाह्वयं रामं गोमेदं रसनाह्वयम् ॥”
इति भावप्रकाशः ॥
(अस्य ससम्प्राप्तिलक्षणं यथा, --
“यस्य वायुः प्रकुपितः शोफशूलकरश्चरन् ।
वंक्षणाद्वृषणौ याति ब्रध्नस्तस्योपजायते ॥”
इति चरके सूत्रस्थानेऽष्टादशेऽध्याये ॥)

**ब्रह्म**, क्ली, (बृंहति बर्द्धते निरतिशयमहत्त्व-लक्षणबृद्धिमान् भवतीत्यर्थः । बृहिबृद्धौ + बृंहे-र्नोऽच्च ।” उणा० ४ । १४५ । मनिन् नकार-स्याकारः । रत्वञ्च ।) वेदः । (यथाह श्रुतिः ।
“तस्मादेतद्ब्रह्मनामरूपमन्नञ्च जायते ॥”
तथा च भागवते । १ । १ । १ ।
“जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत् सूरयः ॥”
दिवत् इति । अनेन हि विभक्तस्यानित्यत्वे-ऽवगते तस्मिन्ननुगतप्रकाशात्मकस्य ब्रह्मणोऽ-विभक्तस्य नित्यत्वमपि अर्थादवगच्छति । इति वेदान्तसारे विद्वन्मनोरञ्जनीटीका ॥ तत्र श्रुतिवाक्यानि यथा, “सत्यं ज्ञानमनन्तं ब्रह्म ।
विज्ञानमानन्दं ब्रह्म ।” “आनन्दो ब्रह्मेति व्यजानात् आनन्दरूपममृतं यद् विभाति ।
यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह ।
यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तत् विजि-ज्ञासस्व तद्ब्रह्मेति ।” इत्याद्यसंख्येयं श्रुति-वचनमनुसन्धेयम् ॥”)
तत्त्वम् । तपः । इत्यमरः । ३ । ३ । ११४ ॥
ब्रह्म चतुर्व्विधं यथा । विराट् १ हिरण्यगर्भः २ ईश्वरः ३ तुरीयः ४ । इति वेदान्तसारः ॥
अस्य लक्षणम् । यथा, आत्मबोधे ।
“यल्लाभान्नापरो लाभो यत्सुखान्नापरं सुखम् ।
यज्ज्ञानान्नापरं ज्ञानं तद्ब्रह्मेत्यवयारयेत् ॥
यद्दृष्ट्वा नापरं दृश्यं यद्भूत्वा न पुनर्भवः ।
यज्ज्ञात्वा नापरं ज्ञेयं तद्ब्रह्मेत्यवधारयेत् ॥
तिर्य्यगूर्द्ध्वमधःपूर्णं सच्चिदानन्दमद्वयम् ।
अनन्तं नित्यमेकं यत्तद्ब्रह्मेत्यवधारयेत् ॥
अतद्व्यावृत्तिरूपेण वेदान्तैर्लक्ष्यते द्वयम् ।
अखण्डानन्दमेकं यत्तद्ब्रह्मेत्यवधारपेत् ॥
दृश्यते श्रूयते यद्यद्ब्रह्मणोऽन्यन्न तद्भवेत् ।
तत्त्वज्ञानाच्च तद्ब्रह्म सच्चिदानन्दमद्वयम् ॥
सर्व्वगं सच्चिदात्मानं ज्ञानचक्षुर्निरीक्ष्यते ।

त्रिकट्ट । इति दुर्गादासकृतधातुदीपिकायां गोविन्दभट्टः ॥

**ब्रण**, शब्दे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट् ।) ब्रणति । इति दुर्गादासः ॥

**ब्रततिः**, स्त्री, (व्रजन्ती ततिर्विस्तृतिर्य्यस्याः । पृषोदरादित्वात् साधुः । यद्वा, प्रतनोतीति । तन-दुञविस्तारे "क्तिच् क्तौ च संज्ञायाम् ।" ३ । ३ । १७४ । इति क्तिच् । पृषोदरादित्वात् पस्य वः ।) लता । विस्तारः । इत्यमरः ॥

**ब्रध्नः**, पुं, (बन्धवन्धने + "बन्धेर्ब्रधिबुधी च । उणा० ३ । ५ । इति नक् ब्रधादेशश्च ।) सूर्य्यः । (यथा, ऋग्वेदे । १ । ६ । १ ।
"युञ्जन्ति ब्रध्नसरुषं चरन्तं परितस्तुषः ।
रोचन्ते रोचना दिवि ॥")
वृक्षमूलम् । अर्कवृक्षः । इत्यमरः । २ । ४ । १५ ।
शिवः । इति हेमचन्द्रः ॥ मेदिनीकारेणान्तःस्थ

वेदान्तमते 'वस्तु सच्चिदानन्दाद्वयं ब्रह्म तथा
अज्ञानादिसकलजडसमूहोऽवस्तु।' 'ब्रह्मैव नित्यं वस्तु तदन्यदखिलमनित्यम्।'
तथाहि, --
"यत्स्यादर्व्वाक् संवत्सरोऽहोभिः परिवर्त्तते ।"
तदेव ज्योतिषां ज्योतिः । नित्यं विभुं सर्व्वगतं
सुसूक्ष्मम् । आकाशवत् सर्व्वगतश्च नित्यः ।
अजो नित्यः शाश्वतः सत्यं ज्ञानमनन्तं ब्रह्म रातेर्दातुः परायणं यत्र नान्यत् पश्यति नान्यत्
शृणोति नान्यद्विजानाति सभूमा यो वै भूमा तदमृतम् ।" इत्यादि श्रुतिभ्यो ब्रह्मणि नित्यत्वं
विशुद्धसत्त्वस्य पुंसः प्रतिभाति । तथा, नैवेह किञ्चनाग्र आसीत् मृत्युनैवेदमावृतमासीत् ।
आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन-
मिषत् सदेव सौम्येदमग्र आसीदेकमेवा-
द्बितीयं नेति नेति नेह नानास्ति किञ्चन यत्रान्यत्
पश्यति अन्यच्छृणोति अन्यद्विजानाति तदल्पम्
अथ यदल्पं तन्मर्त्त्यम् ।" इत्यादि श्रुतिवच-
नेभ्यो ब्रह्मणोऽन्यत्वं भेदप्रपञ्चेऽनित्यत्वञ्च तस्यैव
पुंसः प्रतिभाति । तथानुमानमपि यथा, विम-
तोऽचेतनवर्गोऽनित्यो विभक्तत्वात् घटपटस्तम्भा-

अज्ञानचक्षुर्नेक्षेत भास्वन्तं भानुमन्धवत् ॥"
अपि च । "सत्यमानन्दमद्बयममृतमेकरूपं
वाङ्मनसोऽगोचरं सर्व्वगं सर्व्वातीतं चिदेकरसं
देशकालापरिच्छिन्नमपादमपि शीघ्रगमपाणि
च सर्व्वग्रहमचक्षुरपि सर्व्वद्रष्टृ अश्रोत्रमपि
सर्व्वश्रोतृ अचिन्त्यमपि सर्व्वज्ञं सर्व्वनियन्तृ
सर्व्वशक्ति सर्व्वेषां सृष्टिस्थितिलयकर्त्तृ किमपि
वस्तु ब्रह्मेति वेदा वदन्ति ॥"
शुद्धबुद्धस्वभाव
इत्यौपनिषदाः । १ । आदिविद्वान् सिद्ध इति
कापिलाः । २ ।
क्लेशकर्म्मविपाकाशयैरपरा-
मृष्टो निर्म्माणकायमधिष्ठाय सम्प्रदायप्रद्यो-
तकोऽनुग्राहकश्चेति पातञ्जलाः । ३ । लोक-
वेदविरुद्धैरपि निर्लेपः स्वतन्त्रश्चेति महापाशु-
पताः । ४ । शिव इति शैवाः । ५ । पुरुषोत्तम
इति वैष्णवाः । ६ । पितामह इति पौरा-
णिकाः । ७ । यज्ञपुरुष इति याज्ञिकाः । ८ ।
सर्व्वज्ञ इति सौगताः । ९ । निरावरण इति
दिगम्बराः । १० । उपास्यत्वेन देशित इति
मीमांसकाः । ११ । लोकव्यवहारसिद्ध इति
चार्व्वाकाः । १२ । यावदुक्तोपपन्न इति नैया-
यिकाः । १३ । विश्वकर्म्मेति शिल्पिनः । १४ ।
इति कुसुमाञ्जलिवृत्तिः ॥ योगशास्त्रमते ।
"ब्रह्मतेजोमयं शुक्रं यस्य सर्व्वमिदं रसः ।
एकस्य भूतं भूतस्य द्वयं स्थावरजङ्गमम् ॥
इति महाभारते मोक्षधर्म्मः ॥

तस्य टीका । ब्रह्मणः
स्वरूपमन्तराविस्मर-
णार्थमाह । ब्रह्मतेजोमयमिति । तेजोमयं
ज्ञानात्मकम् । शुक्रं बीजभूतम् । यस्य
सर्व्व-
मिदं रसः रसनीयं ज्ञेयं सर्व्वं यस्यैकस्य
भूतं
सत्यं न तु विवर्त्तवादिनामिवासत्यंभूतस्य
सिद्धस्य अकल्पितस्य तच्च सर्व्वं
स्थावरजङ्गमो-
पाधिवशात् द्वयं द्वेधा ॥ तच्च
सगुणनिर्गुण-
भेदेन द्विविधं यथा,
“ब्रह्मैकं मूर्त्तिभेदस्तु गुणभेदेन सन्ततम् ।
तद्ब्रह्म द्विविधं वस्तु सगुणं निर्गुणं शिव !
॥
मायाश्रितो यः सगुणो मायातीतश्च
निर्गुणः ।
स्वेच्छामयश्च भगवानिच्छया विकरोति च
॥
इच्छाशक्तिश्च प्रकृतिः सर्व्वशक्तिप्रसूः
सदा ।
केचिदेकं वदन्त्येवं ब्रह्म ज्योतिः सनातनम्
॥
केचिद्वदन्ति द्विविधं ब्रह्म प्रकृतिपूर्ब्बकम् ।
शृणु ये च वदन्त्येकं प्रकृतिपुरुषयोः परम्
॥
तस्माद्भवति तौ द्वौ च तद्ब्रह्म
सर्व्वकारणम् ।
अथवैकं परं ब्रह्म द्विविधं भवती च्छया ॥
इच्छाशक्तिश्च प्रकृतिः सर्व्वशक्तिप्रसूः
सदा ।
तत्रासक्तश्च सगुणः स शरीरी च प्राकृतः
॥
निर्गुणस्तत्र निर्लिप्तः अशरीरी निरङ्कुशः ।
स चात्मा भगवान्नित्यः सर्व्वाधारः
सनातनः ॥
सर्व्वेश्वरः सर्व्वसाक्षी सर्व्वत्रास्ति
फलप्रदः ।
शरीरं द्विविधं शम्भो ! नित्यं प्राकृतमेव च
॥
पुराणानामेकरूपं तस्मान्नवविधं स्मृतम् ।
न्यायो निर्व्वचनीयञ्च यन्मतं शङ्करोऽब्रवीत् ॥
नित्यं वैशेषिकात्यन्तं वदन्ति च विचक्षणाः ।
सांख्यो वदति तं देवं ज्योतीरूपं सनातनम् ॥
मीमांसा सर्व्वरूपञ्च वेदान्तः सर्व्वकारणम् ।
पातञ्जलोऽप्यनन्तञ्च वेदाः सत्यस्वरूपकम् ॥
स्वेच्छामयं पुराणञ्च भक्ताश्च नित्यविग्रहम् ॥”
इति तत्रैव १२८ अध्यायः ॥
सगुणनिर्गुणभेदेन तस्य चतुर्धा रूपं यथा, --
“चतुर्विभागः संसृष्टौ चतुर्धा संस्थितः स्थितौ ।
प्रलयञ्च करोत्यन्ते चतुर्भेदो जनार्द्दनः ॥
एकेनांशेन ब्रह्मासौ भवत्यव्यक्तमूर्त्तिमान् ।
मरीचिमिश्राः पतयः प्रजानामन्यभागतः ॥
कालस्तृतीयस्तस्यांशः सर्व्वभूतानि चापरः ।
इत्थं चतुर्धा संसृष्टौ वर्त्ततेऽसौ रजोगुणः ॥
एकांशेन स्थितो विष्णुः करोति परिपालनम् ।
मन्वादिरूपी चान्येन कालरूपी परेण च ॥
सर्व्वभूतेषु चान्येन संस्थितिं कुरुते स्थितः ।
सत्त्वं गुणमुपाश्रित्य जगतः पुरुषोत्तमः ॥
आश्रित्य तमसो वृत्तिमन्तकाले तथा प्रभुः ।
रुद्रस्वरूपो भगवानेकांशेन भवत्यजः ॥
अग्न्यन्तकादिरूपेण भागेनान्येन वर्त्तते ।
कालस्वरूपो भागोऽन्यः सर्व्वभूतानि चापरः ॥
विनाशं कुर्व्वतस्तस्य चतुर्द्धैवं महात्मनः ॥”
इति विष्णुपुराणे १ अंशे २१ अध्यायः ॥
ब्रह्मध्यानं यथा, --
“ब्रह्मध्यानं प्रवक्ष्यामि मायातन्त्रविमर्द्दकम् ।
यच्छेद्वाङ्मनसि प्राज्ञस्तद्यच्छेज्ज्ञानमात्मनि ॥
ज्ञानं महति संयच्छेद्य इच्छेत् श्रेय आत्मनि ।
देहेन्द्रियमनोबुद्धिप्राणाहङ्कारवर्ज्जितम् ॥
वर्जितं भूततन्मात्रैर्गुणजन्माशनादिभिः ।
स्वप्रकाशं निराकारं सदानन्दमनादिमत् ॥
नित्यं शुद्धं वृद्धमृद्धं सत्यमानन्दमद्वयम् ।
तुरीयमक्षरं ब्रह्म अहमस्मि परं पदम् ॥
अहं ब्रह्मेत्यवस्थानं समाधिरिति गीयते ।
आत्मानं रथिनं विद्धि शरीरं रथमेव तु ॥
बुद्धिन्तु सारथिं विद्धि मनः प्रग्रहमेव च ।
इन्द्रियाणि हयानाहुर्विषयास्तेषु गोचराः ॥
आत्मेन्द्रियमनोयुक्तो भोक्तेत्याहुर्मनीषिणः ।
यस्य विज्ञानवानात्मा युक्तेन मनसा सदा ॥
न स तत्पदमाप्नोति युक्तेन मनसा तदा ।
श्रीवत्सकौस्तुभयुतो वनमाली श्रिया युतः
।
नित्यः शुद्धो बुद्धियुक्तः नित्यानन्दाह्वयः
परः ॥
आत्माहं परमं ब्रह्म परमज्योतिरेव तु ।
चतुर्व्विंशतिमूर्त्तिः स
शालग्रामशिलास्थितः ॥
द्वारकादिशिलासंस्थो ध्येयः पूज्योऽपि वा
हरिः ।
मनसोऽभीप्सितं प्राप्य देवो वैमानिको
भवेत् ॥
निष्कामो मुक्तिमाप्नोति मूर्त्तीर्ध्यायिन्
स्तुवन्
जपन् ॥”
इति गारुडे मूर्त्तामूर्त्तध्यानं ४४ अध्यायः
॥
ब्रह्मपदप्राप्तिकारणं यथा, --
“ब्रह्मण्याधाय कर्म्माणि निःसङ्गः
कामवर्जितः ।
प्रसन्नेनैव मनसा कुर्व्वाणो याति तत्पदम्
॥”
इति कूर्म्मपुराणे ३ अध्यायः ॥
सर्व्वं ब्रह्म यथा, --
“ब्रह्मैवेदं जगत् सर्व्वं ब्रह्मणोऽन्यन्न विद्यते
।
ब्रह्मान्यद्भाति चेन्मिथ्या यथा
मरुमराचिका ॥”
इत्यात्मबोधः ॥

**ब्रह्मकन्यका**, स्त्री, (ब्रह्मणः कन्यका सुता ।)
सरस्वती । इति त्रिकाण्डशेषः ॥ ब्राह्मी ।
इति राजनिर्घण्टः ॥

**ब्रह्मकर्म्मसमाधिः**, पुं, ब्रह्मण्येव कर्म्मात्मके समा-
धिश्चित्तैकाग्र्यं यस्य । यथा,
श्रीभगवद्गीता-
याम् । ४ । २४ ।
“ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म्मसमाधिना ॥”

**ब्रह्मकुण्डं**, क्ली, (ब्रह्मणा निर्म्मितं कुण्डं सरो-

नित्यं विनाशरहितं नश्वरं प्राकृतं सदा ।
अहं त्वञ्चापि भगवन्नावयोर्न्नित्यविग्रहः ॥
आवयोरंशभूता ये प्राकृता नष्टविग्रहाः ।
रुद्रादयस्त्वदंशाश्च मदंशा विष्णुरूपिणः ॥
ममाप्येवं द्विधा रूपं द्विभुजञ्च चतुर्भुजम् ।
चतुर्भुजोऽहं वैकुण्ठे पद्मया पार्षदैः सह ॥
गोलोके द्विभुजोऽहञ्च गोपीभिः सह राधया ।
द्विविधं मे वदन्त्येवं द्वौ प्रधानौ तु तन्मते ॥
पुरुषश्च सदा नित्यो नित्या प्रकृतिरीश्वरी ।
सदा तौ द्वौ च संश्लिष्टौ सर्व्वेषां पितरौ शिव ! ॥
सशरीरौ निःशरीरौ स्वेच्छया सर्व्वरूपिणौ ।
प्राधान्यञ्च यथा पुंसः प्रकृतेश्च तथा सदा ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ४ ३ अध्यायः ॥
नन्दयशोदां प्रति श्रीकृष्णवाक्यं यथा, --
“मामेव परमं ब्रह्म भगवन्तं सनातनम् ।
ध्यायं ध्यायं पुत्त्रबुद्धिं त्यक्त्रा लभ परं पदम् ॥”
इति तत्रैव १२७ अध्यायः ॥
सगुणस्य तस्य नवधा रूपं यथा, --
“योगिनो यं वदन्त्येवं ज्योतीरूपं सनातनम् १ ।
ज्योतिरभ्यन्तरे नित्यरूपं भक्ता वदन्ति यम् २ ॥
वेदा वदन्ति सत्यं यं ३ नित्यमाद्यं विचक्षणाः ४ ।
यं वदन्ति सुराः सर्व्वे परं स्वेच्छामयं प्रभुम् ५ ॥
सिद्धेन्द्रा मुनयः सर्व्वे सर्व्वरूपं वदन्ति यम् ६ ।
यमनिर्व्वचनीयञ्च योगीन्द्रः शङ्करो वदेत् ७ ॥
स्वयं धाता च प्रवदेत् कारणानाञ्च कारणम् ८ ।
शेषो वदेदनन्तं यं नवधा रूपमीश्वरम् ९ ॥
तर्काणामेव षण्णां यं षड्विधं रूपमीश्वरम् ।
स तत्पदमवाप्नोति स हि भूयो न जायते ।
विज्ञानसारथिर्य्यस्तु मनःप्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥
अहिंसादि यमः प्रोक्तः शौचादिनियमः स्मृतः ।
आसनं पद्मकाद्युक्तं प्राणायामो मरुज्जयः ॥
प्रत्याहारो जयः प्रोक्तो ध्यानमीश्वरचिन्तनम् ।
मनोधृतिर्धारणं स्यात् समाधिर्ब्रह्मणः स्मृतः ॥”
साकारस्य तस्य ध्यानं यथा, --
“अमूर्त्ते चेत् स्थिरी न स्यात्ततो मूर्त्तं विचिन्तयेत् ।
हृत्पद्मकर्णिकामध्ये शङ्खचक्रगदाब्जवान् ॥
वरम् ।) ब्रह्मणा निर्म्मितसरोबरविशेषः । यथा,
“पाण्डुनाथस्योत्तण्स्यां ब्रह्मकुण्डाह्वयं सरः ।
ब्रह्मणा निर्म्मितं पूर्ब्ब स्नानाय स्वर्गवासिनाम् ॥
आयामेन शतव्यामं विस्तीर्णेन तदर्द्धकम् ।
सर्व्वपापहरं पुण्यं देवलोकात् समागतम् ॥
तत्र स्नानमन्त्रः ।
कमण्डलुसमुद्भूत ब्रह्मकुण्डामृतस्रव । !
हर मे सर्व्वपापानि पण्यं स्वर्गञ्च साधय ॥
इत्यनेन तु मन्त्रेण स्नाति तस्मिन् सरोजले ।
पाण्डुनाथञ्च संपूज्य विष्णुसायुज्यमाप्नुयात् ॥
ब्रह्मकुण्डजले स्नात्वा पूजयित्वा उमापतिम् ।
ब्रह्मकूटं समारुह्य मुक्तिमेवाप्नुयान्नरः ॥”
इति कालिकापुराणे ८१ अध्यायः ॥

**ब्रह्मकूटः**, पुं, (ब्रह्मा कूटे शिखरे यस्य ।) पर्व्वतविशेषः । यथा, कालिकापुराणे ८१ अध्यायः ॥
“ब्रह्मकुण्डजले स्नात्वा पूजयित्वा उमापतिम् ।
ब्रह्मकूटं समारुह्य मुक्तिमेवाप्नुयान्नरः ॥”

**ब्रह्मकूर्च्चं**, श्ली, (ब्रह्मणो ब्राह्मणत्वस्य कूर्च्चमिव ।) व्रतविशेषः । यथा । वृद्धशातातपः ।
“रजस्वले तु ये नार्य्यावन्योन्यं स्पृशतो यदि ।
सवर्णे पञ्चगव्यन्तु ब्रह्मकूर्च्चमतःपरम् ॥”
पञ्चगव्यपानं व्रतरुपं तेनोपवासः ।
ब्रह्मकूर्च्चमाह जावालः ।
“अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः
पञ्चगव्यं पिबेत् प्रातर्ब्रह्मकूर्च्चविधिः स्मृतः ॥”

तदशक्तौ पुराणैकं दातव्यम् । इति प्रायश्चित्त-
तत्त्वम् ॥ (ब्रह्मपुराणेऽपि अस्य व्यवस्था यथा ।
नरस्तु चतुर्द्दश्यां पूर्णिमायाममावास्यायाम्बा
पञ्चगव्यं हविष्यान्नं वा भक्षयेत् । यस्तु पौर्ण-
मासीषु ब्रह्मकूर्च्चं कुर्य्यात् तस्य सर्व्वपापक्षयो
भवेत् । यस्तु मासेन द्विःकुर्य्यात् स यथेष्टाङ्गति-
माप्नुयात् ॥)

**ब्रह्मकोशी**, स्त्री, (ब्रह्मणः कोशीव ।) अजमोदा ।
इति राजनिर्घण्टः ॥ (गुणादयोऽस्या अज-
मोदाशब्दे ज्ञेयाः ॥)

**ब्रह्मगर्भा**, स्त्री, (ब्रह्मेव गर्भो यस्याः ।) आदित्य-
भक्ता । इति राजनिर्घण्टः ॥

**ब्रह्मगिरिः**, पु, (ब्रह्मणो गिरिः पर्व्वतः ।) ब्रह्म-
शैलः । इति शब्दरत्नावली ॥ (नीलकूटाभि-
धेयकामाख्यानिलयस्य पूर्ब्बभागे स्थितोऽयम् ।)
यथा, कालिकापुराणे ८१ अध्याये ।
"ततस्तु नीलकूटाख्यं कामाख्यानिलयं परम् ।
तत्पूर्ब्बभागे वसति ब्रह्मा ब्रह्मगिरिं पुनः ॥"

**ब्रह्मघ्नी**, स्त्री, गृहकन्या । इति राजनिर्घण्टः ॥
(ब्रह्माणं ब्राह्मणं हन्तीति । ब्रह्म + हन् + टक् ।
ततो ङीप् ।) ब्रह्मघातिनी च ॥

**ब्रह्मचर्य्यं**, क्ली, (ब्रह्मणे वेदार्थं चर्य्यं आचरणीयम् ।)
आश्रमविशेषः । यथा, गारुडे ९४ अध्याये ।
यथा, देवीपुराणे ४५ अध्याये ।
"वेदेषु चरते यस्मात्तेन सा ब्रह्मचारिणी ॥"
करुणीवृक्षः । इति राजनिर्घण्टः ॥ ब्रह्मीशाकः ।
इति रत्नमाला ॥ ब्रह्मचर्य्यव्रतधारिणी । यथा,
"आसीतामरणात् क्षान्ता नियता ब्रह्म-
चारिणी ।
यो धर्म्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् ॥"
इति मनुः । ५ । १५८ ॥

**ब्रह्मचारी**, [न्] पुं, (ब्रह्म ज्ञानं तपो वा आच-
रति अर्जयत्यवश्यम् । ब्रह्म + चर + आवश्यके
णिनिः ।) प्रथमाश्रमी । इति भरतः ॥
उपनयनानन्तरं नियमं कृत्वा गुरोः सन्निधौ
स्थित्वा साङ्गवेदाध्ययनं करोति यः । स द्विविधः ।
उपकुर्व्वाणः नैष्ठिकश्च । तस्य नियमा यथा, --
"यद्यस्य विहितं चर्म्म यत् सूत्रं या च मेखला ।
यो दण्डो यच्च वसनं तत्तदस्य व्रतेष्वपि ॥
सेवते मांस्तु नियमान् ब्रह्मचारी गुरौ वसन् ।
संनियम्येन्द्रियग्रामं तपोवृद्ध्यर्थमात्मनः ॥
नित्यं स्नात्वा शुचिः कुर्य्याद्देवर्षिपितृतर्पणम् ।
देवताभ्यर्च्चनञ्चैव समिदाधानमेव च ॥
वर्जयेन्मधु मांसञ्च गन्धं माल्यं रसान् स्त्रियः ।
शुक्तानि यानि सर्व्वाणि प्राणिनाञ्चैव हिंसनम् ॥
अभ्यङ्गमञ्जनञ्चाक्ष्णोरुपानच्छत्रधारणम्।
कामं क्रोधञ्च लोभञ्च नर्त्तनं गीतवादनम् ॥
द्यूतञ्च जनवादञ्च परिवादं तथानृतम् ।
स्त्रीणाञ्च प्रेक्षणालम्भमुपघातं परस्य च ॥
एकः शयीत सर्व्वत्र न रेतः स्कन्दयेत् क्वचित् ।
कामाद्धि स्कन्दयन्रेतो हिनस्ति व्रतमात्मनः ॥
स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः ।
स्नात्वार्कमर्च्चयित्वा त्रिः पुनर्मामित्यृचं जपेत् ॥
उदकुम्भं सुमनसो गोशकृन्मृत्तिकाकुशान् ।
आहरेद्यावदर्थानि भैक्षञ्चाहरहश्चरेत् ॥
वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्म्मसु ।
ब्रह्मचार्य्याहरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहम् ॥
गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु ।
अलाभे त्वन्यगेहानां पूर्ब्बं पूर्ब्बं विवर्ज्जयेत् ॥
सर्व्वं वापि चरेद्ग्रामं पूर्ब्बोक्तानामसम्भवे ।
नियम्य प्रयतो वाचमभिशस्तांस्तु वर्ज्जयेत् ॥
दूरादाहृत्य समिधः सन्निदध्याद्विहायसि ।
नित्यमुद्धृतपाणिः स्यात् साध्वाचारः सुसयतः ।
आस्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः ॥
हीनान्नवस्त्रवेशः स्यात् सर्व्वदा गुरुसन्निधौ ।
उत्तिष्ठेत् प्रथमञ्चास्य चरमञ्चैव संविशेत् ॥
प्रतिश्रवणसम्भाषे शयानो न समाचरेत् ।
नासीनो न च भुञ्जानो न तिष्ठन्न पराङ् मुखः ॥
आसीनस्य स्थितः कुर्य्यादभिगच्छंस्तु तिष्ठतः ।
प्रत्युद्गम्य त्वाव्रजतः पश्चाद्धावंस्तु धावतः ॥
पराङ्मुखस्याभिमुखो दूरस्थस्येत्य चान्तिकम् ।
प्रणम्य तु शयानस्य निदेशे चैव तिष्ठतः ॥
नीचं शय्यासनञ्चास्य सर्व्वदा गुरुसन्निधौ ।
गुरोस्तु चक्षुर्व्विषये न यथेष्टासनो भवेत् ॥
नोदाहरेदस्य नाम परोक्षमपि केवलम् ।
न चैवास्यानुकुर्व्वीत गतिभाषितचेष्टितम् ॥
गुरोर्यत्र परीवादो निन्दा वापि प्रवर्त्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥
परीवादात् खरो भवति श्वा वै भवति निन्दकः ।
परिभोक्ता कृमिर्भवति काटा भवति मत्सरी ॥
दूरस्थो नार्च्चयेदेनं न क्रुद्धो नान्तिके स्त्रियाः ।
यानासनस्थश्चैवैनमवरुह्याभिवादयेत् ॥
प्रतिवातेऽनुवाते च नासीत गुरुणा सह ।
असंस्रवे चैव गुरोर्न किञ्चिदपि कीर्त्तयेत् ॥
गोऽश्वोष्ट्रयानप्रासादप्रस्तरेषु कटेषु च ।
आसीत गुरुणा सार्द्धं शिलाफलकनौषु च ॥
गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेत् ।
न चानिसृष्टो गुरुणा स्वान् गुरूनभिवादयेत् ॥
विद्यागुरुष्वेतदेव नित्या वृत्तिः स्वयोनिषु ।
प्रतिषेधत्सु चाधर्म्मान् हितञ्चोपदिशत्स्वपि ॥
श्रेयःसु गुरुवद्वृत्तिं नित्यमेव समाचरेत् ।
गुरुपुत्त्रेषु चार्य्येषु गुरोश्चैव स्वबन्धुषु ॥
बालः समानजन्मा वा शिष्यो वा यज्ञकर्म्मणि ।
अध्यापयन् गुरुसुतो गुरुवन्मानमर्हति ॥
उत्सादनञ्च गात्राणां स्नापनोच्छिष्टभोजने ।
न कुर्य्याद्गुरुपुत्त्रस्य पादयोश्चावनेजनम् ॥
गुरुवत् प्रतिपूज्याः स्युः सवर्णा गुरुयोषितः ।
असवर्णास्तु संपूज्याः प्रत्युत्थानाभिवादनैः ॥
अभ्यञ्जनं स्नापनञ्च गात्रोत्सादनमेव च ।
गुरुपत्न्या न कार्य्याणि केशानाञ्च प्रसाधनम् ॥

“ब्रह्मचर्य्यस्थितो नैकमन्नमद्यादनापदि
।
ब्राह्मणः काममश्नीयात् श्राद्धे
व्रतमपीडयन् ॥
मधु मांसं तथाश्लीनमित्यादि
परिवर्जयेत् ।
प्रतिवेदं ब्रह्मचर्य्यं द्वादशाब्दानि पञ्च वा
॥
ग्रहणान्तिकमित्येके केशान्तञ्चैव षोडश
॥”
(ब्रह्मचर्य्ये अष्टाङ्गमैथुनप्रतिषेधः ।
यदुक्तम् ।
“स्मरणं कीर्त्तनं केलिः प्रेक्षणं
गुह्यभाषणम् ।
संकल्पोऽध्यवसायश्च
क्रियानिर्वृत्तिरेवच ॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ।
विपरीतं ब्रह्मचर्य्यमेतदेवाष्टलक्षणम् ॥”
एतच्च स्त्रीपुरुषयोः साधारणम् । पुंसः
स्त्रीस्म
रणादि शून्यत्वम् । स्त्रियाश्च
पुरुषस्मरणादि-
राहित्यम् अतएवाह मनुः । ५ । १६०
॥
“मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये
व्यवस्थिता ।
स्वर्गं गच्छत्यपुत्रापि यथा ते
ब्रह्मचारिणः ॥”
“ब्रह्मचर्य्ये व्यवस्थिता
अकृतपुरुषान्तरमैथुना ॥”
इति कुल्लूकभट्टः ॥
यमभेदः । यथा, पातञ्जले । २ । ३० ।
“अहिंसासत्यास्तेय ब्रह्मनर्य्यापरिग्रहा
यमाः ॥”
“ब्रह्मचर्य्यमुपस्थनियमः ।”
वीर्य्यधारणम्बा इति
भाष्यम् ॥ एतत्तु कलियुगे नास्ति ।
यथाह
महानिर्व्वाणतन्त्रे ।
“ब्रह्मचर्य्याश्रमो नास्ति वानप्रस्थोऽपि
न प्रिये ! ।
गार्हस्थो भैक्षुकश्चैव आश्रमौ द्वौ कलौ
युगे ॥”)

सायं प्रातश्च जुहुयात् ताभिरग्निमतन्द्रितः ॥
अकृत्वा भैक्षचरणमसमिध्य च पावकम् ।
अनातुरः सप्तरात्रमवकीर्णिव्रतञ्चरेत् ॥
भैक्षेण वर्त्तयेन्नित्यं नैकान्नादी भवेद्व्रती ।
भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता ॥
व्रतवद्देवदैवत्ये पित्रे कर्म्मण्यथर्षिवत् ।
काममभ्यर्थितोऽश्नीयाद्व्रतमस्य न लुप्यते ॥
ब्राह्मणस्यैव कर्म्मैतदुपदिष्टं मनीषिभिः ।
राजन्यवैश्ययोस्त्वेवं नैतत् कर्म्म विधीयते ॥
चोदितो गुरुणा नित्यमप्रचोदित एव वा ।
कुर्य्यादध्ययने यत्नमाचार्य्यस्य हितेषु च ॥
शरीरञ्चैव वाचञ्च बुद्धीन्द्रियमनांसि च ।
नियम्य प्राञ्जलिस्तिष्ठेद्वीक्षमाणोगुरोर्मुखम् ॥

गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः ।
पूर्णविंशतिवर्षेण गुणदोषौ विजानता ॥
स्वभाव एव नारीणां नराणामिह दूषणम् ।
अतोऽर्थान्न प्रमाद्यन्ति प्रमदासु विपश्चितः ॥
अषिद्वांसमलं लोके विद्वांसमपि वा पुनः ।
प्रमदा ह्युत्पथं नेतुं कामक्रोधवशानुगम् ॥
मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् ।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥
कामन्तु गुरुपत्नीनां युवतीनां युवा भुवि ।
विधिवद्वन्दनं कुर्य्यादसावहमितिब्रुवन् ॥
विप्रोष्य पादग्रहणमन्वहञ्चाभिवादनम् ।
गुरुदारेषु कुर्व्वीत सतां धर्म्ममनुस्मरन् ॥
यथा खनन् खनित्रेण नरो वार्य्यधिगच्छति ।
तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥

| | | |
|---|---|---|
| **ब्रह्मचारणी**, स्त्री, (ब्रह्मणा वेदेन चारयति आचरतीति । ब्रह्म + चर + स्वार्थे णिच् + कर्त्तरि ल्यु । ङीप्) भार्गी । इति रत्नमाला ॥<br>**ब्रह्मचारिणी**, स्त्री, (ब्रह्मणि वेदे चरतीति । ब्रह्म + चर् + णिनिः । स्त्रियां ङीप् ।) दुर्गा । | | |

मुण्डो वा जटिलो वा स्यादथवा
स्याच्छिखा-
जटः ।
नैनं ग्रामेऽभिनिम्लोचेत् सूर्य्यो नाभ्युदियात्
क्वचित् ॥
तञ्चेदभ्युदियात् सूर्य्यः शयानं कामचारतः
।
निम्लोचेद्वाप्यविज्ञानाज्जपन्नुपवसेद्दिनम् ॥
सूर्य्येण ह्यभिनिर्मुक्तः शयानोऽभ्युदितश्च
यः ।
प्रायश्चित्तमकुर्व्वाणो युक्तः स्यान्महतैनसा
॥
आचम्य प्रयतो नित्यमुभे सन्ध्ये समाहितः
।
शुचौ देशे जपन् जप्यमुपासीत यथाविधि
॥”
इति मानवे । २ । १७४-२२२ ॥
अपि च । श्रीऔर्व्व उवाच ।
“बालः कृतोपनयनो वेदाहरणतत्परः ।
गुरुगेहे वसेद्भूप ! ब्रह्मचारी समाहितः ॥
शौचाचारवता तत्र कार्य्यं शुश्रूषणं गुरोः ।
ब्रतानि चरता ग्राह्या वेदाश्च कृतबुद्धिना ॥
उभे सन्ध्ये रविं भूप ! तथैवाग्निं समाहितः
।
उपतिष्ठेत्तथा कुर्य्याद्गुरोरप्यभिवादनम् ॥
स्थिते तिष्ठेद्व्रजेद्याति नीचैरासीत चासति
।
शिष्यो गुरौ नृपश्रेष्ठ ! प्रतिकूलं न संभजेत्
॥
तेनैवोक्तः पठेद्वेदं नान्यचित्तः पुरःस्थितः ।
अनुज्ञातञ्च भिक्षान्नमश्नीयाद्गुरुणा ततः ॥
अवगाहेदपः पूर्ब्बमाचार्य्येणावगाहिताः ।
समिज्जलादिकञ्चास्य कल्यं
कल्यमुपानयेत् ॥
गृहीतग्राह्यवेदश्च ततोऽनुज्ञामवाप्य वै ।
गार्हस्थ्यमावसेत् प्राज्ञो
निष्पन्नगुरुनिष्कृतिः ॥”
इति विष्णुपुराणे । ३ । ९ । १-७ ॥
अपि च । गारुडे ४९ अध्याये ।
“भिक्षाचर्य्याथ शुश्रूषा गुरोः स्वाध्याय एव
च ।

यथा मातृमानित्यादेः । वेदस्मृतिशिष्टैर्व्वा
प्रत्यक्षानुमानागमैर्व्वा तेभ्यो हि विशुद्धिः
प्रत्यक्षा । त्रिकर्म्मकृत् इज्याध्ययनदानानां
कर्त्ता
तरति अतिक्रामति जन्म च मृत्युञ्च जन्ममृत्यू ।
किञ्च ब्रह्मजज्ञमिति । ब्रह्मजज्ञं ब्रह्मणो
हिरण्यगर्भाज्जातो ब्रह्मजः ब्रह्मजश्चासौ
ज्ञश्चेति ब्रह्मजज्ञः सर्व्वज्ञो ह्यसौ तं देवं द्योतन-
ज्ञानादिगुणवन्तं ईड्यं स्तुत्यं विदित्वा शास्त्रतः
निचाय्य दृष्ट्वा च आत्मभावेन इमां स्वबुद्धि-
प्रत्यक्षां शान्तिं उपरतिं अत्यन्तमेति अतिशये-
नैति वैराजं पदं ज्ञानकर्म्मसमुच्चयानुष्ठानेन
प्राप्नोतीत्यर्थः । इति शङ्कराचार्य्यकृतभाष्यम्
॥

**ब्रह्मजटा**, स्त्री, (ब्रह्मणो जटेव संहता ।)

दमनकवृक्षः । इति राजनिर्घण्टः ॥

**ब्रह्मजीवी**, [न्] पुं, (ब्रह्मणा वेदेन वेदोक्त-

श्रौतादिकर्म्मणा इत्यर्थः जीवतीति । ब्रह्म +
जीव् + णिनिः ।) द्विजकार्य्येषु मूल्येन परि-
चारकः । यथा । अनृतवाक् तस्करो राजभृत्यो
वृक्षारोपकवृत्तिर्गरदोऽग्निदोऽश्वरथगजारोह-
णवृत्ती रङ्गोपजीवी श्वागणिकः शूद्रोपाध्यायो
वृषलीपतिर्भाण्डिको नक्षत्रोपजीवी श्ववृत्ति-
र्ब्रह्मजीवी त्तिकित्सको देवलकः पुरोहितः
कितवो मद्यपः कूटकारकोऽपत्यविक्रयी
मनुष्य-
पशुविक्रेता चेति तानुद्धरेत् समेत्य न्यायतो
ब्राह्मणव्यवस्थया सर्व्वद्रव्यत्यागेन
चतुर्थकाला-
हाराः सम्बत्सरं त्रिसवनमुपस्पृशेयुस्तस्यान्ते
देबपितृतर्पणं गवाह्निकञ्चेत्येवं व्यवहार्य्याः ।
इति मिताक्षरायां प्रायश्चित्ताध्याये प्रचेतसो
वचनम् ॥

**ब्रह्मज्ञः**, पुं, (ब्रह्म जानातीति । ब्रह्म + ज्ञा + क ।)

श्रीगोपालः । यथा, --
“वाग्दाता वाक्प्रदो वाणीनाथो ब्राह्मण-
रक्षकः ।
ब्रह्मज्ञो ब्रह्मकृत् ब्रह्मा ब्रह्मकर्म्मप्रकाशकः ॥”
इति नारदपञ्चरात्रे गोपालसहस्रनामस्तोत्रे ८

वासनाविरहविशिष्टमात्मभिन्नभिन्नज्ञानम् ॥
इतिमुक्तिवादः ॥ * ॥
“क्लेशकर्म्मविपाकाशय-
निवर्त्तकहिरण्यगर्भविषयकं ज्ञानम् ।” इति
वैजयन्तीधृतपातञ्जलमतम् ॥ * ॥
“प्रकृतिपुरु-
षयोर्व्विवेकविषयज्ञानम् ।” इति तत्रैव
सांख्य
मतम् ॥ तथा च ।
सूत उवाच ।
“वेदान्तसांख्यसिद्धान्तब्रह्मज्ञानंवदाम्यहम्
॥
अहं ब्रह्म परं ज्योतिर्व्विष्णुरित्येव चिन्तयन्
।
सूर्य्ये हृद्व्योम्नि वह्नौ च ज्योतिरेकं त्रिधा
स्थितम् ॥
यथा सर्पिः शरीरस्थं गवां न कुरुते बलम् ।
निर्गतं कर्म्मसंयुक्तं दत्तं तासां महाबलम् ॥
तथा विष्णुः शरीरस्थो न करोति हितं
नृणाम् ।
विनाराधनया देवः सर्व्वगः परमेश्वरः ॥
आरुरुक्षुमतीनान्तु कर्म्मज्ञानमुदाहृतम् ।
आरूढयोगवृक्षाणां ज्ञानं त्यागः परं मतम् ॥
ज्ञातुमिच्छति शब्दादीन् रागद्वेषोऽथ जायते
।
लोभो मोहः क्रोध एतैर्युक्तः पापं नरश्चरेत्
॥
हस्तावुपस्थमुदरं वाक् चतुर्थी चतुष्टयम् ।
एतत् सुसंयतं यस्य स विप्रः कथ्यते बुधैः
॥
परवित्तं न गृह्णाति हिंसां न कुरुते तथा ।
नाक्षक्रीडारतो यस्तु तस्य हस्तौ सुसंयतौ
॥
परस्त्रीवर्जनपरस्तस्योपस्थं सुसंयतम् ।
अलोलुपो मितं भुङ्क्ते जठरं तस्य संयतम्
॥
सत्यं हितं मितं ब्रूते यः सदा तस्य वाग्
यता ।
यस्य संयतान्येतानि तस्य किं तपसाध्वरैः
॥
ऐक्यं यद्बुद्धिमनसोरिन्द्रियाणाञ्च सर्व्वदा ।

सन्ध्याकर्म्माग्निकार्य्यञ्च धर्म्मोऽयं ब्रह्मचारिणः ॥”
स तु द्विविधः । यथा, कौर्म्मे २ अध्याये ।
“ब्रह्मचार्य्युपकुर्व्वाणो नैष्ठिको ब्रह्मतत्परः ।
योऽधीत्य विधिवद्वेदान् गृहस्थाश्रममाव्रजेत् ॥
उपकुर्व्वाणको ज्ञेयो नैष्ठिको मरणान्तिकः ।”
(गन्धर्व्वविशेषः । यथा महाभारते । १ । १२३ । ५५ ।
“ब्रह्मचारी बहुगुणः सुवर्णश्चेति विश्रुतः ।
विश्वावसुर्भूमन्युश्च सुचन्द्रश्च शरुस्तथा ॥”)

**ब्रह्मजज्ञः**, पुं, (ब्रह्मणो जायते य इति ब्रह्मजः ।

ब्रह्म + जन् + ड । जानातीति ज्ञः । ज्ञा + कः ।
ततः कर्म्मधारयः ।)
समष्टिस्थूलदेहाभिमानि-
विराट् । स च हिरण्यगर्भाज्जातः सर्व्वज्ञः ।
यथा, कठोपनिषदि । १ । १७ ॥
“त्रिनाचिकेतस्त्रिभिरेत्य सन्धिं
त्रिकर्म्मकृत् तरति जन्ममृत्यू ।
ब्रह्मजज्ञं देवमीड्यं विदित्वा
निचाय्येमां शान्तिमत्यन्तमेति ॥”
पुनरपि कर्म्मस्तुतिमेवाह त्रिनेति । त्रिना-
चिकेतः त्रिकृत्वो नाचिकेतोऽग्निः चितो येन स
त्रिनाचिकेतः
तद्विज्ञानस्तदध्ययनस्तदनुष्ठानवान्
वा । त्रिभिर्मातृपित्राचार्य्यैरेत्य प्राप्य सन्धिं
सन्धानं मात्राद्यनुशासनं यथावत्
प्राप्येत्येतत् ।
तद्धि प्रामाण्यकारणं श्रुत्यन्तरादवगम्यते । अध्यायः ॥
(विष्णुः । यथा महाभारते । १३ । १४९ । ८४ ।
“ब्रह्मविद् ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥”
कार्त्तिकेयः । यथा, महाभारते । ३ । २३१ । ११ ।
“ब्रह्मण्यो वै ब्रह्मजो ब्रह्मवित्त्वं
ब्रह्मशेषो ब्रह्मवतां वरिष्ठः ।
ब्रह्मप्रियो ब्राह्मणसव्रती त्वं
ब्रह्मज्ञो वै ब्राह्मणानाञ्च नेता ॥”)

**ब्रह्मज्ञः**, त्रि, (ब्रह्मजानातीति । ब्रह्म + ज्ञा + क ।)

ब्रह्मवेत्ता । यथा, --
“स ब्रह्मज्ञः स वेदज्ञः सोऽग्निहोत्री स दीक्षितः ।
चीनाचारक्रमाचार्य्यैर्यो यजेत्तारिणीं नरः ॥”
इति चीनाचारप्रयोगविधिः ॥

**ब्रह्मज्ञानं**, क्ली, (ब्रह्मणि ब्रह्मविषये यज्ज्ञानम् ।)

ब्रह्मविषयकज्ञानम् । इति समञ्जसावृत्तिः ॥ * ॥
तत्त्वमस्यादिवाक्यजन्यप्रतिफलितवृत्त्यारूढ
ज्ञानम् । इति वेदान्तलघुचन्द्रिका ॥ “मिथ्या-
विश्वेश्वरे परे देवे ध्यानमेतत् प्रकीर्त्तितम् ॥
भ्रुवोर्मध्ये स्थितां बुद्धिं विषयेषु युनक्ति यः ।
जीवो जाग्रदवस्थायामेवमाहुर्विपश्चितः ॥
इन्द्रियाणामुपरमे मनसि ह्यव्यवस्थिते ।
स्वप्नान् पश्यत्यसौ जीवो
वाह्यानाभ्यन्तरानथ ॥
हृदि स्थितः स तमसा मोहितो न स्मरत्यपि ।
यदा कस्य कुतो वेत्ति सुसुप्तिरिति कथ्यते ॥
जाग्रतो यस्य नो तन्द्रीर्न मोहो न भ्रमस्तथा ।
उत्पद्यते न जानाति शब्दादिविषयान् वशी ॥
इन्द्रियाणि समाहृत्य विषयेभ्यो मनस्तथा ।
बुद्ध्याहङ्कारमपि च प्रकृत्या बुद्धिमेव च ॥
संयम्य प्रकृतिञ्चापि चिच्छक्त्या केवले स्थितः ।
पश्यत्यात्मनि
चात्मानमात्मनात्मप्रकाशकम्॥
चिद्रूपममृतं शुद्धं निष्क्रियं व्यापकं शिवम् ।
तुरीयायामवस्थायामास्थितोऽसौन संशयः ॥
शब्दादयो गुणाः पञ्च सत्त्वाद्यास्तु गुणास्त्रयः ।
पुर्य्यष्टकस्य पद्मस्य पत्राण्यष्टौ च तानि हि ॥
साम्यावस्था गुणकृता प्रकृतिस्तत्र कर्णिका ।
कर्णिकायां स्थितो जीवो देहे चिद्रूप एव हि ॥
पुर्य्यष्टकं परित्यज्य प्रकृतिञ्च गुणात्मिकाम् ।
यदा याति तदा जीवो याति मुक्तिं न संशयः ।
शरीरेण चतुर्भागः कर्म्म बुद्धीन्द्रियाणि च ।
त्रिपञ्चकं विनश्येत याति पुर्य्यष्टकं सदा ।
सन्धार्य्यञ्चैव जीवेन योगसेवी हि मुक्तिभाक् ॥

प्राणायामो जपश्चैव प्रत्याहारोऽथ धारणा ।
ध्यानं समाधिरित्येते षड्योगस्य प्रसाधकाः
॥
पापक्षयो देवतानां प्रीतिरिन्द्रियसंयमः ।
मनसः स्थिरता तेभ्यस्तत्त्वालोकश्च सर्व्वदा
॥
गायत्र्या प्रणवेनाथ मात्रया प्राणसंयमः ।
जपध्यानयुतो गर्भस्तेन हीनस्त्वगर्भकः ॥
षट्त्रिंशन्मात्रिकः श्रेष्ठश्चतुर्विंशतिमात्रिकः ।
मध्या द्वादशमात्रास्तु ॐकारं सततं जपेत् ॥
श्रुत्वा यथास्वरं सम्यक् शब्दं गौर्याति
संमुखी ।
प्रणवे च कृते तद्वत् परं ब्रह्म न संशयः ॥
चारके प्रणवे जप्ते परं ब्रह्म प्रसीदति ।
अष्टाक्षरश्च जप्तव्यो गायत्री द्वादशाक्षरा ॥
सर्व्वेषामिन्द्रियाणान्तु प्रवृत्तिर्विषयेषु या ।
निवृत्तिर्मनसा तस्यां प्रत्याहारः प्रकीर्त्तितः ॥
इन्द्रियाणीन्द्रियार्थेभ्य समाहृत्य स्थितो हि
सः ।
मनसा सह बुद्ध्या च प्रत्याहारेषु संस्थितः
॥
प्राणायामैर्द्वादशभिर्यावत् कालकृतो भवेत् ।
यस्तावत् कालपर्य्यन्तं मनो ब्रह्मणि धारयेत्
॥
तस्यैव ब्रह्मणा प्रोक्तं ध्यानं द्वादश धारणाः ।
तुष्टे तु नियतो युक्तः समाधिः सोऽभिधीयते
॥
ध्यायन्न चलते यस्य मनोऽभिध्यायते भृशम्
।
प्राप्यावधिकृतं कालं यावत् सा धारणा
स्थिता ।
ध्येये सक्तं मनो यस्य ध्येयमेवानुपश्यति ।
नान्यं पदार्थं जानाति ध्यानमेतत्
प्रकीर्त्तितम् ॥
ध्येये मनो निश्चलतां याति ध्येयं
विचिन्तयन् ।
यत्तत् ध्यानं परं प्रोक्तं मुनिभिर्ध्यानिचिन्तकैः
॥
ध्येयमेव हि सर्व्वत्र ध्येयस्तल्लयतां गतः ।
पश्यति द्वैतरहितं समाधिः सोऽभिधीयते ॥
मनः संकल्परहितमिन्द्रियार्थांस्तुचिन्तयन् ।
हरिं संस्थाप्य देहेऽब्जे ध्यायन् योगी च
मुक्तिभाक् ॥
आत्मानमात्मना केचित् पश्यन्ति
ध्यानचक्षुषः ।
सांख्यबुद्ध्या तथैवान्ये योगेनान्ये तु
योगिनः ॥
ब्रह्मप्रकाशकं ज्ञानं भवबन्धविभेदकम् ।
तत्रैकचित्ततायोगो मुक्तिदो नात्र संशयः ॥
जितेन्द्रियान्तःकरणो ज्ञानतृप्तो हि यो भवेत्
।
स मुक्तः कथ्यते योगी परमात्मन्यवस्थितः
॥
आसनस्थानविधयो न योगस्य प्रसाधकाः ।
विलम्बजनकाः सर्व्वे विस्ताराः
परिकीर्त्तिताः ॥
शिशुपालः सिद्धिमागात्
स्मरणाभ्याससौरवात् ।
आश्रमाः सर्व्व एवेह पूर्ब्बरात्रे परे तथा ॥
योगाभ्यासं प्रकुर्व्वन्तः
पश्यन्त्यात्मानमात्मना ।
सर्व्वभूतेषु कारुण्यं विद्वेषं विषयेषु च ॥
गुप्तशिश्नोदरादिञ्च कुर्व्वन् योगी विमुच्यते ।
इन्द्रियैरिन्द्रियार्थांस्तु न जानाति नरो यदा ॥
काष्ठवत् ब्रह्मसंलीनो योगयुक्तस्तदा भवेत् ॥
सर्व्वे वर्णाः स्त्रियः सर्व्वाः कृत्वा पापानि
भस्मसात् ।
ध्यानाग्निनामलाः सन्तो लभन्ते परमां गतिम्
।
मथनात् दृश्यते ह्यग्निस्तद्वत् ध्यानेन वै हरिः
॥
ब्रह्मात्मनोर्यदेकत्वं स योगश्चोत्तमोत्तमः ॥
वाह्यैरुपायैर्मुक्तिर्न नान्तःस्थैः
स्याद्यमादिभिः ।
सांख्यज्ञानेन योगेन वेदान्तश्रवणेन च ।
प्रत्यक्षतात्मनो या हि सा मुक्तिरभिधीयते ॥
अनात्मन्यात्मरूपत्वमसतःसत्स्वरूपता ।
दुःखाभावे तथा सौख्यं माया विद्याविना-
शिनी ॥”
इति गारुडे ब्रह्मज्ञाने २४० अध्यायः ॥

**ब्रह्मज्ञानी**, त्रि, (ब्रह्मज्ञानं विद्यतेऽस्य । ब्रह्म-
शनैश्चरः । (स्त्री । दुर्गा । यथा महाभा-
रते ६ । २२ । २६ ।
“वेदश्रुतिमहापुण्ये ब्रह्मण्ये जातवेदसि ।
जम्बूकटकचैत्येषु नित्यं सन्निहितालये ॥”)
ब्रह्मणि साधौ त्रि । इति मेदिनी । ये, ९६ ॥

**ब्रह्मण्यदेवः**, पुं, (ब्रह्मण्यो देवः ।) श्रीकृष्णः ।
यथा, --
“नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः
॥”
इति नारदीयपुराणम् ॥
(यथा च भागवते । ४ । २१ । ३७ ।
“ब्रह्मण्यदेवः पुरुषः पुरातनो
नित्यं हरिर्यच्चरणाभिवन्दनात् ॥”)

**ब्रह्मतालः**, पुं, चतुर्मुखतालः । स तु, दशताला-
त्मकः । तत्र ७ मात्राः । मात्रा तु, क च ट
त पु इति पञ्चाक्षराणामुच्चारणकालः । सैव
लघुमात्रा । तदर्द्धं द्रुतमात्रा । तन्मध्ये ४
लघवः ६ द्रुताः । ० । ०० । ००० । यथा,
--
“चतुर्मुखाभिधे ताले जगणानन्तरं प्लुतः ॥”
इति सङ्गीतदामोदरः ॥

**ब्रह्मतीर्थं**, क्ली, (ब्रह्मणस्तीर्थम् ।) पुष्करमूलम् ।
इति राजनिर्घण्टः ॥ पुष्करतीर्थञ्च ॥ (तत्र
स्नानफलम् । यथा, महाभारते । ३ । ८३ ।
१०५ ।
“ततो गच्छेत राजेन्द्र ! ब्रह्मणस्तीर्थमुत्तमम्
।
तत्र वर्णावरः स्नात्वा ब्राह्मण्यं लभते नरः ।
ब्राह्मणश्च विशुद्धात्मा गच्छेत परमां गतिम्
॥”)

**ब्रह्मत्वं**, क्ली, ब्रह्मणो भावः । (“ब्रह्मणस्त्वः ।” ५ ।
१ । १३६ । इति त्वः ।) तत्पर्य्यायः ।
ब्रह्मभूयम्
२ ब्रह्मसायुज्यम् ३ । इत्यमरः । २ । ७ ।
५२ ।
ब्रह्मसापूज्यम् ४ । इति शब्दरत्नावली ॥
(यथा,
मार्कण्डेये । ५७ । ६० ।

यस्य ब्रह्मणि संलीनं समाधिस्थः स कीर्त्तितः ॥
ध्यायतः परमात्मानमात्मस्थं यस्य योगिनः ।
मनस्तल्लयतां याति समाधिस्थः स कीर्त्तितः ॥
चित्रस्यास्थिरता भ्रान्तिदौर्मनस्यं प्रमादता ।
योगिनां कथिता दोषा योगविघ्नप्रवर्त्तकाः ॥
स्थित्यर्थं मनसः सर्व्वं स्थूलरूपं विचिन्तयेत् ।
तद्ब्रतं निश्चलीभूतं सूर्य्यस्थं स्थिरतां व्रजेत् ॥
न विना परमात्मानं किञ्चिज्जगति विद्यते ।
विश्वरूपं तमेवेह इति ज्ञात्वा न मुह्यति ॥
ॐ कारं परमं ब्रह्म ध्यायेदब्जस्थितं विभुम् ।
क्षेत्रक्षेत्रज्ञरहितं जपेन्मात्रार्थयान्वितम् ॥
हृदि सञ्चिन्तयेत् पूर्ब्बं प्रधानं तस्य चोपरि ।
तमो रजस्तथा सत्त्वं मण्डलत्रितयं क्रमात् ॥
कृष्णरक्तसितं तस्मिन् पुरुषं जीवसंज्ञितम् ।
तस्योपरि गुणैश्वर्य्यमष्टपत्रं सरोरुहम् ॥
ज्ञानन्तु कर्णिका तत्र विज्ञानं केशरं स्मृतम् ।
वैराग्यं नालं तत्कन्दो वैष्णवो धर्म्म उत्तमः ॥
कर्णिकायां स्थितं चक्रं जीववन्निश्चलं विभुम् ।
ध्यायेदुरसि संयुक्तमोङ्कारं मुक्तिसाधकम् ॥
व्यक्ताव्यक्ते च षुरुषस्तिस्रो मात्राः प्रकीर्त्तिताः ।
अर्द्धमात्रा परं ब्रह्म ज्ञेयोऽध्यात्मविदुत्तमैः ॥
ध्यायन् यदि त्यजेत् प्राणान् याति ब्रह्मण्य-सैनिकम् ।

ज्ञान + इन् ।) ब्रह्मज्ञानविशिष्टः । यथा, --
"कुशलाकुशलावृत्तिरहितः समदर्शकः ।
लिङ्गाश्रमपरित्यागी ब्रह्मज्ञानी निगद्यते ॥"
इति शङ्करानन्ददीपिका ॥
तेनापि कृष्णभक्तिः कर्त्तव्या । यथा, --
ब्रह्मानन्देन पूर्णोऽहं तेनानन्देन पूर्णधीः ।
तथापि शून्यमात्मानं मन्ये कृष्णरतिं विना ॥"
इति पाद्मे पातालखण्डे जावालिं प्रति ब्रह्म-विद्यावचनम् ॥

**ब्रह्मण्यः**, पुं, (ब्रह्मणे हितः । ब्रह्मन् + "खलयव-माषतिलवृषब्रह्मणश्च ।" ५ । १ । ७ । इति यत् ।
"येचाभावकर्म्मणोः ।" ६ । ४ । १६८ । इत्यन्-प्रकृत्या ।) विष्णुः । यथा, महाभारते १३ । १४९ । ८४ ।
"ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्द्धनः ।
ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥"
अपि च ।
"ब्रह्मण्यो देवकीपुत्त्रो ब्रह्मण्यो मधुसूदनः ।
ब्रह्मण्यः पुण्डरीकाक्षो ब्रह्मण्यो विष्णुरच्युतः ॥"
इत्याह्निकचन्द्रिका ॥
ब्रह्मदारुवृक्षः । इत्यमरः । २ । ४ । ४१ ॥ मुञ्ज-तृणम् । तूलवृक्षः । इति राजनिर्घण्टः ॥

"ब्रह्मत्वममरेशत्वं देवत्वं मरुतस्तथा ॥")

**ब्रह्मदण्डः**, पुं, (ब्रह्मणो ब्राह्मणस्य दण्डः सिद्ध-यष्टिः ।) ब्राह्मणयष्टिका । इति शब्दचन्द्रिका ॥
वशिष्ठस्य सिद्धयष्टिः । यथा, --
"धिग्बलं क्षत्त्रियबलं ब्रह्मतेजो बलं बलम् ।
एकेन ब्रह्मदण्डेन बहवो नाशिता मम ॥"
इति रामायणे विश्वामित्रवाक्यम् ॥
(ब्रह्मणो ब्राह्मणस्य शापरूपो दण्डः ।) ब्रह्म-शापः । यथा, --
"ब्रह्मदण्डहता ये च विद्युदग्निहताश्च ये ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥"
इति तिथ्यादितत्त्वम् ॥
(अयं हि राजधर्म्मे शत्रुनाशनोपायः । यदुक्तं महाभारते । २ । ५ । १२३ ।
"कच्चिदस्त्राणि सर्व्वाणि ब्रह्मदण्डश्च तेऽनघ ! ।
विषयोगास्तथा सर्व्वे विदिताः शत्रुनाशनाः ॥")

**ब्रह्मदण्डी**, स्त्री, (ब्रह्मणे ब्रह्मोपासनार्थं दण्डी क्षुद्रो दण्डः ।) क्षुद्रक्षुपविशेषः । तत्पर्य्यायः । अजदण्डी २ कण्टपत्रफला ३ । अस्या गुणाः ।
कटुत्वम् । उष्णत्वम् ।
कफशोफानिलापहत्वञ्च ।
इति राजनिर्घण्टः ॥ (यथा गारुडे १८६ अध्याये ।
"ब्रह्मदण्डी तु पुष्पेण स्नाने पाने वशीकरा ॥")

**ब्रह्मदत्तः**, पुं, इक्ष्वाकुवंशीयराजविशेषः । तत्-

पर्य्यायः । ब्रह्मसूनुः २ । इति हेमचन्द्रः । ३ ।
३५८ ॥ (यथा महाभारते । २ । ८ । २० ।
"ब्रह्मदत्तस्त्रिगर्त्तश्च राजोपरिचरस्तथा ॥"
स्वनामख्यातो नीपपुत्त्रः । यथा, भागवते । ९
।
२१ । २५ ।
पारस्य तनयो नीपस्तस्य पुत्त्रशतं त्वभूत् ।
स कृत्व्यां शुककन्यायां ब्रह्मदत्तमजीजनत् ॥"
ब्रह्मणा दत्त इति विग्रहे वाच्यलिङ्गः । यथा,
रामायणे । ३ । १८ । ३८ ।
"अमोघा इषवश्चेमे ब्रह्मदत्ताः सुतेजसः ।
दत्ता मह्यं महेन्द्रेण तूणौ चाक्षयसायकौ ॥")

**ब्रह्मदर्भा**, स्त्री, (ब्रह्मणे हितो दर्भो यस्याः ।)

यमानिका । इत्यमरः । २ । ४ । १४५ ॥
(यथास्याः पर्य्यायः ।
"यमानिकोग्रगन्धा च ब्रह्मदर्भाजमोदिका ।
सैवोक्ता दीप्यका दीप्या तथा स्याद्यवसा-
ह्वया ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**ब्रह्मदारु**, क्ली, (ब्रह्मणो ब्राह्मणस्य हितकरो

दारुः ।) स्वनामख्याताश्वत्थाकारवृक्षविशेषः
॥
तत्पर्य्यायः । नूदः २ पूषः ३ क्रमुकः ४
ब्रह्मण्यः
५ तूलम् ६ । इत्यमरः । २ । ४ । ४१ ॥
पलाशिकम् ७ । इति वाचस्पतिः ॥ तलम् ८ ।
इति भरतः ॥ पूगः ९ यूषः १० । इति शब्द-
रत्नावली ॥ (क्रमुकार्थे पर्य्यायो यथा,
"तूतः स्थूलश्च पूगश्च क्रमुको ब्रह्मदारु च ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**ब्रह्मदैत्यः**, पुं, (ब्रह्मा ब्राह्मणरूपी दैत्यः ।) प्रेत-

योनिप्राप्तब्राह्मणः । इत्यैतिह्यम् ॥

**ब्रह्मनालं**, क्ली, (ब्रह्मणो ब्रह्मलोकप्राप्तेर्नालमिव ।)

काश्यां चक्रतीर्थस्य पूर्ब्बभागे पितामहेश्वर-
लिङ्गस्याधस्तीर्थविशेषः यथा, --

**ब्रह्मनिर्व्वाणं**, क्ली, (ब्रह्मणि परब्रह्मे निर्व्वाणं लयः ।)

ब्रह्मणि निर्वृत्तिः । यथा,
श्रीभगवद्गीतायाम् ।
२ । ७२ ।
"एषा ब्राह्मी स्थितिः पार्थ ! नैनां प्राप्य
विमुह्यति ।
स्थित्वास्यामन्तकालेऽपि
ब्रह्मनिर्व्वाणमृच्छति ॥"

**ब्रह्मपत्रं**, क्ली, (ब्रह्मणस्तदाख्यया प्रसिद्धस्य वृक्षस्य

पत्रम् । पलाशपत्रम् । यथा, --
"भोजनं ब्रह्मपत्रेषु कथयालोचनं हरेः ।
दर्शनं वैष्णवानाञ्च महापातकनाशनम् ॥"
इति पाद्मोत्तरखण्डे कार्त्तिकमाहात्म्ये
११८ अः ॥

**ब्रह्मपर्णी**, स्त्री, (ब्रह्मेव विस्तीर्णानि आमूलं

स्थितानि पत्राणि यस्याः ।) पृश्निपर्णी ।
इति
राजनिर्घण्टः ॥

**ब्रह्मपवित्रः**, पुं, (ब्रह्मणि वेदोक्तकर्म्मणि पवित्रः ।)

कुशः । इति राजनिर्घण्टः ॥

**ब्रह्मपादपः**, पुं, (ब्रह्मा तदाख्यया प्रसिद्धः पादपः ।)

पलाशवृक्षः । इति हेमचन्द्रः । ४ । २०२
॥

**ब्रह्मपुत्त्रः**, पुं, विषभेदः । इत्यमरः । १ । ८ । १० ॥

तस्य लक्षणं यथा, --
"वर्णतः कपिलो यः स्यात्तथा भवति
सारकः ।
ब्रह्मपुत्त्रः स विज्ञेयो जायते मलयाचले
॥"
इति भावप्रकाशः ॥
(पर्य्यायोऽस्य यथा,
"काकोली गरलः क्ष्वेडो वत्सनाभः
प्रदीपनः ।

जगाम वनमध्यन्तु चिन्वन् बहुफलानि
च ॥
तस्मिन्नवसरे ब्रह्मा सर्व्वलोकपितामहः
।
तत्राजगाम यत्रास्ति अमोघा शान्तनोः
प्रिया ॥
तां दृष्ट्वा देवगर्भाभां युवतीमतिसुन्दरीम्
।
मोहितो मदनेनाशु तथाभूद्भूषितेन्द्रियः
॥
उदीरितेन्द्रियो भूत्वा जिघृक्षुस्तां
महासतीम् ।
अथाधावत्तदा ब्रह्मा सम्मुखो
मदनार्द्दितः ॥
धावमानं विधातारं दृष्ट्वामोघा महासती
।
मैवं मैवमिति प्रोक्ता पर्णशालां व्यलीयत
॥
इदञ्चोवाच धातारममोघा कुपिता तदा ।
पर्णशालान्तरगता द्वारमावृत्य तत्क्षणात्
॥
अकार्य्यं न मया कार्य्यं मुनिपत्न्या
विगर्हितम् ।
बलात् प्रमथ्या चाहं तत्त्वया त्वाञ्च
शपाम्यहम् ॥
अमोघया चैवमुक्ते विधातुश्च तदा नृप !
।
रेतश्चस्कन्द च तदैवाश्रमे शान्तनोर्मुनेः
॥
च्युते रेतसि धातापि हंसयानं
समास्थितः ।
लज्जयातिपरीतात्मा द्रुतं वै स्वाश्रमं
ययौ ॥ * ॥
गते वेधसि शान्तनुर्निजमाश्रममागतः ।
आगत्य दृष्ट्वा हंसानां पदक्षोभं तथा
भुवि ॥
तेजश्च पतितं भूमौ
विधातुर्ज्वलनोपमम् ।

"पितामहेश्वरं लिङ्गं ब्रह्मनालोपरिस्थितम्।
पूजयित्वा नरो भक्त्या ब्रह्मलोकमवाप्नुयात्॥
ब्रह्मस्रोतःसमीपे तु कृतं कर्म्म शुभाशुभम्।
परामक्षयतामेति शुभमेव ततश्चरेत्॥
अनल्पमपि यत् कर्म्म कृतमत्र शुभाशुभम्।
प्रलयेऽपि न तस्यास्ति प्रलयो मुनिसत्तम!॥
नाभितीर्थमिदं प्रोक्तं नाभीभूतं यतः क्षितेः।
अपि ब्रह्माण्डगोलस्य नाभिरेषा शुभोदया॥
सा माणिकर्णिकेकीयं नाभिगाम्भीर्य्यभूमिका।
ब्रह्माण्डगोलकं सर्व्वं यस्यामेति लयोदयम्॥
ब्रह्मनालं परं तीर्थं त्रिषु लोकेषु विश्रुतम्।
तत्सङ्गमे नरः स्नातः कोटिजन्ममलं हरेत्॥
ब्रह्मनाले पतेद्येषामपि कीकसमात्रकम्॥
ब्राह्मण्डमण्डपान्तस्ते न विशन्ति कदाचन॥"
इति स्कन्दपुराणे काशीखण्डे बिन्दुमाधवाग्नि-
बिन्दुसंवादे वैष्णवतीर्थमाहात्म्यं नाम ६१ अः
॥

शौक्लिकेयो ब्रह्मपुत्त्रो विषं स्याद्गरलो
विषः॥"
इति वैद्यकरत्नमालायाम्॥
ब्रह्मणः पुत्त्रः। सत्यम्। धर्म्मः।
मरीच्यादिः॥
भनुः। यथा मार्कण्डेये। ९४। ११।
"मन्वन्तरे च दशमे ब्रह्मपुत्त्रस्य धीमतः।
सुखासीना निरुद्धाश्च त्रिःप्रकाराः सुराः
स्मृताः॥"
नारदः। वशिष्ठः॥) क्षेत्रभेदः। नदभेदः।
इति मेदिनी। रे, २८५॥ शेषस्य
पर्य्यायः।
अमोघानन्दनः २ लौहित्यः ३ लोहितः
४।
इति शब्दरत्नावली॥ * ॥ अस्य
नदस्योत्पत्ति-
माहात्म्ये यथा, --
सगर उवाच।
"अमोघायां कथं जज्ञे लौहित्यो ब्रह्मणः
सुतः।
कथं शान्तनुभार्य्यायां रेतः स
कमलासनः॥
पारस्त्रैणेयपुत्त्रो वा कथं जज्ञे पितामहात्
।
तत् सर्व्वं श्रोतुमिच्छामि कथयस्व
द्विजोत्तम!॥
और्व्व उवाच।
शृणु त्वं नृपशार्द्दूल! कथयामि महत्तरम्।
आख्यानं ब्रह्मपुत्त्रस्य लौहित्यस्य
महात्मनः॥
हरिवर्षे महावर्षे शान्तनुर्नाम नामतः।
मुनिरासीन्महामागो ज्ञानवान् सुतपोधनः
॥
तस्य भार्य्या महाभागा अमोघाख्या
महासती।
हिरण्यभर्गस्य मुनेस्तृणवृन्दाश्रमोद्भवा॥
तया सार्द्धं स
कैलासमर्य्यादापर्व्वतेऽवसत्।
लौहित्याख्यस्य सरसस्तीरे वै
गन्धमादने॥
एकदा स तपोनिष्ठो निजपुष्पादिगोचरे।

अमोघां परिपप्रच्छ
पर्णशालान्तरस्थिताम्॥
किमेतदत्र सुभगे! प्रवृत्तं दृश्यते तु यत्
।
पक्षिणाञ्च पदक्षोभस्तेजश्चेदञ्च कीदृशम्
॥
सा तस्य वचनं श्रुत्वा शान्तनुं
मुनिसत्तमम्।
अमर्षितेव न्यगददाकुला विकलानना॥
हंसयुक्तस्यन्दनेन कोऽप्यागत्य
चतुर्मुखः।
कमण्डलुकरो भीरू रतिं मां समयाचत
॥
ततो मया भर्त्सितः स
कुटजान्तरलीनया।
प्रच्याव्य तेजः स यातो मया
शापभयार्द्दितः॥
कुरु तत्र प्रतीकारं यदि शक्नोषि
शान्तनो!।
न हि मां धर्षणां सोढं कश्चित् शक्नोति
जीव-
भृत्॥
स तस्या वचनं शुत्वा स्वयं ब्रह्मा
समागतः।
इति निश्चित्य मनसा तत्र
ध्यानपरोऽभवत्॥
दिव्यज्ञानेन स ज्ञात्वा
देवकार्य्यमुपस्थितम्।
तीर्थावतारणञ्चापि हिताय जगतां मुनिः
।
ज्ञात्वोदर्कं चिन्तयित्वा
स्वभार्य्यामिदमब्रवीत्॥
इदं तेजो ब्रह्मणस्त्वं पिवामोघे!
ममाज्ञया।
हिताय सर्व्वजगतां देवकार्य्यार्थसिद्धये
॥
भवत्या निकटं ब्रह्मा स्वयमेव समागतः
।
त्वामप्राप्य स महात्मा आवयोः स
समर्प्य च।

| | | |
|---|---|---|
| | | गतो निजास्पदं तत्त्वं कर्त्तुमर्हसि मद्वचः ॥<br>तत् शुत्वा शान्तनोर्वाक्यममोघातीव लज्जिता ।<br>शान्तयन्तीव तं प्राह पतिं नला महासती ॥<br>नान्यस्य तेजो धास्यामि न चेत्ते विमनस्कता ।<br>अवश्यं यदि कर्त्तव्यं पीत्वा त्वं मयि चोत्सृज ॥<br>ततस्तस्या वचः श्रुत्वा युक्तं तथ्यञ्च शान्तनुः ।<br>स्वयं पीत्वा च तत्तेजस्तस्या गर्भे व्यसेचयेत् ॥<br>संक्रामितैः शान्तनुना तेजोभिर्ब्रह्मणः सती ।<br>गर्भं दधानामोघाख्या हिताय जगतां ततः ॥<br>तस्यां काले तु संप्राप्ते संजातो जलसञ्चयः ।<br>तन्मध्ये तनयश्चापि नीलवासाः किरीटधृक् ॥ |

रत्नमालासमायुक्तो रक्तगौरश्च ब्रह्मवत् ।
चतुर्भुजः पद्मविद्यावरशक्तिधरस्तथा।
शिशुमारशिरस्थश्च तुल्यकायो जलोत्करैः ॥
तं जातञ्च तथाभूतं शान्तनुर्लोकशान्तनुः ।
चतुर्णां पर्व्वतानाञ्च मध्यदेशे न्यवेशयत् ॥
कैलासश्चोत्तरे पार्श्वे दक्षिणे गन्धमादनः ।
जारुधिः पश्चिमे शैलः पुर्ब्बे सम्बर्त्तकाह्वयः ॥
तेषां मध्ये स्वयं कुण्डं पर्व्वतानां विधेः सुतः ।
कृत्वातिववृधे नित्यं शरदीव निशाकरः ॥
तं तोयमध्यगं पुत्त्रमासाद्य द्रुहिणः स्वयम् ।
क्रमतस्तस्य संस्कारानकरोद्देहशुद्धये॥
अथ काले बहुतिथे व्यतीते ब्रह्मणः सुतः ।
तोयराशिस्वरूपेण ववृधे पञ्च योजनान् ॥
तस्मिन् देवाः पपुः सस्नुर्द्वितीय इव सागरे ।
शीतामलजले हृद्ये देव्यश्चाप्सरसां गणैः ॥
तस्मिन्नवसरे रामो जामदग्न्यः प्रतापवान् ।
चक्रे मातृवधं घोरमत्युग्रं पितुराज्ञया ॥
तस्य पापस्य मोक्षाय स्वपितुश्चोपदेशतः ।
स जगाम महाकुण्डं ब्रह्माख्यं स्नातुमिच्छया
॥
तत्र स्नात्वा च पीत्वा च मातृहत्यां व्यपानयत्
।
वीथिं परशुना कृत्वा तञ्च क्ष्मामवतारयत् ॥ *
॥
अपि च ।
ब्रह्मकुण्डात् सृतः सोऽथ कासारे लोहिता-
ह्वये ।
कैलासोपत्यकायान्तु न्यपतद्ब्रह्मणः सुतः ॥
तस्यापि सरसस्तीरं समुत्थाय महाबलः ।
कुठारेण दिशं पूर्ब्बामनयद्ब्रह्मणः सुतम् ॥
ततोऽपरत्रापि गिरिं हेमशृङ्गं विभिद्य च ।
कामरूपान्तरं पीठमवाहयदमुं हरिः ॥
तस्य नाम विधिश्चक्रे स्वयं लोहितगङ्गकम् ।
लौहित्यात् सरसो जातो
लौहित्याख्यस्ततोऽ-
भवत् ॥
स कामरूपमखिलं पीठमाप्लाव्य वारिणा ।
गोपयन् सर्व्वतीर्थानि दक्षिणं याति सागरम् ॥
प्रागेव दिव्ययमुनां स त्यक्त्वा ब्रह्मणः सुतः ।

**ब्रह्मपुत्त्री**, स्त्री, (ब्रह्मणः पुत्त्री कन्या ।) सर-
स्वती नदी । इति हेमचन्द्रः । ४ ।
१५१ ॥
वाराहीकन्दः । इति राजनिर्घण्टः ॥

**ब्रह्मपुरी**, स्त्री, (ब्रह्मणः पुरी ।) विधातुर्धाम ।
यथा । भूलोकान्तरीक्षस्वर्गलोकादि
ब्रह्माण्डो-
दरवर्त्ति च ब्रह्मपुरीनामकं
त्रैलोक्यस्वरूपं मम
हृदयमध्ये वाह्ये च
सूर्य्यमण्डलमध्यवर्त्ति तेजसा
स एकीभूतं ज्योतिरहमिति चिन्तयन्
जपं
कुर्य्यात् । इति गायत्त्रीव्याख्या ॥ * ॥
काशी ।
यथा, --
"विद्याप्रबोधोदयजन्मभूमि-
र्वारानसी ब्रह्मपुरी दुरत्यया ॥"
इति प्रबोधचन्द्रोदयनाटकम्॥

**ब्रह्मबन्धुः**, पुं, (ब्रह्मणो बन्धुरिव ।) अधिक्षेपः ।
निन्दितब्राह्मणः । निर्द्देशः ।
अग्राह्यनामक-
ब्राह्मणः । इत्यमरः । ३ । ३ । १०३ ॥
तथा हि ।
अधिक्षेपे निन्दायां गम्ये अधिक्षेप्यो
ब्रह्मबन्धुः ।
यथा ब्रह्मबन्धो ! किमेतत्ते इति ।
अधिक्षिप्यते-
ऽसौ अधिक्षेपोऽधिक्षेप्यः कर्म्मणि घञ्
वा ।
ब्रह्मैव बन्धुरस्य नान्यः ।
ब्रह्मकर्म्माभावात् निन्दा
अधिक्षेपे समासोऽभिधानात्।
ब्रह्मबन्धुः निर्द्देशे
यस्य द्वेषान्नाम न गृह्यते स
ब्रह्मबन्धुरितिनिर्द्दि-
श्यते इत्यर्थः । स्त्रियां ("ऊङुतः ।" ४
। १ । ६६ ।

"ब्रह्मभूयाय बृह्मभावाय मोक्षायकल्पते
समर्थो
भवति ।" इति तट्टीकायां स्वामी ॥)

**ब्रह्ममूर्द्धभृत्**, पुं, (ब्रह्मणो मूर्द्धभृत् शिरोमणिरिव ।)
शिवः । इति वटुकभैरवस्य
वकारादिसहस्र-
नामान्तर्गतनाम ॥

**ब्रह्ममेखलः**, पुं, (ब्राह्मनां ब्रह्मणानां मेखला पुंवद्
भावः ।) मुञ्जः । इति केचित् ॥

**ब्रह्मयज्ञः** पुं, (ब्रह्मणो ब्रह्मणे वा यज्ञः ।) विधिना
वेदस्याभ्यसनम् । शिष्याणामध्यापनञ्च।
इत्य-
मरभरतौ ॥ यथा, मनौ । ३ । ७० ।
"अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्
।
होमो दैवो बलिर्भौतोनृयज्ञोऽतिथिपूजनम्
॥"

**ब्रह्मयष्टिः**, स्त्री, (ब्रह्मणो यष्टिरिव ।) भार्गी ।
इति शब्दरत्नावलो ॥ (वृक्षविशेषः । यथा,
गारुडे १९२ अध्याये ।
"ब्रह्मयष्टिफलं पिष्टं वारिणा तेन लेपतः ।
तेन घृष्टं रक्तदोषः प्रणश्यति न संशयः ॥"
ब्रह्मणो ब्राह्मणस्य यष्टिर्लगुडः । विप्रयष्टिः
॥)

**ब्रह्मयोनिः**, पुं, (ब्रह्मणो योनिरुत्पत्तिस्थानम् ।)
ब्रह्मगिरिः । इति शब्दरत्नावली ॥
(ब्रह्मप्राप्ति-
कारणब्रह्मध्यानम् । यथा मनुः । १० ।
७४ ।
"ब्राह्मणा ब्रह्मयोनिस्था ये
स्वकर्म्मण्यवस्थिता ।
ते सम्यगुपजीवेषुः षट् कर्म्माणि
यथाक्रमम् ॥"
"ये ब्राह्मणा
ब्रह्मप्राप्तिकारणब्रह्मध्याननिष्ठाः

पुनः पततति लौहित्ये गत्वा द्वादशयोजनम् ॥ * ॥
चैत्रे मासि सिताष्टम्यां यो नरो नियतेन्द्रियः ।
स्नाति लौहित्यतोयेषु स याति ब्रह्मणः पदम् ॥
चैत्रन्तु सकलं मासं शुचिः प्रयतमानसः ।
लौहित्यतोये यः स्नाति स कैवल्यमवाप्नुयात् ॥”
इति कालिकापुराणे ८४ । ८५ अध्यायः ॥
अन्यच्च ।
मीने मधौ शुक्लपक्षे अशोकाख्यां तथाष्टमीम् ।
पिबेदशोककलिकाः स्नायाल्लौहित्यवारिणि ॥
पुनर्व्वमी वृषे लग्ने चैत्रे मासि सिताष्टमीम् ।
लोहित्ये विरजे स्नायात् सर्व्वपापैः प्रमुच्यते ॥ * ॥
स्नानमन्त्रो यथा, --
“पृथिव्यां यानि तीर्थानि सरितः सागरादयः ।
सर्व्वे लौहित्यमायान्ति चैत्रे मासि सिताष्टमीम् ॥
ब्रह्मपुत्र महाभाग शान्तनोः कुलनन्दन ! ।
अमोघागर्भसम्भूत पापं लौहित्य मे हर ॥”
इति तिथ्यादितत्त्वधृतस्कन्दपुराणवचनम्॥

इति ऊङ् ।) ब्रह्मबन्धूः ।
ब्रह्मबन्धुर्ब्राह्मणजाति-
विशेषे च । ब्राह्मणजातिविशेषे निर्द्देशे ब्रह्म-
बन्धुरधिक्षेपे इति वोपालितः । इति भरतः ॥ * ॥
(यथा, मार्कण्डेये । ७५ । ६० ।
“ब्रह्मबन्धोः सुता न त्वं बाले ! नैव तपस्विनः ।
सुता त्वं मम यो देवान् कर्त्तुमन्यान् समुत्-
सहे ॥”)
तस्य दैहिकवधनिषेधो । यथा, भागवते १
स्कन्धे ।
“वपनं द्रविणादानं स्थानान्निर्यापणन्तथा।
एष हि ब्रह्मबन्धूनां वधो नान्योऽस्ति दैहिकः ॥”

**ब्रह्मभूतिः**, स्त्री, (ब्रह्मणो भूतिरङ्गसम्पदिव भूति
र्यस्याः ।) सन्ध्या । इति शब्दरत्नावली ॥
(ब्रह्मणो भूतिरुत्पत्तिर्य्यस्या इति विग्रहे
वाच्यलिङ्गः ॥)

**ब्रह्मभूमिजा**, स्त्री, (ब्रह्मभूमेर्जायते या । ब्रह्म-
भूमि + जन + ड । टाप्) सिंहली । इति राज-
निर्घण्टः ॥

**ब्रह्मभूयं**, क्ली, (ब्रह्मणो भावः । ब्रह्म + भू +
“भुवो भावे ।” ३ । १ । १०७ । इति क्यप् ।)
ब्रह्मत्वम् । इत्यमरः । २ । ७ । ५२ ॥ (यथा
मनुः । १२ । १०२ ।
“वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन् ।
इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते ॥”

स्वकर्म्मानुष्ठाननिरताश्चते षट्कर्म्माणि वक्ष्य-
माणान्यध्यापनादीनि क्रमेण सम्यगनुतिष्ठेषुः ॥”
इति तट्टीकायां कुल्लूकभट्टः ॥ अपरस्य ब्रह्मणो
योनिरुत्पत्तिकारणम् । यद्वा ब्रह्म सत् योनिः
सर्व्वेषामुत्पत्तिकारकं ब्रह्म । यथा, मुण्डकोप-
निषदि । ३ । १ । ३ ॥
“यदा पश्यः पश्यते रुक्मवर्णम्
कर्त्तारमीशं पुरुषं ब्रह्मयोनिम् ॥”
तीर्थविशेषः । यथा महाभारते । ३ । ८३ । १३१ ।
“ब्रह्मयोनिं समासाद्य शुचिः प्रयतमानसः ।
तत्र स्नात्वा नरव्याघ्र ! ब्रह्मलोकं प्रपद्यते ॥”
ब्रह्मा योनिरुत्पत्तिकारणं यस्य इति विग्रहे
वाच्यलिङ्गः । यथा रघौ । १ । ६४ ।
“त्वयैवं चिन्त्यमानस्य गुरुणा ब्रह्मयोनिना ।
सानुबन्धा कथं न स्युः सम्पदो मे निरापदः ॥”
यथा च मार्कण्डेये । २३ । ३० ।
जगद्धात्रीमहं देवी मारिराधयिषुः शुभाम् ।
स्तोष्ये प्रणम्य शिरसाब्रह्मयोनिं सरस्वतीम् ॥”)

**ब्रह्मयोनी**, स्त्रो, (ब्रह्मा योनिरुत्पत्तिकारणं यस्याः ।
स्त्रियां पक्षे ङीप् ।) कुरुक्षेत्रे सरस्वतीतीरे
पृथूदकनिकटे तीर्थविशेषः । तत्र ब्रह्मणा
चत्वारो वर्णाः सृष्टाः । यथा, --
“सरस्वत्यास्तु तीरे यः संत्यजेदात्मनस्तनुम् ।
पृथूदके जप्यपरो नैनं श्वो मरणं लभेत् ॥
तत्रैव ब्रह्मयोन्यस्ति ब्रह्मणा यत्र निर्म्मिताः ।
पृथूदकं समाश्रित्य सरस्वत्यास्तटे स्थितः ॥

|  | “अस्मिन्नेव लोके तिष्ठन् ब्रह्मभूयाय ब्रह्मत्वाय<br>कल्पते ।” इति तट्टीकायां कुल्लूकभट्टः ॥<br>मोक्षः । यथा गीतायाम् । १४ । २६ ।<br>“माञ्च योऽव्यभिचारेण भक्तियोगेन सेवते ।<br>सगुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥” | चतुर्व्वर्णस्य सृष्ट्यर्थमात्मज्ञानपरोऽभवत् ।<br>तस्याभिध्यायतः<br>सृष्टिर्ब्रह्मणोऽव्यक्तजन्मनः ॥ |
|---|---|---|

मुखतो ब्राह्मणा जाता बाहुभ्यां क्षत्त्रिया-
स्तथा ।
ऊरुभ्यां वैश्यजातीयाः पद्भ्यां शूद्रास्ततोऽभवन् ॥
चातुर्व्वर्ण्यं ततो दृष्ट्वा आश्रमस्थान् सुतांस्ततः ।
एवं प्रतिष्ठितं तीर्थं ब्रह्मयोनीतिसंज्ञितम् ॥
तत्र स्नात्वा मुक्तिकामः पुनर्योनिं न पश्यति ।”
इति वामनपुराणे ३८ अध्यायः ॥

**ब्रह्मरन्ध्रं**, क्ली, (ब्रह्मणः परमात्मनः अधिष्ठानाय-
रन्ध्रं आकाशः यद्वा, ब्रह्मणे ब्रह्मप्राप्तये रन्ध्रम् ।
एतद्रन्ध्रेण प्राणोत्क्रमणे ब्रह्मलोकप्राप्तेरस्य
तथात्वम् ।) उत्तमाङ्गम् । ब्रह्मतालु इति भाषा ।
यथा । अं नमः ब्रह्मरन्ध्रे । इति तन्त्रसारः ॥
अपि च । ब्रह्मरन्ध्रसरसीरुहोदरे इत्यादि
गुरुपादुकास्तोत्रम् ॥ (यथा च हठयोग-
प्रदीपिकायाम् । ४ । १६ ।
“ज्ञात्वा सुषुम्नासद्भेदं कृत्वा वायुञ्च मध्यगम् ।
स्थित्वा सदैव सुस्थाने ब्रह्मरन्ध्रेनिरोधयेत् ॥”)

**ब्रह्मरात्रः**, पुं, (रात्रेरयं रात्रः । ब्रह्मणो रात्रः ।)
ब्राह्ममुहूर्त्तः । इति श्रीधरस्वामी ॥
यथा, --
“ब्रह्मरात्र उपावृत्ते वासुदेवानुमोदिताः ।
अनिच्छन्त्यो ययुर्गोप्यः स्वगृहान् भगवत्प्रियाः ॥”
कीर्त्तनान्मानुषचतुर्युगेनैव दिव्ययुगानुगमनात् ।
तथा च विष्णुपुराणम् ।
“कृतं त्रेताद्वापरञ्च कलिश्चेति चतुर्युगम् ।
प्रोच्यते तत्सहस्रन्तु ब्रह्मणो दिवसो मुने ! ॥”
तथा च मनुः । १ । ६८-७३ ।
“ब्राह्मस्य तु क्षपाहस्य यत्प्रमाणं समासतः ।
एकैकशो युगानान्तु क्रमशस्तन्निबोधत ॥
चत्वार्य्याहुः सहस्राणि वर्षाणान्तु कृतं युगम् ।
तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः ॥
इतरेषु ससन्ध्येषु ससन्ध्यांशेषु च त्रिषु ।
एकापायेन वर्त्तन्ते सहस्राणि शतानि च ॥
यदेतत्परिसंख्यातमादावेव चतुर्युगम् ।
एतद्द्वादशसाहस्रं देवानां युगमुच्यते ॥
दैविकानां युगानान्तु सहस्रं परिसंख्यया ।
ब्राह्ममेकमहर्ज्ञेयं तावती रात्रिरेव च ॥
तद्वै युगसहस्रान्तं ब्राह्मं पुण्यमहर्विदुः ।
रात्रिञ्च तावतीमेव तेऽहोरात्रविदो जनाः ॥”
“यदेतदिति । एतस्य श्लोकस्यादौ यदेतन्मानुषं
चतुर्युगं परिगणितं एतद्देवानां युगमुच्यते । चतुर्युगशब्देन
सन्ध्यासन्ध्यांशयोरप्राप्तिशङ्कायामाह एतद्द्वादशसाहस्रमिति स्वार्थेऽण् । चतु-
र्युगैरेव द्वादशसहस्रसंख्यैर्दिव्यं युगमिति तु
मेधातिथेर्भ्रमो नादर्त्तव्यः मनुनानन्तरं दिव्य-
युगसहस्रेण ब्रह्माहस्याप्यभिधानात् ॥” इति
तट्टीकायां कुल्लूकभट्टः ॥)

**ब्रह्मराक्षसः**, पुं, (आदौ ब्रह्मा ब्राह्मणः पश्चात्
राक्षसः कुकर्म्मभिः राक्षसयोनिं गतः ।)
भूतविशेषः । यथा, --
“संयोगं पतितैर्गत्वा परस्यैव च योषितम् ।
अपहृत्य च विप्रस्वं भवति ब्रह्मराक्षसः ॥”
इति मानवे । १२ । ६० ॥
(स च यज्ञविनाशकारी भूतयोनिगतत्वात् ।
“पित्तलन्त्वारकूटं स्यादारोरीतिश्च कथ्यते ।
राजरीतिर्ब्रह्मरीतिः कपिला पिङ्गलापि च ॥”
इति वैदकरत्नमालायाम् ।
ब्रह्मणो ब्राह्मणस्य रीतिश्च ॥)

**ब्रह्मर्षिः**, पुं, (ब्रह्मा ब्राह्मणः ऋषिः । यद्वा,
ब्रह्म वेदं परब्रह्म वा ऋषति वेत्ति इति । वशि-
ष्ठादिमुनिगणः । इति हेमचन्द्रः ॥ (यथा,
रामायणे । १ । ६३ । २० -- २१ ।
“ब्रह्मणस्तु वचः श्रुत्वा विश्वामित्रस्तपोधनः ।
प्राञ्जलिः प्रणतो भूत्वा प्रत्युवाच पितामहम् ॥
ब्रह्मर्षिशब्दमतुलं स्वार्जितैः कर्म्मभिः शुभैः ।
यदि मे भगवन्नाह ततोऽहं विजितेन्द्रियः ॥”
तथा च महाभारते । १३ । १९ । ३७ ।
“ततो वैश्रवणोऽभ्येत्य अष्टावक्रमनिन्दितम् ।
विधिवत् कुशलं पृष्ट्वा ततो ब्रह्मर्षिमब्रवीत् ॥”)

**ब्रह्मर्षिदेशः**, पुं, (ब्रह्मर्षीणां देशः वासयोग्य-
स्थानम् ।) कुरुक्षेत्रादिदेशचतुष्टयम् । यथा,
“कुरुक्षेत्रञ्च मत्स्याश्च पाञ्चालाः शूरसेनकाः ।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादिनन्तरः ।
एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्व्वमानवाः ॥
इति मानवे । २ । १९-२० ॥

**ब्रह्मलोकः**, (ब्रह्मणो लोको भुवनम् ।) ब्रह्मणो
भुवनम् । यथा, --
“सत्यस्तु सप्तमो लोको ह्यपुनर्भववासिनाम् ।
ब्रह्मलोकः समाख्यातो ह्यप्रतीघातलक्षणः ॥”
इति देवीपुराणम् ॥
अपि च ।
“षड्गुणेन तपोलोकात् सत्यलोको विराजते ।
अपुनर्मारका यत्र ब्रह्मलोको हि स स्मृतः ॥”
अस्य टीका । जनलोकापेक्षयैव षड्गुणेन
द्वादशको ह्युच्छ्रायेण तपोलोकानन्तरं सत्य-
लोकः । न तु तपोलोकात् षड्गुणेनेति मन्त-
व्यम् । तथासत्याष्टचत्वारिंशत्को ह्युच्छ्राय-
त्वेन ब्रह्माण्डे तस्यावकाशाभावात् ।
सूर्य्याण्ड-

इति श्रीभागवते । १० । ३३ । ४९ ॥

**ब्रह्मरात्रिः**, पुं, (याज्ञवल्क्यमुनिः । इति हेमचन्द्रः ॥

ब्रह्मज्ञानं राति ददाति यः । ब्रह्मशब्दात् राधातोर्नाम्नीति त्रिप्रत्ययनिष्पन्नोऽयम् । इति तट्टीका ॥ ब्रह्मणो निशायां स्त्री । सा दैव-सहस्रयुगेन भवति । इति पुराणम् ॥ (मनुष्य-कालपरिमाणतो ब्रह्मणो रात्रिपरिमाणमुच्यते । नेत्रपरिस्पन्दनकालो निमेषः । अष्टादशनिमे-षास्तु काष्ठा । त्रिंशत् काष्ठास्तु कला । त्रिंशत् कलास्तु क्षणः । क्षणास्तु द्वादश मिलित्वा एको मुहूर्त्तः ।

"तास्तु त्रिंशत्क्षणस्ते तु मुहूर्त्तो द्वादशा-स्त्रियाम् ॥"

इत्यमरः । १ । ४ । ११ ॥

मनुमते तु त्रिंशत्कला मिलित्वा एको मुहूर्त्तः स्यात् यदुक्तं तत्रैव । १ । ६४ ।

"त्रिंशत्कला मुहूर्त्तः स्यादहोरात्रन्तु तावतः ॥"

ते त्रिंशन्मुहूर्त्ता एकोऽहोरात्रः । अहो-रात्रास्तु पञ्चदशसंख्यका एकः पक्षः । पक्ष स्तु शुक्लकृष्णभेदात् द्विविधः । ताभ्यामुभाभ्यां पक्षाभ्यां मासः स्यात् । मासस्तु पित्र्ये रात्र्य-हनी । कृष्णपक्षस्तु पितृणामहः शुक्लपक्षस्तु शर्व्वरी । षड्भिर्मासैरयनं भवेत् । अयनन्तु

यथा, रामायणे । १ । ११ । २१ ।

"शक्योऽवाप्तुमयं यज्ञो नाशक्तेन महीक्षिता ।
नचैवाश्रद्दधानेन न चाल्पद्रविणेन च ॥
छिद्रं हि मृगयन्त्यत्र यज्ञघ्ना ब्रह्मराक्षसाः ॥")

महादेवस्य गणविशेषः । यथा, --

"डाकिनीर्जातुधानांश्च वेतालान् सविनायकान् ।
भूतमातृपिशाचांश्च कुष्माण्डान् ब्रह्मराक्ष-सान् ॥"

इति श्रीभागवते बाणयुद्धे ६३ अध्यायः ॥

पारिभाषिकब्रह्मराक्षसाः । यथा, --

"मूर्खः स्त्री कच्छपश्चैव वाजी वधिर एव च ।
गृहीतार्थं न मुञ्चन्ति पञ्चैते ब्रह्मराक्षसाः ॥"

इति व्यवहारप्रदीपः ॥

**ब्रह्मरीतिः**, स्त्री, (ब्रह्मवर्णा रीतिः ।) पित्तलभेदः ।

यथा, हेमचन्द्रः । ४ । ११४ ॥

"पित्तलारेऽथारकूटः कपिलोहं सुवर्णकम् ।
रिरी रीरी च रीतिश्च पीतलोहं सुलोहकम् ॥
ब्राह्मी तु राज्ञी कपिला ब्रह्मरीतिर्महेश्वरी ॥"

राजरीतिः । इति राजनिर्घण्टः ॥ (तथास्याः पर्य्यायान्तरम् ।

गोलयोरन्तः कोट्यः स्युः पञ्चविंशतिरिति शुकोक्तेः । सत्यलोक एव कक्षाभेदेन ब्रह्म-धिष्ण्यात् परं वैकुण्ठलोकादि ज्ञेयम् । एवञ्च भूतलादूर्द्ध्वं पञ्चदशलक्षोत्तरास्त्रयोविंशतिकोट्यो भवन्ति । सत्यलोकादूर्द्ध्वञ्च पञ्चदशलक्षोनको-टिद्वयादण्डकटाह इति ज्ञेयम् । अपुनर्मारिकाः पुनर्मृत्युशून्याः । इति विष्णुपुराणे । २ अं । ७ अः ॥

(ब्रह्मैव लोकः । तुरीयब्रह्मस्वरूपम् । यदुक्तं शतपथब्राह्मणे । १४ । ७ । १ । ३१ ।

"एषोऽस्य परमो लोक एषोऽस्य परम आनन्द एतस्येवानन्दस्यान्यानि भूतानि मात्रामुप-जीवन्ति । स यो मनुष्याणां राद्धः समृद्धो भवति । अन्येषामधिपतिः सर्व्वैर्मानुष्यकैः कामैः सम्पन्नतमः स मनुष्याणां परम आनन्दः । अथ ये शतं मनुष्याणामानन्दाः । स एकः पितृणां जितलोकानामानन्दः । अथ ये शतं पितृणां जितलोकानामानन्दाः स एक

| दक्षिणोत्तरभेदात् द्विविधम् । द्वाभ्यामयनाभ्यां वत्मरः स्यात् । वत्सरस्तु दैवे रात्र्यहनी । उत्तरायणं देवानामहः दक्षिणायनन्तु रात्रिः । मानुषाणां यत्कृतादियुगचतुष्टयं तद्दैवं युगं ज्ञेयम् । एवं दैवयुगसहस्रेण ब्रह्मणोऽहः दैवयुगसहस्रेण च रात्रिर्भवति । तथा च मनौ । १ ७१ । श्लोकस्य टीकायां कुल्लूकभट्टः । “विष्णुपुराणे मानुषचतुर्युगसहस्रेण ब्रह्माह- | | |
|---|---|---|

कर्म्मदेवानामानन्दः ये कर्म्मणा देवत्वमभि-
सम्पद्यन्ते अथ ये शतं
कर्म्मदेवानामानन्दाः ।
स एक आजानदेवानामानन्दो यश्च
श्रोत्रियो-
ऽवृजिनोऽकामहतः । अथ ये शतं आजान-
देवानामानन्दाः । स एको देवलोक
आनन्दो
यश्च श्रोत्रियोऽवृजिनोऽकामहतः। अथ ये
शतं देवलोक आनन्दाः । स एको
गन्धर्व्वलोक
आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः
।
अथ ये शतं गन्धर्व्वलोक आनन्दाः । स
एकः
प्रजापतिलोक आनन्दो यश्च
श्रोत्रियोऽवृजृणो-
ऽकामहतः । अथ ये शतं प्रजापतिलोक
आनन्दाः । स एको ब्रह्मलोक आनन्दो
यश्च
श्रोत्रियोऽवृजिनोऽकामहतः। एषः
ब्रह्मलोकः
सम्राट् ॥ शिवः यथा, महाभारते । १३ ।
१७ । १४२ ।
"निर्व्वाणं ह्लादनञ्चैव ब्रह्मलोकः परागतिः
॥")

**ब्रह्मवद्यं**, क्ली, (ब्रह्म वेदस्तस्य वदनम् । "वद
सुपि क्यप् च ।" १३ । १ । १०६ । इति
भावे
यत् ।) ब्रह्मणो वाक्यम् । इति ल्यप्रकरणे
मुग्धबोधटीकायां दुर्गादासः ॥

**ब्रह्मवद्या**, त्रि, (ब्रह्मणा वेदेन उद्यते या । "वदः
सुपि क्यप् च ।" ३ । १ । १०६ । इति
कर्म्मणि
यत् स्त्रियां टाप् ।) कथा । इति मुग्धबोध-
व्याकरणे ल्यप्रकरणम् ॥

**ब्रह्मवर्च्चसं**, क्ली, (ब्रह्मणो वेदस्य तपसो वा वर्च्च-

**ब्रह्मवादी**, [न्] पुं, (ब्रह्मवादो वेदपाठोऽस्या-
स्तीति । ब्रह्मवाद + णिनि ।) वेदवक्ता । तत्-
पर्य्यायः । वेदान्ती २ । इति जटाधरः ॥
यथा,
गीतायाम् । १७ । २४ ।
"तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्
॥")

**ब्रह्मवादिनी**, स्त्री, गायत्री । यथा, --
"आयाहि वरदे देवि ! त्र्यक्षरे ब्रह्मवादिनि ! ॥"
इत्यादि गायत्र्या आवाहनम् ॥

**ब्रह्मविद्या**, स्त्री, (ब्रह्मणो ब्रह्मविषयिणी या
विद्या ।) ब्रह्मज्ञानम् । यथा, --
"न्यायागतधनः शान्तो ब्रह्मविद्यापरायणः ।
स्वधर्म्मपालको नित्यं सोऽमृतत्वाय कल्प्यते
॥"
इति कौर्म्मे ३ अध्यायः ॥
(दुर्गा । यथा, महाभारते । ६ । २२ । २७ ।
"त्वं ब्रह्मविद्या विद्यानां महानिद्रा च देहि-
नाम् ।
स्कन्दमातर्भगवति ! दुर्गे कान्तारवासिनि !
॥")

**ब्रह्मविन्दुः**, पुं, (ब्रह्मणो विन्दुः ।) वेदपाठे मुख-
निर्गतविन्दुः । इति भरतः ॥

**ब्रह्मवृक्षः**, पुं, (तंदाख्यया प्रसिद्धो वृक्षः । यद्वा,
ब्रह्मणे वेदकर्म्मार्थं यो वृक्षः ।) पलाशवृक्षः ।
इति हलायुधः ॥ उडुम्बरः । इति रत्नमाला ॥

**ब्रह्मवृत्तिः**, स्त्री, (ब्रह्मणो ब्राह्मणस्य वृत्तिर्जीव-
नोपायः ।) ब्राह्मणस्य जीवनोपायः । यथा, --
"स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेत्तु यः ।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥"
इति श्रीभागवतम् ॥

**ब्रह्मवेदः**, पुं, (ब्रह्मणो वेदः ज्ञानम् ।) ब्रह्म-
ज्ञानम् । यथा, --
"प्राणायामः परं ब्रह्म परमात्मा चतुर्मुखः ।

आज्ञा ॥ नवद्वीपस्य पूर्ब्बदक्षिणकोणे
गङ्गापारे
ग्रामविशेषे, पुं ॥ (ब्रह्मणो विधातुः
शासनम् ।
वेदः ॥ प्रतिपादितमेतत् वृहन्नारदीये
४ पादे
१०१ अध्याये ॥)

**ब्रह्मसंहिता**, स्त्री, (ब्रह्मणः संहिता ।) भगवत्-
सिद्धान्तसंग्रहग्रन्थविशेषः । यथा, --
"अध्यायशतसम्पन्ना
भगवद्ब्रह्मसंहिता ।
कृष्णोपनिषदां सारैः सञ्चिता
ब्रह्मणोदिता ॥"
इति ब्रह्मसंहितायां
भगवत्सिद्धान्तसंग्रहे
मूलसूत्राख्यपञ्चमाध्यायस्य
जीवगोस्वामिकृत-
टीका ॥

**ब्रह्मसम्भवः**, पुं, द्विपृष्ठनामकजैनविशेषः । इति
हेमचन्द्रः ॥

**ब्रह्मसर्पः**, पुं, (ब्रह्म बृहान् सर्पः ।) सर्प-
विशेषः । तत्पर्य्यायः । हलाहलः २
अश्व-
लाला ३ । इति त्रिकाण्डशेषः ॥

**ब्रह्मसायुज्यं**, क्ली, (युनक्तीति युजः । "इगुप-
धेति ।" ३ । १ । १३५ । कः । ततः
"तेन
सहेति ।" २ । २ । २८ । इति
बहुब्रीहिः ।
"वोपसर्जनस्य ।" ६ । ३ । ८२ ।
इति सहस्य
सः । ततः सयुजस्य भावः सायुज्यं ।
यद्वा,
योजयतीति युक् सम्पदादित्वात्
क्विप् । ततो
बहुब्रीहिस्ततः सयुजो भावः । ततः
ब्रह्मणः

स्तेजः । "ब्रह्महस्तिभ्यां वर्च्चसः ।" ५ । ४ ।
७८ । इति अच् ।) ब्राह्मणस्य वृत्ताध्ययनर्द्धिः ।
इत्यमरः । २ । ७ । ३९ ॥ अस्य टीका । वेद-
बोधितस्याचारस्य परिपालनं वृत्तम् । व्रत-
ग्रहणपूर्ब्बकं गुरुमुखेन वेदाभ्यासोऽध्ययनम् ।
तयोरृद्धिस्तत्परिपालनकृतस्तेजस उपचयो
ब्रह्मवर्च्चसं स्यात् । ब्रह्महस्तिराजेति अः । इति
भरतः ॥ तपःस्वाध्यायजं यच्च तेजस्तु ब्रह्मवर्च्च-
सम् । इति जटाधरः ॥ (तथा च मनुः । ४ । ९४ ।
"ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुयुः ।
प्रज्ञां यशश्च कीर्त्तिञ्च ब्रह्मवर्च्चसमेव च ॥")

**ब्रह्मवर्त्तः**, पुं, (ब्रह्मणां ब्राह्मणानां वर्त्तः वर्त्तनं

यस्मिन् ।) ब्रह्मावर्त्तदेशः । इति शब्दरत्नावली ॥
(सरस्वतीदृशद्बत्योर्देवनद्यो र्मध्यगतोऽयं प्रदेशः ॥)

**बह्मवर्द्धनं**, क्ली, (ब्रह्मणस्तपसो वर्द्धनं यस्मात् ।)

ताम्रम् । इति हेमचन्द्रः । ४ । १०६ ॥

**ब्रह्मवादः** पुं, (ब्रह्मणो वेदस्य वादो वदनं पठन-

मिति यावत् ।) वेदपाठः । तत्पर्य्यायः ।
श्रुतादानम् २ । इति हारावली । २२१ ॥
(यथा भागवते । ४ । २२ । ६२ ।
"बृहस्पतिर्ब्रह्मवादे आत्मवत्त्वे स्वयं हरिः ॥"
ब्रह्मणो ब्रह्मनिर्णयस्य वादः कथनमिति विग्रहे
ब्रह्माधिकारेण तत्त्वनिर्णयवाक्यम् ॥ ब्रह्मवादो
वेदपाठोऽस्यास्तीति ब्रह्मवादविशिष्टे, त्रि ।
यथा, हरिवंशे । ८१ । ३४ ।
प्राणायामः पदं विष्णोर्ब्रह्मवेदस्वरूपकम् ॥"
इति गीतासारः ॥

**ब्रह्मवेदिः**, स्त्री, (ब्रह्मणो वेदिरिव ।) देश-

बिशेषः । यथा, --
"ब्रह्मवेदिः कुरुक्षेत्रे पञ्चरामहृदान्तरम् ॥"
इति हेमचन्द्रः । ४ । १६ ॥

**ब्रह्मवैवर्त्तं**, क्ली, (विवृतिरेव वैवर्त्तम् । स्वार्थे

अण् । ब्रह्मणो वैवर्त्तं विशेषेण विवृतिर्यत्र ।)
यथा च ब्रह्मवैवर्त्ते ब्रह्मखण्डे । १ । ५८ ।
"विवृतं ब्रह्म कार्त् सेन कृष्णेण यत्र शौनक ! ।
ब्रह्मवैवर्त्तकं तेन प्रवदन्ति पुराविदः ॥")
अष्टादशमहापुराणान्तर्गतदशमपुराणम् । यथा,
"अष्टादशसहस्रञ्च ब्रह्मवैवर्त्तमीप्सितम् ।
सर्व्वेषाञ्च पुराणानां सारमेव विदुर्बुधाः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १३२ अः ॥

**ब्रह्मशल्यः**, पुं, (ब्रह्मेव सूक्ष्मं शल्यमग्रभागो यस्य ।

अतिसूक्ष्माग्रत्वात्तथात्वम् ।) सोमवल्कः । इति
रत्नमाला ॥ वावला इति भाषा ॥

**ब्रह्मशासनं**, क्ली, (ब्रह्मणः शासनं निर्णयो उपदेशो

वा यस्मिन् ।) ब्रह्मविचारगृहम् । तत्पर्य्यायः ।
धर्म्मकीलकः २ । इति शब्दरत्नावली ॥ ब्रह्मण
सायुज्यं योजकत्वम् ।) ब्रह्मणो भावः । तत्-
पर्य्यायः । ब्रह्मभूयम् २ ब्रह्मत्वम् ३ । इत्यमरः ।
२ । ७ । ५२ ॥ ब्रह्मसापूज्यम् ४ । इति शब्द-
रत्नावली ॥ (मुग्धबोधमतेऽस्य व्युत्पत्तिर्यथा ।)
ब्रह्मणो भवनं ताद्रूप्यं ब्रह्मभूयं भूहनः क्यविति
क्यप् । त्वतौ भावे इति त्वे ब्रह्मत्वं । योजनं
युक् तत्सहितः सयुक् तद्भावः सायुज्यं ततो
ब्रह्मणा विग्रहः । इति भरतः ॥

**ब्रह्मसावर्णिः**, पुं, (ब्रह्मपुत्त्रो सावर्णिः ।) दशम

मनुः । अस्मिन् मन्वन्तरे विश्वक्सेनोऽवतारः ।
शम्भुरिन्द्रः । सुरसेनविरुद्धाद्याः देवाः । हविष्म-
दाद्याः सप्तर्षयः । भूरिसेनाद्या मनुपुत्त्रा भवि-
ष्यन्ति । इति श्रीभागवतम् । ८ । १३ । २१-२२ ॥
अन्यच्च ।
"मन्वन्तरे तु दशमे ब्रह्मपुत्त्रस्य धीमतः ।
सुरसेना विरुद्धाश्च द्विप्रकारास्तथा स्मृताः ॥
शतसंख्या हि ते देवा भविष्यास्तत्र वै मनौ ।
तत्पुत्त्राणां शतं भावि तद्देवानां तदा शतम् ॥
शास्तिरिन्द्रस्तदा भावी सर्व्वैरिन्द्रगुणैर्युतः ।
सप्तर्षी स्तु निबोध त्वं ये भविष्यन्ति वै तदा ॥
आपो मूर्त्तिर्हविष्मांश्च सुकृती सत्य एव च ।
नाभागोऽप्रतिमश्चैव वाशिष्ठश्चैव सप्तमः ॥

| | | |
|---|---|---|
| “ब्राह्मणैर्ब्रह्मवादैश्च पुराणोऽयं हि गीयते ॥”) | | सुक्षेत्रश्चोत्तमौजाश्च भूरिसेनः सुवीर्य्यवान् ।<br>शतानीकोऽथ वृषभो अनमित्रो जयद्रथः ॥<br>भूरिद्युम्नः सुवर्च्चाश्च तस्यैते तनया मनोः ।”<br>इति ब्रह्मसावर्णिकम् ।<br>इति मार्कण्डेयपुराणे ॥ ९४ । ११-१६ ॥ |

**ब्रह्मसूः**, पुं, प्रद्युम्नः । इत्यमरः । १ । १ । २८ ॥

कामदेषः । इत्यमरमाला ॥ अनिरुद्धपक्षे ब्रह्माणं सूतषान् ब्रह्मसूः ॥ (सूङ्लप्रसवे । "अन्येभ्यो- पीति ।" ३ । २ । १७८ । क्विप् ।) कल्पान्तरे किलानिरुद्धमूर्त्तेर्भगवतो ब्रह्मा जातः । तथा च ब्रह्मपुराणम् । अनिरुद्धात्ततो ब्रह्मा तन्नाभि- कमलोद्भवः ॥ कामदेवपक्षे । ब्रह्म तपः सुवति प्रेरयति ब्रह्मसूः । सूश प्रेरणे ("अन्येभ्योऽपि दृश्यते ।" ३ । २ । १७८ । इति) क्विप् । इति भरतः ।

(कामेनैष सर्व्वतपःसु प्रवर्त्तनादस्य तथात्वम् ॥)

**ब्रह्मसूत्रं**, क्ली, (ब्रह्मणि वेदग्रहणकाले उपनयन-

समये इत्यर्थः धृतं यत् सूत्रम् ।) यज्ञसूत्रम् । तत्पर्य्यायः । पवित्रम् २ यज्ञोपवीतम् ३ द्विजा- यनी ४ । इति त्रिकाण्डशेषः ॥ उपवीतम् ५ सावित्रम् ६ सावित्रीसूत्रम् ७ । इति शब्द- रत्नावली ॥ (यथा भागवते । ८ । १८ । १४ ।
"तस्योपनीयमानस्य सावित्रीं सविताब्रवीत् ।
बृहस्पति र्ब्रह्मसूत्रं मेखलां कश्यपोऽददात् ॥"
तटस्थलक्षणपरं उपनिषद्वाक्यम् । ब्रह्मनिर्णय- सूत्रम् । यथा गीतायाम् । १३ । ४ ।
"ऋषिभिर्बहुधागीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥"
अस्य व्याख्याने श्रीधरस्वामिना यदुक्तं तदुच्यते ।
"ऋषिभिर्वशिष्ठादिभिर्योगशास्त्रेषु ध्यानधार- णादिविषयत्वेन वैराग्यादिस्वरूपेण बहुधा गीतं निरूपितम् । विविधैर्विचित्रैर्नित्यनैमित्तिक- काम्यकर्म्मादिविषयैश्छन्दोभिर्वेदैर्नानापूजनीय- देवतारूपेण गीतं ब्रह्मणः सूत्रैः पदैश्च ब्रह्म सूत्र्यते सूच्यते एभिरिति ब्रह्मसूत्राणि यतो वा इमानि भूतानि जायन्त इत्यादीनि तटस्थलक्षणपराणि सत्यं ज्ञानमनन्तं ब्रह्मे- त्यादीनि तैश्च बहुधा गीतम् । किञ्च हेतु- मद्भिः सदेव सौम्येदमग्र आसीत् कथमसतः सदजायत इति । को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् एष ह्येवानन्द- यातीत्यादि युक्तिमद्भिः । अन्यात् अपानचेष्टां कः कुर्य्यात् प्राण्यात् प्राणव्यापारं वा कः

"ब्रह्मस्वं वा गुरुस्वं वा देवस्वं वापि यो हरेत् ।
स कृतघ्न इति ज्ञेयो महापापी च भारते ॥
अवटोदे वसेत् सोऽपि यावदिन्द्रशतं शतम् ।
ततो भवेत् सुरापीती ततः शूद्रस्ततः शुचिः ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ४९ अध्याय ॥

**ब्रह्महत्या**, स्त्री, ब्रह्मणो हननम् ॥ (हनस्त च । ३ ।

१ । १०८ । इति भावे क्यप् तकारोऽन्तादे- शश्च । स्त्रीत्वं लोकात् ।) ब्राह्मणवधः । यथा,
"एकदा च गुरोः कोपात् प्रकृतेरवहेलनात् ।
ब्रह्महत्या वज्रभृतो बभूव हतचेतसः ॥"
तस्या रूपं यथा, --
"रक्तवस्त्रपरीधाना वृद्धा स्त्रीवेशधारिणी ।
सप्ततालप्रमाणा सा शुष्ककण्ठौष्ठतालुका ॥
ईशाप्रमाणदशना महाभीतञ्च कातरम् ।
धावन्तं परिधावन्ती बलिष्ठा हतचेतनम् ॥
खड्गहस्ता हतास्त्रं तं दयाहीना च मूर्च्छि- तम् ॥
इन्द्रो दृष्ट्वा च तां घोरां स्मारं स्मारं गुरोः पदम् ॥
विवेश मानससरो मृणालसूक्ष्मसूत्रतः ।
तत्र गन्तुं न शक्ता सा ब्रह्मणः शापकारणात् ॥"

अन्बुवाच्यां भूखननं जले शौचादिकञ्च ये ।
कुर्व्वन्ति भारते वर्षे ब्रह्महत्यां लभन्ति ते ॥
गुरुञ्च मातरं तातं साध्वीं भार्य्यां सुतं सुताम् ।
अनाथां यो न पुष्णाति ब्रह्महत्यां लभेत्तु सः ॥
विवाहो यस्य न भवेत् न पश्यति सुतन्तु यः ।
हरिभक्तिविहीनो यो ब्रह्महत्यां लभेत्तु सः ॥
हरेरनैवेद्यभोजी नित्यं विष्णुं न पूजयेत् ।
पुण्यं पार्थिवलिङ्गं वा ब्रह्महत्यां लभेत्तु सः ॥
अवीरान्नञ्च यो भुङ्क्ते योनिजीवी च ब्राह्मणः ।
यस्त्रिसन्ध्याविहीनश्च ब्रह्महत्यां लभेत् तु सः ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे । ३० । १४४-१५९ ॥
तथा च मनुः । ११ । ५४-५५ ।
"ब्रह्महत्या मुरापानं स्तेयं गुर्व्वङ्गनागमः ।
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥
अनृतञ्च समुत्कर्षे राजगामि च पैशुनम् ।
गुरोश्चालीकनिर्व्वन्धः समानि ब्रह्महत्यया ॥"
तथा च चिन्तामणिधृतदेवीभागवतवचनम् ।
"निद्राभङ्गः कथाच्छेदो दम्पत्योः प्रीतिभेदनम् ।
शिशुमातृविभेदश्च ब्रह्महत्या समं स्मृतम् ॥")
ब्रह्महत्याप्रायश्चित्तं प्रायश्चित्तशब्दे महापातक- प्रायश्चित्तव्यवस्थायामादौद्रष्टव्यम् ॥

**ब्रह्महा**, [न्] पुं, (ब्रह्माणं ब्राह्मणं हतवान् ।

कुर्य्यादिति श्रुतिपदयोरर्थः । विनिश्चितैरुप-
क्रमोपसंहारैकवाक्यतया असन्धिग्धार्थप्रति-
पादकैरित्यर्थः । तदेवमेतैर्विस्तरेणोक्तं दुःसं-
ग्रहं संक्षेपतस्तुभ्यं कथयिष्यामि तत् शृण्वि-
त्यर्थः । यद्वा "अथातो ब्रह्मजिज्ञासा" इत्या-
दीनि ब्रह्मसूत्राणि गृह्यन्ते तान्येव ब्रह्म पद्यते
निश्चीयते एभिरिति पदानि तैर्हेतुमद्भिरीक्ष-
तेर्ना शब्दं आनन्दमयोऽभ्यासादित्यादियुक्ति-
मद्भिर्विनिश्चितार्थैः ॥)

**ब्रह्मसूनुः**, पुं, (ब्रह्मणः सूनुः पुत्त्रः ।) इक्ष्वाकु-

वंशोद्भवराजविशेषः । तत्पर्य्यायः । ब्रह्मदत्तः २ ।
इति हेमचन्द्रः । ३ । ३२८ ॥ (ब्रह्मपुत्त्रे वशि-
ष्ठादौ च ॥)

**ब्रह्मस्वं**, क्ली, (ब्रह्मणो ब्राह्मणस्य स्वं धनम् ।)

ब्राह्मणसम्बन्धि धनम् । तस्य हरणे दोषो यथा,

इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे
। ४७ अः ॥
आतिदेशिकब्रह्महत्या यथा, --
यम उवाच ।
"श्रीकृष्णे च तदर्च्चायां मृण्मव्यां
प्रकृतौ यथा ।
शिवे च शिवलिङ्गे वा सूर्य्ये
सूर्य्यमणौ यथा ॥
गणेशे वा तदर्च्चायामेवं सर्व्वत्र
सुन्दरि ! ।
यः करोति भेदबुद्धिं ब्रह्महत्यां
लभेत्तु सः ॥
स्वगुरौ स्वेष्टदेवेषु जन्मदातरि
मातरि ।
करोति भेदबुद्धिं यो ब्रह्महत्यां
लभेत्तु सः ॥
वैष्णवेष्वन्यभक्तेषु ब्राह्मणेष्वितरेषु
च ।
करोति समतां यो हि ब्रह्महत्यां
लभेत्तु सः ॥
हरेः पादोदकेष्वन्यदेवपादोदके
तथा ।
करोति समता यो हि ब्रह्महत्यां
लभेत्तु सः ॥
यो मूढो विष्णुनैवेद्ये चान्यनैवेद्यके
तथा ।
करोति समतां यो हि ब्रह्महत्यां
लभेत्तु सः ॥
सर्व्वेश्वरेश्वरे कृष्णे
सर्व्वकारणकारणे ।
सर्व्वाद्ये सर्व्वदेवानां सेव्ये
सर्व्वात्मनात्मनि ॥
माययानेकरूपे वाप्येक एव हि
निर्गुणे ।
करोत्यन्येन समतां ब्रह्महत्यां
लभेत्तु सः ॥
पितृदेवार्च्चनं पौर्व्वापरं
वेदविनिर्म्मितम् ।
यः करोति निषेधञ्च ब्रह्महत्यां स
बिन्दति ॥

ब्रह्म + हन् + "ब्रह्मभ्रूणवृत्रेषु क्विप् ।" ३
। २
८७ । इति क्विप् ।) ब्रह्मघ्नः
ब्राह्मणवधकर्त्ता ।
यथा, --
"ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने
वसेत् ।
भिक्षाण्यात्मविशुद्ध्यर्थं कृत्वा
शवशिरोध्वजम् ॥
भिक्षाशी विचरेद्ग्रामं वन्यैर्यदि न जीवति
।
ब्रह्महत्यापनोदाय मितभुक् संयतेन्द्रियः
॥
स सर्व्वस्वं वेदविदे ब्राह्मणायोपपादयेत् ।
धनं वा जीवनायालं गृहं वा सपरिच्छदम्
॥"
इति प्रायश्चित्तविवेकः ॥
तस्य नरकभोगान्ते जन्मानि यथा, --
"श्वशूकरखरोष्ट्राणां
गोऽजाविमृगपक्षिणाम् ।
चण्डालपुक्कशानाञ्च ब्रह्महा
योनिमृच्छति ॥"
इति मानवे । १२ । ५५ ॥

**ब्रह्महविः**, [स्] क्ली, (ब्रह्मैव हविरर्प्यमाणमाज्यम्
।)

अर्प्यमाणं हविरपि ब्रह्मैव । यथा, --
"ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म्मसमाधिना
॥"
इति श्रीभगवद्गीतायाम् । ४ । २४ ॥

**ब्रह्महुतं**, क्ली, (ब्रह्माणि ब्राह्मणे हुतम् दत्तम् ।

ब्रह्मपदमत्र उपलक्षणं तेन नृमात्रे बोध्यम्
।)
पञ्चमहायज्ञान्तर्गतयज्ञविशेषः । स तु
नृयज्ञः ।
अतिथिपूजनरूपः । इति जटाधरः ॥

**ब्रह्मा**, [न्] पुं, (वृंहति वर्द्धते यः । वृहि वृद्धौ +

"वृं हेर्नोऽच्च ।" उणा० ४ । १४५ ।
मनिन् नकार-

| | | |
|---|---|---|
| | ये निन्दन्ति हृषीकेशं<br>तन्मन्त्रोपासकं तथा ।<br>पवित्राणां पवित्रञ्च ब्रह्महत्यां<br>लभन्ति ते ॥<br>ये निन्दन्ति विष्णुमायां<br>विष्णुभक्तिप्रदां सतीम् ।<br>सर्व्वशक्तिस्वरूपाञ्च प्रकृतिं<br>सर्व्वमातरम् ॥<br>सर्व्वदेवीस्वरूपाञ्च सर्व्वाद्यां<br>सर्व्ववन्दिताम् ।<br>सर्व्वकारणरूपाञ्च ब्रह्महत्यां<br>लभन्ति ते ॥<br>कृष्णजन्माष्टमीं रामनवमीं पुण्यदां<br>पराम् ।<br>शिवरात्त्रिन्तथा चैकादशीं वारं<br>रवेस्तथा ॥<br>पञ्च पर्व्वाणि पुण्यानि ये न<br>कुर्व्वन्ति मानवाः ।<br>लभन्ते ब्रह्महत्यां ते<br>चाण्डालाधिकपापिनः ॥ | स्याकारश्च ।) ऋत्विग्भेदः । तस्य<br>स्थापन-<br>विधिर्यथा । ततः प्रादेशप्रमाणां घृताक्तां<br>समिधं तूष्णीमग्नौ हुत्वा ब्रह्मस्थापनं<br>कुर्य्यात् ।<br>समाग्रपञ्चाशत्कुशपत्ररचितं<br>द्विर्दक्षिणावर्त्त-<br>मूर्द्धमुखं दर्भवटुं अधीतवेदं ब्राह्मणं वा<br>छत्र- |

मुत्तरासङ्गं वा कमण्डलुं वा ब्रह्मत्वेन परि-
कल्प्य धारासहितमुदकपात्रं गृहीत्वा अग्ने-
रुत्तरतः प्रभृति दक्षिणावर्त्तेन दक्षिणदेशं गत्वा
अरत्निमात्रान्तरिते देशे पूर्ब्बाभिमुखीं वारि-
धारां दत्त्वा तदुपरि प्रागग्रान् कुशानास्तीर्य्य
पश्चिमाभिमुखोऽनुपविष्टस्तिष्ठेत्। वामहस्ता-
नामिकाङ्गुष्ठाभ्यामास्तीर्णकुशमेकं गृहीत्वा
प्रजापतिरृषिरनुष्टुप् छन्दोऽग्निर्देवता तृण-
निरसने विनियोगः। ॐ निरस्तः परावसु-
रित्यनेन दक्षिणपश्चिमकोणे प्रक्षिपेत्। तत
अप उपस्पृश्य दक्षिणपादेन सव्यपादमवष्टभ्य
उत्तराभिमुखीभूय आस्तीर्णकुशानद्भिरभ्युक्ष्य
प्रजापतिरृषिरनुष्टुप् छन्दोऽग्निर्देवता ब्रह्मोप-
वेशने विनियोगः ॐ आवसोः सदने सीद इति।
ब्राह्मणब्रह्मपक्षे तु ब्राह्मण एव सीदामीति
ब्रूयात् अनेन कुशोपरि पूर्ब्बाग्रं कुशब्राह्मणं
ब्राह्मणब्रह्मपक्षे तु उत्तराभिमुखं स्थापयित्वा
तदुपरि कुशान् दत्त्वा अद्भिरभ्युक्ष्य कुशकुसुमै-
रर्च्चयेत्। ततस्तेनैव पथा प्रत्यावृत्य आसने
पूर्ब्बाभिमुख उपविष्टो भूमिजपादिकं कुर्य्यात्।
यदि तु ब्रह्मत्वेनारोपितो ब्रह्मा अयज्ञीयवाचं
वदेत् तदा इमं मन्त्रं जपेत्। प्रजापतिरृषि-
र्गायत्रीच्छन्दो विष्णुर्देवता अयज्ञीयवाग्वचन-
निमित्तजपे विनियोगः। ॐ इदं विष्णुर्विचक्रमे
त्रेधा निदधे पदं समूढमस्य पांशुले इति जपेत्।
कुशादिब्रह्मपक्षे तु कर्म्मकर्त्तुरेव कृताकृतावेक्ष-
णादिब्रह्मकार्य्यकर्त्तव्यत्वादयज्ञीयवाग्वचननि-
मित्तं स एव जपेत्। इति भवदेवभट्टः॥ * ॥
योगभेदः। स तु विष्कम्भादिसप्तविंशतियोगा-
न्तर्गतपञ्चविंशयोगः। तत्र जातफलम्।
"नानाशास्त्राभ्याससंनीतकालो
वर्णाचारैः संयुतश्चारुकीर्त्तिः।
शान्तो दान्तो जायते चारुकर्म्मा
सूतौ यस्य ब्रह्मयोगप्रयोगः॥"
इति कोष्ठीप्रदीपः॥
विप्रः। इति मेदिनी॥ अर्हदुपासकविशेषः।
इति हेमचन्द्रः॥ सृष्टिकर्त्तृदेवताविशेषः।
वृंहति प्रजा यः। तत्पर्य्यायः। आत्मभूः २
सुरज्येष्ठः ३ परमेष्ठी ४ पितामहः ५ हिरण्य-

चिन्तामणिः ४७ पद्मपाणिः ४८
पुराणगः ४९
अष्टकर्णः ५० हंसरथः ५१ सर्व्वकर्त्ता
५२ चत्-
र्मुखः ५३। इति शब्दरत्नावली॥ कः
५४।
इत्येकाक्षरकोषः॥ आः ५५
शतपत्रनिवासः ५६
स्वायम्भुवमनुपिता ५७। इति
कविकल्पलता॥
मः ५८। इति प्रणवव्याख्या॥
(नाभिजन्मा ५९।
अण्डजः ६०। पूर्ब्बः ६१। निधनः ६२
।
कमलोद्भवः ६३। सदानन्दः ६४।
रजो-
मूर्त्तिः ६५। सत्यकः ६६। हंसवाहनः
६७।
इति कस्मिंश्चिदमरकोषे दृश्यते। १।
१। १७॥)
तस्य स्वरुपं यथा, --
मार्कण्डेय उवाच।
"ततो ब्रह्माण्डसंस्थानं दर्शयामास
शम्भवे।
ववृधे तोयराशिस्थं ब्रह्माण्डञ्च यथा पुरा
॥
तन्मध्ये पद्मगर्भाभं ब्रह्माणं जगतः पतिम्
।
ज्योतीरूपं प्रकाशार्थं सृष्ट्यर्थञ्च
पृथग्गतम्॥
शरीरिणं स ददृशे ब्रह्माण्डान्तर्गतं मुहुः।
चतुर्भुजं प्रकाशन्तं ज्योतिर्भिः
कमलासनम्॥
तत्रैव च त्रिधाभूतं वपुर्ब्राह्म्यं ददर्श सः।
ऊर्द्ध्वमध्यान्तमागैस्तु
ब्रह्मविष्णुशिवात्मिकान्॥
अथोर्द्ध्वभागो वपुषो ब्रह्मत्वमगमत्तथा।
मध्यो यथा विष्णुभूतां ददर्शान्तस्य
शम्भूताम्॥

चतुष्कोणे सङ्गतन्तु
शुक्लमण्डलस्रुक्स्रुवैः॥
सम्मार्जनादिकं सर्व्वं याश्चान्याः
प्रतिपत्तयः।
ग्राह्या उत्तरतन्त्रोक्ता
योगपीठेऽङ्कादिका॥"
तस्य पूजाक्रमो गायत्री च यथा, --
"आधारशक्तिप्रमुखांस्तथासर्व्वांस्तु
पूजयेत्।
अष्टपत्रेषु पद्मस्याष्टौ दिकपालान्
प्रपूजयेत्॥
पद्मासनाय विद्महे हंसारूढाय
धीमहि।
तन्नो ब्रह्मन्निति पदं ततश्चानु
प्रचोदयात्॥
एषा तु ब्रह्मगायत्री पूजयेदनया
विधिम्।
निर्म्माल्यधारी चैतस्य सनत्कुमार
उच्यते॥
उपचाराः पूर्ब्बवत्तु नेत्ररञ्जनरञ्जिताः
।
रक्तकौषेयवस्त्रन्तु ब्रह्मप्रीतिकरं परम्
॥
आज्यं सपायसं सर्पिस्तिलयुक्तस्य
भोजनम्।
सितरक्तसमायुक्तं चन्दनं
परिकीर्त्तितम्॥
पार्श्वयोः शङ्करं विष्णुं पूजने
पूजयेन्नरः।
सवादीन् करसंस्थांस्तु मण्डले
परिपूजयेत्॥
सरस्वतीञ्च सावित्रीं हंसं पद्मन्तथैव
च।
अयं विशेषः कथितः प्रणामश्चास्य
दण्डवत्॥
पद्मबीजभवा माला जपकर्म्मणि
कीर्त्तिता।
पूर्णादर्शौ तिथी ग्राह्ये पूजाकर्म्मणि
सर्व्वदा॥

गर्भः ६ लोकेशः ७ स्वयम्भूः ८ चतुराननः ९
धाता १० अब्जयोनिः ११ द्रुहिणः १२ विरिञ्चिः
१३
कमलासनः १४ स्रष्टा १५ प्रजापतिः १६
वेधाः १७ विधाता १८ विश्वसृक् १९ विधिः २०
।
इत्यमरः । १ । १ । १६-१७ ॥ द्रुघणः २१
विरिञ्चः २२
स्वयम्भुः ४३ पद्मयोनिः २४ पद्मासनः २५
बिश्वसृग्विधिः २६ । इति भरतः ॥ देवदेवः २७
पद्मगर्भः २८ गुणसागरः ३९ वेदगर्भः ३०
बहुरेताः ३१ स्वभूः ३२ सन्ध्यारामः ३३ सुधा
वर्षी ३४ कृपाद्वैतः ३५ खसर्पणः ३६ लोक-
नाथः ३७ महावीर्य्यः ३८ सरोजी ३९ मञ्जु-
प्राणः ४० नाभिजन्मा ४१ बहुरूपः ४२ जटा-
घरः ४३ सनत्शतधृतिः ४४ कञ्जजः ४५ प्रभुः
४६

एकमेव शरीरन्तु त्रिधाभूतं मुहुर्मुहुः ।
हरो ददर्श स्वे गर्भे तथा सर्व्वमिदं जगत्
॥
कदाचिद्वैष्णवं कायं ब्राह्म्ये काये लयं
व्रजेत् ।
ब्राह्म्यं तथा वैष्णवे च शाम्भवे वैष्णवं
तथा ॥
शाम्मवं वैष्णवे काये ब्राह्म्ये चाप्यथ
शाम्भवम् ।
गच्छन्तं लीनतां शम्भुरेकताञ्च मुहुर्मुहुः
॥
ददर्श वामदेवोऽपि भिन्नं चाप्यपृथग्गतम्
।
परमात्मनि गच्छन्तं लीनतां तद्वपुश्च
यत् ॥”
इति कालिकापुराणे १४ अध्यायः ॥ *
॥
तस्य पूजाविधिर्यथा ।
“शृणु राजन्नवहितो ब्रह्मणः पूजनक्रमम्
॥
ब्रह्मबीजं पुरा प्रोक्तं यन्मन्त्रं पूर्ब्बतश्चरेत्
।
तेनैव तन्तु संपूज्य परं निर्व्वाणमाप्नुयात्
॥
एतस्य चाङ्गमन्त्रन्तु यथा भर्गेण भाषितम्
।
वेतालभैरवाद्यांस्तु रूपञ्च शृणु भूमिप ! ॥
तस्य मन्त्रोद्धारो यथा, --
“पतृतीयश्च वह्निश्च शेषस्वरसमन्वितः
।
चन्द्रबिन्दुसमायुक्तो ब्रह्ममन्त्रः
प्रकीर्त्तितः ॥
अनेनैव तु मन्त्रेण ब्रह्माणं यः प्रपूजयेत् ।
स काममिष्टं संप्राप्य ब्रह्मलोके प्रमोदते
॥”
तस्य ध्यानं यथा, --
“ब्रह्मा कमण्डलुधरश्चतुर्व्वक्त्रश्चतुर्भुजः
।
कदाचिद्रक्तकमले हंसारूढः कदाचन ॥
वर्णेन रक्तगौराङ्गः प्रांशुस्तुङ्गाङ्ग उन्नतः ।
कमण्डलुर्वामकरे स्रुवो हस्ते तु दक्षिणे ॥

क्षीरेणार्घ्यं प्रदद्यात्तु सर्व्वदा ब्रह्मणे
मृप ! ।
अयन्ते कथितो भूप ! यथा भर्गेण
भाषितः ॥
दर्शयता स्वपुत्त्राभ्यां कामरूपाह्वयं
शुभम् ।
यत्र तत्र विधिञ्चैव साधकः
परिपूजयेत् ॥
पीठे सम्यक् पूजयित्वा परं
निर्व्वाणमाप्नुयात् ॥”
इति कालिकापुराणे ८२ अध्यायः
॥
तस्यापूज्यत्वकारणम् यथा ।
मोहिन्युवाच ।
“उत्तिष्ठ जगतीनाथ ! पारं कुरु
स्मरार्णवे ।
निमग्नां दुस्तरे घोरे कर्णधार !
भयानके ॥
अतीवनिर्जनस्थाने
सर्व्वजन्तुविवर्जिते ।
सुगन्धिवायुना रम्ये
पुंस्कोकिलरुतशुते ॥
सन्ततं त्वन्मनस्कामां दासीं
जन्मनि जन्मनि ।
क्रीणीहि रतिपण्येनामूल्यरत्नेन
सत्वरम् ॥
इत्युक्त्वा मोहिनी सद्यो
जगत्स्रष्टुश्च ब्रह्मणः ।
विचकर्ष करं वस्त्रं सस्मिता
कामविह्वला ॥
विज्ञाय समयं धाता तामुवाच
भयातुरः ।
पीयषतुल्यवचनं परं विनयपूर्ब्बकम्
॥”
ब्रह्मोवाच ।
“शृणु मोहिनि ! मद्वाक्यं सत्यं सारं
हितं
स्फुटम् ।
न कुरु त्वञ्च त्रैलोक्ये
स्त्रीजातीनामपत्रपाम् ॥

| | | |
|---|---|---|
| | दक्षिणाधस्तथा माला वामाधश्च तथा स्रुवः ।<br>आज्यस्थाली वामपार्श्वेवेदाः सर्व्वेऽग्रतः स्थिताः ॥<br>सावित्री वामपार्श्वस्था दक्षिणस्या सरस्वती ।<br>सर्व्वे च ऋषयो ह्यग्रे कुर्य्यादिभिश्च चिन्तनम् ॥<br>चतुष्कोणं चतुर्द्वारमष्टपत्रसमन्वितम्। | त्यज मामम्बिके ! पुत्रं वृद्धं निष्काममेव च ।<br>त्वत्कर्म्मयोग्यं रसिकं युवानं पश्य सस्मिते ! ॥<br>निषेकाल्लभ्यते पत्नी गुरुर्भर्त्ता शुभाशुभम् ।<br>मन्त्रः शिल्पमपत्यञ्च सर्व्वमेतन्न यत्नतः ॥<br>त्वया सह मम रतेर्निर्बन्धो नास्ति सुव्रते ! ।<br>क्षुद्रं महद्वा यत् कर्म्म सर्व्वं दैवनिबन्धकम् ॥<br>इत्युक्तवन्तं ब्रह्माणं स्मरन्तं मत्पदाम्बु जम् ।<br>विचकर्ष पुनर्वेश्या कामेन हतचेतना ॥<br>एतस्मिन्नन्तरे शीघ्रं स्थानं तत् सुमनोहरम् ।<br>आजग्मुर्मुनयः सर्व्वे ज्वलन्तो ब्रह्मतेजसा ॥<br>दृष्ट्वैतांश्च मुनिश्रेष्ठानागतांश्च ममेच्छया । |

तत्याज मोहिनी शीघ्रं व्रीडया कमलोद्भवम् ॥
तत्रोवास जगद्धाता तद्वामपार्श्वतश्च सा ।
प्रणेमुर्मुनयस्तञ्च भक्तिनम्रात्मकन्धराः ॥
आशिषं युयुजे ब्रह्मा वासयामास तान् प्रभुः ।
तेषु मध्ये प्रजज्वाल यथा तारासु चन्द्रमाः ॥
पप्रच्छुर्म्मुनयो देवं कथमेषा तवान्तिके ।
स्वर्व्वेश्यानाञ्च प्रवरा मोहिनीत्येवमेव च ॥
श्रुत्वा मुनीनां वचनमुवाच तान् प्रजापतिः ॥
ब्रह्मोवाच ।
अपूर्ब्बं नृत्यगीतञ्च चिरं कृत्वा शुभावहा ।
उवासेयं परिश्रान्ता यथा कन्या पितुः पुरः ॥
इत्युक्त्वा जगतां धाता जहास मुनिसंसदि ।
जहसुर्मुनयः सर्व्वे सर्व्वज्ञास्तत्र राधिके ! ॥
सर्व्वं रहस्यं विज्ञाय जगत्स्रष्टुश्च मानसम् ।
सद्यश्चुकोप कुलटा हास्यव्याजेन संसदि ॥
सर्व्वाङ्गकम्पमाना सा कुलटा कुटिलानना ।
रक्तपङ्कजनेत्रा च कोपप्रस्फुरिताधरा ॥
उत्थाय च सभामध्ये तेषाञ्च पुरतः स्थिता ।
संबुध्योवाच ब्रह्माणं मृत्युकन्या यथा रुषा ॥
मोहिन्युवाच ।

मनसः पूर्ब्बसृष्टा वै जाता ये तेन मानसाः ॥
मरीचिरभवत् पूर्ब्बं ततोऽत्रिर्भगवानृषिः ।
अङ्गिराश्चाभवत् पश्चात् पुलस्त्यस्तदनन्तरम् ॥
ततः पुलहनामा वै ततः क्रतुरजायत ।
प्रचेताश्च ततः पुत्त्रो वशिष्ठश्चाभवत् पुनः ॥
पुत्त्रो भृगुरभूत्तत्र नारदोऽपि चिरादभूत् ।
दशेमान् मानसान् ब्रह्मा जपन् पुत्त्रानजीजनत् ॥”
तस्य शारीरदशप्रजासृष्टिर्यथा, --
“शारीरानथ वक्ष्यामि मातृहीनान् प्रजापतेः ।
अङ्गुष्ठाद्दक्षिणाद्दक्षप्रजापतिरजायत॥
धर्म्मस्तनान्तादभवद्धृदयात् कुसुमायुधः ।
भ्रूमध्यादभवत् क्रोधो लोभश्चाधरसम्भवः ॥
बुद्धेर्मोहः समभवदहङ्कारादभून्मदः ।
प्रमोदश्चाभवत् कण्ठान्मृत्युर्लोचनतो नृप ! ॥
रभसः करमध्यात्तु ब्रह्मसूनुरभूत्ततः ।
एते नव सुता राजन् ! कन्या च दशमी पुनः ॥
अङ्गजा इति विख्याता दशमी ब्रह्मणः सुता ॥”
तस्य चतुर्मुखत्वस्य कारणं यथा, --
“ततः स्वदेहसम्भू तामात्मजामित्यकल्पयत् ।
दृष्ट्वा तां व्यथितस्तावत् कामवाणार्द्दितो विभुः ।
अहो रूपमहो रूपमिति चाह प्रजापतिः ॥
ततो वशिष्ठप्रमुखा भगिनीमिति चुक्रुशुः ।
ब्रह्मा न किञ्चिद्ददृशे तन्मुखालोकनादृते ॥
अहो रूपमहो रूपमिति प्राह पुनः पुनः ।
ततः प्रणामनम्रां तां पुरस्तादभ्यलोकयत् ॥
अथ प्रदक्षिणञ्चक्रे सा पितुर्वरवर्णिनी ।
पुत्त्रेभ्यो लज्जितस्यास्य तद्रूपालोकनेच्छया ।
आविर्भूतं ततो वक्त्वं दक्षिणं पाण्डुगण्डवत् ॥
विस्मयस्फुरदोष्ठञ्च पाश्चात्यमुदगात्ततः ।
चतुर्थमभवत् पश्चाद्वामं कामशरातुरम् ॥
ततोऽन्यदभवत्तस्य कामातुरतया तथा ।
उत्पतन्त्यास्तदाकाशमालोकनकुतूहलात् ॥
सृष्ट्यर्थं यत् कृतं तेन तपः परमदारुणम् ।
तत् सर्व्वं नाशमगमत् स्वसुतोपगमेच्छया ॥
तेनाशु वक्त्रमभवत् पञ्चमन्तस्य धीमतः ।

अनिरुद्धरूपविष्णुं प्रति पाद्मकल्पीयब्रह्मवचनम् ॥ * ॥ तस्य पतनकालो यथा, --
“द्वात्रिंशदब्दकोट्यस्तु तथा वृन्दाष्टकं भवेत् ।
खर्व्वद्वयं निखर्व्वञ्च शङ्कुत्रययुतं तथा ॥
पद्ममेकं समुद्राश्च त्रयो ब्रह्मसमागते ।
ब्रह्मा विष्णुदिने चैकः पतत्येवं वदन्ति ते ॥
मनीषिणस्तथा विष्णुरहन्युग्रस्य शङ्करः ।
ईश्वरस्य तथा चासौ स सांख्यप्रकृतेस्तथा ॥
अतः परं परे धाम्नि कालसंख्या न विद्यते ।
ब्रह्मणोऽतः परं संख्या नास्ति चैतन्मतं हि नः ॥”
अपि च ।
“एकार्णवे तु त्रैलोक्ये ब्रह्मा नारायणात्मकः ।
भोगिशय्यागतः शेते त्रैलोक्यग्रासवृंहितः ॥
जलस्थैर्योगिभिर्देवश्चिन्त्यमानोऽब्जसम्भवः ।
व्यतीतायान्तु शर्व्वर्य्यां स बुद्ध्वा सृजते पुनः ॥
एवन्तु ब्रह्मणो वर्षं तथा वर्षशतं भवेत् ।
गते वर्षे शते ब्रह्मा परमात्मनि लीयते ॥”
इत्यग्निपुराणम् ॥

**ब्रह्माग्रभूः**, पुं, (ब्रह्मणोऽग्रेसम्मुखे भवतीति । भू + क्विप् । यज्ञार्थं ब्रह्मणो देहाज्जातत्वात्तथात्वम् ।) घोटकः । इति हारावली । ५२ ॥

**ब्रह्माञ्जलिः**, पुं, (ब्रह्मणे वेदपाठार्थं कृतो योऽञ्जलिः ।) सामवेदपाठे स्वरविभागार्थं योऽञ्जलिः क्रियते सः । अध्ययनस्यादावन्ते च गुरवे प्रणवोच्चारणपूर्ब्बकोऽञ्जलिः क्रियते सः । तत्पाठार्थत्वात् ब्रह्मणोऽञ्जलिः । इत्यमरटीकायां भरतः । २ । ७ । ३९ ॥ (यथा, मनुः । २ । ७०-७१ ।
“अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः ।
ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रियः ॥
ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा ।
संहत्य हस्तावध्येयं सहि ब्रह्माञ्जलिः स्मृतः ॥”)

**ब्रह्माणी**, स्त्री, (ब्रह्माणमणति कीर्त्तयतीति । अण शब्दे कर्म्मण्यण् । ङीप् । यद्वा, ब्रह्माण-

अये ब्रह्मन् ! जगन्नाथ !
वेदकर्त्ता त्वमेव च ।
किंवा वेदप्रणिहितं कर्म्म
किन्तद्विपर्य्ययम् ॥
विचारं मनसा स्वेन कुरु
वेदविदां गुरो ! ।
स्वकन्यायां यत्स्पृहा स कथं
हसति नर्त्तकीम् ॥
निर्म्मिताहमीश्वरेण स्वर्व्वेश्या
सर्व्वगामिनी ।
सतां कर्म्म विरुद्धं
यत्तदत्यन्तविडम्बनम्॥
दासीतुल्यां विनीताञ्च दैवेन
शरणागताम् ।
यतो हससि गर्व्वेण ततोऽपूज्यो
भवाचिरम् ॥
अचिराद्दर्पभङ्गन्ते करिष्यति
हरिः स्वयम् ।
निबोध शरणं ब्रह्मन् !
वेश्यायाश्चैव साम्प्रतम् ॥
तवैव वचनं स्तोत्रं मन्त्रं गृह्णाति
यो नरः ।
भविता तस्य विघ्नश्च स
यास्यत्युपहास्यताम् ॥
भविता वार्षिकी पूजा देवतानां
युगे युगे ।
तव माघ्याञ्च संक्रान्त्यां न
भविष्यति सा पुनः ॥
कल्पान्तरेऽत्र कल्पे वा देहे
देहान्तरेऽत्र ते ।
पुनः पूजा न भविता या गता सा
गतैव च ॥
इत्युक्त्वा मोहिनी शीघ्रं जगाम
मदनालयम् ।
तेन सार्द्धं रतिं कृत्वा बभूव
विज्वरा पुनः ॥”
इति ब्रह्मवैवर्त्ते
श्रीकृष्णजन्मखण्डे
मोहिनीशाप-
ब्रह्मदर्पभङ्गप्रस्तावः ३३
अध्यायः ॥

आविर्भवज्जटाभिश्च तद्वक्त्वञ्चावृणोत्प्रभुः
॥”
इति मत्स्यपराणे ३ अध्यायः ॥ * ॥
नव ब्रह्माणो यथा, मार्कण्डेयपुराणे ।
“भृगुं पुलस्त्यं पुलहं क्रतुमङ्गिरसन्तथा ।
मरीचिं दक्षमत्रिञ्च वशिष्ठञ्चैव मानसम् ।
नव ब्रह्माण इत्येते पुराणे निश्चयं गताः ॥”
कल्पभेदे तस्य जन्मानि यथा, --
“त्वत्तो मे मानसं जन्म प्रथमं द्विजपूजितम् ।
चाक्षुषं वै द्वितीयं मे जन्म चासीत् पुरातनम् ॥
त्वत्प्रसादात्तु मे जन्म तृतीयं वाचिकं महत् ।
त्वत्तः श्रवणजं चापि चतुर्थं जन्म मे विभो ! ॥
नासत्यञ्चापि मे जन्म त्वत्तः पञ्चममुच्यते ।
अण्डजं चापि मे जन्म त्वत्तः षष्ठं विनिर्म्मितम्
॥
इदञ्च सप्तमं जन्म पद्मजन्मेति मे प्रभो ! ।
सर्गे सर्गे ह्यहं पुत्त्रस्तव त्रिगुणवर्ज्जित ! ॥”
इति महाभारते शान्तिपर्व्वणि मोक्षधर्म्मे

मानयति जीवयतीति । अनघ्लुप्राणने ण्यन्ता-
दस्मात् कर्म्मणि अणि कृते “णेरनिटि । ६ । ४ ।
५१ । इति णिलोपः “टिड्ढेति ।” ४ । १ । १५ ।
इति ङीप् पूर्ब्बपदादितिणत्वञ्च ।) ब्रह्मणः पत्नी ।
इति शब्दमाला ॥ ब्रह्मणोऽर्द्धशरीरात् तस्या
उत्पत्तिर्नामान्तरञ्च यथा, --
“ततः संजपतस्तस्य भित्त्वा देहमकल्मषम् ।
स्त्रीरूपमर्द्धमकरोदर्द्धं पुरुषरूपवत् ॥
शतरूपा च सा ख्याता सावित्री च निगद्यते ।
सरस्वत्यथ गायत्त्री ब्रह्माणी च परन्तप ! ॥”
इति मत्स्यपुराणे ३ अध्यायः ॥ * ॥
अपि च ।
“हंसयुक्तविमानाग्रे साक्षसूत्रकमण्डलुः ।
आयाता ब्रह्मणः शक्तिर्ब्रह्माणी साभिधीयते ॥”
इति मार्कण्डेयपुराणे । ८८ । १४ ॥ * ॥
(इयं हि पूर्णशक्तेर्दुर्गायाः कलाशक्तिः । यदुक्तं
मार्कण्डेये । ९० । ३४ ।

| | | |
|---|---|---|
| तस्य सृष्टिक्रमो यथा ।<br>मनुरुवाच ।<br>“चतुर्मुखत्वमगमत्<br>कस्माल्लोकपितामहः ।<br>कथञ्च लोकानसृजद्ब्रह्मा<br>ब्रह्मविदांवरः ॥”<br>मत्स्य उवाच ।<br>“तपश्चचार प्रथमममराणां<br>पितामहः ।<br>आविर्भूतास्ततो वेदाः<br>साङ्गोपाङ्गपदक्रमाः ॥<br>पुराणं सर्व्वशास्त्राणां प्रथमं<br>ब्रह्मणा स्मृतम् ।<br>नित्यशब्दमयं पुण्यं<br>शतकोटिप्रविस्तरम् ॥<br>अनन्तरञ्च वक्त्वेभ्यो<br>वेदास्तस्य विनिःसृताः ।<br>मीमांसा न्यायविद्या च<br>प्रमाणात्मकसम्मता ॥”<br>तस्य मानसदशपुत्त्रसृष्टिर्य्यथा, -<br>-<br>“वेदाभ्यासरतस्यास्य<br>प्रजाकामस्य मानसाः । | | |

देव्युवाच ।
“एकैवाहं जगत्यत्र द्वितीया का ममापरा ।
पश्यैता दुष्ट ! मय्येव विशन्त्यो मद्विभूतयः ॥
ततः समस्तास्ता देव्यो ब्रह्माणी-प्रमुखा लयम् ।
तस्या देव्यास्तनौ जग्मुरेकैवासीत्तदाम्बिका ॥”)
दुर्गा । यथा, --
“ब्रह्माणी ब्रह्मजननाद्ब्रह्माक्षरपरा मता ॥”
इति देवीपुराणे ४५ अध्यायः ॥ * ॥
रेणुकानामगन्धद्रव्यम् । इति रत्नमाला ॥
राज-
रीतिः । इति राजनिर्घण्टः ॥

**ब्रह्माण्डं**, क्ली, (ब्रह्मणो जगत्स्रष्टुरण्डम् । चतुर्द्दश-
भुवनगोलकः । यद्वा, ब्रह्मणा विश्वसृजा कृत-
मण्डम् ।) भुवनकोषः । विश्वगोलकः । यथा,
--
“ब्रह्माण्डरचनाख्यानं श्रूयतां सावधानतः ।
ब्रह्माण्डरचनार्थञ्च भक्ता जानन्ति यत्नतः ॥
मुनयश्च सुराः सन्तः किञ्चिज्जानन्ति दुःखतः ।
जानामि विश्वसर्व्वार्थं ब्रह्मानन्तो महेश्वरः ॥
धर्म्मः सनत्कुमारश्च नरनारायणावृषी ।
कपिलश्च गणेशश्च दुर्गा लक्ष्मीः सरस्वती ॥
वेदाश्च वेदमाता च सर्व्वज्ञा राधिका स्वयम् ।
एते जानन्ति विश्वार्थं नान्यो जानाति कश्चन ॥
वैषम्यार्थञ्च सुधियः सर्व्वे विज्ञातुमक्षमाः ।
नित्याकाशो यथात्मा च तथा नित्या दिशो दश ॥
यथा नित्या च प्रकृतिस्तथैव विश्वगोलकः ।
गोलोकश्च यथा नित्यस्तथा वैकुण्ठ एव च ॥
एकदा मयि गोलोके रासे नृत्यं प्रकुर्व्वति ।
आविर्भूता च वामाङ्गाद् बाला षोडश-
वार्षिकी ॥
श्वेतचम्पकवर्णाभा शरच्चन्द्रसमप्रभा ।
अतीवसुन्दरी रम्या रमणीनां परात्परा ॥
ईषद्धास्या प्रसन्नास्या कोमलाङ्गी मनोहरा ।
वह्निशुद्धांशुकाधाना रत्नाभरणभूषिता ॥
गजेन्द्रगामिनी रामा कामिनी वामलोचना ।
मां ददर्श कटाक्षेण रमणी रमणोत्सुका ॥
रासे संभूय रामा सा दधाव पुरतो मम ।
तेन राधा समाख्याता पुराविद्भिः प्रपूजिता ॥
प्रकृष्टप्रकृतिश्चास्यास्तेन प्रकृतिरीश्वरी ।
शक्ता स्यात् सर्व्वकार्य्येषु तेन शक्तिः प्रकी-
र्त्तिता ॥
सर्व्वाधारा सर्व्वरूपा मङ्गलार्च्चा च सर्व्वतः ।
सर्व्वमङ्गलदक्षा सा तेन स्यात् सर्व्वमङ्गला ॥
वैकुण्ठे सा महालक्ष्मीर्मूर्त्तिभेदे सरस्वती ।
प्रसूय वेदान् विदिता वेदमाता च सा सदा ॥
सावित्री सा च गायत्री धात्री त्रिजगतामपि ।
पुरा संहृत्य दुर्गञ्च सा दुर्गा च प्रकीर्त्तिता ॥
तेजःसु सर्व्वदेवानामाविर्भूता पुरा सती ।
तेनाद्यप्रकृतिर्ज्ञेया सर्व्वासुरविमर्द्दिनी ॥
सर्व्वानन्दा च सानन्दा दुःखदारिद्र्यनाशिनी ।
शत्रूणां भयदात्री च भक्तानां भयहारिणी ॥
दक्षकन्या सती सा च शैलजा तेन पार्व्वती ।
सर्व्वाधारस्वरूपा सा कलया सा वसुन्धरा ॥
कलया तुलसी गङ्गा कलया सर्व्वयोषितः ।
दिव्यं त्रिलक्षवर्षञ्च बभ्राम कमलान्तरे ।
ततो दण्डे पञ्चलक्षं सस्मार तपसा च माम् ॥
तदा मया दत्तमन्त्रं जजाप कमलान्तरे ।
दिव्यं सप्तवर्षलक्षं नियतं संयतः शुचिः ॥
तदा मत्तो वरं लब्धा स्रष्टा सृष्टिञ्चकार सः ।
मायया प्रतिब्रह्माण्डे ब्रह्मविष्णुशिवात्मकाः ॥
दिक्पाला द्वादशादित्या रुद्राश्चैकादशापि वा ।
नव ग्रहाष्टौ वसवो देवाः कोटित्रयस्तथा ॥
ब्राह्मणक्षत्त्रविट्शूद्रा यक्षगन्धर्व्वकिन्नराः ।
भूतादयो राक्षसाश्चाप्येवं सर्व्वं चराचरम् ॥
विश्वे विश्वे विनिर्म्माणं स्वर्गाः सप्त क्रमेण वै ।
सप्तसागरसंयुक्ता सप्तद्वीपा वसुन्धरा ॥
काञ्चनीभूमिसंयुक्ता तमोयुक्तस्थलं ततः ।
पातालाश्च तथा सप्त ब्रह्माण्डमेभिरेव च ॥
विश्वे विश्वे चन्द्रसूर्य्यौ पुण्यक्षेत्रञ्च भारतम् ।
तीर्थान्येतानि सर्व्वत्र गङ्गादीनि व्रजेश्वर ! ॥
यावन्ति लोमकूपानि महाविष्णोः क्रमेण च ।
विश्वान्येव हि तावन्ति ह्यसंख्यानि पितर्ध्रुवम् ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । ८४ ।
५२-१०१ ॥
अपि च ।
“देवीगुणत्रयाविष्टमण्डञ्च कोटिविस्तरम् ।
ब्रह्मादिस्तम्बपर्य्यन्तमुत्पन्नं सचराचरम् ॥
अण्डे हिरण्यगर्भस्य यदूर्द्ध्वं गर्भसंश्रितम् ।
तत्रोत्पन्नमिदं व्योमरूपाणि द्यौर्महीं भवेत् ॥
अधोर्द्ध्वं काञ्चनमयश्चतुरस्रोच्छ्रितो महान् ।
उत्पन्नः स चतुःशृङ्गो मेरुर्दैवतसंश्रयः ॥
पृथिवी पद्मदिक् क्षेत्रं मेरुस्तस्य तु कर्णिका ।
युगाक्षकोटिविस्तीर्णं तत्र कृत्वा रथं रविः ।
देवीवशवृतो देवैर्याति तस्य प्रदक्षिणम् ॥”
इति देवीपुराणम् ॥
अथ ब्रह्माण्डगोलमाह ।
“भूभूधरत्रिदशदानवमानवाद्या
ये याश्च धिष्ण्यगगनेचरचक्रकक्षाः ।
लोकव्यवस्थितिरुपर्य्युपरिप्रदिष्टा
ब्रह्माण्डभाण्डजठरे तदिदं समस्तम् ॥”
अथान्योदितं ब्रह्माण्डमानं पूर्व्वोक्तमपि प्रस-
ङ्गादनुवदतिस्म ।
कोटिघ्नैर्नखनन्दषट्कनखभूभूभृद्भुजङ्गेन्दुभि-

यथा जलदपङ्क्तिश्च बलाकाभिर्विभूषिता।
सिन्दूरबिन्दुना चारुचन्द्रचन्दनबिन्दुभिः ॥
कस्तूरीबिन्दुभिः सार्द्धं
सीमन्ताधःस्थलोज्वला।
अमूल्यरत्ननिर्म्माणसुस्निग्धकिरणोज्वला॥
रत्नकुण्डलयुग्मेन गण्डस्थलसमुज्वला।
कुङ्कुमालक्तकस्तूरीचारुचन्दनपत्रकैः ॥
विचित्रैश्च सुचित्रैश्च सुकपोलस्थलोज्वला।
खगेन्द्रचञ्चुविजितनासा चार्व्वी सुशोभिता ॥
गजेन्द्रगण्डनिर्मुक्तमुक्ताभूषणभूषिता।
सूक्ष्या विमुक्तमुक्ताभदन्तपङ्क्तिमनोहरा॥
वलिता ललितातीव पक्वबिम्बाधरा वरा ।
शश्वत्पूर्णेन्दुनिन्दास्या पद्मनिन्दितलोचना॥
कृष्णसारनिभोद्भिन्नसुचारुकज्जलोज्वला।
अमूल्यरत्ननिर्म्माणकेयूरकङ्कणोज्वला ॥
मणीन्द्रराजराजीभिः शङ्खयुग्मकरोज्वला।
रत्नाङ्गुरीयकैरेभिरमृताङ्गुलिभूषिता ॥
रत्नेन्द्रराजराजेन क्वणन्मञ्जीररञ्जिता।
रत्नपायकराजीभिः पादाङ्गुलिविराजिता।
सुन्दरालक्तरागेण चरणाधःस्थलोज्वला॥

सृष्टिं करोमि च यया तया
शक्त्या पुनःपुनः ॥
दृष्ट्वातां रासमध्यस्थां मम
क्रीडा तया सह ।
बभूव सुचिरं तात ! यावद्वै
ब्रह्मणः शतम् ॥
अत्यद्भुतं कौतुकञ्च
महाशृङ्गारमीप्सितम्।
तयोर्द्वयोर्घर्म्मराशिः सुस्राव
रासमण्डले ॥
तस्मान्मनोहरं जज्ञे नाम्ना
कामसरोवरम्।
पपात घर्म्मधाराधो वेगेन
विश्वगोलके ॥
बभूव जलपूर्णञ्च ब्रह्माण्डानाञ्च
गोलकम्।
जलपूर्णं पुरा सर्व्वं सृष्टिशून्यं
व्रजेश्वर ! ॥
शृङ्गारान्ते च तस्याञ्च
वीर्य्याधानं मया कृतम्।
दधार गर्भं सा राधा यावद्वै
ब्रह्मणः शतम् ॥
सुसाव सा तदन्ते च डिम्बं तत्
परमाद्भुतम्।
चुकोप देवी तं दृष्ट्वा रुरोद
विषसाद सा ॥
पादेन प्रेरयामास तमधो
विश्वगोलके।
स पपात जले तात ! सर्व्वाधारो
महान् विराट् ॥
दृष्ट्वापत्यं जलस्थञ्च मया शप्ता
च सा पुरा।
अनपत्या च सा राधा मत्शापेन
पुरा विभो ! ॥
तेन प्रसूता क्रमतो दुर्गा लक्ष्मीः
सरस्वती।
चतस्रः परिपूर्णा सा प्रसूताश्च
सुनिश्चितम्॥
देव्योऽन्याश्चापि कामिन्यो न
प्रसूता व्रजेश्वर ! ।

ज्योतिःशास्त्रविदो वदन्ति नभसः कक्षामिमां
योजनैः ।
तद्ब्रह्माण्डकटाहसम्पुटतटेकेचिज्जगुर्वेष्टनं
केचित् प्रोचुरदृश्यदृश्यकगिरिं पौराणिकाः
सूरयः ॥
करतलकलितामलकवदमलं
सकलं विदन्ति ये गोलम्।
दिनकरकरनिकरनिहततमसो
नभसः परिधिरुदितस्तैः ॥
ब्रह्माण्डमेतन्मितमस्तु नो वा
कल्पे ग्रहः क्रामति योजनानि।
यावन्ति पूर्ब्बैरिह तत्प्रमाणं
प्रोक्तं खकक्षाख्यमिदं मतं नः ॥"
इति सिद्धान्तशिरोमणौ गोलाध्याये भुवनकोषः ॥

| | | |
|---|---|---|
| | कलया प्रभवो यासां कलांशांशेन वा व्रज ॥<br>जज्ञे महान् विराट् तेन डिम्बेन कलयाश्रयः ।<br>अमृताङ्गुष्ठपीयूषं मया दत्तं पपौ च सः ॥<br>जले स्थावररूपश्च स शेते निजकर्म्मणः ।<br>उपाधानं जलं तल्पं तस्य योगबलेन च ।<br>तस्य लोम्नाञ्च कूपानि जलपूर्णानि सन्ततम् ।<br>प्रत्येकं क्रमतस्तेषु शेते क्षुद्रविराट् पुनः ॥<br>सहस्रपत्रं कमलं जज्ञे क्षुद्रस्य नाभितः ।<br>तत्र जज्ञे स्वयं ब्रह्मा तेनायं कमलोद्भवः ॥<br>तत्राविर्भूय स विधिश्चिन्ताग्रस्तो बभूव च ।<br>कस्माद्देहः क्व माता मे पिता वा क्व च<br>बान्धवः ॥ | |

महादानविशेषः । यथा, --
मत्स्य उवाच ।
"अथातः संप्रवक्ष्यामि
ब्रह्माण्डविधिमुत्तमम् ।
यच्छ्रेष्ठं सर्व्वदानानां महापातकनाशनम् ॥
पुण्यं दिनमथासाद्य तुलापुरुषदानवत् ।
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम्
॥
लोकेशावाहनं तद्वदधिवासनकं यथा ।
कुर्य्याद्विंशपलादूर्ध्वमासहस्राच्च
शक्तितः ॥
कलसद्वयसंयुक्तं ब्रह्माण्डं काञ्चनं बुधः ।
दिग्गजाष्टकसंयुक्तं षड्वेदाङ्गसमन्वितम् ॥
लोकपालाष्टकोपेतं मध्यस्थितचतुर्म्मुखम्
।
शिवाच्युतार्कशिखरमुमालक्ष्मीसमन्वितम्
॥
वस्वादित्यमरुद्गर्भं महारत्नसमन्वितम् ।
वितस्तेरङ्गुलशतं यावदायामविस्तरम् ॥
कौशेयवस्त्रसम्बीतं तिलद्रोणोपरि न्यसेत्
।
तथाष्टादश धान्यानि समन्तात् परिकल्प-
येत् ॥
पूर्ब्बेणानन्तशयनं प्रद्युम्नं पूर्ब्बदक्षिणे ।
प्रकृतिं दक्षिणे देशे सङ्कर्षणमतः परम् ॥
पश्चिमे चतुरो वेदाननिरुद्धमतः परम् ।
अग्निमुत्तरतो हैमं वासुदेवमतःपरम् ॥
समन्ताद्गुडपीठस्थानर्च्चयेत् काञ्चनान्
बुधः ।
स्थापयेद्वस्त्रसंयुक्तान् पूर्णकुम्भान् दशैव तु
॥
दशैव धेनवो देयाः सहेमाम्बरदोहनाः ।
पादुकोपानहच्छत्रचामरासनदर्पणैः ॥
भक्ष्यभोज्यान्नदीपेक्षुफलमाल्यानुलेपनैः ।
होमाधिवासनान्ते तु स्थापितो वेदपुङ्गवैः ।
इममुच्चारयेन्मन्त्रं त्रिः कृत्वाथ प्रदक्षिणम्
॥
नमोऽस्तु विश्वेश्वर ! विश्वधाम
जगत्सवित्रे भगवन्नमस्ते ।
इति पठति शृणोति वा य एतत्
सुरभवनेषु गृहेषु धार्म्मिकाणाम् ।
मतिमपि च ददाति मोदतेऽसा-
वमरपतेर्भवने सहाप्सरोभिः ॥"
इति मत्स्यपुराणे महादानानुकीर्त्तने ब्रह्माण्ड-
दानको नाम २५० अध्यायः ॥ * ॥ अपि च ।
"इदानीं कार्त्तिकी चेयं वर्त्ततेऽद्य नराधिप ! ।
ब्रह्माण्डं सर्व्वसम्पन्नं भूतरत्नौषधीयुतम् ॥
देवदानवयक्षैश्च युक्तमेतत् सदा विभो ! ।
एतद्धेममयं कृत्वा सर्व्वबीजरसान्वितम् ॥
सरत्नं पुरुषं कृत्वा कार्त्तिक्यां द्वादशीदिने ।
अथवा पञ्चदश्यां वै कार्त्तिक्याञ्चैव नान्यतः ॥
पुरोहिताय गुरवे दापयेद्भक्तिमान्नरः ।
ब्रह्माण्डोदरवर्त्तीनि यानि भूतानि पार्थिव ! ।
तानि दत्तानि तेन स्युः समासात् कथितं तव ॥
यो यज्ञैर्यजते राजन् ! सहस्रवरदक्षिणैः ।
सैकोद्देशो यजेत्तस्य ब्रह्माण्डस्य विशेषतः ॥
यः पुनः सकलञ्चेदं ब्रह्माण्डं दातुमिच्छति ।
तेन यष्टं कृतं दत्तं पठितं कीर्त्तितं भवेत् ॥"
वराह उवाच ।
"एतत् कृत्वा ततो राजा हेमकुम्भे प्रकल्पनम् ।
ब्रह्माण्डमृषये प्रादात् सपिधानञ्च तत्क्षणात् ॥
सर्व्वकामैः सुसम्बीतो ययौ स्वर्गं नराधिपः ॥"
इति वराहपुराणम् ॥

**ब्रह्मात्मभूः**, पुं, (ब्रह्मण आत्मनः शरीरात् भव-
तीति । ब्रह्मात्मन् + भू + क्विप् ।) अश्वः ।
इति
शब्दमाला ॥ (अस्य ब्रह्मशरीरजातत्वमुक्तं
बृहदारण्यकौपनिषदि । १ । २ । ६-७ । तद्
यथा, --
"प्राणा वै यशोवीर्य्यं तत्प्राणेषूत्क्रान्तेषु शरीरं
श्वयितुमध्रियत तस्य शरीर एव मन आसीत् ।
सोऽकामयत मेध्यं म इदं स्यादात्मन्व्यनेन
स्या-
मिति । ततोऽश्वः समभवद्यदश्वत्तन्मेध्यम-
भूदिति तदेवाश्वमेधस्याश्वमेधत्वम् ।" अत्र
शाङ्करभाष्यं यथा, --
"प्राणाश्चक्षुरादयः । वै यशो यशोहेतुत्त्वात्तेषु
स्तत्प्रवेशात् गतयशोवीर्य्यत्वादमेध्यं
सन्मेध्यम-
भूत् तदेव
तस्मादेवाश्वमेधस्याश्वमेधनाम्नः
क्रतो-
रश्वमेधत्वमश्वमेधनाम लाभः ॥")

**ब्रह्मादनी**, स्त्री, हंसपदी । इति राजनिर्घण्टः ॥

**ब्रह्मादिजाता**, स्त्री, (ब्रह्मणः आदिजाता सम्भूता
।
क्वचित् ब्रह्माभिजाता इति पाठो
दृश्यते ।)
गोदावरी । इति राजनिर्घण्टः ॥

**ब्रह्मापेतः**, पुं, (ब्रह्माणं ब्रह्मतेजःस्वरूपं सूर्य्य-
मुपेत उपगतः ततः पृषोदरात् साधुः
।) माघ-
मासे सूर्य्यनिकटस्थितराक्षसः । यथा,
--
"त्वष्टा च यमदग्निश्च कम्बलोऽथ
तिलोत्तमा ।
ब्रह्मापेतोऽथ ऋतजिद्धृतराष्ट्रश्च
सप्तमः ॥
माघमासे वसन्त्येते सप्त मैत्रेय !
भास्करे ।"
इति विष्णुपुराणे । २ । १० । १५ ॥

**ब्रह्मारण्यं**, क्ली, (ब्रह्मणोवेदस्य अरण्यमिव ।)
वेदपाठभूमिः । इति त्रिकाण्डशेषः ॥

**ब्रह्मार्प्णं**, क्ली, (ब्रह्मैवार्पणमितिविग्रहे यदर्पणं
तद्ब्रह्मैव । यथा, गीतायाम् । ४ । २४
॥
"ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणाहुतम्
॥"
"ब्रह्मार्पणं येन करणेन प्रकारेण
ब्रह्मविद्धि-
रग्नावर्पयति तद्ब्रह्मैवेति पश्यति
तस्यात्म-
व्यतिरेकेणाभावं पश्यति यथा
शुक्तिकायां

सप्तर्षिलोकामरभूतलेश !
गर्भेण सार्द्धं वितरामि रक्षाम् ॥
ये दुःखितास्ते सुखिनो भवन्तु
प्रयान्तु पापानि चराचराणाम् ।
त्वद्दानशस्त्राहतपातकानां
ब्रह्माण्डदोषाः प्रलयं व्रजन्तु ॥
एवं प्रणम्यामरविश्वगर्भं
दद्याद्द्विजेभ्यो दशधा विभज्य ।
भागद्वयं तत्र गुरोः प्रकल्प्य
समं भजेच्छेषमतः क्रमेण ॥
स्वल्पे तु होमे गुरुरेक एव
कुर्य्यादथैकाग्निविधानयुक्त्या ।
स एव संपूज्यतमोऽल्पवित्तै-
र्यथोक्तवस्त्राभरणादिकेन ॥
इत्थं य एतदखिलं पुरुषोऽत्र कुर्य्याद्
ब्रह्माण्डदानमधिगम्य महद्विमानम् ।
निर्द्धूतकल्मषविशुद्धतनुर्मुरारे-
रानन्दकृत्पदमुपैति सहाप्सरोभिः ॥
सन्तारयेत् पितृपितामहपुत्त्रपौत्त्रान्
बन्धुप्रियातिथिकलत्रशताधिकःसः ।
ब्रह्माण्डदानशकलीकृतपापकौघ-
मानन्दयेच्च जननीकुलमप्यशेषम् ॥

हि सत्सुख्यातिर्भवति । तथा वीर्य्यं
बलमस्मिन्
शरीरे । नह्युत्क्रान्तप्राणो यशस्वी बलवान्
भवति । तस्मात् प्राणा एव यशो वीर्य्यं
चास्मिन्
शरीरे । तदेवं प्राणलक्षणं यशोवीर्य्यमुदक्रामत्
उत्क्रान्तवत् तदेवं यशोवीर्य्यभूतेषु प्राणेषुत्-
क्रान्तेषु शरिरान्निष्क्रान्तेषु तच्छरीरं प्रजापतेः
श्वयितुमुच्छूनभावङ्गन्तुमध्रियतामेध्यञ्चाभवत्
।
तस्य प्रजापतेः शरीरान्निर्गतस्यापि तस्मिन्नेव
शरीरे मन आसीत् । यथा कस्यचित् प्रिये
विषये दूरङ्गतस्यापि मनो भवति तद्वत् । स
तस्मिन्नेव शरीरे गतमनाः सन् किमकरोदिति
॥
उच्यते सोऽकामयत कथं मेध्यं मेधार्हं यज्ञियं
मे ममेदं शरीरं स्यात् । किञ्चात्मन्वी आत्मवां-
श्चानेन शरीरेण शरीरवान् स्यामिति प्रविवेश ।
यस्मात्तच्छरीरं मद्वियोगाद्गतयशोवीर्य्यं
सदश्व-
दश्वयत्ततस्तस्मादश्वः समभवत् ।
ततोऽश्वनामा
प्रजापतिरेव साक्षादत्र स्तूयते । यस्माच्च पुन-

रजताभावं पश्यति तद्वदुच्यते
ब्रह्मैवार्पणमिति
यथा यद्रजतं तच्छुक्तिकैवेति । ब्रह्म
अर्पण-
मित्यसमस्ते पदे यदर्पणबुद्ध्या गृह्यते
लोके
तदस्य ब्रह्मविदो ब्रह्मैवेत्यर्थः । इति
शाङ्कर-
भाष्यम् ॥) ब्रह्मणि समर्पणम् ।
तत्प्रकारा यथा,
“ब्रह्मणा दीयते देयं ब्रह्मणे संप्रदीयते ।
ब्रह्मैव दीयते चेति ब्रह्मार्पणमिदं परम् ॥
नाहं कर्त्ता सर्व्वमेतद्ब्रह्मैव कुरुते तथा
।
एतद् ब्रह्मार्पणं प्रोक्तं
ऋषिभिस्तत्त्वदर्शिभिः ॥
प्रीणातु भगवानीशः कर्म्मणानेन
शाश्वतः ।
करोति सततं बुद्ध्या ब्रह्मार्पणमिदं
परम् ॥
यद्वा फलानां संन्यासं प्रकुर्य्यात्
परमेश्वरे ।
कर्म्मणामेतदप्याहुर्ब्रह्मार्पणमनुत्तमम्
॥”
इति कूर्म्मपुराणे ४ अध्यायः ॥

**ब्रह्मावर्त्तः**, पुं, (ब्रह्मणां ब्रह्मनिष्ठब्राह्मणानामा-
वर्त्त इव । बहुलब्राह्मणाश्रयत्वादस्य
तथा-
त्वम् ।) देशविशेषः । तत्पर्य्यायः ।
तपोवटः २ ।
इति त्रिकाण्डशेषः ॥ तत्परिमाणादि
यथा, --
“सरस्वतीदृशद्वत्योर्द्देवनद्योर्य्यदन्तरम्
।
तद् देवनिर्म्मितं देशं ब्रह्मावर्त्तं प्रचक्षते
॥
तस्मिन् देशे य आचारः
पारम्पर्य्यक्रमागतः ।
वर्णानां सान्तरालानां स सदाचार
उच्यते ॥

| | | |
|---|---|---|
| | | कुरुक्षेत्रञ्च मत्स्याश्च पञ्चालाः<br>शूरसेनकाः ।<br>एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरः ॥<br>एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।<br>स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां<br>सर्व्वमानवाः ॥<br>इति मानवे । २ । १७-२० ॥<br>(तीर्थविशेषः । यथा, महाभारते । ३ ।<br>८३ । ५० ।<br>“ततो गच्छेत धर्म्मज्ञ ! ब्रह्मावर्त्तं<br>नराधिप ! ।<br>ब्रह्मावर्त्ते नरः स्नात्वा<br>ब्रह्मलोकमवाप्नुयात् ॥” |

अपरञ्च तत्रैव । ३ । ८४ । ४० ।
"ब्रह्मावर्त्तं ततो गच्छेत् ब्रह्मचारी समाहितः ।
अश्वमेधमवाप्नोति सोमलोकञ्च गच्छति ॥")

**ब्रह्मासनं**, क्ली, (ब्रह्मणे ब्रह्मप्राप्त्यै आसनम् ।)
ध्यानासनम् । योगासनम् । इत्यमरः । २ । ७ । ४० ॥
ध्यानं परमार्थचिन्तनम् ।
योगश्चित्तवृत्तिनिरोध-
मात्रम् । ध्यानं निराकारभावनम् । योगः साकारभावनमिति वा । तयोः पद्मस्वस्तिका-
द्यासनं यत् तत्र ब्रह्मासनं स्यात् । इति भरतः ॥
(आसनविशेषः । तल्लक्षणं यथा, --
"ब्रह्मासनं तदा वक्ष्ये यत्कृत्वा ब्राह्मणो भवेत् ।
एकपादमुरौ दत्त्वा तिष्ठेद्दण्डाकृतिर्भवेत् ॥"
ब्रह्मण आसनमितिविग्रहे ब्रह्मास्तरणम् ॥)

**ब्रह्मास्त्रं**, क्ली, (ब्रह्मस्वरूपमस्त्रम् ।) ब्रह्मस्वरू-
पास्त्रम् । यथा, देवीपुराणे ।
"तदा रामेण क्रुद्धेन ब्रह्मास्त्रं प्रति रावणे ।
नारायणविघातार्थं चिन्तितं चतुराननम् ॥
मुञ्जमेखलदण्डाक्षस्रुवदर्भकृताजिनम् ।
हूङ्काररावबहुलमागत्य पुरतः स्थितम् ॥"

**ब्रह्मिष्ठा**, स्त्री, (अतिशयेन ब्रह्म । ब्रह्म + इष्ठन् +
टाप् च ।) दुर्गा । यथा, --
"ब्रह्मिष्ठा वेदमातृत्वात् गायत्री चरणाग्रजा ।
वेदेषु चरते यस्मात्तेन सा ब्रह्मचारिणी ॥"
इति देवीपुराणे ४५ व्यध्यायः ॥

**ब्रह्मी**, स्त्री, (मेधाजनकत्वात् ब्रह्मणे हिता ।
ब्रह्म + अण् । बाहुलकात् न वृद्धिः । ततो ङीप् ।) पङ्कगडकमत्स्यः । इति त्रिकाण्ड-
शेषः ॥ पाँकाल इति भाषा । फञ्जिकावृक्षः । शाकभेदः । ब्रमी इति भाषा । इति मेदिनी ।
बन्ध्यानाञ्चैव नारीणां नराणामल्परेतसाम् ।
घृतं सारस्वतं नाम बलवर्णवपुःप्रदम् ॥"
इति जयनारायणकृतचिकित्सारत्नसंग्रहः ॥
(अपरञ्च ।
"ब्रह्मीरसे वचाकुष्ठशङ्खपुष्पीभिरेव च ।
पुराणं मेध्यमुन्मादग्रहापस्मारनाशनम् ॥"
इति वैद्यकचक्रपाणिसंग्रहेऽपस्माराधिकारे ॥)

**ब्रह्मोतं**, त्रि, ब्रह्मणि आ सम्पक् प्रकारेण ऊतं
ग्रथितम् । ("लोपोऽस्योमाडोः ।" इति सूत्रेण अकार लोपः ।) इति मुग्धबोधव्याकरणम् ॥

**ब्रह्मोत्तरं**, त्रि, ब्रह्मा ब्राह्मणः उत्तरः प्रधानं
यस्य । ब्राह्मणस्वामिकभूम्यादि । इति व्यवहार
प्रसिद्धम् ॥ (देशभेदः । इति मास्यम् । १२० । ५० ॥)

**ब्रह्मोद्यं**, क्ली, (ब्रह्मणो वेदस्य वदनम् । ब्रह्म +
वद् + क्यप् ।) ब्रह्मणो वाक्यम् । इति मुग्ध-
बोधव्याकरणम् ॥

**ब्रह्मोद्या**, त्रि, (ब्रह्म + वद् + क्यय् + टाप् ।) ब्रह्मणः
कथा । इति मुग्धबोधव्याकरणम् ॥ (यथा, मनुः । २ । २३१ ।
"ब्रह्मोद्याश्च कथाः कुर्य्यात् पितृणामेतदीप्सि-
तम् ॥"
"परमात्मनिरूपणपराः कथाश्च कुर्य्यात् ।"
इति तट्टीकायां कुल्लूकभट्टः ॥)

**ब्रह्मोपनेता**, [ऋ] पुं, (ब्रह्माणं ब्राह्मणं उपनयते
इति । ब्रह्म + उप + णि + तृच् । उपनयन-
हेतुकदण्डत्वात्तथात्वम् ।) पलाशवृक्षः । इति
राजनिर्घण्टः ॥ ब्राह्मणोपनयनकर्त्ता च ॥

**ब्रह्मौदनं**, क्ली, (ब्रह्मणे देयमोदनम् ।) यज्ञे
ऋत्विग्भ्यो दत्तमन्नम् । इति वैदिकाः । (यथा,

**ब्राह्मः**, पुं, (ब्रह्मणोऽपत्यं पुमान् इति । ब्रह्मन् +
"तस्यापत्यम् । ४ । १ । ९२ । इत्यण् । "नस्त-
द्धिते ।" ६ । ४ । १४४ । इति टिलोपः ।)
नारदः । इति जटाधरः ॥ (ब्रह्मण इवायमिति
अण् ।) विवाहविशेषः । यथा, --
"वरमाहूय यथाशक्त्यलङ्कृता कन्या यत्र
दीयते सः ।"
यथा, --
"आच्छाद्य चार्च्चयित्वा च
श्रुतशीलवते स्वयम् ।
आहूय दानं कन्याया ब्राह्मो धर्म्मः
प्रकीर्त्तितः ॥"
इत्युद्वाहतत्त्वम् ॥
("रात्रेश्च पश्चिमे यामे मुहूर्त्तो ब्राह्म उच्यते ।"
इति नियमात्
रात्रिशेषयामार्द्धस्थितोऽरुण-
दयात् प्राक्दण्डद्वयात्मको
कालविशेषः । यथा,
मनुः । ४ । ९१ ।
"ब्राह्मे मुहूर्त्ते बुद्ध्येत धर्म्मार्थौ चानुचिन्त-
येत् ॥")

**ब्राह्मणं**, क्ली, (ब्रह्मन् + अण् न टिलोपः ।) ब्रह्म-
संघातः । ब्राह्मणसमूहः । वेदभागः । इति
मेदिनी । ने, ६७ ॥

**ब्राह्मणः**, पुं, ब्राह्मणो विप्रस्य प्रजापतेर्वा अपत्यम् ।
ब्रह्म वेदस्तमधीते वा सः । इति भरतः ॥ (ब्रह्मन्
+ अण् "ब्राह्मोऽजातौ ।" ६ । ४ । १७१ ।

मे, १९ ॥ ब्रह्मीशाकस्य पर्य्यायः ।
मत्स्याक्षी २
सुरसा ३ वयस्था ४ ब्रह्मचारिणी ५ । इति
रत्नमाला ॥ (यथा, भैषज्यरत्नावल्यां
कुष्ठरोग
चिकित्सायाम् ।
“तैलतुल्यं प्रदातव्यं स्वरसञ्च पृथक् पृथक्
।
महाकालवचाब्रह्मी तुम्ब्यग्निगृहपुत्रिका ॥”)
अस्या गुणाः । भेदकत्वम् । स्वरकारित्वम् ।
पित्तकफनाशित्वञ्च । इति राजवल्लभः ॥
अस्याः
पर्य्यायान्तरं गुणाश्च ब्राह्मीशब्दे द्रष्टव्याः ॥

**ब्रह्मीघृतं**, क्ली, (ब्रह्मीजातं घृतम् ।) औषध-

विशेषः । सारस्वतघृतमिति ख्यातम् ।
यथा, --
“समूलपत्रामुत्पाट्य ब्रह्मीं प्रक्षाल्य वारिणा ।
उदूखले खोदयित्वा रसं वस्त्रेण गालयेत् ॥
रसे चतुर्गुणे तस्मिन् धृतप्रस्थं विपाचयेत् ।
हरिद्रा मालती कुष्ठं बृहती सहरीतकी ।
एतेषां पलिकैर्भागैः शेषास्तु कार्षिकाः
स्मृताः ॥
पिप्पल्योऽथ विडङ्गानि सैन्धवे शर्करा वचा
।
सर्व्वमेतत् समालोड्य शनैर्मृद्वग्निना पचेत् ॥
एतत्प्राशितमात्रेण वाग्विशुद्धिः प्रजायते ।
सप्तरात्रप्रयोगेण किन्नरैः सह गीयते ॥
अर्द्धरात्रप्रयोगेण स्वरो भवति कौकिलः ।
मासमेकं प्रयोगेण भवेत् श्रुतिधरो नरः ॥
पञ्च गुल्मान् प्रमेहांश्च कासं पञ्चविधं जयेत्
।

अथर्व्ववेदे । ४ । ३५ । ७ ।
“ब्रह्मौदनं विश्वजितं पचामि शृण्वन्तु मे
श्रद्ध-
धानस्य देवाः ॥”)

**ब्राह्मं**, क्ली, (ब्रह्मण इदम् । ब्रह्मन् + “तस्ये-

दम् ।” ४ । ३ । १२० । इत्यण् ।
‘नस्तद्धिते ।’ ६ । ४ । १४४ ।
इति टिलोपः ।) ब्रह्मतीर्थं । तत्तु अङ्गुष्ठस्य
मूले वर्त्तते । इत्यमरः ॥ २ । ७ । ५१ ॥
अनेन
तीर्थेन द्विजस्याचमनं यथा, आह्निकतत्त्वे ।
“अन्तर्जानुशुचौ देश उपविष्ट उदङ्मुखः ।
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत्
॥
अङ्गुष्ठोत्तरतो रेखा या पाणेर्दक्षिणस्य च ।
एतद्ब्राह्ममिति ख्यातं तीर्थमाचमनाय वै ॥”
ब्रह्मपुराणम् । यथा, --
“ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतं तथा ॥”
इति मलमासतत्त्वधृतविष्णुपुराणवचनम् ॥
(ब्रह्मसम्बन्धिनि, त्रि । यथा, मनुः । १ । ६८
।
“ब्राह्मस्य तु क्षपाहस्य यत्प्रमाणं समासतः ।
एकैकशो युगानान्तु क्रमशस्तन्निबोधत ॥”
ब्रह्मा देवतास्य इति । ब्रह्मन् + “सास्य
देवता ।” ४ । २ । २४ । इत्यण् । टिलोपः ।
ब्रह्मदेवताकमस्त्रादि । यथा, रघुः । १२ ।
९७ ।
“अमोघं सन्दधे चास्मै धनुष्येकधनुर्द्धरः ।
ब्राह्ममस्त्रं प्रियाशोकशल्यनिष्कर्षणौषधम्
॥”)

इति नटिलोपः ।) तत्पर्य्यायः ।
द्विजातिः २
अग्रजन्मा ३ भूदेवः ४ बाडवः ५ विप्रः
६ ।
इत्यमरः ॥ २ । ७ । ४ । ॥ द्विजः ७
सूत्र-
कण्ठः ८ ज्येष्ठवर्णः ९ अग्रजातकः
१०
द्विजन्मा ११ वक्त्रजः १२ मैत्रः १३
वेदवासः १४
नयः १५ गुरुः १६ । इति
शब्दरत्नाबली ॥
ब्रह्मा १७ षट्कर्म्मा १८ द्विजोत्तमः
१९ । इति
राजनिर्घण्टः ॥ * ॥ अयं
सर्व्ववर्णश्रेष्ठः । ब्रह्मणो
मुखाज्जातः । प्लक्षद्वीपे तस्य संज्ञा
हंसः ।
शाल्मलद्वीपे श्रुतिधरः । कुशद्वीपे
कुशलः ।
क्रौञ्चद्वीपे गुरुः । शाकद्वीपे ऋतव्रतः ।
पुष्कर-
द्वीपे सर्व्वे एकवर्णाः । अस्य
शास्त्रनिरूपित-
धर्म्मास्त्रयः अध्ययनं यजनं दानञ्च ।
जीविका-
स्तिस्रः अध्यापनं याजनं प्रतिग्रहश्च ।
अयमा-
श्रमचतुष्टयवान् भवति । यथा ।
ब्रह्मचारी
गृहस्थः वानप्रस्थः सन्न्यासी च ।
क्षत्रियवैश्य-
योस्तु क्रमश एकैकपादहीनत्वमिति
बोध्यम् ।
इति श्रीभागवतम् ॥ * ॥
ब्राह्मणीक्षत्त्रिया-
वैश्यासु ब्राह्मणाज्जातो ब्राह्मणः ।
यथा, --
“ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः
स्यान्न संशयः ।

| | | |
|---|---|---|
| | | क्षत्त्रियायां तथैव स्याद्वैश्यायामपि चैव हि ॥”<br>इति महाभारते अनुशासने । ४७ । २८ ॥<br>तस्य लक्षणं यथा, --<br>“जात्या कुलेन वृत्तेन स्वाध्यायेन श्रुतेन च ।<br>एभिर्युक्तो हि यस्तिष्ठेन्नित्यं स द्विज उच्यते ॥”<br>इति वह्निपुराणम् ॥<br>अपि च ।<br>“न क्रुध्येन्न प्रहृष्येच्च मानितोऽमानितश्च यः ।<br>सर्व्वभूतेष्वभयदस्तं देवा ब्राह्मणं विदुः ॥ |

अहेरिव गणाद्भीतः लौहित्यान्नरकादिव ।
कुणपादिव च स्त्रीभ्यस्तं देवा ब्राह्मणं विदुः ॥
येन केनचिदाच्छन्नो येन केनचिदाशितः ।
यत्र क्वचन शायी च तं देवा ब्राह्मणं विदुः ॥
विमुक्तं सर्व्वसङ्गेभ्यो मुनिमाकाशवत् स्थितम् ।
अस्वमेकचरं शान्तं तं देवा ब्राह्मणं विदुः ॥
जीवितं यस्य धर्म्मार्थं धर्म्मो रत्यर्थमेव च ।
अहोरात्राश्च पुण्यार्थं तं देवा ब्राह्मणं विदुः ॥
निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् ।
अक्षीणं क्षीणकर्म्माणं तं देवा ब्राह्मणं विदुः ॥”
इति महाभारते मोक्षधर्म्मः ॥ * ॥
अपि च । विशाखयूप उवाच ।
“विप्रस्य लक्षणं ब्रूहि त्वद्भक्तिः का च तत्कृता ।
यतस्तवानुग्रहेण वाग्वाणाः ब्राह्मणाः कृताः ॥
कल्किरुवाच ।
वेदा मामीश्वरं प्राहुरव्यक्तं व्यक्तिमत् परम् ।
ते वेदा ब्राह्मणमुखे नाना धर्म्माः प्रकाशिताः ॥
यो धर्म्मो ब्राह्मणानां हि सा भक्तिर्मम पुष्कला ।
तयाहं तोषितः श्रीशः संभवामि युगे युगे ॥
ऊर्द्धन्तु त्रिवृतं सूत्रं सधवानिर्म्मितं शनैः ।
तन्तुत्रयमधोवृत्तं यज्ञसूत्रं विदुर्बुधाः ॥
त्रिगुणं तद्ग्रन्थियुक्तं वेदप्रवरसम्मितम् ।
शिरोधरान्नाभिमध्यात्पृष्ठार्द्धपरिमाणकम् ॥
तस्य धर्म्मो यथा, --
ब्राह्मणस्य तु यो धर्म्मस्तं ते वक्ष्यामि केवलम् ।
दममेव महाराज ! धर्म्ममाहुः पुरातनम् ॥
स्वाध्यायाभ्यसनञ्चैव तत्र कर्म्म समाप्यते ।
तञ्चेद्वित्तमुपागच्छेद्वर्त्तमानं स्वकर्म्मणि ॥
अकुर्व्वाणं विकर्म्माणि श्रान्तं प्रज्ञानतर्पितम् ।
कुर्व्वीतोपेत्य सन्तानमथ दद्याद्यजेत च ॥
संविभज्यापि भोक्तव्यं धनं सद्भिरितीष्यते ।
परिनिष्ठितकार्य्यस्तु स्वाध्यायेनैव ब्राह्मणः ॥
कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रो ब्राह्मण उच्यते ।”
इति पाद्मे स्वर्गखण्डे २६ अध्यायः ॥ * ॥
तस्य माहात्म्यादि यथा, --
“सर्व्वेषामेव वर्णानां ब्राह्मणः परमो गुरुः ।
तस्मै दानानि देयानि भक्तिश्रद्धासमन्वितैः ॥
सर्व्वदेवाग्रजो विप्रः प्रत्यक्षत्रिदशो भुवि ।
स तारयति दातारं दुस्तरे विश्वसागरे ॥
हरिशर्म्मोवाच ।
सर्व्ववर्णगुरुर्विप्रस्त्वया प्रोक्तः सुरोत्तम ! ।
तेषां मध्ये च कः श्रेष्ठः कस्मै दानं प्रदीयते ॥
ब्रह्मोवाच ।
सर्व्वेऽपि ब्राह्मणाः श्रेष्ठाः पूजनीयाः सदैव हि ।
अविद्या वा सविद्या वा नात्र कार्य्या विचारणा ॥
स्तेयादिदोषलिप्ता ये ब्राह्मणा ब्राह्मणोत्तम ! ।
आत्मभ्यो द्वेषिणस्तेऽपि परेभ्यो न कदाचन ॥
अनाचारा द्विजाः पूज्या न च शूद्रा जिते-न्द्रियाः ।
अभक्ष्यभक्षका गावः कोलाः सुमतयो न च ॥
माहात्म्यं भूमिदेवानां विशेषादुच्यते मया ।
सूचीप्रक्षेपणं तस्य नेत्रयोः कुरुते यमः ॥
विप्रनिर्भर्त्सनं मूढा येन वक्त्रेण कुर्व्वते ।
तस्मिन् वक्त्रे यमस्तप्तं लौहपिण्डं ददाति वै ॥
ब्राह्मणो यद्गृहे भुङ्क्ते तद्गृहे केशवः स्वयम् ।
देवताः सकला एव पितरश्च मुरर्षयः ॥”
तस्य पादोदकादिमाहात्मम् यथा, --
विप्रपादोदकं यस्तु कणमात्रं वहेद्बुधः ।
देहस्थं पातकं तस्य सर्व्वमेवाशु नश्यति ॥
कोटिब्रह्माण्डमध्येषु सन्ति तीर्थानि यानि वै ।
तीर्थानि तानि सर्व्वाणि वसन्ति द्विजपादयोः ॥
विप्रपादोदकैर्नित्यं सिक्तं स्याद्यस्य मस्तकम् ।
स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षितः ॥
सर्व्वपापानि घोराणि ब्रह्महत्यादिकानि च ।
सद्य एव विनश्यन्ति विप्रपादाम्बुधारणात् ॥
क्षयाद्या व्याधयः सर्व्वे परमक्लेशदायकाः ।
गच्छन्ति विलयं सद्यो विप्रपादाम्बुभक्षणात् ॥
पित्रर्थं यानि तोयानि दीयन्ते विप्रपादयोः ।
तैस्तृप्ताः पितरः स्वर्गे तिष्ठन्त्याचन्द्रतारकम् ॥
प्रक्षाल्य विप्रचरणौ दूर्व्वाभिर्योऽर्च्चयेद्बुधः ।
तेनार्च्चितो जगत्स्वामी विष्णुः सर्व्वसुरोत्तमः ॥
विप्राणां पादनिर्म्माल्यं यो मर्त्यः शिरसा वहेत् ।
सत्यं सत्यमहं वच्मि तस्य मुक्तिर्हि शाश्वती ॥
तस्य प्रदक्षिणफलम् ।

यजुर्विदां नाभिमितं सामगानामयं विधिः
।
वामस्कन्धेन विधृतं यज्ञसूत्रं बलप्रदम् ॥
मृद्भस्मचन्दनाद्यैस्तु धारयेत्तिलकं द्विजः
।
भाले त्रिपुण्ड्रं कर्म्माङ्गं
केशपर्य्यन्तमुज्वलम् ॥
पुण्ड्रमङ्गुलिमानन्तु त्रिपुण्ड्रं तत्त्रिधाकृतम्
।
ब्रह्मविष्णुशिवावासं दर्शनात् पापनाशनम्
॥
ब्राह्मणानां करे स्वर्गा वाचो वेदाः करे
हरिः ।
गात्रे तीर्थानि यागाश्च नाडीषु
प्रकृतिस्त्रिवृत् ॥
सावित्री कण्ठकुहरा हृदयं ब्रह्मसङ्गतम् ।
तेषां स्तनान्तरे धर्म्मः पृष्ठेऽधर्म्मः
प्रकीर्त्तितः ॥
भूदेवा ब्राह्मणा राजन् ! पूज्या वन्द्याः
सदु-
क्तिभिः ।
चातुराश्रम्यकुशला मम धर्म्मप्रवर्त्तकाः ॥
बालाश्चापि ज्ञानवृद्धास्तपोवृद्धा मम
प्रियाः ।
तेषां वचः पालयितुमवताराः कृता मया ॥
महाभाग्यं ब्राह्मणानां सर्व्वपापप्रणाशनम् ।
कलिदोषहरं श्रुत्वा मुच्यते सर्व्वतो भयात्
॥”
इति कल्किपुराणे ४ अध्यायः ॥ * ॥
अपि च ।
“कर्म्मणा ब्राह्मणो जातः करोति
ब्रह्मभावनाम् ।
स्वधर्म्मनिरतः शुद्धस्तस्माद्ब्राह्मण
उच्यते ॥”
इति ब्रह्मवैवर्त्ते गणेशखण्डे ३५ अध्यायः
॥ * ॥
अपि च ।
“जातकर्म्मादिभिर्यस्तु संस्कारैः
संस्कृतः शुचिः ।
वेदाध्ययनसम्पन्नः षट्सु
कर्म्मस्ववस्थितः ॥

तव स्नेहाद्द्विजश्रेष्ठ ! निशामय समाहितः
॥
क्षत्त्रियाणाञ्च वैश्यानां शूद्राणां गुरवो द्विजाः
।
अन्योन्यं गुरवो ज्ञेयाः पूजनीयाश्च भूसुर !
॥
ब्राह्मणं प्रणमेद्यस्तु विष्णुबुद्ध्या नरोत्तमः ।
आयुः पुत्त्राश्च कीर्त्तिश्च सम्पत्तिस्तस्य
वर्द्धते ॥
न च नौति द्विजं यस्तु मूढधीर्मानवो भुवि ।
सुदर्शनेन तच्छीर्षं हन्तुमिच्छति केशवः ॥”
पुष्पादिहस्तब्राह्मणस्य प्रणामनिषेधो यथा,
--
“पुष्पहस्तं पयोहस्तं देवहस्तञ्च भूसुर ! ।
न नमेद्ब्राह्मणं प्राज्ञस्तैलाभ्यङ्गितविग्रहम् ॥
जलस्थं देववेश्मस्थं ध्यानमज्जितचेतसम्
।
देवपूजाञ्च कुर्व्वन्तं न नमेद्ब्राह्मणं बुधः ॥
बहिष्क्रियां प्रकुर्व्वन्तं भुञ्जानञ्च द्विजोत्तम !
।
तथा सामानि गायन्तं न नमेद्ब्राह्मणं बुधः
॥
ब्राह्मणा यत्र तिष्ठन्ति बहवो द्विजसत्तम ! ।
प्रत्येकन्तु नमस्कारस्तत्र कार्य्यो न धीमता
॥
कृताभिवादनं विप्रं भक्त्या यो नाभिवादयेत्
।
स चाण्डालसमो ज्ञेयो नाभिवाद्यः कदापि च
॥
कृतप्रणामं तनयं नमेतां पितरौ न च ।
कृतप्रणामाः सर्व्वेऽपि नमस्कार्य्या
द्विजैर्द्विजाः ॥
कृतदोषान् द्विजान् गाश्च न द्विषन्ति विच-
क्षणाः ।
द्विषन्ति वापि मीहेन तेषां रुष्टः सदा हरिः ॥
याचकान् ब्राह्मणान् यस्तु कोपदृष्ट्या
प्रपश्यति ।

“विप्रं प्रदक्षिणीकृत्य वन्दते यो नरोत्तमः ।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ॥”
तस्य पादसेचनफलम् ।
यो दद्यात् फलताम्बूलं विप्राणां पादसेचने
।
इह लोके सुखं तस्य परलोके ततोऽधिकम्
॥
पुत्त्रार्थी लभते पुत्त्रं धनार्थी लभते घनम् ।
मोक्षार्थी लभते मोक्षं विप्रपादस्य सेचनात्
॥
रोगी रोगात् प्रमुच्येत पापी मुच्येत
पातकात् ।
मुच्येत बन्धनाद्बद्धो विप्राणां पादसेचनात्
॥
अनपत्याश्च या नार्य्यो मृतापत्याश्च याः
स्त्रियः ।
बह्वपत्या जीववत्साः स्युर्विप्रपादसेचनात्
॥”
इति पाद्मे क्रियायोगसारे २० अध्यायः ॥
तस्य सन्ध्याया अकरणे दोषो यथा, --
“नोपतिष्टति यः पूर्ब्बां नोपास्ते यस्तु
पश्चिमाम् ।
स शूद्रवद्बहिः कार्य्यः
सर्व्वस्माद्द्विजकर्म्मणः ॥”
तस्य सन्ध्याकरणफलं यथा, --
“यावज्जीवनपर्य्यन्तं यस्त्रिसन्ध्यं करोति
च ।
स च सूर्य्यसमो विप्रस्तेजसा तपसा सदा
॥
तत्पादपद्मरजसा सद्यः पूता वसुन्धरा ।
जीवन्मुक्तः स तेजस्वी सन्ध्यापूतो हि यो
द्विजः ॥
तीर्थानि च पवित्राणि तस्य संस्पर्शमात्रतः
।
ततः पापानि यान्त्येव वैनतेयादिवोरगाः ॥
सन्ध्याया अकरणे दोषो यथा, --
“न गृह्णन्ति मुरास्तेषां पितरः पिण्डतर्पणम्
।
स्वेच्छया त्त द्विजातेश्च त्रिसन्ध्यरहितस्य
च ॥”
तस्य निन्दितकर्म्माणि यथा, --

| शौचाचारपरो नित्यं विघसाशी गुरुप्रियः ।<br>नित्यव्रती सत्यरतः स वै ब्राह्मण उच्यते ॥<br>सत्यं दानमथोऽद्रोह आनृशंस्यं कृपा घृणा ।<br>तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः ॥ * ॥ | | “विष्णुमन्त्रविहीनश्च त्रिसन्ध्यरहितो द्विजः ।<br>एकादशीविहीनश्च विषहीनो यथोरगः ॥<br>हरेर्नैवेद्यभोजी न धावको वृषवाहकः । |
|---|---|---|

शूद्रान्नभोजी विप्रश्च विषहीनो
यथोरगः ॥
शवदाही च शूद्राणां यो विप्रो
वृषलीपतिः ।
शूद्राणां सूपकारी च शूद्रयाजी च यो
द्विजः ।
असिजीवी मसीजीवी विषहीनो
यथोरगः ॥
यो विप्रोऽवीरान्नभोजी
ऋतुस्नातान्नभोजकः ।
भगजीवी वार्द्धुषिको विषहीनो यथोरगः
।
यः कन्याविक्रयी विप्रो यो
हरेर्नामविक्रयी ।
यो विद्याविक्रयी विप्रो विषहीनो
यथोरगः ॥
सूर्य्योदये च द्विर्भोजी मत्स्यभोजी च
यो
द्विजः ।
शिलापूजादिरहितो विषहीनो यथोरगः
॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २१
अध्यायः ॥ * ॥
अपि च ।
“यदि शूद्रां ब्रजेद्विप्रो वृषलीपतिरेव सः
।
स भ्रष्टो विप्रजातेश्च चाण्डालात्
सोऽधमः
स्मृतः ॥
विष्ठासमश्च तत्पिण्डो मूत्रं तस्य च
तर्पणम् ।
तत्पितॄणां सुराणाञ्च पूजने तत्समं
सति ॥
कोटिजन्मार्जितं पुण्यं
सन्ध्यार्च्चातपसार्ज्जितम् ।
द्विजस्य वृषलीभोगान्नश्यत्येव न
संशयः ॥
ब्राह्मणश्च सुरापीती विड्भोजी
वृषलीपतिः ।

तथा रामनवम्याञ्च यत्नतः पुण्यवासरे ।
ब्राह्मणानां स्वधर्म्मश्च कथितो ब्रह्मणा नृप !
॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ५९
अध्यायः ॥
गृहस्थब्राह्मणनियमा यथा, --
“वेदं वेदौ तथा वेदानधीत्य तु समाहितः ।
तदर्थमभिगम्याथ तत्र स्नायाद्द्विजोत्तमः ॥
गुरवे तु धनं दत्त्वा स्नायीत तदनुज्ञया ।
चीर्णव्रतोऽथ मुक्तात्मा ह्यशक्तः स्नातुमर्हति
॥
वैणवीन्धारयेद्यष्टिमन्तर्व्वासमथोत्तरम् ।
यज्ञोपवीतद्वितयं सोदकञ्च कमण्डलुम् ॥
छत्रञ्चोष्णीषममलं पादुके चाप्युपानहौ ।
रौक्मे च कुण्डले धार्य्ये कृत्तकेशनखः शुचिः
॥
स्वाध्याये नित्ययुक्तः स्याद्बहिर्माल्यं न
धारयेत् ।
अन्थत्र काञ्चनाद्विप्रो न रक्तां बिभृयात्
स्रजम् ॥
शुक्लाम्बरधरो नित्यं स्रग्गन्धः प्रियदर्शनः ।
न जीर्णमलवद्वासा भवेच्च विभवे सति ॥
न रक्तमुल्वणञ्चास्य घृतं वासो न कुण्डिकाम्
।
नोपानहौ स्रजं वाथ पादुके च प्रयोजयेत् ॥
उपवीतमलङ्कारं कुम्भान् कृष्णाजिनानि च ।
नापसव्यं परीदध्याद्वासो न विकृतं वसेत् ॥
आहरेद्विधिवद्धीमान् सदृशामात्मनः शुभाम्
।
रूपलक्षणसंयुक्तां योनिदोषविवर्ज्जिताम् ॥
अमातृगोत्रप्रभवामसमानार्षगोत्रजाम् ।
आहरेद्ब्राह्मणो भार्य्यां
शीलशौचसमन्विताम् ॥
ऋतुकालाभिगामी स्याद्यावत्
पुत्रोऽभिजायते ।
वजयेत् प्रतिषिद्धानि प्रयत्नेन दिनानि तु ॥
षष्ठ्यष्टमी पञ्चदशी द्वादशी च चतुर्द्दशी ।
ब्रह्मचारी भवेन्नित्यं तद्वज्जन्मत्रयाहनि ॥
आदधीतावसथ्याग्निं जुहुयाज्जातवेदसम् ।

त्रिवर्गसेवी सततं देवतानाञ्च पूजनम् ।
कुर्य्यादहरहर्न्नित्यं नमस्येत् प्रयतः सुरान् ॥
विभागशीलः सततं क्षमायुक्तो दयात्मकः ।
गृहस्थस्तु समायुक्तो न गृहे न गृही भवेत् ॥
क्षमा दया च विज्ञानं सत्यञ्चैव दमः शमः ।
अध्यात्मं नित्यता ज्ञानमेतद्ब्राह्मणलक्षणम्
॥
एतस्मान्न प्रमाद्येत विशेषेण द्विजोत्तमः ।
यथाशक्ति चरन् कर्म्म निन्दितानि विवर्जयेत्
॥
विधूय मोहकलिलं लब्ध्वा योगमनुत्तमम् ।
गृहस्थो मुच्यते बन्धान्नात्र कार्य्या विचारणा
विगर्हातिक्रमक्षेपहिंसाबन्धवधात्मनाम् ।
अन्यमन्युसमुत्थानां दोषाणां वर्जनं क्षमा ॥
स्वदुःखेष्विव कारुण्यं परदुःखेषु सौहृदात् ।
दया यन्मुनयः प्राहुः साक्षाद्धर्म्मस्य साधनम्
॥
चतुर्द्दशानां विद्यानां धारणं हि यथार्थतः ।
विज्ञानमितरं विद्याद्येन धर्म्मो विवर्द्धते ॥
अधीत्य विधिवद्विद्यामर्थञ्चैवोपलभ्य तु ।
धर्म्मकार्य्यान्निवृत्तश्चेन्न तद्विज्ञानमिष्यते ॥
सत्येन लोकं जयति सत्यन्तत् परमं पदम् ।
यथा भूतप्रसादस्तु सत्यमाहुर्म्मनीषिणः ॥
दमः शरीरावनतिः शमः प्रज्ञा प्रसादजः ।
अध्यात्ममक्षरं विद्याद्यत्र गत्वा न शोचति ॥
यया स देवो भगवान् विद्यते यत्र विद्यते ।
साक्षादेव महादेव ! तज्ज्ञानमिति कीर्त्तितम्
॥
तन्निष्ठस्तत्परो विद्वान्नित्यमक्रोधनः शुचिः ।
महायज्ञपरो विप्रो लभते तदनुत्तमम् ॥
धर्म्मस्यायतनं यत्नाच्छरीरं परिपालयेत् ।
न हि देहं विना रुद्र ! पुरुषैर्व्विद्यते परः ॥
नित्यं धर्म्मार्थकामेषु युञ्जीत नियतो द्विजः ।
न धर्म्मवर्जितं काममर्थं वा मनसा स्मरेत् ॥
सीदन्नपि स्वधर्म्मेण नत्वधर्म्मं समाचरेत् ।
धर्म्मो हि भगवान्देवो गतिः सर्व्वेषु जन्तुषु ।
भूतानां प्रियकारी स्यान्न परद्रोहकर्म्मधीः ॥
न वेददेवतानिन्दां कुर्य्यात्तैश्च न सम्बदेत् ।

हरिवासरभोजी च कुम्भीपाकं व्रजेद्ध्रुवम् ॥”
अपि च ।
“करोत्यशुद्धां सन्ध्याञ्च सन्ध्यां वा न करोति यः ।
त्रिसन्ध्यं वर्जयेद्यो वा सन्ध्याहीनश्च स द्विजः ॥
नारायणक्षेत्रादितीर्थे तस्य प्रतिग्रहदोषो यथा,
“तत्र नारायणक्षेत्रे कुरुक्षेत्रे हरेः पदे ।
वाराणस्यां वदर्य्याञ्च गङ्गासागरसङ्गमे ॥
पुष्करे भास्करक्षेत्रे प्रभासे रासमण्डले ।
हरिद्वारे च केदारे सोमे वदरपाचने ॥
सरस्वतीनदीतीरे पुण्ये वृन्दावने वने ।
गोदावर्य्याञ्च कौशिक्यां त्रिवेण्याञ्च हिमालये ॥
एतेष्वन्येषु यो दानं प्रतिगृह्णाति कामतः ।
स च तीर्थप्रतिग्राही कुम्भीपाकं प्रयाति च ॥”
पारिभाषिकमहापातकिब्राह्मणायथा, --
“शूद्रसप्तोद्रिक्तयाजी ग्रामयाजीति कीर्त्तितः ।
देवोपजीवजीवी च देवलश्च प्रकीर्त्तितः ॥
शूद्रपाकोपजीवी यः सूपकारः प्रकीर्त्तितः ।
सन्ध्यापूजाविहीनश्च प्रमत्तः पतितः स्मृतः ॥
एते महापातकिनः कुम्भीपाकं प्रयान्ति ते ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २७ अध्यायः ॥ * ॥
विप्राणामाशीर्व्वचनं पूर्णस्वस्त्ययनं यथा, --
“आशिषं कर्त्तुमर्हन्ति प्रसन्नमनसा शिशुम् ।
पूर्णस्वस्त्ययनं सद्यो विप्राशीर्व्वचनं ध्रुवम् ॥”
व्रतानि स्नातको नित्यं पावनानि च पालयेत् ॥
वेदोदितं स्वकं कर्म्म नित्यं कुर्य्यादतन्द्रितः ।
अकुर्व्वाणः पतत्याशु नरकानतिभीषणान् ॥
अभ्यसेत् प्रयतो नित्यं वेदं यज्ञान्न हापयेत् ।
कुर्य्याद्गृह्याणि कर्म्माणि सन्ध्योपासनमेव च ॥
सख्यं समाधिकैः कुर्य्यादुपेयादीश्वरं सदा ।
दैवतान्यपि गच्छेत्तु कुर्य्याद्भार्य्याभिपोषणम् ॥
न धर्म्मं ख्यापयेद्विद्वान् न पापं गूहयेदपि ।
कुर्व्वीतात्महितं नित्यं सर्व्वभूतानुकम्पकः ॥
वयसः कर्म्मणोऽर्थस्य श्रुतस्याभिजनस्य च ।
देशवाग्बुद्धिसारूप्यमाचरन् विचरेत् सदा ॥
श्रुतिस्मृत्युदितं सम्यक् साधुभिर्यश्च सेवितः ।
तमातरन्निषेवेत नेहेतान्यत्र कर्हिचित् ॥
येनास्य पितरो याता येन याताः पितामहाः ।
येन याति सतां मार्गं तेन गच्छंस्तरिष्यति ॥
नित्यं स्वाध्यायशीलः स्यान्नित्यं यज्ञोपवीतिमान् ।
सत्यवादी जितक्रोधो ब्रह्मभूयाय कल्प्यते ॥
सन्ध्यास्नानरतो नित्यं ब्रह्मयज्ञपरायणः ।
अनसूयुर्मृदुर्दान्तो गृहस्थः प्रत्यवर्द्धत ॥
वीतरागभयक्रोधो लोभमोहविवर्ज्जितः ।
सावित्रीजापनिरतः श्रद्धावान् मुच्यते गृही ॥
मातापित्रोर्हिते युक्तो गोब्राह्मणहिते रतः ।
दाता यज्वी देवभक्तो ब्रह्मलोके महीयते ॥
यस्त्विमं नियतो विप्रो धर्म्माध्यायं पठेत् शुचिः ।
अध्यापयेच्छ्रावयेद्वा ब्रह्मलोके महीयते ॥”
इति कौर्म्मे उपविभागे १४ अध्यायः ॥
अपि च । सूत उवाच ।
“आनृशंस्यं क्षमा सत्यमहिंसा दममार्द्दवम् ।
ध्यानं प्रसादो माधुर्य्यमार्ज्जवं शौचमेव च ॥
इज्या दानं तपः सत्यं स्वाध्यायो ह्यात्मनिग्रहः ।
व्रतोपवासौ मौनञ्च स्नानं पैशुन्यवर्जनम् ॥
एभिर्युक्तो मुनिश्रेष्ठा यः सदा वर्त्तते द्विजः ।
हुत्वा तु पावकं सर्व्वं परं ब्रह्माधिगच्छति ॥
अविद्यो वा सविद्यो वा निरग्निः साग्निकोऽपि वा ।
यो विप्रस्तपसा युक्तः स परं स्वर्गमाप्नुयात् ॥
सर्व्वेषामुत्तमं श्रेष्ठं विमुक्तिफलदायकम् ॥
ब्राह्मणस्य तपो वक्ष्ये तन्मे निगदतः शृणु ।
सायं प्रातश्च यः सन्ध्यामुपास्ते स्कन्नमानसः ॥
जपन् हि पावनीं देवीं गायत्रीं वेदमातरम् ।
तपसा भावितो देव्या ब्राह्मणः पूतकिल्विषः ॥

| | | |
|---|---|---|
| इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १३ अध्यायः ॥<br>ब्राह्मणस्य स्वधर्म्मो यथा, --<br>“ब्राह्मणस्य स्वधर्म्मश्च त्रिसन्ध्यमर्च्चनं हरेः ।<br>तत्पादोदकनैवेद्यभक्षणञ्च सुधाधिकम् ॥<br>अन्नं विष्ठा जलं मूत्रमनिवेद्यं हरेर्नृप ! ।<br>भवन्ति शूकराः सर्व्वे ब्राह्मणा यदि भुञ्जते ॥<br>आजीवं भुञ्जते विप्रा एकादश्यां न भुञ्जते ।<br>कृष्णजन्मदिने चैव शिवरात्रौ सुनिश्चितम् ॥ | | |

न सीदेत् प्रतिगृह्णन् स त्वयि पृथ्वीं ससागराम् ।
द्वे सन्ध्ये ह्युपतिष्ठेत गायत्रीं प्रयतः शुचिः ॥
यस्तस्य दुष्कृतं नास्ति पूर्ब्बतः परतोऽपि वा ।
यज्ञदानरतो विद्वान् साङ्गवेदस्य पाठकः ॥
गायत्रीध्यानपूतस्य कलां नार्हन्ति षोडशीम् ।
एवं किल्विषयुक्तस्तु विनिर्दहति पातकम् ॥
उभे सन्ध्ये ह्युपासीत तस्मान्नित्यं द्विजोत्तमः ॥
तस्य देहापवित्रत्वं यथा, --
“यथा देहापवित्रत्वं विप्रादीनां यतो भवेत् ।
देवर्षे ! शृणु तत्सर्व्वं नराणामानुपूर्ब्बिकम् ॥
जातके मृतकेऽस्नाते जलौकाभिः क्षते तथा ।
अपवित्रो द्विजातीनां देहः सन्ध्यादिकर्म्मसु ॥
अपूततनुरुत्सर्गे नरो मूत्रपुरीषयोः ।
अस्पृश्यस्पर्शने चैव ब्रह्मयज्ञजपादिषु ॥
रक्तपाते नखशृङ्गदन्तखड्गादिभिःक्षते ।
विप्रादेरशुचिः कायः शस्त्रास्त्रैः कण्टकादिभिः ॥
भुक्तहस्ताननोच्छिष्टेऽपवित्रःकृतमैथुने ।
शयने ब्राह्मणादीनां शरीरं क्षुरकर्म्मणि ॥
ज्वरादिभिश्चतुःषष्टिरोगैर्युक्ते द्विजन्मनाम् ।
वपुरप्रयतं पूजादानहोमजपादिषु ॥
धूमोद्गारे वमौ श्राद्धपतितान्नादिभोजनैः ।
तथा च रेतःस्खलने मर्त्यदेहापवित्रता ॥
अपवित्रं द्विजातीनां वपुः स्याद्राहुदर्शने ।
गर्हितदानग्रहणे पतिते पातकादिभिः ॥
अशौचान्तेन शुद्धिः स्याज्जातके मृतके द्विज ! ॥
सर्व्ववर्णाश्रमादीनां तनोः सन्ध्यादिकर्म्मसु ॥”
इति पाद्मोत्तरखण्डे १०९ अध्यायः ॥
अथ श्राद्धीयब्राह्मणनिर्णयः ।
मान्धातोवाच ।
“कीदृशेभ्यः प्रदातव्यं भवेच्छ्राद्धं महामुने ! ।
द्विजेभ्यः किंगुणिभ्यो वा तन्मे व्याख्यातुमर्हसि ॥
कुशीलवो देवलको नक्षत्रैर्यश्च जीवति ।
ईदृशा ब्राह्मणा ये च अपाङ्क्तेयास्तु ते मताः ॥
रक्षांसि गच्छते हव्यं यदेषान्तु प्रदीयते ।
श्राद्धे मुक्त्वा महाराज ! दुश्चर्म्मा गुरुतल्पगः ॥
श्राद्धं नाशयते तस्य पितरोऽपि न भुञ्जते ।
सोमविक्रयिणे दत्तं विष्ठातुल्यं भवेन्नृप ! ॥
भिषजे शोणितसमं नष्टं देवलके तथा ।
अप्रतिष्ठं बार्द्धुषिके निष्फलं परिकीर्त्तितम् ॥
बहुबाणिजके दत्तं नेह नामुत्र तद्भवेत् ।
भस्मनीव हुतं हव्यं तथा पौनर्भवे द्विजे ॥
ये तु धर्म्मव्यपेतेषु चरित्रापगतेषु च ।
हव्यं कव्यं प्रयच्छन्ति तेषां तत्प्राय नश्यति ॥
ज्ञानपूर्ब्बन्तु ये तेभ्यः प्रयच्छन्त्य ल्पबुद्धयः ।
पुरीषं भुञ्जते तस्य पितरः प्रेत्य निश्चितम् ॥
एतान् विद्धि महावाहो ! अपाङ्क्तेयान् द्विजा-
धमान् ।
शूद्राणामुपदेशन्तु ये कुर्व्वन्त्यल्पबुद्धयः ॥
षष्टिं काणः शतं खञ्जः श्वित्री यावत् प्रपश्यति ।
पङ्क्त्यां समुपविष्टायां तावद्दूषयते नृप ! ॥
यद्वेष्टितशिरा भुङ्क्ते यद्भुङ्क्ते दक्षिणामुखः ।
सोपानत्कश्च यद्भुङ्क्ते सर्व्वं विद्यात्तदासुरम् ॥
ततो हि पावनात् पङ्क्त्या उच्यन्ते पङ्क्ति-
पावनाः ॥
अनृत्विगनुपाध्यायः स चेदग्रासनं व्रजेत् ।
ऋत्विग्भिरनमुज्ञातः पङ्क्त्या हरति दुष्कृतम् ॥
अथ चेद्वेदवित् सर्व्वैः पङ्क्तिदोषैर्विवर्जितः ।
न च स्यात् पतितो राजन् ! पङ्क्तिपावन उच्यते ॥
तस्मात् सर्व्वप्रयत्नेन परीक्ष्यामन्त्रयेद्द्विजान् ।
स्वकर्म्मनिरतान् शान्तान् कुले जातान् बहु-
श्रुतान् ॥
यस्य मित्रप्रधानानि श्राद्धानि च हवींषि च ।
न प्रीणाति पितॄन् देवान् स्वर्गञ्च न स गच्छति
ब्राह्मणो ह्यनधीयानस्तृणादिरिव शाम्यति ।
तस्मिन् श्राद्धं न दातव्यं न हि भस्मनि हूयते ॥
ऋषीणां समये नित्यं ये चरन्ति महीपते ! ।
निश्चिताः सर्व्वधर्म्मज्ञास्तान् देवा ब्राह्मणान् विदुः ॥
स्वाध्यायनिष्ठानिरताज्ञाननिष्ठास्तथैव च ।
तपोनिष्ठाश्च बोद्धव्याः कर्म्मनिष्ठाश्च पार्थिव ! ।
कव्यानि ज्ञाननिष्ठेभ्यः प्रतिष्ठाप्यानि भूमिप ! ।
तत्र ये ब्राह्मणान् केचिन्न निन्दन्ति हि ते वराः ॥
ये तु निन्दन्ति जल्पेषु न तान् श्राद्धेषु योजयेत् ।
ब्राह्मणा निन्दिता राजन् ! हन्युस्ते पुरुषं सदा ॥
वैखानसानां वचनमृषीणां श्रूयते नृप ! ।
दूरादेव निरीक्षेत ब्राह्मणान् वेदपारगान् ॥
प्रियो वा यदि वा द्वेष्यस्तेषां न श्राद्धमावपेत् ॥”

नारद उवाच ।
ब्राह्मणान्न परीक्षेरन्नान्यवर्णास्त्रयो नृप ! ।
दैवे कर्म्मणि पित्रे च न्याय्यमाहुः परीक्षणम् ॥
देवताः पूजयन्तीह दैवेनैव हि तेजसा ।
उपेये तस्माद्बावेभ्यः सर्व्वेभ्यो दापयेन्नरः ॥
श्राद्धे त्वथ महाराज ! परीक्षेद्ब्राह्मणं बुधः ।
कुलशीलवयोरूपैर्विद्ययाभिजनेन च ॥
तेषामन्ये पङ्क्तिदूषास्तथान्ये पङ्क्तिपावनाः
।
अपाङ्क्तेयास्तु ये राजन् ! कीर्त्तयिष्यामि
तान्
शृणु ॥"
अपाङ् क्तेया यथा, --
कितवो भ्रूणहा यक्ष्मी पशुपालो निराकृतिः ।
ग्रामप्रेष्यो वार्द्धुषिको गायनः सर्व्वविक्रयी ॥
अगारदाही गरदः कुण्डाशी सोमविक्रयी ।
सामुद्रिको राजदूतस्तैलिकः कूटकारकः ॥
पित्रा विवदमानश्च यस्य चोपपतिर्गृ हे ।
अभिशस्तस्तथा स्तेनः शिल्पं
यश्चोपजीवति ॥
पर्व्वकारश्च सूची च मित्रध्रुक् पारदारिकः ।
अव्रतानामुपाध्यायः काण्डपृष्ठस्तथैव च ॥
श्वभिश्च यः परिक्रामेद्यः शुना दष्ट एव च ।
परिवित्तिस्तु यश्च स्याद्दुश्चर्म्मा गुरुतल्पगः
॥
असूयते च यद्दत्तं यच्च
श्रद्धादिवर्जितम् ।
सर्व्वं तदसुरेन्द्राय ब्रह्मा
भागमकल्पयत् ॥
श्वानश्च पङ्क्तिदूषाश्च नावेक्षेरन्
कथञ्चन ।
तस्मात् परिवृते दद्यात्तिलांश्चान्ने
विकीरयेत् ॥
तिलैर्विरहितं श्राद्धं कृतं क्रोधवशेन च
।
यातुधानाः पिशाचाश्च विप्रलुम्पन्ति
तद्धविः ॥
अपाङ्क्तेयो यतः पङ्क्त्यां भुञ्जानो
ननु पश्यति ।
तावत् फलाद्भ्रंशयति दातारं तस्य
वालिशम् ॥"
पङ्क्तिपावना यथा, --
"इमे हि मनुजश्रेष्ठ ! विज्ञेयाः
पङ्क्तिपावनाः ।
विद्यावेदव्रतस्नाताः ब्राह्मणाः सर्व्व एव
हि ॥
सदाचारपराश्चैव विज्ञेयाः
पङ्क्तिपावनाः ।
मातापित्रोर्यश्च बश्यः श्रोत्रियो
दशपूरुषः ॥
ऋतुकालाभिगामी च धर्म्मपत्नीषु यः
सदा ।
वेदविद्याव्रतस्नातो विप्रः पङ्क्तिं
पुनात्युत ॥
अथर्व्वशिरसोऽध्येता ब्रह्मचारी
यतव्रतः ।
सत्रवादी धर्म्मशीलः स्वकर्म्मनिरतश्च
यः ॥
ये च पुण्येषु तीर्थेषु अभिषेककृतश्रमाः
।
मखेषु च समस्तेषु भवन्त्ववभृतप्लुतः
॥
अक्रोधना ह्यचपलाः क्षान्ता दान्ता
जिते-
न्द्रियाः ।
इति पाद्मे स्वर्गखण्डे श्राद्धपात्रनिर्णयो नाम
३५
अध्यायः ॥ आततायिब्राह्मणवधे दोषाभावो
यथा, --
"आत्मानं हन्तुमायान्तमपि वेदान्तपारगम्
।
न दोषो हनने तस्य न तेन ब्रह्महा भवेत् ॥
प्रायश्चित्तं हिंसकानां न वेदेषु निरूपितम् ।
वधे समुचिते तेषामित्याह कमलोद्भवः ॥"
इति ब्रह्मवैवर्त्ते गणपतिखण्डे २५ अध्यायः
॥
(क्ली, मन्त्रेतरवेदभागः । आशङ्कोपन्यास
तन्निर-
सनपूर्ब्बकं तल्लक्षणमाह
ऋग्वेदभाष्योपद्घात-
प्रकरणे यथा । "तत्र ब्राह्मणस्य लक्षणं
नास्ति ।
कुतः ? वेदभागानामियत्तानवधारणेन
बाह्मण-
भागेष्वन्यभागेषु च
लक्षणस्याव्याप्त्यतिव्याप्त्योः
शोधयितुमशक्यत्वात् । पूर्ब्बोक्तमन्त्रभाग
एकः ।
भागान्तराणि च कानिचित् पूर्ब्बैरुदाहर्त्तुं
संगृहीतानि ।
"हेतुर्निर्बचनं निन्दा प्रशंसा संशयो विधिः ।
परक्रिया पुराकल्पो व्यवधारणकल्पना ॥"
इति ।
तेन ह्यन्नं क्रियते इति हेतुः १ ।
तद्दध्नोदधित्व-
मिति निर्वचनम् २ । अमेध्या वै माषाः इति
निन्दा ३ वायुर्वै क्षेपिष्ठादेवतेति प्रशंसा ४ ।
तद्व्यचिकित्स जुहवानीमा हौषामिति
संशयः ५ ।
यजमानेन सम्मितौदुम्भरी भवतीति विधिः
६ ।
माषानेव मह्यं पचन्तीति परकृतिः ७ पुरा
ब्राह्मणा अभैषुरिति पुराकल्पः ८ । यावतो-
ऽश्वान् प्रतिगृह्णीयात्तावतो
वारुणांश्चतुष्कपाला-

| | | |
|---|---|---|
| | सर्व्वभूतहिता ये च<br>श्राद्धेष्वेतान्निमन्त्रयेत् ॥<br>एतेषु दत्तमक्षय्यमेते वै पङ्क्तिपावनाः<br>।<br>यतयो मोक्षधर्म्मज्ञा योगाः<br>सुचरितव्रताः ॥<br>ये चेतिहासं प्रयताः श्रावयन्ति<br>द्विजोत्तमान् ।<br>ये च भाष्यविदः केचिद् ये च व्याकरणे<br>रताः ॥<br>अधीयते पुराणं ये धर्म्मशास्त्राणि<br>चाप्युत ।<br>अधीत्य च यथान्यायं विधिवत्तस्य<br>कारिणः ॥<br>उपपन्नो गुरुकुले सत्यवादी सहस्रदः ।<br>अग्र्याः सर्व्वेषु वेदेषु सर्व्वप्रवचनेषु च<br>॥<br>यावदेते प्रपश्यन्ति पङ्क्त्यां तावत्<br>पुनन्ति च । | |

न्निर्वपेदिति विशेषावधारणकल्पना ९ । एव-
मन्यदपि उदाहार्य्यम् ॥ न च हेत्वादीनामन्यतमं
ब्राह्मणमिति लक्षणम् । मन्त्रेष्वपि हेत्वादि-
सद्भावात् । इन्दवोवामुशन्तिहीति हेतुः ।
उदानिषुर्म्महीरिति तस्मादुदकसुच्यते इति
निर्वचनम् । मोघमन्नं विन्दते अप्रचेताः इति
निन्दा । अग्निर्मूर्द्धादिवः इति प्रशंसा । अधः
स्विदासीदुपरिस्विदासीति संशयः वसन्ताय
कपिञ्जलानालभत इति विधिः सहस्रमयुताद-
द्वितिपरकृतिः । यज्ञेन यज्ञमयजन्त देवा इति
पुराकल्पः । इति करणबहुलं ब्राह्मणमिति
चेत् न इत्यददा इत्ययजथा इत्यपच इति
ब्राह्मणो गायेदित्यस्मिन् ब्राह्मणेन गातव्ये
मन्त्रेऽतिव्याप्तेः । इत्याहेत्यनेन
वाक्येनोपनिबद्धं ब्राह्मणमिति चेन्न राजाचिद्यं भगं
भक्षीत्याह यो वा रक्षाः शुचिरस्मीत्याह इत्यनयोर्म्मन्त्रयो-
रतिव्याप्तेः आख्यायिकारूपं ब्राह्मणमिति चेन्न
यमयमीसंवादसूक्तादावतिव्याप्तेः तस्मान्नास्ति
ब्राह्मणस्य लक्षणमिति प्राप्ते ब्रूमः मन्त्रब्राह्मण-

यष्टी ११ फञ्जीका १२ यष्टी १३ ब्रह्मयष्टिका १४
दुर्व्वरा १५ अङ्गारवल्लरी १६ बालेयः १७
ब्राह्मिका १८ । इति शब्दरत्नावली ॥ भृगु-
भवा १९ पथ्या २० खरशाकः २१ हञ्जिका
२२ । अस्या गुणाः ।
"भार्गी रूक्षा कटुस्तिक्ता रुच्योष्णा पाचनी लघुः ।
दीपनी तुवरा गुल्मरक्तनुन्नाशयेद्ध्रुवम् ॥
शोथकासकफश्वासपीनसज्वरमारुतान्।"
इति भावप्रकाशः ॥

**ब्राह्मणयष्टी**, स्त्री, (ब्राह्मणस्य यष्टीव ।) भार्गी ।
इति राजनिर्घण्टः ॥

**ब्राह्मणहितः**, त्रि, (ब्राह्मणस्य हितः ।) ब्राह्म-
णस्य हितकारी । तत्पर्य्यायः । ब्राह्मण्यः २ ।
इति जटाधरः ॥

**ब्राह्मणायनः**, पुं, (ब्राह्मणस्यापत्यम् । "नडादिभ्यः
फक् ।" ४ । १ । ९९ । इति फक् ।) शुद्ध-
सन्तानजो विप्रः । इति त्रिकाण्डशेषः ॥

**ब्राह्मणी**, स्त्री, फञ्जिका । पृक्का ।
("स्पृक्कासृक् ब्राह्मणीदेवी मरुन्माला लता लघुः ।
समुद्रान्ता बधूः कोटिवर्षालष्को पिकेत्यपि ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
भार्गी । तत्पर्य्याया यथा, --
"पद्मा गन्धर्व्वशाका च काञ्जी चाङ्गारपर्ण्यपि ।
भार्ग्यम्बुयष्टिका ब्राह्मो ब्राह्मणी ब्रह्मचारिणी ॥"
"हरेनुरेणुका कौन्ती ब्राह्मणी हेमगन्धिनी ॥"
इत्युभे वैद्यकरत्नमालायाम् ॥
ब्राह्मण + ङीष् ।) ब्राह्मणपत्नी । इति विश्वः ।
(यथा, मनुः । ८ । ३७६ ।
"ब्राह्मणीं यद्यगुप्तान्तु गच्छेतां वैश्यपार्थिवौ ।
"ततो वै ब्राह्मणीं गत्वा ब्रह्मचारी जितेन्द्रियः ।
पद्मवर्णेन यानेन ब्रह्मलोकं प्रपद्यते ॥")

**ब्राह्मण्यं**, क्ली, (ब्राह्मणानां समूहः । ब्राह्मण +
"ब्राह्मणमानवबाडवाद्यत् ।" ४ । २ । ४२ ।
इति यत् ।) ब्राह्मणसमूहः । इत्यमरः । ३ ।
३ । ४१ ॥ ब्राह्मणत्वम् । इति मेदिनी । ये, ९७ ।
(यथा, मनुः । ३ । १७ ।
"शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् ।
जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते ॥")

**ब्राह्मण्यः**, पुं, शनिग्रहः । इति शब्दमाला ॥

**ब्राह्ममुहूर्त्तः**, पुं, (ब्राह्मो ब्रह्मदेवताको मुहूर्त्तः ।)
अरुणोदयकालस्य प्रथमदण्डद्वयम् । ब्राह्म-
मुहूर्त्तमाह पितामहः ।
"रात्रेश्च पश्चिमे यामे मुहूर्त्तो ब्राह्म उच्यते ।"
पश्चिमे यामे शेषार्द्धप्रहरे । शेषार्द्धप्रहरे ब्राह्मो
मुहूर्त्त इति मदनपारिजातात् । तत्रापि सूर्य्यो-
दयात् प्राक् अर्द्धप्रहरे द्वौ मुहूर्त्तो तत्राद्यो
ब्राह्मः द्वितीयो रौद्रः । इत्याह्निकतत्त्वम् ॥ * ॥
"ब्राह्मे मुहूर्त्ते चोत्तिष्ठेत् सुस्थो रक्षार्थमायुषः ।
शरीरचिन्तां निर्वर्त्य मैत्रं कर्म्म समाचरेत् ॥"
इति राजवल्लभः ॥
तत्कृत्यं प्रातःकृत्यशब्दे द्रष्टव्यम् । ब्रह्मणो
मुहूर्त्तः । स तु एकमनुस्थितिकालः ।
"दैविकानां युगानान्तु सहस्रं ब्रह्मणो दिनम् ।
मन्वन्तरं तथैवैकं तस्य भागश्चतुर्द्दशः ॥"
इति लिङ्गपुराणदर्शनात् ॥

**ब्राह्माहोरात्रः**, पुं, (ब्रह्मणोऽहोरात्रः ।) ब्रह्मणो

रूपौ द्वावेव वेदभागौ इत्यङ्गीकारात्
मन्त्र-
लक्षणस्य पूर्ब्बमभिहितत्वादवशिष्टो
वेदभागो
ब्राह्मणमित्येतल्लक्षणं भविष्यति ।
तदेतल्लक्षण-
द्वयं जैमिनिः सूत्रयामास तच्चोदकेषु
मन्त्रा-
ख्याशेषे ब्राह्मणशब्द इत्यादि ॥”
विष्णुः । यथा, महाभारते । १३ ।
१४९ । ८४ ।
“ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो
ब्राह्मणप्रियः ॥”
शिवः । यथा, तत्रैव । १३ । १७ ।
१३३ ।
गभस्तिब्रह्मकृद्ब्रह्मा ब्रह्मविद् ब्राह्मणो
गतिः ॥”
ब्रह्म जानातीति व्युत्पत्त्या परब्रह्मवेत्तरि,
त्रि ॥)

**ब्राह्मणब्रुवः**, पुं, (ब्राह्मणवंशोत्पन्नतया वेदोक्त-
कर्म्माकुर्व्वन्नपि आत्मानं ब्राह्मणं
ब्रवीतीति ।
ब्राह्मण + ब्रू + क + बाहुलकात् न
वच्यादेशः ।)
ब्राह्मणजातिमात्रोपजीवी । यथा, --
“विप्रः संस्कारयुक्तो न नित्यं सन्ध्यादि
कर्म्म यः ।
नैमित्तिकन्तु नो कुर्य्यात् ब्राह्मणब्रुव
उच्यते ॥
युक्तः स्यात् सर्व्वसंस्कारैर्द्विजस्तु
नियमव्रतैः ।
कर्म्म किञ्चिन्न कुरुते वेदोक्तं ब्राह्मणब्रुवः
॥
गर्भाधानादिभिर्युक्तस्तथोपनयनेन च ।
न कर्म्मकृन्न चाधीते स ज्ञेयो
ब्राह्मणब्रुवः ॥
अध्यापयति नो शिष्यान्नाधीते
वेदमुत्तमम् ।
गर्भाधानादिसंस्कारैर्युतः
स्याद्ब्राह्मणब्रुवः ॥”
इति पाद्मोत्तरखण्डे १०९ अध्यायः ॥
वैश्यं पञ्चशतं कुर्य्यात् क्षत्रियन्तु सहस्रिणम्
॥”)
वरटी । इति त्रिकाण्डशेषः ॥ पिपीलिकाभेदः
।
तत्पर्य्यायः । स्थूलशीर्षिका २ । इति
हेमचन्द्रः ॥
ब्राह्मणीगमने दोषो यथा, --
“कुलटाविप्रपत्नीनां गमने सुरविप्रयोः ।
ब्रह्महत्याषोडशांशं पातकन्तु भवेद्ध्रुवम् ॥
तासामुपस्थितानाञ्च गमने तच्चतुर्थकम् ।
त्यागे धर्म्मो नास्ति पापमित्याह कमलोद्भवः
॥
विप्रपत्नीसतीनाञ्च गमनेन बलेन चेत् ।
ब्रह्महत्याशतं पापं भवेदेव श्रुतौ श्रुतम् ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ४५ अध्यायः ॥
(बुद्धिः । इयं हि भगवता ब्राह्मणीत्वेन
कल्पिता अर्ज्जुनाय कथिता । यथा, महा-
भारते १४ । ३४ । ११-१२ ।
अर्ज्जुन उवाच ।
“क्व नु सा ब्राह्मणी कृष्ण ! क्व चासौ
ब्राह्मणर्षभः ।
याभ्यां सिद्धिरियं प्राप्ता तावुभौ वद
मेऽच्युत ! ॥
श्रीभगवानुवाच ।
मनो मे ब्राह्मणं विद्धि बुद्धिं मे विद्धि ब्राह्मणीम्
।
क्षेत्रज्ञ इति यश्चोक्तः सोऽहमेव धनञ्जयः ॥”
तीर्थविशेषः । यथा, महाभारते । ३ । ८४ ।
५५ ।
दिनयामिन्यौ । स तु दैवयुगसहस्रद्वयेन
भवति ।
स च नृणां कल्पद्वयकालः । तत्र दिनमुदय-
कल्पः रात्रिश्च क्षयकल्पः ।
इत्यमरटीकायां
भरतः ॥
“दैविकानां युगानान्तु सहस्रं परिसंख्यया ।
ब्राह्ममेकमहर्ज्ञेयं तावती रात्रिरेव च ॥
तद्वै युगसहस्रान्तं ब्राह्मं पुण्यमहर्व्विदुः ।
रात्रिञ्च तावतीमेव तेऽहोरात्रविदो जनाः ॥”
इति मानवे १ । ७३ ॥

**ब्राह्मिका**, स्त्री, (ब्राह्मी एव । संज्ञायां स्वार्थे वा
कन् अतैत्वञ्च ।) ब्राह्मणयष्टिका । इति
शब्दरत्नावली ॥

**ब्राह्मी**, स्त्री, (ब्रह्मण इयम् । ब्रह्म + अण् ।
टिलोपः । स्त्रियां ङीष् ।) दुर्गा । यथा, --
“बृहदश्वशरीरं यदप्रमेयं प्रमाणतः ।
बृहद्विस्तीर्णमित्युक्तं ब्राह्मी देवी ततः स्मृता
॥”
इति देवीपुराणे ४५ अध्यायः ॥
शिवस्याष्टमातृकान्तर्गतमातृकाविशेषः ।
सा
च ब्रह्मशक्तिः । सरस्वती । शाकभेदः ।
तत्-
पर्य्यायः । मत्स्याक्षी २ वयस्था ३ सोम-
वल्लरी ४ । इत्यमरः । २ । ४ । १३७ ॥
चत्वारि
सोमलतायां । ब्राह्मीशाके इति केचित् ।
इति
तट्टीकायां भरतः ॥ (यथा, गारुडे १९९
अध्याये ।
“वचा त्रिकटुकञ्चैव लवणं चूर्णमुत्तमम् ।
ब्राह्मीरसे भावितञ्च मधुसर्पिसमन्वितम् ।

तस्मै दाने फलविशेषो यथा, --

“सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
अधीते शतसाहस्रमनन्तं वेदपारगे ॥”

इति मानवे ७ । ८५ ॥

**ब्राह्मणयष्टिका**, स्त्री, (ब्राह्मणस्य यष्टिरिव । ततः

स्वार्थे संज्ञायां वा कन् अत इत्वञ्च ।) वृक्ष-
निशेषः । वामनहाटी इति भाषा ।
तत्पर्य्यायः ।
फञ्जिका २ ब्राह्मणी ३ पद्मा ४ भार्गी ५ अङ्गार-
वल्ली ६ वालेयशाकः ७ वर्व्वरः ८ वर्द्धकः ९ ।
इत्यमरः । २ । ४ । ८९ ॥ ब्रह्मयष्टिः १० ब्रह्म-

सप्ताहं भक्षितं कुर्य्यान्महैश्वर्य्यं मात पराम् ॥")
ब्रह्मीशाकस्य पर्य्यायान्तरं यथा । सरस्वती ५
सौम्या ६ सुरश्रेष्ठा ७ सुवर्च्चला ८ कपोतवेगा ९
वैधात्री १० दिव्यतेजाः ११ महौषधी १२
स्वायम्भुवी १३ सौम्यलता १४ सुरेष्टा १५
ब्रह्मकन्यका १६ मण्डूकमाता १७ मण्डूकी १८
सुरसा १९ मेध्या २० वीरा २१ भारती २२
वरा २३ परमेष्ठिनी २४ दिव्या २५ शारदा २६ ।
अस्या गुणाः । हिमत्वम् । कषायत्वम् ।
तिक्तत्वम् । वातास्रपित्तनाशित्वम् । बुद्धिप्रज्ञा-
मेधाकारित्वम् । आयुर्वर्द्धकत्वञ्च । इति राज-
निर्घण्टः ॥ अपि च ।
"ब्राह्मी कपोतवल्ली स्यात् सोमवल्ली सरस्वती ॥"
अथ ब्रह्ममाण्डूकी ।
"मण्डूकपर्णी माण्डूकी त्वाष्ट्री दिव्या महौ-
षधी ॥"
अस्या गुणाः ।
"ब्राह्मी हिमा सरा तिक्ता लघुर्मेध्या च
शीतला ।
कषाया मधुरा स्वादुपाकायुष्या रसायनी ॥
स्वर्य्या स्मृतिप्रदा कुष्ठपाण्डुमेहास्रकासजित् ।
विषशोथज्वरहरी तद्वन्मण्डूकपर्णिनी ॥"
इति भावप्रकाशः ॥ * ॥
फञ्जिका । वामनहाटी इति भाषा । पङ्क-
मडमत्स्यः । पाँकाल इति भाषा । सोमवल्लरी ।
सोमलता इति ख्याता । इति मेदिनी ॥
महाज्योतिष्मती । वडी मालकङ्गुनी इति
हिन्दी भाषा । मत्स्याक्षी । मच्छाछी इति
छछमछरिया इति च हिन्दी भाषा । वाराही-
कन्दः । हिलमोचिका । इति राजनिर्घण्टः ॥
हिंचा इति भाषा । रोहिणीनक्षत्रम् । इति
हेमचन्द्रः ॥ (ब्रह्म + अण् + ङीप् ।) ब्रह्माधि-
ष्ठातृदेवताकत्वात् तथात्वम् ॥ सूर्य्यमूर्त्तिः ।
यथा, माकण्डेये । १०९ । ७१ ।
"ब्राह्मी माहेश्वरी चैव वैष्णवी चैव ते तनुः ।
त्रिधा यस्य स्वरुपन्तु भानोर्भास्वान् प्रसीदतु ॥"
त्रि, ब्रह्मप्राप्तियोग्या । यथा, मनुः । २ । २८ ।
"स्वाध्यायेन ब्रतैर्होभै स्त्रैविद्येनेज्यया सुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥")

**ब्रुवन्** [त्] त्रि, (ब्रवीतीति । ब्रू + शतृ ।) कथयन् ।
वक्ता । यथा, --
"कृते निःसंशये पापे न भुञ्जीतानुपस्थितः ।
भुञ्जानो वर्द्धयेत् पापमसत्यं संसदि ब्रुवन् ॥"
इति प्रायश्चित्ततत्त्वम् ॥

**ब्रुवाणः**, त्रि, (ब्रूते इति । ब्रू + शानच् ।) वक्ता ।
यथा, --
"इति ब्रुवाणो मधुरं हितञ्च
तमाञ्जिहन्मैथिलयज्ञभूमिम् ।
रामं मुनिः प्रीतिमना मखान्ते
यशांसि राज्ञां निजिघृक्षयिष्यन् ॥"
इति भट्टिः । २ । ४० ॥

**ब्रू** ल ञ उक्तौ । इति कविकल्पद्रुमः ॥ (अदा०-
उभ०-द्विक०-सेट् ।) ल ञ ब्रवीति । ब्रूते ।
विब्रूतिः कटके कृतेत्यत्र अरविहितकार्य्य-
स्यानित्यत्वान्न वचादेशः । इति दुर्गादासः ॥

ब्रह्मभवा । यथा गीतायाम् । २ । ७२ ।
“एषा ब्राह्मी स्थितिः पार्थ ! नैनां पाप्य
विमुह्यति ॥”)

**ब्राह्मीकन्दः**, पुं, (ब्राह्म्याः कन्द इव कन्दो यस्य ।)

वाराहीकन्दः । इति राजनिर्घण्टः ॥

**ब्राह्म्यं**, क्ली, विस्मयः । दृश्यम् । इति धरणिः ॥

(ब्रह्मण इदम् । ब्रह्मन् + ष्यञ् ।) ब्रह्मसम्बन्धिनि
त्रि । (यथा, मार्कण्डेये । ६ । ३८ ।
“चतुर्द्दश गुणो ह्येष कालो ब्राह्म्यमहः
स्मृतम् ॥”)
निर्यकारब्राह्मशब्दार्थीऽप्यत्र ॥ (यथा, रघुः ।
१२ । ९७ ।
“ब्राह्ममस्त्रं प्रियाशोकशल्यनिष्कर्षणौषधम् ॥”)

**भ**

**भ** भकारः । स च व्यञ्जनचतुर्विंशतितमः पवर्गीय-
चतुर्थो वर्णः । अस्योच्चारणस्थानं ओष्ठः ।
इति व्याकरणम् ॥ (तथा च सिद्धान्तकौमुद्याम् ।
उपूपध्मानीयानामोष्ठौ ॥”) तस्य स्वरूपादि
यथा, --
“भकारं शृणु चार्व्वङ्गि ! स्वयं परमकुण्डली ।
महामोक्षप्रदं वर्णं तरुणादित्यसंप्रभम् ॥
पञ्चप्राणमयं वर्णं पञ्चदेवमयं सदा ।”
इति कामधेनुतन्त्रम् ॥
(वङ्गाक्षराकृतौ) तस्य लिखनक्रमो यथा, --
“ऊर्द्ध्वाधःक्रमतो रेखा वामे वक्रा तु कुण्डली ।
पुनश्चाधोगता सैव अत ऊर्द्ध्वगता पुनः ॥
ब्रह्मा शम्भुश्च विष्णुश्च क्रमतस्तासु तिष्ठति ॥”
अस्य लेखनप्रकारान्तरं यथा, --
“किञ्चिदाकुञ्चिता रेखा वामद्दक्षिणतो गता ।
ततो वक्रा वामगता तासु वाण्यादयः क्रमात् ॥
ऋजुमात्रा मध्यगता कोणाद्दक्षगता पुनः ।
महाशक्तिस्वरूपा सा ध्यानमस्य प्रचक्षते ॥”
तद्यथा, --
“तडित्प्रभां महादेवीं नागकङ्कणशोभिताम् ॥
षड्भुजां वरदां भीमां रक्तपङ्कजलोचनाम् ॥
रक्तवस्त्रपरीधानां रक्तपुष्पोपशोभिताम् ।
चतुर्वर्गप्रदां देबीं साधकाभीष्टसिद्धिदाम् ॥
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत् ॥”
तत्प्रणाममन्त्रो यथा, --
“त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं प्रिये ! ।
आत्मादितत्त्वसंयुक्तं भकारं प्रणमाम्यहम् ॥”
इति वर्णोद्धारतन्त्रम् ॥
तस्य नासानि यथा, --
“भः क्लिन्ना भ्रमरो भीमो विश्वमूर्त्तिर्निशाभवम् ।
द्विरण्डो भूषणो मूलं यज्ञसूत्रस्य वाचकः ॥
नक्षत्रं भ्रमणा दीप्तिर्वयो भूमिः पयो नभः ।
नाभिर्भद्रं महाबाहुर्विश्वमूर्त्तिर्विताण्डकः ॥
प्राणात्मा तापिनी वज्रा विश्वरूपी च चन्द्रिका ।
भीमसेनः सुधासेनः सुखो मायापुरं हरः ॥”
इति नानातन्त्रशास्त्रम् ॥

**भं**, क्ली, (भातीति । भा दीप्तौ + बाहुलकात् डः ।)

**भः**, पुं, (भातीति । भा दीप्तौ + बाहुलाद् डः ।)
शुक्राचार्य्यः । इति मेदिनी । भे, १ ॥ भ्रमरः ।
इत्येकाक्षरकोषः । भ्रान्तिः । इति शब्दरत्ना-
वली ॥

**भक्तं**, क्ली, (भज्यते स्मेति भजसेवायां + कर्म्मणि
क्तः ।) अन्नम् । इत्यमरः । २ । ९ । ४८ ॥
अथ भक्तस्य नामानि साधनं गुणाश्च ।
“भक्तमन्नं तथान्धश्च क्वचित् कूरञ्च कीर्त्तितम् ।
ओदनोऽस्त्री स्त्रियां भिस्सा दीदिविः पुंसि
भाषितः ॥”
सुधौतांस्तण्डुलान् स्फीतांस्तोये पञ्चगुणे पचेत् ।
तद्भक्तं प्रसृतञ्चोष्णं विशदं गुणवन्मतम् ॥
भक्तं वह्निकरं पथ्यं तर्पणं रोचनं लघु ।
अधौतमसृतं शीतं गुर्व्वरुच्यं कफप्रदम् ॥”
इति भावप्रकाशः ॥
हरये निवेदितान्नस्य नित्यं भक्षणे फलं यथा,
“ये विप्रा हरये दत्त्वा नित्यमन्नञ्च भुञ्जते ।
उच्छिष्टभोजनात्तेषां हरेर्दास्यं लभेन्नरः ॥”
हरये अदत्त्वा तद्भक्षणे दोषो यथा, --
“न दत्त्वा हरये भक्त्या भुञ्जते चेद्भ्रमादपि ।
पुरीषसदृशं वस्तु जलं मूत्रसमं भवेत् ॥ * ॥
शूद्रश्चेद्धरिभक्तश्च नैवेद्यभोजनोत्सुकः ।
आमान्नं हरये दत्त्वा पाकं कृत्वा च खादति ॥”
अन्नदानफलं यथा, --
“अन्नञ्च सर्व्वजीविभ्यः पुण्यार्थं दातुमर्हति ।
दत्त्वा विशिष्टजीविभ्यो विशिष्टं फलमाप्नुयात् ॥
अतो दत्त्वा मानुषेभ्यो लभतेऽष्टगुणं फलम् ।
ततो विशिष्टशूद्रेभ्यो दत्त्वा तद्द्विगुणं फलम् ॥
दत्त्वान्नं घैश्यजातिभ्यस्ततश्चाष्टगुणंफलम् ।
दत्त्वान्नं क्षत्त्रियेभ्योऽपि वैश्यानां द्विगुणं भवेत् ॥
क्षत्त्रियाणां शतगुणं विप्रेभ्योऽन्नं प्रदाय च ।
घिप्राणाञ्च शतगुण शास्त्रज्ञे ब्राह्मणे फलम् ॥
शास्त्रज्ञानां शतगुणं भक्ते विप्रे लभेद्ध्रुवम् ।
स चान्नं हरये दत्त्वा भुङ्क्ते भक्त्या च
सादरम् ॥
विष्णवे भक्तविप्राथ दत्त्वा दातुश्च यत् फलम् ।
तत् फलं लभते नूनं भक्तब्राह्मणभोजने ॥
भक्त तुष्टे हरिस्तुष्टो हरौ तुष्टे च देवताः ।

नक्षत्रम् । इत्यमरः । १ । ३ । २१ ॥ (यथा,
सूर्य्यसिद्धान्ते । १ । २६ ।
“प्राग्गतित्वमतस्त्येषां भगणैः प्रत्यहं गतिः ।
परिणाहवशाद्भिन्ना तद्वशाद् भानि भुञ्जते ॥”)
ग्रहः । इति शब्दरत्नावली ॥ राशिः । यथा, --
“राशिनामानि च क्षेत्रं भमृक्षं गृहनाम च ॥”
इति ज्योतिस्तत्त्वम् ॥

भवन्ति सिक्ताः शाखाश्च यथा मूलनिषे-
चनात् ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे २१ अध्यायः ।

तस्य एकादश्यां पापाश्रयत्वं भक्षणे
दोषश्च
यथा, --
"एकादश्यामागतायां पावयन्त्यां
जगत्त्रयम् ।
स्थातव्यमन्नमाश्रित्य भवता पापपूरुष ! ॥
अन्नमाश्रित्य तिष्ठन्तं भवन्तं पापपूरुषम् ।
न हनिष्यति मन्मूर्त्तिरियमेकादशी तिथिः
॥
तस्मादन्नं न भोक्तव्यं कदाचिदपि सत्तमैः
।
आत्मनो हितमिच्छद्भिः संप्राप्ते हरिवासरे
॥
संसारे यानि पापानि तान्येवैकादशीदिने ।
अन्नमाश्रित्य तिष्ठन्ति पुण्डरीकेक्षणाज्ञया
॥
कुर्व्वतां सर्व्वपापानि नरकान्निष्कृतिर्भवेत्
।
न निष्कृतिर्भवेन्नणां भुञ्जतां हरिवासरे ॥
मर्त्या भक्तानि यावन्ति भुञ्जते हरिवासरे ।
प्रतिभक्ते ब्रह्महत्याकोटिजं पातकं लभेत्
॥
सर्व्वपापाश्रयं भक्तं त्यक्तव्यं हरिवासरे ।
मोहाद्ये भुञ्जते वापि ते ज्ञेयाः पापिनां
वराः ॥"
इति पाद्मे क्रियायोगसारे २१ अध्यायः ॥
वर्जनीयान्नं यथा, --
"नाद्यात् शूद्रस्य विप्रोऽन्नं मोहाद्वा यदि-
वान्यतः ।
स शूद्रयोनिं व्रजति यस्तु भुङ्क्ते ह्यनापदि
॥
षण्मासान् यो द्विजो भुङ्क्ते शूद्रस्यान्नं
विग-
र्हितम् ।
जीवन्नेव भवेत् शूद्रो मृतः श्वा चाभिजायते
॥
ब्राह्मणक्षत्त्रियविशां शूद्रस्य च मुनीश्वराः
।
यो यस्यान्नेन जीवेत स तस्याश्नाति
किल्विषम् ॥"
"आभीरः कुलमित्रञ्च गोपालो दासनापितौ ।
एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत् ॥
कुशीलवः कुम्भकारः क्षेत्रकर्म्मक एव च ।
एते शूद्रेषु भोज्यान्ना दत्त्वा स्वल्पं पणं बुधैः
॥"
इति कौर्म्मे उपविभागे १६ अध्यायः ॥
तस्य मुख्यत्वं पारिभाषिकत्वञ्च यथा, --
"तण्डुलोऽम्ब्वग्निसंयोगाल्लवणयोगेन पिष्टकम्
।
फलं त्रितयसंयोगादन्नं भवति तत्क्षणात् ॥"
इति रामार्च्चनचन्द्रिकाधृतवचनमितिकेचित्
॥
(धनम् । यथा, मनौ । ११ । ७ ।
"यस्य त्रैवार्षिकं भक्तं पर्य्याप्तं भृत्यवृत्तये ।
अधिकं वापि विद्येत स सोमं पातुमर्हति ॥"
"भक्तं धनम् ।" इति तद्भाष्ये मेधातिथिः ।)

**भक्तः**, त्रि, (भजते स्मेति । भजसेवायां + क्तः ।)
तत्परः । इति हेमचन्द्रः ॥ (यथा, महा-
भारते । १ । १७३ । १४ ।
"न त्वां दृष्ट्वा पुनरन्यां द्रष्टुं कल्याणि ! रोचये
।
प्रसीद वशगोऽहन्ते भक्तं मां भज भाविनि !
॥"
पूज्यविषयकानुरागो भक्तिस्तद्वांश्च ।) अथ
श्रीभगवद्भक्तलक्षणानि । लिङ्गपुराणे ।
"व्रतकर्म्मगुणज्ञानभोगजन्मादिमत्स्वपि ।
शैवेष्वपि च कृष्णस्य भक्ताः सन्ति तथा तथा
॥
श्रीभागवते एकादशस्कन्धे । उत्तमभक्ता
यथा,
"ज्ञात्वाज्ञात्वाथ ये वै मां यावान् यश्चास्मि
यादृशः ।
भजन्त्यनेन भावेन ते मे भक्ततमा मताः ॥"
मध्यमभक्तो यथा, --
"ईश्वरे तदधीने वा वालिशेषु द्विषत्सु च ।
प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः ॥"
प्राकृतभक्तो यथा, --
गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे
प्रविश्यति ।
वेदान्तवेदवेदाङ्गास्तं पवित्रं वदन्ति हि
॥
पुरुषाणां शतं प्रूर्ब्बं पूतं तज्जन्ममात्रतः
।
स्वर्गस्थं नरकस्थं वा मुक्तिमाप्नोति
तत्क्षणात् ॥
यैः कैश्चिद्यत्र वा जन्म लब्धं येषु च
जन्तुषु ।
जीवन्मुक्तास्ते च पूता यान्ति काले हरेः
पदम् ॥
मद्भक्तियुक्तो मत्पूजानियुक्तो
मद्गुणान्वितः ।
मदगुणश्लाघनीयश्च मन्निविष्टश्च
सन्ततम् ॥
सगद्गदः साश्रुनेत्रः स्वात्मविश्रुत एव
च ।
न वाञ्छन्ति सुखं मुक्तिं
सालोक्यादिचतुष्टयीम् ॥
ब्रह्मत्वममरत्वं वा तद्वाञ्छा मम सेवने ।
इन्द्रत्वञ्च मनुत्वञ्च देवत्वञ्च सुदुर्लभम्
॥
स्वर्गराज्यादिभोगञ्च स्वप्ने च नहि
वाञ्छति ।
ब्रह्माण्डानि विनश्यन्ति देवा
ब्रह्मादयस्तथा ।
कल्याणभक्तियुक्तश्च मद्भक्तो न
प्रणश्यति ।
भ्रमन्ति भारते भक्ता लब्ध्वा जन्म
सुदुर्लभम् ॥
तेऽपि यान्ति महीं पूत्वा नवं तीथ
ममालयम् ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५ अध्यायः
॥
अपि च ।
"रतिः कृष्णकथयाञ्च
यस्याश्रुपुलकोद्गमः ।

यस्यान्नेनोदरस्थेन मृतस्तद्योनिमाप्नुयात्
॥
राजान्नं नर्त्तकान्नञ्च तक्षणोऽन्नञ्चक्रकारिणः
।
गणान्नं गणिकान्नञ्च षण्डान्नञ्चैव वर्जयेत् ॥
चक्रोपजीविरजकतस्करध्वजिनांतथा ।
गान्धर्व्वलोहकारान्नं सूतकान्नं विवर्जयेत्
॥
कुलालचित्रकर्म्मान्नं वार्द्धुषेः पतितस्य च ।
पौनर्भवच्छात्रिकयोरभिशस्तस्यचैव हि ॥
सुवर्णकारशैलूषव्याधितस्यातुरस्यच ।
चिकित्सकस्य चैवान्नं पुंश्चल्या
दाण्डिकस्य च ॥
स्तेननास्तिकयोरन्नं देवतानिन्दकस्य च ।
सोमविक्रयिणश्चान्नं श्वपाकस्य विशेषतः
॥
भार्य्याजितस्य चैवान्नं यस्य चोपपतिर्गृहे ।
उत्सृष्टस्य कदर्य्यस्य तथैवोच्छिष्टभोजनः
॥
अपङ्क्त्यन्नञ्च संघान्नं शस्त्राजीवस्य चैव
हि ।
क्लीवस्यान्त्यासिनश्चान्नंमत्तोन्मत्तस्य
चैव हि ॥
भीतस्य रुदितस्यान्नं अवक्रुष्टं परिक्षतम् ।
ब्रह्मद्विषः पापरुचेः श्राद्धान्नं सूतकस्य च
॥
वृथापाकस्य चैवान्नं शावान्नं श्वशुरस्य च
।
अप्रजानान्तु नारीणां कृतघ्नस्य तथैव हि
॥
कन्दुकान्नं विशेषेण शस्त्रविक्रायणस्तथा।
शौण्डान्नं नालिकान्नञ्च भिषजामन्नमेव च ।
विद्धप्रजननस्यान्नं परिवित्त्यन्नमेव च ॥
पुनर्भुवो विशेषेण तथैव दिधिषूपतेः ।
अवज्ञातञ्चावधूतं सरोषं विस्मयान्वितम् ।
गुरावपि न भोक्तव्यमन्नं सत्कारवर्जितम् ॥
दुष्कृतं हि मनुष्यस्य सर्व्वमन्नेष्वनुष्ठितम् ।

“अर्च्चायामेव हरये पूजां यः श्रद्धयेहते ।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः
॥”
इति श्रीहरिभक्तिविलासः ॥
अपि च ।
“भक्तानां लक्षणं ब्रूहि भक्तानुग्रहकातर ! ।
येषां स्पर्शनसन्दर्शात् सद्यः पूतो नराधमः ॥
हरिभक्तिविहीनाश्च महाहङ्कारसंयुताः ।
स्वप्रशंसारता धूर्त्ताः शठाश्च साधुनिन्दकाः
॥
पुनन्ति सर्व्वतीर्थानि येषां स्नानावगाहनात् ।
येषाञ्च पादरजसा पूता पादोदकान्मही ॥
येषां सन्दर्शनं स्पर्शं देवा वाञ्छन्ति भारते ।
सर्व्वेषां परमो लाभो वैष्णवानां समागमः ॥
न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ।
ते पुनन्त्युरुकालेन विष्णुभक्तः क्षणादहो ! ॥
सौतिरुवाच ।
महालक्ष्मीवचः श्रुत्वा लक्ष्मीकान्तश्च
सस्मितः ।
निगूढतत्त्वं कथितुमृषिश्रेष्ठोपचक्रमे ॥
श्रीनारायण उवाच ।
भक्तानां लक्षणं लक्ष्मि ! गूढं श्रुतिपुराणयोः ।
पुण्यस्वरूपं पापघ्नं सुखदं भक्तिमुक्तिदम् ।
सारभूतं गोपनीयं न वक्तव्यं खलेषु च ॥

मनो निमग्नं यस्यैव स भक्तः कथिता
बुधैः ॥
पुत्त्रदारादिकं सर्व्वं जानाति श्रीहरेरपि
।
आत्मना मनसा वाचा स भक्तः कथितो
बुधैः ॥
दयास्ति सर्व्वभूतेषु सर्व्वं कृष्णमयं
जगत् ।
यो जानाति महाज्ञानी स भक्तो
वैष्णवोत्तमः ॥
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ১
अध्यायः ॥
भगवद्भक्ता यथा, तत्रैव ३ अध्याये ।
मद्भक्ताश्चैव निःशङ्का
कर्म्मनिर्मूलकारकाः ।
नाहं शक्तश्च भक्तानां संहारे
नित्यदेहिनाम् ॥
भक्ता ममानुगा नित्यं
मत्पादानततत्पराः ।
अहं भक्तान्तिके नित्यं तेषां रक्षणहेतवे
॥
सर्व्वे नश्यन्ति ब्रह्माण्डे प्रभवन्ति पुनः
पुनः ।
न भे भक्ताः प्रणश्यन्ति निःशङ्काश्च
निरापदः ॥
हरिभक्तिमाहात्म्यं यथा, --
द्विजानां हरिभक्तानां प्रभावो दुर्लभः
श्रुतौ ।
येषां पादाब्जरजसा सद्यः पूता
वसुन्धरा ॥
तेषाञ्च पादचिह्नं यत्तीर्थं तत्
परिकीर्त्तितम् ।
तेषाञ्च स्पर्शमात्रेण तीर्थपापं प्रणश्यति
॥
आलिङ्गनात्
सदालापात्तेषामुच्छिष्टभोजनात् ।
दर्शनात् स्पर्शनाच्चैव सर्व्वपापात्
प्रमुच्यते ॥
भ्रमणे सर्व्वतीर्थानां यत् पुण्यं स्नानतो
भवेत् ।

| | | |
|---|---|---|
| | | हरिदासस्य विप्रस्य तत् पुण्यं दर्शनाल्लभेत् ॥<br>इति तत्रैव २१ अध्यायः ॥<br>त्रिविधभक्तलक्षणं यथा, --<br>भक्तानां त्रिविधानाञ्च लक्षणं श्रूयतामिति ।<br>तृणशय्यारतो भक्तो मन्नामगुणकीर्त्तिषु ॥<br>मनो निवेशयेत्त्यक्त्वा संसारसुखकारणम् ।<br>दास्यं विना न हीच्छन्ति सालोक्यादिचतुष्टयम् ॥<br>नैव निर्व्वाणमुक्तिञ्च सुधापानमभीप्सितम् ।<br>ध्यायते मत्पदाब्जञ्च पूजयेद्भक्तिभावतः ॥<br>श्रीहेतुः किं तस्य देवः सङ्कल्परहितस्य च ।<br>सर्व्वसिद्धिं न वाञ्छन्ति तेऽणिमादिकमीप्सितम् ॥ |

ब्रह्मत्वममरत्वं वा सुरत्वं सुखकारणम् ।
वाञ्छन्ति निश्चलां भक्तिं
मदीयामतुलामपि ॥
स्त्रीपुंविभेदो नास्त्येवं सर्व्वजीवेषु
भिन्नता ।
तेषां सिद्धेश्वराणाञ्च प्रवराणां व्रजेश्वर !
॥
क्षुत्पिपासादिकां निद्रां लोभमोहादिकं
रिपुम् ।
त्यक्त्वा दिवानिशं माञ्च ध्यायते च
दिगम्बरः ॥
स मद्भक्तोत्तमो नन्द ! श्रूयतां
मध्यमादिकम् ॥”
“नासक्तः कर्म्मसु गृही पूर्ब्बप्राक्तनतः
शुचिः ॥
करोति सततञ्चैव पूर्ब्बकर्म्मनिकृन्तनम्
।
न करोत्यपरं यत्नात् सङ्कल्परहितश्च
यः ॥
सर्व्वं कृष्णस्य यत्किञ्चिन्नाहं कर्त्ता च
कर्म्मणः ।
कर्म्मणा मनसा वाचा सततं
चिन्तयेदिति ॥
न्यूनभक्तश्च तन्न्यूनः स च प्राकृतिकः
श्रूतौ ।
यमं वा यमदूतं वा स्वप्नेन च न पश्यति
॥
पुरुषाणां सहस्रञ्च पूर्ब्बं भक्तः समुद्धरेत्
।
पुंसां शतं मध्यमश्च तच्चतुर्थञ्च प्राकृतः
॥
भक्तश्च त्रिविधस्तात ! कथितश्च
तवाज्ञया ॥”
इति तत्रैव ८४ अध्यायः ॥
कृष्णभक्तशरीरें तीर्थादीनि यथा, --
“पृथिव्यां यानि तीर्थानि पुण्यान्यपि च
जाह्नवि ! ।
मद्भक्तानां शरीरेषु सन्ति पूतेषु सन्ततम्
॥

भक्तत्यागे दोषो यथा, --
“ब्रह्महत्या गुरोर्घातो गोवधः स्त्रीवधस्तथा
।
तुल्यमेभिर्म्महापापं भक्तत्यागाद्बुदाहृतम् ॥
भजन्तं भक्तमत्याज्यमदुष्टं त्यजतः मुखम्
।
नेह नामुत्र पश्यामि तस्मात् शक्त ! दिवं
व्रज ॥”
इति मार्कण्डेयपुराणे हरिश्चन्द्रोपाख्यानम्
॥
(कृतविभागः । यथा, लीलावत्याम् ।
“भक्तो हरः शुध्यति यद्गुणः स्यात् ॥”)

**भक्तकरः**, पुं, (भक्तं भजनं करोतीति । कृ + टः ।)
कृत्रिमधूपः । यथा, शब्दचन्द्रिकायाम् ।
“वृकधूपे भक्तकरो गिरिः स्यात्
समगन्धकः ॥”
भक्तकारके त्रि ॥

**भक्तकारः**, त्रि, (भक्तमन्नं करोतीति । कृ +
“कर्म्मण्यण् ।” ३ । २ । १ । इत्यण् ।)
पाचकः ।
भक्तमन्नं करोति पचति यः । तत्पर्य्यायः ।
सूदः २ औदनिकः ३ गुणः ४ भक्ष्यंकारः
५
सूपकारः ६ सूपः ७ आरालिकः ८ वल्लवः
९ ।
इति हेमचन्द्रः ॥

**भक्तता**, स्त्री, भक्तत्वम् । भक्तस्य भाव इत्यर्थे
(तल्) तप्रत्ययेन निष्पन्ना ॥

**भक्ततूर्य्यं**, क्ली, (भक्तस्य तद्भोजनकालस्याक्देकं
यद्वा भक्ते तद्भोजनकाले वादनीयन्तूर्य्यम्
।)
भोजनकाले वादनीयतूर्य्यम् । तत्पर्य्यायः
। नृप-
मानम् २ । इति त्रिकाण्डशेषः ॥

**भक्तदासः**, पुं, (भक्तेनान्नमात्रेण दासः ।) पञ्च-
दशदासान्तर्गतदासविशेषः । यथा, --

“हे अच्युत ! त्वयि मे अच्युता ऐकान्तिकी
भक्तिरस्तु । एकान्तभक्तिः परमप्रीत्यधीनेति
तां प्रीतिं प्रार्थयते येति यादृशी प्रीतिर्विषयेषु
आसक्तानां सा तादृशी प्रीतिर्मे हृदयात
मापसर्पतु मापयातु हृदये सदा तिष्ठत्वित्यर्थः
॥”
इति तट्टीकायां श्रीधरस्वामी ॥ चन्दनादिभि-
स्तिलकादिरचना । यथा, रघौ । १३ । ५५ ।
क्वचित् खगानां प्रियमानसानां
कादम्बसंसर्गषतीव पंक्तिः ।
अन्यत्रकालागुरुदत्तपत्रा
भक्तिर्भवश्चन्दनकल्पितेव ॥”)
श्रद्धा । इति हेमचन्द्रः ॥ (भक्तिविवरणं
यथा, --
“भज इत्येष वै धातुः सेवायां परिकीर्त्तितः ।
तस्मात् सेवा बुधैः प्रोक्ता भक्तिः
साधनभूयसी ॥
इति गारुडे २३१ अध्यायः ॥ * ॥
अथ श्रीमद्भक्तिलक्षणं तृतीये श्रीकापिलेये ।
“देवानां गुणलिङ्गानामानुश्रविककर्म्मणाम् ।
सत्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ॥
अनिमित्ता भागवती भक्तिः सिद्धेर्गरीवसी ॥
अथ विशेषलक्षणानि । श्रीगौतमीयतन्त्रे ।
“देवतायाञ्च मन्त्रे च तथा मन्त्रप्रदे गुरौ ।
भक्तिरष्टविधा यस्य तस्य कृष्णः प्रसीदति ॥
तद्भक्तजनवात्सल्यं पूजायाञ्चानुमोदनम् ।
सुमना अर्च्चयेन्नित्यं तदर्थे दम्भवर्जनम् ॥
तत्कथाश्रवणे रागस्तदर्थे चाङ्गविक्रिया ।
तदनुस्मरणं नित्यं यस्तन्नाम्नोपजीवति ॥
भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्त्तते
।
स मुनिः सत्यवादी च कीर्त्तिमान स भवेन्नरः
॥”
सप्तमस्कन्धे श्रीप्रह्लादोक्तौ ।
“श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्च्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥
इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ।
क्रियते भगवत्यध्वा तन्मन्येऽधीतमुत्तमम् ॥”
तत्रैव श्रीनारदयुधिष्ठिरसंवादे ।

मद्भक्तपादरजसा सद्यः पूता वसुन्धरा ।
सद्यः पूतानि तीर्थानि सद्यः पूतं
जगत्तथा ॥
मन्मन्त्रोपासका विप्रा ये
मदुच्छिष्टभोजिनः ।
मामेव नित्यं ध्यायन्ते ते मत्प्राणाधिकाः
प्रियाः ।
तदुपस्पर्शमात्रेण पूतो वायुश्च पावकः ।
कलेर्दशसहस्राणि मद्भक्ताः सन्ति भूतले
॥
एकवर्णा भविष्यन्ति मद्भक्तेषु गतेषु च ।
मद्भक्तशून्या पृथिवी कलिग्रस्ता
भविष्यति ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे
१२८ अः ॥
भगवद्भक्तमाहात्म्यं यथा, --
"संस्मृतः कीर्त्तितो वापि दृष्टः स्पृष्टोऽपि
वा
प्रिये ! ।
पुनाति भगवद्भक्तश्चाण्डालोऽपि
यदृच्छया ॥"
इति वाराहे उपविभागे प्रबोधिनीमाहा-
त्म्यम् ॥ हरिभक्तकर्त्तव्यानि यथा, --
"हरेश्चरितमीशस्य सर्व्वलोकेषु
कीर्त्तनम् ।
वैष्णवेषु च कार्ष्णेषु भक्तः
कुर्य्यादहर्निशम् ॥
दासीर्दासांश्च यत्किञ्चित् स्वकीयं वस्तु
चात्मनः ।
कृष्णभक्तस्य गार्हस्थ्यं सर्व्वं कृष्णे
निवेदनम् ॥"
भक्तस्य लक्षणान्तरं यथा, --
"प्रेम्णा संजातया भक्त्या
तनुमुत्पुलकाञ्जनः ।
विभर्त्त्यलौकिकं भक्तो वदेद्ध्वसति
नृत्यति ॥
परमानन्दयुक्तोऽसौ क्वचिद्गायति
नन्दति ।
क्रन्दत्यच्युतभावेन गद्गदेन पुनः पुनः
॥
अनुशीलयति भजेत् गोविन्दमनुमोदते ।

"भक्तदासश्च विज्ञेयस्तथैव बडवाकृतः ।
सुभिक्षेऽपि भक्तेनाङ्गीकृतदास्यः । इति
दाय-
क्रमसंग्रहः ॥ (यथा, मनौ । ८ । ४१५ ।
"ध्वजाहृतो भक्तदासो गृहजः
क्रीतदत्त्रिमौ ।
पैत्रिको दण्डदासश्च सप्तैते दासयोनयः
॥")

**भक्तमण्डः**, पुं, क्ली, (भक्तस्यान्नस्य मण्डः ।) अन्नाग्र-
रसः । भातेर माड इति भाषा ।
तत्पर्य्यायः ।
मासरः २ आचामः ३ निःस्रावः ४ ।
इत्य-
मरः ॥ (भक्तस्य भजनशीलस्य
मण्डोभूषणम् ।)
पिच्छा ५ । इति जटाधरः ॥

**भक्तिः**, स्त्री, (भज्यते इति । भज + क्तिन् ।)
विभागः । सेवा । इति मेदिनी । ते, ३९ ॥
गौणवृत्तिः । भङ्गी । (अनुरागविशेषः ।
पूज्ये-
ष्वनुरागो भक्तिरित्युपदेशः ॥ ईश्वरे
परानुरक्तिः ।
"अथातो भक्तिजिज्ञासा सा परानुरक्ति-
रीश्वरे ।" इति शाण्डिल्यसूत्रम् ॥
उपासना ॥
परमेश्वरविषये परमप्रेम । उपास्याकारा-
कारितचित्तवृत्त्यावृत्तिरूपा
परिपक्वनिदिध्या-
सनाख्या श्रवणमननाभ्यासफलभूता
अनुरक्तिः ॥
"नहीष्टदेवात् परमस्ति किञ्चित् ।" इति
बुद्धि-
पूर्ब्बिका चित्तवृत्तिः । सा च
परमप्रीत्यधीना ॥
यथा, विष्णुपुराणे । १ । २० । १८-१९ ।
"नाथ ! योनिसहस्रेषु येषु येषु व्रजाम्यहम्
।
तेषु तेष्वच्युता भक्तिरच्युतास्तु सदा
त्वयि ।

"श्रवणं कीर्त्तनञ्चास्य स्मरणं महतां गतेः ।
सेवेज्यावनतिर्दास्यं सख्यमात्मनिवेदनम् ॥"
पाद्मे कार्त्तिकमाहात्म्ये श्रीयमधूम्रकेशसंवादे
।
"श्रवणं कीर्त्तनं पूजा सर्व्वकर्म्मार्पणं स्मृतिः ।
परिचर्य्या नमस्कारः प्रेम स्वात्मार्पणं हरौ ॥"
तत्रैवोत्तरखण्डे शिवपार्व्वतीसंवादे ।
"आद्यन्तु वैष्णवं प्रोक्तं शङ्खचक्राङ्कनं हरेः ।
धारणञ्चोर्द्ध्वपुण्ड्राणां तन्मन्त्राणां परिग्रहः ॥
अर्च्चनञ्च जपो ध्यानं तन्नामस्मरणं तथा ।
कीर्त्तनं श्रवणञ्चैव बन्दनं पादसेवनम् ।
तत्पादोदकसेवा च तन्निवेदितभोजनम् ॥
तदीयानाञ्च संसेवा द्वादशीव्रतनिष्ठता ।
तुलसीरोपणं विष्णोर्देवदेवस्य शार्ङ्गिणः ॥
भक्तिः षोडशधा प्रोक्ता भववन्धविमुक्तये ॥"
इति च ।
किञ्च ।
"दर्शनं भगवन्मूर्त्तेः स्पर्शनं क्षेत्रसेवनम् ।

| | | |
|---|---|---|
| तरेदेवं विष्णुमायां दुस्तरां मुनिमोहिनीम् ॥<br>सर्व्वत्रेश्वरबुद्ध्या यो भजेदीशं सनातनम् ।<br>स तत्त्ववादी भक्तश्च सर्व्वभूतसुहृत्तमः ॥”<br>इति पाद्मोत्तरखण्डे १०१ अध्यायः ॥<br>* ॥ | या प्रीतिरविवेकानां विषयेष्वनपायिनी ।<br>त्वामनुस्मरतः सा मे हृदयान्मापसर्प्तु ॥” | |

आघ्राणं धूपशेषादेर्निर्म्माल्यस्य च धारणम् ॥
नृत्यं भगवदग्रे च तथा वीणादिवादनम् ।
कृष्णलीलाद्यभिनयः श्रीभागवतसेवनम् ॥
पद्माक्षमालादिधृतिस्त्रिकादश्यादिजागरः ।
प्रासादरचनाद्यन्यज्ज्ञेयं शास्त्रानुसारतः ॥
लिखिता भगवद्धर्म्मा भक्तानां लक्षणानि च ।
तानि ज्ञेयानि सर्व्वाणि भक्तेर्वै लक्षणानि च ॥
तेषु ज्ञेयानि गौणानि मुख्यानि च विवेकिभिः ।
बहिरङ्गान्तरङ्गाणि प्रेमसिद्धौ च तानि यत् ॥
भेदास्तु विविधा भक्तेर्भक्तभावादिभेदतः ।
मुक्ताफलादिग्रन्थेभ्यो ज्ञेयास्तल्लिखनैरलम् ॥
प्रेमभक्तौ च सिद्धायां सर्व्वेऽर्थाः सेवकाः स्वयम् ॥
भगवांश्चातिवश्यः स्याल्लिख्यतेऽस्याः सुल-
क्षणम् ॥”
अथ प्रेमभक्तिलक्षणम् । नारदपञ्चरात्रे ।
“अनन्यममता विष्णौ ममता प्रेमसङ्गता ।
भक्तिरित्युच्यते भीष्म ! प्रह्लादोद्धवनारदैः ॥
प्रेमभक्तेश्च माहात्म्यं भक्तेर्माहात्म्यतः परम् ।
सिद्धमेव यतो भक्तेः फलं प्रेमैव निश्चितम् ॥
चिह्नानि प्रेमसम्पत्तेर्बाह्यान्याभ्यन्तराणि च ।
कियन्त्युल्लिखितान्यस्या महिमैव विलिख्यते ॥”

श्रीभगवदुद्धवसंवादे च ।
“कथं विना रोमहर्षं द्रवता चेतसा विना ।
विनानन्दाश्रुकलया शुद्ध्येद्भक्त्या विनाशयः ॥
वाग्गद्गदा द्रवते यस्य चित्तं
रोदित्यभीक्ष्णं हसति क्वचिच्च ।
विलज्ज उद्गायति नृत्यते च
मद्भक्तियुक्तो भुवनं पुनाति ॥
यथोक्तभक्त्यशक्तौ तु भगवच्चरणाम्बुजम् ।
शरणागतभावेन कृत्स्नभीतिघ्नमाश्रयेत् ॥”
इति हरिभक्तिविलासे ११ विलासः ॥
अपि च । उत्तमभक्तेर्लक्षणं यथा, --
“अन्याभिलासिताशून्यं ज्ञानकर्म्माद्यनावृतम् ।
आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा ॥
तथा नारदपञ्चरात्रे ।
“सर्व्वोपाधिविनिर्भुक्तं तत्परत्वेन निर्म्मलम् ।
हृषीकेण हृषीकेशसेवनं भक्तिरुच्यते ॥”
श्रीभागवतस्य तृतीयस्कन्धे च ।
“अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ।
सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ॥
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ।
स एव भक्तियोगाख्य आन्त्यन्तिक उदाहृतः ॥”
इति ॥
सा उत्तमा भक्तिः षड्विधा यथा, --
“क्लेशघ्नी शुभदा मोक्षलघुताकृत् सुदुर्लभा ।
सान्द्रानन्दविशेषात्मा श्रीकृष्णाकर्षणी च सा ॥”
तत्रास्याः क्लेशघ्नत्वम् ।
“क्लेशास्तु पापं तद्वीजमविद्या चेति ते त्रिधा ॥”
शुभदत्वं यथा, --
“शुभानि प्रीणनं सर्व्वजगतामनुरक्तता ।
सद्गुणाः सुखमित्यादीन्याख्यातानिमनी-
षिभिः ॥”

प्रेमभक्तिर्यथा, --
“सम्यङ्मसृणितस्वान्तो ममत्वातिशयाङ्कितः ।
भावः स एव सान्द्रात्मा बुधैः प्रेमा निगद्यते ॥”
इति भक्तिरसामृतसिन्धौ पूर्ब्बविभागः ॥

**भक्तिमान्** [त्] त्रि, (भक्तिरस्यास्तीति । भक्ति + “तदस्यास्त्यस्मिन्निति मतुप् ।” ५ । २ । ९४ । इति मतुप् ।) भक्तियुक्तः । यथा, --
“गुणवान् पुत्त्रवान् श्रीमान् कीर्त्तिमान् भक्ति-
मान् भवेत् ।
ऐहिके परमैश्वर्य्यमन्ते नाथपदं व्रजेत् ॥”
इति शाम्भवीतन्त्रान्तर्गतमहाकालभैरवस्तोत्रम् ॥
अपि च ।
“अन्येऽपि ये विकर्म्मस्थाः शूद्राद्या नीचजातयः ।
भक्तिमन्तः प्रसुच्यन्ते कालेन मयि सम्मताः ॥”
इति कौर्म्मे ४ अध्यायः ॥

**भक्तियोगः**, पुं, (भक्तेर्योगः भक्त्या यो योग इति वा ।) परमेश्वरे भजनसम्बन्धः । यथा, --
“भक्तियोगप्रकाशाय लोकस्यानुग्रहाय च ।
सन्न्यासाश्रममाश्रित्य कृष्णचैतन्यनामधृक् ॥”
इति चैतन्यभागवतम् ॥
अपि च ।
“वासुदेवे भगवति भक्तियोगः प्रयोजितः ।
जनयत्याशु वैराग्यं ज्ञानञ्च यदहैतुकम् ॥”
इति श्रीभागवते १ स्कन्धे १ अध्यायः ॥
(भक्तियोग उच्यते । यथा, गीतायाम् । १२ । १-२ । १४-२० ।
“एवं सततयुक्ता ये भक्तास्त्वां पर्य्युपासते ।

अथ प्रेमसम्पत्तिचिह्नानि सप्तमस्कन्धे श्रीप्रह्ला-
दस्य बालानुशासने ।
"निशम्य कर्म्माणि गुणानतुल्यान्
वीर्य्याणि लीलातनुभिः कृतानि ।
यद्वातिहर्षोत्पुलकाश्रुगद्गदं
प्रोत्कण्ठ उद्गायति नृत्यते च ॥
यदा ग्रहग्रस्त इव क्वचिद्धसत्या-
क्रन्दति ध्यायति बन्दते जनम् ।
मुहुः श्वसन् वक्ति हरे ! जगत्पते !
नारायणेत्यात्ममतिर्गतत्रपः ॥
तदा पुमान् मुक्तसमस्तबन्धन-
स्तद्भावभावानुकृताशयाकृतिः ।
निर्दग्धबीजानुशयो महीयसा
भक्तिप्रयोगेण समेत्यधीक्षजम् ॥"
एकादशे च श्रीकवियोगेश्वरोत्तरे ।
शृण्वन् सुभद्राणि रथाङ्गपाणे-
र्जन्मानि कर्म्माणि च यानि लोके ।
गीतानि नामानि तदर्थकानि
गायन् विलज्जो विचरेदसङ्गः ॥
एवंव्रतः स्वप्रियनामकीर्त्त्या
जातानुरागो द्रुतचित्त उच्चैः ।
हसत्यथो रोदिति रौति गाय-
त्युन्मादवन्नृत्यति लोकबाह्यः ॥"
तत्रैव श्रीप्रबुद्धयोगेश्वरोत्तरे ।
"स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हारम् ।
भक्त्या संजातया भक्त्या
बिभ्रत्युत्पुलकां तनुम् ॥
क्वचिद्रुदन्त्यच्युतचिन्तया क्वचि-
द्धसन्ति नन्दन्ति वदन्त्यलौकिकाः ।
नृत्यन्ति गायन्त्यनुशीलयन्त्यजं
भवन्ति तष्णीं परमेत्य निर्वृताः ॥

मोक्षलघुताकृद्यथा, --
"मनागेव प्ररूढायां हृदये भगवद्रतौ ।
पुरुषार्थास्तु चत्वारस्तृणायन्ते समन्ततः ॥"
सुदुर्लभा यथा, --
"साधनौघैरनासङ्गैरलभ्या सुचिरादपि ।
हरिणाचाश्वदेयेति द्विधा सा स्यात् सुदुर्लभा ॥"
सान्द्रानन्दविशेषात्मा यथा, --
"ब्रह्मानन्दो भवेदेष चेत् परार्द्धगुणीकृतः ।
नैति भक्तिसुखाम्भोधेः परमाणुतुलामपि ॥"
श्रीकृष्णाकर्षणी यथा ।
"कृत्वा हरिम्प्रेमभाजम्प्रियवर्गसमन्वितम् ।
भक्तिर्वशीकरोतीति श्रीकृष्णाकर्षणी च सा ॥"
सा उत्तमा भक्तिस्त्रिधा यथा, --
"सा भक्तिः साधनं भावः प्रेमा चेति त्रिधो-
दिता ॥"
साधनभक्तिर्यथा, --
"कृतिसाध्या भवेत् साध्यभावा सा साधनाभिधा ।
नित्यसिद्धस्य भावस्य प्राकट्यं हृदि साध्यता ॥"
भावभक्तिर्यथा, --
"शुद्धसत्त्वविशेषात्मा प्रेमसूर्य्यांशुसाम्यभाक् ।
रुचिभिश्चित्तमासृण्यकृदसौ भाव उच्यते ॥"

ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥
श्रीभगवानुवाच ।
मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २ ॥
सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मे भक्तः स मे प्रियः ॥ १४ ॥
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्व्वारम्भपरित्यागी यो मे भक्तः स मे प्रियः ॥ १६ ॥
यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः ॥ १७ ॥
समः शत्रौ च मित्रे च तथामानापमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्ज्जितः ॥ १८ ॥
तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः ॥ १९ ॥
ये तु धर्म्मामृतमिदं यथोक्तं पर्य्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥" २० ॥

**भक्तिरसः**, पुं, भक्तिरेव रसः । यथा, --

"विभावैरनुभावैश्च सात्विकैर्व्यभिचारिभिः ।
स्वाद्यत्वं हृदि भक्तानामानीता श्रवणादिभिः ।

एषा कृष्णरतिः स्थायीभावा
भक्तिरसो भवेत् ॥”
इति भक्तिरसामृतसिन्धुः ॥

**भक्तिलः**, पुं, (भक्तिं भङ्गीं लातीति । ला + कः ।)
साधुघोटकः । यथा, --
प्रभुभक्ता भक्तिलाश्च कुलीनेषु
कुलोत्कटाः ।
इति शब्दचन्द्रिका ॥
भक्तिदातरि त्रि ॥

**भक्ष** क भक्षे । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-सक०-सेट् ।) क भक्षयति
। इति
दुर्गादासः ॥

**भक्ष** ञ भक्षणे । इति कविकल्पद्रुमः ॥ (भ्वा०-
उभ०-सक०-सेट् ।) ञ भक्षति
भक्षते । इति
दुर्गादासः ॥

**भक्षकः**, त्रि, (भक्षयतीति । भक्ष + “ण्वुल्तृचौ ।”
३ । १ । १३३ । इति ण्वुल् ।)
खादकः । भक्षण-
परः । तत्पर्य्यायः । घस्मरः २
अद्मरः ३ । इत्य-
मरः । ३ । १ । १२० ॥ (यथा,
हितोपदेशे । १ । १३५ ।
“भक्ष्यभक्षकयोः प्रीतिर्विपत्तेः
कारणं महत् ।
शृगालात् पाशबद्धोऽसौ मृगः
काकेन
रक्षितः ॥”)

**भक्षटकः**, पुं, (भक्ष + अटन् । ततः संज्ञायां
कन् ।) क्षुद्रगोक्षुरकः । इति
राजनिर्घण्टः ॥

“भक्षितेनापि भवता नाहारो मम पुष्कलः ॥”)
तत्पर्य्यायः । चर्व्वितम् २ लिप्तम् ३
प्रत्यवसितम्
४ गिलितम् ५ खादितम् ६ प्सातम् ७ अभ्यव-
हृतम् ८ अन्नम् ९ जग्धम् १० ग्रस्तम् ११
ग्लस्तम् १२ अशितम् १३ भुक्तम् १४ ।
इत्यमरः ।
३ । २ । ११० ॥ जक्षितम् १५ । इति
शब्दरत्नावली ॥

**भक्ष्यं**, त्रि, (भक्ष्यते इति । भक्ष + ण्यत् ।) भक्षि-
तव्यम् । भक्षणीयम् । यथा । ‘प्रतिपदि
कुष्माण्डं
न भक्ष्यम् । दशम्यां कलम्बी न भक्ष्या ।’ इति
स्मृतिसर्व्वस्वम् ॥ अपि च, हितोपदेशे ।
“मासमेकं नरो याति द्वौ मासौ मृगशूकरौ ।
अहिरेकदिनं याति अद्य भक्ष्यो धनुर्गुणः ॥”
(भक्ष्यद्रव्याणि तेषां गुणादिकञ्च यथा, --
“वक्ष्याम्यतःपरं भक्ष्यान् रसवीर्य्यविपाकतः ।
भक्ष्याः क्षीरकृतावल्या वृष्या हृद्याः सुगन्धिनः
॥
अदाहिनः पुष्टिकराः दीपनाः पित्तनाशनाः ॥
तेषां प्राणकरा हृद्या घृतपूराः कफावहाः ।
वातपित्तहरा वृष्या गुरवो रक्तमांसलाः ॥
वृंहणा गौडिकाभक्ष्या गुरवोऽनिलनाशनाः ।
अदाहिनः पित्तहराः शुक्रलाः कफवर्द्धनाः ॥
मधुमस्तकसंयावाः पूपा ह्येते विशेषतः ।
गुरवो वृंहणाश्चैव मोदकास्तु सुदुर्ज्जराः ॥
रोचनो दीपनः स्वर्य्यः पित्तघ्नः पवनापहः ।
गुरुर्भृ ष्टतमश्चैव सट्टकः प्राणवर्द्धनः ॥
हृद्यः सुगन्धिर्मधुरः स्निग्धः कफकरो गुरुः ।
वातापहस्तृप्तिकरो बल्यो विष्यन्दनः स्मृतः ॥
वृंहणा वातपित्तघ्ना भक्ष्या वल्यास्तु सामिताः
।
हृद्याः पथ्यतमास्तेषां लघवः फेनकादयः ॥
मुद्गादिवेशवाराणां पूर्णा विष्टम्भिनो मताः ।
वेसवारैः सपिशितैः सम्पूर्णा गुरुवृं हणाः ॥
पाललाः श्लेष्मजननाः शष्कुल्यः
कफपित्तलाः ।

फलानि सर्व्वभक्ष्यांश्च प्रदद्याद्वैदलेषु च ।
परिशुष्कप्रदिग्धानि सौवर्णेषु प्रकल्पयेत् ॥
प्रद्रवाणि रसांश्चैव राजतेषूपहारयेत् ।
कट्वराणि खडांश्चैव सर्व्वान् शैलेषु दापयेत् ॥
काचस्फटिकपात्रेषु शीतलेषु शुभेषु च ।
दद्याद्वैदूर्य्यपात्रेषु रागषाडवसट्टकान् ॥
पुरस्ताद्विमले पात्रे सुविस्तीर्णे मनोरमे ।
सूदः सूपौदनं दद्यात् प्रदेहांश्च सुसंस्कृतान् ॥
फलानि सर्व्वभक्ष्यांश्च परिशुष्कानि यानि च ।
तानि दक्षिणपार्श्वे तु भुञ्जानस्योपकल्पयेत् ॥
प्रद्रवाणि रसांश्चैव पानीयं पानकं पयः ।
खडान् यूषांश्च पेयांश्च सव्ये पार्श्वे प्रदापयेत्
॥
सर्व्वान् गुडविकारांश्च रागषाडवसट्टकान् ।
पुरस्तात् स्थापयेत् प्राज्ञो द्वयोरपि च मध्यतः
॥
एवं विज्ञाय मतिमान् भोजनस्योपकल्पनाम् ।”
इति सुश्रुते सूत्रस्थाने ४६ अध्यायः ॥)

**भक्ष्यकारः**, त्रि, (भक्ष्यं भक्ष्यद्रव्यं करोतीति ।
कृ + “कर्म्मण्यण् ।” ३ । २ । १ । इति अण् ।)
पिष्टकविक्रयजीवी । पिष्टकशिल्पी । इतिभरतः
॥
तत्पर्य्यायः । आपूपिकः २ कान्दविकः ३ ।
इत्यमरः । २ । ९ । २८ ॥ पूपिकः ४
पूपविक्रयी ४
मोदकादिविक्रयी ६ । इति शब्दरत्नावली ॥

**भक्ष्याभक्ष्यं**, क्ली, (भक्ष्यमभक्ष्यञ्च ।) खाद्याखाद्य-
द्रव्यम् । यथा, --
“भक्ष्याभक्ष्याण्यनेकानि ब्राह्मणस्य विशेषतः ।
अत्र शिष्टा यथा ब्रूयुस्तथा कार्य्यविनिर्णयः ॥”
इत्येकादशीतत्त्वे शङ्खवचनम् ॥ * ॥
नारद उवाच ।
“भक्ष्यं किंवाप्यभक्ष्यञ्च द्विजानां गृहिणां प्रभो !
।
यतीनां वैष्णवानाञ्च विधवाब्रह्मचारिणाम् ॥
किं कर्त्तव्यमकर्त्तव्यमभोग्यंभोग्यमेव च ।
सर्व्वं कथय सर्व्वज्ञ ! सर्व्वेश ! सर्व्वकारण !
॥”

**भक्षणं**, क्ली, (भक्ष + भावे ल्युट् ।) द्रवेतरद्रव्य-

गलाधःकरणम् । तत्पर्य्यायः । न्यादः २ स्वदनम् ३ खादनम् ४ अशनम् ५ निघसः ६ वल्भनम् ७ अभ्यवहारः ८ जग्धिः ९ जक्षणं १० लेहः ११ प्रत्यवसानम् १२ घसिः १३ आहारः १४ प्सानम् १५ अवष्वाणम् १६ विष्वाणम् १७ भोजनम् १८ जेमनम् १९ अदनम् २० । इति हेमचन्द्रः ॥ द्रव्यविशेषस्य भक्षणनिषेधो यथा, कर्म्मलोचने ।

"शणशाकं वृथामांसं करेण मथितं दधि ।
तर्ज्जन्या दन्तधावश्च सद्यो गोमांसभक्षणम् ॥"

**भक्षणीयं**, त्रि, (भक्ष + अनीयर्) भक्ष्यद्रव्यम् ।

भक्षणयोग्यम् । इति भक्षधातोः कर्म्मण्यनीय-प्रत्ययेन निष्पन्नम् । इति व्याकरणम् ॥ (यथा, पञ्चतन्त्रे । ४ । २५ । "तन्न भेतव्यम् । त्वद्वचनेन भक्षणीयास्ते दायादाः ।") तत्स्थापनविधि-र्यथा, पाकराजेश्वरे ।

"पुरस्ताद्विमलं पात्रं सुविस्तीर्णं मनोरमम् ।
तत्र भक्तं परिण्यस्तं मध्यभागे सुसंयुतम् ॥
सूपं सर्पिः पलं शाकं पिष्टमन्नन्तु मत्स्यकम् ।
स्थापयेद्दक्षिणे पार्श्वे भुञ्जानस्य यथाक्रमम् ॥
वीर्य्योष्णाः पैष्टिका भक्ष्याः कफपित्त प्रकोपणाः ॥
विदाहिनो नातिवला गुरवश्च विशेषतः ।
वैदला लघवो भक्ष्याः कषायासृष्टमारुताः ॥
विष्टम्भिनः पित्तसमाः श्लेष्मध्ना भिन्नवर्च्चसः ।
बल्या वृष्यास्तु गुरवो विज्ञेया माषसाधिताः ॥
कूर्च्चिका विकृता भक्ष्या गुरवो नातिपित्तलाः ।
विरूढककृता भक्ष्या गुरवोऽनिलपित्तलाः ॥
विदाहोत्क्लेशजनना रूक्षा दृष्टिप्रदूषणाः ।
हृद्याः सुगन्धिनो वृष्या लघवो धृतपाचिताः ॥
वातपित्तहरावल्या वर्णदृष्टिप्रसादनाः ।
विदाहिनस्तैलकृता गुरवः कटुपाकिनः ॥
उष्णा मारुतदृष्टिघ्नाः पित्तलास्त्वक्प्रदूषणाः ।
फलमांसेक्षुविकृतितिलमाषोपसंस्कृताः ॥
भक्ष्या बल्यास्तु गुरवो वृं हणा हृदयप्रियाः ।
कपालाङ्गारपक्वास्तु लघवो वातकोपनाः ॥
सुपक्वास्तनवश्चापि भूयिष्ठं लघवो मताः ।
सकिलाटादयो भक्ष्या गुरवः कफवर्द्धनाः ॥"
"आप्तान्वितमसंकीर्णं शुचिकार्य्यं महानसम् ॥
तत्राप्तैर्गुणसम्पन्नमन्नं भक्ष्यं सुसंस्कृतम् ।
शुचौ देशे सुसंगुप्तं समुपस्थापयेद्भिषक् ॥"
"घृतं कार्ष्ण्यायसे देयं पेया देया तु राजते ॥

श्रीमहेश्वर उवाच ।
"कश्चित्तपस्वी विप्रश्च निराहारी चिरं मुनिः
कश्चित् समीरणाहारी फलाहारी च कश्चन ॥
अन्नाहारी यथा लोके गृही च गृहिणीयुतः ।
येषामिच्छा च या ब्रह्मन् ! रुचीनां विविधा गतिः ॥
हविष्यान्नं ब्राह्मणानां प्रशस्तं गृहिणां सदा ।
नारायणोच्छिष्टमिष्टमनिवेद्यमभक्ष्यकम् ॥
अन्नं विष्ठा जलं मूत्रं यद्विष्णोरनिवेदनम् ।
विण्मूत्रं सर्व्वपापोक्तमन्नञ्च हरिवासरे ॥
ब्राह्मणः कामतोऽन्नञ्च यो भुङ्क्ते हरिवासरे ।
त्रैलोक्यजनितं पापं सोऽपि भुङ्क्ते न संशयः ॥
न भोक्तव्यं न भोक्तव्यं न भोक्तव्यञ्च नारद ! ।
गृहिभिर्ब्राह्मणैरन्नं संप्राप्ते हरिवासरे ॥
गृही शैवश्च शाक्तश्च ब्राह्मणो ज्ञानदुर्बलः ।
प्रयाति कालसूत्रञ्च भुक्त्वा च हरिवासरे ॥
क्रमिभिः शालमानैश्च भक्षितस्तत्र तिष्ठति ।
विण्मूत्रभक्षणं कृत्वा यावदिन्द्राश्चतुर्द्दश ॥
जन्माष्टमीदिने रामनवमीदिवसे हरेः ।
शिवरात्रौ च यो भुङ्क्ते सोऽपि द्विगुणपातकी ॥

प्रलेहाद्याः द्रवाः सर्व्वे पानीयं पानकं पयः ।
चोष्यं सन्धानकं लेह्यं सव्यपार्श्वे निधापयेत् ॥
सर्व्वान् इक्षुविकारांश्च पक्वान्नं पायसं दधि ।
पुरतः स्थापयेद्धोकुर्द्वयोः पंक्त्योश्च मध्यतः ॥”

**भक्ष(क्ष्य)पत्रा**, स्त्री, (भक्षं वा भक्ष्यं भक्षणीयं पत्रमस्याः ।) नागवल्ली । इति राजनिर्घण्टः ॥ (गुणादिविवृतिरस्या नागवल्लीशब्दे ज्ञातव्या ॥)

**भक्षितं**, त्रि, (भक्ष्यते स्मेति । भक्ष + कर्म्मणि क्तः ।) कृतभक्षणवस्तु । (यथा, हितोपदेशे । १ ।

उपवासासमर्थश्चेत् फलमूलजलं पिबेत् ।
नष्टे शरीरे स भवेदन्यथा चात्मघातकः ॥
सकृद्भुङ्क्ते हविष्यान्नं विष्णोर्नैवेद्यमेव च ।
न भवेत् प्रत्यवायी स चोपवासफलं लभेत्
॥
एकादश्यामनाहारी गृही विप्राश्च भारत !
।
ते च तिष्ठन्ति वैकुण्ठे यावद्वै ब्रह्मणो वयः
॥
गृहिणां शैवशाक्तानामिदमुक्तञ्च नारद ! ।
विशेषतो वैष्णवानां यतीनां ब्रह्मचारिणाम्
॥
नित्यं नैवेद्यभोजी च श्रीकृष्णस्य च
वैष्णवः ।
नित्यं शतोपवासानां जीवन्मुक्तो लभेत्
फलम् ॥
वाञ्छन्ति तस्य संस्पर्शं तीर्थानि
सर्व्वदेवताः ।
आलापं दर्शनञ्चैव सर्व्वपापप्रणाशनम् ॥
द्विस्विन्नमन्नं पृथुकं शुद्धं देशविशेषके ।
नात्यन्तशस्तं विप्राणां भक्षणे च निवेदने
॥
अभक्ष्यञ्च यतीनाञ्च विधवाब्रह्मचारिणाम्
।
ताम्बूलञ्च यथा ब्रह्मन् ! तथैते वस्तुनी
ध्रुवम् ॥
ताम्बूलं विधवास्त्रीणां यतीनां
ब्रह्मचारिणाम् ।
तपस्विनाञ्च विप्रेन्द्र ! गोमांससदृशं ध्रुवम्
॥
सर्व्वेषां ब्राह्मणानाञ्च अभक्ष्यं शृणु नारद !
।
यदुक्तं सामवेदे च हरिणा चाह्निकक्रमे ॥
ताम्रपात्रे पयःपानं उच्छिष्टे घृतभोजनम् ।
दुग्धं लवणसार्द्धञ्च सद्यो गोमांसभक्षणम् ॥
नारिकेलोदकं कांस्ये ताम्रपात्रे स्थितं मधु
।
ऐक्षवं ताम्रपात्रस्थं मुरातुल्यं न संशयः ॥

शूद्राणां याजकानाञ्च शूद्रश्राद्धान्नमेव च ।
अभक्षाणाञ्च विप्रर्षे ! यदन्नं वृषलीपतेः ॥
ब्रह्मन् ! वार्द्धुषिकान्नञ्च
गणकानामभक्ष्यकम् ॥
अग्रदानीद्विजानाञ्च चिकित्साकारकस्य
च ।
हस्ताचित्राहरौ
तैलमग्राह्यञ्चाप्यभक्ष्यकम् ।
मूले मृगे भाद्रपदे मांसं गोमांसतुल्यकम्
॥”
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे २७ अध्यायः
पाद्मे
स्वर्गखण्डे ३१ अध्यायश्च ॥
नारद उवाच ।
“वर्णानाञ्च चतुर्णाञ्च भक्ष्याभक्ष्यञ्च
सांप्रतम् ।
विपाकं कर्म्मणाञ्चैव सर्व्वेषां प्राणिनामपि
॥
कथयस्व महाभाग ! कारणानाञ्च
कारण ! ।
त्वत्तोऽन्यं कञ्च पृच्छामि नितान्तं सन्त-
मीश्वर ! ॥
श्रीभगवानुवाच ।
भक्ष्याभक्ष्यं चतुर्णाञ्च वर्णानाञ्च
यथोचितम् ।
वेदोक्तं श्रूयतां तात ! सावधानं निशामय
॥
अयःपात्रे पयःपानं गव्यं सिद्धान्नमेव च ।
भृष्टादिकं मधु गुडं नारिकेलोदकं तथा ॥
फलं मूलञ्च यत्किञ्चिदभक्ष्यं मनुरब्रवीत्
।
दग्धान्नं तप्तसौवीरमभक्ष्यं ब्रह्मणा मतम्
॥
नारिकेलोदकं कांस्ये ताम्रपात्रे स्थितं
मधु ।
गव्यञ्च ताम्रपात्रस्थं सर्व्वं मद्यं घृतं विना
॥
ताम्रपात्रे पयःपानमुच्छिष्टे घृतभोजनम् ।
दुग्धं सलवणञ्चैव सद्यो गोमांसभक्षणम् ॥

अभक्ष्यमार्द्रकञ्चैव सर्व्वेषाञ्च रवेर्दिने ॥
पर्य्युषितं जलञ्चान्नं विप्राणां दुग्धमेव च ।
वर्णानाञ्च चतुर्णाञ्चावीरान्नस्य च भक्षणम् ॥
तदन्नञ्च सुरातुल्यं गोमांसाधिकमेव च ।
अवीरान्नञ्च यो भुङ्क्ते ब्राह्मणो ज्ञानदुर्ब्बलः ।
पितृदेवार्च्चनं तस्य निष्फलं मनुरब्रवीत् ॥
ब्राह्मणानां वैष्णवानामभक्ष्यं मत्स्यमेव च ।
इतरेषामभक्ष्यञ्च पञ्चपर्व्वसु निश्चितम् ॥
पितृदेवावशेषे च भक्ष्यं मासं न दूषितम् ।
पञ्चपर्व्वसु त्याज्यञ्च सर्व्वेषां मनुरब्रवीत् ॥
असंस्कृतञ्च लवणं तैलञ्चाभक्ष्यमेव च ।
भक्ष्यं पवित्रं सर्व्वेषां व्यञ्जने वह्निसंस्कृतम् ॥
एकहस्ते घृतं तोयमभक्ष्यं सर्व्वसम्मतम् ।
आविलं कृमियुक्तञ्चापरिशुद्धन्त्वनिर्म्मलम् ॥
अभक्ष्यं ब्राह्मणानाञ्च वैष्णवानां विशेषतः ।
अनिवेद्यं हरेरेव यतीनां ब्रह्मचारिणाम् ॥
पिपीलिकामिश्रितञ्च मधु गव्यं गुडं तथा ।
यत्किञ्चिद्वस्तु वा तात ! न भक्ष्यञ्च श्रुतौ
श्रुतम् ॥
पक्षिभक्ष्यं कीटभक्ष्यं शुद्धं पक्वफलन्तथा ।
काकभक्ष्यमभक्ष्यञ्च सर्व्वेषां द्रव्यमेव च ॥
घृतपक्वं तैलपक्वं मिष्टान्नं शूद्रसंस्कृतम् ।
अभक्ष्यं ब्राह्मणानाञ्च शूद्रभृष्टं चिपीटकम् ॥
सर्व्वेषामशुचीनाञ्च जलमन्नं परित्यजेत् ।
अशौचान्तात् परदिने शुद्धमेव न संशयः ॥
विपाकः कर्म्मणामेव दुष्करः श्रुतिसम्मतम् ।
भक्ष्याभक्ष्यञ्च कथितं यथाज्ञानं व्रजेश्वर !
॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्ण जन्मखण्डे ८५
अध्यायः ॥
“भक्ष्याभक्ष्यञ्च ते शिष्य ! वेदितव्यं तदन्तरे
।
करीरस्य वधः शस्तः फलान्यौदुम्बरस्य च
॥
सद्यो भक्षी भवेत्तेन अभक्ष्या पूतिवासिका ।
न भक्षणीयं वाराहं मांसं मत्स्यश्च सर्व्वशः ॥
अभक्ष्या ब्राह्मणैर्ह्येतैर्दीक्षितैर्हि न संशयः ॥”
इति वाराहे ब्राह्मणदीक्षासूत्रनामाध्यायः ॥

**भक्ष्यालायुः**, स्त्री, (भक्ष्या भक्षार्हा अलावुः ।)

उत्थाय वामहस्तेन यत्तोयं पिबति द्विजः
॥
सुरापीती स विज्ञेयः सर्व्वधर्म्मबहिष्कृतः
॥
अनिवेद्यं हरेरन्नं भक्ष्यशेषञ्च नित्यशः ।
पीतशेषं जलञ्चैव गोमांससदृशं मुने ! ॥
वातिङ्गनफलञ्चैव गोमांसं कार्त्तिके स्मृतम्
।
माघे च मूलकञ्चैव कलम्बी शयने तथा ॥
श्वेतवर्णञ्च तालञ्च मसूरं मत्स्य एव च ।
सर्व्वेषां ब्राह्मणानाञ्च त्याज्यञ्च
सर्व्वदेशतः ॥
मत्स्यांश्च कामतो भुक्त्वा चोपवासं त्र्यहं
वसेत् ।
प्रायश्चित्तं ततः कृत्वा शुद्धिमाप्नोति
ब्राह्मणः ॥
प्रतिपत्सु च कुष्माण्डमभक्ष्यमर्थनाशनम्
।
द्वितीयायाञ्च वृहतीभोजको न स्मरेद्धरिम्
॥
अभक्ष्यञ्च पटोलञ्च शत्रुवृद्धिकरं परम् ।
तृतीयायाञ्चतुर्थ्याञ्च मूलकं धननाशकम्
॥
कलङ्ककारणञ्चैव पञ्चम्यां विल्वभक्षणम् ।
तिर्य्यग्योनिं प्रापयेत्तु षष्ठ्याञ्च
निम्बभक्षणम् ॥
रोगवृद्धिकरञ्चैव सप्तम्यां तालभक्षणम् ।
नारिकेलफलं भक्ष्यमवृन्यां बुद्धिनाशनम्
॥
तुम्बी नवम्यां गोमांसं दशम्याञ्च
कलम्बिका ।
एकादश्यां तथा शिम्बी द्वादश्यां पूतिका
तथा ॥
त्रयोदश्यान्तु वार्त्ताकीभक्षणं पुत्त्रनाशनम्
।
चतुर्द्दश्यां माषभक्षं महापापकरं परम् ॥
पञ्चदश्यां तथा मांसमभक्ष्यं गृहिणां मुने !
।
गृहिणां प्रोक्षितं मांसं भक्ष्यमन्यदिने दिने
॥

अभक्ष्यं मधुमिश्रञ्च घृतं तैलं गुडं तथा ।
आर्द्रकं गुडसंयुक्तमभक्ष्यं श्रुतिसम्मतम्
॥
पीतशेषं जलञ्चैव माघे च मूलकं तथा ।
द्विर्भोजनञ्च दिवसे सन्ध्ययोर्भोजनं तथा
॥
भक्ष्यञ्च रात्रिशेषे च ध्रुवं प्राज्ञः
परित्यजेत् ।
पानीयं पायसं चूर्णं घृतं लवणमेव च ॥
स्वस्तिकं लवणञ्चैव क्षीरं तक्रं तथा मधु
।
हस्ताद्धस्तगृहीतञ्च सद्यो गोमांसभक्षणम्
॥
कर्पूरं रौप्यपात्रस्थमभक्ष्यं श्रुतिसम्मतम्
।
परिवेशनकारी चेद्व्रोक्तारं स्पृशते यदि ॥
अभक्ष्यञ्च तदन्नञ्च सर्व्वेषामेव सम्मतम् ।
नकुलानां गण्डकानां महिषाणाञ्च
पक्षिणाम् ॥
सर्पाणां शूकराणाञ्च गर्द्दभानां विशेषतः ।
मार्जाराणां शृगालानां कुक्कुराणां
ब्रजेश्वर ! ॥
व्याघ्राणामपि सिंहानां त्याज्यं मांसं नृणां
सदा ।
जलौकसाञ्च नक्राणां गोधिकानां तथैव
च ॥
मण्डूकानां कर्क्कटीनां चञ्चुकानाञ्च
निश्चितम् ।
गवाञ्च चमरीणाञ्च कलौ मांसमभक्ष्यकम्
॥
हस्तिनां घोटकानाञ्च नृणामेव च
रक्षसाम् ।
दंशश्च मशकश्चैव मक्षिका च
पिपीलिका ॥
अन्येषाञ्च निषिद्धानां लोके वेदे
ब्रजेश्वर ! ।
वानराणां भल्लूकानां शरभाणां तथैव च ॥
निषिद्धं मृगनाभीनां गर्द्दभानाञ्च मांसकम्
।
अभक्ष्यं महिषाणाञ्च दुग्धं दधि घृतं तथा
॥

राजालावुः । इति राजनिर्घण्टः ॥

**भगं**, क्ली, पुं, (भज्यते अनेनास्मिन् वेति एतदा-
श्रित्यैव कन्दर्पं सेवते इति भावः । भजसेवा-
याम् + “पुंसि संज्ञायां घः प्रायेण ।” ३ । ३ ।
११८ । इति घः । “खनो घ च ।” ३ । ३ ।
१२५ ।
घित्करणमन्यतोऽप्ययमितिविज्ञापनार्थम्
इति
वृत्तिकृद्भट्टोजीदीक्षितः ।) स्त्रीचिह्नम् । तत्-
पर्य्यायः । योनिः २ । इत्यमरः । २ । ६ ।
७६ ॥ वरा-
ङ्गम् ३ उपस्थः ४ स्मरमन्दिरम् ५ । इति
राज-
निर्घण्टः ॥ (भजन्त्यनेनेति भगो मेहनम् ।
भज-
न्त्यस्मिन्निति भगं योनिः । अत्र भगशब्देन
द्वयमपि कथ्यते । इति भावप्रकाशस्य
मध्यखण्डे
चतुर्थे भागे ॥
“ब्रह्मा बृहस्पतिर्विष्णुः सोमः
सूर्य्यस्तथाश्विनौ ।
भगोऽथ मित्रावरुणौ वीरं ददतु मे सुतम् ॥”
इति वाभटे शारीरस्थाने प्रथमेऽध्याये ॥)
रतिगृहम् ६ जन्मवर्त्म ७ अधरम् ८ अवाच्य-
देशः ९ प्रकृतिः १० अपथम् ११ स्मरकूपः
१२

| मांसञ्च रक्तशाकञ्च कांस्यपात्रे च भोजनम् । निषिद्धं शयने चैव कूर्म्ममांसञ्च प्रोक्षितम् ॥ रात्रौ च दधिभक्तञ्च शयनं सन्ध्ययोर्दिने । रजस्वलावीरान्नञ्च पुंश्चलीनामभक्ष्यकम् ॥ | स्वस्तिकञ्च तथा चक्रं विप्राणां नवनीतकम् । मांसमुच्चैःश्रवसकं तस्य दुग्धादिकं तथा ॥ वर्णानाञ्च चतर्णाञ्चाप्यभक्ष्यञ्च श्रुतौ श्रुतम् । | |
|---|---|---|

अप्रदेशः १३ प्रकृतिः १४ पुष्पी
१५ संसारमार्गः
१६ गुह्यम् १७ स्मरागारम् १८
स्मरध्वजम् १९
रत्यङ्गम् २० रतिकुहरम् २१
कलत्रम् २२
अधः २३ । इति शब्दरत्नावली ॥
तस्य लक्ष-
णम् । यथा, --
"विस्तीर्णञ्च गभीरञ्च द्विविधं
भगलक्षणम् ।"
तद्गुणा यथा, --
"कूर्म्मपृष्ठं गजस्कन्धं पद्मगन्धं
सुकोमलम् ।
अकोमलं सुविस्तीर्णं पञ्चैते च
भगोत्तमाः ॥"
तद्दोषा यथा, --
"शीतलं निम्नमत्युष्णं
गोजिह्वासदृशं परम् ।
इत्युक्तं
कामशास्त्रज्ञैर्भगदोषचतुष्टयम् ॥
विस्तीर्णे मुषलं योज्यं गभीरे
वंशबीजकम् ।"
इति रतिमञ्जरी ॥
तस्य शुभाशुभलक्षणम् । यथा, --
"शुभः कमठपृष्ठाभो
गजस्कन्धोपमो भगः ।
वामोन्नतस्तु कन्याजः पुत्त्रजो
दक्षिणोन्नतः ॥
आखुरोमा गूढमणिः स्वाश्लिष्टः
संहतः पृथुः ।
तुङ्गः कमलवर्णाभः
शुभोऽश्वत्थदलाकृतिः ॥
कुरङ्गखुररूपो
यश्चुल्लिकोदरसन्निभः ।
रोमशो विवृतास्यश्च
दृश्यनासोऽतिदुर्भगः ॥
शङ्खावर्त्तो भगो यस्याः सा गर्भमिह
नेच्छति ।

"इन्द्रो भगो वाजदा अस्य गावः
प्रजायन्ते दक्षिणा अस्य पूर्ब्बी ॥"
"भगः सर्व्वैर्भजनीयः स इन्द्रः ।" इति
तद्भाष्ये
सायनः ॥ द्वादशादित्यभेदः । यथा, ऋग्वेदे
।
२ । २७ । १ ।
"इमा गिर आदित्येभ्यो घृतस्नूः
सनाद्राजभ्यो जुह्वा जुहोमि ।
शृणोतु मित्रो अर्य्यमा भगो नस्तुवि
जातो वरुणो दक्षो अंशः ॥"
यथा च महाभारते । १ । ६५ । १५-१६ ।
"धाता मित्रोऽर्य्यमा शक्रो वरुणस्त्वंश एव
च ।
भगो विवस्वान् पूषा च सविता दशमस्तथा
॥
एकादशस्तथा त्वष्टा द्वादशो विष्णुरुच्यते ।
जघन्यजस्तु सर्व्वेषामादित्यानां गुणाधिकः
॥"
रुद्रांशो वीरभद्रोऽस्य भगस्य दक्षयज्ञेनेत्रे
उत्-
पाटितवान् । यथा, भागवते । ४ । ५ ।
१८ ।
"भगस्य नेत्रे भगवान् पातितस्य रुषा भुवि
।
उज्जहार सदस्थोऽक्ष्णा यः
शपन्तमसूसुचत् ॥"
ऐश्वर्य्यादिषट्कम् । यदुक्तम् ।
"ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः
श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना ॥"
भोगास्मदत्वम् । यथा, भागवते । १ । १६
। २९ ।
"प्रागल्भ्यं प्रश्रयः शीलं सह ओजो बलं
भगः ।
गाम्भीर्य्यं स्थैर्य्यमास्तिक्यं
कीर्त्तिर्मानोऽनहं-
कृतिः ॥

बृहस्पतेः खदस्राक्षिवेदषड्वह्नयस्तथा
३६४२२० ॥
सितशीघ्रस्य षट्सप्तत्रियमाश्विखभूधराः
७०२२३७६ ।
शनेर्भुजङ्गषट्पञ्चरसवेदनिशाकराः १४६५६८ ॥
चन्द्रोच्चस्याग्निशून्याश्विवसुसर्पार्णवा
४८८२०३ युगे ।
वामं पातस्य सर्पाग्नियमाश्विशिखिदस्रकाः
२३२२३८ ॥
इति सूर्य्यसिद्धान्तः ॥ * ॥
अपि च । ग्रहाणां मन्दोच्चानां चलोच्चानां
ग्रहपातानाञ्च भगणान् श्लोकषट्केनाह ।
अर्कशुक्रबुधपर्य्यया विधेरह्नि कोटिगुणिता रदा-
ब्धयः । ४३२००००००० एत एव शनिजीव-
भूभुवां कीर्त्तिताश्च गणकैश्चलोच्चजाः ॥ १ ॥
खाब्भ्रखाब्भ्रगगनामरेन्द्रियक्ष्माधराद्रिविषया
५७७५३३०००००० हिमद्युतेः ।
युग्मयुग्मशरनागलोचनव्यालषण्णवयमाश्विनोऽ
सृजः २२९६८२८५२२ ॥ २ ॥
सिन्धुसिन्धुरनवाष्टगोऽङ्कषट्त्र्यङ्कसप्तशशिनो
१७९३६९९८९८४ ज्ञशीघ्रजाः ।
पञ्चपञ्चयुगषट्कलोचनद्व्यब्धिषड्गुणमिता
३६४२२६४५५ गुरोर्मताः ॥ ३ ॥
द्विनन्दवेदाङ्कगजाग्निलोचनद्विशून्यशैलाः
७०२२३८९४९२ सितशीघ्रपर्य्ययाः ।
भुजङ्गनन्दद्विनगाङ्गबाणषट्कक्षेन्दवः
सूर्य्यसुतस्य पर्य्ययाः १४६५६७२९८ ॥ ४ ॥
खाष्टाब्धयो ४८० ऽष्टाक्षगजेषुदिग्वियद्द्विपाब्धयो
४८०१०५८५८ द्व्यङ्कयमा २९२ रदाग्नयः
३३२ ।
शरेष्विभा ८५५ स्त्र्यक्षरसाः ६५३ कुषागराः
४१
स्युः पूर्ब्बगत्या तरणेर्मृदुच्चजाः ॥ ५ ॥
गजार्षिभर्गत्रिरदाश्विनः २३२३१११६८ कुभृद्र-
साश्विनः २६७ कुद्विशराः ५२१ क्रमर्त्तवः ६३ ।
त्रिनन्दनागा ८९३ युगकुञ्जरेषवो ५८४
निशाकराद्व्यस्तगपातपर्य्ययाः ॥ ६ ॥"
इति सिद्धान्तशिरोमणिः ॥ * ॥
ग्रहाणां पूर्ब्बगमनेन कल्पे एते पर्य्ययाः । तथा

चिपिटः कर्पराकारः किङ्करीपददो भगः ॥
वंशवेतसपत्राभो गजरोमोच्चनासिकः ।
विकटः कुटिलाकारो लम्बगल्लस्तथाशुभः ॥”
इति स्कान्दे काशीखण्डे ३७ अध्यायः ॥

**भगः** पुं, (भज्यते इति । भजसेवायां + “पुंसि

“भगः भोगास्पदत्वम् ।” इति तट्टीकायां श्रीधर-
स्वामी ॥ स्थूलमण्डलाभिमानी । यथा, रामा-
यणे । ३ । १२ । १८ ।
“विष्णोः स्थानं महेन्द्रस्य स्थानञ्चैव विवस्वतः ।
सोमस्थानं भगस्थानं स्थानं कौवेरमेव च ॥”
“भगः स्थूलमण्डलाभिमानी ।” इति तट्टीकायां
रामानुजः ॥)

श्रीः । वीर्य्यम् । इच्छा । ज्ञानम् । वैराग्यम् ।
कीर्त्तिः । माहात्म्यम् । ऐश्वर्य्यम् । (यथा,
भागवते । २ । ७ । ९ ।
“यद्वेणमुत्पथगतं द्विजवाक्यवज्र-
निष्प्लुष्टपौरुषभगं निरये पतन्तम् ॥”
“निष्प्लुष्टं दग्धं पौरुषं भगमैश्वर्य्यञ्च यस्य ।”
इति तट्टीकायां स्वामी ॥) यत्नः । धर्म्मः ।
मोक्षः । इति मेदिनी । गे, १४ ॥ पुंसां गुदमुष्क-
मध्यभागः । इति राजनिर्घण्टः ॥ श्रीः । यशः ।
सौभाग्यम् । (यथा, भागवते । १ । १७ । १० ।
“यस्य राष्ट्रे प्रजाः सर्व्वास्त्रस्यन्ते साध्व्य-
साधुभिः ।
तस्य मत्तस्य नश्यन्ति कीर्त्तिरायुर्भगो गतिः ॥”
“भगो भाग्यम् ।” इति तट्टीकायां स्वामी ॥)
कान्तिः । सूर्य्यः । शम्भुविशेषः । चन्द्रः । इत्य-
नेकार्थध्वनिमञ्जरी ॥ पूर्ब्बफल्गुनीनक्षत्रम् ।
यथा, ज्योतिस्तत्त्वे ।
“अक्षतामाषयुक्ताश्च भगे सर्पिस्तदुत्तरे ॥”

**भगणः**, पुं, (भानां नक्षत्राणां गणः समूहः ।)

नक्षत्रसमूहः । शीघ्रगामिनां ग्रहाणामल्पेन
कालेन मन्दगामिनां ग्रहाणां महता कालेन
पूर्ब्बगत्या पातानां पश्चिमगत्या परिवर्त्तनेनाश्वि-
न्यादिरेवत्यन्तनक्षत्रभोगकालः । षष्टिविकलाभिः कला
षष्टिकलाभिर्भागस्त्रिंशभागैराशिर्द्वादश-
राशिभिर्भगणः । यथा, --
“शीघ्रगस्तान्यथाल्पेन कालेन महताल्पगः ।
तेषान्तु परिवर्त्तेन पौष्णान्ते भगणः स्मृतः ॥
विकलानां कलाषष्ट्या तत्षष्ट्या भाग उच्यते ।
तत्त्रिंशता भवेद्राशिर्भगणो द्वादशैव ते ॥
युगे सूर्य्यज्ञशुक्राणां खचतुष्करदार्णवाः ४३२०००० ।
कुजार्किगुरुशीघ्राणां भगणाः पूर्ब्बयायिनाम् ॥
इन्दो रसाग्नित्रित्रीषुसप्तभूधरमागणाः ५७७५३३३६ ।
दस्रत्र्यष्टरसाङ्काक्षिलोचनानिकुजस्य तु २२९६८३२ ॥
बुधशीघ्रस्य शून्यर्त्तुखाद्रित्र्यङ्कनगेन्दवः १७९३७०६० ।

मन्दोच्चानाञ्च प्राग्गत्या एतावन्तः । पातानां
पश्चिमगत्या एतावन्तो भवन्ति । अत्रोपपत्तिः
सा तु तद्भाषाकुशलेन तत्क्षेत्रसंस्थानज्ञेन शुत-
गोलेनैव श्रोतुं शक्यते नान्येन । ग्रहमन्दशीघ्र-
पाताः स्वस्वमार्गेषु गच्छन्त एतावतः पर्य्ययान्
कल्पे कुर्व्वन्तीत्यत्रागम एव प्रमाणम् । इति
तट्टीका ॥

**भगदत्तः**, पुं, (भगमैश्वर्य्यं दत्तमस्मै इति ।) नरकराजस्य

ज्येष्ठपुत्त्रः । स तु प्राग्ज्योतिषपुराधिपः । यथा,
“ऋतुमत्यान्तु जायायां कालेन नरकः क्रमात् ।
भगदत्तं महाशीर्षं मदवन्तं सुमालिनम् ॥
चतुरो जनयामास पुत्त्रांस्तांश्च क्षितेः सुतः ॥”
श्रीभगवानुवाच ।
“भारावतरणे देवि ! नरकस्य वधः पुरा ।
त्वयैव प्रार्थितो यस्मात् तेनासौ निहतो मया ॥

| संज्ञायां घ प्रायेण ।” ३ । ३ ।<br>११८ । इति<br>घ । “खनो घ च ।” ३ । ३ ।<br>१२५ । इति<br>घित्करणाद् वा घ ।) रविः । इति<br>मेदिनी ॥<br>गे, १४ । क्लीवेऽप्ययम् । यथा, --<br>“ज्ञानवैराग्ययोर्योनौ भगमस्त्री तु<br>भास्करे ।”<br>इति रुद्रः ॥”<br>(भजनीये, त्रि । यथा, ऋग्वेदे । ३<br>। ३६ । ५ । | | |
|---|---|---|

पालयिष्पेऽस्य सन्तानं देवि !
त्वद्वचनादहम् ।
प्राग्ज्योतिषेऽभिषेक्ष्यामि नप्तारं भगदत्तकम्
॥
पृथिव्यां नारदेनैव सहितः केशवस्तदा ।
भगदत्तं भौमसुतं प्राग्ज्योतिषपुरोत्तमे ।
अभिषिच्य तदा भूपं पुरमन्ये न्यवेशयत्
॥"
इति कालिकापुराण ३९ अध्यायः ॥
(यथा च महाभारते । २ । २६ । ८ ॥
"स तानपि महेष्वासान् विजिग्ये
भरतर्षभ ! ।
तैरेव सहितैः सर्व्वैः प्राग्ज्योतिषमुपाद्रवत्
॥"
तत्र राजामहानासीद्भगदत्तो विशाम्पते ! ।
तनासीत् सुमहद्युद्धं पाण्डुवस्य महात्मनः
॥")

**भगदैवतं**, क्ली, (भगो योनिदवतं देवता यस्य ।)
पूर्ब्बफल्गुनीनक्षत्रम् । तत्तु
बृहस्पतेर्जन्मनक्ष-
त्रम् । यथा, ज्योतिस्तत्त्वे ।
"विशाखानलतोयानि वैष्णव्यं भगदैवतम् ।
पुष्या पौष्णो यमः सर्पो जन्मभान्यर्क्कतः
क्रमात् ॥"

**भगन्दरः**, पुं, (भगं गुह्यमुष्कमध्यस्थानं दारय-
तीति । "दृ + णिच् + पूःसर्व्वयोर्दारिसहोः
।"
२ । २ । ४१ । इत्यत्र । "भगे च दारेरिति
वक्त
व्यम् ।" इति काशिकोक्तेः खच् । "खचि
ह्रस्वः ।" ६ । ४ । ९४ । इति ह्रस्वः ।
मुम्च ।)
अपानदेशे व्रणरोगविशेषः । तस्य रूपमाह
।
"गुदस्य द्व्यङ्गुले क्षेत्रे पार्श्वतः
पिडकार्त्तिकृत् ।
भिन्नो भगन्दरो ज्ञेयः स च पञ्चविधो भवेत्
॥"
शिरोधर उष्ट्रग्रीवसंज्ञं वदेत् । उष्ट्रग्रीव-
संज्ञञ्च ।
पिडकाकालीनवक्रतयोष्ट्रग्रीवाकार-
त्वेन ॥ * ॥ श्लैष्मिकपरिस्राविसंज्ञमाह ।
"कण्डूयनो घनस्रावी कठिनो मन्दवेदनः
।
श्वेतावभासः कफजः परिस्रावी भगन्दरः
॥"
कठिनः पिडकावस्थायां परिस्रावी
निरन्तरं
स्रवणशीलः ॥ * ॥
सान्निपातिकशम्बूकावर्त्त-
संज्ञमाह ।
"बहुवर्णरुजास्रावाः पिडका गोस्तनोपमाः
।
शम्बूकावर्त्तवन्नाडी शम्बूकावर्त्तको मतः
॥"
बहुवर्णरुजास्रावाः बहुशब्दो वर्णादिभिः
प्रत्येकं सम्बध्यते । नाडी स्रावमार्गः ॥ *
॥
शल्यजमुन्मार्गसंज्ञमाह ।
"क्षताद्गतिः पायुगताद्विवर्द्धते
ह्युपेक्षणात् स्युः कृमयो विदार्य्यंते ।
प्रकुर्व्वते मार्गमनेकधा मुखै-
व्रणैस्तमुन्मार्गभगन्दरं वदेत् ॥
क्षतात् कण्टकादिना नखेन
कण्डूयनादिना वाभिघातात् ।
गतिः स्रावः उन्मार्गभगन्दरम् । एतस्य
कृमि-
कृतमार्गैः पुरीषादिनिर्गमादुन्मार्गसंज्ञा ॥"
कष्टसाध्यमसाध्यञ्चाह ।
"घोराः साधयियुं दुःखाः सर्व्व एव भग-
न्दराः ।
तेष्वसाध्यस्त्रिदोषोत्थः क्षतजश्च
विशेषतः ॥
वातमूत्रपुरीषाणि शुक्रञ्च कृमयस्तथा ।
भगन्दरात् स्रवन्तस्तु नाशयन्ति
तमातुरम् ॥"
अथ भगन्दरस्य चिकित्सा । यथा, --
अपि च ।
"लङ्घनं स्वेदनं लेपविम्लापनविरेचनैः ।
रक्तमोक्षादिभिः शीघ्रं गुदजां पिडकां जयेत्
॥
तथा यत्नं भिषक् कुर्य्याद्यथा पाकं
नियच्छति ।
अपक्वं वाथ पक्वं वा जलौकापातनं हितम्
॥
तदभावे तु शृङ्गाभ्यामिदं रक्तस्य मोक्षणम्
॥"
वटपत्राष्टकाशुण्ठीगुडूच्यः सपुनर्नवाः ।
पिष्ट्वा तु पिडकारम्भे लेपः शस्तो भगन्दरे
॥
आमावस्थाक्रिया प्रोक्ता
पक्वावस्थाक्रियोच्यते ॥
त्र्युषणापाटलाक्षारवह्निदाहादिकंक्रमम् ।
विधाय व्रणवत् कार्य्यं यथा दोषो यथा
बलम् ॥
स्नुह्यर्कदुग्धदार्व्वीभिर्वर्त्तिं कृत्वा भगन्दरे ।
दद्यात् सर्व्वशरीरस्था नाडीर्हन्यात्
प्रयोगराट् ॥
तिलाभयालोध्रमरिष्टपत्रं
निशा वचा कुष्ठमगारधूमः ।
भगन्दरे नाड्युपदंशयोश्च
दुष्टव्रणे शोधनरोपणोऽयम् ॥
शुनोऽस्थिघृष्टं त्रिफलारसेन
विडालकास्थि त्वथवा विलेपनात् ।
चिरप्रभूतं व्रणरोगदुष्टं
भगन्दरं नाशमुपैति नूनम् ॥ * ॥
जम्बूकमांसं भुञ्जीत प्रकारैर्व्यञ्जनादिभिः
॥"
शृगालमांसव्यञ्जनं खाद्यम् । अथवा
शम्बक-
मांसव्यञ्जनं खाद्यम् ॥
"त्रिकटु त्रिफला मुस्तं विडङ्गामृतचित्रकम्
।
शट्येला पिप्पलीमूलं हवुषा सुरदारु च ॥
तुम्बुरुं पुष्करं चव्यं विशाला रजनीद्वयम् ।
विडं सौवर्च्चलक्षारौ सैन्धवं गजपिप्पली ॥

अर्त्तिकृत् पीडाकृत् । पञ्चविधः
वातकपैत्तिक-
श्लैष्मिकसान्निपातिकशल्यजभेदैः ॥
भगन्दर-
शब्दस्य निरुक्तिमाह भोजः ।
"भगं परिसमन्ताद्यो गुदवस्ती तथैव च ।
भगवद्दारयेद्यस्मात्तस्मादेष भगन्दरः ॥"
भजन्त्यनेनेति भगं मेहनम् ।
भजन्त्यस्मिन्निति
भगं योनिः । अत्र भगशब्देन द्वयमपि
कथ्यते ।
भगवत् योनिवत् ॥ पूर्ब्बरूपादीनि यथा, --
"कटीकपालनिस्तोददाहकण्डूरुजादयः ।
भवन्ति पूर्ब्बरूपाणि भविष्यति भगन्दरे ॥"
कटीकपालमत्र कटीफलकम् ॥ वातिकं
शत-
पोनकसंज्ञं भगन्दरमाह ।
"कषायरूक्षैरतिकोपितोऽनिल-
स्त्वपानदेशे पिडकां करोति याम् ।
उपेक्षणात् पाकमुपैति दारुणं
रुजाञ्च भिन्नारुणफेनवाहिनीम् ॥
तत्रागमो मूत्रपुरीषरेतसां
ब्रणैरनेकैः शतपोनकं वदेत् ।
दारुणं अतिदारुणात् । व्रणैरनेकैः
सूक्ष्ममुखैः ।
शतपोनकश्चालनी तत्तुल्यम् ॥
पैत्तिकमुष्ट्रग्रीव-
संज्ञमाह ।
"प्रकोपणैः पित्तमतिप्रकोपितं
करोति रक्तां पिडकां गुदे गताम् ।
तदाशुपाकाहिमपूतिवाहिनीं
भगन्दरञ्चोष्ट्रशिरोधरं वदेत् ॥"
आशुपाकाहिमपूतिवाहिनीम् । शीघ्रपाकाम्
उष्मदुर्गन्धवाहिनीञ्च । तदा तं भगन्दरं
उष्ट्र-

"अथास्य पिडकामेव तथा यत्नादुपाचरेत्
।
शुद्ध्यस्रस्रुतिसेकाद्यैर्यथा पाकं न
गच्छति ॥
पुनर्नवामृताशुण्ठीपिष्टिकावदरैः कृतः ।
लेपाय पिडकावस्थे कल्कः शस्तो
भगन्दरे ॥
पयःपिष्टैस्तिलारिष्टमधुकैः शीतलैः कृतः
।
लेपो भगन्दरे शस्तः पैत्तिके वेदनावति
॥"
अरिष्टो निम्बः ॥
"सुमनायाश्च पत्राणि गुडूची विश्वभेषजम्
।
सैन्धवं तक्रसंपिष्टं लेपाद्धन्ति भगन्दरम्
॥"
सुमना जातिस्तस्याः पत्रम् ।
"पिडकानामपक्वानामपतर्पणपूर्ब्बकम् ।
कर्म्म कुर्य्याद्विरेकान्तं भिन्नानां व्रणवत्
क्रिया ॥
निशार्कक्षीरसिन्धूत्थपुराश्वहननच्छदैः ।
सिद्धमभ्यञ्जने तैलं भगन्दरहरं परम् ॥"
पुरो गुग्गुलुः । अश्वहननच्छदाः करवीर-
पत्राणि । निशादितैलम् ॥ * ॥
"त्रिफलापुरकृष्णानां त्रिपञ्चांशैकयोगिता ।
गुटिका शोथगुल्मार्शोभगन्दरवतांहिता
॥"
नववार्षिको गुग्गुलुः ॥ * ॥
"शस्त्रक्रियापि कथिता शस्त्रसाध्ये
भगन्दरे ।
सा च तेनैव कर्त्तव्या शस्त्रशास्त्रमवैति यः
॥
व्यायामं मैथुनं युद्धं पृष्ठयानं गुरूणि च ।
रूढव्रणेऽपि यत्नेन वर्जयेद्वत्सरं नरः ॥"
इति भावप्रकाशे भगन्दराधिकारः ॥

यावन्त्येतानि चूर्णानि तावद्विगुणगुग्गुलुः ।
कोलप्रमाणां गुटिकां खादयेन्मधुना सह ॥
भगन्दरं श्वासकासं क्षयं जीर्णज्वरोदरम् ।
नाडीदुष्टव्रणानाहकुष्ठोन्मादाश्मरीक्रमीन् ॥
मेहान्त्रवृद्धिहृद्रोगशूलं श्लीपदमेव च ।
सप्तविंशतिको हन्ति गुग्गुलुः सर्व्वरोगहा
॥"
हृद्रोगशूलमित्यत्र हृतपार्श्वशूलमित्यपि
पाठः ॥
सप्तविंशतिगुग्गुलुः ॥ * ॥
"चित्रकार्कौ त्रिवृत्पाठौ मलपूहयमारकौ ।
सुधां वचां लाङ्गलिकां हरितालं
सुवर्च्चलाम् ॥
ज्योतिष्मतीञ्च संहृत्य तैलं वैद्यो
विपाचयेत् ।
एतद्विस्यन्दनं नाम तैलमुक्तं भगन्दरे ॥
शोधनं रोपणञ्चैव सुवर्णकरणं स्मृतम् ।"
विष्यन्दनतैलम् ॥ * ॥
"सूतस्य द्विगुणेन शुद्धवलिना
कन्यापयोभि-
स्त्र्यहं
पिष्ट्वा ताम्रमयं समस्ततुलितं पात्रं
विधायोपरि ।
स्वेद्यं यामयुगं सभस्मपिठरे जम्बूजलैः
सप्तधा
सार्द्धं तत्पुटयेत् भगन्दरहरो गुञ्जोन्मिता
स्यादिति ॥"
जम्बूजलैरित्यत्र निम्बूजलैरिति च पाठः ।
भगन्दरहरो रसः ॥ * ॥
"शुद्धसूतं समं गन्धं मृतनागं सतुत्थकम् ।
जीरकं सैन्धवं तुल्यं तिक्तकोषातकीद्रवैः ॥

पिष्ट्वा तल्लेपनाद्धन्ति भक्षणाच्च भगन्दरम् ।
रसः कालाग्निरुद्रोऽयं गुञ्जैकं मृत्युजिद्भवेत् ॥”
कालाग्निरुद्रो रसः ॥ * ॥
इति सारदीपिकायां भगन्दरचिकित्साध्यायः ॥
अपि च । गारुडे १८८ अध्याये ।
“गुग्गुलुं त्रिफलायुक्तं पीत्वा नश्येत् भग-
न्दरः ॥”
(अस्य सकारणलक्षणचिकित्सितंयथा, --
क्रिम्यस्थि सूक्ष्मलक्षणनव्यवाय-
प्रवाहनान्युत्कटकाश्वपृष्ठैः ।
गुदस्य पाके पिडका भृशार्त्तिः
पक्वप्रभिन्ना तु भगन्दरः स्यात् ॥
विरेचनञ्चैषणपाटनञ्च
विशुद्धमार्गस्य च तैलदाहः ।
स्यात् क्षारमूत्रेण सुपाचितेन
छिन्नस्य चास्य व्रणवच्चिकित्सा ॥”
इति चरके चिकित्सास्थाने सप्तदशेऽध्याये ॥)

**भगभक्षकः**, पुं, (भगं योनिस्तामुपाश्रित्य भक्षयति जीविकां निर्व्वाहयतीति । भक्ष + ण्वुल् ।)
कुण्डाशी । इति महाभारते दानधर्म्मः ॥
कोट्ना इति भाषा ॥
तस्यान्नभक्षणनिषेधो यथा, --
“यो बान्धवैः परित्यक्तः
साधुभिर्ब्राह्मणैरपि ।
कुण्डाशी यश्च तस्यान्नं भुक्त्वा
चान्द्रायणञ्चरेत् ॥”
इति मार्कण्डेयपुराणे सदाचाराध्यायः ॥

**भगवती**, स्त्री, (भगः ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य
यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग
अपि च ।
“सेव्यते या सुरैः सर्व्वैस्ताञ्चैव भजते यतः ।
धातुर्भजेति सेवायां भगवत्येव सा स्मृता ॥”
इति देवीपुराणे ४५ अध्यायः ॥
तस्याः प्रतिमाविशेषस्य पूजने फलविशेषो यथा,
ब्रह्मोवाच ।
“शृणु तस्याः सुराध्यक्ष ! आराधनविधिं परम् ।
यथा सा तोषिता पूर्ब्बं शङ्कराद्यैः फलेप्सुभिः ॥
कर्म्मयज्ञेन देवेश ! तथा त्वमपि पूजय ।
शम्भुः पूजयते देवीं मन्त्रशक्तिमयीं शुभाम् ॥
अक्षमालाकरो नित्यं तेनासौ विबुधांवरः ।
अहं शैलमयीं देवीं यजामि सुरसत्तम ! ॥
तेन ब्रह्मत्वमेवेदं मया प्राप्तं सुदुर्लभम् ।
इन्द्रनीलमयीं देवीं विष्णुरर्च्चयते तदा ॥
विष्णुत्वं प्राप्तवांस्तेन अद्भुतैकं सनातनम् ।
देवीं हेममयीं कान्तां धनदोऽर्च्चयते सदा ॥
तेनासौ धनदो देवो धनेशत्वमवाप्तवान् ।
विश्वेदेवा महात्मानो रौप्यां देवीं मनोहराम् ।
यजन्ति विधिवद्भक्त्या तेन विश्वत्वमाप्नुयुः ॥
वायुः पूजयते भक्त्या देवीं पित्तलसम्भवाम् ।
वायुत्वं तेन तत् प्राप्तमनौपम्यं गुणावहम् ॥
ईश्वर उवाच ।
“देव्या गृहन्तु यः शुक्रकरार्पयति शोभनम् ।
सर्व्वोपकरणैर्युक्तं सकपाटार्गलान्वितम् ॥
तस्मिन् घण्टा ध्वजं छत्रं वितानं दर्पणानि च ।
दत्त्वा मुरजवंशादि नित्यं सङ्गीतकानि च ॥
देवीशास्त्रार्थवेत्तारं पूजनं भवने शुभम् ।
एवं प्रवर्त्तते यस्तु तस्य पुण्यफलं शृणु ॥
दशपूर्ब्बापरांस्तात ! आत्मनश्चैकविंशतिम् ।
उद्धृत्य च कुलं पापाद्ब्रह्मलोके महीयते ॥
गच्छते भगवती यत्र परा परमपूजिता ।
तत्र कल्पान्तरं यावद्भुक्त्वा भोगान् मनो-
रमान् ॥
पुनः कालादिहायातः पृथिव्यामेकराड्भवेत् ।
सभृत्यवाहनोपेतः शान्तः पुरपरिच्छदः ॥
पुनर्देव्या द्विजातीनां तद्भक्तानां प्रियो भवेत् ॥
कन्यासम्पूजको नित्यं देवीशास्त्रार्थपारगः ।
लभते परसद्भावं तदन्ते शिवतां व्रजेत् ॥
देव्या गृहन्तु यः शुक्र ! सम्मार्ज्जयति नित्यशः ।
स भवेद्बलवान् सौख्यसर्व्वसम्पत्तिसंयुतः ॥
तदागच्छेच्छिवालोकं सर्व्वकालफलप्रदम् ।
देव्या गृहन्तु यः शुक्र ! गोमयेनानुलेपयेत् ॥
स्त्रियो वा यदि वा पुंसः षण्मासन्तु निरन्त-
रम् ।
स लभेदीप्सितान् कामान् देव्या लोकञ्च गच्छति ॥”
इत्याद्ये देव्यवतारे ४२ अध्यायः ॥

**भगवद्भक्तः**, पुं, (भगवतो भगवत्या वा भक्तः ।)
श्रीकृष्णभक्तियुक्तः ॥ अथ भगवद्भक्तानां लक्ष-
णानि । सामान्यतः लैङ्गे ।
“विष्णुरेव हि यस्यैष देवता वैष्णवः स्मृतः ॥”
अत्र विशेषः ।
“व्रतकर्म्मशुभज्ञानभोगजन्मादिमत्स्वपि।
शैवेष्वपि च कृष्णस्य भक्ताः सन्ति तथा तथा ॥”
तत्र व्रतिषु मध्ये भगवद्भक्तिहेतुव्रतपरता भग-
वद्भक्तलक्षणम् । तथा च स्कान्दे श्रीमार्कण्डेय-
भगीरथसंवादे ।
“दशमीशेषसंयुक्तं दिनं वैष्णववल्लभम् ।
ह्युपास्यते महीपाल ! ते वै भागवता नराः ॥

इतीङ्गना ॥” इत्युक्तलक्षणम्
षडैश्वर्य्यमस्त्य-
स्येति । भग + “तदस्यास्त्यस्मिन्निति
मतुप् ।”
५ । २ । ९४ । इति मतुप् । मस्य वः ।
“भूमनिन्दाप्रशंसासु
नित्ययोगेऽतिशायने ।
संसर्गेऽस्ति विवक्षायां भवन्ति
मतुबादयः ॥”
इति काशिकोक्तेर्नित्ययोगेऽत्र
मतुप्प्रत्ययः ।
ततः स्त्रियां ङीप् ।) पूज्या । गौरी । इति
मेदिनी । ते, २१४ ॥ (सा च
प्रकृतिरूपिणी
महामाया देवी । यथा, मार्कण्डेये । ८१
। ४२ ।
“ज्ञानिनामपि चेतांसि देवी भगवती हि
सा ।
बलादाकृष्य मोहाय महामाया प्रयच्छति
॥”)
सरस्वती । यथाह पौराणिकाः ।
“सा मां पातु सरस्वती भगवती निःशेष-
जाड्यापहा ॥”
गङ्गा । यथा, शङ्कराचार्य्यकृतगङ्गास्तोत्रे
।
“भगवति ! भवलीलामौलिमाले
तवाम्भः-
कणमणुपरिमाणं प्राणिनो ये स्पृशन्ति
॥”
तस्याः स्वरूपं यथा, --
“यथा नित्यो हि भगवान् नित्या भगवती
तथा ।
स्वमायया तिरोभूता तत्रेशे प्राकृते लये
॥
आब्रह्मस्तम्बपर्य्यन्तं सर्व्वं मिथ्यैव
कृत्रिमम् ।
दुर्गा सत्यस्वरूपा सा प्रकृतिर्भगवान्
यथा ॥
सिद्ध्यैश्वर्य्यादिकं सर्व्वं यस्यामस्ति
युगे युगे ।
वसवः कांसिकां देवीं पूजयन्ते
विधानतः ।
प्राप्नुवन्तो महात्मानो वसुत्वं
सुमहोदयम् ॥
अश्विनौ पार्थिवां देवीं पूजयन्तौ
विधानतः ।
तेन तावश्विनौ देवौ दिव्यदेहं गतायुभौ
॥
स्फाटिकां शोभनां देवीं वरुणोऽर्च्चयते
सदा ।
वरुणत्वं हि संप्राप्तं तेन ऋद्ध्या
समन्वितम् ॥
देवीमन्नमयीं पुण्यामग्निर्यजति भावितः
।
अग्नित्वं प्राप्तवांस्तेन
तेजोरूपसमन्वितम् ॥
ताम्रां देवीं सदाकालं भक्त्या देवो
दिवाकरः ।
अर्च्चते तत्र संप्राप्तं तेन
सूर्य्यत्वमुत्तमम् ॥
मुक्ताशैलमयीं देवीं सोमः पूजयते सदा
।
तेन सोमोऽपि संप्राप्तः सोमत्वं
सततोज्ज्वलम् ॥
प्रबालकमयीं देवीं यजन्ते पन्नगोत्तमाः
।
तेन नागास्तु भोगाढ्याः प्रयान्त्येते परं
पदम् ॥
कृष्णायसमयीं देवीं
पूजयन्त्यसुरोत्तमाः ।
राक्षसाश्च महात्मानस्तेन
वेऽमितविक्रमाः ॥
त्रपुसीसमयीं देवीं पिशाचाः पूजयन्ति
ताम् ।
तेन ऋद्धिबलोपेताः प्रयान्ति परमं
पदम् ॥
त्रैलोहिकां सदा देवीं यजन्ते
गुह्यकादयः ।
तेन भोगबलोपेताः
प्रयान्तीश्वरमन्दिरम् ॥
प्राणात्यये न चाश्नन्ति दिनं प्राप्य हरेर्नराः ।
कुर्व्वन्ति जागरं रात्रौ सदा भागवता हि ते ॥
उपोष्य द्वादशीं शुद्धां रात्रौ जागरणान्विताम् ।
अल्पान्तु साधयेद्यस्तु स वै भागवतो नरः ॥
भक्तिर्न विच्युता येषां न च्युतानि व्रतानि च ।
सुप्रियः श्रीपतिर्येषां ते स्युर्भागवता नराः ॥”
कर्म्मिषु भगवदर्पणादिना तदाज्ञाबुद्ध्या वा
भक्तिहेतुसदाचारपरता तत्रैव ।
“धर्म्मार्थं जीवितं येषां सन्तानार्थञ्च मैथुनम् ।
पचनं विप्रमुख्यार्थं ज्ञेयास्ते वैष्णवा नराः ॥
अध्वगन्तु पथि श्रान्तं कालेऽत्र गृहमागतम् ।
योऽतिथिं पूजयेद्भक्त्या वैष्णवः स न संशयः ॥
सदाचाररताः शिष्टाः सर्व्वभूतानुकम्पकाः ।
शुचयस्त्यक्तरागा ये सदा भागवता हि ते ॥”

| | | |
|---|---|---|
| सिद्ध्यादिके भगो ज्ञेयस्तेन भगवती स्मृता ॥”<br>इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५४ अध्यायः ॥ | वज्रलौहमयीं देवीं यजन्ते मातरः सदा ।<br>मातृत्वं प्राप्य ताः सर्व्वाः प्रयान्ति परमं पदम् ॥<br>एवं देवाः सगन्धर्व्वाः पिशाचोरगराक्षसाः ।<br>पूजयन्ते सदाकालं चर्च्चिकां सुरनायिकाम् ॥<br>तथा त्वमपि देवेन्द्र ! यदीच्छसि परां गतिम् ।<br>शिवां मणिमयीं पूज्य लभसे मनसेप्सितान् ॥<br>कामान् सुरवराध्यक्ष ! कामिकैः पूजितैः सदा ।<br>ददाति सर्व्वलोकानां चिन्तामणिर्यथा शिवा ॥”<br>इत्याद्ये देव्यवतारे द्रव्यविधिपूजामाहात्म्ये ३८ अध्यायः ॥ तस्यै गृहदानस्य फलं यथा, -- | |

पाद्मे वैशाखमाहात्म्ये श्रीनारदाम्बरीषसंवादे
।
यथा, --
“जीवितं यस्य धर्म्मार्थे धर्म्मो हर्य्यर्थमेव च ।
अहोरात्राणि पुण्यार्थे तं मन्ये वैष्णवं जनम्
॥”
लैङ्गे च ।
“विष्णुभक्तिसमायुक्तान्
श्रौतस्मार्त्तप्रवर्त्तकान् ।
प्रीतो भवति यो दृष्ट्वा वैष्णवोऽसौ प्रकीर्त्तितः
॥”
गुणवत्सु
भक्तिहेतुकृपालुत्वादिसद्गुणशीलता
तत्रैव ।
“परदुःखेनात्मदुःखं मन्यन्ते ये नृपोत्तम ! ।
भगवद्धर्म्मनिरतास्ते नरा वैष्णवा नृप ! ॥”
भागवततृतीयस्कन्धे श्रीकपिलदेवहूतिसंवादे
।
यथा, --
“तितिक्षवः कारुणिकाः सुहृदः सर्व्वदेहिनाम्
।
अजातशत्रवः शान्ताः साधवः साधुभूषणाः
॥”
पञ्चमस्कन्धे ऋषभदेवस्य पुत्त्रानुशासने ।
यथा,
“महत्सेवां द्वारमाहुर्विमुक्ते-
स्तमोद्वारं योषितां सङ्गिसङ्गम् ।
महान्तस्ते समचित्ताः प्रशान्ता
विमन्यवः सुहृदः साधवो ये ॥”
एकादशस्कन्धे श्रीभगवत्प्रदत्तोद्धवप्रश्नोत्तरे
।
यथा, --
“कृपलुरक्त्वतद्रोहस्तितिक्षुः सर्व्वदेहिनाम् ।
सत्यसारोऽनवद्यात्मा समः सर्व्वोपकारकः ॥
कामाक्षुभितधीर्दान्तो मृदुः शुचिरकिञ्चनः ।
अनीहो मितभुक् शान्तः स्थिरो मच्छरणो
मुनिः ॥
अप्रमत्तो गभीरात्मा धृतिमान् जितषड्गुणः ।
अमानी मानदः कल्यो मैत्रः कारुणिकः
तत्रैव । यथा, --
“न यस्य जन्मकर्म्मभ्यां न
वर्णाश्रमजातिभिः ।
सज्जतेऽस्मिन्नहंभावो देहे वै स हरेः
प्रियः ॥
भावाः कथञ्चिद्भक्त्यैव
ज्ञानानासक्त्यमानिता ।
भक्तिनिष्ठापका जातास्ततो
ह्युत्तमतोदिता ॥”
निष्ठापकाः परिपाकं प्रापकाः ॥ * ॥
शैवषु श्रीशिवकृष्णाभेदकता
बृहन्नारदीये ।
“शिवे च परमेशाने विष्णौ च
परमात्मनि ।
समबुद्ध्या प्रवर्त्तन्ते ते वै
भागवतोत्तमाः ॥”
इति ॥ * ॥
“अन्यच्च तेषां
भगवच्छास्त्रार्थपरतादिकम् ।
साक्षाद्भक्त्यात्मकं मुख्यं लक्षणं
लिख्यतेऽधुना ॥”
श्रीभागवतशास्त्रपरतास्कान्दे ।
“येषां भागवतं शास्त्रं सदा तिष्ठति
सन्निधौ ।
पूजयन्ति च ये नित्यं ते स्युर्भागवता
नराः ॥
येषां भागवतं शास्त्रं जीवितादधिकं
भवेत् ।
महाभागवताः श्रेष्ठा विष्णुना कथिता
नराः ॥”
वैष्णवसम्माननिष्ठा लैङ्गे ।
“विष्णुभक्तमथायातं यो दृष्ट्वा
सुमुखप्रियः ।
प्रणामादि करोत्येव वासुदेवे यथा तथा
।
स वै भक्त इति ज्ञेयः स पुनाति
जगत्त्रयम् ॥
रूक्षाक्षरा गिरः शृण्वन् तथा
भागवतेरिताः ।
स्मरणपरता । तत्र स्वधर्म्मनिष्ठया
रागद्वेषादि-
निवृत्त्या स्मरणं श्रीविष्णुपुराणे
यमतद्भटसंवादे ।
“न चलति उच्चैः श्रीभगवत्पदार-
विन्दे सितमनास्तमवेहि विष्णुभक्तम् ।
कलिकलुषमलेन यस्य नात्मा
विमलमतेर्मलिनीकृतस्तमेनम् ।
मनसि कृतजनार्द्दनं मनुष्यं
सततमवेहि हरेरतीव भक्तम् ॥
कनकमपि रहस्यवेक्ष्य बुद्ध्या
तृणमिव यः समवैति वै परस्वम् ।
भवति च भगवत्यनन्यचेताः
पुरुषवरं तमवेहि विष्णुभक्तम् ॥
स्फटिकगिरिशिलामलः क्व विष्णु-
र्मनसि नृणां क्व च मत्सरादिदोषः ।
न हि तुहिनमयूखरश्मिपुञ्जे
भवति हुताशनदीप्तिजः प्रतापः ॥
विमलमतिरमत्सरः प्रशान्तः शुचि-
चरितोऽखिलसत्त्वमित्रभूतः ।
प्रियहितवचनोऽस्तमानमायो
वसति सदा हृदि तस्य वासुदेवः ॥
वसति हृदि सनातने च तस्मिन्
भवति पुमान् जगतोऽस्य सौन्यरूपः ।
क्षितिरसमतिरम्यमात्मनोऽन्तः
कथयति चारुतयैव शालपोतः ॥
अन्यविजयेन वैराग्यादिना च स्मरणं
श्रीहरि-
योगेश्वरोत्तरे ।
देहेन्द्रियप्राणमनोधियां यो
जन्माप्ययक्षुद्भयतर्षकृच्छ्रैः ।
संसारधर्म्मैरविमुह्यमानः
स्मृत्या हरेर्भागवतप्रधानः ॥
त्रिभुवनविभवहेतवेऽप्यकुण्ठ-
स्मृतिरजितात्मसुरादिभिर्व्विमृग्यात् ।
न चलति भगवत्पदारविन्दा-
ल्लवनिमिषार्द्धमपि स वैष्णवाग्र्यः ॥
भगवत उरुविक्रमाङ्घ्रिशाखा-
नखमणिचन्द्रिकया निरस्ततापे ।

कविः ॥”
विष्णुपुराणे यमतद्भटसंवादे । यथा, --
“न चलति निजवर्णधर्म्मतो यः
सममतिरात्मसुहृद्विपक्षपक्षे।
न हरति न चलति किञ्चिदुच्चैः
स्थिरमनसं तमवेहि विष्णुभक्तम् ॥” * ॥
ज्ञानिषु भक्तिहेतुज्ञानवत्ता एकादशे । यथा, --
“सर्व्वभूतेषु यः पश्येद्भगवद्भावमात्मनः ।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥
न यस्य स्वः पर इति वित्तेष्वात्मनि वा भिदा ।
सर्व्वभूतसमः शान्तः स वै भागवतोत्तमः ॥
ज्ञात्वाज्ञात्वाथ ये वै मां यावान् यश्चास्मि यादृशः ।
भजन्त्यनन्यभावेन ते मे भक्ततमा मताः ॥
ईश्वरे त्रदधीनेषु वालिशेषु द्विषत्सु च ।
प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः ॥
अर्च्चायामेव हरये पूजां यः श्रद्धयेहते ।
ग तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥”
भोगवत्सु भक्तिहेतुभोगानासक्तता हरियोगे-
श्वरोचरे । यथा, --
“गृहीत्वापीन्द्रियैरर्थान् यो न द्वेष्टि न काङ्क्षति ।
विष्णोर्म्मायामिदं पश्यन् स वै भागवतोत्तमः ॥”
सज्जमविद्यादिमत्सु भक्तिहेतुनिरभिमानिता प्रणामपूर्व्वं क्षन्त्वा यो वदेद्वै वैष्णवो हि सः ॥
भोजनाच्छादनं सर्व्वं यथाशक्त्या ददाति यः ।
विष्णुभक्तस्य सततं स वै भागवतः स्मृतः ॥
गारुडे ।
“येन सर्व्वात्मना विष्णुभक्त्या भावो निवेशितः ।
वैष्णवेषु कृतात्मत्वान्महाभागवतो हि सः ॥ * ॥
श्रीतुलसीसेवानिष्ठा बृहन्नारदीये श्रीभगवन्
माकण्डेयसंवादे ।
“तुलसीकाननं दृष्ट्वा ये नमस्कुर्व्वते नराः ।
तत्काष्ठाङ्कितकर्णा ये ते वै भागवतोत्तमाः ॥
तुलसीगन्धमाघ्राय सन्तोषं कुर्व्वते तु ये ।
तन्मूलमुद्धृतं यैश्च ते वै भागवतोत्तमाः ॥” * ॥
श्रीभगवतः कथापरता बृहन्नारदीये श्रीभगवन्-
मार्कण्डेयसंवादे ।
“मत्कथाश्रवणे येषां वर्त्तते सात्त्विकी मतिः ।
तद्भक्तरि सुभक्ताश्च ते वै भागवतोत्तमाः ॥”
स्कान्दे श्रीभगवदर्ज्जुनसंवादे ।
“मत्कथां कुरुते यस्तु मत्कथाञ्च शृणोति यः ।
हृष्यते मत्कथायाञ्च स वै भागवतोत्तमः ॥”
तृतीयस्कन्धे तत्रैव ।
“मदाश्रयाः कथा मृष्टाः शृण्वन्ति कथयन्ति च ।
तपन्ति विविधास्तापा नैतान्मद्गतचेतसः ॥” * ॥
नामपरता बृहन्नारदीये तत्रैव ।
हृदि कथमुपसीदतां पुनः स
प्रभवति चन्द्रे इवोदितेऽर्कतापः ॥”
पूजापरता स्कान्दे तत्रैव ।
“येऽर्च्चयन्ति सदा विष्णुं यज्ञेशं वरदं हरिम् ।
देहिनः पुण्यकर्म्माणः सदा भागवता हि ते ॥”
लैङ्गे ।
“विष्णुक्षेत्रे शुभान्येव करोति स्नेहसंयुतः ।
प्रतिमाञ्च हरेर्नित्यं पूजयेत् प्रयतात्मवान् ॥
विष्णुभक्तः स विज्ञेयः कर्म्मणा मनसा गिरा ।
नारायणपरो नित्यं भूप ! भागवतो हि सः ॥”
वैष्णवधर्म्मनिष्ठतादि पाद्मोत्तरखण्डे ।
“तापादिपञ्चसंस्कारी नवेज्याकर्म्मकारकः ।
अर्थपञ्चकविद्विप्रो महाभागवतो हि सः ॥”
तापः तप्तमुद्राधारणं
तदादिपच्चसंस्कारयुक्तः ।
पञ्चसंस्काराश्च तत्रैवक्ताः ।
“तापः पुण्डस्तथा नाम मन्त्रो यागस्तु
पश्चमः ॥” इति ॥

| | | |
|---|---|---|
| | मल्मानसाश्च मद्भक्ता<br>मद्भक्तजनलोलुपाः ।<br>मन्नामश्रवणासक्तास्ते वै भागवतोत्तमाः<br>॥<br>येऽभिनन्दन्ति नामानि हरेः शृण्वन्ति<br>हर्षिताः ।<br>रोमाञ्चितशरीराश्च ते वै भागवतोत्तमाः<br>॥”<br>तत्रैवान्यत्र ।<br>“अन्येषामुदयं दृष्ट्वा येऽभिनन्दन्ति<br>मानवाः ।<br>हरिनामपरा ये च ते वै भागवतोत्तमाः<br>॥” | |

अस्यार्थः । नाम श्रीकृष्णदासेत्यादि ।
मन्त्रः
श्रीगुरोः सकाशात् मन्त्रग्रहणम् । यागः
होम-
पूर्ब्बकय थाविधिदीक्षाग्रहणमित्यर्थः । नव
इज्या-
कर्म्माणि पूजासम्बन्धिकृत्यानि
श्रवणादीनि
पाद्मोक्तार्च्चनादीनि वा सर्व्वेषां तेषां
पूजाङ्ग-
त्वात् । तानि च तत्रैवोक्तानि । यथा, --
“अर्च्चनं मन्त्रपठनं यागयोगौ महात्मनः ।
नामसङ्कीर्त्तनं सेवा तच्चिह्नैरङ्कनं तथा ।
तदीयाराधनं चर्य्या नवधा भिद्यते शुभे !
॥”
अर्थपञ्चकं चत्वारो चत्वारो धर्म्मादयः
पुरु-
षार्थाः पञ्चमपुरुषार्थश्च भक्तिः । यद्वा
पञ्च-
तत्त्वानि
अनात्मात्मपरमात्मपरमेश्वरतद्भक्तानां
याथार्थ्यानि । इति तट्टीका ॥ * ॥
एकान्तिता गारुडे ।
“एकान्तेन सदा विष्णौ यस्माद्देवे
परायणाः ।
तस्मादेकान्तिनः प्रोक्तास्तद्भागवतचेतसः
॥”
तद्विज्ञानेनानन्यपरता एकादशे
उद्धवप्रश्नोत्तरे ।
“ज्ञात्वाज्ञात्वाथ ये वै मां यावान्
यश्चास्मि
यादृशः ।
भजन्त्यनन्यभावेन ते वै भागवता मताः
॥”
भागवते । ११ । ३ । ५० ।
“न कामकर्म्मबीजानां यस्य चेतसि
सम्भवः ।
वासुदेवैकनिलयः स वै भागवतोत्तमः ॥”
सा च एकान्तिता चतुर्द्धा । तत्र धर्म्मानाद-
राति मित्रं धनं वा ।
“त्रिधा प्रेमैकपरता प्रेम्नः
स्यात्तारतम्यतः ।
उत्तमा मध्यमा चासौ कनिष्ठा चेति
भेदतः ॥”
तत्रोत्तमा यथा एकादशे हरियोगेश्वरोत्तरे
।
“सर्व्वभूतेषु यः पश्येद्भगवद्भावमात्मनः ।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥
स्वेष्टदेवस्य भावं यः सर्व्वभूतेषु पश्यति ।
भावयन्ति च तान्यस्मिन्नित्यर्थः सम्मतः
सताम् ॥”
तृतीये श्रीकपिलदेवहूतिसंवादे ।
“मय्यनन्येन भावेन भक्तिं कुर्व्वन्ति ये
दृढाम् ।
मत्कृते
त्यक्तकर्म्माणस्त्यक्तस्वजनबान्धवाः॥”
एकादशे श्रीहरियोगेश्वरोत्तरे च ।
“विसृजति हृदयं न यस्य साक्षा-
द्धरिरवशाभिहितोऽप्यघौघनाशः।
प्रणयरसनया धृताङ्घ्रिपद्मः
स भवति भागघतप्रधान उक्तः ॥”
तत्रैव मध्यममाह हरियोगेश्वरोक्तावेव ।
“ईश्वरे तदधीनेषु वालिशेषु द्विषत्सु च ।
प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः
॥”
कनिष्ठता तत्रैव ।
“अर्च्चायामेव हरये पूजां यः श्रद्धयेहते ।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः
स्मृतः ॥
श्रद्धया पूजनं प्रेमबोधकं भक्त इत्यपि ।
प्रेम्णो हि करणात्तत्तु स्वलं
भक्तानपेक्षणात् ॥
लक्षणानि च यान्यग्रे भक्तेर्लेख्यानि
तान्यपि ।
बन्दनादीनि विद्यन्ते येषु भागवता हि ते
॥
एतानि लक्षणानीत्थं गौणमुख्यादिभेदतः
।
व्याप्यव्याप्तं यतः सर्व्वं तं वै पश्यन्ति सूरयः
॥
तद्ब्रह्म तत् परं धाम तद्ध्येयं मोक्षकाङ्क्षिणा
।
श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम्
।
तदेव भगवद्वाच्यं स्वरूपं परमात्मनः ॥
वाचको भगवच्छब्दस्तस्याद्यस्याक्षरात्मनः
।
एवं निगदितार्थस्य स तत्त्वं तस्य तत्त्वतः ॥
ज्ञायते येन तज्ज्ञाने परमन्यत्त्रयीमयम् ॥
अशब्दगोचरस्यापि तस्यैव ब्रह्मणो द्विज ! ।
पूजायां भगवच्छब्दः क्रियते ह्यौपचारिकः ।
शुद्धे महाविभूत्याख्ये परे ब्रह्मणि वर्त्तते ।
मैत्रेय ! भगवच्छब्दः सर्व्वकारणकारणे ॥
संभर्त्तेति तथा भर्त्ता भकारोऽर्थद्वयान्वितः ।
तेनागमयिता स्रष्टा गकारार्थस्तथा मुने ! ॥
ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य थशसः
श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना ॥
वसन्ति यत्र भूतानि भूतात्मन्यखिलात्मनि।
स च भूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः ॥
एवमेव महाबाहो ! भगवानिति सत्तम ! ।
परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ॥
तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः।
शब्दोऽयं नोपचारेण अन्यत्र ह्युपचारतः ॥
उत्पत्तिं प्रलयञ्चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति
॥
ज्ञानशक्तिबलैश्वर्य्यवीर्य्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः
॥”
इति विष्णुपुराणे ६ अंशे ५ अध्यायः ॥
अपि च ।
“परमात्मा च भगवान् विष्वक्सेनो जनार्द्दनः
।
तद्भक्तिमान् भागवतो नाल्पपुण्यैर्हि जायते ॥
भगवच्छासनालम्बी भगवच्छासनप्रियः ।
भगवद्भक्तिमास्थाय वत्स ! भागवतो भव ॥

रेण श्रीमदुद्धवप्रश्नोत्तर एव ।
“अज्ञायैवं गुणान् दोषान् मयादिष्टानपि स्वकान् ।
धर्म्मान् सन्त्यज्य यः सर्व्वान् मां भजेत् स च
सत्तमः ॥
गीतायाञ्च ।
सर्व्वधर्म्मान् परित्यज्य मामेकं शरणं व्रज
।
अहं त्वां सर्व्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥
यदा यस्यानुगृह्णाति भगवानात्मभावितः ।
स जहाति मतिं लोके वेदे च परिनिष्ठताम्
॥”
अन्यसर्व्वनिरपेक्षता भागवते
श्रीमद्भगवदुद्धव-
संवादे ऐलोपाख्याने ।
“सन्तोऽनपेक्षा मच्चित्ताः प्रशान्ताः समदर्शिनः ।
निर्म्ममा निरहङ्कारा निर्द्वन्द्वा निष्परिग्रहाः
॥”
तत्रैव तृतीये श्रीकपिलदेवहूतिसंवादे ।
“त एते साधवः साध्वि !
सर्व्वसङ्गविवर्ज्जिताः ।
सङ्गस्तेष्वथ ते प्रार्थ्यः सङ्गदोषहरा हि ते
॥”
विघ्नाकुलत्वेऽपि मनोरतिपरता स्कान्दे ।
“यस्य कृच्छ्रगतस्यापि केशवे रमते मनः ।
न विच्युता च भक्तिर्वै स वै भागवतो नरः
॥
आपद्गतस्य यस्येह भक्तिरव्यभिचारिणी
।
नान्यत्र रमते चित्तं स वै भागवतो नरः ॥”
प्रेमैकपरता च भागवते पञ्चमस्कन्धे
श्रीऋषभ-
देवस्य पुत्त्रानुशासने ।
“ये वा मयीश कृतसौहृदार्था
जनेषु देहम्भरवार्त्तिकेषु ।
गृहेषु जायात्मजरातिमत्सु
न प्रीतियुक्ता यावदर्थाश्च लोके ॥”
ऊह्यानि लक्षणान्येवं विवेच्यानि
पराण्यपि ॥
ईदृग्लक्षणवन्तः स्युर्दुर्लभा बहवो जनाः ।
दिव्या हि मणयो व्यक्तं न वर्त्तन्ते
इतस्ततः ॥”
अतएवोक्तं मोक्षधर्म्मे नारदीये ।
जायमानं हि पुरुषं यं पश्येत्मधुसूदनः ।
सात्त्विकः स तु विज्ञेयो
भवेन्मोक्षार्थनिश्चयः ॥”
इति श्रीहरिभक्तिविलासे १० विलासः ॥

**भगवान्,** [त्] (भगः “ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य
यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग
इतीङ्गना ॥” इत्युक्तलक्षणं
षडैश्वर्य्यमस्त्यस्येति ।
भग + नित्ययोगे मतुप् मस्य वः ।) पुं
बुद्धः ।
इत्यमरः । १ । १ । १३ ॥ श्रीकृष्णः ।
यथा, --
“भगवानपि ता रात्रीः
शारदोत्फुल्लमल्लिकाः ।
वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रितः
॥”
इति श्रीभागवते १० स्कन्धे २९
अध्यायः ॥
पूज्ये त्रि । इति मेदिनी ॥ भगवत्स्वरूपं
यथा,
“मनुरप्याह वेदार्थं स्मृत्वा
यन्मुनिसत्तम ! ।
तदेतत् श्रूयतामत्र संबन्धे गदतो मम ॥
द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परञ्च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति
॥
द्वे विद्ये वेदितव्ये वै इति चाथर्व्वणी श्रुतिः
।
परया त्वक्षरप्राप्तिरृग्वेदादिमयापरा ॥
यत्तदव्यक्तमजरमचिन्त्यमजमव्ययम्।
अनिर्द्देश्यमरूपञ्च पाणिपादाद्यसंयुतम् ॥
विभुं सर्व्वगतं नित्यं भूतयोनिमकारणम्।
भगवान् भूतभव्येशो भूतादिप्रभवोऽव्ययः।
भावेन तं भजस्वेशं भवभङ्गकरं हरिम् ॥
भजस्व भावेन विभुं भगवन्तं भवेश्वरम् ।
ततो भागवतो भूत्वा भवबन्धात् प्रमोक्ष्यसि
॥”
इत्याद्ये वह्निपुराणे वैष्णवक्रियायोगे यमानु-
शासनो नामाध्यायः ॥ अन्यच्च ।
“महतां क्षुद्रजन्तूनां सर्व्वेषां जीविनां सदा ।
स्रष्टा पाता च शास्ता च भगवान्
करुणानिधिः ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे २५
अध्यायः ॥
षडैश्वर्य्यान्वितः । स च परमेश्वरः ।
तन्नाम-
विशेषस्य सेवनं यथा, --
“अथ श्रीभगवन्नाम सदा सेवेत सर्व्वतः ।
तन्माहात्म्यञ्च विख्यातं सङ्क्षेपेणात्र लिख्यते
॥
अथ श्रीभगवन्नामविशेषस्य च सेवनम् ।
ऋषिभिः कृपयादिष्टं तत्तत्कामहतात्मनाम्
॥”
अथकामविशेषेण
श्रीभगवन्नामविशेषसेवामाहा-
त्म्यम् । तत्र पापक्षयार्थं कौर्म्मे । यथा, --
“श्रीशब्दपूर्व्वं जयशब्दपूर्व्वं
जयद्वयादुत्तरतस्तथा हि ।
त्रिः सप्तकृत्वो नरसिंहनाम
जप्तं निहन्यादपि विप्रहत्याम् ॥”

महाभयनिवारणार्थं तत्रैव ।
“श्रीपूर्ब्बो नरसिंहो द्विर्ज्जयादुत्तरतस्तु सः ।
त्रिःसप्तकृत्वो जप्तस्तु महाभयनिवारणः ॥”
कालविशेषे तु मङ्गलार्थं बिष्णुधर्म्मोत्तरे श्रीमार्कण्डेयवज्रसंवादे ।
“पुरुषं वामदेवञ्च तथा सङ्कर्षणं विभुम् ।
प्रद्युम्नमनिरुद्धञ्च क्रमादब्देषु कीर्त्तयेत् ॥”
अब्दषु संवत्सरादिषु पञ्चसु ॥
“वलभद्रं तथा कृष्णं कीर्त्तयेदयनद्वये ।
माधवं पुण्डरीकाक्षं तथा वै भोगशायिनम् ॥
पद्मनाभं हृषीकेशं तथा देवं त्रिविक्रमम् ।
क्रमेण राजशार्द्दूल ! वसन्तादिषु कीर्त्तयेत् ॥
विष्णुञ्च मधुहन्तारं तथा देवं त्रिविक्रमम् ।
वामनं श्रीधरञ्चैव हृषीकेशं तथैव च ॥
दामोदरं पद्मनाभं केशवञ्च यदूत्तमम् ।
नारायणं माधवञ्च गोविन्दञ्च तथा क्रमात् ॥
चेत्रादिषु च मासेषु देवदेवमनुस्मरेत् ।
प्रद्युम्नमनिरुद्धञ्च पक्षयोः कृष्णशुक्लयोः ॥
सर्व्वः शर्व्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः ।
आदित्यादिषु वारेषु क्रमादेवमनुस्मरेत् ॥
विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ।
भूतभृद् भूतकृद् भावो भूतात्मा भूतभावनः ॥
अव्यक्तः पुण्डरीकाक्षो विश्वकर्म्मा शुचिश्रवाः ।
सम्भवो भावनो भर्त्ता प्रभवः प्रभुरीश्वरः ॥
अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ।
अग्राह्यः शाश्वतो धाता कृष्णश्चैतान्यनुस्मरेत् ॥
नारायणं सर्व्वकालं क्षुतप्रस्खलनादिषु ।
ग्रहनक्षत्रपीडासु देववाधासु सर्व्वतः ॥
दस्युवैरिनिषेधेषु व्याघ्रसिंहादिसङ्कटे ।
अन्धकारे तमस्तीव्रे नरसिंहमनुस्मरेत् ॥
अग्निदाहे समुत्पन्ने संस्मरेज्जलशायिनम् ।
गरुडध्वजानुस्मरणाद्विषवीर्य्यव्यपोहति ॥
स्नाने देवार्च्चने होमे प्रणिपाते प्रदक्षिणे ।
कीर्त्तयेद्भगवन्नाम वासुदेवेति तत्परः ॥
स्थापने वित्तधान्यादेरपध्याने च दुष्टजे ।
कुर्व्वीत तन्मना भूत्वा अनन्ताच्युतकीर्त्तनम् ॥
नारायणं शार्ङ्गधरं श्रीधरं पुरुषोत्तमम् ।
वामनं खड्गिनञ्चैव दुष्टस्वप्ने सदा स्मरेत् ॥
महार्णवादौ पर्य्यङ्कशायिनञ्च नरः स्मरेत् ।
बलभद्रं समृद्ध्यर्थं सर्व्वकर्म्मणि संस्मरेत् ॥
जगत्पतिमपत्यार्थं स्तुवन् भक्त्या न सीदति ।
श्रीशं सर्व्वाभ्युदयिके कर्म्मण्याशु प्रकीर्त्तयेत् ॥
अरिष्टेषु ह्यशेषेषु विशोकञ्च सदा जपेत् ।
मरुत्प्रपाताग्निजलबन्धनादिषुमृत्युषु ॥
स्वतन्त्रपरतन्त्रेषु वासुदेवं जपेद्बुधः ।
सर्व्वार्थशक्तियुक्तस्य देवदेवस्य चक्रिणः ॥
यथाभिरोचते नाम तत् सर्व्वार्थेषु कीर्त्तयेत् ।
सर्व्वार्थसिद्धिमाप्नोति नाम्नामेकार्थता यतः ॥
सर्व्वाण्येतानि नामानि परस्य ब्रह्मणो हरेः ॥”
एवं विष्णुधर्म्मोत्तरे च मार्कण्डेयवज्रसंवादे ॥
किञ्च ।
“कूर्म्मं वराहं मत्स्यं वा जलप्रतरणे स्मरेत् ।
भ्राजिष्णुमग्निजनने जपेन्नाम त्वखण्डितम् ॥
गरुडध्वजानुस्मरणादापदोमुच्यते नरः ।
ज्वरजुष्टशिरोरोगविषवीर्य्यञ्च शाम्यति ॥
बलभद्रन्तु युद्धार्थी कृष्यारम्भे हलायुधम् ।
उत्तारणं बाणिज्यार्थी राममभ्युदये नृप ! ॥
माङ्गल्यं मङ्गलं विष्णुं माङ्गल्येषु च कीर्त्तयेत् ।
भगवद्वशीकारित्वम् । यथा, महाभारते भग-
वद्वाक्यम् ।
“ऋणमेतत् प्रवृद्धं मे हृदयान्नापसर्पति ।
यद्गोविन्देति चुक्रोश कृष्णे ! मां दूरवासिनम् ॥”
आदिपुराणे श्रीकृष्णार्ज्जुनसंवादे ।
“गीत्वा तु मम नामानि नर्त्तयेन्मम सन्निधौ ।
इदं ब्रवीमि ते सत्यं क्रीतोऽहं तेन चार्ज्जुन ! ॥
गीत्वा च मम नामानि रुदन्ति मम सन्निधौ ।
तेषामहं परिक्रीतो नान्यक्रीतो जनार्द्दनः ॥”
एवं श्रुत्वा च मम नामानीत्यादि ॥
विष्णुधर्म्मे प्रह्लादेन ।
“जितं तेन जितं तेन जितं तेनेति निश्चितम् ।
जिह्वाग्रे वर्त्तते यस्य हरिरित्यक्षरद्वयम् ॥”
इति तत्रैव ११ विलासः ॥
भगवत्सान्निध्यलक्षणानियथा । हयशीर्षे ।
“तस्मिन्नेव मुहूर्त्ते तु हर्षो वा भयमेव च ।
चक्षुर्भ्रमो विभ्रमो वा त्रासो वा जायते यदि ॥
व्यामोहः परमोहो वा स्तनितं परमं तथा ।
अशुतानां श्रुतिर्वा स्यात् गात्राणां वाथ वेपथुः ॥”
व्यामोहो मौढ्यविशेषः । परमोहो मूर्च्छा ।
“वैराग्यं नेत्रयोर्वा स्याद्दर्पः कन्दर्प एव वा ।
परमो विस्मयो वाथ दिव्यो वा श्रूयते ध्वनिः ॥
दिव्यवादित्रघोषो वा गन्धर्व्वनगरस्य वा ।
दर्शनं जायते काले तस्मिन् सुरगणार्च्चितम् ॥

देवदेवस्य नामानि कृत्तिकादिषु यादव ! ।
ब्रह्माणं श्रीपतिं विष्णुं कपिलं श्रीधरं प्रभुम् ॥
दामोदरं हृषीकेशं गोविन्दं मधुसूदनम् ।
भूधरं गदिनं देवं शङ्खिनं पद्मिनं तथा ॥
चक्रिणञ्च महाराज ! प्रथमादिषु संस्मरेत् ॥”
प्रथमादिषु प्रतिपदादिषु ।
“सर्व्वं वा सर्व्वदा नाम देवदेवस्य यादव ! ॥
नामानि सर्व्वाणि जनार्द्दनस्य
कालश्च सर्व्वः पुरुषप्रवीरः ।
तस्मात् सदा सर्व्वगतस्य नाम
ग्राह्यं यथेष्टं वरदस्य राजन् ! ॥”
विविधकामसिद्धये च पुलस्त्योक्तौ ।
“कामः कामप्रदः कान्तः कामपालस्तथा हरिः ।
आनन्दो माधवश्चैव कामसंसिद्धये जपेत् ॥
रामः परशुरामश्च नृसिंहो विष्णुरेव च ।
विक्रमश्चैवमादीनि जप्यान्यरिजिगीषुभिः ॥
विद्यामभ्यस्यता नित्यं जप्तव्यः पुरुषोत्तमः ।
दामोदरं बन्धगतो नित्यमेव जपेन्नरः ॥
केशवं पुण्डरीकाक्षमनिशं हि तथा जपेत् ।
तेत्रबाधासु सर्व्वासु हृषीकेशं भयेषु च ॥
अप्युतञ्चामृतञ्चैव जपेदौषधकर्म्मणि ।
संग्रामाभिमुखो गच्छन् संस्मरेद पराजितम् ॥
चक्रिणं गदिनञ्चैव शार्ङ्गिणं खड्गिनं तथा ।
क्षेमार्थी प्रवसन्नित्यं दिक्षु प्राच्यादिषु स्मरेत् ॥
अजितञ्चाधिपञ्चैव सर्व्वं सर्व्वेश्वरं तथा ।
संस्मरेत् पुरुषो भक्त्या व्यवहारेषु सर्व्वदा ।
उत्तिष्ठन् कीर्त्तयेद्विष्णुं प्रस्वपन् माधवं नरः ॥
भोजने चैव गोविन्दं सर्व्वत्र मधुसूदनम् ॥”
तत्रैवान्यत्र ।
“औषधे चिन्तयेद्विष्णुं भोजने च जनार्द्दनम् ।
शयने पद्मनाभञ्च मैथुने च प्रजापतिम् ॥
संग्रामे चक्रिणं क्रुद्धं स्थानभ्रंशे त्रिविक्रमम् ।
नारायणं विषोत्सर्गे श्रीधरं प्रियसङ्गमे ॥
जलमध्ये वराहञ्च पावके जलशायिनम् ।
कानने नरसिंहञ्च पर्व्वते रघुनन्दनम् ॥
दुःस्वप्ने स्मर गोविन्दं विशुद्धौ मधुसूदनम् ।
मायासु वामनं देवं सर्व्वकार्य्येषु माधवम् ॥”
किञ्च ।
“कीर्त्तयेद्वासुदेवञ्च अनुक्तेष्वपि यादव ! ।
कार्य्यारम्भे तथा राजन् ! यथेष्टं नाम कीर्त्त-येत् ॥
सर्व्वाणि नामानि हि तस्य राजन् !
सर्व्वार्थसिद्धौ तु भवन्ति पुंसः ।
तस्माद्यथेष्टं खलु कृष्णनाम
सर्व्वेषु कार्य्येषु जपेत भक्त्या ॥”
इति श्रीहरिभक्तिविलासे ११ विलासः ॥
नरा नार्य्योऽथ दृश्यन्ते गायन्तोऽप्यथ हर्षिताः ।
नन्दितूर्य्यरवो वापि श्रूयते छन्दसां ध्वनिः ॥
दिव्यगन्धा रसा वापि एकस्यापि भवन्ति हि ।
लिङ्गैरेतैर्विजानीयात् तत्र सन्निहितं हरिम् ॥
प्रभा चैव विशेषेण ज्वलतीव च दृश्यते ।
स्फुरन्तीव च दृश्येत प्रतिमा च विशेषतः ॥
स्फुरन्निव जनः कश्चित् स्मयमान इव क्वचित् ।
वीक्ष्यमाणो जनस्तत्र प्रहृष्ट इव लक्ष्यते ॥
एतैस्तु लक्षणैर्ज्ञेयस्तत्र सन्निहितो हरिः ।
विशेषादथवा पश्येच्छक्रचापोपमं क्वचित् ॥
छविं वज्रप्रभां पश्येत् पद्मरागप्रभां यथा ।
सौदामिनीप्रभां पश्येत् प्रतिमायां क्वचिद्यदि ॥
एतैर्लिङ्गैस्तु बोद्धव्यस्तत्र सन्निहितो हरिः ।
बधिरा इव केचित्तु मूका इव तथापरे ।
विभ्रान्ता इव केचिच्च जडा इव तथापरे ॥
धावन्त इव केचित्तु पतन्त इव चापरे ।
नृत्यन्त इव चाप्यन्ये मत्ता इव तथा यदि ।
चित्रस्था इव केचित्तु विवशा इव केचन ।
भवन्ति तत्र चोन्मत्ताः प्रमत्ता इव चापरे ।
लिङ्गैरेतैस्तु बोद्धव्यस्तत्र सन्निहितो हरिः ॥”
इति श्रीहरिभक्तिविलासे ३९ विलासः ॥
(शिवः । यथा, महाभारते । १३ । १७ । १२७ ।
“निवेदनः सुखाजातः सुगन्धारो महाधनुः ।
गन्धपाली च भगवान् उत्थानः सर्व्व-कर्म्मणाम् ॥”)

**भगालं**, क्ली, (भजति मुखदुःखादिकं कर्म्मजन्यमने-

क्वणिभ्यां कालनिति ।” उणा० ३ ।
७६ । बाहुलकाद्
भजेरपीति उज्ज्वलदत्तः इति कालन् ।
नङ्क्वादित्वात्
कुत्वञ्च ।) नृकरोटिः । यथा । भगालं
नरमस्तकम् ।
इति कश्चित् जटाधरः ॥ भगस्य
महादेवस्य
अलं भूषणमितिव्युत्पत्तिः ॥

**भगाली**, [न्] पुं, (भगालं नृकपालं भूषणत्वेना-
स्त्यस्येति इनिः ।) शिवः । इति
त्रिकाण्डशेषः ॥
(चण्डीकान्तो भगाली च । इति
उज्ज्वलदत्तधृतो
राजशेखरश्च ।)

**भगिनी**, स्त्री, सहोदरा । तत्पर्य्यायः । स्वसा २ ।
इत्यमरः । २ । ६ । २९ ॥ भगं यत्नः
पित्रादितो द्रव्यदाने
विद्यतेऽस्या इति इनिप्रत्ययेन भगिनी
। इति
तट्टीकायां भरतः ॥ (भगं योनिरस्या
अस्तीति ।
भग + इनिः ङीप् ।) स्त्रीमात्रम् । यथा,
--
“परिगृह्या च षामाङ्गी भगिनी
प्रकृतिर्नरी ॥”
इति शब्दचन्द्रिका ॥

**भगिनीपतिः**, पुं, (भगिन्याः पतिः ।) स्वसृभर्त्ता ।
तत्पर्य्यायः । आवुत्रः २ भामः ३ ।
यथा, --
“भगिनीपतिरावुत्तो भावो
विद्वानथावुकः ॥”
इति नाट्योक्तावमरः । १ । ७ । १२
॥
“अहो भगिन्यहो भाम ! मया वां वत
पाप्मना ।

अथान्यत्तत्प्रमाणमेव वृत्तं कृत्वा तत्र
मेषादीन् प्रकल्प्य द्वादशराशयोऽङ्क्याः ॥”
तत्क्रान्तिवृत्तसंज्ञम् । तस्मिन् वृत्ते
रविर्भ्रमति
तथा रवेर्भार्द्धान्तरे भूभा च । तथा तत्र
क्रान्तिपातो मेषादिर्विलोमं भ्रमति । तथा
ग्रहाणां विक्षेपपाताः प्रस्फुटा विलोमं
भ्रमन्ति ।
अतः क्रान्तिपातादीनि स्थानानि
तत्राङ्क्यानि ॥
इदानीं क्रान्तिवृत्तनिवेशमाह ।
“क्रान्तिपाते च पाताद्भषट्कान्तरे
नाडिकावृत्तलग्नं विदध्यादिदम् ।
पाततः प्राक् त्रिभे सिद्धभागैरुदग्
दक्षिणे तैश्च भागैर्विभागेऽपरे ॥”
क्रान्तिपातचिह्नात् षड्भेऽन्तरेऽन्यच्चिह्नं
कार्य्यम् ।
ते चिह्ने नाडीवृत्तेन संसक्ते कृत्वा पातचिह्ना-
दग्रतः त्रिभेऽन्तरे नाडीवृत्ताद्भागचतुर्विंशत्या
उत्तरतो यथा भवति । अपरभागे त्रिभेऽन्तरे
दक्षिणतश्च तैर्मार्गैर्यथा भवति तथा बध्नी-
यात् ॥ * ॥ इदानीं विमण्डलमाह ।
“नाडिकामण्डले क्रान्तिवृत्तं यथा
क्रान्तिवृत्ते तथा क्षेपवृत्तं न्यसेत् ।
क्षेपवृत्तन्तु राश्यङ्कितं तत्र च
क्षेपपातेषु चिह्नानि कृत्तोक्तषत् ॥
क्रान्तिवृत्तस्य विक्षेपवृत्तस्य च
क्षेपपाते सषड्भे च कृत्वा युतिम् ।
क्षेपपाताग्रतः पृष्ठतश्च त्रिभे
क्षेपभागैः स्फुटैः सौम्ययाम्ये न्यसेत् ॥
शीघ्रकर्णेन भक्तास्त्रिभज्या गुणाः
स्युः परक्षेपभागा ग्रहाणां स्फुटाः ।
क्षेपवृत्तानि षण्णां विदध्यात् पृथक्
स्वस्ववृत्ते भ्रमन्तीन्दुपूर्ब्बा ग्रहाः ॥”
अस्य श्लोकस्य समग्रस्य व्याख्यानम् ।
यथा
क्रान्तिवृत्तं पृथक् कृतं एवं विमण्डलमपि
राश्यङ्कं पृथक् पृथक् कृत्वा तत्र
मेषादेर्व्यस्तं

अथ विमण्डले च यद्ग्रहस्थानं तस्य क्रान्ति-
वृत्तात् यत्तिर्य्यगन्तरं स विक्षेपः । अथ विम-
ण्डलस्थग्रहस्य नाडीवृत्ताद्यत्तिर्य्यगन्तरं सा
स्फु टा क्रान्तिः ॥ * ॥ इदानीं
क्रान्तिपातमाह ।
विषुवत्क्रान्तिवलययोः संपातः क्रान्तिपातः
स्यात् । तद्भगणाः सौरोक्ता व्यस्ता अयुतत्रयं
कल्पे ॥ अयनचलनं यदुक्तं मुञ्जालाद्यैः स
एवायम् । तत्पक्षे तद्भगणाः कल्पे गोऽङ्गर्त्तु-
नन्दगोचन्द्राः १९९६६९ ॥ तत् सञ्जातं
पातं
क्षिप्त्वा खेटेऽपमः साध्यः ।
क्रान्तिवशात्तच्चर-
मुदयाश्चरदललग्नापमे ततः क्षेप्याः ।
क्रान्त्यर्थ-
पातः क्रान्तिपातः । पातो नामसन्यातः
कयोः
विषुवत्क्रान्तिबलययोः । नहि तयोर्मेषादावेव
सम्पातः । किन्तु तस्यापि चलनमस्ति । ये
अयनचलबभागाः प्रसिद्धास्त एव
विलोमगस्य
क्रान्तिपातस्य भागाः । मेषादेः पृष्ठतस्ता-
बद्भागान्तरे क्रान्तिवृत्ते विषुवद्वृत्तं लग्न-
मित्यर्थः । नहि क्रान्तिपातोऽस्तीति वक्तुं न
शक्यते । प्रत्वक्षेण तस्योपलब्धत्वात् । उप-
लब्धिप्रकारमग्रे वक्ष्यति । स कथं ब्रह्मगुप्ता-
दिभिर्निपुणैरपि नोक्त इति चेत् । तदा
स्वल्पत्वात्तैर्नोपलब्धः । इदानीं बहुत्वात्
साम्प्रतैरुपलब्धः । अतएव तस्य
गतिरस्तीत्यव-
गतम् । यद्येवमप्यनुपलब्धोऽपि सौरसिद्धा-
न्तोक्तत्वादागमप्रामाण्येन भगणपरिध्यादिवत्
कथं तैर्नोक्तः । सत्यम् । अत्र गणितस्कन्धे
उपपत्तिमानेवागमः प्रमाणम् । तर्हि मन्दोच्च-
पातभगणा आगमप्रामाण्येनैव कथं तैरुक्ता
इति न वक्तव्यम् । यतो ग्रहाणां मन्दफला-
भावस्थानानि प्रत्यक्षेणैवोपलभ्यन्ते तान्येव
मन्दोच्चस्थानानि यान्येव विक्षेपाभावस्थानि
तान्येव पातस्थानानि किन्तु तेषां गतिरस्ति

पुरुषाद इवापत्यं सुहृदोर्हिंसिताः सुताः ॥”
इति श्रीभागवते १० स्कन्धे ४ अध्यायः ॥

**भगीरथः**, पुं, (भं ज्योतिष्कमण्डलं गीर्वाङ्गियं तत्र रथ इन्द्रियाणि रथ इवास्य ।) दिलीपराज-पुत्रः । कपिलशापेन भस्मीभूतानामधः पति-तानां पितृणामुद्धरणायानेन मर्त्यलोके गङ्गा आनीता । यथा, मात्स्ये १२ अध्यायः ।
“असमञ्जसस्तनयो ह्यंशुमान्नाम विश्रुतः ।
तस्य पुत्त्रो दिलीपस्तु दिलीपात्तु भगीरथः ॥
येन भागीरथी गङ्गा तपः कृत्वावतारिता ।
भगीरथस्य तनयो नाभाग इति विश्रुतः ॥”

**भगोः**, पुं, हे भगवन् ! । इति मुग्धबोधव्याकर-णम् । संक्षिप्तसारश्च ॥ (सम्बोधन-वाचकाविमौ ॥)

**भगोः**, व्य, हे भगवन् ! । इति मुग्धबोधव्याकर-णम् । संक्षिप्तसारश्च ॥ (सम्बोधन-वाचकाविमौ ॥)

**भगोलः**, पुं, (भानां नक्षत्राणां गोलः । नक्षत्र-समूहेन विरचितः गोलाकारः पदार्थ इत्यर्थः ।) भपञ्जरम् । नक्षत्रचक्रम् । यथा । इदानीं भगोलमाह ।
“याम्योत्तरक्षितिजवत् सुदृढं विदध्या-दाधारवृत्तयुगलं ध्रुवयष्टिबद्धम् ।
षष्ट्यङ्कमत्र सममण्डलवत्तृतीयं नाड्याह्वयञ्च विषुवद्वलयं तदेव ॥”
यथा खगोले क्षितिजं याम्योत्तरञ्च तदाकार-स्फुटक्षेपपातं दत्त्वाग्रे चिह्नं कार्य्यम् । अथ क्रान्तिवृत्तस्य बिमण्डलस्य च क्षेपपातचिह्नयोः सम्पातं कृत्वा तस्मात् षड्भेऽन्तरे अन्यञ्च सम्पातं कृत्वा क्षेपपाताग्रतस्त्रिभेऽन्तरे क्रान्ति-वृत्तादुत्तरतः स्फुटैः क्षेपभागैः पृष्ठतश्च त्रिभे-ऽन्तरे तैरेव भागैर्दक्षिणतः स्थिरं कृत्वा विम-ण्डलं निवेशनीयम् । अथ पठिता ये विक्षेप-भागास्ते त्रिज्या गुणाः शीघ्रकर्णेन भक्ताः स्फु टा ज्ञेयाः ॥ * ॥ अथानुपातः । यदि कर्णाग्रे एतावदन्तरं तर्हि त्रिज्याग्रे कियदिति । यतो भगोले त्रिज्यैव व्यासार्द्धम् । एवं चन्द्रादीनां षट् विमण्डलानि कार्य्याणि । स्वस्वविमण्डले ग्रहा भ्रमयन्ति ॥ इदानीं क्रान्तिं विक्षेपञ्चाह ।
“नाडिका मण्डला तिर्य्यगत्रापमः क्रान्तिवृत्तावधिः क्रान्तिवृत्ताच्छरः ।
क्षेपवृत्तावधितिर्य्यगेव स्फुटो नाडिकावृत्तखेटान्तरालेऽपमः ।
क्रान्तिवृत्ते स्फु टग्रहस्थानं तस्य नाडीवृत्ताद्यत्तिर्य्यगन्तरं सा क्रान्तिः ॥”
नास्ति वेति सन्दिग्धम् । तत्र मन्दोच्चपातानां गतिरस्ति । चन्द्रमन्दोच्चपातवदित्यनुमानेन सिद्धा । सा च कियती तदुच्यते । यैर्भगणैरुप-लब्धिस्थानानि तानि गणितेनागच्छन्ति । तद्भ-गणसम्भवा वार्षिकी दैनन्दिनी वा गतिर्ज्ञेया । नैवम् । यदन्यैरपि भगणैस्तान्येवस्थानानि आग-च्छन्ति । तदा कतरस्यागतेः प्रामाण्यम् । सत्यम् तर्हि साम्प्रतीपलब्ध्यनुसारिणीकापि गतिरङ्गी-कर्त्तव्या । यदा पुनर्महता कालेन महदन्तरं भविष्यति तदा महामतिमन्तो ब्रह्मगुप्तादीनां समानधर्म्मिण एव उत्पत्स्यन्ते । तदुपलब्ध्यनु-सारिणीं गतिमुररीकृत्य शास्त्राणि व्याकरि-ष्यन्ति । अतएवायं गणितस्कन्धो महामति-मद्भिर्दृष्टः सन् अनाद्यनन्ते कालेऽपि खिलत्वं न याति । अतोऽस्य क्रान्तिपातस्य भगणाः कल्पेऽयुतत्रयं तावत् सूर्य्यसिद्धान्तोक्ताः । तथा मुञ्जालाद्यैर्यदयनचलनमुक्तं स एव क्रान्ति-पातः । ते गोऽङ्गर्त्तुनन्दगोचन्द्रा उत्पद्यन्ते । अथ च ते वा ये वा भगणा भवन्तु । यदा येऽंशा निपुणैरुपलभ्यन्ते तदा स एव क्रान्ति-

| | | |
|---|---|---|
| मपरमाधारवृत्तद्वयं ध्रुवयष्टिस्थं कृत्वा तदुपरि<br>अन्यत्तृतीयं सममण्डलाकारं<br>घटीषष्ट्या चाङ्कितं<br>कार्य्यं तन्नाडीवृत्तं विषुवत् वृत्तसंज्ञम्<br>॥ * ॥<br>इदानीं क्रान्तिवृत्तमाह।<br>“क्रान्तिवृत्तं गृहाङ्कं विधेयं भ्रम-<br>त्यत्र भानुश्चं भार्द्धे कुभा भानुतः।<br>क्रान्तिपातः प्रतीपं तथा प्रस्फुटा<br>क्षेपपातश्च तत्स्थानकान्यङ्कयेत् ॥ | | |

पात इत्यर्थः । तं विलोमं क्रान्तिपातं ग्रहे
प्रक्षिप्य क्रान्तिः सान्या । इदानीं विक्षेप-
पातानाह । एवं क्रान्तिविमण्डलसम्पाताः
क्षेपपाताः स्युः । चन्द्रादीनां व्यस्ताः
क्षेपानयने
तु ते योज्याः ।
"मन्दस्फुटो द्राक् प्रतिमण्डले स्वे
ग्रहो भ्रमत्यत्र च तस्य पातः ।
पातेन युक्ता गणितागतेन
मन्दस्फुटात् खेचरतः शरोऽस्मात् ॥
पातेऽथवा शीघ्रफलं विलोमं
कृत्वा स्फुटान्तेन युताच्छरोऽतः ।
चन्द्रस्य कक्षाबलये हि पातः
स्फुटाद्विधोर्मध्यमपातयुक्तात् ॥"
तथा क्रान्तिवृत्तविमण्डलयोःसम्पातः
क्षेप-
पातः । तं ग्रहे प्रक्षिप्य क्षेपः साध्यः । एत-
दुक्तं भवति क्रातिपातः प्रसिद्धः । यथा तं
ग्रहे प्रक्षिप्य क्रान्तिः साध्यत एव क्षेपपातं
ग्रहे प्रक्षिप्य क्षेपः साध्य इत्यर्थः । अथ
विक्षेपपातो मन्दस्फुटे यत् प्रक्षिप्यते
तत्कारण-
माह । मन्दस्फुटो द्राक् प्रतिमण्डल
इत्यादि ।
यतः शीघ्रप्रतिमण्डले मण्डलस्फुटगत्या
ग्रहो
भ्रमति तत्र च वृत्ते पातः । अतो
गणितागत-
पातं मन्दस्फुटे प्रक्षिप्य क्षेपः साध्यते ।
शेषं
स्पष्टार्थम् ॥ * ॥ इदानीं
ज्ञशुक्रयोर्विशेषमाह ।
"ये चात्र पातभगणाः कथिता ज्ञभृग्वो
स्ते शीघ्रकेन्द्रभगणैरधिका यतः स्युः ।
स्वल्पाः सुखार्थमुदिताश्चलकेन्द्रयुक्तौ
पातौ तथोः पठितचक्रभवौ विधेथौ ॥
चलाद्विशोध्यः किल केन्द्रसिद्ध्यै
केन्द्रे सपाते द्युचरस्तु योज्यः ।
अतश्चलात् पातयुताद् ज्ञभृग्वोः
क्षेप्तुं युज्यते । एवं कृते सति क्षेपकेन्द्रं
मन्द-
फलेनान्तरितं स्यात् । तदङ्गीकृतम् ।
इतर-
केन्द्रस्यानुपपत्तेः । अतो मन्दफलं पाते
व्यस्तं
देयम् । यतोऽनुपातसिद्धं चलकेन्द्रं
मध्योनं
शीघ्रोच्चं भवति । यत्तु भगोले क्रान्तिवृत्तं
तत्
कक्षावृत्तं तत्र यद्विमण्डलं तत्र स्फुटग्रहः ।
तत्स्फुटपातयोगो हि विक्षेपकेन्द्रं अतः
स्फुट-
पातस्थाने सम्पातं कृत्वा ततस्त्रिभेऽन्तरे
स्फुटी-
कृतैः परमक्षेपांशैः प्राग्वदुत्तरे दक्षिणे च
विन्यस्यम् । तथा न्यस्ते विमण्डले
स्फुटग्रह-
स्थाने विक्षेपः स्फुटविक्षेपेण गणितागतेन
तुल्यो
दृश्यते नान्यथेत्यर्थः ॥ * ॥ इदानीं
ग्रहगोले
विशेषमाह ।
"ग्रहस्य गोले कथितापमण्डलं
प्रकल्प्य कक्षाबलयं यथोदितम् ।
निबध्य शीघ्रप्रतिवृत्तमस्मिन्
विमण्डलं तत् पठितैः शरांशैः ॥
मध्योऽत्र पातो द्युषदां ज्ञभृग्वोः
स्वशीघ्रकेन्द्रेण युतौ तु योज्याः ॥"
भगोल एव तावद्ग्रहगोलः कल्प्यः तत्र
एफुट
एव पातः । अथ यदि तदन्तर्ग्रहगोलोऽन्यो
निबध्यते तदा तत्र यथोक्तविषुवद्वृत्तं
क्रान्ति-
वृत्तञ्च बद्ध्वा कक्षामण्डलं प्रकल्प्य तत्र
छेद्यकोक्त-
विधिना शीघ्रप्रतिमण्डलं बद्ध्वा तत्र
प्रतिमण्डले
ङ्कयेदस्य विष्कम्भखण्डं द्युजीवा मता ।
नाडी-
वृत्तादुत्तरतो दक्षिणतो वा सर्व्वत्रेष्टक्रान्ति-
तुल्यान्तरे यद्वृत्तं निबध्यते तदहोरात्रवृत्तं
तेन वृत्तेन तस्मिन् दिने रविर्भ्रमतीत्यर्थः ।
तस्य वृत्तस्य व्यासार्द्धं द्युज्या ॥ * ॥
इदानी-
मन्यदाह । अथ कल्प्या मेषाद्या ह्यनुलोमं
क्रान्तिपाताङ्कात् एषा मेषादीनां द्युरात्र-
वृत्तानि बध्नीयात् । नाडीवृत्तोभयतस्त्रीणि
त्रीणि क्रमोत्क्रमात्तानि ।
क्रान्तिपातादारभ्य
त्रिंशत्त्रिंशद्भिर्भागैरन्यान् मेषादीन् प्रकल्प्य
तदग्रेषूक्तवदहोरात्रवृत्तानिबध्नीयात् ।
तानि
च नाडीवृत्तोभयतस्त्रीणित्रीणि भवन्ति
तान्येव क्रमोत्क्रमतः सायनांशार्कस्य
द्वादश-
राशीनाञ्च ॥ * ॥ इदानीमस्योपसंहारः ।
एष
भगोलः कथितः खेचरगोलोऽयमेव विज्ञेयः
।
इति सिद्धान्तशिरोमणिः ॥

**भग्नं**, त्रि, (भन्ज् + क्तः । संघाद् विश्लिष्टत्वात्
तथात्वम् ।) पराजितम् । इति हेमचन्द्रः ॥
मुटितम् । चूर्णितम् । भाङ्गा इति भाषा ।
यथा, भट्टिः ।
"चिरकालोषितं जीर्णं कीटनिष्कुषितं धनुः
।
किं चित्रं यदि रामेण भग्नं क्षत्त्रियकान्तिके
॥"

**भग्नं**, क्ली, (भज्यते आमर्द्यते विश्लेष्यते इति ।
भञ्ज + क्तः ।) रोगविशेषः । अथ
भग्नाधिकारः ।
तत्र भग्नस्य भेदमाह ।
"भग्नं समासाद्द्विविधं हुताश !
काण्डे च सन्धावपि तत्र सन्धौ ।
उत्पिष्टविश्लिष्टविवर्त्तितानि

सुधीभिराद्यैः शरसिद्धिरुक्ता ॥”
“स्फुटोनशीघ्रोच्चयुतौ स्फुटौ तयोः
पातौ भगोले स्फुट एव पातः ॥”
ननु ज्ञशुक्रयोः शीघ्रोच्चपातयुतिं केन्द्रं
कृत्वा यो
विक्षेप आनीतः स शीघ्रोच्चस्थान एव
भवितु-
मर्हति न ग्रहस्थाने । यतो ग्रहोऽन्यत्र वर्त्तते
।
अत इदमनुपपन्नमिव प्रतिभाति । तथा
ब्रह्म-
सिद्धान्तभाष्ये । ज्ञशुक्रयोः शीघ्रोच्चस्थाने
यावान् विक्षेपस्तावानेव यत्रतत्रस्थस्यापि
ग्रहस्य भवत्यत्रोपलब्धिरेव वासना ।
नान्यत्
कारणं वक्तुं शक्यत इति चतुर्व्वेदे
नाप्यनध्य-
वसायोऽत्र कृतः । अत्रोच्यते । येऽत्र ज्ञशु-
क्रयोः पातभगणाः पठितास्ते
शीघ्रकेन्द्रभगणै-
र्युताः सन्तस्तद्भगणा भवन्ति । तथा च
माध-
वीये सिद्धान्तचूडामणौ पठिताः ।
अतोऽल्प-
भगणभवः पातः स्वशीघ्रकेन्द्रेण युतः
कार्य्यः ।
शीघ्रोच्चाद्ग्रहे शोधिते शीघ्रकेन्द्रं तस्मिन्
स
पाते क्षेपकेन्द्रकरणार्थं ग्रहः क्षेप्यः ।
अतस्तुल्य-
शोध्यक्षेपकयोः नाशे कृते
शीघ्रोच्चपातयोग
एवावशिष्यत इत्युपपन्नम् । किञ्च ।
मन्दस्फु-
दोनं शीघोच्चं प्रतिमण्डले चलकेन्द्रं
तत्पाते

गणितागतपातं मेषादेर्विलोमं गणयित्वा
तत्र
चिह्नं कार्य्यम् । अथ त्रिज्या
व्यासार्द्धमिवान्यद्वृत्तं
राश्यङ्कं विमण्डलाख्यं कृत्वा तत्रापि
मेषादेर्व्यस्तं
पाताग्रे चिह्नं कृत्वा
प्रतिमण्डलविमण्डलयोः
सम्पातचिह्ने प्रथमं सम्पातम् । ततो
भार्द्धान्तरे
द्वितीयं कृत्वा पातादग्रतः पृष्ठतश्च
त्रिभेऽन्तरे
परमविक्षेपांशैः पठितैः प्रतिवृत्तादुत्तरे
दक्षिणे
च विमण्डलं न्यस्यम् । तत्र
मन्दस्फुटगत्या
पारमार्थिको ग्रहो भ्रमति । अतो मेषादेरनु-
लोममन्दण्फुटो विमण्डले देयः । स
तत्रस्थः
प्रतिमण्डलात् यावतान्तरेण
विक्षिप्तस्तावान्
तत्प्रदेशे विक्षेपः । यतो वृत्तसंपातस्थे ग्रहे
विक्षेपाभावः त्रिभेऽन्तरे परमो विक्षेपो
मध्ये-
ऽनुपातेन । अतो वृत्तसम्पातग्रहयोरन्तरं
ज्ञेयम् । तदन्तरं पातग्रहयोगे कृते भवति ।
पातस्य विलोमगत्वात् । संयोगः शरार्थं
केन्द्रम् । यदि त्रिज्यातुल्यया केन्द्रज्यया
परम-
शरस्तदाभीष्टयानया क इति फलं
प्रतिमण्डल-
विमण्डलयोस्तिर्य्यगन्तरं स्यात् ।
विमण्डलस्थ-
ग्रहाद्भूमध्यगं सूत्रं तद्भूमध्यग्रहान्तरं स च
शीघ्रकर्णः । यदि भूमध्यात् कर्णाग्रे
एतावान्
विक्षेपस्तदा त्रिज्याग्रे कियानिति
द्वितीयत्रैरा-
शिकम् । आद्ये त्रिज्या हरो द्वितीये गुणः ।
तयोर्नाशे कृते केन्द्रज्यायाः
परमशरगुणायाः

तिर्य्यग्गतं क्षिप्तमधश्च षड्धा ॥”
भग्नमत्र भावार्थे क्तप्रत्ययस्तेन भग्नं भङ्गः स
चात्र विश्लेषोऽभिप्रेतः । तेन भग्नमत्रास्थि-
विश्लेषलक्षणम् । समासात् संक्षेपात् ।
हुताश !
हे अग्निवेश ! । यतश्चरकेऽग्निवेशस्य
हुताशेति
नामान्तरमुक्तम् । काण्डे सन्धिपर्य्यन्ते
एक-
खण्डे । अस्थिसन्धौ द्वयोरस्थ्नोः
सन्धानस्थाने ।
तत्र सन्धौ उत्पिष्टादिभेदैः षट्प्रकारं भग्नं
भवति । स्वल्पवक्तव्यत्वेन
सन्धिभग्नस्यादौ विव-
रणम् । उत्पिष्टेत्यादि । अधः अधोभग्नम् ॥
* ॥
सन्धिभग्नस्य सामान्यं लिङ्गमाह ।
“प्रसारणाकुञ्चनवर्त्तनोग्रा-
रुक्स्पर्शविद्वेषणमेतदुक्तम् ।
सामान्यतः सन्धिगतस्य लिङ्ग-
मुत्पिष्टसन्धेः श्वयथुः समन्तात् ॥
विशेषतो रात्रिभवा रुजश्च
विश्लिष्टके तौ च रुजा च नित्यम् ॥”
वर्त्तनं परिवर्त्तनम् ॥ * ॥ उत्पिष्टस्य
लिङ्गमाह ।
उत्पिष्टसन्धेः उत्पिष्टः द्वाभ्यामस्थिभ्यां
पिष्टः
सन्धिर्यस्य तस्य । समन्तात्
उभयभागद्वयोः ।
विश्लिष्टमाह विश्लिष्ट इत्यादि । तौ
उभयतः
शोथौ । रुजा च नित्यं सदा रुजाधिका
भवती-
त्युत्पिष्टाद्भेदः ॥ * ॥
विवर्त्तिततिर्य्यग्गताक्षिप्ताधो-
गतानाह ।

|  | कर्णो हरः फलं<br>कक्षावृत्तसूत्रयोस्तिर्य्यगन्तरं<br>स्फुटशरः ॥ * ॥ इदानीमहोरात्रवृत्तमाह।<br>ईप्सितक्रान्तितुल्येऽन्तरे सर्व्वतो<br>नाडिकाख्या-<br>दहोरात्रवृत्ताह्वयं तत्र बद्ध्वा। घटीनाञ्च<br>षष्ट्या- |  |
| --- | --- | --- |

"विवर्त्तिते पार्श्वरुजश्च तीव्रा-
स्तिर्य्यग्गते तीव्ररुजो भवन्ति।
क्षिप्तेऽतिशूलं विषमञ्च सक्थ्नोः
क्षिप्ते त्वधो रुक् विघटश्च सन्धेः ॥"
विवर्त्तिते सन्धावमुक्ते।
अस्थिद्वयोपरिवर्त्तिते
पार्श्वरुजः
सन्धिस्थितास्थिखण्डद्वयपार्श्वयो
रुजः। तिर्य्यग्गते सन्धिगते।
एकस्मिन्नस्थ्नि
सन्धिस्थानं त्यक्त्वा तिर्य्यग्गते क्षिप्ते
सक्थ्नोः
ऊरुसन्ध्योः। एकस्मिन्नस्थ्नि
परस्यास्थ्न उपरिगते।
सक्थ्नोः अतिशूलं तत्र विषमं
कदाचिदधिकं
कदाचिन्न्यूनम्। अधःक्षिप्ते सन्धिगते
एक-
स्मिन्नस्थ्नि अधोगते। रुक् सन्धेर्विघटः
विघ-
टनञ्च ॥ * ॥ काण्डभग्नमाह। भग्नञ्च
काण्डे
बहुधा प्रयाति विशेषतो नामभिरेव
तुल्यम्।
भग्नं काण्डे काण्डविषये बहुधा बहुभिः
प्रकारैः
प्रयाति। अत्र बहुविधत्वं द्वादशविधत्वं
बोद्धव्यम्। बहुविधस्य काण्डभग्नस्य
पृथक्
लक्षणं नोक्तं किन्तु काण्डंनामभिरेव
तुल्यत्वम्।
कर्कटकादिनामानुरूपमेव लक्षणं किन्तु
नामभिरेव बोद्धव्यम् ॥ * ॥ तान्
प्रकारा-
नाह।
"काण्डे त्वतः कर्कटकाश्वकर्णौ
विचूर्णितं पिच्चितमस्थि छल्लितम्।
काण्डेषु भग्नं ह्यतिपातितञ्च
मज्जागतं विस्फुटितञ्च वक्रम् ॥"

सामान्या पीडा। सर्व्वास्ववस्थासु
शयनासना-
दिषु ॥ कष्टसाध्यमाह।
"अल्पाशिनोऽनात्मवतो
जन्तोर्वातात्मकस्य च।
उपद्रवैर्वा जुष्टस्य भग्नं कृच्छ्रेण सिध्यति
॥"
अनात्मवतो रोगप्रतीकारे यत्नरहितस्य।
वातात्मकस्य च वातप्रकृतेः। उपद्रवैः
ज्वरा-
ध्मानमोहमूत्रपुरीषसङ्गादिभिः॥ * ॥
असाध्य-
माह।
"भिन्नं कपालं कट्यान्तु सन्धिमुक्तं तथा
च्युतम्।
जघनं प्रतिपिष्टञ्च वर्जयेत्तच्चिकित्सकः
॥"
कपालं
जानुनितम्बांसगण्डतालुशङ्खवङ्क्षणशिरो
ऽस्थीनि कपालानि तथा च्युतं तथा
क्षिप्तम्।
प्रतिपिष्टं उत्पिष्टम् ॥ पुनरसाध्यमाह।
"असंश्लिष्टकपालञ्च ललाटे चूर्णितञ्च
यत्।
भग्नं गुदे स्तने पृष्ठे शङ्खे मूर्द्धनि वर्ज्जयेत्
॥"
असंश्लिष्टकपालमिति भग्नविशेषणम्।
स्तने
स्तनयोरन्तरे उरसि। मूर्द्धनि चूडस्थाने
॥ * ॥
अपरमप्यसाध्यमाह।
"सम्यक्संहितमप्यस्थि
दुर्न्यासाद्दुष्टबन्धनात्।
संक्षोभाद्वापि यद्गच्छेद्विक्रियां तच्च
वर्ज्जयेत् ॥"
सम्यक्संहितमपि सम्यग्योजितमपि
अस्थि
दुर्न्यासात् दुःस्थापनात् संन्यस्तमपि
दुष्टबन्धनात्

"लाक्षास्थिसंहृत् ककुभाश्वगन्धा
चूर्णीकृता नागवला पुरश्च।
संभग्नमुक्तास्थिरुजो निहन्या-
दङ्गानि कुर्य्यात् कुलिशोपमानि ॥"
अस्थिसंहृत् हडसिंहार। लाक्षादिगुग्गुजुः ॥
"मांसं मांसरसः क्षीरं सर्पिर्यूषः कलायजः।
बृंहणञ्चान्नपानञ्च देयं भग्नाय जानता ॥
लवणं कटुकं क्षारं मद्यं मैथुनमातपम्।
रूक्षमन्नं श्रमञ्चापि भग्नः सेवेत न क्वचित् ॥"
इति भावप्रकाशे भग्नाधिकारः ॥
(अथास्य निदानं यथा। पतनपीडनप्रहारा-
क्षेपणव्यालमृगदशनप्रभृतिभिरभिघातविशेषै-
रनेकविधमस्थ्नां भङ्गमुपदिशन्ति तत्तु
भङ्गजात-
मनुसार्य्यमाणं द्विविधमेवोत्पद्यते सन्धिमुक्तं
काण्डभग्नञ्च ॥ इति सुश्रुते निदानस्थाने पञ्च-
दशेऽध्याये ॥
अथ भग्नचिकित्सा।
"भग्नास्थिञ्च नरं दृष्ट्वा तस्य वक्ष्यामि भेष-
जम्।
मणिबन्धे कूर्परे च जानौ भग्ने कटौ तथा ॥
पृष्ठवंशे विभग्ने च साध्यान्येतानि सत्तम !।
ग्रीवादेशे चेन्द्रवस्तौ रोहिण्यां कूर्परादधः ॥
स्कन्धकूर्परमध्ये च तथा च त्रिकमध्यतः।
उरसि क्रोडके चैव विभग्नं तदसाध्यकम् ॥
विभग्नञ्च नरं दृष्ट्वा वेणुखण्डेन बन्धयेत्।
म्रक्षयेन्नवनीतेनैरण्डपत्रैश्च वेष्टयेत् ॥
उष्णाम्भसा सेचयेच्च बस्त्रेण मृदु बन्धयेत्।
धवार्ज्जुनकदम्बानां बल्कलं काञ्जिकेन तु ॥
पिष्ट्वा हितः प्रलेपश्च तेन सौख्यं प्रजायते।
स्वेदयेत्तानि चोष्णेन आवासं कारयेत् पुनः ॥
एवं क्रिया समापत्तौ ततो बन्धं विमोचयेत्।
एकाहान्तरिते नापि पूर्ब्बवत्तत् प्रबन्धयेत् ॥
यावद्ग्रन्थिं न बध्नाति तावन्न स्नापयेन्नरम् ॥
इति हारीते चिकित्सितस्थाने। ५६ अः ॥
अथ पथ्यविधिः।
"शीताम्बुसेचनं पङ्कप्रदेहो बन्धनक्रिया।
शालिप्रियङ्गुगोधूमा यूषो मुद्गसतीलयोः ॥
नवनीतं घृतं क्षीरं तैलं माषरसो मधु।

छिन्नं द्विधा द्वादशधा च काण्डे । अतः
सन्धि-
भग्नानन्तरं काण्डे काण्डभग्ने तदाह ।
कर्कटकः
अस्थिविश्लेषपूर्ब्बको मध्ये प्रोन्नतः
पार्श्वयोरव-
नतः कर्कटतुल्यरूपत्वात् कर्कटः ।
अश्वकर्णः
अश्वकर्णवद्विपुलास्थिनिर्गमादश्वकर्णः
। विचू-
र्णितं चूर्णितमस्थि तच्च शब्दस्पर्शाभ्यां
बोद्धव्यम् ।
पिच्चितमस्थि नियन्त्रितं बहुशोथम् ।
छल्लितं
विश्लिष्टं सम्यक्स्रवम् । काण्डेषु भग्नं
काण्ड-
भग्नम् । यद्यपि कर्कटकादि सर्व्वमेव
काण्डभग्नं
तथापि इयं काण्डभग्नसंज्ञांविशिष्टा ।
अत्र
भग्नं भङ्गः त्रुटिः तेन सर्व्वथा त्रुटितं
पृथग्भूतं
त्वचि स्थितं यत्र काण्डं तत्काण्डभग्नम्
।
अतिपातितं अशेषेण छित्त्वा
पातितमस्थि ।
मज्जागतं अस्थ्यवयवोऽस्थिमध्ये
प्रविश्य मज्जानं
गतम् । विस्फुटितं स्तोकविदीर्णं वक्रं
स्थानं
त्यक्त्वा कुब्जीभूतम् । छिन्नं द्विधा एकं
विदीर्णं
सत् लग्नं अपरं विदीर्य्य द्विधाभूतम् ।
द्वादशधा
च काण्डे । काण्डे च भग्नं
द्वादशधेत्यन्वयः ।
तच्चोक्तमेव कर्कटकादि ॥ * ॥
काण्डभग्नस्य
सामान्यं लक्षणमाह ।
“स्रस्ताङ्गता शोथरुजातिवृद्धिः
संपीड्यमाने भवतीह शब्दः ।
सुबद्धमपि संक्षोभात् अभिघातादिना
सञ्चल-
नात् यद्विक्रियां गच्छेत् विकृतं भवति
तद्वर्ज्ज-
येत् ॥ अस्थिविशेषेण भग्नविशेषमाह ।
“तरुणास्थीनि नम्यन्ते भिद्यन्ते
नलकानि तु ।
कपालानि विभज्यन्ते स्फुटन्ति
रुचकानि च ॥
तरुणास्थीनि घ्राणकर्णाक्षिगुद्येषु
कोमलास्थीनि
नम्यन्ते वक्रीभवन्ति । तेनात्र
वक्रतालक्षणं
भग्नम् । नलकानि नलादीनि नाडीवत्
सरन्ध्रा-
ण्यस्थिपर्व्वाणि भिद्यन्ते
अस्थ्यन्तरानुप्रवेशाद्वि-
दीर्य्यन्ते । कपालानि
जानुनितम्बांसगण्डतालु-
शङ्खशिरोऽस्थीनि विभज्यन्ते स्फुटन्ति
रुच-
कानि दन्ताः स्फु टन्ति त्रुटन्ति ।
अस्थीनि
तरुणानलककपालरुचकबलयभेदात्
पञ्च-
विधानि । तत्र रुचकानि चेति ।
चकाराद्बल-
यान्यपि त्रुटन्तीति बोद्धव्यम् ।
“पाण्योः पार्श्वयुगे पृष्ठे वक्षोजठरपायुषु ।
पादयोरपि चास्थीनि बलयानि बभाषिरे
॥”
अथ भग्नस्य चिकित्सा ।
“भग्ने लेपाय मञ्जिष्ठामधुकञ्चाम्बुपेषितम् ।
शतधौतघृतोन्मिश्रं शालिपिष्टञ्च लेपनम्
॥”
लेपात् पिष्टिकलवणैरम्लीका
फलरसाभ्यां वा ।
सद्योऽभिघातजनिता रागरुजा श्वयथवः
प्रशा-
म्यन्ति ।
पटोलं लशुनं शिग्रु पत्तूरो बालमूलकम् ॥
द्राक्षा धात्री वज्रवल्ली लाक्षा यच्चापि वृंहणम् ।
तत्सर्व्वं भिषजा नित्यं देयं भग्नाय जानता ॥”
अथात्रापथ्यविधिः ।
“लवणं कटुकं क्षारमम्लं मैथुनमातपम् ।
व्यायामञ्च न सेवेत भग्नो रूक्षान्नमेव च ॥”
इत्यायुर्व्वेदपथ्यापथ्यग्रन्थस्य भग्नाधिकारे ॥)

**भग्नपादर्क्षं**, क्ली, (भग्नपदं ऋक्षम् ।) पुष्कराख्य-
नक्षत्रषट्कम् । यथा, --
“पुनर्व्वसूत्तराषाढा कृत्तिकोत्तरफल्गुनी ।
पूर्ब्बभाद्रं विशाखा च षडेते पुष्कराः स्मृताः ॥
भग्नपादर्क्षसंयोगात् द्वितीया द्वादशी यदि ।
सप्तमी चार्कमन्दारे जायते जारजो ध्रुवम् ॥”
इति ज्योतिस्तत्त्वम् ॥

| | | |
|---|---|---|
| स्पर्शासहं स्पन्दनतोदशूलं<br>सर्व्वास्ववस्थामु न शर्म्मलाभः ॥"<br>भग्नस्य काण्डे खलु चिह्नमेतत् ॥"<br>स्पर्शासहमिति काण्डभग्नस्य विशेषणं<br>स्पन्दनं<br>नाडीनां स्फुरणं शूलं शूलेनेव व्यथा ।<br>रुजा | "सघृतञ्चास्थिसंहारं<br>लाक्षागोधूममर्ज्जुनम् ।<br>सन्धिभग्नेऽस्थिसम्भग्ने पिबेत् क्षीरेण वा<br>पुनः ॥"<br>घृतेन पिबेत् क्षीरेण वेत्यर्थः ।<br>अस्थिसंहारः<br>हडसिंहार इति लोके ।<br>"रसोनामधुलाक्षाज्यसिताकल्कं<br>समश्नतः ।<br>छिन्नभिन्नच्युतास्थ्नाञ्च<br>सन्धानमचिराद्भवेत ॥" | |

**भग्नपृष्ठः**, पुं, (भग्नं पृष्ठमस्मिन् ।) सम्मुखः । इति

त्रिकाण्डशेषः ॥ मुटितमेरुदण्डः । यथा, --
"भग्नपृष्ठकटिग्रीवं स्तब्धदृष्टि ह्यधोमुखम् ।
कष्टेन लिखितं पुस्तं यत्नेन परिपालयेत् ॥"
इति प्राचीनवाक्यम् ॥
(भग्नं पृष्ठं यस्य । मुटितमेरुदण्डे, त्रि ॥)

**भग्नसन्धिः**, पुं, (भग्नः सन्धिरत्रास्माद् वा ।)

शरीरस्य सन्धिस्थानभङ्गरोगविशेषः ।
तस्यौ-
षधं यथा, --
"अभया त्रिफला व्योषः सर्व्वैरेभिः
समीकृतैः ।
तुल्यो गुग्गुलुना योज्या भग्नसन्धिप्रसारकः
॥"
इति गारुडे १७५ अध्यायः ॥

**भग्नसन्धिकं**, क्ली, (भग्नो विश्लिष्टः दध्नः सन्धिः

सवातोऽत्र ।) घोलम् । इति शब्दचन्द्रिका ॥

**भग्नात्मा**, पुं, (भग्नः क्रमेण हीन आत्मा देहो

यस्य ।
कृष्णप्रतिपदादिक्रमेणैकैककलाच्छेदेन
भग्नदेहत्वादस्य तथात्वम् ।) चन्द्रः । इति
शब्दचन्द्रिका ॥

**भग्नाशः**, त्रि, (भग्ना आशा यस्य । हताशः ।

दीर्घतृष्णाभङ्गयुक्तः । यथा, --
"अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते ।
स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति
॥"
इत्याह्निकतत्त्वम् ॥

**भग्नी**, स्त्री, (भगिनी । पृषोदरादित्वात् साधुः ।)

भगिनी । इति द्विरूपकोषः ॥

**भङ्कारी**, स्त्री, (भमित्यव्यक्तशब्दं करोतीति ।

कृ + अण् । गौरादित्वात् ङीष् ।) दंशः ।
इति त्रिकाण्डशेषः ॥

**भङ्क्ता**, [ऋ] त्रि, भङ्गकर्त्ता । भन्जधातोः कर्त्तरि

सम्यग्यमितमप्यस्थि दुर्न्यासाद्दुर्निबन्धनात् ॥
संक्षोभादपि यद्गच्छेद्विक्रियां तद्विवर्ज्जयेत् ।
आदितो यच्च दुर्ज्जातमस्थिसन्धिरथापिवा ॥
तरुणास्थीनि भुज्यन्ते भज्यन्ते नलकानि तु ॥
कपालानि विभिद्यन्ते स्फुटन्त्यन्यानि भूयसा ।
अथावनतमुन्नम्यमुन्नतञ्चावपीडयेत् ॥
आञ्छेदतिक्षिप्तमधो गतञ्चोपरि वर्त्तयेत् ।
आञ्छनोत्पीडनोन्नामचर्म्मसंक्षपबन्धनैः ॥
सन्धीन् शरीरगान् सर्व्वान् चलानप्यचलानपि ।
इत्येतैः स्थापनोपायैः सम्यक् संस्थाप्य
निश्चलम् ॥
पट्टैः प्रभूतसर्पिर्भिर्वेष्टयित्वा सुखैस्ततः ।
कदम्बोदुम्बराश्वत्थसर्ज्जार्ज्जुनपलाशजैः ॥
वंशोद्भवैर्वा पृथुभिस्तनुभिः सुनिवेशितैः ।
सुश्लक्ष्णैः सुप्रतिस्तम्भैर्बल्कलैः शकलैरपि ॥
कुशाह्वयैः समं बन्धं पट्टस्योपरि योजयेत् ।
शिथिलेन हि वन्धेन सन्धेः स्थैर्य्यं न जायते ।
गाढेनातिरुजादाहपाकश्वयथुसम्भवः।
त्र्यहात्त्र्यहादृतौ घर्म्मे सप्ताहान्मोक्षयेद्धिमे ॥
साधारणे तु पञ्चाहाद्भङ्गदोषवशेन वा ।
न्यग्रोधादिकषायेण ततः शीतेन सेचयेत् ॥
तं पञ्चमूलपक्वेन पयसा तु सवेदनम् ।
सुखोष्णं वावचार्य्यं स्याच्चक्रतैलं विजानता ॥
विभज्य देशं कालञ्च वातघ्नौषधसंयुतम् ।
प्रततं सेकलेपांश्च विदध्याद्भृशशीतलान् ॥
गृष्टिक्षीरं स सर्पिष्कं मधुरौषधसाधितम्।
प्रातः प्रातः पिबेद्भग्नः शीतलं लाक्षया युतम् ॥
सव्रणस्य तु भग्नस्य व्रणो मधुघृतोत्तरैः ।
कषायैः प्रतिसार्य्योऽथ शेषो भङ्गोदितः क्रमः ॥
लम्बानि व्रणमांसानि प्रलिप्य मधुसर्पिषा ।
सन्दधीत व्रणान् वैद्यो बन्धनैश्चोपपादयेत् ॥
तान् समान् सुस्थिताञ्ज्ञात्वा फलिनीरोध्र-
कट्फलैः ।
समङ्गाधातकीयुक्तैश्चूर्णितैरवचूर्णयेत् ॥
धातकीरोध्रचूर्णैर्वा रोहन्त्याशु तथा व्रणाः ।
इति भङ्ग उपक्रान्तः स्थिरधातोरृतौ हिमे ॥
मांसलस्याल्पदोषस्य सुसाध्यो दारुणोऽन्यथा
।
पूर्ब्बमध्यान्तवयसामेकद्वित्रिगुणैः क्रमात् ॥

कौटिल्यम् । भयम् । विच्छित्तिः ।
इति हेम-
चन्द्रः ॥ (विच्छित्त्यर्थे व्यवहारो
यथा, --
"षड्धातुविभागो वियोगः
सजीवापगमः
सप्राणनिरोधः स भङ्गः
स्वलोकस्वभावः । इति
चरके शारीरस्थाने पञ्चमेऽध्याये ॥)
रोगमात्रम् । इति राजनिर्घण्टः ॥
गमनम् ।
जलनिर्गमः । इत्यजयपालः ॥
(नागभेदः ।
यथा, महाभारते । १ । ५७ । ९ ।
"उच्छिखः शरभा भङ्गो विल्वतेजा
विरोहणः ॥")

**भङ्गवासा**, स्त्री, (भङ्गेन वासः सौरभमस्याः
।)

हरिद्रा । इति शब्दरत्नावली ॥

**भङ्गसार्थः**, त्रि, (भङ्गं वक्रभावं
अनार्ज्ववत्वमित्यर्थः

स्यति व्यवस्यति यत् या क्रिया इति
यावत्
भङ्गसमर्थयतीति अर्थ + अच् ।
कौटिल्यव्यव-
सायक्रियार्थित्वादस्य तथात्वम् ।)
कुटिलः ।
इति हारावली ॥

**भङ्गा**, स्त्री, (भज्यते इति । भन्ज् + "हलश्च
।"

३ । ३ । १२१ । इति बाहुलकाद्
घञ् टाप् ।)
वृक्षविशेषः । तत्पर्य्यायः ।
मातुलानी २ । इत्य-
मरः । २ । ९ । २० ॥ (अस्याः
पर्य्याया गुणाश्च यथा,
"भङ्गा गजा मातुलानी मादिनी
विजया जया ।

तृन्प्रत्ययेन निष्पन्नः ॥ (यथा, मनौ । ९ । २८९ ।
"प्राकारस्य च भेत्तारं परिखानाञ्च पूरकम् ।
द्वाराणाञ्चैव भङ्क्तारं क्षिप्रमेव प्रवासयेत् ॥"

**भङ्गः**, पुं, (भज्यते इति । भञ्ज + कर्म्मणि घञ् ।)

तरङ्गः । इत्यमरः । १ । १० । ५ ॥
पराजयः ।
(भन्ज् + भावे घञ् ।) भेदः । रोगविशेषः । इति मेदिनी । गे, १३ ॥ (रोगविशेषार्थे यथा, --
"पातघातादिभिर्द्वेधा भङ्गोऽस्थ्नां सन्ध्यसन्धितः ।
प्रसारणाकुञ्चनयोरशक्तिः सन्धिमुक्तता ॥
इतरस्मिन् भृशं शोफः सर्व्वावस्थास्वतिव्यथा ।
अशक्तिश्चेष्टितेऽल्पेऽपि पीड्यमाने सशब्दता ॥
समासादिति भङ्गस्य लक्षणं बहुधा तु तत् ।
भिद्यते भङ्गभेदेन तस्य सर्व्वस्य साधनम् ॥
यथास्यादुपयोगाय तथा तदुपदेक्ष्यते ।
प्राप्याणुदारि यत्त्वस्थि स्पर्शे शब्दं करोति यत् ।
यत्रास्थिलेशः प्रविशेन्मध्यमस्थ्नो विदारितः ।
भग्नं यच्चाभिधातेन किञ्चिदेवावशेषितम् ॥
उन्नम्यमानं क्षतयत् यच्च मज्जति मज्जति ।
तद्दुःसाध्यं कृशाशक्तवातलाल्पाशिनामपि ॥
भिन्नं कपालं यत्कट्यां सन्धिमुक्तं च्युतञ्च यत् ।
जघनं प्रतिपिष्टञ्च भग्नं यत्तद्विवर्ज्जयेत् ॥
असंश्लिष्टकपालञ्च ललाटं चूर्णितन्तथा ।
यच्च भग्नं भवेच्छङ्खशिरः पृष्ठस्तनान्तरे ।
मासैः स्थैर्य्यं भवेत् सन्धेर्यथोक्तं भजतो विधिम् ।
कटीजङ्घोरुभग्नानां कपाटशयनं हितम् ॥
यन्त्रणार्थं तथाकीलाः पञ्च कार्य्या निबन्धनाः ।
जङ्घोर्व्वोः पार्श्वयोर्द्वौ द्वौ तल एकश्च कीलकः ॥
श्रोण्यां वा पृष्ठवंशे वा वक्त्रस्याक्षकयोस्तथा ।
विमोक्षे भग्नसन्धीनां विधिमेवं समाचरेत् ॥
सन्धींश्चिरविमुक्तांश्च स्निग्धस्विन्नान् मृदूकृतान् ।
उक्तैर्विधानैर्बुद्ध्या च यथास्वं स्थानमाचरेत् ॥
असन्धिभग्ने रूढे तु विषमोल्वणसाधिते ।
आपोथ्य भङ्गं यमयेत्ततो भग्नवदाचरेत् ॥
भग्नं नैति यथा पाकं प्रयतेत तथा भिषक् ।
पक्वमांससिरास्नायुसन्धिः श्लेषं न गच्छति ॥
वातव्याधिविनिर्द्दिष्टान्स्नेहान् भग्नस्य योजयेत् ॥"
इति वाभटे उत्तरस्थाने । २७ अध्यायः ॥)
भङ्गा कफहरी तिक्ता ग्राहिणी पाचनी लघुः ॥
तीक्ष्णोष्णा पित्तला मोहमन्दवाग्वह्निवर्द्धिनी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
द्वे भङ्गायां भङ्गा काश्मीरेषु स्वनामख्याता ।
इति सुभूत्यादयः । इति भरतः ॥ एतस्याः
फलं कलायपरिमाणमिति सर्व्वस्वम् । इति
सारसुन्दरी ॥ शणाख्यशस्यम् । यथा, --
भङ्गा शस्ये शणाह्वये । इति मुकुटधृतरुद्रः ॥
त्रिवृता । तेउडी इति भाषा । यथा, --
"त्रिभण्डी रेचनी भङ्गा कलिङ्गा परिपाकिनी ॥"
इति शब्दचन्द्रिका ॥
औषधविशेषः । भाङ् इति सिद्धि इति च
भाषा । यथा, --
"त्रैलोक्यविजया भङ्गा विजयेन्द्राशनं जया ॥"
इति शब्दचन्द्रिका ॥
अस्या गुणाः विजयाशब्दे द्रष्टव्याः ॥

**भङ्गानः**, पुं, (भङ्गेन अनिति इति । अन् + अच् ।)

मत्स्यविशेषः । भाङ्गन इति भाषा । तत्-
पर्य्यायः । दीर्घजङ्गलः २ । इति शब्दमाला ॥

**भङ्गारी**, स्त्री, (भङ्कारी पृषोदरात् साधुः ।)

दंशः । इति त्रिकाण्डशेषः ॥

**भङ्गिः**, स्त्री, (भज्यतेइति । भन्ज + इन् । नङ्क्वादित्वात्

कुत्वम् ।) विच्छेदः । (यथा, रघौ । १३ । ६९ ।

| | | “यानादवातरददूरमहीतलेन<br>मार्गेण भङ्गिरचितस्फटिकेन रामः ॥”)<br>कौटिल्यभेदः । इत्यमरभरतौ ॥<br>विन्यासः । इति<br>कलिङ्गः ॥ (भङ्गं करोतीति । भन्ज + णिच् +<br>इः ।) कल्लोलः । इत्यरुणदत्तः ॥<br>भङ्गः । इत्यन्ये ॥<br>व्याजः । छलनिभः । इति रभसः ॥<br>**भङ्गिमा**, [न्] पुं, (भङ्ग + बाहुलकात् स्वार्थे<br>इमनिच् ।) भङ्गिः । यथा, -- |
|---|---|---|

"अधरे कज्जलं चारु
दृशोस्ताम्बूलरङ्गिमा ।
प्राणनाथ ! किमेतत्ते वेशविन्यासभङ्गिमा ॥"
इति काव्यचन्द्रिका ॥

**भङ्गी**, स्त्री, (भङ्गि + कृदिकारादिति पक्षे ङीप् ।) भङ्गिः । यथा, --
"जानामि मानमलसाङ्गि ! वचो विभङ्गीं
भङ्गीशतं नयनयोरपि चातुरीञ्च ।
आभीरनन्दनमुखाम्बुजसङ्गशंसी
वंशीरवो यदि न मामवशीकरोति ॥"
इत्युद्भटः ॥

**भङ्गुरः**, त्रि, (भज्यते स्वयमेवेति । भन्ज + "भञ्ज-भासमिदो घुरच् ।" ३ । २ । १६१ । इति कर्म्म-कर्त्तरि घुरच् । घित्वात् कुत्वमिति काशिका । स्वयं भञ्जनशीलः । यथा, भागवते । ७ । ७ । ४३ ।
"कामान् कामयते काम्यैर्यदर्थमिह पूरुषः ।
स वै देहस्तु पारक्यो भङ्गुरो यात्युपैति च ॥")
कुटिलः । इति जटाधरः ॥

**भङ्गुरः** पुं, (भञ्ज + धुरच् । कुत्वञ्च ।) नद्या वङ्कः । इति शब्दमाल्य । नदीर वाँक इति भाषा ॥

**भङ्गुरा**, स्त्री, (भङ्गुर + टाप् ।) अतिविषा । प्रियङ्गुः । इति राजनिर्घण्टः ॥ (अतिविषा-शब्दे प्रियङ्गुशब्दे चास्य विषयो ज्ञेयः ॥)

**भङ्ग्यं**, क्ली, (भङ्गाया भवनं क्षेत्रमिति । भङ्ग + "विमाषा तिलमाषोमाभङ्गाणुभ्यः ।" ५ । २ । ४ । इति पक्षे यत् ।) भङ्गाक्षेत्रम् । तत्पर्य्यायः ।

भूमौ कक्षायां वा भागेभ्यो
योजनानि च व्यस्तम् ॥"
इति सिद्धान्तशिरोमणौ गोलाध्यायः ॥
(भानां नक्षत्राणां चक्रमितिविग्रहे नक्षत्र-चक्रम् । नक्षत्रसमूहश्च ॥)

**भज**, इक् भासि । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-अक०-सेट् ।) इक् भञ्जयति । भासि दीप्तौ । इति दुर्गादासः ॥

**भज**, क पाके । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-सक०-सेट् ।) क भाजयति । विश्राणने इति प्राञ्चः । विश्राणनं दानम् । इति दुर्गा-दासः ॥

**भज**, ञ औ भागसेवयोः । इति कविकल्पद्रुमः ॥ (भ्वा०-उभ०-सक०-अनिट् ।) ञ विभजति विभजते धनं भ्राता । औ अभाक्षीत् कृष्णं साधुः । इति दुर्गादासः ॥

**भजन्** [त्] त्रि, (भजति विभजतीति वा । भज + लटः शत्रादेशः ।) भागकर्त्ता । सेवा-कर्त्ता । इति भजधातोः कर्त्तरि शतृप्रत्ययेन निष्पन्नम् ॥

**भजनं**, क्ली, (भज + भावे ल्युट् ।) भागः । सेवा । इति भजधातोर्भावे अनट्प्रत्ययेन निष्पन्नम् ।
"दारास्ते ये भजनसहायाः
पुत्त्रास्ते ये तद्भनकायाः ।
धनमपि तद्वद्धरिभजनार्थं
नो चेदेतत् सर्व्वं व्यर्थम् ॥"
इति मोहमुद्गरः ॥

**भजमानः**, त्रि, (भजते फलमनुबध्नातीति । भज + "ताच्छील्यवयोवचनशक्तिषुचानश् ।" १ ।

**भञ्जरुः**, पुं, (भनक्तीति । भञ्ज + बाहुलकात् अरु-प्रत्ययः ।) देवकुलोद्भूततरुः । तत्पर्य्यायः । काचिमः २ । इति त्रिकाण्डशेषः ॥

**भञ्जा**, स्त्री, (भनक्ति भयादिकमिति । भञ्ज + अच् । टाप् ।) अन्नपूर्णा । यथा, --
"भीतिहा भयहन्त्री च भावनावशवर्त्तिनी ।
भीमाङ्गवासिनी भञ्जा भित्तिसंवित्तिवर्द्धिनी ॥"
इति रुद्रयामले सप्तविद्यारहस्यम् ॥

**भट**, भृतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) भृतिरिह पोषणम् । कर्म्ममूल्य-मिति गोविन्दभट्टः । भटति भृत्यं स्वामी । इति दुर्गादासः ॥

**भट** म भाषणे । इति कविकल्पद्रुमः । (भ्वा०-पर०-सक०-सेट् घटादिः ।) म भटयति । भाषणं कथनम् । इति दुर्गादासः ॥

**भटः**, पुं, (भट्यते भ्रियते इति । यद्वा भटतीति । भट + अच् ।) योद्धा । इत्यमरः । २ । ८ । ६१ ॥
(यथा, भागवते । ८ । १० । ९ ।
"उष्ट्रैः केचिदिभैः केचिदपरे युयुधुः खरैः ।
केचिद्गौरमुखैरृक्षैर्द्वीपिभिर्हरिभिर्भटाः ॥"
म्लेच्छभेदः । इति हेमचन्द्रः ॥ वीरः । (यथा, नैषधे । १ । १३२ ।
"पदे पदे सन्ति भटा रणोद्भटा
न तेषु हिंसारस एष पूर्य्यते ।
धिगीदृशन्ते नृपते ! कुविक्रमं
कृपाश्रये यः कृपणे पतत्त्रिणि ॥")
पामरविशेषः । इति मेदिनी । टे, २४ ॥
रजनीचरः । इति शब्दरत्नावली ॥ वर्णसङ्कर-विशेषः । यथा,
"वद्ध्र्वकाराद्भटो जातो नाटिक्यां वरवाहकः ॥"

भाङ्गीनम् २ । इत्यमरभरतौ ॥
(भङ्गमर्हतीति ।
भङ्ग + दण्डादित्वाद् यत् । भङ्गार्हे त्रि ॥)

**भचक्रं**, क्ली, (भानां राशीनां चक्रम् । भानां

स्वस्वसंस्थानविशेषैर्विरचितो गोलाकारः
पदार्थः ।) राशिचक्रम् । यथा, --
"भ्रमावर्त्तो भचक्रेऽस्मिन् ध्रुवो नाभौ
व्यवस्थितः ।
आराचक्रे त्विन्दुभौमौ
शुक्रजीवशनैश्चराः ॥
राहुः केतुरगस्त्यश्च नक्षत्राण्यथ राशयः
।
यदा दिक्षु च अष्टासु मेरोर्भूगोलकोद्भवा ॥
छाया भवेत्तदा रात्रिः स्याच्च तद्विरहा-
द्दिनम् ।
सूर्य्येन्दोरुपरागस्तु गोलकच्छायया
भवेत् ॥
अन्योन्ययोस्तयोरेव व्यापयोरेव
कारणात् ॥
ग्रासमोक्षौ तु जायेते तत्रातः पूर्ब्बपश्चिमौ
॥
तत्र पुण्यफलाद्भागः कृतो राहोस्तु
विष्णुना ॥"
इत्याद्ये वह्निपुराणे गणभेदनामाध्यायः ॥
* ॥
अथ भचक्रभ्रमणव्यवस्थामाह।
"निरक्षदेशे क्षितिमण्डलोपगौ
ध्रुवौ नरः पश्यति दक्षिणोत्तरौ ।
तदाश्रितं खे जलयन्त्रवत् सदा
भ्रमद्भचक्रं निजमस्तकोपरि ॥
उदग्दिशं याति यथा यथा नर-
स्तथा तथा खान्नतमृक्षमण्डलम्।
उदग्ध्रुवं पश्यति चोन्नतं क्षिते-
स्तदन्तरे योजनजाः पलांशकाः ॥
योजनसंख्या भांशै ३६० र्गुणिता
कुपरिधिहृता ४९६७ भवन्त्यंशाः ।

२ । १२९ । इति आनश् । शानज् वा ।)
न्याय्यम् । न्यायागतद्रव्यादिः । इत्यमरः
। २ । ८ ।
२४ ॥ भागकर्त्ता । सेवाकर्त्ता । इति
भजधातोः
कर्त्तरि शानप्रत्ययेन निष्पन्नम् ॥
(सात्वतनृपस्य
पुत्त्रभेदः । यथा, भागवते । ९ । २४ । ६
।
"पुरुहोत्रस्त्वनोः पुत्त्रस्तस्यायुः
सात्वतस्ततः ।
भजमानो
भजिर्दिव्योवृष्णिर्देवावृधोऽन्धकः ॥")

**भञ्जकः**, त्रि, (भञ्ज् + ण्वुल् ।) भञ्जनकर्त्ता ।

भनक्ति यः इत्यर्थे भन्जधातोः कर्त्तरि
णकप्रत्य-
येन निष्पन्नः ॥

**भञ्जन्**, त्रि, वर्त्तमानभञ्जनाश्रयः । इति भन्ज-

धातोः कर्त्तरि शतृप्रत्ययेन निष्पन्नम् ॥

**भञ्जनं**, क्ली, मोटनम् । इति भन्जधातोभवि

अनट्प्रत्ययेन निष्पन्नम् ॥ (यथा,
महाभारते ।
१२ । ५९ । ६२ ।
"यन्त्राणि विविधान्येव क्रियास्तेषाञ्च
वर्णिताः ।
अवमर्द्दः प्रतीघातः केतनानाञ्च भञ्जनम्
॥")

**भञ्जनकः**, पुं, (भनक्ति आमर्द्दयतीति । भञ्ज +

ल्युः । ततः स्वार्थे संज्ञायां वा कन् ।)
मुखरोग-
विशेषः । तस्य निदानादि यथा, --
"वक्त्रं वक्रं भवेद्यस्य दन्तभङ्गश्च जायते
।
कफवातकृतो व्याधिः स भञ्जनकसंज्ञितः
॥"
इति माधवकरः ॥

इति पराशरपद्धतिः ॥

**भटा**, स्त्री, (भट + टाप् ।) इन्द्रवारुणी । इति

रत्नमाला । राखालशसा इति भाषा ॥

**भटित्रं**, क्ली, (भटति भट्यते वेति । भट् + इत्र ।)

शूलपक्वमांसादि । इत्यमरः । २ । ९ । ४५
॥
कावाव इति पारस्यभाषा ॥

**भट्टः**, पुं, (भटतीति । भट् + बाहुलकात् तन् ।)

जातिविशेषः । भाट इति भाषा । तस्योत्-
पत्तिर्यथा, --
"वैश्यायां शूद्रवीर्य्येण पुमानेको बभूव ह ।
स भट्टो वावदूकश्च सर्व्वेषां स्तुतिपाठकः ॥"
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १० अध्यायः ॥
अपि च ।
"क्षत्त्रियाद्विप्रकन्यायां भट्टो जातोऽनुवाचकः
॥"
इति युधिष्ठिरपरशुरामसंवादे जातिसङ्कर-
लक्षणम् ॥ शिविरान्तिके राज्ञा तस्य वासो
देयः । यथा,
"ब्राह्मणं क्षत्त्रियं वैश्यं सच्छूद्रं गणकं शुभम् ।
भट्टं वैद्यं पुष्पकारं स्थापयेत् शिविरान्तिके
॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १०१ अः
॥

**भट्टाचार्य्यः**, पुं, (भट्टः तुतातभट्टः । आचार्य्यः

उदयनाचार्य्यः तौ तुल्यतया
तन्मताभिज्ञत्वेना-

स्त्यस्येति । अण् ।) तुतातभट्टमतं न्यायशास्त्रम् उदयनाचार्य्यमतं न्यायशास्त्रम् एतदुभय- शास्त्रवेत्ता । एतदुभयमतं जानाति यः इत्यर्थे ढघेकादिति कारकात् कर्त्तरि अणिता ष्णप्रत्ययेन निष्पन्नः ॥

**भट्टारः**, त्रि, (भटतीति । भट् + क्विप् । भट् चासौ तारश्चेति कर्म्मधारयः । पृषोदरादित्वात् साधुः । यद्वा भट्टं स्वामित्वं ऋच्छतीति । अण् ।) पूज्यः । इति त्रिकाण्डशेषः ॥ (यथा, राजतरङ्गिण्याम् । ७ । ८६७ ।
"नोनसिह्लारभट्टारप्रशस्तकलसादयः।
बद्ध्वाथ हर्षदेवेन कारागारं प्रवेशिताः ॥")

**भट्टारकः**, पुं, (भट्टार । संज्ञायां कन् ।) नाट्योक्तौ राजा । इत्यमरः । १ । ७ । १३ ॥ देवः । तपोधनः ।
इति मेदिनी । के, २५० ॥ पूज्ये त्रि । इति जटाधरः ॥ (यथा, राजतरङ्गिण्याम् । ६ । २४० ।
"प्रविष्टेषु ततः कोपात् पुरं शुभधरादिषु ।
भट्टारकामठेदिद्धा भूयः पुत्त्रं व्यसर्ज्जयत् ॥")

**भट्टारकवारः**, पुं, (भट्टारः संज्ञायां कन् । भट्टा- रकः सूर्य्यः तस्य वारः ।) रविवारः । यथा, --
"सखे ! स्नायुनिर्म्मितपाशास्तदद्य भट्टारक- वारे कथमेतान् दन्तैः स्पृशामि ॥" इति हितो- पदेशे १ परिच्छेदे मृगं प्रति जम्बूकवाक्यम् ॥

**भट्टिः**, पुं, स्वनामख्यातरामकथाश्रयमहाकाव्यम्। तत्तु बलभीवास्तव्यश्रीस्वामिसूनुभट्टमहाब्राह्मण्ण महावैयाकरणेन कृतम् । इति जयमङ्गलकृता तट्टीका ॥ एतत् काव्यं भर्त्तृहरिणा कृतमिति भरतमल्लिकेन लिखितम् ॥

**भट्टिनी**, स्त्री, (भट्टं स्वामित्वमस्या अस्तीति । भट्ट + इनिः + ङीप् ।) नाट्योक्तौ अकृताभि- षेका राजपत्नी । इत्यमर । १ । ७ । १३ ॥ ब्राह्मणभार्य्या । इति मेदिनी । ने, ३१ ॥

स चेह व्यक्तवाक्यम् । श्रीजयदेवकृतहरिसेवं भणति परमरमणीयम् । इति दुर्गादासः ॥

**भणितं**, त्रि, (भण + क्तः ।) शब्दितम् । कथितम् ।
यथा, --
"श्रीजयदेवभणितमिदमद्भुतकेशवकेलिरहस्यम् ।"
इति गीतगोविन्दः ॥

**भणितिः**, स्त्री, (भण्यते इति । भण + क्तिन् ।) वाक्यम् । इति भूरिप्रयोगः त्रिकाण्डशेषश्च ॥
(यथा, राजतरङ्गिण्याम् । ४ । ५४ ।
"नियन्त्रिता यद्भणितिस्तद्गुणोदीरणादियम्।
अतिप्रसङ्गभङ्गात्तन्नेयत्तावाप्तितःपुनः ॥")

**भण्टाकी**, स्त्री, (भठ्यते भण्यते वा । भट् भृतौ भणशब्दे वा + "पिनाकादयश्च ।" उणा० । ४ । १५ । इति आक । निपात्यते च । गौरादित्वात् ङीष् ।) वार्त्ताकी । इत्यमरः । २ । ४ । ११४ ॥ बृहती । इति रत्नमाला ॥ (वृन्ताकम् । तत्- पर्य्यायो यथा, --
"वृन्ताकं स्त्री तु वार्त्ताकुर्भण्टाकी भाण्टि- कापि च ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**भण्टुकः**, पुं, (भडतीति । भडि-उकन् ।) श्योनाकवृक्षः । इति रत्नमाला ॥ कुत्रचित् भण्डुकोऽपि पाठः ॥

**भण्डः**, पुं, (भण्डते इति । भडि प्रतारणे + अच् ।) अश्लीलभाषी । भाँड इति भाषा । इति संक्षिप्तसारोणादिवृत्तिः ॥ तत्पर्य्यायः । चाटु- पटुः २ । इति भूरिप्रयोगः ॥

**भण्डकः**, पुं, (भण्ड + संज्ञायां कन् ।) खञ्जन- पक्षी । इति जटाधरः ॥

**भण्डनं**, क्ली, (भडि + भावादौ ल्युट् ।) खली- कारः । कवचम् । युद्धम् । इति मेदिनी । ने, १०० ॥

**भण्डहासिनी**, स्त्री, (भण्डेन खलीकारेण हसति या । हस् + णिनिः । ङीप् ।) गणिका । इति

**भण्डी**, स्त्री, (भण्डते इति । भडि-इन् ।) कृदि- कारादिति पक्षे ङीप् ।) मञ्जिष्ठा । इत्यमरः । २ । ४ । ९१ ॥
(पर्य्यायोऽस्या यथा, --
"मञ्जिष्ठा विकसा जिङ्गी
समङ्गा कालमेषिका ।
मण्डूकपर्णी भण्डीरी भण्डी
योजनबल्ल्यपि ॥
रसायन्यरुणा काला रक्ताङ्गी
रक्तयष्टिका ।
भण्डीतकी गण्डीरी च मञ्जूषा
वस्त्रराजिनी ॥"
इति भावप्रकाशस्य
पूर्ब्बखण्डे प्रथमे भागे ॥)
शिरीषवृक्षः । इति
राजनिर्घण्टः ॥ (पर्य्या- योऽस्या यथा, --
"शिरीषो भण्डिलो भण्डी
भण्डीरश्च कपीतनः ।
शुकपुष्पः शुकतरुर्मृदुपुष्पः
शुकप्रियः ॥"
श्वेतत्रिवृता । तत्पर्य्यायो यथा, --
"श्वेतात्रिवृता भण्डी स्यात्
त्रिवृता त्रिपुटापि
च ।
सर्व्वानुभूतिः सरला निशोत्रा
रेचनीति च ॥"
इति भावप्रकाशस्य
पूर्ब्बखण्डे प्रथमे भागे ॥)

**भण्डीतकी**, स्त्री, (भण्डी सती तकतीति । तक + अच् । गौरादित्वात् ङीष् ।) मञ्जिष्ठा । इति भावप्रकाशः ॥

**भण्डीरः**, पुं, (भण्डि + बाहुलकात् ईरन् ।)

**भ** ड इक् शिवे । इति कविकल्पद्रुमः ॥ (चुरा०-

पर०-अक०-सेट् । इदित् ।) शिवं कल्याण-
क्रिया वेदेष्वेव । प्रतारणे प्रसिद्धोऽयम् । इक्
भण्डयति प्रतारको मुग्धं धनदानाङ्गीकारेण ।
इति दुर्गादासः ॥

**भ** ड इ ङ वाचि । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-सक०-सेट् ।) परिभाषण इति
गोविन्द-
भट्टः । परिहास इति चतुर्भुजः । इ भण्ड्यते ङ
भण्डते षिड्गीं लोकः । इति दुर्गादासः ॥

**भडः**, पुं, (भडतीति । भड इङ परिहासे परि-

भाषणे वा + अच् ।) वर्णसङ्करजातिविशेषः ।
स तु लेटात् तीवरकन्यायां जातः । यथा, --
“लेटस्तीवरकन्यायां जनयामास षण्णरान् ।
माल्लं मल्लं मातरञ्च भडं कोलञ्च कन्दरम् ॥”
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १० अध्यायः ॥

**भडिलः**, पुं, (भडतीति । भडि + “सलिकल्यनि-

महिभडिभण्डीति ।” उणा०-१ । ५५ । इति
इलच् ।) सेवकः । शूरः । इत्युणादिकोषः ॥

**भण** ऋ शब्दे । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-द्विक०-सेट् ।) ऋ अबीभणत् अबभाणत्

शब्दरत्नावली ॥

**भण्डिः**, स्त्री, (भडि + इन् ।) वीचिः । इति

हारावली ॥

**भण्डिका**, स्त्री, मञ्जिष्ठा । इति शब्दरत्नावली ॥

**भण्डिरः**, पुं, (भण्डिल + रलयोरैक्यम् ।) शिरीष-

वृक्षः । यथा । भण्डिलो भण्डिरो नेमीति भरत-
धृतवाचस्पतिः ॥

**भाण्डिलः**, पुं, (भण्डते परिहसतीवेति भाषते

इवेति वा । भडि + “सलिकल्यनिमहिभडि
भण्डीति ।” उणा० १ । ५५ । इति इलच् ।)
शिरीषवृक्षः । इत्यमरः । २ । ४ । ६३ ॥
(तत्पर्य्यायो यथा, --
“शिरीषो भण्डिलो भण्डी भण्डीरश्च कपीतनः ।
शुकपुष्पः शुकतरुर्मृदुपुष्पः शुकप्रियः ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**भण्डिलः**, त्रि, (भडि + इलच् ।) शुभः । दूतः ।

इत्युणादिकोषः ॥ शिल्पी । इति संक्षिप्तसारो-
णादिवृत्तिः ॥

समष्ठिलक्षुपः ।
तण्डुलीयशाकः । (यथा, --
“तण्डुलीयो मेघनादः
काण्डेरस्तण्डुलेरकः ।
भण्डीरस्तण्डुली बीजो
विषघ्नश्चाल्पमारिषः ॥”
इति भावप्रकाशस्य
पूर्ब्बखण्डे प्रथमे भागे ॥)
शिरीषवृक्षः । इति
राजनिर्घण्टः ॥ (वटवृक्षः ।
यथा, रामायणे । ३ । ७५ ।
२४ ।
“मालतीकुन्दगुल्मैश्च
भण्डीरैर्निचुलैस्तथा ।
अशोकैः सप्तपर्णैश्च
केतकैरतिमुक्तकेः ॥”
“भण्डीरो वटः ।” इति
तट्टीकायां रामानुजः ।)

**भण्डीरलतिका**, स्त्री, (भण्डीर इव लतते इति ।

लतिः सौत्रो धातुः + अच् ।
स्वार्थे कन् । टाप्
अत इत्वम् ।) मञ्जिष्ठा । इति
राजनिर्घण्टः ॥

**भण्डीरी**, स्त्री, (भण्डीर । गौरादित्वात् ङीष् ।)

मञ्जिष्ठा । इत्यमरः ॥

**भण्डीलः**, पुं, (भण्डीर । रलयोरेकत्वम् ।) मञ्जिष्ठा ।

इति शब्दरत्नावली ॥

**भण्डूकः**, पुं, (भडि + ऊक् ।) मत्स्यविशेषः ।

भाकुर इति भाषा । अस्य
गुणाः । मधुरत्वम् ।
शीतत्वम् । वृष्यत्वम् ।
श्लेष्मकरत्वम् । गुरुत्वम् ।
विष्टम्भित्वम् ।
रक्तपित्तहरत्वञ्च । इति भाव-
प्रकाशः ॥ श्योनाकवृक्षः ।
इति रत्नमाला ॥

| | | |
|---|---|---|
| | | **भद** इक् शुभे । इति कविकल्पद्रुमः ॥ (चुरा०-<br>पर०-अक०-सेट् ।) इक्<br>भन्दयति शुभं कल्याण-<br>क्रिया । इति दुर्गादासः ॥<br>**भद** इ ङ हर्षे । प्रीतौ । शुभे । इति कविकल्पद्रुमः ॥<br>(भ्वा०-आत्म०-अक०-सेट्-<br>इदित् ।) इ भन्द्यते ।<br>ङ भन्दते पण्डितः सदा ।<br>इति दुर्गादासः ॥<br>**भदन्तः**, पुं, (भन्दते इति । भदि कल्याणे + “भन्दे-<br>र्नलोपश्च ।” उणा० ३ ।<br>१३० । इति झच् ।<br>नलोपश्च ।) सौगतादिबुद्धः ।<br>इति हेमचन्द्रः ॥<br>मायादेवीमुतः । सुतेजः ।<br>पूजिते, त्रि । इत्युणा- |

दिकोषः ॥ (भदन्तः प्रव्रजितः । इत्युणादौ । ३ । १३० । सूत्रव्याख्यायां उज्ज्वलदत्तः । यथा, कथासरित्सागरे । ४९ । १७८ ।
"तत्रान्विष्य यथावत् तं भदन्तमभिगम्य च ।
परिचर्य्यापरो भक्त्या त्रीणि वर्षाण्यशेषतः ॥")

**भदाकः**, पुं, क्ली, (भन्दते इति । भदि + "पिना-

कादयश्च ।" उणा० । ४ । १५ । इति आकः । नलोपश्च ।) मङ्गलम् । इत्युणादिकोषः ॥

**भद्रं**, क्ली, (भन्दते इति । भदि कल्याणे +

"ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रेति ।" उणा ० । २ । २८ । इति रन् । निपात्यते च ।) मङ्गलम् । (यथा, ऋग्वेदे । २ । २६ । २ ।
"यजस्व वीर ! प्रविहि मनायतो भद्रं मनः कृणुष्व वृत्रतूर्य्ये ॥"
यथा च कामन्दकीयनीतिसारे । १३ । १२ ।
"किरीटमणिचित्रेषु मूर्द्धसु त्राणसारिषु ।
नाकृत्वा विद्विषां पादं पुरुषो भद्रमश्नुते ॥")
मुस्तम् । काञ्चनम् । इति मेदिनी । रे, ७१ ॥

**भद्रं**, क्ली, स्त्री, (भदि + रन् निपात्यते च ।)

करणविशेषः । इति मेदिनी । रे, ७२ ॥
तत्तु विष्टिभद्रात्वेन प्रसिद्धमशुभदम् । इति ज्योतिषम् ॥

**भद्रः**, पुं, (भन्द ते इति भदि + रन् निपातितश्च ।)

शिवः । स्वञ्जरीटः । वृषभः । कदम्बकः । करि-जातिविशेषः । इति मेदिनी । रे, ७० ॥ नव-शुक्लावलान्तर्गतजिनभेदः । रामचरः । सुमेरुः । इति हेमचन्द्रः ॥ स्नुही । इति राजनिर्घण्टः ॥
(चन्दनम् । तत्पर्य्यायो यथा, --
"श्रीखण्डं चन्दनं नस्त्री भद्रः श्रीस्तैलपर्णिकः ।
गन्धसारो मलयजस्तथा चन्द्रद्युतिश्च सः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
साध्यमौलिकानां पद्धतिविशेषः । यथा, --
विष्णुर्नागः खिलपिलगूत्नैन्द्रो गुप्तः पालो भद्रः ।
इति कुलाचार्य्यकारिका ॥ (वसुदेवस्य पुत्र-भेदः । यथा, भागवते । ९ । २४ । ४७ ।
"सुभद्रो भद्रबाहुश्च दुर्म्मदो भद्र एव च ।
पौरव्यास्तनया ह्येते भूताद्या द्वादशाभवन् ॥"
"अरक्षः शिखिरौतश्च सको वैदूर्य्यपर्व्वतः ।
कपिलः पिङ्गलो भद्रः सुरसश्च महाचलः ॥"
एकादशद्वापरजातो महेश्वरस्य ऋषिमूर्त्त्यव-तार विशेषः । यथा, ब्रह्माण्डे । २७ अध्याये ।
"एकादशद्वापरे तु व्यासस्तु त्रिवृषो यदा ।
तदाप्यहं भविष्यामि गङ्गाद्वारे युगान्तिके ॥
भद्रो नाम महातेजास्तत्रापि मम पुत्रकाः ।
भविष्यन्ति महात्मानो सुवृत्ता वेदपारगाः ॥")

**भद्रः**, त्रि, (भन्दते इति । भदि कल्याणे रन् ।

निपात्यते च ।) श्रेष्ठः । साधुः । इति मेदिनी ।
रे, ७२ ॥ (यथा, पञ्चतन्त्रे । १ । २६ ।
"भद्र ! कण्टक ! अयं तावदस्मत्स्वामी पिङ्गलक उदकग्रहणार्थं यमुनाकच्छमवतीर्य्य स्थितः ॥")

**भद्रकं**, क्ली, (भद्र + संज्ञायां स्वार्थे वा कन् ।)

भद्रमुस्तकम् । इति रत्नमाला ॥ (देवदारु-शब्देऽस्य विषयोऽभिहितः ॥) मनोज्ञे, त्रि ।
इति त्रिकाण्डशेषः ॥

**भद्रकः**, पुं, (भद्र + संज्ञायां कन् ।) देवदारुः ।

इति शब्दरत्नावली ॥

**भद्रकण्टः**, पुं, (भद्रः कण्टो यस्य ।) गोक्षुरः ।

इति राजनिर्घण्टः ॥

**भद्रकाली**, स्त्री, (भद्रा मङ्गलमयी चासौ काली चेति

सीमन्तिनी विनाशं ते करिष्यति न संशयः ॥
पुरा मुनिं तपस्यन्तं रौद्राश्वं नाम चोत्तमम् ।
मुनेः कात्यायनाख्यस्य शिष्यं हिमवदन्तिके ॥
दिव्यस्त्रीरूपमतुलं कृत्वाहं कौतुकात्तदा ।
मया संमोहितो विप्रोऽत्यजन्मूढस्तदा तपः ॥
न दूरात् संस्थितेनाहं मुनिना कात्यसूनुना ।
ज्ञात्वा मायां तदा शप्तः शिष्यार्थे क्रोधवह्निना ॥
यस्मात्त्वया मे शिष्योऽयं मोहितस्तपसश्च्युतः ।
कृतस्त्वया स्त्रीरूपेण ततस्त्वां स्त्री हनिष्यति ॥
इति मां शप्तवान् पूर्ब्बं मुनिः कात्यायनः पुरा ।
तस्य शापस्य कालोऽयमागत्य समुपस्थितः ॥
देवेन्द्रत्वं मया प्राप्तं भुक्तं त्रिभुवनं समम् ।
किञ्चिन्न शोच्यं तत्रास्ति वाञ्छनीयं हि यन्मया ॥
तस्मात्त्वां वै प्रपन्नोऽहं प्रार्थ्यं शेषं हि यन्मया ।
तद्देहि देवि दुर्गे ! त्वं भूयस्तुभ्यं नमो नमः ॥
श्रीदेव्युवाच ।
"प्रार्थनीयो वरो यस्ते तं वृणु त्वं महासुर ! ।
दास्यामि ते वरं प्रार्थ्यं संशयो नात्र विद्यते ॥"
महिष उवाच ।
"यज्ञभागमहं भोक्तुमिच्छामि त्वत्प्रसादतः ।

सरोवरविशेषः । यथा, मत्स्यपुराणे । ११२ । ४६ ।
"अरुणोदं मानसञ्च सितोदं भद्रसंज्ञितम् ।
तेषामुपरि चत्वारि सरांसि च वनानि च ॥"
तृतीयमनोरुत्तमस्यान्तरेदेवगणभेदे बहुवच-नान्तोऽयम् । यथा, भागवते । ८ । १ । २४ ।
"वशिष्ठतनयाः सप्त ऋषयः प्रमदादयः ।
सत्या वेदश्रुता भद्रा देवा इन्द्रस्तु सत्यजित् ॥"
स्वायम्भुवमन्वन्तरे विष्णोर्दक्षिणागर्भजात तुषित-नामकदेवगणभेदः । यथा, भागवते । ४ । १ । ६-७ ।
"तां कामयानां भगवानुवाह यजुषां पतिः ।
तुष्टायां तोषमापन्नोऽजनयद्द्वादशात्मजान्॥
तोषः प्रतोषः सन्तोषो भद्रः शान्तिरिडस्पतिः ॥
इध्मः कविर्विभुः स्वाह्नः सुदेवो रोचनो द्विषट् ॥"
पर्व्वतविशेषः । यथा, ब्रह्माण्डपुराणे । भुवन-कोषे । ४० अध्याये ।

कर्म्मधारयः । यद्वा, भद्रं कल्याणं कालयतीति ।
भद्र + कर्म्मण्यण् ।" ३ । २ । १ । इति अण् ।
ङीप् ।) गन्धोली । कात्यायनी । इति मेदिनी । ले, १५८ । तस्या उत्पत्तिर्यथा, --
श्रीऔर्व्व उवाच ।
"शृणु त्वं नृपशार्दूल ! भद्रकाली यथा पुरा ।
प्रादुर्भूता महाभागा महिषेण सदैव तु ॥
महिषासुर एवासौ निद्रायां निशि पर्व्वते ।
स्वप्नं प्रददृशे वीरो दारुणं घोरदर्शनम् ॥
महामाया भद्रकाली छित्त्वा खड्गेन काशरम् ।
पपौ तस्य च रक्तानि व्यादितास्यातिभीषणा॥
ततः प्रातर्भययुतः स दैत्यो महिषासुरः ।
तामेव पूजयामास सुचिरं सानुगस्तदा ॥
आराधिता तदा देवी महिषेणासुरेण वै ।
प्रादुर्भूता भद्रकाली भुजैः षोडशभिर्युता ॥
ततः प्रणम्य महिषो महामायां जगन्मयीम् ।
उवाचेदं वचो नम्रमूर्त्तिर्भक्तियुतोऽसुरः ॥
महिष उवाच ।
देवि ! खड्गेन संछिद्य शोणितानि शिरो मम ।
त्वया भुक्तानि दृष्टानि मया स्वप्ने सुनिश्चितम् ॥
अवश्यं तत्त्वया कार्य्यं मया ज्ञातं प्रमाणतः ।
एतद्रुधिरपानं मे तत्रैकं देहि मे वरम् ॥
वध्यस्तवाहं नात्रास्ति संशयः परमेश्वरि ! ।

यथा यज्ञेषु सर्व्वेषु पूज्योऽहं स्यां तथा कुरु ॥
त्वत्पादसेवां न त्यक्ष्ये यावत् सूर्य्यः प्रवर्त्तते ।
एवं वरद्वयं देहि यदि देयो वरो मम ॥"
श्रीदेव्युवाच ।
"यज्ञभागाः सुरेभ्यश्च कल्पिता वै पृथक्
पृथक् ।
भागो न विद्यते चान्यो यद्दास्यामि तवाधुना ॥
किन्तु त्वयि मया युद्धे निहते महिषासुर ! ।
नैव त्यक्ष्यसि मत्पादं सततं नात्र संशयः ॥
मम प्रवर्त्तते पूजा यत्र यत्र च तत्र ते ।
पूज्यश्चिन्त्यश्च तत्रैव कायोऽयं तव दानव ! ॥
इति श्रुत्वा वचस्तस्याः प्रत्यूचे महिषासुरः ।
वरं प्राप्येह मुदितः प्रसन्नवदनस्तदा ॥
उग्रचण्डे ! भद्रकालि ! दुर्गे देवि ! नमोऽस्तु ते ।
प्रभूता मूर्त्तयो देवि ! भवत्याः सकलात्मिकाः ॥
काभिस्ते मूर्त्तिभिः पूज्यो यज्ञेऽहं परमेश्वरि ! ।
तत् समाचक्ष्व यदि मे भवत्येह कृपा कृता ॥"
श्रीदेव्युवाच ।
"यानि नामानि चोक्तानि त्वयेहं महिषासुर ! ।
तासु मूर्त्तिषु संस्पृष्टः पूज्यो लोके भविष्यति ॥
उग्रचण्डेति या मूर्त्तिर्भद्रकाली ह्यहं पुनः ।
यया मूर्त्या त्वां हतिष्ये सा दुर्गेति प्रकीर्त्तिता ॥
एतासु मूर्त्तिषु सदा पादलग्नो नृणां सदा ।

| | | |
|---|---|---|
| | ममापि तत्र नो दुःखं नियतिः केन लङ्घ्यते ॥<br>किन्तु त्वयैव सहितः शम्भुराराधितः पुरा ।<br>मम पित्रा मदर्थेन जातः पश्चादहं ततः ॥<br>मयाप्याराधितः शम्भुः प्राप्ताश्चेष्टास्तथा वराः ।<br>मन्वन्तरत्रयं यावदासुरं राज्यमुत्तमम् ।<br>अकण्टकं मया भुक्तमनुतापो न विद्यते ॥<br>कात्यायनेन मुनिना शप्तोऽहं शिष्यकारणात् । | पूज्यो भविष्यसि त्वं वै देवानामपि रक्षसाम् ॥<br>आदिसृष्ट्या उग्रचण्डामूर्त्या त्वं निहतः पुरा ।<br>द्वितीयसृष्टौ तु भवान् भद्रकाल्या मया हतः ॥<br>दुर्गारूपेणाधुना त्वां हनिष्यामि सहानुगम् ।<br>किन्तु पूर्ब्बं न गृहीतस्त्वं मया पादयोस्तले ॥<br>अधुना प्रार्थितवरो गृहीतः पूर्ब्बकाययोः ।<br>ग्रहीतव्यश्च पश्चात्त्वं यज्ञभागोपभुक्तये ॥”<br>इति कालिकापुराणे ५९ अध्यायः ॥<br>* ॥<br>गङ्गायाः पश्चिमे तीरे ग्रामविशेषश्च ॥ |

**भद्रकाशी**, स्त्री, (भद्राय काशते इति । काश +

अच् । गौरादित्वात् ङीष् ।) भद्रमुस्ता । इति

राजनिर्घण्टः ॥

**भद्रकुम्भः**, पुं, (भद्रस्य भद्राय वा कुम्भोऽथवा भद्रः

कुम्भः ।) पूर्णकुम्भः । इत्यमरः । २ । ८ । ३२

॥

**भद्रगन्धिका**, स्त्री, (भद्रो गन्धोऽस्यास्तीति । ठन् ।

टाप् ।) मुस्तकम् । इति रत्नमाला ॥

**भद्रङ्करः**, त्रि, (भद्रं करोतीति । कृ + "बाहु-

लकात् खच् । मुम् च ।) मङ्गलकारकः । तत्-

पर्य्यायः । क्षेमङ्करः २ क्षेमकारः ३ मद्रङ्करः ४

शुभङ्करः ५ अरिष्टतातिः ६ शिवतातिः ७

शङ्करः ८ । इति भूरिप्रयोगः ॥

**भद्रचूडः**, पुं, (भद्रा चूडास्य ।) लङ्कास्थायी ।

इति शब्दचन्द्रिका । लङ्कासिज इति भाषा ॥

**भद्रजः**, पुं, (भद्राय जायते इति । जन + डः ।)

इन्द्रयवः । इति राजनिर्घण्टः ॥ (गुणादयो-

ऽस्येन्द्रयवशब्दे ज्ञातव्याः ॥)

**भद्रतरुणी**, स्त्री, (भद्रा तरुणीव ।) कुब्जकवृक्षः ।

इति राजनिर्घण्टः ॥ (तथास्या अन्यतरः

पर्य्यायः ।

"कुब्जको भद्रतरुणी बृहत्पुष्पोऽतिकेसरः ।

महा सहा कण्टकाढ्या नीलालिकुल-

सङ्कुला ॥"

इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**भद्रतुरगं**, क्ली, (भद्रा तुरगा अत्र ।) जम्बू-

द्वीपस्य नववर्षान्तर्गतवर्षविशेषः । यथा, --

"माल्यवज्जलधिमध्यवर्त्तियत्तत्तु भद्रतुरगं

जगुर्बुधाः ।"

इति सिद्धान्तशिरोमणौ गोलाध्यायः ॥

**भद्रदन्तिका**, स्त्री, (भद्रा दन्तिका ।) दन्तीवृक्ष-

भेदः । भद्रदन्ती इति ख्याता । तत्पर्य्यायः ।

केशरुहा २ भिषग्भद्रा ३ जयावहा ४ आव-

र्त्तकी ५ ज्वराङ्गी ६ जयाह्वा ७ । अस्या गुणाः ।

गोक्षुरं शरमूलञ्च कुशमूलं

समांसिकम् ॥

ऊनचत्वारिंशद्द्रव्यैर्भद्रदार्व्वादिको

गणः ॥"

इति शब्दचन्द्रिका ॥ * ॥

एतन्मध्ये चतुर्दशद्रव्याणि न प्राप्तानि

॥

**भद्रनामा**, [न्] पुं, (भद्रं नाम यस्य ।) काष्ठकुट्ट-

पक्षी । इति त्रिकाण्डशेषः । काट्ठोक्रा

इति

भाषा ॥

**भद्रनामिका**, स्त्री, (भद्रं नामास्याः । कप् । टाप् ।

अत इत्वम् ।) त्रायन्तीवृक्षः । इति

रत्न-

माला । वहला इति भाषा ॥

**भद्रनिधिः**, स्त्री, (भद्रा निधयोऽत्र ।) महादान-

विशेषः । यथा, --

इन्द्र उवाच ।

"विधानं ब्रूहि मे ब्रह्मन् ! दानस्यास्य

महानिधेः ।

यथा देव ! विशेषेण

विष्णोरानन्दकारकम् ॥"

ब्रह्मोवाच ।

"पुण्यां तिथिं प्राप्य तु पौर्णमास्यां

तथोपरागे शशिसूरयोर्वा ।

चतुर्युगादिष्वयनद्वये वा

प्रबोधने प्रस्वपनेऽथ विष्णोः ॥

कुर्य्यादिथौडुम्बरमेव कुम्भं

हिरण्यमानेन यथात्मशक्त्या ।

तथा पिधानञ्च सुराजतं स्याद्-

हिरण्यभारेण तु पूरयेत्तत् ॥

तदर्द्धतोऽर्द्धेन तदर्द्धतो वा

स्वशक्तितः स्वर्णपलैः शतेन ।

तदर्द्धमध्येन तु वित्तशक्त्या

पलत्रयादूनमथो न कुर्य्यात् ॥

तत्ताम्रभाण्डे कनकं निधेयं

समस्तकल्याणनिधिः समाधि-

र्हरिप्रिये ! भद्रनिधे ! नमस्ते ॥

एवं संपूज्य विधिना ततो विप्रमथार्च्चयेत्

।

किरीटाङ्गदनिष्काग्र्यकुण्डलाङ्गुलिभूषणैः

॥

अलंकृत्य हरिं यद्वत् पीताम्बरधरं ततः ।

पूजयेदच्युतं ध्यात्वा मन्त्रेणानेन

भक्तिमान् ॥

भूदेवोऽसि विभो ! नित्यं नित्यानन्द मयो

हरे ! ।

हर मे दुष्करं कृष्ण ! कृपाकर ! नमोऽस्तु

ते ॥

भूदेव ! भगवान् भर्ग भवभङ्गकरेश्वर ! ।

भवभूतिकरो जिष्णो ! प्रभविष्णो

नमोऽस्तु ते ॥

एवं पूज्य हृदि ध्यात्वा तं द्विजं

ब्रह्मरूपिणम् ।

ततो भद्रनिधिं दद्यान्मन्त्रेणानेन वासव !

॥

स्वगोत्रोच्चारणेनादौ विप्रनाम तथात्मनः

।

यवदर्भतिलैः सार्द्धमुदकं संपरित्यजेत् ॥

पितृसन्तारणार्थाय नित्यानन्दविवृद्धये ।

सर्व्वाघौघविघाताय विष्णोर्दानं मया

कृतम् ॥

तदनेन सरत्नेन धातुत्रययुतेन च ।

सक्षौमाम्बरयुक्तेन सादर्शपादुकेन च ॥

सासनेन सच्छत्रेण चामरोपानहेन च ।

सदानन्दनिधानेन प्रीयतां विष्णुरीश्वरः ॥

एवमुच्चार्य्य तं दद्याद्द्विजाय हरिरूपिणे ।

गोप्येन विधिना दद्याद्धेमसंख्यां न

कीर्त्तयेत् ॥

प्रकीर्त्तिते कोटियुगायुतं फलं

प्रगोपिते कल्पगणैर्न संक्षयः ।

इतीयमज्ञो न तु कीर्त्तयेत् सुधी-

र्निधानमध्ये निहितञ्च यद्वसु ॥

एवं कृते स्यान्मनुजः कृतात्मा

तपेन्न च स्वामरणं कदाचित् ।

कटुत्वम् । उष्णत्वम् । रेचनत्वम् । कृमिशूल-
कुष्ठामदोषतुन्दामयनाशित्वञ्च। इति राज-
निर्घण्टः ॥

**भद्रदारु**, क्ली, पुं, (भद्रं दारु ।) देवदारु । इत्य-

मरभरतौ ॥ सरलकाष्ठम् । इति रत्नमाला ॥

**भद्रदार्व्वादिकः**, पुं, (भद्रदारु आदौ यस्य कप् ।)

औषधगणविशेषः । यथा । भद्रदारुकुष्ठहरिद्रा-
वरुणमेषशृङ्गीबलातिबलार्त्तगलकच्छुरासल्लकी-
कुवेराक्षीवीरतरुसहचराग्निमन्थवत्सादन्येर-
ण्डाश्मभेदकालकर्कर्कशतावरीपुनर्न्नवावसुकवसि-
रकाञ्चनकभार्गीकाप्पासीवृश्चिकालीपत्तूरवदर
यवकोलकुषत्थप्रभृतीनि । इति सुश्रुतसूत्र-
स्थानस्य संशोधनसंशमनीयाध्यायः ॥ * ॥
अपिच ।
"देवदारु हरिद्रे द्वे वरुणः कुष्ठमेव च ।
महानिम्बं नागबला श्यामला गरलोऽपरः ॥
पाटला चात्मगुप्ता च शुण्ठी पाषाणभेदिका ।
शतावरी चार्कमूतं गुडूची गणिकारिका ॥
पुनर्न्नवा च वास्तूकसूर्य्यावर्त्तककानतम।
सवज्रनीलोत्तमपद्मरागम्।
सुमुक्तवैदूर्य्यसविद्रुमञ्च
तद्राजतं पात्रमधोमुखं स्यात् ॥
एवन्तु तं भद्रनिधिं सुविद्वान्
कृत्वासने प्रावरणोपयुक्ते ।
कुशोत्तरे दर्पणचामराढ्यं
सपादुकोपानहच्छत्रयुक्तम् ।
तं क्षौमवस्त्रोत्तमयुग्मयुक्तं
सम्पूजयेन्मन्त्रवरैरथैतम् ॥
आदौ तु पञ्चामृतमाप्य विष्णुं
संस्नाप्य संसारतरं समच्चर्य ।
तथेश्वरं पावकमेव हुत्वा
आमन्त्रयेद्भद्रनिधिं ततस्तम् ॥
श्रीखण्डकर्पूरसकुङ्कमेन
पञ्चाक्षरं नाम श्रियः प्रलिख्य ।
नमस्तथोङ्कारयुतञ्च पात्रे
तद्राजतेऽप्येवमथार्च्चयेत्ताम् ॥
त्वया समस्तामरसिद्धयक्ष-
विद्याधरेन्द्रोरगकिन्नरेन्द्रैः ।
गन्धर्व्वदिव्याप्सरदानवेन्द्रै-
र्युतं वृतं विश्वमिदं नमस्ते ॥
समस्तसंसारकरी त्वमेव
विभोः सदानन्दमयी च माया ।
प्रयाति विष्णोः पदमव्ययं तत्
शिवात्मकानन्दमयं सदाख्यम् ॥"
इत्याद्ये वह्निपुराणे
भद्रनिधिदाननामाध्यायः ॥

**भद्रपदा**, स्त्री, (भद्रं पदमासाम् ।) भाद्रपदा ।

पूर्ब्बभाद्रपदोत्तरभाद्रपदानक्षत्रम्।
इत्यमर-
टीकायां रायमुकुटः ॥ (यथा, बृहत्संहि-
तायाम् । ९ । २ ।
"नगा तु पवनयाम्यां
नलानिपैतामहात् त्रिभास्तिस्रः ।
गोवीथ्यामश्विन्यः
पौष्णं द्वे चापि भद्रपदे ॥")

**भद्रपर्णा**, स्त्री, (भद्राणि पर्णान्यस्याः । टाप् ।)

कटम्भरावृक्षः । इति शब्दमाला ॥
(गुणादिक-
मस्याः कटम्भराशब्दे विवृतम् ॥)

**भद्रपर्णी**, स्त्री, (भद्राणि पर्णान्यस्याः । गौरादित्वात्

ङीष् ।) गाम्भारी । इत्यमरः । २ । ४ ।
३६ ॥
(अस्याः पर्य्यायो यथा, --
"गाम्भारी भद्रपर्णी च श्रीपर्णी मधुपर्णिका
॥
काश्मिरी काश्मरी हीरा काश्मर्य्यः पीत-
रोहिणी ।
कृष्णवृन्ता मधुरसा महाकुसुमिकापि च
॥")
प्रसारिणी । इति जटाधरः ॥ (अस्याः
पर्य्यायो
यथा, --

"प्रसारणी राजबला भद्रपर्णी प्रतापनी ।
सरणी सारणी भद्रा बला चापि कटम्भरा ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
"प्रसारणी च गन्धाली भद्रपर्णी कटम्भरा ॥"
इति वैद्यकरत्नमालायाम् ॥
यथा, शतपथब्राह्मणे । ३ । ४ । १ । १६ ।
इत्यस्य भाष्ये
"काष्मर्य्यो भद्रपर्णी प्रकृतौ पलाशवैकङ्कता-
दीनामैच्छिकत्वादत्र नियमविधिः ॥")

**भद्रबलनः**, पुं, (भद्रं महद्बलनं बलमस्य ।)

बलरामः । इति शब्दमाला ॥

**भद्रमल्लिका**, स्त्री, (भद्रा मल्लिका ।) गवाक्षी ।

इति शब्दमाला ॥

**भद्रमुञ्जः**, पुं, (भद्रो मुञ्ज इति कर्म्मधारयः ।)

मुञ्जभेदः । रामशर इति शरपत इति च
भाषा । तत्पर्य्यायः । शरः २ बाणः ३ तेजनः
४ इक्षुवेष्टनः ५ । अथ मुञ्जस्य पर्य्यायः । मुञ्जः
१ मुञ्जातकः २ बाणः ३ स्थूलदर्भः ४
सुमेधसः
५ । एतयोर्गुणाः ।
"मुञ्जद्वयन्तु मधुरं तुवरं शिविरं तथा ।
दाहतृष्णाविसर्पास्रमूत्रवस्त्यक्षिरोगजित् ॥
दोषत्रयहरं वृष्यं मेखलासूपयुज्यते ॥"
इति भावप्रकाशः ॥

**भद्रमुस्तकः**, पुं, (भद्रो मुस्तकः ।) नागरमुस्तकः ।

इत्यमरः । २ । ४ । १६० ॥ (तत्पर्य्यायो
यथा, --
"मेघाख्यं मुस्तकं मुस्ता गाङ्गेयं भद्रमुस्तकम्
॥"
इति वैद्यकरत्नमालायाम् ॥)

**भद्रमुस्ता**, स्त्री, (भद्रा मुस्ता ।) नागरमुस्तकः ।

तत्पर्य्यायः । वराही २ गुन्द्रा ३ ग्रन्थिः ४
भद्रकाशी ५ कशेरुः ६ क्रोडेष्टा ७ कुरु-
विन्दाख्या ८ सुगन्धिः ९ ग्रन्थिला १० हिमा
११ बल्या १२ राजकशेरुः १३ कच्छोत्था
१४

**भद्रवती**, स्त्री, (भद्रं विद्यतेऽस्याम् । भद्र +
मतुप् ।

मस्य वः । ङीप् ।) भद्रपर्णी । इति
जटाधरः ॥
(कट्फलः । अस्य पर्य्यायो यथा, -
-
"कट्फलः सोमबल्कश्च कैटर्य्यः
कुम्भिकापि च ।
श्रीपर्णी काकुमुदिका भद्रा
भद्रवतीति च ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ॥
कल्याणविशिष्टे, त्रि । यथा,
महाभारते ।
४ । २४ । १८ ।
"इमाञ्च नः प्रियां वीर ! वाचं
भद्रवतीं
शृणु ॥"
श्रीकृष्णस्य नाग्नजितीगर्भजाता
कन्या । यथा,
हरिवंशे । १६० । १०-११ ।
"मित्रबाहुः सुनीथश्च नाग्नजित्याः
प्रजाः शृणु ।
भद्रकालो भद्रबिन्दः कन्या भद्रवती
तथा ॥"
मधोर्माता । यथा, हरिवंशे । ३६ ।
३ ।
"आसीन्मरुवसः पुत्त्रः पुरुद्वान्
पुरुषोत्तमः ।
मधुर्जज्ञेऽथ वैदर्भ्यां भद्रवत्यां
कुरूद्वह ! ॥")

**भद्रवर्म्मा**, [न्] पुं, (भद्रेण वृणाति आत्मान-

मितिशेषः । वृ + मनिन् ।)
नवमल्लिका । इति
शब्दचन्द्रिका ॥ (विषयोऽस्य
नवमल्लिकाशब्दे
ज्ञातव्यः ॥)

**भद्रवला**, स्त्री, (भद्रा वला ।) लताविशेषः ।

कट्फलम् । अनन्ता । इति मेदिनी । रे, ७१
॥
जीवन्ती । अपराजिता । नीली । बला ।
शमी । वचा । दन्ती । हरिद्रा । श्वेतदूर्व्वा ।
काश्मरी । (पर्य्यायोऽस्या यथा, --
"श्रीपर्णी काश्मरी भद्रा गाम्भारी गोपभद्रिका
।
कुमुदा च सदाभद्रा कट्फला कृष्णवृन्तिका
॥"
इति वैद्यकरत्नमालायाम् ॥
चन्द्रशूरः । तत्पर्य्यायो यथा, --
"चन्द्रिका चर्म्महन्त्री च पशुमेहनकारिका ।
नन्दिनी कारवी भद्रा वासपुष्पा सुवासरा ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
सारिवाविशेषः । गौः । इति राजनिर्घण्टः ॥
काकोडुम्बरिका । इति रत्नमाला ॥
(भद्राश्व-
वर्षस्थनदीभेदः । यथा, मार्कण्डेये । ५९ ।
७ ।
"शीता शङ्खावती भद्रा चक्रावर्त्तादिका-
स्तथा ॥")
गङ्गायास्त्रिश्रोतोऽन्तर्गतश्रोतोविशेषः । तत्तु
उत्तरे कुरुवर्षीयगङ्गा । इति पुराणं शब्द-
माला च ॥ बुद्धशक्तिविशेषः । तत्पर्य्यायः ।
तारा २ महाश्रीः ४ ओङ्कारा ४ स्वाहा ५
श्रीः ६ मनोरमा ७ तारिणी ८ जया ९
अनन्ता
१० शिवा ११ लोकेश्वरात्मजा १२ खदूर-
वासिनी १३ वैश्या १४ नीलसरस्वती १५
शङ्खिनी १६ महातारा १७ वसुधारा १८
धनन्ददा १९ त्रिलोचना २० लोचना २१ ।
इति त्रिकाण्डशेषः ॥ छायागर्भजाता सूर्य्य-
कन्या । यथा, --
"यमलौ तु ततस्तस्यां जनयामास भास्करः
।
शनैश्चरञ्च भद्राञ्च छायायाममितद्युतिः ॥
तथा च तेजसा विष्णोस्तस्य चक्रमवर्त्तयत् ।
तदप्रतिहते युद्धे दानवान्तचिकीर्षया ।
तद्भगिनी मुखतो भद्रा नियुक्तैवं विगर्हिता ॥"

मुस्ता १५ अर्णोदः १६ वारिदः १७ अम्भोदः १८ मेघः १९ जीमूतः २० अब्दः २१ नीरदः २२ अभ्रम् २३ घनः २४ गाङ्गेयः २५ । अस्या गुणाः । कषायत्वम् । तिक्तत्वम् । शीतत्वम् । पाचनत्वम् । पित्तज्वरकफनाशित्वम् । संग्राहित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
"मुस्तकं न स्त्रियां मुस्तं त्रिषु वारिदनामकः ।
कुरुबिन्दश्च संख्यातोऽपरः क्रोडकशेरुकः ॥
भद्रमुस्तश्च गुन्द्रा च तथा नागरमुस्तकः ।
मुस्तं कटु हिमं ग्राहि तिक्तं दीपनपाचनम् ॥
कषायं कफपित्तास्रतृड्ज्वरारुचिजन्तुहृत् ।
अनूपदेशे यज्जातं मुस्तकं तत् प्रशस्यते ॥
तत्रापि मुनिभिः प्रोक्तं वरं नागरमुस्तकम् ॥"
इति भावप्रकाशः ॥

**भद्रयवः**, पुं, क्ली, (भद्रः शुभदो यवः ।) इन्द्रयवम् । इत्यमरः । २ । ४ । ६७ ॥ (विवरणमस्य इन्द्रयवशब्दे ज्ञातव्यम् ॥)

**भद्ररेणुः**, पुं, (भद्रा रेणवोऽस्य ।) ऐरावतहस्ती । इति त्रिकाण्डशेषः ॥

**भद्रवत्**, क्ली, (भद्रमस्त्यस्मिन्निति । मतुप् मस्य वः ।) देवदारु । इति राजनिर्घण्टः ॥

गन्धभादालिया इति भाषा । तत्पर्य्यायः । सरणा २ प्रसारणी ३ कटम्भरा ४ राजबला ५ । इत्यमरः । २ । ४ । १५३ ॥ अस्याः पर्य्यायान्तरं गुणाश्च प्रसारिणीशब्दे द्रष्टव्याः ॥ बला । इति राजनिर्घण्टः ॥

**भद्रवल्लिका**, पुं, (भद्रा वल्लिका ।) गोपवल्ली । इति रत्नमाला । अनन्तमूल इति भाषा ॥

**भद्रवल्ली**, स्त्री, (भद्रा चासा वल्ली चेति कर्म्मधारयः ।) मल्लिका । माधवीलता । इति राजनिर्घण्टः ॥ लताविशेषः । मदनमाली इति हापरमाली इति च भाषा । तत्पर्य्यायः । शातभीरुः २ भूमिमण्डा ३ अष्टपादिका ४ । इति रत्नमाला ॥

**भद्रश्रयं**, क्ली, (भद्राय श्रीयते गृह्यते इति । श्रि + कर्म्मणि अच् ।) चन्दनम् । इति रत्नमाला ॥

**भद्रश्रीः**, पुं, (भद्रा श्रीरस्य ।) चन्दनवृक्षः । इत्यमरः । २ । ६ । १३१ ॥

**भद्रसोमा**, स्त्री, (भद्रः सोम इवास्या द्रव इति । टाप् ।) गङ्गा । इति शब्दमाला ॥ (कुरुवर्षस्थनदीविशेषः । यथा, मार्कण्डेये । ५९ । २३ ।
"तस्मिन् कुलाचलौ वर्षे तन्मध्ये च महानदी ।
भद्रसोमा प्रयात्युर्व्व्यां पुण्यामलजलौघिनी ॥")

इति वह्निपुराणे वैवस्वतानुकीर्त्तनम् ॥
सुभद्रा । यथा, --
"आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता ।
तस्यां रथे समारोप्य रामं मां भद्रया सह ॥"
इति स्कान्दे भगवद्वाक्यम् ॥ * ॥
विष्टिभद्रा यथा, --
"एकादश्यां चतुर्थ्यान्तु शेषार्द्धे शुक्लपक्षके ।
अष्टमीपौर्णमास्योस्तु पूर्ब्बार्द्धे विष्टिसम्भवः ॥
कृष्णपक्षे तृतीयाया दशम्याश्च परार्द्धतः ।
सप्तम्याश्च चतुर्द्दश्याः पूर्ब्बार्द्धे विष्टिरीरिता ॥
विहाय विषरोद्राणि विष्टिं सर्व्वत्र वर्जयेत् ।
विष्टिशेषे त्रिदण्डे हि पुच्छे कार्य्यं जयावहम् ॥"
कर्म्मप्रकाशे तस्या अङ्गविशेषो यथा, --
"नाड्यस्तु पञ्चवदनं गलकस्तथैका
वक्षो दशैकसहिता नियतं चतस्रः ।
नाभिः कटिः षडथ पुच्छलता च तिस्रो
विष्टेर्ध्रुवं निगदितोऽङ्गविभाग एषः ॥"
अङ्गविशेषे कार्य्यध्वंसादिफलम् यथा, --
"मुखे कार्य्यध्वंसो भवति मरणञ्चाथ गलके
धनग्लानिर्वक्षस्यथ कटितटैर्बुद्धिविलयः ।

| | | |
|---|---|---|
| | **भद्रा**, स्त्री, (भद्र + अजादित्वात् टाप् ।) रास्ना ।<br>कृष्णा । व्योमनदी । तिथिभेदः ।<br>सा तु द्वितीया<br>सप्तमी द्वादशी च ॥ प्रसारिणी ।<br>(अस्याः<br>पर्य्यायो यथा, --<br>"प्रसारिणी राजबला भद्रपर्णी<br>प्रतापनी ।<br>सरणी सारणो भद्रा बला चापि<br>कटम्भरा ॥"<br>इति भावप्रकाशस्य पूर्ब्बखण्डे<br>प्रथमे भागे ॥) | |

कलिर्नाभीदेशे विजयमथ पुच्छे च जगदुः
शरीरे भद्रायाः पृथगिति फलं सर्व्वमुनयः
॥”
मनुवसुमुनितिथियुग्दशशिवगुणसंख्यासु
तिथिषु
पूर्ब्बाद्यास्यम् । आयाति विष्टिरेषा पृष्ठे
शुभदा
पुरस्त्वशुभा ॥ चतुर्द्दश्यादिषु
पूर्ब्बाग्न्यादिमुखं
भवतीत्यर्थः । इति ज्योतिस्तत्त्वम् ॥

**भद्राकरणं**, क्ली, (भद्र + डाच् । कृ + ल्युट् ।)

मुण्डनम् । इति हेमचन्द्रः ॥

**भद्रात्मजः**, पुं, (भद्रः हितकर आत्मज इव रक्षा-

करत्वात् ।) खड्गः । इति त्रिकाण्डशेषः ॥

**भद्रारकः** पुं, अष्टादशक्षुद्रद्वीपान्तर्गतद्वीपविशेषः ।

इति शब्दमाला ॥

**भद्रालपत्रिका**, स्त्री, (भद्राय अलति पर्य्याप्नोतीति ।

अल् + अच् । भद्रालं पत्र यस्याः । कप् ।
टाप् । अत इत्त्वम् ।) गन्धाली । इति शब्द-
माला ॥

**भद्राली**, स्त्री, (भद्र + अल् + अच् । भद्राल + गौरा

दित्वात् ङीष् ।) गन्धाली । इति शब्दमाला
॥

**भद्रावती**, स्त्री, (भद्रमस्या अस्तीति । मतुप् ।

मस्य वः । संज्ञायां पूर्ब्बपदस्य दीर्घः ।)
कट्
फलवृक्षः । इति राजनिर्घण्टः ॥

**भद्राश्रयः**, पुं, (भद्रस्याश्रयः ।) चन्दनम् । इति

शब्दचन्द्रिका ॥

**भद्राश्वं**, क्ली, (भद्रा अश्वा अत्र ।) भुवि
जम्बुद्वीपस्य

नववर्षान्तर्गतवर्षविशेषः । इति
त्रिकाण्डशेषः ॥

एतेषु चूतजम्बूकदम्बन्यग्रोधाश्चत्वारःपादप-
प्रवराः पर्व्वतकेतव इवाधिसहस्रयोजनोन्नाहा-
स्तावद्विटपविततयः शतयोजनपरिणाहाः ।
ह्रदाश्चत्वारः पयोमध्विक्षुरसमृष्टजलाःयदुप-
स्पर्शिन उपदेवगणा योगैश्वर्य्याणि स्वाभावि-
कानि भरतर्षभ ! धारयन्ति । देवोद्यानानि च
भवन्ति चत्वारि नन्दनं चैत्ररथं वैभ्राजकं
सर्व्वतोभद्रामति । येष्वमरपरिवृढाः सहसुर-
ललनाललामयूथपतय उपदेवगणैरुपगीयमान-
महिमानः किल विहरन्ति । मन्दरोत्सङ्ग
एकादशशतयोजनोत्तुङ्गदेवचूतशिरसो गिरि-
शिखरस्थूलानि फलान्यमृतकल्पानि निपतन्ति ।
तेषां विशीर्य्यमाणानां अतिमधुरसुरभिसुगन्धि-
बहलारुणरसोदेनारुणोदा नाम नदी मन्दर-
गिरिशिखरान्निपतन्ती पूर्ब्बेणेलावृतमुपप्लाव-
यति । यदुपजोषणाद्भवान्या अनुचरीणां पुण्य-
जनबधूनामवयवस्पर्शसुगन्धिवातो दशयोजनं
समन्तादनुवासयति । एवं जम्बूफलानामत्यु-
च्चनिपातविशीर्णानामनस्थिप्रायाणामिभकाय
निभानां रसेन जम्बूनदी नाम नदी मेरुमन्दर-
शिखरादयुतयोजनादवनितले निपतन्ती दक्षिणे-
नात्मानं यावदिलावृतमुपस्यन्दति । तावदु-
भयोरपि रोधसोर्या मृत्तिका तद्रसेनानुविध्य-
माना वाय्वर्कसंयोगविपाकेन सदामरलोकाभरणं
जाम्बूनदं नाम सुवर्णं भवति यदुहवाव विबुधा-
दयः सह युवतिभिर्मुकुटकटककटिसूत्राद्या-
भरणरूपेण खलु धारयन्ति । यस्तु महाकदम्बः
मुपाश्वपार्श्वनिरूढस्तस्य कोटरेभ्यो विनिःसृताः
पञ्चायामपरिणाहाः पञ्च मधुधाराः सुपार्श्व-
शिखरात् पतन्त्योऽपरेणात्मानमिलावृतमनु-
मोदयन्ति यो ह्युपयुञ्जानानां मुखनिर्व्वासितो
वायुः समन्तात् शतयोजनमनुवासयति । एवं
कुमुदनिरूढो यः शतवल्शो नाम वटस्तस्य
स्कन्धेभ्यो नीचीनाः पयोदधिमधुघृतगुडान्नाद्य-
म्बरशय्यासनाभरणादयःसर्व्व एव कामदुघा
नदाः कुमुदाग्रात् पतन्तस्तमुत्तरेणेलावृतमुप-
योजयन्ति यानुपजुषाणानां न कदाचिदपि
प्रजानां बलीपलितक्लमस्वेद्दौर्गन्ध्यजरा-
मयापमृत्युशीतोष्णवैवर्ण्योपसर्गादयस्तापविशेषा

पालानामष्टानां यथादिशं यथारूपं
तुरीय-
मानेन पुरोऽष्टावुपक्लृप्ताः । इति
श्रीभागवते
५ स्कन्धे भुवनकोषवर्णने १६
अध्यायः ॥

**भद्रासनं**, क्ली, (भद्राय लोकहिताय
आसनम् ।)

नृपासनम् । इत्यमरः । २ । ८ ।
३१ ॥ (योगि-
नामासनविशेषः । यथा, तन्त्रसारे
।
“सीवन्याः
पार्श्वयोर्न्यस्येद्गुल्फयुग्मं सुनिश्च-
लम् ।
भद्रासनं समुद्दिष्टं योगिभिः
परिकल्पितम् ॥”)

**भद्रेश्वरः**, पुं, (भद्रः
शुभदश्चासावीश्वरश्चेति भद्रा-

त्मकः मङ्गलमय ईश्वरो वेति ।)
कल्पग्रामस्थ-
शिवः । यथा, --
“उत्तिष्ठ कान्त ! गच्छावः
कल्पग्रामं सुशो-
भनम् ।
तया सार्द्धं जगामाथ कल्पग्रामं
वसुन्धरे ! ॥
भद्रेश्वरनिमित्तं हि द्रव्यञ्च कथितं
शुभम् ।
नित्यञ्च भुञ्जते यत्र पात्रद्रव्यं
समर्पितम् ॥
दृष्ट्वा भद्रेश्वरं देवं चक्रतीर्थफलं
लभेत् ।
कल्पग्रामाच्छतगुणं चक्रतीर्थं
वसुन्धरे ! ॥”
इति वाराहे मथुरामाहात्म्ये
चक्रतीर्थप्रभावो
नामाध्यायः ॥

तद्विवरणं यथा । माल्यवतः पूर्ब्बपार्श्वे पूर्ब्ब-
गण्डिका एकशृङ्गाद्योजनसहस्राणि मानन्तत्र
च भद्राश्वा नाम जनपदाः भद्रशालवनञ्च तत्र
व्यवस्थितं कालाभ्रवृक्षाः पुरुषाः श्वेताः पद्म-
वर्णिनः स्त्रियः कुमुदवर्णाः दशवर्षसहस्राणि च
तेषामायुस्तत्र च पञ्च कुलपर्व्वताः तद्यथा,
शैलवर्णः मालाख्यको वरजस्वः त्रिपर्णोनीलश्चेति
तद्विनिर्गता बह्व्यो नद्यस्तदम्भःस्थितानां देशानां
तान्येव नामानि ते च देशाः एताः नदीः
पिबन्ति । तद्यथा, सीता सुवाहिनी हंसवती
कावेरी सुरसा शाखावती इन्द्रनदी अङ्गार-
वाहिनी हरितोया सोमावर्त्ता शतह्रदा वन-
माला वसुमती हंसा पर्णा पञ्चगङ्गा धनुष्मती
मणिवप्रा सुब्रह्मभागा विलासिनी कृष्णतोया
पुण्योदा नागवती शिवा शैवालिनी मणितटा
क्षीरोदा वरुणावती विष्णुपदी महानदी
हिरण्यस्कन्धवाहा सुरावती वामोदा पताका-
श्चेत्येता महानद्यः एताश्च गङ्गासमाः कीर्त्तिताः
आजन्मान्तं पापं विनाशयन्ति क्षुद्रनद्यश्च
कोटिशस्ताश्च बदीर्ये पिबन्ति ते दशवर्षसह-
स्रायुषः रुद्रोमाभक्ता इति । इति वाराहे
भुवनकोषे रुद्रगीता ॥ अपि च । तथैवेलावृत-
मपरेण पूर्ब्बेण च माल्यवद्गन्धमादनावानील
निषधायतौ द्विसहस्रं पप्रथतुः केतुमालभद्रा-
भवन्ति यावज्जीवं सुखनिरतिशयम्बे कुरङ्गकुरर-
कुसुम्भवैकङ्कत्रिकूटशिशिरपतङ्गरुचकनिषध-
शितिवासकपिलशङ्खवैदूर्य्यजारुधिहंसर्षभनाग-
कालञ्जरनीरदादयो गिरयो मेरोः कर्णिकाया
इव केशरभूता मूलदेशे परित उपक्लृप्ताः ।
जठरदेवकूटौ मेरुं पूर्ब्बेणाष्टादशयोजनसहस्र-
मुदगायतौ द्विसहस्रपृथुतुङ्गौ भवतः एवमप-
रेण पवनपारिपात्रौ दक्षिणेन कैलासकरवीरौ
प्रागायतौ एवमुत्तरतस्त्रिशृङ्गमकरौ अष्टाभि-
रेतैः परिवृतोऽग्निरिव परितश्चकास्ते काञ्चन-
गिरिः । मेरोर्मूर्द्धनि भगवत आत्मयोनेर्मध्यत
उपक्लृप्तां पुरीमयुतयोजनसाहस्रीं समचतु-
रम्नां शातकौम्भीं वदन्ति तामनुपरितो लोक-
शिवप्राप्त्यर्थं दुर्गाराधितहिमालयस्थपार्थिव-
शिवलिङ्गम् । यथा, --
"तवार्थाय ग्रहीष्यामि महर्षीन् हिमवद्गृहे ।
यश्चेह रुद्रमीहन्त्या मृण्मयश्चेश्वरः कृतः ॥
असौ भद्रेश्वरेत्येवं ख्याते लोके भविष्यति ।
देवदानवगन्धर्व्वा यक्षकिम्पुरुषोरगाः ॥
पूजयिष्यन्ति सततं मानवाश्च शुभेप्सवः ॥
इति वामनपुराणे ४६ अध्याये उमां प्रति
शिववाक्यम् ॥ गङ्गायाः पश्चिमतीरे गरिट्याख्य-
ग्रामस्योत्तरे पाषाणमयशिवलिङ्गविशेषो ग्राम-
विशेषश्च ॥

**भद्रैला**, स्त्री, (भद्रा एला ।) स्थूलैला । इति
राजनिर्घण्टः ॥ (अस्याः पर्य्यायो यथा, --
"एला स्थूला च बहुला पृथ्वीका त्रिपुटापि च ।
भद्रैला वृहदेला च चन्द्रबाला च निष्कुटिः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**भद्रोदनी**, स्त्री, (भद्रं उदनिति अनयेति । उत्
+ अन् + अच् । गौरादित्वात् ङीष् ।) बला ।
नागबला । इति राजनिर्घण्टः ॥

**(भन्ज**, ओ ध औ मोटने । इति कविकल्पद्रुमः ॥
रुधा०-पर०-सक०-अनिट् । ध, भनक्ति ॥)

**भन्दिलं**, क्ली, (भदि + इलच् ।) शुभम् । इत्यणादि-

| श्वयोः सीमानं विदधाते । मन्दरो<br>मेरुमन्दरः<br>सुपार्श्वः कुमुद<br>इत्ययुतयोजनविस्तारोन्नाहा<br>मेरो अतुर्द्दिगमवष्टम्भगिरय उपक्लृप्ताः ।<br>चतुर्षु | | कोषः ॥ कम्पः । दूतः । इति<br>संक्षिप्तसारो-<br>णादिवृत्तिः ॥<br><br>**भन्ध्रुकः**, पुं, भारतवर्षान्तर्गतदेशविशेषः । यथा,<br><br>“लक्षाश्चत्वार एवापि ग्रामाणां<br>भन्ध्रुकाः<br>स्मृताः ॥”<br>इति स्कान्दे कुमारिकाखण्डे<br>वक्रेश्वरमाहात्म्य-<br>नामाध्यायः ॥<br><br>**भपञ्जरं**, क्ली, (भानां नक्षत्राणां पञ्जरम् ।)<br><br>नक्षत्रचक्रम् । इति<br>सिद्धान्तशिरोमणिः ॥ |
|---|---|---|

**भपतिः**, पुं, (भानां नक्षत्राणां पतिः ।) चन्द्रः ।
इति हेमचन्द्रः ॥

**भम्भः**, पुं, (भम् इत्यव्यक्तशब्देन भातीति । भा +
कः ।) मक्षिका । इति
शब्दरत्नावली ॥ धूमः ।
इति त्रिकाण्डशेषः ॥

**भम्भरालिका**, स्त्री, (भमित्यव्यक्तशब्दस्य भरं
बाहुल्यमालाति गृह्लातीति । आ +
ला + कः ।
गौरादित्वात् ङीष् । ततः स्वार्थे
कन् टाप्
पूर्ब्बस्य ह्रस्वत्वम् ।) भङ्कारी । इति
त्रिकाण्ड-
शेषः ॥ डाँश इति भाषा ॥

**भम्भराली**, स्त्री, (भमित्यव्यक्तशब्दस्य भरमाला-
तीति । आ + ला + कः ।
गौरादित्वात् ङीष् ।)
मक्षिका । इति त्रिकाण्डशेषः ॥

**भम्भासारः**, पुं, मगधराजविशेषः । तत्पर्य्यायः ।
श्रेणिकः २ । इति हेमचन्द्रः ॥

**भयं**, क्ली, (भी + "एरच् ।" ३ । ३ । ५६ । इत्यत्र
"भयादीनामुपसंख्यानं नपुंसके
क्तादिनिवृत्त्य-
र्थम् ।" इति वार्त्तिकोक्त्या
अपादाने अच् ।) बिभे-
त्यस्मात् तत् । इति भरतः ॥
अस्य लक्षणं यथा,
"रौद्रशक्त्या तु जनितं
चित्तवैक्लव्यदं भयम् ॥"
इति साहित्यदर्पणे ३ परिच्छेदः ॥
अपि च । रागविषयस्य विनाशके
समुपस्थिते

**भयङ्करं**, त्रि, (भयं करोतीति । भय + कृ +
"मेघर्त्तिभयेषु कृञः ।" ३ । २ । ४३ । इति
खच् ।
मुम्च ।) भयजनकम् । तत्पर्य्यायः । भैरवम्
२
दारुणम् ३ भीषणम् ४ भीष्मम् ५ घोरम् ६
भीमम् ७ भयानकम् ८ प्रतिभयम् ९ ।
इत्यमरः ।
१ । ७ । २० ॥ भयावहम् १० । इति हेम-
चन्द्रः ॥ (यथा, मार्कण्डेयपुराणे । १४ ।
८६ ।
"वृकैर्भयङ्करैः पृष्ठं नित्यमस्योपभुज्यते ॥")
पुं, डुण्डुलपक्षी । इति राजनिर्घण्टः ॥

**भयडिण्डिमः**, पुं, (भयाय शत्रुभयजननाय
डिण्डिमः ।) संग्रामपटहः । इति पुराणम् ॥

**भयद्रुतः**, त्रि, (द्रु + कर्त्तरि क्तः । भयेन द्रुतः ।)
भीत्या पलायितः । तत्पर्य्यायः ।
कान्दिशीकः
२ । इत्यमरः । ३ । १ । ४२ ॥

**भयनाशिनी**, स्त्री, (भयं रोगभयं नाशयतीति ।
भय + नश् + णिच् + णिनिः ।) त्रायमाणा
लता । इति राजनिर्घण्टः ॥ भयनाशकर्त्री च
॥

**भयभीतः**, त्रि, (भयेन भीतः ।) त्रासेनातङ्कितः ।
यथा, वह्निपुराणे शिविराजोपाख्याने ।
"एकतो भयभीतस्य प्राणिनः प्राणरक्षणम् ।
नातो गुरुतरो धर्म्मः कश्चिदन्योऽस्ति
खेचर ! ॥

**भयभ्रष्टः**, त्रि, (भयेन भ्रष्टः ।) भयद्रुतः । इति
जटाधरः ॥

**भयानकः**, पुं, (बिभेत्यस्मादिति । भी + "आनकः
शीङ्भियः ।" उणा० । ३ । ८२ । इति
आनकः ।)
व्याघ्रः । राहुः । रसविशेषः । इति मेदिनी ।

**भयावहः**, त्रि, (आवहतीति । आ + वह् +
अच् । भयस्यावहः इति ।) भयङ्करः । इति
हेमचन्द्रः ॥ (तथा, भगवद्गीतायाम् । ३ । ३५
।
"श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात्
स्वनुष्ठितात् ।
स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावहः ॥")

**भरः**, पुं, (भरतीति । भृ + पचाद्यच् ।) अति-
शयः । इत्यमरः । १ । २ । ६९ ॥ (यथा, गीत-
गोविन्दे । ४१ ।
"पीनपयोधरभारभरेण हरिं परिरभ्य सरा-
गम् ॥"
भारः । यथा, भागवते । १ । ३ । २३ ।
"एकोनविंशे विंशतिमे वृष्णिषु प्राप्य नामनी ।
रामकृष्णाविति भुवो भगवानहरद्भरम् ॥")
भरणकर्त्तरि, त्रि । (यथा, ऋग्वेदे । १० । १००
। २ ।
"भराय सु भरत भागमृत्वियं
प्र वायवे शुचिपे क्रन्ददिष्टये ॥"
"भराय सर्व्वेषां पोषकाय ।" इति तद्भाष्ये
सायनः ॥ संग्रामः । यथा, ऋग्वेदे । ४ । ३८ ।
५ ।
"उत स्मैनं वस्त्रमथिं न त्रायु
मनुक्रोशन्ति क्षितयो भरेषु ॥"
"भरेषु संग्रामेषु ।" इति तद्भाष्ये सायनः ॥)

**भरटः**, पुं, (बिभर्त्तीति । भृ + "जनिदाच्युसृवृमदि-
शमिनमिभृञ्भ्य इत्वन्निति ।" उणा० । ४ ।
१०४ । इति अटच् ।) कुम्भकारः । इत्युणादि-
कोषः ॥

**भरणं**, क्ली, (भ्रियतेऽनेनेति । भृ + करणे ल्युट् ।)
वेतनम् । भृतिः । इति मेदिनी । णे, ६८ ॥
(भृ + भावे ल्युट् ।) पोषणम् । यथा, --
"भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम् ।
नरकं पीडने चास्य तस्माद्यत्नेन तं भरेत् ॥"
इति दायभागः ॥

**भरणः**, पुं, (भरतीति । भृ + ल्यु ।) भरणीनक्षत्रम् ।

तन्निवारणासामर्थ्यमात्मनो
मन्यमानस्य दैन्या-
त्मकश्चित्तवृत्तिविशेषो भयम् ।
इति भगवद्-
गीतायां २ अध्याये
मधुसूदनसरस्वती ॥
अन्यच्च । परतः
स्वानिष्टसम्भावना भयम् ।
यया । व्याघ्राद्बिभेति
व्याघ्राधीनत्वेन स्वीयमरणं
सम्भावयति । इति २ व्युत्पत्तिषादे
गदाधर-
भट्टाचार्य्यः । तत्पर्य्यायः । दरः २
त्रासः ३
भीतिः ४ भीः ५ साध्वसम् ६ ।
इत्यमरः । १ ।
७ । २१ ॥ रुद्रासः ७ साधुसंभवः
८ प्रतिभयम्
९ । इति शब्दरत्नावली ॥ आतङ्कः
१०
आशङ्का ११ भिया १२ । इति
हेमचन्द्रः ॥
आगते भये अभीतवत् स्थातव्यम् ।
यथा, --
"तावद्भयस्य भेतव्यं
यावद्भयमनागतम् ।
उत्पन्ने तु भये तीव्रे स्थातव्यं
तैरभीतवत् ॥"
इति गारुडे नीतिसारे ११५
अध्यायः ॥
कुब्जकपुष्पम् । घोरे, त्रि । इति
मेदिनी । ये,
४१ ॥ पुं रोगः । इति राजनिर्घण्टः
॥
(निरृतेः पुत्त्रभेदः । यथा,
महाभारते । १ ।
६६ । ५५-५६ ।
"तस्यापि निरृतिर्भार्य्या नैरृता येन
राक्षसाः ।
घोरास्तस्यास्त्रयः पुत्त्राः
पापकर्म्मरताः सदा ॥
के, २०५ ॥ स तु
शृङ्गाराद्यष्टरसान्तर्गतषष्ठरसः ।
तस्य लक्षणं यथा, --
"भयानको भयस्थायिभावः कालाधिदैवतः
।
स्त्री नीचप्रकृतिः कृष्णो मतस्तत्त्वविशारदैः
॥
यस्मादुत्पद्यते भीतिस्तदत्रालम्बनं मतम् ।
चेष्टा घोरतरास्तस्य भवेदुद्दीपनं पुनः ॥
अनुभावोऽत्र वैवर्ण्यं गद्गदस्वरभाषणम् ।
प्रलयस्वेदरोमाञ्चकम्पदिक्प्रेक्षणादयः ॥
जुगुप्सावेगसंमोहसंत्रासग्लानिदीनताः ।
शङ्कापस्मारसंभ्रान्तिमृत्य्वाद्या व्यभिचारिणः
॥"
उदाहरणं यथा, --
"नष्टं बर्षवरैर्मनुष्यगणनाभावादपास्य त्रपा-
मन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं
वामनः ॥"
इति साहित्यदर्पणे ३ परिच्छेदः ॥

**भयानकः**, त्रि, (भी + आनकः ।) भयङ्करः ।

इत्यमरः । १ । ७ । २० ॥ (यथा, भगवद्-
गीतायाम् । ११ । २७ ।
"वक्त्राणि ते त्वरमाणा विशन्ति
दंष्ट्राकरालानि भयानकानि ।
केचिद्विलग्ना दशनान्तरेषु
संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥"

**भयापहः**, पुं, (भयं अपहन्तीति । हन् + "अन्ये-

भ्योऽपि दृश्यते ।" ३ । २ । १०१ । इति
डः ।)
राजा । इति त्रिकाण्डशेषः ॥ (भयनाशके,
त्रि ॥)
इति शब्दरत्नावली ॥

**भरणी**, स्त्री, (भरण + गौरादित्वात् ङीष् ।)

घोषकलता । इति मेदिनी । णे, ६८ ॥ अश्वि-
न्यादिसप्तविंशतिनक्षत्रान्तर्गतद्वितीयनक्षत्रम् ।
तत्पर्य्यायः । यमदैवता २ । इति हेमचन्द्रः ॥
सा तारकात्रयमितत्रिकोणाकृतिः । तस्या
अधिष्ठात्री देवता यमः । यथा, --
"तारकात्रयमिते त्रिकोणके
मध्यगे दिविषदध्वनो यमे ।
पङ्कजाक्षिगणिताः कुलीरतः
सायकाक्षिभुजसंख्यकाः कलाः ॥
दं ३ । ४५ । इति कालिदासकृतरात्रिलग्न-
मानम् ॥ सा च उग्रगणान्तर्गता । अधो-
मुखगणान्तर्गता च । विद्यार्घ्यभूमिखनने
प्रशस्ता । इति ज्योतिस्तत्त्वम् ॥ तत्र
जातफलम् ।
"सदापकीर्त्तिर्हि महापवादो
नानाविनोदैश्च विनीतकालः ।
जले विलासी चपलः खलः स्यात्
प्राणिप्रणीतो भरणीषु जातः ॥"
इति कोष्ठीप्रदीपः ॥

| भयो महाभयश्चैव<br>मृत्युर्भूतान्तकस्तथा ।<br>न तस्य भार्य्या पुत्त्रो वा<br>कश्चिदस्त्यन्तको हि<br>सः ॥”<br>द्रोणस्य वसोरभिमतिनामिकायां<br>पत्न्यां जातः<br>पुत्त्रभेदः । यथा, भागवते । ६ । ६<br>। ११ ।<br>“द्रोणस्याभिमतेः पत्न्या<br>हर्षशोकभयादयः ॥”<br>यवनराजविशेषः । यथा, भागवते ।<br>४ । २७ । २३ ।<br>“ततो विहतसङ्कल्या कन्यका<br>यवनेश्वरम् ।<br>मयोपदिष्टमासाद्य वव्रे नाम्ना भयं<br>पतिम् ॥”) | | |
|---|---|---|

**भरणीभूः**, पुं, (भरणी भूरुत्पत्तिस्थानं यस्य ।)
राहुग्रहः । इति हेमचन्द्रः ॥

**भरणीयः**, त्रि, भरणयोग्यः । पोष्यः । भृधातोः
कर्म्मणि अनीयप्रत्ययेन निष्पन्नः ॥
(यथा, महा-
भारते । ५ । १५० । १७ ।
"सर्व्वं भवतु ते राज्यं पञ्च ग्रामान्
विसर्ज्जय ।
अवश्यं भरणीया हि पितुस्ते
राजसत्तम् ! ॥")

**भरण्डः**, पुं, (बिभर्त्तीति । भृ + "अण्डन्कृसृभृ-
वृञः ।" उणा ० । १ । १२८ । इति
अण्डन् ।)
स्वामी । । भूपालः । वृषः ।
इत्युणादिकोषः ॥
भूः । कृमिः । इति
संक्षिप्तसारोणादिवृत्तिः ॥

**भरण्यं**, क्ली, (भरणे साधु । "तत्र साधुः ।" ४ । ४ ।
९८ । इति यत् ।) मूल्यम् । वेतनम् ।
इत्य-
मरः । २ । १० । ३१ ॥

**भरण्यभुक्**, त्रि, (भरण्यं वेतनं भुनक्ति इति ।
भुज् + क्विप् ।) कर्म्मकरः । मूल्यं
गृहीत्वा
कर्म्मकारकः । इत्यमरः । ३ । १ । १९
॥

**भरण्या**, स्त्री, (भरण्य + अजादित्वात् टाप् ।)
वेतनम् । इत्यमरटीकायां स्वामी ॥

**भरण्याह्वा**, स्त्री, (भरण्या आह्वा आख्या यस्याः ।)
पर्व्वपुष्पी । इति शब्दचन्द्रिका ॥
रामदूतीति
ख्याता ॥

**भरण्युः**, पुं, (कण्ड्वादिगणीयभरण्यधातुः । ततो

श्रीशकुन्तलोवाच ।
विश्वामित्रात्मजैवाहं त्यक्ता मेनकया वने ।
वेदैतद्भगवान् कण्वो वीर ! किं करवाम ते ॥
आस्यतां ह्यरविन्दाक्ष ! गृह्यतामर्हणञ्च नः ।
भुज्यन्तां सन्ति नीवारा उष्यतां यदि रोचते ॥
श्रीदुष्मन्त उवाच ।
उपपन्नमिदं सुभ्रु ! जातायाः कुशिकान्वये ।
स्वयं हि वृणुते राज्ञां कन्यका सदृशं वरम् ॥
ओमित्युक्ते यथाधर्म्ममुपयेमे शकुन्तलाम् ।
गान्धर्व्वविधिना राजा देशकालविधानवित् ॥
अमोघवीर्य्यो राजर्षिर्महिष्यां वीर्य्यमादधे ।
श्वोभूते स्वपुरं यातः कालेनासूत सा सुतम् ॥
कण्वः कुमारस्य वने चक्रे समुचिताः क्रियाः ।
बद्ध्वा मृगेन्द्रं तरसा क्रीडति स्म स बालकः ॥
तं दुरत्ययविक्रान्तमादाय प्रमदोत्तमा ।
हरेरंशांशसम्भूतं भर्त्तुरन्तिकमागमत् ॥
यदा न जगृहे राजा भार्य्यापुत्त्रावनिन्दितौ ।
शृण्वतां सर्व्वभूतानां खे वागाहाशरीरिणी ॥
माता भस्त्रा पितुः पुत्त्रो येन जातः स एव सः ।
भरस्व पुत्त्रं दुष्मन्त ! मावमंस्थाः शकुन्तलाम्
॥
रेतोधाः पुत्त्रो नयति नरदेव ! यमक्षयात् ।
त्वञ्चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥
पितर्य्युपरते सोऽपि चक्रवर्त्ती महायशाः ।
महिमा गीयते तस्य हरेरं शभुवो भुवि ॥
चक्रं दक्षिणहस्तेऽस्य पद्मकोषोऽस्य पादयोः ।
ईजे महाभिषेकेण सोऽभिषिक्तोऽधिराड्विभुः ॥
पञ्चपञ्चाशता मेध्यैर्गङ्गायामनु वाजिभिः ।
मामतेयं पुरोधाय यमुनामनु च प्रभुः ॥
अष्टसप्ततिमेध्याश्वान् बबन्ध प्रददद्वसु ।
भरतस्य हि दौष्मन्तेरग्निः साचीगुणे चितः ॥
सहस्रं बद्धशो यस्मिन् ब्राह्मणा गा विभेजिरे ।
त्रयस्त्रिंशच्छतं ह्यश्वान् बद्ध्वा विस्मापयन्
नृपान् ॥
दौष्मन्तिरत्यगान्मायां देवानां गुरुमाययौ ।
मृगान् शुक्लदतः कृष्णान् हिरण्येन परीवृतान्
॥
अदात् कर्म्मणि मष्णारे नियुतानि चतुर्द्दश ।
भरतस्य महत् कर्म्म न पूर्ब्बे नापरे नृपाः ॥

ऋषभदेवः स्वं वर्षं
कर्म्मक्षेत्रमनुमन्यमानः प्रद-
र्शितगुरुकुलवासो
लब्धवरैर्गुरुभिरनुज्ञातो गृह-
मेधिनां धर्म्माननुशिक्ष्यमाणो
जयन्त्यामिन्द्र-
दत्तायामुभयविधं कर्म्म
समाम्नायमभियुञ्जन्नात्म-
जानामात्मसमानानां शतं जनयामास ।
येषां
खलु महायोगी भरतो ज्येष्ठः श्रेष्ठगुण
आसीत्
येनेदं वर्षं भारतमिति व्यपदिशन्ति ।"
इति
श्रीभागवते ५ स्कन्धे ४ अध्यायः ॥ *
॥ पावक-
पुत्त्रः । यथा, --
"पावनो लौकिको ह्यग्निः प्रथमो ब्रह्मणः
स्मृतः ।
ब्रह्मौदनाग्निस्तत्पुत्त्रो भरतो नाम विश्रुतः
॥"
इति मात्स्ये अग्निवंशो नाम ४८
अध्यायः ॥
रामानुजभरतस्य जन्म यथा, --
"भरतो नाम कैकेय्यां जज्ञे
सत्यपराक्रमः ।
साक्षाद्विष्णोश्चतुर्भागः सर्व्वैः समुदितो
गुणैः ॥"
तस्यानुगतः शत्रुघ्नः । यथा, --
"भरतस्यापि शत्रुघ्नो लक्ष्मणावरजो हि
सः ।
प्राणैः प्रियतरो नित्यं तस्य चासीत्तथा
प्रियः ॥"
स कुशध्वजकन्यां माण्डवीं परिणीतवान्
। यथा,
"भ्राता यवीयान् धर्म्मज्ञ एष राजा
कुशध्वजः ।
अस्य धर्म्मात्मनो राजन् ! रूपेणाप्रतिमं
भुवि ॥

बाहुलकात् उण् ।) शरण्युः । मित्रम् । इति
शब्दमाला ॥ अग्निः । चन्द्रमाः । ईश्वरः ।
इति संक्षिप्तसारोणादिवृत्तिः ॥

**भरतः**, पुं, (बिभर्त्ति स्वाङ्गमिति । बिभर्त्ति लोका-
निति वा । भृ + "भृमृदृशियजीति ।" उणा०
३ । ११० । इति अतच् ।) नाट्यशास्त्रम् ।
मुनिविशेषः । स तु अलङ्कारादिशास्त्रस्य सूत्र-
कर्त्ता । (भरतस्य शिष्यः । तस्येदमित्यण् ।
अणो लुक् ।) नटः । रामानुजः । दौष्मन्तिः ।
इति मेदिनी । ते, १३७-३८ ॥ शवरः । तन्तु-
वायः । इति विश्वः ॥ क्षेत्रम् । भरतात्मजः ।
इति हेमचन्द्रः ॥ दुष्मन्तराजपुत्त्रभरतस्य
पर्य्यायः । शाकुन्तलेयः २ दौष्मन्तिः ३ सर्व्व-
दमनः ४ । इति त्रिकाण्डशेषः ॥ यस्त्रयस्त्रिंश-
च्छतमश्वमेधं कृतवान् । पञ्चाशद्राजसूयं एव-
मन्यान् नानाविधान् यज्ञानकरोत् । सप्तविंशति-
सहस्रवत्सरानेकच्छत्रं राज्यं कृतवान् । तस्योत्-
पत्त्यादिर्यथा, --
"दुष्मन्तो मृगयां यातः कण्वाश्रमपदं गतः ।
तत्रासीनां स्वप्रभया मण्डयन्तीं रमामिव ॥
विलोक्य सद्यो मुमुहे देवमायामिव स्त्रियम् ।
बभाषे तां वरारोहां भटैः कतिपयैर्वृतः ॥
तद्दर्शनप्रमुदितः संनिवृत्तपरिश्रमः ।
नैवापूर्णैव प्राप्स्यन्ति बाहुभ्यां त्रिदिवं यथा ।
किरातहूनान् यवनान् पौण्ड्रान् कङ्कान् खशाञ्छकान् ॥
अब्रह्मण्यनृपांश्चाहन्म्लेच्छान् दिग्विजये ऽखिलान् ।
जित्वा पुरासुरा देवान् ये रसौकांसि भेजिरे ॥
देवस्त्रियो रसां नीताः प्राणिभिः पुनराहरत् ।
सर्व्वान् कामान् दुदुहतुः प्रजानां तस्य रोदसी ॥
समास्त्रिनवसाहस्रीर्दिक्षु चक्रमवर्त्तयत् ।
स सम्राट् लोकपालाख्यमैश्वर्य्यमधिराट्श्रियम् ॥
चक्रञ्चाख्खलितं प्राणान्मृषेत्युपरराम ह ।
तस्यासन् नृप ! वैदर्भ्यः पत्न्यस्तिस्रः सुसम्मताः ॥
जघ्नुस्त्यागभयात् पुत्त्रान्नानुरूपा इतीरिते ॥"
इति श्रीभागवते ९ स्कन्धे १० अध्यायः ॥ * ॥
ऋषभदेवात् इन्द्रदत्तजयन्त्यां कन्यायां जातशत-
पुत्त्रान्तर्गतज्येष्ठपुत्त्रः । यथा । "अथ ह भगवान्
सुताद्वयं नरश्रेष्ठ ! पत्न्यर्थं वरयामहे ।
तमेवमुक्त्वा जनको भरतञ्चाभ्यभाषत ॥
गृहाण पाणिं माण्डव्याः पाणिना रघुनन्दन ! ॥"
स नन्दिग्रामे राज्यं कृतवान् । यथा, --
"सबल्कलजटाधारी मुनिवेशधरः प्रभुः ।
नन्दिग्रामेऽवसद्धीरः ससैन्यो भरतस्तदा ॥
सबालव्यजनं छत्रं धारयामास स स्वयम् ।
भरतः शासनं सर्व्वं पादुकाभ्यां निवेदयन् ॥
ततस्तु भरतः श्रीमानभिषिच्यार्य्यपादुके ।
तदधीनस्तदा राज्यं कारयामास सर्व्वदा ॥"
इति रामायणे बालकाण्डे । १८ । ७२ । ७३
अध्यायाः । अयोध्याकाण्डे २४ अध्यायश्च ॥
तस्य द्वौ पुत्त्रौ । यथा, --
"भरतस्यात्मजौ वीरौ तक्षः पुष्कल एव च ।
मातुलेन सुगुप्तौ तु धर्म्मेण सुसमाहितौ ॥
भरतञ्चाग्रतः कृत्वा कुमारौ सबलानुगौ ।
निहत्य गन्धर्व्वसुतान् द्वे पुरे विभजिष्यतः ॥"
इति रामायणे उत्तरकाण्डे १०१ अध्यायः ॥

**भरतखण्डं** क्ली, भारतवर्षान्तर्गतकुमारिका-
खण्डम् । यथा, --
"कुमारिकेति विख्याता यस्या नाम्ना प्रकथ्यते ।
इदं कुमारिकाखण्डं चतुर्वर्गफलप्रदम् ॥
यथा कृतावनीयश्च नानाग्रामादिकल्पना ।
इदं भरतखण्डञ्च यया सम्यक् प्रकल्पितम् ॥"
इति स्कान्दे कुमारिकाखण्डे भूसंस्थितिनामा-

| | | |
|---|---|---|
| पप्रच्छ कामसन्तप्तः प्रहसन् श्लक्ष्णया गिरा ॥<br>का त्वं कमलपत्राक्षि ! कस्यासि हृदयङ्गमे ! ।<br>किं स्विच्चिकीर्षितं त्वत्र भवत्या निर्ज्जने<br>वने ॥<br>व्यक्तं राजन्यतनयां वेद्म्यहं त्वां सुमध्यमे ! ।<br>न हि चेतः पौरवाणामधर्म्मे रमते क्वचित् ॥ | | ध्यायः ॥<br>**भरतपुत्त्रकः**, पुं, (भरतस्य नाट्यशास्त्रप्रणेतुः पुत्त्रकः ।) नटः । इति हेमचन्द्रः ॥<br>**भरतप्रसूः**, स्त्री, (प्रसूते इति । प्र + सू + क्विप् । प्रसूः । भरतस्य प्रसूः ।) केकयी । इति शब्द-<br>रत्नावली ॥ |

**भरताग्रजः**, पुं, (भरतस्य अग्रजः ।) श्रीरामचन्द्रः ।

यथा, वोपदेवः ।
“शेते स चित्तशयने मम मीनकूर्म्म-
कोलोऽभवन्नृहरिवामनजामदग्न्यः।
योऽभूद्बभूव भरताग्रजकृष्णबुद्धः
कल्की सताञ्च भविता प्रहरिष्यतेऽरीन् ॥”

**भरथः**, पुं, (बिभर्त्तीति । भृञ् + “भृञश्चित् ।”

उणा० ३ । ११५ । इति अथप्रत्ययः । स च चित् ।) लोकपालः । इत्युणादिकोषः ॥

**भरद्वाजः**, पुं, (द्वाभ्यां जायते इति । जन् + डः ।

ततः पृषोदरादित्वात् द्वाजः सङ्करः । भ्रियते मरुद्भिरिति । भृ + अप् । भरः । भरश्चासौ द्वाजश्चेति कर्म्मधारयः ।) मुनिविशेषः । स च उतथ्यपत्न्यां ममतायां
बृहस्पतिवीर्य्याज्जातः।
तस्य जन्मविवरणं यथा । “ततोऽस्य वितथे पुत्त्रजन्मनि पुत्त्रार्थिने मरुत्सोमयाजिने दीर्घ-
तमसा
पार्ष्ण्यपास्ताद्बृहस्पतिवीर्य्यादुतथ्यपत्नी-
ममतासमुत्पन्नो भरद्वाजाख्यो नाम पुत्त्रो मरु-
द्भिर्दत्तः । अस्यापि नामनिर्व्वचनश्लोकः
पठ्यते ।
‘मूढे भर द्वाजमिमं भर द्वाजं बृहस्पते ! ।
यातौ यदुक्त्वा पितरौ भरद्वाजस्ततस्त्वयम् ॥’ इति ।
भरद्वाजश्च तस्य वितथे पुत्त्रजन्मनि
मरुद्भिर्दत्तो
वितथसंज्ञामवाप ॥” * ॥ अस्य टीका ।
वितथे
अर्थ सति । अत्रैवमितिहासः । बृहस्पते-
रग्रजस्योतथ्यस्य ममताख्या पत्नी
गर्भिण्यासीत् ।
तस्यां बृहस्पतिः कामाभिभूतो वीर्य्यं व्यसृजत् ।
तच्च गर्भं प्रविशद्गर्भस्थेन
स्थानसङ्कोचभयात्
पार्ष्णिप्रहारेणापास्तं बहिः पतितमपि अमोघ-
वीर्य्यतया बृहस्पतेर्भरद्वाजनामपुत्त्रोऽभूत्।

दृष्टा इन्द्रियशक्तिसंक्षयकराः सर्व्वाङ्गपीडा-
कराः ।
धर्म्मार्थाखिलकाममुक्तिषुमहाविघ्नस्वरूपा
बलात्
प्राणानाशु हरन्ति सन्ति यदि ते क्षेमं कुतः
प्राणिनाम् ॥
तत्तेषां प्रशमाय कश्चन विधिश्चिन्त्यो
भवद्भिर्बुधै-
र्योग्यैरित्यभिधाय संसदि भरद्वाजं मुनिं
तेऽब्रुवन् ।
त्वं योग्यो भगवन् ! सहस्रनयनं याचस्व
लब्धं
क्रमा-
दायुर्व्वेदमधीत्य यं गदभयाम्मुक्ता भवामो
वयम् ॥”)
पक्षिविशेषः । भारुइ इति भाषा । तत्पर्य्यायः
।
व्याघ्राटः २ । इत्यमरः । २ । ५ । १५ ॥
भर-
द्वाजकः ३ । इति शब्दरत्नावली ॥
(गोत्रभेदः ।
यथा, मनौ ।
“शाण्डिल्यः काश्यपश्चैव वात्स्यः
सावर्णकस्तथा ।
भरद्वाजो गौतमश्च सौकालीनस्तथापरः ॥”
इत्यादि गोत्रशब्दे द्रष्टव्यम् ॥ भृ + शतृ ।
भरत् + वाजः ।
संभ्रियमाणहविर्लक्षणान्नेयज-
मानादौ, त्रि । यथा, ऋग्वेदे । १ । ११६ ।
१८ ।
“यदयातं दिवोदासाय वर्त्तिर्भरद्वाजायाश्विना
हयन्ता ॥”
“भरद्वाजाय संभ्रियमाणहविर्लक्षणान्नाय यज-
मानाय ।” इति तद्भाष्ये सायनाचार्य्यः ॥)

**भरद्वाजकः**, पुं, (भरद्वाज + स्वार्थे कन् ।) व्याघ्राट-

पक्षी । इति शब्दरत्नावली ॥

**भरिणी**, स्त्री, (मनो बिभर्त्ति हरतीति । भृ +

णिनिः । गौरादित्वात् ङीष् । पृषोदरादित्वात्

“प्रत्युवाच ततो भर्गः पुरा
दक्षप्रजापतेः ।
देवि ! त्वञ्च तथान्याश्च
बह्व्योऽजायन्त कन्यकाः ।
स मह्यं भवतीं प्रादात्
धर्म्मादिभ्योऽपरा-
श्च ताः ॥
वीतिहोत्रस्य पुत्त्रः । यथा, भागवते
। ९ । १७ । ९ ।
“वीतिहोत्रोऽस्य भर्गोऽतो
भार्गभूमिरभून्नृप ! ॥”)
आदित्यान्तर्गततेजः । यथा, --
“आदित्यान्तर्गतं वर्चो भर्गाख्यं
तन्मुमुक्षुभिः ।
जन्ममृत्युविनाशाय दुःखस्य
त्रितयस्य च ॥
ध्यानेन पुरुषो यश्च द्रष्टव्यः
सूर्य्यमण्डले ॥”
इत्याह्निकतत्त्वम् ॥

**भर्गः**, [स्] क्ली, (भर्जते इति । भृज भर्जने +

“अञ्च्यञ्जियुजिभृजिभ्यः कुश्च ।”
उणा ० ४ ।
२१५ । इति असुन्
कवर्गश्चान्तादेशः ।)
ज्योतिः । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः॥
(यथा, ऋग्वेदे । ३ । ६२ । १० ।
“तत् सवितुर्वरेण्यं भर्गो देवस्य
धीमहि ॥”)

**भर्ग्यः**, पुं, (भृज् + “ऋहलोर्ण्यत् ।” ३ । १ । १२४ ।

इति ण्यत् । चजोरिति कुत्वम् ।)
भर्गः । इत्य-
मरटीकायां भरतरायमुकुटौ ॥

**भर्जनं**, क्ली, (भृज् + ल्युट् ।) भृष्टिः । इति शब्द-

माला ॥ भाजा इति भाषा ॥

गर्भस्थश्च बृहस्पतिना तस्मादेवापराधादन्धो भवेति शप्तो दीर्घतमा नामाभवत् । तत्र भर-द्वाजनामनिरुक्तिपरः तत्पित्रोर्व्विवादकरोऽयं श्लोको देवैः पठितः । हे मूढे ममते द्वाजं द्वाभ्यामावाभ्यां जातमिमं पुत्त्रं त्वं भर रक्ष । एवं बृहस्पतिनोक्त्वे ममता तमाह हे बृह-स्पते ! द्वाजं द्वाभ्यां जातमिममेकाकिनी किमि-
त्यहं भरिष्यामि । त्वमिमं भरेति परस्परमुक्त्वा तं
पुत्त्रं त्यक्त्वा यस्मात् पितरौ ममताबृहस्पती ततो यातौ । ततो भरद्वाजाख्योऽयम् । पाठा-न्तरे एवं विवदमानौ । यद्दुःखात् यन्निमि-त्ताद् दुःखात् पितरौ यातावित्यर्थः । तदेवं ताभ्यां त्यक्तो मरुद्भिर्भृतः । मरुत्सोमाख्येन च यागेनाराधितैर्मरुद्भिस्तस्य वितथे पुत्त्र-जन्मनि सति दत्तत्वाद्वितथसंज्ञाञ्चावाप । इति बिष्णुपुराणे ४ अंशे १९ अध्यायः ॥ * ॥ (द्वादशद्वापरेऽसावेव व्यासः । यथा, देवीभाग-वते । १ । ३ । २९ ।
“एकादशेऽथ त्रिवृषो भरद्वाजस्ततःपरम् ।
त्रयोदशे चान्तरिक्षो धर्म्मश्चापि चतुर्द्दशे ॥”
यथा च भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ।
“रोगाः कार्श्यकरा वलक्षयकरा देहस्य चेष्टाहराः
पूर्ब्बादीर्घे साधुः ।) हरिद्वर्णः । इत्युणादि-कोषः ॥

**भरितः**, त्रि, (हरितः । पृषोदरादित्वात् हस्य भः ।)
हरिद्वर्णः । इत्युणादिकोषः ॥ पुष्टः । भारयुक्तः ।
भरोऽस्य जात इत्यर्थे इतप्रत्ययेन निष्पन्नः ॥

**भरिमा**, [न्] पुं, (भृ + “हृभृधृसृस्तृशृभ्य इम-निच् ।” उणा० ४ । १४७ । इति भावे इम-निच् ।) भरणम् । इत्युणादिकोषः ॥ (भ्रियते इति । कुटुम्बः । इत्युज्ज्वलदत्तः ॥)

**भरुः**, पुं, (भरति बिभर्त्ति जगदिति । भृञ् भरणे + “भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्यउः ।”
उणा० १ । ७ । इति उः ।) विष्णुः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः । समुद्रः । स्वामी ।
इति संक्षिप्तसारोणादिवृत्तिः ॥ स्वर्णम् । शिवः
इति । मेदिनी । रे, ६९ ॥

**भरुजः**, पुं, (भेति शब्देन रुजतीति । रुज् + क ।)
क्षुद्रशृगालः । इति हेमचन्द्रः ॥

**भरुटकं**, क्ली, (भृ + बाहुलकात् उट । संज्ञायां कन् ।) भृष्टामिषम् । इति हेमचन्द्रः ॥

**भर्गः**, पुं, (भृज्यते कामादिरनेनेति । भृज् + “हलश्च ।” इति घञ् ।) शिवः । इत्यमरः ॥ (यथा, कथासरित्सागरे । १ । ३४ ।

**भर्त्तव्यं**, त्रि, (भृ + तव्य ।) भरणीयम् । पोषणीयम् ।
यथा, दायभागटीकाधृतवचनम् ।
“वृद्धौ च मातापितरौ साध्वी भार्य्या सुतः
शिशुः ।
अप्यकार्य्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत् ॥”

**भर्त्ता**, [ऋ] पुं, (बिभर्त्ति पुष्णाति पालयति धारय-
तीति वा । भृञ् धारणपोषणयोः + “ण्वुल्
तृचौ ।” ३ । १ । १३३ । इति तृच् ।) अधि-
पतिः । (यथा, रघौ । १ । ७४ ।
“सोऽपश्यत् प्रणिधानेन सन्ततेः स्तम्भकारणम् ।
भावितात्मा भुवो भर्त्तुरथैनं प्रत्यबोधयत् ॥”)
तत्पर्य्यायः । अधिपः २ ईशः ३ नेता ४ परि-
वृढः ५ अधिभूः ६ पतिः ७ इन्द्रः ८ स्वामी ९
नाथः १० आर्य्यः ११ प्रभुः १२ ईश्वरः १३
विभुः १४ ईशिता १५ इनः १६ नायकः १७ ।
इति हेमचन्द्रः ॥ (विष्णुः । प्रपञ्चाधिष्टान-
वत्त्वेन भरणात् ॥) धातरि पोष्टरि च त्रि ।
इति मेदिनी । ते, ३८ ॥ (यथा, ऋग्वेदे । १० ।
२२ । ३ ।
“भर्त्ता वज्रस्य धृष्णोः पिता पुत्त्रमिष प्रियम् ॥”
विवाहितायाः पतिः । यथा, महाभारते ।
१ । १०४ । २८ ।
“भार्य्याया भरणाद्भर्त्ता पालनाच्च पतिः स्मृतः ।

| | | |
|---|---|---|
| | | अहं त्वां भरणं कृत्वा जात्यन्धं ससुतं तदा ।<br>नित्यकालं श्रमेणार्त्ता न भरेयं महातपः ॥")<br>**भर्त्तृघ्नी**, स्त्री, (भर्त्तारं हन्तीति । हन् + टक् ।<br>ङीप् ।) पतिघातिनी । इति महाभारतम् ॥<br>**भर्त्तृदारकः**, पुं, (भर्त्रा द्रियते इति । दृङ् आदरे +<br>कर्म्मणि घञ् । ततः स्वार्थे कः ।) नाट्योक्तौ<br>युवराजः । इत्यमरः । १ । ७ । |

**भर्त्तृदारिका**, स्त्री, (भर्त्तृदारक + टापि अत इत्वम् ।) नाट्योक्तौ राजसुता । इत्यमरः । १ । ७ । १३ ॥

**भर्त्तृहरिः**, पुं, स्वनामख्यातः काव्यकर्त्तृराजविशेषः । इति जटाधरः । स च विक्रमादित्य-भ्राता ॥ (अयमेव गन्धर्व्वसेनात् दासीगर्भ-जातः । यथा, राजावल्याम् । ४ । १-२ ।
"अथ कालेन कियता रममाणो महीतले ।
दास्यां गन्धर्व्वसेनस्तु पुत्त्रमेकमजीजनत् ॥
तस्य भर्त्तृहरीत्येवं नाम चक्रे महामतिः ॥")

**भर्त्स**, क ङ ञ भर्त्से । इति कविकल्पद्रुमः ॥ (चुरा०-आत्म०-उभ० च-सक० सेट् ।) रेफ-युक्तः । दन्त्यवर्गाद्योपधः । भर्त्सो भर्त्सनम् । भर्त्सनन्त्वपकारगीरित्यमरः । १ । ६ । १४ ॥ क ङ, भर्त्सयते खलं राजा । ञ, भर्त्सयति भर्त्सयते । अयमात्मनेपदीत्यन्ये । कदाचित् परस्मैपदार्थो ञकारः । इति दुर्गादासः ॥

**भर्त्सनं**, क्ली, (भर्त्स + ल्युट् ।) अपकारगीः । इत्यमरः । १ । ६ । १४ ॥ चौरोऽसि त्वां घात-यिष्यामि इत्याद्यपकारार्थं वचनम् । इति भरतः ॥ तत्पर्य्यायः । कुत्सा २ निन्दा ३ जुगुप्सा

**भर्व्व**, हिंसे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) भर्व्वति । अन्तःस्थवान्तोऽयम् । इति दुर्गादासः ॥

**भल**, क ङ निरूपणे । इति कविकल्पद्रुमः ॥ (चुरा०-आत्म०-सक०-सेट् ।) क ङ, भालयते । इति दुर्गादासः ॥

**भल**, ङ दानवधनिरूपणेषु । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट् ।) ङ, भलते । इति दुर्गादासः ॥

**भलता**, स्त्री, (भातीति । भा + बाहुलकात् डः । भा चासौ लता चेति कर्म्मधारयः ।) राजबला । इति शब्दरत्नावली ॥

**भलन्दनः**, पुं, कान्यकुब्जदेशीयनृपविशेषः । यथा,
"कलावती कान्यकुब्जे बभूवायोनिसम्भवा ।
जातिस्मरा महासाध्वी सुन्दरी कमला कला ॥
कान्यकुब्जे नृपश्रेष्ठो भलन्दन उरुक्रमः ।
स तां संप्राप योगान्ते यज्ञकुण्डसमुत्थिताम् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १७ अध्यायः ॥

**भल्ल**, ङ दानवधनिरूपणेषु । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट् ।) लद्वयान्तः । ङ, भल्लते । इति दुर्गादासः ॥

**भल्लः**, पुं, (भल्लते इति । भल्ल + अच् ।) भल्लूकः । इत्यमरः । २ । ५ । ४ ॥ (देशभेदः । यथा, बृहत्संहितायाम् । १४ । ३० ।
"ब्रह्मपुरदार्व्वडामर-वनराज्यकिरातचीनकौणिन्दाः ।
भल्लापलोलजटासुर-

**भल्लातः**, पुं, (भल्लं भल्लास्त्रमिव अतति आत्मानं ज्ञापयतीति । अत + अच् ।) भल्लातकवृक्षः । इति रत्नमाला ॥ (यथा, भावप्रकाशस्य पूर्ब्ब-खण्डे प्रथमे भागे ।
"भल्लाताभावतश्चित्रं नलञ्चेक्षोरभावतः ॥")

**भल्लातकः**, पुं, (भल्ल इवाततीति । अत + क्वुन् । यद्वा, भल्लात + स्वार्थे कन् ।) वृक्षविशेषः । भेला इति भाषा । तत्पर्य्यायः । अरुष्करः २ भल्लातः ३ शोथहृत् ४ वह्निनामा ५ वीरतरुः ६ व्रणकृत् ७ भूतनाशनः ८ । इति रत्नमाला ॥ भल्लातकी ९ अग्निमुखी १० वीरवृक्षः ११ । इत्यमरः ॥ निर्दहनः १२ तपनः १३ अनलः १४ कृमिघ्नः १५ शैलबीजः १६ वातारिः १७ स्फोटबीजकः १८ पृथग्बीजः १९ धनुर्वृक्षः २० बीजपादपः २१ वह्निः २२ । (यथा, सुश्रुते । सूत्रस्थने । ४६ ।
"उष्णोदकानुपानन्तु स्नेहानामथ शस्यते ।
ऋते भल्लातकस्नेहात् स्नेहात्तौवरकात्तथा ॥")
अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । कषाय-त्वम् । उष्णत्वम् । कृमिकफवातोदरानाहमेह-दुर्नामनाशित्वञ्च । तत्फलगुणाः । कषायत्वम् । मधुरत्वम् । कोष्णत्वम् । कफार्त्तिश्रमश्वासानाह-विबन्धशूलजठराध्मानकृमिनाशित्वञ्च । तन्-मज्जगुणाः । विशेषेण दाहशमनत्वम् । पित्ता पहत्वम् । तर्पणत्वम् । वातारोचकहारित्वम् । दीप्तिजनकत्वम् । पित्तनाशित्वञ्च । इति राज-निर्घण्टः ॥ अपि च ।
"भल्लातकं त्रिषु प्रोक्तमरुष्कोऽरुष्करोऽग्निकः ।
तथैवाग्निमुखी भल्ली वीरवृक्षश्च शोफहृत् ॥
भल्लातकफलं पक्वं स्वादुपाकरसं लघु ।
कषायं पाचनं स्निग्धं तीक्ष्णोष्णं छेदि भेद-नम् ॥

४ गर्हा ५ गर्हणम् ६ निन्दनम् ७
कुत्सनम् ८
परिवादः ९ परीवादः १० जुगुप्सनम्
११
आक्षेपः १२ अवर्णः १३ निर्व्वादः
१४ अप-
क्रोशः १५ । इति शब्दरत्नावली ॥
(भर्त्स +
युच् । भर्त्सनाप्यत्रार्थे । यथा,
कथासरित्-
सागरे । ३२ । ५३ ।
“इत्यादि भर्त्सनां कृत्वा गच्छद्भिस्तैः
समं स च ।
विवशः प्रययौ विष्णुदत्तस्तूष्णीं बभूव
च ॥”)

**भर्त्सपत्रिका**, स्त्री, (भर्त् स्यते स्मेति । भर्त्स +
घञ् । भर्त्सं निन्दितं पत्रं यस्याः ।
कप् ।
टाप् । अत इत्वम् ।) महानीली ।
इति राज-
निर्घण्टः ॥ (भर्त्स्यपत्रिकापि पाठः
॥)

**भर्म्मं**, क्ली, (भ्रियतेऽनेनेति । भृ + बाहुलकात्
मन् ।) स्वर्णम् । भृतिः । नाभिः ।
इति द्विरूप-
कोषः ॥

**भर्म्म**, [न्] क्ली, (भरति भ्रियते वेति । भृञ् +
“सर्व्वधातुभ्यो मनिन् ।” उणा ० ४
। १४४ । इति
मनिन् ।) वेतनम् । इति हेमचन्द्रः ॥
स्वर्णम् ।
धुस्तूरम् । इत्यमरः । २ । ९ । ९४
॥ नाभिः । इति
विश्वः ॥ (भरणम् । यथा, ऋग्वेदे ।
१० । ८८ । १ ।
“हविष्पान्तमजरं स्वर्व्विदि
दिविस्पृश्याहुतं
जुष्टमग्नौ ।
कुनठखषखोषकुचिकाख्याः ॥”)

**भल्लः**, पुं, क्ली, (भल्लते हन्तीति । भल्ल + अच् ।)
शस्त्रभेदः । इति मेदिनी शब्दमाला च ।
भाला
इति भाषा ॥ (यथा महाभारते । १ । १४०
। ६ ।
“प्रगाढदृढमुष्टित्वे लाघवे वेधने तथा ।
क्षुरनाराचभल्लानां विपाठानाञ्च तत्त्ववित् ॥”
अनेन देहविद्धशल्यादिकमुद्धरति । यथा, --
“स च शल्योद्धरणकः प्रोच्यते वैद्यकागमे ।
नाराचबाणशूलाद्यैर्भल्लैः कुन्तैश्च तोमरैः ॥”
इति हारीते प्रथमे स्थाने द्वितीयेऽध्याये ॥)

**भल्लकः**, पुं, (भल्ल + स्वार्थे कन् ।) भल्लूकः । इति
द्विरूपकोषः ॥ (पक्षिभेदः । यथा, भागवते ।
३ । १० । २३ ।
“काकगृध्रवकश्येनभासभल्लकवर्हिणः ।
हंससारसचक्राह्वकाकोलूकादयःखगाः ॥”)

**भल्लपुच्छी**, स्त्री, (भल्लस्य पुच्छमिव पुष्पं यस्याः ।)
गवेशका । इति शब्दचन्द्रिका ॥
गोरक्षतण्डुला
इति ख्याता ॥

**भल्लाटं**, क्ली, शशिध्वजराजपुरम् । यथा, --
“सेनागणैः परिवृतः कल्किर्नारायणः प्रभुः ।
भल्लाटनगरं प्रायात् खड्गधृक् सप्तिवाहनः
॥”
इति कल्किपुराणे । २२ अध्यायः ॥
(दण्डसेनस्य पुत्त्रे, पुं । यथा, हरिवंशे । २०
। ३२ ।
“विष्वक्सेनस्य पुत्त्रोऽभूत् दण्डसेनो
महीपतिः ।
भल्लाटो तत्कुमारोऽभूद्राधेयेन हतः पुरा ॥”)
मेध्यं वह्निकरं हन्ति कफवातव्रणोदरम् ।
कुष्ठार्शोग्रहणीगुल्मशोफानाहज्वरक्रमीन्॥
तन्मज्जा मधुरो वृष्यो वृं हणो वातपित्तहा ।
वृत्तमारुष्करं स्वादु पित्तघ्नं केश्यमग्निकृत् ॥
भल्लातकः कषायोष्णः शुक्रलो मधुरो लघुः ।
वातश्लेष्मोदरानाहकुष्ठार्शोग्रहणीगदान् ॥
हन्ति गुल्मज्वरं चित्रवह्निमान्द्यकृमिव्रणान् ॥”
इति भावप्रकाशः ॥
अन्यच्च ।
“भल्लातकफलं स्निग्धं क्रिमिदुर्नामनाशनम् ।
दन्तस्थैर्य्यकरं ग्राहि कषायं मधुरञ्च तत् ॥
भल्लातवृन्तं मधुरं कषायं वातकोपनम् ॥”
इति राजवल्लभः ॥

**भल्लातकी**, स्त्री, (भल्लातक + गौरादित्वात् ङीष् ।)
भल्लातकवृक्षः । इत्यमरः ॥

**भल्लिका**, स्त्री, (भल्ल् + अच् । स्वार्थे कन् । टाप् ।
अत इत्वम् ।) भल्लातकः । इति शब्द-
चन्द्रिका ॥

**भल्ली**, त्रि, (भल्ल + गौरादित्वात् ङीष् ।) भल्ला-
तकः । इति शब्दरत्नावली ॥ (अस्याः
पर्य्यायः ।

तस्य भर्म्मणे भुवनाय देवा धर्म्मणे कं स्वधया
पप्रथन्त ॥"
"भर्म्मणे भरणाय ।" इति तद्भाष्ये
सायनः ॥)

**भर्म्मण्या**, स्त्री, (भर्म्मणि भरणे साधुरिति ।
भर्म्मन् + यत् । टाप् ।) वेतनम् । इति हेम-
चन्द्रः ॥

**भर्भ**, हिंसे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) रेफोपधः । भर्भति । इति दुर्गा-
दासः ॥

"भल्लातकं त्रिषु प्रोक्तमरुष्कोऽरुष्करोऽग्निकः ।
तथैवाग्निमुखी भल्ली वीरवृक्षश्च शोफकृत् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**भल्लुकः**, पुं, (भल्लूक + पृषोदरादित्वात् ह्रस्वः ।) भालूकः । इत्यमरः ॥

**भल्लूकः**, पुं, (भल्लते इति । भल्ल + "उलूकादयश्च ।" उणा० ४ । ४१ । इति ऊकप्रत्ययेन साधुः ।)
जन्तुविशेषः । भालूक इति भाषा । तत्पर्य्यायः ।
ऋक्षः २ भल्लः ३ सशल्यः ४ दुर्घोषः ५ भल्लुकः
६ पृष्ठदृष्टिः ७ द्राघिष्ठः ८ दीर्घकेशः ९ चिरायुः
१० दुश्चरः ११ दीर्घदर्शी १२ । इति राज-
निर्घण्टः ॥ भालुकः १३ भालूकः १४ अच्छः १५
भाल्लूकः १६ भीलूकः १७ । इति शब्दरत्नावली ॥
(यथा, महाभारते । १२ । ११६ । ६ ।
"सिंहव्याघ्रगणाः क्रूरा मत्ताश्चैव महागजाः ।
द्वीपिनः खड्गभल्लूका ये चान्ये भीम-
दर्शनाः ॥"
कोशस्थप्राणिविशेषः । तद्यथा, --
"शङ्खशङ्खनखशुक्तिशम्बूकभल्लूकप्रभृतयः को-
शस्थाः ।" इति सुश्रुते सूत्रस्थाने ४६ अध्यायः ॥)
श्योनाकप्रभेदः । (यथास्य पर्य्यायः ।
"श्योनाको भूतपुष्पश्च पूतिवृक्षो मुनिद्रुमः ।
दीर्घवृन्तश्च कट्वङ्गो भल्लूकष्टुण्टकोऽरणुः ॥"
इति वैद्यकरत्नमाला ॥)
कुक्कुरः । इति राजनिर्घण्टः ॥

**भवं**, क्ली, (भवति भूयते वा । भू + अच् अप् वा ।) भव्यम् । इति राजनिर्घण्टः ॥ चाल्ता । इति भाषा ॥

भवती भवत् । (यथा, मार्कण्डेये देवी-
माहात्म्ये । ८५ । ५ ।
"भवतां नाशयिष्यामि तत्क्षणात् परमापदः ॥")
वर्त्तमानार्थम् । इति मेदिनी । ते, १३७ ॥ अत्र
भूधातोः शतृप्रत्ययेन निष्पन्नम् । तस्य लिङ्गत्रये
रूपं भवन् भवन्ती भवत् ॥ (यथा, मनौ ।
१२ । ९७ ।
"चातुर्व्वर्ण्यं त्रयो लोका
श्चत्वारश्चाश्रमाः पृथक् ।
भूतं भवद्भविष्यञ्च सर्व्वं वेदात् प्रसिध्यति ॥")

**भवती**, स्त्री, (भवत् + ङीप् ।) बाणभेदः । स तु विषाक्तः । इति शब्दरत्नावली ॥
दीप्तिमती ।
यथा । वाल्मीकिकृतगङ्गास्तोत्रम् ।
"स्वर्गारोहणवैजयन्ति भवतीं भागीरथीं
प्रार्थये ॥"

**भवदारु**, क्ली, (भवाख्यं भवप्रियं वा दारु ।) देव-दारुवृक्षः । इति राजनिर्घण्टः ॥

**भवदीयं**, त्रि, (भवत् + "मवतष्ठक्छसौ ।" ४ । २ । ११५ । इति छस् ।) भवत इदम् । युष्मत्-
सम्बन्धि । यथा, उद्भटे ।
"श्रुत्वातिदूरे भवदीयकीर्त्तिं
कर्णौ च तुष्टौ न च चक्षुषी मे ।
द्वयोर्व्विवादं परिहर्त्तुमिच्छन्
समागतोऽहं तव दर्शनाय ॥"
(यथा, भागवते । ९ । १८ । ३९ ।

यैवास्य विद्याद्युत्पत्तेस्तथात्वम् ।)
कविविशेषः
स च भोजराजस्य पण्डितः । मालतीमाध-
वादिनाटककर्त्ता च । तत्पर्य्यायः । भूगर्भः २ ।
इति जटाधरः ॥ (यथा, राजतरङ्गिण्याम् । ४ । १४४ ।
"कविर्वाक्पतिराजश्रीभवभूत्यादिसेवितः ॥"
भवस्य महादेवस्य भूतिरिति विग्रहे तु ।)
महादेवस्य ऐश्वर्य्यञ्च ॥

**भवरुत्**, [द्] स्त्री, (भवे जन्मादिप्रदे संसारे रोदिति अनेनेति भवे जन्मान्ते रोदित्यनेन वेति । रुद् + क्विप ।) प्रेतपटहः । इति त्रिकाण्डशेषः ॥

**भवात्मजा**, स्त्री, (भवस्य शिवस्य आत्मजेति ।) मनसादेवी । इति शब्दमाला ॥

**भवादृक्**, [श्] त्रि, युष्मत्सदृशः । भवानिव दृश्यते य इति व्युत्पत्त्या भवच्छब्द-
पूर्ब्बकदृशधातोः कर्म्मणि क्रमेण क्विप्-
टक्सक्प्रत्ययेन निष्पन्नः । इति व्याकरणम् ॥

**भवादृक्षः** [श्] त्रि, युष्मत्सदृशः । भवानिव दृश्यते य इति व्युत्पत्त्या भवच्छब्द-
पूर्ब्बकदृशधातोः कर्म्मणि क्रमेण क्विप्-
टक्सक्प्रत्ययेन निष्पन्नः । इति व्याकरणम् ॥

**भवादृशः** [श्] त्रि, युष्मत्सदृशः । भवानिव दृश्यते य इति व्युत्पत्त्या भवच्छब्द-
पूर्ब्बकदृशधातोः कर्म्मणि क्रमेण क्विप्-
टक्सक्प्रत्ययेन निष्पन्नः । इति व्याकरणम् ॥

**भवानी**, स्त्री, भवस्य भार्य्या । (भव + "इन्द्रवरुण-भवशर्व्वेति ।" ४ । १ । ४९ । इति स्त्रियां ङीष्
ततः आनुक् चागम इति ।) दुर्गा । इत्य-
मरः । १ । १ । ३१ ॥ एतन्नामकारणं यथा, --
"रुद्रो भवः समाख्यातो भवः संसारसागरः ।

**भवः**, पुं, (भूयते इति । भू + भावे अप् ।) जन्म ।

(यथा, याज्ञवल्क्ये । ३ । १६४ ।
"भवो जातिसहस्रेषु प्रियाप्रियविपर्य्ययः ॥"
भवत्यस्मादिति । भू + अपादाने अप् । शिवः ।
इत्यमरः ॥ यथा, शतपथब्राह्मणे । ६ । १ । ३ । १५ ।
"तमब्रवीद् भवोऽसीति तद्यदस्य तन्नामा-
करोत्पर्जन्यस्तद्रूपमभवत् पर्जन्यो वै भवः ॥")
स च जलमूर्त्तिः । यथा, --
"भवाय जलमूर्त्तये नमः ।"
इति पार्थिवशिवलिङ्गपूजाप्रयोगः ॥
(भवति प्रभवत्यनेनेति । भू + अप् ।) क्षेमः ।
(यथा, महाभारते । १ । २२१ । २८ ।
"को हि नाम भवेनार्थी साहसेन समाचरेत् ॥"
भवति उत्पद्यतेऽस्मिन्निति । भू + आधारे अप् ।) संसारः । (यथा, मार्कण्डेये । १९ । ७ ।
"अनघस्त्वं तथैवेयं देवी सर्व्वभवारणिः ॥")
सत्ता । प्राप्तिः । इति मेदिनी ॥

**भवकः**, पुं, (भवतादिति । भू + वुन् ।) आशी-

र्वाचकः । इति संक्षिप्तसारः ॥

**भवघस्मरः**, पुं, (भवस्य वनस्य घस्मरः ध्वंस-

कारकः ।) दावानलः । इति शब्दमाला ॥

**भवत्**, त्रि, (भाति विद्यते इति । भा + डवतु-

प्रत्ययः ।) युष्मदर्थम् । अत्र भाधातोर्ड्वतुप्रत्य-
येन निष्पन्नम् । तस्य लिङ्गत्रये रूपम् । भवान्
"वयसा भवदीयेन रंस्ये कतिपयाः समाः ॥")

**भवनं**, क्ली, (भवत्यस्मिन्निति । भू + अधिकरणे

ल्युट् ।) गृहम् । (यथा, मनौ । ११ । १८ ।
"स त्वप्सु तं घटं प्रास्य प्रविश्य भवनं स्वकम् ॥"
प्रासादः । यथा, महाभारते । ३ । ५४ । १३ ।
"देवराजस्य भवनं विविशाते सुपूजितौ ॥"
भू + भावे ल्युट् ।) भावः । इति मेदिनी ॥ (यथा,
"ननु प्रागसतो घटस्य भवनं दृश्यते ॥"
इति तार्किकाः ॥)

**भवनाशिनी**, स्त्री, (भवं संसारं जन्मादिकं वा

नाशयति उत्सारयति नाशयितुं शीलमस्येति
वा । नश + णिच् + णिनिः ।) सरयूनदी । इति
पुराणम् ॥

**भवनीयं**, त्रि, (भवितुमर्हमिति । भू + अनीयर ।)

भवितव्यम् । भव्यम् । उत्पत्त्यर्हम् । इति मुग्ध-
बोधव्याकरणम् ॥

**भवन्तः**, पुं, (भवत्यत्रेति । भू + "तृभूवहिवसीति ।"

उणा० ३ । १२८ । इति झच् । स च षिद्भवति ।)
कालभेदः । स तु वर्त्तमानः । इत्युणादिकोषः ॥
(भान्ति इति । भा + डवतु प्रत्ययः ।) भव-
च्छब्दस्य प्रथमाबहुवचनान्तरूपोऽप्ययम् ॥
(यथा, महाभारते । ३ । ५४ । २ ।
भवः कामस्तथा सृष्टिर्भवानी परिकीर्त्तिता ॥"
इति देवीपुराणे ४५ अध्यायः ॥
(यथा, हरिवंशे भविष्यपर्व्वणि । १६ । ६ ।
"भवानी तत्र मे देव ! परिचर्त्तुं तदाभवत् ॥") ।

**भवानीगुरुः**, पुं, (भवान्याः शिवपत्न्या गुरुः पिता ।)

हिमालयपर्व्वतः । इति हेमचन्द्रः ॥

**भवाभीष्टः**, पुं, (भवे अभीष्टः ।) गुग्गुलुः । इति

राजनिर्घण्टः ॥

**भवाब्धिः**, पुं, (भवः अब्धिरिवेत्युपमितसमासः ।

भव एव अब्धिर्वा ।) संसाररूपसमुद्रः । यथा,
"ध्येयं सदा परिभवघ्नमभीष्टदोहं
तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ।
भृत्यार्त्तिहं प्रणतपालभवाब्धिपोतं
वन्दे महापुरुष ! ते चरणारविन्दम् ॥"
इति श्रीभागवते ११ स्कन्धे ५ अध्यायः ॥

**भवायना**, स्त्री, (भवः शिव एवायनमाश्रयस्थल-

मस्याः । शिवशिरसि स्थितत्वादस्यास्तथात्वम् ।)
गङ्गा । इति शब्दरत्नावली ॥ (भवायनी-
त्येके ॥)

**भविकं**, क्ली, (भवः प्रभाव ऐश्वर्य्यादिकमित्यर्थः

उत्पाद्यत्वेनास्त्यस्येति ठन् ।) मङ्गलम् । तद्वति
त्रि । इत्यमरः ॥

**भवितः**, त्रि, (भवो मङ्गलं जातोऽस्येति तारका-

दित्वात् इतच् ।) अतीतोत्पत्तिकः । भूतः ।
इति जटाधरः ॥

**भवितव्यं**, त्रि, भवनीयम् । भव्यम् । इति भवि-

ष्यत्काले कर्म्मणि भावे शक्यार्हप्रेष्यानुज्ञाप्राप्त-
कालार्थे च भूधातोस्तव्यप्रत्ययेन निष्पन्नम् ।
इति व्याकरणम् ॥ यथा, वह्निपुराणे ।

| | | |
|---|---|---|
| | "के वै भवन्तः कश्चासौ यस्याहं दूत ईप्सितः ॥")<br>**भवन्तिः**, पुं, (भू + "भुबो झिच् ।" उणा० ३ । ५० । इति झिच् ।) वर्त्तमानकालः । इत्युणा- दिकोषः संक्षिप्तसारोणादिवृत्तिश्च ॥<br>**भवभूतिः**, पुं, (भवेन शिवेन भूतिरैश्वर्य्यादिकं यस्य भव एव भूतिर्यस्येति वा । शिवोपासन- | |

"न भवद्भ्यामहं शोच्यो नायं राजापराध्यति ।
भवितव्यमनेनैव येनाहं निधनं गतः ॥"

**भवितव्यता**, स्त्री, (भवितव्य + भावे तल् ।) भाग्यम् । इति जटाधरः ॥ (यथा, कथासरित्-सागरे । २७ । ८६ ।
"तन्ममाचक्ष्व तावत् त्वं कथयिष्याम्यहञ्च ते ।
यदस्तु कोऽन्यथा कर्त्तुं शक्तो हि भवितव्य-ताम् ॥")

**भविता**, [ऋ] त्रि, (भू + शीलार्थे तृच् ।) भवन-शीलः । इति भरतः ॥ साधु भवनशीलः । इति मुकुटः । तत्पर्य्यायः । भूष्णुः २ भविष्णुः ३ । इत्यमरः ॥ (भविष्यदर्थेऽपि तृच्प्रत्ययः स्यात् यथा, मार्कण्डेये । २४ । २९ ।
"नान्या भार्य्या भवित्रीति वर्ज्जयित्वा मदा-लसाम् ।")

**भविनः**, पुं, (भवाय काव्यादिप्रकाशाय इनः सूर्य्यः इव । ततः पृषोदरादित्वात् साधुः ।) काव्य कर्त्ता । इति त्रिकाण्डशेषः ॥

**भविलः**, पुं, (भू + "सलिकल्यनिमहिभडिभण्डि-शण्डिपिण्डितुण्डिकुकिभूभ्य इलच् ।" उणा० । १ । ५५ । इलच् ।) षिड्गः । इति त्रिकाण्ड-शेषः । भव्यः । इति सिद्धान्तकौमुद्यामुणादि-पादः ॥

**भविष्णुः**, त्रि, (भू + "भुवश्च ।" ३ । २ । १३८ । इति इष्णुच् । भवतेर्धातोश्छन्दसि विषये तच्छीला-दिषु इष्णुच् प्रत्ययो भवतीति काशिका ।) पिच्छिलबीजम् ७ । अस्य गुणाः । अम्लत्वम् । कटुत्वम् । उष्णत्वञ्च । बालस्य तस्य गुणः । वातकफापहत्वम् । पक्वस्य तस्य गुणः । मधु-राम्लत्वम् । रुचिकारित्वम् । श्रमशूलहरत्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
"भव्यं स्वादु कषायाम्लं हृद्यमास्यविशोधनम् ।
तदेव पक्वं दोषघ्नं गुरु ग्राहि विषापहम् ॥"
इति राजवल्लभः ॥
अस्थि । इति मेदिनी । ये, ४३ ॥

**भव्यं**, त्रि, (भवतीति । भू + कर्त्तरि निपातनात् वा यत् ।) शुभम् । (यथा, भागवते । ४ । १४ । ३० ।
"भग्नायां भव्ययाच्ञायां तस्मै विदुर ! चुक्रुधुः ॥")
सत्यम् । योग्यम् । भावि । इति मेदिनी शब्द-रत्नावली च ॥ (यथा, मार्कण्डेये । ७९ । ७ ।
"भूतभव्यभवन्नाथाः शृणु चैतत् त्रयं द्विज ! ॥"
श्रेष्ठम् । यथा, भागवते । १ । १५ । १७ ।
"यत्पादपद्ममभवाय भजन्ति भव्याः ॥"
"भव्याः श्रेष्ठाः ।" इति तट्टीकायां स्वामी ॥
प्रसन्नम् । यथा, रामायणे । १ । ६२ । ७ ।
"स मे नाथो ह्यनाथस्य भव भव्येन चेतसा ॥"
भव्येन प्रसन्नेन चेतसेति तट्टीकायां रामानुजः ॥)

**भव्यः**, पुं, (भवति उत्पद्यते भू + निपातनात्

**भसत्**, [द्] स्त्री, (भस + अदिः ।) भास्करः । योनिः । इति मेदिनी ॥ मांसम् । कारण्डव-पक्षी । प्लवः । इत्युणादिकोषः ॥ कालः । इति त्रिकाण्डशेषः ॥

**भसनः**, पुं, (बभस्तीति । भस् + ल्युः ।) भ्रमरः । इति भूरिप्रयोगः ॥

**भसन्तः**, पुं, (बभस्तीति । भस + बाहुलकात् झच् ।) कालः । इति त्रिकाण्ड शेषः ॥

**भसितं**, क्ली, (भस् + क्त ।) भस्म । इति हेम-चन्द्रः ॥ (यथा, शिवपुराणे बायुसंहितायाम् । २९ । ४१ ।
"चन्दनं वामदेवाख्ये हरितालञ्च पौरुषे ।
ईशाने भसितं केचिदालेपनमितीदृशम् ॥")

**भसूचकः**, पुं, (भानां नक्षत्राणां सूचकः ।) दैवज्ञः । इति शब्दरत्नावली ॥

**भस्त्रका**, स्त्री, (भस्यते इति । भस दीप्तौ + त्रन् + टाप् । भस्त्रा ततः स्वार्थे कन् । "भस्त्रैषा-जाज्ञेति ।" ७ । ३ । ४७ । इति इत्वं न । आतः स्थाने योऽकारस्तस्य इत्वं न भवति उदीचा-माचार्य्याणां मतेन । इति काशिका ।) चर्म्म-प्रसेविका । इति शब्दरत्नावली ॥

**भस्त्रा**, स्त्री, (भस्यतेऽनयेति । भस + "हुयमाश्रू-भसिभ्यस्त्रन् ।" उणा० ४ । १६७ । इति त्रन् अजादित्वात् टाप् ।) अग्निदीपकचर्म्मनिर्म्मित-यन्त्रविशेषः । भाथी इति याँता इति च भाषा । तत्पर्य्यायः । चर्म्मप्रसेविका २ । इत्य-

भविता । इत्यमरः ॥

**भविष्यः**, त्रि, (भू + लृटः सद्वेति शतृस्यट् च ततो

विभाषायां पृषोदरात् तस्य लोपः ।)
भविष्यत्-
कालः । इति हेमचन्द्रः ॥ (यथा, हरिवंशे ।
८१ । २८ ।
"अयं भविष्ये कथितो भविष्यकुशलैर्द्विजैः
॥")
पुराणविशेषे, क्ली । यथा, --
"चतुर्द्दशं भविष्यं स्यात्तथा पञ्चशतानि च
॥"
इति श्रीभागवते १२ स्कन्धे १३ अः ॥
(फलविशेषे, क्ली ॥)

**भविष्यत्**, त्रि, (भू + लृटः शतृस्यट् च ।) काल-

विशेषः । तस्य लक्षणम् ॥ वर्त्तमानप्रागभाव-
प्रतियोगित्वम् । इति सारमञ्जरी ॥ वर्त्तमान-
कालोत्तरकालीनोत्पत्तिकत्वम् । इति शिरो-
मणिकृतपदार्थटीकाखण्डनम् ॥ तत्पर्य्यायः
।
अनागतम् २ श्वस्तनम् ३ प्रगेतनम् ४
वत्स्यर्त्
५ वर्त्तिष्यमाणम् ६ आगामि ७ भावि ८ ।
इति राजनिर्घण्टः ॥ अद्यतने भव्ये डी
दूरभव्ये
ती । इति सांप्रदायिकः । यथा श्वो भविता
वर्षान्तरे भविष्यति । इति दुर्गादासः ॥

**भव्यं**, क्ली, (भवतीति भूयते इति वा । भू +

"भव्य गेयेति ।" ३ । ३ । ६८ । इति यत् ।
भव्यादयः शब्दाः कर्त्तरि वा निपात्यन्ते ।
इति
काशिका ।) फलविशेषः । चाल्ता इति
भाषा ॥ तत्पर्य्यायः । भवम् २ भविष्यम् ३
भावनम् ४ वक्त्वशोधनम् ५ लोमफलम् ६

कर्त्तरि वा यत् ।) कर्म्मरङ्गवृक्षः । इति
मेदिनी ।
ये, ४२ ॥ रसभेदे, पुं क्ली । इति
शब्दरत्ना-
वली ॥

**भव्या**, स्त्री, (भव्य + टाप् ।) उमा । गजपिप्पली ।

इति मेदिनी । ये, ४२ ॥

**भष**, वुक्के । पिशुनोक्तौ । इति कविकल्पद्रुमः ॥

(भ्वा०-पर०-श्वशब्दे अक०
पिशुनोक्त्यादौ सक०-
सेट् ।) बुक्कः कुक्कुरादिकर्त्तृकशब्दः ।
भषति
श्वा । भषत्यन्यदोषं खलः
सूचयतीत्यर्थः । भर्त्-
सने इति प्राञ्चः । भषति श्वा पान्थं
शब्देन
निर्भर्त्सयतीत्यर्थः । इति रमानाथः ।
इति
दुर्गादासः ॥

**भषः**, पुं, (भषतीति । भष कुक्कुरादि शब्दे +

अच् ।) कुक्कुरः । इति रत्नमाला ॥

**भषकः**, पुं, स्त्री, (भषातीति । भष + "क्वुन् शिल्पि-

संज्ञयोरपूर्ब्बस्यापि ।" उणा० २ । ३२
। इति
क्वुन् ।) कुक्कुरः । इत्यमरः । २ । १०
। २२ ॥

**भषणं**, क्ली, (भष् + ल्युट् ।) वुक्कनम् । कुक्कुर-

शब्दः । इति हेमचन्द्रः ॥

**भषा**, स्त्री, स्वर्णक्षीरी । इति रत्नमाला ॥

**भषी**, स्त्री, (भष + स्त्रियां जातित्वात् ङीष् ।)

शुनी । इति शब्दरत्नावली ॥

**भस**, र लि द्युतौ । भर्त्से । इति कविकल्पद्रुमः ॥

(ह्वा०-पर०-अक०-सक० च सेट् ।) र
वैदिकः ।
लि, वभस्ति । इति दुर्गादासः ॥

मरः । २ । १० । ३३ ॥ चर्म्मप्रसेवकः ३
। इति भरतः ॥
भस्राका ४ भस्त्रका ५ भस्त्री ६ । इति
शब्द-
रत्नावली ॥ भस्त्रिका ७ । इति व्याकरणम्
॥
(यथा, भागवते । ९ । २० । २१ ।
"माता भस्रा पितुः पुत्त्रो येन जातः स एव
सः ।
भरस्व पुत्त्रं दुष्मन्त ! मावमंस्थाः
शकुन्तलाम् ॥")

**भस्राका**, स्त्री, भस्रा । इति शब्दरत्नावली ॥

**भस्त्री**, स्त्री, (भस्यतेऽनयेति । भस् + त्रन् । गौरा-

दित्वात् ङीष् ।) भस्त्रा । इति
शब्दरत्नावली ॥

**भस्म**, [न्] क्ली, (बभस्तीति । भस् भर्त्सनदीप्त्योः +

"सर्व्वधातुभ्यो मनिन् ।" उणा० ४ ।
१४४ ।
इति मनिन् ॥ दग्धकाष्ठादिविकारः ।)
शिवाङ्ग-
भूषणम् । छाइ इति भाषा । यथा, --
"अस्याङ्गभूषणं भस्म विभूतिर्भूतिरस्य तु
।"
इति शब्दरत्नावली ॥
तद्भस्म कामदेवशरीरजम् । यथा, --
"प्रसीद सर्व्वभूतेश ! भक्त्या त्वत्प्रणता
वयम् ।
इति स्म वदतां तेषाममराणां तदानलः ।
ललाटचक्षुः सम्भूतो
भस्माकार्षीन्मनोभवम् ॥
दग्ध्वा कामं तदा
वह्निर्ज्वालामालातिदीपितः ।
संस्तम्भितोऽथ विधिना हरं गन्तुं शशाक
न ॥
महादेवोऽथ तद्भस्म मनोभवशरीरजम् ।
आदाय सर्व्वगात्रेषु भूतिलेपं तदाकरोत् ॥
लेपशेषाणि भस्मानि समादाय तदा हरः ।
सगणोऽन्तर्दधे कालीं विहाय विधिसम्मते
॥"

| | भसत्, स्त्री, (बभस्तीति । भस् + "शॄदॄभसो-<br>ऽदिः ।" उणा ० १ । १२९ । इति<br>अदिः ।)<br>काष्ठम् । अश्वमांसम् । जघनम् । इति<br>सिद्धान्त-<br>कौमुद्यामुणादिवृत्तिः ॥ | इति कालिकापुराणे ४१ अध्यायः ॥ * ॥ |
|---|---|---|

भस्मप्रक्षणं
सप्तविधास्नानान्तर्गताग्नेयस्नानम् ।
यथा, --
"आग्नेयं भस्मना स्नानं वायव्यं गोरजः
स्मृतम् ।"
इति यामलः ॥
शिवपूजायां ललाटे तस्य
धारणमावश्यकम् ।
यथा, --
"विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया
।
पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः
॥"
इत्याह्निकतत्त्वम् ॥
तेन कांस्यशुद्धिर्यथा, --
"अम्भसा हेमरूप्यायः कांस्यं शुध्यति
भस्मना ।
अम्लैस्ताम्रञ्च रैत्यञ्च पुनःपाकेन मृण्मयम्
॥"
इति शुद्धितत्त्वम् ॥ * ॥
अश्मरीविकारः । यथा, --
"शर्क्करासिकतामेहो
भस्माख्योऽश्मरीवैकृतम् ।
अश्मर्य्याः शर्क्करा ज्ञेया
तुल्यव्यञ्जनवेदना ॥"
इति सुश्रुते निदानस्थाने अश्मरीनिदानम्
॥

**भस्मकं**, क्ली, (भस्म + संज्ञायां कन् ।) रोग-
भेदः । भस्मकोट इति ख्यातः । विडङ्गः ।
(यथास्य पर्य्यायः ।
"जन्तुघ्नं भस्मकं रेणुः क्रिमिघ्नं
चित्रतण्डुलम् ।
क्रिमिशत्रु विडङ्गश्च गर्द्दभं तच्च कैवलम्
॥"
इति वैद्यकरत्नमालायाम् ॥)
कलधौतम् । इति मेदिनी । के, १३३ ॥ *
॥
भस्मकस्य निदानसंप्राप्तिपूर्ब्बकं
लक्षणमाह ।
पायसं कृशरं स्निग्धं पैष्टिकं
गुडवैकृतम् ॥
अद्यात्तथौदकानूपपिशितानिघृतानि
च ।
मत्स्यान् विशेषतः स्निग्धान्
स्थिरतोयचरां-
स्तथा ॥
आविकं सघृतं
मांसमद्यादत्यग्निनाशनम् ।"
"पिबेत् शीताम्बुना सर्पिर्मधूच्छिष्टेन वा
युतम् ।
गोधूमचूर्णं पयसा ससर्पिष्कं पिबेन्नरः
॥
आनूपरससिद्धान् वा त्रीन्
स्नेहांस्तैलवर्ज्जितान् ।
गोधूमचूर्णमन्थं वा व्यधयित्वा शिरां
पिबेत् ॥"
"श्यामा त्रिवृद्विपक्वं वा पयो
दद्याद्विरेचनम् ।
असकृत् पित्तशान्त्यर्थं
पायसप्रतिभोजनम् ॥
यत्किञ्चिन्मधुरं मेध्यं श्लेष्मलं
गुरुभोजनम् ।
तदत्यग्निहितं सर्व्वं भुक्त्वा प्रस्वपनं
दिवा ॥
कफे वृद्धे जिते पित्ते मारुते चानलः
समः ।
समधातोः पचत्यन्नं पुष्ट्यायुर्बलवृद्धये
॥")

**भस्मकारः**, पुं, (भस्म करोतीति । कृ + "कर्म्म-
ण्यण् ।" ३ । २ । १ । इति अण् ।)
रजकः ।
इति शब्दमाला ॥

**भस्मकूटः**, पुं, कामरूपस्थपर्व्वतभेदः । यथा, -
-
"नन्दनात पूर्ब्बभागे तु भस्मकूटो
महागिरिः ।
मणिकर्णेश्वरं दृष्ट्वा मुक्तिर्भस्माचलं गते ॥"
इति श्रीकालिकापुराणे ८१ अध्यायः ॥

**भस्माह्वयः**, पुं, (भस्म आह्वयते स्पर्द्धते इति ।
आ + ह्वे + बाहुलकात् शः ।) कर्पूरः । इति
त्रिकाण्डशेषः ॥ (विषयोऽस्य कर्पूरशब्दे
ज्ञातव्यः ॥)

**भा**, ल ष दीप्तौ । इति कविकल्पद्रुमः ॥ (अदा०-
पर०-अक०-अनिट् ।) ल, भाति । ष, भा ।
इति दुर्गादासः ॥

**भा**, स्त्री, (भा दीप्तौ + "षीद्भिदादिभ्योऽङ् ।" ३ ।
३ । १०४ । इत्यङ् । टाप् ।) प्रभा । दीप्तिः ।
इत्यमरः । १ । ४ । ३४ ॥ (यथा, वाजसनेय-
संहितायाम् । ३० । १२ ।
"भायै दार्व्वाहारमिति ॥")

**भाः**, [स्] पुं, (भासते इति । भासृ दीप्तौ +
"भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ।"
३ । २ । १७७ । इति क्विप् ।) सूर्य्यः । इति
त्रिकाण्डशेषः ॥ (स्त्री, दीप्तिः । इत्यमरः । १ ।
४ ।
३४ ॥ यथा, ऋग्वेदे । १ । ४६ । १० ।
"अभूदु भा उ अंशवे हिरण्यं प्रति सूर्य्यः ॥")

**भाकुटः**, पुं, (भया दीप्त्या कुटतीति । कुट + क ।)
मत्स्यविशेषः । भेक्टी इति भाषा ॥ अस्य
गुणाः । मधुरत्वम् । शीतत्वम् । वृष्यत्वम्
श्लेष्मकारित्वम् । गुरुत्वञ्च । इति राजवल्लभः
॥

**भाकूटः**, पुं, (भायुक्ताः कूटाः शिखराणि यस्य ।)
पर्व्वतभेदः । मत्स्यभेदः । इति मेदिनी । टे,
५३ ॥

**भाकोषः**, पुं, (भानां दीप्तीनां कोष इव ।) सूर्य्यः ।
इति त्रिकाण्डशेषः ॥

**भाक्तं**, त्रि, (भक्तेः गौण्यावृत्तेरागतमिति । भक्ति
+ अण् ।) पारिभाषिकम् । गौणम् । लाक्ष-
णिकम् । औपचारिकम् । यथा । "नन्वेवं परत्र

"कङ्वादिरूक्षान्नभुजां नराणां
क्षीणे कफे मारुतपित्तवृद्धौ ।
अतिप्रवृद्धः पवनान्वितोऽग्नि-
र्भुक्तं क्षणाद्भस्म करोति यस्मात् ।
तस्मादसौ भस्मकसंज्ञकोऽभू-
दुपेक्षितोऽयं पचते च धातून् ॥"
भस्मकस्य सोपद्रवमरिष्टमाह ।
"तृट्स्वेददाहमूर्च्छादीन्
कृत्वैवात्यग्निसम्भवान् ।
पक्त्वान्नमाशु धात्वादीन् स क्षिप्रं नाशयेद्-
ध्रुवम् ॥"
इति भावप्रकाशः ॥
(अत्र तीक्ष्णाग्निव्याख्याने विजयेनोक्तम् ।
तीक्ष्णग्रहणेन भस्मकस्यावरोधः ।
अत्यन्त-
तीक्ष्णाग्निरेव हि भस्मकमित्युच्यते ॥
यदुक्त-
ञ्चरके चिकित्सास्थाने ऊनविंशेऽध्याये ।
भस्मकचिकित्सामाह ।
"बरे क्षीणकफे पित्तं कुपितं मारुतानुगम् ।
स्वोष्मणा पावकस्थाने बलमग्नेः प्रयच्छति
॥
तथा लब्धबलो देहे विरूक्षे सानिलोऽनलः
।
परिभूय पचत्यन्नं तैक्ष्ण्यादाशु मुहुर्मुहुः ॥
पक्त्वान्नं सततं धातून् शोणितादीन्
पचत्यपि ।
ततो दौर्ब्बल्यमातङ्कान् मृत्युञ्चोपनयेन्नरम्
॥
भुक्तेऽन्ने लभते शान्तिं जीर्णमात्रे प्रताम्यति
॥"
"तमत्यग्निं गुरुस्निग्धशीतमधुरविज्वलैः ॥
अन्नपानैर्नयेच्छान्तिं दीप्तमग्निमिवाम्बुभिः ।
मुहुर्मुहुरजीर्णेऽपि भोज्यान्यस्योपहारयेत्
॥
निरिन्धनोऽन्तरं लब्ध्वा यथैनं न
विपादयेत् ।

यत्र तिष्ठति भूतेशो महादेवो वृषध्वजः
॥"
इति कालिकापुराणे ८१ अध्यायः ॥

**भस्मगन्धा**, स्त्री, (भस्मन इव गन्धो यस्याः ।)
रेणुका । इति भावप्रकाशः ॥

**भस्मगन्धिका**, स्त्री, (भस्मगन्धोऽस्त्यस्या इति
।
भस्मगन्ध + "अत इनिठनौ ।" ५ । २
। १५५ ।
इति ठन् । टाप् ।)
रेणुकाख्यगन्धद्रव्यम् । इति
जटाधरः ॥

**भस्मगन्धिनी**, स्त्री, (भस्मन इव बाहुल्येन
गन्धो-
ऽस्त्यस्या इति । भस्मगन्ध + इनिः ।
ङीप् ।)
रेणुकाख्यगन्धद्रव्यम् । इत्यमरः । २ ।
४ । १२० ॥

**भस्मगर्भः**, पुं, (भस्म गर्भेऽस्य ।) तिनिशवृक्षः ।
इति राजनिर्घण्टः ॥ (विवरणमस्य
तिनिश-
शब्दे ज्ञातव्यम् ॥)

**भस्मगर्भा**, स्त्री, (भस्म गर्भेऽस्या इति । टाप् ।)
कपिलशिंशपा । इत्यमरः । २ । ४ ।
६३ ॥ (अस्याः
पर्य्यायो यथा, भावप्रकाशे पूर्ब्बखण्डे
प्रथमे भागे ।
"शिं शपा पिच्छिला श्यामा कृष्णसारा
च सा
गुरुः ।
कपिला सैव मुनिभिभस्मगर्भेति
कीर्त्तिता ॥")
रेणुकानामगन्धद्रव्यम् । इति जटाधरः
॥

**भस्मतूलं**, क्ली, (भस्म तूलति तूलयति वेति ।
तूल
+ क ।) ग्रामकूटः । पांशुवर्षणम् ।
हिमम् ।
इति मेदिनी । ले, १६८ ॥

सप्तमे मासि क्रियमाणस्य कथं
षाण्मासिकत्वम् ।
इति चेद्भाक्तम् ।" इति तिथ्यादितत्त्वम् ॥
(भक्त-
स्येदमिति तस्येदमित्यण् ।) भक्तसम्बन्धिनि
च ॥
(भक्तमस्मै दीयते नियुक्तमिति । भक्त +
"भक्ता-
दणन्यतरस्याम् ।" ४ । ४ । ६८ । इत्यण् ।
अन्नेन
पोष्ये च ॥)

**भाक्तिकः**, त्रि, (भक्तमस्मै नियुक्तं दीयते इति ।
भक्त + "भक्तादणन्यतरस्याम् ।" ४ । ४ ।
६८ ।
इति पक्षे ठक् ।) अन्नेन पोष्यः । भक्तमस्मै
दीयते । इति सिद्धान्तकौमुदी ॥

**भागः**, पुं, (भज्यते इति । भज भागसेवयोः
+ कर्म्मणि घञ् ।) अंशः । इत्यमरः । २ । ९ ।
८९ ॥
रूप्यार्द्धकः । भाग्यम् । एकदेशः । इति शब्द-
रत्नावली ॥ राशेस्त्रिंशभागैकभागः । यथा, --
"त्रिंशांशकस्तथा राशेर्भाग इत्यभिधीयते ॥"
इति तिथ्यादितत्त्वधृतविष्णुधर्म्मोत्तरवचनम् ॥
(भज + भावे घञ् । भजनम् । भगानामैश्व-
र्य्याणां समूहः इति अण् । ऐश्वर्य्यसमूहः ॥)

**भागधेयं**, क्ली, (भाग एव । भाग + "भागरूप-
नामभ्यो धेयः ।" इति धेयप्रत्ययः ।
अभिधाना-
न्नपुसकत्वम् ।) भाग्यम् । इत्यमरः । १ । ४ ।
२८ ॥

**भस्मरोहा**, स्त्री, (भस्मनि रोहति इति । रुह् +

अच् । टाप् ।) दग्धावृक्षः । इति राज-

निर्घण्टः ॥

**भस्मवेधकः**, पुं, (भस्म इव वेधकः ।) कर्पूरः । इति

शब्दरत्नावली ॥

**भस्माचलः**, पुं, कामरूपस्थपर्व्वतभेदः । यथा, --

"सर्व्वतीर्थजले स्नात्वा स्पृष्ट्वा चन्द्रं सवा-

सवम् ।

**भागधेयः**, पुं, (भागेन धीयते इति । धा + कर्म्मणि यत् ।) राजकरः । इत्यमरः । २ । ८ । २७ ॥ दायादः । इत्यजयपालः ॥

**भागवतं**, क्ली, (भगवतो भगवत्या वेदम् । भगवत् + तस्येदमित्यण् ।) अष्टादशपुराणान्तर्गतमहा-पुराणविशेषः । स च वेदव्यासकृतद्वादशस्कन्ध-द्वात्रिंशत्त्रिशताध्यायसमन्विताष्टादशसहस्र श्लोकसंख्याक-भगवन्माहात्म्यवर्णन-प्रधानको ग्रन्थः । यथोक्तं मत्स्यपुराणे पुराणदानप्रस्तावे ।
"यत्राधिकृत्य गायत्रीं वर्ण्यते धर्म्मविस्तरः ।
वृत्रासुरवधोपेतं तद्भागवतमिष्यते ॥
लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् ।
प्रौष्ठपद्यां पौर्णमास्यां स याति परमं पदम् ॥
अष्टादशसहस्राणि पुराणं तत् प्रकीर्त्तितम् ॥"
पुराणान्तरे च ।
"ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसम्मितः ।
हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा ॥
गायत्र्या च समारम्भस्तद्वै भागवतं विदुरिति ॥"
पद्मपुराणे च अम्बरीषं प्रति गोतमवचनम् ॥
"अम्बरीष ! शुकप्रोक्तं नित्यं भागवतं शृणु ।
पठस्व स्वमुखेनापि यदीच्छसि भवक्षयमिति ॥"
इति श्रीभागवतटीकायां श्रीधरस्वामी ॥
(तत्र तावत् पुराणेषु भागवतद्वयं प्रसिद्धम् । एकं महापुराणान्तर्गतमपरमुपपुराणान्तगतम् । लोकेऽप्युपलम्भो द्वयोर्देवीभागवतनाम्ना विष्णु-भागवतनाम्ना चास्त्येव । तत्रैकं महापुरा-णान्तर्गतमन्यदुपपुराणान्तर्गतमित्यपि निर्व्वि-वादमेव । तथापि किं देवीभागवतं महापुराण-मन्यदुपपुराणमथवा विष्णुभागवतं महापुराण-मन्यदुपपुराणमिति संशये केचित् विष्णुभाग-वतमेव महापुराणमिति वदन्ति । केचित्
"पुराणं भागवतं दौर्गं नन्दिप्रोक्तं तथैव च ।
पाशुपत्यं रैणुकञ्च भैरवञ्च तथैव च ॥"
इति ॥
तथा तत्पूर्ब्बमपि ।
"विष्णुधर्म्मोत्तरे चैव तत्र भागवतं तथेति ॥"
तन्त्रं भागवतं तथेति पाठे तन्त्रं शास्त्रमित्यर्थः ।
तद्विशेषणेन चोत्तमत्वं सूचितम् । तथा पाद्मे शकुनपरीक्षायाम् ।
"ब्राह्मं पाद्मं वैष्णवञ्च मार्त्तण्डं नारदेरितम् ॥"
इत्यादि ॥
"तथैव गदितं राम ! पुराणं कापिलं तथा ।
वाराहं ब्रह्मवैवर्त्तं शकुनेषु प्रशस्यते ।
शैवं भागवतं दौर्गं भविष्योत्तरमेव च ॥" इति ॥
तथा पाद्मे भागवतमाहात्म्ये एकोनविंशेऽध्याये उपपुराणेषु ।
"शैवमादिपुराणञ्च देवीभागवतं तथा ॥"
इति ॥
तथा मधुसूदनसरस्वतीकृतसर्व्वशास्त्रार्थसंग्रहे-ऽप्युपपुराणमध्ये भागवतं परिगणितम् । नागोजीभट्टादिभिश्च धर्म्मशास्त्रग्रन्थेष्वेवमन्यैरपि निबन्धकारैरिति । ननु देवीभागवतस्य ।
"तत्र भागवतं पुण्यं पञ्चमं वेदसम्मितम् ॥"
इति प्रथमाध्यायस्थस्ववचनेनाष्टादशमहापुरा-णेषु पञ्चममिदं पुराणमिति स्वस्य महापुरा-णत्वं बोधयतः कथमन्यपुराणमुपपुराणत्वं बोध-येन्नह्येवं क्वचिद्दृष्टचरमिति चेन्न । नारदीय-शिववायव्यादित्यपुराणानां स्वमुखेनान्यमुखेन
आग्नेयं वायवं मात्स्यम् ।" इति वचनेन शैव-वायव्यपुराणयोः परस्परं पृथक्त्वेन परिगणनात् ।
तथा वायव्यपुराणस्य स्ववचनेन स्वस्य महा-पुराणत्वं बोधयतो वक्ष्यमाणशैवपुराणवचनं महापुराणबहिर्भूतत्वं बोधयति । तथादित्य-पुराणस्यापि आलिंपाग्निपुराणानीति क्वचित् पुराणसम्मतपाठेन महापुराणत्वम् । अनाप-लिङ्गकूर्स्काख्यमिति क्वचित् पुराणसम्मतपाठेन महापुराणबहिर्भूतत्वं यथा चैतेषां चतुर्णां क्वचित् पुराणेषु महापुराणत्वेन क्वचिच्चोप-पुराणत्वेन ग्रहणम् । तथा देवीभागवतस्यापि भविष्यतीति को विरोधः । मतभेदेनोभयोरपि वचनयोः प्रमाणत्वात् । ननु अन्यान्युपपुरा-णानि मुनिभिः कथितानि त्वित्यादिवचनै-रुपपुराणानि व्यासान्यमुनिकृतान्येव सन्ति । देवीभागवतं तु व्यासकृतमेवेति । तस्य कथ-मुपपुराणेष्वन्तर्भाव इति चेन्न । नारदशैव-वायव्यादित्यपुराणेषु व्यासकृतत्वेऽपि कस्यचित् पुराणमते उपपुराणत्वदर्शनात्तादृशनियमस्या-

देवीभागवतमेव महापुराणमिति वदन्ति । तत्र प्रथमपक्षैकदेशिनः केचिदुपपुराणेषु द्वितीयं भागवतं नास्त्येव महापुराणेष्वेवैकं भागवतं प्रसिद्धम् । तच्च विष्णुभागवतमेव न देवीभागवतम् । देवीभागवतन्तु निर्मूलमेवेति वदन्ति । द्वितीवपक्षैकदेशिनोऽपि विष्णुभागवतं वोपदेवकृतमिति वदन्ति ।
वस्तुतस्तूभयो-
रपि पुराणयोः पुराणमतभेदेन महापुराणत्वमुपपुराणत्वञ्च । ननु महापुराणेष्वेवैकं भागवतं प्रसिद्धम् । नतूपपुराणेषु द्वितीयमस्तीति चेन्न । कूर्मगरुडपाद्मादिषूपपुराणेषु द्वितीयस्य स्पष्टपरिगणनात् । तथाहि हेमाद्रौ दानप्रस्तावे कूर्मपुराणेऽष्टादशपुराणान्युक्त्वा, --
"अन्यान्युप्रपुराणानि मुनिभिः कथितानि तु ।
आद्यं सनत्कुमारोक्तं नारसिंहमतः परम् ॥"
इत्यादि ॥
"पराशरोक्तं प्रवरं तथा भागवताह्वयम् ॥" इति
।
तथा गारुडे तत्त्वरहस्ये द्वितीयांशे धर्म्मकाण्डे प्रथमाध्याये प्रथमतो महापुराणानां सात्त्विकादिभेदेन विभागमुक्त्वा लघुपुराणानां सात्त्वि-
कादिभेदेन विभागप्रदर्शनपरे ग्रन्थेऽप्युक्तम् ।

वा महापुराणत्वेन
ज्ञायमानानामन्यपुराणैरुप-
पुराणत्वस्य व्यवस्थापनात् ।
पुराणमतभेदेनै-
कस्यापि पुराणस्य महापुराणत्वोपपुराणत्वसिद्ध्या तद्विरोधाभावात् पुराणभेदेन मतभेदस्तु
बहुशः प्रसिद्धः । वैष्णवपुराणेषु सात्त्विकत्वं शैवपुराणेषु तामसत्वं वैष्णवपुराणमतेन । शैव-
पुराणेषु सात्त्विकत्वं वैष्णवपुराणेषु तामसत्वम् ।
"दश शैवपुराणानि सात्त्विकानि विदुर्बु धाः ।
तामसानि च चत्वारि वैष्णवानि प्रचक्षते ॥"
इति स्कान्दे ॥
शैवपुराणमतेनेत्येवं प्रकारेणेति । तथाहि नारदीयस्य पुराणस्य स्वान्तर्गतमहापुराणग्रन्थसूच्या स्वमुखेनैव स्वात्मनो महापुराणत्वं
बोधयतः ।
"मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम् ।
आलिंपाग्निपुराणानि कूस्कंगारुडमेव च ॥"
इति वचनेन वक्ष्यमाणमुद्गलपुराणवचनेन च
महापुराणबहिर्भूतत्वं बोध्यते । आलिंपाग्नीत्यत्राऽऽशब्देनादित्यपुराणं तथा शैवपुराणस्य
स्वमुखेन स्वस्य महापुराणत्वं बोधयतो मद्वयं
भद्वयमित्येव वचनं तद्बहिर्भूतत्वं बोधयति । ननु वायव्यं पुराणमेव शैवं शिवप्रतिपादकत्वा-
त्तस्य च वचतुष्टयपदेन संग्रहात्तदुदाहरणं न सम्भवतीति चेन्न । मुद्गलपुराणे ।
"ब्राह्मञ्च वैष्णवं पाद्मं शैवं भागवतं तथा ।
भविष्यं ब्रह्मवैवर्त्तं मार्कण्डेयञ्च वामनम् ॥

स्वीकारात् प्रायशस्तथा
सत्त्वाभिप्रायेण तु
तद्वचनम् । इत्थं भागवतद्वयस्य महापुराण-
मध्ये उपपुराणमध्ये च सत्त्वसिद्धौ कस्य पुरा-
णस्य मते किं भागवतं महापुराणान्तर्गतमिति
चेदुच्यते । शैवपुराणमते मात्स्यपुराणमते च
देवीभागवतमेव महापुराणमिति । तथाहि
शैवपुराणे उत्तरखण्डे मध्यमेश्वरमाहात्म्ये
शिवाल्लब्धवरेण व्यासेन महापुराणानि प्रणी-
तानीत्युक्त्यनन्तरं तेषां नामान्यष्टादशोक्त्वा तेषां
योगरूढानां नाम्नां निर्व्वचनं तत्रैव कृतम् ।
तद्यथा, --
"यत्र वक्ता स्वयं तण्डे ! ब्रह्मा साक्षाच्चतुर्मुखः ।
तस्माद्ब्राह्मं समाख्यातं पुराणं प्रथमं मुने ! ॥"
तण्डे इति मुनिसम्बोधनम् ।
"पद्मकल्पस्य माहात्म्यं तत्र यस्मादुदाहृतम् ।
तस्मात् पाद्मं समाख्यातं पुराणञ्च द्वितीयकम् ॥
पराशरकृतं यत्तु पुराणं विष्णुबोधकम्
।
तदेव व्यासकथितं पुत्त्रपित्रोरभेदतः
॥
यत्र पूर्ब्बोत्तरे खण्डे शिवस्य चरितं बहु
।
शैवमेतत् पुराणं हि पुराणज्ञा वदन्ति च ॥
भगवत्याश्च दुर्गायाश्चरितं यत्र विद्यते
।

| | | |
|---|---|---|
| | | तत्तु भागवतं प्रोक्तं नतु देवीपुराणकम् ॥<br>नारदोक्तं पुराणन्तु नारदीयं प्रचक्षते ॥<br>यत्र वक्ताभवत्तण्डे ! मार्कण्डेयो महामुनिः ।<br>मार्कण्डेयपुराणं हि तदाख्यातञ्च सप्तमम् ॥<br>अग्नियोगात्तदाग्नेयं भविष्योक्तेर्भविष्यकम् ।<br>विवर्त्तनाद्ब्रह्मणस्तु ब्रह्मवैवर्त्तमुच्यते ॥<br>लिङ्गस्य चरितोक्तत्वात् पुराणं लिङ्गमुच्यते ।<br>वराहस्य च वाराहं पुराणं द्वादशं मुने ! ॥<br>यत्र स्कन्दः स्वयं वक्ता श्रोता साक्षात् महेश्वरः ।<br>तत्तु स्कान्दं समाख्यातं वामनस्य तु वामनम् ॥<br>कौर्म्मं कूर्म्मस्य चरितं मात्स्यं मत्स्यस्य कीर्त्तितम् । |

गरुडस्तु स्वयं वक्ता यत्तद् गारुडसंज्ञकम् ॥
ब्रह्माण्डचरितोक्तत्वाद्ब्रह्माण्डं परिकीर्त्ति-
तम् ॥”
अत्र क्वचिद्वक्तृसम्बन्धः
क्वचिच्छ्रोतृसम्बन्धः
क्वचित्प्रतिपाद्यमुख्यदेवताचरितसम्बन्धः।
प्रवृत्ति-
निमित्तमिति स्पष्टमेव दर्शितम्। तत्र
भागवत-
नाम्नो निर्व्वचनवाक्यमेतत्।
“भगवत्याश्च दुर्गायाश्चरितं यत्र विद्यते।
तत्तु भागवतं प्रोक्तं न तु देवीपुराणकम् ॥”
अनेन च वाक्येन भगवत्या इदं भागवतमिति
व्युत्पत्या
ग्रन्थप्रतिपाद्यमुख्यदेवताचरितसम्बन्धः।
प्रवृत्तिनिमित्तमिति स्पष्टमेव दर्शितम्। का
सा
भगवतीत्यपेक्षायामाह दुर्गाया इति। तत्तु
भागवतं तु शब्दो निश्चयार्थकः। तदेव भाग-
वतपदवाच्यं प्रोक्तमित्यर्थः। न तु
पुराणान्तर-
मतप्राप्तं विष्णुभागवतं महापुराणान्तर्गतं
भागवतमित्यर्थ इति शैवपुराणेन स्वमतं प्रद-
र्शितम्। कश्चिदेतत् पुराणान्तरमतेन उप-
पुराणं जानीयात्तत्राह न तु देवीपुराणक-
मिति। पुराणकमित्यत्र कप्रत्ययोऽल्पार्थकः
।
अल्पे इति सूत्रात् पुराणकमल्पं पुराणमिति
यावत्। देव्याः पुराणकं देवीपुराणकम्।
यदिदमुक्तं तद्देव्या उपपुराणं नैवास्तीत्यर्थः।
अनेन च वाक्येनान्यस्य महापुराणत्वनिषेधेन
स्वाभिप्रेतस्य च उपपुराणत्वनिषेधेन
श्रीमद्देवी-
भागवतस्यैव महापुराणत्वं बोधयति व्यासः।
सुख्यत्वेन भगवतीचरितप्रतिपादकस्यमहा-
पुराणमध्ये कस्यचित्
पुराणस्यान्यस्याभावात्।
ननु नारदादिपुराणवचनबलात्
विष्णुभागवतस्य
वर्त्तते तद्भागवतमित्यर्थः। तच्च न देवीभागवतं
भवितुमर्हति। तस्य तल्लक्षणलक्ष्यत्वे न तु
देवीपुराणकमिति निषेधविषयत्वेन निषेध-
विध्योः समानविषयत्वापत्तेः। किन्तु विष्णु-
भागवतमेव। ननु तथाप्येतल्लक्षणमन्यपुराणे-
ष्वतिप्रसक्तमिति चेन्न। यथा वृत्रासुरवध-
लक्षणमन्यपुराणेषु प्रसक्तमपि यथा लक्षणत्वेन
गृहीतम्। तद्वदत्रापि सत्त्वादिति चेन्न।
पूर्ब्बोक्तनिरुक्तिवचनप्रकरणस्थत्वविरोधात्।
किञ्च लक्षणवाक्यमेतदितिपक्षेऽप्येतस्य लक्ष-
णस्य महापुराणोद्देशेनैव सत्त्वादुपपुराणेष्वस्य
प्रसक्त्यभावाद्देवीपुराणकालिकापुराणयोरुप
पुराणत्वस्य निश्चितत्वात् तत्रैतल्लक्षणस्य
प्रसक्ति-
रेव नास्तीति न तु देवीपुराणकमिति निषेधो
व्यर्थ एव स्यात्। तस्मादेव तद्वचनस्य पूर्ब्बोक्त
एवार्थः। किञ्च लक्षणवाक्यमेतदिति पक्षे यत्
किञ्चिच्चरितं गृह्यते उत यावच्चेरितम्। यत्-
किञ्चिच्चरितस्य सर्व्वमहापुराणेषु सत्त्वाद्देवी-
पुराणमात्रनिषेधेन न निर्व्वाहः। तस्माद्देवी-
पुराणस्यैव निषेधस्वारस्याद्यावच्चरितं
मुख्यत्वेन
भगवतीचरित्रमेव ग्राह्यम्। तदा तव नाभी-
ष्टार्थसिद्धिः। मुख्यत्वेन विष्णुभागवते दुर्गा-
चरितस्याभावान्ममैव त्वभीष्टार्थसिद्धिः।
निषेध-
विध्योः समानविषयकत्वरूपं दूषणन्तु नैव
सम्भ-
वति। प्रकरणबलात् तात्पर्य्ये निश्चिते तद्विषयं
विहायैव निषेधप्रवृत्तेः। वृत्रासुरवधोपेतत्व-
लक्षणं तु गायत्र्यारम्भविशिष्टमिति न तदति-
प्रसक्तं तस्मात् पूर्ब्बोक्त एव तद्वचनार्थे इति
तद्वचनाद्देवीभागवतं महापुराणं न तु विष्णु-
भागवतमिति शिवपुराणमतम्। अत्र च
नियमद्वयस्य पूर्ब्बोक्तस्य सत्त्वाद्विष्णुभागवत-
विषये तथा नियमद्वयाभावादिदं शिवपुराण-
मतमेव मुख्यमन्यपुराणमतं त्वेकदेशीति
नियम-
द्वयप्रदर्शकव्यासवाक्येन स्पष्टमेव बोधितमिति
“यदिदं कालिकाख्यं तन्मूलं
भागवतं स्मृतम्।”
इति वचनं तदपि देवीभागवतस्यैव
महापुरा-
णत्वं बोधयति। तथाहि।
“अष्टादशभ्यस्तु पृथक् पुराणं यत्
प्रदृश्यते।
विजानीध्वं द्विजश्रेष्ठास्तथा तेभ्यो
विनिर्गतम् ॥”
इति मात्स्यवचनेनोपपुराणानां
महापुराण-
मूलकत्वनियमादिदं कालिकापुराणं
किम्-
पुराणमूलकमित्याकाङ्क्षायां
तस्यानिवर्त्तकमिदं
वाक्यं यदिदं कालिकाख्यं पुराणं
तन्मूलं तस्य
मूलं भागवतं विदुरिति हि तस्यार्थो
निबन्ध-
कारैर्द्दर्शितः।
यथान्यान्युपपुराणान्येकैकस्मा-
न्महापुराणान्निर्गतानि तद्वदिदं
भागवतादुत्-
पन्नमिति यावत्। तच्च भागवतं न
वैष्णवं
तन्मूलं भवितुमर्हति।
देव्युपपुराणस्य देवी-
पुराणमूलकत्वे एव सामञ्जस्यात्।
शैवोप-
पुराणानां शैवेभ्य एव
वैष्णवोपपुराणानां
वैष्णवेभ्य एवोत्पत्तिदर्शनादिति
देवीभागवत-
मेव तन्मूलमिति तस्य महापुराणत्वं
सिद्धम्।
यत्र तु क्वचित् क्वचित्
महापुराणमूलकत्वमप्र-
सिद्धं तत्र यथायोग्यमनुमेयमिति।
किञ्चा-

महापुराणान्तर्गतत्वे निर्व्विघ्नं निश्चिते तद्बलात्
भागवतद्वयस्य मतंभेदेन महापुराणत्वकल्पना-
पेक्षया यत्किञ्चित् भगवतीचरितस्यास्मिन्वचने
ग्रहणेनानेन वचनेन विष्णुभागवतनाम्न एव
निरुक्तिः कृतेति कुतो न कल्प्यते । वर्त्तते च
विष्णुभागवते दशमस्कन्धे किञ्चिद्विन्ध्यवासिन्या-
श्चरितमिति चेन्न । तथा सति मुनेर्विष्णुर्भाग-
वतविषय एव तात्पर्य्यसत्त्वे भगवत इदं भाग-
वतमित्येव व्युत्पत्तिं कुर्य्यान्नहि केनचिन्मुनेः
शिरसि भारः स्थापितो यत् स्वाभिप्रेतां युक्ति-
युक्तां निरुक्तिं त्यक्त्वा निष्प्रयोजनोऽनभिप्रेतां
निरुक्तिं करोति । किञ्च सर्व्वत्रैतद्वचनप्रकरणे
"यत्र पूर्ब्बोत्तरे खण्डे शिवस्य चरितं बहु ।
शैवमेतत् पुराणं हि पुराणज्ञा वदन्ति च ॥"
इति बहुवचनैर्ब्बहुचरितमुख्यचरितसम्बन्धरूप-
प्रवृत्तिनिमित्तस्यैवाभिप्रेतत्वं मुनेरवसीयते ।
मतभेदेन पुराणभेदकल्पना तु नात्रैव नवी-
नास्ति । पूर्ब्बोक्तयुक्त्या नारदशैववायव्यादित्य-
पुराणेष्वन्यत्रापि सत्त्वात् । अस्तु वा गौरवं
नहि तद्भयात् मुनेस्तात्पर्य्यमन्यथाकर्त्तुं कश्चि-
दीष्टे । तस्मात् पूर्ब्बोक्तं तात्पर्य्यं विहायान्य-
तात्पर्य्येणान्यार्थकरणं महासाहसमेव । ननु
लक्षणवाक्यमेतत् । ततश्च दुर्गाचरितं यत्र

सुधियो विभावयन्तु । किञ्च ।
"शैवमादिपुराणञ्च देवीभागवतं तथा ।"
इति पाद्मवचनसंवादितया, --
"नवरात्रे तु देवेशि ! दौर्गं भागवतं पठेत् ।
जपेत् सप्तशतीं चण्डीं नियमेन समाहितः ॥"
इति दुर्गातरङ्गिणीधृतयामलवचनेन तथा, --
"देवीभागवतं नित्यं पठेद्भक्त्या समाहितः ।
नवरात्रे विशेषेण श्रीदेवीप्रीतये मुदा ॥"
इति महेशठक्कुरकृतदुर्गाप्रदीपधृतदेवीयामल-
वचनेन च सप्रमाणस्य देवीभागवतस्य सर्व्वथो-
पपुराणमध्ये एव निवेशात् ।
"तत्र भागवतं पुण्यं पञ्चमं वेदसम्मितम् ।"
इति प्रथमस्कन्धस्थस्य महापुराणेषु पञ्चममिदं
पुराणमित्यर्थकस्य देवीमागवतोक्तवचनस्य
निरालम्बनत्वादप्रामाण्यापत्तेः। मन्मते तु तस्य
विषयलाभान्नाप्रामाण्यं तद्वचनप्रामाण्यादपि
देवीभागवतमेव महापुराणमिति । किञ्च
हेमाद्रौ कालिकापुराणे ।

दित्यपुराणदृष्ट्यापि देवीभागवतमेव महा-
पुराणम् । तथाहि आदित्यपुराणे रक्तासुर-
वधप्रस्तावे ।
"या जघ्ने महिषं दैत्यं क्रूरं वृत्रासुरं तथा ।
साद्य रक्तासुरं हत्वा स्वाराज्यं ते प्रदास्यति ॥"
इति वचनम् । अनेन वचनेन देवीभागवते
स्वसम्मतिर्द्दर्शिता । न हि देवीभागवताति-
रिक्तसर्व्वपुराणेषु देवीकृतो वृत्रासुरवधः क्वचि-
दप्यस्ति । इन्द्रकृतस्यैव तस्य सत्त्वात् केवलं
देवीभागवत एव देवीकृतः सोऽस्ति । तद्ग्रह-
णेन तु देवीभागवते स्वसम्मतिर्द्दशितेति युक्त-
मेव । अनन्तरञ्च तत्रैव पुराणदानप्रस्तावे ।
"ददाति सूर्य्यभक्ताय यस्तु भागवतं द्विजाः ।
सर्व्वपापविनिर्मुक्तः सर्व्वव्याधिविवर्ज्जितः ॥
जीवेद्वर्षशतं साग्रमन्ते वैवस्वतं पदम् ॥"
इति पठितम् ॥
अत्र च स्वसम्मतं भागवतमेव ग्रहीतुमुचितम् ।
किञ्चेदं षचनं देवीभागवतपक्षे एव स्वरसतः
सङ्गच्छते । प्रथमश्लोके एकादशद्वादशस्कन्ध-
योश्च सविस्तरं गायत्रीविधानसहस्रनामादे
कथनात् सूर्य्यस्य गायत्रीदेवतात्वात् । तद्भाग-

| | | |
|---|---|---|
| | | वतपक्षे तु वैकुण्ठं गच्छेदित्येव वदेदिति । किञ्च "यत्राधिकृत्य गायत्रीं वर्ण्यते धर्म्मविस्तरः । वृत्रासुरवधोपेतं तद्भागवतमिष्यते ॥" इति मात्स्यवचनमपि देवीभागवतस्यैव महा-पुराणत्वं बोधयति । वेदे त्रिपदा गायत्रीति गायत्रीलक्षणं श्रूयते । तेन च त्रिपाच्छन्दो-ऽधिकृत्य यत्र धर्म्मविस्तरो वर्ण्यते तद्भागवत-मिति तदर्थः । त्रिपाच्छन्दश्च देवीभागवते प्रथमश्लोके । "सर्व्वचैतन्यरूपां तामाद्यां विद्याञ्च धीमहि । बुद्धिं या न प्रचोदयात् ॥" इति श्रूयते । |

न विष्णुभागवते तच्छन्दोऽस्ति
मुख्यार्थसम्भवे
गायत्रीपदस्य लक्षणया
धीमहीत्यर्थकरणेन
विष्णुभागवतपरत्वकल्पनमस्य
वचनस्य तु
साहसमेव । क्वचित्पुराणेषु यदि
तादृशान्येव
विष्णुभागवतपराणि वचनानि सन्ति ।
तत्र
गत्यन्तराभावादस्तु लक्षणा । उदासीने
मात्स्य-
वाक्ये तु मुख्यविषयसम्भवे सानुचिता
। यद्य-
प्याधुनिकपुस्तकेषु
क्वचिच्चतुश्चरणश्लोकोऽपि
दृश्यते तथापि सप्तशत्यां
गुप्तवतीटीकाकारा-
दिभिस्त्रिपात्श्लोकस्यैव व्याख्याततत्वेन
स एव
सांप्रदायिकः पाठ इति बोध्यम् । यत्तु
गाय-
त्र्यर्थश्च विष्णु ध्यानं न तु
शिवशक्तिसूर्य्यादि-
ध्यानमित्युक्तं तत्तु
नास्तिकत्वमूलकमेव ।
"मैत्रायणीयानां भर्गो वै रुद्रः ।" इति
श्रुतौ
प्रपञ्चसारादिसर्व्वतन्त्रेषु पुराणादिषु च
शिव-
सूर्य्यशक्त्यादिरूपार्थस्योक्तत्वाच्च
तदुदाहृत-
माग्नेयवाक्यन्तु विरोधत्वे नापेक्षं
स्यादसति
ह्यनुमानमिति न्यायात् स्तावकमेवेति ।
किञ्च ।
"हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा ।
गायत्र्या च समारम्भस्तद्वै भागवतं
विदुः ॥"

वृत्रासुरवधोपेतं तद्भागवतमिष्यते ॥" इति ॥
"स्वारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः ।
तद्वृत्तान्तोद्भवं लोके तद्भागवतमिष्यते ॥"
इत्युक्त्वा ततोऽन्यान्यपि महापुराणान्येव तत्तत्-
कल्पवृत्तान्ताश्रयाणि दर्शितानि । पश्चादुप-
पुराणकथनार्थमुपभेदान् प्रवक्ष्यामीति प्रतिज्ञाय
पद्मपुराणान्नारसिंहं निर्गतमेवं नन्दिसाम्बा-
दित्यसंज्ञकान्युक्त्वा अन्योपपुराणान्यपि महा-
पुराणेभ्य एव निर्गतानीति ।
"अष्टादशभ्यस्तु पृथक् पुराणं यत् प्रदृश्यते ।
विजानीध्वं द्विजश्रेष्ठास्तदा तेभ्यो विनिर्गतम् ॥"
इति वचनेन सूतऋषिरुक्तवान् ॥ ततः ।
"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ॥"
इत्यादिना पुराणलक्षणान्युक्त्वा, --
"सात्त्विकेषु च कल्पेषु महात्म्यमधिकं हरेः ।
राजसेषु च कल्पेषु माहात्म्यं ब्रह्मणो विदुः ।
तद्वदग्नेश्च माहात्म्यं तामसेषु शिवस्य च ।
सङ्कीर्णेषु सरस्वत्याः पितृणां च निगद्यते ॥"
इति वचनेन पुराणप्रतिपाद्यहरिब्रह्माग्निहर-
सरस्वतीपितॄणां माहात्म्यसम्बन्धात् कल्पानां
सात्त्विकराजसतामसत्वसङ्कीर्णत्वभेदैश्चातुर्विं-
ध्यत्वमुक्तवानिति । तत्र कल्पानां तत्तद्देषता-
सम्बन्धज्ञानन्तु तत्तत्कल्पाश्रिततत्तत्पुराणप्रति-
पाद्यमुख्यदेवताज्ञानेनैव बोध्यम् । अन्यप्रकारस्य
क्वचिदपि पुराणेष्वनुपलम्भात्तत्रैवं सति ।
"सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः ।
तद्वृत्तान्तोद्भवं लोके तद्भागवतमिष्यते ॥"
इति वचनं भागवतस्य लक्षणप्रतिपादकं प्रति-
पादितम् । तदर्थस्तु यथा गारुडकल्प इत्यत्र
गरुडस्यायं गारुडः । यथा वा वाराहकल्प
इत्यत्र वराहस्यायं वाराह इति व्युत्पत्तिः
प्रसिद्धा । तद्वदेव सरस्वत्या अयं सारस्वत
इति विग्रहः ।
"सरस्वत्यास्तथा कल्पो गौरीकल्पस्तथैव च ॥"
इति कल्पनामसु सरस्वतीकल्पत्वेनैव कथित
त्वाच्च । मत्स्यपुराणे उपन्त्याध्याये ।
"सङ्कीर्णेषु सरस्वत्याः पितृणां कल्प उच्यते ॥"
इति वचनेन तथैवोक्तत्वाच्च ब्रह्मविष्णुरुद्राणां
कल्पवद्गौरीलक्ष्म्योः कल्पवच्च सरस्वतीकल्प-

इति वचनेनेश्वरप्रेरणां विनापि
गृहागतमेव ।
अस्मिंश्च वचने भागवतपदेन
विष्णुभागवतस्य
ग्रहणं बन्ध्यापुत्रोपममेव । तत्र
मुख्यत्वेन सर-
स्वत्याविर्भावस्यासत्त्वात्।
विष्णुभागवते द्वितीय-
स्कन्धे । "पाद्मं कल्पमथो शृणु ।"
इति वचनेन
स्वमुखेनैव स्वस्य
पाद्मकल्पकथाश्रयत्वस्योक्त-
त्वात् । तद्विरोधाच्च न च पाद्मकल्प
एव सार-
स्वतः । सरस्वान् समुद्रस्तस्माज्जातं
कमलं सार-
स्वतं तस्य कल्प इति व्यत्पत्त्येति
वाच्यम् ।
"पद्मकल्पस्य वृत्तान्तं तत्र
यस्मादुदाहृतम् ।
तस्मात् पाद्मं समाख्यातम् ॥"
इति पूर्ब्बोदाहृतशिवपुराणवचनेन ।
"एतदेव यदा पाद्ममभूद्धैरण्मयं जगत्
।
तद्वृत्तान्ताश्रयं तद्वत् पाद्ममित्युच्यते
बुधैः ॥
पाद्मं तत् पञ्चपञ्चाशत्सहस्राणीह
कथ्यते ॥"
इति मत्स्यपुराणवचनेन ।
"सारस्वतस्य कल्पस्य मध्ये
येस्युर्नरामराः ।"
इति वचनेन च
पाद्मकल्पसारस्वतकल्पयोः
पृथक्कथनात् । किञ्च
सारस्वतकल्पपाद्मकल्पयो-
रेकत्वे पद्मकल्पस्य प्रतिपादकं
पुराणद्वयं पाद्मं
भागवतञ्चेत्येव वदेत् किञ्च
पद्मकल्पस्य वृत्तान्त-

इति पुराणान्तरवाक्यमपि
देवीभागवतस्यैव
महापुराणत्वबोधकम्। तथा हि
हयग्रीव-
नामासुरो देवीभागवते प्रथमस्कन्धे
प्रसिद्ध-
स्तेनोपासिता ब्रह्मप्रतिपादिका विद्या
स्त्री-
दैवत्यो मन्त्रः। सा विद्या यत्र वर्त्तते
तद्भागवत-
मित्यर्थः। स दैत्यस्तदुपासिता विद्या
चेत्युभय-
मपि तत्रैव प्रथमस्कन्धे दर्शितम्।
"जपन्नेकाक्षरं मन्त्रं मायाबीजात्मकं
मम ॥"
इत्यादिना ॥
ननु विष्णुभागवते पञ्चमस्कन्धेऽपि
हयग्रीव-
मन्त्रस्य सत्त्वादिदं
वचनमुभयभागवतसाधारण
मिति चेन्न। नारदीये
शारदातिलकादिनिब-
न्धेषु च।
"मन्त्राः पुंदेवताः प्रोक्ता विद्याः
स्त्रीदेवताः
स्मृताः ॥"
इत्यादिवचनैः स्त्रीदैवत्यमन्त्रेष्वेव
विद्यापद-
प्रयोगो न पुंदैवत्यमन्त्रेष्विति
प्रतिपादनात्।
क्वचित् पुंदैवत्यमन्त्रे तथाप्रयोगस्तु
गौणः। न
च गौणार्थमादाय तद्वचनस्य
विष्णुभागवत-
परत्वं कल्पितुमुचितम्।
लक्षणारूपदोषापत्तेः।
तस्मान्न तद्वचनमुभयसाधारणमिति
देवीभाग-
वतस्यैव महापुराणत्वं बोधयति। किञ्च
सार-

स्यार्थप्राप्तत्वाच्च तादृशसारस्वतकल्पसम्बन्धिनो
ये देवमनुष्यास्तद्वृत्तान्तस्योद्भव उत्पत्तिर्यस्मात्
तत्पुराणं भागवतं विदुः। तद्वृत्तान्तप्रदशकं
यत् पुराणं तद्भागवतसं ज्ञकमिति यावत्। अत्र
च तत्तद्देवतानामाविर्भावाश्रयाये ये कल्पास्ते
तत्तन्नाम्ना व्यवह्रियन्ते। एतच्च तत्तन्नामक-
कल्पाश्रितेषु पुराणेषु तत्तद्देवताया एव मुख्यत्वे-
नोत्पत्तिप्रदर्शकवाक्यैर्लक्ष्मीकल्पादिकल्पाश्रित-
कूर्म्मपुराणादिषु सर्व्वत्र प्रसिद्धमेव। तथा च
मुख्यत्वेन सरस्वत्या आविर्भावप्रतिपादकं पुराणं
यत् तद्भागवतमित्यतिरहस्यार्थः। तत्र सार-
स्वतकल्प इति पदेनैव कल्पस्य सरस्वतीसम्बन्धे
बोधिते तस्य सङ्कीर्णत्वं सङ्कीर्णेषु सरस्वत्या

मित्यत्राभिव्यक्तपदार्थाये स्वतन्त्रा
लोकविश्रुता
इति न्यायेन पूर्ब्बं बुद्ध्यारूढं प्रसिद्धं
पाद्मशब्दं
विहायाप्रसिद्धं सारस्वतशब्दं
पाद्मशब्दस्य
वाचकं कृत्वा
सारस्वतपदघटितकल्पनेप्रयो-
जनाभावः। किञ्च सरस्वत्यास्तथा
कल्प
इत्यादेः। पूर्ब्बोक्तस्य
सारस्वतपदनिरुक्त्यर्थकस्य
वचनसमूहस्य विरोधश्च। न च
पाद्मकल्प-
सारस्वतकल्पयोः पृथक्त्वे
त्रिंशत्कल्पेषु मत्स्य-
पुराणान्तिमाध्याये कीर्त्तितेषु
सारस्वतपदेन
पाद्मस्य ग्रहणं न स्यादिति वाच्यम्।
प्रभास-
खण्डे त्रिंशत्कल्पेषु
विष्णुजकल्पार्चिषकल्पसुपु-
मान्कल्पानां ग्रहणेऽपि तेषां कल्पानां
यथा
मात्स्यान्तिमाध्याये न ग्रहणं तथा
पाद्मस्यापि
न ग्रहणमित्यस्य तुल्यत्वात्। यदि
तेषां पर्य्याय-
त्वेन कुत्रचिदन्तर्भावः क्रियते
तर्ह्यस्यापि कुत्र-
चिदन्तर्भावोऽस्तु अतएव
विष्णुभागवतस्य
प्रबन्धटीकाकारेण पितृकल्पे एव
पूर्ब्बार्द्धान्ते
पद्मस्योद्भवात् पितृकल्पपदेन
पाद्मसंग्रहो वेदि-
तव्य इत्युक्तम्।
पुराणकल्पकथनप्रस्तावे सार-
स्वतकल्पपाद्मकल्पयोः
पृथक्त्वकरणेन सारस्वत-

| स्वतस्य कल्पस्येति मात्स्यवचनादपि देवीभाग-<br>वतमेव महापुराणम् । अत्र ह्येवं प्रकरणशुद्धिः ।<br>ऋषय ऊचुः ।<br>“पुराणसंख्यामाचक्ष्व सूत ! विस्तरतः क्रमात् ।”<br>इति मुनिप्रश्नोत्तरं ब्रह्मणाऽभिहितं पूर्ब्बं<br>यत्तद्ब्राह्मं पद्मकल्पवृत्तान्ताश्रयं पाद्मं वराह-<br>कल्पवृत्तान्ताश्रयं वैष्णवं श्वेतकल्पवृत्तान्ताश्रयं<br>वायवीयमित्येवं तत्तत्कल्पवृत्तान्ताश्रयाणिपुरा-<br>णान्युक्त्वा तदुत्तरम् ।<br>“यत्राधिकृत्य गायत्रीं वर्ण्यते धर्म्मविस्तरः । | | पदेन पाद्मस्य सर्व्वथा न ग्रहणम् । वस्तुतस्तु<br>त्रिंशत्कल्पा ब्रह्मणस्त्रिंशत्तिथ्यात्मकाः त्रिंश-<br>त्तिथिषु प्रतिपदादिषूत्पद्यन्ते ।<br>भूर्भुवःसुवः<br>भूर्भूवःसुव<br>इत्यादयस्त्रयस्त्रिंशत्कल्पाः । पाद्मा-<br>दयश्च वायुपुराणोक्ता दिनकल्पा ब्रह्मणः प्रति<br>दिवसेषूत्पद्यन्ते इति दिनकल्पतिथिकल्पानां<br>सुतरां भेदात्तिथिकल्पेषु दिनकल्पानां पाद्मा-<br>दीनां न ग्रहणमिति सिद्धान्तः ।<br>यत्तु विष्णुभागवतस्यारम्भतः पाद्मकल्पाश्रय-<br>त्वेऽपि कृष्णजन्मखण्डस्यैव सारस्वतकल्पभवत्वेन<br>तस्य च दशमस्कन्धे सत्त्वात् । |
|---|---|---|

"सारस्वतस्य कल्पस्य मध्ये ये
स्युर्नरामराः ॥"
इति वचनस्य विष्णुभागवतं
विषयोऽस्तीत्याहु-
स्तदसत् । कृष्णजन्मखण्डस्य
सारस्वतकल्पभवत्व-
प्रतिपादकानां वचनानां निर्मूलत्वात्
समूल-
त्वेऽपि यस्मिन् पुराणे यस्य
कल्पस्य प्रथमतः
प्रतिपादनं तत्कल्पप्रतिपादकमेव
तत्पुराणमिति
नियमः सर्व्वपुराणे तथा दृष्टत्वात् ।
तथा च
कृष्णजन्मखण्डस्य दशमस्कन्धे
विद्यमानत्वेऽपि
प्रथमतस्तत्कथाया
अभावात्पाद्मकल्पकथायाः
प्रथमतो विद्यमानत्वस्य
स्वेनैवोक्तत्वाच्च । न
सारस्वतस्य कल्पस्येति वचनस्य
विष्णुभागवतं
विषयः । किञ्च कृष्णजन्मखण्डस्य
यथा दशम-
स्कन्धे कथनं तदा सर्व्वपुराणेषु
तत्कथनं वर्त्तत
एवेति सर्व्वपुराणानां
तद्वचनविषयत्वं स्यात्तथा
च सर्व्वपुराणानि
भागवतपदवाच्यानि स्युस्त-
स्मात्सारस्वतकल्पस्य यत्र
प्रथमतः प्रतिपादनं
स एव तद्वचनस्य विषयो
वक्तव्यस्तादृशञ्च
देवीभागवतमेवास्तीति
देवीभागवतमेव तद्वि-
षयो वक्तव्य इति । किञ्च शिवपुराणे
उमा-
संहितायाम् ।

देवीभागवतं शुकायैव प्रोक्तं व्यासेनेति । किञ्च
"अष्टादशपुराणानि कृत्वा सत्यवतीसुतः ।
भारताख्यानमखिलं चक्रे तदुपबृंहणम् ॥"
इति मात्स्यवचनमपि देवीभागवतस्यैव महा-
पुराणत्वं बोधयति । अष्टादशपुराणोत्तरं
भारतस्य जातत्वात् । भारतोत्तरञ्च विष्णु-
भागवतस्य जातत्वात् । भारतोत्तरकालं
निर्व्विण्णो व्यासश्चकारेति विष्णुभागवते एवोक्त-
त्वात् । ननु
"वेदशाखाः पुराणानि वेदान्तं भारतन्तथा ।
कृत्वा सम्मोहसंमूढोऽभवं राजन् ! मन-
स्यपि ॥"
इति देवीभागवते तृतीयस्कन्धे एवोक्तत्वात्त-
त्रापि सविरोधस्तदवस्थ एवेति चेन्न । मन्मते
तदानीं ग्रन्थो नैव जातः किन्तु जनमेजयं
प्रति एवं वक्तास्मीति ज्ञानचक्षुषा ज्ञात्वा भार-
तात् पूर्ब्बमेव देवीभागवतं कृतमित्यर्थस्य कल्प-
नात् । त्वन्मते तु तथा कल्पयितुं न शक्यते ।
चतुःश्लोकीभागवतोपदेशस्य जायमानत्वात् ।
उपदेशात् पूब्ब तज्ज्ञानाभावस्यावश्यं कल्प-
नीयत्वात् । यदि तत्रापि पूर्ब्बं व्यासस्य ज्ञान-
मस्तीति स्वीक्रियते तदा वक्ष्यमाणः सर्व्वोप्यर्थ-
वादः स्यात् । ततश्च ग्रन्थसारस्यभङ्गप्रसङ्ग
इत्यास्तां तावत् । वस्तुतस्तु वेदशाखाः पुराणा-
नीति पाठोऽसङ्गत इति वक्ष्यते तृतीयस्कन्धे
तदा न कोऽपि विरोधः । यत्तु पाद्मे भागवत-
माहात्म्ये श्रीमद्भागवतकथाश्रवणायसमा-
गतानां परिगणनप्रसङ्गे ।
"वेदान्तानि च वेदाश्च मन्त्रास्तन्त्राणि संहिताः ।
दशसप्तपुराणानि षट्शास्त्राणि समाययुः ॥"
इत्युक्तम् । तत्र व्यासकृतपुराणानामष्टादशत्वा-
दष्टादशेति वक्तव्ये सप्तदशत्वोक्तिः श्रीमद्भागवत-
स्याष्टादशत्वं गमयति तस्याष्टादशानन्तर्गतत्वे
देवीभागवतस्याष्टादशान्तर्गतत्वे वाष्टादशानां
श्रोतृत्वसम्भवेन श्रोतुमागतानां पुराणाना-
मष्टादशत्वानुक्तेर्निर्बीजत्वप्रसङ्गात् । एवं पाद्मे
"सप्तदशपुराणानि कृत्वा सत्यवतीसुतः ।
नाप्तवान्मनसा तोषं भारतेनापि भामिनि ! ॥
चकार संहितामेतां श्रीमद्भागवतीं पराम् ॥"

तत्त्वतो ज्ञातुकामोऽहं भगवन्तमुपस्थितः
॥"
इति ।
तथा च भारतोत्तरं मार्कण्डेयपुराणमभवत्
।
तथैव त्वदुक्तरीत्यैव विष्णुभागवतमपि ।
तथा च
भारतात् पूर्ब्बं षोडशपुराणान्येव सिद्धानि
।
तथा च पूर्ब्बोक्तवचनमध्ये षोडशेत्येव
वक्तव्ये
सप्तदशेत्युक्तत्वात् । देवीभागवतमेव
महापुराण-
मन्यथा सप्तदशत्वपूर्त्तिर्न स्यात् ।
तस्मात्तद्वचन-
प्रामाण्याद्देवीभागवतमेव महापुराणमिति
सिध्यति न तु विष्णुभागवतम् । भारतात्
पूर्ब्बं
सप्तदश मदीयभागवतसहितानि
मार्कण्डेयमष्टा-
दशमुभयमतसिद्धमेव विष्णुभागवतस्य
भारतो-
त्तरं जायमानत्वेन तन्मध्ये
तस्यावस्थानस्थला-
भावादित्येवं लापनेनापि दोषाभावादिति
सुधियो विभावयन्तु । यत्तु किञ्च पाद्मे ।
"वैष्णवं नारदीयञ्च तथा भागवतं शुभम् ।
गारुडञ्च तथा पाद्मं वाराहं शुभदर्शने ! ।
सात्त्विकानि पुराणानि विज्ञेयानि शुभानि
वै ॥"
इत्युक्या च भागवतस्य सात्त्विकत्वमुक्तम्
।
सात्त्विकेषु पुराणेष्विति कौर्म्मोक्त्या च
सात्त्विक-
पुराणानां विष्णुपरत्वमुक्तम् । अतो विष्णु
पर-
मेव भागवतमष्टादशपुराणान्तर्गतं न तु
देवी-

"ब्रह्मणा संस्तुता सेयं
मधुकैटभनाशने ।
महाविद्या जगद्धात्री
सर्व्वविद्याधिदेवता ॥
द्वादश्यां फाल्गुनस्यैव शुक्लायां
समभून्नृप ! ॥"
इति वचनात् फाल्गुनशुक्लद्वादश्यां
देव्या
उद्भवस्तद्दिने एव
सारस्वतकल्पोद्भवस्तदुक्तं
हेमाद्रौ कल्पश्राद्धप्रकरणे
नागरखण्डे ।
"सारस्वतस्तु द्वादश्यां शुक्लायां
फाल् गुनस्य
च ।" इति ॥
तथा च सरस्वत्याः कल्प
इत्यर्थकस्य ।
"सारस्वतस्य कल्पस्य मध्ये ये
स्युर्नरामराः ॥"
इति वचनस्य सर्व्वथा
देवीभागवतमेव विषयो
न विष्णुभागवतमिति बोध्यम् ।
किञ्च तस्य
ग्रहणे तस्य
हरिमाहात्म्यप्रतिपादकत्वात्।
तदाश्रितकल्पस्य
सात्त्विकत्वमेवायास्यति ।
"सात्त्विकेष्वथ कल्पेषु
माहात्म्यमधिकं हरेः ।"
इति वचनात् । ततश्च संकीर्णेषु
सरस्वत्या इति
वचनेन सारस्वतकल्प इति नाम्ना
च पारम-
हंस्यसामग्र्येव कर्त्तव्या स्यात् ।
अतो विष्णु-
मागवतं विहाय देवीभागवतमेवास्य
वचनस्य
विषयोऽनिच्छतापि वक्तव्यस्तस्मात्
सारस्वतस्य
कल्पस्येति व चनाद्देवीभागवतमेव
महापुराणम् ।

इति सप्तदशत्वोक्तिः श्रीमद्भागवतस्यैवैतां संहि-
तामिति निर्द्दिष्टस्याष्टादशत्वं गमयति ।
देवीभागवतस्याष्टादशत्वेऽष्टादशपुराणानीत्य-
नुक्तेर्निर्बीजत्वप्रसङ्गादित्याहुस्तदसत् । तेषा-
मेव वचनैर्विष्णुभागवतस्याष्टादशपुराणान्त-
र्गतत्यं न सिध्यति । किन्तु देवीभागवतस्यैवेति
वार्द्धुषिकत्वं कुर्व्वाणो मूलमेव विनाशितवा-
निति न्याय आगतः । तथा हि भारतं व्यास-
मुखाच्छ्रुत्वा तत्र सन्दिहानः क्रौष्टुकिर्मार्कण्डेयं
प्रत्यागत्य सन्देहं पृष्ठवान् तस्मै मार्कण्डेयो
मार्कण्डेयपुराणमुक्तवान् । तदुक्तं मार्कण्डेय-
पुराणे
"तदिदं भारताख्यानं बह्वर्थं श्रुतिविस्तरम् ।

भागवतमिति । अपि च स्कान्दे
प्रभासखण्डे ।
"चतुर्भिर्भगवान् विष्णुर्द्वाभ्यां ब्रह्मा तथा
रविः ।
अष्टादशपुराणेषु शेषेषु भगवान् भवः ॥"
इत्युक्तम् । स्कान्दे सौरसंहितायाञ्च ।
"कथ्यते दशभिर्विप्राः पुराणैः परमेश्वरः ।
चतुर्भिर्भगवान् विष्णुर्द्वाभ्यां ब्रह्मा
प्रकीर्त्तितः ॥
एकेनाग्निस्तथैकेन भगवांश्चण्डभास्करः
॥"
इत्युक्तमतोऽपि
विष्णुभागवतमष्टादशान्तर्गतं
नत्वन्यदित्याहुस्तदसत् । त्वन्मते
मत्स्योक्त-
सात्त्विकराजसतामससङ्कीर्णपुराणेषु मध्ये
त्रयाणां व्यवस्था पूर्ब्बवचनैस्त्वयोक्ता ।
सङ्कीर्ण-
पुराणानान्तु नोक्ता । तेषां केषु
पुराणेष्वन्तर्भाव
इति वद । करिष्यामि कुत्रचिदिति चेन्मम
मतेऽपि श्रीभगवत्या विष्णु
शक्तित्वाभिमानेन
मन्त्राधिष्ठात्रीं देवतां वेदमानो दुर्गां दुर्ब्बोध-
ध्वान्तभानुं गुरुञ्च इति
श्रीक्रमदीपिकोक्तप्रका-
रेण विष्णु मन्त्राणां दुर्गायाः अधिष्ठातृत्वेन
तयोरैक्याद्वा तत्प्रतिपादकभागवतस्य
वैष्णवे-
ष्वेवान्तर्भावात् । अतएव
"हरिर्द्वाभ्यां रविर्द्वाभ्यां द्वाभ्यां चण्डीविना-
यकौ ।
द्वाभ्यां ब्रह्मा समाख्यातः शेषेषु भगवान्
शिवः ॥"
इति वचनं सङ्गच्छते । वस्तुतस्तु द्वयोरपि
भागवतयोरस्मन्मते प्रमाणत्वात् ।
विष्णुभाग-
वतपक्षपातिनां वचनानामस्माकं
विरोधाभावेन
तल्लापने प्रयोजनाभाव एव । तथा च नार-
दीयादिपुराणमतेन श्रीविष्णु भागवतं महा-

| | | |
|---|---|---|
| अस्ति चात्र सरस्वत्याविर्भावप्रतिपादकंवच-नम् । तदुक्तं देवीभागवते प्रथमस्कन्धे । “तस्यास्तु सात्त्विकी शक्ती राजसी तामसी तथा । महालक्ष्मीः सरस्वती महाकालीति ताः स्त्रियः । तासां तिसृणां शक्तीनां देहाङ्गीकारलक्षणः । सृष्ट्यर्थञ्च समाख्यातः सर्गः शास्त्रविशारदैः ॥” इति । “अम्बरीषशुकप्रोक्तं नित्यं भागवतं शृणु ।” इति वचनमपि शुकाय प्रोक्तमिति व्युत्पत्त्या देवीभागवतपरमपि सङ्गच्छते । भवति हि | | पुराणं तद्वचनानि प्रसिद्धान्येवेति न लिखितानि । देवीभागवतन्तु तन्मते उपपुराणम् । शैव- |

मात्स्यपुराणादिमते तु देवीभागवतं महापुराणम् । विष्णुभागवतमर्थादुपपुराणमिति सिद्धम् ।
अत्र केचिद्देवीभागवतसम्मतित्वे देवीयामल-तन्त्रस्थम् ।
"श्रीमद्भागवतं नाम पुराणं वेदसम्मितम् ।
पारीक्षितायोपदिष्टं सत्यवत्यङ्गजन्मना ॥
तत्र देव्यवताराश्च बहवः प्रतिपादिताः ॥"
इति ।
तथा
"इदं रहस्यञ्चरितं राधोपासनमुत्तमम् ।
व्यासाय मम भक्ताय प्रोक्तं पूर्ब्बं मयाद्रिजे ! ॥
मत्तो रहस्यं ज्ञात्वैव राधामाहात्म्यमुत्तमम् ।
एतस्य विस्तरं चक्रे श्रीमद्भागवते तथा ॥
नारदे ब्रह्मवैवर्त्ते लोकानां हितकाम्यया ॥"
इति ।
सौभाग्यकल्पलतायां संहारभैरवतन्त्रस्थं वचनं
लिखन्ति । तत्र परे विवदन्ते । तदुभयमपि गौरवभिया न लिख्यत इति ॥ * ॥)
तत्र विष्णुभागवते प्रथमस्कन्धे परिक्षिन्नारदयो-
रुपाख्यानम् । विप्रशापात् परीक्षितस्य प्रायोप-
वेशः । शुकपरीक्षितसंवादश्च ॥ १ ॥ * ॥ द्वितीय-
स्कन्धे । योगधारणयोत्क्रान्तिः । नारदाजयोः
संवादः । अवतारानुगीतम् । महदादिक्रमेण सृष्टिश्च ॥ २ ॥ * ॥ तृतीयस्कन्धे । विदुरोद्धव-
संवादः । क्षत्तृमैत्रेययोः संवादः । पुराण-संहिताप्रश्नः । महापुरुषसंस्थितिः । प्राकृ-तिकः सर्गः । वैकृतिकाः सप्त सर्गाः । ब्रह्माण्ड-
सम्भूतिः । विराट्पुरुषोत्पत्तिः । कालस्य स्थूल-
सूक्ष्मस्य गतिः । पाद्मसमुद्भवः । अम्भोधेर्भव उद्धारणा । हिरण्याक्षवधः । ऊर्द्धतिर्य्यगर्वाक्

खट्वाङ्गमान्धातृसौभरिरामाणांचरितम् । निमे-
रङ्गपरित्यागः । जनकानां सम्भवः । परशुराम-
जन्म । भुवो निःक्षत्रीकरणम् । ययाति-नहुषभरतशान्तनुतत्सुतयक्नां वंशानुकीर्त्त-नञ्च ॥ ९ ॥ * ॥ दशमस्कन्धे । श्रीकृष्णस्य वसु-
देवगृहे जन्म । गोकुले तस्य वृद्धिः । तस्य पूतनापयःपानम् । शकटोच्चाटनम् । तृणावर्त्त-
वधः । वकवत्सयोर्वधः । अधासुरवधः । धात्रा
वत्सपालावगूहनम् । भ्रात्रा सह धेनुकस्य वधः । प्रलम्बवधः । गोपालानां दावाग्नेः परि-
त्राणम् । कालीयदमनम् । महाहेर्नन्दमोक्ष-णम् । कन्यानां व्रतचर्य्या । यज्ञपत्नीभ्यः प्रसादः ।
विप्राणामनुपालनम् । गोवर्द्धनोद्धारणम् । शक्र-
सुरभिकर्त्तृककृष्णस्य यज्ञाभिषेकः । रात्रिषु स्त्रीभिः क्रीडा । शङ्खचूडस्य वधः । केशिवधः ।
अक्रूरागमनम् । रामकृष्णयोर्मथुराप्रस्थानम् ।
व्रजस्त्रीणां विलापः । मथुरालोकनम् । गज-मुष्टिकचानूरकंसादीनां वधः । सान्दीपनेर्मृत-
पुत्त्रानयनम् । उद्धवरामाभ्यां सह हरिणा यदुचक्रस्य प्रियकरणम् । जरासन्धसमानीत-
बहुसैन्यवधः । यवनेन्द्रस्य घातनम् । कुशस्थल्या
निवेशनम् । पारिजातहरणम् । रुक्मिणीहर-णम् । बाणेन सह युद्धम् । प्रागजोतिषपतिं हत्वा कन्यानां हरणम् । चैद्यपौण्ड्रकशाल्वदन्त-
वक्रशम्बरद्विविदपीटमुरपञ्चजनानांमाहात्म्य

अल्पां तु साधयेद्यस्तु स वै भागवतो वरः ॥
भक्तिर्न विच्युता येषां न च्युतानि व्रतानि च ॥
सुप्रियः श्रीपतिर्येषां ते स्युर्भागवता नराः ॥
सदाचाररताः शिष्टाः सर्व्वभूतानुकम्पकाः ।
शुचयस्त्यक्तरागा ये सदा भागवता हि ते ॥"
एकादशस्कन्धे ।
"सर्व्वभूतेषु यः पश्येद्गगवद्भावमात्मनः ।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥
न यस्य स्वपर इति वित्तेष्वात्मनि वा भिदा ।
सर्व्वभूतसमः शान्तः स वै भागवतोत्तमः ॥"
हरियोगेश्वरोत्तरे ।
"गृहीत्वापीन्द्रियैरर्थान् यो न द्वेष्टि न काङ्क्षति ।
विष्णोर्मायामिदं पश्यन् स वै भागवतोत्तमः ॥"
बृहन्नारदीये ।
"शिवे च परमेशाने विष्णौ च परमात्मनि ।
समबुद्ध्या प्रवर्त्तन्ते ते वै भागवतोत्तमाः ॥"
स्कान्दे ।
"येषां भागवतं शास्त्रं सदा तिष्ठति सन्निधौ ।
पूजयन्ति च ये नित्यं ते स्युर्भागवता नराः ॥
येषां भागवतं शास्त्रं जीवितादधिकं भवेत् ।
महाभागवताः श्रेष्ठा विष्णुना कथिता नराः ॥"
लैङ्गे ।

सर्गः । रुद्रसर्गः । अर्द्धनारीनरस्य सर्गः ।
यतः
स्वायम्भुवमनुः स्त्रीणां आद्या प्रकृतिः
शतरूपा
च । कर्द्दमप्रजापतेर्धर्म्मपत्नीनां सन्तानः ।
भग-
वत्कपिलावतारः । कपिलेन देवहूतिसंवा-
दश्च ॥ ३ ॥ * ॥ चतुर्थस्कन्धे ।
नवब्रह्मसमुत्पत्तिः ।
दक्षयज्ञविनाशनम् । ध्रुवचरितम् । पृथोः
प्राचीनवर्हिषश्च चरितम् । नारदस्य संवा-
दश्च ॥ ४ ॥ * ॥ पञ्चमस्कन्धे ।
प्रियव्रतचरितम् ।
द्वीपसमुद्रादिवर्षनद्युपवर्णनम् ।
ज्योतिश्चक्रस्य
संस्थानम् । पातालनरकस्थितिश्च ॥ ५ ॥ *
॥
षष्ठस्कन्धे । दक्षजन्म । तत्पुत्त्रीणां सन्ततिः
।
यतः देवासुरनरतिर्य्यङ्नगखगादयः ।
त्वाष्ट्रस्य
जन्म च ॥ ६ ॥ * ॥ सप्तमस्कन्धे । दितेः
पुत्त्रयो-
र्निधनम् । प्रह्लादचरितञ्च ॥ ७ ॥ * ॥ अष्टम-
स्कन्धे । मन्वन्तरानुचरितम् । गजेन्द्रविमोक्ष-
णम् । मन्वन्तरावताराः । हयशीर्षादयोऽव-
ताराः । जगत्पतेः कौर्म्ममात्स्यनारसिंह-
वामनरूपाणि । क्षीरोदमथनम् । देवासुर-
युद्धश्च ॥ ८ ॥ * ॥ नवमस्कन्धे ।
राजवंशानु-
कीर्त्तनम् । इक्ष्वाकुजन्म तद्वंशः ।
सुद्युम्नवंशः ।
इलोपाख्यानम् । तारोपाख्यानम् ।
सूर्य्यवंशानु-
कथनम् ।
शशादनृगसौकन्यस्वर्जातिककुत्स्थ-
वधश्च । वाराणस्या दाहः । पाण्डवान्
निमित्तीकृत्य भूमेर्भारावतरणञ्च ॥ १० ॥ *
॥
एकादशस्कन्धे । विप्रशापापदेशेन स्वकुल-
संहारः । उद्धवसंवादः । उद्धवाय आत्म-
विद्याकर्म्मविनिर्णयकथनम् । आत्मयोगानु-
भावतो मर्त्यपरित्यागश्च ॥ ११ ॥ * ॥
द्वादश-
कन्धे । युगलक्षणवृत्तिः । कलौ
नृणामुपप्लवः ।
चतुर्विधप्रलयः । त्रिविधोत्पत्तिः । परिक्षित-
देहत्यागः । व्यासकर्त्तृकशाखाप्रणयनम् ।
मार्क
ण्डेयस्य सत्कथा । सूर्य्यस्य विन्यासश्च ॥
१२ ॥ * ॥
इति श्रीभागवते १२ स्कन्धे
अनुक्रमणिकाध्यायः ॥

**भागवतः**, त्रि, (भगवान् हरिः भगवती दुर्गा वास्य
देवतेति । भगवत् + "सास्य देवता ।" ४ ।
२ । २४ ।
इति अण् ।) भगवद्भक्तः । तस्य लक्षणम् ।
यथा,
"सर्व्वदेवान् परित्यज्य नित्यं भगवदाश्रयः ।
रतस्तदीयसेवायां स भागवत उच्यते ॥"
इति पाद्मोत्तरखण्डे ९९ अध्यायः ॥ * ॥
स च यमदूतैस्त्याज्यः । यथा, --
"ये तु भागवता लोके
तच्चित्तास्तत्परायणाः ।
पूजयन्ति सदा विष्णुं ते च त्याज्याः
सुदूरतः ॥"
इति वह्निपुराणे दूतान् प्रति यमवचनम् ॥
स्कान्दे श्रीमार्कण्डेयभगीरथसंवादे ।
"दशमीशेषसंयुक्तं दिनं वैष्णववल्लभम् ।
ह्युपासते महीपाल ! ते वै भागवता नराः ॥
प्राणात्यये न चाश्नन्ति दिनं प्राप्य हरेर्नराः ।
कुर्व्वन्ति जागरं रात्रौ सदा भागवता हि ते ॥
उपोष्य द्वादशीं शुद्धां रात्रौ जागरणान्विताम्
।
"भोजनाच्छादनं सर्व्वं यथाशक्त्या
ददाति यः ।
विष्णुभक्तस्य सततं स वै भागवतः
स्मृतः ॥"
गारुडे ।
"येन सर्व्वात्मना विष्णुभक्त्या भावो
निवेशितः ।
वैष्णवेषु कृतात्मत्वान्महाभागवतो हि
सः ॥"
बृहन्नारदीये ।
"तुलसीकाननं दृष्ट्वा ये नमस्कुर्व्वते
नराः ।
तत्काष्ठाङ्कितकर्णा ये ते वै
भागवतोत्तमाः ॥
तुलसीगन्धमाघ्राय सन्तोषं कुर्व्वते तु
ये ।
तन्मूलमृद्धृता यैश्च ते वै
भागवतोत्तमाः ॥
मत्कथाश्रवणे येषां वर्त्तते सात्त्विकी
मतिः ।
तद्वक्तरि सुभक्ताश्च ते वै
भागवतोत्तमाः ॥"
स्कान्दे ।
"मत्कथां कुरुते यस्तु मत्कथाञ्च
शृणोति च ।
हृष्यते मत्कथायाञ्च स वै
भागवतोत्तमः ॥"
बृहन्नारदीये ।
"मन्मानसाश्च मद्भक्ता
मद्भक्तजनलोलुपाः ।
मन्नामश्रवणासक्तास्ते वै
भागवतोत्तमाः ॥
येऽभिनन्दन्ति नामानि हरेः शृण्वन्ति
हर्षिताः ।
रोमाञ्चितशरीराश्च ते वै
भागवतोत्तमाः ॥
अन्येषामुदयं दृष्ट्वा येऽभिनन्दन्ति
मानवाः ।
हरिनामपरा ये च ते वै भागवतोत्तमाः
॥"
स्कान्दे ।

| | | |
|---|---|---|
| | | "येऽर्च्चयन्ति सदा विष्णुं यज्ञेश वरदं हरिम् ।<br>देहिनः पुण्यकर्म्माणः सदा भागवता हि ते ॥"<br>लैङ्गे ।<br>"विष्णुक्षेत्रे शुभान्येव करोति स्नेहसंयुतः ।<br>प्रतिमाञ्च हरिर्नित्यं पूजयेत् प्रयतात्मवान् ॥<br>विष्णुभक्तः स विज्ञेयः कर्म्मणा मनसा गिरा ।<br>नारायणपरो नित्यं भूप ! भागवतो हि सः ॥" |

पाद्मोत्तरखण्डे ।
“तापादिपञ्चसंस्कारी नवेज्याकर्म्मकारकः
।
अर्थपञ्चकविद्विप्रो महाभागवतो हि सः ॥
एकान्तेन सदा विष्णौ यस्माद्देवे परायणाः
।
तस्मादेकान्तिनः प्रोक्तास्तद्भागवतचेतसः
॥”
एकादशस्कन्धे ।
“ज्ञात्वाज्ञात्वाथ ये वै मां यावान्
यश्चास्मि
यादृशः ।
भजन्त्यनन्यभावेन ते वै भागवता मताः ॥
न कामकर्म्मबीजानां यस्य चेतसि सम्भवः
।
वासुदेवैकनिलयः स वै भागवतोत्तमः ॥”
स्कान्दे ।
“यस्य कृच्छ्रगतस्यापि केशवे रमते मनः ।
न विच्युता च भक्तिर्वै स वै भागवतो नरः
॥
आपद्गतस्य यस्येह भक्तिरव्यभिचारिणी
।
नान्यत्र रमते चित्तं स वै भागवतो नरः ॥”
हरियोगेश्वरोत्तरे ।
“विसृजति हृदयं न यस्य साक्षा-
द्धरिरवशाभिहितोऽप्यघौघनाशः।
प्रणयरसनया धृताङ्घ्रिपद्मः
स भवति भागवतप्रधान उक्तः ॥”
मध्यममाह तत्रैव ।
“ईश्वरे तदधीनेषु वालिशेषु द्विषत्सु च ।
प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः
॥”
कनिष्ठस्तत्रैव ।
“अर्च्चायामेव हरये पूजां यः श्रद्धयेहते ।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः
॥”
इति श्रीहरिभक्तिविलासे १० विलासः ॥

**भागिकं**, त्रि, (भाग + “भागाद्यच्च ।” ५ । १ । ४९
।
योनिसम्बन्धे
मातृष्वस्रीयपितृष्वस्रीयगागिनेयेषु ।
मातुलमरणे भागिनेयस्यापि पक्षिण्यशौचम्
।”
इति शुद्धितत्त्वम् ॥

**भागिनेयी**, स्त्री, (भगिनी + ढक् । स्त्रियां ङीप् ।)
भगिन्याः स्त्र्यपत्यम् । भाग्नी इति भाषा ।
भगिनीशब्दात् स्त्र्यपत्यार्थे ष्णेये
षित्त्वादीप्-
प्रत्ययनिष्पन्ना । इति व्याकररणम् ॥

**भागीरथी**, स्त्री, (भगीरस्येयम् । भगीरथ + अण् ।
ङीप् ।) गङ्गा । इत्यमरः । १ । १० । ३१
॥
पृथिव्यां तस्यावतरणम् । यथा, --
सूत उवाच ।
“ततो भगीरथो राजा तपः परमदुश्चरम् ।
कृत्वा सन्तोषयामास उमाकान्तं महेश्वरम्
॥
धारणायानुमत्वा तं जगाम ब्रह्मणोऽन्तिकम्
।
ततो भगीरथः प्राह गङ्गा ब्रह्मन् !
विसृज्यताम् ॥
स तच्छ्रुत्वा वचस्तस्य सम्मान्य
विबुधप्रियम् ।
गङ्गां प्रस्थापयामास
सापतद्ब्रह्मणोऽन्तिकात् ॥
वायुना प्रेर्य्यमाणापि आकाशपथगा नदी ।
विख्याताकाशगङ्गेति तत्र संसेविता गजैः ॥
विष्णोः पदं समायाता तस्माद्विष्णुपदीति
सा ।
पूज्यमाना सुरैः सिद्धैर्मुनिविद्याधरोरगैः ॥
सुरालयमनुप्राप्ता तस्माद्देवनदी तु सा ।
तस्मात् प्रपतिता गङ्गा शम्भोः शिरसि
संस्थिता ॥
धृतैकेनैव तेनापि शम्भुना योगमायया ।
दिव्यं वर्षशतं साग्रं पुनराराधितेन वै ॥
मुक्ता भगीरथेनैव मलहन्त्री विनिर्गता ।
देवैः संपूज्यमानापि जगाम
ब्रह्मणोऽन्तिकम् ॥
जग्मुस्ते सागराः स्वर्गं ब्रह्मणोपहताश्च ये
।
रक्षकास्ते विनिर्द्दिष्टा गङ्गाया ब्रह्मणा
स्वयम् ॥
भवद्भिरनिशं नृणां कर्त्तव्यं विघ्ननाशनम्
॥
सूत उवाच ।
एतद्वः कथितं सर्व्वं यथावतरणं दिवः ।
गङ्गायाश्चैव माहात्म्यं श्रूयतां गदतो मम
॥”
इत्याद्ये वह्निपुराणे गङ्गावतरणनामाध्यायः
॥
तस्या मुख्यनामानि यथा, --
वराह उवाच ।
“धर्म्मस्तु द्रवरूपेण ब्रह्मणा निर्म्मितः पुरा
।
यद्वै गङ्गेति विख्याता शृणु स्तोत्रं
वसुन्धरे ! ॥
किन्तैर्नामसहस्रैस्तु मुख्यामुख्यैः
सुविस्तरैः ।
यानि नामानि मुख्यानि तानि
वक्ष्याम्यनुक्रमात् ॥
गङ्गा भागीरथी पुण्या जाह्नवी सुरनिम्नगा
।
विष्णुपादाब्जसम्भूता शम्भोः शिरसि
संस्थिता ॥
सुमेरुशृङ्गसंस्पृष्टा हिमाचलंकृताश्रया ।
शङ्खकुन्देन्दुधवला महापातकनाशिनी ॥
नदीश्वरी त्रिपथगा वैष्णवी सुरसुप्रिया ।
धर्म्मद्रवी भोगवती बिन्ध्यपाषाणदारिणी
॥
क्षमा शान्तिः प्रजाशान्तिः पुण्यदा पूतिका
शिवा ।
महानदी शतमुखी शुक्ला मकरवाहिनी ॥
ब्रह्महस्तात् परिभ्रष्टा सौम्यरूपातिशोभना
।

इति पक्षे ठन् ।) वृद्ध्यर्थदत्तमुद्रादि । सुदी टाका इत्यादि भाषा । यथा । भागो वृद्ध्यादि-
रस्मिन् दीयते भाम्यं भागिकं शतम् । भाग्या
भागिका विंशतिः । इति सिद्धान्तकौमुदी ॥

**भागिनेयः**, पुं, (भगिन्या अपत्यम् । भगिनी +
"स्त्रीभ्यो ढक् ।" ४ । १ । १२० । इति ढक् ।)
भगिनीपुत्त्रः । तत्पर्य्यायः । स्वस्रीयः २ । इत्य-
मरः । २ । ६ । ३२ ॥ स्वस्रियः ३ । इति शब्दरत्ना-
वली ॥ स च मुख्यप्रतिनिधिः । यथा, --
"ऋत्विक् पुत्त्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः ।
एभिरेव हुतं यत्तु तद्धुतं स्वयमेव हि ॥"
इति तिथ्यादितत्वम् ॥ * ॥
तस्यावश्यपोष्यत्वम् यथा, --
"पितृव्यगुरुदौहित्रान् भर्त्तुः स्वस्रीयमातुलान् ।
पूजयेत् कव्यपूर्त्ताभ्यां वृद्धानाथातिथीन् स्त्रियः ॥"
इत्यपुत्त्रधनाधिकारे दायभागः ॥ * ॥
भागिनेयदत्तककरणं शूद्रस्यैव न तु द्विजानाम् ।
यथा, दत्तकचन्द्रिकायां शौनकवचने ।
"दौहित्रो भागिनेयश्च शूद्रैस्तु क्रियते सुतः ।
ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित् ॥"
तन्मरणे मातुलस्य पक्षिण्यशौचम् । यथा ।
"पक्षिणी योनिसम्बन्धे बान्धवेषु तथैव च ।
जटाजूटात् पपातोर्द्धे मेरोस्तस्मात्ततोऽगमत् ॥
देवैः परिवृता गङ्गा हेमकूटञ्च पर्व्वतम् ।
मन्दरञ्चैव कैलासं हिमवन्तञ्च पर्व्वतम् ॥
तामायान्तीं तु रोधाय स्वलीनो नाम दानवः ।
पार्व्वतं रूपमास्थाय वर्षाणान्तु शतैर्द्विजाः ॥
ततो भगीरथो राजाराधयामास कौशिकम् ।
स तुष्टः प्रददौ नागं वाहनं वै भगीरथः ॥
तमारुह्यागमत्तत्र यत्र रुद्धा भगीरथी ।
तेन नागेन तं दैत्यं संविदार्य्य न सङ्गतः ॥
शतधा तां समाधाय मूर्द्धन्यैरावणो गजः ।
महीतलं समापेदे स यावन्नागसाह्वयम् ॥
तस्माद्व्याघटनाद्विप्रा अभून्नागपुरं वरम् ।
प्लावयन्ती महीं गङ्गा जह्नोराश्रममभ्यगात् ॥
तां दृष्ट्वाथ पपौ सोऽपि प्रसृत्या कुपितो मुनिः ।
जह्नुना नाशितां दृष्ट्वा गङ्गां त्रिपथगां नदीम् ॥
सशोकस्तोषयामास जह्नुं भगीरथो मुनिम् ।
मुमोच कर्णरन्ध्रेण गङ्गा स दक्षिणेन ताम् ॥
एतस्माज्जाह्नवी भूता सुता तस्य मुनेस्तथा ।
ततः सा विविधान् देशान् पर्व्वतांश्च तथा-श्रमान् ॥
संप्लाव्य वारिणा भूयो जगाम पूर्ब्बसागरम् ॥
यत्र तत्रोदकं तस्थौ तस्याः पुण्यमभूद्द्विजाः ।
सुतीर्थं सर्व्वमर्त्यानां तारणं पापनाशनम् ॥
ततः सम्पूरयामास समुद्रं सर्व्वतो दिशम् ।
प्रपन्नं सागरैः सर्व्वं ततः पातालमाविशत् ॥
सागराणां तनोस्तस्मात् संप्लाव्य वारिणा ततः ।
मुनिभिः पूजिता सर्व्वैः सर्व्वैर्देवैर्नमस्कृता ॥
महायज्ञमयी देवी मर्त्यानामुपकारिणी ।
सर्व्वत्र दुर्लभा गङ्गा त्रिभिः स्थानैर्व्विशेषतः ॥
गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे ॥
इदं स्तोत्रं मया ख्यातं पूर्ब्बमुक्तं स्वयम्भुवा ।
यः पठेत् प्रातरुत्थाय तस्य नश्यति दुर्गतिः ॥
यत् पापं यौवने बाल्ये कौमारे वार्द्धके च यत् ।
तत् सर्व्वं विलयं याति तोयस्थं लवणं यथा ॥
कीर्त्तिं प्रीतिं महालक्ष्मीमायुरारोग्यसन्ततिम् ।
ददाति जाह्नवी तुष्टा सर्व्वभावेन माधवि ! ॥"
इति वाराहे सर्व्वपापप्रशमनगङ्गास्तवः ॥
अपि च ।
ब्रह्मोवाच ।
"श्रोतुमिच्छामि देवेश ! लक्ष्मीकान्त ! जगत्
प्रभो ! ।
विष्णो ! विष्णुपदीस्तोत्रं पापघ्नं पुण्यकारणम् ॥
श्रीनारायण उवाच ।
शिवसंगीतसंमुग्ध श्रीकृष्णाङ्गद्रवोद्भवाम् ।
राधाङ्गद्रवसंयुक्तां तां गङ्गां प्रणमाम्यहम् ॥
या जन्मसृष्टेरादौ च गोलोके रासमण्डले ।
सन्निधाने शङ्करस्य तां गङ्गां प्रणमाम्यहम् ॥
गोपैर्गोपीभिराकीर्णेः शुभे राधामहोत्सवे ।
कार्त्तिकीपूर्णिमाजातां तां गङ्गां प्रणमाम्यहम् ॥
कोटियोजनविस्तीर्णा दैर्घ्ये सप्तगुणा ततः ।
समावृता या गोलोकं तां गङ्गां प्रणमाम्यहम् ॥
षष्टिलक्षयोजनां या ततो दैर्घ्ये चतुर्गुणा ।

आवृता ब्रह्मलोकं या तां गङ्गां
प्रणमाम्यहम् ॥
त्रिंशल्लक्षयोजना या दैर्घ्ये पञ्चगुणा ततः
।
आवृता शिवलोकं या तां गङ्गां
प्रणमाम्यहम् ॥
लक्षयोजनविस्तीर्णा दैर्घ्ये सप्तगुणा ततः
।
आवृता ध्रुवलोकं या तां गङ्गां
प्रणमाम्यहम् ॥
लक्षयोजनविस्तीर्णा दैर्घ्ये शतगुणा ततः
।
आवृता चन्द्रलोकं या तां गङ्गां
प्रणमाम्यहम् ॥
षष्टिसहस्रयोजना या दैर्घ्ये दशगुणा
ततः ।
आवृता सूर्य्यलोकं या तां गङ्गां
प्रणमाम्यहम् ॥
लक्षयोजनविस्तीर्णा दैर्घ्ये च षड्गुणा
ततः ।
आवृता सत्यलोकं या तां गङ्गां
प्रणमाम्यहम् ॥
दशलक्षयोजना या दैर्घ्ये पञ्चगुणा ततः ।
आवृता या तपोलोकं तां गङ्गां
प्रणमाम्यहम् ॥
सहस्रयोजनायामा दैर्घ्ये दशगुणा ततः ।
आवृता जनलोकं या तां गङ्गां
प्रणमाम्यहम् ॥
सहस्रयोजनायामा दैर्घ्ये सप्तगुणा ततः ।
आवृता या च कैलासं तां गङ्गां
प्रणमाम्यहम् ॥
शतयोजनविस्तीर्णा दैर्घ्ये दशगुणा ततः
।
मन्दाकिनी येन्द्रलोके तां गङ्गां
प्रणमाम्यहम् ॥
पाताले या भोगवती विस्तीर्णदशयोजना
।
ततो दशगुणा दैर्घ्ये तां गङ्गां
प्रणमाम्यहम् ॥

(यथा । "वष्टि भागुरिरल्लोपमवाप्योरुप-
सर्गयोः ।" इति सिद्धान्तकौमुदी ॥)

**भाग्यं**, क्ली, (भज्यतेऽनेन इति । भज + "ऋहलो-
र्ण्यत् ।" ३ । १ । १२४ । इति ण्यत् ।
"चजोः
कु घिण्ण्यतोः ।" ७ । ३ । ५२ । इति
कुत्वम् ।)
प्राक्तनशुभाशुभकर्म्म । तत्पर्य्यायः ।
दैवम् २
दिष्टम् ३ भागधेयम् ४ नियतिः ५ विधिः
६ ।
इत्यमरः । १ । ४ । १८ ॥ प्राक्तनकर्म्म
७ भागः
८ भवितव्यता ९ । इति जटाधरः ॥
अदृष्टम्
१० । इति शब्दरत्नावली ॥
फलोन्मुखीभूत-
पूर्ब्बदैहिकशुभाशुभं कर्म्म । इति
मलमास-
तत्त्वम् ॥ (यथा, --
"समुद्रमन्थने लेभे हरिर्लक्ष्मीं हरो विषम्
।
भाग्यं फलति सर्व्वत्र न विद्या न च
पौरुषम् ॥"
इति प्राञ्चः ॥
उत्तरफल्गुनीनक्षत्रम् । यथा, बृहत्संहि-
तायाम् । १० । १ ।
"श्रवणानिलहस्तार्द्रा-
भरणीभाग्योपगः सुतोऽर्कस्य ।
प्रचुरसलिलोपगूढां
करोति धात्रीं यदि स्निग्धः ॥"
भागो वृद्धादिरस्मिन् दीयते इति । भाग +
"भागाद्यच्च ।" ५ । १ । ४९ । इति यत्
।)
भागिके, त्रि । इति सिद्धान्तकौमुदी ॥
(भाग-
मर्हति । भाग + "दण्डादिभ्यो यत् ।" ५ ।
१ ।

**भाजी**, स्त्री, (भाज्यते इति । भाज + कर्म्मणि
घञ् । भाज + "जानपदकुण्डगौणस्थलभाज-
नागेति ।" ४ । १ । ४२ । इति ङीष् ।)
अञ्जन-
विशेषः । अन्यत्र भाजा । इति स्त्रीत्यटीकायां
दुर्गादासः ॥

**भाज्यं**, त्रि, भागार्हम् । भाजनीयम् । इति भाज-
धातोः कर्म्मणि यप्रत्ययेन निष्पन्नम् ॥

**भाटकः**, पुं, क्ली, (भटतीति । भट पोषणे + ण्वुल् ।)
व्यवहारार्थं दत्तशकटादिलभ्यधनम् । इति
हलायुधः ॥ भाडा इति माषा ॥ अथ गृहादि-
भाटकम् ।
"परभूमौ गृहं कृत्वा भाटयित्वा वसेत्तु यः ।
स तद्गृहीत्वा निर्गच्छेत्तृणकाष्ठेष्टकादिकम् ॥
स्तोमं विना वसित्वा तु परभूमावनिच्छतः ।
निर्गच्छंस्तृणकाष्ठानि न गृह्णीयात् कथञ्चन
॥"
कात्यायनः ।
"गृहवाप्यापणादीनि गृहीत्वा भाटकेन यः ।
स्वामिनो नार्पयेद्यावत्तावद्दाप्यः स भाटकम्
॥"
वापी परकृता प्रतिष्ठितेति विवक्षितम् ।
"हस्त्यश्वगोखरोष्ट्रादीन् गृहीत्वा भाटकेन यः
॥
स्वामिनो नार्पयेद्यावत् तावद्दाप्यः स भाट-
कम् ॥"
वृद्धमनुः ।
"यो भाटयित्वा शकटं नीत्वा नान्यत्र गच्छति
।
भाटं न दद्याद्दाप्योऽसावनूढस्यापिभाटकम्
॥"
शकटं वृषनौकादेरप्युपलक्षणम् । अनूढस्या-
वाहितस्यापि शकटादेः । इति विवादचिन्ता-
मणिः ॥

**भाणः**, पुं, (भण्यतेऽत्रेति । भण + अधिकरणे
घञ् ।) नाटकादिदशरूपकान्तर्गतरूपक-
विशेषः । इति हेमचन्द्रः । २ । १९८ ॥ तस्य

क्रोशैकमात्रविस्तीर्णा ततः क्षीणा च कुत्रचित् ।
क्षितौ चालकनन्दा या तां गङ्गां प्रणमाम्यहम् ॥
सत्ये या क्षीरवर्णा च त्रेतायामिन्दुसन्निभा ।
द्वापरे चन्दनाभा च तां गङ्गां प्रणमाम्यहम् ॥
जलप्रभा कलौ या च नान्यत्र पृथिवीतले ।
स्वर्गे च नित्यं क्षीराभा तां गङ्गां प्रणमाम्यहम् ॥
यस्याः प्रभावमतुलं पुराणे च श्रुतौ श्रुतम् ।
या पुण्यदा पापहर्त्री तां गङ्गां प्रणमाम्यहम् ॥
यत्तोयकणिकास्पर्शः पापिनाञ्च पितामह ! ।
ब्रह्महत्यादिकं पापं कोटिजन्मार्जितं दहेत् ॥
इत्येवं कथितं ब्रह्मन् ! गङ्गापद्यैकविंशतिः ।
स्तोत्ररूपञ्च परमं पापघ्नं पुण्यकारकम् ॥
नित्यं यो हि पठेद्भक्त्या संपूज्य च सुरेश्वरीम् ।
अश्वमेधफलं नित्यं लभते नात्र संशयः ॥
अपुत्त्रो लभते पुत्त्रं भार्य्याहीनो लभेत् प्रियाम् ।
रोगात् प्रमुच्यते रोगी बद्धो मुच्येत बन्धनात् ॥
अस्पष्टकीर्त्तिः सुयशा मूर्खो भवति पण्डितः ॥
यः पठेत् प्रातरुत्थाय गङ्गास्तोत्रमिदं शुभम् ॥
शुभं भवेत्तु दुःस्वप्नं गङ्गास्नानफलं लभेत् ॥”
इति गङ्गास्तोत्रम् ॥
नारायण उवाच ।
“भगीरथोऽनेन स्तोत्रेण स्तुत्वा गङ्गाञ्च

६६ । इति यत् ।) भागार्हम् । (भज + ण्यत् ।
भजनीयम् ॥)

**भाङ्गीनं**, त्रि, (भङ्गाया भवनं क्षेत्रमिति । “विभाषा तिलमाषोमाभङ्गाणुभ्यः ।” ५ । २ । ४ । इति पक्षे खञ् ।) भङ्गाक्षेत्रम् । तत्पर्य्यायः । भाङ्ग्यम् २ । इत्यमरहेमचन्द्रौ ॥ (यथा, शब्दरत्नावल्याम् ।
“एवं माष्यन्तु माषीणं कौद्रव्यं कोद्रवीणवत् ।
तथा भाङ्ग्यञ्च भाङ्गीनमुम्यमौमीनमित्यपि ॥”)

**भाज**, त् क पृथक्कृत्याम् । इति कविकल्पद्रुमः ॥ (अदन्तचुरा०-पर०-सक०-सेट् ।) अवभाजत् धनं भ्रातृवर्गः । इति दुर्गादासः ॥

**भाजनं**, क्ली, (भाज्यते इति । भाज पृथक्करणे + ल्युट् ।) पात्रम् । इत्यमरः । २ । ९ । ३३ ॥ (यथा, महाभारते । १३ । १११ । १०२ ।
“राजतं भाजनं हृत्वा कपोतः संप्रजायते ॥”)
योग्यम् । इति मेदिनी । ने, १०१ ॥ (यथा, कथासरित्सागरे । ३४ । २०५ ।
“तस्माज्जितात्मा राजा स्याद्युक्तदण्डो विशेष-वित् ।
प्रजानुरागादेवं हि स भवेद्भाजनं श्रियः ॥”)
“यः संवादयते नित्यं योऽभिवादांस्तितिक्षति ।
यश्च तप्तो न तपति दृढं सोऽर्थस्य भाजनम् ॥”
इति मत्स्यपुराणम् ॥
आढकपरिमाणम् । इति वैद्यकपरिभाषा ॥

लक्षणादि यथा, --
“भाणः स्याद्धूर्त्तचरितो नानावस्थान्तरात्मकः ।
एकाङ्क एक एवात्र निपुणः पण्डितो विटः ॥
रङ्गे प्रकाशयेत् स्वेनानुभूतमितरेण वा ।
सम्बोधनोक्तिप्रत्युक्ती कुर्य्यादाकाशभाषितैः ॥
सूचयेद्वीरशृङ्गारौ शौर्य्यसौभाग्यवर्ण्णनैः ।
तत्रेतिवृत्तमुत्पाद्यं वृत्तिः प्रायेण भारती ॥
मुखनिर्व्वहणे सन्धी लास्याङ्गानि दशापि च ॥
अत्राकाशभाषितरूपं परवचनमपि स्वयमेवा-नुवदन्नुत्तरप्रत्युत्तरे कुर्य्यात् । शृङ्गारवीररसौ च सौभाग्यशौर्य्यवर्णया सूचयेत् । प्रायग्रहणात् कौशिक्यपि वृत्तिर्भवति । उदाहरणं लीला-मधुकरः ।” इति साहित्यदर्पणे ६ परिच्छेदः ॥

**भाण्डं**, क्ली, (भण्यते भणति वेति । भण् शब्दे + “ञमन्ताड्डः ।” उणा० १ । ११३ । इति डः । ततः प्रज्ञादित्वादण् ।) पात्रम् । (यथा, महा-भारते । १३ । ११ । १०२ ।
“हृत्वा तु काञ्चनं भाण्डं कृमियोनौ प्रजायते ॥”)
बणिङ्मूलधनम् । भूषा । अश्वभूषा । इति मेदिनी । डे, २१ ॥ (यथा, महाभारते । ७ । २६ । २३ ।

नारद ! ।

जगाम तां गृहीत्वा च यत्र नष्टाश्च सागराः ।

वैकुण्ठं ते ययुस्तूर्णं गङ्गायाः स्पर्शवायुना ॥

भगीरथेन सानीता तेन भागीरथी स्मृता ।

इत्येवं कथितं सर्व्वं गङ्गोपाख्यानमुत्तमम् ॥

पुण्यदं मोक्षदं सारं किं भूयः श्रोतुमिच्छसि ॥”

इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे गङ्गोपाख्याने ८ अः ॥

**भागुरिः**, पुं, स्मृतिव्याकरणादिकर्त्तृमुनिविशेषः ।

तत्पर्य्यायः । शतलुम्पकः २ । इति जटाधरः ॥

**भाजितं**, त्रि, (भाज्यते स्मेति । भाज + क्त ।)

पृथक्कृतम् । विभक्तम् । इति भाजधातोःकर्म्मणि क्तप्रत्ययेन निष्पन्नम् ॥ (भावे + क्त ।) भागे, क्ली ॥

"विप्रविद्धकुथावल्गाश्छिन्नभाण्डाः परासवः ।
सारोहास्तुरगाः पेतुर्मथिताः पार्थमार्गणैः ॥")
नष्टभाण्डस्य दण्डादिविधिर्य्यथा, --
"अराजदैविकं नष्टं भाण्डं दाप्यस्तु वाहकः ।
प्रस्थानविघ्नकृच्चैव प्रदाप्यो द्विगुणां भृतिम् ॥
भाण्डं व्यसनमागच्छेत् यदि वाहकदोषतः ।
दाप्यो यत् तत्र नश्येत्तु दैवराजकृतादृते ॥"
इति मिताक्षरायां नारदः ॥
नदीकूलद्वयमध्यम् । इति हेमचन्द्रः । ४ । ९२ ॥
(भण्डते इति । भडि + अच् ।
भण्डस्तस्य भावः
इत्यण् ।) भण्डवृत्तिः । इत्यजयपालः ॥
भाँडामि
इति भाषा ॥

**भाण्डः**, पुं, गर्द्धभाण्डवृक्षः । इति शब्दचन्द्रिका ॥

**भाण्डपुटः**, पुं, (भाण्डे पुटा यस्य ।) नापितः ।
इति जटाधरः ॥

**भाण्डपुष्पः**, पुं, सर्पविशेषः । तत्पर्य्यायः । कौक्कुटि-
कन्दलः २ । इति त्रिकाण्डशेषः ॥

**भाण्डागारः**, पुं, (भाण्डानां पात्रादीनामागारः ।)
गृहविशेषः । भाँडार इति भाषा ॥ तत्-पर्य्यायः । मन्थरः २ । इति शब्दमाला ॥
(यथा, महाभारते । १२ । ६९ । ५४ ।
"भाण्डागारायुधागारान् योधागारांश्च सर्व्वशः ।
अश्वागारान् गजागारान्बलाधिकरणानि च ॥")

**भाण्डारी**, [न्] पुं, (भाण्डारोऽधिकारित्वेना-
सूर्य्यः । इति त्रिकाण्डशेषः ॥ दीप्तः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**भाद्रः**, पुं, (भाद्री पौर्णमास्यस्मिन्निति । भाद्री +
"सास्मिन् पौर्णमासीति ।" ४ । २ । २१ ।
इत्यण् ।) भाद्रपदनक्षत्रयुक्ता पौर्णमासी यस्मिन् मासे सः । वैशाखादिद्वादशमासान्तर्गतपञ्चम-मासः । तत्पर्य्यायः । नभस्यः २ प्रौष्ठपदः ३ भाद्र-पदः ४ । इत्यमरः । १ । ४ । १७ ॥ स च द्विविधः ।
सिंहस्थरविकालः सौरः । १ । सिंहस्थरव्या-रब्धशुक्लप्रतिपदादिदर्शान्तोमुख्यचान्द्रः । कृष्ण-प्रतिपदादिपौर्णमास्यन्तो गौणचान्द्रः । २ । इति मलमासतत्त्वम् ॥ * ॥ तत्र जातफलम् ।
"नभस्यमासे खलु जन्म यस्य
धीरो मनोज्ञश्च वराङ्गनानाम् ।
रिपुप्रमाथी कुटिलोऽतिमर्म्मा
प्रपन्नभर्त्ता स भवेत् सहासः ॥"
इति कोष्ठीप्रदीपः ॥ * ॥
तत्र गोः प्रसवे नारदः ।
"भानौ सिंहगते चैव यस्य गौः सम्प्रसूयते ।
मरणं तस्य निर्द्दिष्टं षड्भिर्मासैर्न संशयः ॥
तत्र शान्तिं प्रवक्ष्यामि येन सम्पद्यते शुभम् ।
प्रसूतां तत्क्षणादेव तां गां विप्राय दापयेत् ॥
ततो होमं प्रकुर्व्वीत घृताक्तै राजसर्षपैः ।
आहुतीनां घृताक्तानामयुतं जुहुयात्ततः ॥"
व्याहृतिभिश्चायं होमः ।
"सोपवासः प्रयत्नेन दद्याद्विप्राय दक्षिणाम् ॥"
इति ॥
तथा ।
"सिंहराशौ गते सूर्य्ये गोः प्रसूतिर्यदा भवेत् ।
पौषे च महिषी सूते दिवैवाश्वतरी तथा ।
तदानिष्टं भवेत् किञ्चित् तच्छान्त्यै शान्तिकं चरेत् ॥
अस्य वामेतिसूक्तेन तद्विष्णोरिति मन्त्रतः ।
जुहुयाच्च तिलाज्येन शतमष्टोत्तराधिकम् ॥
मृत्युञ्जयविधानेन जुहुयाच्च तथायुतम् ।
श्रीसूक्तेन ततः स्नायात् शान्तिसूक्तेन वा पुनः ॥
मध्यरात्रौ निशीथे वा यदा गौः क्रन्दते तदा ।
ग्रामे वास्य गृहे वापि शान्तिकं पूर्ब्बवद्विशेत् ॥"

तत्र प्रयोगः पूर्ब्बदिने संयमं विधाय तद्दिने
कृतप्रातःस्नानादिराचान्तः । ॐ सूर्य्यः सोम
इति पठित्वा ॐ तद्विष्णोः परमं पदमित्यादि-
मन्त्रेण नारायणं संस्मृत्य ॐ तत् सत् इत्युच्चार्य्य
उदङ्मुखो दर्भहस्तस्ताम्रपात्रे कुशतिलजला-
न्यादाय ॐ अद्य भाद्रे मासि कृष्णे पक्षे अष्टम्यां
तिथौ अमुकगोत्रः श्रीअमुकदेवशर्म्मा विष्णु-
लोकप्राप्तिकामः श्रीविष्णुप्रीतिकामो वा श्रीकृष्ण-
जन्माष्टमीव्रतमहं करिष्ये इति संकल्पयेत् ।
यद्युपवासदिने प्रातः सप्तमी तदाष्टम्यां तिथौ
इत्यत्र सप्तम्यां तिथावारभ्य इति वक्तव्यम् ।
ततः सामगस्तु ॐ देवो वो द्रविणोदा पूर्णां
विवष्टासिचं उद्वासिञ्चद्ध्वमुपवा प्रणुद्ध्वमादिदिवो
देव ओहते । इति पठेत् । ॐ धर्म्माय धर्म्मे-
श्वराय धर्म्मपतये धर्म्मसम्भवाय गोविन्दाय
नमो नमः । इत्युच्चार्य्य
"ॐ वासुदेवं समुद्दिश्य सर्व्वपापप्रशान्तये ।
उपवासं करिष्यामि कृष्णाष्टम्यां नभस्यहम् ॥
अद्य कृष्णाष्टमीं देवीं नभश्चन्द्रसरोहिणीम् ।
अर्च्चयित्वोपवासेन भोक्ष्येऽहमपरेऽहनि ॥

स्त्यस्येति । भाण्डार + इनिः ।)
भाण्डाराध्यक्षः ।
भाँडारी इति भाषा । यथा, व्यवहारप्रदीपे ।
"क्षुधितस्तृषितः कामी विद्यार्थी कृषिकारकः ।
भाण्डारी च प्रवासी च सप्त सुप्तान् प्रबोधयेत् ॥

**भाण्डिः**, पुं, (भडि + इन् । पृषोदरादित्वात् साधुः ।) नापितस्य क्षुराद्याधारः । भाँडि इति भाषा । इति भाण्डिवाहशब्ददर्शनात् ॥

**भाण्डिलः**, पुं, (भाण्डिरस्त्यस्येति । भाण्डि + लच् ।) नापितः । इति शब्दमाला ॥

**भाण्डिवाहः**, पुं, (भाण्डिं क्षुराद्याधारं वहतीति । वह् + अण् ।) नापितः । इति शब्दमाला ॥

**भाण्डीरः**, पुं, (भण्ड + ईरच् । पृषोदरादित्वात् साधुः ।) वटवृक्षः । इति जटाधरः ॥
व्रज-
मण्डलान्तरे षोडशवटवनमध्ये द्वितीयवटवनम् ।
यथा, --
"सङ्केतवटमादौ तु भाण्डीराख्यं वटं द्वयम् ॥"
इति नारायणभट्टकृतव्रजभक्तिविलासः ॥

**भातं**, क्ली, (भा दीप्तौ + क्तः ।) प्रभातम् । इति शब्दमाला ॥ (भा + भावे क्तः ।) दीप्तिः ॥
तद्वति, त्रि ॥

**भातिः**, स्त्री, (भा + क्तिन् ।) शोभा । इति राज-निर्घण्टः ॥ (यथा, श्रीमद्भागवते । ८ । १८ । १२ ।
"यत्तद्वपुर्भातिविभूषणायुधै-
रव्यक्तचिद्व्यक्तमधारयद्धरिः ।
बभूव तेनैव स वामनो वटुः

संक्रमणोत्तरषोडशदण्डात्मकपुण्यकालाभ्यन्तेर गोः प्रसवे विप्रसम्प्रदानकगोप्रदानपूर्ब्बकशान्तिः कार्य्या इति विशेषः । तदतिरिक्तसिंहस्थरवौ गोः प्रसवे शान्तिमात्रं कर्त्तव्यं न गोः प्रदानम् । निर्णयसिन्धुधृताद्भुतसागरग्रन्थीयवचनजात-मीमांसानुसारादिति ॥ * ॥ अथ भाद्रकृत्यम् । तत्र जन्माष्टमीव्रतप्रमाणन्तिथितत्त्वेऽनुसन्धेयम् । श्रावणपौर्णमास्यनन्तरितभाद्रकृष्णाष्टम्यां रात्रि-मध्ये मुहूर्त्ताष्टमीरोहिणीयोगरूपजयन्तीलाभे तत्रैवोपवासः । उभयदिने चेत्तदा परदिने । जयन्त्यलाभे तु रोहिणीयुक्ताष्टम्यां उभयदिने रोहिणीयुताष्टमीलाभे परदिने । रोहिण्यलाभे तु निशीथसम्बन्धिन्यामष्टम्याम् । उभयदिने निशीथसम्बन्धे तदसम्बन्धे वा परदिने इति ।

एनसो मोक्षकामोऽस्मि यद्गोविन्द त्रियोनिजम् ।
तन्मे मुञ्चतु मां त्राहि पतितं शोकसागरे ॥
आजन्ममरणं यावद्यन्मया दुष्कृतं कृतम् ।
तत् प्रणाशय गोविन्द ! प्रसीद पुरुषोत्तम ! ॥"
इति पठेत् ।
तत आह्निकं समाप्यार्द्धरात्रे तत्तत्प्रतिमासु
पटादिषु वा
आवाहनविसर्ज्जनसहितं शाल-ग्रामे घटादिस्थजले वा
आवाहनविसर्ज्जन-
रहितं पूजयेत् । ततो ध्यानम् ।
"मात्रापि बालकं सुप्तं पर्य्यङ्के स्तनपायिनम् ।
श्रीवत्सवक्षःपूर्णाङ्गं
नीलोत्पलदलच्छविम् ॥"
इति ध्यात्वा श्रीकृष्ण स्वागतं इति पृच्छेत् ।
इदमासनं ॐ कृष्णाय नमः ।
इत्यासनं दत्त्वा
एतत् पाद्यम् ॐ श्रीकृष्णाय नमः ॐ यज्ञाय
यज्ञेश्वराय यज्ञपतये यज्ञसम्भवाय गोविन्दाय
नमो नमः । इत्युच्चार्य्य इदमर्घ्यम् ॐ श्रीकृष्णाय
नमः । इदमाचमनीयम् ॐ श्रीकृष्णाय नमः ।
इदमाचमनीयम् ॐ श्रीकृष्णाय नमः । ततो
दधिमधुघृतात्मकं मधुपर्कमानीय एष मधुपर्कः
ॐ श्रीकृष्णाय नमः ।
इदमाचमनीयम् ॐ
श्रीकृष्णाय नमः ।
लौकिकषष्ट्यधिकशतत्रय-

| | | |
|---|---|---|
| संपश्यतोर्दिव्यगतिर्यथा नटः ॥”)<br>**भातुः**, पुं, (भातीति । भा + “कमिमनिजनिगा-<br>भायाहिभ्यश्च ।” उणा० १ । ७३ । इति<br>तुः ।) | | तोलकपरिमितान्यूनं जलमानीय<br>ॐ योगाय<br>योगेश्वराय योगपतये योगसम्भवाय<br>गोविन्दाय<br>नमो नमः । इदं स्नानीयजलम् ॐ<br>श्रीकृष्णाय<br>नमः । इदं वस्त्रं इदमाभरणम् एष<br>गन्धः इदं<br>पुष्पम् एष धूपः एष दीपः इदं<br>नैवेद्यम् ॐ<br>विश्वाय विश्वेश्वराय विश्वपतये<br>विश्वसम्भवाय<br>गोविन्दाय नमो नमः । इत्यनेन<br>नैवेद्यं दद्यात्<br>स्वापयेच्च । ततो नमो देव्यै श्रियै<br>नमः ।<br>इति मन्त्रेण श्रियं पूजयेत् । ततः<br>स्वगृह्योक्त-<br>विधिनाग्निं संस्थाप्य<br>घृततिलाभ्याम् । ॐ<br>धर्म्माय धर्म्मेश्वराय धर्म्मपतये<br>धर्म्मसम्भवाय |

गोविन्दाय नमो नमः स्वाहा । इत्यन्तेनाष्टो-
त्तरशतमष्टाविंशतिमष्टौ वा जुहुयात् । ततो
गुडघृतेन वसोर्धारां भित्तौ दद्यात् । ततो
नाडीच्छेदं भावयेत् । ॐ षष्ठ्यै नम इति षष्ठीं
पूजयेत् । ततो भगवतः श्रीकृष्णस्य
नामकरणान्न-
प्राशनचूडाकरणोपनयनोद्वाहसंस्कारान् भाव-
येत् । ततः प्रणवादिनमोऽन्तेन तत्तन्नामभिः
पूजयेत् । ॐ देवक्यै नमः एवं वसुदेवाय यशो-
दायै नन्दाय रोहिण्यै चण्डिकायै बलदेवाय
दक्षाय गर्गाय चतुर्म्मुखाय इत्यनेन यथाशक्ति
पञ्चोपचारैः पूजयेत् । ततः शङ्खेन कुशपुष्प-
चन्दनजलान्यादाय भूमौ जानुनी पातयित्वा,
ॐ क्षीरोदार्णवसंभूत अत्रिनेत्रसमुद्भव ! ।
गृहाणार्घ्यं शशाङ्केदं रोहिण्या सहितो मम ॥
ॐ सोमाय सोमेश्वराय सोमपतये
सोमसम्भवाय
गोविन्दाय नमो नमः । इत्यर्घ्यं दद्यात् । ततः
प्रणाममन्त्रौ ।
"ॐ ज्योत्स्नायाः पतये तुभ्यं ज्योतिषां पतये
नमः ।
नमस्ते रोहिणीकान्त ! सुधावास नमोऽस्तु ते
॥
नभोमण्डलदीपाय शिरोरत्नाय धूर्ज्जटेः ।
कलाभिर्वर्द्धमानाय नमश्चन्द्राय चारवे ॥"
ततश्च ।
"अनघं वामनं शौरिं वैकुण्ठं पुरुषोत्तमम् ।
वासुदेवं हृषीकेशं माधवं मधुसूदनम् ॥
वराहं पुण्डरीकाक्षं नृसिंहं दैत्यसूदनम् ।
दामोदरं पद्मनाभं केशवं गरुडध्वजम् ॥
गोविन्दमच्युतं देवमनन्तमपराजितम् ।
अधोक्षजं जगद्बीजं स्वर्गस्थित्यन्तकारिणम् ॥
अनादिनिधनं विष्णुं त्रिलोकेशं त्रिविक्रमम् ।
नारायणं चतुर्ब्बाहुं शङ्खचक्रगदाधरम् ॥
पीताम्बरधरं नित्यं वनमालाविभूषितम् ।
श्रीवत्साङ्कं जगत्सेतुं श्रीकृष्णं श्रीधरं हरिम् ।
प्रपद्येऽहं सदा देवं सर्व्वकामप्रसिद्धये ॥"
इति स्तवः ॥
ततः प्रणमेत् ।

ततो नृत्यगीतवादित्रस्तवैः कालं
नयेत् । पर-
दिने प्रातःस्नानादिकं कृत्वा भगवन्तं
श्रीकृष्णं
यथाविधि संपूज्य दुर्गायाश्च
महोत्सवः कार्य्यः ।
ततो ब्राह्मणान् भोजयेत् तेभ्यो
दक्षिणां दद्यात्
सुवर्णादि यत् किञ्चिदिष्टतमं श्रीकृष्णो
मे प्रीयता-
मिति ।
"ॐ यं देवं देवकी देवी
वसुदेवादजीजनत् ।
भौमस्य ब्रह्मणो गुप्त्यै तस्मै ब्रह्मात्मने
नमः ॥
सुब्रह्मवासुदेवाय गोब्राह्मणहिताय च ।
शान्तिरस्तु शिवञ्चास्तु इत्युच्चार्य्य
विसर्ज्जयेत् ॥"
ततश्चोपवासपरदिने
तिथिनक्षत्रयोरवसाने
पारणम् । यदा तु महानिशायाः
पूर्ब्बमेकतर-
स्यावसानं अन्यतरस्य महानिशायां
तदनन्तरं
वा तदैकतरावसाने पारणम् । यदा तु
महानि-
शायामुभयस्थितिः तदा उत्सवान्ते
पारणं
कुर्य्यात् । तत्र मन्त्रः । ॐ सर्व्वाय
सर्व्वेश्वराय
सर्व्वपतये सर्व्वसम्भवाय गोविन्दाय
नमो नमः ।
पारणानन्तरन्तु समापनमन्त्रः । ॐ
भूताय
भूतेश्वराय भूतपतये भूतसम्भवाय
गोविन्दाय
नमो नमः । इत्यनेन व्रतं समापयेत् ॥
* ॥

ॐ अद्येत्यादि
सिंहार्कचतुर्थीचन्द्रदर्शनजन्य-
पापक्षयकामो धात्रेयीवाक्यमहं पठिष्ये ।
इति
संकल्प्य ।
"ॐ सिंहः प्रसेनमवधीत् सिंहो जाम्बवता
हतः ।
सुकुमारक ! मा रोदीस्तव ह्येष स्यमन्तकः
॥"
इति विष्णुपुराणोक्तं धात्रेयीवाक्यं पठेत् ॥
* ॥
अथानन्तव्रतम् । तत्र यद्दिने
पूर्ब्बाह्णलाभस्तद्दिने
व्रतम् । उभयदिने चेत् परदिने युग्मात् ।
व्रतानु-
ष्ठानविधिस्तु पद्धतौ ज्ञेयः ॥ * ॥
अथागस्त्यार्घ्य-
दानम् । प्रमाणन्तु तिथितत्त्वेऽनुसन्धेयम् ।
सिंहस्थरविकर्त्तव्यत्वेन सौरमासादरः ।
कन्यार्क-
संक्रान्तिपूर्ब्बदिनत्रयाभ्यन्तरे
कृतस्नानादिकृता-
ह्निकस्तिलकुशजलान्यादाय ॐ तत्
सदित्युच्चार्य्य
ॐअद्येत्यादि
सर्व्वाभिलषितसिद्धिकामोऽगस्त्य-
पूजनमहं करिष्ये इति संकल्प्य शालग्रामे
जले वा दक्षिणामुखः एतत् पाद्यम् ॐ अग-
स्त्याय नमः । सितपुष्पाक्षतयुक्तं जलं
शङ्खेन
गृहीत्वा इदमर्घ्यम् ।
ॐ काशपुष्पप्रतीकाश अग्निमारुतसम्भव ।
मित्रावरुणयोः पूत्र कुम्भयोने नमोऽस्तु ते
॥
ॐ अगस्त्याय नमः ।
एवमाचमनीयस्नानीय-
गन्धपुष्पधूपदीपनैवेद्यादिकं दद्यात् ।
ॐ आतापिर्भक्षितो येन वातापिच्च
महासुरः ।

"प्रणमामि सदा देवं वासुदेवं जगत्पतिम् ।
त्राहि मां सर्व्वदेवेश हरे ! संसारसागरात् ॥"
ततः प्रार्थयेत् ।
"ॐ त्राहि मां सर्व्वपापघ्न
दुःखशोकार्णवाद्धरे ! ।
सर्व्वलोकेश्वर त्राहि पतितं मां भवार्णवे ॥
देवकीनन्दन श्रीश हरे संसारसागरात् ।
त्राहि मां सर्व्वदुःखघ्न रोगशोकार्णवाद्धरे ! ॥
दुर्गतांस्त्रायसे विष्णो ये स्मरन्ति सकृत् सकृत्
।
सोऽहं देवातिदुर्व्वृत्तस्त्राहि मां दुःखसागरात् ॥
पुष्कराक्ष निमग्नोऽहं मायाविज्ञानसागरे ।
त्राहि मां देवदेयेश ! त्वत्तो नान्योऽस्ति
रक्षिता ॥"
इति प्रार्थयेत् ॥
"यद्बाल्ये यच्च कौमारे वार्द्धके यच्च यौवने ।
तत् पुण्यं वृद्धिमाप्नोतु पापं हर हलायुध ! ॥"
इति वदेत् ॥

भाद्रशुक्लपञ्चमीमधिकृत्य
भविष्योत्तरे ।
"तथा भाद्रपदे मासि पञ्चम्यां
श्रद्धयान्वितः ।
यस्त्वालिख्य नरो भक्त्या
कृष्णवर्णादिवर्णकैः ।
पूजयेद्गन्धपुष्पैश्च
सर्पिर्गुग्गुलुपायसैः ॥
तस्य तुष्टिं समायान्ति
पन्नगास्तक्षकादयः ।
आसप्तमात् कुलात्तस्य न भयं सर्पतो
भवेत् ।
तस्मात् सर्व्वप्रयत्नेन नागान्
संपूजयेन्नरः ॥
इयमेवालेख्यनागपञ्चमीति
वाचस्पतिमिश्राः ।
आलेख्यनागाः कर्कोटकादयः
पूर्ब्बलिखिताः
पूजा च श्रावणपञ्चमीविहितेति
बोध्यम् ॥ * ॥
अथ हरेः पार्श्वपरिवर्त्तनम् । तत्र
द्वादश्यां
सन्धिसमये नक्षत्राणामसम्भवे ।
आभाका-
सितपक्षेषु शयनावर्त्तनादिकमिति
ब्रह्मपुरा-
णात् ॥ भाद्रशुक्लद्वादश्यां
श्रवणमध्ययुक्तायां
सन्ध्यासमये द्वादश्यामृक्षाभावे
एकादश्यादिषु
पादयोगे तदभावेऽपि द्वादश्यां
केवलायां वा
कृताह्निकः सायं सन्ध्यायां देवं
संपूज्य ।
"ॐ वासुदेव जगन्नाथ प्राप्तेयं द्वादशी
तव ।
पार्श्वेन परिवर्त्तस्व सुखं स्वपिहि
माधव ! ॥"
इति प्राञ्जलिः पठेत् ॥
"त्वयि सुप्ते जगन्नाथ ! जगत् सुप्तं
भवेदिति ।

समुद्रः शोषितो येन स मेऽगस्त्यः प्रसीदतु
॥"
इति प्रार्थयेत् ॥ इति कृत्यतत्त्वम् ॥

**भाद्रपदः**, पुं, (भाद्रपदानक्षत्रयुक्ता पौर्णमासी
भाद्रपदी सा यत्र मासे सः । भाद्रपदी +
अण् ।)
भाद्रमासः । इत्यमरः । १ । ४ । १७ ॥
(यथा, --
"ते तु भाद्रपदाद्येन द्बिमासिकेन
व्याख्याताः ।
तद्यथा । भाद्रपदाश्वयुजौ वर्षाः ।" इति
सुश्रुते सूत्रस्थाने षष्ठेऽध्याये ॥)

**भाद्रपदा**, स्त्री, पूर्ब्बभाद्रपदानक्षत्रम् । उत्तर-
भाद्रपदानक्षत्रम् । तत्पर्य्यायः । प्रौष्ठपदा २
।
इत्यमरः । १ । ३ । २२ ॥

**भाद्रमातुरः**, पुं, (भद्रमातुरपत्यमिति । भद्रमातृ +
"मातुरुत्संख्यासम्भद्रपूर्ब्बायाः ।" ४ । १ ।
११५ ।
इति अण् । "उकाराश्चान्तादेशः ।" इति
काशिका ।) सतीतनयः । "सत्यास्तु तनये
साम्मा-
तुरवद्भाद्रमातुरः ।" इति हेमचन्द्रः । ३ ।
२१० ॥

**भानुः**, पुं, (भाति चतुर्द्दशभुवनेषु स्वप्रभया दीप्यते
इति । भा + "दाभाभ्यां नुः ।" उणा० १ ।
३२ । इति नुः ।) सूर्य्यः । (यथा, महा-
भारते । ३ । ३ । २४ ।
"अनन्तः कपिलो भानुः कामदः
सर्व्वतोमुखः ॥"
विष्णुः । यथा, तत्रैव । १३ । १४९ । २७
।
"सर्व्वगः सर्व्वविद्भानुर्विष्वक्सेनो जनार्द्दनः
॥"
प्राधायाः पुत्त्रभेदः । यथा, तत्रैव । १ ।
६५ । ४८ ।
"विश्वावसुश्च भानुश्च सुचन्द्रो
दशमस्तथा ।

| | | |
|---|---|---|
| | प्रबुद्धे त्वयि बुध्येत जगत् सर्व्वं चराचरम् ॥” इत्यनेन पूजयेत् ॥ * ॥ अथ सिंहार्के चतुर्थ्यां चन्द्रदर्शनप्रायश्चित्तम् । सिंहार्कमधिकृत्य ब्रह्मपुराणम् । “नारायणोऽभिशप्तस्तु निशाकरमरीचिषु । स्थितश्चतुर्थ्यामद्यापि मनुष्यानापतेच्च सः ॥ अतश्चतुर्थ्यां चन्द्रन्तु प्रमादाद्वीक्ष्य मानवः । पठेद्धात्रेयिकावाक्यं प्राङ्मुखो वाप्युदङ्मुखः ॥” अभिशप्तो मिथ्यापरीवादविषयीभूतः । सोऽभि- शापः अद्यापि मनुष्यान् पतेत् । ततश्च प्राङ्मुख उदङ्मुखो वा कुशतिलजलान्यादाय | इत्येता देवगन्धर्व्वा प्राधायाः परिकीर्त्तिताः ॥” अङ्गिरःसृष्टस्तपसः पुत्त्रभेदः । यथा, तत्रैव । ३ । २२० । ८ । |

"तपसश्च मनुं पुत्त्रं
भानुञ्चाप्यङ्गिराः सृजत् ॥"
यादवविशेषः । यथा, हरिवंशे ।
१४७ । २ ।
"कन्यां भानुमतीं नाम
भानोर्दुहितरं नृप ! ।
जहारात्मवधाकाङ्क्षी निकुम्भो
नाम दानवः ॥")
किरणः । (यथा, ऋग्वेदे । ६ ।
६४ । २ ।
"भद्राददृक्षौविया विभास्युत्ते
शोचिर्भानवो
द्यामपप्तन् ॥"
"भानवो रश्मयः ।" इति
तद्भाष्ये सायनः ॥)
अर्कवृक्षः । इत्यमरः । २ । ४ ।
३३ ॥ प्रभुः ।
राजा । इति धरणिः ॥
वृत्तार्हत्पितृविशेषः ।
इति हेमचन्द्रः । २ । १४ ॥

**भानुः**, स्त्री, (भातीति । भा + नुः) भातुमती ।

इति शब्दरत्नावली ॥
(दक्षकन्याभेदः । यथा,
मत्स्यपुराणे । ५ । १५ ।
"शृणुध्वं देवमातॄणां
प्रजाविस्तरमादितः ।
मरुत्वती वसुर्यामी लम्बा
भानुररुन्धती ॥")

**भानुफला**, स्त्री, (भानुरिव दीप्तिमत् फलमस्याः ।)

कदली । इति जटाधरः ॥

**भानुमती**, स्त्री, (भानु + मतुप् + ङीप् ।) विक्र-

मादित्यराजपत्नी । यथा, --
"देवगुरोः प्रसादेन जिह्वाग्रे मे
सरस्वती ।
केशिध्वजस्य पुत्त्रः । यथा, भागवते । ९ ।
१३ । २१ ।
"भानुमांस्तस्य पुत्त्रोऽभूच्छतद्युम्नस्तु तत्-
सुतः ॥")
दीप्तियुक्ते, त्रि ॥ (यथा, महाभारते । १ । ३० ।
४७ ।
"चर्म्माण्यपि च गात्रेषु भानुमन्ति दृढाणि च
॥")

**भानुवारः**, पुं, (भानोर्व्वारः ।) रविवारः । यथा, --

"अमाव्यास्या द्वादशी च संक्रान्तिश्च विशेषतः
।
एताः प्रशस्तास्तिथयो मानुवारस्तथैव च ॥
अत्र स्नानं जपो होमो देवतानाञ्च पूजनम् ।
उपवासस्तथा दानमेकैकं पावनं स्मृतम् ॥"
इति तिथितत्त्वे सम्बर्त्तवचनम् ॥

**भानेमिः**, पुं, (भानां प्रभाचक्राणां नेमिरिव ।)

सूर्य्यः । इति त्रिकाण्डशेषः ॥

**भाम**, ङ क्रोधे । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-अक०-सेट् ।) ङ, भामते । इति दुर्गा-
दासः ॥

**भाम**, त् क कोपने । इति कविकल्पद्रुमः ॥ अदन्त-

चुरा०-पर०-अक०-सेट् ।) अवभामत् । इति
दुर्गादासः ॥

**भामः**, पुं, (भामनमिति । भाम क्रोधे + घञ् ।)

क्रोधः । (यथा, ऋग्वेदे । ५ । २ । १० ।
"मदेचिदस्य प्ररुजन्ति भामा
न वरन्ते परिबाधो अदेवीः ॥"
"भामाः क्रोधा दीप्तयो वा ।" इति तद्भाष्ये
सायनः ॥ भातीति । भा + "अर्त्तिस्तुसुहुसृधृ-
क्षिक्षुभायावापदीति ।" उणा० १ । १३९ ।
इति
मन् ।) सूर्य्यः । (भा + भावे मन् ।) दीप्तिः ।
इति
मेदिनी । मे, २१ ॥ भगिनीपतिः । इति शब्द-
रत्नावली ॥ (यथा, देवीभागवते । ६ । १६ ।
४९ ।
न्नाथविरचिते भामिनीविलासे प्रास्ताविकः
प्रथमो विलासः । शृङ्गारवर्णनं द्वितीयो
विलासः । श्रीकृष्णगुणानुवर्णनं तृतीयो विला-
सश्च ॥

**भामी**, [न्] त्रि, (भामः क्रोधोऽस्त्यस्येति । भाम +

"अत इनिठनौ ।" ५ । २ । ११५ । इति इनि ।)
क्रोधी । (तेजस्वी । यथा, ऋग्वेदे । १ । ७७ । १
।
"कथा दाशेमाग्नये कास्मै देवजुष्टोच्यते भामिने
गीः ॥"
"भामिने तेजस्विने ।" इति तद्भाष्ये सायनः ॥)

**भारः**, पुं, (भ्रियते इति । भृञ् भरणे + "अकर्त्तरि

च कारके संज्ञायाम् ।" ३ । ३ । १९ । इति
घञ् ।) विंशतितुलापरिमाणम् । इत्य-
मरः ॥ तत्तु अष्टसहस्रतोलकात्मकमितियावत् ।
बीवधः । यथा, --
"अविश्रामं वहेद्भारं शीतोष्णञ्च न विन्दति ।
ससन्तोषस्तथा नित्यं त्रीणि शिक्षेत गर्द्दभात् ॥"
इति चाणक्यम् ॥ * ॥
विष्णुः । इति मेदिनी । रे, ७२ ॥ गुरुत्वञ्च ॥
(गुरुत्वगुणवद्वस्तु ॥)

**भारण्डः**, पुं, उत्तरकुरुदेशजशकुनपक्षी । इति

पुराणम् ॥

**भारतं**, क्ली, (भरतान् भरतवंशीयानधिकृत्य कृतो

ग्रन्थ इत्यण् । यद्वा, भारं चतुर्वेदादिशास्त्रे-
भ्योऽपि सारांशं तनोतीति । तन् + डः ।)
ग्रन्थभेदः । इति मेदिनी । ते, १३८ ॥ तत्तु
व्यासप्रणीतलक्षश्लोकात्मकमहाभारतसंज्ञकेति-
हासः । तस्य श्रवणादिफलं यथा, --
"भारतं शृणुयान्नित्यं भारतं परिकीर्त्तयेत् ।
भारतं भवने यस्य तस्य हस्तगतो जयः ॥
यो गोशतं कनकशृङ्गमयं ददाति
विप्राय वेदविदुषे सुबहुश्रुताय ।
पुण्याञ्च भारतकथां शृणुयाच्च नित्यं
तुल्यं फलं भवति तस्य च तस्य चैव ॥
नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा ।
ह्रदानामुदधिः श्रेष्ठो गौर्वरिष्ठश्चतुष्पदाम् ।

तेनाहं नृप ! जानामि
भानुमत्यास्तिलं यथा ॥”
इति वररुचिः ॥
(कृतवीर्य्यस्य दुहिता । सा च
अहंयातेः पत्नी ।
“यथा, महाभारते । १ । ९५ ।
१५ ।
“अहंयातिः
खलुकृतवीर्य्यदुहितरमुपयेमे
भानु-
मतीं नाम । तस्यामस्य जज्ञे
सार्व्वभौमः ॥”
अङ्गिरसः प्रथमा सुता । यथा,
महाभारते ।
३ । २१७ । ३ ।
“प्रजासु तासु सर्व्वासु
रूपेणाप्रतिमाभवत् ।
देवी भानुमती नाम
प्रथमाङ्गिरसः सुता ॥”
यादवभानोः कन्या । यथा,
हरिवंशे । १४७ । २ ।
“कन्यां भानुमतीं नाम
भानोर्दुहितरं नृप ! ॥”
दुर्य्योधनपत्नी । यथा,
वेणीसंहारनाटके २
अङ्के ।
“आर्य्य ! एषा भानुमती देवी
पत्युः समर-
विजयासंशया
निर्वर्त्तितगुरुपादवन्दनाद्यप्रभृति
आरब्धनियमा बालोद्याने
तिष्ठतीति ॥”
गङ्गा । यथा, काशीखण्डे । २९
। १२९ ।
“भुक्तिमुक्तिप्रदा भेशी
भक्तस्वर्गापवर्गदा ।
भागीरथी भानुमती भाग्यं
भोगवती भृतिः ॥”)

**भानुमान्,** [त्] पुं, (भानवः सन्त्यस्येति ।
भानु +

“गुरुं मित्रं तथा भामं पुत्त्रञ्च भगिनीं तथा ॥”)

**भामकः**, पुं, (भाम एव । स्वार्थे कन् ।) भगिनी-
पतिः । इति शब्दरत्नावली ॥

**भामा**, स्त्री, (भामते इति । भाम् + अच् + टाप् ।)
कोपना स्त्री । इति शब्दरत्नावली ॥

**भामिनी**, स्त्री, (भामते इति । भाम् + णिनिः +
ङीप् ।) कोपना स्त्री । इत्यमरः । २ । ६ । ४
॥
स्त्रीमात्रम् । इति राजनिर्घण्टः ॥ (यथा,
भागवते । ९ । १८ । ६ ।
“एकदा दानवेन्द्रस्य शर्म्मिष्ठा नाम कन्यका ।
सखी सहस्रसंयुक्ता गुरुपुत्त्रा च भामिनी ॥”
तुनयनामकगन्धर्व्वस्य दुहिता । यथा, मार्क-
ण्डेयपुराणे । १२८ । ७ ।
“राजपुत्त्र ! सुतेयं मे भामिनी नाम मानिनी ।
अभिशापादगस्त्यस्य विशालतनयाभवत् ॥”)

**भामिनीविलासः**, पुं, (भामिन्या विलासो यत्र ।)
जगन्नाथमिश्रपण्डितराजकृतकाव्यग्रन्थविशेषः
।
तस्याद्यश्लोकोऽयम् ।
“दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः
करिण्यः कारुण्यास्पदमसमशीलाः खलु मृगाः
।
इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं
नखानां पाण्डित्यं प्रकटयतु कस्मिन् मृगपतिः
॥
तस्य पुष्पिका । इति श्रीमत्पण्डितराजजग-

यथैतानीतिहासानां तथा भारतमुच्यते ॥
यश्चैनं श्रावयेत् श्राद्धे ब्राह्मणान् पादमन्ततः ।
अक्षय्यमन्नपानं वै पितॄंस्तस्योपतिष्ठते ॥
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ॥
कार्ष्णं वेदमिमं विद्वान् श्रावयित्वार्थमश्नुते ।
भ्रूणहत्याकृतञ्चापि पापं जह्यादसंशयः ॥”
इति महाभारतम् ॥ * ॥
तद्वृत्तान्तो यथा, --
ब्रह्मोवाच ।
“भारतं संप्रवक्ष्यामि भारावतरणं भुवः ।
चक्रे कृष्णो युध्यमानः पाण्डवादिनिमित्ततः ॥
विष्णुनाभ्यब्जजो ब्रह्मा ब्रह्मपुत्त्रोऽत्रिरत्रितः ।
सोमस्ततो बुधस्तस्मात्पुरूरवाः ॥
तस्माद्यस्तस्य पुत्त्रोऽभूद्ययातिर्भरतः कुरुः ।
शान्तनुस्तस्य वंशेऽभूद्गङ्गायां शान्तनोः सुतः ॥

| | | |
|---|---|---|
| मतुप् ।) सूर्य्यः । इति शब्दरत्नावली ॥ (यथा, कुमारसम्भवे । ३ । ६५ ।<br>“अथोपनिन्ये गिरिशाय गौरी तपस्विने ताम्ररुचा करेण ।<br>विशोषितां भानुमतो मयूखै-र्मन्दाकिनी पुष्करबीजमालाम् ॥”<br>कलिङ्गदेशजनृपतिविशेषः । यथा, महाभारते । ६ । ५१ । ३३ ।<br>“भानुमांस्तु ततो भीमं शरवर्षेण दारयन् ।<br>ननाद बलवन्नादं नादयानो नभस्तलम् ॥” | | |

भीष्मः सर्व्वगुणैर्युक्तो ब्रह्मवैवर्त्तपारगः ।
शान्तनोः सत्यवत्याञ्च द्वौ पुत्त्रौ
संबभूवतुः ॥
चित्राङ्गदन्तु गन्धर्व्वः पुत्त्रं
चित्ररथोऽवधीत् ।
अन्यो विचित्रवीर्य्योऽभूत्
काशिराजसुतापतिः ॥
विचित्रवीर्य्ये स्वर्याते
व्यासात्तत्क्षेत्रतोऽभवत् ।
धृतराष्ट्रोऽम्बिकापुत्त्रः
पाण्डुरम्बालिकासुतः ॥
भुजिष्यायान्तु विदुरो गान्धार्य्यां
धृतराष्ट्रतः ।
दुर्य्योधनप्रधानास्तु शतसंख्या
महाबलाः ॥
पाण्डोः कुन्त्याञ्च माद्र्याञ्च पञ्च पुत्त्राः
प्रजज्ञिरे ।
युधिष्ठिरो भीमसेनः अर्ज्जुनो
नकुलस्तथा ।
सहदेवश्च पञ्चैते महाबलपराक्रमाः ॥
कुरुपाण्डवयोर्व्वैरं दैवयोगाद्बभूव ह ।
दुर्य्योधनेन वीरेण पाण्डवाः स्वमुपद्रुताः
।
दग्धा जतुगृहे वीरास्ते मुक्ताः
सुधियामलाः ॥
ततस्त एकचक्रायां ब्राह्मणस्य निवेशने ।
विप्रवेशा महात्मानो निहत्य वकराक्षसम्
॥
ततः पाञ्चालविषये द्रौपद्यास्ते स्वयंवरम्
।
विज्ञाय वीर्य्यशुल्कां तां पाण्डवा
उपयेमिरे ॥
द्रोणभीष्मानुमत्या च धृतराष्ट्रः
समानयत् ।
अर्द्धं राज्यं ततः प्राप्ता इन्द्रप्रस्थे
पुरोत्तमे ॥
राजसूयं ततश्चक्रुः सभां कृत्वा
यतव्रताः ।
य एते पृथिवीपाला हताः पार्थास्त्रसागरे ।
शोकमासाद्य पुत्त्रेण द्रोणोऽपि
स्वर्गमाप्नुयात् ॥
ततः कर्णो ययौ योद्धुमर्ज्जुनेन महात्मना ।
दिनद्वयं महद्युद्धं कृत्वा पार्थास्त्रसागरे ॥
निमग्नः सूर्य्यलोकन्तु ततः प्राप स
वीर्य्यवान् ।
ततः शल्यो ययौ योद्धुं धर्म्मराजेन धीमता ॥
दिनार्द्धेन हतः शल्यो बाणैर्ज्वलनसन्निभैः ।
दुर्य्योधनोऽथ वेगेन गदामादाय वीर्य्यवान् ॥
अभ्यधावत वै भीमं कालान्तकयमोपमम् ।
अथ भीमेन वीरेण गदया विनिपातितः ॥
अश्वत्थामा ततो द्रौणिः सुप्तं सैन्यं ततो
निशि ।
जघान बाहुवीर्य्येण पितुर्व्वधमनुस्मरन् ॥
धृष्टद्युम्न जघानाथ द्रौपदेयांश्च वीर्य्यवान् ।
द्रौपद्यां रोदमानायामश्वत्थाम्नः शिरोमणिम्
।
ऐषीकास्त्रेण तं जित्वा जग्राहार्ज्जुन उत्तमम्
॥
युधिष्ठिरः समाश्वास्य स्त्रीजनं शोकसङ्कुलम्
।
स्नात्वा सन्तर्प्य देवांश्च पितॄनथ
पितामहान् ।
आश्वासितोऽथ भीष्मेण
राज्यञ्चैवाकरोन्महत् ॥
विष्णुमीजेऽश्वमेधेन विधिवद्दक्षिणावता ।
राज्ये परिक्षितं स्थाप्य यादवानां विनाशनम्
॥
श्रुत्वा तु मौषले राजा जप्त्वा नामसहस्रकम्
।
विष्णोः स्वग जगामाथ भीमाद्यैर्भ्रातृभिर्युतः
॥”
इति गारुडे १५० अध्यायः ॥ * ॥
वर्षभेदः । इति मेदिनी ॥ स तु जम्बुद्वीपस्य
नववर्षान्तर्गतनवमवर्षः । तद्विवरणं यथा, --
“उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः ॥
नवयोजनसाहस्रो विस्तारोऽस्य महामुने ! ।
आसां नद्युपनद्यश्च सन्त्यन्याश्च सहस्रशः
॥
तास्विमे कुरुपाञ्चालमध्यदेशादयो जनाः ।
पूर्ब्बदेशादिकाश्चैव कामरूपनिवासिनः ॥
ओड्राः कलिङ्गा मगधा दाक्षिणात्याश्च
कृत्-
स्नशः ।
तथापरान्ताः सौराष्ट्राः
शूराभीरास्तथार्व्वुदाः ॥
मारुका मालवाश्चैव पारिपात्रनिवासिनः ।
सौवीराः सैन्धवा हूणाः शाल्वाः शाकल-
वासिनः ॥
मद्रा रामास्तथाम्बष्ठाः पारसीकादयस्तथा
।
आसां पिबन्ति सलिलं वसन्ति सरितां
सदा ॥
समीपतो महाभाग ! हृष्टपुष्टजनाकुलाः ।
चत्वारि भारते वर्षे युगान्यत्र महामुने ! ॥
कृतं त्रेता द्वापरञ्च कलिश्चान्यत्र न क्वचित्
।
तपस्तप्यन्ति यतयो जुह्वते चात्र यज्विनः
॥
दानानि चात्र दीयन्ते परलोकार्थमादरात् ।
पुरुषैर्यज्ञपुरुषो जम्बुद्वीपे सदेज्यते ॥
यज्ञैर्यज्ञपतिर्विष्णुरन्यद्वीपेषु चान्यथा ।
तत्रापि भारतं श्रेष्ठं जम्बुद्वीपे महामुने ! ॥
यतो हि कर्म्मभूरेषा ततोऽन्या भोगभूमयः ।
अत्र जन्मसहस्राणां सहस्रैरपि सत्तम ! ।
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् ॥
गायन्ति देवाः किल गीतकानि
धन्यास्तु ये भारतभूमिभागे ।
स्वर्गापवर्गास्पदमार्गभूते
भवन्ति भूयः पुरुषाः सुरत्वात् ॥
कर्म्माण्यसङ्कल्पिततत्फलानि
संन्यस्य विष्णौ परमात्मरूपे ।
अवाप्य तां कर्म्ममहीमनन्ते
तस्मिल्लयं ये त्वमलाः प्रयान्ति ॥
जानीम नैतत् क्व वयं विलीने
स्वर्गप्रदे कर्म्मणि देहबन्धम् ।

अर्ज्जुनो द्वारवत्यान्तु सुभद्रां प्राप्तवान् प्रियाम् ॥
वासुदेवस्य भगिनीं मित्रं देवकिनन्दनम् ॥
गाण्डीवं नाम तद्दिव्यं त्रिषु लोकेषु विश्रुतम् ।
अक्षयान् शायकांश्चैव तथाभेद्यञ्च दंशनम् ॥
स तेन धनुषा वीरः पाण्डवो जातवेदसम् ।
कृष्णद्वितीयो वीभत्सुरतर्पयत वीर्य्यवान् ॥
नृपान् दिग्विजये जित्वा रत्नान्यादाय वै ददौ ।
युधिष्ठिराय महते भ्रात्रे नीतिविदे मुदा ॥
युधिष्ठिरोऽपि धर्म्मात्मा भ्रातृभिः परिवारितः ।
जितो दुर्य्योधनेनैव मायाद्यूतेन पापिना ।
कर्णदुःशासनमते स्थितेन शकुनेर्मते ।
अथ द्वादशवर्षाणि वने तेपुर्म्महत्तपः ॥
सधौम्या द्रौपदीसत्या मुनिवृन्दाभिसंवृताः ।
ययुर्विराटनगरं गुप्तरूपेण संस्थिताः ॥
वर्षमेकं महाप्राज्ञा गोग्रहादिमपालयन् ।
ततो ज्ञाताः स्वकं राष्ट्रं प्रार्थयामासुरादृताः ॥
पञ्च ग्रामानर्द्धराज्यं वीरा दुर्य्योधनं नृपम् ।
नाप्तवन्तः कुरुक्षेत्रे युद्धञ्चक्रुर्बलान्विताः ॥
अक्षौहिणीभिर्द्दिव्याभिः सप्तभिः परिवारिताः ।
एकादशभिरुद्युक्तास्तेऽपि दुर्य्योधनादयः ॥
आसीद्युद्धं स्वर्गमार्गं देवासुरबलोपमम् ।
भीष्मः सेनापतिरभूदादौ दौर्य्योधने बले ॥
पाण्डवानां शिखण्डी च तयोर्युद्धं बभूव ह ।
शस्त्राशस्त्रैर्म्महाघोरं दशरात्रं शराशनिः ॥

कर्म्मभूमिरियं स्वर्गमपवर्गञ्च गच्छताम् ॥
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्व्वतः ।
बिन्ध्यश्च पारिपात्रश्च सप्तात्र कुलपर्व्वताः ॥
अतः संप्राप्यते स्वर्गो मुक्तिमस्मात् प्रयान्ति च ।
तिर्य्यक्त्वं नरकं चापि यान्त्यतः पुरुषा मुने ! ॥
इतः स्वर्गश्च मोक्षश्च मध्यञ्चान्तश्च गम्यते ।
न खल्वन्यत्र मर्त्यानां कर्म्मभूमौ विधीयते ॥
भारतस्यास्य वर्षस्य नव भेदान्निशामय ।
इन्द्रद्वीपः कशेरुश्च ताम्रपर्णो गभस्तिमान् ॥
नागद्वीपस्तथा सौम्यो गान्धर्व्वस्त्वथ वारुणः ।
अयन्तु नवमस्तेषां द्वीपः सागरसंवृतः ॥
योजनानां सहस्रन्तु द्वीपोऽयं दक्षिणोत्तरात् ।
पूर्ब्बे किराता यस्यान्ते पश्चिमे यवनाः स्थिताः ॥
ब्राह्मणाः क्षत्त्रिया वैश्या मध्ये शूद्राश्च भागशः ।
इज्यायुद्धबणिज्याद्यैर्व्वर्त्तयन्तो व्यवस्थिताः ॥
शतद्रुश्चन्द्रभागाद्या हिमवत्पादनिःसृताः ।
वेदस्मृतिमुखाश्चान्याः पारिपात्रोद्भवा मुने ! ॥
नर्म्मदासुरसाद्याञ्च नद्यो बिन्ध्यविनिःसृताः ।
तापी पयोष्णी निर्व्विन्ध्याप्रमुखा ऋक्षसम्भवाः ॥
गोदावरी भीमरथी कृष्णवेण्यादिकास्तथा ।
सह्यपादोद्भवा नद्यः स्मृताः पापभयापहाः ॥
कृतमाला ताम्रपर्णी प्रमुखा मलयोद्भवाः ।
त्रिसामा ऋषिकुल्याद्या महेन्द्रप्रभवाः स्मृताः ॥
ऋषिकुल्या कुमार्य्याद्याः शुक्तिमत्पादसम्भवाः ।

प्राप्स्याम धन्याः खलु ते मनुष्या ये भारते नेन्द्रियविप्रहीनाः ॥
नववर्षन्तु मैत्रेय ! जम्बुद्वीपमिदं मया ।
लक्षयोजनविस्तारं संक्षेपात् कथितं तव ॥
जम्बूद्वीपं समावृत्य लक्षयोजनविस्तरः ।
मैत्रेय ! वलयाकारः स्थितः क्षारोदधिर्बहिः ॥”
इति श्रीविष्णुपुराणे २ अंशे ३ अध्यायः ॥ * ॥
आस्मिन् वर्षे जन्मकारणं तत्साफल्यञ्च यथा, --
“शतजन्मतपः कृत्वा जन्मेदं भारते लभेत् ।
करोति सफलं जन्म श्रुत्वा हरिकथामृतम् ॥
अर्च्चनं वन्दनं मन्त्रजपः सेवनमेव च ।
स्मरणं कीर्त्तनं शश्वद्गुणश्रवणमीप्सितम् ॥
निवेदनं स्वस्य दास्यं नवधा भक्तिलक्षणम् ।
करोति सफलं जन्म कृत्वैतानि च भारते ॥” * ॥
अस्य पुण्यस्थलत्वं कर्म्मभूमित्वं परिमाणञ्च यथा, --
“कर्म्मणां फलभोगश्च सर्व्वेषां सुरसुन्दरि ! ।
नैव स्वर्गे न पाताले नान्यद्वीपे श्रुतौ श्रुतम् ॥
कृत्वा शुभाशुभं कर्म्म पुण्यक्षेत्रे च भारते ।
अन्यत्र तत्फलं भुङ्क्ते कर्म्मी कर्म्मनिबन्धनात् ॥

| | | |
|---|---|---|
| शिखण्ड्यर्ज्जुनबाणैश्च भीष्मः शरशितैश्चितः ।<br>उत्तरायणमीक्ष्याथ ध्यात्वा देवं गदाधरम् ॥<br>उक्त्वा धर्म्मान् बहून् वर्षांस्तर्पयित्वा पितॄन्<br>बहून् ।<br>आनन्दे तु पदे लीनो विमले मुक्तकिल्विषे ॥<br>ततो द्रोणो ययौ योद्धुं धृष्टद्युम्नेन वीर्य्यवान् ।<br>दिनानि पञ्च तद्युद्धमासीत् परमदारुणम् ॥ | | |

हिमालयादासमुद्रं पुण्यक्षेत्रञ्च भारतम् ।
श्रेष्ठं सर्व्वस्थलानाञ्च मुनीनाञ्च
तपःस्थलम् ॥
लब्ध्वा तत्र जन्म जीवो वञ्चोतो
विष्णुमायया ।
शश्वत् करोति विषयं विहाय सेवनं हरेः ॥
कृत्वा तत्र महत् पुण्यं स्वर्गं गच्छति
पुण्यवान् ।
गृहीत्वा स्वर्गकन्याश्च चिरं स्वर्गे प्रमोदते
॥
स्वर्गमागच्छति नरो विहाय मानवीं तनूम्
॥”
इति ब्रह्मवैवर्त्तपुराणे श्रीकृष्णजन्मखण्डे ।
१ । ५९ ।
अध्यायौ ॥

**भारतः**, पुं, (भरतस्य मुनेरयमिति । भरत +
अण् ।) नटः । इति जटाधरः ॥ अग्निः ।
इति त्रिकाण्डशेषः ॥ (भरतस्य गोत्रापत्य-
मिति । भरत + अण् ।) भरतस्य
गोत्रापत्यम् ॥
(यथा, महाभारते । ३ । ११ । ७४ ।
“तत्राश्रौषमहञ्चैतत् कर्म्म भीमस्य भारत !
॥”)

**भारतवर्षं**, क्ली, (भारतं भरतसम्बन्धि वर्षमिति ।)
जम्बुद्वीपस्य नववर्षान्तर्गतवर्षविशेषः ।
यथा, --
“हिमाह्वं दक्षिणं वर्षं भरताय ददौ पिता ।
तस्माच्च भारतं वर्षं तस्य नाम्ना
महात्मनः ॥”
तस्य नव भागा यथा, --
“भारतस्यास्य वर्षस्य नवभेदान्निबोध मे ।
समुद्रान्तरिता ज्ञेयास्ते त्वगम्याः परस्परम्
॥
इन्द्रद्वीपः कसेरुश्च ताम्रवर्णो गभस्तिमान्
।
नागद्वीपस्तथा सौम्यो गान्धर्व्वो
वारुणस्तथा ॥
अयन्तु नवमस्तेषां द्वीपः सागरसंवृतः ।

सिप्रा ह्यवन्ती च तथा पारिपात्राश्रयाः
स्मृताः ॥
शोणो महानदश्चैव नर्म्मदा सुरसा क्रिया ।
मन्दाकिनी दशार्णा च चित्रकूटा तथापगा
॥
चित्रोत्पलाथ तमसा करतोया पिशाचिका
।
तथान्या पिप्पला श्रोणी विपाशा वञ्जुला
नदी ॥
सरोरुजा शुक्तिमती मङ्कुली त्रिदिवा क्रतुः
।
ऋक्षपादप्रसूता वै तथान्या वेगवाहिनी ॥
शिप्रा पयोष्णी निर्बिन्ध्या तापी च
निषधावती ।
वेणा वैतरणी चैव शिनीवाली कुमुद्वती ॥
तोया चैव महागौरी दुर्गा चान्तःशिवा तथा
।
बिन्ध्यपादप्रसूतास्ता नद्यः पुण्यजलाः
शुभाः ॥
गोदावरी भीमरथी कृष्णवर्णा तथापगा ।
तुङ्गभद्रा सुप्रयोगा वाह्या कावेय्यथापगा ।
सह्यपादविनिष्क्रान्ता इमास्ताः
सरिदुत्तमाः ॥
कृतमाला ताम्रपर्णी पुष्यजात्युत्पलावती ।
मलयाद्रिसमुद्भूता नद्यः शीतजलास्त्विमाः
॥
पितृसोमर्षिकुल्या च इक्षला त्रिदिवालया ।
लाङ्गूलिनी वंशकरा महेन्द्रप्रभवाः स्मृताः
॥
ऋषिका च कुमारी च मन्दगा मन्दवासिनी
।
कृशा पलाशिनी चैव शुक्तिमत्प्रभवाः
स्मृताः ॥
सर्व्वाः पुण्याः सरस्वत्यः सर्व्वा गङ्गाः
समु-
द्रगाः ।
विश्वस्य मातरः सर्व्वाः सर्व्वाः पापहराः
स्मृताः ॥

मल्वा मगधगोमेदाः प्राच्या जनपदाः
स्मृताः ॥
अथापरे जनपदा दक्षिणापथवासिनः ।
पाण्ड्याश्च केरलाश्चैव चोलाः
कुल्यास्तथैव च ॥
सेतुका मूषिकाश्चैव कुमारा वानवासिकाः
।
महाराष्ट्रा माहिषिकाः कलिङ्गाच्चैव
सर्व्वशः ॥
आभीराः सह चैषीका आटव्याः शवराश्च
ये ।
पुलिन्दा बिन्ध्यमालेया वैदर्भा दण्डकैः
सह ॥
पौरिका मौलिकाश्चैव अश्मका
भोगवर्द्धनाः ।
तैलिकाः कुन्तला ह्यन्धा उद्भिदा नाल-
कारकाः ॥ * ॥
दाक्षिणात्यास्त्विमे देशा अपरान्तान्निबोध
मे ।
सौर्परिकाः कालनदा दुल्लास्तालीयकैः सह
॥
कारस्करा लोहजङ्घा वानेया राजभद्रकाः ।
तोसलाः कोशलाश्चैव त्रैपुरा
विदिशास्तथा ॥
तुषारास्तुम्बराश्चैव पाटवो नैषधैः सह ।
पुलिन्दाश्च सुशीलाश्च रूपपास्तामसैः
सह ॥
तथा कुरुमिणश्चैव सर्व्वे चैव करस्कराः ।
नासिकाख्याश्च ये चान्ये ये
चैवान्तरनर्म्मदाः ।
मारुकच्छाः समाहेयाः सर्व्वे सारस्वतैः
सह ।
कच्छीयाश्च सुराष्ट्राश्च आवन्त्याश्चार्व्वुदैः
सह ॥
इत्येते ह्यपरान्ताश्च शृणु
बिन्ध्यनिवासिनः ।
मलजाश्च करूषाश्च मेकलाश्चोत्कलैः
सह ॥

योजनानां सहस्रं वै द्वीपोऽयं दक्षिणोत्तरात् ॥
पूर्ब्बे किराता यस्यान्ते पश्चिमे यवनाः स्मृताः ।
ब्राह्मणाः क्षत्त्रिया वैश्याः शूद्राश्चान्तःस्थिता द्विज ! ॥
इज्यायुद्धबणिज्याद्यैः कर्म्मभिः कृतपावनाः ।
तेषां संव्यवहारश्च एभिः कर्म्मभिरिष्यते ॥
स्वर्गापवर्गप्राप्तिश्च पुण्यं पापञ्च वै तथा ।
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्व्वतः ॥
बिन्ध्यश्च पारिपात्रश्च सप्तैवात्र कुलाचलाः ।
तेषां सहस्रशश्चान्ये भूधरा ये समीपगाः ॥
विस्तारोच्छ्रयिणो रम्या विपुलाश्चित्रसानवः ।
कोलाहलः सवैभ्राजो मन्दरो दर्दुराचलः ॥
वातन्धमो वैद्युतश्च मैनाकः सुरसस्तथा ।
तुङ्गप्रस्थो नामगिरिर्गोधनः पाण्डुराचलः ॥
पुष्पवीर्य्यजयन्तौ च रेवतोऽर्व्वुद एव च ।
ऋष्यमूकः सगोमन्तः कूटशैलः कृतस्मरः ॥
श्रीपर्व्वतश्चकोरश्च शतशोऽन्येऽल्पपर्व्वताः ।
तैर्विमिश्रा जनपदा म्लेच्छाश्चार्य्याश्च भागशः ।
तैः पीयन्ते सरिच्छ्रेष्ठा यास्ताः सम्यङ्‌निबोध मे ॥
गङ्गा सरस्वती सिन्धुश्चन्द्रभागा तथापगा ।
यमुना च शतद्रुश्च वितस्तैरावती कुहूः ॥
गोमती धूतपापा च बाहुदा च दृषद्वती ।
विपाशा देविका वङ्क्षुर्विशाला गण्डकी तथा ।
कौशिकी चापरा विप्र ! हिमवत्पादनिःसृताः ॥
वेदस्मृतिर्वेतसिनी रात्रिघ्नी सिन्धुरेव च ।
वेण्वा च स्यन्दना चैव सवानीरा मही तथा ॥
पारा चर्म्मण्वती लूपी विदिशा वेत्रवत्यपि ।
अन्याः सहस्रशश्चोक्ताः क्षुद्रनद्यो द्विजोत्तम ! ।
प्रावृट्कालवहाः सन्ति सर्व्वकालवहाश्च याः ॥
मत्स्याः कुशूलाः कुल्याश्च कुन्तलाः काशिको-
शलाः ॥
अर्व्वुदाश्च पुलिङ्गाश्च समकाश्च वृकैः सह ।
मध्यदेशे जनपदाः प्रायशोऽमी प्रकीर्त्तिताः ॥
सह्यस्य चोत्तरेणैव यत्र गोदावरी नदी ।
पृथिव्यामपि कृत्स्नायां स प्रदेशो मनोरमः ॥
गोवर्द्धनपुरं रम्यं भार्गवस्य महात्मनः ।
वाह्लीका वाटधानाश्च आभीराः कालतोयकाः ॥
अपरान्ताश्च शूद्राश्च पह्लवाश्चर्म्मखण्डिकाः ।
गान्धारा यवनाश्चैव सिन्धुसौवीरमद्रकाः ॥
शतद्रुदा ललित्थाश्च पारदाहारमूषिकाः ।
माठरा रक्षहतकाः कैकया दशमानिकाः ॥
क्षत्त्रियोपनिवेशाश्च वैश्यशूद्रकुलानि च ।
काम्बोजा दरदाश्चैव वर्व्वरा ह्यङ्गलौकिकाः ॥
नीचाश्चैव तुषाराश्च पह्लवा वाह्यतोदराः ।
आत्रेयाः सभरद्वाजाः प्रस्थलाश्च दशेरकाः ॥
लम्पकाः सूनकाराश्च चूलिका जाह्नवैः सह ।
अपधाश्चालिमद्राश्च किरातानाञ्च जातयः ॥
तामसा हंसमार्गाश्च काश्मीरास्तङ्गनास्तथा।
चूलिका हुडुकाश्चैव ऊर्णा दार्व्वास्तथैव च ॥ * ॥
एते देशा ह्युदीच्यास्तु प्राच्यान् देशान्निबोध मे ।
अन्ध्रवाका मुद्गरका अन्तर्गिरिबहिर्गिराः ॥
उत्तमर्णा दशार्णाश्च भोजाः किस्किन्धकैः सह ।
अनूपास्तुण्डिकेराश्च वीरहोत्रा ह्यवन्तयः ॥
एते जनपदाः सर्व्वे बिन्ध्यपृष्ठनिवासिनः ॥
अतो देशान् प्रवक्ष्यामि पर्व्वताश्रयिणश्च ये ॥ * ॥
निर्हारा हंसमार्गाश्च कुपथास्तङ्गनाः खसाः ।
कुत्साः प्रावरणाश्चैव ऊर्णा दर्व्वाः सहूहुकाः ॥
त्रिगर्त्ता मालवाश्चैव किरातास्तामसैः सह ।
कृतत्रेतादिकश्चात्र चतुर्युगकृतो विधिः ॥ * ॥
एतत्तु भारतं वर्षं चतुःसंस्थानसंस्थितम् ॥
दक्षिणे परतो ह्यस्य पूर्ब्बेण च महोदधिः ।
हिमवानुत्तरेणास्य कार्मुकस्य यथा गुणः ॥
तदेतद्भारतं वर्षं सर्व्वबीजं द्विजोत्तम ! ।
देवत्वममरेशत्वं देवत्वं मर्त्यतां तथा ॥
मृगपश्वम्बरचरा योनीस्तद्वत् सरीसृपाः ।
स्थावराणाञ्च सर्व्वेषामतो ब्रह्मन् ! शुभाशुभैः ॥
प्रयान्ति कर्म्मभूर्ब्रह्मन्नान्यलोकेषु विद्यते ।
देवानामपि विप्रर्षे ! सदैवैष मनोरथः ॥
अपि मानुषमाप्स्यामो देवत्वात् प्रच्युताः क्षितौ ।
मनुष्याः कुरुते तत्तु यन्न शक्यं सुरासुरैः ॥
स्वकर्म्मनिगडग्रस्तैः स्वकर्म्मक्षपणोत्सुकैः ।
न किञ्चित् क्रियते कर्म्म सुखलेशोपबृंहितैः ॥”
इति श्रीमार्कण्डेयपुराणे भारतखण्डवर्णन-नामाध्यायः ॥ ५७ ॥ * ॥ अपि च ।
“भारतेऽप्यस्मिन् वर्षे सरिच्छैलाः सन्ति बहवः ।
मलयो मङ्गलप्रस्थो मैनाकस्त्रिकूट ऋषभः कूटकः कोण्वः सह्यो देवगिरिरृष्यमूकः श्रीशैलो वेङ्कटो महेन्द्रो वारिधारो बिन्ध्यः शुक्तिमानृक्षगिरिः पारिपात्रो द्रोणश्चित्रकूटो

|  | तथा प्लवङ्गा वङ्गेया मलदा मलवर्त्तिकाः ।<br>ब्रह्मोत्तराः प्रविजया भार्गवाङ्गेयमर्द्दकाः ॥<br>प्राग्ज्योतिषाश्च मद्राश्च<br>विदेहास्ताम्रलिप्तकाः । | गोवर्द्धनो रैवतकः ककुभो नीलो<br>गोकामुखः |
|---|---|---|

इन्द्रकीलः कामगिरिरिति चान्ये
शतसहस्रशः
शैलास्तेषां नितम्बप्रभवा नदा नद्यश्च
सन्त्यसं-
ख्याताः । एतासामपो भारत्यः प्रजा
नामभिरेव
पुनन्तीनामात्मना चोपस्पृशन्ति चन्द्रवशा
ताम्रपर्णी अवटोदा कृतमाला वैहायसी
कावेरी वेण्वा पयस्विनी शर्करावर्त्ता
तुङ्गभद्रा
कृष्णवेण्वा भीमरथी गोदावरी निर्बिन्ध्या
पयोष्णो तापी रेवा सुरसा नर्म्मदा
चर्म्मण्वती
अन्धः शोणश्च नदौ महानदी
वेदस्मृतिरृषि-
कुल्या त्रिसामा कौशिकी मन्दाकिनी यमुना
सरस्वती दृशद्वती गोमती सरयूरोघवती
षष्ठ-
वती सप्तवती सुषोमा शतद्रुश्चन्द्रभागा
मरुद्-
वृधा वितस्ता असिक्नी विश्वेति महानद्यः
।
अस्मिन्नेव वर्षे पुरुषैर्लब्धजन्मभिः
शुक्ललोहित-
कृष्णवर्णेन स्वारब्धेन कर्म्मणा
दिव्यमानुषनारक-
गतयो बह्व्य आत्मन आनुपूर्ब्ब्येण सर्व्वा
ह्येव
सर्व्वेषां विधीयन्ते । यथावर्णविधानमपवर्ग-
श्चापि भवति । योऽसौ भगवति
सर्व्वभूतात्मनि
अनात्म्येऽनिरुक्तेऽनिलयने परमात्मनि
वासुदेवे
अनन्यनिमित्तभक्तियोगलक्षणोनानागति-
निमित्ताविद्याग्रन्थिबन्धनद्वारेण यदा हि
महा-
पुरुषपूरुषप्रसङ्गः । एतदेव हि देवा गायन्ति
।
"अहो वतैषां किमकारि शोभनं
तेनाजनाभे स्मृतिमज्जन्मनः स्या-
द्वर्षे हरिर्य्यद्भजतां शं तनोति ॥"
श्रीशुक उवाच । जम्बूद्वीपस्य च
राजन्नुपद्वीपा-
नष्टौ हैक उपदिशन्ति
सागरात्मजैरश्वान्वेषण
इमां महीं परितो निखनद्भिरुपकल्पितान् ।
तद्यथा । स्वर्णप्रस्थश्चन्द्रशुक्ल आवर्त्तनो
रमणको
नन्दहरिणः पाञ्चजन्यः सिंहलो लङ्केति ।
एवं
तव भारतोत्तमजम्बुद्वीपवर्षविभागो यथोप-
देशमुपवर्णितः ।" इति श्रीभागवते
महापुराणे
५ स्कन्धे द्वीपवर्षवर्णनं नाम १९ अध्यायः
॥
(विष्णुपुराणे च । २ अंशे ३ अध्याये ।
"उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम्
।
वर्षं तत् भारतं नाम भारती यत्र सन्ततिः ॥
१ ॥
नवयोजनसाहस्रो विस्तारोऽस्य महामुने !
।
कर्म्मभूमिरियं स्वर्गमपवर्गञ्च गच्छताम् ॥"
२ ॥
अपरञ्च ।
"अतः संप्राप्यते स्वर्गो मुक्तिमस्मात्
प्रयान्ति वै ।
तिर्य्यक्त्वं नरकञ्चापि यान्त्यतः पुरुषा
मुने ! ॥ ४ ॥
इतः स्वर्गश्च मोक्षश्च मध्यमन्तश्च गम्यते
।
नखल्वन्यत्र मर्त्त्यानां कर्म्मभूमौ विधीयते
॥" ५ ॥
अपि च ।
"चत्वारि भारते वर्षे युगान्यत्र महामुने ! ।
कृतं त्रेता द्वापरञ्च कलिश्चान्यत्र न क्वचित्
॥ १९ ॥
व्यापारो नराश्रयः । इति साहित्यदर्पणस्य
६
परिच्छेदः ॥ ब्राह्मी । इति राजनिर्घण्टः ॥
(शङ्कराचार्य्यशिष्यतोटकस्य
शिष्याणामन्य-
तमस्य उपाधिविशेषः । यथा,
प्राणतोषिण्या-
मवधूतप्रकरणे ।
"विद्याभारेण सम्पूर्णः सर्व्वभारं
परित्यजेत् ।
दुःखभारं न जानाति भारती परिकीर्त्तिता
॥"
नदीविशेषः । यथा, महाभारते । ३ ।
२२१ । २५ ।
"भारती सुप्रयोगा च कावेरी मुर्म्मुरायथा
॥")

**भारद्वाजं**, क्ली, अस्थि । इति हेमचन्द्रः । ३ ।
२८९ ॥

**भारद्वाजः**, पुं, (भरद्वाजस्य अपत्यं गोत्रापत्य-
मिति वा । भरद्वाज + "अनृष्यनान्तर्य्ये
विदा-
दिभ्योऽञ् ।" ४ । १ । १०४ । इति अञ्
।)
द्रोणाचार्य्यः । (यथा, महाभारते । ७ । ६
। २३ ।
"ततः प्रयाते सहसा भरद्वाजे महारथे ।
आर्त्तनादेन घोरेण वसुधा समकम्पत ॥")
ऋषिभेदः । इति मेदिनी । जे, ३४ ॥
अगस्त्य-
मुनिः । इति शब्दरत्नावली ॥ मङ्गलग्रहः
।
इति ग्रहयज्ञतत्त्वम् ॥ व्याघ्राटपक्षी ।
बृहस्पति-
पुत्रः । इति हेमचन्द्रः ॥ (देशभेदः ।
यथा,
"कृकणपर्णाद्भारद्वाजे ।" ४ । २ । १४५ ।
इति सूत्रे "भारद्वाजशब्दोऽपि देशवचन
एव नगोत्रशब्दः ।" इति काशिका ॥ भर-
द्वाजवंशीये, त्रि ॥ यथा, महाभारते । १ ।

प्रसन्न एषां स्विदुत स्वयं हरिः ।
यैर्जन्म लब्धं नृषु भारताजिरे
मुकुन्दसेवौपयिकस्पृहा हि नः ॥
किं दुष्करैर्न्नः क्रतुभिस्तषोव्रतै-
र्दानादिभिर्वा द्युजयेन फल्गुना ।
न यत्र नारायणपादपङ्कज-
स्मृतिः प्रमुष्टातिशयेन्द्रियोत्सवात् ॥
कल्पायुषां स्थानजयात् पुनर्भवात्
क्षणायुषां भारतभूजयो वरः ।
क्षणेन मर्त्येन कृतं मनस्विनः
संन्यस्य संयान्त्यभयं पदं हरेः ॥
न यत्र वैकुण्ठकथा सुधापगा
न साधवो भागवतास्तदाश्रयाः ।
न यत्र यज्ञेशमखा महोत्सवाः
सुरेशलोकोऽपि न वै स सेव्यताम् ॥
प्राप्ता नृजातिन्त्विह ये च जन्तवो
ज्ञानक्रियाद्रव्यकलापसम्भृताम्।
न चेद्यतेरन्न पुनर्मृतायते
भूयो वनौका इव यान्ति बन्धनम् ।
यैः श्रद्धया वर्हिषि भागशो हवि-
र्निरुप्तमिष्टं विधिमन्त्रवस्तुतः ।
एकः पृथङ्नामभिराह्वतो मुदा
गृह्णाति पूर्णः स्वयमाशिषां प्रभुः ॥
सत्यं दिशत्यर्थितमर्थितो नृणां
नैवार्थदो यत् पुनरर्थिता यतः ।
म्वयं विधत्ते भजतामनिच्छता-
मिच्छापिधानं निजपादपल्लवम् ॥
यद्यत्र नः स्वर्गसुखावशेषितं
स्विष्टस्य सूक्तस्य कृतस्य शोभनम् ।
तपस्तप्यन्ति मुनयो जुह्वते चात्र यज्विनः
।
दानानि चात्र दीयन्ते परलोकार्थमादरात्
॥” २० ॥
“अत्रापि भारतं श्रेष्ठं जम्बुद्वीपे महामुने ! ।
यतो हि कर्म्मभूरेषा ततोऽन्या भोगभूमयः
॥ २२ ॥
अत्र जन्म सहस्राणां सहस्रैरपि सत्तम ! ।
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् ॥
२३ ॥
गायन्ति देवाः किल गीतकानि
धन्यास्तु ते भारतभूमिभागे ।
स्वर्गापवर्गास्पदमार्गभूते
भवन्ति भूयः पुरुषाः सुरत्वात् ॥ २४ ॥
कर्म्माण्यसङ्कल्पिततत्फलानि
संन्यस्य विष्णौ परमात्मभूते ।
अवाप्य तां कर्म्म महीमनन्ते
तस्मिल्लयं येत्वमलाः प्रयान्ति ॥ २५ ॥
जानीम नैतत् क्व वयं विलीने
स्वर्गप्रदे कर्म्मणि देहबन्धम् ।
प्राप्स्याम धन्याः खलु ते मनुष्या
ये भारते नेन्द्रियविप्रहीनाः ॥” २६ ॥)

**भारती**, स्त्री, (भृ + अतच् । स्त्रियां ङीप् ।)
वचनम् । (यथा, कुमारे । ६ । ७९ ।
“तमर्थमिव भारत्या सुतया योक्तुमर्हसि
॥”)
सरस्वती । (यथा, कालिदासः ।
“वीणापुस्तकरञ्जितहस्ते
भगवति भारति देवि ! नमस्ते ॥”)
पक्षिभेदः । वृत्तिभेदः । इति मेदिनी । ने,
१३८ ॥ यथा, --
“शृङ्गारे कौशिकी वीरे सात्वत्यारभटी पुनः
।
रसे रौद्रे च वीभत्से वृत्तिः सर्व्वत्र भारती
॥”
भारती वृत्तिस्तु भारती संस्कृतप्रायो वाग्-
१३१ । ३ ।
“इति सञ्चिन्त्य गाङ्गेयस्तदा
भारतसत्तम ! ।
द्रोणाय वेदविदुषे भारद्वाजाय धीमते ।
पाण्डवान् कौरवांश्चैव ददौ
शिष्यान्नरर्षभ ! ॥”)

**भारद्वाजी**, स्त्री, वनकार्पासी । इति शब्दरत्ना-
वली ॥ (नदीभेदः । यथा, महाभारते । ६
।
९ । २९ ।
“शीघ्राञ्च पिच्छिलाञ्चैव भारद्वाजीञ्च
निम्न-
गाम् ।
कौशिकीं निम्नगां शोणां बाहुदामथ चन्द्र-
माम् ॥”)

**भारयः** पुं, (भां दीप्तिं रयते प्राप्नोतीति । रय
गतौ + पदाद्यच् ।) भारद्वाजपक्षी । इति
शब्दचन्द्रिका ॥ भारै इति भाषा ॥

**भारयष्टिः**, स्त्री, (भारस्य यष्टिः ।) भारवहन-
दण्डः । वाँक इति भाषा । तत्पर्य्यायः ।
विह-
ङ्गिका २ । इत्यमरः । २ । १० । ३० ॥

**भारवं**, क्ली, (भारं वातीति । भार + वा +
“आतोऽनुपेति ।” ३ । २ । ३ । इति कः
।)
धनुर्गुणः । इति त्रिकाण्डशेषः ॥

**भारवाहः**, पुं, (भारं वहतीति । वह् + “कर्म्म-
ण्यण् ।” ३ । २ । १ । इत्यण् ।) भारिकः
।
इत्यमरः । २ । १० । १५ ॥ (यथा,
महाभारते ।
३ । १३३ । १ ।
“अन्धस्य पन्था वधिरस्य पन्थाः
स्त्रियाश्च पन्था भारवाहस्य पन्थाः ॥”)

**भारवाही**, स्त्री, (भारवाह + गौरादित्वात्
ङीष् ।) नीली । इति राजनिर्घण्टः ॥

**भारविः**, पुं, कविविशेषः । स च किरातार्ज्जुनीय-
नामकग्रन्थकर्त्ता । तत्पर्य्यायः । शतपुष्पः २ ।
इति त्रिकाण्डशेषः ॥ तस्य ग्रन्थस्य प्रथम-
श्लोकोऽयम् ।
"श्रियः कुरूणामधिपस्य पालनीं
प्रजासु वृत्तिं यमयुङ्क्त वेदितुम् ।
स वर्णिलिङ्गी विदितः समाययौ
युधिष्ठिरं द्वैतवने वनेचरः ॥"

**भारवृक्षः**, पुं, (काक्षीनामकगन्धद्रव्यम् । इति
शब्दचन्द्रिका ॥

**भारहरः**, पुं, (हरतीति । हृ + पदाद्यच् । भारस्य
हरः ।) भारवाहकः । इति शब्दरत्नावली ॥

**भारहारः**, पुं, (भारं हरतीति । हृ + अण् ।)
भारवाहकः । इति शब्दरत्नावली ॥

**भारिः**, पुं, (इभस्य अरिः । पृषोदरादित्वात्
इलोपः ।) सिंहः । इति हेमचन्द्रः ॥

**भारिकः**, पुं, (भारोऽस्ति वाह्यतयास्य । "अत
इनिठनौ ।" ५ । २ । ११५ । इति ठन् ।) भार-
वाहकः । भारी इति ख्यातः । तत्पर्य्यायः ।
भारवाहः २ । इत्यमरः । २ । १० । १५ ॥
भारहरः ३ भारहारः ४ । इति शब्दरत्ना-
वली ॥ (यथा, कथासरित्सागरे । ३७ । ५६ ।
"तत्र चाग्रागताः केचित् तमूचुः काष्ठ-
भारिकाः ॥")

**भारिटः**, पुं, पक्षिविशेषः । तत्पर्य्यायः । श्याम-
चटकः २ शैशिरः ३ कणभक्षकः ४ । इति
राजनिर्घण्टः ॥

**भारी**, [न्] पुं, (भारोऽस्त्यस्यास्मिन् वेति । भार +
"इत्युक्त्वा ते जग्मुराशु चत्वारोऽमिततेजसः ।
पृथिवीकाश्यपश्चाग्निःप्रकृष्टायुश्च भार्गवः ॥"
शौनकः । यथा, महाभारते । १ । १८ । ६ ।
"तथेति चाब्रवीद्विष्णुर्ब्रह्मणा सह भार्गवः ॥"
भृगुवंशीये, त्रि ॥ (यथा, महाभारते । ३ ।
९९ । ४१ ।
"शृणु रामस्य राजेन्द्र ! भार्गवस्य च धीमतः ॥")

**भार्गवप्रियः**, पुं, (भार्गवस्य प्रियः ।) हीरकः ।
शुक्राधिष्ठातृदेवताकत्वात् ॥

**भार्गवी**, स्त्री, (भार्गव + ङीप् ।) पार्व्वती ।
(भृगोरपत्यं स्त्री । भृगु + अण् + ङीप् ।)
लक्ष्मीः । (अस्या भृगुसुतात्वमुक्तं यथा, विष्णु-
पुराणे । १ । ९ । १४६ ।
"एतत् ते कथितं ब्रह्मन् ! यन्मां त्वं परि-
पृच्छसि ।
क्षीराब्धौ श्रीयथा जाता पूर्ब्बं भृगुसुता सती ॥")
दूर्व्वा । इति मेदिनी । वे, ४५ ॥ (यथा, वैद्यक-
रत्नमालायाम् ।
"सहस्रवीर्य्या दूर्व्वा तु मङ्गल्या भार्गवी
रुहा ॥")
नीलदूर्व्वा । इति शब्दरत्नावली ॥ (यथास्याः
पर्य्यायः ।
"नीलदूर्व्वा रुहानन्ता भार्गवी शतपर्व्विका ।
शष्पं सहस्रवीर्य्या च शतवल्ली च कीर्त्तिता ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
श्वेतदूर्व्वा । इति राजनिर्घण्टः ॥ (भृगुवंशीय-
स्त्रीमात्रे । यथा, महाभारते । १ । ७३ । ३३ ।
"कस्माच्चिरायितोऽसीतिपृष्टस्तामाह भार्ग
वीम् ।
हतोऽहमिति चाचख्यौ पृष्टो ब्राह्मण-
कन्यया ॥")

**भार्गी**, स्त्री, (भृज् + घञ । भर्गोऽस्त्यस्या इति ।
"ज्योत्स्नादिभ्य उपसंख्यानम् ।" ५ । २ ।
१०३ ।
८ धर्म्मचारिणी ९ दारः १० कलत्रम् ११
कलत्रकम् १२ ॥ इति शब्दरत्नावली ॥ अस्याः
प्रशंसा यथा, --
"सा भार्य्या या प्रियं ब्रूयात् स पुत्त्रो यस्तु
जीवति ।
स जीवति गुणो यस्य धर्म्मो यस्य स जीवति ॥
गुणधर्म्मविहीनो यो निष्फलं तस्य जीवनम् ॥
सा भार्य्या या गृहे दक्षा सा भार्य्या या
प्रियंवदा ॥
सा भार्य्या या पतिप्राणा सा भार्य्या या पति-
व्रता ।
नित्यस्नाता सुगन्धा च नित्यञ्च प्रियवादिनी ॥
अल्पभुक् स्वल्पभाषी च सततं मङ्गलैर्युता ।
सततं धर्म्मबहुला सततञ्च पतिप्रिया ॥
सततं प्रियवक्त्री च सततं ऋतुकामिनी ।
पितृदेवक्रियायुक्ता सर्व्वसौभाग्यवर्द्धिनी ॥
यस्येदृशी भवेद्भार्य्या देवेन्द्रो न स मानुषः ॥"
अस्या दोषा यथा, --
"यस्य भार्य्या विरूपाक्षी कश्मला कलहप्रिया ।
उत्तरोत्तरवादा स्यात् सा जरा न जरा जरा ॥
य स्य भार्य्याश्रितान्यत्र परवेश्माभिकाङ्क्षिणी ।
कुक्रिया त्यक्तलज्जा च सा जरा न जरा जरा ॥"
"यस्य भार्य्या गुणज्ञा च भर्त्तारमनुगामिनी ।

इनिः ।) भारवाहकः । इत्यमरटीकायां रमा-
नाथः ॥ (यथा, मनौ । २ । १३८ ।
“चक्रिणो दशमीस्थस्य रोगिणो भारिणः स्त्रियाः ।
स्नातकस्य च राज्ञश्च पन्था देयो वरस्य च ॥”)
भारयुक्ते, त्रि ॥

**भारौही**, स्त्री, (भारं वहतीति । वह् + ण्वि ।
स्त्रियां ङीप् । ततः शसादावजादौ ऊट् ।)
भारवाहिका । इति मुग्धबोधव्याकरणम् ॥

**भार्गवः**, पुं, (भृगोरपत्यम् तद्गोत्रापत्यमिति ।
भृगु + अण् ।) परशुरामः । शुक्राचार्य्यः ।
(यथा, महाभारते । १ । ६६ । ४५ ।
“तस्मिन्नियुक्ते विधिना योगक्षेमाय भार्गवे ।
अन्यमुत्पादयामास पुत्त्रं भृगुरनिन्दितम् ॥”)
धन्वी । गजः । इति मेदिनी । वे, ४५ ॥ भारत-
वर्षमध्ये प्राच्यदेशान्तर्गतदेशविशेषः । यथा, --
“ब्रह्मोत्तराः प्रविजया भार्गवा ज्ञेयमर्द्दकाः ॥”
इति मार्कण्डेयपुराणम् ॥
(कुलालः । यथा, महाभारते । १ । १९२ । १ ।
“गत्वा तु तां भार्गवकर्म्मशालां
पार्थौ पृथां प्राप्य महानुभावौ ॥”
“भृगुः स्वघटवृत्तिः जीविकार्थं भृगुणा व्यव-
हरतीति भार्गवः कुलालः ।” इति तट्टीकायां
नीलकण्ठः ॥ मार्कण्डेयः । यथा, महाभारते ।
१३ । २२ । १५ ।
इत्यस्य वार्त्ति० । इति अण् । ततो ङीप् ।)
वृक्षविशेषः । वामनहाटी इति भाषा । तत्-
पर्य्यायः । गर्द्दभशाखी २ फञ्जी ३ अङ्गार-
वल्लरी ४ ब्राह्मी ५ ब्राह्मण यष्टिः ६ वान्तारिः
७ भृङ्गजा ८ पद्मा ९ यष्टिः १० भारङ्गी ११
वातारिः १२ कामजित् १३ सुरूपा १४
भ्रमरेष्टा १५ शक्रमाता १६ । अस्या गुणाः ।
कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । कासश्वास-
शोफव्रणक्रिमिदाहज्जरनाशित्वञ्च। इति राज-
निर्घण्टः ॥ अन्यत् ब्राह्मणयष्टिकाशब्दे
द्रष्टव्यम् ॥

**भार्द्वाजी**, स्त्री, (भारद्वाजी । पृषोदरादित्वात्
साधुः ।) भारद्वाजी । वनकार्पासी । इति
शब्दरत्नावली ॥

**भार्य्या**, स्त्री, (भरणीया इति । भृ + “ऋह-
लोर्ण्यत् ।” ३ । १ । १२४ । इति ण्यत् । टाप् ।
यद्वा भया दीप्त्या आर्य्या ।) वेदविधा-
नेनोढा । विधिपूर्ब्बकविवाहिता । तत्पर्य्यायः ।
पत्नी २ पाणिगृहीती ३ द्वितीया ४ सह-
धर्म्मिणी ५ जाया ६ दाराः ७ सहधर्म्मिणी
अल्पाल्पेन तु सन्तुष्टा सा प्रिया न प्रिया प्रिया ॥
दुष्टा भार्य्या शठं मित्रं भृत्याश्चोत्तरदायकाः ।
ससर्पे च गृहे वासो मृत्युरेव न संशयः ।
आपत्सु मित्रं जानीयात् युद्धे शूरं वने शुचिम् ।
भार्य्याञ्च विभवे क्षीणे दुर्भिक्षे च प्रियातिथिम् ॥”
इति गारुडे नीतिसारे १०८ । १०९ अध्यायौ ॥
(तथा च महाभारते । १ । ७४ । ३९ - - ४५ ।
“सा भार्य्या या गृहे दक्षा सा भार्य्या या प्रजावती ।
सा भार्य्या या पतिप्राणा सा भार्य्या या पतिव्रता ॥
अर्द्धं भार्य्या मनुष्यस्य भार्य्या श्रेष्ठतमः सखा ।
भार्य्यामूलं त्रिवर्गस्य भार्य्यामूलं तरिष्यतः ॥
भार्य्यावन्तः क्रियावन्तः सभार्य्या गृहमेधिनः ।
भार्य्यावन्तः प्रमोदन्ते भार्य्यावन्तः श्रियान्विताः ॥
सखायः प्रविविक्तेषु भवन्त्येताः प्रियंवदाः
पितरो धर्म्मकार्य्येषु भवन्त्यार्त्तांश्च मातरः ॥
कान्तारेष्वपि विश्रामो जनस्याध्वनिकस्य वै ।
यः सदारः स विश्वास्यस्तस्माद्दाराः परा गतिः ॥
संस्मरन्तमपि प्रेतं विषमेष्वेकपातिनम् ।
भार्य्यैवान्वेति भर्त्तारं सततं या पतिव्रता ॥
प्रथमं संस्थिता भार्य्या पतिं प्रेक्ष्य प्रतीक्षते ।
पूर्ब्बं मृतञ्च भर्त्तारं पश्चात् साध्वनुगच्छति ॥”)

|  |  |  |
| --- | --- | --- |
|  |  | बृहस्पतिरुवाच।<br>"यस्य नास्ति सती भार्य्या गृहेषु प्रियवादिनी।<br>अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्॥<br>सुशीला सुन्दरी शान्ता गता यस्य गृहोदरात्।<br>अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्॥<br>भावानुरक्ता वनिता हृता यस्य च शत्रुणा। |

अरण्यं तेन गन्तव्यं यथारण्यं तथा
गृहम् ॥
दैवेनापहृता यस्य पतिसाध्या
पतिव्रता ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा
गृहम् ॥
यस्य माता गृहे नास्ति भार्य्या
चाप्रियवादिनी ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा
गृहम् ॥
प्रियाशून्यं गृहं यस्य पूर्णं
स्त्रीधनबन्धुभिः ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा
गृहम् ॥
भार्य्याशून्या वनसमाः सभार्य्याश्च
गृहा गृहाः ।
गृहिणी च गृहं प्रोक्तं न गृहं गृहमुच्यते ॥
अशुचिः स्त्रीविहीनश्च दैवे पैत्रे च
कर्म्मणि ।
यदह्ना कुरुते कर्म्म न तस्य
फलभाग्भवेत् ॥
दाहिकाशक्तिहीनश्च यथा मन्दो
हुताशनः ।
प्रभाहीनो यथा सूर्य्यः शोभाहीनो यथा
शशी ॥
शक्तिहीनो यथा जीवो यथात्मा च तनूं
विना ।
विनाधारं यथा धेयो यथेशः प्रकृतिं
विना ॥
न च शक्तो यथा यज्ञः फलदां दक्षिणां
विना ।
कर्म्मिणे च फलं दातुं सामग्रीमूलमेव च
॥
विना स्वर्णं स्वर्णकारो यथाशक्तः
स्वकर्म्मणि ।
यथाशक्तः कुलालश्च मृत्तिकाञ्चनवि
द्विजाः ! ॥
तथा गृही न शक्तश्च सन्ततं
सर्व्वकर्म्मणि ।

बहुभार्य्यस्य भार्य्याणामृतुमैथुननाशनम् ।
न किञ्चिद्विद्यते कर्म्म शास्त्रेणापि यदीरितम्
॥
तोषयेत् सततं भार्य्या विधिवत्
पाणिपीडिताः ।
तासां तुष्ट्या तु
कल्याणमकल्याणमतोऽन्यथा॥
सन्तुष्टो भार्य्यया भर्त्ता भर्त्रा भार्य्या तथैव
च ।
यस्मिन्नेतत्कुले नित्यं कल्याणं तत्र वै ध्रुवम्
॥
यया विरुध्यते स्वामी सौभाम्यमददृप्तया ।
सपत्नीसङ्गमं कर्त्तुं सा स्याद्वेश्या भवान्तरे
॥
इहापि लोके वाच्यत्वमधर्म्मञ्चापि विन्दति ।
न च पितृकुलं स्वामिकुलं तस्याः प्रमोदते ॥
विरुध्यमाने पत्यौ यत् सपत्न्या वा प्रवर्त्तिते
।
अतीव दुःखं भवति तदकल्याणकृत्तयोः ॥”
इति कालिकापुराणे २० अध्यायः ॥
रजस्वला भार्य्या अत्याज्या । यथा, --
“न धिनोतीह यो दारान् रजसा कलुषीकृतः
।
प्रेतपैत्र्याहृते कुण्डे रेतसाञ्च पिबत्यसौ ॥
यो जहाति रजः कृत्वा पित्र्यं स्वं तेजसा
नरः ।
सोऽश्नाति फलमप्येवं यो न दद्यादृतुं पुनः ॥
यो बिभर्त्ति स मत्तो वै बहूनां रजसि स्थितः
।
रेतः पिबति तन्मग्नो पितृभ्यो योऽप्यपिण्डदः
॥
यो जहाति हि निर्द्दोषां भार्य्याञ्चैव
रजस्वलाम् ।
शुद्धिमान् संवृतः कृत्तगर्भस्य दुरितं वहेत्
॥”
इति वह्निपुराणम् ॥
कालविशेषे तद्गमननिषेधो यथा, --
“न दिवापि स्त्रियं गच्छेत् कदाचिदिच्छयापि
च ।

**भार्य्यारुः**, पुं, (भार्य्यां ऋच्छतीति । ऋ गतौ +
उण् ।) मृगभेदः । क्रीडया परभार्य्यायां
पुत्त्रो-
त्पादकः । शैलभेदः । इति मेदिनी । रे,
१९२ ॥

**भार्य्यावृक्षः**, पुं, (भार्य्यावत् प्रियो वृक्षः ।) पत्तङ्ग-
वृक्षः । इति राजनिर्घण्टः ॥

**भालं**, क्ली, (भाल दीप्तौ + भावे क्विप् । भां लाति
गृह्णातीति । ला + “आतोऽनुपसर्गे कः ।” ३
।
२ । ३ । इति कः ।) भ्रुवोरूर्द्ध्वभागः ।
कपाल
इति भाषा । तत्पर्य्यायः । ललाटम् २
अलिकम्
३ गोधि ४ । इति राजनिर्घण्टः ॥ (यथा,
साहित्यदर्पणे ३ परिच्छेदे ।
“स्वामिन् भङ्गुरयालकं सतिलकं भालं
विला-
सिन् कुरु
प्राणेश ! त्रुटितं पयोधरतटे हारं पुन-
र्योजय ॥”)
तेजः । इति मेदिनी । ले, ४२ ॥

**भालदर्शनं**, क्ली, (भाले ललाटे दर्शनमस्येति ।)
सिन्दूरम् । इति शब्दचन्द्रिका ॥

**भालदृक्**, [श्] पुं, (भाले ललाटे दृक्
नेत्रं यस्य ।) शिवः । इति हेमचन्द्रः ।
२ । ११० ॥

**भालाङ्कः**, पुं, (भालस्येव अङ्को यत्र भाले अङ्को
यस्येति वा ।) करपत्रम् । शाकभेदः ।
रोहित-
मत्स्यः । महालक्षणसम्पन्नपुरुषः । कच्छपः
।
हरः । इति मेदिनी । के, १३३ ॥ (भालस्य
अङ्कः ।) ललाटचिह्नञ्च ॥

**भाललोचनः**, पुं, (भाले ललाटे लोचनं नेत्रं

भार्य्यामूलाश्च पुत्राश्च भार्य्यामूला गृहास्तथा ॥
भार्य्यामूलं सुखं शश्वद्गृहस्थानां गृहे सदा ।
भार्य्यामूलः सदा हर्षो भार्य्यामूलञ्च मङ्गलम् ॥
भार्य्यामूलश्च संसारो भार्य्यामूलञ्च सौरतम् ।
यथा रथश्च रथिनां गृहिणाञ्च तथा गृहम् ।
सारथिस्तु यथा तेषां गृहस्थानां तथा प्रिया ॥
सर्व्वरत्नप्रधानञ्च स्त्रीरत्नं दुष्कुलादपि ।
सा गृहीता गृहस्थेनैवेत्याह कमलोद्भवः ॥
यथा जलं विना पद्मं पद्मं शोभां विना यथा ।
तथैव च गृहं शश्वद्गृहिणां गृहिणीं विना ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५६ अध्यायः ॥
तस्या अत्याज्यत्वं यथा, --
"अनपत्याञ्च युवतीं कुलजाञ्च पतिव्रताम् ।
त्यक्त्वा भवेद्यः सन्न्यासी ब्रह्मचारी यतीति वा ॥
बाणिज्ये वा प्रवासे वा चिरं दूरं प्रयाति यः ।
तीर्थाय तपसे वापि मोक्षार्थं जन्म खण्डितुम् ॥
न मोक्षस्तस्य भवति धर्म्मस्य स्खलनं ध्रुवम् ।
अभिशापेन भार्य्याया नरकञ्च परत्र च ॥
इहैव च यशोनाश इत्याह कमलोद्भवः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ११२ अः ॥
बहुभार्य्यस्यैकस्या भजने दोषादि यथा, --
न पर्व्वसु न सन्ध्यासु नाद्यर्त्तु चतूरात्रिषु ॥
नोदक्यां न दिवा गच्छेत् न सगर्भां न व्रत-स्थिताम् ।
अभिगच्छेदविद्वान् यस्तदायुःक्षयमेव च ॥
बन्ध्याष्टमे परित्याज्या नवमे च मृतप्रजा ।
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥
न वक्त्रेऽभिगमं कुर्य्यात् पाणिग्राही तु योषितः ।
कुर्य्याच्चेत् पितरस्तस्य पतन्ति रेतसोभुजः ॥
भार्य्याधीनं सुखं पुंसां भार्य्याधीनो धनागमः ।
भार्य्याधीना मखोत्पत्तिर्भार्य्याधीनः सुखोदयः ॥
यत्र भार्य्या गृहं तत्र भार्य्याधीनो गृहे वसेत् ।
न गृहेणगृहस्थः स्यात् भार्य्यया कथ्यते गृही ॥"
इति पराशरस्मृतिः ॥

**भार्य्याटः**, पुं, (भार्य्यया अटति वर्त्तते इति ।
अट गतौ + पदाद्यच् ।) अन्यार्थं स्वस्त्रीदाता ।
इति त्रिकाण्डशेषः ॥

**भार्य्याटिकः**, पुं, (अट गतौ + भावे घञ् । भार्य्यया
आटो मतिर्भ्रमणं वा अस्त्यस्येति । भार्य्याट +
ठन् ।) स्त्रीजितः । हरिणविशेषः । इति मेदिनी । के, २०५ ॥ (मुनिविशेषः । इति हेमचन्द्रः ॥)

**भार्य्यापती**, पुं, (भार्य्या च पतिश्च तौ । "राज-
दन्तादिषु परम् ।" २ । २ । ३१ । इति साधुः ।)
योषित्पती । नित्यद्विवचनान्तोऽयं शब्दः ।
तत्पर्य्यायः । दम्पती २ जम्पती ३ जायापती
४ । इत्यमरः । २ । ६ । ३८ ॥
यस्य ।) शिवः । इति भालदृक्शब्ददर्शनात् ॥
(यथा, काशीखण्डे । २९ । १३० ।
"भाललोचनभावज्ञा भूतभव्यभवत्प्रभुः ॥")

**भालुकः**, पुं, (भलते हिनस्ति प्राणिनः इति । भल
हिंसायाम् + बाहुलकात् उकः । ततः प्रज्ञा-
द्यण् ।) भल्लूकः । यथा, भरतधृतकोषान्तरे ।
"भालूको भालुको भल्लोऽच्छभल्लोऽच्छोऽपि भल्लुकः ॥"

**भालूकः**, पुं, (भलते हिनस्ति जीवानिति । भल
+ "ऊलूकादयश्च ।" उणा० । ४ । ४१ । इति
ऊकः । ततः प्रज्ञाद्यण् ।) भल्लूकः । यथा, --
"भालूको भालुको भल्लोऽच्छभल्लोऽच्छोऽपि भल्लूकः ॥"
इति भरतधृतकोषान्तरम् ॥

**भाल्लुकः**, पुं, भल्लूकः । इत्यमरटीकायां भरतः ॥

**भाल्लूकः**, पुं, भल्लूकः । इत्यमरटीकायां भरतः ॥

**भावः**, पुं, (भावयति चिन्तयति पदार्थानिति ।
भू + णिच् + पचाद्यच् । भवतीति । भू + "भव-
तेश्चेति वक्तव्यम् ।" इति काशिकोक्तेर्णो वा ।)
नाट्योक्तौ विद्वान् । मानसविकारः । सत्ता ।
(यथा, श्रीमद्भगवद्गीतायाम् । २ । १६ ।
"नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥")
स्वभावः । अभिप्रायः । (यथा, रामायणे । २ । २ । १९ ।

| | | |
|---|---|---|
| "गदतो यत् श्रुतं पूर्ब्बं नारदाय पितुर्मुखे ।<br>दक्षस्य धर्म्मशास्त्रार्थं तत् शृणुष्व निशापते ! ॥<br>बहुदारः पुमान् यस्तु रागादेकां भजेत् स्त्रियम् ।<br>स पापभाक् स्त्रीजितश्च तस्याशौचं सनातनम् ॥<br>यद्दुःखं जायते स्त्रीणां स्वाम्यसम्भोगजं यथा ।<br>न तस्य सदृशं दुःखं किञ्चिदन्यद्धि विद्यते ॥<br>मतीमृतुमतीं जायां यो नेयात् पुरुषाधमः ।<br>ऋतुघस्रेषु शुद्धेषु भ्रूणहा स हि जायते ॥<br>भार्य्या स्याद्यावदात्रेयी तावत् कालं विरो-<br>धकम् ।<br>तस्यास्तु सङ्गमे किञ्चित् विहितञ्चापि नाचरेत् ॥ | | |

"तस्य धर्म्मार्थविदुषो भावमाज्ञाय सर्व्वशः ।
ब्राह्मणा बलमुख्याश्च पौरजानपदैः सह ॥")
चेष्टा । आत्मा । जन्म । इत्यमरः । ३ । ३ । २०६ ॥
(चित्तम् । यथा, मनुः । ४ । २२७ ।
"दानधर्म्मं निषेवेत नित्यमैष्टिकपौर्त्तिकम् ।
परितुष्टेन भावेन पात्रमासाद्य भक्तितः ॥")
क्रिया । लीला । पदार्थः । (यथा, रघुः । ३ । ४१ ।
"अतीन्द्रियेष्वप्युपपन्नदर्शनो
बभूव भावेषु दिलीपनन्दनः ॥")
विभूतिः । बुधः । जन्तुः । रत्यादिः । इति मेदिनी ।
वे, २१ ॥ गौरवितः । अभिनयान्तरम् । इति
त्रिकाण्डशेषः ॥ (विषयः । यथा, हितोपदेशे ।
"अवश्यम्भाविनो भावा भवन्ति महतामपि ।
नग्नत्वं नीलकण्ठस्य महाहिशयनं हरेः ॥"
पर्य्यालोचना । यथा मनुः । ६ । ८० ।
"यदा भावेन भवति सर्व्वभावेषु निस्पृहः ।
तदा सुखमवाप्नोति प्रेत्य चेह च शाश्वतम् ॥"
प्रेम । यथा, गीतायाम् । १० । ८ ।
"इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥")
धात्वर्थः । (यथा, सुग्धबोधे वोपदेवः ।
"देशाध्वकालभावं वाटैः ।" क्रियान्तरापेक्षि-
क्रियाविशिष्टः तत्र सप्तमी विहिता तथा च
मुग्धबोधटीकायां रामतर्कवागीशः । "यस्य
क्रियया क्रियान्तरमपेक्ष्यते स इह भावः ॥")
योनिः । उपदेशः । इति धरणिः ॥ संसारः ।
इत्यनेकार्थकोषः ॥ नवग्रहाणां शयनादिद्वादश-
चेष्टाः । यथा, --
"शयनञ्चोपदेशश्च नेत्रपाणिः प्रकाशनम् ।
गमनं गमनेच्छा च सभायां वसतिस्तथा ॥
आगमनं भोजनञ्च नृत्यलिप्सा च कौतुकम् ।
निद्रा ग्रहाणां भावाश्च द्वादशैते प्रकीर्त्तिताः ॥"
भावानयनक्रमो यथा, --
"यद्राशौ विद्यते खेटस्तेन तं परिपूरयेत् ।
पुनरंशेन संपूर्य्य स्वर्क्षं तत्र नियोजयेत् ॥
जातदण्डं तथा लग्नमेकीक्त्य सदा बुधैः ।
रविणा भागहारेण शेषं कार्य्ये नियोजयेत् ॥
अंशेन नवसंख्यया । खर्क्षं ग्रहाणां जन्म-
नक्षत्रम् । तद्यथा, --
"विशाखानलतोयानि वैष्णवं भगदैवतम् ।
तदाशुभं भवेत्तस्य नात्र कार्य्या
विचारणा ॥
तुङ्गस्थाने स्वगृहे वा त्रिकोणे वा यदा
भवेत् ।
अपत्यस्य तदा नाशो जायते नात्र
संशयः ॥
शुभग्रहो यदा तत्र क्रूरो वा यदि
वेक्षितः ।
तदा प्रथमापत्यस्य नाशो भवति
निश्चितम् ॥
मृत्युस्थाने स्थितः पापो निद्रायां
शयनेऽपि वा ।
तदात्मनोऽपमृत्युः
स्याद्राजतोऽपरतोऽपि वा ॥
शुभग्रहो यदा तत्र मृत्युस्थानेऽपि
संस्थितः ।
तदा च मरणं तस्य मृत्युस्थाने
विशेषतः ॥
पापग्रहैर्यदा दृष्टः शुभो वा
शत्रुवीक्षितः ।
तदा तस्य शिरश्छेदो मुनिना
परिकीर्त्तितः ॥
एवं क्रमेण बोद्धव्यं ग्रहभावे सुबुद्धिना
।
बलाबलविचारेण जायते च
शुभाशुभम् ॥
ज्योतिर्व्वित्सु च सर्व्वेषु परिहारः
कृतो मया ।
शयनादिकभावेषु ज्ञातव्यञ्चोपदेशतः
॥
एकादशे वा दशमालये वा
धनालये वा यदि वा विलग्ने ।
पापेन युक्तो न शुभग्रहश्चे-
त्तथापि सिद्धिं महतीं वदन्ति ॥"
फलं यथा, --
"मन्दाग्निः पित्तशूली च जायते
शयने नरः । १ ।
उपवेशे भवेच्छिल्पी श्यामवर्णस्तथा
नरः ॥ २ ॥
सभायाञ्च विधौ नित्यं जायते
पुरुषोत्तमः ॥ ७ ॥
नित्यक्रोधी महादुःखी भवेदागमने
विधौ । ८ ।
भोजने च भवेल्लुब्धो भक्षकश्च
महासुरः ॥ ९ ॥
यो जातो नृत्यलिप्सायां गुणवान्
धार्म्मिको
भवेत् ।
बहुपात्रो घनी दाता जायते नात्र
संशयः ॥ १० ॥
कौतुके च भवेद्रोगी नानाविद्यासु
तत्परः ।
उत्साही च महाक्रोधी जायते च
सुनिश्चि-
तम् ॥ ११ ॥
निद्रायां दद्रुरोगी स्यात्
क्लेशपापरुजान्वितः ।
पुत्रशोकमहादुःखी नित्यं भ्रमति
मेदिनीम् ॥ १२
इति चन्द्रस्य ॥ * ॥
शयने च कुजे जातो
लक्ष्मीबहुकुरङ्गकः ।
क्षणक्रोधी महादक्षः कृपणो जायते
नरः ॥ १ ॥
उपवेशे यदा भौमे जायते च नराधमः
।
धनवान् क्रूरकर्म्मा च निष्ठुरो
जातिवर्ज्जितः ॥ २ ॥
नेत्रपाणौ च यो जातः अक्षिरोगी
भवेन्नरः ।
पुत्रदारधनैर्युक्तो दारिद्र्येणैव दह्यते
॥ ३ ॥
प्रकाशने कुजे जातो धनवान्
पण्डितः सुधीः ।
नारी च म्रियते तस्य प्रथमा च
विशेषतः ॥ ४ ॥
गमने च यदा जातः प्रवासी
नित्यदुःखितः ।

पुष्या पौष्णोयमः सर्पो जन्मभान्यर्क्तः क्रमात् ॥”
ऋक्षो राशिः । यदा मेषे ग्रहस्तदा १ एक-
पूरितग्रहसंख्याङ्कः । यदा वृषे ग्रहस्तदा २
द्विपूरितो ग्रहसंख्याङ्कः कार्य्यः ॥ * ॥ जाया-
सुतमृत्युतुङ्गस्वगृहत्रिकोणस्थानस्थितपापग्रहाणां
निद्राशयनभावयोः फलम् ।
“निद्रायाञ्च यदा पापो जायास्थाने शुभं वदेत् ।
यदि पापः शुभैर्दृष्टो नाशुभैश्च कदाचन ॥
यदि वा शत्रुगेही स्याच्छयने यदि वेक्षितः ।
तदा नारीसमं तस्य नाशो भवति निश्चितम् ॥
शुभाशुभैर्यदा दृष्टः शुभग्रहसमन्वितः ।
नारी च म्रियते तस्य प्रथमा च विशेषतः ॥
सुतस्थाने स्थितः पापो निद्रायां शयनेऽपि वा ।

नेत्रपाणौ भवेत् क्रूरो जलदोषो
भवेन्नरः । ३ ।
पुण्यवान् धार्म्मिकश्चैव धनवांश्च
प्रकाशने ॥ ४ ॥
गमने च रवेर्जातः कृपणो धनसंयुतः
।
बहुभाषी क्षमी क्रोधी लुब्धचित्तः
सदा
भवेत् ॥ ५ ॥
अल्पभोक्ता शीघ्रगामी
दीर्घायुर्नृपवल्लभः ।
शूरः श्रीमान् सुशीलश्च
गमनेच्छाभवो नरः ॥ ६ ॥
सभायाञ्च रवेर्जातः खलो दाता क्षमी
भवेत् ।
दयालुः पण्डितो धीमान् गुणवान्
पण्डित-
प्रियः ॥ ७ ॥
आगमने भवेन्मूर्खः कुरूपो धनवान्
भवेत् । ८ ।
भोजने भक्षको मांसलुब्धो
महावपुर्बली ॥ ९ ॥
नृत्यलिप्सौ सुन्दरो वाग्मी
पण्डितस्य गृहा-
धिपः । १० ।
उत्साही च महाभोगी कोतुके च
दिवाकरे ॥ ११ ॥
दाता भोक्ता प्रियः पुत्त्रकलत्राणां न
संशयः ।
लिङ्गे देहे करे चैव गुदे रोगी तथैव च
।
निद्रायाञ्च भवेद्भानोः क्रोधनो
रक्तनेत्रकः ॥ १२ ॥
इति रवेस्तुङ्गातुङ्गे बलाबले वा
बोध्यम् ॥ * ॥
“शयने च विधौ क्रोधी दरिद्रो
बहुलम्पटः । १ ।
उपवेशे महारोगी धनवांश्च भवेन्नरः
॥ २ ॥
नेत्रपाणौ नेत्ररोगी श्लीपदी
बहुभाषकः ।

शरीरे च भवेद्रोगः
कण्ड्वादिकुष्ठदद्रुकः ॥ ५ ॥
प्रवासी गमनेच्छायां गुदरोगी भवेच्च
सः ।
धनहीनः कुकर्म्मा च जायते
क्षितिजस्य च ॥ ६
सभायाञ्च यदा जातो धार्म्मिको
बहुसम्पदः ।
गुणवांश्च महादाता शिरोरोगी
भवेद्ध्रुवम् ॥ ७
कुजस्यागमने नित्यं खञ्जो भवति
नान्यथा ।
कर्णरोगी पित्तशूली जायते च
नराधमः ॥ ८ ॥
भोजने भूमिजस्यापि यो जातो
मांसलुब्धकः ।
बृहत्कायो महाक्रोधी नित्योत्साही
धना-
न्वितः ॥ ९ ॥
कुजस्य नृत्यलिप्सायां यो जातो
धनवान् भवेत् ।
दाता भोक्ता सदा मानी राजपात्रो
भवेच्च
सः ॥ १० ॥
कौतुके क्षितिजस्यापि जातो भवति
पण्डितः ।
नानाधनेन संयुक्तो बहुपुत्त्रो
द्विभार्य्यकः ॥ ११ ॥
निद्रायां भूमिपुत्त्रस्य यो जातो भूर्ख
एव सः ।
कलहो बान्धवैः सार्द्धं
शोकक्लेशरुजान्वितः ॥ १२
इति मङ्गलस्य ॥
“बुधस्य शयने जातो धनवान्
क्षुधितः सदा ।
अङ्गच्छेदो भवेद्वापि खञ्जो भवति
नान्यथा ॥ १ ॥
उपवेशे च यो जातः प्रवासी जायते
ध्रुवम् ।
कवितागुणधीयुक्तो गौरवर्णो
महाशयः ॥ २ ॥

| | | |
|---|---|---|
| | क्रूरः खलोऽतिशूरश्च जायते च विधौ तदा ॥ ३ ॥<br>प्रकाशने निशानाथे धनवांश्च भवेन्नरः ।<br>दक्षो बुद्धिमान् दाता च परदारेषु लम्पटः ॥ ४ ॥<br>अरोगी वित्तहा चैव क्रूरकर्म्मा धनान्वितः ।<br>शिरोरोगी दन्तशूली जायते गमने विधौ ॥ ५ ॥<br>नानामतिर्महाक्रोधी सम्पदी च भवेन्नरः ।<br>गमनेच्छुविधौ जातो धनहीनो भवेत्तदा ॥ ६ ॥<br>दाता च धार्म्मिकश्चैव राजपात्रो भवेत् सदा । | नेत्रपाणौ च यो जातः श्लीपदादिरुजान्वितः ।<br>चक्षूरोगी विशेषात् स्यात् पुत्त्रनाशी भवेद्-<br>ध्रुवम् ॥ ३ ॥<br>प्रकाशने भवेज्जातो राजपात्री धनान्वितः ।<br>नानाधनेन संयुक्तो जायते वेदपारगः ॥ ४ ॥<br>गमने यो नरो जातः प्रवासी नित्यदुःखितः<br>शरीरे क्षतमाप्नोति नित्यमृणी भवेच्च सः ॥ ५ ॥<br>यो जातो गमनेच्छायां लम्पटो दुष्टचित्तकः ।<br>स्त्रीवशो दुष्टभार्य्यश्च कामुको बहुभाषकः ॥ ६ ॥ |

सभायाञ्च बुधे जातो मूर्खो भवति पण्डितः।
धनवान् धार्म्मिकश्चैव चिररोगी भवेत्तु सः ॥ ७ ॥
क्रूरः खलो हतमूर्खः पापशीलो भवेन्नरः।
बुधस्यागमने नित्यं जायते च नराधमः ॥ ८ ॥
भोजने च भवेत् सौख्य धनहीनो भवेन्नरः।
परद्वेषी प्रवासी च शोषगात्रव्यथान्वितः ॥ ९ ॥
यो जातो नृत्यलिप्सायां धनवान् पण्डितः कविः।
उत्साही च महाहृष्टो भुनक्ति सुख-मद्भुतम् ॥ १० ॥
कौतुके च यदा जातो भवेत् सर्व्वजनप्रियः।
अर्शोरोगी दद्रुयुक्तो धनवानल्प शस्यकः ॥ ११ ॥
निद्रायाञ्च यदा जातः सर्व्वदुःखैकपात्रताम्।
नानाक्लेशमवाप्नोति रोगशोकयमक्षयम् ॥ १२ ॥"
इति बुधस्य ॥ * ॥
"धनवान् लम्पटः श्यामः स्थूलो व्रणरुजान्वितः।
जीवस्य शयने जातो मानवो नात्र संशयः ॥ १ ॥
उपवेशे गुरोर्जातो बहुभाषी च रोगवान्।
पशुघाती महाशिल्पी श्लीपदी रोगसंयुतः ॥ २ ॥
नेत्रपाणौ गुरोर्जातः काशरोगी धनी भवेत्।
क्षतादिश्चरणे नित्यं जायते नात्र संशयः ॥ ३ ॥
गुरोः प्रकाशे धनवान् लिङ्गगुह्ये रुजान्वितः।
दक्षो लम्पटपापी च श्यामवर्णो रुजान्वितः ॥ ४ ॥
गमनेच्छौ यदा जातो भ्रातृनाशो भवेद्ध्रुवम्।
माता च म्रियते तस्य शैशवे व्याधिसंयुतः ॥ ६ ॥
सभायाञ्च भृगोर्जातो राजपात्रो महाधनी।
कुलशीली महादक्षः केवलं शूलरोगवान् ॥ ७ ॥
भृगोरागमने जातो दुःखितो बहुलम्पटः।
दद्रुरोगी पुत्रशोकी जायते च नराधमः ॥ ८ ॥
शुक्रस्य भोजने जातो बलवान् दाम्भिकः सदा।
महाधनी भवेन्नित्यं बाणिज्येन विशेषतः ॥ ९ ॥
यो जातो नृत्यलिप्सायां स वाग्मी जायते ध्रुवम्।
पाण्डित्यं कविता चैव वर्द्धते च दिने दिने ॥
यदि चैव भवेन्नीचे मूर्खो भवति निश्चितम्।
तुङ्गस्थाने विशेषेण राजपात्रो महाधनी ॥
कामुको बहुकान्तश्च परयोषित्प्रियः सदा।
श्यामवर्णस्तथा मानी याज्ञिको बहुभा-षकः ॥ १० ॥
शुक्रस्य कौतुके जातो धनवान् सात्विकः सदा।
महाहृष्टो महावन्धुः कौतुकी च भवेत् सदा ॥
बहुपुत्रकलत्रश्च नानासुखसमन्वितः।
नीचे तद्विपरीतः स्यात् दुःखशोकसम-न्वितः ॥ ११ ॥
निद्रायाञ्च भृगोर्जातो भवेद्रोगी स निश्चितम्।
नित्यक्लेशी महादुःखी जायते नात्र संशयः ॥
कौतुके च शनेर्जातो राजपुत्रो महाशयः।
दाता भोक्ता महादक्षो धार्म्मिकः पण्डितः शुचिः ॥ ११ ॥
निद्रायाञ्च शनेर्जातो धनवान् पण्डितः शुचिः।
चक्षूरोगी पित्तशूली द्विभार्य्यो बहुपुत्त्रकः ॥
विशेषतश्च धर्म्मस्थे कर्म्मस्थे च कदाचन।
यदि दैवाद्भवेन्निद्रा नाशो भवति निश्चितम् ॥
कर्म्मनाशो धर्म्मनाशः क्षुधार्त्तो दुःखितः सदा।
नित्यप्रवासी रोगी च कार्य्यनाशः पदे पदे ॥
स्वमित्रगेहे षष्ठे वा केन्द्रे वा स्वगृहे पुनः।
तदा सर्व्वं विचार्य्यञ्च वैपरीत्येन चिन्तनम् ॥
जायायाञ्च सुतस्याने यदि निद्रा भवेत् पुनः।
तदा सर्व्वं शुभं विद्याद्विष्णुना परि-कीर्त्तितम् ॥ १२ ॥
इति शनेः ॥ * ॥
शयने च यदा राहोर्जन्म यस्य भवेत् पुनः।
तस्य क्लेशो महादुःखं जायते च न संशयः ॥ १ ॥
उपवेशे च यो जातः श्लीपदी रोगसंयुतः।
बहुहानिर्नरेन्द्रस्य पीडा भवति नित्यशः ॥ २ ॥
नेत्रपाणौ यदा जातश्चक्षूरोगी भवेद्ध्रुवम्।
सर्पाघातो महाभीतिर्द्विभार्य्यो बहुभाषकः ॥ ३ ॥
प्रकाशने च यो जातो धनवान् धार्म्मिकः पुनः।
नित्यप्रवासी चोत्साही सात्त्विको धार्म्मिकः शुचिः ॥ ४ ॥
गमने चैव यो जातो नानारोगैर्धनक्षयः।
दन्ताघाती महाक्रोधी पिशुनः परनिन्दकः ॥ ५ ॥
यो जातो गमनेच्छायां बहुपुत्त्रो महाधनः।
पण्डितो गुणवान् दाता जायते च नरोत्तमः ॥ ६ ॥
सभायाञ्च यदा जातः कृपणो धनसंयुतः।
नानागुणेन गुणवान् धार्म्मिकः पण्डितः शुचिः ॥ ७ ॥
आगमने च यो जातो लम्पटो बहुभाषकः।

सर्पभीतो गूढकर्म्मा साहसी गमनोन्मुखे।
परवित्तेन धनवान् पुमान् भवति वाक्पतौ
॥ ५ ॥
गुरोश्च गमनेच्छायां जातो भवति मानवः
।
शूली धनी प्रवासी च सेवाकर्म्मणि तत्परः
॥ ६ ॥
बक्ता दाता च धनवान् राजसेवान्वितो
नरः।
शूलरोगी भवेन्नित्यं सभायां वाक्पतौ
स्थिते ॥ ७ ॥
धार्म्मिकस्तीर्थविन्मानी धनी चागमने
गुरोः।
परदारेषु संलुब्धो जायते नात्र संशयः ॥
८ ॥
भोजने बहुसौख्याढ्यो मांसलुब्धो
महासुरः।
कामुकः प्रियवाक्यश्च जायते नात्र
संशयः ॥ ९ ॥
नृत्यलिप्से शठो वाग्मी धनवान्
सात्विकस्तथा।
महदैश्वर्य्यसंयुक्तो जीवस्य च भवेन्नरः ॥
१० ॥
कौतुके च गुरोर्जातो धनवान् धार्म्मिकः
सदा।
नृत्योत्साही महत्सङ्गो भुनक्ति सुखमद्-
भुतम् ॥ ११ ॥
निद्रायाञ्चैव यो जातश्चक्षूरोगी भवेच्च सः
।
कृपणो बहुभाषी च दुःखितो भ्रमते
महीम् ॥ ११ ॥”
इति गुरोः ॥ * ॥
“शुक्रस्य शयने जातो लम्पटो बहुभाषकः
।
दन्तरोगी महाक्रोधी नीचो भवति
नित्यशः ॥ १ ॥
उपवेगे तथा जातो बलवान् दाम्भिकः
सदा।
नित्यप्रवासी रोगी च जायते नीचसंस्थिते
॥ २ ॥
नेत्रपाणौ भृगोर्दुःखी रोगशोकसमन्वितः।
जायायाञ्च सुतस्थाने यति निद्रा
भृगोर्भवेत्।
तदा सर्व्वविनाशः स्याद्विष्णुना परिकी-
र्त्तितः ॥ १२ ॥”
इति शुक्रस्य ॥ * ॥
“शयने च शनेर्जातो लम्पटो बहुभाषकः
।
गुह्यस्थाने भवेद्रोगी कोषवृद्धिश्च जायते
॥
लग्नात् सप्ताष्टमे चैव शयनस्थः
शनैश्चरः।
तदा नित्यप्रवासी स्याच्छत्रुक्षयी भवेच्च
सः ॥ १ ॥
उपवेशे यदा जातः श्लीपदी दद्रुसंयुतः
।
धनहीनो भवेत्तस्य पीडा भवति
नित्यशः ॥ २ ॥
नेत्रपाणौ यदा जातो मूर्खो भवति
पण्डितः।
धनवान् धार्म्मिकश्चैव द्विभार्य्यो
बहुभाषकः ॥ ३ ॥
प्रकाशने च यो जातो राजपात्रो भवेच्च
सः।
नानागुणेन गुणवान् धार्म्मिकः पण्डितः
शुचिः ॥”
मतान्तरे।
जायास्थाने च लग्ने च प्रकाशने यदा
शनिः।
तदा सर्व्वविनाशः स्याज्जातिध्वंसो
भवेद्
ध्रुवम् ॥ ४ ॥
गमने च यदा जातः पादमूले रुजान्वितः
।
तीर्थे च गतिमान्नित्यं
पुत्त्रदारैर्व्विवर्ज्जितः ॥ ५ ॥
यो जातो गमनेच्छायां श्लीपदी
रोगसंयुतः।
दन्ताघाती महाक्रोधी कृपणः
परनिन्दकः ॥ ६ ॥
सभायाञ्च शनेर्जातः पुत्त्रदारधनैर्युतः।
सुहृद्बन्धुविनाशः स्यान्नानाक्लेशश्च जायते ॥
८ ॥
भोजने च महादुष्टो मन्दाग्निश्च रुजान्वितः।
कृपणः कलहाढ्यश्च दुःखितो नित्यसेवकः ॥
९ ॥
यो जातो नृत्यलिप्सायां खञ्जो भवति नान्यथा
।
पुत्त्रनाशो भवेत्तस्य जायानाशो भवेद्ध्रुवम् ॥
१० ॥
कौतुके च यदा जातो गुणैः सर्व्वैः समन्वितः।
नानाधनेन् धनवान् राजसेवासु तत्परः ॥
यदि दैवाद्भवेत्तुङ्गी स्वगृही वा कदाचन।
तदा सर्व्वं वैपरीत्यं जायते च न संशयः ॥ ११
॥
यो जातो राहुनिद्रायां दुःखितः सर्व्वतस्तथा।
नानास्थाने गतो वापि धनपुत्त्रविवर्ज्जितः ॥
जायायाञ्च सुतस्थाने यदि निद्रां विधुन्तुदः।
तदा सर्व्वं वैपरीत्यं शतजायासमन्वितः ॥ १२
॥
नानाशास्त्रं समालोक्य क्रियते ग्रन्थसंग्रहः।
बलाबलविचारेण युक्त्या सञ्चिन्तयेद्बुधः ॥”
इति ग्रहाणां शयनादिद्वादशभावविवेकः
समाप्तः ॥ इति जातरत्नः कोष्ठीप्रदीपश्च ॥
अथ तन्वादिद्वादशभावाः।
ते च नराणां जन्मलग्नावधिकद्वादशस्थानानि।
यथा, --

| | | |
|---|---|---|
| धनहीनो महारोगी मानवः स्यान्न संशयः ॥ ३ ॥<br>भृगोः प्रकाशने जातो विद्याधनसमन्वितः ।<br>दाता च धार्म्मिकश्चैव कोर्त्तिमान् जायते नरः ॥ ४ ॥<br>शुक्रम्य गमने जातः पादमूले रुजान्वितः ।<br>नित्योत्साही महाशिल्पी भवेत्तीर्थगतौ रतः ॥ ५ ॥ | सर्व्वत्र लभते वित्तं नानारत्नसमन्वितम् ॥ ७ ॥<br>आगमने यदा जातो महाक्रोधी रुजान्वितः ।<br>सर्पादिभिश्च संदष्टो भ्रातृनाशी भवेद्ध्रुवम् ॥ ८ ॥<br>भोजने चैव यो जातो मन्दाग्निश्च महानपि ।<br>अर्शोरोगी तथा शूली चक्षूरोगी भवेच्च सः ॥ ९ ॥<br>यो जातो नृत्यलिप्सायां नर्त्तको बहुभाषकः ।<br>जीवतो दुःखितश्चैव प्रवासी परसेवकः ॥ १० ॥ | |

"सामर्थ्यं तनु कल्यते समुदये वित्तं
कुटुम्बं ततो
विक्रान्तिं सहजं तृतीयभवने योधश्च
सञ्चि-
न्तयेत् ।
बन्धुं वाह्यसुखालयानपि ततो
धीमन्त्रपुत्त्रांस्ततः
षष्ठेऽथ क्षतविद्विषौ मदगृहे कामं स्त्रियं
वर्त्म च ॥
रन्ध्रायुर्मृतयोऽष्टमे गुरुतपो भाग्यानि
चित्तन्ततो
मानाज्ञास्पदकर्म्मणां दशमभे
कुर्य्यात्ततश्चिन्त-
नम् ।
प्राप्त्यायावथ चिन्तयेद्भवगृहे ऋष्फे तु
मन्त्रि-
व्ययौ
सौम्यस्वामियुतीक्षणैरुपचयस्तेषां
क्षतिस्त्वन्यथा ॥
इति द्वादशभावविवेकः ॥
अरातिव्रणयोः षष्ठे चाष्टमे मृत्युरन्ध्रयोः ।
अयस्य द्वादशस्थाने वैपरीत्येन चिन्तनम्
॥"
अरात्यादिभावापवादः ॥
अथ तन्वादिद्वादशभावस्थग्रहफलम्।
"लग्ने सूर्य्येऽक्षिरोगी शशिनि बलयुतो
रूप-
वान् वित्तयुक्तो
भौमे व्यङ्गः सुवाग्मी शशधरतनये सर्व्व-
शास्त्रार्थवेत्ता ।
जीवे दाता पवित्रः सुकविरथ गते भार्गवे
मण्डलेशः
शौरौ कण्डूतिगात्रस्तमसि च नियतं
वञ्चितो
धर्म्महीनः ॥ १ ॥
वित्तेऽर्के चैव रोगी सततगदयुतो रात्रिनाथे
घनाढ्यो
भौमे नित्यं प्रवासी कृषिसुतधनवान्
सोमपुत्त्रे
सौम्ये सुस्थः सुदेहः प्रचुरधनयुतो
देवपूज्ये
सुपुत्त्रः
कन्यायुक्तो हि शुक्रे रविजदनुजयोः
पुत्त्रपौत्त्रै-
र्विहीनः ॥ ५ ॥
षष्ठेऽर्के शत्रुहन्ता रिपुगणरहितः
क्षीणचन्द्रे
गतायुः
पूर्णे शत्रुञ्च हन्याद्भवति धरणिजे
हीनदेहो-
ऽतिदीनः ।
सौम्ये शास्त्रार्थयुक्तस्त्रिदशपतिगुरौ
राज्य-
सौख्योपभोगी
दैत्याचार्य्येऽतिरोगी रविजदनुजयोः
पापभुङ्-
नित्यदुःखी ॥ ६ ॥
पत्न्यामर्के च जायापतिरतिविमुखी
शीतरश्मौ
सुपुत्त्रः
सुस्थो भूयान्नरोऽसौ भवति धरणिजे
हीन-
भार्य्यश्च नूनम् ।
सौम्ये सुस्थः सुदेहस्त्रिदशपतिगुरौ
शास्त्रवेत्ता
शतायुः ।
शुक्रे पुत्त्रप्रमोदी
रविजदनुजयोर्हीनभार्य्यश्च
नूनम् ॥ ७ ॥
मृत्यौ चार्के समृत्युर्भवति च नियतं
शीतरश्मौ
गतायु-
र्भूमेः पुत्त्रे सुरोगी शशधरतनये
शूलरोगी
विकर्म्मा ।
जीवे तीर्थे च मृत्युर्भवति भृगुसुते
धार्म्मिक-
स्तीर्थगोऽसौ
अर्के संस्थे व्ययेऽसौ पुरधनरहितः सर्व्वरोगी
सुदुःखी
सोमे खेदान्वितोऽसौ भवति धरणिजे द्यूतरक्तो
विबुद्धिः ।
सौम्ये धर्म्मार्थकारी दिनकररहिते देवपूज्ये-
ऽभिमानी
शुक्रे शास्त्रानुरागी रविजदनुजयोः क्रूरकर्म्मा
कुचेलः ॥ १२ ॥
इति ज्योतिस्तत्त्वम् ॥ * ॥
स्त्रीणां यौवनकाले स्वभावजाष्टाविंशत्यलङ्का-
रान्तर्गताङ्गजप्रथमालङ्कारः । यथा, --
"यौवने सत्त्वजास्तासामष्टाविंशतिसंख्यकाः ।
अलङ्कारास्तत्र भावहावहेलास्त्रयोऽङ्गजाः ॥"
तत्र भावः ।
"निर्व्विकारात्मके चित्ते भावः प्रथमविक्रिया ॥"
जन्मतः प्रभृति निर्विकारे मनसि उद्बुद्धमात्रो
विकारो भावः । यथा, --
"स एव सुरभिः कालः स एव मलयानिलः ।
सैवेयमवला किन्तु मनोऽन्यदिव दृश्यते ॥"
इति साहित्यदर्पणे तृतीयपरिच्छेदः ॥ * ॥
भावस्य लक्षणान्तरं यथा, --
"शरीरेन्द्रियवर्गस्य विकाराणां विधायकाः ।
भावा विभावजनिताश्चित्तवृत्तयईरिताः ॥
पुराणे नाट्यशास्त्रे च द्वयोस्तु रतिभावयोः ।
समानार्थतया चात्र द्वयमैक्येन लक्ष्यते ॥" * ॥
पूर्ब्बोक्तमानसविकाररूपभावस्यविवरणं यथा,
रजःसत्त्वतमोमयश्चित्तविकारोभावः । चित्त-
वृत्तिविशेषो भाव इत्यन्ये । अतएव मनो-
विकारो रत्यादिर्भाव उक्तः । भावयति जनयति
रसान् भावः अन् । तथा च भरतः ।
"नानाभिनयसम्बन्धान् भावयन्ति रसानिमान् ।
यस्मात्तस्मादमी भावा विज्ञेया नाटकोक्तिषु ॥"
भावाश्च त्रिविधाः स्थायिनो व्यभिचारिणः
सात्त्विकाश्च । तत्र स्थायिनो यथा, --
"रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयन्तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्त्तिताः
॥
व्यभिचारिणी यथा, --
"निर्व्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः ।

प्रधानः ।
जीवे लक्ष्मीप्रमोदी विलसति भृगुजे
दर्पितः
स्त्रीनिकेतः
सौरौ दीनोऽति नित्यं तमसि च नियतं
चौरि-
कावित्तिजीवी ॥ २ ॥
भ्रातर्य्यर्के सधर्म्मः स भवति नियतं
भ्रातृहा
रात्रिनाथे
हिस्रो भौमेऽनुजानां सपदि वधकरो
भूमिका-
वृत्तिजीवी ।
सौम्ये सत्यस्य हन्ता भवति सुरगुरौ
कामदेव-
स्वरूपः
शुक्रे राज्याधिकारी
रविजदनुजयोर्भ्रातृहन्ता
धनाढ्यः ॥ ३ ॥
अर्के बन्धौ सुदुःखी स्वजनपरिवृतः
शीतगौ
जानुरोगी
भौमे कुग्रामवासी भवति शशिसुते
भ्रातृपुत्रा-
न्बितोऽपि ।
जीवे रत्नोपभोगी त्रिदशरिपुगुरौ
सर्व्वसोख्या-
धिकारी
सौरौ गेहे निवासी भवति शशिरिपौ मन्द-
कर्म्मा कुचेलः ॥ ४ ॥
पुत्रस्थेऽर्के नरोऽसौ प्रथमसुतहतः
सिंहराशौ
सुपुत्रः
स्रोमे सर्व्वाधिकारी भवति धरणिजे
पुत्रशोका-
कुलोऽसौ ।

सौरौ शूली गतायुर्भवति विधुरिपौ
वेदमुक्तो
गतायुः ॥ ८ ॥
धर्म्मे चार्के नरोऽसौ विविधधनयुतः
शीतगौ
पुण्यकर्म्मा
लक्ष्मीवान् पुण्यचेता भवति धरणिजे
देव-
वित्तापहारी ।
सौम्पे धर्म्म्यः मुशीलस्त्रिदशपतिगुरौ
राज-
तुल्यः सुकर्म्मा
शुक्रे तीर्थानुरागी रविजदनुजयोः
पापशीलः
सुदुःखी ॥ ९ ॥
कर्म्मण्यर्के प्रतापी प्रचुरधनयुतः
श्लीपदी
क्रोधदृष्टिः
सोमे श्लेष्मान्वितोऽसौ
विविधधनयुतो भूमिजे
बन्धुहीनः ।
नित्योत्साही च सौम्ये प्रचुरधनयुतो
देव-
पूज्यऽभिमानी
दिव्यस्त्रीशोऽपि शुक्रे नृपतिसमधनः
सौरिदैत्ये
सुखी च ॥ १० ॥
आये चार्के नरोऽसौ पितृधनसहितः
शीतगौ
चारुशीलो
भौमे नित्यं स रोगी शशधरतनये
सर्व्वदा
क्रोधयुक्तः ।
जीवे श्रीमान् प्रदाता
करितुरगपतिर्भार्गवे
शास्त्रविज्ञः
छत्री रत्नादियुक्तो रविजदनुजयोः
क्रूरकर्म्मा
कुचेलः ॥ ११ ॥

आलस्यञ्चैव दैन्यञ्च चिन्ता मोहो धृतिः स्मृतिः
॥
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्व्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥
स्वप्नो विबोधोऽमर्षश्चाप्यवहित्थमथोग्रता।
मतिर्व्याधिस्तथोन्मादस्तथामरणमेव च ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः प्रयान्ति रससंस्थितम् ॥”
सात्त्विका यथा, --
“स्वेदः स्तम्भोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः
।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मता इति ॥
रत्यादयः स्थायिनोऽष्टौ निर्व्वेदाद्या व्यभि-
चारिणस्त्रयस्त्रिंशत् स्वेदादयः सात्त्विका अष्टौ
चेति ऊनपञ्चाशद्भावाः पञ्चाशद्भावा इत्यन्ये ।
इत्यमरटीकायां भरतः ॥

(प्रधानव्यभिचारिप्रभृतयो
भावशब्देनोच्यन्ते ।
यदुक्तं साहित्यदर्पणे तृतीयपरिच्छेदे ।
"सञ्चारिणः प्रधानानि देवादिविषया रतिः ।
उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते
॥")
भगवद्भावो यथा, --
"शुद्धसत्त्वविशेषात्मा प्रेमसूर्य्यांशुसाम्यभाक्
।
रुचिभिश्चित्तमासृण्यकृदसौ भाव उच्यते
॥"
इति भक्तिरसामृतसिन्धुः ॥ * ॥

**भावकः**, पुं, (भाव एव स्वार्थे कन् ।) भावः ।
मानसो विकारः । इति हलायुधः ॥
(भवतीति ।
भू + कर्त्तरि ण्वुल् ।) सत्ताश्रये, त्रि । इति
संक्षिप्तसारः ॥

**भावतः** त्रि, (भवत अयमिति । भवत् + अण् ।)
भवदीयः ।
शत्रन्तभवच्छब्दादणप्रत्ययनिष्पन्नः।
इति सिद्धान्तकौमुदी ॥

**भावत्कः**, त्रि, (भवतामयमिति । भवत् + "भवत-
ष्ठक्छसौ ।" ४ । २ । ११५ । इति ठक् ।)
भवदीयः । भवच्छब्दात् ठक्प्रत्ययनिष्पन्नः
।
इति सिद्धान्तकौमुदी ॥ यथा, भट्टिपञ्चमसर्गे
।
"भावत्कं दृष्टवत्स्वेतदस्मास्मधि
सुजीवितम् ॥"

**भावनं** क्ली, (भू + णिच् + ल्युट् ।) भव्यम् ।
इति राजनिर्घण्टः ॥ चाल्ता इति भाषा ॥
(भावे ल्युट् ।) भावना । इति मेदिनी । ने,
१०१ ॥ (यथा, साहित्यदर्पणे ३ परिच्छेदे ।
"सुखदुःखादिभिभर्वैर्भावस्तद्भावभावनम्
॥"
भावयतीति । भू + णिच् + ल्युः । उत्पादके,
त्रि । यथा, महाभारते । १ । २२४ । ४५ ।
तत्र वयं ब्रह्मैव भावयामः । वयं
कर्म्मैव कुर्म्मः ।
वयन्तूभयमिदमनुसन्दध्मइत्येवं
त्रिविधा
भावना । भावनायुक्तान्
जीवानुदाहरति सन-
न्दनादय इति द्वाभ्याम् । इति
तट्टीका ॥

**भावबोधकः**, पुं, (भावस्य रत्यादेर्वोधकः अनु-
भावकः ।) अनुभावः । इत्यमरः ।
२ । ७ । २१ ॥ भावस्य
रत्यादेर्बोधकः सूचको
गुणक्रियादिरनुभावः ।
अनुभाव्यते प्रतीतियोग्यतां नीयते
रत्यादिरने-
नेति अनुभावः घञ् । तत्र
रतेरनुभावाः
लोचनचातुर्य्यभ्रूक्षेपादयः ।
हासस्य च कपोला-
कुञ्चनानासोत्फुल्लनादयोऽनुभावा
एवं अन्यत्रा-
नुमन्तव्यम् । किंवा
भावाननुभावयतीति अन्
अनुभावो मुखरागादिः । इति
तट्टीकायां
भरतः ॥

**भाववृत्तः**, पुं, (भावः सत्ता वृत्तः प्रवृत्तोऽस्मा-
दिति । यद्वा, भावः सृष्टिः तत्र वृत्तः
प्रवृत्तः ।)
ब्रह्मा । इति सन्ध्याव्याख्यायां
स्मृतिः ॥

**भावाटः**, पुं, (भावं भावेन वाटतीति । अट् +
अण् अच् वा ।) भावकः । साधुः ।
निवेशः ।
कामुकः । नटः । इति मेदिनी । टे,
५२ ॥
"शतघण्टा शतानन्दा भगनन्दा च भाविनी ।
वपुष्मती चन्द्रशीता भद्रकाली च भारत ! ॥")
वर्त्तमानप्रागभावप्रतियोगिनीच ॥

**भावी**, [न्] त्रि, (भविष्यतीति । भू + "भुवश्च ।"
उणा० ४ । ८ । इति इनिः । स च णिद्-
भवति ।) भविष्यत्कालादिः । वर्त्तमानप्राग-
भावप्रतियोग्युत्पत्तिकः । यथा, --
"वीरप्रतिपदा नाम तव भावी महोत्सवः ॥"
इति कार्त्तिकशुक्लप्रतिपदमधिकृत्य बलिं प्रति
भगवद्वाक्यम् । इति तिथ्यादितत्त्वम् ॥

**भावुकं**, क्ली, (भवतीति । भू + "लषपतपदस्थाभू-
वृषेति ।" ३ । २ । १५४ । इति उकञ् ।)
मङ्गलम् ।
(यथा, प्रद्युम्नविजये १ अङ्के ।
"शक्र ! सर्व्वत्र कुशलमस्माकम् । अपि भावुकं
वः सुराणाम् ॥")
तद्वति, त्रि । इत्यमरः । १ । ४ । २६ ॥

**भावुकः**, पुं, (भू + उकञ् ।) नाट्योक्तौ भगिनी-
पतिः । इति हेमचन्द्रः ॥

**भावुकः**, त्रि, भवनाश्रयः । भवति यः । इति
कर्त्तरि भूधातोर्उकप्रत्ययेन निष्पन्नः ॥
रसविशेष-
भावनाचतुरः । इति श्रीधरस्वामी ॥ यथा, --
"निगमकल्पतरोर्गलितं फलं
शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयं
सुहुरहो रसिका भुवि भावुकाः ॥"
इति श्रीभागवते । १ । १ । ३ ॥
लग्नपलितप्रियान्धस्थूलसुभगाढ्यशब्दोपपदभू
धातोरभूततद्भावार्थे कर्त्तरि वाच्ये खुकञ्-
प्रत्ययेन लग्नम्भावुक इत्यादयश्च निष्पन्नाः ॥

**भाव्यं**, क्ली, अवश्यभवितव्यम् । इति भूधातो-
रवश्यम्भावार्थे भावे ध्यण्प्रत्ययेन निष्पन्नम् ।
यथा । विप्रेण शुचिना भाव्यम् । इति मुन्ध-
बोधव्याकरणम् ॥ प्रयोगदर्शनात् कर्त्तरि च तत्र
त्रि । यथा, --

"दृष्ट्वैव च स राजानं शङ्करो लोकभावनः ।
उवाच परमप्रीतः श्वेतकिं नृपसत्तमम् ॥")

**भावना**, स्त्री, क्ली, (भू + णिच् + युच् ।) ध्यानम् ।

(यथा, गीतायाम् । २ । ६६ ।
"नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥")
पर्य्यालोचनम् । अधिवासनम् । इति मेदिनी ।
ने, १०१ ॥ त्रिविधा भावना यथा, --
"त्रिविधा भावना विप्र ! विश्वमेतन्निबोध मे ।
ब्रह्माख्या कर्म्मसंज्ञा च तथा चैवोभयात्मिका ॥
ब्रह्मभावात्मिका ह्येका कर्म्मभावात्मिकापरा ।
उभयात्मिका तथैवान्या त्रिविधा भावभावना ॥
सनन्दनादयो ब्रह्मभावभावनया युताः ।
कर्म्मभावनया चान्ये देवाद्याः स्थावराश्चराः ॥
हिरण्यगर्भादिषु च ब्रह्मकर्म्मात्मिका द्विधा ।
बोधाधिकारयुक्तेषु विद्यते भावभावना ॥"
इति विष्णुपुराणे ६ अंशे ७ अध्यायः ॥
त्रिविधभावनाश्रयजीवात्मकत्वात्तदुपचारेण
त्रिविधा भावनेत्युच्यते । एतद्धि हरेः स्थूलं
रूपम् । अतः पररूपप्राप्त्युपायत्वात् तत्र
प्रथमं मनः मन्धार्य्यमिति भावः । भावना नाम
ज्ञानविशेषजा वासना । तां त्रिविधामपि
संज्ञामादिशति ब्रह्माख्येति । तामेव विषय-
त्रैविध्येन विविनक्ति ब्रह्मभावनात्मिकेति । भाव-
भावना भावो वस्तु तद्विषया भावना त्रिविधा ।

**भावानुगा**, स्त्री, (भावं मूर्त्तपदार्थमनुगच्छ-

तीति । अनु + गम् + डः । टाप् ।)
छाया ।
इति राजनिर्घण्टः ॥ (भक्त्यादिना
अनुगते, त्रि ॥)

**भावालीना**, स्त्री, (भावेषु मूर्त्तपदार्थेषु आलीना ।)

छाया । इति राजनिर्घण्टः ॥

**भावितः**, त्रि, (भाव्यते स्मेति । भू + णिच् + क्तः ।)

वासितः । प्राप्तः । इति मेदिनी ।
ते, १४० ॥
विशोधितः । (यथा, महाभारते ।
१३ । १६ । ३८ ।
"ये चैनं प्रतिपद्यन्ते भक्तियोगेन भाविताः ।
तेषामेवात्मनात्मानं दर्शयत्येष हृच्छयः ॥")
चिन्तितः । मिश्रितः । भू क शुद्धिचिन्तयोर्मि-
श्रणे च इत्यस्मात् ञ्यन्तात् क्तप्रत्ययनिष्पन्नो-
ऽयम् ॥ (समर्पितः । यथा, महाभारते । १ ।
५ । ३२ ।
"एतत् संसूचितं ब्रह्मंस्तापत्रयचिकित्सितम् ।
यदीश्वरे भगवति ! कर्म्म ब्रह्मणि भावितम् ॥"
"भगवति भावितं समर्पितम् ।" इति तट्टीकायां
श्रीधरस्वामी ॥ सिक्ताः । यथा, सुश्रुते चिकि-
त्सितस्थाने । १ अध्याये ।
"भल्लातकान् वासयेत्तु क्षीरे प्राङ्मूत्र-
भावितम् ॥")

**भावित्रं**, क्ली, (भवतीति । भू + "भूवादिगृभ्यो

णित्रन् ।" उणा० ४ । १७० । इति
णित्रन् ।)

"कृतस्य करणं नास्ति दैवाधिष्ठितकर्म्मणः ।
भावीत्यवश्यं यद्भाव्यं तत्र ब्रह्माप्यवाधकः ॥"
इति कालिकापुराणे ३८ अध्यायः ॥

**भाष**, ङ ऋ वाचि । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-सक०-सेट् ।) ङ, भाषते । ऋ, अवीभषत्
अवभाषत् । इति तट्टीकायां दुर्गादासः ॥

**भाषणं**, क्ली, (भाष् + भावे ल्युट् ।) कथनम् ।

यथा । "संलापो भाषणं मिथः ।" इत्यमरः ॥
(यथा, सर्व्वदर्शनसंग्रहे । आर्हतदर्शने ।
"हास्यलोभभयक्रोधप्रत्याख्यानैर्निरन्तरम् ॥
आलोच्य भाषणेनापि भाषयेत् सूनृतं व्रतम् ॥")

**भाषा**, स्त्री, (भाष्यते शास्त्रव्यवहारादिना प्रयु-

ज्यते इति । भाष् + "गुरोश्च हलः ।" ३ । ३ ।
१०२ । इत्यप्रत्ययः । टाप् ।) रागिणीविशेषः ।
इति हलायुधः ॥ वाक्यम् । वाग्देवता । तत्-
पर्य्यायः । ब्राह्मी २ भारती ३ गीः ४ वाक् ५
वाणी ६ सरस्वती ७ व्याहारः ८ उक्तिः ९
लपितम् १० भाषितम् ११ वचनम् १२ वचः

| | | |
|---|---|---|
| | त्रैलोक्यम् । स्वर्गमर्त्यपातालम् । इत्युणादिकोषः ॥<br>**भाविनी**, स्त्री, स्त्रीविशेषः । इत्यमरः ॥ भावः शृङ्गारचेष्टाविशेषो विद्यतेऽस्याः भाविनी । इति तट्टीकायां भरतः ॥ (यथा, हरिवंशे । ११७ । ३६ ।<br>"सा हि तस्याभवज्ज्येष्ठा पत्नी कृष्णस्य भाविनी ।<br>पतिव्रता गुणोपेता रूपशीलगुणान्विता ॥")<br>स्त्रीमात्रम् । इति राजनिर्घण्टः ॥ (स्कन्दस्य मातृगणानामन्पतमा । यथा, महाभारते ।<br>९ । ४६ । ११ । | |

१३ । इत्यमरः । १ । ६ । १ ॥
त्रयोदश वचने । पूर्ब्बसप्तकं
वागधिकृतायां देवतायाञ्च । इति
तट्टीकायां
भरतः ॥ शास्त्रीयाष्टादशभाषा यथा ।
संस्कृतम्
१ प्राकृता २ उदीची ३ महाराष्ट्री ४
मागधी ५
मिश्रार्द्धमागधी ६ शकाभीरी ७ श्रवन्ती
८
द्राविडी ९ ओड्रीया १० पाश्चात्या
११ प्राच्या १२
वाह्लीका १३ रन्तिका १४ दाक्षिणात्या
१५
पैशाची १६ आवन्ती १७ शौरसेनी
१८ ।
एतासां लक्षणोदाहरणानि
प्राकृतलङ्केश्वर-
व्याकरणे द्रष्टव्यानि ॥
अथ भाषाविभागः ।
"पुरुषाणामनीचानां संस्कृतं स्यात्
कृतात्मनाम् ।
शौरसेनी प्रयोक्तव्या तादृशीबाञ्च
योषिताम् ॥
आसामेव तु गाथान्तु महाराष्ट्रीं
प्रयोजयेत्।
अत्रोक्ता मागधी भाषा
राजान्तःपुरचारि-
णाम् ॥
चेटानां राजपुत्त्राणां
श्रेष्ठिनाञ्चार्द्धमागधी।
प्राच्या विदूषकादीनां धूर्त्तानां
स्यादवन्तिका ॥
योधनागरिकादीनां दाक्षिणात्याहि
दीव्यताम् ।
शकाराणां शकादीनां शाकारीं
संप्रयोजयेत् ॥
वाह्लीकभाषा दिव्यानां द्राविडी
द्रविडादिषु ।
"वचनस्य प्रतिज्ञात्वं तदर्थस्य च पक्षता ।
असङ्करेण वक्तव्ये व्यवहारेषु वादिभिः ॥"
वक्तव्ये पक्षप्रतिज्ञे पूर्ब्बोक्ते । नारदेनापि ।
"सारस्तु व्यवहाराणां प्रतिज्ञा समुदाहृता
।
तद्धानौ हीयते वादी तरंस्तामुत्तरो भवेत्
॥"
उत्तरो विजयी । यद्यप्यन्यत्र साध्यं तद्-
विशिष्टधर्म्माधर्म्मी पक्ष इति भेदः
तथाप्यत्र
बाक्प्रतार्य्यर्णादिधर्म्मविशेषविशिष्टतया
धर्म्मि-
णोऽधमर्णपदैरेव साध्यत्वात्
साध्यपक्षयोरभेदा-
भिधानम् । उपसंहारे च एवंविधः पक्ष
इति ।
मिताक्षरायान्तु । भाषा प्रतिज्ञा पक्ष इति
नार्थान्तरमित्युक्तम् । भाषार्थमुक्त्वा
भाषास्वरूप-
प्रपञ्चमाह । स्वल्पाक्षर इति । निराकुलः
पौर्व्वापर्य्यविपर्य्यासादिशून्यः । तत्र ।
"द्यूते च व्यवहारे च प्रवृत्ते यज्ञकर्म्मणि ।
यानि पश्यन्त्युदासीनाः कर्त्ता तानि न
पश्यति ॥"
इति गृह्यसंग्रहवचनादुदासीनेभ्यो ज्ञात्वा
शोधयेत् ॥ * ॥ तच्छोधनमाह बृहस्पतिः
।
"न्यूनाधिकं पूर्ब्बपक्षं तावद्वादी विशोधयेत्
।
न दद्यादुत्तरं यावत् प्रत्यर्थी सभ्यसन्निधौ
॥"
तल्लिखनप्रकारमाह व्यासः ।
"पाण्डुलेखेन फलके भूमौ वा प्रथमं
लिखेत् ।
न्यूनाधिकन्तु संशोध्य पश्चात् पत्रे
निवेशयेत्"
फलकं काष्ठादिपट्टकम् । कात्यायनः ।
"पूर्ब्बपक्षं स्वभावोक्तं प्राड्विवाकोऽथ
लेखयेत् ।
"संस्कृतैः प्राकृतैर्वाक्यैर्यः शिष्यमनुरूपतः ।
देशभाषाद्युपायैश्च बोधयेत् स गुरुः स्मृतः ॥
इति व्यवहारतत्त्वम् ॥

**भाषापरिच्छेदः**, पुं, विश्वनाथन्यायपञ्चाननकृत-
न्यायपरिभाषाग्रन्थः । अस्य अयमाद्यश्लोकः
।
"नूतनजलधररुचये गोपवधूटीदुकूलचौराय ।
तस्मै नमः कृष्णाय संसारमहीरुहस्य बीजाय
॥"
तस्यायमन्त्यश्लोकः ।
"सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते ।
तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् ॥"
अस्य टीका सिद्धान्तमुक्तावली ॥

**भाषापादः**, पुं, (भाषायाः पादः ।) चतुष्पाद्ब्य-
वहारान्तर्गतप्रथभपादः । तस्य लक्षणं यथा, --
"अर्थवद्धर्म्मसंयुक्तं परिपूर्णमनाकुलम् ।
साध्यवद्वाचकपदं प्रकृतार्थानुबन्धि च ॥
प्रसिद्धमविरुद्धञ्च निश्चितं साधनक्षमम् ।
संक्षिप्तं निखिलार्थञ्च देशकालाविरोधि च ॥
वर्षर्त्तुमासपक्षाहोवेलादेशप्रदेशवत् ।
स्थानावसथसाध्याख्याजात्याकारवयोयुतम् ॥
साध्यप्रमाणसंख्यावदात्मप्रत्यर्थिनाम च ।
परात्मपूर्ब्बजानेकराजनामभिरङ्कितम् ॥
क्षमालिङ्गात्मपीडावत्कथिताहर्त्तृदायकम्।
यदावेदयते राज्ञे तद्भाषेत्यभिधोयते ॥"
इति मिताक्षरायां व्यवहाराध्यायः ॥
अस्य विवरणं भाषाशब्दे द्रष्टव्यम् ॥

**भाषितं**, क्ली, (भाष्यते इति । भाष् + भावे क्तः ।)
वचनम् । इत्यमरः । १ । ६ । १ ॥ (यथा, मनौ
। ८ । २३ ।
"आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च ।
नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः ॥"
भाष्यते स्मेति । भाष् + कर्म्मणि क्तः ।) कथिते
त्रि ॥ (यथा, कामन्दकीये नीतिसारे । ५ । २४
।
"प्रविश्य सानुरागस्य चित्तं चित्तज्ञसम्मतः ।
समर्थयंश्च तत्पक्षं साधु भाषेत भाषितः ॥")

आभीरेषु तथाभीरी चाण्डाली
पुक्कसादिषु ॥
आभीरी शावरी चापि
काष्ठपत्रोपजीविषु ।
तथैवाङ्गारकारादौ पैशाची स्यात्
पिशाच-
वाक् ।
चेटीनामप्यनीचानामपि स्यात्
शौरसेनिका ॥
बालानां षण्डकानाञ्च
नीचग्रहविचारिणाम् ।
उन्मत्तानामातुराणां सैव स्यात्
संस्कृतं
क्वचित् ॥
ऐश्वर्य्येण प्रमत्तस्य
दारिद्र्योपस्कृतस्य च ।
भिक्षुबल्कधरादीनां प्राकृतं
संप्रयोजयेत् ॥
संस्कृतं संप्रयोक्तव्यं लिङ्गिनीषूत्तमासु
च ।
देवीमल्लिसुतावेश्यास्वपि
कैश्चित्तथोदितम् ॥
यद्देशो नीचपात्रस्तु तद्देशे तस्य
भाषितम् ।
कार्य्यतश्चोत्तमादीनां कार्य्यो
भाषाविपर्य्ययः ॥
योषित्सखीबालवेश्याकितवाप्सरसां
तथा ।
वैदग्ध्यार्थं प्रदातव्यं
संस्कृतञ्चान्तरान्तरा ॥
एषामुदाहरणान्याकरेषु बोद्धव्यानि ।
भाषा-
लक्षणानि भाषार्णवे । इति
साहित्यदर्पणे ६
परिच्छेदः ॥
अथ भाषापादः ।
तत्र भाषास्वरूपमाहतुः
कात्यायनबृहस्पती ।
"प्रतिज्ञादोषनिर्मुक्तं साध्यं
सत्कारणान्वितम् ।
पाण्डुलेखेन फलके ततः पत्रेऽभिलेखयेत्
॥
शोधयेत् पूर्ब्बपक्षन्तु यावन्नोत्तरदर्शनम् ।
उत्तरेणावरुद्धस्य निवृत्तं शोधनं भवेत् ॥
अन्यदुक्तं लिखेद्योऽन्यदर्थिप्रत्यर्थिनां
वचः ।
चौरवच्छासयेत्तन्तु धार्म्मिकः
पृथिवीपतिः ॥"
स्वभावोक्तमकृत्रिमम् । एतच्च
स्वरविशेषादिना
सुज्ञेयम् । अतएव याज्ञवल्क्यः ।
"छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः ।
भूतमप्यनुपन्यस्तं हीयते व्यवहारतः ॥"
भूतं तत्त्वार्थसम्बन्धम् । नारदः ।
"भूतं तत्त्वार्थसम्बन्धं प्रमादाभिहितं
छलम् ।
किन्तु राज्ञा विशेषेण स्वधर्म्ममभिरक्षता
॥
मनुष्यचित्तवैचित्र्यात् परीक्षा साध्वसाधु
वा ।
सर्व्वेष्वर्थविवादेषु वाक्छलेनावसीदति ॥
पशुस्त्रीभूम्यृणादाने शास्योऽप्यर्थान्न
हीयते ॥"
सर्व्वेष्वर्थविवादेषु प्रमादाभिधानेऽपि
नावसी-
दति । अत्रोदाहरणं पशुस्त्रीत्यादि । अर्थ-
विवादग्रहणान्मन्युकृतविवादेषु
प्रमादाभिधाने
प्रकृतार्थादप्यर्थाद्धीयत इति गम्यते ।
यथाह-
मनेन शिरसि पादेन ताडितः इत्यभिधाय
केवलं हस्तेन ताडितः इति वदन्न केवलं
दण्ड्यः
पराजीयते च । ततश्च त्वं मह्यमृणं
धारयसि
मत्त ऋणत्वेन गृहीततावद्धनकत्वादिति
भाषा-
शरीरम् । एतच्च संस्कृतदेशभाषान्यतरेण
यथा-
बोधं वक्तव्यं लेख्यं वा । मूर्खाणामपि
वादिप्रति-

**भाष्यं**, क्ली, (भाष्यते विवृततया वर्ण्यते इति ।
भाष + ण्यत् ।) चूर्णिः । इति स्वामी ॥ सूत्र-
विवरणग्रन्थः । तस्य लक्षणम् ।
"सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः
॥"
इति लिङ्गादिसंग्रहटीकायां भरतः ॥ सूत्रो-
क्तार्थप्रपञ्चकम् । इति हेमचन्द्रः ॥ (भाष्यते
अत्रेति । ण्यत् ।) गृहविशेषः । इति माध-
वीति मथुरेशः ॥ (भाष् + ण्यत् ।) कथ-
नीये त्रि ॥

**भाष्यकारः**, पुं, (भाष्यं चूर्णिं करोतीति । कृ +
"कर्म्मण्यण् ।" ३ । २ । १ । इत्यण् ।) महा-
भाष्यकर्त्ता मुनिः । तत्पर्य्यायः । गोनर्द्दीयः २
पतञ्जलिः ३ चूर्णिकृत् ४ । इति त्रिकाण्डशेषः
॥
"अहञ्च भाष्यकारश्च कुशाग्रीयधियायुभौ ।
नैव शब्दाम्बुधेः पारं किमन्ये जडबुद्धयः ॥"
इति दुर्गसिंहः ॥

**भास** ऋ ङ भासि । दीप्तौ । इति कविकल्प-
द्रुमः ॥ (भ्वा०-आत्म०-अक०-सेट् ।) ऋ

| | | |
|---|---|---|
| निश्चितं लोकसिद्धञ्च पक्षं पक्षविदो विदुः ॥<br>स्वल्पाक्षरः प्रभूतार्थो निःसन्दिग्धो निराकुलः ।<br>विरोधिकारणैर्मुक्तो विरोधिप्रतिरोधकः ॥<br>यदा त्वेवंविधः पक्षः कथितः पूर्ब्बवादिना ।<br>दद्यात्तत्पक्षसम्बद्धं प्रतिवादी तदोत्तरम् ॥<br>प्रतिज्ञा साध्याभिधायिका वाक् । तस्या दोषैः परस्परविरुद्धार्थपदादिभिस्त्यक्तं साध्यं साधना-<br>र्हाभिमतं पक्षं विदुः । अन्यथा प्रतिज्ञादोषेण साध्यदोषः स्यात् । अतएवोक्तम् । | वादितादर्शनात् । अतएवाध्यापनेऽपि तथोक्तं<br>विष्णुधर्म्मोत्तरे । | |

अवीभसत् अबभासत् । ङ भासते । इति दुर्गादासः ॥

**भास्**, स्त्री, (भासते इति । भास + "भ्राजभासधुर्व्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ।" ३ । २ । १७७ । इति क्विप् ।) प्रभा । अस्य शब्दस्य प्रथमान्तरूपं भाः । इत्यमरः । १ । ४ । ३४ ॥ मयूखः । इति मेदिनी । से, ७ ॥ इच्छा । इति धरणिः ॥

**भासः**, पुं, (भास्यते इति । भास + भावे घञ् ।) दीप्तिः । (यथा, महाभारते । ८ । ५८ । ३१ ।
"चन्द्रनक्षत्रभासैश्च वदनैश्चारुकुण्डलैः ।")
(भासन्ते गावोऽत्र । भास + आधारे घञ् ।) गोष्ठम् । (भासते दीप्यते इति । भास् + कर्त्तरि अच् ।) कुक्कुटः । गृध्रः । इति विश्वः । स्वनामख्यातपक्षिविशेषः । तत्पर्य्यायः । शकुन्तः २ । इति हेमचन्द्रः ॥ (यथा, महाभारते । १ । १३४ । ७० ।
"कृत्रिमं भासमारोप्य वृक्षाग्रे शिल्पिभिः कृतम् ।
अभिज्ञातं कुमाराणां लक्ष्यभूतमुपादिशत् ॥"
पर्व्वतभेदः । यथा, महाभारते । १४ । ४३ । ४ ॥
"हिमवान् पारिपात्रश्च सह्यो बिन्ध्यस्त्रिकूटवान् ।

**भास्करः**, पुं, (भाः करोतीति । कृ + "दिवाविभेति । ३ । २ । २१ । इति टः ।) सूर्य्यः । (यथा, मनौ । २ । ४८ ।
"प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम् ।
प्रदक्षिणं परीत्याग्निं चरेद्भैक्ष्यं यथाविधि ॥")
अग्निः । इति मेदिनी । रे, १९१ ॥ वीरः । इति घरणिः ॥ अर्कवृक्षः । इति राजनिर्घण्टः ॥ भास्कराचार्य्यः । स च सिद्धान्तशिरोमण्यादिज्योतिर्ग्रन्थकर्त्ता ॥

**भास्करप्रियः**, पुं, (भास्करस्य प्रियः ।) पद्मरागमणिः । इति केचित् । चुणि इति भाषा ॥

**भास्करेष्टा**, स्त्री, (भास्करस्य इष्टा ।) आदित्यभक्ता । इति राजनिर्घण्टः ॥

**भास्वरं**, क्ली, (भासते इति । भास् + "स्थेशभासपिसकसो वरच् । ३ । २ । १७५ । इति वरच् ।) कुष्ठौषधम् । इति शब्दचन्द्रिका ॥

**भास्वरः**, पुं, (भासते इति । भास् + "स्थेशभासपिसकसो वरच् । ३ । २ । १७५ । इति वरच् ।) दिनम् । इति राजनिर्घण्टः ॥ सूर्य्यः । इति केचित् । दीप्तियुक्ते, त्रि । इति मुग्धबोधव्याकरणम् ॥ (यथा, महाभारते । १ । ११ । ११ ।
"स डौण्डुभं परित्यज्य रूपं विप्रर्षभस्तदा ।

दातारं दीनः । लोभाद्ददतीत्यर्थः । भिक्षते जनः । क्लिश्यतीत्यर्थः । इति दुर्गादासः ॥

**भिक्षा**, स्त्री, (भिक्ष याचनादौ + "गुरोश्च हलः ।" ३ । ३ । १०२ । इति अः । ततष्टाप् ।) लोभयाचनम् । चाओया इति मागा इति च भाषा । तत्पर्य्यायः । याच्ञा २ अर्थना ३ अर्द्दना ४ । इत्यमरः । ३ । २ । ६ ॥ प्रार्थनम् ५ याचना ६ । इति शब्दरत्नावली ॥ (तदुक्तम् ।
"बाणिज्ये वसते लक्ष्मीस्तदर्द्धं कृषिकर्म्मणि ।
तदर्द्धं राजसेवायां भिक्षायां नैव नैव च ॥")
सेवा । भृतिः । इति नानार्थे अमरः ॥ भिक्षितवस्तु । इति मेदिनी ॥ (सा च ग्रासप्रमाणा । ग्रासमात्रा भवेद्भिक्षेति शातातपवचनात् ॥ यथा, मनुः । ३ । ९४ ।
"कृत्वैतद्बलिकर्म्मैवमतिथिं पूर्ब्बमाशयेत् ।
भिक्षाञ्च भिक्षवे दद्याद्विधिवद् ब्रह्मचारिणे ॥")
उपनीतस्य भिक्षाविधिर्यथा, --
"भिक्षामाहृत्य शिष्टानां गृहेभ्यः प्रयतोऽन्वहम् ।
निवेद्य गुरवेऽश्नीयाद्वाग्यतस्तदनुज्ञया ॥
भवत्पूर्ब्बञ्चरेद्भैक्षमुपनीतो द्विजोत्तमः ।
भवन्मध्यन्तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥
मातरं वा स्वसारं वा मातुर्व्वा भगिनीं निजाम् ।
भिक्षेत भिक्षां प्रथमं या चैनं नावमानयेत् ॥
सजातीयगृहेष्वेव सार्व्ववर्णिकमेव वा ।
भैक्षस्याचरणं प्रोक्तं पतितादिविवर्जितम् ॥
वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्म्मसु ।
ब्रह्मचार्य्याहरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहम् ॥
गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु ।
अलाभे त्वन्यगेहानां पूर्ब्बं पूर्ब्बं विवर्जयेत् ॥
सर्व्वद्वारि चरेद्भैक्षं पूर्ब्बोक्तानामसम्भवे ।
नियम्य प्रयतो वाचं दिशन्त्वनवलोकयन् ॥
समाहृत्य तु तद्भैक्षं यावदर्थममायया ।
भुञ्जीत प्रयतो नित्यं वाग्यतोऽनन्यमानसः ॥
भैक्षेण वर्त्तयेन्नित्यं नैकान्नादी भवेद्व्रती ।
भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता ॥"
इति कूर्म्मपुराणे उपविभागे १२ अध्यायः ॥ * ॥

श्वेतो नीलश्च भासश्च कोष्ठवांश्चैव
पर्व्वतः ॥”)
(स्त्रियां ङीप् । प्राधायाः कन्या । यथा,
महा-
भारते । १ । ६५ । ४६ ।
“अनवद्यां मनुं वंशामसुरां मार्गणप्रियाम्
।
अनूपां सुभगां भासीमिति प्राधा
व्यजायत ॥”)

**भासः**, [स्,] क्ली, (भास् + आसस् ।) दीप्तिः ।
इति द्विरूपकोषः ॥

**भासन्तः**, पुं, (भासते इति । भास् + तॄभूवहि-
वसिभासीति ।” उणा० ३ । १२८ ।
इति झच् ।)
सूर्य्यः । चन्द्रः । इत्युणादिकोषः ॥
भासपक्षी ॥
इति मेदिनी । ते, १३९ ॥ नक्षत्रम् ।
इति हेमचन्द्रः ॥

**भासन्तः**, त्रि, (भासते इति । भास + झच् ।)
सुन्दराकारः । इति मेदिनी । ते, १३९
॥

**भासन्ती**, स्त्री, (भासन्त । गौरादित्वात् ङीष् ।)
नक्षत्रम् । इत्युणादिकोषः ॥

**भासुः**, पुं, (भास् + बाहुलकादुन् ।) सूर्य्यः ।
इति त्रिकाण्डशेषः ॥

**भासुरं**, क्ली, (भासते इति । भास् + “भञ्जभास-
मिदो घुरच् ।” ३ । २ । १६१ । इति
घुरच् ।)
कुष्ठौषधम् । इति जटाधरः ॥

**भासुरः**, पुं, (भास + घुरच् ।) स्फटिकः । इति
त्रिकाण्डशेषः ॥ वीरः । इति धरणिः ।
कर्त्तरि
घुरप्रत्ययनिष्पन्नत्वेन दीप्तियुक्ते, त्रि ॥
(यथा,
किरातार्ज्जुनीये । ५ । ५ ।
“मणिमयूखचयांशुकभासुराः
सुरवधूपरिभुक्तलतागृहाः ॥”)
स्वं रूपं भास्वरं भूयः प्रतिपेदे महायशाः
॥”
सूर्य्यस्यानुचरविशेषः । स च भगवता
सूर्य्येण
तारकासुरवधसाहाय्यार्थंस्कन्दाय
दत्तः । यथा,
महाभारते । ९ । ४५ । ३० ।
“सुभ्राजो भास्वरश्चैव यौ तौ
सूर्य्यानुयायिनौ ।
तौ सूर्य्यः कार्त्तिकेयाय ददौ प्रीतः
प्रतापवान् ॥”)

**भास्वान्**, [त्] पुं, (भासः सन्त्यस्येति । भास् +
“तदस्यास्त्यस्मिन्निति मतुप् ।” ५ । २
। ९४ । इति
मतुप् । मस्य वः ।) सूर्य्यः । (यथा,
मार्क-
ण्डेयपुराणे । १०१ । १६ ।
“यथा चाराधितो देव्या सोऽदित्या
कश्यपेन च ।
आराधितेन चोक्तं यत् तेन देवेन
भास्वता ॥”)
अर्कवृक्षः । इत्यमरः ॥ दीप्तिः । इति
हेमचन्द्रः ॥
वीरः । इति मेदिनी ॥ दीप्तिविशिष्टे, त्रि
॥
(यथा, कुमारसम्भवे । १ । २ ।
“यं सर्व्वशैलाः परिकल्प्य वत्सं
मेरौ स्थिते दोग्धरि दोहदक्षे ।
भास्वन्ति रत्नानि महौषधीश्च
पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥”
प्रकाशकः । यथा, मनौ । १ । ७७ ।
“वायोरपि विकुर्व्वाणाद्विरोचिष्णु
तमोनुदम् ।
ज्योतिरुत्पद्यते भास्वत्तद्रूपगुणमुच्यते
॥”
“भास्वत् प्रकाशकम् ।” इति तट्टीकायां
कुल्लूक-
भट्टः ॥)

**भिक्ष**, ङ लाभार्थलोभोक्तिक्लिशि । इति कवि-
सायं प्रातर्भिक्षाटनाभावो यथा, --
“कारयित्वा तु कर्म्माणि कारुम्पश्चान्न वञ्चयेत्
।
सायं प्रातर्गृहद्वारान् भिक्षार्थं नावघट्टयेत् ॥”
इति तत्रैव १५ अध्यायः ॥ * ॥
सा त्रिविधा यथा, --
“हन्तकारमथाग्रं वा भिक्षां वा शक्तितो द्विजः ।
दद्यादतिथये नित्यं बुद्ध्वैतं परमेश्वरम् ॥
भिक्षामाहुर्ग्रासमात्रमग्रन्तस्माच्चतुर्गुणम् ।
पुष्कलं हन्तकारान्तं तच्चतुर्गुणमुच्यत ॥
गोदोहमात्रं कालं वै प्रतीक्षेदतिथिः स्वयम् ।
अभ्यागतान् यथाशक्ति पूजयेदतिथिं यथा ॥
भिक्षां वै भिक्षवे दद्याद्विधिवद्ब्रह्मचारिणे ।
दद्यादन्नं यथाशक्ति त्वर्थिभ्यो लोभवर्जितः ॥
सर्व्वेषामप्यलाभे तु अन्नं गोभ्यो निवेदयेत् ॥”
इति तत्रैव १७ अध्यायः ॥

| | | |
|---|---|---|
| **भासुरपुष्पा**, स्त्री, (भासुराणि पुष्पाण्यस्याः । टाप् ।) वृश्चिकाली । इति राजनिर्घण्टः ॥<br>**भास्करं**, क्ली, (भाः करोतीति । कृ + “दिवा-विभानिशाप्रभा भास्करान्तानन्तादीति ।” ३ । २ । २१ । इति टः ।) सुवर्णम् । इति राजनिर्घण्टः ॥ | कल्पद्रुमः ॥ (भ्वा०-आत्म०-याचने द्विक०-लाभे लोभोक्तौ च सक०-क्लिशि अक०-सेट् ।) अर्थो याचनम् । लोभादुक्तिर्लोभोक्तिः । ङ, भिक्षते भूमिं नृपात् पण्डितः । लभत इत्यर्थः । भिक्षते दातारं धनं भिक्षुः । याचत इत्यर्थः । भिक्षते | |

**भिक्षाकः**, पुं, (भिक्षते इति । भिक्ष + "जल्प-

भिक्षकुट्टलुण्टवृङः षाकन् ।" ३ । २ । १५५ । इति
षाकन् ।) भिक्षुकः । इति सिद्धान्तकौमुदी ॥

**भिक्षाकी**, स्त्री, (भिक्षाक + षित्वात् ङीष् ।)

भिक्षुकी । इति मुग्धबोधव्याकरणम् ॥

**भिक्षाचरः**, पुं, स्त्री, (भिक्षां चरतीति । भिक्षा +

चर + "भिक्षासेनादायेषु च ।" ३ । २ । १७ । इति
टः ।) भिक्षुकः । इति सिद्धान्तकोमुदी ॥
(स्वनामख्यातो भोजनरपतेः पुत्त्रः । यथा,
राजतरङ्गिण्याम् । ८ । १७ ।
"राज्ञ्यां विभवमत्यां यं भोजो हर्षनृपात्मजः ।
जातं मृतद्वित्रिपुत्त्रानन्तरं गुरुभिः शिशुम् ।
आयुष्कामैस्तमाबद्ध्वाभव्यभिक्षाचराभिधम् ॥")

**भिक्षाटनं**, क्ली, (भिक्षार्थमटनं गमनम् ।)

भिक्षार्थगमनम् । यथा, --
"अर्द्धं दानववैरिणा गिरिजयाप्यर्द्धं हरस्याहृतं
देवेत्थं जगतीतले स्मरहराभावः समुन्मीलति ।
गङ्गा वारिधिमम्बरं शशिकला नागाधिपः
क्ष्मातलं
सर्व्वज्ञत्वमधीश्वरत्वमगमत् त्वां माञ्च भिक्षा-
टनम् ॥"
इत्युद्भटः ॥

**भिक्षाशित्वं**, क्ली, (भिक्षाशिनो भिक्षुकस्य भावः ।

भिक्षाशिन् + त्व ।) पैशुन्यम् । इति हारा-
वली ॥

**भिक्षाशी**, [न्] त्रि, (भिक्षां अश्नातीति । अश +

णिनिः ।) भिक्षुकः । इत्युणादिकोषः ॥ यथा, --
"भिक्षाशी विचरेद्ग्रामं वन्यैर्यदि न जीवति ॥"
इति प्रायश्चित्तविवेकः ॥

**भिक्षुः**, पुं, (भिक्षणशीलः । भिक्ष याचने +

"सनाशंसभिक्ष उः ।" ३ । २ । १६८ । इति उः ।)
ब्रह्मचार्य्याद्याश्रमचतुष्टयान्तर्गतचतुर्थाश्रमी ।
आश्रमशब्दोऽयं धर्म्मिपरो धर्म्मपरश्च । इति
भरतः ॥ तत्पर्य्यायः । परिव्राट् २ कर्म्मन्दी ३
सम्भवः ५ चतुष्पदः ६ चतुःपुण्डः ७
सुशाकः ८
अस्रपत्रकः ९ करपर्णः १० वृत्तबीजः
११ ।
अस्या गुणाः । अम्लरसत्वम् ।
उष्णत्वम् ।
ग्राहित्वम् । रुचिकरत्वञ्च । इति
राजनिर्घण्टः ॥

**भिण्डीतकः**, पुं, (भिण्डी सती तकति हसतीति ।

तक् + अच् ।) भिण्डावृक्षः । इति राज-
निर्घण्टः ॥

**भित्तं**, क्ली, (भिद्यते स्मेति । भिद् + क्तः ।
"भित्तं

शकलम् ।" ८ । २ । ५९ । इति
निष्ठातकारस्य
नत्वाभावो निपात्यते ।) खण्डम् ।
इत्यमरः ।
१ । ३ । १६ ॥

**भित्तिः**, स्त्री, (भिद्यते इति । भिद् + क्तिन् ।)

गृहादेर्मृदिष्टकादिमयी वृतिः । काँथ
इति भित्
इति च ख्याता । तत्पर्य्यायः । कूड्यम्
२ । इत्य-
मरः । २ । २ । ४ ॥ भित्तिका ३
कुड्यम् ४
कुड्यकम् ५ । इति शब्दरत्नावली ॥
(यथा,
विश्वकर्म्मप्रकाशे । पञ्चमाध्याये ।
"मानेनानेन विस्तारो भित्तीनान्तु
विधीयते ।
पादे पञ्चगुणं कृत्वा भित्तीनामुच्छ्र्यो
भवेत् ॥")
प्रभेदः । सम्बिभागः । अवकाशः । इति
विश्वः ।
प्रदेशः । इति शब्दरत्नावली ॥ (यथा,
रघौ । ५ । ४३ ।
"अथोपरिष्टाद् भ्रमरैर्भ्रमद्भिः
प्राक् सूचितान्तःसलिलप्रवेशः ।

तस्य स्वरूपं गदतो मम श्रोतुं
नृपार्हसि ॥
पुत्त्रद्रव्यकलत्रेषु त्यक्तस्नेहो
नराधिप ! ।
चतुर्थमाश्रमस्थानं
गच्छेन्निर्द्धूतमत्सरः ॥
त्रैवर्णिकांस्त्यजेत्
सर्व्वानारम्भानवनीपते ! ।
मित्रादिषु समो मैत्रः समस्तेष्वेव
जन्तुषु ॥
जरायुजाण्डजादीनां वाङ्मनःकर्म्मभिः
क्वचित् ।
युक्तः कुर्व्वीत न द्रोहं सर्व्वसङ्गांश्च
वर्जयेत् ॥
एकरात्रस्थितिर्ग्रामे पञ्चरात्रस्थितिः
पुरे ।
तथा तिष्ठेद्यथा प्रीतिर्द्वेषो वा नास्य
जायते ॥
प्राणयात्रानिमित्तञ्च व्यङ्गारे
भुक्तवज्जने ।
काले प्रशस्तवर्णानां भिक्षार्थे पर्य्यटेद्
गृहान् ॥
कामः क्रोधस्तथा
दर्पमोहलोभादयश्च ये ।
तांस्तु दोषान् परित्यज्य
परिव्राण्णिर्म्ममो भवेत् ॥
अभयं सर्व्वसत्त्वेभ्यो दत्त्वा यश्चरते
मुनिः ।
न तस्य सर्व्वभूतेभ्यो भयमुत्पद्यते
क्वचित् ॥
कृत्वाग्निहोत्रं स्वशरीरसंस्थं
शारीरमग्निञ्च मुखे जुहोति ।
विप्रस्तु भैक्षोपगतैर्हविर्भि-
श्चिताग्निना स व्रजति स्म लोकान् ॥
मोक्षाश्रमं यश्चरते यथोक्तं
शुचिः सुसङ्कल्पितबुद्धियुक्तिः ।
अनिन्धनं ज्योतिरिव प्रशान्तं
स ब्रह्मलोकं श्रयति द्विजातिः ॥"

पाराशरी ४ मस्करी ५ इत्यमरः । २ । ७ । ४२ ॥
परिव्राजकः ६ पराशरी ७ व्रजकः ८ । इति
शब्दरत्नावली ॥ तस्य धर्म्मो यथा, --
"भिक्षोर्धर्म्मं प्रवक्ष्यामि तन्निबोधत सत्तमाः ।
वनाद्गृहाद्वा कृत्वेष्टिं सर्व्ववेदसदक्षिणाम् ॥
प्राजापत्यां तदन्ते तु अग्निमारोप्य चात्मनि ।
सर्व्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः ॥
सर्व्वारामं परिव्रज्य भिक्षार्थी ग्राममाश्रयेत् ।
अप्रमत्तश्चरेद्भैक्ष्यं सायाह्ने नातिलक्षितः ॥
रहिते भिक्षुकैर्ग्रामे यात्रामात्रमलोलुपः ।
भवेत् परमहंसो वा एकदण्डो यमादिकृत् ॥
सिद्धयोगस्त्यजन् देहममृतत्वमिहाप्नुयात्।
योगमभ्यस्य मितभुक् परां सिद्धिमवाप्नुयात् ॥
दातातिथिप्रियो ज्ञानी गृही श्राद्धेऽपि मुच्यते ।"
इति गारुडे १०३ अध्यायः ॥ * ॥
अपि च ।
"चतुर्थश्चाश्रमो भिक्षोः प्रोच्यते यो मनी-
षिभिः ।
इति बिष्णुपुराणे ३ अंशे ९ अध्यायः
॥ * ॥
बुद्धभेदः । इति जटाधरः ॥
श्रावणीक्षुपः ।
इति राजनिर्घण्टः ॥ कोकिलाक्षः ।
इति भाव-
प्रकाशः ॥

**भिक्षुकः**, पुं, स्त्री, (भिक्षुरेव । भिक्षु + स्वार्थे

कन् । यद्वा, भिक्षते इति । भिक्ष +
उक ।)
भिक्षोपजीवी । तत्पर्य्यायः । मार्गणः
२ याच-
नकः ३ वनीयकः ४ याचकः ५ ।
इति
जटाधरः ॥ अर्थी ६ । इत्यमरः ॥
(यथा,
मनुः । ३ । २४३ ।
"ब्राह्मणं भिक्षुकं वापि
भोजनार्थमुपस्थितम् ।
ब्राह्मणैरभ्यनुज्ञातः शक्तितः
प्रतिपूजयेत् ॥"
पारिभाषिकभिक्षुका यथा, अत्रिः ।
"ब्रह्मचारी यतिश्चैव विद्यार्थी
गुरुपोषकः ।
अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः
स्मृताः ॥")

**भिक्षुसंघाटी**, स्त्री, (भिक्षुं संघटते इति । भिक्षु

+ सम् + घट + अण् । गौरादित्वात्
ङीष् ।)
चीवरम् । इति हेमचन्द्रः ॥ यथा,
सुश्रुते
उत्तरतन्त्रे ३३ अध्याये ।
"पुरीषं कौक्कुटं
केशांश्चर्म्मसर्पत्वचन्तथा ।
जीर्णञ्च भिक्षुसं घाटीं
धूपनायोपकल्पयेत् ॥")

**भिण्डः**, पुं, (भण्यते इति । भण् + डः ।
पृषोदरा-

दित्वात् साधुः ।) भिण्डाक्षुपः । इति
राज-
निर्धौतदानामलगण्डभित्तिः
र्वन्यः सरित्तो गज उन्ममज्ज ॥")

**भित्तिका**, स्त्री, (भिद्यते भिनत्ति वेति ।

भिदिर विदारणे + "कृतिभिदिलतिभ्यः
कित् ।"
उणा० ३ । १४७ । इति तिकन् ।
कित् स्यात् ।)
कुड्यम् । इति शब्दरत्नावली ॥ पल्ली ।
इति
हेमचन्द्रः ॥

**भित्तिचौरः**, पुं, (चोरयतीति । चुर + अच् ।

चौर एव स्वार्थे अण् । चौरः । भित्त्या
कुड्यादि-
भेदेन चौरः ।) चौरविशेषः । सिँदाल
चोर
इति भाषा । तत्पर्य्यायः । खानिनः २
कूड्य-
च्छित् ३ । इति शब्दरत्नावली ॥

**भित्तिपातनः**, पुं, (पातयतीति । पत + णिच् ।

कर्त्तरि ल्युः । भित्तीनां पातनः ।)
महामूषकः ।
इति राजनिर्घण्टः ॥

**भित्**, [द्] स्त्री, (भिद्यते इति । भिद् + "सत्

सूद्विषद्रुहदुहयुजविदभिदेति ।" ३ । २
। ६१ ।
इति क्विप् ।) प्रभेदः । इति जटाधरः ॥
(भिनत्तीति । भिद् + तच्छीलादिषु
"अन्यतो-
ऽपि दृश्यते ।" इति क्विप् ।) भेदकर्त्तरि
त्रि ॥
(यथा, ऋग्वेदे । ७ । १७४ । ८ ।
"भिनत्पुरो न भिदो अदेवीर्न नमो
वधरदेवस्य
पीयोः ॥")

**भिद** इर् औ ञ ध भिदि । इति कविकल्पद्रुमः ॥

(रुधा०-उभ०-सक०-अनिट् ।) भित्
कियद-

| | | |
|---|---|---|
| | निर्घण्टः ॥<br>**भिण्डकः**, (भिण्ड । स्वार्थे कन् ।) भिण्डाक्षुपः ।<br>इति राजनिर्घण्टः ॥<br>**भिण्डा**, स्त्री, (भिण्ड + अजादित्वात् टाप् ।)<br>क्षुपविशेषः । भिण्डी इति ख्याता ।<br>तत्पर्य्यायः ।<br>भिण्डीतकः २ भिण्डः ३ भिण्डकः ४ क्षेत्र- | वयवविदारणम् । ञ ध भिनत्ति भिन्ते कूलं<br>नदी । औ भेत्ता । इर् अभिदत्<br>अभैत्सीत् ।<br>इति दुर्गादासः ॥ |

**भिदकं**, क्ली, (भिनत्तीति । भिद् + “बहुलमन्य-
त्रापि ।” उणा० २ । ३७ । इति क्वुन् ।) वज्रम् ।
खड्गे, पुं । इत्युणादिकोषः ॥

**भिदा**, स्त्री, (भेदनमिति भिद् + “षिद्भिदादि-
भ्योऽङ् ।” ३ । ३ । १०४ । इति । अङ् । टाप् ।)
वस्त्रादेर्द्धिदारणम् । चेरा इति भाषा । तत्-
पर्य्यायः । विदरः २ स्फुटनम् ३ । इत्यमरः ।
३ । २ । ५ ॥ धन्याकम् । इति शब्दचन्द्रिका ॥ भेदः ।
यथा । प्रायश्चित्तस्य पूर्ब्बाहकृत्यं बाल्यभिदा
तथा । इति प्रायश्चित्ततत्त्वम् ॥

**भिदिः**, पुं, (भिनत्तीति । भिद + “कृगशृपृकुटि-
भिदिच्छिदिभ्यश्च ।” उणा० ४ । १४२ । इति
इः । स च कित् ।) वज्रम् । इति द्विरूप-
कोषः ॥

**भिदिरं**, क्ली, (भिनत्ति विदारयतीति । भिद्
+ “इषिमदिमुदिखिदिच्छिदिभिदिमन्दीति ।”
उणा० १ । ५२ । इति किरच् ।) वज्रम् ।
इत्यमरटीकायां भरतः त्रिकाण्डशेषश्च ॥

**भिदुः**, पुं, (भिनित्ति विदारयतीति । भिद् +
“पृभिदिव्यधिगृधिधृषिदृशिभ्यः ।” उणा० १ ।
२४ । इति कुः ।) वज्रम् । इति
त्रिकाण्डशेषः ॥

**भिदुरं**, क्ली, (भिनत्तीति । भिद् + “विदिभिदि-
च्छिदेः कुरच् ।” ३ । २ । १६२ । इति । कुरच् ।)
वज्रम् । इत्यमरः । १ । १ । ५० ॥
प्लक्षवृक्षे पुं ।
इति राजनिर्घण्टः ॥

सङ्गतः । अन्यः । फुल्लः । इति मेदिनी । ने, १४ ॥
क्षतरोगविशेषः । तल्लक्षणं यथा, --
“शक्तिकुन्तेषु खड्गाग्रविषाणैराशयो हतः ।
यत्किञ्चित् प्रस्रवेत्तद्धि भिन्नमित्यभिधीयते ॥”
आशयः कोष्ठः । तस्यौषधं यथा, --
“छिन्ने भिन्ने तथा विद्धे क्षते वासृगतिस्रवेत् ।
रक्तक्षयात्तत्र रुजः करोति पवनो भृशम् ॥
स्नेहपानपरीषेकलेपांस्तत्रोपनाहनम् ।
कुर्व्वीत स्नेहवस्तिञ्च मारुतघ्नौषधैर्भिषक् ॥
खड्गादिच्छिन्नगात्रस्य तत्कालं पूरितो व्रणः ।
गाङ्गेरुकीमूलरसैः सद्यः स्याद्गतवेदनः ॥
कषायमधुराः शीताः क्रियाः सर्व्वाः प्रयोजयेत् ।
सद्यो ब्रणानां सप्ताहात् पश्चात् पूर्ब्बोक्त-
माचरेत् ॥
आमाशयस्थे रुधिरे विदध्याद्वमनं नरः ।
तस्मिन् पक्वाशयस्थे तु गृह्णीयात् सविरेचनम् ॥
क्वाथो वंशत्वगेरण्डश्वदंष्ट्राश्मभिदा कृतः ।
हिङ्गुसैन्धवसंयुक्तः कोष्टस्थं स्रावयेदसृक् ॥
यवकोलकुलत्थानां निःस्नेहेन रसेन च ।
भुञ्जीतान्नं यवागूं वा पिबेत् सैन्धवसंयुताम् ॥
जातीनिम्बपठोलपत्रकटुक्कादार्व्वीनिशाशारिवा
मञ्जिष्ठाभयतिक्ततुत्थमधुकैर्नक्ताह्वबीजैः समैः ।
सर्पिःसिद्धमनेन सूक्ष्मवदना मर्म्माश्रिताः स्राविणो
गम्भीराः सरुजो व्रणाः सगतिकाः शुध्यन्ति
रोहन्ति च ॥
वृद्धवैद्योपदेशेन पारम्पर्य्योपदेशतः ।
जातीघृते तु संसिद्धे क्षेप्तव्यं सिक्थकं बुधैः ॥”
जात्यादिघृतम् । इति भावप्रकाशः ॥ * ॥
(अथोपाङ्गचिकित्सा ।
“छिन्नं भिन्नं तथा भग्नं क्षतं पिच्छितमेवच ॥
दग्धन्तेषां प्रतीकारः प्रोक्तश्चोपाङ्गसंज्ञकः ॥”
इति हारीते प्रथमे स्थाने द्वितीयेऽध्याये ॥)

**भिन्नकः**, पुं, (भिन्न + संज्ञायां कन् ।) बौद्धः । यथा,
“भिन्नकः क्षपणोऽर्ह्णीको बौद्धो वैनायिकः
स्मृतः ॥”
इति त्रिकाण्डशेषः ॥
(भिन्न + “अनत्यन्तगतौ क्तात् ।” ५ । ४ । ४ ।

**भिरिण्टिका**, स्त्री, श्वेतगुञ्जा । इति
राजनिर्घण्टः ॥

**भिल्ल**, पुं, (भेलयति भिलत्तीति वा । भिल् +
बाहुलकात् । लक् ।)
म्लेच्छजातिविशेषः । भील
इति भाषा । यथा, हेमचन्द्रे ।
“माला भिल्लाः किराताश्च सर्व्वऽपि म्लेच्छ-
जातयः ॥”
अपि च ।
“रजकश्चर्म्मकारश्च नटो वरुड एव च ।
कैवर्त्तमेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः ॥”
इति प्रायश्चित्ततत्त्वम् ॥
स च ब्राह्मणकन्यायां तीवराज्जातः । यथा, --
“पुलिन्दमेदभिल्लाश्च पुल्लो मल्लश्च धावकः ।
कुन्दकारो डोखलो वा मृतपो हस्तिपस्तथा ।
एते वै तीवराज्जाताः कन्यायां ब्राह्मणस्य च ॥”
इति पराशरपद्धतिः ॥

**भिल्लगवी**, स्त्री, (भिल्लानां गवी ।) गवयी । इति
राजनिर्घण्टः ॥

**भिल्लतरुः**, पुं, (भिल्लप्रियस्तरुः । लोध्रपुष्पेण हि
भिल्लादयोऽङ्गभूषणादिकं कुर्व्वन्तीति प्रसिद्धे-
रस्य तथात्वम् ।) लोध्रः । इति
राजनिर्घण्टः ॥

**भिल्ली**, स्त्री, (भिल्ल + ङीप् । भिल्लानां प्रियत्वा-
दस्यास्तथात्वम् ।) लोध्रः । इति
राजनिर्घण्टः ॥

**भिषृ**, रुग्जये । सौत्रधातुरयम् । इति कविकल्प-

**भिद्यः**, पुं, (भिनत्ति कूलमिति । भिद् + "भिद्यो

द्ध्यौ नदे ।" ३ । १ । ११५ । इति क्यप् । निपा-

तितश्च ।) नदः । इति हेमचन्द्रः ॥ मुग्धबोध-

व्याकरणञ्च ॥ (यथा, भट्टौ । ६ । ५९ ।

"समुत्तरन्तावव्यथ्यौ नदान् भिद्योद्ध्यसन्निभान् ।

सिध्यतारामिव ख्यातां शवरीमापतुर्व्वने ॥")

**भिद्रः**, पुं, क्ली, (भिनत्तीति । भिद् "स्फायितञ्चि

वञ्चिशकिक्षयिक्षुदिसृपितृपीति ॥" उणा० ३ ।

१३ । इति रक् ।) वज्रम् । इति त्रिकाण्डशेषः

उणादिकोषश्च ॥

**भिन्दिपालः**, पुं, (भिदि + इन् । भिन्दिं विदारणं

पालयतोति पालि + अण् ।) हस्तप्रमाण-

काण्डः । नालिकास्त्रमिति ख्यातम् । इति

भरतः ॥ हस्तक्षेप्यलगुडः । इति स्वामी ॥

तत्पर्य्यायः । सृगः २ । इत्यमरः । २ । ८ । ९१ ॥

(यथा, वैशम्पायनसंहितायाम् । ३ ।

"भिन्दिपालस्तु वक्राङ्गो नम्रशीर्षो बृहच्छिराः ।

हस्तमात्रोत्सेधयुक्तः करसम्मितमण्डलः ॥"

भिण्डिबालः भिन्दिवालश्चापि इत्येवं पाठद्वयं

दृश्यते ।)

**भिन्नः**, त्रि, (भिद्यते स्मेति । भिद् + क्तः ।) भेद-

विशिष्टः । भाङ्गा इति भाषा । तत्पर्य्यायः ।

दारितः २ । भेदितः ३ । इत्यमरः । ३ । १ । १०० ॥

विदारितः ४ । इति शब्दरत्नावली ॥ (यथा,

हरिवंशे । भविष्यपर्व्वणि । ५३ । १६ ।

"भ्रान्तमुद्भ्रान्तमाविद्धं प्रविद्धं बहुनिःसृतम् ।

इति कन् । ईषद् भिन्ने, त्रि ।)

**भिन्नगात्रिका**, स्त्री, (भिन्नं गात्रमस्याः । कप् ।

टाप् । अत इत्वम् ।) कर्कटी । इति शब्द-

चन्द्रिका ॥

**भिन्नभिन्नात्मा**, [न्] पुं, (भिन्नभिन्नो भेदयुक्त आत्मा

यस्य ।) चणकः । इति शब्दचन्द्रिका ॥

**भिन्नयोजनी**, स्त्री, (भिन्नं योजयतीति । युज् +

णिच् + णिनिः । ङीप् ।) पाषाणभेदकवृक्षः ।

इति भावप्रकाशः ॥

**भिन्नार्थकः**, त्रि, (भिन्नोऽर्थो यस्य । कप् ।)

अन्यः । इत्यमरः । ३ । १ । ८२ ॥

**भिया**, स्त्री, (भीयते इति । भी + "षिद्भिदा-

दिभ्योऽङ् ।" ३ । ३ । १०४ । इति अङ् । इयङ् ।

टाप् ।) भयम् । इति हेमचन्द्रः । २ । ३०१ ॥

द्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) भिषक्

भेषजं भेषति । इति दुर्गादासः ॥

**भिषक्**, [ज्] बिभेति रोगो यस्मादिति । भीलि

भीत्याम् + "भियः षुक् ह्रस्वश्च ।" उणा० १ ।

१३७ । इति अजिः षुगागमो ह्रस्वत्वञ्च ।)

वैद्यः । इत्यमरः । २ । ६ । ५७ ॥ (अस्य

प्राशस्त्यादिकं यथा, --

"भिषग्बुभूषुर्मतिमान् अतः स्वगुणसम्पदि ।

परं प्रयत्नमातिष्ठेत् प्राणदः स्याद् यथा नृणाम् ॥

तदेव युक्तं भैषज्यं यदारोग्याय कल्प्यते ।

स चैव भिषजां श्रेष्ठो रोगेभ्यो यः प्रमोचयेत् ॥

सम्यक् प्रयोगं सर्व्वेषां सिद्धिराख्यातिकर्म्मणाम् ॥

सिद्धिराख्यातिसर्व्वैश्च गुणैर्युक्तं भिषक्तमम् ॥"

इति चरके सूत्रस्थाने प्रथमेऽध्याये ॥

"एतदवश्यमध्येयमधीत्य च कर्म्माप्यवश्यमुपा-

सितव्यमुभयज्ञो हि भिषग्राजार्हो भवति ॥"

यस्तु केवलशास्त्रज्ञः कर्म्मस्वपरिनिष्ठितः ।

स मुह्यत्यातुरम्प्राप्य प्राप्य भीरुरिवाहवम् ॥

यस्तु कर्म्मसु निष्णातो धाष्टर्याच्छास्त्रबहिष्कृतः ।

स सत्सु पूजां नाप्नोति वधञ्चार्हति राजतः ॥

उभावेतावनिपुणावसमर्थौ स्वकर्म्मणि ।

| | | |
|---|---|---|
| आकरं विकरं भिन्नं निर्मर्यादममानुषम् ॥”) | | अर्द्धवेदधरावेतावेकपक्षाविव द्विजौ ॥<br>ओषध्योऽमृतकल्पास्तु शस्त्राशनिविषोपमाः ।<br>भवन्त्यज्ञैरुपहृतास्तस्मादेतौ विवर्ज्जयेत् ॥<br>छेद्यादिष्वनभिज्ञो यः स्नेहादिषु च कर्म्मसु ।<br>स निहन्ति जनं लोभात् कुवैद्यो नृपदोषतः ॥<br>यस्तूभयज्ञो मतिमान् स समर्थोऽर्थसाधने ।<br>आहवे कर्म्मनिर्वोढुं द्विचक्रः स्यन्दनो यथा ॥”<br>इति सुश्रुते सूत्रस्थाने तृतीयेऽध्याये ॥) |

दण्डनीयभिषग् यथा, --
“अज्ञातौषधिमन्त्रस्तु यश्च
व्याधेरतत्त्ववित् ।
रोगिभ्योऽर्थं समादत्ते स
दण्ड्यश्चौरवद्भिषक् ॥”
इति ज्योतिस्तत्त्वम् ॥
तस्यान्नस्याभोज्यत्वं यथा, --
“शूद्रान्नं ब्राह्मणो भुक्त्रा तथा
रङ्गावतारिणः ।
चिकित्सकस्य क्रूरस्य तथा
स्त्रीमृगजीविनाम् ॥
शौण्डिकान्नं सूतिकान्नं भुक्त्वा मासं व्रती
भवेत् ॥”
व्रती यावकेन । तत्र धेनुद्वयम् । इति
प्राय-
श्चित्तविवेकः ॥ अपि च ।
“पूयञ्चिकित्सकस्यान्नं
पुंश्चल्यास्त्वन्नमिन्द्रियम् ।
विष्ठा वार्द्धु षिकस्यान्नं शस्त्रविक्रयिणो
मलम् ॥”
इति मानवे ४ अध्यायः ॥
(शतधन्वनः क्षेत्रजः पुत्त्रः । यथा,
हरिवंशे ।
३८ । ६ ।
“कृतवर्म्माग्रजस्तेषां शतधन्वा तु
मध्यमः ।
देवर्षेश्च्यवनात् तस्य भिषग्वैतरणश्च यः
॥”
औषधम् । यथा, ऋग्वेदे । १ । २४ । ९
।
“शतं ते राजन् भिषजः सहस्रमुर्व्वी
गभीरा सुमतिष्टे अस्तु ॥”
“हे राजन् ! वरुण ! ते तव शतं भिषजः
सहस्रं बन्धनिवारकाणि
शतसहस्रसंख्याका-
न्यौषधानि वैद्या वा सन्ति ॥” इति
तद्भाष्ये
सायनः ॥)

**भिषक्प्रिया**, स्त्री, (भिषजः प्रिया ।) गुडुची ।
भिस्सेति भाष्यप्रयोगाल्लोकेऽपि । यद्वा,
भेदन-
मिति भित् । भिद् + क्विप् । भिदं
स्यतीति ।
सो + “आतोऽनुपसर्गे कः ।” इति कः ।
पृषो-
दरादित्वात् साधुः ।) अन्नम् । इत्यमरः ।
२ ।
९ । ४८ ॥ (अस्याः पर्य्यायो यथा, --
“भक्तमन्नं तथान्धश्च क्वचित् कूरञ्च
कीर्त्तितम् ।
ओदनोऽस्त्री स्त्रियां भिस्सादीदिविः
पुंसि-
भाषितः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये
भागे ॥)

**भिस्सिटा**, स्त्री, (भिस्सामन्नं टीकते इति । टीक
गतौ + डः । पृषोदरादित्वात् साधुः ।)
दग्धा-
न्नम् । इत्यमरटीकासारसुन्दरी ॥

**भी**, ग गि भृत्याञ्च । इति कविकल्पद्रुमः ॥ (क्र्या०
-पर० सक०-अनिट् ।) ग, भीनाति ।
गि,
भिनाति । भीनः भीनिः । गिनैव
क्र्यादित्वसिद्धौ
ग्रग्रहणं प्वादित्वविकल्पार्थं चकारात्
भीत्याञ्च ।
इति दुर्गादासः ॥

**भी**, ञि लि भीत्याम् । इति कविकल्पद्रुमः ॥
(ह्वा०-पर०-अक०-अनिट् ।) ञि,
भीतोऽस्ति ।
लि, बिभेति । इति दुर्गादासः ॥

**भीः**, स्त्री, (भी भीत्याम् + सम्पदादित्वात् क्विप्
।)
भयम् । इत्यमरः । १ । ७ । २१ ॥
(यथा,
आर्य्यासप्तशत्याम् । ३८७ ।
भीममुग्रं महादेवमुवाच स पितामहः ॥”
विष्णुः । यथा, महाभारते । १३ । १४९ ।
५२ ।
“अतुलः शरभो भीमः समयज्ञो हविर्हरिः ॥”)
मध्यमपाण्डवः । (यथा, महाभारते । १ ।
१२३ । १३ ।
“तस्माज्जज्ञे महाबाहुर्भीमो भीमपराक्रमः ॥”
अस्य विवरणादिकं भीमसेनशब्दे द्रष्टव्यम् ॥)
अम्लवेतसः । इति मेदिनी । मे, २१ ॥
महादेव-
स्याष्टमूर्त्त्यन्तर्गताकाशमूर्त्तिः । यथा । भीमाय
आकाशमूर्त्तये नमः । इति तिथ्यादितत्त्वे
शिवपूजाप्रयोगः ॥ (गन्धर्व्वविशेषः । यथा,
महाभारते । १ । ६५ । ४३ ।
“भीमश्चित्ररथश्चैव विख्यातः सर्व्वविद्वशी ॥”
पुरुवंशीयस्य ईलिनस्य पुत्त्रः । यथा, तत्रैव ।
१ । ९४ । १८ ।
“ईलिनो जनयामास दुष्मन्तप्रभृतीन् नृपान् ।
दुष्मन्तं शूरभीमौ च प्रवसुं वसुमेव च ॥”)

**भीमनादः**, पुं, (भीमो भैरवो नादो यस्य ।)
सिंहः । इति शब्दचन्द्रिका ॥ (भीमो नादः
शब्दः । इति विग्रहे भयानकशब्दः । यथा,
चातकाष्टके । १ ।
“वातैर्विधूनय विभीषय भीमनादैः
सञ्चूर्णय त्वमथवा करकाभिघातैः ।
त्वद्वारिबिन्दुपरिपालितजीवितस्य
नान्या गतिर्भवति वारिद ! चातकस्य ॥”
भयानकशब्दविशिष्टे, त्रि । यथा, महाभारते ।
१ । १५६ । ३१ ।
“भीमनादं सुताम्रोष्ठं तीक्ष्णदंष्ट्रं महा-
रवम् ॥”)

**भीमरथः**, पुं, (भीमो भयानको रथोऽस्य ।)
तामसमनुवंशजातासुरविशेषः । स च कूर्म्म-
रूपिणा हरिणा हतः । यथा, --
“हरिणा कूर्म्मरूपेण हतो भीमरथोऽसुरः ॥”
इति गारुडे गयामाहात्म्ये ८६ अध्यायः ॥
(धृतराष्ट्रस्य पुत्त्रभेदः । यथा, महाभारते ।
१ । ११७ । ११ ।

इति राजनिर्घण्टः ॥

(विवृतिरस्या गुडूचीशब्दे ज्ञातव्या ॥)

**भिषग्जितं**, क्ली, (भिषजा जितम् ।) औषधम् ।

इति त्रिकाण्डशेषः ॥ (चिकित्सा ॥ यथास्य पर्य्यायः ।
"चिकित्सितं प्रतीकारश्चिकित्सा च भिषग्-
जितम् ॥"
इति वैद्यकरत्नमालायाभ् ॥)

**भिषग्भद्रा**, स्त्री, (भिषजि औषधे वैद्ये वा भद्रा

शुभदायिका ।) भद्रदन्तिका । इति राज-निर्घण्टः ॥

**भिषङ्माता**, [ऋ] स्त्री, (भिषजां मातेव ।)

वासकः । इति राजनिर्घण्टः ॥ (अस्याः पर्य्यायः ।
"वासको वाशिका वासा भिषङ्माता च सिंहिका ।
सिंहास्यो वाजिदन्ता स्यादटरूषोऽटरूषकः ॥
आटरूषो वृषस्ताम्रः सिंहपर्णश्च स स्मृतः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**भिस्सटा**, स्त्री, (भिस्सामन्नं टीकते इति । टीक

गतौ + "अन्येभ्योऽपीति डः । ततः पृषोदरा-
दित्वात् साधुः ।) दग्धान्नम् । इत्यमरः । २ ।
९ । ४९ ॥ अस्य रूपान्तरम् । भिस्सिटा ।
भिष्मिटा । भिष्मिष्टा । भिष्मिका । इति तट्टीका-
सारसुन्दरी ॥

**भिस्सा**, स्त्री, (बभस्तीति । भस दीप्तौ + बाहुल-

कात् सः । छन्दसि बहुलमितीत्वम् । ब्राह्मण-
"पूर्ब्बाधिको गृहिण्याम् बहुमानः प्रेमनर्म्म-
विश्वासः ।
भीरधिकेय्यं कथयति रागं बालाविभक्तमिव ॥")

**भीतं**, क्ली, (भी लि भीत्याम् + क्तः ।) भयम् ।

भययुक्ते, त्रि । इति मेदिनी । ते, ४० ॥ (यथा,
मनुः । ७ । ९४ ।
"यस्तु भीतः परावृत्तः संग्रामे हन्यते परैः ।
भर्त्तुर्यद्दुष्कृतं किञ्चित् तत्सर्व्वं प्रतिपद्यते ॥")

**भीतिः**, स्त्री, (भी + क्तिन् ।) भयम् । इत्यमरः ।

१ । ७ । २१ ॥ (यथा, मार्कण्डेये । ८४ । १६ ।
"दुर्गे ! स्मृता हरसि भीतिमशेषजन्तोः
स्वस्थैः स्मृता मतिमतीव शुभां ददासि ॥")
कम्पः । इति विश्वः ॥

**भीमं**, त्रि, (बिभेत्यस्मादिति । भी + "भियः

षुग्वा ।" उणा० १ । १४७ । बिभेतेर्मक् धातोर्वा
षुगागमश्च । इति मक् ।) भयहेतुः । तत्-
पर्य्यायः । भैरवम् २ दारुणम् ३ भीषणम् ४
भीष्मम् ५ घोरम् ६ भयानकम् ७ भयङ्करम् ८
प्रतिभयम् ९ । इत्यमरः । १ । ७ । २० ॥ (यथा,
रघुः । १ । १६ ।
"भीमकान्तैर्नृ पगुणैः स बभूवोपजीविनाम् ।
अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः ॥")

**भीमः**, पुं, (बिभेत्यस्मादिति । भी + मक् ।) भया-

नकरसः । यथा, --
"उग्रभीमरथौ वीरौ वीरबाहुरलोलुपः ॥")

**भीमरथी**, स्त्री, जनानामवस्थाविशेषः । यथा, --

"सप्तसप्ततिके वर्षे सप्तमे मासि सप्तमी ।
रात्रिर्भीमरथी नाम नराणां दुरतिक्रमा ॥"
इति शब्दमाला ॥
अपि च ।
"सप्तसप्ततिवर्षाणां सप्तमे मासि सप्तमी ।
रात्रिर्भीमरथी नाम नराणामतिदुस्तरा ।
तामतीत्य नरो योऽसौ दिनानि यानि जीवति ॥
क्रतुभिस्तानि तुल्यानि सुवर्णशतदक्षिणैः ।
गतिः प्रदक्षिणं विष्णोर्जल्पनं मन्त्रभाषणम् ।
ध्यानं निद्रा सुधा चान्नं भीमरथ्याः फलश्रुतिः ॥"
इति वैद्यकम् ॥
नदीभेदः । यथा राजनिर्घण्टे ।
मलापहा भीमरथी च घट्टगा
पथ्या च कृष्णा जलसाम्यगा गुणैः ॥"

| | | |
|---|---|---|
| | “भयानको भयस्थायिभावः<br>कालाधिदैवतः ।<br>स्त्री नीचप्रकृतिः कृष्णो<br>मतस्तत्त्वविशारदैः ॥”<br>इत्यमरटीकायां भरतः ॥<br>शिवः । (यथा, मार्कण्डेये । ५२ । ७ ।<br>“भवं सर्व्वं तथेशानं तथा पशुपतिं प्रभुः<br>। | |

(इयं हि सह्यपर्व्वतोद्भवा । यथा,
विष्णुपुराणे ।
२ । ३ । ११ ।
"गोदावरी भीमरथी
कृष्णवेण्यादिकास्तथा ।
सह्यपादोद्भवा नद्यः स्मृताः
पापभयापहाः ॥")

**भीमविक्रान्तः**, पुं, (भीमश्चासौ विक्रान्तश्चेति ।)
सिंहः । इति त्रिकाण्डशेषः ॥
भयानकविक्रम-
विशिष्टे, त्रि ॥

**भीमशासनः**, पुं, (भीमं शासनं यस्य ।) यमः ।
इति शब्दरत्नावली ॥

**भीमसेनः**, पुं, मध्यमपाण्डवः । स च कुन्तीगर्भे
पवनाज्जातः । तत्पर्य्यायः । भीमः २
वीरवेणुः
३ वृकोदरः ४ वकजित् ५ कीचकजित्
६
किर्म्मरिजित् ७ जरासन्धजित् ८
हिडिम्बजित्
९ कटव्रणः १० नागबलः ११ गुणाकरः
१२ ।
इति शब्दरत्नावली ॥ तस्य
जन्मविवरणं यथा,
"धार्म्मिकस्तं सुतं लब्ध्वा पाण्डुस्तां
पुनरब्रवीत् ।
प्राहुः क्षात्रं बलं ज्येष्ठं बलज्येष्टं सुतं
वृणु ॥
ततस्तथोक्ता भर्त्रा तु वायुमेवाजुहाव
सा ।
तस्माज्जज्ञे महाबाहुर्भीमो भीमपराक्रमः
॥
तमप्यतिबलं जातं वागुवाचाशरीरिणी ।
सर्व्वेषां बलिनां श्रेष्ठो जातोऽयमिति
भारत ! ॥
इदमत्युद्भुतञ्चासीज्जातमात्रे वृकोदरे ।

**भीमादेवी**, स्त्री, दुर्गा । यथा, --
"पुनश्चाहं यदा भीमं रूपं कृत्वा हिमाचले ।
रक्षांसि क्षययिष्यामि मुनीनां त्राणकारणात् ॥
तदा मां मुनयः सर्व्वे स्तोष्यन्त्यानम्रमूर्त्तयः ।
भीमादेवीति विख्यातं तन्मे नाम भविष्यति
॥"
इति मार्कण्डेयपुराणे देवीमाहात्म्यम् ॥

**भीमैकादशी**, स्त्री, (भीमेनोपासिता एकादशी ।
शाकपार्थिवादिवत् समासः ।) भैमी । सा च
माघशुक्लैकादशी । भीमद्वादशीत्वेन ख्याता
च ।
यथा, --
मत्स्य उवाच ।
"पुरा रथन्तरे कल्पे परिपृष्टो महात्मना ।
मन्दरस्थो महादेवः पिनाकी ब्रह्मणा स्वयम् ॥
ब्रह्मोवाच ।
कथमारोग्यमैश्वर्य्यमनन्तममरेश्वर ! ।
स्वल्पेन तपसा देव ! भवेन्मोक्षोऽथ वा नृणाम्
॥
किमज्ञातं मया देव ! त्वत्प्रसादादधोक्षज ! ।
स्वल्पकेनापि तपसा महत् फलमिहोच्यते ॥
मत्स्य उवाच ।
इति पृष्टः स विश्वात्मा ब्रह्मणा सोकभावनः ।
उमापतिरुवाचेदं मनसः प्रीतिकारकम् ॥
ईश्वर उवाच ।
अस्माद्रथन्तरात् कल्पात् त्रयोविंशतिमो यदा
।
वाराहो भविता कल्पस्तस्य मन्वन्तरे शुभे ॥
वैवस्वताख्ये संजाते सप्तमे सप्तलोकधृक् ।
द्वापराख्यं युगं तस्मिन् सप्तविंशतिमे तदा ॥
तस्यान्ते स महानीलो वासुदेवो जनार्द्दनः ।
भारावतरणार्थाय त्रिधा विष्णुर्भविष्यति ॥
द्वैपायनो मुनिस्तद्वद्रौहिणेयोऽथ केशवः ।
कंसादिदर्पमथनः केशवः शोकनाशनः ॥
पुरी द्वारवती नाम सांप्रतं वा कुशस्थली ।
दिव्यानुभावसंयुक्तामधिवासाय शार्ङ्गिणः ॥
त्वष्टा ममाज्ञया ब्रह्मन् ! करिष्यति जगत्पतेः ॥
तस्यां कदाचिदासीनः सभायाममितद्युतिः ।

वासुदेव उवाच ।
यद्यष्टमीचतुर्द्दश्यां द्वादशीष्वथ भारत ! ।
अन्येष्वपि दिनर्क्षेषु न शक्तस्त्वमुपोषितुम्
॥
ततः पुण्यामिमां भीम ! तिथिं पापप्रणा-
शिनीम् ।
उपोष्य विधिनानेन गच्छेद्विष्णोः परं
पदम् ॥
माघमासस्य दशमी यदा शुक्ला भवेत्तदा
।
घृतेनाभ्यञ्जनं कृत्वा तिलैः स्नानं
समाचरेत् ॥
तथैव विष्णुमभ्यर्च्य नमो नारायणाय च ।
कृष्णाय पादौ संपूज्य शिरः सर्व्वात्मनेति
च ॥
वैकुण्ठायेति वै कण्ठमुरः श्रीवत्सधारिणे
।
शङ्खिने चक्रिणे तद्वद्गदिने वरदाय वै ॥
सर्व्वे नारायणस्यैवं संपूज्या बाहवः
क्रमात् ।
दामोदरायेत्युदरं मेढ्रं पञ्चशराय वै ॥
ऊरू सौभाग्यनाथाय जानुनी भूतधारिणे
।
नमो नीलाय वै जङ्घे पादौ विश्वसृजे पुनः
॥
नमो देव्यै नमः शान्त्यै नमो लक्ष्म्यै नमः
श्रियै ।
नमः पुष्ट्यै नमस्तुष्ट्यै धृष्ट्यै हृष्ट्यै
तथा श्रियै ॥
नमो विहङ्गनाथाय वायुवेगाय पक्षिणे ।
विषप्रमाथिने नित्यं गरुडञ्चाभिपूजयेत् ॥
एवं संपूज्य गोविन्दमुमापतिविनायकौ ।
गन्धैर्माल्यैस्तथा धूपैर्भक्षैर्नानाविधैस्तथा
॥
गव्येन पयसा सिद्धां कृशरामथ वाग्यतः ।
सर्पिषा सह भुक्त्वा च गत्वा शतपदं बुधः
॥
न्यग्रोधन्दन्तधावनमथवाखादिरं बुधः ।

यदङ्कात् पतितो मातुः शिलां
गात्रैरचूर्णयत् ॥
कुन्ती व्याघ्रभयोद्विग्ना सहसोत्पतिता
किल ।
नान्वबुध्यत तं सुप्तमुत्सङ्गे स्वे वृकोदरम्
॥
वज्रसंहननः सोऽथ कुमारो न्यपतद्गिरौ
।
पतता तेन शतधा शिला गात्त्रैर्विचूर्णिता
॥”
इति महाभारते आदिपर्व्वणि
पाण्डवोत्पत्ति-
नामाध्यायः ॥
(गन्धर्व्वविशेषः । यथा, महाभारते । १
। १२३ । ५२ ।
भीमसेनोग्रसेनौ च ऊर्णायुरनघस्तथा
॥”)
कर्पूरभेदः । यथा, --
“पोतासो भीमसेनस्तदनुशितकरः
शङ्करा-
वाससंज्ञः
पांशुः पिञ्जोऽब्जसारस्तदनु हिमयुता
वालुका
जूटिका च ।
पश्चादस्यास्तुषारस्तदुपरि सहिमः
शीतलः
पत्रिकाख्या
कर्पूरस्येति भेदा गुणरसमहसा
वैसदृश्येन
दृश्याः ॥”
इति राजनिर्घण्टः ॥

**भीमहासं**, क्ली, (भीमे ग्रीष्मादौ हासः प्रकाशो
यस्य ।) इन्द्रतूलम् । इति
शब्दरत्नावली ॥
युडिर सुता इति भाषा ॥ ग्रीष्महासमपि
पाठः ॥

**भीमा**, स्त्री, (भी + मक् + स्त्रियां टाप् ।) दुर्गा ।
इति शब्दरत्नावली ॥
रोचनाख्यगन्धद्रव्यम् ।
भार्य्याभिर्वृष्णिभिः साद्‌र्ध्वं भूभृद्भिर्भूरिदक्षिणैः
॥
कुरुभिर्देवगन्धर्व्वैरभितः कैटभार्द्दनः ।
प्रवृत्तासु पुराणीषु धर्म्मसम्बन्धिनीषु च ॥
कथासु भीमसेनेन परिपृष्टः प्रतापवान् ।
त्वया पृष्टस्य धर्म्मस्य रहस्थस्यास्य भेदकृत्
॥
भविता स तदा ब्रह्मन् ! कर्त्ता चैव वृकोदरः ।
प्रवर्त्तकोऽस्य धर्म्मस्य पाण्डुसूनुर्महाबलः ॥
तस्य तीक्ष्णो वृको नाम जठरे हव्यवाहनः ।
मया दत्तः स धर्म्मात्मा तेन चासौ वृकोदरः ॥
अतीवान्नादशीलश्च नागायुतबलो महान् ।
भविष्यत्यजरः साक्षात् कन्दर्प इव बुद्धिमान् ॥
धार्म्मिकस्याप्यशक्तस्य तीव्राग्नित्वादुपोषणे ।
इमं व्रतमशेषाणां व्रतानामधिकं यतः ॥
कथयिष्यति विश्वात्मा वासुदेवो जगद्‌गुरुः ।
अशेषयज्ञफलदमशेषाघविनाशनम् ॥
अशेषदुष्टशमनमशेषसुरपूजनम् ॥
पवित्राणां पवित्रञ्च मङ्गलानाञ्च मङ्गलम् ।
भविष्यञ्च भविष्याणां पुराणानां पुरातनम् ॥
गृहीत्वा धावयेद्दन्तानाचान्तः प्रागुदङ्मुखः
॥
ब्रूयात् सायन्तनीं कृत्वा सन्ध्यामस्तमिते
रवौ ।
नमो नारायणायेति त्वामहं शरणं गतः ॥
एकादश्यां निराहारः समभ्यर्च्च्य च
केशवम् ।
रात्रिञ्च सकलां स्थित्वा स्नानञ्च
पयसापि च ॥
सर्पिषा विश्वदहनं हुत्वा ब्राह्मणपुङ्गवैः ।
सहैव पुण्डरीकाक्ष ! द्वादश्यां
क्षीरभोजनम् ॥
करिष्यामि यतात्माऽहं निर्विघ्नेनास्तु
तच्च मे ।
एवमुक्त्वा स्वपेद्भूमावितिहासकथां पुनः
॥ * ॥
श्रुत्वा प्रभाते संजाते नदीं गत्वा
विशाम्पते ! ।
स्नानं कृत्वा मृदा तद्वत्
पाषण्डानभिवर्ज्जयेत् ॥
उपास्य सन्ध्यां विधिवत् कृत्वा च
पितृतर्पणम् ।
प्रणम्य च हृषीकेशममलञ्चाप्यनीश्वरम् ॥
गृहस्य पुरतो भक्त्या मण्डपं कारयेद्बुधः
।
दशहस्तमथाष्टौ वा करान्
कुर्य्याद्विशाम्पते ! ॥
चतुर्हस्तां शुभां कुर्य्याद्वेदीमरिनिसूदन ! ।
चतुर्हस्तप्रमाणञ्च विन्यसेत्तत्र तोरणम् ॥
आरोप्य कलसं तत्र दिक्पालान्
पूजयेत्ततः ।
माससमात्रेण संपूर्णमधःकृष्णाजिने स्थितः
॥
तस्य धाराश्च शिरसा धारयेत् सकलां
निशाम् ।
धाराभिर्भूरिभिर्भूरिफलं वेदविदो विदुः ॥
यस्मात्तस्मात् कुरुश्रेष्ठ ! धारा धार्य्याः
स्वश-
क्तितः ।
तथैव विष्णोः शिरसि क्षीरधाराः
प्रपातयेत् ॥

| | | |
|---|---|---|
| इति शब्दचन्द्रिका ॥ कशा । इति शब्दमाला ॥<br>(नदीविशेषः । तद्यथा, --<br>"कावेरी वीरकान्ता च भीमा चैव पयोष्णिका ।<br>विभावरी विशाला च गौरीदा मदनस्वसा ॥<br>पार्व्वती चापरा नद्यो दक्षिणाद्रिगमा हिमाः ॥"<br>इति हारीते प्रथमे स्थाने सप्तमेऽध्याये ॥) | | अरत्निमात्रं कुण्डञ्च कृत्वा तत्र त्रिमेखलम् ।<br>योनिवक्त्रञ्च तं कृत्वा ब्राह्मणैर्यवसर्पिषी ॥<br>तिलांश्च विष्णुदैवत्यैर्मन्त्रैरेकाग्निवत्तदा । |

कृत्वा च वैष्णवं सम्यक् चरुं
गोक्षीरसंयुतम् ॥
निष्पावार्द्धप्रमाणांषै धारामाज्यस्य
पातयेत् ॥
जलकुम्भान् महावीर ! स्थापयित्वा
त्रयोदश ।
भक्षैर्नानाषिधैर्युक्तान् सितवस्त्रैरलङ्कृतान् ।
युतानौडुम्बरैः पात्रैः पञ्चरँत्नसमन्वितान्
॥
चतुर्भिर्बह्वृचैर्होमस्तत्र कार्य्य उदङसुखैः ।
रुद्रजापश्चतुर्भिश्च यजुर्व्वेदपरायणैः ॥
वैष्णवानि च सामानि चतुरः सामवेदिनः ।
अरिष्टवर्ग्गसहितान्यभितःपरिपाठयेत् ॥
एवं द्वादश तान् विप्रान्
वस्त्रमाल्यानुलेपनैः ।
पूजयेदङ्गुलीयैश्च कटकैर्हेमसूत्रकैः ॥
वासोभिः शयनीयैश्च
वित्तशाठ्यविवर्ज्जितः ।
एवं क्षपातिवाह्या वै गीतमङ्गलनिस्वनैः ।
उपाध्यायस्य च पुनर्द्विगुणं सर्व्वमेव तु ॥
* ॥
ततः प्रभाते विमले समुत्थाय त्रयोदश ।
गा वै दद्यात् कुरुश्रेष्ठ ! सौवर्णमुखसंयुताः
॥
पयस्विनीः शीलवतीः
कांस्यदोहनसंयुताः ।
रौप्यखुराः सवस्त्राश्च
चन्दनेनाभिषेचिताः ॥
तांस्तु तेषां ततो भक्त्या भक्ष्यभोज्येन
तर्पितान् ।
कृत्वाथ ब्राह्मणान्
सर्व्वानन्नैर्नानाविधैस्तथा ॥
भुक्त्वा चाक्षारलवणमात्मना च
विसर्जयेत् ॥
अनुगम्य पदान्यष्टौ पुत्त्रभार्य्यासमन्वितः
।
प्रीयतामत्र देवेशः केशवः क्लेशनाशनः ॥
शिवस्य हृदये विष्णुर्विष्णोश्च हृदये शिवः
।

इदमेव कृतं महेन्द्रमुख्यै-
र्वसुभिश्चैव पुरा सुरादिभिश्च ।
फलमत्र न शक्यतेऽभिवक्तुं
यदि जिह्वाकोटयो मुखे स्युः ॥
कलिकल्मषविदारिणीमनन्ता-
मिति कथयिष्यति यादवेन्द्रसूनुः ।
अपि नरकगतान् पितॄनशेषा-
नलमुद्धर्त्तुमिह्वै यः करोति ॥
य इदमनघं शृणोति चातिभक्त्या
परिपठतीह परोपकारहेतोः ।
तिथिमिह सकलार्थभाङ्नरेन्द्र-
स्तव चरणेन स साम्यतामुपैति ॥
कल्याणिनी नाम पुरा बभूव
या द्वादशी माघदिनेऽभिपूज्या ।
सा पाण्डुपुत्रेण कृता भविष्य-
त्यनन्तपुण्यानघ ! भीमपूर्ब्बा ॥”
इति मत्स्यपुराणे भविष्यद्व्रतोद्देशे भीम-
द्वादशी नाम ६५ अध्यायः ॥

**भीरुः**, त्रि, (बिभेतीति । भी भये + “भियः
क्रुक्लुकनौ ।” ३ । २ । १७४ । इति क्रुः ।)
भय-
शीलः । (यथा, मनौ । ७ । ६२ ।
“तेषामर्थे नियुञ्जीत शूरान् दक्षान्
कुलोद्गतान् ।
शुचीनाकरकर्म्मान्ते भीरूनन्तर्निवेशने ॥”)
तत्पर्य्यायः । त्रस्नुः २ भीरुकः ३ भीलुकः
४ ।
इत्यमरः । ३ । १ । २६ ॥ भीलुः ५ । इति
शब्दरत्नावली ॥

**भीरुः**, स्त्री, (बिभेतीति । भी + “भियः क्रुक्लुकनौ ।”
३ । २ । १७४ । इति क्रुः ।) भयशीला स्त्री ।
भयप्रकृतिका । इत्यमरभरतौ ॥ (यथा,
विष्णु-
पुराणे । १ । १५ । ३३ ।
“सत्यं भीरु ! वदस्येतत् परिहासोऽथवा
शुभे ! ।
दिनमेकमहं मन्ये त्वया सार्द्धमिहासितम् ॥”)

अस्य गुणाः । यथा, भावप्रकाशे ।
“वातपित्तप्रशमनो मधुरो रसपाकयोः ।
सुशीतो वृं हणो बल्यः पौण्ड्रको
भीरुकस्तथा ॥”

**भीरुकः**, त्रि, (बिभेतीति । ञिभी भये + “भियः
क्रुकन् ।” उणा० २ । ३१ । इति क्रुकन्
।)
भययुक्तः । इत्यमरः ॥ कातरः । इति
संक्षिप्त-
सारोणादिवृत्तिः ॥

**भीरुपत्री**, स्त्री, (भीरूणीव पत्राण्यस्याः । गौरादि-
त्वात् ङीष् ।) शतमूली । इत्यमरः । २ ।
४ । १०१ ॥

**भीरुहृदयः**, पुं, (भीरु हृदयमस्य ।) मृगः । इति
जटाधरः ॥

**भीरूः**, स्त्री, (भीरु + “ऊङुतः ।” ४ । १ । ६६ ।
इति ऊङ् ।) भयशीला नारी । इत्यमर-
टीकायां भरतः ॥

**भीलभूषणा**, स्त्री, (भूषयतीति । भूष् + कर्त्तरि
ल्युः । टाप् । भीलानां भूषणा ।) गुञ्जा ।
इति
राजनिर्घण्टः ॥

**भीलुः**, त्रि, (बिभेतीति । भी + क्लु ।) भीरुः ।
भयशीलः । इति शब्दरत्नावली ॥

**भीलुकः**, पुं, (बिभेतीति । भी + “भियः क्रुक्लु-
कनौ । ३ । २ । १७४ । इति क्लकन्
।) भीरुः ।
इत्यमरः । ३ । १ । २६ ॥ (यथा,
कथासरित्-
सागरे । ३२ । ५२ ।
“एतदेवानिमित्तं नः
किमन्येनाध्वभीलुक ! ।
यस्त्वमस्माभिरानीतःकाकशङ्की पदे
पदे ॥”)
भल्लुकः । इति शब्दरत्नावली ॥

यथान्तरं न पश्यामि तथा मे स्वस्ति चायुषः ॥
एवमुच्चार्य्य तान् कुम्भान् गाश्चैव शयनानि च ।
वासांसि चैव सर्व्वेषां गृहाणि प्रापयेद्बुधः ॥
अभावे बहुशय्यानामेकामपि मुसंस्कृताम् ।
शय्यां दद्याद्गुरौ भीम ! सर्व्वोपस्करसंयुताम् ॥
इतिहासपुराणानि वाचयित्वातिवाहयेत् ।
तद्दिनं नरशार्दूल ! य इच्छेद्विपुलां श्रियम् ॥
तस्मात्त्वं सत्त्वमालम्ब्य भीमसेन ! विमत्सरः ।
कुरु व्रतमिदं सम्यक् स्नेहाद्यद्वाक्यमीरितम् ।
त्वया कृतमिदं वीर ! त्वन्नामाख्यं भविष्यति ।
सा भीमद्वादशी ह्येषा सर्व्वपापहरा शुभा ।
या तु कल्याणिनी नाम पुरा कल्पेषु पट्यते ॥"
त्वमादिकर्त्ता भव शौकरेऽस्मिन् कल्पे महावीरवरप्रधान ! ।
यस्याः स्मरणकीर्त्तनमप्यशेषं विनष्टपापस्त्रिदशाधिपः स्यात् ॥
दृष्ट्वा च यामप्सरसामपीशा- वेश्याकृतामप्यभवान्तरेषु ।
आभीरकन्येति कुतूहलेन सैवोर्व्वशी संप्रति नाकपृष्ठे ॥
जातापि सा वैश्यकुलोद्भवापि पुलोमकन्या पुरुहूतपत्नी ।
तत्रापि तस्याः परिचारिकेयं मम प्रिया संप्रति सत्यभामा ॥
स्नातः पुरा मण्डलमेष तद्व- त्तेजोमयं देवशरीरमाप ।
अस्याञ्च कल्याणतिथौ विवस्वान् सहस्रधारेण सहस्ररश्मिः ॥

शतावरी । इति धरणिः, अमरश्च ॥ (यथा, --
"बहुपुत्त्री वरा भीरुः शतमूली शतावरी ।
महापुरुषदन्ता च पीवरीन्दीवरी वरी ॥"
इति वैद्यकरत्नमालायाम् ॥)
कण्टकारी । इति शब्दचन्द्रिका ॥
शतपादिका । इति शब्दरत्नावली ॥ अजा । छाया । स्त्री । इति राजनिर्घण्टः ॥

**भीरुः**, पुं, (बिभेतीति । भी + क्रुः ।) शृगालः । इति शब्दमाला ॥ व्याघ्रः । इति राजनिर्घण्टः ॥
इक्षुभेदः । इति रत्नमाला ॥ अस्य गुणाः । श्लेष्मकारित्वम् । स्वादुत्वम् । अविदाहित्वम् । गुरुत्वञ्च । इति राजवल्लभः ॥

**भीरुकं**, क्ली, (भीरु + संज्ञायां कन् ।) वनम् । इति शब्दरत्नावली ॥

**भीरुकः**, पुं, (भीरु + स्वार्थे संज्ञायां वा कन् ।) पेचकः । इति शब्दरत्नावली ॥ इक्षुभेदः । भोररी इति हिन्दीभाषा ॥ (यथा, सुश्रुते सूत्रस्थाने । ४५ अध्याये ।
"पौण्ड्रको भीरुकश्चैव वंशकः शतपोरकः ।
कान्तारस्तापसेक्षुश्च काष्ठेक्षुः सूचिपत्रकः ॥")

**भीषणः**, पुं, (भीषयते इति । भी + णिच् + "भियो हेतुभये षुक् ।" ७ । ३ । ४० । इति षुक् । भीषिधातुस्ततो नन्द्यादित्वात् ल्युः ।)
भयानकरसः । इत्यमरटीकायां भरतः, मेदिनी च ॥ कुन्दुरुकः । कपोतः । हिन्तालः । इति राजनिर्घण्टः ॥ शिवः । इति शब्दरत्नावली ।
शल्लकी इति मेदिनी ॥ (भयोत्पादने क्ली, ।
यथा, महाभारते । १५ । ७ । ४ ।
"व्यसनं भेदनञ्चैव शत्रूणां कारयेत्ततः ।
कर्षणं भीषणञ्चैव युद्धे चैव बलक्षयम् ॥")

**भीषणः**, त्रि, (भीषयते इति । भी + णिच् + ततो नन्द्यादित्वात् ल्युः । षुगागमश्च ।) गाढः ।
दारुणः । इति मेदिनी । णे, ६९ ॥ (यथा, रघौ । १२ । ४० ॥
"पर्णशालामथ क्षिप्रं विकृष्टासिः प्रविश्य सः ।
वैरूप्यपौनरुक्त्येन भीषणां तामयोजयत् ॥")

**भीष्मं**, त्रि, (बिभेत्यस्मादिति । भी + "भियः षुग् वा ।" उणा० । १ । १४७ । इति मक् । वा षुगागमश्च ।) भयानकम् । इत्यमरः । १ । ७ । २० ॥
(यथा, शतपथब्राह्मणे । ११ । ६ । १ । ३ ।
"सहोवाच भीष्मं वत भोः पुरुषान् वा ।"
"भीष्मं भयङ्करं ।" इति तद्भाष्ये महीधरः ॥)

**भीष्मः**, पुं, (बिभेत्यस्मादिति । भी + मक् । षुग् वेति पक्षे षुक् ।) भयानकरसः । इत्यमर-

चक्रवर्त्तिनो गङ्गायां भार्य्यायां जातः । स परम-
धर्म्मात्मा महावीरः । येन पितुर्दासकन्या-
विवाहार्थं पितृराज्यं त्यक्तं, यश्च स्वस्य
विवाहं
त्यक्त्वा ऊद्ध्वरेता जातः । इति श्रीभागवतम्
॥
तस्योत्पत्तिर्य्था, --
"अथ तामष्टमे जाते पुत्त्रे प्रहसतीमिव ।
उवाच राजा दुःखार्त्तः परीप्सन् सुतमात्मनः ॥
मा वधीः कासि कस्यासि किञ्च हंसि सुता-
निति ।
पुत्त्रघ्नि ! सुमहत् पापं संप्राप्तं ते सुगर्हिते ! ॥"
स्त्र्युवाच ।
"पुत्त्रकाम ! न ते हन्मि पुत्त्रं पुत्त्रवतांवर ! ।
जीर्णस्तु मम वासोऽयं यथा स समयः कृतः ॥
अहं गङ्गा जह्नुसुता महर्षिगणसेविता ।
देवकार्य्यार्थसिद्ध्यर्थमुषिताहं त्वया सह ॥
अष्टौ ये वसवो देवा महाभागा महौजसः ।
वशिष्ठशापदोषेण मानुषत्वमुपागताः ॥
तेषां जनयिता नान्यस्त्वदृते भुवि विद्यते ।
मद्विधा मानुषी धात्री लोके नास्ति कदाचन ॥
तेषाञ्च जननीहेतोर्मानुषत्वमुपागता ।
जनयित्वा वसूनष्टौ जिता लोकास्त्वयाक्षयाः ॥
देवानां समयस्त्वेष वसूनां संश्रुतो मया ।
जातं जातं मोक्षयिष्ये जन्मतो मानुषादिति ॥
तत्ते शापाद्विनिर्मुक्ता आपवस्य महात्मनः ।
स्वस्ति तेऽस्तु गमिष्यामि पुत्त्रं पाहि महा-
व्रतम् ॥
एष पर्य्यायवासो मे वसूनां सन्निधौ कृतः ।
मत्प्रसूतं विजानीहि गङ्गादत्तमिमं सुतम् ॥"
इत्यादिपर्व्वणि भीष्मोत्पत्तिनाम १००
अध्यायः ॥

**भीष्मजननी**, स्त्री, (भीष्मस्य जननी माता ।)
गङ्गा । इति राजनिर्घण्टः ॥

**भीष्मपञ्चकं**, क्ली, (भीष्मेण कृतमुपदिष्टं वा पञ्चकं
एकादश्यादिपूर्णिमान्तपञ्चतिथिकर्त्तव्यम् ।)
कार्त्तिकशुक्लपक्षीयैकादश्यादिपूर्णिमान्तपञ्च-
तिथिकर्त्तव्यव्रतविशेषः । यथा, --
वशिष्ठ उवाच ।
"शृणु राजन् ! प्रवक्ष्यामि व्रतं
सौभाग्य-
दायकम् ।
रहस्यं भीष्मपञ्चाख्यं
विष्णुतुष्टिप्रदायकम् ॥
कार्त्तिके मासि राजेन्द्र !
प्रारभ्यैकादशीतिथिम् ।
यावत् पञ्चदशी रम्या भविता
चन्द्रपूर्णिता ।
पञ्चभीष्ममिति ख्यातं तिथयः
पुण्यदाः स्मृताः ॥
प्रातःकाले समुत्थाय शौचं कृत्वा
यथाविधि ।
स्नात्वा सभार्य्यः पुरुषो नद्यादौ
विमले जले ॥
तर्पयेद्भीष्मवर्म्माणं
कुरुवंशपितामहम् ।
पितृभिस्तिलयुक्तैश्च
जलाञ्जलिभिरुद्धृतैः ॥
वैयाघ्रपद्यगोत्राय साङ्कृतिप्रवराय च
।
तिलतोयाञ्जलिं तस्मै
प्रयच्छेद्भीष्मवर्म्मणे ॥
सन्तर्प्य कौरवश्रेष्ठं कुर्य्यादाचमनं
ततः ।
अर्च्चयित्वा विधानेन
चन्दनादिभिरावृतः ।
अर्घ्यं दद्याद्यतात्मा च मन्त्रेणानेन
भूपते ! ॥
बसूनामवताराय शान्तनोरात्मजाय
च ।
अर्घ्यं ददामि भीष्माय
आजन्मब्रह्मचारिणे ॥
इत्थं समापयेद्वतृस !
भीष्मपञ्चविधिं नरः ।
नियमेनोपवासेन पञ्चगव्येन वा पुनः
॥
अपि च ।
"सदा हरेर्व्रतं श्रेष्ठं ततः स्याद्दक्षिणायने ।
चातुर्म्मास्ये ततस्तस्मात् कार्त्तिके
भीष्मपञ्चकम् ॥
ततः श्रेष्ठतमं शुक्ल एकादश्यां समाचरेत् ।
स्नायात्त्रिकालं पित्रादीन् यवाद्यैरर्च्चयेद्धरिम्
॥
यजेन्मौनी घृताद्यैस्तु पञ्चगव्येन वारिभिः ।
स्नापयित्वाथ कर्पू रमुखैश्चैवानुलेपयेत् ॥
घृताक्तगुग्गुलोर्धूपं द्विजः पञ्चदिनं दहेत् ।
नैवेद्यं परमान्नन्तु जपेदष्टोत्तरं शतम् ॥
ॐ नमो वासुदेवाय घृतव्रीहितिलोदकम् ।
षडक्षरेण मन्त्रेण स्वाहान्तेन तु होमयेत् ॥
प्रथमेऽह्नि हरेः पादौ यजेत् पद्मैर्द्वितीयके ।
विल्वपत्रैर्जानुदेशं नाभिं भृङ्गेण चापरे ॥
स्कन्धौ विल्वैर्जवाभिश्च पञ्चमेऽह्नि
शिरोऽर्च्चयेत् ।
मालत्या भूमिशायी स्याद्गोमयं प्राशयेत्
क्रमात् ॥
गोमूत्रक्षीरदधि च पञ्चमे पञ्चगव्यकम् ।
नक्तं कुर्य्यात् पञ्चदश्यां व्रती स्याद्भुक्तिमुक्ति-
भाक् ॥"
इति गारुडे भीष्मपञ्चादिव्रतं नाम १२३
अध्यायः ॥
वकपञ्चकम् । यथा, --
"आरभ्यैकादशीं पञ्च दिनानि व्रतमाचरेत् ।
भगवत् प्रीतये भीष्मषञ्चकं यदि शक्नुयात् ॥
तथा धात्रीव्रतं पौर्णमास्यां कुर्व्वीत कार्त्तिके ।
तथा नवम्वां शुक्लायामक्षयं नवमीव्रतम् ॥
पैतामहादिकृच्छ्राणि मासोपोषणमेव च ।
समर्थः कार्त्तिके कुर्य्यात् ज्ञात्वा पाद्मादितो
विधिम् ॥"
इदि श्रीहरिभक्तिविलासे १६ विलासः ॥

**भीष्मरत्नं**, क्ली, (भीष्मं भयानकं रत्नं दुर्लभत्वात् ।)
हिमालयोत्तरदेशजातशुक्लबर्णप्रस्तरविशेषः
।
तस्योत्पत्त्यादि यथा, --
सूत उवाच ।

श्रीनारद उवाच ।
"भगवन् ! यत् त्वया प्रोक्तं भीष्मस्य च दिनं महत् ।
माहात्म्यं श्रोतुमिच्छामि तस्य मे कथय प्रभो ! ॥
कथं स्नानञ्च किं दानं को विधिः कस्य पूजनम् ।
किं फलं केन वाकारि तन्मे कथय विस्तरात् ॥"
ब्रह्मोवाच ।
तद्भीष्मपञ्चकस्येदं माहात्म्यं विधिपूर्ब्बकम् ।
वक्ष्यामि फलसंयुक्तं येनेदञ्च कृतं पुरा ॥
अयोध्या नगरी या च कलिकल्मषनाशिनी ।
वैष्णवी स्वर्गरम्या च कलिकल्मषनाशिनी ॥
हस्त्यश्वरथपत्त्याठ्या विष्णुचक्रप्रतिष्ठिता ।
तस्यामासीन्नरवरः सूर्य्यवंशोद्भवो मुने ! ॥
अतिथिर्नाम देवर्षे ! धर्म्मात्मा नैकयज्ञकृत् ।
तेन दत्तं पुरा राज्ञा कृतं यज्ञमनूत्तमम् ॥
भार्य्यया चन्द्रभाविन्या साद्‌र्ध्वं भीष्मस्य पञ्चकम् ।
चिकीर्षः परिपप्रच्छ वशिष्ठं तद्विधिं द्विज ! ॥"

पयोमूलफलाहारैर्हव्यैर्नानाविधैरपि ।
नरो वा यदि वा नारी मुक्तपापो दिवं व्रजेत् ॥
भुङ्क्ते स विपुलान् भोगान् कार्त्तिकं न
त्यजेद्धि यः ।
अतोऽशक्तो नयेत् पञ्चभीष्माख्यं हरिपूर्णितम् ॥
श्रुत्वैतद्विष्णुभक्तोऽसौ भक्त्या त्वचलया सह ।
दम्पती च यथा भीष्मं लब्ध्वा तौ तु महाफलम् ॥
स्वल्पायासेन विप्रेन्द्र ! कृतं ताभ्यां हि तत् पुरा ।
प्राप्तं राज्यं महीमेतां
समुद्रवलयान्विताम् ॥
प्रभुज्य प्रचुरान् कामान् व्रतकामौ यथा मुने ! ।
दिव्याम्बराभरणौ तौ
दिव्यमाल्यानुलेपितौ ॥
दिव्यदेहविमानेन
सर्व्वकिन्नरसेवितौ ।
अप्सरोगीतनृत्येन स्तुतौ
देवमहर्षिभिः ।
सम्प्राप्तौ विष्णुलोकञ्च
भीष्मपञ्चव्रतान्मुने ! ॥"
ब्रह्मोवाच ।
"इत्येतत् कथितं वत्स ! माहात्म्यं कात्तिको-
द्भवम् ।
भीष्मपञ्चकमाहात्म्यं सेतिहासं पुरातनम् ॥
तत् सर्व्वं कुरु विप्रेन्द्र ! यदि ते भक्तिरच्युते ।
निश्चलः कायमनसा वचसा
सुमनीभव ॥"
"शृण्वन्ति मर्त्याश्च पठन्ति ये वै
भूखण्डमध्ये भगवद्गुणान् मुने ! ।
मतिञ्च लब्ध्वा भगवत्यशेषतः
कथामुपेन्द्रस्य पुरं प्रयान्ति ॥"

"हिमवत्युत्तरे देशे वीर्य्यं पतितं
सुरद्विषस्तस्य ।
सम्प्राप्तमुत्तमानामाकरतां भीष्मरत्नानाम् ॥
शुक्लाः शङ्खाब्जनिभाः श्योनाकसन्निभाः
प्रभावन्तः ।
प्रभवन्ति ततस्तरुणा वज्रनिभा
भीष्मपाषाणाः ।
हिमाद्रिप्रतिबद्धं शुद्धमपि श्रद्धया विधत्ते यः ।
भीष्ममणिं ग्रीवादिषु स सम्पदं सर्व्वदा लभते ॥
गुणयुक्तस्य तस्यैव धारणान्मुनिपुङ्गव ! ।
विषाणि तानि नश्यन्ति सर्व्वाण्येव महीतले ॥"
विषमानाबाधन्ते ये तमरण्यनिवासिनः समी-
पेऽपि ।
द्वीपिवृक्षशरभकुञ्जरसिंहव्याघ्रादयो हिंस्राः ॥
तस्योत्कवलितकृतिनो भवन्ति भयं न चापि
समुपस्थितम् ।
भीष्ममणिर्गुणयुक्तः सम्यक्
संप्राप्ताङ्गुलित्रितयः ।
पितृतर्पणे पितॄणां तृप्तिर्बहुवार्षिकी भवति ॥
शाम्यन्त्युद्भूतान्यपि सर्पाण्डजाखुवृश्चिक-
विषाणि ।
सलिलाग्निवैरितस्करभयानि भीमानि
नश्यन्ति ॥

|  | कलिमलमपहृत्य प्राणिनो देवदेवं सुभगसकलभोगान् भोजयित्वा च यान्ति ।<br>हरिपुरममरेशैर्गीतवाद्यैर्विशालै-र्विहितसकलकृत्यास्तोषयन्ते हरिं ये ॥<br>एतत् कार्त्तिकमाहात्म्यं भक्त्या यः शृणुयान्नरः ।<br>सर्व्वपापविनिर्म्मुक्तः स कृष्णे लभते रतिम् ॥”<br>इति पाद्मोत्तरखण्डे कार्त्तिकमहात्म्ये १३२ अध्यायः ॥ |  |
|---|---|---|

सैबलबलाहकाभं परुषं पीतप्रभं
प्रभाहीनम् ।
मलिनद्युतिं विवर्णं दूरात् परिवर्जयेत्
प्राज्ञः ॥
मूल्यं प्रकल्प्यमेषां
विबुधवरैर्देशकालविज्ञानात् ।
दूरे भूतानां बहु
किञ्चिन्निकटप्रसूतानाम् ॥”
इति गारुडे भीष्मरत्नपरीक्षा नाम
७६ अः ॥

**भीष्मसूः**, स्त्री, (भीष्मं सूते प्रसूते इति । सू प्रसवे
+ क्विप् ।) गङ्गा । इत्यमरः । १ ।
१० । ३१ ॥

**भीष्माष्टमी**, स्त्री, (भीष्मस्य अष्टमी भीष्मनाशिका
अष्टमी वा ।) माघशुक्लाष्टमी । तत्र
भीष्मस्य
तर्पणादिकं कर्त्तव्यम् । यथा,
भविष्योत्तरे ।
“शुक्लाष्टम्यान्तु माघस्य
दद्याद्भीष्माय यो जलम् ।
संवत्सरकृतं पापं तत्क्षणादेव
नश्यति ॥”
धवलधृता स्मृतिः ।
“अष्टम्यान्तु सिते पक्षे भीष्माय तु
तिलोदकम् ।
अन्नञ्च विधिवद्दद्युः सर्व्वे वर्णा
द्विजातयः ॥”
सर्व्वे वर्णा इत्युपादानात्
ब्राह्मणशूद्रयोरप्यधि-
कारः । द्विजातय इति सम्बोधनम्
॥ स्मृति-
रत्नाकरे विष्णुधर्म्मोत्तरम् ।
“मध्याह्नव्यापिनी ग्राह्या श्राद्धे
भीष्माष्टमी
तिथिः ।
स्नाने च तर्पणे दाने ग्राह्या
सूर्य्योदयी परा ॥

**भुक्तसमुज्झितं**, त्रि, (आदौ भुक्तं पश्चात् समु-
ज्झितं परित्यक्तम् ।
स्नातानुलिप्तवत्समासः ।)
पूर्ब्बं भुक्तं तत् शेषं पश्चात् समुज्झितं
त्यक्तम् ।
तत्पर्य्यायः । फेला २ । इत्यमरः । २
। ९ । ५६ ॥
पिण्डम् ३ फेलिः ४ । इति
भरतधृतरभसः ॥

**भुक्तिः**, स्त्री, (भुज् + क्तिन् ।) भोजनम् । इति
शब्दरत्नावली ॥ भोगः । यथा, --
“भुक्तिस्त्रिपुरुषी सिद्ध्येदपरेषां न
संशयः ।
अनिर्वृत्ते सपिण्डत्वे सकुल्यानां न
सिद्ध्यति ॥
आहर्त्ता शोधयेद्भुक्तिमागमञ्चापि संसदि
।
तत्सुतो भुक्तिमेवैकां पौत्त्रादिषु न
किञ्चन ॥”
इति दायतत्त्वम् ॥
(यथा, मनुः । ८ । २५२ ।
“एतैर्लिङ्गैर्नयेत् सीमां राजा
विवदमानयोः ।
पूर्ब्बभुक्त्या च सततमुदकस्यागमेन च
॥”)
रविर्भुक्तिर्यथा, --
“सार्द्धसप्तझसे मेषे वसुः सार्द्धो घटे
वृषे ।
दशैव मकरे द्वन्दे पलानि प्रतिवासरम्
।
कुलीरसिंहप्रमदातुलालिकार्म्मुकेषु च ।
पलान्येकादश तथा रविभुक्तिं प्रचक्षते
॥”
इति ज्योतीरत्नमाला ॥
भोगः । दखल इति पारस्यभाषा । स
च
प्रमाणचतुष्टयान्तर्गतप्रमाणविशेषः ।
यथा ।

रेकेण परैर्दशवर्षाणि भुज्यमानं स्वामी तूष्णीं
प्रेक्षते मा भुज्यतामिति प्रतिषेधं न रचयति
नासौ तल्लब्धुं योग्यो भवति तत्र तस्य स्वाम्यं
नश्यतीत्यर्थः । गोतमः । अजडापौगण्डधनं
दशवर्षभुक्तं परैः सन्निधौ भोक्तुरिति । जडो
विकलेन्द्रियः । पौगण्डः पूतोऽनुत्पन्नश्मश्रुर्गण्डः
कपोलो यस्य सः । तदाह नारदः --
“बाल आषोडशाद्वर्षात् पौगण्डश्चापि
शब्द्यते ॥”
अत्रापौगण्डः प्रकीर्त्तित इति कुल्लूकभट्टेन
लिखितम् । तत्पाठेऽपि अपौगण्डस्तु पौगण्ड
इति द्विरूपकोषादविरोधः । तस्माद्याज-
नादिरिव वचनाद्दशवर्षविंशतिवर्षादिकालैर्भोग
एव स्वत्वं जनयति । यथा कालप्राप्तिवशेन
बीजमङ्कुरं जनयति तरवश्च कुसुममिति ।
स्वामिना चापरित्यक्तेऽपि शास्त्रोक्तकालीन-
भोगात् स्वाम्यमन्यस्य भवति । यथा जयेन
राज्ञः परराष्ट्रधन इति । एवमेव श्रीकरवालो-
कजोग्लोकभबद्वेवभट्टशूलपाणिकुल्लूकभट्टचण्डेश्व-
रनव्यवर्द्धमानोपाध्यायप्रभृतयः ॥ व्यवहारो-
ऽप्येतादृगेव । एतद्विरुद्धवचनान्यन्यथाव्याख्ये-
यानि । तत्रोपेक्षया स्वत्वहानिं भुक्त्या च स्वत्व-
माह नारदः --
“भुज्यमानान् परैरर्थान् यस्तान्मोहादुपेक्षते ।
समक्षं तिष्ठतोऽप्यस्य तान् भुक्तिः कुरुते वशे ॥”
व्यक्तमाह बृहस्पतिः --
“स्थावरं सिद्धिमाप्नोति भुक्त्या हानिमुपेक्षया ।”
उपेक्षया क्षमया । तत्कारणञ्च स्वामिनः
सुशीलत्वमह्रेच्छत्वदयालुत्वादि । एवञ्च विंशति-
वर्षात् पूर्ब्बं स्वकृतिसाध्यकर्षणपालनाद्यैरुत्-
पन्नद्रव्य एव स्वत्वम् । एवं दशवर्षात् पूर्ब्बं
स्वकृतिसाध्यदोहनपालनाद्यैरुत्पन्नदुग्धादौ एव
स्वत्वम् । तत्तत्कालपरतस्तु भूमौ गवादिधने
च स्वत्वमिति । पूर्ब्बं तत्तन्नाशकभोगे तु चौर्य्य-
दोषो भवत्येव ॥ * ॥ भोगे तु स्वत्वहानिमा-
ध्यादीनां व्यावर्त्तयति पश्यतोऽब्रुवत इत्यभिधाय
याज्ञवल्क्यः --
“आधिसीमोपनिःक्षेपजडबालधनैर्विना ।
तथोपनिधिराजस्त्रीश्रोत्रियाणांधनैरपि ॥”

यदा कदाचित् कुम्भांशं गता
सूर्य्योदयी परा ।
पूर्ब्बस्यामेव कर्त्तव्यं तर्पणं श्राद्धमेव
च ॥
यदैकस्मिन् भवेन्मासि
कदाचिन्माकरी द्वयम् ।
भीष्माष्टमी द्वयं वापि तदा ग्राह्या परा
तिथिः ॥
व्राह्मणस्त्वन्यवर्णानांयः
करोत्यौद्‌र्ध्वदेहिकम् ।
तद्वर्णत्वमसौ याति इह लोके परत्र
च ॥”
इति मरीचिवचनन्तु
भीष्मकृत्येतरपरम् ॥
तथा च स्मृतिः ।
“ब्राह्मणाद्यास्तु ये वर्णा दद्युर्भीष्माय
नो जलम् ।
संवत्सरकृतं पुण्यं तत्क्षणादेव
नश्यति ॥
असवर्णजलदाननिषेधस्तु
प्रकरणवलादपि
भ्रात्रादिविषय इति श्रीदत्तः ॥
तर्पणमन्त्रस्तु ।
“वैयाघ्रपद्यगोत्राय सांकृतिप्रवराय च
।
अपुत्त्राय ददाम्येतत् सलिलं
भीष्मवर्म्मणे ॥
भीष्मः शान्तनवो वीरः सत्यवादी
जितेन्द्रियः ।
आभिरद्भिरवाप्नोतु पुत्त्रपौत्त्रोचितां
क्रियाम् ॥”
इत्याशंसामन्त्रः ।
पुत्त्रपौत्त्रोचितामित्यभिधानात्
पितृकर्म्मरीत्या । ब्राह्मणः
पितृतर्पणानन्तरं
क्षत्त्रियस्तु तत्पूर्ब्बं तर्पयेत् । इति
संवत्सर-
प्रदीपादयः ॥ इति तिथ्यादितत्त्वम्
॥

**भुक्तं**, त्रि, (भुज् + कर्म्मणि क्तः ।) भक्षितम् ।
लिखिताद्यभावे दिव्यमाह याज्ञवल्क्यः
।
“प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति
कीर्त्ति-
तम् ।
एषामन्यतमाभावे दिव्यान्यतममुच्यते
॥”
इति व्यवहारतत्त्वम् ॥
तद्विवरणं यथा । अथ भुक्तिः । तत्र
याज्ञ-
वल्क्यः ।
“पश्यतोऽब्रुवतो
हानिर्भूमेर्व्विंशतिवार्षिकी ।
परेण भुज्यमानाया धनस्य
दशवार्षिकी ॥”
विवादमकुर्व्वतः समक्षं भूस्वामिनः
परेणा-
सपिण्डादिना भुज्यमानाया
भूमेर्व्विंशतिवर्ष-
निर्वृत्ता स्वत्वहानिः । अत्र
लोकव्यवहार-
कर्म्मत्वाद्वर्षगणना सावनेन । यथा च
विष्णु-
धर्म्मोत्तरम् ।
“सत्राण्युपास्यान्यथ सावनेन
लौक्यञ्च यत् स्याद्‌व्यवहारकर्म्म ॥”
तत्रैव ।
“सावने च तथा मासि त्रिंशत्
सूर्य्योदयाः
स्मृताः ॥”
इति ॥
विशेषयति व्यासः ।
“वर्षाणि विंशतिं यस्य भूर्भुक्ता तु
परैरिह ।
सति राज्ञि समर्थस्य तस्य सेह न
सिध्यति ॥”
समर्थस्य बालत्वादिदोषरहितस्य।
धनस्य
दशवर्षनिर्वृत्ता स्वत्वहानिः । तथा च
मनु-
नारदौ ।
आधिर्बन्धकद्रव्यम् । उपनिःक्षेपः ।
वासनस्थमनाख्याय समुद्रं यन्निधीयते ॥”
इति नारदोक्तेः ॥
वासनस्थं निःक्षेपाधारभूतसम्पुटादिस्थम्।
समुद्रं ग्रन्थ्यादियुतम् । जडो बुद्धिविकलः ।
बालोऽप्राप्तषोडशवर्षः । उपनिधिः प्रीत्या
भोगार्थमर्पितः । ततश्च आध्यादिभिर्जडादि-
धनैश्च विना अन्यानि धनानि उक्तभोगकालेन
स्वामिनो नश्यन्ति एतानि तु स्वामिनो न
नश्यन्ति न वा भोक्तुर्भवन्ति ॥ * ॥ मिताक्षरायां
स्मृतिः --
“द्वारमार्गक्रियाभोगजलवाहादिषु क्रिया ।
भुक्तिरेव तु गुर्व्वी स्यान्न दिव्यं न च साक्षिणः ॥”

| | | |
|---|---|---|
| इत्यमरः । ३ । २ । ११ ॥ (यथा, मनुः । २ । ५५ ।<br>"पूजितं ह्यशनं नित्यं बलमूर्ज्जञ्च यच्छति ।<br>अपूजितन्तु तद्भुक्तमुभयं नाशयेदिदम् ॥"<br>उपभुक्तम् । यथा, रघुः । ४ । ७ ।<br>"मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः ।<br>तथाप्यनन्यपूर्ब्बेव तस्मिन्नासीद्वसुन्धरा ॥"<br>भावे क्तः ।) भक्षणे, क्ली । इति त्रिकाण्डशेषः ॥<br>(यथा, रामायणे । २ । ५८ । १२ ।<br>"आसितं शयितं भुक्तं सूत ! रामस्य कीर्त्तय ।<br>जीविष्याम्यहमेतेन ययातिरिव साधुषु ॥") | "यत्किञ्चिद्दशवर्षाणि सन्निधौ प्रेक्षते धनी ।<br>भुज्यमानं परैस्तूष्णीं न स तल्लब्धुमर्हति ॥"<br>यत्किञ्चिद्धनजातं समक्षमेव प्रीत्यादिव्यति | |

याज्ञवल्क्यः ।
"आगमो ह्यधिको भोगाद्विना
पूर्ब्बक्रमागतात् ।
नागमः कारणं तत्र भुक्तिः स्तोकापि यत्र नो
॥
आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत्
।
न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी
॥
योऽभियुक्तः परेतः स्यात्तस्य रिक्थी
तमुद्धरेत् ।
न तत्र कारणं भुक्तिरागमेन विना कृता ॥"
भूम्यादावागमः
पूर्ब्बपुरुषक्रमादागतभोगाद्
बलवान् । अतः क्रमागतभोग
आगमाद्बलवान् ।
तथा च बृहस्पतिः --
"अनुमानाद्गुरुः साक्षी साक्षिभ्यो लिखितं
गुरु ।
अव्याहता त्रिपुरुषी भुक्तिस्तेभ्यो गरीयसी
॥"
त्रिपुरुषभोगमाह व्यासः --
"प्रपितामहेन यद्भुक्तं तत्पुत्त्रेण विना च तम्
।
तौ विना यस्य पित्रा च तस्य
भोगस्त्रिपौरुषः ॥
पिता पितामहो यस्य जीवेच्च प्रपितामहः
।
त्रयाणां जीवतां भोगो विज्ञेयस्त्वेकपूरुषः
॥"
आगमोऽपि बलवान्न भवति यत्र स्तोकापि
भुक्तिर्नास्ति । तथा च नारदः ।
"विद्यमानेऽपि लिखिते जीवत्स्वपि च
साक्षिषु ।
विशेषतः स्थावराणां यन्न भुक्तं न तत्
स्थिरम् ॥"
इति दीपकलिका ॥
यत्र वादिन्यौ स्वस्वागमबलप्रवृत्तौ
आगमयोश्च

"अथारूढविवादस्य प्रेतस्य व्यवहारिणः ।
पुत्त्रेण सोऽर्थः संशोध्यो न तु भोगो
निवर्त्तयेत् ॥
भोगः केवलभोगः । तथा च स एव । आदौ
तु कारणं दानं पश्चाद्भुक्तिस्तु सागमेति ।
एष
स विवादभोगः षष्ट्यब्देतरपरः ।
तथाविध-
भोगस्यागमं विनापि प्रामाण्यात् । तथा च
व्यासः ।
"वर्षाणि विंशतिं भुक्ता स्वामिनाव्याहता
सती ।
भुक्तिः सा पौरुषी भूमेर्द्विगुणा तु द्विपौरुषी
॥
त्रिपौरुषी तु त्रिगुणा न तत्रान्वेष्य आगमः
॥"
एतद्वचनमसमक्षभोगविषयकमिति
समक्षविंश-
तिवर्षभोगविषयकवचनेनाविरुद्धम् ।
एतादृक्-
स्मृत्युक्तकाश एव कात्यायनः ।
"स्मार्त्तकाले क्रिया भूमेः सागमा
भुक्तिरिष्यते ।
अस्मार्त्ते त्वागमाभावात्
क्रमात्त्रिपुरुषागता ॥"
षष्टिवर्षैकपुरुषभुक्तौ
त्रिपुरुषभुक्तिव्यपदेशस्य
फलमाह न तत्रेत्यादि । अतएव नारदः ।
"अन्यायेन तु यद्भुक्तं पित्रा पूर्ब्बतरैस्त्रिभिः
।
न तच्छक्यमपाकर्त्तुं क्रमात्त्रिपुरुषागतम्
॥"
अन्यायेनेत्यत्रानागममिति
शूलपाणिधृतपाठः ।
तुरप्यर्थः । पित्रा सह पितरमादा त्रिभि-
रित्यर्थः । यत्तु ।
"अनागमन्तु यो भुङ्क्ते बहून्यब्दशतान्यपि
।
चौरदण्डेन तं पापं दण्डयेदवनीपतिः ॥"

विवाह्य श्रोत्रियैर्भुक्तं राज्ञामात्यैस्तथैव च ।
सुदीर्घेणापि कालेन तेषां तत्तु न
सिद्ध्यति ॥"
आपणो विक्रयस्थानम् । विवाह्यो जामाता
।
इति च व्यवहारतत्त्वम् ॥

**भुक्तिप्रदः**, पुं, (भुक्तिं भोगं प्रददातीति । प्र +
दा + "आतश्चोपसर्गे ।" ३ । १ । १३६ ।
इति
कः ।) मुद्गः । इति राजनिर्घण्टः ॥ भोग-
दातरि, त्रि ॥

**भुग्नः**, त्रि, (भुज मोटने + क्तः । "ओदितश्च ।"
८ । २ । ४५ । इति निष्ठातस्य नः ।)
रोगा-
दिना कुटिलीकृतः । तत्पर्य्यायः । रुग्नः २
।
इत्यमरः । ३ । १ । ९१ ॥ वक्रः । इति
भुज-
धात्वर्थदर्शनात् । (यथा, --
"साश्रुणी कलुषे रक्ते भुग्ने लुलितपक्ष्मणी ।
अक्षिणी
पिण्डिकापार्श्वमूद्र्ध्वपर्व्वास्थिरुग्भ्रमः ॥"
इति वाभटे निदानस्थाने द्वितीयेऽध्याये ॥
यथा, च भट्टिः । ११ । ८ ।
"पीने भटस्योरसि वीक्ष्य भुग्नां
स्तनुत्वचः पाणिरुहान् सुभध्या ॥")

**भुज**, ओ श औ वक्रणे । इति कविकल्पद्रुमः ॥
(तुदा०-पर०-सक०-अनिट् ।)
वक्रणमिति
वक्रं करोतीति ञौ रूपम् । ओ, भुग्नः । श,
भुजति लतां वायुः । औ, भोक्ता । इति
दुर्गा-
दासः ॥

**भुज**, ध औ त्राणे । भक्षे । इति कविकल्पद्रुमः ॥
(रुधा०-पर०-सक०-अनिट् ।) ध,
भुनक्ति ।
औ, अभौक्षीत् । त्राणं पालनम् उपभोगश्च

पूर्ब्बापरभावो न निश्चीयते तत्र यस्य भुक्ति-
स्तस्यागमो बलीयान् न त्वन्यस्येत्यर्थ इति मिता-
क्षरा ॥ अर्थात्
यत्रागमपौर्ब्बापर्य्यनिश्चयस्तत्र ।
“सर्व्वेष्वेव विवादेषु बलवत्युत्तरा क्रिया ।
आधौ प्रतिग्रहे क्रीते पूर्ब्बा तु बलवत्तरा ॥”
इति याज्ञवल्क्यवचनान्निर्णयः ॥
आगमस्त्विति आ सम्यग्गम्यते प्राप्यते स्वं भवति येन क्रयादिना स आगम इति व्यवहार-
मातृका ॥ आगमः साक्षिपत्रादिकमिति याज्ञ-
वल्क्यदीपकलिका ॥ आगमो धनोपार्ज्जनोपायः
क्रयादिरिति मैथिलाः ॥ तत्रान्येनाभियुक्त आगमकर्त्ता तत्कूटतामुद्धरेत्तत्पुत्त्रपौत्त्रौ नाग-
ममुद्धरेतां किन्तु भुक्तिरेव तत्र प्रमाणम् । विशे-
षयति बृहस्पतिः ।
“आहर्त्ता शोधयेद्भुक्तिमागमञ्चापि संसदि ।
तत्सुतो भुक्तिमेवैकां पौत्त्रादिषु न किञ्चन ॥”
इति शूलपाणिधृतम् ॥
तत्पुत्त्रादौ न किञ्चनेति मैथिलधृतम् ॥ आहर्त्ता
अर्जनकर्त्ता । अत्र पुत्त्रस्य भुक्तिशोधनमात्रम्।
भुक्तिशोधनमाहतुर्व्यासकात्यायनौ।
“सागमो दीर्घकालश्च
निश्छिद्रोऽन्यरवोज्झितः।
प्रत्यर्थिसन्निधानञ्च पञ्चाङ्गो भोग इष्यते ॥”
प्रमाणमिति शेषः । सागमः क्रयादियुक्तः । एष च
भूमिविषयकविंशतिवर्षधनविषयकदश-
वर्षान्यूनकालभोगपरः । योऽभिभुक्त इति यो
भोगे क्रियमाणे परेणाभियुक्तः परेतो मृतः

इति दण्डविधायकव्यासवचनं तद्धर्म्मशास्त्रविरो-
धात् न मुख्यार्थपरम् । तदाह स एव ।
“यत्र विप्रतिपत्तिः
स्याद्धर्म्मशास्त्रार्थशास्त्रयोः ।
अर्थशास्त्रार्थमुत्सृज्य
धर्म्मशास्त्रार्थमाचरेत् ॥”
एवमेव शूलपाणिः । वस्तुतस्तु अनागममिति
दण्डविधायकवचनं स्त्रीधननरेन्द्रधनपरम् ।
“स्त्रीधनञ्च नरेन्द्राणां न कदाचन जीर्य्यति ।
अनागमं भुज्यमानमपि वर्षशतैरपि ॥”
इति
स्वत्वनिषेधकनारदवचनैकवाक्यत्वात् ।
यत्र विप्रतिपत्तिः स्यादिति वचनस्याप्येतदुदा-
हरणम् । यत्रैकस्य जयेऽवधार्य्यमाणे मित्र-
लब्धिरपरस्य जयेऽवधार्य्यमाणे धनलब्धिस्तत्र ।
“हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यतः ।
अतो यतेत तत्प्राप्ताविति वेदविदां मतम् ॥”
इति याज्ञवल्क्योक्तार्थशास्त्रमुत्सृज्य क्रोध-
लोभविवर्ज्जित इति धर्म्मशास्त्रमवलम्ब्य व्यव-
हारं पश्येत् । अतएव ।
“सभ्येनावश्यवक्तव्यं धर्म्मार्थसहितं वचः ॥”
इति कात्यायनोक्तमिति । भवदेवस्तु व्यासवच-
नन्तु प्रतिवादिनोऽसन्निधाने पुरुषैकद्वयभोगा-
भिप्रायं त्रैपुरुषिकभोगस्य तत्रापि प्रमाणत्वा-
दित्याहुः ॥
अथ भुक्तिस्वत्वापवादः ।
तत्र बृहस्पतिः ।

तस्मात् पालने परस्मैपदम् । इति बोध्यम् ।
भुनक्ति पृथ्विवीं राजा पालयतीत्यर्थः । उप-
भोगे तु वृद्धो जनो दुःखशतानि भुङ्क्ते इति ।
दिवं मरुत्वानिव भोक्ष्यते महीमिति रघुः ।
एवं सुखमुपभुङ्क्ते इत्यादि च बोध्यम् । भुजोऽ-
शने इत्यत्र भक्षणमात्रस्य ग्रहणेऽपि उपभोगस्य
भक्षणजन्यतृप्तिजनकत्वविवक्षया सिद्धिरिति
विद्यानिवासः । इति दुर्गादासः ॥

**भुजः**, पुं स्त्री, (भुजति वक्रो भवतीति । भुज +
“इगुपधज्ञेति ।” ३ । १ । १३५ । इति कः ।
यद्वा, भुज्यतेऽनेनेति । भुज + “हलश्चेति ।”
३ । ३ । १२१ । इति घञ् । इत्यत्र काशिकोक्तेः
घञ् । “भुजन्युब्जौ पाण्युपतापयोः ।” ७ । ३ । ६१ ।
इति घञि गुणाभावः कुत्वाभावश्च निपा-
त्यते ।) तत्पर्य्यायः । बाहुः २ प्रवेष्टः ३
दोः ४ । इत्यमरः । २ । ६ । ८० ॥ बाहः ५
वाहा ६ भुजा ७ दोषः ८ दोषा ९ । इत्यमर-
टीकायां भरतः ॥ करः १० । इति मेदिनी ।
जे, १३ ॥ (यथा, रघुः । २ । ७४ ।
“भुजे भुजङ्गेन्द्रसमानसारे
भूयः स भूमेर्धुरमाससञ्ज ॥”)
तस्य शुभाशुभलक्षणम् यथा, --
“कक्षा चाश्वदला श्रेष्ठा
सुगन्धिन्यूर्द्ध्वरोमिका ।
अन्यथा अर्थहीनानामसौ निःस्वस्य रोमशौ ॥
निर्म्मांसौ चैव भुग्नाल्पौ श्लिष्टौ च विपुलौ भुजौ ।

| स्यान्नागमसुद्धृतवान् तदा तत्पुत्रादिरेव तमु-<br>द्धरेत् । तथाह नारदः । | "भुक्तिस्त्रैपुरुषी सिद्ध्येदपरेषां न संशयः ।<br>अनिवृत्ते सपिण्डत्वे सकुल्यानां न सिद्ध्यति ॥<br>अस्वामिना च यद्भुक्तं गृहक्षेत्रापणादिकम् ॥<br>सुहृद्बन्धुसकुल्यस्य न तद्भोगेव हीयते ॥ | |
|---|---|---|

आजानुलम्बिनौ बाहू वृत्तौ पीनौ नृपेश्वरे ॥
निःस्वानां रोमशौ ह्रस्वौ श्रेष्ठौ करिकरप्रभौ ।”
इति गारुडे ६६ अध्यायः ॥
(हस्तिशुण्डः । यथा, महाभारते । ३ । २७० । २१ ।
“नकुलस्तस्य नागस्य समीपपरिवर्त्तिनः ।
सविषाणं भुजं मूले खड्गेन निरकृन्तत ॥”)
ग्रहस्पष्टीकरणार्थं राशित्रयादूनकेन्द्रग्रहादिः ।
राशित्रयादधिकनवपर्य्यन्तषडन्तरितावशेषः ।
नवराशिभ्योऽधिकं चेत् तदा द्वादशराशिभ्यः
शोध्यश्च भुजः स्यात् । यथा, --
“दोस्त्रिभोनं त्रिभोद्‌र्ध्वं विशेष्यं रसै-
श्चक्रतोऽङ्काधिकं स्याद्भुजोनं त्रिभम् ।
कोटिरेकैककं त्रित्रिभैः स्यात् पदं
सूर्य्यमन्दोच्चमष्टाद्रयोऽंशा भवेत् ॥”
इति ग्रहलाघवम् ॥
क्षेत्रस्य परिमाणविशेषः । यथा, --
“कोटिश्चतुष्टयं यत्र दोस्त्रयं तत्र का श्रुतिः ।
कोटिं दोः कर्णतः कोटिश्रुतिभ्याञ्च भुजं वद ॥
इष्टो बाहुर्यः स्यात्तत्स्पर्द्धिन्यां दिशीतरो बाहुः ।
त्र्यस्रे चतुरस्रे वा सा कोटिः कीर्त्तिता तज्ज्ञैः ॥
तत्कृत्योर्योगपदं कर्णः दोः कर्णवर्गयोर्विवरात् ।
मूलं कोटिः तच्छ्रुतिकृत्योरन्तरात् पदं बाहुः ॥”
इति लीलावत्यां क्षेत्रव्यवहारः ॥

**भुजकोटरः**, पुं, (भुजस्य कोटर इव ।) कक्षः ।
इति हेमचन्द्रः । ५ । २५३ ॥

**भुजगः**, पुं, (भुजं वक्रं गच्छतीति । गम् + डः । ३ । २ । ३८ । इत्यत्र “खच्च डिद्वाच्यः ।” वार्त्तिकोक्तेः
डित् । ततः टिलोपः ।) सर्पः । इत्यमरः । १ । ८ । ६ ॥ (यथा, मेघदूते । ६२ ।
“तस्मिन् हित्वा भुजगवलयं शम्भुना दत्तहस्ता ।
क्रोडाशैले यदि च विचरेत् पादचारेण गौरी ॥”)

**भुजगदारणः**, पुं, (भुजगं दारयतीति । दॄ +
णिच् + ल्युः ।) गरुडः । इति राजनिर्घण्टः ॥

**भुजगाभोजी**, [न्] पुं, (भुजगं आ सम्यक्प्रकारेण
भुङ्क्ते इति । भुजग + आ + भुज + णिनिः ।)
“त्रिंशद्भागा भुजङ्गस्य
गन्धपाषाणपञ्चकम् ॥
शुरतालकयोर्द्वौ द्वौ
वङ्गस्यैकोऽञ्जनात्त्रयम् ।
अन्धमूषीकृतं ध्मातं पक्वं
विमलमञ्जनम् ॥”
इति वाभटे उत्तरतन्त्रे त्रयोदशेऽध्याये ॥)

**भुजङ्गघातिनी**, स्त्री, (भुजङ्गं सर्पं तद्विषं वा
हन्तीति । हन + णिनिः । स्त्रियां ङीप् ।)
वृक्षविशेषः । कङ्कालिका इति ख्यातः । तत्-
पर्य्यायः । सूरिः २ सर्पाक्षी ३ क्षुत्करी ४
स्पृहा ५ । इति शब्दचन्द्रिका ॥
सर्पनाशिनी च ॥

**भुजङ्गजिह्वा**, स्त्री, (भुजङ्गस्य जिह्वेव आकृति-
र्यस्याः ।) महासमङ्गा । इति
राजनिर्घण्टः ॥
(भुजङ्गस्य जिह्वा ।) सर्परसना च ॥
(विवरण-
मस्या महासमङ्गाशब्दे ज्ञातव्यम् ॥)

**भुजङ्गप्रयातं**, क्ली, (भुजङ्गवत्प्रयातं गतिरिव
भङ्गीमान् शब्दविन्यासो यस्य ।)
द्वादशाक्षर-
पादच्छन्दः । यथा,
कालिदासकृतश्रुतबोधे ।
“यदाद्यञ्चतुर्थन्तथा सप्तमञ्चेत्-
तथैवाक्षरं ह्रस्वमेकादशाद्यम् ।
शरच्चन्द्रविद्वेषिवक्त्रारविन्दे
तदुक्तं कवीन्द्रैर्भुजङ्गप्रयातम् ॥”
(अधिकन्तु छन्दःशब्दे ज्ञातव्यम् ।)

**भुजङ्गभुक्**, [ज्] पुं, (भुजङ्गं भुङ्क्ते इति । भुज् +
क्विप् ।) गरुडः । इति शब्दरत्नावली ॥ मयूरः ।

**भुजङ्गाख्यः**, पुं, (भुजङ्गस्य आख्या आख्या यस्य ।)
नागकेशरः । इति शब्दमाला सर्पनामके, त्रि ॥

**भुजशिरः**, [स्] क्ली, (भुजस्य शिर इव ।)
स्कन्धः । इत्यमरः ॥ २ । ६ । ७८ ॥

**भुजा**, स्त्री, (भुज + टाप् ।) बाहुः । करः । इति
मेदिनी । जे, १३ ॥ (यथा, शिशुपालवधे । ७ । ७१ ।
“अविरतकुसुमावचायखेदा
न्निहितभुजालतयैकयोपकण्ठम् ॥”)

**भुजाकण्टः**, पुं, (भुजायाः करस्य कण्ट इव ।)
हस्तनखः । इति हेमचन्द्रः ॥

**भुजादलः**, पुं, (भुजाया बाहोर्दल इव ।) हस्तः ।
इति त्रिकाण्डशेषः ॥

**भुजान्तरं**, क्ली, (भुजयोरन्तरं मध्यम् ।) क्रोडम् ।
इत्यमरः । २ । ६ । ७७ ॥ (वक्षः ।
यथा, रघुः । ३ । ५४ ।
“दिलीपसूनोः स बृहद्भुजान्तरं
प्रविश्य भीमासुरशोणितोचितः ।
पपावनास्वादितपूर्ब्बमाशुगः
कुतूहलेनेव मनुष्यशोणितम् ॥”
भुजस्यान्तरं प्रभेदः ।) हस्तप्रभेदश्च ॥

**भुजिः**, पुं, (भुनक्ति भुङ्क्ते वा सर्व्वानिति ।
भुज + “भुजेः किच्च ।” उणा० ४ । १४१ । इति
इः । स च कित् । सर्व्वभक्षकत्वादस्य तथा-
त्वम् ।) वह्निः । इत्युणादिकोषः ॥ (भुज + भावे
इः । भोगः । यथा, ऋग्वेदे । ८ । ९१ । ६ ।
“आसवं सवितुर्यथा भगस्येव भुजिं हुवे ।
अग्निं समुद्रवाससम् ॥”

मयूरः । इति राजनिर्घण्टः ॥

**भुजान्तकः**, पुं, (भुजगस्य अन्तकः ।) गरुडः ।

इति राजनिर्घण्टः ॥

**भुजगाशनः**, पुं, (भुजगमश्नातीति । अश + ल्युः ।

भुजगः अशनं यस्येति वा ।) गरुडः । इति
त्रिकाण्डशेषः ॥

**भुजङ्गः**, पुं, (भुजं वक्रं गच्छतीति । गम + खच् ।

"खच्च डिद्वाच्य" इति वार्त्ति डित्त्वपक्षे टिलोपः
।)
सर्पः । (यथा, रघुः । ९ । ७९ ।
"आक्रान्तपूर्ब्बमिव मुक्तविषं भुजङ्गं
प्रोवाच कोशलपतिः प्रथमापराद्धः ॥")
षिङ्गः । इत्यमरः । १ । ८ । ६ । मेदिनी च ॥
(सीसम् । तद्यथा, --
"सीसं वध्रञ्च वप्रञ्च योगेष्टं नागनामकम् ॥"
नागनामकम् । नागः भुजङ्ग इत्यादि ।)
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
अपरञ्च तदर्थे ।

इत्यमरः । २ । ५ । ३० ॥ (मयूरार्थे
पर्य्यायो
यथा, --
"मयूरश्चन्द्रकी केकी मेघरावो
भुजङ्गभुक् ।
शिखी शिखाबलो वर्ही शिखण्डी
नीलकण्ठकः ॥
शुक्लोपाङ्गः कलापी च मेघनादः
कलाप्यपि ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये
भागे ॥)

**भुजङ्गभोजी**, [न्] पुं, (मुजङ्गं भुङ्क्ते इति ।

भुज + णिनिः ।) राजसर्पः । इति
हेमचन्द्रः ॥

**भुजङ्गमः**, पुं, (भुज कौटिल्ये + इगुपधेति कः ।

भुजः कुटिलीभवन् गच्छतीति । भुज
+
गम् + "गमेः सुपि बाच्यः ।" ३ । १ ।
३८८ ।
इत्यस्य वार्त्तिकात् खच् ।
"खच्चडिद्वाच्यः ।" इति
डिदभावे टिलोपाभावः ।) सर्पः ।
इत्य-
मरः । १ । ८ । ६ । (यथा, रघुः । ६
। ७७ ।
"आरूढमद्रीनुदधीन् वितीर्णं
भुजङ्गमानां वसतिं प्रविष्टम् ॥")
सीसके, क्ली । इति राजनिर्घण्टः ॥

**भुजङ्गलता**, स्त्री, (भुजङ्गवत् कुटिला तत्प्रिया

वा लता ।) नागवल्ली । इति
राजनिर्घण्टः ॥

**भुजङ्गहा**, [न्] पुं, (भुजङ्गं हन्तीति । हन् +

क्विप् ।) गरुडः । इति त्रिकाण्डशेषः
॥

**भुजङ्गाक्षी**, स्त्री, (भुजङ्गस्य अक्षीव पुष्पं यस्याः
।

"अक्ष्णोऽदर्शनात् ।" ५ । ४ । ७६ ।
इति अच् ।

"सवितुः प्रेरकस्य देवस्य सवं यथा
प्रसवमिव
भगस्येव भुजिं भगाख्यस्य देवस्य
भोगमिव च
समुद्र वाससमग्निं आहुवे आह्वयामि ।"
इति
तद्भाष्ये सायनः ॥ * ॥ भोक्तरि, त्रि ।
यथा,
ऋग्वेदे । ८ । ८ । २ ।
"भुजी हिरण्यपेशसा कवी गम्भीरचेतसा
॥"
"हे भुजी हविषां भोक्तारौ ।" इति
तद्भाष्ये
सायनः ॥)

**भुजिष्यः**, पुं, (भुङ्क्ते स्वाम्युच्छिष्टमिति भुज्यते

इति वा भुज + "रुचिभुजिभ्यां किष्यन्
।"
उणा० ४ । १७८ । इति किष्यन् ।)
स्वतन्त्रः ।
हस्तसूत्रम् । दासः । इति मेदिनी । ये,
९८ ॥
(यथा, माघे । १५ । ६३ ।
"किमहो नृपाः सममभीभि-
रुपपतिसुतैर्न पञ्चभिः ।
वध्यमभिहत भुजिष्यममुं
सह चानया स्थविरराजकन्यया ॥")
रोगः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**भुजिष्या**, स्त्री, (भुजिष्य + टाप् ।) दासी ।

(यथा, रघुः । ६ । ५३ ।
"अथाङ्गदाश्लिष्टभुजं भुजिष्या
हेमाङ्गदं नाम कलिङ्गनाथम् ।
आसेदुषीं सादितशत्रुपक्षं
बालामबालेन्दुमुखीं बभाषे ॥")
गणिका । इति मेदिनी । ये, ९९ ॥

| | | |
|---|---|---|
| | गौरादित्यात् ङीष् ।) रास्ना । इत्यमरः । २ । ४ । ११५ ॥ (रास्ना मेदनाइ इति लोके । तथास्याः पर्य्यायान्तरम् । "नाकुली सरसा नागसुगन्धा गन्धनाकुली । नकुलेष्टा भुजङ्गाक्षी सर्पाक्षी विषनाशिनी ॥" इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥) | |

**भुज्युः**, पुं, (भुज्यतेऽत्रेति । भुज भक्षणे + “भुजि
मृङ्भ्यां युक्त्युकौ ।” उणा० ३ । २१ । इति
युक् ।) भाजनम् । इत्युणादिकोषः । २ । २०३ ॥
भाजनम् । (भुङ्क्ते सर्व्वानिति । भुज + कर्त्तरि
युक् ।) अग्निः । इति संक्षिप्तसारोणादिवृत्तिः ॥
(स्वनामख्यातराजविशेषः । यथा, ऋग्-
वेदे । ४ । २७ । ४ ।
“ऋजिप्य ईमिन्द्रावतो न भुज्युं
श्येनो जभार बृहतो अधिष्णोः ॥”
भुनक्ति पालयतीति । भुज पालने + युक् ।
रक्षके, त्रि । यथा, ऋग्वेदे । ८ । २२ । २ ।
“पूर्ब्बापुषं सुहवं पुरुस्पृहं भुज्युं
वाजेषु पूर्ब्बम् ॥”
“भुज्युं भुजपालने सर्व्वस्य रक्षकम् ॥” इति
तद्भाष्ये सायनः ॥)

**भुञ्जन्**, [त्] त्रि, (भुज् + शतृ ।) भोगकर्त्ता ।
भुजधातोः शतृप्रत्ययनिष्पन्नोऽयभ् ॥

**भुञ्जानः**, पुं, (भुज् + शानच् ।) भोगकर्त्ता ।
यथा, --
“भुञ्जानो वर्द्धयेत् पापमसत्यं संसदि
बृवन् ॥”
इति प्रायश्चित्ततत्त्वम् ॥
(तथा च ।
“अशितश्चोदकं युक्त्या
भुञ्जानश्चान्तरा पिबेत् ॥”
इति सुश्रुते सूत्रस्थाने । ४६ अ, ॥)

**भुरिक्**, [ज्] स्त्री, (भरति सर्व्वं धरतीति ।

भद्राश्वं केतुमालञ्च तथा वर्षमिलावृतम् ॥
भारतं हरिवर्षञ्च तथा किंपुरुषावृतम् ।
एतान्यष्टौ तु वर्षाणि पुण्यानि कथितानि तु ॥
इन्द्रद्युम्नः कसेरुश्च ताम्रवर्णो गभस्तिमान् ।
नागवीथी तथा सौम्यो गन्धर्व्वो वारुणस्तथा ॥
सागराख्यस्तु नवमो भेदभारतवार्षिकः ।
इदन्तु भारतं वर्षं कर्म्मभूमिरिति स्मृतम् ॥
शेषाणि द्वीपवर्षाणि भोगस्थानानि सन्त्यपि ।
भागीरथी पावनी च ह्रदिनी ह्लादिनी तथा ॥
सीता वंक्षुश्च सिन्धुश्च सप्त गङ्गाः प्रकीर्त्तिताः ।
सुप्रभा काञ्चनी चैव विशाला सुमनोह्रदाः ॥
सरस्वत्योघनादा च सुवेणुर्व्विमलोदका ।
एता गङ्गास्तु विख्याताः सप्त पुण्यप्रदाः शुभाः ॥
हिमवान् हेमकूटश्च निषधो नीलपर्व्वतः ।
श्वेतश्च शृङ्गवान्मेरुर्माल्यवान् गन्धमादनः ॥
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षवानपि ।
बिन्ध्यश्च पारिपात्रश्च कैलासो मन्दरस्तथा ॥
लोकालोको महांस्तेषु तथैवोत्तरमानसः ।
एते विंशतिर्विख्याताः पर्व्वतास्तस्थुषां वराः ॥
अतलं सुतलञ्चैव वितलञ्च गभस्तिमत् ।
महातलं रसातलं पातालं सप्तमं स्मृतम् ॥
रुक्मभौमं शिलाभौमं पातालं नीलमृत्तिकम् ।
रक्तपीतश्वेतकृष्णभौमानि च भवन्त्यपि ॥
पातालानाञ्च सप्तानां लोकानाञ्च यदन्तरम् ।
शुषिरं तानि कथ्यन्ते भुवनानि चतुर्द्दश ॥”
इति वह्निपुराणम् ॥
(भूतजातम् । यथा, ऋग्वेदे । १ । १५७ । ५ ।
“युवं ह गर्भं जगतीषु धत्थो युवं विश्वेषु भुवने-
ष्वन्तः ।”
तथा च वाजसनेयसंहितायाम् । ९ । ५ ।
“यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो
देवः सविता धर्म्म साविषत् ॥” * ॥ भावनम् ।
यथा, ऋग्वेदे । १० । ८८ । १ ।
“तस्य भर्म्मणे भुवनाय देवा धर्म्मणे कं स्यधया
पप्रथन्त ॥” * ॥ पुं, मुनिविशेषः । यथा, महा-
भारते । १३ । २६ । ८ ।

नाभिः किंपुरुषश्चैव हरिवर्ष इलावृतः ।
रम्यो हिरण्मयश्चैव कुरुभद्रश्च केतुमान् ॥ ५ ॥
नववर्षाणि विभज्य पुत्रेभ्यः पित्रा दत्तानि वनं
प्रविशता । अग्नीध्रोऽयं हिमाह्वयम् । यस्याधि-
पतिर्नाभिः ऋषभः पुत्रो बभूव ॥ ६ ॥ ऋषभाद्भरतो
भरेतन चिरकालं धर्मेण पालितत्वादिदं भारतं
वर्षमभूत् । इलावृतस्य मध्ये मेरुः सुवर्णमय-
श्चतुरशीतिसहस्राणि योजनानि तस्योच्छ्रायः ।
षोडशसहस्रमप्यधस्तादवगाढःतद्द्विगुणो मूल-
विस्तारः ॥ ६ ॥ तन्मध्ये ब्रह्मणः पुरी । ऐन्द्र्यामि-
न्द्रस्य चामरावती । आग्नेय्यामग्नेस्तेजोवती ।
याम्यां यमस्य संयमनी । नैरृत्यां निरृतेर्भयं-
करी । वारुण्यां वरुणस्य विश्वावती । वायव्यां
वायोर्गन्धवती । उदीच्यां सोमस्य विभावरीति
नववर्षान्वितं जम्बूद्वीपं पुण्यपर्वतैः पुण्यनदी-
भिरन्वितम् ॥ ७ ॥ किंपुरुषादीन्यष्टवर्षाणि पुण्य-
वतां भोगस्थानानि साक्षाद्भारतवर्षमेकं कर्म-
भूमिश्चातुर्वर्ण्ययुतम् ॥ ८ ॥
तत्रैव कर्म्मभिः स्वर्गं कृतैः प्राप्स्यन्ति मानवाः ।
मुक्तिश्चात्रैव निष्कामैः प्राप्यते ज्ञानकर्मभिः ॥ ९ ॥
अधोगतिमितो विप्र ! यान्ति वै पापकारिणः ।

भृञ् + "भृञ उच्च ।" उणा० २ । ७२ । इति
इजिः । धातोरुकारान्तादेशः ।)
पृथिवी ।
इत्युणादिकोषः ॥ (द्विवचनान्तत्वे । बाहू ।
द्यावापृथिव्यौ च । यथा, ऋग्वेदे । ४ । २ । १४ ।
"रथं न क्रन्तो अपसा भुरिजो
रृतं येमुः सुध्य आशुषाणाः ॥"
"भुरिजोः बिभ्रतः कर्म्मकरणसामर्थ्यं पदार्थान्
वेति भुरिजौ बाहू तयोः । यद्वा, भुरिजोः देवान्
मनुष्यांश्च बिभृत इति भुरिजौ द्यावापृथिव्यौ ।"
इति तद्भाष्ये सायनः ॥)

**भुवनं**, क्ली, (भवन्त्यस्मिन् भूतानीति । भू + "भूसू-
धूभ्रस्जिभ्यश्छन्दसि ।" उणा० २ । ८० । इत्यत्र
बहुलवचनाद्भाषायामपि प्रयुज्यते ।" इत्युज्ज्वल-
दत्तोक्त्या क्युन् ।) जगत् । (यथा, भट्टिः । १ । १ ।
"गुणैर्व्वरं भुवनहितच्छलेन यं
सनातनः पितरमुपागमत् स्वयम् ॥")
सलिलम् । गगनम् । जनः । इति मेदिनी । ने,
१०२ ॥ चतुर्द्दशभुवनानि यथा, --
"चतुर्द्दशविधं ह्येतद् भूतसर्गं प्रकीर्त्तितम् ।
भूर्भुवः स्वर्महश्चैव जनश्च तप एव च ॥
सत्यलोकश्च सप्तैते लोकास्तु परिकीर्त्तिताः ।
जम्बूः शाकः कुशः क्रौञ्चः शाल्मलो मेदपुष्करः ।
सप्तद्वीपाः प्रधानानि ह्युपद्वीपैस्तु संयुताः ॥
"नितम्भूर्भुवनो धौम्यः शतानन्दोऽकृतव्रणः ॥")

**भुवनको(श)ष**, पुं, (भुवनस्य कोष इव ।) भूगोलः ।
(अस्य विवरणं श्रीभागवते पञ्चमस्कन्धे । १६ ।
१७ । १८ । अध्याये द्रष्टव्यम् ॥ तथाच ।
"जम्बुप्लक्षशाल्मलकुशक्रौञ्च-
शाकपुष्करसंज्ञाः सप्त द्वीपाः ।
लक्षयोजनप्रमाणाज्जम्बु-
द्वीपादुत्तरोत्तरद्विगुणाः ॥ १ ॥
लवणसुरासर्पिर्दधिदुग्धस्वच्छोदकसंज्ञैः पर-
स्परद्विगुणैः ।
सप्तसमुद्रैर्बलयाकारैस्ते द्वीपाः परिधिष्ठिताः ॥
योऽसौ मनुपुत्त्रः प्रियव्रतो नाम स सप्तद्वीपा-
धिपतिर्बभूव । तस्य अग्नीध्रादयो दश पुत्त्रा
बभूवुः ॥ ३ ॥ त्रयः प्रव्रजिताः । शिष्टानां सप्तानां
सप्त द्वीपाः पित्रा दत्ताः । तत्र जम्बुद्वीपाधि-
पतेराग्नीध्रस्य नव पुत्त्रा जाताः ॥ ४ ॥
ये पापकारिणस्तान् विद्धि पातालतले नरके
कोटिसमन्वितान् ॥ १० ॥ अथ सप्तकुलपर्वताः
कथ्यन्ते । माहेन्द्रः । मलयः शुक्तिमान् ऋष्यमृकः
सह्यपर्वतः बिन्ध्यः पारियात्रः । इत्येते भारते
कुलपर्वताः ॥ ११ ॥
नर्मदासुरसाऋषिकुल्याभी-
मरथीकृष्णावेणीचन्द्रभागाताम्रपर्णीइत्येताः सप्त नद्यः
गङ्गायमुनागोदावरीतुङ्गभद्राकावेरी-
सरयूरित्येता महानद्यः पापध्न्यः ॥ १२ ॥
जम्बुनाम्ना च विख्यातं जम्बुद्वीपमिदं शुभम् ।
लक्षयोजनविस्तीर्णमिदं श्रेष्ठं तु भारतम् ॥ १३ ॥
अक्षद्वीपादिपुण्या जनपदाः निष्कामा ये स्वध-
र्मेण नरसिंहं यजन्ति ते तत्र निवसन्ति अधि-
कारक्षयात् मुक्तिं च प्राप्नुवन्ति ॥ १४ ॥ जम्बाद्याः
स्वादूदकान्ताः सप्त पयोधयः: । ततः परा
हिरण्मयी भूमिः । ततो लोकालोकपर्वतः
एष भूर्लोकः ॥ १५ ॥ अस्योपरि अन्तरिक्ष-
लोकः खेचराणां रम्यस्तदूर्ध्वं स्वर्गलोकः ॥ १६ ॥
स्वर्गस्थानं महापुण्यं प्रोच्यमानं निबोध मे ।
भारते कृतपुण्यानां देवानामपि चालयम् ॥ १७ ॥
मध्ये पृथिव्यामद्रीन्द्रो भास्वान् मेरुर्हिरण्मयः ।
योजनानां सहस्राणि चतुरशीतिमुच्छ्रितः ॥ १८ ॥
प्रविष्टः षोडशाधस्ताद्धरण्यां धरणीधरः ।
तावत्प्रमाणा पृथिवी पूर्ब्बतश्च समन्ततः ॥ १९ ॥
तस्य शृङ्गत्रयं मूर्ध्नि स्वर्गो यत्र प्रतिष्ठितः ।
नानाद्रुमलताकीर्णं नानापुष्पोपशोभितम् ॥ २० ॥

| | | |
|---|---|---|
| लवणः क्षीरसंज्ञश्च घृतोदो दधिसंज्ञकः ।<br>सुरोदेक्षुरसोदौ च स्वादूदः सप्तमो भवेत् ।<br>चत्वारः सागराः ख्याताः पुष्करिण्यश्च ताः स्मृताः ॥<br>उत्तराः कुरवो रम्यं वर्षं हैमवतं तथा । | | मध्यमं पश्चिमं पूर्ब्बं मेरोः शृङ्गाणि त्रीणि वै ।<br>मध्यमं स्फाटिकं शृङ्गं वैदूर्यमणिकामयम् ॥ २१ ॥<br>इन्द्रनीलमयं पूर्ब्बं माणिक्यं पश्चिमं स्मृतम् ।<br>योजनानां सहस्राणि नियुतानि चतुर्दश ॥ २२ ॥<br>उच्छ्रितं मध्यमं शृङ्गं स्वर्गो यत्र त्रिविष्टपः ।<br>अप्रभान्तरितं शृङ्गं मूर्ध्नि छत्राकृतिस्थितम् । |

पूर्व्वमुत्तरशृङ्गाणां अन्तरं मध्यमस्य च ।
त्रिविष्टपो नाकपृष्ठे ह्यप्सराः सन्ति निर्वृताः ॥ २४ ॥
आनन्दोऽथ प्रमोदश्च स्वर्गशृङ्गे तु मध्यमे ।
श्वेतश्च पौष्टिकश्चैव उपशोभनमन्मथौ ॥ २५ ॥
आह्लादः स्वर्गराजा वै स्वर्गशृङ्गे तु पश्चिमे ।
निर्म्मो निरहङ्कारः सौभाग्यश्चातिनिर्म्मलः ॥ २६ ॥
स्वर्गाश्चैव द्विजश्रेष्ठ ! पूर्ब्बशृङ्गे समास्थिताः ।
एकविंशानि स्वर्गा वै निविष्टा मेरुमूर्द्धनि ॥ २७ ॥
अहिंसादानकर्तारो यज्ञानां तपसां तथा ।
तत्तेषु निवसन्ति स्म जनाः क्रोधविवर्जिताः ॥ २८ ॥
जलप्रवेशे चानन्दं प्रमोदं वह्निसाहसे ।
भृगुप्रपाते सौख्यं च रणं चैवास्य निर्मलम् ॥ २९ ॥
अनाशके तु संन्यासे मृतो गच्छेत्त्रिविष्टपम् ।
क्रतुयाजी नाकपृष्ठं अग्निहोत्री च निर्वृ-तिम् ॥ ३० ॥
तडागकूपकर्त्ता च लभते पौष्टिकं द्विजः ।
सुवर्णदायी सौभाग्यं लभन् स्वर्गतपःफलम् ॥ ३१ ॥
शीतकाले महावह्निं प्रज्वालयति यो नरः ।
सर्व्वसत्त्वहितार्थाय स्वर्गं सोप्सरसं लभेत् ॥ ३२ ॥
हिरण्यगोप्रदाने हि निरहङ्कारमाप्नुयात् ।
भूमिदानेन शुद्धेन लभते शान्तिकं पदम् ॥ ३३ ॥
रौप्यदानेन स्वर्गं तु निर्मलं लभते नरः ।
अश्वदानेन पुण्याहं कन्यादानेन मङ्गलम् ॥ ३४ ॥
नवमे तु तथा दक्ष आदित्यो दशमे पथि ॥ ४८ ॥
भूर्लोकाच्छतसाहस्राद्रूर्ध्वं चरति भास्करः ।
योजनानां सहस्रे द्वे विष्टम्भनसमं ततः ॥ ४९ ॥
त्रिगुणं परिणाहेन सूर्य्यबिम्बं प्रमाणतः ।
सोमपुर्य्यां विभावर्य्यां मध्याह्ने चार्य्यमा यदा ।
महेन्द्रस्यामरावत्यां तदा तिष्ठति भास्करः ॥ ५० ॥
मध्याह्ने त्वमरावत्यां यदा भवति भास्करः ।
तदा संयमने याम्ये तत्रोद्यंस्तु प्रदृश्यते ॥ ५१ ॥
मेरुं प्रदक्षिणं कुर्व्वन् भात्येव सविता सदा ।
ध्रुवाधारस्तथोत्तिष्ठन्वालिखिल्यादिभिः स्तुतः ॥ ५२ ॥
इति श्रीनरसिंहपुराणे भूवनकोशे त्रिंशो-ध्यायः ॥ ३० ॥)

**भुवन्युः**, पुं, (भवतीति । “कन्युच् क्षिपेश्च ।” उणा० ३ । ५१ । इति चकारात् भूधातोरपि कन्युच् ।) सूर्य्यः । वह्निः । चन्द्रः । इति मेदिनी । ये, ९८ ॥ प्रभुः । इत्युणादिकोषः ॥

**भुवर्लोकः**, पुं, (भुवश्चासौ लोकश्चेति ।) भूरादि-सप्तलोकान्तर्गतद्वितीयलोकः । यथा, --
“भूमिसूर्य्यान्तरं यच्च सिद्धादिसुनिसेवितम् ।
भुवर्लोकस्तु सोऽप्युक्तो द्वितीयो मुनिसत्तम ! ॥”
इति विष्णुपुराणे । २ अंशे ७ अध्यायः ॥
(यथा च भागवते । २ । ५ । ८ ।
“भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः ।
हृदा स्वर्लोक उरसा महर्ल्लोको महात्मनः ॥”)

**भुवः**, [स्] व्य, (भवतीति । भू + “भूरञ्जिभ्यां भ्वाद्यात्मनेपदिनं मत्वा प्राप्तौ परस्मैपदं सत्तार्थ-स्यैवानेकार्थत्वात् समाधत्ते । इति दुर्गादासः ॥

**भू**, व्य, (भू + क्विप् ।) रसातलम् । इति हेमचन्द्रः ॥

**भूः**, स्त्री, (भवत्यस्मिन्निति । भू + अधिकरणे क्विप् ।) पृथिवी । इत्यमरः । २ । १ । २ ॥ (यथा, मनुः । ७ । ६ ।
“न चैनं भुवि शक्नोति कश्चिदप्यभिवीक्षि-तुम् ॥”
यथा च वैद्यकरत्नमालायामस्याः पर्य्यायः ।
“भूर्भूमिः पृथिवी पृथ्वी मेदिनी वसुधावनिः ।
क्षितिरुर्व्वी मही क्षौणी क्ष्मा धरा कुर्वसु-न्धरा ॥”)
स्थानमात्रम् । इति मेदिनी । भे, १ ॥ (यथा, भागवते । ६ । ४ । ३१ ।
“यच्छक्तयो वदतां वादिनां वै विवादसंवादभुवो भवन्ति ॥”
यज्ञाग्निः । इति जटाधरः ॥

**भूकं**, क्ली, (भवतीति । भू + “सृकृभूशुषिमुषिभ्यः कक् ।” उणा० ३ । ४१ । इति कक् ।) छिद्रम् । कालः । इति मेदिनी । के, ३० ॥

**भूकः**, पुं, (भू + कक् ।) अन्धकारः । इति शब्द-माला ॥

**भूकदम्बः**, पुं, (भुवि कदम्ब इव ।) अलम्बुषवृक्षः । इति रत्नमाला ॥ कोकसीम । इति भाषा ॥

**भूकदम्बकः**, पुं, (भूकदम्ब + संज्ञायां कन् ।) यवानी । इति राजनिर्घण्टः ॥ (विवृतिविशेषो-ऽस्य यवानीशब्दे ज्ञातव्यः ॥)

**भूकन्दः**, पुं, (भुवः पृथिव्याः कन्द इव ।) महा-

द्विजेभ्यस्तर्पणं कृत्वा दत्वा वस्त्राणि भक्तितः ।
श्वेतं तु लभते स्वर्गं यत्र गत्वा न शोचते ॥ ३५ ॥
कपिलागोप्रदानेन परमार्थे महीयते ।
गोवृषस्य प्रदानेन स्वर्गं मन्मथमाप्नुयात् ॥ ३६ ॥
माधमासे सरित्स्नायी तिलधेनुप्रदस्तथा ॥
छत्रोपानहदाता च स्वर्गं यात्युपशोभनम् ॥ ३७ ॥
देवतायतनं कृत्वा द्विजशुश्रूषकस्तथा ।
तीर्थयात्रापरश्चैव स्वर्गराज्ये महीयते ॥ ३८ ॥
एकान्नभोजी यो मर्त्यो नक्तभोजी च नित्यशः ।
उपवासी त्रिरात्राद्यैः शान्तः स्वर्गं शुभं लभेत् ॥ २९ ॥
सरित्स्नायी जितक्रोधो ब्रह्मचारी दृढव्रतः ।
निर्म्मलं स्वर्गमाप्नोति यथाभूतहिते रताः ॥ ४० ॥
विद्यादानेन मेधावी निरहङ्कारमाप्नुयात् ।
येन येन हि भावेन यद्यद्दानं प्रयच्छति ॥ ४१ ॥
तत्तत्स्वर्गमवाप्नोति यद्यदिच्छति मानवः ।
चत्वारि अतिदानानि कन्या गौर्भूः सरस्वती ॥ ४२ ॥
नरकादुद्धरन्त्येते जपवाहनदोहनात् ।
यस्तु सर्व्वाणि दानानि ब्राह्मणेभ्यः प्रय-च्छति ॥ ४३ ॥
संप्राप्य न निवर्त्तेत स्वर्गं शान्तमनामयम् ।
शृङ्गे तु पश्चिमे यत्र ब्रह्मा तत्र स्थितः स्वयम् ॥ ४४ ॥
पूर्ब्बशृङ्गे स्वयं विष्णुः मध्ये चैव शिवः स्थितः ।
अतः परं तु विप्रेन्द्र ! स्वर्गाध्वानमिमं शृणु ॥ ४५ ॥

कित् ।” उणा० ४ । २१६ । इति असुन् स च कित् ।) आकाशः । इति हेमचन्द्रः ॥ (महाव्याहृतिभेदः । यथा, मनुः । २ । ७६ ।
“अकारञ्चाप्युकारञ्च मकारञ्च प्रजापतिः ।
वेदत्रयान्निरदुहत् भूर्भुवः स्वरितीति च ॥”)

**भुविः**, [स्] क्ली, (भवतीति भवत्यस्मिन् रत्नादीनि वा । भू + “भुवः कित् ।” उणा० २ । ११३ । इति इसिन् । स च कित् ।) समुद्रः । इत्यु-णादिकोषः ॥

**भू**, सत्तायाम् । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट् ।) सत्तेह द्विविधा । उत्पत्ति-र्विद्यमानता च । भवति मनुष्योऽथवा विष्णुः । इति दुर्गादासः ॥

**भू**, क शुद्धिचिन्तयोः । मिश्रणे । इति कविकल्प-द्रुमः । (चुरा०-पर०-सक०-सेट् ।) क, तृण-वद्भावयति द्विषः सर्व्वान् । त्रयोऽर्थाः । इति दुर्गादासः ॥

**भू**, क ङ प्राप्तौ । इति कविकल्पद्रुमः ॥ (चुरा०-आत्म०-सक०-सेट् ।) क ङ, भावयते । इति दुर्गादासः ॥

**भू**, ञ प्राप्तौ । इति कविकल्पद्रुमः । (भ्वा०-उभ०-सक०-सेट् ।) ञ, भवति भवते धनं धीरः । भवत्येव सत्तायां प्राप्तिसम्पन्नजन्मस्विति भट्ट-मल्लः । भवते दुरितक्षयं यथोक्तक्रतुभिर्भावयते च नाकलोकमिति हलायुधः । केचिदमुं

श्रावणिका । इति राजनिर्घण्टः ॥ थुलकुडी । इति भाषा ॥

**भूकम्पः**, पुं, (भुवः पृथिव्याः कम्पः ।) भूमि-कम्पनम् । स च अद्भुतविशेषः । यथा, अद्भुतसागरे ।
“मेषे वृश्चिकभे गजः प्रचलति व्यासादिभिः कथ्यते
चापे मीनकुलीरभे च वृषभे सत्यं चलेत् कच्छपः ।
यूके कुम्भधरे मृगेन्द्रमिथुने कन्यामृगे पन्नग-स्तेषामेकतमो यदि प्रचलति क्षौणी तदा कम्पते ॥
“कच्छपे मरणं ज्ञेयं मरणञ्चापि पन्नगे ।
सर्व्वत्र सुखदश्चैव पृथिव्यां चलिते गजे ॥
प्रथितनरेश्वरमरणं व्यसनान्याग्नेयमारुतयोः ।
क्षुद्भयमतिवृष्टिभिरुपपीड्यन्तेजनाश्चापि ॥
त्रिचतुर्थपञ्चमदिने मासे पक्षे त्रिपक्षके ।
भवति यदा भूकम्पः प्रधाननृपनाशनं कुरुते ॥”
स च भूमिजोत्पातविशेषः । यथा, --
“चरस्थिरभवं भौमं भूकम्पमपि भूमिजम् ।
जलाशयानां वैकृत्यं भौमन्तदपि कीर्त्तितम् ॥
भौमं जाप्यफलं ज्ञेयं चिरेण परिपच्यते ।”
इति ज्योतिस्तत्त्वम् ॥

**भूकर्व्वुदारकः**, पुं, वृक्षविशेषः । छोटालसोडा इति हिन्दी भाषा । तत्पर्य्यायः । क्षुद्रश्लेष्मान्तकः २ भूशेलुः ३ लघुशेलुः ४ लघुपिच्छिलः ५ लघुशीतः ६ सूक्ष्मफलः ७ लघुभूतद्रुमः ८ भूकर्व्वुदारः ९ । अस्य गुणाः । मधुरत्वम् । क्रमिशूलनाशित्वम् । वातप्रकोपणत्वम् । किञ्चित् शीतत्वम् । स्वर्णमारकत्वञ्च । इति राज-निर्घण्टः ॥

| | | |
|---|---|---|
| विमलं विपुलं शुद्धमुपर्य्युपरिसंस्थितम् ।<br>प्रथमे तु कुमारस्तु द्वितीये मातरः<br>स्थिताः ॥ ४६ ॥<br>तृतीये सिद्धगन्धर्वा तुर्य्ये विद्याधरा<br>द्विज !<br>पञ्चमे नागराजा च षष्ठे तु विनतासुतः ॥<br>४७ ॥<br>सप्तमे दिव्यपितरो धर्म्मराजस्तथाष्टमे । | | |

**भूकलः**, पुं, (भुवः पृथिव्याः कलः ।) दुर्व्विनीताश्वः ।

इति राजनिर्घण्टः ॥

**भूकश्यपः**, पुं, (भुवि पृथिव्यां कश्यप इव भुवः

कश्यप इति वा ।

"तदस्य कश्यपस्यांशस्तेजसा

कश्यपोपमः ।

वसुदेव इति ख्यातो गोधु तिष्ठति

भूतले ॥"

इति हरिवंशीयवचनेनास्य

कश्यपांशसम्भूत-

त्वात् तथात्वम् ।) वसुदेवः । इति

त्रिकाण्ड-

शेषः ॥

**भूकाकः**, पुं, (भुवि ख्यातः काकः ।) स्वल्पकङ्कः ।

क्रौञ्चः । नीलकपोतः । इति

शब्दरत्नावली ॥

**भूकुम्भी**, स्त्री, (भुवि कुम्भीव ।) भूपाटली ।

इति राजनिर्घण्टः ॥

**भूकुष्माण्डी**, स्त्री, (भुवि कुष्माण्डीव ।) विदारी ।

इति राजनिर्घण्टः ॥

**भूकेशः**, पुं, (भुवः पृथिव्याः केश इव ।) शैवलः ।

वटः । इति मेदिनी । शे, २६ ॥

**भूकेशा**, स्त्री, (भूकेश + ठाप् ।) राक्षसी । इति

शब्दरत्नावली ॥

**भूकेशी**, स्त्री, (भूकेश + स्त्रियां ङीप् ।) अवल्-

गुजः । इति मेदिनी । शे, २७ ॥

**भूक्षित्**, पुं, (भुवं क्षितिं क्षिणोतीति + क्षिद् +

क्विप् ।) शूकरः । इति त्रिकाण्डशेषः

॥

**भूखर्ज्जूरी**, स्त्री, (भूसंलग्ना खर्ज्जूरी । शाक-

पञ्चेमानि महाभाग ! महाभूतानि

संग्रहात् ।

तेभ्य एव प्रजातानि सर्व्वाणि गुणवन्ति

च ॥

भूमिरापस्तथा वायुरग्निराकाशमेव च ।

गुणोत्तराणि सर्व्वाणि तेषां भूमिः

प्रधानतः ॥

शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च

पञ्चमः ।

भूमावेते गुणाः प्रोक्ता ह्रसन्ति परतः

क्रमात् ॥

चत्वारोऽप्सु गुणा ब्रह्मन् ! गन्धस्तत्र न

वर्त्तते ।

शब्दः स्पर्शश्च रूपञ्च त्रय एव हि

तेजसि ॥

शब्दः स्पर्शोऽथ वायोस्तु आकाशे शब्द

एव हि ।

एते पञ्च गुणाः प्रोक्ता महाभूतेषु पञ्चमु ॥

वर्त्तन्ते सर्व्वभूतेषु येषु लोकाः

प्रतिष्ठिताः ।

अन्योन्यं नातिवर्त्तन्ते सम्यग्भवति वै

तदा ॥

यदा तु विषमं भावमाविशन्ति परस्परम्

।

तदा देहवियोगः स्याद्देहिनां नान्यथा

द्विज ! ॥

अनुपूर्व्वा विनश्यन्ति जायन्ते चापि

सर्व्वशः ।

सर्व्वाण्यपरिमेयाणि तदेषां रूपमैश्वरम्

॥

तत्र तत्र हि दृश्यन्ते धातवः

पाञ्चभौतिकाः ।

तेषां मनुष्यास्तर्केण प्रमाणानि प्रचक्षते

॥

अचिन्त्याः स्वलु ये भावा न तांस्तर्केण

योजयेत् ।

प्रकृतिभ्यः परं यत्तु तदचिन्त्यस्य

लक्षणम् ॥ * ॥

आदित्यतरुणाभासो विधूम इव पावकः ॥

लक्षयोजन उच्छ्रायो मूर्द्ध्नि द्वाविंश एव च ।

योजनानां सहस्राणि मूले चापि तु षोडश ॥

विस्तृतः स महाभाग ! भूमिष्ठं मूलमस्य तु ।

प्रविष्टमन्तर्भूम्यां वै षोडशैव सहस्रकम् ॥

ऊर्द्ध्वमन्तश्च तिर्य्यक् च लोकानावृत्य तिष्ठति

।

तस्य चेलावृतं वर्षं सर्व्वतः परिकीर्त्तितम् ॥

विहगः सुमुखो यस्तु सुपर्णस्यात्मजः किल ।

स वै विचिन्तयामास सौवर्णान् प्रेक्ष्य वायसान् ॥

मेरुरुत्तममध्यानामवराणाञ्चपक्षिणाम् ।

अविशेषकरो यस्मात्तस्मादेनं त्यजाम्यहम् ॥

तमादित्योऽनुपर्य्येति सततं ज्योतिषां वरः ।

चन्द्रमाश्च सनक्षत्रो वायुश्चैव प्रदक्षिणम् ॥

स पर्व्वतो महाभाग ! दिव्यपुष्पसमन्वितः ।

भवनैरावृतः सर्व्वैर्जाम्बूनदमयैः शुभैः ॥

तत्र देवगणा ब्रह्मन् ! गन्धर्व्वासुरराक्षसाः ।

अप्सरोगणसंयुक्ताः शैले क्रीडन्ति सर्व्वदा ॥

अवष्टम्भकरास्तस्य मन्दरो मेरुमन्दरः ।

मुपार्श्वः कुमुदश्चेति चतुर्दिक्षु स्थिता द्विज ! ॥

अयुतयोजनोन्नाहास्तावद्विस्तारसंयुताः ।

चतुर्ष्वेतेषु धर्म्मज्ञ ! चूतजम्बूकदम्बकाः ॥

न्यग्रोधश्चापि चत्वारः पादपा व्राह्मणर्षभ ! ।

सहस्रयोजनोन्नाहास्तावद्विटपविस्तृताः॥

केतुभूताः पर्व्वतानां विशालाः शतयोजनम् ।

ह्रदाश्च तत्र चत्वारः पयोमध्विक्षुवारिदाः ॥

देवोद्यानानि चत्वारि द्वे चैत्ररथनन्दने ।

सर्व्वतोभद्रमित्येवं तथा वैभ्राजकं वनम् ॥

तेषु देवस्त्रियो नित्यं विहरन्ति सुरैः सह ।

गन्धर्व्वाः किन्नराश्चेव तथान्ये सिद्धचारणाः ॥

गायन्तो मधुरं दिव्यं स्त्रीभिः क्रीडन्ति तापस ! ।

चूतो यो मन्दरोत्सङ्गेऽयुतयोजनमुच्छ्रितः ॥

फलान्यमृतकल्पानि पतन्त्यस्य सुदूरतः ।

तेषां विशीर्य्यमाणानां रसेनाजनि या नदी ॥

अरुणोदा नाम सैव वहते मन्दराचलात् ।

यज्जलस्पर्शमात्रेण भवानीशिवयोर्गणाः ॥

स्वदेहसौरभेणापि समन्ताद्दशयोजनम् ।

सुगन्धयन्ति वातेन वात्स्यायन ! तदद्भुतम् ॥

एवं जम्बूफलानाञ्च पततां मेरुमन्दरे ।

पार्थिवादिवत् समासः ।) क्षुद्रखर्ज्जूरी । तत्-
पर्य्यायः । भूयुक्ता २
वसुधाखर्ज्जूरिका ३
भूमिखर्ज्जूरी ४ । अस्या गुणाः ।
मधुरत्वम् ।
शिशिरत्वम् । दाहपित्तहरत्वञ्च । इति राज-
निर्घण्टः ॥

**भूगरं**, क्ली, (भुवः पृथिव्या गरम् ।) विषम् ।
इति राजनिघण्टः

**भूगर्भः**, पुं, भवभूतिः । स च मालतीमाधवादि-
नाटककर्त्ता । इति जटाधरः ॥ (भूः सर्व्व-
भूताश्रयभूता पृथ्वी गर्भे कुक्षौ यस्येति ।
विष्णुः । यथा, महाभारते । १३ । १४९ । २१ ।
"हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥")

**भूगोलः**, पुं, (भूर्गोलो मण्डलमिव ।) भुवनकोषः ।
(यदुक्तं सूर्य्यसिद्धान्ते ।
"मध्ये समन्तादण्डस्य भूगोलो व्योम्नि तिष्ठति ।
बिभ्राणः परमां शक्तिं ब्रह्मणो धारणा-
त्मिकाम् ॥")
तस्य विवरणम् । यथा, --
"प्रकृतेस्तु महान् जातोऽहङ्कारो महतः पुनः ।
तन्मात्राणि ह्यहङ्कारात् शब्दः स्पर्शोऽथ
रूपकम् ॥
रसो गन्धश्च पञ्चैव गुणा नाम प्रकीर्त्तिताः ।
जम्बुद्वीपं प्रवक्ष्यामि वात्स्यायन महामुने ! ॥
परिमण्डलो महाभाग ! द्वीपोऽसौ चक्रवत्
स्थितः ।
नदीगिरिप्रतिच्छन्नो विविधैः पत्तनैरपि ॥
षनैर्जनपदैर्वृक्षैस्तथा पुष्पफलोपगैः ।
लवणेन समुद्रेण समन्तात् परिवारितः ॥
प्रागायता महाभाग ! षडेते रत्नपर्व्वताः ।
अवगाढा ह्युभयतः सागरौ पूर्ब्बपश्चिमौ ॥
हिमवान् हेमकूटश्च निषधश्च नगोत्तमः ।
नीलः श्वेतः शृङ्गवांश्च रत्नधातुविचित्रिताः ॥
अयुतानि योजनानि उच्छ्रायास्तेषु कीर्त्तिताः ।
पृथुत्वे च द्विसाहस्रयोजनास्ते च पर्व्वताः ॥
तेषामन्तरविष्कम्भे नवसाहस्रयोजनः ।
वर्षे वर्षे प्रमाणन्तु वर्षाणि त्रीणि दक्षिणे ॥
तत्र पुण्या जनपदास्तेषु वर्षेषु तापस ! ।
वसन्ति तेषु सर्व्वाणि सत्त्वानि विविधानि च ॥
दक्षिणे भारतं वर्षमुत्तरे लवणोदधेः ।
कूलादेव महाभाग ! तस्य सीमा हिमालयः ॥
ततः किंपुरुषं वर्षं हेमकूटादधस्ततः ।
हरिवर्षं ततो ज्ञेयं निषधोऽवधिरुच्यते ॥
एवमेवोत्तरे त्रीणि वर्षाणि च तपोधन ! ।
कुरुवर्षं सिन्धुकूलात् शृङ्गवानवधिः स्मृतः ॥
हिरण्मयं ततो वर्षं श्वेतावधि निगद्यते ।
रम्यकञ्च ततो वर्षं नीलस्तस्यावधिः स्मृतः ॥
दक्षिणेन तु नीलस्य निषधस्योत्तरेण तु ।
हस्तिकायप्रमाणानां रसैर्जाता महानदी ॥
सैव जम्बूनदी नाम दक्षिणेन इलावृतम् ।
तीरयोरुभयोरेव जम्बूरसपरिप्लुता ॥
मृत्तिकैव सुवर्णं स्यात् वार्य्यर्ककिरणान्वयात् ।
तत्र जाम्बूनदं हेम नानाभरणसंज्ञितम् ॥
देवोपदेवगन्धर्व्वा धारयन्ति सह स्त्रिया ।
यो वै महाकदम्बश्च सुपार्श्वोपरि तापस ! ॥
तत्कोटरेभ्यः पञ्चैव मधुधाराः सवन्ति वै ।
पञ्चायामपरीणाहाः पश्चिमेन इलावृतम् ॥
यासां रसांश्च भुञ्जानाः सुमुखोद्गारवायुना ।
सुगन्धयन्ति धर्म्मज्ञ ! समन्तात् शतयोजनम् ॥
कुमुदाग्रनिरूढो यः शतवल्यो वटो महान् ।
स्कन्धेभ्यस्तस्य नद्यस्तु उत्तरेण इलावृतम् ॥
पयस्विनीदधिह्रदाघृतकुल्यामधुस्रवाः ।

| | | |
|---|---|---|
| | प्रागायतो महाभाग ! माल्यवान्नाम<br>पर्व्वतः ॥<br>पश्चिमे तु तथैवास्ते पर्व्वतो<br>गन्धमादनः ॥<br>पूर्व्वे समुद्रकूलात्तु भद्राश्वं नाम वर्षकम्<br>॥<br>माल्यवानवधिस्तस्य केतुमालञ्च<br>पश्चिमे ।<br>गन्धमादनसीमान्तं नवसाहस्रयोजनम्<br>॥ * ॥<br>परिमण्डलस्तयोर्म्मध्ये मेरुः<br>कनकपर्व्वतः । | |

गुडस्रवेति पञ्चैव यासां रसनिषेवणात् ॥
बलीपलितदौर्गन्ध्यजरादोषो न विद्यते ।
कुरङ्गकुरवः शङ्खः कुसुम्भः
शिखरस्तथा ॥
वैकङ्कश्च त्रिकूटश्च पर्व्वतौ रुचकर्षभौ
॥
पतङ्गनिषधौ नागसितिवासत्रिकूटकाः ।
हंसवैदूर्य्यकपिला द्वौ कालञ्जरजारुधी ॥
गिरयो मूलदेशे तु सुमेरोः परिकल्पिताः
॥
जठरो देवकूटश्च द्वौ नगौ मेरुपूर्ब्बतः ।
अष्टादशसहस्राणि योजनान्युदगायतौ ॥
पृथुतुङ्गौ द्विसाहस्रयोजनं तापसर्षभ ! ।
पवनः पारिपात्रश्च मेरोः पश्चिमतः
स्थितौ ॥
तथा प्रमाणौ कैलासकरवीरौ तु दक्षिणे ।
प्रागायतावुत्तरेण त्रिशृङ्गमकरौ तथा ॥
अष्टाभिरेतैर्गिरिभिर्भाति काञ्चनपर्व्वतः ।
मेरोर्मूर्द्धनि विप्राग्र्य ! मध्ये विश्वसृजः
पुरी ।
चतुरस्रा शातकौम्भी
योजनायतविस्तृता ॥
दिक्पालानां तथा पूर्य्यः पूर्ब्बादिषु
यथाक्रमम् ।
ब्रह्मपुर्य्याश्चतुर्थेन भागेन परिकल्पिता
॥
तत्र ब्रह्मा च रुद्रश्च शक्रश्चापि मुरेश्वरः
।
समेत्य विविधैर्यज्ञैर्यजन्ते भूरिदक्षिणैः ॥
तुम्बुरुर्नारदश्चैव विश्वावसुर्हाहाहूहूः ।
अभिगम्यामरश्रेष्ठं स्तुवन्ति विविधैः
स्तवैः ॥
सप्तर्षयो महात्मानः कश्यपश्च
प्रजापतिः ।
तत्र गच्छन्ति भद्रं ते सदा पर्व्वणि
पर्व्वणि ॥
तस्यैव मूर्द्धन्युशना काव्यो दैत्यैर्महीयते
।

मेरोस्तु पश्चिमे पार्श्वे केतुमालो
महामते ! ।
आयुर्दशसहस्राणि वर्षाणां तत्र मानवे
॥
सुवर्णवर्णाश्च नराः
स्त्रियश्चाप्सरसोपमाः ।
वीतरोगशोकभया
नित्यमानन्दवर्त्तिनः ।
जायन्ते मानवास्तत्र प्रतप्तकनकप्रभाः
॥ * ॥
गन्धमादनशृङ्गेषु कुवेरः सह राक्षसैः ।
अप्सरोगणगन्धर्व्वैर्मोदते गुह्यकाधिपः
॥
गन्धमादनपार्श्वे तु गण्डशैलाः
सहस्रशः ।
एकादशसहस्राणि वर्षाणां परमायुषः
॥
तत्र हृष्टा नराः सर्व्वे
बलवीर्य्यपराक्रमाः ।
स्त्रियश्चोत्पलपत्राभाः सर्व्वाः
सुप्रियदर्शनाः ॥
उत्तराः कुरवश्चैव भारतञ्च महामते !
।
धनुसंस्थे महाभाग ! द्विवर्षे
दक्षिणोत्तरे ॥
इलावृतं मध्यमन्तु पञ्चवर्षाणि चैव हि
।
उत्तरोत्तरमेतेभ्यो वर्षमुद्रिच्यते गुणैः
॥
अपरेषु च वर्षेषु सर्व्वेषु भारतं विना ।
आयुःप्रमाणं लोकानां
दशवर्षसहस्रकम् ॥
एवमेषा महाभाग ! पृथिवी
पर्व्वतैश्चिता ॥”
इति पद्मपुराणे भूमिखण्डे भूगोलवर्णने
१२८
अध्यायः ॥
शेष उवाच ।

दक्षिणेन तु नीलस्य मेरोः पार्श्वे तथोत्तरे ॥
उत्तराः कुरवो नाम पुण्याः सिद्धनिषेविताः ।
तत्र वृक्षा मधुफला नित्यं पुष्पफलोपगाः ॥
सुगन्धीनि च पुष्पाणि फलानि रसवन्ति च ।
सर्व्वे कामदुघा वृक्षा लताः कामप्रपूरिकाः ॥
अपरे क्षीरिणो नाम तरवो मुनिपुङ्गव ! ।
ये स्रवन्ति सदा क्षीरं रसैरमृतसन्निभम् ॥
वस्त्राणि च प्रसूयन्ते फलेष्वाभरणानि च ।
सर्व्वा मणिमयी भूमिः सूक्ष्महाटकबालुका ॥
सर्व्वर्त्तुसुखदा नित्यं पङ्कशर्करवर्ज्जिता ।
स्वर्गभोगावशेषेण जायन्ते तत्र मानवाः ॥
शुक्लाभिजनसम्पन्नाः सर्व्वे चारुमुखाम्बुजाः ।
मिथुनानि च जायन्ते स्त्रियः सुरसुतोपमाः ॥
तेषान्ते क्षीरिणां क्षीरं पिबन्त्यमृतसन्निभम् ।
मिथुनं जायते काले समन्ताच्च प्रवर्द्धते ॥
तुल्यरूपगुणोपेतं तुल्यवेशवयस्तथा ।
निरामया निराबाधाः सदानन्दविवर्त्तिनः ॥
एकादशसहस्राणि तत्र वर्षाणि वै जनाः ।
जीवन्ति ते महाभाग ! न चान्योन्यं हनन्ति च ॥
भारुण्डा नाम शकुनास्तीक्ष्णतुण्डा महाबलाः ।
तान्निर्हरन्तीह मृतान् दरीषु प्रक्षिपन्ति च ॥
उत्तराः कुरवो ब्रह्मन् ! व्याख्यातास्ते समा-
सतः । * ।
हिरण्मये रम्यके च एष धर्म्मः प्रकीर्त्तितः ॥
मेरोः पार्श्वमहं पूर्ब्बं वक्ष्ये ब्रह्मन् ! यथातथम् ।
भद्राश्वे भद्रश्रवा नाम तत्र ब्रह्मन् ! महीपतिः ॥
भद्रसालवनं यत्र कालाम्रश्च महाद्रुमः ।
कालाम्रो नाम वृक्षोऽसौ सिद्धचारणसेवितः ॥
योजनैकसमुत्सेधो नित्यपुष्पफलः शुभः ।
तत्र ते पुरुषाः श्वेतास्तेजोयुक्ता महाबलाः ॥
कुमुदाभाः स्त्रियस्तत्र चारुनासाः सुलोचनाः ।
चन्द्राभचारुरूपाश्च पूर्णेन्दुसदृशाननाः ॥
नृत्यगीतकलाभिज्ञाश्चन्द्रशीतलकान्तयः ।
दशवर्षसहस्राणि तत्रायुर्ब्राह्मणर्षभ ! ॥
कालाम्ररसपानेन नित्यं सुस्थिरयौवनाः ।
दक्षिणेन तु नीलस्य निषधस्योत्तरेण तु ॥
सुदर्शनो नाम महान् जम्बूवृक्षः सनातनः ।
सर्व्वकामफलः पुण्यः सिद्धचारणसेवितः ॥
द्वीपख्यातिकरः श्रीमान् सहस्रयोजनोच्छ्रितः ।

तस्य हैमानि रत्नानि तस्येमे रत्नपर्व्वताः ॥
तस्मात् कुवेरो भगवांश्चतुर्थं भागमश्नुते ।
ततः कलांशं वित्तस्य मनुष्येभ्यः प्रयच्छति ॥
पार्श्वे तस्योत्तरे दिव्यं सर्व्वर्त्तुकुसुमान्वितम् ।
कर्णिकारवनं रम्यं शिलाजालसमुद्गतम् ॥
तत्र साक्षान्महाद्वेवो भीमैर्भूतैः समावृतः ।
पार्व्वत्या सह देवेशो रमते भूतभावनः ॥
कर्णिकारमयीं मालां दधदापादलम्बिनीम्॥
तस्य शैलस्य शिखरात् क्षीरधारा महामते ! ।
विश्वरूपा परिमिता भीमनिर्घातनिस्वना ॥
पुण्या पुण्यतमैर्ज्जुष्टा गङ्गा भागीरथी शुभा ।
तां धारयामास तदा दुर्द्धरां पर्व्वतैरपि ॥
शतं वर्षसहस्राणां शिरसैव पिनाकधृक् ।
मेरोस्तु शिखराद्देवी भिद्यमाना चतुर्विधा ॥
सीता चालकनन्देति वङ्क्षुर्भद्रेति कीर्त्तिता ।
सीता तु ब्रह्मसदनात् केशरादिमहाचलान् ॥
अतिक्रम्य प्रस्रवन्ती गन्धमादनमूर्द्धसु ।
पतित्वा द्विज ! वर्षञ्च भद्राश्वं पुनती क्रमात् ।
प्राच्यां दिशि महाभाग ! प्रविष्टा लवणोदधिम् ॥
माल्यवच्छिखराद्वङ्क्षुः पतित्वा केतुमालके ।
प्रतीच्यां दिशि विप्रेन्द्र ! प्रविवेश सरित्पतिम् ॥
भद्रा चोत्तरतो मेरुशिखरात् पतिता गिरीन् ।
अतिक्रम्य शृङ्गवतः शृङ्गाद्वेगेन पातुका ।

"नवस्वतेषु वर्षेषु भगवान् भूतभावनः ।
अनुग्रहाय लोकानामास्ते मायावपुर्द्धरः ॥
इलावृते तु भगवान् भव एकः सहोमया ।
आस्ते विहारनिरतो नान्यस्तत्र पुमान् द्विज ! ॥
भवानीशापतो ब्रह्मन् ! प्रविशेन्न कदाचन ।
यत्र प्रविष्टो मोहेन सुतो वैवस्वतस्य वै ॥
इलः स्त्रीभावमापन्नो यस्यां जातः पुरूरवाः ।
तत्र सङ्कर्षणं देवं कलां विष्णोर्महात्मनः ।
भवो भवान्या सहितः स्तौति भक्तिसमन्वितः ॥
भद्राश्वे द्विज ! वर्षे तु हयशीर्षाकृतिर्हरिः ।
वसते वर्षपुरुषास्तं स्तुवन्ति जगद्गुरुम् ॥ * ॥
हरिवर्षे तु भगवान्नरसिंहवपुर्धरः ।
स्तूयते दैत्यपतिना प्रह्लादेन महात्मना ॥
केतुसाले च भगवान् कामदेवस्वरूपवान् ।
प्रजापतेर्दुहितृभिः सहैव रमया मुदा ॥
स्तूयते परया भक्त्या जगन्मोहनरूपधृक् ॥ * ॥
रम्यके भगवानास्ते मत्स्यरूपी दयापरः ।
मनुर्वैवस्वतस्तञ्च स्तौति भक्त्या कृतैः स्तवैः ॥ * ॥
हिरण्मये तु भगवानास्ते कूर्म्मतनुं दधत् ।
प्रेताधिराजस्तं स्तौति भक्त्या परमया युतः ॥
कुरुवर्षे च भगवान् वराहः सेव्यते जनैः ।

अरत्नीनां सहस्रञ्च शतानि दश पञ्च च ॥
परिणाहस्तु वृक्षस्य रसानां रसभेदिनाम् ।
तरुणादित्यवर्णाश्च जायन्ते तत्र मानवाः ॥ * ॥
तथा माल्यवतः शृङ्गे दृश्यते हव्यवाहनः ।
नाम्ना सम्बर्त्तकी नाम कालाग्निः प्रलयेऽन्तकृत् ॥
तथा माल्यवतः शृङ्गे पूर्ब्बे पूर्ब्बानुगण्डिकाः ।
योजनानां सहस्राणि पञ्चषण्माल्यवान् द्विज ! ॥
महारजतसङ्काशा जायन्ते तत्र मानवाः ।
ब्रह्मलोकच्युताः सर्व्वे जायन्ते तत्र वै नराः ॥
तपस्तप्यन्ति ते तीव्रं भवन्ति ह्यूद्र्ध्वरेतसः ।
रक्षणार्थन्तु भूतानां न विशन्ति दिवाकरम् ॥
षष्टिस्तानि सहस्राणि षष्टिरेव शतानि च ।
अरुणस्याग्रतो यान्ति परिवार्य्य दिवाकरम् ॥

| | | |
|---|---|---|
| उत्तरांश्च कुरून् प्राप्य प्रविष्टा लवणार्णवम् ॥<br>तथैवालकनन्दा च पतन्ती गिरिमूर्द्धसु ।<br>हिमालयं विनिर्भिद्य भारतं वर्षमेत्य च ।<br>लवणाम्बुधिमभ्येति दक्षिणस्यां दिशिद्विज ! ॥ | तं देवी यं क्षितिः स्तौति तद्वर्षपतिभिः सह ॥<br>वर्षे किंपुरुषे ब्रह्मन् ! भगवानादिपूरुषः ।<br>सीतया विहरन्नास्त सततं लक्ष्मणाग्रजः ॥<br>तञ्च किंपुरुषैः सार्द्धं भक्त्या मारुतनन्दनः ।<br>पार्ष्णिसेनेन च सह स्तौति भक्त्या विभावितः ॥<br>भारते च तथा वर्षे नरनारायणावृषी ।<br>नारदः स्तौति भगवान् भगवन्तौ कृतानतिः ॥<br>द्वीपेऽस्मिन् बहवः सन्ति गिरयः सरितस्तथा ।<br>देशाश्च बहवो ब्रह्मंस्तांस्ते वक्ष्याम्यनुक्रमात् ॥<br>मेरोरुत्तरतः सर्व्वान् पर्य्यायेण ब्रवीम्यहम् । | |

षष्टिं वर्षसहस्राणि षष्टिमेव शतानि च ।
आदित्यतप्तास्ते सर्व्वे विशन्ति शशिमण्डलम् ॥”
इति पाद्मे भूमिखण्डे भूगोले १२९ अध्यायः ॥ * ॥
शेष उवाच ।
दक्षिणेन तु श्वेतस्य निषधस्योत्तरेण तु ।
वर्षं रमणकं नाम जायन्ते तत्र मानवाः ॥
शुक्लाभिजनसम्पन्नाः सर्व्वे सुप्रियदर्शनाः ।
दशवर्षसहस्राणि शतानि दश पञ्च च ॥
जीवन्ति ते महाभाग ! नित्यं मुदितमानसाः ।
दक्षिणेन तु नीलस्य निषधस्योत्तरेण तु ॥
वर्षं हिरण्मयं नाम तत्र हैमन्वती नदी ।
तत्र चायं महाभाग ! पक्षिराट् पतगोत्तमः ॥
यक्षानुगाश्च बहवो धनिनश्च महाबलाः ।
एकादशसहस्राणि वर्षाणां ते महामते ! ॥
आयुःप्रमाणं जीवन्ति शतानि दश पञ्च च ।
शृङ्गाणि च विचित्राणि त्रीण्येव ब्राह्मणर्षभ ! ॥
एकं मणिमयं तत्र द्वितीयं रौक्ममद्भुतम् ।
सर्व्वरत्नमयञ्चैव तृतीयं तत्र शोभते ॥
यत्र स्वयम्प्रभा देवी नित्यं वसति शाण्डिली ।
हेमकूटस्तु सुमहान् कैलासो नाम पर्व्वतः ॥
यत्र वै पवनो राजा गुह्यकैः सह मोदते ।
अस्त्युत्तरेण कैलासं मैनाकं पर्व्वतं प्रति ॥
हिरण्यशृङ्गः सुमहान् दिव्यो मणिमयो गिरिः ।
तस्य पार्श्वे महद्दिव्यं शुभ्रकाञ्चनबालुकम् ॥
रम्यं बिन्दुसरो नाम यत्र राजा भगीरथः ।
दृष्ट्वा पुण्यापगां गङ्गामुवास बहुलाः समाः ॥
यूपा मणिमयास्तत्र चैत्याश्चापि हिरण्मयाः ।

पृथोस्तु ब्रह्मन् ! वैण्यस्य तथेक्ष्वाकोर्महात्मनः ।
ययातेरम्बरीशस्य मान्धातुर्नहुषस्य च ॥
तथैव मुचुकुन्दस्य शिवेरौशीनरस्य च ।
सोमकस्य च राजर्षेर्गाधेश्चैव महात्मनः ॥
ऋषभस्य तथैलस्य दिलीपस्य महात्मनः ।
कुशिकस्य च धर्म्मज्ञ ! नृगस्य नृपतेस्तथा ॥
अन्येषाञ्च महाभाग ! क्षत्त्रियाणां बलीयसाम् ॥
शृणु मे गदतो ब्रह्मन् ! सर्व्वपापप्रणाशनम् ॥
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षवानपि ।
बिन्ध्यश्च पारिपात्रश्च सप्तैते कुलपर्व्वताः ॥
तेषां सहस्रशो ब्रह्मन् ! गिरयस्तु समीपतः ।
धातुचित्राः सत्त्ववन्तो महान्तश्चित्रसानवः ॥
आर्य्या म्लेच्छाश्च धर्म्मज्ञ ! तैर्मिश्राः पुरुषा
द्विज ! ।
नदीं पिबन्ति विपुलां गङ्गां सिन्धु सरस्वतीम् ॥
शतद्रुं चन्द्रभागाञ्च विपापां स्थूलबालुकाम् ।
गोदावरीं नर्म्मदाञ्च यमुनाञ्च महानदीम् ॥
दृशद्वतीं विपाशाञ्च बाहुदां सरिताम्बराम् ।
नदीं वेत्रवतीञ्चैव पयोष्णीं देविकामपि ॥
वेदस्मृतिं वेदशिनीं चित्रसेनाञ्च निम्नगाम् ।
करीषिणीं चित्रवहां कृष्णवेण्वां सुपुण्यदाम् ॥
इराबतीं वितस्ताञ्च त्रिदिवामिक्षुलां कृमिम् ।
गोमतीं धूतपापाञ्च निचितां लोहितावनीम् ॥

शुक्तिमती मनङ्गा च मञ्जला वाहिनी तथा ॥
कुमारी ऋषिकुल्या च नदी मन्दाकिनी तथा ।
सुवर्णा च तथा गङ्गा मारिषा च सरस्वती ॥
लौहित्यं करतोया च तथैव वृषकाह्वया ।
विश्वस्य मातरश्चैताः सर्व्वाश्चैव महाफलाः ॥
तथा नद्यस्त्वप्रकाशाः शतशश्च सहस्रशः ।
इत्येताः सरितो ब्रह्मन् ! समाख्यातास्तवानघ ! ॥
वक्ष्यामि पर्व्वतांश्चापि भारते सन्ति ये द्विज ! ।
मलयो मङ्गलप्रस्थो मैनाकश्च त्रिकूटकः ॥
ऋषभः कूटकः कोल्लः सह्यो देवगिरिस्तथा ।
श्रीशैलो ऋष्यमूकश्च शुक्तिमानृक्ष एव च ॥
द्रोणश्च पारिपात्रश्च रैवतः ककुभस्तथा ।
गोवर्द्धनश्चित्रकूटो नीलो गोकर्ण एव च ॥
कोकामुख इन्द्रकीलस्तथा कामगिरिर्द्विज ! ।
अतःपरं जनपदान् वक्ष्यामि द्विजसत्तम ! ॥
विख्याताः कुरुपाञ्चालाः शाल्वा माद्रेय-जाङ्गलाः ।
मत्स्याः कुशट्टा मौद्गल्या भोजाः सिन्धुकुलि-
न्दकाः ॥
सूरसेनाः पुलिन्दाश्च कुन्तयः केशिकोशलाः ।
पाञ्चालाः कौशलाश्चैव बोधा मालास्तथैव च ॥
चेदिमत्स्यकरूषाश्च नैकपृष्ठा युगन्धराः ।
उत्तमाश्च दशार्णाश्च काशयोऽपरकाशयः ॥
कुन्तयोऽवन्तयश्चैव मलजा विजयास्तथा ।
आधिराज्याः सकुट्टाश्च चक्रवक्रातयः शकाः ॥
मानवास्योपवाहाश्च यकृल्लोमान एव च ।

तत्रेष्ट्वा तु गतः सिद्धिं सहस्राक्षो महायशाः ॥
स्रष्टा भूतपतिर्यत्र सर्व्वलोकैः सनातनः ।
उपास्यते तीग्मतेजा यत्र भूतैः समन्ततः ॥
नरनारायणौ ब्रह्मा मनुः स्थाणुश्च पञ्चमः ।
तत्र दिव्या त्रिपथगा प्रथमन्तु प्रतिष्ठिता ॥
ब्रह्मलोकादपक्रान्ता सप्तधा प्रतिपद्यते ।
वस्वोकसा वा नलिनी पावनी च सरस्वती ॥
जम्बूनदी च सीता च गङ्गा सिन्धुश्च सप्तमी ।
अचिन्त्या दिव्यसङ्काशा प्रभावैश्च समन्विता ॥
उपासते यत्र सत्रं सहस्रयुगपर्य्यये ।
दृश्यादृश्या च भवति तत्र तत्र सरस्वती ॥
एता दिव्याः सप्त गङ्गास्त्रिषु लोकेषु विश्रुताः ।
रक्षांसि वै हिमवति हेमकूटे तु गुह्यकाः ॥
सपा नागाश्च निषधे गोकर्णञ्च तपोवनम् ।
देवासुराणां सर्व्वेषां श्वेतपर्व्वत उच्यते ॥
गन्धर्व्वा निषये नित्यं नीले ब्रह्मर्षयस्तथा ।
शृङ्गवांश्च महाभाग ! देवानां प्रतिसञ्चरः ।
इत्येतानि महाभाग ! सप्त वर्षाण्यनुक्रमात् ॥
भूतान्यपि निविष्टानि गतिमन्ति ध्रुवाणि च ॥
तेषामृद्धिर्बहुविधा दृश्यते दैवमानुषी ।
अशक्या परिसंख्यातुं श्रद्धेया तु बुभुत्सुना ॥
इलावृते तु भगवान् भवान्या सह मोदते ।
इत्येवमष्टौ वर्षाणि कथितानि तवानघ ! ॥ * ॥
कर्म्मक्षेत्रं महापुण्यं भारतं शृणु सांप्रतम् ।
प्रियमिन्द्रस्य देवस्य मनोर्वैवस्वतस्य च ॥

कौशिकीं त्रिदिवां कृत्यां सरयूञ्च महामते ! ।
चर्म्मण्वतीं वेत्रवतीं चन्दनाञ्च महानदीम् ॥
रहस्यां शतकुम्भाञ्च हन्तिसोमां दिशन्तथा ।
शरावतीं पयोष्णीञ्च वाजिनीं पुरमालिनीम् ॥
पूर्ब्बाभिरामां धीराञ्च वापीं शीतवलीमपि ।
पलाशिनीं पापहरां सुप्रयोगां महामते ! ॥
कावेरीञ्चुलुकाञ्चापि वेण्वां भीमरथीमपि ।
रहस्यां शतकुम्भाञ्च कुशचीरां महानदीम् ॥
पलाशिनीं पापहरां हेमां घृतवतीं तथा ।
मरुतीं प्रवरां मेलां महेन्द्रां पाटलावतीम् ॥
पुरावतीमनुष्णाञ्च कुशधारां महानदीम् ।
सदानीरामधृष्याञ्च तथा चीरवतीमपि ॥
करीषिणीमशिक्नीञ्च विपुलां सहिरण्मयीम् ।
सदाकान्तां शिवाञ्चैव पञ्चमीञ्च महानदीम् ॥
विण्वां वीरकराञ्चापि विश्वामित्रां कपिञ्जलाम् ।
वसुं सुवस्त्रां गौरीञ्च कुवेरामम्बुवाहिनीम् ॥
रथचित्रां ज्योतिरथां तुङ्गवेण्वां महानदीम् ।
वैलन्दीं पिञ्जलाञ्चैव तुङ्गवेण्वां महानदीम् ॥
विदिशां कृष्णवेण्वाञ्च हविःस्रावां महापगाम् ।
सन्ध्यां समासां वेदास्वां भारद्वाजीञ्च निम्नगाम् ॥
शीघ्राञ्च पिच्छिलाञ्चैव कौशिकीं निम्नगामपि ।
दुर्गां मन्त्रशिलाञ्चैव ब्रह्ममेध्यां दृशद्वतीम् ॥
परोक्षामथ रोहीञ्च सामान्यां वरणामसिम् ।
सुरसां तपसां दासीं पर्णासाञ्च महानदीम् ॥
मालवीं वृषभां भासां ब्रह्ममेध्यां बृहद्वतीम् ।

वाह्लीका वाटधानाश्च शङ्कलाशर्म्मचण्डकाः ॥
मल्लाः मुदेष्णाः प्रह्लादा महिषाः शशिका-स्तथा ।
अपरान्ताः परान्ताश्च आभीराः काल-तोयकाः ॥
अटवीशिखराश्चैव मेरुभूताश्च मारिष ! ।
उपविष्णानुविष्णाश्च जङ्गलाः कुरुवर्णकाः ॥
कुट्टाः परान्ता माहेया मागधा मालवज्जटाः ।
अन्ध्राश्च बहवो ब्रह्मन् ! कक्षाः सामुद्र-निष्कुटाः ॥
बहिर्गिर्य्योऽङ्गमलदा अन्तर्गिर्य्यस्तथैव च ।
सह्युत्तराः प्रावृषेयाः सुदेष्टा यामुनास्तथा ॥
शका निषादा निषधा भार्गवाश्च द्विजर्षभ ! ।
पुण्ड्रा भोगाः किराताश्च तथैवानर्त्तनैरृताः ॥
तीरग्रहाः शूरसेनाः कुन्तलाः कुशलास्तथा ।
तिलभावा मसावाश्च गान्धारा दर्शकास्तथा ॥
काश्मीराः सिन्धुसौवीरा इजिका कन्यका-गणाः ।
अभीसाहा कुलूताश्च मधुमत्ताः कुकुन्दकाः ॥
रत्नवट्टाश्च धर्म्मज्ञ ! सौचला वाह्लिकास्तथा ।
दर्व्वीवरा लता दर्व्वाः मुदामानः सुमल्लिकाः ॥
वनायवो दशाः पार्श्वरोमाणः कुशिकास्तथा ।
रत्नवट्टाश्च धर्म्मज्ञ ! वाडयामरथोरगाः ॥
रन्ध्राः करीषकाश्चापि कुलिन्दोपेत्यकास्तथा ।
कच्छा गोपालकच्छाश्च मूषिका वानवासिकाः ॥
किराता वर्व्वराः सिद्धाः पार्व्वतीयाश्च मारिष ! ।

|  | एताश्चान्याश्च बह्व्यो वै महानद्यो द्विजर्षभ ! ॥<br>सदा निरामया कृष्णा मन्दगा मन्दवाहिनी ।<br>चित्रोपला चित्ररथा दुर्गापि पापहारिणी ॥<br>ब्रह्माणी च महागौरी कोषा चापि महानदी । |  |
|---|---|---|

ओड्रम्लेच्छाः ससैरिन्ध्रा
वैदेहास्ताम्रलिप्तकाः ॥
तथापरे जनपदा दक्षिणा ब्राह्मणर्षभ ! ।
द्रविडाः केरलाः प्राच्या
विकल्पमृषकास्तथा ॥
कोवेट्टकास्तथा चोलाः सौहृदा मलका
मलाः ।
ध्वजिन्युत्सवसंकेता
कोङ्कवेङ्कटमालवाः ॥
दण्डकाः कोरकाः प्राच्याः कुकुराङ्गार-
मारिकाः ।
तथैव बिन्ध्यचूलिकास्त्रिगर्त्ताः
साल्लसेनयः ॥
समङ्गाः कवकाश्चैव तथैवापरवर्त्तकाः
।
मूषकास्तनबालाश्च पुलिन्दा वर्व्वरैः
सह ॥
मुनिवाटाः शिवाटाश्च सरा
वेगवशास्तथा ।
विदर्भा ऋषिकाः काकजनाश्च
ब्राह्मणर्षभ ! ॥
यवनाश्च शकाम्भोजास्तङ्गनाः
परतङ्गनाः ।
सकृद्ग्रहाः कुलत्थाश्च दारुणा
म्लेच्छजातयः ॥
उत्तराश्चापरे म्लेच्छा हूनाः पारसिकैः
सह ।
तथैव च मलाश्चीना दशार्णा
दशमालिकाः ॥
अङ्गवङ्गकलिङ्गाश्च पह्लवा गिरिगह्वराः
।
खासीकाश्चान्तचाराश्च
वैश्यशूद्रकुलानि च ॥
शूद्राभीराश्च दरदा ये चान्ये
म्लेच्छभूमयः ।
आत्रेयाश्च भरद्वाजास्तथैव
स्तनपोषकाः ॥
ह्रेषकाश्च कलिङ्गाश्च किरातानाञ्च
जातयः ।

अष्टावत्र उपद्वीपा मुनिभिः परिकीर्त्तिताः ।
सिन्धुमध्ये महाभाग ! नानाविधजनाश्रिताः
॥
नामानि तेषां वक्ष्यामि शृणु वात्स्यायन
द्विज ! ।
सगरस्य सुतैरश्वान्वेषणे परितो महीम् ॥
खनद्भिः कल्पिता विप्र ! द्वीपा अष्टौ महार्णवे
।
स्वर्णप्रस्थश्चन्द्रशल्कः सिंहलावर्त्तनौ यथा
॥
पञ्चजन्यस्तथा मन्दहरिणो रमणकाह्वयः ।
लङ्केति कथिता विप्र ! जम्बुद्वीपस्य तेऽन्तरा
॥”
इति पाद्मे भूमिखण्डे भूगोलवर्णने १३०
अध्यायः ॥ * ॥
शेष उवाच ।
“प्लक्षद्वीपं प्रवक्ष्यामि शृणु वात्स्यायन
द्विज ! ।
यन्मानं जम्बुद्वीपस्य तथैव लवणोदधेः ॥
ततो द्विगुणमानोऽसौ प्लक्षद्वीपो महामते ! ।
जम्बुद्वीपस्य च यथा वेष्टनं लवणाम्भसा ॥
समानेन प्रमाणेन पुरः परिखया यथा ।
परिखाया उपवनं यथा भवति वेष्टनम् ॥
प्लक्षद्वीपस्तथैवासौ संवेष्ट्य लवणोदधिम्
।
द्विलक्षयोजनायामो वर्त्तते द्विजसत्तम ! ॥
तत्र जम्बूप्रमाणोऽस्ति द्वीपख्यातिकरस्तरुः
।
प्लक्षो नाम महाभाग ! स्वर्णवर्णोऽग्निधाम च
॥
तत्र वर्षाणि सप्तैव सुभद्रं यवसं शिवम् ।
अमृताक्षमशान्तानि क्रमादभयमित्यपि ॥
सप्तैव सीमागिरयो नद्यः सप्त च कीर्त्तिताः ।
मणिकूटो वज्रकूटो ज्योतिष्मानिन्द्रसेनकः
॥
हिरण्यष्ठीवो मेघमालः सुपर्णः सेतुशैलका ।
अरुणनृमणा चैव सावित्र्यसिवमी तथा ॥
सत्यम्भवा सुप्रभा च वात्स्यायन ! धृतम्भवा
।

सहस्राणां शतान्येवं नद्यः संख्या न शक्यते
॥
तत्र पुण्या जनपदाश्चत्वारो लोकसम्मताः ॥
मगाश्च मशकाश्चैव मानसा मन्दगास्तथा ॥
मगा ब्राह्मणभूयिष्ठाः स्वकर्म्मनिरता द्विज ! ।
मशकेषु तु राजन्या धार्म्मिकाः सर्व्वकामदाः
।
मानसे च महाभाग ! वैश्यधर्म्मनिषेविणः ।
मन्दगेषु तथा शूद्राः शूरा धर्म्मार्थनिश्चिताः
॥
न तत्र राजा विप्रेन्द्र ! न दण्डो न च
दण्ड्यता ।
सधर्म्मेणैव ते सर्व्वे रक्षन्ति च परस्परम् ॥ *
॥
प्लक्षद्वीपसमानेन समुद्रेण वृतो बहिः ।
इक्षुरसजलेनैव नानारत्नवता द्विज ! ॥
शाल्मलोऽपि तथा द्वीपः
प्लक्षाद्द्विगुणमानतः ।
चतुर्लक्षयोजनेन सुरोदेनावृतो महान् ॥
यत्र वै शाल्मली नाम द्विलक्षयोजनोच्छ्रिता ।
द्वीपख्यातिकरो वृक्षः सुपर्णेन कृतालयः ॥
तत्र वर्षाणि सप्तैव कथ्यन्तेऽत्र सुरोचनम् ।
सौमनस्यं रमणकं देववर्षमिति क्रमात् ॥
पारिभाद्रमाप्यायनमभिज्ञातमितिद्विज ! ।
सेतुशैलाश्च सप्तैव सुरसः शतशृङ्गकः ॥
वामदेवश्च कुन्दश्च कुमुदः पुष्पवर्षकः ।
सहश्रुतिरिति ब्रह्मन् ! नद्यः सप्तैव कीर्त्तिताः
॥
अनुमतिः सिनीवाली नन्दा राका सरस्वती
।
रजनी च कुहूश्चैव महानद्यः सुपुण्यदाः ॥
तत्र विप्रादयो वर्णाः क्रमान्नामानि बिभ्रति ।
आद्यः श्रुतधरो वर्णस्ततो वीर्य्यधरः स्मृतः ।
वसुन्धरस्तृतीयस्तु चतुर्थस्तु इषुन्धरः ।
सर्व्वे ते सोममात्मानं भगवन्तं यजन्ति हि ॥
सुरोदं परिवेष्ट्योऽथ ततो द्विगुणमानकः । *
।
कुशद्वीपो घृतोदेन समानेनावृतो द्विज ! ॥

तोमरा हन्यमानाश्च तथैव करभञ्जकाः ॥
एते चान्ये जनपदाः
प्राच्योदीच्यास्तथैव च ।
उद्देशेन मया देशास्तव संकीर्त्तिता द्विज ! ॥
वर्षे तु भारते ब्रह्मन् ! त्रिवर्गस्य फलं भवेत् ।
दुह्यते कामधुग्धेनुर्भूमिः सम्यगनुष्ठिता ॥
तस्मिन् शुभाशुभं कर्म्म यथोक्तफलदं नृणाम् ।
अन्यानि यानि वर्षाणि भूमिस्वर्गाणि तानि वै ॥
भारते विहितं कर्म्म
यागध्यानादिलक्षणम् ।
फलं जनयते सम्यक् विकर्म्म
नरकाण्यपि ॥
तत्र सिद्धा नरा ब्रह्मन् ! तपसाराधनेन च ।
प्रयान्त्रि परमं लोकमपवर्गञ्च मारिष ! ॥
कृतं त्रेता द्वापरञ्च कलिश्च
ब्राह्मणर्षभ ! ।
भारते तु क्रमेणैवं भवन्ति हि युगानि वै ॥
चत्वारि च सहस्राणि वर्षाणां
ब्राह्मणर्षभ ! ।
आयुःसंख्या कृतयुगे संख्याता भारते द्विज ! ॥
त्रीण्येव तु सहस्राणि त्रेतायां भारते नृणाम् ।
द्वे सहस्रे द्वापरे तु शतमेकं कलौ स्मृतम् ॥
तत्रापि च स्थितिर्नास्ति कलौ
ब्राह्मणसत्तम ! ।
गर्भस्थाश्च म्रियन्ते च तथा जाता म्रियन्ति च ॥
महाबला महासत्त्वा ज्ञानिनो
धर्म्मतत्पराः ।
एताः सप्त महानद्यो दर्शनादेव पावनाः ॥
वर्णानां ब्राह्मणादीनां तत्र नामान्यनुक्रमात् ।
हंसश्चैव पतङ्गश्चोद्ध्र्वायनश्च तृतीयकः ॥
सत्याङ्गश्च चतुर्थो वै सर्व्वे धर्म्मार्थकोविदाः ।
अन्ये च पर्व्वतास्तत्र नद्यश्चैव महाफलाः ॥
प्रागायतो महाभाग ! मलयो नाम पर्व्वतः ।
ततो मेघाः प्रवर्त्तन्ते प्रभवन्ति च सर्व्वतः ॥
ततः परेण विप्रेन्द्र ! जलधारस्तु पर्व्वतः ।
तस्माद्गृह्णाति वै तोयं वासवः पृथिवीकृते ॥
वर्षासु हि ततो वृष्टिस्ततः शस्यसमुद्भवः ।
रैवतो नाम तत्राथ गिरिर्यत्र प्रतिष्ठितः ॥
रैवती नाम नक्षत्रं दृश्यते दिवि मोदिता ।
उत्तरेण तु तस्याथ श्यामो नाम गिरिर्महान् ॥
प्रांशुः श्रीमान्महामेघप्रभयोज्वलविग्रहः ।
यस्य श्रिया श्यामवर्णाः प्रजास्तत्र महामते ! ॥
अतःपरं महाभाग ! दुर्गो नाम महागिरिः ।
केशरी केशरयुतो यस्माद्वातः प्रवर्त्तते ॥
प्लक्षो नाम महाद्वोपो यत्र पूज्यस्तु शङ्करः ।
तत्र गच्छन्ति सिद्धाश्च चारणा दैवतानि च ॥
धार्म्मिकाश्च प्रजा ब्रह्मन् !
जरामृत्युविवर्ज्जिताः ।
दीर्घायुषः सत्यपरा वर्द्धन्ते भोगवर्द्धिताः ॥
नद्यश्चान्या महापुण्या गङ्गा च बहुधा मता ।
महानदी मणिजला सीतासी वेणिका तथा ।
कुशस्तम्बो महांस्तत्र द्वीपख्यातिं करोति च ।
जाज्वल्यमानो दीप्त्यैव महाज्वलनराशिवत् ॥
तत्र वर्षाणि सप्तैव समानानि प्रमाणतः ।
वसुदानं दृढरुचिर्नाभिगुप्तं महामते ! ॥
सत्यव्रतं विप्रनाम देवनामेति सप्तमम् ।
सप्तैव सीमागिरयः कीर्त्तिता द्विजसत्तम ! ॥
वभ्रुश्चैव चतुःशृङ्गः कपिलश्चित्रकूटकः ।
देवानीक ऊद्ध्र्वरोमा द्रविणश्चेति सप्तमः ॥
महानद्यश्च सप्तैव सर्व्वपापप्रणाशनाः ।
रसकुल्या मधुकुल्या मित्रविन्दा च मानद ! ॥
श्रुतविन्दा देवगर्भा मन्त्रमाला घृतच्युता ।
तत्र विप्रादयो वर्णा नामान्तरभृतो द्विज ! ॥
कुशलः प्रथमो वर्णः कोविदम्भूर्द्वितीयकः ।
अतिमुक्तस्तृतीयस्तु चतुर्थः कुलकः स्मृतः ॥
ते सर्व्वे ज्ञानसम्पन्ना जातवेदस्वरूपिणः ।
भजन्ते भगवन्तं वै कर्म्मकौशलयाजिनः ॥ * ॥
घृतोदाच्च तथा द्वीपो द्विगुणः क्रोञ्चसंज्ञकः ।
क्षीरोदेन समानेन वेष्टितो ब्राह्मणर्षभ ! ॥
क्रोञ्चो नाम गिरिर्यत्र द्वीपख्यातिकरो महान् ।
महासेनशराघातकृतच्छिद्रो महामते ! ॥
क्षीरोदेनाभिषिक्तश्च सततं वीचिसञ्चयैः ।
वर्षाणि तत्र सप्तैव तेषां नामानि मे शृणु ॥
आम्रो मधुरुहो मेघपृष्ठश्चापि वनस्पतिः ।

| | | |
|---|---|---|
| तपस्विनो ध्याननिष्ठाः कृते जायन्ति मानवाः ॥<br>त्रेतायां सर्व्ववर्णाश्च स्वधर्म्मनिरताः सदा ।<br>द्वापरे च महाभाग ! क्रूराश्च परहिंसकाः ॥<br>लुब्धाश्चानृतिकाश्चैव क्रोधना दुष्कृते रताः ।<br>कलौ खलु भविष्यन्ति भारते तापस ! प्रजाः ॥<br>सर्व्वेषामपि वर्षाणां भारतं प्रवरं द्विज ! ।<br>सिध्यन्ति मानवा ह्यत्र हरिभक्तिपरायणाः ॥<br>प्रायो भागवताः सर्व्वे भारते द्विजसत्तम ! ।<br>नानारूपाणि तीर्थानि फलदानि नृणामपि ॥ * ॥<br>जम्बूद्वीपो मया प्रोक्तो लक्षयोजनविस्तृतः ।<br>समानेन प्रमाणेन वेष्टितो लवणाम्भसा ॥ | | |

लोहितार्णः सुधामा च भ्राजिष्ठश्चापि सप्तमः ।
गिरयश्चापि सप्तैव वर्षसीमाकरा द्विज ! ।
शुक्लोऽथ वर्द्धमानश्च भोजन उपबर्हणः ॥
नन्दमो नन्दनश्चैव सर्व्वतोभद्र इत्यपि ।
सप्त तत्र महानद्यः पावना ब्राह्मणर्षभ ! ॥
अभया चामृतौघा च तृप्तिरूपवती तथा ।
तीर्थवत्यार्य्यका शुक्ला पवित्रवत्यपि स्मृता ॥
विप्रादयस्तथा वर्णाः ख्याता नामान्तरेण तु ।
पुरुषः प्रथमो वर्णो द्वितीयो ऋषभः स्मृतः ॥
तृतीयो द्रविणो नाम देवसंज्ञश्चतुर्थकः ।
मूर्त्तिं जलमयीं विष्णोर्ध्यायन्ति च यजन्ति च ॥ * ॥
एवं परस्तात् क्षीरोदात् शाकद्वीपो द्विजर्षभ ! ।
आयामेन स विज्ञेयो द्वात्रिंशल्लक्षयोजनः ॥
दधिमण्डोदकेनैव समानेन स सिन्धुना ।
परीतो भाति तत्रास्ति शाको नाम महीरुहः ॥
द्वीपख्यातिकरः श्रीमान् वासयन् द्वीपमेव तम् ।
वर्षाणि तत्र सप्तैव पुरोजवमनोजवौ ॥
धूम्रानीको वेपमानो विश्वाधारश्च मारिष ! ।
बहुरूपश्चित्ररेफो गिरयोऽपि च सप्त वै ॥
ईशान उरुशृङ्गश्च बलभद्रो महानसः ।
शतकेशवनामा च सहस्रस्रोत एव च ॥

तावती काञ्चनी भूमिर्लोकालोकात्परे द्विज ! ॥
यत्र प्रणिहितं वस्तु कथञ्चिन्नोपलभ्यते ।
सौवर्णी कान्तिरुद्दीप्ता सर्व्ववर्णप्रमाथिनी ॥
अतः सर्व्वाणि सत्त्वानि तां भूमिं वर्जयन्ति हि ।
लोकालोको गिरिर्य्यस्तु लोकान्ते वर्त्तते महान् ॥
आवृणोति स तेजांसि सूर्य्यादीनामपि द्विज ! ।
तमतिक्रम्य ज्योतींषि क्षमन्ते न प्रवर्त्तितुम् ॥
तावदुन्नाहवान् ब्रह्मन्नायामेन च तादृशः ।
आयामविस्तरे पृथ्वी पञ्चाशत्कोटियोजना ॥
तस्याश्चतुर्थभागोऽयं लोकालोकाचलो गिरिः ।
तस्योपरिष्टाच्चत्वारो गजेन्द्राः सुमहाबलाः ॥
नियुक्ता ब्रह्मणा भूमिं करैराकृष्य संस्थिताः ।
भगवानपि तत्रैव विष्वक्सेनादिभिर्वृतः ॥
पार्श्वदप्रवरैर्ब्रह्मन् ! भुजैर्बहुभिरुच्छ्रितैः ।
धारयन् जगतीमास्ते आकल्पमपि मारिष ! ॥
योऽन्तर्विस्तार एतस्या भूभ्यास्ते परिवर्णितः ।
तावती भूरलोकाख्या सान्द्रसन्तमसावृता ॥
ततो योगेश्वरगतिर्योगिनां प्राप्यमुत्तमम् ।
स्थानं भगवतः साक्षात् श्वेतद्वीप इतीर्य्यते ॥
इति ते कथितं ब्रह्मन् ! भूगोलस्योपवर्णनम् ॥
व्यास उवाच ।
य इदं शृणुयात् सूत ! भूगोलस्यानुवर्णनम् ।

जल्पन्नल्पमतिः स्मयात् पटुवटुभ्रूभङ्गवक्रोक्तिभिः ।
हीतः सन्नुपहासमेति गणको गोलानभिज्ञस्तथा
ज्योतिर्व्वित् सदसि प्रगल्भगणकप्रश्नप्रपञ्चोक्तिभिः ॥'
अथ गोलस्वरूपमाह ।
'दृष्टान्त एवावनिभग्रहाणां संस्थानमानप्रतिपादनार्थम् ।
गोलः स्मृतः क्षेत्रविशेष एव प्राज्ञैरतः स्याद्गणितेन गम्यः ॥'
अथ गणितप्रशंसामाह ।
'ज्योतिःशास्त्रफलं पुराणगणकैरादेश इत्युच्यते
नूनं लग्नबलाश्रितः पुनरयं तत्स्पष्टखेटाश्रयम् ।
ते गोलाश्रयिणोऽन्तरेण गणितं गोलोऽपि न ज्ञायते
तस्मात् यो गणितं न वेत्ति स कथं गोलादिकं ज्ञास्यति ॥'
अथ ज्योतिषशास्त्रश्रवणाधिकारिलक्षणमाह।
'द्विविधगणितमुक्तं व्यक्तमव्यक्तसंज्ञं
तदवगमननिष्ठः शब्दशास्त्रे पटिष्ठः ।
यदि भवति तदेदं ज्योतिषं भूरिभेदं
प्रपठितुमधिकारी सोऽन्यथा नाधिकारी ॥'
व्याकरणवर्णनमाह ।
'यो वेद वेदवदनं सदनं हि सम्यग्-
ब्राह्म्यं सवेदमपि वेद किमन्यशास्त्रम् ।
यस्मादतः प्रथममेतदधीत्य धीमान्
शास्त्रान्तरस्य भवति श्रवणेऽधिकारी ॥'
अथ गोलग्रन्थस्य प्रवृत्त्यर्थमन्योक्तप्रकारेणाह ।
'गोलं श्रोतुं तव यदि मतिर्भास्करीयं शृणु त्वं
नो संक्षिप्तो न च बहु वृथा विस्तरः शास्त्रतत्त्वम् ।
लीलागम्यः सुललितपदः प्रश्नरम्यः स यस्माद्विद्वन् ! विद्वत्सदसि पठतां पण्डितोक्तिं व्यनक्ति ॥'
अथ भूसंस्थानं प्रश्नश्लोकद्वयेन आह ।
'भ्रमद्भचक्रचक्रान्तर्गगने गगनेचरैः ।
वृता धृता धरा केन येन नेयमियादधः ॥
किमाकारा कियम्माना नानाशास्त्रविचार-

देवपालोऽपि सप्तैते वर्षसीमप्रवर्त्तकाः ।
नद्यः सप्तैव विख्याता आयुर्द्धाप्यनघा
द्विज ! ॥
सहश्रुतिः पञ्चनदी निरृतिरपराजिता ।
विख्यातोभयसृष्टिश्च महापुण्या
महाफलाः ॥
विप्रादयस्तथा वर्णा ख्याता नामान्तरेण
तु ।
आद्यो ऋतव्रतो नाम ततः सत्यव्रतः
स्मृतः ॥
दानव्रतानुव्रतौ च तृतीयश्च चतुर्थकः ।
भगवन्तं वायुरूपं भजन्ते च यजन्ति च
॥ * ॥
तथैव दधिमण्डोदात् परस्तात् पुष्करो
महान् ।
द्विगुणेन प्रमाणेन द्वीपः स्वादूदकेन तु ॥
परिवीतः समानेन सिन्धुना
ब्राह्मणर्षभ ! ।
यत्र पुष्करमत्युच्चं
ज्वलज्ज्वलनसन्निभम् ॥
द्वीपख्यातिकरं पत्रसहस्रायुतशोभितम्
।
यदाहुरासनं विश्वसृजस्तस्य प्रजापतेः
॥
द्वीपमध्येऽवधिगिरिरेक एव महामते ! ।
स मानसोत्तरो नाम प्राकार इव वेष्टकः
॥
तस्य पूर्ब्बापरौ पार्श्वौ देवर्षे ! तत्र
मारिष ! ।
सिन्धोर्वेष्टनमत्रैकं गिरेर्वेष्टनकं परम् ॥
रमणकं धातकञ्च द्वे वर्षे नामतः स्मृते ।
मानं तस्य गिरेर्विप्रायुतयोजनमुच्छ्रितम्
॥
तावदेव तथायामस्तस्योपरि पुराणि च
।
चत्वारि लोकपालानामिन्द्रादीनां
द्विजर्षभ ! ॥
यः परिक्रममाणस्य मेरुं विप्र !
विवस्वतः ।
मूद्‌र्ध्ना बिभर्त्ति शैलेन्द्रश्चक्रं
सम्बत्सरात्मकम् ॥

प्रदक्षिणीकृता तेन सशैलवनकानना ।
ससागरा च सद्वीपा सवर्षा च वसुन्धरा
॥
इति श्रीपद्मपुराणे भूमिखण्डे
भूगोलवर्णनं नाम
१३१ अध्यायः ॥ * ॥
ज्योतिषशास्त्रोक्तभूगोलम् ॥
यथा, --
“सिद्धिं साध्यमुपैति यत्स्मरणतः क्षिप्रं
प्रसादात्तथा
यस्याश्चित्रपदास्वलंकृतिरलं
लालित्यलीला-
वती ।
नृत्यन्ती मुखरङ्गगेव कृतिनां स्याद्भारती
भारती
तं ताञ्च प्रणिपत्य गोलममलं बालावबोधं
ब्रुवे ॥”
गोलग्रन्थकथने कारणमाह ।
‘मध्याद्यं द्युसदां यदत्र गणितं
तस्योपपत्तिं
विना
प्रौढिं प्रौढसभासु नैति गणको निःसंशयो
न
स्वयम् ।
गोले सा विमला करामलकवत् प्रत्यक्षतो
दृश्यते
तस्मादस्म्युपपत्तिबोधविषये
गोलप्रबन्धोद्यतः ॥’
अथ गोलप्रशंसया
गोलानभिज्ञगणकोपहास-
माह ।
‘भोज्यं यथा सर्व्वरसं विनाज्यं
राज्यं यथा राजविवर्ज्जितञ्च ।
सभा न भातीव सुवक्तृहीना
गोलानभिज्ञो गणकस्तथैव ॥
वादी व्याकरणं विनैव विदुषां धृष्टः
प्रविष्टः
सभां

णात् ।
कीदृग्द्वीपकुलाद्रीन्द्रसमुद्रैर्मुद्रितोच्यताम् ॥’
अथ ग्रहस्फुटीकरणोपपत्तिप्रश्नं श्लोकद्वयेनाह
।
‘संसिद्धो द्युगणाद्युगादिभगणैः खेटोऽनु-
पातेन यः
स्यात्तस्यास्फुटता कथं कथमभूत् स्पष्टीकृति-
र्नैकधा ।
किं देशान्तरमुद्गमान्तरमहो बाह्वन्तरं किञ्चरं
किञ्चोच्चंमृदु चञ्चलञ्च तदिदं कस्तात ! पातः
स्मृतः ॥
किं केन्द्रं किमु केन्द्रजं किमु चलं किम्बाचलं
तत्फलं
कस्मात्तत्सहितः कुतश्च रहितः खेटस्फुटो
जायते ।

| | | |
|---|---|---|
| अध्यासते च द्वौ पार्श्वौ प्रजास्तस्य महाबलाः ।<br>तत्र संज्ञान्तरं नास्ति वर्णानां ब्राह्मणर्षभ ! ॥<br>स्वादूदकस्य परतो लोकालोकाचलो महान् ।<br>लोकस्य चाप्यलोकस्य मध्ये गिरिवरः स्थितः ॥<br>प्राकार इव संवेष्ट्य लोकान् सर्व्वान्महामते ! ।<br>लोकालोकाचलो नाम तेनासौ परिकीर्त्तितः ॥<br>मानसोत्तरमेर्व्वोस्तु अन्तरे यावती मही । | | |

किं दृक् कर्म्म तथोदयास्तसमये द्वेधा विदध्यु-
र्बुधाः
सर्व्वं मे विमलं वदामलमलं गोलं विजानासि
चेत् ॥'
अथ त्रिप्रश्नोदितदिनमानभेदप्रश्नं
श्लोकद्वयेनाह ।
'महदहः किमहो रजनी तनु-
र्दिनमणौ गणकोत्तरगोलगे ।
ननु तनुर्दिवसो महती निशा
वद विचक्षण ! दक्षिणदिग्गते ॥
भवति किं द्युनिशं द्युनिवासिनां
द्युमणिवर्षमितञ्च सुरद्विषाम् ।
पितृषु किं शशिमासमितं तथा
युगसहस्रयुगं द्रुहिणस्य किम् ॥'
अथ राश्युदयमानकालभेदप्रश्नञ्चाह ।
'भवलयस्य किलार्कलवाः समाः
किमसमैः समयैः खलु राशयः ।
समुपयान्त्युदयं किमु गोलवि-
न्नविषयेष्वखिलेष्वपि ते समाः ॥'
अथ द्युज्याकुज्यादिसंस्थानप्रश्नं वृत्तार्द्धेनाह ।
'द्युज्याकुज्यापमसमनराग्राक्षलम्बादिकानां
विद्वन् ! गोले वियति हि यथा दर्शय क्षेत्र-
संस्थाम् ॥'
अथ चन्द्रार्कग्रहणयोः दिक्कालभेदाद्युपपत्ति-
प्रश्नान् श्लोकोत्तरार्द्धेनाह ।
'तिथ्यन्ते चेत् ग्रह उडुपतेः किन्न भानोस्तदानीं
इन्दोः प्राच्यां भवति हि रवेः प्रग्रहः किं प्रती-
च्याम् ॥'
लम्बनं वद किं का च नतिमतिमतां वर ! ।
तत्संस्कृतिस्तिथौ बाणे किं ते सिद्धे कुतः कुतः
॥'
अथ शृङ्गोन्नतौ चन्द्रस्य शुक्लस्य क्षयवृद्धिप्रश्न-
माह ।
'शुक्लस्य द्विजराज एष महसो हान्याः कुवृत्तः
कुतः
सद्वृत्तत्वगतोऽप्यहो भ्रमवशाद्दोषातिसङ्गा-
दिव ।
संप्राप्याथ पुनस्त्रयीतनुमतस्तस्याश्रयेनैव किं
शुक्लस्य क्रमशस्तथैव महसो वृद्ध्यैति सद्वृत्त-

नान्याधारः स्वशक्त्या वियति च
नियतं तिष्ठती-
हास्य पृष्ठे
निष्ठं विश्वञ्च शश्वत्
सदनुजमनुजादित्यदैत्यं
समन्तात् ॥
सर्व्वतः पर्व्वतारामग्रामचैत्यद्रुमैश्चितः
।
कदम्बकुमुमग्रन्थिः केशरप्रकरैरिव ॥'
अथ पुराणेषु भूमेराधारपरम्परा या
पठिता
तां निराकुर्वन्नाह ।
मूर्त्तो धर्त्ता चेद्धरित्र्यास्तदन्य-
स्तस्याप्यन्योऽप्येवमत्रानवस्था ।
अन्त्ये कल्प्या चेत् स्वशक्तिः किमाद्ये
किं नो भूमिः साष्टमुर्त्तेश्च मूर्त्तिः ॥'
अथ कथमियं भूमेः स्वशक्तिरित्याशङ्कां
परि-
हरन्नाह ।
'यथोष्णतार्कानलयोश्च शीतता
विधौ द्रुतिः के कठिनत्वमश्मनि ।
मरुच्चलो भूरचला स्वभावतो
यतो विचित्राः खलु वस्तुशक्तयः ॥
आकृष्टशक्तिश्च मही तया यत्
खस्थं गुरु स्वाभिमुखं स्वशक्त्या ।
आकृष्यते तत् पततीव भाति
समे समन्तात् कुरियं यतः खे ॥'
अथ बौद्धानां युक्तिमाह ।
'भपञ्जरस्य भ्रमणावलोका-
दाधारशून्या कुरितिप्रतीतिः ।
खस्थं न दृष्टं गुरु च क्षमातः
खेऽधः प्रयातीति वदन्ति बौद्धाः ॥
द्वौ द्वौ रवीन्दू भगणौ च तद्व-
देकान्तरौ तावुदयं व्रजेताम् ।
यदब्रुवन्नेवमनर्थवादान्
ब्रवीम्यतस्तान् प्रतियुक्तियुक्तम् ॥'
अथ तेषां युक्तिभङ्गमाह ।
'भूः खेऽधः खलु यातीति बुद्धिर्बौद्ध !
मुधा

स्वोक्तस्य भूपरिधिप्रमाणस्य
उपपत्तिमाह ।
'पुरान्तरं चेदिदमुत्तरं स्यात्
तदक्षविश्लेषलवैस्तदा किम् ।
चक्रांशकैरित्यनुपातयुक्त्या
युक्तं निरुक्तं परिधेः प्रमाणम् ॥'
तदेव दृढीकुर्व्वन्नाह ।
'निरक्षदेशात् क्षितिषोडशांशे
भवेदवन्ती गणितेन यस्मात् ।
तदन्तरं षोडशसंगुणं स्याद्
भमानमस्माद्बहु किं तदुक्तम् ॥
शृङ्गोन्नतिग्रहयुतिग्रहणोदयास्त-
च्छायादिकं परिधिना घटतेऽमुना हि ।
नान्येन तेन जगुरुक्तमहीप्रमाण-
प्रामाण्यमन्वययुजा व्यतिरेककेण ॥'
अथ भूगोलपुरनिवेशमाह ।
'लङ्का कुमध्ये यमकोटिरस्याः
प्राक्पश्चिमे रोमकपत्तनञ्च ।
अधस्ततः सिद्धपुरं सुमेरुः
सौम्येऽथ याम्ये बडवानलश्च ॥
कुवृत्तपादान्तरितानि तानि
स्थानानि षड्गोलविदो वदन्ति ।
वसन्ति मेरौ सुरसिद्धसंघा
और्व्वे च सर्व्वे नरकाः सदैत्याः ॥
यो यत्र तिष्ठत्यवनीतलस्य-
मात्मानमस्या उपरिस्थितञ्च ।
स मन्यतेऽतः कुचतुर्थसंस्था
मिथश्च ते तिर्य्यगिवामनन्ति ॥
अधःशिरस्का कुदलान्तरस्था
च्छाया मनुष्या इव नीरतीरे ।
अनाकुलास्तीर्य्यगधःस्थिताश्च
तिष्ठन्ति ते तत्र वयं यथात्र ॥'
अथ द्वीपानां समुद्राणाञ्च संस्थानमाह ।
'भूमेरर्द्धं क्षारसिन्धोरुदक्स्थं
जम्बुद्वीपं प्राहुराचार्य्यवर्य्याः ।
अर्द्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये
क्षारक्षीराद्यम्बुधीनां निवेशः ॥
लवणजलधिरादौ दुग्धसिन्धुश्च तस्मा-
दमृतममृतरश्मिः श्रीश्च यस्माद्बभूव ।

ताम् ॥'
अथ प्रथमप्रश्नस्य पृथिवीसंस्थानोपपत्तेरुत्तरं विवक्षुरादिसर्गे पृथिव्यादीनां तत्त्वानामादितत्त्वं निखिलजगज्जननैकबीजं परं ब्रह्म मनसा प्रणिपत्यादौ तावत् तज्जयमाह ।
'यस्मात् क्षुब्धप्रकृतिपुरुषाभ्यां महानस्य गर्भे-ऽहं कारोऽभूत् खकशिखिजलोर्व्यस्ततः संह-तेश्च ।
ब्रह्माण्डं यज्जठरगमहीपृष्ठनिष्ठो विरिञ्चि-र्विश्वं शश्वत् सृजति परमं ब्रह्म तत्तत्त्वमाद्यम् ॥'
अथ भूमेः स्वरूपमाह ।
भूमेः पिण्डः शशाङ्कज्ञकविरविकुजेज्यार्कि-नक्षत्रकक्षा
वृत्तैर्वृत्तो वृतःसन्मृदनिलसलिलव्योमतेजो-मयोऽयम् ।
कथम् ।
यातायातञ्च दृष्ट्वापि खेयत् क्षिप्तं गुरु क्षितिम् ॥'
अथ जिनानां युक्तिभङ्गमाह ।
'किं गण्यं तव वैगुण्यं द्वैगुण्यं यो वृथाकृथाः ।
भार्केन्दूनां विलोक्याह्ना ध्रुवमत्स्यपरिभ्रमम् ॥'
भूगोलस्य समतां निराकर्त्तुमाह ।
'यदि समा मुकुरोदरसन्निभा
भगवती धरणी तरणिः क्षितेः ।
उपरि दूरगतोऽपि परिभ्रमन्
किमु नरैरमरैरिव नेक्षते ॥
यदि निशाजनकः कनकाचलः
किमु तदन्तरगः स न दृश्यते ।
उदगयं ननु मेरुरथांशुमान्
कथमुदेति स दक्षिणभागतः ॥'
अथ प्रत्यक्षविरोधशङ्कां निरस्यन्नाह ।
'समो यतः स्यात् परिधेः शतांशः
पृथ्वी च पृथ्वी नितरां तनीयान् ।
नरश्च तत्पृष्ठगतस्य कृस्ना
समेव तस्य प्रतिभात्यतः सा ॥'
महितचरणपद्मः पद्मजन्मादिदेवै-र्वसति सकलवासो वासुदेवश्च यत्र ॥
दध्नो घृतस्येक्षुरसस्य तस्मान्-मद्यस्य च स्वादुजलस्य चान्त्यः ।
स्वादूदकान्तर्घडवानलोऽसौ पातालोकाः पृथिवीपुटानि ॥
चञ्चत्फणा मणिगणांशुकृतप्रकाशा एतेषु सासुरगणाः फणिनो वसन्ति ।
दीव्यन्ति दिव्यरमणीरमणीयदेहैः सिद्धाश्च तत्र हि लसत्कनकावभासैः ॥
शाकं ततः शाल्मलमत्र कौशं क्रौञ्चञ्च गोमेदकपुष्करे च ।
द्वयोर्द्वयोरन्तरमेकमेकं समुद्रयोर्द्वीपमुदाहरन्ति ॥'

अथ जम्बुद्वीपमध्ये गिरिनिवेशवशेन नवखण्डा-
न्याह ।
‘लङ्कादेशाद्धिमगिरिरुदक् हेमकूटश्च तस्मा-
त्तस्माच्चान्यो निषध इति ते सिन्धुपर्य्यन्त-
दैर्घ्याः ।
एवं सिद्धादुदगपि पुरात् शृङ्गवच्छुक्लनीला-
वर्षाण्येषां जगुरिह बुधा अन्तरे द्रौणिदेशान् ॥
‘भारतवर्षमिदं ह्युदगस्मात्
किन्नरवर्षमतो हरिवर्षम् ।
सिद्धपुराच्च तथा कुरु तस्माद्-
विद्धि हिरण्मयरम्यकवर्षे ॥
माल्यवांश्च यमकोटिपत्तनाद्-
रोमकाच्च किल गन्धमादनः ।
नीलशैलनिषाधवधी च तौ
अन्तरालमनयोरिलावृतम्॥
माल्यवज्जलधिमध्यवर्त्ति
यत्तत्तु भद्रतुरगं जगुर्बुधाः ।
गन्धशैलजलराशिमध्यगं
केतुमालकमिला कलाविदः ॥
निषधनीलसुगन्धसुमाल्य-
कैरलमिलावृतमावृतमाबभौ।
अमरकेलिकुलाय समाकुलं
रुचिरकाञ्चनचित्रमहीतलम्॥’
अथ मेरुसंस्थानमाह ।
इह हि मेरुगिरिः किल मध्यगः
कनकरत्नमयस्त्रिदशालयः।
द्रुहिणजन्मकुप्द्मजकर्णि-
केति च पुराणविदः समवर्णयन् ॥
विष्कम्भशैलाः खलु मन्दरोऽस्य
सुगन्धशैलो विपुलः सुपार्श्वः ।
तेषु क्रमात् सन्ति च केतुवृक्षाः
कदम्बजम्बूवटपिप्पलाख्याः॥
जम्बूफलामलगलद्रसतःप्रवृत्ता
जाम्बूनदीरसयुता मृदभूत् सुवर्णम् ।
सीताख्या भद्राश्वं सालकनन्दा च भारतं वर्षम्
चक्षुश्च केतुमालं भद्राख्या चोत्तरान् कुरून् याता ॥
या कर्णिताभिलसिता दृष्टा स्पृष्टावगाहिता पीता ।
उक्ता स्मृता स्तुता वा पुनाति बहुधापि पापिनः
पुरुषान् ॥
यां चलिते दलिताखिलबन्धो
गच्छति बल्गति तत्पितृसंघः ।
प्राप्ततटो विजितान्तकदूतो
याति नरो निरयात् सुरलोकम् ॥’
अथ भारतवर्षमध्ये नव खण्डानि सप्त कुका-
चलांश्चाह ।
‘ऐन्द्रं कसेरुसकलं किल ताम्रपर्ण-
मन्यद्गभस्तिमदतश्च कुमारिकाख्यम् ।
नागञ्च सौम्यमिह वारुणमन्त्यण्डं
गान्धर्व्वसंज्ञमिति भारतवर्षमध्ये ॥
वर्णव्यवस्थितिरिहैव कुमारिकाख्ये
शेषेषु चान्त्यजजना निवसन्ति सर्व्वे ।
माहेन्द्रशुक्तिमलयर्क्षकपारिपात्राः
सह्यः सबिन्ध्य इह सप्त कुलाचलाख्याः ॥’
अथ लोकव्यवस्थामाह।
‘भूर्लोकाख्यो दक्षिणे व्यक्षदेशा-
दस्मात् सौम्योऽयं भुवः स्वश्च मेरुः ।
लभ्यः पुण्यैः खे महः स्याज्जनोऽतो-
ऽनल्पानल्पैः स्वैस्तपः सत्यमन्त्यः ॥’
दिग्व्यवस्थामाह ।
‘लङ्कापुरेऽर्कस्य यदोदयः स्या-
त्तदा दिनार्द्ध्वं यमकोटिपुर्य्यां ।
अधस्ततः सिद्धपुरेऽस्तकालः
स्याद्रोमके रात्रिदलं तदैव ॥
यत्रोदितोऽर्कः किल तत्र पूर्ब्बा
तत्रापरा यत्र गतः स चास्तम् ।
तन्मत्स्यतोऽन्ये च ततोऽखिलाना-
मुदक्स्थितो मेरुरिति प्रसिद्धम् ॥’
अथ विशेषमाह ।
स्तदन्तरे योजनजाः पलांशकाः ॥
योजनसंख्या भांशै ३ ६ ० र्गुणिता
कुपरिधिहृता ४ ९ ६ ७ भवन्त्यंशाः ।
भूमौ कक्षायां वा
भागेभ्यो योजनानि च व्यस्तम् ॥’
अथ देवदैत्यानां ध्रुवर्क्षसंस्थानमाह ।
‘सौम्यं ध्रुवं मेरुगताः खमध्ये
याम्यञ्च दैत्या निजमस्तकोर्द्ध्वे ।
सव्यापसव्यं भ्रमदृक्षचक्रं
विलोकयन्ति क्षितिजप्रसक्तम् ॥
उत्तरगोले क्षितिजादूर्द्ध्वं परितो भ्रमन्तमादि-
त्यम् ।
सव्यं त्रिदशाः सततं पश्यन्त्यसुरा अपसव्यं
याम्ये ॥
द्वन्द्वान्तमारोहति यैः क्रमेण
तैरेव वृत्तैरवरोहती नः ।
यत्रैव दृष्टः प्रथमं स देवै-
स्तत्रैव तिष्ठन्न विलोक्यते किम् ॥
दिनं सुराणामयनं यदुत्तरं
निशेतरत् सांहितिकैः प्रकीर्त्तितम् ।
दिनोन्मुखेऽर्के दिनमेव तन्मतं
निशा तथा तत्फलकीर्त्तनाय वै ॥
विधूर्द्ध्वभागे पितरो वसन्तः
स्वाधःसुधादीधितिमामनन्ति।
पश्यन्ति तेऽर्कं निजमस्तकोर्द्ध्वे
दर्शे यतोऽस्माद्युगलं तदैषाम् ॥
कृष्णे दले पक्षदलेऽभ्युदेति
शुक्रेऽस्तमेत्य तत एव सिद्धम् ।
भार्द्धान्तरत्वान्न विधोरधःस्थं
तस्मान्निशीथः खलु पौर्णमास्थाम् ॥
यदतिदूरगतो द्रुहिणः क्षितेः
सततमाप्रलयं रविमीक्षिते ।
भवति तावदयं शयितस्य तद्-
युगसहस्रयुगं द्युनिशं विधेः ॥’
अथ भूपरिधिमानं प्राक्कथितमपि विशेषार्थ-
माह ।

जाम्बूनदं हि तदतः सुरसिद्धसंघाः
शश्वत् पिबन्त्यमृतपानपराङ्मुखास्ते ॥
वनं तथा चित्ररथं विचित्रं
तेष्वप्सरोनन्दननन्दनञ्च।
धृत्याह्वयं यत् धृतिकृत् सुराणां
भ्राजिष्णु वैभ्राजमिति प्रसिद्धम् ॥
सरांस्यथैतेष्वरुणञ्च मानसं
महाह्रदं श्वेतजलं यथाक्रमम् ।
सरःसु रामारमणश्रमालसाः
मुरा रमन्ते जलकेलिलालसाः ॥
सद्रत्नकाञ्चनमयं शिखरत्रयञ्च
मेरौ मुरारिकपुरारिपुराणि तेषु ।
तेषामधः शतमखज्वलनान्तकानां
रक्षोऽम्बु पानिलशशीशपुराणि चाष्टौ ॥'
तत्र अन्यविशेषमाह ।
'विष्णुपदीविष्णुयदात् पतिता मेरौ
चतुर्द्धासीत्
विष्कम्भाचलमस्तकशस्तसरःसंगता
गता
वियति ।

'अथोज्जयिन्याः कुचतुर्थभागे
प्राच्यां दिशि स्याद्यमकोटिरेव ।
ततश्च पश्चान्न भवेदवन्ती
लङ्कैव तस्याः ककुभि प्रतीच्याम् ॥
तथैव सर्व्वत्र यतो हि यत् स्यात्
प्राच्यां ततस्तन्न भवेत् प्रतीच्याम् ।
निरक्षदेशादितरत्र तस्मात्
प्राचीप्रतीच्यौ च विचित्रसंस्थे ॥'
अथ भचक्रभ्रमणव्यवस्थामाह।
'निरक्षदेशे क्षितिमण्डलोपगौ
ध्रुवौ नरः पश्यति दक्षिणोत्तरौ ।
तदाश्रितं खे जलयन्त्रवत्तथा
भ्रमद्भचक्रं निजमस्तकोपरि ॥
उदग्दिशं याति यथा यथा नर-
स्तथा तथा खान्नतमृक्षमण्डलम्।
उदग्ध्रुवं पश्यति चोन्नतं क्षिते-

'प्रोक्तो योजनसंख्यया कुपरिधिः
सप्ताङ्गनन्दा-
ब्धय ४९६७
स्तद्व्यासः कुभुजङ्गशायकभवः
सिद्धांशके
१
नाधिकः । १५८१ । २४
पृष्ठक्षेत्रफलं यथा युगगुणत्रिंशच्छराष्टाद्रयो
७८५३०३४
भूमेः कन्दुकजालवत् कुपरिधिव्यासाहतेः
प्रस्फुटम् ॥'
भूपृष्ठफलस्य लल्लोक्तस्य दूषणमाह ।
'दुष्टं कन्दुकपृष्ठजालवदिलागोले फलं
जल्पितं
लल्लेनास्य शतांशकोऽपि न
भवेद्यस्मात्फलं
वास्तवम् ।
तत् प्रत्यक्षविरुद्धमुद्धतमिदं नैवास्तु वा
चास्तु वा
हे प्रौढा गणका विचारयत
तन्मध्यस्थबुद्ध्या
भृशम् ॥'

अथ सद्युक्तिमाह ।
‘यत् परिध्यर्द्धविष्कम्भं वृत्तं कृत्वा किलांशुकम् ।
तेनार्द्धं छाद्यते गोलः किञ्चिद्वस्त्रञ्च शिष्यते ॥
गोलक्षेत्रफलाद्यस्माद्वस्त्रक्षेत्रफलं यतः ।
सार्द्धद्विगुणितासन्नं तावदेवापरे दले ॥
एवं पञ्चगुणात् क्षेत्रफलात् पृष्ठफलं खलु ।
नाधिकं जायते तेन परिधिघ्नं कुतः कृतम् ॥
वृत्तक्षेत्रफलं यस्मात् परिधिघ्नं न युक्तिमत् ।
दुष्टत्वाद्गणितस्यास्य दुष्टं भूपृष्ठजं फलम् ॥”
अथान्यथा प्रतिपाद्यते ।
‘गोलस्य परिधिः कल्प्यो वेदघ्नज्यामितेर्मितः ।
मुखवुध्नगरेखाभिर्यद्वदामलके स्थितः ॥
दृश्यन्ते वप्रकास्तद्वत् प्रागुक्तपरिधेर्मितात् ।
ऊद्ध्वार्धःकृतरेखाभिर्गोले वप्रान् प्रकल्पयेत् ॥
तत्रैकवप्रकक्षेत्रफलं खण्डैः प्रसाध्यते ।
सर्व्वज्यैक्यं त्रिभज्यार्द्धहीनं त्रिज्याद्ध्वर्भाजितम्
॥
एवं वप्रफलं तत् स्याद्गोलव्याससमं यतः ।
परिधिव्यासघातोऽतो गोलपृष्ठफलं स्फुटम् ॥’
अथ भूमेः प्रलयभेदान् प्रलयञ्चाह ।
‘वृद्धिर्विधेरह्नि भुवः समन्तात्
स्याद्योजनं भूभवभूतिपूर्ब्बैः ।
ब्राह्म्य लये योजनमात्रवृद्धे-
र्नाशो भुवः प्राकृतिकेऽखिलायाः ॥
दिने दिने यन्म्रियते हि भूतै-
र्दैनन्दिनं तं प्रलयं वदन्ति ।
ब्राह्मं लयं ब्रह्मदिनान्तकाले
भूतानि यद्ब्रह्मतनुं व्रजन्ति ॥
ब्रह्मात्यये यत् प्रकृतिं प्रयान्ति
सर्व्वाण्यतः प्राकृतिकं कृतीन्द्राः ।
लीनान्यतः कर्म्मपुटान्तरत्वात्
पृथक् क्रियन्ते प्रकृतेर्विकारैः ॥
ज्ञानाग्निदग्धाखिलपुण्यपापा
मनः समाधाय हरौ परेशे ।
यद्योगिनो यान्ति निवृत्तिमस्मा-
दात्यन्तिकं चेति लयश्चतुर्द्धा ॥’
अथ ब्रह्माण्डगोलमाह ।
‘भूभूधरत्रिदशदानवमानवाद्या
ये याश्च धिष्ट्यगगनेचरचक्रकक्षाः ।
ब्रह्माण्डमेतन्मितमस्तु नो वा
कल्पे ग्रहः क्रामति योजनानि ।
यावन्ति पूर्ब्बैरिह तत्प्रमाणं
प्रोक्तं खकक्षाख्यमिदं मतं नः ॥”
इति सिद्धान्तशिरोमणौ गोलाध्याये
भुवनकोषः
समाप्तः ॥

**भूच्छायं**, क्ली, स्त्री, (भुवश्छाया । “विभाषासेना-
सुराच्छायानिशानाम् ।” २ । ४ । २५ ।
इति
तत्पुरुषे विभाषया नपुंसकम् ।
छायाबाहुल्ये
तु केवलं क्लीवत्वं) अन्धकारः । इति
शब्दमाला ॥

**भूजन्तुः**, पुं, (भुवो जन्तुरिव ।) उपरसविशेषः ।
इति
राजनिर्घण्टः ॥ (विशेषोऽस्य भूनागशब्दे
द्रष्टव्यः ॥)

**भूजम्बूः**, स्त्री, (भूवो जम्बूरिव सादृश्यात्)
विकङ्कत-
फलम् । गोधूमः । इति मेदिनी । बे, १४
॥
भूमिजम्बूः । इति राजनिर्घण्टः ॥

**भूतं**, क्ली, (भू + क्तः ।) युक्तम् । न्यायः ।
क्ष्मादिः ।
पृथिव्यप्तेजोवाय्वाकाशपञ्चकम् । (यथा,
मनुः ।
१२ । १४ ।
“तावुभौ भूतसम्पृक्तौ महान् क्षेत्रज्ञ एव
च ॥
उच्चावचेषु भूतेषु स्थितं तं व्याप्य
तिष्ठतः ॥”
“स च त्रिविधो वैकारिकस्तैजसो
भूतादिरिति ।
भूतादेरपि तैजससहायात्तल्लक्षणान्येव
पञ्चत-
न्मात्राण्युत्पद्यन्ते । तद्यथा ।
शब्दतन्मात्रं स्पर्श-
तीति ॥ अथ सर्व्वथापि भूतानुसरणं
न शक्यते
कर्त्तुं तथा सति साक्ष्यादिभिर्न्निर्णयः
कार्य्य-
इत्यनुकल्पः । यथोक्तम् ।
भूतच्छलानुसारि-
त्वाद्विगतिः समुदाहृता ।
भूतन्तत्त्वार्थयुक्तं यत्
प्रमादाभिहितं छलमिति ॥ तत्र
भूतानुसारी
व्यवहारो मुख्यः । छलानुसारी
त्वनुकल्पः ।
इति मिताक्षरायां व्यवहाराध्यायः ॥

**भूतं**, त्रि, (भाव्यते स्मेति । “आधृषाद्वेति
णिज-
भावः । भू + क्तः । भूतिरस्त्यस्येति
वा । अर्श-
आदित्वात् अच् । अभवदिति वा ।
भुवो गत्यर्थे
इति । भूतार्थे कर्त्तरि क्तः ।) प्राणी ।
जन्तुः ।
(यथा, ऋग्वेदे । ३ । २७ । ९ ।
“धिया चक्रे वरेण्यो भूतानां
गर्भमादधे ॥”
यथा च चरके शारीरस्थाने
तृतीयेऽध्याये ॥
“भूतानाञ्चतुर्व्विधा
योनिर्जराय्वण्डस्वेदोद्भिदः ।”)
अतीतम् । (यथा, कथासरित्सागरे ।
१ । २४ ।
“भूतं भवद् भविष्यद् वा किं तत्
स्यात् जगति
प्रिये ।
भवती यन्न जानीयादिति
शर्व्वोऽप्युवाच ताम् ॥”)
वृत्तम् । (यथा, सुश्रुते
चिकित्सितस्थाने । १०
अध्याये ।

लोकव्यवस्थितिरुपर्य्युपरिप्रदिष्टा
ब्रह्माण्डभाण्डजठरे तदिदं समस्तम् ॥”
अथान्योदितं ब्रह्माण्डमानं पूर्ब्बोक्तमपि प्रस-
ङ्गादनुवदति स्म ।
कोटिघ्नैर्नखनन्दषट्कनखभूभूभृद्भुजङ्गेन्दुभि-
र्ज्योतिःशास्त्रविदो वदन्ति नभसः कक्षामिमां
योजनैः १८७१२०६९२००००००००।
तद्ब्रह्माण्डकटाहसम्पुटतटे केचिज्जगुर्वेष्टनं
केचित् प्रोचुरदृश्यदृश्यकगिरि पौराणिकाः
सूरयः ॥
करतलकलितामलक-
वदमलं सकलं विदन्ति ये गोलम् ।
दिनकरकरनिकरनिहत-
तमसो नभसः परिधिरुदितस्तैः ॥

तन्मात्रं रूपतन्मात्रं रसतन्मात्रं
गन्धतन्मात्र-
मिति । तेषां विशेषाः
शब्दस्पर्शरूपरसगन्धा-
स्तेभ्यो भूतानि
व्योमानिलानलजलोर्व्व्यः ।” इति
सुश्रुते शारीरस्थाने प्रथमेऽध्याये ।)
ऋतम् । सत्यम् । इत्यमरभरतौ ॥
पिशाचादि ।
(यथा, श्रीभागवते । ३ । १४ । २१ ।
“एषा घोरतमा वेला घोराणां घोरदर्शना
।
चरन्ति यस्यां भूतानि भूतेशानुचराणि ह
॥”)
जन्तुः । इति मेदिनीशब्दरत्नावल्यौ ॥
(यथा,
मनुः । ६ । ८ ।
“स्वाध्याये नित्ययुक्तः स्याद्दान्तो मैत्रः
समा-
हितः ।
दाता नित्यमनादाता
सर्व्वभूतानुकम्पकः ॥”
स्थावरजङ्गमात्मकं द्रव्यम् । यथा, मनुः
। ८ । ३०६ ।
“रक्षन् धर्म्मेण भूतानि राजा वध्यांश्च
घात-
यन् !
यजतेऽहरहर्यज्ञैः सहस्रशतदक्षिणैः ॥”)
वस्तुतत्त्वम् । यथा, --
“छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः ।
भूतमप्यनुपन्यस्तं हीयते व्यवहारतः ॥
छलं प्रमादाभिहितम् । निरस्य
परित्यज्य ।
भूतेन वस्तुतत्त्वानुसरणेन ।
व्यवहारान्नयेदन्तं
नृपः । यस्माद्भूतमपि वस्तुतत्त्वमपि
अनुपन्यस्त-
मनभिहितं हीयते हानिमुपगच्छति
व्यवहारतो
व्यवहारेण साक्ष्यादिभिः ।
तस्माद्भूतानुसरणं

“गोशकृद्भूतानां वा यवानां शकून्
कार-
यित्वा ॥”)
समम् । सदृशम् । इत्यमरभरतौ ॥
प्राप्तम् ।
(यथा, महाभारते । १३ । ३४ । १५
।
“यद् ब्राह्मणमुखात् प्राप्तं प्रतिगृह्णन्ति
वैवचः ।
भूतात्मानो महात्मानस्ते न यान्ति
परा-
भवम् ॥”
“भूतः प्राप्तो वशीकृत आत्मा चित्तं
यैस्ते ॥”
इति तट्टीकायां नीलकण्ठः ।)
सत्यम् ।
इति मेदिनीशब्दरत्नावल्यौ ॥ (यथा
शाकु-
न्तले । प्रथमाङ्के । “सूत्रधारः ।
सस्मितम् ।
आर्य्ये ! कथयामि ते भूतार्थम् ।”)
भूतकालस्य
पर्य्यायो यथा । वृत्तम् २ अतीतम् ३
ह्यस्तनम् ४
निभृतम् ५ गतम् ६ । इति
राजनिर्घण्टः ॥
उत्तरपदस्थ एव भूतशब्दः समार्थ
इति
शाब्दिकाः । यथा देवभूतोऽयम् ।
इति भरतः ॥
(उत्तरपदस्थ भूतशब्दः
स्वरूपार्थोऽपि । यथा,
मनुः । १ । ५ ।
“आसीदिदं
तमोभूतमप्रज्ञातमलज्ञणम्।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्व्वतः
॥”)

**भूतः**, पुं, (भू + कर्त्तरि क्तः ।) देवयोनिविशेषः ।

स च अधोमुस्वोद्र्ध्वमुखादिः
पिशाचभेदो रुद्रा-

| | | |
|---|---|---|
| | कर्त्तव्यम् । यथार्थिप्रत्यर्थिनौ सत्यमेव वदतस्तथा<br>ससभ्येन सभापतिना यतितव्यं सामादिभिरुपायै-<br>स्तथा सति साक्ष्यादिनैरपेक्षेणैव निर्णयो भव- | नुचरो बालग्रहः । इत्यमरभरतौ ॥ (यथा,<br>मार्कण्डेयपुराणे । ५१ । ५३ ।<br>"विक्षिपेज्जुहुयाच्चैवानलं मित्रञ्च कीर्त्तयेत् ।<br>भूतानां मातृभिः सार्द्धं बालकानान्तु शान्तये ॥")<br>कुमारः । इति मेदिनी । ते, ४१ ॥ योगीन्द्रः ।<br>इति शब्दरत्नावली ॥ कृष्णचतुर्द्दशी । इति<br>त्रिकाण्डशेषः ॥ * ॥<br>भूतनाशकौषधम् । यथा,<br>"श्वेतापराजितामूलं पिष्टं तण्डलवारिणा ।<br>तेन नस्यप्रदानं स्याद्भूतबृन्दस्य विद्रवम् ॥ |

अगस्त्यपुष्पनस्यो वै समरीचश्च भूतहृत् ।
भुजङ्गवर्म्म वै हिङ्गु निम्बपत्राणि वै यवाः ।
गौरसर्षप एभिः स्याल्लेपो भूतहरः कृतः ॥
गोरोचना मरीचानि पिप्पली सैन्धवं मधु ।
अञ्जनं कृतमेभिः स्याद् ग्रहभूतहरं शिव ! ॥
अपि च ।
"वचा त्रिकटुकञ्चैव करञ्जं देवदारु च ।
मञ्जिष्ठा त्रिफला श्वेता शिरीषो रजनीद्वयम् ॥
प्रियङ्गुनिम्बत्रिकटुगोमूत्रेणावघर्षितम् ॥
नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनं तथा ॥
अपस्मारविषोन्मादशोषालक्ष्मीज्वरापहम्।
भूतेभ्यश्च भयं हन्ति राजद्वारे च शासनम् ॥"
इति गारुडे १९२ । १९९ अध्यायः ॥
शम्भुगणभूता यथा, --
"हते वराहस्य गणे भर्गमासाद्य ते गणाः ।
चतुर्भागाः स्वयं भूत्वा भूतं कर्म्मेति वै जगुः ॥
भूतत्वमभवत्तेषां चतुर्भागवतां तदा ।
वचनात् पद्मजातस्य भूतग्रामास्ततो मताः ॥
यो लोकविदितः पूर्ब्बं भूतग्रामश्चतुर्विधः ।
यतस्तेभ्योऽधिका यत्नैस्तद्भूतग्राम उच्यते ॥
इति वः सर्व्वमाख्यातं भूताः शम्भुगणा यथा
।"
इति कालिकापुराणे २९ अध्यायः ॥
(वसुदेवस्य पौरवीगर्भजातद्वादशपुत्त्राणां ज्येष्ठ-
तमः । यथा, भागवते । ९ । २४ । ४७ ।
"पौरव्यास्तनया ह्येते भूताद्या द्वादशाभवन्
॥")

**भूतकेशः**, पुं, (भूतस्य केश इव ।) स्वनामख्यात-

तृणम् । तत्पर्य्यायः । गोलोमी २ । इत्य-
मरः । २ । १० । १११ ॥ भूतकेशी ३ अल्प-
केशी ४ केशी ५ । इति रत्नमाला ॥ भूतानां
केश इव भूतकेशः क्लीवञ्चेति केचित् । स्त्री
चेत्यन्ये । अथ द्वयोर्भूतकेशो गोलोमी भूत-
केशिकेति वाचस्पतिः । इति भरतः ॥

**भूतकेशी**, स्त्री, (भूतकेश + गौरादित्वात् ङीष् ।)

भूतकेशः । इति रत्नमाला ॥ (यथा, सुश्रुते
उत्तरतन्त्रे । ६० अध्याये ।

**भूतचतुर्द्दशी**, स्त्री, (भूतप्रिया भूतोद्देशे क्रियां

कर्त्तव्या वा चतुर्द्दशी । मध्यपदलोपी
समासः ।)
गौणकार्त्तिककृष्णचतुर्द्दशी । सा एव यमचतु-
र्द्दशी । तत्कृत्यं यथा, पाद्मे ।
"चतुर्द्दश्यां धर्म्मराजपूजा कार्य्या प्रयत्नतः ।
स्नानमावश्यकं कार्य्यं नरैर्नरकभीरुभिः ॥
अरुणोदयतोऽन्यत्र रिक्तायां स्नाति यो नरः
।
तस्याब्दिकभवो धर्म्मो नश्यत्येव न संशयः
॥"
स्कान्दे च तत्रैव ।
"कार्त्तिके कृष्णपक्षे तु चतुर्द्दश्यां विधूदये ।
अवश्यमेव कर्त्तव्यं स्नानं नरकभीरुभिः ॥
किञ्च पाद्मे तत्रैव ।
"ततश्च तर्पणं कार्य्यं धर्म्मराजस्य नामभिः
।
जीवत्पिता न कुर्वीत तर्पणं यमभीष्मयोः ॥
यज्ञोपवीतिना कार्य्यं प्राचीनावीतिना तथा ॥
देवत्वञ्च पितृत्वञ्च यमस्यास्ते द्विरूपता ॥
नक्तं यमचतुर्द्दश्यां यः कुर्य्याच्छिवसन्निधौ ।
न तत् क्रतुशतेनापि प्राप्यते पुण्यमीदृशम् ॥
कुमारीवटुकान् पूज्य तथा शैवतपोधनान् ।
राजसूयफलं तेन प्राप्यते नात्र संशयः ॥
कार्त्तिके भौमवारेण चित्रा कृष्णा चतुर्द्दशी ।
तस्यां भूतेशमभ्यर्च्य गच्छेच्छिवपुरं नरः ॥
किञ्च ।
अमावास्याश्चतुद्दश्याः प्रदोषे दीपदानतः ।
वममार्गान्धकारेभ्यो मुच्यते कार्त्तिके नरः
॥"
इति श्रीहरिभक्तिविलासः ॥
अपि च । लैङ्गे ।
"कार्त्तिके कृष्णपक्षे च चतुर्द्दश्यां दिनोदये ।
अवश्यमेव कर्त्तव्यं स्नानं नरकभीरुभिः ॥
अपामार्गपल्लवञ्च भ्रामयेच्छिरसोपरि ।
ततश्च तर्पणं कार्य्यं धर्म्मराजस्य नामभिः ॥
नरकाय प्रदातव्यो दीपः संपूज्य देवताः ।
नरकाय नरकनिवृत्तये ।
अर्थोऽभिधेयो वै वस्तु प्रयोजननिवृत्तिषु ॥

आचारादत्रचतुर्द्दशशाकभक्षणं
कर्त्तव्यम् । तत्र
निर्णयामृतम् ।
"ओलं केमुकवास्तुकं सरषपं कालञ्च
निम्बं जयां
शालिञ्चीं हिलमोचिकाञ्च पटुकं
शौल्फं
गुडूचीन्तथा ।
भण्टाकीं शुनिषण्णकं शिवदिने
खादन्ति ये
मानवाः
प्रेतत्वं न च यान्ति कार्त्तिकदिने
कृष्णे च भूते
तिथौ ॥"
जयां जयन्तीं पटुकं पटोलं शौल्फं
शुल्फा
इति ख्यातम् । शुनिषण्णकं शुषणिया
इति
ख्यातम् । इति तिथ्यादितत्त्वम् ॥

**भूतजटा**, स्त्री, (भूतस्य जटेव तत्सदृशत्वात् ।)

जटामांसी । इति शब्दमाला ॥
(पर्य्यायो यथा,
"जटामांसी भूतजटा जटिला च
तपस्विनी ।"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)
गन्धमांसी । इति राजनिर्घण्टः ॥

**भूतद्रावी**, [न्] पुं, (भूतान् पिशाचान् द्रावयतीति ।

द्रु + णिच् + णिनिः ।) भूताङ्कुशवृक्षः
। रक्त-
करवीरः । इति राजनिर्घण्टः ॥

**भूतद्रुमः**, पुं, (भूतप्रियो द्रुमः ।) श्लेष्मान्तकवृक्षः ।

इति राजनिर्घण्टः ॥

**भूतधात्री**, स्त्री, (भूतानि धरतीति । धृ + तृच् ।

"गोलोमी चाजलोमी च भूतकेशी जटा तथा ॥")
शेफालिका । नीलसिन्दुवारः । इति राजनिर्घण्टः ॥

**भूतक्रान्तिः**, स्त्री, (भूतानां क्रान्तिः ।) भूतावेशः ।
इति राजनिर्घण्टः ॥

**भूतगन्धा**, स्त्री, (भूतः मर्द्दनं विनापि प्रकटितो-
गन्धोऽस्याः ।) मुरानामगन्धद्रव्यम् । इति जटा-
धरः ॥

**भूतघ्नः**, पुं, (भूतं हन्तीति । हन् + टक् ।)
उष्ट्रः । इति हेमचन्द्रः ॥ लशुनः । भूर्जवृक्षः ।
इति राजनिर्घण्टः ॥ भूतनाशके त्रि ॥ (यथा, तन्त्रसारे ।
"भूतघ्नैस्तु विकीर्णैस्तैर्विद्रुताः क्रूरचेतसः ।
भूतप्रेतपिशाचाश्च वेताला भैरवादयः ॥")

**भूतघ्नी**, स्त्री, (भूतं हन्तीति । हन् + टक् +
ङीप् ।) तुलसी । इति राजनिर्घण्टः ॥ मुण्डि-
तिका । इति रत्नमाला ॥

इति निवृत्तावपि तादर्थ्य इत्यनेन चतुर्थीविधा-
नात् । अपामार्गभ्रामणमन्त्रः ।
शीतलोष्णसमायुक्तसकण्टकदलान्वित ।
हर पापमपामार्ग ! भ्राम्यमाणः पुनः पुनः ॥
ततः प्रदोषसमये दीपान् दद्यात् प्रयत्नतः ।
ब्रह्मविष्णुशिवादीनां भवनेषु मठेषु च ॥
भविष्ये ।
कार्त्तिके भौमवारे च चित्रा कृष्णचतुर्द्दशी ।
तस्यामाराधितः स्थाणुर्नयेच्छिवपुरं ध्रुवम् ॥
यां काञ्चित् सरितं प्राप्य कृष्णपक्षे चतुर्द्दशीम् ।
यमुनायां विशेषेण नियतस्तर्पयेद्यमान् ॥
यमाय धर्म्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्व्वभूतक्षयाय च ॥
ओडुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥
एकैकस्य तिलैर्मिश्रांस्त्रीस्तु दद्याज्जलाञ्ज-
लीन् ।
सम्बत्सरकृतं पापं तत्क्षणादेव नश्यति ॥"

+ ङीप् ।) पृथिवी । इति त्रिकाण्डशेषः ॥
(यथा, बृहत्संहितायाम् । ८ । ३० ।
"निष्पन्नशालीक्षुयवादिशस्यां
भयौर्व्वसुक्तामुपशान्तवैराम् ।
संहृष्टलोकां कलिदोषमुक्तां
क्षत्रं तदा शास्ति च भूतधात्रीम् ॥")

**भूतनाथः**, पुं, (भूतानां नाथः ।) शिवः । इति
शब्दरत्नावली ॥ (यथा, रघुः । २ । ५८ ।
"तद्भूतनाथानुग ! नार्हसि त्वं ॥")

**भूतनायिका**, स्त्री, (भूतानां नायिका नियामिका ।)
दुर्गा । इति हेमचन्द्रः ॥

**भूतनाशनं**, क्ली, (भूतानि प्राणिजातानि नाश्यन्ते
अनेनेति । नश + णिच् + ल्युट् ।) रुद्राक्षम् ।
इति राजनिर्घण्टः ॥

**भूतनाशनः**, पुं, (भूतान् नाशयतीति ॥ नश +
णिच् + ल्युः ।) भल्लातकः । इति रत्नमाला ॥
सर्षपः । इति राजनिर्घण्टः ॥

**भूतपत्री**, स्त्रा, (भूत इव कृष्णं पत्रं यस्याः । ङीष् ।)
तुलसी । इति राजनिर्घण्टः ॥

**भूतपुष्पः**, पुं, (भूतयुक्तं प्राणिविशिष्टं पुष्पं यस्य ।)
श्योनाकवृक्षः । इति रत्नमाला ॥

**भूतपूर्णिमा**, स्त्री, (भूतानां पूर्णिमा ।) आश्विनी
पूर्णिमा । तत्पर्य्यायः ॥ शारदी २ कौमुदी ३
अश्वयुजी ४ शतपर्व्वा ५ रङ्गभूतिः ६ कोजा-
गरा ७ । इति शब्दरत्नावली ॥

**भूतब्रह्मा**, [न्] पुं, (भूतात्मनो ब्रह्मा ब्राह्मणः ।)
देबलः । इति शब्दमाला ॥

|  |  |  |
|---|---|---|
|  |  | **भूतभावनः**, पुं, (भूतानि क्षित्यादीनि भावयति जनयतीति । भ + णिच + ल्यः ।) विष्णुः ॥ |

(यथा, महाभारते । १३ । १४९ । १४ ।
"भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः ॥"
महादेवः । यथा, महाभारते । १३ । १७ । ३३ ।
"अभिवाद्यो महाकर्म्मा तपस्वी भूतभावनः ॥")
वटुकभैरवः । इति विश्वसारतन्त्रोक्त तस्याष्टो-
त्तरशतनामान्तर्गतनाम ॥ (भूतानि भावयति
पालयतीति । भूतपालके, त्रि । इति श्रीधर-
स्वामी ॥ यथा गीतायाम् । ९ । ५ ।
"भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥")

**भूतभृत्**, पुं, (भूतानि बिभर्त्तीति । भृ + क्विप् । तुगा-
गमश्च) विष्णुः । यथा, महाभारते । १३ । १४९ । १४ ।
भूतकृत् भूतभृद्भावो भूतात्मा भूतभावनः । इति
तस्य सहस्रनामस्तोत्रम् ॥ (भूतधारके, त्रि ।
यथा, गीतायाम् । ९ । ५ ।
"भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥")

**भूतमारी**, स्त्री, (भूतानि मारयतीति । भूत +
मृ + णिच् + णिनिः ।) चीडानामगन्धद्रव्यम् ।
इति राजनिर्घण्टः ॥

**भूतयज्ञः**, पुं, (भूतार्थो यज्ञः । भूतानि काकादि-
प्राणिजातानि तान्युद्दिश्य यो यज्ञ इति वा
नित्यं गार्हस्थ्यकरणीय पञ्चयज्ञेषु यज्ञभेदः ।)
भूतबलिः । ते तु पञ्चमहायज्ञान्तर्गतबलिवैश्व-
देवकर्म्मणी । यथा, भूतेभ्यो बलिहरणं भूत-
यज्ञः । इति हारीतसूत्रम् ॥ अस्यानुष्ठानं
बलिशब्दे द्रष्टव्यम् । (यथा, मनुः । ४ । २१ ।
"ऋषियज्ञं देवयज्ञं भूतयज्ञञ्च सर्व्वदा ।
नृयज्ञं पितृयज्ञञ्च यथाशक्ति न हापयेत् ॥")

**भूतलिका**, स्त्री, (भूतलं पृथ्वीतलं आधारत्वेन
अस्त्यस्या इति । भूतल + ठन् टाप् ।) पृक्वा ।
इति राजनिर्घण्टः ॥

**भूतवासः**, पुं, (भूतानां वासो यत्र ।) कलिद्रुमः ।
इत्यमरः । २ । ४ । ५८ ॥ (तथा च पर्य्यायः ।
"विभीतकस्त्रिलिङ्गः स्यान्नास्कः कर्षफलस्तु सः ।
कलिद्रुमो भूतवासस्तथा कलियुगालयः ॥"

दीपकलिकाकारं मूलाधारस्थकुलकुण्डलिन्या
सह सुषुम्नावर्त्मना मूलाधारस्वाधिष्ठानमणिपुर-
कानाहतविशुद्धाज्ञाख्यषट्चक्राणिभित्त्वा शिरो
ऽवस्थिताधोमुखसहस्रदलकमलकर्णिकान्तर्गत-
परमात्मनि संयोज्य तत्रैव पृथिव्यप्तेजोवाय्वा-
काशगन्धरसरूपस्पर्शशब्दनासिकाजिह्वाचक्षु-
स्त्वक्श्रोत्र वाक्पाणिपादपायूपस्थप्रकृतिमनो-
बुद्ध्यहङ्काररूपचतुर्व्विंशतितत्त्वानि लीनानि
विभाव्य यमिति वायुबीजं धूम्रवर्णं वामनासा-
पुटे विचिन्त्य तस्य षोडषवारजपेन वायुना
देहमापूर्य्य नासापुटौ धृत्वा तस्य चतुःषष्टि-
वारजपेन कुम्भकं कृत्वा वामकुक्षिस्थकृष्णवर्ण-
पापपुरुषेण सह देहं संशोष्य तस्य द्वात्रिंशद्-
वारजपेन दक्षिणनासया वायुं रेचयेत् ।
दक्षिणनासापुटे रमिति वह्निबीजं रक्तवर्णं
ध्यात्वा तस्य षोडशवारजपेन वायुना देहमा-
पूर्य्य नासापुटौ धृत्वा तस्य चतुःषष्टिवारजपेन
कुम्भकं कृत्वा पापपुरुषेण सह देहं मूलाधारो-
त्थितवह्निना दग्ध्वा तस्य द्वात्रिंशद्वारजपेन
वामनासया भस्मना सहवायुं रेचयेत् । ठमिति
चन्द्रबीजं शुक्लवर्णं वामनासायां ध्यात्वा तस्य
षोडशवारजपेन ललाटे चन्द्रं नीत्वा नासापुटौ
धृत्वा वमिति वरुणबीजस्य चतुःषष्टिवारजपेन
तस्माल्ललाटस्थचन्द्राद्गलितसुधयामातृका-
वर्णात्मिकया समस्तदेहं विरचय्य लमिति पृथ्वी-
बीजस्य द्वात्रिंशद्वारजपेन देहं सुदृढं विचिन्त्य
दक्षिणेन वायुं रेचयेत् । मात्रासंख्यया वा ॥ * ॥
तदुक्तं गौतमीये ।
"सुषुम्नावर्त्मना सोऽहमिति मन्त्रेण योजयेत् ।
सहस्रारे शिवस्थाने परमात्मनि देशिकः ॥
धूम्रवर्णं ततो वायुबीजं षड्बिन्दुलाञ्छितम् ।
पूरयेदिडया वायुं सुधीः षोडशमात्रया ॥
मात्रया तु चतुःषष्ट्या कुम्भयेच्च सुषुम्नया ।
द्वात्रिंशन्मात्रया मन्त्री रेचयेत् पिङ्गलाख्यया ॥
पूरयेदनया चैव सञ्चिन्त्य नीलमारुतम् ।
रक्तवर्णं वह्निबीजं त्रिकोणं स्वस्तिकान्वितम् ॥
तेन पूरकयोगेन मात्रया षोडशाख्यया ।
चतुःषष्ट्या मात्रया च निर्द्दहेत् कुम्भकेन च ।
वामपार्श्वस्थितं पापपुरुषं कज्जलप्रभम् ।

द्वात्रिंशन्मात्रया मन्त्री लं
बीजेन दृढं नयेत् ।
स्वस्थाने हंसमन्त्रेण
पुनस्तेनैव वर्त्मना ॥
जीवं तत्त्वानि चानीय
स्वस्थाने स्थापयेत्ततः ।
इति कृत्वा भूतशुद्धिं
मातृकान्यासमाचरेत् ॥ *
संक्षेपभूतशुद्धिर्य्यथा ।
पुरश्चरणचन्द्रिकायाम् ।
"अथवान्यप्रकारेण
भूतशुद्धिर्व्विधीयते ।
धर्म्मकन्दसमुद्भूतं
ज्ञाननालसुशोभनम् ॥
ऐश्वर्य्याष्टदलोपेतं परं
वैराग्यकर्णिकम् ।
स्वीयहृत्कमले ध्यायेत्
प्रणवेन विकासितम् ॥
कृत्वा तत्कर्णिकासंस्थं
प्रदीपकलिकानिभम् ।
जीवात्मानं हृदि ध्यात्वा
मूले सञ्चिन्त्य कुण्डलीम् ।
सुषुम्नावर्त्मनात्मानं
परमात्मनि योजयेत् ॥"
इति तन्त्रसारः ॥

**भूतसञ्चारः**, पुं, (भूतस्य सञ्चारः ।) भूतोन्माद-
रोगः । तत्पर्य्यायः ।
आवेशः २ भूतक्रान्तिः
३ ग्रहागमः । इति
राजनिर्घण्टः ॥

**भूतसञ्चारी**, [न्] पुं, (भूतेषु सञ्चरति इति
भूत + सम् + चर णिनिः ।)
दावानलः । इति
शब्दमाला ॥

**भूतसर्गः**, पुं, (सृज्यते इति । सृज + भावे घञ् ।

इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमेभागे ॥

महादेवः । यथा, हरिवंशे उत्तरभविष्ये । १५ । ३३ ।

“भूतवास ! नमस्तुभ्यं सर्व्वावास ! नमोऽस्तुते ॥”)

**भूतविक्रिया**, स्त्री, (भूतानामिव विक्रियास्याम् ।)

अपस्माररोगः । इति राजनिर्घण्टः ॥

**भूतवृक्षः**, पुं, (भूतप्रियो वृक्षः ।) शाखोटवृक्षः ।

श्योनाकवृक्षः । इति मेदिनी । षे, ५६ ॥

**भूतवेशी**, स्त्री, (भूतानामिव वेशोऽस्याः ।

गौरादित्वात् ङीष् ।) श्वेतशेफालिका । इत्य-मरः । २ । ४ । ७१ ॥ (विशेषोऽस्याः श्वेत-शेफालिकाशब्दे द्रष्टव्यः ॥)

**भूतशुद्धिः**, स्त्री, (भूतानां देहारम्भ कपृथिव्यादि

पञ्चभूतानां शुद्धिः शोधनम् ।) पूजादौ बीज-विशेषद्वारावामकुक्षिस्थितपापपुरुषदहनपूर्ब्बक-शरीरशोधनम् । तत्प्रयोगो यथा । रमिति जलधारया वह्निप्राकारं विचिन्त्य स्वाङ्के ङत्तानौ करौ कृत्वा सोऽहमिति जीवात्मानं हृदयस्थं

ब्रह्महत्याशिरस्कञ्च स्वर्णस्तेयभुजद्वयम् ॥
सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम् ।
तत्संसर्गि पदद्वन्द्वमङ्गप्रत्यङ्गपातकम् ॥
उपपातकरोमाणं रक्तश्मश्रु विलोचनम् ।
खड्गचर्म्मधरं क्रुद्धमेवं कुक्षौ विचिन्तयेत् ॥
मूलाधारोत्थितेनैव वह्निना निर्द्दहेच्च तम् ।
एवं संदह्य परितो द्वात्रिंशन्मात्रया ततः ॥
भस्मना सहितं मन्त्री रेचयेदिडया पुनः ।
वामनाड्यां चन्द्रबीजं कुन्देन्दुयुतसप्रभम् ॥
भालेन्दुराजे संयोज्य ततः षोडशमात्रया ।
सुषुम्नया चतुःषष्टिमात्रया तोयबीजकम् ॥
ध्यात्वामृतमयीं वृष्टिं पञ्चाशद्वर्णरूपिणीम् ।
तया देहं विचिन्त्यैवं मनसा पिङ्गलाध्वना ॥

भूतानां सर्गः ।) भूतसृष्टिः । (यथा, मार्कण्डेय-पुराणे । ४७ । ३१ ।
“प्रथमो महतः सर्गो विज्ञेयो ब्रह्मणस्तु सः ।
तन्मात्राणां द्बितीयस्तु भूतसर्गः म उच्यते ॥”)
“ब्राह्मं प्रजापतीयञ्च सौम्यमैन्द्रन्तथैव च ।
गान्धर्व्वमथ कौवेरं रक्षःपैशाचमानुषम् ॥
स्थावरं पाशवं मार्गं सार्पं शाकुनिकन्तथा ।
चतुर्द्दशविधं ह्येतद्भूतसर्गं प्रकीर्त्तितम् ॥”
इति वह्निपुराणोक्त क्लीवत्वमार्षम् ॥

**भूतसारः**, पुं, (भूतः गतः सारो यस्य ।) श्योनाक-

प्रभेदः । इति राजनिर्घण्टः ॥

**भूतहन्त्री**, स्त्री, (भूतानि हन्तीति हन + तृच +

ङीप् ।) बन्ध्याकर्कोटकी । नीलदूर्व्वा । इति राजनिर्घण्टः ॥

**भूतहरः**, पुं, (भूतानि हरतीति हृ + अच् ।)

गुग्गुलुः । इति राजनिर्घण्टः ॥

**भूतहारि**, [न्] क्ली, (भूतानि हरतीति हृ +

णिनिः ।) देवदारु । इति राजनिर्घण्टः ॥

**भूता**, स्त्री, (भूत + टाप् ।) कृष्णचतुर्द्दशी । यथा,

स्कान्दे ।
“ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति वै ।

| | | |
|---|---|---|
| | | पूजितानि भवन्तीह भूतायां पारणे कृते ॥”<br>अपि च ।<br>“शिवरात्रिव्रते भूतां कामविद्धां विवर्ज्जयेत् ॥”<br>इति तिथ्यादितत्त्वम् ॥<br><br>**भूताङ्कुशः**, पुं, (भूतानामङ्कुश इव निवारकत्वात् ।)<br>स्वनामख्यातवृक्षः । तत्पर्य्यायः । क्षवकः २ क्षुरकः ३ तीक्ष्णः ४ क्रूरः ५ क्षवः ६ राजो-द्वेदनसंज्ञः ७ भूतद्रावी ८ ग्रहाह्वयः ९ । ढ्यस्य गुणाः । तीव्रगन्धत्वम् । उत्कटत्वम् । उष्णत्वम् कटुत्वम् । भूतग्रहादिदोषघ्नत्वम् । कफवात-निकृन्तनत्वञ्च । इति राजनिर्घण्टः ॥ |

**भूतात्मा**, [न्] पुं, (भूतानामात्मा ।) देहः ।

(यथा, मनुसंहितायाम् । १२ । १२ ।
"यः करोति तु कर्म्माणि स
भूतात्मोच्यते बुधैः ॥"
"यः पुनरेष व्यापारान् करोति
शरीराख्यः स
पृथिव्यादिभूतारब्धत्वात् भूतात्मेति
पण्डितै-
रुच्यते ॥" इति तट्टीकायां कुल्लूकभट्टः
॥)
परमेष्ठी । इति मेदिनी । ने, २०० ॥
शिवः ।
युद्धम् । इति शब्दरत्नावली ॥ विष्णुः ।
यथा,
"भूतकृत् भूतभृत् भावो भूतात्मा
भूतभावनः ॥"
इति महाभारते दानधर्म्मः ॥
(जीवात्मा । यथा, मनुसंहितायाम् । ५ ।
१०९ ।
"अद्भिर्गात्राणि शुध्यन्ति मनः सत्येन
शुध्यति ।
विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन
शुध्यति ॥"
यथा च चरके शारीरस्थाने प्रथमेऽध्याये
।
तस्मिंश्चरमसंन्यासे समूलाः
सर्व्ववेदनाः ।
समज्ञा ज्ञानविज्ञाना निवृत्तिं
यान्त्यशेषतः ॥
अतःपरं ब्रह्मभूतो भूतात्मा नोपलभ्यते ।
निःसृतः सर्प्पभावेभ्यश्चिह्नं यस्य न
विद्यते ॥
गतिब्रह्मविदां ब्रह्म तच्चाक्षरमलक्षणम् ।
ज्ञानं ब्रह्मविदाञ्चात्र नाज्ञस्तज्ज्ञातुमर्ह-
तीति ॥")

**भूतार**, क्ली, (भूतानां अरिः तन्निवारकत्वात् अभि-

धानात् क्लीवत्वम् ।) हिङ्गु । इति
राजनिर्घण्टः ॥

१ ८ १८ २३
२० २१ ३ ६
७ २ २४ १७
२२ १९ ५ ४
५० ५० ५० ५०

**भूताविष्टः**, त्रि, (भूतेन आविष्टः ।) भूतक्रान्तः ।

भूतादिना रोगग्रस्तः । (यथा, --
"भूताविष्टेषु पञ्चाशन्मृतापत्यासु वै
शतम् ।"
इत्यादि ज्योतिस्तत्त्वम् ॥
भूतविशेषाणामावेश-
समयाः । यथा, --
"देवग्रहाः पौर्णमास्यामसुराः
सन्ध्ययोरपि ।
गन्धर्व्वाः प्रायशोऽष्टम्यां यक्षाश्च
प्रतिपद्यथ ॥
कृष्णपक्षे च पितरः पञ्चम्यामपि चोरगाः
।
रक्षांसि निशि पैशाचाश्चतुर्द्दश्यां
विशन्ति च ॥
दर्पणादीन् यथाच्छाया शीतोष्णं
प्राणिनो
यथा ।
स्वमणिं भास्करार्च्चिश्च यथा देहञ्च
देहभृत् ॥
विशन्ति च न दृश्यन्ते
ग्रहस्तद्वच्छरीरिणम् ।"
इति सुश्रुते उत्तरतन्त्रे षष्टितमेऽध्याये
॥)

**भूतावेशः**, पुं, (भूतानामावेशः) भूतसञ्चारः ।

भूते पाओया इति भाषा । अस्य
पर्य्याय-
आवेशशब्दे द्रष्टव्यः ॥

**भूतिः**, स्त्री, (भवत्यनयेति । भू + "क्तिच्क्तौ च

संज्ञायाम् ।" ३ । ३ । १७४ । इति
क्तिच् ।)

कट्फलम् । यमानी । घनसारः । इति हेम-
चन्द्रः ।

**भूतिकः**, पुं, (भूति । संज्ञायां कन् ।) यमानी ।

इति रत्नमालाराजनिर्घण्टौ ॥

**भूतिकामः**, पुं, (भूतिं कामयते इति । कम् +

"कर्म्मण्यण् ।" ३ । २ । १ । इत्यण् ।) राज-
मन्त्री । बृहस्पतिः । इति केचित् । ऐश्वर्य्याभि-
लाषिणि, त्रि । यथा । वायव्यं श्वेतमालभेत
भूतिकामः । इत्यधिकरणमालायां द्वितीयपादे
काम्यपशुकाण्डे विध्यर्थवादबोधिका श्रुतिः ॥

**भूतिकीलः**, पुं, (भूतेः शस्यादिसम्पत्तेः कील इव

जलदत्वात् ।) भूखातः । इति शब्दमाला ॥
खाना इति भाषा ॥

**भूतिगर्भः**, पुं, (भूतिः कवित्वसम्पत्तिर्गर्भेऽन्तर्यस्य ।

यद्वा भूतिशब्द उपाधिनाम्नोऽन्तर्यस्य ।)
भवभूतिकविः । इति भूरिप्रयोगः ॥

**भूतिनिधानं**, क्ली, (निधीयतेऽस्मिन्निति । नि + धा

+ अधिकरणे + ल्युट् । ततः भूत्या
निधानमिति,
षष्ठीसमासः ।) धनिष्ठानक्षत्रम् । इति जटा-
धरः ॥

**भूतिमान्**, [त्] त्रि, ऐश्वर्य्ययुक्तः । भूतिरस्त्यस्य ।

इत्यर्थे मतुप्रत्ययेन निष्पन्नः ॥ (यथा, महा-
भारते । ३ । २०३ । ४३ ।
"आयुष्मान् भूतिमांश्चैव श्रुत्वा भवति
पर्व्वसु ॥")

**भूतीकं**, क्ली, (भूतिक । पृषोदरात् साधुः ।)

भूनिम्बः । यमानी । भूस्तृणम् । कत्तृणम् ।
इति मेदिनी । के, १३५ ॥ (यथा, सुश्रुते
उत्तर-
तन्त्रे । ३९ अध्याये ।
"वचां पर्पटकं मुस्तं भूतीकमथ कट्फलम् ॥"
यथा च भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।
"कत्तृणं रोहिषं देवजग्धं सौगन्धिकन्तथा ।
भूतीकं ध्यामपौरञ्च श्यामकं धूमगन्धिकम् ॥")

**भूतार्त्तः**, त्रि, (भूतेन ऋतः) भूताविष्टः । इति
हैमचन्द्रः । ३ । १५५ ॥

**भूताली**, स्त्री, (भूतानामालीव) भूपाटली ।
मुषली । इति राजनिर्घण्टः ॥

**भूतावासः**, पुं, (भूतानामावासः) विभीतकवृक्षः ।
इति राजनिर्घण्टः ॥ विष्णुः । यथा, --
"भूतावासो वासुदेवः सर्व्वासुनिलयो
लयः ॥"
इति महाभारते दानधर्म्मः ॥ (शरीरम् ।
यथा,
मनुसंहितायाम् । ६ । ७७ ।
"जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यञ्च भूतावासमिमं त्यजेत्
॥"
शाखोटः । तत्पर्य्यायो यथा, --
"शाखोटः पीतकनको भूतावासः
खरच्छदः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**भूताविष्टः**, त्रि, (भूतेन आविष्टः) पिशाचग्रस्तः ।
तन्नाशकचक्रम् यथा, --
"पञ्चरेखाः समुल्लिख्य तिर्य्यगूर्द्धक्रमेण
हि ।
पदानि षड्दशापाद्य त्वेकमाद्ये मुनौ
त्रयम् ॥
नवमे सप्त दद्यात्तु बाणं पञ्चदशे तथा ।
द्वितीयेऽष्टावष्टमे षट् दिशि द्वौ षौडशे
श्रुतिः ॥
एकादिना समं ज्ञेयमिच्छाङ्काद्ध्र्वं
त्रिकोणके ।
तदा द्वात्रिंशदादिः स्याच्चतुष्कोष्ठेषु
सर्व्वतः ॥
दर्शनाद्धारणात्तासां शुभं स्यादेषु कर्म्मसु
।
द्वात्रिंशत् प्रसवे नार्य्याश्चतुस्त्रिंशद्गमे
नृणाम् ॥
भूताविष्टेषु पञ्चाशन्मृतापत्यासु वै शतम्
।
महादेवस्य अणिमाद्यष्टप्रकारवैभवम् ।
इत्य-
मरः । १ । १ । ३८ ॥ शम्भुधृतभस्म ।
इत्यमर-
टीकायां भरतः ॥ भस्म ॥ (यथा,
शिशुपाल-
वधे । १ । ४ ।
"क्षणं क्षणोत्क्षिप्तगजेन्द्रकृत्तिना
स्फुटोपमं भूतिसितेन शम्भुना ॥")
सम्पत्तिः । (उत्तरोत्तरवृद्धिः । यथा,
भगवद्-
गीतायाम् । १८ । ७४ ।
"यत्र योगेश्वरः कृष्णो यत्र पार्थो
धनुर्द्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम
॥")
हस्तिशृङ्गारः । इति मेदिनी ते, ४० ॥
(हस्ति-
शृङ्गारोऽत्र गजमण्डनम् । यथा, मेघदूते
। १९ ।
"रेवां द्रक्ष्यस्यपलविषमे बिन्ध्यपादे
विशीर्णाम् ।
भक्तिच्छेदैरिव विरचितां भूतिमङ्गे
गजस्य ॥")
जातिः । इति विश्वः ॥ (पितृगणभेदः ।
यथा,
मार्कण्डेयपुराणे । ९६ । ४३ ।
"विश्वो विश्वभुगाराध्यो धर्म्मो धन्यः
शुभाननः ।
भूतिदो भूतिकृद् भूतिः पितृणां ये गणा
नव ॥"
लक्ष्मीः । यथा, भागवते । ४ । १ । ४ ।
"यस्तयोः पुरुषः साक्षाद्
विष्णुर्यज्ञस्वरूपधृक् ।
या स्त्री सा दक्षिणा भूतेरंशभूतानपायिनी
॥"
भूतेर्लक्ष्म्याः । इति तट्टीकायां
श्रीधरस्वामी ॥)
वृद्धिनामौषधम् । रोहिषतृणम् । भूतृणम्
।

**भूतृणं**, क्ली, (भुवस्तृणम् ।) गन्धतृणम् । गन्धस्वड
इति भाषा । तत्पर्य्यायः । गन्धखेडम् २ रौहि-
षम् ३ गोमयप्रियम् ४ । इति रत्नमाला ॥ पटम्
५ रामकर्पूरम् ६ सत्तृणम् ७ शरम् ८ श्याम-
कम् ९ ध्यामकम् १० पौरम् ११ देवजग्धकम्
।
इति रत्नमालान्तरम् ॥ (यथास्य पर्य्यायः ।
"गुह्यबीजन्तु भूतीकं सुगन्धं जम्बुकप्रियम् ।
भूतृणन्तु भवेच्छत्रा मालातृणकमित्यपि ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**भूतृणः**, पुं, (भुवस्तृणः ।) भूस्तृणम् । सुगन्ध
रोहिष इति परिमलदगङ्गनि च अन्ध्रदेशे
प्रसिद्धः । तत्पर्य्यायः । रोहिषः २ भूतिः ३
भूतिकः ४ कुटुम्बकः ५ मालातृणः ६
समालम्बी
७ छत्रः ८ अतिच्छत्रकः ९ गुह्यबीजः १०
सुगन्धः ११ गुच्छालः १२ पुंस्त्वविग्रहः १३
वधिरः १४ अतिगन्धः १५ शृङ्गरोहः १६ करे-
न्दुकः १७ । अस्य गुणाः । कटुत्वम् । तिक्त-
त्वम् । वातसमूहभूतग्रहावेशदारुणविषदोष-
नाशित्वञ्च । इति राजनिर्घण्टः ॥

| | | |
|---|---|---|
| द्वासप्ततिस्तु बन्ध्यायां चतुःषष्टी रणाध्वनि ॥<br>विषे विंशो धान्यकीटेष्वष्टाविंशतिरेव च ।<br>चतुरष्टौ च बालानां रोदने परिकीर्त्तिताः ॥”<br>इति ज्योतिस्तत्त्वम् ॥ | इति राजनिर्घण्टः ॥ (भवनमिति । भू + क्तिन्)<br>उत्पत्तिः । सत्ता । इति भूधातोर्भवि क्तिप्रत्य-<br>वेन निष्पन्नम् ॥<br>**भूतिकं**, क्ली, (भू + क्तिच् । संज्ञायां कन् ।)<br>भूनिम्बः । कत्तृणम् । इत्यमरः । ३ । ३ । ८ । | |

**भूतेशः**, पुं, (भूतानां प्राण्यादीनां प्रमथादीनां

बालग्रहाणाञ्च ईशः ।) शिवः । इत्यमरः । १ । १ । ३३ ॥ (यथा, राजतरङ्गिण्याम् । १ । १०७ ।
"म्लेच्छैः सञ्छादिते देशे स तदुच्छित्तये नृपः ।
तपः सन्तोषिताल्लेभे भूतेशात् सुकृती सुतम् ॥")

**भूत्तमं**, क्ली, (भुवि उत्तमम् ।) सुवर्णम् । इति

हेमचन्द्रः । ४ । १० ॥

**भूदरीभवा**, स्त्री, (भूदर्य्यां भूविले भवतीति । भू +

अच् । टाप् ।) आखुपर्णी । इति भावप्रकाशः ॥

**भूदारः**, पुं, (भुवं दारयतीति । दॄ + कर्म्मण्यण् ।

३ । २ । १ । इत्यण् ।) शूकरः । इत्यमरः । २ । ५ । २ ॥

**भूदेवः**, पुं, (भुवो भुवि वा देवः ।) ब्राह्मणः ।

इत्यमरः । ३ । ७ । ४ ॥

**भूधनः**, पुं, राजा । भूरेव धनं यस्य सः । इति

केचित् ॥

**भूधरः**, पुं, (धरतीति । धृ + पचाद्यच् । भुवां

धरः इति षष्ठीसमासः ।) पर्व्वतः । इति हेम-
चन्द्रः ॥ (यथा, मार्कण्डेयपुराणे । ५७ । ११ ।
"तेषां सहस्रशश्चान्ये भूधरा ये समीपगाः ॥")
यन्त्रभेदः । यथा, --
"जलकच्छपपातालदोलाभूधरबालुकाः।
वकाद्या यन्त्रभेदाः स्युर्वज्रान्ध्राद्याश्च मूषकाः ॥"
इति शब्दचन्द्रिका ॥
(यथाचास्य व्यवहारः ।
"द्विपलं शुद्धसूतस्य सूताद्धं गन्धकन्तथा ।
कन्यानीरेण संमर्द्द्य दिनमेकं निरन्तरम् ॥
रुद्ध्वा तद्भूधरे यन्त्रे दिनैकं मारयेत् पुटे ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणाधि-
कारे ॥
रसजारणत्वम् । तत्सत्त्वस्य विषापहत्वञ्च ।
इति राजनिर्घण्टः ॥

**भूनिम्बः**, पुं, (क्षुपविशेषः । चिराता इति भाषा ।

(यथा, सुश्रुते चिकित्सितस्थाने ९ अध्याये ।
"मधूकभूनिम्बगृष्टिका इति समभागाः कल्कः स्यात् ।")
तत्पर्य्यायः । अनार्य्यतिक्तः २ कैरातः ३ राम-
सेनकः ४ किराततिक्तः ५ हैमः ६ काण्ड-
तिक्तः ७ किरातकः ८ । इति राजनिर्घण्टः ॥
कटुतिक्तः ९ । इति भावप्रकाशः ॥ (तथा चास्य
पर्य्यायान्तरम् । वैद्यकरत्नमालायाम् ।
"किराततिक्तं कैरातं भूनिम्बः काण्डतिक्तकः ॥")
अस्य गुणाः । वातिकत्वम् । तिक्तत्वम् । कफ-
पित्तज्वरापहत्वम् । ब्रणसंरोपणत्वम् । पथ्य-
त्वम् । कुष्ठकण्डूतिशोफनाशित्वञ्च । इति राज-
निर्घण्टः ॥ अपि च ।
"किरातकोऽन्यो नेपालः सोऽर्द्धतिक्तो ज्वरा-
न्तकः ।
किरातः सारको रूक्षः शीतलस्तिक्तको लघुः ॥
सन्निपातज्वरश्वासकफपित्तास्रदाहनुत्।
कासशोषतृषाकुष्ठज्वरव्रणकृमिप्रणुत् ॥"
इति भावप्रकाशः ॥
अस्य गुणपर्य्यायान्तरे किराततिक्तशब्दे द्रष्टव्ये ॥

**भूनीपः**, पुं, (भूमिलग्नो नीपः । शाकपार्थिवादि-

वत् समासः ।) भूमिकदम्बः । इति राज-
निर्घण्टः ॥

**भूनेता**, [ऋ] पुं, (भुवो नेता नायकः ।) राजा ।

इति केचित् ॥

**भूपः**, पुं, (भुवं पाति रक्षतीति । पा + "आतो-

ऽनुपसर्गे कः ।" ३ । २ । ३ । इति कः ।)
राजा । इत्यमरः । २ । ८ । १ ॥ अर्थलोभेन
प्रजादण्डकरणे तस्य पापं यथा ।

**भूपलाशः**, पुं, (भुवि पलाशमस्य ।) वृक्षभेदः ।

विशाली इति भाषा । यथा, --
"अक्षोडकः सुकल्कश्च भूपलाशो विशल्यकृत् ।"
इति रत्नमाला ॥

**भूपाटली**, स्त्री, (भुवि जाता पाटलीव ।)

वृक्षविशेषः । भूयातानि इति लेनवादवी इति
च हिन्दीभाषा । तत्पर्य्यायः । भूकुम्भी २
भूताली ३ रक्तपुष्पिका ४ ।
अस्या गुणाः ।
कटुत्वम् । उष्णत्वम् । पारदे प्रयोजकत्वञ्च ।
इति राजनिर्घण्टः ॥

**भूपालः**, पुं, (भुवं पालयतीति । पालि रक्षणे +

"कर्म्मण्यण् । ३ । २ । १ ।
इत्यण् ।) राजा ।
इति शब्दमाला ॥ (यथा, मार्कण्डेये । १८ । ३ ।
"यदर्थं गृह्यते शुल्कं तदनिंष्पादयन् वृथा ।
पण्यानां द्वादशं भागं भूपालाय बणिग्जनः ॥"
सोमपालस्य पुत्त्रः । यथा, राजतरङ्गिण्याम् ।
८ । ३४९५ ।
"सोमपालात्मजो भूभृद् भूपालः प्राकृत-
स्तथा ॥")

**भूपुत्री**, स्त्री, (भुवः पुत्री ।) सीता । इति शब्द-

रत्नावली ॥
("भूपुत्री यस्य पत्नी स भवतु कथं भूपती रामचन्द्रः ॥"
इति रामायणम् ॥)

शिवः । यथा, महाभारते । १३ । १४ । १५१ ।
"भूधरो नागमौञ्जी च नागकुण्डलकुण्डली ॥"
कृष्णः । यथा, भागवते । ३ । १३ । ४० ।
"दंष्ट्राग्रकोट्या भगवंस्त्वया धृता
विराजते भूधर ! भूः सभूधरा ।
यथा वनान्निःसरतो दता धृता
मतङ्गजेन्द्रस्य सपत्रपद्मिनी ॥")

**भूधात्री**, स्त्री, (भूलग्ना धात्री ।) भूम्यामली ।

इति राजनिर्घण्टः ॥ (यथास्य गुणाः ।
"भूधात्री वातकृत्तिक्ता कषाया मधुरा हिमा ।
पिपासाकासपित्तास्रकफकण्डूक्षतपाहा ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
वटुकभैरवः । इति विश्वसारतन्त्रे तस्य शत-
नामस्तोत्रम् ॥

**भूध्रः**, पुं, (भुवं धरतीति । धृ + मूलविभुजादित्वात् ।

३ । २ । ५ । इत्यस्य वार्त्तिकोक्त्या कः ।)
पर्व्वतः । इति हेमचन्द्रः । ४ । ९३ ॥

**भूनागः**, पुं, उपरसविशेषः । तत्पर्य्यायः । क्षिति-

नागः २ भूजन्तुः ३ रक्तजन्तुकः ४ क्षितिजः ५
क्षितिजन्तुः ६ रक्ततुण्डकः ७ । अस्य गुणाः ।
वज्रमारकत्वम् । नानाविज्ञानकारकत्वम् ।

"अर्थलोभेन यो भूपः प्रजादण्डं करोति च ।
वृश्चिकानाञ्च कुण्डे स तल्लोमाब्दं वसेद्ध्रुवम् ॥
ततो वृश्चिकजातिश्च सप्तजन्मसु भारते ।
ततो नरश्चाङ्गहीनो व्याधी शुद्धो भवेन्नरः ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २७ अध्यायः ॥

**भूपतिः**, पुं, (भुवः पतिः ।) वटुकभैरवः । यथा,

"भूधरो भूधराधीशो भूपतिर्भूधरात्मकः ।"
इति विश्वसारतन्त्रोक्तभैरवस्तोत्रम् ॥
राजा । यथा, --
भूपुत्री यस्य पत्नी स तु भवति कथं भूपती राम-
चन्द्रः ।
इति रामायणे केकयीवाक्यम् ॥
ऋषभौघम् । इति राजनिर्घण्टः ॥

**भूपदः**, पुं, (भुवि पदानि मूलान्यस्य ।) वृक्षः ।

इति शब्दचन्द्रिका ॥

**भूपदी**, स्त्री, (भुवि पदं यस्याः । गौरादित्वात्

ङीष् ।) मल्लिका । इत्यमरः । २ । ४ । ७० ॥
(यथास्याः पर्य्यायः ।
"मल्लिका मदयन्ती च शीतभीरुश्च भूपदी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**भूपेष्टः**, पुं, (भूपानामिष्टः ।) राजादनीवृक्षः ।

इति राजनिर्घण्टः ॥

**भूभर्त्ता**, [ऋ] पुं, (भुवो भर्त्ता । "याजकादि-

भिश्च ।" २ । २ । ९ । इति
षष्ठीसमासः ।)
पृथिवीपतिः । इति
सिद्धान्तकौमुद्यां तत्पुरुष-
समासः ॥ (यथा, राजतरङ्गिण्याम् । ३ । २९१ ।
"तस्मिन्नहनि भूभर्त्रा
शोकान्निःश्वसता-
निशम् ॥")

**भूभुक्**, [ज्] पुं, (भुवं भुनक्ति पालयतीति ।

भुज् + "सत्सूद्विषेति ।" ३ । २ ।
६१ । इति
क्विप् ।) राजा । इति जटाधरः ॥
(यथा,
कामन्दकीयनीतिसारे । ४ । ६१ ।
"सापसाराणि दुर्गाणि भुवः
सारूपजाङ्गलाः ।
निवासाय प्रशस्यन्ते भूभुजां
भूतिमिच्छताम् ॥")

**भूभृत्**, पुं, (भुवं बिभर्त्तीति । भृ + क्विप् । "ह्रस्वस्य

पितिकृति तुक् । ६ । १ । ७१ ।
इति तुगा-
गमश्च ।) राजा । (यथा, रघौ ।
११ । ८१ ।
"तेन भूमिनिहितैककोटि तत्
कार्म्मुकञ्च बलिनाधिरोपितम् ।
निष्प्रभश्च रिपुरास भूभृताम्
धूमशेष इव धूमकेतनः ॥")
पर्व्वतः । इति मेदिनी । ते, १४० ॥ (यथा,
कुमारसम्भवे । ६ । १ ।
"अथ विश्वात्मने गौरी सन्दिदेश
मिथः
सखीम् ।

| | | |
|---|---|---|
| | | दाता मे भूभृतां नाथः प्रमाणीक्रियतामिति ॥”) |
| | | **भूमयी**, स्त्री, (भू + मयट् + ङीप् ।) छाया । सा तु सूर्य्यपत्नी । इति त्रिकाण्डशेषः ॥ मृदा-त्मके, त्रि ॥ |

**भूमा**, [न्] पुं, बहुत्वम् । यथा । "भूयोभूम-
भूयिष्ठाः ।" बहोरीयस्विमन्
इष्ठान्तस्य एते
निपात्यन्ते । इति
मुग्धबोधव्याकरणम् ॥ ईय-
सोर्यस् ईयस्वादौ बहोर्भूरादेशः ।
ईयस्विन्नो-
रादिलोपः । इष्ठे यकारागमश्च
निपात्यन्ते ।
अतिशयेन बहुः भूयान् । बहोर्भावः
भूमा ।
अतिशयेन बहुः भूयिष्ठः । इति
तट्टीकायां
दुर्गादासः ॥ बहुत्वविशिष्टः । तत्र
वाच्यलिङ्गः ।
यथा । भूयः भूम । इति
प्रभूतशब्दपर्य्यायि
अमरटीकायां रमानाथः ॥ * ॥
विराट्पुरुषः ।
यथा । "यत्र नान्यत् पश्यति नान्यत्
श्रृणोति
नान्यद्विजानाति स भूमा यो भूमा
तदमृतम् ।"
इत्यादि श्रुतिभ्यो ब्रह्मनित्यत्वं
सत्त्वशुद्धस्य प्रति-
भाति । इति वेदान्तसारटीका ॥

**भूमिः**, स्त्री, (भवन्ति भूतान्यस्यामिति । भू +
"भुवः कित् ।" उणा० ४ । ४५ ।
इति मिः ।
स च कित् ।) पृथिवी । स्थानमात्रम् ।
इति
मेदिनी । मे, २२ ॥ (यथास्या
पर्य्यायः ।
"भूर्भूमिः पृथिवी पृथ्वी मेदिनी
वसुधावनिः ।
क्षितिरुर्व्वी मही क्षौणी क्ष्मा धरा
कुर्वसुन्धरा ॥"
इति वैद्यकरत्नमालायाम् ॥)

तस्मादल्पमलञ्चैव भुक्तिमुक्तिसुखप्रदम् ॥
यथा तथा प्रकारेण भूमिदाता तु भूमिपः ।
सुखी स्यात् सर्व्वकालेषु चान्ते
स्वर्गमवाप्नुयात् ॥
बृहदल्पतरं वापि भूमिदानं महत्तमम् ।
यः कश्चिद्ब्राह्मणे दत्त्वा भवतीह महीपतिः ॥
सर्व्वथा सर्व्वदा देया धरित्री ब्राह्मणस्य तु ।
प्राणान्तेनैव न क्वापि हरणीया जनैरपि ॥
कृत्वा खातादिकं कर्म्म विप्रभूमिं नरो बलात्
।
करोति यदि राजेन्द्र ! तत् सर्व्वं निष्फलं
भवेत् ॥
ब्राह्मणाद्दानग्रहणं विनानुज्ञाञ्च पार्थिव ! ।
तथा तत्परितोषञ्च तत्तन्मूल्यादिकं विना ॥
विप्रभूमौ भूसुरोऽपि दैवं पैत्रं तथाध्वरम् ।
हरिसद्म तथारामप्रासादमण्डपंगृहम् ॥
खातादिखननं सेतुबन्धनं भवनं गवाम् ।
सधान्यफलमूलादिशाकादिक्षेत्रमेव च ॥
पञ्चाम्रवपनं पुष्पोद्यानं वृक्षादिरोपणम् ।
सवटाश्वत्थतुलसीधात्रीविल्वादिरोपणम्॥
नित्यं नैमित्तिकं काम्यं स्नानसन्ध्यादिकं
तथा ।
पञ्चयज्ञं तथेष्टाच्चर्चादिकमेतत्तु चापरम् ॥
श्रीकृष्णसेवनं भक्तभक्तिषोडशपूर्ब्बकम् ।
का कथा वेतरेषान्तु न कुर्य्यात् पारमार्थिकः
॥
यः कर्म्मफलकामेप्सुर्न करोत्यत्र कर्म्म च ।
कुरुते मत्ततामोहादज्ञानाद्वा भ्रमादितः ।
नृपते ! कुर्व्वतामेतत् सर्व्वं स्यान्निष्फलं ध्रुवम्
॥
यद्भू मिरथवा तस्य संपूर्णं फलमेव च ।
अतो लोके हि धर्म्मात्मा ज्ञानी च सर्व्वधर्म्म-
वित् ॥
विवेकी धर्म्मशास्त्रज्ञः पुराणागमवेदवित् ।
वेदान्तज्ञो मुनिः साधुः कार्ष्णादिर्वा महीपते !
।
न कुर्य्याद्भू मिहरणं ब्राह्मणीहरकल्मषम् ॥"
इति पाद्मोत्तरखण्डे ४९ अध्यायः ॥ * ॥
अपि च । बृहस्पतिः ।

तस्यां पाठो बीजवापो नाहिभीर्दुग्धपानतः ॥
रजोयुक् क्ष्मा ऋतुमती पृथ्वी । ज्योतिषे ।
यस्मिन् वारे सहस्रांशुर्यत्काले मिथुनं व्रजेत्
।
अम्बु वाची भवेन्नित्यं पुनस्तत्कालवारयोः
॥"
मत्स्यसूक्ते ।
"धरण्यामृतुमत्याञ्च भूमिकम्पे तथैव च ।
अन्तरागमने चैव विद्यां नैव पठेद्बुधः ॥"
इति तिथ्यादितत्त्वम् ॥ * ॥
"न स्वाध्यायं वषट्कारं न देवपितृपूजनम् ।
हलानां योजनञ्चैव बीजानां वपनं तथा ।
दिनत्रयं न कुर्व्वीत यावत् पृथ्वी रजस्वला ॥
यतिनो व्रतिनश्चैव विधवा च द्बिजस्तथा ।
अम्बुवाचीदिनेन्नैव पाकं कृत्वा न भक्षयेत् ॥
स्वपाकं परपाकं वा अम्बुवाचीदिने तथा ।
भक्षणं नैव कुर्वीत चाण्डालान्नसमं स्मृतम्
॥"
इति राजमार्त्तण्डः ॥
अशुद्धां भूमिमाह देवलः ।
'सा अमेध्या मलिना दुष्टा
एतत्त्रितयान्यतमा
भवति ।' अत्रामेध्या यथा, --
"प्रसूते गर्भिणी यत्र म्रियते यत्र मानुषः ।
चाण्डालैरुषितं यत्र यत्र विन्यस्यते शवः ॥
विण्मूत्रोपहतं यत्तु कुणपो यत्र दृश्यते ।
एवं कश्मलभूयिष्ठा भूरमेध्येति लक्ष्यते ॥"
कुणपः शवः । दुष्टा यथा, --
"कृमिकीटपदक्षेपैर्दूषिता यत्र मेदिनी ।
द्रप्सापकर्षणैः क्षिप्तैर्वान्तैश्च दुष्टतां व्रजेत्
॥"
द्रप्सा घनीभूतश्लेष्मा । मलिना यथा, --
"नखदन्ततनूजत्वक्तुषपांशुरजोमलैः ।
भस्मपङ्कतृणैर्वापि प्रच्छन्ना मलिना भवेत् ॥
तासाञ्च शुद्धिमाह ।
"दहनं खननं भूमेरुपलेपनवापने ।
पर्य्यन्यवर्षणञ्चैव शौचं पञ्चविधं स्मृतम् ॥"
वापनं मृदन्तरेण पूरणम् । अत्रामेध्याया-
श्चतुष्कं पञ्चकं वा । दुष्टायाः द्बिकं त्रिकं वा ।

जिह्वा । इति संक्षिप्तसारोणादिवृत्तिः ॥
योगिनामवस्थाविशेषः । यथा, --
“निरुद्धे चेतसि पुरा सविकल्पसमाधिना ।
निर्व्विकल्पसमाधिस्तु भवेदत्र त्रिभूमिकः ॥
व्युत्तिष्ठते स्वतस्त्वाद्ये द्बितीये परबोधितः ।
अन्ते व्युत्तिष्ठते नैव सदा भवति तन्मयः ॥
एवं प्राग्भूमिसिद्धावप्युत्तरोत्तरभूमये ।
विधेया भगवद्भक्तिस्तां विना सा न सिध्यति ॥”
इति गीतागूढार्थदीपिकायां मधुसूदनसरस्वती ॥
भूमेः पर्य्यायादयः पृथिवीशब्दे द्रष्टव्याः ।
अस्या गुणाः ।
“भूमेः स्थैर्य्यं गुरुत्वञ्च काठिन्यं प्रसवार्थता ।
गन्धो गुरुत्वं शक्तिश्च संघातः स्थापना धृतिः ॥”
इति महाभारते मोक्षधर्म्मः ॥
अस्यार्थः । स्थैर्य्यमचाञ्चल्यम् १ । गुरुत्वं पतन-
प्रतियोगी गुणः २ । काठिन्यम् ३ । प्रसवार्थता
धान्याद्युत्पत्तिस्तदर्थता ४ । गन्धः ५ । गुरुत्वं
पिण्डपुष्टिः ६ । शक्तिः गन्धग्रहणसामर्थ्यम् ७ ।
संघातः श्लिष्टावयवत्वम् ८ । स्थापना मनुष्या-
द्याश्रयम् ९ । धृतिः पाञ्चभौतिके मनसि यो
धृत्यंशः । इति तट्टीका ॥ * ॥
भूमिदानमाहात्म्यम् यथा, --
“सर्व्वेषामेव दानानां भूमिदानमनुत्तमम् ।
“षष्टिं वर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः ।
उच्छेत्ता चानुमन्ता च तावन्ति नरके वसेत् ॥
तथा ।
भूमिं दत्त्वा तु यः पत्रं कुर्य्याच्चन्द्रार्क्ककालिकम् ।
अनाच्छेद्यमनाहार्य्यं दानलेख्यन्तु तद्बिदुः ॥
महाभारते ।
अपि पापकृतो राज्ञः प्रतिगृह्णन्ति साधवः ।
पृथिवीं नान्यदिच्छन्ति पावनीं जननीं यथा ॥
नामास्याः प्रियदत्तेति गुह्यं देव्याः सनातनम् ।
दाने वाप्यथवादाने नामास्याः परमं प्रियम् ॥”
दानादानकाले यत् प्रियदत्ता नामास्याः परमं
प्रियमित्युक्तं तेन प्रियदत्तामित्युच्चार्य्य दातव्या
प्रतिग्रहीतव्या च । भूमेः पूजायां दानवाक्ये च
प्रियदत्तेति विशेषणम् । भूमिर्व्विष्णुदेवताका ।
षष्टिवर्षसहस्रावच्छिन्नस्वर्गवासः फलम् । प्रति-
ग्रहे तद्भूमेः प्रदक्षिणमात्रम् । भूमेरसन्निधाने
तामुद्दिश्य प्रदक्षिणम् । इति शुद्धितत्त्वम् ॥ * ॥
आर्द्राद्यपादगे रवौ भूमी रजोयुक्ता भवति
तत्काले पाठादिनिषेधो यथा ज्योतिषे ।
“रजोयुक् क्ष्माम्बु वाची च रौद्राद्यपादगे रवौ ।
मलिनायाः दहनादीनामेकधा शोधनमाह देवलः ।
“पञ्चधा वा चतुर्द्धा वा भूरमेध्या विशुध्यति ।
द्विधा दुष्टा त्रिधा वापि शुध्यते मलिनैकधा ॥”
अन्यपञ्चप्रकारमाह मनुः ।
“सम्मार्जनेनाञ्जनेन सेकेनोल्लेखनेन च ।
गवाञ्च परिवासेन भूमिः शुद्ध्यति पञ्चधा ॥”
सम्मार्जनं तृणाद्यपनयनम् । अञ्जनं गोमये-
नोपलेपनम् । सेको जलेन प्रक्षालनम् । उल्लि-
खनं तक्षणम् । परिवासो गवोपस्थापनम्
अत्र सेकपरिवासयोर्न्निर्लेपस्थापनविषयत्वम्
अन्येषाममेध्यलिप्तविषयत्वम् । ब्रह्मपुराणे ।
“ग्रामाद्दण्डशतं त्यक्त्वा नगराच्च चतुर्गुणम् ।
भूमेः सर्व्वत्र शुद्धिः स्याद्यत्र लोको न विद्यते ॥”
दण्डं चतुर्हस्तः । नगरं महाग्रामः । इति
गोपालपञ्चाननकृतशुद्धिनिर्णयः ॥ * ॥ भूमौ वर्ण-
लेखनादिनिषेधो यथा, --
“न भूमौ विलिखेद्वर्णं मन्त्रं न पुस्तके लिखेत् ।

| | | |
|---|---|---|
| यो ददाति महीं राजन् !<br>विप्रायाकिञ्चनायवै ॥<br>अङ्गुष्ठमात्रमथवा स भवेत्<br>पृथिवीपतिः ।<br>न भूमिदानसदृशं पवित्रमिह विद्यते ॥<br>भूमिं यः प्रतिगृह्णाति भूमिं यश्च<br>प्रयच्छति ।<br>उभौ तौ पुण्यमापन्नौ नियतं<br>स्वर्गगामिनौ ॥<br>यत्किञ्चिद्भूमिदानन्तु<br>सर्व्वदानोत्तमोत्तमम् ।<br>महीपते ! नरः कोऽपि भूमिदो<br>भूमिमाप्नुयात् ॥<br>भूमिदानसमं दानं नास्त्यत्र<br>पृथिवीतले । | | |

न मुक्त्वा पुस्तकं स्थाप्यं न मुक्तमाहरेत्तु तत् ॥
भूकम्पे ग्रहणे चैव अक्षरं वाथ पुस्तकम् ।
भूमौ तिष्ठति देवेशि ! जन्मजन्मसु मूर्खता ।
तदा भवति देवेशि ! तस्मात्तत् परिवर्जयेत् ॥”
इति योगिनीतन्त्रे तृतीयभागे ७ पटलः ॥

**भूमिकदम्बः**, पुं, (भूमिजातः कदम्बः । शाक-
पार्थिवादिवत् समासः ।) कदम्बविशेषः । तत्-
पर्य्यायः । भूनीपः २ भूमिजः ३ भृङ्गवल्लभः ४
लघुपुष्पः ५ वृत्तपुष्पः ६ विषघ्नः ७ व्रण-
हारकः ८ । अस्य गुणाः यथा, राजनिर्घण्टे ।
“त्रिकदम्बाः कटूष्णाश्च वृष्या दोषहरा हिमाः ।
कषायतिक्ताः पित्तघ्ना वीर्य्यवृद्धिकराः पराः ॥”

**भूमिका**, स्त्री, (भूमिरिव कायतीति । कै + कः ।
स्त्रियां टाप् । यद्वा । भूमिरेव स्वार्थे कन् ।
टाप् ।) रचना । वेशान्तरपरिग्रहः । इति
मेदिनी ॥
पात्राणि नाट्येऽधिकृतास्तत्तद्वेशास्तु भूमिकाः ।
इति हेमचन्द्रः ॥
भूमिः । भूमिरेव भूमिका स्वार्थे कप्रत्ययेन
निष्पन्ना । इति व्याकरणम् ॥ वेदान्तमते चित्त-
स्यावस्थाविशेषः । यथा । क्षिप्तं मूढं विक्षिप्तं
एकाग्रं निरुद्धं इति पञ्चभूमयः । आसुरसम्प-
ल्लोकशास्त्रदेहवासनासु वर्त्तमानं चित्तं क्षिप्त-
भूमिका । १ । निद्रातन्द्रादिग्रस्तं चित्तं मूढ-
भूमिका । २ । कदाचिद्ध्यानयुक्तं चित्तं क्षिप्ता-
द्विशिष्टतया विक्षिप्तभूमिका । ३ । तत्र क्षिप्त-
मूढयोः समाधित्वशङ्कैव नास्ति विक्षिप्ते तु
समाधित्वशङ्का तदितरत् भूमिद्वयं समाधिः ।
एकाग्रे मनसि सम्भूतमर्थं प्रद्योतयति क्षिणोति
च क्लेशान् कर्म्मबन्धनानि श्लथयति निरोधममि-
मुखीकरोतीति सः प्रज्ञातो योग एकाग्र-
भूमिका । ४ । सर्व्ववृत्तिनिरोधरूपा संप्रज्ञात-
समाधिर्निरुद्धभूमिका । ५ । इति वेदान्तसंज्ञा-
निरूपणग्रन्थः ॥

**भूमिखर्ज्जूरिका**, स्त्री, (भूमिजाता खर्ज्जूरिका ।)
क्षुद्रखर्ज्जूरी । तत्पर्य्यायः । स्वाद्वी २ दुरा-
रोहा ३ मृदुच्छदा ४ । अस्या भेदाः गुणाश्च ।

**भूमिखर्ज्जूरी**, स्त्री, (भूमिजाता खर्ज्जूरी ।)
भूमिखर्ज्जूरिका । इति राजनिर्घण्टः
। अस्या
गुणपर्य्यायाः भूखर्ज्जूरीशब्दे द्रष्टव्याः
॥

**भूमिचम्पकः**, पुं, (भूमिजातश्चम्पकः ।)
पुष्पवृक्ष-
विशेषः । भूँइचाँपा इति भाषा ।
तत्पर्य्यायः ।
ताम्रपुष्पः २ सन्धिबन्धः ३ द्रुघणः
४ । इति
शब्दचन्द्रिका ॥ अस्य मूलं
व्रणपाककारकम् ॥

**भूमिजं**, क्ली, (भूमेर्जायते इति । जन् + डः ।)
गौरसुवर्णम् । इति राजनिर्घण्टः ॥

**भूमिजः**, पुं, (भूमेः पृथिव्या जायते इति ।
जन् + डः ।) मङ्गलग्रहः । नरकराजः
। इति
मेदिनी । जे, २७ ॥ भूमिकदम्बः ।
मनुष्यः ।
इति राजनिर्घण्टः ॥ (भूमिजाते, त्रि ।
यथा,
विष्णुधर्म्मोत्तरे ।
“चरस्थिरभवं भौमं भूकम्पमपि
भूमिजम् ॥”)

**भूमिजगुग्गुलुः**, पुं, (भूमिजो गुग्गुलुः ।) आशा-
पुरगुग्गुलुः । तत्पर्य्यायः । दैत्यमेदजः
२
दुर्ग्राह्यः ३ आशापुरसम्भवः ४
मज्जारः ५
मेदजः ६ महिषासुरसम्भवः ७ ।
अस्य गुणाः ।
तिक्तत्वम् । कटुत्वम् ।
कफवातनाशित्वम् ।
उमाप्रियत्वम् । भूतघ्नत्वम् ।
मेध्यत्वम् । सौर-
भ्यदत्वञ्च । इति राजनिर्घण्टः ॥

**भूमिपः**, पुं, (भूमिं पाति रक्षतीति । पा +
“आतोऽनुपसर्गे कः ।” ३ । २ । ३ ।
इति कः ।)
राजा । इति जटाधरः ॥ (यथा, महा-
भारते । १ । १०० । ८ ।
“वीतशोकभयाबाधाः
सुखस्वप्नविबोधनाः ।
पतिं भारतगोप्तारं समपद्यन्त भूमिपाः
॥”)

**भूमिपक्षः**, पुं, (भूमिः पक्ष इव यस्य ।) वाताश्वः ।
इति हारावली ॥

**भूमिपिशाचः**, पुं, (भूमौ पिशाच इव तद्वदा-
कृतिमत्त्वात् ।) तालवृक्षः । इति
हारावली ॥
(विषयोऽस्य तालवृक्षशब्दे ज्ञेयः ॥)

**भूमिमण्डः**, पुं, (भूमिं मण्डयति भूषयतीति ।
मडि + अण् ।) अष्टपादिका । इति
रत्नमाला ॥
मदनलालीति हापरमाली इति च भाषा
॥

**भूमिमण्डपभूषणा**, स्त्री, (भूमिमण्डपं भूषयतीति
।
भूषि + ल्युः + टाप् ।) माधवीलता ।
इति राज-
निर्घण्टः ॥

**भूमिरक्षकः**, पुं, (रक्षतीति । रक्ष + ण्वुल् । भूमेः
रक्षकः । गमनकाले भूमेरुपरि
पादाप्रदानात्
तथात्वम् ।) वाताश्वः । इति
भूरिप्रयोगः ॥

**भूमिलाभः**, पुं, (भूमेर्लाभोऽत्र ।) मृत्युः । इति
भूरिप्रयोगः ॥ (भूमेर्लभः ।)
भूमिप्राप्तिश्च ॥

**भूमिलेपनं**, क्ली, (भूमिर्लिप्यतेऽनेनेति । लिप् +

"भूमिखर्ज्जूरिका स्वाद्वी दुरारोहा मृदुच्छदा ।
अथ स्कन्धफला काककर्क्कटी स्वादुमस्तका ॥
पिण्डखर्ज्जूरिका त्वन्या सा देशे पश्चिमे भवेत् ।
खर्ज्जूरी गोस्तनाकारा परादद्वीपादिहागता ॥
जायन्ते पश्चिमे देशे सा च्छोहोरेति कीर्त्तिता ॥
खर्ज्जूरीत्रितयं शीतं मधुरं रसपाकयोः ।
स्निग्धं रुचिकरं हृद्यं क्षतक्षयहरं गुरु ॥
तर्पणं रक्तपित्तघ्नं पुष्टिविष्टम्भिशुक्रदम् ।
कोष्ठमारुतकृद्बल्यं वाह्यवातकफापहम् ॥
ज्वराभिघातक्षुत्तृष्णाकाशश्वासनिवारणम् ।
मदमूर्च्छामरुत्पित्तमद्योद्भूतगदान्तकृत् ॥
महतीभ्यां गुणैरल्पा स्वल्पखर्ज्जूरिका स्मृता ॥
खर्ज्जूरीतरुतोयन्तु मदपित्तकरं भवेत् ।
वातश्लेष्महरं रुच्यं दीपनं बलशुक्रकृत् ॥"
इति भावप्रकाशः ॥

**भूमिजम्बुः**, स्त्री, (भूमिजाता जम्बुः ।) क्षुद्र-
जम्बुः । तत्पर्य्यायः नादेयिका २
नादेयी ३
भूजम्बुः ४ भूमिजम्बुका ५ । इति
शब्दरत्नावली ॥
काकजम्बुः ६ शीतपल्लवा ७ । इति
रत्नमाला ॥
नादेयिका च नादेयी
भूजम्बुर्भूमिजम्बुका ।
भूमिजम्बुलतायां स्यात् केचित्तु
भूमिचम्पके ॥
इति शब्दरत्नावली ॥

**भूमिजम्बूः**, स्त्री, (भूमिजाता जम्बूरिति मध्यपदलोपी
समासः ।) भूजम्बुः । क्षुद्रजम्बुः ।
तत्पर्य्यायः ।
ह्रस्वफला २ भृङ्गवल्लभा ३ ह्रस्वा ४
भूजम्बुः ५
भ्रमरेष्टा ६ पिकभक्षा ७ काष्ठजम्बूः ८
। अस्या
गुणाः । कषायत्वम् । मधुरत्वम् ।
श्लेष्मपित्त-
नाशित्वम् । रुच्यत्वम् । संग्राहित्वम्
। हृत्-
कण्ठदोषनाशित्वम् ।
वीर्य्यपुष्टिदत्वञ्च । इति
राजनिर्घण्टः ॥

**भूमिजम्बूका**, स्त्री, (भूमिजम्बू + स्वार्थे कन् । टाप् ।)
भूमिजम्बुः । इत्यमरः । २ । ४ । ३८
॥

**भूमिजा**, स्त्री, (भूमेर्जायते इति । जन् + डः ।
टाप्) सीता । इति त्रिकाण्डशेषः
मेदिनी च ।
जे, २७ ॥

**भूमिजीवी**, [न्] पुं, (भूम्या तत्कर्षणादिना जीव-
तीति । जीव् + णिनिः ।) वैश्यः ।
इति शब्द-
रत्नावली ॥

ल्युट् ।) गोमयम् । इति हेमचन्द्रः । ४ ।
३३८ ॥
(भूमेर्लेपनम्) भूमेर्लेपश्च ॥

**भूमिवर्द्धनः**, पुं, क्ली, (भूमिर्वर्द्ध्यतेऽनेनेति । वृध् +
णिच् + ल्युट् । स्वीयपार्थिवांशप्रदानेन
भूमे-
र्वर्द्धनादस्य तथात्वम् ।) शवः । इति
हेमचन्द्रः ॥

**भूमिसम्भवा**, स्त्री, (भूमेः सम्भव उत्पत्तिर्यस्याः ।)
सीता । इति जटाधरः ॥

**भूमिस्पृक्**, [श्] पुं, (भूमिं स्पृशतीति । स्पृश् +
"स्पृशोऽनुदके क्विन् ।" ३ । २ । ५८
। इति क्विन् ।)
मानुषः । वैश्यः । इति मेदिनी । शे, ३८
॥
चौरविशेषः । अन्धः । खञ्जः । इति
शब्द-
रत्नावली ॥

**भूमी**, स्त्री, (भूमिः । कृदिकारादक्तिनः ।" इति
पक्षे ङीष् ।) भूमिः । इति
भरतद्विरूपकोषः ॥

**भूमीन्द्रः**, पुं, (भूम्यामिन्द्र इव । भूमेः इन्द्र ईश्वरो
वा ।) राजा । इति शब्दरत्नावली ॥

**भूमीरुहः**, पुं, (भूम्यां रोहतीति । रुह + कः ।)
वृक्षः । यथा, --
"दीर्घास्तापयुता यथा
विरहिणीश्वासास्तथा
वासरा
यामिन्यश्चपला यथा कुलबधूदृष्टिः
सरोषा
प्रिये ! ।
छाया वाञ्छ्यतमा नवोढवनितावाणीव
भूमीरुहा
निष्पन्दाः सुचिराद्यथा
मिलितयोर्यूनोर्मिथो
दृष्टयः ॥"

**भूमिदेवः**, पुं, (भूमौ देव इव भूम्या देवो वा ।)

ब्राह्मणः । इति हलायुधः ॥ (यथा, किराता-
र्ज्जुनीये । ३ । ६ ।
“अद्य क्रियाः कामदुघाः क्रतूनां
सत्याशिषः सम्प्रति भूमिदेवाः ।
आसंसृतेरस्मि जगत्सु जात
स्त्वय्यागते यद्बहुमानपात्रम् ॥”)

इत्युद्भटः श्लोकः ॥

**भूमीसहः**, पुं, (भूमेः सहते उत्सहते उत्पद्यते

इति सह + अच् । वृक्षविशेषः । भूंरसह इति

हिन्दी भाषा । तत्पर्य्यायः । द्वारदातुः २ वर-
दातुः ३ खरच्छदः ४ । अस्य गुणाः । शिशिर-
त्वम् । रक्तपित्तप्रसादनत्वञ्च । इति भाव-
प्रकाशः ॥

**भूम्यामलकी**, स्त्री, (भूमिलग्ना आमलकी शाक
पार्थिवादित्वात् समासः) क्षुपविशेषः । भूँइ
आमला इति भाषा । तत्पर्य्यायः । बहुपुष्पी २
जडा ३ अध्यण्डा ४ तालिः ५ तामलकी ६
अजटा ७ सूक्ष्मफला ८ क्षेत्रामलकी ९ । इति
रत्नमाला ॥ वितुन्नकः १० झटा ११ अमला १२
अज्झटा १३ ताली १४ शिवा १५ । इत्यमरः ।
२ । ४ । १२७ ॥ झाटा १६ मला १७ झाटामला
१८
अमलाज्झटा १९ । इत्यमरटीकायां भरतः ॥
भूम्यामलकिका २० शिवामलकी २१ बहु-
पुत्रा २२ बहुफला २३ बहुवीर्य्या २४
भूधात्री २५ । अस्या गुणाः । वातकारित्वम् ।
तिक्तत्वम् । कषायत्वम् । मधुरत्वम् । हिमत्वम् ।
पिपासाकासपित्तासृक्कफपाण्डुक्षतनाशित्वञ्च ।
इति भावप्रकाशः ॥

**भूम्यामली**, स्त्री, (भूम्या आमलते आत्मानं धारय-
तीति । आ + मल् + अच् ।) भूम्यामलकी ।
अरुनेली इति हिन्दी भाषा । भूँइ आमला
इति वङ्गभाषा । तत्पर्य्यायः । तमाली २
ताली ३ तमालिका ४ उच्चटा ५ दृढपादी ६
वितुन्ना ७ वितुन्निका ८ भूधात्री ९ चारटी
१० वृष्या ११ विषघ्नी १२ बहुपत्रिका १३
बहुवीर्य्या १४ अहिभयदा १५ विश्वपर्णी १६
हिमालया १७ अज्झटा १८ वीरा १९ ।
अस्या गुणाः । कषायत्वम् । अम्लत्वम् । पित्त-
मेहदाहनाशित्वम् । शिशिरत्वम् । मूत्र-
रोधार्त्तिशमनत्वञ्च । इति राजनिर्घण्टः ॥

**भूम्याहुल्यं**, क्ली, (भूमिमाहोलति आच्छादय-
तीति । आ + हुल् + कः । ततः यत् ।) क्षुप-
विशेषः । भूञितखड् इति हिन्दी भाषा ।
तत्पर्य्यायः । कुष्ठकेतु २ मार्कण्डीयम् ३ महौ-
षधम् ४ । अस्य गुणाः । तिक्तत्वम् । कटुत्वम् ।

इति यिडागमो बहोः स्थाने
भूरादेशश्चः ।)
प्रचुरः । इत्यमरः । ३ । १ ।
६३ ॥ (यथा, ऋग्वेदे ।
८ । ८५ । ३ ।
“इन्द्रस्य वज्र आयासो
निमिश्ल इन्द्रस्य बाहो-
र्भूयिष्ठमोजः ॥”)

**भूयुक्ता**, स्त्री, (भुवा + युक्ता ।) भूमिखर्ज्जुरी ।
इति राजनिर्घण्टः ॥

**भूरि**, क्ली, (भवति भूयते वेति । भू + “अदि-
शदिभूशुभिभ्यः क्रिन् ।”
उणा० । ४ । ६५ । इति
क्रिन् ।) स्वर्णम् । इत्यमरः । ३
। १ । ६३ ॥

**भूरिः**, पुं, (भवतीति । भू + “अदिशदिभूशुभिभ्यः ।”
उणा० ४ । ६५ । इति क्रिन् ।)
विष्णुः । ब्रह्मा ।
शिवः । इति मेदिनी । रे, ७३
॥ वासवः । इति
शब्दरत्नावली ॥ (सोमदत्तस्य
पुत्रभेदः । यथा,
महाभारते । १ । १८७ । १४
।
“कौरव्यः सोमदत्तश्च
पुत्राश्चास्य महारथाः ।
समवेतास्त्रयः शूरा
भूरिर्भूरिश्रवाः शलः ॥”)
प्रचुरे, त्रि । इत्यमरः । ३ । १ ।
६३ ॥ (यथा,
ऋग्वेदे । ७ । ४ । २ ।
“संयोवनायुवते शुचिदन्भूरि
चिदन्नासमिदत्ति सद्यः ॥”)

**भूरिक्**, [ज्] स्त्री, (भरति सर्व्वं धरतीति भृञ् ।

**भूरिबला**, स्त्री, (भूरि बलं यस्याः ।) अतिबला
इति राजनिर्घण्टः ॥

**भूरिमल्ली**, स्त्री, (भूरि मल्लते इति । मल्ल + अच्
ङीष् ।) अम्बष्ठा । इति राजनिर्घण्टः ॥

**भूरिमायः**, पुं, स्त्री, (भूरी माया यस्य ।)
शृगालः । इत्यमरः । २ । ५ । ५ ॥

**भूरिशः**, [स्] व्य, बहुशः । बह्वल्पार्थात् काच्च-
शस् वेति कारकभूरिशब्दात्
चशस्प्रत्ययनिष्प-
न्नोऽयं शब्दः । इति मुग्धबोधव्याकरणम् ॥
(भूरीणि भूरीणि इति वीप्सायां शस् । (यथा,
महानिर्व्वाणतन्त्रे । १ । ५२ ।
“बद्धपद्मासनादीनि गदितान्यपि भूरिशः ॥”)

**भूरिश्रवाः**, [स्] पुं, (भूरि श्रवो यज्ञादिजनितं
यशो यस्य सः । चन्द्रवंशीयसोमदत्तराजपुत्रः
।
यथा, महाभारते । १ । १८७ । १४ ।
“समवेतास्त्रयः शूराः भूरिर्भूरिश्रवाः शलः ॥”)
स तु अर्ज्जुनसात्यकिभ्यां हतः । इति महा-
भारतम् ॥ (बहुयशोविशिष्टे, त्रि ॥)

**भूरुण्डी**, स्त्री, (भुवं पृथिवीं रुणद्धि भुवि रोहतीति
वा । भू + “रुध + वा रुह + कः पृषोदरा-
दित्वात् नकार डकारौ गौरादित्वात् ङीष् ।)
श्रीहस्तिनी वृक्षः । इत्यमरः । २ । ४ । ५९ ॥
(भूरण्डीति च सर्व्वानन्दः ।) हातिशुँडा
इति भाषा ॥

**भूरुहः**, पुं, (भुवि रोहति प्रादुर्भवतीति भू +
रुह + कः ।) वृक्षः । इति शब्दमाला ॥
(यथा, माघे । ७ । ५० ।
“इदमिदमिति भूरुहाम्प्रसूनैः ।”)

**भूर्जः**, पुं, (ऊर्ज + घञ् । भूः ऊर्जो बलं यस्य ।
भुवि ऊर्ज्जयते इति भू + ऊर्ज + अच् वा ।)
स्वनामख्यातवृक्षविशेषः । भोजपत्र इति
हिन्दी-

ज्वरकुष्ठामसिध्मनाशित्वञ्च। इति राज-
निर्घण्टः ॥

**भूयः**, [स्] व्य, (भुवे भावाय यस्यति यतते
इति । भू + यस् + क्विप् ।) पुनरर्थम् । इति
शब्दरत्नावली ॥ (यथा, विष्णुपुराणे । १ । ४ ।
२४ ।
"यच्चोक्तं यच्च नैवोक्तं मयात्र परमेश्वर ! ।
तत् सर्व्वं त्वं नमस्तुभ्यं भूयो भूयो नमो नमः ॥"

**भूयान्**, [स्] त्रि, (अयमनयोरतिशयेन बहु-
रिति बहु + "द्विवचनविभज्योपपदे तरवीय-
सुनौ ।" ५ । ३ । ५७ । इति ईयसुन् । "बहो-
र्लोपोभू च बहोः ।" ६ । ४ । १५८ । इतीयसुन ई
लोपः भूरादेशश्च ।) बहुतरः । इति मेदिनी ।
से, ३० ॥ (यथा, मनुसंहितायाम् । २ । १३७ ।
"पञ्चानां त्रिषु वर्णेषु भूयांसि गुणवन्ति च ।"

**भूयिष्ठं**, त्रि, (अयमेषामतिशयेन बहुरिति । बहु
+ इष्ठन् । "इष्ठस्य यिट् च ।" ६ । ४ । १५९ ।
भृञ उच्चं ।" उणा० २ । ७२
। इति इजिः
स च कित्
धातोरुकान्तादेशश्च ।
पृषोदरादि-
त्वात् साधुः ।) पृथिवी । इति
सिद्धान्त-
कौमुद्यामुणादिवृत्तिः ॥

**भूरिगन्धा**, स्त्री, (भूरिः प्रचुरो गन्धोऽस्याः । तत-
ष्टाप् ।) पुरानामगन्धद्रव्यम् ।
इति राज-
निर्घण्टः ॥ (गन्धाढ्यायाञ्च, त्रि
॥)

**भूरिगमः**, पुं, (भूरिभिभर्भारैर्गच्छतीति । भूरि +
गम + "ग्रहवृदृनिश्चिगमश्च ।"
३ । ३ । ५८ ।
इति अप् ।) गर्द्दभः । इति
राजनिर्घण्टः ॥

**भूरिदावा**, [न्] पुं, भूरि ददाति यः । (भूरि +
दा + वनिप् । प्रचुरदाता । इति
मुग्धबोध-
व्याकरणम् ॥ (यथा, ऋग्वेदे ।
२ । २७ । १७ ।
"माहं मघोनो वरुणप्रियस्य
भूरिदाव्ण
आविदं शूनमापेः ॥")

**भूरिदुग्धा**, स्त्री, (भूरीणि दुग्धानि निर्यासा
यस्याः ।) वृश्चिकाली । इति
राजनिर्घण्टः ॥
(गुणादयोऽस्या
वृश्चिकालीशब्दे ज्ञातव्याः ॥)

**भूरिपत्रः**, पुं, (भूरीणि पत्राण्यस्य ।) उखर्व्वल-
तृणम् । इति राजनिर्घण्टः ॥

**भूरिपलितदा**, स्त्री, (भूरि पलितं केशपाकं
भाषा । (यथा, रघौ । ४ । ७३ ।
"भूर्जेषु मर्म्मरीभूताः कीचकध्वनिहेतवः ।")
तत्पर्य्यायः । वल्कद्रुमः २ भुर्जः ३ सुचर्म्मा
४
भूर्जपत्रकः ५ चित्रत्वक् ६ बिन्दुपत्रः ७ रक्षा-
पत्रः ८ विचित्रकः ९ भूतघ्नः १० मृदुमत्रः
११
शैलेन्द्रस्थः १२ । इति राजनिर्घण्टः ॥ भूर्ज-
पत्रः १३ चर्म्मी १४ बहुलवल्कलः १५ । इति
भावप्रकाशः ॥ छत्रपत्रः १६ शिवः १७
स्थिर-
च्छदः १८ । इति रत्नमाला ॥ मृदुत्वक् १९
इत्यमरः । २ । ४ । ४६ । पत्रपुष्पकः २० ।
इति
भरतधृतमधुः ॥ भुजः २१ बहुपटः २२ बहु-
त्वक्कः २३ मृदुत्वचः २४ । इति भरतधृत-
स्वामी ॥ अस्य गुणाः । बलकारित्वम् । कफ-
रक्तनाशित्वञ्च । इति राजवल्लभः ॥ कटत्वम् ।
कषायत्वम् । उष्णत्वम् । भूतरक्षाकरत्वम् ।
त्रिदोषशमनत्वम् । पथ्यत्वम् । दुष्टकौटिल्य-
नाशित्वञ्च । इति राजनिर्घण्टः ॥ कर्णरोग-
पित्तराक्षसमेदविषहरत्वञ्च । इति भावप्रकाशः
॥
(यथा, वाभटे शरीरस्थाने प्रथमेऽध्याये ॥
"भूर्जलाङ्गलिकीतुम्बीसर्पत्वक्कुष्ठसर्षपैः ।
पृथक् द्वाभ्यां समस्तैर्वा योनिलेपनधूपनम्
॥")

दायति शोधयति इति दैप् +

कः । टाप् ।)

पाण्डुरफली । इति

राजनिर्घण्टः ॥

**भूरिपुष्पा**, स्त्री, (भूरीणि पुष्पाण्यस्याः ।) शत-

पुष्पा । इति राजनिर्घण्टः ॥

**भूरिप्रेमा**, [न्] पुं, (भूरिः प्रेमा प्रेयस्त्वं यस्य ।)

चक्रवाकः । इति राजनिर्घण्टः

॥

**भूरिफेना**, स्त्री, (भूरयः फेना यस्याः ।) सप्तला-

वृक्षः । इत्यमरः । २ । ४ ।

१४३ ॥ चामार-

कसा इति भाषा ॥

**भूर्जकण्टकः**, पुं, वणसङ्करजातिविशेषः । इति
जटाधरः ॥ (यथा, मनौ । १० । २१ ।
"ब्रात्यात्तु जायते विप्रात् पापात्मा भूर्ज-
कण्टकः ॥")

**भूर्ज्जपत्रः**, पुं, (भुवि ऊर्ज्जस्वलेभ्यः उपदेवजातिभ्यः
पत्राण्यस्य ।) भूर्ज्जवृक्षः । इति रत्नमाला ॥
(यथा, रामायणे । २ । ९४ । २४ ।
"कुष्ठस्थगरपुन्नागभूर्ज्जपत्रोत्तरच्छदान् ॥")
तथा चास्य पर्य्यायः ।
"भूर्ज्जपत्रः स्मृतो भूर्ज्जचर्म्मी बहुलबल्कलः
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥

**भूर्णिः**, स्त्री, (बिभर्त्ति सर्व्वमिति । भृ + "घृणिपृश्नि-
पार्ष्णिचूर्णिभूर्णिः ।" उणा० ४ । ५२ । इति
निः
निपातनादूत्वश्च ।) पृथिवी । मरुभूमिः ।
इत्यु-
णादिकोषः ॥ (भर्त्ता । यथा, ऋग्वेदे । ७ ।
८७ । २ ।
"आत्मा ते वातो रज आनवीनोत्-
पशु र्न भूर्णिर्य्यवसे स सवान् ॥"
"भूर्णिर्जगतो भर्त्ता ।" इति तद्भाष्ये सायनः
॥)

**भूर्लोकः**, पुं, (भूःसंज्ञको लोकः । शाकपार्थिवादि-
वत् समासः ।) अन्तरीक्षादधो लोकः । मर्त्य-
लोकः । तस्य लक्षणं यथा, --
"पादगम्यञ्च यत्किञ्चित् वस्त्वस्ति
पृथिवीमयम् ।
स भूर्लोकः समाख्यातो विस्तारोऽस्य मयो-
दितः ॥"
इति विष्णुपुराणे । २ अंशे ५ अध्यायः ॥
चरणसञ्चारयोग्यं गिरिशिखरादि यावत् ताव-
दुत्सेधो भूर्लोक इत्यर्थः । विस्तारो मयोदितः
सर्व्वतो लोकालोकावधिः पञ्चविंशतिकोटि-
प्रमाणः । इति तट्टीकायां स्वामी ॥ अस्य
विव-
रणं तत्रैव द्वितीयादिचतुर्थाध्यायेषु भूगोल-
यथा, --
"भूशयो भूषणो भूतिर्विशोकः
शोकनाशनः ॥"
इति महाभारते तस्य सहस्रनामस्तोत्रम्
॥

**भूशेलुः**, पुं, (भुवि ख्याता शेलुः शाकपार्थिवादि-
वत् समासः ।) भूकर्व्वुदारकः । इति
राज-
निर्घण्टः ॥

**भूष** कि भूषणे । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-सक०-सेट् ।) कि भूषयति भूषति
हारो
जनम् । इति दुर्गादासः ॥

**भूषणं**, क्ली, (भूष्यते अनेनेति । भूष + करणे
ल्युट् ।) अलङ्कारः । इति हेमचन्द्रः । ३
। ३१३ ॥
(यथा, चाणक्यसंग्रहे । ८ ।
"नक्षत्रभूषणं चन्द्रो नारीणां भूषणं पतिः
॥")
देवदेयभूषणादि यथा, --
"भोग्यभूषोत्तमं नित्यं भूषणानि शृणुष्व
मे ।
किरीटञ्च शिरोरत्नं कुण्डलञ्च
ललाटिका ॥
तालपत्रञ्च हारश्च ग्रैवेयकमथोर्म्मिका ।
प्रालम्बिका
रत्नसूत्रमुत्तुङ्गोऽथर्क्षमालिका ॥
पार्श्वद्योतो नखद्योतो
ह्यङ्गुलीच्छादकस्तथा ।
कटिलग्नं माणवको मूर्द्धतारा ललन्तिका
॥
अङ्गदो बाहुबलयः शिखाभूषणमिङ्गिका
।
प्रागण्डबन्धं तद्भ्राशं नाभिपूरोऽथ
मालिका ॥
सप्तकी शृङ्खलञ्चैव दन्तपत्रञ्च वर्णकः ।
चतुर्व्वर्गप्रदं नित्यं भूषणं सर्व्वसौख्यदम् ।
तुष्टिपुष्टिप्रीतिकरं यथाशक्तीष्टये सृजेत् ॥
इदं ते भूषणं प्रोक्तं सर्व्वदेवस्य तुष्टिदम् ।"
इति कालिकापुराणे ६८ अध्यायः ॥
अथालङ्कारयुक्तिः । तद्धारणदिनमुच्यते ।
"रेवत्यश्विधनिष्ठासु हस्तादिष्वपि पञ्चसु ।
गुरुशुक्रबुधस्याह्नि वस्त्रालङ्कारधारणम् ॥
अनिष्टेष्वपि निर्द्दिष्टं वस्त्रालङ्कारधारणम् ।
उद्वाहे राजसम्माने ब्राह्मणानाञ्च सम्मते ॥
शिरस्त्रं मुकुटं हारः कुण्डलञ्चाङ्गदन्तथा ।
कङ्कणं बालकञ्चैव मेखलाष्टाविति क्रमात्
॥
प्रधानभूषणान्येषु यथा स्वं याति निश्चयः
।
पद्मरागश्च वज्रञ्च विजयो गोविदस्तथा ॥
मुक्तावैदूर्य्यनीलञ्च यथा मरकतं क्रमात् ।
आदित्यादिदशाजानां
सर्व्वसम्पत्तिदायकाः ॥
सुवणनापि घटना सर्व्वेषामुपयुज्यते ।
प्रधानभूषणेष्वेवमप्रधाने न निर्णयः ॥
प्रधानभूषणं प्रायः शिरसो ह्यभिधीयते ।
तस्य प्रधानभूततत्वादित्याहभृगुनन्दनः ।
सुखदा मणयः शुद्धा दुःखदा दोषशालिनः
॥"
इति युक्तिकल्पतरुः ॥
तद्धारणफलम् यथा, --
"भूषणं भूषयेदङ्गं यथायोग्यविधानतः ।
शुचिसौभाग्यसन्तोषदायकंकाञ्चनं स्मृतम्
॥
ग्रहदृष्टिहरं पुष्टिकरं दुःखप्रणाशनम् ।
पापदौर्भाग्यशमनं रत्नाभरणधारणम् ॥
माणिक्यं तरणेः सुजात्यममलं मुक्ताफलम्
शीतगो-
र्माहेयस्य च विद्रुमो निगदितः सौम्यस्य
गारुत्मतम् ।
देवेज्यस्य च पुष्परागमसुराचार्य्यस्य वज्रं
शने-
र्नीलं निर्म्मलमन्ययोश्च गदिते
गोमेदवैदूर्य्यके ॥

शब्दे च द्रष्टव्यम् ॥ (यथा, भागवते । २ । ५ । ३८ ।
भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः ॥”)

**भूलग्ना**, स्त्री, (भुवि लग्ना ।) शङ्खपुष्पी । इति राजनिर्घण्टः ॥

**भूलता**, स्त्री, (भुवि लता इव ।) किञ्चुलुकः । इति हेमचन्द्रः । ४ । २६९ ॥

**भूवदरी**, स्त्री, (भूलग्ना वदरी शाकपार्थिवादिवत् समासः ।) क्षुद्रकोली । झडवेर इति हिन्दी-भाषा । तत्पर्य्यायः । क्षितिवदरी २ वल्लीवदरी ३ वदरवल्ली ४ बहुफलिका ५ लघुवदरी ६ वदरफली ७ सूक्ष्मवदरी ८ । अस्या गुणाः । मधुराम्लत्वम् । कफवातविकारहारित्वम् । पथ्यत्वम् । दीपनत्वम् । पाचनत्वम् । किञ्चित् पित्तास्रकारित्वम् । रुच्यत्वञ्च । इति राज-निर्घण्टः ॥

**भूशयः**, पुं, (भुवि शेते इति । भू + शीङ् + “अधिकरणे शेतेः ।” ३ । २ । १५ । इति अच् ।)
नकुलगोधादिः । एतेषां मांसगुणाः । गुरुत्वम् । उष्णत्वम् । मधुरत्वम् । स्निग्धत्वम् । वायुनाशि-त्वम् । शुक्रकारित्वञ्च । इति राजवल्लभः ॥
विष्णुः ।

ऊरुसूत्रञ्च नीवी च मुष्टिबद्धं प्रकीर्णकम् ॥
पादाङ्गदं हंसकञ्च नूपुरं क्षुद्रघण्टिका ।
सुखपट्टमिति प्रोक्ता अलङ्कारासुशोभनाः ॥
चत्वारिंशदमी प्रोक्ता लोके वेदे च सौख्यदाः ।
अलङ्कारः प्रदानेन चतुर्व्वर्गप्रदायकाः ॥
एतेषां पूजनं कृत्वा प्रदद्यादिष्टसिद्धये ।
तेषां दैवतमुच्चार्य्य पूजयेत्तु विचक्षणः ॥
शिरोगतानि चादद्यात् सौवर्णानि तु सर्व्वदा ।
चूडारत्नादिकानीह भूषणानि तु भैरव ! ॥
ग्रैवेयकादि हंसान्तं सौवर्णं राजतञ्च वा ।
निवेदयेत्तु देवेभ्यो नान्यतैजससम्भवम् ॥
रीतिवङ्गादिसंजातं पात्रोपकरणादिकम् ।
दद्यादायसवर्ज्जन्तु भूषणं न कदाचन ॥
घण्टाचामरकुम्भादि पात्रोपकरणादिकम् ।
तद्भूषणान्तरे दद्याद् यस्मात्तदुपभूषणम् ॥
सर्व्वं ताम्रमयं दद्याद्यत्किञ्चिद्भूषणादिकम् ।
सर्व्वत्र स्वर्णवत्ताम्रमर्घ्यपात्रे ततोऽधिकम् ॥
पूजार्घ्यपात्रं नैवेद्याधारपात्रञ्च पानकम् ।
औडुम्बरं सदा विष्णोः प्रीतिदं तोषदं तदा ॥
ताम्रे देवाः प्रमोदन्ते ताम्रे देवाः सदा स्थिताः ।
सर्व्वप्रीतिकरं ताम्रं तस्मात्ताम्रं प्रयोजयेत् ॥
स्वोपयोगे नरः कुर्य्याद्देवानामपि भैरव ! ।
वासः स्रग्गन्धरत्नानां धारणं प्रीतिवर्द्धनम् ।
रक्षोघ्नमर्थ्यमोजस्यं सौभाग्यकरमुत्तमम् ॥”
इति भावप्रकाशः ॥

**भूषणः**, पुं, (भूयषति भक्तबृन्दमिति भूष्यतेऽनेनेति वा । भूष + ल्युः वा ल्युट् ।) विष्णुः । यथा, --
“भूशयो भूषणो भूतिर्विशोकः शोकनाशनः ।”
इति तस्य सहस्रनामस्तोत्रम् ॥
(राजविशेषः । यथा, कथासरित्सागरे । ४७ । १३ ।
“वसुदत्तादयश्चैते राजानोऽर्थरथा इमे ।
अङ्कुरी सुविशालश्च दण्डिभूषणसोमिलाः ॥”)

**भूषा**, स्त्री, (भूष + भावे अः टाप् च ।) अल-ङ्क्रिया । इत्यमरः । २ । ६ । १०१ ॥ (यथा, भागवते । ३ । २२ । २२ ।
“दम्पत्योः पर्य्यदात् प्रीत्या भूषावासःपरि-च्छदान् ॥”)

**भूषितः**, त्रि, (भूष + क्तः ।) अलङ्कृतः । इत्य-मरः । २ । ६ । १०० ॥ (यथा, भट्टिः । ६ । ७३ ।
“भृङ्गालीकोकिलक्रुङ्भिवर्पशनैः पश्य लक्ष्मण ! ।
रौचनैर्भूषितां पम्पामस्माकं हृदयाविघम् ॥”)

| | | |
|---|---|---|
| | ग्रीवोद्र्ध्वदेशे रौप्यन्तु न कदाचिच्च भूषणम् ॥<br>प्रावारः पानपात्रञ्च गेण्डुकं गृहमेव च ।<br>पर्य्यङ्कादि यदन्यच्च सर्व्वं तदुपभूषणम् ॥<br>अयोमयमृते कांस्यमृते यद्भूषणं भवेत् ।<br>स्वर्णरौप्यस्य चाभावे त्वधःकाये नियोजयेत् ॥<br>एतेषां भूषणादीनां यद्दातुं शक्यते नरैः ।<br>तत्तद्दद्यात् सम्भवे तु सर्व्वमेव प्रदापयेत् ॥ | |

**भूष्णुः**, त्रि, (भू + ग्स्नु ।) भवनशीलः । तत्-
पर्य्यायः । भविष्णुः २ भविता ३ ।
इत्यमरः ।
३ । १ । २९ ॥ साधुभवनशीलः । इति
तट्टीकायां रायमुकुटः ॥ (यथा, मनौ । ४
।
१३५ ।
“क्षत्त्रियं चैव सर्पं च ब्राह्मणञ्च बहुश्रुतम् ।
नावमन्येत वै भूष्णुः कृशानपि कदाचन
॥”
“भूष्णुः, धनायुरादिना वर्द्धनशीलः ।”
इति
तट्टीकायां कुल्लूकभट्टः ॥)

**भूसुतः**, पुं, (भुवः पृथिव्याः सुतः ।) मङ्गलग्रहः: ।
इति शब्दमाला ॥ (यथा, सूर्य्यसिद्धान्ते
।
२ । ५५ ।
“महत्त्वाच्छीघ्रपरिधिः सप्तमे भृगुभूसुतौ
॥”)
सीतायाम् स्त्री ॥

**भूस्तृणं**, क्ली, (भूलग्नं तृणं भुवस्तृणमिति वा ।
पारस्करादित्वात् सुट् ।) भूतृणम् ।
इत्यमरः ।
२ । ५ । १६७ ॥ (यथा, मनौ । ६ ।
१४ ॥
“वर्जयेन्मधुमांसञ्च भौमानि कवकानि च
।
भूस्तृणं शिग्रुकञ्चैव श्लेष्मातकफलानि
च ॥”)
अस्य पर्य्यायगुणा यथा, --
“गुह्यवीजञ्च भूतीकं सुगन्धं गोमयप्रियम्
।
भूस्तृणन्तु भवेच्छत्रा
मालातृणकमित्यपि ॥
भूस्तृणं कटुकं तिक्तं तीक्ष्णोष्णं रोचनं
लघु ।
विदाहि दीपनं रूक्षमनेत्र्यं मुखशोधनम् ।

**भृकुटिः**, स्त्री, (कुट कौटिल्ये इति कुट + इन् ।
भ्रुवः कुटिः कौटिल्यं निपातनात् वा
सम्प्रसार-
णम् ।) भ्रूकुटिः । यथा, --
“रचितभृकुटिबन्धं नन्दिना द्वारि रुद्धे ।”
इति भरतधृतहरविलासः ॥

**भृकुटी**, स्त्री, (भृकुठि । कृदिकारादिति ङीष् ।)
भ्रूकुटिः । इत्यमरटीकायां भरतः ॥ भृकुटी-
कुटिलाननौ । इति मार्कण्डेयपुराणे देवी-
माहात्म्यञ्च ॥

**भृगुः**, पुं, (तपसा भृज्ज्यते पञ्चतपादिभिर्वेति ।
भ्रस्ज + “प्रथिम्रादिभ्रस्जां सम्प्रसारणं सलो-
पश्च ।” उणा० १ । २९ । इति कुः
सम्प्रसारणं
सलोपः, न्यङ्क्वादित्वात् कुत्वञ्च । यद्वा
भृज्जतीति
क्विप् । भृक् ज्वाला तया सहोत्पन्न इति उः
।)
मुनिविशेषः । स तु ब्रह्मणस्त्वचो जातः ।
(यथास्योत्पत्तिर्नामनिरुक्तिश्चमहाभारते ।
१३ । ८५ । १०५ -- १०६ ।
“पुरुषा वपुषा युक्ताः स्वैः स्वैः प्रसवजैर्गुणैः ।
भृगित्येव भृगुः पूर्ब्बमङ्गरेभ्योऽङ्गिराभवत् ॥
अङ्गारसंश्रयाच्चैव कविरित्यपरोऽभवत् ।
सह ज्वालाभिरुत्पन्नो भृगुस्तस्माद् भृगुः
स्मृतः ॥”)
अस्य भार्य्या कर्द्दममुनिकन्या ख्यातिः । पुत्त्रः
धाता विधाता च । कन्या श्रीः । इति श्रीभाग-
वतम् ॥ अपि च ।
मुनय ऊचुः ।
“कथितस्ते यदा सर्गः पृष्टः सूत त्वयाधुना ।
भृगुसर्गात् प्रभृत्येष सर्गो नः कथ्यतां पुनः ॥”
सूत उवाच ।
भृगोः ख्यात्यां समुत्पन्ना श्रीः पूर्ब्बमुदधेः
पुनः ।
तथा धाता विधाता च तस्यां जातौ भृगोः
सुतौ ॥
आयतिर्नियतिश्चैव मेरुकन्ये महाप्रभोः ।

तथा च मेघदूते । १ । ५९ ।
“हंसद्वारं भृगुपतियशो वर्त्म यत् क्रौञ्च-
रन्ध्रम् ।”)

**भृगुसुतः**, पुं, (भृगोः सुतः ।) शुक्रः । इति शब्द-
रत्नावली ॥ परशुरामश्च ॥

**भृगुलापतिः**, पुं, परशुरामः । इति शब्दरत्नावली
॥
भ्रगूणाम्पतिरित्यपि पाठः ॥

**भृङ्गं**, क्ली, (बिभर्त्तीति । डु-भृञ् भरणे । “भृञः
कित् नुट् च ।” उणा० १ । १२४ । इति
गन् । स च कित् नुडागमश्च ।) त्वचम् ।
गुडत्वक् इति ख्यातम् । इत्यमरः । २ ।
५ ।
१६ ॥ (यथा, --
“त्वक्पत्रञ्च वराङ्गं स्याद्भृङ्गञ्चोचन्तथोत्-
कटम् ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)
अभ्रकम् । इति राजनिर्घण्टः ॥

**भृङ्गः**, पुं, (विभर्त्त्यनुरागमिति । भृञ् + “भृञः
कित् नुट् च ।” उणा० १ । १२४ । इति
गन् ।
स च कित् नुट् च ।) भ्रमरः ।
कलिङ्गपक्षी ।
इत्यमरः । २ । ५ । १६ । फिङ्गा इति
भाषा ॥
(अस्य पर्य्याया धूम्याटशब्दे द्रष्टव्याः ।)
अस्य
मांसगुणाः । मधुरत्वम् । स्निग्धत्वम् ।
कफशुक्र-
विवर्द्धनत्वञ्च । इति राजनिर्घण्टः ॥
षिड्गः ।
भृङ्गराजः । इति मेदिनी गे, १५ ॥
(यथास्य
पर्य्यायः ।
“भृङ्गराजः केशराजो भृङ्गः पत्तङ्ग
मार्कवम्

अवृष्यं बहुविट्कञ्च पित्तरक्तप्रदूषणम् ॥”
इति भावप्रकाशः ॥

**भूस्पृक्**, [श्] पुं, (भुवं स्पृशतीति स्पृश् + क्विन् ।)
मनुष्यः । इति हेमचन्द्रः । ३ । १ ॥

**भूस्वर्गः**, पुं, (भुवि स्वर्ग इव अमरलोकधार-
णात् ।) सुमेरुपर्व्वतः । इति जटाधरः ॥

**भृञ**, भृतिपुष्ट्योः । इति कविकल्प-
द्रुमः ॥ (भ्वा०-उभ०-सक०-
अनिट् । लि-ह्वा०-उभ०-सक०-अनिट् ।) भृति-
र्भरणं पुष्टिः पोषणम् । लि ञ “बिभर्त्ति शशिनं
शम्भुर्बिभृते जनकः सुतम् । टु भरथुः । डु
भृत्रिमम् । भ्वादिपक्षे भृतिः पूरणम् । ञ भरति
कुम्भमद्भिर्जनः । भरते । इति दुर्गादासः ॥

**भृ** लि टु डु ञ भृतिपुष्ट्योः । इति कविकल्प-
द्रुमः ॥ (भ्वा०-उभ०-सक०-
अनिट् । लि-ह्वा०-उभ०-सक०-अनिट् ।) भृति-
र्भरणं पुष्टिः पोषणम् । लि ञ “बिभर्त्ति शशिनं
शम्भुर्बिभृते जनकः सुतम् । टु भरथुः । डु
भृत्रिमम् । भ्वादिपक्षे भृतिः पूरणम् । ञ भरति
कुम्भमद्भिर्जनः । भरते । इति दुर्गादासः ॥

**भृकुंशः**, पुं, (कुसि + अच् । कुसो भावदीपनम् ।
पृषोदरादित्वात् सस्य शत्वम् । भ्रुवा कुशो भाव-
प्रकाश इङ्गितज्ञापनं यस्य । निपातनात् सम्प्र-
सारणम् ।) भ्रुकुंशः । स्त्रीवेशधारी नट-
घातुर्विधातुस्ते भार्य्ये ययोर्जातौ सुतावुभौ ॥
प्राणश्चैव मृकण्डुश्च मार्कण्डेयो मृकण्डुतः ।
ततो वेदशिरा जज्ञे प्राणस्य द्युतिमान् मुतः ॥
ततो वंशो मुनिश्रेष्ठा विस्तरं भार्गवो गतः ।
इत्याद्ये वह्निपुराणे वरसर्गनामाध्यायः ॥ * ॥
शिवः । शुक्रग्रहः । इति मेदिनी । गे, १५ ॥
सानुः । यमदग्निः । इति हेमचन्द्रः ॥ अरण्य-
कण्टकव्याप्तगिरिपार्श्वोच्चदेशः ।
निरवलम्बन-
पर्व्वतादिपार्श्वः । आरडि इति ख्यातम् ।
यस्मात् पतने अक्स्थानक्रियाविशेषो नास्ति ।
अतएव भृगुपतनमित्यादिप्रयोगो दृश्यते । इति
भरतः ॥ तत्पर्य्यायः । प्रपातः २ अतटः ३ ।
इत्यमरः । २ । ३ । ४ ॥ दरद् ४ । इति
जटाधरः ॥
पतनस्थानम् ५ । इति शब्दरत्नावली ॥

**भृगुपतिः**, पुं, (भृगूनां तद्वंशीयानां पतिः ।)
परशुरामः । इति शब्दरत्नावली ॥ (यथा,
गीतगोविन्दे । १ । १० ।
“केशवधृत भृगुपतिरूप ! जय जगदीश ! हरे ! ।
इति वैद्यकरत्नमालायाम् ॥
तथा च पर्य्यायान्तरम् ।
“भृङ्गराजो भृङ्गरजो मार्कवो भृङ्ग एव च ।
अङ्गारकः केशराजो भृङ्गारः केशरञ्जनः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
भृङ्गारः । भृङ्गरोलः । इति शब्दरत्नावली ॥

**भृङ्गकः**, पुं, (भृङ्ग । संज्ञायां कन् ।) राजवासन-
पक्षी । यथा, --
“अथ भृङ्गो भृङ्गराजो भृङ्गको राजवासनः ॥”
इति शब्दरत्नावली ॥

**भृङ्गजं**, क्ली, (भृङ्ग इव जायत इति । जन
+ डः ।) अगुरु । इति रत्नमाला ॥ (गुणा-
श्चास्यागुरुशब्दे विहिताः ॥)

**भृङ्गजा**, स्त्री, (भृङ्गज + स्त्रियां टाप् ।) भार्गी ।
इति राजनिर्घण्टः ॥

**भृङ्गपर्णिका**, स्त्री, (भृङ्ग इव कार्ष्ण्यात् भृङ्गवर्णं
पर्णमस्याः इति ङीष् । ततः स्वार्थे कन् टाप् ।
अत इत्वञ्च । ईकारस्य ह्रस्वत्वम् ।) सूक्ष्मैला ।
इति शब्दचन्द्रिका ॥

**भृङ्गप्रिया**, स्त्री, (भृङ्गाणां प्रिया । प्रचुर-
मधुत्वात् ।) माधवीलता । इति राज-
निर्घण्टः ॥

**भृङ्गमूलिका**, स्त्री, (भृङ्गस्य भृङ्गराजस्येव मूल-
मस्याः कः । अजातिवचनत्वात् टाप् । कापि
अत इत्वञ्च ।) भ्रमरच्छल्ली । इति राज-
निर्घण्टः ॥

पुरुषः । इत्यमरटीकायां रमानाथः ॥

**भृकुंसः**, पुं, (चुरादौ पट पुटेत्यादि दण्डकोक्तः
कुसिर्भाषार्थः । स्त्रीवेशं धारयित्वा भ्रुवः कुस-
यति पुरुषत्वमिति संज्ञात्वादुकारस्य अकारः
ह्रस्वश्च वा । कुसि + अच् । यद्वा भ्रुवा कुंस
इङ्गितप्रकाशो यस्य । निपातनात् सम्प्रसार
णम् ।) भ्रुकुंशः । स्त्रीवेशधारी नटपुरुषः ।
इत्यमरटीकायां रमानाथः ॥

**भृकुंसकः**, पुं, (भृकुंस एवेति स्वार्थे कन् ।)
भ्रुकुंशः । इति शब्दरत्नावली ॥

**भृङ्गरजः**, पुं, (भृङ्गान् रञ्जयतीति अन्तर्भूत-
ण्यर्थाद् रञ्जोऽच् । पृषोदरादित्वात् न
लोपः ।) भृङ्गराजः । इति भावप्रकाशः ॥
(यथा, --
"भृङ्गरजत्रिफलोत्पलशारि-
लौहपुरीषसमन्वितकारि ॥"
इति वैद्यकचक्रपाणिसंग्रहे क्षुद्राधिकारे ॥)

**भृङ्गरजाः**, [स्] पुं, (रजयतीति । अन्तर्भूत-
ण्यर्थातः रञ्जे "सर्व्वधातुभ्योऽसुन् ।"
उणा० ४ ।
१८८ । इति असुन् । ततो "रजेश्च ।" ६
। ४ । २६ ।
इति नलोपः । ततो भृङ्गाणां रजाः रञ्जकः
।
अथवा भृङ्ग इव कृष्णवर्णं रजः परागोऽस्य
।)
भृङ्गराजः । इत्यमरटीकायां भरतः ॥

**भृङ्गराजः**, पुं, (भृङ्गैव राजते इति । भृङ्ग + राज्
+ अच् । द्रव्यद्वारेण भृङ्गवत्
केशकृष्णींकरणा-
त्तथात्वम् ।) क्षुपविशेषः । केसुरिया इति
वङ्ग-
भाषा । भेगरिया इति हिन्दीभाषा । तत्-
पर्य्यायः । केशराजः २ भृङ्गः ३ पत्तङ्गः
४
मार्करः ५ । इति रत्नमाला ॥ भृङ्गाह्वः ६
केश-
रञ्जनः ७ पितृप्रियः ८ अङ्गारकः ९
केश्यः १०
कुन्तलवर्द्धनः ११ । अस्य गुणाः ।
तिक्तत्वम् ।
उष्णत्वम् । चक्षुष्यत्वम् । केशरञ्जनत्वम् ।
कफा-
मशोफश्वित्रनाशित्वम् । तत्र नीलो
रसायनः ।
इति राजनिर्घण्टः ॥ अपि च ।
"भृङ्गराजो भङ्गरजः मार्करो भृङ्ग एव च ।
भृङ्गारकः केशराजो भृङ्गारः केशरञ्जनः ॥

**भृङ्गानन्दा**, स्त्री, (भृङ्गाणामानन्दो यस्याः
पञ्चमी तत्पुरुषः । भृङ्गाणां आनन्दा आनन्द-
करी वा ।) यूथिका । इति राजनिर्घण्टः ॥

**भृङ्गाभीष्टः**, पुं, (भृङ्गाणां अभीष्टः प्रियः । मधु
बाहुल्यात् ।) आम्रवृक्षः । इति राज-
निर्घण्टः ॥ तन्मुकुलफलयोः क्ली ॥

**भृङ्गारं**, क्ली, (डुभृञ् धारणपोषणयोरिति । भृ +
"शृङ्गारभृङ्गारौ ।" उणा० ३ । १३६ । इति
आरन् निपातनात् नुम् गुक् च ।) लवङ्गम् ।
सुवर्णम् । इति राजनिर्घण्टः ॥

**भृङ्गारः**, पुं, (भृ + आरन् नुम् गुक् च । अथवा
"भृङ्गं जलमियर्त्त्यनेनेति ।" भृङ्गं + ऋ + करणे
घञ् । इत्यमरटीकायां रघुनाथः ॥ स्वर्णघटित-
वारिपात्रम् । (यथा मार्कण्डेयपुराणे । ८ ।
२०३ ।
"नाद्य पश्यामि ते छत्रं भृङ्गारमथवा पुनः ॥")
तत्पर्य्यायः । कनकालुका २ इत्यमरः ॥
गुडुकः
३ गडुकः ४ । इति शब्दरत्नावली ॥ भृङ्ग-
राजः । इति जटाधरः ॥ अथ भृङ्गारोद्देशः ।
"राज्ञोऽभिषेकपात्रं यद्भृङ्गार इति तन्मतम् ।
तदष्टधा तस्य मानमाकृतिश्चापि चाष्टधा ॥
सौवर्णं राजतं भौमं ताम्रं स्फाटिकमेव च ।
चान्दनं लौहजं शार्ङ्गमेतदष्टविधं मतम् ॥
भानुदिङ्नवसप्ताष्टरुद्रलोकसुरोन्मिताः।
अष्टावष्टौ समाख्याता आयामपरिणाहयोः ॥
द्विचतुर्बाणवेदाब्धिबाणसप्तात्मवृत्तिता।
यथाक्रमं समुद्दिष्टमादित्यादिदशाभुवाम् ॥
पद्मरागस्तथा वज्रं वैदूर्य्यमौक्तिकन्तथा ।
नीलं मारकतञ्चैव मुक्ता च सप्त कीर्त्तिताः ॥
भृङ्गारसप्तके न्यास्या न भौमो मणिमहति ।
कानकं मृण्मयं वापि सर्व्वेषामुपयुज्यते ॥
कानकन्तु क्षितीशानां मृण्मयं सार्व्वयोगिकम् ।
शङ्खपद्मेन्दुकह्लारं प्रत्यस्रं विन्यसेत् क्रमात् ॥
चतुर्व्विधानां भूपानां चान्द्रः सर्व्वत्र शस्यते ।
श्वेतं रक्तं तथा पीतं कृष्णं चन्दनमुच्यते ।
एतेषां सलिलैः सेकश्चतुर्णां स्यान्महीभुजाम् ॥

स्ततः गौरादित्वात् ङीप् । रस्य लत्वे
भृङ्गाली
च ।) झिल्ली इत्यमरः । २ । ५ । २८
॥

**भृङ्गाह्वः**, पुं, (भृङ्गमाह्वयते स्पर्द्धते इति । आ +
ह्वे + कः ।) जीवकः । भृङ्गराजः । इति
राज-
निर्घण्टः ॥ (विवृतिरस्य
जीवकभृङ्गराजशब्द-
योर्ज्ञातव्या ॥

**भृङ्गाह्वा**, स्त्री, (भृङ्गमाह्वयते स्पर्द्धते । भृङ्ग + आ
+ ह्वे + कः स्त्रियां टाप् ।) भ्रमरच्छल्ली
। इति
राजनिर्घण्टः ॥

**भृङ्गिः**, पुं, (विभर्त्तीति । भृ + बाहुलकात् गिक्
नुट् च ।) भृङ्गी । यथा, --
"प्राप्ता गणाधिपत्यं त्वं नाम्ना
भृङ्गिरिति
स्मृतः ।"
इति वामनपुराणे ४५ अध्यायः ॥

**भृङ्गिणी**, स्त्री, (भृङ्गवत् वर्णो अस्या अस्तीति
इनिः । ङीप् ।) वटीवृक्षः । इति राज-
निर्घण्टः ॥

**भृङ्गी**, स्त्री, (भृ + गक् + नुट् + गौरादित्वात्
ङीष् ।) अतिविषा । इति राजनिर्घण्टः
॥

**भृङ्गी**, [न्] पुं, (भृङ्गः भृङ्गवद्वर्णोऽस्यास्तीति।
इनिः ।) वटवृक्षः । इति राजनिर्घण्टः
॥ शिव-
द्वारपालविशेषः । तत्पर्य्यायः ।
भृङ्गेरिटिः २
भृङ्गरीटः ३ शलः ४ नाडीदेहः ५
अस्थिविग्रहः
६ । इति त्रिकाण्डशेषः ॥ भृङ्गरिटिः ७
। इति

भृङ्गराजः कटुस्तिक्तो रूक्षोष्णः
कफवातनुत्।
केश्यस्त्वच्यः
कृमिश्वासकासशोथामयापहृत्॥
दन्त्यो रसायनो बल्यः कुष्ठनेत्रशिरोऽर्त्ति-
जित्॥”
इति भावप्रकाशः॥
पक्षिविशेषः। (यथा, महाभारते। ३।
१०८।७।
शकुनैश्च विचित्राङ्गैः कूजद्भिर्विविधा गिरः
।
भृङ्गराजैस्तथा हंसैर्दात्यूहैर्जलकुक्कुटैः
॥”)
भ्रमरः। इति मेदिनी। जे, ३४॥
यज्ञभेदः।
इति धरणिः॥

**भृङ्गरिटिः**, पुं, (भृङ्ग इव रटति इति। भृङ्ग + रट

+ इन्। पृषोदरादित्वादिकारागमः।)
शिव-
द्वारपालः। इति भूरिप्रयोगः॥

**भृङ्गरीटः**, पुं, (भृङ्गरिटि। पृषोदरात् ईत्वम्।)

शिवद्वारपालः। इति भूरिप्रयोगः॥

**भृङ्गरोलः**, पुं, (भृङ्ग इव रौति। भृङ्ग + रु +

बाहुलकात् ओलच्। अस्य
भृङ्गतुल्यशब्दत्वा-
त्तथात्वम्।) कीटविशेषः। भीम्रुल् इति
भाषा। तत्पर्य्यायः। विषसृक्का २
वरोलः ३
तृणषट्पदः ४। इति त्रिकाण्डशेषः॥

**भृङ्गवल्लभः**, पुं, (भृङ्गाणां वल्लभः प्रियः।) धारा-

कदम्बः। भूमिकदम्बः। इति
राजनिर्घण्टः॥

**भृङ्गवल्लभा**, स्त्री, (भृङ्गाणां वल्लभा।) भूमिजम्बूः।

इति राजनिर्घण्टः॥

**भृङ्गसोदरः**, पुं, (भृङ्गाणां सोदरस्तुल्यः।) केश-

राजः। इति त्रिकाण्डशेषः॥

मल्ली पद्मञ्च नीलञ्च तथा कृष्णापराजिता।
एषां पुष्पाणि केशेषु चतुर्जातिमहीभुजाम्॥
हीरकं पद्मरागश्च वैदूर्य्यं नीलमेव च।
चत्वारो मणयो धेयाश्चतुर्णां सेचनाम्भसि॥
इत्थं निश्चित्य यः कुर्य्यान् नृपतिः
सेकमात्मनः।
स चिरायुर्भवेद्भोगी इतोऽन्यस्त्वन्यथाचरन्॥”
इति युक्तिकल्पतरौ भृङ्गारोद्देशः॥

**भृङ्गारिः**, स्त्री, (भृङ्गं भृङ्गवद्वर्णमृच्छतीति। ऋ +

इन्।) केविकापुष्पम्। इति राजनिर्घण्टः॥

**भृङ्गारिका**, स्त्री, (भृङ्ग + ऋ + “कर्म्मण्यश्” ३।

२।१। इति अण्। भृङ्गारः ततः कन्। टाप्
अत इत्वञ्च।) झिल्लिका। यथा, --
“झिल्लीका झिल्लिका वर्षकरी भृङ्गारिका
च सा।”
इति हेमचन्द्रः। ४।८२॥

**भृङ्गारी**, स्त्री, (भृङ्गमियर्त्ति रूपेणानुकरोति

“कर्म्मण्यण्।” ३।२।१। इति अण्।
भृङ्गार-

भूरिप्रयोगः॥ तस्य जन्मकारणं यथा,
--
ईश्वर उवाच।
“रतिमात्रेण नोमायां मत्पुत्त्रः
संभविष्यति।
महामैथुनसंत्यागात् स्यादपुत्त्री च
पार्व्वती॥
तस्मादहन्तु देवानां
वचनाद्ब्रह्मणस्तथा।
त्यक्ष्ये महामैथुनन्तु किन्त्वेकं
करुतामराः!॥
येन मे सुमहत्तेजो महामैथुनकारणम्।
धार्य्यं तेजस्विनं देवमानयन्त्वमरास्तु
तम्॥
यो निष्कम्पो निर्व्विकारो भूत्वा तेजो
ग्रही-
ष्यति।
तन्मे वदन्तु त्रिदशास्त्यक्ष्ये तेजः
शरीरजम्॥”
श्रीऔर्व्व उवाच।
“वृषध्वजवचः श्रुत्वा देवा
ब्रह्मपुरोगमाः।
हरतेजोग्रहायाथ वीतिहोत्रं ययुर्ह्रिया॥
अथ ब्रह्माणमामन्त्र्य तथानुज्ञाप्य
पावकम्।
सेन्द्रा देवगणाः सर्व्वे हरमूचुरिदं वचः
॥”
श्रीदेवा ऊचुः।
“एष वैश्वानरः श्रीमान् भूरितेजोमयो
बली।
महामैथुनबीजन्तु त्वत्तेजः संग्रहीष्यति
॥
इत्युक्त्वा त्रिदशाः सर्व्वे बीतिहोत्रं
पुरःस्थितम्।
तस्मै निदेशयामासुः शम्भवे सर्व्वहेतवे
॥
ततः षडङ्गं स्वं रेतो व्यादिते दहनानने
।
उसत्सर्ज महाबाहुर्महामैथुनकारणम्॥
अग्नावुत्सृज्यमानस्य तेजसः
शशभृद्भृतः।

|  |  |  |
| --- | --- | --- |
|  |  | अणुद्वयमतिस्वल्पं गिरिप्रस्थे पपात ह ॥<br>तयोः कारणयोः सद्यः सम्भूतौ शङ्करात्मजौ ।<br>एको भृङ्गसमः कृष्णो भिन्नाञ्जननिभोऽपरः ॥<br>भृङ्गी तस्य तदा ब्रह्मा नाम भृङ्गीति चाकरीत् । |

महाकृष्णैकरूपस्य महाकालेति लोकभृत् ॥
ततस्तौ लालयामास शङ्करः प्रमथोत्करैः ।
अपर्णया चापि तथा क्रमात्तावभिवर्द्धितौ ॥
प्रवृद्धौ तौ महात्मनौ हरोमाप्रतिपालितौ ।
क्रमाद्गणेशौ कृत्वा तौ हरो द्वारि न्ययोजयत् ॥”
इति कालिकापुराणे ४५ अध्यायः ॥
तस्य वानरमुखत्वकारणं तच्छापेन हरपार्व्व त्योश्चापिमनुष्यजन्मग्रहणंयथा, --
“यदा सा नर्म्मणे याता गौरी स्मरहरान्तिकम् ।
तदा भृङ्गिमहाकालौ द्वाःस्थौ द्वारि प्रतिष्ठितौ ।
नर्म्मावसाने सा देवी मुक्तधम्मिल्लबन्धना ।
निःसृता रतिसङ्केतशालाया जलजानना ॥
तां निःसरन्तीं सहसा तथाभूतामनिन्दिताम्।
अयोग्यां वीक्षितुं चान्यैर्वृषध्वजमृते प्रियम् ॥
ददर्शतुर्महात्मानौ नातिहृष्टात्ममानसौ।
भृङ्गी चापि महाकालः प्राप्तकालश्च कोपतः ॥
दृष्ट्वा तौ मातरं दीनौ तदा भूतावधोमुखौ ।
चिन्ताञ्च जग्मतुस्तीव्रां निशश्वसतुरुत्तमम् ॥
तौ पश्यन्तौ तदा देवी ददर्श हिमवत्सुता ।
चुकोप च तदापर्णा वाक्यञ्चैतदुवाच ह ॥
एवम्भूतान्तु मां कस्मादसम्बद्धामपश्यताम्।
आराधय महादेवं सुप्रसन्नो भविष्यति ॥
यथा संभाषते भर्गः फलमेतत्तथा भवान् ।
करिष्यंति फलं राजन् ! भार्य्याभिस्तिसृभिः सह ॥
इत्युक्त्वा प्रययौ ब्रह्मा राजापि सह भीरुभिः ।
हरं यष्टुं समारेभे भक्त्या परमया युतः ॥
स तु वर्षद्वयेऽतीते महादेवो जगत्पतिः ।
पौष्यस्य नृपतेः सम्यक् प्रससादार्थसिद्धये ॥
ततः पुत्त्रार्थिनं भूपं प्रसन्नो वृषभध्वजः ।
ब्रह्मदत्तफलं हस्ते कृत्वेदं तमुवाच ह ॥
ईश्वर उवाच ।
इदं फलं ब्रह्मदत्तं विभज्य नृपते ! त्रिधा ।
भोजयेस्ताः स्वजायास्त्वं प्रहृष्टः सुस्थमानसः ॥
एकस्या जठरे शीर्षं भार्य्यायास्ते भविष्यति ।
अपरस्यास्तथा कुक्षौ मध्यभागो भविष्यति ।
अधो नाभ्यास्तु यो भागः सोऽपरस्यां भविष्यति ॥
ततः खण्डत्रयं भूप ! यथास्थानं पृथक् पृथक् ।
योजयिष्यति पश्चात्ते पुत्त्र एको भविष्यति ॥
ततः फले स्वयं देवः प्रविवेश वृषध्वजः ।
तत्क्षणात् तत् फलं भूतं त्रिभागं स्वयमेव हि ।
ततः समुचिते काले प्राप्ते ताभिस्तु भक्षितम् ॥
तत् फलं नृपशार्द्दूल ! गर्भाश्चाप्याहिताः शुभाः ।
सम्पूर्णे गर्भकाले तु गर्भेभ्यः समजायत ॥
पार्व्वती च स्वयं जाता नरयोनावनिन्दिता ॥
यथा भृङ्गी महाकाल एतयोरभवत् सुतः ।
तथा त्वं शृणु राजेन्द्र ! कथयामि समुद्भवम् ॥
अथोमया समं देवो वियता चन्द्रशेखरः ।
आजगाम तदा गच्छन् प्रासादं प्रतितं नृप ! ॥
ददृशेऽथ चरन्तीं तामुमायाः सदृशीं गुणैः ।
सर्व्वलक्षणसम्पूर्णां माधवस्येव माधवीम् ॥
तां दृष्ट्वा न्यगदद्देवीं गौरीं वृषभकेतनः ।
इयं ते मानुषी मूर्त्तिः प्रिये ! तारावतोति या ॥
भृङ्गी महाकालयोस्ते जन्मने विहिता स्वयम् ।
त्वत्तो ह्यनन्यकान्तोऽहं नान्यां गन्तुमिहोत्सहे ॥
त्वमिदानीं स्वयञ्चास्यां मूर्त्त्यां प्रविश भाविनि ! ।
तत उत्पादयिष्यामि महाकालञ्च भृङ्गिणम् ॥
श्रीदेव्युवाच ।
ममैव मानुषी मूर्त्तिरियं बृषभकेतन ! ।
विशामि तेऽत्र वचनादुत्पादय सुतद्वयम् ॥
प्रविवेश ततो देवी स्वयं तारावतीतनौ ।
महादेवोऽपि तस्यान्तु कामार्थं समुपस्थितः ॥
ततः सापर्णयाविष्टा देवी तारावती सती ।
कामयानं महादेवं स्वयमेवाभवन्मुदा ॥
कामावसाने तस्यान्तु सद्योजातं सुतद्वयम् ।
अभवन् नृपशार्द्दूल ! तथा शाखामृगाननम् ॥
ततस्तयोर्नाम चक्रे नारदो वचनान् नृप ! ।
ज्येष्ठो भैरवनामाभूत् भीरोः पुत्त्रो भयङ्करः ॥
वेतालसदृशः कृष्णो वेतालोऽभूत्तथापरः ।
इति चक्रे तयोर्नाम देवर्षिर्ब्रह्मणः सुतः ॥
अन्यांश्च सर्व्वसंस्कारान्नारदो मुनिसत्तमः ।
चकार क्रमशो वाक्याच्चन्द्रशेखरभूभृतः ॥”
इति कालिकापुराणे ४७ । ४८ । ४९ अध्यायेभ्यः संकलितम् ॥ तस्य जन्मनः प्रकारान्तरं यथा,
वेण उवाच ।
प्रपद्ये देवमीशानं त्वामजं चन्द्रभूषणम् ।
महादेवं महात्मानं विश्वस्य जगतः पतिम् ॥
अथैनमब्रवीद्देवस्त्रैलोक्याधिपतिर्भ्वः ।
आश्वासनकरञ्चास्य वाक्यविद्वाक्यमुत्तमम् ॥

भवन्तौ तनयौ शुद्धौ
ह्रीमर्य्यादाविवर्ज्जितौ ॥
तस्मादिमाममर्य्यादां भवन्तौ निरपत्रपौ
।
अकुर्व्वतां ततो भूयाद्भवतोर्जन्म मानुषे
॥
मानुषीं योनिमासाद्य ममावेक्षणदोषतः ।
भविष्यतो भवन्तौ तु शाखामृगमुखौ
भुवि ॥
तौ प्राप्तदुःखौ तु तदा विमनस्कौ
हरात्मजौ ।
शापं तस्या न सेहाते
प्रोचतुश्चेदमद्रिजाम् ॥
नियोजितौ यथा द्वारि महेशेन त्वया सह
।
तथा नियोगं कुर्व्वन्तौ तिष्टावो द्वारि
संयतौ ।
हठान्निःसरणं गेहात्तवैव न हि युज्यते ॥
तस्मात्तत्र प्रतीकारं शृणु मातरनिन्दिते !
।
त्वं मानुषी क्षितौ भूया हरो भवतु मानुषः
॥
मानुषस्य हरस्यावां जायायां हरतेजसा
।
भवत्याश्चापि मानुष्या
भविष्यावस्तथोदरे ॥
अथ काले व्यतीते तु सर्व्वज्ञो
वृषभध्वजः ।
तद्भावि कर्म्म ज्ञात्वैव मानुषो ह्यभवत्
स्वयम् ॥
ब्रह्मणो दक्षिणाङ्गुष्ठाद्दक्षो ब्रह्मसुतोऽभवत्
।
अदितिस्तत्सुता जाता ततः
पूषाह्वयोऽभवत् ॥
पूष्णः पुत्त्रोऽभवत् पौष्यः
सर्व्वशास्त्रार्थपारगः ।
यस्य तुल्यो नृपो भूमौ न भूतो न
भविष्यति ॥
स पुत्रहीनो राजाभूत् पौष्यो
नृपतिसत्तमः ।
खण्डत्रयं पृथक् राजा यथा भर्गेण
भाषितम् ।
तच्च खण्डत्रयं पौष्यो यथास्थानं
नियोज्य च ॥
एकं पिण्डं चकाराशु तत्र पुत्त्रो व्यजायत
।
तस्य शीर्षे तदा राजन् ! सहजेन्दुकला
शुभा ॥
तस्य नामाकरोद्राजा ब्राह्मणैः स्वैः
पुरोहितैः ।
चन्द्रशेखर इत्येवं कान्त्या चन्द्रसमप्रभः
॥
एवं तिसृणामम्बानां गर्भे जातो यतो हरः
।
अतस्त्र्यम्बकनामाभूत् प्रथितो
देवलोकयोः ॥”
इति कालिकापुराणे ४६ अध्यायः ॥
“अवतीर्णे महादेवे पौष्यजायासु
स्वेच्छया ।
मानुषेण प्रमाणेन तेन सम्बत्सरद्वये ।
गिरिजापि ककुत्स्थस्य राज्ञो
भार्य्यास्वजायत ॥”
“इक्ष्वाकुवंशजो राजा ककुत्स्थो नाम
धार्म्मिकः ।
तस्य भार्य्या महाभागा भर्गदेवस्य
पुत्त्रिका ॥
सा मनोन्मथिनी नाम्ना पूजिता
पतिबल्लभा ।
पुत्त्री न विद्यते तस्यास्तदर्थं सा
गृहान्तरे ।
निभृतं स्थण्डिलं कृत्वा चण्डिकां
समपूजयत् ॥
पूज्यमाना महादेवी चण्डिका
राजभार्य्यया ।
पार्व्वत्यपि स्वयं तस्या गर्भे काले विवेश
ह ॥
सा मनोन्मथिनी देवी सुषुवे तनयां
शुभाम् ।
तां दृष्ट्वा हारसंयुक्तां शरज्ज्योत्स्नोपमां
शुभाम् ॥
अहो तुष्टोऽस्मि ते राजन् ! स्तवेनानेन सुव्रत !
।
बहुनात्र किमुक्तेन मत्समीपे वसिष्यसि ॥
उषित्वा सुचिरं कालं मम गात्रोद्भवः पुनः ।
असुरो ह्यन्धको नाम भविष्यसि सुरान्तकृत् ॥
हिरण्याक्षगृहे जन्म प्राप्य वृद्धिं गमिष्यसि ।
पूर्ब्बाधर्म्मेण घोरेण वेदनिन्दाकृतेन च ॥
साभिलाषो जगन्मातुर्भविष्यसि यदा तदा ।
देहं शूलेन हत्वा ते पातयिष्यामि साध्विमम् ॥
तत्राप्यकल्मषो भूतः स्तुत्वा मां भक्तितः पुनः
।
प्राप्त्वा गणाधिपत्यं त्वं नाम्ना भृङ्गिरिति स्मृतः
।
मत्सन्निधाने स्थित्वा त्वं ततः सिद्धिं गमिष्यसि
॥”
ततः कालान्तरे अन्धककृतस्तवानन्तरं महा-
देववाक्यम् यथा, --
“सिद्धोऽसि दानवपते ! परितुष्टोऽस्मि
तेऽन्धक ! ।
वरं वरय भद्रं ते यमिच्छसि विनाम्बिकाम् ॥

| | | |
|---|---|---|
| शेषे वयसि संप्राप्ते भार्य्याभिस्तिसृभिः सह ॥<br>पौष्यः परमया भक्त्या ब्रह्माणं पर्य्यतोषयत् ।<br>तस्य प्रसन्नो भगवान् ब्रह्मा लोकपितामहः ॥<br>ब्रह्मोवाच ।<br>शृणु पौष्य ! यथा भावी पुत्त्रस्तव कुलोद्वहः ।<br>तदहं ते वदिष्यामि भार्य्याभिस्तत् समाचर ॥<br>इदं फलं गृहाण त्वं मया दत्तं नृपोत्तम ! ।<br>अजीर्णं बहुले काले प्राप्तेऽपि सुरसं सदा ॥<br>फलमेतत् समादाय यावत् संवत्सरद्वयम् । | ककुत्स्थो भार्य्यया सार्द्धमत्यन्तमुदितोऽभवत् ॥<br>तेनैव हारचिह्नेन तस्यां तारावतीति वै ।<br>नाम्नाकरोत् पिता काले यथोक्ते नृपसत्तम ! ॥<br>तस्यास्तु यौवनोद्भेदं दृष्ट्वा राजा सुतैः सह ।<br>ककुत्स्थः कारयामास समयेऽथ स्वयम्बरम् ।<br>स्वयं सा पार्व्वती देवी वव्रे च चन्द्रशेखरम् ॥<br>इति स्वयं महादेवो मानुषीं योनिमाश्रितः । | |

अन्धक उवाच ।
अम्बिका जननी मह्यं भगबांस्त्र्यम्बकः पिता ।
बन्दामि चरणौ मातुर्बन्दनीया ममाम्बिका ॥
वरदोऽसि यदीशान ! तद्यातु विलयं मम ।
शारीरं मानसं वाग्जं दुष्कृतं दुर्व्विचिन्तितम् ॥
तथा मे दानवो भावो ह्यपयातु महेश्वर ! ।
स्थिरा स्यात्तव भक्तिस्तु वरमेतं प्रयच्छ मे ॥
महेश्वर उवाच ।
एवं भवतु दैत्येन्द्र ! पापं ते यातु संक्षयम् ।
मुक्तोऽसि दैत्यभावाच्च भृङ्गी गणपतिर्भव ॥
इत्येवमुक्त्वा वरदः शूलाग्रादवतार्य्य तम् ।
निर्म्मार्ज्य निजहस्तेन चक्रे निर्व्रणमन्धकम् ॥
ततः स्वदेहतो देवान् ब्रह्मादीनाजुहाव सः ।
ते निश्चेरुर्महात्मानो नमस्यन्तस्त्रिलोचनम् ॥
गणान् स नन्दी चाहूय सन्निवेश्य तदग्रतः ।
भृङ्गिणं दर्शयामास ब्रुवन्नेषोऽन्धकेति हि ॥
ते दृष्ट्वा दानवपतिं संशुष्कपिशितं रिपुम् ।
गणाधिपत्यमापन्नं प्रशशंसुर्वृषध्वजम् ॥"
इति वामनपुराणे । ४४ । ४५ । ६७ अध्यायेभ्यः सङ्कलितम् ॥

**भृङ्गीफलः**, पुं, (भृङ्ग्याः अतिविषायाः फलमिव फलं यस्य ।) आम्रातकवृक्षः । इति राज-

विधं प्रोक्तमदत्तं षोडशात्मकमिति प्रतिपाद्य दत्तादत्तयोः स्वरूपं विवृतम् ।
"पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात् प्रत्युपकारतः ।
स्त्रीशुल्कानुग्रहार्थञ्च दत्तं दानविदो विदुः ॥"
इति मिताक्षरा ॥

**भृतिभुक्**, [ज्] पुं, (भृत्या भुङ्क्ते उपजीवतीत्यर्थः । भुज् + कर्त्तरि क्विप् ।) भृतकः । इत्यमरः । २ । १० । १५ ॥

**भृत्यः**, पुं, (भ्रियते इति । भृ + "भृञोऽसंज्ञायाम् ।" ३ । १ । ११२ । इति क्यप् । "ह्रस्वस्य पिति कृति तुक् ।" ६ । १ । ७१ । इति तुगागमश्च ।) दासः । इत्यमरः । २ । १० । १७ ॥
(तथास्य पर्य्यायान्तरम् ।
"परिकर्म्मा परिचरः सहायः परिचारकः ।
प्रेष्यो भत्य उपस्थाता सेवकोऽभिषवोऽनुगः ॥"
इति वैद्यकरत्नमालायाम् ॥)
तस्य लक्षणं यथा, --
सूत उवाच ।
"भृत्या बहुविधा ज्ञेया उत्तमाधममध्यमाः ।
नियोक्तव्या यथार्थेषु त्रिविधेष्वेव कर्म्मसु ॥
भृत्यपरीक्षणं वक्ष्ये यस्य यस्य हि यो गुणः ।
तमिमं संप्रवक्ष्यामि यद्यदा कथितानि च ॥
यथा चतुर्भिः कनकं परीक्ष्यते तुलाघर्षणच्छेदनतापनेन ।
तथा चतुर्भिर्भृतकः परीक्ष्यते श्रुतेन शीलेन कुलेन कर्म्मणा ॥"
कुलशीलगुणोपेतः सत्यधर्म्मपरायणः ।
रूपेण सुप्रसन्नश्च राज्याध्यक्षो विधीयते ॥
मूल्यरूपपरीक्षाकृद्भवेद्रत्नपरीक्षकः ।
बलाबलपरिज्ञाता सेनाध्यक्षो विधीयते ॥
इङ्गिताकारतत्त्वज्ञो बलवान् प्रियदर्शनः ।
अप्रमादी प्रमाथी च प्रतीहारः स उच्यते ॥
मेधावी वाक्पटुः प्राज्ञः सत्यवादी जितेन्द्रियः ।

**भृमिः**, पुं, (भ्रमति भ्राम्यति वेति । भ्रम् + "भ्रमेः संप्रसारणञ्च ।" उणा० ४ । १२० । इति इन् कित् सम्प्रसारणञ्च ।) वायुविशेषः । घूरणा वातास इति भाषा । जलादिभ्रमणम् । इत्युणादिकोषः ॥ (त्रि, कर्म्मनिर्व्वाहकः । यथा, ऋग्वेदे । १ । ३१ । १६ ।
"आपिः पिता प्रमतिः सोम्यानां मृमिरस्यृषिकृन्मर्त्त्यानाम् ॥"
"भृमिर्भ्रामकः कर्म्मनिर्व्वाहक इत्यर्थः ।" इति तद्भाष्ये सायनः ॥ भ्रमणशीलः । यथा, ऋग्वेदे । ३ । ६२ । १ ।
"इमा उवां भृमयो मन्यमाना युवावते न तुज्या अभूवन् ॥"
"भृमयः भ्रमणशीलाः ॥" इति तद्भाष्ये सायनः ॥
वीणाविशेषे स्त्री । यथा, ऋग्वेदे । २ । ३४ । १ ।
"अग्नयो न शुशुचाना ऋजीषिणो भृमिं धमन्तो अपगा अवृण्वत ॥"
"यद्वा, भृम्याख्यो वीणाविशेषस्तं धमन्तो वादयन्तः ॥" इति तद्भाष्ये सायनः ॥)

**भृश**, इर् य उ अधःपते । इति कविकल्पद्रुमः ॥ (दिवा०-पर०-अक०-सेट् ।) इर् अभृशत् अभर्शीत् । पुषादित्वान्नित्य ङ इत्यन्ये । य भृश्यति भृश्यत्यरिपताकिनीति हलायुधः ॥ उ भर्शित्वा भृष्ट्वा । इति । दुर्गादासः ॥

**भृशं**, क्ली, (भृश्यति प्राचुर्य्येण वर्त्तते इति भृश + कः ।) अतिशयः । तद्वति, त्रि । इत्यमरः १ । ७० ॥ (यथा, भारवौ । ११ । ४६ ।

निर्घण्टः ॥

**भृङ्गीशः**, पुं, (भृङ्गिणो भृङ्गेर्वा ईशः ।) महा-

देवः । इति शब्दरत्नावली ॥

**भृङ्गेरिटिः**, पुं, (भृङ्गे भृङ्गविषये रिटति । अभि-

लषतीति । भृङ्गे + रिट् कर्त्तरि इः ।
अलुक्
समासः ।) भृङ्गी । इति त्रिकाण्डशेषः ॥

**भृङ्गेष्टा**, स्त्री, (भृङ्गाणामिष्टा ।) घृतकुमारी ।

भार्गी । तरुणी । काकजम्बूः । इति राज-
निर्घण्टः ॥

**भृज** ई ङ भर्जने । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-सक०-सेट् ।) भर्जनं
पाकविशेषः । ई
भृक्तः । ङ भर्जते तण्डुलान् जनः । इति
दुर्गा-
दासः ॥

**भृज्जनः**, पुं, (भृज्यन्ते तण्डुलादयोऽस्मिन्निति ।

भ्रस्ज् + "भूसूधूभ्रस्जिभ्यश्छन्दसि ।"
उणा०
२ । ८० । इति क्युन् ।) अम्बरीषः ।
इति
उणादिकोषः । भाजना खोला इति भाषा
॥

**भृतः**, त्रि, भरणीयः । इत्याह्निकतत्त्वम् । पुष्टः ।

इति भृधातोः कर्म्मणि क्तप्रत्ययेन
निष्पन्नम् ॥

**भृतकः**, पुं, (भ्रियते इति । भृ + कर्म्मणि क्तः ।

ततः स्वार्थे कन् । यद्वा, भृतेन वेतनेन
उपजीव-
तीति कन् ।) वेतनोपजीविकर्म्मकर्त्ता ।
तत्-
पर्य्यायः । भृतिभुक् २ कर्म्मकरः ३
वैतनिकः ४ ।
इत्यमरः । २ । १० । १५ ॥ (यथा,
मनौ । ३ । १५६ ।
"भृतकाध्यापको यश्च
भृताध्यापितस्तथा ॥")

सर्व्वशास्त्रसमालोकी ह्येष साधुः स लेखकः
॥
बुद्धिमान् मतिमांश्चैव परचित्तोपलक्षकः ।
क्रूरो यथोक्तवादी च एष दूतो विधीयते ॥
समस्तकृतशास्त्रज्ञः पण्डितोऽथ जितेन्द्रियः ।
शौर्य्यवीर्य्यगुणोपेतो धर्म्माध्यक्षो विधीयते ॥
पितृपैतामहो दक्षः शास्त्रज्ञः सत्यवाचकः ।
शौचयुक्तः सदाचारी सूपकारः स उच्यते ॥
आयुर्व्वेदकृताभ्यासः सर्व्वज्ञः प्रियदर्शनः ।
आर्य्यशीलगुणोपेतो वैद्य एष विधीयते ॥
वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायणः ।
आशीर्व्वादपरो नित्यमेष राजपुरोहितः ॥
इति गारुडे ११२ अध्यायः ॥

**भृत्या**, स्त्री, (भ्रियतेऽनया भरणमिति वा । भृ +

"संज्ञायां समजनिषद्निपतमनविदषुञ्शीङ्
भृञिणः ॥" ३ । ३ । ९९ । इति क्यप् ।
स्त्रियां
टाप् ।) वेतनम् । इत्यमरः । २ । १० । ३८ ॥
(भरणक्रिया । यथा, ऋग्वेदे । १ । ८४ । १६
।
"आसन्निषून् हृत्स्वसोमयो भून्य
एषां भृत्यामृणधत्स जीवात् ॥")

"भृशमाराधने यत्तः स्वाराध्यस्य
मरुत्वतः ॥"

**भृशम्**, व्य, (भृश + कः ।) प्रकर्षार्थः । मुहुरर्थः ।

शोभनम् । इति शब्दरत्नावली ॥

**भृषत्**, [द्] पुं, पाषाणः । इति शब्दरत्नावली ॥

**भृष्टः**, त्रि, (भ्रस्ज + कर्म्मणि क्तः ।) जलोपसेकं

विना पक्वः । इति हेमचन्द्रः ॥ भाजा
इति
भाषा ॥

**भृष्टतण्डुलः**, पुं, (भृष्टश्चासौ तण्डुलश्चेति कर्म्म-

धारयः ।) भर्जनविशिष्टधान्यनिकरः ।
चाल
भाजा इति भाषा ॥ अस्य गुणाः ।
"सुगन्धिः कफहारूक्षः पित्तलो
भृष्टतण्डुलः ॥"
इति राजवल्लभः ॥

**भृष्टयवः**, पुं, (भृष्टश्चासौ यवश्चेति ।) भर्ज्जन-

विशिष्टयवः । यव भाजा इति भाषा ।
तत्-
पर्य्यायः । धानाः २ । इत्यमरः ॥
वाट्टकम् ३ ।
इति शब्दचन्द्रिका ॥ अस्य गुणा
धानाशब्दे
द्रष्टव्याः ॥

**भृष्टान्नं**, क्ली, (भृष्टं अन्नम् ।) भृष्टतण्डुलः ।

मुडि इति भाषा । तत्पर्य्यायः । कुहरम्
२
न्याट्यम् ३ । इति शब्दचन्द्रिका ॥

**भृष्टिः**, स्त्री, (भ्रस्ज् + भावे क्तिन् ।) भर्जनम् ।

शून्यवाटिका । इति मेदिनी । टे, २५ ॥

**भॄ** गि भृतौ । भृजि । भर्त्से । इति कविकल्पद्रुमः ॥

(क्र्या०-पर०-सक०-सेट् ।) गि भृणाति
भूर्णः ।
भूर्णिः । भृजि भर्जने । इति दुर्गादासः ॥

| भृतिः, स्त्री, (भ्रियते अनयेति । भृ + क्तिन् ।)<br>वेतनम् । इत्यमरः । २ । १० । ३८ ॥<br>मूल्यम् ।<br>भरणम् । इति मेदिनी । ते, ४२ ॥<br>भृतिर्वेतनं<br>कृतकर्म्मणे दत्तम् । तत्तु<br>सप्तविधदत्तान्तर्गत-<br>दत्तविशेषः । यथा नारदेन च । दत्तं सप्त- | | |
|---|---|---|

**भेकः**, पुं, (बिभेति इति । भी + “इण्भीका-
पाशल्यतीति ।” उणा० । ३ । ४३ । इति
कन् ।
जन्तुविशेषः । व्याङ् इति भाषा । तत्-
पर्य्यायः । मण्डूकः २ वर्षाभूः ३ शालूरः ४
प्लवः ५ दर्दुरः ६ । इत्यमरः । १ । १० ।
२४ ॥ वृष्टिभूः
७ सालूरः ८ । इति तट्टीका ॥ प्लवङ्गमः ९
व्यङ्गः १० प्लवगः ११ शल्लः १२ नन्दनः
१३
गूढवर्च्चाः १४ अजिह्वः १५ जिह्मोहनः
१६ । इति शब्दरत्नावली ॥ नन्दकः १७
कृता-
लयः १८ रेकः १९ । इति त्रिकाण्डशेषः ॥
मण्डः
२० हरिः २१ लुलुकः २२ । क्वचित्
पुस्तके
लूलकोऽपि पाठः । शालूकः २३ कटुरवः
२४ ।
अस्य मांसगुणाः । सद्योबलकरत्वम् । श्रम-
तृड्दाहप्रमेहक्षयकुष्ठच्छर्द्दिनाशित्वञ्च । इति
राजनिर्घण्टः ॥ मेघः । इति मेदिनी । के, ३०
॥
(यथा, आर्य्यासप्तशत्याम् । ४५१ ।
“संवृणुतेऽद्रीनुदधिर्न्निदाघनद्यो न भेकमपि
॥”)

**भेकटः**, पुं, (भेक इव टलति । भेक + टल + डः ।)
मत्स्यभेदः । यथा । तुल्यौ भेकटवेकटौ ।
इति
द्विरूपकोषः ॥

**भेकनिः**, पुं, मत्स्यविशेषः । भाङ्गन इति भाषा ।
अस्य गुणाः । मधुरत्वम् । शीतत्वम् । वृष्य-
त्वम् । श्लेष्मकरत्वम् । गुरुत्वञ्च । इति राज-
वल्लभः । भेकलिः । इति च पाठः ॥

**भेकपर्णी**, स्त्री, (भेकाकृति पर्णमस्याः ङीष् ।)
मण्डूकपर्णी । इति केचित् ॥ (यथा, --
“तत्सर्व्वं कन्यकाद्रावैर्म्मर्द्दयेद्भावयेत्तथा ।
भेकपर्णीरसेनैव गुञ्जाद्वयवटीं हिताम् ॥”

**भेदः**, पुं, (भिद् + घञ् ।) शत्रुवशीकरणोपाय-
चतुष्टयान्तर्गततृतीयोपायः ।
तत्पर्य्यायः ।
उपजापः २ । इत्यमरः । २ । ८ ।
२१ ॥ परतो
विश्लेष्य आत्मसात् करणंभेदः । इति
भरतः ॥
तद्विशेषो यथा, --
मत्स्य उवाच ।
“परस्परन्तु ये दुष्टाः क्रुद्धा
भीतावमानिताः ।
तेषां भेदं प्रयुञ्जीत भेदसाध्या हि ते
मताः ॥
ये तु येनैव दोषेण परस्मान्नापि
बिभ्यति ।
ते तु तद्दोषपातेन भेदनीया भृशं ततः
॥
आत्मीयां दर्शयेदाशां
परस्माद्दर्शयेद्भयम् ।
एवं हि दर्शयेद्भिन्नान् यथावद्वशमानयेत्
॥
संहता हि विना भेदं शक्रेणापि
सुदुःसहाः ।
भेदमेव प्रशंसन्ति तस्मान्नयविशारदाः
॥
स्वमुखेनाश्रयेद्भेदं भेदं परमुखेन च ।
परीक्ष्य साधु मन्येत भेदं
परमुखाच्छ्रुतम् ॥
भेद्याः स्वकार्य्यमुद्दिश्य कुशलैर्ये हि
भेदिताः ।
भेदितास्ते विनिर्द्दिष्टा नैव
राजार्थवादिभिः ॥
अन्तःकोपो बहिःकोपो यत्र स्यातां
मही-
क्षिताम् ।
अन्तःकोपो महांस्तत्र नाशकः
पृथिवीक्षिताम् ॥
सामन्तकोपो बाह्यस्तु कोपः प्रोक्तो
मनीषिभिः ।

**भेदकः**, त्रि, (भिद् + ण्वुल् ।) विदारकः । यथा,
मनौ । ९ । २८५ ।)
(“संक्रमध्वजयष्टीनां प्रतिमानाञ्च भेदकः ।
प्रतिकुर्य्याच्च तत् सर्व्वं पञ्च दद्याच्छतानि च ॥”
विरेचकौषधादिः । (विरेचकौधार्थे विषयो यथा,
“नवज्वरे च ये योगा भेदकाः परिकीर्त्तिताः ।
ते तथैव प्रयोक्तव्या वीक्ष्य देहमलादिकम् ॥”
इति वैद्यकरसेन्द्रसारसंग्रहे विरेकाधिकारे ॥)
पृथक्कारकः । यथा । “भेदयति अन्यपदार्थं
पृथक् करोतीति भेदकं नाम्ना शिवः गोत्रेण
गार्ग्यः ।” इति कारकटीकायां दुर्गादासः ॥
अपि च ।
“भेद्यभेदकयोः श्लिष्टं सम्बन्धोऽन्योन्यमिष्यते ।
द्विष्ठो यद्यपि सम्बन्धः षष्ठ्यत्पत्तिस्तु भेदकात्
॥”
इति कलापटीकाधृतभर्त्तृहरिकारिका ॥
(“सामान्यस्य भेदको विशेषः प्रकारः ।” इति च
५ । ३ । ६९ । इत्यस्य । काशिकावृत्तिः ॥)

**भेदनं**, क्ली, (भिद्यतेऽनेनेति भिद् + ल्युट् ।)
हिङ्गु । इति राजनिर्घण्टः ॥ विदारणम् ।
इति भिदधातोभविऽनट् प्रत्ययेन निष्पन्नम् ॥
(भेदकारके, त्रि ॥ यथा, भागवते । ३ । २६ । २ ।
“यदाहुर्वर्णये तत् ते हृदयग्रन्थिभेदनम् ।
“अहङ्कारनिवर्त्तकमिति स्वामिव्याख्यानम् ॥”
विरेचनकारके च । यथा च सुश्रुते । १ । १८८ ।
१४ ॥
सर्व्वं पित्तकरं मद्यमम्लं दीपनरोचनम् ।
भेदनं कफवातघ्नं हृद्यं वस्तिविशोधनम् ॥”)

**भेदनः**, पुं, (“भिद्यतेऽनेनेति ।” भिद + ल्युट् ।)
अम्लवेतसः ॥ (भिनत्ति भूमिमिति । ल्युः ॥
शूकरः । इति राजनिर्घण्टः ॥

**भेदितः**, त्रि, (भिद + णिच् + कर्म्मणि क्तः ।)
भिन्नः । दारितः । इत्यमरः । ३ । १ । १०० ॥

**भेदी**, [न्] पुं, (भेत्तुं शीलमस्येति । भिद + णिनिः ।)
अम्लवेतसः । इति राजनिर्घण्टः ॥ (गुणादयो-
ऽस्याम्लवेतसशब्दे विज्ञेयाः ॥)
भेदकर्त्तरि तद्विशिष्टे च त्रि ॥ (यथा भागवते ।
३ । १५ । ३३ ।

इति वैद्यकरसेन्द्रसारसंग्रहे बृहत्सोमनाथ-
रसे ॥)

**भेकभुक्** [ज्] पुं, (भेकं भुङ्क्ते इति । भुज् +
क्विप् । सर्पः । इति त्रिकाण्डशेषः ॥

**भेकी**, स्त्री, (भेक + "जातेरस्त्रीविषयादयोप-
धात् ।" ४ । १ । ६३ । इति ङीष् ।)
भेकप्रिया ।
तत्पर्य्यायः । शिली २ गण्डुपदी ३ वर्षाभ्वी
४
इत्यमरः । १ । १० । २४ ॥
अन्येऽपीबन्तभेक-
पर्य्याया एतद्वाचकाः । मण्डुकपर्णीवृक्षः ।
इति
रत्नमाला ॥ (यथास्याः पर्य्यायान्तरम् ।
"भेकी मण्डूकपर्णी च मण्डूकी मूलपर्ण्यपि
॥"
इति रत्नमालायाम् ॥)

**भेडः**, पुं, (भी + बाहुलकात् डः । अस्येत्त्वम् न
गुणत्वं च ।) मेषः । इति हेमचन्द्रः । ४ ।
३४३ ।
अस्य भाषा भेडा ॥

**भेडी**, स्त्री, (भेड + ङीष् ।) भेडभार्य्या । अवी ।
अस्या दुग्धगुणाः ।
"आकिकं लवण स्वादु
स्निग्धोष्णञ्चाश्मरीप्रणुत् ।
अहृद्यं तर्पणं केश्यं शुक्रपित्तकफप्रदम् ॥
गुरुकासेऽनिलोद्भूते केवले चानिले वरम् ।"
इति भावप्रकाशः ॥

**भेत्ता**, [ऋ] त्रि, (भिनत्तीति । भिद + तृच् ।)
भेदकर्त्ता । यथा, व्यवहारतत्त्वे ।
"कुद्दालपाणिविज्ञेयः सेतुभेत्ता समीपतः ॥"
महिषीयुवराजाभ्यां तथा सेनापतेर्नृप !
॥
अमात्यमन्त्रिणाञ्चैव राजपुत्त्रात्तथैव च
।
अन्तःकोपो विनिर्द्दिष्टो दारुणः
पृथिवीक्षिताम् ॥
वाह्यकोपे समुत्पन्ने सुमहत्यपि
पार्थिवः ।
शुद्धान्तस्तु महाभाग ! शीघ्रमेव जयी
भबेत् ॥
अपि शक्रसमो राजा अन्तःकोपेन
नश्यति ।
सोऽन्तःकोपःप्रयत्नेन
तस्माद्रक्षेन्महीक्षिता ॥
परतः कोपमुत्पाद्य भेदेन विजिगीषुणा
।
ज्ञातीनां भेदनं कार्य्यं परेषां
विजिगीषुणा ॥
रक्ष्यश्चैव प्रयत्नेन
ज्ञातिभेदस्तथात्मनः ।
ज्ञातयः परितप्यन्ते सततं परितप्य
यम् ॥
तथापि तेषां कर्त्तव्यं सुगम्भीरेण
चेतसा ।
ग्रहणं दानमानाभ्यां भेदस्तेभ्यो
भयङ्करः ॥
न ज्ञातिरनुगृह्णाति न
ज्ञातिर्दग्धुमिच्छति ।
ज्ञातिभिर्भेदनीयास्तु रिपवस्तेन
पार्थिवैः ॥
भिन्ना हि शक्या रिपवः प्रभूताः
स्वल्पेन सैन्येन निहन्तुमाजौ ।
सुसंहतानां हि ततस्तु भेदः
कार्य्यो रिपूणां नयशास्त्रविद्भिः ॥"
इति मात्स्ये राजधर्म्मे २२२
अध्यायः ॥ * ॥
द्वैधः । विशेषः । विदारणम् । इति
मेदिनी ।
ने, १२ ॥ (तथा च कामन्दकीये ।
१५ । १६ ।
"पुरश्च पश्चाच्च यदा समर्थ-
स्तदाभियायान्महते फलाय ।
पुनः प्रसर्पन्नविशुद्धपृष्ठः
"व्युत्पादितं ह्युदरभेदि भयं यतोऽस्य ॥")

**भेदुरं**, क्ली, (भिदुर + पृषोदरादित्वात् साधुः ।)
भिदुरम् । वज्रम् । इति द्विरूपकोषः ॥

**भेरः**, पुं, (बिभेत्यस्मादिति । भी + ऋज्रेन्द्राग्र-
वज्रेति । उणा० । २ । २८ । इति रन् ।)
पटहः । भेरी । दुन्दुभिः । इति संक्षिप्तसारो-
णादिवृत्तिः ॥

**भेरिः**, स्त्री, (बिभ्यति शत्रवोऽस्या इति । भी +
"वङ्क्र्यादयश्च ।" उणा० । ४ । ६६ । इति क्रिन्
।
बाहुलकाद् गुणः ।) बृहड्ढक्का । तत्पर्य्यायः ।
आनकः २ दुन्दुभिः ३ । इत्यमरः । १ । ७ । ६ ॥
भेरी ४ आनकदुन्दुभिः ५ आनकदुन्दुभी ६ ।
इति तट्टीकायां भरतः ॥ (यथा, "यतो भेरि-
वेणुवीणामृदङ्गतालपटहशङ्खकाहलादिभेदेन
शब्दा अनेकविधाः ।" इति पञ्चतन्त्रे प्रथम-
तन्त्रम् ॥)

| | | |
|---|---|---|
| | प्राप्नोति तीव्रं खलु पार्ष्णिभेदम् ॥”)<br>विरेकः । यथा, हास्यार्णवनाटके ।<br>“काशे धूमस्तुषाणां बलवति मरुते<br>स्वेदभेदोपवासा<br>वह्नेर्म्मान्द्ये च पिष्टं सपिशितमनिशं<br>वारिपानं<br>कफर्त्तौ ॥” | |

**भेरी**, स्त्री, (बिभ्यति शत्रवोऽस्या इति । भी + क्रिन् । कृदिकारादिति पक्षे ङीप् ।) भेरी ।
इत्यमरटीकायां भरतः ॥
वराह उवाच ।
"भेरीशब्दमकृत्वा तु यस्तु मां प्रतिबोधयेत् ।
बधिरो जायते भूमे ! जन्मैकञ्च न संशयः ॥
तस्य वक्ष्यामि सुश्रोणि ! प्रायश्चित्तं मम प्रियम् ।
किल्विषाद् येन मुच्येत भेरीताडनमोहितः ॥
यस्य कस्यचिन्मासस्य शुक्लपक्षे तु द्वादशीम् ।
आकाशशयनं कृत्वा शीघ्रं मुच्येत किल्बिषात् ॥
य एतेन विधानेन वसुधे ! कर्म्म कारयेत् ।
अपराधं न गच्छेत मम लोकाय गच्छति ॥"
इति वराहपुराणे भेरीताडनापराधप्रायश्चित्तम् ॥
(यथा च, सुश्रुते । २ । २७६ । ९ ।
"एतेन भेर्य्यः पटहाश्च दिग्धा
नानद्यमाना विषमाशु हन्युः ॥")

**भेरुण्डं**, क्ली, गर्भधारणम् । भयानके, त्रि । इति शब्दरत्नावली ॥

**भेरुण्डा**, स्त्री, (भेरुण्ड + टाप् ।) देवताविशेषः । यक्षिणीभेदः । इति मेदिनी । डे, ३४ ॥ सा देवता काली । यथा, --
"त्रिकोणनिलया नित्या परमामृतरञ्जिता ।
महाविद्येश्वरी श्वेता भेरुण्डा कुलसुन्दरी ॥"

तत्र प्रथमः कालः ।
'प्रायः पित्तकफोद्रेके विरेकवमनार्थयोः ।
लेखनार्थे च भैषज्यं प्रभाते नान्नमाहरेत् ॥'
अथ द्बितीयः कालः ।
'भैषज्यं विगुणेऽपाने भोजनाग्रे प्रशस्यते ।
अरुचौ चित्रभोज्यैश्च मित्रं रुचिरमाहरेत् ॥
समानवाते विगुणे मन्देऽग्नौ वह्निदीपनम् ।
दद्याद्भोजनमध्ये च भैषज्यं कुशलो भिषक् ॥
व्यानकोपे तु भैषज्यं भोजनान्ते समाहरेत् ।
हिक्काक्षेपककम्पेषु पूर्ब्बमन्ते च भोजनात् ॥'
अथ तृतीयः कालः ।
'उदाने कुपिते वाते स्वरभङ्गादिकारिणि ।
ग्रासग्रासादिकं देयं भैषज्यं साध्यभोजने ॥
प्राणे प्रदुष्टे साध्यस्य भुक्तस्यान्ते प्रदीयते ।
औषधं प्रायशो धीरैः कालोऽयं स्यात् तृतीयकः ॥'
अथ चतुर्थः कालः ।
मुहुर्मुहुश्च तृट्छर्द्दिहिक्काश्वासगरेषु च ।
सान्नञ्च भेषजं दद्यादिति कालचतुर्थकः ॥'
अथ पञ्चमः कालः ।
'ऊर्द्ध्वगन्तु विकारेषु लेखने वृंहणे तथा ।
पाचने शयने देयमनन्तं भेषजं निशि ॥'
इति पञ्चमः कालः ॥
निरन्नस्य भेषजस्य गुणमाह ।
'वीर्य्याधिकं भवति भेषजमन्नहीनं
हन्यात्तदामयमसंशयमाशु चैव ॥
तद्बालवृद्धयुवतीमृदुभिश्च पीतं
ग्लानिं परां नयति चाशु बलक्षयञ्च ॥'
सान्नस्य भेषजस्य गुणमाह ।
'शीघ्रं विपाकमुपपत्तिबलंन्न हिंस्या-
दन्नावृतं न च मुहुर्वदनान्निरेति ।
एतद्धितं स्थविरबालकृशाङ्गनाभ्यः
प्राग्भोजनाद्यदशितं किल तच्च तद्वत् ॥'
तद्वत् अन्नावृतवत् भेषजमिति शेषः ।
'औषधशेषे भुक्तं भोजनशेषे यदौषधं पीतम् ।
न करोति गदोपशमं प्रकोपयत्यन्यरोगांश्च ॥'
पीतमित्युपलक्षणम् । लीढादि च ।
'अनुलोमोऽनिलः स्वास्थ्यं क्षुत्तृष्णासुमनः कुतः ।
लघुत्वमिन्द्रियोद्गारशुद्धिजीर्णौषधाकृतिः ॥
क्लमो दाहोऽङ्गसदनं भ्रममूर्च्छाशिरोरुजः ।
निःक्षिप्याचम्य सलिलं ताम्बूलाद्युपयोजयेत् ॥'
अथ भेषजानां विधानानि ।
'स्वरसश्च तथा कल्कः क्वाथश्च हिमफाण्टकौ ।
ज्ञेयाः कषायाः पञ्चैते लघवः स्युर्यथोत्तरम् ॥'
तत्रादौ स्वरसविधिः ।
'आहतात्तत्क्षणाकृष्टात् द्रव्यात् क्षुण्णात् समुद्भवे ।
वस्त्रनिष्पीडितो यश्च स्वरसो रस उच्यते ॥'
अथ कल्कविधिः ।
'द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा सजलं भवेत् ।
प्रक्षिप्य गालयेद्वस्त्रे तन्मानं कर्षसम्मितम् ॥
कल्के मधु घृतं तैलं देयं द्विगुणमात्रया ।
सितां गुडं समं दद्याद्द्रवा देयाश्चतुर्गुणाः ॥'
अथ क्वाथविधिः ।
'पानीयं षोडशगुणं क्षुण्णे द्रव्यपले क्षिपेत् ।
मृत्पात्रे क्वाथयेद्ग्राह्यमष्टमांशावशेषितम् ॥
कर्षादौ तु पलं यावद्दद्यात् षोडशिकं जलम् ॥
षोडशिकं षोडशगुणम् ॥ * ॥
अथ हिमविधिः ।
'क्षुण्णं द्रव्यपलं सम्यक् षड्भिर्नीरपलैः प्लुतम् ।
निशोषितं हिमः स स्यात्तथा शीतकषायकः ॥
अथ फाण्टविधिः ।
'क्षुण्णद्रव्यपले सम्यक् जलमुष्णं विनिःक्षिपेत् ।
मृत्पात्रे कुडवोन्मानं ततस्तु श्रावयेत् पुटात् ॥
स स्यात् चूर्णद्रवः फाण्टस्तन्मानं द्विपलोन्मितम् ।
क्षौद्रं सिता गुडादींस्तु कर्षमात्रान् विनिःक्षिपेत् ॥' * ॥
अथ तण्डुलजलविधिः ।
'कण्डितं तण्डुलपलं जलेऽष्टगुणिते क्षिपेत् ।
भावयित्वा जलं ग्राह्यं देयं सर्व्वत्र कर्म्मसु ॥'
अथ मन्थविधिः ।
'जले चतुष्पले शीते क्षुण्णं द्रव्यपलं क्षिपेत् ।
मृत्पात्रे मन्थयेत् सम्यक तस्माच्च द्विगुणं पिबेत् ॥'
अथ चूर्णविधिः ।
'अत्यन्तशुष्कं यद्द्रव्यं सुपिष्टं वस्त्रगालितम् ।

इति कालीकुलसर्व्वस्वे

श्रीशिवपरशुरामसंवादे

आद्यायाः सहस्रनामस्तोत्रम् ॥

**भेलं**, त्रि, (भी + "ऋजेन्द्राग्रवज्रेति ।" उणा० २ ।

२८ । इति रन् रस्य लत्वम् ।) भीरुः

। मूर्खः ।

इति मेदिनी । ले, ४३ ॥ चञ्चलः ।

इति शब्द-

रत्नावली ॥

**भेलः**, पुं, (भी + रन् लत्वम् ।) प्लवः । मुनिविशेषः ।

इति मेदिनी । ले, ४३ ॥ भेलकम् ।

इति

संक्षिप्तसारोणादिवृत्तिः ॥

**भेलकः**, पुं, क्ली, (भेल + स्वार्थे कन् ।) नद्यादि

तरणसाधन्वस्तु । भेला इति भाषा ।

तत्-

पर्य्यायः । प्लवः २ कोलः ३ उडूपम्

४ उडुपम्

५ तरणः ६ तारणः ७ तारकः ८ ।

इति

शब्दरत्नावली ॥ तरीषः ९ । इति

जटा-

धरः ॥

**भेष**, ऋ ञ भये । इति कविकल्पद्रुमः ॥ (भ्वा०-

उभ०-अक०-सेट् ।) ऋ अबिभेषत् ।

ञ भेषति

भेषते बिभेषे । इति दुर्गादासः ॥

**भेषजं**, क्ली, (भिषजोवैद्यस्येदमित्यण् निपा-

तनादेत्वम् । यद्वा, भेषं रोगं जयतीति

। जि +

डः । औषधम् । इत्यमरः । २ । ६ ।

५० ॥

("अस्ति भेषजोजलाषः ।" इति

ऋक्संहिता ।

२ । ३३ । ७ ।) अथ

भेषजभक्षणसमयाः ।

अरतिर्बलहानिश्च सावशेषौषधाकृतिः ॥'

अथ भेषजभक्षणविधिमाह चरकः ।

'देवान् गुरूंस्तथा विप्रान् पूजयित्वा प्रणम्य च ।

आशिषश्च समादाय श्रद्धया भेषजं भजेत् ॥

रसायनमिवर्षीणां देवानामिव चामृतम् ।

सुधैवोत्तमनागानां भैषज्यमिदमस्तु ते ॥

ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः।

ऋषयः सौषधिग्रामा भूमिदेवाश्च पान्तु वः ॥'

इत्याद्याशिषः ॥

'औषधं हेमरजतमृद्भाजनपरिस्थितम्।

पिबेदात्मजनस्याग्रे प्रसन्नवदनेक्षणः ॥

प्रशान्तस्तूपविश्याथ पीत्वा पात्रमधोमुखम् ।

तत् स्याच्चूर्णं रजःक्षोदस्तन्मात्राकर्षसम्मिता ॥

चूर्णे गुडः समो देयः शर्करा द्विगुणा मता ।

चूर्णेषु भर्जितं हिङ्गु देयं नोत्क्लेदकृद्भवेत् ॥'

अथ भावनाविधिः ।

'द्रवेण यावता सम्यक् चूर्णं सर्व्वं प्लुतं भवेत् ।

भावनायाः प्रमाणन्तु चूर्णे प्रोक्तं भिषग्वरैः ॥'

अथ पुटपाकविधिः ।

'पुटपक्वस्य कल्कस्य स्वरसो गृह्यते यतः ।

अतस्तु पुटपाकानां युक्तिरत्रोच्यते मया ॥

पुटपाकस्य पाकोऽयं लेपस्याङ्गारवर्णता ।

लेपञ्च द्व्यङ्गुलं स्थूलं कुर्य्याद्वाङ्गुष्ठमात्रकम् ॥

काश्मरीवटजम्ब्वादिपत्रैर्वेष्टनमुत्तमम् ।

पलमात्रो रसो ग्राह्यः कर्षमात्रं मधु क्षिपेत् ॥

कल्कचूर्णद्रवाद्यास्तु देयाः कोलमिता बुधैः ॥'

अथोष्णोदकविधिः ।

'अष्टमेनांशशेषेण चतुर्थेनार्द्धकेन वा ।

| | | |
|---|---|---|
| "भैषज्यमभ्यवहरेत् प्रभाते प्रायशो बुधः ।<br>कषायांस्तु विशेषेण तत्र भेदस्तु दर्शितः ॥<br>ज्ञेयः पञ्चविधः कालो भैषज्यग्रहणे नृणाम् ।<br>किञ्चित् सूर्य्योदये जाते तथा दिवसभोजने ।<br>सायन्तने भोजने च मुहुश्चापि तथा निशि ॥" | | |

अथवा क्वाथनेनैव सिद्धमुष्णोदकं
वदेत् ॥’
अथ क्षीरपाकविधिः ।
‘क्षीरमष्टगुणं द्रव्यात् क्षीरान्नीरं
चतुर्गुणम् ।
क्षीरावशेषं तत्पीतं शूलमामोद्भवं जयेत्
॥’
अथावलेहविधिः ।
‘क्वाथादेर्यत् पुनः पाकात् घनत्वं सा
रसक्रिया ।
सोऽवलेहश्च लेहश्च तन्मात्रा स्यात्
पलो-
न्मिता ॥’
अथ वटिकाविधिः ।
‘वटिका अथ कथ्यन्ते तन्नामवटिका
वटी ।
मोदको गुटिका पिण्डी गुडो
वर्त्तिस्तथोच्यते ॥
लेहवत् साध्यते वह्नौ गुडो वा
शर्कराथवा ।
गुग्गुलुर्व्वा क्षिपेत्तत्र चूर्णं तन्निर्म्मिता
वटी ॥’
अथ सन्धानविधिः ।
‘द्रवेषु चिरकालस्थं द्रव्यं यत् सन्धितं
भवेत् ।
आसवारिष्टभेदैस्तत् प्रोच्यते
भेषजोचितम् ॥’
अथ धातूनां शोधनमारणविधिः । तत्र
शोधनविधिः ।
‘पत्तलीकृत्य पत्राणि हेम्नो वह्नौ
प्रतापयेत् ।
निषिञ्चेत्तप्ततप्तानि तैले तक्रे च
काञ्जिके ॥
गोमूत्रे च कुलत्थानां कषाये तु त्रिधा
त्रिधा ।
एवं हेम्नः परेषाञ्च धातूनां शोधनं भवेत्
॥’ * ॥
अथ स्वर्णस्य मारणविधिः ।
‘स्वर्णस्य द्विगुणं सूतमम्लेन सह
मर्द्दयेत् ।

शनैर्घर्षणमङ्गुल्या तदुक्तं प्रतिसारणम् ॥
अथ स्वेदविधिः ।
स्वेदश्चतुर्विधः प्रोक्तस्तापोष्णस्वेदसंज्ञितः ।
उपनाहो द्रवः स्वेदः सर्व्वे वातार्त्तिहारिणः ॥
अथ कर्णपूरणविधिः ।
स्वेदयेत् कर्णदेशन्तु किञ्चित्तु पार्श्वशायिनः ।
मूत्रैः स्नेहै रसैरुक्तैः कोष्णैः श्रोत्रं प्रपूरयेत् ॥
कर्णञ्च पूरितं रक्षेच्छतं पञ्चशतानि वा ।
सहस्रं वापि मात्राणां श्रोत्रकण्ठशिरोगदैः ॥
रसाद्यैः पूरणं कर्णे भोजनात् प्राक् प्रशस्यते ।
तैलाद्यैः पूरणं कर्णे भास्करेऽस्तमुपागते ॥ * ॥
अथालेपविधिः ।
अथालेपस्य नामानि लेपलेपनलिप्तयः ।
दोषघ्नो विषहा वर्ण्यः स च लेपस्त्रिधा मतः ।
न रात्रौ लेपनं कुर्य्यात् शुष्यमाणं न धारयेत् ॥
अथ शोणितस्रावणविधिः ।
शोणितं स्रावयेज्जन्तोरामयं प्रसमीक्ष्य च ।
प्रस्थं प्रस्थार्द्धमथवा प्रस्थार्द्धार्द्धमथापि वा ॥
शरत्काले स्वभावेन शोणितं स्रावयेन्नरः ।
त्वग्दोषग्रन्थिशोथाद्या न स्यू रुधिरपातनात् ॥
अथाश्च्योतनविधिः ।
क्वाथक्षौद्रासवस्नेहबिन्दूनां यत्तु पातनम् ।
द्व्यङ्गुलोन्मीलिते नेत्रे प्रोक्तमाश्च्योतनं हितम् ॥
अथ विडालकविधिः ।
विडालको वहिर्लेपो नेत्रे पक्ष्मविवर्ज्जिते ।
तस्य मात्रा परिज्ञेया मुखालेपविधानवत् ॥
अथ तर्पणविधिः ।
वातातपरजोहीने वेश्मन्युत्तानशायिनः ।
आधारौ माषचूर्णेन क्लिन्नेन परिमण्डितौ ॥
समौ दृढावसम्बाधौ कर्त्तव्यौ नेत्रकोषयोः ।
पूरयेद्घृतमण्डेन विलीनेन सुखोदके ॥
अथाञ्जनविधिः ।
“अथ सम्यगदोषस्य प्राप्तमञ्जनमाचरेत् ।
अञ्जनं क्रियते नेत्रे तद्द्रव्यञ्चाञ्जनं मतम् ॥
अथ प्रत्यञ्जनविधिः ।
गतदोषमपेताश्रु प्रपश्यत् सम्यगम्भसा ।
प्रक्षाल्याक्षि यथादोषं कार्य्यं प्रत्यञ्जनं ततः ॥
इति भावप्रकाशः ॥ * ॥
अथ भेषजकरणभक्षणदिनम् । तत्र तिथयः
विष्टिभिन्नाः शोभनाः । वाराः रविसोमबुध-
बृहस्पतिशुक्राणाम् । नक्षत्राणि पूर्ब्बफल्गुनी-

वासस्वस्त्ययनप्रणिपातगमनादि।
युक्तिव्यपा-
श्रयं संशोधनोपशमने चेष्टाश्च दृष्टफलाः ।
एतच्चैव भेषजमङ्गभेदादपि द्विविधं
द्रव्यभूत-
मद्रव्यभूतञ्च, तत्र यद्द्रव्यभूतं
तदुपायाभि-
प्लुतम् । उपायो नाम
भयदर्शनविस्मापनक्षो-
भणहर्षणभर्त्सन
वधबन्धस्वप्नसंवाहनादिरमूर्त्तो
भावः यथोक्ताः सिद्ध्युपायाश्च । यत्तु
द्रव्य-
भूतं तद्वमनादिषु योगमुपैति । तस्यापीयं
परीक्षा, इदमेवं प्रकृत्या एवंगुणमेवंप्रभाव-
मस्मिन् देशे जातमस्मिन् ऋतौ एवं
गृहीतमेवं
निहितमेवमुपस्कृतमनया मात्रया
युक्तमस्मिन्
ऋतौ एवंविधस्य
पुरुषस्यैतावन्तन्दोषमपकर्ष-
यति उपशमयति वा अन्यदपि चैवंविधं
भेषजमभूत्तच्चानेनानेन वा विशेषेण
युक्तमिति ।
इति चरके विमानस्थानेऽष्टमेऽध्याये ॥)

**भेषजाङ्गं**, क्ली, (भेषजस्य औषधस्य अङ्गमवयव-
इव ।) अनुपानम् । इति शब्दचन्द्रिका ॥

**भैक्षं**, क्ली, (भिक्षाणां समूह इति । भिक्षा +
भिक्षादिभ्योऽण् ।” ४ । २ । ७८ । इत्यण्
।)
भिक्षासमूहः । इत्यमरः । २ । ७ । ४७ ॥
अपि च ।
“भिक्षाशनमनुद्योगात्
प्राक्केनाप्यनिमन्त्रितम् ।
अयाचितन्तु तद्भैक्षं भोक्तव्यं मनुरब्रवीत्
॥”
इति प्रायश्चित्ततत्त्वधृतोशनसोवचनम् ॥
(भिक्षैव स्वार्थे अण् । भिक्षा ॥ भिक्षाभवे
भिक्षालब्धे वा त्रि ॥)

तद्गोलकसमं गन्धं
निदध्यादधरोत्तरम् ॥
गोलकञ्च ततो रुद्ध्वा सरावदृढसंपुटे
।
त्रिंशद्वनोपलैर्दद्यात् पुटान्येवं चतुर्द्दश ।
निरुत्थं जायते भस्म गन्धो देयः पुनः
पुनः ॥'
अथ स्नेहपानविधिः ।
स्नेहश्चतुर्विधः प्रोक्तो घृतं तैलं वसा
तथा ।
मज्जा च तत् पिवेन्मर्त्यः
किञ्चिदभ्युदिते रवौ ॥
अथ पञ्चकर्म्माणि ।
प्रथमं वमनं पश्चाद्विरेकश्चानुवासनम्
।
एतानि पञ्च कर्म्माणि निरूहेणोत्तरं
तथा ॥
अथ फलवर्त्तिविधिः ।
घृताभ्यक्ते गुदे क्षिप्त्वा श्लक्ष्णा
स्वाङ्गुष्ठसन्निभा ।
मलप्रवर्त्तिनी वर्त्तिः फलवर्त्तिश्च सा
स्मृता ॥
अथ नस्यग्रहणविधिः ।
नस्यं तत् कथ्यते धीरैर्नासाग्राह्यं
यदौषघम् ।
लावणं नस्तकर्म्मेति तस्य नाम द्वयं
मतम् ॥
अथ धूमपानविधिः ।
धूमस्तु षड्विधः प्रोक्तः शमनो
वृंहणस्तथा ।
रेचनः कासहा चैव वामनो ब्रणधूपनः
॥
अथ गण्डूषकवलप्रतिसारणविधिः ।
तत्र गण्डूषः ।
स्नेहक्षीरकषायादिद्रवैः सम्पूर्णमाननम्
।
आपूर्य्य स्थीयते
तावद्विधिर्गण्डूषधारणे ॥
अथ कवलः ।
वातपित्तकफघ्नस्य द्रव्यस्य कवलं
मुखे ।
अर्द्धे निःक्षिप्य संचर्व्य निष्ठीवेत् कवले
विधिः ॥

पूर्व्वाषाढापूर्व्वभाद्रपन्मघाभरण्यश्लेषाविशाखा-
र्द्राभिन्नानि । जन्मर्क्षञ्च निषिद्धम् ।
"लग्नानि मिथुनकन्याधनुर्मीनसंज्ञकानि ।
तत्र गुरुबुधचन्द्रशुक्रेषु सत्सु प्रशस्तानि ॥"
इति ज्योतिषतत्त्वम् ॥
(करणं पुनर्भेषजम् । भेषजं नाम तत् यदुप-
करणाय उपकल्प्यते भिषजो धातुसाम्याभि-
निर्वृत्तौ प्रयतमानस्य विशेषतश्चोपायात्तेभ्यः ।
तद्द्विविधं व्यपाश्रयभेदात् दैवव्यपाश्रयं युक्ति-
व्यपाश्रयञ्च । तत्र दैवव्यपाश्रयं मन्त्रौषध-
मणिमङ्गलबल्युपहारहोमनियमप्रायश्चित्तोप-

**भैक्षजीविका**, स्त्री, (भैक्षेण जीविका ।) भिक्षया
जीवनोपायः । तत्पर्य्यायः । पैण्डिन्यम् २
।
इति त्रिकाण्डशेषः ॥

**भैक्षभुक्** [ज्] त्रि, भैक्षाशी । भिक्षाशी ।
भैक्षं भुङ्क्ते यः । इति कर्त्तरि
क्विप्प्रत्ययेन ।
निष्पन्नं ॥ (यथा, महाभारते । १४ । ४६
। ३ ।
"गुरुणा समनुज्ञातो भुञ्जितान्नमकुत्सयन्
।
हविष्यभैक्ष्यभुक् चापि स्थानासनविहार-
वान् ॥")

**भैमी**, स्त्री, (भीमेनोपासिता भीमस्य इयं वेति ।
भीम + अण् ङीप् ।) भीमैकादशी । यथा,
अथ भैमी । विष्णुधर्म्मोत्तरे ।
"मृगशीर्षे शशधरे माधे मासि प्रजापते ! ।
एकादश्यां सिते पक्षे सोपवासो
जितेन्द्रियः ।
द्वादश्यां षट्तिलाचारं कृत्वा पापात्
प्रमुच्यते ॥
तिलस्नायी तिलोद्वर्त्ती तिलहोमी
तिलोदकी ।
तिलस्य दाता भोक्ता च षट्तिली नावसी-
दति ॥"
मत्स्यपुराणे ।
"यद्यष्टम्यां चतुर्द्दश्यां द्वादश्यामथ भारत !
।
अन्येष्वपि दिनर्क्षेषु न शक्तस्त्वमुपोषितुम्
॥
ततः पुण्यामिमां भीमतिथिं पापप्रणाशि-
नीम् ।
उपोष्य विधिनानेन गच्छ विष्णोः परं
पदम् ॥
भीमतिथिं भैमीत्वेन ख्यातां एकादशीम् ॥
इत्येकादशीतत्त्वम् ॥ * ॥

| | | |
|---|---|---|
| अथ प्रतिसारणम्।<br>दन्तजिह्वामुखानां<br>यच्चूर्णकल्कावलेहकैः । | | |

अपि च ।
पितामह उवाच ।
“माघमासे शुक्लपक्षे सूर्य्यर्क्षेण युता पुरा ।
एकादशी तथा चैषा भीमेन समुपोषिता ॥
आश्चर्य्यन्तु व्रतं कृत्वा पितृणामनृणो भवेत् ।
भीमद्वादशीति विख्याता प्राणिनां पुण्यवर्द्धिनी ॥
नक्षत्रेण विनाप्येषा ब्रह्महत्यादि नाशयेत् ।
विनिहन्ति महापापं कुनृपो विषयं यथा ।
कुपुत्त्रस्तु कुलं यद्वत् कुभार्य्या च पतिं यथा ।
अधर्म्मञ्च यथा धर्म्मः कुमन्त्री च यथा नृपम् ॥
अज्ञानेन यथा ज्ञानं शौचञ्चाशौचता यथा ।
अश्रद्धया यथा श्राद्धं सत्यञ्चैवानृतैर्यथा ॥
हिमं यथोष्णमादद्यादनर्थञ्चार्थसञ्चयः ।
यथा प्रकीर्त्तनाद्दानं तपो वै विस्मयाद्यथा ॥
अशिक्षया यथा पुत्त्रो गावो दूरगतेर्यथा ।
क्रोधेन च यथा शान्तं यथा वित्तमवर्द्धनात् ॥
यथा समीहनाज्ज्ञानं फलानाञ्च यतव्रताः ।
तथैव पापनाशाय प्रोक्तेयं द्वादशी शुभा ॥
ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः ।
युगपदुपजातानि नहि हन्ति त्रिपुष्करम् ॥
न चापि नैमिषक्षेत्रं कुरुक्षेत्रं प्रभासकम् ।
कालिन्दी यमुना गङ्गा न रेवा न सरस्वती ॥
न चैव सर्व्वतीर्थानि एकादश्याः समानि च ।
न दानं न जपो होमो न चान्यसुकृतं क्वचित् ॥
एकतः पृथिवीदानमेकतो हरिवासरः ।
ततोऽप्येका महापुण्या इयमेकादशी परा ॥
अस्मिन् वराहवपुषः कृत्वा देहन्तु हाटकम् ।
घटोपरि नवे पात्रे कृत्वा वै ताम्रभाजने ॥
सर्व्वबीजन्तु ते विप्राः सितवस्त्रावगुण्ठिते ।
सहिरण्यप्रदीपाद्यैः कृत्वा पूजां प्रयत्नतः ॥
वराहाय नमः पादौ क्रोडाकृति नमः कटिम् ।
नाभिं गम्भीरघोराय उरःश्रीवत्सधारिणे ॥

“सव्येन च कटीदेशे गृह्य वाससि पाण्डवः ।
तद्रक्षो द्विगुणं चक्रे रुवन्तं भैरवं रवम् ॥”)
अस्य पर्य्यायाः भयङ्करशब्दे द्रष्टव्याः ॥

**भैरवः**, पुं, (भीर्भयङ्करो रवो यस्य । इति भीरव । ततः स्वार्थे अण् ।) शङ्करः । इति मेदिनी । वे ४६ ॥ भयानकरसः । इत्यमरटीकायां भरतः ॥ नदविशेषः । इति शब्दरत्नाबली ॥ रागभेदः । इति हेमचन्द्रः ॥ * ॥ अष्टभैरवाणामुत्पत्तिर्यथा,
“दैत्याधिपः समुत्पत्य हरोरसि गदां क्षिपत् ।
संस्थितस्तु महायोगी सर्व्वाधारः प्रजापतिः ॥
गदापातक्षताद्भूरि चतुर्धासृगथापतत् ।
पूर्ब्बधारासमुद्भूतो भैरवोऽग्निसमप्रभः ॥
विद्याराजेति विख्यातः पद्ममालाविभूषितः ।
तथा दक्षिणधारोत्थो भैरवः प्रेतमास्थितः ॥
कामराजेति विख्यातः कृष्णाञ्जनसमप्रभः ।
नागराजेति विख्यातश्चक्रमालाधिभूषितः॥
क्षतजाद्रुधिराज्जातो भैरवः शूलभूषितः ।
सच्छन्दराजेति विख्यात इन्द्रायुधसमप्रभः ॥
भूयिष्ठाद्रुधिराज्जातो भैरवः फलभूषितः ।
ख्यातो लम्बितराजेति शोभाञ्जनसमप्रभः ॥
ततोऽभूद्देवराजेति भैरवः क्षतजादथ ।
उग्रराजो बभूवाथ क्षतजाद्भैरवोऽपरः ॥
एवं हि सप्तरूपोऽसौ कथ्यते भैरवो मुने ! ।
विघ्नराजोऽष्टमः प्रोक्तो भैरवाष्टकमुच्यते ॥”
इति वामनपुराणे अन्धकवरप्रदाने भैरवप्रादुर्भावे ६७ अध्यायः ॥ * ॥
शारदीयदुर्गापूजायां अष्टौ पूज्यभैरवा यथा,
“आदौ महाभैरवञ्च संहारभैरवं तथा ।
असिताङ्गभैरवञ्च रुरुं भैरवमेव च ॥
ततः कालं भैरवञ्च क्रोधभैरवमेव च ।
ताम्रचूडं चन्द्रचूडं अन्ते च भैरवद्वयम् ॥
एतान् संपूज्य मध्ये च नवशक्तीश्च पूजयेत् ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे दुर्गोपाख्याने ६१ अध्यायः ॥
ताम्रचूडचन्द्रचूडयोः स्थाने कपालभैरवरुद्रभैरवौ ज्ञेयौ । इति तत्रैव गणपतिखण्डे ४१ अध्यायः ॥ * ॥ अपि च ।
“असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्तसंज्ञकः ।
कपाली भीषणश्चैव संहारश्चाष्टमः स्मृतः ॥”
इति तन्त्रसारः ॥ * ॥

कामावसाने तस्यान्तु सद्यो जातं सुतद्वयम्
अभवन्नृपशार्दूल ! तथा शाखामृगाननम् ॥
ततस्तयोर्नाम चक्रे नारदो वचनान्नृप ! ।
ज्येष्ठो भैरवनामाभूत् भीरोः पुत्त्रो भयङ्करः ।
वेतालसदृशः कृष्णो वेतालोऽभूत्तथापरः ॥”
इति कालिकापुराणे ४९ अध्यायः ॥ * ॥
अपि च ।
“योऽसौ भृङ्गी हरसुतां महाकालोऽपि भर्गजः ।
तावेव गौरीशापेन सम्भूय नरयोनिजौ ॥
वेतालभैरवौ जातौ पृथिव्यां नृपवेश्मनि ।
यथा भृङ्गिमहाकालावुत्पन्नौ प्राक् तथा शृणु ।
योऽसौ महाभैरवाख्यः सकायः शारभो हरः ।
भैरवः पृथगेवायं गणाध्यक्षो हरात्मजः ॥”
इति कालिकापुराणे ४५ अध्यायः ॥ * ॥
दुर्जयाख्यगिरिस्थभैरवो यथा, --
“तन्मध्ये भैरवो देवो भर्गसङ्गमसम्भवः ।
दुर्जयाख्ये वरगिरौ स्वर्गस्योपमभूमिगः ॥
योऽसौ शरभरूपस्य मध्यखण्डादिभैरवः ।
स एव भैरवाख्योऽयं पञ्चवक्त्रस्य मन्त्रकैः ।
संपूज्य तत्र मतिमान् स याति शिवलोकताम् ॥”
इति कालिकापुराणे ८१ अध्यायः ॥ * ॥
भैरवस्य मन्त्रो यथा, --
“केवलः सपरो हादिः षष्ठस्वरसमन्वितः ।

बाहुं सहस्रशिरसे ग्रीवां सर्व्वेश्वराय च ।
मुखं सर्व्वात्मने पूज्य ललाटं प्रभवाय च ।
केशाः शतमयूखाय पूज्या देवस्य चक्रिणः ॥
विधिना पूजयित्वा तु कृत्वा जागरणं निशि ।
श्रुत्वा पुराणं देवस्य माहात्म्यप्रतिपादकम् ॥
प्रातर्विप्राय दत्त्वा तु याचकाय शुभाय च ।
कनकक्रोडसहितं सन्निवेद्य परिच्छदम् ॥
पश्चात्तु पारणं कुर्य्यान्नातितृप्तः सुहृद्वृतः ।
एवं कृत्वा नरो विप्रा न भूयः स्तनपो भवेत् ॥
उपोष्यैकादशीं पुण्यां मुच्यते वै ऋणत्रयात् ।
मनोऽभिलषितावाप्तिः कृत्वा सर्व्वव्रतादिकम् ॥"
इति गारुडे एकादशीमाहात्म्ये १२७ अध्यायः ॥ (भीमस्य राज्ञः अपत्यं अण् स्त्री ।
भीमराजनन्दिनी दमयन्ती । यथा, महा-भारते । ३ । ६४ । ११ ।
"नाबिभ्यत् सा नृपसुता भैमी तत्राथ कस्य-चित् ।")

**भैरवं**, त्रि, (भीरोरिदं त्रासकृत् । भीरु + अण् ।)
भयानकम् । इत्यमरः । १ । ७ । २० । (यथा, महाभारते । १ । १६४ । २७ ।

शिवगणाधिपभैरवो यथा, --
"नन्दी भृङ्गी महाकालो वेतालो भैरवस्तथा ।
अङ्गं भूत्वा महेशस्य वीतभीतास्तपोधनाः ॥
यैर्मानुषशरीरेण प्रापिरे तपसो बलात् ।
गणानामाधिपत्यन्तु ते जानन्ति हरं परम् ॥"
इति कालिकापुराणे ४४ अध्यायः ॥ * ॥
करवीरपुरराजचन्द्रशेखरपत्नीतारावतीगर्भे महादेवाज्जातपुत्त्रः । स च पुरा भृङ्गी बभूव पार्व्वतीशापात् वानरमुखो भूत्वा भैरव इति नाम्ना ख्यातः । यथा, --
"प्रविवेश ततो देवी स्वयं तारावतीतनौ ।
महादेवोऽपि तस्यान्तु कामार्थं समुपस्थितः ॥

चन्द्रबिन्दुसमायुक्तं हयग्रीवस्य बीजकम् ॥
भैरवं पाण्डुनाथन्तु वनमालिस्वरूपिणम् ।
वाराहेण तु बीजेन पूजयेत्तु विधानतः ॥
सपरौ द्वावनुस्वारविसर्गाभ्यां समन्वितौ ।
महाभैरवमन्त्रोऽयं भैरवं तेन पूजयेत् ॥"
इति कालिकापुराणे ६२ अध्यायः ॥ * ॥
अस्य ध्यानं यथा, --
"भैरवः पाण्डुनाथश्च रक्तगौरश्चतुर्भुजः ।
गदां पद्मञ्च शक्तिञ्च चक्रञ्चापि करेण च ।
बिभ्रद्देव्याः पुरोभागे पूज्योऽयं विष्णुरूपधृक् ॥"
इति तत्रैव ६० अध्यायः ॥ * ॥
अस्य गायत्त्री यथा, --
"महाभैरव विद्महे केलिरूपाय धीमहि ।
तन्नः कामो भैरवस्तु देवी नित्यं प्रचोदयात् ॥
एषा भैरवरूपस्य गायत्त्री मे प्रतिष्ठिता ।
यथेष्टमांसमद्यादिभोजनाय मया धृतः ॥
महाभैरवरूपोऽयं तथा स्त्रीरतिसङ्गमे ।
अयन्तु वाम्यभावेन पूज्यो मद्यादिभिः सदा ॥"
इति कालिकापुराणे ७७ अध्यायः ॥
अथ महाविद्यादीनां भैरवनिरूपणं यथा, --
शिव उवाच ।
"शृणु चार्व्वङ्गि शुभगे ! कालिकायाश्च भैरवम् ।
महाकालं दक्षिणाया दक्षभागे प्रपूजयेत् ॥
महाकालेन वै सार्द्धं दक्षिणा रमते सदा ।
ताराया दक्षिणे भागे अक्षोभ्यं परिपूजयेत ॥
समुद्रमथने देवि ! कालकूटं समुत्थितम् ।
सर्व्वे देवाः सदाराश्च महाक्षोभमवाप्नुयुः ॥
क्षोभादिरहितं यस्मात् पीतं हालाहलं विषम्

तेन सार्द्धं महामाया तारिणी रमते सदा ।
महात्रिपुरसुन्दर्य्या दक्षिणे पूजयेत् शिवम् ॥
पञ्चवक्त्रं त्रिनेत्रञ्च प्रतिवक्त्रे सुरेश्वरि ! ।
तेन सार्द्धं महादेवी सदा कामकुतूहला ॥
अतएव महेशानि ! पच्चमीति प्रकीर्त्तिता ।
श्रीमद्भुवनसुन्दर्य्या दक्षिणे त्र्यम्बकं यजेत् ॥
स्वर्गे मर्त्ये च पाताले या चाद्या भुवनेश्वरी ।
एतया रमते तेन त्र्यम्बकस्तेन कथ्यते ॥
सशक्तिश्च समाख्यातः सर्व्वतन्त्रे प्रपूजितः ।
भैरव्या दक्षिणे भागे दक्षिणामूर्त्तिसंज्ञकम् ॥
पूजयेत् परयत्नेन पञ्चवक्त्रं तमेव हि ।
छिन्नमस्तादक्षिणांशे कबन्धं पूजयेत् शिवम् ॥
कबन्धपूजनाद्देवि ! सर्व्वसिद्धीश्वरो भवेत् ।
धूमावती महाविद्या विधवारूपधारिणी ॥
वगलाया दक्षभागे एकवक्त्रं प्रपूजयेत् ।
महारुद्रेति विख्यातं जगत्संहारकारकम् ॥
मातङ्गीदक्षिणांशे च मतङ्गं पूजयेत् शिवम् ।
तमेव दक्षिणामूर्त्तिं जगदानन्दकारकम् ॥
कमलाया दक्षिणांशे विष्णुरूपं सदाशिवम् ।
पूजयेत् परमेशानि ! स सिद्धो नात्र संशयः ॥
पूजयेदन्नपूर्णाया दक्षिणांशे च रूपकम् ।
महामोक्षप्रदं देवं दशवक्त्रं महेश्वरम् ॥
दुर्गाया दक्षिणे देशे नारदं परिपूजयेत् ॥
नकारः सृष्टिकर्त्ता च दकारः पालकः सदा ।
रेफः संहाररूपत्वान्नारदः परिकीर्त्तितः ॥
अन्यासु सर्व्वविद्यासु ऋषिर्यः परिकीर्त्तितः ॥

कल्लिनाथमते तु भैरवश्चतुर्थरागः । अस्य रागिण्यः षट् । यथा । भैरवी गुज्जरी भाषा वेलावली कर्णाटी रगतंसा वडहंसीति च केचित् । एतन्मते पूर्ब्बवत् अष्टौ पुत्त्राः । किन्तु तिलकपुरीयपञ्चमसूहस्थान्षु देवशाखललित-मालकौशविलाबला लिखिताः । सोमेश्वर-मतेऽपि रागिण्यः षट् । यथा । भैरवी गुज्जरी रेवा गुणकली वङ्गाली बहुली च । तन्मते रागिण्या सहास्य गानसमयो ग्रीष्मर्त्तुः ॥ भरतमते तु अस्य रागिण्यः पञ्च यथा । मधु-माधवी ललिता वरारी वाहाकली भैरवी च । तन्मतेऽपि अस्याष्टौ पुत्त्राः । यथा देवशाखः ललितः हर्षः विलावलः माधवः वङ्गालः वेभासः पञ्चमश्च । एषामष्टौ भार्य्या यथा । सूहा वेलावली सोरठी कुम्भारी अन्दाही बहुलगुज्जरी पटमञ्जरी मिरवी च । इति सङ्गीत-शास्त्रम् ॥ * ॥ मतान्तरे भैरवरागस्य भार्य्या यथा । भैरवी वङ्गाली वरारी मध्यमा मधु-माधवी सिन्धवी च । तत्पुत्त्रा यथा । कोशकः अजयपालः श्यामः खरतापः शुद्धः ढोलश्च । तत्पुत्त्रबध्वो यथा । अष्टी रेवा बहुला सोहिनी रम्भेली सूहा च । अत्र शोभा इति साधुः पाठः । इति नारदपुराणम् ॥
(नागभेदः । यथा, महाभारते । १ । ५७ । १६ ।
"भैरवो मुण्डवेदाङ्गः पिशङ्गश्चोद्रपारकः ॥")

**भैरवी**, स्त्री, (भैरव + ङीप् ।) चामुण्डा । यथा,

"चामुण्डा चर्च्चिका चर्म्ममुण्डा मार्जारकर्णिका ।

हसाद्या सैव देवेशि ! त्रिषु बीजेषु पार्ब्बति ! ।
इयन्तु सहराद्या स्यात् पूजाध्यानादिकं तथा ॥ ३ ॥
अथ सकलसिद्धिदा भैरवी ।
एतस्या एव विद्याया आद्यन्ते रेफवर्जिते ।
तदेयं परमेशानि ! नाम्ना सकलसिद्धिदा ।
सम्पत्प्रदाभैरवीवत् ध्यानपूजादिकं तथा ॥ ४ ॥
अथ भयविध्वंसिनी भैरवी ।
सम्पत्प्रदा भैरवी आद्यन्ते रेफरहिता चेत्तदा भयविध्वंसिनी भैरवी भवति । दक्षिणामूर्त्तौ तथादर्शनात् । पूजादिकन्तु सम्पत्प्रदावत् ॥ ५ ॥
अथ चैतन्यभैरवी ।
"वागभवं बीजमुच्चार्य्य जीवप्राणसमन्वितम् ।
सकला भुवनेशानी द्वितीयं बीजमुद्धृतम् ॥
जीवं प्राणं वह्निसंस्थं शक्रस्वरसमन्वितम् ।
विसर्गाढ्यंमहेशानि ! विद्या त्रैलोक्यमातृका ॥"
ऋष्यादिन्यासः । शिरसि दक्षिणामूर्त्तये ऋषये नमः । मुखे पङ्क्तिच्छन्दसे नमः । हृदि चैतन्यभैरव्यै देवतायै नमः ॥ ६ ॥
अथ कामेश्वरी भैरवी ।
"कामेश्वरी च रुद्रार्णा पूर्ब्बसिंहासने स्थिता ।
एतस्या एव विद्याया बीजद्वयमुदाहृतम् ॥
तदन्ते परमेशानि ! नित्यक्लिन्ने मदद्रवे ।
एतस्या एव तार्त्तीयं रुद्रार्णा परमेश्वरि ! ॥ ७ ॥
अथ षट्कूटा भैरवी ।
डाकिनी राकिणी बीजे लाकिनी काकिनी-युगम् ।
शाकिनी हाकिनी बीजे आहृत्य सुरसुन्दरि ! ॥
आद्यमैकारसंयुक्तमन्यदीकारमण्डितम् ।
शक्रस्वरान्वितं देवि ! तार्त्तीयं बीजमालिखेत् ।
बिन्दुनादकलाक्रान्तं त्रितयं शैलसम्भवे ! ॥ ८ ॥
अथ नित्या भैरवी ।
एतस्या एव विद्यायाः षड्वर्णान् क्रमशः स्थितान् ।
विपरीतान् वद प्रौढे ! विद्येयं भोगमोक्षदा ।
न्यासपूजादिकं सर्व्वमस्याः पूर्ब्बवदाचरेत् ॥ ९ ॥
अथ रुद्रभैरवी ।
शिवचन्द्रौ मादनान्तं फान्तं वह्निसमन्वितम् ।
शक्तिभिन्नं बिन्दुनादकलाढ्यं वाग्भवं प्रिये ! ॥
सम्पत्प्रदाया भैरव्याः कामराजं तदेव हि ।

स एव तस्या भर्त्ता च दक्षभागे प्रपूजयेत्
॥"
इति तोडलतन्त्रप्रथमपटले॥
(भैरवबलिविषयः। यथा, कालिकापुराणे
।
पक्षिणः कच्छपाग्राहा मत्स्या नवविधा
मृगाः ।
महिषा गोधिका गावश्छागो वभ्रुश्च
शूकरः ।
खड्गश्च कृष्णसारश्च गोधिका शरभो
हरिः ।
शार्द्दूलश्च नरश्चैव स्वगात्ररुधिरन्तथा॥
चण्डिकाभैरवादीनां बलयः
परिकीर्त्तिताः।
बलिभिः साध्यते मुक्तिर्बलिभिः साध्यते
दिवम् ॥)
अथ भैरवरागस्य विवरणम्। हनूमन्मते
षड्-
रागमध्ये प्रथमरागः ।
महादेवमुखान्निर्गतः ।
अस्य जातिः औडवः । अर्थात्
धैवतनिषाद-
षड्जगान्धारमध्यममिति
पञ्चस्वरमिलितः।
अस्य गृहं धैवतस्वरः । शरदृतौ
प्रातःकालः
अस्य गानसमयः । रागमालायाम्
अस्या-
कारः महादेवाकारवत्। अर्थात् सुन्दर-
सन्न्यासी। भस्ममृक्षितवदनः।
जटामस्तकः।
जटापतद्गङ्गाजलः। कङ्कणभूषितहस्तः
। लला-
टार्द्धचन्द्रः। त्रिनेत्रः ।
सर्पवेष्टितस्कन्धबाहुः ।
भालतिलकः। स्कन्धस्थहस्तिचर्म्मा।
अथवा
द्वीपिचर्म्मोपविष्टः। गलमुण्डमालः।
त्रिशूल-
हस्तः। अथवा सम्मुखप्रोथितत्रिशूलः।
पार्श्वस्थवृषश्च। अस्य रागिण्यः पञ्च।
यथा ।

कर्णमोटी महागन्धा भैरवी च कपालिनी ॥"
इति हेमचन्द्रः। २। १२० ॥
भैरवीविशेषा यथा। त्रिपुरभैरवी १ सम्पत्-
प्रदा भैरवी २ कौलेशभैरवी ३
सकलसिद्धिदा
भैरवी ४ भयविध्वंसिनी भैरवी ५
चैतन्यभैरवी
६ कामेश्वरी भैरवी ७ षट्कूटा भैरवी ८
नित्या
भैरवी ९ रुद्रभैरवी १० भुवेनेश्वरी भैरवी
११
त्रिपुरबाला भैरवी १२ नवकूटा भैरवी १३
अन्नपूर्णा भैरवी १४। आसां मन्त्रा यथा, --
अथ त्रिपुरभैरवी ।
"वियद्भृगुहुताशस्थो भौतिको बिन्दुशेखरः।
वियत्तदादिकेन्द्राग्निस्थितं वामाक्षिबिन्दुमत्
॥
आकाशभृगुवह्निस्थो मनुः सर्गेन्दुखण्डवान्
।
पञ्चकूटात्मिका विद्या वेद्या त्रिपुरभैरवी ॥"
१ ॥
अथ सम्पत्प्रदा भैरवी ।
यथासौ त्रिपुरा बाला तथा त्रिपूरभैरवी ।
सम्पत्प्रदा नाम तस्याः शृणु निर्म्मलमानसे
॥
शिवचन्द्रौ वह्निसंस्थौ वाग्भवं तदनन्तरम्।
कामराजं तथा देवि ! शिवचन्द्रान्वितं ततः
॥
पृथ्वीबीजान्तवह्न्याट्यंतार्त्तीयं शृणु
वल्लभे ! ।
शक्तिबीजे महेशानि ! शिववह्नी नियोजयेत्
॥
कुमार्य्याः परमेशानि ! हित्वा सर्गन्तु
बैन्दवम्।
त्रिपुरा भैरवी देवी महासम्पत्प्रदा प्रिये ! ॥
२ ॥
अथ कौलेशभैरवी ।
सम्पत्प्रदाभैरवीवद्विद्धि कौलेशभैरवीम्।

सदाशिवस्य बीजन्तु महासिंहासनस्य च ।
एषा विद्या महेशानि ! वर्णितुंनैव शक्यते ॥ १०
अथ भुवनेश्वरी भैरवी ।
हसाद्यं वाग्भवञ्चाद्यं हसकान्ते सुरेश्वरि ! ।
भूबीजं भुवनेशानी द्वितीयं बीजमुद्धृतम्।
शिवचन्द्रौ महेशानि ! भुवनेशी च भैरवी ॥ ११ ॥
अथ त्रिपुरबाला भैरवी ।
अधरो बिन्दुनामाद्यं ब्रह्मेन्द्रस्थः शशी युतः ।
द्वितीयं भृगुसर्गाढ्यो मनुस्तार्त्तीयमीरितम्।
एषा बालेति विख्याता त्रैलोक्यवशकारिणी॥
१२
अथ नवकूटा बाला ।
बालाबीजत्रयं देवि ! कूटत्रयं नवाक्षरी ।
वियत्कूठत्रयं देवि ! भैरव्या नवकूठकम् ॥ १३ ॥

| | | |
|---|---|---|
| भैरवी वैराटी मघुमाधवी सिन्धवी<br>वङ्गाली<br>च । अस्याष्टौ पत्राः । यथा । हर्षः<br>तिलकः<br>पुरीयः माधवः सूहः बलनेहः मधुः<br>पञ्चमश्च । | | |

अयान्नपूर्णा भैरवी ।
प्रणवं भुवनेशानि ! श्रीबीजं कामबीजकम् ।
हृदन्ते भगवत्यन्ते माहेश्वरिपदं ततः ।
अन्नपूर्णे ठयुगलं विद्येयं विंशदक्षरी ॥ १४ ॥”
इति तन्त्रसारे भैरवीमन्त्रपरिच्छेदः ॥
रागिणी-
विशेषः । सा च भैरवरागस्य पत्नी । यथा, --
“भैरवी कौशिकी चैव भाषा वेलाबली तथा ।
वङ्गाली चेति रागिण्यो भैरवस्यैव वल्लभाः ॥”
मतान्तरे मालवरागस्य पत्नी । यथा, --
धानसी मालसी चैव रामकीरी च सिन्धुडा ।
आशावरी भैरवी च मालवस्य प्रिया इमाः ॥”
अस्या ध्यानं यथा, --
“सरोवरस्था स्फटिकस्य मन्दिरे
सरोरुहैः शङ्करमर्च्चयन्ती ।
तालप्रयोगप्रतिबद्धगीति-
गौरीतनूर्नारद भैरवीयम् ॥”
अस्या गानसमयः पूर्ब्बाह्णकालः । यथा, --
“विभाषा ललिता चैव कामोदी पठमञ्जरी ।
रामकीरी रामकेली वेलोयारी च गुज्जरी ॥
देशकारी च शुभगा पञ्चमी च गडा तुडी ।
भैरवी चाथ कौमारी रागिण्यो दश पञ्च च ।
एताः पूर्ब्बाह्णकाले तु गीयन्ते गायनोत्तमैः ॥”
इति सङ्गीतदामोदरः ॥ * ॥
हनूमन्मते एषा सम्पूर्णजातिः । अस्याः सप्त-
स्वरविन्यासक्रमः
मध्यमपञ्चमधैवतनिषादषड्-
जर्षभगान्धारान्तः । अस्या गृहं
मध्यमस्वरः ।
शरदृतौ प्रभाते अस्या गानसमयः । राग-
मालायां अस्याः स्वरूपम् । अल्पवयस्का ।
सुरूपा । सुनेत्रा । विस्तारवदना । पिङ्गल-

**भोक्तव्यं** त्रि, (भुज + कर्म्मणि तव्यत् ।) भोज-
नीयम् । भोज्यम् । यथा, --
“यन्नेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम् ।”
इति तिथ्यादितत्त्वम् ॥
“अलावू वर्त्तुलाकारा वार्त्ताकी दुग्धवर्णिका ।
प्राणान्तेऽपि न भोक्तव्या दुग्धवर्णा कलम्बिका ॥”
इति कर्म्मलोत्तनञ्च ॥
(कर्म्मजन्ये अनुभवनीये । यथा च देवीभाग-
वते । ११ । ७ । २८ ।
“प्रारब्धं किल भोक्तव्यं शुभं वाप्यथवा शुभम् ।
उद्यमस्तद्वशे नित्यं कारयत्येव सर्व्वथा ॥”)

**भोक्ता** [ऋ] त्रि, (भुज् + कर्त्तरि तृच् ।)
भोजनकर्त्ता । यथा, --
“यज्ञेश्वरो हव्यसमस्तकव्य-
भोक्ताव्ययात्मा हरिरीश्वरोऽत्र ।”
इति श्राद्धप्रयोगतत्त्वम् ॥
सुखादिभोगकर्त्ता यथा, --
“कर्त्ता च देही भोक्ता च आत्मा भोजयिता सदा ।
भोगो विभवभेदश्च निष्कृतिर्मुक्तिरेव च ॥”
इति ब्रह्मवेवर्त्ते प्रकृतिखण्डे २३ अध्यायः ॥
अथ भोक्तुर्लक्षणं यथा, पाकराजेश्वरे ।
“स्नातः सुधौतमृदुसुन्दरशुक्लवासा-
स्तत्कालधौतचरणः सह पुत्त्रमित्रैः ।
स्रग्वी प्रसन्नहृदयो रसपाकवेद्यां
भोक्ता विशेच्च सततं हि सहात्मवैद्यैः ॥
मृदुतूलमये स्थूले चारुवस्त्रावगुण्ठिते ।
आसने प्राङ्मुखो भोक्तोपविशेद्वाप्युदङ्मुखः ॥”
(भोजनकर्त्रर्थे यथा, --
“यदा कारणमासाद्य भोक्तृणां छन्दतोऽपि वा ।
अनेकद्रव्ययोनित्वाच्छास्त्रतस्तान्विनिर्द्दिशेत् ॥”
इति सुश्रुते सूत्रस्थाने ४६ अध्यायः ॥
“भोक्तारं विजने रम्ये निःसम्बाधे शुभे शुचौ ।
सुगन्धिपुष्परचिते रम्ये देशेऽथ भोजयेत् ॥”
इति च तत्रैव तदध्याये ॥
यथा च सांख्यशास्त्रे भोक्ता भोगकर्त्ता पुरुषः ।
सति भोगज्ञाने भोक्तृज्ञानं भवतीति तल्लक्षण-
“भ्राजिष्णुर्भोजनं भोक्ता
सहिष्णुर्जगदादिजः ।”
इति महाभारते तस्य सहस्रनामस्तोत्रम् ॥
भर्त्ता । इति हेमचन्द्रः । ३ । ९१ ॥

**भोगः**, पुं, (भुज्यतेऽसौ इति । भुज + घञ् ।)
सुखम् । स्त्र्यादिभृतिः । पण्यस्त्रीणां भृति-
र्भाडिः । आदिना
हस्त्यश्वादिकर्म्मकराणाञ्च
भृतिः । सर्पस्य फटा । सर्पशरीरम् ।
इत्यमर-
भरतौ । ३ । ३ । २३ ॥ (यथा, रघौ । ११ । ५९ ।
“लक्ष्यते स्म तदनन्तरं रविः
बद्धभीमपरिवेशमण्डलः ।
वैनतेयशमितस्य भोगिनः
भोगवेष्टित इव च्युतो मणिः ॥”)
धनम् । (यथा, ऋग्वेदे । ३ । ३४ । ९ ।
“हिरण्ययमुतभोगं ससान हत्वी दस्यून् प्रार्य्यं
वर्णमावत् ॥”
“हिरण्ययं सुवर्णमयं भोगं धनम् ॥” इति
तद्भाष्ये सायनः ॥) गृहम् । (यथामुस्मिन्नेव
मन्त्रे । “भोगशब्दव्याख्याने
भुज्यतेऽस्मिन्निति
भोगो गृहं वा ससान अर्थिभ्यो ददौ ।” इति
सायनः ॥) पालनम् । अभ्यवहारः । इति
मेदिनी । गे, १६ ॥ सर्पः । देहः । मानम् ।
इति शब्दरत्नावली ॥ * ॥
पुण्यपापजननयोग्य-
कालः । यथा, --
“अतीतानामतो भोगो नाड्यः पञ्चदश
स्मृतः ॥”
इति तिथ्यादितत्त्वे संक्रान्तिप्रकरणम् ॥
(पुरम् । यथा, ऋग्वेदे । ५ । २९ । ६ ।
“नव यदस्य नवतिञ्च भोगान्
साकं वज्रेण मघवा विवृश्चत् ।”
भोगान् पुराणि । इति तद्भाष्ये सायनः ।)
भूम्यादीनां भोगो यथा । त्रिपुरुषभोगमाह
व्यासः ।

केशा । कोमलाङ्गी । रक्तवर्णा । श्वेतवसना ।
गलशोभितचम्पकमाला।
प्रफुल्लपद्मयुक्तपर्व्वत-
गुहायां शिवपूजापरायणा । तत्र मञ्जीर-
वादका गायन्ति च ॥ * ॥ कल्लिनाथसोमे-
श्वरभरतमतेष्वेवम् ॥

**भैषजं**, क्ली, (भेषजमेव संज्ञायां स्यार्थे वा अण् ।)

लावकपक्षी । इति जटाधरः ॥ भेषजञ्च ॥

**भैषज्यं**, क्ली, (भेषजमेवेति । भेषज + "अनन्ता-

वसथेतिहभेषजाञ्ञ्यः ।" ५ । ४ । २३ । इति
ञ्यः ।) औषधम् । इत्यमरः । २ । ६ । ५० ॥
(अस्य पर्य्यायो यथा, --
"भैषज्यं भेषजञ्चायुर्द्रव्यमगदमौषधम् ॥"
इति वैद्यकरत्नमालायाम् ॥
"तदेव युक्तं भैषज्यं यदारोग्याय कल्पते ।"
इति चरके सूत्रस्थाने द्वितीयेऽध्याये ॥)

**भोः**, [स्] व्य, (भातीति । भा + बाहुलकाद्

डोसिः ।) सम्बोधनम् । तत्पर्य्यायः । प्याट् २ पाट्
३ अङ्ग ४ हे ५ है ६ । इत्यमरः । ३ । ४ । ७ ॥ हंहो
७ हुम् ८ हो ९ अरे १० अये ११ अयि १२ ।
इति भरतः ॥ (यथा, मार्कण्डेये । ३ । ५२ ।
"भो भो विप्रेन्द्र ! बुध्यस्व बुद्ध्या बोध्यं बुधा-
त्मक ! ।")
प्रश्वः । विषादः । इति शब्दरत्नावली ॥

माह । "चिदवसानो भोगः ।" इति सांख्यसूत्रम् । १ ।
१०४ ॥ पुरुषस्वरूपे चैतन्ये पर्य्यवसानं यस्यैतादृशो
भोगः सिद्धिरित्यर्थः । राज्ञो भृत्यवर्गः यथा,
स्वामिने भोग्यजातमर्पयति, तथा, इन्द्रियाणि
विषयजातं स्वस्वशक्त्या गृहीत्वा अन्तःकरण-
प्रतिविम्बिताय पुरुषाय अर्पयति, स च पुरुषः
प्रतिविम्बग्रहणमात्रेण विषयजातं भुङ्क्ते
प्रकाशयतीत्यर्थः । पुरुषस्य भोगः प्रतिविम्बा-
दानमात्रं अन्येषान्तु पुष्ट्यादिः । ईदृशः परि-
णामरूपो भोगः पुरुषे निषिध्यते । "बुद्धे
र्भाग इवात्मनि ।" इत्यादिभिरिति । एतादृक्
तया पुरुषः भोगकर्त्ता वा भोक्ता ॥" इति
तद्भाष्ये विज्ञानभिक्षुः ॥

**भोक्ता** [ऋ] पुं, (भुङ्क्ते जीवरूपेणेति, भुनक्ति

पालयतीति वा भुज + तृच् ।) विष्णुः । यथा, --

"प्रपितामहेन यद्भुक्तं तत्पुत्त्रेण विना च तत् ।
तौ विना यस्य पित्रा च तस्य
भागस्त्रिपौरुषः ॥
पिता पितामहो यस्य जीवेच्च प्रपतामहः ।
त्रयाणां जीवतां भोगो विज्ञेयस्त्वेकपूरुषः ॥
नारदः ।
तथारूढविवादस्य प्रेतस्य व्यवहारिणः ।
पुत्त्रेण सोऽर्थः संशोध्यो न तं भोगो
निवर्त्तयेत् ॥"
इति व्यवहारतत्त्वम् ॥
विभवभेदः । यथा, --
"कर्त्ता च देही भोक्ता च आत्मा भोजयिता सदा ।
भोगो विभवभेदश्च निष्कृतिर्मुक्तिरेव च ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २३ अध्यायः ॥
(व्यूहभेदः । यथा, कामन्दकीयनीतिसारे ।
१९ । अध्याये । ४१ । ४८ । ५४ ।
श्लोकेषु ॥
"यदि स्याद्दण्डबाक्षुल्यं तदा चापः
प्रकीर्त्तितः ।
मण्डलोऽसंहतो भोगो दण्डश्चेति
मनीषिभिः ॥
गोमूत्रिका हि सञ्चारी शकटो मकरस्तथा ।
भोगभेदाः समाख्यातास्तथा परिपतन्तकः ॥
असंहतास्तु षड्व्यूहा भोगव्यूहाश्च पञ्चधा ॥")

**भोगगृहं**, क्ली, (भोगार्थं गृहम् ।) वासगृहम् ।

यथा, --
"वासागारं भोगगृहं कन्यापत्न्याटनिष्कुटाः ।"
इति हेमचन्द्रः ॥

**भोगदेहः**, पुं, (भोगहेतुको भोगसाधको वा देहः ।)

स्वर्गनरकभोगार्थं सूक्ष्मशरीरम् । यथा, --
"कृते सपिण्डीकरणे नरः संवत्सरात् परम् ।
प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते ॥"
इति श्राद्धतत्त्वम् ॥
अपि च ।
"शृणु देहविवरणं कथयामि यथागमम् ।
पृथिवी वायुराकाशस्तेजस्तोयमिति स्फुटम् ।
देहिनां देहबीजञ्च स्रष्टुः सृष्टिविधौ परम् ॥
पृथिव्यादिपञ्चभूतैर्यो देहो निर्म्मितो भवेत् ।
स कृत्रिमो नश्वरश्च भस्मसाच्च भवेदिह ॥
वृद्धाङ्गुष्ठप्रमाणश्च यो जीवपुरुषः कृतः ।
बिभर्त्ति सूक्ष्मदेहन्तं तद्रूपं भोगहेतवे ॥
स देहो न भवेद्भस्म ज्वलदग्नौ यमालये ।
जले न नष्टो देही वा प्रहारे सुचिरे कृते ॥
न शस्त्रे च न चास्त्रे च न तीक्ष्णकण्टके तथा ।
तप्तद्रवे तप्तलोहे तप्तपाषाण एव च ॥
प्रतप्तप्रतिमाश्लेषेऽप्यत्यूद्र्ध्वपतनेऽपि च ।
न च दग्धो न भग्नश्च भुङ्क्ते सन्तापमेव च ।
कथितं देहवृत्तान्तकारणञ्च यथागमम् ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २९ अध्यायः ॥

**भोगपालः**, पुं, (भोगं भोगसाधनमश्वादिकं पाल-

यतीति । भोग + पालि + अण् । अश्व-
रक्षकः । इति शब्दमाला ॥ भोगरक्षके त्रि ॥

**भोगपिशाचिका**, स्त्री, (भोगे पिशाचिका इव,

तद्वदतृप्तत्वात् ।) क्षुधा । इति हारावली ॥

**भोगमूमिः**, स्त्री, (भोगार्थैव भूमिः ।) सुख-

स्थानम् । भारतवर्षातिरिक्तवर्षम् । यथा, --
"तत्रापि भारतं श्रेष्ठं जम्बुद्वीपे महामुने ! ।
यतो हि कर्म्मभूरेषा ततोऽन्या भोगभूमयः ॥"
इति विष्णुपुराणे २ अंशे ३ अध्यायः ॥

**भोगवती**, स्त्री, (भोगः सर्पशरीरं भूम्ना अस्त्यस्या

मिति । भोग + मतुप् मस्य वः । "शार्ङ्गर-

"गर्भागारं वासगृहं भोगसद्मापवाधकम्
।"
इति शब्दरत्नावली ॥

**भोगार्हं**, क्ली, (भोगाय अर्ह्यते इति अर्ह +

"ऋहलोर्ण्यत् ।" ३ । १ । १२४ ।
इति ण्यत् ।)
धान्यम् । इति राजनिर्घण्टः ॥

**भोगावली**, स्त्री, (भोगानां आवली श्रेणि-

र्यस्याम् ।) स्तुतिपाठकस्य स्तुतिः ।
इति जटा-
धरः ॥ (यथा माघे । ५ । ६७ ।
"भोगावलीः कलगिरोऽवसरेषु पेठुः ।"
भोगावलीः प्रबन्धान् । इति तट्टीकायां
मल्लि-
नाथः ॥) नागपुरी । इति हेमचन्द्रः ॥

**भोगावासः**, पुं, (आवसत्यस्मिन् इति । आ +
वस्

+ अधिकरणे घञ् । भोगार्थोवा
आवासः ।)
वासगृहम् । इति हारावली ॥

**भोगिकः**, पुं, (भोगे अश्वभोगे नियुक्त इति ।

भोग + बाहुलकात् ठन् ।) अश्वरक्षकः
।
इति शब्दमाला ॥

**भोगिकान्तः**, पुं, (भोगिनां कान्तः प्रियः ।) वायुः
।

इति त्रिकाण्डशेषः ॥

**भोगिनी**, स्त्री, (भोगः अस्या अस्तीति ।

भोग + इनिः । ङीप् ।)
महिषीभिन्ननृपपत्नी ।
इत्यमरः । २ । ६ । ५ ॥

**भोगिवल्लभं**, क्ली, (भोगिनां वल्लभं प्रियम् ।)

चन्दनम् । इति राजनिर्घण्टः ॥

**भोगी**, [न्] पुं, (भोगोऽस्यास्तीति । भोग +

इनिः ।) सर्पः । इत्यमरः । १ । ७ । ८
। (यथा,

फलं भोग्यं यस्यासौ फलभोग्यः क्षेत्रारामादिः
स न कदाचिदपि नश्यति । इति मिताक्षरायां
व्यवहाराध्यायः ॥

**भोग्या**, स्त्री, (भुज् + कर्म्मणि ण्यत् टाप् ।) वेश्या ।

इति राजनिर्घण्टः ॥ भोग्या भूः । इति वोप-
देवः ॥ (तत्र त्रि ।)

**भोजः**, पुं, (भोजस्येदमिति । भोज + "तस्ये-

दम् ।" ४ । ३ । १२० । इत्यण् । अणो लोपः
।)
स्वनामख्यातदेशः । भोजपुर इति भाषा ।
तत्पर्य्यायः । भोजकटः २ । इति शब्द-
रत्नावली ॥ धारानगरस्य राजविशेषः ।
तस्य वृत्तान्तो यथा । धारानामनगर्य्यां
सिन्धुल-
संज्ञो राजा आसीत् । तस्य राज्ञी
सावित्री, तयोर्वृद्धावस्थायां भोजनामपुत्त्रो
जातः । स यदा पञ्चवर्षवयस्कस्तदा तत्पिता
आत्मनमरणकालं विदित्वा भ्रात्रे मुञ्जाय राज्यं
ददौ, तदुत्सङ्गे भोजञ्च मुमोच । ततो राज्ञि
परलोकं प्राप्ते कियत्कालानन्तरं सभायां
कश्चिदुदरम्भरिर्ज्योतिर्व्विदागत्य मुञ्जं प्राह
राजन् ! भोजस्य भाग्योदयं वक्तुं विरिञ्चिरपि
न समर्थः कोऽहं वराक उदरम्भरिर्ब्राह्मणः
तथापि वदामि भोजमितः प्रेषय । ततो
राजाज्ञया भोजेऽध्ययनशालां प्राप्ते आह
यथा, --
"पञ्चाशत्पञ्चवर्षाणि सप्तमासा दिन त्रयम् ।
भोगराजेन भोक्तव्यं सगौडं दक्षिणापथम् ॥"
इति श्रुत्वा मुञ्जराजोऽचिन्तयत्, यदि राज-
लक्ष्मीर्भोजं गमिष्यति ततोऽहं जीवन्नपि मृतः
।
ततो राजा मन्त्रयित्वा वङ्गालाधीश्वरं महा-
बलं वत्सराजमाहूय निर्जने तं प्राह, वत्स-
राज ! त्वया भोजस्त्रिभुवनेश्वरीविपिने
हन्तव्यः ।
वत्सराजः भोजकुमारोपाध्यायमाहूय प्राह,
विप्र ! भोजमानय । ततो विदितवृत्तान्तो
भोजः
कुपितः प्राह, आः पाप ! राज्ञः कुमारं वहि-

वाद्यञो ङीन् ।” ४ । १ । ७३ । इति ङीन् ।)
पातालगङ्गा । नागपुरी । इति मेदिनी । ते,
२१४ ॥ (नागपत्नी । यथा महाभारते ।
१ । १७२ । ३२ ।
“नच भोगवतीं मन्ये न गन्धर्व्वीं न मानुषीम् ।”
गङ्गा । यथा, च काशीखण्डे । २९ । १२८ ॥
“भव्या भोगवती भद्रा भवानी भूतभाविनी ।”
तीर्थभेदः । यथा, महाभारते । ३ । ८५ । ७५ ॥
“तीर्थं भोगवती चैव वेदिरेषा प्रजापतेः ।”)

**भोगवान्,** [त्] पुं, (भोगः फणः कायो वा भूम्ना

अस्त्यस्येति । भोग + मतुप् मस्य च वत्वम् ।)
सर्पः । इति मेदिनी । ते, २१४ ॥ नाट्यम् ।
गानम् । इति त्रिकाण्डशेषः ॥ भोगविशिष्टे त्रि ॥

**भोगसद्म**, [न्] क्ली, (भोगार्थं उपभोगार्थं सद्म ।)

वासगृहम् । यथा, --

विष्णुपुराणे । १ । ३ । २३ ।
“एकार्णवे तु त्रैलोक्ये ब्रह्मा
नारायणात्मकः ।
भोगिशय्यागतः शेते
त्रैलोक्यग्रासबृंहितः ॥”
भोगयुक्तः । यथा, आर्य्यासप्तशत्याम् ।
४१४ ।
“भवतालिङ्गि भुजङ्गी जातः किल
भोगिचक्र-
वर्त्ती त्वम् ॥”)
ग्रामपात्रः । नृपः । इति मेदिनी । ने ।
१०२ ।
नापितः । इति विश्वः ॥ वैयावृत्तिकरः
। इति
हेमचन्द्रः ॥

**भोगीन्द्रः**, पुं, (भोगिनामिन्द्रः ।) अनन्तदेवः ।

इति शब्दरत्नावली ॥

**भोगीशः**, पुं, (भोगिनामीशः ।) अनन्तदेवः ।

इति शब्दरत्नावली ॥

**भोग्यं**, क्ली, (भुज + ण्यत् ।) धनम् । धान्यम् ।

इति राजनिर्घण्टः ॥ भोगमर्हतीति ।
भोग +
यत् । भोगार्हे त्रि ॥ (यथा, कामन्दकीये
। ५ । ८१ ।
“यथा रक्षेच्च निपुणं शस्यं
कण्टकिशाखया ।
फलाय लगुडः कार्य्यस्तद्वद्भोग्यमिदं
जगत् ।”)
आधिभेदः । यथाह नारदः ।
“विश्रम्भहेतू द्वावत्र प्रतिभूराधिरेव च ।
अधिक्रियत इत्याधिः स विज्ञेयो
द्विलक्षणः ॥
कृतकालोपनेयश्च यावद्देयोद्यतस्तथा
।
स पुनर्द्विविधः प्रोप्यो गोप्यो
भोग्यस्तथैव च ॥”
गोप्यो रक्षणीयः । भोग्यस्यार्थः
फलभोग्यपदे
द्रष्टव्यः । तद्यथा, --
“काले कालकृतो नश्येत् फलभोग्यो न
नश्यति ।”

रानेतुं तव का शक्तिः, ततो वामचरणपादु-
कामादाय भोजेन भालदेशे हतो वत्सराजः
प्राह, भोजकुमार ! वयं राजादेशकारिणः ।
इत्युक्त्वा वधार्थं बलात् वत्सराजेन निशायां
विपिनं भोजे नीते वत्सराजस्य भ्रात्रा भोजस्य
वधोद्यमसमये ।
“एक एव सुहृद्धर्म्मो निधनेऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्व्वमन्यच्च गच्छति ॥”
इत्युक्तं निशम्य वत्सराजो वैराग्यमापन्नो भोजं
क्षमस्वेत्युक्त्वा प्रणम्य तं रथे निवेश्य
गृहमागत्य
भूमिगृहान्तरे भोजं रक्षित्वा कृत्रिमं भोज-
मस्तकं कारयित्वा राजानमागत्य नत्वा प्राह
श्रीमता यदादिष्टं तन्मया कृतम् । राजपुत्त्रबधं
ज्ञात्वा राजा तं प्राह वत्सराज ! पुत्त्रेण
खड्गप्रहारावसरे किमपि उक्तम् । वत्सराजः
प्राह देव ! किमपि पत्रं प्रेषितमस्ति तदिदं
गृहाण शिरश्च दर्शयति । ततो भोजमस्तकं
दृष्ट्वा राजा रुरोद ।

"मान्धातेति महीपतिः कृतयुगेऽलङ्कारभूतो गतः
सेतुर्येन महोदधौ विरचितः क्वासौ दशास्यान्तकः ।
अन्ये चापि युधिष्ठिरप्रभृतयो यावद्भवान् भूपते !
नैकेनापि समं गता वसुमती मन्ये त्वया यास्यति ॥"
इति भोजकृतश्लोकं पठित्वा पपात च ।
ततो राजा पण्डितमानीय मया पुत्त्रो हतः प्रायश्चित्तमुच्यतामित्युवाच । ततस्ते ऊचुः राजन् ! सवासा वह्निमाविश । ततो राज्ञो वह्निप्रवेशे निश्चिते सति तद्वार्त्तां श्रुत्वा नृपद्वार-मागत्य वत्सराजो बुद्धिसागरं प्राह तात ! मया भोजो न मारितः वुद्धिसागरश्च तस्य कर्णे किमपि कथयति । ततो वत्सराजो निष्क्रान्तः । ततस्तन्मुहूर्त्तेन साक्षान्महेश्वर इव एकः कापालिक आगतः । तं वीक्ष्य बुद्धिसागरः प्राह योगिन् ! कुत आगम्यते कापालिके त्वयि जगच्चमत्कारी कलाविशेषश्चौषधिविशेषो वा अस्ति । ततो राजाप्याह मया सहसा हतं पुत्त्रं रक्ष । कापालिकः प्राह राजन् ! मा भैषीः पुत्त्रस्ते नाथप्रसादेन न मरिष्यति प्रातस्तव गृहं स्वयमेव समेष्यति परं श्मशानभूमौ बुद्धिसागर-मन्त्रिणा सह होमद्रव्यं प्रेषय । कापालिकेन यदुक्तं तत् सर्व्वं राज्ञा सम्पाद्य बुद्धिसागरः प्रेषितः ततश्च रात्रौ गूढतया वत्सराजगृहात् भोजस्तत्र नदीपुलिनं नीतः योगिना भोजकु-मारो जीवित इति किम्बदन्ती सर्ब्बतोऽप्य-जायत । ततः पौरामात्यैः परिवृतो भोजो राजभवनमागतः । ततस्तमालिङ्ग्य रुदन्तं मुञ्जं निवार्य्य भोजः स्तौति । ततो राजा लज्जावनतग्रीवः सन् निजसिंहासने भोजमुप-वेश्य राज्यं दत्त्वा वनं गतः । ततो मुञ्जे वनं प्राप्ते बुद्धिसागरं मुख्यामात्यं विधाय भोजः स्वयं राज्यसुखं बुभुजे । ततो राजसभायां सहस्रशो बुधवरा दिग्भ्य समागग्मुः ततो राजा अमात्यमाह ।
"लक्षं महाकवेर्द्देयं तदर्द्ध्वं विबुधस्य च ।
देयं ग्राम्यकवेर्वत्स ! तस्याप्यर्द्धं त्वयान्वहम् ॥" इति ॥
बहुलक्षमुद्रादानादिवर्णनञ्च ग्रन्थशेषपर्य्यन्त-मस्ति । तद्ग्रन्थविस्तरभयात्न लिखितम् ।
इति भोजप्रबन्धपुस्तकात् सङ्कलितम् ॥ * ॥ ऐन्द्र-जालिकविद्यां भोजविद्यां वदन्ति ॥

**भोजकटः**, पुं, भोजदेशः । इति शब्दरत्नावली ॥

(रुक्मिनिर्म्मिते पुरे, क्ली । यथा, विष्णुपुराणे ।
५ । २६ । १३ ।
"इत्युक्तेन परित्यक्तः कृष्णणाक्लिष्टकर्म्मणा ।
रुक्मी भोजकटं नाम पुरं कृत्वावसत्तदा ॥")

**भोजनं**, क्ली, (भुज् + "ल्युट् च ।" ३ । ३ । ११५ ।

इति भावे ल्युट् ।) भक्षणम् । कठिनद्रव्यस्य गलाधःकरणम् । तत्पर्य्यायः । जग्धः २
जेमनम् ३ लेपः ४ आहारः ५ निघसः ६
न्यादः ७ । इत्यमरः । २ । ९ । ५५ ॥ जमनम् ८
विघसः ९ । इति तट्टीका ॥ अभ्यवहारः १०
प्रत्यवसानम् ११ अशनम् १२ स्वदनम् १३
निगरः १४ । इति राजनिर्घण्टः ॥ * ॥
अथ भोजनगुणविधानादि ।
"भोजनाग्रे सदा पथ्यं जिह्वाकण्ठविशोधनम् ।
अग्निसन्दीपनं हृद्यं लवणार्द्रकभक्षणम् ॥
आयुर्घृते गुडे रोगा मृत्युर्लीनो विदाहिषु ।
पादरोगहरं वृष्यं चक्षुष्यं चायुषे हितम् ॥ * ॥
शरीरे जायते नित्यं वाञ्छा नृणां चतुर्विधा ।
बुभुक्षा च पिपासा च सुषुप्सा सुरतस्पृहा ॥
भोजनेच्छाविघातात् स्यादङ्गमर्द्दोऽरुचिः श्रमः ।
तन्द्रा लोचनदौर्ब्बल्यं धातुदाहो बलक्षयः ॥
विघातेन पिपासायाः शोषः कण्ठास्ययोर्भवेत् ।
श्रवणस्यावरोधश्च रक्तशोषो हृदि व्यथा ॥
निद्राविघाततो जम्भा शिरोलोचनगौरवम् ।
अङ्गमर्द्दस्तथा तन्द्रा स्यादन्नापाक एव च ॥
बुभुक्षितो न योऽश्नाति तस्याहारेन्धनक्षयात् ।
मन्दीभवति कायाग्निर्यथा चाग्निर्निरिन्धनः ॥
आहारं पचति शिखी दोषाननाहारः पचति ।
दोषक्षये च धातून् पचति धातुक्षये प्राणान् ॥
आहारः प्रीणनः सद्यो बलकृद्देहधारणः ।
स्मृत्यायुःशक्तिवर्णौजःसत्त्वशोभाविवर्द्धनः ॥
यथोक्तगुणसम्पन्नमुपसेवेत भोजनम् ।
विचार्य्य दोषकालादीन् कालयोरुभयोरपि ॥"
उभयोः कालयोः प्रातः सायञ्च । तथा च ।
"सायं प्रातर्मनुष्याणामशनं श्रुतिबोधितम् ।
नान्तरा भोजनङ्कुर्य्यादग्निहोत्रसमो विधिः ॥"
प्रातः प्रथमयामात् उपरि द्वितीययामात् अर्व्वाक् । तथा च ।
"याममध्ये न भोक्तव्यं यामयुग्मं न लङ्घयेत् ।
याममध्ये रसोत्पत्तिर्यामयुग्माद्बलक्षयः ॥"
अन्यच्च ।
"क्षुत् सम्भवति पक्वेषु रसदोषमलेषु च ।
काले वा यदि वाकाले सोऽन्नकाल उदाहृतः ॥"
रसादीनां पाकं ज्ञातुमाह ।
"उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः ।
लघुता क्षुत्पिपासा च यदा कालः स भोजने ॥"
स्थानमाह ।
"आहारं विजने कुर्य्यान्निर्हारमपि सर्व्वदा ।
उभाभ्यां लक्ष्म्युपेतः स्यात् प्रकाशे हीयते श्रिया ॥
निर्हारो मलमूत्रोत्सर्गः । अन्यच्च ।
"आहारनिर्हारविहारयोगाः
सदैव सद्भिर्व्विजने विधेया इति ॥" * ॥
भोजने येषां दृष्टिर्निवारणीया तानाह ।
"हीनदीनक्षुधार्त्तानां पापषण्डैणरोगिणाम् ।
कुक्कुटादिशुनां दृष्टिर्भोजने नैव शोभना ॥"
येषां दृष्टिः शुभदा तानाह ।

ततः क्रमेण वररुचिसुबन्धुबाणामररामक्षेमहरि-
वंशशङ्करकलिङ्गकर्पूरविनायकमदनविद्याविनोद
कोकिलतारेन्द्रप्रमुखाः सर्व्वशास्त्रविचक्षणाः
सर्व्वज्ञा इव राजसभामहर्निशमलंकुर्व्वन्ति ।
कियत्कालानन्तरं कालिदासकवौ समागते
तेन साद्‌र्ध्वं राज्ञः परमा प्रीतिरजायत । अन्ये
विद्वांसः कालिदासं वेश्यालम्पटं विदित्वा सर्व्व-
भावेन वैरञ्चक्रुः न कश्चित् सभायां स्पृशति न
कोऽपि वदति । किन्तु भोजनृपतिस्तेन सार्द्धं
परमप्रीतो बभूव । अन्येषां पण्डितानामाग-
मनं तेषां पद्यानि समस्यापूरणानि तेभ्यो

आरोग्यं कटुतिक्तेषु बलं मांसे
पयःसु च ॥
अन्नादष्टगुणं पिष्टं पिष्टादष्टगुणं
पयः ।
पयसोऽष्टगुणं मांसं मांसादष्टगुणं
घृतम् ॥
घृतादष्टगुणं तैलं मर्द्दनान्न च
भक्षणात् ।
आहारः प्रीणनः सद्यो
बलकृद्देहधारणः ॥ * ॥
आयुष्यं प्राङ्मखो भुङ्क्ते यशस्यं
दक्षिणामुखः ।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं
भुङ्क्ते
ह्युदङ्मुखः ॥
कुक्षेरन्नेन भागौ द्वावेकं पानेन
पूरयेत् ।
वायोः सञ्चारणार्थञ्च
चतुर्थमवशेषयेत् ॥
दन्ते चावगतं चान्नं
सौचेनैवाहरेज्जलैः ।
कुर्य्यादनिर्गतं तद्धि
सुखस्यानिष्टगन्धताम्॥
भुक्त्रा पाणितलं घृष्ट्वा चक्षुषोर्यदि
दीयते ।
अचिरेणैव तद्वारि तिमिराणि
व्यपोहति ॥
भुक्त्वाचम्य करं वामं दत्त्वा कुक्षौ
ततः पठेत् ।
भुक्तं महेन्द्रहस्तेन वैश्वानरसुखेन
च ॥
गरुडस्य च कण्ठेन समुद्रस्य च
वह्निना ।
वातापिर्भक्षितो येन पीतो येन
महोदधिः ॥
यन्मया खादितं पीतं तदगस्त्यो
जरिष्यति ।
पठित्वैतत् सुखासीनः क्षणं
तिष्ठेदनाकुलः ॥
भुक्त्रा पादशतं गत्वा वामपार्श्वेन
संविशेत् ।
एवं ह्यधोगतं चान्नं सुखं तिष्ठति
जीर्य्यति ॥

“पितृमातृसुहृद्वैद्यापापकृद्धंसवर्हिणाम् ।
सारसस्य चकोरस्य भोजने दृष्टिरुत्तमा ॥”
कथञ्चित्तद्दुष्टदृष्टिपाते तद्दोषशान्तये ब्रह्मा-
दीन् स्मरेत् । तद्यथा, --
“अन्नं ब्रह्म रसो विष्णुर्भोक्ता देवो महेश्वरः ।
इति सञ्चिन्त्य भुञ्जानो दृष्टिदोषो न बाधते ॥
अञ्जनागर्भसम्भूतं कुमारं ब्रह्मचारिणम् ।
दृष्टिदोषविनाशाय हनूमन्तं स्मराम्यहम् ॥”
भाजनमाह ।
“दोषहृद्दृष्टिदं पथ्यं हैमं भोजनभाजनम् ।
रौप्यं भवति चक्षुष्यं पित्तहृत् कफवातकृत् ॥

| | | |
|---|---|---|
| | भुक्त्वोपविशतस्तुन्दं शयानस्य वपुर्भवेत् ।<br>आयुश्चंक्रममाणस्य मृत्युर्धावति धावतः ॥”<br>इति राजवल्लभः ॥ * ॥<br>अपि च ।<br>“ततो भोजनवेलायां कुर्य्यान्मङ्गलदर्शनम् ।<br>तस्य प्रदक्षिणं नित्यमायुर्धर्म्मविवर्द्धनम् ॥<br>लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः ।<br>हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः ॥<br>पादुकारोहणं कुर्य्यात् पूर्ब्बं भोजनतः परम् । | |

कांस्यं बुद्धिप्रदं रुच्यं रक्तपित्तप्रसादनम्।
पैत्तलं वातकृद्रूक्षमुष्णं कृमिकफप्रणुत् ॥
आयसे कान्तपात्रे च भोजनं सिद्धिकारकम्।
शोथपाण्डुहरं बल्यं कामलापहमुत्तमम्॥
शैलजे मृण्मये पात्रे भोजनं श्रीनिवारणम्।
दारूद्भवे विशेषेण रुचिदं श्लेष्मकारि च ॥
पात्रं पत्रमयं रुच्यं दीपनं विषपापनुत् ॥
जलपात्रन्तु ताम्रस्य तदभावे मृदो हितम् ॥
पवित्रं शीतलं पात्रं घटितं स्फटिकेन यत्।
काचेन रचितं तद्वत्तथा वैदूर्य्यसम्भवम् ॥ *
॥
भोजनाग्रे सदा पथ्यं लवणार्द्रकभक्षणम्।
अग्निसन्दीपनं रुच्यं जिह्वाकण्ठविशोधनम्
॥"
लवणं सैन्धयं ज्ञेयम्। आर्द्रकन्तु कटुकमपि
न
पित्तविरोधि मधुरपाकित्वात्॥
"अश्नीयात्तन्मना भूत्वा पूर्ब्बन्तु मधुरं रसम्
।
मध्येऽम्ललवणौ पश्चात् कटुतिक्तकषायकान्
॥
फलान्यादौ समश्नीयात् दाडिमादीनि
बुद्धिमान् ॥
विना मोचाफलं तद्वद्वर्ज्जनीया च कर्क्कटी ॥
मृणालविसशालूककन्देक्षुप्रभृतीन्यपि।
पूर्ब्बमेव हि भोज्यानि न तु भुक्त्रा कदाचन ॥
गुरु पिष्टमयं द्रव्यं तण्डुलान् पृथुकानपि।
न जातु भुक्तवान् खादेन्मात्रां खादेद्बुभु-
क्षितः ॥
घृतपूर्ब्बं समश्नीयात् कठिनं प्राक् ततो मृदु।
अन्ते पुनर्द्रवाशी तु बलारोग्ये न मुञ्चति ॥"
अयमर्थः। प्राक् घृतपूर्ब्बं कठिनं समश्नीयात्
।
यथा काश्यादिवासिनः प्रथमं सव्यञ्जनां
घृतपूर्ब्बां
रोटिकां भुञ्जते। ततो मृदुसपूपादिकमोदनं
भुञ्जते। अन्ते पुनर्द्रबाशी भोजनान्ते
दधितक्र-
दुग्धादि भुञ्जते।
"यद्यत् स्वादुतरं तद्धि विदध्यादुत्तरोत्तरम्।
"गुरूणामर्द्धसौहित्यं लघूनां तृप्तिरिष्यते।"
अयमर्थः। माषपिष्टान्नादिभिरर्द्धं सौहित्यं
कर्त्तव्यं मुद्गादिभिः स्वाभाविक्या मात्रया तृप्तिः
कर्त्तव्येत्यर्थः।
"द्रवो द्रवोत्तरश्चापि न मात्रागुरुरिष्यते।"
द्रवः पेयादि। द्रवोत्तरः तक्राद्यधिक ओद-
नादिर्मात्रातोऽधिकोऽपिमात्रागुरुर्न मन्तव्यः।
पेयस्य सर्व्वतो लघुत्वात्! उक्तञ्च सुश्रुतेन।
पेयलेह्याद्यभक्ष्याणां गुरु विद्याद्यथोत्तरमिति।
पेयं पय आदि। लेह्यं रसालादि। अद्यं
ओदनसूपादि। भक्ष्यं मोदकादि।
"द्रवाढ्यमपि शुष्कन्तु सम्यगेवोपपद्यते।
विशुष्कमन्नमभ्यस्तं न पाकं साधु गच्छति ॥"
अयमर्थः। शुष्कमपि स्रोतोरोधकरमपि
द्रवाढ्यं सम्यक् पाकं याति। केवलस्य शुष्क-
स्यान्नस्य दोषमाह। विशुष्कमन्नमित्यादि॥
अपक्वं तत् किं भवतीत्यपेक्षायामाह।
"पिण्डीकृतमसंक्लिन्नं विदाहमुपगच्छति।"
पिण्डीकृतं अष्ठीलावद्धतम्। असंक्लिन्नं
असम्यगार्द्रम्। विदाहमुपगच्छति विदग्धं
भवतीत्यर्थः ॥ शुष्कादीनां वैगुण्यमाह।
शुष्कं विरुद्ध्वं विष्टम्भि वह्निव्यापादमावहेत्।"
शुष्क चिपिटादि। विरुद्धं क्षीरमत्स्यादि।
विष्टाम्भि चणकमसूरादि वह्निमान्द्यं कुर्य्यात्।
"न भुक्त्वा न रदैश्छित्त्वा न निशायां न वा
बहून्।"
न जलान्तरितान्न द्विः शकूनद्यान्न केवलान् ॥
पुनर्द्दानं पृथक् पानं सामिषं पयसा निशि।
दन्तच्छेदनमुष्णञ्च सप्त शकुषु वर्ज्जयेत् ॥"
विषमाशनस्य लक्षणमाह।
"बहुस्तोकमकाले वा ज्ञेयं तद्विषमाशनम्।"
बहुलाल्पस्य भक्षितस्य दोषमाह।
"आलस्यगौरवाटोपशब्दांश्चकुरुतेऽधिकम्।
हीनमात्रं तनोः कार्श्यं करोति च बलक्षयम् ॥"
अधिकं अन्नम् ॥ अकाले भुक्तस्य दोषमाह।
"अप्राप्तकालो भुञ्जानोऽप्यसमर्थतनुर्नरः।
तांस्तान् व्याधीनवाप्नोति मरणञ्चाधिगच्छति ॥"
अप्राप्तकालः कालादतिप्राक् भुञ्जानोऽसमर्थ-
शरीरो भवति। तथा सति तांस्तान् व्याधीन्
शिरोव्यथाविसूचिकालसकबिलम्बिकादीन्
प्राप्नोति। तेषामाधिक्ये मरणमपि प्राप्नो-
भुक्तस्यादौ जलं पीतं
कार्श्यमन्दाग्निदोषकृत्।
मध्येऽग्निदीपनं श्रेष्ठमन्ते
स्थौल्यकफप्रदम्॥"
अन्यच्च।
"समस्थूलकृशा
भुक्तमध्यान्तप्रथमाम्बुपाः।"
इति वाग्भटः ॥ भुक्तं भोजनम्।
"तृषितस्तु न चाश्नीयात् क्षुधितो न
पिबेज्जलम्।
तृषितस्तु भवेद्गुल्मी क्षुधितस्तु
जलोदरी ॥"
ननु शिष्टा भोजनान्ते दुग्धं पिबन्ति तत्
कथ-
मुचितम्। यतस्त्रिधा विभक्तस्य
भोजन-
कालस्य प्रथमो भागो वातस्य द्वितीयः
पित्तस्य
तृतीयः कफस्य। अतएवाह।
"अश्नीयात्तन्मना भूत्वा पूर्ब्बन्तु मधुरं
रसम्।
मध्येऽम्ललवणौ पश्चात्
कटुतिक्तकषायकान्॥"
अस्यायमभिप्रायः। भोजने पूर्ब्बं भुक्तो
मधुरो
रसो बुभुक्षितस्य वातपित्तयोः शमको
भवति।
"भोजनमध्ये भुक्तावम्ललवणौ
पित्ताशये च वह्निवृद्धिं कुरुतः।
भोजनान्त्यसमये भुक्ताः कटुतिक्त-
कषाया रसा कफं शमयन्तीति।"
अतो भोजनावसानसमयस्य
कफकाल-
त्वात्तत्र कथं श्लेष्मजनकं दुग्धं
पातुमुचितं
भवति। यत उक्तम्।
"दुग्धं स्वादुरसं स्निग्धमोजस्यं
धातुवर्द्धनम्।
वातपित्तहरं वृष्यं श्लेष्मलं गुरु
शीतलमिति ॥"
उच्यते।

भुक्त्वा यत् प्रार्थ्यते भूयस्तदुक्तं स्वादु भोजनम् ॥”
स्वाद्वन्नस्य गुणमाह ।
“सौमनस्यं बलं पुष्टिमुत्साहं रसनासुखम् ।
स्वादु सञ्जनयत्यन्नमस्वादु च विपर्य्ययम् ॥
अत्युष्णान्नं बलं हन्ति शीतं शुष्कञ्च दुर्ज्जरम् ।
अतिक्लिन्नं ग्लानिकरं युक्तियुक्तं हि भोजनम् ॥
अतिद्रुताशिताहारो गुणान् दोषान्न बिन्दति ।
भोज्यं शीतमहृद्यञ्च स्याद्विलम्बितमश्नतः ॥”
गुरु त्रिविधं तन्निवारयन्नाह ।
“मन्दानलो नरो द्रव्यं मात्रागुरु विवर्ज्जयेत् ।
स्वभावतश्च गुरु यत्तथा संस्कारतो गुरु ॥
मात्रागुरुस्तु मुद्गादिर्माषादिः प्रकृतेर्गुरुः ।
संस्कारगुरु पिष्टान्नं प्रोक्तमित्युपलक्षणम् ॥ * ॥
आहारं षड्विधं चूष्यं पेयं लेह्यं तथैव च ।
भोज्यं भक्ष्यं तथा चर्व्यं गुरु विद्याद्यथोत्तरम् ॥”
चूष्यं इक्षुदाडिमादि । पेयं पानकशर्करोद-कादि । लेह्यं रसालाक्वथितादि । क्वथिता कटी इति लोके । भोज्यं भक्तसूपादि । भक्ष्यं लड्डुकमण्डकादि । चर्व्व्यं चिपिटचणकादि ॥
स्वभावगुरुसंस्कारगुरुणोः स्वभावलघुनश्च भक्ष्यस्य भोजनपरिमाणमाह ।

तीत्यर्थः ।
“कालेऽतीतेऽग्रतो जन्तोर्व्वायुनापहतेऽनले ।
कृच्छ्राद्विपच्यते भुक्तं न स्याद्भोक्तुं पुनः स्पृहा ॥
कुक्षेर्भागद्वयं भोज्यैस्तृतीयं वारि पूरयेत् ।
वायोः सञ्चरणार्थाय चतुर्थमवशेषयेत् ॥
रसेनान्नस्य रसना प्रथमेनोपतर्पिता ।
न तथा स्वादुमाप्नोति ततः सेच्याम्बुनान्तरा ॥
अत्यम्वुपानान्न विपच्यतेऽन्न-मनम्बुपानाच्च स एव दोषः ।
तस्मान्नरो वह्निविवर्द्धनाय मुहुर्मुहुर्व्वारि पिबेदभूरि ॥

“विदाहीन्यन्नपानानि यानि भुङ्क्ते हि मानवः ।
तद्विदाहप्रशान्त्यर्थं भोजनान्ते पयः पिबेत् ॥”
अतएव ब्रह्मपुराणे ।
“कुर्य्यात् क्षीरान्नमाहारं दध्यन्नं न कदाचनेति ॥
लवणाम्लकटूष्णानि विदाहीन्यति यानि तु ।
तद्दोषं हर्त्तुमाहारं मधुरेण समापयेत् ॥”
भोजनावसानसमये दुग्धादिमधुरभोजनेनैव वर्द्धितकफो लवणाम्लकटुभोजनजनितां पित्तस्य वृद्धिं नाशयति पित्तवृद्धिनाशनेन कफस्यापि वृद्धिरुपक्षीणा भवति क्षीणकफवृद्धिरग्निमान्द्या-दीन् व्याधीन् उत्पादयितुं न शक्नोति ॥
“एवं भुक्त्वा समाचामेत् रूक्षग्रहणपूर्ब्बकम् ।
भोजने दन्तलग्नानि निर्हृत्याचमनञ्चरेत् ॥
दन्तलग्नमनिर्हार्य्यं लेपं मन्येत दन्तवत् ।
न तत्र बहुशः कुर्य्याद्यत्नं निर्हरणं प्रति ॥
आचम्य जलयुक्ताभ्यां पाणिभ्यां चक्षुषीस्पृशेत् ।
भुक्त्वा पाणितले घृष्ट्वा चक्षुषोर्यदि दीयते ।
अचिरेनैव तद्वारि तिमिराणि व्यपोहति ॥
भुक्त्रा च संस्मरेन्नित्यमगस्त्यादीन् सुखावहान् ।
विष्णुरात्मा तथैवान्नं परिणामश्च वै यथा ।
सत्येन तेन यद्भुक्तं जीर्य्यत्यन्नमिदं तथा ॥
अगस्तिरग्निर्वडवानलश्च भुक्तं ममान्नं जरयत्वशेषम् ।
सुखञ्च मे तत् परिणामसम्भवं

| | | |
|---|---|---|
| | | यच्छत्वरोगं मम चारुदेहे ॥<br>अङ्गारकमगस्तिञ्च पावकं<br>सूर्य्यमश्विनौ ॥<br>यश्चैतान् संस्मरेन्नित्यं भुक्तं तस्याशु<br>जीर्य्यति ॥ |

इत्युच्चार्य्य स्वहस्तेन परिमार्ज्य
तथोदरम् ।
अनायासप्रदायीनि कुर्य्यात्
कर्म्माण्यतन्द्रितः ॥”
अतन्द्रितः जाग्रत्तिष्ठेन्न तु सुप्यात् ।
भुक्त-
मात्रस्य तु स्वप्नान्मन्दाग्निः कुपितः
कफ इति
वचनात् ।
“जीर्णेऽन्ने वर्द्धते वायुर्विदग्धे
पित्तमेधते ।
भुक्तमात्रे कफश्चापि क्रमोऽयं
भोजनोपरि ॥”
विदग्धे किञ्चित्पक्वे पित्तमेधते
किञ्चिदपक्वेकफः ॥
भुक्तमात्रे संजातकफस्य प्रतीकारमाह
।
“धूमेनापोह्य हृद्यैर्वा
कषायकटुतिक्तकैः ॥
पूगकर्पूरकस्तूरी लवङ्गसुमनःफलैः ।
फलैः कटुकषायैर्वा
मुखवैषद्यकारिभिः ।
ताम्बूलपत्रसहितैः सुगन्धैर्वा विचक्षणः
॥”
धूभेन अगुर्व्वादिधूमेन । अपोह्य कफं
दूरी-
कृत्य । कषायकटुतिक्तकैः फलैः
कर्पूरकस्तूरी-
लवङ्गादिभिः । पूगैः क्रमुकैः ।
सुमनःफलैः
जातीफलैः ॥ फलैः
एलाहरीतक्यादिफलैः ।
“रते सुप्तोत्थिते स्नाते भुक्ते वान्ते च
सङ्गरे ।
सभायां विदुषां राज्ञां
कुर्य्यात्ताम्बूलभक्षणम् ॥
भुक्त्वा शतपदीं गच्छेच्छनैस्तेन तु
जायते ।
अन्नसंघातशैथिल्यं
ग्रीवाजानुकटीसुखम् ॥

“नाशेषं पुरुषोऽश्नीयादन्यत्र जगतीपते ! ।
मध्वम्बुदधिसर्पिर्भ्यः शक्तुभ्यश्च विवेकवान् ॥
अश्नीयात्तन्मयो भूत्वा पूर्ब्बन्तु मधुरं रसम् ।
लवणाम्ले तथा मध्ये कटुतिक्तादिकांस्ततः ॥
प्राक् द्रवं पुरुषोऽश्नीयान्मध्ये च कठिनाशनम्
।
अन्ते पुनर्द्रवाशी तु बलारोग्ये न मुञ्चति ।
अनिन्द्यं भक्षयेदित्थं वाग्यतोऽन्नमकुत्सयन् ।
पञ्चग्रासं महामौनं प्राणाद्याप्यायनादि तत् ॥
भुक्त्वा सम्यगथाचम्य प्राङ्मुखोदङ्मुखोऽपि वा ।
यथावत् पुनराचामेत् पाणी प्रक्षाल्य मूलतः ॥
स्वस्थः प्रशान्तचित्तश्च कृतासनपरिग्रहः ।
अभीष्टदेवतानाञ्च कुर्व्वीत स्मरणं नरः ॥
अग्निराप्याययत्वन्नं पार्थिवं पवनेरितः ।
दत्तावकाशं नभसा जरयत्वस्तु मे सुखम् ॥
अन्नं बलाय मे भूमेरपामग्न्यनिलस्य च ।
भवत्वेतत्परिणतौ ममास्त्वव्याहतं सुखम् ॥
प्राणापानसमानानामुदानव्यानयोस्तथा।
अन्नं पुष्टिकरञ्चास्तु ममास्त्वव्याहतं सुखम् ॥
अगस्तिरग्निर्व्वडवानलश्च
भुक्तं मयान्नं जरयत्वशेषम् ।
सुखञ्च मे तत्परिणामसम्भवं
यच्छत्वरोगं मम चास्तु देहे ॥
विष्णुः समस्तेन्द्रियदेहदेहि-
प्रधानभूतो भगवान् यथैकः ।
सत्येन तेनान्नमशेषमेत-
दारोग्यदं मे परिणाममेतु ॥
विष्णुरत्ता तथैवान्नं परिणामश्च वै तथा ।
सत्येन तेन मे भुक्तं जीर्य्यत्वन्नमिदं तथा ॥
इत्युच्चार्य्य स्वहस्तेन परिमृज्य तथोदरम् ।
अनायासप्रदायीनि कुर्य्यात् कर्म्माण्यतन्द्रितः
॥
सच्छास्त्रादिविनोदेन सन्मार्गादविरोधिना ।
दिनं नयेत्ततः सन्ध्यामुपतिष्ठेत् समाहितः ॥”
इति विष्णुपुराणे ३ अंशे ११ अध्यायः ॥ * ॥
अपरञ्च ।
“भुञ्जीत प्रयतो नित्यं वाग्यतोऽनन्यमानसः ।
भैक्षेण वर्त्तयेन्नित्यं नैकान्नादी भवेद्व्रती ॥
भैक्षेण वृत्तिनो वृत्तिरुपवाससमा स्मृता ।
पूजयेदशनं नित्यमद्याच्चैनदकुत्सयन् ॥
दृष्ट्वा हृष्येत् प्रसीदेच्च प्रतिनन्देच्च सर्व्वशः ।

नाशयत्याशु पापानि देवानामर्च्चनन्तथा ॥
यो मोहादथवालस्यादकृत्वा देवतार्च्चनम् ।
भुङ्क्ते स याति नरकान् शूकरेष्वभिजायते ॥
तस्मात् सर्व्वप्रयत्नेन कृत्वा कर्म्माणि वै द्विजः ।
भुञ्जीत स्वजनैः सार्द्धं स याति परमां गतिम् ॥”
इति कौर्म्मे उपविभागे १७ अध्यायः ॥ * ॥
व्यास उवाच ।
“प्राङ्मुखोऽन्नानि भुञ्जीत सूर्य्याभिमुख एव वा ।
आसीनस्त्वासने शुद्धे भूम्यां पादौ निधाय तु ॥
आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ॥
श्रियं प्रत्यङ्मुखो भुङ्क्ते हृयतं भुङ्क्ते उदङ्मुखः ॥
पञ्चार्द्रो भोजनं कुर्य्याद्भूमौ पात्रं निधाय तु ।
उपवासेन तत्तुल्यं मनुराह प्रजापतिः ॥
उपलिप्ते शुचौ देशे पादौ प्रक्षाल्य वै करौ ।
आचम्यार्द्राननोऽक्रोधः पञ्चार्द्रो भोजनञ्चरेत् ॥
महाव्याहृतिकं भिन्नं परिधायोदकेन तु ।
अमृतोपस्तरणमसीत्यापोऽशानक्रियाञ्चरेत् ॥
स्वाहाप्रणवसंयुक्तां प्राणापानाहुतिन्ततः ।
अपानाय ततः कृत्वा व्यानाय तदनन्तरम् ॥
उदानाय ततः कुर्य्यात् समानायेति पञ्चमीम् ।
विज्ञाय तत्त्वमेतेषां जुहुयादात्मनि द्विजः ॥
शेषमन्नं यथोक्तञ्च भुञ्जीत व्यञ्जनैर्युतम् ।
ध्यात्वा तन्मनसा देवमात्मानं वै प्रजापतिम् ॥
अमृतापिधानमसीत्युपरिष्टादपः पिबेत् ।
आचान्तः पुनराचामेदायं गौरीतिमन्त्रतः ॥
द्रुपदां वा त्रिरावाह्य सर्व्वपापप्रणाशिनीम् ।
प्राणानां ग्रन्थिरसीत्यालभेद्धृदयन्ततः ॥
आचम्याङ्गुष्ठमात्रेति पादाङ्गुष्ठेऽथ दक्षिणे ।
निःस्रावयेद्धस्तजलं मूर्द्धहस्तः समाहितः ॥
हुत्वान्नमन्त्रणं कुर्य्यात् सन्ध्यायामिति मन्त्रतः ।
अथाक्षरेण स्वात्मानं योजयेद्ब्राह्मणोऽति हि ॥
सर्व्वेषामेव योगानामात्मयोगः परः स्मृतः ।
योऽनेन विधिना कुर्य्यात् स याति ब्रह्मणः
क्षयम् ॥
यज्ञोपवीती भुञ्जीत स्रग्गन्धालङ्कृतो नरः ।
सायं प्रातर्नान्तरा वै सन्ध्यायान्तु विशेषतः ॥
नाद्यात् सूर्य्यग्रहात् पूर्ब्बमह्नि सायं शशिग्रहात् ।
ग्रहकाले तु नाश्नीयात् स्नात्वाश्नीयात्तु मुक्तयोः
।
मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा ॥
अमुक्तयोरस्तं गतयोः स्नात्वा दृष्ट्वा परेऽहनि ।

भुक्त्रोपविशतस्तुन्दं शयानस्य तु पुष्टता ।
आयुश्चंक्रममाणस्य मृत्युर्धावति धावतः ॥”
चंक्रममाणस्य पदशतं शनैर्गच्छतः ॥ * ॥
“श्वासानष्टौ समुत्तानस्तान् द्विः पार्श्वे तु दक्षिणे ।
ततस्तद्द्विगुणान् वामे पश्चात् सुप्यात् यथासुखम् ।
वामदिशायामनलो नाभेरूद्‌र्ध्वोऽस्ति जन्तूनाम् ।
तस्मात्तु वामपार्श्वे शयीत भुक्तप्रपाकार्थम् ॥
त्रिदोषशमनी खट्वा तूली वातकफापहा ।
भूशय्या वृं हणी वृष्या काष्ठपट्टी तु वातुला ॥”
इति भावप्रकाशः ॥ * ॥
अन्यच्च ।
“स्नातो यथावत् कृत्वा च देवर्षिपितृतर्पणम् ।
प्रशस्तरत्नपाणिस्तु भुञ्जीत प्रयतो गृही ॥
कृते जप्ये हुते वह्नौ शुद्धवस्त्रधरो नृप ! ।
दत्त्वातिथिभ्यो विप्रेभ्यो गुरुभ्यः संश्रिताय तु ॥
पुण्यगन्धधरः शस्तमाल्यधारी नरेश्वर ! ।
नैकवस्त्रधरोऽथार्द्रपाणिपादोनरेश्वर ! ॥
विशुद्धवदनः प्रीतो भुञ्जीत न विदिङ्मुखः ।
प्राङ्प्रखोदङ्मुखो वापि न चैवान्यमना नरः ॥”
“अन्नं प्रशस्तं पथ्यञ्च प्रोक्षितं प्रोक्षणोदकैः ।
न कुत्सिताहृतञ्चैव जुगुप्सावदसंस्कृतम् ॥
दत्त्वा तु भक्तं शिष्येभ्यः क्षुधितेभ्यस्तथा गृही ।
अनारोग्यमनायुष्यमस्वर्ग्यञ्चातिभोजनम् ।
अपुण्यं लोकविद्विष्टं तस्मात्तत् परिवर्जयेम् ॥
प्राङ्मुखोऽन्नानि भुञ्जीत सूर्य्याभिमुख एव वा ।
नाद्यादुदङ्मुखो नित्यं विधिरेष सनातनः ॥
प्रक्षाल्य पाणी पादौ च भुञ्जानो द्विरुपस्पृशेत् ।
शुचौ देशे समासीनो भुक्त्वा च द्विरुपस्पृशेत् ॥
नाश्नीयाद्भार्य्यया सार्द्धं नैनामीक्षेत मेहतीम् ।
न भक्षयेदभक्ष्याणि नापेयं वा पिबेद्द्विजः ॥”
अभक्ष्यान्नन्तु भक्तशब्दे द्रष्टव्यम् ॥ * ॥
“भुञ्जीत बन्धुभिः सार्द्धं वाग्यतोऽन्नमकुत्सयन् ।
अकृत्वा तु द्विजः पञ्च महायज्ञान् द्विजोत्तम ! ।
भुञ्जीत चेदमूढात्मा तिर्य्यग्योनिं स गच्छति ॥
वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रियाक्षया ।
नाश्नीयात् प्रेक्षमाणानामप्रदायैव दुर्म्मतिः ॥
नायज्ञशिष्टादन्यद्वा न क्रुद्धो नान्यमानसः ॥
आत्मार्थं भोजनं यस्य रत्यर्थं यस्य मैथुनम् ।
वृत्त्यर्थं यस्य चाधीतं निष्फलं तस्य जीवितम् ॥
यद्भुङ्क्ते वेष्टितशिरा यच्च भुङ्क्ते उदङ्मुखः ।
सोपानत्कश्च यद्भुङ्क्ते सर्व्वं विद्यात्तदासुरम् ॥
नार्द्धरात्रे न मध्याह्ने नाजीर्णे नार्द्रवस्त्रधृक् ।
न च भिन्नासनगतो न शयानः स्थितोऽपि वा ॥
न भिन्नभाजने चैव न भूम्यां न च पाणिषु ।
नोच्छिष्टो घृतमादद्यान्न मूर्द्धानं स्पृशेदपि ॥
न ब्रह्म कीर्त्तयेद्वापि न निःशेषं न भार्य्यया ।
नान्धकारे च नाकाशे न च देवालयादिषु ॥

| | | |
|---|---|---|
| प्रशस्तशुद्धपात्रेषु भुञ्जीताकुपितो नृप ! ॥<br>नासन्दीसंस्थिते पात्रे नादेशे च नरेश्वर ! ।<br>नाकाले नातिसङ्कीर्णे दत्त्वाग्रञ्च नरोऽग्नये ॥<br>आसन्दी दारुमयत्रिपदी ।<br>"मन्त्राभिमन्त्रितं शस्तं न च पर्य्युषितं नृप ! ।<br>अन्यत्र फलमांसेभ्यः शक्तुशाकादिकान्तथा ॥<br>तद्वद्धरितकेभ्यश्च गुडपक्वेभ्य एव च ।<br>भुञ्जीतोद्धृतसाराणि न कदाचिन्नरेश्वर ! ॥"<br>हरितकेभ्यः अपक्वलेह्यादिभ्यः ॥ | | |

नैकवस्त्रस्तु भुञ्जीत न च यानस्थितोऽपि वा ।
न पादुकानुगतो वा न हसन् विलपन्न हि ॥
भुक्त्वैवं सुखमास्थाय तदन्नं परिणामयेत् ॥”
इति कूर्म्मे उपविभागे १८ अध्यायः ॥ * ॥
अपरञ्च ।
“दत्त्वा च हुत्वा पितृदेवताभ्यो
भृत्वातिथीन् भृत्यजनावशिष्टम् ।
तुष्टः शुचिः श्रद्दधानोऽत्ति योऽन्नं
तस्यामृतं स्यात् स पुमान् भुनक्ति ॥”
सायं प्रातर्मनुष्याणामशनं देवनिर्म्मितम् ।
धैदिके लौकिकेऽग्नौ तु प्रत्यक्षे जाठरे तथा ॥
उपलिप्ते समे देशे शुचिः श्रद्धासमन्वितः ।
पात्रेष्वर्थानुरूपेषु पुत्त्रशिष्यादिभिर्वृतः ॥
सुसंस्कृतं हितं स्निग्धं भुञ्जीतान्नमकुत्सयन् ।
यवगोधूमशाल्याद्यं मांसशाकादिभिर्युतम् ॥
कट्वम्ललवणैस्तिक्तैर्व्यञ्जनैस्तु सुगन्धिभिः ।
भक्ष्यप्रकारान् विविधान् कन्दमूलफलानि च ॥
पात्रं भूमौ प्रतिष्ठाप्य यो भुङ्क्ते वाग्यतः शुचिः ।
भोजने भोजने चैव त्रिरात्रफलमश्नुते ॥
यत्नेन धारयेद्विप्रः पवित्रं दक्षिणे करे ।
भुञ्जानस्तु विशेषेण अन्नदोषैर्न लिप्यते ॥
यातुधानाः पिशाचाश्च असुरा राक्षसास्तथा ।
घ्नन्ति केबलमन्नस्य मण्डलस्य विवर्ज्जनात् ॥
आदित्या वसवो रुद्रा ब्रह्मा चैव पितामहः ।
मण्डलान्युपजीवन्ति तस्मात् कुर्व्वीत मण्डलम्
॥
चतुष्कोणं द्विजाग्रस्य त्रिकोणं क्षत्त्रियस्य तु ।
द्विकोणाकृति वैश्यस्य शूद्रस्य वर्त्तुलं सदा ॥
न लौहे मृण्मये पात्रे भिन्नेऽश्नीयात् कटेऽम्बरे ।
आपः पुनन्त्वितिमन्त्रेण भुव्यास्तीर्य्य
समासनम् ॥”
ध्रुवा द्यौरित्युपविश्य पात्रं प्रक्षाल्य मूर्द्धानं
दिवोऽरतिमितिपात्रमभिमन्त्र्यभूम्यावृत्वायनेति
भूमौ पात्रं प्रतिष्ठापयेत् । आहतवासाः शुक्ल-
वासा वा पवित्रात्मा क्षान्तात्मा प्राङ्मुख
आसीनः पाणी प्रक्षाल्य दशहोतारन्निगद्येति
ध्यायेदव्यक्तं पुरुषम् । तत ओजोऽसीत्यन्नाद्य-
माह्रियमाणं प्रतिपत्तयेत् । ओजोसीत्यादिना
प्रतिगृह्य अहमस्म्यग्निरश्मीत्यृभ्यामभिमन्त्रयेत्
।
उद्बुध्यस्वेति जाठराग्निमन्तरस्थं प्रबोधयेत् ।

अभृतोपस्तरणमसीत्यपःस्पृश्योपस्थाय
वाचं
नियच्छेत् । न्यस्तं महाव्याहृतिभिरद्भिः
प्रदक्षिणं
परिषिच्य सव्येन पाणिना
पात्रमविमुञ्चन्नमृतो-
पस्तरणमसीति पुरस्तादपः पीत्वा
पञ्चभिस्तैः
प्राणाहुतीर्ज्जुहोति । प्राणे निविष्टोऽमृतं
जुहोमि
शिवोमाविशाप्रदाहाय प्राणाय स्वाहा ।
अपाने निविष्टोऽमृतं जुहोमि शिवोमाविशा-
प्रदाहायापानाय स्वाहा । व्याने निविष्टोऽमृतं
जुहोमि शिवोमाविशाप्रदाहाय समानाय
स्वाहा । इति तूर्ष्णीं भूयो व्रतयेत् । प्रजापतिं
मनसा ध्यायेत् ॥ * ॥ प्राणाय स्वाहेति प्राण-
स्तृप्यति । प्राणे तृप्यति चक्षुस्तृप्यति ।
चक्षुषि
तृप्यति आदित्यस्तृप्यति । आदित्ये तृप्यति
द्यौस्तृप्यति । दिवि तृप्यन्त्यां यत्किञ्चिद्द्यौ-
श्चादित्यश्चाधितिष्ठतस्तत्तृप्यति
तस्यानुतृप्तिं अनु-
तृप्यति । व्यानाय स्वाहेति व्यानस्तृप्यति ।
व्याने तृप्यति श्रोत्रं तृप्यति । श्रोत्रे तृप्यति
चन्द्र-
मास्तृप्यति । चन्द्रमसि तृप्यति
दिशस्तृप्यन्ति ।
दिक्षु तृप्यन्तीषु यत्किञ्चिद्दिशः खं चन्द्रमा-
श्चाधितिष्ठन्ति । तत्तृप्यति तस्यानुतृप्तिं
अनु-
तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा
ब्रह्मवर्च्च-
सेनेति । अपानाय स्वाहेत्यपानस्तृप्यति ।
अपाने
तृप्यति वाक् तृप्यति । वाचि तृप्यन्त्यां अग्नि-
स्तृप्यति । अग्नौ तृप्यति पृथिवी तृप्यति ।
पृथिव्यां तृप्यन्त्यां यत्किञ्चित् पृथिवी वाग्नि-
श्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं
अनुतृप्यति ।
तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा
ब्रह्मवर्च्च-

र्जठरमसीतिनाभिदेशम् । यो देवानामधि-
पतीति पुनरपि हृदयदेशमालभ्य जपति ।
सावित्रीञ्चानुभाष्य त्रिरापो रसानां
रसभुक्
तत्रात्मा कर्म्मेष्टिः प्रीयतां विश्वभुगिति
ध्यायेद-
व्यक्तं पुरुषम् ॥ * ॥
“आहिताग्निरनड्वांश्च ब्रह्मचारी च ते
त्रयः ।
अश्नन्त एव सिद्ध्यन्ति नैषां
सिद्धिरनश्नताम् ॥
गृहस्थो ब्रह्मचारी च योऽनश्नंस्तु
तपश्चरेत् ।
प्राणाग्निहोत्रलोपेन अवकीर्णी भवेत्तु सः
॥
अन्तराप्रातराशञ्च सायमाशन्तथैव च ।
सदोपवासी भवति यो न भुङ्क्ते कदाचन
॥
प्राणाग्निहोत्रमन्त्राणां निरुद्धे भोजने जपेत्
।
त्रेधाग्निहोत्रमन्त्रांस्तु द्रव्यालाभेन तर्पयेत्
॥
यथाहि नलमैषीकमग्निप्रोतं प्रहूयते ।
तद्वत् सर्व्वाणि पापानि
निर्दहन्त्यात्मयाजिनः ॥
यथेह क्षुधिता बाला मातरं पर्य्युपासते ।
एवं सर्व्वाणि भूतानि अग्निहोत्रमुपासते
॥”
इति ॥ * ॥
“भोजनस्य निषेधन्तु
प्रवक्ष्याम्यनुपूर्ब्बशः ।
नोच्छ्रितो भक्षयेत् किञ्चिन्न गच्छन् वा
कदाचन ॥
खट्वारूढो न भुञ्जीत न पाणिस्थं कदाचन
।
चन्द्रसूर्य्योपरागे च ग्रस्तास्ते
चन्द्रसूर्य्ययोः ॥
गोब्राह्मणोपवासेन न वाजीर्णे तु भोजने ।
निशीथे नैकवासास्तु न
लग्नोच्छिष्टभाजने ॥

भूतपतये नमः भुवनपतये नमः भूतानां पतये नमः इति नमस्कारान्ते बलित्रयं भूमौ दद्यात् ।
अथात्रैवात्मानं चिन्तयेत् ।
"प्राणस्य हृदयं स्थानमपानस्य गुदं स्मृतम् ।
समानो नाभिदेशे तु उदानः कण्ठमाश्रितः ॥
पञ्चमः स तु विज्ञेयो व्यानः सर्व्वाङ्गसन्धिषु ।
राजीवसदृशः प्राणो हृदये नित्यसंस्थितः ॥
तस्याधस्तादपानस्तु स वै गोक्षीरसन्निभः ।
नाभ्या मध्ये समानस्तु विद्युज्ज्वालासमप्रभः ॥
प्राणस्योपर्य्युदानस्तु इन्द्रनीलसमप्रभः ।
उभाभ्यामथ शाखाभ्यामथवाप्येकशाखया ।
अशून्यं पात्रं कुर्व्वीत एवं हानिर्न जायते ॥
अन्तश्चरसि भूतेषु गुहायां विश्वतोमुख ! ।
त्वं यज्ञस्त्वं वषट्कारस्त्वं विष्णोः परमं पदम् ॥"

सेनेति । समानाय स्वाहा इति समानस्तृप्यति ।
समाने तृप्यति मनस्तृप्यति । मनसि तृप्यति पर्य्यन्यस्तृप्यति । पर्य्यन्ये तृप्यति विद्युत्तृप्यति ।
विद्युति तृप्यन्त्यां यत्किञ्चिद्विद्युत्पर्य्यन्यश्चाधि-तिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं अनुतृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्च्चसेनेति ।
उदानाय स्वाहेति उदानस्तृप्यति । उदाने तृप्यति वायुस्तृप्यति । वायौ तृप्यति आकाश-स्तृप्यति । आकाशे तृप्यति यत्किञ्चिद्वायु-श्चाकाशश्चाधितिष्ठतस्तत्तृप्यति। तस्यानुतृप्ति-मनुतृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्च्चसेनेति ॥ * ॥
"भुक्तेऽन्नेकेचित्काङ्क्षन्ति भुक्तशेषं भुविक्षिपेत् ।
केचित काङ्क्षन्त्यनाजीवाः केचित् कर्म्मवशा-नुगाः ॥
भुञ्जन्तु मम चोत्सृष्टं पात्रे वाथ मुवि स्थिते ।
अमृतापिधानमसीत्युपरिष्टात् पयः पिबेत् ॥
अह्नि पूर्ब्बोपरिष्टाच्च वस्त्रं प्राणस्य निर्णयेत् ।
भुक्त्रा पीत्वा च यः कश्चित् शून्यं पात्रं समुत् सृजेत् ॥
स पुनः क्षुत्पिपासार्त्तो भवेज्जन्मनि जन्मनि ।
अमृतापिधानमसीत्युपरिष्टादपः पिबेत् ॥"
अपः पीत्वाचान्तः प्राणस्थानान्यद्भिः स्पृशति ।
प्राणानां ग्रन्थिरसीति हृदयमालभ्य जपति प्राणानां ग्रन्थिरसि इति प्राणदेशम् । विष्णो-

न रात्रौ तिलसम्बद्धं दधि शक्तून्न माक्षिकम् ॥
कोविदारवटाश्वत्थफलानिन कदाचन ।
चणकञ्च कौसुम्भं करमथितञ्च यद्दधि ॥
वेद्या बहिः पुरोडाशं तुल्यं गोमांसभक्षणे ।
नोच्छिष्टेन घृतं ग्राह्यं शक्तून् वापद्गतोऽपि सन् ।
पलाण्डुं लशुनं वापि भुञ्जंस्तत्पापमाप्नुयात्॥
नानार्द्रमुखपाणिस्तु चन्द्रतारार्कमीक्षयेत् ।
भुञ्जन् कुर्व्वन् स्वमूर्द्धानं स्पृशेद् ब्रह्म न कीर्त्तयेत् ॥
नार्द्रवासाः शिरःक्लिन्नः सोपानत्को निरासनः ।
शयानः प्रौढपादश्च कृत्वा चैवावसक्थिकम् ॥
नाश्नीयान्न पिबेच्चैव कृत्वा पर्य्यस्तिकां नरः ।
पादप्रसारणं कृत्वा न च वेष्टितमस्तकः ॥
न च श्राद्धस्य यच्छिष्टं ग्रहे पर्य्युषितञ्च यत् ।
दम्पत्योर्भुक्तशेषन्तु न भुञ्जीत कदाचन ॥
नातिचरितमश्नीयात् भुक्त्रा शेषं विवर्ज्जयेत् ।
न भक्षयेत्तु निःशेषमन्यत्र दधिसर्पिषोः ॥
पयसो मधुशक्तूनां तिलानामोदनस्य च ।
न चैको मिष्टमश्नीयान्न बहूनाञ्च पश्यताम् ॥
बहवस्तु न भुञ्जन्ति तथा चकस्य पश्यतः ।
ओष्ठौ च न लिहेत् पाणिं नाङ्गुलिं पात्रमेव च ॥
शून्यालयेऽग्निशालायां देवागारे तथैव च ।
आयुर्निरस्यते तस्य मिष्टैकस्य बुभुक्षतः ॥
अदत्त्वा गोऽग्निविप्रेभ्यः कुमारायानुयायिषु ।
एकोऽन्नं मिष्टमश्नाति ततोऽन्यो नास्त्यपुण्यकृत् ॥
यस्त्वेकपङ्क्त्यां विषमं ददाति स्नेहाद्भयाद्वा यदि वार्थहेतोः ।
वेदेषु दृष्टामृषभिस्तु गीतां

एकपङ्क्त्युपविष्टानां दुष्कृतानां दुरात्मनाम्
।
सर्व्वेषां तत्समं तावद्यावत् पङ्क्तिर्न भिद्यते
॥
एवं यो ब्राह्मणो भुङ्क्ते सन्तर्प्य पितृदेवताः
।
स द्वे कुले समुद्धृत्य ब्रह्मसायुज्यमाप्नुयात्
॥”
इति वह्निपुराणे भोजनविधानम् ॥ * ॥
त्रिविधभोजनं यथा, --
“उच्छिष्टमवशिष्टं वा पथ्यं पूतमभीप्सितम्
।
भक्तानां भोजनं विष्णोर्नैवेद्यं सात्त्विकं मतम्
॥
इन्द्रियप्रीतिजननं शुक्रशोणितवर्द्धनम् ।
भोजनं राजसं शुद्धमायुरारोग्यवर्द्धनम् ॥
अतः परं तामसानां कट्वम्लोष्णाविदाहिकम्
।
पूतिपर्य्युषितं ज्ञेयं भोजनं तामसप्रियम् ॥”
इति कल्किपुराणे २५ अध्यायः ॥ * ॥
श्राद्धादिषु निमन्त्रितस्यान्यत्र भोजने दोषो
यथा, --
“निमन्त्रितोऽन्यतो भुङ्क्ते श्राद्धे दैवे
सपैतृके ।
स द्विजो नरके वासं लभते नात्र संशयः ॥”
देवतादिष्वभुक्तवत्सु भोजने दोषा यथा, --
“देवतापितृमर्त्येषु महत्सु ब्राह्मणेषु च ।
अभुक्तवत्सु येऽश्नन्ति बालपित्रग्निमातृषु ॥
दुष्टास्ते पूयनिचये निपात्यन्तेऽधमाधमाः ।
सूचीमुखाश्च जायन्ते क्षुधार्त्ताः
किरिविग्रहाः ॥”
“एकपङ् क्त्युपविष्टाश्च समुत्थाय प्रयान्ति
ये ।
विड्भोजनं राक्षसेन्द्र ! नरकन्ते प्रयान्ति हि
॥
एकसार्थप्रयातञ्च तथान्यञ्चार्थितं नराः ।
असंविभज्य भुञ्जन्ति ते यान्ति
श्लेष्मभोजनम् ॥
पायसं कृशरं मांसं वृथा भुक्तञ्च यैर्नरैः ।
तेषामयोगुडास्तप्ताः क्षिप्यन्ते वदनेऽद्भुताः
॥”

असगोत्रेण यत् पक्वं शोणितं तदपि
स्मृतम् ॥
अभक्तेन च यत् पक्वं स्त्रिया पक्वं
तथैव च ।
पक्वपात्रे च यत् पक्वं तत् सर्व्वं
निष्फलं भवेत् ॥”
पाककाष्ठनिरूपणं यथा, --
“उडुम्बरेण काष्ठेन कदम्बस्य दलेन च
।
शालेन करमर्द्देन उदरावर्त्तकिन च ॥
पक्वान्नं नैव भुञ्जीत भुक्त्रा
रात्रिमुपावसेत ॥”
निषिद्धान्नं यथा, --
“गर्हितान्नमवीरान्नं भुक्त्वा
चान्द्रायणञ्चरेत् ।
अप्रजा या तु वनिता नाश्नीयादेव
तद्गृहे ॥
शालकाष्ठस्य पक्वान्नं शिरीषकस्य चैव
हि ।
कालचण्डातकस्यैव वज्रवारणकस्य च
॥
भेरण्डशाल्मलैर्वापि पक्वान्नं गर्हितं
स्मृतम् ॥”
पाकपात्रत्यागकालो यथा, --
“यदा मृण्मयपात्रे तु पक्वं वै
सार्व्वकालिकम् ।
मासें पक्षे तथाष्टासु तत्पात्रं विसृजेद्
गृही ॥
धनुःपाके तथा सिंहे मीने चैव
वरानने ! !
यः कुर्य्याद्भोजनं देवि ! कृच्छ्रेणेव
विशुद्ध्यति ॥”
पाकार्थजलदानं यथा, --
“एकदा तु जलं दद्याद् द्विवारं न
प्रदापयेत् ।
त्रिभागं पूरयेत् पात्रं पश्चात्तोयं न
दापयेत् ॥”
भोजनस्थानादि यथा, --
“उपलिप्ते शुचौ देशे पादौ प्रक्षाल्य
वाग्यतः ।
प्राङ्मुखोऽन्नानि भुञ्जीत शुचिः पीठमव-

“मण्डलं भोजने काले चतुष्कोणं द्विजस्य च ।
क्षत्त्रियस्य भवेद्दैर्घं वैश्यस्य कूर्म्मपृष्टकम् ।
स्त्रीशूद्राणां भवेद्वृत्तं शकटाकारमेव वा ॥”
अथ भोजनकालः ।
“सायं प्रातर्द्विजातीनामशनं देवनिर्म्मितम् ।
नित्यमह्नि तमस्विन्यां सार्द्धप्रहरयामतः ॥
रात्रौ यामत्रयान्ते च सन्ध्ययोर्न कदाचन ।
अकालभोजनं कृत्वा प्राणायामेन शुद्ध्यति ।
अहोरात्रेश्च सन्ध्यायां भुक्त्वा कृच्छ्रं समाचरेत् ॥”
मोदकादिभक्षणानन्तरमन्नभोजनविधिर्य्यथा, --
मोदकं कन्दुपक्वञ्च गव्याढ्यं घृतसंयुतम् ।
पुनः पुनर्भोजने च पुनरन्नं न दुष्यति ।
त्रिसन्ध्यं भुक्तवान् यस्तु न स स्वार्थं द्विजः
क्वचित् ॥
भुक्त्वा रात्रिमुपगमे कृच्छ्रेणैकेन शुद्ध्यति ॥
कोलं हरिद्रा सौवीरं मरीचं जातिकोषकम् ।
ग्रन्थिपर्णादिकं सर्व्वं गन्धद्रव्यं तथौषधिः ।
प्रशस्तमेषामामान्नं स्विन्नञ्चापि न दुष्यति ॥
कुटुम्बभरणार्थाय पाकं पश्चान्निवेदयेत् ।
वैश्वदेवान्नमुद्धत्य भोजयेन्न विचारयेत् ॥
नाश्नीयात् केवलं रात्रौ विल्वञ्चैव तथा दधि ।
अङ्केन तृणगुच्छेन काष्ठखण्डेन वह्निना ॥
पङ्क्तिभेदं ततः कुर्य्यात् पश्चाद्भुञ्जीत वाग्यतः ।
हस्तदत्तं यदन्नञ्च शूद्रादत्तं न भक्षयेत् ॥
घृततैलञ्च लवणं पानीयं पायसं दधि ।
रविवारे तथा षष्ठ्यां भौमवारे दिनक्षये ।
पर्व्वकाले च द्वादश्यां द्विजस्तिक्तं न भक्षयेत् ॥
न वामेन पिबेत्तोयं न रसं तक्रमेव च ।
भेकाखुशिशुमार्ज्जारैस्तथा पारावतैरपि ॥
कलविङ्कैः पन्नगैश्च पाके स्पृष्टेऽपि सुन्दरि ! ।
गोधया बनमार्ज्जारैः पाकं न विसृजेत् क्वचित् ॥
स्वर्णरौप्यमये पात्रे पाषाणे ब्रह्मपत्रके ।
सकृद्भुक्त्वा तु देवेशि ! पराकस्य फलं लभेत् ॥
पूर्ब्बायां स्वर्णपात्रे च भोजनं यः समाचरेत् ।
पुण्डरीकस्य यज्ञस्य लभते फलमीप्सितम् ॥
स्वर्णपात्रे पश्चिमायां उत्तराभिमुखेन वा ।
तदन्नं शौकरं मांसं भुक्त्वा चान्द्रायणञ्चरेत् ॥
सर्व्वकामः स्वर्णपात्रे यशस्वी खर्परेषु च ।
पद्मपत्रे भवेत् पुष्टिर्हविष्याशी तु पुण्यवान् ॥
क्षयी भवति ताम्रे च काचपात्रे दरिद्रता ।
तूतपत्रे भवेदायुः कदले कीर्त्तिमाप्नुयात् ॥

इति वामनपुराणे १२ अध्यायः ॥ * ॥
औषधातिरिक्तकिञ्चिद्भोजनवतो
नित्यनैमित्तिक-
क्रियानिषेधो यथा, --
“द्रव्ये भुक्ते त्वजीर्णे च नैव भुक्त्रा च किञ्चन
।
कर्म्म कुर्य्यान्नरो नित्यं सूतके मृतके तथा ॥
पत्रं पुष्पञ्च ताम्बूलं भेषजत्वेन कल्पितम् ।
कणादिपिप्पल्यन्तञ्च फलं भुक्वा न
चाचरेत् ॥
जलस्यापि नरश्रेष्ठ ! भोजनाद्भेषजादृतें ।
नित्यक्रिया बिवर्त्तेत सह नैमित्तिकैः सदा
॥”
इति कालिकापुराणे ५४ अध्यायः ॥
भोजने पाकविधौ दिङ्नियमो यथा, --
“पूर्ब्बाशाभिमुखो भूंत्वा उत्तराशामुखेन वा
।
पचेदन्नञ्च मध्याह्ने सायाह्ने च विवर्ज्जयेत् ॥
अग्न्याशाभिमुखे पक्त्वा अमृतान्नं
विजानीहि ।
पूर्ब्बामुखो धर्म्मकामः शोकहानिश्च दक्षिणे
॥
श्रीकामश्चोत्तरमुखे पतिकामश्च पश्चिमे ।
ऐशान्याभिमुखे पक्त्वा दरिद्रो जायते नरः
॥”
पाकपात्रनिरूपणं यथा, --
“यदा तु आयसे पात्रे पक्त्वा अश्नाति वै
द्विजः ।
स पापिष्ठोऽपि भुङ्क्तेऽन्नं रौरवे परिपच्यते
॥
ताम्रे पक्त्वा चक्षुर्हानिर्मणौ भवति वै क्षयः ।
पितृभ्यां पक्वमन्नञ्च पितृव्येण यशस्विनि !
॥
पुण्डरीकस्य यज्ञस्य लभते फलमीप्सिंतम्
।
वातुलेन तु यत् पक्वं भगिन्या च कनिष्ठया
।
स्थितः ॥”
पीठनिरूपणं यथा, --
“सार्द्धहस्ते चतुष्कोणे
सहकारविनिर्म्मिते ।
चामभद्रदारुमये प्रादेशोच्छ्रायसंयुते ॥
वरुणासने भवेद्वृद्धिर्भद्रके
श्रियमाप्नुयात् ।
चामे धनविवृद्धिः स्याद्धर्म्मवृद्धिस्तु
भद्रके ।
शालासने कशेरुके किंशुके मरणं भवेत्
॥”
भोजने दीपनिरूपणं यथा, --
“घृतदीप्त्या यज्ञफलं तैले धेनुफलं
लभेत् ॥”
भोजने चाण्डालादिदृष्टिनिषेधो यथा, -
-
“यदा भोजनकाले तु चाण्डालैः
पतितैस्तथा ।
श्वकुक्कुटवराहैश्च म्लेच्छैश्च
अन्त्यजैरपि ।
अन्नं वाप्यथ पानं वा दृष्टमात्रं
परित्यजेत् ॥”
“रजस्वलायाः संस्पृष्टीर्वाचं श्रुत्रा
प्रमादतः ।
व्रतस्थो वर्ज्जयेद्देवि ! अव्रते
प्रोक्षणञ्चरेत् ॥
देवालये तथा तीर्थे सिद्धक्षेत्रे च
शङ्करि ! ।
ब्राह्मणानां समाजे तु भुक्त्वा क्रतुफलं
लभेत् ॥
आचान्ती भोजनं कुर्य्यादनामायां
हिरण्ययुक् ।
सुवर्णेन स्पृशेदन्नं तदन्नञ्चामृतं विदुः ॥
रजःस्पृशं यदन्नञ्च भुक्त्रा भवति
किल्विषी ।
पौष्पकेण स्पृशेदन्नमन्नं विष्ठासमं भवेत्
॥
वैदूर्य्येण माणिक्येन स्फटिकेन
स्पृशेदपि ।
स्वर्णेन संस्पृशेदन्नं तदन्नं
शुचितामियात् ॥”
भोजने दिङ्नियमो यथा, --
मधुपत्रे च रोगः स्याद्वटपत्रे तु वैष्णवः ।
शालपत्रे भवेत्कामी पनसे चैव स्वर्गतिः ।
निशापत्रे प्ररोहे च पुनः संस्कारमर्हति ॥”
इति मत्स्यसूक्तन्त्रे ४२ पटलः ॥
अथ स्मृत्युक्तभोजनविधिः । बहिःप्रक्षालित-
पाणिपादवदनो रत्नपाणिर्द्विवासा द्विराचान्तो
गोमयोपलिप्ते प्रावृते देशे शुद्धः शुद्धनीचासनो-
पविष्टो धर्म्मवृद्धिकामः प्राङ्मुख उदङ्मुखो
वा यशस्कामो जीवत्पितृमातृक्तेरो दक्षिणा-
मुखो धनकामः प्रत्यङ्मुखो भूमिस्पृष्टदक्षिण-
पाद आसनारूढसव्यपादोऽन्तर्जानुकरोदक्षि-

| | “आयुष्यं प्राङ्मुखो भुङ्क्ते रात्रौ चैव उदङ्-<br>मुखः ।<br>यशस्वी दक्षिणे चैव पश्चिमे तु विवर्ज्जयेत् ॥”<br>भोजने मण्डलानि यथा, -- | |
|---|---|---|

णदिक्कृतपानीयपात्रो दक्षिणावर्त्तेन चतु-
ष्कोणमण्डलं कृत्वा लोहताम्रमृण्मयभवादि-
दुष्टभग्नकांस्यकदल्यादिपत्रपृष्ठपद्मपलाशपत्रेतर
पात्रं विधाय प्रक्षाल्य च आत्मानं पात्रञ्च
दक्षिणक्रमेण जलेन वेष्टयित्वा तदुपरि लोहे-
तरपात्रान्तरेण हस्ताभ्यां प्रतिषिद्धेतरमन्ना-
दिकं स्थापयित्वा अन्नं दृष्ट्वा प्रहृष्येत् ।
अस्माकं
नित्यमेवास्तु इत्यभिलप्य संप्रोक्ष्य
आचाराच्चतु-
ष्कोणमण्डलाभ्यन्तरे जललिखितचक्रोपरि ॐ
नारायणाय नम इत्यन्नं सजलं मध्ये दद्यात् ।
तत्पार्श्वे ॐ भुवः पतये स्वाहा ॐ भुवनपतये
स्वाहा ॐ भूतानां पतये स्वाहा । इति बलि-
चतुष्टयं दद्यात् । तदिदं सोपकरणमन्नं ॐ
विष्णवे नम इत्युत्सृज्य तदग्रं किञ्चित् ॐ
विश्वकसेनाय नम इति दत्त्वा अन्नोपरि विष्णु-
निर्म्माल्यतुलसीपत्रं प्रक्षिप्य विष्णुपादोदकं पुरा
न गृहीतञ्चेदिदानीम् ।
"ॐ कृष्ण कृष्ण महाबाहो भक्तानामार्त्ति-
नाशन ! ।
सर्व्वपापप्रशमनं पादोदकं प्रयच्छ मे ॥"
इति गृहीत्वा इष्टदेवतानामपरेरितं श्रुत्वा
स्वयं त्रिरुच्चार्य्य वा ॐ अमृतोपस्तरणमसि
स्वाहा इत्यनेन पीत्वा ।
"ॐ अकालमृत्युहरणं सर्व्वव्याधिविनाशनम् ।
विष्णोः पादोदकं पुण्यं शिरसा धारयाम्यहम् ॥"
इत्यनेन पादोदकशेषं शिरसि दद्यात् ।
"ॐ उच्छिष्टभोजिनस्तस्य वयमुच्छिष्टकाङ्क्षिणः
।
येन लीलावराहेण हिरण्याक्षो निपातितः ॥"
इत्युक्त्वा अङ्गुष्ठानामिकाभ्यां
घृतप्लुतस्तोकमन्न-
मादाय महामौनी साङ्गुष्ठसर्व्वाङ्गुलिभिर्व्वा ॐ
प्राणाय स्वाहा इत्यनेन मुखे दत्त्वा अदन्तच्छिन्नं
निगिरेत् । एवं ॐ अपानाय स्वाहा ॐ समा-
नाय स्वाहा ॐ उदानाय स्वाहा ॐ
व्यानाय स्वाहा । ततो वीर्य्यकामो मौनी
भुञ्जीत । ततः प्रथमं द्रवयुक्तमधुरं मध्ये कठि-
नाम्ललवणानि अन्ते द्रवयुक्तकटतिक्तानि
यथालाभं क्षीरान्तं साङ्गुष्ठैदक्षकरसर्व्वाङ्गु-

ततो जिह्वाञ्च संघृष्य
जलगण्डूषैर्मुखाभ्यन्तरं
संशोध्य पाणी पादौ च प्रक्षाल्य
आसनस्थ एव
भूमौ पादौ दत्त्वा द्विराचम्य मुखं
तुलसी-
पत्रादिना संशोध्य दक्षिणपादाङ्गुष्ठे
दक्षिण-
हस्तेन --
"ॐ अङ्गुष्ठमात्रपुरुषो ह्यङ्गुष्ठञ्च
समाश्रितः ।
ईशः सर्व्वस्य जगतः प्रभुः प्रीणातु
विश्वधृक् ॥"
इति मन्त्रेण जलं दद्यात् । ततो
महीमार्ज्जना-
भावे अशुचित्वादविलम्बमेव
भोजनपात्रमुद्धृत्य
तत् स्थानं उच्छिष्टमपनीय
गोमयोदकाभ्यां
संमृज्य सिञ्चेत् । सुस्थः प्रशान्तचित्त
आसने
उपविश्याभीष्टदेवतानाम स्मृत्वा --
"ॐ अग्निराप्याययत्वन्नं पार्थिवं
पवनेरितः ।
दत्तावकाशो नभसा जरयत्वस्तु मे
सुखम् ॥
अन्नं बलाय मे भूमेरपामग्न्यनिलस्य च
।
भवत्वेतत्परिणतौ ममास्त्वव्याहतं
सुखम् ॥
प्राणापानसमानानामुदानव्यानयोस्तथा
।
अन्नं तुष्टिकरञ्चास्तु ममास्त्वव्याहतं
सुखम् ॥
अगस्तिरग्निर्व्वडवानलश्च
भुक्तं ममान्नं जरयत्वशेषम् ।
सुखं ममैतत्परिणामसम्भवं
यच्छत्वरोगं मम चास्तु देहे ॥
विष्णुः समस्तेन्द्रियदेहदेहि-
प्रधानभूतो भगवान् यथैकः ।
सत्येन तेनान्नमशेषमेत-

षष्ठ इति मुख्यः कल्पः प्रागुक्तन्यायात् ।
कृत्य-
चिन्तामणौ ।
"अन्नस्य प्राशनं प्रोक्तं मासि षष्ठेऽष्टमे बुधैः ।
स्त्रीणान्तु पञ्चमे मासि सप्तमे प्रजगौ मुनिः ॥
द्वादशीसप्तमीनन्दारिक्तासुपञ्चपर्व्वसु ।
बलमायुर्यशो हन्यात् शिशूनामन्नभोजनम् ॥"
भुजबलभीमे ।
"षष्ठे मासि निशाकरे शुभकरे रिक्तेतरे वै
तिथौ
सौम्यादित्यसितेन्दुजीवदिवसे पक्षे च कृष्णेतरे
।
प्राजेशादितिपौष्णवैष्णवयुगैर्हस्तादिषट्कोत्तरै-
राग्नेयाप्पतिपित्रभैश्च नितरामन्नादिभक्षे
शुभम् ॥"
युगैरिति प्राजेशादौ प्रत्येकं सम्बध्यते अत्रापि
तिथ्यङ्गादिविद्धर्क्षं विवर्जयेत ।
"वृषद्वन्द्वधनुर्मीनकन्यालग्नेऽन्नभक्षणम् ।
त्रिकोणाष्टकयूक्रान्त्यग्रहा यद्वत्तथा फलम् ॥
दुष्टः शशधरो लग्नात् षष्ठाष्टस्थोऽन्नभक्षणे ॥"
मार्कण्डेयपुराणम् ।
"देवतापुरतस्तस्य पितुरङ्कगतस्य च ।
अलङ्कृतस्य दातव्यमन्नं पात्रे च काञ्चने ॥
मध्वाज्यकणकोपेतं प्राशयेत् पायसन्ततः ।
कृतप्राशनमुत्सङ्गे मातुर्बालन्तु तं त्यजेत् ॥
देवाग्रतोऽथ विन्यस्य शिल्पभाण्डानि सर्व्वशः
।
शास्त्राणि चैव शस्त्राणि ततः पश्येत्तु लक्षणम् ॥
प्रथमं यत् स्पृशेद्बालः शिल्पभाण्डं स्वयं तथा
।
जीविका तस्य बालस्य तेनैव तु भविष्यति ॥"
सोमवारे दोषमाह भोजराजः ।
"वाचालो बलवान् दिने
दिनपतेरत्यन्तदीप्तानलो
देही हीनहुताशनः शिशिरगौ कौजे रुजा
पीडितः ।
बौधे भोगसुखोदयी प्रथमभुग्जीवे चिरायुः
सुखी
शुक्रे सौख्यबलान्वितोऽतिसुभगोमन्दे च
मन्दानलः ॥"
इति ज्योतिस्तत्त्वम् ॥

लिभिः अनतितृप्तं भुञ्जीत । पश्चादधिकं जला-
दिकं न पातव्यम् । जलक्षीरदधिघृतमधुशाक-
शक्तुमांसेतरद्रव्याणां शेषं रक्षणीयम् । भोजने
संपूर्णे तु मांसभोजने करं प्रक्षाल्य तदभोजने
तु करमप्रक्षाल्यैव सान्नेन हस्तेन जलं गृहीत्वा
ॐ अमृतापिधानमसि स्वाहा इति जलगण्डूषं
गृहीत्वा सान्नं तज्जलशेषं ॐ रौरवेऽपुण्य-
निलये पद्मार्व्वुदनिवासिनाम् । उच्छिष्टभागि-
नामन्नमक्षय्यमुपतिष्ठतामितिभूमौ निक्षिपेत् ।
भोजनकाले तु विडालकर्म्मकस्पर्शत्यागः ।
विडालकर्त्तृकस्पर्शे न दोषः । ततः स्थानान्तरं
न गच्छेत् । परावृत्य मृद्भिर्मुखहस्तलेपमपनीय
तृणादिना जिह्वाघर्षणयोग्यं दन्तेभ्यो गृहीत-
रसद्रव्यं रक्तपातक्षतादिकं विना अपनयेत् ।
यत्ने कृते यदि न निःसरति तदा न दोषः ।

दारोग्यदं मे परिणाममेतु ॥
विष्णुरत्ता तथैवान्नं परिणामश्च वै यथा
।
सत्येन तेन मद्भुक्तं जीर्य्यत्वन्नमिदं तथा
॥”
इत्युच्चार्य्य वामहस्तेनोदरं परिमृजेत् ।
ततः
पादशतव्रजनानन्तरं वामपार्श्वेन
किञ्चित्कालं
शयितव्यम् । ततस्ताम्बूलादि
मुखवासद्रव्यं
भोक्तव्यम् । इत्याह्निकाचारे
पञ्चमयामार्द्ध-
कृत्यम् ॥ * ॥ अथ
भोजनादिदानफलम् ।
“भोजनाच्छादनं दत्त्वा दत्त्वा चोपानहौ
द्विज ! ।
स स्वर्गलोकं संभुज्य सर्व्वकामोऽत्र
जायते ॥
विद्यां भक्त्या प्रयच्छेद्यः परंब्रह्मण्यसौ
विशेत् ।
विद्यार्थिने च विप्राय यो दद्याद्भोजनं
नरः ॥
अन्नं प्राणो जलं प्राणः
प्राणश्चौषधमुच्यते ।
तस्मादौषधदानेन दत्ताः स्युरसवो
द्विजाः ॥
इति पराशरस्मृतिः ॥
भोजने प्रतिषेधो यथा, --
“ताम्रपात्रे पयःपानमुच्छिष्टे
घृतभोजनम् ।
दुग्धे च लवणं दद्यात् सद्यो
गोमांसभक्षणम् ॥
यः शूद्रेण समाहूतो भोजनं कुरुते
द्विजः ।
सुरापश्च स विज्ञेयः
सर्व्वधर्म्मबहिष्कृतः ॥
स्नानं रजकतीर्थेषु भोजनं गणिकालये
।
शयनं पूर्ब्बपादे च ब्रह्महत्या दिने दिने
॥”
इति कर्म्मलोचनम् ॥

तद्वैदिकपर्य्यायाः । आवयति १ भर्वति २
बभस्ति
३ वेति ४ वेवेष्टि ५ अविष्यन् ६ वप्सति ७
भसथः ८ वब्धाम् ९ ह्वरति १० । इति
दशाति-
कर्म्माणः । इति वेदनिघण्टौ २ अध्यायः ॥
(तथा च सुश्रुते सूत्रस्थाने ४६ अध्याये ।
“वक्ष्याम्यतः परं कृत्स्नमाहारस्योपकल्पनाम्
।
घृतं कार्ष्णायसे देयं पेया देया तु राजते ॥
फलानि सर्व्वभक्ष्यांश्च प्रदद्याद्वैदलेषु च ।
परिशुष्कप्रदिग्धानि सौवर्णेषु प्रकल्पयेत् ॥
प्रद्रवाणि रसांश्चैव राजतेषूपहारयेत् ।
कट्वराणि खडांश्चैव सर्व्वान् शैलेषु दापयेत् ॥
दद्यात्ताम्रमये पात्रे सुशीतं सुशृतं पयः ।
पानीयं पानकं मद्यं मृण्मयेषु प्रदापयेत् ॥
काचस्फटिकपात्रेषु शीतलेषु शुभेषु च ।
दद्याद्वैदूर्य्यपात्रेषु रागषाडवसट्टकान् ॥

| | | |
|---|---|---|
| | अथ शिशूनां प्रथमान्नभोजनदिनादि।<br>यथा,<br>यमः ।<br>“ततोऽन्नप्राशनं मासि षष्ठे कार्य्यं यथाविधि ।<br>अष्टमे वाथ कर्त्तव्यं यद्वेष्टं मङ्गलं कुले ॥” | |

पुरस्ताद्विमले पात्रे सुविस्तीर्णे मनोरमे ।
सूदः सूपौदनं दद्यात् प्रदेहांश्च
सुसंस्कृतान् ॥
फलानि सर्व्वभक्ष्यांश्च परिशुष्काणि यानि
च ।
तानि दक्षिणपार्श्वे तु
भुञ्जानस्योपकल्पयेत् ॥
प्रद्रवाणि रसांश्चैव पाणीयं पानकं पयः ।
खडान् यूषांश्च पेयांश्च सव्ये पार्श्वे
प्रदापयेत् ॥
सर्व्वान् गुडविकारांश्च रागषाडवसट्टकान्
।
पुरस्तात् स्थापयेत्प्राज्ञो द्वयोरपि च
मध्यतः ॥
एवं विज्ञाय मतिमान्
भोजनस्योपकल्पनाम्।
भोक्तारं विजने रम्ये निःसम्बाधे शुभे शुचौ
॥
सुगन्धिपुष्परचिते समे देशेऽथ भोजयेत् ।
पूर्ब्बं मधुरमश्नीयान्मध्येऽम्ललवणौ रसौ
॥
पश्चाच्छेषान् रसान् वैद्यो
भोजनेष्ववचारयेत् ।
आदौ फलानि भुञ्जीत दाडिमादीनि
बुद्धिमान् ॥
ततः पेयांस्ततो भोज्यान्
भक्ष्यांश्चित्रांस्ततःपरम्।
घनपूर्ब्बं समश्नीयात् केचिदाहुर्विपर्य्ययम्
॥
आदावन्ते च मध्ये च भोजनस्य तु
शस्यते ।
अतीवायतयामास्तु क्षपा येष्वृतुषु स्मृताः
॥
तेषु तत्प्रत्यनीकाढ्यं भुञ्जीत प्रातरेव तु ।
येषु चापि भवेयुश्च दिवसा भृशमायताः ॥
तेषु तत्कालविहितमपराह्णे प्रशस्यते ।
रजन्यो दिवसाश्चैव येषु चापि समाः
स्मृताः ॥
कृत्वासममहोरात्रं तेषु भुञ्जीत भोजनम् ।
तस्मात् सुसंस्कृतं युक्त्या
दोषैरेतैर्व्विवर्ज्जितम् ।

**भोजयिता**, [ऋ] त्रि, (भुज् + णिच् + कर्त्तरि
तृच् ।) भोजनकारयिता । भोगप्रयोजकः । यथा,
“कर्त्ता च देही भोक्ता च आत्मा भोजयिता
सदा ।
भोगो विभवभेदश्च निष्कृतिर्मुक्तिरेव च ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २३ अध्याये ॥

**भोजाधिपः**, पुं, (भोजस्य अधिपः ।) कंसराजः ।
इति शब्दरत्नावली ॥

**भोज्यं**, त्रि, (भुज्यते इति । भुज् + कर्म्मणि +
ण्यत् । “भोज्यं भक्ष्ये ।” ७ । ३ । ६९ । इति
निपातनात् न कुत्वम्) भोजनीयद्रव्यम् । यथा,
“भोज्यं भोजनशक्तिश्च रतिशक्तिर्वराः स्त्रियः ।
विभवो दानशक्तिश्च नाल्पस्य तपसः फलम् ॥”
इति चाणक्ये ५१ श्लोकः ॥
अपि च ।
“आहारं षड्विधं चूष्यं पेयं लेह्यं तथैव च ।
भोज्यं भक्ष्यं तथा चर्व्व्यं गुरु विद्याद्यथोत्तरम् ॥”
चूष्यं इक्षुदण्डादि । पेयं पानकशर्करीदकादि ।
लेह्यं रसालाक्वथितादि । भोज्यं भक्तसूपादि ।
भक्ष्यं लड्डुकमण्डकादि । चर्व्व्यं चिपिटचण-
कादि । इति भावप्रकाशः ॥ (पितॄणां तृप्त्यर्थं
देये अन्नादौ च ॥)
भोज्यदानस्येतिकर्त्तव्यता यथा । ॐ अद्यामुके
मासि अमुके पक्षे अमुकतिथौ अमुकगोत्रस्य
पितुरमुकदेवशर्म्मण एकोद्दिष्टविधिकसाम्बत्-
सरिकश्राद्धवासरे अमुकगोत्रस्य पितुरमुक-
देवशर्म्मणोऽक्षयस्वर्गकाम इदं सघृतसवस्त्रोप-
करणामान्नभोज्यमर्च्चितं श्रीविष्णुदैवतं यथा-
सम्भवगोत्रनाम्ने ब्राह्मणायाहं ददानि । ततो
दक्षिणा । ॐ अद्येत्यादि कृतैतत्सघृत-
सवस्त्रोपकरणामान्नभोज्यदानकर्म्मणः साङ्गतार्थं
दक्षिणामिदं काञ्चनमूल्यं श्रीविष्णुदैवतं यथा-
सम्भवगोत्रनाम्ने ब्राह्मणायाहं ददानि । कृतै-
तत्सघृतसवस्त्रोपकरणामान्नभोज्यदानकर्म्म
च्छिद्रमस्तु । इति श्राद्धप्रयोगतत्त्वम् ॥

**भोज्यसम्भवः**, पुं, (सम्भवत्यस्मादिति सम्भव उत्-
पत्तिकारणम् । भोज्यं सम्भवोऽस्य ।) शरीरस्थ-
रसधातुः । इति शब्दचन्द्रिका ॥

**भोलिः**, पुं, उष्ट्रः । इति त्रिकाण्डशेषः ॥

**भौतः**, पुं, (भूतानि प्राणिनोऽधिकृत्य प्रवृत्तः ।
भूत + अण् ।) भूतयज्ञः । बलिकर्म्म ।
यथा, --
“होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूज-
नम् ॥”
इत्याह्निकतत्त्वम् ॥ देबलः । इति
शब्दमाला ॥
(भिक्षादिभ्योऽण् । भूतसङ्घः ।
तस्येदमित्यण् ।)
भूतसम्बन्धिनि, त्रि ॥

**भौतिकं**, क्ली, (भूतानां विकार इति ठक् ।)
मुक्ता । इति राजनिर्घण्टः ॥ त्रि,
भूतसम्बन्धि ॥
(भूतानि क्षित्यादीनि तद्विकारश्च
गोघटवृक्षा-
दयः ।
“आहङ्कारिकत्वश्रुतेर्न भौतिकानि ।” इति
।
२ । २० । सांख्यसूत्रम् ॥ सृष्टिविशेषश्च
।
तथाच ।
“ईश्वरकृष्णकृतसांख्यकारिकायाम्।
अष्ट विकल्पो दैवस्तैर्य्यग्योनश्च पञ्चधा
भवति ।
मानुष्यश्चैकविधः समासतो भौतिकः
सर्गः ॥
अत्र च सर्गे चैतन्योत्कर्षापकर्षविशेषात्
तार-
तम्यम् । यथा, तत्रैव । ऊर्द्ध्वं
सत्त्वविशालस्तमो-
विशालश्च मूलतः सर्गः । मध्ये
रजोविशालो
ब्रह्मादिस्तम्बपर्य्यन्तः ॥

**भौतिकः**, पुं, महादेवः । इति त्रिकाण्डशेषः ॥
(उपद्रवः । व्याध्यादिः । चक्षुरादि । शरी-
रादि ॥ (भूतेषु महदादिक्षित्यन्तेषु
आत्मबुद्ध्या
उपासकाः भौतिकाः । बौद्धविशेषाः ।

यथोक्तगुणसम्पन्नमुपसेवेत भोजनम् ॥”

**भोजनपात्रं**, क्ली, (भोजनस्य पात्रम् ।) भक्ष्यद्रव्या-

धारः । यथा, --
“तिष्ठन्ति यत्र नवकाञ्चननिर्म्मितानि
श्रेणीकृतानि परितस्तु कटोरकाणि ।
राकाशशाङ्कनवमण्डलभास्करंयत्
क्षौणीभृतां रजतनिर्म्मितथालकं स्यात् ॥”
अथोद्‌र्ध्वप्रतिमादर्शिकांस्यमादर्शवत्
शुचि ।
पात्रं दृढं सुविस्तीर्णं स्त्रीणामत्यन्तदुर्लभम्
॥
पत्रावली भवति वा नृपभोजनाय
निर्जन्तुजालरहितामलवारिधौता।
पालाशभूरुहदलैरचिता मनोज्ञा
तादृग्विपर्णकगणैः परिवेष्टिता च ॥”
इति पाकराजेश्वरः ॥

**भोजपतिः**, पुं, (भोजानां भोजवंशीयानां पतिः ।)

कंसराजः । यथा, --
“मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो
मूर्त्तिमान्
गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता
स्वपित्रोः शिशुः ।
मृत्युर्भोजपतेर्विराडविदुषां तत्त्वं परं
योगिनां
वृष्णीनां परदेवतेति विदितो रङ्गंगतः
साग्रजः ॥”
इति श्रीभागवते १० स्कन्धे ४३ अध्याये
१७ श्लोकः ॥

**भोजपुरं**, क्ली, (भोजस्य भोजराजस्य पुरम् ।)

स्वनामख्यातदेशः ।
“आजिरभूद्भोजपुरे साकमसुरवरैः ।
हरे रेवापारे सवलो नूनं ते लघीयांसः ॥”
इति विदग्धमुखमण्डनम् ॥

**भोटाङ्गः**, पुं, (भोटस्तज्जातिरङ्गमस्य ।) देश-

विशेषः । इति शब्दरत्नावली । भोटान् इति
भाषा ॥ (भोटान्तोऽपि पाठः ॥)

**भोभो**, व्य, सम्बोधनम् । इति हलायुधः ॥ (यथा,

महानाटके । १ । १४ ।
“भोभो भुजङ्ग ! तरुपल्लवलोलजिह्व ! ॥”)

**भोलानाथः**, पुं, शिवः । यथा, --

“ब्रह्मणो वचनं श्रुत्वा भोलानाथः कृपानिधिः ।
संहृत्य तां महाज्वालां सगणोऽन्तरगान्मुने ! ॥”
इति श्रीशिवपुराणोत्तरखण्डे तुण्डिवामदेवसंवादे
वाराणसीमाहात्म्ये पञ्चक्रोशीयात्रायां महा-
कालगणोत्पत्तिर्नाम २५ अध्यायः ॥ * ॥
पुस्तकान्तरे भोलानाथ इत्यत्र महादेव इति
पाठः ॥

“भौतिकास्तु शतं पूर्णं
सहस्रन्त्वाभिमानिकाः ॥”
इति पातञ्जलयोगसूत्रव्यासभाष्यटीकायां
वाच-
स्पतिमिश्रधृतवचनम् । १ । १९ ॥)

**भौती**, स्त्री, (भूतानां भूतयोनीनामियमिति ।

भूत + अण् । ङीप् । तस्यां
भूतानामधिका-
रित्वविद्यमानत्वात्तथात्वम् ।) रात्रिः ।
इति
हेमचन्द्रः । १४२ ॥

**भौत्यः**, पुं, (भूतेरपत्यं पुमान् । भूतिः + अप-

त्यार्थे ष्यञ् ।) भूतिमुनिपुत्त्रश्चतुर्द्दशो
मनुः ।
यथा, --
मार्कण्डेय उवाच ।
“अतः परन्तु भौत्यस्य त्वमुत्पत्तिं
निशामय ।
देवानृषींस्तथा पुत्त्रांस्तथैव वसुधाधिपान्
॥
बभूवाङ्गिरसः पुत्त्रो भूतिर्नाम्नातिकोपनः
।
तस्य भ्राता सुवर्च्चाभूद् यज्ञे तेन
निमन्त्रितः ॥
यियासुः शान्तिनामानं शिष्यमाह
महामुनिः ।
सदोद्युक्तं सदाचारमुदारं मुनिसत्तमम् ॥
भूतिरुवाच ।
अहं यज्ञं गमिष्यामि भ्रातुः शान्ते !
सुवर्च्चसः ।
तेनाहूतस्त्वया चेह यत् कर्त्तव्यं शृणुष्व
तत् ॥
अतिजागरणं वह्नेस्त्वया कार्य्यं ममाश्रमे ।
तथा तथाप्रमत्तेन यथाग्निर्न शमं व्रजेत् ।
इत्याज्ञप्ते तथेत्युक्तः स तु शिष्येण
शान्तिना ।
जगाम यज्ञं तं भ्रातुराहूतः सन् यवीयसा
॥
प्रशान्तस्तावदनलो योऽसौ भूतिपरिग्रहः
।

|  |  | तं दृष्ट्वा सोऽनलं शान्तं<br>शान्तिरत्यन्तदुःखितः ।<br>भीतश्च भूतेर्बहुधा चिन्तयन् स महाद्युतिः<br>॥ |
|---|---|---|

मार्कण्डेय उवाच ।
बहुधैवं विचिन्त्यासौ भीतस्तस्य तदा गुरोः ।
ययौ मतिमतां श्रेष्ठः शरणं जातवेदसम् ॥
स चकार ततः स्तोत्रं सप्तार्च्चेर्यतमानसः ।
भूत्वैकचित्तो मेदिन्यां न्यस्तजानुः कृताञ्जलिः ॥
स एवं संस्तुतस्तेन भगवान् हव्यवाहनः ।
ज्वालामालावृततनुस्तस्यासीदग्रतोमुने ! ॥
परितुष्टोऽस्मि ते विप्र ! भक्त्या यत्ते स्तुतिः कृता ।
वरं ददामि भवतः प्रार्थ्यतां यत्तवेप्सितम् ॥
भगवन् ! कृतकृत्योऽस्मि यत्त्वां पश्यामि रूपिणम् ।
तथापि भक्तिनम्रस्य भगवन् ! श्रूयतां मम ॥
ममापराधात् संत्यक्तं यत्तेऽधिष्ट्यं विभावसो ! ।
तत्त्वयाधिष्ठितं सोऽद्य पूर्ब्बवत् पश्यतां द्विजः ॥
तथान्यदपि मे देव ! प्रसादं कुरुषे यदि ।
पुत्रो विशिष्टो भवतु निरपत्यस्य मे गुरोः ॥
यथा च मैत्रीं तनये स करिष्यति मे गुरुः ।
तथा समस्तसत्त्वेषु भवत्वस्य मनो मृदु ॥
अग्निरुवाच ।
गुरोरर्थं त्वया ब्रह्मन् ! याचितं यद्वरद्वयम् ।
नात्मार्थे तेन मे प्रीतिस्त्वय्यतीव महामुने ! ॥
भविष्यत्येतदखिलं गुरोर्यत् प्रार्थितं त्वया ।
मैत्री समस्तभूतेषु पुत्त्रस्तस्य भविष्यति ॥
मन्वन्तराधिपः पुत्त्रो भौत्यो नाम भविष्यति ।
महाबलो महावीर्य्यो महाप्राज्ञो गुरोस्तव ॥
इत्युक्त्वा भगवानग्निः पश्यतस्तस्य वै मुने ! ।
वभूवादर्शनः सद्यः प्रदीपो निर्वृतो यथा ॥
एतस्मिन्नन्तरे सोऽपि गुरुस्तस्य महात्मनः ।
भ्रातुर्यवीयसो यज्ञादाजगाम स्वमाश्रमम् ॥
तस्यागतस्य शिष्योऽसौ चक्रे पादाभिवन्दनम् ।
गृहीतासनपूजश्च तमाह स तदा गुरुः ॥
वत्सातिहार्द्दं त्वयि मे तथान्येष्वपि जन्तुषु ।
न वेद्मि किमिदं त्वञ्चेद्वत्सैतत् कथयाशु मे ॥
ततः स शान्तिस्तत् सर्व्वमाचार्य्याय महात्मने ।
अग्निनाशादिकं विप्र ! समाचष्ट यथातथम् ॥
तच्छ्रुत्वा स परिष्वज्य स्नेहार्द्रनयनो गुरुः ।
शिष्याय प्रददौ वेदान् साङ्गोपाङ्गान् महात्मने ॥
भौत्थो नाम मनुस्तस्य पुत्त्रो भूतेरजायत ।

**भौमः**, पुं, (भूमेरपत्यं । भूमि + शिवादित्वादण् ।) मङ्गलग्रहः । (यथा, वृहत्संहितायाम् । ५ । ६० ।
"पश्यन् ग्रस्तं सौम्यो
घृतमधुतैलक्षयाय राज्ञां च ।
भौमः समरविमर्द्दं
शिखिकोपं तस्करभयञ्च ॥")
नरकराजः । (यथा, हरिवंशे । १२० । १४ ।
"तासां पुरवरं भौमोऽकारयन्मणि-
पर्व्वतम् ॥")
तस्येदमित्यण् । भूमिभवे, त्रि । इति मेदिनी ।
मे, २२ ॥ (यथा, महाभारते । १ । १३६ । २० ।
"भौमेन प्राविशद्भूमिं पार्व्वतेनाभवद्गिरिः ।
अन्तर्धानेन चास्त्रेण पुनरन्तर्हितोऽभवत् ॥")
अम्बरः । इति धरणिः ॥ रक्तपुनर्नवा । इति
राजनिर्घण्टः ॥

**भौमजलं**, क्ली, (भूमि + अण् ।) भूमिसम्बन्धि-सलिलम् । तत् त्रिविधं यथा, --
"भौमम्भो निगदितं प्रथमं त्रिविधं बुधैः ।
जाङ्गलं परमानूपं ततः साधारणं क्रमात् ॥"
तेषां लक्षणानि गुणाश्च ।
"अल्पोदकोऽल्पवृक्षश्च
पित्तरक्तामयान्वितः ।
देशोऽनूप इति ख्यात आनूपं तद्भवं जलम् ॥
मिश्र चिह्नस्तु यो देशः स हि साधारणः स्मृतः ।
तम्मिन् देशे यदुदकं तत्तु साधारणं स्मृतम् ॥
जाङ्गलं सलिलं रूक्षं लवणं लघु तत्तनु ।
वह्निकृत् कफहृत् पथ्यं विकारान् कुरुते बहून् ॥
"स्पृशन्ति बिन्दवः पादौ य आचामयतः परान् ।
भौमिकैस्ते समा ज्ञेया न तैरप्रयतो भवेत् ॥")

**भौमी**, स्त्री, (भूम्यां जाता । भूमिः + अण् + स्त्रीत्वात् ङीष् ।) सीता । इति शब्दरत्नावली ॥

**भौरिकः**, पुं, (भूरि सुवर्णमधिकरोतीति ठक ।) कनकाध्यक्षः । इत्यमरः । २ । ७ ॥

**भ्राश**, ऋ ण टु ङ भासि । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-सेट् ।) ऋ अवभ्नाशत् ।
ण भ्नेशे बभ्नाशे । टु भ्नाशथुः । ङ भ्नाशते ।
इति दुर्गादासः ॥

**भ्नाश**, य ङ भासि । इति कविकल्पद्रुमः ॥ (दिवा० आत्म०-अक०-सेट् ।) य ङ भ्नाश्यते । इति दुर्गादासः ॥

**भ्रास**, ऋ ण ङ टु भासि । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-सेट्० ।) ऋ अवभ्नासत् ।
ण भ्नेसे वभ्नासे । ङ भ्नासते । टु भ्नासथुः । इति
दुर्गादासः ॥

**भ्नास**, य ङ भासि । इति कविकल्पद्रुमः ॥ (दिवा०-आत्म०-अक-०सेट् ।) य ङ भ्नाश्यते । इति दुर्गादासः ॥

**भ्यस**, ङ भये । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-सेट् ।) अन्तःस्थाद्ययुक्तः । ङ
भ्यसते । इति दुर्गादासः ॥

**भ्रंशः**, पुं, (भ्रन्श + भावे घञ् ।) अधःपतनम् । यथा । भ्रेषो भ्रंशो यथोचितात् । इत्यमरः । २ । १८६ । २३ ॥ यथोचितात् यथाप्राप्तात् भ्रंशोऽधःपतनम् । इति भ्रेषशब्दटीकायां

तस्य मन्वन्तरे देवानृषीन् भूपांश्च मे शृणु ॥
भविष्यस्य भविष्यांस्तु गदतो मम विस्तरात् ।
देवेन्द्रो यश्च भविता तस्य विख्यातकर्म्मणः ॥
चाक्षुषाश्च कनिष्ठाश्च पवित्रा भ्राजिरास्तथा ।
रजोवृकाश्च इत्येते पञ्च देवगणाः स्मृताः ॥
शुचिरिन्द्रस्तथा तेषां त्रिदशानां भविष्यति ।
महाबलो महावीर्य्यः सर्व्वैरिन्द्रगुणैर्युतः ॥
अग्नीधश्चाग्निबाहुश्च शुचिर्युक्तोऽथ माधवः ।
शुक्रो जितश्च सप्तैते तदा सप्तर्षयः स्मृताः ॥
गुरुर्गभीरो ब्रध्नश्च भरश्चानुग्र एव च ।
स्त्रीमानी च प्रवीरश्च विष्णुः संक्रन्दनस्तथा ॥
तेजस्वी सुवलश्चैव भौत्यस्यैते मनोः सुताः ।
चतुर्द्दशं मयैतत्ते मन्वन्तरमुदाहृतम् ॥”
इति मार्कण्डेयपुराणे मन्वन्तरानुवर्णननामा-
ध्यायः ॥

आनूपं वार्य्यभिष्यन्दि स्वादु स्निग्धं घनं
गुरु ।
वह्निकृत् कफहृन्नित्यं विकारान् कुरुते
बहून् ॥
साधारणन्तु मधुरं दीपनं शीतलं लघु ।
तर्पणं रोचनं तृष्णादाहदोषत्रयप्रणुत् ॥”
अथ भौमानामेव नादेयादीनां लक्षणानि
गुणाश्च । तत्र नादेयस्य लक्षणं गुणाश्च
।
“नद्या नदस्य वा नीरं नादेयमिति
कीर्त्तितम् ।
नादेयमुदकं रूक्षं वातलं लघु दीपनम् ।
अनभिष्यन्दि विशदं कटुकं कफपित्तनुत्
॥
नद्यः शीघ्रवहा लघ्व्यः सर्व्वा
याश्चामलौदकाः ।
गुर्व्व्यः शैवलसंछन्ना मन्दगाः कलुषाश्च
याः ॥
नदीसरस्तडागस्थे कूपप्रस्रवणादिजे ।
उदके देशभेदेन गुणान् दोषांश्च लक्षयेत्
॥”
इति भावप्रकाशः ॥

**भौमनः**, पुं, (आदिसर्गे भवतीति भू + कर्त्तरि
मन् । भूमा ब्रह्मा । तस्यापत्यम् । अण् ।
मन-
न्तत्वात् न टेर्लोपः ।) विश्वकर्म्मा । इति
पुराणम् ॥ (यथा, महाभारते । १ ।
२२६ । १२ ।
“ससर्ज्ज यं सुतपसा भौमनो भुवनप्रभुः
।
प्रजापतिरनिर्द्देश्यं यस्य रूपं रवेरिव ॥”

**भौमरत्नं**, क्ली, (भूमौ जातं । भूमि + अण् ।
तादृशं रत्नम् ।) प्रबालम् । इति
राजनिर्घण्टः ॥

**भौमिकः**, त्रि, भूम्यधिकारी । भूमिमधिकरोति
यः । इत्यर्थे ष्णिकप्रत्ययेन निष्पन्नः ॥
(भूमि-
स्थितः । यथा, मनौ । ५ । १४२ ।

भरतः ॥ (यथा, कामन्दकीये नीतिसारे । २
। ३९ ।
“उद्वेजनादधर्म्मस्तु तस्माद् भ्रंशो महीपतेः
॥”
नाशः । यथा, बृहत्संहितायाम् । ४६ । २५ ।
“शाखाभङ्गेऽकस्मात्
वृक्षाणां निर्द्दिशेद्रणोद्योगम् ।
हसने देशभ्रंशं
रुदिते च व्याधिबाहुल्यम् ॥”)

**भ्रकुंशः**, पुं, (भ्रुवा कुंसो भाषणं यस्य । पृषोदरा-
दित्वात् सस्य शः ।) स्त्रीवेशधारी
नर्त्तकपुरुषः ।
इत्यमरटीकायाम् ॥ (अस्यं विशेषो
भ्रकुंसशब्दे
द्रष्टव्यः ॥)

**भ्रकुंसः**, पुं, (भ्रुवा कुंसो भाषणं शोभा वा यस्य
सः । ६ । ३ । ६१ । इत्यस्य
“भ्रुकुंसादीनामकारो
भवतीति वक्तव्यम् ।” इति वार्त्तिकोक्त्या
उका-
रस्यात्वम् ।) स्त्रीवेशधारी नर्त्तकपुरुषः ।
तत्-
पर्य्यायः । भ्रुकुंसः २ भ्रूकुंसः ३ । इत्यमरः ।
१ । ७४४ ॥ भृकुंसः ४ भ्रकुंशः ५ । इति
तट्टीका ॥

**भ्रकुटिः**, स्त्री, (भ्रुवोः कुटिः कौटिल्यम् । “भ्रु कुं-
सादीनामकारो भवतीति वक्तव्यम् ।” ६ । ३
। ६१ ।
इत्यस्य वार्त्तिकोक्त्या । उकारस्यात्वम् ।)
क्रोधा-
दिना भ्रुवः कौटिल्यम् । इत्यमरः । १ । ७ ।
३७ ॥
अस्या रूपान्तराणि । भ्रुकुटिः । भ्रूकुटिः ।
भृकुटिः । भ्रकुटी । भ्रुकुटी । (यथा, माघे ।
१५ । ८ ।
“भ्रुकुटीकठोरितललाटमाननम् ।”)
भ्रूकुटी । भृकुटी । इति भरतः ॥

**भ्रण**, शब्दे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) रेफयुक्तः । भ्रणति । इति
दुर्गा-
दासः ॥

**भ्रन्श**, इर् य उ अधःपते । इति कविकल्पद्रुमः ॥
(दिवा०-पर०-अक०-सेट् ।) भ्रश्यति । इर्
अभ्रशत् । अभ्रंशीत् ॥

**भ्रन्श**, लृ उ ङ अधःपते । इति कविकल्पद्रुमः ॥
(भ्वा०-आत्म०-अक० सेट् ।) लृ अभ्रशत्
। उ
भ्रंशित्वा भ्रष्ट्वा । ङ भ्रंशते । इति दुर्गादासः
॥

**भ्रम**, इर् चाले । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-अक०-सेट् ।) इर् अभ्रमत् अभ्रमीत् ।
इति दुर्गादासः ॥

**भ्रम**, भ य चाले । इति कविकल्पद्रुमः ॥ (दिवा०-
पर०-सक०-सेट् ।) भ य भ्राम्यति । इति
दुर्गादासः ॥

**भ्रम**, उ ज ण चाले । इति कविकल्पद्रुमः ॥
(भ्वा०-पर०-अक०-सेट् ।) उ भ्रमित्वा
भ्रान्त्वा ।
ज भ्रामः भ्रमः । ज्वलादित्वाण्णप्रत्ययेऽपि
जनबध इत्यादिना ह्रस्वे भ्रम इत्येव । तेन
ज्वलादावस्य पाठो निष्फल इति
धातुप्रदीपा-
दयः । वस्तुतस्तु । ज्वलादिपाठसामर्थ्यान्न
ह्रस्वः । ण भ्रेमतुः बभ्रमतुः । य भ्रम्यति
भ्रमति । चाल इह पादविहरणम् ।
"न जाने को हेतुर्भ्रमति विपिने भिक्षुक इव
।"
भ्रेमुः शिलोच्चयान् भीमानित्यत्र
गत्यर्थविवक्षया
सकर्म्मकत्वम् । इति दुर्गादासः ॥

**भ्रमः**, पुं, (भ्रमु अनवस्थाने इति । भ्रम + भावे
घञ् ।) मिथ्याज्ञानम् । (यथा, राजतरङ्गि-
ण्याम् । ३ । ४२३ ।
तत्प्रपञ्चो विपर्य्यासः संशयोऽपि
प्रकीर्त्तितः ।
आद्यो देहे यात्मबुद्धिः शङ्खादौ
पीततामतिः ॥
भवेन्निश्चयरूपा सा संशयोऽथ प्रदर्श्यते ।
किंस्विन्नरो वा स्थाणुर्व्वेत्यादिबुद्धिस्तु
संशयः ॥
तदभावप्रकारा धीस्तत्प्रकारा तु निश्चयः
।
स संशयो भवेद् या धीरेकत्राभावभावयोः
॥
साधारण्यादिधर्म्मस्य ज्ञानं संशयकारणम्
।
दोषोऽप्रमाया जनकः प्रमायास्तु गुणो
भवेत् ॥
पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः
।"
इति भाषापरिच्छेदः । १२७ -- १३२ ॥
(भ्रमणशीले, त्रि ॥ यथा, ऋग्वेदे । ६ । ६
। ४ ।
"अधभ्रमस्त उर्व्विया विभाति
यातयमानो अधिसानुपृश्नेः ॥"
"भ्रमो भ्रमणशीलो ज्वालासमूहः ॥" इति
तद्भाष्ये सायनः ॥ रोगविशेषः । तद्यथा, -
-
"मूर्च्छा पित्ततमःप्राया
रजःपित्तानिलाद्भ्रमः ।
चक्रवद्भ्रमतो गात्रं भूमौ पतति सर्व्वदा ।
भ्रमरोग इति ज्ञेयो रजःपित्तानिलात्मकः
॥"
इति वैद्यकमाधवकृतरुग्विनिश्चये
मूर्च्छाधिकारे ॥
तथाचास्य चिकित्सा ॥
"शतावरी बलामूलद्राक्षासिद्धं पयः पिबेत्
।
ससितं भ्रमनाशाय बीजं वाट्यालकस्य च
॥
पिबेद्दुरालभाक्वाथं सघृतं भ्रमशान्तये ।
त्रिफलायाः प्रयोगो वा प्रयोगः पयसोऽपि
वा ॥
तत्पर्य्यायः । मधुव्रतः २ मधुकरः ३ मधुलिट्
४
मधुपः ५ अली ६ द्विरेफः ७ पुष्पलिट् ८ भृङ्गः
९
षट्पदः १० अलिः ११ । इत्यमरः । २ । ५ ।
२९ ॥
कलालापः १२ शिलीमुखः १३ पुष्पन्धयः १४
मधु-
कृत् १५ द्विपः १६ भसरः १७ चञ्चरीकः १८
सुकाण्डी १९ मधुलोलुपः २० इन्दिन्दिरः २१
मधु-
मारकः २२ । इति राजनिर्घण्टः ॥ मधुपरः २३
लम्बः २४ पुष्पकीटः २५ मधुसूदनः २६
भृङ्गराजः
२७ मधुलेही २८ रेणुवासः २९ । इति शब्द-
रत्नावली ॥ कामुकः । इति मेदिनी । रे, १९१
॥

**भ्रमरकः**, पुं, (भ्रमर इवेति भ्रमर + "इवे प्रति-
कृतौ ।" ५ । ३ । ९६ । इति कन् ।) ललाट-
लम्बितचूर्णकुन्तलः । इत्यमरः । २ । ६९६ ॥
(स्वार्थे कन् । भृङ्गः । बालमूषिकः । इति ।
मेदिनी । के, २०४ ॥ अम्बुभ्रमः । इति विश्वः
॥

**भ्रमरकीटः**, पुं, (भ्रमर इव कीटः ।) कीट-
विशेषः । कुम्रे पोका इति भाषा ॥ यथा, --
"जीवन्मुक्तिस्तु तद्विद्वान् पूर्ब्बोपाधिगुणांस्त्य-
जेत् ।
सच्चिदानन्दधर्म्मत्वाद्भजेद्भ्रमरकीटवत् ॥"
इत्यात्मबोधः ॥

**भ्रमरच्छली**, स्त्री, (भ्रमरान् छलयतीति । छलि +
अच् । गौरादित्वात् ङीष् ।) लताविशेषः । तत्-
पर्य्यायः । भृङ्गाह्वा २ भ्रमरा ३ भृङ्गमूलिका ४ ।
अस्या गुणाः । यथा, राजनिर्घण्टे ।
"भृङ्गच्छल्ली च कटुका तिक्ता दीपनरोचनी ।"

**भ्रमरप्रियः**, पुं, (भ्रमरस्य प्रियः ।) धाराकदम्बः ।
इति रत्नमाला ॥

**भ्रमरमारी**, स्त्री, (भ्रमरान् मारयति गन्धोत्कर्षेण

"देवो जगाद तं भद्र ! कोऽयं ते मनसि भ्रमः ॥")
तत्पर्य्यायः । भ्रान्तिः २ मिथ्यामतिः ३ । इत्य-
मरः । १ । ५ । ४ । अम्बुनिर्गमः । कुन्दः । (यथा, रघौ । ६ । ३२ ।
"अवन्तिनाथोऽयमुदग्रबाहु-
र्विशालवक्षास्तनुवृत्तमध्यः ।
आरोप्य चक्रभ्रममुष्णतेजाः
त्वष्ट्रेव यत्नोल्लिखितो विभाति ॥"
"चक्रभ्रमं चक्राकारशस्त्रोत्तेजनयन्त्रम् ।
भ्रमोऽम्बुनिर्गमे भ्रान्तौ कुन्दाख्ये शिल्पियन्त्रके ॥"
इति तट्टीकायां मल्लिनाथः ॥)
भ्रमणम् । इति मेदिनी । मे, २० ॥ (यथा, कथासरित्सागरे । २७ । ४६ ।
"एवं किलोक्त्वा व्यसृजत् तं भ्रमाय बणिक्-सुतम् ।")
न्यायमते भ्रमस्य नामान्तरं अप्रमा । भ्रमो-द्विविधः । विपर्य्यासः संशयश्च । आद्यो यथा ।
देहे आत्मबुद्धिः । शङ्खादौ पीततामतिः । सा निश्चयरूपा । द्वितीयो यथा । किंस्विन्नरो वा स्थाणुर्वा इत्यादिबुद्धिः । तस्य कारणम् ।
पित्तदूरत्वमोहभयादिनानाविधदोषः । यथा,
"अप्रमा च प्रमा चेति ज्ञानं द्विविधमुच्यते ।
तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरूपिता ॥

इति वैद्यकचक्रपाणिसंग्रहे मूर्च्छाद्यधिकारे ॥)

**भ्रमणं**, क्ली, (भ्रम + भावे ल्युट् ।) गमनवि-शेषः । पर्य्यटनम् । (यथा, भाषापरिच्छेदे । ७ ।
"भ्रमणं रेचनं स्यन्दनोर्द्ध्वज्वलनमेव च ॥"
पुनःपुनर्गमनम् । यथा, देवीभागवते । १ । १४ । ४६ ॥
"संसारेऽस्मिन्महाघोरे भ्रमणं नभचक्रवत् ॥"
तथाच, कामन्दकीये । १४ । २४ ।
"नवाग्निधूमसंरोधो दिङ्मोहो भ्रमणानि च ॥"
"भ्रमणानि दिग्भ्रमात् दुर्गमप्रदेशेषु चंक्रमणानि ।"
भ्रमत्यस्मिन्ननेनेति वा । भ्रम + ल्युट् ।) मण्ड-लम् । यथा, सूर्य्यसिद्धान्ते । १२ । ७६ ।
"कालेनाल्पेन भ्रमणं भुङ्क्तेऽल्पभ्रमणाश्रितः ।
ग्रहः कालेन महता मण्डले महति भ्रमन् ॥"
अल्पभ्रमणं स्वल्पपरिधिमण्डलमानमित्यर्थः ।
उत्तरपदे मण्डले महतीति दर्शनात् ॥")
हस्त्यश्वरथदोलादिद्वाराभ्रमणगुणाः । वात-कोपनत्वम् । अङ्गस्थैर्य्यकरत्वम् । बलाग्निविवर्द्धन-त्वञ्च । इति राजवल्लभः ॥

**भ्रमणी**, स्त्री, (भ्राम्यति अनयेति भ्रम + करणे ल्युट् । ङीप् ।) कारण्डिका । अधीशितुः क्रीडाट्या । इति मेदिनी । ने, ६९ ॥

**भ्रमत्कुटी**, स्त्री, (भ्रमन्ती चलन्ती कुटी क्षुद्र-गृहमिव ।) तृणादिच्छत्रम् । तत्पर्य्यायः । कावारी २ जङ्गलकुटी । इति त्रिकाण्डशेषः ॥

**भ्रमरः**, पुं, (भ्रमति प्रतिकुसुममिति ॥ अर्त्ति-व्याकुलयतीति । मृ + णिच् + अण् । गौरादि-त्वात् ङीष् ।) मालवदेशप्रसिद्धपुष्पवृक्ष-विशेषः । तत्पर्य्यायः । भ्रमरारिः २ भृङ्गारिः ३ भृङ्गमारी ४ मांसपुष्पिका ५ कुष्ठारिः ६ भ्रमरी ७ षष्टिलता ८ । अस्या गुणाः । तिक्त-त्वम् । पित्तश्लेष्मज्वरनाशित्वम् । शोफकण्डूति-कुष्ठब्रणदोषत्रिदोषनाशित्वञ्च । इति राज-निर्घण्टः ॥

**भ्रमरा**, स्त्री, (भ्रमर + अजादित्वात् टाप् ।) भ्रमरच्छल्ली । इति राजनिर्घण्टः ॥

**भ्रमरातिथिः**, पुं, (भ्रमरः अतिथिरभ्यागतो यस्य ।) चम्पकः । इति राजनिर्घण्टः ॥

**भ्रमरानन्दः**, पुं, (मधुबाहुल्यात् भ्रमराणा-मानन्दो यस्मात् सः ।) वकुलः । अतिमुक्तकः । रक्ताम्लानः । इति राजनिर्घण्टः ॥

**भ्रमरालकः**, पुं, (भ्रमर इव अलति भूषयतीति । अल + ण्वुल् ।) ललाटस्थितचूर्णकुन्तलः । तत्-पर्य्यायः । भ्रमरकः २ कुरुलः ३ । इति हेमचन्द्रः । ३ । २३३ ॥

**भ्रमरी**, स्त्री, (भ्रमर + ङीष् ।) जतुका । पुत्त्र-दात्री । षट्पदी । इति राजनिर्घण्टः ॥

**भ्रमरेष्टः**, पुं, (भ्रमराणामिष्टः ।) श्योनाक-प्रभेदः । इति राजनिर्घण्टः ॥

|  | कमीत्यादिना। “उणा० ३ । १३२ । इति अरः ।)<br>कीटविशेषः । (यथा, रघुवंशे । ८ । ३८ । “भ्रमरैः कुसुमानुसारिभिः ।”) |  |
|---|---|---|

**भ्रमरेष्टा**, स्त्री, (भ्रमराणामिष्टा ।) भार्गी ।

भूमिजम्बूः । इति राजनिर्घण्टः ॥

**भ्रमरोत्सवा**, स्त्री, (भ्रमराणां उत्सवः प्रमोदो

यस्याः ।) माधवी । इति राजनिर्घण्टः ॥

**भ्रमासक्तः**, पुं, (भ्रमे भ्रमणे आसक्तः युक्तः ।)

शस्त्रमार्जकः । इति हेमचन्द्रः । ३ । ५८० ॥

**भ्रमिः**, स्त्री, (भ्रम + बाहुलकात् इः ।) भ्रमणम् ।

तत्पर्य्यायः । भ्रमः २ । इत्यमरः । ३ । २ । ९ ॥ भ्रमी
३ । इति भरतः ॥ (मण्डलाकारगतिः ४ । तथाच
नैषधचरिते । १ । ७३ ।
"अचीकरच्चारुहयेन या भ्रमी-
र्निजातपत्रस्य तलस्थले नलः ।")
मण्डलाकारसैन्यरचना । यथा, --
"वीरान् सहस्रशो दृष्ट्वा भ्रमिभिः पर्य्यवस्थितान् ।
लवो लवेन सन्धाय शरान् रोषप्रपूरितः ॥
भ्रमिराद्या सहस्रेण द्वितीयायुतसङ्ख्यया ।
तृतीयायुतयुग्मेन तुरीयायुतपञ्चभिः ॥
पञ्चमी लक्षयोधानां षष्ठी योधायुताधिकैः ।
सप्तमी लक्षयुग्मेन सप्तभिर्भ्रमिभिर्युतान् ॥
मध्ये लवो भ्रमिव्याप्तः सञ्चरन् बह्निवत्तदा ।
दाहयामास सर्व्वान् वै सैनिकान् भ्रमिकार-
कान् ॥"
इति पाद्मे पातालखण्ड ६१ अध्यायः ॥

**भ्रमी**, [न्] त्रि, (भ्रम + इनि ।) भ्रमविशिष्टः । भ्रमो

विद्यते अस्येति अस्त्यर्थे इन्प्रत्ययेन निष्पन्नः ॥

**भ्रश** य उ अधःपतने । इति कविकल्पद्रुमः ॥

(दिवां-पर०-अक०-सेट् ।) य भ्रश्यति । उ भ्रशित्वा भ्रष्ट्वा । इति दुर्गादासः ॥

**भ्रष्टं**, त्रि, (भ्रश् + कर्त्तरि + क्तः ।) च्युतम् । अस्य

पर्य्याया गलितशब्दे द्रष्टव्याः ॥
"अर्थाद्भ्रष्टस्तीर्थ्यात्रान्तु गच्छेत्
सत्याद्भ्रष्टो रौरवं वै ब्रजेच्च ।
"भ्राजिष्णुभिर्यः परितो विराजते
लसद्विमाना बलिभिर्महात्मनाम् ॥")
विष्णौ, पुं । यथा, तस्य सहस्रनामस्तोत्रे ।
भ्राजिष्णुर्भोजनं भोक्ता
सहिष्णुर्जगदादिजः ॥

**भ्रातरौ**, पुं, (भ्राता च भगिनी च । भ्रातृस्वस्रो-

रित्यादिना एकशेषः ।) भ्रातृभगिन्यौ । नित्य-
द्विवंचनान्तोऽयम् । इत्यमरः । २ । ६ । ३६ ॥

**भ्राता**, [ऋ] पुं, (भ्राजते इति । भ्राज + "नप्तृ-

नेष्टृत्वष्टृहोत्रिति । उणा० । २ । ९६ । इति
तृन् । निपात्यते च ।) एकगर्भजातः । "भाइ"
इति भाषा । तत्पर्य्यायः । सहोदरः २
समानोदर्य्यः ३ सोदर्य्यः ४ सगर्भः ५ सहजः ६
सोदरः ७ । इति हेमचन्द्रः ॥ पितरि मृते
ज्येष्ठभ्रातुः पितृतुल्यत्वम् । यथा, --
"ज्येष्ठो भ्राता पितृतुल्यो मृते पितरि शौनक ! ।
सर्व्वेषां स पिता हि स्यात् सर्व्वेषामनुपालकः ॥
कनिष्ठस्तेषु सर्व्वेषु समत्वेनानुवर्त्तते ।
समोपभोगजीवेषु यथैव तनयस्तथा ॥"
इति गारुडे ११४ अध्यायः ॥
तस्य भार्य्याहरणे तस्मै दायादाने च दोषो
यथा, ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५६ अध्याये ।
"भ्रातृजायापहारी च मातृगामी भवेन्नरः ।
ब्रह्महत्यासहस्रञ्च लभते नात्रसंशयः ॥
स याति कुम्भीपाकञ्च यावच्चन्द्रदिवाकरौ ।
तस्मादुर्त्तीर्य्य पापी च विष्ठायां जायते कृमिः ॥
प्रयातो नश्यति तथा तन्न कार्य्यं विजानता ॥"
इति विष्णुपुराणे १ अंशे १६ अध्यायः ॥
अपि च, मात्स्ये ५ अध्याये ।
"ततः प्रभृति न भ्रातुः कनीयान् मार्गमिच्छति ।
अन्विषन् दुःखमाप्नीति तेन तं परिवर्जयेत् ॥"
ज्येष्ठभ्रात्रादेर्गुरुत्वं यथा, --
"उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः ।
मातुलः श्वशुरस्त्राता मातामहपितामहौ ।
बन्धुर्ज्येष्ठः पितृव्यश्च पुंस्येते गुरवः स्मृताः ॥"
इति कौर्म्मे उपविभागे ११ अध्यायः ॥
विभक्तानां तेषां धर्म्मवृद्धिर्यथा, --
व्यासः ।
"भ्रातॄणां जीवतोः पित्रोः सहवासो विधीयते ।
तदभावे विभक्तानां धर्म्मस्तेषां विवर्द्धते ॥
भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्म्मणा ।
स निर्भाज्यः स्वकादंशात् किञ्चिद्दत्त्वोप-
जीवनम् ॥"
ज्येष्ठभ्रातृप्रशंसा यथा, --
"बिभृयाद्वेच्छतः सर्व्वान् ज्येष्ठो भ्राता यथा पिता ।
भ्राता शक्तः कनिष्ठो वा शक्त्यपेक्षा कुले स्थितिः ॥
कुटुम्बार्थेषु चोद्युक्तस्तत् कार्य्यं कुरुते तु यः ।
स भ्रातृभिर्बृंहणीयो ग्रासाच्छादनवाहनैः ॥
अन्योन्यभेदो भ्रातॄणां सुहृदां वा बलान्तक ! ।
भवत्यानन्दकृद्देव ! द्विषतां नात्र संशयः ॥" * ॥
भ्रातृसंस्कारस्यावश्यकत्वम् । यथा, नारदः ।
"येषान्तु न कृताः पित्रा संस्कारविधयः क्रमात् ।
कर्त्तव्या भ्रातृभिस्तेषां पैतृकादेव तद्धनात् ॥
अविद्यमाने पित्रर्थे स्वांशादुद्धृत्य वा पुनः ।
अवश्यकार्य्याः संस्कारा भ्रातृभिः पूर्ब्बसंस्कृतैः ॥"
विभक्तानां तेषां साक्षित्वादि यथा, --
"साक्षित्वं प्रतिभाव्यञ्च दानं ग्रहणमेव च ।
विभक्ता भ्रातरः कुर्य्युर्नाविभक्ताः परस्परम् ॥"
इति दायतत्त्वम् ॥

**भ्रातृकः**, त्रि, (भ्रातुरागत इति । भ्रातृ + "ऋत-

ष्ठञ् ।" ४ । ३ । ७८ । इति ठञ् । भ्रातुरागत-

योगभ्रष्टः सत्यधृतिञ्च गच्छेत्
राज्याद्भ्रष्टो मृगयां वै व्रजेच्च ॥”
इति गारुडे नीतिसारे १०९ अध्यायः ॥

**भ्रस्ज**, औ ञ श पाके । इति कविकल्पद्रुमः ॥

(तुदा०-उभ०-सक०-अनिट् ।) रेफयुक्तादि-
र्दन्त्योपधः । क्विपि संयोगादिलोपे भृट् ।
पाक
इह भर्ज्जनम् । ञश भृज्जति भृज्जते मत्स्यं
सूपकारः । औ अभ्राक्षीत् । इति दुर्गादासः ॥

**भ्राज**, ङ ण ऋ टु भासि । इति कविकल्पद्रुमः ॥

(भ्वा०-आत्म०-अक०-सेट्, ।) रेफयुक्तः ।
ङ
भ्राजते ण भ्रेजे बभ्राजे । अनुबन्धबलात्
संयो-
गादित्वेऽप्याकारस्याप्येत्वम् ॥ ऋ
अबिभ्रजत्
अवभ्राजत् । टु भ्राजथुः । इति दुर्गा-
दासः ॥

**भ्राजकं**, क्ली, (भ्राज् + “ण्वुल् तृचौ ।” ३ । १ ।

१३३ । इति ण्वुल् ।) पित्तम् । इति शब्द-
चन्द्रिका ॥

**भ्राजिष्णुः**, त्रि, (भ्राज् + इष्णुच् ।) अलङ्कारा-

दिना दीप्तियुक्तः । इत्यमरः । २ । ६ । १०१
॥
(यथा, भागवते । २ । ९ । १२ ।
वर्षकोटिसहस्राणि तत्र स्थित्वा च
पातकी ।
ततो भवेन्महापापी वर्षकोटिसहस्रकम् ॥
पुंश्चलीयोनिगर्भे च कृमिश्चैव पुरन्दर ! ।
गृध्रः कोटिसहस्राणि शतजन्मानि
कुक्कुरः ।
भ्रातृजायापहरणात् शतजन्मानि शूकरः
॥”
“यो ददाति न दायञ्च बलिष्ठो दुर्ब्बलाय
च ।
स याति कुम्भीपाकञ्च
यावच्चन्द्रदिवाकरौ ॥
भ्रातुरन्वेषणे भ्राता न गच्छेत् । यथा, --
नारद उवाच ।
“हे हर्य्यश्वा महावीर्य्याः प्रजा यूयं
करिष्यथ ।
ईदृशो लक्ष्यते यत्नो भवतां श्रूयतामिदम्
॥
वालिशा वत यूयं ये नास्या जानीत वै
भुवः ।
अन्तरूर्द्ध्मधश्चैव कथं स्रक्ष्यथ वै प्रजाः
॥
ऊर्द्ध्वं तिर्य्यगधश्चैव यदाप्रतिहता
गतिः ।
तदा कस्माद्भुवो नान्तं सर्व्वे द्रक्ष्यथ
वालिशाः ॥
ते तु तद्वचनं श्रुत्वा प्रयाताः सर्व्वतो
दिशम् ।
अद्यापि न निवर्त्तन्ते समुद्रेभ्य इवापगाः
॥
हर्य्यश्वेष्वथ नष्टेषु दक्षः प्राचेतसः पुनः ।
वैरिण्यामथ पुत्राणां सहस्रमसृजद्विभुः ॥
विवर्द्धयिषवस्ते तु सवलाश्वाः प्रजाः
पुनः ।
पूर्ब्बोक्तं वचनं ब्रह्मन्नारदेन प्रचोदिताः ॥
अन्योन्यमूचुस्ते सर्व्वे सम्यगाह
महामुनिः ।
भ्रातॄणां पदवी चैव गन्तव्या नात्र संशयः
॥
ज्ञात्वा प्रमाणं पृथ्व्यास्तु प्रजाः
स्रक्ष्यामहे पुनः ।
तेऽपि तेनैव मार्गेण प्रयाताः सर्व्वतो
दिशम् ।
धनादि ।) भ्रातृयोग्यः । इति सिद्धान्तकौमुदी ॥

**भ्रातृजः**, पुं, (भ्रातुः सहोदरात् जायते इति ।

जन् + “पञ्चम्यामजातौ ।” ३ । २ । ९८ । इति
डः ।)
भ्रातुरपत्यम् । तत्पर्य्यायः । भ्रात्रीयः २ । इत्य-
मरः । २ । ६ । ३६ ॥ भ्रातृव्यः ३ भ्रातृपुत्त्रः
४ ।
इति शब्दरत्नावली ॥ (स्त्रियां टाप् । भ्रातृजा ।
भ्रातुष्पुत्त्राम् ॥)

**भ्रातृजाया**, स्त्री, (भ्रातुर्जाया ।) भ्रातृभार्य्या ।

(यथा, मेघदूते । १ । १० ।
“अव्यापन्नामविहतगतिर्द्रक्ष्यसिभ्रातृजायाम्
।”)
तत्पर्य्यायः । प्रजावती २ । इत्यमरः । २ । ६
। ३० ॥

**भ्रातृद्वितीया**, स्त्री, (भ्रातृमङ्गलार्था भ्रातृभोज-

नार्था वा द्वितीया इति मध्यपदलोपी कर्म्म-
धारयः ।) कार्त्तिकशुक्लद्वितीया । तद्विवरणं
यथा । यमद्वितीया तु प्रतिपद्युता ग्राह्ये-

| | | |
|---|---|---|
| | अद्यापि न निवर्त्तन्ते समुद्रेभ्य इवापगाः ॥<br>ततः प्रभृति वै भ्राता भ्रातुरन्वेषणे द्विज ! । | |

त्युक्तं निर्णयामृतादौ । यमद्बितीया मध्याह्न-
व्यापिनी पूर्ब्बविद्धा चेति हेमाद्रिः । अत्र
विशेषो हेमाद्रौ स्कान्दे ।
"ऊर्ज्जे शुक्लद्बितीयायामपराह्णेऽर्च्चयेत् यमम् ।
स्नानं कृत्वा भानुजायां यमलोकं न पश्यति ॥
ऊर्ज्जे शुक्लद्बितीयायां पूजितस्तर्पितो यमः ।
वेष्टितः किन्नरैर्हृष्टैस्तस्मै यच्छति वाञ्छितम् ॥"
तथा भविष्ये ।
"प्रथमा श्रावणे मासि तथा भाद्रपदेऽपरा ।
तृतीयाश्वयुजे मासि चतुर्थी कार्त्तिके भवेत् ॥
श्रावणे कलुषा नाम तथा भाद्रे च गीर्म्मता ।
आश्विने प्रेतसञ्चारा कार्त्तिके याम्यका मता ॥"
इत्युक्त्वा प्रथमायां व्रतं द्बितीयायां सरस्वती-
पूजा तृतीयायां श्राद्धमुक्त्वा चतुर्थ्यामुक्तम् ।
"कार्त्तिके शुक्लपक्षस्य द्बितीयायां युधिष्ठिर ! ।
यमो यमुनया पूर्ब्बं भोजितः स्वगृहेऽर्च्चितः ॥
अतो यमद्बितीयेयं त्रिषु लोकेषु विश्रुता ।
अस्यां निजगृहे विप्र ! न भोक्तव्यं ततो नरैः ॥
स्नेहेन भगिनीहस्तात् भोक्तव्यं पुष्टिवर्द्धनम् ।
दानानि च प्रदेयानि भगिनीभ्यो विधानतः ॥
स्वर्णालङ्कारवस्त्रान्नपूजासत्कारभोजनैः ।
सर्व्वा भगिन्यः संपूज्या अभावे प्रतिपन्नकाः ॥
प्रतिपन्ना माताभगिन्य इति हेमाद्रिः ॥
पितृव्यभगिनीहस्तात्प्रथमायां युधिष्ठिर ! ।
मातुलस्य सुताहस्तात् द्बितीयायां तथा नृप ! ॥
पितुर्म्मातुः स्वसुः कन्ये तृतीयायां तयोः करात् ।
चतुर्थ्यां सहजायाश्च भगिन्या हस्ततः परम् ।
सर्व्वासु भगिनीहस्तात् भोक्तव्यं बलवर्द्धनम् ॥
यस्यां तिथौ यमुनया यमराजदेवः
सम्भोजितः प्रतिजगत्स्वसृसौहृदेन ।
तस्यां स्वसुः करतलादिह यो भुनक्ति
प्राप्नोति रत्नसुखधान्यमनुत्तमं सः ॥
गौडास्तु ।
यमञ्च चित्रगुप्तञ्च यमदूतांश्च पूजयेत् ।
अर्घ्यश्चात्र प्रदातव्यो यमाय सहजद्बयैः ॥
मन्त्रस्तु ।
एह्येहि मार्त्तण्डज ! पाशहस्त !
यमान्तकालोकधरामरेश ! ।
भ्रातृद्बितीयाकृतदेवपूजां
गृहाण चार्घ्यं भगवन्नमस्ते ॥
भ्रातस्तवानुजाताहं भुङ्क्ष्व भक्तमिदं शुभम् ।

**भ्रातृपुत्त्रः**, पुं, स्त्री, (भ्रातुः पुत्त्रः ।) भ्रातृजः । इति
शब्दरत्नावली । भाइपो इति भाषा ॥

**भ्रातृभगिन्यौ**, स्त्री, (भ्राता च भगिनी च । इति
इतरेतरद्वन्द्वसमासः ।) भ्रातरौ । द्विवचना-
न्तोऽयम् । इत्यमरः । २ । ६ । ३६ ॥

**भ्रातृव्यः**, पुं, (भ्रातुरपत्यमिति । "भ्रातुर्व्यच्च ।"
४ । १ । १४४ । इति व्यत् ।) भ्रातृपुत्त्रः । (यथा,
राजतरङ्गिण्याम् । ८ । २८४२ ।
"जयराजानुजं राज्ञा यशोराजं बिवेशितम् ।
तन्मतेनावचस्कन्द भ्रातृव्यं राजकाभिधः ॥"
भ्रातृ + "व्यन् सपत्ने ।" ४ । १ । १४५ । इति
व्यन् ।) शत्रुः । इति हेमचन्द्रः ॥ (यथा,
भागवते । ५ । ११ । १७ ।
"भ्रातृव्यमेतं त्वमदभ्रवीर्य्य-
मुपेक्षयाध्येधितमप्रमत्तः ॥"
"तस्मात् भ्रातृव्यम् शत्रुम् ।" इति तट्टीकायां
स्वामी ॥)

**भ्रातृश्वशुरः** पुं, (पत्युर्ज्येष्ठभ्राता श्वशुर इव पूज्य-
त्वात् ।) पतिज्येष्ठभ्राता । भाशुर इति भाषा ।
तत्पर्य्यायः । श्वशुरकः २ । इति शब्दरत्ना-
वली ॥ (भ्रातुः श्वशुरः ।) भ्रातुःपत्न्याः पिता च ॥

**भ्रात्रीयः**, पुं, (भ्रातुरपत्यं पुमानिति । भ्रातृ +
"भ्रातुर्व्यच्च ।" ४ । १ । १४४ । इत्यत्र 'चकारा-
च्छश्च ।' इति काशिकोक्तेः छः ।) भ्रातृपुत्त्रः ।
इत्यमरः । २ । ६ । ३६ ॥
भ्रातृसम्बन्धिनि, त्रि ॥

**भ्रान्तः**, त्रि, भ्रमणयुक्तः । भ्रान्तिविशिष्टः ।
इति ण्वुल् ।) शृगालः । धूर्त्तः । सूर्य्यावर्त्तः ।
प्रस्तरभेदः । इति मेदिनी । के, १३३ ॥ चुम्बक
पातर इति भाषा । भ्रमजनके, त्रि ॥

**भ्रामरं**, क्ली, (भ्रमरैः कृतं सम्भृतमिति । भ्रमर
+ "क्षुद्राभ्रमरवटरपादपादञ् ।" ४ । ३ । ११९ ।
इति अञ् ।) मधु । इति मेदिनी । रे, १९१ ॥
तत्तु भ्रमरजमधु । तस्य गुणाः । पिच्छलत्वम् ।
रूक्षत्वम् । मधुरत्वम् । मुखजाड्यनाशित्वञ्च ।
इति राजनिर्घण्टः ॥ अपि च ।
पैच्छिल्यात् स्वादु भूयस्त्वात् भ्रामरं गुरु
कीर्त्तितम् ।"
इति राजवल्लभः ।
अन्यच्च ।
"किञ्चित् सूक्ष्मैः प्रसिद्धेभ्यः षट्पदेभ्यीऽलिभि-
श्चितम् ।
निर्म्मलं स्फटिकाभं यत्तन्मधु भ्रामरं स्मृतम् ॥
भ्रामरं रक्तपित्तघ्नं मूत्रजाड्यकरं गुरु ।
स्वादुपाकमभिष्यन्दि विशेषात् पिच्छिलं हिमम् ॥"
इति भावप्रकाशः ॥
नृत्यविशेषः । तत्पर्य्यायः । रासः २ मण्डल-
नृत्यम् ३ हल्लीसम् ४ । इति शब्दमाला ॥
भ्रमरसम्बन्धिनि त्रि । यथा, --
"तदाहं भ्रामरं रूपं कृत्वासंख्येयषट्पदम् ।"
इति देवीमाहात्म्यम् ॥
(यथा च हारीते प्रथमे स्थाने एकादशेऽध्याये ।
मध्वर्थे लक्षणं गुणाश्च ।
"शीतं कषायं मधुरं लघु स्यात्
सन्दीपनं लेखनमेव शस्तम् ।

प्रीतये यमराजस्य यमुनाया विशेषतः ॥”
ज्येष्ठाग्रजातेति वदेदिति स्मार्त्ताः ॥ इत्यन्न-
दानमित्यप्याहुः । ब्रह्माण्डपुराणेऽपि ।
“या तु भोजयते नारी भ्रातरं युग्मके तिथौ ।
अर्च्चयेच्चापि ताम्बूलैर्न सा वैधव्यमाप्नुयात् ॥
भ्रातुरायुःक्षयो राजन् ! न भवेत्तत्र कर्हिचित् ॥”
इति निर्णयसिन्धौ २ परिच्छेदः ॥

**भ्रातृपत्नी**, स्त्री, (भ्रातापतिर्यस्या इति भ्रातुः पत्नीति वा । ऋन्नेभ्यो ङीप् । इति ङीप् । ततः + “नित्यं सपत्न्यादिषु ।” इति नान्तादेशः ।) भ्रातृजाया । इति शब्दरत्नावली ॥

(अतीन्द्रियमिन्द्रियं भ्रान्तानामधिष्ठाने ॥” इति
सांख्यसूत्रम् । २ । २३ ॥)
भ्रमधातोः कर्त्तरि क्तप्रत्ययेन निष्पन्नः ॥ भ्रमणे,
क्ली । यथा, वाभटपशुपतिभ्यां
व्याख्यातम् ।
“भ्रान्तं देशमनेकदुर्गविषमं प्राप्तं न किञ्चित्
फलम् ।”

**भ्रान्तः**, पुं, (भ्रम् + कर्त्तरि क्तः । “अनुनासिकस्येति । ६ । ४ । १५ । इति दीर्घः ।) राज-
धूस्तूरः । मत्तहस्ती । इति राजनिर्घण्टः ॥

**भ्रान्तिः**, स्त्री, (भ्रम् + क्तिन् । “अनुनासिकस्य क्विझलोः क्ङिति । ६ । ४ । १५ । इति दीर्घः ।)
भ्रमः । इत्यमरः । १ । ५ । ४ ॥
(“युक्तिहीनप्रकाशत्वाद् भ्रान्तेर्नह्यस्ति लक्षणम् ।
यदि स्याल्लक्षणं किञ्चिद्भ्रान्तिरेव न सिध्यति ॥”
इति तार्किकाः ॥)
सा तु नराणां षष्ठमासे जायते । यथा, --
“षाण्मासिके तु संप्राप्ते भ्रान्तिः संजायते यतः ।
धात्राक्षराणि सृष्टानि पत्रारूढान्यतः पुरा ॥”
इति ज्योतिस्तत्त्वम् ॥
भ्रमणम् । इति मेदिनी ॥ अनवस्थितिः । इति
विश्वः ॥

**भ्रान्तिहरः**, पुं, (भ्रान्तिं हरतीति । हृ + कर्त्तरि पचाद्यच् ।) मन्त्री । इति शब्दमाला ॥ भ्रम-
नाशके, त्रि ॥

**भ्रामकः**, पुं, (भ्रामयति भ्रमं जनयतीति । भ्रम् + णिच् । “ण्वुल् तृचौ ।” ३ । १ । १३३ ।
संशोधनन्तु व्रणशोधबञ्च
संरोपणं हृद्यतमञ्च बल्यम् ॥
त्रिदोषनाशं कुरुते च पुष्टिं
कासे क्षये वा क्षतजे च छर्द्दौ ।
हिक्काभ्रमे शोषसपीनसानां
रक्तप्रमेहे च तथातिसारे ॥
रक्तातिसारे च सरक्तपित्ते
तृण्मोहहृत् पार्श्वगदेऽपि शस्तम् ।
नेत्रामये वा ग्रहणीगदे वा
विषे प्रशस्तं भ्रमरैश्चितं यत् ॥”
भ्रामरं सघनं जाड्यं भूयिष्ठं मधुरञ्च यत् ।
रूक्षं विशेषतो ज्ञेयं शीतलं लघुलेखनम् ॥”)

**भ्रामरः**, पुं, (भ्रामयति लौहमिति । भ्रामि + “अर्त्तिकमिभ्रमिद्वेवीति ।” उणा० ३ । १३२ ।
इति अरः । बाहुलकात् दीर्घश्च ।)
प्रस्तरभेदः ।
मेदिनी । रे, १९१ ॥ चुम्बक पातर इति
भाषा ॥
(अपस्माररोगः । इनि भ्रामरी त्रि । यथा,
मनौ । ३ । १६१ ।
“भ्रामरी गण्डमाली च श्वित्र्यथो
पिशुनस्तथा ॥”
“भ्रामरी अपस्मारी ।” इति तद्भाष्ये मेधा-
तिथिः ॥)

**भ्रामरी**, स्त्री, (भ्रमरस्यायं भ्रामरो भ्रमरवद्-
वर्णः । सोऽस्या अस्तीति । अर्श आद्यत्त ।

ङाप् ।) पार्व्वती । इति त्रिकाण्डशेषः ॥
यथा, मार्कण्डेये । ९१ । ४७-४९ ।
“यदारुणाक्षस्त्रैलोक्ये महाबाधां करिष्यति ।
तदाहं भ्रामरं रूपं कृत्वासंख्येयषट्पदम् ॥
त्रैलोक्यस्य हितार्थाय वधिष्यामि महासुरम् ।
भ्रामरीति च मां लोकास्तदा स्तोष्यन्ति सर्व्वतः ॥”

**भ्राश**, ऋ ङ ण टु भासि । इति कविकल्पद्रुमः ॥
(भ्वा०-आत्म०-अक०-सेट् ।
द्वितीयस्तु दिवा०-आत्म०-अक०-सेट् ।) य ङ
भ्राश्यते । ऋ अबभ्राशत् । स्वमते अनयोर्य्यङि
ह्रस्वविकल्पनेऽपि सप्तमस्वरानुबन्धोऽन्येषामनु-
रोधात् । ण भ्रेशे बभ्राशे । टु भ्राशथुः । ङ
भ्राशते । भासि दीप्तौ । इति दुर्गादासः ॥

**भ्राश**, य ङ भासि । इति कविकल्पद्रुमः ॥
(भ्वा०-आत्म०-अक०-सेट् ।
द्वितीयस्तु दिवा०-आत्म०-अक०-सेट् ।) य ङ
भ्राश्यते । ऋ अबभ्राशत् । स्वमते अनयोर्य्यङि
ह्रस्वविकल्पनेऽपि सप्तमस्वरानुबन्धोऽन्येषामनु-
रोधात् । ण भ्रेशे बभ्राशे । टु भ्राशथुः । ङ
भ्राशते । भासि दीप्तौ । इति दुर्गादासः ॥

**भ्राष्ट्रं**, क्ली, (भ्रस्ज + ष्ट्रन् ।) आकाशम् ।
अम्बरीषम् । इति संक्षिप्तसारोणादिवृत्तिः ॥

**भ्राष्ट्रः**, पुं, (भृज्ज्यते अत्रेति । भ्रस्ज + “भ्रस्जि-
अत्र षट्चक्रान्तर्गताज्ञाख्य चक्रमस्ति । तत्तु
हक्षवर्णद्वययुक्तद्विदलपद्माकारम् । तन्मध्ये मन-
स्तिष्ठति । यथा, --
“आज्ञानामाम्बुजं तद्धिमकरसदृशं ध्यान-धामप्रकाशं
हस्ताभ्यां वै कलाभ्यां प्रविलसितवपुर्नेत्रपत्रं सुशुभ्रम् ।
तन्मध्ये हाकिनी सा शशिसमधवला वक्त्रषट्कं दधाना
विद्यां मुद्रां कपालं डमरुजपवटीं बिभ्रती शुद्धचित्ता ॥
एतत्पद्मान्तराले निवसति च मनः सूक्ष्मरूपं प्रसिद्धम् ॥”
इति श्रीतत्त्वचिन्तामणौ षष्ठप्रकाशः ॥
(विषयोऽस्या यथा, --
“भ्रुवोर्वा यदि वा मूर्द्ध्नि सीमन्तावर्त्तकान् बहून् ।
अपूर्ब्बानकृतान् व्यक्तान् दृष्ट्वा मरणमादिशेत् ॥
त्र्यहमेते न जीवन्ति लक्षणेनातुरा नराः ।
अरोगाणां पुनस्त्वेतत् षड्रात्रं परमुच्यते ॥”
इति चरके इन्द्रियस्थाने अष्टमेऽध्याये ॥
कर्णनेत्रनासाभ्रूशङ्खांसगण्डकक्षस्तनवृषपार्श्व
स्फिग् जानुबाहूरूप्रभृतयो द्वे द्वे विंशतिरङ्गु-
लयः । इति सुश्रुते शारीरस्थाने पञ्चमेऽध्याये ॥)

**भ्रूकुंसः**, पुं, (भ्रू + कुंस + अच् । स्त्रीवेशधारी
नर्त्तकपुरुषः । इत्यमरः । १ । ७ । ११ ।

**भ्रूकुटिः**, स्त्री, (भ्रुवः कुटिः कौटिल्यम् । क्रोधा-
दिना भ्रुवः कोटिल्यम् । इत्यमरः ॥

**भ्रूण**, क ङ आशाविशङ्कयोः । इति कविकल्प-
द्रुमः ॥ (चुरा०-आत्म०-सक०-सेट् ।) रेफ-
युक्तषष्ठस्वरी । क ङ भ्रूणयते भद्रं लोकः ।
आशाविषयं करोतीत्यर्थः । इति दुर्गादासः ॥

**भ्रूणः**, पुं, (भ्रूण्यते आशस्यते इति । भ्रूण +
घञ् ।) बालकः । स्त्रीगर्भः । इत्यमरः २ । ६ ।
३९ ॥
(क्लीवमपि । यथा, ऋग्वेदे । १० । १५५ । २ ।
“चत्तो इतश्चत्तामुतः सर्व्वाभ्रूणान्यारुषी ॥”)
अथ गर्भाधानदिनम् । रजोदर्शनावधिषोडश-
दिनपर्य्यन्तं ऋतुकालः । तत्राद्याश्चतस्रो निशाः
“त्रिविवाहं कृतं येन न करोति चतुर्थकम् ।
कुलानि पातयेत् सप्त भ्रूणहत्याब्रतञ्चरेत् ॥”
इत्युद्वाहतत्त्वम् ॥

**भ्रूणहा**, [न्] त्रि, (भ्रूणं हन्तीति । भ्रूण + हन् +
“ब्रह्मभ्रूणवृत्तेषु ।” ३ । २ । ८७ । इति
क्विप् ।)
गर्भस्थबालकहन्ता । भ्रूणं हन्ति इति भ्रूण-
शब्दोपपदहनधातोष्टप्रत्ययेन निष्पन्नः । इति
संक्षिप्तसारव्याकरणम् ॥ (यथा, महाभारते ।
१ । ८३ । ३४ ।
“ऋतुं वै याचमानाया न ददाति पुमानृतुम् ।
भ्रूणहेत्युच्यते ब्रह्मन् ! स इह ब्रह्मवादिभिः ॥”)
तस्य प्रायश्चित्तम् । तत्र पुंस्त्वेन ज्ञाते पुंवध-
प्रायश्चित्तम् । स्त्रीत्वेन ज्ञाते स्त्रीबधप्रायश्चि-
त्तम् । अविज्ञाते तु पुंबधप्रायश्चित्तमाह मनुः ।
“हत्वा गर्भमविज्ञातमेतदेव ब्रतञ्चरेत् ।
गर्भहा च यथावर्णं तथात्रेयीनिसूदनः ॥”
इति प्रायश्चित्तविवेकः ॥
(ब्रह्महन्ता । यथा, मनुः । ८ । ३२७ ।
“अन्नादेर्भ्रूणहा मार्ष्टि पत्यौ भार्य्यापचारिणी ॥”
“भ्रूणहा ब्रह्महा ।” इति तद्भाष्ये मेधातिथिः ॥)

**भ्रूभङ्गः**, पुं, (भ्रुवो भङ्गः ।) भ्रुवः कौटिल्यम् । यथा,
“क्षुद्राः सन्त्रासमेते विजहत हरयो भिन्नशक्रेभ-कुम्भा
युष्मद्देहेषु लज्जां दधति परममी शायका निष्पतन्तः ।
सौमित्रे तिष्ठ पात्रं त्वमपि नहि रुषां नन्वहं मेघनादः

गमिनमिहनिविश्यशांवृद्धिश्च ।”
उणा० । ४ ।
१५९ । इति । ष्ट्रन् ।) यत्र
कलायचणकादिकं
भृज्यते सः । भाजना स्वोला इति
ख्यातः ।
(यथा, नैषधचरिते । ३ । १२८ ।
“रौद्रे चक्षुषि तज्जितस्तनुमनुभ्राष्टंच
य-
श्चिक्षिपे ॥”
“अनुभ्राष्टं भर्ज्जनपात्रसदृशेन ।” इति
तट्टीका ।)
तत्पर्य्यायः । अम्बरीषम् २ । इत्यमरः ।
२ । ९ । ३० ॥

**भ्रास**, ऋ ङ ण टु भासि । इति कविकल्पद्रुमः ॥

भ्वा०-आत्म०-अक०-सेट् ।
द्वितीयस्तु दिवा०-आत्म०-अक०-सेट्
।) य ङ
भ्रास्यते । ङ भ्रासते । ऋ अबभ्रासत् ।
ण
भ्रेसे बभ्रासे । टु भ्रासथुः । इति
दुर्गादासः ॥

**भ्रास**, य ङ भासि । इति कविकल्पद्रुमः ॥

भ्वा०-आत्म०-अक०-सेट् ।
द्वितीयस्तु दिवा०-आत्म०-अक०-सेट्
।) य ङ
भ्रास्यते । ङ भ्रासते । ऋ अबभ्रासत् ।
ण
भ्रेसे बभ्रासे । टु भ्रासथुः । इति
दुर्गादासः ॥

**भ्रुकुंसः**, पुं, (भ्रकुंसः । भ्रुकुंसः । भ्रूकुंसः ।
भृकुंसः ।

इति रूपचतुष्टयम् । “चुरादौ
पठपुटेत्यादि-
दण्डके कुसिर्भाषार्थः । यः स्त्रीवेशं
धारयित्वा
भ्रुवः कुंसयतीति । एरच् प्रत्ययः ।
ह्रस्वश्च
वा । इति अमरटीकायां
रघुनाथचक्रवर्त्ती ॥)

परित्यज्य चतुर्द्दश्यष्टमी अमावास्या पूर्णिमा
सूर्य्यसंक्रान्तिः पर्व्वाण्येतानि परित्यज्य च
अन्यासुरात्रिपु चन्द्रादिशोभने काले भार्य्यामुप-
गच्छेत् । युग्मरात्रिषु गमने पुत्त्रो भवेत् । अयुग्म-
रात्रिषुगमने कन्या भवेत् । तत्र प्रशस्तनक्षत्राणि
पुष्यः हस्ता मृगशिरा आर्द्रा पुनर्व्वसुः पूर्ब्बा-
षाढा उत्तराषाढा श्रवणा पूर्ब्बभाद्रपदुत्तर-
भाद्रपत् । तत्र निषिद्धनक्षत्राणि । ज्येष्ठाश्लेषा
मघा मूला रेवती कृत्तिकाश्विनी उत्तरफल्-
गुनी । तत्र तिथयः नन्दा भद्राः प्रशस्ताः ।
रिक्ता निषिद्धाः । तत्र रविमङ्गलबृहस्पतिवाराः
प्रशस्ताः । इति समयप्रदीपः ॥

**भ्रूणहत्या**, स्त्री, (हननं हत्या । हन् + भावे

क्यप् । भ्रूणस्य हत्या इति षष्ठीसमासः ।)
गर्भस्थबालकहननम् । यथा, --

किञ्चिद्भ्रूभङ्गलीलानियमितजलधि
राममन्वे-
षयामि ॥”
इति काव्यप्रकाशः ॥

**भ्रेज**, ऋ ङ भासि । इति कविकल्पद्रुमः ॥ (भ्वा०

आत्म०-अक०-सेट् ।) रेफयुक्तः । ऋ
अबि-
भ्रेजत् । ङ बिभ्रेजे । इति दुर्गादासः ॥

**भ्रेष**, ऋ ञ चले । भये । इति कविकल्पद्रुमः ॥

(भ्वा०-उभ०-अक०-सेट् ।) रेफयुक्तः ।
ऋ
अबिभ्रेषत् । ञ भ्रेषति भ्रेषते घर्म्मात् खलः
।
बिभ्रेषे । इति दुर्गादासः ॥

**भ्रेषः**, पुं, (भ्रेष् चलने + भावे घञ् ।) तथाच

यथोचिताद्भ्रंशः । इत्यमरः ॥ (यथा,
पातञ्जल-
भाष्ये । ३ । १२ । “आसमाषिभ्रेषात् ।”
इति ।)
चलनम् । इति भ्रेषधात्वर्थदर्शनात् ॥

**भ्रेषणं**, क्ली, (भ्रेष् + भाबे ल्युट् ।) चलनम्

इति भ्रेषधातोर्भावेऽनट्प्रत्ययेन निष्पन्नम्
॥

**भ्लक्ष**, ञ भक्षणे । इति कविकल्पद्रुमः ॥ (भ्वा०-

उभ०-सक०-सेट् ।)
अन्तःस्थतृतीयोपधः । ञ
भ्लक्षति भ्लक्षते । लस्थाने सप्तमस्वर इति
दुर्ग-
सिंहः । इति दुर्गादासः ॥

| | | |
|---|---|---|
| स्त्रीवेशधारिनर्त्तकपुरुषः । इत्यमरः ।<br>१ । ७ । ११ ॥<br><br>**भ्रुकुटिः**, स्त्री, (भ्रुवः कुटि कौटिल्यमिति षष्टी-<br>समासः । अभ्रुकुं सादीनामिति वा<br>ह्रस्वः ।)<br>क्रोधादिना भ्रुवः कौटिल्यम् । इत्यमरः<br>।<br>१ । ७ । ३७ ॥ (यथा, महाभारते । ७<br>। ७६२ ।<br>बद्ध्वा च भ्रुकुटिं वक्त्रे क्रोधस्य<br>परिलक्षणम् ॥”)<br><br>**भ्रुकुटी**, स्त्री, (भ्रुकुटि । कृदिकारादिति पक्षे<br>ङीष् ।) क्रोधादिना भ्रवः कोटिल्यम् ।<br>इत्य-<br>मरः । १ । ७ । ३७ ॥ (यथा, माघे ।<br>१५ । ९ ।<br>“भ्रुकुटीकठोरितललाटमाननम् ॥”)<br><br>**भ्रूः**, स्त्री, (भ्राम्यति नेत्रोपरि इति । भ्रम् +<br>“भ्रमेश्च डूः ।” उणा० २ । ६८ । इति<br>डूः ।)<br>दृग्भ्यामूद्र्ध्वभागः । तत्पर्य्यायः ।<br>चिल्लिका २<br>नयनोद्ध्र्वभागरोमराजी ३ । इति<br>राजनिर्घण्टः ॥<br>तल्लक्षणम् यथा, गारुडे ६६ अध्याये ।<br>“विशालोन्नता सुखिनि दरिद्रा<br>विषमभ्रुवः ।<br>धनी दीर्घा संसक्तभ्रूर्बालेन्दून्नतसभ्रुवः ।<br>आव्या निस्वश्च खड्गभ्रूर्मध्याश्च<br>विनतभ्रुवः ॥” | | |

म

**म** मकारः । स तु पञ्चविंशतितमव्यञ्जनवर्णः ।
अस्योच्चारणस्थानमोष्ठः । इति व्याकरणम् ॥
("उपूपध्मानीयानामोष्ठौ ।" इति सिद्धान्त-कौमुदी ॥) अस्य स्वरूपं यथा, --
"मकारं शृणु चार्व्वङ्गि ! स्वयं परमकुण्डली ।
तरुणादित्यसङ्काशं चतुर्व्वर्गप्रदायकम् ॥
पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा ।"
इति कामधेनुतन्त्रम् ॥
(वङ्गीयाक्षरैः) अस्य लेखनप्रकारः । यथा, --
"ऊर्द्ध्वाधःक्रमतो रेखा वामे वक्रा तु कुण्डली ।
पुनश्चाधोगता सैव तत ऊर्द्ध्वगता पुनः ।
ब्रह्मा शम्भुश्च विष्णुश्च क्रमशस्तासु तिष्ठति ॥"
अस्य ध्यानं यथा, --
"कृष्णां दशभुजां भीमां
पीतलोहितलोचनाम् ।
कृष्णाम्बरधरां नित्यां धर्म्मकामार्थमोक्षदाम् ।
एवं ध्यात्वा मकारन्तु तन्मन्त्रं दशधा जपेत् ॥"
तत्प्रणाममन्त्रो यथा, --
"त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा ।
आत्मादितत्त्वसंयुक्तं हृदिस्थं प्रणमाम्यहम् ॥"
इति वर्णोद्धारतन्त्रम् ॥
तस्य नामानि ।
"मः काली क्लेशितः काला महाकालो महान्तकः ।
वैकुण्ठो वसुधा चन्द्री रविः पुरुषराजकः ॥
कालभद्रो जया मेधा विश्वदा दीप्तसंज्ञकः ।
जठरञ्च भ्रमा मानं लक्ष्मीर्मातोग्रबन्धनौ ॥
विषं शिवो महावीरः शशिप्रभा जनेश्वरः ।
प्रमत्तः प्रियसू रुद्रः सर्व्वाङ्गो वह्निमण्डलम् ।
मातङ्गमालिनी बिन्दुः श्रवणा भरथो वियत् ॥" ३६ ॥
"मत्स्यानां मकरः श्रेष्ठो दीपनो वातनाशनः ।
रुचिप्रदः शुक्रकरो ग्राही चोष्णविकारहा ।
मूत्राश्मरीणां शमनो गुल्मातीसारनाशनः ॥"
इति हारीते प्रथमस्थान एकादशेऽध्याये ॥)
मकर इति गङ्गाया वाहनत्वेन ख्यातः । इति सारसुन्दरी । यथा । सितमकरनिषण्णां शुभ्र-वर्णां त्रिनेत्रामित्यादि स्मृत्युक्तगङ्गाध्यानम् ॥
स च कामदेवस्य ध्वजचिह्नम् । मकरध्वज इत्यमरकोषदर्शनात् । मेषादिद्वादशराश्यन्त-र्गतो दशमराशिः । तत्पर्य्यायः । आकोकेरः २ ।
अस्य अधिष्ठातृदेवता मृगास्यमकरः । उत्त-राषाढायाः शेषपादत्रयं श्रवणासमुदायः धनिष्ठायाः पूर्ब्बार्द्धं एतन्नवपादेन भवति । स च पृष्ठोदयः भूमिराशिः अर्द्धशब्दकरः दक्षिण-दिक्स्वामी पिङ्गलवर्णः रूक्षः भूमिचारी शीतलस्वभावः अल्पसन्तानः अल्पस्त्रीसङ्गः वातप्रकृतिः वैश्यवर्णः श्लथाङ्गश्च । अत्र जातस्य
फलम् । सदानन्दः । पितृमातृभक्तः श्रवणा-मकरजातश्चेत् बहुविवाहः । इति जातका-दयः ॥ अथ, रवियुक्तमकरजातफलम् ।
"सदाटनो मित्रगणो विपक्षतां
प्रयाति नूनं धनवर्ज्जितः स्यात् ।
यद्युष्णरश्मिर्म्मकरोपगः स्यात्
प्रसूतिकाले स तु भाग्यहीनः ॥"
अथ चन्द्रयुक्तमकरजातफलम् ।
"कलितशीतभयः किल गीतवित्-
तमरुषा सहितो मदनातुरः ।
निजकुलोत्तमवृत्तिकरः परं
हिमकरे मकरे पुरुषो भवेत् ॥"
अथ मङ्गलयुक्तमकरजातफलम् ।
"पराक्रमप्राप्तवरः प्रतिष्ठः
सदङ्गनाप्राप्तिवराङ्गनः स्यात् ।
श्रिया समेतो मकरे महीजे
प्रसूतिकाले कुलपालकश्च ॥"
अथ बुधग्रहस्थितमकरजातफलम् ।
"रिपुभयेन युतः कुमतिर्न्नरः
स्मरविहीननरः परकर्म्मठः ।
मकरगे सति शीतकरात्मजे
व्यसनतः स नतः पुरुषो भवेत् ॥"
वरगन्धविभूषणभूषितगात्र-
स्तरुणीरमणः पङ्कजनेत्रः ॥"
इति कोष्ठीप्रदीपः ॥
(व्यूहभेदः । यथा, कामन्दकीये नीतिसा रे । १८ । ४८ ।
"यायाद्व्यूहेन महता मकरेण पुरो भये ॥")

**मकरकुण्डलं**, क्ली, (कुण्डलम् मकर इवेत्युप-मितसमासः ।) मकराकृतिकर्णभूषणम् । यथा,
"वनमालानिवीताङ्गो लसच्छ्रीवत्सकौस्तुभः ।
महाकिरीटकटकः स्फुरन्मकरकुण्डलः ॥"
इति श्रीभागवते ६ स्कन्धे ४ अध्यायः ३७ श्लोकः ॥
स्फुरती मकरकुण्डले यस्य सः । इति तट्टी-कायां श्रीधरस्वामी ॥

**मकरकेतनः**, पुं, (मकरेण चिह्नितं केतनं ध्वजो यस्य ।) कन्दर्पः । इति मीनकेतनशब्दटीकायां भरतेन सङ्केतितम् ॥

**मकरध्वजः**, पुं, (मकरेण चिह्नितो ध्वजो यस्य ।) कामदेवः । इत्यमरः । १ । १ । २७ ॥
(यथा,
माघे । ३ । ६१ ।
"शरीरिणा जैत्रशरेण यत्र
निशङ्कमूषे मकरध्वजेन ॥")
रससिन्दूरविशेषः । तस्य नामान्तरं चन्द्रो-दयः । तस्य करणप्रकारो यथा, --
"पलं मृदु स्वर्णदलं रसेन्द्रं
पलाष्टकं षोडशगन्धकस्य ।
शोणैः सुकार्पासभवप्रसूनैः
सर्व्वं विमर्द्द्याथ कुमारिकाद्भिः ॥
तत् काचकुम्भे निहितं सुगाढे
मृत्कर्पटैस्तद्दिवसत्रयञ्च ।
पचेत् क्रमाग्नौ सिकताख्ययन्त्रे
ततो रजः पल्लवरागरम्यम् ॥
निगृह्य चैतस्य पलं पलानि
चत्वारि कर्पूररजस्तथैव ।
जातीफलं सोषणमिन्द्रपुष्पं

इति तन्त्रोक्तवर्णाभिधानम् ॥

**मः**, पुं, (माति निर्म्माति जगदिति । मा + कः ।)

शिवः । चन्द्रमाः । ब्रह्मा । इत्येकाक्षरकोषः ॥
यमः । समयः । विषम् । मधुसूदनः । इति मेदिनी । मे, १ ॥

**मक**, इ ङ भूषे । गतौ । इति कविकल्पद्रमः ॥

(भ्वा०-आत्म०-सक०-सेट् ।) इ मङ्क्यते । ङ
मङ्कते हारो जनम् । गत्यर्थोऽप्ययमिति रामः ।
इति दुर्गादासः ॥

**मकरः**, पुं, (कृणातीति । क हिसांयाम् । क +

अच् । ततः मनुष्याणां करः हिंसकः । यद्वा, मुखं किरतीति । मुख + कॄ + कः । उभयत्रापि
पृषोदरादित्वात् साधुः । इति अमरटीकायां रघुनाथचक्रवर्त्ती ।) जलजन्तुविशेषः इत्यमरः ।
१ । १० । २० ॥ (पादिनां गणान्तर्गतो जल-
जन्तुविशेषः ।
"कुम्भीरकूर्म्मनक्राश्च गोधामकरशङ्कवः ।
घण्टिकः शिशुमारश्चेत्यादयः पादिनः स्मृताः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे द्बितीये भागे ।
यथास्य गुणाः ।

अथ गुर्व्वाश्रितमकरजातफलम् ।
"न मनोरथसिद्धिमुपैति नरो
वचसामधिपे मकरोपगते ।
भवयुक् कुमतिः परकर्म्मरतो
बहुतोषयुतो मदनापहतः ॥"
अथ शुक्राश्रितमकरजातफलम् ।
"अतिरतिर्जनने त्वजनने नृणां
व्ययभयं कृशता बहुचिन्तया ।
भृगुसुते मृगराशिगते सदा
कविजने विजनेऽपि मतिर्भवेत् ॥"
अथ शनिग्रहस्थितमकरजातफलम् ।
"मकरोपगतः खलु भानुमुतः
कृपया सहितो नृपमानयुतः ।

कस्तूरिकाया इह शाण एकः ॥
चन्द्रोदयोऽयं कथितोऽस्य माषो
भुक्तोऽहिबल्लीदलमध्यवर्त्ती ॥"
अस्य गुणाः ।
"मदोन्मदानां प्रमदाशतानां
गर्व्वाधिकत्वं श्लथयत्यकाण्डे ।
शृतं घनीभूतमतीव दुग्धं
मृदूनि मांसानि समण्डकानि ।
मांसानि मिष्टानि भवन्ति पथ्य-
मानन्ददायीन्यपराणि चात्र ॥"
बलीपलितनाशनस्तनुभृतांवयस्तम्भनः
समस्तगदखण्डनः प्रचुरयोगपञ्चाननः ।
गृहेषु रसराडयं भवति यस्य चन्द्रोदयः
स पञ्चशरदर्पितो मृगदृशां भवेद्बल्लभः ॥"
इन्द्रपुष्पं लवङ्गम् । उक्तपरिमाणलक्षणमुप-
लक्षणम् । दाक्षिणात्याः शोणकार्पासपुष्पद्रव-
मेव गृह्णन्ति । पाश्चात्याः निर्वृन्ततत्पुष्पेणैव
यावदार्द्रत्वं मर्द्दयन्ति । उभयथैव
निष्पत्तेरदोषः ।

तथैवेति सर्व्वत्रान्वयः । * । शास्त्रान्तराद्विशेषो
लिख्यते ।
"रतिकाले रतान्ते च पुनः सेव्यो रसोत्तमः ।
स्थावरं जङ्गमविषं जङ्गमं विषवारि वा ।
न विकाराय भवति साधकेन्द्रस्य वत्सरान् ॥
मृत्युञ्जयो यथाभ्यासात् मृत्युं जयति देहिनः ।
तथाय साधकेन्द्रस्य जरामरणनाशनः ॥"
शास्त्रान्तरे मकरद्धजो नाम । इति चन्द्रोदयः ।
इति रसेन्द्रचिन्तामणिः ॥

**मकरन्दः**, पुं, (मकरमपि अन्दति बध्नाति धारयतीति
वा । अदि बन्धने + अण् ततः शकन्धादित्वात्
साधुः ।) पुष्परसः । इत्यमरः । २ । ४ । १७ ॥
(यथा, रघौ । ४ । ८८ ॥
"प्रस्थानप्रणतिभिरङ्गुलीषु चक्रु-
मौलिस्रक्च्युतमकरन्दरेणुगौरम् ॥")
कुन्दपुष्पवृक्षः । किञ्जल्के क्ली । इति राज-
निर्घण्टः ॥

**मकरन्दवती**, स्त्री, (मकरन्दस्तत्समूहोऽस्या
अस्तीति । मकरन्द + मतुप् । मस्य वः ङीप् ।)
पाटलापुष्पम् । इति शब्दचन्द्रिका ॥ मधु-
विशिष्टे त्रि ॥

**मकरव्यूहः**, पुं, (मकरः मकराकारः व्यूहः ।)
मकराकारसैन्यविन्यासः । इति महाभारतम् ॥

**मकराकरः**, पुं, (मकराणामाकरः । षष्ठीतत्-
पुरुषः ।) समुद्रः । इति हेमचन्द्रः । १०७४ ॥
(यथा, कथासरित्सागरे । ४३ । १३७ ।
"मकराकरमुल्लङ्क्य प्राप तत्तीरवर्त्ति सः ॥")

**मकराकारः**, पुं, (मकरस्येवाकारो यस्य ।) षड्-
ग्रन्थः । इति शब्दचन्द्रिका ॥ काँटाकरञ्ज ।
इति भाषा ॥ मकरमत्स्याकृतिश्च ॥

**मकराङ्कः**, पुं, (मकरस्तदाकारोऽङ्कश्चिह्नंयस्य ।)
कामदेवः । (मकरा अङ्केऽस्य ।) समुद्रः । इत्य-
जयपालः ॥

**मकरालयः**, पुं (आलीयते अस्मिन्निति आलयः ।
मकराणामालयः ।) समुद्रः । इति त्रिकाण्ड-
शेषः ॥ (यथा, महाभारते । १४ । ७६ । १२ ॥

**मकुष्टकः**, पुं, (मकि भूषायां + उः । पृषोदरादि-
त्वात् साधुर्मकुः । मकुं भूषां स्तकति प्रति-
हन्तीति । स्तक + पचाद्यच् ।)
वनजातमुद्गः ।
मोठ इति हिन्दी भाषा ॥ मुगानि इति
वङ्गभाषा । तत्पर्य्यायः । मयष्टः २ वनमुद्गः
३
कृमीलकः ४ अमृतः ५ अरण्यमुद्गः ६
वल्ली-
मुद्गः ७ । अस्य गुणाः । कषायत्वम् ।
मधुर-
त्वम् । रक्तपित्तज्वरदाहहरत्वम् । पथ्यत्वम्
।
रुचिकारित्वम् । सर्व्वदोषजयकारित्वञ्च ।
इति
राजनिर्घण्टः ॥
"मकुष्टो बातलो ग्राही कफपित्तहरो लघुः ।
वान्तिजिन्मधुरः पाके कृमिकृज्वरनाशनः
॥"
इति भावप्रकाशः ॥

**मकुष्ठः**, पुं, (मङ्कते मङ्क्यते इति वा । बाहुलकात्
उः मकुः । तिष्ठतीति स्था + कः स्थः ।
मकु-
श्चासौ स्थश्चेति मकुष्ठः । पूर्ब्बपदादिति ।
८ ।
३ । १०६ । षत्वम् ।) ब्रीहिभेदः । मन्थरे त्रि
।
इति मेदिनी । ठे, १६ ।
"मकुष्ठो वनमुद्गः स्यान्मकुष्ठकमुकुष्ठकौ ।
(ब्रीहिभेदार्थे यथा, पर्य्यायो गुणाश्च ।
मकुष्ठो वातलो ग्राही कफपित्तहरो लघुः ।
वह्निजिन्मधुरः पाके कृमिकृज्वरनाशनः ॥"
इति भांवप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**मकुष्ठकः**, पुं, (मकुष्ठ + स्वार्थे कन् ।) वनमुद्गः ।
इति भरतः ॥ (तथाच पर्य्यायाः ॥
मकुष्ठो वनमुद्गः स्यान्मकुष्ठकमुकुष्ठकौ ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
अस्य गुणा यथा, सुश्रुते सूत्रस्थाने ४६ अः
।

**मक्ष**, रोषे । संघाते । इति कविकल्पद्रुमः ॥
(भ्वा०-पर०-अक०-सेट् ।) मक्षति । इति
दुर्गा-
दासः ॥

**मक्षः**, पुं, (मक्ष् + घञ् ।) स्वदोषाच्छादनम् ।
इति हारावली ॥ क्रोधः । समूहः । इति
पूर्ब्बोक्तधात्वर्थदर्शनात् ॥

**मक्षवीर्य्यः**, पुं, (मक्षं निविडं वीर्य्यमस्य ।)
प्रियालवृक्षः । इति राजनिर्घण्टः ॥

**मक्षिका**, स्त्री, (मशति शब्दायते इति ।
मश + "हनिमशिभ्यां सिकन् ।" उणा० ।
४ । १५३ । इति सिकन् ।) कीटविशेषः ।
माछि इति भाषा ॥ (यथा, भागवते । ५ ।
१४ । ४२ ।
"आर्षभस्येह राजर्षेर्मनसापि महात्मनः ।
नानुवर्त्मार्हिति नृपो मक्षिकेव गरुत्मतः ॥")
तत्पर्य्यायः । मक्षीका २ भम्भः ३ माचिका
४
गन्धलोलुपा ५ पतङ्गिका ६ पत्तिका ७ ।
इति
शब्दरत्नावली ॥ अमृतोत्पन्ना ८ वमनीया
९
पलङ्कषा १० । इति राजनिर्घण्टः ॥ नीला
मक्षिका वर्व्वणा ११ । इत्यमरः । २ । ५ ।
२६ ॥
तन्नाशकधपो यथा, --
"त्रिफलार्ज्जुनपुष्पाणि भल्लातकशिरीषकम्
।
लाक्षासर्ज्जरसश्चैव विडङ्गश्चैव गुग्गुलुः ।
एतैर्धूपैर्मक्षिकाणां मशकानां विनाशनम् ॥"
इति गारुडे १८१ अध्यायः ॥

**मक्षिकामलं**, क्ली, (मक्षिकाणां मधुमक्षिकाणां
मलम् ।) सिक्थकम् । इति राजनिर्घण्टः ॥
(विशेषोऽस्य सिक्थशब्दे ज्ञेयः ॥)

**मक्षीका**, स्त्री, (मक्षिका । पृषोदरात् दीर्घः ।)
मक्षिका । इति राजनिर्घण्टः ॥ (रोगविशेषे-
णास्या अरिष्टत्वं यथा, --
"स्नातानुलिप्तगात्रेऽपि यस्मिन् गृध्यन्ति

"ततस्तं वारणं क्रुद्धं शरजालेन पाण्डवः ।
निवारयामास तदा वेलेव मकरालयम् ॥")

**मकरी**, [न्] पुं, समुद्रः । मकरोऽस्यास्तीति-
व्युत्पत्त्या इन्प्रत्ययनिष्पन्नोऽयम् ॥

**मकुटं**, क्ली, (मङ्कते अनेनेति । मकि भूषणे +
बाहुलकात् उटः । आगमशास्त्रस्यानित्यत्वात्
न नुम् ।) मुकुटम् । इति भरतधृतद्विरूपकोषः
॥

**मकुतिः**, स्त्री, (मकि + उतिः । पृषोदरादित्वात्
साधुः ।) शूद्रशासनम् । इति त्रिकाण्डशेषः ॥

**मकुरः**, पुं, (मङ्कते इति । मकि + "मकुर-
दर्दुरौ ।" उणा० । १ । ४१ । इति उरच् ।)
कुलालदण्डः । वकुलः । कोरकः । आदर्शः ।
इति हेमचन्द्रः । ३ । ३४८ ॥

**मकुलः**, पुं, क्ली, (मङ्कते भूषयति वृक्षम् । मकि +
बाहुलकादुलच् ।) वकुलः । मकुलः । इति
शब्दरत्नावली ॥

"मकुष्ठकाः कृमिकराः कलायाः
प्रचुरानिलाः ॥")

**मकूलकः**, पुं, (मकि मण्डने + पिच्छादित्वादूलच्
बाहुलकादनुषङ्गलोपः । स्वार्थे कन् ।"
इत्यमर-
टीकायां रघुनाथः ।) मुकूलकः । दन्तीवृक्षः
।
इत्यमरटीकायां रमानाथः ॥ (पर्य्यायोऽस्य
यथा, भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
।
"लघुदन्ती विशल्या च स्यादुम्बरपर्ण्यपि ।
तथैरण्डफला शीघ्रा श्येनघण्टा घुणप्रिया ।
वाराङ्गी चैव कथिता निकुम्भश्च मकूलकः
॥")

**मक्क**, ङ गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) कोपधः । ङ मक्कते
।
इति दुर्गादासः ॥

**मक्कल्लः**, पुं, (मक्कं गमनं आत्यन्तिकगतिं मरणं लाति
आदत्ते योजयतीत्यर्थः । ला + कः
पृषोदरात्
लकारागमे साधुः ।) शूलरोगविशेषः । यथा,
"सूताया हृच्छिरोवस्तिशूलं
मक्कल्लसंज्ञितम् ।
यवक्षारं पिबेत्तत्र मस्तुनोष्णोदकेन वा ॥"
इति चक्रपाणिदत्तः ॥

**मक्कुलं**, क्ली, (मक्क् + उलच् ।) शिलाजतु । इति
शब्दरत्नावली ॥
(विवरणमस्य शिलाजतुशब्दे ज्ञातव्यम् ॥)

**मक्कोलः**, पुं, खटिका । यथा, --
"मक्कोलो वर्णलेखा च कठिनी कक्खटी
खटी ।
इति शैलवर्गे त्रिकाण्डशेषः ॥

मक्षिकाः ।
स प्रमेहेण संस्पर्शं प्राप्यते नैव हन्यते ॥"
इति चरके इन्द्रियस्थाने पञ्चमेऽध्याये ॥)

**मख**, सर्पणे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) मखति ॥

**मख**, इ सर्पणे । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।) इ मङ्ख्यते इति
दुर्गादासः ॥

**मखः**, पुं, (मखन्ति गच्छन्ति देवा अत्रेति । मख
सर्पणे + "हलश्च ।" ३ । ३ । १२७ । इति
घञ् ।
संज्ञापूर्ब्बकत्वान्न वृद्धिः । यद्वा, पुंसीति घः
।)
यज्ञः । इत्यमरः । २ । ७ । १३ ॥ यथा,
देवी-
भागवते । १ । १९ । २३ ।
"कृत्वा तस्य मखं पूर्णं करिष्यामि तवापि वै
।"

**मखत्राता**, [ऋ] पुं, (त्रायते रक्षतीति कर्त्तरि
तृच् । मखस्य त्राता ।
विश्वामित्रमखरक्षणा-
त्तथात्वम् ।) रामः । यथा, --
"रावणारिर्मखत्राता सीतायाः पतिरित्यपि
।"
इति शब्दरत्नावली ॥

**मखवह्निः**, पुं, (मखस्य वह्निः मखाराध्यो वह्नि-
रिति यावत् ।) यज्ञाग्निः । इति जटाधरः ॥

**मखानलः**, पुं, (मखस्य अनलः मखसाध्योऽनल इत्यर्थः ।) यज्ञाग्निः । तत्पर्य्यायः । महा-
वीरः २ । इति त्रिकाण्डशेषः ॥

**मखान्नं**, क्ली, (मखे मखकाले भोज्यमन्नम् ।) खाद्यबीजभेदः । माखाना इति भाषा ॥ तत्-
पर्य्यायः । पद्मबीजाभम् २
पानीयफलम् ३ ।
"मखान्नं पद्मबीजस्य गुणैस्तुल्यं
विनिर्द्दिशेत् ।"
इति भावप्रकाशः ॥

**मखासुहृत्**, [द्] पुं, शिवः । मखस्य दक्षयज्ञस्य असुहृत् शत्रुः नाशक इत्यर्थः । इति हेम-
चन्द्रः । २०० ॥

**मग** इ सर्पणे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) इ मङ्ग्यते । इति दुर्गा-
दासः ॥

**मगधः**, पुं, (मगि + अच् । पृषोदरादित्वान्निष्पन्नः । मगं दोषं दधाति । धा + "आतोऽनुपसर्गे ।"
३ । २ । ३ । इति कः । यद्वा,
कण्ड्वादिमगध + अच् ।)
कीकटदेशः । अधुना वेहाराख्यदेशस्य दक्षिण-
भागः । तद्देशस्थे पुं भूम्नि । इति शब्दरत्ना-
वली ॥ (यथा, महाभारते । ८ । ४५ । ४८ ।
"इङ्गितज्ञाश्च मगधाः प्रेक्षितज्ञाश्च
कोशलाः ।
अर्द्धोक्ताः कुरुपाञ्चालाः शाल्याः कृत्स्नानु-
शासनाः ॥")
बन्दी । इति हेमचन्द्रः । ७९५ ॥

**मगधा**, स्त्री, (मगधस्तन्नामा देश उत्पत्तिस्थान-
कितवक्रिया अक्षक्रीडनादिः । इ मङ्घ्यते ङ मङ्घते अक्षैः कितवः । अध्यर्थो गतिनिन्दा-
रम्भजवाः । कैतवजवयोरेवायमिति केचित् ।
इति दुर्गादासः ॥

**मघः**, पुं, (मघि + अच् । पृषोदरात् साधुः ।) द्वीपविशेषः । इति मेदिनी । घे, ४ ॥ देश-
विशेषः । स तु मग्रामकम्लेच्छानां स्थानम् ॥
पुष्पविशेषे क्ली । इति शब्दरत्नावली ॥ (क्लीं
मंहनीयं धनम् । यथा, ऋग्वेदे । ७ । २१ । ७ ।
"इन्द्रो मघानि दयते विषह्येन्द्रं वाजस्य जोहु
वन्तसातौ ॥"
"मघानि मंहनीयानि धनानि ।") इति तद्भाष्ये
सायनः ।)

**मघवती**, स्त्री, (मघवत् + ङीप् । इन्द्राणी ।
इति मुग्धबोधव्याकरणम् ॥

**मघवा**, [न्] पुं, (मह्यते पूज्यते इति । मह-पूजायाम् । "श्वन्नुक्षन् पूषन् प्लीहन्निति ।"
उणा० । २ । १५८ । इति कनिन् । निपातनात्
हस्य घः अवुगागमश्च ।) इन्द्रः । इत्यमरः १ ।
१ । ४४ ॥ (यथा, रघौ । १ । २६ ।
दुदोह गां स यज्ञाय शस्याय मघवा दिवम् ।
सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥")
जिनानां द्वादशचक्रवर्त्त्यन्तर्गतचक्रवर्त्तिविशेषः ।
इति हेमचन्द्रः ॥ (सप्तमद्वापरस्य व्यासः ।
यथा, देवीभागवते । १ । ३ । २८ ।
"मघवा सप्तमे प्राप्रे वशिष्ठस्त्वष्टमे स्मृतः ।")

**मघवान्**, [त्] पुं, (भघवत् । "मघवा बहुलम् ।"
६ । ४ । १२८ । इति पक्षे तृ-आदेशः । ऋ
इत् ।) इन्द्रः । इत्यमरटीकायां रमानाथः ।
व्याकरणञ्च ॥ (यथा, महाभारते । ३ । ४५ ।
१० ।
"एको वै रक्षिता चैव त्रिदिवं मघवानिव ॥"
दनोः पुत्त्रभेदः । यथा, मात्स्ये । ६ । १८ ।
"मरीचिर्मघवांश्चैव इरागर्भशिरास्तथा ।")

**मघा**, स्त्री, (मह् + घः । हस्य घत्वम् ।) औषध-विशेषः । इति धरणिः ॥ अश्विन्यादिसप्तविंश-
नक्षत्रान्तर्गतदशमनक्षत्रम् । तत्तु लाङ्गलाकृति
पञ्चतारात्मकम् । गृहाकृति । इति केचित् ।
अपि च ।
नवोदके नवान्ने च गृहप्रच्छादने यथा ।
पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च ॥"
इति तिथ्यादितत्त्वम् ॥
एकवचनान्तप्रयोगो यथा, --
"मघायां पिण्डदानेन ज्येष्ठपुत्त्रो विनश्यति ।"
इति मलमासतत्त्वम् ॥
(अस्यां व्याधिजननेऽरिष्टत्वं यथा, --
"मघा भरणीहस्तेषु मूले वा ज्वरितोऽपि वै ।
मृत्युमापद्यते सोऽपि नात्र कार्य्या विचारणा ॥
"नवरात्र तथाश्लेषा मघास्वेति यमालयम् ॥"
इति हारीते द्वितीये स्थाने चतुर्थेऽध्याये ॥)

**मघात्रयोदशी**, स्त्री, (मघा दशमनक्षत्त्रम् । मघा-युक्ता त्रयोदशी । इति मध्यपदलोपी कर्म्म-
धारयः ।) मघानक्षत्रयुक्तभाद्रकृष्णत्रयोदशी ।
यथा । प्रौष्ठपद्यूर्द्ध्वं कृष्णत्रयोदश्यां मघायुक्तायां
अनिषिद्धयत्किञ्चिद्द्रव्येण श्राद्धमावश्यकम् ।
शङ्खादिविधिवाक्येषु नक्षत्रविशिष्टश्रुतेः । ततश्च
केवलत्रयोदशी केवलमघा श्राद्धार्थवादा अपि
कलृप्तविशिष्टविधिप्राप्तकर्म्मणो नित्यत्वबोधका
न तु केवलविध्यन्तरकल्पकागौरबात् । तथा च
शङ्खः ।
"प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् ।
प्राप्य श्राद्धं हि कर्त्तव्यं मधुना पायसेन च ॥"
मनुः ।
"यत्किञ्चिन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम् ।
तदप्यक्षयमेव स्याद्वर्षासु च मघासु च ॥"
विष्णुधर्म्मोत्तरे ।
"प्रौष्ठपद्यामतीतायां तथा कृष्णा त्रयोदशी ।
एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः ॥"
शातातपः ।
"पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च ।
तस्माद्दद्यात् सदोद्युक्तो विद्वत्सु ब्राह्मणेषु च ॥"
अत्रान्नमात्रश्रुतेः मनुवचने यत्किञ्चित् श्रुतेश्च
शङ्खोक्तपायसः फलातिशयार्थः गुणविशेषे फल-

त्वेनास्त्यस्या इत्यर्श आदिभ्योऽच् । स्त्रियां
टाप् ।) पिप्पली । इति रत्नमाला ॥ (यथा,
सुश्रुते कल्पस्थाने सप्तदशाध्याये ।
"हरेणुमगधाजास्थि
मज्जैलायकृदन्वितम् ॥")

**मगधेश्वरः**, पुं, (मगधस्य तदाख्यदेशस्येश्वरः ।)
जरासन्धराजः । इति हेमचन्द्रः ॥ मगधदेशा-
धिपमात्रे च ॥ (यथा, रघौ । ६ । २० ।
"प्राक्सन्निकर्षं मगधेश्वरस्य
नीत्वा कुमारीमवदत् सुनन्दा ॥")

**मगधोद्भवा**, स्त्री, (मगधे उद्भवो यस्याः ।) पिप्पली ।
इति राजनिर्घण्टः ॥ (यथा, सुश्रुते कल्प-
स्थान एकादशाध्याये ।
"फलं बृहत्या मगधोद्भवाना-
मादाय कल्कं फलपाककाले ।")
मगधदेशजाते त्रि ॥

**मग्नः**, त्रि, (मस्ज् + क्तः । "ओदितश्च ।" ८ । २ । ४५ ।
इति निष्ठातकारस्य नत्वम् । "स्कोः संयोगाद्यो
रन्ते च ।" ८ । २ । २९ । इति सलोपः । चोः
कुत्वञ्च ।) स्नातः । जलान्तःप्रविष्टः । डोवा
इति भाषा ॥ (यथा, देवीभागवते । १ । ६ । २५ ।
"केन सृष्टं कथं जातं मग्नावावां जले स्थितौ ॥")
मस्जधातोः कर्त्तरि क्तप्रत्ययेन निष्पन्नः ॥

**मघ**, इ ङ भूषे । कविकल्पद्रुमः ॥ (भ्वा० आत्म०-
सक० सेट् ।) इ, मङ्घ्यते । इति
दुर्गादासः ॥

**मघ**, इ ङ कैतवाध्यार्थयोः । इति कविकल्प-

अस्याधिष्ठातृद्वेवता पितृगणः । यथा, --
"लाङ्गलाकृतिनि पञ्चतारके
चारुकेशि पितृभे शिरोगते ।
नीलनीरदविनिन्दिलोचने!
वृश्चिकाद्विगलितं कलाशतम् । १ । ४० ॥"
इति कालिदासकृतरात्रिलग्ननिरूपणम् ॥
तत्र जातफलम् ।
कठोरचित्तः पितृमातृभक्त-
स्तीव्रस्वभावस्त्वनवद्यविद्यः ।
चेज्जन्मभं यस्य मघानघः स्या-
न्मतिः सदारातिविनाशदक्षा ॥"
इति कोष्ठीप्रदीपः ॥
मघाशब्दो बहुवचनान्तोऽपि दृश्यते । यथा, --
"कृष्णपक्षे त्रयोदश्यां मघास्विन्दुः करे रविः ।
यदा तदा गजच्छाया श्राद्धे पुण्यैरवाप्यते ॥

विशेषः स्यादिति न्यायात् । व्यक्तं
विष्णुधर्म्मोत्तरे ।
"मघायुक्ता च तत्रापि शस्ता राजंस्त्रयोदशी ।
तत्राक्षयं भवेत् श्राद्धं मधुना पायसेन च ।
तत्र अश्वयुक्कृष्णपक्षे । अत्र यत् श्राद्धं तन्मधु-
योगेन वा अक्षयं भवेत् । अतएव मनुवचने
यत्किञ्चिन्मधुना मिश्रमित्यनेन मधुमात्रयुक्तत्व-
मुक्तम् । अतोऽत्र सुतरां शूद्रस्याधिकारः ॥ * ॥
अत्र गजच्छायायोगे फलातिशयः । तथा कृत्य-
चिन्तामणौ स्मृतिः ।
"कृष्णपक्षे त्रयोदश्यां मघास्विन्दुः करे रविः ।
यदा तदा गजच्छाया श्राद्धे पुण्यैरवाप्यते ॥"
करे हस्तानक्षत्रे । कन्यादशमांशोपरि सपाद-
त्रयोविंशांशः इति यावत् ॥ * ॥ अविभक्ता-
नामप्यत्र पृथक् श्राद्धमावश्यकम् । यथा,
श्राद्धचिन्तामणौ स्मृतिः ।
"विभक्ता अविभक्ता वा कुर्य्युः श्राद्धमदैविकम् ।
मघासु च ततोऽन्यत्र नाधिकारः पृथग्विना ॥"

अदैविकं प्रत्याब्दिकैकोद्दिष्टम् । अन्यत्र
कृष्ण-
पक्षादौ नाधिकारः न नित्याधिकारः
सपिण्डी-
करणान्तानि यानि श्राद्धानि षोडश ।
पृथङ्-
नैव सुताः कुर्य्युः पृथग्द्रव्या अपि
क्वचिदित्य-
त्रापिना समुच्चितस्यापृथग्द्रव्यस्यपुंसः
सपिण्डी-
करणान्तानीति विशेषणात्तदुत्तरश्राद्धानां
पृथक्त्वमपि प्रतीयते ॥ * ॥
मघात्रयोदशी-
निमित्तके श्राद्धे पुत्त्रवता पिण्डा न देयाः
।
"भौजङ्गीं तिथिमासाद्य
यावच्चन्द्रार्कसङ्गमम् ।
तत्रापि महती पूजा कर्त्तव्या पितृदैवते ।
ऋक्षे पिण्डप्रदानन्तु ज्येष्ठपुत्त्री विवर्जयेत्
॥"
इति देवीपुराणात् । भौजङ्गी पञ्चमी ।
चन्द्रार्क-
सङ्गमोऽमावास्या । पितृदैवते ऋक्षे
मघायाम् ।
शातातपः ।
"पिण्डनिर्व्वापरहितं यत्तु श्राद्धं विधीयते
।
स्वधावाचनलोपोऽत्र विकिरस्तु न लुप्यते
॥
अक्षय्यं दक्षिणा स्वस्ति सौमनस्यं
यथास्त्विति ।
इति तिथ्यादितत्त्वम् ॥

**मघाभवः**, पुं, (मघायां भवः ।) शुक्रग्रहः । इति
हेमचन्द्रः ॥ मघानक्षत्रजाते त्रि ॥

**मघाभूः**, पुं, (मघायां मघासमीपस्थपूर्ब्बफल्-
गुन्यां भवतीति भू + क्विप् ।)
शुक्राचार्य्यः ।
इति त्रिकाण्डशेषः ॥

**मघी**, स्त्री, (मघा तदाख्यनक्षत्रं उत्पत्तिकारण-

शिखिहयगजगोधा रासभो भृङ्गराजो
मुखरपिककपोतो पोतकी शूकरी वा ।
तदनु विहगराजो मङ्गलाशंसिनः स्यु-
र्वदति शकुनवेत्ता वामतो निर्गमे वः ॥"
इति हारीते द्वितीयस्थाने सप्तमेऽध्याये ।)
सर्व्वार्थरक्षणम् । इति मेदिनी । ले, १२०
॥ * ॥
मङ्गललक्षणं यथा, --
"प्रशस्ताचरणं नित्यमप्रशस्तविवर्ज्जनम्
।
एतद्धि मङ्गलं प्रोक्तं ऋषिभिस्तत्त्वदर्शिभिः
॥"
इत्येकादशीतत्त्वम् ॥ * ॥
मङ्गलजनकद्रव्याणि । यथा, --
"पूर्णकुम्भं द्विजं वेश्यां शुक्लधान्यञ्च
दर्पणम् ।
दध्याज्यं मधु लाजञ्च पुष्पं दूर्व्वाक्षतं
सितम् ॥
वृषं गजेन्द्रं तुरगं ज्वलदग्निं सुवर्णकम् ।
पर्णञ्च परिपक्वानि फलानि विविधानि च
॥
पतिपुत्त्रवतीं नारीं प्रदीपं मणिसुत्तमम् ।
मुक्तां प्रसूनमालाञ्च सद्योमांसञ्च चन्दनम्
॥
ददर्शैतानि वस्तूनि मङ्गलानि पुरो मुने ! ।
शृगालं नकुलं चासं शवं वामे शुभावहम् ॥
राजहंसं मयूरञ्च खञ्जनञ्च शुकं पिकम् ।
पारावतं शङ्खचिल्लं चक्रवाकञ्च मङ्गलम् ॥
कृष्णसारञ्च सुरभीं चमरीं श्वेतचामरम् ।
धेनुं वत्सप्रयुक्ताञ्च पताकां दक्षिणे शुभाम्
॥
नानाप्रकारवाद्यञ्च शुश्राव मङ्गलध्वनिम् ।
हरिशब्दस्य सङ्गीतं घण्टाशङ्खध्वनिन्तथा
।
दृष्ट्वा श्रुत्वा स जगाम हर्षेण तात !
मन्दिरम् ॥"
इति ब्रह्मवैवर्त्ते गणपतिखण्डे
कार्त्तिकागमनं
नाम १६ अध्यायः ॥ * ॥ अपि च ।
"ददर्श वर्त्मन्येवञ्च मङ्गलार्हं शुभप्रदम् ।
वाञ्छाफलप्रदं रम्यं पुरो मङ्गलसूचकम् ॥

हिरण्यं सर्पिरादित्य अपो राजा तथाष्टमः ॥
एतानि शततं पश्येन्नमस्येदर्च्चयेत्ततः ।
प्रदक्षिणन्तु कुर्व्वीत तथा चायुर्न हीयते ॥
दूर्व्वा दधि सर्पिरथोदकुम्भं
धेनुं सवत्सां वृषभं सुवर्णम् ।
मृद्गोमयं स्वस्तिकमक्षतानि
लाजा मधु ब्राह्मणकन्यकाश्च ॥
श्वेतानि पुष्पाणि तथा शमीञ्च
हुताशनं चन्दनमर्कविम्बम् ।
अश्वत्थवृक्षञ्च समालभेत
ततश्च कुर्य्याद्द्विजजातिधर्म्मम् ॥"
इति मत्स्यसूक्तमहातन्त्रे ४३ पटलः ॥
वर्णभेदे मङ्गलप्रश्नभेदो यथा, --
"ब्राह्मणान् कुशलं पृच्छेत् क्षत्त्रबन्धुमनामयम् ।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव तु ॥"
इति कौर्म्मे उपविभागे ११ अध्यायः ॥

**मङ्गलः**, पुं, (मगि + "मङ्गेरलच् ।" उणा०
५ । ७० । इति अलच् ।) ग्रहविशेषः । तत्प-
र्य्यायः । अङ्गारकः २ भौमः ३ कुजः ४ वक्रः ५
महीसुतः ६ वर्षार्च्चिः ७ लोहिताङ्गः ८ खोन्मुखः ९
ऋणान्तकः १० । इति शब्दरत्नावली ॥ आरः
११ क्रूरदृक् १२ आवनेयः १३ । इति ज्योतिष-
तत्त्वम् ॥ स च रक्तगौरमिश्रितवर्णः । दक्षिण-
दिक्पुरुषक्षत्त्रियजातिसामवेदतमोगुणतिक्त-
रसमेषराशिप्रबालावन्तिदेशानामधिपतिः ।
मेषवाहनः । चतुरङ्गुलप्रमाणः । आरक्तमाल्य-
वसनः । भरद्वाजमुनिसन्तानः । चतुर्भुजः ।
शक्तिवराभयगदाधारी । सूर्य्याभिमुखः ।
अस्याधिदेवता कार्त्तिकेयः । प्रत्यधिदेषता
पृथिवी । स तु पित्तप्रकृतिः । युवा । क्रूरः ।
वनचारी । मध्याह्नकाले प्रबलः । गैरिकादि-
धातुस्वामी । चतुष्पदानां प्रभुः । चतुष्कोणा-
कृतिः । सुवर्णकारादीनां स्वामी । ज्वलित-
भूमिचारी । किञ्चिदङ्गहीनः । कटुरसप्रियः ।
ताम्रवर्णरक्तद्रव्यस्वामी च । इति ग्रहयागतत्त्व-
लघुजातकादयः ॥ * ॥ अस्योत्पत्तिर्यथा, --
"उपेन्द्रबीजात् पृथ्व्यान्तु मङ्गलः समजायत ।
वसुन्धरायां बलवान् तन्मे व्याख्यातुमर्हसि ॥
सौतिरुवाच ।
उपेन्द्ररूपमालोक्य कामार्त्ता च वसुन्धरा ।

तयास्त्यस्या इति । मघा + अर्शआद्यच् । गौरा-
दित्वात् ङीष् ।) धान्यभेदः । इति मेदिनी । धे, ३ ॥

**मघोनी**, स्त्री, (मघोनः पत्नीति । मघवन् +
स्त्रियां ङीष् । वकारस्य च सम्प्रसारणम् ।)
इन्द्राणी । इति मुग्धबोधव्याकरणम् ॥

**मङ्कुरः**, पुं, (मङ्कयति भूषयतीति । मकि + बाहु-
लकादुरच् ।) मुकुरः । इत्यमरटीकायां भरतः ॥

**मङ्क्ता**, [ऋ] त्रि, (मज्जति स्नाति इति । मस्ज्
+ तृच् । "मस्जिनशोर्झलि ।" ७ । १ । ६० ।
इति नुम् ।) स्नानकर्त्ता । इति मस्जधातोः
कर्त्तरि तृन्प्रत्ययेन निष्पन्नम् ॥

**मङ्गः**, पुं, (मङ्गति सर्पतीति मगि + अच् ।)
नौकाशिरः । इति हेमचन्द्रः ॥

**मङ्गलं**, क्ली, (मङ्गति हितार्थं सर्पति मङ्गति
दुरदृष्टमनेनास्माद्वेति । मगि + "मङ्गेरलच् ।"
उणा० ५ । ७० । इत्यलच् ।) अभिप्रेतार्थ-
सिद्धिः । इति तिथ्यादितत्त्वम् ॥ तद्वति, त्रि ।
इत्यमरः ॥ यथा, रामायणे । २ । २३ । ३० ।
"मङ्गलैरभिषिञ्चस्व तत्र त्वं व्यापृतो भव ॥"
तत्पर्य्यायः । भावुकम् २ भव्यम् ३ कल्याणम् ४
भविकम् ५ शुभम् ६ । क्षेमम् ७ प्रशस्तम् ८
भद्रम् ९ स्वश्रेयसम् १० शिवम् ११ अरिष्टम् १२
कुशलम् १३ रिष्ठम् १४ मद्रम् १५ शस्तम् १६ ।
इति शब्दरत्नावली ॥ (यथा, भागवते । ५ ।

वामे शवं शिवां पूर्णकुम्भं नकुलमेव च ।
पतिपुत्त्रवतीं साध्वीं दिव्याभरणभूषिताम् ॥
शुक्लपुष्पञ्च माल्यञ्च धान्यञ्च खञ्जनं शुभम् ।
दक्षिणे ज्वलदग्निञ्च विप्रञ्च वृषभं गजम् ॥
वत्सप्रयुक्तां धेनुञ्च श्वेताश्वं राजहंसकम् ।
वेश्याञ्च पुष्पमालाञ्च पताकां दधि पायसम् ॥
मणिं सुवर्णं रजतं मुक्तामाणिक्यमीप्सितम् ।
सद्योमांसं चन्दनञ्च माध्वीकं घृतमुत्तमम् ॥
कृष्णसारं फलं लाजान् स्निग्धान्नं दर्पणन्तथा ।
विचित्रितं विशालञ्च सुदीप्तां प्रतिमान्तथा ॥
क्षणं ददर्श देवं तं पञ्चवक्त्वं त्रिलोचनम् ।
शुद्धस्फटिकसङ्काशं नागराजैर्विराजितम् ॥
शुक्लोत्पलं पद्मवनं शङ्कचिल्लञ्च कोरकम् ।
मार्जारं पर्व्वतं मेघं मयूरशुकसारसम् ॥
शङ्ककोकिलवाद्यानां ध्वनिं शुश्राव मङ्गलम् ।
विचित्रं कृष्णसङ्गीतं हरिशब्दं जयध्वनिम् ॥
एवंभूतं शुभं दृष्ट्वा श्रुत्वा प्रहृष्टमानसः ।
प्रविवेश हरिं स्मृत्वा पुण्यं वृन्दावनं वनम् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ७० अध्यायः ॥
अन्यच्च ।
"लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुता-
शनः ।

विधाय सुन्दरी वेशमक्षता प्रौढयौवना ॥
सस्मिता तस्य तल्पे च सहसा समुपस्थिता ।
सुरम्यां मालतीमालां ददौ तस्मै वरानना ॥
उपेन्द्रस्तन्मनो ज्ञात्वा कामी मन्मथपीडितः ।
नानाप्रकारशृङ्गारं चकार च तया सह ॥
तदङ्गसङ्गमासक्ता मूर्च्छां प्राप सती तदा ।
मृतेव निद्रिता वासौ वीर्य्याधानकृते हरौ ॥
विहाय तत्र रहसि जगाम पुरुषोत्तमः ।
उर्व्वशी पथि गच्छन्ती बोधयामास तां मुने ! ॥
सा च पप्रच्छ वृत्तान्तं कथयामास भूश्च ताम् ।
वीर्य्यं सम्बरणं कर्त्तुं सा चाशक्ता च दुर्ब्बला ॥
प्रबालस्याकरे त्रस्ता वीर्य्यन्यासं चकार सा ।

| | | |
|---|---|---|
| १४ । ३४ ।<br>“मङ्गलाय च लोकानां क्षेमाय च भवाय च ।”<br>“कल्याणं मङ्गलं क्षेमं शातं शर्म्म शिवं शुभम् ।<br>इति वैद्यकरत्नमालायाम् ॥ | | |

तेन प्रबालवर्णश्च कुमारः समजायत ।
तेजसा सूर्य्यसदृशो नारायणसुतो महान्
॥”
इति ब्रह्मवैवर्त्तपुराणे, ९ अध्यायः ॥
अपि च ।
“ततोऽङ्गारकलोको हि वसत्यत्र महीसुतः ।
उत्पत्तिञ्चास्य वक्ष्यामि यथायं
भूसुतोऽभवत् ॥
पुरा हि भ्रमतो विष्णोः स्वेदबिन्दुः पपात ह
।
महांस्ततः कुमारोऽसौ लोहिताङ्गो मही-
तलात् ॥
जातः स्नेहेन मेदिन्या वर्द्धितः पृथिवीपते !
।
तपसाराध्य ब्रह्माणं ग्रहत्वमुपसेदिवान् ॥”
इति पाद्मे स्वर्गखण्डे ११ अध्यायः ॥
अपरञ्च ।
“पुरा दक्षविनाशाय कुपितस्य त्रिशूलिनः ।
अपतद्भीमवक्त्रस्य स्वेदबिन्दुर्ल्ललाटजः ॥
भित्त्वा समस्तपातालानदहत् सप्त सागरान्
।
अनेकवक्त्रनयनो ज्वलज्ज्वलनभीषणः ॥
वीरभद्र इति ख्यातः करपादायुतैर्युतः ।
कृत्वा स यज्ञमथनं पुनर्भूतलसम्भवः ॥
त्रिजगन्निर्द्दहन् भूयः शिवेन विनिवारितः ।
कृतं त्वया वीरभद्र ! दक्षयज्ञविनाशनम् ॥
इदानीमलमेतेन लोकदाहेन कर्म्मणा ।
शान्तिप्रदानात् सर्व्वेषां ग्रहाणां प्रथमो भव
॥
प्रेक्षिष्यन्ति जनाः पूजां करिष्यन्ति मतं मम
।
अङ्गारक इति ख्यातिं गमिष्यसि
धरात्मज ! ॥
देवलोके द्वितीयञ्च तव रूपं भविष्यति ।
ये च त्वां पूजयिष्यन्ति चतुर्थ्यां त्वद्दिने
नराः ।
रूपमारोग्यमैश्वर्य्यं तेष्वनन्तं भविष्यति ॥
एवमुक्तस्तदा शान्तिमगमत् कामरूपधृक् ।
संजातस्तत्क्षणाद्राजन्! ग्रहत्वमगमत् पुनः
॥”

अस्य स्तोत्रं यथा, --
“धरणीगर्भसंभूतं विद्युत्पुञ्जसमप्रभम् ।
कुमारं शक्तिहस्तञ्च लोहिताङ्गं नमाम्यहम् ॥”
इति व्यासोक्तनवग्रहस्तोत्रान्तर्गत्तम् ॥
ऋणपरिशोधनार्थस्तोत्रं यथा, --
“मङ्गलो भूमिपुत्त्रश्च ऋणहन्ता धनप्रदः ।
स्थिरासनो महाकायः सर्व्वकर्म्माविरोधकः ॥
रोहितो लोहिताक्षश्च सामगानां कृपाकरः ।
धरात्मजः कुजो भौमो भूमिजो भूमिनन्दनः ॥
अङ्गारको यमश्चैव सर्व्वरोगापहारकः ।
वृष्टिकर्त्ता च हर्त्ता च सर्व्वकामफलप्रदः ॥
एतानि कुजनामानि प्रातरुत्थाय यः पठेत् ।
ऋणं न जायते तस्य धनमाप्नोति पुष्कलम् ॥
रक्तपुष्पैश्च गन्धैश्च धूपदीपादिभिस्तथा ।
मङ्गलं पूजयेद्भक्त्या मङ्गलेऽहनि सर्व्वदा ॥
ऋणरेखाः प्रकर्त्तव्या अङ्गारेण सदा बुधैः ।
प्रोञ्छयेद्वामपादेन ऋणं तस्य विनश्यति ॥
मङ्गलाय नमस्तुभ्यं नमस्ते ऋणहारिणे ।
पुत्त्रपौत्त्रप्रदात्रे च मङ्गलाय नमो नमः ॥
ऋणार्थे त्वत्प्रपन्नोऽहमऋणं कुरु मे विभो ! ।
एतत् कृत्वा न सन्देहो ऋणं हत्वा धनी भवेत् ।
इति स्कन्दपुराणम् ॥ * ॥
मङ्गलवारे जातस्य फलं यथा, --
“उग्रः प्रतापी क्षितिपालमन्त्री
रणप्रियो वक्रवचाः सरोषः ।
सत्त्वान्वितः शूरगणप्रणेता
कुजस्य वारे प्रभवो मनुष्यः ॥”
इति कोष्ठीप्रदीपः ॥

**मङ्गलचण्डिका**, स्त्री, (मङ्गला मङ्गलदायिका
चासौ चण्डिका चेति । यद्वा, सृष्टौ मङ्गला
प्रलये
चण्डिका । अथवा मङ्गले चण्डिका दक्षा ।)
मङ्गलचण्डी । यथा, कालिकापुराणे ।
“यैषा ललितकान्ताख्या देवी मङ्गलचण्डिका ।
वरदाभयहस्ता च द्विभुजा गौरदेहिका ॥
रक्तपद्मासनस्था च रत्नकुण्डलमण्डिता ।
रक्तकौषेयवस्त्रा च स्मितवक्त्वा शुभानना ॥
नवयौवनसम्पन्ना चार्व्वङ्गी ललितप्रभा ।
उमया भाषितं मन्त्रं यत् पूर्ब्बन्त्वेकमक्षरम् ।
मन्त्रमस्यास्तु तज्ज्ञेयं तेन देवीं प्रपूजयेत् ॥”

अत्र यत् क्रियते पापमथवा धर्म्मसञ्चयः ।
षष्टिवर्षसहस्राणि प्रतिजन्म तदक्षयम् ॥”
इति तिथ्यादितत्त्वम् ॥

**मङ्गलचण्डी**, स्त्री, (मङ्गला चासौ चण्डी चेति
यद्वा, देषानां मुन्यादिभक्तानां मङ्गलाय
दुर्जया-
सुरादिमारणे चण्डी अत्यन्तकोपना । मङ्गले-
चण्डी दक्षेति वा । अथवा सृष्टौ मङ्गला
प्रलये चण्डी । भागवतेऽस्या नामनिरुक्ति-
र्यथा, --
“सृष्टौ मङ्गलरूपा च संहारे कोपरूपिणी ।
तेन मङ्गलचण्डी सा पण्डितैः परिकीर्त्तिता
॥”)
दुर्गा । यथा, --
नारायण उवाच ।
“कथितं षष्ठ्युपाख्यानं ब्रह्मपुत्र ! यथागमम्
।
देवी मङ्गलचण्डी या तदाख्यानं निशामय ॥
तस्याः पूजादिकं सर्व्वं धर्म्मवक्त्वेण
यच्छ्रुतम् ।
श्रुतिसम्मतमेवेष्टं सर्व्वेषां विदुषामपि ॥
दक्षायां वर्त्तते चण्डी कल्याणेषु च मङ्गलम् ।
मङ्गलेषु च या दक्षा सा च मङ्गलचण्डिका ॥
पूज्यायां वर्त्तते चण्डी मङ्गलेऽपि महीसुतः ।
मङ्गलाभीष्टदेवी या सा वा मङ्गलचण्डिका ॥
मङ्गलो मनुवंशश्च सप्तद्वीपधरापतिः ।
तस्य पूज्याभीष्टदेषी तेन मङ्गलचण्डिका ॥
मूर्त्तिभेदेन सा दुर्गा मूलप्रकृतिरीश्वरी ।
कृपारूपातिप्रत्यक्षा योषितामिष्टदेवता ॥
प्रथमे पूजिता सा च शङ्करेण पुरः पुरा ।
त्रिपुरस्य वधे घोरे विष्णुना प्रेरितेन च ॥
ब्रह्मन् ! ब्रह्मोपदेशेन दुर्गप्रस्थेन सङ्कटे ।
आकाशात् पतिते याने दैत्येन पातिते रुषा ॥
ब्रह्मविष्णूपदिष्टश्च दुर्गां तुष्टाव शङ्करः ।
सा च मङ्गलचण्डी च बभूव रूपभेदतः ॥
उवाच पुरतः शम्भोर्भयं नास्तीति ते विभो !
।
भगवान् वृषरूपश्च सर्व्वेशश्च बभूव ह ॥
युद्धशक्तिस्वरूपाहं भविष्यामि तदाज्ञया ।
मयामुना च हरिणा सहायेन वृषध्वज ! ॥

इति मत्स्यपुराणे अङ्गारकव्रतं नाम ६८ अः ॥

कल्पभेदे अन्धकासुरवधकाले
तस्योत्पत्तिर्यथा,
“यो भूम्यां न्यपतद्विप्र ! स्वेदबिन्दुः शिवान-
नात् ।
तस्मादङ्गारपुञ्जाभो बालकः समजायत ॥
स बालस्तृषितोऽत्यर्थं पपौ रुधिरमान्धकम् ।
कन्या चोत्स्वेदसंजाता
सासृग्विलिलिहेऽद्भुता ॥
ततस्तामाह बालार्कप्रभां भैरवमूर्त्तिमान् ।
शङ्करो वरदो लोकश्रेयोऽर्थाय वचो महत् ॥
त्वां पूजयिष्यन्ति सुरा ऋषयः पितरस्तथा ।
यक्षविद्याधराश्चैव मानवाश्च शुभङ्करि ! ॥
त्वां स्तोष्यन्ति सदा देवि ! वलिपुष्पोत्करैः करैः ।
चर्च्चिकेति शुभं नाम यस्माद्रुधिरचर्च्चिता ॥
इत्येवमुक्ता वरदेन चर्च्चिका
भूतानुयाता हरिचर्म्मवासिनी ।
महीं समन्ताद्विचचार सुन्दरी
स्थलं गता हैङ्गुलमाद्यमुत्तमम् ॥
तस्यां गतायां वरदः कुजस्य
प्रादाद्वरं सर्व्ववरोत्तमं यतः ।
ग्रहाधिपत्यं जगतः शुभाशुमं
भविष्यति त्वद्वशगं महात्मनाम् ॥
इति वामनपुराणे ६७ अध्यायः ॥

एकमक्षरं शक्तिबीजरूपम् ।
“अष्टम्याञ्च नवम्याञ्च पूजा कार्य्या विवृद्धये ।
पटेषु प्रतिमायां वा घटे मङ्गलचण्डिकाम् ॥
यः पूजयेद्भौमदिने शुभर्द्दूर्व्वाक्षतैः शुभाम् ।
सततं साधकः सोऽपि काममिष्टमवाप्नुयात् ॥ * ॥

मङ्गलवारे कृष्णाष्टमीचतुर्द्दश्यौ चेत् पुण्यतरै भवतः । यथा, --
“शनैश्चरस्य वारेण वारेणाङ्गारकस्य च ।
कृष्णाष्टमीचतुर्द्दश्यौ पुण्यात् पुण्यतरे स्मृते ॥ * ॥

मङ्गलवारे शुक्ला चतुर्थी चेदक्षया भवति । यथा, --
“सोमवारेऽप्यमावास्या आदित्याहे च सप्तमी ।
चतुर्थ्यङ्गारके वारे त्वष्टमी च बृहस्पतौ ॥

जहि दैत्यञ्च शत्रुञ्च सुराणां पदघातकम् ।
इत्युक्त्वान्तर्हिता देवी शम्भोः शक्तिर्बभूव सा ॥
विष्णुदत्तेन शस्त्रेण जघान तमुमापतिः ।
मुनीन्द्र ! पतिते दैत्ये सर्व्वे देवा महर्षयः ॥
तुष्टुवुः शङ्करं देवं भक्तिनम्रात्मकन्धराः ।
सद्यः शिरसि शम्भोश्च पुष्पवृष्टिर्बभूव च ।
ब्रह्मा विष्णुश्च सन्तुष्टो ददौ तस्मै शुभाशिषम् ॥
ब्रह्मविष्णूपदिष्टश्च सुस्नातः शङ्करः शुचिः ।
पूजयामास तां शक्तिं देवीं मङ्गलचण्डिकाम् ॥
पाद्यार्घ्याचमनीयैश्च बलिभिर्विविधैरपि ।
पुष्पचन्दननैवेद्यैर्भक्त्या नानाविधैर्मुने ! ॥
छागैर्मेषैश्च महिषैर्गण्डैमायातिभिस्तथा ।
वस्त्रालङ्कारमाल्यैश्च पायसैः पिष्टकैरपि ॥
मधुभिश्च सुधाभिश्च पक्वैर्नानाविधैः फलैः ।
संगीतैर्नर्त्तनैर्वाद्यैरुत्सवैः कृष्णकीर्त्तनैः ॥
ध्यात्वा माध्यन्दिनोक्तेन ध्यानेन
भक्तिपूर्व्बकम् ।
ददौ द्रव्याणि मूलेन मन्त्रेणैव च नारद ! ॥

ॐ ह्रीं श्रीं क्लीं सर्व्वपूज्ये देवि मङ्गलचण्डिके ।
हुं हुं फट् स्वाहेत्येवञ्चाप्यैकविंशाक्षरो मनुः ॥
पूज्यः कल्पतरुश्चैव भक्तानां सर्व्वकामदः ।
दशलक्षजपेनैव मन्त्रसिद्धिर्भवेन्नृणाम् ।
मन्त्रसिद्धिर्भवेद्यस्य स विष्णुः सर्व्वकामदः ॥
ध्यानञ्च श्रूयतां ब्रह्मन् ! वेदोक्तं सर्व्वसम्मतम् ॥
देवीं षोडशवर्षीयां शश्वत्सुस्थिरयौवनाम् ।
सर्व्वरूपगुणाढ्याञ्च कोमलाङ्गीं मनोहराम् ॥
श्वेतचम्पकवर्णाभां चन्द्रकोटिसमप्रभाम् ।
वह्निशुद्धांशुकाधानां रत्नभूषणभूषिताम् ॥
बिभ्रतीं कवरीभारं मल्लिकामाल्यभूषितम् ।
विम्बोष्ठीं सुदतीं शुद्धां शश्वत्पद्मनिभाननाम् ॥
ईषद्धास्यप्रसन्नास्यां सुनीलोत्पललोचनाम् ।
जगद्धात्रीञ्च दात्रीञ्च सर्व्वेभ्यः सर्व्वसम्पदाम् ।
संसारसागरे घोरे पोतरूपां वरां भजे ॥
देव्याश्च ध्यानमित्येवं स्तवनं श्रूयतां मुने ! ।
प्रयातः सङ्कटग्रस्तो येन तुष्टाव शङ्करः ॥
श्रीशङ्कर उवाच ।
रक्ष रक्ष जगन्मातर्देवि मङ्गलचण्डिके ! ।
हारिके विपदां राशिं हर्षमङ्गलदायिके ! ॥
हर्षमङ्गलदक्षे च हर्षमङ्गलचण्डिके ! ।
शुभे मङ्गलदक्षे च शुभे मङ्गलचण्डिके ! ॥
मङ्गले मङ्गलार्थे च सर्व्वमङ्गलमङ्गले ! ।
सतां मङ्गलदे देवि ! सर्व्वेषां मङ्गलालये ! ॥
पूज्ये ! मङ्गलवारे च मङ्गलाभीष्टदेवते ! ।
पूज्ये मङ्गलभूपस्य मनुवंशस्य सन्ततम् ॥
मङ्गलाधिष्ठातृदेवि ! मङ्गलानाञ्च मङ्गले ! ।
संसारमङ्गलाधारे मोक्षमङ्गलदायिनि ! ॥
सारे च मङ्गलाधारे पारे च सर्व्वकर्म्मणाम् ।
प्रतिमङ्गलवारे च पूज्ये च मङ्गलप्रदे ! ॥
स्तोत्रेणानेन शम्भुश्च स्तुत्वा मङ्गलचण्डिकाम् ।
प्रतिमङ्गलवारे च पूजां कृत्वा गतः शिवः ॥
"पठित्वाथ प्रियान् श्लोकान् महावादित्र-निःस्वनैः ।
प्रभोर्नीराजनं कुर्य्यान्मङ्गलाख्यं जगद्धितम् ॥
नीराजनन्त्विदं सर्व्वैः कर्त्तव्यं शुचिविग्रहैः ।
परमश्रद्धयोत्थाय द्रष्टव्यञ्च सदा नरैः ॥
स्त्रीणां पुंसाञ्च सर्व्वेषामेतत् सर्व्वेष्टपूरकम् ।
समस्तदैन्यदारिद्र्यदुरिताद्युपशान्तिकृत् ॥"
इति श्रीहरिभक्तिविलासे ३ विलासः ॥

**मङ्गलपाठकः**, पुं, (पठतीति । पठ + ण्वुल् । मङ्गलस्य पाठकः ।) बन्दी । इति हेमचन्द्रः । ७ । ९४ ॥ (यथा, वेणीसंहारनाटके । १, अङ्के ‘आः पाप ! दुरात्मन् ! वृथामङ्गलपाठक ! ।’

**मङ्गलप्रदा**, स्त्री, (मङ्गलं प्रददातीति । प्र + दा + "आतश्चोपसर्गे ।" ३ । १ । १३६ । इति कः । टाप् ।) हरिद्रा । इति केचित् ॥ मङ्गल-दातरि त्रि ॥

**मङ्गला**, स्त्री, (मङ्गलमस्या अस्तीति । मङ्गल + अर्श आद्यच् । टाप् ।) पार्व्वती । शुक्लदूर्व्वा । पतिव्रता । इति शब्दरत्नावली ॥ करञ्जभेदः । इति शब्दचन्द्रिका ॥ वृत्तार्हन्मातृविशेषः । इति हेमचन्द्रः ॥ हरिद्रा । नीलदूर्व्वा । इति राजनिर्घण्टः ॥

**मङ्गलागुरु**, क्ली, (मङ्गलञ्च तत् अगुरु चेति । नित्यकर्म्मधारयः ।) अगुरुचतुष्टयान्तर्गतागुरु-विशेषः । यथा, राजनिर्घण्टः ।
"मङ्गल्या मल्लिकागन्धा मङ्गलागुरुवाचकाः ।
मङ्गल्या गुरुशिशिरा गन्धाढ्या योगवाहिकाः ॥"

**मङ्गल्यं**, क्ली, (मङ्गलाय साधु इति । मङ्गल + "तत्र साधुः ।" ४ । ४ । ९८ । इति यत् ।) दधि । इति मेदिनी । ये, १०१ ॥ चन्दनम् । मङ्गल्यागुरु । स्वर्णम् । सिन्दूरम् । इति राज-निर्घण्टः ॥

**मङ्गल्यं**, त्रि, (मङ्गलाय साधु । मङ्गल + यत् ।) शिवकरम् । इति मेदिनी । ये, १०१ ॥ (यथा, उत्तरचरिते । ७ म अङ्के ।
"पाप्मभ्यश्च पुनाति वर्द्धयति च श्रेयांसि येयं कथा ।
मङ्गल्यनामधेया च शाकश्रेष्ठा पयस्विनी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**मङ्गल्यकः**, पुं, (मङ्गल्य + संज्ञायां कन् । यद्वा मङ्गलस्य मङ्गलग्रहस्य प्रियः इति यत् । ततः स्वार्थे कन् ।) मसूरः । इत्यमरः । २ । ९ । १७ ॥ (तथास्य पर्य्यायः ।
"मङ्गल्यको मसूरः स्यान्मङ्गल्या च मसूरिका ।"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**मङ्गल्यकुमुमा**, स्त्री, (मङ्गल्यानि कुमुमानि यस्याः ।) शङ्खपुष्पी । इति भावप्रकाशः ॥

**मङ्गल्यनामधेया**, स्त्री, (मङ्गलं मङ्गलजनकं नाम-धेयं यस्याः ।) जीवन्ती । इति जटाधरः ॥

**मङ्गल्या**, स्त्री, (मङ्गलाय साधुरिति यत् । टाप् ।) मल्लिकागन्धयुक्तागुरु । इत्यमरः । २ । ६ । १२७ ॥
शमी । अधःपुष्पी । मिसी । शुक्लवचा । रोचना । इति मेदिनी । ये, १०० ॥ प्रियङ्गुः ।
शङ्खपुष्पी । इति हेमचन्द्रः ॥ माषपर्णी । जीवन्ती । ऋद्धिः । वचा । हरिद्रा । चीडा ।
इति राजनिर्घण्टः ॥ दूर्व्वा । इति रत्नमाला ॥
दुर्गा । यथा, --
"शोभनानि च श्रेष्ठानि या देवी ददते हरे ।
भक्तानामार्त्तिहरणी मङ्गल्या तेन सा स्मृता ॥"
इति देवीपुराणे ४४ अध्यायः ॥
(वचार्थे पर्य्यायो यथा, --

देव्याश्च मङ्गलं स्तोत्रं यः शृणोति समाहितः ।
तन्मङ्गलं भवेत् शश्वन्न भवेत्तदमङ्गलम् ॥
प्रथमे पूजिता देवी शिवेन सर्व्वमङ्गला ।
द्बितीये पूजिता देवी मङ्गलेन ग्रहेण च ॥
तृतीये पूजिता भद्रा मङ्गलेन नृपेण च ।
चतुर्थे मङ्गले वारे सुन्दरीभिश्च पूजिता ॥
मङ्गले मङ्गलाकाङ्क्षैर्नरैर्मङ्गलचण्डिका ।
पूजिता प्रतिविश्वेषु विश्वेशपूजिता सदा ॥
ततः सर्व्वत्र संपूज्या सा बभूव सुरेश्वरी ।
देवादिभिश्च मुनिभिर्मनुभिर्मानवैर्मुने ! ॥
वर्द्धते तत्पुत्त्रपौत्त्रो मङ्गलञ्च दिने दिने ॥”
इति ब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारा-
यणनारदीये मङ्गलचण्डिकोपाख्यानं
तत्स्तोत्र-
कथनं नाम ४१ अध्यायः ॥

**मङ्गलच्छायः**, पुं, (मङ्गला मङ्गलजनिका छायास्य ।)
प्लक्षवृक्षः । इति राजनिर्घण्टः ॥

**मङ्गलनीराजनं**, क्ली, (मङ्गलं मङ्गलकरं मङ्ग-
लाय वा नीराजनम् ।) ब्राह्ममुहूर्त्तकर्त्तव्य
भगवदारात्रिकम् । मङ्गल आरती इति
भाषा ॥ यथा, --
मङ्गल्या च मनोहरा च जगतो मातेव
गङ्गेव च ॥”
यथाच, महाभारते । १ । १ । २४ ।
मङ्गल्यं मङ्गलं विष्णुं वरेण्यमनघं शुचिम् ।
नमस्कृत्य हृषीकेशं चराचरगुरुं हरिम् ॥”)
रुचिरम् । इति हेमचन्द्रः ॥ साधुः । इति
धरणिः ॥

**मङ्गल्यः**, पुं, (मङ्गलाय साधुः । मङ्गल + “तत्र
साधुः ।” ४ । ४ । ९८ । इति यत् ।) त्राय-
माणा । अश्वत्थः । विल्वः । मसूरकः । इति
मेदिनी । ये, १०० ॥ जीवकः । नारिकेलः ।
कपित्थः । रीठाकरञ्जः । इति राजनिर्घण्टः ॥
(जीव इति ख्यातः शाकषिशेषः । तत्पर्य्यायो
यथा, --
“जीवन्ती जीवनी जीवा जीवर्न या मधुस्रवा ।
“तीक्ष्णोग्रगन्धा जटिला मङ्गल्या विजया
वचा ।
षड्ग्रन्थोग्रा च रक्षोघ्नी सिता हैमवती तु
सा ॥”
मिस्यर्थे यथा, --
“अवाक्पुष्पी च छत्रा स्यान्मङ्गल्या
मधुरा मिसी ॥”
हेमपुष्पी । तत्पर्य्यायो यथा, --
“अवाक्पुष्पी त्वधःपुष्पी
मङ्गल्यामरपुष्पिका ॥”
इति च वैद्यकरत्नमालायाम् ॥
रोचनार्थे पर्य्यायो यथा, --
“गोरोचना तु मङ्गल्या वन्द्या गौरी च
रोचना ।”
शम्यर्थे पर्य्यायो यथा, --
“शमी शक्तुफला तुङ्गा केशहन्त्री फला
शिवा ।
मङ्गल्या च तथा लक्ष्मीः शमीरः
साल्पिका
स्मृता ॥”
मसूरः । तत्पर्य्यायो यथा, --
“मङ्गल्यको मसूरः स्यान्मङ्गल्या च
मसूरिका ।”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**मङ्गिनी**, स्त्री, (मङ्गो नौशिरस्तदस्या अस्तीति
इनिः ङीप् च ।) नौका । इति हेमचन्द्रः
॥

**मङ्क्षणं**, क्ली, (मङ्क्षत्यनेनेति । मङ्क्ष + ल्युट् ।)
जङ्घा-
त्राणम् । इति हारावली । १९८ ॥

**मङ्क्षु**, व्य, मज्जतीति । मस्ज् + बहुलवचनात् सुः
।
“मस्जिनशोर्झलि ।” ७ । १ । ६० ।
इति
नुम् । “स्कोः संयोगाद्योरन्ते च ।” ८ ।
२ ।
२९ । इति सलोपः ।) द्रुतम् ! इत्यमरः ।
३ ।
४ । २ । (यथा, माघे । ५ । ३७ ।
“यद्द्वन्तिनः कटकटाहतटान्मिमङ्क्षो-
र्मङ्क्षूदपाति परितः पटलैरलीनाम् ॥”)

**मङ्खुणं**, क्ली, (मङ्खण । पृषोदरादित्वात् साधुः ।) जङ्घात्राणम् । इति त्रिकाण्डशेषः ॥

**मच**, इ ङ उच्छ्रायधृत्यर्च्चाभाःसु । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-धृतौ अर्च्चायाञ्च सक०-दीप्तौ उच्चीभावे च अक०-सेट् ।) इ मञ्च्यते । ङ मञ्चते । उच्छ्राय उच्चीभावः । इति दुर्गादासः ॥

**मच**, ङ च कल्कने । दम्भे । शाठ्ये । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-दम्भे शाठ्ये च । अक०-कल्कने-सक०-सेट् ।) कल्कनमिति कल्कं
करोतीति ञौ रूपं चूर्णीकरणमित्यर्थः । ङ मचते तण्डुलं शिला चकारात् मचि ङ । इति दुर्गादासः ॥

**मचर्च्चिका**, स्त्री, (मं शभुं चर्च्चतीवेति । चर्च्च् + ण्वुल् । टाप् । अत इत्वम् । वस्तुतस्तु रूढोऽयं शब्दः ।) प्रशस्तम् । इत्यमरः । १ । ४ । २७ ॥ (यथा,
प्रशस्तो ब्राह्मणो ब्राह्मणमचर्च्चिका । “प्रशंसावचनैश्च । २ । १ । ६६ । इति समासः ।)

**मच्छः**, पुं, (माद्यति सलिलेनेति । मद् + क्विप् । तथा सन् शेते इति । शी + डः ।) मत्स्यः । इति शब्दरत्नावली ॥

**मज्जकृत्**, क्ली, (मज्जानं करोतीति । कृ + क्विप् । तुगागमश्च ।) अस्थि । इति हेमचन्द्रः ॥

**मज्जनं**, क्ली, (मस्ज् + ल्युट् ।) स्नानम् । इति जटाधरः ॥ (यथा, राजतरङ्गिण्याम् । ३ । ४७ ।
जाह्नवीमज्जनप्रीतिं न जानन्ति मरुस्थिताः ॥”)
मज्जा । इति शब्दचन्द्रिका ॥

**मज्जसमुद्भवं**, क्ली, (मज्जा समुद्भव उत्पत्तिस्थानं यस्य ।) शुक्रम् । इति हेमचन्द्रः ॥

**मज्जा**, [न्] पुं, (मज्जति अस्थिष्विति । मस्ज् + “श्वन् उक्षन् पूषन् प्लीहन् क्लेदन् स्नेहन् मूर्द्धन् मज्जा विशेषतोऽस्थ्नाञ्च बलकृत् स्नेहने हितः ॥”
इति चरकः ॥
मज्जाशब्द आबन्तोऽपि । यथा । शणातसी-
मूलकशिग्रुसिद्धैः
पियालमज्जासहितैस्त्विति
सुश्रुतः ॥ द्वयमेवाह त्रिकाण्डे भागुरिः ॥
“लज्जावद्राजवन्मज्जा
मांससारास्थिसारयोः ।”
इत्यमरटीकायां भरतः ॥

**मज्जा**, स्त्री, (मज्जतीति । मस्ज् + अच् । अजादित्वात् टाप् ।) अस्थिसारः । इत्यमरटीकायां भरतः ॥ अस्य गुणाः । वातनाशित्वम् । बलपित्तकफप्रदत्वम् । मांसतुल्यगन्धरूपत्वञ्च । कुम्भीरमहिषमज्जागुणाः । मधुरत्वम् ।
बृंहणत्वम् । बल्यत्वञ्च । मज्जसत्त्वगुणौ यथा ।
शैत्यम् । उष्णत्वञ्च । इति राजवल्लभः ॥

**मज्जाजः**, पुं, (मज्जाया जायते इति । जन् + डः ।) भूमिजगुग्गुलुः । इति राजनिर्घण्टः ॥

**मज्जारसः**, पुं, (मज्जाया रसः ।) शुक्रम् । इति राजनिर्घण्टः ॥

**मज्जासारं**, क्ली, (मज्जायां सारो यस्य ।) जातीफलम् । इति राजनिर्घण्टः ॥

**मज्जूषा**, स्त्री, (मज्जन्ति द्रव्याण्यत्रं । मस्ज् + ऊषन् । टाप् निपा० ।) मञ्जूषा । इत्यमरटीकायां रायमुकुटः ॥

**मञ्चः**, पुं, (मञ्चति । उच्चीभवतीति । मचि + घञ् ।) खट्वा । इत्यमरः । २ । ७ । १३८ ॥
कर्णवंशः । माचा इति भाषा ॥ इति हारा-
“मञ्जरिमञ्जरी मञ्जिर्मञ्जरं त्रिषु वल्लरी ।
वल्लरं त्रिषु वल्लिश्च वल्लरिः पत्रनालिका ॥”
इति हड्डचन्द्रः ॥
लतामात्रेऽपि वल्लरिः । अतो बाहुवल्लरीति प्रयोग इति मुकुटादयः ॥ वल्लरीमञ्जर्य्योर्भेदमप्याहुः । यथा अभिनवनिर्गता आयता सुकुमारा सकुसुमा अकुसुमा च मञ्जरिः । यथा चूतमञ्जरिः कदलीमञ्जरिः । वल्लरिः पुनश्चिरभूतापि । यथा तालमञ्जरिः गुवाकवल्लरिरिति द्वयमेव नवे चिरन्तनेऽपीति कृष्णसाञ्जौ । इति भरतः ॥

**मञ्जरी**, स्त्री, (मञ्जरि । कृदिकारादिति पक्षे ङीष् ।) मुक्ता । तिलकवृक्षः । लता । इति शब्दरत्नावली ॥ (यथा, राजतरङ्गिण्याम् । १ । २०७ ।
“निर्गते मञ्जरीकुञ्जादपश्यत् पुरतस्ततः ।
कन्ये नीलनिचोलिन्यौ स केचिच्चारुलोचने ॥”)
मञ्जरिः । इत्यमरटीकायां भरतः ॥ (यथा, आर्य्यासप्तशत्याम् । ५३३ ।
“वापीकच्छे वासः कण्टकवृतयः सजागरा भ्रमराः ।
केतकविटप किमेतैर्न्ननु वारय मञ्जरीगन्धम् ॥”)
तुलसी । इति राजनिर्घण्टः ॥

**मञ्जरीनम्रः**, पुं, (मञ्जर्य्यां मञ्जर्य्यवस्थायामपि नम्रः ।) वेतसवृक्षः । इति राजनिर्घण्टः ॥

**मञ्जा**, स्त्री, (मजि + पचाद्यच् । टाप् ।) छागी । इति त्रिकाण्डशेषः ॥ मञ्जरी । इति हेमचन्द्रः ।
११ । २२ ॥

**मञ्जिः**, पुं, (मजि + इन् ।) मञ्जरी । इति त्रिकाण्डशेषः ॥

**मञ्जिका**, स्त्री, (मञ्जयतीति । मञ्ज + ण्वुल् । टाप् । अत इत्वञ्च ।) वेश्या । इति हारावली ॥

**मञ्जिफला**, स्त्री, (मञ्जिर्मञ्जरी फलेऽस्याः ।)

मज्जन्नित्यादि ।” उणा० । १ । १५८ । इति कनिन्
निपात्यते च ।) वृक्षादेरुत्तमस्थिरभागः । सार इति ख्यातः । इत्यमरभरतौ ॥ फलमज्जगुणो यथा, --
“यस्य यस्य फलस्येह वीर्य्यं भवति यादृशम् ।
तस्य तस्यैव वीर्य्येण मज्जानमभिनिर्द्दिशेत् ॥”
इति राजवल्लभः ॥
अस्थिमध्यस्थस्नेहविशेषः । तत्पर्य्यायः । कौशिकः
२ शुक्रकरः ३ अस्थिस्नेहः ४ अस्थिसम्भवः ५ ।
इति हेमचन्द्रः । ६ । १९ ॥ अस्थिसारः ६ तेजः ७
बीजम् ८ अस्थिजम् ९ जीवनम् १० देहसारः
११ । इति राजनिर्घण्टः ॥ अथ मज्जस्वरूप-माह ।
“अस्थि यत् स्वाग्निना पक्वं तस्य सारो द्रवो घनः ।
यः स्वेदवत् पृथग्भूतः स मज्जेत्यभिधीयते ॥”
अथ मज्जस्थानमाह ।
“स्थूलास्थिषु विशेषेण मज्जा त्वभ्यन्तरे स्थितः ।”
इति भावप्रकाशः ॥
अस्य गुणाः ।
“बलशुक्ररसश्लेष्ममेदोमज्जविवर्द्धनः ।

वली ॥ उच्चमण्डपविशेषः । यथा, --
“दोलायमानं गोविन्दं मञ्चस्थं मधुसूदनम् ।
रथस्थं वामनं दृष्ट्वा पुनर्जन्म न विद्यते ॥”
इति पुराणम् ॥

**मञ्चकः**, पुं, (मञ्च + स्वार्थे कन् ।) खट्वा । इति
हेमचन्द्रः । ६ । ८३ ॥ (यथा, कथासरित्-
सागरे । २७ । ९१ ।
“वारिधानी तु कुम्भश्च मार्ज्जनी मञ्चकस्तथा ।
अहञ्च मत्पतिश्चेति युग्मत्रितयमेव नौ ॥”)
इन्द्रकोषः । उच्चमण्डपः । इति त्रिकाण्ड-
शेषः ॥

**मञ्चकाश्रयः**, पुं, (मञ्चकः खट्वादिराश्रयो यस्य ।)
मत्कुणः । इति राजनिर्घण्टः ॥

**मञ्चमण्डपः**, पुं, (मञ्चो मण्डप इव ।) शस्य-
रक्षार्थकुटिरम् । टं इति भाषा ॥ तत्पर्य्यायः ।
कुद्रङ्गः । इति हारावली ॥

**मञ्जरं**, क्ली, (मञ्जयति दीप्यते इति । मन्ज् +
अरप्रत्ययः ।) मुक्ता । तिलकवृक्षः । वल्ली ।
इति शब्दरत्नावली ॥

**मञ्जरिः**, स्त्री, वल्लरिः । इत्यमरः । २ । ४ । १३ ॥
वल्लते वृणोति तरुं वल्लरिः वलमि वल्ल ङ
स्तृतौ नाम्नीति अरिः । मञ्जु मनोज्ञतां रातीति
मञ्जरिः पूर्ब्बेण डिः मनीषादित्वाद्कारस्य
अकारः पाच्छोणादीति ईपि मञ्जरी वल्लरी
च । वल्लरिर्मञ्जरिर्द्वयोरिति शाब्दिकः ॥ वल्लि-
र्मुञ्जिश्चात्र ।

कदली । इति त्रिकाण्डशेषः ॥

**मञ्जिष्ठा**, स्त्री, (अतिशयेनेयं मञ्जिमती । मञ्जि-
मती + इष्ठः । मतुपो लोपः स्त्रियां टाप् ।)
स्वनामख्यातरक्तवर्णलताविशेषः । मजीठ इति
हिन्दी भाषा । तत्पर्य्यायः । विकसा २
जिङ्गी ३ समङ्गा ४ कालमेषिका ५ मण्डूक-
पर्णी ६ भण्डीरी ७ भण्डी ८ योजनवल्ली ९ ।
इत्यमरः । २ । ४ । ९० ॥ कालमेषी १० काला
११ जिङ्गिः १२ भण्डिरी १३ भण्डिका १४
भण्डिः १५ । इति शब्दरत्नावली ॥ हरिणी १६
रक्ता १७ गौरी १८ योजनवल्लिका १९ वप्रा
२० रोहिणी २१ चित्रलता २२ चित्रा २३
चित्राङ्गी २४ जननी २५ विजया २६ मञ्जूषा
२७ रक्तयष्टिका २८ क्षत्रिणी २९ रागाढ्या
३० कालभाण्डिका ३१ अरुणा ३२ ज्वरहन्त्री
३३ छत्रा ३४ नागकुमारिका ३५ भण्डीरलतिका
३६ रागाङ्गी ३७ वस्त्रभूषणा ३८ । (पर्य्या-
यान्तरं यथा, --
“मञ्जिष्ठा विकसा जिङ्गी काला योजनपर्ण्यपि ।

ताम्रवल्ली चित्रपर्णी कान्तारी रक्तयष्टिका ॥”
इति रत्नमाला ॥)
अस्या गुणाः । मधुरत्वम् । कषायत्वम् । उष्ण-
त्वम् । गुरुत्वम् । व्रणमेहज्वरश्लेष्मविषनेत्रामय-
नाशित्वञ्च । सा चतुर्व्विधा । चोलः १ योजनी २
कौन्ती ३ सिंहली च ४ । इति राजनिर्घण्टः ॥
कुष्ठस्वरभङ्गशोथनाशित्वम् । वर्णाग्निकारित्वञ्च ।
इति राजवल्लभः ॥ अपि च ।
“मञ्जिष्ठा मधुरा तिक्ता कषाया स्वर्णवर्णकृत् ।
गुरूष्णा विषश्लेष्मघ्नी शोथयोन्यक्षिकर्णरुक् ।
रक्तातिसारकुष्ठास्राविसर्पव्रणमेहनुत् ॥”
इति भावप्रकाशः ॥

**मञ्जी**, स्त्री, (मञ्जयति दीप्यते इति । मञ्जि +
इन् । कृदिकारादिति ङीष् ।) मञ्जरी । इति
हेमचन्द्रः त्रिकाण्डशेषश्च ॥

**मञ्जीरः**, पुं, क्ली, (मञ्जति मधुरं शब्दायते ।
इति मन्ज् ध्वनौ सौत्रधातुः + बाहुलकात्
ईरन् ।) नूपुरः । इत्यमरः । २ । १०९ ॥
मञ्जीरोऽस्त्री स नूपुरः । इति रभसः ॥ (यथा,
गीतगोविन्दे । ५ । ११ ।
“मुखरमधीरं त्यज मञ्जीरं
रिपुमिव केलिषु लोलम् ॥”)

**मञ्जीरः**, पुं, (मञ्ज + ईरन् ।) मन्थानदण्डरज्जु
बन्धनार्थस्तम्भः । तत्पर्य्यायः । विष्कम्भः २
कुटरः २ । इति हेमचन्द्रः ॥

**मञ्जु**, त्रि, (मञ्जतीति । मञ्ज ध्वनौ सौत्रधातुः ।
“मृगय्वादयश्च ।” उणा० । १ । ३८ । इति
कुः ।) मनोज्ञम् । इत्यमरः । ३ । १ । ५२ ॥
(यथा, पदाङ्कदूते । १ ।
“त्यक्त्रा गेहं झटिति यमुनामञ्जुकुञ्जं जगाम ॥”)

**मञ्जुकेशी**, [न्] पुं, (मञ्जवो मनोहराः केशाः
सन्त्यस्य । इनि ।) श्रीकृष्णः । इति हलायुधः ॥
सुन्दरकेशविशिष्टे त्रि ॥

**मञ्जुगमना**, स्त्री, (मञ्जु मनोहरं गमनं यस्याः ।
स्त्रियां टाप् ।) हंसी । इति राजनिर्घण्टः ॥
सुन्दरगामिनि त्रि ॥

**मञ्जुघोषः**, पुं, (मञ्जुर्मनोहरो घोषः शब्दोऽस्य ।)

प्रोक्ता सार्व्वज्ञविद्येयं एकवर्णात्मिका प्रिये ! ॥
सिद्धः साध्यः सुसिद्धो वा साधकस्य रिपुश्च
वा ।
तदा मन्त्रो भवेद्भक्त्या शुभदो बुद्धिवदो
भवेत् ॥
मध्याह्ने सलिले चैव भोजने भाजने तथा ।
गोमये तु बहिर्द्देशे मैथुने रमणीकुचे ॥
गोष्ठे च निशि गोमुण्डे यन्त्रं डमरुसन्निभम् ।
विलिख्य मन्त्रवर्णांश्च त्रिश ऊर्द्ध्वे
अधस्तथा ।
लिखेच्चन्दनलेखन्या प्रयत्नात् साधकोत्तमः
।
उच्चाटने लिखेद्यन्त्रं गोचर्म्मणि विशेषतः ।
सलिले विजयी नित्यं भजने च महेश्वरः ॥
गोमये वावदूकः स्याद्गोष्ठे सर्व्वज्ञतां व्रजेत् ।
कुचे श्रुतिधरो नित्यं गोमुण्डे च महाकविः ॥
गोमूत्रं वदरीमूलं चन्दनं पांशुमेव च ।
एकीकृत्याष्टधा जप्त्वा तिलकं धारयेत् सदा
॥
नमस्कृत्य वरं श्रेष्ठं प्रार्थयेद्भक्तितत्परः ।
वरं प्राप्य च तस्माद्वै विहरेत्तु यथासुखम् ॥
नान्यदेवार्च्चनं स्नानं प्रणवोच्चारणं न तु ।
वस्त्राञ्चलेन दन्तानां शोधनं लवणेन वा ॥
रात्रिवासो न मुञ्चेत न शुचिः स्यात् कदाचन
।
एवं कृत्वां प्रयत्नेन ज्ञात्वा गुरुमुखात् सुधीः
॥
मासैकेन कवीन्द्रः स्यात् द्विमासेनैव ईश्वरः ।
त्रिभिर्मासैर्भवेन्मर्त्यः सर्व्वशास्त्रविशारदः ॥
पुत्त्रार्थी लभते पुत्त्रं धनार्थी विपुलं धनम् ।
आयुरारोग्यकामस्तु सर्व्वान्
कामानवाप्नुयात् ॥
ततः कराङ्गन्यासौ ।
क्षां शां अङ्गुष्ठाभ्यां नमः । इत्यादि एवं हृद-
यादिषु । तथा च तन्त्रे ।
“सम्बर्त्तको वकेशश्च द्वौ वर्णौ कथितौ प्रिये !
।
षड्दीर्घभाग्भ्यामेताभ्यां षडङ्गानि समाचरेत्
॥
सम्बर्त्तः क्षकारः वकेशः शकारः ॥ * ॥
ध्यानम् ।

एवं सिद्धमनुर्मन्त्री महायोगीश्वरो भवेत्
॥”
इति तन्त्रसारः ॥
प्रकारान्तरं कुक्कुटादितन्त्रे द्रष्टव्यम् ॥

**मञ्जुपाठकः**, पुं, (मञ्जु मनोहरं पठतीति पठ +
ण्वुल् ।) शुकपक्षी । इति राजनिर्घण्टः ॥
सुन्दरपाठकर्त्तरि त्रि ॥

**मञ्जुप्राणः**, पुं, (मञ्जवः प्राणाः यस्य ।
सर्व्वव्यापक-
तया महाप्राणत्वादस्य तथात्वम् ।) ब्रह्मा
। इति
जटाधरः ॥

**मञ्जुभद्रः**, पुं, (मञ्जु मनोहरं भद्रं मङ्गलं यस्य ।)
जिनविशेषः । तत्पर्य्यायः । मञ्जुश्रीः २
ज्ञान-
दर्पणः ३ मञ्जुघोषः ४ कुमारः ५
अष्टारचक्र-
वान् ६ स्थिरचक्रः ७ वज्रधरः ८ प्रज्ञा-
कायः ९ वादिराट् १० नीलोत्पली ११
महा-
राजः १२ नीलः १३ शार्द्दूलवाहनः १४
धियाम्पतिः १५ पूर्ब्बजिनः १६ खड्गी
१७
दण्डी १८ विभूषणः १९ बालव्रतः २०
पञ्च-
चीरः २१ सिंहकेलिः २२ शिखाधरः
२३
वागीश्वरः २४ । इति त्रिकाण्डशेषः ॥

**मञ्जुलं**, क्ली, (मञ्जु मञ्जुत्वमस्त्यस्येति ।
“सिध्मा-
दिभ्यश्च ।” ५ । २ । ९७ । इति
मञ्जुशब्दात्
लच् ।) जलाञ्चलम् । निकुञ्जम् । इति
मेदिनी ।
ले, १ । २२ । ॥ शबलः । इति विश्वः
॥

**मञ्जुलः**, पुं, (मञ्जु मञ्जुत्वमस्यास्तीति । मञ्जु +
सिध्मादित्वात् लच् ।) जलरङ्कपक्षी ।
इति

पूर्ब्बजिनभेदः । इति त्रिकाण्डशेषः ॥ उपास्य-
देवताविशेषः । अस्य मन्त्रादि यथा, --
“जाड्यौघतिमिरध्वंसी संसारार्णवतारकः ।
श्रीमञ्जुघोषो जयतां साधकानां सुखावहः ॥”
तत्रागमोत्तरे ।
“मातृकादि समुद्धत्य वह्निबीजं समुद्धरेत् ।
वामांसं कूर्म्मसंज्ञञ्च ततो मेषेशमुद्धरेत् ॥
मीनेशञ्च ततः कुर्य्यात् वामनेत्रेन्दुसंयुतम् ।
षडक्षरो मनुः प्रोक्तो मञ्जुघोषस्य शम्भुना ॥
इयस्तु दीपनी प्रोक्ता मूलमन्त्रस्तु कथ्यते ।
अङ्कुशं शक्तिबीजञ्च रमाबीजं ततः प्रिये ! ॥
बीजत्रयात्मको मन्त्रो जाड्यौघध्वान्तनाशनः।
शक्तिबीजं रमाबीज कामबीजं तथा प्रिये ! ॥
विद्या श्रुतिधरी प्रोक्ता एषा वर्णत्रयात्मिका ।
हकारो वह्निमारूढो बालनेत्रेन्दुभूषितः ।

“शशधरमिव शुभ्रं खड्गपुस्ताङ्गपाणिं
सुरुचिरमतिशान्तं पञ्चचूडं कुमारम् ।
पृथुतरवरमुख्यं पद्मपत्रायताक्षं
कुमतिदहनदक्षं मञ्जुधोषं नमामि ॥
पीठपूजां ततः कुर्य्यादाधाराद्यादिशक्तितः।
भूतप्रेतादिभिः कुर्य्यात् पीठासनमनन्तरम्॥
ज्ञानदात्रे नमः पाद्यं बुद्धिकर्त्रे तथाचमम् ।
जाड्यनाशाय गन्धः स्यादर्घ्यं स्याद् यक्षपाय
वै ॥
सर्व्वसिद्धिप्रदायेति पुष्पं दद्याद्विचक्षणः ।
कुन्दपुष्पं समादाय भैरवान् पूजयेत्ततः ॥
असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्तसंज्ञकः
।
कपाली भीषणश्चैव संहारश्चाष्टमः स्मृतः ॥
ततो धूपादिकं दत्त्वा प्रसूनानि बिसर्जयेत् ।
तैः पुष्पैः पूजयेदष्टौ यक्षिणीश्च विशेषतः ॥
सुरारिसुन्दरी चैव मनोहारिण्यनन्तरम्।
कनकावती तथा कामेश्वरी च रतिकर्य्यथ ॥
पद्मिनी च नटी चैव अनुरागिण्यनन्तरम्।
पूज्या एतास्तु योगिन्यो हृल्लेखाबीजपूर्ब्बिकाः
॥
एवं संपूज्य देवेशं लक्षषट्कं जपेन्मनुम् ।
घृताक्तकुन्दपुष्पैश्च एकादशशतानि च ॥
जुहुयादेधिते वह्नौ कान्तारे पितृवेश्मनि ।

मेदिनी । १ । २२ ॥ सुन्दरे त्रि ।
इत्यमरः । ३ ।
१ । ५२ ॥ (यथा, कालिकापुराणे ४८
अध्याये ।
“मञ्जुलं यौवनोद्भेदं प्राप श्रीरिव माधवे
।”
नदीभेदे स्त्री । यथा, महाभारते । ६ । ९
। ३४ ।
“चित्रोपलां चित्ररथां मञ्जुलां वाहिनीं
तथा ॥”)

**मञ्जुश्रीः**, पुं, (मुञ्जुर्मनोहरा श्रीः शोभा यस्य ।)
मञ्जुघोषः । इति त्रिकाण्डशेषः ॥

**मञ्जुषा**, स्त्री, (मञ्जूषा । पृषोदरादित्वात् ह्रस्वः ।)
मञ्जूषा । पेट्रा इति भाषा । यथा, --
“मञ्जुषापि च मञ्जूषा पेटा च पेटिकेत्यपि
।”
इति शब्दरत्नाबली ॥

**मञ्जूषा**, स्त्री, (मज्जति द्रव्यमस्मिन् । “मस्जेर्नुम्
च ।” उणा० । ४ । ७७ । इति मस्ज् +
ऊषन् ।
नुम् च स चाचोऽन्त्यात् परः । ततो
जश्त्व-
श्चुत्वे मध्यमस्य लोपात् साधुः ।)
पिटकः । इत्य-
मरः । २ । १० । ३० ॥ (यथा,
देवीभागवते । २ । ६ । ३३ ।
“मञ्जुषायां सुतं कुन्ती सुञ्चन्ती
वाक्यमब्रवीत् ॥”)
पाषाणः । इत्युणादिकोषः ॥ मञ्जिष्ठा ।
इति
राजनिर्घण्टः ॥ (मञ्जिष्ठार्थे पर्य्यायो
यथा, --
“मञ्जिष्ठा विकसा जिङ्गी समङ्गा
कालमेषिका ।
मण्डूकपर्णी भण्डीरी भण्डी
योजनवल्ल्यपि ॥
रसायन्यरुणा काला रक्ताङ्गी रक्तयष्टिका
।
भण्डीतकी च गण्डेरी मञ्जूषा वस्त्ररञ्जिनी
॥”

| | | इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥) |
|---|---|---|
| | | **मट**, सादे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट् ।) सौत्रधातुरयम् । अस्य प्रयोगः ।<br>मटहः । इति दुर्गादासः ॥ |

**मटची**, स्त्री, (मटनं मटः । मट् अवसादे + भावे
अप् मटः चीयते प्रचीयते एभिरिति ।
मट +
चि + बाहुलकात् डिः । मटचिः । ततः
कृदि-
कारादिति पक्षे ङीष् ।)
सर्व्वेषामवसादकत्वा
दस्यास्तथात्वम् ।)
रक्तवर्णक्षुद्रपक्षिविशेषः ।
पाषाणवृष्टयः । यथा, गोविन्दभाष्यधृत-
च्छान्दोग्ये । १ । १० । १ ॥
(“मटचीहतेषु
कुरुष्वाटिक्या सह जाययोषस्तिर्ह
चाक्रायण
इभ्यग्रामे प्रद्राणक उवास ॥ इति ॥)

**मटस्फटिः**, पुं, (मटं अवसादं स्फटति निरा
करोति । स्फट् + इः ।) दर्पारम्भः ।
इति जटा-
धरः ॥

**मट्टकं**, क्ली, (मठति वसत्यत्रेति । मठ + अप् ।
पृषोदरादित्वात् टागमे साधुः । मट्टः ।
मट्टस्य
कं शिरः ।) गृहस्य शिरोभागः । इति
केचित् ।
मट्का इति भाषा ॥

**मठ**, वासमर्द्दयोः । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-वासे अक०-मर्द्दने सक०-सेट् ।)
मठति ।
वासो निवासः । मर्द्दः कैश्चिन्न मन्यते ।
इति
दुर्गादासः ॥

**मठ**, इ ङ आध्याने । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) इ मण्ठ्यते ।
आध्यानं
स्मृ म औत्के इत्यत्र व्याख्यातम् । इति
दुर्गादासः ॥

उतस्वराजो अश्विना । अस्ति सोमोऽयं सुतः ।
पिबन्तस्य मरुतो हाइ । उतस्वराजो वा हाइ
नो हाइ । इति गीयमानेनाक्षतान् क्षिपेत् ।
गानाशक्तौ त्रिधा ऋचं वाचयेत् । ततः ।
“सूर्य्यः सोमो यमः कालः सन्ध्ये भूतान्यहः क्षपा ।
पवनो दिक्पतिर्भूमिराकाशं खचरामराः ।
ब्राह्मं शासनमास्थाय कल्पध्वमिह मन्निधिम् ॥”
इति पठित्वा । तत ॐ तद्विष्णोः परमं पदं सदा
पश्यन्ति सूरयः । दिवीव चक्षुराततम् । इति
विष्णुं स्मृत्वा नारायणं नमस्कृत्य ॐ तत् सदित्यु-
च्चार्य्य कुशत्रयजलफलपुष्पाण्यादायॐ अद्या-
मुके मासि अमुकपक्षेऽमुकतिथौ अमुकगोत्रः
श्रीअमुकदेवशर्म्मा एतत्तृणकाष्ठादिमयवेश्मपर-
माणुसमसंख्यवर्षसहस्रावच्छिन्नस्वर्गलोकमहि-
तत्वकामः श्रीविष्णुप्रीतिकामो विष्णुलोकप्राप्ति-
कामो वा विष्णुवेश्मप्रतिष्ठामहं करिष्ये । इति
संकल्पयेत् इष्टकादिमये तु एतदिष्टकादिमय-
वेश्मपरमाणुसमसंख्यकवर्षसहस्रदशगुणकाला-
वच्छिन्नस्वर्गलोकमहितत्वकाम इति विशेषः ।
पाषाणवेश्मनि तु तद्दशगुणकालावच्छिन्नस्वर्ग-
लोकेति विशेषः । देवतान्तरगृहप्रतिष्ठायान्तु
तदूहेन प्रयोगः ॥ * ॥ ततः संकल्पसूक्तं पठेत् ।
सामवेदोक्तं तद्यथा ॐ देवो वो द्रविणोदाः
पूर्णां विवष्ट्यासिचम् । उद्वासिञ्चध्वमुपवा पृणु-
ध्वमादिद्वो देव ओहते ॥ यजुर्वेदोक्तं यथा, --
“ॐ यज्जाग्रतो दूरमुदैतु दैवं
तदुसुप्तस्य तथैवेति ।
दूरङ्गमं ज्योतिषां ज्योतिरेकं
तन्मे मनः शिवसङ्कल्पमस्तु ॥”
ततः सगणाधिपगौर्य्यादिषोडशमातृकापूजा-
वसोर्धारासम्पातनायुष्यमन्त्रजपाभ्युदयिकश्रा-
द्धानि कर्त्तव्यानि ॥ * ॥ आयुष्यमन्त्रो यथा । ॐ
आयुर्व्विश्वायुर्व्विश्वं विश्वमायुरसि । महि प्रजान्त्व-
ष्टाराधिनिधे ह्यस्मे शतं जीबेम शरदो वयन्ते ॥
ॐ आयुषो मे पवस्व वर्च्चसो मे पवस्व विदुः
पृथिव्या दिवो जनित्र्या शृण्वन्त्यापोऽधः
क्षरन्ती सोमोहोद्गाय ममायुषे मम ब्रह्मवर्च्च-
साय यजमानस्यद्‌र्ध्या अमुकस्य राज्याय ॥ * ॥
तत्र विष्णुवेश्मप्रतिष्ठाभ्युदयार्थमिति वाक्ये
विशेषः । एवमन्यवेश्मनि । ततः उत्तराभि-
मुखं ब्राह्मणमुपवेश्य तत्समीपे आसनमानीय

कुरु । ॐ यथाज्ञानं करवाणीति
प्रतिवचनम् ।
स्वयं होमासामर्थ्ये होतुर्वरणमपि तथैव
कार्य्यम् । तन्त्रधारकत्वेन आचार्य्यस्यापि
तथैव
कार्य्यम् । शक्तेन सदस्यस्यापि ।
गुरोर्वरणे तु
संकल्पितेऽस्मिन्
विष्णुवेश्मप्रतिष्ठाकर्म्मणीति
वक्तव्यम् ॥ * ॥ ततो यजमानः गुरोः
पादौ
धृत्वा पठेत् ।
“नारायणस्वरूपस्त्वं संसारात्त्राहि मां
प्रभो ! ।
त्वत्प्रसादात् गुरो ! यज्ञं प्राप्नोमि
यन्मयोदि-
तम् ॥
त्राहि नाथ ! प्रपन्नं मां भीतं संसारसाग-
रात् ।
देवतास्थापने ह्यद्य मम शान्तिं कुरु
प्रभो ! ॥
ततो गुरुः ।
ॐ उत्तिष्ठ वत्स भद्रन्ते
मत्प्रसादात्त्वयानघ ! ।
प्राप्तव्यं धर्म्मकामार्थं दुष्प्रापं यत् सुरासुरैः
॥ * ॥
ततो गुरुः ।
ॐ पावमानीः स्वस्त्ययनीः मृदुघा हि
घृत-
श्च्युतः ।
ऋषिभिः सम्भृतो रसो ब्राह्मणे स्वमृतं
हितम् ॥
इति पावमानीसूक्तम् ॥
“असपत्नं पुरस्तान्नः शिवं दक्षिणतः
कृधि ।
अभयं सततं पश्चात् भद्रमुत्तरतो गृहे ॥”
इति शाकुनसूक्तम् ॥
ॐ रक्षोहनो बलगहनः प्रोक्षामि वैष्णवान्
रक्षोहनो बलगहनोऽवनयामि वैष्णवान्
रक्षो-

**मठः**, पुं, छात्रादिनिलयः । इत्यमरः । २ । २ । ८ ॥ मठन्ति

वसन्ति छात्रादयोऽत्र मठः । मठ वासमर्द्दयोः
अल् । छत्रशीला विद्यार्थिनच्छात्राः । छत्रेण
गुरुसेवा लक्ष्यते गुरुदोषच्छादनात् छत्रं तच्छी-
लत्वात् छात्रः विकारसंघेति ष्णः । आदिना
परिव्राजकक्षपणकादीनांग्रहः । छात्रादीनां
निलयो गृहं छात्रादिनिलयः । अर्थकथनमेतत् ।
नामाप्येतदिति केचित् । छात्रशाला प्रतिश्रय-
श्चात्रैव । इति भरतः ॥ गन्त्रीरथः । इति हारा-
वली ॥ * ॥ अथ मठादिप्रतिष्ठाप्रयोगः ।
यदि तद्दिने प्रतिमादिप्रतिष्ठा क्रियते तदा तन्त्रेण
वृद्धिश्राद्धादिकं विधाय देवप्रतिष्ठातत्त्वोक्त-
विधिना देवप्रतिष्ठां विधाय गृहप्रतिष्ठा कर्त्तव्या ।
यदिगृहप्रतिष्ठामात्रं तदा प्रातः कृतनित्यक्रियः
प्रक्षालितपाणिपाद आचान्तः प्राङ्मुख उदङ्-
मुखो वा कुशयुक्तासने उपविश्य ब्राह्मणत्रयं
गन्धादिना परितोष्य अस्मिन् विष्णुवेश्मप्रतिष्ठा-
कर्म्मणि ॐ पुण्याहं भवन्तोऽधिब्रुवन्तु इति त्रिः
श्रावयेत् । ॐ पुण्याहमिति त्रिस्तैरुक्ते अस्मिन्
विष्णुवेश्मप्रतिष्ठाकर्म्मणि ॐ स्वस्ति भवन्तोऽधि-
ब्रुवन्तु इति त्रिः श्रावयेत् । ॐ स्वस्तीति त्रिस्तै-
रुक्ते अस्मिन् विष्णुवेश्मप्रतिष्ठाकर्म्मणि ॐ ऋद्धिं

प्राङ्मुखो यजमानः प्राञ्जलिर्वदेत् । ॐ साधु
भवानास्ताम् । ॐ साध्वहमासे इति प्रतिवचनं
दत्त्वा तदासने उदङ्मुख उपविशति । ततो
यजमानः ॐ अर्च्चयिष्यामो भवन्तं इति वदेत् ।
ॐअर्च्चयेति प्रतिवचनम् । ततो गन्धपुष्पताम्वूला-
लङ्कारैरभ्यर्च्च्य दक्षिणं जानु स्पृष्ट्वा ॐ अद्ये-
त्यादि अमुकगोत्रममुकप्रवरममुकदेवशर्म्माणं
भवन्तं अस्मिन् सङ्कल्पितविष्णुवेश्मप्रतिष्ठा-
कर्म्माङ्गभूतहोमकर्म्मणि ब्रह्मकर्म्मकरणाय गन्ध-
पुष्पताम्बूलालङ्कारवस्त्रैरहंवृणे । ॐ वृतो-
ऽस्मीति प्रतिवचनम् । यथाविहितं ब्रह्मकर्म्म

हनो बलगहनोऽवस्तृणामि वैष्णवान् । रक्षो-
हनौ बलगहनावुपदधामि वैष्णवी । रक्षोहनौ
बलगहनौ पर्य्यूहामि वैष्णवमसि वैष्णवाः स्थः ।
इति रक्षासूक्तम् । इति पठित्वा ।
"वेतालाश्च पिशाचाश्च राक्षसाश्च सरीसृपाः ।
अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ॥
विनायका विघ्नकरा महोग्रा
यज्ञद्विषो ये पिशिताशनाश्च ।
सिद्धार्थकैर्वज्रसमानकल्पै-
र्मया निरस्ता विदिशः प्रयान्तु ॥"
इति श्वेतसर्षपान् विकीर्य्य स्वैः स्वैर्मन्त्रैः पञ्च-
गव्यं शोधयेत् ॥ * ॥ तच्छोधनमन्त्रा यथा ।
ॐ तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि
धियो यो नः प्रचोदयात् ।
इति गोमूत्रम् ।
ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्व्वभूतानां तामिहोपह्वये श्रियम् ॥
इति गोमयम् ।
ॐ आप्यायस्व स मे तु ते विश्वतः सोमवृष्ण्यं
भवावाजस्य सङ्गथे ।
इति दुग्धम् ।
ॐ दधिक्राव्नो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभिणो मुखाकरत् प्रणतायूंषि तारिषत् ॥
इति दधि ।

| | | |
|---|---|---|
| भवन्तोऽधिब्रुवन्तु इति त्रिः श्रावयेत् । ॐ ऋद्ध्य तामिति त्रिर्वदेयुः । यजुर्वेदिनां ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः स्वस्ति नस्तार्क्षोऽरिष्टनेमिः स्वस्ति नोबृहस्पति-र्दधातु । इत्यनेनाक्षतान् क्षिपेत् । सामगानान्तु । ॐ अस्ति सोमोऽयं सुतः । पिबन्तस्य मरुतः । | | |

ॐ तेजोऽसि शुक्रमस्यमृतमसि धामनामासि
प्रियन्देवानामनाधृष्टं देवयजनमसि ॥
इति घृतम् ।
ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां
पूष्णो हस्ताभ्यां हस्तमाददे । इति
कुशोदकम् ॥
ॐ वेद्या वेदिः समाप्यते बर्हिषा बर्हिरिन्द्रियम्
।
जपेन यूप आप्यते प्रणीतो अग्निरग्निना । इति
मन्त्रेण वेदीं संप्रोक्ष्य पञ्च घटान् घटस्थापन-
क्रमेण संस्थाप्य ॥ * ॥ घटस्थापनमन्त्रा
यथा ।
सामगानाम् । ॐ महित्रीणामवोस्तुद्युक्षं मित्र-
स्यार्य्यम्नः दुराधर्षं वरुणस्य । इति भूमेः ।
ॐ धानावन्तं करम्भिणमपूपवन्तमुक्थिनं
इन्द्र
प्रातर्ज्जूषस्व नः । इति धान्यस्य । ॐ
आविशं
कलसं सुतो विश्वा अर्षन्नभिश्रिय
इन्द्ररिन्द्राय
धीयते । इति कलसस्य ।
"ॐ अयमूर्ज्जावतो वृक्ष उर्ज्जीव फलिनी
भव ।
पर्णं वनस्पते न त्वा नु त्वा च सूयतां रयि ॥"
इति पल्लवस्य ।
ॐ आनोमित्रावरुणा घृतैर्गव्युतिमुक्षतं मध्वा
रजांसि सुक्रतु । इति जलस्य । ॐ इन्द्रन्नरो
नेमधिता हवन्ते यत्पार्य्या युनयते धियस्ताः
सूरो नृषाताश्रवसश्च काम आगोमतिव्रजे
भजात्वन्नः । इति फलस्य । ॐ
सिन्धोरुच्छ्वासे
पतयन्तमुक्षणं हिरण्यपावाः पशुमाशु गिभ्नते
।
इति सिन्दूरस्य । ॐ त्वावतः पुरूवसो
वयमिन्द्र
प्रणेतः स्मचिस्थातर्हरीणाम् । इति स्थिरी-
करणस्य । ॐ पवमानो
व्यश्नवद्रश्मिभिर्वाजसा-
तमः । दधास्तोत्रे सुवीर्य्यम् । इति पुष्पस्य ॥
* ॥

र्म्मिभिः पिन्नमानः इति सिन्दूरस्य । ॐ
श्रीश्च ते
लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि
रूपं
अश्विनौ व्यात्तं इष्टम्मनीषाण सर्व्वलोकं
मनी-
षाण । इति पुष्पस्य ॥ * ॥ ततः
फलपुष्पयुतं विता-
नम् । ॐ विमान एष दिवो मध्य आस्त
आप
प्रवान्रोदसी अन्तरीक्षम् ।
सविस्वाचीरभिचष्टे
घृताचीरन्तरा पूर्ब्बमपरञ्च केतुम् ॥ साम-
गानान्तु । ॐ ऊद्ध्र्व ऊषु न ऊतये तिष्ठा
देवो न
सविता ऊद्ध्र्वो वाजस्य सनिता
यदञ्जिभिर्व्वा
घद्भिर्व्विह्वयामहे । इति मन्त्रेण बध्नीयात् । *
।
"ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः
पतिरेक आसीत् । सदाधारपृथिवीं
द्यामुतेसां
कस्मै देवाय हविषा विधेम । इति मन्त्रेण
मण्डलमध्ये सुवर्णपद्मं दत्त्वा स्वर्णशलाकया
दलान्युत्कीर्य्य मण्डलमध्ये राजतीं प्रतिमां
ॐ सूत्रामाणं पृथिवीं द्यामनेहसं सुशर्म्माण-
मदितिं सुप्रणितिम् । दैवीं नावं स्वरित्रामा
नागसमस्रवन्ती मारुहे मास्रस्तये । इति
मन्त्रेण
निःक्षिप्य घटेषु देवान् पूजयेत् । * ।
प्रथमघटे
गणेशं सूर्य्यं द्वितीयघटे शिवं दुर्गां तृतीयघटे
विष्णुं लक्ष्मीं सरस्वतीं चतुर्थे अग्निं
वास्तुपुरुषं
क्षेत्रपालान् कार्त्तिकेयमश्विनीकुमारौ पञ्चमे
ग्रहान् लोकपालांश्च स्वैः स्वैर्मन्त्रैरावाह्य
पूजयेत् । * । ततो गुरुदेवं प्रतिमायां
शालग्रामे
वा यथोक्तविधिना स्नापयेत् ।
"ॐ भद्रं कर्णेभिः शृणुयाम देवा
भद्रं पश्येमाक्षिभिर्यजत्राः ।

इति मन्त्रेण सिकताजलेन । ॐ तद्विष्णोः
परमं
पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुरा-
ततम् । इति बल्मीकतोयेन । ॐ या ओषधी
सोमराज्ञीर्व्विष्ठिताः पृथिवीमनु । तामह्य-
मस्मिन्नासनेऽच्छिद्रं शर्म्म यच्छत । इति
सर्व्वौ-
षधिजलेन । ॐ यज्ञा यज्ञा वो अग्नये गिरा
गिरा च दक्षसे । प्रप्रवयममृतञ्जातवेदसं प्रियं
मित्रन्नशं सिषम् । इति कषाययुक्तजलेन ।
पञ्चगव्येन स्वैः स्वैर्मन्त्रैः सेचयेत् । ॐ पयः
पृथिव्यां पय औषधीषु पयो दिव्यन्तरिक्षे
पयोधाम । पयस्वती प्रादशः सन्तु मह्यं सम्मा
सृजामि पयसा घृतेन सम्मा सृजाम्यपहः ॥
इति पञ्चगव्येन । ॐ तस्माद्यज्ञात्
सर्व्वहुतऋचः
सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्-
यजुस्तस्मादजायत ॥ इति पञ्चामृतेन । ॐ
याः
फलिनीति फलोदकेन । ॐ सहस्रशीर्षेति
वक्ष्य-
माणमन्त्रण सहस्रधारया । ॐ एतोन्विन्द्रमिति
पूर्ब्बोक्तमन्त्रेण तुलसीचन्दनयुक्तजलेन । ॐ
यासां
राजा वरुणो याति मध्ये सत्यानृते
अवपश्यञ्ज-
नानाम् । मधुश्च्युतः शुचयो याः पावकास्ता
आपो देवीरिह मामवन्तु ॥ इत्यनेन वेदादि
चतुष्टयेन । तद्यथा ॐ अग्निमीले पुरोहितं
यज्ञस्य देवमृत्विजं होतारं रत्नधातमम् । १ ।
ॐ इषेत्वोर्जेत्वा वायवस्थदेवो वः सविता
प्रार्प-
यतु श्रेष्ठतमाय कर्म्मणे । २ । ॐ अग्न आयाहि
वीतये गृणानो हव्यदातये निहोता सत्सि
वर्हिषि । ३ । ॐ शन्नो देवीरभिष्टये शन्नो
भवन्तु
पीतये शंयोरभिस्रवन्तु नः । ४ । वक्ष्यमाण-
पुरुषसूक्तेन च एकाशीतिघटैः स्नापयेत् ।
अशक्तौ अष्टाविंशतिघठैरष्टघटैर्वा स्नापयित्वा
धौतवाससा जलमपनीय यथोपचारैः संपूज्य
मण्डले आधारशक्त्यादीनि पूजयेत् । * । ॐ

यजुषाम् । ॐ भूरसि भुवनस्य दितिरसि
विश्वस्य
धाया विश्वस्य भुरणधर्त्रीम् । पृथिवीं यच्च
पृथिवीं
दृँह पृथिवीं माहिँसीः । इतिभूमेः । ॐ
धान्यमसि धिनुहि देवान् धिनुहि यज्ञं धिनुहि
यज्ञपतिं धिनुहि मां यज्ञन्यम् । इति धान्यस्य
।
ॐ आजिघ्रकलसमह्यात्वाविशन्त्युन्दवः
पुन-
रुर्जा निवर्त्त स्वसानः । सहसं धुक्षोरुधारा
पयस्वतीमाविशताद्रयि । इति घटस्य । ॐ
वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भः
सर्जनीस्थः
वरुणस्य ऋत सदन्यसि वरुणस्य ऋत
सदनमपि
वरुणस्य ऋत सदनीमासीद । इति जलस्य ।
ॐ धन्वनागा धन्वना जिञ्जयेम धन्वना
तीव्राः
समदो जयेम । धनुःशत्रोरपकामं कृणोतु
धन्वना सर्व्वाः प्रतिशो जयेम । इति पल्लवस्य
।
ॐ याः फलिनीर्या अफला अपुष्पा याश्च
पुष्पिणीः बृहस्पतिप्रसूतास्ता नो
मुञ्चन्तं£हसः ।
इति फलस्य ।
“ॐ सर्व्वतीर्थमयं वारि सर्व्वदेवसमन्वितम् ।
इमं घटं समारुह्य तिष्ठ देवगणैः सह ॥”
इति जलं दद्यात् । ॐ स्थिरो भव विड्वङ्ग
आशुर्भव वाह्यर्व्वन् पृथुर्भव मुसदस्त्वमग्ने
पुरीष-
वाहनः । इति स्थिरीकरणस्य । ॐ
सिन्धोरिव
प्राध्वने शूघनाशो वातप्रमियः । पतयन्ति
यह्वा
घृतस्य धारा अरुषोण वाजी काष्ठा भिन्दन्नू-
स्थिरैरङ्गैस्तुष्टवाँसस्तनू-
भिर्ब्व्यशेमदेव हितं यदायुः ॥”
इति मन्त्रेण निवेश्य ॐ
एतोन्विन्द्रं£स्तवामः
शुद्धं शुद्धेन साम्ना । शुद्धै रुक्मैर्वा वृध्वां
संशुद्ध
आशीर्वान्ममत्तु । इति मन्त्रेण शुद्धोदकेन
स्नापयेत् । ॐ घृतवतीति घृतेनाभ्यज्य ।
ॐ
अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे ।
पृथिव्याः सप्तधामभिः । इति
मसूरचूर्णेनोद्ध्यर्त्त्य ।
ॐ सप्त ते अग्ने समिधः सप्तजिह्वाः सप्त
ऋषयः
सप्त धामप्रियाणि सप्त होत्राः सप्तधा त्वा
यजन्ति । सप्त योनीरापृणुस्वा घृतेन । इति
उष्णोदकेन क्षालयेत् । ॐ द्रुपदादिव
मुमुचानः
स्विन्नः स्नातो मलादिव पूतं पवित्रेणे
वाज्यमापः
शुन्धन्तु मैनसः इति चन्दनेनानुलिप्य ॐ
आपो-
हिष्ठामयो भुवः स्नान ऊर्ज्जे दधातनः
महेर-
णाय चक्षसे । इति नदीतोयेन स्नापयेत् ।
ॐ शन्नो देवीरभिष्टये आपो भवन्तु पीतये
शंयोरभिस्रवन्तु नः । इति तीर्थमृत्कलसेन
स्नापयित्वा गावत्र्या गन्धयुक्तजलेन
स्नापयेत् ।
ॐ हिरण्यवर्णाः शुचयः पावकाः यासु
जातः
कश्यपो यास्विन्द्रः । अग्नीया गर्भन्दधिरे
विरू-
पास्तान् आपः शं£श्योना भवन्तु ॥ इति
पञ्च-
मृत्तिकया । ॐ इमं मे गङ्गे यमुने सरस्वति
सुतुद्रि स्तोमम् सचता परुष्ण्या ।
असिक्न्या
मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया
आधारशक्तये नमः । एवं सर्व्वत्र प्रणवादि-
नमोऽन्तेन । प्रकृत्यै कूर्म्माय अनन्ताय
पृथिव्यै
क्षीरसमुद्राय रत्नद्वीपाय रत्नोज्वलसहितमहा-
मणिमण्डपाय कल्पवृक्षाय रत्नवेदिकायै रत्न-
सिंहासनाय । आग्नेय्यां धर्म्माय नैरृत्यां
ज्ञानाय वायव्यां वैराग्याय ऐशान्यां ऐश्वर्य्याय
पूर्ब्बस्यां अधर्म्माय पश्चिमायां अवैराग्याय
उत्तरस्यां अनैश्वर्य्याय । मध्ये अं
अर्कमण्डलाय
उं सोममण्डलाय मं वह्निमण्डलाय । सं
सत्वाय
रं रजसे तं तमसे । आं आत्मने अं अन्तरा-
त्मने पं परमात्मने ह्रीं ज्ञानात्मने ।
पूर्ब्बादिकेश-
रेषु प्रादक्षिण्येन ॐ विमलायै नमः । एवं उत्-
कर्षिण्यै ज्ञानायै क्रियायै यीगायै प्रह्वै सत्यायै
ईशानायै । कर्णिकायां अनुग्रहायै ।
कर्णिकोपरि
ॐ नमो भगवते विष्णवे सर्व्वभूतात्मने
वासुदेवाय
सर्व्वात्मसंयोगयोगपीठात्मने नमः ॥ * ॥ ततो
मण्डले देवं संस्थाप्य पौराणिकमन्त्रेण पुरुष-
सूक्तेन वा षोडशोपचारैः पूजयेत् । तद्यथा ।
ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं सर्व्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलम् ।
१ ।

सर्व्वतः स्थाने विश्वतो वृत्वा स्थाने
स्पृष्ट्वा इत्यपि
पाठः । इति पठित्वा भगवन् विष्णो
इहागच्छ
इहागच्छ इह तिष्ठ इह तिष्ठ इह
सन्निरुद्धस्व
मम पूजां गृहाण । ततो
यथाविध्यासनमानीय
वमिति वरुणबोजेनार्घ्याम्भसा
संप्रोक्ष्यासनम-
भ्यर्च्च्य ॐ पुरुष एवेदं सर्व्वं यद्भूतं यच्च
भाव्यं
उतामृत त्वस्पेशानो यदतेनातिरोहति २ ।
इति पठित्वा इदममुकासनं ॐ नमो
भगवते
वासुदेवाय श्रीविष्णव नमः । एवं सर्व्वत्र
दाने ।
ॐ भगवन् विष्णो स्वागतम् । इति
स्वागतप्रश्नः ।
ततस्ताम्रपात्रस्थं
पद्मश्यामाकदूर्व्वापराजितादि-
युक्तं जलं गृहीत्वा ॐ एतावानस्य
महिमातो
ज्यायांश्च पूरुषः पादोऽस्य विश्व भूतानि
त्रिपादस्यामृतं दिवि ३ । इति पठित्वा इदं
पाद्यं पूर्ब्बवन्मूलेन पादयोर्द्दद्यात् । ततो
गन्ध-
पुष्पाक्षतयवकुशाग्रतिलसर्षपदूर्व्वायुक्तजलं
शङ्खादिपात्रे कृत्वा ॐ त्रिपादूर्द्ध उदैत्
पुरुषः
पादोऽस्येहाभवत् पुनः । ततो
विश्वङ्व्यक्रामत्
शासनानशने अभि ४ ॥ ततः स्थाने
तस्मा-
दित्यपि पाठः । इति पठित्वा
सामगानामिद-
मर्घ्यमन्येषामेषः अर्घः इति शिरसि दद्यात्
।
जातीलवङ्गकक्कोलयुक्तं केवलं वा
पात्रस्थं जलं

इति पठित्वा मूलेन पुष्पं दद्यात् । ॐ
चन्द्रमा
मनसो जातश्चक्षोः सूर्य्यो अजायत ।
श्रोत्रा-
द्वायुश्च प्राणश्च मुखादग्निरजायत १२ ॥
मुखा-
दिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत इति च
पाठः ।
इति पठित्वा मूलेन धूपं दद्यात् । ॐ
नाभ्या
आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्त्तत ।
पद्भ्यां
भूमिर्द्दिशः श्रोत्रात्तथा लोकानकल्पयन्
१३ ॥
इति पठित्वा मूलेन दीपं दद्यात् । ततो
नैवेद्यो-
परि मत्स्यमुद्रया मूलमन्त्रं दशधा
जप्त्वाभ्यर्च्च्य
धेनुमुद्रां प्रदर्श्य ॐ यत्पुरुषेण हविषा देवा
यज्ञमतन्वत । वसन्तोऽस्यासीदाज्यं
ग्रीष्म इध्मः
शरद्धविः १४ ॥ इति पठित्वा नैवेद्यं
मूलेन
दद्यात् । ॐ सप्तास्यासन् परिधयस्त्रिः
सप्त
समिधा कृताः । देवा यद्यज्ञं तन्नांना
अवध्नन
पुरुषं पशुम् १५ ॥ इति पठित्वा
कर्पूरादि-
वासितं पानीयं ताम्बूलं पुनराचमनीयं
दर्पणञ्च
दद्यात् । ॐ यज्ञेन यज्ञमयजन्त
देवास्तानि
धर्म्माणि प्रथमान्यासन् । ते ह नाकं महि
मानः स चन्त यत्र पूर्ब्बे साध्याः सन्ति
देवाः १६ । इति पठित्वा अञ्जलित्रयं पुष्पं
दत्त्वा आवरणानि संपूज्य मूलमन्त्रं
यथाशक्ति
जप्त्वा प्रणमेत् । * ।
ऋग्वेदस्याश्वलायनशाखा-

प्रादेशपरिमितोडुम्बरनिर्म्मितमेक्षणं चरुस्थाली
आज्यस्थाली उदूखलमुषले स्रुवं पूर्णहोमार्थं
स्रुचं समिधं आज्यादीनि उदगग्राणि प्राञ्चं
प्राञ्चं विनियोगक्रमेणासादयति । संस्थाप्य
यवान् ब्रीहीन् वा तदभावे तण्डुलान् शूर्पे
निधाय । सामगः । ॐ विष्णवे त्वा जुष्टं निर्व्व-
पामि । इति यवादिप्रसृतिमेकां चरुस्थाल्यां
कृत्वा उदूखलमध्ये स्थापयेत् । यजुर्व्वेदी तु
ॐ विष्णवे त्वा जुष्टं गृह्णामि ॐ विष्णवे त्वा
जुष्टं निर्व्वपामि चमसस्थजलेन ॐ विष्णवे त्वा
जुष्टं प्रोक्षामीति त्रयं कुर्य्यात् । ऋग्वेदी तु ॐ
विष्णवे त्वा जुष्टं निर्व्वपामि ॐ विष्णवे त्वा
जुष्टं प्रोक्षामीति निर्व्वापप्रोक्षणमात्रम् । यस्य
गृहप्रतिष्ठा तस्यादौ जुष्टग्रहणम् । एवं सर्व्वत्र ।
एवमग्न्यादिषु । ॐ अग्नये त्वा जुष्टं निर्व्वपामि
एवं वायवे सूर्य्याय द्विः विष्णवे द्विः अग्नये
वायवे पुनरग्नये वरुणाय पुनरपि अग्नये
सूर्य्याय प्रजापतये अन्तरीक्षाय द्यवे ब्रह्मणे
पृथिव्यै महाराजाय सोमाय इन्द्राय अग्नये
यमाय नैरृताय वरुणाय वायवे कुवेराय
ईशानाय ब्रह्मणे अनन्ताय आदित्याय सोमाय
मङ्गलाय बुधाय बृहस्पतये शुक्राय शनैश्चराय
राहवे केतुम्य इत्थं नवत्रिंशत् प्रसृतीः स्थाप-
येत् । द्विस्तूष्णीं उपरिकृतदक्षिणवाममुष्टिभ्यां
मुषलेनावहत्य शूर्पेण प्रस्फोटयेत् । एवमपर-
वारद्वयमवहत्य शूर्पेण प्रस्फोटयेत् । तथा कर्त्तव्यं
यथा वारत्रयेण तण्डुलनिष्पत्तिर्भवति । तदशक्तौ
संस्कारमात्रार्थं तण्डुलेष्वेवम् । ततस्तण्डुलान्
त्रिः प्रक्षाल्य चरुस्थाल्याममन्त्रकं कृतोत्तराग्रं
पवित्रं निःक्षिप्य तत्र तण्डुलान् निधाय कपि-
लाया दुग्धं निःक्षिप्य तदभावे अन्यधेनो-
र्दुग्धं निःक्षिप्य दर्व्व्यां प्रागादिप्रदक्षिणमीष-
दूद्र्ध्वमवघट्टयंस्तथा पचेत् यथा दाहकाठिन्याति-
शैथिल्यमण्डगालनरहितोऽन्तरुष्मपक्वश्चरुर्भवति
ज्वलदुल्मुकेन स्थालीमध्यस्थं चरुं दृष्ट्वा ॐ
तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः
दिर्वाव चक्षुराततमित्यनेन मन्त्रेणं ओमित्यनेन
च घृतेन सिक्त्वा दर्व्व्या दक्षिणावर्त्तेन संमिश्र-
येत् । ततोऽग्नेरुत्तरतोऽवतार्य्य पुनर्ज्वलदुल्मु-
केन स्थालीमध्यस्थं दृष्ट्वा पुनर्घृतेनाभिधारयेत् ।
ततः पर्य्युक्षणान्तां कुशण्डिकां समाप्य सामगस्तु

गृहीत्वा ॐ ततो विराडजायत
विराजोऽधि-
पुरुषः स जातोऽत्यरिच्यत पश्चाद्भूविमथो
पुरः ५ ॥ इति पठित्वा इदमाचमनीयं ॐ
नमो
भगवते वासुदेवाय श्रीविष्णवे स्वधा इति
दद्यात् । ततः कांस्यपात्रस्थं
दधिमधुघृतात्मकं
कांस्येन पिहितं मधुपर्कं गृहीत्वा ॐ
तस्माद्-
यज्ञात् सर्व्वहुतः संभृतं पृषदाज्यं पशूंस्तां
श्चक्रे वायव्यानारण्या ग्राम्याश्च ये ६ ॥
इति
पठित्वा एष मधुपर्कः ॐ नमो भगवते
वासु-
देवाय श्रीविष्णवे स्वाहा इति दद्यात् ।
ततः
पूर्ब्बमन्त्रं पठित्वा पुनराचमनीयञ्च दद्यात् ।
कर्पूरवासितजलं गृहीत्वा ॐ तस्माद्यज्ञात्
सर्व्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि
जज्ञिरे तस्माद्यजुस्तस्मादजायत७ ॥
इति
पठित्वा इदं स्नानीयजलं मूलेन दद्यात् ।
पूर्ब्बवत् पुनराचमनीयं दत्त्वा वस्त्रं गृहीत्वा
ॐ
तस्मादश्वा अजायन्त ये के चोभयादतः ।
गावो
ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ८
॥
इति पठित्वा इदं वस्त्रं मूलेन दद्यात् । एव-
मुत्तरीयवस्त्रं यज्ञोपवीतं पूर्ब्बवदाचमनीयं
दत्त्वा
आभरणं गृहीत्वा ॐ तं यज्ञं वर्हिषि प्रौक्षन्
पुरुषं जातमग्रतः । तेन देवा अयजन्त
साध्या
ऋषयश्च ये ९ ॥ इति पठित्वा मूलेन
दद्यात् ।
ॐ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्
मुखं
किमस्यासीत् किंबाहू किमूरू पादा उच्येते
१० ।
ऋग्वेदस्याश्वलायनशाखायान्तुमुखं
किमस्य
यान्तु यत्पुरुषेण हविषा इत्यादिना
स्नानीयं ६
तं यज्ञं वर्हिषीत्यादिना वस्त्रं ७ तस्मात्
यज्ञात्
सर्व्वहुतः संभृतमित्यादिना यज्ञोपवीतम्
८
तस्मात् यज्ञात् सर्व्वहुत ऋचः
सामानीत्यादिना
चन्दनम् ९ तस्मादश्वा अजायन्त
इत्यादिना
पुष्पं १० यत्पुरुषं व्यदधुरित्यादिना धूपम्
११
ब्राह्मणोऽस्य मुखमासीदित्यादिना दीपम्
१२
चन्द्रमा मनसो जात इत्यादिना नैवेद्यम्
१३
नाभ्या आसीदन्तरिक्षमित्यादिना
ताम्बूलम् १४
सप्तास्यासन् परिधय इत्यादिना
नीराजनम् १५
इति भेदः अन्यत् समानम् । * । ततो
गुरुः
कुण्डपश्चिमे उपविश्य कुण्डे स्थण्डिले
वा ब्राह्म
विधिना तदज्ञाने स्वगृह्योक्तविधिना
साहस-
नामानमग्निं संस्थाप्य ब्रह्मस्थापनानन्तरं
अभि-
षेकार्थं ऐशान्यां नवमव्रणमश्यामं
बहिर्द्दध्यक्षत-
भूषितं
चूताश्वत्थन्यग्रोधोडुम्बरप्लक्षपल्लवच्छन्न-
मुखं फलवस्त्रयुतं अन्तःक्षिप्तपञ्चरत्नं
निर्म्मल-
जलपूर्णं दृढकलसं अक्षतानामुपरि ॐ
आजिघ्र
कलसमित्यादिमन्त्रेण स्थापयेत् । तत्र
वरुणस्यो-
त्तम्भनमसीति बरुणं न्यसेत् ।
"ॐ गङ्गाद्याः सरितः सर्व्वाः समुद्राश्च
सरांसि
च ।
काम्यकर्म्माङ्गत्वेन तपश्च तेजश्च श्रद्धा च ह्रीश्च
सत्यञ्चाक्रोधश्च त्यागश्च धृतिश्च धर्म्मश्च सत्त्वञ्च
वाक् च मनश्चात्मा च ब्रह्म च तानि प्रपद्ये
तानि मामवन्तु । इति जपित्वा विरूपाक्षजपं
कुर्य्यात् । ततः प्रकृते कर्म्मणि ।
"ॐ पिङ्गभ्रूश्मश्रुकेशाक्षः पीनाङ्गजठरोऽरुणः ।
छागस्थः साक्षसूत्रोऽग्निः सप्तार्च्चिः शक्ति-
धारकः ॥"
इत्यादित्यपुराणीयं ध्यात्वा विष्णुवेश्मप्रतिष्ठा-
कर्म्मणि अग्ने त्वं साहसनामासीति नाम कृत्वा-
वाह्य संपूज्य प्रादेशप्रमाणां घृताक्तां समिधं

| | | |
|---|---|---|
| कौ बाहू कावूरू पादा उच्येते इति भेदः ।<br>इति पठित्वा मूलेन गन्धं दद्यात् । ॐ<br>ब्राह्मणो<br>ऽस्य मुखमासीत् बाहू राजन्यः कृतः ।<br>उरू<br>तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ११<br>॥ | सर्व्वे समुद्राः सरितस्तीर्थानि जलदा<br>नदाः ।<br>आयान्तु यजमानस्य दुरितक्षयकारकाः<br>॥"<br>इति तीर्थानि च न्यसेत् । तत्रैव कलसे<br>अश्व-<br>स्थानाद्गजस्थानात् बल्मीकात् सङ्गमात्<br>ह्रदात् ।<br>गोकुलात् रथ्याया आनीय सप्त मृदः<br>क्षिपेत् ॥<br>सर्व्वौषधीश्च ॥ * ॥ ततश्चरुश्रपणं<br>कुर्य्यात् ।<br>अग्नेरुत्तरे द्व्यङ्गुलविस्ताराग्रां<br>प्रादेशपरिमि-<br>तोडम्बरनिर्म्मितदर्व्वीं<br>सार्द्धाङ्गुष्ठविस्ताराग्र- | |

तूष्णीमग्नौ हुत्वा मेक्षणेन चरुं गृहीत्वा ॐ तद्वि-
ष्णोरित्यादिस्वाहान्तेन जुहुयात् सर्व्वत्र साम-
गानां मन्त्रान्ते देवतोद्देशो नास्ति । अन्येषां
इदं विष्णवे इति । ॐ भूः स्वाहा इदमग्नये ॐ
भुवः स्वाहा इदं वायवे ॐ स्वः स्वाहा इदं
सूर्य्याय ॐ भूर्भवः स्वः तत् सवितुर्व्वरेण्यं भर्गो
देवस्य धीमहि । धियो यो नः प्रचोदयात्
स्वाहा इदं सूर्य्याय । ॐ तद्विप्रासो विपन्यवो
जागृवांसः समिन्धते विष्णोर्यत् परमं पदं स्वाहा
इदं विष्णवे । ॐ विश्वतश्चक्षुरुत विश्वतो मुखो
विश्वतो बाहुरुत विश्वतस्पात् संबाहुभ्यां धमति
संपतत्रैर्द्यावा भूमी जनयन् देव एकः स्वाहा
इदं विष्णवे । ॐ अग्निमीले पुरोहितं यज्ञस्य
देवमृत्विजं होतारं रत्नधातमं स्वाहा इद-
मग्नये । ॐ इषेत्वोर्जेत्वा वायवस्थदेवो वः
सविता प्रार्पयतु श्रेष्ठतमाय कर्म्मणे स्वाहा इदं
वायवे । ॐ अग्न आयाहि वीतये गृणानो
हव्यदातये निहोता सत्सि बर्हिषि स्वाहा
इदमग्नये । ॐ शन्नो देवीरभीष्टये शन्नो भवन्तु
पीतये शंयोरभिस्रवस्तु नः स्वाहा इदं वरुणाय ।
ॐ भूरग्नये स्वाहा ॐ सूर्य्याय स्वाहा ॐ
प्रजापतये स्वाहा ॐ अन्तरीक्षाय स्वाहा ॐ
द्यौः स्वाहा ॐ ब्रह्मणे स्वाहा ॐ पृथिव्यै स्वाहा
ॐ महाराजाय स्वाहा एष्वपि सामगेतरै-
स्तत्तद्देवतोद्देशः पश्चात् कार्य्यः । ॐ सोमं
राजानं वरुणमग्निमन्वारभामहे आदित्यं
विष्णुं सूर्य्यं ब्रह्माणञ्च बृहस्पतिं स्वाहा इदं
सोमाय ॥ * ॥ ततो दिक्पालहोमः । ॐ
वानमुक्थ्यामिन्द्रं गिरो बृहतीरभ्यनूषत वावृ-
धानं पुरुहूतं सुवृक्तिभिरमर्त्यं जवमानं दिवे
दिवे स्वाहा । इदमनन्ताय । इति सामगो
जुहुयात् । तत्तद्देवतोद्देशस्तु न कर्त्तव्यः । तत्तद्-
देवताप्रकाशनाय च देवताविशेषा उक्ताः ॥ * ॥
यजुर्व्वेदी तु । ॐ त्रातारमिन्द्रमवितारमिन्द्रँ
हवे हवे सुहवँ सूरमिन्द्रं हुवनु शक्रं पुरुहूत
मिन्द्रँ स्वस्तिनो मघवा धात्विन्द्रः स्वाहा इद-
मिन्द्राय । ॐ वैश्वानरो न उतय आप्रयातु परा-
वतः अग्निरुक्थेन वाहसा उपयामगृहीतोऽसि
वैश्वानराय द्वैषते योनिर्व्वैश्वानराय त्वा स्वाहा
इदमग्नये । ॐ असियमोऽस्यादित्योऽर्व्वन्नसि-
त्रितो गुह्येन व्रतेन असि सोमेन समयाविपृक्त
आहुस्ते त्रीणि दिवि बन्धनानि स्वाहा इदं
यमाय । ॐ यस्ते देवी निरृ तिराबबन्ध पाशं
ग्रीवासु विश्रुत्यं तन्ते विषाम्यायुषो न मध्या-
दथैतं पित्तमद्धि प्रसूतः । नमी भूत्यै एदञ्च-
कारस्वाहा । इदं निरृतये । शाखान्तरे
तु ॐ यत्ते देवी निरृ तिराबबन्ध दासग्रीवा
स्वविच श्रर्त्यं इदन्ते तद्विष्यामायुषो न मध्या-
दथा जीवः पितुमद्धिप्रमुक्त स्वाहा इदं निरृ-
तये । ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भ-
सर्जनीस्थः वरुणस्य ऋतसदन्यसि वरुणस्य
ऋतसदनमसि वरुणस्य ऋतसदनी मासीद
स्वाहा इदं वरुणाय । ॐ वातो वावो मनो
वा गन्धर्व्वाः सप्तविंशतिस्तेऽग्रे समयुञ्जँस्ते-
ऽस्मिन् यवमादधुः स्वाहा इदं वायवे । ॐ
कुविदङ्गथवमन्तो यवञ्चिद्यथा दान्त्यनुपूर्ब्बं
वियूयम् । इहे हैषां कृणुहि भोजनानि ये
बर्हिषो नम उक्तिं न जग्मुः स्वाहा इदं कुवे-
राय । ॐ तमीशानं जगतस्तस्थुषस्पतिं धियं
जिन्नमवसे हूमहे वयम् । पूषाणो यथा वेद-
सामसद्वृधे रक्षिता पायुरदब्धस्वस्तये स्वाहा
इदमीशानाय । ॐ आब्रह्मन् ब्राह्मणो ब्रह्म-
वर्च्चसी जायता माराष्ट्रे राजन्य शूर इषव्योति
व्याधी महारथो जायतां स्वाहा इदं ब्रह्मणे ।
ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु ये
अन्तरीक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः स्वाहा
ताय । आश्वलायनशाखायान्तुॐ मोषुणः
परापरा निरृ तिर्दुर्हनावधीत् । पदीष्ट तृष्णया
सह स्वाहा इदं नैरृ ताय । ॐ तत्वायामि
ब्रह्मणा बन्दमानस्तदाशास्ते यजमानो
हविर्भिः । अहेडमानो वरुणे हवोध्युरुशं
समान आयुः प्रमोषी स्वाहा इदं वरुणाय ।
ॐ वातो वावो मनो वा गन्धर्व्वाः सप्तविंशति-
स्तेग्रेऽश्वमयुञ्जँस्तेऽस्मिन् यवमादधुः स्वाहा ।
इदं वायवे । आश्वलायनशाखायान्तुॐ तव
वाय वृतस्यते त्वष्टुर्ज्जामातरद्भुत । अवांस्या
वृणीमहे स्वाहा इदं वायवे । ॐ कुविदङ्गयव-
मन्तो यवञ्चिद्यथा दान्त्यनुपूर्ब्बं वियूय इहे
हैषां कृणुहि भोजनानि ये बर्हिषो नमो वृक्तिं
न जग्मुः स्वाहा इदं कुवेराय । ॐ तमीशानं
जगतस्तस्थुषस्पतिं धियं जिन्नमवसे हूमहे वयं
पूषाणो यथा वेद सामसद्वृधे रक्षिता पायुर-
दब्धस्वस्तये स्वाहा इदमीशानाय । ॐ ब्रह्म
यज्ज्ञानं प्रथमं पुरस्ताद्विषीमत सुरुचो वेण
आवः स्वबुध्न्या उपमा अस्य विष्ठाः सतश्च
योनिमसतश्च विवः स्वाहा इदं ब्रह्मणे । ॐ
नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु येऽन्त-
रीक्षे ये दिवि तेभ्यः सर्पेभ्यो नम स्वाहा इद-
मनन्ताय ॥ * ॥ ततो नवग्रहहोमः । ॐ आकृ-
ष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च
हिरण्ययेन सविता रथेना देवो याति भुवनानि
पश्यन् स्वाहा । ॐ आप्यायस्व समेतु ते विश्वतः
सोमवृष्ट्यं भवावाजस्य सङ्गथे स्वाहा । ॐ अग्नि-
र्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयं अपाँ
रेतां£सि जिन्नति स्वाहा । ॐ अग्ने विवस्वदुषस
श्चित्रं राधोऽमर्त्य आदाशुषे जातवेदो वहा
त्वमद्या देवां उषर्व्वुधः स्वाहा । ॐ बृहस्पते
परिदीया रथेन रक्षोहा मित्रां अपबाधमानः

त्रातारमिन्द्रमवितारमिन्द्रंहवे हवे सुहवं
सूरमिन्द्रं ह्वयामि शक्रं पुरुहूतमिन्द्रं
स्वस्तिनो
मघवा धात्विन्द्रः स्वाहा इदमिन्द्राय । ॐ
अग्निं दूतं वृणीमहे होतारं विश्ववेदसं अस्य
यज्ञस्य सुक्रतुं स्वाहा इदमग्नये । ॐ नाके
सुपर्णमुपयत् पतन्तं हृदावेनन्तो अभ्यचक्षत
त्वा हिरण्यपक्षं वरुणस्य दूतं यमस्य योनी
शकुनं भुरण्यं स्वाहा इदं यमाय । ॐ वेत्था
हि निरृतीनां वज्रहस्तः परिव्रजं अहरहः
सिन्धुपरिपदामिव स्वाहा इदं निरृताय ।
ॐ घृतवती भुवनानामभिश्रियोर्व्वीपृथ्वी
मधु-
दुधे सुपेशसा द्यावा पृथिवी वरुणस्य
धर्म्मणा
विष्कभिते अजरे भूरिरेतसा स्वाहा इदं
वरु-
णाय । ॐ वात आवातु भेषजं शम्भुमयो
भुनो
हृदे प्रण आयूंषि तारिषत् स्वाहा इदं
वायवे । ॐ सोमं राजानं वरुणमग्निमन्वा-
रभामहे आदित्यं विष्णुं सूर्य्यं ब्रह्माणञ्च बृह-
स्पतिं स्वाहा इदं सोमाय । ॐ अभित्वा
शूरणोनुमोऽद्गुधा इव धेनवः । ईशानमस्य
जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः स्वाहा
इद-
मीशानाय । ॐ ब्रह्म यज्ज्ञानं प्रथमं पुर-
स्ताद्विसीमतः सुरुचो वेण आवः ।
सुबुध्न्या
उग्रमा अस्य विष्ठाः सतश्च योनिमसतश्च
विवः स्वाहा इदं ब्रह्मणे । ॐ चर्षणीधृतं
मघ-

इदमनन्ताय ॥ * ॥ ऋग्वेदी तु । ॐ त्रातार-
मिन्द्रमवितारमिन्द्रं हवे हवे सुहवं सूरमिन्द्रं
ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा
धात्विन्द्रः स्वाहा इदमिन्द्राय । ॐ अग्निं दूतं
पुरोदधे हव्यवाहमुपब्रुवे देवा आसादयादिह
स्वाहा इदमग्नये । ॐ यमाय सोमं सुतनुत
यमाय जुहुता हविः यमं ह यज्ञो गच्छत्यग्नि-
दूतो अरं कृतः स्वाहा इदं यमाय । ॐ एषते
निरृतेर्भागस्तं जुषस्व स्वाहा अग्निनेत्रेभ्यो
देवेभ्यः पुरः सद्भ्यः स्वाहा यमनेत्रेभ्यो
दक्षिणा-
सद्भ्यः विश्वदेवनेत्रेभ्यः देवेभ्यः स्वाहा
पश्चात्
सद्भ्यः स्वाहा मित्रावरुणनेत्रेभ्यो देवामादा-
वय्य उषरा सद्भ्यः स्वाहा सोमनेत्रेभ्यो देवेभ्य
उपविशद्भ्यो दुरः सद्भ्यः स्वाहा इदं निरृ-

प्रभञ्जत्सेना प्रमृणो युधा
यजन्नस्माकमेध्यविता
रथानां स्वाहा । ॐ शुक्रन्तेऽन्यद्यजन्ते
अन्य-
द्विषुरूपे अहनी द्यौरिवासि विश्वा हि माया
अवसि स्वधावन् भद्राते पूषन्निह रातिरस्तु
स्वाहा । ॐ शन्नो देवीरभीष्टये शन्नो भवन्तु
पीतये शंयोरभिस्रवन्तु नः स्वाहा । ॐ
कयान-
श्चित्र आभुव दूती सदा वृधः सखा कया
सचिष्ठया वृता स्वाहा । ॐ केतुं कृन्नन्नकेतवे
पेशो मर्य्या अपेशसे समुसद्भिरजायथाः
स्वाहा ।
यजुर्व्वेदी तु । ॐ आकृष्णेनेत्यादि इदं
सूर्य्याय ।
ॐ इमं देवा असपत्नँ सुबद्धं महते क्षत्राय
महते ज्यैष्ठाय इमममुममुष्य पुत्त्रममुष्याः
पुत्त्रमस्यै विशे स्वाहा । इदं सोमाय । ॐ
अग्निर्मूद्धा दिवः ककुत्पतिः पृथिव्या अयं
अपां£ रेतां£सि जिन्नति स्वाहा । इदं मङ्ग-
लाय । ॐ उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमि-
ष्टापूर्त्ते सं£सृजेथामयञ्च । अस्मिन् सधस्थे
अध्युत्तरस्मिन् विश्वेदेवा यजमानश्च सीदत
स्वाहा । इदं बुधाय । ॐ बृहस्पते अति
यदर्य्यो
अर्हाद्युमद्विभाति क्रतुमज्जनेषु ।
यद्दीदषच्छरस

ऋत प्रजात तदस्मासु द्रविणं धेहि चित्रं£ स्वाहा । इदं बृहस्पतये । ॐ अन्नात् परिश्रुतो रसं ब्रह्मणा व्यपिबत् क्षत्त्रं पयःसोमं प्रजापतिः । ऋतेन सत्यमिन्द्रियं विपानं£ शुक्रमन्धसः । इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु स्वाहा । इदं शुक्राय । ॐ शन्नो देवीरभीष्टये आपो भवन्तु पीतये शंयोरभिस्रवन्तु नः स्वाहा । इदं शनैश्चराय । ॐ काण्डात् काण्डात् प्ररोहन्ती परुषः परुषः परि एवानो दूर्व्वे प्रतनु सहस्रेण शतेन च स्वाहा । इदं राहवे । ॐ केतुं कृन्नन्नकेतवे पेषो मर्य्या अपेशसे समुसद्भिरजायथाः स्वाहा । इदं केतुभ्यः । ऋग्वेदी तु एभिरेव मन्त्रैर्जुहुयात् ॥ * ॥ ततो मेक्षणमग्नौ प्रक्षिपेत् । एवं चरुहोमं समाप्य चरुशेषेण दिग्भ्यो बलिन्दद्यात् । तद्यथा । एष पायसवलिः ॐ प्राच्यै दिशे नमः । एवमाग्नेय्यै अवाच्यै निरृत्यै प्रतीच्यै वायव्यै उदीच्यै ऐशान्यै ऊर्द्ध्वदिशे अधोदिशे ॥ * ॥ ततो घृताक्तपलाशसमिधा अष्टोत्तरशतं जुहुयादनेन मन्त्रेण । ॐ तद्विष्णोरित्यादि स्वाहा इदं विष्णवे । ततः पूर्ब्बोक्तैश्चरुहोममन्त्रैस्तत्तद्देवताभ्यःस्रुवेणाज्याहुतीर्जुहुयात् । तत आज्येन पुरुषसूक्तनवभिर्म्मन्त्रैः सामगो जुहुयात् । यथा । ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं स मूढमस्य पांशुले स्वाहा । १ । ॐ प्रक्षस्य विष्णो अरुषस्य नूसहः प्रणवोचं विदथा जातवेदसः वैश्वानराय मतिर्नव्यसि शुचिः सोम इव पवते चारुरग्नये स्वाहा । २ । ॐ प्रकाव्यमुषणेव ब्रुवाणो देवो देवानां जनिमा विवक्ति महिव्रतः शुचिबन्धुः पावकः पदा वराहो त्येति रेतन् स्वाहा । ३ । ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं सर्व्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलं स्वाहा । ४ । ॐ त्रिपादूर्द्ध्वमुदेत् पुरुषः पादोऽस्येहाभवत् पुनः । ततो विश्वं व्यक्रामत् शासनानशने अभि स्वाहा । ५ । ॐ पुरुष एवेदं सर्व्वं यद्भूतं यच्च भव्यं उतामृत त्वस्येशानो यदन्नेनातिरोहति स्वाहा । ६ । ॐ एतावानस्य महिमातो ज्यायांश्च पुरुषः पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि स्वाहा । ७ । ॐ ततो विराडजायत विराजो अधिपूरुषः । स जातो अत्यरिच्यत

ॐ ईशानानुयायिभ्यः स्वाहा । एवं पूर्ब्बोक्तैर्नवग्रहमन्त्रैर्दशदिक्पालमन्त्रैश्च सकृत्
सकृत्
जुहुयात् । एवं पर्व्वतेभ्यः स्वाहा । ॐ नदीभ्यः
स्वाहा । ॐ समुद्रेभ्यः स्वाहा । एवं तिलहोमं समाप्य स्रुवेण महाव्याहृतिभिराज्यं जुहुयात् । * । ततः प्रायश्चित्तहोमसङ्कल्पं कृत्वा ॐ अग्ने त्वं विधुनामासीति नाम कृत्वा
आवाह्य पूजयित्वा परिभाषासिद्धं स्वशाखोक्तं
प्रायश्चित्तहोमादि कृत्वा पूर्णाहुत्यां मृडनामा-
नमग्निं पूजयित्वा घृतपूर्णस्रुचा उत्थाय यजमानेनान्वारब्धः ॐ तद्विष्णोः परममित्यादि वौषट् इत्युच्चार्य्य पूर्णाहुतित्रयं दद्यात् । तत
आचारात् ऐशान्यां पृथ्वि त्वं शीतला भव इत्युच्चार्य्य दुग्धादि क्षिप्त्वा स्रुवलग्नभस्मना ॐ
कश्यपस्य त्र्यायुषं इति शिरसि । ॐ यमदग्ने
स्त्र्यायुषं कण्ठे । ॐ यद्देवानां त्र्यायुषं बाहुमूलयोः । ॐ तन्मेऽस्तु त्र्यायुषं हृदि । अन्य-
कर्त्तृकपक्षे तु तत्तेऽस्तु त्र्यायुषमिति विशेषः ।
ततो यजमानः पञ्चगव्यं चरुशेषञ्च प्राश्य घ्रात्वा
वा पूर्णपात्रादिकां दक्षिणां ब्रह्मणे दद्यात् ततो
हेमयुक्तं सवस्त्रतिलपात्रं अलङ्कृतगवीं तन्मूल्यं
वा एतद्धोमकर्म्मप्रतिष्ठार्थमाचार्य्याय दद्यात् ।
अन्यहोतृपक्षे होत्रे दद्यात् ।
एतत्कृतकर्म्मणा
प्रीयतां भगवान् विष्णुरिति विष्णवे समर्पयेत् । * ।

"ॐ यद्भक्तिलेशसम्पर्कात्
परमानन्दसम्भवः ।
तस्मै ते चरणाब्जाय पाद्यं शुद्धाय कल्पये ॥"
इत्युच्चार्य्य मूलेन पादयोर्द्दद्यात् ३ । इदमासन-
मितीव मन्त्रस्य पूर्ब्बमेतत् पाद्यमिति प्रयोज्य-
मेवमुत्तरत्र यथायोग्यमुल्लेखः ।
गन्धपुष्पाक्षत-
यवकुशाग्रतिलश्वेतसर्षपदूर्व्वात्मकं अर्घ्यं शङ्खस्थं
गृहीत्वा ।
"ॐ तापत्रयहरं दिव्यं परमानन्दलक्षणम् ।
तापत्रयविनिर्मुक्तं तवार्घ्यं कल्पयाम्यहम् ॥"
इति मूलेन शिरसि दद्यात् ४ । जातीलवङ्गकक्कोलयुक्तं केवलं वा जलं गृहीत्वा ।
"ॐ देवानामपि देवाय देवानां देवतात्मने ।
आचामं कल्पयामीश शुद्धानां शुद्धिहेतवे ॥"
इति मूलेन दद्यात् ५ । कांस्यस्थं दधिमधुघृता-
त्मकं कांस्यपिहितं मधुपर्कं गृहीत्वा ।
"ॐ सर्व्वकल्मषहीनाय परिपूर्णसुखात्मने ।
मधुपर्कमिमं देव कल्पयामि प्रसीद मे ॥"
इति मूलेन दद्यात् ६ । पुनराचमनीयं गृहीत्वा ।
"ॐ उच्छिष्टोऽप्यशुचिर्वापि यस्य
स्मरणमात्रतः ।
शुद्धिमाप्नोति तस्मै ते पुनराचमनीयकम् ॥"
इति मूलेन दद्यात् ७ ।
लौकिकषष्ट्यधिकशत-
त्रयतोलकान्यूनं तीर्थजलं गृहीत्वा ।
"ॐ परमानन्दबोधाब्धिनिमग्ननिजमूर्त्तये ।
साङ्गोपाङ्गमिदं स्नानं कल्पयाम्यहमीश ते ॥"
ॐ तद्विष्णोरिति मूलेन दद्यात् ८ ।
पूर्ब्बरीत्या

पश्चाद्भूमिमथो पुरः स्वाहा । ८ । ॐ कयान-
श्चित्र आभुवदूती सदा वृधः सखा कया सचि
ष्ठया वृता स्वाहा । ९ । * । यजुर्व्वेदी तु ।
षोडशोपचारपूजोक्तपुरुषसूक्तषोडशमन्त्रैरा
ज्येन षोडशाहुतीर्जुहुयात् । ऋग्वेदिनाम-
प्येवम् ॥ * ॥ तत आज्यमिश्रितान् तिलान्
गृहीत्वा ॐ इरावती धेनुमती हि भूतं सूयव-
सिनी मन वेदशस्या व्यस्तभ्ना रोदसी विष्णु-
रेतेराधत्त पृथिवीमभितो मयूखैः स्वाहा । इदं
विष्णवे । इति सकृत् जुहुयात् । ॐ ब्रह्मानु-
यायिभ्यः स्वाहा । ॐ विष्णवनुयायिभ्यः स्वाहा
।

ततः प्रासादसम्मुखे ॐ उत्तिष्ठ ब्रह्मणस्पते
देवा
यजन्तस्ते महे उपप्रयान्तु मरुतः सुदानव
इन्द्रः
प्राशुर्भवासचा इतिमन्त्रेण देवतामानीय
विष्णु-
गृहस्य सम्मुखे गरुडं शिवगृहस्य वृषं दुर्गा-
गृहस्य सिंहं स्थापयेत् । ततो
गन्धमाल्यवस्त्रा
दिना स्थपतिं परितोष्य ॐ इदं
विष्णुर्विचक्रमे
इत्यादि पठित्वा ॐ चक्राय नम इति चक्रं
संपूज्य गृहोपरि यथायोग्यं चक्रादिकं
विन्यस्य
गृहं वस्त्रेणाच्छाद्य गृहद्वारानुरूपं तोरणं
विधाय गृहानुरूपघण्टाचामरकिङ्किणीजाल-
वर्हिपत्रोपेतं सवस्त्रयष्टिसमेतं ध्वजं
गृहस्येशान-
कोणे वायुकोणे वा स्थापयेत् । * । ततो
विष्णुं
शालग्रामादौ यथार्हं गृहसमीपे नीत्वा
पञ्चविं-
शतिघटैर्नारिकेलोदकैः
पञ्चगव्यपञ्चामृतैस्तीर्थो-
दकैः स्नानं कारयित्वा षोडशोपचारादिभिः
पूजयेत् । वक्ष्यमाणमन्त्राणां पौराणिकत्वेन
शूद्राणामप्यधिकारः । अत्रार्घ्यपात्राम्भसा
प्रोक्षितं आसनं गृहीत्वा इदमासनं ॐ
सर्व्वा-
न्तर्यामिणे देव सर्व्वबीजमयं ततम् ।
आत्मस्थाय
परं शुद्धमासनं कल्पयाम्यहम् ॥ ॐ विष्णवे
नम इति मूलेन दद्यात् १ । ततः कृताञ्जलिः
।
“ॐ यस्य दर्शनमिच्छन्ति देवाः
स्वाभीष्टसिद्धये ।
तस्मै ते परमेशाय स्वागतं स्वागतञ्च मे ॥
कृतार्थोऽनुगृहीतोऽस्मि सफलं जीवितं मम
।
आगतो देवदेवेश ! सुस्वागतमिदं वपुः ॥”
विष्णो स्वागतमिति स्वागतप्रश्नः २ ।
ताम्र-

पुनराचमनीयञ्च दद्यात् । अर्घ्याम्भसा
प्रोक्षितं
वस्त्रं गृहीत्वा ।
“ॐ मायाचित्रपटच्छन्ननिजगुह्योरुतेजसे ।
निरावरणविज्ञाय वासस्ते कल्पयाम्यहम्
॥”
इति मूलेन दद्यात् ९ । उत्तरीयवस्त्रं
गृहीत्वा ।
“ॐ यमाश्रित्य महामाया जगत्संमोहिनी
सदा ।
तस्मै ते परमेशाय कल्पयाम्युत्तरीयकम् ॥”
इति मूलेन दद्यात् ९ । ततः पूर्ब्बवत्
पुनराच-
मनीयञ्च दद्यात् ।
सुवर्णाद्याभरणमर्घ्याम्भसा
प्रोक्ष्य ।
“ॐ स्वभावसुन्दराङ्गाय
नानाशक्त्याश्रयाय ते ।
भूषणानि विचित्राणि कल्पयाम्यमरार्च्चित
॥”
इति मूलेन दद्यात् १० । प्रोक्षितं गन्धं
गृहीत्वा ।
“ॐ परमानन्दसौरभ्यपरिपूर्णदिगन्तर ।
गृहाण परमं गन्धं कृपया परमेश्वर ॥”
इति मूलेन दद्यात् ११ ।
तत्तद्देवताप्रियपुष्प-
मादाय ।
“ॐ तुरीयवनसम्भूतं नानागुणमनोहरम् ।
आनन्दसौरभं पुष्पं गृह्यतां परमेश्वर ॥”
इति मूलेन दद्यात् १२ । धूपं प्रोक्ष्य घण्टां
संपूज्य ।
“ॐ वनस्पतिरसो दिव्यो गन्धाढ्यः
सुमनोहरः ।
आघ्रेयः सर्व्वदेवानां धूपोऽयं प्रतिगृह्यताम्
॥”
इत्युच्चार्य्य वामहस्तेन घण्टां वादयन् मूलेन
दद्यात् १३ । ततो घृतादिप्रदीपमादाय ।
“ॐ सुप्रकाशो महादीपः
सर्व्वतस्तिमिरापहः ।

सवाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥”
इति मूलेन दद्यात् १४ । प्रोक्षितनानाविध-
नैवेद्योपरि मत्स्यमुद्रया मूलं दशधा जप्त्वा-
भ्यर्च्च्य धेनुमुद्रयामृतीकृत्य ।
“ॐ सत्पात्रसिद्धं सुहविर्विविधानेकभक्षणम् ।
निवेदयामि देवेश सानुगाय गृहाण तत् ॥”
इति मूलेन दद्यात् १५ । जलमादाय ।
“ॐ समस्तदेवदेवेश सर्व्वतृप्तिकरं परम् ।
अखण्डानन्दसम्पूर्णं गृहाण जलमुत्तमम् ॥”
इति मूलेन दद्यात् १५ । पूर्ब्बवत् पुनराच-
मनीयञ्च । ताम्बूलं गृहीत्वा ।
“ॐ ताम्बूलं देवदेवेश कर्पूरादिसुवासितम् ।
कल्पयामि तवेशान वदनाम्भोजभूषणम् ॥”
इति मूलेन दद्यात् १५ । ततस्तत्तद्देवतानम-
स्कारमन्त्रैर्ब्बन्दनं कुर्य्यात् । १६ । उपचारद्रव्या-
धारदाने साधारत्वेनोल्लेखः पृथग्वा तद्दानम् । * ।
तत ॐ विष्णवे नमः इति त्रिः संपूज्य घण्टा-
वितानतोरणयुक्तं वस्त्रादिच्छादितं वेश्म प्रोक्ष्य
ॐ विष्णवे नमः इति त्रिः संपूज्य ॐ तद्विष्णो-
रित्यनेन विष्णुं स्मृत्वा ॐ तत् सदित्युच्चार्य्य
वामहस्तेन धृत्वा कुशतिलजलान्यादाय अद्ये-
त्यादि अमुकगोत्रः श्रीअमुकदेवशर्म्मा एतत्तृण-
काष्ठादिमयवेश्मपरमाणुसमसंख्यवर्षसहस्राव-
च्छिन्नस्वर्गलोकमहितत्वकामः श्रीविष्णुप्रीति-
कामो वा एतत्तृणकाष्ठादिमयवेश्म विष्णुदैवतं
विष्णवे तुभ्यमहं सम्प्रददे । इत्युत्सृजेत् । इष्ट-
कादिमये तु एतदिष्टकादिमयवेश्मपरमाणुसम-
संख्यवर्षसहस्रदशगुणकालावच्छिन्नस्वर्गलोक-
महितत्वकाम एतदिष्टकादीतिविशेषः । एतत्-
प्रतिष्ठार्थं सुवर्णं तन्मूल्यं वा दक्षिणां विष्णवे
दद्यात् । पश्चादाचार्य्यादौ प्रतिपत्तिः । * ।
ततो देवं स्वयं गृहीत्वा गृहप्रदक्षिणं कारयित्वा
ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्ये-
माक्षिभिर्यजत्राः स्थिरैरङ्गैस्तुष्टुवांसस्तनुभिर्व्य-
सेम देवहितं यदायुः । इत्यनेनाभिमन्त्रितं देवं
गृहं प्रवेशयेत् । ॐ देवस्य त्वा सवितुः प्रसवे-
ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तमाददे
इति मन्त्रेण पिण्डिकोपरि न्यसेत् । ॐ स्थिरो
भव वीड्वङ्ग आशुर्भव वाह्यर्व्वन् पृथुर्भव सुसदस्त्व-
मग्ने पुरीषवाहनः । इत्यनेन स्थिरीकुर्य्यात् ।
पुनर्देवं संपूज्य यथाशक्ति चामरघण्टावितान-

अद्येत्यादि अमुकगोत्रः श्रीअमुकदेवशर्म्मा
महापातकादिबहुपापक्षयकामो
विष्णुप्रीति-
कामो वा विष्णुवेश्मनि इमं ध्वजं
विष्णुदैवतं
विष्णवे तुभ्यमहं सम्प्रददे । इत्युत्सृज्य
एतत्-
प्रतिष्ठार्थं दक्षिणां विष्णवे दद्यात् ।
पश्चादा-
चार्य्यादौ प्रतिपत्तिः । ततो गरुडस्तम्भं
समा-
रोप्य ॐ सुपर्णोऽसि गरुत्मांस्त्रिवृत्ते शिरो
गायत्र्यं चक्षुर्बृहद्रथन्तरे पक्षौ । स्तोम
आत्मा
छन्दांस्यङ्गानि यजूंषि नाम सामते
तनुर्वाम-
देव्यं यज्ञायज्ञियं पुच्छं धिष्ट्याश्च शफाः
सुप-
र्णोऽसि गरुत्मान्दिवं गच्छ स्वःपते ॥
यजु-
र्वेदी तु । ॐ सुपर्णोऽसि गरुत्मान् त्रिवृत्ते
शिरो गायत्रं चक्षुस्तोम आत्मा साम ते
तनू-
र्वामदेव्यं बृहद्रथन्तरे पक्षौ यज्ञायज्ञियं
पुच्छं
छन्दांस्यङ्गानि धिष्णियाः शफाः यजूंःषि
नाम ।
सुपर्णोऽसि गरुत्मान्दिवं गच्छ सुरः पत
इति
पठित्वा । ॐ गरुडाय नम इति
त्रिःसंपूज्य
ॐ नमस्ते पतगश्रेष्ठ पन्नगान्तकर प्रभो ।
त्वत्-
प्रसादान्महाबाहो मोदेयं दिवि देववत् ॥
यथा त्वं संपुटकरः सततं नतकन्धरः ।
तथैव
पुरतो विष्णोस्त्वत्प्रसादाद्भवाम्यहम्॥
इति
पुटाञ्जलिः प्रार्थयेत् ॥ * ॥ ततः
पिष्टप्रदीपा-

आदित्यश्चन्द्रमा भौमो
बुधजीवसितार्कजाः ।
ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च
तर्पिताः ॥
देवदानवगन्धर्व्वा यक्षराक्षसपन्नगाः ।
ऋषयो मुनयो गावो देवमातर एव च ॥
देवपत्न्योऽध्वरा नागा दैत्याश्चाप्सरसा
गणाः ।
अस्त्राणि सर्व्वशास्त्राणि राजानो
वाहनानि च ॥
औषधानि विचित्राणि कालस्यावयवाश्च
ये ।
सरितः सागराः शैलास्तीर्थानि जलदा
नदाः ।
एतास्त्वामभिषिञ्चन्तु
धर्म्मकामार्थसिद्धये ॥” * ॥
इति मठादिप्रतिष्ठाप्रयोगतत्त्वं समाप्तम् ॥
(पक्वखाद्यवस्तुविशेषः । अस्य
पाकप्रकारो यथा,
“समिता मर्द्दयेदन्यजलेनापि च सन्नयेत्
।
तस्यास्तु वटिकां कृत्वा पचेत सर्पिषि
नीरसम् ॥
एला लवङ्गकर्पूरमरीचाद्यैरलङ्कृते ।
मज्जयित्वा सितापाके ततस्तञ्च
समुद्धरेत् ॥
अयम्प्रकारः संसिद्धो मठ इत्यभिधीयते
॥”
[सन्नयेन्मर्द्दयेत्] तथास्य गुणाः ॥
“मठस्तु बृंहणो वृष्यो बल्यः सुमधुरो
गुरुः ।
पित्तानिलहरो रुच्यो दीप्ताग्नीनां
सुपूजितः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**मठरः**, पुं, (मन्यते मनुतेऽवबुध्यते इत्यर्थः । मन
+

“वचिमनिभ्यां चिच्च ।” उणा० ५ ।
३९ । इति
अरश्चित् ठश्चान्तादेशः ।) मुनिविशेषः
। इत्यु-

गोहिरण्यग्रामवाद्यभाण्डादिकंदद्यात् । तत ॐ यावद्धराधरो देवो यावत्तिष्ठति मेदिनी । तावदत्र जगन्नाथ सन्निधीभव केशव ॥ इति मन्त्रं पठेत् । ततो ध्वजसमीपं गत्वा संप्रोक्ष्य तमारोपयेदनेन मन्त्रेण ॐ एह्येहि भगवन्नी-श्वरविनिर्म्मित उपरिचरवायुमार्गानुसारिन् श्रीकर श्रीनिवास रिपुध्वंसकर सुजनाधिलय सर्व्वदेवतासम्मत कुरु शान्तिं स्वस्त्ययनञ्च मे भवतु सर्व्वविघ्नान् हर हर स्वाहा ॐ ध्वजाय नम इति ध्वजं संपूज्य ॐ विष्णवे नम इति त्रिरभ्यच्चर्य्य ध्वजं संप्रोक्ष्य वामहस्तेन स्पृष्ट्वा दिना निर्म्मञ्छनं कुर्य्यात् । ततो विंशान्यून-ब्राह्मणेभ्यो भोज्यानि दद्यात् । दीनानाथकृपण-वधिरेभ्यो यथाशक्ति दद्यात् । ततः प्रीयतां पुण्डरीकाक्षसर्व्वयज्ञेश्वरो हरिः । तस्मिंस्तुष्टे जगत्तुष्टं प्रीणिते प्रीणितं जगत् ॥ ततो नृत्य-गीतवादित्रनिस्वनर्म्महोत्सवं कृत्वा अच्छिद्रा-वधारणं कृत्वा वैगुण्यसमाधानार्थं तद्विष्णो-रिति विष्णुं स्मरेत् । * । एवं रुद्रादिमठादि-प्रतिष्ठायां आसनादिकन्तु तत्तन्मन्त्रं विहाय केवलं प्रणवादिनमोऽन्तेन तत्तन्नाम्ना दत्त्वा यथायोग्यं तत्तत्कर्म्मशेषं समापयेत् । * । एवं गोपथादि प्रतिष्ठायां तत्समीपे वेदिकां कृत्वा तत्तत्फलकामो विष्णुप्रीतिकामो वा तत्तत्-प्रतिष्ठां करिष्ये इति सङ्कल्प्य वृद्धिश्राद्धादिकं विधाय प्रागुक्तविधिनाग्निस्थापनादिएतत्-कर्म्मणा प्रीयतां भगवान् विष्णुरित्यन्तं कर्म्म कृत्वा कूपादिवत् सर्व्वभूतेभ्य उत्सृज्य दक्षिणां दद्यात् । * । नियमव्रतादिप्रतिष्ठायान्तु विष्णु-रित्यन्तं कर्म्म कृत्वा व्रतानुष्ठानं कृत्वा दक्षिणा-दिकं कुर्य्यात् । * । ततो घटस्थजलेन यजमान-मभिषिञ्चेत् । तद्यथा, --
"ॐ सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ।
वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः ।

णादिकोषः ॥ (शौण्डः । मठरो मुनिशौण्डयो-रित्युज्ज्वलदत्तः ॥)

**मड** इ क मोदे । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-अक०-सेट् ।) इ मण्डयति । इति दुर्गा-दासः ॥

**मड** इ कि भूषे । इति कविकल्पद्रुमः ॥ (चुरा०-पक्षे भ्वा०-पर०-सक०-सेट् ।) मण्डयति मण्डति हारो जनम् । इ मण्ड्यते । इति दुर्गादासः ॥

**मड** इ ङ विभागे । वेष्टे । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट् ।) इ मण्ड्यते ङ मण्डते । इति दुर्गादासः ॥

**मडकः**, पु, (मण्डयति भूषयति क्षेत्रमिति । मडि + "क्वुन् शिल्पिसंज्ञयोरपूर्ब्बस्यापि ।" उणा० २ । ३२ । इति क्वुन् । पृषोदरादित्वान्नलोपः ।) शस्यभेदः । मेडुया इति भाषा । इति जटा-धरः ॥

**मड्डुः**, पुं, वाद्यविशेषः । इत्यमरः । १ । ७ । ८ ॥ चुचूक इति ख्यातः । विपुलो डमरुर्म्मड्डु-रिति कोषः ॥ मड् इति रौति इति मड्डुः पूर्ब्बवद्रौतेर्डु मनीषादित्वाद्रेपस्य डत्वम् । मज्जन्ति शब्दा अत्रेति मज्जेर्निपातो वा । इति भरतः ॥

**मड्डुकः**, पुं, (मड्डुरेवेति मड्डु + स्वार्थे कन् ।) मड्डुवाद्यम् । इति त्रिकाण्डशेषः ॥

**मण** कूजे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट् ।) मणति । कूजेऽव्यक्तशब्दे । इति दुर्गादासः ॥

| | | |
|---|---|---|
| | प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ॥<br>आखण्डलोऽग्निर्भगवान् यमो वै नैरृतस्तथा ।<br>वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ।<br>ब्रह्मणा सहितः शेषो दिक्पालाः पान्तु ते सदा ॥<br>कीर्त्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्षमा मतिः ।<br>बुद्धिर्लज्जा वपुः शान्तिस्तुष्टिः पुष्टिश्च मातरः ।<br>एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ॥ | **मणिः**, पुं, स्त्री, (मण + "सर्व्वधातुभ्य इन् ।" उणा० ४ । ११७ । इतीन् ।) अश्मजातिः । |

(यथा, रघौ । १ । ४ ।
“मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ।”)
मुक्तादिकम् । तत्पर्य्यायः । रत्नम् २ मणी ३ ।
इत्यमरः । २ । ९ । ९३ । (तथाचास्य पर्य्यायः
।
“रत्नं क्लीवे मणिः पुंसि स्त्रियामपि निगद्यते ।
तत्तु पाषाणभेदोऽस्ति मुक्तादि च तदुच्यते ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ।)
अस्य गुणाः ।
“मणिरत्नं परं शीतं कषायं स्वादु लेखनम् ।
चक्षुष्यं धारणात्तच्च पापालक्ष्मीविनाशनम् ॥”
इति राजबल्लभः ॥
(तथाचास्य गुणाः ।
“मुक्ताविद्रुमवज्रेन्द्रवैदूर्य्यस्फटिकादयः ।
चक्षुष्या मणयः शीता लेखना विषसूदनाः ।
पवित्रा धारणायाश्च पाप्मालक्ष्मीमलापहाः ॥”
इति सुश्रुते सूत्रस्थाने ४६ अध्याये ।)
अजायाः कण्ठस्थितस्तनः । लिङ्गाग्रम् ।
अलि-
ञ्जरः । इति मेदिनी । २४ ॥ योन्यग्रभागः । इति
शब्दरत्नावली ॥ नागविशेषः । इति जटाधरः ॥
मणिबन्धः । इति हेमचन्द्रः ॥ (मुनिभेदः ।
यथा,
महाभारते । २ । ११ । २२ ।
“असितो देवलश्चैव जैगिषव्यश्च तत्त्ववित् ।
ऋषभो जितशत्रुश्च महावीर्य्यस्तथा मणिः ॥”)

**मणिकं**, क्ली, (मणिरेवेति मणि + “यावादिभ्यः
कन् ।” ५ । ४ । २९ । इति स्वार्थे कन् ।
अलिञ्जरः । इत्यमरः । २ । ९ । ३१ ॥ (यथा,
मात्स्ये । १ । २१ ।
“स तमादाय मणिके प्राक्षिपज्जलचारि-
णम् ॥”)

**मणिकर्णः**, पुं, कामरूपस्थशिवलिङ्गभेदः । यथा,
“भस्मकूटस्य चैशान्यां मणिकूटो महागिरिः ।
मणिकर्णो नाम हरस्तत्र तिष्ठति लिङ्गकः ॥
स सद्योजातरूपस्तु मणिकर्ण इतीरितः ।
सद्योजातस्य मन्त्रेण पूजितव्यः सदा शिवः ॥”
इति कालिकापुराणे ८१ अध्यायः ॥

**मणिकर्णिका**, स्त्री, (कर्णे भवा इति । कर्ण + “कर्ण-

श्रीविष्णुरुवाच ।
मुक्ताकुण्डलपातेन तवाद्रितनयाप्रियम् ।
तीर्थानां परमं तीर्थं मुक्तिक्षेत्रमिहास्तु वै ॥
काशतेऽत्र यतो ज्योतिस्तदनाख्येयमीश्वर ! ।
अतो नामापरञ्चास्तु काशीति प्रथितं विभो ! ॥
अन्यं वरं वरे देव ! देयः सोऽप्यविचारितम् ।
स ते परोपकारार्थं जगद्रक्षामेणे शिव ! ॥
आब्रह्मस्तम्बपर्य्यन्तं यत्किञ्चिज्जन्तुसंज्ञितम् ।
चतुर्षु भूतग्रामेषु काश्यां तन्मुक्तिमाप्स्यति ॥
तस्मिंस्तीर्थवरे शम्भो ! मणिश्रवणभूषण ।
सन्ध्यां स्नानं जपं होमं वेदाध्ययनमुत्तमम् ॥
तर्पणं पिण्डदानञ्च देवतानाञ्च पूजनम् ।
गोभूतिलहिरण्याश्वदीपान्नाम्बरभूषणम् ॥
कन्याद्यनं प्रयत्नेन सप्ततन्तूननेकशः ।
व्रतोत्सर्गं वृषोत्सर्गं लिङ्गादिस्थापनं तथा ॥
करोति यो महाप्राज्ञो ज्ञात्वायुः क्षणगत्वरम् ।
विपत्तिं विपुलाञ्चापि सम्पत्तिमतिभङ्गुराम् ॥
अक्षया मुक्तिरेकास्तु विपाकस्तस्य कर्म्मणः ।
अन्यच्चापि शुभं कर्म्म यद्दत्तं श्रद्धया हुतम् ॥
विनात्मधातमीशान त्यक्त्वा प्रायोपवेशनम् ।
नैःश्रेयस्याः श्रियो हेतुस्तदस्तु जगदीश्वर ! ॥
नानुशोचति नाख्याति कृत्वा कालान्तरेऽपि
यत् ।
तदिहाक्षयतामेतु तस्येश ! त्वदनुग्रहात् ॥
तव प्रसादात्तस्येह सर्व्वमक्षयमस्तु तत् ।
यदस्ति यद्भविष्यच्च यद्भूतञ्च सदाशिव ! ॥
तस्मादेतच्च सर्व्वस्मात् क्षेत्रमस्तु शुभोदयम् ।”
इति काशीखण्डे मणिकर्णिकाख्यानं नाम २६
अध्यायः ॥

**मणिकर्णीश्वरः**, पुं, (मणिकर्ण्या मणिकर्ण्यां वा
ईश्वरः ।) काशीस्थशिवलिङ्गविशेषः । यथा, --
“ओङ्कारं प्रथमं पश्येत् मत्स्योदर्य्यां कृतो-
दकः ।
त्रिपिष्टपसहादेवं ततो वै कृत्तिवाससम् ॥
रत्नेशञ्चाथ चन्द्रेशं केदारञ्च ततो व्रजेत् ।
धर्म्मेश्वरञ्च वीरेशं गच्छेत् कामेश्वरं ततः ॥
विश्वकर्म्मेश्वरञ्चाथ मणिकर्णीश्वरं ततः ।
अविमुक्तेश्वरं दृष्ट्वा ततो विश्वेशमर्च्चयेत् ॥
एषा यात्रा प्रयत्नेन कर्त्तव्या क्षेत्रवासिभिः ।”
इति काशीखण्डे १०० अध्यायः ॥

**मणिकूटः**, पुं, (मणयः मणिमयानि कूटानि
शिखराणि यस्य सः ।)
कामरूपस्थपर्व्वतभेदः ।
यथा, --
“भस्मकूटस्य चैशान्यां मणिकूटो
महागिरिः ।
मणिकर्णो नाम हरस्तत्र तिष्ठति लिङ्गकः
॥”
इति कालिकापुराणे ८१ अध्यायः ॥
“मणिकूटस्याथ गिरेर्गन्धमादनकस्य च
।
मध्ये स्रवति लोहित्यो ब्रह्मपुत्रः
समास्थितः ॥
हत्वा ज्वरं तथा विष्णुस्तत्र
वासमथाकरोत् ।
नरदेवासुरादीनां यथा भवति वै हितम् ॥
ज्यरेणापीडिततनुर्ज्वरं हत्वा महासुरम्
।
सर्व्वलोकहितार्थाय
सोऽगदस्नानमाचरत् ॥
अगदस्नानसंभूतं संजातञ्च महासरः ।
तस्य स्वयं नाम चक्रे हयग्रीवोऽपनर्भवम्
॥
न पुनर्जायते यस्मात् ततः स्नात्वा
नरीत्तमः ।
अपुनर्भवसंज्ञं तत् सरस्तु परिकीर्त्तितम्
॥
मणिकूटाचले विष्णुर्हयग्रीवस्वरूपधृक् ।
स च व्यामप्रमाणेन विस्तारेणैव
संस्थितः ॥”
इति कालिकापुराणे ८० अध्यायः ॥

**मणिखनिः**, पुं, (मणीनां खनिः ।) मणेराकरः ।
यथा । मणेः खनिः ॥ इति
मुग्धबोधव्याकरणम् ॥

**मणिग्रीवः**, पुं, (मणयो ग्रीवायां कन्धरायां यस्य ।)
कुवेरपुत्रः । इति शब्दरत्नावली ॥
रत्नकन्धरे
त्रि ॥ (यथा, ऋग्वेदे । १ । १२२ । १४
।
“हिरण्यकर्णं मणिग्रीवमर्णस्तन्नो

ललाटात् कनलङ्कारे ।” ४ । ३ । ६५ । इति कन् ।
टाप् । अकारस्य इत्वम् । मणिमयी कर्णिका शाकपार्थिवादिवत् समासः । सा विद्यते यत्रेति वा । विष्णोस्तपस्याप्रचयदर्शनात् विस्मिततया शिवस्य मणिमयकुण्डलपतनादस्यास्तथात्वम् ।)
काशीस्थतीर्थविशेषः । तदुत्पत्तिर्यथा । विष्णुं प्रति शिववाक्यम् ।
“त्वदीयस्यास्य तपसो महोपचयदर्शनात् ।
यन्मयान्दोलितो मौलिरहिश्रवणभूषणः ॥
तदान्दोलनतः कर्णात् पपात मणिकर्णिका ।
मणिभिः स्वचिता रम्या ततोऽस्तु मणि-कर्णिका ॥
चक्रपुष्करिणीतीर्थं पुरा ख्यातमिदं शुभम् ।
त्वया चक्रेण खननाच्छङ्खचक्रगदाधर ॥
मम कर्णात् पपतेयं यदा च मणिकर्णिका ।
तदा प्रभृति लोकेऽत्र ख्यातास्तु मणिकर्णिका ॥

मणिकर्णेश्वरः, पुं, (मणिकर्णस्तदाख्य ईश्वरः ।)
कामरूपस्थशिवलिङ्गविशेषः । यथा, --
“सर्व्वतीर्थजले स्नात्वा स्पृष्ट्वा चन्द्रं सवासवम् ।
मणिकर्णेश्वरं दृष्ट्वा मुक्तिर्भस्माचलं गते ॥”
इति कालिकापुराणे ८१ अध्यायः ॥

**मणिकाननं**, क्ली, (मणीनां काननमिव । बहु-
मणिधारणादस्य तथात्वम् ।) कण्ठः । इति शब्दरत्नाबली ॥ रत्नवनञ्च ॥

**मणिकारः**, पुं, (मणिं करोतीति । कृ + अण् ।)
मणिनिर्म्मितालङ्कारादिकर्त्ता । जौहरि इति भाषा । तत्पर्य्यायः । वैकटिकः २ । इति हेमचन्द्रः ॥ न्यायचिन्तामणिकर्त्ता च ॥

विश्वे वरिवस्यन्तु देवाः ॥”
“मणिग्रीवं रत्नाद्युपेतकण्ठम् ।” इति तद्भाष्ये
सायनः ॥)

**मणिच्छिद्रा**, स्त्री, (मणेरिव छिद्रमस्याम् ।) मेदा-
नामौषधम् । ऋषभाख्यौषधम् । इति मेदिनी ।
रे, २९० ॥ (तथास्याः सलक्षणपर्य्यायः ।
“महामेदाभिधो ज्ञेयो मेदालक्षणमुच्यते ।
शुक्लकन्दो नखच्छेद्यो मेदोधातुमिव स्रवेत् ॥
यः स मेदेति विज्ञेयो
जिज्ञासातत्परैर्जनैः ।
शल्यपर्णी मणिच्छिद्रा मेदा
मेदोभवाध्वरा ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**मणितं**, क्ली, (मण् + भावे क्तः । मैथुनकालीन-
वाक्यम् । “स्त्रनितमणितादि सुरते ।” इति
साहित्यदर्पणे ।) तत्पर्य्यायः ।
रतकूजितम् १ ।
इति हेमचन्द्रः ॥ (यथा, शिशुपालवधे । १० । ७५ ।
“सीत्कृतानि मणितं करुणोक्तिः
स्निग्धमुक्तमलमर्थ्थवचांसि ॥”)

**मणितारकः**, पुं, (मणेरिव दीप्तिमती तारका
यस्य ।) सारसपक्षी । इति राजनिर्घण्टः ॥

**मणिद्वीपः**, पुं, क्ली, (मणिप्रचुरो द्वीपः ।) क्षीर-
समुद्रमध्ये पद्मरागादिमणिमयान्तरीपः । स च
त्रिपुरसुन्दरीवासस्थानम् । यथा, --
“सुधासिन्धोर्म्मध्ये
सुरविटपिवाटीपरिसरे
मणिद्वीपे नीपीपवनवति चिन्तामणिगृहे ।
शिवाकारे मञ्चे परमशिवपर्य्यङ्कनिलयां
भजन्ति त्वां धन्याः कति च न
चिदानन्दलहरीम् ॥”

**मणिपर्व्वतः**, पुं, (मणीनां पर्व्वतः ।) गिरि-
विशेषः । यथा, --
"ततोऽभ्ययाद्गिरिश्रेष्ठमभितो मणिपर्व्वतम् ।
तत्र पुण्या ववुर्वाता ह्यभवंश्चामलाः प्रभाः ॥
मणीनां हेमवर्णानामभिभूय दिवाकरम् ।
तत्र वैदूर्य्यवर्णानि ददर्श मधुसूदनः ॥
सतोरणपताकानि द्वाराणि शिखराणि च ।
विद्युद्ग्रथितमेघाभः प्रबभौ मणिपर्व्वतः ॥
हेमचित्रवितानैश्च प्रासादैरुपशोभितः ।
तत्र ता हेमवर्णाभा ददर्श मधुसूदनः ॥
गन्धर्व्वासुरमुख्यानां प्रिया दुहितरस्तथा ।
ददर्श पृथुलश्रोणीः संरुद्धा गिरिकन्दरे ॥
नरकेण समानीता रक्ष्यमाणाः समन्ततः ॥"
इति महाभारते हरिवंशे नरकवधाध्यायः ॥

**मणिपूरं**, क्ली, षट्चक्रान्तर्गतनाभिमध्यस्थतृतीय-
चक्रम् । यथा, --
"तदूर्द्ध्वे नाभिदेशे तु मणिपूरं महाप्रभम् ।
मेघाभं विद्युदाभञ्च बहुतेजोमयं ततः ।
मणिवद्भिन्नं तत् पद्मं मणिपूरं तथोच्यते ॥
दशभिश्च दलैर्युक्तं डादिफान्ताक्षरान्वितम् ।
शिवेनाधिष्ठितं पद्मं विश्वालोकनकारणम् ॥"
इति तन्त्रम् ॥
तत्तु स्वाधिष्ठानपद्मस्योदर्द्ध्वदेशे तिष्ठति ।
यथा, --
"एतत्पद्मस्योदर्द्ध्वदेशे महापद्मं सुदुर्लभम् ।
दशपत्रं नीलवर्णं सजलं घोररूपकम् ।
डादिफान्तैः सचन्द्रैश्च पङ्कजञ्चातिशोभनम् ॥
तन्मध्ये बीजकोषे निवसति सततं वह्निवीजं सुसिद्धं
वाह्ये तत्त्रेपुराख्यं नवतपननिभं स्वस्तिकं तत्त्रिभागे ॥
स्वर्णकाख्यमिदं देवि ! सर्व्वदेवप्रपूजितम् ।
साकारं वह्निबीजञ्च सदैव मेघवाहनम् ॥
रुद्रालयं हि तत्रैव महामोहस्य नाशनम् ।
नृपा हीनैः करच्छेदैः सशब्दैर्धनवर्ज्जिताः ॥"
इति गारुडे ६५ अध्यायः ॥

**मणिभद्रः**, पुं, (मणिषु भद्रः, यद्वा मणिभि-
र्भद्रमस्य । मणिमुक्तादिधनाधिक्यादस्यतथा-
त्वम् ।) जिनानां पूर्ब्बयक्षविशेषः । तत्पर्य्यायः ।
जम्भलः २ पूर्ब्बयक्षः ३ जलेन्द्रः ४ । इति
त्रिकाण्डशेषः ॥ (प्रधानयक्षभेदः । यथा,
महाभारते । ३ । ६४ । १२७ ।
"ऋते त्वां मानुषीं मर्त्त्यं न पश्यामि महावने ।
तथा नो यक्षराडद्य मणिभद्रः प्रसीदतु ॥"
यथा च कथासरित्सागरे । १३ । १६५ ।
"अस्मद्देशे पुरस्यान्तर्मणिभद्र इति श्रुतः ।
पूर्ब्बैः कृतप्रतिष्ठोऽस्ति महायक्षः प्रभावितः ॥")

**मणिभूमिः**, स्त्री, (मणीनां भूमिः आकरः ।
मणिमयी भूमिरिति वा ।) रत्नस्य खनिः । तत्-
पर्य्यायः । कुट्टिमम् २ । इति शब्दरत्नावली ॥

**मणिमण्डपः**, पुं, (मणिमयः मण्डपः ।) रत्नमय-
गृहम् । यथा, रुद्रयामले वगलास्तोत्रे ।
"मध्ये सुधाब्धिमणिमण्डपरत्नवेद्री-
सिंहासनोपरिगतां परिपीतवर्णाम् ।
पीताम्बराभरणमाल्यबिभूषिताङ्गीं
देवीं नमामि धृतमुद्गरवैरिजिह्वाम् ॥"

**मणिमन्थं**, क्ली, (मणिरिव मथ्यते इति मणि +
मन्थ + कर्म्मणि घञ् ।) सैन्धवलवणम् । इति
राजनिर्घण्टः ॥ (मणयः मथ्यन्ते उपलान्
विदार्य्य गृह्यन्ते अत्रास्माद्वेति । मन्थ + अधि-
करणादौ घञ् ।) पर्व्वतविशेषः । इति माणि-
मन्थशब्दटीकायां भरतः ॥ (यथा, महाभारते ।
१३ । १८ । ३३ ।
"मणिमन्थेऽथ शैले वै पुरा सम्पूतिजो मया ॥")

**मणिमान्**, [त्] त्रि, मणिविशिष्टः । रत्नभूषितः ।
(यथा, भागवते । ३ । १५ । ४१ ।
"विद्युत्क्षिपन्मकरकुण्डलमण्डनार्ह-
गण्डस्थलोन्नसमुखं मणिमत्किरीटम् ॥")
मणिरस्तीति मतुप्रत्ययेन निष्पन्नः ॥ (पुं, नाग-
विशेषः । यथा, महाभारते । २ । ९ ।
भेदः । यथा, छन्दोममञ्जर्य्याम् । "त्यौ त्यौ
मणिमाला छिन्ना गुहवक्त्रैः ।" अधिकन्तु छन्दः-
शब्दे द्रष्टव्यम् ॥)

**मणिरागं**, क्ली, (मणेरिव रागो वर्णोज्ज्वल्यमस्य ।)
हिङ्गुलम् । इति राजनिर्घण्टः ॥ (मणेः रागः ।)
मणेर्व्वर्णे पुं ॥ (गुणादयोऽस्य हिङ्गुलशब्दे
विधेयाः ॥)

**मणिवः**, पुं, नागविशेषः । मणिशब्दादस्त्यर्थे
वप्रत्ययेन निष्पन्नः । इति सिद्धान्तकौमुदी ॥

**मणिवीजः**, पुं, (मणिरिव दर्शनीयं वीजं यस्य ।)
दाडिम्बवृक्षः । इति राजनिर्घण्टः ॥

**मणिसरः**, पुं, (मणिभिः स्रियते गम्यते ग्रथ्यते
इतिभावः । सृ + कर्म्मणि अप् ।) मुक्ताहारः ।
यथा, गीतगोविन्दे ७ सर्गः ।
"घटयति सघने कुचयुगगगने मृगमदरुचि-
रूषिते ।
मणिसरममलं तारकपटलं नखदशशशि-
भूषिते ॥"

**मणी**, स्त्री, (मणि + कृदिकारादिति पक्षे ङीष् ।)
मणिः । इति भरतद्विरूपकोषः ॥

**मणीचकं**, क्ली, (मणीम् चकते प्रतिहन्ति दीप्त्या
इति । चक + अच् ।) चन्द्रवर्णरूप्यम् । तत्-
पर्य्यायः । इन्दुकान्तः २ । इति
त्रिकाण्डशेषः ॥
(शाकद्वीपस्य वर्षविशेषः । यथा, मात्स्ये ।
१२१ । २३ ।
"श्यामपर्ब्बतवर्षं तु मणीचकमिति स्मृतम् ॥")

**मणीचकः**, पुं, (मणी + चक् + अच् ।) मत्स्य-
रङ्गपक्षी । यथा, --
"झम्पाशी मत्स्यरङ्गः
स्याज्जलमद्गुर्म्मणीचकः ।"
इति हारावली ॥

भद्रकाली महाविद्या वामभागे सुशोभिता ॥"
इति निर्व्वाणतन्त्रे ६ पटलः ॥
तत्र देवतीर्थं यथा, रुद्रयामले ।
मणिपूरे देवतीर्थं पञ्चकुण्डं सरोवरम् ।
तत्र श्रीकामनातीर्थं स्नाति यो मुक्तिमिच्छति ॥"
(मणीनां पूरोऽत्र ।) स्वनामख्यातदेशश्च ॥ (यथा, महाभारते १ । २१८ । २३ ।
"चित्राङ्गदां पुनर्द्रष्टुं मणिपूरपुरं ययौ ॥")

**मणिबन्धः**, पुं, (मणिर्बध्यते यत्र । अधिकरणे घञ् ।) प्रकोष्ठपाण्योः सन्धिस्थानम् । इत्यमरटीकायां भरतः । कब्जा इति भाषा ॥ स च करस्यादिभागः । (यथा, अभिज्ञानशकुन्तले ३ अङ्कः ।
"मणिबन्धाद्गलितमिदं संक्रान्तोशीरपरिमलं तस्याः ।")
तत्पर्य्यायः । मणिः २ । इति हेमचन्द्रः ॥ करग्रन्थिः ३ करग्रन्थिकः ४ । इति शब्दरत्नाबली ॥ तस्य शुभाशुभलक्षणं यथा, --
"मणिबन्धैर्निगूढैश्च सुश्लिष्टशुभसन्धिभिः ।
"मणिमान् कुण्डधारश्च कर्कोटकधनञ्जयौ ॥"
राक्षसभेदः । स च कुवेरस्य सखा । यथा, महाभारते । ३ । १३० । ५७ ।
"सखा वैश्रवणस्यासीन्मणिमान्नामराक्षसः ॥"
पश्चिमस्थदेशभेदः । यथा, बृहत्संहितायाम् । १४ । २० ।
"अपरस्यां मणिमान् मेघवान् वनौघः क्षुरार्पणोऽस्तगिरिः ॥"
स्त्री, पुरभेदः । यथा, महाभारते । ३ । ९६ । ४ ।
"इल्वलो नाम दैत्येय आसीत् कौरवनन्दन ! ।
मणिमत्यां पुरि पुरा वातापिस्तस्य चानुजः ॥")

**मणिमाला**, स्त्री, (मणिनिर्म्मिता माला शाकपार्थिवादिवत् समासः ।) हारः । दन्तक्षतविशेषः । इति मेदिनी । ले, १६० ॥ (मणिनिर्म्मिता माला यस्याः ।) लक्ष्मीः । इति शब्दरत्नावली ॥ दीप्तिः । इतिशब्दमाला ॥ (छन्दो-

**मणीव**, व्य, मणितुल्यम् । मणिशब्देन सह इवशब्दस्य षष्ठीतत्पुरुषसमासः । प्रथमाद्विवचनान्तमणिशब्दात् इवार्थवशब्देन वाशब्देनाप्येवं रूपम् यथा, --
"मणीवोष्ट्रस्येति तु इवार्थे वशब्दो वाशब्दो वा बोध्यः ।"
इति सिद्धान्तकौमुदी ॥

**मणीवकं**, क्ली, (मणीव + संज्ञायां कन् ।) पुष्पम् । इति हेमचन्द्रः ॥

**मण्टपी**, स्त्री, (मण्टमुन्मादं पाति रक्षतीति मण्ट + पा + कः । जातौ संज्ञायां वा ङीष् ।) क्षुद्रोपोदकी । इति राजनिर्घण्टः ॥

**मण्ठः**, पुं, (मण्ठते इति मठि + अच् ।) वटकविशेषः । माडाँ इति हिन्दी माषा । यथा, --
"समितां मर्द्दयेदाज्यैर्जलेनापि च सन्नयेत् ।
अस्यास्तु वटकं कृत्वा पचेत् सर्पिषि नीरसम् ॥
एलालवङ्गकर्प्पूरमरिचाद्यैरलङ्कृते ।
मज्जयित्वा सितापाके ततस्तञ्च समुद्धरेत् ।
अयं प्रकारः संसिद्धो मण्ठ इत्यभिधीयते ॥"
अस्य गुणाः ।
"मण्ठस्तु बृंहणो वृष्यो बल्यः सुमधुरो गुरुः ।
पित्तानिलहरो रुच्यो दीप्ताग्नीनां सुपूजितः ॥"

प्रकारान्तर यथा, --
"समिता शर्करासर्पिर्निर्म्मिता अपरेऽपि ये ।
प्रकारा अमुना तुल्यास्तेऽपि चैतद्गुणाः स्मृताः ॥"
इति राजनिर्घण्टः ॥

**मण्डं**, क्ली, पुं, (मन्यते ज्ञायते अनेन अन्नादिकमिति । मन + "ञमन्तात् डः ।" उणा० १ । ११३ । इति डः ।) सर्व्वेषामन्नदध्यादीनामग्ररसः । इत्यमरभरतौ । माड् इति मात् इति च भाषा ॥ (यथा, उत्तररामचरिते ४ अङ्के । १ ।
"नीवारौदनमण्डमुष्णमधुरंसद्यःप्रसूताप्रियापीतादप्यधिकं तपोवनमृगः पर्य्याप्तमाचामति ॥")
सारः । पिच्छम् । इति मेदिनी । डे, २१ ॥

**मण्डं**, क्ली, (मण्डतीति । मडि भूषादौ + अच् ।) मस्तु । इति मेदिनी । डे, २१ ॥ (यथा, भागवते । ५ । २० । २४ ।
"समानेन दधिमण्डोदेन परितः ॥")

**मण्डः**, पुं, (मण्डयति क्षेत्रं भूषयतीति मडि + अच् ।) एरण्डवृक्षः । शाकभेदः । इति मेदिनी । ते, २१ ॥ मस्तु । भूषा । सारः । पिच्छम् । हेमचन्द्रः ॥ (मण्डति वर्षागमे हृष्यतीति मडि + अच् ।) दर्दूरः । भक्तादिभवरसः । तस्य लक्षणम् ।
"भक्तैर्विना द्रवो मण्डः पेयं भक्तसमन्वितम् ।"
इति राजनिर्घण्टः ॥
("तक्राल्लघुतरो मण्डः ।" इति च, सुश्रुते सूत्रस्थाने ४५ अध्यायः ।) अथ मण्डस्य लक्षणं विधिर्गुणाश्च ।
"तण्डुलानां सुसिद्धानां चतुर्द्दशगुणे जले ।
रसः सिक्थैर्व्विरहितो मण्ड इत्यभिधीयते ॥
"शुण्ठी सैन्धवसंयुक्तो दीपनः पाचनश्च सः ।
अन्नस्य सम्यक् सिद्ध्यात्र ज्ञेया मण्डस्य सिद्धता ॥
पेया यूषयवागूनां विलेपीभक्तयोरपि ॥"
तस्य गुणाः ।
"मण्डो ग्राही लघुः शीतो दीपनो धातुसाम्यकृत् ।
"युगन्धराणां मण्डन्तु श्लेष्मकृद्वातलं मतम् ।
पित्तसंशमनीयञ्च मूत्रलं ग्राहणञ्च तत् ॥"
इति युगन्धरमण्डगुणाः ॥
"रक्तशाल्युद्भवं मण्डं मधुरं ग्राहि शीतलम् ।
प्रमेहानश्मरीं हन्ति वातलं पित्तकृत्तथा ॥"
इति रक्तशालिमण्डगुणाः ॥
"मधुरं शीतलं किञ्चित् श्लेष्मलं शोषनाशनम् ।
अश्मरीमेहसंछेदी वातलं श्वेतताण्डुलम् ॥"
इति श्वेततण्डुलमण्डगुणाः ॥
"यवमण्ड कषायं स्याद् ग्राहि चोष्णं विपाकि च ।"
इति यवमण्डगुणाः ॥
"तद्वत् गोधूमसंभूतं मधुरं पित्तवारणम् ।"
इति गोधूममण्डगुणाः ॥
"ग्लानिमूर्च्छाकरं सद्यः कोद्रवाद्यकृतं लघु ।"
इति कोद्रवमण्डगुणाः ॥
"तद्वच्च क्षुद्रधान्यानां वातलं पित्तकारकम् ।
करोति श्लीपदं गुल्मं प्रतिश्यायादिकोपनम् ॥"
इति क्षुद्रधान्यमण्डगुणा ॥
इति मण्डवर्गाः ॥
इति हारीते प्रथमे स्थाने नवमेऽध्याये ॥
"मण्डस्तु दीपयत्यग्निं वातञ्चाप्यनुलोमयेत् ।
मृदूकरोति स्रोतांसि स्वेदं सञ्जनयत्यपि ॥
लङ्घितानां विरिक्तानां जीर्णे स्नेहे च तृष्यताम् ।
दीपनत्वाल्लघुत्वाच्च मण्डः स्यात् प्राणधारणः ॥
तृष्णातीसारशमनो धातुसाम्यकरः शिवः ।
लाजमण्डोऽग्निजननो दाहमूर्च्छानिवारणः ॥
(माधवीलता । तत्पर्य्यायो । यथा, --
"माधवी स्याात्तु वासन्ती पुण्ड्रको मण्डकोऽपि च ।
अतिमुक्तो विमुक्तश्च कामुको भ्रमरोत्सवः ॥"
इति च भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
गीताङ्गविशेषः । यथा, --
"जयप्रियः कलापश्च कमलः सुन्दरस्तथा ।
मङ्गलो वल्लभश्चेति मण्डकाः षट् प्रकीर्त्तिताः ॥
जयप्रियो हंसताले लघुमध्ये यदा गुरुः ।
ऊनविंशत्यक्षरैर्युक्तो रसे वीरे स वर्त्तते ।
लघुर्गुरुर्लघुर्यत्र हंसतालः स उच्यते ॥ १ ॥
कलापो रङ्गतालेन युक्तो रौद्ररसे हि सः ।
द्वाविंशत्यक्षरैर्युक्तो लघुरादौ गुरुद्वयम् ।
लघुरादौ गुरुद्वन्द्वं रङ्गताल इतीरितः ॥ २ ॥
लघुद्वन्द्वं गुरुश्चैकोऽनिलोऽत्र संगणात्मकः ।
पञ्चविंशत्यक्षरैः स्यात् कमलः शान्तहास्ययोः ॥ ३
गुरुरेको लघुद्वन्द्वं त्रिपुटे भगणात्मके ।
अष्टाविंशत्यक्षरैस्तु शृङ्गारे सुन्दरे मतः ॥ ४ ॥
आदौ गुरुर्लघुर्मध्ये प्लुतोऽन्ते भृङ्गतालके ।
एकविंशत्यक्षरैस्तु वीरे मङ्गलमण्डकः ॥ ५ ॥
षट्पितापुत्रके ताले गलसागलगात्मके ।
चतुस्त्रिंशदक्षरोऽयं वल्लभो रौद्रके रसे ॥ ६ ॥
इति सङ्गीतदामोदरः ॥

**मण्डनं**, क्ली, (मण्ड्यते अनेन इति । मडि भूषे + करणे ल्युट् ।) भूषणम् । यथा, अभिज्ञानशकुन्तले । १ । १४ ।
"किमिव हि मधुराणां मण्डनं नाकृतीनाम् ।"
अलङ्करिष्णुनि त्रि । इतिमेदिनी । ने, १०५ ।
"चतुर्धा मण्डनं वासोभूषामाल्यानुलेपनैः ।"
इति महाभारते मोक्षधर्म्मः ॥

**मण्डपः**, पुं क्ली, (मडि + भावे घञ् मण्डः । मण्डं पाति । पा + कः ।) जनविश्रामगृहम् । तत्प-

ज्वरघ्नस्तर्पणो बल्यः पित्तश्लेष्मश्रमापहः ॥”
इति भावप्रकाशः ॥
अपि च ।
“क्षुद्बोधनो वस्तिविशोधनश्च
प्राणप्रदः शोणितवर्द्धनश्च ।
ज्वरापहारी कफपित्तहन्ता
वायुं जयेदष्टगुणो हि मण्डः ॥”
लाजमण्डोऽग्निजननो दाहतृष्णानिवारणः ।
ज्वरातीसारशमनोऽशेषदोषामपाचनः ॥
वाट्यमण्डोऽग्निजननः शूलानाहविनाशनः ।
पाचनो दीपनो हृद्यः पित्तश्लेष्मानिलापहः ॥”
वाट्यमण्डो भृष्टयवमण्डः । इति राजवल्लभः ॥
(धान्यादिकृतमण्डगुणाः । क्लीवत्वं विवक्षितम्
।
“धान्यमण्डं पित्तहरं श्रमघ्नञ्चाश्मरीहरम् ।
वातलं रक्तशमनं ग्राहि सन्दीपनं परम् ॥”
इति धान्यमण्डगुणाः ॥

मन्दाग्निविषमाग्नीनां बालस्थविरयोषिताम्
।
देयश्च सुकुमाराणां लाजमण्डः
सुसंस्कृतः ।
क्षुत्पिपासासहः पथ्यः शुद्धानान्तु
मलापहा ॥”
इति चरके सूत्रस्थाने सप्तविंशेऽध्याये ॥
“लाजमण्डो विशुद्धानां पथ्यः
पाचनदीपनः ।
वातानुलोमनो हृद्यः पिप्पलीनागरायुतः
॥”
इति सुश्रुते सूत्रस्थाने ४६ अध्यायः ॥)

**मण्डकः**, पुं, (मण्डेन कृतः इति । मण्ड + संज्ञायां
कन् ।) पिष्टकविशेषः । माँडा इति हिन्दी
भाषा ॥ यथा, --
“गोधूमा धवला धौताः कुट्टिताः
शोषितास्ततः ।
प्रोक्षिता यन्त्रनिष्पिष्टाश्चालिताः समिताः
स्मृताः ॥
वारिणा कोमलां कृत्वा समितां साधु
मर्द्दयेत् ।
हस्तचालेन या तस्या लोप्त्री सम्यक्
प्रसारयेत् ॥
अधोमुखघटस्यैतद्विस्तृतं प्रक्षिपेद्बहिः ।
मृदुना वह्निना साध्यः सिद्धो मण्डक
उच्यते ॥”
लोप्त्री लेची इति लोके ।
“दुग्धेन साज्यखण्डेन मण्डकं भक्षयेन्नरः
।
अथवा सिद्धमांसेन सतक्रवटकेन वा ॥”
तस्य गुणाः ।
“मण्डको वृंहणो वृष्यो बल्यो रुचिकरो
भृशम् ।
पाकेऽपि मधुरो ग्राही लघुर्द्दोषत्रयापहः ॥”
इति भावप्रकाशः ॥

र्य्यायः । जनाश्रयः २ । इत्यमरः । २ । २ ।
९ ॥
(यथा, देवीभागवते । २ । ११ । ५० ।
“गङ्गातीरे शुभां भूमिं मापयित्वा द्विजोत्तमैः ।
कुर्व्वन्तु मण्डपं स्वस्थाः शतस्तम्भं
मनोहरम् ॥”)
देवादिदत्तवेश्म । इति शब्दरत्नावली ॥
(यथा-
विश्वकर्म्मप्रकाशे ६ अध्याये ।
“प्रदक्षिणायास्तु समस्त्वग्रतो मण्डपो भवेत्
।
तस्य चार्द्धेन कर्त्तव्यस्त्वग्रतो मुखमण्डपः
॥”
इत्यादिमण्डपविवरणम्तत्रैव विस्तरशो
द्रष्टव्यम् ॥ मण्डं पिबतीपि । पा + कः ।)
मण्ड-
पानकर्त्तरि त्रि ॥

**मण्डपा**, स्त्री, निष्पावी । इति राजनिर्घण्टः ॥
(मण्डपीत्यपि दृश्यते ।)

**मण्डयन्तः**, पुं, (मण्डयति भूषयतीति । मडि +
“तृभूवहिवसिभासिसाधिगडिमण्डिजि,
नन्दि-,
भ्यश्च ।” उणा० । ३ । १२८ । इति झच्
स च षित् ।) अन्नम् । बधूसंघः । नटः ।
अल-
ङ्कारः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**मण्डयन्ती**, स्त्री, (मण्डयतीति । मडि + झच्
स्त्रियां ङीप् ।) योषित् । इति त्रिकाण्डशेषः
॥

**मण्डरी**, स्त्री, (मण्डयति भूषयतीति । मडि +
अरप्रत्ययः । स्त्रियां ङीप् ।) धुर्घुरी । इति
हारावली ॥

**मण्डलं**, क्ली, (मण्डयति भूषयतीति । मडि +
“कलस्तृपश्च ।” उणा० । १ । १०६ । इति
कलः ।)
चन्द्रसूर्य्ययोर्बहिर्व्वेष्टनम् ।
चन्द्रसूर्य्ययोरुत्पातज-
रश्मिमण्डलम् । यथा, --
“वातेन मण्डलीभूताः सूर्य्याचन्द्रमसोः कराः
।
मालाभा व्योम्नि तन्वन्ते परिवेशः
प्रकीर्त्तितः ॥”
इति साहसाङ्कः ॥
तत्पर्य्यायः । परिवेशः २ परिधिः ३ उप-
सूर्य्यकम् ४ । इत्यमरः । १ । ३ । ३२ ॥
परिवेषः
मूर्द्धन्यान्तोऽपि । यथा, --
“पुंलिङ्गः परिवेषः स्यात् परिधौ परिवेषणे ।”
इति मूर्द्धन्यान्ते रुद्रः ॥
सूर्य्यमुपगतं उपसूर्य्यं स्वार्थे कः
उपसूर्य्यकम् ।
चन्द्रपक्षे उपसूर्य्यमिव उपसूर्य्यकं इवार्थे कः
।
इति भरतः ॥ * ॥ चक्रबालम् । इत्यमरः ।
१ । ३ । ६ ॥ तत्तु मण्डलाकारेण परिणतं
समूहमात्रम् । मण्डलाकारदिक्समूहः । इति
माधवी ॥ चक्रस्येव वालो वलनमस्य चक्र-
बालं वलेर्घञि वालः मनीषादित्वात् लस्य
डत्वे चक्रवाडञ्च । किंवा चक्रेण चक्रा-
कारेण वाडते चक्रवाडं वाड्ङ आप्लावे
अल् । इति भरतः ॥ * ॥ कोठरोगः ।
द्वादश-
राजकम् । इति मेदिनी । १ ले, २१ ॥
(उक्तञ्च तद्विवरणं कामन्दकीये नीतिसारे ।
८ । १ -- २२ ।
“उपेतः कोषदण्डाभ्यां सामात्यः सह
मन्त्रिभिः ।
दुर्गस्थश्चिन्तयेत्साधु मण्डलं मण्डलाधिपः
।
एतापसिद्धौ नृपतिः प्राप्नोति महतीं श्रियम् ।
तस्मादुत्थानयोगेन प्रतापं जनयेत्परम् ॥
एकार्थाभिनिवेशित्वमविलक्षणमुच्यते।
दारूणस्तु स्मृतः शत्रुर्विजिगीषुगुणान्वितः ॥
लुब्धः क्रूरोऽलसोऽसत्यः प्रमादी
भीरुरस्थिरः ।
मूढो योधावमन्ता च सुखच्छेद्यो रिपुः स्मृतः
॥
अरिर्मित्रमरेर्मित्रं मित्रमित्रमतःपरम् ।
तथारिमित्रमित्रञ्च विजिगीषोः पुरः स्थिताः
॥
पार्ष्णिग्राहः स्मृतः पश्चादाक्रन्दस्तदनन्तरम्
।
आसारावनयोश्चव विजिगीषोस्तु मण्डलम्
॥
अरेस्तु विजिगीषोस्तु मध्यमो भूम्यनन्तरः ।
अनुग्रहे संहतयोः समर्थो व्यस्तयोर्वधे ॥
मण्डलत्वे हि चैतेषामुदासीनो बलाधिकः ।
अनुग्रहे संहतानां व्यस्तानाञ्च वधे प्रभुः ॥
मूलप्रकृतयस्त्वेताश्चतस्रः परिकीर्त्तिताः ।
आहैव मन्त्रकुशलश्चतुष्कं मण्डलं मयः ॥
विजिगीषुररिर्मित्रं पार्ष्णिग्राहोऽथ मध्यमः ।
उदासीनः पुलोमेन्द्रौ षट्कं मण्डलमूचतुः ॥
उदासीनो मध्यमश्च विजिगीषोस्तु मण्डलम्
।
उशना मण्डलमिदं प्राह द्वादशराजकम् ॥”)
देशः । स च देशः समन्ताद्विंशतियोजनं
चत्वा-
रिंशद्योजनं वा । इति केचित् ॥ गोलम् ।
इत्य-
नेकार्थकोषः ॥ चक्रम् । इति त्रिकाण्डशेषः ॥
संघातः । इति हेमचन्द्रः ॥ नखाघातः । इति
शब्दमाला ॥ धन्विनां स्थानपञ्चकान्तर्गत-
स्थितिविशेषः । यथा, --
“मण्डलाकारपादाभ्यां मण्डलं
स्थानमीरितम् ।”
इति शब्दरत्नावली ॥
व्याघ्रनखाख्यगन्धद्रव्यम् । इति
शब्दचन्द्रिका ॥
व्यूहविशेषः । यथा, --
“तिर्य्यग्वृत्तिश्च दण्डः स्याद्भोगोऽन्वावृत्तिरेव
द्विगुणं मण्डलञ्चास्य यथैव सवितुस्तथा ।
चन्द्रतः षोडशो भागो भार्गवस्य विधीयते ॥
भार्गवात् पादहीनस्तु विज्ञेयो वै बृहस्पतिः ।
बृहस्पतेः पादहीनौ वक्रसौरावुदाहृतौ ॥
विस्तारमण्डलाभ्यान्तु पादहीनस्तयोर्बुधः ।
बुधतुल्यानि ऋक्षाणि सर्व्वे ह्रस्वानि यानि तु
॥
योजनार्द्धप्रमाणानि तेभ्यो ह्रस्वं न विद्यते ।
राहुः सूर्य्यप्रमाणस्तु कदाचित् सोमसम्मितः
।
तस्मात् ग्रहप्रमाणस्तु केतुस्त्वनियतः स्मृतः
॥”
इति देवीपुराणे ग्रहगतिर्नामाध्यायः ॥
कृत्रिममण्डलविधिर्य्यथा, --
“चतुर्हस्तं समारभ्य यावद्धस्तशतं भवेत् ।
मण्डलं तत्र कर्त्तव्यमत ऊर्द्ध्वं न कारयेत् ॥
विमलं विजयं भद्रं विमानं शुभदं शिवम् ।
वर्द्धमानञ्च दैवञ्च लताक्षं कामदायकम् ।
रुचकं स्वस्तिकाख्यञ्च द्विदशं इति मण्डलाः
॥
सितादिहरितान्ताश्च रजाः कार्य्याः
सुशोभनाः ।
शालिषष्टिककौसुम्भरजनीहरिपत्रजाः॥
मणिविद्रुमरागाश्च भस्मना अभिमन्त्रिताः ।
सितसर्षपधूपाढ्या रजाः कृत्वा तु पातयेत् ॥
अस्त्रराजं न्यसेन्मन्त्री सम्भवेति पदं पि वा ।
समोत्थानं शुभं कृत्वा गोमयेनोपलेपितम् ॥
चन्दनागुरुकर्पूरक्षोदधूपाधिवासितम्।
भूभागं सुमितं सिद्धं पूर्ब्बपश्चिमकोत्तरम्॥
याम्यं स्वस्तिकमस्त्याङ्कैः सूत्रैर्वोर्णाण्डपत्रजैः
।
पद्मपत्राष्टकं मन्ये द्विगुणं त्रिगुणं पि वा ॥
द्वाराणि समसूत्राणि कर्णिकाकेशरोज्ज्वलम् ।
पद्मं तथावशेषाणि स्वस्तिकान्युत्पलानि च ॥
सव्याबलम्बहस्तस्तु रजःपातं समाचरेत् ।
मध्यमानामिकाङ्गुष्ठैरुपरिष्टाद्यथेप्सया ॥
अधोमुखाङ्गुलिं कृत्वा पातयेत्तु विचक्षणः ।
समा रेखा तु कर्त्तव्याविच्छिन्ना पुष्टिवर्ज्जिता
॥
अङ्गुष्ठपर्व्वनैपुण्या समा कार्य्या विजानता ।
संसक्तं विषमं स्थूलं विच्छिन्नं कृषरावृतम् ॥

रथी विराजते राजा विशुद्धे मण्डले चरन् ।
अशुद्धे मण्डले सर्पन् शीर्य्यते रथचक्रवत् ॥
रोचते सर्व्वभूतेभ्यः शशीवाखण्डमण्डलः ।
सम्पूर्णमण्डलस्तस्माद्विजिगीषुःसदा भवेत् ॥
अमात्यराष्ट्रदुर्गाणि कोषो दण्डश्च पञ्चमः ।
एताः प्रकृतयस्तज्ज्ञैर्विजिगीषोरुदाहृताः ॥
एताः पञ्च तथा मित्रं सप्तमः पृथिवीपतिः ।
सप्तप्रकृतिकं राज्यमित्युवाच बृहस्पतिः ॥
सम्पन्नस्तु प्रकृतिभिर्महोत्साहः कृतश्रमः ।
जेतुमेषणशीलश्च विजिगीषुरिति स्मृतः ॥
कौलीनं वृद्धसेवित्वसुत्साहः स्थूललक्षिता ।
चित्रज्ञता बुद्धिमत्त्वं प्रागल्भ्यं सत्यवादिता ॥
अदीर्घसूत्रताऽक्षौद्रं प्रश्रयः स्वप्रधानता ।
देशकालज्ञता दार्ढ्यं सर्व्वक्लेशसहिष्णुता ॥
सर्व्वविज्ञानिता दाक्ष्यं सदा संवृतमन्त्रता ।
अविसंवादिता शौर्य्यं भक्तिज्ञत्वं कृतज्ञता ॥
शरणागतवात्सल्यमर्मर्षित्वमचापलम् ।
स्वकर्म्मदृष्टशास्त्रत्वं कृतित्वं दीर्घदर्शिता ॥
जितश्रमित्वं धर्म्मित्वमक्रूरपरिवारता ।
प्रकृतिस्फीतता चेति विजिगीषुगुणाः स्मृताः ॥
सर्व्वैर्गुणैर्विहीनोऽपि स राजा यः प्रतापवान् ।
प्रतापयुक्ता ह्यस्यन्ति परान् सिंहा मृगानिव ॥
च ।
मण्डलं सर्व्वतोवृत्तिः पृथग्वृत्तिरसंहतः ॥”
इति भरतधृतकामन्दकिः ॥
(अस्य पुंस्त्वमपि । यथा, महाभारते । ६ । ७८ । २० ।
“भीष्मेण धार्त्तराष्ट्राणां व्यूढः प्रत्यङ्मुखो ययौ ।
मण्डलः सुमहाव्यूहो दूर्भेद्योऽमित्रघातिनाम् ॥”
यथा च, कामन्दकीये । १९ । ४१ ।
“मण्डलोऽसंहतो भोगो दण्डश्चेति मणीषिभिः ॥”)
ग्रहादीनां मण्डलसंस्थानं तत्परिमाणञ्च यथा,
“सर्व्वेषान्तु ग्रहाणां वै अधस्ताच्चरते रविः ।
रवेरूर्द्ध्वं स्थितः सोमः सोमान्नक्षत्रमण्डलम् ॥
नक्षत्रेभ्यो बुधस्तूर्द्ध्वं बुधादूर्द्ध्वन्तु भार्गवः ।
तस्मादङ्गारकश्चोर्द्ध्वं तस्य चोर्द्ध्वं बृहस्पतिः ॥
तस्मात् शनैश्चरश्चोर्द्ध्वं तस्योर्द्ध्वमृषिमण्डलम् ।
ऋषिभ्यश्च ध्रुवश्चोर्द्ध्वमायान्तं त्रिदिवं ध्रुवे ।
आदित्यनिलयो राहुः कदाचित् सोममार्गतः ॥
सूर्य्यमण्डलसंस्थस्तु नित्यं केतुः प्रसर्पति ।
नवयोजनसहस्राणि विस्तारो भास्करस्य तु ॥
विस्तारात्त्रिगुणञ्चास्य परिणाहे तु मण्डलम् ।
द्विगुणः सूर्य्यविस्ताराद्विस्तारः शशिनः स्मृतः ॥
पर्य्यन्तसर्पितं ह्रस्वमालिखेन्न कदाचन ।
संसक्ते कलहं विद्याद्वक्ररेखे तु विग्रहम् ॥
अतिस्थाने भवेद्व्याधिर्नित्यं पीडा विमिश्रिते ।
बिन्दुभिर्भयमाप्नोति शत्रुपक्षान्न संशयः ॥
कृषायाञ्चार्थहानिः स्यात् विच्छिन्ने मरणं ध्रुवम् ।
वियोगात्तु भवेत्तस्य इष्टद्रव्यसुतस्य वा ॥
अविदित्वा लिखेद्यस्तु मण्डलन्तु यथेप्सया ।
सर्व्वदोषानवाप्नोति ये दोषाः पूर्ब्बभाषिताः ॥”
इति देवीपुराणे पुष्पाभिषेकचिन्तानामाध्यायः ॥
सूर्य्यमण्डले देवानां स्थितिर्यथा, --
“अर्च्चयन् पूजयन् देवं जपेच्च रविमण्डले ।
आदित्यमण्डले देवं ध्यात्वा विष्णुमुपैति तम् ॥”
भोजनमण्डलं यथा, --
“यातुधानाः पिशाचाश्च असुरा राक्षसास्तथा ।
घ्नन्ति केवलमन्नस्य मण्डलस्य विवर्ज्जनात् ॥
आदित्या वसवो रुद्रा ब्रह्मा चैव पितामहः ।
मण्डलान्युपजीवन्ति तस्मात् कुर्व्वन्ति मण्डलम् ॥
चतुःकोणं द्विजाग्रस्य त्रिकोणं क्षत्रियस्य तु ।
द्विकोणाकृति वैश्यस्य शूद्रस्य वर्त्तुलं सदा ॥”
इत्याद्ये वह्निपुराणे आह्निकतपोनामाध्यायः ॥

**मण्डलं**, त्रि, विम्बम् । इत्यमरः । १ । ३ । १५ ॥ द्वे चन्द्रस्य

शरीरे उपचारादादित्यस्य च । वेति शोभते
विम्बः वीलकान्तिगत्यादौ नाम्नीति विम्बः ।
विम्बति भाति विम्बः । सौत्रोऽयमिति स्वामी ।
मण्डयति मण्डलं नाम्नीति अलः स्त्रियां नदा-
दित्वात् मण्डली च । इति भरतः ॥

**मण्डलः**, पुं, (मण्डं लाति गृह्णातीति । ला + कः ।)

कुक्कुरः । इति मेदिनी । ले, १२१ ॥
सर्पविशेषः ।
इति विश्वः ॥
(देहस्याष्टप्रकारसन्ध्यन्त-
र्गतसन्धिविशेषः । "त एते सन्धयोऽष्टविधाः ।
कोरोदूखल-सामुद्ग-प्रतर-
तुन्नसेवनीवायसतुण्ड-
मण्डल-शङ्खावर्त्ताः ।"
'कण्ठहृदयनेत्रक्लोम-
नाडीषु मण्डलाः ।' इति सुश्रुते शारीरस्थाने
पञ्चमेऽध्याये ॥)

**मण्डलकं**, क्ली, (मण्डल । स्वार्थे कन् ।) विम्बम् ।

कुष्ठभेदः । दर्पणम् । इति मेदिनी । के, २०७ ॥
मण्डलाकारव्यूहः । इति जटाधरः ॥

**मण्डलकः**, पुं, (मण्डल । स्वार्थे कन् ।) कुक्कुरः ।

इति धरणिः ॥

**मण्डलनृत्यं**, क्ली, (मण्डलेन मण्डलाकारेण प्रव-

र्त्तितं नृत्यमिति नित्यसमासः ।) मण्डलाकार-

चक्रलक्षणिकाधीरा विशल्या च रसायनी ॥
चन्द्रहासी वयस्था च मण्डली देवनिर्म्मिता ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**मण्डलेशः**, पुं, (मण्डलस्य ईशः ।) मण्डलेश्वरः ।

तत्पर्य्यायः । एकजन्मा २ भयापहः ३ । इति
त्रिकाण्डशेषः ॥

**मण्डलेश्वरः**, पुं, (मण्डलस्य ईश्वरः ।) भूम्येक-

देशाधिपः । अन्यो भूम्येकदेशाधिपो मण्डले-
श्वरः स्यात् मण्डलस्य अरिमित्रादिरूपस्य
देशस्य ईश्वरो मण्डलेश्वरः । एकदेशाधिप
इत्यर्थः । स्यान्मण्डलं द्वादशराजके च देशे च
विम्बे च कदम्बके च । इति विश्वः ॥ इत्यमर-
टीकायां भरतः ॥ तस्य लक्षणान्तरम् ।
"चतुर्योजनपर्य्यन्तमधिकारं नृपस्य च ।
यो राजा तच्छतगुणः स एव मण्डलेश्वरः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ८६ अध्यायः ॥

**मण्डहारकः**, पुं, (मण्डं हरति आहरति गृह्णा-

तीति । हृ + "ण्वुल्तृचौ ।" ३ । १ । १३३ ।
इति ण्वुल् । सुरासम्पादनार्थं मण्डग्रहणा-
दस्य तथात्वम् ।) शौण्डिकः । इत्यमरः ।
१ । २ । १० ॥

**मण्डा**, स्त्री, (मण्डः कारणत्वेनास्ति अस्या इति

अर्शादिभ्योऽच् । टाप् ।) सुरा । इति हारा-
वली ॥ (मण्डयतीति । मडि + अच् । टाप् ।)
आमलकी । इति मेदिनी । डे, २२ ॥

**मण्डितः**, पुं, बौद्धगणाधिपविशेषः । इति हेम-

चन्द्रः । (मडि + कर्म्मणि क्तः ।) भूषिते त्रि ।
इत्यमरः । ६ । २ । १०० ॥ (यथा, गीत-
गोविन्दे । २ । ७ ।
"मणिमयमकरमनोहर-
कुण्डलमण्डितगण्डमुदारम् ।")

**मण्डूकः**, पुं, (मण्डयति भूषयति जलाशयमिति

मडि + "शलिमण्डिभ्यामूकण्' उणा० ४ । ४२ ।

दीर्घवृन्तोरलुश्चापि पृथुशिम्बः कटम्भरः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ।)
शोणकः । इति मेदिनी । णे, ११५ ॥

**मण्डूकपर्णी**, स्त्री, (मण्डूकपर्ण । गौरादित्वात्

ङीष् ।) मञ्जिष्ठा ॥ (यथास्या पर्य्यायः ।
"मञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेषिका
मण्डूकपर्णी भण्डीरी भण्डी योजनवल्ल्यपि ॥
रसायन्यरुणा काला रक्ताङ्गी रक्तयष्टिका ।
भण्डीतकी च गण्डीरी मञ्जूषा वस्त्ररञ्जिनी ॥")
ब्राह्मणी इति मेदिनी । णे, ११५ ॥
आदित्य,
भक्ता । इति राजनिर्घण्टः ॥ ओषधि-
विशेषः । थुल्कुडी इति भाषा ।
तत्पर्य्यायः ।
भेकी २ मण्डूकी ३ मूलपर्णी ४ । इति रत्न-
माला ॥ मण्डूकपर्णिका ५ । अस्या गुणाः ।
मण्डूकपर्णिका लघ्वी स्वादुपाका रसा हिमा ।
(महौषध्यर्थे पर्य्यायान्तरं यथा, --
"मण्डूकपर्णी माण्डूकी त्वाष्ट्री दिव्या महौषधी ।"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
तथाचास्या गुणाः ॥
कषाया तु हिता पित्ते स्वादुपाकरसा हिमा ।
लम्बी मण्डूकपर्णी तु तद्वद्गोजिह्विका मता ॥
इति सुश्रुते सूत्रस्थाने ४६ अध्याये ।)

नृत्यम् । तत्पर्य्यायः । हल्लीषः २ ॥ इति शब्द-
माला ॥

**मण्डलपत्रिका**, स्त्री, (मण्डलं मण्डलाकारं पत्रं
यस्याः । कन् । टाप् । अत इत्वञ्च ।) रक्तपुन-
र्नवा । इति राजनिर्घण्टः ॥ (गुणादयोऽस्या
रक्तपुनर्नवाशब्दे ज्ञातव्याः ॥)

**मण्डलाग्रः**, पुं, (मण्डलं गोलाकारं अग्रं यस्य ।)
खड्गः । इत्यमरः । २ । ८ । ८९ ॥ (यथा,
सुश्रुते सूत्रस्थाने अष्टमेऽध्याये ॥ तत्र मण्डलाग्र-
करपत्रे स्यातां च्छेदने लेखने च ।)

**मण्डलायितं**, क्ली, (मण्डलवदाचरितमिति । मण्डल
+ क्यङ् । दीर्घः । मण्डलाय नामधातुः क्तः ।)
वर्त्तुलम् । इति शब्दरत्नावली ॥

**मण्डलाधीशः**, पुं, (मण्डलस्य अधीशः ।) मण्डले-
श्वरः । तत्पर्य्यायः । मध्यमः २ । इति
हेमचन्द्रः ॥

**मण्डली**, [न्] पुं, (मण्डलं कुण्डलनं कुण्डला
कारेणशरीरवेष्टनमस्यास्तीति । मण्डल + इनिः ।
सर्पः । इति त्रिकाण्डशेषः ॥ विडालः । इति
शब्दमाला ॥ जाहकः । इति हेमचन्द्रः ॥
खट्टाश इति भाषा ॥ वटवृक्षः । गोनाश-
सर्पः । इति राजनिर्घण्टः ॥

**मण्डली**, स्त्री, (मण्डलमस्त्यस्या इति । अर्श
आद्यच् । गौरादित्वात् ङीष् ।) दूर्व्वा । इति
हारावली ॥ (स्त्री, गुडूची ॥ तत्पर्य्यायो यथा,
"गुडूची मधुपर्णी स्यादमृतामृतवल्लरी ।

इति ऊकण् ।) भेकः । इत्यमरः । १ । १० ।
२४ ॥ (यथा, मनुः । ४ । १२६ ।
"पशुमण्डूकमार्ज्जारश्वसर्पनकुलाखुभिः ।
अन्तरागमने विद्यादनध्यायमहर्न्निशम् ॥"
भेकार्थे पर्य्यायो गुणाश्च यथा, --
"मण्डूकः प्लवगो भेको वर्षाभूर्द्दर्द्दुरो हरिः ।
मण्डूकः श्लेष्मलो नातिपित्तलो बलकारकः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥)
शोणकः । मुनिविशेषः । इति मेदिनी । के,
१३६ ॥ गाढतेजाः । इति शब्दरत्नावलि ॥
बन्धविशेषे क्ली । इति विश्वः ॥ (अश्वजाति-
भेदः । यथा, महाभारते । २ । २८ । ६ ।
"तत्र तित्तिरिकल्माषान् मण्डूकाख्यान् हयो-
त्तमान् ।")

**मण्डूकपर्णः**, पुं, (मण्डूकाकृति पर्णमस्य । यद्वा,
मण्डूक इवोत्तानोदरं पर्णमस्य ।) श्योनाकवृक्षः ।
इत्यमरः । ४ । २ । ५६ ॥ (तथाचास्य पर्य्यायः ॥
"श्योनाकः शोषणश्च स्यान्नटकट्वङ्गटुण्टुकः ।
मण्डूकपर्णपत्रोर्णशुकनासकुटन्नटाः ॥

पाठान्तरम् । मण्डूकपर्णिका लघ्वी रूक्षा
वातविबन्धनुत् । इति राजवल्लभः ॥

**मण्डूकमाता**, [ऋ] स्त्री, (मण्डूकस्य मातेव मण्डूक-
पोषकत्वादस्यास्तथात्वम् ।) ब्राह्मी । इति
राजनिर्घण्टः ॥ भेकमाता च ॥

**मण्डूका**, स्त्री, (मण्डूक + स्त्रियां टाप् ।) मञ्जिष्ठा ।
यथा, शब्दमालायाम् ।
"मण्डूका च लता यष्टिर्हेमपुष्पी च
भण्डिरी ।"

**मण्डूकी**, स्त्री, (मण्डूक + स्त्रियां ङीष् ।) मण्डूक-
पर्णी । इति मेदिनी । के, १३७ ॥ आदित्यभक्ता ।
ब्राह्मी । इति राजनिर्घण्टः ॥ क्षुपविशेषः ।
इति रत्नमाला ॥ थुलकुडी । इति भाषा ।
धृष्टयोषित् । इति शब्दरत्नावली ॥

**मण्डूरं**, क्ली, पुं, लौहमलम् । ततपर्य्यायः ।
शिङ्घाणम् २ । इत्यमरः । २ । ९ । ९८ ॥
सिंहानं ३ । सिंहाणं ४ । मण्डते लोहं वेष्टते
अग्निदाहे लोहाद्विभजते वा मण्डयति भूष-
यति औषधत्वाद्रोगिणमिति वा मण्डूरं कि
मडि भूषे मडि ङ विभागे वेष्टे नाम्नीति
ऊरः । इति तट्टीकायां भरतः ॥ अस्य गुणः ।
लौहगुणतुल्यः । शतवर्षोद्ध्वं मण्डूरमुत्तमम् ।
अशीतिवर्षीयं मध्यमम् ।
षष्टिवर्षीयमधमम् ।
अतो न्यूनं विषतुल्यम् । यथा, --

| | | |
|---|---|---|
| छिन्ना च्छिन्नरुहा च्छिन्नोद्भवा<br>वत्सादनीति च ॥<br>जीवन्ती तन्त्रिका सोमा सोमवल्ली च<br>कुण्डली । | | “यल्लोहं यद्गुणं प्रोक्तं तत्किट्टञ्चापि<br>तद्गुणम् ।<br>शतोर्द्ध्वमुत्तमं किट्टं<br>मध्यञ्चाशीतिवार्षिकम् ॥<br>अधभं षष्टिवर्षीयं ततो हीनं विषोपमम्<br>॥”<br>इति रसेन्द्रचिन्तामणिः ॥<br>(तथा चास्य पर्य्यायान्तरम् । मण्डूरं<br>लोहजं<br>किट्टम् । इति वैद्यकरत्नमालायाम् ॥<br>अस्य<br>उत्पत्तिर्गणाश्च यथा, -- |

"ध्मायमानस्य लोहस्य मलं मण्डूरमुच्यते ।
लोहसिंहानिका किट्टी सिंहाणञ्च निगद्यते ॥
यल्लोहं यद्गुणं प्रोक्तं तत्किट्टमपि तद्गुणम्
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥
"ये गुणा मारिते मुण्डे ते गुणा मुण्डकिट्टके ।
तस्मात् सर्व्वत्र मण्डूरं रोगशान्त्यै
प्रयोजयेत् ॥"
अथास्य मारणविधिर्यथा, --
"दग्ध्राक्षकाष्ठैर्मलमायसन्तु
गोमूत्रनिर्व्वापितमष्टवारान्।
विचूर्ण्य लीढं मधुनाचिरेण
कुम्भाह्वयं पाण्डुगदं निहन्ति ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणा-
धिकारे ॥)

**मण्डोदकं**, क्ली, (मण्ड इव उदकमस्य मण्डमिश्रित-
मुदकमत्रेति वा ।) चित्रागः । विचित्रवर्णः ।
आतर्पणम् । आलिम्पना । इति मेदिनी ।
के,
२०७ ॥ (यथा, सुश्रुते सूत्रस्थाने ४४
अध्याये ।
"तस्य पिष्टस्य भागांस्त्रीन् किण्वभागविमि-
श्रितान् ।
मण्डोदकार्थे क्वाथञ्च दद्यात्
तत्सर्व्वमेकतः ॥")

**मत्** व्य अनहमहम् । अत्वं त्वं भवति त्वद्भवति
अनहमहं मद्भवतीति संक्षिप्तसारव्याकरणम्
॥
अस्मच्छब्दाच्चिप्रत्यये कृते तल्लुकि
अस्मच्छब्दस्य
मदादेशान्निष्पन्नम् । इति तट्टीकायां गोयी-
चन्द्रः ॥

**मतं**, क्ली, (मन् + भावे क्तः ।) सम्मतम् । तत्-
पर्य्यायः । छन्दः २ अभिप्रायः ३ आकूतम्
४
भावः ५ आशयः ६ । इति हेमचन्द्रः ॥
"मतिस्तु द्विविधा लोके युक्तायुक्तेति
सर्व्वथा ।")
इच्छा । स्मृतिः । इति मेदिनी । ते, ४३ ॥
आर्य्यम् । शाकभेदः । इत्यजयपालः ॥ *
॥
"विप्रेन्द्र ! का प्रशंसेयं जन्म ते ब्रह्ममानसे
।
यस्य यत्र कुले जन्म तन्मतिस्तादृशी
भवेत् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १
अध्यायः ॥
मतिकरौषधम् । यथा, --
"पाठा द्वे जीरके कुष्ठमश्वगन्धाजमोदकम्
।
वचा त्रिकटुकञ्चैव लवणं चूर्णमुत्तमम् ॥
ब्राह्मीरसैर्भावितञ्च सर्पिर्मधुसमन्वितम् ।
सप्ताहं भक्षितं कुर्य्यान्मदैश्वर्य्यं मतिं
पराम् ॥"
इति गारुडे १९८ अध्यायः ॥

**मतिदा**, स्त्री, (मतिं ददातीति । दा + कः ।)
ज्योतिष्मती । शिमृडीक्षुपः । इति राज-
निर्घण्टः ॥ (मतिदातरि, त्रि ।)

**मतिभ्रमः**, पुं, (मतेर्बुद्धेर्भ्रमः ।) बुद्धिभ्रंशः ।
("अस्थान एवास्य मतिभ्रमः ।" इति
पातञ्जल-
योगसूत्रभाष्ये वेदव्यासः ।) तत्पर्य्यायः ।
भ्रमः २
मिथ्यामतिः ३ भ्रान्तिः ४ । इति
शब्दरत्ना-
वली ॥

**मतिभ्रान्तिः**, स्त्री, (मतेर्बुद्ध्वेर्भ्रान्तिः ।) बुद्धि-
भ्रंशः । तत्पर्य्यायः । भ्रमः २ मिथ्यामतिः
३
भ्रान्तिः ४ । इति शब्दरत्नावली ॥

**मतिविभ्रंशः**, पुं, (मतेर्बुद्धेर्बिभ्रंशः ।) उन्माद-
रोगः । इति राजनिर्घण्टः ॥

**मत्कुणारिः**, पुं, (मत्कुणस्य अरिः । मत्कुण-
नाशकत्वादस्य तथात्वम् ।) इन्द्राशनः ।
सिद्धि
इति भाषा । इति शब्दमाला ॥
(विवृतिरस्य इन्द्राशनशब्दे विहिता ॥)

**मत्तः**, पुं, (माद्यतीति । मद् + कर्त्तरि क्तः ।)
क्षरन्मदहस्ती । मातओयाला हाती इति
भाषा ॥ तत्पर्य्यायः । प्रभिन्नः २
गर्ज्जितः ३ ।
इत्यमरः । २ । ८ । ३६ ॥ मतङ्गः ४
क्षरन्मदः ५ ।
इति शब्दरत्नावली ॥ धुस्तूरः ।
कोकिलः ।
महिषः । इति राजनिर्घण्टः ॥

**मत्तः**, त्रि, मत्तताविशिष्टः । सुरापाने विक-
लान्तःकरणः । तत्पर्य्यायः । शौण्डः २
उत्-
कटः ३ क्षीवः ४ । इत्यमरः । ३ । १ ।
२३ ॥
मदोद्धतः ५ । इति जटाधरः ॥ (यथा,
देवी-
भागवते । २ । ८ । ४ ।
"ते पीत्वा मदिरां मत्ताः कृत्वा युद्धं पर-
स्परम् ।"
यथाच माधवकृतरुग्विनिश्चये
मदात्ययाद्यधिकारे।
"मध्येन मत्तः पुरुषो मदेन ।")
हृष्टः । मदीभिर्य्यञि हर्षे क्तः । इत्यमर-
भरतौ ॥ अविवेकी । (यथा रामायणे । १
।
४४ । १० । "बलान्मत्तो महाबलः ।"
"मत्तोऽविवेकी ।" इति
तट्टीकाकृद्रामानुजः ॥)

**मत्तकाशिनी** स्त्री, उत्तमस्त्री । इत्यमरः ।
२ । ६ । ४ ॥ मत्त इव क्षीव इव
कसति गच्छति मत्तकासिनी कस ज गतौ

**मतः**, त्रि, (मन् + कर्म्मणि क्तः ।) सम्मतः ।
ज्ञातः । इति मेदिनी । ते, ४२ ॥ (यथा, रघौ । २ । ५७ ।
"किमप्यहिंस्यस्तव चेन्मतोऽहं
यशःशरीरे भव मे दयालुः ॥")
अर्च्चितः । इति हेमचन्द्रः ॥

**मतङ्गः**, पुं, (माद्यति माद्यत्यनेन वेति । मद् +
"मदीभिर्यत्रि हर्षे । इत्युणादिकोष टीकोक्त-सूत्रादङ्गच् । दस्य तः ।) मुनिभेदः । (यथा, रघौ । ५ । ५३ ।
"मतङ्गशापादवलेपमूला-
दवाप्तवानस्मि मतङ्गजत्वम् ॥")
मेघः । इत्युणादिकोषः । १ । २७ ॥

**मतङ्गजः**, पुं, (मतङ्गः मेघ इव जायते तद्याख्य-
मुनेर्जातो वेति । जन + ड ।) हस्ती । इत्यमरः ।
२ । ८ । ३४ ॥ (यथा, कामन्दकीये नीतिसारे । १५ । ७ ।
"ग्रीष्मे प्रभूताम्बुवनेन यायात्
निर्वासनार्थं करिणां यथा तु ।
ऋतेऽम्भसो ग्रीष्मकृतात् प्रतापात्
भवन्ति कुष्ठानि मतङ्गजानाम् ॥")

**मतल्लिका**, स्त्री, प्रशस्तम् । इत्यमरः । १ । ४ । २७ ॥

**मतिः**, स्त्री, (मन्यतेऽनयेति । मन् + क्तिन् ।)
बुद्धिः । इत्यमरः । १ । ५ । १ ॥ (यथा, देवी-
भागवते । १ । १७ । २९ ।

**मतिष्ठः**, त्रि, (अयमनयोरयमेषामतिशयेन मति-
मान् वेति । मतिमत् + इष्ठन् । मतुपो लोपः ।) अतिशयबुद्धिमान् । इति मुग्धबोध-
व्याकरणम् ॥

**मत्कः**, पुं, (माद्यतीति । मद् + क्विप् । ततः
स्वार्थे कन् ।) मत्कुणः । इति शब्दमाला ॥
(मम अयम् । अस्मद् शब्दादिदमर्थे कन् । मदादेशश्च ।) मत्सम्बन्धिनि त्रि । इति व्याक-
रणम् ॥ (यथा, भट्टिः । ३ । ३२ ।
"नैतन्मतं भत्कमिति ब्रुवाणः
सहस्रशोऽसौ शपथानशप्यत् ॥")

**मत्कुणः**, पुं, (माद्यतीति । मद् + क्विप् कुणति
इति कुण् + क । ततः । मच्चासौ कुणश्चेति ।)
कीटविशेषः । छारपोका इति भाषा ॥ तत्-
पर्य्यायः । रक्तपायी २ रक्ताङ्गः ३ मञ्च-काश्रयः ४ । इति राजनिर्घण्टः ॥ उद्दंशः ५ ।
(यथा, शिशुपालवधे । १४ । ६८ ।
"मत्कुणाविव पुरा परिप्लवौ
सिन्धुनाथशयने निषेदुषः ।
गच्छतः स्म मधुकैटभौ विभो-
र्यस्य नैद्रसुखविघ्नतां क्षणम् ॥")
निर्व्विषाणहस्ती । निःश्मश्रुपुरुषः । माकुन्द्या
इति भाषा ॥ नारिकेलः । इति मेदिनी । ने,
७० ॥ जङ्घात्राणम् । इति हेमचन्द्रः । ४ । २७५ ॥

**मत्कुणा**, स्त्री, अजातलोमभगम् । इति शब्द-
रत्नावली ॥

ग्रहादित्वाण्णिन् दन्त्यमध्या । मत्तेव काशते
भाति मत्तकाशिनी तालव्यमध्यापि । इति भरतः ॥ (यथा, महाभारते । १ । १७३ । ३९ ।
"न तासां सदृशीं मन्ये त्वामहं मत्त-
काशिनि ! ।")

**मत्तकीशः**, पुं, (मत्तः सन् कीशो वानर इव ।)
हस्ती । इति शब्दमाला ॥

**मत्तरः**, पुं, ममाधिकः । मत्तोऽतिशयः । अस्म-
च्छब्दात् डतरप्प्रत्ययेन निष्पन्नः । इति सिद्धान्तकौमुदी ॥

**मत्तवारणं**, क्ली, (मत्तं वारयतीति । वृ + णिच्
ल्युः ।) प्रासादवीथीनां वरण्डः । कोठार वाराण्डा इति भाषा ॥ (यथा, कुट्टनीमते । ९ ।
"दिव्यधराधरभूरिव राजति
मत्तवारणोपेता ॥"
"प्रासादवीथीनां वरण्डकः ।" इति तट्टीका ॥)
अपाश्रयः । प्राङ्गणावरणम् । इति हेमचन्द्रः ।
४ । ७८ । विश्वश्च ॥ प्रासादवीथीनां कुण्डवृक्ष-
वृतिः । कुन्दवृक्षवृति इति च पाठः । इति मेदिनी । णे, ११४ ॥ पूगचूर्णः । इति शब्दमाला ॥

**मत्तवारणः**, पुं, (वार्य्यते संयम्यते शृङ्खलादिभिः
इति वारणः । वृ + णिच् कर्म्मणि ल्युट् । मत-
श्चासौ वारणश्चेति ।) प्रक्लिन्नकटकुञ्जरः
मत्तहस्ती । इति मेदिनी । णे, ११४ । हेम-
चन्द्रश्च । ४ । ७८ ॥

**मत्ता**, स्त्री, (माद्यति मादयतीति । अन्तर्भूत-
ण्यर्थान्मदधातोः + क्तः + स्त्रियां टाप् ।) मदिरा ।

इति राजनिर्घण्टः ॥
(पङ्क्त्यन्तर्गतः दशाक्षरः
छन्दोविशेषः । तल्लक्षणं यथा,
छन्दोमञ्जर्य्याम् ।
"ज्ञेया मत्ता मभसगसृष्टा ।"
अधिकन्तु छन्दःशब्दे
द्रष्टव्यम् ॥)

**मत्तालम्बः**, पुं, (आलम्ब्यते असावित्यालम्बः ।
आ + लम्ब + कर्म्मणि घञ् ।
मत्तस्यालम्बः
आश्रयः ।) प्राङ्गनावरणम् ।
तत्पर्य्यायः ।
अपाश्रयः २ प्रग्रीवः ३
मत्तवारणम् ४ । इति
हेमचन्द्रः । ४ । ७८ ॥

**मत्तेभगमना**, स्त्री, (मत्तेभस्य गमनमिव गमनं
यस्याः ।) स्त्रीविशेषः ।
मत्तगजगामिनी । इति
हेमचन्द्रः । ३ । १७० ॥

**मत्यं**, क्ली, (मतं ज्ञानं तस्य करणमिति । मत +
"मतजनहलात्
करणजल्पकर्षेषु ।" ४ । ४ ।
९७ ।
इति यत् । कृष्टस्य क्षेत्रस्य
समीकरणादिसाधन-
फलकम् । यथा,
ताण्ड्यमहाब्राह्मणे । २ । ९ ।
२ ।
"भ्रातृव्यवांस्तवीत यथा
सप्तास्थितेन मत्येन ।
मतीकरोत्येवं पाप्मानं भ्रातृव्यं
प्ररुजति ॥"
"मत्यं वाम कृष्टस्य क्षेत्रस्य
समीकरणादि-

**मत्सरा**, स्त्री, (मद् + सरन् । स्त्रियां टाप् ।)
मक्षिका । इति मेदिनी । रे, १९३ ।

**मत्सरी**, [न्] त्रि, (मत्सरोऽन्यशुभद्वेषोऽस्त्यस्येति
मत्सरः + इनिः ।) अन्यशुभद्वेष्टा ।
तत्पर्य्यायः ।
कर्णेजपः २ दुर्ज्जनः ३ पिशुनः ४ सूचकः
५
नीचः ६ द्विजिह्वः ७ खलः ८ । इति हेम-
चन्द्रः ॥ (यथा, मनौ । २ । २०१ ।
"परिभोक्ता कृमिर्भवति कीटोभवति मत्सरी
॥")

**मत्स्यः**, पुं स्त्री, (माद्यन्ति लोका अनेनेति ।
मद् + "ऋतन्यञ्जीति ।" उणा० । ४ । २
इति
स्यन् ।) स्वनामख्यातजलजन्तुः । माछ
इति
भाषा ॥ तत्पर्य्यायः । पृथुरोमा २ झसः ३
मीनः ४
वैसारिणः ५ अण्डजः ६ विसारः ७ शकली
८ ।
इत्यमरः । १ । १० । १७ ॥ शन्धली ९
झषः १०
आत्माशी ११ संवरः १२ मूकः १३ जले-
शयः १४ कण्टकी १५ शल्की १६ मच्छः
१७
अनिमिषः १८ । इति शब्दरत्नावली ॥ शुङ्गी
१९ ।
इति जटाधरः ॥ तस्य गुणाः । बृंहणत्वम् ।
गुरुत्वम् । शुक्रबर्द्धनत्वम् । बल्यत्वम् ।
स्निग्ध-
त्वम् । उष्णत्वम् । मधुरत्वम् ।
कफपित्तकर-
त्वम् । व्यायामाध्वरतदीप्ताग्नीनांपूजितत्वम्
।
वातरोगहरत्वञ्च ॥ * ॥ बृहन्मत्स्यगुणाः ।
गुरु-
त्वम् । शुक्रलत्वम् । मलबद्धकारित्वञ्च ॥ *
॥

नादेयाः । रोहित-पाठीन-पाटला-राजीव-
वर्म्मिगोमत्स्य-कृष्णमत्स्य-वागुञ्जार-मुरल-
सहस्र-दंष्ट्रप्रभृतयो नादेयाः ॥
"नादेया मधुरा मत्स्या गुरवो मारुतापहाः
रक्तपित्तकराश्चोष्णा वृष्याः स्निग्धाल्पवर्च्चसः ॥
कषायानुरसस्तेषां शष्पशैबालभोजनाः ।
सरस्तडागसम्भताः स्निग्धाः स्वादुरसाः स्मृताः ।
महाह्रदेषु बलिनः स्वल्पेऽम्भस्यबलाः स्मृताः ।"
तिमितिमिङ्गिलकुलिशपाकमत्स्यनिरालक-
नन्दिवारलकमकरगर्गरकचन्द्रकमहामीन-
राजीवप्रभृतयः सामुद्राः ॥
"सामुद्रा गुरवः स्निग्धा मधुरा नातिपित्तलाः ।
उष्णावातहरा वृष्या वर्च्चस्याः श्लेष्मवर्द्धनाः ॥
बलावहा विशेषेण मांसाशित्वात् समुद्रजाः ।
तेषामप्यनिलघ्नत्वाच्चौण्ट्यकौप्यौगुणोत्तरौ ॥
स्निग्धत्वात् स्वादुपाकत्वात् तयोर्वाप्या गुणो-
त्तराः ।
नादेया गुरवो मध्ये यस्मात् पुच्छास्यचारिणः ।
सरस्तडागजानान्तु विशेषेण शिरो लघु ॥
अदूरगोचरा यस्मात्तस्मादुत्सोदपानजाः ।
किञ्चिन्मुक्त्वा शिरोदेशमत्यर्थं गुरवस्तु ते ॥
अधस्तद्गुरवो ज्ञेया मत्स्याः सरसिजाः स्मृताः ।
उरो विचरणात्तेषां पूर्ब्बमङ्गं लघु स्मृतम् ॥"
इति सुश्रुते सूत्रस्थाने ४६ अध्यायः ॥)
नादेयमत्स्यगुणाः । श्लेष्मलत्वम् । वृष्यत्वम् ।
मधुरत्वम् । अल्पमलभेदकत्वञ्च ॥ * ॥ सर-
स्तडागभवमत्स्यगुणौ । स्निग्धत्वम् । स्वादुरस-
त्वम् ॥ * ॥ महाह्रदभवमस्याः वलिनः । अल्प-
जलभवाः अबलाः ॥ * ॥ दग्धमत्स्यगुणाः ।
गुरुत्वम् । वृष्यत्वम् । बृंहणत्वम् । बलवर्द्धनत्वञ्च ॥
तैललवणयुक्तदग्धमत्स्यगुणः । क्षीणशुक्रभग्न-
जर्ज्जरितनित्यस्त्रीसेविक्षीणतेजसां हितकारि-
त्वञ्च ॥ * ॥ पलालवेष्टितकर्द्दमलेपिताङ्गार-
दग्धसलवणवेशवारपुरस्कृतसार्द्रककटुतैलसन्तो-
लितमत्स्यगुणाः । स्वादुत्वम् । कफवातहरत्वम् ।
शुक्रलत्वम् । बलवर्द्धनत्वञ्च ॥ * ॥ शाकमत्स्याख्य-
व्यञ्जनगुणाः । हृद्यत्वम् । वृष्यत्वम् । पुष्टिदत्वञ्च ॥
मत्स्यघण्टगुणाः । बलकरत्वम् । वातहरत्वम् ।
अतिशयरोचनत्वञ्च ॥ शिरसि खड्गकेशधारि-

साधनफलकम् ।” इति
तद्भाष्ये सायनः ॥)
दात्रादीनां मुष्टिः । तत्पर्य्यायः
। वण्टः २ ।
इति हेमचन्द्रः । ३ । ५५६ ॥

**मत्र**, इ ङ क गुप्तोक्तौ । इति कविकल्पद्रुमः ॥

(चुरा०-आत्म०-सक०-सेट्
।) दन्त्यवर्गाद्योपधः ।
इ क ङ इति ध्रुवं मन्त्रयते
नृपोऽयमिति
मुरारिः ॥ मन्त्र
इत्यनेनैवेष्टसिद्धौ इदनुबन्धो
वेदेषूच्चारणभेदार्थः । इति
दुर्गादासः ॥

**मत्सः**, पुं, (माद्यतीति । मद् + बाहुलकात् सन् ।)

मत्स्यः । इत्युणादिकोषः ॥

**मत्सगण्टः**, पुं, (मत्स्यानां गण्डोऽत्र पृषो-

दरादित्वात् साधुः ।)
व्यञ्जनविशेषः । मत्स्य-
घण्ट इति ख्यातः ।
तत्पर्य्यायः । गलग्रहः २ ।
इति शब्दचन्द्रिका ॥

**मत्सरः**, पुं, (मद्यते इति मद् + “कृधूमदिभ्यः

कित् ।” उणा० । ३ । ७३ ।
इति सरन् ।
स च कित् । यद्वा । मदा
सरतीति अमर-
टीका ।) अन्यशुभद्वेषः ।
इत्यमरः । ३ । ३ ।
१७२ ॥ (यथा,
कथासरित्सागरे । ४२ । ६५
।
“शीर्षान्ताद्भक्षयामास
द्वितीयमपि तत्फलम् ।
निसर्गसिद्धो नारीणां सपत्नीषु
हि मत्सरः ॥”)

क्षुद्रमत्स्यगुणाः । लघुत्वम् । ग्राहित्वम् ।
ग्रहणीरोगे हितत्वञ्च ॥ * ॥ कृष्णमत्स्यगुणाः
।
लघुत्वम् । स्निग्धत्वम् । वातघ्नत्वम् ।
वह्निवर्द्धन-
त्वञ्च ॥ * ॥ पाण्डरमत्स्यगुणाः । दोषलत्वम्
।
स्निग्धत्वम् । गुरुत्वम् । मलभेदित्वञ्च ॥ * ॥
क्वथितमत्स्यस्य अर्थात् पूतिमत्स्यस्य
गुणः ।
दोषलत्वम् ॥ * ॥ शुष्कमत्स्यगुणौ । विष्ट-
म्भित्वम् । दुर्ज्जरत्वञ्च ॥ * ॥ लवणभावित-
मत्स्यगुणाः । कफपित्तकरत्वम् । सारकत्वम्
॥
सामुद्रमत्स्यगुणाः । लघुत्वम् । वृष्यत्वम् ।
मधु-
रत्वम् । स्वल्पमलकारित्वञ्च ।
“सामुद्रा गुरवो वृष्याः स्निग्धोष्णा वात-
नाशनाः ।”
इति पाठान्तरम् ॥ * ॥
(तथास्य पर्य्यायाः गुणाश्च ।
“मत्स्यो मीनो विकारश्च उषो
वैसारिणोऽण्डजः ।
शकुलः पृथुरोमा च स सुदर्शन इत्यपि ॥
रोहिताद्यास्तु ये जीवास्ते मत्स्याः परिकी-
र्त्तिताः ।
मत्स्याः स्निग्धोष्णमधुरा गुरवः
कफपित्तलाः ॥
वातघ्ना बृंहणा वृष्या रोचका बलवर्द्धनाः
।
मद्यव्यवायसक्तानां दीप्ताग्नीनाञ्च पूजिताः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे
॥
“मत्स्या रोहितपाठीनकूर्म्मकुम्भीरकर्कटाः ।
शुक्तिशङ्खोद्रुशम्बूकशफरीवर्म्मिचन्द्रिका ॥
चुलूकीनक्रमकरशिशुमारतिमिङ्गिलाः।
राजीवाः चिलिचिमाद्याश्च ॥”
इति वाभटे सूत्रस्थाने षष्ठेऽध्याये ॥
मत्स्यास्तु द्विविधा नादेयाः सामुद्राश्च । तत्र

मस्यगुणाः । मुखप्रियत्वम् । हृद्यत्वम् । पुंस्त्व-
घातकत्वञ्च । इति राजवल्लभः ॥ * ॥ अपि च ।
“निःशल्का निन्दिता मत्स्याः सर्व्वे शल्कयुता
हिताः ।
वपुःस्थैर्य्यकरा वीर्य्यबलपुष्टिविवर्द्धनाः ॥
ह्रदकुल्याजलनिर्झरतडागवापीजलेषु येमत्स्याः ।
तेऽतिजडा नादेया यथोत्तरं लघुतरास्तु
नादेयाः ॥
क्षाराम्बुमत्स्या गुरवो विदाहिनो
विष्टम्भदास्ते लवणार्णवादिजाः ।
नानाश्रिताः स्वादुजलस्थिता अपि
ज्ञेया जडास्तेऽपि तथाश्रिता इमे ॥”
इति राजनिर्घण्टः ॥

क्रोधः । इति मेदिनी । रे, १९३ ॥

**मत्सरः**, त्रि, (माद्यतीति । मद् हर्षे + “कृधू-
मदिभ्यः कित् ।” उणा० । ३ । ७३ । इति सरन् । स च कित् ।) असह्यपरसम्पत्तिः । मात्सर्य्ययुक्तः । (यथा, महानिर्व्वाणतन्त्रे । १ । २६ ।
“न मत्सरा नातिरुष्टा नातिलुब्धा न कामुकाः ।”) कृपणः । इत्यमरमेदिनीकरौ ॥ आत्मधिक्कार-
विशेषः । यथा, --
“निन्दन्ति मां सदा लोका धिगस्तु मम जीवनम् ।
इत्यात्मनि भवेद्यस्तु धिक्कारः स च मत्सरः ॥”
इति पाद्मे क्रियायोगसागरे १६ अध्यायः ॥

अथ क्षुद्रमत्स्यगुणाः ।
"क्षुद्रमत्स्याः स्वादुरसा
दोषत्रयविनाशनाः ।
लघुपाका रुचिकराः सर्व्वदा ते हिता
मताः ।
अथातिक्षुद्रमत्स्यगुणाः ।
अतिसूक्ष्माः पुंस्त्वहरा रुच्याः
कासानिलापहाः ।
अथ मत्स्याण्डगुणाः ।
मत्स्यगर्भो भृशं वृष्यः स्निग्धः पुष्टिकरो
गुरुः ।
कफमेदप्रदो बल्यो
ग्लानिकृन्मेहनाशनः ॥
अथ शुष्कमत्स्यगुणाः ।
शुष्कमत्स्या न बल्याः स्युर्दुर्जरा
विड्विबन्धिनः ॥
अथ दग्धमत्स्यगुणाः ।
दग्धमत्स्यो गुणैः श्रेष्ठः
पुष्टिकृद्बलवर्द्धनः ॥
अथ कूपजादिमत्स्यगुणाः ।
कूपमत्स्याः
शुक्रमूत्रकुष्ठश्लेष्मविवर्द्धनाः ।
सरोजा मधुराः स्निग्धा बल्या
वातविनाशनाः ॥
नादेया बृंहणा मत्स्या
गुरवोऽनिलनाशनाः ।
रक्तपित्तकरा वृष्याः स्निग्धोष्णाः
स्वल्पवर्च्चसः ॥
चौड्याः पित्तहराः स्निग्धा मधुरा
लघवो
हिमाः ।
ताडागा गुरवो वृष्याः शीतला
बलमूत्रदाः ।
ताडागवन्निर्झरजा बलायुर्मतिदृक्कराः
॥
अथ ऋतुविशेषे मत्स्यविशेषगुणः ।
हेमन्ते कूपजा मत्स्याः शिशिरे सारसा
हिताः ।

"यो यस्य मांसमश्नाति स तन्मांसाद उच्यते
।
मत्स्यादः सर्व्वमांसादस्तस्मान्मत्स्यान्
विवर्ज्जयेत् ॥
इति मानवे ५ अध्यायः ॥
जलस्थलचरा ये च प्राणिनस्तान् मृतानपि ।
न भक्षेन्मानवो ज्ञानी हन्ता तेषां भवेन्न हि ॥
हत्वा हत्वा तु मत्स्याशी सर्व्वेषां यो विशेषतः
।
मांसादः प्राणिनां सोऽपि तस्मान्मत्स्यं
परित्यजेत् ॥"
इति पाद्मोत्तरखण्डे १०५ अध्यायः ॥
वर्जनीयमत्स्या यथा, --
"शृणु देवि ! प्रवक्ष्यामि मांसभेदान्निबोध मे ।
नादेयं तिक्तकमठं पशुशृङ्गिणमेव च ॥
गोमीनं चक्रशकुलं वडालं राघवं तथा ।
वामीनं चलकर्णञ्च सचक्रं चेङ्गमेव च ॥
भूविलञ्चानिरुद्धञ्च गाङ्गेयानि विवर्ज्जयेत् ॥"
इति मत्स्यसूक्तमहातन्त्रम् ॥
रविवारे मत्स्यभक्षणनिषेधो यथा, --
"आमिषं रक्तशाकञ्च यो भुङ्क्ते च रवेर्द्दिने ।
सप्तजन्म भवेत् कुष्ठी दरिद्रश्चोपजायते ॥"
इति भविष्यपुराणम् ॥
"माषमामिषमांसञ्च मसूरं निम्बपत्रकम् ।
भक्षयेद् यो रवेवरि सप्तजन्मान्यपुत्त्रकः ॥"
इति तिथ्यादितत्त्वम् ॥
कार्त्तिके मत्स्यभक्षणनिषेधो यथा, --
"न मात्स्यं भक्षयेन्मांसं न कौर्म्मं नान्यदेव हि
।
चण्डालो जायते राजन् ! कार्त्तिके मांसभक्ष-
णात् ॥"
इति नारदीयपुराणम् ॥
माघवैशाखयोर्हविष्यब्रह्मचर्य्यविधानात्
मत्स्य-
भक्षणं नितरां निषिद्धमिति कृत्यतत्त्वदर्शनात्
॥
जन्मतिथौ मत्स्यभक्षणनिषेधो यथा, --
"आमिषं कलहं हिंसां वर्षवृद्धौ विवर्जयेत् ॥"
अपि च ।

निवेद्य देवताभ्यश्च ब्राह्मणेभ्यश्च नान्यथा
॥
सफरं सिंहतुण्डञ्च तथा पाठीन-रोहितौ ।
मत्स्यास्त्वेते समुद्दिष्टा भक्षणाय तपोधनैः
॥
प्रोक्षितं भक्षयेदेषां मांसञ्च द्विजकाम्यया ।
यथाविधिनियुक्तश्च प्राणानामपि चात्यये
॥"
इति कौर्म्मे उपविभागे १६ अध्यायः ॥
अपि च ।
"पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः
।
राजीवान् सिंहतुण्डांश्च सशल्कांश्चैव
सर्व्वशः ॥"
इति मानवे ५ अध्यायः ॥
"अनिवेद्य न भोक्तव्यं मत्स्यं मांसञ्च
यद्भवेत् ।
अन्नं विष्ठा पयो मूत्रं यद्विष्णोरनिवेदितम्
॥"
इत्याह्निकतत्त्वम् ॥
प्रेतश्राद्धे मत्स्यदानविधिर्यथा, --
"सपिण्डीकरणं यावत् प्रेतश्राद्धन्तु
षोडशम् ।
पक्वान्नेनैव कर्त्तव्यं सामिषेण द्विजातिभिः
॥"
इति श्राद्धतत्त्वधृतकामधेनुवचनम् ॥

**मत्स्यः**, पुं, (जलं प्राप्य माद्यतीति मद् +
"ऋत्यन्यञ्जीति ।" उणा० । ४ । २ । इति
स्यन् ।)
मीनविशेषः । विराटदेशः । नारायणः ।
इति
हेमचन्द्रः । ४ । ४०९ ॥ देशविशेषे
बहुवचनान्तः ।
इति मेदिनी । ये, ४५ ॥ द्वादशराशिः ।
यथा,
"मत्स्यौ घटी नृमिथुनं सगदं सवीणम् ॥"
इत्यादि ज्योतिस्तत्त्वम् ॥
अष्टादशपुराणान्तर्गतपुराणविशेषः ॥
(मत्स्य-

वसन्ते ते तु नादेया ग्रीष्मे
चौड्यसमुद्भवाः ॥
तडागजाता वर्षासु तास्वपथ्या
नदीभवाः ।
निर्झराः शरदि श्रेष्ठा विशेषोऽयमुदाहृतः
॥”
इति भावप्रकाशः ॥
मत्स्योत्पत्तिकारणं यथा, --
“ततस्तु मित्रावरुणौ भ्रातरौ
ब्रह्मचारिणौ ।
तन्तु देशं गतौ देवौ विचरन्तौ यदृच्छया
॥
ताभ्यां तत्र तदा दृष्टा उर्व्वशी तु
वराप्सराः ।
स्नायन्ती सहितान्याभिः सखीभिः सा
वरानना ॥
गायन्ती च हसन्ती च विश्वस्ता निर्जने
वने ॥
गौरी कमलगर्भाभा
स्निग्धकृष्णशिरोरुहा ।
पद्मपत्रविशालाक्षी रक्तोष्ठी मृदुभाषिणी
॥
शङ्खकुन्देन्दुधवलैर्दन्तैरविरलैः समैः ।
सुभ्रूः सुनासा सुमुखी सुललाटा
मनस्विनी ॥
सिंहवत् सूक्ष्ममध्याङ्गी
पीनोरुजघनस्तनी ।
मधुरालापचतुरा सुमध्या चारुहासिनी
॥
रक्तोत्पलकरा तन्वी सुपदी
विनयान्विता ।
पूर्णचन्द्रनिभा बाला मत्तद्विरदगामिनी
॥
दृष्ट्वा तस्यास्तु तद्रूपं तौ देवौ बिस्मयं
गतौ ।
यस्या हास्येन लास्येन स्मितेन
ललितेन च ॥
मृदुना वायुना चैव शीतानिलसुगन्धिना
।
मत्तभ्रमरगीतेन पुंस्कोकिलरुतेन च ॥
सुखरेण हि गीतेन उर्व्वश्या मधुरेण च ।

“भुङ्क्ते यस्तु निरामिषं स हि भवेज्जन्मान्तरे
पण्डितः ॥”
इति तिथ्यादितत्त्वम् ॥
शैवस्य मत्स्यभक्षणनिषेधो यथा, --
“क्व मद्यं क्व शिवे भक्तिः क्व मांसं
क्वशिवार्च्चनम् ।
मत्स्यमांसरतानां वै दूरे तिष्ठति शङ्करः ॥”
इति काशीस्वण्डम् ॥
मा भक्ष्यं नैवेद्यार्थे भक्षेष्वजामहिषीक्षीरं वर्ज-
येत् । पञ्चनखमत्स्यवराहमांसानिच । इत्या-
ह्निकतत्त्वधृतविष्णुसूत्रम् ॥ * ॥
बिन्ध्यपर्व्वतस्य
पश्चिमे मत्स्यभक्षणनिषेधो यथा, --
“बिन्ध्यस्य पश्चिमे मागे मत्स्यभुक् पतितो
नरः ।”
इति पुराणम् ॥
कामतो मत्स्यभक्षणप्रायश्चित्तंयथा, --
“मत्स्यांस्तु कामतो जग्ध्वा सोपवासस्त्र्यहं
वसेत् ॥”
अज्ञानतस्तदर्द्धम् । इति प्रायश्चित्तविवेकः ॥
मत्स्यभक्षणप्रतिप्रसवोयथा, --
“मत्स्यान् सशल्कान् भुञ्जीत मांसं रौरवमेव
च ।

रूपेणावतीर्णेन भगवता उक्तत्वात् अस्य
तदाख्या ।) यथा, --
“पुण्यं पवित्रमायुष्यमिदानीं शृणुत द्विजाः
।
मात्स्यं पुराणमखिलं यज्जगाद गदाधरः
॥”
इति मत्स्यपुराणे १ अध्यायः ॥
दशावतारान्तर्गतप्रथमावतारः । यथा, --
सूत उवाच ।
“पुरा राजा मनुर्नाम चीर्णवान् विपुलं तपः
।
पुत्त्रे राज्यं समारोप्य क्षमावान् रविनन्दनः
॥
मलयस्यैकदेशे तु सर्व्वात्मगुणसंयुतः ।
समदुःखसुखो वीरः प्राप्तवान् योगमुत्तमम्
॥
बभूव वरदश्चास्य वर्षायुतशते गते ।
वरं वृणीष्व प्रोवाच प्रीतः स कमलासनः ॥
एममुक्तोऽब्रवीद्राजा प्रणम्य स पितामहम् ।
एकमेबाहमिच्छामि त्वत्त्वो वरमनुत्तमम् ॥
भूतग्रामस्य सर्व्वस्य स्थावरस्य चरस्य च
।
भविता रक्षणे यानं प्रलये समुपस्थिते ॥
एवमस्त्विति विश्वात्मा तत्रैवान्तरधीयत ।
पुष्पवृष्टिश्च महती स्वात् पपात सुरार्पिता
॥
कदाचिदाश्रभे तस्य कुर्व्वतः पितृतर्पणम् ।
पपात पाण्योरुपरि शफरी जलसंयुतः ॥
दृष्ट्वा तच्छफरीरूपं स दयाजुर्महीपतिः ।
रक्षणायाकरोद्यत्नं स तस्मिन् करकोदरे ॥
अहोरात्रेण चैकेन षोडशाङ्गुलविस्तृतः ।
सोऽभवन्मत्स्यरूपेण पाहि पाहीति
चाब्रवीत् ॥
स तमादाय मलिके प्राक्षिपज्जलचारिणम्
॥
तत्रापि चैकरात्रेण हस्तत्रयमवर्द्धत ॥

| | | |
|---|---|---|
| ईक्षितौ च कटाक्षेण<br>स्कन्दतुस्ताषुभावपि ॥<br>तत्त्रिधा पतितं रेतः कमलेऽथ स्थले जले ।<br>कमलेऽथ वशिष्ठस्तु जातो हि मुनिसत्तमः ॥<br>स्थले त्वगस्त्यः सम्भूती जले मत्स्यो महामते ! ॥”<br>इति नारसिंहपुराणे ६ अध्यायः ॥<br>मत्स्यभक्षणनिषेधो यथा, -- | | |

पुनः प्राहार्त्तनादेन
सहस्रकिरणात्मजम्।
स मत्स्यः पाहि पाहीति त्वामहं
शरणं गतः ॥
ततः स कूपे तं मत्स्यं
प्राहिणोद्रविनन्दनः।
यदा न माति तत्रापि कूपे मत्स्यः
सरोवरे ॥
क्षिप्तोऽसौ पृथुतामागात्
पुनर्योजनसम्मितः।
तत्राप्याह पुनर्द्दीनः पाहि पाहि
नृपोत्तमम् ॥
ततः स मनुना क्षिप्तो
गङ्गायामप्यवर्द्धत।
यदा तदा समुद्रे तं
प्राक्षिपन्मेदिनीपतिः ॥
यदा समुद्रमखिलं व्याप्यासौ
समुपस्थितः।
तदा प्राह मनुर्भीतः कोऽपि
त्वमसुरेश्वरः ॥
अथवा वासुदेवस्त्वमन्य ईदृक् कथं
भवेत्।
योजनायुतविंशत्या कस्य तुल्यं
भवेद्वपुः ॥
ज्ञातस्त्वं मत्स्यरूपेण मां खेदयसि
केशव !।
हृषीकेश ! जगन्नाथ ! जगद्धाम !
नमोऽस्तु ते ॥
एवमुक्तः स भगवान् मत्स्यरूपी
जनार्द्दनः।
साधु साध्विति चोवाच सम्यक्
ज्ञातस्त्वयानघ! ॥
अचिरेणैव कालेन मेदिनी
मेदिनीपते!।
भविष्यति जले मग्ना
सशैलवनकानना ॥
नौरियं सर्व्वदेवानां निकायेन
विनिर्म्मिता।
रक्तोत्पलैर्वा पद्मैर्वा मालत्याद्यैः
सुगन्धिभिः।
एवं कृते वर्षमेकं मन्त्रसिद्धिः प्रजायते
॥
नित्यं द्वादशविप्रांश्च श्रीरूपाञ्च
सुवासिनीम्।
भोजयेत् पूजनञ्चास्य चरेत्तौ व्याशयेत्
सदा ॥
षट्पत्रकर्णिकायाञ्च श्रीयुतं
देवमर्च्चयेत्।
षट्पत्रेषु षडङ्गानि यजेद्वाह्यचतुर्द्दले ॥
मण्डूकं मकरं कूर्म्मं शिशुमारञ्च
पूर्ब्बतः ।
तद्वाह्येऽष्टदले पूज्याः क्षाराद्याः सप्त
सिन्धवः ॥
तद्वाह्येऽङ्कदले पूज्या वामुक्याद्याः
फणीश्वराः।
तस्य वाह्ये शक्रदले रत्नानि तु
चतुर्द्दश ॥
समुद्रजानि पूज्यानि
लक्ष्मीकौस्तुभकानि च ।
गङ्गाद्याः षोडश ततो महानद्यः
प्रपूजयेत् ॥
ततश्चाष्टदले वेदानुपवेदसमन्वितान्।
दिगीशांश्च तदस्त्राणि
नवावरणपूजनम्।
एवं सिद्धमनुर्मन्त्री जायते
सिद्धिभाजनम् ॥
एतदुक्तशतं मन्त्रं जपेदष्टोत्तरं शतम्।
तद्देवतादिने सिद्धः पुस्तकादेव जायते
॥
अकुण्ठितप्रयोगेषु न पुनस्तस्य
संस्कृतिः ।
एतत्पल्लविता मन्त्रा मम सिद्ध्यन्ति
पार्व्वति ! ॥
एतत्संपुठिताः सर्व्वे वैदिकाः
सिद्धिदाः कलौ ।
अनेन ग्रथिता जप्ताः कलेश्च
द्रुतसिद्धिदाः ॥”
जलपिप्यल्यर्थे पर्य्यायो यथा, --
“जलपिप्पल्यभिहिता शारदी शकलादनी।
मत्स्यादनी मत्स्यगन्धा लाङ्गलीत्यपि
कीर्त्तिता ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥

**मत्स्यघण्टः**, पुं, (मत्स्यानां घण्टः विमिश्रणं यत्र सः।) स्वनामख्यातमत्स्यव्यञ्जनम्। तत्-पर्य्यायः। गलग्रहः २। इति शब्दचन्द्रिका ॥

**मत्स्यजालं**, क्ली, (मत्स्यधारणार्थं जालं शाक-पार्थिववत् समासः।) आनायः। इति हेम-चन्द्रः। ३। ५९३। माछधरा जाल इतिभाषा ॥

**मत्स्यण्डिका**, स्त्री, (मदं मधुररसं स्यन्दते इति। स्यन्द + ण्वुल् + टाप्। अत इत्वञ्च। पृषो-दरादित्वात् साधुः। शर्कराविशेषः। मिछिरि इति भाषा। यथा, --
“लसीकाफाणितगुडखण्डमत्स्यण्डिकासिताः।
निर्म्मला लघवो ज्ञेयाः शीतवीर्य्या यथोत्तरम्।
यथा यथैषां वैमल्यं भवेच्छैत्यं तथा तथा ॥”
इति राजवल्लभः ॥
राव इति हिन्दीभाषा। तस्य लक्षणं यथा, --
“इक्षोरसो यः संपक्वो घनः किञ्चिद्द्रवा-
न्वितः।
मन्द यत् स्यन्दते यस्मान्मत्स्यण्डीति निगद्यते ॥”
अस्य गुणाः।
“मत्स्यण्डी भेदिनी बल्या लघ्वी पित्तानिला-
पहा।
मधुरा वृंहणी वृष्या रक्तदोषापहा स्मृता ॥”
इति भावप्रकाशः ॥

**मत्स्यण्डी**, स्त्री, खण्डविकारः। इत्यमरः। २। ९। ४३ ॥ इक्षुविशेषस्य रसपाके खण्डयोग्ये सारभूते या गुडिकाकारा जायते सा मत्स्यण्डी। खण्ड-शालूकं मिछिरि इति ख्याते नवात् इति ख्यातापि मत्स्यण्डीति केचित्। मत्स्याण्डा-कारत्वात् मत्स्यण्डी मनीषादित्वादलुक् नदा-दित्वादीप् मत्स्यमनिति मत्स्यण्डी अन प्राणने डः इत्यन्ये। मदं स्यन्दते मत्सण्डीति केचित्। इति भरतः ॥ (यथास्या लक्षणं गुणाश्च ॥

महाजीवनिकायस्य रक्षणार्थं
महीपते ! ॥
स्वेदाण्डजोद्भिजो ये वै ये च जीवा
जरायुजाः ।
अस्यां निधाय सर्व्वांस्ताननाथान्
पाहि
सुव्रत ! ॥
युगान्तवाताभिहता यदा भवति
नौर्नृप ! ।
शृङ्गेऽस्मिन् मम राजेन्द्र ! तदेमां
संयमिष्यसि ॥
ततो लयान्ते सर्व्वस्य स्थावरस्य
चरस्य च ।
प्रजापतिस्त्वं भविता जगतः
पृथिवीपते ! ॥
एवं कृतयुगस्यादौ सर्व्वज्ञो धृतिमान्
नृपः ।
मन्वन्तराधिपश्चैव देवपूज्यो
भविष्यसि ॥"
इति मत्स्यपुराणे मनुविष्णुसंवादे
प्रथमे सर्गे
प्रथमोऽध्यायः ॥ विस्तारस्तु
श्रीभागवते ८ स्कन्धे
२४ अध्याये द्रष्टव्यः ॥ * ॥ तस्य
मन्त्रध्यानपूजादि
यथा, --
शङ्कर उवाच ।
"एक एवाभवन्मत्स्यावतारः कल्प
आदिमे ।
तस्य मन्त्रं प्रवक्ष्यामि
भुक्तिमुक्तिप्रदायकम् ॥
तारो नमो भगवते मं मत्स्याय रमां
वदेत् ।
द्वादशाक्षरमन्त्रोऽयं मुनिर्ब्रह्मा
समीरितः ॥
गायत्री च्छन्द उदितं देवता
मीनविग्रहः ।
भगवान् शर्व्वरीनाथो बीजं
श्रीपञ्चकीलकम् ॥
नाभ्यधो रोहितसम आकण्ठञ्च
नराकृतिः ।
इति मेरुतन्त्रे २६ प्रकाशः ॥

**मत्स्यकरण्डिका**, स्त्री, (मत्स्यस्यकरण्डिकेव) मत्स्य-

रक्षणपात्रम् । खालुइ इति भाषा ।
तत्पर्य्यायः ।
मत्स्यधानी २ कुवेणी ३ । इति
जटाधरः ॥

**मत्स्यगन्धा**, स्त्री, (मत्स्यस्येव गन्धो यस्याः ।

छान्दसादित्वाभावः ।) लाङ्गलीवृक्षः ।
स च
जलपिप्पली । इति जटाधरः
राजनिर्घण्टश्च ॥
व्यासमाता ॥ (अस्या उत्पत्तिकथा
यथा, एकदा
चेदीश्वरो वसुराजः
पितृगणनियोजितो मृगये-
प्सुर्वनं गत्वा स्वपत्नीं गिरिकां
ऋतुस्नातां स्मरन्
आस्ते । इत्यवसरे
कामोद्दीपकवसन्तवायुना
प्रेर्य्यमाणस्य तस्य रेतः प्रचस्कन्द ।
ततस्त-
द्वीर्य्यं सपत्रपुटे स्थापितवान् । एतत्तु
मृषा न
स्खलितमिति निश्चित्य अभिमन्त्र्य
च तत्
स्वपालित-श्येनेन प्रियायै प्रेषयामास
। तदा-
दाय उड्डीयमानस्य अन्येन च श्येनेन
सह
विहायसि युध्यतस्तस्य पदात् भ्रष्टं
कालिन्दीजले
पपात वीर्य्यम् । अथ तद्रेतः
ब्रह्मशापान्मत्स्य-
रूपिणी अद्रिका नाम्नी काचिदप्सरा
भक्षित-
वती धीवरास्तु तां पूर्णगर्भां मत्स्यीं
बवन्धुः
ततस्तेतु तस्या उदरात् एकां
स्त्रियमेकञ्च
रावकाकव खण्डराव इति लोके ।
"इक्षो रसो यः सम्पक्वो घनः किञ्चिद्रवान्वितः ।
मन्दं यत् स्यन्दते यस्मात्तन्मत्स्यण्डी निगद्यते ॥
मत्स्यण्डी मेदिनी बल्या लघ्वी पित्तानिला-
पहा ।
मधुरा बृंहणी वृष्या रक्तदोषपहा स्मृता ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥

**मत्स्यधानी**, स्त्री, (मत्स्या धीयन्ते । यत्रेति मत्स्य

+ धाञ् + ल्युट् ङीप् ।) मत्स्यरक्षार्थपात्रम् ।
खारयी इति खालुइ इति च भाषा । तत्प-
र्य्यायः । कुवेणी २ । इत्यमरः । १ । १० । १६ ॥
मत्स्यकरण्डिका ३ खारयिका ४ मत्स्यबन्धनी ५
कुवेणिः ६ कुवेणा ७ कुपिनी ८ कुपिनिः ९ ।
इतिभरतः ॥ सा स्वल्पा चेत् कुपिनी भवेत्
इति शब्दरत्नावली ॥

| | | |
|---|---|---|
| घनश्यामश्चतुर्ब्बाहुः<br>शङ्खचक्रगदाधरः ॥<br>शृङ्गीमत्स्यनिभो मूर्द्धा<br>लक्ष्मीवक्षोविराजितः ।<br>पद्मचिह्नितसर्व्वाङ्गः<br>सुन्दरश्चारुलोचनः ॥<br>जपेद्द्वादशसाहस्रं<br>त्रिमध्वाक्तैस्तिलैर्हुनेत् ।<br>प्रत्यहं तद्दशांशेन वैशाखे कार्त्तिके<br>तथा ।<br>माधे च मार्गशीर्षे च हविष्याशी<br>जितेन्द्रियः ॥<br>आरभ्य भाद्रबहुलमष्ट वा<br>षोडशाहकम् ।<br>लक्ष्मीमनुं जपेन्नित्यमिदञ्चापि<br>कलाशतम् ॥<br>तथैव होमः कर्त्तव्यस्तथान्यदिवसेषु<br>तु ।<br>तर्पयेद्द्वादशशतं तिलतण्डुलचन्दनैः<br>॥<br>आज्यन्तथा शताष्टौ च तर्पयेच्च<br>तथा श्रियम् । | पुरुषमुज्जह्रुः । तयोस्तु पुरुषो मत्स्यो<br>नाम<br>राजा, सा कन्या च मत्स्यगन्धेति<br>ख्यातासीत् ॥<br>हवुषा । तत्पर्य्यायो यथा, --<br>“तन्मस्ये प्रथमं फलं मत्स्यसदृशं<br>विस्रगन्धंद्वितीय-<br>मश्वत्थफलसदृशं मत्स्यगन्धं<br>तयोर्नामानि ।<br>“हवुषा पुष्पवस्ता च पराश्वत्थफला<br>मता ।<br>मत्स्यगन्धा प्लीहहन्त्री विषघ्नी<br>ध्वाङ्क्षनाशिनी ॥”<br>मत्स्याक्षी ॥ तत्पर्य्यायो यथा, --<br>“मत्स्याक्षी वाह्लिका मत्स्यगन्धा<br>मत्स्या-<br>दनीति च ।” | |

**मत्स्यनाशकः**, पुं, (नाशयतीति नश् + णिच् +

ण्वुल् । मत्स्यानां नाशकः । सदैव मत्स्यभक्षक-
तयास्य तथात्वम् ।) कुररपक्षी । इति भूरि-
प्रयोगः ॥ मत्स्यनाशकर्त्तरि त्रि ॥

**मत्स्यनाशनः**, पुं, (नाशयतीति नश् + णिच्

ल्युः । मत्स्यस्य नाशनः ।) कुररपक्षी । इति
हेमचन्द्रः । ४ । ४०१ ॥

**मत्स्यपित्ता**, स्त्री, (कटुरौहिणी । इत्यमरः ।

२ । ४ । ८६ ॥ (तथा चास्याः षर्य्यायाः ।
“कट्वी तु कटुका तिक्ता कृष्णभेदा कटुम्भरा ।
अशोका मत्स्यशकला चक्राङ्गी शकुलादनी ॥
मत्स्यपित्ता काण्डरुहा रोहिणी कटु-
रोहिणी ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**मत्स्यबन्धी**, [न्] पुं, (मत्स्यान् बन्धुं धर्त्तुं शील-

मस्य । मत्स्य + बन्ध + इनिः ।) धीवरः । यथा,
“कैवर्त्तो धीवरो दासो मत्स्यबन्धी च
जालिकः ॥
इति हलायुधः ॥”
(“अथान्येद्युस्तैर्यमकिङ्कराभैर्मत्स्यबन्धिभिः
प्रभात आगत्य जालैराच्छादितो ह्रदः ।”
इति पञ्चतन्त्रे । ५ । २९ ।)

**मत्स्यबन्धिनी**, स्त्री, (मत्स्यबन्धिन् + स्त्रियां

ङीप् ।) मत्स्यधानी । इति हलायुधः ॥

**मत्स्यरङ्कः**, पुं, (मत्स्यरङ्ग । पृषोदरादित्वात्

साधुः ।) मत्स्यरङ्गपक्षी । इति भूरिप्रयोगः ॥

**मत्स्यरङ्गः**, पुं, (मत्स्यान् रङ्गति भक्षणार्थं

तत्समीपं गच्छतीति । मत्स + रगि + अच् ।)
पक्षिविशषः । माछराङ्गा इति भाषा । (यथा,
“त्रिभुवनविदितो हा मत्स्यरङ्गे कलङ्कः ॥”
इत्युद्भटः ॥)
तत्पर्य्यायः । झम्पाशी २ जलमद्गुः ३ मणी-
चकः ४ । इति हारावली ॥ मत्स्याशनः ५
मीनरङ्कः ६ मत्स्यरङ्कः ७ सुचित्रकः ८ । इति
शब्दरत्नावली ॥

**मत्स्याक्षी**, स्त्री, (मत्स्यानां अक्षीणीव अक्षीणि

पुष्परूपाणि चक्षूषि यस्याः ।
मत्स्याक्षि +
“बहुब्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्
।” ५ ।
४ । ७३ । इति षच् ङीष् च ।) ब्राह्मी
। इत्य-
मरः । २ । ४ । १३७ ॥ सा च
सोमलतायाम् ।
ब्राह्मीशाके इति केचित् । इति भरतः
॥ यथा,
“ब्राह्मी वयस्था मत्स्याक्षी मीनाक्षी
सोम-
वल्लरी ।
मत्स्याक्षी शिशिरा रुच्या
ब्रणदोषक्षयापहा ॥”
इति राजनिर्घण्टः ॥
गण्डदूर्व्वा । इति राजनिर्घण्टः ॥
हिलमोचिका । ब्राह्मीशाकः । इति
रत्नमाला ॥
(गण्डदूर्ब्बार्थे पर्य्या यो यथा, --
“गण्डदूर्व्वा तु गण्डाली मत्स्याक्षी
शकुला-
क्षकः ॥”
मत्स्यादनी ॥ तत्पर्य्यायो गुणाश्च
यथा ।
मछेछी छछमछरी आइतिच । इति
लोके ।
“मत्स्याक्षी वाह्लिका मत्स्यगन्धा
मत्स्याद-
नीति च ।
मत्स्याक्षी ग्राहिणी शीता
कुष्ठपित्तकफास्र-
जित् ॥
लघुस्तिक्ता कषाया च स्वाद्वी
कटुविपाकिनी ।”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

कोटिकोटिभटान्यानि
सर्व्वर्द्धिसहितान्यपि ॥
ततः शैलं महादुर्गं तैः काशीपरितः
कृतम् ।
परिखा निकृतालिन्दा मत्स्योदर्य्या
जलाविला ॥
मत्स्योदरी द्विधा जाता बहिरन्तश्चरा
पुनः ।
तस्य तीर्थं महत् ख्यातं मिलितं
गाङ्गवारिणि ॥
यदा संहारमार्गेण गङ्गाम्भः प्रसरेदिह
तदा मत्स्योदरीतीर्थं लभ्यते
पुण्यगौरवात् ॥
सूर्य्याचन्द्रमसोः पर्व्व तदा कोटिगुणं
शतम् ।
सर्व्वपर्व्वाणि तत्रैव सर्व्वतीर्थानि तत्र वै
।
तत्रैव सर्व्वलिङ्गानि गङ्गा मत्स्योदरी
यतः ॥
मत्स्योदर्य्याञ्च ये स्नाता यत्र कुत्रापि
मानवाः ।
कृतपिण्डप्रदानास्ते न मातुरुदरेशयाः
॥
अविमुक्तमिदं क्षेत्रं
मत्स्याकारत्वमाप्नुयात् ।
परितः स्वर्धुनीवारि संसारे परिवीक्षते
॥
मत्स्योदर्य्यां कृतस्नाना ये नरास्ते
नरोत्तमाः ।
कृत्वापि बहुपापानि नेक्षन्ते भास्करेः
पुरीम् ॥
किं स्नात्वा बहुतीर्थेषु किं तप्त्वा
दुष्करं तपः ।
यदि मत्स्योदरीं स्नाताः कुतो गर्भभयं
ततः ॥
यत्र यत्र हि लिङ्गानि नृदेवर्षिकृतान्यपि
।
तत्र मत्स्योदरीं प्राप्य सुस्नातो
मोक्षभाजनम् ॥

**मत्स्यराजः**, पुं, (मत्स्येषु राजा श्रेष्ठः समा-

सान्तष्टच् ।) रोहितमत्स्यः । इति त्रिकाण्ड-

शेषः ॥ विराटराजः ।

("तस्य तद्वचनं श्रुत्वा मत्स्यराजः प्रतापवान् ।"

इति महाभारते । ४ । ६९ । २१ ।)

**मत्स्यविन्ना**, स्त्री, कटुका । इति वैद्यकम् ॥

**मत्स्यवेधनं**, क्ली, (मत्स्योविध्यतेऽनेनेति मत्स्य +

विध + करणे ल्युट् । मत्स्यानां वेधनमिति

वा ।) वडिशम् । इत्यमरः । १ । १० । १६ ॥

**मत्स्यवेधनी**, स्त्री, (मत्स्यवेधन + ङीप् ।) मद्गु-

पक्षी । इति जटाधरः ॥ वडिशम् । इति

शब्दरत्नावली ॥

**मत्स्यसन्तानिकः**, पुं, (मत्स्याना सन्तानिकात्र ।)

मत्स्यव्यञ्जनविशेषः । यथा, --

"दग्धोऽङ्गारे सलवणो वेशवारैरुपस्कृतः ।

सार्द्रकः कटुतैलेन मत्स्यसन्तानिको भवेत् ॥"

इति शब्दचन्द्रि का ॥

**मत्स्याङ्गी**, स्त्री, (मत्स्यानां अङ्गमिवाङ्गं यस्याः ।)

हिलमोचिका । इति त्रिकाण्डशेषः ॥

**मत्स्यादनी**, स्त्री, (मत्स्यैरद्यते इति मत्स्य +

अद + ल्युट् गौरादित्वात् ङीष् ।)

जलपिप्पली ।

इति राजनिर्घण्टः ॥ (तथा च पर्य्यायः ॥

"जलपिप्पल्यभिहिता शारदी

शकलादनी ।

मत्स्यादनी मत्स्यगन्धा लाङ्गलीत्यपि

कीर्त्तिता ॥"

मत्स्याक्षी । मछेछी इति लोके ॥

तत्पर्य्यायो

यथा, भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे

भागे ।

"मत्स्याक्षी वाह्लिकामत्स्य गन्धा

मत्साद-

नीति च ।")

**मत्स्याशनः**, पुं, (मत्स्यानश्नातीति मत्स्य +

अश + ल्युः ।) मत्स्यरङ्गपक्षी । इति

त्रिकाण्ड-

शेषः ॥ मत्स्यभक्षके त्रि ॥

**मत्स्यी**, स्त्री, (मत्स्य + जाते ङीष् ।) स्त्रीमत्स्य-

जातिः । इति मुग्धबोधव्याकरणम् ॥

**मत्स्योदरी**, स्त्री, (मत्स्यस्य उदरं उत्पत्तिस्थानं

यस्याः । मत्स्यगर्भे

जातत्वादस्यास्तथात्वम् ।)

सत्यवती सा च व्यासमाता । इति

जटाधरः ॥

(यथा देवीभागवते । २ । १ । ३८ ।

"कालिका वसुना दत्ता तरसा

जालजीविने ।

नाम्ना कालीति विख्याता तथा

मत्स्यो-

दरीति च ॥")

(मत्स्या उदरे गर्भे यस्याः ।)

काशीस्थतीर्थ-

सन्ति तीर्थान्यनेकानि

भूर्भुवःस्वर्गतान्यपि ।

न समानि परं तानि कोट्यंशेनापि

निश्चितम् ॥

इत्थं तीर्थं कृतं तेन विभो !

कैलासवासिना ।

गणाधिपेन सुमहत् सुमहोदरकर्म्मणा

॥"

इति काशीखण्डे ६९ अध्यायः ॥

**मथ** इ कुन्थे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

वधे-सक०-क्लेशे अक०-सेट् ।) इ

मन्थ्यते ।

कुन्थो वधक्लेशौ । इति दुर्गादासः ॥

**मथ** ज ए गाहे । इति कविकल्पद्रुमः ॥ भ्वा०-

पर०-सक०-सेट् ।) ज मन्थः मथः । ए

अम-

थीत् । इति दुर्गादासः ॥

**मथनं**, क्ली, (मथ्यते इति मथ + भावे ल्युट् ।)

विलोडनम् । मओया इति भाषा ।

यथा, --

"क्वाहं मन्दमतिः क्वेदं मथनं

क्षीरवारिधेः ।

किं तत्र परमाणुर्वै यत्र मज्जति मन्दरः

॥"

इति भागवते । १ । १ । १ । टीकायां

श्रीधरस्वामी ॥

अस्त्र विशेषः । यथा, हरिवंशे । २३६ ।

१० ।

"ऐषीकमस्त्रमैन्द्रञ्च आग्नेयं शैशिरं तथा

।

वायव्यं मथनं नाम कापालमथ किङ्करम्

॥")

**मथनः**, पुं, (मथति रोगानिति मथ + कर्त्तरि

ल्युः ।) गणिकारिकावृक्षः । इति

रत्नमाला ॥

(मथनकारके, त्रि ।

केशिमथनमुण्डमथन्यादि-

दर्शनात् ।)

| | | |
|---|---|---|
| | विशेषः ॥ यथा, --<br>“कैलासाद्रेः समायाताः<br>सप्तकोटिमिताः प्रभो ! ।<br>दुर्गाणि तैः कृतानीह सप्तस्वर्गसमानि<br>च ॥<br>सद्वाराणि सयन्त्राणि कवाटविकटानि<br>च । | **मथितं**, क्ली, (मथ + क्तः ।) निर्जलघोलम् । इत्य-<br>मरः । २ । ९ । ५३ ॥ यथा,<br>वृहत्संहितायाम् । ५० । २६ ।<br>“क्षारे कदल्यामथितेन युक्ते<br>दिनोषिते पायितमायसं यत् ॥”)<br>अस्य गुणाः । कफपित्तनाशकत्वम् ।<br>रोचनत्वम् ।<br>धातुपुष्टिदत्वञ्च । इति राजवल्लभः ॥<br>विलो-<br>डिते, त्रि ॥ (तथा च पर्य्यायान्तरं<br>प्रकारा-<br>न्तरञ्च यथा, --<br>“घोलन्तु मथितं<br>तक्रमुदस्विच्छच्छिकापिच । |

ससरं निर्ज्जलं घोल मथितन्त्वसरोदकम्
॥
तक्रं पादजलं प्रोक्तमुदास्वित्त्वर्द्धवारिकम्।
छच्छिका सारहीना स्यात् स्वच्छा प्रचुर-
वारिका ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे द्बितीये भागे
॥
“ससरं निर्जलं घोलं मथितं सरवर्ज्जितम्
।”
इति च हारीते प्रथमस्थाने अष्टमेऽध्याये ॥)

**मथुरा**, स्त्री, (मथ्यते पापराशिर्य्या इति । मथ +
“मन्दिवाशीत्यादि ।” उणा० । १ । ३९ ।
इति उरच् ।) स्वनामख्यातपुरी । अधुना
आगरा इति ख्यातस्याग्रवणस्य नगरम् ।
(यथा, रघौ । ६ । ४८ ।
“यस्यावरोधस्तनचन्दनानां
प्रक्षालनाद्वारिविहारकाले।
कलिन्दकन्या मथुरां गतापि
गङ्गोर्म्मिसंसक्तजलेव भाति ॥”)
तत्पर्य्यायः । मधुपघ्नम् २ । इति
त्रिकाण्डशेषः ॥
मधुपुरी ३ मधुरा ४ । इति शब्दरत्नावली ॥
सा च मोक्षदायकतीर्थम् । यथा, --
“अयोध्या मथुरा माया काशी काञ्ची अव-
न्तिका ।
पुरी द्वारवती चैव सप्तैता मोक्षदायिकाः ॥
अयोध्या रामनगरी मथुरा कृष्णपालिता ।
एतास्तु पृथिवीमध्ये न गण्यन्ते कदाचन ॥
श्रीरामधनुरग्रस्था अयोध्या सा महापुरी ।
मथुरा केशवोत्सृष्टसुदर्शनविधारिता ॥”
इत्यादिभूतशुद्धितन्त्रम्॥ * ॥
तत्र विष्णुदर्शनमाहात्म्यं यथा,
“यज्यैष्ठशुक्लद्वादश्यां स्नात्वा वै
यमुनाजले ।
मथुरायां हरिं दृष्ट्वा प्राप्नोति परमां गतिम् ॥
यमुनासलिले स्नातः पुरुषो मुनिसत्तम ! ।
ज्येष्ठामूलामले पक्षे द्वादश्यामुपवासकृत् ॥
समभ्यर्च्च्याच्युतं सम्यक् मथुरायां
समाहितः ।

सा रम्या च सुशस्ता च जन्मभूमिः
प्रिया मम ॥
शृणु देवि ! यथा स्तौमि मथुरां
पापहारि-
णीम् ।
तन्निवासी नरो याति मोक्षं नास्त्यत्र
संशयः ॥
महामाध्यां प्रयागे तु यत् फलं लभते
नरः ।
तत् फलं लभते देवि ! मथुरायां दिने
दिने ॥
कार्त्तिक्याञ्चैव यत् पुण्यं पुष्करे तु
वसुन्धरे ! ।
तत् फलं लभते देवि ! मथुरायां दिने
दिने ॥
पूर्णे वर्षसहस्रे तु वाराणस्यान्तु यत्
फलम् ।
तत् फलं लभते देवि ! मथुरायां क्षणेन
हि ॥
मथुराञ्च परित्यज्य योऽन्यत्र कुरुते
रतिम् ।
मूढो भ्रमति संसारे मोहितो मायया
मम ॥
यः शृणोति वरारोहे ! माथुरं मम
मण्डलम् ।
अन्येनोच्चारितं शंसन् सोऽपि पापैः
प्रमुच्यते ॥
पृथिव्यां यानि तीर्थानि
आसमुद्रसरांसि च ।
मथुरायां गमिष्यन्ति सुप्ते चैव जनार्द्दने
॥
मथुरां समनुप्राप्य श्राद्धं कृत्वा
यथाविधि ।
तृप्तिं यान्तीह पितरो यावत्
स्थित्यग्रजन्मनः ॥
ये वसन्ति महाभागे ! मथुरामितरे
जनाः ।
तेऽपि यान्ति परां सिद्धिं मत्प्रसादान्न
संशयः ॥

न च यज्ञैर्न तपसा न ध्यानैर्न च संयमैः ।
तत् फलं लभते देवि ! स्नातो विश्रान्तिसंज्ञके
॥
कालत्रयन्तु वसुधे ! यः पश्यति गतश्रमम् ।
कृत्वा प्रदक्षिणे द्वे तु विष्णुलोकं स गच्छति ॥
अस्ति चान्यत् परं गुह्यं सर्व्वसंसारमोक्षणम् ।
यस्मिन् स्नातो नरो देवि ! मम लोके महीयते
॥
प्रयागं नाम तीर्थन्तु देवानामपि दुर्लभम् ।
तस्मिन् स्नातो नरो देवि ! अग्निष्टोमफलं
लभेत् ॥
इन्द्रलोकं समासाद्य नरो वै तत्र मोदते ।
अथात्र मुञ्चते प्राणान् मम लोकं स गच्छति ॥
तथा कनखलं तीर्थं नाम गुह्यं परं मम ।
स्नानमात्रेण तत्रापि नाकपृष्ठे स मोदते ॥
अस्ति क्षेत्रं परं गुह्यं तिन्दुकं नाम नामतः ।
तस्मिन् स्नातो नरो देवि ! मम लोके महीयते
॥
अस्मिंस्तीर्थे पुरावृत्तं तच्छृणुष्व वसुन्धरे ! ।
पाञ्चालविषये देवि ! काम्पिल्यञ्च पुरोत्तमम् ॥
धनधान्यसमायुक्तं ब्रह्मदत्तेन पालितम् ।
तस्मिंस्तु वसते देवि ! तिन्दुको नाम नामतः
॥
तस्मिंस्तु वसतस्तस्य नापितस्य पुरोत्तमे ।
कालेन महता तस्य कुटुम्बः क्षयमागतः ॥
क्षीणे कुटुम्बे तु तदा सुभृशं दुःखपीडितः ।
सर्व्वसङ्गपरित्यागी यो गच्छन् मथुरापुरीम् ।
ब्राह्मणावसथे सोऽपि वसमानो वसुन्धरे ! ॥
तत्र कर्म्मशतं कृत्वा स्नात्वैव यमुनां नदीम् ।
तत्र दानञ्च कुरुते नित्यकालं दृढव्रतः ॥
ततः कालेन महता पञ्चत्वं समुपागतः ।
तस्य तीर्थप्रभावेण जातोऽसौ ब्राह्मणोत्तमः ॥
तस्मिन् वरगृहे देवि ! ब्राह्मणो योगिनां वरः ।
जातिस्मरो महाप्राज्ञो विष्णुभक्तो वसुन्धरे ! ॥
तस्य तीर्थप्रभावेण प्राप्ता मुक्तिः सुदुर्लभा ॥
ततः परं सूर्य्यतीर्थं सर्व्वपापप्रमोचनम् ।
वैरोचनेन बलिना सूर्य्यस्त्वाराधितः पुरा ॥
भ्रष्टराज्येन बलिना धनकामेन वै पुरा ।
ऊद्ध्र्वबाहुर्न्निराहारस्तप्तवानुत्तमं तपः ॥

अश्वमेधस्य यज्ञस्य प्राप्नोत्यविकलं
फलम् ॥
कश्चिदस्मत्कुले जातः
कालिन्दीसलिलाप्लुतः।
अर्च्चयिष्यति गोविन्दं मथुरायामुपोषितः ॥
ज्येष्ठामूलसिते पक्षे येनैवं वयमप्युत ।
परामृद्धिमवाप्स्यामस्तारिताःसकुलोद्भवैः
॥"
इति विष्णुपुराणे ६ अंशे ८ अध्यायः ॥ *
॥
तस्या माहात्म्यं यथा, --
वराह उवाच ।
"न विद्यते च पाताले नान्तरीक्षे न मानुषे ।
समत्वं मथुराया हि प्रियं मम वसुन्धरे ! ॥"
सूत उवाच ।
"तच्छ्रुत्वा वचनं तस्य प्रणम्य शिरसा तदा
।
पुण्यानां परमं पुण्यं पृथ्वी वचनमब्रवीत् ॥
पृथिव्युवाच ।
पुष्करं नैमिषं चैव पुरी वाराणसी तथा ।
एता हित्वा महाभाग ! मथुरां किं प्रशंससि
॥
वराह उवाच ।
शृणु कात्स्न्र्येन वसुधे ! कथ्यमानं मयानधे !
।
मथुरति च विख्यातं नास्ति क्षेत्रं परं मम ।
कुब्जाम्रके शौकरवे मथुरायां विशेषतः
।
विना सांख्येन योगेन मुच्यते नात्र
संशयः ॥
मथुरायां महापुर्य्यां ये वसन्ति
शुचिव्रताः ।
बलिभिक्षाप्रदातारो ये वा ते
नरविग्रहाः ॥
भविष्यामि वरारोहे ! द्वापरे
युगसंस्थिते ।
ययातिभूपवंशाच्च क्षत्त्रियः
कुलवर्द्धनः ॥
भविष्यामि वरारोहे ! मथुरायां न
संशयः ।
मूर्त्तिं चतुर्व्विधां कृत्वा स्थास्यामि
ऋषिभिः
स्तुतः ॥
स्थास्यामि वत्सरशतं युद्धेषु
कृतनिश्चयः ।
एका चन्दनसङ्काशा द्वितीया
कनकप्रभा ॥
अशोकसदृशा चान्या अन्या
चोत्पलसन्निभा ।
तत्र गुह्यानि नामानि भविष्यन्ति मम
प्रिये ! ॥
पुण्यानि च पवित्राणि
संसारोच्छेदनानि च ।
यत्राहं घातयिष्यामि द्वात्रिंशति
वसुन्धरे ! ॥
दैत्यान् घोरान् महाभागे ! कंसादीन्
घोर-
दर्शनान् ।
यमुना यत्र सुवहा नित्यं सन्निहिता
ध्रुवम् ॥
वैवस्वतस्वसा रम्या यमुना यत्र
विश्रुता ।
तां नदीं यमुनां गङ्गां प्रयागे
सङ्गविश्रुताम् ॥
गङ्गाशतगुणा पुण्या मथुरे मम मण्डले
।
साग्रं संवत्सरं देवि ! ततः काममवाप्नुयात् ।
तस्य प्रसन्नो भगवान् द्युमणिः प्रत्यभाषत ॥
किं कारणं बले ! ब्रूहि तपस्यसि महत्तपः ॥"
बलिरुवाच ।
"भ्रष्टराज्योऽस्मि देवेश ! पाताले
निवसाम्यहम् ।
वित्तेनापि विहीनस्य कुटुम्बभरणं कुतः ॥
मुकुटात्तस्य वै सूर्य्यो ददौ चिन्तामणिं ततः ।
चिन्तामणिं समासाद्य पातालमगमत्तदा ॥
तस्मिंस्तीर्थे नरः स्नात्वा सर्व्वपापैः प्रमुच्यते
।
तत्रापि मुञ्चते प्राणान् मम लोकं स गच्छति ॥
आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्रसूर्य्ययोः ।
तस्मिन् स्नातो नरो देवि ! राजसूयफलं लभेत्
॥
यत्र ध्रुवेण सन्तप्तं इच्छया परमं तपः ।
अत्र वै स्नानमात्रेण ध्रुवलोके महीयते ॥
तत्रापि मुञ्चते प्राणान् मम लोके महीयते ॥
ध्रुवतीर्थे च वसुधे यः श्राद्धं कुरुते नरः ।
पितॄं स्तारयते सर्व्वान् पितृपक्षे विशेषतः ॥
दक्षिणे ध्रुवतीर्थस्य तीर्थराजं प्रकीर्त्तितम् ।

| | | |
|---|---|---|
| | यमुना विश्रुता देवि ! नात्र कार्य्या विचारणा ॥<br>तत्र तीर्थानि गुह्यानि भविष्यन्ति ममानघे ! ।<br>येषु स्नानपरो देवि ! मम लोके महीयते ॥<br>अथात्र मुञ्चते प्राणान् मम कर्म्मपरायणः ।<br>न जायते स मर्त्येषु जायते च चतुर्भुजः ॥<br>अविमुक्ते नरः स्नातो मुक्तिं प्राप्नोत्यसंशयम् ।<br>तथात्र मुञ्चते प्राणान्मम लोकं स गच्छति ।<br>विश्रान्तिसंज्ञकं नाम तीर्थं त्रैलोक्यविश्रुतम् ।<br>यस्मिन् स्नातो नरो देवि ! मम लोके महीयते ॥<br>सर्व्वतीर्थेषु यत् स्नानं सर्व्वतीर्थेषु यत् फलम् ।<br>तत् फलं लभते देवि ! दृष्ट्वा देवं गतश्रमम् ॥ | |

तस्मिन् स्नातो नरो देवि ! मम लोके महीयते ।
तत्राथ मुञ्चते प्राणान्मम लोकं स गच्छति ॥
तद्दक्षिणे महादेवि ! ऋषितीर्थं परं मम ।
तत्र स्नातो नरो देवि ! ऋषिलोकं प्रपद्यते ॥
अथात्र मुञ्चते प्राणान्मम लोके महीयते ।
दक्षिणे ऋषितीर्थस्य मोक्षतीर्थं परं मम ॥
स्नानमात्रेण वसुधे ! मोक्षं प्राप्नोति मानवः ।
तत्राथ मुञ्चते प्राणान् मम लोके महीयते ॥
तत्रैव कोटितीर्थं हि तीर्थानामपि दुर्लभम् ।
तत्र स्नानेन दानेन मम लोके महीयते ॥
कोटितीर्थे नरः स्नातः सन्तर्प्य पितृदेवताः ।
तारिताः पितरस्तेन तथैव प्रपितामहाः ॥
कोटितीर्थे नरः स्नातो ब्रह्मलोके महीयते ।
तत्रैव वायुतीर्थन्तु पितॄणामपि दुर्लभम् ॥
पिण्डं दद्यात्तु वसुधे ! पितृलोकं स गच्छति ।
गयापिण्डप्रदानेन यत् फलं लभते नरः ॥
तत् फलं लभते देवि ! ज्यैष्ठे दानान्न संशयः ।
द्वादशैतानि तीर्थानि देवानां दुर्लभानि च ॥
स्नानं दानं जपो होमः सहस्रगुणितं भवेत् ।

तत्पर्य्यायः । दानम् २ ॥ (मद्यते इति । मद् + “मदोऽनुपसर्गे ।” ३ । ३ । ६७ । इति अप् ।) हर्षः । (यथा, ऋग्वेदे । १ । ४ । २ ।
“उप नः सवनागहि सोमपाः पिब गोदा इद्रेवतो मदः ॥” “मदो हर्षः ।” इति तद्भाष्येसायनः ।) तत्पर्य्यायः । आमोदः २ । इत्यमरः । ३ । २ । १२ ।) रेतः । कस्तूरी । (पर्य्यायो यथा, --
“मृगनाभिर्मृगमदो मदः कस्तूरिकाण्डजः ॥”
इति वैद्यकरत्नमालायाम् ॥
रोगविशेषः । उन्मादस्य प्रथमावस्थायां यथा,
“स चाप्रवृद्धस्तरुणो मदसंज्ञां बिभर्त्ति च ।”
इति माधवकृतरुग्विनिश्चये उन्मादाधिकारे ॥
विशेषोऽस्य यथा, --
यदा तु रक्तवाहीनि रससंज्ञावहानि च ।
पृथक् पृथक्समस्ता वा स्रोतांसि कुपिता मलाः ॥
मलिनाहारशीलस्य रजोमोहावृतात्मनः ।
प्रतिहत्यावतिष्ठन्ते जायन्ते व्याधयस्तदा ॥
मदमूर्च्छायसंन्यासास्तेषां विद्याद्विचक्षणः ।
यथोत्तरं बलाधिक्यं हेतुलिङ्गोपशान्तिषु ॥
दुर्ब्बलश्चेतसः स्थानं यदा वायुः प्रपद्यते ।
मनो विक्षोभयन् जन्तोः संज्ञां संमोहयेत्तदा ॥
पित्तमेवं कफश्चैवं मनो विक्षोभयन् नृणाम् ।
संज्ञां नयत्याकुलतां विशेषश्चात्र वक्ष्यते ॥
स्वप्नानल्पद्रुताभाषञ्चलस्खलितचेष्टितम् ।
विद्याद्वातमदाविष्टं रूक्षश्यावारुणाकृतिम् ॥
सक्रोधपरुषाभाषं संप्रहारकलिप्रियम् ।
विद्यात् पित्तमदाविष्टं रक्तपीतासिताकृतिम् ॥
स्वल्पसम्बन्धवचनं तन्द्रालस्यसमन्वितम् ।
विद्यात् कफमदाविष्टं पाण्डुं प्रध्यानतत्परम् ॥
सर्व्वाण्येतानि रूपाणि सन्निपातकृते मदे ।
जायन्ते शाम्यति त्वाशु मदो मद्यमदाकृतिः ॥
यश्च मद्यमदः प्रोक्तो विषजो रौधिरश्च यः ।
सर्व्व एते मदान्र्त्ते वातपित्तकफाश्रयात् ॥”
इति चरके सूत्रस्थाने चतुर्व्विंशेऽध्याये ॥) गर्व्वः । इति मेदिनी । दे, १२ ॥ (यथा, भारवौ । २ । ४९ ।
“मदमानसमुद्धतं नृपं
न वियुङ्क्ते नियमेन मूढता ॥”)

**मदकटः**, पुं, (मदं कटति प्रकटयतीति । कट् + अच् ।) षण्डः । षाँड़ इति भाषा ॥ यथा ।
इड्चरो इड्वरौ गोपतिः षण्डो वृषो मदकटो हलः । इति हेमचन्द्रः । ४ । ३२५ ॥

**मदकलः**, पुं, (मदेन कलोऽव्यक्तमधुरध्वनिर्य्यस्य ।) मत्तहस्ती । तत्पर्य्यायः । मदोत्कटः २ । इत्यमरः । २ । ८ । ३५ ॥ अव्यक्तप्रलापी । इति शब्दरत्नावली ॥ मदाव्यक्तवात्तिनि त्रि । इति मेदिनी । ले, १५९ ॥ (यथा, उत्तरचरिते २ अङ्के ।
“मदकलमयूरकण्ठच्छविभिरवकीर्णानि ।”)

**मदगन्धः**, पुं, (मदस्य दानस्येव गन्धोऽस्य ।) सप्तच्छदवृक्षः । इति राजनिर्घण्टः ॥ (विवरणन्तु सप्तच्छदशब्दे ज्ञेयम् ।)

**मदगन्धा**, स्त्री, (मदः मादनः गन्धोऽस्याः ।) मदिरा । अतसी । इति राजनिर्घण्टः ॥

**मदघ्नी**, स्त्री, (मदं मत्ततां हन्तीति । मद् + हन् टक् ङीप् ।) पूतिका । इति जटाधरः ॥

**मदनः**, पुं, (मदयतीति । मद् + णिच् ल्युः ।) कामदेवः । इत्यमरः । १ । १ । २६ ॥
तस्य नाम्नां व्युत्पत्तिर्यथा । ऋषय ऊचुः ।
“यस्मात् प्रमथ्य चेतस्त्वं जातोऽस्माकं तथा विधेः ।
तस्मान्मन्मथनाम्ना त्वं लोके गेयो भविष्यसि ॥
जगत्सु कामरूपस्त्वं त्वत्समो न हि विद्यते ।
अतस्त्वं कामनाम्नापि ख्यातो भव मनोभव ! ॥
मदनान्मदनाख्यस्त्वं शम्भोर्दर्पात् सदर्पकः ।
तथा कन्दर्पनाम्नापि लोके ख्यातो भविष्यसि ॥”
इति कालिकापुराणे २ अध्यायः ॥
ब्रह्मणस्तस्योत्पत्तिर्य्यथा, --
“प्रहृष्टमानसः पुत्त्रं कन्यैकाञ्च ससर्ज्ज ह ।

एषां स्मरणमात्रेण सर्व्वपापैः
प्रमुच्यते ॥
श्रुत्वा तीर्थस्य माहात्म्यं सर्व्वान्
कामानवा-
प्नुयात् ॥”
इत्यादि वराहपुराणे
मथुरातीर्थप्रभावः ॥ * ॥
इतः प्रभृति सप्तविंशाध्यायेषु
मथुरामाहात्म्यं
ज्ञेयम् ॥

**मथुरेशः**, पुं, (मथुराया ईशः ।) श्रीकृष्णः । इति

शब्दरत्नावली ॥

**मथूरा**, स्त्री, (मथ् + बाहुलकात् ऊरः टाप् ।)

मथुरा । इति द्विरूपकोषः ॥

**मद**, इ ङ स्वप्ने । जाड्ये । मदे । मोदे । स्तुतौ ।

गतौ । इति कविकल्पद्रुमः ॥
(भ्वा०-आत्म०-
स्वप्ने जाड्ये मद मोदे अक०-
स्तुतौ गतौ च
सक०-सेट् ।) मन्द्यते । ङ मन्दते
जनः स्वपिति
जडो भवति माद्यति मोदते स्तौति
गच्छति
वा इत्यर्थः । इति दुर्गादासः ॥

**मद**, ई भ य इर् ञि हर्षे । इति कविकल्पद्रुमः ॥

दिवा०-पर०-अक०-सेट् ।) ई ञि
मत्तोऽस्ति ।
भ य माद्यति । इर् अमदत्
अमादीत् ।
अस्मात् पुषादित्वात् नित्यं ङ
इत्यन्ये । इति
दुर्गादासः ॥

**मद**, क ङ तृप्तियोगे । इति कविकल्पद्रुमः ॥

(चुरा०-आत्म०-सक०-सेट् ।) क
ङ मनो माद-

मद्यम् । क्षैव्यम् । मत्ततेति यावत् । इति हेम-
चन्द्रः । २ । २२६ ॥ (यया, मनौ । ७ । ४७ ।
“मृगयाक्षो दिवास्वप्नः परिवादः स्त्रियो मदः ।”
“तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः
॥”)
नदः । कल्याणवस्तु । इति धरणिः ॥ * ॥
मदलक्षणं यथा, --
“अहं महात्मा धनवान् मत्तुल्यः कोऽस्ति भूतले
।
इति यज्जायते चित्तं मदः प्रोक्तः स कोविदैः
॥”
इति पाद्मे क्रियायोगसारे १६ अध्यायः ॥
तस्य उत्पत्तिर्यथा ।
“बुर्द्धेर्मोहः समभवदहङ्कारादभून्मदः ।”
इति मात्स्ये ३ अध्यायः ॥
(दानवभेदः । यथा, हरिवंशे । ३ । ८६ ।
“असिलोमा सुकेशी च शटश्च बलको मदः ॥”

हृष्टस्य कामिनः पुत्त्रः कामदेवो बभूव ह ॥
कन्या षोडशवर्षीया रत्नभूषणभूषिता ॥
उवाच पुत्त्रं स विधिः सुदीप्तं पुरतः स्थितम् ।
दुर्न्निवार्य्यं मत्कलांशं स्वात्मारामं मनोहरम् ॥
ब्रह्मोवाच ।
स्त्रीपुंसोः क्रीडनार्थाय मुदा त्वञ्च विनिर्म्मितः
।
हृदि योगेन सर्व्वेषामधिष्ठानं करिष्यसि ॥
सम्मोहनं समुद्वेगबीजं स्तम्भितकारणम् ।
उन्मत्तबीजं ज्वलनं शश्वच्चेतनहारकम् ॥
प्रगृह्यैतान्मया दत्तान् सर्व्वान् सम्मोहनं कुरु ।
दुर्निवार्य्यो मम वराद्भव वत्स ! भवेषु च ॥
बाणान्दत्त्वैवमुक्त्वा च प्रहृष्टश्च जगद्विधिः ।
दृष्ट्वा वाचं दुहितरं वरं दातुं समुद्यतः ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ३५
अध्यायः ॥
(योगाचार्य्यरूपः शिवस्यावतारविशेषः ।
यथा, शिवपुराणे वायुसंहितायाम् । २ । १० ।
१ -- २ ।
श्रीकृष्ण उवाच ।
“युगावर्त्तेषु सर्व्वेषु योगाचार्य्यछलेन तु ।
अवताराणि सर्वस्य शिष्यांश्च भगवन् ! वद
॥”
उपमन्युरुवाच ।
“श्वेतः सुतारो मदनः सुहोत्रः कंक एव च ॥”
महादेवः । मदयति भक्तानां मनः इति

| | | |
|---|---|---|
| यते यस्य शास्त्राभ्यासरसायनात् । इति दुर्गा- दासः ॥<br>**मद**, म गर्व्वे । म्लेपने । इति कविकल्पद्रुमः ॥<br>(भ्वा०-पर०-अक०-सेट् ।) गर्व्वोऽहङ्कारः । ग्लेपनं दैन्यम् । म मदयति नीचं सम्पत्तिः । मदयति शत्रुं शूरः । इति दुर्गादासः ॥<br>**मदः**, पुं, (मदयतीति । मद् + अच् ।) हस्ति- गण्डजलम् । (यथा, भारवौ । २ । १८ । "मदसिक्तमुखैर्मृगाधिपः करिभिर्व्वर्त्तयते स्वयं हतैः ।") | | |

मद + ल्युः । मनसि आनन्दजनकत्वादस्य तथा-
त्वम् । यथा, महाभारते । १३ । १७ । ६९ ।
"उन्मादो मदनः कामो ह्यश्वत्थोऽर्थकरो यशः ॥"
मत्तता । वरारोहाणां कामिनीनां भावविशेषः इति यावत् । यथा, महाभारते । ३ । ४६ । १३ ।
"सीधुपानेन चाल्पेन तुष्टाथ मदनेन च ।
विलासनैश्च विविधैः प्रेक्षणीयतराभवत् ॥")
वसन्तः । धुस्तूरः । सिक्थकम् । इति मेदिनी ।
मे । १०३ ॥ वृक्षभेदः । मयना इति भाषा ।
तत्पर्य्यायः । पिचुकः २ मुचुकुन्दः ३ कण्टकी ४ ।
इति रत्नमाला ॥ पिण्डीतकः ५ । (तथाचास्य
पर्य्यायान्तरं गुणाश्च ।
"मदनः छर्द्दनः पिण्डो नटः पिण्डीतकस्तथा ।
करहाटी मरुवकः शल्यको विषपुष्पकः ॥
मदनो मधुरस्तिक्तो वीर्य्योष्णो लेखनो लघुः ।
वान्तिकृद्विद्रधिहरः प्रतिश्यायव्रणान्तकः ॥
रूक्षः कुष्ठकफानाहशोथगुल्मव्रणापहः ॥"
धुस्तूरार्थे पर्य्यायो यथा, --
"धत्तूरधूर्त्तधुत्तूरा उन्मत्तः कनकाह्वयः ।
देवता कितवस्तूरी महामोहः शिवप्रियः ॥
मातुलो मदनश्चास्य फले मातुलपुत्त्रकः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
मरुवकः ६ श्वसनः ७ करहाटकः ८ शल्यः ९ ।
इत्यमरः । २ । ४ । ५२ -- ५३ ॥ भ्रमरः ।
इति जटाधरः ॥ माषः । इति हेमचन्द्रः ॥
खदिरवृक्षः । इति शब्दचन्द्रिका ॥ मङ्कोठ-
मध्वाधारो मदनकं मधूषितमपि स्मृतम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितोये भागे ॥)

**मदनकाकूरवः**, पुं, (मदनेन हेतुना काकुः काम-
जन्यो विकृतो रवः अस्फुटध्वनिर्यस्य ।) पारा-
वतः । इति राजनिर्घण्टः ॥

**मदनगोपालः**, पुं, (मदनश्चासौ गोपालश्चेति ।
भक्तचित्तोन्मादकारित्वादस्य तथात्वम् ।)
श्रीकृष्णः । यथा, --
"वन्दे मदनगोपालं कैशोराकारमद्भुतम् ।"
इति पाद्मे पातालखण्डे ९ अध्यायः ॥

**मदनचतुर्द्दशी**, स्त्री, (मदनोत्सवात्मिका चतुर्द्दशी ।)
चैत्रशुक्लचतुर्द्दशी । यथा । अथ मदनचतुर्द्दशी
तत्र मदनस्य पूजा कार्य्या । स्कन्दपुराणसौरा-
गमयोः ।
"मधुमासे तु संप्राप्ते शुक्लपक्षे चतुर्द्दशी ।
प्रोक्ता मदनभुञ्जीति सिद्धिदा तु महोत्सवे ॥
पूजयिष्यन्ति ये मर्त्यास्तदङ्गभवपल्लवैः ।
ते यान्ति परमं स्थानं मदनस्य प्रभावतः ॥
चैत्रे मासि चतुर्द्दश्यां मदनस्य महोत्सवः ।
जुगुप्सितोक्तिभिस्तत्र गीतवाद्यादिभिर्नृणाम् ।
भगवांस्तुष्यते कामः पुत्त्रपौत्त्रसमृद्धिदः ॥
वलिं प्रति भगवद्वाक्यम् ।

**मदनद्वादशी**, स्त्री, (मदनपूजाविषयिणी द्वादशी ।)
चैत्रशुक्लद्वादशी । अत्र मदनव्रतं कार्य्यम् । यथा,
ऋषय ऊचुः ।
"श्रोतुमिच्छामहे सूत ! मदनद्वादशीव्रतम् ।
सुतानेकोनपञ्चाशत् येन लेभे दितिः पुनः ॥
सूत उवाच ।
यद्वशिष्ठादिभिः पूर्ब्बं दितेः कथितमुत्तमम् ।
विस्तरेणैतदेवेदं मत्सकाशान्निबोधत ॥
चैत्रे मासि सिते पक्षे द्वादश्यां नियतव्रतः ।
स्थापयेदव्रणं कुम्भं सिततण्डुलपूरितम् ॥
नानाफलयुतं तद्वदिक्षुदण्डसमन्वितम् ।
सितवस्त्रयुगच्छन्नं सितचन्दनचर्च्चितम् ॥
नानाभक्ष्यफलोपेतं सहिरण्यञ्च शक्तितः ।
ताम्रपात्रं शुभोपेतं तस्योपरि निवेदयेत् ॥
तस्मादुपरि कामन्तु कदलीदलसंस्थितम् ।
कुर्य्याच्छर्करयोपेतां रतिं तस्य च वामतः ॥
गन्धधूपं ततो दद्यात् गीतवाद्यञ्च कारयेत् ।
तदभावे कथां कुर्य्यात् कामकेशवयोर्नरः ॥
कामनाम्ना हरेरर्च्चां स्नापयेद् गुडवारिणा ।
शुक्लपुष्पाक्षततिलैरर्च्चयेन्मधुसूदनम् ॥
कामाय पादौ संपूज्य जंघे सौभाग्यदाय च ।
ऊरू स्मरायेति पुनर्मन्मथायेति वै कटिम् ॥
स्वच्छोदरायेत्युदरं अनङ्गायेत्युरो हरेः ।
मुखं पद्ममुखायेति बाहू पञ्चशराय वै ॥
नमः सर्व्वात्मने मौलिमर्च्चयेदिति केशवम् ।
ततः प्रभाते तं कुम्भं ब्राह्मणाय निवेदयेत् ॥
ब्राह्मणान् भोजयेद्भक्त्या स्वयञ्च लवणादृते ।
भुक्त्वाथ दक्षिणां दद्यादिमं मन्त्रमुदीरयेत् ॥
प्रीयतामत्र भगवान् कामरूपी जनार्द्दनः ।
हृदये सर्व्वभूतानामानन्दो यो विधीयते ॥
अनेन विधिना सर्व्वं मासि मासि समाचरेत् ।
उपवासी त्रयोदश्यामर्च्चयेद् विष्णुमव्ययम् ॥
फलमेकञ्च संप्राश्य द्वादश्यां भूतले स्वपेत् ।
ततस्त्रयोदशे मासि घृतं धेनुसमन्वितम् ॥
शय्यां दद्यादनङ्गाय सर्व्वोपस्करसंयुताम् ।
काञ्चनं कामदेवञ्च शुक्लां गाञ्च पयस्विनीम् ॥

वृक्षः । वकुलवृक्षः । वृक्षविशेषः । मयना-
फल इति भाषा । तत्पर्य्यायः । शल्यः २
कैटर्य्यः ३ पिण्डः ४ धाराफलः ५ तगरः ६
करहाटः ७ पिण्डीतकः ८ श्वसनः ९ मरु-
वकः १० । अस्य गुणाः । वमिकारकत्वम् ।
तिक्तत्वम् । उष्णवीर्य्यत्वम् । लेखनत्वम् ।
लघुत्वम् ।
रूक्षत्वम् ।
कुष्ठकफानाहशोफगुल्मब्रणापहत्वञ्च ।
इति राजनिर्घण्टः ॥ आलिङ्गनविशेषः ।
तल्ल-
क्षणम् । नायको नायिकायाः कण्ठे हस्तं
दत्त्वा
द्वितीयहस्तं तस्या मध्यदेशे दत्त्वा
यदाश्लिषति ।
इति कामशास्त्रम् ॥ ("अथ मयनम् ।" मम्
इति भाषा ।
"मयनन्तु मधूच्छिष्टं मधुशेषञ्च सिक्थकम् ।
मध्वाधारो मदनकं मधूषितमपि स्मृतम् ॥
मदनं मृदुसुस्निग्धं भूतघ्नं ब्रणरोपणम् ।
भग्नतन्धानकृद्वातकुष्ठवीसर्परक्तजित् ॥"
इति च भावप्रकाशस्य पूर्व्वखण्डे द्वितीये
भागे ॥
मण्डलिसर्पान्तर्गतसर्पविशेषः ॥ "शिशुको
मदनः
पालिंहिरः इत्यादि ।" इति सुश्रुते
कल्पस्थाने
चतुर्थेऽध्याये ॥)

**मदनकः**, पुं, (मदयतीति मद + णिच् + ल्युः स्वार्थे
कः ।) दमनकवृक्षः । इति रत्नमाला ॥
(सिक्थकार्थे क्ली । तत्पर्य्यायो यथा, --
"मयनन्तु मधूच्छिष्टं मधुशेषञ्च सिक्थकम् ।
न मानयन्ति ये पर्व्व मादनं
मानवाधमाः ।
तेषां पुण्यं फलं दत्तं मया ते
चैत्रमासिकम् ॥
देवलः ।
चैत्रशुक्लचतुर्द्दश्यां यः
स्नायाच्छिवसन्निधौ ।
पिशाचत्वं न तस्य स्यात् गङ्गायाञ्च
विशेषतः ॥"
इति तिथितत्त्वम् ॥

**मदनत्रयोदशी**, स्त्री, (मदनपूजार्था त्रयोदशी ।)
चैत्रशुक्लत्रयोदशी । तत्र मदनस्य व्रतं
कर्त्तव्यम् ।
यथा भविष्ये ।
"चैत्रशुक्लत्रयोदश्यां मदनं
दमनात्मकम् ।
कृत्वा संपूज्य विधिवद्वीजयेद्व्यजनेन
तु ॥
तत्र सन्धुक्षितः कामः
पुत्त्रपौत्त्रविवर्द्धनः ।
कामदेवस्त्रयोदश्यां पूजनीयो
यथाविधि ।
रतिप्रीतिसमायुक्तो ह्यशोकमणिभूषितः
॥"
दमनो दमनकवृक्षः । सन्धुक्षितः
प्रीणितः ।
कामदेवध्यानन्तु ।
"चापेषुधृक् कामदेवो रूपवान्
विश्वमोहनः ।"
तत्र स्तुतिमन्त्रः ।
"पुष्पधन्वन् ! नमस्तेऽस्तु नमस्ते
मीनकेतन ! ।
मुनीनां लोकपालानां धैर्य्यच्युतिकृते
नमः ॥
माधवात्मज ! कन्दर्प ! सम्बरारे !
रति-
प्रिय ! ।
नमस्तुभ्यं जिताशेषभुवनाय मनोभुवे
॥
आधयो मम नश्यन्तु व्याधयश्च
शरीरजाः ।
वासोभिर्द्विजदाम्पत्यं पूज्य शक्त्या विभूषणैः
।
शय्यां गवादिकं दद्यात् प्रीयतामित्युदीरयेत् ॥
होमं शुक्लैस्तिलैः कुर्य्यात् कामनामानि
कीर्त्तयन् ।
गव्येन सर्पिषा चैव पायसेन च धर्म्मवित् ॥
विप्रेभ्यो भोजनं दद्याद्वित्तशाठ्यविवर्ज्जितः
।
इक्षुदण्डानथो दद्यात् पुष्पमालाश्च शक्तितः
॥
यः कुर्य्याद्विधिनानेन मदनद्वादशीमिमाम् ।
सर्व्वपापविनिर्मुक्तः प्राप्नोति हरिसाम्यताम् ।
इह लोके वरान् पुत्त्रान् सौभाग्यञ्च समश्नुते
॥"
इति मत्स्यपुराणे ७ अध्यायः ॥

**मदनपाठकः**, पुं, (मदनं तदुद्दीपकं पठतीति । पठ
+ ण्वुल् । स्वरेण कामोद्दीपनात्तथात्वम् ।)
कोकिलः । इति राजनिर्घण्टः ॥

**मदनमोहनः** पुं, (मदन उन्मादकश्चासौ मोहन-
श्चेति कर्म्मधारयः । मुह् + णिच् ल्युः ।)
श्रीकृष्णः । यथा, --

|  |  |  |
| --- | --- | --- |
|  | सम्पद्यतामभीष्टं मे सम्पदः सन्तु मे स्थिराः ॥<br>नमो माराय कामाय देवदेवस्य मूर्त्तये ।<br>ब्रह्मविष्णुशिवेन्द्राणां मनःक्षोभकराय च ॥<br>एवं यः कुरुते पूजामनङ्गस्य महात्मनः ।<br>भवन्ति नापदस्तस्य तस्मिन्नब्दे कदाचन ॥"<br>इति तिथितत्त्वम् ॥ |  |

"वन्दे मदनगोपालं कैशोराकारमद्भुतम् ।
यमाहुर्यौवनोद्भिन्ने श्रीमन्मदनमोहनम् ॥"
इति पाद्मे पातालखण्डे ९ अध्यायः ॥

**मदनशलाका**, स्त्री, (मदनोद्दीपिका शलाकेव ।
अस्याः कामोद्दीपकत्वात्तथात्वम् ।) कामो-
द्दीपकौषधम् । सारिकापक्षी । इति मेदिनी ।
के, २३५ । कोकिला । इति शब्दरत्ना-
वली ॥

**मदनसारिका**, स्त्री, (मदनोद्दीपनाय सारिका ।)
पक्षिभेदः । सालिक् इति भाषा ॥ तत्पर्य्यायः
।
शलाका २ सारिका ३ चित्रलोचना ४
कुणपी ५ । इति जटाधरः ॥

**मदना**, स्त्री, (मदयति मत्ततां जनयतीति ।
मद् + णिच् + ल्युः । यद्वा, माद्यति अनया ।
मद् + ल्युट् । स्त्रियां टाप् ।) सुरा । इति
हेमचन्द्रः । ३ । ५६७ ॥

**मदनाङ्कुशः**, पुं, (मदनस्य कामस्य अङ्कुश इव ।)
लिङ्गम् । इति त्रिकाण्डशेषः ॥ नखम् । इति
कामाङ्कुशशब्ददर्शनात् । यथा, --
"कामाङ्कुशाङ्कुशितकामिमतङ्गजेन्द्रे ।"
इति श्रुतबोधे कालिदासः ॥

**मदनाग्रकः**, पुं, (मदनं उन्मादकं अग्रं शिरोभागो
यस्य ।) कोद्रवः । इति राजनिर्घण्टः ॥ (विव-
रणमस्य कोद्रवशब्दे ज्ञातव्यम् ॥)

**मदनायुधः**, पुं, (मदनस्यायुधः ।) भगम् । इति
शब्दचन्द्रिका ॥

**मदनायुषः**, पुं, (मदनस्यायुर्जीवनं इव समा-
सान्तोऽच् । निपातनात् साधुः ।) कामवर्द्धक-
त्वात्तथात्वम् । कामवृद्धिक्षुपः । इति राज-
निर्घण्टः ॥

**मदनालयः**, पुं, (आलीयतेऽस्मिन्निति आ +
ली + अधिकरणे अच् । मदनस्यालयः ।)
न च निम्नादिव सलिलं निवर्त्तते मे ततो
हृद-
यम् ॥"
इत्यभिज्ञानशाकुन्तले ३ अङ्कः ॥
मदनावस्थ
इति राज्ञोऽत्र उद्वेगरूपा पञ्चमी कामा-
वस्था । यदाह भरतः । उद्वेगः पञ्चमः
प्रोक्त
इति । सचिन्तमिति केनोपायेन मम शकु-
न्तलालाभो भविष्यति । इति तट्टीका ॥

**मदनी**, स्त्री, (माद्यति अनया इति । मद् +
करणे ल्युट् । स्त्रियां ङीप् ।) सुरा । इति
हारावली ॥ कस्तूरी । अतिमुक्तकः ।
इति
राजनिर्घण्टः ॥

**मदनेच्छाफलः**, पुं, (मदनेच्छां फलति जनय-
तीति अच् ।) बद्धरसालः । इति राज-
निर्घण्टः ॥

**मदनोत्सवः**, पुं, (मदनाय उत्सवः ।) उत्सव-
विशेषः । होलाका इति ख्याता ।
तत्पर्य्यायः ।
सुवसन्तकः २ । इति हारावली ॥

**मदनोत्सवा**, स्त्री, (मदनाय उत्सवो यस्याः ।)
स्वर्गवेश्या । इति शब्दरत्नावली ॥

**मदप्रयोगः**, पुं, (मदस्य प्रयोगः ।) करिणां मदो-
द्गमः । तत्पर्य्यायः । व्यस्तारम् २ ।
इति त्रिकाण्ड-
शेषः ॥

**मदभञ्जिनी**, स्त्री, (मदं उन्मत्ततां भनक्ति दूरी-
करोतीति । मद + भन्ज् +
"नन्दिग्रहिपचा-
दिभ्यो ल्युणिन्यचः ।" ३ । १ । १३४ ।
इति
णिनिः । स्त्रियां ङीप् ।) शतमूली । इति

**मदविक्षिप्तः**, पुं, (मदेन विक्षिप्तश्चलितमनाः ।)
मत्तहस्ती । इति शब्दचन्द्रिका ॥

**मदशाकः**, पुं, (मदकरः शाकोऽस्य ।) उपोदकी ।
इति राजनिर्घण्टः ॥

**मदसारः**, पुं, (मदं सारयति दूरीकरोति । इति
मद + सृ + णिच् + अण् ।) तूलवृक्षः ।
इति
राजनिर्घण्टः ॥

**मदहस्तिनी**, स्त्री, (मदेन हस्तिनीव ।) महा-
करञ्जः । इति राजनिर्घण्टः ॥

**मदहेतुः**, पुं, (मदस्य हेतुः कारणम् ।) धातकी ।
इति वैद्यकम् । मत्तताकारणञ्च ।
(मदरोगस्य
हेतुः यथा, --
"यदा तु रक्तवाहीनि रससंज्ञावहानि च ।
पृथक् पृथक् समस्ता वा स्रोतांसि
कुपिता
मलाः ॥
मलिनाहारशीलस्य रजोमोहावृतात्मनः ।
प्रतिहत्यावतिष्ठन्ते जायन्ते
व्याधयस्तदा ॥
मदमूर्च्छाय संन्यासास्तेषां
विद्याद्विचक्षणः ।
यथोत्तरं बलाधिक्यं हेतुलिङ्गोपशान्तिषु
॥"
इति चरके सूत्रस्थाने चतुर्व्विंशेऽध्याये
॥)

**मदस्थलं**, क्ली, (मदस्य स्थलम् ।) मदस्थानम् ।
यथा, शब्दरत्नावली ।
"अवदंशः सुरापानं शुण्डापानं
मदस्थलम् ।"

**मदस्थानं**, क्ली, (मदस्य स्थानम् ।)
मद्यपानस्थानम् ।
तत्पर्य्यायः । शुण्डापानम् २ । इत्यमरः
। २ । १० । ४१ ।

षष्ठीसमासः ।) भगम् ।
मदनपर्य्यायकशब्दोत्तर-
गृहपर्य्यायकशब्देन भगस्योक्तत्वात् । यथा, --
“स्वपुष्पैराकीर्णं कुसुमधनुषो मन्दिरमहो
पुरो ध्यायन् ध्यायन् यदि जपति भक्तस्तव
मनुम् ॥”
इति कर्पूरस्तवः ॥
जन्मलग्नावधिसप्तमस्थानम् । तत्तु
जायास्थानम् ।
यथा, --
“सूर्य्याद्युच्चान् क्रियवृषमृगस्त्रीकुलीरान्तयूके
दिग्वह्नीन्द्रद्व्यतिथिशरान्सप्तविंशांश्च विंशान्
।
अंशानेतान् वदति यवनश्चान्त्यतुङ्गान्
सुतुङ्गान्
तानेवांशान् मदनभवनेष्वाह नीचान् सुनी-
चान् ॥”
इति दीपिकायां मदनभवनशब्ददर्शनात् ॥

**मदनावस्था**, स्त्री, (मदनस्यावस्था ।) कामा-

वस्था । सा तु उद्वेगरूपा । विरह इति
यावत् । यथा । ततः प्रविशति मदनावस्थो
राजा निःश्वस्य ।
“जाने तपसो वीर्य्यं सा बाला परवतीति मे
विदितम् ।

शब्दचन्द्रिका ॥ (गुणादयोऽस्याः
शतमूली-
शब्दे ज्ञातव्याः ॥)

**मदयन्तिका**, स्त्री, (मदयन्ती + ततः कन् ठाप् ।

पूर्ब्ब ह्रस्वश्च ।) मल्लिका । इति
शब्दरत्नावली ॥
(यथा, सुश्रुते चिकित्सितस्थाने ९
अध्याये ।
“त्रिफलात्वक् त्रिकटुका सुरसा
मदयन्तिका ।
वायस्यारग्बधानाञ्च तुलां कुर्य्यात् पृथक्
पृथक् ॥”)

**मदयन्ती**, स्त्री, (मद् + झच् + ङीप् ।) वन-

मल्लिका । इति रत्नमाला ॥ काट्मल्लिका
इति भाषा ॥ मल्लिका । इतिराजनिर्घण्टः
॥
(तथाचास्याः पर्य्यायो यथा, --
“मल्लिका मदयन्ती च शीतभीरुश्च
भूपदी ।”
इतिभावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥
“मदयन्त्यङ्घ्रिजः क्वाथस्तद्वत्
समधुशर्करः ।”
इति च वैद्यकचक्रपाणिसंग्रहे
रक्तपित्ताधिकारे ॥)

**मदयित्नु**, क्ली, (मदयतीति । मद् + णिच् ।

“स्तनिहृषिपुषिगदिसदिभ्योणेरित्नुच् ।”
उणा०
३ । २९ । इति मदि + इत्नुच् । “अया-
मन्ताल्वाय्येत्न्विष्णुषु ।” ६ । ४ । ५५ ।
इति
णेरयादेशः ।) मद्यम् । इति मेदिनी । ने,
२०२ ॥

**मदयित्नुः**, पुं, (मदयतीति । मद् + णिच् ।

“स्तनीति ।” उणा० । २ । २९ । इति
इत्नुच् ।
णेरयादेशश्च ।) कामदेवः । शौण्डिकः ।
इति

**मदाढ्यः**, पुं, (मदेन मदजनकरसेन ताडीति

ख्यातेन आढ्यः युक्तः ।) तालवृक्षः ।
इति
राजनिर्घण्टः ॥ (गुणादिविवृतिरस्य
ताल-
शब्दे ज्ञातव्या ॥) मदयुक्ते, त्रि ॥

**मदाढ्या**, स्त्री, (मदेन आढ्या ।) लोहितझिण्टी ।

इति शब्दचन्द्रिका ॥

**मदातङ्कः**, पुं, (मदजनितः आतङ्कः रोगः ।)

मदात्ययरोगः । इति राजनिर्घण्टः ॥

**मदात्ययः**, पुं, (मदेन अत्ययो नाशोन्मुखतात्र ।)

मद्यपानादिजन्यरोगविशेषः । तत्पर्य्यायः
।
मदातङ्कः २ पानात्ययः ३ मदव्याधिः ४
मदः ५ ।
इति राजनिर्घण्टः ॥ अथ मदात्ययादीनां
निदानान्याह ।
“विषस्य ये गुणा दृष्टाः
सन्निपातप्रकोपनाः ।
त एव मद्ये दृश्यन्ते विषे तु बलवत्तराः ॥
तस्मादविधिपीतेन तथा मात्राधिकेन च
।
युक्तेन चाहितैरन्नैरकाले सेवितेन च ॥
मद्येन खलु जायन्ते मदात्ययमुखा गदाः
॥”
अविधिप्रयुक्तं मद्यं
विकारान्तरमप्युत्पादयती-
त्याह ।
“निभक्तमेकान्तत एव मद्यं
निषेव्यमाणं मनुजेन नित्यम् ।
उत्पादयेत् कष्टतमान् विकारा-
नुत्पादयेच्चापि शरीरभेदम् ॥”
एकान्ततो नैरन्तर्य्येण विकारान्
मदात्ययादीन् ।
शरीरस्य भेदं नाशम् ॥ * ॥
मदात्ययादीनां
हेत्वन्तरमप्याह ।

"क्रुद्धेन भीतेन पिपासितेन
शोकाभितप्तेन बुभुक्षितेन ।
व्यायामभाराध्वपरिक्षतेन
वेगावरोधाभिहतेन चापि ॥
अत्यम्लरूक्षावततोदरेण
साजीर्णभुक्तेन तथाबलेन ।
उष्णाभितप्तेन च सेव्यमानं
करोति मद्यं विविधान् विकारान् ॥"
तानेव विकारान् विवृणोति ।
"पानात्ययं परमदं पानाजीर्णमथापि वा ॥"
पानविकारान् विवृणोति ।
"पानविभ्रममुग्रञ्च तेषां वक्ष्यामि लक्षणम् ।"
तत्र मदात्ययस्य सामान्यं लक्षणमाह ।
"शरीरदुःखं बलवत् प्रमोहो हृदयव्यथा ।
अरुचिः प्रततं तृष्णा ज्वरः शीतोष्णलक्षणः
॥
शिरःपार्श्वास्थिसन्धीनांवेदना विक्षते यथा ।
जायतेऽतिबलात् जृम्भा स्फुरणं वेपनं श्रमः ॥
उरोविबन्धः कासश्च श्वासो हिक्वा प्रजागरः
।
शरीरकम्पः कर्णाक्षिमुखरोगास्त्रिकग्रहः॥
छर्द्दिविड्भेदावुत्क्लेशो वातपित्तकफात्मकः।
भ्रमः प्रलापो रूपाणामसताञ्चैव दर्शनम् ॥
तृणभस्मलतापर्णपांशुभिश्चावपूरितम्।
प्रधर्षणं विहङ्गैश्च भ्रान्तचेताः स मन्यते ॥
व्याकुलानामशस्तानां स्वप्नानां दर्शनानि च
।
मदात्ययस्य रूपाणि सर्व्वाण्येतानि लक्ष-
येत् ॥"
अथ मदात्ययस्य वातिकस्य निदानमाह ।
"स्त्रीशोकभयभाराध्वकर्म्मभिर्योऽतिकर्षितः ।
रूक्षाल्पप्रमिताशी च यः पिबत्यतिमात्रया ॥
रूक्षं परिणतं मद्यं निशि निद्रां निहन्ति च ।
करोति तस्य तच्छीघ्रं वातप्रायं मदात्ययम्
॥"
तत् मद्यम् ॥ * ॥ अथ तस्य लक्षणमाह ।
"हिक्वाश्वासशिरःकम्पपार्श्वशूलप्रजागरैः ।
विद्याद्बहुप्रलापस्य वातप्रायं मदात्ययम् ॥"
अथ पैत्तिकस्य निदानमाह ।

"श्लेष्मोच्छ्र्योऽङ्गगुरुता विरसास्यता
च
विण्मूत्रसक्तिरथ तन्द्रिररोचकश्च ।
लिङ्गं परस्य तु मदस्य वदन्ति तज्ज्ञा
स्तृष्णा रुजा शिरसि सन्धिषु चापि
भेदः ॥"
तन्द्रिस्तन्द्रा ॥ * ॥ पानाजीर्णमाह ।
"आध्मानमुग्रमथवोद्गिरणंविदाहः
पाने त्वजीर्णमुपगच्छति लक्षणानि ।"
उद्गिरणं वान्तिः उद्गारो वा । पीयत
इति
पानं मद्यम् ॥ * ॥ पानविभ्रममाह ।
"हृद्गात्रतोदकफसंस्रवकण्ठधूम-
मूर्च्छावमीज्वरशिरोरुजनप्रदेहाः ।
द्वेषः मुरान्नविकृतेषु च तेषु तेषु
तं पानविभ्रममुषन्त्यखिलेषु धीराः ॥"
कण्ठधूमः कण्ठाद्धूमनिर्गम इव । प्रदेहः
कफेन
लिप्तास्यता । द्वेषः सुरान्नविकृतेषु
सुरावि-
कारेषु अन्नविकारेषु च द्वेषः ।
अखिलेषु मद्यविकारेषु ॥ * ॥
असाध्यानां
मदात्ययादीनां लक्षणमाह ।
"दीनोत्तरोष्ठमतिशीतममन्ददाहं
तैलप्रभास्यमतिपानहतंत्यजेच्च ।
जिह्वोष्ठदन्तमसितन्त्वथवापिनीलं
पीते च यस्य नयने रुधिरप्रभे च ॥
हिक्वा ज्वरो वमथुवेपथुपार्श्वशूलाः
कासभ्रमावपि च पानहतं त्यजेत्तम् ॥"
अथ मदात्ययादीनां चिकित्सा ।
"मदोत्थानान्तु रोगाणां मद्यमेव हि
भेषजम् ।
यथा दहनदग्धानां दहनस्वेदनं हितं ।
मिथ्यातिहीनमद्येन यो व्याधिरुपजायते
।
समेनैव निपीतेन मद्येन स हि शाम्यति
॥
बीजपूरकवृक्षाम्लकोलदाडिमसंयुतम् ।

शशान् कपिञ्जलानेणान्
लावानसितपुच्छकान्।
मधुराम्लान् प्रयुञ्जीत भोजने
शालिषष्टिकान् ॥
पटोलयूषमिश्रं वा छागलं कल्पयेद्रसम् ।
सतीलं मुद्गमिश्रं वा
दाडिमामलकान्वितम् ॥
द्राक्षामलकखर्ज्जूरपरूषकरसेन च ।
कल्पयेत् तर्पणान् यूषान् रसांश्च
विविधात्म-
कान् ॥
शीतानि चान्नपानानि शीतशय्यासनानि च
।
शीतवातजलस्पर्शाः शीतान्युपवनानि च ॥
क्षौमपद्मोत्पलानाञ्च मणीनां मौक्तिकस्य च
।
चन्दनोदकशीतानां
स्पर्शाश्चन्द्रांशुशीतलाः।
रूक्षतर्पणसंयुक्तं यवानीव्योषसंयुतम् ।
यवगोधूमकं चान्नं रूक्षयूषेण भोजयेत् ॥
कुलत्थानाञ्च शुष्काणां मूलकानां रसेन वा
।
प्रभूतकटुसंयुक्तं यावान्नं वा प्रदापयेत् ॥
छागमांसरसं रूक्षमम्लं वा जाङ्गलं रसम् ।
व्योषयूषं मनागम्लं पिबेत् कफमदात्यये ॥
स्थाल्यामथ कपाले वा भृष्टं कृत्वा तु
नीरसम् ।
कट्वम्ललवणं मांसं खादेत् कफमदात्यये ॥
पाचकद्रव्ययुक्तेन मद्येनोल्लेखनं मतम् ।
मदात्यये कफोद्भूते लङ्घनञ्च यथाबलम् ॥
यदिदं कर्म्म निर्द्दिष्टं वातपित्तकफान् प्रति ।
सर्व्वजे सर्व्वमेवेदं प्रयोक्तव्यं चिकित्सकैः
॥"
इति भावप्रकाशः ॥
गरुडपुराणोक्तमदात्ययनिदानादिकंतत्रैव
१६० श्रध्याये द्रष्टव्यम् ॥ (तथाचास्य
सकारण-
लक्षणचिकित्सादिकंयथा, --
"हालाहलाहलसमं भजते वियोगात्

"तीक्ष्णीष्णं मद्यमम्लञ्च योऽतिमात्रं निषेवते ।
अम्लोष्णतीक्ष्णभोजी च
क्रोधनोऽग्न्यातपप्रियः ।
तस्योपजायते तीव्रः पित्तप्रायो मदात्ययः ॥"
अथ तस्य लक्षणमाह ।
"तृष्णादाहज्वरस्वेदमोहातीसारविभ्रमैः ।
विद्याद्धरितवर्णस्य पित्तप्रायं मदात्ययम् ॥"
अथ श्लैष्मिकस्य मद त्ययस्य निदानमाह ।
"मधुरस्निग्धगुर्व्वाशी यः पिबत्यतिमात्रथा ।
अव्यायामदिवास्वप्नशय्याशनसुखेरतः ।
मदात्ययं कफप्रायं स नरो लभते ध्रुवम् ॥"
अथ तस्य लक्षणमाह ।
"छर्द्यरोचकहृल्लासतन्द्रास्तैमित्यगौरवैः ।
विद्याच्छीतपरीतस्य कफप्रायं मदात्ययम् ॥"
अथ सान्निपातिकस्य मदातयस्य निदानं
लक्षणञ्चाह ।
"त्रिदोषहेतुभिः सर्व्वैः सर्व्वैर्लिङ्गैर्मदात्ययः
॥"
अथ परमदमाह ।

यवानीहवुषाजाजीशृङ्गवेरावचूर्णितम् ॥
सस्नेहैः
शक्तूभिर्युक्तमवदंशैश्चिरोत्थितम् ।
दद्यात् सलवणं मद्यं पैष्टिकं वातशान्तये
॥
मद्यं सौवर्च्चलव्योषयुक्तं
किञ्चिज्जलान्वितम् ।
जीर्णमद्याय दातव्यं वातपानात्ययापहम्
॥
चव्यं सौवर्च्चलं हिङ्गु पूरकं
विश्वदीप्यकम् ।
चूर्णं मद्येन पातव्यं पानात्ययरुजापहम्
॥
लावतित्तिरिदक्षाणां रसैश्च
शिखिनामपि ।
पक्षिणां मृगमत्स्यानामानूपनां तथोदनैः
॥
स्निग्धोष्णलवणाम्लैश्च
वेसवारैर्मुखप्रियैः ।
स्निग्धैर्गोधूमिकैरन्नैर्व्वातमद्यात्ययं
जयेत् ॥
नारीणां यौवनोष्णानां निर्द्दयैरुपगूहनैः ।
श्रोण्यूरुकुचभारैश्च संरोधोष्मसुखप्रदैः
॥
शयनाच्छादनैरुष्णैरुष्णैश्चान्तर्गृहैः
सुग्वैः ।
उत्पन्नो मारुतात् शीघ्रं प्रशाम्यति मदा-
त्ययः ॥
पित्तपानात्यये योज्याः सर्व्वतश्च
क्रिया हिमाः ।
सितामाक्षिकसंयुक्तं मद्यमर्द्धोदकं पिबेत्
॥
मद्यं खर्ज्जूरमृद्वीकापरूषकरसैर्युतम् ।
सदाडिमरसं शीतं शक्तुभिश्चावचूर्णितम्
॥
सशर्करं वा माध्वीकं संयुक्तमथवापरम्
।
दद्यात् बहूदकं काले पातुं पित्तमदात्यये
॥

सेव्यं न शिष्यमनुजैः कथितं मुनीन्द्रैः ।
तृष्णा वमिः श्वसनमोहनदाहतृष्णा
संजायतेऽतिसरणं विकलेन्द्रियत्वम् ॥
ये नित्यसेवनाद्दुष्टा मद्यस्य मनुजा भृशम् ।
बिषमाहारसदृशी मुरा मोहनकारिणी ॥
यथा विषं प्राणहरं वियोगाद्
योगेन तच्चाप्यमृतं वदन्ति ।
तथा सुरा योगयुता हिता स्या-
दयोगतश्चारभतेऽतिकष्टम् ॥
क्षुधातुरे तृषाक्रान्ते सुरा वा भोजनं विना ।
न च क्षीणैर्विना भक्ता विनाहारातिपानकम्
॥
अत्यशनेऽप्यजीर्णेऽपि सुरा पीता रुजाकरी
।
यस्य प्रलपनञ्चापि न च वातमदात्ययः ।
दाहमूर्च्छातिसारश्च ज्वरः पित्तमदात्यये
॥
छद्‌र्यरोचकहृल्लासतन्द्रास्तैमित्यगौरवम् ।
शीतता च प्रतिश्यायः कफजे च मदात्यये
।
त्रिषु दोषेषु समता लिङ्गैर्येषामुपक्रमः ।
स त्रिदोषसमुद्भूतो मदमूर्च्छा भिषग्वर ! ॥
वमनञ्च प्रशस्तञ्च निद्रासंसेवनं पुनः ।
स्नानं हितं पयःपानं भोजने सगुडं दधि ॥
मस्तुखण्डं सखर्ज्जूरं मृद्वीका
दाडिमाम्लिका ।
आमला च परूषञ्च लेहो हन्ति मदात्ययम्
॥
द्राक्षामलकखर्ज्जूरपरूषकरसेन वा ।
कल्कयेत् पयसा तत्तु पानं सर्व्वमदात्यये
॥

पथ्या क्वाथेन संयुक्तं पयःपानं मदात्यये
।”
इति मदात्ययचिकित्सा ॥
अथ पूगीपलमदात्ययचिकित्सारभ्यते।
“पूगीफलमदे कम्पो मोहो मूर्च्छा
क्लमस्तमः ।
प्रस्वेदो विधुरत्वञ्च लालास्रावश्च जायते
॥
भ्रमक्लमपरीतत्वं विज्ञेयं पूगमूर्च्छिते ।
मानवो लक्षणैरेभिर्ज्ञेयः पूगविमूर्च्छितः ॥
तस्य शीतं जलं पीतं वस्तिवातहितं
भवेत् ।
शर्कराभक्षणे देया मुस्ता वा शर्करान्विता
॥
कोद्रवाणां भवेन्मूर्च्छा देयं क्षीरं
सुशीतलम् ।
धुस्तूरकमदे देयं शर्करासहितं दधि ॥
फलिनी करवीरञ्च मोहिनी मदयन्तिका ।
अन्येषामपि कन्दानां वमनञ्चाशु कारयेत्
॥
पाययेत् शर्करायुक्तं क्षीरं वा दधि शर्कराम्
।”
इति श्रीमहर्ष्यत्रियभाषिते हारीतोत्तरे
तृतीय-
स्थाने मदात्ययचिकित्सानाम
सप्तदशोऽध्यायः ॥)

**मदाम्नातः**, पुं, (मदाय मत्ततोद्रेकाय आम्नायते
वाद्यते स्मेति । आ + म्ना + कर्म्मणि क्तः
।)
गजढक्वा । इति हाराबली । २०४ ।
हातीर-
उपरेर डङ्का इति भाषा ॥

**मदाम्बरः**, पुं, (मदो दानवारि अम्बरमिवास्या-
च्छादकत्वात् ।) मत्तहस्ती । इति
त्रिकाण्ड-
शेषः ॥

**मदारः**, पुं, (माद्यति मत्तो भवतीति । मद् +
यथाच शान्तिशतके । ४ । २४ ।
“पीत्वा मोहमयीं प्रमोदमदिरामुन्मत्तभूतं
जगत् ।”)
तत्पर्य्यायः । सुरा २ हलिप्रिया ३ हाला ४
परिश्रुत् ५ वरुणात्मजा ६ गन्धोत्तमा ७
प्रसन्ना ८ इरा ९ कादम्बरी १० परिश्रुता
११
कश्यम् १२ मद्यम् १३ । इत्यमरः । २ ।
१० । ४० ॥
मानिका १४ । इति शब्दरत्नावली ॥
कपिशी १५
गन्धमादनी १६ माधवी १७ कत्तोयम् १८
मदः १९
कापिशायनम् २० । इति जटाधरः ॥
वारुणी २१
मत्ता २२ सीता २३ चपला २४ कामिनी
२५
प्रिया २६ मदगन्धा २७ माध्वीकम् २८
मधु २९
सन्धानम् ३० आसवः ३१ अमृता ३२
वीरा ३३
मेधावी ३४ मदनी ३५ सुप्रतिभा ३६
मनोज्ञा ३७
विधाता ३८ मोदिनी ३९ हली ४० गुणा-
रिष्टम् ४१ सरकः ४२ मधूलिका ४३
मदोत्-
कटा ४४ महानन्दा ४५ । इति
राजनिर्घण्टः ॥
सीधुः ४६ मैरेयम् ४७ बलवल्लभा ४८ ।
इति
भावप्रकाशः ॥ कारणम् ४९ । तत्त्वम् ५०
इति
कैबल्यतन्त्रम् ॥ मदिष्ठा ५१ परिप्लुता ५२
कल्पम् ५३ स्वादुरसा ५४ शूण्डा ५५
हार-
हूरम् ५६ मार्द्वीकम् ५७ मदना ५८ देवसृष्टा
५९ कापिशम् ६० अब्धिजा ६१ । इति
हेम-
चन्द्रः । ३ । ५६६ ॥ सा द्वादशविधा यथा,
--
मदिरागुणौ । गुरुत्वम् । विष्टम्भदायकत्वञ्च
॥
शर्कराधातकीतोयकृतमदिरागुणौ ।
शीतत्वस् ।
मनोहरत्वञ्च ॥ * ॥ शार्करमद्यगुणाः ।
वृष्य-
त्वम् । दीपनत्वम् । मोहनत्वञ्च । इति
नाना-
मद्यगुणाः ॥ * ॥ ऋतुविशेषे पेयमदिरा
यथा,
“गौडी तु शिशिरे पेया पैष्टी हेमन्तवर्षयोः ।
शरद्ग्रीष्मवसन्तेषु माध्वी ग्राह्या न
चान्यथा ॥
“कादम्बरीशर्करजादिमद्यं
सुशीतलं वृष्यकरं मदाढ्यम् ।
माध्वीसमं स्यात् तृणवृक्षजातं
मद्यं सुशीतं गुरु तर्पणञ्च ॥”
अन्यथा कुरुते पानं मद्यं सन्तापशोषदम् ।
अन्नदोषमदात्यादिकारकंमूर्च्छनञ्च यत्
॥”
नवजीर्णमद्ययोर्गुणाः ।
“मद्यं नवं सर्व्वविकारहेतुः
सर्व्वन्तु वातादिकदोषदायि ।
जीर्णन्तु सर्व्वं सकलामयघ्नं
घूर्णप्रदं वृष्यकरञ्च दीपनम् ॥”
अन्यच्च ।
“पर्य्युषितमल्पमेलनमम्लं वा पिच्छिलं
विगन्धंवा ।
दोषावहमविशेषान्मद्यं हृद्यं विवर्ज्जयेत् ॥
मद्यप्रयोगं कुर्व्वन्ति शूद्रादिषु महार्त्तिषु ।
द्विजैस्त्रिभिस्तु न ग्राह्यं यद्यप्युज्जीवयेन्
मृतम् ॥”
इति मद्यवर्ज्ज्यावर्ज्यम् ॥ * ॥
“अन्ये द्वादशधा मद्यभेदानाहुर्मनीषिणः ।
उक्तस्यान्तर्भवन्तीति नान्येषां पृथगीरितम्
॥”
इति राजनिर्घण्टे मद्यप्रकरणम् ॥
अथ मतान्तरे मद्यस्य लक्षणं गुणाश्च ।
“पेयं यन्मादकैर्लोकैस्तन्मद्यमभिधीयते ।

"अङ्गिमदिमन्दिभ्य आरन् ।" उणा० । ३
।
१३४ । इति आरन् ।) हस्ती । धूर्त्तः ।
इति
विश्वः ॥ शूकरः । कामुकः । गन्धभेदः ।
मत्त-
हस्ती । नृपभेदः । इत्युणादिकोषः ॥

**मदार्म्मदः**, पुं, (मदार्म्मं मदजन्यं अर्म्मं नेत्ररोग-

विशेषं ददातीति । दा + कः ।)
फलकमत्स्यः ।
इति त्रिकाण्डशेषः ॥

**मदालापी**, [न्] पुं, (मदेन मत्ततया आलपतीति । आ

+ लप् + णिनिः ।) कोकिलः ।
इतिशब्दमाला ॥

**मदाह्वः**, पुं, (मदो मृगमद आह्वाख्या यस्य ।

ह्रस्वः ।) कस्तूरी । इति त्रिकाण्डशेषः ॥
(कस्तूरीशब्देऽस्य विवरणं ज्ञातव्यम् ॥)

**मदिरः**, पुं, (मद् + किरच् ।) रक्तखदिरः ।

इति शब्दचन्द्रिका ॥ मदकरे, त्रि । यथा,
ऋग्वेदे । ५ । ६१ । ११ ।
"य ईं वहन्त आशुभिः पिबन्तो मदिरं मधु
॥"
"मदिरं मदकरं मधु ।" इति तद्भाष्ये
सायनः ।)

**मदिरा**, स्त्री (माद्यतीति । मद् + किरच् ।

अजादित्वात् टाप् ।) मत्तखञ्जनः । इति
शब्दरत्नावली ॥ (यथा, शाकुन्तले । ३ ।
५ ।
"यदि मदिरायतनयनां
तामधिकृत्य प्रहरतीति ।
माद्यत्यनयेति । मद् + "इषि मदीति ।
उणा० ।
१ । ५२ । इति किरच् ।)
मादकद्रव्यविशेषः ।
मद् इति भाषा ॥ (यथा, --
"हिक्का-श्वास-प्रतिश्याय-कास
वर्च्चोग्रहारुचौ ।

"माध्वीकं पानसं द्राक्षं खार्ज्जूरं
तालमैक्षवम् ।
मैरेयं माक्षिकं टाङ्कं मधूकं नारिकेलजम् ॥
मुख्यमन्नविकारोत्थं मद्यानि द्वादशैव च ॥"
इति जटाधरः ॥
अस्याः सामान्यगुणाः । सुमधुराम्लत्वम् ।
कफ-
मारुतनाशनत्वम् । लघुत्वम् । पुष्टिकरत्वम्
।
हृद्यत्वम् । सारकत्वम् । मदावहत्वञ्च ॥ *
॥
धातकीरसगुडादिकृता मदिरा गौडी । तद्-
गुणा यथा । तीक्ष्णत्वम् । उष्णत्वम् । मधुर-
त्वम् । वातनाशित्वम् । पित्तबलकारित्वम् ।
दीपनत्वम् । पथ्यत्वम् ।
कान्तितृप्तिकारित्वञ्च ॥
पुष्पद्रवादिमधुसारमयी मदिरा माध्वी ।
तद्-
गुणा यथा । मधुरत्वम् । नात्युष्णत्वम् ।
पित्त-
वातनाशित्वम् ।
पाण्डुकामलगुल्मार्शःप्रमेह-
शमनत्वञ्च ॥ * ॥ विविधधान्यजाता मदिरा
पैष्टी । तद्गुणा थथा । कटुत्वम् ।
अम्लत्वम् ।
तीक्ष्णत्वम् । गौडीसमत्वम् । वातहरत्वम् ।
कफकरत्वम् । ईषत्पित्तकरत्वम् । मोहनञ्च
॥
तालादिरसनिर्यासकृता मदिरा सैन्धी हाला
च । तद्गुणा यथा । शीतत्वम् । कषायत्वम्
।
अम्लत्वम् । पित्तहरत्वम् । वातदातृत्वञ्च ॥
* ॥
सर्व्वतृणवृक्षनिर्यासरूपमदिरागुणाः ।
शीतल-
त्वम् । गुरुत्वम् । मोहनत्वम् । बलदत्वम् ॥
हृद्यत्वम् । तृष्णासन्तापनाशकत्वञ्च ॥ * ॥
नाना-
द्रव्यकदम्बकृता मदिरा कादम्बरी ।
तद्गुणा-

यथारिष्टं सुरा सीधुरासवाद्यमनेकधा ॥
मद्यं सर्व्वं भवेदुष्णं पित्तकृत् वातनाशनम् ।
भेदनं शीघ्रपाकञ्च रूक्षं कफहरं परम् ॥
अम्लञ्च दीपनं रुच्यं पाचनं चाशुकारि च ।
तीक्ष्णं सूक्ष्मञ्च विशदं व्यवायि च विकाशि
च ॥"
अथारोहणलक्षणं गुणाश्च ।
"पक्वौषधाम्बुसिद्धं यन्मद्यं तत्
स्यादरिष्टकम् ।"
अरिष्टं मद्यमिति लोके । यथा, द्राक्षारिष्टम्
।
दशमूलारिष्टम् । वव्वूलारिष्टमिति ।
"अरिष्टं लघुपाकेन सर्व्वं तच्च गुणाधिकम्
।
अरिष्टस्य गुणा ज्ञेया बीजद्रव्यगुणैः समाः
॥"
अथ सुराया लक्षणं गुणाश्च ।
"शालिषष्टिकपिष्टादिकृतं मद्यं सुरा स्मृता
।
सुरा गुर्व्वी बलस्तन्यपुष्टिमेदःकफप्रदा ।
ग्राहिणी शोथगुल्मार्शोग्रहणीमूत्रकृच्छ्रनुत्
॥"
अथ सुराभेदो वारुणी तस्या लक्षणं
गुणाश्च ।
"पुनर्नवाशिलापिष्टैर्व्विहिता वारुणी स्मृता
।
संहितैस्तालखर्ज्जूररसैर्या सापि वारुणी ॥
सुरावद्वारुणी लघ्वी पीनसाध्मानशूलनुत्
॥"
सुरातो भेदार्थं लघ्वीति ॥ * ॥
अथ सीधुद्वयस्य लक्षणं गुणाश्च ।
"इक्षोः पक्वे रसैः सिद्धः सीधुः
पक्वरसश्च सः ॥

| | | |
|---|---|---|
| वम्यानाहविबन्धेषु वातघ्नी मदिरा हिता ॥”<br>इति चरके सूत्रस्थाने १७ अध्यायः ॥ | यथा । सुमधुरत्वम् । पित्तश्रमहरत्वम् । मद-<br>कारित्वञ्च ॥ * ॥ ऐक्षवमदिरागुणौ । शिशि-<br>रत्वम् । मदोत्कटत्वञ्च ॥ * ॥<br>यवधान्यकृत- | |

आमैस्तैरेव यः सीधुः स च शीतरसः स्मृतः ॥
सीधुः पक्वरसः श्रेष्ठः स्वराग्निबलवर्णकृत् ।
वातपित्तकरो हृद्यः स्नेहनो रोचनो हरेत् ॥
विबन्धमेदःशोषार्शःशोफोदरकफामयान् ।
तस्मादल्पगुणः शीतरसः संलेखनः स्मृतः ॥”
अथासवस्य लक्षणं गुणाश्च ।
“यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः ।
आसवस्य गुणा ज्ञेया बीजद्रव्यगुणैः समाः ॥”
अथ नवपुराणमद्यगुणाः ।
“मद्यं नवमभिष्यन्दि त्रिदोषजनकं सरम् ।
अहृद्यं बृंहणं दाहि दुर्गन्धं विशदं गुरु ॥
जीर्णं तदेव रोचिष्णु कृमिश्लेष्मानिलापहम् ।
हृद्यं सुगन्धि गुणवल्लघुस्रोतोविशोधनम् ॥”
अथ सात्विकानां मद्यं पिबतां चेष्टाविशेषाः ।
सात्विके गीतहास्यादि राजसे साहसादिकम् ।
तामसे निन्द्यकर्म्माणि निद्राञ्च मदिराचरेत् ॥”
आचरेत् कुर्य्यात् ।
“विधिना मात्रया काले हितैरन्नैर्यथाबलम् ।
प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतं यथा ॥
किन्तु मद्यं स्वभावेन यथैवान्नं तथा स्मृतम् ।
अयुक्तियुक्तं रोगाय युक्तियुक्तं यथामृतम् ॥”
अथ मद्यगन्धनाशनोपायः ।
“मुस्तैलबालगदजीरकधान्यकैला-
यश्चर्व्वयन् सदसि वाचमभिव्यनक्ति ।
स्वाभाविकं मुखजमुज्झति पूतिगन्धं
गन्धञ्च मद्यलशुनादिभवञ्च नूनम् ॥”
इति भावप्रकाशः ॥
अपि च ।
“प्रकृत्या मद्यमत्युष्णमम्लञ्चोष्णं विपाकतः ।
सर्व्वसामान्यतस्तस्य विशेष उपदेक्ष्यते ॥
कृशानां सक्तमूत्राणां ग्रहण्यर्शोविकारिणाम् ।
सुरा प्रशस्ता वातेषु रक्तपित्तक्षयेषु च ॥
प्रसन्ना गुल्मवातार्शोविबन्धानाहनाशिनी ।
शूलप्रवाहिकाटोपकफवातार्शसां हिता ॥”
जगलो ग्राहिरूक्षोष्णः शोथघ्नो भक्तपाचनः ।
शोथार्शोग्रहणीदोषान् हन्त्यरिष्टः कफामयान्
॥”
अरिष्टो मद्यविशेषः ॥
“प्रायशोऽभिनवं मद्यं गुरु दोषलमीरितम् ।
मम तु मतमनङ्गस्मेरतारल्यघूर्ण-
न्मदकलमदिराक्षीनीविमोक्षोहि मोक्षः
॥”
इत्युद्भटः ॥
(पुं, विराटराजस्य भ्राता । यथा, महा-
भारते । ४ । ३० । ११ -- १२ ।
सवज्रायसगर्भन्तु कवचं तप्तकाञ्चनम् ।
विराटस्य प्रियो भ्राता
शतानीकोऽभ्यहार-
यत् ॥
सर्व्वपारशवं वर्म्म कल्याणपटलं दृढम् ।
शतानीकादवरजो मदिराक्षोऽभ्यहारयत्
॥)

**मदिरागृहं**, क्ली, (मदिराया गृहम् ।) मद्यस्य
गृहम् । मद्यसन्धानगृहम् । तत्पर्य्यायः ।
गञ्जा २
इत्यमरः । २ । २ । ८ ॥ गुञ्जा ३ । यथा,
--
“भाण्डागारे विदुर्गञ्जं खनौ खञ्जा सुरागृहे
।
मद्यभाण्डे स्मृता गुञ्जा गुञ्जा स्यात् काक-
कुंञ्चिका ॥”
इनि भरतधृतहड्डचन्द्रः ॥

**मदिरासखः**, पुं, (मदिरायाः सखा सगन्धत्वादिति
।
मदिरा + सखि + “राजाहःसखिभ्यष्टच्
।” ५ ।
४ । ९१ । इति टच् ।) आम्रवृक्षः । इति
जटाधरः ॥

**मदिष्ठा**, स्त्री, (मदोऽस्या अस्तीति । मद् + इनिः ।
इयमतिशयेन मदिनीति । इष्ठन् ।
इनोलोपः ।)
मदिरा । इति हेमचन्द्रः । ३ । ५६६ ॥

**मदी**, स्त्री, (मृद्नाति चूर्णीकरोति कृष्टक्षेत्र-
लोष्टादिकमिति । मृद्-इन् ।
कृदिकारादिति
१ । ७ । इति उः ।) पक्षिविशेषः ।
इत्यमरः ।
२ । ५ । ३४ ॥ पानकौडि इति भाषा
॥
अस्य मांसगुणाः । वायुनाशित्वम् ।
स्निग्ध-
त्वम् । भेदकत्वम् । शुक्रकारित्वम् ।
रक्तपित्त-
नाशित्वम् । शीतत्वञ्च । इति
राजवल्लभः ॥
(पर्णमृगभेदः । यथा, सुश्रुते सूत्रस्थाने
४६
अध्याये ॥
“मद्गुमूषिकवृक्षशायिका
वकुशपूतिघासवानर-
प्रभृतयः पर्णमृगाः ॥”)

**मद्गुरः**, पुं, (माद्यति जलं प्राप्य हृष्यतीति ।
मद् + “मद्गुरादयश्च ।” उणा० । १ ।
४२ ।
इति उरच् निपातितश्च ।)
मत्स्यविशेषः ।
इत्यमरः । १ । १० । १९ ॥ मागुर
इति भाषा ।
(यथा । ललितविस्तरे । ३२० । ७ ।
“श्रमणो गौतमः श्यामको वत भो
श्रमणो गौतमो मद्गुरच्छविः ।”)
अस्य गुणाः । मधुरत्वम् । स्निग्धत्वम्
। संग्रा-
हित्वम् । शुक्लत्वम् । गुरुत्वञ्च । इति
राज-
वल्लभः ॥ (यथाच भावप्रकाशपूर्व्वखण्डे
द्वितीय-
भागे ।
“मद्गुरो वातहृद्बल्यो वृष्यः कफकरो
लघुः ॥”
वर्णशङ्करजातितिशेषः । यथा,
महाभारते ।
१३ । २५ । ८३ ।

स्रोतसां शोधनं जीर्णं दीपनं लघु रोचनम् ॥
हर्षणं प्रीणनं बल्यं मद्यं शोकश्रमापहम् ।
प्रागल् भ्यप्रतिभापुष्टिवीर्य्यतुष्टिस्वरप्रदम् ॥”
इति राजवल्लभः ॥
अन्यत् मद्यशब्दे द्रष्टव्यम् ॥
(वसुदेवपत्नी । यथा, श्रीमद्भागवते । ९ । २४ । ४५ ।
“पौरवी रोहिणी भद्रा मदिरा रोचना इला ।
देवकीप्रमुखाश्चासन् पत्न्य आनकदुन्दुभेः ॥”)

**मदिराक्षी**, स्त्री, (मदिरे इव अक्षिणी यस्याः इति
अक्षि + “अक्ष्णोऽदर्शनात् ।” ५ । ४ । ७६ । इति
अच् । स्त्रियां ङीप् ।) मत्तलोचना । यथा, --
“अविदितसुखदुःखं निर्गुणं वस्तु किञ्चि-
ज्जडमतिरिह कश्चिन्मोक्ष इत्याचचक्षे ।
पक्षे ङीष् । पृषोदरादित्वात् साधुः ।) चषक-
वस्तु । इति नानार्थे हेमचन्द्रः ॥
कृषकवस्तु ।
इति वैश्यवर्गे जटाधरः ॥

**मदीयं**, त्रि, मम इदम् । आमार इति भाषा ॥
अस्मच्छब्दादीयप्रत्यये एकवचनार्थे मदादेशेन
निष्पन्नमिदम् । इति मुग्धबोधव्याकरणम् ॥
(यथा, कथासरित्सागरे । २८ । ९० ।
“हे देवतास्तपोंशेन मदीयेनैष भूपतिः ॥”)

**मदोत्कटः**, पुं, (मदेन दानवारिणा उत्कटः ।)
मत्तहस्ती । इत्यमरः । २ । ८ । ३४ ॥ (यथा,
महाभारते । ३ । ६५ । ८ ।
“ते तान् ग्राम्यगजान् दृष्ट्वा सर्व्वे वनगजास्तदा ।
समाद्रवन्त वेगेन जिघांसन्तो मदोत्कटाः ॥”)

**मदोत्कटा**, स्त्री, (मदेन मत्ततया उत्कटः उद्दमो
जनः अस्याः । स्त्रियां टाप् ।) मदिरा ।
इति राजनिर्घण्टः ॥ (मदेन गर्व्वादिना उत्-
कटः । मदोन्मत्ते, त्रि ।)

**मदोद्धतः**, त्रि, (मदेन मत्ततया उद्धतः ।) मत्तः ।
इति जटाधरः ॥ (यथा, वेणीसंहारे १ अङ्के ।
“सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्ध्वता-
रम्भाः ॥”)

**मदोदग्रा**, स्त्री, (मदेन उदग्रा ।) नारी । इति शब्द
माला ॥ (मदोद्धते, त्रि । यथा, रघौ । ४ । २२ ।
“मदोदग्राः ककुद्मन्तः सरितां कुलमुद्रुजाः ।”)

**मद्गुः**, पुं, (मज्जतीति । मस्ज + “भृमृशीतृ-
“निषादं मुद्गुरं सूते दाशं नावोपजीविनम् ।”
“मद्गून् मीनविशेषान् राति आदत्ते इति
रा + कः । तम् ।” इति तट्टीकायां नीलकण्ठः ।)

**मद्गुरकः**, पुं, (मद्गुरः + स्वार्थे कन् !) मद्-
गुरमत्स्यः । इति शब्दरत्नावली ॥

**मद्गुरसी**, स्त्री, (मद्गौ पक्षिविशेषे रसो यस्याः
ङीप् ।) शृङ्गी मत्स्यः । इति शब्दरत्नावली ॥

**मद्यं**, क्ली, (माद्यति जनोऽनेन । मद् + “गदमद-
यमश्चानुपसर्गे ।” ३ । १ । १०० । इति करणे
यत् ।) सुरा । इत्यमरः । २ । १० । ४० ॥
(यथा, साहित्यदर्पणे ।
“भिक्षो ! मांसनिषेवणं प्रकुरुषे किं तेन मद्यं
विना
मद्यञ्चापि तव प्रियं प्रियमहो वाराङ्गनाभिः
सह ।
वेश्याप्यर्थरुचिः कुतस्तव धनं द्यूतेन चौर्य्येण बा,
एतावानपि संग्रहोऽस्ति भवतो नष्टस्य कान्या
गतिः ॥”)
अस्य गुणपर्य्यायौ मदिराशब्दे द्रष्टव्यौ ॥ * ॥
तत् द्वादशविधं यथा पुलस्त्यः ।
“पानसं द्राक्षमाधूकं खार्ज्जूरं तालमैक्षवम् ।
माध्वीकं टाङ्कमाध्वीकं मैरेयं नारिकेलजम् ॥
समानानि विजानीयान्मद्यान्येकादशैव तु ।
द्वादशस्तु सुरा मद्यं सर्व्वेषामधमं स्मृतम् ॥”

| | | |
|---|---|---|
| | चरित्सरितधनिनिमिमस्जिभ्यउः ।” उणा० । | अनेन एकादशानां सुरात्वं निषेधयति मद्यशब्दो मदहेतुद्रव्यवचनः । अस्मादेव वचनात् नतु मद्यमात्रं सुराशब्दार्थः । यथा बृहस्पतिः । “गौडीं माध्वीं सुरां पैष्टीं पीत्वा विप्रः समा- चरेत् । |

तप्तकृच्छं पराकञ्च चान्द्रायणमनुक्रमात् ॥”
त्रयाणां सुरात्वे क्रमेण प्रायश्चित्तत्रयं न स्यात् ।
तथा भविष्ये ।
“सुरा तु पैष्टी मुख्योक्ता न तस्यास्त्वितरे समे ।”
पैष्टीति तण्डुलविकारमात्रोपलक्षणं इतरे गौडीमाध्व्यौ अतोऽन्नविकार एव सुराशब्दस्य
मुख्यत्वात् त्रिविधा सुरेति गौडीमाध्व्योर्गौण-
सुरात्वज्ञापनार्थम् । तेन एतत्पानेऽपि महा-
पातकत्वमतिदिशति यथैवैका तथा सर्व्वा इति
पैष्ट्यां पूर्ब्बप्रसिद्ध्वं दर्शयति । यथा पैष्टी सुरा
तथा सर्व्वा गौडी माध्वी चेति पूर्ब्बवचनोक्ता तु पैष्टी दृष्टान्तत्वेनात्र दर्शिता । न पातव्या
द्विजोत्तमैरिति ब्राह्मणैरित्यर्थः । त्रैवर्णिकपरत्वे
उत्तमपदानर्थक्यात् बहवचनानर्थक्यपरी-
हारार्थमुत्तमप्रातिपदिकानर्थक्यमयुक्तं अतो
ब्राह्मणस्य त्रिविधैव सुरा महापातकहेतुः ।
क्षत्त्रियवैश्ययोस्तु सुरा वै मलमन्नानामिति
वचनेन पैष्ट्यैव इति स्थितम् । अतएव ।
“एका माध्वी च गौडी च पैष्टी च त्रिविधा सुरा ।
द्विजातिभिर्न पातव्या कदाचिदपि कर्हिचित् ॥”
इति यमवचने द्विजातिपदं ब्राह्मणपरमेव ।
अत एव द्विविधसुरापाने न क्षत्त्रियादीनां
महापातकम् ॥ * ॥ तावदस्तु ।
दोषाभावमेवाह
वृद्धयाज्ञवल्क्यः ।
“कामादपि हि राजन्यो वैश्यो वापि कथञ्चन ।
मद्यमेव सुरां पीत्वा न दोषं प्रतिपद्यते ॥”
तदेवं पैष्टीनिषेधस्त्रैवर्णिकानां गौडीमाध्वीनि-
“सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत् ।
तया सकाये निर्दग्धे मुच्यते किल्विषात्ततः ॥
गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा ।
पयो घृतं वामरणात् गोसकृद्रसमेव वा ॥”
अग्निवर्णां अग्निसमस्पर्शाम् । पयो घृतं गोरेव
आदावन्ते च गोः कीर्त्तनात् ।
मोहशब्दोऽत्र
बुद्धिपरः । देवलः । सुरापाने ब्राह्मणो रूप्य-
ताम्रसीसकानामन्यतममग्निकल्पंपीत्वा शरीर-
त्यागात् पूयते । रूप्यादयोऽत्र द्रवीभूताः
पीत्वेति निर्द्देशात् । स्वयमशक्तावन्यैरपि मुखे
सेचनीया । यथा गोतमः । सुरापस्य ब्राह्मणस्य
उष्णामासिञ्चेयुः सुरामास्ये मृतः शुध्येत ।
अतएव न सेचकानां वधो विहितत्वात् स्वयं
पान इव । एतच्च मरणप्रायश्चित्तं कामकृते ।
यथा, बृहस्पतिः ।
“सुरापाने कामकृते ज्वलन्तीं तां विनिःक्षिपेत् ।
मुखे स हि विनिर्द्दग्धो मृतः शुद्धिमवाप्नुयात् ॥”
कथञ्चिदिति सकृदित्यर्थः । अङ्गिराः ।
सुरापानं सकृत् कृत्वा योऽग्निवर्णां सुरां पिबेत् ।
स पावयेदथात्मानमिह लोके परत्र च ॥”
भविष्ये ।
“मतिपूर्ब्बं सुरापाने प्राणान्तिकमुदाहृतम् ।
पैष्टीपाने तु ऋषिभिर्नेतरासां कथञ्चन ॥
पैष्टीपाने ब्राह्मणस्य द्वादशवार्षिकम् । यथा
ब्रह्महत्याव्रतानुवृत्तौ यमः ।
“चरेतामेतदेवोभौ सुरापगुरुतल्पगौ ।
सगोत्रादूषकश्चैव सुवर्णस्तेयकृन्नरः ॥” * ॥
भविष्ये ।
“अकामतः सुरां पीत्वा पैष्टीं मत्कुलनन्दन ! ।
कृच्छ्रातिकृच्छ्रौ कृत्वा वै पुनःसंस्कारतः शुचिः ॥
कणान् वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि ।
सुरापानापनुत्यर्थं बालवासा जटी ध्वजी ॥”
सुरापानमात्रापनेयरोगस्य रोगिणोऽज्ञानतः
पानविषयमिदं इत्युक्तं भविष्ये । यथा, --
“तथास्मिन्नेव विषये वाशिष्ठं परिकीर्त्तितम् ।
यदि रोगैर्भवेद्वःस्थो नेतरस्य कदाचन ॥
कृच्छ्रश्चात्र सुरश्रेष्ठ ! तप्तकृच्छ्र उदाहृतः ।”
कृच्छ्रातिकृच्छ्रावित्यत्र कृच्छ्रपदं न प्राजापत्य-
परं किन्तु तप्तकृच्छ्रपरम् । * । अज्ञानतो
गौडीमाध्व्योः सकृत्पाने उक्तं भविष्यपुराणे ।
“सकृत् पीत्वा तथा गौडीमज्ञानात् सुरसत्तम ! ।
कृच्छ्रातिकृच्छ्रौ विहितौ घृतप्राशनमेव च ॥”
अज्ञानाभ्यासे तत्रैवोक्तम् ।
“गौडीमज्ञानतः पीत्वा ब्राह्मणो ब्राह्मणप्रिय ! ।
तप्तकृच्छ्रन्तु वै कृत्वा पुनःसंस्कारतः शुचिः ॥
माध्वीं पीत्वा महाबाहो ! अज्ञानाद् द्विज-सत्तमः ।
शुद्ध्येत तप्तकृच्छ्रेण विकर्म्माभ्यासनात्तथा ॥

षेधन्तु ब्राह्मणानामेव ॥ * ॥ तज्जातेः
स्त्रीणा-
मपि सुरापाननिषेधः । यथा भविष्ये ।
“तस्मान्न पेयं विप्रेण सुरा मद्यं कथञ्चन ।
ब्राह्मण्यापि न पेया वै सुरा पापभयावहा ॥”
“या ब्राह्मणी सुरापी स्यान्
न तां देवाः पतिलोकं नयन्ति ॥”
इति श्रुतिः ॥
“पतत्यर्द्धशरीरेण भार्य्या यस्य सुरां पिवेत् ।
पतितार्द्धशरीरस्य निष्कृतिर्नोपपद्यते ॥”
न चैवं क्षत्त्रियवेश्यस्त्रीणामनिषेधः ।
ब्राह्मणी-
पदस्य
निषिद्धसुरापानकर्त्तृभार्य्योपलक्षणत्वाद्
भार्य्या यस्य सुरां पिबेदिति
सामान्यश्रवणाच्च ॥
पानञ्च द्रवीभूतस्याभ्यवहारः । स च
कण्ठदेशा-
दधोनयनं न तु वक्त्रमात्रप्रवेशः ।
निष्ठीवनार्थं
कपोलधारणे पानशब्दप्रसङ्गात् । यच्चोक्तम्
।
“जिघ्रन्नहि सुरां कश्चित् पिबतीत्यभिधीयते
।
यावन्न क्रियते वक्त्रे गण्डूषस्य प्रवेशनम् ॥
अत्र गण्डूषप्रमाणं अविवक्षितम् । गण्डूषा-
र्द्धपानेऽपि लोके पानशब्दप्रयोगात् । अतएव
मुखप्रवेशनं अत्राविवक्षितं किन्तु मुखप्रवेशे
कण्ठादधोनयनं भवति
अतस्तदेवोपलक्षयति ।
अतएव ओष्ठमात्रलेपे न पाननिष्पत्तिः ।
अत-
स्तत्रोत्तमाङ्गस्पर्शप्रायश्चित्तम् ॥ * ॥
अथ सरापानप्रायश्चित्तम् । तत्र मनुः ।

शङ्खेनापि महाबाहो !
प्रायश्चित्तमुदाहृतम् ।
सुरायाः कामतः पाने मुख्यायाः
प्राणनाशनम् ॥”
पुनःपुनःपैष्टीविषयत्वाभिधानम् ।
त्रिविधा सुरा
भुख्या इति भ्रमनिरासार्थम् । कथञ्चन
सकृ-
दित्यर्थः । * । इतरासां असुराणां गौडी-
माध्वीप्रभृतीनां ज्ञानतः सकृत्पाने
मरणान्तिकं
न भवति गौडीमाध्व्योस्तु
ज्ञानतोऽभ्यस्तपाने
गौडीमाध्वीव्यतिरिक्तायास्त्वसुराया
अत्यन्ता-
भ्यस्तपाने मरणमुक्तं भविष्ये ।
“गौडीमाध्व्योस्तथाभ्यासे
प्राणान्तिकमुदा-
हृतम् ।
अभ्यासे त्वसुरायास्तु तामेवाग्निनिभां
पिबेत् ॥”
तथेति ज्ञानत इत्यर्थः । अतएव ।
“असकृत् ज्ञानतः पीत्वा वारुणीं पतति
द्विजः ।
मरणं तस्य निर्द्दिष्टं प्रायश्चित्तं विधीयते
॥”
इति यमवचनमपि एतद्विषयमेव
अत्राभ्यासे
मरणविधानात् द्वितीयवार एव मरणं
कार्य्यम् ।
गौडीमाध्व्योः कामतः सकृत्पाने भविष्ये
।
“असुरामद्यपाने तु कृते विप्रस्तु कामतः
।
चान्द्रायणं समभ्यस्येत् शुद्धिकामः
स्वशुद्धये ॥
यद्वास्मिन्नेव विषये मानवीयं प्रकल्पयेत्
।
कणान् वा भक्षयेदब्दं पिण्याकं वा
सकृन्निशि ॥

रेतोमूत्रपुरीषाणां गौडीमाध्व्योश्च प्राशने ।
क्रव्यादपशुविष्ठानां संस्काराच्छुद्धिरिष्यते
॥”
प्राणान्तिके च पादहानेरसम्भवात् क्षत्त्रिय-
वैश्ययोरपि यथोक्तं मरणान्तिकं
प्रायश्चित्तमेव ।
द्वादशवार्षिकादौ पादपादहानिरभक्ष्यभक्षणे
क्षत्त्रियादीनां ह्रासदर्शनात् ।
“विप्रे तु सकलं देयं पादोनं क्षत्त्रिये मतम् ।
वैशेऽर्द्धं पादशेषन्तु शूद्रजातिषु शस्यते ॥”
पानसादिमद्यपाने तु
कामनाकृतानेकसमया-
भ्यस्ते प्राणान्तिकं युक्तं ब्राह्मणस्य
कामनया
सकृत्कृते तु पराशरः ।
“अगम्यागमने चैव मद्यगोमांसभक्षणे ।
शुद्ध्यै चान्द्रायणं कुर्य्यात् नदीं गत्वा
समुद्रगाम् ॥
चान्द्रायणे ततश्चीर्णे
कुर्य्याद्‌ब्राह्मणभोजनम् ।
अनडुत्सहितां गाञ्च दद्याद्विप्राय दक्षिणाम्
॥”
अकामतः सकृत्पाने विष्णुः ।
“पीत्वा प्रमादतो मद्यमतिकृच्छ्रं चरेद्द्विजः
।
कारयेत् पुनःसंस्कारं भक्त्या विप्रांश्च
भोजयेत् ॥”
कामतोऽकामतश्चाभ्यासेव्रतावृत्तिमाह
यमः ।
“गोघ्नवद्विहितः कल्पश्चान्द्रायणमथापि
वा ।
अभ्यासे तु तयोर्भूयस्ततः शुद्धिमवाप्नुयात्
॥”
अपर्य्युषितपानसाद्येकादशविधमद्यपाने
त्रिरा-
त्रम् । पानसं द्राक्षमाधूकमित्याद्यभिधाय
पुलस्त्यः ।
“द्राक्षेक्षुटङ्कखर्ज्जूरपनसादेश्च यो रसः ।
सद्योजातन्तु तं पीत्वा त्र्यहात् शुद्ध्येत्
द्विजो-
त्तमः ॥”

| | | |
|---|---|---|
| | सुरापानापनुत्यर्थं बालवासा जटी ध्वजी ।"<br>पिण्याकं खलिम् ॥ * ॥ उत्तप्तसुरापानं आय-<br>सेन पात्रेण इत्याह यमः ।<br>"आयसे भाजने तप्तां ब्राह्मणीं वारुणीं पिबेत् ॥"<br>गोवालचीरवाससा तत् कर्त्तव्यं आह उशनाः ।<br>गोवालचीरवासाः सुरापः सुरामग्निवर्णां पीत्वा पूतो भवति ॥ * ॥ अज्ञानतः सकृत्- | |

प्रयोजकादीनां पादपादहानिर्द्रष्टव्या ।
बाल-
वृद्धस्त्रीणामर्द्धादिकं प्रायश्चित्तम् । इति
प्राय-
श्चित्तविवेकः ॥ * ॥ अथ पुराणे
ब्राह्मणस्य
मद्यपानादिनिषेधो यथा, --
“अध्रेयञ्चाप्यपेयञ्च तथैवास्पृश्यमेव च ।
द्विजातीनामनालोच्यं नित्यं मद्यमिति
स्थितम् ॥
तस्मात् सर्व्वं प्रयत्नेन मद्यं नित्यं
विवर्ज्जयेत् ।
पीत्वा पतति कर्म्मभ्यस्त्वसम्भाष्यो
द्विजोत्तमः ॥
भक्षयित्वाप्यभक्षाणि पीत्वापेयान्यपि
द्विजः ।
नाधिकारी भवेत्तावद्यावत्तन्न जहात्यधः
॥
तस्मात् परिहरेन्नित्यमभक्ष्याणि
प्रयत्नतः ।
अपेयानि च विप्रो वै पीत्वा तद्याति
रौरवम् ॥”
इति श्रीकूर्म्मपुराणे उपविभागे १६
अध्यायः ॥
मद्यपस्य विष्णोरुपसर्पणे दोषादि यथा,
--
वराह उवाच ।
“मद्यं पीत्वा वरारोहे ! यस्तु
मामुपसर्पति ।
तत्र दोषं प्रवक्ष्यामि शृणु सुन्दरि !
तत्त्वतः ॥
दत्त्वा वर्षसहस्राणि दरिद्रो जायते पुनः ।
ततो भवेत् स पूतात्मा मद्भक्तश्च न
संशयः ॥
यस्तु भागवतो भूत्वा कामरागेण
मोहितः ।
दीक्षितो पिबते मद्यं प्रायश्चित्तं न विद्यते
॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व
वसुन्धरे ! ।
काव्यः खयं वाक्यमिदं जगाद
सुरापानं प्रति वै जातशङ्कः ॥
यो ब्राह्मणोऽद्यप्रभृतीह कश्चित्
मोहात् सुरां पास्यति मन्दबुद्धिः ।
अपेतधर्म्मो ब्रह्महा चैव स स्या-
दस्मिँल्लोके गर्हितः स्यात् परे च ।
मया चेमां विप्रधर्म्मोक्तसीमां
मर्य्यादां वै स्थापितां सर्व्वलोके ।
सन्तो विप्राः शुश्रुवांसो गुरूणां
देवा लोकाश्चोपशृण्वन्तु सर्व्वे ॥”
इति महाभारते आदिपर्व्वणि ७९
अध्यायः ॥
अथ तन्त्रे मद्यपाननिषेधो यथा, --
“नारिकेलञ्च खार्ज्जूरं पानसञ्च तथैव
च ।
ऐक्षवं मधुकं टाङ्कं तालञ्चैव च
माक्षिकम् ॥
द्राक्षन्तु दशमं ज्ञेयं गौडं चैकादशं
स्मृतम् ।
पैष्टन्तु द्वादशं प्रोक्तं सर्व्वेषामधमं
स्मृतम् ॥
मध्यमं मधुजं गौडं शेषञ्चोत्तममिष्यते
।
एतत् द्वादशकं मद्यं न पातव्यं द्विजैः
क्वचित् ।
क्षत्त्रियादिः पिबेत् सर्व्वं पैष्टीमेकान्तु
वर्ज्जयेत् ॥
सुरां पीत्वा द्विजो मोहात् कामात्
तक्रादि-
मिश्रिताम् ।
त्रैवाषिकं व्रतं कुर्य्यादीषन्मिश्रे तु
वार्षिकम् ॥
तक्रादिमिश्रितां किञ्चित्सुरां पीत्वा
ह्यकामतः ।
कृच्छ्राब्दपादमुच्चर्य्य पुनः
संस्कारमर्हति ॥
मुखप्रवेशमात्रन्तु
प्रायश्चित्ताद्र्ध्वमाचरेत् ।
एकीकृत्याग्निसन्धानात् खार्ज्जूरं मद्यमीरितम् ॥
पक्वतालं दन्तिशाकं ककुभञ्च तथैव च ।
एतैरेव सुसन्धानात् तालमद्यं प्रकीर्त्तितम् ॥
इक्षुदण्डं मरीचञ्च वदरञ्च तथा दधि ।
शेषे तु लवणं दत्त्वा इक्षु मद्यं प्रकीर्त्तितम् ॥
नवं मधु तथा विल्वं पक्वं शर्करया सह ।
सन्धानाज्जायते मद्यं माध्वीकं शरतो रसम् ॥
शतावरी टङ्कमूलं लक्ष्मणं पद्ममेव च ।
मधुना सह सन्धानात् टङ्कमाध्वीकमीरितम् ॥
मालूरमूलं वदरी शर्करा च तथैव च ।
एषामेकत्र सन्धानात् मैरेयं मद्यमीरितम् ॥
इन्द्रजिह्वा पक्वधात्री नारिकेलजलन्तथा ।
कदलीफलसन्धानान्मद्यं तन्नारिकेलजम् ॥
दधि त्रैलोक्यविजया तथैव च करीकणा ।
गुडेन सह सन्धानात् गौडीमद्यं प्रकीर्त्तितम् ॥
शस्कुलीमर्द्धसिद्ध्वान्नपुष्णोदकसमन्वितम्।
वह्नौ सन्तापयेत् किञ्चित् स्थापयित्वा दिनद्वयम् ॥
शेषेऽहनि तु संप्राप्ते जीवनं तत्र निःक्षिपेत् ।
शृङ्गवेरं मरीचञ्च मातुलङ्गं तथैव च ।
एतेषामेव सन्धानान् पैष्टीमद्यं प्रकीर्त्तितम् ॥”
इति श्रीमत्स्यसूक्ते महातन्त्रे चतुर्व्विंशति-
साहस्रे ३६ पटलः ॥ * ॥ अपि च ।
“सिद्धमन्त्री भवेद्वीरो न वीरो मद्यपानतः ।
कलौ तु भारते वर्षे लोका भारतवासिनः ॥
गृहे गृहे सुरां पीत्वा वर्णभ्रष्टा भवन्ति हि ॥”
इति उत्पत्तितन्त्रे ६४ पटलः ॥ * ॥
“दिव्यवीरमयो भावः कलौ नास्ति कदाचन ।
केवलं पशुभावेन मन्त्रसिद्धिर्भवेन्नृणाम् ॥”
इति महानिर्व्वाणतन्त्रम् ॥ * ॥
श्रीक्रमे ।
“न दद्याद् ब्राह्मणो मद्यं महादेव्यै कथञ्चन ।
वामकामो ब्राह्मणो हि मद्यं मांसं न भक्षयेत् ॥
भैरवतन्त्रे ।
“नारिकेलोदकं कांस्ये ताम्रे गव्यं तथा मधु ।
राजन्यवैश्ययोर्देयं न द्विजस्य कदाचन ॥
एवं प्रदानमात्रेण हीनायुर्ब्राह्मणो भवेत् ।
इति आगमतत्त्वविलासः ॥ * ॥
स्मृतौ कलौ मद्यपानादिनिषेधो यथा, याज्ञ-
वल्क्यदीपकलिकायां ब्रह्मपुराणम् ।

अग्निवर्णां सुरां पीत्वा तेन मुच्येत
किल्विषात् ॥
एवञ्चैवापराधानि येन मुच्यन्ति
किल्विषात् ।
य एतेन विधानेन प्रायश्चित्तं समाचरेत्
।
न स लिप्यति पापेन संसारञ्च न
गच्छति ॥
इति वराहपुराणे
मद्यपानापराधप्रायश्चित्तम्॥
अपि च ।
“अगम्यागमनं कृत्वा मद्यगोमांसभक्षणम्
।
शुद्ध्येच्चान्द्रायणाद्विप्रः प्राजापत्येन
भूमिपः ।
वैश्यः सान्तपनाच्छूद्रः
पञ्चाहोभिर्व्विशुद्ध्यति ॥”
इति गारुडे २२ अध्यायः ॥
एतद्गौडीमाध्व्योः कामतः
सकृत्पानविषयमिति
प्रायश्चित्तविवेकदर्शनात् ॥ * ॥
द्विजस्य पूजादौ
मद्यदानविध्यनुकल्पनिषेधा यथा, --
“मदिरां पृष्ठतो दद्यात् अन्यत् पानन्तु
वामतः ।
अवश्यं विहितं यत्र मद्यं तत्र द्विजः पुनः
॥
नारिकेलजलं कांस्ये ताम्रे च
विसृजेन्मधु ।
नापद्यपि द्विजो मद्यं कदाचित्
विसृजेदपि ॥
ऋते पुष्पासवादुक्ताद्व्यञ्जनाद्वा
विशेषतः ।
राजपुत्रस्तथा मर्त्यः सचिवः
सौप्तिकादयः ॥
दद्युर्नरवलिं भूपसम्मत्या विभवाय च ।
भूपालानुमते मद्यं ददत् पापमवाप्नुयात्
॥”
इति कालिकापुराणे ६६ अध्यायः ॥
अथ ब्राह्मणस्य
मद्यपाननिषेधकशुक्रशापो यथा,
अनुपनीतो देवेशि ! व्रतं त्रैवार्षिकं
चरेत् ॥
चतुर्थकालाहारी
स्याद्ब्रह्मचर्य्यमथापि वा ।
आ पञ्च वर्षं वृद्धं वा ज्ञानादर्द्धं
विनिर्द्दिशेत् ॥
शूद्रस्य च विशेषेण अतिकृच्छ्रद्वयं
चरेत् ।
स्वजातिसाधिते तस्मिन् तदर्द्धं
व्रतमाचरेत् ॥
पैष्टीपाने ब्राह्मणस्य
मरणान्तिकमुच्यते।
माध्वीगौडीसुरापाने द्वादशाब्दं
विधीयते ॥
इतरेषान्तु पानेन शुद्धिश्चान्द्रायणेन
तु ।
राजन्यवैश्ययोश्चापि गौडी माध्वी न
शस्यते ।
मोहात् क्षत्त्रश्च वैश्यश्च पीत्वा
कृच्छ्रद्वयं चरेत् ॥
शूद्रोऽपि गौडीं पैष्टीञ्च न
पिबेद्धीनसंस्कृताम् ।
कामात् पीत्वा सुरां विप्रो
मरणान्तिकमाचरेत् ॥
चरेच्चान्द्रायणं ज्ञानात् क्षत्त्रियो वैश्य
एव च ।
पैष्टीपाने तु शूद्रस्य प्राजापत्यं
विनिर्द्दिशेत् ॥
ज्ञानादभ्यासयोगे तु चान्द्रायणत्रयं
स्मृतम् ।
नारिकेलं तथा
ज्ञानाद्विप्रश्चान्द्रायणेन तु ।
क्षत्त्रियश्चैव वैश्यश्च प्राणायामेन
शुध्यति ॥
अपक्वं पनसञ्चैव आम्रञ्च वदरं तथा
।
स्थापयित्वा घटे नित्यं
दद्यादामपयःपलम् ॥
त्रैलोक्यविजयाञ्चैव मातुलङ्गं तथैव च
।
“नराश्वमेधौ मद्यञ्च कलौ वर्ज्या द्विजातिभिः ॥”
निषेधविषयं स्पष्टयति उशनाः । “मद्यमदेयम-
पेयमनिर्ग्राह्यम् ।” अनिर्ग्राह्यमस्वीकार्य्यमिति
कल्पतरुः ॥ कालिकापुराणेऽपि ।
“स्वगात्ररुधिरं दत्त्वा आत्महत्यामवाप्नुयात्।
मद्यं दत्त्वा ब्राह्मणस्तु ब्राह्मण्यादेव हीयते ॥”
स्मृतिः ।
“ताम्रे चेक्षुरसो मद्यं पयसा यवचूर्णकम् ।
गव्यञ्च ताम्रपात्रस्थं मद्यतुल्यं घृतं विना ॥
अतो मद्यप्रतिनिधिदानमपि न युक्तम् । इति
तिथ्यादितत्त्वम् ॥ * ॥ मद्यतुल्यं यथा, --
“नारिलेकोदकं कांस्ये ताम्रपात्रे स्थितं
मधु ।

<table>
<tr>
<td>वैशम्यायन उवाच ।<br>“सुरापानाद्वञ्चनां प्राप्य विद्वान्<br>संज्ञानाशं प्राप्य चैवातिघोरम् ।<br>दृष्ट्वा कचञ्चापि तथाभिरूपं<br>पीतं तथा सुरया मोहितेन ॥<br>समन्युरुत्थाय महानुभाव-<br>स्तदोशना विप्रहितं चिकीर्षुः ।</td>
<td>समेऽहनि ततो दद्यात् सन्धानात्<br>सत्वमीरितम् ॥<br>दधि मधु घृतञ्चापि माञ्जिष्ठं तिक्तकं<br>तथा ।<br>अनुपाने तु देवेशि ! द्राक्षमद्यं<br>सुनिश्चितम् ॥<br>विडङ्गं शालवो मूलं -- ।<br>मधुना स्नह संस्थाप्य शेषपाकं<br>समाचरेत् ॥<br>पिप्पलीलवणं दत्त्वा मधुना<br>मद्यमीरितम् ।<br>पानसं पक्वखर्ज्जूरं आर्द्रं<br>सोमलतारसम् ।</td>
<td></td>
</tr>
</table>

गव्यञ्च ताम्रपात्रस्थं मद्यतुल्यं घृतं विना ॥”
इति कर्म्मलोचनः ॥ * ॥
अथ मद्यपानां तुष्ट्यर्थं कौलानां मद्यपानविधि-
र्लिख्यते ।
“कुलाचाररतो वीरः कुलसङ्गी सदा भवेत् ।
सम्बिदासेवनं कुर्य्यात् सोमपानं महेश्वरि ! ॥
सर्व्वथा कुरुते देवि ! वीरश्चोद्धतमानसः ।
दिव्यस्तु देवताप्रायश्चन्दनागुरुलेपनैः ॥
रक्तचन्दनगन्धैश्च सुदिग्धो नात्र संशयः ।
भस्माङ्गधूसरो वीर उन्मत्तवद्विचेष्टितः ॥
सुरापानरतो नित्यं बलिपूजापरायणः ।
नरश्छागश्च महिषो मेषः शूकर एव च ॥
शशकः शल्लकी गोधा खड्गी कूर्म्मो दश स्मृताः ।
वानरश्च खरश्चैव गजाश्वादिविहङ्गमाः ॥
इत्यादेस्तु बलेर्द्दानैः पूजयेत् स्वेष्टदेवताम् ।
नित्यं नैमित्तिकं काम्यं प्रकुर्य्याच्च दिने दिने ॥
कुलवारे कुलर्क्षे च तिथौ च कुलके तथा ।
भैरव्याः कल्पितं चक्रं संस्थाप्य पूर्व्ववत् प्रिये ! ।
सुराणां शोधनं कुर्य्याद्यथावत् परमेश्वरि ! ॥
प्रवृत्ते भैरवीचक्रे सर्व्वे वर्णा द्विजोत्तमाः ।
निवृत्ते भैरवीचक्रे सर्व्वे वर्णाः पृथक् पृथक् ॥
विजयाञ्चानुकल्पञ्च द्विजो दद्याद्युगे युगे ॥”
इति उत्पत्तितन्त्रे ६ ३ पटलः ॥
“द्रव्याभावे चानुकल्प्यौः पूजयेत् परदेबताम् ।
सुराभावे च गोक्षीरं द्विजो दद्याद्युगे युगे ॥”
इति निरुत्तरतन्त्रे ५ पटलः ॥ * ॥
“असंस्कृतां सुरां पीत्वा ब्राह्मणो ब्रह्महा भवेत् ।
स ब्राह्मणः स वेदज्ञः सोऽग्निहोत्री स दीक्षितः ।
बहु किं कथ्यते देवि ! स एव निर्गुणात्मकः ॥
मुक्तिमार्गमिदं देवि ! गोप्तव्यं पशुसङ्कटे ।
प्रकाशात् सिद्धिहानिः स्यात् निन्दनीयो न चान्यथा ॥”
इति मातृकाभेदतन्त्रे ३ पटलः ॥ * ॥
“कुलस्त्रीसेवनं कुर्य्यात् सर्व्वथा परमेश्वरि ! ।
रमते युवतीं रम्यां कामोन्मत्तविलासिनीम् ॥
नटीं कापालिकां वेश्यां हड्डिपानां वराङ्गनाम् ।
शूद्राणीं म्लेच्छरमणीं जवनीं परमेश्वरि ! ॥
मातृयोनिविचारोऽस्ति मातृयोनिं विना प्रिये ! ।
कुलाचारपरो वीरः कुलपूजापरायणः ॥
भगलिङ्गसमायोगादाकृष्य जपमाचरेत् ।
निश्चलन्तु भवेच्चित्तं कोटिसूर्य्यग्रहेण किम् ॥
चले चित्ते भवेद्व्याधिर्निश्चले निश्चलं यथा ।
शवानां साधनं देवि ! लतासाधनमुत्तमम् ॥
चितायाः साधनं देवि ! सिद्धिरस्ति कलौ युगे ॥
इत्युत्पत्तितन्त्रम् ॥
कालिकातारिणीदीक्षांगृहीत्वा मद्यसेवनम् ।
न करोति नरो यस्तु स कलौ पतितो भवेत् ॥
वैदिके तान्त्रिके चैव जपहोमबहिष्कृतः ।
अब्राह्मणः स एवोक्तः स एव हस्तिमूर्खकः ॥
शुनीमूत्रसमं तस्य तर्पणं यत् पितृष्वपि ।
ततः षडङ्गयुक्तञ्च वकारं बिन्दुसंयुतम् ।
एवं सकारकञ्चापि वर्णाक्षरसमन्वितम् ॥
जप्त्वा मन्त्री ततो ध्यायेत् स्वमन्त्रं कुलसुन्दरि ! ।
आनन्दभैरवं ध्यायेद्यथा तन्त्रानुसारतः ॥
रक्तवर्णं चतुर्बाहुं त्रिनेत्रं वरदं शिवम् ।
जटाजूटधरं देवं वासुकीकण्ठभूषितम् ॥
डमरुञ्च कपालञ्च मुद्गरं पाशमुत्तमम् ।
धारिणं तं यजेद्देवं व्याघ्रचर्म्माम्बरं शिवम् ॥
एवं ध्यात्वा महेशानि ! तस्य मध्ये प्रपूजयेत् ।
मायाबीजं ततो हुं फट्मन्त्रेणानेन संत्यजेत् ॥
ततस्तस्मिन्महेशानि ! आनन्दभैरवीं स्मरेत् ।
आनन्दभैरवीं देवीं वराभयलसत्कराम् ॥
घोररूपां वरारोहां त्रिनेत्रां रक्तवाससम् ।
रक्तवर्णां महारौद्रीं सहस्रभैरवान्विताम् ॥
ब्रह्मविष्णुमहेशाद्यैः स्तूयमानां शिवां भजे ।
इति ध्यात्वा महेशानि ! तेनैव मनुना यजेत् ॥
तयोरैक्यं विभाव्यैव गायत्रीं दशधा जपेत् ।
भैरवं ङेऽन्तकञ्चोक्त्वा विद्महे तदनन्तरम् ॥
सुधादेव्यै ततः पश्चाद्धीमहीति ततो वदेत् ।
तन्नो देवी ततः पश्चात्तदन्ते च प्रचोदयात् ॥
इति ते कथिता देवी गायत्री परमाक्षरी ।
तस्याः स्मरणमात्रेण द्रव्यशुद्धिश्च जायते ॥
तस्य प्रसादादीशोऽहं सत्यं सत्यं न संशयः ।
तस्य मध्ये मूलमन्त्रं विल्वदण्डैर्लिखेत् सकृत् ।
रक्तवस्त्रेण संपूज्य सुधां वस्त्रेण गोपयेत् ॥ * ॥
धर्म्मार्थकाममोक्षाणां विषयाणाञ्च पार्व्वति ! ।
सर्व्वेषां कारणं यस्मात् कारणं परिकीर्त्तितम् ॥

संस्कृतान्तु सुरां पीत्वा ब्राह्मणो
ज्वलदग्निवत् ॥
सौत्रामण्यां कुलाचारे ब्राह्मणः प्रपिबेत्
सुराम् ।
अन्यत्र कामतः पीत्वा ब्राह्मण्यादेव हीयते
॥”
इति उत्पत्तितन्त्रम् ॥ * ॥
“ब्राह्मणस्य महामोक्षं मद्यपाने प्रियंवदे ! ।
ब्राह्मणः परमेशानि ! यदि पानादिकं चरेत्
।
तत्क्षणात् शिवरूपोऽसौ सत्यं सत्यं हि
शैलजे ! ॥
तोये तोयं यथा लीनं तैजसं तैजसे यथा ।
घटे भग्ने यथाकाशं बायौ वायुर्यथा प्रिये ! ॥
तथैव मद्यपानेन ब्राह्मणो ब्रह्मणि प्रिये ।
लीयते नात्र सन्देहः परमात्मनि शैलजे ! ॥
सायुज्यादिमहामोक्षं नियुक्तं क्षत्रियादिषु ।
मद्यपानं विना देवि ! तत्त्वज्ञानं ब लभ्यते ॥
अतएव हि विप्रस्तु मद्यपानं समाचरेत् ॥
वेदमाताजपेनैव ब्राह्मणो नहि शैलजे ! ।
ब्रह्मज्ञानं यदा देवि ! तदा ब्राह्मण उच्यते ॥
देवानाममृतं ब्रह्म तदेव लौकिकी सुरा ।
सुरत्वं भोगमात्रेण सुरा तेन प्रकीर्त्तिता ॥
मन्त्रत्रयं सदा पाठ्यं ब्रह्मशापादिमोचनम् ।
प्रकुर्य्यात्तु हि येनैव तदा ब्रह्ममयी मुरा ॥
हविरारोपमात्रेण वह्निर्दीप्तो यथा भवेत् ।
शापमोचनमात्रेण सुरा मुक्तिप्रदायिनी ।
अतएव हि देवेशि ! व्राह्मणः पानमाचरेत् ॥

कालीतारामनुं प्राप्य वीराचारं करोति न
॥
शूद्रत्वं तच्छरीरेण प्राप्नुयात् स न
चान्यथा ॥
इति कामाख्यातन्त्रे ५ पटलः ॥
मद्यशोधनप्रकारो यथा । शिव उवाच ।
शृणु पार्व्वति ! वक्ष्यामि तेषां वै
शोधनक्रियाम् ।
पद्मासनेन संविश्य करपुटं समाचरेत् ॥
वामे गुरूनमस्कृत्य दक्षिणे गणपतिं
स्मरेत् ।
मध्ये देवीं नमस्कृत्य प्राणायामत्रयञ्चरेत्
॥
शरीरे मातृकां न्यस्य
ऋष्यादिन्यासमाचरेत् ।
स्वकल्पोक्तविधानेन षडङ्गन्यासमाचरेत्
॥
पश्चाद्भूमौ त्रिकोणं वा षट्कोणं वा महे-
श्वरि ! ।
विलिख्य मण्डलं शुद्धं तस्योपरि घटं
न्यसेत् ॥
बहुधा प्रोक्षणं कृत्वा फट्कारेण पुनः पुनः
।
ततस्तस्मिन् कारणन्तु मूलेनैव च
स्थापयेत् ॥
मातृकार्णेन देवेशि ! विपरीतेन चैव हि ।
पुनः फट्कारमन्त्रेण प्रोक्षणं कारयेत्
सुधीः ॥
ततो वियच्छक्तिबीजं चतुर्द्दशस्वरान्वितम्
।
नादबिन्दुयुतं कृत्वा तस्योपरि शतं जपेत्
॥
ततो मूलं जपेन्मन्त्रं मायाबीजं ततः परम्
।
धेनुं योनिं गालिनीञ्च त्रिखण्डं
मीनसंज्ञकम् ।
दर्शयित्वा वरारोहे ! घटं धृत्वा पठेन्मनुम्
॥
ॐएकमेव परं ब्रह्म स्थूलसूक्ष्ममयं ध्रुवम्
।

अस्माकञ्च महेशानि ! शरीरकारणं हि तत्
।
मृत्युञ्जयोऽहं वीरेशि ! वीरकार्य्यप्रसादतः ॥
निर्व्विकारेण देवेशि ! निर्व्विकल्पेन चेतसा
।
सेव्यमानं कुलं भद्रे ! भुक्तिमुक्तिप्रदायकम्
॥
निर्व्विकल्पो महेशानि ! मुक्तिभागी न
संशयः ।
सविकल्पो वरारोहे ! रौरवं याति निश्चितम्
॥”
इति कैवल्यतन्त्रे २ पटलः ॥
(वैद्यकोक्तदोषादि यथा, --
“तीक्ष्णोष्णरूक्षसूक्ष्माम्लंव्यवायाशुकरं
लघु ।
विकाशि विशदं मद्यमोजसोऽस्माद्विपर्य्ययः
॥
तीक्ष्णादयो विषेऽप्युक्ताश्चित्तोपप्लाविनो
गुणाः ।
जीवितान्ताय जायन्ते विषे तूत्कर्षवृत्तितः
॥
तीक्ष्णादिभिर्गुणैर्मद्यं मन्दादीनोजसो गुणान्
।
दशभिर्दशसंक्षोभ्य चेतो नयति विक्रियाम् ॥
आद्ये मदे द्वितीये स प्रमादायतने स्थितः ।
दुर्व्विकल्पहतो मूढः सुखमित्यधिमुच्यते ॥
मध्यमोत्तमयोः सन्धिं प्राप्य राजसतामसः
।
निरङ्कुश इव व्यालो न किञ्चिन्नाचरेज्जडः ॥
इयं भूमिरवद्यानां दौःशील्यस्येदमास्पदम् ।
एकोऽयं बहुमार्गाया दुर्गतेर्देशिकः परम् ॥
निश्चेष्टः शववच्छेते तृतीये तु मदे स्थिताः
।
मरणादपि पापात्मा गतः पापतरां दशाम् ॥
धर्म्माधर्म्मसुखं दुःखमर्थानर्थं हिताहितम् ।
यदासक्तो न जानाति कथं तच्छीलयेद्बुधः ।
मद्ये मोहो भयं शोकः क्रोधो मृत्युश्च
संस्थितः ॥

| | | |
|---|---|---|
| | कचोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यहम् ॥<br>ॐ सूर्य्यमण्डलसम्भूते वरुणालयसम्भवे ।<br>अमाबीजमये देवि !<br>शुक्रशापाद्विमुच्यताम् ॥<br>ॐ वेदानां प्रणवो बीजं ब्रह्मानन्दमयं यदि ।<br>तेन सत्येन ते देवि ! ब्रह्महत्यां व्यपोहतु ॥ | |

सोन्मादमदमूर्च्छायाः सापस्मारापतानकाः ॥
यत्रैकः स्मृतिविभ्रंशस्तत्र सर्व्वमसाधु यत् ।
अयुक्तियुक्तमन्नं हि व्याधये मरणाय वा ॥
मद्यं त्रिवर्गधीधैर्य्यलज्जादेरपि नाशनम् ।
नाति माद्यन्ति बलिनः कृताहारा महाशनाः ॥
स्निग्धाः सत्त्ववयोयुक्ता मद्यनित्यास्तदन्वयाः ।
मेदःकफाधिकामन्दवातपित्तादृढाग्नयः ॥
विपर्य्ययेऽतिमाद्यन्ति विश्रब्धाः कुपिताश्च ये ।
मद्येन चाम्लरूपेण साजीर्णे बहु नाति च ॥"
इति वाभटे निदानस्थाने षष्ठेऽध्याये ॥) एतानि श्रुतिस्मृतिविरुद्धत्वान्मोहनार्थानिशिष्टैः कदाचिदपि नाचरणीयानि ॥

**मद्यद्रुमः**, पुं, (मद्योत्पादको द्रुमः ।) माडवृक्षः । इति राजनिर्घण्टः ॥

**मद्यपङ्कः**, पुं, (मद्यानां पङ्क इव ।) सुराकल्कः । मेया इति भाषा ॥ तत्पर्य्यायः । मेदकः २ जगलः ३ । इति हेमचन्द्रः । ३ । ५६८ ॥

**मद्यपाशनं**, क्ली, (मद्यपैरश्यते भुज्यते इति । अश् + कर्म्मणि ल्युट् ।) पानरुचकभक्ष्यम् । तत्-पर्य्यायः । उपदंशः २ अवदंश ३ चक्षणम् ४ । इति हेमचन्द्रः । ३ । १७१ ॥

**मद्यपुष्पा**, स्त्री, (मद्यानि मदसाधनानि पुष्पा-ण्यस्याः ।) धातकी । इति राजनिर्घण्टः ॥ (गुणादिविवृतिरस्या धातकीशब्दे ज्ञातव्या ॥)

**मद्यमण्डः**, पुं, (मद्यस्य मण्डः ।) मद्यफेनः । तत्-पर्य्यायः । कारोत्तमः २ । इति हेमचन्द्रः । ३ ।

मद्रभद्रयोः पर्य्यायित्वादन्यतरो न पठनीयः । इति सिद्धान्तकौमुदी च ॥)

**मद्रकः**, त्रि, (मद्रेषु जातं इति । मद्र + "मद्रवृज्योः कन् ।" ४ । २ । १३१ । इति कन् ।) मद्रदेश-भवः । इति सिद्धान्तकौमुदी ॥ (देशभेदः । यथा, मत्स्यपुराणे । ११३ । ४१ ॥
"गान्धारा यवनाश्चैव सिन्धुसौवीरमद्रकाः ॥")

**मद्रकारः**, त्रि, (मद्रं करोतीति । कृ + "क्षेम-प्रियमद्रेऽण् च ।" ३ । २ । ४४ । इति पक्षे अण् ।) मद्रङ्करः । यथा क्षेमप्रियमद्रात् कुर्व्वेति मुग्धबोधव्याकरणम् ॥

**मद्रङ्करः**, त्रि, (मद्रं भद्रं करोतीति । कृ + "क्षेम-प्रियमद्रेऽण् च ।" ३ । २ । ४४ । इति चकारात् खच् । मुम् च ।) मङ्गलकारकः । यथा क्षेम-ङ्करोऽरिष्टतातिः स्यान्मद्रङ्करशङ्करौ । इति त्रिकाण्डशेषः ॥

**मद्रसुता**, स्त्री, (मद्रस्य सुता ।) मद्रराजकन्या । सा पाण्डुराजस्य द्वितीया भार्य्या नकुलसहदेव-जननी च । इति शब्दरत्नावली ॥

**मद्वर्गीणः**, त्रि, (मद्वर्गस्यायमिति । "अशब्दे

मधु तु मधुरं कषायानुरसं रुक्षं शीतमग्नि-दीपनं वर्ण्यं बल्यं लघु सुकुमारं लेखनं हृद्यं सन्धानं शोधनं रोपणं वाजीकरणं संग्राहि चक्षुःप्रसादनं सूक्ष्ममार्गानुसारि पित्तश्लेष्ममेदो-मेहहिक्काश्वासकासातिसारच्छर्द्दितृष्णाकृमि-विषप्रशमनं ह्लादित्रिदोषप्रशमनञ्च तत्तु लघु-त्वात् कफघ्नं पैच्छिल्यान्माधुर्य्यात् कषायभावाच्च वातपित्तघ्नम् ।
"बृंहणीयं मधु नवं नातिश्लेष्महरं सरम् ।
मेदःस्थौल्यापहं ग्राहि पुराणमतिलेखनम् ॥
दोषत्रयहरं पक्वमाममम्लं त्रिदोषकृत् ।
तद्युक्तं विविधैर्योगैर्निहन्यादामयान् बहून् ॥
नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु ॥"
तत्तु नानाद्रव्यरसगुणवीर्य्यविपाकविरुद्धानां पुष्परसानां सविषमक्षिकासम्भवत्वाच्चानुष्णो-पचारम् ।
"उष्णैर्विरुध्यते सर्व्वं विषान्वयतया मधु ।
उष्णार्त्तमुष्णैरुष्णैर्वा तं निहन्ति यथा विषम् ॥
तत् सौकुमार्य्याच्च तथैव शैत्या-न्नानौषधीनां रससम्भवाच्च ।
उष्णैर्विरुध्येत विशेषतश्च तथान्तरीक्षेण जलेन चापि ॥
उष्णेन मधु संयुक्तं वमनेष्ववचारितम् ।
अपाकादनवस्थानान्न विरुध्येत पूर्ब्बवत् ॥
मध्वामात् परतस्त्वन्यदामं कष्टं न विद्यते ।
विरुद्धोपक्रमत्वात्तत् सर्व्वं हन्ति यथा विषम् ॥"
इति सुश्रुते सूत्रस्थाने ४५ अध्याये ॥) अस्य सामान्यगुणाः । शीतत्वम् । मृदुत्वम् । स्वादुत्वम् । त्रिदोषव्रणनाशित्वम् । कषायानु-रसत्वम् । रूक्षत्वम् । चक्षुष्यत्वम् । श्वासकास-नाशित्वञ्च ॥ * ॥ तदष्टविधं यथा । पौत्तिकम् १ भ्रामरम् २ क्षौद्रम् ३ माक्षिकम् ४ छात्रम् ५ अर्घ्यम् ६ औद्दालकम् ७ दालम् ८ । एतेषां लक्षणाणि यथा, --
"पिङ्गला मक्षिका ज्ञेया महत्यल्पा च सा द्विधा ।
महती पुत्तिकानाम्नी स्वल्पा क्षुद्रेति कथ्यते ॥
मध्यमा मक्षिका नीला माक्षिकेत्यभिधीयते ।
पुत्तिकाभ्रमरक्षुद्रामक्षिकासम्भवंमधु ॥

५६९ ॥ कारोत्तरः ३ सुरामण्डः ४ ।
इत्यमरः ।
२ । १० । ४३ ॥

**मद्यवासिनी**, स्त्री, (मद्यानामिव वासो गन्धोऽस्या
अस्तीति । इनिः ङीष् ।) धातकीवृक्षः ।
इति
रत्नमालाराजनिर्घण्टौ ॥

**मद्यबीजं**, क्ली, (मद्यस्य बीजम् ।) नानाद्रव्यकृत-
सुराबीजम् । तत्पर्य्यायः । किण्वम् २ नग्नहूः
३ नग्नहुः ४ । इति हेमचन्द्रः । ३ । ५६९ ।
वाखर इति भाषा ॥

**मद्यसन्धानं**, क्ली, (मद्यस्य सन्धानमुत्पादनार्थं
आयोजनम् ।) सुरासज्जीकरणम् ।
वंशाङ्कुर-
फलादीन् बहुकालं सन्धाय यत् क्रियते तत्
।
तत्पर्य्यायः । आसुतिः २ आसवः ३
अभिषवः
४ । इति हेमचन्द्रः । ३ । ५६९ ॥

**मद्यामोदः**, पुं, (मदस्येवामोदो गन्धो यस्य ।)
वकुलवृक्षः । इति राजनिर्घण्टः ॥

**मद्रः**, पुं, (मन्दते इति । मदि मोदादौ + "स्फायि
तञ्चीति ।" उणा० २ । १३ । इति रक् ।)
देश-
विशेषः । हर्षः । इत्युणादिकोषः ॥
तद्देशविव-
रणं यथा, --
"वैराटपाण्ड्ययोर्म्मध्ये पूर्ब्बदक्षक्रमेण तु ।
मद्रदेशः समाख्यातो माद्रीहा तत्र तिष्ठति ॥"
इति शक्तिसङ्गमतन्त्रे ७ पटलः ॥
(भद्रे, क्ली । यथा, चतुर्थी चाशिष्यायुष्य
मद्र-
भद्रकुलसुखार्थहितैः । २ । ३ । ७३ ।
इत्यत्र
सूत्रे । मद्रं देवदत्तस्यभूयात् । इति काशिका
।

यत् खावन्यतरस्याम् ।" ४ । ३
। ६४ ।
इतिक्रमेण खछयत्प्रत्ययाः ।)
मद्वर्गसम्बन्धी । इति
सिद्धान्तकौमुदी ॥

**मद्वर्गीयः**, त्रि, (मद्वर्गस्यायमिति । "अशब्दे
यत् खावन्यतरस्याम् ।" ४ । ३
। ६४ ।
इतिक्रमेण खछयत्प्रत्ययाः ।)
मद्वर्गसम्बन्धी । इति
सिद्धान्तकौमुदी ॥

**मद्वर्ग्यः**, त्रि, (मद्वर्गस्यायमिति । "अशब्दे
यत् खावन्यतरस्याम् ।" ४ । ३
। ६४ ।
इतिक्रमेण खछयत्प्रत्ययाः ।)
मद्वर्गसम्बन्धी । इति
सिद्धान्तकौमुदी ॥

**मद्वा**, [न्] पुं, (माद्यतीति । मद् + "स्ना-
मदिपद्यर्त्तिपॄशकिभ्यो वनिप् ।"
उणा० ४ ।
११२ । इति वनिप् ।) शिवः ।
इति सिद्धान्त-
कौमुद्यामुणादिवृत्तिः ॥
(मदनशीले, त्रि ।
यथा, ऋग्वेदे । ८ । ८१ । १९ ।
"इन्द्राय मद्वने सुतं परिष्टोभन्तु
नो गिरः ॥")
"मद्वने मदनशीलाय ।" इति
तद्भाष्ये सायनः ॥

**मधु**, क्ली, (मन्यन्ते विशेषेण जानन्ति
जना
यस्मिन् । मन् +
"फलिपाटिनमिमनिजनांगुक्-
पटिनाकिधतश्च । उणा० १ ।
१९ । इति उः
धश्चान्तादेशः । मद्यम् । (यथा,
आर्य्यासप्त-
शत्याम् । ४२५ ।

पौत्तिकाद्युच्यते च्छात्रं वरटीच्छत्रसम्भवम् ।
तपोवने जरत्कारोरर्घ्यं मधुतरूद्भवम् ॥
औद्दालकन्तु बल्मीककारिकीटविनिर्म्मितम् ।
दालमित्यभिनिर्द्दिष्टं वृक्षकोटरकीटजम् ॥"
एतेषां वर्णा यथा, --
"माक्षिकं तैलवर्णं स्यात् घृतवर्णन्तु पौत्तिकम् ।
क्षौद्रं कपिलवर्णं स्याच्छ्वेतं भ्रामरमुच्यते ॥"
एतेषां गुणा यथा, --
पौत्तिकं तेषु वीर्य्योष्णं कषायानुरसान्वयात् ।
वातासृक्पित्तकृद्भेदि विदाहि मदकृन्मधु ॥
"पैच्छिल्यात् स्वादुभूयस्त्वाद् भ्रामरं गुरु
कीर्त्तितम् ।
क्षौद्रं विशेषतो ज्ञेयं शीतलं लघु लेखनम् ॥
तस्माल्लघुतरं रूक्षं माक्षिकं प्रवरं स्मृतम् ।

| | “मधुमदवीतव्रीडा यथा यथा लपति सम्मुखं बाला ॥”)<br>क्षीरम् । जलम् । इति विश्वः हेमचन्द्रश्च ॥<br>रसभेदः । मधुररसः इति यावत् । इति शब्द-रत्नावली ॥ पुष्परसः । पुलेर मौ इति भाषा ॥<br>तत्पर्य्यायः । मकरन्दः २ । इत्यमरः । २ । ४ । १७ ॥<br>मरन्दः ३ मरन्दकः ४ । इति शब्दरत्नावली ॥<br>क्षुद्राभिर्मक्षिकाभिः कृतम् । मौ इति भाषा ।<br>क्षौद्रम् २ माक्षिकम् ३ । इत्यमरः । २ । १ । १७ ॥<br>माक्षीकम् ४ कुसुमासवम् ५ पुष्पासवम् ६<br>पवित्रम् ७ पित्र्यम् ८<br>पुष्परसाह्वयम् ९ । इति राजनिर्घण्टः ॥ माध्वीकम् १० सारघम् ११<br>मक्षिकावान्तम् १२ वरटीवान्तम् १३ भृङ्ग-वान्तम् १४ पुष्परसोद्भवम् १५ । इति भाव-प्रकाशः ॥ (तथास्य पर्य्यायः ।<br>“मधु पुष्परसं क्षौद्रं मकरन्दश्च माक्षिकम् ॥”<br>इति वैद्यकरत्नमालायाम् ॥ | |
|---|---|---|

श्वासादिषु च रोगेषु प्रशस्तं तद्विशेषतः ॥
छात्रं श्वित्रिक्रिमिहरं रक्तपित्तहरं गुरु ।
अर्घ्यं चक्षुष्यमायुष्यं कफपित्तामवातजित् ॥
औद्दालकं कषायोष्णं कटुकुष्ठविषापहम् ।
दालं कफहरं रूक्षं दीपनं छर्द्दिमेहनुत् ॥
उष्णमुष्णार्त्तमुष्णैश्च हन्यान्मधु
विषान्वयात् ।
मधुन्युष्णैर्विरुध्यन्ते
वर्ज्जयित्वार्य्यसंज्ञितम् ॥”
उष्णैः रौद्रैः करणैः उष्णं मधु उष्णार्त्तं रौद्र-
पीडितं जनं विषान्वयात् विषतुल्यत्वात्
हन्यात् ॥ * ॥ नवपुराणमधुगुणाः ।
“वृंहणीयं मधु नवं वातश्लेष्महरं परम् ।
पुराणं लघु संग्राहि निर्द्दोषं स्थौल्यनाशनम्
॥
दोषत्रयहरं पक्वमाममम्लं त्रिदोषकृत् ॥”
अत्र केचिन्मधुनोऽग्निसंयोगाभावात्
कालपक्व-
तामाहुः ॥ * ॥ मधुजातशर्क्करागुणाः ।
“मधुजा शर्क्करा रूक्षा
तृष्णाच्छर्द्यतिसारजित् ।”
इति राजवल्लभे मधुवर्गः ॥ * ॥
अपि च ।
“माक्षिकं भ्रामरं क्षौद्रं पौत्तिकं छात्रकं तथा ।
आर्घ्यमौद्दालकं दालमित्यष्टौ मधुजातयः ॥
नानापुष्परसाहाराः कपिला वनमक्षिकाः ।
याः स्थूलास्ताभिरुत्पन्नं मधु माक्षिकमुच्यते
॥
ये स्निग्धाञ्जनगोलाभाः पुष्पासवपरायणाः ।
भ्रमरैर्जनितं तैस्तु भ्रामरं मधु भण्यते ॥
पिङ्गला मक्षिकाः सूक्ष्माः क्षुद्रा इति हि
विश्रुताः ।
ताभिरुत्पादितं यत्तु तत् क्षौद्रं मधु कथ्यते
॥
महत्यो मक्षिकाः पिङ्गाः पुत्तिका इति
कीर्त्तिताः ।
तज्जातं मधु धीमद्भिः पौत्तिकं समुदाहृतम्
॥
छत्राकारन्तु पटलं सरघाः पीतपिङ्गलाः ।

दालं कटु कषायाम्लं मधुरं पित्तदायि च ॥
नवं मधु भवेत् स्थौल्यं नातिश्लेष्महरं परम् ।
देहस्थौल्यापहं ग्राहि पुराणं मधु लेखनम् ॥
पक्वं दोषत्रयघ्नं मधु विविधरुजाजाड्यजिह्वा-
मयादि-
ध्वंसं धत्ते च रुच्यं बलमतिधृतिदं वीर्य्यवृद्धिं
विधते ।
आमञ्चेदामगुल्मामयपवनरुजापित्तदाहास्रदोष-
नाशं न्यूनं विशोषं जनयति नयति
ध्वंसमप्यण्ड-
वृद्धेः ॥
व्रणशोधनसन्धाने व्रणसंरोपणादिषु ।
साधारण्यान्मधु हितं तत्तुल्या मधुशर्कराः ॥
उष्णं सहोष्णं काले वा स्वयमुष्णमथापि वा ।
आमं मधु मनुष्याणां विषवत्तापदायकम् ॥
कीटकादियुतमम्लदूषितं
यच्च पर्य्युषितकं मधु स्वतः ।
कण्ठकोटरगतञ्च मेचकं
तच्च गेहजनितञ्च दोषकृत् ॥
दण्ड निहत्य यदुपात्तमपास्य दंशां-
स्तादृग्विधं मधु रसायनयोगयोग्यम् ।
हिक्कागुदाङ्कुरविशोफकफव्रणादि-
दोषापहं भवति दोषदमन्यथा चेत् ॥
माध्वी सिता मधूपन्ना मधुजा मधुशर्करा ।
माक्षीकशर्करा चैषा क्षौद्रजा क्षौद्रशर्करा ॥
यद्गुणं यन्मधु प्रोक्तं तद्गुणास्तस्य शर्कराः ।
विशेषाद्बलवृष्या च तर्पणं क्षीणदेहिनाम् ॥”
इति राजनिर्घण्टः ॥ * ॥ * ॥
मतान्तरे मधुगुणाः ।
“मधु शीतं लघु स्वादु रुक्षं ग्राहि विलेखनम् ।
चक्षुष्यं दीपनं स्वर्य्यं व्रणशोधनरोपणम् ॥
सौकुमार्य्यकरं सूक्ष्मं परं स्रोतोविशोधनम् ।
कषायानुरसं ह्लादि प्रसादजनकं परम् ॥
बल्यं मेधाकरं वृष्यं विषदं रोचनं हरेत् ।
कुष्ठार्शःकासपित्तास्रकफमेहक्लमक्रिमीन् ।
मेदस्तृष्णावमिश्वासहिक्कातीसारविड्ग्रहान् ।
दाहक्षतक्षयांस्तत्तु योगवाह्यल्पवातलम् ॥” * ॥
अथ मधुभेदाः ।

अथ क्षौद्रस्य ।
“मक्षिकाः कपिलाः सूक्ष्माः
क्षुद्राख्यास्तत्कृतं
मधु ।
मुनिभिः क्षौद्रमित्युक्तं तद्वर्णात्
कपिलं भवेत् ॥
गुणैर्माक्षिकवत् क्षौद्रं
विशेषान्मेहनाशनम् ॥”
अथ पौत्तिकस्य ।
“याः कृष्णा मशकोपमा लघुतराः
प्रायो
महापिण्डितं
वृक्षाणां तरुकोटरान्तरगताः
पुष्पासवं कुर्व्वते ।
तास्तज्ज्ञैरिह पुत्तिका
निगदितास्ताभिः कृतं
सर्पिषा
तुल्यं यन्मधु तद्वनेचरजनैः
संकीर्त्तितं पौत्ति-
कम् ॥
पौत्तिकं मधु रूक्षोष्णं
पित्तदाहास्रवातकृत् ।
विदाहि मेहकृच्छ्रघ्नं
ग्रन्थ्यादिक्षतशोषि च ॥”
अथ छात्रस्य ।
“वरटाः कपिलाः पीताः प्रायो
हिमवतो वने ।
कुर्व्वन्ति छत्रकाकारं तज्जं छात्रं
मधु स्मृतम् ॥
छात्रं कपिलपीतं स्यात् पिच्छिलं
शीतलं
गुरु ।
स्वादुपाकं
क्रिमिश्चित्ररक्तपित्तप्रमेहजित् ।
भ्रमतृणमोहविषहृत् तर्पणञ्च
गुणाधिकम् ॥”
अथार्घ्यस्य ।
“मधूकवृक्षा निर्यासं
जरत्कार्बाश्रमोद्भवाः ।

ये कुर्व्वन्ति तदुत्पन्नं मधुच्छात्रकमीरितम्॥
मक्षिकास्तीक्ष्णतुण्डाया: पीता: षट्पद-
सन्निभा: ।
तदुद्भूतं यदर्घ्यार्हं तदार्घ्यं मधु भण्यते ॥
उद्दाला: कपिला: कीटा भूमेरुद्दलना:
स्मृता: ।
बल्मीकान्तस्तदुत्पन्नमौद्दालकमुदीर्य्यते ॥
इन्द्रनीलदलाकारा: सूक्ष्माश्चिन्वन्ति
मक्षिका: ।
यद्वृक्षकोटरान्तस्तन्मधु दालमिदं क्रमात् ॥
इत्येतस्याष्टधा भेदैरुत्पत्ति: कथिता क्रमात्
।
अथ वक्ष्याम्यहं त्वेषां वर्णवीर्य्यादिकं क्रमात्
॥"
तद्यथा, --
माक्षिकं तैलवर्णं स्यात् श्वेतं भ्रामरमुच्यते ।
क्षौद्रन्तु कपिलाभासं पौत्तिकं घृतसन्निभम्
॥
आपीतवर्णं छत्रं स्यात् पिङ्गलञ्चार्घ्यनामकम्
।
औद्दालं स्वर्णसादृश्यमापीतं दालमुच्यते ॥
माक्षिकं मधुरं रूक्षं लघु श्वासादिदोषनुत् ।
भ्रामरं पिच्छिलं रूक्षं मधुरं मुखजाड्यजित्
॥
क्षौद्रन्तु शीतं चक्षुष्यं पिच्छिलं पित्तवातहृत्
।
पौत्तिकं मधु रूक्षोष्णं कृम्यस्रपित्तदाहहृत् ॥
श्वित्रमेहकृमिघ्नञ्च विद्याच्छात्रं गुणोत्तरम् ।
अर्घ्यं मध्वतिचक्षुष्यं कफपित्तादिदोषहृत् ॥
औद्दालकन्तु कुष्ठादिदोषघ्नं सर्व्वसिद्धिदम्
।

"माक्षिकं भ्रामरं क्षौद्रं पौत्तिकं छात्रमित्यपि ।
आर्घ्यमौद्दालकं दालमित्यष्टौ मधुजातय: ॥" *
॥
अथ तेषां लक्षणानि गुणाश्च । तत्र माक्षिकस्य ।
"मक्षिका: पिङ्गवर्णास्तु महत्यो मधुमक्षिका: ।
ताभि: कृतं तैलवर्णं माक्षिकं तत् प्रचक्षते ॥
माक्षिकं मधुषु श्रेष्ठं नेत्रामयहरं लघु ।
कामलार्श:क्षतश्वासकाशक्षयविनाशनम्॥" *
॥
अथ भ्रामरस्य ।
"किञ्चित् सूक्ष्मै: प्रसिद्धेभ्य: पुष्पेभ्य: अलिभि-
श्चितम् ।
निर्म्मलं स्फटिकाभं यत्तन्मधु भ्रामरं स्मृतम् ॥
भ्रामरं रक्तपित्तघ्नं मूत्रजाड्यकरं गुरु ।
स्वादुपाकमभिष्यन्दि विशेषात् पिच्छिलं
हिमम् ॥ * ॥"

स्रवन्त्यार्घ्यं तदा ख्यातं श्वेतकं
मालवे पुन: ॥
तीक्ष्णतुण्डास्तु या: पीता मक्षिका:
षट्पदो-
पमा: ।
अर्घ्यास्तास्तत्कृतं
यत्तदार्घ्यमित्यपरे जगु: ॥
आर्घ्यं मध्वतिचक्षुष्यं कफपित्तहरं
परम् ।
कषायं कटुकं पाके तिक्तञ्च
बलपुष्टिकृत् ॥" * ॥
अथोद्दालकस्य ।
"प्रायो वल्मीकमध्यस्था: कपिला:
स्वल्प-
कीटका: ।
कुर्व्वन्ति कपिलं स्वल्पं तत्
स्याद्यौद्दालकं मधु ॥
औद्दालकं रुचिकरं स्वर्य्यं
कुष्ठविषापहम् ।
कषायमुष्णमम्लञ्च कटुपाकञ्च
पित्तकृत् ॥" * ॥
अथ दालस्य ।
"संस्रुत्य पतितं पुष्पात् यत्तु
पत्रोपरि स्थितम् ।
मधुराम्लकषायञ्च तद्दालं मधु
कीर्त्तितम् ॥
दालं मधु लघु प्रोक्तं दीपनीयं
कफापहम् ।
कषायानुरसं रूक्षं रुच्यं
छर्द्दिप्रमेहजित् ॥
अधिकं मधुरं स्निग्धं बृंहणं
गुरुभारिकम् ॥"
लघु पाके । गुरुभारिकं तुलितम् ॥
* ॥ अथ
नवपुराणमधुगुणा: ।
"नवं मधु भवेत् पुष्ट्यै
नातिश्लेष्महरं सरम् ।
पुराणं ग्राहकं रूक्षं
मेदोघ्नमतिलेखनम् ॥
मधुन: शर्करायाश्च गुडस्यापि
विशेषत: ।

| | | |
|---|---|---|
| | | एकसंवत्सरेऽतीते पुराणत्वं स्मृतं बुधैः ॥”<br>अथ मधुनः शीतस्य गुणाधिक्यमुष्णताया निषेधः ।<br>“विषपुष्पादपि रसं सविषा भ्रमरादयः ।<br>गृहीत्वा मधु कुर्व्वन्ति तच्छीतं गुणबन्मधु ॥<br>विषान्वयात्तदुष्णन्तु द्रव्येणोष्णेन वा सह ।<br>उष्णार्त्तस्योष्णकाले च स्मृतं विषसमं मघु ॥”<br>इति भावप्रकाशः ॥ |

**मधुः**, पुं, (मन् + उ । नस्य धः ।) मधुद्रुमः ।
मौलगाछ इति भाषा ॥ वसन्तर्त्तुः । (यथा,
कुमारसम्भवे । ३ । २७ ।
"निवेशयामास मधुर्द्विरेफान्
नामाक्षराणीव मनोभवस्य ॥")
दैत्यभेदः । (यथा, देवीभागवते । १ । ९ । १५ ।
"मधुश्च कुपितस्तत्र हरिणा सह संयुगे ॥")
इमं हत्वा विष्णुर्मधुसूदनोऽभूत् ॥ चैत्रमासः ।
इति मेदिनी । धे, १२ ॥ (यथा, रघुः । ११ । ७ ।
"रेजतुर्गतिवशात् प्रवर्त्तिनौ
भास्करस्य मधुमाधवाविव ॥")
अशोकवृक्षः । इति हेमचन्द्रः । २ । १५३ ॥ यष्टि-
मधु । इति शब्दरत्नावली ॥ असुरविशेषः ।
(यथा, भागवते । ९ । ११ । १४ ।
"शत्रुघ्नश्च मधोः पुत्त्रं लवणं नाम राक्षसम् ।
हत्वा मधुवने चक्रे मथुरां नाम वै पुरीम् ॥")
स च शत्रुघ्नेन हतः । यस्य नाम्ना मथुरा मधु-
पुरीति ख्याता ॥

**मधुः**, स्त्री, (मन् + उ । नस्य धः ।) जीवन्तीवृक्षः ।
इत्यमरः । २ । ४ । १४२ ॥

**मधुकं**, क्ली, (मध्विवेति । मधु + "संज्ञायां
च ।" ५ । ३ । ९७ । इति कन् । यद्वा, मधु
मधुरं कायतीति । कै + कः ।) यष्टिमधुका ।
इत्यमरः । २ । ४ । १०९ ॥ (यथास्य पर्य्यायः ।
"यष्ट्याह्वं मधुकं यष्टि क्लीतकं मधुयष्टिका ।
यष्टिमधु स्थलेजाता जलजातिरसा पुरा ॥"
इति वैद्यकरत्नमालायाम् ॥)
त्रपु । इति हेमचन्द्रः ॥

**मधुकः**, पुं, (मधु मधुरं कायतीति । कै + कः ।)
वन्दिभेदः । यष्ट्याह्वः । विहगान्तरः । इति विश्वः
॥

**मधुकण्ठः**, पुं, (मधुर्मधुरः कण्ठः कण्ठस्वरो
यस्य ।) क्लोकिलः । इति त्रिकाण्डशेषः ॥

**मधुकरः**, पुं, (करोति सञ्चिनोतीति । कृ + अच् ।
मधुनः करः ।) भ्रमरः । इत्यमरः । २ । ५ ।
२९ ॥ (यथा, श्रीमद्भागवते । ४ । १८ । २ ।
"सर्व्वतः सारमादत्ते यथा मधुकरो बुधः ॥")
कामी । इति धरणिः ॥ भृङ्गराजवृक्षः । इति

**मधुका**, स्त्री, (मधुक + टाप् ।) मधुयष्टिका ।
इत्यमरः । २ । ४ । १०९ ॥ मधुपर्णीवृक्षः
। इति
मेदिनी । के, १३५ ॥ कृष्णवर्णकङ्गुनी ।
इति
हेमचन्द्रः । ४ । २४३ ॥

**मधुकुक्कुटिका**, स्त्री, (मधुः मधुरा कुक्कुटीव ।
मधुकुक्कुट + स्त्रियां ङीष् ।
स्वार्थे कन् । स्त्रियां टाप् । पूर्ब्बस्य
ह्रस्वत्वञ्च ।)
जम्बीरविशेषः । मखुर इति महूर इति च
भाषा । तत्पर्य्यायः । मातुलुङ्गा २ सुगन्धा
३
गिरिजा ४ पूतिपुष्पिका ५ अत्यम्ला ६
देव-
दूती ७ । इति रत्नमाला ॥ अस्या गुणाः ।
शीतत्वम् । स्वादुत्वम् । गुरुत्वम् ।
स्निग्धत्वम् ।
वातपित्तविनाशित्वञ्च । इति राजवल्लभः ॥

**मधुकुक्कुटी**, स्त्री, (मधुः मधुरा कुक्कुटीव ।
मधुकुक्कुट + स्त्रियां ङीष् ।
स्वार्थे कन् । स्त्रियां टाप् । पूर्ब्बस्य
ह्रस्वत्वञ्च ।)
जम्बीरविशेषः । मखुर इति महूर इति च
भाषा । तत्पर्य्यायः । मातुलुङ्गा २ सुगन्धा
३
गिरिजा ४ पूतिपुष्पिका ५ अत्यम्ला ६
देव-
दूती ७ । इति रत्नमाला ॥ अस्या गुणाः ।
शीतत्वम् । स्वादुत्वम् । गुरुत्वम् ।
स्निग्धत्वम् ।
वातपित्तविनाशित्वञ्च । इति राजवल्लभः ॥

**मधुकृत्**, पुं, (मधु करोति सञ्चिनोतीति । कृ +
क्विप् तुगागमश्च ।) भ्रमरः । इति
हेमचन्द्रः ॥
(यथा, छान्दोग्योपनिषदि । ३ । १ । २ ।
"अथ येऽस्य दक्षिणा रश्मयस्ता एवास्य
दक्षिणा मधुनाड्यो यजूंष्येव मधुकृतो
यजुर्व्वेद

भ्रममाणौ ददृशतुर्नाभिपद्मस्थितं विधिम् ॥
तमूचतुस्तौ धातारं हनिष्यावोऽद्य नामितम्
त्वं जागरय वैकुण्ठं यदि जीवितुमिच्छसि ॥
ततो ब्रह्मा महामायां योगनिद्रां जगत्प्रसूम् ।
प्रसादयामास तदा स्तुतिभिर्नतिभिर्भिया ॥
चिरं स्तुताथ सा देवी ब्रह्मणा जगदात्मना ।
प्रसन्नाभवदत्यर्थमुवाच च तथा विधिम् ॥
किमर्थं संस्तुता चाहं किं करिष्याम्यहं तव
।
तद्वद त्वं महाभाग ! करिष्याम्यहमद्य ते ॥
ततस्तेन महामाया प्रोक्ता धात्रा महात्मना ।
प्रबोधय जगन्नाथं यावन्नो मां हनिष्यतः ।
संमोहयैतौ दुर्द्धर्षावसुरौ मधुकैटभौ ॥
इत्युक्ता सा तदा देवी ब्रह्मणा जगदात्मना ।
बोधयामास वैकुण्ठं मोहयामास तौ तदा ॥
ततः प्रबुद्धः कृष्णः स ददर्श भयशालिनम्
।
ब्रह्माणं तौ तदा घोरावसुरौ मधुकैटभौ ॥
ततस्ताभ्यां स युयुधे ह्यसुराभ्यां जनार्द्दनः
।
नाशकद् वाधितुं वीरावसुरौ मधुकैटभौ ॥
अनन्तोऽपि फणाग्रेण तान्नो धर्त्तुं
क्षमोऽभवत् ।
युध्यमानान्महावीरान् वैकुण्ठमधुकैटभान्
॥
अथ ब्रह्मा शिलारूपां स्थितिशक्तिं
तदाकरोत् ।
अर्द्धयोजनविस्तीर्णां सार्द्धयोजनमायताम्
॥
तस्यां शिलायां वैकुण्ठो युयुधे नृपसत्तम !
।
सह ताभ्यां शिला सा तु प्रविवेश
जलान्तरम् ॥
तस्यान्तु शक्त्यां मग्नायां तोयेषु युयुधे हरिः
।
पञ्चवर्षसहस्राणि बाहुयुद्धैर्निरन्तरम् ॥
यदा नैवाशकद्धन्तुं तौ विष्णुर्जगतां पतिः ।
परां चिन्तां तदावाप विधातापि भयात्ततः
॥
ततस्तावेव तं विष्णुमूचतुर्ब्बलदर्पितौ ।
पुनः पुनस्तौ गर्जन्तौ महामायाविमोहितौ ॥
तुष्टौ स्वस्त्वन्नियुद्धेन वरं वरय माधव ! ।

शब्दमाला ॥

**मधुकर्कटिका**, स्त्री, (मधुर्मधुरा कर्क्कटिकेव ।) मधुरजम्बीरविशेषः । मौकट्टी इति भाषा । तत्पर्य्यायः । कुशा २ । इति शब्दचन्द्रिका ॥ (पर्य्यायोऽस्या गुणाश्च यथा, --
"बीजपुरोऽपरः प्रोक्तो मधुरो मधुकर्क्कटी ।
मधुकर्कटिका स्वाद्वी रोचनी शीतला गुरुः ।
रक्तपित्तक्षयश्वासकासहिक्काभ्रमापहा॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥) मधुखर्ज्जूरिका । इति राजनिर्घण्टः ॥

**मधुकर्कटी**, स्त्री, (मधुर्मधुरा कर्क्कटी) मधुबीजपुरः । इति राजनिर्घण्टः ॥
एव पुष्पं ता अमृता आपः ॥")

**मधुकेशटः**, पुं, (मधुनः पुष्परसस्य के शिरसि अग्रभागे शटति गच्छतीति । शट् + कर्त्तरि अच् ।) भ्रमरः । इति त्रिकाण्डशेषः ॥

**मधुकैटभौ**, पुं, (मधुश्च कैटभश्च तौ । इतरेतरद्वन्द्वः ।) असुरविशेषौ । तयोरुत्पत्त्यादि यथा,
"दैनन्दिने तु प्रलये प्रसुप्ते गरुडध्वजे ।
तस्य श्रवणविड्जातावसुरौ मधुकैटभौ ॥
कूर्म्मपृष्ठगता पृथ्वी विलीनेवाभवज्जलैः ।
तां विशीर्णां योगनिद्रा महामाया व्यलोकयत् ॥
तां वै दृढतरां कर्त्तुं पृथ्वीं प्रति तदेश्वरी ।
उपायं चिन्तयामास कथं पृथ्वी भवेद्दृढा ॥
इदानीमाज्यवत् पृथ्वी प्रवृत्ता कोमला जलैः ।
सृष्टिकाले जनान् वोढुं कथं शक्ता भविष्यति ॥
इति सञ्चिन्त्य सा माता जगतां सृष्टिकारिणी ।
उपगम्य तदा विष्णुमाससाद सुनिद्रितम् ॥
तन्तु सुप्तं समासाद्य जगन्नाथं जगत्पतिम् ।
वामहस्तकनिष्ठाग्रं तस्य कर्णे न्यवेशयत् ॥
निवेश्य नखराग्रेण प्रोद्धृत्य श्रावणं मलम् ।
चूर्णीचकार सा देबी योगनिद्रा जगत्प्रसूः ॥
तत्कर्णमलचूर्णेभ्यो मधुनामासुरोऽभवत् ।
ततो दक्षिणहस्तस्य कनिष्ठाग्रन्तु दक्षिणे ॥
कर्णे न्यवेशवद्देवी तस्मादप्युद्धृतं मलम् ।
तच्चापि क्षोदयामास करशाखाग्रजेन तु ॥
ततोऽभूत् कैटभो नाम बलवानसुरो महान् ॥
उत्पन्नः स च पानार्थं यस्मान् मृगितवान्मधु ।
अतस्तस्य महादेवी मधुनामाकरोत्तदा ॥
उत्पन्नः कीटवद्भाति महामायाकरे यतः ।
अतस्तं कैटभाख्यन्तु स्वयं देवी तदाकरोत् ॥
ताबुवाच महामाया युध्यतां हरिणा सह ।
युवानौ श्रद्धयैवात्र भवन्तौ निहनिष्यति ॥
यदा युवां प्रभाषेथे आवां विष्णो ! वधान तौ ।
तवेष्टं संप्रदास्यावः सत्यमेतद्वराधुना ॥
तयोस्तद्वचनं श्रुत्वा भगवान् गरुडध्वजः ।
उवाच तौ युवां वध्यौ भवेतां मे महाबलौ ।
इति देहि वरं मह्यं दातव्यं यदि विद्यते ॥
तौ तदा प्राह युष्मत्तो योग्यो नौ शोभनो वधः ।
तत्रावां जहि नो यत्र तोयं सम्प्रति विद्यते ॥
तयोस्तद्वचनं श्रुत्वा माधवो जगतां पतिः ।
ब्रह्माणं माञ्च शीघ्रेण प्राहेदञ्चात्मसंज्ञया ॥
ब्रह्मशक्तिशिलां शीघ्रमुद्धृत्य धीयतां यथा ।
तत्र स्थित्वा महाधारे हनिष्यामि महाबलौ ॥
ततो ब्रह्मा ह्यहञ्चैव उद्दधार शिलान्तु ताम् ॥
तस्या मध्ये पूर्ब्बभागे ह्यहं पर्व्वतरूपधृक् ।
ऊद्‌र्ध्वे स्थित्वा शिलां भित्त्वा प्रविवेश रसातलम् ॥
ऐशान्यामभवत् कूर्म्मः पर्व्वतश्चाग्रहीत् शिलाम् ।
वायव्याञ्च तथानन्तो नैरृत्याञ्च सुरेश्वरी ॥
महामाया जगद्धात्री शैलरूपप्रधारिणी ।
आग्नेय्याञ्च स्वयं विष्णुरेकरूपेण संस्थितः ॥
ब्रह्मशक्तिशिलां गृह्णन् भगवान् परमेश्वरः ।
मध्ये ब्रह्मा त्वहञ्चैव वराहश्च तथापरः ॥
ततो वराहपृष्ठस्य चरमे जगतां पतिः ।
स्थित्वा शिलामवष्टभ्य ब्रह्मशक्तिमधोगताम् ॥

वामे स्वजघने यत्नादारोप्य शिरसी तयोः ।
जगदाधारभूतः स सर्व्वयत्नेन संयुतः ॥
सर्व्वैर्बलैः समाक्रम्य चिच्छेद स पृथक् पृथक् ।
मधुकैटभयोः सम्यक् वीरयोः पृथिवीमृते ॥
तस्य चाक्रम्य संस्थानाद्ब्रह्मशक्तिरधोगता।
ध्रियमाणापि देवौघैर्यत्नादपि मुहुर्मुहुः ॥
ततस्तयोस्तु मृतयोः शरीरे जगतां पतिः ।
ब्रह्मशक्तिं समुद्धृत्य न्यधात्तस्यां प्रयत्नतः ।
उद्धृतायां पृथिव्यान्तु तयोर्म्मेदोविलेपनैः ।
सुदृढामकरोत् पृथ्वीं क्लेदितां तोयराशिभिः ॥
मेदोविलेपिता यस्माद् गीयते मेदिनीति सा ।
अद्यापि पृथिवी देवी देवमानुषराक्षसैः ॥"
इति कालिकापुराणे ६१ अध्यायः ॥
(अनयोर्नामनिरुक्तिर्य्यथा, महाभारते । १२ । ३४७ । २४ -- २६ ।
"सत्त्वस्थः परमेष्ठी स ततो भूतगणान् सृजन् ।
पूर्ब्बमेव च पद्मस्य पत्रे सूर्य्यांशुसप्रभे ॥
नारायणकृतौ बिन्दू अपामास्तां गुणोत्तरौ ।
तावपश्यत् स भगवाननादिनिधनोऽच्युतः ॥
एकस्तत्राभवद्बिन्दुर्म्मध्वाभो रुचिरप्रभः ।
स तामसो मधुर्जातस्तदा नारायणाज्ञया ।
कठिनस्त्वपरो बिन्दुः कैटभो राजसस्तु सः ॥")

**मधुकोषः**, पुं, (मध्वर्थं कृतः कोषः मध्वाधारः कोषो वा ।) मधुमक्षिकाकृतकोषः ॥ मौचाक् इति भाषा । तत्पर्य्यायः । मधुक्रमः २ । इति शब्दचन्द्रिका ॥ (यथा, --
"भ्रमरेणेव मयायं व्याख्यामधुकोष आरब्धः ।"
इति रुग्विनिश्चयटीकाकृद्विजयेन लिखितम् ॥)
छागमुष्क इति मांसाशिनो वदन्ति ॥

**मधुक्रमः**, पुं, (मधुनः क्रमः ।) पुनः पुनर्म्मधुपानक्रमः । तत्पर्य्यायः । मधुवारः २ । इत्यमरः । २ । १० । ४१ ॥ मधुकोषः । इति शब्दचन्द्रिका ॥

**मधुच्छदा**, स्त्री, (मधुः मधुरश्छदः पर्णमस्याः । यद्वा मधु छादयति रसाधिक्येन पराभवतीति छद + णिच् । घः । धे ह्रस्वश्च ।) मयूरशिखा । इति भावप्रकाशः ॥ (तथास्या गुणाः ।
"नीलकण्ठशिखा लघ्वी पित्तश्लेष्मातिसारजित् ॥"
इति च भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**मधुजं**, क्ली, (मधुनो जातम् इति । जन् + डः ।) शिक्थकम् । इति राजनिर्घण्टः ॥

**मधुजम्बीरः**, पुं, (मधुर्मधुरो जम्बीरः ।) मधुरजम्बीरः । इति राजनिर्घण्टः ॥

**मधुजा**, स्त्री, (मधोः मधुमेदसो जाता प्रादुर्भूता इति । जन् + डः टाप् ।) पृथिवी । इति शब्दचन्द्रिका ॥ (मधुनो जायते स्म इति । जन + ड ।) सिता । तत्पर्य्यायः । महाश्वेता २ । इति त्रिकाण्डशेषः ॥

**मधुजित्**, पुं, (मधुं मधुनामानं दैत्यं जितवान्निति । जि + क्विप् । तुगागमश्च ।) विष्णुः । इति शब्दरत्नावली ॥ (यथा, देवीभागवते । १ । ५ । ६२ ।
"शिवे ! किं वा ज्ञात्वा विविदिषसि शक्तिं मधुजितः ॥")

**मधुतृणं**, क्ली, (मधुरं तृणम् ।) इक्षुः । इति त्रिकाण्डशेषः ॥ (गुणादयोऽस्य इक्षुशब्दे ज्ञातव्याः ॥)

**मधुतृणः**, पुं, (मधुर्मधुरस्तृणः ।) इक्षुः । इति राजनिर्घण्टः ॥ (अस्य पर्य्यायो यथा, --
"महारसोऽसिपत्रः स्यान्मृत्युपुष्पो मधुतृणः ।
इक्षुर्व्वंशककान्तारभिरुपौण्ड्रादिभेदवान् ॥"
इति वैद्यकरत्नमालायाम् ॥
"इक्षुर्दीर्घच्छदः प्रोक्तस्तथा भूरिरसोऽपि च ।
गुडमूलोऽसिपत्रश्च तथा मधुतृणः स्मृतः ॥"
इति च भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥)

**मधुत्रयं**, क्ली, (मधूनां मधुरद्रव्याणां त्रयम् ।) मधुरत्रयम् । इति राजनिर्घण्टः ॥ (मधुघृतसितात्रयम् ॥)

**मधुदीपः**, पुं, (मधौ वसन्ते दीप्यत इति । दीप् + वृक्षविशेषः । मौलगाछ इति भाषा ॥ तत्पर्य्यायः ।
मधूकः २ गुडपुष्पः ३ । इत्यमरः । २ । ४ । २७ ॥
(पर्य्यायान्तरमस्य यथा, वैद्यकरत्नमालायाम् ।
"मधुपुष्पो मधूकश्च गुडपुष्पो मधुद्रुमः ॥")

**मधुधातुः**, पुं, (मधुना तत्पर्य्यायनाम्ना प्रसिद्धो धातुः ।) माक्षिकम् । इति राजनिर्घण्टः ॥ (तथास्य पर्य्यायः ।
"स्वर्णमाक्षिकमाख्यातं तापीजं मधुमाक्षिकम् ।
ताप्यं माक्षिकधातुश्च मधुधातुश्च स स्मृतः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**मधुधूलिः**, स्त्री, (मधुर्मधुरा धूलिरिव ।) खण्डः । इति हेमचन्द्रः । ३ । ६ ॥ खाँड़ इति भाषा ॥

**मधुधेनुः**, स्त्री, (मधुरचिता धेनुः ।) दानार्थमध्वादिनिर्म्मितसवत्सा गौः । यथा, -- होतोवाच ।
"मधुधेनुं प्रवक्ष्यामि सर्व्वपातकनाशिनीम् ।
अनुलिप्ते महीपृष्ठे कृष्णाजिनकुशोत्तरे ॥
धेनुं मधुमयीं कृत्वा संपूर्णां घटषोडशीम् ।
चतुर्थेन तथांशेन वत्सकं परिकल्पयेत् ॥
सौवर्णन्तु मुखं कृत्वा शृङ्गाण्यगुरुचन्दनैः ।
पृष्ठं ताम्रमयं कृत्वा सास्नां पट्टमयीं तथा ॥
पदानिक्षुमयान् कृत्वा सितकम्बलकम्बलाम् ।
मुखं गुडमयं कृत्वा जिह्वां शर्करया तथा ।
ओष्ठौ पुष्पमयौ तस्या दन्ताः फलमयाः स्मृताः ।
दर्भरोमधरा देवी रौप्यक्षुरविभूषिता ॥
प्रशस्तपत्रश्रवणा प्रमाणात् परितस्ततः ।

**मधुक्षीरः**, पुं, (मधुवत् क्षीरं निर्य्यासोऽस्य ।)
खर्ज्जूरवृक्षः । इति हारावली ॥

**मधुखर्ज्जूरिका**, स्त्री, (मधुर्मधुरा खर्ज्जूरी । ततः
कन् टाप् । पूर्ब्बस्य ह्रस्वत्वम् ।) खर्ज्जूर-
विशेषः । तत्पर्य्यायः । मधुकर्क्कटिका २
कोल-
कर्क्कटिका ३ कण्टकिनी ४ मधुफलिका ५
माध्वी-
मधुरा ६ मधुरखर्ज्जूरी ७ मधुखर्ज्जूरी ८ ।
अस्या
गुणाः । मधुरत्वम् । वृष्यत्वम् ।
सन्तापपित्त-
शान्तिकारित्वम् । शिशिरत्वम् ।
जन्तुकर्त्तृत्वम् ।
बहुवीर्य्यविवर्द्धनत्वञ्च । इति राजनिर्घण्टः ॥

**मधुगायनः**, पुं, (मधु गायतीति । गै + “ण्युट्
च ।” ३ । १ । १४७ । इति ण्युट् । यद्वा,
मधौ
वसन्ते गायन इति सप्तमीसमासः ।)
कोकिलः ।
इति राजनिर्घण्टः ॥

**मधुगुञ्जनः**, पुं, (मधु मधुरं गुञ्जनमस्य । पवनेरित-
शुष्कफलशब्दस्यास्य मधुरत्वात् तथात्वम्
।)
शोभाञ्जनवृक्षः । इति शब्दमाला ॥

**मधुघोषः**, पुं, (मधुर्मधुरो घोषो यस्य ।) कोकिलः ।
इति शब्दमाला ॥

कः ।) कामदेवः । इति हेमचन्द्रः । २ । १४१ ॥

**मधुदूतः**, पुं, (मधोर्वसन्तस्य दूत इव । वसन्ता-
गमनात् प्रागस्य मुकुलोद्गमदर्शनात् तथात्वम् ।)
आम्रवृक्षः । इति त्रिकाण्डशेषः ॥ (तथास्य
पर्य्यायः ।
“आम्रः प्रोक्तो रसालश्च सहकारोऽतिसौरभः ।
कामाङ्गो मधुदूतश्च माकन्दः पिकवल्लभः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**मधुदूती**, स्त्री, (मधोर्वसन्तस्य दूतीव ।) पाटला-
वृक्षः । इति भावप्रकाशः ॥ (पर्य्यायादि विव-
रणमस्याः पाटलाशब्दे द्रष्टव्यम् ॥)

**मधुद्रः**, पुं, (मधुने द्राति पुष्पात् पुष्पं गच्छतीति ।
द्रा + कः ।) भ्रमरः । इति त्रिकाण्डशेषः ॥

**मधुद्रवः**, पुं, (मधुर्मधुरो द्रवो निर्यासोऽस्य ।) रक्त-
शिग्रुः । इति शब्दरत्नावली ॥

**मधुद्रुमः**, पुं, (मध्वर्थं मद्यार्थं मधूत्पादको वा
द्रुमः । तत् पुष्पेभ्यो मद्यसम्भवादस्य तथात्वम् ।)

सर्व्वलक्षणसंयुक्ता सप्तधान्यान्विता तथा
॥
चत्वारि तिलपात्राणि चतुर्द्दिक्ष्वपि
स्थापयेत् ।
छादितां वस्त्रयुग्मेन घण्टाभरणभूषिताम् ।
कांस्योपदोहनां कृत्वा गन्धपुष्पैस्तु
धूपिताम् ॥
अयने विषुवे पुण्ये व्यतीपाते दिनक्षये ।
संक्रान्त्यामुपरागे च सर्व्वकालं यदृच्छया
॥
द्रव्यब्राह्मणसम्पत्तिं दृष्ट्वा तान्तु प्रदापयेत्
।
ब्राह्मणाय दरिद्राय श्रोत्रियायाहिताग्नये ॥
आर्य्यावर्त्ते समुत्पन्ने वेदवेदाङ्गपारगे ।
तादृशाय प्रदातव्या मधुधेनुर्नरोत्तम ! ॥
पुच्छदेशोपविष्टस्तु गन्धधूपादिपूजिताम् ॥
आच्छाद्य वस्त्रयुग्मेन मुद्रिकाकर्णपत्रकैः ॥
स्वशक्त्या दक्षिणां दत्त्वा
वित्तशाठ्यविवर्जितः ।
जलपूर्ब्बन्तु कर्त्तव्यं पश्चाद्दानं समर्पयेत्
॥
रसज्ञा सर्व्वदेवानां सर्व्वभूतहिते रता ।
प्रीयन्तां पितृदेवाश्च मधुधेनो ! नमोऽस्तु
ते ॥
एवमुच्चार्य्य तां धेनुं ब्राह्मणाय निवेदयेत्
॥
अहं गृह्णामि त्वां देवि ! कुटुम्बार्थे
विशेषतः ।
कामं कामदुघे कामां मधुयेनो ! नमोऽस्तु
ते ॥
मधुवातेतिमन्त्रेण दद्यादाशु त्रिकेण तु ।
दत्त्वा धेनुं महाराज ! छत्रकोपानहौ तथा ॥
एवं यः कुरुते भक्त्या मधुधेनुं नराधिप ! ।
दत्त्वा दानं पायसेन मधुना च दिनं नयेत् ॥
ब्राह्मणोऽपि त्रिरात्रन्तु मधुपायससंयुतम् ।
एवं कृते तु यत् पुण्यं तन्निबोध नराधिप !
॥
यत्र नद्यो मधुवहा यत्र पायसकर्द्दमाः ।

ऋषयो मुनयः सिद्धास्तत्र गच्छन्ति धेनुदाः ॥
तत्र भोगानथो भुङ्क्ते ब्रह्मलोके स तिष्ठति ।
क्रीडित्वा सुचिरं कालं पुनर्मर्त्त्यमुपागतः ।
स भुक्त्वा विपुलान् भोगान् विष्णुलोकं स गच्छति ॥
दशपूर्ब्बान् दशपरानात्मानञ्चैकविंशितिम् ।
नयते विष्णुसायुज्यं मधुधेनुप्रसादतः ॥
य इदं शृणुयाद्भक्त्या श्रावयेद्वापि मानवः ।
सर्व्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥"
इत्यादि वराहपुराणे श्वेतोपाख्याने मधु-धेनुमाहात्म्यम् ॥

**मधुनालिकेरकः**, पुं, (मधुर्मधुरो नारिकेलः स्वार्थे कन् । रलयोरैक्यात् रस्य लत्वं लस्य च रत्वम् ।)
मधुनारिकेलः । एरनारिकेल इति कोकणे प्रसिद्धम् । मोहानारल इति च ख्यातम् । तत्-पर्य्यायः । माध्वीकफलः २ मधुफलः ३ अधि-
तजफलः ४ माक्षिकफलः ५ मृदुफलः ६ बहु-कूर्च्चः ७ ह्रस्वफलः ८ । अस्य गुणाः । मधु-रत्वम् । शिशिरत्वम् । दाहतृष्णार्त्तिपित्तहारि-त्वम् । बलपुष्टिश्रेष्ठकान्तिकारित्वम् । वीर्य्य-विवर्द्धनत्वम् । रुच्यत्वञ्च । अपि च ।
"माध्वीकं नारिकेरं फलमतिमधुरं दुर्ज्जरं जन्तुकारि
स्निग्धं वातातिसारभ्रमशमनमथ ध्वंसनं वह्निदीप्तेः ।
आमश्लेष्मप्रकोपं जनयति कुरुते चारुकान्तिं बलञ्च
स्थैर्य्यं देहस्य धत्ते घनमदनकलावर्द्धनं पित्त-नाशम् ॥"
इति राजनिर्घण्टः ॥

**मधुनी**, स्त्री, क्षुपविशेषः । माकड हाता इति माकड चाउली इति च भाषा ॥ तत्पर्य्यायः । घृतमण्डा २ वायसोली ३ सुमङ्गला ४ । इति रत्नमाला ॥

**मधुनेता**, [ऋ] पुं, (मधु नयति पुष्पेभ्यः संगृह्णा-तीति । णीञ् + तृच् ।) भ्रमरः । इति शब्द-चन्द्रिका ॥

**मधुपर्कं**, क्ली, (पृच् + घञ् । मधुना पर्को योगो-ऽत्र ।) दधिसंयुक्तमधु । तत्पर्य्यायः । महोदयः २ । इति हेमचन्द्रः । ३ । ४९७ ॥ अपि च ।
"मधुपर्कं दधिमधुघृतमपिहितं कांस्येनेति ।
अपिहितमाच्छादितम् ।" इत्येकादशीतत्त्वे-कात्यायनसूत्रम् ॥

**मधुपर्कः**, पुं, (पृची + घञ् । मधुना पर्कः सम्पर्को यस्य मधुना संयोजनात् तथात्वम् ।) षोडशोपचारपूजान्तर्गतषष्ठोपचारः । तस्य प्रमाणं यथा, --
"दधि सर्पिर्ज्जलं क्षौद्रं सितैताभिस्तु पञ्चभिः ।
प्रोच्यते मधुपर्कस्तु सर्व्वदेवौघतुष्टये ॥
जलन्तु सर्व्वतः स्वल्पं सिता दधि घृतं समम् ।
सर्व्वेषामधिकं क्षौद्रं मधुपर्के प्रयोजयेत् ॥
तद्दद्यात् कांस्यपात्रेण रौक्मश्वेतभवेन वा ।
ज्योतिष्टोमाश्वमेधादौ पूर्त्ते चेष्टे प्रपूजने ॥
मधुपर्कः प्रतिष्ठोऽयं सर्व्वदेवौघतुष्टिदः ।
धर्म्मार्थकाममोक्षाणां साधकः परिकीर्त्तितः ॥
मधुपर्कः सौख्यभोग्यतुष्टिपुष्टिप्रदायकः ॥"
इति कालिकापुराणे ६७ अध्यायः ॥
अपि च ।
"आज्यं दधिमधुमिश्रं मधुपर्कं विदुर्ब्बुधाः ॥"
इति तन्त्रसारः ॥
तद्दाने मुद्रा यथा, --
"संयुक्तानामिकाङ्गुष्ठा तिस्रोऽन्याः संप्र-सारिताः ।
मधुपर्के च सा मुद्रा विद्वद्भिः परिकीर्त्तिता ॥"
इति हरिभक्तिविलासः ॥

**मधुपर्णिका**, स्त्री, (मध्विव हितं पर्णमस्याः । ततः स्वार्थे कन् टाप् । अत इत्वञ्च ।) गम्भारीवृक्षः । (अस्याः पर्य्यायो यथा, --
"गम्भारी भद्रपर्णी च श्रीपर्णी मधुपर्णिका ।
काश्मीरी काश्मरी हीरा काश्मर्य्यः पीत-रोहिणी ॥
कृष्णवृन्ता मधुरसा महाकुसुमिकापि च ॥")
नीलीवृक्षः । इत्यमरः । २ । ४ । ३५ ॥ (अस्याः पर्य्यायो यथा, --
"नीली तु नीलिनी तूली कालदोला च नीलिका ।
रञ्जनी श्रीफली तुच्छा ग्रामीणा मधुपर्णिका ॥
"वत्सादनी छिन्नरुहा मधुपर्ण्यमृतामरा ।
कुण्डल्यमृतवल्ली च गुडूची चक्रलक्षणा ॥")
गम्भारीवृक्षः । नीलीवृक्षः । इति मेदिनी । ने, १०५ ॥ मधुबीजपूरः । इति राजनिर्घण्टः ॥
(विकङ्कतवृक्षः । तत्पर्य्यायो यथा, --
"विकङ्कतः स्वादुकण्टः श्रुग्दारु मधुपर्ण्यपि ॥"
इति वैद्यकरत्नमालायाम् ॥)

**मधुपाका**, स्त्री, (पाकेन मधुर्मधुरा । राजदन्ता-दित्वात् पूर्ब्बनिपातः । टाप् ।) षड्भुजा । इति राजनिर्घण्टः ॥

**मधुपायी**, [न्] पुं, (मधु पिबतीति । पा + णिनिः । ततः "आतोयुक् चिण्कृतोः ।" ७ । ३ । ३३ । इति युक् ।) भ्रमरः । इत्यमरटीकायां रामा-श्रमः ॥ मधुपानकर्त्तरि, त्रि ॥

**मधुपालिका**, स्त्री, (मधु पालयतीति । पालि + ण्वुल् । टाप् । अत इत्वम् ।) गम्भारी । इति शब्दमाला ॥ (विषयोऽस्या गम्भारीशब्दे द्रष्टव्यः ॥)

**मधुपीलुः**, पुं, (मधुर्मधुरः पीलुः ।) महापीलुः । इति राजनिर्घण्टः ॥

**मधुपुरी**, स्त्री, (मधोस्तन्नाम्नो दैत्यस्य पुरी ।) मथुरा । इति शब्दरत्नावली ॥ (यथा, भाग-वते । ७ । १४ । ३१ ।
"नैमिषं फाल्गुनं सेतुः प्रभासोऽथ कुशस्थली ।
वाराणसी मधुपुरी पम्पा बिन्दुसरस्तथा ॥")

**मधुपुष्पः**, पुं, (मधुप्रचुराणि पुष्पाण्यस्य ।) मधु-द्रुमः । इति रत्नमाला ॥ (मधूकः । तत्पर्य्यायो

**मधुपः**, पुं, (मधु पिबतीति । पा + कः ।) भ्रमरः ।

इत्यमरः । २ । ५ । २९ ॥ (यथा, राजतर-
ङ्गिण्याम् । ३ । ४०९ ।
"गव्यूतिमात्रमासन्ने देवीधामनि धैर्य्यवान् ।
धुन्बन् कराभ्यां मधुपान् धावति स्म स
धीरधीः ॥"
मधु जलं पातीति । पा + कः । वारिरक्षके,
त्रि । यथा, ऋग्वेदे । ५ । ३२ । ८ ।
"त्यं चिदर्णं मधुपं शयानमसिन्वं वव्रं मह्या-
ददुग्रः ।"
"मधुपं मधुनोऽम्भसः पातारं पालयितारम् ।"
इति तद्भाष्ये सायनः ॥ मधुपानकर्त्तरि च, त्रि
।
यथा, ऋग्वेदे । १ । १८० । २ ।
"स्वसा यद्वां विश्वगूर्त्तीभराति वाजायेट्टे मधु-
पाविषे च ।" "हे मधुपौ मधुरस्य सोमरसस्य
पातारौ ।" इति तद्भाष्ये सायनः ॥)

क्लीतका कालकेशी च नीलपुष्पा च सा
स्मृता ॥")
वराहक्रान्ता । इति शब्दचन्द्रिका ॥ गुडूची ।
सुदर्शना । इति राजनिर्घण्टः ॥ (यथा, सुश्रुते
शारीरस्थाने १० अध्याये ।
"पृश्निपर्णी बलाशिग्रुश्वद्रंष्टा मधुपर्णिका ॥"
अस्याः पर्य्यायो यथा, --
"सुदर्शना सोमवल्ली चक्राह्वा मधुपर्णिका ।"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**मधुपर्णी**, स्त्री, (मधु इव हितं पर्णं यस्याः ।

गौरादित्वात् ङीष् ।) गुडूची । इत्यमरः । २ ।
४ । ८४ ॥ (अस्याः पर्य्यायो रत्नमालायां यथा,

यथा, भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ।)
"मधूको गुडपुष्पः स्यान्मधुपुष्पो मधुस्रवः
।
वानप्रस्थो मधुष्ठीलो जलजेऽत्र मधूलकः
॥")
शिरीषवृक्षः । अशोकवृक्षः । वकुलवृक्षः ।
इति
राजनिर्घण्टः ॥

**मधुपुष्पा**, स्त्री, (मधुपुष्प + स्त्रियां टाप् ।) दन्ती-

वृक्षः । नागदन्तीवृक्षः । इति राजनिर्घण्टः
॥

**मधुप्रियः**, पुं, (मधु मद्यं प्रियमस्य ।) बलरामः ।

इति त्रिकाण्डशेषः ॥ भूमिजम्बुः । यथा, -
-
"नादेयी स्त्री नागरङ्गस्त्वक्सुगन्धो
मधुप्रियः ॥"
इति जटाधरः ॥ (मद्यप्रिये, त्रि ॥)

**मधुफलः**, पुं, (मधु मधुरं फलमस्य । यद्वा, मधु

मद्यं फलाद् यस्य ।) मधुनारिकेलः । इति
राजनिर्घण्टः ॥ विकङ्कतवृक्षः । इति
शब्द-
चन्द्रिका ॥ (मधुरफलविशिष्टे, त्रि ॥)

**मधुफलिका**, स्त्री, (मधु मधुरं फलं यस्याः ।

मधुफल + संज्ञायां कन् । टाप् । अत
इत्वञ्च ।)
मधुखर्ज्जूरिका । इति राजनिर्घण्टः ॥
(गुणा-
दयोऽस्या मधुखर्ज्जूरिकाशब्दे ज्ञातव्याः
॥)

**मधुबहुला**, स्त्री, (मधुना मधौ वा बहुला ।)

वासन्तीलता । इति राजनिर्घण्टः ॥

**मधुभित्**, [द्] पुं, (मधुं तन्नामानं दैत्यं भिनत्ति

नाशयतीति । भिद् + क्विप् । तुगागमश्च
।)
विष्णुः । इति शब्दरत्नावली ॥ (यथा,
भाग-
वते । ४ । २९ । ४० ।

"तस्मिन् महम्मुखरिता मधुभिच्चरित्र-
पीयूषशेषसरितः परितः स्रवन्ति ॥")

**मधुमक्षिका**, स्त्री, (मधुसञ्चायिका मक्षिका ।)
कीटविशेषः । मौमाछी इति भाषा । तत्प-
र्य्यायः । सरघा २ । इत्यमरः । २ । ५ । २६
॥

**मधुमज्जा**, [न्] पुं, (मधुर्मधुरो मज्जा यस्य ।)
आखोटवृक्षः । इति राजनिर्घण्टः ॥

**मधुमती**, स्त्री, (मधुर्मधुररसोऽस्त्यत्रेति मतुप् ।
ङीप् ।) काश्मरीवृक्षः । नदीविशेषः । तस्या
जलगुणाः । यथा, राजनिर्घण्टे ।
"चन्द्रभागागुणसाम्यदं जलं
किञ्च माधुमतमग्निदीपनम् ॥"
उपास्यनायिकाविशेषः । यथा, --
"तथा मधुमती सिद्धिर्जायते नात्र संशयः ।
देवचेटी शतशतं तस्य वश्या भवन्ति ह ॥
स्वर्गे मर्त्ये च पाताले स यत्र गन्तुमिच्छति ।
तत्रैव चेटिकाः सर्व्वा नयन्ति नात्र संशयः ॥"
इति कृकलासदीपिकायां ३ पटलः ॥
(छन्दोभेदः । अस्या लक्षणं यथा, छन्दोम-
ञ्जर्य्याम् । २ । १ ।
"ननगि मधुमती ।" अधिकं छन्दःशब्दे द्रष्ट-
व्यम् ॥ समाधिसिद्धिभेदः । यथा, सर्व्वदर्शन-
संग्रहे पातञ्जलदर्शने । "तत्र मधुमती नामा-
भ्यासवैराग्यादिवशादपास्तरजस्तमोलेशसुख-
प्रकाशमयसत्त्वभावनयानवद्यवैशारद्यविद्योतन-
रूपऋतम्भरप्रज्ञाख्या समाधिसिद्धिः ॥ गङ्गा ।
यथा, काशीखण्डे । २९ । १३३ ।
"महोदया मधुमती महापुण्या मुदाकरी ॥"
इक्ष्वाकुपुत्त्रहर्य्यश्वस्य भार्य्या सा च
मधोर्दैत्यस्य
सुता । यथा, हरिवंशे । ९३ । १२ -- १३ ।
"आसीद्राजा मनोर्वंशे श्रीमानिक्ष्वाकुसम्भवः ।
हर्य्यश्व इति विख्यातो महेन्द्रसमविक्रमः ॥
तस्यासीद्दयिता भार्य्या मधोर्दैत्यस्य वै सुता ।
देवी मधुमती नाम यथेन्द्रस्य शची तथा ॥"
मधुरसविशिष्टे, त्रि । यथा, ऋग्वेदे । ७ । ६९ ।
३ ।
"स्वश्वायशसायातमर्व्वाग्दस्रानिधिमधुमन्तं
पिबाथः ॥")

**मधुमाध्वीकं**, क्ली, (मधु माधुर्य्ययुक्तं माध्वीकम् ।)
मद्यम् । इत्यमरटीकायां भरतः ॥

**मधुमारकः**, पुं, (मधूनां मारकः । भक्षकत्वा-
त्तथात्वमस्य ।) भ्रमरः । इति राजनिर्घण्टः
॥

**मधुमूलं**, क्ली, (मधु मधुरं मूलम् ।) आलुकम् ।
इति शब्दचन्द्रिका । मौ आलु इति भाषा ॥

**मधुयष्टिः**, स्त्री, (मधुर्मधुरा यष्टिः ।) इक्षुः । इति
शब्दचन्द्रिका ॥

**मधुयष्टिका**, स्त्री, (मधुर्मधुरा यष्टिः । ततः कन्
टाप् ।) यष्टिमधु । तत्पर्य्यायः । मधुकम् २
क्लीतकम् ३ यष्टिमधुका ४ । इत्यमरः । २
। ४ ।
१०९ ॥ मधुयष्टी ५ । इति भरतः ॥
(तथास्याः
पर्य्यायान्तरम् ।
"यष्ट्याह्वं मधुकं यष्टि क्लीतकं मधुयष्टिका
।
यष्टिमधु स्थले जाता जलजातिरसा पुरा ॥"
इति वैद्यकरत्नमालायाम् ॥)

**मधुयष्टी**, स्त्री, (मधुयष्टि । कृदिकारादिति पक्षे
ङीष् ।) मधुयष्टिका । इति शब्दमाला ॥

**मधुरं**, क्ली, (मधु + रः ।) वङ्गम् । इति राज-
निर्घण्टः ॥ विषम् । इति मेदिनी । रे, १९५
॥
(वङ्गशब्दे विषशब्दे च विवरणमस्य
ज्ञातव्यम् ॥)

**मधुरः**, पुं, (मधु माधुर्य्यं रातीति । रा + कः ।
यद्वा, मधुमाधुर्य्यमस्यास्तीति ।
"ऊषसुषिमुष्क-
मधो रः ।" ५ । २ । १०७ । इति रः ।)
मिष्टरसः ।
इत्यमरः । १ । ५ । ९ ॥ स च इक्ष्वादौ
लक्ष्यते ।
तत्पर्य्यायः । गौल्यः २ । इति राजनिर्घण्टः
॥
न्द्रियप्रसादनो बलवर्णकरः
पित्तविषमारुतघ्न-
स्तृष्णाप्रशमनः त्वच्यः केश्यः कण्ठ्यः
प्रीणनो
जीवनस्तर्पणः स्नेहनः स्थैर्य्यकरः क्षीणक्षत-
सन्धानकरः घ्राणमुखकण्ठोष्ठतालुप्रह्लादनो
दाहमूर्च्छाप्रशमनः षट्पदपिपीलिकाना-
मिष्टतमः स्निग्धः शीतो गुरुश्च ।
स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानः
स्थौल्यं
मार्द्दवमालस्यमतिस्वप्नंगौरवमनन्नाभिलाष-
मग्नेर्द्दौर्बल्यमास्यकण्ठमांसाभिवृद्धिं
श्वासकास-
प्रतिश्यायालसकशीतज्वरानाहास्यमाधुर्य्य-
मथुसंज्ञास्वरप्रणाशगलगण्डमालाश्लीपदगल-
शोफवस्तिधमनीगुदोपलेपाक्ष्यामयानभिष्य-
मित्येवंप्रभृतीन् कफजान्
विकारानुपजनयन्ति ।
"स्नेहनप्रीणनाह्लादमार्द्दवैरुपलभ्यते ।
मुखस्थो मधुरश्चास्यं व्याप्नुवँल्लिम्पतीव च
॥"
इति चरके सूत्रस्थाने २६ अध्याये ॥)
जीवकः । रक्तशिग्रुः । राजाम्रः । रक्तेक्षुः ।
गुडः । शालिः । इति च राजनिर्घण्टः ॥
(बीजपूरविशेषः । तत्पर्य्यायो यथा, --
"बीजपूरोऽपरः प्रोक्तो मधुरो मधुकर्कटी ।"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
स्कन्दस्यसैनिकभेदः । यथा महाभारते । ९ ।
४५ । ६९ ।
"मधुरः सुप्रसादश्च किरीटी च महाबलः ॥")

**मधुरः**, त्रि, (मधु माधुर्य्यमस्यास्तीति । "ऊषसुषि-
मुष्कमधो रः ।" ५ । २ । १०७ । इति रः ।)
मधुररसविशिष्टः । स्वादुः । (यथा, हितोप-
देशे । १ । ७९ ।
"न धर्म्मशास्त्रं पठतीति कारणं
न चापि वेदाध्ययनं दुरात्मनः ।
स्वभाव एवात्र तथातिरिच्यते
यथा प्रकृत्या मधुरं गवां पयः ॥")
प्रियः । इति मेदिनी । रे, १९५ ॥ पारि-
भाषिकमधुराणि यथा । विदग्धोक्तिः । प्रिया-
धरकुचादिः । शशी । स्त्रियः । बालोक्तिः ।

**मधुमथनः**, पुं, (मधुं तन्नामानं दैत्यं मथ्नातीति ।

मन्थ + ल्यु ।) विष्णुः । इति हलायुधः ॥
(यथा,
भागवते । ६ । ९ । ३९ ।
“सर्व्वात्मनि निरतनिर्वृ तमनसः कथमुह वा
एते मधुमथन ! पुनः स्वार्थकुशला ह्यात्मप्रिय-
सुहृदः साधवस्तच्चरणाम्बुजानुसेवां
विसृजन्ति
न यत्र पुनरयं संसारपर्य्यावर्त्तः ॥”)

**मधुमल्ली**, स्त्री, (मधुप्रधाना मल्ली ।) मालती ।

इति शब्दमाला ॥

**मधुमस्तकं**, क्ली, (मधुर्मधुररसः मस्तके उपरि-

भागे यस्य ।) पिष्टकविशेषः । यथा, --
“मधुतैलघृतैर्मध्ये वेष्टिताः समिताश्च याः ।
मधुमस्तकमुद्दिष्टं तस्याख्यापरिमार्ज्जनम् ॥”
इति शब्दचन्द्रिका ॥
अस्य गुणाः पिष्टशब्दे द्रष्टव्याः ॥

रसज्येष्ठः ३ गुल्यः ४ स्वादुः ५ मधूलकः ६
। इति
हेमचन्द्रः । ६ । २४ ॥ तस्य गुणाः ।
प्रीणनत्वम् ।
बल्यत्वम् । बृंहणत्वम् । वायुपित्तनाशित्वम्
।
रसायनत्वम् । गुरुत्वम् । स्निग्धत्वम् ।
चक्षुष्य-
त्वम् । तर्पणत्वम् । सरत्वञ्च । अन्यच्च ।
“रसो मधुरकः शीतो धातुस्तन्यबलप्रदः ।
चक्षुष्यो वातपित्तघ्नः कुर्य्यात्
स्थौल्यकफक्रमीन् ॥
सोऽतियुक्तो ज्वरश्वासगलगण्डादिरोगकृत्
॥”
इति राजवल्लभः ॥
अपि च ।
“मधुरस्तु रसश्चिनोति केशान्
बपुषः स्थैर्य्यबलौजोवीर्य्यदायी ।
अतिसेव्रनतः प्रमेहशैत्य-
जडतामान्द्यमुखान् करोति दोषान् ॥”
इति राजनिर्घण्टः ॥
(यथा च वाभटे सूत्रस्थाने दशमेऽध्याये ॥
“रसानामिति रूपाणि कर्म्माणि मधुरो रसः ।
आजन्मसात्म्यात् कुरुते धातूनां प्रबलं
बलम् ।
बालवृद्धक्षतक्षीणवर्णकेशेन्द्रियौजसाम् ॥
प्रशस्तो बृंहणो कण्ठ्यः
स्तन्यसन्धानकृद्गुरुः ।
आयुष्यो जीवनः स्निग्धः
पित्तानिलविषापहः ॥
कुरुतेऽत्यु पयोगेन समेदःकफजान् गदान् ।
स्थौल्याग्निसादसंन्यासमेहगण्डार्व्वुदादिकान्
॥”
अपिच ।
“तत्र मधुरो रसः
शरीरसात्म्याद्रसरुधिरमांस-
मेदोऽस्थिमज्जौजः शुक्राभिवर्द्धन आयुष्यः
षडि-

इति कविकल्पलता ॥

**मधुरकः**, पुं, (मधुर + संज्ञायां कन् ।) जीवक-

वृक्षः । इत्यमरः । २ । ४ । १४२ ॥ (यथा,
सुश्रुते चिकित्सितस्थाने ४ अध्याये ।
“विपचेन्मधुरकप्रतीवापम् ॥”)

**मधुरकण्टका**, स्त्री, (मधुराः कण्टका यस्याः ।)

मत्स्यविशेषः । तत्पर्य्यायः । कज्जली २
कज्जला ३
अनन्ता ४ माध्वी ५ । इति शब्दरत्नावली ॥

**मधुरजम्बीरः**, पुं, (मधुरो जम्बीरः । नित्यकर्म्म-

धारयः ।) मधुजम्बीरः । तत्पर्य्यायः । मधु-
जम्भः २ मधुजम्भलः ३ रसद्रावी ४
शर्क्करकः ५
पित्तद्रावी ६ । अस्य गुणाः । मधुरत्वम् ।
शिशिरत्वम् । कफपित्तशोफश्रमनाशित्वञ्च ।
इति राजनिर्घण्टः ॥

**मधुरत्वचः**, पुं, (मधुरा त्वचा यस्य ।) धव-

वृक्षः । इति त्रिकाण्डशेषः ॥ (गुणादयोऽस्य
धवशब्दे ज्ञातव्याः ॥)

**मधुरत्रयं**, क्ली, (मधुराणां त्रयम् ।) सिता
माक्षिकं सर्पिश्च । इति राजनिर्घण्टः ॥

**मधुरत्रिफला**, स्त्री, (मधुरा त्रिफला ।) द्राक्षा-
फलं काश्मर्य्यफलं खर्ज्जूरीफलञ्च । इति राज-
निर्घण्टः ॥

**मधुरनिस्वना**, स्त्री, (मधुरो निस्वनो यस्याः ।)
मधुरस्वरयुक्ता नारी । इति त्रिकाण्डशेषः ॥

**मधुरफलः**, पुं, (मधुरं फलमस्य ।) राजवदरः ।
इति राजनिर्घण्टः ॥

**मधुरवल्ली**, स्त्री, (मधुरा बल्लीति नित्यकर्म्म-
धारयः ।) मधुबीजपूरः । इति राजनिर्घण्टः ॥

**मधुरसः**, पुं, (मधुर्मधुरो रसोऽस्य ।) इक्षुः ।
इति शब्दमाला ॥ तालः । इति राज-
निर्घण्टः ॥

**मधुरसा**, स्त्री, (मधुर्मधुरो रसो यस्याः ।) मूर्व्वा ।
इत्यमरः । २ । ४ । ८३ ॥ (अस्याः पर्य्यायो यथा,
"तेजनी पिलुनी देवी तिक्तवल्ली पृथक्त्वचा ।
मधुश्रेणी मधुरसा मूर्व्वा निर्द्दहनीति च ॥"
इति वैद्यकरत्नमालायाम् ॥
"मूर्व्वा मधुरसा देवी मोरटा तेजनी स्रुवा ।
मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
द्राक्षा ॥ (तत्पर्य्यायो यथा, --
"द्राक्षा स्वादुफला प्रोक्ता तथा मधुरसापि च ।
मृद्वीका हारहूरा च गोस्तनी चापि कीर्त्तिता ॥"
चासौ अलावुनी चेति नित्यकर्म्मधारयः ।)
राजालावुः । इति राजनिर्घण्टः ॥

**मधुरिका**, स्त्री, (मधुर + स्वार्थे कन् + स्त्रियां टाप्
अत इत्वञ्च ।) क्षुपविशेषः । मौरी इति भाषा ।
तत्पर्य्यायः । शालेयः २ शीतशिवः ३ छत्रा ४
मिशी ५ मिश्रेया ६ । इत्यमरः । २ । ४ । १०५ ॥
सालेयः ७ मिसिः ८ मिसी ९ मिशिः १० । इति
तट्टीका ॥ अवाक्पुष्पी ११ मङ्गल्या १२ मधुरा
१३ । इति रत्नमाला ॥ मधुरी १४ । इति शब्द-
रत्नावली ॥ अस्या गुणाः । रोचकत्वम् । शुक्र-
कारित्वम् । दाहरक्तपित्तनाशित्वञ्च । इति
राजवल्लभः ॥

**मधुरिपुः**, पुं, (मधोरसुरविशेषस्य रिपुर्नाश-
कत्वात् ।) विष्णुः । इत्यमरः । १ । १ । २० ॥
(यथा गीतगोविन्दे । २ । ९ ।
"श्रीजयदेवभणितमतिसुन्दरमोहनमधुरिपुरूपम् ॥)

**मधुरेणुः**, पुं, (मधुर्मधुरो रेणुरस्य ।) कटभी-
वृक्षः । इति राजनिर्घण्टः ॥

**मधुरोदकः**, पुं, (मधुराणि उदकानि यस्य ।)
जलसमुद्रः । स तु स्वादूदकमयः पुष्करद्वीप-
वेष्टितः सप्तसमुद्राणां शेषसमुद्रः । इति जटाधरः ॥

**मधुलं**, क्ली, (मधु पुष्परसादिकं लाति स्वकारणत्वेन
गृह्णातीति । ला + कः ।) मद्यम् । इति शब्द-
चन्द्रिका ॥ (निर्व्विषीकर्त्र्यां मधुविद्यायां स्त्री ।
यथा, ऋग्वेदे । १ । १९१ । १० ।
"सोचिन्नुनमरातिनो वयं मरामारे
अस्य योजनं हरिष्ठामधुत्वामधुला चकार ॥"
"हे विष ! त्वा त्वां मधु अमृतं चकार विषस्य
विषभावं दूरेऽपनोद्यामृतीचकारेति एषैव
मधुला मधुदात्री निर्विषीकर्त्री मधुविद्या यदे-
तदादित्यस्य मण्डले विषयोजनं तेन चामृती-
करणं यदस्ति एषा मधुविद्या ॥" इति तद्भाष्ये
सायनः ॥)

**मधुलग्नः**, पुं, (मधुर्मधुररसो लग्नोऽत्र ।) रक्त-
शोभाञ्जनः । इति रत्नमाला ॥

**मधुलता**, स्त्री, (मधुप्रधाना लतेति मध्यलोपी
(यथा, भट्टिकाव्ये । २ । ७ ।
"दत्तावधानं मधुलेहिगीतौ
प्रशान्तचेष्टं हरिणं जिघांसुः ॥")

**मधुलोलुपः**, पुं, (मधुनि लोलुपः ।) भ्रमरः ।
इति राजनिर्घण्टः ॥

**मधुवनं**, क्ली, (मधुना तन्नाम्ना दैत्येन कृतं
वनम् । मध्यपदलोपी कर्म्मधारयः ।) मथुराया
वनविशेषः । यथा, श्रीभागवते ४ । ८ । ४२ ।
"तत्तात ! गच्छ भद्रं ते यमुनायास्तटं शुचि ।
पुण्यं मधुवनं यत्र सान्निध्यं नित्यदा हरेः ॥"
(मधुप्रधानं वनमिति ।) किस्किन्धायां सुग्री-
वस्य वनविशेषः । इति रामायणे किस्किन्धा-
काण्डम् ॥ (यथा, महाभारते । ३ । २८१ । २७ ।
"वालिना रक्षितं यत्तत् स्फीतं मधुवनं महत् ।
त्वया च प्लवगश्रेष्ठ ! तद्भुङ्क्ते पवनात्मजः ॥")

**मधुवनः**, पुं, (मधौ वनति शब्दायते इति । वन +
अच् ।) कोकिलः । इति शब्दचन्द्रिका ॥

**मधुवल्ली**, स्त्री, (मधुप्रधाना वल्ली ।) यष्टी-
मधु । क्लीतनकम् । इति राजनिर्घण्टः ॥ (कार-
वेल्लकम् । तत्पर्य्यायो यथा, --
"तोयवल्ली राजवल्ली मघुवल्ली कारवेल्लकम् ॥"
इति वैद्यकरत्नमालायाम् ॥)

**मधुवारः**, पुं, (मधुनो मद्यस्य वारः समयः
पर्य्यायो वा ।) मधुक्रमः । इत्यमरः । २ ।
४० । ४१ ॥
स च पुनः पुनर्मद्यपानपरिपाटी । इति तट्टी-
कायां भरतः ॥

**मधुवीजः**, पुं, (मधु मधुरं वीज यस्य ।) दाडिमः ।

इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
दुग्धिका । इति मेदिनी । से, ६० ॥
गम्भारी ।
इति भावप्रकाशः ॥

**मधुरस्रवा**, स्त्री, (मधुरस्य मधुररसस्य स्रवो यस्याः ।) पिण्डखर्ज्जूरी । इति राजनिर्घण्टः ॥

**मधुरा**, स्त्री, (मधुर + टाप् ।) शतपुष्पा । (अस्याः पर्य्यायो यथा, --
"शतपुष्पा शताह्वा च मधुरा कारवी मिसिः ।
अतिलम्बी सितच्छत्रा संहिता छत्रिकापि च ।
छत्रा शालेयशालीनौ मिश्रेया मधुरा मिषिः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
मिश्रेया । मथुरानगरी । मधुकर्कटिका । मेदा ।
मधूली । मधूयष्टिका । इति मेदिनी । रे, १९४ ॥
काकोली । शतावरी । बृहज्जीवन्ती । पालङ्क्य-शाकम् । इति राजनिर्घण्टः ॥

**मधुराम्रकः**, पुं, (मधुरश्चासौ अम्रश्चेति नित्य-कर्म्मधारयः । ततः स्वार्थे कन् ।) आम्रातकः ।
इति शब्दचन्द्रिका ॥

**मधुराम्रफलः**, पुं, (मधुरं मिष्टं आम्रवत् फलं यस्य ।) रेफलः । तत्पर्य्यायः । आरः २ ।
इति रत्नमाला ॥

**मधुरालापा**, स्त्री, (मधुरः श्रुतिसुखकरः आलापः शब्दो यस्याः ।) शारिका । इति राज-निर्घण्टः ॥

**मधुरालावुनी**, स्त्री, (अलावू + बाहुलकात् नक् । पृषोदरादित्वात् ह्रस्वः ङीष् च । ततः मधुरा कर्म्मधारयसमासः ।) शूलीतृणम् । इति राज-निर्घण्टः ॥

**मधुलिका**, स्त्री, (मधुल + संज्ञायां कन् । टाप् अत इत्वञ्च ।) राजिका । इति राजनिर्घण्टः ॥ (विवृतिरस्या राजिका शब्दे ज्ञातव्या ॥ स्कन्धा-नुचरमातृगणविशेषः । यथा, महाभारते । ९ । ४६ । १९ ।
"पृथुवक्त्रा मधुलिका मधुकुम्भा तथैव च ॥")

**मधुलिट्**, [ह्] पुं, (मधु लेढि आस्वादयतीति । लिह् + क्विप् ।) भ्रमरः । इत्यमरः । २ । ५ । २६ ॥ (यथा, रघुवंशे । ९ । २९ ।
"मधुलिहां मधुदानविशारदा
कुरवका रवकारणतां ययुः ॥")

**मधुलेही**, [न्] पुं, (मधु लेढीति । मधु + लिह् + णिनिः ।) भ्रमरः । इति शब्दरत्नावली ॥

**मधुवीजपूरः**, पुं, (मधूनां मधुपूर्णानां वीजानां पूरः समूहो यत्र ।) मधुकर्कटिका । मीठा बिजौरा इति हिन्दी भाषा । तत्पर्य्यायः । मधुपर्णी २ मधुरकर्कटी ३ मधुरवल्ली ४ मधु-कर्कटी ५ मधुरफला ६ महाफला ७ वर्द्ध-माना ८ । अस्य गुणाः । मधुरत्वम् । शिशि-रत्वम् । दाहनाशित्वम् । त्रिदोषशमनत्वम् । रुच्यत्वम् । पथ्यत्वम् । गुरुत्वम् । दुर्ज्जरत्वञ्च ।
इति राजनिर्घण्टः ॥ (गुणादिविवरणमस्य दाडिमशब्दे द्रष्टव्यम् ॥)

**मधुव्रतः**, पुं, (मधु मधुसञ्चयो व्रतं व्रतमिव सत-तानुशीलनीयं यस्य । यद्वा, मधुव्रतयति नियतं भुङ्क्ते इति । व्रति + अण् ।) भ्रमरः । इत्य-मरः । २ । ५ । २९ ॥ (यथा, भागवते । ३ । २८ । २८ ।
"मालां मधुव्रतवरूथगिरोपघुष्टाम् ॥"
मध्वर्थं व्रतं कर्म्म यस्य । उदकार्थकर्म्मणि, त्रि ।
यथा, ऋग्वेदे । ६ । ७० । ५ ।
"मधुनो द्यावापृथिवी मिमिक्षतां मधुश्चुता पधुदुघे मधुव्रते ॥"
"मधुव्रते उदकार्थकर्म्माणौ ।" इति तद्भाष्ये सायनः ॥)

**मधुशर्करा**, स्त्री, (मधुजाता शर्करा ।) मधुजात-शर्करा । सिताखण्ड इति भाषा ॥ यथा, --

"माध्वी सिता मधूत्पन्ना मधुजा मधुशर्करा ।
माक्षीकशर्करा चैषा क्षौद्रजा क्षौद्रशर्करा ॥
यद्गुणं यन्मधु प्रोक्तं तद्गुणा तस्य शर्करा ।
विशेषाद्बलवृष्या च तर्पणं क्षीणदेहिनाम् ॥"
इति राजनिर्घण्टः ॥
("मधुशर्करा पुनश्छर्द्द्यतीसारहरी रूक्षाछेदनी
प्रह्लादनी कषायमधुरा मधुरविपाका च ।"
इति सुश्रुते सूत्रस्थाने ४५ अध्याये ॥)

**मधुशाखः**, पुं, (मधुर्माधुर्य्ययुक्ता शाखा यस्य ।) मधुष्ठीलः । इति शब्दचन्द्रिका ॥ (मधुरशाखा-
विशिष्टे, त्रि । यथा,
वाजसनेयसंहितायाम् ।
२८ । २० । "मधुशाखः सुपिप्पलः ।"
"मधुरा रसवती शाखा यस्य ।"
इति तद्भाष्ये महीधरः ॥)

**मधुशिग्रुः** पुं, (मधुप्रधानः शिग्रुः ।) रक्त-शोभाञ्जनवृक्षः । इत्यमरः । २ । ४ । ३१ ॥
(शजिना । इति ख्यातः । यथा, सुश्रुते । १ । ३७ ।
"वरुणार्त्तगलशिग्रुमधुशिग्रुतर्करीत्यादि ।"
तत्पर्य्यायो यथा, --
"सुरङ्गा स्वादुगन्धा स्यान्मधुशिग्रुः शोभाञ्जनः ॥"
इति वैद्यकरत्नमालायाम् ॥
तद्गुणा यथा, सुशुते सूत्रस्थाने ४६ अध्याये ।
"मधुशिग्रुः सरस्तिक्तः शोफघ्नो दीपनः कटुः ।")

**मधुशेषं**, क्ली, (मधुनः शेषो यत्र ।) शिक्थकम् । इति राजनिर्घण्टः ॥

**मधुसूदनः**, पुं, (मधुं तन्नामानं असुरं सूद-यति नाशयतीति । सूद् + णिच् + ल्युः ।) श्रीकृष्णः । इत्यमरटीकायां भरतः ॥ (पक्षद्वये एकः श्लिष्टश्लोको यथा, छन्दोमञ्जर्य्याम् । ११ । ३ ।
"वनेषु कृत्वा सुरभिप्रचारं
प्रकाममुग्धो मधुवासरेषु ।
गायन् कलं क्रीडति पद्मिनीषु
मधूनि पीत्वा मधुसूदनोऽसौ ॥")
श्रीकृष्णपक्षे व्युत्पत्तिर्यथा, --
"सूदनं मधुदैत्यस्य यस्मात् स मधुसूदनः ।
इति सन्तो वदन्तीशं वेदैर्भिन्नार्थमीप्सितम् ॥
मधु क्लीवञ्च माध्वीके कृतकर्म्मशुभाशुभे ।
भक्तानां कर्म्मणाञ्चैव सूदनं मधुसूदनः ॥
परिणामाशुभं कर्म्म भ्रान्तानां मधुरं मधु ।
करोति सूदनं यो हि स एव मधुसूदनः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ११० अध्यायः ॥
तस्य स्मरणफलम् ।
"महाविपत्तौ संसारे यः स्मरेन्मधुसूदनम् ।
विपत्तौ तस्य सम्पत्तिर्भवेदित्याह शङ्करः ॥"
तत्रैव प्रकृतिखण्डे ३४ अध्यायः ॥
(सरस्वत्युपनामकः कविविशेषः । यथा, श्रीमद्-भगवद्गीताटीकायाम् । "व्याख्यातं भगवत्पदैः प्रतिपदं श्रीशङ्कराख्यैः पुनर्व्विस्पष्टं मधुसूद-नेन मुनिना स्वज्ञानसिद्ध्यै कृतम् ॥" अयं हि अद्वैतसिद्धिप्रस्थानभेदभगवद्गीताटीका-महिम्नस्तवटीकासिद्धान्तबिन्दुटीकाद्यनेकग्रन्थ-कर्त्ता ॥)

**मधुसूदनी**, स्त्री, (मधु सूदयतीति । मधु + सूद् + णिच् + ल्युः । स्त्रियां ङीप् ।) पालङ्क्यशाकम् । इति हेमचन्द्रः । ४ । २५२ ॥

**मधुस्रवः**, पुं, (मधूनां मकरन्दानां स्रवः क्षरणं यस्मादिति ।) मधूकवृक्षः । मोरटलता । इति राजनिर्घण्टः ॥

**मधुस्रवा**, स्त्री, (मधुनः स्रवो यस्याः ।) मधुयष्टिका । इति जटाधरः ॥ जीवन्ती । इति शब्दचन्द्रिका ॥ (अस्याः पर्य्यायो यथा, --
"जीवन्ती जीवनी जीवा जीवनीया मधुस्रवा ।
मङ्गल्यनामधेया च शाकश्रेष्ठा पयस्विनी ॥"
प्रसहजातिप्राणिविशेषः ॥ यंथा, --
"शशघ्नी भासकुररगृध्रोलूककुलिङ्गकाः ।
धूमिका मधुहा चेति प्रसहा मृगपक्षिणः ॥"
इति वाभटे सूत्रस्थाने षष्ठेऽध्याये ॥)

**मधूकं**, क्ली, (महतीति । मह् + "ऊलूका-दयश्च ।" उणा० ४ । ४१ । इति ऊकः निपा-तितश्च ।) यष्टिमधु । इति रार्जनिर्घण्टः ॥ (गुणादयोऽस्य यष्टिमधुशब्दे विज्ञेयाः ॥)

**मधूकः**, पुं, (मह्यते मन्यते वेति । मह् + मन् वा + "उलूकादयश्च ।" उणा ० ४ । ४१ । इति ऊकप्रत्ययो निपातितश्च ।) वृक्षविशेषः । महुल इति मौल इति महुया इति च भाषा ॥ तत्पर्य्यायः । गुडपुष्पः २ मधुद्रुमः ३ वान-प्रस्थः ४ मधुष्ठीलः ५ । इत्यमरः । २ । ४ । २८ ॥
मधुकः ६ मधुः ७ मधुपुष्पः ८ । इति शब्द-रत्नावली ॥ मधुस्रवः ९ । इति जटाधरः ॥ मधुवृक्षः १० रोधपुष्पः ११ माधवः १२ । (यथा, महाभारते । १५ । २५ । ११ ।
"चित्राङ्गदा चैव नरेन्द्रकन्या
यैषा सवर्णाग्र्यमधूकपुष्पैः ॥")
अस्य गुणाः । मधुरत्वम् । शीतत्वम् । पित्त-दाहश्रमापहत्वम् । वातलत्वम् । जन्तुदोषघ्न-त्वम् । वीर्य्यपुष्टिविवर्द्धनत्वञ्च । अस्य पुष्पगुणाः ।
मधुरत्वम् । हृद्यत्वम् । हिमत्वम् । पित्त-विदाहकारित्वञ्च । अस्य फलगुणाः । वाता-मयपित्तनाशित्वम् । ज्ञेयं मधूकद्वयमेवमेतत् । इति राजनिर्घण्टः ॥ अपि च ।
"मधूकपुष्पं मधुरं शीतलं गुरु बृंहणम् ।
बलशुक्रकरं प्रोक्तं वातपित्तविनाशनम् ॥
फलं शीतं गुरु स्वादु शुक्रलं वातपित्तनुत् ।
अहृद्यं हन्ति तृष्णास्रदाहश्वासक्षत-क्षयान् ॥"
इति भावप्रकाशः ॥
अपरञ्च ।
"मधूकपुष्पञ्चाहृद्यं तर्पणं बृंहणं परम् ।
मधूकस्य फलं पक्वं वातपित्तप्रणाशनम् ॥"
तन्मज्जगुणास्तत्फलगुणवत् । यथा, --
"यस्य यस्य फलस्यैव वीर्य्यं भवति यादृशम् ।

**मधुश्रेणी**, स्त्री, (मधूनां मधुररसानां श्रेणिर्यत्र ।)
मूर्व्वा । इत्यमरः । २ । ४ । ८४ ॥
(अस्याः पर्य्यायो
यथा, भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ।
“मूर्व्वा मधुरसा देवी मोरटा तेजनी स्रुता
।
मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि
॥”)

**मधुश्वासा**, स्त्री, (मधुर्मधुरः श्वासोऽस्मात् ।)
जीवन्तीवृक्षः । इति राजनिर्घण्टः ॥
(विवरण-
मस्या जीवन्तीशब्दे ज्ञातव्यम् ॥)

**मधुष्ठीलः**, पुं, (मधु मकरन्दं ष्ठीवति निःक्षि-
पतीति । ष्ठीव् + इगुपधत्वात् कः । पृषो-
दरादित्वाद्वस्य लत्वम् ।) मधूकवृक्षः ।
इत्य-
मरः । २ । ४ । २८ ॥ (अस्य पर्य्यायो
यथा, --
“मधूको गुडपुष्पः स्यान्मधुपुष्पो
मधुद्रुमः ।
वानप्रस्थो मधुष्ठीलो जलजेऽत्र मधूलकः
॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**मधुसखः**, पुं, (मधोर्वसन्तस्य सखा इति ।
“राजाहः-
सखिभ्यष्टच् ।” ५ । ४ । ९१ । इति टच्
।)
कामदेवः । इति हलायुधः ॥

**मधुसारथिः**, पुं, (मधुर्वसन्तः सारथिर्यस्य ।)
काम-
देवः । इति त्रिकाण्डशेषः ॥

**मधुसिक्थकः**, पुं, (सिञ्चतीति सिचेः स्थक् ।
स्वाथे कन् मधु मधुमयं सिक्थकं यस्य
।)
स्थावरविषभेदः । इति हेमचन्द्रः । ४ ।
२६४ ॥

**मधुसुहृत्**, [द्] पुं, (मधोर्वसन्तस्य सुहृत् ।)
कामदेवः । इति केचित् ॥

इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
मूर्व्वा । हंसपदी । इति राजनिर्घण्टः ॥

**मधुस्रवाः**, [स्] पुं, (मधूनि स्रवति निःक्षिपतीति ।
स्रु + कर्त्तरि असुन् ।) मधूकवृक्षः । इति
जटाधरः ॥

**मधुस्वरः**, पुं, (मधुर्मनोहरः स्वरो ध्वनिर्य्यस्य ।)
कोकिलः । इति शब्दरत्नावली ॥

**मधुहा**, [न्] पुं, (मधुं तन्नामानमसुरं हन्तीति ।
हन् + क्विप् ।) विष्णुः । इति हेमचन्द्रः ॥
(मधु हन्तीति । हन् + क्विप् । मधुनाशके, त्रि ।
यथा, महाभारते । ३ । ३३ । ६८ ।
“सर्व्वथा संहतैरेव दुर्ब्बलैर्बलवानपि ।
अमित्रः शक्यते हन्तुं मधुहा भ्रमरैरिव ॥”

तस्य तस्यैव वीर्य्येण मज्जानमभिनिर्द्दिशेत् ॥”
तस्य त्वग्गुणाः ।
“मधूकं रक्तपित्तघ्नं व्रणशोधनरोपणम् ॥”
इति राजवल्लभः ॥

**मधूच्छिष्टं**, क्ली, (मधुनः उच्छिष्टमवशिष्टम् ।
मध्ववशिष्टम् । मोम इति भाषा ॥ (यथा,
बृहत्संहितायाम् । १६ । २५ ।
“शैलेयकमांसीतगरकुष्ठरससैन्धवादिवल्लीजम्
।
मधुररसमधूच्छिष्टानि चोरकश्चेति जीवस्य
॥”)
तत्पर्य्यायः । सिक्थकम् २ । इत्यमरः । २ ।
९ ।
१०७ ॥ शिक्थकम् ३ शिक्थम् ४ । इति
शब्दरत्नावली ॥

**मधूत्थितं**, क्ली, (मधुनः उत्थितम् ।) सिक्थकम् ।
इति राजनिर्घण्टः ॥

| | | |
|---|---|---|
| **मधुसूदनः**, पुं, (मधु पुष्परसं सूदयति भक्षय- तोति । सूद् + णिच् + ल्युः ।) भ्रमरः । इति | | |

**मधूत्सवः**, पुं, (मधोश्चैत्रस्य उत्सवो यत्र ।) चैत्री
पूर्णिमा । इति जटाधरः ॥ (यथाभिज्ञान-
शकुन्तले । ६ ।
"कञ्चुकी । प्रविश्य । सक्रोधम् । मा तावद-
नात्मज्ञे ! देवेन प्रतिषिद्धेऽपि मधूत्सवे चूत-
कलिकाभङ्गमारभसे ॥")

**मधूपघ्नं**, क्ली, (मधोस्तन्नाम्नो दैत्यस्य उपघ्नः
आश्रयः । अभिधानात् क्लीवत्वम् ।)
मथुरा ।
इति हेमचन्द्रः । ४ । ४४ ॥

**मधूपघ्नः**, पुं, (मधोस्तन्नाम्नो दैत्यस्य उपघ्नः
आश्रयः ।) मथुरा । इति जटाधरः ॥ (यथा,
रघुवंशे । १५ । १५ ।
"स च प्राप मधूपघ्नं कुम्भीनस्याश्च
कुक्षिजः ।
वनात् करमिवादाय सत्वराशिमुपस्थितः
॥")

**मधूलः**, पुं, (मधु उरति प्राप्नोतीति । मधु +
उर गतौ सौत्रधातुः + कः । रस्य लत्वम् ।)
जलजगिरिजमधूकवृक्षौ । इति जटाधरः ॥
(अस्य पर्य्यायो यथा, वैद्यकरत्नमालायाम्
।
"गौरशाको मधूलोऽन्यो गिरिजः स्वल्प-
पत्रकः ॥")

**मधूलकः**, पुं, (मधूल + स्वार्थे कन् ।) जलज-
मधूकवृक्षः । तत्पर्य्यायः । दीर्घपत्रकः २ ।
इति जटाधरः ॥ गौरशाकः ३ मधूलः ४
स्वल्प-
पत्रकः ५ । इति रत्नमाला ॥
"स्यान्मधूके तु जलजे गिरिजेऽपि मधूलकः
॥"
इति शब्दरत्नावली ॥
(पर्य्यायान्तरमस्य यथा, --
"मधूको गुडपुष्पः स्यान्मधुपुष्पो मधुस्रवः ।
वानप्रस्थो मधुष्ठीलो जलजेऽत्र मधूलकः
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

अवसानम् । तत्पर्य्यायः । विरामः २ । इति
त्रिकाण्डशेषः ॥ मन्दत्वशीघ्रत्वोभयेतरत्वयुक्त-
नृत्यविषयकगमनविशेषः । इति भरतः ॥ लय-
विशेषः । इति मधुः ॥ मध्यमावृत्तिः । इति
साङ्गः ॥ यथा, अमरे । २ । ६ । ७९ ।
"विलम्बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात् ॥"

**मध्यः**, पुं, क्ली, (मन् + यक् । नस्य च ध ।) देह-
मध्यभागः । माजा इति भाषा ॥ तत्पर्य्यायः ।
मध्यमम् २ अवलग्नम् ३ । इत्यमरः । २ । ६ ।
७९ ॥ विलग्नम् ४ । इति मेदिनी । भे, ४४ ॥
(यथा, भट्टिकाव्ये । ४ । १६ ।
"दधाना बलिभं मध्यं कर्णजाहविलोचना ॥"
मध्यभागमात्रम् । यथा, मनुः । ४ । ३७ ।
"नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन ।
नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम् ॥"
"आयुष्कालस्य मध्यमावस्थाविशेषः कालः ।
षोडशसप्तत्योरन्तरे मध्यं वयस्तस्य विकल्पो
वृद्धिर्यौवनं सम्पूर्णता हानिरिति । तत्राविंशते-
र्वृद्धिरात्रिंशतो यौवनमाचत्वारिंशतः सर्व्व-
धात्विन्द्रियबलवीर्य्यसम्पूर्णता । अत
ऊर्द्धमीषत्
परिहानिर्यावत् सप्ततिरिति ॥" इति सुश्रुते
सूत्रस्थाने ३५ अध्याये ॥)

**मध्यः**, पुं, (मन् + यक् । नस्य धः ।) ग्रहस्फुट-
साधकाङ्कविशेषः । स च अहर्गणजातदेशा-
न्तरादिसंस्काररहिताङ्करूपग्रहः । इति
ज्योतिषम् ॥

**मध्यः**, त्रि, (मन्यते इति । मन् + यक् । नस्य
च धः ।) न्याय्यः । अन्तरः । अधमः । इति
शब्दरत्नावली ॥ मध्यमः । यथा, --
"उत्तमाधममध्यानि बुद्ध्वा कार्य्याणि पार्थिवः ।
उत्तमाधममध्येषु पुरुषेषु नियोजयेत् ॥"
इति मात्स्ये ८९ अध्यायः ॥

**मध्यगन्धः**, पुं, (मध्ये फलाभ्यन्तरे गन्धोऽस्य ।)
आम्रवृक्षः । इति शब्दचन्द्रिका ॥

**मध्यतः**, [स्] व्य, (मध्य + तसिल् ।) मध्यात् ।
मध्ये । इति सिद्धान्तकौमुदी ॥ स्यादेः स्थाने
तसादयो ये आदेशास्तेषामदन्तत्वमव्ययत्व-

**मध्यन्दिनः**, पुं, (दिनस्य मध्यं राजदन्तादित्वात्
मध्यशब्दस्य पूर्ब्बनिपातः । पृषोदरादित्वात्
नकारागमः । मध्यन्दिनं पुष्पविकासकत्वेना-
स्यास्तीति । अच् ।) बन्धूकवृक्षः । इति
राज-
निर्घण्टः ॥ (मध्याह्ने, क्ली, यथा, मनुः । ४ ।
१३१ ।
"मध्यन्दिनेऽर्द्धरात्रे च श्राद्धं भुक्त्वा च
सामि-
षम् ॥")

**मध्यपञ्चमूलकं**, क्ली, (मध्यं मध्यमं पञ्चमूलकम् ।)
पञ्चमूलपाचनविशेषः । यथा, --
"बला पुनर्नवैरण्डसूर्पपर्णीद्वयेन तु ।
एकत्र योजितैनैव स्यान्मध्यं पञ्चमूलकम् ॥"
इति राजनिर्घण्टः ॥

**मध्यमं**, पुं, क्ली, (मध्ये भवः । मध्य + "मध्यान्मः ।"
४ । ३ । ८ । इति मः ।) देहमध्यभागः ।
इत्य-
मरः । २ । ६ । ७९ ॥

**मध्यमः**, पुं, (मध्ये भवः । मध्य + मः ।) सप्त-
स्वराणां मध्ये पञ्चमस्वरः । इत्यमरः । १ ।
७ । १ ॥
गानशास्त्रमते चतुर्थस्वरः । स तु क्रौञ्चस्वर-
तुल्यः । अस्योच्चारणस्थानं वक्षः ।
व्याकरणमते
अधरः । अयं विप्रवर्णः । अस्य संज्ञा
अन्तरः । अर्थात्चतुःस्वरमिलितः । तस्य
ताना-
श्चतुर्विंशतिः तेषां प्रत्येकं द्वात्रिंशद्भेदेन ७६८
ताना भवन्ति । इति संगीतशास्त्रम् ॥
उपपति-
भेदः । तस्य लक्षणम् । प्रियायाः प्रकोपे यः
प्रकोपमनुरागं वा न प्रकटयति चेष्टया मनो-
भावं गृह्णाति स मध्यमः । यथा, --
"आस्यं यद्यपि हास्यवर्जितमिदं लास्येन
हीनं
वचो
नेत्रे शोणसरोजकान्तिरुचिरे क्वापि क्षणं
स्थीयते ।

अस्य गुणाः । मधूकगुणतुल्याः । मधुररसः
।
इति हेमचन्द्रः । ६ । २४ ॥
(क्लीवलिङ्गेऽपि दृश्यते ।
यथा, अथर्व्ववेदे । १ । ३४ । २ ।
"जिह्वाया अग्रे मधु मे जिह्वामूले मधूलकम्
॥")
तद्वति, त्रि ॥

**मधूलिका**, स्त्री, (मधूल + कन् । स्त्रियां टाप्

अत इत्वञ्च ।) मूर्व्वा । इत्यमरः । २ । ४ ।
८४ ॥
(अस्याः पर्य्यायो यथा, --
"मूर्व्वा मधुरसा देवी मोरटा तेजनी स्रुवा ।
मधलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ॥"
यष्टीमधु । तत्पर्य्यायो यथा, --
"यष्टीमधु तथा यष्टी मधुकं क्लीतकन्तथा ।
अन्यत्क्लीतनकन्तत्तु भवेत्तोये मधूलिका
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**मधूली**, स्त्री, (मधूल + गौरादित्वात् ङीष् ।)

क्लीतनकम् । मधुकर्कटी । आम्रः । इति
राज-
निर्घण्टः ॥

**मध्यं**, क्ली, (मन्यते इति । मन् + "अघ्न्यादयश्च ।"

उणा ० ४ । ११२ । इति यक्प्रत्ययेन
निपातितः ।)
दशान्त्यसंख्या । शतसागरसंख्या । इति
हेम-
चन्द्रः ॥ (यथा, महाभारते । २ । ६१ । ४
।
"मध्यञ्चैव परार्द्धञ्च सपरञ्चात्र पण्यताम्
॥")
मिति प्राञ्चः । तेन कुतः कुतः आगतं कौत-
स्कुतम् । इत्यत्राव्ययत्वात् टिलोपः । इति दुर्गा-
दासः ॥

**मध्यदेशः**, पुं, (मध्यश्चासौ देशश्चेति ।) देश-

विशेषः । तत्पर्य्यायः । मध्यमः २ । इत्यमरः ॥
तस्य सीमा यथा, मनुः । २ । २१ ।
"हिमवद्विन्ध्ययोर्म्मध्यं यः प्राग्विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः ॥"
विनशनं तीर्थभेदः । मां ध्यायति स्मरतीति
केसति मद्ध्यो दकारवानिति साङ्गे । मनो
धश्चेति यप्रत्यये नस्य धे सति चतुर्थमात्रवा-
नति रूपरत्नाकरः । इति तट्टीकायां भरतः ॥

**मध्यदेश्यः**, त्रि, (मध्यदेशे भवः इति यत् ।)

मध्यदेशोद्भवः । यथा, वामनपुराणे १३ अः ॥
"शकाश्चैव संससका मध्यदेश्या जनास्त्विमे
॥"
मालायाः करणोद्यमे मकरिकारम्भः कुचा-
म्भोजयो-
र्धूपः कुन्तलधोरणीषु सुतनोः सायन्तनो
दृश्यते ॥"
इति रसमञ्जरी ॥
मध्यदेशः । इत्यमरः ॥ ग्रहाणां सामयिक-
संज्ञाविशेषः । यथा, --
"द्युचरचक्रहतो दिनसञ्चयः
क्व ह हतो भगणादिफलं ग्रहः ।
दशशिरःपुरमध्यमभास्करे
क्षितिजसन्निधिगे सति मध्यमः ॥"
इति सिद्धान्तशिरोमणिः ॥
मृगभेदः । रागभेदः । इति धरणिः ॥

**मध्यमः**, त्रि, (मध्ये भवः । मध्य + "मध्यान्मः । ४ ।

३ । ८ । इति मः ।) मध्यभवः । इति मेदिनी
।
मे, ४९ ॥ (यथा, मनौ । ९ । ११२ ।
"ततोऽर्द्धं मध्यमस्य स्यात् तुरीयन्तु
यवीयसः ॥")
तत्पर्य्यायः । माध्यमम् २ मध्यमीयम् ३
माध्यन्दिनम् ४ । इति हेमचन्द्रः ॥
(वयोमध्य-
समयः ।
"वयश्चतुर्व्विधं प्रोक्तं मध्यमाधममुत्तमम् ।
हीनञ्च हारीत ह्यत्र तानि वक्ष्यामि साम्प्रतम्
॥

पथिश्रान्तः श्रमक्षीणः बालश्रीः सुकुमारकः ।
एतेषां मध्यमा संज्ञा प्रोच्यते वैद्यकागमे ।
मध्यमः सप्ततिं यावत् परतो वृद्ध उच्यते ॥”
इति हारीते प्रथमे स्थाने पञ्चमेऽध्याये ॥
“बाले विवर्द्धते श्लेष्मा मध्यमे पित्तमेव तु ।
भूयिष्ठं वर्द्धते वायुर्वृद्ध्वे तद्वीक्ष्य योजयेत् ॥”
इति च सुश्रुते सूत्रस्थाने ३५ अध्याये ॥)

**मध्यमपाण्डवः**, पुं, (मध्यमश्चासौ पाण्डवश्चेति ।
तस्य पूर्ब्बापरयोर्द्वयोर्द्वयोर्म्मध्यवर्त्तित्वात्तथा-
त्वम् ।) अर्ज्जुनः । इति जटाधरः ॥ (यथा,
किरातार्ज्जुनीये । १ । ४६ । श्लोकस्य
टीकायां
मल्लिनाथः ।
“नेता मध्यमपाण्डवो भगवतो नारायण-
स्यांशजः ॥”)

**मध्यमलोकः**, पुं, (मध्यमश्चासौ लोकश्चेति कर्म्म-
धारयः ।) पृथिवी । इति त्रिकाण्डशेषः ॥
(यथा,
रघुः । २ । १६ ।
“तां देवता पित्रतिथिक्रियार्था-
मन्वक् ययौ मध्यमलोकपालः ॥”
“मध्यमलोकपालः भूपालः ।” इति तट्टीकायां
मल्लिनाथः ॥)

**मध्यमभृतकः**, पुं, (मध्यमश्चासौ भृतकश्चेति ।)
कृषीबलभृतकः । कृषाण इति भाषा ॥ यथा, --
“उत्तमश्चायुधीयोऽत्र मध्यमस्तु कृषीबलः ।
अधमो भारवाही स्यादित्येष त्रिविधो भृतः ॥”
इति मिताक्षरा ॥

**मध्यमसंग्रहः** पुं, (मध्यमश्चासौ संग्रहश्चेति ।)
स्त्रीसंग्रहणाख्यविवादविशेषः । स तु गन्ध-
माल्यवस्त्रभूषादिप्रेरणरूपः । यथा । प्रथम-
साहसादिदण्डप्राप्त्यर्थं त्रेधा तत्स्वरूपं
व्यासेन
विवृतम् ।
“त्रिविधं तत् समाख्यातं प्रथमं मध्यमोत्तमम् ।
अदेशकालभाषाभिर्न्निर्जने च परस्त्रियाः ।
कटाक्षावेक्षणं हास्यं प्रथमं साहसं स्मृतम् ॥
प्रेषणं गन्धमाल्यानां धूपभूषणवाससाम् ।
लोभात् सहस्रं दण्डन्तु मोहात् पूर्ब्बन्तु
साहसम् ।
भयाद्वा मध्यमौ दण्डौ मैत्रात् पूर्ब्बं
चतुर्गुणम् ॥”
इति मानवे साक्षिप्रकरणे ८ अध्यायः ॥

**मध्यमा** स्त्री, (मध्यम + टाप् ।) दृष्टरजस्का
नारी । कर्णिका । अङ्गुलिभेदः । त्र्यक्षर-
च्छन्दः । इति मेदिनी । मे, ५० ॥
हृदयोत्थित-
बुद्धियुतनादरूपवर्णः । यथा,
अलङ्कारकौस्तुभः ॥
“पश्चात् पश्यन्त्यथ हृदयगो
बुद्धियुङ्मध्य-
माख्यः ।”
स्वीयाद्यन्तर्गतनायिकाभेदः । तस्या
लक्षणम् ।
हिताहितकारिण्यपि प्रियतमे हिताहित-
कारिणी या सा । अस्यास्तु
व्यवहारानुसारिणी
चेष्टा । इति रसमञ्जरी ॥ (जम्बुभेदः ।
तत्पर्य्यायो
यथा, --
“सूक्ष्मकृष्णफलाजम्बुर्दीर्घपत्रा च
मध्यमा ॥”
इति वैद्यकरत्नमालायाम् ॥)

**मध्यमिका**, स्त्री, (मध्यमैव । कन् टापि
अत इत्वञ्च ।) दृष्टरजस्का नारी । इति
रत्नावली ॥

**मध्यमीयं**, त्रि, (मध्यमे भवं मध्यमस्येदं वेति ।
“गहादिभ्यश्च ।” ४ । २ । १३८ । इति
छः ।)
मध्यमम् । इति हेमचन्द्रः । ६ । ९६ ॥

**मध्यमेश्वरः**, पुं, (मध्यमस्य स्थानस्य ईश्वरः ।)
काशीस्थशिवलिङ्गविशेषः । यथा, --
“धन्यास्तु खलु ते विप्रा मन्दाकिन्यां
कृतोदकाः ।
अर्च्चयन्ति महादेवं मध्यमेश्वरमीश्वरम्
॥
“निषिद्धवत्या मध्यस्थान्दस्यूनानन्दपूर्णया ।
स श्रीदत्तस्तया साकं तन्मन्दिरमथाविशत् ॥”
यथा च भागवते । ६ । १६ । ५ ।
“बन्धुज्ञात्यरिमध्यस्थमित्रोदासीनविद्विषः।
सर्व्व एव हि सर्व्वेषां भवन्ति क्रमशो मिथः ॥”)
उभयपक्षहीनः । यथा, --
“श्रुत्वा युद्धोद्यमं रामः कुरूणां सह पाण्डवैः ।
तीर्थाभिषेकव्याजेन मध्यस्थः प्रययौ किल ॥”
इति श्रीभागवते १० स्कन्धे ७८ अध्यायः ॥
स्वार्थाविरोधेन परार्थघटकः । यथाह प्राञ्चः ।
“ते ते सत्पुरुषाः परार्थघटकाः स्वार्थस्य
वाधेन ये
मध्यस्थाः परकीयकार्य्यकुशलाः स्वार्थाविरो-
धेन ये ।
तेऽमी मानुषराक्षसाः परहितं यैः स्वार्थतो
हन्यते
ये तु घ्नन्ति निरर्थकं परहितं ते के न जानी-
महे ॥”

**मध्यस्थलं**, क्ली, (मध्यं स्थलम् । शरीरमध्यवर्त्ति-
त्वात्तथात्वम् ।) कटिदेशः । यथा, --
“कुचौ मरिचसन्निभौ मुरजमध्यमध्यस्थली ।
अहो तिमिरमञ्जरी सहचरी नरीनृत्यते ॥”
इत्युद्भटः ॥

**मध्या**, स्त्री, (मध्य + ठाप् ।) मध्यमाङ्गुलिः ।
इति हेमचन्द्रः ॥ नायिकाविशेषः । अस्या
लक्षणम् । समानलज्जामदना । एषैव चाति-
प्रश्रयादतिविश्रब्धनवोढा ॥ अस्याश्चेष्टा ।
सागसि प्रेयसि धेर्य्ये वक्रोक्तिरधैर्य्ये परुषवाक् ।
यथा, --
“स्वापे प्रियाननविलोकनहानिरेव
स्वापच्युतौ प्रियकरग्रहणप्रसङ्गः ।
इत्थं सरोरुहमुखी परिचिन्तयन्ती
स्वापं विधातुमपि हातुमपि प्रपेदे ॥”
मध्याप्रगल्भे मानावस्थायां प्रत्येकं त्रिविधे ।
धीरा अधीरा धीराधीरा चेति । इति रस-
मञ्जरी ॥

**मध्याह्नः**, पुं, (मध्यं अहः समासान्तः टच् ।
“अह्नोऽह्न एतेभ्यः ।” ५ । ४ । ८८ । इत्यह्नादेशः
पुंस्त्वञ्च ।) अह्नोऽष्टममुहूर्त्तात्मकमध्यभागः ।
स च कुतपकालस्य संज्ञाविशेषः । यथा, --

प्रलोभनञ्चान्नपानैर्मध्यमं समुदाहृतम् ॥
सहासनं विविक्तेषु परस्परमपाश्रयः ।
केशाकेशिग्रहश्चैव सम्यक् संग्रहणं स्मृतम् ॥”
इति मिताक्षरायां स्त्रीसंग्रहणप्रकरणम् ॥

**मध्यमसाहसं**, क्ली, (सहसा क्रियमाणं कृतं वा ।

सहसा + अण् । मध्यमञ्च तत् साहसञ्चेति ।)
बलदर्पितेन बासःपश्वन्नपानादीनाम्भङ्गाक्षेप्मो
पमर्दादिरूपं सहसा क्रियमाणं कर्म्म । यथा,
“फलमूलोदकादीनां क्षेत्रोपकरणस्य च ।
भङ्गाक्षेपोपमर्द्दाद्यैः प्रथमं साहसं स्मृतम् ॥
वासःपश्वन्नपानानां गृहोपकरणस्य च ।
एतेनैव प्रकारेण मध्यमं साहसं स्मृतम् ॥”
इति मिताक्षरा ॥

**मध्यमसाहसः**, पुं, (मध्यमश्चासौ साहसश्चेति ।)

दण्डविशेषः । स तु पञ्चशतपणरूपः । यथा, --
“पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः ।
मध्यमं पञ्च विज्ञेयः सहस्रन्त्वेव चोत्तमः ॥
स्नानं दानं तपः श्राद्धं पिण्डनिर्व्वापणं
त्विह ।
एकैकशः कृतं विप्राः पुनन्त्यासप्तमं
कुलम् ॥
सन्निहित्वा अपस्पृश्य राहुग्रस्ते निशाकरे
।
यत् फलं लभते मर्त्यस्तस्माद्दशगुणं त्विह
॥
एवमुक्त्वा महायोगी मध्यमे शान्तिके
प्रभुः ।
उवास सुचिरं कालं पूजयन् वै महेश्वरम्
॥”
इति कौर्म्मे ३१ अध्यायः ॥

**मध्ययवः**, पुं, (मध्यो मध्यमो यवः ।) षट्श्वेत-

सर्षपपरिमाणम् । इति केचित् ॥

**मध्यरात्रः**, पुं, (मध्यं रात्रेः “पूर्ब्बापराधरेति ।”

२ । २ । १ । इति समासः ।
“अहस्सर्वैकेति ।”
इति ५ । ४ । ८७ । समासान्तोऽच्
पुंस्त्वञ्च ।)
निशीथः । अर्द्धरात्रः । इति हलायुधः ॥
(यथा मनौ । ४ । १०९ ।
“उदके मध्यरात्रे च विन्मूत्रस्य विसर्ज्जने
।
उच्छिष्टः श्राद्धभुक् चैव मनसापि न
चिन्त-
येत् ॥”)

**मध्यलोकः**, पुं, (मध्यश्चासौ लोकश्चेति ।)
पृथिवी ।

मर्त्यलोक इति यावत् ।
वक्ष्यमाणशब्दार्थ-
दर्शनात् ॥

**मध्यलोकेशः**, पुं, (मध्यलोकानां मर्त्यानां ईशः ।)

राजा । इति हेमचन्द्रः । ३ । ३५३ ॥

**मध्यस्थः**, त्रि, (मध्ये वादिप्रतिवादिनोरन्तरे

तिष्ठतीति । स्था + कः ।) मध्यस्थायी ।
तत्-
पर्य्यायः । निसृष्टः २ । इति
त्रिकाण्डशेषः ॥
(यथा कथासरित्सागरे । १० । १९१ ।
“अह्नो मुहूर्त्ता विख्याता दश पञ्च च सर्व्वदा ।
तत्राष्टमो मुहूर्त्तो यः सः कालः कुतपः स्मृतः ।
मध्याह्ने सर्व्वदा यस्मान्मन्दीभवति भास्करः ।
तस्मादनन्तफलदस्तत्रारम्भोविशिष्यते ॥
मध्याह्नः खड्गपात्रञ्च तथा नेपालकम्बलम् ।
रौप्यं दर्भास्तिला गावो दौहित्रं चाष्टमः स्मृतः ॥
पापं कुत्सितमित्याहुस्तस्य सन्तापकारिणः ।
अष्टावेते यतस्तस्मात् कुतपा इति संस्मृताः ॥”
इति मत्स्यपुराणे श्राद्धकल्पे २२ अध्यायः ॥
त्रिधाविभक्तदिनमध्यभागः । स च दशदण्डात्
परं दशदण्डरूपः । इति श्रुत्युक्तः अमरोक्तश्च ॥
पञ्चधाविभक्तदिनतृतीयभागः । स तु द्वादश-

दण्डात् परषड्दण्डात्मकः। इति
स्मार्त्तधृतमत्स्य-
पुराणम् ॥ एष
नियमस्त्रिंशद्दण्डदिनाभिप्रायेण
न्यूनाधिके न्यूनाधिककालो ज्ञेयः ॥ * ॥
मध्याह्न-
कृत्यं यथा, --
"ततो मध्याह्नसमये स्नानार्थं मृदमाहरेत् ।
पुष्पाक्षतं कुशतिलान् गोमयं शुद्धमेव च ॥
नदीषु देवखातेषु तडागेषु सरित्सु च ।
स्नानं समाचरेन्नित्यं गर्भप्रस्रवणेषु च ॥
परकीयनिपानेषु न स्नायाद्वै कदाचन ।
पञ्च पिण्डान् समुद्धृत्य स्नायाद्वा सम्भवे
पुनः ॥
मृदैकया शिरः क्षाल्यं द्वाभ्यां नाभेस्तथोपरि
।
अधश्च तिसृभिः कार्य्यं पादौ षड्भिस्तथैव
च ॥
मृत्तिका च समुद्दिष्टा त्वार्द्रामलकमानिका।
गोमयस्य प्रमाणन्तत्तेनाङ्गं लेपयेत्ततः ॥
लेपयित्वाथ तीरस्थस्तल्लिङ्गेनैव मन्त्रतः ।
प्रक्षाल्याचम्य विधिवत्ततः स्नायात्
समाहितः ॥
अभिमन्त्र्य जलं मन्त्रैस्तल्लिङ्गैर्वारुणैः शुभैः ।
भावपूतस्तदव्यक्तं ध्यायन् वै विष्णुमव्ययम्
॥
आपो नारायणोद्भूतास्ता एवास्यायनं पुनः ।
तस्मान्नारायणं देवं स्नानकाले स्मरेद्बुधः ॥
प्रेक्ष्य ॐकारमादित्यं त्रिर्निमज्जेज्जलाशये।
पुनः पुनरथाचामेत् मन्त्रेणानेन मन्त्रवित् ॥
अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः ।
त्वं यज्ञस्त्वं वषट्कार आपो ज्योती रसोऽमृ-
तम् ॥
द्विवारं वा त्रिरभ्यस्येत् व्याहृतिप्रणवान्विताम्
।
सावित्रीं वा जपेद्विद्वांस्तथा चैवाघमर्षणम् ॥
ततः सम्मार्ज्जनं कुर्य्यादापोहिष्ठामयो भुवः
।
इदमापः प्रवहत व्याहृतिभिस्तथैव च ॥
ततोऽभिमन्त्र्य तत् तीर्थमापोहिष्ठादिमन्त्रकैः
।
अन्तर्ज्जले त्रिरावर्त्त्य सर्व्वपापात् प्रमुच्यते ॥
चण्डालाशौचिपतितान् दृष्ट्वाचम्य
पुनर्ज्जपेत् ।
तैरेव भाषणं कृत्वा स्नात्वा चैव जपेद्बुधः
॥
आचम्य प्रयतो नित्यं जपेदशुचिदर्शने ।
सौरान् मन्त्रान् शक्तितो वै पावमानीस्तु
कामतः ॥
यदि स्यात् क्लिन्नवासो वै वारिमध्यगतो
जपेत् ।
अन्यथा तु शुचौ भूम्यां दर्भेषु
सुसमाहितः ॥
प्रदक्षिणं समावृत्य नमस्कृत्वा ततः क्षितौ
।
आचम्य च यथाशास्त्रं शक्त्या
स्वाध्यायमाच-
रेत् ॥
ततः सन्तर्पयेद्देवानृषीन् पितृगणान्
क्रमात् ।
आदावोङ्कारमुच्चार्य्य नमोऽन्ते तर्पयामि
च ॥
देवान् ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैः ।
तिलोदकैः पितॄन् भक्त्या
स्वसूत्रोक्तविधानतः ॥
अन्वारब्धेन सव्येन पाणिना दक्षिणेन च
।
देवर्षींस्तर्पयेद्धीमानुदकाञ्जलिभिः पितॄन्
॥
यज्ञोपवीती देवानां निवीती ऋषितर्पणम्
।
प्राचीनावीती पैत्र्ये तु स्वेन तीर्थेन
भावतः ॥
नापीड्य स्नानवस्त्रं वै समाचम्य च
वाग्यतः ।
स्वैर्म्मन्त्रैरर्च्चयेद्देवान् पुष्पैः
पत्रैरथाम्बुभिः ॥
ब्रह्माणं शङ्करं सूर्य्यं तथैव मधुसूदनम् ।
अन्यांश्चाभिमतान् देवान् भक्त्या
चाक्रोधनो-
ऽत्वरः ॥
प्रदद्याद्वाथ पुष्पाणि सूक्तेन पुरुषेण तु ।
आपो वा देवताः सर्व्वास्तेन सम्यक्
समर्च्चिताः ॥
वैश्वदेवनिमित्तं वै देवयज्ञः स वै स्मृतः ॥
यदि स्याल्लौकिके पक्वं ततोऽन्नं तत्र हूयते ।
शालाग्नौ तत्र देवान्नं विधिरेष सनातनः ॥
देवेभ्यश्च हुतान्दद्यात् शेषान् भूतबलिं हरेत् ।
भूतयज्ञः स वै ज्ञेयो भूतिदः सर्व्वदेहिनाम् ॥
श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यो नित्यमेव च ।
दद्याद्भूमौ बलिं त्वन्नं पक्षिभ्योऽथ द्विजोत्तमः ॥
सायं चान्नस्य सिद्धस्य कुर्य्यादेवमतन्द्रितः ।
भूतयज्ञः स्वयं नित्यं सायं प्रातर्विधीयते ॥
एकन्तु भोजयेद्विप्रं षितॄनुद्दिश्य सत्तमम् ।
अथवायं यथाशक्ति किञ्चिदन्नं समाहितः ।
वेदतत्त्वार्थविदुषे द्विजायै वोपपादयेत् ॥
पूजयेदतिथिं नित्यं नमस्येदर्च्चयेद्द्विजम् ।
मनोवाक्कर्म्मभिः शान्तमागतं स्वगृहन्तु तम् ॥
हन्तकारमथाग्रं वा भिक्षां वा शक्तितो द्विजः ।
दद्यादतिथये नित्यं बुद्ध्वा तं परमेश्वरम् ॥
भिक्षामाहुर्ग्रासमात्रमग्रं स्यात् तच्चतुर्गुणम् ।
पुष्कलं हन्तकारन्तु तच्चतुर्गुणमुच्यते ॥
गोदोहमात्रं कालं वै प्रतीक्ष्यो ह्यतिथिः स्वयम् ।
अभ्यागतान् यथाशक्ति पूजयेदतिथिं यथा ॥
भिक्षां वै भिक्षवे दद्याद्विधिवद् ब्रह्मचारिणे ।
दद्यादन्नं यथाशक्ति त्वर्थिभ्यो लोभवर्ज्जितः ॥
सर्व्वेषामप्यलाभे तु अन्नं गोभ्यो निवेदयत् ।
भुञ्जीत बन्धुभिः सार्द्धं वाग्यतोऽन्नमकुत्सयन् ॥
अकृत्वा तु द्विजः पञ्च महायज्ञान् द्विजोत्तमाः ।
भुञ्जीत चेत् सुमूढात्मा तिर्य्यग्योनिं स
गच्छति ॥
वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रियाक्षमाः ।
नाशयन्त्याशु पापानि देवानामर्च्चनं तथा ॥
यो मोहादथवालस्यादकृत्वा देवतार्च्चनम् ।
भुङ्क्ते स याति नरकान् शूकरेष्वभिजायते ॥
तस्मात् सर्व्वप्रयत्नेन कृत्वा कर्म्माणि वै द्विजः ।
भुञ्जीत स्वजनैः सार्द्धं स याति परमां गतिम् ॥"
इति कौर्म्मे उपविभागे १७ अध्यायः ॥
अत्र भोजनविधिर्भोजनशब्देद्रष्टव्यः ॥

**मध्वलः**, (मधुं तत्पर्य्यायं अलतीति । अल् +
अण् । संज्ञापूर्ब्बकत्वात् वृद्ध्यभावः ।) मधुवारः ।
इति शब्दचन्द्रिका ॥

**मध्वालु**, क्ली, (मधु मधुरं आलु । मधुवन्मिष्टत्वा-
त्तथात्वम् ।) मूलविशेषः । मौ आलु इति

अपः पाणौ समादाय जप्त्वा वै मार्ज्जने कृते ।
विन्यस्य मूर्द्ध्नि तत्तोयं मुच्यते सर्व्वपातकैः ॥
यथाश्वमेधः क्रतुराट् सर्व्वपापापनोदनः ।
तथाघमर्षणं सूक्तं सर्व्वपापापनोदनम् ॥
अथोपतिष्ठेदादित्यं मूर्द्ध्नि पुष्पान्विताञ्जलिम् ।
प्रक्षिप्यालोकयन्त्वेमदृश्यं वैदिकैः परम् ॥
उदुत्यं चित्रं देवानामित्यादिभिरनन्यधीः ।
हंसः शुचिषदेतेन सावित्र्या च विशेषतः ॥
अन्यैश्च वैदिकैर्मन्त्रैः सौरैः पापप्रणाशनैः ।
सावित्रीं वै जपेत् पश्चाज्जपयज्ञः स वै स्मृतः ॥
विविधानि पवित्राणि गुह्यविद्यास्तथैव च ।
शतरुद्रियमथर्व्वशिरः सौरमन्त्रांश्च शक्तितः ॥
प्राक्कूलेषु समासीनः कुशेषु प्राङ्मुखः शुचिः ।
तिष्ठंश्चेदीक्षमाणोऽर्कं जाप्यं कुर्य्यात् समाहितः ॥
स्फाटिकेन्द्राक्षरुद्राक्षपुत्त्रजीवसमुद्भवैः ।
कर्त्तव्या अक्षमाला वा उत्तरादुत्तमा स्मृता ॥
जपकाले न भावेत नान्यानि प्रेक्षयेद्बुधः ।
न कम्पयेच्छिरोग्रीवान्दन्तान्नैव प्रकाशयेत् ॥
गुह्यका राक्षसाः सिद्धा हरन्ति प्रसभम्भयात् ।
एकान्तेषु शुभे देशे तस्माज्जप्यं समाचरेत् ॥
नमस्कारेण पुष्पाणिं विन्यसेद्वै पृथक् पृथक् ।
न विष्णवाराधनात् पुण्यं विद्यते कर्म्म वैदिकम् ।
तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम् ॥
तद्विष्णोरितिमन्त्रेण सूक्तेन पुरुषेण तु ।
नैताभ्यां सदृशो मन्त्रो वेदेषूक्तश्चतुर्ष्वपि ॥
निवेदयेत् स्वमात्मानं विष्णावमलतेजसि ।
तदात्मा तन्मनाः शान्तस्तद्विष्णोरितिमन्त्रतः॥
अथवा देवमीशानं भगवन्तं सनातनम् ॥
आराधयेन्महादेवं भावपूतो महेश्वरम् ॥
मन्त्रेण रुद्रगायत्र्या प्रणवेनाथ वा पुनः ।
ईशानेनाथवा रुद्रैस्त्र्यम्बकेण समाहितः ॥
पुष्पैः पत्रैरथाद्भिश्च चन्दनाद्यैर्महेश्वरम् ।
अथोन्नमः शिवायेति मन्त्रेणानेन योजयेत् ॥
नमस्कुर्य्यान्महादेवमृतं सत्यमितीश्वरम् ।
निवेदयीत स्वात्मानं यो ब्राह्मणमितीश्वरे ॥
प्रदक्षिणं द्विजः कुर्य्यात् पञ्च ब्राह्मण वै जपन् ।
ध्यायेत्तं देवमीशानं व्योममध्यगतं शिवम् ॥
अथावलोकयेदर्कं हंसः शुचिषदित्यृचा ।
कुर्य्यात् पञ्च महायज्ञान् गृहं कृत्वा समाहितः ॥
देवयज्ञं पितृयज्ञं ऋषियज्ञं तथैव च ।
मानुष्यं ब्रह्मयज्ञञ्च पञ्चयज्ञान् प्रचक्षते ॥
यदि स्यात् तर्पणादर्व्वाक्ब्रह्मयज्ञः कृतो न हि ।
कृत्वा मनुष्ययज्ञं वै ततः स्वाध्यायमाचरेत् ।
अग्नेः पश्चिमतो देशे भूतयज्ञान्त एव वा ।
कुशासनसमासीनः कुशपाणिः समाहितः ॥
शालाग्नौ लौकिकाग्नौ वा जले भूम्यामथापि वा ।
भाषा ॥ अस्य गुणाः । रक्तपित्तनाशित्वम् । गुरुत्वम् । स्वादुत्वम् । शीतत्वम् । स्तन्यशुक्रकारित्वञ्च । इति राजवल्लभः ॥

**मध्वालुकं**, क्ली, (मध्वालु + स्वार्थे कन् ।) कन्द-विशेषः । इति शब्दचन्द्रिका ॥ मौ आलु इति भाषा ॥ (यथा, सुश्रुते सूत्रस्थाने ४६ अध्याये । “विदारीकन्दशतावरीविसमृणालशृङ्गाटककशेरुकपिण्डालुकमध्वालुकहस्त्यालुककाष्ठलुकशङ्खालुकरक्तालुकेन्दीवरोत्पलकन्द-प्रभृतीनि ॥”)

**मध्वासवः**, पुं, (मधु मधूकपुष्परसस्तन कृत आसवः ।) मधूकपुष्पकृतमद्यम् । तत्पर्य्यायः ।

माधवकः २ मधु ३ माध्वीकम् ४ । इत्यमरः । २ । १० । ४१ ॥ (यथा, सुश्रुते १ । ४५ अध्याये ।
"मुखप्रियः स्थिरमदो विज्ञेयोऽनिलनाशनः ।
मधु मध्वासवश्छेदी मेहकुष्ठविषापहः ॥"
विवरणमस्य माध्वीकशब्दे ज्ञातव्यम् ॥)

**मध्वासवनिकः**, पुं, (मध्वासवनमुत्पाद्यत्वेनास्त्य-स्येति । मध्वासवन + ठन् ।) शौण्डिकः । इति शब्दमाला ॥

**मध्विजा**, स्त्री, (मधु ईजते प्राप्नोति कारणत्वे-नेति । ईज + कः । पृषोदरादित्वात् ह्रस्वः ।) मदिरा । इति हेमचन्द्रः । ३ । ५६७ ॥ (गुणादि-विषयोऽस्या मदिराशब्दे ज्ञातव्यः ॥)

**मन**, अर्च्चे । गर्व्वे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-गर्व्वे अक०-सेट् ।) मनति । इति दुर्गादासः ॥

**मन**, क ङ गर्व्वके । इति कविकल्पद्रुमः ॥ (चुरा०-आत्म०-अक०-स्तम्भने सक०-सेट् ।) क ङ, मानयते । गर्व्वकोऽहङ्कारः । मनस्तम्भने । इति प्राञ्चः । मानयते शत्रुं बली स्तभ्नाती-त्यर्थः । इति रमानाथः । इति दुर्गादासः ॥

**मन**, त् क धृतौ । इति कविकल्पद्रुमः ॥ (अदन्त चुरा०-पर०-सक०-सेट् ।) दन्त्यनोपधः । मन-

स्वान्तम् ५ हृत् ६ मानसम् ७ । इत्यमरः । १ । ४ । ३१ ॥ अनङ्गकम् ८ अङ्गम् ९ । इति शब्दरत्नावली ॥ अपि च ।
"मनो महान् मतिर्ब्रह्मा पूर्ब्बुद्धिः ख्यातिरीश्वरः ।
प्रज्ञा संवित् चितिश्चव स्मृतिश्च परिपठ्यते ।
पर्य्यायवाचकाः शब्दा मनसः परिकीर्त्तिताः ॥"
इति महाभारते मोक्षधर्म्मः ॥ * ॥
न्यायमते अस्य गुणाः । परत्वम् । अपरत्वम् । संख्या । परिमितिः । पृथक्त्वम् । संयोगः । विभागः । वेगश्च । मनोग्राह्याणि यथा । सुखम् । दुःखम् । इच्छा । द्वेषः । मतिः । यत्नश्च । इदं परमाणुस्वरूपम् । शिरोमणि-मते वायवीयपरमाणुरूपम् । यथा, --
"परापरत्वं संख्याद्याः पञ्च वेगश्च मानसे ।
मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः ॥
अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहेष्यते ॥"
इति भाषापरिच्छेदः ॥
जन्यज्ञानसामान्यं प्रति त्वङ्मनोयोगः कार-णम् । यथा, तत्रैव ।
"त्वचो योगो मनसा ज्ञानकारणम् ॥"
तस्य नवगुणा यथा, --
"धैर्य्योपपत्तिव्यक्तिश्च विसर्गः कल्पना क्षमा ।
सदसच्चाशुता चैव मनसो नव वै गुणाः ॥"
इति मोक्षधर्म्मः ॥
अस्य व्याख्या । धैर्य्यम् १ उपपत्तिः ऊहापोह-कौशलम् २ व्यक्तिः स्मरणम् ३ विसर्गः विप-रीतसर्गो भ्रान्तिः ४ कल्पना मनोरथवृत्तिः ५ क्षमा ६ सत् वैराग्यादि ७ असत् रागद्वेषादि ८ आशुता अस्थिरत्वम् ९ । इति तट्टीका ॥ * ॥

तदर्थात्मसम्पदायत्तचेष्टम् । चेष्टाप्रत्ययभूत-मिन्द्रियाणाम् । स्वार्थेन्द्रियार्थसङ्कल्पव्यभिचर-णाच्चानेकमेकस्मिन् पुरुषे सत्त्वरजस्तमः सत्त्व-गुणयोगाच्च न चानेकत्वं नानेकं ह्येककालमने-केषु प्रवर्त्तते ॥ तस्मान्नैककाला सर्व्वेन्द्रिय-प्रवृत्तिः । यद्गुणञ्चाभीक्ष्णं पुरुषमनुवर्त्तते सत्त्वं तत्सत्त्वमेवोपदिशन्ति ऋषयो बाहुल्यानुशयात् ॥ मनःपुरःसराणीन्द्रियाण्यर्थग्रहणसमर्थानि भवन्ति ॥"
"मनसस्तु चिन्त्यमर्थः । तत्र मनसो बुद्धेश्च त एव समानातिहीनमिथ्यायोगाः प्रकृति-विकृतिहेतवो भवन्ति ॥" इति चरके सूत्र-स्थाने अष्टमेऽध्याये ॥
"लक्षणं मनसो ज्ञानस्याभावो भाव एव वा ।
सति ह्यात्मेन्द्रियार्थानां सन्निकर्षेण वर्त्तते ॥
वैधृत्यान्मनसो ज्ञानं सान्निध्यात्तच्च वर्त्तते ।
अणुत्वमथचैकत्वं द्वौ गुणौ मनसः स्मृतौ ॥
चिन्त्यविचार्य्यमूह्यञ्च ध्येयं सङ्कल्प्यमेव च ।
यत्किञ्चिन्मनसो ज्ञेयं तत् सर्व्वं ह्यर्थसंज्ञकम् ॥
इन्द्रियाभिग्रहः कर्म्म मनसस्तस्य निग्रहः ।
ऊहो विचारश्च ततः परं बुद्धिः प्रवर्त्तते ॥
इन्द्रियेणेन्द्रियार्थो हि समनस्केन गृह्यते ।
कल्प्यते मनसाप्यूर्द्धं गुणतो दोषतो यथा ॥
जायते विषये तत्र या बुद्धिर्निश्चयात्मिका ।
व्यवस्यते तथा वक्तुं कर्त्तुं वा बुद्धिपूर्ब्बकम् ॥
या यदिन्द्रियमाश्रित्य जन्तोर्बुद्धिः प्रवर्त्तते ।
याति सा तेन निर्द्देशं मनसा च मनोभवा ॥
बुद्धीन्द्रियमनोर्थानां विद्याद् योगधरं परम् ॥"
इति चरके शारीरस्थाने प्रथमेऽध्याये ॥
सत्त्वगुणयुक्तस्य मनसो गुणा यथा, --
"आस्तिक्यं प्रविभज्य भोजनमनुत्तापश्च तथ्यं वचो
मेधाबुद्धिधृतिक्षमाश्च करुणा ज्ञानञ्च निर्द्द-म्भता ।
कर्म्मानिन्दितमस्पृहञ्च विनयो धर्म्मः सदैवादरा-देते सत्त्वगुणान्वितस्य मनसो गीता गुणा ज्ञानिभिः ॥"
अस्ति धर्म्ममोक्षपरलोकादिकमिति बुद्ध्या चरतीत्यास्तिकस्तस्य भाव आस्तिक्यं अनु-त्तापः अक्रोधः धृतिः भूतप्रेतस्मरक्रोधलोभा-द्यावेशराहित्यं ज्ञानमात्मज्ञानम् । निर्द्दम्भता कपटाभावः कर्म्म अनिन्दितं अस्पृहं निष्का

यति । इति दुर्गादासः ॥

**मन**, द ङ बोधे । इति कविकल्पद्रुमः ॥ (तना०-
आत्म०-सक०-सेट् ।) द ङ, मनुते । इति
दुर्गादासः ॥

**मन**, य औ ङ बोधे । इति कविकल्पद्रुमः ॥
(दिवां-आत्म०-सक०-अनिट् ।) य ङ, मन्यते ।
औ, अमंस्त । इति दुर्गादासः ॥

**मनआपः**, त्रि, (आप्नोतीति । आप् + अच् ।
मनस आपः ।) मनोज्ञः । इति त्रिकाण्ड-
शेषः ॥

**मनः**, पुं, (मन्यते सुरभित्वादिगुणेन आद्रियत
इति । मन् + घः ।) जटामांसी । इति शब्द-
चन्द्रिका ॥

**मनः**, [स्] क्ली, (मन्यते बुध्यतेऽनेनेति । मन् +
"सर्व्वधातुभ्योऽसुन् ।" उणा० ४ । १८८ । इति
असुन् ।) लिङ्गशरीरावयवविशेषः । यथा ।
सूक्ष्मशरीराणि सप्तदशावयवानि लिङ्गशरी-
राणि । अवयवास्तु ज्ञानेन्द्रियपञ्चकं बुद्धि-
मनसी कर्म्मेन्द्रियपञ्चकं वायुपञ्चकञ्चेति । मनो
नाम सङ्कल्पविकल्पात्मिका अन्तःकरणवृत्तिः ।
मनस्तु कर्म्मेन्द्रियैः सहितं सत् मनोमयकोशो
भवति । इति वेदान्तसारः ॥ ज्ञानेन्द्रियविशेषः ।
तत्तु बुद्धीन्द्रियाणां षण्णां प्रधानं श्रीकृष्ण-
विभूतिश्च । यथा, --
"इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥"
इति भगवद्गीता ॥
अस्य चातुर्विध्यं यथा, --
"मनोबुद्धिरहङ्कारश्चित्तं करणमान्तरम् ।
संशयो निश्चयो गर्व्वः स्मरणं विषया अमी ॥"
इति वेदान्तः ॥
तस्य अध्यात्मत्वादि यथा, --
"अध्यात्मं मन इत्याहुः पञ्चभूतात्मधारकम् ।
अधिभूतञ्च सङ्कल्पश्चन्द्रमाश्चाधिदैवतम् ॥"
इति महाभारते आश्वमेधिकपर्व्व ॥
तस्य स्वरूपं यथा, --
"अनिरूप्यमदृश्यञ्च ज्ञानभेदं मनः स्मृतम् ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २३ अध्यायः ॥
तस्य प्राशस्त्याप्राशस्त्यानुमापकानियथा, --
"जनानां हृदयं सद्यः सुव्यक्तं वचनेन वै ।
शिष्ये कलत्रे कन्यायां दौहित्रे बान्धवेऽपि च ॥
पुत्त्रे पौत्त्रे च वचसि प्रतापे यशसि श्रियाम् ।
बुद्धौ वारिणि विद्यायां ज्ञायते हृदयं नृणाम् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १ अध्यायः ॥
तस्य बन्धमोक्षहेतुत्वं यथा, --
"मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धस्य विषयासङ्गि मुक्तेर्न्निर्व्विषयं तथा ॥"
इति विष्णुपुराणे ६ अंशे ७ अध्यायः ॥
("अतीन्द्रियं पुनर्मनः सत्त्वसंज्ञकं चेत्याहुरेके
मञ्च ॥ रजोगुणयुक्तस्य मनसो गुणा यथा, --
"क्रोधस्ताडनशीलता च बहुलं दुःखं सुखे-
च्छाधिका
दम्भः कामुकताप्यलीकवचनं चाधीरता-
हङ्कृतिः ।
ऐश्वर्य्यादभिमानितातिशयितानन्दोऽधिकश्चाटनं
प्रख्याता हि रजोगुणेन सहितस्यैते गुणा-
श्चेतसः ॥"

| तच्च गभस्थस्य सप्तमे मासि जायते । इति सुखबोधः ॥ ("पञ्चमे मनः प्रतिबुद्धतरं भवति ।" इति सुश्रुते शारीरस्थाने तृतीयेऽध्याये ॥ * ॥) तत्पर्य्यायः । चित्तम् २ चेतः ३ हृदयम् ४ | | |
|---|---|---|

अलीकवचनं मिथ्याकथनं अटनं पृथ्वीपरि-
भ्रमणम् ॥ अथ तमोगुणयुक्तस्य मनसो गुणा
यथा, --
"नास्तिक्यं सुविषन्नतातिशयितालस्यञ्चदुष्टा
मतिः
प्रातिर्निन्दितकर्म्मशर्म्मणि सदा निद्रालुताह-
र्न्निशम् ।
अज्ञानं किल सर्व्वतोऽपि सततं क्रोधान्धता
मूढता
प्रख्याता हि तमोगुणेन सहितस्यैते गुणा-
श्चेतसः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥ *
॥
सर्व्वे सान्ता अदन्ताश्चेति प्रमाणात् अका-
रान्त मनशब्दोऽप्यस्ति । यथा, उत्तरगीता-
याम् । १३ । अध्याये ।
"मनस्थं मनमध्यस्थं मध्यस्थं मनवर्ज्जितम् ।
मनसा मनमालोक्य स्वयं सिद्ध्यन्ति योगिनः
॥")

**मनःशिलः**, पुं, (मनो मानसं शिलति आकर्षति
स्वगन्धेनेति । शिल + कः ।) मनःशिला ।
यथा,
"टङ्कैर्मनःशिलगुहैरविदार्य्यमाणा ॥"
इत्यमरटीकायां भरतः ॥

**मनःशिला**, स्त्री, (मनः शिलति आददाति आक-
र्षति गन्धेनेति । शिल + कः । स्त्रियां टाप् ।
यद्वा, मनःप्रसादिका शिला धातुविशेषः ।)
रक्तवर्णधातुविशेषः । मञ्छल इति भाषा ॥
(यथा, कुमारे । १ । ५५ ।
"मनःशिलाविच्छुरिता निषेदुः
शैलेयनद्धेषु शिलातलेषु ॥")
सा तु लक्ष्मीवीर्य्यम् । इति वैद्यकम् ॥ तत्प-
र्य्यायः । कुनटी २ मनोज्ञा ३ नागजिह्विका ४ ।
इत्यमरः । २ । ९ । १०८ ॥ नैपाली ५
शिला ६ । इति रत्नमाला ॥ मनोह्वा ७ नेपा-
लिका ८ मनोगुप्ता ९ कल्याणिका १० रोग-
शिला ११ । इति राजनिर्घण्टः ॥ गोला १२
दिव्यौषधिः १३ । इति भावप्रकाशः ॥ अस्या
गुणाः । कटुत्वम् । स्निग्धत्वम् । लेखनत्वम् ।
विषभूतावेशभयोन्मादनाशित्वम् । वश्यकारि-
मनोह्वा ओड्रपुष्पाभा शस्यते सर्व्वकर्म्मसु
॥"
"जयन्ती भृङ्गराजोत्थै रक्तागस्त्यरसैः शिला
॥
दोलायन्त्रे दिनं पाच्या यामं छागस्य मूत्रके ।
क्षालयेदारनालेन सर्व्वरोगेषु योजयेत् ॥"
मतान्तरे मनःशिलाशुद्धिर्य्यथा, --
"अगस्त्यपत्रतोयेन भाविता सप्तवासरम् ।
शृङ्गवेररसैर्वापि विशुध्यति मनःशिला ।
कटुः स्निग्धा शिला तिक्ता कफघ्नी लेखनी
सरा ।
भूतावेशभयं हन्ति कासश्वासहरा शुभा ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणाधि-
कारे ॥)

**मननं**, क्ली, (मन्यत इति । मन् + ल्युट् ।) श्रुतस्या-
द्वितीयवस्तुनो वेदान्तार्थानुगुणयुक्तिभिः
अन-
वरतमनुचिन्तनम् । इति वेदान्तसारः ॥
बोध-
नम् । (यथा, गायत्त्रीतन्त्रे । १ । ४ ।
"मननात् पापतस्त्राति मननात् स्वर्गमश्नुते
।
मननात् मोक्षमाप्नोति चतुर्व्वर्गमयो भवेत्
॥")
धारणम् । इति मनधात्वर्थदर्शनात् । बुद्धिः ।
इति राजनिर्घण्टः ॥

**मनसा**, स्त्री, (मनः भक्ताभीष्टपूरणाय मननं
अस्त्यस्या इति । मनस् + अर्श
आदित्वादच् ।
ततष्टाप् । यद्वा, मनं मननमहङ्कारमिति
यावत् स्यति नाशयतीति । सो + कः ।)
देवी-
विशेषः । तत्पर्य्यायः । कद्रुः २ मनसादेवी
३
विषहरी ४ । इति जटाधरः ॥ अस्याः
प्रणाम-
मन्त्रः ।
"आस्तीकस्य मुनेर्माता भगिनी
वासुकेस्तथा ।
महाज्ञानयुतां ताञ्च प्रवदन्ति मनीषिणः ॥
आस्तीकस्य मुनीन्द्रस्य माता सा च तप-
स्विनः ॥
आस्तीकमाता विख्याता जगत्सु सुप्रतिष्ठीता
॥
प्रिया मुनेर्जरत्कारोर्मुनीन्द्रस्य महात्मनः ।
योगिनो विश्वपूज्यस्य जरत्कारुप्रिया ततः ॥
जरत्कारुर्जगद्गौरी मनसा सिद्धयोगिनी ।
वैष्णवी नागभगिनी शैवी नागेश्वरी तथा ॥
जरत्कारुप्रियास्तीकमाताविषहरीति च ।
महाज्ञानयुता चैव सा देवी विश्वपूजिता ॥
द्वादशैतानि नामानि पूजाकाले च यः पठेत् ।
तस्य नागभयं नास्ति तस्य वंशोद्भवस्य च ॥
नागभीते च शयने नागग्रस्ते च मन्दिरे ।
नागक्षते महादुर्गे नागवेष्टितविग्रहे ।
इदं स्तोत्रं पठित्वा तु मुच्यते नात्र संशयः ।
नित्यं पठेद् यस्तं दृष्ट्वा नागवर्गः पलायते ॥
दशलक्षजपेनैव स्तोत्रसिद्धिर्भवेन्नृणाम् ।
स्तोत्रसिद्धिर्भवेद्यस्य स विषं भोक्तुमीश्वरः ॥
नागौघभूषणं कृत्वा स भवेन्नागवाहनः ।
नागासनो नागतल्पो महासिद्धोभवेन्नरः ॥"
इति ब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारा-
यणनारदीये मनसोपाख्याने मनसास्तोत्रं
नाम
पञ्चचत्वारिंशत्तमोऽध्यायः ॥ * ॥ तस्याः
पूजा-
मन्त्रादि यथा, --
श्रीनारायण उवाच ।
"पूजाविधानं स्तोत्रञ्च श्रूयतां मुनिपुङ्गव ! ।
ध्यानञ्च सामवेदोक्तं देवीपूजाविधानकम् ॥
श्वेतचम्पकवर्णाभां रत्नभूषणभूषिताम् ।
वह्निशुद्धांशुकाधानां नागयज्ञोपवीतिनीम् ॥
महाज्ञानयुताञ्चैव प्रवरां ज्ञानिनां सतीम् ।
सिद्धाधिष्ठातृदेवीञ्च सिद्धां सिद्धिप्रदां भजे ॥
इति ध्यात्वा तु तां देवीं मूलेनैव प्रपूजयेत् ।
नैवेद्यैर्विविधैर्दीपैः पुष्पधूपानुलेपनैः ॥
मूलमन्त्रश्च वेदोक्तो भक्तानां वाञ्छितप्रदः ।
मुने ! कल्पतरुर्नाम सुसिद्धो द्वादशाक्षरः ॥
ॐ ह्रीं श्रीं क्रीं ऐं मनसादेव्यै स्वाहेति
कीर्त्तितः ।
पञ्चलक्षजपेनैव मन्त्रसिद्धिर्भवेन्नृणाम् ॥
मन्त्रसिद्धिर्भवेद्यस्य स सिद्धो जगतीतले ।

त्वञ्च । इति राजनिर्घण्टः ॥ अपि च । तिक्त-
त्वम् । कफनाशित्वम् । सारकत्वम् । छर्द्दि-
कारित्वम् । कुष्ठज्वरपाण्डुकासश्वासनाशि-
त्वम् । शुक्रमङ्गलकारित्वञ्च । इति राजवल्लभः
॥
अन्यच्च ।
“मनःशिला गुरुर्ब्बल्या सरोष्णा लेखनी कटुः ।
तिक्ता स्निग्धा विषश्वासकासभूतकफास्रनुत्॥
मनःशिला मन्दबलं करोति
जन्तुं ध्रुवं शोधनमन्तरेण ।
मलानुबन्धं किल मूत्ररोधं
सशर्करं कृच्छ्रगदञ्च कुर्य्यात् ॥”
इति भावप्रकाशः ॥
(अस्याः पर्य्यायः शोधनं गुणाश्च यथा, --
“मनःशिला च नेपाली शिलाह्वा नागजिह्विका ।
मनोज्ञा कुनटी गोली करञ्जी करवीरिका ॥

जरत्कारुमुनेः पत्नी मनसादेवि ! नमोऽस्तु
ते ॥”
इति तस्याः पूजापद्धतिः ॥
तस्या नाम्नां व्युत्पत्तिर्यथा, --
श्रीनारायण उवाच ।
“श्रूयतां मनसाख्यानं यत् श्रुतं धर्म्मवक्त्रतः
।
कन्या सा च भगवती कश्यपस्य च मानसी
॥
तेनेयं मनसादेवी मनसा या च दीव्यति ।
मनसा ध्यायते या वा परमात्मानमीश्वरी ॥
तेन सा मनसादेवी योगेन तेन दीव्यति ।
आत्मारामा च सा देवी वैष्णवी सिद्धयोगिनी
॥
त्रियुगञ्च तपस्तप्त्वा कृष्णस्य परमात्मनः ।
जरत्कारुशरीरञ्च दृष्ट्वा यत् क्षीणमीश्वरः ॥
गोपीपतिर्नाम चक्रे जरत्कारुरिति प्रभुः ।
वाञ्छितञ्च ददौ तस्यै कृपया च कृपानिधिः
॥
पूजाञ्च कारयामास चकार च पुनः पुनः ।
स्वर्गे च नागलोके च पृथिव्यां ब्रह्मलोकतः ॥
भृशं जगत्सु गौरी सा सुन्दरी च मनोहरा ।
जगद्गौरीति विख्याता तेन सा पूजिता सती
॥
शिवशिष्या च सा देवी तेन शैवीति कीर्त्तिता
।
विष्णुभक्तातीव शश्वद्वैष्णवी तेन नारद ! ॥
नागानां प्राणरक्षित्री यज्ञे जन्मेजयस्य च ।
नागेश्वरीति विख्याता सा नागभगिनीति च
॥
विषं संहर्त्तुमीशा सा तेन विषहरीति सा ।
सिद्धं योगं हरात् प्राप तेनातिसिद्धयोगिनी ।
महाज्ञानञ्च गोप्यञ्च मृतसञ्जीवनीं पराम् ।

सुधासमं विषं तस्य धन्वन्तरिसमो भवेत् ॥
ब्रह्मन्नाषाढसंक्रान्त्यां स्नुहीशाखासु यत्नतः
।
आवाह्य देवीमीशान्तां पूजयेद् यो हि
भक्तितः ॥
पञ्चम्यां मनसाख्यायां देव्यै दद्याच्च यो
बलिम् ।
धनवान् पुत्त्रवांश्चैव कीर्त्तिमांश्च भवेद्ध्रुवम्
॥
पूजाविधानं कथितं तदाख्यानं निशामय ।
कथयामि महाभाग ! यत् श्रुतं धर्म्मवक्ततः
॥”
तस्या जन्मकारणं यथा, --
“पुरा नागभयाक्रान्ता बभुवुर्मानवा भुवि ।
यान् यान् खादन्ति नागाश्च ते न जीवन्ति
नारद ! ॥
मन्त्रांश्च ससृजे भीतः कश्यपः ब्रह्मणार्थितः
।
वेदबीजानुसारेण चोपदेशेन ब्रह्मणः ॥

मन्त्राधिष्ठातृदेवीन्तां मनसां ससृजे ततः ।
तपसा मनसा तेन बभूव मनसा च सा ॥”
तस्यास्तपस्यादि यथा, --
“कुमारी सा च सम्भूय जगाम शङ्करालयम् ।
भक्त्या संपूज्य कैलासे तुष्टाव चन्द्रशेखरम् ॥
दिव्यं वर्षसहस्रञ्च तं सिषेवे मुनेः सुता ।
आशुतोषो महेशश्च ताञ्च तुष्टो बभूव ह ॥
महाज्ञानं ददौ तस्यै पाठयामास साम च ।
कृष्णमन्त्रं कल्पतरुं ददावष्टाक्षरं मुने ! ॥
लक्ष्मीमाया कामबीजं ङेऽन्तं कृष्णपदन्तथा ।
त्रैलोक्यमङ्गलं नाम कवचं पूजनक्रमम् ॥
सर्व्वपूज्यञ्च स्तवनं ध्यानं भुवनपावनम् ।
पुरश्चर्य्याक्रमञ्चापि वेदोक्तं सर्व्वसम्मतम् ॥
प्राप्ता मृत्युञ्जयाज्ज्ञानं परं मृत्युञ्जयं सती ।
जगाम तपसे साध्वी पुष्करं शङ्कराज्ञया ॥
त्रियुगञ्च तपस्तप्त्वा कृष्णस्य परमात्मनः ।
सिद्धा बभूव सा देवी ददर्श पुरतः प्रभुम् ॥
दृष्ट्वा कृशाङ्गीं बालाञ्च कृपया च कृपानिधिः ।
पूजाञ्च कारयामास चकार च स्वयं हरिः ॥
वरञ्च प्रददौ तस्यै पूजिता त्वं भवे भव ।
वरं दत्त्वा च कल्याण्यै सद्यश्चान्तर्दधे विभुः ॥
प्रथमे पूजिता सा च कृष्णेन परमात्मना ।
द्वितीये शङ्करेणैव कश्यपेन सुरेण च ॥
मनुना मुनिना चैव नागेन मानवादिना ।
बभूव पूजिता सा च त्रिषु लोकेषु सुव्रता ॥”
तस्या विवाहः स्वामिकर्त्तृकत्यागश्च यथा, --
“जरत्कारुमुनीन्द्राय कश्यपस्तां ददौ पुरा ।
अयाचितो मुनिश्रेष्ठो जग्राह ब्रह्मणाज्ञया ॥
कृत्वोद्वाहं महायोगी विश्रान्तस्तपसा चिरम् ।
सुष्वाप देव्या जघने वटमूले च पुष्करे ॥
सुपुण्ये भारते वर्षे पतिसेवां करोति या ।
वैकुण्ठं स्वामिना सार्द्धं सा याति ब्रह्मणः शतम् ॥
विप्रियं कुरुते भर्त्तुर्विप्रियं वदति प्रियम् ।
असत्कुलप्रजाता या तत्फलं श्रूयतां सति ! ॥
कुम्भीपाकं व्रजेत् सा च यावच्चन्द्रदिवाकरौ ।
ततो भवति चाण्डाली पतिपुत्त्रविवर्जिता ॥
इत्युक्त्वा च मुनिश्रेष्ठो बभूव स्फुरिताधरः ।
चकम्पे मनसा साध्वी भयेनोवाच तं पतिम् ॥
मनसोवाच ।
सन्ध्यालोपभयेनैव निद्राभङ्गः कृतस्तव ।
कुरु शास्तिं महाभाग ! दुष्टाया मम सुव्रत ! ॥
शृङ्गाराहारनिद्राणां यश्च भङ्गं करोति च ।
स व्रजेत् कालसूत्रञ्च स्वामिनश्च विशेषतः ॥
इत्युक्त्वा मनसादेवी स्वामिनश्चरणाम्बुजे ।
पपात भक्त्या भीता च रुरोद च पुनः पुनः ॥
कुपितञ्च मुनिं दृष्ट्वा श्रीसूर्य्यः शप्तुमुद्यतम् ।
तत्राजगाम भगवान् सन्ध्यया सह नारद ! ॥
तत्रागत्य मुनिश्रेष्ठमुवाच भास्करः स्वयम् ।
विनयेन च भीतश्च तया सह यथोचितम् ॥
श्रीसूर्य्य उवाच ।
सूर्य्यास्तसमयं दृष्ट्वा धर्म्मलोपभयेन च ।
बोधयामास त्वां विप्र ! नाहमस्तं गतस्तदा ॥
क्षमस्व भगवन् ! ब्रह्मन्मां शप्तुं नोचितं मुने ! ॥
ब्राह्मणानाञ्च हृदयं नवनीतसमं तथा ।
तेषां क्षणार्द्धं क्रोधश्च ततो भस्म भवेज्जगत् ॥
“ब्रह्मणो वचनं श्रुत्वा जरत्कारुर्मुनीश्वरः ।
चकार तन्नाभिस्पर्शं योगेन मन्त्रपूर्ब्बकम् ॥
तस्यै शुभाशिषं दत्त्वा ययुर्देवा मुदान्विताः ।
मुदान्विता च मनसा जरत्कारुर्मुदान्वितः ॥
मुनेः करस्पर्शमात्रात् सद्यो गर्भो बभूव ह ।
मनसाया मुनिश्रेष्ठ ! मुनिश्रेष्ठ उवाच ताम् ॥”
जरत्कारुरुवाच ।
गर्भेणानेन मनसे ! तव पुत्त्रो भविष्यति ।
जितेन्द्रियाणां प्रवरो धार्म्मिको वैष्णवाग्रणीः ॥
तेजस्वी च तपस्वी च यशस्वी च गुणान्वितः ।
वरो वेदविदाञ्चैव ज्ञानिनां योगिनान्तथा ॥
स च पुत्त्रो विष्णुभक्तो धार्म्मिकः कुलमुद्धरेत् ।
नृत्यन्ति पितरः सर्व्वे यज्जन्ममात्रतो मुदा ॥
पतिव्रता सुशीला या सा प्रिया प्रियवादिनी ।
धर्म्मिष्ठपुत्त्रमाता च कुलजा कुलपालिका ॥
हरिभक्तिप्रदो बन्धुस्तमिष्टं तत्सुखप्रदम् ।
यो बन्धच्छित् स च पिता हरेर्वर्त्म प्रदर्शकः ॥
सा गर्भधारिणी या च गर्भवासविमोचनी ।
विष्णुमन्त्रप्रदाता च स गुरुर्विष्णुभक्तिदः ॥
गुरुश्च ज्ञानदाता च तज्ज्ञानं कृष्णभावनम् ।
आब्रह्मस्तम्बपर्य्यन्तं यतो विश्वं चराचरम् ॥
आविर्भूतं तिरोभूतं किं वा ज्ञानं तदन्यतः ।
वेदजं योगजं यद्यत्तत्सारं हरिसेवनम् ॥
तत्त्वानां सारभूतञ्च हरिरन्यद्विडम्बनम् ।
दत्तं ज्ञानं मया तुभ्यं स स्वामी ज्ञानदो हि यः ।
ज्ञानात् प्रमुच्यते बन्धात् स रिपुर्यो हि बन्धदः ॥
विष्णुभक्तियुतं ज्ञानं न ददाति हि यो गुरुः ।
स रिपुः शिष्यघाती च यो हि बन्धान्न मोचयेत् ॥
जननीगर्भजात् क्लेशाद् यमताडनजात्तथा ।
न मोचयेद् यः स कथं गुरुस्तातो हि बान्धवः ॥
परमानन्दरूपञ्च कृष्णमार्गमनश्वरम् ।
न दर्शयेद् यः स कथं कीदृशो बान्धवो नृणाम् ॥
भज साध्वि ! परं ब्रह्माच्युतं कृष्णञ्च निर्गुणम् ।
निर्मूलञ्च पुरा कर्म्म भवेद् यत्सेवया ध्रुवम् ॥
मया च्छलेन त्वं त्यक्ता क्षम देवि ! मम प्रिये ! ।
क्षमायुतानां साध्वीनां सत्त्वात् क्रोधो न विद्यते ॥
पुष्करं तपसे यामि गच्छ देवि ! यथासुखम् ।
श्रीकृष्णचरणाम्भोजध्यानविच्छेदकातरः ॥
धनादिषु स्त्रियां प्रीतिः प्रवृत्तिवर्त्म गच्छताम् ।
श्रीकृष्णचरणाम्भोजे निष्पृहाणां मनोरथाः ॥
जरत्कारुवचः श्रुत्वा मनसा शोककातरा ।
सा साश्रुनेत्रा विनयादुवाच प्राणवल्लभम् ॥

निद्रां जगाम च मुनिः स्मृत्वा
निद्रेशमीश्वरम् ।
जगामास्तं दिनकरः सायंकाल उपस्थितः
॥
सचिन्त्य मनसा तत्र मनसा सा प्रतिष्ठिता
।
धर्म्मलोपभयेनैव चकारालोचनं सती ॥
अकृत्वा पश्चिमां सन्ध्यां नित्याञ्चैव
द्विजन्मनाम् ।
ब्रह्महत्यादिकं पापं लभिष्यति पतिर्मम ॥
नोपतिष्ठति यः पूर्ब्बां नोपास्ते यस्तु
पश्चिमाम् ।
स च एवाशुचिर्न्नित्यं ब्रह्महत्यादिकं लभेत्
॥
वेदोक्तमपि संचिन्त्य बोधयामास तं मुनिम्
।
स च बुद्ध्वा मुनिश्रेष्ठश्चुकोप तां दृशा मुनिः
॥
जरत्कारुरुवाच ।
कथं मे सुव्रते ! साध्वि ! निद्राभङ्गः
कृतस्त्वया ।
व्यर्थं व्रतादिकं तस्या या
भर्त्तुश्चापकारिणी ॥
तपश्चानशनञ्चैव व्रतं दानादिकञ्च यत् ।
भर्त्तुरप्रियकारिण्याः सर्व्वं भवति
निष्फलम् ॥
यया प्रियः पूजितश्च श्रीकृष्णः
पूजितस्तया ।
पतिव्रताव्रतार्थञ्च पतिरुपी हरिः स्वयम् ॥
सर्व्वदानं सर्व्वयज्ञः सर्व्वतीर्थनिषेवणम् ।
सर्व्वं व्रतं तपः सर्व्वमुपवासादिकञ्च यत् ॥
सर्व्वधर्म्मश्च सत्यञ्च सर्व्वदेवप्रपूजनम् ।
तत्सर्व्वं स्वामिसेवायाः कलां नार्हन्ति
षोड-
शीम् ॥

पुनः स्रष्टुं द्विजः शक्तो न तेजस्वी द्विजात्
परः ।
ब्राह्मणो ब्रह्मणो वंशः प्रज्वलन् ब्रह्मतेजसा
॥
श्रीकृष्णं भावयेन्नित्यं ब्रह्मज्योतिः
सनातनम् ।
सूर्य्यस्य वचनं श्रुत्वा द्विजः शान्तो बभूव
ह ॥
सूर्य्यो जगाम स्वस्थानं गृहीत्वा
ब्राह्मणाशिषम् ।
तत्याज मनसां विप्रः प्रतिज्ञापालनाय च
॥
रुदन्ती शोकयुक्ता च हृदयेन विदूयता ।
सा सस्मार गुरुं शम्भुमिष्टदेवं हरिं विधिम्
॥
कश्यपं जन्मदातारं विपत्तौ भयकर्षिता ।
तत्राजगाम भगवान् गोपीशः शम्भुरेव च ।
विधिश्च कश्यपश्चैव मनसा परिचिन्तितः
॥
दृष्ट्वा विप्रोऽभीष्टदेवं निर्गुणं प्रकृतेः परम् ।
तुष्टाव परया भक्त्या प्रणनाम मुहुर्मुहुः ॥
नमश्चकार शम्भुञ्च ब्रह्माणं कश्यपन्तदा ।
कथमागमनं देवा इति प्रश्नं चकार सः ॥
ब्रह्मा तद्वचनं श्रुत्वा सहसा समयोचितम् ।
समुवाच नमस्कृत्य हृषीकेशपदाम्बुजम् ॥
ब्रह्मोवाच ।
यदि त्यक्ता धर्म्मपत्नी धर्म्मिष्ठा मनसा
सती ।
कुरुष्वास्यां सुतोत्पत्तिं स्वधर्म्मपालनाय
वै ॥
यती वा ब्रह्मचारी वा भिक्षुर्व्वनचरोऽपि वा
।
जायायाञ्च सुतोत्पत्तिं कृत्वा पश्चात्
त्यजेन्मुने ! ॥
अकृत्वा तु सुतोत्पत्तिं वैरागी यस्त्यजेत्
प्रियाम् ।
स्रवेत्तपस्तत्पुण्यञ्च चालन्याञ्च यथा
जलम् ॥”
तस्याः पुत्रोत्पत्तिर्यथा, --

मनसोवाच ।
दोषेणाहं त्वया त्यक्ता निद्राभङ्गेण ते प्रभो ! ।
यत्र स्मरामि त्वां बन्धो ! तत्र मामागमिष्यसि ॥
बन्धुभेदः क्लेशतमः पुत्रभेदस्ततः परः ।
प्राणेशभेदः प्राणानां विच्छेदात् सर्व्वतः परः ॥
पतिः पतिव्रतानान्तु शतपुत्राधिकः स्मृतः ।
सर्व्वस्मात्तु प्रियः स्त्रीणां प्रियस्तेनोच्यते बुधैः ॥
पुत्रे यथैकपुत्राणां वैष्णवानां यथा हरौ ।
नेत्रे यथैकनेत्राणां तृषितानां यथा जले ॥
क्षुधितानां यथान्ने च कामुकानां यथा स्त्रियाम् ।

यथा परस्वे चौराणां यथा जारे कुयोषिताम् ॥
विदुषाञ्च यथा शास्त्रे बाणिज्ये बणिजां यथा ।
तथा शश्वन्मनः कान्ते साध्वीनां योषितां प्रभो ! ॥
इत्युक्त्वा मनसा देवी पपात स्वामिनः पदे ।
क्षणं चकार क्रोडे तां कृपया स कृपानिधिः ॥
नेत्रोदकेन मनसां स्नापयामास तां मुनिः ।
साश्रुणा च मुनेः क्रोडं सिषेच भेदकातरा ॥
तदा ज्ञानेन तौ द्वौ च विशोकौ च बभूवतुः ।
स्मारं स्मारं पदाम्भोजं कृष्णस्य परमात्मनः ॥
जगाम तपसे विप्रः स्वकान्तां सुप्रबोध्य च ।
जगाम मनसा शम्भोः कैलासं मन्दिरं गुरोः ॥
पार्व्वती बोधयामास मनसां शोककर्षिताम् ।
शिवश्चातीव ज्ञानेन शिवेन च शिवालये ॥
सुप्रशस्तदिने साध्वी सुषुवे मङ्गलक्षणे ।
नारायणांशं पुत्त्रञ्च ज्ञानिनां योगिनां गुरुम् ॥
गर्भस्थितो महाज्ञानं श्रुत्वा शङ्करवक्त्रतः ।
स बभूव च योगीन्द्रो योगिनां ज्ञानिनां गुरुः ॥
जातकं कारयामास वाचयामास मङ्गलम् ।
वेदांश्च पाठयामास शिवाय च शिवः शिशोः ॥
रत्नत्रिकोटिलक्षञ्च ब्राह्मणेभ्यो ददौ शिवः ।
पार्व्वती च गवां लक्षं रत्नानि विविधानि च ॥
शम्भुश्च चतुरो वेदान् वेदाङ्गानीतराणि च ।
बालकं पाठयामास ज्ञानं मृत्युञ्जयं परम् ॥

सत्कारं कारयामास पितुर्जन्मेजयः शुचा ॥
राजा चकार यज्ञञ्च सर्पसत्रं ततो मुने ! ।
प्राणांस्तत्याज सर्पाणां समूहो ब्रह्मतेजसा ॥
स तक्षकश्च भीतश्च महेन्द्रं शरणं ययौ ।
सेन्द्रञ्च तक्षकं हन्तुं विप्रवर्गः समुद्यतः ॥
अथ देवाश्च मुनयश्चाययुर्मनसान्तिकम् ।
तान्तुष्टाव महेन्द्रश्च भयकातरविह्वलः ॥
तत आस्तीक आगत्य यज्ञञ्च मातुराज्ञया ।
महेन्द्रतक्षकप्राणान् ययाचे भूमिपं वरम् ॥
ददौ वरं नृपश्रेष्ठः कृपया ब्राह्मणाज्ञया ।
यज्ञं समाप्य विप्रेभ्यो दक्षिणाञ्च ददौ मुदा ॥
विप्राश्च मुनयो देवा गत्वा च मनसान्तिकम् ।
मनसां पूजयामासुस्तुष्टुवुश्च पृथक् पृथक् ॥
शक्रः सम्भृतसम्भारो भक्तियुक्तः सदा शुचिः ।
मनसां पूजयामास तुष्टाव परमादरम् ॥
दत्त्वा षोडशोपचारं बलिञ्च तत्प्रियं तदा ।
प्रददौ परितुष्टश्च ब्रह्मविष्णुशिवाज्ञया ॥
संपूज्य मनसादेवीं प्रययुः स्वालयञ्च ते ।
इत्येवं कथितं सर्व्वं किं भूयः श्रोतुमिच्छसि ॥”
इन्द्रकृतमनसापूजास्तोत्रे यथा, --
नारद उवाच ।
“केन तुष्टाव स्तोत्रेण महेन्द्रो मनसां सतीम् ।
पूजाविधिक्रमं तस्याः श्रोतुमिच्छामि तत्त्वतः ॥
श्रीनारायण उवाच ।
सुस्नातः शुचिराचान्तो धृत्वा धौते च वाससी ।
रत्नसिंहासने देवीं वासयामास भक्तितः ॥
स्वर्गगङ्गाजलेनैव बहुकुम्भस्थितेन च ।
स्नापयामास मनसां महेन्द्रो वेदमन्त्रतः ॥
वाससी वासयामास वह्निशुद्धे मनोहरे ।
सर्व्वाङ्गे चन्दनं दत्त्वा पाद्यार्घ्यं भक्तिसंयुतः ॥
गणेशञ्च दिनेशञ्च वह्निं विष्णुं शिवं शिवाम् ।
संपूज्यादौ देवषट्कं पूजयामास तां सतीम् ॥
ॐ ह्रीं श्रीं मनसादेव्यै स्वाहेत्येवञ्च मन्त्रतः ।
दशाक्षरेण मूलेन ददौ सर्व्वं यथोचितम् ॥
दत्त्वा षोडशोपचारं दुर्लभं दुर्लभां हरिः ।
भक्त्या च पूजयामास ब्रह्मणा प्रेरितो मुदा ॥
वाद्यं नानाप्रकारञ्च वादयामास तत्र वै ।
बभूव पुष्पवृष्टिश्च नभसो मनसोपरि ॥
देवविप्राज्ञया तत्र ब्रह्मविष्णुशिवाज्ञया ।

नित्या यद्यपि पूज्या त्वं भवेऽत्र जगदम्बिके ! ।
तथापि तव पूजाञ्च वर्द्धयामि त्त सर्व्वतः ॥
ये त्वामाषाढसंक्रान्त्यां पूजयिष्यन्ति भक्तितः ।
पञ्चम्यां मनसाख्यायामीशां त्वां वा दिने दिने ॥
पुत्त्रपौत्त्रादयस्तेषां वर्द्धन्ते च धनानि च ।
यशस्विनः कीर्त्तिमन्तो विद्यावन्तो गुणान्विताः ॥
ये त्वां न पूजयिष्यन्ति निन्दन्त्यज्ञानतो जनाः ।
लक्ष्मीहीना भविष्यन्ति तेषां नागभयं सदा ॥
त्वं स्वयं स्वर्गलक्ष्मीश्च वैकुण्ठे कमलालया ।
नारायणांशो भगवान् जरत्कारुर्मुनीश्वरः ॥
तपसा तेजसा त्वाञ्च मनसा ससृजे पिता ।
अस्माकं रक्षणायैव तेन त्वं मनसाभिधा ॥
मनसा देवितुं शक्ता स्वात्मना सिद्धयोगिनी ।
तेन त्वं मनसादेवी पूजिता वन्दिता भवे ॥
यां भक्त्या मनसा देवाः पूजयन्त्यनिशं भृशम् ।
तेन त्वां मनसां देवीं प्रवदन्ति पुराविदः ॥
सत्त्वरूपा च देवि ! त्वं शश्वत्सत्त्वनिषेवया ।
यो हि यद् भावयेन्नित्यं स तत् प्राप्नोति तत्समः ॥
इन्द्रश्च मनसां ज्ञात्वा गृहीत्वा भगिनीञ्च ताम् ।
प्रजगाम स्वभवनं भूषावासःपरिच्छदाम् ॥
पुत्त्रेण सार्द्धं सा देवी चिरं तस्थौ पितुर्गृहे ।
भ्रातृभिः पूजिता शश्वन्मान्या वन्द्या च सर्व्वतः ॥
गोलोकात् सुरभी ब्रह्मन् ! तत्रागत्य सुपूजिताम् ।
तां स्नापयित्वा क्षीरेण पूजयामास सादरम् ॥
ज्ञानञ्च कथयामास गोप्यं सर्व्वसुदुर्लभम् ।
तया देव्या पूजिता सा स्वर्लोकञ्च पुनर्ययौ ॥
इदं स्तोत्रं पुण्यबीजं तां संपूज्य च यः पठेत् ।
तस्य नागभयं नास्ति तस्य वंशोद्भवस्य च ॥
विषं भवेत् सुधातुल्यं सिद्धस्तोत्रो यदा भवेत् ।
पञ्चलक्षजपेनैव सिद्धस्तोत्रो भवेन्नरः ।
सर्पशायी भवेत् सोऽपि निश्चितं सर्पवाहनः ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ४६ अध्यायः ॥
धन्वन्तरिकृतमनसाध्यानपूजादि यथा, --
धन्वन्तरिरुवाच ।
“इहागच्छ जगद्गौरि ! गृहाण मम पूजनम् ।
पूज्या त्वं त्रिषु लोकेषु परा कश्यपकन्यके ! ॥
त्वया जितं जगत् सर्व्वं देवि ! विष्णुस्वरूपया ।
तेन तेऽस्त्रप्रयोगश्च न कृतो रणभूमिषु ॥

भक्तिरस्ति स्वकान्ते चाभीष्टदेवे गुरौ हरौ
।
यस्याश्च तेन त्वत्पुत्त्रो बभूवास्तीक एव
च ॥
जगाम तपसे विष्णोः पुष्करं शङ्कराज्ञया ।
संप्राप्य च महामन्त्रं तपश्च परमात्मनः ॥
दिव्यं वर्षत्रिलक्षञ्च तपस्तप्त्वा तपोधनः ।
आजगाम महायोगी नमस्कर्त्तुं शिवं प्रभुम्
॥
शङ्करञ्च नमस्कृत्य कृत्वा च बालकं पुरः ।
सा चाजगाम मनसा कश्यपस्याश्रमं पितुः
॥
तां सपुत्त्रां सुतां दृष्ट्वा मुदं प्राप प्रजापतिः
।
शतलक्षञ्च रत्नानां ब्राह्मणेभ्यो ददौ मुने !
॥
ब्राह्मणान् भोजयामास सोऽसंख्यान्
श्रेयसे
शिशोः ।
अदितिश्च दितिश्चान्या मुदं प्रापुः
परन्तथा ॥
सा सपुत्त्रा च सुचिरं तस्थौ तातालये
तदा ।
तदीयं पुनराख्यानं वक्ष्यामि तन्निशामय
॥”
तस्या माहात्म्यं यथा, --
“अथाभिमन्युतनये ब्रह्मशापः परीक्षिते ।
बभूव सहसा ब्रह्मन् ! दैवदोषेण कर्म्मणा ॥
सप्ताहे समतीते तु तक्षकस्त्वाञ्च भोक्ष्यति
।
शशाप शृङ्गी नृपतिं कौशिक्याश्च जलेन
च ॥
राजा श्रुत्वा तत्प्रवृत्तिं गङ्गाद्वारं जगाम सः
।
तत्र तस्थौ च सप्ताहं शुश्राव धर्म्मसंहिताम्
॥
सप्ताहे समतीते तु गच्छन्तं तक्षकं पथि ।
धन्वन्तरिर्नृपं भोक्तुं ददर्श गामुको नृपम् ॥
तयोर्बभूव संवादः सुप्रीतिश्च परस्परम् ।
धन्वन्तरिर्मणिं प्राप तक्षकः स्वेच्छया ददौ
॥
स ययौ तं गृहीत्वा च तुष्टः प्रहृष्टमानसः ।
तक्षको भक्षयामास नृपञ्च मञ्चकस्थितम्
॥
तुष्टाव साश्रुनेत्रश्च पुलकाञ्चितविग्रहः ॥
महेन्द्र उवाच ।
देवि ! त्वां स्तोतुमिच्छामि साध्वीनां प्रवरां
वराम् ।
परात्पराञ्च परमां नहि स्तोतुं क्षमोऽधुना ॥
स्तोत्राणां लक्षणं वेदे स्वभावाख्यानतत्परम् ।
न क्षमः प्रकृतं वक्तुं गुणानां तव सुव्रते ! ॥
शुद्धसत्त्वस्वरूपा त्वं कोपहिंसाविवर्ज्जिता ।
न च शप्तो मुनिस्तेन त्यक्तया च त्वया यतः ॥
त्वं मया पूजिता साध्वी जननी च यथादितिः
।
दयारूपा च भगिनी क्षमारूपा यथा प्रसूः ॥
त्वया मे रक्षिताः प्राणाः पुत्त्रदाराः सुरेश्वरि !
।
अहं करोमि त्वां पूज्यां प्रीतिश्च वर्द्धते मम ।
इत्युक्त्वा संयतो भूत्वा भक्तिनम्रात्मकन्धरः ।
गृहीत्वा शुक्लकुसुमं ध्यानं कर्त्तुं समुद्यतः ॥
चारुचम्पकवर्णाभां सर्व्वाङ्गसुमनोहराम् ।
ईषद्धास्यप्रसन्नास्यां शोभितां सूक्ष्मवाससा ॥
कवरीभारशोभाढ्यां रत्नाभरणभूषिताम् ।
सर्व्वाभयप्रदां देवीं भक्तानुग्रहकातराम् ॥
सर्व्वविद्याप्रदां शान्तां सर्व्वविद्याविशारदाम् ॥
नागेन्द्रवाहिनीं देवीं भजे नागेश्वरीं पराम् ॥
ध्यात्वैवं कुसुमं दत्त्वा नानाद्रव्यसमन्वितम् ।
दत्त्वा षोडशोपचारं पूजयामास तां प्रिये ! ॥
स्तोत्रञ्चकार भक्त्या च पुलकाञ्चितविग्रहः ।
पुटाञ्जलियुतो भूत्वा भक्तिनम्रात्मकन्धरः ॥ * ॥

धन्वन्तरिरुवाच ।
नमः सिद्धिस्वरूपायै सिद्धिदायै नमो नमः ।
नमः कश्यपकन्यायै वरदायै नमो नमः ॥
नमः शङ्करकन्यायै शङ्करायै नमो नमः ।
नमस्ते नागवाहिन्यै नागेश्वर्य्यै नमो नमः ॥
नमो नागभगिन्यै च योगिन्यै च नमो नमः ।
नमोऽस्तीकजनन्यै च जनन्यै जगतां नमः ॥
नमो जरत्कारुनाम्ने जरत्कारुस्त्रियै नमः ॥
नमश्चिरं तपस्विन्यै सुखदायै नमो नमः ।
नमस्तपःस्वरूपायै फलदायै नमो नमः ॥
सुशीलायै च साध्व्यै च शान्तायै ते नमो नमः
।
इत्येवमुक्त्वा भक्त्या च प्रणनाम प्रयत्नतः ॥
तुष्टा देवी वरं दत्त्वा सत्वरं स्वालयं ययौ ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे
धन्वन्तरिदर्प-
भङ्गमनसाविजयो नाम ५१ अध्यायः ॥ * ॥
(कामरूपस्थितनदीविशेषः । यथा,
कालिका-
पुराणे । ७४ । ३३ ।
"ततस्तु मनसा नाम नदी पुण्यतमा परा ।
सरित्सा मनसाख्या तु तृणबिन्द्ववतारिता ॥
वैशाखं सकलं मासं यस्यां स्नात्वा नरोत्तमः
।
विष्णुलोकमवाप्यैव ततो मोक्षमवाप्नुयात्
॥")

**मनसादेवी**, स्त्री, (मनसा चासौ देवी चेति ।
यद्वा, मनसा दीव्यतीति । दिव् + अच् ।
ङीप् । "मनसः संज्ञायाम् ।" ६ । ३ । ४ ।
इति विभक्त्यलुक् च ।) मनसा । इति जटा-
धरः ॥ (यथा, ब्रह्मवैवर्त्ते प्रकृतिखण्डे । ४६ ।
११८ ।
"सम्पूज्य मनसादेवीं प्रययुः स्वालयञ्च ते
॥")
अस्या विवरणं मनसाशब्दे द्रष्टव्यम् ॥

**मनसिजः**, पुं, (मनसि जायत इति । जन् + डः ।
"हलदन्तात् सप्तम्याः संज्ञायाम् ।" ६ । ३ ।
९ ।
इत्यलुक् ।) कामदेवः । इत्यमरः । १ । १ ।
२७ ॥
निश्चयो मनस्कारः सेतु कखेति सः । मनसि
करणं मनसि कारः इत्यपि दृश्यते अत्र बाहु-
ल्यात् सप्तम्या अलुक् । इति तट्टीकायां
भरतः ॥

**मनस्तापः**, पुं, (मनसः तापः पीडा ।) मनः-
पीडा । यथा, गारुडे १११ अध्याये ।
"मनस्तापं न कुर्व्वीत आपदं प्राप्य पार्थिवः ।
समबुद्धिः प्रसन्नात्मा सुखदुःखे समो भवेत्
॥"
अनुतापः । यथा, प्रायश्चित्ततत्त्वे ।
"ब्राह्मणेन यदा दैवात् छिन्नं यज्ञोपवीतकम् ।
मनस्तापेन शुद्धिः स्यादापस्तम्बोऽब्रवीन्मुनिः
॥"

**मनस्तालः**, पुं, (तल्यत इति । तल प्रतिष्ठायाम् +
घञ् । मनसि तालः प्रतिष्ठा यस्य ।) दुर्गायाः
सिंहः । इति त्रिकाण्डशेषः ॥ (हरितालः ।
तत्र क्लीवत्वमपि । यथा,
वैद्यकरत्नमालायाम् ।
"हरितालं मनस्तालं वर्णकं नटभूषणम् ॥")

**मनस्थं**, त्रि, (मने मनसि वा तिष्ठतीति । स्था +
कः । पक्षे विसर्गस्य लोपः ।) मनोऽवच्छिन्नम्
।
अन्तःकरणस्थितम् । यथा, --
"मनस्थं मनमध्यस्थं मध्यस्थं मनवर्ज्जितम्
।
मनसा मनमालोक्य स्वयं सिद्ध्यन्ति
योगिनः ॥"
इति श्रीमदुत्तरगीतासूपनिषत्सु ब्रह्मविद्यायां
योगशास्त्रे श्रीकृष्णार्ज्जुनसंवादे ब्रह्मनिरूपणं
नाम १ अध्यायः ॥ "तादृशब्रह्मापरोक्षेण
मुच्यते
इत्याह मनस्थमित्यादि । मनस्थं मनोऽव-
च्छिन्नम् । मनमध्यस्थं मनःसाक्षीभूतम् ।
मध्यस्थं
सर्व्वसाक्षीभूतम् । मनवर्ज्जितं सङ्कल्पविक-
ल्पादिरहितम् । मनमवबोधात्मकम् । तदेवं
मनसा परिशुद्धान्तःकरणेन । आलोक्य तद्
गोचरापरोक्षचरमवृत्तिं लब्ध्वा । योगिनः
ज्ञानिनः । स्वयमेव सिद्ध्यन्ति
निवृत्ताविद्यका

**मनस्वी**, [न्] पुं, (प्रशस्तं मनोऽस्त्यस्येति ।
मनस् + विनिः ।) शरभः । इति राजनिर्घण्टः
॥
प्रशस्तमनोयुक्ते, त्रि । यथा, --
"मनस्विगर्हितः पन्थाः समारोढुमसाम्प्रतम्
॥"
इति कारकटीकायां दुर्गादासः ॥

**मनाक्**, व्य, (मन्यते इति । मन ज्ञाने + बाहुल-
कात् आक्प्रत्ययः ।) अल्पम् । इत्यमरः । ३
।
४ । ८ ॥ (यथा, भागवते । १ । १० । ३५ ।
"मरुधन्वमतिक्रम्य सौवीराभीरयोः परान् ।
आनर्त्तान् भार्गवोपागाच्छ्रान्तवाहो मनाग्-
विभुः ॥")
मन्दः । इति मेदिनी । अव्यय-के, ११ ॥

**मनाका**, स्त्री, (मन्यत इति । मन + "बलाका-
दयश्च ।" उणा० ४ । १४ । इत्याकः । टाप्
।)
हस्तिनी । इत्युणादिकोषः ॥

**मनाक्करं**, क्ली, (मनाक् यथा तथा करोतीति ।
कृ + अच् ।) मङ्गल्या । मल्लिकागन्धयुक्तागुरु
।
इति शब्दचन्द्रिका । (मनाक् अल्पस्य करः ।)
इषत्कारके, त्रि ॥

**मनायी**, स्त्री, (मनोः पत्नीति । मनु + "मनोरौ
वा ।" ४ । १ । ३८ । इति ङीप्
उदात्तैकारश्च ।)
मनोः पत्नी । इति जटाधरः ॥

**मनावी**, स्त्री, (मनोः स्त्री । मनु + "मनोरौ वा ।"
४ । १ । ३८ । इति ङीप् औकारश्चान्तादेशः
।)
मनुपत्नी । इति मुग्धबोधव्याकरणम् ॥ (यथा,
शतपथब्राह्मणे । १ । १ । ४ । १६ ।
"सा मनोरेव जायां मनावीं प्रविवेश ॥")

**मनितं**, त्रि, (मन बोधे + क्तः ।) ज्ञातम् । इत्य-
मरः । ३ । १ । १० ॥

**मनीकं**, क्ली, (मन्यते शोभार्थमाद्रियते इति । मन्

(यथा, शाकुन्तले द्वितीयाङ्के ।
"कामं प्रिया न सुलभा मनस्तु तद्भावदर्शना-
श्वासि ।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना
कुरुते ॥")
मनोजाते, त्रि ॥

**मनसिशयः**, पुं, (मनसि शेते इति । शी +
"अधिकरणे शेते ।" ३ । २ । १५ । इति अच्
।
"हलदन्तात् सप्तम्याः संज्ञायाम् ।" ६ । ३ ।
९ ।
इत्यलुक् ।) कामदेवः । इति हलायुधः ॥

**मनस्कारः**, पुं, (मनसि मनसो वा कारो निश्चय
इति । यद्वा, कृ + भावे घञ् । मनसः कारो-
विकारः करणमिति वा ।) मनसः सुखादिः ।
तत्र्यायः । चित्ताभोगः २ । इत्यमरः । १ ।
५ । ५ ॥ द्वे मनसः सुखादौ तत्परत्वे
एकस्मिन्
विषये मनसः पुनः पुनः प्रवृत्तिराभोगः ।
आभोगस्तात्पर्य्यमिति सर्व्वानन्दः । स्थैर्य्य-
मित्यन्ये । व्यापार इत्यपरे । वाञ्छितवस्तु-
प्राप्त्या चित्तस्य निराकाङ्क्षता । आभोगः
परिपूर्णतेति परे । अनागतचिन्तनादिरूपो
मनस्कार इत्यपरे । मनसो मनसि वा कारो
मुक्ता भवन्तीत्यर्थः ।" इति
श्रीमदुत्तरगीतायाः
सुबोधिन्यां टीकायां श्रीगौडपादाचार्य्यविर-
चितायां १ अध्यायः ॥ * ॥ सर्व्वे सान्ता
अद-
न्ताश्चेति प्रमाणादत्र मनशब्दोऽकारान्तः ।
मनःस्थितम् । यथा, --
"आजन्मं मन्मनस्थं यदपि मम मनोमध्यतः
क्वापि नाभूत्
तत्ते पुण्यप्रतापादिह शरदि सतः सिद्धमाभूत्
सुखेन ॥"
इत्युद्भटः ॥

**मनस्विनी**, स्त्री, (प्रशस्तं मनोऽस्त्यस्याः इति ।
मनस् + विनि । ङीप् ।) प्रशस्तमनाः स्त्री ।
यथा, कुमारसम्भवे । ३ । ३२ ।
"मनस्विनीमानविघातदक्षं
तदेव जातं वचनं स्मरस्य ॥"
मृकण्डोः पत्नी । यथा, मार्कण्डेयपुराणे ।
५२ । १७ ।
"प्राणश्चैव मृकण्डुश्च पिता मम महायशाः ।
मनस्विन्यामहं तस्मात् पुत्त्रो वेदशिरा मम ॥"
प्रजापतिपत्नी । सा च सोमस्य वसोर्जननी ।
यथा, महाभारते । १ । ६६ । १९ ।
"धूम्रायास्तु धरः पुत्त्रो ब्रह्मविद्यो ध्रुवस्तथा ।
चन्द्रमास्तु मनस्विन्याः श्वसायाः
श्वसनस्तथा ॥")
+ "अलीकादयश्च ।" उणा ०४ । २५ । इति
कीकन्प्रत्ययेन निपातनात् साधु ।) अञ्ज-
नम् । इत्युणादिकोषः ॥

**मनीषा**, स्त्री, (ईष् + अः । टाप् । मनस ईषा
गमनम् । "शकन्धादिषु पररूपं वाच्यम् ।"
१ । १ । ६४ । इत्यस्य वार्त्तिकोक्त्या साधुः
।)
बुद्धिः । इत्यमरः । १ । ७ । ५ ॥ (यथा,
ऋग्वेदे । १ । ५४ । ८ ।
"असमं क्षत्रमसमा मनीषा ॥"
स्तुतिः । यथा, ऋग्वेदे । ५ । ८३ । १० ।
"उत प्रजाभ्योऽविदो मनीषाम् ॥"
"मनीषां स्तुतिमविद प्राप्तवानसि ॥" इति
तद्भाष्ये सायनः ॥)

**मनीषी**, [न्] पुं, (मनीषा अस्त्यस्येति । मनीषा +
व्रीह्यादित्वात् इनिः ।) पण्डितः । इत्यमरः ।
२ । ७ । ५ ॥ (यथा च मनौ । १ । १७ ।
"यन्मूर्त्यवयवाः सूक्ष्मास्तस्येमान्याश्रयन्ति
षट् ।
तस्माच्छरीरमित्याहुस्तस्य मूर्त्तिं मनीषिणः
॥")
बुद्धियुक्ते, त्रि ॥ (यथा, ऋग्वेदे । १ । १६४ ।
४५ ।
"चत्वारि वाक् परिमिता पदानि
तानि विदुर्ब्राह्मणा ये मनीषिणः ॥"
"मनीषिणो मेधाविनः ।" इति तद्भाष्ये सायनः
॥)

**मनुः**, स्त्री, (मन् + "शृस्वृस्निहीति ।" उणा०
१ । ११ । इति उः ।) पृक्का । इति राज-
निर्घण्टः ॥ (मनोः पत्नीति । मनु + "मनोरौ
वा ।" ४ । १ । ३८ । इत्यत्र "वा ग्रहणेन
द्वावपि
विकल्प्येते । तेन त्रैरूप्यं भवति । मनोः स्त्री
मनायी मनावी मनुः ।" इति काशिकोक्तेः पक्षे
ङीबभावः ।) मनुपत्नी । इति लिङ्गादिसंग्रहे
अमरः ॥

**मनुः**, पुं, (मन्यते इति । मन + "शृस्वृस्निहीति ।"
उणा० १ । ११ । इति उः ।) ब्रह्मणः पुत्त्रः ।
स च प्रजापतिर्धर्म्मशास्त्रवक्ता च । इति
लिङ्गादिसंग्रहे अमरः ॥ मनुष्यः । इति शब्द-
रत्नावली ॥ (यथा, ऋग्वेदे । ८ । ४७ । ४ ।
"मनोर्विश्वस्य घेदिम आदित्याराय ईशते-
ऽनेहसो वऊतयः सुऊतयो वऊतयः ॥"
"मनोः मनुष्यस्य ।" इति तद्भाष्ये सायनः ॥)
जिनभेदः । इति त्रिकाण्डशेषः ॥ मन्त्रः । इति
जटाधरः ॥ (यथा, गौतमीयतन्त्रे । ७ । ५ ।
"गोहिरण्यकवस्त्राद्यैस्तोषयेद् गुरुमात्मनः ।
यथा ददाति सन्तुष्टः प्रसन्नवदनो मनुम् ॥" *
॥)
प्रतिकल्पे चतुर्द्दश मनवो भवन्ति तेषां
नामानि यथा । स्वायम्भुवः १ स्वारोचिषः २
उत्तमः ३ तामसः ४ रैवतः ५ चाक्षुषः ६
एते गताः । वैवस्वतः ७ । वर्त्तमानोऽयम् ।
सावर्णिः ८ दक्षसावर्णिः ९ ब्रह्मसावर्णिः १०
धर्म्मसावर्णिः ११ रुद्रसावर्णिः १२ देव-
सावर्णिः १३ इन्द्रसावर्णिः १४ एते
भविष्यन्ति ।
इति श्रीभागवते ८ स्कन्धे १ अध्यायः ॥ * ॥
एतेषामुत्पत्तिर्यथा, --
"आद्यो मनुर्ब्रह्मपुत्त्रः शतरूपापतिर्व्रती ।
धर्म्मिष्ठानां वरिष्ठश्च गरिष्ठो मनुषु प्रभुः ॥
स्वायम्भुवः शम्भुशिष्यो विष्णुव्रतपरायणः ।
जीवन्मुक्तो महाज्ञानी भवतः प्रपितामहः ॥
संप्राप कृष्णदास्यञ्च गोलोकञ्च जगाम सः ।
दृष्ट्वा मुक्तं स्वपुत्त्रञ्च प्रहृष्टश्च प्रजापतिः ॥
तुष्टाव शङ्करं तुष्टः ससृजे मनुमन्यकम् ।
स च स्वयम्भूपुत्त्रश्च पुरः स्वायम्भुवो मनुः ॥
स्वारोचिषो मनुश्चैव द्वितीयो वह्निनन्दनः ।
त्रतुर्द्दशो महाज्ञानी चेन्द्रसावर्णिरेव च ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५१ अध्यायः ॥
अपि च । स्वायम्भुवः १ । स च गायत्र्यां
ब्रह्मणो जातः । अस्य पुत्त्राः दश । अग्निध्रः
।
अग्निबाहुः । रिफ्फः । सबलः । ज्योतिष्मान्
।
द्युतिमान् । हव्यः । मेधाः । मेधातिथिः ।
वसुश्च ।
स्वारोचिषः २ । अस्य पुत्त्राश्चत्वारः ।
नभः ।
नभस्यः । प्रसृतिः । भावनश्च । औत्तमिः ३
।
अस्य पुत्त्राः दश । ईषः । ऊर्ज्जः । भूर्ज्जः
।
शुचिः । शुक्रः । मधुः । माधवः । नभस्यः ।
नभः । सहश्च । तामसः ४ । अस्य पुत्त्रा
दश । अकल्मषः । तपोधन्वी । तपोमूलः ।
तपोधनः । तपोरतिः । तपस्यः । तपोद्युतिः
।
परन्तपः । तपोभागी । तपोयोगी च ।
रैवतः ५ । तस्य पुत्त्राः दश । अरुणः ।
तत्त्व-
दर्शी । वित्तवान् । हव्यपः । कपिः । मुक्तः ।
निरुत्सुकः । सत्तः । निर्म्मोहः ।
प्रकाशकश्च ।
चाक्षुषः ६ । स च ध्रुवपौत्त्रात् रिपुञ्जयात्
ब्रह्मदौहित्र्यां वीरणकन्यायां वैरिण्यां जातः ।
तस्य भार्य्या नड्वला । तस्य पुत्त्राः दश ।
उरुः ।
पुरुः । शतद्युम्नः । तपस्वी । सत्यवाक् ।
कविः ।
अग्निष्टुप् । अतिरात्रः । स्वच्छस्वः । अभि-
मन्युश्च । वैवस्वतः ७ । स च सूर्य्यात्
संज्ञायां
जातः । तस्य पुत्त्राः दश । इलः । इक्ष्वाकुः
।
कुशनाभः । अरिष्टः । रिष्ठः । नरिष्यन्तः ।
कुरूषः । शर्य्यातिः । पृषध्रः । नाभागश्च ।
सावर्णिः ८ । स च सूर्य्यात् छायायां जातः ।
तस्य पुत्त्राः दश । धृतिः । वरीयान् । यवसः
।
तस्य मन्वन्तरं यावत्तावत्तद्वं शविस्तरे ।
भुक्तेयमवनिः सर्व्वा द्वितीयं वै तदन्तरम् ॥
स्वरोचिषस्तु चरितं जन्म स्वारोचिषस्य च ।
निशम्य मुच्यते पापैः श्रद्दधानो हि मानवः ॥"
अस्यान्यद्विवरणं तत्रैव ६१ अध्यायमारभ्य
६६ अध्यायपर्य्यन्तं द्रष्टव्यम् ॥ ३ औत्तमः ।
यथा, तत्रैव ७३ अध्याये ।
मार्कण्डेय उवाच ।
"मन्वन्तरे तृतीयेऽस्मिन् औत्तमस्य प्रजापतेः
।
देवानिन्द्रमृषीन् भूपान् निबोध गदतो मम ॥
स्वधामानस्तथा देवा यथानामानुकारिणः ।
सत्याख्यश्च द्वितीयोऽन्यस्त्रिदशानांतथा गणः
॥
तृतीये तु गणे देवाः शिवाख्या मुनिसत्तम ! ।
शिवाः स्वरूपतस्ते तु श्रुताः पापप्रणाशनाः ॥
प्रतर्दनाख्यश्च गणो देवानां मुनिसत्तम ! ।
चतुर्थस्तत्र कथित औत्तमस्यान्तरे मनोः ॥
वशवर्त्तिनः पञ्चमेऽपि देवास्तत्र गणे द्विज ! ।
यथाख्यातस्वरूपास्तु सर्व एव महामुने ! ॥
एते देवगणाः पञ्च स्मृता यज्ञभुजस्तथा ।
मन्वन्तरे मनुश्रेष्ठे सर्वे द्वादशका गणाः ॥
तेषामिन्द्रो महाभागस्त्रैलोक्ये स गुरुर्भवेत् ।
शतं क्रतूनामाहृत्य सुशान्तिर्नाम नामतः ॥
यस्योपसर्गनाशाय नामाक्षरविभूषिता ।
अद्यापि मानवैर्गाथा गीयते तु महीतले ॥
सुशान्तिर्देवराट् कान्तः सुशान्तिं स प्रयच्छति
।
सहितः शिवसत्याद्यैस्तथैव वशवर्त्तिनः ॥
अजः परशुचिर्दिव्यो महाबलपराक्रमाः ।
पुत्त्रास्तस्य मनोरासन् विख्यातास्त्रिदशो-
पमाः ॥
तत्सूतिसम्भवैर्भूमिः पालिताभून्नरेश्वरैः ।
यावन्मन्वन्तरं तस्य मनोरुत्तमतेजसः ॥
चतुर्युगानां संख्याता साधिका ह्येकसप्ततिः ।
कृतत्रेतादिसंज्ञानां यान्युक्तानि युगे मया ॥
स्वतेजसा हि तपसो वशिष्ठस्य महात्मनः ।
तनयाश्चान्तरे तस्मिन् सप्त सप्तर्षयोऽभवन् ॥
तृतीयमेतत्कथितं तव मन्वन्तरं मया ॥"
अस्यान्यद्विवरणं तत्रैव ६८ अध्यायमारभ्य
७२
अध्यायपर्य्यन्तं द्रष्टव्यम् ॥ ४ तामसः । यथा,

राजा वदान्यो धर्म्मिष्ठः स्वायम्भुवसमो महान् ॥
प्रियव्रतसुतावन्यौ द्वौ मनू धर्म्मिणां वरौ ।
तौ तृतीयचतुर्थौ च वैष्णवौ तामसोत्तमौ ॥
तौ च शङ्करशिष्यौ च कृष्णभक्तिपरायणौ ।
धर्म्मिष्ठानां वरिष्ठश्च रैवतः पञ्चमो मनुः ॥
षष्ठश्च चाक्षुषो ज्ञेयो विष्णुभक्तिपरायणः ।
श्राद्धदेवः सूर्य्यसुतो वैष्णवः सप्तमो मनुः ॥
सावर्णिः सूर्य्यतनयो वैष्णवो मनुरष्टमः ।
नवमो दक्षसावर्णिर्विष्णुव्रतपरायणः ॥
दशमो ब्रह्मसावर्णिर्ब्रह्मज्ञानविशारदः ।
ततश्च धर्म्मसावर्णिर्मनुरेकादशः स्मृतः ॥
धर्म्मिष्ठश्च वरिष्ठश्च वैष्णवानां सदा व्रती ।
ज्ञानी च रुद्रसावर्णिर्मनुश्च द्वादशः स्मृतः ॥
धर्म्मात्मा देवसावर्णिर्मनुरव त्रयोदशः ।

सुवर्णः । वृष्टिः । चरिष्णुः । ईड्यः । सुमतिः ।
वसुः । शुभ्र्यश्च । रौच्यः ९ । असौ रुचेः प्रजापतेः पुत्त्रः । भौत्यः १० । असौ भूतिनामक-
प्रजापतेः पुत्त्रः । मेरुसावर्णिः ११ । असौ ब्रह्मणः
पुत्त्रः । ऋतुः १२ । ऋतुधामा १३ । विव्वक्-
सेनः १४ । इति मात्स्ये नवमाध्यायावधि एकविंशत्यध्यायपर्य्यन्तम् ॥ क्रमशस्तेषां विव-
रणानि यथा, १ स्वायम्भुवः । यथा, मार्कण्डेये
५३ अध्याये ॥
"मनोः स्वायम्भुवस्यासन् दश पुत्त्रास्तु तत्समाः ।
यैरियं पृथिवी सर्व्वा सप्तद्वीपा सपर्व्वता ।
ससमुद्रा करवती प्रतिवर्षं निवेशिता ॥"
२ स्वारोचिषः । यथा, तत्रैव ६७ अध्याये ।
मार्कण्डेय उवाच ।
"ततः स्वारोचिषं नाम्ना द्युतिमन्तं प्रजापतिम् ।
मनुञ्चकार भगवांस्तस्य मन्वन्तरं शृणु ॥
तत्रान्तरे तु ये देवा मुनयस्तत्सुताश्च ये ।
भौपालाः क्रौष्टुके ! ये तान् गदतस्त्वं निशामय ॥
देवाः पारावतास्तत्र तथैव तुषिता द्विज ! ।
स्वारोचिषेऽन्तरे चेन्द्रो विपश्चिदिति विश्रुतः ॥
ऊर्ज्जस्तम्बस्तथा प्राणो दत्तोलिरृषभस्तथा ।
निश्चरश्चार्व्वीरांश्च तत्र सप्तर्षयोऽभवन् ॥
चैत्र-किंपुरुषाद्याश्च सुतास्तस्य महात्मनः ।
सप्तासन् सुमहावीर्य्याः पृथिवीपरिपालकाः ॥

तत्रैव ७४ अध्याये ।
"तामसाख्यो मनुरभूत्तस्य मन्वन्तरं शृणु ।
ये देवा यत्पतिर्यश्च देवेन्द्रो ये तथर्षयः ।
ये पुत्त्राश्च मनोस्तस्य पृथिवीपरिपालकाः ॥
सत्यास्तथान्ये सुधियः सुरूपा हरयस्तथा ।
एते देवगणास्तत्र सप्तविंशतिका मुने ! ॥
महाबलो महावीर्य्यः शतयज्ञोपलक्षितः ।
शिखिरिन्द्रस्तथा तेषां देवानामभवद्विभुः ॥
ज्योतिर्धामा पृथुः काव्यश्चैत्रोऽग्निर्बलकस्तथा ।
पीवरश्च तथा ब्रह्मन् ! सप्त सप्तर्षयोऽभवन् ॥
नरः क्षान्तिः शान्तदान्तजानुजङ्घादयस्तथा ।
पुत्त्रास्तु तामसस्यासन् राजानः सुमहाबलाः ॥"
अस्यान्यद्विवरणं तत्रैव द्रष्टव्यम् ॥ ५ रैवतः । यथा, तत्रैव ७५ अध्याये ।

मार्कण्डेय उवाच ।
"तामादाय ततो भूपः स्वमेव नगरं ययौ ।
तस्मादजायत सुतो रेवत्यां रैवतो मनुः ॥
समेतः सकलैर्धर्म्मैर्म्मानवैरपराजितः ।
विज्ञाताखिलशास्त्रार्थो वेदविद्यार्थशास्त्रवित्
॥
तस्य मन्वन्तरे देवान् मुनिदेवेन्द्रपार्थिवान् ।
कथ्यमानान्मया ब्रह्मन् ! निबोध सुसमाहितः
॥
सुमेधसस्तत्र देवास्तथा भूपतयो द्विज ! ।
वैकुण्ठश्चामिताभश्च चतुर्द्दश चतुर्द्दश ॥
तेषां देवगणानान्तु चतुर्णांमपि चेश्वर ! ।
नाम्ना विभुरभूदिन्द्रः शतयज्ञोपलक्षकः ॥
हिरण्यलोमा वेदश्रीरूर्द्ध्वबाहुस्तथापरः ।
वेदबाहुः सुधामा च पर्जन्यश्च महामुनिः ॥
वशिष्ठश्च महाभागो वेदवेदान्तपारगः ।
एते सप्तर्षयश्चासन् रैवतस्यान्तरे मनोः ॥
बलबन्धुर्म्महावीर्य्यः सुयष्टव्यस्तथापरः ।
सत्यकाद्यास्तथैवासन् रैवतस्य मनोः सुताः
॥
रैवतान्तास्तु मनवः कथिता ये मया तव ।
स्वायम्भुवाश्रया ह्येते स्वारोचिषमृते मनुम् ॥"
अस्यान्यद्विवरणं तत्रैव द्रष्टव्यम् ॥ ६ चाक्षुषः
।
यथा, तत्रैव ७६ अध्याये ।
"तस्य मन्वन्तरेशस्य येऽन्तरत्रिदशा द्विज ! ।
ये चर्षयस्तथैवेन्द्रो ये सुताश्चास्य तान् शृणु
॥
आर्य्या नाम सुरास्तत्र तेषामेकोऽष्टको गणः ।
प्रख्यातकर्म्मणां विप्र ! यज्ञे हव्यभुजामयम् ॥
प्रख्यातबलवीर्य्याणां प्रभामण्डलदुर्द्दृशाम् ।
द्वितीयश्च प्रसूताख्यो देवानामष्टको गणः ॥
तथैवाष्टक एवान्यो भव्याख्यो देवतागणः ।
चतुर्थश्च गणस्तत्र यूथगाख्यस्तथाष्टकः ॥
लेखसं ज्ञास्तथैवान्ये तत्र मन्वन्तरे द्विज ! ।
पञ्चमे च गणे देवास्तत्संज्ञा ह्यमृताशिनः ॥
शतं क्रतूनामाहृत्य यस्तेषामधिपोऽभवत् ।
मनोजवस्तथैवेन्द्रः संख्यातो यज्ञभागभुक् ॥
सुमेधा विरजाश्चैव हविष्मानुन्नतो मधुः ।
अतिनामा सहिष्णुश्च सप्तासन्निति चर्षयः ॥
उरुपुरुशतद्युम्नप्रमुखाः सुमहाबलाः ।
धर्माद्यैः कारणैः शुद्धैराधिपत्यगुणान्विताः ।
भूतभव्यभवन्नाथाः शृणु चैतत् त्रयं द्विज ! ॥
भूर्लोकोऽयं स्मृता भूमिरन्तरीक्षं दिवः स्मृतम्
।
दिव्याख्यश्च तथा स्वर्गस्त्रैलोक्यमिति गद्यते
॥
अत्रिश्चैव वशिष्ठश्च काश्यपश्च महानृषिः ।
गौतमश्च भरद्वाजो विश्वामित्रोऽथ कौशिकः
॥
तथैव पुत्रो भगवानृचीकस्य महात्मनः ।
जमदग्निस्तु सप्तैते मुनयोऽत्र तथान्तरे ॥
ईक्ष्वाकुर्नाभगश्चैव धृष्टशर्मातिखेव च ।
नरिष्यन्तश्च विख्यातो नाभगो दिष्ट एव च ॥
कुरूषश्च प्रुषध्रुश्च वसुमान् लोकविश्रुतः ।
मनोर्वैवस्वतस्यैते नव पुत्राः प्रकीर्त्तिताः ॥
वैवस्वतमिदं ब्रह्मन् ! कथितन्ते मयान्तरम् ।
अस्मिन् श्रुते नरः सद्यः पठिते चैव सत्तम ! ।
मुच्यते पातकैः सर्व्वैः पुण्यञ्च महदश्नुते ॥"
अस्यान्यद्विवरणं ७७-७८ अध्याययोर्द्रष्टव्यम्
॥
८ सावर्णिः । यथा, तत्रैव ८० अध्याये ।
मार्कण्डेय उवाच ।
"कथितस्तव सावर्णिश्छायासंज्ञासुतश्च यः ।
पूर्ब्बजस्य मनोस्तुल्यः स मनुर्भविताष्टमः ॥
रामो व्यासो गालवश्च दीप्तिमान् कृप एव च ।
ऋष्यशृङ्गस्तथा द्रोणिस्तत्र सप्तर्षयोऽभवन् ॥
सुतपाश्चामिताभाश्च मुख्याश्चैव त्रिधा सुराः
।
विंशकः कथिताश्चैषां त्रयाणां त्रिगुणो गणः ॥
तपस्तपश्च शक्रश्च द्युतिर्ज्योतिः प्रभाकरः ।
प्रभासो दयितो धर्मस्तेजोरश्मिश्च वक्रतुः ॥
इत्यादिकस्तु सुतपा देवानां विंशको गणः ।
प्रभुर्विभुर्विभासाद्यस्तथान्यो विंशको गणः ॥
सुराणाममितानान्तु तृतीयमपि मे शृणु ।
दमो दान्तो ऋतः सोमो विन्ताद्याश्चैव
विंशतिः ॥
मुख्या ह्येते समाख्याता देवा मन्वन्तराधिपाः
॥
मारीचस्यैव ते पुत्राः काश्यपस्य प्रजापतेः ॥
भविष्याश्च भविष्यन्ति सावर्ण्णस्यान्तरे
मनोः ।
तेषामिन्द्रो भविष्यस्तु बलिर्वैरोचनिर्मुने ! ।
१० ब्रह्मसावर्णिः । यथा, तत्रैव ९४ अध्याये
॥
"मनोस्तु दशमस्यान्यच्छ्रणु मन्वन्तरं द्विज !
॥
मन्वन्तरे च दशमे ब्रह्मपुत्रस्य धीमतः ।
सुखासीना निरुद्धाश्च त्रिःप्रकाराः सुराः
स्मृताः ।
शतसंख्या हि ते देवा भविष्या भाविनो मनोः ।
यत् प्राणिनां शतं भावि तद्देवानां तदा शतम् ॥
शान्तिरिन्द्रस्तथा भावी सर्व्वैरिन्द्रगुणैर्युतः ।
सप्तर्षींस्तान् निबोध त्वं ये भविष्यन्ति वै तदा
॥
आपोमूर्त्तिर्हविष्मांश्च सुकृती सत्य एव च ।
नाभागोऽप्रतिमश्चैव वाशिष्ठश्चैव सप्तमः ॥
सुक्षेत्रश्चोत्तमौजाश्च भूमिसेनश्च वीर्य्यवान् ।
शतानीकोऽथ वृषभो ह्यनमित्रो जयद्रथः ॥
भूरिद्युम्नः सुपर्व्वा च तस्यैते तनया मनोः ॥"
११ धर्म्मसावर्णिः । यथा, तत्रैव ।
"भविष्या धर्मपुत्रस्य सावर्णस्यान्तरं शृणु ॥
विहङ्गमाः कामगाश्च निर्माणरतयस्तथा ।
त्रिःप्रकारा भविष्यन्ति एकैकस्त्रिंशतो गणाः ॥
मासर्तुर्दिवसा ये तु निर्माणपतयस्तु ते ।
विहङ्गमा रात्रयोऽथ मौहूर्त्ताः कामगा गणाः ॥
इन्द्रो वृषाख्यो भविता तेषां प्रख्यातविक्रमः ।
हविष्मांश्च वरिष्ठश्च ऋष्टिरन्यस्तथारुणिः ॥
निश्चरश्चानघश्चैव विष्टिश्चान्यो महामुनिः ।
सप्तर्षयोऽन्तरे तस्मिन्नग्निदेवश्च सप्तमः ॥
सर्व्वत्रगः सुशर्म्मा च देवानीकः पुरूद्वहः ।
हेमधन्वा दृढायुश्च भाविनस्तत्सुता नृपाः ॥"
१२ रुद्रसावर्णिः । यथा, तत्रैव ।
"द्वादशे रुद्रपुत्रस्य प्राप्ते मन्वन्तरे मनोः ।
सावर्णाख्यस्य ये देवा मुनयश्च शृणुष्व तान् ॥
सुधर्माणः सुमनसो हरिता रोहितास्तथा ।
सुवर्णाश्च सुरास्तत्र पञ्चैते दशका गणाः ॥
तेषामिन्द्रस्तु विज्ञेय ऋतधामा महाबलः ।
सर्वैरिन्द्रगुणैर्युक्तः सप्तर्षीनपि मे शृणु ॥
द्युतिस्तपस्वी सुतपास्तपोमूर्त्तिस्तपोनिधिः ।
तपोरतिस्तथैवान्यः सप्तमस्तु तपोधृतिः ॥
देववानुपदेवश्च देवश्रेष्ठो विदूरथः ।
मित्रवान् मित्रविन्दश्च भाविनस्तत्सुता
नृपाः ॥"
१३ रौच्यः । यथा, तत्रैव ।

चाक्षुषस्य मनोः पुत्त्राः पृथिवीपतयोऽभवन्
॥”
अस्यान्यद्विवरणं तत्रैवाध्याये द्रष्टव्यम् ॥ ७ वैव-
स्वतः । यथा, तत्रैव ७९ अध्याये ।
मार्कण्डेय उवाच ।
“आदित्या वसवो रुद्राः साध्या विश्वे मरुद्गणाः ।
भृगवोऽङ्गिरसश्चाष्टौ यत्र देवगणाः स्मृताः ॥
आदित्या वसवो रुद्रा विज्ञेया कश्यपात्मजाः ।
साध्याश्च वसवो विश्वे धर्मपुत्त्रगणास्त्रयः ॥
भृगोस्तु भृगवो देवाः पुत्त्रा ह्यङ्गिरसः सुताः ।
एष सर्गश्च मारीचो विज्ञेयः साम्प्रताधिपः ॥
ऊर्ज्जस्वी नाम चैवेन्द्रो महात्मा यज्ञभागभुक् ।
अतीतानागता ये च वर्त्तन्ते साम्प्रतञ्च ये ॥
सर्व्वे ते त्रिदशेन्द्रास्तु विज्ञेयास्तुल्यलक्षणाः ।
सहस्राक्षाः कुलिशिनः सर्व एव पुरन्दराः ॥
मघवन्तो वृषाः सर्व्वे शृङ्गिणो गजगामिनः ।
ते शतक्रतवः सर्व्वे भूताभिभवतेजसः ॥

पाताल आस्ते योऽद्यापि दैत्यः समयबन्धनः ।
विरजाश्चार्व्ववीरश्च निर्मोहः सत्यवाक् कृतिः ॥
विष्णवाद्याश्चैव तनयाः सावर्णस्य मनोर्नृपाः ॥”
अस्यान्यद्विवरणं तत्रैव ८१-९३ अध्यायेषु द्रष्ट-
व्यम् ॥ ९ दक्षसावर्णिः । यथा, तत्रैव ९४ अध्याये ।
“दक्षपुत्त्रश्च सावर्णो भावी यो नवमो मनुः ।
कथयामि मनोस्तस्य ये देवा मुनयो नृपाः ॥
पारामरीचिभर्गाश्च सुधर्म्माणस्तथा सुराः ।
एते त्रिधा भविष्यन्ति सर्व्वे द्वादशका गणाः ॥
तेषामिन्द्रो भविष्यस्तु सहस्राक्षो महाबलः ।
साम्प्रतं कार्त्तिकेयो यो वह्निपुत्त्रः षडाननः ॥
अद्भुतो नाम शक्रोऽसौ भावी तस्यान्तरे मनोः ।
मेधातिथिर्व्वसुः सत्यो ज्योतिष्मान् द्युतिमांस्तथा ॥
सप्तर्षयोऽन्यः सबलस्तथान्यो हव्यवाहनः ।
धृष्टकेतुर्व्वर्हकेतुः पञ्चहस्तो निरामयः ।
पृथुश्रवास्तथार्च्चिष्मान् भूद्युरिम्नो बृहद्भयः ॥
एते नृपसुतास्तस्य दक्षपुत्त्रस्य वै नृपाः ॥”

“त्रयोदशस्य पर्य्याये रौच्याख्यस्य मनोः सुतान् ।
सप्तर्षींश्च नृपांश्चैव गदतो मे निशामय ॥
सुधर्म्माणः सुरास्तत्र सुकर्म्माणस्तथापरे ।
सुशर्म्माणः सुरा ह्येते समस्ता मुनिसत्तम ! ॥
महाबलो महावीर्य्यस्तेषामिन्द्रो दिवस्पतिः ।
भविष्यानथ सप्तर्षीन् गदतो मे निशामय ॥
धृतिमानव्ययश्चैव तत्त्वदर्शी निरुत्सुकः ।
निर्मोहः सुतपाश्चान्यो निष्प्रकम्पश्च सप्तमः ॥
चित्रसेनो विचित्रश्च नयतिर्निर्भयो दृढः ।
सुनेत्रः क्षत्त्रबुद्धिश्च सुव्रतश्चैव तत्सुताः ॥”
१४ भौत्यः । यथा, तत्रैव १०० अध्याये ।
“भौत्यो नाम मनुस्तस्य पुत्त्रो भूतेरजायत ।
तस्य मन्वन्तरे देवानृषीन् भूपांश्च मे शृणु ॥

भविष्यस्य भविष्यांस्तु गदतो मम
विस्तरात् ।
देवेन्द्रो यश्च भविता तस्य विख्यातकर्म्मणः
॥
चाक्षुषाश्च कनिष्ठाश्च पवित्रा
भ्राजिरास्तथा ।
धारावृकाश्च इत्येते पञ्च देवगणाः स्मृताः
॥
शचिरिन्द्रस्तदा तेषां त्रिदशानां भविष्यति ।
महाबलो महावीर्य्यः सर्व्वैरिन्द्रगुणैर्युतः ॥
अग्नीध्रश्चाग्निबाहुश्च शुचिर्मुक्तोऽथ माधवः
।
शुक्रोऽजितश्च सप्तैते तदा सप्तर्षयः स्मृताः
॥
गुरुर्गभीरो व्रध्नश्च भरतोऽनुग्रहस्तथा ।
स्त्रीमानी च प्रतीरश्च विष्णुः
संक्रन्दनस्तथा ॥
तेजस्वी सुबलश्चैव भौत्यस्यैते मनोः
सुताः ।
चतुर्दश मयैतत्ते मन्वन्तरमुदाहृतम् ॥”
मन्वन्तरकथाश्रवणफलमाहतत्रैव १००
अध्याये ।
“श्रुत्वा मन्वन्तराणीत्थं क्रमेण मुनिसत्तम !
।
पुण्यमाप्नोति मनुजस्तथाक्षीणाञ्च
सन्ततिम् ॥
श्रुत्वा मन्वन्तरं पूर्ब्बं धर्ममाप्नोति मानवः ।
स्वारोचिषस्य श्रवणात् सर्वकामानवाप्नुते
॥
औत्तमेर्धनमाप्नोति ज्ञानञ्चाप्नोति तामसे
।
रैवते च श्रुते बुद्धिं सुरूपां विन्दते स्त्रियम्
॥
आरोग्यञ्चाक्षुषे पुंसां श्रुते वैवस्वते बलम् ।
गुणवत्पुत्त्रपौत्रन्तु सूर्य्यसावर्णिके श्रुते ॥
माहात्म्यं ब्रह्मसावर्णे धर्मसावर्णिके शुभम् ।
मतिमाप्नोति मनुजो रुद्रसावर्णिके जयम्
॥
ज्ञातिश्रेष्ठो गुणैर्युक्तो दक्षसावर्णिके श्रुते ।
निशातयत्यरिबलं रौच्यं श्रुत्वा नरोत्तम ! ॥
देवप्रसादमाप्नोति भौत्ये मन्वन्तरे श्रुते ।
तथाग्निहोत्रं पुत्त्रांश्च गुणयुक्तानवाप्नुते ॥

**मनुजः**, पुं, (मनोर्जात इति । जन् + डः ।)
मनुष्यः । इत्यमरः । २ । ६ । १ ॥ (यथा,
विष्णुपुराणे । १ । ६ । १० ।
“स्वर्गापवर्गौ मानुष्यात् प्राप्नुवन्ति नरा मुने ! ।
यथाभिरुचितं स्थानं तद्यान्ति मनुजा
द्विज ! ॥”)

**मनुजी**, स्त्री, (मनुज + गौरादित्वात् ङीष् ।)
मानुषी । इति जटाधरः ॥ (टाप् इत्येके । यथा,
हरिवंशे । १७६ । २३ ।
“विद्याधराणां नारीषु साध्वीषु मनुजासु च ॥”)

**मनुभूः**, पुं, (मनोर्भवतीति । भू + क्विप् । मनु-
र्भूरुत्पत्तिस्थानं यस्येति वा ।) मनुष्यः । इति
शब्दचन्द्रिका ॥

**मनुराट्**, [ज्] पुं, (मनुः मानव इव राजते
इति । राज् + क्विप् । मनुष्यवदाचारवत्त्वादस्य
तथात्वम् ।) कुवेरः । इति त्रिकाण्डशेषः ॥

**मनुषी**, स्त्री, (मनुष्यस्य स्त्री । मनुष्य + “हय-
गवयमुकयमनुष्यमत्स्यानामप्रतिषेधः ।” ४ । १
।
६३ । इत्यस्य वार्त्तिकोक्त्या ङीष् ।
“हलस्तद्धि-
तस्य ।” ६ । ४ । १५० । इति यलोपः ।)
मानुषी । इति शब्दरत्नावली ॥

**मनुष्यः**, पुं, (मनोरपत्यमिति । मनु + “मनो-
र्जातावञ्यतौ षुक्च ।” ४ । १ । १६१ । इति
यत् षुगागमश्च ।) मनोरपत्यम् । तत्पर्य्यायः ।
मानुषः २ मर्त्यः ३ मनुजः ४ मानवः ५ नरः
६ । इत्यमरः । ३ । ६ । १ ॥ भूमिजः ७ द्विपदः
८ चेतनः ९ भूस्थः १० । इति राजनिर्घण्टः ॥
मनुः ११ पञ्चजनः १२ पुरुषः १३ पूरुषः १४
पुमान् १५ ना १६ । इति शब्दरत्नावली ॥
मर्णः १७ विट् १८ । इति जटाधरः ॥ * ॥
(यथा, मनुः । १ । ४३ ।
“रक्षांसि च पिशाचाश्च मनुष्याश्च जरा-
युजाः ॥”)
स तु अर्व्वाक्स्रोतो ब्रह्मणो नवमः सर्ग एक-
विधश्च । यथा, --
“अर्व्वाक्स्रोतस्तु नवमः क्षत्तरेकविधो नृणाम् ।
सुदुस्तरापि दुःसाध्या माया कृष्णस्य मोहिनी
॥”
इति तत्रैव शुद्धिव्रतनामाध्यायः ॥ * ॥
“मनुष्याणां पिता माता भ्राता च श्रीहरिर्यथा ।
विशेषतो मनुष्याणां पिता माता जनार्द्दनः ।
भ्राता च सर्व्वलोकानां वात्सल्यगुणसागरः
॥”
इति पाद्मोत्तरखण्डे ७८ अध्यायः ॥ * ॥
स त्रिविधो यथा, --
“यजन्ते सात्विका देवान् यक्षरक्षांसि राक्षसाः
।
प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः
॥
इति श्रीभगवद्गीतायां १७ अध्यायः ॥
“ऊद्र्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति
राक्षसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः
॥”
इति तत्रैव १४ अध्यायः ॥
(त्रि, स्तुतिकारकः । यथा, ऋग्वेदे । १ । ५९
। ४ ।
“होता मनुष्यो न दक्षः ॥”
“मनुष्यो लौकिको वन्दी दातारं प्रभुं बहु-
विधया स्तुत्या स्तौति ।” इति तद्भाष्ये
सायनः ॥
मनुष्यसम्बन्धी । यथा, ऋग्वेदे । १ । ९२ ।
११ ।
“प्रमिनती मनुष्या युगानि ॥”
“मनुष्या मनुष्याणां सम्बन्धीनि युगानि कृत-
त्रेतादीनि प्रमिनती स्वगमनागमनाभ्यां प्रक-
र्षेण हिंसन्ती ॥” इति तद्भाष्ये सायनः ॥
मनुष्य-
हितः । यथा, ऋग्वेदे । २ । १८ । १ ।
“दशारित्रो मनुष्यः स्वर्षाः ॥”
“मधुष्यो मनुष्याणां हितः स्वर्षाः स्वर्गस्य
दाता ।” इति तद्भाष्ये सायनः ॥)

**मनुष्यधर्म्मा**, [न्] पुं, (मनुष्यस्येव धर्म्म आचारो
यस्य । “धर्म्मादनिच् केवलात् ।” ५ । ४ ।
१२४ । इति
समासान्तोऽनिच् ।) कुबेरः । इत्यमरः । २ ।
६ । १ ॥

सर्वाण्यनुक्रमाद्यश्च शृणोति मुनिसत्तम ! ।
मन्वन्तराणि तस्यापि श्रूयतां फलमुत्तमम् ॥
तत्र देवानृषीनिन्द्रान्मनूंस्तत्तनयान्नृपान् ।
वंशांश्च श्रुत्वा सर्व्वेभ्यः पापेभ्यो विप्रमुच्यते ॥
देवर्षीन्द्रनृपाश्चान्ये ये तन्मन्वन्तराधिपाः ।
ते प्रीयन्ते तथा प्रीताः प्रयच्छन्ति शुभां मतिम् ॥
ततः शुभां मतिं प्राप्य कृत्वा कर्म तथा शुभम् ।
शुभां गतिमवाप्नोति यावदिन्द्राश्चतुर्द्दश ॥
सर्वे स्युरृतवः क्षेम्याः सर्वे सौम्यास्तथा ग्रहाः ।
भवन्त्यसंशयं श्रुत्वा क्रमान्मन्वन्तरस्थितिम् ॥" * ॥
विष्णुः । यथा, महाभारते । १३ । १४९ । १९ ।
"विश्वकर्म्मा मनुस्त्वष्टा स्थविष्ठो स्थविरो ध्रुवः ॥"
मननप्रधानो विद्वान् । यथा, वाजसनेयसंहि-
तायाम् । १५ । ४९ ।
"तस्मिन्नहं निदधे नाकेऽग्निं यमाहुर्मनवस्तीर्ण-
बर्हिषम् ॥"
"मनवः मननप्रधाना विद्वांसः ॥" इति तद्भाष्ये
महीधरः ॥ * ॥ अन्तःकरणम् । यथा, भागवते ।
६ । ४ । २५ ।
"देहोऽसवोऽक्षा मनवो भूतमात्रा
नात्मानमन्युञ्च विदुः परं यत् ॥"
"मनवोऽन्तःकरणानि ।" इति तट्टीकायां श्रीधरः ॥
कृशाश्वस्य पुत्त्रभेदः । यथा, भागवते । ६ । ६ । २० ।
"कृशाश्वोऽर्च्चिषि भार्य्यायां धूमकेतुमजीजनत् ।
विषण्णायां वेदशिरः देवलं वयुनं मनुम् ॥")

रजोऽधिकाः कर्म्मपरा दुःखे च सुखमानिनः ॥"
इति श्रीभागवते । ३ । १० । २४ ।
अपि च ।
"तस्यापि ध्यायतः सर्गं सत्याभिध्यायिनस्ततः ।
प्रादुर्ब्बभूव चाव्यक्तादर्व्वाक्स्रोतस्तु साधकः ॥
यस्मादर्व्वाक् प्रवर्त्तन्ते ततोऽर्व्वाक्स्रोतसस्तु ते ।
ते च प्रकाशबहुलास्तमोद्रिक्तरजोऽधिकाः ॥
तस्मात्ते दुःखबहुला भूयो भूयश्च कारिणः ।
प्रकाशा बहिरन्तश्च मनुष्याः साधकास्तु ते ॥"
इति वह्निपुराणे सर्गकथननामाध्यायः ॥ * ॥
मनुष्यजन्ममुक्तिकारणंयथा, --
"विमुक्तिहेतुकान्या तु नरयोनिः कृतात्मनाम् ।
नामुञ्चन्ति हि संसारे विभ्रान्तमनसो गताः ॥
जीवा मानुष्यतां मन्ये जन्मनामयुतैरपि ।
तदीदृक् दुर्लभं प्राप्य मुक्तिद्वारं विचेतसः ॥
पतन्ति भूयः संसारे विष्णुमायाविमोहिताः ।

**मनुष्ययज्ञः**, पुं, (मनुष्येभ्यो मनुष्यार्थं यो यज्ञः ।)
अतिथिपूजनम् । इति नृयज्ञशब्ददर्शनात् ॥
(यथा, शतपथब्राह्मणे । ११ । ५ । ६ । १ ।
"तान्येव महासत्राणि भूतयज्ञो मनुष्ययज्ञः
पितृयज्ञो देवयज्ञो ब्रह्मयज्ञ इति ॥")

**मनुष्यी**, स्त्री, (मनुष्य + गौरादित्वात् ङीष् ।
योपधप्रतिषेधे "हयगवयमुकयमनुष्यमत्स्याना-
मप्रतिषेधः ।" इति ङीषि यलोपाभावः ।) मानुष-
स्त्रीजातिः । तत्पर्य्यायः । मानुषी २ नारी ३
मानवी ४ । इति शब्दरत्नावली ॥ मर्त्या ५
मनुजी ६ नरी ७ । इति जटाधरः ॥

**मनोगुप्ता**, स्त्री, (मनसा मनःशब्देन गुप्तेव ।)
मनःशिला । इत्यमरः । २ । ९ । १०८ ॥

**मनोजन्मा**, [न्] पुं, (मनसो जन्म यस्य ।)
कन्दर्पः । इति त्रिकाण्डशेषः ॥

**मनोजवः**, पुं, (मनस इव जवोऽस्य । एकदैव सर्व-
गामित्वात् तथात्वम् ।) विष्णुः । यथा, महा-
भारते दानधर्म्मे सहस्रनामस्तोत्रम् । १३ ।
१४९ । ८७ ।
"मनोजवस्तीर्थकरो वसुरेता वसुप्रदः ॥"
(मनसश्चित्तस्य जवः ।) मनसो वेगः । इति
व्याकरणम् ॥ (अनिलपत्न्याः शिवायाः पुत्त्रः ।
यथा, हरिवंशे । ३ । ४२ ।

"अनिलस्य शिवा मार्य्या यस्याः पुत्त्रो मनो-
जवः ॥")
रुद्रस्य पुत्त्रभेदः । यथा, मार्कण्डेये । ५२ ।
११ ।
"शनैश्चरस्तथा शुक्रो लोहिताङ्गो मनोजवः
॥"
तीर्थभेदः । यथा, महाभारते । ३ । ८३ ।
८५ ।
"मनोजवे नरः स्नात्वा गोसहस्रफलं लभेत्
॥"
षष्ठमन्वन्तरस्येन्द्रः । यथा, मार्कण्डेये । ७६
। ५३ ।
"मनोजवस्तथैवेन्द्रः संख्यातो यज्ञभागभुक्
॥"
भेधातिथेः पुत्त्रभेदः । यथा, भागवते । ५ ।
२० ।
२५ । "तस्य प्रियव्रत एवाधिपतिर्नाम्ना
मेधा-
तिथिः । सोऽपि विभज्य सप्तवर्षाणि
पुत्त्रनामानि
तेषु स्वात्मजान्
पुरोजवमनोजववेपमानधूम्रा-
नीकचित्ररेफविश्वाधारसंज्ञान् निधाप्याधि-
पतीन् स्वयं भगवत्यनन्त
आवेशितमतिस्तपो-
वनं प्रविवेश ॥")

**मनोजवः**, त्रि, (मनो जवं वेगवद्यस्मिन् । यद्वा,
मनो जवति पितायमिति कृत्वा धावत्यस्मिन्
इति । जु सौत्रधातुः + अच् ।) पितृतुल्यः ।
तत्प-
र्य्यायः । पितृसन्निभः ७ । इत्यमरः । ३ । १
। १३ ॥
अतिशयवेगवान् । (यथा, मार्कण्डेये । २१ ।
८ ।
"तमन्वधावद्वेगेन तुरगोऽसौ मनोजवः ॥")

**मनोजवसः**, त्रि, (मनो जवत्यस्मिन् । जु + बाहुल-
कात् असच् ।) पितृसन्निभः ।
इत्यमरटीकायां
स्वामी । ३ । १ । १३ ॥

**मनोजवा**, स्त्री, (मनो जवत्यत्रेति । जु + अच्
रम् १४ बन्धूरम् १५ पेशलम् १६ पेषलम् १७
सुमनम् १८ वामम् १९ अभिरामम् २० नन्दि-
तम् २१ । इति शब्दरत्नावली ॥ (यथा,
सुश्रुते । १ । ४६ । अध्याये ।
"मनोज्ञं शुचि नात्युष्णं प्रत्यग्रमशनं हितम् ।
पूर्व्वं मधुरमश्नीयात् मध्येऽम्ललवणौ रसौ ॥")

**मनोज्ञा**, स्त्री, (मनोज्ञ + स्त्रियां टाप् ।) मनः-
शिला । इति रत्नमाला ॥ (यथा, सुश्रुते
उत्तरतन्त्रे त्रयोदशाध्याये ।
"स्विन्नं मनोज्ञाकासीसव्योषाञ्जनकसैन्धवैः ॥")
राजपुत्त्री । इति जटाधरः ॥ बन्ध्याकर्कोटकी ।
आवर्त्तकी । स्थूलजीरकः । जाती । मदिरा ।
इति राजनिर्घण्टः ॥

**मनोभवः**, पुं, (मनसः मनसि वा भवतीति ।
भू + अच् । मनसः भव उत्पत्तिर्यस्येति वा ।)
कन्दर्पः । इति हलायुधः ॥ (यथा, मार्कण्डेये ।
१८ । ४१ ।
"ते तां दृष्ट्वाग्रतो दैत्याः साभिलाषा मनोभवम् ।
न शेकुरुद्धतं धैर्य्यान्मनसा वोढुमातुराः ॥"
मनोजन्ये, त्रि । यथा, भागवते । ६ । १५ । २४
।
"दृश्यमाना विनार्थेन न दृश्यन्ते मनोभवाः ।
कर्म्मभिर्ध्यायतो नाना कर्म्माणि मनसोऽभ-
वन् ॥")

**मनोभूः**, पुं, (मनसः मनसि वा भवतीति । भू +
क्विप् ।) कामदेवः । इति शब्दरत्नावली ॥
(यथा, कलाविलासे । १ । ३३ ।
"श्यामा शुशुभे शशिना तया मनोभूर्मधूत्सव-
स्तेन ।
मदमुदितमानसानां तेनापि मृगीदृशां
लीला ॥")

**मनोयोनिः**, पुं, (मन एव योनिरुत्पत्तिस्थान-
मस्य ।) कामदेवः । इति हेमचन्द्रः । २ । १४२
॥

**मनोरथः**, पुं, (मनसः रथ इव । मन एव रथो-
ऽत्रेति वा) इच्छा । इत्यमरः । १ । ७ । २७ ॥
(यथा, रघौ । ११ । ५९ ।
"इतस्ततश्च वैदेहीमन्वेष्टुं भर्त्तृचोदिताः ।
वसुधारा १८ धनन्ददा १९ त्रिलोचना २०
लोचना २१ । इति त्रिकाण्डशेषः ॥ (इन्दी-
वराख्यविद्याधरस्य कन्या । यथा च मार्क-
ण्डेये । ६२ । १३ ।
"अहमिन्दीवराख्यस्य सुता विद्याधरस्य वै
।
नाम्ना मनोरमा जाता सुतायां मरुधन्वनः
॥"
सप्तसरस्वतीनाम्येकतमा । यथा, महाभारते
।
९ । ३८ । ४ ।
"मुप्रभा काञ्चनाक्षी च विशाला च मनोरमा ।
सरस्वती चौघवती सुरेणुर्विमलोदका ॥"
तथा च तत्रैव । ९ । ३८ । २४ -- २५ ।
"उद्दालकेन यजता पूर्ब्बं ध्यात्वा सरस्वती ।
आजगाम सरित्श्रेष्ठा तं देशमृषिकारणात् ॥
पूज्यमाना मुनिगणैर्व्वल्कलाजिनसंवृतैः ।
मनोरमेति विख्याता सा हि तैर्मनसाकृता
॥"
छन्दोविशेषः । तल्लक्षणमुदाहरणञ्च यथा,
छन्दमञ्जर्य्याम् ।
"नरजगैर्भवेन्मनोरमा ।"
"तरणिजातटे विहारिणी व्रजविलासिनी
विलासतः ।
सुररिपोस्तनुः पुनातु वः सुकृतशालिनां
मनो-
रमा ॥")

**मनोहतः**, त्रि, (मनसा मनसि वा हतः ।) प्रति-
हतः । इत्यमरः । ३ । १ । ४१ ॥

**मनोहरं**, त्रि, (हरतीति । हृ + अच् । मनसो
हरमिति ।) मनोज्ञम् । इति शब्दरत्नावली ॥
(यथा, मनौ । २ । ३३ ।
"स्त्रीणां सुखोद्यमक्रूरं विष्पष्टार्थं मनोहरम्
॥"
यथा च मार्कण्डेये । ११२ । ३ ।
"स ददर्श तदा तत्र होमधेनुं मनोहराम् ॥")
कुन्दवृक्षे, पुं । सुवर्णे, क्ली । इति
राजनिर्घण्टः ॥

**मनोहरा**, स्त्री, (मनोहर + टाप् ।) जाती ।

टाप् ।) अग्निजिह्वावृक्षः । इति जटाधरः ॥
(गुणादिविवृतिरस्या अग्निजिह्वाशब्दे ज्ञातव्या ॥
वह्निजिह्वाविशेषः । यथा, मार्कण्डेये । ९९ । ५४ ।
"मनोजवा च या जिह्वा लघिमा गुणलक्षणा ।
तया नः पाहि पापेभ्य ऐहिकाच्च महा-
भयात् ॥"
स्कन्दस्य मातृगणभेदः । यथा, महाभारते । ९ । ४६ । १६ ।
"मनोजवा कण्टकिनी प्रघसा पूतना तथा ॥"
क्रौञ्चद्वीपस्य नदीविशेषः । यथा, मात्स्ये । १२१ । ८७ ।
"गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा ॥"
मन इव जवो यस्याः । वेगविशिष्टायां स्त्रियाम् ।
यथा, महाभारते । १ । १५६ । १८ ।
"अहःसु विहरानेन यथाकामं मनोजवा ॥")

**मनोजवृद्धिः**, पुं, (मनोजस्य कामस्य वृद्धिर्यस्मात् ।)
कामवृद्धिक्षुपः । इति राजनिर्घण्टः ॥

**मनोज्ञं**, क्ली, (मनो जानाति ज्ञापयति तोषय-
तीति । अन्तर्भूतण्यर्थे ज्ञा + कः ।) सरल-
काष्ठम् । इति रत्नमाला ॥

**मनोज्ञं**, त्रि, (मनसा जानातीति । ज्ञा + कः ।
यद्वा, मनः ज्ञापयति तोषयतीति । अन्त-
र्भूतण्यर्थज्ञाधातोः कः ।) मनोहरम् । तत्प-
र्य्यायः । सुन्दरम् २ रुचिरम् ३ चारु ४
सुषमम् ५ साधु ६ शोभनम् ७ कान्तम् ८
मनोरमम् ९ रुच्यम् १० मञ्जु ११ मञ्जुलम् १२ ।
इत्यमरः । ३ । १ । ५२ ॥ मनोहरम् १३ बन्धु-
कपयश्चेरुरार्त्तस्य रामस्येव मनोरथाः ॥"
कविविशेषः । यथा, राजतरङ्गिण्याम् । ४ । ५९६ ।
"मनोरथः शङ्खदत्तश्चटकः सन्धिमांस्तथा ।
बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः ॥")

**मनोरमं**, त्रि, (मनो रमयतीति । रम् + णिच् +
अण् ।) मनोज्ञम् । इत्यमरः । ३ । १ । ५२ ॥
(यथा, सुश्रुते । १ । ४६ । अध्याये ॥
"पुरस्ताद्विमले पात्रे सुविस्तीर्णे मनोरमे ।
सूदः सूपौदनं दद्यात् प्रदेहांश्च सुसंस्कृतान् ॥")

**मनोरमा**, स्त्री, (मनोरम + स्त्रियां टाप् ।)
गोरोचना । इति राजनिर्घण्टः ॥ बुद्धिशक्ति-
विशेषः । तत्पर्य्यायः । तारा २ महाश्रीः ३
ओङ्कारा ४ स्वाहा ५ श्रीः ६ तारिणी ७
जया ८ अनन्ता ९ शिवा १० लोकेश्वरात्मजा
११ खदूरवासिनी १२ भद्रा १३ वैश्या १४ नील-
सरस्वती १५ शङ्खिनी १६ महातारा १७
स्वर्णयूथी । इति राजनिर्घण्टः ॥ (धरस्य वसोः
पत्नी । यथा, विष्णुपुराणे । १ । १५ । ११४ ।
"मनोहरायाः शिशिरः प्राणोऽथ वरुणस्तथा ॥"
अप्सरोविशेषः । यथा, महाभारते । १३ । १९ । ४५ ।
"मनोहरासुकेशी च सुमुखी हासिनी प्रभा ॥")

**मनोहर्त्ता**, [ऋ] त्रि, (मनो हरतीति । हृ +
तृच् ।) मनोहरणकर्त्ता । यथा, --
"व्यसनं तेऽपनेष्यामि त्रिलोक्यां यदि भाव्यते ।
तमानेष्ये वरं यस्ते मनोहर्त्ता तमादिश ॥"
इति श्रीभागवते १० स्कन्धे ६२ अध्यायः ॥

**मनोहारि**, [न्] त्रि, (मनो हरति मनो हर्त्तुं
शीलमस्येति वा । हृ + णिनिः ।) मनोहरम् ।
इत्यमरटीकायां स्वामी । तथाहि ।
"गाङ्गं वारि मनोहारि मुरारिचरणच्युतम् ।
त्रिपुरारिशिरश्चारि पापहारि पुनातु माम् ॥"
इति वाल्मीकिकृतगङ्गास्तोत्रम् ॥

**मनोह्वा**, स्त्री, (मनः ह्वयति आह्वयतीवेति ।
ह्वे + "आतोऽनुपसर्गे कः ।" ३ । २ । ३ । इति कः ।
टाप् ।) मनःशिला । इत्यमरः । २ । ९ । १०८ ॥
(अस्याः पर्य्यायो यथा, --
"मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका ।
नैपाली कुनटी गोला शिला दिव्यौषधिः स्मृता ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**मन्तव्यं**, त्रि, (मन्यते इति । मन + तव्य ।) मन-

नीयम् । भाव्यम् । यथा । “आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ।” इत्यादि छान्दोग्योपनिषत् ॥

**मन्ता**, [ऋ] त्रि, (मन्यते जानातीति । मन् +

“बहुलमन्यत्रापि ।” उणा० २ । ९५ । इति तृच् ।) विद्वान् । इति सिद्धान्तकौमुद्यामुणादि-वृत्तिः ॥ (मननकर्त्ता । यथा । “स हि हेतुः कारणं निमित्तमक्षरं कर्त्ता मन्ता वेदिता बोद्धा द्रष्टा धाता ब्रह्मा विश्वकर्म्मा विश्व-रूपः पुरुषः प्रभवोऽव्ययो नित्यः गुणी ग्रहणं प्राधान्यमव्यक्तं जीवो ज्ञः प्रकुलश्चेतनावान् विभुर्भूतात्मा चेन्द्रियात्मा चान्तरात्मा चेति ।” इति चरके शारीरस्थाने चतुर्थेऽध्याये ॥)

**मन्तुः**, पुं, (मन्यते इति । मन् + “कमिमनिजनि-

गाभायाहिभ्यश्च ।” उणा ० । १ । ७३ । इति तुन् ।) अपराधः । (यथा, नैषधचरिते । ६ । ११० ।

“सतीव्रतैस्तीव्रमिमन्तु मन्तु-
मन्तर्वरं वज्रिणि मार्ज्जितास्मि ॥”)

मनुष्यः । प्रजापतिः । इति मेदिनी । ते, ४३ ॥

द्वात्रिंशदपराधा यथा । भगवद्भक्तानां क्षत्रिय-सिद्धान्नभोजनम् १ अनिषिद्धदिने दन्तधावन-मकृत्वा विष्णोरुपसर्पणम् २ मैथुनं कृत्वा अस्नात्वा विष्णोरुपसर्पणम् ३ मृतं नरं स्पृष्ट्वा अस्नात्वा विष्णुकर्म्मकरणम् ४ रजस्वलां स्पृष्ट्वा अस्नात्वा विष्णुगृहप्रवेशनम् ५ मानवं शवं अप्रदाय धूपदीपदानम् २९ उपानहावारुह्य विष्णुस्थानप्रवेशनम् ३० भेरीशब्देन विना विष्णोः प्रबोधनम् ३१ अजीर्णे सति विष्णोरुपसर्पणम् ३२ । एतदप्युपलक्षणं तथा च नरसिंहपुराणे ।

“अपराधसहस्राणि अपराधशतानि च ।
पद्मेनैकेन देवेशः क्षमते हेलयार्च्चितः ॥”

इत्याह्निकाचारतत्त्वे चतुर्थयामार्द्धकृत्यम् ॥

अपि च ।

वराह उवाच ।

“भुक्त्वा तु परकीयान्नं तत्परस्तन्निवर्त्तनः ।
प्रथमश्चापराधोऽयं धर्म्मविघ्नाय वै भवेत् ॥
अभुक्त्वा दन्तकाष्ठानि यस्तु मामुपसर्पति ।
द्वितीयश्चापराधस्तु कर्म्मविघ्नाय विद्यते ॥
गत्वा मैथुनसंयोगे योऽनु मां स्पृशते नरः ।
तृतीयमपराधन्तु कल्पयामि वसुन्धरे ! ॥
स्पृष्ट्वा रजस्वलां नारीमस्माकं यः प्रपद्यते ।
चतुर्थमपराधन्तु दृष्टे नैव क्षमाम्यहम् ॥
स्पृष्ट्वा तु मृतकञ्चैव असंस्कारकृतन्तु वै ।
पञ्चमञ्चापराधञ्च न क्षमामि वसुन्धरे ! ॥
स्पृष्ट्वा तु मृतकं यस्तु नाचम्य स्पृशते तु माम् ।
षष्ठकञ्चापराधन्तु न क्षमामि वसुन्धरे ! ॥
मामेवार्च्चनकाले तु पुरीषं यस्य गच्छति ।
सप्तमञ्चापराधन्तु कल्पयामि वसुन्धरे ! ॥
यस्तु नीलेन वस्त्रेण प्रावृतो मां प्रपद्यते ।
अष्टमञ्चापराधन्तु कल्पयामि वसुन्धरे ! ॥
द्वाविंशत्यपराधानां तान्यहं चोपकल्पये ॥
यस्तु वाराहमांसानि प्रापणेनोपपादयेत् ।
अपराधं त्रयोविंशं कल्पयामि वसुन्धरे ! ॥
सुरां पीत्वापि यो मर्त्यः कदाचिदुपसर्पति ।
अपराधं चतुर्विंशं कल्पयामि वसुन्धरे ! ! ॥
यः कुसुम्भञ्च मे शाकं भक्षयित्वोपचक्रमे ।
अपराधं पञ्चविंशं कल्पयामि वसुन्धरे ! ॥
परप्रावरणेनैव यस्तु मामुपसर्पति ।
अपराधेषु षड्विंशं कल्पयामि वरानने ! ॥
नवान्नं यस्तु भक्षेत न स देवान् पितॄन् यजेत् ॥
सप्तविंशापराधानि कल्पयामि गुणान्विते ! ॥
उपानहौ च प्रपदे तथा मे वोपचक्रमे ।
अष्टाविंशापराधानि कल्पयामि गुणान्विते ! ॥
शरीरं मण्डयित्वा तु यो मामाप्नोति माधवि ! ।
एकोनत्रिंशमपराधं स स्वर्गेषु न गच्छति ॥
अजीर्ण्णेन समाविष्टो यस्तु मामभिगच्छति ।
त्रिंशकञ्चापराधानां कल्पयामि वसुन्धरे ! ॥
गन्धपुष्पाण्यदत्त्वा तु यस्तु धूपं प्रयच्छति ।
एकत्रिं शापराधन्तु कल्पयामि यशस्विनि ! ॥
विना भेर्य्यादिशब्देन द्वारस्योद्घाटनं मम ।
महापराधं विद्येत तद्द्वात्रिंशापराधकम् ॥”

इति वाराहे द्वात्रिंशदपराधाध्यायः ॥

(त्रि, ज्ञाता । यथा, ऋग्वेदे । १० । ६३ । ८ ।

“य ईशिरे भुवनस्य प्रचेतसो
विश्वस्य स्थातुर्जगतश्च मन्तवः ।”

“मन्तवः सर्व्वस्य वेदितारः ।” इति तद्भाष्ये सायनः ॥ मननीयः । यथा, ऋग्वेदे । १ । १५२ । १ ।

“युवोरच्छिद्रा मन्तवोह सर्गाः ।”

“मन्तवोह मननीयाश्च ।” इति सायनः ॥)

**मन्त्रः**, पुं, (मन्त्र्यते गुप्तं परिभाष्यते इति ।

मत्रि गुप्तभाषणे + घञ् । यद्वा, मन्त्रयते गुप्तं भाषते इति । मत्रि गुप्तभाषणे + अच् ।) वेद-भेदः । स च मन्त्रस्वरूपभागः ॥ (यथा, ऋग्वेदे । ६७ । ४ । ७४ ।

“प्रनूनं ब्रह्मणपतिर्मन्त्रं वदत्युक्थम् ॥”

यथा च मनुः । २ । १६ ।

“निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः ।
तस्य शास्त्रेऽधिकारोऽस्मिन्ज्ञेयो नान्यस्य कस्यचित् ॥”

स्पृष्ट्वा अस्नात्वा विष्णुसन्निधाववस्थानम्
६
विष्णुं स्पृशतः पायुवायुप्रयोगः ७ विष्णोः
कर्म्म
कुर्व्वतः पुरीषत्यागः ८
विष्णुशास्त्रमनादृत्य
शास्त्रान्तरप्रशंसा ९ अतिमलिनं वासः
परि-
धाय विष्णुकर्म्माचरणम् १०
अविधानेनाचम्य
विष्णोरुपस्पर्शनम् ११ विष्णोरपराधं
कृत्वा
विष्णोरुपसर्पणम् १२ क्रुद्धस्य
विष्णुस्पर्शनम् १३
निषिद्धपुष्पेण विष्णोरर्च्चनम् १४ रक्तं
वासः
परिधाय विष्णोरुपसर्पणम् १५ अन्धकारे
दीपेन
विना विष्णोः स्पर्शनम् १६ कृष्णं वस्त्रं
परिधाय
विष्णोः कर्म्माचरणम् १७ वायसोद्धृतवस्त्रं
परिधाय विष्णोः कर्म्माचरणम् १८ विष्णवे
कुक्कुरोच्छिष्टदानम् १९ वराहमांसं भुक्त्वा
विष्णो-
रुपसर्पणम् २० जालपादशरारिमांसं
भुक्त्वा
विष्णोरुपसर्पणम् २१ दीपं स्पृष्ट्वा
हस्तमप्रक्षाल्य
विष्णोः स्पर्शनं कर्म्माचरणं वा २२
श्मशानं
गत्वा अस्नात्वा विष्णोरुपसर्पणम् २३
पिण्याकं
भुक्त्वा विष्णोरुपसर्पणम् २४ विष्णवे
वराहमांस-
निवेदनम् २५ मद्यमादाय स्पृष्ट्वा पीत्वा वा
विष्णुगृहप्रवेशनम् २६ परकीयेणाशुचिना
वा
वस्त्रेण परिहितेन विष्णुकर्म्माचरणम् २७
विष्णवे नवान्नमप्रदाय तद्भोजनम् २८
गन्धपुष्पे

मामेवार्च्चनकाले तु यस्त्वसत्यं प्रभाषते
।
नवमञ्चापराधन्तु न रोचामि वसुन्धरे ! ॥
अविधानेन मां स्पृष्ट्वा यस्तु मां
प्रतिपद्यते ।
दशमञ्चापराधन्तु मम चाप्रियकारकम् ॥
क्रुद्धस्त्वन्त्यानि कर्म्माणि कुरुते
कर्म्मकारकः ।
एकादशापराधन्तु कल्पयामि वसुन्धरे !
॥
अकर्म्मण्यानि पुष्पाणि यस्तु
मामुपकल्पयेत् ।
द्वादशञ्चापराधन्तु कल्पयामि वसुन्धरे !
॥
यस्तु रक्तेन वस्त्रेण कौसुम्भेनोपगच्छति
।
त्रयोदशापराधन्तु कल्पयामि वसुन्धरे !
॥
अन्तकालेऽपि मां देवि ! यः स्पृ शेत
कदाचन ।
चतुर्द्दशापराधन्तु कल्पयामि वसुन्धरे !
॥
यस्तु कृष्णेन वस्त्रेण मम कर्म्माणि
कारयेत् ।
पञ्चदशापराधन्तु कल्पयामि वरानने ! ॥
अधौतेन च वस्त्रेण यस्तु मामुपकल्पते ।
षोडशन्त्वपराधानां कल्पयामि वरानने !
॥
स्वयमन्नन्तु यो दद्यादज्ञानाय च
माधवि ! ।
सप्तदशापराधन्तु कल्पयामि वसुन्धरे !
॥
यस्तु मत्स्यानि मांसानि भक्षयित्वा
वरानने ! ।
अष्टादशापराधानि अनुजातानि माधवि !
॥
जालपादं भक्षयित्वा यस्तु मामुपसर्पति ।
एकोनविंशापराधं प्रतिजानामि सुन्दरि !
॥
यस्तु मे दीपकं स्पृष्ट्वा यो मां स्पृशति
माधवि ! ।
विंशकञ्चापराधानां कल्पयामि वरानने ॥

तन्त्राद्युक्तमन्त्रभागश्च । यथा, मनौ । ७ । २१७ ।
“सुपरीक्षितमन्नाद्यमद्यान्मन्त्रैर्विषापहैः ॥”)
गुप्तिवादः । स तु रहसि कर्त्तव्यावधारणं मन्त्र-
णेति ख्यातम् । इत्यमरभरतौ ॥ परामर्शः ।
मन्त्रणा । (यथा, माघे । २ । २९ ।
“मन्त्रो योध इवाधीरः सर्व्वाङ्गैः संवृतैरपि ।
चिरं न सहते स्थातुं परेभ्यो भेदशङ्कया ॥”)
व्यङ्गादिभ्यो मन्त्रणाग्रहणस्य निषेधो यथा, --
“व्यङ्गाङ्गहीना वधिराः कुयोनिषु रताश्च ये ।
तेषां मन्त्रो न सुखदः प्रोक्तः कविभिरेव च ॥
कामुकानां जडानाञ्च स्त्रीजितानां तथैव च ।
श्वशुरस्य गृहे नित्यं जासाता कर्म्मकारकः ।

| | श्मशानं यस्तु वै गत्वा यो मामेवाभिगच्छति ।<br>एकविंशापराधानि कल्पयामि वसुन्धरे ! ॥<br>पिण्याकं भक्षयित्वा तु यो मामेवोपचक्रमे । | |
|---|---|---|

तस्यापि न भवेन्मन्त्रः कार्य्यसिद्धौ कदाचन ॥”
इति जैमिनिभारते आश्वमेधिकपर्व्वणि २ अः ॥
अन्यत् मन्त्रणाशब्दे द्रष्टव्यम् ॥ * ॥ देवादीनां साधनम् । इति मेदिनी । रे, ७४ ॥
“तन्मन्त्राद्यषडक्षीणं यत् तृतीयाद्यगोचरम् ।
रहस्यालोचनं मन्त्रो रहश्छन्नमुपह्वरम् ॥”
इति हेमचन्द्रः ॥
मन्त्रव्याख्याकृद्देकनवत्यृषयो यथा, --
“एते मन्त्रकृतः सर्व्वे कृत्स्नशस्तु निबोधत ।
भृगुः काश्यः प्रचेताश्च दधीचो ह्यात्मवानपि ॥
और्व्वोऽथ जमदग्निश्च विदः शारद्वतस्तथा ।
आर्ष्णिषेणो ह्यश्वनश्च वीतहव्यः सवेधसः ॥
वैण्यः पृथुर्द्दिवोदासो बन्ध्यश्वो गृत्सशौनकः ।
एकोनविंशति र्ह्येते भृगवो मन्त्रकृत्तमाः ॥ १९ ॥
अङ्गिरा वेधसश्चैव भरद्वाजो नभात्मकः ।
तथा मृगधरो गर्द्दः सितिः सुकृतिरेव च ॥
गुववीतश्च मान्धाता अम्बरीषस्तथैव च ।
युवनाश्वः पुरुकुत्सः सुमदद्युः सदस्यवान् ॥
अजमीढो ह्युदार्य्यश्च तक्षकः कविरेव च ।
पृषदश्वो विरूपश्च कण्वश्चैवाथ मुद्गलः ॥
उतथ्यश्च शरद्वांश्च तथा वाजिश्रवा अपि ।

“तावन्निबद्धः संसारकारागारे विधेर्जनः ।
न यावत् कृष्णमन्त्रञ्च प्राप्नोति गुरुवक्त्रतः ॥
कृतकर्म्मभोगरूपनिगडोच्छेदकारणम् ।
मायाजालोच्छेदकरमाशापाशनिकृन्तनम् ॥
गोलोकमार्गसोपानं निस्तारबीजकारणम् ।
भक्त्यङ्कुरस्वरूपश्च नित्यं वृद्धमनश्वरम् ॥
सारञ्च सर्व्वतपसां योगानाञ्च तथैव च ।
सिद्धीनां वेदपाठानां व्रतादीनाञ्च निश्चितम् ॥
दानानां तीर्थस्नानानां यज्ञादीनां पुरन्दर ! ।
जपानामुपवासानामित्याहकमलोद्भवः ॥
पुंसां लक्षं पितृणाञ्च शतं मातामहस्य च ।
पूर्ब्बं परञ्च तत्संख्यं पितरं मातरं गुरुम् ॥
सहोदरं कलत्रञ्च बन्धुं शिष्यञ्च किङ्करम् ।
समुद्धरेच्च श्वशुरं श्वश्रूं कन्याञ्च तत्सुतम् ॥
आत्मानञ्च सतीर्थ्यञ्च गुरुपत्नीं गुरोः सुतम् ।
उद्धरेद्बलवान् भक्तो मन्त्रग्रहणमात्रतः ॥
मन्त्रग्रहणमात्रेण जीवन्मुक्तो भवेन्नरः ।
तत्स्पर्शपूतस्तीर्थौघः सद्यः पूता वसुन्धरा ॥
अनेकजन्मपर्य्यन्तं दीक्षाहीनो भवेन्नरः ।
तदान्यदेवमन्त्रञ्च लभते पुण्यशेषतः ॥ * ॥
सप्तजन्मोपदेवानां कृत्वा सेवां स्वकर्म्मतः ।
लभते च रवेर्मन्त्रं साक्षिणः सर्व्वकर्म्मणाम् ॥
जन्मत्रयं भास्करञ्च निसेव्य मानवः शुचिः ।
लभेद्गणेशमन्त्रञ्च सर्व्वविघ्नहरं परम् ॥
जन्मत्रयं तं निसेव्य निर्व्विघ्नश्च भवेन्नरः ।
विघ्नेशस्य प्रसादेन दिव्यज्ञानं लभेन्नरः ॥
तदा ज्ञानप्रदीपेन समालोच्य महामतिः ।
अज्ञानान्धतमो हित्वा महामायां भजेन्नरः ॥
विष्णुमायाञ्च प्रकृतिं दुर्गां दुर्गतिनाशिनीम् ।
सिद्धिदां सिद्धिरूपाञ्च परमां सिद्धयोगिनीम् ॥
वाणीरूपाञ्च पद्माञ्च भद्रां कृष्णप्रियात्मिकाम् ।
नानारूपां तां निसेव्य जन्मनां शतकं नरः ॥
तत्प्रासादाद्भवेत् ज्ञानी ज्ञानानन्दं ततो भजेत् ।
कृष्णज्ञानाधिदेवञ्च महाज्ञानं सनातनम् ॥
शिवं शिवस्वरूपञ्च शिवदं शिवकारणम् ।
परमानन्दरूपञ्च परमानन्ददायिनम् ॥
सुखदं मोक्षदञ्चैव दातारं सर्व्वसम्पदाम् ।
अमरत्वप्रदञ्चैव दीर्घायुष्ट्वप्रदं परम् ॥
इन्द्रत्वञ्च मनुत्वञ्च दातुं शक्तञ्च लीलया ।
राजेन्द्रत्वप्रदञ्चैव ज्ञानदं हरिभक्तिदम् ॥

न विद्यते पुनर्जन्म पुनरागमनं सुर ! ।
पुनश्च न पिबेत् क्षीरं धृत्वा मातृस्तनं परम् ॥
विष्णुमन्त्रोपासकानां गङ्गादितीर्थसेविनाम् ।
स्वधर्म्मिणाञ्च भिक्षूणां पुनर्जन्म न विद्यते ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ३३ अध्यायः ॥
शिवमन्त्रा यथा, --
“प्रथमं शृणु तन्मन्त्रं ततोऽनुध्यानगोचरम् ।
ततः क्रमन्तु पूजायाः क्रमाद्बित्तं नरर्षभौ ॥
समस्तानां स्वराणान्तु दीर्घाः शेषाः सबिन्दुकाः ।
ऋ ऌ क् शून्याः सार्द्धचन्द्रा उपान्ते नाभि-संहिताः ॥
एभिः पञ्चाक्षरैर्मन्त्रः पञ्चवक्त्रस्य कीर्त्तितः ।
क्रमात् सम्मदसन्दोहमादगौरवसंज्ञकाः ॥
प्रासादस्तु भवेत् शेषः पञ्चमन्त्राः प्रकीर्त्तिताः ।
एकैकेन तथैवैकं वक्त्वं मन्त्रेण पूजयेत् ॥
एकं समुदितं कृत्वा पञ्चभिर्वा प्रपूजयेत् ।
प्रासादेनाथवा पञ्चवक्त्रं देवं प्रपूजयेत् ।
सम्मदादिषु मन्त्रेषु प्रासादस्तु प्रशस्यते ॥
शम्भोः प्रसादनेनैव यस्माद्वृत्तस्तु मन्त्रकः ।
तेन प्रासादसंज्ञोऽयं कथ्यते मुनिपुङ्गवैः ।
तस्मात् सर्व्वेषु मन्त्रेषु प्रासादः प्रीतिदः प्रभोः ॥
आमोदकारकः शम्भोर्म्मन्त्रः सम्मद उच्यते ।
मनःप्रपूरणश्चापि सन्दोहः परिकीर्त्तितः ॥
आकर्षको भवेन्मादो गुरुत्वाद्गौरवाह्वयः ।
एतद्व्यस्तं समस्तञ्च मन्त्रं शम्भोः प्रकीर्त्तितम् ॥
पञ्चाक्षरञ्च यन्मन्त्रं पञ्चवक्त्रस्य कीर्त्तितम् ।
युवां तेनैव मन्त्रेण आराधय तमीश्वरम् ॥”
इति कालिकापुराणे ५० अध्याये वेताल-भैरवौ प्रति वशिष्ठवाक्यम् ॥ * ॥
मन्त्रस्य त्रिविधजपो यथा, --
“वाचिकश्च उपांशुश्च मानसश्च त्रिधा स्मृतः ।
त्रयाणां जपयज्ञानां श्रेयान् स्यादुत्तरोत्तरः ॥
यदुच्चनीचस्वरितैः स्पष्टशब्दवदक्षरैः ।
मन्त्रमुच्चारयेद्व्यक्तं जपयज्ञः स वाचिकः ॥
शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयन् ।
किञ्चित् शब्दं स्वयं विद्यादुपांशुः स जपः स्मृतः ॥
धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात् पदम् ।
शब्दार्थचिन्तनाभ्यासः स उक्तो मानसो जपः ॥
तेन स्वरादिसुव्यक्तवर्णोच्चारणवान्वाचिकः ।
स्वयंशब्दग्रहणमात्रयोग्यकिञ्चिच्छब्दवानुपांशुः ।
जिह्वोष्ठचालनमन्तरेण वर्णानुसन्धात्मको-

अयस्योऽथ सुचित्तिश्च वामदेवस्तथैव च ॥
औषिजो बृहशक्तिश्च ऋषिर्दीर्घतपा अपि ।
काक्षीवांश्च त्रयस्त्रिंशत् स्मृता ह्याङ्गिरसा वराः ॥ ३३ ॥
एते मन्त्रकृतः सर्व्वे काश्यपांस्तु निबोधत ।
काश्यपः सहवत्सावो निध्रुवो वैद्य एव च ।
असितो देवलश्चैव षडेते ब्रह्मवादिनः ॥ ६ ॥
अत्रिर्व्वद्धस्वनश्चैव श्वावाश्वोऽथ गविष्ठिवः ।
वर्णातको ऋषिः सिद्धस्तथा पूर्ब्बातिथिश्च यः ॥
इत्येते अत्रयः प्रोक्ता मन्त्रकृत्सु महर्षयः ॥ ४ ॥
वशिष्ठश्चैव शक्तिश्च तृतीयश्च पराशरः ।
ततस्तु इन्द्रप्रमतिः पञ्चमस्तु भवद्वसुः ॥
षष्ठस्तु मित्रावरुणिः सप्तमः कुण्डिनस्तथा ।
इत्येते सप्त विज्ञेया वाशिष्ठा ब्रह्मवादिनः ॥ ७ ॥
विश्वामित्रश्च गाधेयो देवत्रातस्तथोद्दलः ।
तथा विद्वान् मधुच्छन्दो ऋषिश्चान्योऽघमर्षणः ॥
अष्टको लोहितश्चैव भूतकीलश्च ताबुभौ ।
देवश्रवा देवरातः पुराणश्च धनञ्जयः ॥
शिशिरश्च महातेजाः सालङ्कायन एव च ।
त्रयोदशैते विज्ञेया ब्रह्मिष्ठाः कौशिका वराः ॥ १३ ॥
अगस्त्योऽथ दृढद्युम्न इन्द्रबाहुस्तथैव च ।
ब्रह्मिष्ठागस्तयो ह्येते त्रयः परमकीर्त्तयः ॥ ३ ॥

जन्मत्रयं समाराध्य चाशुतोषप्रसादतः ।
सर्व्वदस्य वरेणैव निर्म्मलं ज्ञानमालभेत् ॥
निर्म्मलज्ञानदीपेन सुप्रदीपेन तत्त्ववित् ।
ब्रह्मादितृणपर्य्यन्तं सर्व्वं मिथ्यैव पश्यति ॥
दयानिधेः प्रसादेन शङ्करस्य महात्मनः ।
वरदस्य वरेणैव हरिभक्तिं लभेत् ध्रुवम् ॥
तदा तद्भक्तसंसर्गात् कृष्णमन्त्रं लभेत् ध्रुवम् ।
तदा निवृत्तिमाप्नोति सारात्सारां परात्पराम् ॥
यत्र देहे लभेन्मन्त्रं तद्देहावधि भारते ।
तत् पाञ्चभौतिकं त्यक्त्वा बिभर्त्ति दिव्यरूपकम् ॥
करोति दास्यं गोलोके वैकुण्ठे वा हरेः पदे ।
परमानन्दसंयुक्तो मोहादिषु विवर्ज्जितः ॥

मानसः ॥” * ॥
वाचिकेऽप्युच्चैर्जपनिषेधमाह शङ्खः ।
“नोच्चैर्जप्यं बुधः कुर्य्यात् सावित्र्यास्तु विशेषतः ।”
योगियाज्ञवल्क्यः ।
“न चंक्रमन् न विहसन् न पार्श्वमवलोकयन् ।
नोपाश्रितो न जल्पंश्च न प्रावृतशिरास्तथा ॥
न पदा पादमाक्रम्य न वै बहिः करौ स्मृतौ ।
नैवंविधं जपं कुर्य्यात् न च संश्रावयेज्जपम् ॥
उत्तिष्ठन् वीक्ष्यमाणोऽर्क्कमासीनः प्राङ्मुखो जपेत् ।
प्राक् कुशेष्वेवमासीनो वसानो वाससी शुभे ॥”

| | | |
|---|---|---|
| मनुर्वैवस्वतश्चैव इलो राजा पुरूरवाः ।<br>क्षत्त्रियाणां वरा ह्येते विज्ञेया मनुवादिनः ॥ ३ ॥<br>भनन्दश्चैव भत्सश्च वत्सलश्चैव ते त्रयः ।<br>एते मन्त्रकृतो ज्ञेया वैश्यानां प्रवराः स्मृताः ॥ ३<br>इत्येकनवतिः प्रोक्ता मन्त्रा यैश्च बहिष्कृताः ।<br>ब्राह्मणाः क्षत्त्रिया वैश्या ऋषिपुत्त्रास्तथा स्मृताः ।<br>ऋषीणाञ्च सुता ह्येते ऋषिपुत्त्राः श्रुतर्षयः ॥”<br>इति मात्स्ये १२१ अध्यायः ॥<br>कृष्णमन्त्रमाहात्म्यं यथा, -- | | |

वृद्धमनुः ।
"यदि स्यात् क्लिन्नवासा वै
वारिमध्यगतो जपेत् ।
अन्यथा तु शुचौ भूम्यां कुशोपरि
समाहितः ॥"
व्यासः ।
"जपकाले न भाषेत व्रतहोमादिकेषु च ।
एतेष्वेवावशक्तस्तु यद्यागच्छेत्
द्विजोत्तमः ।
अभिवाद्य ततो विप्रं योगक्षेमञ्च कीर्त्तयेत्
॥"
योगियाज्ञवल्क्यः ।
"यदि वाग्यमलोपः स्यात् जपादिषु
कदाचन ।
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम्
॥"
गोतमः ।
"क्रोधं मोहं क्षुतं निद्रां
निष्ठीवनविजृम्भितम् ।
दर्शनं वनितानाञ्च वर्ज्जयेज्जपकर्म्मणि
।
आचामेत् सम्भवे चैषां स्मरेद्विष्णुं
सुरार्च्चितम् ॥"
बौधायनः ।
"नाभेरधश्च संस्पर्शं कर्म्मकाले
विवर्ज्जयेत् ॥"
इत्याह्निकाचारतत्त्वम् ॥ * ॥
मन्त्रशब्दस्य व्युत्पत्तिर्यथा, --
"मननात्त्रायते यस्मात्तस्मान्मन्त्रः प्रकी-
र्त्तितः ॥"
मन्त्रदीक्षारहितानां दोषो यथा,
मत्स्यसूक्ते ।
"अदीक्षितानां मर्त्यानां दोषं शृणु
वरानने ! ।
अन्नं विष्ठासमं तस्य जलं मूत्रसमं स्मृतम्
।
तत्कृतं तस्य वा श्राद्धं सर्व्वं याति ह्यधो-
गतिम् ॥"
शूद्रस्य मन्त्रविशेषनिषेधमाह तन्त्रे ।
"प्रणवाद्यं न दातव्यं मन्त्रं शूद्राय सर्व्वथा
।
"सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रयोर्न्नेच्छन्ति ।
सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्री शूद्रो यदि
जानीयात् स मृतोऽधो गच्छति ।"
विशेषमाह वाराहीये ।
"गोपालस्य मनुर्देयो महेशस्य तु पादजे ।
तत्पत्न्याश्चापि सूर्य्यस्य गणेशस्य मनुस्तथा ॥
एषां दीक्षाधिकारी स्यादन्यथा पापभाग्-
भवेत् ॥"
मन्त्रदीक्षाप्रशंसा यथा, गोविन्दवृन्दावने ।
"अदीक्षितस्य मरणे प्रेतत्वं न च मुञ्चति ॥"
नवरत्नेश्वरे ।
"सर्व्वासामपि दीक्षाणां मुक्तिः फलमखण्डितम्
।
अविरोधाद्भवन्त्येव प्रासङ्गिक्यस्तु भक्तयः ॥"
तथा ।
"उपपातकलक्षाणि महापातककोटयः ।
क्षणाद्दहति देवेशि ! दीक्षा हि विधिना कृता ॥"
अत्राप्यनुकूलमन्त्रं दीक्षेत ।
"स्वताराराशिकोष्ठानामनुकूलान् भजेन्मनून् ॥"
वाराहीये ।
"ताराचक्रं राशिचक्रं नामचक्रं तथैव च ।
अत्र चेत् सगुणो मन्त्रो नान्यच्चक्रं विचारयेत्
॥"
इति प्राधान्यतया बोध्यम् ॥
तथा च ।
"धनिमन्त्रन्तु गृह्णीयादनुकूलन्तथैव च ।"
इत्यादिदर्शनात्तत्तच्चक्रविचारस्य
आवश्यकत्वात्
प्रथमं तन्निरूप्यते । सिद्धसारस्वते ।
"तत्र नृसिंं हार्कवराहाणां प्रासादप्रणवस्य च ।
सपिण्डाक्षरमन्त्राणां सिद्धादीन्नैव शोधयेत् ॥
स्वप्नलब्धे स्त्रिया दत्ते मालामन्त्रे च त्र्यक्षरे ।
वैदिकेषु च मन्त्रेषु सिद्धादीन्नैव शोधयेत् ॥"
मालामन्त्रस्तु वाराहीये ।
"विंशत्यर्णाधिका मन्त्रा मालामन्त्राश्च
कीर्त्तिताः ।
नपुंसकस्य मन्त्रस्य सिद्धादीन्नैव शोधयेत् ॥
हंसस्याष्टाक्षरस्यापि तथा पञ्चाक्षरस्य च ।
एकद्वित्र्यादिबीजस्य सिद्धादीन्नैव शोधयेत् ॥
तथा । एकाक्षरस्य मन्त्रस्य मालामन्त्रस्य
पार्व्वति ! ।
वैदिकस्य च मन्त्रस्य सिद्धादीन्नैव शोधयेत्
॥"
तथा चामुण्डातन्त्रे ।
"काली तारा महाविद्या षोडशी भुवनेश्वरी ।
भैरवी छिन्नमस्ता च विद्या धूमावती तथा ॥
वगला सिद्धविद्या च मातङ्गी कमलात्मिका ।
एता दश महाविद्याः सिद्धविद्याः प्रकीर्त्तिताः
॥
नात्र सिद्धाद्यपेक्षास्ति न नक्षत्रविचारणा ।
कालादिशोधनं नास्ति न चामित्रादिदूषणम् ॥
सिद्धविद्यातया नात्र युगसेवापरिश्रमः ।
नास्ति किञ्चिन्महादेवि ! दुःखसाध्यं कथञ्चन
॥"
पृथिव्यां पूर्णफलप्रदा महाविद्या । यथा,
मालिनीविजये ।
"अथ वक्ष्याम्यहं या या महाविद्या महीतले ।
दोषजालैरसंस्पृष्टास्ताः सर्व्वा हि फलैः सह
॥
काली नीला महादुर्गा त्वरिता च्छिन्नमस्तका
।
वाग्वादिनी चान्नपूर्णा तथा प्रत्यङ्गिरा पुनः ॥
कामाख्या वासली बाला मातङ्गीशैलवासिनी
।
इत्याद्याः सकला विद्याः कलौ पूर्णफलप्रदाः
॥
सिद्धमन्त्रतया नात्र युगसेवापरिश्रमः ।
तथा चैता महाविद्याः कलिदोषान्न वाधिताः
॥"
इत्यादिवचनादेषु विचारो नास्ति । वस्तुतस्तु
इदं प्रशंसापरम् । सर्व्वत्र विचारस्यावश्यक-
त्वम् । दुरदृष्टवशात् कदाचिद्वैरिमन्त्रस्य
स्वप्नादौ
प्राप्त्या तत्तद्दोषस्य दृष्टत्वात् । इति तु साम्प्र-

| आत्ममन्त्रं गुरोर्म्मन्त्रं मन्त्रं चाजपसंज्ञकम् ॥<br>स्वाहाप्रणवसंयुक्तं शूद्रे मन्त्रं ददद्द्विजः ।<br>शूद्रो निरयमाप्नोति ब्राह्मणो यात्यधोगतिम् ॥”<br>श्रुतिरपि । | | दायिकाः ॥ * ॥<br>मन्त्रोद्धारार्थषट्चक्रप्रमाणानि चक्रशब्दे द्रष्टव्यानि । तेषां लेखनप्रकारा यथा, |
|---|---|---|

**कुलाकुलचक्रम् ।**

| वायुः | अग्निः | भूमिः | जलम् | आकाशः |
|---|---|---|---|---|
| अ आ | इ ई | उ ऊ | ऋ ॠ | ऌ ॡ |
| ए | ऐ | ओ | औ | अं |
| क | ख | ग | घ | ङ |
| च | छ | ज | झ | ञ |
| ट | ठ | ड | ढ | ण |
| त | थ | द | ध | न |
| प | फ | ब | भ | म |
| य | र | ल | व | श |
| ष | क्ष | ळ | स | ह |
| वायुः | अग्निः | भूमिः | जलम् | आकाशः |

**अकथहचक्रम् ।**

| अ क | उ | आ | ऊ |
|---|---|---|---|
| थ ह | ङ प | ख द | च फ |
| ओ | ऌ | औ | ॡ |
| ड व | झ म | ढ श | ञ य |
| ई | ॠ | इ | ऋ |
| घ न | ज भ | ग ध | छ ब |
| अः | ऐ | अं | ए |
| त स | ठ ल | ण ष | ट र |

**नक्षत्रचक्रम् ।**

| अ आ | इ | ई उ ऊ | ऋ ॠ ऌ ॡ | ए | ऐ | ओ औ | क | ख ग |
|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
| देवः | मानुषः | राक्षसः | मानुषः | देवः | मानुषः | देवः | देवः | राक्षसः |
| घ ङ | च | छ ज | झ ञ | ट ठ | ड | ढ ण | त थ द | ध |
| १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ |
| राक्षसः | मानुषः | मानुषः | देवः | राक्षसः | देवः | राक्षसः | देवः | राक्षसः |
| न प फ | ब | भ | म | य र | ल | व श | ष स ह | अं अः |
| १९ | २० | २१ | २२ | २३ | २४ | २५ | २६ | ल क्ष २७ |
| राक्षसः | मानुषः | मानुषः | देवः | राक्षसः | राक्षसः | मानुषः | मानुषः | देवः |

**ऋणिधनिचक्रम् ।**

| ६ | ६ | ६ | ० | ३ | ४ | ४ | ० | ० | ० | ३ |
|---|---|---|---|---|---|---|---|---|---|---|
| अ | इ | उ | ऋ | ऌ | ए | ऐ | ओ | औ | अं | अः |
| आ | ई | ऊ | ॠ | ॡ | | | | | | |
| क | ख | ग | घ | ङ | च | छ | ज | झ | ञ | ट |
| ठ | ड | ढ | ण | त | थ | द | ध | न | प | फ |
| ब | भ | म | य | र | ल | व | श | ष | स | ह |
| २ | २ | ५ | ० | ० | २ | १ | ० | ४ | ४ | १ |

देवताभेदे चक्रविचारस्यावश्यकत्वमाहवारा-
हीतन्त्रे यामलादौ च ।
"तारशुद्धिर्वैष्णवानां कोष्ठशुद्धिः शिवस्य च ।
राशिशुद्धिस्त्रैपुरे च गोपालेऽकडमः स्मृतः ॥
अकडमो वामने च गणेशे च तथैव च ।
कोष्ठचक्रं वराहस्य महालक्ष्म्याः कुलाकुलम्
॥
नामादिचक्रे सर्व्वेषां भूतचक्रे तथैव च ।
त्रैपुरं तारचक्रे तु शुद्धमन्त्रं जपेद्बुधः ॥"
तथा ।
"वैष्णवं राशिसंशुद्धं शैवञ्चाकडमं स्मृतम् ।
कालिकायाश्च तारायास्तारचक्रं शुभावहम् ॥
चण्डिकायास्तारकोष्ठे गोपालेऽकडमः स्मृतः
।
हरचक्रे सर्व्वमन्त्रं धनाधिक्ये न चाश्रयेत् ॥
ऋणाधिक्ये शुभं विद्यात् धनाधिक्ये च नो
विधिम् ।
दोषान् संशोध्य गृह्णीयान्मध्यदे शोद्भवस्य च
॥
मन्त्रस्त्वृणी शुभफलोऽप्यशुभो धनी च
तुल्यं यदा समफलः कथितो मुनीन्द्रैः ॥"
अन्यत्रापि ।
"शून्ये मृत्युमवाप्नोति धने च विफलं भवेत् ।
ऋणे च प्राप्तिमात्रेण सर्व्वसिद्धिस्तु जायते ॥"
अथ मन्त्राणां दश संस्काराः । गौतमीये ।
"जननं जीवनं पश्चात् ताडनं बोधनन्तथा ।
अथाभिषेको विमलीकरणाप्यायने पुनः ॥
तर्पणं दीपनं गुप्तिर्दशैता मन्त्रसंस्क्रियाः ।
स्वर्णादिपात्रे संलिख्य मातृकायन्त्रमुत्तमम् ।
काश्मीरचन्दनेनापि भस्मना वाथ सुव्रत ! ॥
काश्मीरं शक्तिसंस्कारे चन्दनं वैष्णवे मनौ ।
शैवे भस्म समाख्यातं मातृकायन्त्रलेखने ॥
मन्त्राणां मातृकायन्त्रादुद्धारो जननं स्मृतम् ।
पंक्तिक्रमेण विधिना मुनिभिस्तत्र निश्चितम् ॥
१ ॥
व्योमेन्दौ रसनार्णकर्णिकमचां द्वन्द्वैः स्फुरत्
केशरं
वर्गोल्लासिवसुच्छदं वसुमतीगेहेन संवेष्टितम् ।
आशास्वश्रिषु लान्तलाङ्गलियुजा क्षौणीपुरे-
णावृतं
यन्त्रं वर्णतनोः परं निगदितं सौभाग्यसम्पत्-
तन्त्रान्तरे ।
"मन्त्रस्य चामुकं वर्णमभिषिञ्चामि हृद्गतम्
।"
इति वचनात् प्रत्येकमभिषिञ्चेत् ।
"अश्वत्थपल्लवैः सिञ्चेत् मन्त्री
मन्त्रार्णसंख्यया ॥ ५ ॥
सञ्चिन्त्य मनसा मन्त्रं सुषुम्णामूलमध्यतः
।
ज्योतिर्मन्त्रेण विधिवत् दहेन्मलत्रयं यती ॥
तारं व्योमाग्निमनुयुक् दण्डी ज्योतिर्मनुर्मतः
॥"
तारं प्रणवः व्योम हकारः अग्नी रेफः मनु-
रौकारः दण्डी अनुस्वारः ॥ ६ ॥
"स्वर्णेन कुशतोयेन पुष्पतोयेन वा तथा ।
तेन मन्त्रेण विधिवदाप्यायनविधिः स्मृतः
॥ ७ ॥
मन्त्रेण वारिणा मन्त्रे तर्पणं तर्पणं मतम् ।
मधुना शक्तिमन्त्रेषु वैष्णवे चेन्दुमज्जलैः ॥
शैवे घृतेन दुग्धेन तर्पणं सम्यगीरितम् ॥"
अभिषेकेऽपि तथा ॥ ८ ॥
"तारमायारमायोगो मनोर्द्दीपनमुच्यते ॥ ९
॥
जप्यमानस्य मन्त्रस्य गोपनं त्वप्रकाशनम्
॥ १० ॥
संस्कारा दश संप्रोक्ताः सर्व्वतन्त्रेषु
गोपिताः ।
यान् कृत्वा सम्प्रदायेन मन्त्री
वाञ्छितमाप्नु-
यात् ।"
मलत्रयमिति आनव्यं मायिकं कार्म्मणञ्च ।
प्रपञ्चसारे ।
"मायिकं नाम योषोत्थं पौरुषं कार्म्मणं
मलम् ।
आनव्यं तद्द्वयं प्रोक्तं निषिद्धं तन्मलत्रयम्
॥"
न नवं अनवं तस्य भावः आनव्यं
वृद्धत्वमित्यर्थः ।
तारमायारमायोग इति । तारमायारमा-
बीजपुटितम् मन्त्रमष्टोत्तरशतं जपेत्
इत्यर्थः ।
तथा च विश्वसारे ।
पञ्चदेवतानामेक एको मन्त्रो लिखितः ।
एतासामन्यासाञ्चान्यमन्त्रा
ग्रन्थविस्तारभयान्न
लिखिताः ॥ कलावागमोक्तमन्त्रजपविधि-
र्यथा, --
"आगमोक्तविधानेन कलौ मन्त्रं जपेत् सुधीः
।
नहि देवाः प्रसीदन्ति कलौ चान्यविधानतः
॥"
तथा ।
"कृते श्रुत्युक्तमार्गः स्यात् त्रेतायां
स्मृतिसम्भवः ।
द्वापरे तु पुराणोक्तः कलावागमसम्भवः ॥
मन्त्राणां देवताः प्रोक्ता देवता गुरुरूपिणी ।
तेषां भिदा न कर्त्तव्या यदीच्छेच्छुभमात्मनः
॥"
पित्रादितो मन्त्रग्रहणनिषेधो यथा, --
"पितुर्मन्त्रं न गृह्णीयात् तथा मातामहस्य च ।
सोदरस्य कनिष्ठस्य वैरिपक्षाश्रितस्य च ॥
न पत्नीं दीक्षयेद्भर्त्ता न पिता दीक्षयेत् सुताम्
।
न पुत्रञ्च तथा भ्राता भ्रातरं न च दीक्षयेत् ॥
सिद्धमन्त्रो यदि पतिस्तदा पत्नीं स दीक्षयेत् ।
शक्तित्वेन वरारोहे ! न च सा कन्यकाभवेत्
॥"
तथा गणेशविमर्षिण्याम् ।
"यतेर्द्दीक्षा पितुर्द्दीक्षा दीक्षा च वनवासिनः ।
विविक्ताश्रमिणां दीक्षा न सा कल्याण-
दायिका ॥"
इत्यादिनिषेधवचनादेभ्यो मन्त्रं न गृह्णीयादि-
त्यर्थः । इति तन्त्रसारः ॥ (ज्वरादिनाशक-
मन्त्रो यथा, --
"वानराकृतिमालिख्य खटिकाभिः पुनः शृणु
।
गन्धपुष्पाक्षतैर्धूपैरर्च्चयेद्भिषजां वरः ॥
मन्त्रः ।
ॐ ह्रां ह्रीं श्रीं सुग्रीवाय महाबलपराक्रमाय
सूर्य्यपुत्राय अमिततेजसे ऐकाहिक-द्याहिक-
त्र्याहिक-चातुर्थिक-महाज्वर-भूतज्वर-भय-
ज्वर-शोकज्वर-क्रोधज्वर-वेलाज्वर-प्रभृति-
ज्वराणां दह दह हन हन पच पच अवतर

करम् ॥”
यन्त्रस्य दिक्षु वं विदिक्षु ठं लिखेत् । तथा च गौतमीये ।
“कादिमान्ताः पञ्चवर्गा दिक्षु पूर्ब्बादितो न्यसेत् ।
यादिवान्ताः शादिहान्ता लक्षमीशे प्रविन्यसेत् ॥
चतुरस्रं चतुर्द्वारं दिक्षु वं ठं विदिक्षु च ॥”
इति मातृकायन्त्रम् ॥
“प्रणवान्तरितान् कृत्वा मन्त्रवर्णान् जपेत् सुधीः ।
प्रत्येकं शतवारन्तु जीवनन्तदुदाहृतम् ॥ २ ॥
मन्त्रवर्णान् समालिख्य ताडयेच्चन्दनाम्भसा ।
प्रत्येकं वायुबीजेन पूर्ब्बवत्ताडनं मतम् ॥ ३ ॥
विलिख्य मन्त्रवर्णांस्तु प्रसूनैः करवीरजैः ।
तन्मन्त्रवर्णसंख्याकैर्हन्याद्रेफेण बोधनम् ॥” ४ ॥
“तत्तन्मन्त्रोक्तविधिना अभिषेकः प्रकीर्त्तितः ।”
“तारमायारमाबीजपुटितेन मनुं जपेत् ।
शतमष्टोत्तरञ्चैव दीपयेत् साधकोत्तमः ॥” * ॥
अथ दुर्गामन्त्रः ।
“अथ दुर्गामनुं वक्ष्ये दृष्टादृष्टफलप्रदम् ।
मायाद्रिः कर्णबिन्द्वाढ्यो भूयोऽसौ सर्गवान् भवेत् ॥
पञ्चान्तकः प्रतिष्ठावान् मारुतो भौतिकासनः ।
तारादिहृदयान्तोऽयं मन्त्रो वस्वक्षरात्मकः ॥”
अद्रिर्दकारः । कर्ण उकारः । पञ्चान्तको गकारः । प्रतिष्ठा आकारः । मारुतो यकारः ।
भौतिक ऐकारः । ॐ ह्रीं दुं दुर्गायै नमः ॥ * ॥
अथ विष्णुमन्त्रः ।
“तारं नमःपदं ब्रूयात् नरौ दीर्घसमन्वितौ ।
पवनो णायमन्त्रोऽयं प्रोक्तो वस्वक्षरः परः ॥”
ॐ नमो नारायणाय ॥ * ॥ अथ शिवमन्त्रः ।
“सान्तमौकारसंयुक्तं बिन्दुभूषितमस्तकम् ।
प्रासादाख्यो मनुः प्रोक्तो भजतां कामदो मनुः ॥”
हौँ ॥ * ॥ अथ गणेशमन्त्रः ।
“पञ्चान्तकं शशिधरं बीजं गणपतेर्व्विदुः ॥”
पञ्चान्तको गकारः । गँ ॥ * ॥ अथ सूर्य्यमन्त्रः ।
“तारो घृणिर्भृगुः पश्चाद्वामकर्णविभूषितः ।
वह्न्यासनो मरुत्शेषः सनेत्रोऽद्रिस्त्यपश्चिमः ॥
अष्टाक्षरो मनुः प्रोक्तो भानोरभिमतः परः ॥”
ॐ घृणि सूर्य्य आदित्य ॥ * ॥
अवतर किलिकिलि वानरराजज्वराणां बन्ध बन्ध ह्लां ह्लीं ह्लूं फट् स्वाहा ।” इति हारीते चिकित्सितस्थाने द्वितीयेऽध्याये ॥)

**मन्त्रकृत्,** पुं, (मन्त्रं कृतवान् । मन्त्र + कृ + क्विप् । तुगागमश्च ।) मन्त्री । मन्त्रणाकारकः । इति सिद्धान्तकौमुदी ॥ (दौत्यकारी । यथा, श्रीमद्भागवते । ३ । १ । २ ।
“यद्वा अयं मन्त्रकृद्वो भगवानखिलेश्वरः ।
पौरवेन्द्रगृहं हित्वा प्रविवेशात्मसात्कृतम् ॥”
“मन्त्रकृत् दौत्यकर्त्ता सन् ।” इति तट्टीकायां श्रीधरस्वामी ॥ * ॥ त्रि, मन्त्रप्रयोगकारी । यथा, रघुवंशे । १ । ६१ ।
“तव मन्त्रकृतो मन्त्रैर्दूरात् प्रशमितारिभिः ।
प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥”
“मन्त्रकृतः मन्त्राणां स्रष्टुः प्रयोक्तुर्वा ।” इति तट्टीकायां मल्लिनाथः ॥)

**मन्त्रगण्डकः,** पुं, (मन्त्रप्रधानो गण्डकः मध्य-पदलोपी कर्म्मधारयः ।) विद्या । इति हारावली । १९६ ॥

**मन्त्रगूढः**, पुं, (मन्त्रे मन्त्रणाविषये गूढः गुप्तः ।)

चरः । इति शब्दरत्नावली ॥

**मन्त्रगृहं**, क्ली, (मन्त्रस्य मन्त्रणायाः गृहम् ।)

मन्त्रणागारम् । (यथा, महाभारते । १५ ।
५ । २२ ।
"सुसंवृत्तं मन्त्रगृहं स्थलं चारुह्य मन्त्रयेः ।
अरण्ये निःशलाके वा न च रात्रौ कथञ्चन
॥")

**मन्त्रजा**, स्त्री, (मन्त्रात् जायते इति । मन्त्र +

जन् + डः । टाप् ।) मन्त्रशक्तिः । इति
पुराणम् ॥

**मन्त्रजिह्वः**, पुं, (मन्त्र एव जिह्वा यस्य ।) अग्निः ।

इति हेमचन्द्रः । ४ । १६५ ॥ (यथा, माघः ।
२ । १०७ ।
"अमृतं नाम यत् सन्तो मन्त्रजिह्वेषु जुह्वति ।
शोभैव मन्दरक्षुब्धक्षुभिताम्भोधिवर्ण्णा ॥")

**मन्त्रज्ञः**, पुं, (मन्त्रं जानातीति । मन्त्र + ज्ञा +

कः ।) चरः । इति हलायुधः ॥ मन्त्रज्ञातरि,
त्रि । (यथा, मनुसंहितायाम् । ८ । ४ ।
"व्यवहारान् दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः ।
मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीतः प्रविशेत् सभाम्
॥")

**मन्त्रणं**, क्ली, (मन्त्र + ल्युट् ।) मन्त्रणा । मन्त्र-

धातोर्भावे अनट्प्रत्ययेन निष्पन्नम् ॥ (यथा,
मार्कण्डेयपुराणे । ५० । ८७ ।
"अवस्करे मन्त्रणञ्च यक्षैतदुपकृत्तव ॥")

**मन्त्रणा**, स्त्री, (मन्त्र + भावे युच् । टाप् ।)

रहसि कर्त्तव्यावधारणम् । इति मन्त्रशब्द-
टीकायां भरतः ॥ मन्त्रः । यथा, --
"वादी मूकति रङ्कति क्षितिपतिर्वैश्वानरः
शीतति
क्रोधी शाम्यति दुर्जनः सुजनति क्षिप्रानुगः
खञ्जति ।
गर्व्वी खर्व्वति सर्व्वविच्च जडति त्वन्मन्त्रणा-
यन्त्रितः
श्रीनित्ये वगलामुखि ! प्रतिदिनं कल्याणि
तुभ्यं

अरण्ये निःशलाके वा न यामिन्यां कदाचन ।
शिशून् शाखामृगान् पण्डान् शुकान् वैशा-
रिकांस्तथा ॥
वर्जयेन्मन्त्रगेहेषु मनुष्यानुद्धतांस्तथा ।
दूषणं मन्त्रभेदेषु नृपाणां यत्र जायते ॥
न तत् सम्यक् समाधातुं दक्षैर्नृपशतैरपि ॥"
इति कालिकापुराणे ८५ अध्यायः ॥
अथ मन्त्रनिर्णयः ।
"मन्त्रमूलं यतो राज्यं ततो मन्त्रं सुरक्षितम् ।
कुर्य्याद्राजा सदा मन्त्रान्
कर्म्मणामाफलोदयात् ॥
अर्थानर्थौ हि यत्रोभौ संशयश्च परीक्ष्यते ।
स मन्त्र इति विज्ञेयः शेषाश्च खलु विभ्रमाः ॥
एकमेव विषं हन्ति शस्त्रेणैकश्च वध्यते ।
सराष्ट्रं सम्पदं हन्ति राजानं मन्त्रविप्लवः ॥
करिष्यन् न प्रभाषेत कृतान्येव तु दर्शयेत् ।
धर्म्मार्थकामकार्य्याणि कृतो मन्त्रो न भिद्यते
॥
गिरिपृष्ठमुपारुह्य प्रासादं वा रहोगतः ।
स्वपथे निःशलाके वा तत्र मन्त्रो विधीयते ॥
तत्र साम प्रयोक्तव्यं कार्य्येषु गुणवत्स्वपि ।
दानं लुब्धेऽपि भेदश्च शङ्कितेष्वपि निश्चयः ॥
जडमूकान्धबधिरान् तिर्य्यग्योनीन् वयोऽधि-
कान् ।
स्त्रीम्लेच्छव्याधितव्यङ्गान् मन्त्रकाले
निषेधयेत् ।
इति सम्पततः प्रोक्तो राजनीतिरियं मया ॥
यत्त्रिवर्गाविरुद्धं स्याद्राजनीतिस्तदुच्यते ॥"
इति युक्तिकल्पतरौ नीतियुक्तिः ॥

**मन्त्रतः**, [स्] व्य, (मन्त्रादिति । मन्त्र +

"पञ्चम्यास्तसिल् ।" ५ । ३ । ७ । इति
पञ्चमी-
स्थाने तसिल् ।) मन्त्रात् । इति सिद्धान्त-
कौमुदी ॥

**मन्त्रदः**, पुं, (मन्त्रं ददातीति । मन्त्र + दा + कः ।)

शिष्यकर्णे तदिष्टदेवमन्त्रप्रदानकर्त्ता । मन्त्र-
दातृगुरुः । यथा, --
"परापरगुरूणाञ्च निर्णयं शृणु पार्व्वति ! ।
आदौ सर्व्वत्र देवेशि ! मन्त्रदः परमो गुरुः ।

अन्यो वन्द्यो गुरुरयमन्यश्चारोपितोगुरुः
॥
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥
अदीक्षितस्य मूर्खस्य निष्कृतिर्नास्ति
निश्चितम् ।
सर्व्वकर्म्मस्वनर्हस्य नरके तत्पशोः
स्थितिः ॥
जन्मदातान्नदाता वा मातान्ये गुरवस्तथा ।
पारं कर्त्तुं न शक्तास्ते घोरे संसारसागरे ॥
विद्यामन्त्रज्ञानदाता निपुणः पारकर्म्मणि ।
न शक्तः शिष्यमुद्धर्त्तुमीश्वरश्चेश्वरोऽपरः
॥
गुरुर्विष्णुर्गुरुर्ब्रह्मा गुरुर्देवो महेश्वरः ।
गुरुर्धर्म्मो गुरुः शेषः सर्व्वात्मा निर्गुणो गुरुः
॥
सर्व्वतीर्थाश्रमश्चैव सर्व्वदेवाश्रयो गुरुः ।
सर्व्ववेदस्वरूपश्च गुरुरूपी हरिः स्वयम् ॥
अभीष्टदेवे रुष्टे च गुरुः शक्तो हि रक्षितुम् ।
गुरौ रुष्टेऽभीष्टदेवो नहि शक्तश्च रक्षितुम् ॥
सर्व्वे ग्रहाश्च यं रुष्टा यं रुष्टा देवब्राह्मणाः ।
तमेव रुष्टो भवति गुरुरेव हि दैवतः ॥
न गुरोश्च प्रियश्चात्मा न गुरोश्च प्रियः
सुतः ।
धनं प्रियं न च गुरोर्न च भार्य्या प्रिया तथा
॥
न गुरोश्च परो धर्म्मो न गुरोश्च परन्तपः ।
न गुरोश्च परं सत्यं न पुण्यञ्च गुरोः परम् ॥
गुरोः परो न शास्ता च नहि बन्धुर्गुरोः परः
।
देवो राजा च शास्ता च शिष्याणाञ्च सदा
गुरुः ॥
यावत् शक्तो दातुमन्नं तावत् शास्ता
तदन्नदः ।
गुरुः शास्ता च शिष्याणां प्रति जन्मनि
जन्मनि ॥
मन्त्रो विद्यागुरुर्देवः सर्व्वलब्धो यथा पतिः
।
प्रतिजन्मनिबन्धेन सर्व्वेषामुपरि स्थिताः ॥
पिता गुरुश्च वन्द्यश्च यत्र जन्मनि जन्मदः
।

नमः ॥”
इति तन्त्रसारे वगलास्तोत्रम् ॥ * ॥
मन्त्रणायां वर्णनीयानि यथा, --
“मन्त्रे पञ्चाङ्गताशक्तिषाड्गुण्योपायसिद्धयः।
उदयाश्चिन्तनीयाश्च स्थैर्य्योन्नत्यादिसूक्तयः ॥”
इति कविकल्पलता ॥ * ॥
व्यक्तित्रयादिकृतमन्त्रणायां दोषो यथा, --
“षट्कर्णो भिद्यते मन्त्रश्चतुष्कर्णश्च धार्य्यते ।
द्विकर्णस्य तु मन्त्रस्य ब्रह्माप्येको न बुध्यते ॥”
इति गारुडे ११४ अध्यायः ॥
राज्ञा विद्यादिगुणयुक्तविप्रा मन्त्रिणः कार्य्याः ।
यथा, --
“मन्त्रिणस्तु नृपः कुर्य्यात् विप्रान् विद्याविशा-रदान् ।
विशुद्धांश्च कुलीनांश्च धर्म्मार्थकुशलानृजून् ॥
मन्त्रयेत्तैः समं काले नात्यर्थं बहुभिश्चरेत् ।
एकैकेनैव कर्त्तव्यं मन्त्रस्य तु विनिश्चयम् ॥
व्यस्तैश्चैव समस्तैश्च वान्यस्य व्यपदेशतः ।
स्वयं वृत्तं मन्त्रगृहं स्थूल आरुह्य मन्त्रयेत् ॥
परापरगुरुस्त्वं हि परमेष्ठी त्वहं गुरुः ॥”
इति बृहन्नीलतन्त्रे २ पटलः ॥ * ॥
तत्पित्रादीनामपि परमगुरुत्वादिर्यथा, --
“मानवस्य महेशानि ! सङ्क्षेपान्निगदामि ते ।
गुरुः परमगुरुश्चैव परापरगुरुस्तथा ।
स्वगुरुः परमेशानि ! साक्षाद्ब्रह्म न संशयः ॥
तत्पिता परमगुरुः स्वयं विष्णुः क्षितौ सदा ।
तत्पिता परापरगुरुर्म्महेश्वरसमः सदा ॥”
इति शाक्तानन्दतरङ्गिणीधृतमहिषमर्द्दिनी-तन्त्रम् ॥

**मन्त्रदाता**, [ऋ] त्रि, (मन्त्रं ददातीति । मन्त्र + दा + तृच् ।) मन्त्रदानकर्त्ता । गुरुः । यथा, --
“सर्व्वेषाञ्च गुरूणाञ्च जन्मदाता परो गुरुः ।
पितुः शतगुणैर्माता पूज्या बन्द्या गरीयसी ॥
विद्यादाता मन्त्रदाता ज्ञानदो हरिभक्तिदः ।
पूज्यो वन्द्यश्च सेव्यश्च मातुः शतगुणैर्गुरुः ॥
मन्त्रमुद्गीरणेनैव गुरुरित्युच्यते बुधैः ।
गुरवोऽन्ये तथा माता गुरुश्च प्रतिजन्मनि ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे शचीकृतगुरु-स्तोत्रकथनं नाम ५९ अध्यायः ॥ अपि च ।
“मान्यः पूज्यश्च सर्व्वेभ्यः सर्व्वेषां जनको भवेत् ।
अहो यस्य प्रसादेन सर्व्वान् पश्यति मानवः ॥
जनको जन्मदाता च रक्षणाच्च पिता नृणाम् ।
ततो विस्तीर्णकरणात् कलया स प्रजापतिः ॥
पितुः शतगुणैर्माता पोषणाद्गर्भधारणात् ।
वन्द्या पूज्या च मान्या च प्रसूरूपा वसुन्धरा ॥
मातुः शतगुणैर्वन्द्यः पूज्यो मान्योऽन्नदायकः ।
यद्विना नश्वरो देहो विष्णुश्च कलयान्नदः ॥
अन्नदातुः शतगुणोऽभीष्टदेवः परः स्मृतः ।
गुरुस्तस्माच्छतगुणो विद्यामन्त्रप्रदायकः ॥
अज्ञानतिमिराच्छन्नं ज्ञानदीपेन चक्षुषा ।
यः सर्व्वार्थं दर्शयति तत्परः कोऽपि बान्धवः ॥
गुरुदत्तेन मन्त्रेण तपसेष्टसुखं लभेत् ।
सर्व्वज्ञत्वं सर्व्वसिद्धिं तत्परः कोऽपि बान्धवः ॥
सर्व्वं जयति सर्व्वत्र विद्यया गुरुदत्तया ।
तस्मात् पूज्यो हि जगति को वा बन्धुस्ततो-ऽधिकः ॥
विद्यान्धो वा धनान्धो वा यो मूढो न भजेद्-गुरुम् ।
ब्रह्महत्यादिभिः पापैः स लिप्तो नात्र संशयः ॥

दरिद्रं पतितं क्षुद्रं नर-बुद्‌ध्याचरेद्‌गुरुम्
।
सोऽशुचिस्तीर्थस्नातोऽपि नाधिकारी च
कर्म्मसु ॥
पितरं मातरं भार्य्यां गुरुपत्नीं गुरुं परम्
।
यो न पुष्णाति कापट्यात् स
महापातकी
शिव ! ॥
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुरेव परं ब्रह्म गुरुर्भास्कररूपधृक् ॥
गुरुश्चन्द्रस्तथेन्द्रश्च वायुश्च
वरुणोऽनलः ।
सर्व्वरूपो हि भगवान् परमात्मा स्वयं
गुरुः ॥
नास्ति वेदात् परं शास्त्रं नहि कृष्णात्
परः
सुरः ।
नास्ति गङ्गासमं तीर्थं न पुष्पं
तुलसीपरम् ॥
नास्ति क्षमावती भूमेः पुत्त्रान्नास्ति परः
प्रियः ।
न च दैवात् परा शक्तिर्व्रतं नैकादशीं
विना ॥
शालग्रामात्परो यन्त्रो न क्षेत्रं भारतात्
परम् ।
परं पुण्यस्थलानाञ्च पुण्यं वृन्दावनं
यथा ॥
मोक्षदानां यथा काशी वैष्णवानां यथा
शिवः ।
न पार्व्वतीपरा साध्वी न गणेशात् परो
वशी ॥
न च विद्यासमो बन्धुर्नास्ति
कश्चिद्‌गुरोः परः ।
विद्यादातुः पुत्त्रदारौ तत्समौ नात्र
संशयः ॥”
इति ब्रह्मवैवर्त्तपुराणे गणपतिखण्डे ४४
अध्यायः ॥

**मन्त्रदीधितिः**, पुं, (मन्त्रेण दीधितिर्दीप्तिर्यस्य ।)

बह्निः । इति त्रिकाण्डशेषः ॥

मन्त्रितं प्रोक्षणीतोयैः शान्तिकुम्भजलैस्तथा ।
मूलमन्त्रेणाष्टशतं मन्त्रितैरभिषेचयेत् ॥”)

**मन्त्री**, [न्] पुं, (मन्त्रो गुप्तभाषणमस्यास्ति ।

मन्त्र + इनिः । यद्वा, मन्त्रयते इति । मन्त्र +
“नन्दिग्रहीति ।” ३ । १ । १३४ । इति णिनिः ।)
मन्त्रजातकर्त्तव्यनिश्चयकर्त्ता । तत्पर्य्यायः ।
धीसचिवः २ अमात्यः ३ । इत्यमरः । २ । ८ ।
४ ॥
सचिवः ४ धीसखः ५ सामवायिकः ६ । इति
हेमचन्द्रः । ३ । ३८३ ॥ तस्य लक्षणं यथा, --
“मन्त्री भक्तः शुचिः शूरोऽनुकृतो बुद्धिमान्
क्षमी ।
आन्वीक्षिक्यादिकुशलः परिच्छेदी सुदेशजः ॥”
इति कविकल्पलता ॥
“बहुभिर्म्मन्त्रयेत् कामं राजा मन्त्रं पृथक्
पृथक् ।
मन्त्रिणामपि नो कुर्य्यान्मन्त्री मन्त्रप्रकाशनम् ॥
न क्वचित् कस्य विश्वासो भवतीह सदा नृणाम्
।
निश्चयश्च सदा मन्त्रे कार्य्य एकेन सूरिणा ॥
भवेद्वा निश्वयावाप्तिः परबुद्‌ध्यनुजीवनात् ।
एकस्यैव महीभर्त्तुर्भूयः कार्य्यो विनिश्चयः ॥”
इति मत्स्यपुराणे १८९ अध्यायः ॥

**मन्थ**, कुन्थे । गाहे । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) मन्थति । कुन्थः कैश्चिन्न
मन्यते । इति दुर्गादासः ॥

**मन्थ**, ग गाहे । इति कविकल्पद्रुमः ॥ (क्र्या०-पर०-

सक०-सेट् ।) गाहो विलोडनम् । ग, मथाति
दधि वल्लवी । रथं ममन्थ सहयम् । इति दुर्गा-
दासः ॥

**मन्थः**, पुं, (मथ्यतेऽनेन । मन्थ + करणे घञ् ।)

मन्थदण्डकः । इत्यमरः । २ । ९ । ७४ ॥
(यथा,
महाभारते । १२ । ३४३ । ११ ।
“आमथ्य मतिमन्थेन ज्ञानोदधिमनुत्तमम् ।
नवनीतं तथा दध्नो मलयाच्चन्दनं यथा ॥”
मथ्यते विलोड्यते इति । मन्थ + कर्म्मणि घञ्
।)

**मन्थजं**, क्ली, (मन्थेन मन्थनेन जायते इति ।

जन् + डः ।) नवनीतम् । इति रत्नमाला ॥
(विवरणमस्य नवनीतशब्दे ज्ञातव्यम् ॥)

**मन्थदण्डकः**, पुं, (मन्थाय मन्थनाय यो दण्डः ।

ततः स्वार्थे कन् ।) मन्थानदण्डः । छाँचुनी
इति
घोलमौनी इति खडेन् इति च भाषा ॥ तत्-
पर्य्यायः । वैशाखः २ मन्थः ३ मन्थानः ४
मन्थाः ५ । इत्यमरः । २ । ९ । ७४ ॥ कर-
हर्षकः ६ मन्थनः ७ भक्ताटः ८ । इति शब्द-
रत्नावली ॥ तक्राटः ९ । इति जटाधरः ॥

**मन्थनं**, क्ली, (मन्थ + ल्युट् ।) विलोडनम् । कुन्थ-

नम् । इति मन्थधातोर्भावि अनट्प्रत्ययेन
निष्पन्नम् ॥ (यथा, महाभारते । १ । १८ ।
३० ।
“चिरारब्धमिदञ्चापि सागरस्यापि मन्थ-
नम् ॥”)

**मन्थनः**, पुं, (मथ्नात्यनेनेति । मन्थ + करणे ल्युट् ।

यद्वा, मथ्नातीति । मन्थ + ल्युः ।)
मन्थानदण्डः ।
इति शब्दरत्नावली ॥ (यथा, हरिवंशे । ८२ ।
३६ ।
“गोभिश्च समकीर्णासु व्रजनिर्य्याणभूमिषु ।
मन्थनावर्त्तपूर्णेषु गर्गरेषु नदत्सु च ॥”)

**मन्थनघटी**, स्त्री, (अल्पो घटः । अल्पार्थे

ङीष् । मन्थनार्था मन्थनस्य वा घटी ।) दधि-
मन्थनपात्रम् । यथा, --
“कलसी मन्थनघटी मन्थनी चापि गर्गरी ॥”
इति जटाधरः ॥

**मन्थरं**, क्ली, (मन्थति क्लेशयतीति । मन्थ + बाहुल-

कात् अरन् ।) कुसुम्भी । इति मेदिनी । रे,
१९८ ॥

**मन्थरः**, पुं, (मन्थ + बाहुलकात् अरन् ।) कोषः ॥

फलम् । वाधः । मन्थानः । इति मेदिनी । रे,
१९८ ॥ सूचकः । इति विश्वः ॥ मन्दगामि-
योद्धा । इति क्षत्रियवर्गे अमरः । २ । ८ ।
७२ ।

**मन्त्रपूतः**, त्रि, (मन्त्रेण पूतः ।) मन्त्रेण पवित्री-
कृतः । यथा, मार्कण्डेयपुराणे
देवीमाहात्म्ये ।
८९ । ३६ ।
"ब्रह्माणीमन्त्रपूतेन तोयेनान्ये
निराकृताः ॥"

**मन्त्रपूतात्मा**, [न्] पुं, (मन्त्रेण पूतः आत्मा
यस्य ।) गरुडः । इति धरणिः ॥

**मन्त्रवित्**, [द्] (पुं, मन्त्रं पञ्चाङ्गमन्त्रणां वेत्तीति ।
विद् + क्विप् ।) चरः । इति हेमचन्द्रः ।
३ ।
३९७ ॥ (यथा, महाभारते । ५ ।
१९३ । ५ ।
"एतत् श्रुत्वा द्रुपदो यज्ञसेनः
सर्व्वं तत्त्वं मन्त्रविद्भ्यो निवेद्य ।
मन्त्रं राजा मन्त्रयामास राजन् !
यथायुक्तं रक्षणे वै प्रजानाम् ॥")
मन्त्रज्ञातरि, त्रि ॥ (यथा,
छान्दोग्योपनिषदि ।
७ । १ । ३ ।
"सोऽहं भगवतो मन्त्रविदेवास्मि ॥"
मन्त्रं वेदार्थं वेत्तीति । विद् + क्विप् ।
वेदार्थ-
वित् । यथा, मनौ । ३ । १३१ ।
"सहस्रं हि सहस्राणामनृचां यत्र भुञ्जते
।
एकस्तान् मन्त्रवित् प्रीतः सर्वानर्हति
धर्मतः ॥")

**मन्त्रस्पृक्**, [श्] त्रि, (मन्त्रेण स्पृशतीति ।
"स्पृशोऽनुदके क्विन् ।" ३ । २ । ५८
। इति क्विन् ।)
मन्त्रकरणकस्पर्शकर्त्ता । इति
सिद्धान्तकौमुदी ॥

**मन्त्रितः**, त्रि, मन्त्रेण संस्कृतः । अभिमन्त्रितः ।
मन्त्रोऽस्य जातः । इति मन्त्रिधातोः
क्तप्रत्ययेन
मन्त्रशब्दात् इतप्रत्ययेन च निष्पन्नः ॥
(यथा,
निबन्धे ।

साक्तवः । (मथ्नाति स्वकरेण त्रिभुवनं पीडय-
तीति । मन्थ + अच् ।) दिवाकरः । इति
मेदिनी । थे, ११ ॥ साक्तवो यथा, --
"सक्तुभिः सर्पिषाभ्यक्तैः शीतवारिपरिप्लुतैः ।
नात्यच्छो नातिसान्द्रश्च मन्थ इत्यभिधीयते ॥"
इति राजनिर्घण्टः ॥
पेयविशेषः । तस्य विधिर्यथा, --
"जले चतुष्पले शीते क्षुण्णं द्रव्यं पलं क्षिपेत् ।
मृत्पात्रे मन्थयेत् सम्यक् तस्माच्च द्विपलं
पिबेत् ॥"
क्षुण्णं चूर्णीकृतम् । मन्थयेत् मृद्नीयात् । इति
भावप्रकाशः ॥ (मन्थ + भावे घञ् ।) मारणम् ।
इति त्रिकाण्डशेषः ॥ नेत्रमलम् । इति धरणिः ॥
नेत्रामयः । इति विश्वः ॥ अंशुः । इति शब्द-
रत्नावली ॥ कुन्थनम् । विलोडनम् । इति
मन्थधात्वर्थदर्शनात् ॥ (यथा, रघौ । १० । ३ ।
"अतिष्ठत् प्रत्ययापेक्षसन्ततिः स चिरं नृपः ।
प्राङ्मन्थादनभिव्यक्तरत्नोत्पत्तिरिवार्णवः ॥")

कोपः । इत्यजयः ॥

**मन्थरः**, त्रि, (मन्थति पादाविति । मथि +
अरन् ।) मन्दः । (यथा, साहित्यदर्पणे । ३ ।
६८
"दत्ते सालसमन्थरं भुवि पदं निर्याति नान्तः-
पुरात् ॥")
पृथुः । वक्रः । इति मेदिनी । रे, १९८ ॥
(निश्चलः । यथा, आर्य्यासप्तशत्याम् । ४८८
।
"राज्याभिषेकसलिलक्षालितमौलेः कथासु
कृष्णस्य ।
गर्वभरमन्थराक्षी पश्यति पदपङ्कजं राधा ॥")
जडः । इति शब्दरत्नावली ॥ नीचः । इति
हेमचन्द्रः । ६ । ६५ ॥ (मन्दगामी । इति
हेमचन्द्रः । ३ । १५९ ॥)

**मन्थरा**, स्त्री, (मन्थर + स्त्रियां टाप् ।) केकय्या
दासी । यथा, --
"रामाभिषेके विघ्नार्थं यतस्व ब्रह्मवाक्यतः ।
मन्थरां प्रविशस्वादौ कैकेयीञ्च ततः परम् ॥"
इत्यध्यात्मरामायणे अयोध्याकाण्डे २
अध्यायः ॥

**मन्थरुः**, पुं, (मन्थ + बाहुलकात् अरुः ।)
चामरवातः । तत्पर्य्यायः । कुठेरुः २ । इति
त्रिकाण्डशेषः ॥

**मन्थशैलः**, पुं, (मन्थाय समुद्रमन्थनाय कल्पितः शैलः ।) मन्दरपर्व्वतः । इति जटाधरः ॥

**मन्था**, स्त्री, (मथ्यते इति । मन्थ + घञ् । ततः स्त्रियां टाप् ।) मेथिका । इति राजनिर्घण्टः ॥ (यथा, भावप्रकाशे पूर्ब्बखण्डे ।
"वल्लरी चन्द्रिका मन्था मित्रपुष्पा च कैरती ॥")

**मन्थाः**, [थिन्] पुं, (मन्थ + "मन्थः ।" उणा० ४ । ११ । इति इनिः । स च कित् ।) मन्थान-
दण्डः । इत्यमरः । २ । ९ । ७४ ॥ (यथा, किरातार्ज्जुनीये । ४ । १६ ।
"मुहुः प्रणुन्नेषु मथां विवर्त्तनै-
र्नदत्सु कुम्भेषु मृदङ्गमन्थरम् ॥")

**मन्थानः**, पुं, (मथ्यते अनेनेति । मन्थ + बाहुलकात् आनच् ।) मन्थदण्डकः । इत्यमरः । २ । ९ । ७४ ॥ (यथा, देवीभागवते । १ । १० । २५ ।
"मन्थानारणिसंयोगान्मन्थनाच्च समुद्भवः ।
पावकस्य यथा तद्वत् कथं मे स्यात् सुतोद्भवः ॥")
आरग्वधः ॥ इति राजनिर्घण्टः ॥ (समुद्र-
मन्थनदण्डकत्वादस्य तथात्वम् ।
मन्दरपर्व्वतः ।
यथा, रामायणे । १ । ४५ । २७ ।
"प्रविवेशाथ पातालं मन्थानः पर्व्वतोत्तमः ॥"
महादेवः । यथा, महाभारते । १३ । १७ । १२८ ।
"मन्थानो बहुलो वायुः सकलः सर्व्वलोचनः ॥")

**मन्थानकः**, पुं, (मन्थान इवेति । "इवे प्रति-
कृतौ ।" ५ । ३ । ९६ । इति कन् ।) तृणभेदः ।
तत्पर्य्यायः । हरितः २ दृढमूलः ३ तृणाङ्-
घ्रिपः ४ । अस्य गुणाः । स्निग्धत्वम् ।
दोग्ध्रीणां
प्रियत्वम् । मधुरत्वम् । बहुवीर्य्यदत्वञ्च । इति राजनिर्घण्टः ॥

**मन्थिनी**, स्त्री, (मन्थो मन्थनमस्त्यस्याम् । मन्थ +

"मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्य-
ताम् ॥")
स्वैरः । अभाग्यः । रोगी । अल्पः । इति मेदिनी । दे, १३ ॥ (यथा, मेघदूते । १ । ४ ।
"मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वाम् ॥"
अलसः । यथा, श्रीमद्भागवते । १ । १ । १० ।
"प्रायेणाल्पायुषः सभ्य ! कलावस्मिन् युगे जनाः ।
मन्दाः सुमन्दमतयो मन्दभाग्या ह्युपद्रुताः ॥"
"मन्दाः अलसाः ।" इति तट्टीकायां श्रीधर-
स्वामी ॥)
मदरतः । खलः । इति हेमचन्द्रः । ३ । ४८ ॥

**मन्दगः**, त्रि, (मन्दं अल्पं गच्छतीति । गम् + डः ।) मृदुगामी । यथा, --
"मन्दगाश्च शनिज्ञानिवृषहंसगजस्त्रियः ॥"
इति कविकल्पलता ॥
(पुं, शाकद्वीपस्थजनपदभेदः । यथा, महा-
भारते । ६ । ११ । ३३ ।
"तत्र पुण्या जनपदाश्चत्वारो लोकसम्मताः ।
मगाश्च मशकाश्चैव मानसा मन्दगास्तथा ॥")

**मन्दगामी**, [न्] त्रि, (मन्दं गच्छतीति । गम् + णिनिः ।) मृदुगमनशीलः । तत्पर्य्यायः । मन्थरः २ । इत्यमरः । २ । ८ । ७२ ॥ स्वैर-
गामी ३ मन्दः ४ । इति शब्दरत्नावली ॥

**मन्दजननी**, स्त्री, (मन्दस्य शनेर्ज्जननी माता ।) शनैश्चरमाता । सूर्य्यपत्नी । इति त्रिकाण्डशेषः ॥

**मन्दटः**, पुं, (मन्दमटतीति । अट् + अच् । शक-

पर्व्वतविशेषः । यथा, मात्स्ये । १२१ । ६१ ।
"मन्दरः सैव विज्ञेयः सर्व्वधातुमयः शुभः ।
मन्द इत्येष यो धातुरपामर्थे प्रकाशकः ॥
अपां विदारणात् चैव मन्दरः स निगद्यते ॥")

**मन्दरः**, त्रि, (मन्द् + अरः ।) बहलः । मन्दः । इति मेदिनी । रे, १९६ ॥

**मन्दसानः**, पुं, (मन्दते स्तुत्यादिकं प्राप्नोतीति । मन्द + "ऋञ्जिवृधिमन्दिसहिभ्यः कित् ।" उणा०
२ । ८७ । इति असानच् ।) अग्निः । प्राणः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ निद्रा । इत्युणादिकोषः ॥ (त्रि, मोदमानः । यथा, ऋग्वेदे । १ । १०० । १४ ।
"मन्दसानो मरुत्वान् ।"
"मन्दसानो मोदमानः सन् ॥" इति तद्भाष्ये सायनः ॥)

**मन्दसानुः**, पुं, (मन्दं मन्दतां सनोति ददातीति । मन्द + सन् + बाहुलकात् उण् ।) स्वप्नः । जीवः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**मन्दा**, स्त्री, (मन्द + स्त्रियां टाप् ।) संक्रान्ति-
विशेषः । सा उत्तरफल्गुन्युत्तराषाढोत्तरभाद्र-
पदारोहिणीनक्षत्रेषु रविसंक्रान्तिश्चेत्तदा भवति । तस्याः सन्निहितदण्डत्रयस्य पुण्य-
तमत्वम् । यथा, --
"मन्दा मन्दाकिनी ध्मांक्षी घोरा चैव महो-
दरी ।
राक्षसी मिश्रिता प्रोक्ता संक्रान्तिः सप्तधा नृप ! ॥
मन्दा ध्रुवेषु विज्ञेया मृदौ मन्दाकिनी तथा ।
क्षिप्रे ध्मांक्षीं विजानीयादुग्रे घोरा प्रकीर्त्तिता ॥
चरैर्म्महोदरी ज्ञेया क्रूरैरृक्षैस्तु राक्षसी ।
मिश्रिता चैव विज्ञेया मिश्रैरृक्षैस्तु संक्रमः ॥"
इत्येतैर्द्वादशस्वेव संक्रान्तिषु ध्रुवादिनक्षत्र-
योगात् मन्दादिरूपतया सप्तधा भिन्नासु त्रिचतुःपञ्चसप्ताष्टनवद्वादशएव च । क्रमेण घटिका ह्येतास्तत् पुण्यं पारमार्थिकमिति देवीपुराण एव त्रिचतुरादिघटिकानां पुण्यत्व-

इनिः । ङीप् ।) दधिमन्थनपात्रम् ।
तत्पर्य्यायः ।
गर्गरी २ कलसी ३ । इति हेमचन्द्रः । ४ ।
८८ ॥

**मन्थोदधिः**, पुं, (मथ्यतेऽसौ । मन्थ + कर्म्मणि

घञ् । मन्थश्चासौ उदधिश्चेति । मन्थाय
उदधि-
रिति वा ।) क्षीरसमुद्रः । इति केचित् ॥

**मन्दः**, पुं, (मन्दते इति । मदि + अच् ।) शनिः ।

(यथा, ज्योतिषे ।
"शुक्रेन्दुबुधजीवानां वाराः सर्व्वत्र शोभनाः ।
भानुभूसुतमन्दानां शुभकर्म्मसु केष्वपि ॥")
हस्तिजातिविशेषः । इति मेदिनी । दे, १३ ॥
यमः । इति त्रिकाण्डशेषः ॥ (यथा, कथा-
सरित्सागरे । ३२ । १५५ ।
"तत्र मन्दमिवालोक्य साभिप्रायः स मां नृपः
।
पप्रच्छ रे किमीदृक् त्वं सञ्जातः कथ्यतामिति
॥")
प्रलयः । इत्यजयः ॥ (जठरानलविशेषः ।
यथा,
हारीते चिकित्सितस्थाने ६ अध्याये ।
"तीक्ष्णः पित्ताधिकत्वेन जायते जठराग्निकः ।
वातश्लेष्माधिकत्वेन जायते मन्दसंज्ञकः ॥")

**मन्दः**, त्रि, (मदि + अच् ।) अतीक्ष्णः । मूर्खः ।

(यथा, रघुवंशे । १ । ३ ।

न्ध्वादित्वात् साधुः ।) पारिभद्रवृक्षः । इति
शब्दरत्नावली ॥

**मन्दता**, स्त्री, (मन्दस्य भावः । मन्द + भावार्थे

तल् । स्त्रियां टाप् ।) आलस्यम् । इति
राज-
निर्घण्टः ॥ (यथा, सुश्रुते शारीरस्थाने ।
"दुर्म्मेधस्त्वं मन्दता च स्वप्ने
मैथुननित्यता ।
निराकरिष्णुता चैव विज्ञेयाः पाशवा गुणाः
॥")
मन्दत्वम् । (यथा, चन्द्रालोके । १ । १ ।
"उच्चैरस्यति मन्दतामरसतामिति ॥"
क्षीणता । यथा, साहित्यदर्पणे । ३ । ६८
।
"मध्यस्य प्रथिमानमेति जघनं वक्षोजयो-
र्म्मन्दतां
दूरं यात्युदरञ्च रोमलतिका नेत्रार्ज्जवं
धावति ॥")

**मन्दनं**, क्ली, (मन्दते स्तौति अनेन । मन्द् +

"कृपृवृजिमन्दिनिधाञः क्युः । उणा० २
। ८१ ।
इति करणे क्युः ।) स्तोत्रम् । इति
सिद्धान्त
कौमुद्यामुणादिवृत्तिः ॥

**मन्दरः**, पुं, (मन्द् + बाहुलकात् अरः ।) मन्थ-

शैलः । (यथा, महाभारते । १ । १८ ।
१३ ।
"मन्थानं मन्दरं कृत्वा तथा नेत्रञ्च वासु-
किम् ॥")
मन्दारपादपः । इति मेदिनी । रे, १९६ ॥
स्वर्गः । हारभेदः । इति हेमचन्द्रः । ४ ।
९६ ॥
मुकुरः । इति शब्दरत्नावली ॥
(कुशद्वीपस्थ-

मुक्तम् । इति तिथ्यादितत्त्वम् ॥

**मन्दाकं**, क्ली, (मन्द्यते स्तूयते इति । मन्द् +

बाहुलकात् आकः ।) स्तवनम् । इत्युणादि-
कोषः ॥ (स्रोतः । इत्युज्ज्वलदत्तः । ४ । १३
॥)

**मन्दाकिनी**, स्त्री, (मन्दाकानि स्रोतांसि सन्त्यस्याः

इति । मन्दाक + णिनिः । यद्वा, "मन्दमकितुं
शीलमस्याः । णिनिः । यद्वा, मन्दनाम्नः
सरसः
अकति गच्छतीति । नयनानन्दः ।" इत्यमर-
टीकायां रघुनाथचक्रवर्त्ती ।) स्वर्गगङ्गा ।
तत्पर्य्यायः । वियद्गङ्गा २ स्वर्नदी ३ सुरदी-
र्घिका ४ । इत्यमरः । १ । १ । ५२ ॥
स्वर्गङ्गा ५
देवभूतिः ६ स्वर्णपद्मा ७ सुरेश्वरी ८ । इति
शब्दरत्नावली ॥ (यथा, नैषधचरिते । ६ ।
८२ ।
"मन्दाकिनीनन्दनयोर्व्विहारे
देवे भवद्वेवरि माधवे वा ॥")
तस्या विवरणं यथा, --

“प्रधानधारा या स्वर्गे सा च मन्दाकिनी
स्मृता ।
योजनायुतविस्तीर्णा प्रस्थेन योजना स्मृता ॥
क्षीरतुल्यजला शश्वदत्युत्युङ्गतरङ्गिणी ।
वैकुण्ठाद्‌ब्रह्मलोकञ्च ततः स्वर्गं समागता ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे जाह्नवी-
जन्मप्रस्तावे ३४ अध्यायः ॥ * ॥ संक्रान्ति-
विशेषः । अस्य प्रमाणं मन्दाशब्दे द्रष्टव्यम् ॥
(चित्रकूटस्थनदीविशेषः । यथा, महाभारते ।
३ । ८५ । ५८ ।
“ततो गिरिवरश्रेष्ठे चित्रकूटे विशाम्पते ।
मन्दाकिनीं समासाद्य सर्व्वपापप्रणाशिनीम् ॥”
द्वारकास्थनदीविशेषः । यथा, महाभारते ।
हरिवंशपर्व्वणि । १५५ । २२ ।
“वैदूर्य्यपत्रैर्ज्जलजैस्तथा मन्दाकिनी नदी ।
भाति पुष्करिणी रम्या पूर्ब्बस्यां दिशि
भारत ! ॥”
छन्दोविशेषः । यथा, छन्दोमञ्जर्य्याम् ।
“न न र र-घटिता तु मन्दाकिनी ॥”
उदाहरणादिकन्तु छन्दःशब्दे द्रष्टव्यम् ॥)

**मन्दाक्रान्ता**, स्त्री, (मन्दं यथा तथा आक्रान्ता ।)
छन्दोविशेषः । यथा, --
“चत्वारः प्राक् सुतनु गुरवो द्वौ दशैकादशौ चे-
न्मुख्यौ वर्णौ तदनु कुमुदामोदिनि ! द्वादशान्त्यौ
।
तद्वच्चान्त्यौ युगरसहयैर्यत्र कान्ते ! विरामो
मन्दाक्रान्तां प्रवरकवयस्तन्वि ! तां संगिरन्ते
॥”
इति श्रुतबोधः ॥
(अल्पाक्रान्ता । यथा, --
“मन्दाक्रान्ता वितरति रसं नेक्षुयष्टिः सम-
ग्रम् ॥”
इत्युद्भटः ॥)

**मन्दाक्षं**, क्ली, (मन्दे सङ्कुचिते अक्षिणी नेत्रे यस्मात् ।
“अक्ष्णोऽदर्शनात् ।” ४ । ४ । ७६ । इति
समा-
सान्तः अच् ।) लज्जा । इत्यमरः । १ । ७ ।
२३ ॥
(यथा, नैषधचरिते । ३ । ६१ ।

“चित्रकस्याष्टभागानि शूरणस्य च षोडश ।
शुण्ठ्याश्चत्वारि भागानि मरीचानां द्वयं
तथा ॥
पिप्पली पिप्पलीमूलं विडङ्गानां चतुष्टयम् ।
अष्टौ मुसलिभागाश्च त्रिफलायाश्चतुष्टयम् ॥
द्विगुणेन गुडेनैषां मोदकानि हि कारयेत् ।
तद्भक्षणमजीर्णं हि पाण्डुरोगञ्च कामलाम् ।
अतिश्रोणितमन्दाग्निप्लीहाद्यञ्चनिवारयेत् ॥”
इति गारुडे १९८ अध्यायः ॥ * ॥
अथ जठराग्निविकाराधिकारः । तत्र सन्नि-
कृष्टनिदानपूर्ब्बकान् उदराग्निविकारानाह ।
“कफपित्तानिलाधिक्यात्तत्साम्याज्जाठरोऽनलः
।
मन्दस्तीक्ष्णोऽथ विषमः समश्चेति चतुर्विधः ॥”
तत्र मन्दस्याग्नेर्लक्षणमाह ।
“स्वल्पापि नैव मन्दाग्नेर्मात्रा भुक्तापि पच्यते ।
छर्द्दिर्दाहः प्रसेकः स्याच्छिरोगौरवजाठरम् ॥”
मन्दाग्निजन्यान् विकारानाह ।
“मन्दोऽग्निर्द्देहिनां कुर्य्याद्विकारान् कफसम्भ-
वान् ॥” * ॥
अथ चिकित्सा ।
“हरीतकी तथा शुण्ठी भक्ष्यमाणा गुडेन वा ।
सैन्धवेन युता वा स्यात् सातत्येनाग्निदीपनी ॥
१ ॥
गुडेन शुण्ठीमथवोपकुल्यां
पथ्यातृतीयामथ दाडिमं वा ।
आमेष्वजीर्णेषु गुदामयेषु
वर्च्चोविबन्धेषु च नित्यमद्यात् ॥ २ ॥
व्योषं दन्ति त्रिवृच्चित्रं कृष्णामूलं विचूर्णितम् ।
तच्चूर्णं गुडसंमिश्रं भक्षयेत् प्रातरुत्थितः ॥
एतद्‌गुडाष्टकं नाम बलवर्णाग्निवर्द्धनम् ।
शोथोदावर्त्तशूलघ्नं प्लीहपाण्ड्वामयापहम् ॥”
सर्व्वचूर्णसमो गुडो देयः । गुडाष्टकम् ॥ ३ ॥
“दहनाजमोदसैन्धवनागरमरिचानि चाम्ल-
तक्रेण ।
सप्ताहादग्निकरं पाण्ड्वर्शोनाशनं परमम् ॥” * ॥
वैश्वानरः क्षारः ।
“सामुद्रलवणं ग्राह्यमष्टकर्षमितं बुधैः ।
सौवर्च्चलं पञ्चकर्षं विडसैन्धवधान्यकम् ॥
पिप्पली पिप्पलीमूलं पत्रकं कृष्णजीरकम् ।
तालीशं केशरं चव्यमम्लवेतसकं तथा ।

निम्बुरसादिकं दत्त्वा गुटिकामप्येके
कुर्व्वन्ति ॥ ६ ॥
टङ्गणं रसगन्धौ च समं भागं त्रयं
विषात् ।
कपर्द्दः सर्ज्जिकाक्षारो मागधी
विश्वभेषजम् ॥
पृथक् पृथक् कर्षमात्रं
वसुभागमिहोषणम् ।
जम्बीराम्लैर्दिनं घृष्टं भवेदग्निकुमारकः
॥
विशुचीशूलवातादिवह्निमान्द्यप्रशान्तये
॥”
क्षारो यवक्षारः । अग्निकुमारो रसो
विशु-
च्याद्यजीर्णे ॥ ७ ॥
“पारदामृतलवङ्गगन्धकं
भागयुग्ममरिचेन मिश्रितम् ।
तत्र जातिफलमर्द्धभागिकं
तिन्तिडीफलरसेन मर्द्दितम् ॥
वह्निमान्द्यदशवक्त्रनाशनो
रामबाण इति विश्रुतो रसः ।
संग्रहग्रहणिकुम्भकर्णकं
सामवातखरदूषणञ्जयेत् ॥
दीयते तु चणकानुमानतः
सद्य एव जठराग्निदीपनः ।
रोचकः कफकुलान्तकारकः
श्वासकासवमिजन्तुनाशनः ॥” ८ ॥
पारदभागः १ विषभागः १ लवङ्गभागः
१
गन्धकभागः १ मरिचभागः २
जातीफलभागः
॥ ० । रामबाणो रसोऽजीर्णे । इति
भाव-
प्रकाशः ॥ (विवरणमस्य यथा, --
“अग्निश्चतुर्व्विधः प्रोक्तः समो
विषमतीक्ष्णकः ।
मन्दस्तदापरः प्रोक्तः शृणु चिह्नानि
साम्प्रतम् ॥
वातपित्तकफे साम्यात् समत्वं
जायतेऽनलः ।

"मन्दाक्षमन्दाक्षरमुद्रमुक्त्वा
तस्यां समाकुञ्चितवाचि हंसः ।
तच्छंसिते किञ्चन संशयालु-
र्गिरा मुखाम्भोजमयं युयोज ॥")

**मन्दाग्निः**, पुं, (मन्दः पाचनासमर्थश्चासावग्नि-

श्चेति ।) कफद्वाराल्पजठरानलः । तस्य निदा-
नादि यथा, --
"मन्दस्तीक्ष्णोऽथ विषमः समश्चेति चतुर्व्विधः
।
कफपित्तानिलाधिक्यात्तत्साम्याज्जाठरोऽनलः
॥
विषमो वातजान् रोगांस्तीक्ष्णः पित्तसमुन्न-
तान् ।
करोत्यग्निस्तथा मन्दो विकारान् कफसम्भवान्
॥
समा समाग्नेरशिता मात्रा सम्यग्विपच्यते ।
अल्पापि नैव मन्दाग्नेर्विषमाग्नेस्तु देहिनः ।
कदाचित् पच्यते सम्यक् कदाचिच्च न पच्यते
॥"
इति माधवकरः ॥ * ॥
तस्यौषधं यथा, --

द्विकर्षमात्राण्येतानि प्रत्येकं कारयेद्-
बुधः ॥ ५ ॥
मरिचं जीरकं विश्वमेकैकं कर्षमात्रकम् ।
दाडिमं स्याच्चतुष्कर्षं त्वगेले वार्द्धकर्षके ।
एतच्चूर्णीकृतं सर्व्वं लवणं भास्कराभिधम् ॥
भक्षयेच्छाणमानं तत् तक्रमस्तुककाञ्जिकैः ।
वातश्लेष्मभवं गुल्मं प्लीहानमुदरं क्षयम् ॥
अर्शांसि ग्रहणी कुष्ठं विबन्धञ्च भगन्दरम् ।
शूलं शोथं श्वासकासावामदोषञ्च हृद्रुजम् ॥
अश्मरीं शर्कराञ्चापि पाण्डुरोगं कृमीनपि ।
मन्दाग्निं नाशयेदेतद्दीपनं पाचनं परम् ॥
हिताय सर्व्वलोकानां भास्करेणैतदीरितम् ।
हन्यात् सर्व्वाण्यजीर्णानि भुक्तमात्रमसंशयम् ॥

तैरेव विषमं प्राप्ते विषमो जायतेऽनलः
॥
तीक्ष्णः पित्ताधिकत्वेन जायते
जठराग्निकः ।
वातश्लेष्माधिकत्वेन जायते
मन्दसंज्ञकः ॥"
इति हारीते चिकित्सितस्थाने
षष्ठेऽध्याये ॥
"अन्नमण्डं पिबेदुष्णं
हिङ्गुसौवर्च्चलान्वितम् ।
विषमोऽपि समस्तेन मन्दो दीप्येत
पावकः ॥"
"सिन्धूत्थहिङ्गुत्रिफलायमानी-
व्योषैर्गुडांशैर्गुडिकां प्रकुर्य्यात् ।
तैर्भक्षितैस्तृप्तिमवाप्नुवन्ना
भुञ्जीत मन्दाग्निरपि प्रभूतम् ॥"
इति
वैद्यकचक्रपाणिसंग्रहेऽग्निमान्द्याधिकारे
॥
मन्दः अग्निर्यस्येति । अल्पाग्निविशिष्टे,
त्रि ।
यथा, मार्कण्डेये । १५ । १३९ ।
"सोऽजीर्णव्याधिदुःखार्त्तो मन्दाग्निः
संप्र-
जायते ।
परनिन्दा कृतघ्नत्वं परमर्म्मावघट्टनम्
॥")

**मन्दायुः**, [स्] त्रि, (मन्दमल्पमायुर्य्यस्य ।)

अल्पायुः । यथा, श्रीभागवते । १ ।
१६ । १० ।
"मन्दस्य मन्दप्रज्ञस्य वयो
मन्दायुषश्च वै ।
निद्रया ह्रियते नक्तं दिवा च
व्यर्थकर्म्मभिः ॥"

**मन्दारः**, पुं, (मन्द्यते स्तूयते प्रशस्यते वेति ।
मदि

+ "अङ्गिमदिमन्दिभ्य आरन् ।"
उणा० ३ ।
१३४ । इति आरन् ।)
स्वर्गीयपञ्चवृक्षान्त-
र्गतदेवतरुविशेषः । यथा, अमरकोषे ।
११ । ५३ ।

सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥”
(यथा, अभिज्ञानशकुन्तले ७ अङ्के ।
“अन्तर्गतप्रार्थनमन्तिकस्थं
जयन्तमुद्वीक्ष्य कृतस्मितेन ।
आमृष्टवक्षोहरिचन्दनाङ्का
मन्दार-माला हरिणा पिनद्धा ॥”)
पारिभद्रवृक्षः । पालिता मादार इति भाषा ।
यथा, अमरकोषे । २ । ४ । २६ ।
“पारिभद्रे निम्बतरुर्म्मन्दारः पारिजातकः ॥”
अर्कवृक्षः । आकन्द इति भाषा । यथा, --
“अर्काह्ववसुकास्फोतगणरूपविकीरणाः।
मन्दारश्चार्कपर्णेऽत्र शुक्लेऽलर्कप्रतापसौ ॥”
इत्यमरः । २ । ४ । ८१ ॥
हस्तः । धूर्त्तः । इति मेदिनी । रे, १९७ ॥
तीर्थविशेषः । यथा, --
वराह उवाच ।
“शृणु सुन्दरि ! यत्नेन यन्मां त्वं परिपृच्छसि ।
कथयिष्यामि ते गुह्यां मन्दारस्य महाक्रियाम् ॥
क्रीडमानोऽस्म्यहं तत्र दृष्ट्वा मन्दारपुष्पितम् ।
मन्दारपुष्पमादाय मनोज्ञं न्यस्य वै हृदि ॥
तत्रैकादशकुण्डानि निःसृतानि गिरौ धरे ।
बिन्ध्ये च मत्प्रभावेन मन्दारश्च महाद्रुमः ॥
स्थितोऽहं तत्र सुगगे ! भक्तानुग्रहकाम्यया ।
दर्शनीयतमं स्थानं मनोज्ञं तु शिलातलम् ॥
यत्र तिष्ठाम्यहं देवि ! मन्दारद्रुममास्थितः ।
विस्मयं शृणु सुश्रोणि ! मन्दारेऽस्मिन् द्रुमे तथा ॥
द्वादश्याञ्च चतुर्द्दश्यां स पुष्प्यति द्रुमोत्तमः ।
तत्र मध्याह्नवेलायां वीक्ष्यमाणो जनैस्ततः ।
ततोऽन्यदिनमासाद्य दृश्यते न कदाचन ॥
तस्मिन् मन्दारकुण्डे तु एकभक्तोषितो नरः ।
स्नानं करोति शुद्धात्मा स गच्छेत् परमां
गतिम् ॥
अथ प्राणान् प्रमुच्येत कुण्डे मन्दारसंस्थिते ।
तपः कृत्वा वरारोहे ! मम लोकाय गच्छति ॥
तस्य चोत्तरपार्श्वे तु प्रापणं नाम तं गिरिम् ।
तिस्रोधाराः पतन्त्यत्र दक्षिणां दिशमास्थिताः ॥
स्नानकुण्डमिति ख्यातं तस्मिन् क्षेत्रे परं मम ।
दक्षिणे पतते धारा श्रवते चोत्तरामुखम् ॥
तत्र स्नातो वरारोहे ! एकरात्रोषितो नरः ।
मोदते दक्षिणे शृङ्गे तस्मिन् मेरौ शिलोच्चये ॥
तत्राथ मुञ्चते प्राणान् मम कर्म्मपरायणः ।
यत्र धारा पतत्येका मुषलेन समन्विता
॥
तत्र स्नानं प्रकुर्व्वीत पञ्चभक्तोषितो
नरः ।
मोदते पूर्ब्बपार्श्वे तु तस्मिन् मेरौ
शिलोच्चये ॥
तत्राथ मुञ्चते प्राणान् कृत्वा कर्म्म
सुदुष्करम् ।
मेरुशृङ्गं समुत्सृज्य मम लोकञ्च
गच्छति ॥
तस्य दक्षिणपार्श्वे तु गुह्यं
बिन्ध्यविनिःसृतम् ।
पञ्च धाराः पतन्त्यत्र मुषलेन
समन्विताः ॥
तत्र स्नानन्तु कुर्व्वीत अहोरात्रोषितो
नरः ।
मोदते दक्षिणे शृङ्गे महामेरौ शिलोच्चये
॥
अथात्र मुञ्चते प्राणान् कृत्वा कर्म्म
सुदुष्करम् ।
मेरुशृङ्गं परित्यज्य मम लोकं प्रपद्यते
॥
दक्षिणे पश्चिमे भागे मन्दारस्य
यशस्विनि ! ।
तत्र धारा पतत्येका
आदित्यसमतेजसा ॥
तत्र स्नानन्तु कुर्व्वीत अहोरात्रोषितो
नरः ।
मोदते पश्चिमे भागे ध्रुवो यत्र प्रवर्त्तते
॥
अथात्र मुञ्चते प्राणान् मम
कर्म्मव्यवस्थितः ।
सर्व्वपापविनिर्मुक्तो मम लोके च मादते
॥
तस्य पश्चिमपार्श्वे तु गुह्यं
देवसमन्वितम् ।
चक्रावर्त्त इति ख्यातमगाधश्च
महाह्रदः ॥
स्नानं करोति यस्तत्र पञ्चभक्तोषितो
नरः ।
इत्यादि वाराहपुराणे भगवच्छास्त्रे मन्दार-
गुह्यवर्णनं नामाध्यायः ॥

**मन्दास्यं**, क्ली, (मन्दं आस्यमस्मादिति ।) लज्जा ।
इति शब्दरत्नावली ॥

**मन्दिकुकुरः**, पुं, मत्स्यविशेषः । इति भूरि-
प्रयोगः ॥ ग्रन्थान्तरे मल्लिकुकुडोऽपि पाठः ॥

**मन्दिरं**, क्ली, (मन्द्यते सुप्यतेऽत्र मन्द्यते स्तूयते
इति वा । मदि ङ स्वपने स्तुतौ + “इषि
मदिमुदीति ।” उणा० १ । १५२ । इति
किरच् ।)
गृहम् । इत्यमरः । २ । २ । ५ ॥ “मन्द्यते
सुप्यतेऽत्र मन्दिरम् । मदि ङ स्वपने जाड्ये
मदे
मोदे स्तुतौ गतौ नाम्नीति इरः । नगरं मन्दिरं
पुरमिति पुंनपुंसकयोररुणेन पठ्यते । स्त्रियां
मन्दिरा च प्रयोगश्च मन्दिरायास्त्वरावानिति
मधुमुकुटादयः ।” इति तट्टीकायां भरतः ॥ *
॥
अथ भगवन्मन्दिरनिर्म्माणमाहात्म्यम्।
“यः कारयेन्मन्दिरं केशवस्य
पुण्याँल्लोकान् स जयेच्छाश्वतान् वै ।
दत्त्वावासान् पुष्पफलाभिपन्नान्
भोगान् भुङ्क्ते कामतः श्लाघनीयान् ॥
आसप्तमं पितृकुलं तथा मातृकुलं नरः ।
तारयेदात्मना सार्द्धं विष्णोर्म्मन्दिरकारकः ॥
इमाश्च पितरो दैत्यगाथा गायन्ति योगिनः ।
पुरतो यदुसिंहस्य ह्यनघस्य तपस्विनः ॥
अपि नः स्वकुले कश्चिद्विष्णुभक्तो भविष्यति
।
हरिमन्दिरकर्त्ता यो भविष्यति शुचिव्रतः ॥”
इति वामने शेषाध्यायः ॥ * ॥
अपि च । अग्निपुराणे ।
“ये ध्यायन्ति सदा बुद्ध्या करिष्यामो हरे-
र्गृहम् ।
तेषां विलीयते पापं पूर्ब्बजन्मशतोद्भवम् ॥”
किञ्च ।
“समतीतं भविष्यञ्च कुलानामयुतं नरः ।
विष्णुलोकं नयत्याशु कारयेद्वा हरेर्गृहम् ॥”
किञ्च ।

सर्व्वं सङ्गं परित्यज्य मम लोकं प्रपद्यते ॥
नाकपृष्ठं समासाद्य मोदते दैवतैः सह ।
तथात्र मुञ्चते प्राणान् कृतकृत्यः सुनिश्चितः ।
तारयित्वा कुलं सर्व्वं मम लोकं प्रपद्यते ॥
तस्य दक्षिणपूर्व्वेण समश्रोतो वराङ्गने ! ।
पतते बिन्ध्यशृङ्गेषु अगाधश्च महाह्रदः ॥
तत्र स्रानन्तु यः कुर्य्यादेकभक्तोषितो नरः ।
मोदते पूर्ब्बपार्श्वे तु तस्मिन्मेरौ शिलोच्चये ॥
अथात्र मुञ्चते प्राणान् मम चित्तव्यवस्थितः ।
छित्त्वा यै सर्व्वसंसारं मम लोकाय गच्छति ॥
मन्दारस्य तु पूर्ब्बेण गुह्यं कोटरसंस्थितम् ।

मोदते सर्व्वशृङ्गेषु स्वच्छन्दगमनालयः
॥
अथ वै मुञ्चते प्राणान् चक्रावर्त्ते
महायशाः ।
शृङ्गान् सर्व्वान् परित्यज्य मोदते मम
सन्निधौ ॥
देशं वायव्यमाश्रित्य तस्मिन्
बिन्ध्यशिलोच्चये ।
तिस्रो धाराः पतन्त्यत्र मुषलाकृतयः
शुभाः ।
तत्र स्नानं प्रकुर्व्वीत मम
चित्तव्यवस्थितः ।
मोदते सर्व्वशृङ्गेषु एकचित्तसमाश्रितः ।
तथात्र मुञ्चते प्राणांश्चास्मिन् गुह्ये
यशस्विनि ! ।
सर्व्वसङ्गं षरित्यज्य मम लोकाय
गच्छति ॥
तस्य त्रिक्रोशमात्रेण दक्षिर्णा
दिशमाश्रितः ।
गुह्यं गम्भीरकं नाम अगाधञ्च महाह्रदम्
॥
तत्र स्नानन्तु कुर्व्वीत अष्टभक्तोषितो
नरः ।
मोदते सर्व्वद्वीपेषु सर्व्वत्र गमनालयः ॥
अथैवं मुञ्चते प्राणान् मम
कर्म्मव्यवस्थितः ।
सर्व्वद्वीपान् परित्यज्य मम लोकं
प्रपद्यते ॥
तस्य पश्चिमपार्श्वे तु गुह्यं मे परमं
महत् ।
सप्त धाराः पतन्त्यत्र अगाधश्च
महाह्रदः ॥
तत्र स्नानन्तु कुर्व्वीत अहोरात्रोषितो
नरः ।
मोदते शक्रलोकन्तु
स्वच्छन्दगमनालयः ॥
अथ वै मुञ्चते प्राणान्
स्वकर्म्मपरिनिष्ठितः ।
सर्व्वसङ्गं परित्यन्य मम लोकं प्रपद्यते
॥
मण्डलं तस्य क्षेत्रस्य कथ्यमानं मया
शृणु ।

“लक्षेणाथ सहस्रेण शतेनार्द्धेन वा हरेः ।
तुल्यं फलं समाख्यातमिहेश्वरदरिद्रयोः ॥”
विष्णुधर्म्मोत्तरे तृतीयकाण्डे ।
“कृत्वा वासगृहं तस्य देवस्य परमेष्ठिनः ।
राजसूयाश्वमेधानां फलेन सह युज्यते ॥
प्रासादे मृण्मये पुण्यं मयैतत् कथितं
द्विजाः ।
तस्माद्दारुमये पुण्यं कृते शतगुणं भवेत् ॥
ततो दशगुणं पुण्यं तथा शैलमये भवेत् ।
ततो दशगुणं लौहे ताम्रे शतगुणं ततः ॥
सहस्रगुणितं रौप्ये तस्मात् फलमपाश्नुते ।
ततः शतसहस्रं वै सौवर्णे द्विजसत्तमाः ॥
अनन्तं फलमाप्नोति रत्नचित्रे मनोहरे ॥”
स्कान्दे ।
“आरम्भे कृष्णधिष्ण्यस्य सप्तजन्मनि यत्
कृतम् ।
पापं विलयमाप्नोति नरकादुद्धरेत् पितॄन् ॥
प्रासादपादे कृष्णस्य यावत्तिष्ठन्ति रेणुकाः ।

| | | |
|---|---|---|
| | स्यमन्तपञ्चकञ्चैव मन्दारस्य गिरौ मम ॥<br>तत्र तिष्ठामि सुश्रोणि ! बिन्ध्यस्य गिरिमूर्द्धनि ।<br>मन्दारे परमं गुह्यं तस्मिन् गुह्यशिलोच्चये ॥<br>दक्षिणे संस्थितं चक्रं वामे स्थाने च वै गदा ।<br>लाङ्गलं मुषलञ्चैव शङ्खं तिष्ठति चाग्रतः ॥<br>य एतत् शृणुयान्नित्यं गुह्यं मन्दारसंहितम् ।<br>तव चैव प्रियार्थाय मम भक्तसुखावहम् ॥<br>एतन्न जानते कश्चिन्मम मायाविमोहितः ।<br>मुच्य भागवतान् शुद्धान् ये च वाराहसंश्रि-<br>तान् ॥” | |

तावद्वर्षसहस्राणि वसते विष्णुसद्मनि ॥
प्रासादे कृष्णदेवस्य चित्रकर्म्म करोति यः ।
वसते विष्णुलोके तु यावत्तिष्ठन्ति सागराः ॥”
नारसिंहे ।
“यः कुर्य्याच्छोभनं वेश्म नरसिंहस्य भक्तिमान्
।
सर्व्वपापविनिर्म्मुक्तो विष्णुलोकमवाप्नयात् ॥”
हयशीर्षे ।
“देवागारं करोमीति मनसा यस्तु चिन्तयेत् ।
तस्य कायगतं पापं तदह्ना विप्र ! नश्यति ।
कृते तु किं पुनस्तस्य प्रासादे विधिनैव तु ॥
अष्टेष्टकासमायुक्तं यः कुर्य्याद्वैष्णवं गृहम् ।
न तस्य फलसम्पत्तिर्व्वक्तुंशक्येत केनचित् ॥
अनेनैवानुमेयन्तु फलं प्रासादविस्तरात् ।
मरणञ्च व्रजेन्मर्त्यो यः कृत्वा प्रथमेष्टकाम् ॥
स समाप्तस्य यज्ञस्य फलं प्राप्नोत्यसं शयम्
॥”
विष्णुरहस्ये ।
“बाल्ये च क्रीडमाना ये पांशुभिर्भवनं हरेः ।
वासुदेवस्य कुर्व्वन्ति तेऽपि तल्लोकगामिनः ॥”
आदिपुराणे ।
“लेपनाच्छदनञ्चैव यः करोति पुनर्नरः ।
देवस्यायतनं कृत्वा न भवेत् कीटजं भयम् ॥”
अथ मन्दिरनिर्म्माणकालः । मात्स्ये ।
“चैत्रे व्याधिमवाप्नोति यो गृहं कारयेन्नरः ।
वैशाखे धनरत्नानि ज्यैष्ठे मृत्यं तथैव च ॥
आषाढे भृत्यरत्नानि पशुवर्णमवाप्नुयात् ।
श्रावणे मित्रलाभन्तु हानिं भाद्रपदे तथा ॥
पत्नीनाशञ्चाश्वयुग्गे कार्त्तिके धनधान्यकम् ।
मार्गशीर्षे तथा भक्तं पौषे तस्करजं भयम् ।
लाभन्तु बहुशो विद्यादग्निं माघे विनिर्द्दिशेत् ॥
काञ्चनं फाल्गुने पुत्त्रानिति कालबलं स्मृतम् ।
अश्विनी रोहिणी मूलमुत्तरा-त्रयमैन्दवम् ॥
स्वाती हस्तानुराधा च गृहारम्भे प्रशस्यते ।
आदित्यभौमवर्ज्जञ्च सर्व्वे वाराः शुभावहाः ॥
वज्रव्याघातशूलानि व्यतीपातातिगण्डके ।
विष्कम्भगण्डपरिघान् वर्ज्य योगेषु कारयेत् ॥
श्वेतमैत्रे च माहेन्द्रे गान्धर्व्वाभिजिद्रौहिणे ।
तथा वैराजसावित्रे मुहूर्त्ते गृहमारभेत् ॥
चन्द्रादित्यबलं लब्ध्वा लग्नं शुभनिरीक्षितम् ।

अथ प्रासादस्थानम् । हयशीर्षे ।
“पूर्ब्बं देवकुलं पीड्य प्रासादं
स्वल्पकन्तथा ।
समं वाप्यधिकं वापि न कर्त्तव्यं विजानता
॥
उभयोर्द्विगुणां सीमां त्यक्त्वा
चोच्छ्रायसंमि-
ताम् ।
प्रासादं कारयेदन्यं नोभयं पीडयेद्बुधः ॥”
* ॥
अथ स्थानशोधनानि । देवीपुराणे ।
“देवो विष्णुस्तथा रुद्रो ब्रह्माद्याः
सुरसत्तमाः ।
प्रतिष्ठाप्याः शुभे स्थाने अन्यथा ते
भयावहाः ॥
गर्त्तादिलक्षणा धात्री गन्धस्वादेन या भवेत्
।
वर्णेन च सुरश्रेष्ठ ! सा मही सर्व्वकामदा ॥”
मात्स्ये ।
“पूर्ब्बं भूमिं परीक्षेत पश्चात् वास्तुं
प्रकल्पयेत् ।
श्वेता रक्ता तथा पीता कृष्णा
चैवानुपूर्ब्बशः ॥
विप्रादेः शस्यते भूमिरतः कार्य्यं परीक्षणम्
।
विप्राणां मधुरास्वादा कषाया क्षत्त्रियस्य च
॥
कषाये कटुता तद्वद्वैश्यशूद्रेषु शस्यते ।
अरत्निमात्रे वै गर्त्ते स्वनुलिप्ते च सर्व्वतः ॥
घृतमामशरावस्थं कृत्वा वर्त्तिचतुष्टयम् ।
ज्वालयेद्भूपरीक्षार्थं पूर्णं तत् सर्व्वदिङ्मुखम्
॥
दीप्त्या पूर्ब्बादि गृह्णीयाद्वर्णानामनुपूर्ब्बशः ।
वास्तुः समूहिको नाम दीप्यते सर्व्वतस्तु
यः ॥
शुभदः सर्व्ववर्णानां प्रासादेषु गृहेषु च ।
अरत्निमात्रकं गर्त्तं परीक्ष्यं खातपूरणे ॥
अधिके श्रियमाप्नोति न्यूने हानिं समे
समम् ।
फालकृष्टेऽथवा देशे सर्व्वबीजानि रोपयेत्
॥

वनोद्यानलतागुल्मफुल्लस्तम्बसमावृता ।
यज्ञीयवृक्षसुक्षेत्रयुक्ता भद्रेति कीर्त्तिता ॥
बकुलाशोकबहुला तथा प्लक्षाम्रलोहितैः ।
माधवीवेष्टिता या च मुद्गनिष्पावकोद्रवैः ॥
शूकधान्यैश्च पुन्नागैर्गिरिपार्श्वगता च या ।
तोयञ्च स्वल्पकं यस्यां सा पूर्णा
परिकीर्त्तिता ॥
विल्वार्कस्नुहिपीलूनां वनैर्य्या पारतो वृता ।
सशर्करा च कठिना युक्ता कण्टकिभिर्द्रुमैः ॥
गृध्रगोमायुकाकानां श्येनानां या कुलाकुलैः ।
धूम्रेति कीर्त्तिता सा तु तां यत्नात्
परिवर्ज्जयेत् ॥
ततो भूमिं परीक्षेत पूर्ब्बोदक्प्लवनां शुभाम् ।
असङ्कटां तथाच्छन्नामल्पतोयां परिप्लुताम्
॥
संपूर्य्यमाणे खाते तु तथाधिकमृदं शुभाम् ।
कुसुम्भसदृशं वर्णं यस्यां न म्लानिमृच्छति
॥
न निर्व्वाति तथा दीपस्तीयं शीघ्रं न जीर्य्यते
।
श्वेतारुणा पीतकृष्णा विप्रादीनां प्रशस्यते ॥
आज्यसद्गन्धमद्यानां तुल्यगन्धा तु या
भवेत् ।
मधुरा च कषाया च अम्ला च कटुका च या
॥
कुशैः शरैस्तथा काशैः दूर्व्वाभिर्या च संवृता
।
तस्यां पुण्येऽथ नक्षत्रे कुर्य्याद्भूमिपरिग्रहम्
॥”
अथ भूमिपरिग्रहः । तत्रैव ।
“प्राकारसीमापर्य्यन्तं ततो भूतबलिं हरेत् ।
मांसं हरिद्राचूर्णञ्च सलाजदधिशक्तवः ॥
एभिर्भूतबलिं दत्त्वा सूत्रमष्टाक्षरेण तु ।
पातयित्वा ततः शङ्कूनष्टदिक्षु निवेशयेत् ॥
राक्षसाश्चापि भूताश्च येऽस्मिंस्तिष्ठन्ति
भूतले ।
ते सर्व्वे व्यपगच्छन्तु स्थानं कुर्य्यामहं हरेः
॥
इत्यनुज्ञाप्य भूतादीन् तां भूमिं परिशोधयेत्
।

स्तम्भोच्छ्रादि प्रकर्त्तव्यमन्यत्र परिवर्ज्जयेत् ॥"
हयशीर्षे ।
"वास्तुकर्म्म न चारभ्यं वर्षाकाले विजानता ।
कृष्णपक्षे त्रिभागान्ते शुक्लपादौ द्वितीयके ॥
चतुर्थी नवमी वर्ज्या तिथिश्चापि चतुर्द्दशी ।
भौमस्य तु दिनं वर्ज्यं करणं विष्टिसंज्ञितम् ॥
क्षित्यन्तरीक्षदिव्योत्थैरुत्पातैर्भयपीडितम् ।
उपस्पृष्टं ग्रहैर्भञ्च व्यतिपातहतं तथा ॥
चन्द्रतारानुकूले च कार्य्यं कर्म्म विजानता ।
ध्रुवाणि चात्र शस्तानि नैरृतं शक्रदैवतम् ॥
पुष्यं पौष्णञ्च सावित्रं वायव्यं वैष्णवं तथा ।
स्थिरांशे च स्थिरे लग्ने कर्त्तुश्चोपचयात्मके ॥
केन्द्रे सौम्यग्रहो यस्य त्रिकोणे तु सुरोत्तम ! ।
पापश्चोपचयस्थाने तदा कार्य्यं समारभेदिति ॥"

त्रिपञ्चसप्तरात्रेण यत्र रोहन्ति तान्यपि ।
ज्येष्ठा मध्या कनिष्ठा भूर्व्वर्ज्जनीयेतरा सदा ॥"
हयशीर्षे ।
"सुरभीणां रतिर्यत्र सवत्सानां वृषः सह ।
सुन्दरीणां रतिर्यत्र पुरुषैः सह सत्तम ! ॥
राज्ञां पूर्ब्बं गृहं यस्यामग्नीनां यज्विनां तथा ।
काश्मीरचन्दनामोदा कर्पूरागुरुगन्धिनी ॥
कमलोत्पलगन्धा च जातीचम्पकगन्धिनी ।
पाटलामल्लिकागन्धा नागकेशरगन्धिनी ॥
दधिक्षीराज्यगन्धा च मदिरासवगन्धिनी ।
सुगन्धिव्रीहिगन्धा च शुभद्रव्यस्वना च या ॥
सर्व्वेषां वर्णिनां भूमिः सर्व्वसाधारणा मता ।
दुर्गन्धा दुःस्वना या च नानावर्णा च दुर्भगा ॥
वृत्तार्द्धचन्द्रसदृशा विस्ताराद्द्विगुणायता ।
विवर्णा वर्णहीना च वक्रा शुचिमुखी तथा ॥
द्विवर्णा सूर्पसदृशी गोमुखी च त्रिकोणिका ।
षडस्रा शूलसदृशी दन्तिपृष्ठोपमा च या ॥
सरीसृपसमा या च दिङ्मुखा शकटाकृतिः ।
एवं प्रकारा या भूमिर्व्वर्ज्या यत्नेन देशिकैः ॥"
किञ्च ।
"प्रासादस्य विशेषेण प्रोक्ता भूमिश्चतुर्व्विधा ।
सुपद्मा भद्रिका पूर्णा धूम्रा रागिण्यथापरा ॥
तिलकैर्नारिकेलैश्च वर्हिःकाशैश्च शोभिता ।
पद्मेन्दीवरसंयुक्ता सा सुपद्मेति विश्रुता ॥
नदीसमुद्रायतनतीर्थपर्य्यन्तशोभिता ।
पुष्पवृक्षसमाकीर्णा क्षीरवृक्षोपशोभिता ॥

आदित्यादिग्रहाणाञ्च लोकपालैः समं कृती ॥
आर्य्यमिष्टविधानेन ततो वै होममाचरेत् ।
चतुर्होमं ततः कुर्य्यान्मूलमन्त्रेण देशिकः ॥
दद्यात् पूर्णाहुतिं पश्चात् वौषडन्तेन देशिकः ।
वृषभौ कपिलौ गृह्य सवर्णौ वा विचक्षणः ।
योजनार्थं हलञ्चैव गृह्णीयादसनोद्भवम् ॥
प्राङ्मुखं योज्य मन्त्रज्ञो वस्त्रालङ्कारभूषितः ।
आसनीं यष्टिमादाय द्वादशाक्षरविद्यया ॥
संमर्द्दनेन समीकृत्य शुभबीजानि वापयेत् ।
संप्राप्ते शुभकाले तु गोभिस्तत् खादयेद्बुधः ।
पुनस्तं कर्षयित्वा तु समीकृत्य गृहं गुरुः ॥"
मात्स्ये च ।
"हीनाधिकां गतां वास्तोः सर्व्वतः परिवर्ज्जयेत् ।
नगरग्रामदेशेषु सर्व्वत्रैव विवर्ज्जयेत् ॥" * ॥
अथ दिक्साधनम् । हयशीर्षे ।
"बाह्यवास्तु समं कृत्वा चतुरस्रं समन्ततः ।
भूमिं तोयसमां कृत्वा दर्पणोदरसन्निभाम् ॥
द्वादशाङ्गुलमानेन चाष्टौ वारांस्तु भ्रामयेत् ।
मध्ये सुनिश्चलं शङ्कुं स्थाप्य च्छायां निरीक्षयेत् ॥
प्रवेशे निष्क्रमे तस्यां शङ्कुच्छायां निरूपयेत् ।
वैषुवे विमले व्योम्नि शङ्कुना साधयेद्दिशम् ॥
शरद्वसन्तयोरेवमादित्यात् साधयेद्दिशम् ।
प्राचीं वा पुष्पवेधेन विचित्रामन्तरेण वा ॥

उदीचीं ध्रुववेधेन मध्ययोगेन चोन्नयेत् ।
चतुरस्रां शिलां गृह्य इष्टकां वा सुशोभनाम्
॥
चतुर्द्दिक्षु निवेश्याथ सूत्रचिह्नन्तु कारयेत् ।
एवं कृत्वा सूत्रचिह्नं ब्राह्मणांस्तत्र भोजयेत् ।
वैष्णवान् पायसेनाग्र्यान् द्वादशैव समाहितः
॥”
अथ शल्योद्धरणम् । मात्स्ये ।
“गृहारम्भेति कण्डूतिः स्वाम्यङ्गे यत्र जायते
।
शल्यन्त्वपनयेत्तत्र प्रासादे भवनेऽथवा ।
सशल्यं भयदं यस्मादशल्यं भयनाशनम् ॥”
हयशीर्षे ।
“आदिशेद्वास्तुनः शल्यं
गृहिणोऽङ्गविकारतः ।
शकुनो दृश्यते वापि यस्य वा श्रूयते ध्वनिः
।
कीर्त्यते यस्य वै नाम शल्यं तस्य
विनिर्द्दिशेत् ॥”
अथ वास्तुमण्डलम् । मात्स्ये ।
“पञ्चगव्यौषधिजलैः परीक्षित्वावसेचयेत् ।
एकाशीतिपदं कुर्य्याद्रेखाभिः कनकेन तु ॥
पश्चाल्लेप्येन चालिप्य सूत्रेणालोड्य
सर्व्वतः ।
दश पूर्ब्बायता रेखा दश चैवोत्तरायताः ॥
सर्व्ववास्तुविभागेषु विज्ञेया नवका नव ।
एकाशीतिपदं कृत्वा वास्तुवित् सर्व्ववास्तुषु
॥
पदस्थान् पूजयेद्देवान् त्रिंशत् पञ्चदशैव च ।
द्वात्रिंशद्बाह्यतः पूज्याः पूज्याश्चान्ते
त्रयोदश ॥
नामतस्तान् प्रवक्ष्यामि स्थानानि च निबोध
मे ।
ईशकोणादिषु सुरान् पूजयेच्च विधानतः ॥
शिखी चैवाथ पर्ज्जन्यो जयन्तः
कुलिशायुधः ।
सूर्य्यः सत्यो भृशश्चैव आकाशो वायुरेव च
॥
पूषा च वितथश्चैव गृहक्षतयमाबुभौ ।
गन्धर्व्वो भृङ्गराजश्च मृगाः पितृगणस्तथा ॥

एते वंशाः समाख्याताः क्वचिद्रज्जव एव
तु ।
एतेषां यस्तु सम्पातः पदमध्यं समं तथा ॥
समं चैतत् समाख्यातं त्रिशूलं कोणगञ्च यत्
।
स्तम्भन्यासेषु वर्ज्यानि तुलाविधिषु
सर्व्वदा ॥
कीलोत्सृष्टोपधानादि वर्ज्जयेद्यत्नतो नरः
।
सर्व्वत्र वास्तुनिर्द्दिष्टः पितृवंशोत्तरायतः ॥
मूर्द्धन्यग्निः समाविष्टो मुखे चापः
समास्थितः ।
पृथ्वीधरोऽर्य्यमा चैव स्तनयोस्तावधिष्ठितौ
॥
वक्षःस्थले त्वापवत्सः पूजनीयः सदा बुधैः
।
नेत्रयोर्द्दितिपर्ज्जन्यौ श्रोत्रे दितिजयन्तकौ
॥
सर्पेन्द्रा वंशसंस्थौ तु पूजनीयौ प्रयत्नतः ।
सूर्य्यः सोमादयस्तद्वद्बाह्वोः पञ्च च पञ्च च
॥
रुद्रश्च राजयक्ष्मा च वामहस्तं समाश्रितौ
॥
सावित्रः सविता तद्वद्धस्तं दक्षिणमाश्रितौ ।
विवस्वानथ मित्रश्च जठरे संव्यवस्थितौ ।
पूषा च पापयक्ष्मा च हस्तयोर्म्मणिबन्धने ॥
तथैवासुरशोषौ च वामपार्श्वं समाश्रितौ ।
पार्श्वे तु दक्षिणे तद्वद्वितथः सगृहक्षतः ॥
उर्व्वोऽर्य्यमाम्बुपौ ज्ञेयौ
जान्वोर्गन्धर्व्वपुष्पकौ ।
जङ्घयोर्मृगसुग्रीवौ स्फिक्स्थौ दौवारिको
मृगः ॥
जयः शक्रस्तथा मेढ्रे पादयोः पितरस्तथा
।
मध्ये नवपदो ब्रह्मा हृदये तु स पूज्यते ॥
चतुःषष्टिपदो वास्तु प्रासादे ब्रह्मणः स्मृतः
।
ब्रह्मा चतुष्पदस्तद्वत् कोणेष्वेकपदास्तथा
॥
बहिःकोणेषु चाष्टौ तु सार्द्धाश्चोभयतः
स्मृताः ।

इन्द्रश्चन्द्रो जयश्चैव एकैके संव्यवस्थिताः ॥
मित्रश्चतुष्पदस्थश्च पश्चिमे तु व्यवस्थितः ॥
रुद्रः पदैकसंस्थो वै यक्ष्मा वैकपदे स्थितः ।
धराधरश्च विज्ञेयो ह्युत्तरे च चतुष्पदः ।
चतुर्मुखश्चतुष्कस्थो मध्ये ज्ञेयः प्रजापतिः ॥”
अथ वास्तुपूजा । मात्स्ये ।
“अथातः संप्रवक्ष्यामि प्रासादविधिनिर्णयम् ।
वास्तौ परीक्षिते सम्यग्वास्तुदेहविचक्षणाः ॥
वास्तूपशमन कुर्य्यात् पूर्ब्बमेव विचक्षणः ।
एकाशीतिपदं लिख्य वास्तुमध्ये तु पिष्टकैः ॥
होमस्त्रिमेखले कार्य्यः कुण्डे हस्तप्रमाणके ।
यवैः कृष्णतिलैस्तद्वत् समिद्भिः क्षीरवृक्षजैः ॥
पालाशैः खादिरैर्व्वापि मार्गोडम्बरसम्भवैः ।
कुशदूर्व्वामयैर्व्वापि मधुसर्पिःसमन्वितैः ॥
कार्य्यस्तु पञ्चभिर्व्विल्वैर्व्विल्वबीजैरथापि वा ।
होमान्ते भक्ष्यभोज्यैश्च वास्तुदेशे बलिं हरेत् ॥
तद्वद्विशेषनैवेद्यमिदं दद्यात् क्रमेण तु ।
ईशकोणे घृतान्नन्तु शिखिने विनिवेदयेत् ॥
ओदनं सफलं दद्यात् पर्ज्जन्याय घृतान्वितम् ।
जयन्ताय ध्वजं पीतं पैष्टं कूर्म्मञ्च संत्यजेत् ॥
इन्द्राय पञ्च रत्नानि पैष्टकं कुलिशं तथा ।
वितानकञ्च सूर्य्याय धूम्रं रक्तं तथैव च ॥
सत्याय घृतगोधूमं मत्स्यान् दद्याद्भृशाय च ।
शष्कुलीं चान्तरीक्षाय दद्याच्छक्तुञ्च वायवे ॥
पूष्णे लाजास्तु दातव्या वितथे चणकोदनम् ।
गृहक्षताय मध्वन्नं यमाय पिशितौदनम् ॥
गन्धौदनञ्च गन्धर्व्वे भृङ्गे मेषस्य शृङ्गकम् ।
मृगाय यावकं दद्यात् पितृभ्यः कृशरा मताः ॥
दौवारिके दन्तकाष्ठं पैष्टं कृष्णं बलिं तथा ।
सुग्रीवे पूपकं दद्यात् पुष्पदन्ताय पायसम् ॥
कुशस्तम्बेन सहितं दद्यात् पद्मञ्च वारुणे ।
पैष्टं हिरण्मयं दद्यादसुराय सुरा मता ॥
घृतौदनं च शोषाय गोधां वै पापयक्ष्मणे ।
घृतलड्डुकांश्च रोगाय नागे पुष्पं फलान्वि-
तम् ॥
सर्पिर्मुख्याय दातव्यं मुद्गौदनमतः परम् ।
भल्लाटाय ततो दद्यात् सोमाय घृतपायसम् ॥
सर्पाय पैष्टं शालूकमदित्यै लोपिकास्तथा ।
दित्यै तु पूरिकां दद्यात् इत्येवं बाह्यतो बलिम् ॥
क्षीरमापाय दातव्यमापवत्साय वै दधि ।
सवित्रे लड्डुकान् दद्यात् समरीचान् कुशौ-

दौवारिकोऽथ सुग्रीवः पुष्पदन्तो जलाधिपः
।
असुरः शोषपापौ च रोगोऽहिर्मुख्य एव च ॥
भल्लाटः सोमसूर्य्यौ च अदितिश्च
दितिस्तथा।
वहिर्द्वात्रिंशदेते तु तदन्तश्च सुरान् शृणु ॥
ईशानादिश्चतुष्कोणे संस्थितान् पूजयेद्बुधः
।
आपश्चैवाथ सावित्रो जयो रुद्रस्तथैव च ॥
मध्ये नवपदो ब्रह्मा तस्याष्टौ च समीपगाः।
सर्व्वानिकोत्तरान् विद्यात् पूर्ब्बादीन्नामतः
शृणु ॥
अर्य्यमा सविता चैव विवखान् विबुधाधिपः
।
मित्रोऽथ राजयक्ष्मा च तथा पृथ्वीधरः
क्रमात् ॥
अष्टमश्चापवत्सश्च परितो ब्रह्मणः स्मृताः।
अर्य्यमा च विवस्वांश्च मित्रः
पृथ्वीधरस्तथा॥
ब्रह्मणः परितो दिक्षु त्रिपदास्ते तु सर्व्वतः।
आपश्चैवापवत्सश्च
पर्ज्जन्योऽग्निर्द्दितिस्तथा॥
पदिकानाञ्च वर्गोऽयमेवं कोणेष्वशेषतः।
तन्मध्ये तु वहिर्व्विंशद्द्विपदास्ते तु सर्व्वतः
॥
अर्य्यमा च विवस्वांश्च मित्रः
पृथ्वीधरस्तथा।
ब्रह्मणः परितो दिक्षु त्रिपदास्ते तु सर्व्वतः ॥
वंशानिदानीं वक्ष्यामि रज्जूरपि पृथक्
पृथक्।
वायुं यावत्तथा रोगात् पितृभ्यः
शिखिनन्तथा॥
मुख्याद्भृशं तथा शोषाद्वितथं यावदेव तु।
सुग्रीवाददितिं यावत् भृङ्गात् पर्ज्यन्यमेव च
॥

विंशतिर्द्विपदास्तेषां चतुःषष्टिपदे स्मृतः ॥"
* ॥
हयशीर्षे।
"वास्त्वङ्गं सूत्रयेत् प्राज्ञः श्वेताम्बरधरः
शुचिः।
श्वेतगन्धानुलिप्ताङ्गः सर्व्वालङ्कारभूषितः॥
चतुःषष्टि तु प्रासादे एकाशीति गृहे सदा।
चतुरस्रीकृते क्षेत्रे अष्टधोभयभाजिते॥
कोणरेखां ततो दत्त्वा सुरभागांस्तु कल्पयेत्
।
शिवः कोणार्द्धतो ज्ञेयः पर्ज्जन्यः
पदसंस्थितः ॥
द्विपदस्थो जयो ज्ञेयः सुरेशश्चैकपादिकः।
भास्करस्तु पदे ज्ञेयो द्विपदः सत्य इष्यते
॥
भृशः पदस्थो विज्ञेयो व्योमश्चैव पदार्द्धगः
।
हुताशनः पदार्द्धश्च पूषा च पदसंस्थितः ॥
वितथो द्विपदस्थश्च पदैकश्च गृहक्षतः।
वैवस्वतः पदैकस्थो गन्धर्व्वो द्विपदस्थितः
॥
भृङ्गश्चैकपदो ज्ञेयो मृगश्चार्द्धपदे स्थितः।
पितरश्चार्द्धतो ज्ञेयाः पदे दौवारिकस्तथा
॥
सुग्रीवश्च पदे ज्ञेयो ह्येकस्थः पुष्पदन्तकः
।
यादसाम्पतिरेकस्थो ह्यसुरस्तु हि
संस्थितः ॥
शोषश्चैकपदे ज्ञेयो ह्यर्द्धगः पाप इष्यते।
रोगश्चार्द्धपदे ज्ञेयो नागश्चापि पदे स्थितः
॥
मुख्यश्च द्विपदे ज्ञेयो भल्लाटः पदसंस्थितः
।
यज्ञेश्वरः पदे ज्ञयो नागस्तु द्विपदे स्थितः।
पदस्था श्रीमहादेवी अदितिश्चार्द्धसंस्थिता
।
आपो ज्ञेयास्तु पदगा बली द्विपदसंस्थितः
॥
चतुष्पदस्थो विज्ञेयस्त्वर्य्यमा पूर्ब्बमध्यगः
।
सविता तु पदे ज्ञेयः सावित्री च पदे स्थिता
॥

दनम्।
सवितुर्गुडपूपांश्च जयाय घृतचन्दनम्।
विवस्वते तथा दद्यात् रक्तचन्दनपायसम्॥
हरितालौदनं दद्यादिन्द्राय घृतसंयुतम्।
घृतौदनञ्च मित्राय रुद्राय घृतपायसम्॥
आमं पक्वं तथा मांसं देयं स्याद्राजयक्ष्मणे।
पृथ्वीधराय मांसानि कुष्माण्डाय च दापयेत् ॥
सशर्करान्नं संदद्यादर्य्यम्ने सर्व्वतः क्रमात्।
नमस्कारान्तयुक्तेन मन्त्रेण पुनरेव च ॥
पञ्चगव्यं यवांश्चैव तिलाक्षतहविश्चरून्।
भक्ष्यं भोज्यञ्च विविधं ब्रह्मणे विनिवेदयेत् ॥

एवं सम्पूजिता देवाः शान्तिं कुर्व्वन्ति ते सदा ।
सुरेभ्यः काञ्चनं दद्याद्ब्रह्मणे गां पयस्विनीम् ॥
राक्षसीनां बलिर्द्देयः अपि यादृक् तथा शृणु ।
मांसौदनं घृतं पद्मं केशरं हविषान्वितम् ।
ईशानभागमाश्रित्य चरक्यै विनिवेदयेत् ॥
दध्योदनं सरुधिरमस्थिखण्डैश्च संयुतम् ।
पीतरक्तबलिं दद्यात् पूतना या तु राक्षसी ॥
वायव्ये पापराक्षस्यै मत्स्यमांससुरासवम् ।
पायसं वापि दातव्यं स्वनाम्ना सर्व्वतः क्रमात् ।
नमस्कारान्तयुक्तेन प्रणवाद्येन सर्व्वतः ॥" * ॥
ततः सर्व्वौषधिस्नानं यजमानस्य कारयेत् ।
द्विजांस्तु पूजयेद्भक्त्या ये चान्ये गृहमागताः ॥
एतद्वास्तपशमनं कृत्वा कर्म्म समारभेत् ।
प्रासादभवनोद्यानप्रारम्भेपरिवर्त्तने ॥
परवेश्मप्रवेशेषु सर्व्वदोषापनुत्तये ।
इति वास्तूपशमनं कृत्वा सूत्रेण वेष्टयेत् ॥
रक्षोघ्नपवमानेन सूत्रेण भवनादिकम् ।
नृत्यमङ्गलवाद्येन कुर्य्याद्ब्राह्मणवाचनम् ॥
अनेन विधिना यस्तु प्रतिसंवत्सरं बुधः ।
गृहे वायतने कुर्य्यान्न स दुःखमवाप्नुयात् ॥
न च व्याधिभयं तस्य न च बन्धुधनक्षयः ।
जीवेद्वर्षशतं स्वर्गे कल्पमेकं वसेन्नरः ॥"
* ॥
हयशीर्षपञ्चरात्रे ।
"एवं प्रगृह्य काष्ठानि रजसापूर्य्य देशिकः ।
एतेषामेव देवानां बलिं दद्यात्तु कामिकम् ॥
ईशानाय प्रदातव्यं पायसं मधुना सह ।
आममांसं पूर्ब्बभागे सर्व्वस्कन्धे तुषोदकम् ॥
सितपद्मं घृतं मांसं विदार्य्यै चाग्निकोणके ।
कुशं वा पूपकं मांसमर्य्यम्णयेव दक्षिणे ॥
पिण्डञ्चैव तथा रक्तं पूतन्यै नैरृते तथा ।
सासृङ्मांसं प्रदातव्यं जृम्भकायैव पश्चिमे ॥
अग्निखण्डेन सहितं रक्तपिण्डेन मिश्रितम् ।
प्रदेयं पापराक्षस्यै वायव्यां मांसमेव च ॥
उत्तरे पिलिपिच्छायै सान्द्रं रक्तं बलिं हरेत् ।
वाराह्यै छागमांसानि ऐशान्यां दिशि दापयेत् ॥
ततो भूतगणानान्तु राक्षसानां सुरोत्तम ! ।
पिशाचानां गणानान्तु बलिर्देयस्तु कामिकः ॥
एतान् वा पूजयेत् सर्व्वान् कुशपुष्पाक्षतैर्बुधः ।
एवं संपूजिता देवाः शान्तिपुष्टिप्रदा नृणाम् ॥
अपूजिता विहिंसन्ति कारकं स्थापकं तथा ।
तस्मादेतांस्तु संपूज्य गन्धपुष्पैर्मनोहरैः ।
प्रासादं कारयेद्विद्वान् गृहं वा सुरसत्तम ! ॥"
अथ प्रासादमूलारम्भः । तत्रैव ।
"ब्रह्मस्थाने ततः कुर्य्याद्वासुदेवस्य पूजनम् ।
श्रियः संपूजनं कुर्य्यात् हृषीकेशगणस्य च ॥
पूजनन्तु ततः कुर्य्याद्वासुदेवगणस्य च ।
गन्धाढ्यपुष्पनैवेद्यधूपदीपैः सुरोत्तम ! ॥
ततः संपूजयेत्तस्मिन् सर्व्वलोकधरां महीम् ।
सुरूपां प्रमदारूपां विद्याभरणभूषिताम् ॥
ध्यात्वा समर्च्चयेद्देवीं परितुष्टां स्मिताननाम् ।
ततः प्रणम्य विज्ञाप्य तन्मयत्वेन चिन्तयेत् ॥
ततः स्वनाममन्त्रेण सर्व्वदेवमयं परम् ।
ध्यात्वा समर्च्चयेत्तत्र यत्तद्वास्तुमयं नरः ॥
ब्रह्मस्थाने ततो विद्वान् कुर्य्यादाधारमक्षतैः ।
तस्मिन् संस्थापयेत् कुम्भं वर्द्धन्या सह पूजि-तम् ॥
हेमं वा राजतं वापि मृण्मयं वा दृढं नवम् ।
सर्व्ववीजौषधीयुक्तं सुवर्णरजतान्वितम् ॥
रत्नगर्भं सुसंपूर्णं वस्त्रपूतेन वारिणा ।
प्रशस्तपल्लवोपेतं श्वेतचन्दनचर्च्चितम् ॥
पुष्पैः सुमालितं कृत्वा गन्धपुष्पैर्व्विधूपितम् ।
आहतेन च शुक्लेन वस्त्रयुग्मेन वेष्टितम् ॥
ब्रह्मस्थाने ततो मन्त्री कलसं स्थाप्य पूजयेत् ।
तस्मिंश्चतुर्मुखं देवं प्रजेशं मन्त्रविग्रहम् ॥
गन्धपुष्पैश्च नैवेद्यैः पूजयेत् सुमनोहरैः ।
ततो मण्डलबाह्ये तु प्राच्यां वा प्राङ्मुख-स्थितः ॥
ततो गर्त्तं खनेन्मध्ये हस्तमात्रप्रमाणकम् ।
चतुरङ्गुलमात्रं तदधः खन्यात् सुसम्मितम् ॥
गोमयेनोपलिप्याथ चन्दनेन च भूषयेत् ।
मध्ये दत्त्वा तु पुष्पाणि शुक्लान्यक्षतमेव च ॥
आचार्य्यः प्राङ्मुखो भूत्वा ध्यायेद्देवं चतु-र्भुजम् ।
तूर्य्यमङ्गलघोषेण ब्रह्मघोषरवेण च ॥
अर्घ्यं दद्यात् सुरश्रेष्ठ ! कुम्भतोयेन मन्त्रवित् ।
प्रगृह्य कर्क्करीं तावच्छ्वभ्रं प्रपूरयेज्जलैः ॥
सर्व्वरत्नसमाकीर्णैर्व्विमलैः सुसुगन्धिभिः ।
तस्मिन् शुक्लानि पुष्पाणि प्रक्षिपेदोमिति स्मरन् ॥
तदावर्त्तं परीक्षेत वेदाद्येनाक्षतं क्षिपेत् ।
शुभं स्याद्दक्षिणावर्त्तेऽशुभं वामे भवेत्ततः ॥
बीजैः शालियवादीनां तं गर्त्तं पूरयेद्बुधः ।
क्षत्त्रजाभिः पवित्राभिर्मृद्भिर्गर्त्तं प्रपूरयेत् ॥
एवं पुष्पाद्यविधिना चार्घ्यदानं सुरोत्तम ! ।
सुवर्णं गां वस्त्रयुगमाचार्य्याय निवेदयेत् ॥
कालज्ञस्थपती पूज्यौ वैष्णवान् शक्तितोऽर्च्चयेत् ।
ब्राह्मणान् भोजयित्वा च गेयनृत्यादि कारयेत् ॥
ततस्तं खातयेद्यत्नाज्जलान्तं याषदेव तु ।
पुरुषाधः स्थितं शल्यं न गृहे दोषदं भवेत् ॥
प्रासादे दोषदं शल्यं भवेद्यावज्जलान्तिकम् ।
तस्मात् प्रासादिकी भूमिः शोध्या यावज्जला-न्तिकम् ॥
शिवान्तं कर्क्करान्तं वा यावद्वा भूः कुमारिका ।
आकोट्यतां समीकृत्य ततो योगं समाचरेत् ॥"
किञ्च ।
"पूरयेत् खातकं यत्नात् पादं पादं यथाक्रम् ।

पर्ज्जन्याय जलं देयं
पुष्पगन्धादिवासितम् ॥
जयन्ताय प्रदातव्या पताका पीतवर्णिका
।
सुरेशाय च रत्नानि भाष्कराय घृतं तथा
॥
धूम्रकं पीतवर्णं वा सत्ये दद्याद्वितानकम् ।
दद्याद्भृशे पक्षिमांसं व्योमाय त्वचमग्नये ॥
पूष्णे धानाः सलाजास्तु सुवर्णं वितथे
तथा ।
गृहक्षताय मध्वन्नं यमाय पिशितौदनम् ॥
गन्धं गन्धर्व्वदेवाय भृङ्गे दद्यात्तु शाकुनम्
।
मृगे तिलयवांश्चैव पितृभ्यः कृशरं तथा ॥
दौवारिके दन्तकाष्ठं सुग्रीवे यावकं तथा ।
पुष्पदन्ते कुशा देया वरुणे पद्ममुत्पलम् ॥
असुरायैक्षवं देयं रसं शोषे घृतौदनम् ।
यवास्तु देयाः पापाय रोगाय घृतमण्डकम्
॥
नागाय नागपुष्पाणि भक्ष्यान् मुख्याय
दापयेत् ।
चित्रौदनञ्च भल्लाटे सोमाय मधुपायसम् ॥
नागाय चापि शालूकं श्रिये सरसपायसम्
।
अदित्यै पूरिका देया क्षीरं चाद्भ्यो
ददेद्बलिम् ॥
दधि क्षीरं चापवल्ल्यै अर्य्यम्ने लड्डुकं
बलिम् ।
कुशोदकं सवित्रे च सावित्र्यै गुडपूर्ब्बकम्
॥
विवस्वते रक्तपुष्पं रक्तचन्दनमेव च ।
हरिद्रान्नं तथेन्द्राय साज्यामन्तु जयाय च
॥
घृतपूरन्तु मित्राय रुद्राय गुडपायसम् ।
आमपक्वानि मांसानि प्रदद्याद्राजयक्ष्मणे
॥
पृथ्वीधरायाममांसं खड्गिमांसं बलिं हरेत्
।
साक्षतं सलिलञ्चैव पञ्चगव्यं तथा चरुम् ॥
कुशान् गन्धं तथा पुष्पं ब्रह्मस्थाने
निवेशयेत् ।

आचार्य्यो गृह्य संभारान् ग्रहादींस्तर्पयेत्
सुरान् ।
घृतैस्तैलैर्यवैर्म्मन्त्रैर्ब्रह्मादींस्तर्पयेत्ततः ॥
प्रजेशं तर्पयेद्विद्वानाहुतीनां शतेन च ।
इतरान् दशभिर्द्देवानाहुतिभिः प्रतर्पयेत् ॥
दद्यात् पूर्णाहुतिं पश्चात् वौषडन्तेन मन्त्रवित् ।
तत्र प्रणम्य विज्ञाप्य कृत्वा वै स्वस्तिवाचनम् ॥
प्रगृह्य कर्करीं सम्यङ्मण्डलन्तु प्रदक्षिणम् ।
सूत्रमार्गेण दिव्येन तोयधारान्तु भ्रामयेत् ॥
पूर्ब्बवत्तेन मार्गेण सूत्रबीजानि भ्रामयेत् ।
सुशोभनं शुभं स्थानं तथा खातस्य कारयेत् ॥

आष्टाङ्गुलं मृत्तिकया स्वस्तिकं
चेष्टिकादिभिः ॥
सिक्त्वा सिक्त्वा तु तोयेन कलसैः
काञ्चनादिभिः ।
आकोटनं ततः कुर्य्यात् मुद्गरैर्ब्रह्मवृक्षजैः
॥
पादोनं पूरयेत् खातं सुषमं चैव कारयेत् ।
देशिकः पञ्चगव्येन तां भूमिं प्रोक्षयेद्बुधः ॥
सुवर्णब्रीहिगर्भेण चूतपल्लवशोभिना ।
तीर्थतोयसुपूर्णेन स्वर्णताम्रमयेण वा ॥
सेचयेदभिजप्तेन वारिणा कलसेन तु ।
ततः शुद्धा भवेद्भूमिर्दोषयुक्तापि या भवेत्
॥”
अथ शिलालक्षणं मात्स्ये ।
“आदावेवं समासेन शिलालक्षणमुत्तमम् ।
शिलान्यासविधानञ्च प्रोच्यते तदनन्तरम् ।
शिला वाथेष्टका वापि चतस्रो
लक्षणान्विताः ।
प्रासादादौ विधानेन न्यस्तव्याः सुमनोहराः
॥
चतुरस्राः समाः कृत्वा समन्तादथ वेष्टकाः
।
शिलारूपाः स्मृता विद्या नन्दाद्याश्चेष्टका-
त्मिकाः ॥
संपूर्णाः सुतलाः स्निग्धाः सुषमा लक्षणा-
न्विताः ।
कुशदूर्व्वाङ्किता धन्याः सध्वजच्छत्रचामराः
॥
साङ्कुशास्तोरणोपेताः
कूर्म्ममत्स्यफलान्विताः ।
दर्पणा हस्तिवज्राङ्काः
प्रशस्तद्रव्यलाञ्छिताः ॥
शस्तपक्षिमृगाङ्काश्च वृषाङ्काः सर्व्वदा
हिताः ।

स्वस्तिका वेदिका शुक्ला
नन्द्यावर्त्तकलाञ्छिताः॥
पद्मादिलक्षणोपेताः शिलाः
सर्व्वार्थसिद्धिदाः।
तथा गोवाजिपादाङ्काः शिला धन्याः
सुखा-
वहाः ॥
क्रव्यादमृगपादाङ्का न शस्ताः
पक्षिणस्तथा।
दिङ्मूढा दिग्विहीनाश्च दीर्घह्रस्वाः क्षता-
न्विताः ॥
विवर्णाः स्फुटिता भग्नाः संत्याज्या
लक्षणच्युताः ।
प्रशस्तपाणिरूपाङ्काः
प्रशस्तद्रव्यलाञ्छिताः॥
यथोक्तलक्षणोपेताः शिला
नित्यहितावहाः ॥”
अथ इष्टकालक्षणम्। तत्रैव ।
“इष्टकानां समासेन लक्षणं शृणु सांप्रतम्
।
एकवर्णाः सुपक्वाश्च सुप्रमाणा मनोरमाः
॥
नन्दाद्याश्चेष्टकाः कार्य्याश्चतुरस्राः
सुसंमिताः ।
अस्थ्यङ्गारान्विता नेष्टाः कृष्णवर्णाः
सशर्कराः ॥
मन्दपक्वा विपक्वाश्च वहुदिन्याश्च
वर्ज्जिताः ।
भग्नाश्च विषमा हीना वर्ज्जनीयाः
प्रयत्नतः ॥”
हयशीर्षपञ्चरात्रे ।
“इष्टकानां प्रमाणञ्च लक्षणं सांप्रतं शृणु ।
सुतला लक्षणोपेता द्वादश्यङ्गुलसम्मिताः
॥
सुविस्तारविभागेन नैपुण्येन च सम्मिताः
।
सुपक्वाः सुप्रमाणास्ता एकवर्णा मनोहराः
।
विमला इष्टकाः कार्य्याश्चतुरस्राः
सुसम्मिताः ।

द्विगुणः शिखरोच्छ्रायो भित्त्युच्छ्रायात् प्रमा-
णतः ।
शिखरार्द्धस्य चार्द्धेन विधेया तु प्रदक्षिणा ॥
चतुर्दिक्षु तदा ज्ञेयो निर्गमस्तु तथा बुधैः ।
गर्भसूत्रद्वयं भागो विस्तारो मण्डपस्य तु ॥
आयतः स्यात्त्रिभिर्भागैर्भद्रयुक्तः सुशोभनः ।
पञ्चभागेन संभज्य गर्भमानं विचक्षणः ॥
भागमेकं गृहीत्वा तु प्राग्ग्रीवं कल्पयेद्बुधः ।
गर्भसूत्रसमो भागादग्रतो मुखमण्डपः ।
एतत् सामान्यमुद्दिष्टं प्रासादस्येह लक्षणम् ॥
किञ्च ।
मेरुमन्दरकैलासकुम्भसिंहमृगास्तथा ।
विमानच्छन्दकस्तद्वच्छ्रीवृक्षोऽथ मृगाधिपः ॥
बलभिच्छन्दकस्तद्वद्वर्त्तुलःसर्व्वभद्रकः ।
गजश्च नन्दनश्चैव नन्दिवर्द्धन एव च ॥
हंसो वृषः सुपर्णश्च पद्मकोऽथ समुद्गकः ।
प्रासादा नामतः प्रोक्ता विभागं शृणुत द्विजाः ॥
शतशृङ्गश्चतुर्द्वारो भूमिकाषोडशोच्छ्रितः ।
नानाविचित्रशिखरो मेरुप्रासाद उच्यते ॥
मन्दरो द्वादशः प्रोक्तः कैलासो दशभूमिकः ।
विमानच्छन्दकस्तद्वदनेकशिखराननः ॥
स चाष्टभूमिकस्तद्वत् सप्तभिर्नन्दिवर्द्धनः ।
विंशाण्डकसमायुक्तो नन्दनः समुदाहृतः ॥
षोडशाण्डकसंयुक्तो नानारूपसमन्वितः ।
अनेकशिखरस्तद्वत् सर्व्वतोभद्र उच्यते ॥
चन्द्रशालसमोपेतो विज्ञेयः पञ्चभूमिकः ।
बलभिच्छन्दकस्तद्वच्छुकनासात्रयान्वितः ॥
वृषस्योच्छ्र्यतस्तुल्यो मण्डलश्चास्रिवर्ज्जितः ।
सिंहः सिंहगतिर्ज्ञेयो मृगो मृगसमस्तथा ॥
कुम्भः कुम्भाकृतिस्तद्वद्भूमिकानवकोच्छ्र्यः ।
अङ्गुलीपुटसंस्थानपञ्चाण्डकविभूषितः॥
षोडशास्रः समन्तात्तु विज्ञेयः स समुद्गकः ।
पार्श्वयोश्चन्द्रशालस्य उच्छ्रायो भूमिकाद्वयम् ॥
षोडशास्रः स विज्ञेयो विचित्रशिखरः शुभः ।
मृगराजस्तु विख्यातश्चन्द्रशालाविभूषितः॥
प्राग्ग्रीवेण विशालेन भूमिकासु षडुन्नतः ।
अनेकचन्द्रशालस्तु गजः प्रासाद उच्यते ॥
पर्य्यन्तगृहराजो वै गरुडो नाम नामतः ।
सप्तभूम्युच्छ्रयस्तद्वच्चन्द्रशालात्रयान्वितः॥
भूमिकाषडशीतिस्तु वाह्यतः सर्व्वतो भवेत् ।
तथान्यो गरुडस्तद्वदुच्छ्रायाद्दशभूमिकः ॥

त्रिंशता नन्दनः प्रोक्तः
सर्व्वतोभद्रकस्तथा ॥
वर्त्तुलः पद्मकश्चैव त्रिंशद्धस्त उदाहृतः ।
मृगः सिंहश्च कुम्भश्च
बलभिच्छन्दकस्तथा ॥
एते षोडशहस्ताः स्युश्चत्वारो
देववल्लभाः ।
श्रीवृक्षो मृगराजश्च समुद्गकगजौ तथा
॥
एते द्वादशहस्ताः स्युरेतेषां हंसकः समः
।
गरुडोऽष्टकरो ज्ञेयो वृषो दश उदाहृतः ॥
एवमेते प्रमाणेन कर्त्तव्याः शुभलक्षणाः ।
यक्षराक्षसनागानां मातृहस्तः प्रशस्यते ॥
तथा मेर्व्वादयः सप्त ज्येष्ठलिङ्गे
सुखावहाः ।
श्रीवृक्षकादयश्चाष्टौ मध्यमस्य उदाहृताः
॥
तथा हंसादयः पञ्च कन्यसे सुभदा मताः
॥”
हयशीर्षपञ्चरात्रे ।
“प्रासादं संप्रवक्ष्यामि सर्व्वसाधारणं शृणु
।
चतुरस्रीकृतं क्षेत्रं भवेत् षोडशधा पुनः ॥
मध्ये तस्य चतुर्भिस्तु
कुर्य्यादायसमन्वितम् ।
द्वादशैव तु भागानि भित्त्यर्थं परिकल्पयेत्
॥
जङ्घोच्छ्रायन्तु कुर्व्वीत चतुर्भागेन
चायतम् ।
जङ्घयोर्द्विगुणोच्छ्रयं मञ्जर्य्याः
कल्पयेद्बुधः ॥
चतुर्भागेन मञ्जर्य्याः कार्य्या सम्यक्
प्रदक्षिणा ।
तन्मानं निर्गमं कार्य्यमुभयोः पार्श्वयोः
समम् ॥
शिखरेण समं कार्य्यमग्रे जगति विस्तरम्
।
त्रिगुणेनापि कर्त्तव्यं यथाशोभानुरूपतः ॥
विस्तरं मण्डपस्याग्रे गर्भसूत्रद्वयेन तु ।

छिन्नकर्णाश्चाप्रशस्ताः
पाणिपादविवर्ज्जिताः ॥
सशर्कराः कृष्णवर्णा अस्थ्यङ्गारचिताश्च
याः ।
विवर्णा मन्दगन्धाश्च याः पीनाः
पिण्डिकाश्च
याः ॥
हीनाश्च विषमा भग्ना जर्ज्जराश्च
विवर्ज्जिताः ॥”
अथ शिलादिन्यासव्यवस्था । मात्स्ये ।
“शिलान्यासस्तु कर्त्तव्यः प्रासादे तु
शिलामये ।
इष्टकानान्तु विन्यासः प्रासादे चेष्टकामये
॥
शैलजे शैलजः पीठ ऐष्टिके ऐष्टिकः स्मृतः
।
शिलान्यासादिको भद्रे मूलपादो विधीयते
॥”
हयशीर्षपञ्चरात्रे ।
“कर्त्तव्यश्चेष्टकान्यासः प्रासादे
चेष्टकामये ।
शैले शिलानां विन्यासः कार्करे कर्करा
न्यसेत् ॥
कृत्वा शिलादिन्यासे च
प्राक्शिलाभ्यधिवा-
सनम् ।
इष्टकानां प्रतिष्ठाञ्च गर्भाधानञ्च कारयेत् ॥
गुरवे दक्षिणां दत्त्वा पीठबन्धञ्च साधयेत् ।
स्वयं श्रीहयशीर्षेण प्रोक्तस्तत्तद्विधिः
स्फुटम् ॥”
अथ पीठबन्धनम् । हयशीर्षे ।
“पीठबन्धं ततः
कुर्य्यान्महाप्रासादमानतः ।
पीठोत्तमं चोच्छ्रयेण
प्रासादस्योर्द्ध्वमानतः ॥
यादहीनं मध्यमं स्यात् कन्यसं
चार्द्धमानतः ।
उत्तमं वासुदेवस्य कुर्य्यात् पीठं विचक्षणः
॥
अथ प्रासादलक्षणानि । मातृस्ये ।
एवं वास्तुबलिं कृत्वा भजेत्
षोडशभागिकम् ।

पद्मकः षोडशास्रस्तु भूमिद्वयसमन्वितः ।
पद्मतुल्यप्रमाणेन श्रीवृक्षक इति स्मृतः ॥
पञ्चाण्डकस्त्रिभूमिस्तु गर्भे हस्तचतुष्टयम् ।
वृषो भवति नाम्ना यः प्रासादः सर्व्वकामिकः ॥
सप्ताष्टौ पञ्चकाश्चैव प्रासादा ये मयोदिताः ।
सिंहस्य ते समा ज्ञेया ये चान्ये तत्प्रमाणतः ॥
चन्द्रशालैः समोपेताः सर्व्वे प्राग्ग्रीवसंयुताः ।
ऐष्टका दारवाश्चैव शैला वा स्युः सुतोरणाः ॥
मेरुः पञ्चाशद्धस्तः स्यात् मन्दरः पञ्चहीनकः ।
चत्वारिंशत्तु कैलासश्चतुस्त्रिंशद्विमानकः ॥
नन्दिवर्द्धनकस्तद्वद्द्वात्रिंशत्समुदाहृतः ।

दैर्घ्यात् पादाधिकं कुर्य्यान्मध्ये
स्तम्भैर्व्विभूषि-
तम् ॥
प्रासादगर्भमानं वा कुर्व्वीत मुखमण्डपम्
।
एकाशीतिपदैर्व्वास्तुं यष्ट्वा मण्डपमारभेत्
॥
शुकाढ्यद्वारि विन्यासे पादान्तस्थान्
यजेत्
सुरान् ।
तथा प्राकारविन्यासे
यजेद्द्वात्रिंशदन्तगान् ॥
सर्व्वसाधारणञ्चैतत् प्रासादस्य तु
लक्षणम् ।
मानेन प्रतिमाया वा प्रासादमपरं शृणु ॥
प्रतिमायाः प्रमाणेन कर्त्तव्या पिण्डिका
शुभा ।
गर्भस्तु पिण्डिकार्द्धेन गर्भमानास्तु
भित्तयः ॥
भित्तेरायाममानेन उच्छ्रायन्तु प्रकल्पयेत्
।
भित्त्युच्छ्रायात्तद्द्विगुणं शिखरं
कल्पयेद्गुरु ! ।
शिखरस्य तु तुर्य्येण भ्रमणं परिकल्पयेत्
॥
शिखरस्य चतुर्थेन अग्रतो मुखमण्डपम् ।
अष्टकांशेन गर्भस्य रथकानान्तु निर्गमः ॥
परिधेर्गुणभागेन रथकांस्तत्र कल्पयेत् ।
तत्तृतीयेन वा कुर्य्याद्रथकानान्तु निर्गमम्
॥
वासत्रयं स्थापनीयं रथकत्रितये सदा ।
शिखरार्थञ्च सूत्राणि रत्नानि
विनिपातयेत् ॥
शिखरस्यार्द्धभागस्थं सिंहं तत्र च
कारयेत् ।
शुकनासां स्थिरीकृत्य मध्यसन्धौ
विवर्ज्जयेत् ।
अपरे च तथा पार्श्वे तद्वत् सूत्रं
निधापयेत् ॥
तदर्द्धन्तु भवेदंशः कण्ठे श्यामलसारवान्
।
स्कन्धभग्नन्तु कर्त्तव्यं विकरालं तथैव च
।

| तस्य मध्ये चतुर्भिस्तु भागैर्गर्भञ्च कारयेत् ॥<br>भागद्वादशकं तत्र भित्त्यर्थं परिकल्पयेत् ।<br>चतुर्भागेन भित्तीनामुच्छ्रायः स्यात् प्रमा-<br>णतः ॥ |  | ऊर्द्धन्तु वेदिकामानात् कलसं परिकल्पयेत् ॥”<br>किञ्च ।<br>“गरुत्मन्तं तथा कुर्य्यादुपरिष्टाच्चतुर्गुणम् |
| --- | --- | --- |

कुर्य्याद्दिक्प्रतिमायामान् दिक्षु चाष्टासु चोपरि ॥
महावराहमैन्द्र्यान्तु नरसिंहन्तु दक्षिणे ।
प्रतीच्यां श्रीधरं देवमुदीच्यां हयशीर्षकम् ॥
आग्नेय्यां यामदग्न्यञ्च नैरृते राममेव च ।
वामनञ्चैव वायव्यां वासुदेवमथापरे ॥” * ॥
किञ्च ।
“पूर्ब्बभूमौ तु शयनं द्वितीये चासनं भवेत् ।
स्थानमेव तृतीये तु चतुर्थे यानमेव च ॥
पञ्चमे योगनिद्रा तु षष्ठे योगासनं भवेत् ।
स्थानं योगसमायुक्तं सप्तमे परिकल्पयेत् ॥
नानागवाक्षकैर्य्यत्नात् पत्रवल्ल्यादिभूषितम् ।
नानाप्रकारपुष्पाद्यैर्य्यथाशोभं प्रकल्पयेत् ॥
कनिष्ठमध्यज्येष्ठानां प्रासादानां यथाक्रमम् ।
वसुभागा च ऋत्विग्भिः प्रदेया रचना बुधैः ॥
द्वारस्य चाष्टमे युक्ते नवमे दशमे तथा ।
ललाटवेधो नैवं स्यादायस्य शृणु साम्प्रतम् ॥
यावद्धस्तैरभिप्रेतः प्रासादकर्त्तृणानघ ! ।
तावद्भिरङ्गुलैरायो वसुभागेन वा भवेत् ॥
एकस्तम्भो ध्वजो ज्ञेयो द्विस्तम्भा वेदिका मता ।
दशभूम्यन्तरे नित्यं चतुस्तम्भं प्रकल्पयेत् ॥” * ॥
अथ मण्डपलक्षणविशेषः । मात्स्ये ।
“अथातः सम्प्रवक्ष्यामि मण्डपानान्तु लक्षणम् ।
मण्डपान् प्रवरान् वक्ष्ये प्रासादस्यानुरूपतः ॥
विविधा मण्डपाः कार्य्या ज्येष्ठमध्यकनीयसः ।
नामतस्तान् प्रवक्ष्यामि शृणुध्वं द्विजसत्तमाः ! ॥
पुष्पकः पुष्पभद्रश्च सुवृत्तो मृतनन्दनः ।
कौशल्यो बुद्धिसङ्कीर्णो राजभद्रो जयावहः ॥

चतुष्कोणञ्च कर्त्तव्यं संस्थानं मण्डपस्य तु ।
राज्यञ्च विजयश्चैवमायुर्वर्द्धनमेव च ॥
पुत्त्रलाभः श्रियः पुष्टिस्त्र्यस्रादिषु भवेत् क्रमात् ।
एवन्तु शुभदाः प्रोक्ता अन्यथा तु भयावहाः ॥”
अथ तत्र द्वारनिर्णयः । हयशीर्षपञ्चरात्रे ।
“ग्राममध्ये च पूर्ब्बे च प्रत्यग्द्वारं प्रकल्पयेत् ।
विदिशासु च सर्व्वासु तथा प्रत्यङ्मुखं भवेत् ॥
दक्षिणे चोत्तरे चैव पश्चिमे प्राङ्मुखं भवेत् ॥”
किञ्च ।
“विस्ताराद्द्विगुणं द्वारं कर्त्तव्यन्तु सुशोभनम् ।
जातरूपं सरजतं तद्वदुडुम्बरैर्वृतम् ॥
औडम्बरोर्द्धतः स्वर्णं दत्त्वा शाखां न्यसेद्बुधः ।
तूर्य्यमङ्गलघोषेण ब्राह्मणान् स्वस्तिवाच्य च ॥
द्वारस्य च चतुर्थांशे कार्य्यौ चण्डप्रचण्डकौ ।
दण्डहस्तौ तु कर्त्तव्यौ विष्वक्सेनोपमावुभौ ॥
शाखोर्द्धं न्यस्य रत्नानि न्यसेदूर्द्धमुडम्बरम् ।
तस्य मध्ये स्थिता देवी साक्षाल्लक्ष्मीः सुरेश्वरी ॥
कर्त्तव्या दिग्गजैः सा तु स्नाप्यमाना घटेन तु ।
शाखोडुम्बरकौ कार्य्यौ पत्रवल्ल्यादिभूषितौ ॥
एकशाखं त्रिशाखं वा षट्शाखं द्वारमिष्यते ।
नवशाखञ्च कुर्व्वीत अत ऊर्द्ध्वं न कारयेत् ।
विष्णववताररूपाद्यैः शाखां रत्नेन भूषयेत् ॥”
मात्स्ये ।
“चतुःषष्टिपदं कृत्वा मध्ये द्वारं प्रकल्पयेत् ।
विस्ताराद्द्विगुणोच्छ्रायस्तत्त्रिभागा कटिर्भवेत् ॥
विस्तारार्द्धो भवेद्गर्भो भित्तयोऽन्याः समन्ततः ।
गर्भपादेन विस्तीर्णं द्वारं द्विगुणमायतम् ॥
उच्छ्रायात् पादविस्तीर्णा शाखा तद्वदुडुम्बरः ।
विस्तारपादप्रतिमं बाहुल्यं शाखयोः स्मृतम् ॥
त्रिपञ्चसप्तनवभिः शाखाभिर्द्वारमिष्यते ।
कनिष्ठं मध्यमं ज्येष्ठं यथायोगं प्रकल्पयेत् ॥
अङ्गुलानां शतं सार्द्धं चत्वारिंशद्भिरुत्तमम् ।
धन्यमुत्तममायुष्यं धनधान्यदमेव च ॥
शतं चाशीतिसहितं वातनिर्गमनं भवेत् ।
अधिकं दशभिस्तद्वत्तथा षोडशभिः शतम् ॥
शतमानं द्वितीयन्तु भवत्यशीतिभिस्तथा ।
दशद्वाराणि चैतानि क्रमेणोक्तानि सर्व्वदा ॥

उत्तरेण नलैस्तालैः शुभा स्यात् पुष्पवाटिका
सर्व्वतस्तु जलं श्रेष्ठं स्थिरमस्थिरमेव च ॥
सर्व्वतश्चापि कर्त्तव्यं परिखाबलयादिकम् ।
याम्ये तपोवनस्थानमुत्तरे मातृकागृहम् ॥
महानसं तथाग्नेये नैरृते तु विनायकः ।
वारुणे श्रीनिवासश्च वायव्ये ग्रहमालिका ॥
उत्तरे यज्ञशाला तु निर्म्माल्यस्थानमुत्तरे ।
वारुणे सोमदैवत्ये बलिनिर्व्वपणं स्मृतम् ॥
पुरतो गरुडस्थानं तथान्येषां यथोचितम् ।
एवमायतनं कुर्य्या च्छुभमण्डपसंयुतम् ॥
घण्टावितानकसतोरणचित्रयुक्तं
नित्योत्सवप्रमुदितेन जनेन सार्द्धम् ।
यः कारयेत् सुरगृहं विविधध्वजाढ्यं
श्रीस्तं न मुञ्चति सदा दिवि पूज्यते च ॥”
अथ जीर्णोद्धारः । विष्णुधर्म्मे तृतीयकाण्डे ।
“यस्य राज्ञस्तु विषये देववेश्म विशीर्य्यते ।
तस्य सीदति तद्राज्यं देववेश्म यथा तथा ॥
कृत्वा जीर्णस्य संस्कारं तथा देवेशवेश्मनः ।
द्विगुणं फलमाप्नोति नात्र कार्य्या विचारणा ॥”
विष्णुरहस्ये ।
“पतितस्य च यः कर्त्ता पतमानस्य रक्षिता ।
विष्णोरायतनस्येह स नरो विष्णुलोकभाक् ॥”
अग्निपुराणे ।
“पतितं पतमानन्तु तथार्द्धस्फुटितं नरः ।
समुद्धृत्य हरेर्धाम द्विगुणं फलमाप्नुयात् ॥”
देवीपुराणे ।
“मूलाच्छतगुणं पुण्यं प्राप्नुयाज्जीर्णकारकः ।
तस्मात् सर्व्वप्रयत्नेन जीर्णस्योद्धारमाचरेत् ॥”
हयशीर्षपञ्चरात्रे ।
“वापीकूपतडागानां सुरधाम्नां तथानघ ! ।
प्रतिमानां सभानाञ्च संस्कर्त्ता यो नरो भुवि ।
पुण्यं शतगुणं तस्य भवेन्मूलान्न संशयः ॥
प्रतिष्ठाया विधिः कार्य्यस्तथा मन्दिरनिर्म्मिते ।
प्रायः श्रीहयशीर्षोक्तेरनुसारेण वैष्णवैः ॥
देवालयप्रतिष्ठा च ख्याता तल्लिखनेन किम् ।
श्रीमूर्त्तिस्थापनेनैव संपूर्णा सा विशेषतः ॥”

श्रीवृक्षो विजयश्चैव वास्तुजीर्णः श्रुतिं धरः ।
यज्ञभद्रो विंशालश्च संश्लिष्टः शत्रुमर्द्दनः ।
भागपञ्चो नन्दनश्च मानवो मानभद्रकः ।
सुग्रीवो हर्षणश्चैव कर्णिकारः पदार्द्धकः ॥
सिंहश्च श्यामभद्रश्च सुभद्रश्च तथैव च ।
सप्तविंशतिर्व्याख्याता लक्षणं शृणुत द्विजाः ॥
स्तम्भा यत्र चतुःषष्टिः पुष्पकः स उदाहृतः ।
द्वाषष्टिः पुष्पभद्रस्तु षष्टिः सुवृत्त उच्यते ॥
अष्टपञ्चाशकस्तम्भः कथ्यते मृतनन्दनः ।
कौशल्यः षट्पञ्चाशच्चतुःपञ्चाशतापुनः ॥
नाम्ना तु बुद्धिसङ्कीर्णो द्विहीनो राजभद्रकः ।
जयावहस्तु पञ्चाशच्छ्रीवृक्षस्तु द्विहीनकः ॥
विजयस्तद्द्विहीनः स्यात् वास्तुसङ्कीर्णकस्तथा ।
द्वाभ्यामेव प्रहीयेत ततः श्रुतिधरोऽपरः ॥
चत्वारिंशद्यज्ञभद्रो द्विहीनोऽथ विशालकः ।
षट्त्रिंशच्चैव संश्लिष्टो द्विहीनः शत्रुमर्द्दनः ॥
द्वात्रिंशद्गागपञ्चस्तु त्रिंशता नन्दनः स्मृतः ।
अष्टाविंशन्मानवस्तु मानभद्रो द्विहीनकः ॥
चतुर्व्विंशस्तु सुग्रीवो द्वाविंशद्धर्षणो मतः ।
विंशतिः कर्णिकारः स्यादष्टादशः पदार्द्धकः ।
सिंहो भवेद्द्विहीनश्च श्यामभद्रो द्विहीनकः ॥
सुभद्रस्तु तथा प्रोक्तो द्वादशस्तम्भसंवृतः ।
मण्डपाः कथिता ह्येते यथाषल्लक्षणान्विताः ।
त्रिकोणं वृत्तमर्द्धेन्दुमष्टकोणं द्विरष्टकम् ॥
अन्यानि वर्ज्जनीयानि मानसोद्वेगदानि तु ।
द्वारवेधन्तु यत्नेन सर्व्ववास्तुषु वर्ज्जयेत् ॥
वृक्षकोणाच्च भूद्वारात् स्तम्भकूपध्वजादपि ।
कुल्याश्वभ्रेण वा विद्धं न द्वारं शुभदं भवेत् ॥
क्षयश्च दुर्गतिश्चैव प्रवासः क्षुद्भयं तथा ।
दौर्भाग्यं बन्धनं रोगो दारिद्र्यं कलहं तथा ।
विरोधश्चार्थनाशश्च सर्व्वं वेधे भवेत् क्रमात् ॥”
अथ प्राकारादिनिर्णयः । हयशीर्षपञ्चरात्रे ।
“प्रासादस्य चतुर्भागैः प्राकारस्योच्छ्रयो भवेत् ।
पञ्चहस्तस्य देवस्य एकहस्ता तु पीठका ॥
तस्मात्तु द्विगुणः प्रोक्तस्तथा गरुडमण्डपः ।
एकहस्तादि कुर्व्वीत त्रिंशद्धस्तान्तमेव च ॥”
अथ वृक्षरोपणनिर्णयः । मात्स्ये ।
“पूर्ब्बेण फलिनो वृक्षाः क्षीरवृक्षास्तु दक्षिणे ।
पश्चिमेन जलं श्रेष्ठं पद्मोत्पलविभूषितम् ॥
इति श्रीहरिभक्तिविलासे २० विलासः ॥

**मन्दिरं**, क्ली, पुं, (मन्दन्ते मोदन्ते लोका यत्र । मदि + “इषिमदिमुदीति ।” उणा० १ । ५२ । इति किरच् ।) नगरम् । इति मेदिनी । रे, १९७ ॥ पुंलिङ्गोऽप्ययं शब्दः । यथा । नगरं मन्दिरं पुरमिति पुंनपुंसकयोररुणेन पठ्यते । इत्यमरटीकायां भरतः ॥ (अश्वजानुपश्चिमभागः । यथा, अश्ववैद्यके । २ । २१ ।
“अधरे च ततो जानु निर्द्दिष्टं शास्त्रकोविदैः ।
मन्दिरं पश्चिमो भागः कलाची जानुनोऽग्रिमः ॥”)

**मन्दिरः**, पुं, (मदि + किरच् ।) समुद्रः । इति मेदिनी । रे, १९७ ॥ जानुपश्चाद्भागः । इति हेमचन्द्रः । ३ । २७८ ॥

**मन्दिरपशुः**, पुं, (मन्दिरचरः मन्दिरपालितो वा पशुः । मध्यपदलोपी कर्म्मधारयः ।) विडालः । इति शब्दचन्द्रिका ॥

**मन्दिरा**, स्त्री, (मन्दिर + स्त्रियां टाप् ।) मन्दि-
रम् । यथा, मन्दिरायास्त्वरावानितिमधुमुकु-
टादयः ॥

**मन्दुरा**, स्त्री, (मन्दन्ते स्वपन्ति मोदन्ते वा अश्वा
यत्र । मन्द + “मन्दिवाशिमथीति ।” उणा०
१ । ३९ । इति उरच् । स्त्रियां टाप् ।) वाजि-
शाला । इत्यमरः । २ । २ । ७ ॥ (यथा, नैषध-
चरिते । १ । ५७ ।
“उपाहरन्नश्वमजस्रचञ्चलैः
क्षुराञ्चलैः क्षोभितमन्दुरोदरम् ॥”)
शयनीयार्थवस्तु । इति मेदिनी । रे, २०० ॥
मादुर इति भाषा ॥

**मन्दोदरी**, स्त्री, (मन्दं उदरं यस्याः । स्त्रियां
ङीष् ।) रावणमहिषी । सा तु मयदानवकन्या ।
इति रामायणम् ॥ (यथा, महाभारते । ३ ।
२८० । १६ ।
“भार्य्या मे भव सुश्रोणि ! यथा मन्दोदरी
तथा ॥”
कुमारानुचरमातृगणभेदः । यथा, महा-
भारते । ९ । ४६ । १७ ।
“मन्दोदरी तुहुण्डी च कोटरा मेघवाहिनी ॥”)

**मन्दोदरीशः**, पुं, (मन्दोदर्य्याः ईशः पतिः ।)
रावणः । इति त्रिकाण्डशेषः ॥

**मन्दोदरीसुतः**, पुं, (मन्दोदर्य्याः सुतः ।) इन्द्रजित् ।
इति जटाधरः ॥

**मन्दोष्णं**, क्ली, (मन्दं अल्पं च तदुष्णञ्चेति ।) ईष-
दुष्णम् । तद्वति, त्रि । इत्यमरः । १ । ४ । २५
॥

**मन्द्रः**, पुं, (मन्द्यते बुध्यते अनेन । मदि + “स्फायि-
तञ्चीति ।” उणा० २ । १३ । इति रक् ।)
गम्भीरध्वनिः । इत्यमरः । १ । ७ । २ ॥
(यथा,
मेघदूते । १०० ।
“मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्-
सुकानि ॥”)
वाद्यविशेषः । तत्पर्य्यायः । मड्डः २ मृदङ्गकः
३ । इति शब्दरत्नावली ॥ (त्रि, हृष्टः । यथा,

“एवं चिन्तयतस्तस्य ब्रह्मणो मुनिसत्तमाः ।
मनसः पुरुषो वल्गुराविर्भूतो विनिःसृतः ॥
काञ्चनीचूर्णपीताभः पीनोन्नतसुनासिकः ।
सुवृत्तोरुकटीजङ्घो नीलावल्लितकेशकः ॥
लग्नभ्रूयुगलो लोलः पूर्णचन्द्रनिभाननः ।
कपाटविस्तीर्णहृदि रोमराजीविराजितः ॥
शुभ्रमातङ्गकरवत्पीननिस्तलबाहुकः ।
आरक्तपाणिनयनमुखपादकरोद्भवः॥
क्षीणमध्यश्चारुदन्तः प्रमत्तगजकन्धरः ।
प्रफुल्लपद्मपत्राक्षः केशरघ्राणतर्पणः ॥
कम्बुग्रीवो मीनकेतुः प्रांशुर्मकरवाहनः ।
पञ्चपुष्पायुधो योगी पुष्पकोदण्डमण्डितः ॥
कान्तः कटाक्षपातेन भ्रामयन्नयनद्वयम् ।
सुगन्धिमारुताभ्रान्तं शृङ्गाररससेवितम् ॥
वीक्ष्य तं तादृशं दक्षप्रमुखा मानसाश्च ते ।
मरीच्याद्या दश ततो विस्मयाविष्टचेतसः ॥
औत्सुक्यं परमं जग्मुरापुर्व्वैकारिकं मनः ।
स चापि वेधसं वीक्ष्य स्रष्टारं जगतां पतिम् ।
प्रणम्य पुरुषः प्राह विनयानतकन्धरः ॥
श्रीपुरुष उवाच ।
किं करिष्याम्यहं कर्म्म ब्रह्मंस्तत्र नियोजय ।
मानाय्ये पुरुषो यस्मादुचिते शोभिते विधे ॥
अभिधानञ्च यद्योग्यं स्थानं पत्नी च या मम ।
तन्मे कुरुव्व लोकेश ! स्रष्टा त्वं जगतां यतः
॥
मार्कण्डेय उवाच ।
एवं तस्य वचः श्रुत्वा पुरुषस्य महात्मनः ।
क्षणं न किञ्चित् प्रोवाच स्वसृष्टावपि विस्मितः
॥
ततो मनः सुसंयम्य सम्यगुत्सृज्य विस्मयम् ।
उवाच पुरुषं ब्रह्मा तत्कर्म्मोद्देशमावहन् ॥
ब्रह्मोवाच ।
अनेन चारुरूपेण पुष्पबाणैश्च पञ्चभिः ।
मोहयन् पुरुषांस्त्रींश्च कुरु सृष्टिं सनातनीम् ॥
न देवा न च गन्धर्व्वा न किन्नरमहोरगाः ।
नासुरा न च दैत्या वा न विद्याधरराक्षसाः ॥
न यक्षा न पिशाचाश्च न भूता न विनायकाः ।
न गुह्यका न सिद्धाश्च न मनुष्या न पक्षिणः ॥
पशवो न मृगाः कीटाः पतङ्गा जलजाश्च ये ।
न ते सर्व्वे भविष्यन्ति न लक्ष्या ये शरस्य ते
॥

मार्कण्डेय उवाच ।
“ततस्ते मुनयः सर्व्वे तदभिप्रायवेदिनः ।
चक्रुस्तदुचितं नाम मरीच्यत्रिमुखास्तदा
॥
मुखावलोकनाद्वेद्य ज्ञात्वा वृत्तान्तमन्यतः
।
दक्षादयश्च स्रष्टारः स्थानं पत्नीञ्च ते
ददुः ॥
ततो निश्चित्य नामानि मरीचिप्रमुखा
द्विजाः ।
ऊचुः सङ्गतमेतस्मै पुरुषाय द्विजोत्तमाः
॥
ऋषय ऊचुः ।
यस्मात् प्रमथ्य चेतस्त्वं जातोऽस्माकं
तथा विधेः ।
तस्मान्मन्मथनाम्ना त्वं लोके गेयो
भविष्यसि ॥
जगत्सु कामरूपस्त्वं त्वत्समो न हि
विद्यते ।
अतस्त्वं कामनाम्नापि ख्यातो भव
मनोभव ! ॥
मदनान्मदनाख्यस्त्वं शम्भोर्दर्पात्
सदर्पकः ।
तथा कन्दर्पनाम्नापि लोके ख्यातो
भविष्यसि ॥
त्वदाशुगानां यद्वीर्य्यं तद्वीर्य्यं न भविष्यति
।
वैष्णवानाञ्च रौद्राणां ब्रह्मास्त्राणाञ्च
तादृशम् ॥
स्वर्गो मर्त्यश्च पातालं ब्रह्मलोकः
सनातनः ।
अवस्थानानि सर्व्वाणि सर्व्वव्यापी भवान्
यतः ॥
किंवा चापि विशेषेण सामान्ये नास्ति ते
समः ।
यत्र यत्र भवेत् प्राणी शाद्वलास्तरवोऽथवा
॥
तत्र तत्र तव स्थानमस्त्वाब्रह्मसदोदयम् ।
दक्षोऽयं भवतः पत्नीं स्वयं दास्यति
शोभ-
नाम् ॥”

ऋग्वेदे । १ । ५ । ७ ।
"होता मन्द्रो वरेण्यः ॥"
"मन्द्रो हृष्टः ।" इति तद्भाष्ये सायनः ॥
मादनशीलः । यथा, ऋग्वेदे । १ । १४४ । ७ ।
"अग्ने ! जुवस्व प्रतिहर्य्यतद्वचो
मन्द्र स्वधावऋतजात सुक्रतो ॥"
"मन्द्र ! मादनशील ! ।" इति तद्भाष्ये सायनः ॥)

**मन्मथः**, पुं, (मनो मथ्नाति विकरोतीति । मन्थ् + पचाद्यच् । पृषोदरादित्वात् साधुः । अस्य नामनिरुक्तिर्यथा, ब्रह्मवैवर्त्ते । १ । ४ । ७ ।
"मनो मथ्नाति सर्व्वेषां पञ्चबाणेन कामिनाम् ।
तन्नाम मन्मथस्तेन प्रवदन्ति मनीषिणः ॥")
कामदेवः । (यथा, नैषधचरिते । ८ । २९ ।
"न मन्मथस्त्वं स हि नास्तिमूर्त्तिः ॥")
कपित्थवृक्षः । इत्यमरः । १ । ४ । २१ ॥ काम-चिन्ता । इति मेदिनी । थे, २२ ॥ * ॥ काम-देवस्योत्पत्तिर्यथा, --
अहं वा वासुदेवो वा स्थाणुर्व्वा पुरुषोत्तम ! ।
भविष्यामस्तव वशे किमन्यैः प्राणधारिभिः ॥
प्रच्छन्नरूपी जन्तूनां प्रविशन् हृदये सदा ।
सुखहेतुः स्वयं भूत्वा कुरु सृष्टिं सनातनीम् ॥
त्वत्पुष्पबाणस्य सदा मुख्यं लक्ष्यं मनोऽस्तु च ।
सर्व्वेषां प्राणिनां नित्यं मदमोदकरो भवान् ॥
इति ते कर्म्म कथितं सृष्टिप्रावर्त्तकं पुनः ।
नामानि च गदिष्यामि यत्ते योग्यं भवि-ष्यति ॥
मार्कण्डेय उवाच ।
इत्युक्त्वाथ सुरश्रेष्ठो मानसानां मुखानि च ।
आलोक्य चासने पद्मे सूपविष्टोऽभवत् क्षणात् ॥"
इति कालिकापुराणे कामप्रादुर्भावो नाम १ अध्यायः ॥
इति कालिकापुराणे २ अध्यायः ॥

**मन्मथानन्दः**, पुं, (मन्मथं आनन्दयतीति । आ + नन्द + णिच् + पचाद्यच् । कामवर्द्धकत्वादस्य तथात्वम् ।) महाराजचूतः । इति राज-निर्घण्टः ॥

**मन्मथालयः**, पुं, (मन्मथस्य आलय इव । काम-वर्द्धकत्वाद्वेवास्य तथात्वम् ।) आम्रः । इति राजनिर्घण्टः ॥

**मन्मनः**, पुं, गद्गदध्वनिः । इति त्रिकाण्डशेषः ॥ (दम्पत्योः कथनविशेषः । यथा, चिन्तामणि-धृतवचनम् ।
"सुरते कर्णमूले तु निजदेशीयभाषया ।
दम्पत्योः कथनं यत्तु मन्मनं तं विदुर्बुधाः ॥")

**मन्या**, स्त्री, (मन्यते ज्ञायते स्तम्भदुःखादिकमनया । मन् + करणे क्यप् । स्त्रियां टाप् ।) ग्रीवायाः पश्चात् शिरा । इत्यमरः । २ । ६ । ६५ ॥ (यथा, सुश्रुते उत्तरतन्त्रे २५ अध्यायः ।
"दोषास्तु दुष्टास्त्रय एव मन्यां
संपीड्य घाटां सुरुजां सुतीव्राम् ।
कुर्व्वन्ति साक्षिभ्रुवशङ्खदेशे
स्थितिं करोत्याशु विशेषतस्तु ॥")

**मन्याका**, स्त्री, (मन्यैवेति । मन्या + स्वार्थे कन् । स्त्रियां टाप् । सुकन्याक इति वत् न विभाषया ह्रस्वः ।) मन्या । इति शब्दरत्नावली ॥

**मन्युः**, पुं, (मन्यते ज्ञायतेऽसौ । मन + "यजिमनि-शुन्धिदसिजनिभ्योयुच् ।" उणा० ३ । २० । इति युच् ।) शोकः । (यथा, भट्टिकाव्ये । ६ । ३० ।
"मन्युर्म्मन्ये ममास्तम्भीद्विषादोऽस्तभक्ष्य-

दैन्यम् । क्रतुः । (यथा, राजतरङ्गिण्याम् । १
।
१७४ ।
"आविर्बभूवाभिमन्युः शतमन्युरिवापरः ॥")
क्रोधः । इत्यमरः । ३ । ३ । १५३ ॥ (यथा,
महाभारते । १ । ७९ । ५ ।
"यः सन्धारयते मन्युं योऽतिवादांस्तितिक्षते
।
यश्च तप्तो न तपति दृढं सोऽर्थस्य भाजनम्
॥")
अहङ्कारः । इति शब्दरत्नावली ॥ (क्रोधाभि-
मानिदेवः । यथा, ऋग्वेदे । १० । ८३ । १ ।
"यस्ते मन्यो ! विधद्वज्र सायक
सह ओजः पुष्यति विश्वमानुषक् ॥"
वितथपुत्त्रः । यथा, भागवते । ९ । २१ । १
।
"वितथस्य सुतान् मन्योर्बृहत्क्षत्त्रो जय-
स्ततः ॥"
रुद्रदेवः । यथा, भागवते । ४ । ५ । ५ ।
"आज्ञप्त एव कुपितेन मन्युना
स देवदेवं परिचक्रमे विभुम् ॥")

**मन्वन्तरं**, क्ली, (मनोरन्तरमस्मिन्निति ।) दिव्यानां
युगानामेकसप्ततिः । इत्यमरः । १ । ४ । २२
॥ देव-
मानेनैकसप्ततियुगानि मन्वन्तरमुच्यते मनो-
रन्तरमवकाशोऽवधिर्वा अस्मिन्निति
मन्वन्तरम् ।
"एवं चतुर्युगाख्यानां साधिका ह्येकसप्ततिः ।
कृतत्रेतादियुक्तानां मनोरन्तरमुच्यते ॥"
इति लिङ्गपुराणम् ॥
मनवः स्वायम्भुवादयस्तेषामन्तरमवकाशोऽ-
वधिर्वा मन्वन्तरमिति वा । एकसप्ततिरिति
यद्यपि गणनया अर्द्धयुगेनाधिका ।
"दैविकानां युगानान्तु सहस्रं ब्रह्मणो दिनम् ।
मन्वन्तरं तथैवैकं तस्य भागाश्चतुर्द्दश ॥"
तत्किञ्चिदधिका दिव्ययुगानामेकसप्ततिरिति
नामविधाने सर्व्वज्ञनारायणेनोक्तत्वात् तथापि
अल्पत्वादिह नोक्तम् । मन्वन्तरस्य
संख्यात-
वर्षाणि यथा, --

अस्यार्थः । देवमाने सत्यस्य वर्षाणि ४०००
चतुःसहस्राणि सन्ध्यावर्षाणि ४०० चत्वारि
शतानि सन्ध्यांशवर्षाणि ४०० चत्वारि शतानि
।
एवं देवमाने सत्यस्य वर्षाणि
अष्टशताधिकचतुः-
सहस्राणि ४८०० एवं त्रेतायाः षट्शताधिक-
त्रिसहस्रं ३६०० एवं द्वापरस्य चतुःशताधिकं
द्विसहस्रम् २४०० एवं कलेः शतद्वयाधिकमेक-
सहस्रम् १२०० समुदायेन द्वादशसहस्राणि
१२००० । मानुषमानेन सत्यादीनां मानं यथा,
ज्योतिषे ।
"वस्वश्विमैत्रा ऋतुरन्ध्रमासा
वेदा रसाष्टौ भुजवह्निवेदाः ।
एतानि शून्यत्रयताडितानि
युगाब्दसंख्याः परिकीर्त्तितानि ॥"
एतदङ्कैर्दृश्यते सत्यस्य यथा, १,७२८,००० ।
त्रेताया यथा, १, २९६, ००० । द्वापरस्य
यथा,
८६४,००० । कलेर्यथा, ४३२,००० ।
समुदायेन
४,३२०,००० । अपरं ब्राह्मवर्षादिमानं
बाहुल्य-
भिया नोक्तम् । इति तट्टीकायां भरतः ॥
अपि च । ब्रह्मणो दिनमध्ये चतुर्द्दशमन्वन्त-
राणि भवन्ति । एको मनुर्यावदधिकारी भवति
स कालो मन्वन्तरसंज्ञको भवति । तत्र मनूनां
नामानि । प्रथमः स्वायम्भुवो मनुः । द्वितीयः
स्वारोचिषो मनुः । तृतीय उत्तमो मनुः ।
चतुर्थस्तामसो मनुः । पञ्चमो रैवतो मनुः ।
षष्ठश्चाक्षुषो मनुः । सप्तमो वैवस्वतो मनुः ।
वर्त्तमानोऽयम् ॥ अष्टमः सावर्णिर्मनुः । नवमो
दक्षसावर्णिर्मनुः । दशमो ब्रह्मसावर्णिर्मनुः ।
एकादशो धर्म्मसावर्णिर्मनुः । द्वादशो रुद्र-
सावर्णिर्मनुः । त्रयोदशो देवसावर्णिर्मनुः ।
चतुर्दश इन्द्रसावर्णिर्मनुः । प्रतिमन्वन्तरं भग-
वदवतारेन्द्रदेवगणसप्तर्षिमनुमनुपुत्त्रादयः पृथक्
पृथग्भवन्ति । यथा । स्वायम्भुवे मन्वन्तरे
यज्ञोऽवतारः स एवेन्द्रः । यमादयो देवाः ।
मरीचिप्रभृतयः सप्तर्षयः । स्वायम्भुवो मनुः ।
प्रियव्रतोत्तानपादौ मनुपुत्त्रौ ॥ १ ॥ स्वारोचिषे

पुरुषसुद्युम्नादयस्तत्सुताः ॥ ६ ॥
वैवस्वते
वामनोऽवतारः । पुरन्दर इन्द्रः ।
आदित्या
वसवो रुद्रा विश्वेदेवा मरुद्गणा
अश्विनावृषभ
इत्याद्या देवाः । कश्यपोऽत्रिर्व्वशिष्ठो
विश्वा-
मित्रो गोतमो जमदग्निर्भरद्वाज एते
सप्तर्षयः ।
वैवस्वतो मनुः । इक्ष्वाकुः नृगः शर्यातिः
दृष्टः
धृष्टः करूषकः नरिष्यन्तः पृषध्रः
नाभागः
कविः एते मनुपुत्त्रा दश ॥ ७ ॥ अथ
भवि-
ष्याणि । सावर्णिके सार्व्वभौमोऽवतारः ।
वलि-
रिन्द्रः । सुतपसो विरजा अमृतप्रभा देवाः
।
गालवः दीप्तिमान् परशुरामः अश्वत्थामा
कृपः
ऋष्यशृङ्गः व्यासः एते सप्तर्षयः ।
सावर्णिर्मनुः ।
निर्म्मोकविरजस्काद्यास्तत्सुताः ॥ ८ ॥
दक्ष-
सावर्णिके ऋषभोऽवतारः । श्रुत इन्द्रः ।
पार-
मरीचिगर्भाद्या देवाः । द्युतिमदाद्याः
सप्तर्षयः ।
दक्षसावर्णिर्मनुः ।
भूतकेतुदीप्तिकेत्वाद्यास्तत्-
सुताः ॥ ९ ॥ ब्रह्मसावर्णिके
विव्वक्सेनोऽव-
तारः । शम्भुरिन्द्रः । सुरसेनविरुद्धाद्या
देवाः ।
हविष्मदाद्याः सप्तर्षयः । ब्रह्मसावर्णिर्मनुः
।
भूरिसेनाद्यास्तत्सुताः ॥ १० ॥
धर्म्मसावर्णिके

"त्रिंशत्कोट्यस्तु वर्षाणां मानुषेण द्विजोत्तमाः ।
सप्तषष्टिस्तथान्यानि नियुतान्यधिकानि तु ॥
विंशतिस्तु सहस्राणि कालो यः साधिकां विना ।
मन्वन्तरस्य संख्यैषा लिङ्गेऽस्मिन् कथिता द्विजाः ॥"
एतदङ्का यथा, ३०६,७२०,००० । एवं चतुर्दश-
मन्वन्तरैर्ब्रह्मदिनम् । युगानि यथा लैङ्गे ।
"पूर्ब्बं कृतयुगं नाम ततस्त्रेता विधीयते ।
द्वापरश्च कलिश्चैव युगान्येतानि सुव्रताः ॥"
युगमानानि यथा, --
"चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम् ।
दिव्याब्दानां सहस्राणि युगेष्वाहुः पुराविदः ॥"
इति ॥
अन्यत्र च ।
"चत्वार्य्याहुः सहस्राणि वर्षाणान्तु कृतं युगम् ।
तस्य तावत् सती सन्ध्या सन्ध्यांशश्च तथाविधः ॥
इतरेषु ससन्ध्येषु ससन्ध्यांशेषु च त्रिषु ।
एकापायेन वर्त्तन्ते सहस्राणि शतानि च ॥"
इति ॥

विभुरवतारः । रोचन इन्द्रः । देवास्तुषिता-
दयः । ऊर्ज्जस्तम्भादयः सप्तर्षयः । अग्निसुतः
स्वारोचिषो मनुः । द्युमत्सेनरोचिष्मत्प्रमुखा
मनुपुत्त्राः ॥ २ ॥ उत्तमे सत्यसेनोऽवतारः ।
सत्यजिदिन्द्रः । सत्यवेदश्रुतभद्रादयो देवाः ।
वशिष्ठसुताः सप्तर्षयः प्रमदादयः । प्रियव्रतसुत
उत्तमो मनुः । पवनसृञ्जययज्ञहोत्राद्यास्तत्
सुताः ॥ ३ ॥ तामसे हरिरवतारः । त्रिशिख
इन्द्रः । वैधृतादयो देवाः । ज्योतिर्धामादयः
सप्तर्षयः । तामसो मनुः । वृषख्यातिनरादय-
स्तत्सुताः ॥ ४ ॥ रैवते विकुण्ठोऽवतारः । विभु-
रिन्द्रः । भूतरयादयो देवाः । हिरण्यरोमा-
दयः सप्तर्षयः । रैवतो मनुः । बलिबिन्ध्यादय
स्तत्सुताः ॥ ५ ॥ चाक्षुषे अजितोऽवतारः ।
मन्दद्रुम इन्द्रः । अप्यादयो देवाः । हर्य्यश्व-
द्वीरकादयः सप्तर्षयः । चाक्षुषो मनुः । पुरु-

धर्म्मसेतुरवतारः । वैधृत इन्द्रः । विहङ्गम-
कामगमाद्या देवाः । अरुणादयः सप्तर्षयः ।
धर्म्मसावर्णिर्मनुः ।
सत्यधर्म्मादयस्तत्सुताः ॥ ११ ॥
रुद्रसावर्णिके । सुधामाख्योऽवतारः । ऋत-
धामा इन्द्रः । हरितादयो देवाः । तपोमूर्त्या-
दयः सप्तर्षयः । रुद्रसावर्णिर्मनुः । देववदुपदेवा-
दयस्तत्सुताः ॥ १२ ॥ देवसावर्णिके योगेश्वरो-
ऽवतारः । दिवस्पतिरिन्द्रः । सुकर्म्मसूत्राद्या
देवाः । निर्म्मोकतत्त्वदर्शाद्याः सप्तर्षयः । देव
सावर्णिर्मनुः ।
चित्रसेनविचित्राद्यास्तत्सुताः ॥
१३ ॥ इन्द्रसावर्णिके बृहद्भानुरवतारः । शुचि-
रिन्द्रः । पवित्रचाक्षुषादयो देवाः । अग्नि-
बाहुशुचिशुद्धमागधाद्याः सप्तर्षयः । इन्द्र-
सावर्णिर्मनुः ।
उरुगम्भीरवृध्नाद्यास्तत्सुताः॥
१४ ॥ अथैतेषां कर्म्मोच्यते । इन्द्रो देवराट्
यथावर्षी च । मनुरादौ पृथिव्यां राजा भवति
तत्पुत्त्रपौत्त्रादयो मन्वन्तरसमाप्तिपर्य्यन्तं
राजानो भवन्ति । देवताः पुजानां यज्ञादि-
कर्म्मतुष्टास्तत्फलं प्रयच्छन्ति । सप्तर्षयो धर्म्म-
शास्त्राणि प्रकाशयन्ति । भगवदवतारा एतान्
स्वस्वकर्म्मणि नियोजयन्ति दैत्यराक्षसादीन्
धर्म्मद्रुहो घ्नन्ति च ।
चतुर्द्दशमन्वन्तैर्ब्रह्मण

| | | |
|---|---|---|
| | | एकं दिनं भवति तन्मनुष्यमानेनैकः कल्पः । त्रिंशत्कल्पैर्ब्रह्मण एको मासो भवति । इति श्रीभागवतमतम् ॥ * ॥ अन्यच्च । “वर्षलक्षाणि चत्वारि भवेत् कलियुगं क्रमे । द्वात्रिंशत्या सहस्रैस्तु सहितान्यपि संख्यया ॥ चतुःषष्टिसहस्राणि लक्षाण्यष्टौ च संख्यया । वर्षाणां द्वापरं प्रोक्तं युगं पूर्ब्बनिदर्शनात् ॥ त्रेता द्वादशलक्षाणि वर्षाणां परिकीर्त्तिता । षण्णवत्या सहस्रैस्तु संयुक्तानि भवन्ति हि ॥ दश सप्त च लक्षाणां वर्षाणाञ्च कृतं युगम् । |

सहस्रैरष्टविंशत्या संयुतान्यपि संख्यया ॥
त्रिचत्वारिंशल्लक्षाणि सहस्राणि च विंशतिः ।
मानुषेण प्रमाणेन भवेत् चातुर्युगं क्रमात् ॥
सप्तषष्टिश्च लक्षाणि त्रिंशत्कोट्यस्तथैव च ।
विंशतिश्च सहस्राणि मन्वन्तरमिहोच्यते ॥
चतुर्युगैकसप्तत्या मन्वन्तरमिति श्रुतिः ।
कल्पो मन्वन्तरैरेभिश्चतुर्द्दशभिरुच्यते ॥
कोट्यो द्वादश षट्त्रिंशल्लक्षाणि तु भवन्ति च ।
अष्टाशीतिसहस्राणि जीवेत् स्वायम्भुवो मनुः ॥”
इति वह्निपुराणम् ॥
अपरञ्च ।
मार्कण्डेय उवाच ।
“मन्वन्तरं मनोः कालो यावत् पालयते प्रजाः ।
एको मनुः स कालस्तु मन्वन्तरमिति श्रुतम् ॥
तदेकसप्ततियुगैर्देवानामिह जायते ।
तैश्चतुर्द्दशभिः कल्पो दिनमेकन्तु वेधसः ॥”
इति कालिकापुराणे २७ अध्यायः ॥
अन्यदपि ।
“मन्वन्तराण्यशेषाणि श्रोतुमिच्छाम्यनुक्रमात् ।
मन्वन्तराधिपांश्चैव शक्रदेवपुरोगमान् ।
भवता कथितानेतान् श्रोतुमिच्छाम्यहं गुरो ! ॥
श्रीपराशर उवाच ।
अतीतानागतानीह यानि मन्वन्तराणि वै ।
तान्यहं भवतः सम्यक् कथयामि समासतः ॥
स्वायम्भुवो मनुः पूर्ब्बं मनुः स्वारोचिषस्तथा ।
औत्तमिस्तामसश्चैव रैवतश्चाक्षुषस्तथा ॥
षडेते मनवोऽतीताः साम्प्रतन्तु रवेः सुतः ।
वैवस्वतोऽयं तस्यैतत् सप्तमं वर्त्ततेऽन्तरम् ॥
स्वायम्भुवन्तु कथितं कल्पादावन्तरं मया ।
देवास्तत्रर्षयश्चैव यथावत् कथिता मया ॥ १ ॥
अत ऊर्द्ध्वं प्रवक्ष्यामि मनोः स्वारोचिषस्य तु ।
मन्वन्तराधिपान् सम्यग्देवर्षी स्तत्सुतांस्तथा ॥
पारावताः सतुषिता देवाः स्वारोचिषेऽन्तरे ।
विपश्चित्तत्र देवेन्द्रो मैत्रेयासीन्महाबलः ॥
ओजस्तम्भस्तथा प्राणो दत्तोलिरृषभस्तथा ।
विश्वरश्चार्व्वरीवांश्च तत्र सप्तर्षयोऽभवन् ॥
चैत्रकिंपुरुषाद्याश्च सुताः स्वारोचिषस्य तु ।
द्वितीयमेतद्व्याख्यातमन्तरं शृणु चोत्तमम् ॥ २ ॥
तृतीयेऽप्यन्तरे ब्रह्मन्नौत्तमिर्नाम यो मनुः ।
पुत्त्रास्तु तामसस्यासन् राजानः सुमहाबलाः ॥ ४ ॥
पञ्चमे चापि मैत्रेय ! रैवतो नाम नामतः ।
मनुर्विभुश्च तत्रेन्द्रो देवांश्चैवान्तरे शृणु ॥
अमिताभा भूतरया वैङ्कुटाश्च सुमेधसः ।
एते देवगणास्तत्र चतुर्द्दश चतुर्द्दश ॥
हिरण्यरोमा वेदश्रीरूर्द्ध्वबाहुस्तथापरः ।
वेदबाहुः सुधामा च पर्ज्जन्यश्च महामुनिः ।
एते सप्तर्षयो विप्र ! तत्रासन् रैवतान्तरे ॥
बलबन्धुः सुसम्भाव्यः सत्यकामाश्च तत्सुताः ।
नरेन्द्राः सुमहावीर्य्या बभूवुर्मुनिसत्तम ! ॥
स्वारोचिषश्चौत्तमिस्तु तामसो रैवतस्तथा ।
प्रियव्रतान्वया ह्येते चत्वारो मनवः स्मृताः ॥
विष्णुमाराध्य तपसा स राजर्षिः प्रियव्रतः ।
मन्वन्तराधिपानेतान् लब्धवानात्मवंशजान् ॥ ५ ॥
षष्ठे मन्वन्तरे चासीच्चाक्षुषाख्यस्तदा मनुः ।
मनोजवस्तथैवेन्द्रो देवानपि निबोध मे ॥
आर्य्याः प्रसूता भव्याश्च पृथुगाश्च दिवौकसः ।
महानुभावा लेखाश्च पञ्चैतेऽप्यष्टका गणाः ॥
मुमेधा विरजाश्चैव हविष्मानुत्तमो मधुः ।
अतिनामा सहिष्णुश्च सप्तासन्निति चर्षयः ॥
ऊरुः पूरुः शतद्युम्नप्रमुखाः सुमहाबलाः ।
चाक्षुषस्यं मनोः पुत्त्राः पृथिवीपतयोऽभवन् ॥ ६ ॥
विवस्वतः सुतो विप्र ! श्राद्धदेवो महाद्युतिः ।
मनुः स वर्त्तते धीमान् साम्प्रतं सप्तमेऽन्तरे ॥
आदित्यवसुरुद्राद्या देवाश्चात्र महामुने ! ।
पुरन्दरस्तथैवात्र मैत्रेय ! त्रिदशेश्वरः ॥
वशिष्ठः कश्यपोऽथात्रिर्जमदग्निः सगौतमः ।
विश्वामित्रभरद्वाजौ सप्त सप्तर्षयोऽत्र च ॥
इक्ष्वाकुश्चैव नाभागो धृष्टः शर्यातिरेव च ।
नरिष्यन्तश्च विख्यातो नाभ उदिष्ट एव च ॥
करूषश्च पृषध्रश्च वसुमान् लोकविश्रुतः ।
इत्येतास्तनवस्तस्य सप्तमन्वन्तरेषु वै ।
सप्तस्वेवाभवन् विप्र ! याभिः संरक्षिताः प्रजाः ॥
यस्माद्विष्टमिदं सर्व्वं तस्य शक्त्या महात्मनः ।
तस्मात् संप्रोच्यते विष्णुर्व्विशेर्धातोः प्रवेशनात् ॥
सर्व्वे च देवा मनवः समस्ताः
सप्तर्षयो ये मनुसूनवश्च ।
इन्द्रश्च यो यस्त्रिदशेशभूतो
विष्णोरशेषास्तु विभूतयस्ताः ॥”
इति विष्णुपुराणे ३ अंशे मन्वन्तराख्यानं नाम
१ अध्यायः ॥ * ॥
श्रीमैत्रेय उवाच ।
प्रोक्तान्येतानि भवता सप्त मन्वन्तराणि वै ।
भविष्याण्यपि विप्रर्षे ! ममाख्यातुं त्वमर्हसि ॥
श्रीपराशर उवाच ।
“छायासंज्ञासुतो योऽसौ द्वितीयः कथितो मनुः ।
पूर्ब्बजस्य सवर्णोऽस्य सावर्णिस्तेन कथ्यते ॥
तस्य मन्वन्तरं ह्येतत् सावर्णिकमथाष्टमम् ।
तच्छृणुष्व महाभाग ! भविष्यं कथयामि ते ॥
सावर्णिस्तु मनुर्योऽसौ मैत्रेय ! भविता ततः ।
सुतपाश्चामिताभाश्च मुख्याश्चापि तदा सुराः ॥
तेषां गणस्तु देवानामेकैको विंशकः स्मृतः ।
सप्तर्षीनपि वक्ष्यामि भपिष्यानथ सप्त च ॥
दीप्तिमान् गालवो रामः कृपो द्रौणिस्तथापरः ।
मत्पुत्त्रश्च तथा व्यास ऋष्यशृङ्गश्च सप्तमः ॥
विष्णुप्रसादादनघः पातालान्तरगोचरः ।
विरोचनसुतस्तेषां बलिरिन्द्रो भविष्यति ॥

सुशान्तिर्नाम तत्रेन्द्रो मैत्रेयाभूत् सुरेश्वरः ॥
सुधामानस्तथा सत्याः शिवाश्चाथ प्रतर्द्दनाः ।
वशवर्त्तिनश्च पञ्चैते गणा द्वादशकाः स्मृताः ॥
वशिष्ठतनयास्तत्र सप्त सप्तर्षयोऽभवन् ।
अजः परशुदिव्याद्यास्तथौत्तमिमनोःसुताः ॥ ३ ॥
तामसस्यान्तरे देवाः स्वरूपा हरयस्तथा ।
मत्याश्च सुधियश्चैव सप्तविंशतिका गणाः ॥
शिविरिन्द्रस्तथा चासीच्छतयज्ञोपलक्षणः ।
सप्तर्षयश्च ये तत्र तेषां नाम्मनि मे शृणु ॥
ज्योतिर्धामा पृथुः काव्यश्चैत्रोऽग्निर्व्वतक-स्तथा ।
पीवरश्चर्षयो ह्येते सप्त तत्रापि चान्तरे ॥
नरः ख्यातिः शान्तहयो जानुजङ्गादयस्तथा ।

मनोर्वैवस्वतस्यैते नव पुत्रास्तु धार्म्मिकाः ॥ ७ ॥
विष्णुशक्तिरनौपम्या सत्त्वोद्रिक्ता स्थितौ स्थिता ।
मन्वन्तरेष्वशेषेषु देवत्वेनाधितिष्ठति ॥
अंशेन तस्य यज्ञोऽसौ जज्ञे स्वायम्भुवेऽन्तरे ।
आकूत्यां मानसो देव उत्पन्नः प्रथमेऽन्तरे ॥
ततः पुनः स वै देवः प्राप्ते स्वारोचिषेऽन्तरे ।
तुषितायां समुत्पन्नो ह्यजितस्तुषितैः सह ॥
औत्तमेरन्तरे चापि तुषितस्तु पुनः स वै ।
सत्यायामभवत् सत्यः सत्यैः सह सुरोत्तमैः ॥
तामसस्यान्तरे चैव संप्राप्ते पुनरेव हि ।
हर्य्यायां हरिभिः सार्द्धं हरिरेव बभूव ह ॥
रैवतेऽप्यन्तरे देवः सम्भूत्यां मानसोऽभवत् ।
सम्भूतो राजसैः सार्द्धं देवैर्देववरो हरिः ॥
चाक्षुषे चान्तरे देवो वैकुण्ठः पुरुषोत्तमः ।
विकुण्ठायामसौ जज्ञे वैकुण्ठे दैवतैः सह ॥
मन्वन्तरे तु संप्राप्ते तथा वैवस्वते द्विजः ।
वामनः कश्यपाद्विष्णुरदित्यां संबभूव ह ॥
त्रिभिः क्रमैरिमान् लोकान् जित्वा येन महा-त्मना ।
पुरन्दराय त्रैलोक्यं दत्तं निहतकण्टकम् ॥

विरजाश्चार्व्वरीवांश्च निर्मोहाद्यास्तथापरे ।
सावर्णस्य मनोः पुत्रा भविष्यन्ति नरेश्वराः ॥ ८ ॥
नवमो दक्षसावर्णिर्मैत्रेय ! भविता मनुः ।
पारा मरीचिगर्भाश्च सुधर्म्माणस्तथा त्रिधा ॥
भविष्यन्ति तदा देवा एकैको द्वादशो गणः ।
तेषामिन्द्रो महावीर्य्यो भविष्यत्यद्भुतो द्विज ! ॥
सवनो द्युतिमान् हव्यो वसुर्मेधातिथिस्तथा ।
ज्योतिष्मान् सप्तमः सत्यस्तत्रैते च महर्षयः ॥
धृतिकेतुर्दीप्तिकेतुः पञ्चहस्तो निरामयः ।
पृथुस्तवाद्याश्च तथा दक्षसावर्णिकात्मजाः ॥ ९ ॥
दशमो ब्रह्मसावर्णिर्भविष्यति मुने ! मनुः ।
सुधामानोऽनिरुद्धाश्च शतसंख्यास्तथा सुराः ॥
तेषामिन्द्रश्च भविता शान्तिर्नाम महाबलः ।
सप्तर्षयो भविष्यन्ति ये तदा तान् शृणुष्व च ॥
हविष्मान् सुकृतिः सत्यो ह्यपां मूर्त्तिस्तथापरः ।
नाभागो प्रतिमौजाश्च सत्यकेतुस्तथैव च ॥
सुक्षेत्रश्चोत्तमौजाश्च भूरिषेणादयो दश ।
ब्रह्मसावर्णिपुत्राश्च रक्षिष्यन्ति वसुन्धराम् ॥ १० ॥
एकादशश्च भविता धर्म्मसावर्णिको मनुः ।
विहङ्गमाः कामगमा निर्म्माणरुचयस्तथा ॥
गणास्त्वेते तदा मुख्या देवानां हि भविष्यताम् ।
एकैकस्त्रिंशकस्तेषां गणश्चेन्द्रश्च वै वृषः ॥
निश्चरश्चाग्नितेजाश्च वपुष्मान् वृष्टिवारुणिः ।
हविष्माननघश्चैव भाव्याः सप्तर्षयस्तथा ॥
सर्व्वत्रगः सर्व्वधर्म्मा देवानीकादयस्तथा ।

भविष्यन्ति मनोस्तस्य तनयाः पृथिवीश्वराः
॥ ११ ॥
रुद्रपुत्त्रस्तु सावर्णिर्भविता द्वादशो मनुः ।
ऋतधामा च तत्रेन्द्रो भविता शृणु मे सुरान् ।
हरिता लोहिता देवास्तथा सुमनसो द्विज ! ।
सुकर्म्मार्णः सुरापाश्च दशकाः पञ्च वै गणाः ॥
तपस्वी सुतपाश्चैव तपोमूर्त्तिस्तपोरतिः ।
तपोधृतिर्द्युतिश्चान्यः सप्तमस्तु तपोधनः ॥
देववानुपदेवश्च देवश्रेष्ठादयस्तथा ।
भविष्यन्ति मनोस्तस्य महावीर्य्याः सुता
नृपाः ॥ १२ ॥
त्रयोदशो रौच्यनामा भविष्यति मुने ! मनुः ।
सुत्रामणिः सुकर्म्माणः सुधर्म्माणस्तथापरः ॥
त्रयस्त्रिंशद्विभेदास्ते देवानां ये तु वै गणाः ।
दिवस्पतिर्म्महावीर्य्यस्तेषामिन्द्रो भविष्यति ॥
निर्मोहस्तत्त्वदर्शी च निष्प्रकम्पो निरुत्सुकः ।
धृतिमानव्ययश्चान्यः सप्तमः सुतपा मुनिः ॥
सप्तर्षयस्त्विमे तस्य पुत्त्रानपि निबोध मे ।
चित्रसेनविचित्राद्या भविष्यन्ति महीक्षितः ॥
१३ ॥
भौत्यश्चतुर्द्दशश्चात्र मैत्रेय ! भविता मनुः ।
शुचिरिन्द्रः सुरगणास्तत्र पञ्च शृणुष्व तान् ॥
चाक्षुषश्च पवित्राश्च कनिष्ठा भ्राजिनस्तथा ।
वातावृद्धाश्च वै देवाः सप्तर्षीनपि मे शृणु ॥
अग्निबाहुः शुचिः शुक्रो मागधोऽग्नीध्र एव च ।
युक्तस्तथाजितश्चान्यो मनुपुत्त्रानतः शृणु ॥
उरुगम्भीररन्ध्राद्या मनोस्तस्य सुता नृपाः ।
कथिता मुनिशार्दूल ! पालयिष्यन्ति मेदि-
नीम् ॥ १४ ॥
चतुर्युगान्ते वेदानां जायते किल विप्लवः ।
प्रवर्त्तयन्ति तानेत्य भुवि सप्तर्षयो दिवः ॥
कृते कृते स्मृतेर्विप्र ! प्रणेता जायते मनुः ।
देवा यज्ञभुजस्ते तु यावन्मन्वन्तरन्तु तत् ॥
भवन्ति ये मनोः पुत्त्रा यावन्मन्वन्तरं हि तैः ।
तदन्वयोद्भवैश्चैव तावद्भूः परिपाल्यते ॥
मनुः सप्तर्षयो देवा भूपालाश्च मनोः सुताः ।
मन्वन्तरे भवन्त्येते शक्रश्चैवाधिकारिणः ॥
चतुर्द्दशभिरेतैस्तु गतैर्मन्वन्तरैर्द्विज ! ।
सहस्रयुगपर्य्यन्तः कल्पो निःशेष उच्यते ।
तावत्प्रमाणा च निशा ततो भवति सत्तम ! ॥"
इति विष्णुपुराणे ३ अंशे २ अध्यायः ॥ * ॥

तथाग्निदीप्तिं पुत्त्रांश्च गुणयुक्तानवाप्नुते ॥
सर्व्वाण्यनुक्रमाद्यस्तु शृणोति मुनिसत्तम !
।
मन्वन्तराणि तस्यापि श्रूयतां फलमुत्तमम्
॥
तत्र देवानृषीन् विप्रान्मनूंस्तत्तनयान्
नृपान् ।
इन्द्रांश्च श्रुत्वा सर्व्वेभ्यः पापेभ्यो
विप्रमुच्यते ॥
देवेन्द्रर्षिनृपाश्चान्ये ये तन्मन्वन्तराधिपाः
।
ते प्रीयन्ते तथा प्रीताः प्रयच्छन्ति शुभां
मतिम् ॥
ततः शुभां मतिं प्राप्य कृत्वा कर्म्म तथा
शुभम् ।
शुभां गतिमवाप्नोति यावदिन्द्राश्चतुर्द्दश
॥
सर्व्वे स्युरृतवः सौम्याः सर्व्वे
सौम्यास्तथा
ग्रहाः ।
भवन्त्यसंशयं श्रुत्वा
क्रमान्मन्वन्तरस्थितिम् ॥"
इति मार्कण्डेयपुराणे मन्वन्तरानुवर्णनं
नामा-
ध्यायः ॥

**मपष्टः**, पुं, (मयुष्टकः । पृषादरादित्वात् साधुः ।)
वनमुद्गः । इत्यमरटीकायां भरतः । २ ।
९ । १७ ॥

**मपष्टकः**, पुं, (मपष्ट एव । मपष्ट + स्वार्थे कन् ।)
वनमुद्गः । इत्यमरटीकायां भरतः । २ ।
९ । १७ ॥

**मपुष्टकः**, पुं, (मयुष्टकः । पृषोदरादित्वात् साधुः ।)
वनमुद्गः । इत्यमरटीकायां भरतः । २ ।
९ । १७ ॥

**मभ्र**, गतौ । इति कविकल्पद्रुमः । (भ्वा०-पर०-
सक०-सेट् ।) ओष्ठ्यवर्गचतुर्थोपधः ।
मभ्रति ।
इति दुर्गादासः ॥

"ममत्वेन स्नेहेन आकृष्टा चेतना मतिर्यस्य ।
ममेति षष्ठ्यन्तरूपमव्ययं तस्य भावः
ममत्वम् ॥"
इति तट्टीकायां काशीरामः ॥

**ममापतालः**, पुं, (मव्यति बध्नाति जनानिति ।
मव्य बन्धने + "मव्यतेर्यलोपो मश्चापतुट्
चालः ।" उणा० ५ । ५० । इति आलप्रत्ययः
।
धातोर्यलोपः मकारश्चान्तस्य
प्रत्ययस्यापतुडा-
गमश्च ।) विषयः । इति सिद्धान्तकौमुद्या-
मुणादिवृत्तिः ॥

**मय**, ङ गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) ङ, मयते । इति दुर्गा-
दासः ॥

**मयः**, पुं, (मयते द्रुतं गच्छतीति । मय् + पचाद्य-
च् ।) उष्ट्रः । इत्यमरः । २ । ९ । ७५ ॥
अश्वतरः ।
दानवविशेषः । स तु दैत्यानां शिल्पी । इति
मेदिनी । ये, ४४ ॥ (अयं हि युधिष्ठिरस्य
राज्ञः सभां विरचितवान् । यथा, शिशुपाल-
वधे । १३ । ५० ।
"उपनीय बिन्दुसरसो मयेन या
मणिदारुचारु किल वार्षपर्व्वणम् ।
विदधेऽवधूतसुरसद्मसम्पदं
समुपासदत् सपदि संसदं स ताम् ॥")
तस्य सप्तापत्यानि यथा, वह्निपुराणे ।
"मयस्य जाता हेमायां पुत्त्राः सप्त महाबलाः ।
मायावी दुन्दुभिश्चैव वृषश्च महिषस्तथा ।
बालिका वज्रकन्या च कन्या मन्दोदरी तथा
॥"
(सुखम् । त्रि, गन्ता । यथा, वाजसनेयसंहि-
तायाम् । २२ । १९ ।
"हयोऽस्यत्योऽसि मयोऽस्यर्व्वासि ।"
"मयोऽसि
मयते गच्छति मयः मय गतौ पचाद्यच् । यद्वा
मय इति सुखनाम सुखरूपोऽसि ।" इति
तद्भाष्ये महीधरः ॥)

**मयटः**, पुं, (मयते गच्छत्यत्रेति । मय + "शका-

मन्वन्तरश्रवणफलं यथा, --
"श्रुते मन्वन्तरे पूर्ब्बे धर्म्ममाप्नोति मानवः ।
खारोचिषस्य श्रवणात् सर्व्वान् कामानवा-
प्नुयात् ॥
औत्तमे धनमाप्नोति ज्ञानञ्चाप्नोति तामसे ।
रैवते च श्रुते बुद्धिं सुरूपां विन्दते स्त्रियम् ॥
आरोग्यञ्चाक्षुषे पुंसां श्रुते वैवस्वते बलम् ।
गुणवत् पुत्त्रपौत्त्रांश्च सूर्य्यसावर्णिके श्रुते ॥
माहात्म्यं ब्रह्मसावर्णेर्धर्म्मसावर्णिके शुभाम् ।
मतिमाप्नोति मनुजो रुद्रसावर्णिके जयम् ॥
जातिश्रेष्ठो गुणैर्युक्तो दक्षसावर्णिके श्रुते ।
विशातयत्यरिबलं रौच्यं श्रुत्वा मनूत्तमम् ॥
देवप्रासादमाप्नोति भौत्ये मन्वन्तरे श्रुते ।

**मम**, व्य, मदीयम् । आमार इति भाषा । यथा,

"ममत्वं मम राज्यस्य
राज्याङ्गेष्वखिलेष्वपि ।
जानतोऽपि यथाज्ञस्य
किमेतन्मुनिसत्तम ! ॥"
इति मार्कण्डेयपुराणे देवीमाहात्म्यम् ॥
"तेषु अमदीयत्वं जानतोऽपि मम
यथाज्ञस्य
अज्ञस्येव राज्यादिषु ममत्वमेतत् किं किं
निब-
न्धनमित्यर्थः ।" इति तट्टीकायां
नागोजीभट्टः ॥
अस्याव्ययत्वेन स्पष्टप्रमाणं ममत्वशब्दे
द्रष्टव्यम् ।
अस्मच्छब्दस्य षष्ठ्येकवचनान्तस्येदं
रूपं तत्पदं
त्रिषु लिङ्गेषु सदृशम् ॥

**ममता**, स्त्री, (मम + भावे तल् । टाप् ।) दर्पः ।

अभिमानः । इति हेमचन्द्रः । २ । २३१
॥
ममत्वम् । यथा, --
"तथापि ममतावर्त्ते मोहगर्त्ते निपातिताः
॥"
इति देवीमाहात्म्यम् ॥
(उतथ्यपत्नी । सा तु दीर्घतमोमाता ।
यथा,
ऋग्वेदे । ६ । १० । २ ।
"स्तोमं यमस्मै ममतेव शूषं
घृतं न शुचि मतयः पवन्ते ॥"
"ममता नाम ब्रह्मवादिनी दीर्घतमसो माता
।"
इति तद्भाष्ये सायनः ॥)

**ममतायुक्तः**, पुं, (ममतया युक्तः ।) कृपणः । इति

शब्दमाला ॥ अभिमानादिविशिष्टे, त्रि ॥

**ममत्वं**, क्ली, (मम + भावे त्व ।) मदीयत्वम् ।

यथा, मार्कण्डेयपुराणे ।
"दुःखायतनभूतो हि ममत्वालम्बनो गृही
॥"
स्नेहः । यथा, --
"सोऽचिन्तत्तदा तत्र ममत्वाकृष्टचेतनः ।"
इति देवीमाहात्म्यं ॥

दिभ्योऽटन् ।" उणा० ४ । ८१ । इति अटन्
।)
तृणयुक्तहर्म्यः । इति हारावली ॥ हलन्तश्चेत्
तद्रूपार्थे प्राचुर्य्यार्थे च मयट् इति प्रत्ययो
भवति ॥

**मयष्टकः**, पुं, (मयुष्टकः । पृषोदरादित्वात् साधुः ।)

वनमुद्गः । इत्यमरटीकायां भरतः ॥

**मया**, स्त्री, (मयते गच्छति रोगोऽनया । मय् +

कः । स्त्रियां टाप् ।) चिकित्सा । इति शब्द-
चन्द्रिका ॥ त्रि,
तृतीयेकवचनान्तास्मच्छब्दस्य
रूपम् ॥ (यथा, हितोपदेशे । १ । २२१ ।
"इहैव दृष्टानि मयैव तानि
जन्मान्तराणीव दशान्तराणि ॥")

**मयी**, स्त्री, (मय + "पुंयोगादिति ।" ४ । १ ।

४८ । इति ङीष् ।) मयस्य स्त्रीजातिः । उष्ट्री ।
इति व्याकरणम् ॥

**मयुः**, पुं, (मयङ् गतौ + न्यङ्क्वादित्वात् कुः ।
इत्यमर-

टीकायां रघुनाथः ॥ यद्वा, मिनोति सुशब्दं
करोतीति । मि + "भृमृशीतृचरित्सरितनिध-
निमिमस्जिभ्य उः ।" उणा० १ । ७ । इति
उः ।)

किन्नरः । इत्यमरः । १ । १ । ७४ ॥
मृगः ।
इति मेदिनी । मे, ४३ ॥ (यथा,
वाजसनेय-
संहितायाम् । १३ । ४७ ।
"मयुं पशुं मेधमग्ने ! जुषस्व
तेन चिन्वानस्तन्वो निषीद ।"
"मयुं पशुं तुरङ्गवदनं किम्पुरुषं पशुं
मयुं
कृष्णमृगं वा जुषस्व ।" इति तद्भाष्ये
महीधरः ॥)

**मयुराजः**, पुं, (मयूनां किन्नराणां राजा ।
"राजाहःसखिभ्यष्टच् ।" ५ । ४ । ९१
। इति
टच् ।) कुवेरः । इति शब्दरत्नावली ॥

**मयुष्टकः**, पुं, (मयून् मृगान् स्तकति प्रीणयतीति
।
स्तक् + अच् । षत्वम् ।) वनमुद्गः ।
इत्यमर-
टीका ॥

**मयूखः**, पुं, (मापयन् गगनं प्रमाणयन् ओखति
गच्छतीति । पृषोदरादिः ।
इत्यमरटीकायां
रधुनाथः । यद्वा, माति परिमातीव । मा
+
"माङ ऊखो मय च ।" उणा० ५ ।
२५ । इति
ऊखः । मयादेशश्च ।) किरणः ।
(यथा,
महाभारते । ३ । ३९ । ४३ ।
"व्यसृजच्छतधा राजन् ! मयूखानिव
भास्करः ॥")
दीप्तिः । ज्वाला । इत्यमरः । १ । ४ ।
३३ ॥
(यथा, रघौ । २ । ४६ ।
"अथान्धकारं गिरिगह्वराणां
दंष्ट्रामयूखैः शकलानि कुर्व्वन् ।
भूयः स भूतेश्वरपार्श्ववर्त्ती
किञ्चिद्विहस्यार्थपतिं बभाषे ॥")

इन्द्रो मयूरः संवृत्तो धर्म्मराजस्तु वायसः ।
कृकलासो धनाध्यक्षो हंसश्च वरुणोऽभवत् ॥"
इत्यादि ॥
"हर्षात्तदाब्रवीदिन्द्रो मयूरं नीलबर्हिणम् ।
प्रीतोऽस्मि तव धर्म्मज्ञ ! भुजगाद्धि न ते
भयम् ॥
इदं नेत्रसहस्रन्तु यत्त्वद्बर्हे भविष्यति ।
वर्षमाणे मयि मुदं प्राप्स्यसे प्रीतिलक्षणम् ॥
एवमिन्द्रो वरं प्रादान्मयूरस्य सुरेश्वरः ।
नीलाः किल पुरा बर्हा मयूराणां नराधिप ! ।
सुराधिपाद्वरं प्राप्य गताः सर्व्वे विचित्रताम् ॥"
इत्यन्तं वाल्मीकीये रामायणे उत्तरकाण्डे १८
सर्गः ॥ अस्य मांसगुणाः ।
"मयूरः श्रोत्रनेत्राग्निमेधावर्णस्वरायुषाम् ।
हितो बल्यो गुरुश्चोष्णो वातघ्नः शुक्रमांसदः ॥
हेमन्तकाले शिशिरे वसन्ते
सेव्यं हि मायूरमुशन्ति मांसम् ।
उष्णो हि बर्ही विषभोजनैश्च
वर्षाशरद्ग्रीष्ममुखेष्वपथ्यः ॥"
इति राजनिर्घण्टः ॥
एतन्मांसमेरण्डतैलभृष्टं विषतुल्यम् । इति
राजवल्लभः ॥ * ॥ मयूरशिखाक्षुपः । तत्पर्य्यायः ।
खराश्वा २ कारवी ३ दीपः ४ लोचमस्तकः ५ ।
इत्यमरः । २ । ४ । १११ ॥ अपामार्गः । इति
मेदिनी । रे, १९९ ॥ (यथा, सुश्रुते चिकित्-
सितस्थाने २३ अः । "पिप्पलीपिप्पलीमूलं
चव्यचित्रकमयूरवर्षाभूसिद्धं वा क्षीरं पिबेत् ॥"
असुरविशेषः । यथा, महाभारते । १ । ६७ । ३६
।
"मयूर इति विख्यातः श्रीमान् यस्तु महासुरः ।
स विश्व इति विख्यातो बभूव पृथिवीपतिः ॥"
सुमेरोरुत्तरवर्त्ती पर्व्वतविशेषः । यथा, मार्क-
ण्डेये । ५५ । १३ ।
"स्वर्णशृङ्गी शातशृङ्गी पुष्पको मेघपर्व्वतः ।
विरजाक्षो वराहाद्रिर्म्मयूरो दारुधिस्तथा ॥"
कविविशेषः । स च मयूरभट्ट इति लोके
प्रसिद्धः । अयं खलु बाणभट्टस्य श्वशुरः
उज्जयिन्यां वृद्धभोजमहीपतेः सभायामा-
सीदिति मानतुङ्गाचार्य्यप्रणीतभक्तामराख्य-
स्तोत्रटीकाप्रारम्भे मेरुतुङ्गप्रणीतप्रबन्धचिन्ता-
मणौ च समुपलभ्यते । प्रबन्धचिन्तामणौ

युक्तश्चैतान् पठेद् यः सकृदपि पुरुषः
सर्व्वपापै-
र्व्विमुक्तः ।
आरोग्यं सत्कवित्वं मतिमतुलबलं
कान्तिमायुः-
प्रकर्षं
विद्यामैश्वर्य्यमर्थं सुखमपि लभते सोऽत्र
सूर्य्य-
प्रसादात् ॥")

**मयूरकं**, क्ली, (मयूरः मयूरग्रीवेव प्रतिकृतिरिति ।
मयूर + "इवे प्रतिकृतौ ।" ५ । ३ । ९६ ।
इति
कन् । अस्य मयूरकण्ठकान्तितुल्यद्युतित्वा-
त्तथात्वम् ।) अञ्जनविशेषः । तुतिया इति
भाषा । तत्पर्य्यायः । तुत्थाञ्जनम् २
शिखिग्रीवम्
३ वितुन्नकम् ४ । इत्यमरः । २ । ९ । १०१
॥
(यथा, भावप्रकाशे । १ ।
"तुल्यं वितुन्नकं चापि शिखिग्रीवं मयूरकम्
॥")

**मयूरकः**, पुं, (मयूर + इवार्थे कन् ।) अपा-
मार्गः । इत्यमरः । २ । ९ । १०१ ॥ (यथा,
सुश्रुते सूत्रस्थाने । ३६ । १६ ।
"मयूरको राजवृक्षो निम्बः कोषातकी
तिलाः ॥")
तुत्थकम् । (स्वार्थे कन् ।) मयूरः । इति
विश्वः ॥
मयूरशिखा । इति जटाधरः ॥

**मयूरग्रीवकं**, क्ली, (मयूरस्य ग्रीवायाः कन्धरस्य
वर्णं इव वर्णो यस्य । बहुव्रीहौ कन् । ह्रस्वश्च
।)
तुत्थम् । इति राजनिर्घण्टः ॥

**मयूरचटकः**, पुं, (मयूर इव चटकः ।) गृह-
कुक्कुटः । इति हारावली । ९० ॥

**मयूरचूडं**, क्ली, (मयूरस्येव चूडा अग्रभागो यस्य
तत् ।) स्थौणेयकम् । इति राजनिर्घण्टः ॥

शोभा । इति मेदिनी । खे, ११ ॥
कीलः ।
इत्यजयः ॥ (पर्व्वतः । यथा, ऋग्वेदे ।
७ । ९९ । ३ ।
"दाधर्थ पृथिवीमभितो मयूखैः ॥"
"मयूखैः पर्व्वतैः ।" इति तद्भाष्ये
सायनः ॥")

**मयूरः**, पुं, (मयुरिव राति शब्दायते इति । रा +
कः । पृषोदरादित्वात् साधुः । यद्वा,
मीनाति
हन्ति सर्पानिति । मी + "मीनातेरूरन्
।"
उणा० १ । ६८ । इति ऊरन् ।)
स्वनामख्यातपक्षि-
विशेषः । तत्पर्य्यायः । बर्हिणः २ बर्ही
३ नील-
कण्ठः ४ भुजङ्गभुक् ५ शिखाबलः ६
शिखी ७
केकी ८ मेघनादानुलासी ९ । इत्यमरः
। २ ।
५ । ३० ॥ प्रचलाकी १० चन्द्रकी
११ सितापाङ्गः
१२ । इति शब्दरत्नावली ॥ ध्वजी
१३ मेघा-
नन्दी १४ कलापी १५ शिखण्डी १६
चित्र-
पिच्छिकः १७ भुजगभोगी १८
मेघनादानु-
लासकः १९ । तस्य पक्षस्य
विचित्रताकारणं
यथा, --
"प्रविष्टायां हुताशन्तु वेदवत्यां स
रावणः ।
पुष्पकन्तु समारुह्य परिचक्राम
मेदिनीम् ॥
ततो मरुत्तं नृपतिं यजन्तं सह दैवतैः ।
उशीरबीजमासाद्य ददर्श स तु रावणः
॥
संवर्त्तो नाम ब्रह्मर्षिः साक्षाद्भ्राता
बृहस्पतेः ।
याजयामास धर्म्मज्ञः सर्व्वैर्देवगणैर्वृतः
॥
बाणभट्टो मयूरस्य भगिनीपतिरासीदित्युक्त-
मस्ति । अथ च ।
"अहो प्रभावो वाग्देव्या यन्मातङ्गदिवाकरः ।
श्रीहर्षस्याभवत् सभ्यः समो बाणमयूरयोः ॥"
इति शार्ङ्गपद्धत्यादिप्रसिद्धराजशेखरपद्येनापि
बाणमयूरयोः समकालत्वं प्रतीयते ।
अयं हि कुष्ठरोगग्रस्तः सूर्य्यमारिरात्सुः सूर्य्य-
शतकं नाम स्तोत्रग्रन्थं प्रणीय ततः सम्यक्
निष्कृतिमवाप । सूर्य्यशतकस्यान्तिमः श्लोको
यथा, --
"श्लोका लोकस्य भूत्यै शतमिति रचिताः
श्रीमयूरेण भक्त्या

**मयूरचूडा**, स्त्री, (मयूरस्य चूडेव चूडा शिखा
यस्याः ।) मयूरशिखा । इति वैद्यकम् ॥

**मयूरजङ्घः**, पुं, (मयूरस्य जङ्घेव जङ्घा यस्य ।)
श्योनाकः । इति राजनिर्घण्टः ॥

**मयूरतुत्थं**, क्ली, (मयूर इव तुत्थम् । मयूरवर्ण-
त्वादस्य तथात्वम् ।) तुत्थम् । इति राज-
निर्घण्टः ॥

**मयूरपदकं**, क्ली, (मयूरस्येव पदकं स्थानम् ।)
नखाघातः । यथा, शब्दमालायाम् ।
"तथावकेरकोली च नखाघाते तु सुण्डनम् ।
मयूरपदकं व्याघ्रनखकोत्पलपत्रके ॥"

**मयूरविदला**, स्त्री, (मयूरान् विशेषेण दलति
स्वपुष्पादिशोभया तिरस्करोतीति । वि +
दल +
अच् । स्त्रियां टाप् ।) अम्बष्ठा । इति वैद्यकम्
॥

**मयूरशिखा**, स्त्री, (मयूरस्य शिखेव शिखा अग्रं
यस्याः ।) स्वनामख्यातक्षुपविशेषः ।
तत्पर्य्यायः ।
बर्हिचूडा २ शिखिनी ३ शिखालुः ४ सुशिखा
५ शिखा ६ शिखाबला ७ केकिशिखा ८ ।
अस्या गुणाः । रसे स्वादुत्वम् । मूत्रकृच्छ्र-
बालग्रहादिदोषनाशित्वम् । वश्यकर्म्मणि
शस्त-
त्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
"मयूराह्वा शिखा प्रोक्ता सहस्राङ्घ्रिर्म्मरुच्छदा
।
नीलकण्ठशिखा लघ्वी
पित्तश्लेष्मातिसारजित् ॥"
इति भावप्रकाशः ॥

**मयूरिका**, स्त्री, (मयूरवत् वर्णोऽस्त्यस्याः । मयूर
+ ठन् । टाप् ।) अम्बष्ठा । इति राज-
निर्घण्टः ॥

**मयूरी**, स्त्री, (मयूर + स्त्रियां ङीप् ।) मयूर-
स्त्रीजातिः । इति व्याकरणं
लिङ्गादिसंग्रहश्च ॥
(यथा उत्तररामचरिते । ३ । ८ ।
"किमव्यक्तेऽसि निनदे कुतस्त्येऽपि
त्वमीदृशी ।
स्तनयित्नोर्म्मयूरीव चकितोत्कण्ठिता
स्थिता ॥")

**मरकः**, पुं, (म्रियन्ते जना यस्मात् । मृ + अपादाने
अप् । ततः स्वार्थे संज्ञायां वा कन् ।
यद्वा,
मृ + भावे अप् । मरो मरणमिति शब्देन
कायति शब्दायते इति । कै + कः ।)
मारिः ।
इति हेमचन्द्रः । २ । २३९ ॥ मडक
इति भाषा ।
तत्पर्य्यायः । मारी २ मारकः ३ । इति
जटा-
धरः ॥ (यथा, कामन्दकीयनीतिसारे ।
१३ । २० ।
"हुताशनो जलं व्याधिर्दुर्भिक्षो
मरकस्तथा ।
इति पञ्चविधं दैवं व्यसनं मानुषं परम्
॥")
तस्य कारणादि यथा, --
"यावन्मार्त्तण्डसूनुर्गवि धनुषि झसे
मन्मथे
वास्ति नार्य्यां
तावद्दुर्भिक्षपीडा भवति च मरकं संशयं
यान्ति लोकाः ।
हाहाकारा तथोर्व्वी मनुजभयकरी
फेरुरावैश्च
भीमैः
शून्यग्रामा भवेयुर्नरपतिरहिता
भूरिकङ्काल-
माला ॥
वक्रं करोति रविजो धरणीसुतो वा
मूलर्क्षहस्तमघखेतिमैत्रभेषु ।
छत्रोपभङ्गपतनानि च सैनिकानां
"उपसर्गानशेषांस्तु महामारीसमुद्भवान् ।
तथा त्रिविधमुत्पातं माहात्म्यं शमयेन्मम ॥"
इति मार्कण्डेयपुराणम् ॥
"मारीभये राजभये तथा चौराग्निजे भये ।
औत्पातिके महाघोरे तथा दुःस्वप्नदर्शने ।
बन्धने च तथा घोरे पठेत् स्तोत्रं समाहितः ॥"
इति विश्वसारोद्धारतन्त्रे आपदुद्धारकल्पः ॥
"ग्रहयज्ञैः शान्तिकैश्च किं क्लिश्यन्ति नरा
द्विज ! ॥
महाशान्तिकरः श्रीमांस्तुलस्या पूजितो हरिः ॥
उत्पातान् दारुणान् पुंसां दुर्निमित्तान्यशेषतः ।
तुलस्या पूजितो भक्त्या महाशान्तिकरो
हरिः ॥"
अत्र ब्रह्मपुराणीयो मन्त्रः ।
"ॐ नमस्ते बहुरूपाय विष्णवे परमात्मने
स्वाहेति ।"
इति ज्योतिस्तत्त्वम् ॥
(जातिविशेषः । यथा, मार्कण्डेये । ५८ । ५१ ।
"दार्व्वादा मरकाश्चैव कुरटाश्चान्नदारकाः ।
एकपादाः खशा घोषाः स्वर्गभौजानव-
द्यकाः ॥")

**मरकतं**, क्ली, (मरकं मारिभयं तरन्त्यनेन ।
तन् + डः । यद्वा, मरकं मरणं तनोतीति ।
लोभान्मरणमनादृत्य तस्मिन् रत्ने प्रवर्त्तते इति
मरकतमिति स्मरन्तीति वृद्धाः । इत्यमरटीकायां
भरतः ।) हरिद्वर्णमणिविशेषः । पान्ना इति
भाषा ॥ तस्य देवता बुधः । इति ज्योतिषम् ॥
तत्पर्य्यायः । गारुत्मतम् २ अश्मगर्भम् ३ हरि-
न्मणिः ४ । इत्यमरः । २ । ९ । ९२ ॥ मरक्तम्
५ राज-
नीलम् ६ गरुडाङ्कितम् ७ । इति शब्दरत्ना-
बली ॥ रौहिणेयम् ८ सौपर्णम् ९ गरुडोद्गी-
र्णम् १० बुधरत्नम् ११ अश्मगर्भजम् १२ गर-
लारिः १३ वापबोलम् १४ गारुडम् १५ ।
कुत्रचित् पुस्तके गरुडोद्गीर्णस्थाने गरुडो-
त्तीर्णं वापवोलस्थाने वाप्रबालं इति च पाठः ॥
अस्य गुणाः । विषघ्नत्वम् । नशीतलत्वम् ।
रसे मधुरत्वम् । आमपित्तहरत्वम् । रुच्य-
त्वम् । पुष्टिदत्वम् । भूतनाशकत्वञ्च ॥ * ॥
अस्य लक्षणम् ।
छायाभिः समतां दधाति तदिदं निर्द्दिष्टमष्टा-
त्मकं
जात्यं यत्तपनातपेष्वपरितो गारुत्मतं रञ्जयेत्
॥"
इति राजनिर्घण्टः ॥ * ॥
ग्रन्थान्तरे तस्य परीक्षादि यथा, --
सूत उवाच ।
"दानवाधिपतेः पित्तमादाय भुजगाधिपः ।
द्विधा कुर्व्वन्निव व्योम सत्वरं वासुकिर्य्ययौ ॥
स तदा स्वशिरोरत्नप्रभादीप्ते नभोऽम्बुधौ ।
राजतः स महानेकः खण्डसेतुरिवाबभौ ॥
ततः पक्षनिपातेन संहरन्निव रोदसी ।
गरुत्मान् पन्नगेन्द्रस्य प्रहर्त्तुमुपचक्रमे ॥
सहसैव मुमोच तत् फणीन्द्रः
सुरसाद्युक्ततुरस्कपादपायाम् ।
नलिकावनगन्धवासितायां
वरमाणिक्यगिरेरुपत्यकायाम् ॥
तस्य प्रपातसमनन्तरकालमेव
तद्वद्वरालयमतीत्य रमासमीपे ।
स्थानं क्षितेरुपपयोनिधितीरलेखं
तत्प्रत्ययान्मरकताकरतांजगाम ॥
तत्रैव किञ्चित् पततस्तु पित्ता
दुत्पत्य जग्राह ततो गरुत्मान् ।
मूर्च्छापरीतः सहसैव घोणा-
रन्ध्रद्वयेन प्रमुमोच सर्व्वम् ॥
तत्राकठोरशुककण्ठशिरीषपुष्प-
खद्योतपृष्ठचरशाद्वलशैवलानाम् ।
कह्लारशस्पकभुजङ्गभुजाञ्चपत्र-
प्रान्तत्विषो मरकताः शुभदा भवन्ति ॥
तद्यत्र भोगीन्द्रभुजा विमुक्तं
पपात पित्तं दितिजाधिपस्य ।
तस्याकरस्यातितरां स देशो
दुःखोपलभ्यश्च गुणैश्च युक्तः ॥
तस्मिन्मरकतस्थाने यत्किञ्चिद्उपजायते ।
तत्सर्व्वं विषरोगाणां प्रशमाय प्रकीर्त्त्यते ॥
सर्व्वमन्त्रौषधिगणैर्य्यन्न शक्यं चिकित्सितुम् ।
महाहिदंष्ट्राप्रभवं विषन्तत्तेन शाम्यति ॥
अन्यमप्याकरे तत्र यद्दोषैरुपवर्ज्जितम् ।
जायते तत् पवित्राणामुत्तमं परिकीर्त्तितम् ॥
अत्यन्तहरितवर्णं
कोमलमर्च्चिर्व्विभेदजटिलञ्च ।

सर्व्वत्र लोकमरणं जलधौतदेशः ॥
मांसास्थीनि समादाय
श्मशानाद्गृध्रवायसाः ।
श्वा शृगालोऽथवा मध्ये पुरस्य
प्रविशन्ति चेत् ॥
विकिरन्ति गृहादौ च श्मशानं सा मही
भवेत् ।
चौरेण हन्यते लोकः परचक्रसमागमः ॥
संग्रामश्च महाघोरो दुर्भिक्षं मरकस्तथा
।
अद्भुतानि प्रसूयन्ते तस्य देशस्य
विद्रवः ॥”
इति ज्योतिस्तत्त्वम् ॥
अपि च ।
“सार्च्चिष्यग्निभयं गैरिकरूपे च युद्धानि
।
दूर्व्वाकाण्डश्यामे हारिद्रे चापि निर्द्दिशेन्
मरकम् ॥”
इति ग्रहणप्रकरणे तिथ्यादितत्त्वम् ॥
अन्यदपि ।
“रवाविन्दौ गजारूढा शन्यङ्गारे तुरङ्गमे
।
नौकया गुरुशुक्राभ्यां दोलया बुधवासरे
॥
गजे च जलदा देवी छत्रभङ्गस्तुरङ्गमे ।
नौकायां शस्यवृद्धिः स्यात् दोलायां
मरकं
भवेत् ॥”
इति पत्रिकाप्रवेशफलकथने ज्योतिषम्
॥ * ॥
अस्य शान्तिः । देवीमाहात्म्यपाठः ।
वटुक-
भैरवस्तवपाठः । तुलस्या विष्णुपूजनञ्च
। यथा,

“स्वच्छञ्च गुरु सच्छायं स्निग्धं गात्रञ्च मार्द्दव-
समेतम् ।
अव्यङ्गं बहुरङ्गं शृङ्गारी मरकतं शुभं बिभृ-
यात् ॥”
तस्य कुलक्षणम् ।
“शर्करिलकलिलरूक्षं मलिनं लघुहीनकान्ति
कल्माषम् ।
त्रासयुतं विकृताङ्गं मरकतममरोऽपि नोप-
भुञ्जीत ॥” * ॥
तस्य परीक्षा ।
“यच्छैवालशिखण्डिशाद्वलहरित्काचैश्च बाध-
च्छदैः
खद्योतेन च बालकीरवपुषा शैरीषपुष्पेण च ।

काञ्चनचूर्णस्यान्तःपूर्णमिव लक्ष्यते यच्च ॥
युक्तं संस्थानगुणैः समरागं गौरवेण विहीनम् ।
सवितुः करसंस्पर्शाच्छुरयति सर्व्वाश्रमं
दीप्त्या ॥
हित्वा च हरितभावं यस्यान्तर्व्विनिहिता
भवेद्दीप्तिः ।
अचिरप्रभाप्रभाहतनवशाद्वलसन्निभाभाति ॥
यच्च मनसः प्रसादं विदधाति निरीक्षितमति-
मात्रम् ।
तन्मरकतं महागुणमिति रत्नविदां मनोवृत्तिः
॥
यस्तु भास्करसंस्पर्शात् हस्तन्यस्तो
महामणिः ।
रञ्जयेदात्मपादैस्तु महामरकतं हि तत् ॥
चतुर्धा जातिभेदस्तु महामरकते मणौ ।
छायाभेदेन विज्ञेया चतुर्व्वर्गस्य लक्षणैः ॥” *
॥

अथ छाया ।
"भवेदष्टविधच्छाया मणेर्मरकतस्य च ।
वर्हिपुच्छसमाभासा चासपक्षसमापरा ॥
हरिकोचनिभा चान्या तथा शैबालसन्निभा ।
स्वद्योतपृष्ठसंकाशा बालकीरसमा तथा ॥
नवशाद्वलसच्छाया शिरीषकुसुमोपमा ।
एवमष्टौ समाख्याताश्छाया मरकताश्रयाः ॥
छायाभिर्यक्तमेताभिः श्रेष्ठं मरकतं भवेत् ।
पद्मरागगतः स्वच्छो जलविन्दुर्यथा भवेत् ।
तथा मरकतच्छाया श्यामला हरितामला ॥"
अथ दोषगुणाः ।
"दोषाः सप्त भवन्त्यस्य गुणः पञ्चविधो मतः
।
अस्निग्धं रूक्षमित्युक्तं व्याधिस्तस्य धृते
भवेत् ॥
विस्फोटः स्यात् सपिडके तत्र
शस्त्रहतिर्भवेत् ।
सपाषाणे भवेदिष्टनाशो मरकते धृते ॥
विच्छायं मरकतं प्राहुर्वार्य्यते न तु धार्य्यते ।
शर्करं कर्करायुक्तं पुत्त्रशोकप्रदं धृतम् ॥
जठरं कान्तिहीनन्तु दंष्ट्रिवह्निभयावहम् ।
कुल्माषवर्णं धवलं ततो मृत्युभयं भवेत् ॥
इति दोषाः समाख्याता वर्ण्यन्तेऽथ महा-
गुणाः ।
निर्म्मलं कथितं स्वच्छं गुरु
स्याद्गुरुतायुतम् ॥
स्निग्धं रूक्षविनिर्मुक्तमरजस्कमरेणुकम् ।
सुरागं रागबहुलं मणेः पञ्च गुणा मताः ॥
एतैर्युक्तं मरकतं सर्व्वपापभयापहम् ।
गजवाजिरथान्दत्त्वा विप्रेभ्यो विस्तराद्धि मे
॥
तत् फलं समवाप्नोति शुद्धे मरकते धृते ।
धनधान्यादिकरणे तथा सैन्यक्रियाविधौ ॥
विषरोगोपशमने कर्म्मस्वाथर्व्वणेषु च ।
शस्यते मुनिभिर्यस्मादयं मरकतो मणिः ॥"
तथा च ।
"स्वच्छता गुरुता कान्तिः स्निग्धत्वं
पित्तकार-
णम् ।
हरिन्निरञ्जकञ्चैव सप्त मरकते गुणाः ॥"
अथ कृत्रिमाकृत्रिमपरीक्षा ।
लाघवेनैव काचस्य शक्या कर्त्तुं विभावना ॥
कस्यचिदनेकरूपैर्मरकतमनुगच्छतोऽपि गुण-
वर्णैः ।
भल्लातकस्य निर्नेतुर्वैशद्यमुपैति वर्णस्य ॥
वज्राणि मुक्ताः सन्त्यन्ये ये च केचिद्द्विजातयः ।
तेषामप्रतिबद्धानां भा भवत्यूद्र्ध्वगामिनी ॥
ऋजुत्वाच्चैव केषाञ्चित्कथञ्चिदुपजायते ।
तिर्य्यगालोक्यमानानां सद्यश्चैव प्रणश्यति ॥
स्नानाचमनजप्येषु रक्षामन्त्रक्रियाविधौ ।
ददद्भिर्गोहिरण्यानि कुर्व्वद्भिः साधनानि च ॥
दैवपित्र्यातिथेयेषु गुरुसंपूजनेषु च ।
वाध्यमानेषु विषमैर्दोषजातैर्विषोद्भवैः ॥
दौषैर्हीनं गुणैर्युक्तं काञ्चनप्रतियोजितम् ।
संग्रामे विचरद्भिश्च धार्य्यं मरकतं बुधैः ॥"
अथ मूल्यम् ।
"तुलया पद्मरागस्य यन्मूल्यमुपजायते ।
लभतेऽभ्यधिकं तस्मात् गुणैर्मरकतं स्मृतम् ॥
तथा च पद्मरागाणां दोषैर्मूल्यं प्रलीयते ।
ततोऽस्याप्यधिका हानिर्दोषैर्मरकते भवेत् ॥
गुणपिण्डसमायुक्ते हरितश्यामभास्वरे ।
मूल्यं द्वादशकं प्रोक्तं जातिभेदेन सूरिभिः ॥
यवैकेन शतं पञ्चसहस्रं द्वितये यवे ।
त्रिभिश्चैव सहस्रे द्वे चतुर्भिश्च चतुर्गुणम् ॥"
इति गारुडे मरकतपरीक्षा ७१ अध्यायः
युक्तिकल्पतरुश्च ॥

**मरकतपत्री**, स्त्री, (मरकतमिव पत्रं यस्याः ।
ङीष् । तद्वर्णसादृश्यादेवास्यास्तथात्वम् ।)
पाची । इति राजनिर्घण्टः ॥

**मरक्तं**, क्ली, (मरकतम् । पृषोदरादित्वात्
साधुः ।) मरकतमणिः । इति शब्दरत्नावली ॥

**मरणं**, क्ली, (म्रियतेऽनेनेति । मृ + करणे ल्युट् ।)
वत्सनाभः । इति राजनिर्घण्टः ॥ (भावे ल्युट् ।)
विजातीयात्ममनःसंयोगध्वंसः । इति न्याय-
मतम् ॥ तत्पर्य्यायः । पञ्चता २ कालधर्म्मः ३
दृष्टान्तः ४ प्रलयः ५ अत्ययः ६ अन्तः ७
नाशः ८ मृत्युः ९ निधनम् १० । इत्यमरः ।
२ । ८ । ११६ ॥ भूमिलाभः ११ निपातः १२
आत्ययिकम् १३ मृतिः १४ । इति शब्दरत्ना-
वली ॥ कीर्त्तिशेषः १५ महानिद्रा १६ महा-
क्लेशादुत्क्रान्तिमाप्नोति
याम्यकिङ्करपीडितः ।
ततश्च यातनादेहं क्लेशेन प्रतिपद्यते ।
एतान्यन्यानि चोग्राणि दुःखानि मरणे
नृणाम् ॥"
इति विष्णुपुराणे ६ अंशे ५ अध्यायः ॥
* ॥
सुहृन्मरणश्रावणनिषेधो यथा, --
"अग्नौ न निक्षिपेदग्निं नाद्भिः प्रशमयेत्तथा
।
सुहृन्मरणमार्त्तिं वा न स्वयं श्रावयेत्
परान् ॥"
इति कौर्म्मे उपविभागे १५ अध्यायः ॥
* ॥
अथ धार्म्मिकमरणलक्षणम् ।
सोमशर्म्मोवाच ।
"धर्म्यो हि कीदृशो मृत्युर्जन्म चैव वदस्व
मे ।
उभयोर्लक्षणं कान्ते ! त्वमेवं हि वदस्व
मे ॥
सुमनोवाच ।
सत्यं शौचं क्षमा शान्तिस्तीर्थं पुण्यादिकं
तथा ।
धर्म्मञ्च पालितं येन तस्य मृत्युं
वदाम्यहम् ॥
रोगो न जायते तस्य न च पीडा कलेवरे
।
न श्रमो वै नच ग्लानिर्न च स्वेदो
भ्रमस्तथा ॥
दिव्यरूपधरा भूत्वा गन्धर्व्वा
ब्राह्मणास्तथा ।
वेदपाठसमायुक्ता गतिज्ञानविशारदाः ॥
तस्य पार्श्वं समायान्ति स्तुतिं कुर्व्वन्ति
चातु-
लाम् ।
सुस्थो हि आसने युक्तो देवपूजारतः
किल ॥
तीर्थञ्च लभते प्राज्ञः स्नानार्थं
धर्म्मतत्परः ।
अग्न्यगारे च गोष्ठे च देवतायतनेषु च ॥

“कृत्रिमत्वं सहजत्वं दृश्यते सूरिभिः क्वचित् ।
घर्षयेत् प्रस्तरे वङ्गकाचस्तस्माद्विपद्यते॥
लेखयेल्लौहभृङ्गेण चूर्णेनाथ विलेपयेत् ।
सहजः कान्तिमाप्नोति कृत्रिमो मलिनायते ॥
वर्णस्यातिबहुत्वात् यस्यान्तः स्वच्छकिरण-परिधानम् ।
सान्द्रस्निग्धविशुद्धं कोमलबर्हप्रभादिसमकान्ति ॥
चलोज्ज्वलया कान्त्या सान्द्राकारं विभासया भाति ।
तदपि गुणवत्संज्ञामाप्नोति हि यादृशीं पूर्ब्बम् ॥
सकलकठोरं मलिनं रूक्षं पाषाणकर्करोपेतम् ।
दिग्धञ्च शिलाजतुना मरकतमेवंविधं विगुणम् ॥
यत्सन्धिश्लेषितं रत्नमन्यन्मरकताद्भवेत् ।
श्रेयस्कामैर्न तद्धार्य्यं क्रेतव्यं वा कथञ्चन ॥
भल्लातकपुत्त्रिका च तद्वर्णसमयोगतः ।
मणेर्मरकतस्यैते लक्षणीया विजातयः ॥
क्षौमेण वाससा घृष्टा दीप्तिं त्यजति पुत्त्रिका ।

पथगमः १७ संस्थानम् १८ । इति जटाधरः ॥
मरणदुःखान्याह ।
“मरणे यानि दुःखानि प्राप्नोति शृणु तान्यपि ।
श्लथग्रीवाङ्घ्रिहस्तोऽथव्याप्तो वेपथुना नरः ॥
मुहुर्ग्लानिः परवशो मुहुर्ज्ञानबलान्वितः ।
हिरण्यधान्यतनयभार्य्याभृत्यगृहादिषु।
एते कथं भविष्यन्तीत्यतीवममताकुलः ॥
मर्म्मभिद्भिर्महारोगैः क्रकचैरिव दारुणैः ।
शरैरिवान्तकस्योग्रैश्छिद्यमानासुबन्धनः॥
विवर्त्तमानताराक्षिहस्तपादंमुहुः क्षिपन् ।
संशुष्यमाणताल्वोष्ठपुटो घुरघुरायते ॥
निरुद्धकण्ठो दोषौघौरुदानश्वासपीडितः।
तापेन महता व्याप्तस्तृषा चार्त्तस्तथा क्षुधा ॥

आरामे च तडागे च यत्राश्वत्थो वटस्तथा ।
ब्रह्मवृक्षं समाश्रित्य श्रीवृक्षन्तु तथा पुनः ॥
अश्वस्थानं समाश्रित्य गजस्थानं ततो नरः ।
अशोकं चूतवृक्षञ्च समाश्रित्य यदा स्थितः ॥
सन्निधिं ब्राह्मणानाञ्च राजवेश्मगतोऽपि वा ।
रणभूमिं समाश्रित्य पुरा यत्र मृता भटाः ॥
मृत्युस्थानानि पुण्यानि केवलं धर्म्मकारणम् ।
गोग्रहन्तु समं प्राप्य तथा समरशङ्कटम् ॥
शद्धधर्म्मकरो नित्यं धर्म्मतो धर्म्मवत्सलः ।
एवं स्थानं समाप्नोति यदा मृत्युं समाश्रितः ॥
मातरं पश्यते पुण्यं पितरञ्च नरोत्तमम् ।
भ्रातरं श्रेयसा युक्तमन्यं स्वजनबान्धवम् ॥
वन्दिजनं तथा पुण्यं स्तूयमानं पुनः पुनः ।
पापिष्ठं नैव पश्येत मातृपित्रादिकं पुनः ॥
गीतं गायन्ति गन्धर्व्वाः स्तुवन्ति स्तावकाः स्तवैः ।
मन्त्रपाठैस्तथा विप्रा माता स्नेहेन पूजयेत् ॥
पिता स्वजनवर्गश्च धर्म्मात्मानं महामतिम् ।
एवंभूताः समाख्याताः पुण्यस्थानानि ते विभो ! ।
प्रत्यक्षान् पश्यते भूतान् हास्यस्नेहसमाविलान् ॥
न च स्वप्नेन मोहेन क्लेशरक्तेन वै वत ॥
धर्म्मराजो महाप्राज्ञो दूरात्तन्तु समाह्वयेत् ।
एह्येहि त्वं महाभाग ! यत्र धर्म्मः स तिष्ठति ॥
तस्य मोहो न च भ्रान्तिर्न ग्लानिर्न च विक्रिया ।

| | | |
|---|---|---|
| | | जायते नात्र सन्देहः प्रसन्नात्मा प्रतिष्ठते ॥<br>ज्ञानविज्ञानसम्पन्नः स्मरन्नेवं जनार्द्दनम् । |

तैश्च राद्धं प्रयात्येवं सन्तुष्टो हृष्टमानसः ॥
दशमद्वारमाश्रित्य आत्मा तस्य हि गच्छति ।
शिविका तस्य चायाति सुयानं सुमनोहरम् ॥
विमानैरेव यात्येष वायोर्वेगेन चोत्तमः ॥
छत्रेण ध्रियमाणेन चामरव्यजनैस्तथा ।
वीज्यमानः स धर्म्मात्मा पुण्यैरेव समन्ततः ॥
गीयमानस्तु धर्म्मात्मा स्तूयमानस्तु पण्डितैः ।
वन्दिभिश्चामरैर्दिव्यैर्ब्राह्मणैर्वेदपारगैः ॥
साधुभिः स्तूयमानस्तु सर्व्वसौख्यसमन्वितः ।
यथादानप्रभावेण फलमाप्नोति तत्र सः ॥
आरामवाटिकामध्ये स प्रयाति सुखेन वै ।
अप्सरोभिः समाकीर्णो दिव्याभिर्मङ्गलैर्युतः ॥
देवैस्तु स्तूयमानस्तु धर्म्मराजं प्रपश्यति ।
देवाश्च धर्म्मसंयुक्ता जग्मुः सांमुख्यमेव ते ॥
एह्येहि त्वं महाभाग ! भुङ्क्ष्व भोगान्मनो-
रमान् ।
एवं संपश्यते धर्म्मं सौम्यरूपं महामतिः ॥
अस्य पुण्यस्य भावेन भुङ्क्ते स्वर्गमनुत्तमम् ।
भोगक्षयात् स धर्म्मात्मा पुनर्जन्म प्रयाति च ॥
निजधर्म्मप्रसादात् स कुलं पुण्यं प्रयाति च ।
ब्राह्मणस्य सुपुण्यस्य क्षत्रियस्य तथैव च ॥
धनाढ्यस्य सुपुण्यस्य वैश्यस्य च महामते ! ।
धर्म्मेण मोदते भद्रं पुनः पुण्यं करोति सः ॥”
इति श्रीपद्मपुराणे भूमिखण्डे सुमनोपाख्याने
१५ अध्यायः ॥ * ॥
अथ पापिनां मरणलक्षणम् ।
सोमशर्म्मोवाच ।
“पापिनां मरणं भद्रे ! कीदृशैर्लक्षणैर्युतम् ।
तन्मे त्वं विस्तराद्ब्रूहि यदि जानासि
भाविनि ! ॥
सुमनोवाच ।
श्रूयतामभिधास्यामि तस्मात् सिद्धात् श्रुतं
मया ।
पापिनां मरणं कान्त ! यादृशं लिङ्गमेव च ॥
महापातकिनाञ्चैव स्थानमेषां वदाम्यहम् ।
लिप्ताममेध्यसंक्लेदैर्भूमिं पापसमन्विताम् ॥
स तां प्राप्य सुदुष्टात्मा प्राणान् दुःखेन मुञ्चति ।
चाण्डालभूमिं संप्राप्य मरणं याति दुःखितः ॥
गर्द्दभाचरितां भूमिं वेश्यागारं समाश्रितः ॥
मद्यपानगृहं गत्वा नैधन्यमुपगच्छति ।
समाकृष्य नयन्त्येते हाहेति रुदतो मुहुः ।
म्रियमाणस्य या चेष्टा तामेवं प्रवदाम्यहम् ॥
परद्रव्यापहरणं परभार्य्याविडम्बनम् ।
ऋणं परस्य सर्व्वस्वं गृहीतं यैस्तु पापिभिः ॥
पुनर्नैव प्रदत्तं हि लोभास्वादविमोहितैः ।
अन्यदेव महापापं कुप्रतिग्रहमेव च ॥
कण्ठमायान्ति ते सर्व्वे म्रियमाणस्य तस्य च
।
यानि कानि च पापानि पूर्ब्बमेव कृतानि च ॥
आयान्ति कण्ठमूलं हि महापापस्य नान्यथा
।
दुःखमुत्पादयन्त्येते कफबन्धेन दारुणम् ॥
पीडाभिर्दारुणाभिश्च कण्ठो घुरघुरायते ।
रोदते कम्पतेऽत्यर्थं मातरं पितरं पुनः ।
स्मरति भ्रातरं तत्र भार्य्यां पुत्त्रं पुनः पुनः ॥
पुनर्विस्मरणं याति महापापेन मोहितः ।
तस्य प्राणा न गच्छन्ति बहुपीडासमाकुलाः
॥
पतते कम्पते चैव मूर्च्छते च पुनः पुनः ।
एवं पीडासमायुक्तो दुःखं भुङ्क्तेऽतिमोहितः
॥
तस्य प्राणा सुदुःखेन महाकष्टैः प्रचालितः ।
अपानं मार्गमाश्रित्य शृणु कान्त ! प्रयान्ति ते
॥
एवंप्राया दुरात्मानो लोभमोहसमन्विताः ।
नीयन्ते च महाभूतैस्तेषां दुःखं वदाम्यहम् ॥”
इति पाद्मे भूमिखण्डे सुमनोपाख्याने
पापिमरणं
नाम १६ अध्यायः ॥ * ॥
पापिनां यमालयगमननानायोनिप्राप्तिविवरणं
यथा, --
सुमनोवाच ।
“अङ्गारसञ्चये मार्गे कृष्यमाणो हि नीयते ।
दह्यमानः स दुष्टात्मा चेष्टमानः पुनः पुनः ॥
यत्रातपो महातीव्रो द्वादशादित्यतापितः ।
नीयते तेन मार्गेण सन्तप्तः सूर्य्यरश्मिभिः ॥
पर्व्वतेष्विव दुर्गेषु छायाहीनेषु दुर्म्मतिः ।
नीयते तेन मार्गेण क्षुधातृष्णादिपीडितः ॥
स दूतैर्हन्यमानस्तु पदा दण्डैः परश्वधैः ।
कशाभिस्ताड्यमानस्तु निन्द्यमानस्तु दूतकैः
॥
नरकञ्च प्रयात्येवं कृमिकीटेषु पापकृत् ।
अमेध्ये पच्यते नित्यं हाहाभूतो विचेतनः
॥
मरणञ्चैव पापात्मा एवं याति सुनिश्चितम्
।
एवं पापस्य सम्भोगं भुङ्क्ते चैव सुदुर्म्मतिः
॥
पुनर्जन्म प्रवक्ष्यामि यासु योनिषु जातिषु ।
श्वयोनिं समनुप्राप्य भुञ्जते पातकं पुनः ॥
व्याघ्रो भवति दुष्टात्मा रासभं याति वै पुनः
।
मार्ज्जारशौकरीं योनिं सर्पयोनिन्तथैव च
॥
नानाभेदासु सर्व्वासु तिर्य्यक्सु च पुनः
पुनः ।
पापपक्षिषु संयाति अन्यासु गर्हितासु च ।
चाण्डालभिल्लजातिञ्च पुलिन्दीं याति पाप-
कृत् ॥
एतत्ते सर्व्वमाख्यातं पापिनां जन्म चव हि
।
पापपुण्यसमाचारस्त्वदग्रे कथितो मया ॥”
इति पाद्मे भूमिखण्डे सुमनोपाख्याने पाप-
पुण्यविवेको नाम १७ अध्यायः ॥ * ॥
शालग्रामशिलास्पर्शे मरणफलम् । यथा, -
-
राजान ऊचुः ।
“युवां नारायणस्यास्य कल्केः श्वशुरतां
गतौ ।
वयं नृपा इमे लोका ऋषयो ब्राह्मणाश्च ये
॥
प्रेक्ष्य भक्तिवितानं वां हरौ
विस्मितमानसाः ।
पृच्छामस्त्वामियं भक्तिः क्व लब्धा
परमात्मनः ॥
कस्य वा शिक्षिता राजन् ! किं वा
नैसर्गिकी
तव ।
श्रोतुमिच्छामहे राजन् !
त्रिजगज्जनपावनीम् ।
कथां भागवतीं त्वत्त्वः
संसाराश्रमनाशिनीम् ॥

अस्थिचर्म्मनखैः पूर्णामाश्रितां पापकिल्विषैः ॥
तामवाप्य स दुष्टात्मा मृत्युं प्राप्नोति निश्चितम् ।
अन्यां पापसमाचारां प्राप्य मृत्युं स गच्छति ॥
अथ चेष्टां प्रवक्ष्यामि दूतानां प्रिय ! निश्चि-
ताम् ॥
भैरवान् दारुणान् घोरानतिकृष्णान्महोदरान् ।
पिङ्गाक्षान् पीतनीलांश्च अतिश्वेतान्महो-
दरान् ॥
अत्युच्चांश्च करालांश्च शुष्कमांसत्वचोपमान् ।
रौद्रदंष्ट्राकरालांश्च सिंहास्यान् सर्पहस्तकान् ॥
स तान् दृष्ट्वा प्रकम्पेत स्विद्येत च मुहुर्मुहुः ।
शिवासंवादवद्घोरान्महारावान्महामते! ॥
मुञ्चन्ति दूतकाः सर्व्वे कर्णमूले तु तस्य हि ।
गले पाशप्रबद्धास्ते कण्ठे बद्धास्तथोदरे ॥

ततः शीतमये मार्गे वायुना सेव्यते पुनः ।
तेन शीतेन दुःखी स भूत्वा याति न संशयः ॥
आकृष्यमाणो दूतैस्तु नानादुःखेन नीयते ।
एवं पापी स दुष्टात्मा देवब्राह्मणनिन्दकः ॥
सर्व्वपापसमायुक्तो नीयते यमकिङ्करैः ।
यमं पश्यति दुष्टात्मा कृष्णाञ्जनचयोपमम् ।
तमुग्रं दारुणं भीमं यमदूतैः समावृतम् ।
सर्व्वव्याधिसमाकीर्णं चित्रगुप्तसमन्वितम् ॥
आरूढमहिषं देवं धर्म्मराजं द्विजोत्तम ! ।
दंष्ट्राकरालमत्युग्रं लम्बास्यं कालसन्निभम् ॥
पीतवासं महाहस्तं रक्तगन्धानुलेपनम् ।
रक्तमालाकृताभूषं गदाहस्तं भयङ्करम् ॥
एवंविधं महाकायं यमं पश्यति दुर्म्मतिः ।
तं दृष्ट्वा समनुप्राप्तं सर्व्वधर्म्मबहिष्कृतम् ॥
यमः पश्यति तं दुष्टं पापिष्ठं धर्म्मकण्टकम् ।
शातयेत्तु महादुःखैः पीडाभिर्दारुमुद्गरैः ॥
यावद्युगसहस्रान्तं तावत् कालं प्रपच्यते ।
नानानरकदेशेषु पच्यते च पुनः पुनः ॥

शशिध्वज उवाच ।
स्त्रीपुंसोरावयोर्यूयं शृणुतामोघविक्रमाः ।
वृत्तं यज्जन्मकर्म्मादिस्मृतिं तद्भक्तिलक्षणाम् ॥
पुरा युगसहस्रान्ते गृध्रोऽहं पूतिमांसभुक् ।
गृध्रीयं मे प्रियारण्ये कृतनीडौ वनस्पतौ ॥
चकार कामं सर्व्वत्र वनोपवनसंकुले ।
मृतानां पूतिपललैः प्राणिनां वृत्तिकल्पकौ ॥
एकदा लुब्धकः क्रूरो लुलोभ पिशिताशिनौ ।
आवां वीक्ष्य गृहे पुष्टं गृध्रं तत्राप्ययोजयत् ॥
तं वीक्ष्य जातविश्रान्तौ क्षुधया परिपीडितौ ।
स्त्रीपुंसौ पतितौ तत्र मांसशोणितचेतसौ ॥
बद्धावावां वीक्ष्य शिचा हर्षादागत्य लुब्धकः ।
जग्राह कण्ठे तरसा चञ्च्वग्राघातपीडितः ॥
आवां गृहीत्वा गण्डक्याः शिलायां सलिला-
न्तिके ।
मस्तिष्कं चूणयामास लुब्धकः पिशिताशनः ॥
चक्राङ्कितशिलासङ्गान्मरणादपितत्क्षणात् ।
ज्योतिर्म्मयविमानेन सद्यो भूत्वा चतुर्भुजौ ॥
प्राप्तौ वैकुण्ठनिलयं सर्व्वलोकनमस्कृतम् ।
ततः स्थित्वा युगशतं ब्रह्मणो लोकमागतौ ॥
ब्रह्मलोके पञ्चशतं युगानामुपभुज्य वै ।
देवलोके कालवशाद्गतं युगचतुःशतम् ॥
ततो भुवि नृपास्तावत् बद्धसूनुरहं स्मरन् ।
हरेरनुग्रहं लोके शालग्रामशिलाश्रयम् ॥
जातिस्मरत्वं गण्डक्याः किं तस्याः कथया-
म्यहम् ।

यज्जलस्पर्शमात्रेण माहात्म्यं महदद्भुतम् ॥
चक्राङ्कितशिलास्पर्शमरणस्येदृशं फलम् ।
न जाने वासुदेवस्य सेवया किं भविष्यति ॥”
इति कल्किपुराणे २५ अध्यायः ॥ * ॥
मरणजनकवस्तूनि यथा, --
“अग्निरापः स्त्रियो मूर्खः सर्पा राजकुलानि च ।
नित्यं परोपसेव्यानि सद्यःप्राणहराणि षट् ॥”
इति गारुडे ११४ अध्यायः ॥
(“मरणं प्राप्नुयात्तत्र शुक्रस्थानगते ज्वरे ।
शेफसः स्तब्धता मोक्षः शुक्रस्य तु विशेषतः ॥”
इति माधवकरकृतरुग्विनिश्चये ज्वराधिकारे ॥
“अपानः कर्षति प्राणं प्राणोऽपानन्तु कर्षति ।
शङ्खिनी तु यदा भिन्ना तदैव मरणं ध्रुवम् ॥”
इति वैद्यकम् ॥)

**मरतः**, पुं, (मृ मृतौ + “भृमृदृशियजीति ।” उणा० ३ । ११० । इति अतच् ।) मरणम् । इत्युणादिकोषः ॥

**मरन्दः**, पुं, (मरं मरणं द्यति खण्डयति भ्रमराणां जीवनहेतुत्वात् । दो + कः । यद्वा, मकरन्दः । पृषोदरादित्वात् साधुः ।) मकरन्दः । इति शब्दरत्नावली ॥ (यथा, --
“माकन्दमुकुलस्यन्दि मरन्दस्यन्दिमन्दिरे ।
केलितल्पे मुकुन्देन कुन्दवृन्देन मण्डिता ॥”
इति स्तवावली ॥)

**मरन्दकः**, पुं, (मरन्दः । स्वार्थे कन् ।) मकरन्दः । इति शब्दरत्नावली ॥

**मराकाली**, स्त्री, (मरं मरणदुःखं अकति प्राप्नोत्यनेनेति । अक् + करणे घञ् । स इव अलति पर्य्याप्नोतीति । अल् + अच् । गौरादित्वात् ङीष् ।) बृश्चिकाली । इति रत्नमाला । विछाटी इति भाषा ॥ (विवृतिरस्या बृश्चिकालीशब्दे ज्ञातव्या ॥)

**परारः**, पुं, (मरं मरणमलति निवारयतीति । अल + अण् । लस्य रत्वम् ।) शस्यरक्षणस्थानम् । इति जटाधरः । मराइ इति भाषा ॥

णम् ६ यवनेष्टम् ७ वृत्तफलम् ८ शाकाङ्गम् ९
धर्म्मपत्तनम् १० कटुकम् ११ शिरोवृत्तम् १२
वीरम् १३ कफविरोधि १४ मृषम् १५ सर्व्वहितम् १६ कृष्णम् १७ वेल्लजम् १८ । (यथा,
सुश्रुते सूत्रस्थाने ३८ अध्याये ।
“पिप्पलीमरिचशृङ्गवेराणि त्रिकटुकम् ॥”)
अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् ।
लघुत्वम् । श्लेष्मविनाशनत्वम् । समीरकृमिहृद्रोगहरत्वम् । रुचिकारकत्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
“मरिचं वेल्लजं कृष्णमूषणं धर्म्मपत्तनम् ।
मरिचं कटुकं तीक्ष्णं दीपनं कफवातजित् ॥
उष्णं पित्तहरं रूक्षं श्वासशूलकृमीन् हरेत् ।
तदार्द्रं मधुरं पाके नात्युष्णं कटुकं गुरु ॥
किञ्चित्तीक्ष्णगुणं श्लेष्मप्रसेकि स्यादपित्तलम् ॥”
इति भावप्रकाशः ॥
(अपि च ।
“स्वादुपाक्यार्द्रमरिचं गुरुश्लेष्मप्रसेकि च ।
कटूष्णं लघु तच्छुष्कमवृष्यं कफवातजित् ॥
नात्युष्णं नातिशीतञ्च वीर्य्यतो मरिचं सितम् ।
गुणवन्मरिचेभ्यश्च चक्षुष्यञ्च विशेषतः ॥”
इति सुश्रुते सूत्रस्थाने ४६ अध्यायः ॥)

**मरिचः**, पुं, (म्रियते नश्यतीति । मृ + इचः ।) मरुवकवृक्षः । इति राजनिर्घण्टः ॥

**मरिचपत्रकः**, पुं, (मरिचस्य पत्राणीव पत्राणि यस्येति । बहुब्रीहौ कः ।) सरलवृक्षः । इति राजनिर्घण्टः ॥

**मरिमा**, [न्] पुं, (म्रियते इति । मृ + “जनिमृङ्भ्यामिमनिन् ।” उणा० ४ । १४८ । इति

“मरीचिर्मघवांश्चैव इरा शङ्कुशिरा वृकः ॥”
मरुद्गणानामन्यतमः । यथा, श्रीभगवद्गीतायाम् । १० । २१ ।
“मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥”
प्रियव्रतवंशीयस्य सम्राजः पुत्त्रः । यथा, श्रीमद्भागवते । ५ । १५ । १४ -- १५ । “चित्ररथादूर्णायां सम्राडजनिष्ट । ततः उत्कलायां मरीचिर्मरीचेर्बिन्दुमत्यां बिन्दुमानुदपद्यत ।
तस्मात् सरघायां मधुनामाभवत् ॥”)

**मरीचिः**, पुं, स्त्री, (म्रियन्ते नश्यन्ति क्षुद्रजन्तवस्तमांसि वानेन । मृ + ईचिः ।) किरणः । इत्यमरः । १ । ४ । ३३ ॥ (यथा, रघौ । १३ । ४ ।
“गर्भं दधत्यर्कमरीचयोऽस्माद्
विवृद्धिमत्राश्नुवते वसूनि ॥”
यथा च ।
“मरीचीनसतो मेघान् मेघान् वाप्यसतोऽम्बरे ।
विद्युतो वा विना मेघैः पश्यन् मरणमृच्छति ॥”
इति चरके इन्द्रियस्थाने चतुर्थेऽध्याये ॥)
षट्त्र्यसरेणुपरिमाणम् । इति वैद्यकपरिभाषा ॥
(स्त्री, म्रियन्ते इव देवा यद्दर्शनादिति । मृ + ईचिः । अप्सरोविशेषः । यथा, महाभारते । १ । १२३ । ५९ ।
“मरीचिः शुचिका चैव विद्युद्वर्णा तिलोत्तमा ।
अम्बिका लक्षणा क्षेमा देवी रम्भा मनोरमा ॥”
म्रियते वारिभ्रमेण जीवा यस्याः । मृ + अपादाने ईचिः । मरीचिका । यथा, कथासरित्सागरे । ५७ । ९१ ।
“वेश्याप्रेमणि सद्भावो यदस्मिन् बुध्यते त्वया ।
सत्यंभवति किं जातु जलं मरुमरीचिषु ॥”)

**मरालः**, पुं, (मृ + आलच् ।) राजहंसः । इति जटाधरः ॥ (यथा, नैषधे । ६ । ७२ ।
"भैमीसमीपे स निरीक्ष्य यत्र
ताम्बूलजाम्बूनदहंसलक्ष्मीम् ।
कृतप्रियादूत्यमहोपकार-
मरालमोहद्रढिमानमूहे ॥")
कज्जलम् । कारण्डवः । तुरङ्गमः । वारिवाहः ।
दाडिमीविपिनम् । खलः । इति सारस्वतः ॥
मसृणे, त्रि । इति त्रिकाण्डशेषः ॥

**मरालकः**, पुं, (मराल इव प्रतिकृतिरिति । मराल + कन् ।) कलहंसः । इति राज-
निर्घण्टः ॥

**मरिचं**, क्ली, (म्रियते नश्यति श्लेष्मादिकमनेनेति । मृ + बाहुलकात् इचः ।) कक्कोलकम् ।
स्वनामख्यात-
वर्त्तुलाकारकटुद्रव्यविशेषः । तत्पर्य्यायः । पवि-
तम् २ श्यामम् ३ कोलम् ४ वल्लीजम् ५ ऊष-
इमनिन् ।) मृत्युः । इति सिद्धान्तकौमुद्या-
मुणादिवृत्तिः ॥

**मरीचं**, क्ली, (मृ + बाहुलकात् ईचः ।) स्वनाम-
ख्यातकटुद्रव्यविशेषः । तत्पर्य्यायः । वेल्लजम् २
कोलकम् ३ कृष्णम् ४ ऊषणम् ५
धर्म्मपत्तनम् ६ ।
इत्यमरः । २ । ९ । ३६ ॥ मरिचम् ७
श्यामम् ८
वरिष्ठम् ९ । इति जटाधरः ॥ आर्द्रस्य तस्य
गुणाः । पाके स्वादुत्वम् । गुरुत्वम् । श्लेष्म-
प्रसेकित्वञ्च । शुष्कस्य तस्य गुणाः । रुच्यत्वम् ।
अग्निदत्वम् । रूक्षत्वम् । कटुत्वम् । उष्णत्वम् ।
लघुत्वम् । शुक्रनाशित्वञ्च । इति
राजवल्लभः ॥
अन्यत् मरिचशब्दे द्रष्टव्यम् ॥

**मरीचिः**, पुं, (म्रियते पापराशिर्यस्मिन्निति ।
मृ + "मृकणिभ्यामीचिः ।" उणा० ४ । ७० ।
इति ईचिः । तपःप्रभावादस्य तथात्वम् ।)
मुनिविशेषः । स तु ब्रह्मणो ज्येष्ठमानसपुत्त्रः ।
अस्य भार्य्या कर्द्दममुनिकन्या कला, पुत्त्रः
कश्यपः पूर्णिमासश्च । इति श्रीभागवतम् ॥
(अस्य भार्य्या सम्भूतिरिति नाम्नापि ख्याता ।
यथा, मार्कण्डेये । ५२ । १९ ।
"पत्नी मरीचेः सम्भूतिः पौर्णमासमसूयत ॥")
कृपणः । इति हेमचन्द्रः ॥ (दनुपुत्त्रः । यथा,
हरिवंशे । ३ । ८२ ।

**मरीचिका**, स्त्री, (मरीचिरेव । स्वार्थे कन् ।
टाप् ।) मृगतृष्णा । इत्यमरः । १ । ४ ।
३५ ॥ (यथा, प्रबोधचन्द्रोदये । १ । १ ।
"मध्याह्नार्कमरीचिकास्विव पयःपूरो यद-
ज्ञानतः ॥")
"मरीचिरिव मरीचिका स्वार्थे संघे इत्यादिना
इवार्थे कः । ग्रीष्मे मरुदेशसिकतादावर्क्ककराः
प्रतिफलिताः दूरस्थानां जलत्वेनाभान्ति तद्वा-
चिका मृगतृष्णेति टीकाकारः । उत्कटरवि-
रश्मिजन्यक्षितिवास्पजालंमरीचिका । दूरशून्ये
यन्मयूखैर्जलमिव दृश्यते इत्यपरे ।" इति
भरतः ॥

**मरुः**, पुं, (म्रियतेऽस्मिन्निति । मृ + "भृमृ-
शीति ।" उणा० १ । ७ । इति उः ।) निर्जल-
देशः । (यथा, महाभारते । १३ । १५४ । २७ ।
"अदृश्या गच्छ भीरु ! त्वं सरस्वति ! मरून् प्रति ॥")
पर्व्वतः । इत्यमरः । ३ । ३ । १६२ ॥ यथा
महाभारते । ५ । ६४ । १८ ।
"तत्रापश्याम वै सर्व्वे मधु पीतममाक्षिकम् ।
मरुप्रपाते विषमे निविष्टं कुम्भसम्मितम् ॥"
दशेरकदेशः । तत्पर्य्यायः । धन्वा २ । इत्यमरः ।
२ । १ । ५ ॥ यथा, हेमचन्द्रः ।
"शाल्वास्तु कारकुक्षीया मरवस्तु दशेरकाः ॥"

मरुवकवृक्षः । इति भावप्रकाशः ॥ (निमि-
वंशीयहर्य्यश्वपुत्त्रः । यथा, श्रीमद्भागवते । ९ ।
१३ । १५ ।
"तस्माद्बृहद्रथस्तस्य महावीर्य्यः सुवृत्पिता ।
सुधृतेर्धृष्टकेतुर्वै हर्य्यश्वोऽथ मरुस्ततः ॥")
सूर्य्यवंशीषभाविराजविशेषः । तस्य विवरणं
यथा, --
"रामात् कुशोऽभूदतिथिस्ततोऽभून्निषधान्नभः
।
तस्मादभूत् पुण्डरीकः क्षेमधन्वाभवत्ततः ॥
देवानीकस्ततो हीनः पारिपात्रोऽथ हीनतः ।
बलाहकस्ततोऽर्कश्च रजनाभस्ततोऽभवत् ॥
खगणाद्विधृतस्तस्माद्धिरण्योनाभसंज्ञितः ।
ततः पुष्पार्णवस्तस्मान्मुद्गलोऽथाग्निवर्ण्कः ॥
तस्मात् शीघ्रोऽभवत् पुत्त्रः पिता
मेऽतुलविक्रमः ।
तस्मात् मरुं मां केऽपीह बुधञ्चापि सुमित्रकम् ॥
कलापग्राममासाद्य विद्धि सत्तपसि स्थितम् ।
तवावतारं विज्ञाय व्यासात् सत्यवतीसुतात् ॥
प्रतीक्ष्य कालं लक्षाब्दं कालप्राप्तस्तवान्तिकम्
।
कल्किरुवाच ।
मरो ! त्वामभिषेक्ष्यामि निजायोध्यापुरेऽधुना ।
हत्वा म्लेच्छानधर्म्मिष्ठान् प्रजाभूतविहिंसकान्
॥
विशाखयूपभूपालस्तनयां विनयान्विताम् ।
बिवाहे रुचिरापाङ्गीं सुन्दरीं त्वां प्रदा-
स्यति ॥"
इति कल्किपुराणे १८ अध्यायः ॥
(वसूनामन्यतमः । यथा, हरिवंशे । १९६ ।
४७ ।
"वासवानुगता देवी जनयामास वै सुतान् ।
मरुं वै प्रथमं देवं द्बितीयं ध्रुवमव्ययम् ॥")

**मरुजः**, पुं, (मरौ निर्ज्जलदेशे जायते इति ।
जन् + डः ।) नखीनामगन्धद्रव्यम् । इति
शब्द-
चन्द्रिका ॥ (वंशाङ्कुरे, क्ली । तत्पर्य्यायो यथा,
"करीरं मरुजं फलम् -- ।"
इति वैद्यकरत्नमालायाम् ॥)
मरुदेशजाते, त्रि ॥

मरुवकः । इति भावप्रकाशः ॥ (अस्य गुणा
यथा, --
"मरुदग्निप्रदो हृद्यस्तीक्ष्णोष्णपित्तलो लघुः ।
वृश्चिकादिविषश्लेष्मवातकुष्ठक्रिमिप्रणुत् ।
कटुपाकरसो रुच्यस्तिक्तो रूक्षः सुगन्धिकः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
देवः । (यथा, रघुः । १२ । १०१ ।
"मरुतां पश्यतां तस्य शिरांसि पतितान्यपि ।
मनो नातिविशश्वास पुनः सन्धानशङ्किनाम् ॥"
साध्यविशेषः । यथा, हरिवंशे । १९६ । ४५ ।
"धर्म्माल्लक्ष्म्युद्भवः कामः साध्या साध्यान्
व्यजायत ।
प्रभवं च्यवनञ्चैवमीशानं सुरभीं तथा ।
अरण्यं मरुतञ्चैव विश्वावसुवलध्रुवौ ॥")
भ्रातृवत्सलदेवताविशेषः । यथा, --
"भ्रातॄणां प्रायणं भ्राता योऽनुतिष्ठति
धर्म्मवित् ।
स पुण्यबन्धुः पुरुषो मरुद्भिः सह मोदते ॥"
इति श्रीभागवते ६ स्कन्धे ५ अध्यायः ॥
"प्रायणं प्रकृष्टं गमनम् । पुण्यमेव बन्धुर्यस्य
मरुद्भिर्भ्रातृवत्सलैर्देवैः ।" इति तट्टीकायां
श्रीधरस्वामी ॥ (हिरण्यम् । इति निघण्टुः ।
१ । २ ॥ ऋत्विक् । इति तत्रैव । ३ । १८ ॥)
ग्रन्थिपर्णे, क्ली । इति मेदिनी । ते, १४३ ॥
पृक्कायां, स्त्री । इति शब्दरत्नावली ॥

**मरुत्करः**, पुं, (करोतीति । कृ + अच् । मरुतो-
ऽपानवायोः करः ।) राजमाषः । इति शब्द-
चन्द्रिका ॥ (मरुत्कारिणि, त्रि । यथा, --
"कषायमधुराः शीताः कटुपाका मरुत्कराः ।
बद्धमूत्रपुरीषाश्च पित्तश्लेष्महरास्तथा ॥"
इति सुश्रुते सूत्रस्थाने ४६ आध्यायः ॥)

**मरुत्क्रिया**, स्त्री, (मरुतः क्रिया ।) अपानोत्-
सर्गः । वातकर्म्म इति ख्यातः । इति केचित् ॥

**मरुत्तः**, पुं, (मरुदस्त्यस्येति । मरुत् + "तप्
पर्व्वमरुद्भ्याम् ।" ५ । २ । १२२ । इत्यत्र
काशि-
कोक्त्या तप् ।) चन्द्रवंशीयराजविशेषः । स च
अवीक्षिद्राजपुत्त्रः । यथा --
क्रोष्टुकिरुवाच ।

"त्रिभानुस्तत्सुतोऽस्यापिकरन्धम
उदारधीः ।
मरु त्तस्तत्सुतोऽपुत्त्रः पुत्त्रं
पौरवमन्वभूत् ॥"
शिलेयुराजपुत्त्रः । यथा, महाभारते ।
हरि-
वंशपर्व्वणि । ३६ । ७ ।
"शिलेयुरभवत् पुत्त्र उशतः शत्रुतापनः
।
मरुत्तस्तस्य तनयो राजर्षिरभवन्नृप !
॥")

**मरुत्तकः**, पुं, (मरुदिव तकति हसतीति । तक्
हासे + अच् ।) मरुवकः । इति
भावप्रकाशः ॥

**मरुत्पथः**, पुं, (मरुतां पन्थाः । "ऋक्पूरब्धूः
पथामानक्षे ।" ५ । ४ । ७४ । इत्यः ।)
आका-
शम् । इति हेमचन्द्रः ॥

**मरुत्पालः**, पुं, (मरुतो देवान् पालयतीति ।
पालि
+ अच् । देवराजत्वादस्य तथात्वम् ।)
इन्द्रः ।
इति केचित् ॥

**मरुत्पुत्त्रः**, पुं, (मरुतो वायोः पुत्त्रः ।) भीमसेनः
।
इति हेमचन्द्रः । ७०७ ॥ (अस्य
मरुत्पुत्त्रत्वे
विवरणम् । यथा । पुरा किल पाण्डुर्नाम
महीपतिर्मृगयार्थं वनं गत्वा ब्राह्मणमेकं
मृग-
रूपधारिणं हरिण्यां रममाणं
काममोहितं
जघान । ततस्तेनाभिशप्तो निजपत्न्यो
रन्तुमसौ
न शक्तः । अथ गच्छति काले कुन्ती
पुत्त्र-
कामस्य स्वभर्त्तुः पाण्डुराजस्यानुज्ञया
इन्द्रादीन्

**मरुजा**, स्त्री, (मरुज + स्त्रियां टाप् ।) मृगे-
र्व्वारुः । इति राजनिर्घण्टः ॥

**मरुटा**, स्त्री, उच्चललाटयुक्तस्त्री । इति शब्द-
रत्नावली ॥

**मरुण्डा**, स्त्री, उच्चललाटा नारी । इति
त्रिकाण्डशेषः ॥

**मरुतः**, पुं, (म्रियन्ते प्राणिनो यदभावादिति । मृ
+ बाहुलकात् उत ।) वायुः । (यथा,
अभिज्ञान-
शकुन्तले ।
"तदेनां मुखमरुतेन विशदां करवाणि ॥")
देवः । इति भरतधृतव्याडिः ॥ घण्टापाटलि-
वृक्षः । इति शब्दचन्द्रिका ॥

**मरुत्**, पुं, (म्रियते प्राणी यस्याभावादिति ।
मृ + "मृग्रोरुतिः ।" उणा० १ । ९४ । इति
उत् ।) वायुः । इत्यमरः । १ । १ । ६५ ॥
(यथा,
नैषधचरिते । २ । ५३ ।
"भृशतापभृता मया भवान्
मरुदासादि तुषारसायकान् ॥")
"अवीक्षितस्य नृपतेर्मरुत्तस्य महात्मनः ।
श्रोतुमिच्छामि चरितं श्रूयते सोऽतिचेष्टितः ॥
चक्रवर्त्ती महाभागः शूरः क्षान्तो महामतिः ।
धर्म्मविद्धर्म्मकृच्चैव सम्यक् पालयिता भुवः ॥
मार्कण्डेय उवाच ।
स पित्रा समनुज्ञातो राज्यं प्राप्य पितामहात् ।
धर्म्मतः पालयामास प्रजाः पुत्त्रानिवौरसान् ॥
इयाज सुमहायज्ञान् यथावत् प्राज्यदक्षिणान् ।
ऋत्विक्पुरोहितादेशादनिर्व्विण्णो महीपतिः ॥
तस्याप्रतिहतं चक्रमासीद्द्वीषेषु सप्तसु ।
गतयश्चाप्यविच्छिन्नाः स्वःपातालजलादिषु ॥"
इति मार्कण्डेयपुराणे १०३ अध्यायः ॥
(यदुवंशीयः करन्धमपुत्त्रः । यथा, श्रीमद्भाग-
वते । ९ । २३ । १७ ।
देवानाहूय तैरन्वरंसीत् । तेषां मरुतो
भीम-
सेनो जात इति पौराणिकी
वार्त्तात्रानुसन्धेया ।
अस्य विशेषस्तु महाभारते । १ ।
११८ -- १२३ ।
अध्यायेषु द्रष्टव्यः ॥) हनूमांश्च ॥

**मरुत्प्लवः**, पुं, (मरुदिव प्ल्वते द्रुतं गच्छ-
तीति । प्लु + अच् ।) सिंहः । इति
त्रिकाण्ड-
शेषः ॥

**मरुत्फलं**, क्ली, (मरुतां वायूनां फलमिव ।)
घनोपलः । इति शब्दमाला ॥

**मरुत्वान्**, [त्] पुं, (मरुतो देवाः पालनीयत्वेन
सन्त्यस्य इति । मरुत् +
"मध्वादिभ्यश्च ।" ४ । २ ।
८६ । इति मतुप् मस्य वः । संज्ञायां
प्रत्यय-
वकारे परे न तस्य दः ।) इन्द्रः ।
इत्यमरः ।
१ । १ । ४४ ॥ (यथा, रघौ । ३ । ४ ।
"दिवं मरुत्वानिव भोक्ष्यते भुवं
दिगन्तविश्रान्तरथो हि तत्सुतः ॥"
धर्म्मपुत्त्रदेवगणभेदः । यथा,
महाभारते । १२ ।
२०७ । २३ ।
"धर्म्मस्य वसवः पुत्त्रा
रुद्राश्चामिततेजसः ।
विश्वे देवाश्च साध्याश्च मरुत्वन्तश्च
भारत ! ॥"
मरुज्जनकत्वेनास्त्यस्येति । मतुप् ।
मस्य वः ।)
हनूमान् । इति शब्दरत्नावली ॥ (वायु-
विशिष्टे, त्रि । सर्व्वोदाहरणं यथा, भट्टौ
।
१० । २९ ।
"बभौ मरुत्वान् विकृतः समुद्रो
बभौ मरुत्वान् विकृतः समुद्रः ।
बभौ मरुत्वान् विकृतः समुद्रो
बभौ मरुत्वान् विकृतः समुद्रः ॥"

"भानुर्लम्बाककुद्यामिर्विश्वा साध्या मरुत्वती ।
वसुर्मुहूर्त्ता संकल्पा धर्म्मपत्न्यः सुतान् शृणु ॥")

**मरुत्सखः**, पुं, (मरुतां देवानां सखा । "राजाहः सखिभ्यष्टच् ।" ५ । ४ । ९१ । इति टच् ।)
इन्द्रः । इति धरणिः ॥ (मरुतो वायोः सखा ।)
अग्निः । वायुसख इत्यमरदर्शनात् ॥ (वायुसखे,
त्रि । यथा, रघौ । ११ । ३ ।
"तावदाशु विदधे मरुत्सखैः
सा सपुष्पजलवर्षिभिर्घनैः ॥")

**मरुदान्दोलः**, पुं, (मरुत् वायुरान्दोल्यतेऽने-
नेति । आन्दोलि + करणे घञ् ।) धवित्रम् ।
इति शब्दमाला ॥

**मरुदिष्टः**, पुं, (मरुतां देवनामिष्टः प्रियः ।) गुग्-
गुलुः । इति राजनिर्घण्टः ॥ (विशेषोऽस्य गुग्गुलुशब्दे व्याख्यातः ॥)

**मरुद्ध्वजं**, क्ली, (मरुत्सु वायुषु ध्वजः पताकेव ।
नभसि वायुवशाच्चलितत्वादस्य तथात्वम् ।)
वाततूलम् । वुडीर सुता इति भाषा । यथा, --
"ग्रीष्महासं वंशकथं वाततूलं मरुद्ध्वजम् ॥"
इति हारावली । २३ ॥

**मरुद्भवा**, स्त्री, (मरुद्वायुर्भव उत्पत्तिकारणं
यस्याः ।) ताम्रमूलाक्षुपः । इति रत्नमाला ।
खिराइ इति भाषा ॥

**मरुद्रथः**, पुं, (मरुद्वायू रथो यानमिवास्य । ऊर्व्वां
स्तोकं वियति बहुतरं गच्छतीति तथात्वम् ।)
रुह् + "इगुपधज्ञाप्रीकिरः कः ।" ३ । १ । १३५ ।
इति कः ।) करीरवृक्षः । इति भावप्रकाशः ॥
मरुभूमिजाते, त्रि ॥ (यथा, आर्य्यासप्त-
शत्याम् । ६७६ ।
"सत्पुंसो मरुभूरुह इव जीवनमात्रमाशा-
स्यम् ॥")

**मरुलः**, पुं, (म्रियते जलं विनेति । मृ + उलः ।)
कारण्डवपक्षी । इति हेमचन्द्रः । ४ । ४०७ ॥

**मरुवः**, पुं, (मरुं निर्ज्जलदेशं वाति प्राप्नोतीति ।
वा + कः ।) वृक्षविशेषः । मरुया इति नाग-
दाना इति च भाषा ॥ तत्पर्य्यायः । खरपत्रः
२ गन्धपत्रः ३ फणिज्झकः ४ बहुवीर्य्यः ५
शीतलकः ६ सुराह्वः ७ समीरणः ८ जम्बीरः
९ प्रस्थकुसुमः १० मरुवकः ११ आजन्मसुरभि-
पत्रः १२ मरिचः १३ । अस्य गुणाः । कटुत्वम् ।
तिक्तत्वम् । उष्णत्वम् । कृमिकुष्ठविड्बन्धाध्मान-
शूलमान्द्यत्वग्दोषनाशित्वञ्च । इति राज-
निर्घण्टः ॥ अपि च ।
"मरुत्तको मरुवको मरुन्मरुरपि स्मृतः ।
फणी फणिज्झकश्चापि प्रस्थपुष्पः समीरणः ॥
मरुदग्निप्रदो हृद्यस्तिक्तोष्णः पित्तलो लघुः ।
बृश्चिकादिविषश्लेष्मवातकुष्ठकृमिप्रणुत् ।
कटुपाकरसो रुच्यस्तिक्तो रूक्षः सुगन्धिकः ॥"
इति भावप्रकाशः ॥

**मरुवकः**, पुं, (मरुव + स्वार्थे इवार्थे वा कन् ।)
कण्टकिवृक्षविशेषः । मयना इति भाषा ।
तत्पर्य्यायः । पिण्डीतकः २ श्वसनः ३ करहा-
टकः ४ शल्यः ५ मदनः ६ । (पर्य्यायान्तरं
यथा, --
"मदनश्छर्द्दनः पिण्डो नटः पिण्डीतकस्तथा ।
करहाटो मरुवकः शल्यको विषपुष्पकः ॥")
स्वल्पपत्रतुलसी । तत्पर्य्यायः । समीरणः २
प्रस्थपुष्पः ३ फणिज्झकः ४ जम्बीरः ५ ।
इत्यमरः । २ । ४ । ७९ ॥ (एतत्पर्य्यायो यथा, --
"मरुत्तको मरुवको मरुभ्मरुरपि स्मृतः ।
फणी फणिज्कश्चापि प्रस्थपुष्पः समीरणः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
जम्बीरभेदः । इत्यमरटीकायां भरतः ॥ पुष्प-

**मरुसम्भवा**, स्त्री, (मरौ सम्भवो यस्याः । टाप् ।)
महेन्द्रवारुणी । क्षुद्रदुरालभा । इति राज-
निर्घण्टः ॥

**मरुस्था**, स्त्री, (मरौ तिष्ठतीति । स्था + कः ।
स्त्रियां टाप् ।) क्षुद्रदुरालभा । इति राज-
निर्घण्टः ॥

**मरूकः**, पुं, (म्रियते इवेति । मृ + "मृकणिभ्या-
मूकोकणौ ।" उणा० ४ । ३९ । इति ऊकः ।
भयशीलत्वादस्य तथात्वम् ।) मृगविशेषः ।
इत्युणादिकोषः ॥ मयूरः । शटी । इति संक्षिप्त-
सारोणादिवृत्तिः ॥

**मरूद्भवा**, स्त्री, (मरौ धन्वप्रदेशे उद्भवतीति ।
उत् + भू + अच् । स्त्रियां टाप् ।) कार्पासी ।
यवासः । क्षुद्रखदिरः । इति राजनिर्घण्टः ॥

**मरोलिः**, पुं, (मरौ निर्ज्जलदेशे लीयते म्रियते
इति । मरु + ली + इन् । पृषोदरादित्वात्
साधुः ।) मकरः । यथा, --
"जलरूपस्तु मकरो मरोलिरसिदंष्ट्रकः ॥"
इति त्रिकाण्डशेषः ॥

**मरोलिकः**, पुं, (मरोलि + स्वार्थे कन् ।) मकरः ।
इति शब्दरत्नावली ॥

**मर्क**, सर्पे । सौत्रधातुरयम् । इति कविकल्पद्रुमः ॥
(भ्वा०-पर०-सक०-सेट् ।) मर्कटः । इति दुर्गा-
दासः ॥

**मर्कः**, पुं, (मर्च्चति चेष्टते इति । मर्च्च् + "इण्
भीकापाशल्यतिमर्च्चिभ्यः कन् ।" उणा० ३ ।
४३ । इति कन् । यद्वा, मर्कति सर्पतीति । मर्क

अश्वः । इति त्रिकाण्डशेषः ॥ देवरथः । इति
हेमचन्द्रः । ३ । ४१६ ॥

**मरुद्रुमः**, पुं, (मरोर्निर्ज्जलदेशस्य द्रुमः । मरुजातो द्रुमो वा ।) विट्खदिरः । इति रत्नमाला ॥

**मरुद्वर्त्म**, क्ली, (मरुतां वायूनां देवानां वा वर्त्म पन्थाः ।) आकाशम् । इति त्रिकाण्डशेषः ॥

**मरुद्वाहः**, पुं, (मरुता वायुना उह्यतेऽसौ इति । वह + कर्म्मणि घञ् । यद्वा, मरुद्वायुर्वाह इव
यस्य ।) धूमः । इति त्रिकाण्डशेषः ॥
अग्निः ।
इति शब्दमाला ॥

**मरुद्विपः**, पुं, (मरौ निर्ज्जलदेशे द्विपो हस्तीव ।) उष्ट्रः । इति त्रिकाण्डशेषः ॥

**मरुन्माला**, स्त्री, (मरुद्भिर्मल्यते धार्य्यते इति । मल धारणे + कर्म्मणि घञ् । टाप् ।)
पृक्का ।
इत्यमरः । २ । ४ । १३३ ॥ पिडिंशाक इति
भाषा ॥ (पर्य्यायोऽस्य यथा, --
"स्पृक्कासृक् ब्राह्मणी देवी मरुन्माला लता
लघुः ।
समुद्रान्ता बधूः कोटिवर्षा लङ्कापिकेत्यपि ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**मरुप्रियः**, पुं, (मरुर्निर्ज्जलदेशः प्रियोऽस्य ।) उष्ट्रः । इति हेमचन्द्रः । ४ । ३१९ ॥

**मरुभूः**, स्त्री, (मरुर्निर्ज्जला भूर्भूमिः ।) दाशेरकदेशः । इति त्रिकाण्डशेषः ॥
मारओयार
इति भाषा ॥ निर्ज्जलभूमिश्च ॥

**मरुभूरुहः**, पुं, (मरुभुवि रोहति जायते इति । वृक्षविशेषः । मरुयाफुल इति भाषा । तत्-
र्य्यायः । शुक्लपुष्पः २ तिलकः ३ कुलकः ४ । क्षुपविशेषः । नागदाना इति भाषा । तत्-
पर्य्यायः । खरपत्र २ गन्धपत्रः ३ । इति रत्न-
माला ॥ व्याघ्रः । राहुः । भयानके, त्रि । इति
जटाधरः ॥

**मरुसम्भवं**, क्ली, (मरुः सम्भव उत्पत्तिस्थानमस्य ।) चाणक्यमूलकम् । इति राजनिर्घण्टः ॥
(पर्य्यायोऽस्य यथा, --
"मूलकं द्विविधं प्रोक्तं तत्रैकं लघुमूलकम् ।
शालमर्कटकं विप्रं शालयं मरुसम्भवम् ॥
चाणक्यमूलकं तीक्ष्णं तथा मूलकपोतिका ।
नेपालमूलकञ्चान्यत् तद्भवेद्गजदन्तवत् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

+ अच् ।) देहः । वायुः । इत्युणादिकोषः ॥
(शुक्रपुत्त्रः । यथा, वाजसनेयसंहितायाम् ।
७ । १६ ।
"उपयामगृहीतोऽसि मर्काय त्वा ॥"
"मर्कः शुक्रपुत्त्रोऽसुरपुरोहितः ।" इति तद्भाष्ये
महीधरः ॥) वानरः । इति शब्दरत्नावली ॥
(यथा, श्रीमद्भागवते । १० । ८ । २९ ।
"मर्कान् भोक्ष्यन् विभजति स चेन्नात्ति भाण्डं
भिनत्ति ॥"
"मर्कान् मर्कटान् ।" इति तट्टीकायां श्रीधर-
स्वामी ॥ त्रि, मार्ज्जयिता । यथा, ऋग्वेदे ।
१० । २७ । २० ।
"सूरश्च मर्क उपरो बभूवान् ॥"
"मर्को मार्ज्जयिता ।" इति तद्भाष्ये
सायनः ॥)

**मर्ककः**, पुं, (मर्क + इवार्थे संज्ञायां वा कन् ।) गलगण्डपक्षी । इति शब्दरत्नावली ॥ हाड-
गिल् इति भाषा ॥

**मर्कटः**, पुं, (मर्कति गच्छतीति । मर्क + "शका-दिभ्योऽटन् ।" उणा ० ४ । ८१ । इति
अटन् ।)
वानरः । इत्यमरः । २ । ५ । ३ ॥
(यथा, वाजसनेयसंहितायाम् । २४ । ३० ।
"यमाय कृष्णो मनुष्यराजाय मर्कटः ॥")
ऊर्णनाभः । (यथा आर्य्यासप्तशत्याम् ।
३२२ ।
"अयमुद्गृहीतवडिशः कर्कट इव मर्कटः
पुरतः ॥"

"मर्कटो लूता ॥" इति तट्टीका ॥)
स्थावरविष-
भेदः । इति हेमचन्द्रः ॥ गलेगण्डपक्षी । इति
त्रिकाण्डशेषः ॥ हाडगिल् इति भाषा ॥

**मर्कटकः**, पुं, (मर्कट + स्वार्थे संज्ञायां वा कन् ।)

वानरः । लूता । शस्यभेदः । इति
मेदिनी । के,
२०८ ॥ (यथा, विष्णुपुराणे । १ । ६ । २५ ।
"श्यामाकास्त्वथ नीवारा जर्त्तिलाः
सगवेधुकाः ।
तथा वेणुयवाः प्रोक्तास्तद्वन् मर्कटका
मुने ! ॥")
मत्स्यभेदः । दैत्यः । इति
शब्दरत्नावली ॥

**मर्कटतिन्दुकः**, पुं, (मर्कटप्रियस्तिन्दुकः । मध्य-

पदलोपी कर्म्मधारयः ।) कुपीलुः ।
इति
भावप्रकाशः ॥

**मर्कटपिप्पली**, स्त्री, (मर्कटस्य पिप्पलीव ।)

अपामार्गः । इति राजनिर्घण्टः ॥
(विवरण-
मस्या अपामार्गशब्दे ज्ञातव्यम् ॥)

**मर्कटप्रियः**, पुं, (मर्कटस्य प्रियः ।) क्षीरवृक्षः ।

इति शब्दमाला ॥

**मर्कटवासः**, पुं, (मर्कटः ऊर्णनाभस्तस्य वासः

आवासस्थानम् ।) लूतातन्तुः ।
माकडशार-
जाल इति भाषा ॥ तत्पर्य्यायः ।
आशाबन्धः
२ । इति शब्दरत्नावली ॥

**मर्कटशीर्षं**, क्ली, (मर्कटस्य शीर्षमिव तद्वर्णत्वा-

**मर्कटेन्दुः**, पुं, मर्कटे खगविशेषे इन्दुरिव ।)

काकतिन्दुकवृक्षः । यथा, --
"काकेन्दुः कुलकः काकपीलुकः काकतिन्दुके ।
मर्कटेन्दुः सिन्धुपुत्त्रो द्वावेतौ तत्र कीर्त्तितौ ॥"
इति शब्दचन्द्रिका ॥

**मर्करः**, स्त्री, (मर्कति गच्छतीति । मर्क + बाहुल-

कात् अरः ।) भृङ्गराजः । इति शब्दरत्नावली ॥
(गुणादयोऽस्य भृङ्गराजशब्दे ज्ञातव्याः ॥)

**मर्करा**, स्त्री, (मर्कर + स्त्रियां टाप् ।) दरी ।

भाण्डम् । सुरङ्गा । निष्कला स्त्री । इति विश्वः ॥

**मर्च्च**, क ग्रहे । सौत्रोऽयं धातुः । इति कविकल्प-

द्रुमः ॥ (चुरा०-पर०-सक०-सेट् ।) तालव्य-
वर्गप्रथमान्तः । मर्कः । इति दुर्गादासः ॥

**मर्जूः**, स्त्री, (मृज्यते इति । मृज् शुद्धौ +

"मृजेर्गुणश्च ।" उणा ० १ । ८१ । इति ऊः ।
गुणश्च ।) शुद्धिः । इति मेदिनी । जे, १३ ॥

**मर्जूः**, पुं, (मार्ष्टि शोधयति वसनमिति ।

मृज् + ऊः ।) रजकः । इति हेमचन्द्रः ॥
पीठमर्द्दः । इति शब्दरत्नावली ॥

**मर्त्तः**, पुं, (म्रियतेऽसौ इति । मृ + "हसिमृग्रि-

णिति ।" उणा० ३ । ८६ । इति तन् ।) मनुष्यः ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥ (यथा,
मार्कण्डेये । १०० । १८ ।
"पौर्णमास्याममावस्यां पर्व्वस्वन्येषु प्रस्तवः ।
ममैष संश्रुतो मर्त्तैर्भविता पापनाशनः ॥")
माणवकः । इति संक्षिप्तसारोणादिवृत्तिः॥
(म्रियतेऽत्रेति । भूलोकः । इत्युज्ज्वलदत्तः ।
३ । ८६ ॥)

**मर्त्यः**, पुं, (म्रियतेऽत्रेति । मर्त्तो भूलोकस्तत्र

भवः । मर्त्त + यत् । यद्वा, मर्त्त एव यदित्यमर-
टीकायां भरतः ।) मनुष्यः । इत्यमरः । २ ।
६ । १ ॥ (यथा, ब्रह्मवैवर्त्ते । २ । १ । २६ ।
"गृहे च गृहलक्ष्मीश्च मर्त्त्यानां गृहिणां तथा ॥")
मध्यमलोकः । इति जटाधरः ॥ (क्ली, शरीरम् ।
यथा, भागवते । ३ । ३३ । ३१ ।
"तस्यास्तद्योगविधुतमार्त्यंमर्त्यमभूत् सरित् ॥")

**मर्द्दलः**, पुं, (मर्द्दं मर्द्दनं लातीति । ला + कः ।)

वाद्यविशेषः । इत्यमरः । १ । ७ । ८ ॥
मादल
इति भाषा । तत्पर्य्यायः । गुरुः २ । इति
शब्द-
रत्नावली ॥ (यथा, महाभारते । ८ । ४४ ।
१९ ।
"मृदङ्गानकशङ्खानां मर्द्दलानाञ्च निस्वनैः ।
खरोष्ट्राश्वतरैश्चैव मत्ता यास्यामहे सुखम्
॥")

**मर्द्दितं**, त्रि, (मृद् + कर्म्मणि क्तः ।) ग्रन्थितम् ।

इति विशेष्यनिघ्नवर्गटीकायां भरतः ॥
चूर्णि-
तम् । यथा, --
"तिन्तिडीफलरसेन मर्द्दितो
रामबाण इति विश्रुतो रसः ॥"
इति भावप्रकाशः ॥

**मर्ब्ब**, गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) मर्ब्बति । इति
दुर्गादासः ॥

**मर्म्म**, [न्] क्ली, (मृ + "सर्व्वधातुभ्यो मनिन् ।"

उणा ० ४ । १४४ । इति मनिन् ।)
स्वरूपम् ।
तत्त्वम् । यथा, नैषधे । २ । ९ ।
"मृगया न विगीयते नृपै-
रपि धर्म्मागममर्म्मपारगैः ।
स्मरसुन्दर ! मां यदत्यज
स्तव धर्म्मः सदयो दयोज्ज्वलः ॥"
सन्धिस्थानम् । इति लिङ्गादिसंग्रहे अमर-
भरतौ ॥ जीवस्थानम् । इति राजनिर्घण्टः ॥
* ॥
अथ मर्म्माणि ।
"सन्निपातः
शिरास्नायुसन्धिमांसास्थिसम्भवः ।
मर्म्माणि तेषु तिष्ठन्ति प्राणाः खलु विशेषतः
॥
सप्तोत्तरं शतं सन्ति देहे मर्म्माणि देहिनाम् ।
तान्येकादश मांसे स्युरष्टावस्थिषु सन्ति हि
॥

देवास्य तथात्वम् ।) हिङ्गुलम् । इति रत्न-
माला ॥ (यथा, वैद्यकरत्नमालायाम् ।
"रक्तं मर्कटशीर्षञ्च हिङ्गुलं दरदो रसः ॥")

**मर्कटास्यं**, क्ली, (मर्कटस्य आस्यमिव तद्वर्णत्वा-
देवास्य तथात्वम् ।) ताम्रम् । इति हेमचन्द्रः ।
४ । १०६ ॥ (मर्कटस्यास्यम् ।) वानरमुखम् ।
(मर्कटस्यास्यमिवास्यं यस्य ।) वानरमुखे, त्रि ॥

**मर्कटी**, स्त्री, (मर्कति वायुवेगेन इतस्ततो
गच्छतीति । मर्क + अटन् । स्त्रियां ङीप् ।)
कपिकच्छुः । (यथा, भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ।
"कपिकच्छुरात्मगुप्ता वृष्या प्रोक्ता च मर्कटी ।
अजरा कण्डुरा व्यङ्गा दुःस्पर्शा प्रावृषायणी ॥
जाङ्गली शूकशिम्बी च सैव प्रोक्ता मह-
र्षिभिः ॥")
अपामार्गः । (यथा, --
"अपामार्गस्तु शिखरी ह्यधःशल्यो मयूरकः ।
मर्कटी दुर्ग्रहा चापि किणिही खरमञ्जरी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
अजमोदा । इति राजनिर्घण्टः ॥ (यथा,
सुश्रुते उत्तरतन्त्रे । ३३ । ५ ।
"कुच्चटीं मर्कटीं शिम्बीमनन्ताञ्चापि धारयेत् ।
मांसमामं तथा पक्वं शोणितञ्च चतुष्पथे ॥")

**मर्द्दनं**, क्ली, (मृद् + भावे ल्युट् ।) अङ्गमर्द्दनम् ।
गाटेपा इति भाषा ॥ तत्पर्य्यायः । संवाह-
नम् २ । इत्यमरः । ३ । २ । २२ ॥ सम्बलम् ३ । इति
शब्दरत्नावली ॥ (यथा, "यत् पुनर्बहिःस्पर्शना-
श्रित्याभ्यङ्गस्वेदप्रदेहपरिषेकोन्मर्द्दनाद्यैरामयान्
प्रमार्ष्टि तद्बहिः परिमार्ज्जनम् ॥" इति चरके
सूत्रस्थाने ११ अध्यायः ॥) अस्य गुणाः । भ्रम-
हरत्वम् । निद्राशुक्रसुस्वप्रदत्वम् । मांसरक्त-
त्वक्प्रसन्नकारित्वम् । वायुकफनाशित्वञ्च । इति
राजवल्लभः ॥ चूर्णनम् । इति मृदधात्वर्थदर्श-
नात् ॥ (कदनम् । यथा, भागवते । ३ । ४ । २ ।
"तेषां मैरेयदोषेण विषमीकृतचेतसाम् ।
निम्लोचति रवावासीत् वेणूनामिव मर्द्दनम् ॥"
मृद् + ल्युः । मर्द्दनकारके, त्रि । यथा, महा-
भारते । १३ । १४ । ३७२ ।
"द्रक्ष्ये क्षितिजसङ्घानां मर्द्दनं त्रिदशेश्वरम् ॥")

सन्धीनां विंशतिस्तानि स्नायूनां सप्तविंशतिः ।
चत्वारिंशत्तथैकञ्च शिरामर्म्माणि तत्र तु ॥
द्वाविंशतिः सक्थियुगे तावन्त्येव भुजद्वये ।
द्वादशोरसि कुक्षौ च पृष्ठदेशे चतुर्द्दश ॥
ग्रीवाया ऊद्‌र्ध्वभागे तु सप्तत्रिंशन्मतानि हि ॥
मर्म्माणि तानि सन्ति पञ्चधा भवन्ति ।
तान्याह ।
सद्यःप्राणहराणि स्युर्मर्म्माण्येकोनविंशतिः ।
मर्म्मदेशास्त्रयस्त्रिंशत् स्युः कालान्तरमारकाः ॥
चत्वारिंशच्च चत्वारि वैकल्यं जनयन्ति हि ।
मर्म्माष्टकं रुजाकारि विशल्यघ्नं त्रिकं मतम् ॥
शृङ्गाटकान्यधिपतिः शङ्खौ कण्ठसिरागुदम् ।
हृदयं वस्तिनाभ्यौ च सद्यो घ्नन्ति हतानि चेत् ॥
शृङ्गाटकानि घ्राणश्रोत्राक्षिजिह्वासन्तर्प्फाणां
शिरामुखानां शिरसो मध्ये संयोगस्थानं तानि
चत्वारि शिरामर्म्माणि चतुरङ्गुलप्रमाणानि
हतानि सन्ति सद्योमारकाणि । अधिपतिः ।
मस्तकस्याभ्यन्तरे सन्धिसिरयोः सन्निपात
उपरिष्टाद्रोमावर्त्तः स एकः सन्धिमर्म्मेदं अर्द्धा-
ङ्गुलप्रमाणं सद्योमारकम् । शङ्खौ भ्रुवोरन्तोपरि
कर्णललाटमध्ये ते द्वे अस्थिमर्म्मणी अर्द्धा-
ङ्गुले सद्योमारके । कण्ठशिराः मातृकाः
ग्रीवाया उभयपार्श्वयोश्चतस्रश्चतस्रः शिरास्ता
अष्टौ शिरामर्म्माणि चतुरङ्गुलानि सद्योमार-

| करञ्जभेदः । इत्यमरः । २ । ४ । ८७ ॥ माकडा करञ्जा इति भाषा ॥ (यथास्याः पर्य्यायो भावप्रकाशस्य पूर्ब्बखण्डे १ भागे । “उदकीर्य्यस्तृतीयोऽन्यः षड्ग्रन्था हस्तिवारुणी । मर्कटी वायसी चापि करञ्जी करभञ्जिका ॥” मर्कट + ङीष् ।) वानरी च ॥ | | |
|---|---|---|

काणि । गुदं प्रसिद्धमेकं मांसमर्म्म चतुरङ्गुलं सद्योमारकम् । हृदयं स्तनयोर्म्मध्यमामाशय-द्वारमेकं शिरामर्म्म चतुरङ्गुलं सद्योमारकम् । वस्तिः नाभिपृष्ठकटीमुष्कगुदवङ्क्षणसेफ़सां मध्ये वस्तिस्तनूत्वक् एकद्वारो ह्यधोमुखः स्नायुः मर्म्मेदं चतुरङ्गुलं सद्योमारकम् । नाभिः प्रसिद्धा । सिरामर्म्मेदं चतुरङ्गुलं सद्योमारकम् ॥ वक्षोमर्म्माणि सीमन्तास्तलक्षिप्रेन्द्रवस्तयः । बृहत्यौ पार्श्वजौ सन्धी कटीकतरुणे च ये । नितम्बाविति चैतानि कालान्तरहराणि तु ॥ वक्षोमर्म्माणि स्तनमूलस्तनरोहितापलापाप-स्तम्बाः स्तनमूले स्तनयोरधस्ताद्द्व्यङ्गुलं यावत् द्वे
शिरामर्म्मणी द्व्यङ्गुले कफपूर्णकोष्ठतया काला-न्तरमारके । स्तनरोहिते स्तनयोरुपरि द्व्यङ्गुलं यावत् द्वे मांसमर्म्मणी रक्तपूरितकोष्ठतया कालान्तरमारके । अपलापौ अंशकूटयोरध-स्तात् पार्श्वयोरुपरि द्वौ शिरामर्म्मणी अर्द्धाङ्गुले रक्तेन पूयताङ्गते न कालान्तरमारके । अप-स्तम्बौ उरस उभयतो नाड्यौ वातवहे शिरा-मर्म्मणी अर्द्धाङ्गुले वातपूर्णकोष्ठतया कासश्वा-साभ्याञ्च कालान्तरमारके । सीमन्ताः शिरसि पञ्च सन्धयः सन्धिमर्म्माणि चतुरङ्गुलानि उन्माद-
भयचित्तविनाशैः कालान्तरमारकानि । तलानि मध्याङ्गुलिमनुक्रम्य हस्तभध्यं तलं एवमपरस्य हस्तस्य पादयोश्च चत्वारि तलानि मांसमर्म्मा-एयर्द्धाङ्गुलानि रुजाभिः कालान्तरमारकाणि । क्षिप्राणि अङ्गुष्ठाङ्गुल्योर्म्मध्यं क्षिप्रं तच्च हस्त-योर्द्वे पादयोर्द्वे एवञ्चत्वारि स्नायुमर्म्माण्यर्द्धाङ्गु-लान्याक्षेपकेण कालान्तरमारकाणि । इन्द्र-वस्तयः प्रकोष्ठयोर्म्मध्ये द्वे जङ्घयोर्म्मध्ये द्वे एवं चत्वारि मांसमर्म्माणि द्व्यङ्गुलानि शोणितक्षयेण कालान्तरमारकाणि । बृहत्यौ स्तनमूला-दुभयतः पृष्ठवंशं यावत् शिरामर्म्मणी अर्द्धाङ्गुले शोणितातिप्रवृत्तिनिमित्तैरुपद्रवै कालान्तर-मारके । पार्श्वसन्धी जघनपार्श्वयोः सन्धी शिरा-
मर्म्मणी अर्द्धाङ्गुले शोणितपूर्णकोष्ठतया काला-न्तरमारके । कटीकतरुणे त्रिकसन्निधाने उभ-यतः श्रोणिकाण्डं लक्षीकृत्यास्थिनी अस्थि-

एवं चतस्रः स्नायुमर्म्माण्यर्द्धाङ्गुला वैकल्यकर्य्यः
तत्र शोथाभिवृद्धिः सक्थिस्तम्भश्च । जानुनी
जङ्घोर्व्योः सन्धी सन्धिमर्म्मणी द्व्यङ्गुले वैकल्य-
करे । तत्र खञ्जता । ऊर्व्व्योः द्वे ऊर्व्वोर्म्मध्ये द्वे
प्रगण्डयोर्म्मध्ये एवं चतस्रः सिरामर्म्माण्येका-
ङ्गुला वैकल्यकर्य्यः तत्र शोणितक्षयात् सक्थि-
शोषः । कूर्च्चाः
पादयोरङ्गुष्ठाङ्गुल्योर्म्मध्ये तयो-
रूद्ध्वर्मधश्च एवं चत्वारः । स्नायुमर्म्माणि वैकल्य-
कराणि तत्र पादयोर्भ्रमणवेपने भवतः । विटपे
द्वे वङ्क्षणवृषणयोर्म्मध्ये स्नायुमर्म्मणी एकाङ्गुले
वैकल्यकरे तत्र षाण्ड्यमल्पशुक्रता वा । कूर्परौ
कफोणी तौ द्वौ सन्धिमर्म्मणी द्व्यङ्गुलौ वैकल्य-
करौ तत्र बाहुमध्ये सङ्कोचः । कुकुन्दरे
नितम्बकूपके द्वे सन्धिमर्म्मणी अर्द्धाङ्गुले
वैकल्यकरे तत्र स्पर्शाज्ञानमधःकाये चेष्टोप-
घातश्च । कक्षधरे वक्षःकक्षयोर्म्मध्ये द्वे स्नायु-
मर्म्मणी एकाङ्गुले वैकल्यकरे तत्र पक्षाघातः ।
विधुरे कर्णपृष्ठतोऽधःसंश्रिते किञ्चिन्निम्नाकारे
द्वे स्नायुमर्म्मणी अर्द्धाङ्गुले वैकल्यकरे तत्र
वाधिर्य्यम् । कृकाटिके शिरोग्रीवयोरुभयतः
सन्धी द्वे सन्धिमर्म्मणी अर्द्धाङ्गुले वैकल्यकरे तत्र

जीवेत् पाकात् पतितशल्यो वा उद्धृतशल्यस्तु
म्रियेत अतएव विशल्यमुद्धृतशल्यं हन्तीति विशल्यघ्नं मर्म्म । स्थापनी एका भ्रुवोर्म्मध्ये सिरामर्म्मेदमर्द्धाङ्गुलं विशल्यघ्नम् ।
सप्तरात्रान्तरे हन्युः सद्यः प्राणहराणि हि ।
कालान्तरप्राणहरं पक्षे मासे च मारकम् ॥
सद्यःप्राणहरं चान्ते विद्धं कालेन मारयेत् ।
कालान्तरप्राणहरमन्ते विद्धन्तु दुःखदम् ॥
अन्ते मर्म्मसमीपे ।
मर्म्माण्यधिष्ठाय हि ये विकारा
मूर्च्छन्ति काये विविधा नराणाम् ।
प्रायेण ते कृच्छ्रतमा भवन्ति
वैद्येन यत्नैरपि साध्यमानाः ॥”
इति भावप्रकाशः ॥ * ॥
मर्म्मस्पर्शनिषेधो यथा, --
“परक्षेत्रे गां चरन्तीं न चाचक्षीत कस्यचित् ।
न संवसेत् सूतके च न कं वै मर्म्मणि स्पृशेत् ॥”
इति कूर्म्मपुराणे उपविभागे १५ अध्यायः ॥
(“सप्तोत्तरं मर्म्मशतम् । तानि मर्म्माणि पञ्चात्मकानि । तद्यथा मांसमर्म्माणि । सिरा-मर्म्माणि । स्नायुमर्म्माणि । अस्थिमर्म्माणि । सन्धिमर्म्माणि चेति । न खलु मांससिरा-स्नाय्वस्थिसन्धिव्यतिरेकेणान्यानि मर्म्माणि भवन्ति यस्यान्योपलभ्यन्ते ॥
तत्रैकादशमांस-
मर्म्माणि । एकचत्वारिंशत्सिरामर्म्माणि । सप्तविंशतिः स्नायुमर्म्माणि । अष्टावस्थि-मर्म्माणि । विंशतिः सन्धिमर्म्माणि । तदेतत् सप्तोत्तरं मर्म्मशतम् ॥” इति सुश्रुते शारीर-स्थाने षष्ठेऽध्याये ॥)

**मर्म्मकीलः**, पुं, (मर्म्म कीलति विध्यतीति । कील + कः । यद्वा, मर्म्मणि गूढविषये कीलः शङ्कु-रिव ।) भर्त्ता । इति जटाधरः ॥

**मर्म्मज्ञः**, त्रि, (मर्म्म तत्त्वं जानातीति । ज्ञा + कः ।) मर्म्मवित् । तत्त्वज्ञः । मर्म्म स्वरूपं सन्धि-
स्थानं वा तज्जानाति यः सः ॥ (यथा, महा-भारते । ७ । ३५ । २० ।

मर्म्मणी अर्द्धाङ्गुले शोणितक्षयात् पाण्डुविवर्ण-
रूपं कृत्वा कालान्तरमारके । नितम्बौ प्रसिद्धौ ।
द्वे अस्थिमर्म्मणी अर्द्धाङ्गुले अधःकायशोषेण
दौर्ब्बल्येन च कालान्तरमारके ॥ * ॥
लोहिताक्षाणिजानूर्व्वीकूर्च्चाविटपकूर्पराः ।
कुकुन्दरे कक्षधरे विधुरे सकृकाटिके ॥
अंसांसफलकापाङ्गा नीले मन्ये फणे तथा ।
वैकल्यकारकाण्याहुरावर्त्तौ द्वौ तथैव च ॥
लोहिताक्षाणि
ऊर्व्व्योरूर्द्ध्वमधोवङ्क्षणसन्धेर्लोहि-
ताक्षं तच्च द्वे बाह्वोर्द्वे ऊर्व्वोरेवं तानि चत्वारि
शिरामर्म्माण्यर्द्धाङ्गुलानि वैकल्यकारकाणि
तत्र शोणितक्षयेण पक्षाघातः सक्थिसादो
वा । आणयः जानुन ऊर्द्ध्वमुभयोः पार्श्वयो-
र्द्व्यङ्गुला एकस्मिन् जानुनि द्वे अपरस्मिन् द्वे
शिरःकम्पः । अंसौ स्कन्धौ
स्नायुमर्म्मणी अर्द्धा-
ङ्गुलौ वैकल्यकरौ तत्र बाहुस्तम्भः ।
अंस-
फलके पृष्ठोपरि
पृष्ठवंशमुभयतस्त्रिकसम्बन्धे
ग्रीवाया अंसद्वयस्य च संयोगो यत्र
तत्त्रिकं
अस्थिमर्म्मणी अर्द्धाङ्गुले वैकल्यकरे तत्र
बाह्वोः
शून्यता शोषश्च । अपाङ्गौ नेत्रयोरन्तौ
सिरा-
मर्म्मणी अर्द्धाङ्गुलौ वैकल्यकरौ तत्रान्ध्यं
दृष्ट्युप-
घातो वा । नीले मन्ये च
कण्ठनाडीमुभयतश्च-
तस्रो धमन्यो द्वे नीले द्वे मन्ये तत्र एका
नीला
एका मन्या एकस्मिन् पार्श्वे । अन्या
मन्या अन्या
नीला अपरस्मिन् पार्श्वे । द्वे द्वे
शिरामर्म्मणी
द्व्यङ्गुले द्व्यङ्गुले वैकल्यकरे तत्र
मूकता विकृत-
स्वरता रसाग्राहिता च । फणे
घ्राणमार्गमुभ-
यतः अभ्यन्तरे सिरामर्म्मणी अर्द्धाङ्गुले
वैकल्य-
करे तत्र गन्धाज्ञानम् । आवर्त्तौ
भ्रुवोरुपरि
निम्नयोः सन्धिमर्म्मणी अर्द्धाङ्गुलौ
वैकल्यकरौ
तत्राप्यान्ध्यं दृष्ट्युपघातो वा ॥ * ॥
गुल्फौ द्वौ मणिबन्धौ द्वौ तथा
कूर्च्चशिरांसि
च ।
रुजाकराणि जानीयादष्टावेतानि
बुद्धिमान् ॥
गुल्फौ घुटिके सन्धिमर्म्मणी द्व्यङ्गुलौ
रुजा-
करौ तत्र रुजा पादस्तम्भः खञ्जता वा ।
मणि-

"तेषामापततां वीरः शीघ्रं पूर्ब्बमथो दृढम् ।
क्षिप्रास्त्रो न्यवधीद्व्रातान्मर्म्मज्ञो मर्म्म-
भेदिभिः ॥")

**मर्म्मरः**, पुं, (मर्म्म तत्त्वं मर्म्मेत्यव्यक्तशब्दं वा
रातीति । रा + कः ।) वस्त्रस्य पत्रस्य च
ध्वनिः । इत्यमरः । १ । ७ । २३ ॥ मड्मड्
शब्द इति भाषा ॥ (यथा, रघुवंशे । ४ । ५६
।
"अभ्यभूयत वाहानां चरतां गात्रशिञ्जितैः ।
मर्म्मरः पवनोद्धूतराजतालीवनध्वनिः ॥")

**मर्म्मरी**, स्त्री, (मर्म्मर + गौरादित्वात् ङीष् ।)
पीतदारु । दारुहरिद्रा इति ख्याता । इति
मेदिनी । रे, २० ॥

**मर्म्मरीकः**, पुं, (म्रियत इवासाविति । मृ +
"फर्फरीकादयश्च ।" उणा० ४ । २० । इति
ईकन् प्रत्ययेन निपातनात् साधुः ।) दीनः ।
इत्युणादिकोषः ॥

|  | बन्धौ हस्तप्रकोष्ठसन्धी सन्धिमर्म्मणी द्व्यङ्गुलौ<br>रुजाकरौ तत्र हस्तयोः क्रियाराहित्यम् ।<br>कूर्च्चशिरांसि गुल्फसन्धेरध उभयतः एकस्मिन्<br>पादे द्वे द्वे च द्वितीये एवं चत्वारि स्नायु-<br>मर्म्माण्येकाङ्गुलानि रुजाकराणि तत्र रुजा<br>शोफश्च ॥ * ॥ विशल्यघ्नानि ।<br>उत्क्षेपौ स्थापनी चैव विशल्यघ्नं त्रिकं मतम् ।<br>उत्क्षेपौ शङ्खयोरुपरि केशान् यावत् स्नायु-<br>मर्म्मणी अर्द्धाङ्गुलौ तयोर्विद्धयोः सशल्यो |  |
|---|---|---|

**मर्म्मवित्,** [द्] पुं, (मर्म्म वेत्तीति । विद् + क्विप् ।) मर्म्मज्ञः । तत्पर्य्यायः । कार्पटिकः २ । इति त्रिकाण्डशेषः ॥ मर्म्मिकः ३ मर्म्मवेदी ४ । इति जटाधरः ॥ (यथा, कथासरित्सागरे । ६२ । ९० ।
"वक्रनासस्ततोऽवादीद्रक्ष्योऽयंपरमर्म्मवित् ॥")

**मर्म्मवेदी**, [न्] पुं, (मर्म्म वेत्तीति । विद् + णिनिः ।) मर्म्मवित् । तत्त्वज्ञः । इति जटाधरः ॥

**मर्म्मस्पृक्** [श्] त्रि, (मर्म्म स्पृशतीति । स्पृश् + "स्पृशोऽनुदके क्विन् ।" ३ । २ । ५८ । इति क्विन् ।) मर्म्मपीडकः । तत्पर्य्यायः । अरुन्तुदः २ । इत्यमरः । ३ । १ । ८३ ॥ व्यथकः ३ । इति हेमचन्द्रः । ६ । १६५ ॥

**मर्म्मावित्,** [ध्] त्रि, (मर्म्म विध्यतीति । मर्म्म + व्यध् + क्विप् । "ग्रहिज्येति ।" ६ । १ । १६ । इति सम्पसारणम् । "नहि-वृतिवृषिव्यधिरुचिसहितनिषुक्वौ ।" ६ । ३ । ११६ ।
इति दीर्घत्वम् ।) सन्धिस्थानवेधकर्त्ता । मर्म्मज्ञः । यथा, भट्टिकाव्ये । ५ । ५२ ।

**मर्म्माविद्** [ध्] त्रि, (मर्म्म विध्यतीति । मर्म्म + व्यध् + क्विप् । "ग्रहिज्येति ।" ६ । १ । १६ । इति सम्पसारणम् । "नहि-वृतिवृषिव्यधिरुचिसहितनिषुक्वौ ।" ६ । ३ । ११६ ।
इति दीर्घत्वम् ।) सन्धिस्थानवेधकर्त्ता । मर्म्मज्ञः । यथा, भट्टिकाव्ये । ५ । ५२ ।
"चिरं क्लिशित्वा मर्म्माविद्रामो विलुभितप्लवम् ।
शब्दायमानमव्यात्सीद्भयदंक्षणदाचरम् ॥"
"मर्म्माणि विध्यतीति क्विप् जिः वीरुहो धङ्-क्वाविति दीर्घनिर्द्देशात् क्वचित् क्विवन्ते पूर्ब्ब-पददीर्घत्वं स्यादिति सूचितं आङ्पूर्ब्बस्य रूपं वा मर्म्मावित् मर्म्मज्ञो वा वेत्ते रूपम् ।" इति तट्टीकायां भरतः ॥

**मर्म्मिकः**, त्रि, (मर्म्म वेत्तीति । मर्म्म + ठक् ।)

**मर्य्यादागिरिः** पुं, (मर्य्यादा सीमा तज्ज्ञापको गिरिः ।) कुलाचलः । वर्षसीमापर्व्वतः । यथा । "उत्तरोत्तरेणेलावृतं नीलः श्वेतः शृङ्गवानिति त्रयो रम्यकहिरण्मयकुरूणां वर्षाणां मर्य्यादा-गिरयः प्रागायताः । उभयतः क्षारोदावधयो द्विसहस्रयोजनपृथव एकैकशः पूर्ब्बस्मात् पूर्ब्ब-स्मादुत्तरोत्तरो दशांशाधिकांशेन दैर्घ्य एव ह्रसन्ति । एवं दक्षिणेनेलावृतं निषधो हेम-कूटो हिमालय इति प्रागायता यथा नीला-दयः । अयुतयोजनोत्सेधा हरिवर्षकिंपुरुष-भारतानां यथासंख्यम् । तथैवेलावृतमपरेण पूर्ब्बेण च
माल्यवद्गन्धमादनावानीलनिषधायतौ द्विसहस्रं पप्रथतुः केतुमालभद्राश्वयोः सीमानं विदधाते ।" इति श्रीभागवते ५ स्कन्धे १६ अध्यायः ॥

**मर्व्व**, पूर्त्तौ । गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) मर्व्वति पयसा कुम्भं चेटी । इति दुर्गादासः ॥

**मर्ष**, पुं, क्षान्तिः । मृषधातोर्भावे घञ् प्रत्य-येन निष्पन्नः ॥ (यथा, किरातार्ज्जुनीये । १ । ३३ ।
"अ-मर्षशून्येन जनस्य जन्तुना
न जातहार्द्देन न विद्विषादरः ॥")

**मर्षणं**, क्ली, (मृष् + ल्युट् ।) क्षमा । मृषधातो-र्भावे अनट्प्रत्ययेन निष्पन्नम् ॥ (धर्षणम् । यथा, महाभारते । ३ । ३१३ । २९ ।
"न चाप्यधर्म्मे न सुहृद्विभेदने
परस्वहारे परदारमर्षणे ।
कदर्य्यभावे च रमेन्मनः सदा
नृणां सदाख्यानमिदं विजानताम् ॥"
मर्षयतीति । मृष् + णिच् + ल्युः । मर्षके, त्रि । यथा, श्रीमद्भागवते । ४ । ७ । ५८ ।
"इदं पवित्रं परमीशचेष्टितं
यशस्यमायुस्यमघौघमर्षणम् ॥")

**मर्षितः**, त्रि, क्षमायुक्तः । क्षान्तिविशिष्टः । मृष-धातोः कर्त्तरि क्तप्रत्ययेन निष्पन्नः ॥ (यथा, श्रीमद्भागवते । १ । ७ । ५१ ।

कुल्लूकभट्टः ॥ * ॥) विट् । (यथा, मनुः ।
४ । २२० ।
"पूयं चिकित्सकस्यान्नं
पुंश्चल्यास्त्वन्नमिन्द्रियम् ।
विष्ठा वार्द्धुषिकस्यान्नं शास्त्रविक्रयिणो मलम् ॥"
"विष्ठा मलमेकमेव च ।" इति तद्भाष्ये मेधा-
तिथिः ॥) किट्टम् । इत्यमरः । २ । ६ । ६५ ॥
(यथा, अभिज्ञानशकुन्तले । ६ ।
"छाया न मूर्च्छति मलोहतप्रासादे
शुद्धे तु दर्पणतले सुलभावकाशा ॥")
"पापं किल्विषम् । विट् । विष्ठा । किट्टं कलङ्को मण्डूरादि स्वेदादि च एषु मलः ।
'वसा शुक्रमसृङ्मज्जा मूत्रं
विट्कर्णविण्णखाः ।
श्लेष्माश्रुदूषिका स्वेदो द्वादशैते नृणां मलाः ॥'
इति स्मृतिः ।" इति तट्टीकायां भरतः ॥ कर्पू-
रम् । इति शब्दचन्द्रिका ॥
वातपित्तकफाः ।
यथा, --
"सर्व्वेषामेव रोगाणां निदानं कुपिता मलाः ।
तत्प्रकोपस्य तु प्रोक्तं
विविधाहितसेवनम् ॥"
इति माधवकरः ॥
(पारिभाषिकमलं यथा, महाभारते । ८ ।
४५ । २३ ।
"क्षत्त्रियस्य मलं भैक्ष्यं ब्राह्मणस्याव्रतं मलम् ।
मलं पृथिव्या वाहीकाः स्त्रीणां
मदश्रियो
मलम् ॥")

**मलघ्नः**, पुं, (मलं हन्तीति । हन् + टक् ।) शाल्मली-

मर्म्मवित् । इति जटाधरः ॥

**मर्य्या**, व्य, (म्रियतेऽवशिष्यतेऽत्र । मृ + यत् ।
टाप् ।) सीमा । इति मर्य्यादाशब्दट्टीकायां
रायमुकुटः ॥

**मर्य्यादकः**, त्रि, मर्य्यादाकर्त्ता । मर्य्यादां करो-
तीति कर्त्तरि ढघे कादिति कण्प्रत्यये केऽकः स्वो
हेतु वेति आकारस्य ह्रस्वे निष्पन्नोऽयं शब्दः ॥

**मर्य्यादा**, स्त्री, (मर्य्या + दा + अङ् । न्याय्यपथ-
स्थितिः । (यथा, महाभारते । १५ । २२ । २५ ।
"मर्य्यादायां स्थितो धर्म्मः शमश्चैवास्य लक्ष-
णम् ॥")
तत्पर्य्यायः । संस्था २ धारणा ३ स्थितिः ४ ।
इत्यमरः । २ । ८ । २६ ॥ "पर्य्यादीयते मर्य्यादा
पर्य्याङ्पूर्ब्बात् दाञो ङः निपातनात् पस्य मः ।"
इति तट्टीकायां भरतः ॥ "मर्य्येति सीमार्थे
अव्ययं तत्र दीयते मय्यदिति स्वामी ।" इति
रायमुकुटः ॥ "म्रियन्तेऽत्रेति मर्य्या तां ददा-
तीति मर्य्यादा ।" इति सारसुन्दरी ॥ सीमा ।
इति जटाधरः ॥
कूलम् । इति हेमचन्द्रः । ४ । १४३ ॥ (यथा,
प्रबोधचन्द्रोदये । १ । ६ ।
"कल्पान्तवातसंक्षोभलङ्घिताशेषभूभृतः ।
स्थैर्य्यप्रसादमर्य्यादास्ता एव हि महोदधेः ॥"
देवातिथेः पत्नी । यथा, महाभारते । १ ।
९५ । २३ ।
"देवातिथिः खलु वैदेहीमुपयेमे मर्य्यादां नाम ॥")

"तत्राहामर्षितो भीमस्तस्य श्रेयान् वधः स्मृतः ।
न भर्त्तुर्नात्मनश्चार्थे योऽहन् सुप्तान् शिशून्
वृथा ॥")
भावे क्ते, क्ली । (मर्षणम् ॥)

**मर्षितवान्**, त्रि, क्षान्तः । मृषधातोः कर्त्तरि
क्तवतुप्रत्ययेन निष्पन्नः ॥

**मल**, ङ धृतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-
सक०-सेट् ।) ङ मलते । इति दुर्गादासः ॥

**मलः**, पुं, क्ली, (मृज्यते शोध्यते इति । मृज् +
"मृजेष्टिलोपश्च ।" उणा ० १ । १०९ । इति
अलच् टिलोपश्च । यद्वा, मलते धारयति
व्याध्यादिदौर्गन्धमिति । मल् + अच् ।) पापम् ।
(यथा, मनुः । २ । १०२ ।
"पश्चिमान्तु समासीनो मलं हन्ति दिवाकृतम् ॥"
"दिवार्ज्जितं पापं निहन्ति ।" इति तट्टीकायां

कन्दः । इति राजनिर्घण्टः ॥
मलनाशके, त्रि ॥

**मलघ्नी**, स्त्री, (मलघ्न + स्त्रियां ङीष् ।) नाग-
दमनी । इति राजनिर्घण्टः ॥

**मलजं**, क्ली, (मलाज्जायते इति । जन् + डः ।)
पूयः । इति शब्दचन्द्रिका ॥ मलोद्भवे, त्रि ॥

**मलदूषितं**, त्रि, (मलेन दूषितम् ।) मलिनम् ।
इत्यमरः । ३ । १ । ५५ ॥

**मलद्रावी**, [न्] पुं, (मलं विष्ठां द्रावयति चाल-
यतीति । द्रु + णिच् + णिनिः ।) जयपालः ।
इति राजनिर्घण्टः ॥

**मलनं**, क्ली, (मल्यते मर्द्द्यते इति । मल् + ल्युट् ।)
मर्द्दनम् । इति मेदिनी । ने, १०४ ॥

**मलनः**, पुं, (मलते धारयति वृष्टितापौ । मल
धृतौ + ल्युः ।) पटवासः । इति मेदिनी । ने,
१०४ । ताँवु इति भाषा ॥

**मलपूः**, स्त्री, (मलात् पापात् पुनातीति । पू +
क्विप् ।) काकोडुम्बरिका । इत्यमरः । २ । ४ ।
६१ ॥ (यथा, भावप्रकाशे ।
"विभीतकत्वं मलपूजटानां
क्वाथेन कृत्वा गुडसंयुतेन ॥")

**मलभुक्**, [ज्] पुं, (मलं भुङ्क्ते इति । भुज् +
क्विप् ।) काकः । इति शब्दरत्नावली ॥

**मलभेदिनी**, स्त्री, (मलं भिनत्तीति । भिद् +
णिनिः । स्त्रियां ङीप् ।) कटुका । इति राज-
निर्घण्टः ॥

**मलमासः**, पुं, (मलो मलिनश्चासौ मासश्चेति
कर्म्मधारयः ।) अधिकमासः । तत्पर्य्यायः ।

मलिम्लुचः २ अधिमासः ३ असंक्रान्तमासः ४
नपुंसकः ५ । तस्य लक्षणं यथा । रविसंक्रान्त्य-
भावविशिष्टचान्द्रमासत्वंमलमासत्वम् । इति
श्राद्धविवेकटीकायां श्रीकृष्णतर्कालङ्कारः ॥
अपि च । ज्योतिषे ।
“अमावस्याद्वयं यत्र रविसंक्रान्तिवर्ज्जितम् ।
मलमासः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥
अमावस्याद्वयम् अमावस्याद्वयान्त्यक्षणद्वयम्।
रविसंक्रान्तिभ्यां रविक्रियोत्पत्तिरूपोत्तर-
संयोगरूपाभ्यां यथाक्रमं वर्ज्जितं तेन दर्श-
द्वयान्त्यक्षणद्वयपूर्ब्बापरयोस्स्र रवेः क्रियोत्प-
त्त्युत्तरसंयोगाभ्यां यथाक्रमं योगेनाधिमासः ।
संक्रान्तेरेकक्षणे क्रियोत्पत्तिरपरक्षणे पूर्ब्ब-
संयोगनाशः उत्तरसंयोगोत्पत्तिश्चेति क्षणद्वय-
वृत्तित्वमिति मीमांसकसिद्धान्तात्। गृह्यपरि-
शिष्टज्योतिःपराशरौ।
रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलि-
म्लुचः ।
तत्र यद्विहितं कर्म्म उत्तरे मासि कारयेत् ॥
पराशरः ।
पक्षद्वयेऽपि संक्रान्तिर्यदि न स्यात् सितासिते ।
तदा तन्मासविहितमुत्तरे मासि कारयेत् ॥
अत्र लङ्घनमसंक्रमणञ्च रवेस्तदा भवति यदा
तन्मासतत्पूर्ब्बमासान्त्यक्षणयोरेकराश्यवस्थितस्य
रवेस्तन्मासानन्तरमेव राश्यन्तरसंयोगः नत्वेक-
राशिस्थितस्य मासव्यापनमात्रं तथात्वे चतु-
र्द्दश्यामेकराशौ संक्रान्तस्य प्रतिपत्प्रथमक्षणे-
ऽपरराशौ तत्परराशौ च द्वितीयायां प्रतिपदि
वा रवेः संयोगेऽपरस्यापि मलमासता स्यात्
अतएव ज्योतिषे ।
अमावास्यापरिच्छिन्नं रविसंक्रान्तिवर्ज्जितम् ।
मलमासं विजानीयाद्गर्हितं सर्व्वकर्म्मसु ॥
तस्यार्को दर्शकश्चैकराशौ दर्शद्वयातिगः ॥
अत्रैकराशिस्थार्कस्य दर्शद्वयातिगत्वमुक्तम्॥
एतच्च पूर्ब्बोपदर्शितयोर्मासयोः पूर्ब्बस्यैव सम्भ-
वति न परस्य ॥ * ॥ मलमासकारणन्तु ज्योतिषे ।
दिवसस्य हरत्यर्कः षष्टिभागमृतौ ततः ।
करोत्येकमहश्छेदं तथैवैकञ्च चन्द्रमाः ॥
एवमर्द्धतृतीयानामब्दानामधिमासकम्।
ग्रीष्मे जनयतः पूर्ब्बं पञ्चाब्दान्ते तु पश्चिमम् ॥
तेन दिवसस्य तिथेः षष्टिभागं दण्डमेकं रवि-
द्विराषाढः स विज्ञेयः शेते तु श्रावणेऽच्युतः ॥
द्विराषाढो द्विराषाढादिः । श्रावणे सौर-
श्रावणे । तथा च ज्योतिषे ।
मिथुनस्थो यदा भानुरमावस्याद्वयं स्पृशेत् ।
द्विराषाढः स विज्ञेयः विष्णुः स्वपिति कर्क्कटे ॥
अमावस्याद्वयं तदन्त्यक्षणद्वयं स्पृशेत् संयुञ्ज्यात्
न तन्मध्ये राश्यन्तरसंयोग इत्यर्थः ॥ * ॥ ननु
कर्क्कटादित्रिके अधिमासपाते तत्पूर्ब्बं मिथुन
एव हरिशयनं तत् कथं माधवादिषट्कमात्रे
कर्क्कटे तत् । तत्राह राजमार्त्तण्डः ।
कन्यासिंहकुलीरेषु यदा दर्शद्वयं भवेत् ।
आगामिनि तदा वर्षे कुलीरे माधवः स्वपेत् ॥
माधवादित्रिकश्रावणादित्रिकाधिमासविकल्पन-
मप्येतदर्थम् । इदन्तु सार्द्धवर्षद्वयाधिमासपात-
मौचित्यक्रमादुक्तं क्वचित्तिथीनां ह्रासबाहुल्येन
दण्डषष्ट्यधिकन्यूनदर्शनादुक्तकालन्यूनाधिकका-
लेऽपि मलमासो भवतीति समयप्रकाशकृत् ।
वस्तुतस्तु वैपरीत्यं यतो न्यूनदण्डतिथेः प्रायि-
कत्वे तत्र तिथिक्षयस्य झटित्युपलभ्यमानत्वात्
स्वल्पकालेन तिथ्यन्तरसम्बन्धात् शीघ्रं रवि-
लङ्घनप्रतीतेः शीघ्रमेव मलमासो भवतीति
अधिकदण्डतिथेः प्रायिकत्वे तत्र तिथिक्षयस्य
झटित्यनुपलभ्यमानत्वेनाधिकेनैव कालेन तिथ्य-
न्तरसम्बन्धात् विलम्बेनैव रविलङ्घनप्रतीतेश्चिरे-
णैव मलमासो भवतीति । तथा च विष्णु-
धर्म्मोत्तरम् ।
सौरसंवत्सरस्यान्ते मानेन शशिजेन तु ।
एकादशातिरिच्यन्ते दिनानि भृगुनन्दन ! ॥
समाद्वये साष्टमासे तस्मान्मासोऽतिरिच्यते।
स चाधिमासकः प्रोक्तः काम्यकर्म्मसु गर्हितः ॥
इदन्तु नियतमेकस्मादधिमासात्तृतीयाब्देअधि-
मासान्तरमिति । यद्यपि ।
यां तिथिं समनुप्राप्य तुलां गच्छति भास्करः ।
तयैव सर्व्वसंक्रान्तिर्यावन्मेषं न गच्छति ॥
इति राजमार्त्तण्डवचनात्तुलादिषण्मासेतिथि-
वृद्ध्यभावाद्वर्षे द्वादशतिथिवृद्धिरनुपपन्ना-
तथापि ।
मध्ये विषुवतोर्भानुर्यान्यहानि तु वर्द्धयेत् ।
तैः सम्भूयाधिको मासः पतत्येव त्रयोदशः ॥
इति गृह्यपरिशिष्टवाक्ये विषुवतोर्मेषतुलासं-
क्रान्त्योर्मध्ये मेषादिषण्मास एव तिथिवृद्धि-
इति राजमार्त्तण्डोक्तः
सप्तदशदिनाधिकाष्ट-
मासाधिकवर्षद्वये अधिमासः ।
स सौरे मासि
सप्तदशदिनोत्तरं
चान्द्रमासलङ्घनासम्भवात्
सावनमानेन ज्ञेयः । तथा च
विष्णुधर्म्मोत्तर-
प्रथमकाण्डम् ।
सौरेणाब्दस्तु मानेन यदा भवति
भार्गव ! ।
सावनेन च मानेन दिनषट्कं
प्रपूर्य्यते ॥
सौरसंरत्सरे दिनषट्काधिकः
सावनसंवत्सरो
भवतीति ।
सौरमासाष्टकाधिकवर्षद्वये
सप्तदश
दिनानि वर्द्धन्ते सावनक्रमेणेति
पूर्ब्बोक्तविष्णु-
धर्म्मोत्तरोक्तसमानविषयतास्येति
॥” “ज्योतिषे ।
दर्शानां फाल्गुनादीनां प्रायो
माघस्य च
क्वचित् ।
नपुंसकत्वं भवति न पौषस्य
कदाचन ॥
नपुंसकत्वं मलमासत्वम् । तथा
चोक्तम् ।
असंक्रान्तो हि यो मासः
कदाचित्तिथि-
वृद्धितः ।
कालान्तरात् समायाति स
नपुंसक इष्यते ॥
शाण्डिल्योऽपि ।
प्रायशो न शुभः सौम्यो
ज्यैष्ठश्चाषाढकस्तथा।
मध्यमौ चैत्रवैशाखावधिकोऽन्यः
सुभिक्षकृत् ॥
सौम्यो मार्गशीर्षः ।
अधिकोऽधिमासः ॥” * ॥

र्हरति छेदयति उत्तरे छेदमित्यभिधानात्।
ततश्च ऋतौ मासद्वये षष्टिनाडीच्छेदादह्न-
स्तिथेश्छेदमाकर्षणं करोति। एवं चन्द्रोऽपि।
एवमुक्तक्रमेण वर्षे द्वादशतिथ्यात्मककालाकर्षा-
दर्द्धतृतीयानामब्दानामन्तेअर्द्धं तृतीयं येषां
ते तथा ग्रीष्मे माधवादिषट्के पूर्व्वं माधवादि-
त्रिकपतितं पञ्चाब्दान्ते तु पश्चिमं श्रावणादि-
त्रिकपतितं मलमासं चन्द्रार्कौ जनयतः। ग्रीष्मे
माधवादिषट्के इति यदुक्तं तत् व्यक्तमाह
मिहिरः।
माधवादिषु षट्केषु मासि दर्शद्वयं यदा।
रुक्ता। अहर्गणने मेषादिषण्मासे मन्दभुक्त्या
सप्तदिनवृद्धिस्तुलादौ शीघ्रभुक्त्या दिनद्वयह्रास
इति। तथा च ज्योतिःशास्त्रम्।
मेषादीनामहर्वृन्दं षण्णां सप्ताष्टचन्द्रकम्।
तुलादीनामष्टसप्तचन्द्रकन्तुलिखेत् पृथक्॥
चन्द्र एकः। अङ्कस्य वामा गतिरित्यङ्कविदां
समयात् व्युत्क्रमेण अङ्का बोध्याः। तेन दिन-
वृद्धिक्रमसञ्चयाभ्यां मेषादिषट्क एव एका-
दशादितिथिवृद्धिः। एवञ्च।
गतेऽब्दद्वितये सार्द्धे पञ्चपक्षे दिनद्वये।
दिवसस्याष्टमे भागे पतत्येकोऽधिमासकः॥
"तदयं संक्षेपः।
शुक्लप्रतिपदादिरमावास्यान्तो
रविलङ्घितो मासो मलमासः। स
च माधवादौ
औत्सर्गिकः कदाचित्
कार्त्तिकादावपि। अयञ्चा-
निष्टकृत् माधवादि
कार्त्तिकादिषट्कयोरपि
तल्लक्षणयोगे माधवादावेव
तुलादिषट्क एवो-
भयमासे तल्लक्षणयोगे पूर्व्व एव।
आश्विन-
वैशाखयोस्तल्लक्षणयोगे पर एव
मलमासः
तद्भिन्नस्तु भानुलङ्घितः।
मलमासे आषाढा-
देर्द्वित्वम्। भानुलङ्घिते तु
नैतदिति विस्तरः॥ * ॥
मलमासे निषिद्धानि यथा,
काठकगृह्यम्।
चूडां मौञ्जीबन्धनञ्च अग्न्याधेयं
महालयम्।
राजाभिषेकं काम्यञ्च न
कुर्य्यादधिमासके॥
चूडां मौञ्जीबन्धनञ्च अग्न्याधेयं
महालयम्।
राजाभिषेकं काम्यञ्च न
कुर्य्याद्भानु-
लङ्घिते॥
महालयं कन्यार्कश्राद्धम्।
भीमपराक्रमेऽपि।
अधिमासे दिनपाते धनुषि रवौ
भानुलङ्घिते
मासि।
चक्रिणि सुप्ते कुर्य्यान्नो माङ्गल्यं
विवाहञ्च॥
दिनपाते दिनक्षये।
अधिमासे विवाहं यात्रां चूडां
तथोपनय-
नादि।
कुर्य्यान्न सावकाशं माङ्गल्यं न तु
विशेषे-
ज्याम्॥ इति॥

|  |  |  |
| --- | --- | --- |
|  |  | अत्र विवाहादिकीर्त्तनं निरवकाशत्वेऽपि निषे- धार्थम् । अन्यथा सावकाशमित्यनेनैव सिद्धेः । सावकाशञ्च सम्भवत्कालान्तरं कर्म्म अतो निरवकाशस्यानन्यगतिकस्य प्रतिप्रसवोऽर्थात् सूचितः । तथा च मलमासाधिकारे काठक- गृह्यम् । |

कालेऽनन्यगतिं नित्यां कुर्य्यान्नैमित्तिकीं क्रियाम् ॥”
इति मलमासतत्त्वम् ॥ * ॥
अपि च ।
“अग्न्याधानं प्रतिष्ठाञ्च यज्ञदानव्रतानि च ।
देवव्रतवृषोत्सर्गचूडाकरणमेखलाः ।
माङ्गल्यमभिषेकञ्च मलमासे विवर्ज्जयेत् ॥”
इति गारुडे १२८ अध्यायः ॥ * ॥
अथ मलमासकर्त्तव्यव्रतादि । “चातुर्मास्यव्रत-
माषाढाद्युल्लेखेन विहितं तदप्यारब्धं श्राव-
णादिमलमासेऽपि कर्त्तव्यं आषाढादिप्रतिदिन-
कर्त्तव्यत्वेन निरवकाशात् ।
‘षष्ठ्या तु दिवसैर्मासः कथितो वादरायणैः ॥’
इति ज्योतिःशास्त्रे पितामहेन एकमासत्वाभि-
धानाच्च । यच्च ।
‘संवत्सरन्तु यः पूर्णमेकभक्तेन तिष्ठति ।’
इत्यादौ माघाद्यनुल्लिखितसंवत्सरव्रतमारब्धं
तन्मलमासेऽपि कर्त्तव्यम् ।
‘क्वचित्त्रयोदशमासाः संवत्सर इति श्रुतेः ॥’
यच्च प्रतिमासविहितं न माघाद्युल्लेखेन तन्मल-
मासेऽपि कर्त्तव्यम् । तथा च रम्भातृतीयाव्रते
शिवरहस्यम् ।
‘मासे मलिम्लुचेऽप्येवं यजेद्देवीं सशङ्कराम् ।
किन्तु नोद्यापनं कार्य्यमित्याह भगवान् शिवः ॥’
उद्यापनं प्रतिष्ठा । व्रतारम्भोऽपि निषिद्धः ।
पूर्ब्बोक्तकाश्यपवचनात् । ज्यैष्ठादिमासविशेष-
विहितं सावित्रीव्रतादिकन्तु सावकाशत्वान्मल-
मासे न कार्य्यम् । किन्तु प्रकृत एव ज्यैष्ठादौ
कर्त्तव्यमिति । बृहस्पतिः ।
‘नित्यनैमित्तिके कुर्य्यात् प्रयतः सन् मलिम्लुचे ।
तीर्थस्नानं गजच्छायां प्रेतश्राद्धं तथैव च ॥’
नित्यमहरहः पुरस्कारविहितं स्नानसन्ध्यापञ्च-
महायज्ञादि काम्यमपि तथाविधं संकल्पितं
यत्किञ्चिद्द्रव्यदानशिवपूजादि । व्यक्तं भविष्ये ।
‘कुर्य्यात् प्रात्यहिकं कर्म्म प्रयतः सन् मलिम्लुचे ।
नैमित्तिकञ्च कुर्व्वीत सावकाशं न यद्भवेत् ॥’
कालमाधवीये मत्स्यपुराणम् ।
स्मृतिः ।
‘श्राद्धजातकनामानि ये च संस्कारमाश्रिताः ।
मलिम्लुचेऽपि कर्त्तव्याः काम्या इष्टीश्च वर्ज्जयेत् ॥’
संस्कारा अन्नप्राशननिष्क्रमणादयः । इति
माधवाचार्य्यः । अन्त्यकर्म्माणि वहनदहनोदक-
दानपिण्डदानास्थिसञ्चयादीनि । नवश्राद्धम् ।
‘चतुर्थे पञ्चमे चैव नवमैकादशे तथा ।
यदत्र दीयते जन्तोस्तन्नवश्राद्धमुच्यते ॥’
इति यमोक्तम् ॥
अत्र चतुर्थाहादिग्रहणं मरणदिनावधीति ।
बालग्रहभूतग्रहनराधिपप्रबलशत्रुदुःसहरोगा-
भिभवाद्भुतदुःस्वप्नग्रहदौस्थ्यादिनिमित्तं शान्ति-
कर्म्मापि मलमासेऽपि कर्त्तव्यम् । विष्णुना
शान्तिस्वस्त्ययनैर्दैवोपघातान् शमयेत् पर-
चक्रोपघातांश्च इत्युक्तम् ।” इति मलमास-
तत्त्वम् ॥

**मलयः**, पुं, (मलते धरति चन्दनादिकमिति ।
मल् + “वलिमलितनिभ्यः कयन् ।” उणा० ४ ।
९९ । इति कयन् ।) स्वनामख्यातपर्व्वतः ।
तत्पर्य्यायः । आषाढः २ दक्षिणाचलः ३ ।
इति हेमचन्द्रः । ४ । ९५ ॥ चन्दनाद्रिः ४ मल-
याचलः ५ । इति शब्दरत्नावली ॥ (स च सप्त-
कुलाचलान्तर्गतः । यथा, मार्कण्डेये । ५७ ।
१०--११ ।
“महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्व्वतः ।
बिन्ध्यश्च पारिपात्रश्च सप्तैवात्र कुलाचलाः ॥”)
शैलाङ्गम् । देशविशेषः । (यथा, मात्स्ये ।
११३ । ४४ ।
“अङ्गा वङ्गा मद्गुरका अन्तर्गिरिबहिर्गिरी ।
ततः प्रवङ्गमातङ्गमलयामलवर्त्तिकाः ॥”)
आरामः । इति मेदिनी । ये, ९९ ॥ नन्दन-
वनम् । इति धरणिः ॥ अष्टादशोपद्वीपान्त-
र्गतद्वीपविशेषः । इति शब्दमाला ॥ ऋषभ-
मलयजाते, त्रि । यथा, महाभारते । १ ।
२७ । ६ ।
“उत्पतद्भिरिवाकाशं वृक्षैर्मलयजैरपि ॥”)
यथा च ।
“राहुं मलयजं शूद्रं पैठीनं द्वादशाङ्गुलम् ।
कृष्णं कृष्णाम्बरं सिंहासनं ध्यात्वा तथाह्वयेत् ॥”
इति ग्रहयज्ञतत्त्वम् ॥

**मलया**, स्त्री, (मल + कयन् । टाप् ।) त्रिवृता ।
इति मेदिनी । ये, ९९ ॥

**मलयाचलः**, पुं, (मलयश्चासावचलश्चेति ।)
मलयपर्व्वतः । इति शब्दरत्नावली ॥ (यथा,
सुश्रुते उत्तरतन्त्रे । ४७ अध्याये ।
“पुन्नागनागकरवीरकृतोपकारे
तस्मिन् गृहे कमलरेण्वरुणे शयीत ।
यत्राहतानिलविकम्पितपुष्पदाम्नि
हेमन्तबिन्ध्यहिमवन्मलयाचलानाम् ॥”)

**मलयानिलः**, पुं, (मलयस्यानिलः ।) वसन्त-
कालीनवायुः । तत्पर्य्यायः । वासन्तः २ । इति
त्रिकाण्डशेषः ॥ (यथा, साहित्यदर्पणे ।
३ । १२६ ।
“स एव सुरभिः कालः स एव मलयानिलः ।
सैवेयमबला किन्तु मनोऽन्यदिव दृश्यते ॥”)

**मलयूः**, स्त्री, (मलपूः । पृषोदरादित्वात् पस्य
यत्वम् ।) मलपूः । इति शब्दरत्नावली ॥

**मलयोद्भवं**, क्ली, (मलयः उद्भव उत्पत्तिकारणं
यस्य ।) चन्दनम् । इति राजनिर्घण्टः ॥

**मलविनाशिनी**, स्त्री, (मलं विनाशयतीति । वि +

‘वर्षे चाहरहः श्राद्धं दानञ्च प्रतिवासरम् ।
गोभूतिलहिरण्यानां मासेऽसि स्यान्मलिम्लुचे ॥’
काठकगृह्यपरिशिष्टम् ।
‘प्रवृत्तं मलमासात् प्राक् यत् कर्म्म न समा-
पितम् ।
आगते मलमासेऽपि तत् समाप्यमसंशयम् ॥’
ब्रह्मसिद्धान्ते ।
‘आरब्धं कर्म्म यत्किञ्चित्तत्कार्य्यं हि मलिम्लुचे ॥’
नैमित्तिकं माससंवत्सरदिवसादिविशेषनियम-
शून्यावश्यकर्त्तव्यकादाचित्कनिमित्तोत्पपन्नम्॥
जातकर्म्माद्यपि मलमासे कार्य्यम् ।
‘जातकर्म्मान्त्यकर्म्माणि नवश्राद्धं तथैव च ।
मघात्रयोदशीश्राद्धं श्राद्धान्यपि च षोडश ॥
चन्द्रसूर्य्यग्रहे स्नानं दानश्राद्धक्रियादिकम् ।
कार्य्यं तम्मलमासेऽपि नित्यं नैमित्तिकं तथा ॥’

देवस्य शतपुत्त्रान्तर्गतपञ्चमपुत्त्रः । (यथा, श्रीभागवते । ५ । ४ । १० । “तमनु कुशावर्त्त इलावर्त्तो ब्रह्मवर्त्तो मलयः केतुर्भद्रसेन इन्द्र-स्पृक् विदर्भः कीकट इति नव नवतिप्रधानाः ॥”
गरुडवंशीयानामन्यतमः । यथा, महाभारते । ५ । १०१ । १४ ।
“सुस्वरो मधुपर्कश्च हेमवर्णस्तथैव च ।
मलयो मातरिश्वा च निशाकरदिवाकरौ ॥”)

**मलयगन्धिनी**, स्त्री, (मलयस्य गन्धः अस्त्यस्याः । मलयगन्ध + इनिः । स्त्रियां ङीप् ।) उमासखी-विशेषः । इति शब्दमाला ॥

**मलयजं**, पुं, क्ली, (मलयात् जायते इति । जन् + डः ।) चन्दनम् । इत्यमरः । २ । ६ । १३१ ॥ (यथा, गीतगोविन्दे । ३ । ११ ।
“हृदि विषलताहारो नायं भुजङ्गमनायकः
कुवलयदलश्रेणी कण्ठे न सा गरलद्युतिः ॥
मलयजरजो नेदं भस्म प्रियारहिते मयि
प्रहर न हरभ्रान्त्यानङ्ग ! क्रुधा किमु धावसि ॥”

नश् + णिच् + णिनिः । स्त्रियां ङीप् ।) शङ्ख-पुष्पी । इति राजनिर्घण्टः ॥

**मलहन्ता**, [ऋ] पुं, (मलं हन्तीति । हन् + तृच् ।) शाल्मलीकन्दः । इति राजनिर्घण्टः ॥

**मला**, स्त्री, (मल + अच् । टाप् ।) भूम्यामलकी । इति शब्दचन्द्रिका ॥

**मलाकर्षी**, [न्] पुं, (मलं विष्ठां आकर्षति स्थानात् स्थानान्तरं नयतीति । आ + कृष् + णिनिः ।) हडिकः । इति शब्दमाला । हाडि इति भाषा ॥

**मलाका**, स्त्री, (मलेन मनोमालिन्येन अकति कुटिलं गच्छतीति । अक् + अच् । स्त्रियां टाप् ।) कामिनी । हस्तिनी । दूती । इति संक्षिप्तसारोणादिवृत्तिः ॥

**मलापकर्षणं**, क्ली, (अप + कृष् + भावे ल्युट् । मलस्यापकर्षणम् ।) पापमोचनम् । मलदूरी-करणम् । इति केचित् ॥

**मलापहा**, स्त्री, (मलमपहन्तीति । अप + हन् + डः । स्त्रियां टाप् ।) नदीविशेषः । यथा, --
“मलापहा भीमरथी च घट्टगा
यथा च कृष्णा जलसाम्यगा गुणैः ।
मलापहाघट्टगयोस्तथापि
पथ्यं लघु स्वादुतरं सुकान्तिदम् ॥”
इति राजनिर्घण्टः ॥

**मलावहं**, क्ली, (मलं आवहतीति । आ + वह् + अच् ।) नवविधपापान्तर्गतपापविशेषः । यथा, मानवे । ११ । ७१ ।

"कृमिकीटवयोहत्या मद्यानुगतभोजनम् ।
फलैधःकुसुमस्तेयमधैर्य्यञ्च मलावहम् ॥"

**मलारिः**, पुं, (मलस्यारिर्नाशको रेचकत्वात् ।) सर्व्वक्षारः । इति राजनिर्घण्टः ॥

**मलिनं**, त्रि, (मलते धारयतीति । मल + "बहुल-मन्यत्रापि ।" उणा० २ । ४९ । इति इनच् । यद्वा, "ज्योत्स्नातमिस्रेति ।" ५ । २ । ११४ ।
इत्यत्र । "मलशब्दादिनजीमसचौ प्रत्ययौ निपात्येते ।" इति काशिकोक्त्या इनच् ।) मलयुक्तवस्तु । तत्पर्य्यायः । मलीमसम् २ कच्चरम् ३ मलदूषितम् ४ । इत्यमरः । ३ । १ ।
५५ ॥ (यथा, महानिर्व्वाणतन्त्रे । १ । ४३ ।
"परस्त्रीहरणे पापशङ्काभयविवर्ज्जिताः ।
निर्धना मलिना दीना दरिद्राश्चिररोगिणः ॥")
दूषितम् । (यथा, आर्य्यासप्तशत्याम् । ४०२ ।
"परपट इव रजकीभिर्मलिनो भुक्त्वापि निर्द्दयं ताभिः ।
अर्थग्रहणेन विना जघन्य ! मुक्तोऽसि कुल-टाभिः ॥")
कृष्णम् । इति मेदिनी । ने, १०४ ॥ नित्यनैमि-त्तिकक्रियात्यागी । इति मार्कण्डेयपुराणम् ॥ (निकृष्टम् । यथा, शिशुपालवधे । ९ । २३ ।
"द्युतिमग्रहीद्‌ग्रहगणो लघवः
प्रकटीभवन्ति मलिनाश्रयतः ॥"
"मलिनाश्रयतः निकृष्टाश्रयणात् ।" इति तट्टीकायां मल्लिनाथः ॥)

**मलिनं**, क्ली, (मलते धरति दोषमिति । मल + इनच् ।) घोलम् । इति शब्दचन्द्रिका ॥ दोषः । इति हेमचन्द्रः ॥ टङ्कणः । इति राजनिर्घण्टः ॥

**मलिनमुखः**, पुं, (मलिनं मुखमग्रभागो यस्य ।) तत्त्वम् ॥ अग्निः । चौरः । इति मेदिनी । चे, २१ ॥ (यथा, माघे । १६ । ५२ ।
"प्रहितः प्रधनाय माधवा-
नहमाकारयितुं महीभृता ।
न परेषु महौजसश्छला-
दपकुर्व्वन्ति मलिम्लुचा इव ॥")
वायुः । इति शब्दमाला ॥ (पञ्चयज्ञपरिभ्रष्टः । इति हेमचन्द्रः । ३ । ५२२ ॥)

**मलिष्ठा**, स्त्री, (अतिशयेन मलिनी । मलिनी + इष्ठः । स्त्रियां टाप् ।) रजस्वला नारी । इति त्रिकाण्डशेषः ॥

**मलीमसं**, क्ली, (मलमस्यास्तीति । मल + "ज्योत्स्नातमिस्रेति ।" ५ । २ । ११४ । इति ईमसच् प्रत्ययेन निपातितः ।) लौहम् । पुष्पकासीसम् । इति मेदिनी । से, ५९ ॥

**मलीमसः**, त्रि, (मलमस्यास्तीति । मल + ईम-सच् । निपात्यते ।) मलिनः । इत्यमरः । ३ । १ । ५५ ॥ (यथा, माघे । १ । ३८ ।
"उपप्लुतं पातुमदो मदोद्धतै-
स्त्वमेव विश्वम्भर ! विश्वमीशिषे ।
ऋते रवेः क्षालयितुं क्षमेत कः
क्षपातमस्काण्डमलीमसंनभः ॥"
कृष्णवर्णः । यथा, श्रीकण्ठचरिते । ६ । ३८ ।
"मलीमसश्रीर्म्मधुपानसक्तो
भेजे लताः पुष्पवतीः स्फुटं यः ।
स एव चैत्रेण वत द्विरेफः
पुष्पेषुराज्ये विहितः पुरोधाः ॥")

**मलूकः**, पुं, (मल + बाहुलकात् ऊकः ।) कृमि-विशेषः । इत्युणादिकोषः ॥

**मल्ल**, ङ धृतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक० सेट् ।) ङ, मल्लते । इति दुर्गा-दासः ॥

**मल्लः**, पुं, (मल्लते धरति बलमिति । मल्ल् + अच् ।)

**मल्लकः**, पुं, स्त्री, (मल्लते धारयति प्रदीपमिति । मल्ल् + ण्वुल् ।) दीपाधारः । नारिकेलफला-वयवजपात्रविशेषः । माला इति भाषा । स्त्रियां मल्लिका । इत्यमरभरतौ ॥ प्रदीपः । इति मथुरेशः ॥

**मल्लजं**, क्ली, (मल्ले तदाख्यदेशे जायते इति । जन् + डः ।) मरिचम् । इति जटाधरः ॥

**मल्लतूर्य्यं**, क्ली, (मल्लैर्वाद्यमानं तूर्य्यम् । मल्लाय तूर्य्यमिति वा ।) वाद्यविशेषः । तत्पर्य्यायः । महास्वनः २ । इति त्रिकाण्डशेषः ॥

**मल्लनागः**, पुं, (नागो हस्तीव मल्लः । पूर्ब्बनिपातः ।) वात्स्यायनमुनिः । (मल्लो बलीयान् नागः ।) अभ्रमातङ्गः । इति मेदिनी । गे, ५७ ॥ (मल्लो नाग इव ।) लेखहारः । इति शब्दरत्नावली ॥ कामशास्त्रविशेषः । इति धरणिः ॥

**मल्लभूः**, स्त्री, (मल्लानां भूर्भूमिः ।) मल्लभूमिः । इति जटाधरः ॥

**मल्लभूमिः**, स्त्री, (मल्लानां भूमिः स्थानम् ।) मल्लक्रीडास्थानम् । तत्पर्य्यायः । अक्षवाटः २ रङ्गभूमिः ३ रणस्थली ४ । इति शब्दरत्नावली ॥ मल्लभूः ५ अक्षपाटः ६ । इति जटाधरः ॥ देशविशेषश्च ॥ (यथा, --
"अयःपात्रे पयःपानं शालपत्रे च भोजनम् ।
शयनं तालपत्रे च मल्लभूमेरियं गतिः ॥"
इत्युद्भटः ॥)

**मल्लयात्रा**, स्त्री, (मल्लानां यात्रा ।) मल्लानां युद्धार्थयात्रा । तत्पर्य्यायः । माल्लवी २ । इति हारावली ॥

**मल्लयुद्धं**, क्ली, (मल्लानां युद्धम् ।) मल्लानां संग्रामः । तत्पर्य्यायः । नियुद्धम् २ बाहुयुद्धम् ३ । इति शब्दरत्नावली ॥ तत्प्रकारा यथा, --
"अथ सूदेन तं मल्लं योधयामास मत्स्यराट् ।
चोद्यमानस्ततो भीमो दुःखेनैवाकरोम्मतिम् ॥
नहि शक्नोति विवृतं प्रत्याख्यातुं नराधिपम् ।

अग्निः । गोलाङ्गुलः । इति मेदिनी । खे, १८ ॥
प्रेतः । इति हेमचन्द्रः ॥

**मलिनमुखः**, त्रि, (मलिनं दूषितं मुखं यस्य ।) क्रूरः । खलः । इति मेदिनी । खे, १८ । हेमचन्द्रश्च ॥ म्लानवदनश्च ॥

**मलिनाम्बु**, क्ली, (मलिनं कृष्णवर्णं अम्बु ।) मसी । इति हेमचन्द्रः । ३ । ४८ ॥

**मलिनास्यः**, त्रि, (मलिनं दूषितमास्यं यस्य ।) खलः । इति शब्दमाला ॥

**मलिनी**, स्त्री, (मलमस्या अस्तीति । मल + इनिः । स्त्रियां ङीप् ।) रजस्वला नारी । इत्यमरः । २ । ६ । २० ॥

**मलिम्लुचः**, पुं, (मली सन् म्लोचतीति । म्लुच् इर् गत्याम् + कः ।) मलमासः । यथा, --
"तमतिक्रम्य तु रविर्यदा गच्छेत् कथञ्चन ।
आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्रकृतः स्मृतः ॥
यदा तं दर्शान्तमासमतिक्रम्य तत्पूर्ब्बमासान्त्यक्षणवृत्तिराशिस्थः सन् सूर्य्योऽतिवाह्य गच्छेत्
मासान्तरे राश्यन्तरसंयोगं गच्छेत् तदा आद्योऽतिक्रान्तमासो मलिम्लुचो ज्ञेयः । मली
सन् म्लोचति गच्छतीति मलिम्लुचः । द्वितीयस्तु
प्रकृतः शुद्धः कर्म्मार्हत्वात् ।" इति मलमासबाहुयोधी । इत्यमरभरतौ । माल इति भाषा ॥
(यथा, श्रीमद्भागवते । १० । ४३ । १७ ।
"मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्त्तिमान् ॥")
वर्णसङ्करजातिविशेषः । माला इति भाषा ।
स च व्रात्यक्षत्त्रियात् सवर्णायां जातः । इति मानवे १० अध्यायः ॥ स च लेटात् तीवरकन्यायां जातः । इति ब्रह्मवैवर्त्तपुराणम् ॥
तन्त्रवाय्यां कुन्दकाराज्जातः । इति पराशर-
पद्धतिः ॥ पात्रम् । कपोलम् । मत्स्यभेदः । इति
मेदिनी । ले, ४४ ॥ देशविशेषः । यथा, --
"दशार्णा नवराष्ट्रञ्च मल्लाः शाल्ला युगन्धराः ॥"
इति विराटपर्व्वणि १ अध्यायः ॥

**मल्लकः**, पुं, (मल्ल इव । मल्ल + कन् । दृढत्वादस्य तथात्वम् । यद्वा, मल्ल धारणे + ण्वुल् ।) दन्तः । इति हेमचन्द्रः । ३ । २८४ ॥ (ब्राह्मण-
विशेषः । यथा, राजतरङ्गिण्याम् । ८ । २३२० ।
"विलोक्य वैकल्यहतौ बद्धौ तौ स्वामिनौ तथा ।
कृष्टासिधेनुरुत्तस्थौ द्विजन्मा मल्लकाभिधः ॥")
ततः स पुरुषव्याघ्रः शार्दूलशिथिलश्चरन् ॥
प्रविवेश महारङ्गं विराटमभिपूजयन् ।
बबन्ध कक्षां कौन्तेयस्ततः संहर्षयन् जनान् ।
ततस्तं वृत्रसङ्काशं भीमो मल्लं समाह्वयत् ॥
जीमूतं नाम तं मल्लं तत्र प्रख्यातविक्रमम् ।
तावुभौ सुमहोत्साहावुभौ तीव्रपराक्रमौ ॥
मत्ताविव महाकायौ वारणौ षष्टिहायनौ ।
ततस्तौ नरशार्दूलौ बाहुयुद्धे समीयतुः ॥
वीरौ परमसं हृष्टावन्योन्यजयकाङ्क्षिणौ ।
आसीत् सुभीमः सम्पातो वज्रपर्व्वतयोरिव ॥ १० ॥
उभौ परमसंहृष्टौ बलेनातिबलावुभौ ।
अन्योन्यमन्तरप्रेप्सू परस्परजयैषिणौ ॥
उभौ परमसंहृष्टौ मत्ताविव महागजौ ।
कृतप्रतिकृतैश्चित्रैर्बाहुभिश्च सकङ्कटैः ॥ ११ ॥
सन्निपातावधूतैश्च प्रमाथोन्मथनैस्तथा ।
क्षेपणैर्मुष्टिभिश्चैव वराहोद्धूतनिस्वनैः ॥
तलैर्वज्रनिपातैश्च प्रसृष्टाभिस्तथैव च ।
शलाकानखपातैश्च पादोद्धूतैश्च दारुणैः ॥

जानुभिश्चाश्मनिर्घोषैः शिरोभिश्चावघट्टितैः ।
तद्युद्धमभवद्घोरमशस्त्रं बाहुतेजसा ॥
बलप्राणेन शूराणां समाजोत्सवसन्निधौ ।
अरज्यत जनः सर्व्वः सोत्क्रुष्टनिनदोत्थितः ।
बलिनो संयुगे राजन् ! वृत्रवासवयोरिव ।
प्रकर्षणाकर्षणयोरभ्याकर्षविकर्षणैः ॥
आकर्षेतामथान्योन्यं जानुभिश्चाभिजघ्नतुः ॥ १२ ॥
ततः शब्देन महता भर्त्सयन्तौ परस्परम् ।
व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ ॥
बाहुभिः समसज्जेतामायसैः परिघैरिव ।
चकर्ष दोर्भ्यामुत्पाट्य भीमो मल्लममित्रहा ॥
विनदन्तमभिक्रोशन् शार्दूल इव वारणम् ।
तमुद्यम्य महाबाहुर्भ्रमयामास वीर्य्यवान् ॥
ततो मल्लाश्च मत्स्याश्च विस्मयं चक्रिरे परम् ।
भ्रामयित्वा शतगुणं गतसत्त्वमचेतनम् ।
प्रत्यपिंषन्महाबाहुर्म्मल्लं भुवि वृकोदरः ॥ १३ ॥
तस्मिन् विनिहते मल्ले जीमूते लोकविश्रुते ।
विराटः परमं हर्षमगच्छद्बान्धवैः सह ॥
स हर्षात् प्रददौ वित्तं बहु राजा महामनाः ॥”
इति विराटपर्व्वणि १२ अध्यायः ॥
एषां टीका यथा । “दुःखेन स्वप्रकटनराजाज्ञा-
लङ्घनद्वन्द्वजेन । विवृतं लोकसमक्षम् । शार्दूल-
शिथिलः सिंह इव व्याघ्र इव वा शिथिलः
सावज्ञः । स्यात् सिंहेऽपि च शार्दूल इति
दर्शनात् । कक्षां कच्छम् । सम्पातः संघर्षः ॥
१० ॥ सकङ्कटैः कङ्कटः करघर्षणजः किणः कडा
इति प्रसिद्धः । कृतप्रतिकृतैः परप्रयुक्तिप्रति-
कृतैः । चित्रैर्विचित्रैर्ब्बन्धैरिति शेषः ॥ ११ ॥
सन्निपातेत्यादि । एते मल्लानां शिक्षाविशेषाः ।
सन्निपातैः परस्परसंघातैरवधूतैर्बद्धमुष्टिभुजा-
घातैः प्रमाथैः पातयित्वा पेषणैः । उन्मथनैः
अन्तरीक्षे भुजाभ्यां मथनैः । क्षेपणैः स्थानात्
प्रच्यावनैः । बद्धाङ्गुलिकरो मुष्टिः ।
‘अवाङ्मुखं स्कन्धगतं भ्रामयित्वा तथैव यः ।
क्षिप्तस्य शब्दः स भवेद्वराहोद्धूतनिस्वनः ॥
तर्जन्यङ्गुष्ठमध्येन प्रसारितकरो हि यः ।
संप्रहारस्तलाख्यस्तु संग्रहो वज्रमिष्यते ॥’
अर्द्धचन्द्रतुल्यमल्लमुष्टिर्व्वज्रमित्यर्थः ।
‘प्रसृताङ्गुलिहस्तेन प्रसृष्टिः प्रहृतिः स्मृता ।
द्विगुणीकृतबाहुर्यस्तदीयार्थं यथाबलम् ॥
प्रहारः सशलाका स्यात् पादोद्धूतः पदा-

**मल्ला**, स्त्री, (मल्लते धारयति विलासादिकमिति ।
मल्ल धारणे + अच् । स्त्रियां टाप् ।)
नारी ।
पत्रवल्ली । मल्लिका । इति
शब्दरत्नावली ॥
(लोठनराजपत्नी । यथा,
राजतरङ्गिण्याम् ।
८ । १९१७ ।
“तमेव पुत्रा शोचन्ती
शोकशङ्कुहताशया ।
ततः प्रपेदे प्रलयं मल्ला
लोठनवल्लभा ॥”)

**मल्लारः**, पुं, (मल्लं ऋच्छति प्राप्नोतीति । ऋ +
अण् ।) रागविशेषः । स तु षण्णां
रागाणां
मध्ये द्वितीयः । यथा, --
“आदौ मालवरागेन्द्रस्ततो
मल्लारसंज्ञितः ।
श्रीरागस्तस्य पश्चाद्वै
वसन्तस्तदनन्तरम् ॥
हिल्लोलश्चाथ कर्णाट एते रागाः
प्रकी-
र्त्तिताः ॥”
अस्य षट्रागिण्यो यथा, --
“वेलावली पूरवी च कानडा
माधवी तथा ।
कोडा केदारिका चैव मल्लारस्य
प्रिया इमाः ॥”
अस्य गानसमयः ।
“मेघमल्लाररागस्य गानं वर्षासु
सर्व्वदा ॥”
अस्य स्वरूपं यथा, --
“शङ्खावदातं पलितं दधानः
प्रलम्बकर्णः कुमुदेन्दुवर्णः ।
कौपीनवासाः सविहारचारी
मल्लाररागः शुचिशान्तमूर्त्तिः ॥”
इति सङ्गीतदामोदरः ॥
(तथा च सङ्गीतदर्पणे रागाध्याये ।

**मल्लिकः**, पुं, (मल्ल्यते धार्य्यतेऽसौ । मल्ल + इन् ।
स्वार्थे कन् ।) मलिनचञ्चुचरणयुक्तहंसः ।
मलिनैः किञ्चिद्धूसरवर्णैरालोहितैश्चञ्चुचरणै-
रुपलक्षितः शुक्लहंसः । इत्यमरभरतौ ॥
नृणामुपाधिविशेषश्च ॥ (यथा, भरतमल्लिकः ।
तथा च भट्टिकाव्यटीकारम्भे मङ्गलाचरण-
श्लोकः ।
“नत्वा शङ्करमम्बष्ठगौराङ्गमल्लिकात्मजः ।
भट्टिटीकां प्रकुरुते भरतो मुग्धबोधिनीम् ॥”)

**मल्लिका**, स्त्री, (मल्लिरेवेति । मल्लि + स्वार्थे कन् ।
स्त्रियां टाप् । यद्वा, मल्लिर्हंस इव शुक्ल-
त्वात् । मल्लि + इवार्थे कन् ।) स्वनामख्यात-
पुष्पवृक्षः । वेलफुल इति भाषा ॥ (यथा,
काव्यादर्शे । २ ।
“मल्लिकामुकुले चण्डि ! भाति गुञ्जन्मधुव्रतः ।
प्रयाणे पञ्चबाणस्य शङ्खमापूरयन्निव ॥”)
तत्पर्य्यायः । तृणशून्यम् २ भूपदी ३
शतभीरुः
४ । इत्यमरः । २ । ४ । ६९ ॥ तृणशून्या ५
शीतभीरुः ६ । इति भरतः ॥ भद्रवल्ली ७
गौरी ८ वनचन्द्रिका ९ प्रिया १० सौम्या
११ नारीष्टा १२ गिरिजा १३ सिता १४
मल्ली १५ मदयन्ती १६ चन्द्रिका १७
मोदिनी
१८ । अस्या गुणाः । कटुत्वम् । तिक्तत्वम् ।
चक्षुष्यत्वम् । मुखपाककुष्ठविस्फोटकण्डूति-
विषव्रणनाशित्वञ्च । इति राजनिर्घण्टः ॥
कफ-
नाशित्वम् । इति राजवल्लभः ॥ उष्णत्वम् ।
लघुत्वम् । वृष्यत्वम् । वातपित्तास्रदृग्व्याध्य-
रुचिनाशित्वञ्च । इति भावप्रकाशः ॥ * ॥
अस्या उत्पत्तिर्यथा, --
“विचरन्तं तदा भूयो महेशं कुसुमायुधः ।
आरात् स्थित्वाग्रतो धन्वी सन्तापयितुमुद्यतः
॥
ततस्तमग्रतो दृष्ट्वा क्रोधाद् ध्मातदृशा हरः ।
स्मरमालोकयामास शिखाग्राच्चरणान्तिकम्
॥
आलोकितस्त्रिनेत्रेण मदनो द्युतिमानपि ।
प्रादह्यत तदा ब्रह्मन् ! पादादारभ्य कक्षवत् ॥

हतम् ॥’

जानुभिश्चाश्मनिर्घोषैःपाषाणघोषसदृशध्वनिभिः करणैर्यान्यवघट्टनानि तैः । बलप्राणेन बलोत्कर्षेण । सोत्क्रुष्टनिनदोत्थितः उत्क्रोशननिनदोत्थानसहितः । प्रकर्षणं बाहुसंमुखानयनं प्रकृष्टाकर्षणं तदेवाकर्षणमीषत्सम्मुखानयनम् । अभ्याकर्षः समन्ततः कर्षणम् । विकर्षणं पश्चात् नयनं तदेव विपरीतकर्षणमुच्यते उपसर्गभेदादर्थभेदोऽपीति ॥ १२ ॥ शतगुणं शतवारम् ॥ १३ ॥” इत्यर्ज्जुनमिश्रकृतभारतार्थदीपिका ॥

“भैरवः पञ्चमो नाटो मल्लारो गौडमालवः ।
देशाख्यश्चेति षड्रागाः प्रोच्यते लोकविश्रुताः ॥”
“मेघमल्लारिका मालकौशिकः पटमञ्जरी ।
आशावरीति विज्ञेया रागा मल्लारसंश्रयाः ॥”
इति रागार्णवमतम् ॥)

**मल्लारी**, स्त्री, (मल्लार + ङीप् ।) वसन्तरागस्य रागिणी । यथा, --
“आन्दोलिता च देशाख्या लोला प्रथम-मञ्जरी ।
मल्लारी चेति रागिण्यो वसन्तस्य सदानुगाः ॥”
इति सङ्गीतदामोदरः ॥
मेघरागस्य रागिणी । इति हलायुधः ॥
(अस्या उदाहरणादिकं यथा संगीतदर्पणे ।
“मल्लारी सपहीना स्यात् ग्रहांशन्यासधैवता ।
औडवा पौवरीयुक्ता वर्षासु सुखदा सदा ॥”
ध नि रि ग म ध । अस्या ध्यानं यथा, --
“गौरी कृशा कोकिलकण्ठनादा गीतच्छलेनात्मपतिं स्मरन्ती ।
आदाय वीणां मलिना रुदन्ती मल्लारिका यौवनदूनचित्ता ॥”)

**मल्लिः**, पुं, (मल्लते धारयति विज्ञानमिति । मल्ल + “सर्व्वधातुभ्य इन् ।” उणा० ४ । ११७ । इति इन् ।) चतुर्विंशतिवृत्तार्हतां मध्ये ऊनविंश-जिनः । इति हेमचन्द्रः । १ । २८ ॥

**मल्लिः**, स्त्री, (मल्ल + इन् ।) मल्लिका । इति शब्दरत्नावली ॥

प्रदह्यमानौ चरणौ दृष्ट्वासौ कुसुमायुधः ।
उत्ससर्ज्ज धनुः श्रेष्ठं तज्जगामाथ पञ्चधा ॥
यदासीन्मुष्टिबन्धं तद्रुक्मपृष्ठं महाप्रभम् ।
स च कल्पतरुर्ज्जातः स्रग्गन्धाढ्यो गुणाकृतिः ॥
नाहस्थानं शुभाकारं यदासीद्वज्रभूषितम् ।
तज्जातं केशवारण्यं बकुलं नामतो नगैः ॥
या च कोटी शुभा ह्यासीदिन्द्रनीलविभूषिता ।
जाता सा पाटला रम्या भृङ्गराजविभूषिता ॥
नाहोपरि तथा मुष्टौ स्थानं चन्द्रमणिप्रभम् ।
पञ्चगुल्माभवज्जाती शशाङ्ककिरणोज्ज्वला ॥
ऊर्द्ध्वं मुष्ट्या अधः कट्याः स्थानं विद्रुमभूषितम् ।
तस्माद्बहुपुटा मल्ली सञ्जाता विविधा मुने ! ॥”
इति वामनपुराणे ६ अध्यायः ॥
मत्स्यविशेषः । मृत्पात्रभेदः । इति मेदिनी । के, १३७ ॥ पानपात्रम् । इति हेमचन्द्रः ॥

**मल्लिकाक्षः**, पुं, (मल्लिकापुष्पमिव अक्षिणी यस्येति । “अक्ष्णोऽदर्शनात् ।” ५ । ४ । ७६ ।

इति अच् ।) मलिनचञ्चुचरणयुक्तहंसः । इति हेमचन्द्रः । ४ । ३९२ ॥ शुक्लवर्णवेष्टितचक्षुर्द्वययुक्तहयः । इति हलायुधः ॥ (यथा, हरिवंशे । २४१ । २५ -- २६ ।
"मल्लिकाक्षान् विरूपाक्षान् क्रौञ्चवर्णान् मनोजवान् ।
अश्वसैन्यं महाबाहुस्तदप्रतिमपौरुषः ।
निसूदयामास बली गदया भीमविक्रमः ॥")

**मल्लिकाख्यः**, पुं, मलिनचञ्चुचरणयुक्तहंसः । इत्यमरटीका ॥ ते सिता हंसा मलिनैः किञ्चिद्धूसरवर्णैरालोहितैश्चञ्चुचरणैर्लक्षिता मल्लिकाख्या मल्लिकनामानः । मल मल्ल ङ धृतौ लान्तः नाम्नीति इकः । मल्लिको हंसभेदे स्यात्तृणशून्यन्तु मल्लिका । इति रुद्रः । शुक्लाङ्गत्वान्मल्लिकापुष्पमिव अक्षि येषां ते मल्लिकाक्षा इति स्वामी । इति भरतः ॥ (यथा, उत्तररामचरिते । १ । २६ ।
"एतस्मिन् मदकलमल्लिकाख्यपक्षव्याधूतस्फु रदुरुदण्डपुण्डरीकाः ।
वाष्पाम्भःपरिपतनोद्गमान्तराले
संदृष्टाः कुवलयिनो भुवो विभागाः ॥")

**मल्लिकाख्या**, स्त्री, (मल्लिकेति आख्या यस्याः ।) त्रिपुरमालीपुष्पम् । तत्पर्य्यायः । मोहिनी २ वटपत्रा ३ मोहना ४ । इति रत्नमाला ॥

**मल्लिकागन्धं**, क्ली, (मल्लिकाया इव गन्धो यस्य ।) मङ्गलागुरु । इति राजनिर्घण्टः ॥

**मल्लिकापुष्पः**, पुं, (मल्लिकाया पुष्पमिव पुष्पं यस्य ।) कुटजवृक्षः । इति राजनिर्घण्टः ॥ करुणवृक्षः । इति हेमचन्द्रः । करुणा लेवु इति भाषा ॥ स्वनामख्यातपुष्पवृक्षश्च ॥

**मल्लिगन्धि**, क्ली, (मल्लेरिव गन्धो यस्य तत् । "उपमानाच्च ।" ५ । ४ । १३८ । इति इकारादेशः ।) अगुरु । इति शब्दचन्द्रिका ॥

**मल्लिपत्रं**, क्ली, (मल्लेः पत्रमिव पत्रं यस्य ।) छत्राकः । इति त्रिकाण्डशेषः ॥

**मल्ली**, स्त्री, (मल्लि + कृदिकारादिति पक्षे ङीष् ।)

**मव्य**, बन्धे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) मव्यति चौरं राजा । यद्वयान्तोऽयमित्येके । इति दुर्गादासः ॥

**मश**, ध्वनौ । कोपे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट् ।) मशति मशकः । इति दुर्गादासः ॥

**मशकः**, पुं, (मशति ध्वनतीति । मश् + अच् । संज्ञायां कन् ।) कीटविशेषः । मशा इति भाषा ॥
तत्पर्य्यायः । वज्रतुण्डः २ सूच्यास्यः ३ सूक्ष्ममक्षिकः ४ रात्रिजागरदः ५ । इति राजनिर्घण्टः ॥ (यथा, श्रीमद्भागवते । ३ । ३१ । २७ ।
"तुदन्त्यामत्वचं दंशा मशका मत्कुणादयः ।
रुदन्तं विगतज्ञानं कृमयः कृमिकं यथा ॥")
तन्नाशकधूपो यथा, --
"त्रिफलार्ज्जुनपुष्पाणि भल्लातकशिरीषकम् ।
लाक्षासर्ज्जरसश्चैव विडङ्गश्चैव गुग्गुलुः ।
एतैर्धूपैर्म्मक्षिकाणां मशकानां विनाशनम् ॥"
इति गारुडे १८१ अध्यायः ॥
चर्म्मभेदः । स तु स्वनामख्यातचर्म्मनिर्म्मितस्नेहादिपात्रम् । रोगविशेषः । माशा इति हिन्दी । आँचिल इति वङ्गभाषा ॥ इति शब्दरत्नावली ॥ * ॥ मशकरोगमाह ।
"अवेदनं स्थिरञ्चैव यत्तु गात्रे प्रदृश्यते ।
माषवत् कृष्णमुत्सन्नं मलिनं मशकं दिशेत् ॥"
स्थिरं अचलम् । अस्य चिकित्सा यथा, --
"चर्म्मकीलं जतुमणिं
मशकांस्तिलकालकान् ।
उत्कृत्य शस्त्रेण दहेत् क्षाराग्निभ्यामशेषतः ॥"
इति भावप्रकाशः ॥
अपि च
"लशुनानान्तु चूर्णस्य घर्षो मशकनाशनः ।"

**मस**, इर् य ई परिमाणे । परिणामे । इति कविकल्पद्रुमः ॥ (दिवा०-पर०-सक०-सेट् । निष्ठायामनिट् ।) इर्, अमसत् अमासीत् अमसीत् । अस्मात् पुषादित्वान्नित्यं ङ इत्यन्ये । य, मस्यति धान्यं गृही । परिमातीत्यर्थः । ई, मस्तः । परिणामं कस्यचिदनुरोधात् । इति दुर्गादासः ॥

**मसकः**, पुं, (मस्यते परिमीयतेऽसौ । मस + कर्म्मणि घः । अल्पार्थे कन् ।) क्षुद्ररोगविशेषः । मासा इति लोके प्रसिद्धः । तल्लक्षणं यथा, --
"अवेदनं स्थिरञ्चैव यत्तु गात्रे प्रदृश्यते ।
माषवत् कृष्णमुत्सन्नं मलिनं मसकं दिशेत् ॥"
अवेदनं वेदनारहितम् । स्थिरम् अचलम् ॥
तच्चिकित्सा यथा, --
"चर्म्मकीलं जतुमणिं
मसकांस्तिर्लकालकान् ।
उत्कृत्य शस्त्रेण दहेत् क्षाराग्निभ्यामशेषतः ॥"
इति भावप्रकाशः ॥

**मसनं**, क्ली, (मस्यते इति । मस् + ल्युट् ।) सोमराजीवृक्षः । इति शब्दचन्द्रिका ॥

**मसरा**, स्त्री, (मस् + बाहुलकात् अरच् । स्त्रियां टाप् ।) मसूरः । इति जटाधरः ॥

**मसारः**, पुं, (मस् + भावे क्विप् । मसं परिमाणं ऋच्छतीति । ऋ + अण् ।) इन्द्रनीलमणिः । इति शब्दरत्नावली ॥ (यथा, नैषधचरिते । ९ । १०४ ।
"चकास्ति बिन्दुच्युतकातिचातुरी-

मल्लिका । इति राजनिर्घण्टः शब्दरत्नावली च ॥ (यथा, राजेन्द्रकर्णपूरे । ४९ ।
"किं राकेन्दुकरच्छटाभिरुदितं किं मौक्तिकैरुद्गतं
किं मल्लीमुकुलैः स्मितं बिकसितं किं मालतीकुड्मलै ॥")

**मल्लीकरः**, त्रि, (अमलमपि आत्मानं मल्लमिव करोतीति । कृ + अच् ।) चौरः । इति शब्दरत्नावली ॥

**मल्लु**, पुं, (मल्लते भयं धारयतीति । मल्ल + बाहुलकात् उः ।) भालुकः । इति शब्दचन्द्रिका ॥

**मव**, नहे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-मक०-सेट् ।) नहो बन्धनम् । मवति चौरं लोकः । इति दुर्गादासः ॥

**मवितः**, त्रि, (मव + कर्म्मणि क्तः ।) बद्धः । इत्यमरटीकायां स्वामी ॥

इति गारुडे १७५ अध्यायः ॥

**मशकी**, [न्] पुं, (मशकाः सन्त्यस्यामिति । मशक + इनिः ।) उदुम्बरवृक्षः । इति हेमचन्द्रः । ४ । १९८ ॥

**मशहरी**, स्त्री, (मशं मशकं हरतीति । हृ + "हरतेरनुद्यमनेऽच् ।" ३ । २ । ९ । इति अच् ।
स्त्रियां ङीष् ।) मशकनिवारकप्रावरणविशेषः । मशारि इति भाषा ॥ चतुष्की २ । इति जटाधरः ॥

**मशुनः**, पुं, (मे समये श्वयति वर्द्धते इति । श्वि + बहुलवचनात् नक् । ततः निपातितः ।) कुक्कुरः । इति शब्दमाला ॥

**मष**, वधे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) मषति । इति दुर्गादासः ॥

**मषिकूपी**, स्त्री, (मषेः कूप इव । मषिकूप + अल्पार्थे ङीष् ।) मस्याधारः । इति हेमचन्द्रः ॥
३ । १४८ ॥

**मषिधानं**, क्ली, (धीयतेऽस्मिन्निति । धा + अधिकरणे ल्युट् । मषेर्धानं स्थानम् ।) मस्याधारः ।
इति हेमचन्द्रः । ३ । १४८ ॥

**मषीलेख्यदलः**, पुं, (मषीभिर्लेख्यं लेखनयोग्यं दलं यस्य ।) श्रीतालवृक्षः । इति राजनिर्घण्टः ॥

घनाम्रुबिन्दुस्रु तिकैतवात्तव ।
मसारताराक्षि ! ससारमात्मना
तनोषि संसारमसंशयं यतः ॥")

**मसारकः**, पुं, (मसार + स्वार्थे कन् ।) इन्द्रनीलमणिः । इति शब्दरत्नावली ॥

**मसिः**, स्त्री, पुं, (मस्यते परिणमते इति । मस् + "सर्व्वधातुभ्य इन् ।" उणा० ४ । ११७ । इति इन् ।) लिपिप्रयोजना । लेखनद्रव्यम् ।
इत्यमरटीकायां भरतः ॥ तत्पर्य्यायः । मसिजलम् २ पत्राञ्जनम् ३ । इति त्रिकाण्डशेषः ॥
मेला ४ काली ५ अञ्जनम् ६ मसी ७ । इति शब्दरत्नावली ॥ रञ्जनी ८ । इति स्वामी ॥
मलिनाम्बु ९ मशी १० । इति हेमचन्द्रः । ३ । १४८ ॥ शेफालिकावृन्तम् । इति रुद्रः शब्दरत्नावली च ॥

**मसिका**, स्त्री, शेफालिका । इति शब्दरत्नावली ॥ मलिका इति ग्रन्थान्तरे पाठः ॥

**मसिधानं**, क्ली, (मसेर्धानं आधारः ।) मस्याधारः । इति शब्दरत्नावली ॥

**मसिधानी**, स्त्री, (मसेर्धानी ।) मस्याधारः । दोयाति इति भाषा ॥ तत्पर्य्यायः । मसिमणिः २ मेलान्धुः ३ वर्णकूपिका ४ मेलानन्दा ५ मेलाम्बु ६ मसिधानम् ७ । इति शब्दरत्नावली ॥
मसिकूपी ८ । इति हेमचन्द्रः ॥
मसिकूपिका ९ । इति जटाधरः ॥

**मसिनं**, क्ली, (मस्यते परिमीयते गणनयेति । मस् + "बहुलमन्यत्रापि ।" उणा ० २ । ४९ । इति इनच् ।) सपिण्डकम् २ । इत्युणादिकोषः ॥

**मसिपण्यः**, पुं, (मसिः काली पण्यमस्य ।) लेखकः । इति त्रिकाण्डशेषः ॥

**मसिप्रसूः**, स्त्री, (मसिं प्रकर्षेण सूते उद्गिरतीति । प्र + सू + क्विप् ।) मस्याधारः । इति हारा-वली ॥ लेखनी । इति केचित् ॥

**मसिमणिः**, स्त्री, (मस्याधारो मणिरिवेति ।) मस्याधारः । इति शब्दरत्नावली ॥

**मसिवर्द्धनं**, क्ली, (मसिं वर्द्धयतीति । वृध् + णिच् + ल्युः ।) रसगन्धः । इति त्रिकाण्डशेषः ॥

**मसी**, स्त्री, (मसि + कृदिकारादिति ङीष् ।) काली । (यथा, नैषधचरिते । ९ । ६३ ।
"त्वदास्य निर्य्यन्मदलीकदुर्यशो-
मसीमयं सल्लिपिरूपभागिव ।")
शेफालिकावृन्तम् । इति शब्दरत्नावली ॥

**मसीजलं**, क्ली, (मस्या जलम् । राहोः शिर इतिवत् अभेदे षष्ठी ।) मसी । काली । इति त्रिकाण्डशेषः ॥

**मसीधानी**, स्त्री, (मस्या धानी पात्रम् ।) मस्या-धारः । इति त्रिकाण्डशेषः ॥

**मसीना**, स्त्री, (मस् + "बहुलमन्यत्रापि ।" उणा ० २ । ४९ । इति । इनच् । पृषोदरादि त्वाद्दीर्घः । स्त्रियां टाप् ।) स्वनामख्यात-शस्यम् । यथा, शब्दचन्द्रिकायाम् ।
"मसीना चातसी चिह्वा क्षुमोमामालिका मिता ॥"

**मसुरः**, पुं, (मस्यते परिमीयतेऽसौ । मस् + त्वञ्च । इति राजनिर्घण्टः ॥ अस्रहरत्वम् । रूक्षत्वम् । ज्वरनाशित्वञ्च । इति भाव-प्रकाशः ॥ तस्य यूषगुणाः । संग्राहित्वम् । स्वादुपाकित्वम् । प्रमेहपित्तश्लेष्मज्वरातीसार-नाशित्वञ्च । इति राजनिर्घण्टः ॥

**मसूरकः**, पुं, (मसूर इव प्रतिकृतिरिति । मसूर + कन् । संज्ञायां कन् वा ।) उपबर्हविशेषः । गोल वालिश इति भाषा । तत्पर्य्यायः । चतुरः २ चातुरः ३ अङ्केऊः ४ चक्रगण्डुः ५ । इति शब्दरत्नावली ॥ (क्लीवेऽपि दृश्यते । यथा, बृहत्संहितायाम् । ४३ । ४३ ।
"अष्टाश्रि नीलरक्तं
तृतीयमिन्द्रेण भूषणं दत्तम् ।
असितं यमश्चतुर्थं
मसूरकं कान्तिमदयच्छत् ॥")

**मसूरविदला**, स्त्री, (मसूरस्येव विशिष्टं दल-मस्याः । स्त्रियां टाप् ।) कृष्णत्रिवृत् । इत्य मरः । २ । ४ । १०९ ॥ (यथा, राजतर-ङ्गिण्याम् । ६ । १८७ ।
"मसूरविदलाकारतूलाक्लिन्नकलेवरः ।
पौषे चाब्दे चतुस्त्रिंशे नवमेऽब्दे सिते मृतः ॥")
श्यामलता । इति रत्नमाला ॥

**मसूरा**, स्त्री, (मस्यति परिणमतीति । मस् + ऊरन् । स्त्रियां टाप् ।) वेश्या । मसूरकलायः । इति मेदिनी । रे, २०१ ॥

**मसूरिका**, स्त्री, (मसूरेव । मसूरा + कन् । स्त्रियां टाप् । अत इत्वञ्च ।) कुट्टनी । इति शब्द-माला ॥ * ॥ वसन्तरोगः । तस्योत्पादनक्रिया टीका इति ख्याता । सा तु गोस्तनज-नर-गात्रज-मसूरिकापूयेन भवति । यथा, --
"धेनुस्तन्यमसूरिका नराणाञ्च मसूरिका ।
तज्जलं बाहुमूलाच्च शस्त्रान्तेन गृहीतवान् ॥
बाहुमूले च शस्त्राणि रक्तोत्पत्तिकराणि च ।
तज्जलं रक्तमिलितं स्फोटकज्वरसम्भवम् ॥"
इति धन्वन्तरिकृतशाक्तेयग्रन्थः ॥
तत्पर्य्यायः । पापरोगः २ रक्तवटी ३ मसूरी ४ । इति शब्दरत्नावली ॥ * ॥ अथ मसूरिका-धिकारः । "तत्र मसूरिकाविप्रकृष्टनिदान-मसूराकृतिसंस्थाना मसूरस्य या आकृति-स्तद्वत्संस्थानमाकृतिर्यासां ताः ॥ * ॥
अथ पूर्ब्बरूपमाह ।
'तासां पूर्ब्बं ज्वरः कण्डुर्गात्रभङ्गोऽरतिर्भ्रमः ।
त्वचि शोफः सवैवर्ण्यो नेत्ररागस्तथैव च ॥'
वातजामाह ।
'स्फोटाः कृष्णारुणा रूक्षास्तीव्रवेदनया-न्विताः ।
कठिनाश्चिरपाकाश्च भवन्त्यनिलसम्भवाः ॥
'सन्ध्यस्थिपर्व्वणां भेदः कासः कम्पोऽरतिर्भ्रमः ।
शोषस्ताल्वोष्ठजिह्वानां तृष्णा चारुचिसंयुता ॥'
पैत्तिकामाह ।
'रक्ताः पीताः सिताः स्फोटाः सदाहास्तीव्र-वेदनाः ।
भवन्त्यचिरपाकाश्च पित्तकोपसमुद्भवाः ॥
'विड्भेदश्चाङ्गमर्द्दश्च दाहस्तृष्णारुचिस्तथा ।
मुखपाकोऽक्षिपाकश्च ज्वरस्तीव्रः सुदारुणः ॥'
रक्तजामाह ।
'रक्तजायां भवन्त्येते विकाराः पित्तलक्षणाः ॥'
अथ कफजामाह ।
'श्वेताः स्निग्धाः भृशं स्थूलाः कण्डुरा मन्द-वेदनाः ।
मसूरिकाः कफोद्भूताश्चिरपाकाः प्रकीर्त्तिताः ॥
कफप्रसेकः स्तैमित्यं शिरोरुग्गात्रगौरवम् ।
हृल्लासः सारुचिनिद्रा तन्द्रालस्यसमन्विताः ॥'
सान्निपातिकीमाह ।
'नीलाश्चिपिटविस्तीर्णामध्ये निम्ना महारुजः ।

"मसेश्च ।" उणा ० १ । ४४ । इति । उरन् ।) मसुरकलायः । इति त्रिकाण्डशेषः ॥

**मसुरा**, स्त्री, (मस्यति पण्यत्वेन परिणमत्यसा- विति । मस् + उरन् । स्त्रियां टाप् ।) वेश्या । ब्रीहिप्रभेदः । इति मेदिनी । रे, २०१ ॥

**मसूरः**, पुं स्त्री, (मस्यते परिमीयतेऽसौ । मस् + "मसेरूरन् ।" उणा० ५ । ३ । इति ऊरन् ।) ब्रीहिभेदः । मसुरी कलाइ इति भाषा ॥ (अस्याधिपतिर्म्मेषराशिः । यथा, बृहत्संहि- तायाम् । ४१ । २ ।
"वस्त्राविककुतुपानां मसूरगोधूमरालकयवानाम् ।
स्थलसम्भवौषधीनां कनकस्य च कीर्त्तितो मेषः ॥")
तत्पर्य्यायः । मङ्गल्यकः २ । इत्यमरः । २ । ९ । १७ ॥ मसुरः ३ ब्रीहिकाञ्चनः ४ । इति त्रिकाण्डशेषः ॥ मसूरा ५ मसुरा ६ । इति मेदिनी । रे, २०१ ॥ रागदालिः ७ मङ्गल्यः ८ पृथुबीजकः ९ शूरः १० कल्याणबीजः ११ गुडबीजः १२ मसूरकः १३ । इति राजनिर्घण्टः ॥ मङ्गल्या १४ मसूरका १५ । इति भावप्रकाशः ॥ अस्य गुणाः । मधुरत्वम् । शीतत्वम् । संग्राहित्वम् । कफपित्तनाशित्वम् । वातामयकरत्वम् । मूत्रकृच्छ्रहरत्वम् । लघु-

पूर्ब्बिकां संप्राप्तिमाह ।
'कट्वम्ललवणक्षारविरुद्धाध्यशनाशनैः ।
दुष्टनिष्पावशाकाद्यैः प्रदुष्टपवनोदकैः ॥
क्रुद्धग्रहेक्षणाच्चापि देशे दोषाः समुद्भवाः ।
जनयन्ति शरीरेऽस्मिन् दुष्टरक्तेन सङ्गताः ॥
मसूराकृतिसंस्थानाः पिडकाः स्युर्मसूरिकाः ॥'
क्षारो यवक्षारः । विरुद्धाध्यशनाशनैः कट्वा- दिविरुद्धान्तानामशनैः । अथ च अध्यशनाशनं अधिकमशनं अध्यशनम् । दुष्टनिष्पावशाकाद्यैः दुष्टैर्निष्पावशाकाद्यैः । आद्यशब्दान्मध्वालुकादि तैः । प्रदुष्टपवनोदकैः सविषकुसुमादिसंसर्गात् क्रुद्धग्रहेक्षणाच्चापि देशे देशे क्रुद्धग्रहा राहु- शनैश्चरादयस्तेषामीक्षणाद्दृष्टेः यस्मिन् देशे क्रुद्धग्रहदृष्टिः तत्रापि मसूरिकोत्पत्तिरित्यर्थः ।

पूतिस्रावाश्चिरं पाकाः प्रभूताः सर्व्वदोषजाः ॥'
सप्तधातुगतामाह ।
'मसूरिकास्त्वचं प्राप्तास्तोयवुद्बुदसन्निभाः ।
स्वल्पदोषाः प्रजायन्ते भिन्नास्तोयं स्रवन्ति च ॥'
त्वचं प्राप्ताः त्वच्छब्देनात्र रस उच्यते रसा- श्रयत्वात् ॥ * ॥ रक्तस्थामाह ।
'रक्तस्था लोहिताकाराः शीघ्रपाकास्तनुत्वचः ।
साध्या नात्यर्थदुष्टास्तु भिन्ना रक्तं स्रवन्ति च ॥'
साध्या रक्तस्था इत्यर्थः । नात्यर्थदुष्टास्तु अत्यर्थ- दुष्टशोणिताः पुनर्न साध्याः किन्तु कष्ट- साध्याः ॥ * ॥ मांसस्थामाह ।
'मांसस्थाः कठिनाः स्निग्धाश्चिरपाकास्तनु- त्वचः ।
गात्रशूलानिशं कण्डूर्मूर्च्छादाहतृषान्विताः ॥'
मेदस्थामाह ।
'मेदोजा मण्डलाकारा मृदवः किञ्चिदुन्नताः ।
घोरज्वरपरीताश्च स्थूलाः स्निग्धाः सवेदनाः ।
सम्मोहारतिसन्तापाः कश्चिदाभ्यो विनिस्तरेत् ॥'
अस्थिमज्जागते प्राह ।
'क्षुद्रा गात्रसमा रुक्षाश्चिपिटाः किञ्चिदुन्नताः ।
भज्जस्था भृशसम्मोहवेदनारतिसंयुताः ॥
भ्रमरेणेव विद्धानि कुर्व्वन्त्यस्थीनि सर्व्वतः ।
छिन्दन्ति मर्म्मधामानि प्राणानाशु हरन्ति ताः ॥'
गात्रसमाः गात्रतुल्यवर्णाः । चिपिटाः चिपि- टाकाराः । मज्जाग्रहणेनास्थ्नोऽपि ग्रहणं

तदाधारत्वात् । अतएवाग्रे भ्रमरेणेव विद्धानि कुर्व्वन्त्यस्थीनि सर्व्वत इति । मर्म्मधामानि मर्म्मस्थानानि ॥ * ॥ शुक्रगतामाह ।
'पक्वाभाः पिडकाः स्निग्धाः श्लक्ष्णाश्चात्यर्थ-
वेदनाः ।
स्तमित्यारतिसम्मोहदाहोन्मादसमन्विताः॥
शुक्रगाया मसूर्य्यास्तु लक्षणानि भवन्ति हि ।
निर्द्दिष्टं केवलं चिह्नं जीवनन्तु न दृश्यते ॥'
पक्वाभाः पक्वाकाराः न तु पक्वाः । श्लक्ष्णाः
कोमलाः । निर्द्दिष्टं केवलं चिह्नं नत्वस्या-
श्चिकित्सा युक्ता यतो जीवनं न दृश्यते ।
सप्ताप्येता दोषहेतुं विना न भवन्ति । दोष-
मन्तरेण रसादिदुष्टेरभावादित्यत आह ।
'दोषमिश्रास्तु सप्तैता द्रष्टव्या दोषलक्षणैः ॥'
चर्म्मजामाह ।
कण्ठरोधारुची तन्द्रा प्रलापारतिसंयुताः ।
दुश्चिकित्साः समुद्दिष्टाः पिडकाश्चर्म्मसंज्ञिताः ॥'
रोमान्तिकामाह ।
'रोमकूपोन्नतिसमा रागिण्यः कफपित्तजाः ।
कासारोचकसंयुक्ता रोमाञ्चज्वरपूर्ब्बिकाः ॥'
साध्याः प्राह ।
'त्वगन्ता रक्तगाश्चैव पित्तजाः श्लेष्मजास्तथा ।
श्लेष्मपित्तकृताश्चैव सुखसाध्या मसूरिकाः ।
इमा विनापि क्रियया प्रशाम्यन्ति शरी-
रिणाम् ॥'
त्वग्गता रसगताः ॥ * ॥ कष्टसाध्यतमाः प्राह ।
'वातजा वातपित्तोत्था वातश्लेष्मकृताश्च याः ।
कष्टसाध्यतमास्तास्तु यत्नादेता उपाचरेत् ॥'
असाध्याः प्राह ।
'असाध्याः सन्निपातोत्थास्तासां वक्ष्यामि लक्षणम् ।
प्रबालसदृशाः काश्चित् काश्चिज्जम्बुफलोपमा।
लोहजालसमाः काश्चिदतसीफलसन्निभाः ॥
दुश्चिकित्सः कष्टसाध्यः । दुःशब्दोऽत्र निषेधे
तेनासाध्य इत्येके ।
'काश्चिद्विनापि यत्नेन सिध्यन्त्याशु मसूरिकाः ।
दृष्टाः कृच्छ्रतराः काश्चित् काश्चित् सिध्यन्ति
वा नवा ॥
काश्चिन्नैव तु सिध्यन्ति साध्यमानाः प्रयत्नतः ॥'
अथ मसूरिकायाश्चिकित्सा।
'मसूरिकायां कुष्ठोक्ता लेपनादिक्रिया हिता ।
पित्तश्लेष्मविसर्पोक्तक्रिया चात्र प्रशस्यते ॥
श्वेतचन्दनकल्कोक्तं हिलमोचीभवं द्रवम् ।
पिबेन्मसूरिकारम्भे नैव वा केवलं रसम् ॥'
हिलमोचिका शाकविशेषः । हुरहुर इति लोके ।
'द्वे पञ्चमूत्यौ रास्ना च धात्त्रुशीरं दुरालभा ।
सामृतं धान्यकं मुस्तं जयेद्वातमसूरिकाम् ॥
मञ्जिष्ठा बहुपात्प्लक्षशिरीषोडुम्बरत्वचः ।
वातजायां मसूर्य्यां स्यात् प्रलेपः सघृतो हितः ॥'
बहुपाद्वटः ।
'गुडूची मधुकं द्राक्षा मोरटं दाडिमैः सह ।
पाककाले प्रदातव्यं भेषजं गुडसंयुतम् ॥
तेन कुप्यति नो वायुः पाकं यान्ति मसूरिकाः ।
मसूरिकासु भुञ्जीत शालीन् मुद्गान् मसूर-
कान् ॥
रसं मधुरमेवाद्यात् सैन्धवञ्चाल्पमात्रकम्।
पटोलमूलं क्वथितं मोरटं सुरसं तथा ॥'
पटोलमूलं क्वथितमित्यत्र पटोलं कथितञ्चैवेति
वा पाठः ।
'आदावेव मसूर्य्यान्तु पित्तजायां प्रयोजयेत् ।
निम्बपर्पटकः पाठा पटोलश्चन्दनद्वयम्॥
उशीरं कटुका धात्री तथा वासा दुरालभा ।
एषां पानं शुभं शीतमुत्तमं शर्करान्वितम् ।
मसूर्य्यां पित्तजायान्तु प्रयोक्तव्यं विजानता ॥
दाहे ज्वरे विसर्पे च व्रणे पित्ताधिकेऽपि च ।
उशीरलोध्रमञ्जिष्ठा प्रलेपाश्चोतने हिताः ।
नश्यन्त्यनेन दृगजाता मसूर्य्यो न भवन्ति च ॥
प्रलेपं चक्षुषोर्द्दद्याद्वहुवारस्य बल्कलैः ।
पञ्चबल्कलचूर्णेन क्लेदिनीमवधूनयेत् ।
भस्मना केचिदिच्छन्ति केचिद्गोमयरेणुना ॥
सुषवीपत्रनिर्यासं हरिद्राचूर्णसंयुतम् ।
रोमजज्वरसंयुक्तव्रणानां शान्तये पिबेत् ॥'
निर्यासं द्रवम् ॥ * ॥ अथ मसूरिकाभेदस्य शीतलाया अधिकारः । तत्र शीतलाया रूप-
माह ।
'देव्या शीतलयाक्रान्ता मसूर्य्येव हि शीतला ।
ज्वर एव तथा भूताधिष्ठितो विषमज्वरः ।
सा च सप्तविधा ख्याता तासां भेदान् प्रचक्षते ॥
ज्वरपूर्ब्बा बृहत्स्फोटैः शीतला बृहती भवेत् ।
सप्ताहान्निःसरत्येषा सप्ताहात् पूर्णतां व्रजेत् ॥
ततस्तृतीये सप्ताहे शुष्यति स्खलति स्वयम् ।
तासां मध्ये यदा काचित् पाकं गत्वा स्फुटं स्रवेत् ॥
तत्रावधूननं कुर्य्याद्वनगोमयभस्मना ।
निम्बसत्पत्रशाखाभिर्म्मक्षिकामपसारयेत् ॥
जलञ्च शीतलं दद्यात् ज्वरेऽपि न तु दापयेत् ।
स्थापयेत्तं स्थले पूते रम्ये रहसि शीतले ॥
नाशुचिः संस्पृशेत्तन्तु न च तस्यान्तिकं व्रजेत् ।
बहवो भिषजो नात्र भेषजं योजयन्ति हि ॥
केचित् प्रयोजयन्त्येव मतन्तेषामथ ब्रुवे ॥ * ॥
ये शीतलेन सलिलेन विपिष्य सम्यक्
चिञ्चाजबीजसहितां रजनीं पिबन्ति ।
तेषां भवन्ति न कदाचिदपीह देहे
पीडाकरा जगति शीतलिका विकाराः ॥
मोचारसेन सहितं सितचन्दनेन
वासारसेन मधुकं मधुकेन वाथ ।

आसां बहुविधा वर्णा जायन्ते दोषभेदतः ॥’
प्रबालसदृशा इत्यादि । आसां
प्रबालजम्बुफल-
लोहगुटिकातसीफलसादृश्यंवर्णेन । अनुक्त-
वर्णसंग्रहार्थमाह । आसां बहुविधा वर्णा
इति ॥ * ॥ अपराश्चासाध्याः प्राह ।
‘कासो हिक्का प्रमोहश्च ज्वरस्तीव्रः
सुदारुणः ।
प्रलापारतिमूर्च्छाश्च तृष्णा दाहोऽतिघूर्णता
॥’
दाहस्थाने दौर्गन्ध्य इति च पाठः ।
‘मुखेन प्रस्रवेद्रक्तं तथा घ्राणेन चक्षुषा ।
कण्ठे घुर्घुरकं कृत्वा श्वसित्यत्यर्थदारुणम् ॥
मसूरिकाभिभूतस्य यस्यैतानि भिषग्वरैः ।
लक्षणानीह दृश्यन्ते न दद्यात्तत्र भेषजम् ॥’
मसूरिकास्वरिष्टमाह ।
‘मसूरिकाभिभूतो यो भृशं घ्राणेन निश्वसेत् ।
स भृशं त्यजति प्राणान् तृष्णार्त्तो वायुदूषितः
॥’
वायुदूषितः अपतानकादिवातव्याधिदूषितः ॥
मसूरिकाहैतुकं शोथविशेषमाह ।
‘मसूरिकान्ते शोथः स्यात् कूर्परे मणिबन्धके
।
तथांसफलके वापि दुश्चिकित्सः सुदारुणः
॥’

मसूर्य्यो रक्तजा नाशं यान्ति शोणितमोक्षणैः
॥
वासामुस्तकभूनिम्बत्रिफलेन्द्रयवासकम् ।
पटोलारिष्टकं वापि क्वाथयित्वा समाक्षिकम्
।
पिबेत्तेन प्रशाम्यन्ति मसूर्य्यः कफसम्भवाः
॥’
इन्द्रः इन्द्रयवः ॥ * ॥
‘शिरीषोडम्बरत्वग्भ्यां खदिरारिष्टजैर्जलैः ।
कफोत्थासु मसूरीषु लेपः पित्तोत्थितासु च
॥’ * ॥
निम्बपर्पटकः पाठा पटोलः कटुरोहिणी ।
चन्दने द्वे उशीरञ्च धात्री वासा दुरालभा ॥
एष निम्बादिकः क्वाथः पीतः शर्करयान्वितः
।
मसूरीं सर्व्वजां हन्ति ज्वरवीसर्पसंयुताम् ॥
* ॥
उत्थिता प्रविशेद् या च तां पुनर्बाह्यतो
नयेत् ।
काञ्चनारस्त्वचः क्वाथस्ताप्यचूर्णावचूर्णितः
॥’
ताप्यं सुवर्णमाक्षिकम् ।
‘धात्रीफलं समधुकं क्वथितं मधुसंयुतम् ।
मुखे कण्ठे व्रणे जाते गण्डूषार्थं प्रशस्यते ॥ *
॥
अक्ष्णोः सेकं प्रशंसन्ति गवेधुमधुकाम्बुना ।
गवेधुर्गवेधुका । गवडुया इति लोके ।
मधुकं त्रिफला मूर्व्वा दार्व्वी त्वक्
नीलमुत्पलम् ।

आदौ पिबन्ति सुमनाःस्वरसेन मिश्रं
ते नाप्नुवन्ति भुवि शीतलिकाविकारान् ॥’
मोचारसेन कदलीस्तम्भजलेन । मधुकेन
वाथ
अथवा मधुना । आदौ पूर्ब्बरूपे ज्वरागमन-
मात्रे । सुमनाःस्वरसेन जातीपत्ररसेन ।
‘शीतलासु क्रिया कार्य्या शीतला रक्षया सह
।
बध्नीयान्निम्बपत्राणि परितो भवनान्तरे ॥
कदाचिदपि नो कार्य्यमुच्छिष्टस्य प्रवेशनम् ।
स्फोटेष्वधिकदाहेषु रक्षारेणूत्करो हितः ॥
तेन ते शोषमायान्ति प्रपाकं न भजन्ति च ।
रक्षारेणूत्करः शुष्कगोमयभस्मचूर्णतः ॥
चन्दनं वासको मुस्तं गुडूची द्राक्षया सह ।
एषां शीतकषायस्तु शीतलाज्वरनाशनः ॥’
शीतकषायो हिमः ।
‘जपहोमोपहारैश्च दानस्वस्त्ययनार्च्चनैः ।
विप्रगोशम्भगौरीणां पूजनैस्तां समं नयेत् ॥
स्तोत्रञ्च शीतलादेव्याः पठेत्
शीतलिनोऽन्तिके ।
ब्राह्मणः श्रद्धया युक्तस्तेन शाम्यति शीतला
॥
स्कन्द उवाच ।
भगवन् ! देवदेवेश ! शीतलायाः स्तवं शुभम्
।
वक्तुमर्हस्यशेषेण विस्फोटकभयापहम् ॥

ईश्वर उवाच ।
नमामि शीतलां देवीं रासभस्थां
दिगम्बरीम् ।
मार्जनीकलसोपेतां
सूर्पालङ्कृतमस्तकाम् ॥
वन्देहं शीतलां देवीं सर्व्वरोगभयापहाम्
।
यामासाद्य निवर्त्तेत विस्फोटकभयं
महत् ॥
शीतले शीतले चेति यो
ब्रूयाद्दाहपीडितः ।
विस्फोटकभयं घोरं क्षिप्रं तस्य
प्रणश्यति ॥
यस्त्वामुदकमध्य तु धृत्वा संपूजयेन्नरः
।
विस्फोटकभयं घोरं कुले तस्य न
जायते ॥
शीतले ज्वरदग्धस्य पूतिगन्धगतस्य च
।
प्रनष्टचक्षुषः पुंसस्त्वामाहु र्जीवनौषधम्
॥
शीतले तनुजान् रोगान् नृणां हरसि
दुस्तरान् ।
विस्फोटकविशीर्णानां
त्वमेकामृतवर्षिणी ॥
गलगण्डग्रहा रोगा ये चान्ये दारुणा
नृणाम् ।
त्वदनुध्यानमात्रेण शीतले यान्ति ते
क्षयम् ॥
न मन्त्रो नौषधं किञ्चित् पापरोगस्य
विद्यते ।
त्वमेका शीतले ! त्रात्री नान्यां पश्यामि
देव-
ताम् ॥
मृणालतन्तुसदृशीं
नाभिहृन्मध्यसंस्थिताम् ।
यस्त्वां विचिन्तयेद्देवों तस्य मृत्युर्न
जायते ॥
अष्टकं शीतलादेव्या यः पठेन्मानवः
सदा ।

**मस्करः**, पुं, (मस्कते गच्छत्यनेनेति । मस्क +
बाहुलकादरः । यद्वा, मकर +
"मस्करमस्क-
रिणौ वेणुपरिव्राजकयोः ।" ६ । १ । १५४
। इति
सुट् निपात्यते । इति काशिका ।) वंशः ।
इत्य-
मरः । २ । ४ । १६१ ॥ रन्ध्रवंशः । इति
राज-
निर्घण्टः ॥

**मस्करी**, [न्] पुं, (मस्कते इतस्ततो गच्छत्यनेनेति ।
मस्क + बाहुलकादरः । मस्करो दण्डः
सोऽ-
स्त्यस्येति । मस्कर + इनिः । यद्वा, मा
कर्त्तुं
कर्म्म निषेद्धुं शीलमस्य ।
"मस्करमस्करिणौ
वेणुपरिव्राजकयोः ।" ६ । १ । १५४ । इति
इनिर्निपात्यते ।) भिक्षुः । इत्यमरः । २ । ७
।
४७ ॥ (यथा, भट्टिकाव्ये । ५ । ६३ ।
"अधीयन्नात्मविद्विद्यां धारयन् मस्करिव्रतम्
।
वदन् बह्वङ्गुलिस्फोटं भ्रूक्षेपञ्च विलोकयन्
॥")
चन्द्रः । इति शब्दचन्द्रिका ॥

**मस्ज**, ओ श टु औ स्नाने । इति कविकल्प-
द्रुमः ॥ (तुदा०-पर०-अक०-अनिट् ।)
दन्त्य-
मध्यः क्विपि संयोगादिलोपे मक् । ओ,
मग्नः ।
श, मज्जती मज्जन्ती । टु, मज्जथुः ।
अमाङ्क्षीत् ।
स्नायतेऽनेनेति स्नानमिह जलान्तःप्रवेशः ।
मज्जति प्रस्तरो जले । इति दुर्गादासः ॥

**मस्तं**, क्ली, (मस्यते परिमीयते । मस् परिमाणे +
क्तः ।) मस्तकम् । इति द्विरूपकोषः ॥
(यथा,
अमरटीकायां मतुष्यवर्गे । ९५ । रघुनाथ

हृदयस्थं दीपकलिकाकारं मूलाधारस्थकुल-
कुण्डलिन्या सह सुसम्नावर्त्मना मूलाधारस्वाधि-
ष्ठानमणिपूरानाहतविशुद्धाज्ञाख्यषट्चक्राणि
भित्वा शिरोऽवस्थिताधोमुखसहस्रदलकमल-
कर्णिकान्तार्गतपरमात्मनि संयोजयेत्यादि तन्त्र-
सारः ॥ तथा च ।
"सुसुम्नावर्त्मना सोऽहमिति मन्त्रेण योजयेत् ।
सहस्रारे शिरःस्थाने परमात्मनि देशिकः ॥"
इति गौतमीयतन्त्रम् ॥

**मस्तकस्नेहः**, पुं, (मस्तकस्य स्नेहः ।) शिरो-
मज्जा । यथा, --
"गोदन्तु मस्तकस्नेहो मस्तिष्को मस्तुलुङ्गकः ॥"
इति हेमचन्द्रः । ३ । २८९ ॥

**मस्तकाख्यः**, पुं, (मस्तकमिति आख्या यस्य ।)
वृक्षशिरः । इति शब्दत्तन्द्रिका ॥

**मस्तदारु**, क्ली, (मस्तं मस्तकमिव उच्चं दारु ।)
देवदारु । इति भावप्रकाशः ॥

**मस्तमूलकं**, क्ली, (मूलमेव मूलकं स्वार्थे कन् ।
मस्तस्य मूलकम् ।) शिरोऽधः । इति शब्द-
चन्द्रिका । घाड़ इति भाषा ॥

**मस्तिष्कं**, क्ली, (मस्तं मस्तकं इष्यति स्वाधार-
त्वेन प्राप्नोतीति । इष गतौ + कः । पृषोदरा-
दित्वात् साधुः ।) मस्तकभवघृताकारस्नेहः ।
मगज इति पारस्यभाषा ॥ तत्पर्य्यायः । गोर्द्दम्
२ । इत्यमरः । ३ । ६ । ६५ ॥ गोदम् ३ मस्तक-
स्नेहः ४ मस्तुलुङ्गकः ५ । इति हेमचन्द्रः ।
३ । २८९ ॥ (यथा, ऋग्वेदे । १० । १६३ । १ ।
"यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वाया विवृहामि
ते ॥")

**मस्तु**, क्ली, (मस्यति परिणमतीति । मस् +
"सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ।"
उणा० १ । ७० । इति तुन् ।) दधिभव-
मण्डम् । दधिर मात् इति भाषा ॥ इत्यमरः
२ । ९ । ९४ ॥ दधिजलम् । द्विगुणवारियुतं
दधि । अस्य गुणाः ।
"उष्णाम्लं रुचिपित्तदं श्रमहरं बल्यं कषायं सरं
भुक्तिच्छन्दकरं तृषोदरगदप्लीहार्शसां नाश-

विस्फोटकभयं घोरं कुले तस्य न जायते ॥
श्रोतव्यं पठितव्यञ्च नरैर्भक्तिसमन्वितैः ।
उपसर्गविनाशाय परं स्वस्त्ययनं महत् ॥
शीतलाष्टकमेतद्धि न देयं यस्य कस्यचित् ।
दातव्यं हि सदा तस्मै भक्तिश्रद्धान्वितो हि
यः ॥'
इति श्रीस्कन्दपुराणे काशीखण्डे शीतलाष्टक-
स्तोत्रं समाप्तम् ॥" इति भावप्रकाशे मध्यखण्डे
चतुर्थो भागः ॥

**मसूरिका**, स्त्री, मशहरी । मशारि इति भाषा ।

यथा --
"दंशांश्च मशकांश्चैव वर्षाकाले निवारयेत् ।
मसूरिकाभिः प्रावृत्य मञ्चशायिनमच्युतम् ॥"
इति पाद्मे क्रियायोगसारे १२ अध्यायः ॥

**मसूरी**, स्त्री, (मसूर + स्त्रियां ङीष् ।) पाप-

रोगः । इति मेदिनी । रे, २०१ ॥ स तु वसन्त-
रोग इति प्रसिद्धः । त्रिवृत् । रक्तत्रिवृत् ।
इति राजनिर्घण्टः ॥

**मसृणं**, त्रि, (समृणोति दीप्यते इति । ऋणु दीप्तौ

+ इगुपधेति कः । पृषोदरादित्वात् साधुः ।)
अकर्कशम् । स्निग्धम् । इति मेदिनी । णे, ७० ॥
(यथा, रघुवंशटीकारम्भे मल्लिनाथः ।
"करुणामसृणैः कटाक्षपातैः
कुरु मामम्ब ! कृतार्थसार्थवाहम् ॥")

**मसृणा**, स्त्री, (मसृण + स्त्रियां टाप् ।) उमा ।

चक्रवर्त्तिधृतश्लोकः ॥
"दण्डकमण्डलुमण्डितहस्तः
सुललिततिलकविभूषितमस्तः ॥")

**मस्तकः**, पुं, क्ली, (मस्यते परिमीयते । मस्

+ "इष्यशिभ्यां तकन् ।" उणा ० ३ । १४८ ।
इत्यत्र । "बाहुलकात् मस्यतेरपि तकन् ।"
इत्युज्ज्वलदत्तोक्त्या तकन् ।) प्रधानाङ्गम् । माथा
इति भाषा ॥ (यथा, मार्कण्डेयपुराणे । १४ ।
७८ ।
"बिभ्रत् क्लेशमवाप्नोति सोऽप्येवं शिरसा शिलाम् ।
क्षुत्क्षामोऽहर्निशं भारपीडाव्यथित-
मस्तकः ॥")
तत्पर्य्यायः । उत्तमाङ्गम् २ शिरः ३ शीर्षम् ४
मूर्द्धा ५ । इत्यमरः । २ । ६ । ९४ ॥ मुण्डम् ६
शिरम् ७ । इति शब्दरत्नावली ॥ वराङ्गम् ८ ।
इति जटाधरः ॥ कम् ९ पुण्ड्रम् १० मौलिः ११
कपालम् १२ केशभूः १३ । इति राज-
निर्घण्टः ॥ (मस्तम् १४ । इति द्विरूपकोषः ।)
तस्य शुभाशुभलक्षणं यथा, --
"छत्राकारैः शिरोभिस्तु नृपा निम्नशिरा धनी ।
चिपिटैश्च पितुर्मृत्युर्गवाढ्याः परिमण्डलैः ॥
घटमूर्द्धा पापरुचिर्धनाद्यैः परिवर्ज्जितः ॥"
इति गारुडे ६६ अध्यायः ॥
मस्तके अधोमुखसहस्रदलकमलमस्तितत्
कर्णिकायां परमात्मा तिष्ठति । यथा । स्वाङ्के
उत्तानौ करौ कृत्वा सोऽहमिति जीवात्मानं

नम् ।
श्रोतःशुद्धिकरं कफानिलहरं विष्टम्भशूलापहं
पाण्डुश्वासविकारगुल्मशमनं मस्तु प्रशस्तं लघु ॥"
इति राजनिर्घण्टः ॥
अपि च ।
"मस्तु क्लमहरं स्वल्पं लघु भुक्ताभिलाषकृत् ।
श्रोतोविशोधनं ह्लादि कफतृष्णाविलापहम् ॥
अवृष्यं प्रीणनं शीघ्रं भिनत्ति मलसंग्रहम् ॥"
इति भावप्रकाशः ॥

**मस्तुलुङ्गः**, पुं, (मस्तु इव लिङ्गं सादृश्यमस्य ।

पृषोदरादित्वात् इकारस्य उकारः ।) मस्ति-
ष्कम् । इति त्रिकाण्डशेषः ॥ (यथा, सुश्रुते
सूत्रस्थाने २३ अध्याये । "भिन्ने वा शिरःकपाले
यत्र मस्तुलुङ्गदर्शनं त्रिदोषलिङ्गप्रादुर्भावः
कासश्वासौ वा यस्येति ॥")

| | | |
|---|---|---|
| इति मेदिनी । णे, ७० । मसीना इति भाषा ॥<br>**मस्क**, ङ गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-<br>आत्म०-सक०-सेट् ।) दन्त्यमध्य इति दुर्ग-<br>सिंहः । क्विपि संयोगादेर्लोपे मक् । मूद्दर्ध्वन्य-<br>मध्य इत्येके । क्विपि संयोगान्तलोपे मट् । ङ,<br>मस्कते । इति दुर्गादासः ॥ | | |

**मस्तुलुङ्गकः**, पुं, (मस्तुलुङ्ग + स्वार्थे कन् ।) मस्तिष्कम् । इति हेमचन्द्रः । ३ । २८९ ॥

**मह**, पूजे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) महति । इति दुर्गादासः ॥

**मह**, इ क त्विषि । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-अक०-सेट् ।) इ क, मंहयति । त्विषि दीप्तौ । इति दुर्गादासः ॥

**मह**, इ ङ वृद्धौ । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-सेट् ।) इ, मंह्यते । ङ, मंहते । इति दुर्गादासः ॥

**मह**, त् क पूजे । इति कविकल्पद्रुमः ॥ (अदन्त चुरा०-पर०-सक०-सेट् ।) महयति । इति दुर्गादासः ॥

**महः**, पुं, (मह्यते पूज्यतेऽस्मिन्निति । मह + "पुंसि संज्ञायां घः प्रायेण ।" ३ । ३ । ११८ । इति घः । मह + अच् इत्युज्ज्वलदत्तः । ४ । १८८ ।) उत्सवः । इत्यमरः । १ । ७ । १८८ ॥ (यथा, माघे । ६ । १९ ।
"न खलु दूरगतोऽप्यतिवर्त्तते महमसाविति बन्धुतयोदितैः ॥"
महते पूज्यते इति ।) तेजः । इति मेदिनी । हे ७ ॥ यज्ञः । इति शब्दरत्नावली ॥ (यथा, हरिवंशे । ७१ । १८ ।
"तस्मात् प्रावृषि राजानः सर्व्वे शक्रं मुदा युताः ।
महैः सुरेशमर्च्चन्ति वयमन्ये च मानवाः ॥")
महिषः । इति हेमचन्द्रः ॥ (त्रि, महत् ।

**महत्**, क्ली, (मह् + अति । निपातितश्च ।) राज्यम् । इति मेदिनी । वे, १४० ॥ (यथा, छान्दोग्योपनिषदि । ५ । २ । ४ ।
"अथ यदि महज्जिगमिषेदमावास्यायां दीक्षिता पौर्णमास्या रात्रौ इत्यादि ॥" ब्रह्म । यथा, महाभारते । ३ । ३१२ । ४४ ।
"श्रुतेन श्रोत्रियो भवति तपसा विन्दते महत् ॥"
उदकम् । इति निघण्टुः । १ । १२ ॥)

**महत्**, त्रि, (मह्यते पूज्यतेऽसौ इति । मह् + "वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्च ।" उणा० २ । ८४ । इति अतिः निपात्यते ।) महान् । महती । वड्रः । इति मेदिनी । ते, १४० ॥ तत्पर्य्यायः । विशङ्कटम् २ पृथु ३ बृहत् ४ विशालम् ५ पृथुलम् ६ वड्रम् ७ उरु ८ । विपुलम् ९ । इत्यमरः । २ । १ । ६० ॥ पुलम् १० विस्तीर्णम् ११ । इति शब्दरत्नावली ॥ (यथा, रघौ । १२ । ४० ।
"तस्मिन् रामशरोत्कृत्ते बले महति रक्षसाम् ॥")
तद्वैदिकपर्य्यायः । ब्रध्नः २ ऋष्वः ३ बृहत् ४ उक्षितः ५ तवसः ६ तविषः ७ महिषः ८ अभ्वः ९ ऋभुक्षाः १० उक्षा ११ विहायाः १२ यह्वः १३ ववक्षिथ १४ विवक्षसे १५ अम्भृणः १६ माहिनः १७ गभीरः १८ ककुहः १९ रभसः २० ब्राधन् २१ विरप्शी २२ अद्भुतम् २३ वंहिष्ठः २४ बर्हिषत् २५ । इति पञ्चविंशतिर्म्महन्नामानि । इति वेदनिघण्टौ ३ अध्यायः ॥ * ॥ (प्रकृतेराद्योविकारः । यथा, सांख्यसूत्रम् । १ । ६१ ।
"सत्त्वरजस्तमसां सामावस्था प्रकृतिः प्रकृतेर्महान् महतोऽहङ्कारः ॥" इति ॥) महच्छब्दस्य शङ्खादिशब्दविशेषाणां पूर्ब्बं प्रयोगनिषेधो यथा, --
"शङ्खे तैले तथा मांसे वैद्ये ज्योतिषिके द्विजे ।
यात्रायां पथि निद्रायां महच्छब्दो न दीयते ॥"
इति भट्टिप्रथमस्वर्गीयचतुर्थश्लोकटीकायां भरतः ॥

**महती**, स्त्री, (महत् + ङीष् ।) वल्लकीभेदः ।

**महतीद्वादशी**, स्त्री, (महतीति ख्याता द्वादशी ।) श्रवणद्वादशी । यथा, --
"मासि भाद्रपदे शुक्ले द्वादशी श्रवणान्विता ।
महती द्वादशी ज्ञेया उपवासे महाफला ॥"
इति गारुडे १४१ अध्यायः ॥

**महत्तत्त्वं**, क्ली, (महच्च तत् तत्त्वञ्चेति ।) चतुर्विंशतितत्त्वान्तर्गतद्वितीयतत्त्वम् । तत्तु प्रकृतेरुत्पन्नम् । समष्टिबुद्धिस्वरूपम् । तत्पर्य्यायः । यथा, --
"महानात्मा मतिर्व्विष्णुर्ज्जिष्णुः शम्भुश्च वीर्य्यवान् ।
बुद्धिः प्रज्ञोपलब्धिश्च तथा ख्यातिर्धृतिः स्मृतिः ।
पर्य्यायवाचकैः शब्दैर्म्महानात्मा विभाव्यते ।
तं जानन् ब्राह्मणो विद्वान् प्रमोहं नाधिगच्छति ॥"
इति महाभारते आश्वमेधिकपर्व्व ॥
अपि च ।
"एका मूर्त्तिस्तयो भागा ब्रह्मविष्णुमहेश्वराः ।
सविकारात् प्रधानात्तु महत्तत्त्वं प्रजायते ॥
महानिति यतः ख्यातिर्लोकानां जायते सदा ।
अहङ्कारश्च महतो जायते मानवर्द्धनः ॥"
इति मात्स्ये २ अध्यायः ॥

**महत्तरः**, पुं, स्त्री, (अयमनयोरतिशयेन महान् । महत् + तरप् ।) शूद्रः । यथा, --
"शूद्रः स्यात् पादजो दासो ग्रामकूटो महत्तरः ।"
इति त्रिकाण्डशेषः ॥
(यथा, कथासरित्सागरे । ५ । ३४ ।
"केनायं रचितोऽत्रेति सोऽपृच्छच्च महत्तरान् ।
ते च न्यवेदयंस्तस्मै कर्त्तारं तिलकस्य माम् ॥")
अतिशयमहति, त्रि ॥ (यथा, महाभारते । ७ । १९९ । ५९ ।
"ददर्श भृशदुर्दशं सर्व्वदेवैरभिष्टुतम् ।
अणीयांसमणुभ्यश्च बृहद्भ्यश्च महत्तरम् ॥")

यथा, ऋग्वेदे । १० । ९१ । ८ ।
"महे वृणते नान्यं त्वत् ॥"
"महे महति ।" इति तद्भाष्ये सायनः ॥)

**महः**, [स्] क्ली, (मह्यते पूज्यतेऽस्मिन्निति ।
मह + "सर्व्वधातुभ्योऽसुन् ।" उणा० ४ । १८८ ।
इति असुन् ।) उत्सवः । (मह्यते पूज्यते इति ।
मह + असुन् ।) तेजः । इति मेदिनी । से, ३० ॥
(यथा, रघुटीकारम्भे मल्लिनाथः ।
"अन्तरायतिमिरोपशान्तये
शान्तपावनमचिन्त्यवैभवम् ।
तं नरं वपुषि कुञ्जरं मुखे
मन्महे किमपि तुन्दिलं महः ॥"
मह्यन्ते पूज्यन्ते देवादयोऽस्मिन्निति । मह +
असुन् ।) यज्ञः । इति शब्दरत्नावली ॥ (उद-
कम् । इति निघण्टुः । १ । १२ ॥
पूज्यमाने, त्रि ।
यथा, वाजसनेयसंहितायाम् । २० । ६ ।
"जिह्वा मे भद्रं वाङ्महो मनो मन्युः स्वरात् भामः ॥"
"वाक् वागिन्द्रियं महः पूज्यमानास्तु ।" इति
तद्भाष्ये महीधरः ॥ महति । यथा, ऋग्वेदे ।
८ । २३ । १६ ।
"महो राये तमुत्वा समिधीमहि ।" "महो
महते राये धनाय ।" इति तद्भाष्ये
सायनः ॥)

**महछः**, पुं, (महः कायति प्रकाशयतीति ।
महस् + कै + कः । पृषोदरादित्वात् साधुः ।)
बहुलामोदः । इति जटाधरः ॥

इति मेदिनी । ते, १४० ॥ नारदवीणा । बृहत्-
प्रमाणा । इत्यमरटीकायां भरतः ॥ (यथा,
शिशुपालवधे । १ । १० ।
"स्फुटीभवद्ग्रामविशेषमूर्च्छना-
मवेक्षमाणं महतीं मुहुर्मुहुः ॥")
बृहती । वार्त्ताकी । इति राजनिर्घण्टः ॥ (कुश-
द्वीपस्थनदीविशेषः । यथा, मात्स्ये । १२१ ।
७४ ।
"महती सप्तमी प्रोक्ता पुनश्चैषा धृतिः स्मृता ।
अन्यास्ताभ्योऽपि सञ्जाता शतशोऽथ सह-
स्रशः ॥"
पारिपात्रनिर्गतनदीविशेषः । यथा, मात्स्ये ।
११३ । २३ -- २४ ।
"वर्णाशा चन्दना चैव कावेरी महती तथा ।
पारा चर्म्मण्वती पुष्पा विदुषा वेणुमत्यपि ।
शिप्रा ह्यवन्ती कुन्ती च पारिपात्राश्रिताः
स्मृताः ॥")

**महत्त्वं**, क्ली, (महत् + त्व ।) महतो भावः ।
यथा, भाषापरिच्छेदे ।
"महत्त्वं षड्विधे हेतुरिन्द्रियं करणं मतम् ॥"
"महत्त्वं षड्विध इति । द्रव्यप्रत्यक्षे महत्त्वं
समवायसम्बन्धेन कारणम् । द्रव्यसमवेतानां
गुणकर्म्मसामान्यानां प्रत्यक्षे स्वाश्रयसमवाय-
सम्बन्धेन । द्रव्यसमवेतसमवेतानां रूपत्वादीनां
प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेन कार-
णम् ।" इति सिद्धान्तमुक्तावली ॥ (श्रेष्ठत्वम् ।
यथा, रामायणे । १ । १ । १०१ ।
"जनश्च शूद्रोऽपि महत्त्वमीयात् ॥"
"महत्त्वं श्रैष्ठ्यम् ।" इति तट्टीका ।)

**महर्लोकः**, पुं, (महश्चासौ लोकश्चेति । कर्म्म-
धारयः ।) भूरादिसप्तलोकान्तर्गतचतुर्थलोकः ।
यथा, --
"भूर्भुवः स्वर्म्महश्चैव जनश्च तप एव च ।
सत्यलोकश्च सप्तैते लोकास्तु परिकीर्त्तिताः ॥
चतुर्मुखदिनस्यान्ते जगदेतच्चराचरम् ॥

तदा हि दह्यते सर्व्वं त्रैलोक्यं भूर्भुवादिकम् ।
जनं प्रयान्ति तापार्त्ता महर्लोकनिवासिनः ॥”
इति वह्निपुराणम् ॥
“चतुर्थे तु महर्लोके तिष्ठन्ते कल्पवासिनः ॥”
इति देवीपुराणम् ॥

**महर्षभी**, स्त्री, (महती चासौ ऋषभी चेति
कर्म्मधारयः ।) कपिकच्छुः । इति
राजनिर्घण्टः ॥

**महर्षिः**, पुं, (महांश्चासौ ऋषिश्चेति ।) व्यासादिः ।
इति त्रिकाण्डशेषः ॥ अस्य व्युत्पत्त्यादिर्यथा,
--
“ऋषिर्हिंसागतो धातुर्व्विद्यासत्यतपःश्रुतैः ।
एष सन्निचयो यस्माद् ब्राह्मणश्च ततस्त्वृषिः
॥
विवृत्तिसमकालन्तु बुद्ध्या व्यक्तिमृषिस्त्वयम्
।
ऋषते परमं यस्मात् परमर्षिस्ततः स्मृतः ॥
गत्यर्थादृषतेर्धातोर्नामनिर्वृतिकारणम् ।
यस्मादेष स्वयम्भूतस्तस्माच्च ऋषिता मता
॥
तेनेश्वराः स्वयम्भूता ब्रह्मणो मानसाः सुताः ।
विवर्द्धमानैस्तैर्बुद्ध्वा महान् परिगतः परः ॥
यस्मादृषिः परत्वेन महांस्तस्मान्महर्षयः ।
ईश्वराणां सुतास्तेषां मानसाश्चौरसाश्च वै ॥
ऋषयस्तत्परत्वेन भूतादिऋषयस्ततः ।
ऋषिपुत्त्रा ऋषीकास्तु मैथुनाद्गर्भसम्भवात्
॥
परत्वेनर्षयस्ते वै भूतादिऋषिकास्ततः ।
ऋषीकाणां सुता ये वै विज्ञेया ऋषिपुत्त्रकाः ॥
श्रुत्वा ऋषं परत्वेन नाम तस्मात् श्रुतर्षयः ।
अव्यक्तात्मा महानात्माहङ्कारात्मा तथैव च ॥
भूतात्मा चेन्द्रियात्मा च तेषान्तु ज्ञानमुच्यते ।
इत्येवमृषिजात्यस्तु पञ्च तान् नामभिः शृणु ॥
भृगुर्म्मरीचिरत्रिश्च अङ्गिराः पुलहः क्रतुः ।
मनुर्द्दक्षो वशिष्ठश्च पुलस्त्यश्चेति ते दश ॥
ब्रह्मणो मानसा ह्येते उत्पन्नाः स्वयमीश्वराः ।
परत्वेनर्षयस्तस्माद्भूतास्तस्मान्महर्षयः ॥”
इति मात्स्ये १२० अध्यायः ॥

**महल्लकः**, पुं, (महतः स्त्रीरक्षादिरूपान् विपु-

**महा**, स्त्री, (मह्यते पूज्यते इति । मह् + घ ।
स्त्रियां टाप् ।) गोपवल्ली । इति शब्दचन्द्रिका
।
गोरक्षचाकुलिया इति भाषा ॥ स्त्रीगवी ।
इति शब्दरत्नावली ॥

**महाकच्छः**, पुं, (महान् विपुलः कच्छो जल-
प्रायदेशोऽस्य ।) समुद्रः । वरुणः । इति
मेदिनी । छे, ६ ॥ पर्व्वतः । इति
शब्दरत्नावली ॥

**महाकण्टकिनी**, स्त्री, (महती चासौ कण्टकिनी
चेति ।) विश्वसारकम् । इति शब्दचन्द्रिका ।
फणिमनसा इति भाषा ॥

**महाकन्दः**, पुं, (महांश्चासौ कन्दश्चेति ।)
रसोनकः । इत्यमरः । २ । ४ । १४८ ॥
मूल-
कम् । इति शब्दरत्नावली ॥ चाणक्यमूलकम्
।
रक्तलशुनम् । राजपलाण्डः । इति राज-
निर्घण्टः ॥

**महाकपित्थः**, पुं, (महांश्चासौ कपित्थश्चेति ।)
विल्ववृक्षः । इति त्रिकाण्डशेषः ॥

**महाकरञ्जः**, पुं, (महांश्चासौ करञ्जश्चेति ।)
करञ्जविशेषः । वड करञ्जा इति भाषा ॥ तत्
पर्य्यायः । षड्ग्रन्था २ हस्तिचारिणी ३ उद-
कीर्णः ४ विषघ्नी ५ काकघ्नी ६
मदहस्तिनी ७
शारङ्गेष्टा ८ मधुमती ९ रसायनी १० हस्ति-
रोहणकः ११ हस्तिकरञ्जकः १२ सुमनाः
१३
काकभाण्डी १४ मधुमत्ता १५ । अस्य गुणाः
।
तीक्ष्णत्वम् । उष्णत्वम् । कटुत्वम् ।
विषकण्डू-
विचर्च्चिकाकुष्ठत्वग्दोषव्रणनाशित्वञ्च । इति
राजनिर्घण्टः ॥

**महाकर्णिकारः**, पुं, (महांश्चासौ कर्णिकारश्चेति ।)
आरग्वधः । इति राजनिर्घण्टः ॥

“कलनात् सर्व्वभूतानां महाकालः
प्रकीर्त्तितः ।
महाकालस्य कलनात् त्वमाद्या कालिका
परा ॥”)
प्रमथगणविशेषः । इति मेदिनी । ले, १५९
॥
(उज्जयिनीस्थशिवलिङ्गविशेषः । यथा,
कथा-
सरित्सागरे । ११ । ३१ -- ३२ ।
“अस्तीहोज्जयिनी नाम नगरी भूषणं भुवः
।
हसन्तीव मुधाधौतैः प्रासादैरमरावतीम् ॥
यस्यां वसति विश्वेशो महाकालवपुः
स्वयम् ।
शिथिलीकृतकैलासनिवासव्यसनो हरः ॥”
तीर्थविशेषः । यथा, महाभारते । ३ । ८२ ।
४७ ।
“महाकालं ततो गच्छेत् नियतो
नियताशनः ।
कोटितीर्थमुपस्पृश्य हयमेधफलं लभेत्
॥”)
लताविशेषः । माकाल इति भाषा ॥ तत्-
पर्य्यायः । उरुकालः २ किम्पाकः ३
काक-
मर्द्दकः ४ । इति रत्नमाला ॥ काकमर्द्दः ५
देवदालिका ६ दाला ७ दालिका ८ जलङ्गः
९
घोषकाकृतिः १० । इति राजनिर्घण्टः ॥
(यथा,
“अन्तर्मलिनदेहेन बहिराह्लादकारिणा ।
महाकालफलेनेव कः खलेन न वञ्चितः ॥”
इत्युद्भटः ॥)
शिवपुत्त्रविशेषः । तस्य जन्मवृत्तान्तं यथा,
--
श्रीदेवा ऊचुः ।
“एष वैश्वानरः श्रीमान् भूरितेजोमयो बली
।
महामैथुनबीजन्तु त्वत्तेजः संग्रहीष्यति ॥
इत्युक्त्वा त्रिदशाः सर्व्वे वीतिहोत्रं
पुरःस्थितम् ।
तस्मै निदेशयामासुः सम्भवे सर्व्वहेतवे ॥

लान् भारानित्यर्थः लाति गृह्णातीति । ला +
"आतोऽनुपसर्गे कः ।" ३ । २ । ३ । इति
कः । ततः स्वार्थे कन् । यद्वा, महान्तं चरित्र-
गुणं लकति आस्वादयतीति । लक् आस्वादने
+
अच् ।) अन्तःपुररक्षकः । तत्पर्य्यायः । सौवि-
दल्लः २ कञ्चुकी ३ स्थापत्यः ४ सौविदः ५
विदाङ्कः
६ । इति जटाधरः ॥ सौविदल्लकः ७ अन्त-
र्वंशिकः ८ । इति शब्दरत्नावली ॥

**महल्लिकः**, पुं, (महान्त चरित्रगुणं लिखतीवेति ।
महत् + लिख + कः । पृषोदरादित्वात् साधुः
।)
अन्तःपुररक्षकः । खोजा इति भाषा ॥ तस्य
लक्षणं यथा, --
"मुष्कशून्योऽनुपस्थो यः स्त्रीस्वभावो मह-
ल्लिकः ॥"
इति शब्दमाला ॥

**महसं**, क्ली, (मह्यते पूज्यतेऽनेनेति । मह +
"अत्यविचमितमिनमीति ।" उणा० ३ ।
११७ ।
इति असच् ।) ज्ञानम् । प्रकारः । इत्युणादि-
कोषः ॥

**महाकायः**, पुं, (महान् कायोऽस्य ।) नन्दी ।
स च शिवद्वारपालः । इति त्रिकाण्डशेषः ॥
(यथा, महाभारते । १३ । १५० । २४ ।
"नन्दीश्वरो महाकायो ग्रामणीर्वृषभध्वजः
॥")
हस्ती । इति केचित् ॥ (महान् कायः शरीर-
मिति ।) बृहत् शरीरम् ॥ तद्वति, त्रि ॥ (यथा,
महाभारते । १ । १५६ । ३२ ।
"महाजवं महाकायं महामायमरिन्दमम् ॥"
स्त्रियां टाप् । कुमारानुचरमातृगणविशेषः ।
यथा, महाभारते । ९ । ४६ । २४ ।
"रोहिताक्षी महाकाया हरिपिण्डा च
भूमिप ! ॥")

**महाकार्त्तिकी**, स्त्री, (महती चासौ कार्त्तिकी
चेति ।) रोहिणीनक्षत्रयुक्ता कार्त्तिकी-
पूर्णिमा । यथा, --
"प्राजापत्यं यदा ऋक्षं तथैतस्यां नराधिप ! ।
सा महाकार्त्तिकी प्रोक्ता देवानामपि दुर्लभा
॥"
इति पाद्मे २ खण्डे ३ अध्यायः ॥

**महाकालः**, पुं, (महांश्चासौ कालश्चेति ।) विष्णु-
स्वरूपाखण्डदण्डायमानसमयः । यथा ।
कालो
घटवान् महाकालत्वात् । इति सिद्धान्त-
लक्षणम् ॥ महादेवः । (तन्निरुक्तिर्यथा महा-
निर्व्वाणतन्त्रे । ४ । ३१ ।

ततः षडङ्गं स्वं रेतो वादिते दहनानने ।
उत्ससर्ज्ज महाबाहुर्महामैथुनकारणम् ॥
अग्नावुत्सृज्यमानस्य तेजसः शशभृद्भृतः ।
अणुद्वयमतिस्वल्पं गिरिप्रस्थे पपात ह ॥
तयोः कारणयोः सद्यः संभूतौ शङ्करात्मजौ
।
एको भृङ्गसमः कृष्णो भिन्नाञ्जननिभोऽपरः
॥
भृङ्गी तस्य तदा ब्रह्मा नाम भृङ्गीति
चाकरोत् ।
महाकृष्णैकरूपस्य महाकालेति लोकभृत्
॥
ततस्तौ पालयामास शङ्करः प्रमथोत्करैः ।
अपर्णया चापि तथा क्रमात्तावभिवर्द्धितौ ॥
प्रवृद्धौ तौ महात्मानौ हरोमाप्रतिपालितौ ।
क्रमाद्गणेशौ कृत्वा तौ हरो द्वारि न्ययो-
जयत् ॥"
इति कालिकापुराणे ४५ अध्यायः ॥
तस्य वानरमुखकारणं जन्मान्तरञ्च यथा, -
-
"अथैकदोमया सार्द्धं निगूढे रतिमन्दिरे ।
नर्म्माकरोन्महाद्वेवो मोदयुक्तो रतिप्रियः ॥
यदा सा नर्म्मणे याता गौरी स्मरहरान्तिकम्
।
तदा भृङ्गिमहाकालौ द्वास्थौ द्वारि प्रतिष्ठितौ
॥
नर्म्मावसाने सा देवी मुक्तधम्मिल्लबन्धना ।
ग्रन्थिहीनगलद्गात्रा वस्त्रमालम्ब्य पाणिना
॥
व्यस्तहारा गन्धपुष्पैराकुलैर्नातिशोभना ।
विलुप्तकुङ्कुमा दष्टदशनच्छदविभ्रमा ॥
निःसृता रतिसङ्केतशालाया जलजानना ।
ईशदाघूर्णनयना निचिता स्वेदबिन्दुभिः ॥

तां निःसरन्तीं सहसा
तथाभूतामनिन्दिताम्।
अयोग्यां वीक्षितुं चान्यैर्वृषध्वजमृते
प्रियम् ॥
ददृशतुर्महात्मानौ नातिहृष्टात्ममानसौ
।
भृङ्गी चापि महाकालः प्राप्तकालश्च
कोपतः ॥
दृष्ट्वा तौ मातरं दीनौ तदा
भूतावधोमुखौ ।
चिन्ताञ्चाजग्मतुस्तीव्रां
निशश्वसतुरुत्तमम्॥
तौ पश्यन्तां तदा देवी ददर्श
हिमवत्सुता ।
चुकोप च तदापर्णा वाक्यञ्चैतदुवाच ह
॥
एवंभूतान्तु मां
कस्मादसम्बद्धामपश्यताम्।
भवन्तौ तनयौ शुद्धौ
ह्रीमर्य्यादाविवर्ज्जितौ ॥
तस्मादिमाममर्य्यादां भवन्तौ निरपत्रपौ
।
अकुर्व्वातां ततो भूयाद्भवतोर्जन्म मानुषे
॥
मानुषीं योनिमासाद्य मातुरीक्षणदोषतः
।
भविष्यतो भवन्तौ तु शाखामृगमुखौ
भुवि ॥
इति तावुमया शप्तौ हरपुत्त्रौ महामती
॥"
"अथोमया समं देवो वियता
चन्द्रशेखरः ।
आजगाम तदा गच्छन् प्रासादं प्रति तं
नृप ! ॥
ददृशेऽथ चरन्तीं तामुमायाः सदृशीं
गुणैः ।
सर्व्वलक्षणसम्पूर्णां माधवस्येव
माधवीम् ॥
तां दृष्ट्वा न्यगदद्देवीं गौरीं वृषभकेतनः
।

अन्धकं तपसा युक्तं भृङ्गिणञ्चाकरोद्धरः ॥
अन्धकस्तु हरं पूर्ब्बं विरुध्यापदमागतः ।
पश्चाद्धरं समाराध्य पुत्त्रोऽभूत्तस्य सोऽसुरः ॥
भृङ्गिस्नेहाद्भृङ्गिणं तं सं ज्ञया चाकरोद्धरः ।
स्नेहेन तु महाकालं बाणं वलिसुतं हरः ॥
विष्णुना च्छिन्नबाहुं तं महाकालमथाकरोत्।
एवं मुनिवरास्तेषां संजातञ्च चतुष्टयम् ॥
वेतालो भैरवो भृङ्गी महाकालेत्यनुक्रमात् ॥"
इति कालिकापुराणे ८५ अध्यायः ॥ * ॥
तस्य ध्यानादि यथा, --
"महाकालं यजेद्देव्या दक्षिणे धूम्रवर्णकम् ।
बिभ्रतं दण्डखट्टाङ्गौ दंष्ट्राभीममुखं शिशुम् ॥
व्याघ्रचर्म्मावृतकटिं तुन्दिलं रक्तवाससम् ।
त्रिनेत्रमूर्द्ध्वकेशञ्च मुण्डमालाविभूषितम्॥
जटाभारलसच्चन्द्रखण्डमुग्रंज्वलन्निभम् ॥
तथा च कुमारीकल्पे ।
देव्यास्तु दक्षिणे भागे महाकालं प्रपूजयेत् ।
हुं क्षौं यां रां लां वां क्रों महाकालभैरव
सर्व्वविघ्नान्नाशय नाशय ह्रीं श्रीं फट् स्वाहा ।
इत्यनेन पाद्यादिभिराराध्य त्रिस्तर्पयित्वा
मूलेन
देवीं पञ्चोपचारैः पूजयेत् । तथा च काली-
तन्त्रे ।
महाकालं यजेद्यत्नात् पश्चाद्देवीं प्रपूजयेत् ।
कालीकल्पे ।
कवचं क्षौं समुद्धृत्य यां रां लां वाञ्च क्रोन्ततः ।
महाकालभैरवेति सर्व्वविघ्नान्नाशयेति च ॥
नाशयेति पुनः प्रोच्य मायां लक्ष्मीं समुद्धरेत् ।
फट् स्वाहया समायुक्तो मन्त्रः सर्व्वार्थसाधकः
॥"
इति तन्त्रसारः ॥

**महाकाली**, स्त्री, (महाकाल + पत्न्यर्थे ङीष् ।)
महाकालस्य पत्नी । सा तु पञ्चवक्त्वाष्टभुज-
कालीविशेषः । इति तन्त्रम् ॥ (इयमेव
पराशक्ते-
स्तामसी शक्तिः । यथा, देवीभागवते । १ । २
। २० ।
"तस्यास्तु सात्त्विकी शक्ती राजसी तामसी
तथा ।
महालक्ष्मीः सरस्वती महाकालीति ताः

पूर्ब्बादीशानपर्य्यन्तं कुम्भस्थाने स्थिता इमाः ॥
तत्र क्रमः । देवीं ध्यात्वा यथाविध्युपचारेण
संपूज्य ब्राह्म्याद्यष्टशक्तीः पूर्ब्बादिक्रमेण पूज-
येत् । तथा ।
नामोच्चारणसंरब्धं वह्नौ प्रज्वलितेऽम्बरे ।
जुहुयाद्वैरिणां शुद्धौ देवीमन्त्रं जपंस्तथा ॥
समिधः पिचुमर्द्दस्य तथा विभीतकाष्ठिकाः ।
गृहधूमश्मशानास्थिविभीताङ्गारहोमतः॥
सप्ताहाद्वैरिणं हन्ति कालिकामन्त्रयोगतः ।
उच्चाटनं चापराह्णे सन्ध्यायां मारणं तथा ॥
दक्षिणस्यां दिशि स्थित्वा ग्रामादेर्द्दक्षिणा-
मुखः ॥"
इति तन्त्रसारः ॥
जिनानां चतुर्विंशतिशासनदेवतान्तर्गतदेवी-
विशेषः । इति हेमचन्द्रः ॥ * ॥

**महाकाव्यं**, क्ली, (महच्च तत्काव्यञ्चेति ।) काव्य-
शास्त्रविशेषः । तत्पर्य्यायः । सर्गबन्धः २ । इति
त्रिकाण्डशेषः ॥ तस्य लक्षणं यथा, --
"सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः ।
सद्वंशः क्षत्त्रियो वापि धीरोदात्तगुणान्वितः ॥
एकवंशभवा भूपाः कुलजा बहवोऽपि वा ।
शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते ॥
अङ्गानि सर्व्वेऽपि रसाः सर्व्वे नाटकसन्धयः ।
इतिहासोद्भवं वृत्तमन्यद्वा सज्जनाश्रयम् ॥
चत्वारस्तत्र वर्गाः स्युस्तेष्वेकञ्च फलं भवेत् ।
आदौ नमस्क्रियाशीर्व्वा वस्तुनिर्द्देश एव वा ॥
क्वचिन्निन्दा खलादीनां सताञ्च गुणकीर्त्तनम् ।
एकवृत्तमयः पद्यैरवसानेऽन्यवृत्तकैः ॥
नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह ।
नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते ॥
सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत् ।
सन्ध्यासूर्य्येन्दुरजनीप्रदोषध्वान्तवासराः ॥
प्रातर्मध्याह्नमृगयाशैलर्त्तुवनसागराः ।
सम्भोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः ॥
रणप्रयाणोपयममन्त्रपुत्त्रोदयादयः।
वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह ॥
कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा ।
नामास्य सर्गोपादेयकथया सर्गनाम तु ॥"
इति साहित्यदर्पणे ६ परिच्छेदः ॥ * ॥
महाकाव्यग्रन्था यथा, कालिदासकृतकुमार-

स्मितप्रसन्नवदनः प्रहसन्निव भाविनीम्
॥
ईश्वर उवाच ।
इयं ते मानुषी मूर्त्तिः प्रिये तारावतीति
या ।
भृङ्गीमहाकालयोस्ते जन्मने विहिता
स्वयम् ॥
त्वत्तो ह्यनन्यकान्तोऽहं नान्यां
गन्तुमिहोत्सहे ।
त्वमिदानीं स्वयं चास्यां मूर्त्यां प्रविश
भाविनि ! ॥
तत उत्पादयिष्यामि महाकालञ्च
भृङ्गिणम् ॥
श्रीदेव्युवाच ।
ममैव मानुषी मूर्त्तिरियं वृषभकेतन ! ।
विशामि तेऽत्र वचनादुत्पादय सुतद्वयम्
॥
प्रविवेश ततो देवी स्वयं तारावतीतनौ
।
महादेवोऽपि तस्यान्तु कामार्थं
समुपस्थितः ॥
ततः सापर्णयाविष्टा देवी तारावती
सती ।
कामयानं महादेवं स्वयमेवाभजन्मुदा ॥
तस्मिन् कालेऽभवद्गर्भः कापाली
चास्थिमाल्य-
धृक् ।
कामावसाने तस्यान्तु सद्यो जातं
सुतद्वयम् ।
अभवन्नृपशार्द्दूल ! तथा
शाखामृगाननम् ॥”
इति कालिकापुराणे ४६ -- ४९
अध्यायाः ॥
बाणासुरस्य महाकालत्वं यथा, --
ऋषय ऊचुः ।
“कथितो भवता सर्गः संशया अपि
शातिताः ।
त्वत्प्रसादान्महाभाग! कृतकृत्या वयं
गुरो ! ॥
भूयश्च श्रोतुमिच्छामो
वयमेतद्द्विजोत्तम ! ।
कोऽन्यो भृङ्गी महाकालो जातौ
वेतालभैरवौ ॥

स्त्रियः ॥”)
अथ महाकालीमन्त्रः ।
“ॐ फ्रें फ्रें क्रों क्रों पशून् गृहाण हूं फट्
स्वाहा । श्मशानभैरवीमन्त्रेण यावत् क्रूर-
कर्म्मणि प्रयोगः कर्त्तव्यः । अथ महाकाली-
मन्त्रप्रयोगः । तत्र न्यासशुद्ध्यादिकं न कर्त्त-
व्यम् । तथा च ।
न्यासशुद्ध्यादिकं किञ्चिन्नात्र कार्य्या
विचारणा ।
कृष्णतोयैश्च संपूर्णे कृष्णकुम्भेऽथ कालिकाम्
॥
पञ्चवक्त्रां महारौद्रीं प्रतिवक्त्रत्रिलोचनाम् ।
शक्तिशूलधनुर्वाणखड्गखेट्वराभयान् ॥
दक्षादक्षभुजैर्देवीं बिभ्राणां भूरिभूषणाम् ।
ध्यात्वैवं साधकः साध्यं साधयेन्मनसेप्सितम्
॥
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही च तथा चैन्द्री चामुण्डा चण्डिका-
ष्टमी ।

सम्भवरघुवंशप्रभृतयः । भर्त्तृहरिकृतभट्टि-
काव्यम् । भारविकृतकिरातार्ज्जुनीयम् । श्रीहर्ष-
कृतनैषधीयचरितम् । माघकृतशिशुपालवध-
श्चेत्यादयः ॥

**महाकुमुदा**, स्त्री, (महती चासौ कुमुदा चेति ।)

काश्मरी । इति राजनिर्घण्टः ॥

**महाकुम्भी**, स्त्री, (महती चासौ कुम्भी चेति ।)

कट्फलः । इति राजनिर्घण्टः ॥

| वेतालञ्च महाकालं भैरवं भृङ्गिणं तथा । श्रृण मे द्विजशार्दूल ! कथमेषां चतुष्टयम् ॥ मार्कण्डेय उवाच । भुवं गते महाकाले मानुयस्थे च भृङ्गिणि । वेतालभैरवाख्ये च तथाभूते द्विजोत्तमाः ॥ वरलब्धे च वेताले भैरवे तेन संगते । | | |
|---|---|---|

**महाकुलः**, त्रि, (महत् कुल वशोऽस्य ।)
उत्तमकुलजातः । तत्पर्य्यायः । कुलीनः
२ आर्य्यः ३
सभ्यः ४ सज्जनः ५ साधुः ६ । इत्यमरः
। २ ।
७ । ३ ॥ कुल्यः ७ अभिजातः ८
कौलेयकः ९
जात्यः १० । इति हेमचन्द्रः । ३ । १६६
॥
महाकुलः ११ कौलेयः १२ कोलेयकः
१३ ।
इत्यमरटीका ॥ कुलजः १४ साधुजः १५
कुल-
श्रेष्ठः १६ । इति शब्दरत्नावली ॥ (यथा,
बृहत्-
संहितायाम् । १७ । ४ ।
"भेदे वृष्टिविनाशो भेदः मुहृदां महाकुला-
नाञ्च ॥"
क्ली, उत्तमं कुलम् । यथा,
राजतरङ्गिण्याम् ।
३ । ६१ ।
"द्वयोरालोकितं चित्रं जन्मैकस्मिन् महा-
कुले ॥")

**महाकुलीनः**, त्रि, (महाकुलस्य अपत्यम् । महा-
कुल + "महाकुलादञ्खञौ ।" ४ । १ ।
१४१ ।
इति पक्षे खः ।) महाकुलः । यथा, --
"महाकुलीन ऐक्ष्वाके वंशे दाशरथिर्मम ।
पितुः प्रियङ्करो भर्त्ता क्षेमकारस्तपस्विनाम्
॥"
इति भट्टिः । ५ । ७७ श्लोकः ॥
(स्त्रियां टाप् । यथा, रामायणे । २ । २८ ।
३ ।
"सीते ! महाकुलीनासि धर्म्मे च निरता
सदा ॥")

**महाकुष्ठं**, क्ली, (महच्च तत् कुष्ठञ्चेति ।) बृहत्-
कुष्ठरोगः । तत् सप्तविधं यथा, --
अश्मरी मूढगर्भश्च तथैवोदरमष्टमम् ।
अष्टावेते प्रकृत्यैव दुश्चिकित्सा महागदाः
॥"
औषधविशेषः । यथा, सुश्रुते कल्पस्थाने
५
अध्याये ।
"एषोऽगदो हन्ति विषं प्रयुक्तः
पानाञ्जनाभ्यञ्जननस्ययोगैः ।
अवार्य्यवीर्य्यो विषवेगहन्ता
महागदो नाम महाप्रभावः ॥"
महती गदास्येतिविग्रहे महागदाविशिष्टे,
त्रि ।
यथा, श्रीमद्भागवते । ३ । १८ । ९ ।
"परानुषक्तं तपनीयोपकल्पं
महागदं काञ्चनचित्रदंशम् ।
मर्म्माण्यभीक्ष्णं प्रतुदन्तं दुरुक्तैः
प्रचण्डमन्युः प्रहसंस्तं बभाषे ॥")

**महागन्धं**, क्ली, (महान् गन्धोऽस्य ।) हरि-
चन्दनम् । बोलम् । इति राजनिर्घण्टः ॥
(महा-
गन्धयुक्ते, त्रि । यथा, हरिवंशे । १४३ ।
४४ ।
"तच्च कण्ठे समासज्य महागन्धं
नराधिप ! ।
आययावन्धको यत्र दुरात्मा बलदर्पितः
॥")

**महागन्धः**, पुं, (महान् गन्धोऽस्य ।) कुटजवृक्षः ।
इति राजनिर्घण्टः ॥ जलवेतसः । इति
शब्द-
चन्द्रिका ॥

**महागन्धा**, स्त्री, (महान् गन्धो यस्याः । स्त्रियां
टाप् ।) नागबला । केविकापुष्पम् । इति
राज-
निर्घण्टः ॥ चामुण्डा । यथा, हेमचन्द्रः ।
२ । १२० ।
"चामुण्डा चर्व्विका चर्म्ममुण्डा माज्जार-
कर्णिका ।
शातातपः ।
"गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ।
पतिरेको गुरुः स्त्रीणां सर्व्वत्राभ्यागतो गुरुः
॥"
एकपदेन दत्तस्त्रीणां पितृमातृव्यावृत्तिः ॥ *
॥
सपिण्डमरणं प्रकृत्य आश्वलायनः ।
त्रिरात्र-
मक्षारलवणान्नाशिनः स्युर्द्वादशरात्रं महा-
गुरुषु । आचार्य्यश्च उपनीय
ददद्वेदमाचार्य्यः
स उदाहृतः । इति याज्ञवल्क्योक्तः । तन्म-
रणे त्रिरात्राशौचित्वेन नैतादृङ्नियमः ॥
आश्वलायनः । नैतस्यां रात्रावन्नं पचेयुः ।
अन्नं न पचेयुरित्यनेनोपवासः सूचितः ।
अघ-
स्रस्तरे त्र्यहमनश्नन्त आसीरन् इति वक्ष्य-
माणवचनात् । अघस्रस्तरः कटादिः ।
अक्षार-
लवणं क्षारमृत्तिकादिकृतलवणभिन्नं तत्तु
सैन्धवं साम्भरि च । इति शुद्धितत्त्वम् ॥ *
॥
महागुरुमरणे संवत्सरपर्य्यन्तं
निषिद्धकर्म्माणि
यथा, कर्म्मलोचने ।
"महागुरुनिपाते च काम्यं किञ्चिन्न चाचरेत्
।
आर्त्विज्यं ब्रह्मचर्य्यञ्च यावत् पूर्णो न
वत्सरः ॥
अन्यश्राद्धं परान्नञ्च गन्धं माल्यञ्च मैथुनम् ।
वर्ज्जयेद्गुरुपाते च यावत् पूर्णो न वत्सरः
॥
तीर्थयात्रां विवाहञ्चाध्यापनं तर्पणन्तथा ।
संवत्सरं न कुर्व्वीत महागुरुनिपातने ॥"
अपि च ।
"विशेषतः शिवापूजां प्रमृतपितृको द्विजः ।
यावद्वत्सरपर्य्यन्तं मनसापि न चाचरेत् ॥
महागुरुनिपाते तु काम्यं किञ्चिन्न चाचरेत् ।

"पूर्ब्बत्रिकं तथा सिध्मं ततः काकणकं तथा ।
पुण्डरीकर्क्षजिह्वे तु महाकुष्टानि सप्त च ॥
पूर्ब्बत्रिकं कपालौदुम्बरमण्डलाख्यम् । सिध्म-
शब्दोऽकारान्तो नपुंसकलिङ्गः । ननु कथं
सिध्मस्य महाकुष्ठेषु गणना सुश्रुतेन क्षुद्र-
कुष्ठेषुक्तत्वात् । उच्यते । त्वङ्मात्रगता सिध्म-
पुष्पिका सुश्रुतेन च क्षुद्रकुष्ठेषूक्ता धातुषु प्रवि-
ष्टन्तु सिध्मं महाकुष्ठमेव । एवंविधस्य सिध्मस्य
चरकेण महाकुष्ठेषु दर्शितत्वात् । एषां महाकुष्ठत्वञ्च
शीघ्रमुत्तरोत्तरधात्ववगाहनात् उल्वणदोषजन्यत्वात्
चिकित्साबाहुल्याच्च ।"
इति भावप्रकाशः ॥ (एषां चिकित्सा क्षुद्रकुष्ठ-
शब्दे द्रष्टव्या ॥)

**महाकूपः**, पुं, (महांश्चासौ कूपश्चेति ।) बृहत्कूपः ।
तत्पर्य्यायः । अरघट्टः २ । इति जटाधरः ॥

**महाकूलः**, पुं, (महत् कूलमस्य ।) महाकुलः ।
सत्कुलः । इति द्विरूपकोषः ।

**महाकोशफला**, स्त्री, (महान् कोशः फले
यस्याः ।) देवदाली लता । इति राजनिर्घण्टः ॥

**महाकोशातकी**, स्त्री, (महती चासौ कोशा-
तकी चेति ।) हस्तिघोषा । इति राज-
निर्घण्टः ॥ (अस्याः पर्य्यायो यथा, --
"महाकोशातकी प्रोक्ता हस्तिघोषा महा-
फला ।
धामार्गवो घोषकश्च हस्तिपर्णश्च स स्मृतः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**महागदः**, पुं, (महांश्चासौ गदश्चेति ।) ज्वरः ।
कर्णमोटी महागन्धा भैरवी च कपालिनी ॥"

**महागवः**, पुं, (महांश्चासौ गौश्चेति । "गोर-
तद्धितलुकि ।" ५ । ४ । ९२ । इति समासान्तष्टच् ।
गोसदृशत्वादस्य तथात्वम् ।) गवयः । यथा, --
"वनगौर्गवयः प्रोक्तो बलभद्रो महागवः ॥"
इति राजनिर्घण्टः ॥

**महागिरिः**, पुं, (महान् गिरिस्तदाख्योपाधिर्य्यस्य ।
यद्वा, महान् गिरिरिव ।) बौद्धभेदः । यथा --
"महागिरिः सुहस्त्याद्या वज्रान्ता दश-
पूर्ब्बिणः ॥"
इति हेमचन्द्रः । १ । ३४ ॥
महान् गिरिः पर्व्वतः ।) बृहत्पर्व्वतश्च ॥ (यथा,
महाभारते । ३ । ११० । १५ ।
"नातप्रतपसा शक्यो द्रष्टुमेष महागिरिः ।
आरोढुं वापि कौन्तेय ! तस्मान्नियतवाग्भव ॥"
दानवविशेषः । यथा, हरिवंशे । ३ । ८६ ।
"सूक्ष्मश्चैव निचन्द्रश्च उर्णनाभो महागिरिः ॥")

**महागुरुः**, पुं, (महांश्चासौ गुरुश्चेति ।) अति-
गुरुः । स च पुरुषस्य पिता माता आचार्य्यश्च ।
स्त्रियाः पतिः । अदत्तकन्यायाः पिता माता
च । यथा । त्रयः पुरुषस्यातिगुरवो भवन्ति
माता पिताचार्य्यश्चेति । इति विष्णुसूत्रम् ॥
पत्युर्महागुरुत्वमाह रामायणे ।
"नातो विशिष्टं पश्यामि बान्धवं वै कुलस्त्रियाः ।
पतिर्ब्बन्धुर्गतिर्भर्त्ता दैवतं गुरुरेव च ॥"
आर्त्विज्यं ब्रह्मयज्ञञ्च श्राद्धं देवयुतञ्च यत् ॥"
इति कालिकापुराणे ५४ अध्यायः ॥

**महागुल्मा**, स्त्री, (महान् गुल्मो यस्याः ।) सोम-
वल्ली । इति राजनिर्घण्टः ॥

**महागुहा**, स्त्री, (महती गुहा यस्याः ।) पृश्नि-
पर्णी । इति राजनिर्घण्टः ॥

**महागोधूमः**, पुं, (माहांश्चासौ गोधूमश्चेति ।)
बृहद्गोधूमः । वड गम इति भाषा ॥ यथा, --
"गोधूमः सुमनोऽपि स्यात्त्रिविधः स च कीर्त्तितः ।
महागोधूम इत्याख्यः पश्चाद्देशांत् स चागतः ॥
मघूली तु ततः किञ्चिदल्पा सा मध्यदेशजा ।
निःशूको दीर्घगोधूमः क्वचिन्नन्दीमुखाभिधः ॥
गोधूमो मधुरः शीतो वातपित्तहरो गुरुः ।
कफशुक्रप्रदो बल्यः स्निग्धः सन्धानकृत्सरः ॥
जीवनो बृंहणो वर्ण्यो व्रण्यो रुज्यः स्थिरत्व-
कृत् ॥"
कफप्रदो नवीनो नतु पुराणः । पुराणयव-
गोधूमक्षौद्रजाङ्गलशूल्यभुगितिवाग्भटेन
वसन्ते गृहीतत्वात् ।
"मधुली शीतला स्निग्धा पित्तघ्नी मधुरा लघुः ।
शुक्रला वृंहणी पथ्या तद्वन्नन्दीमुखाः स्मृताः ॥"
इति भावप्रकाशः ॥

| | | |
|---|---|---|
| इति राजनिर्घण्टः ॥ (महारोगः । यथा, सुश्रुते । १ । ३३ अध्याये । “वातव्याधिः प्रमेहश्च कुष्ठमर्शो भगन्दरः । | | |

**महाग्रीवः**, पुं, (महती दीर्घा ग्रीवा कन्धरा
यस्य ।) उष्ट्रः । इति राजनिर्घण्टः ॥
(शिवः ।
यथा, महाभारते । १३ । १७ । ८६ ।
"महानासो महाकम्बुर्म्महाग्रीवः
श्मशान-
भाक् ॥"
शिवानुचरभूतविशेषः । यथा, हरिवंशे
भविष्य-
पर्व्वणि । १४ । ३ ।
"कुण्डोदरो महाग्रीवः स्थूलजिह्वो
द्विबाहुकः ।
पार्श्ववक्त्रः सिंहमुख उन्नतांसो महाहनुः
॥"
देशविशेषः । यथा, मार्कण्डेये । ५८ ।
१७ ।
"व्याघ्रग्रीवा महाग्रीवा स्त्रीपुरा श्मश्रु-
धारिणः ॥")
बृहद्ग्रीवायुक्ते, त्रि ॥

**महाघासः**, पुं, महतो देशस्य महत्या भूमेर्वा-
वासः । इति मुग्धबोधव्याकरणटीकायां
दुर्गा-
दासः ॥

**महाघूर्णा**, स्त्री, (महती घूर्णा शरीरभ्रमणं
यस्याः ।) सुरा । इति शब्दचन्द्रिका ॥
(महती-
चासौ घूणां चेति ।) अतिशयभ्रमिश्च ॥

**महाघोरः**, त्रि, (महांश्चासौ घोरश्चेति ।)
अतिशयभयानकः । यथा, शुद्धितत्त्वे ।
"यमद्वारे महाघोरे तप्ता वैतरणी नदी ।
ताञ्च तर्त्तुं ददाम्येनां कृष्णां वैतरणीञ्च
गाम् ॥"

**महाघोषं**, क्ली, (महान् घोषः कोलाहलो
यस्मिन् ।) हट्टम् । इति मेदिनी । षे, ५६
॥

**महाच्छायः**, पुं, (महती छायास्य ।) वटवृक्षः ।
इति राजनिर्घण्टः ॥ बृहच्छायायुक्ते, त्रि ॥

**महाच्छिद्रा**, स्त्री, (महच्छिद्रमस्याः ।) महामेदा ।
इति राजनिर्घण्टः ॥ बृहच्छिद्रयुक्ते, त्रि ॥

**महाजः**, पुं, (महांश्चासौ अजश्चेति ।) बृह-
च्छागः । (महतो जायत इति । महत् +
जन्
+ कर्त्तरि डः । पृषोदरादित्वात् साधुः ।)
महाकुलोद्भवे, त्रि ॥

**महाजटा**, स्त्री, (महती जटास्याः ।) रुद्रजटा ।
इति राजनिर्घण्टः ॥ (महती जटा ।) बृह-
ज्जटा च ॥

**महाजनः**, पुं, (महांश्चासौ जनश्चेति ।) साधुः ।
यथा, महाभारते । ३ । ३१२ । ११२ ।
"वेदा विभिन्नाः स्मृतयो विभिन्ना
नासौ मुनिर्यस्य मतं न भिन्नम् ।
धर्म्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतः स पन्थाः ॥"
मन्वादिः । यथा, --
"प्रायेण वेद तदिदं न महाजनोऽयं
देव्या विमोहितमतिर्व्वत माययालम् ।
त्रय्यां जडीकृतमतिर्मधुपुष्पितायां
वैतानिके महति मर्म्मणि युज्यमानः ॥"
इति श्रीभागवते षष्ठस्कन्धे
अजामिलोपाख्याने
यमवाक्यव्याख्याने श्रीधरस्वामी ॥ (धनी
। यथा,
मृच्छकटिके । १ ।
"सङ्गं नैव हि कश्चिदस्य कुरुते
सम्भाष्यते
नादरात्
संप्राप्तो गृहमुत्सवेषु धनिनां
सावज्ञमालोक्यते ।
दूरादेवमहाजनस्य विहरत्यल्पच्छदो
लज्जया
मन्ये निर्धनता प्रकाममपरं षष्ठं महापात-

"फलेन्द्रः कथितो नन्दो राजजम्बुर्महाफला ।
तथा सुरभिपत्रा च महाजम्बूरपि स्मृता ॥
राजजम्बूफलं स्वादु विष्टम्भि गुरु रोचनम् ॥"
इति भावप्रकाशः ॥

**महाजातिः**, स्त्री, (महती जातिरस्या इति ।
यद्वा, महती जातिरिव तदाकृतित्वात् ।)
वासन्ती लता । इति राजनिर्घण्टः ॥ (महती
जातिरिति ।) श्रेष्ठवर्णश्च ॥

**महाजातीयः**, त्रि, (महत् + "प्रकारवचने
जात्तीयर् ।" ५ । ३ । ६९ । इति जातीयर् ।
ततः । "आन् महतः समानाधिकरणजाती-
ययोः ।" ६ । ३ । ४६ । इति महतः
आकारादेशः ।)
महतः प्रकारः । इति व्याकरणम् ॥

**महाजाली**, स्त्री, (जालयति आच्छादयतीति ।
जाल आच्छादने + पचाद्यच् । स्त्रियां ङीष् ।
ततः । महती चासौ जाली चेति । यद्वा,
महांश्चासौ जालश्चेति स अस्या अस्ति अर्श
आद्यच् ततः ङीष् । इत्यमरटीकायां रभसः ।)
पीतवर्णघोषा । इत्यमरः । २ । ४ । ११७ ॥
राजकोशातकी । इति राजनिर्घण्टः ॥ बृह-
ज्जालवाहके, त्रि ॥

**महाज्यैष्ठी**, स्त्री, (महती चासौ ज्यैष्ठी चेति ।)
नक्षत्रविशेषादियुक्तज्यैष्ठीपूर्णिमा । सा पञ्चधा
।
यथा, ब्रह्मपुराणे ।
"ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा ।
पूर्णिमा गुरुवारेण महाज्यैष्ठी प्रकीर्त्तिता ॥
ऐन्द्रे ज्येष्ठायां प्राजापत्ये रोहिण्याम् ॥ १ ॥
विना गुरुवारेणापि ।
ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा ।
पूर्णिमा ज्यैष्ठमासस्य महाजयिष्ठी प्रकीर्त्तिता
॥ २ ॥
अनुराधास्थगुरावपि ।
ऐन्द्रे मैत्रे यदा जीवस्तत्पञ्चदशके रविः ।
पूर्णिमा शक्रचन्द्रेण महाज्यैष्ठी प्रकीर्त्तिता ॥ ३
॥

बृहच्छब्दयुक्ते, त्रि ॥ यथा, महाभारते । १ ।
२२१ । ११ ।
"तेषां श्रुत्वा सभापालो भेरां सान्नाहिकीं तथा ।
समाजघ्ने महाघोषां
जाम्बूनदपरिष्कृताम् ॥")

**महाघोषः**, पुं, (महांश्चासौ घोषश्चेति ।) अति-

घोषणम् । इति मेदिनी । षे, ५६ ॥

**महाघोषा**, स्त्री, (महान् घोषो यस्याः । टाप् ।)

कर्कटशृङ्गी । इति मेदिनी । षे, ५६ ॥
कुन्दुरुकी ।
इति शब्दचन्द्रिका ॥

**महाङ्गः**, पुं, (महान्ति दीर्घाणि अङ्गान्यस्य ।)

उष्ट्रः । इत्यमरः । २ । ९ । ७५ ॥
गोक्षुरकः ।
रक्तचित्रकः । इति राजनिर्घण्टः ॥ बृहदव-
यवयुक्ते, त्रि ॥ (यथा, महाभारते । १३ । १७ । ८३ ।
"स्वस्तिदः स्वस्तिभावश्च भागी भागकरो लघुः ।
उत्सङ्गश्च महाङ्गश्च महागर्भपरायणः ॥")

**महाचञ्चुः**, स्त्री, (महती चञ्चुरग्रमस्याः ।) शाक-

विशेषः । तत्पर्य्यायः । बृहच्चञ्चुः २ विषारिः ३
मुचञ्चुका ४ स्थूलचञ्चुः ५ दीर्घपत्री ६ दिव्य-
गन्धा ७ । अस्य गुणाः । कटुत्वम् । उष्णत्वम् ।
कषायत्वम् । मलशोधनत्वम् । गुल्मशूलो-
दरार्शोऽर्त्तिविषनाशित्वम् । रसावनत्वञ्च । इति
राजनिर्घण्टः ॥ पुं, बृहच्चञ्चुयुक्तपक्षी च ॥

**महाचण्डः**, पुं, (महांश्चासौ चण्डश्चेति ।) यम-

कम् ॥")

**महाजवः**, पुं, (महान् जवो वेगो यस्य ।) गवयः ।

श्रीकारी मृगः । इति राजनिर्घण्टः । अति-
वेगयुक्ते, त्रि ॥ (यथा, श्रीमद्भागवते । ७ । ८ । २८ ।
"कृत्वाट्टहासं खरमुत्स्वनोल्वणं
निमीलिताक्षं जगृहे महाजवः ॥"
स्त्री, कुमारानुचरगणविशेषः । यथा, महा-
भारते । ९ । ४६ । २२ ।
"शशोलूकमुखी कृष्णा खरजङ्घा महाजवा ॥")

**महाजम्बुः**, स्त्री, (महती चासौ जम्बुश्चेति ।)

बृहज्जम्बुवृक्षः । यथा, --
"महाजम्बुर्महापत्रा राजजम्बुर्बृहत्फला ॥"
इति रत्नमाला ॥

**महाजम्बूः**, स्त्री, (महती चासौ जम्बूश्चेति ।)

बृहज्जम्बुः । तत्पर्य्यायः । राजजम्बुः २ स्वर्ण-
माता ३ महाफला ४ पिकप्रिया ५ कोकिलेष्टा
६ महानीला ७ बृहत्फला ८ । अस्य गुणाः ।
उष्णत्वम् । मधुररसत्वम् । कषायत्वम् । श्रम-
हरत्वम् । झटित्यास्यजडिमनाशित्वम् । स्वर-
करत्वम् । विष्टम्भित्वम् । शोषशमनत्वम् ।
भ्रमातीसारार्त्तिवर्द्धकत्वम् । श्वसितकफकास-
प्रशमनत्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।

अनुराधास्थे चन्द्रेऽपि । व्याघ्रभूतिः ।
ऐन्द्रर्क्षे त्वथवा मैत्रे गुरुचन्द्रौ यदा स्थितौ ।
पूर्णिमा ज्यैष्ठमासस्य महाज्यैष्ठी प्रकीर्त्तिता ॥ ४ ॥
राजमार्त्तण्डे ।
ज्यैष्ठे संवत्सरे चैव ज्यैष्ठमासस्य पूर्णिमा ।
ज्येष्ठाभेन समायुक्ता महाज्यैष्ठी प्रकीर्त्तिता ॥ ५ ॥
ज्यैष्ठसंवत्सरश्च ।
ज्येष्ठामूलोपगे जीवे वर्षं स्यात् शक्रदैवतम् ।
इति विष्णुधर्म्मोत्तरोक्तो ग्राह्यः ।
न तु संवत्सरादिपञ्चकान्तर्गतवर्षविशेषः । ज्यैष्ठ
इति वर्षविशेषणस्य वैयर्थ्यापत्तेः । संवत्सरे
यदि स्यादिति पाठः काल्पनिकः ॥ * ॥
महाज्यैष्ठ्यान्तु यः पश्येत् पुरुषः पुरुषोत्तमम् ।
विष्णुलोकमवाप्नोति मोक्षं गङ्गाम्बुमज्जनात् ॥"
इति तिथ्यादितत्त्वम् ॥

**महाज्योतिष्मती**, स्त्री, (महती चासौ जोतिष्मती

चेति ।) लताविशेषः । वडी मालकङ्गुनी इति
हिन्दी भाषा । तत्पर्य्यायः । तेजोवती २ बहु-
रसा ३ कनकप्रभा ४ तीक्ष्णा ५ सुवर्णनकुली ६

| | | |
|---|---|---|
| भृत्यः । इति हेमचन्द्रत्रिकाण्डशेषौ ॥ प्रचण्डे, त्रि ॥ **महाच्छदः**, पुं, (महान् छदः पत्रमस्य ।) देव-साडवृक्षः । इति रत्नमाला ॥ बृहत्पत्रञ्च ॥ | | |

लवणा ७ अग्निदीप्ता ८ तेजस्विनी ९ सुर-
लता १० अग्निफला ११ अग्निगर्भा १२
कङ्गुनी
१३ शैलसुता १४ सुतैला १५ सुवेगा
१६
वायसी १७ तीव्रा १८ काकाण्डी १९
वायसा-
दनी २० गीर्लता २१ श्रीलता २२ सौम्या
२३
ब्राह्मी २४ लवणकिंशुका २५ पारावतपदी
२६
पीता २७ पीततैला २८ यशस्विनी २९
मेध्या
३० मेधावती ३१ धीरा ३२ । अस्या
गुणाः ।
तिक्ततरत्वम् । रूक्षत्वम् । किञ्चित्कटुत्वम्
।
वातकफापहत्वम् । दाहप्रदत्वम् ।
दीपनत्वम् ।
मेधाप्रज्ञाकारित्वञ्च । इति राजनिर्घण्टः ॥

**महाज्वालः**, पुं, (महती ज्वाला शिखास्य ।)
होमाग्निः । इति हेमचन्द्रः । ३ । ५०० ॥
(नरक-
विशेषः । यथा, विष्णुपुराणे । २ । ६ ।
१२ ।
“स्नुषां सुताञ्चापि गत्वा महाज्वाले निपा-
त्यते ॥”
महादेवः । यथा, महाभारते । १३ । १७ ।
८१ ।
“अग्निज्वालो महाज्वालो अतिधूम्रो हुतो
हविः ॥”)

**महाज्वाला**, स्त्री, (महती ज्वाला दीप्तिर्यस्याः ।)
जिनानां विद्याधरीविशेषः । इति हेमचन्द्रः
।
३ । ५०० ॥ (महती ज्वाला ।)
बृहदग्निशिखा च ॥

**महाढ्यः**, पुं, (महान् आढ्यः शोभासम्पन्नः ।)
तारेति कर्म्मधारयः ।) जिनानां देवीविशेषः
।
तत्पर्य्यायः । तारा २ महाश्रीः ३ ओङ्कारा
४
स्वाहा ५ श्रीः ६ मनोरमा ७ तारिणी ८
जया
९ अनन्ता १० शिवा ११ लोकेश्वरा १२
आत्मजा
१३ खदूरवासिनी १४ भद्रा १५ वैश्या
१६
नीलसरस्वती १७ शङ्खिनी १८ वसुधारा
१९
धनंददा २० त्रिलोचना २१ लोचना २२ ।
इति हेमचन्द्रः ॥

**महाताली**, स्त्री, (महान् अनेकस्तालो यत्र ।
स्त्रियां ङीष् ।) आवर्त्तकी । इति
राजनिर्घण्टः ॥

**महातिक्तः**, पुं, (महानतिशयस्तिक्तस्तिक्तरसो
यत्र ।) महानिम्बः । इति राजनिर्घण्टः ॥
अतिशयतिक्तरसयुक्ते, त्रि ॥

**महातिक्ता**, स्त्री, (महती गुरुतरा तिक्ता ।)
यवतिक्ता । इति राजनिर्घण्टः ॥ (यथा,
गोविन्दविशारदकृतभैषज्यरत्नावल्याम् ।
“आचु जिङ्गी महातिक्ता विशाला छपिपत्र-
कम् ॥”)
पाठा । इति शब्दचन्द्रिका ॥

**महातीक्ष्णा**, स्त्री, (महती तीक्ष्णा ।) भल्ला-
तकवृक्षः । इति राजनिर्घण्टः ॥ अतिशय-
तीक्ष्णे, त्रि ॥

**महातेजः**, [स्] क्ली, (महदतिशयं तेजोऽस्य ।)
पारदः । इति राजनिर्घण्टः ॥

**महातेजाः**, [स्] पुं, (महदतिशयं तेजो बल-
मस्य ।) कार्त्तिकेयः । इति हलायुधः ।
अग्निः ।
“महान् महात्मा महितो महिमावान् महा-
बलः ॥”
महादेवः । यथा, महाभारते । १३ । १७ ।
३४ ।
“महारूपो महाकायो वृषरूपो महायशाः ।
महात्मा सर्व्वभूतात्मा विश्वरूपो महाहनुः
॥”)

**महादण्डः**, पुं, (महान् दण्डस्ताडनसाधनमस्य ।)
यमदूतप्रभेदः । इति बृहद्धर्म्मपुराणे ५६
अध्यायः ॥ (महान् दण्डः ।) बृहद्दण्डश्च
॥
(यथा, महाभारते । ५ । १९४ । ३७ ।
“यस्माज्जानन् स मन्दात्मा मामसौ
नोपसर्पति ।
तस्मात्तस्मै महादण्डो धार्य्यः स्यादिति मे
मतिः ॥”)

**महादन्तः**, पुं, (महांश्चासौ दन्तश्चेति ।) गज-
दन्तः । तत्पर्य्यायः । ईशादन्तः २ । इति
त्रिकाण्डशेषः ॥ बृहद्दन्तमात्रञ्च ॥
(महादेवः ।
यथा, महाभारते । १३ । १७ । ८७ ।
“महादन्तो महादंष्ट्रो महाजिह्वो महा-
मुखः ॥”
महान् दन्तोऽस्य ।) तद्वति, त्रि ॥

**महादानं**, क्ली, (महच्च तद्दानञ्चेति ।) श्रेष्ठ-
दानम् । तत्तु तुलापुरुषादिषोडशप्रकारम् ।
यथा, मत्स्यपुराणे ।
“अथातः संप्रवक्ष्यामि महादानस्य
लक्षणम् ॥”
इत्यभिधाय ।
“आद्यन्तु सर्व्वदानानां तुलापुरुषसंज्ञितम्
।
हिरण्यगर्भदानञ्च ब्रह्माण्डं तदनन्तरम् ॥
कल्पपादपदानञ्च गोसहस्रन्तु पञ्चमम् ।
हिरण्यकामधेनुश्च हिरण्याश्वस्तथैव च ॥
पञ्चलाङ्गलकं तद्वद्धरादानन्तथैव च ।
हिरण्याश्वरथस्तद्वद्धेमहस्तिरथस्तथा॥

कदम्बः । इति राजनिर्घण्टः ॥
(महानाढ्यः ।)
अतिशयधनवति, त्रि ॥ (यथा,
कथासरित्सागरे ।
२५ । ११८ ।
"ततः प्रभृति चैतस्यां वाराणस्यामुवास
सः ।
अभ्यर्थतो महाढ्यस्य तस्यैव बणिजो गृहे
॥")

**महातमःप्रभा**, स्त्री, (महती तमसां प्रभा प्रकाशो-
ऽस्याम् ।) नरकविशेषः । स
चातिशयान्ध-
कारमयः । यथा, हेमचन्द्रः । ५ । ३ ।
"घनोदधिघनवाततनुवातनभःस्थिताः ।
रत्नशर्कराबालुकापङ्कधूमतमःप्रभाः ॥
महातमःप्रभा वेत्यधोऽधो नरकभूमयः ॥"

**महातरुः**, पुं, (महांश्चासौ तरुश्चेति ।) स्नुही-
वृक्षः । इति हेमचन्द्रः । ४ । २०६ ॥
(महाकवेः
कालिदासस्य स्नुहीवृक्षमुद्दिश्य
वक्रोक्तिप्रयोगो
यथा, --
"तरवः पारिजाताद्याः स्नुहीवृक्षो महा-
तरुः ॥")
बृहद्वृक्षश्च ॥

**महातलं**, क्ली, (महच्च तत्तलञ्चेति ।) पाताल-
विशेषः । यथा, शब्दमालायाम् ।
"अतलं वितलञ्चैव नितलञ्च तलातलम् ।
महातलञ्च सुतलं सप्तमञ्च रसातलम् ॥"
(यथा च श्रीमद्भागवते । २ । १ । २६ ।
"पातालमेतस्य हि पादमूलं
पठन्ति पार्ष्णिप्रपदे रसातलम् ।
महातलं विश्वसृजोऽथ गुल्फौ
तलातलं वै पुरुषस्य जङ्घे ॥")

**महातारा**, स्त्री, (तारयति संसारादिति । तृ +
णिच् + अच् । स्त्रियां टाप् । ततो महती
इति शब्दचन्द्रिका ॥ (महादेवः । यथा,
महा-
भारते । १३ । १७ । ५६ ।
"उग्रतेजा महातेजा जन्यो विजयकाल-
वित् ॥")
अतिशयतेजस्विनि, त्रि ॥ (यथा, मनुः । १
। ६२ ।
"स्वारोचिषश्चौत्तमिश्च तामसो रैवतस्तथा
।
चाक्षुषश्च महातेजा विवस्वत्सुत एव च
॥")

**महात्मा**, [न्] त्रि, (महानात्मा स्वभावोऽस्य ।)
उत्तमस्वभावयुक्तः । (यथा,
कामन्दकीयनीति-
सारे । ३ । ११ ।
"महावाताहृतभ्रान्तिर्म्मेघमालातिपेलवैः ।
कथं नाम महात्मानो ह्रियन्ते विषयारिभिः
॥")
तत्पर्य्यायः । महेच्छः २ उद्भटः ३ उदारः
४
उदात्तः ५ उदीर्णः ६ महाशयः ७ महा-
मनाः ८ । इति हेमचन्द्रः । ३ । ३१ ॥ (पुं,
पर-
मात्मा । यथा, मनुः । १ । ५४ ।
"युगपत्तु प्रलीयन्ते यदा तस्मिन् महात्मनि
।
तदायं सर्व्वभूतात्मा सुखं स्वपिति निर्वृतः
॥"
"तस्मिन् परमात्मनि ।" इति तट्टीकायां
कुल्लूकः ॥ महत्तत्त्वम् । यथा, श्रीमद्भागवते
।
९ । ७ । २५ ।
"मनः पृथिव्यां तामद्भिस्तेजसापोऽनिलेन
तत् ।
खे वायुं धारयंस्तच्च भूतादौ तं महात्मनि
॥"
"महात्मनि महत्तत्त्वे ।" इति तट्टीकायां
श्रीधरस्वामी ॥ पितृगणविशेषः । यथा,
मार्क-
ण्डेये । ९६ । ४६ ।
द्वादशं विष्णुचक्रञ्च ततः कल्पलतात्मकम्
।
सप्तसागरदानञ्च रत्नधेनुस्तथैव च ।
महाभूतघटस्तद्वत् षोडशः परिकीर्त्तितः
॥" * ॥
अत्र सामान्यलक्षणम् । सूक्तजपाङ्गकदानं
महादानम् ।
विनायकादिपञ्चाशद्देषताहोमा-
ङ्गकं वा । तथा मत्स्यपुराणम् ।
"विनायकादिग्रहलोकपाल-
वस्वष्टकादित्यमरुद्गणानाम् ।
ब्रह्माच्युतेशानबृहस्पतीनां
स्वमन्त्रतो होमचतुष्टयं स्यात् ॥
जप्यानि सूक्तानि तथैव चैषा-
मनुक्रमेणापि यथास्वरूपम् ॥"
इत्यादिना सूक्तजपहोमरूपाङ्गयोर्व्विधानं
प्रत्येकं
षोडशतुलापुरुषप्रधानान्युद्दिश्योक्तं नतु
महादानत्वेनोद्दिश्येति । अतो नेतरेतरा-
श्रयः । न तु
कुण्डमण्डपेतिकर्त्तव्यतायोगित्वं
जिकनीयलक्षणम् । अचलदानेऽपि
गतत्वात् ।
एवञ्च ।
"कनकाश्वतिला गावो दासी रथमहीगृहाः
।
कन्या च कपिला धेनुर्म्महादानानि वै दश
॥"
इति कूर्म्मपुराणोक्तदानपदं गौणम् ॥
अन्यथा बहुशक्तिकल्पनापत्तेः
कनकदानादि-

साधारणानुगतैकरूपाभावाच्च । अतो न वैप-
रीत्यमिति ।
"सर्व्वेषामेव दानानामेकजन्मानुगं फलम् ॥"
इति मलमासतत्त्वम् ॥

**महादारु**, क्ली, (महत् दारु अस्य ।) देवदारु ।
इति जटाधरः ॥ (महत् दारु ।) बृहत्काष्ठञ्च ॥

**महादेवः**, पुं, (महांश्चासौ देवश्चेति । यद्वा,
महतां देवादीनां देवः ।) शिवः । इत्यमरः ।
१ । १ । ३४ ॥
अष्टमूर्त्यन्तर्गतसोममूर्त्तिरियम् ।
यथा, महादेवाय सोममूर्त्तये नमः । इति
शिवपूजापद्धतिः ॥ * ॥ अस्य व्युत्पत्तिर्यथा --
"ब्रह्मादीनां सुराणाञ्च मुनीनां ब्रह्मवादिनाम् ।
तेषाञ्च महतां देवो महादेवः प्रकीर्त्तितः ॥
भहती पूजिता विश्वे मूलप्रकृतिरीश्वरी ।
तस्या देवः पूजितश्च महादेवः स च स्मृतः ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५३ अध्यायः ॥
तस्य पञ्चवक्त्रत्वत्रिनेत्रत्वकारणं यथा, --
"अतीव कमनीयाङ्गं किशोरं श्यामसुन्दरम् ।
अहो निर्व्वचनीयञ्च दृष्ट्वा रूपमनुत्तमम् ।
न बभूव वितृष्णश्च लोचनाभ्यां त्रिलोचनः ॥
पश्यन्निमेषरहित इति मत्वा स्वमानसे ।
मूर्त्यन्तरेण कालेन तां संप्राप प्रियां सतीम् ॥"
तस्य दिगम्बरत्वजटाधारित्वकारणंयथा, --
"दिग्वस्त्रधारी योगेन नेच्छाऽनित्ये पटे विभोः ।
जटास्तपस्याकालीना धत्तेऽद्यापि विवेकतः ॥
न चेच्छा केशसंस्कारे स्वाङ्गवेशेन योगिनः ।
समता चन्दने पङ्के लोष्ट्रे रत्ने मणीश्वरे ॥"
तस्य नागभूषणत्ववृषवाहनत्वकारणंयथा, --
"गरुडद्वेषिणो नागाः शङ्करं शरणं ययुः ।
बिभर्त्ति कृपया स्वाङ्गे तानेव शरणागतान् ॥
वाहनं वृषरूपोऽहमन्यस्तं वोढुमक्षमः ।
त्रिपुरस्य वधे पूर्ब्बं मत्कलांशसमुद्भवः ॥"
तस्य धुस्तूरपुष्पविल्वपत्रप्रियत्वव्याघ्रचर्म्मधारित्व-
श्मशानस्थायित्वकारणंयथा, --
"पारिजातादिकं पुष्पं सुगन्धिचन्दनादिकम् ।
मयि संन्यस्य तेष्वेव प्रीतिर्नास्ति कदाचन ॥
धुस्तूरे तत् सदा प्रीतिर्व्विल्वपत्रानुलेपने ।
गन्धहीने प्रसूने च योगेष्टे व्याघ्रचर्म्मणि ॥
दिव्यलोके दिव्यतल्पे जनतायां न तन्मनः ।
श्मशानेऽतीवरहसि ध्यायते मामहर्न्निशम् ॥"
तस्य महिमादि यथा, --
"आब्रह्मतृणपर्य्यन्तं स्वप्नवन्मन्यते शिवः ।
ममानिर्व्वचनीयेऽत्र रूपे तन्मग्नमानसम् ॥
ब्रह्मणः पतनेनापि शूलपाणेः क्षणो भवेत् ।
तस्यायुषः प्रमाणञ्च नाहं जानामि का श्रुतिः ॥
ज्ञानं मृत्युञ्जयं शूलं धत्ते मत्तेजसा समम् ।
विना मया न कश्चित्तं शङ्करं जेतुमीश्वरः ॥
शङ्करः परमात्मा मे प्राणेभ्योऽपि परः शिवः ।
त्र्यम्बके मन्मनः शश्वन्न प्रियो मे भवात् परः ॥
न संवसामि गोलोके वैकुण्ठे तव वक्षसि ।
सदाशिवस्य हृदये निबद्धः प्रेमपाशतः ॥
स्रष्टुं शक्तो हि नष्टुञ्च भ्रूभङ्गलीलया हि यः ।
ब्रह्माण्डनिकरं योगान्न योगी शङ्करात् परः ॥
दिव्यज्ञानेन यः स्रष्टुं नष्टुं भ्रूभङ्गलीलया ।
मृत्युकालादिकं शक्तो न ज्ञानी शङ्करात् परः ॥
मम भक्तिञ्च दास्यञ्च मुक्तिञ्च सर्व्वसम्पदम् ।
सर्व्वसिद्धिं दातुमीशो न दाता शङ्करात् परः ॥
पञ्चवक्त्रेण मन्नाम यशो गायत्यहर्निशम् ।
मद्रूपं ध्यायते शश्वन्न भक्तः शङ्करात् परः ॥"
सिद्धाश्रमे च तद्दत्तं गुरवे शूलपाणिने ।
भक्त्युद्रेकाच्च तत् सर्व्वं भुक्तञ्च प्राप्तिमात्रतः ॥
भुक्त्वा सुदुर्लभं वस्तु ननर्त्त प्रेमविह्वलः ।
पपात डमरुर्हस्तात् शृङ्गञ्च व्याघ्रचर्म्म च ॥
स्वयं निपत्य पश्चाच्च रुदन्मूर्च्छामवाप च ।
एतस्मिन्नन्तरे देवी दुर्गा दुर्गतिनाशिनी ॥
मुदा जगाम शीघ्रं तत्प्रसन्नवदनेक्षणा ।
रुदन्तं मूर्च्छितं दृष्ट्वा निपतन्तञ्च भक्तितः ।
प्रहस्य वार्त्तां पप्रच्छ कुमारं शूलपाणिनः ॥
सर्व्वं तां कथयामास कुमारः संपुटाञ्जलिः ।
श्रुत्वा चुकोप सा देवी शिवं प्रस्फुरिताधरा ॥
श्रुत्वा मनोहरं स्तोत्रं न शशाप शिवं शिवा ।
दुष्टं चक्रे तदुच्छिष्टमभक्ष्यं विदुषामपि ॥
सुचिरञ्च तपस्तप्त्वा मया लब्धस्त्वमीश्वरः ।
त्वया विष्णोः प्रसादेन वञ्चिताहं कथं विभो ! ॥
यतो न दत्तं नैवेद्यं विष्णोर्मह्यं त्वयाधुना ।
अतो मत्तो गृहाणैतत् फलमेव महेश्वर ! ॥
अद्य प्रभृति ये लोका नैवेद्यं भुञ्जते तव ।
ते जन्मैकं सारमेया भविष्यन्त्येव भारते ॥
इत्युक्त्वा पार्व्वती मानाद्रुरोद पुरतो विभोः ।

भक्त्युद्रेकान्महाभक्तो रुरोद
प्रेमविह्वलः ॥
सहस्रवदनोऽनन्तो भाग्यवांश्च
चतुर्म्मुखः ।
वहुभिर्लोचनैर्दृष्ट्वा तुष्टाव बहुभिर्मुखैः ॥
पश्यामि किं वा किं स्तौमि संप्राप्य
नाथ-
मीदृशम् ।
आस्यैकेन लोचनाभ्यां चतुर्धा स पुनः
पुनः ॥
स्वमानसे कुर्व्वतीदं शङ्करे च
तपस्विनि ।
तद्बभूव चतुर्व्वक्त्रं पूर्ब्बेण सह पञ्चमम्
॥
एकैकवक्त्रं शुशुभे लोचनैश्च
त्रिभिस्त्रिभिः ।
बभूव तेन तन्नाम पञ्चवक्त्रस्त्रिलोचनः
॥
चक्षूंषि गुणरूपाणि तस्य
ब्रह्मस्वरूपिणः ।
सत्त्वं रजस्तम इति तस्य हेतुं निशामय
॥
सत्त्वांशेन दृशा शम्भुः पश्यन् पाति च
सात्त्वि
कान् ।
राजसेन राजसिकान् तामसेन च
तामसान् ॥
चक्षुस्तामसात् पश्चात्
ललाटस्थाद्धरस्य च ।
संहारकाले संहर्त्तुरग्निराविर्भ्भवेत् क्रुधा
॥
कोटितालप्रमाणश्च
सूर्य्यकोटिसमप्रभः ।
लेलिहानो दीर्घशिखस्त्रैलोक्यं
दग्धुमीश्वरः ॥”
तस्य भस्मधारणकारणं यथा, --
“विभूतिगात्रः स विभुः
सतीसत्कारभस्मना ।
धत्ते तस्या अस्थिमालां प्रेमभावेन
भस्म च ॥

इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ३६ अध्यायः
॥
शिवनैवेयभक्षणदोषकारणादिकंयथा, --
राधिकोवाच ।
“एवंभूतस्य च विभोः सर्व्वेशस्य महात्मनः ।
न शस्तं कथमुच्छिष्टं ब्रूहि सन्देहभञ्जन ! ॥
श्रीकृष्ण उवाच ।
शृणु देवि ! प्रवक्ष्येऽहमितिहासं पुरातनम् ।
पापेन्धनानां दहने ज्वलदग्निशिखोपमम् ॥
सनत्कुमारो वैकुण्ठमेकदा च जगाम ह ।
ददर्श भुक्तवन्तञ्च नाथं नारायणं द्विजः ॥
तुष्टाव गूढैः स्तोत्रैश्च प्रणम्य भक्तितो मुदा ।
अवशेषं ददौ तस्मै सन्तुष्टो भक्तवत्सलः ॥
प्राप्तमात्रेण तत्रैव भुक्तं तेनापि किञ्चन ।
किञ्चिद्ररक्ष बन्धूनां भक्षणाय च दुर्लभम् ॥

दृष्टिः पपात तत्कण्ठे नीलकण्ठो बभूव
सः ॥
अपूर्ब्बं तव नैवेद्यं जन्ममृत्युजराहरम् ।
कृतं दुष्टं यतस्तस्मात् पश्य देहं
त्यजामि च ॥
लिङ्गोपरि च यद्दत्तं तदेवाग्राह्यमीश्वर !
।
सुपवित्रं भवेत्तत्र विष्णोर्नैवेद्यमिश्रितम्
॥
इत्येवं कथितं सर्व्वं त्वया पृष्टं
सुरेश्वरि ! ।
अभिशस्तं शङ्करस्य निर्म्माल्यं येन
हेतुना ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे
३७ अध्यायः ॥
तस्यावतारा यथा, --
सूत उवाच ।
“वेदव्यासावताराणि द्वापरे कथितानि
तु ।
महादेवावताराणि कलौ शृणुत सुव्रताः
॥
आदौ कलियुगे श्वेते देवदेवो
महाद्युतिः ।
नाम्ना हिताय
विप्राणामभूद्वैवस्वतेऽन्तरे ॥
हिमवच्छिखरे रम्ये छगले पर्व्वतोत्तमे
।
तस्य शिष्याः शिखायुक्ता
बभूवुरमितप्रभाः ॥
श्वेतः श्वेतशिखश्चैव श्वेतास्यः
श्वेतलोहितः ।
चत्वारस्ते महात्मानो ब्राह्मणा
वेदपारगाः ॥
सुभावो दमनश्चाथ सुहोत्रः
कङ्कणस्तथा ।
लोकाक्षिरथ योगीन्द्रो जैगीषव्यस्तु
सप्तमे ॥
अष्टमे दधिबाहुः स्यान्नवमे वृषभः प्रभुः
।
भृगुस्तु दशमे प्रोक्तस्तस्मादुग्रपरः
स्मृतः ॥

| | | |
|---|---|---|
| स्वात्मारामो यद्यपीशस्तथापि पूर्णमब्दकम् ।<br>सतीशवं गृहीत्वा च भ्रामं भ्रामं रुरोद ह ॥<br>प्रत्यङ्गाङ्गञ्च तस्याश्च पपात यत्र यत्र च ।<br>सिद्धपीठस्तत्र तत्र बभूव मन्त्रसिद्धिकृत् ॥<br>तदा शवावशेषञ्च कृत्वा वक्षसि शङ्करः ।<br>पपात मूर्च्छितो भूत्वा सिद्धक्षेत्रे च राधिके ! ॥<br>तदा गत्वा महेशन्तं कृत्वा क्रोडे प्रबोध्य च ।<br>अददं दिव्यतत्त्वञ्च तस्मै शोकहरं परम् ॥<br>तदा शिवश्च सन्तुष्टः स्वलोकञ्च जगाम ह । | | द्वादशेऽत्रिः समाख्यातो वाली चाथ त्रयोदशे ।<br>चतुर्द्दशे गौतमस्तु वेदशीर्व्वा ततः परम् ॥<br>गोकर्णश्चाभवत्तस्माद्गुहारामः शिखण्ड्यथ ।<br>जटामाल्यश्च हासश्च दारुको लाङ्गली क्रमात् ॥<br>श्वेतस्तथा परः शूली तिण्डी मुण्डी च वै क्रमात् ।<br>सहिष्णुः सोमशर्म्मा च कुलीशो चान्तिमे प्रभुः ॥<br>वैवस्वतेऽन्तरे शम्भोरवतारास्त्रिशूलिनः ।<br>अष्टाविशतिविख्याता ह्यन्ते कलियुगे प्रभोः ।<br>तीर्थकार्य्यावतारः स्याद्देवेशो नकुलीश्वरः ॥”<br>इति कौर्म्मे ५० अध्यायः ॥ * ॥ |

तस्याष्टषष्टिनामानि क्षेत्राणि च यथा, --
मनुरुवाच ।
“मन्दरस्थं महादेवं ब्रह्मा पृच्छति शङ्करम्
।
केषु केषु च स्थानेषु द्रष्टव्योऽसि मया
प्रभो ! ॥
ईश्वर उवाच ।
वाराणस्यां महादेवं प्रयागे तु महेश्वरम् ।
नैमिषे देवदेवञ्च गयायां प्रपितामहम् ॥
कुरुक्षेत्रे विदुः स्थाणुं प्रभासे शशिभूषणम्
।
पुष्करे तु अपोगन्धिं विश्वञ्च विमलेश्वरे ॥
अट्टहासे महानादं महेन्द्रे तु महाव्रतम् ।
उज्जयिन्यां महाकालमाकोटे तु
महोत्कटम् ॥
शङ्कुकर्णे महातेजं गोकर्णे च महाबलम् ।
भैरवे भैरवाकारं भवं वस्त्रापदे विदुः ॥
उग्रं कनखले चैव भद्रकर्णाह्रदे शिवम् ।
देवदारुवने दिण्डिं चण्डीशं मध्यमङ्गले ॥
ऊर्द्धरेतं त्वरण्डे तु सकलाण्डे कपर्द्दिनम्
।
कृत्तिवाससमेकाग्रे सूक्ष्मं ताम्रातिकेश्वरे ॥
कालञ्जरे नीलकण्ठं श्रीकण्ठं मण्डलेश्वरे
।
ध्यानं सिद्धेश्वरे योगी गायत्रीञ्चोत्तरेश्वरे
॥
विजयं नाम काश्मीरे जयन्तं मरुकेश्वरे ।
हरिश्चन्द्रे हरिञ्चैव पुरिश्चन्द्रे तु शङ्करम् ॥
जटावासेश्वरे विद्यां सौम्यं कुब्जटकेश्वरे
।
भूतेश्वरे भस्मगात्रं जललिङ्गे जलेश्वरम् ॥
भिक्षुकं कर्णिकायान्तु वाराहं बिन्ध्यपर्व्वते
।
ताम्रं पश्चिमसन्ध्यायां विरजायां
त्रिलोचनम् ॥
दृप्तेश्वरे त्रिशूलन्तु श्रीशैले त्रिपुरान्तकम् ।
जललिङ्गे विदुः कालिं कापालिं करवीरके
॥
दीप्तचक्रेश्वरे वेदं नेपाले पशुपतिं पतिम् ।

तन्नामोच्चारणफलं यथा, --
“कोटयो ब्रह्महत्यानामगम्यागमकोटयः ।
सद्यः प्रलयमायान्ति महादेवेति कीर्त्तनात् ॥
महादेव महादेव महादेवेति वादिनम् ।
वत्सं गौरिव गौरीशो धावन्तमनुधावति ॥”
इति पुराणम् ॥ * ॥
तस्य प्रणाममन्त्रः ।
“नमस्ये त्वां महादेव ! लोकानां गुरुमीश्वरम्
।
पुंसामपूर्णकामानां कामपूरामराङ्घ्रिपम् ॥”
इति श्रीभागवतम् ॥
“महादेवं महात्मानं महायोगिनमीश्वरम् ।
महापापहरं देवं मकाराय नमो नमः ॥”
इति तन्त्रम् ॥ * ॥
तस्य कालरूपवर्णनं यथा, --
नारद उवाच ।
“कालरूपी त्वया ख्यातः शम्भुर्गगनगोचरे ।
लक्षणञ्च स्वरूपञ्च सर्व्वं व्याख्यातुमर्हसि ॥
पुलस्त्य उवाच ।
स्वरूपं त्रिपुरघ्नस्य वदिष्ये कालरूपिणः ।
अश्विनी भरणी चैव कृत्तिका प्रथमांशकम् ॥
मेषकं हि विजानीयात् कुजक्षेत्रमुदाहृतम् ।
आग्नेयांशास्त्रयो ब्रह्मन् ! प्राजापत्यं कवेर्गृहम्
॥
सौम्यार्द्धं वृषनामेदं वदनं परिकीर्त्तितम् ।
मृगार्द्धमार्द्रादित्यांशास्त्रयःसौम्यगृहन्त्विदम्
॥
मिथुनं भुजयोस्तस्य गगनस्थस्य शूलिनः ।
आदित्यांशश्च पुष्यञ्च अश्लेषा शशिनो गृहम्
॥
राशिः कर्कटको नाम पार्श्वेन खविलासिनः ।
पित्रर्क्षं भगदैवत्यं उत्तरांशश्च केशरी ॥
सूर्य्यक्षेत्रं विभोर्ब्रह्मन् हृदयं परिकीर्त्तितम् ।
उत्तरांशास्त्रयः पाणिश्चित्रार्द्धं कन्यका
त्विदम् ॥
सोमपुत्त्रस्य सद्मैतत् द्वितीयं जठरं विभोः ।
चित्रांशद्वितयं स्वाती विशाखायांशकत्रयम् ॥
द्वितीयं शुक्रसदनं तुलानाभिरुदाहृतम् ।
विशाखांशमनुराधा ज्येष्ठा भौमगृहं त्विदम् ॥

तस्या व्युत्पत्तिर्यथा, --
“पूज्यते या सुरैः सर्व्वैर्महांश्चैव प्रमाणतः
।
धातुर्महेति पूजायां महादेवी ततः स्मृता
॥”
इति देवीपुराणे ४५ अध्यायः ॥
राज्ञी । पाटराणी इति भाषा । तत्पर्य्यायः
।
महिषी २ पट्टार्हा ३ पट्टदेवी ४ । इति
राज-
निर्घण्टः ॥ (यथा, कथासरित्सागरे । ५
। २९ ।
“अलिखत् स महादेवीं योगनन्दञ्च तं पटे
।
सजीवमिव तच्चित्रं वाक्चेष्टारहितं
त्वभूत् ॥”)

**महादैत्यः**, पुं, (महांश्चासौ दैत्यश्चेति ।) भौत्य-
मन्वन्तरीयदैत्यविशेषः । यथा, --
“चतुर्द्दशस्य भौत्यस्य शृणु
पुत्रान्मनोर्मम ।”
इत्युपक्रम्य ।
“शुचिरिन्द्रो महादैत्यो रिपुर्हन्ता हरिः
स्वयम् ॥”
इति गारुडे ७८ अध्यायः ॥

**महाद्रावकः**, पुं, (द्रावयति रोगानिति । द्रु + णिच्
+ ण्वुल् । महांश्चासौ द्रावकश्चेति ।)
औषध-
विशेषः । द्रावक इति भाषा । यथा, --
“यवक्षारस्य भागौ द्वौ स्फटिकास्त्रयो
मताः ।
एकीकृत्य प्रपिष्यापि मूत्रैर्व्वत्सतरीभवैः
॥
शुष्कं कृत्वा क्षिपेत् पात्रे सैसके
वस्त्रलेपिते ।
अन्यसीसकपात्रन्तु द्विमुखं मेलयेद्बुधः ॥
वृद्धवैद्योपदेशेन पचेत् पात्रस्थमौषधम् ।
ततो ज्वालाधतः स्थाप्यं पात्रान्यं लभते
रसम् ॥

श्रीकारारोहणे कूटं दैविकायामुमापतिम् ॥
गङ्गायां सागरे त्वमरमोङ्कारममरकण्ठके।
सप्तगोदावरे भीमं स्वयम्भुं नकुलेश्वरे ॥
कर्णिकारे गणाध्यक्षं कैलासे च गणाधिपम्
।
हेमकूटे विरूपाक्षं भूर्भुवं गन्धमादने ।
सिद्धेश्वरन्तु आकाशे पाताले चट्टकेश्वरम्
॥
अष्टषष्टिश्च नामानि देवदेवस्य धीमतः ।
पुराणे चोपगीतानि ब्राह्मणस्य स्वयम्भुवा
॥
यः पठेत् प्रातरुत्थाय स्नातो वा यदि वा
शुचिः ।
मुच्यते सर्व्वपापेभ्यः शिवलोकं स
गच्छति ॥”
इत्याद्ये देवीपुराणे अष्टषष्टिनामानि महा-
देवस्य ॥ * ॥ तस्य द्वादशनामस्तोत्रम्।
“प्रथमस्तु महादेवो द्वितीयस्तु महेश्वरः ।
तृतीयः शङ्करो ज्ञेयश्चतुर्थो वृषभध्वजः ॥
पञ्चमः कृत्तिवासाश्च षष्ठः कामाङ्गनाशनः
।
सप्तमो देवदेवेशः श्रीकण्ठश्चाष्टमः स्मृतः
॥
ईश्वरो नवमो ज्ञेयो दशमः पार्व्वतीपतिः ।
रुद्र एकादशश्चैव द्वादशः शिव उच्यते ॥
द्वादशैतानि नामानि त्रिसन्ध्यं यः पठेन्नरः
।
कृतघ्नश्चैव गोघ्नश्च ब्रह्महा गुरुतल्पगः
॥
स्त्रीबालघातकश्च्वै सुरापो वृषलीपतिः ।
मुच्यते सर्व्वपापेभ्यो रुद्रलोकं स गच्छति
॥”
इति स्कन्दपुराणम् ॥ * ॥

द्वितीयं वृश्चिको राशिर्मेढ्रं कालस्वरूपिणः ।
मूलं पूर्ब्बोत्तरांशश्च देवाचार्य्यगृहं धनुः ॥
ऊरुयुगलमीशस्य अमरर्षे ! प्रगीयते ।
उत्तरांशास्त्रयो ऋक्षं श्रवणं मकरो मुने ! ॥
धनिष्ठार्द्धं शनिक्षेत्रं जानुनी परिकीर्त्तिते ।
धनिष्ठार्द्धं शतभिषा प्रोष्ठपद्यांशकत्रयम् ॥
सौरं सद्मापरमिदं कुम्भो जङ्घे च विश्रुते ।
प्रोष्ठपद्यांशमेकन्तु उत्तरा रेवती तथा ॥
द्वितीयं जीवसदनं मीनस्तु चरणावुभौ ॥
एवं कृत्वा कालरूपं त्रिनेत्रो
यज्ञं क्रोधान्मार्गणैराजघान ।
विद्धश्चासौ वेदनाबुद्धियुक्तः
खे सन्तस्थौ तारकाभिश्चिताङ्गः ॥”
इति वामनपुराणे ५ अध्यायः ॥

**महादेवी**, स्त्री, (महादेवस्य पत्नीति । पत्न्यर्थे ङीष् ।
यद्वा, महती चासौ देवी चेति ।) दुर्गा । यथा,
“अपर्णा स्यान्महादेवी गिरिजा मेनकात्मजा
॥”
इति हलायुधः ॥

ततो रसं विनिष्कृष्य स्थापयेत्
स्निग्धभाजने ।
लवङ्गेन वटीं कुर्य्यादथवा मृतताम्रकैः ॥
प्लीहादिस्थूलरोगेषु दापयेत् रक्तिकां
भिषक् ।
द्रवीकरोति रोगञ्च महाद्रावकसंज्ञकः ॥
श्वित्रे च दद्रुरोगे च प्रलेपं द्रावकस्य च ।
वह्निवज्ज्वलनं तस्य दधि दत्त्वा प्रलेपयेत्
॥” * ॥
अपि च ।
“वृषश्चित्रमपामार्गं चिञ्चा
कुष्माण्डनाडिका ।
स्नुही तालस्य पुष्पञ्च वर्षाभूर्व्वेतसं तथा
॥
एतेषां क्षारमाहृत्य लिम्पाकस्वरसेन च ।
क्षालयित्वा क्षारतोयं वस्त्रपूतञ्च कारयेत्
॥
चण्डातपेन संशोष्य ग्राह्यं
तद्द्रवंणोचितम् ।
एतस्य द्विपलं ग्राह्यं यवक्षारपलद्वयम् ॥
स्फटिकारिपलञ्चैव नरसारपलं तथा ।
पलार्द्धं सैन्धवं ग्राह्यं टङ्कणं तोलकद्वयम्
॥
कासीसं तोलकञ्चैव मुद्राशङ्खञ्च तोलकम्
।
दारुमोचं कर्षकञ्च तोलं समुद्रफेनकम् ॥
सर्व्वमेकत्र संचूर्ण्य वकयन्त्रेण साधयेत् ।
महाद्रावकमेतद्धि योज्यञ्च रसजारणे ।
हन्ति गुल्मादिकान् रोगान् यकृत्प्लीहोद-
राणि च ॥” * ॥
इति भैषज्यरत्नावली ॥
(तथापरञ्च ।
“शुद्धं काञ्चनमाक्षिकं मृदुतरं
कांस्याभिधेय-
न्तथा
सिन्धूत्थं विमलं रसाञ्जनवरं फेनं
स्रवन्तीपतेः ।

क्षारौ सर्ज्जिकसम्भवौ सुविमलौ
भागास्त्व-
मीषां समाः
सप्तानां सदृशन्तु टङ्गणमिह त्वर्द्धो
नृसारः
स्मृतः ॥
तत्तुल्या स्फटिकारिका त्रिसदृशः शुद्धो
यव-
स्याग्रजः
काशीशद्वितयं यवाग्रजसमं सञ्चूर्ण्य
सर्व्वं
न्यसेत् ।
पात्रे काचमये मृदम्बरवृते सोऽयं
महाद्रावको
नो वक्तुं प्रभवेदमुष्य नितरां सम्यग्गुणं
भूतले ॥
एतद्वल्लचतुष्टयं पिबेदथो शुण्ठ्या
लवङ्गेन वा
तत्पश्चात् परिवासितं बहुगुणं
ताम्बूलकं
भक्षयेत् ।
प्रासङ्ग्य्यात् कथयामि ते शृणु गुणान्
कांश्चि-
त्तथान्यान् परान्
निःशेषं विनिहन्ति तानि
चिरजान्यष्टौदराणि
ध्रुवम् ॥
गुल्मं पाण्डुहलीमकं
सुकठिनामष्ठीलिकां
कामलां
मन्दाग्निं विषमाग्नितां बहुविधान्
शोथांश्च
शूलान्यपि ॥” * ॥
इति वैद्यककषायसंग्रहे प्लीहाधिकारे
॥)

**महाद्रुमः**, पुं, (महांश्चासौ द्रुमश्चेति ।) अश्वत्थ-
वृक्षः । इति शब्दचन्द्रिका ॥ बृहद्वृक्षश्च
॥
(यथा, हरिवंशे । २२३ । ७२ ।
“महाधने संग्रामे ।” इति तद्भाष्ये सायनः ॥
महच्च तद्धनच्चेति । प्रभूतधनम् । यथा, ऋग्-
वेदे । १ । ७ । ५ ।
“इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे ॥”
“महाधने प्रभूतधननिमित्तम् ।” इति तद्भाष्ये
सायनः ॥ बहुमूल्ये, त्रि । यथा, किराताज्र्जु-
नीये । १ । ३८ ।
“पुराधिरूढं शयनं महाधनं
विबोध्यसे यः स्तुतिगीतिमङ्गलैः ।
अदभ्रदर्भामधिशय्य संस्थलीं
जहासि निद्रामशिवः शिवारुतैः ॥”)
अतिशयधनयुक्ते, च त्रि ॥

**महाधातुः**, पुं, (महांश्चासौ धातुश्चेति ।) स्वर्णम् ।
इति शब्दचन्द्रिका ॥

**महाध्वनिकः**, पुं, (अध्वनि गच्छतीति । अध्वन् +
ठक् । महांश्चासौ आध्वनिकश्चेति ।) पुण्यार्थं
हिमालयावधिकमहापथगमनेन सम्पादित-
मरणः । यथा, “भृग्वग्निजलसंग्रामदेशान्तरस्थ-
संन्यासानशनाशनिमहाध्वनिकानामुदकक्रिया
कार्य्या सद्यःशौचं भवतीति ।” इति शुद्धितत्त्व-
धृतसुमन्तुसूत्रम् ॥

**महान्**, [त्] त्रि, (मह्यते पूज्यते वेति । मह +
“वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्च ।” उणा०
२ । ८४ । इति अतिः । निपात्यते ।) बृहन् ।
इत्यमरः । ३ । १ । ६० ॥ (यथा, मनौ । ८ ।
२९६ ।
“प्राणभृत्सु महत्स्वर्द्धं गोगजोष्ट्रहयादिषु ॥”)
अस्य पर्य्यायः महच्छब्दे द्रष्टव्यः ॥

**महान्**, पुं, (मह्यते सेव्यते आश्रीयते गमना-
येति । मह् + अतिः ।) उष्ट्रः । इति राज-
निर्घण्टः ॥ दुर्गा । यथा, --
“महान् व्याप्य स्थिता सर्व्वं महा वा प्रकृति-
र्म्मता ।
स्मृतिः संस्मरणाद्देवी नियती च नियामता ॥”
इति देवीपुराणे ४५ अध्यायः ॥
महत्तत्त्वम् । यथा --
“सविकारात् प्रधानात्तु महत्तत्त्वं प्रजायते ।
चित्रोत्पलेति विख्याता सर्व्वपापहरा
शुभा ॥
चित्रोत्पला महानदी ।” इति
पुरुषोत्तम-
तत्त्वम् ॥ गङ्गा । यथा, --
“अम्बुजमम्बुनि जातं
जातु न जायते अम्बुजादम्बु ।
मुरहर ! तव विपरीतं
पादाम्बजान्महानदी जाता ॥”
इत्युद्भटः ॥

**महानन्दः**, पुं, (महानानन्दोऽत्र ।) मुक्तिः ।
इति हलायुधः ॥ (महान् आनन्दः ।)
अति-
शयाह्लादश्च ॥ (नृपतिविशेषः । यथा,
मार्क-
ण्डेये । १३४ । ४० ।
“इत्युक्त्वा तान् महीपालान्
महानन्दमुखान्
बली ।
अथाब्रवीत्तदा सर्व्वान् महारिदमनो
दमः ॥”
वेणुविशेषः । यथा, सङ्गीतदामोदरे ।
“महानन्दस्तथा नन्दो विजयोऽथ
जयस्तथा ।
चत्वार उत्तरवंशा मातङ्गमुनिसम्मताः
॥”)

**महानन्दा**, स्त्री, (महानानन्दोऽस्याः ।) सुरा ।
इति राजनिर्घण्टः ॥ माघशुक्ला नवमी
। यथा,
भविष्ये ।
“माघमासस्य या शुक्ला नवमी
लोकपूजिता ।
महानन्देति सा प्रोक्ता सदानन्दकरी
नृणाम् ॥
स्नानं दानं जपो होमो
देवार्च्चनमुपोषणम् ।
सर्व्वं तदक्षयं प्रोक्तं यदस्यां क्रियते नरैः
॥”

"चकोराः शतपत्राश्च
मत्तकोकिलसारसाः ।
पुष्पितान् फलिताग्रांश्च संपतन्ति
महाद्रुमान् ॥"
शाकद्वीपपतेर्भव्यस्य सप्तमः पुत्त्रः ।
यथा, मार्क-
ण्डेये । ५३ । २१ ।
"जलदश्च कुमारश्च सुकुमारो
मनीवकः ।
कुशोत्तरोऽथ मेधावी सप्तमस्तु
महाद्रुमः ॥")

**महाद्रोणा**, स्त्री, (महती चासौ द्रोणा चेति ।)

वृक्षविशेषः । वडी द्रोणपुष्पी इति
हिन्दी
भाषा । तत्पर्य्यायः । देवकुरुम्बा २
दिव्यपुष्पा
३ महाद्रोणी ४ देवी ५ काञ्ची ६
देवद्रोणा
७ । अस्या गुणाः । कटुत्वम् ।
तिक्तत्वम् ।
मेध्यत्वम् ।
भूतार्त्तिवातकफाग्निमान्द्यनाशित्वम्।
युक्त्या पारदशोधनत्वञ्च । इति
राजनिर्घण्टः ॥

**महाद्रोणी**, स्त्री, (महती चासौ द्रोणी चेति ।)

महाद्रोणाक्षुपः । इति राजनिर्घण्टः ॥

**महाद्वन्द्वः**, पुं, (महान् द्वन्द्वः कोलाहलो यत्र ।)

युद्धवाद्यम् । इति शब्दरत्नावली ॥
अतिशय-
कलहश्च ॥

**महाधनं**, क्ली, (महत् अनेकं धनं मूल्यत्वेनास्य ।)

बहुमूल्यवस्त्रम् । इत्यमरः । २ । ६ ।
११३ ॥
सुवर्णम् । सिह्लकम् । इति मेदिनी । ने,
२०१ ॥
चारुवस्त्रम् । इति हेमचन्द्रः ॥ कृषिः ।
इति
महानिति यतः ख्यातिर्लोकानां जायते सदा ॥"
इति मात्स्ये ३ अध्यायः ॥
(महादेवः । यथा, महाभारते । १३ । १७ । ४२
।
"अशनी शतघ्नी खड्गी पट्टिशी चायुधी
महान् ॥")
महच्छब्दप्रयोगनिषेधो यथा, --
"शङ्खे तैले तथा मांसे वैद्ये ज्यौतिषिके द्विजे ।
यात्रायां पथि निद्रायां महच्छब्दो न दीयते ॥"
इति भट्टिप्रथमसर्गीयचतुर्थश्लोकटीकायां भरतः
॥

**महानटः**, पुं, (महांश्चासौ नटो नर्त्तकश्चेति ।

उद्धतनर्त्तकत्वादस्य तथात्वम् ।) शिवः । इति
त्रिकाण्डशेषः ॥

**महानदी**, स्त्री, (महती चासौ नदी चेति ।)

पुरुषोत्तमक्षेत्रान्तर्गतकटकस्योत्तरदेशस्थनदी-
विशेषः । तस्या नामान्तरं चित्रोत्पला । यथा,
"नदी तत्र महापुण्या बिन्ध्यपादविनिर्गता ।
इति तिथ्यादितत्त्वम् ॥
नदीविशेषः । सा पद्माया विनिःसृता
राम-
पुराख्याग्रामात् पश्चिमत उत्तरदिग्गता
॥
(दक्षिणदेशीयो नदीभेदः । यथा,
महाभारते ।
१३ । २५ । ४३ ।
"पुनरावर्त्तनन्दाञ्च महानन्दाञ्च सेव्य वै
।
नन्दने सेव्यते
दान्तस्त्वप्सरोभिरहिंसकः ॥")

**महानन्दिः**, पुं, (आ सम्यक् नन्दतीति । आ +

नन्द + "सर्व्वधातुभ्य इन् ।" उणा० ४
। ११७ ।
इति इन् । ततः । महानानन्दिरिति ।)
नन्दिवर्द्धनराजपुत्त्रः । यथा, --
"चत्वारिंशत्तथा भाव्यो राजा वै
नन्दिवर्द्धनः ।
चत्वारिंशत्त्रयश्चैव महानन्दिर्भविष्यति
॥
महानन्दिसुतश्चापि शूद्रायां
कलिकांशजः ।
उत्पत्स्यते महापद्मः सर्व्वक्षत्त्रान्तको
नृपः ॥
ततः प्रभृति राजानो भविष्याः
शूद्रयोनयः ।
एकराट् स महापद्म एकच्छत्रो
भविष्यति ॥"
इति मत्स्यपुराणे २४६ अध्यायः ॥
अपि च ।
"महानन्दिसुतः
शूद्रागर्भोद्भवोऽतिलुब्धो महा-
पद्मानन्दः परशुराम
इवापरोऽखिलक्षत्त्रि-
यान्तकारी भविता ततः प्रभृति शूद्रा
भूपाला
भविष्यन्ति । तेन महानन्दिपर्य्यन्तं
क्षत्त्रिय
आसीत् ।" इति
शुद्धितत्त्वधृतविष्णुपुराणम् ॥

| | | |
|---|---|---|
| शब्दरत्नावली ॥ (महदनेकं धनमस्मात् । संग्रामः । इति निघण्टुः । २ । १७ ॥ यथा, ऋग्वेदे । ८ । ६४ । १२ । "मा नो अस्मिन्महाधने परावर्गभारभृद् यथा ॥" | | **महानरकः**, पुं, (महानतिशययातनाप्रदो नरकः ।) अतिशयनानाप्रकारयातनास्थानम्। इति पुराणम् ॥ (यथा, मनुः । ४ । ८८ । |

"तामिस्रमन्धतामिस्रं महारौरवरौरवौ
।
नरकं कालसूत्रञ्च महानरकमेव च
॥")

**महानलः**, पुं, (महांश्चासौ नलश्चेति ।) देव-

नलः । इति राजनिर्घण्टः ॥
(महांश्चासौ
अनलश्चेति ।) बृहदग्निश्च ॥

**महानवमी**, स्त्री, (महती चासौ नवमी चेति ।)

आश्विनशुक्लनवमी । यथा, --
श्रीभगवानुवाच ।
"दुर्गातन्त्रेण मन्त्रेण
कुर्य्युर्दुर्गामहोत्सवम् ।
महानवम्यां शरदि बलिदानं नृपादयः
॥
आश्विने शुक्लपक्षस्य भवेद्या अष्टमी
तिथिः ।
महाष्टमीति सा प्रोक्ता देव्याः
प्रीतिकरा
परा ॥
ततोऽनु नवमी या स्यात् सा
महानवमी स्मृता ।
सा तिथिः सर्व्वलोकानां पूजनीया
शिवा-
प्रिया ॥"
इति कालिकापुराणे ५७ अध्यायः ॥
अपि च ।
"प्रावृट्काले विशेषेण आश्विने
ह्यष्टमीषु च ।
महाशब्दो नवम्यान्तु लोके ख्यातिं
गमिष्यति ॥"
इति तिथ्यादितत्त्वम् ॥

**महानसं**, क्ली, (महच्च तत् अनश्चेति ।

+ "अनोऽश्मायःसरसां जातिसंज्ञयोः
।" ५ ।
४ । ९४ । इति संज्ञायां टच् ।
"आन्महतः

कांस्यजे पाचितं यद्धि तद्धितं मतिदं शुचि ।
यच्च ताम्रमये सिद्धं न रुच्यं त्वम्लपित्तकृत् ॥
सौवर्णे राजते पाच्यमाढ्यभूमिभृतां गृहे ।
तत्पात्रं सर्व्वदोषघ्नं धिषणोत्सवदायकम् ॥"
अथ महानसोपयोग्योपकरणानि ।
"वस्तूनि भोजनार्हाणि विविधानि पुनः पुनः ।
सर्व्वाणि गुणयुक्तानि स्थापितानि महानसे ॥
दास्याप्तमार्ज्जनी वाढा पूतहण्डी सुकूर्च्चिका
।
कर्षणी वैणवं पात्रं जलपूर्णस्त्वलिञ्जरः ॥
वह्निसंजननो ग्रावः कुद्दालं सुकुठारकः ।
दारुखण्डानि शुष्काणि हस्तमात्राणि चेन्ध-
नम् ॥
अजीर्णान्यनतिस्थूलान्यजन्तून्यमलानिच ।
तितयुश्चालनी पीठो मुषलं चाप्युदूखलम् ॥
सूर्पलोष्ट्रशिला दर्व्वी चनुरस्रावपट्टिका ।
संदंशकन्तु युगलं वस्त्रखण्डचतुष्टयम् ॥
नालिका च्छुरिका चैव सुशूलं सुकटाहकम् ॥
वह्निसञ्चालनार्थाय दर्व्वी दीर्घा सुलौहजा ॥
तन्दूरझर्झरी स्रावा तप्तकं दृढवेष्टनी ।
इत्यादि वस्तुजातं हि युज्यते च महानसे ॥"
इति पाकराजेश्वरः ॥
तत्र रक्षणीया जना यथा, --
"सूदशास्त्रविधानज्ञाः पराभेद्याः कुलोद्गताः
।
सर्व्वे महानसे धार्य्या लुप्तकेशनखा जनाः ॥"
इति मात्स्ये १८९ अध्यायः ॥
महानसोऽपि पुंसि । इत्यमरटीकायां रमा-
नाथः ॥

**महानाटकं**, क्ली, (महच्च तत् नाटकञ्चेति ।)

नाटकविशेषः । तस्य लक्षणं यथा, --
"एतदेव यदा सर्व्वैः पताकास्थानकैर्युतम् ।
अङ्कैश्च दशभिर्धीरा महानाटकमूचिरे ॥
एतदेव नाटकम् । यथा, बालरामायणम् ।"
इति साहित्यदर्पणः ॥
स्वनामख्यातहनूमद्रचित-
रामचरितग्रन्थविशेषः । यथा, --
"एष श्रीलहनूमता विरचिते श्रीमन्महानाटके
वीरश्रीयुतरामचन्द्रचरिते प्रत्युद्धृते विक्रमैः ।

भारते । १३ । १७ । ४८ ।
"निशाचरः प्रेतचारी भूतचारी महेश्वरः ।
कालयोगी महानादः सर्व्वकामश्चतुष्पथः
॥"
महाशब्दयुक्ते, त्रि । यथा, रामायणे । ४ ।
४० । ३८ ।
"तत्कालमेव प्रतिमं महोरगनिषेवितम् ।
अभिगम्य महानादं तीर्थेनैव महोदधिम् ॥")

**महानिद्रा**, स्त्री, (महती सुदीर्घा चासौ निद्रा

चेति ।) मरणम् । इति जटाधरः ॥

**महानिम्बः**, पुं, (महांश्चासौ निम्बश्चेति ।) निम्ब-

वृक्षविशेषः । घोडा निम इति भाषा । तत्-
पर्य्यायः । कैटर्य्यः २ पवनेष्टः ३ पार्व्वतः ४
।
इति रत्नमाला ॥ (यथा, --
"मृतसूताभ्रनागञ्च स्वर्णं तुल्यं प्रकल्पयेत् ।
महानिम्बस्य चूर्णतु चतुर्भिः सममाहरेत् ।
मधुना लेहयेन्माषं लालामेहप्रशान्तये ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे प्रमेहाधिकारे ॥)
अस्य गुणाः । परमग्राहित्वम् । कषायत्वम् ।
अम्लत्वम् । शीतलत्वञ्च । इति राजवल्लभः
॥
(तथास्य पर्य्यायान्तरं गुणाश्च ।
"महानिम्बः स्मृतोद्रेका रम्यको विषमुष्टिकः
।
केशामुष्टिनिम्बकश्च कार्म्मुको जीव इत्यपि
॥
महानिम्बो हिमो रूक्षस्तिक्तो ग्राही कषा-
यकः ।
कफपित्तभ्रमच्छर्द्दिकुष्ठहृल्लासरक्तजित् ।
प्रमेहश्वासगुल्मार्शो मूषिकाविषनाशनः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**महानिशा**, स्त्री, (महती घोरा निशा ।)

निशामध्यभागः । तत्पर्य्यायः । निशार्द्धः २
निशीथः ३ । इति हेमचन्द्रः । २ । ५९ ॥ *
॥

समानाधिकरणजातीययोः।” ६ । ३ । ४६ ।
इति महत आकारादेशः ।)
रन्धनगृहम् ।
तत्पर्य्यायः । रसवती २
पाकस्थानम् ३ । इत्य-
मरः । २ । ९ । २७ ॥ (तथास्य
लक्षणं
यथा, --
“प्रशस्तदिग्देशकृतं शुचिभाण्डं
महच्छुचि ।
सजालकं
गवाक्षाढ्यमात्मवर्गनिषेवितम् ॥
विकक्षसृष्टसंसृष्टं सवितानं
कृतार्च्चनम् ।
परीक्षितस्त्रीपुरुषं भवेच्चापि
महानसम् ॥
तत्राध्यक्षं नियुञ्जीत प्रायो
वैद्यगुणान्वितम् ।
शुचयो दक्षिणा दक्षा विनीताः
प्रियदर्शनाः ॥
सविभक्ताः सुमनसो नीचकेशनखाः
स्थिराः ।
स्नाता दृढं संयमिनः कृतोष्णीषाः
सुसंयुताः ॥
तस्य चाज्ञा विधेयाः स्युर्व्विविधाः
परि-
कर्म्मिणः ।
आहारस्थितयश्चापि भवन्ति
प्राणिनो यतः ॥
तस्मान्महानसे वैद्यः प्रमादरहितो
भवेत् ।
माहानसिकवोढारः
सौपौदनिकपौपिकाः ॥
भवेयुर्वैद्यवशगा ये चाप्यन्ये तु केचन
॥”
इति सुश्रुते कल्पस्थाने प्रथमेऽध्याये
॥)
तद्विवरणं यथा, --
“आग्नेय्यां दिशि कर्त्तव्यमावासस्य
महानसम् ।
मिश्रश्रीमधुसूदनेन कविना सन्दर्भ्य
सज्जीकृते
स्वर्गारोहणनामकोऽत्र नवमो यातोऽङ्क
एवेत्यसौ ॥”
इति तस्यान्तिमः श्लोकः ॥

**महानाडी**, स्त्री, (महती चासौ नाडी चेति ।)
कण्डरा । इति राजनिर्घण्टः ॥ (विवरणमस्याः
कण्डराशब्दे ज्ञेयम् ॥)

**महानादः**, पुं, (महान् नादोऽस्य ।) हस्ती ।
वर्षुकमेघः । (महाश्चासौ नादश्चेति ।) महा-
शब्दः । इति मेदिनी । दे, ५१ ॥ (यथा,
महाभारते । ५ । ९९ । २ ।
“इदमद्भिः समं प्राप्ता ये केचिद्ध्रुवजङ्गमाः ।
प्रविशन्तो महानादं नदन्ति भयपीडिताः ॥”)
सिंहः । कर्णः । इति हेमचन्द्रः ॥ उष्ट्रः ।
शङ्खः । इति राजनिर्घण्टः ॥ काहलवाद्यम् ।
इति हारावली ॥ (महादेवः । यथा, महा-
स्मृत्युक्तमहानिशा सार्द्धप्रहरोपरि प्रहरद्वयम्
।
“महानिशा तु विज्ञेया मध्यभं प्रहरद्वयम् ।
तत्र स्नानं न कुर्व्वीत काम्यनैमित्तिकादृते
॥”
इति रघुनन्दनभट्टाचार्य्यधृतवचनात् ।
महानिशापरकालस्य नाडीचतुष्टयस्य पर-
दिनादित्वेन तदानीं
पूर्ब्बदिवसीयभोजनानुप-
पत्तेः । तद्दिनकृत्यलोपापत्तेश्चेति
तिथितत्त्वीय-
लिखनस्वरसाच्च ॥ * ॥ तत्र भक्षणनिषेधो
यथा, --
“यन्मुहूर्त्ते व्यतीते तु रात्रावेव महानिशा ।
लभते ब्रह्महत्याञ्च तत्र भुक्त्वा च नारद ! ॥
गोमांसविण्मूत्रसमं ताम्बूलञ्च फलं जलम् ।
पुंसामभक्ष्यं शुद्धायामोदनस्यापि का कथा
॥”
इति ब्रह्मवैवर्त्तपुराणम् ॥
तत्र पारणनिषेधो यथा, --
“न रात्रौ पारणं कुर्य्यादृते वै रोहिणीव्रतात् ।
निशायां पारणं कुर्य्याद्वर्ज्जयित्वा
महानिशाम् ॥
महानिशायां प्राप्तायां तिथिभान्तं यदा भवेत्
।
तृतीयेऽह्नि मुनिश्रेष्ठ ! पारणं कुरुते व्रती ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्ड ८
अध्यायः ॥
देवलोक्ता महानिशा रात्रिमध्यमदण्डद्वया-
त्मिका । सा
द्वितीयप्रहरशेषदण्डतृतीयप्रहर-

| | | |
|---|---|---|
| गवाक्षजालमार्गाय<br>मूर्द्धभित्त्युपलेपितम् ॥<br>चुल्ली तत्र प्रकर्त्तव्या<br>पूर्ब्बपश्चिममायता ।<br>मृण्मयादीनि भाण्डानि क्षालितानि च वारिणा ॥<br>तेषु यत् पच्यते द्रव्यं गुणवत् सर्व्वसम्मतम् ।<br>मृदभावे पचेल्लौहे चक्षुरर्शोविकारजित् ॥ | | |

प्रथमदण्डरूपा ॥ तस्यां शिवलिङ्गोद्भवो यथा,
“माघकृष्णचतुर्द्दश्यामादिदेवो महानिशि ।
शिवलिङ्गतयोद्भूतः कोटिसूर्य्यसमप्रभः ॥”
अत्र ।
“महानिशा द्वे घटिके रात्रेर्म्मध्यमयामयोः ॥”
इति देवलोक्ता महानिशा ॥
घटिका दण्डरूपा । इति तिथ्यादितत्त्वम् ॥
तान्त्रिकमहानिशा यथा, तन्त्रसारे ।
“गते तु प्रथमे यामे तृतीयप्रहरावधि ।
महानिशायां जप्तव्यं रात्रिशेषे जपेन्न तु ॥”
अपि च ।
“निशा तु परमेशानि ! सूर्य्ये चास्तमुपागते ।
प्रहरे च गते रात्रौ घटिके द्वे परे च ये ।
महानिशा समाख्याता ततश्चातिमहानिशा ॥
अर्द्धरात्रे गते देवि ! पशुभावेन पूजयेत् ।
दशदण्डे तु या पूजा तत् सर्व्वमक्षयं भवेत् ॥
षष्ठक्रोशे महेशानि ! तत् सर्व्वममृतोपमम् ।
सप्तमक्रोशके देवि ! सर्व्वं क्षीरोपमं भवेत् ॥
अष्टमक्रोशके देवि ! द्रव्यतुल्यं न संशयः ।
अतःपरं महेशानि ! विषतुल्यो न संशयः ॥
एतत् सर्व्वं महेशानि ! पशुभावे मयोदितम् ।
दिव्यवीरमते देवि ! तत्त्वज्ञानेन पूजयेत् ॥
पञ्चतत्त्वं समानीय यदि पूजापरो भवेत् ।
कालाकालं महेशानि ! विचारं तत्र वर्ज्जयेत्
॥
अर्द्धरात्रगते देवि ! कुलपूजा प्रकीर्त्तिता ।
भवेत्तन्त्रानुरूपेण सर्व्वं पूजादिकञ्चरेत् ॥
अतिस्नेहेन देवेशि ! तव स्थाने प्रकाशितम् ।
पशोरग्रे कदाचिद्वै प्रकाशं नैव कारयेत् ॥”
इति गुप्तसाधनतन्त्रे ६ पटलः ॥

**महानीचः**, पुं, (महानतिशयो नीचः ।)
रजकः । इति शब्दमाला ॥ अतिशयहीन-
वर्णश्च ॥

**महानीलः**, पुं, (महान् नीलः नीलवर्णः ।) भृङ्ग-
राजः । नागविशेषः । मणिविशेषः । इति
मेदिनी । ले, १६१ ॥ (यथा, शिशुपालवधे ।
१ । १६ ।
“महामहानीलशिलारुचः पुरो
“शीतार्त्तश्चक्रमुञ्जश्च कुलीरोऽथ
सुकङ्कवान् ।
मणिशैलोऽथ वृषवान् महानीलो
भवाचलः ॥”)

**महानीला**, स्त्री, (महती चासौ नीला नील
वर्णा चेति ।) महाजम्बूः । इति
राजनिर्घण्टः ॥
(विशेषोऽस्य महाजम्बूशब्दे विज्ञेयः ॥)

**महानीली**, स्त्री, (नील + “नीलादोषधौ ।”
४ । १ । ४२ । इति वार्त्तिकोक्त्या ङीष्
। ततः ।
महती चासौ नीली चेति ।)
नीलापराजिता ।
बृहन्नीली । तत्पर्य्यायः । अमरा २ जनि-
नीलिका ३ तुत्था ४ श्रीफलिका ५ मेला
६
केशार्हा ७ भर्त्सपत्रिका ८ । अस्या गुणाः
।
गुणाढ्यत्वम् । रङ्गश्रेष्ठत्वम् ।
सुवर्णदातृत्वम् ।
नीलिकामपेक्ष्य सर्व्वकर्म्मसु सगुणत्वम् ।
इति
राजनिर्घण्टः ॥

**महानुभावः**, त्रि, (महाननुभावो माहात्म्य-
मस्य ।) महाशयः । यथा, --
“सुकृती पुण्यवान् धन्यो धर्म्मी च
धर्म्मवानपि ।
महाशयो महेच्छः स्यान्महानुभाव
इत्यपि ॥”
इति शब्दरत्नावली ॥
(महात्मा । यथा, शिशुपालवधे । १ ।
१७ ।
“ग्रहीतुमार्य्यान् परिचर्य्यया मुहु-
र्महानुभावा हि नितान्तमर्थिनः ॥”)

**महान्तः**, पुं, (महत् + प्रथमाबहुवचनरूपम् ।)
नवधाभक्तियुक्तकृष्णभक्ताः । ते
शिवशेषधर्म्मा-
“शृङ्गी च कालकूटश्च मुस्तको
वत्सनाभकः ।
शङ्खकर्णीति योगोऽयं महापञ्चविषाभिधः
॥”
इति राजनिर्घण्टः ॥

**महापत्रा**, स्त्री, (महान्ति पत्राण्यस्याः ।)
महाजम्बूः । इति रत्नमाला ॥
बृहत्पर्णयुक्ते
त्रि ॥

**महापथः**, पुं, (महांश्चासौ पन्थाश्चेति । “आन्म-
हत इति ।” ६ । ३ । ४६ । इति महत
आकारा-
देशः । “ऋक् पूरब्धूःपथामानक्षे ।” ५ ।
४ । ७४ ।
इति समासान्तोऽकारः ।) प्रधानपथः ।
तत्पर्य्यायः । घण्टापथः २ संसरणम् ३
श्रीपथः ४ राजवर्त्म ५ उपनिष्क्रमणम् ६
उप-
निष्करम् ७ । इति हेमचन्द्रः । ४ । ५३
॥
(यथा, रामायणे । २ । ८० । १९ ।
“पताका शोभिताः सर्व्वे
सुनिर्म्मितमहापथाः ॥”
यथा च महाभारते । ५ । ९४ । २० ।
“संमृष्टसंसिक्तरजः प्रतिपेदे महापथम्
॥”
मृत्युपथः । “यात्रायां पथि निद्रायां
महच्छब्दो
न दीयते ।” इत्यस्य प्रतिप्रसूतार्थवत्त्वात्
तथात्वम् । यथा, कथासरित्सागरे । २ ।
४३ ।
“तच्छोकादिन्द्रदत्तस्य पिता यातो महा-
पथम् ॥”
सुषुम्ना । यथा, हठयोगप्रदीपिकायाम् ।
३ । ४ ।
“सुषुम्ना शून्यपदवी ब्रह्मरन्ध्रं महापथः ।
श्मशानं शाम्भवी
मध्यमार्गश्चेत्येकवाचकाः ॥”)

निषेदिवान् कंसकृषः स विष्टरे ॥”
“सिंहलस्याकराद्भूता महानीलास्तु ते स्मृताः
॥
इति भगवानगस्त्यः ॥” इति तट्टीकायां मल्लि-
नाथः ॥) तस्य लक्षणं यथा, --
“यस्तु वर्णस्य भूयस्त्वात् क्षीरे शतगुणे
स्थितः ।
नीलतां तनुयात् सर्व्वं महानीलः स उच्यते
॥”
इति गारुडे ७२ अध्यायः ॥
(गुग्गुलुजातिभेदः । तद्यथा, --
“महिषाक्षो महानीलः कुमुदः पद्म इत्यपि ।
हिरण्यः पञ्चमो ज्ञेयो गुग्गु लोः पञ्च जातयः ॥
महानीलस्तु विज्ञेयः स्वनामसमलक्षणः ।
महिषाक्षो महानीलो गजेन्द्रानां हितावुभौ ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
सुमेरोर्दक्षिणपार्श्वस्थपर्व्वतविशेषः । यथा,
मार्क-
ण्डेये । ५५ । ४ ।
दयः । यथा, --
“शिवः शेषश्च धर्म्मश्च ब्रह्मा विष्णुर्महान्
विराट् ।
सनत्कुमारः कपिलः सनकश्च सनन्दनः
॥
वोढुः पञ्चशिखो दक्षो नारदश्च सनातनः
।
भृगुर्म्मरीचिर्दुर्वासाः कश्यपः
पुलहोऽङ्गिराः ॥
मेधसो लोमशः शुक्रो वशिष्ठः क्रतुरेव च
।
बृहस्पतिः कर्द्दमश्च शक्तिरत्रिः पराशरः
॥
मार्कण्डेयो बलिश्चैव प्रह्लादश्च गणेश्वरः
।
यमः सूर्य्यश्च वरुणो वायुश्चन्द्रो
हुताशनः ॥
अकूपार उलूकश्च नाडीजङ्घश्च वायुजः
।
नरो नारायणः कूर्म्म इन्द्रद्युम्नो
विभीषणः ॥
नवधाभक्तियुक्ताश्च कृष्णस्य परमात्मनः
।
एते महान्तो धर्म्मिष्ठा भक्तानां
प्रवरास्तथा ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ६०
अध्यायः ॥

**महापञ्चमूलं**, क्ली, (पञ्चानां विल्वादिमूलानां
समाहारः । ततः महच्च तत्
पञ्चमूलञ्चेति ।)
बृहत् पञ्चमूलम् । तद्यथा, --
“विल्वोऽग्निमन्थः श्योनाकः काश्मर्य्यः
पाटला
तथा ।
सर्व्वैस्तु मिलितैरेतैः
स्यान्महापञ्चमूलकम् ॥”
इति राजनिर्घण्टः ॥
(यथा, सुश्रुते चिकित्सितस्थाने २०
अध्याये ।
“विनिर्गमार्थं वायोश्च स्वेदयेच्च मुहुर्मुहुः
।

**महापथगमः**, पुं, (महापथस्य महापथे वा गमः
गमनम् ।) मरणम् । इति जटाधरः ॥

**महापद्मः**, पुं, (महत् पद्मं तावृशं चिह्नं
शिरसि यस्य ।) अष्टनागान्तर्गतनागभेदः
।
तत्पर्य्यायः । अतिशुक्लः २
दशबिन्दुकमस्तकः ३ ।
इति हेमचन्द्रः । ४ । ३७५ ॥ (यथा,
हरि-
वंशे । ३ । ११२ ।
“ऐरावतो महापद्मः कम्बलाश्वतरावुभौ
॥”
दर्व्वीकरान्तर्गतसर्पविशेषः । तद् यथा ।
“कृष्ण-
सर्पो महाकृष्णः कृष्णोदरः श्वेतकपोतो
महा-
कोपोतो बलाहको महासर्पः शङ्खपालो
लोहि-
ताक्षो गवेधुकः परिसर्पः खण्डफणः
ककुदः
पद्मो महापद्मो दर्भपुष्पो दधिमुखः
पुण्डरीको
भ्रुकुटीमुखो विष्किरः पुष्पाभिकर्णो गिरि-
सर्प ऋजुसर्पः श्वेतोदरो महाशिरा
अलगर्द्द
आशीविष इति ॥” इति सुश्रुते
कल्पस्थाने
चतुर्थेऽध्याये ॥) कुवेरस्य
नवनिध्यन्तर्गतनिधि-
विशेषः । इति जटाधरः ॥ (यथा,
मार्कण्डेये ।
६४ । १५ ।
“यस्या वत्से ! प्रभावेण विद्यायास्तां
गृहाण मे ।
पद्मिनी नाम विद्येयं महापद्माभिपूजिता
॥”
पुरभेदः । यथा, महाभारते । १२ ।
३५३ । १ ।
“आसीत् किल नरश्रेष्ठ ! महापद्मे
पुरोत्तमे ।

| | | |
|---|---|---|
| | क्षीरं महापञ्चमूलं मूषिकां चान्त्रवर्ज्जिताम् ॥”)<br>**महापञ्चविषं**, क्ली, (पञ्चानां विषाणां समाहारः । ततो महच्च तत् पञ्चविषञ्चेति ।) बृहद्विषपञ्च-कम् । तद्यथा, -- | गङ्गाया दक्षिणे तीरे कश्चिद्विप्रः समाहितः ॥”<br>दैत्यभेदः । यथा, हरिवंशे । २३२ । ३ ।<br>“महापद्मो निकुम्भश्च पूर्णकुम्भश्च वीर्य्यवान् ॥”<br>हस्तिभेदः । यथा, महाभारते । ६ । ६१ । ५१ । |

"तस्य चान्येऽपि दिङ्गागा
बभुवुरनुयायिनः ।
अञ्जनो वामनश्चैव महापद्मश्च सुप्रभः
॥")
क्ली, लक्षकोटिसंख्या ॥ इति
लीलावती ॥ (यथा,
महाभारते । २ । ६१ । ३ ।
"अयुतं प्रयुतं चैव पद्मं खर्व्वमथार्व्वुदम्
।
शङ्खञ्चैव महापद्मं निखर्व्वं कोटिरेव च
॥")
शुक्लपद्मम् । इति रत्नमाला ॥

**महापातकं**, क्ली, (महदतिशयितं पातकम् ।)
पापविशेषः । तत्तु पञ्चविधम् । यथा, --
"ब्रह्महत्या सुरापानं स्तेयं
गुर्व्वङ्गनागमः ।
महान्ति पातकान्याहुः संसर्गश्चापि
तैः सह ॥"
इति मानवे ११ अध्यायः ॥
"महापातकजं चिह्नं सप्तजन्मसु जायते
।
वाधते व्याधिरूपेण तस्य कृच्छ्रादिभिः
समः ॥"
इति शातातपीयकर्म्मविपाकः ॥
"तुलामकरमेषेषु प्रातःस्नानं विधीयते
।
हविष्यं ब्रह्मचर्य्यञ्च महापातकनाशनम्
॥"
इति मलमासतत्त्वम् ॥
"कृष्णेति मङ्गलं नाम यस्य वाचि
प्रवर्त्तते ।
भस्मीभवन्ति राजेन्द्र !
महापातककोटयः ॥"
इति पुराणम् ॥

**महापातकी**, [न्] त्रि, (महापातकमस्त्य-
स्येति । महापातक + इनिः ।)
पञ्चप्रकार-
पारेवतम् ६ द्वीपजम् ७ द्वीपखर्ज्जूरम् ८ ।
अस्य गुणाः । मधुरत्वम् । बलकारित्वम् ।
पुष्टिवर्द्धनत्वम् । वृष्यत्वम् । मूर्च्छाभ्रमघ्नत्वम् ।
पारेवतादधिकगुणत्वञ्च । इति राजनिर्घण्टः ॥

**महापाशः**, पुं, (महान् पाशोऽस्य ।) यमदूत-
विशेषः । इति बृहद्धर्म्मपुराणे ५६ अध्यायः ॥
(महांश्चासौ पाशश्चेति ।) बृहत्पाशश्च ॥

**महापासकः**, पुं, (पसति वाधते निराकरोति
परकालेश्वरादिकमिति । पस् + ण्वुल् । ततः
महांश्चासौ पासकश्चेति ।) बुद्धभिक्षुकः ।
तत्पर्य्यायः । चेलुकः २ श्रामणेरः ३ प्रव्रजितः
४ गोमीनः ५ । इति त्रिकाण्डशेषः ॥ (महो-
पासक इति पाठः कुत्रचित् दृश्यते ॥)

**महापिण्डीतकः**, पुं, (पिण्डीं तनोतीति । तन् + डः
संज्ञार्थे कन् । ततः महांश्चासौ पिण्डीतक-
श्चेति । पिण्डाकारफलत्वादस्य तथात्वम् ।)
कृष्णवर्णमहामदनवृक्षः । तत्पर्य्यायः । वाराहः
२ । अस्य गुणाः । श्रेष्ठत्वम् । कटुतिक्तरसा-
न्वितत्वम् । छर्द्दनत्वम् । कफहृद्रोगपक्वामाशय-
शोधनत्वञ्च । इति राजनिर्घण्टः ॥

**महापिण्डीतरुः**, पुं, (महांश्चासौ पिण्डीतरु-
श्चेति ।) वृक्षविशेषः । पेडिरा इति हिन्दी
भाषा । तत्पर्य्यायः । श्वेतपिण्डीतकः २ कर-
हाटः ३ क्षुरः ४ शस्त्रकोषतरुः ५ शरः ६
पिण्डीतरुः ७ । अस्य गुणाः । कषायत्वम् ।
उष्णत्वम् । त्रिदोषशमनत्वम् । चर्म्मरोगाप-
हत्वम् । विशेषात् रक्तदोषनाशित्वञ्च । इति
राजनिर्घण्टः ॥

**महापीलुः**, पुं, (पीलति प्रतिष्टभते विषपित्तादिक-
मिति । पील + "मृगय्वादयश्च ।" उणा० १ । ३८
।
इति कुः । ततो महान् पीलुरिति कर्म्मधारयः ।)
पीलुवृक्षविशेषः । तत्पर्य्यायः । बृहत्पीलुः २
महाफलः ३ राजपीलुः ४ महावृक्षः ५
मधुपीलुः ६ । अस्य फलगुणाः । मधुरत्वम् ।
वृष्यत्वम् । विषनाशित्वम् । पित्तप्रशमनत्वम् ।
यद्विहायासुरं भावं महापुरुषतां गतः
॥")
नारायणः । यथा, --
"ध्येयं सदा परिभवघ्नमभीष्टदोहं
तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ।
भृत्यार्त्तिहं प्रणतपालभवाब्धिपोतं
वन्दे महापुरुष ! ते चरणारविन्दम् ॥
त्यक्त्वा
सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं
धर्म्मिष्ठ आर्य्यवचसा यदगादरण्यम् ।
मायामृगं दयितयेप्सितमन्वधाव-
वन्दे महापुरुष ! ते चरणारविन्दम् ॥"
इत्याह्निकतत्त्वधृतश्रीभागवतम् ॥

**महापुरुषदन्ता**, स्त्री, (महापुरुषस्य दन्ता इव
मूलानि यस्याः ।) शतमूली । इति
रत्न-
माला ॥ (विवरणमस्याः शतमूलीशब्दे
ज्ञात-
व्यम् ॥)

**महापुरुषदन्तिका**, स्त्री, (महापुरुषदन्ता +
स्वार्थे कन् । स्त्रियां टाप् अत इत्वञ्च
।) महा-
शतावरी । इति राजनिर्घण्टः ॥

**महापुष्पा**, स्त्री, (महत् प्रशस्तं पुष्पमस्याः ।
स्त्रियां टाप् ।) अपराजिता । इति
शब्द-
चन्द्रिका ॥ (यथा, सुश्रुते उत्तरतन्त्रे
५४
अध्याये ।
"दर्भपुष्पा महापुष्पा
प्रसूनाश्चिपिटास्तथाः ॥"
महापुष्पविशिष्टे, त्रि ॥)

**महापृष्ठः**, पुं, (महत् विपुलं पृष्ठमस्य ।) उष्ट्रः ।
इति राजनिर्घण्टः ॥ त्रि, बृहत्पृष्ठश्च ॥

**महाप्रकृतिः**, स्त्री, (महती श्रेष्ठा प्रकृतिर्जग-
न्मूलकारणम् ।) दुर्गा । यथा, --

महापातकयुक्तः । स च पतितः । यथा, --
“महापातकिनो ये च पतितास्ते प्रकीर्त्तिताः ।
पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः ॥
न चाश्रुपातः पिण्डो वा कार्य्यं श्राद्धादिकं क्वचित् ।
एतानि पतितानान्तु यः करोति विमोहितः ॥
तप्तकृच्छ्रद्वयेनैव तस्य शुद्धिर्न चान्यथा ॥”
इति शुद्धितत्त्वधृतविष्णुपुराणवचनम् ॥
पारिभाषिकमहापातकी यथा, --
“कृतप्राणप्रतिष्ठाञ्च नीचैर्यां प्रतिमां द्विज ! ।
दुर्गां न प्रणमेद्यस्तु स महापातकी स्मृतः ॥”
इति देवीपुराणे व्यासनारदसंवादः ॥ अपि च ।
“पितरं मातरं भार्य्यां गुरुपत्नीं गुरुं परम् ।
यो न पुष्णाति कापट्यात् स महापातकी शिव ! ॥”
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ४४ अध्यायः ॥
(यथा च महानिर्व्वाणतन्त्रे । ३ । ९२ ।
“जातिभेदो न कर्त्तव्यः प्रसादे परमात्मनः ।
योऽशुद्धबुद्धिं कुरुते स महापातकी भवेत् ॥”)

**महापापं**, क्ली, (महच्च तत् पापञ्चेति ।) महापातकम् । यथा, --
“महापापेषु सर्व्वं स्यात् तदर्द्धन्तूपपातके ।
दद्यात् पापेषु षष्ठांशं ज्ञात्वा व्याधिबलाबलम् ॥”
रुच्यत्वम् । आमघ्नत्वम् । दीपनीयकत्वञ्च ।
इति राजनिर्घण्टः ॥

**महापुराणं**, क्ली, (महच्च तत् पुराणञ्चेति ।)
एकादशलक्षणयुक्तव्यासप्रणीताष्टादशसंख्यक-पुराणविशेषः । तस्य लक्षणं यथा, --
“सृष्टिश्चापि विसृष्टिश्च स्थितिस्तेषाञ्च पालनम् ।
कर्म्मणां वासना वार्त्ता मनूनाञ्च क्रमेण च ॥
वर्णनं प्रलयानाञ्च मोक्षस्य च निरूपणम् ।
उत्कीर्त्तनं हरेरेव देवानाञ्च पृथक् पृथक् ।
दशाधिकं लक्षणञ्च महातां परिकीर्त्तितम् ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १३२ अध्यायः ॥
(अष्टादशमहापुराणानां विशेषविवरणलक्ष-णादिकं पुराणशब्दे द्रष्टव्यम् ॥)

**महापुरुषः**, पुं, (महांश्चासौ पुरुषश्च ति ।)
श्रेष्ठनरः । (यथा, श्रीमद्भागवते । ६ । १२ । २० ।
“भवानतार्षीन्मायां वै वेष्णवीं जनमोहिनीम् ।
“चितिश्चैतन्यभावाद्वा चेतना वा चितिः स्मृता ।
महान् व्याप्य स्थिता सर्व्वं महा वा प्रकृति-र्म्मता ॥”
इति देवीपुराणे ४५ अध्यायः ॥

**महाप्रभः**, त्रि, महती प्रभा यस्येति । अतिशय-
दीप्तियुक्तः । (यथा, हरिवंशे भविष्यपर्व्वणि । २९ । १२ ।
“ततश्चक्रं महाघोरं सहस्रारं महाप्रभम् ॥”)

**महाप्रभा**, स्त्री, (महती चासौ प्रभा चेति ।)
महती दीप्तिः । यथा । महाप्रभात्वावच्छिन्ना-भावोऽन्धकारः । इति सामान्यलक्षणायां जग-दीशः ॥

**महाप्रभुः**, पुं, (महांश्चासौ प्रभुश्चेति ।) पर-
मेश्वरः । यथा, --
“वन्देऽनन्ताद्भुतैश्वर्य्यं श्रीचैतन्यं महाप्रभुम् ।
नीचोऽपि यत्प्रसादात् स्यात् सदाचारप्रव-र्त्तकः ॥”
इति हरिभक्तिविलासे ३ विलासः ॥
“अनन्तमद्भुतञ्चावितर्क्यं ऐश्वर्य्यं प्रभावो यस्य तं यतो महाप्रभुं परमेश्वरम् ।” इति तट्टीकायां जीवगोस्वामी ॥ श्रीचैतन्यः । यथा, --
“सोऽयं नीलगिरीश्वरः सविभवो यात्रा च सा गुण्डिचा

| | | |
|---|---|---|
| इति मलमासतत्त्वम् ॥<br>**महापारेवतं**, क्ली, (महच्च तत् पारेवतञ्चेति ।)<br>फलवृक्षविशेषः । वडा पारेवत इति हिन्दी<br>भाषा ॥ तत्पर्य्यायः । स्वर्णपारेवतम् २ साम्रा-<br>णिजम् ३ खारिकम् ४ रक्तरैवतकम् ५ बृहत्- | | |

ते ते दिग्विदिगागताः सुकृतिनस्तास्ता
दिदृक्षार्त्तयः ।
आरामश्च त एव नन्दनवनश्रीणां
तिरस्कारिणः
सर्व्वाण्येव महाप्रभुं वत विना शून्यानि मन्या-
महे ॥”
इति चैतन्यचन्द्रोदयनाटकम्॥

**महाप्रलयः**, पुं, (महांश्चासौ प्रलयो जगता-
मवसानञ्चेति ।) त्रिलोकनाशः । तत्पर्य्यायः ।
संहारः २ । इति हलायुधः ॥ तस्य विवरणं
यथा, --
श्रीमार्कण्डेय उवाच ।
“मन्वन्तरं मनोः कालो यावत् पालयते प्रजाः
।
एको मनुः स कालस्तु मन्वन्तरमिति श्रुतम् ।
तदेकसप्ततियुगैर्द्देवानामिह जायते ।
तैश्चतुर्द्दशभिः कल्पो दिनमेकन्तु वेधसः ॥
दिनान्ते वेधसो जाते सुषुप्सा तस्य जायते ।
योगनिद्रा महामाया समायाति पितामहम् ॥
नाभिपद्मं प्रविश्याथ विष्णोरमिततेजसः ।
सुखं स शेते भगवान् ब्रह्मा लोकपितामहः ॥
ततो विष्णुः स्वयं भूत्वा रुद्ररूपी जनार्द्दनः
पूर्ब्बवन्नाशयामास स सर्व्वं भुवनत्रयम् ॥
वायुना वह्निना सर्व्वं दाहयामास वै यथा ।
महाप्रलयकालेषु तथा सर्व्वं जगत्त्रयम् ॥
जनं यान्ति प्रतापार्त्ता महर्लोकनिवासिनः ।
त्रैलोक्यं दाहयामास पीडिता दारुणाग्निना ॥
ततः कालान्तकैर्म्मेघैर्नानावर्णैर्महास्वनैः ।
समुत्पाद्य महावृष्टिमापूर्य्य भुवनत्रयम् ॥
चलत्तरङ्गैस्तोयौघैराध्रुवस्थानसङ्गतैः ।
निधाय जठरे लोकानिमांस्त्रीन् स जनार्द्दनः ॥
नागपर्य्यङ्कशयने शेते स परमेश्वरः ।
शयानं नाभिकमले ब्रह्माणं स जगत्प्रभुः ॥
संस्थाप्य त्रीनिमाल्लोकान् दग्ध्वा दग्ध्वा श्रिया
सह ।
शेते स भोगिशय्यायां ब्रह्मा नारायणात्मकः ॥
योगनिद्रावशं यातस्त्रैलोक्यग्रासबृंहितः ॥
त्रैलोक्यमखिलं दग्धं यदा कालाग्निना तदा ।
तालवृन्तं तदा चक्रे स शेषः पश्चिमां फणाम् ।
स्वयन्तु वीजयामास शेषरूपी जनार्द्दनम् ॥
शङ्खं चक्रं नन्दकासिमिषुधी द्वे महाबलः ।
ऐशानयाथ फणया स दध्रे गरुडं तदा ॥
गदां पद्मञ्च शार्ङ्गञ्च तथैव विविधायुधम् ।
यानि चान्यानि तस्यासन्नाग्नेय्या फणया दधौ
॥
एवं कृत्वा स्वकं कायं शयनीयं तदा हरेः ।
पृथ्वीमधरकायेन मग्नामाक्रम्य चाम्भसि ॥
त्रैलोक्यब्रह्मसहितं सलक्ष्मीकं जनार्द्दनम् ।
सोपासङ्गजगद्बीजं जगत्कारणकारणम् ॥
नित्यानन्दं वेदमयं ब्रह्मण्यं परमेश्वरम् ।
जगत्कारणकर्त्तारं जगत्कारणकारणम् ॥
भूतभव्यभवन्नाथं परापरपतिं हरिम् ।
दधार शिरसानन्तः स्वयमेव स्वकां तनूम् ॥
एवं ब्रह्मदिनस्यैव प्रमाणेन निशां हरिः ।
सन्ध्याञ्च समधिप्राप्य शेते नारायणोऽव्ययः ॥
यस्मादयन्तु प्रलयो ब्रह्मणः स्याद्दिने दिने ।
तस्माद्दैनन्दिनमिति ख्यापयन्ति पुराविदः ॥
व्यतीतायां निशायान्तु ब्रह्मा लोकपितामहः ।
त्यक्त्वा निद्रां समुत्तस्थौ स पुनः सृष्टये त्विह
॥”
इति कालिकापुराणे २७ अध्यायः ॥
न्यायमते जन्यभावानधिकरणकालः। स च
चरमध्वंसरूपः ॥

**महाप्रसादः**, पुं, (महांश्चासौ प्रसादश्चेति ।)
विष्णुनैवेद्यादिः । यथा, --
“पादोदकञ्च निर्म्माल्यं नैवेद्यञ्च विशेषतः ।
महाप्रसाद इत्युक्त्वा ग्राह्यं विष्णोः प्रयत्नतः
॥”
इत्येकादशीतत्त्वधृतमत्स्यसूक्तवचनम्॥
श्रीजगन्नाथस्य महाप्रसादमाहात्म्यं जगन्नाथ-
शब्दे द्रष्टव्यम् ॥ अतिशयप्रसन्नता च ॥ (महान्
प्रसादोऽस्य । शिवः । यथा, महाभारते । १३
।
१७ । १३६ ।
“महाप्रसादो दमनः शत्रुहा श्वेतपिङ्गलः ॥”)

**महाप्रस्थानगमनं**, क्ली, (प्रस्थीयते अस्मिन्निति ।
“वर्गाणां प्रथमतृतीयपञ्चमाः
प्रथमतृतीययमौ
य र ल वाश्चाल्पप्राणाः । अन्ये
महाप्राणा
इत्यर्थः ।” इति सिद्धान्तकौमुदी ॥
(महावले,
त्रि । यथा, श्रीमद्भागवते । ६ । ११
। ६ ।
“एवं सुरगणान् क्रुद्धो भीषयन् वपुषा
रिपून् ।
व्यनदत् सुमहाप्राणो येन लोका
विचेतसः ॥”)

**महाफलः**, पुं, (महत् पूजादौ प्रशस्तं पूज्यं वा
फलमस्य ।) विल्ववृक्षः । इति
रत्नमाला ॥
(महच्च तत् फलञ्चेति ।) बृहत्फले,
क्ली ॥ (यथा,
मनौ । ३ । १२८ ।
“श्रोत्रियायैव देयानि हव्यकव्यानि
दातृभिः ।
अर्हत्तमाय विप्राय तस्मै दत्तं
महाफलम् ॥”)

**महाफला**, स्त्री, (महत् फलं आरोग्यादिकं
यस्याः ।) इन्द्रवारुणी । इति
जटाधरः ॥
(अस्याः पर्य्यायो भावप्रकाशस्य
पूर्ब्बखण्डे
प्रथमे भागे ।
“ऐन्द्रीन्द्रवारुणी चित्रा गवाक्षी च
गवादनी ।
वारुणी च पराप्युक्ता सा विशाला
महाफला ॥
श्वेतपुष्पा मृगाक्षी च
मृगैर्वारुमृगादनी ॥”
राजजम्बूः । तत्पर्य्यायो यथा, तत्रैव
।
“फलेन्द्राकथितानन्दो
राजजम्बूर्महाफला ॥”

अनन्तः पृथिवीं त्यक्त्वा
विष्णोरन्तिकमागतः ॥
तेन त्यक्ता तु पृथिवी क्षणमात्रादधो गता ।
पतिता कूर्म्मपृष्ठे तु विशीर्णेव तदाभवत् ॥
कूर्म्मोऽपि महतो यत्नाच्चलन्तीं पृथिवीं जले
।
ब्रह्माण्डं पद्भिराक्रम्य पृष्ठे दध्रे धरां तदा ॥
ब्रह्माण्डखण्डसंयोगाच्चूर्णिता पृथिवी भवेत् ।
इति तां परिजग्राह कूर्म्मरूपी जनार्द्दनः ॥
चलज्जलौघसंसर्गाच्चिलन्त्या धरया तदा ।
कूर्म्मपृष्ठं बहुतरैर्वरण्डैर्विततीकृतम् ॥
अनन्तस्तत्र गत्वा तु यत्र क्षीरोदसागरः ।
तत्र स्वयं श्रिया युक्तं सुषुप्सन्तं जनार्द्दनम् ॥
फणया मध्यया दध्रे त्रैलोक्यग्रासवृंहितम् ।
पूर्ब्बं फणं वितत्योर्द्ध्वं पद्मं कृत्वा महाबलः ।
विष्णुमाच्छादयामास शेषाख्यः परमेश्वरः ॥
तस्योपधानमकरोदनन्तोदक्षिणां फणाम् ।
उत्तरां पादयोश्चक्रे उपाधानं महाबलः ॥

प्र + स्था + ल्युट् । महत् प्रस्थानं महापथः ।
तत्र गमनम् ।) महापथगमनम् । तच्तु मरणो-
द्देशेन हिमालयपर्य्यन्तप्रयाणम् । तच्च कलौ
निषिद्धम् । यथा, बृहन्नारदीये ।
“समुद्रयात्रास्वीकारः कमण्डलुविधारणम् ।
द्विजानामसवर्णासु कन्यासूपयमस्तथा ॥
देवरेण सुतोत्पत्तिर्म्मधुपर्के पशोर्व्वधः ।
मांसादनं तथा श्राद्धे वानप्रस्थाश्रमन्तथा ॥
दत्तायाश्चैव कन्यायाः पुनर्द्दानं वरस्य च ।
दीर्घकालं ब्रह्मचर्य्यं नरमेधाश्वमेधकौ ॥
महाप्रस्थानगमनं गोमेधञ्च तथा मखम् ।
इमान् धर्म्मान् कलियुगे वर्ज्यानाहुर्म्मनी-
षिणः ॥”
इत्युद्वाहतत्त्वम् ॥

**महाप्राणः**, पुं, (महान्तो दीर्घकालस्थायिनः

प्राणा यस्य सः ।) द्रोणकाकः । इति राज-
निर्घण्टः ॥ वर्णविशेषः । स च । ख घ छ झ ठ
ढ थ ध फ भ श ष स ह रूपः । यथा, --

कटुतुम्बी । तत्पर्य्यायो यथा, तत्रैव
।
“इक्ष्वाकुः कटुतुम्बी स्यात् सा
तुम्बी च महा-
फला ॥”
महाकोशातकी । तत्पर्य्यायो यथा,
तत्रैव ।
“महाकोशातकी प्रोक्ता हस्तिघोषा
महा-
फला ।
धामार्गवो घोषकश्च हस्तिपर्णश्च स
स्मृतः ॥”)

**महाफेणा**, स्त्री, (महती फेणा ।) हिण्डीरः ।

इति शब्दचन्द्रिका ॥

**महाबलं**, क्ली, (महदतिशयितं बलं सामर्थ्यमस्मात् ।

महत् बलमस्येति वा ।) सीसकम् ।
इति
हेमचन्द्रः ॥ (तथास्य पर्य्यायः ।
“नागं महाबलं चीनं पिष्टं
योगेष्टसीसकम् ॥”
इति वैद्यकरत्नमालायाम् ॥)

**महाबलः**, पुं, (महदुत्कृष्टं बलं ऐश्वर्य्यं यस्य ।)

बुद्धः । इति त्रिकाण्डशेषः ॥
(पितृगणविशेषः ।
यथा, मार्कण्डेये । ९६ । ४६ ।
“महान् महात्मा महितो महिमावान्
महा-
बलः ।
गणाः पञ्च तथैवैते पितृणां
पापनाशनाः ॥”)
वायुः । बलीयसि, त्रि । इति
हेमचन्द्रः । ४ ।
१७३ ॥ (यथा, रामायणे । १ । १ ।
३४ ।
“नियुज्यमानो राज्याय नैच्छद्राज्यं
महाबलः ।
स जगाम वनं वीरो
रामपादप्रसादकः ॥”)

| | | |
|---|---|---|
| | | **महाबला**, स्त्री, (महद्बलमस्याः ।) बलाभेदः । पीतवाट्यालकः । तत्पर्य्यायः । ऋष्यप्रोक्ता २ अतिबला ३ पीतपुष्पी ४ । इति रत्नमाला ॥ (अस्याः पर्य्यायो यथा, -- “वाट्या वाट्यालिका वाट्या सैव वाट्यालकापिच । महाबला पीतपुष्पा सहदेवी च सा स्मृता ॥” इति भावप्रकाशस्य पूर्ब्बस्वण्डे प्रथगे भागे ॥) |

(तथास्या गुणाः ।
"हरेन्महाबला कृच्छ्रं
भवेद्वातानुलोमनी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ॥)

**महाबोधिः**, पुं, (बुध्यते सर्व्वं जानातीति । बुध् +
"सर्व्वधातुभ्य इन् ।" उणा० ४ ।
११७ । इति
इन् । ततो महांश्चासौ बोधिश्चेति
।) बुद्धः ।
इति हेमचन्द्रः । २ । १४६ ॥

**महाब्राह्मणः**, पुं, (महानतिशयनिन्दितः ब्राह्मणः ।
"वैद्ये ज्योतिषिके द्विजे ।" इति
निषेधवचन-
स्मरणादेवास्य तथात्वम् ।)
निन्दितब्राह्मणः ।
इति पाणिनिव्याकरणम् ॥
अस्मिन् देशे अयं अग्रदानित्वेन
प्रसिद्धः ॥
(यथा, मृच्छकटिके १ अङ्के ।
"विटः । महाब्राह्मण ! मर्षय मर्षय
॥")

**महाभटः**, पुं, (महांश्चासौ भटश्चेति ।) अति-
शययोद्धा । यथा, --
"तदोजसा दैत्यमहाभटार्पितं
चकासदन्तः ख उदीर्णदीधिति ।
चक्रेण चिच्छेद निशातनेमिना
हरिर्यथा तार्क्षपतत्रमुज्झितम् ॥"
इति श्रीभागवते ३ स्कन्धे १९
अध्यायः ॥

**महाभद्रा**, स्त्री, (महत् भद्रं मङ्गलं यस्याः ।)
गङ्गा । इति शब्दमाला । काश्मरी ।
इति
राजनिर्घण्टः ॥
(मेरोरुत्तरपार्श्वस्थसरोवरे, क्ली ।

आश्रममौषलयानिकनाकाः
पर्व्वणि पर्व्वणि नाम विशेषाः ॥
इति भारतटीका ॥ * ॥
हरिवंशसहितोनविंशतिपर्व्वणामन्तर्गतशत-
पर्व्वविभागस्तेषामध्यायश्लोकसंख्या च यथा, --
१ आदिपर्व्वणि १९ पर्व्वाणि २२७ अध्यायाः
८९८४ श्लोकाः ॥ २ सभापर्व्वणि ९ पर्व्वाणि
७८ अध्यायाः २५११ श्लोकाः ॥ ३
आरण्यक-
पर्व्वणि १६ पर्व्वाणि २६९ अध्यायाः
११६६४
श्लोकाः ॥ ४ विराटपर्व्वणि ४ पर्व्वाणि ६७
अध्यायाः २०५० श्लोकाः ॥ ५ उद्योगपर्व्वणि
११ पर्व्वाणि १८६ अध्यायाः ६६२८ श्लोकाः
॥
६ भीष्मपर्व्वणि ५ पर्व्वाणि ११७ अध्यायाः
५८८४ श्लोकाः ॥ ७ द्रोणपर्व्वणि ८ पर्व्वाणि
१७० अध्यायाः ९९०९ श्लोकाः ॥ ८
कर्णपर्व्वणि
१ पर्व्व ६९ अध्यायाः ४९६४ श्लोकाः ॥ ९
शल्य-
पर्व्वणि ४ पर्व्वाणि ५९ अध्यायाः ३२२०
श्लोकाः ॥ १० सौप्तिकपर्व्वणि ३ पर्व्वाणि १८
अध्यायाः ८७० श्लोकाः ॥ ११ स्त्रीपर्व्वणि ५
पर्व्वाणि २७ अध्यायाः ७७५ श्लोकाः ॥ १२
शान्तिपर्व्वणि ४ पर्व्वाणि ३३९ अध्यायाः
१४७३२ श्लोकाः ॥ १३ अनुशासनपर्व्वणि १
पर्व्व
१४६ अध्यायाः ८००० श्लोकाः ॥ १४
अश्वमेध-
पर्व्वणि २ पर्व्वणी १०३ अध्यायाः ३३२०
श्लोकाः ॥ १५ आश्रमवासपर्व्वणि ३ पर्व्वाणि
४२ अध्यायाः १५०६ श्लोकाः ॥ १६ मौषल-
पर्व्वणि १ पर्व्व ८ अध्यायाः ३०० श्लोकाः ॥
१७
महाप्रास्थानिकपर्व्वणि १ पर्व्व ३ अध्यायाः
३२० श्लोकाः ॥ १८ स्वर्गपर्व्वणि १ पर्व्व ५
अध्यायाः २०० श्लोकाः । १९ हरिवंशे
आश्चर्य्य-

गिरयः सागरा नद्यस्तथैवाप्सरसां गणाः ।
ग्रहाः संवत्सरश्चैव अयनान्यृतवस्तथा ॥
स्थावरं जङ्गमञ्चैव जगत् सर्व्वं सुरासुरम् ।
भारते भरतश्रेष्ठ ! एकस्थमिह दृश्यते ॥
तेषां श्रुत्वा प्रतिष्ठानं नामकर्म्मानुकीर्त्तनात्
।
कृत्वापि पातकं घोरं सद्यो मुच्येत मानवः
॥ * ॥
इति हासमिमं श्रुत्वा यथावदनुपूर्ब्बशः ।
संयतात्मा शुचिर्भूत्वा पारं गत्वा च भारत !
॥
तेषां श्राद्धानि देयानि श्रुत्वा भारत !
भारतम् ।
ब्राह्मणेभ्यो यथाशक्त्या भक्त्या च
भरतर्षभ ! ॥
महादानानि देयानि रत्नानि विविधानि च ।
गावः कांस्योपदोहाश्च कन्याश्चैव
स्वलङ्कृताः ॥
सर्व्वकामगुणोपेता यानानि विविधानि च ।
भवनानि विचित्राणि भूमिर्व्वासांसि
काञ्चनम् ॥
वाहनानि च देयानि हया मत्ताश्च वारणाः ।
शयनं शिविकाश्चैव स्यन्दनाश्च
स्वलङ्कृताः ॥
यद्यद्गृहे वरं किञ्चित् यद्यदस्ति महद्वसु ।
तत्तद्देयं द्विजातिभ्य आत्मा दाराश्च सूनवः
॥
श्रद्धया परया दत्तं क्रमशस्तस्य पारगः ।
शक्तितः सुमना हृष्टः शुश्रूषुरविकल्पनः ॥
* ॥
सत्यार्ज्जवरतो दान्तः शुचिः
शौचसमन्वितः ।
श्रद्दधानो जितक्रोधो यथा सिध्यति तच्छृणु
॥
शुचिः शीलान्विताचारः शुक्लवासा
जितेन्द्रियः ।
संस्कृतः सर्व्वशास्त्रज्ञः श्रद्दधानोऽनसूयकः
॥

यथा, मार्कण्डेये । ५५ । ३ ।
“अरुणोदं सरः पूर्ब्बं मानसं दक्षिणे तथा ।
शीतोदं पश्चिमे मेरोर्महाभद्रं तथोत्तरे ॥”)

**महाभारतं**, क्ली, (महत् भारतम् । यद्वा, महान्तं
भारं तनोतीति । महाभार + तन् + डः ।)
व्यासप्रणीतेतिहासशास्त्रम् ।
तन्नामकारणं
यथा, --
“एकतश्चतुरो वेदा भारतञ्चैतदेकतः ।
पुरा किल सुरैः सर्व्वैः समस्य तुलया धृतम् ॥
चतुर्भ्यः सरहस्येभ्यो
वेदेभ्योऽभ्यधिकं यदा ।
तदाप्रभृति लोर्केऽस्मिन् महाभारतमुच्यते ॥
महत्त्वाद्भारतत्वाच्च
महाभारतमुच्यते ॥”
इति महाभारते आदिपर्व्व ॥ * ॥
लोकविशेषेषु तस्य श्लोकसंख्या वाचकाश्च यथा,
“षष्टिं शतसहस्राणि चकारान्यां स संहिताम् ।
त्रिंशच्छतसहस्रञ्च देवलोके प्रतिष्ठितम् ॥
पित्रे पञ्चदश प्रोक्तं रक्षोयक्षे चतुर्द्दश ।
एकं शतसहस्रन्तु मानुषेषु प्रतिष्ठितम् ॥
नारदोऽश्रावयद्देवानसितोदेवलः पितॄन् ।
गन्धर्व्वयक्षरक्षांसि श्रावयामास वै शुकः ॥
अस्मिंस्तु मानुषे लोके वैशम्पायन उक्तवान् ॥”
इति महाभारते १ पर्व्वणि अनुक्रमणिका-
पर्व्वणि १ पर्व्व २४४ अध्यायाः १२००० श्लोकाः ॥
हरिवंशे भविष्यपौष्करप्रादुर्भावे १ पर्व्व ११२ अध्यायाः ३४४८ श्लोकाः ॥ इति महाभारते आदिपर्व्वणि पर्व्वसंग्रहनामकः २ अध्यायः ॥ * ॥
तच्छ्रवणविध्यादि यथा, --
जनमेजय उवाच ।
“भगवन् ! केन विधिना श्रोतव्यं भारतं बुधैः ।
फलं किं के च देवाश्च पूज्या वै पारणेष्विह ॥
देयं समाप्ते भगवन् ! किञ्च पर्व्वणि पर्व्वणि ।
वाचकः कीदृशश्चात्र एष्टव्यस्तद् ब्रवीहिमे ॥ * ॥
वैशम्पायन उवाच ।
शृणु राजन् ! विधिमिमं फलं यच्चापि भार-तात् ।
श्रुताद्भवति राजेन्द्र ! यत्त्वं मामनुपृच्छसि ॥
दिवि देवा महीपाल ! क्रीडार्थमवनिं गताः ।
कृत्वा कार्य्यमिदञ्चैव ततश्च दिवमागताः ॥
हन्त यत्ते प्रवक्ष्यामि तच्छृणुष्व समाहितः ।
ऋषीणां देवतानाञ्च सम्भवं वसुधातले ॥
अत्र रुद्रास्तथा साध्या विश्वेदेवाश्च शाश्वताः ।
आदित्या अश्विनौ देवौ लोकपाला महर्षयः ॥
गुह्यकाश्च सगन्धर्व्वा नागा विद्याधरास्तथा ।
सिद्धा धर्म्मः स्वयम्भुश्च मुनिः कात्यायनो वरः ॥
रूपवान् शुभगो दान्तः सत्यवादी जितेन्द्रियः ।
दानमानगृहीतश्च कार्य्यो भवति वाचकः ॥
अविलम्बमनायस्तमद्रुतं धीरमूर्ज्जितम् ।
असंसक्ताक्षरपदं रसभावसमन्वितम् ॥
त्रिषष्टिवर्णसंयुक्तमष्टस्थानसमन्वितम् ।
वाचयेद्वाचकः स्वस्थः स्वासीनः सुसमाहितः ॥
नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं स्वरस्वतीञ्चैव ततो जयमुदीरयेत् ॥
ईदृशाद्वाचकाद्राजन् ! शुत्वा भारत ! भारतम् ।
नियमस्थः शुचिः श्रोता शृण्वन् स फलमश्नुते ॥
पारणं प्रथमं प्राप्य द्विजान् कामैश्च तर्पयन् ।
अग्निष्टोमस्य यागस्य फलं वै लभते नरः ॥
अप्सरोगणसङ्कीर्णं विमानं लभते महत् ।
प्रहृष्टः स तु देवैश्च दिवं याति समाहितः ॥
द्वितीयं पारणं प्राप्य अतिरात्रफलं लभेत् ।
सर्व्वरत्नमयं दिव्यं विमानमधिरोहति ॥
दिव्यमाल्याम्बरधरो दिव्यगन्धविभूषितः ।
दिव्याङ्गदधरो नित्यं देवलोके महीयते ॥
तृतीयं पारणं प्राप्य द्वादशाहफलं लभेत् ।
वसत्यमरङ्काशो वर्षाण्ययुतशो दिवि ॥
चतुर्थे वाजपेयस्य पञ्चमे द्विगुणं फलम् ।
उदितादित्यसङ्काशं ज्वलन्तमनलोपमम् ॥
विमानं विबुधैः सार्द्धमारुह्य दिवि गच्छति ।
वर्षायुतानि भवने शक्रस्य दिवि मोदते ॥
षष्ठे द्विगुणमस्तीह सप्तमे त्रिगुणं फलम् ।
कैलासशिखराकारं वैदूर्य्यमयवेदिकम् ॥
परिक्षिप्तञ्च बहुधा मणिविद्रुमभूषितम् ।
विमानं समधिष्ठाय कामगं साप्सरोगणम् ॥

| ध्यायः ॥ * ॥ तत्र शतपर्व्वाणि तेष्वष्टादश मुख्यानि यथा, --<br>“आदिसभाविपिनानि विराट-<br>प्रोद्यमभीष्मगुरूणि च कर्णः ।<br>शल्यकसौप्तिकपर्व्व तथा स्त्री-<br>शान्त्यनुशास्तितुरङ्गममेधाः ॥ | | |
|---|---|---|

सर्व्वान् लोकान् विचरते द्वितीय इव
भास्करः ।
अष्टमे राजसूयस्य पारणे लभते फलम् ॥
चन्द्रादयनिभं रम्यं विमानमधिरोहति ।
चन्द्ररश्मिप्रतीकाशैर्हयैर्युक्तं मनोजवैः ॥
सेव्यमानो वरस्त्रीणां चन्द्रात् कान्ततरैर्म्मुखै
।
मेखलानां निनादेन नूपुराणाञ्च निस्वनैः ॥
अङ्के परमनारीणां सुखसुप्तो विबुध्यते ।
नवमे क्रतुराजस्य वाजिमेधस्य भारत ! ॥
काञ्चनस्तम्भनिर्य्यूहं वैदूर्य्यकृतवेदिकम् ।
जाम्बूनदमयैर्द्दिव्यैर्गवाक्षैः सर्व्वतो वृतम् ॥
सेवितं चाप्सरःसङ्घैर्गन्धर्व्वैर्द्दिवि चारिभिः ।
विमानं समधिष्ठाय श्रिया परमया ज्वलन् ॥
दिव्यमाल्याम्बरधरो दिव्यचन्दनरूषितः ।
मोदते दैवतैः सार्द्धं दिवि देव इवापरः ॥
दशमं पारणं प्राप्य द्विजातीनभिवन्द्य च ।
किङ्किणीजालनिर्घोषं पताकाध्वजशोभितम्
॥
वसुदेविकसंकाशं वैदूर्य्यमणितोरणम् ।
हेमजालपरिक्षिप्तं प्रबालबडभीमुखम् ॥
गन्धर्व्वैर्गीतकुशलैरप्सरोभिश्च शोभितम् ।
विमानं सुकृतावासं सुखेनैवोपपद्यते ॥
मुकुटेनार्कवर्णेन जाम्बू नदविभूषिणा ।
दिव्यचन्दनदिग्धाङ्गो दिव्यमाल्यविभूषितः
।
दिव्यान् लोकान् विचरति दिव्यैर्भोगैः सम-
न्वितः ।
विबुधानां प्रसादेन श्रिया परमया युतः ॥
अथ वर्षगणानेवं स्वर्गलोके महीयते ॥
अथ गन्धर्व्वसहितः सहस्राण्येकविंशतिम् ।
पुरन्दरपुरे रम्ये शक्रेण सह मोदते ॥
दिव्ययानविमानेषु लोकेषु विविधेषु च ।
दिव्यनारीगणाकीर्णो निवसत्यमरो यथा ॥
ततः सूर्य्यस्य भवने चन्द्रस्य भवने तथा ।
शिवस्य भवने राजन् ! विष्णोर्याति
सलोक-
ताम् ॥
एवमेतन्महाराज ! नात्र कार्य्या विचारणा ।

आरण्यके मूलफलैस्तर्पयेत्तु द्विजोत्तमान्
।
अरणीपर्व्व चासाद्य जलकुम्भान्
प्रदापयेत् ॥
तर्पणानि च मुख्यानि रम्यमूलफलानि च
॥
सर्व्वकामगुणोपेतं विप्रेभ्योऽन्नं प्रदापयेत्
।
विराटपर्व्वणि तथा वासांसि विविधानि
च ॥
उद्योगे भरतश्रेष्ठ ! सर्व्वकामगुणान्वितम्
।
भोजनं भोजयेद्विप्रान्
गन्धमाल्यैरलङ्कृतान् ॥
भीष्मपर्व्वणि राजेन्द्र ! दत्त्वा
यानमनुत्तमम् ।
ततः सर्व्वगुणोपेतमन्नं दद्यात् सुसंस्कृतम्
॥
द्रोणपर्व्वणि विप्रेभ्यो भोजनं
परमार्च्चितम् ।
शराश्च देया राजेन्द्र !
चापान्यसिवरास्तथा ॥
कर्णपर्व्वण्यपि तथा भोजनं
सार्व्वकामिकम् ।
विप्रेभ्यः संस्कृतं सम्यक् दद्यात्
संयतमानसः ॥
शल्यपर्व्वणि राजेन्द्र ! मोदकैः
सगुडौदनैः ।
अपूपैस्तर्पणैश्चैव सर्व्वमन्नं प्रदापयेत् ॥
गदापर्व्वण्यपि तथा मुद्गमिश्रं प्रदापयेत्
॥
स्त्रीपर्व्वणि तथा रत्नैस्तर्पयेत्तु
द्विजोत्तमान् ।
घृतौदनं पुरस्ताच्च ऐषीके दापयेत् पुनः
॥
ततः सर्व्वगुणोपेतमन्नं दद्यात् सुसंस्कृतम्
।
शान्तिपर्व्वण्यपि तथा हविष्यं भोजयेद्
द्विजान् ॥

भारतश्रवणाद्राज्ञा पारणे च नृपोत्तम ! ॥
सदा यत्नवता भाव्यं श्रेयस्तु परमिच्छता ।
* ।
भारतं शृणुयान्नित्यं भारतं परिकीर्त्तयेत् ।
भारतं भवने यस्य तस्य हस्तगतो जयः ॥
भारतं परमं पुण्यं भारते विविधाः कथाः ।
भारतं सेव्यते देवैर्भारतं परमं पदम् ॥
भारतं सर्व्वशास्त्राणामुत्तमं भरतर्षभ ! ।
भारतात् प्राप्यते मोक्षस्तत्त्वमेतद्ब्रवीमि ते
॥
महाभारत्तमाख्यान क्षितिं गाञ्च सरस्वतीम्
।
ब्राह्मणान् केशवञ्चैव कीर्त्तयन्नावसीदति ॥
वेदे रामायणे पुण्ये भारते भरतर्षभ ! ।
आदौ चान्ते च मध्ये च हरिः सर्व्वत्र गीयते
॥
यत्र विष्णुकथा दिव्याः श्रुतयश्च सनातनाः
।
तच्छ्रोतव्यं मनुष्येण परं पदमिहेच्छता ॥
एतत् पवित्रं परममेतद्धर्म्मनिदर्शनम् ।
एतत् सर्व्वगुणोपेतं श्रोतव्यं भूतिमिच्छता
॥”
इति महाभारते हरिवंशे सर्व्वपर्व्वानुकीर्त्त-
नम् ॥ * ॥ त्रिषष्टिवर्णसंयुक्तमित्यत्र त्रिषष्टि-
वर्णाः । अ इ उ ऋ ऌ इति ह्रस्वपञ्चकम् ।
आ ई ऊ ॠ ॡ इति दीर्घपञ्चकम् । आ ई
ऊ ॠ ॡ इति प्लुतपञ्चकम् । ए ओ ऐ औ
च
दीर्घाः । प्लुतत्वेनापरचतुष्टयम् । अं अः क
+
पँ इति चत्वारः । ॠ ॡ इति अच्संज्ञकौ
द्वौ । अनुनासिकश्चैकः । तथा
कादिमावसानाः
पञ्चविंशतिवर्णाः । अन्तःस्थाश्चत्वारः ।
उष्म-
चतुष्टयमिति त्रिषष्टिः । इति ॥ * ॥ वर्णानां
किलाष्टौ स्थानानि भवन्ति तानि यथा, --
“उरः कण्ठः शिरस्तालु जिह्वादन्तौष्ठ-
नासिकाः ।
अष्टौ स्थानानि वर्णानां ये विदुस्ते हि

श्रद्दधानेन वै भाव्यमेवमाह गुरुर्मम ॥ * ॥
लेखकस्थ तु दातव्यं मनसा यद्यदिच्छति ।
हस्त्यश्वरथयानानि वाहनञ्च विशेषतः ॥
कटकं कुण्डलञ्चैव ब्रह्मसूत्रं तथापरम् ।
वस्त्रञ्चैव विचित्रञ्च गन्धञ्चैव विशेषतः ।
देववत् पूजयेत्तन्तु विष्णुलोकमवाप्नुयात् ॥ * ॥
अतः परं प्रवक्ष्यामि यानि देयानि भारते ।
वाच्यमाने तु विप्रेभ्यो राजन् ! पर्व्वणि पर्व्वणि ॥
जातिं देशञ्च सत्त्वञ्च माहात्म्यं भरतर्षभ ! ।
धर्म्मवृत्तिञ्च विज्ञाय क्षत्रियाणां नराधिप ! ॥
स्वस्तिवाच्य द्विजानादौ ततः कार्य्ये प्रवर्त्तते ।
समाप्ते पर्व्वणि ततः स्वशक्त्या पूजयेत् द्विजान् ॥
आदौ तु वाचकन्तत्र वस्त्रगन्धसमन्वितम् ।
विधिवद्भोजयेद्राजन् ! मधु पायसमुत्तमम् ॥
ततो मूलफलप्रायं पायसं मधुसर्पिषा ।
आस्तीके भोजयेद्राजन् ! दद्याच्चैव गुडौदनम् ॥
अपूपैश्चैव पूपैश्च मोदकैश्च समन्वितम् ।
सभापर्व्वणि राजेन्द्र ! हविष्यं भोजयेद् द्विजान् ॥
आश्वमेधिकमासाद्य भोजनं सार्व्वकामिकम् ।
तथाश्रमनिवासे तु हविष्यम्भोजयेत् द्विजान् ॥
मौषले सार्व्वगुणिकं गन्धमाल्यानुलेपनम् ।
महाप्रास्थानिके तद्वत् सर्व्वकामगुणान्वितम् ॥
स्वर्गपर्व्वण्यपि तथा हविष्यं भोजयेद्द्विजान् ।
हरिवंशे पर्व्वणि च पायसं तत्र भोजयेत् ॥
पारणे पारणे राजन् ! यथावद्भरतर्षभ ! ।
समाप्य सर्व्वाः प्रयतः संहिताः शास्त्र-कोविदः ॥ * ॥
शुभे देशे निवेश्याथ क्षौमवस्त्राभिसंवृताः ।
शुक्लाम्बरधरः स्रग्वी शुचिर्भूत्वा स्वलङ्कृतः ॥
अर्च्चयेत यथान्यायं गन्धमाल्यैः पृथक् पृथक् ।
संहितापुस्तकान् राजन् ! प्रयतः सुसमा-हितः ॥
भक्ष्यैर्म्माल्यैश्च पेयैश्च कामैश्च विविधैः शुभैः ।
हिरण्यञ्च सुवर्णञ्च दक्षिणामथ दापयेत् ॥
देवताः कीर्त्तयेत् सर्व्वा नरनारायणौ तथा ।
ततो गन्धैश्च माल्यैश्च स्वलंकृत्य द्विजोत्तमान् ॥
तर्पयेद्विविधैः कामैर्दानैश्चोच्चावचैस्तथा ।
अतिरात्रस्य यज्ञस्य फलं प्राप्नोति मानवः ॥
प्राप्नुयाच्च क्रतुफलं तथा पर्व्वणि पर्व्वणि ।
वाचको भरतश्रेष्ठ ! व्यक्ताक्षरपदस्वरः ॥
भविष्यं श्रावयेद्विद्वान् भारतं भरतर्षभ ! ।
भुक्तवत्सु द्विजेन्द्रषु यथावत् संप्रदापयेत् ॥
वाचकं भरतश्रेष्ठ ! भोजयित्वा स्वलङ्कृतम् ।
पाठकाः ॥" * ॥
पारणं यथा, --
"भारतं शतपर्व्वोक्तं मुनिना तत्त्वदर्शिना ।
पर्व्वभिर्द्दशभिश्चैषां पर्व्वणां पारणं स्मृतम् ॥"
इति विक्रमादित्यः ॥
"द्यूतान्तं प्रथमं प्रोक्तं द्वितीयं वनवासिकम् ।
उद्योगान्तं तृतीयन्तु भीष्मान्तञ्च तुरीयकम् ॥
पञ्चमं द्रोणपर्व्वान्तं कर्णान्तं पारणं ततः ।
विशोकान्तं सप्तमन्तु शान्तिपर्व्वान्तमष्टमम् ॥
नवमं स्वर्गपर्व्वान्तमाश्चर्य्यान्तमतः परम् ॥"
इति च भारतटीकायां अर्ज्जुनमिश्रः ॥
(अन्यत्सर्व्वं भारतशब्दे द्रष्टव्यम् ॥)

**महाभीता**, स्त्री, (महत्यधिका भीतेव ।) लज्जालु-वृक्षः । यथा, शब्दचन्द्रिकायाम् ।
"स्पर्शलज्जा महाभीता वशिनी च महौ-षधिः ॥"
(महानतिशयो भीतः ।) अतिशयभययुक्ते, त्रि ॥

**महाभीमः**, स्त्री, (महानतिशयो भीमः । भीषणा-कृतित्वात् शिवांशसम्भूतत्वाच्च तथात्वम् ।)
शान्तनुराजः । इति जटाधरः ॥
भृङ्गिनामक-शिवद्वारपालः । इति त्रिकाण्डशेषः ॥
अति-शयभयानके, त्रि ॥

| | | |
|---|---|---|
| | वाचके परितुष्टे तु शुभा प्रीतिरनुत्तमा ॥<br>ब्राह्मणेषु तु तुष्टेषु प्रसन्नाः सर्व्वदेवताः ।<br>* ।<br>ततो हि वरणं कार्य्यं द्विजानां भरतर्षभ !<br>॥<br>सर्व्वकामैर्यथान्यायं साधुभिश्च<br>पृथग्विधैः ।<br>इत्येष विधिरुद्दिष्टो मया ते द्विपदां वर !<br>॥<br>श्रद्दधानेन वै भाव्यं यन्मां त्वं परिपृच्छसि<br>। | |

**महाभीरुः**, पुं, (महानतिशयो भीरुः ।) गोपा-
लिकाख्यकीटविशेषः । इति हेमचन्द्रः । ४ ।
२३४ ॥ अतिभयशीले, त्रि ॥

**महाभीष्मः**, पुं, (महानतिशयो भीष्मः ।) शान्तनु-
राजः । इति त्रिकाण्डशेषः ॥

**महाभूतं**, क्ली, (महत् भूतम् । पञ्चतन्मात्रेभ्यः
स्थौल्यादस्य तथात्वम् ।) पृथिव्यादिपञ्चभूतम् ।
यथा, --
"महाभूतानि पञ्चैव खानिलाग्न्यम्बुभूमिभिः ॥"
इति शब्दचन्द्रिका ॥
(अस्य विषय उत्पत्तिश्च यथा, --
"तन्मात्रेभ्यो वियद्वायुवह्निवायुवसुन्धराः ।
एतानि पञ्च जायन्ते महाभूतानि तत्क्रमात् ॥"
एकोत्तरपरिवृद्ध्या वियदादयो जायन्त इत्यर्थः ।
तद्यथा । शब्दतन्मात्राच्छब्दगुणं वियज्जायते ।
शब्दतन्मात्रसहितात् स्पर्शतन्मात्राच्छब्दस्पर्श-
गुणो वायुर्ज्जायते । शब्दतन्मात्रस्पर्शतन्मात्र-
सहितात् रूपतन्मात्राच्छब्दस्पर्शरूपगुणो वह्नि-
र्ज्जायते । शब्दतन्मात्रस्पर्शतन्मात्ररूपतन्मात्र-
सहिताद्रसतन्मात्राच्छब्दस्पर्शरूपरसगुणं वारि-
जायते । शब्दतन्मात्रस्पर्शतन्मात्ररूपतन्मात्र-
रसन्मात्रसहिताद्गन्धतन्मात्राच्छब्दस्पर्शरूपरस-
गन्धगुणा वसुन्धरा जायते ।" इति भावप्रकाशस्य
पूर्ब्बखण्डे प्रथमे भागे ॥" "मातृजादयोऽप्यस्य
महाभूतविकारा एव तत्रास्याकाशात्मकं शब्दः
श्रोत्रं लाघवं सौक्ष्म्यं विवेकश्च । वाय्वात्मकं
स्पर्शः स्पर्शनञ्च रौक्ष्यं प्रेरणं धातुव्यूहनं चेष्टाश्च
शारीर्य्यः । अग्न्यात्मकं रूपं दर्शनं प्रकाशः
पक्तिरौष्ण्यञ्च । अबात्मकं रसो रसनं शैत्यं
मार्द्दवः स्नेहः क्लेदश्च । पृथिव्यात्मको गन्धः घ्राणं
गौरवं स्थैर्य्यं मूर्त्तिश्च ।" इति चरके शारीरस्थाने
चतुर्थेऽध्याये ॥ सिद्धादयः महाप्राणिनः । यथा,
महाभारते । १ । ११९ । ४८ ।
"रक्ष्यमाणो महाभूतैः सिद्धैश्च परमर्षिभिः ॥")

**महाभृङ्गः**, पुं, (महांश्चासौ भृङ्गश्चेति ।) नील-
भृङ्गराजः । इति राजनिर्घण्टः ॥

**महाभैरवः**, पुं, (महान् भैरवः ।) शरभरूपी

**महामण्डूकः**, पुं, (महान् मण्डूकः ।) पीत-
मण्डूकः । इति राजनिर्घण्टः । सोनाबेङ्
इति
भाषा ॥

**महामतिः**, त्रि, (महती मतिर्यस्य ।) अतिबुद्धि-
मान् । यथा, --
"किमेतन्नाभिजानामि जानन्नपि महामते !
।
यत् प्रेमप्रवणञ्चित्तं विगुणेष्वपि बन्धुषु ॥"
इति मार्कण्डेयपुराणे देवीमाहात्म्यम् ॥

**महामदः**, पुं, (महान् मदोयस्य ।) मत्तहस्ती । इति
शब्दरत्नावली ॥ (महान् मदः ।)
अतिशय-
हर्षः । अतिशयमत्तता च । तद्युक्ते, त्रि ॥

**महामनाः**, [स्] त्रि, (महत् प्रशस्तं मनो
यस्य ।) महाशयः । यथा, --
"महेच्छे तूद्भटोदारोदात्तोदीर्णमहाशयाः ।
महामना महात्मा च -- ॥"
इति हेमचन्द्रः । ३ । ३१ ॥
(यथा, ऋग्वेदे । १० । १०३ । ९ ।
"इन्द्रस्य वृष्णो वरुणस्य राज्ञ
आदित्यानां शर्ध उग्रम् ।
महामनसां भुवनच्यवानां
घोषो वेदानां जयतामुदस्थात् ॥"
"महामनसां उदारमनसाम् ।" इति
तद्भाष्ये
सायनः ॥ महाशालपुत्त्रः । यथा, हरिवंशे
।
३१ । २० ।
"महामना नाम सुतो महाशालस्य
धार्म्मिकः ॥")

**महामहावारुणी**, स्त्री, (महती चासौ महा-
वारुणी चेति ।) गङ्गास्नानस्य योगविशेषः
।
स तु शनिवारशतभिषानक्षत्रशुभयोगयुक्त-
गौणचान्द्रचैत्रकृष्णत्रयोदशीरूपः । यथा,
--

"तत्र वृद्धो महामात्रः सिद्धार्थो
नाम नामतः ।
शुचिर्बहुमतो राज्ञः
कैकेयीमिदमब्रवीत् ॥"
समृद्धः । (यथा, महाभारते । २ ।
३१ । ६० ।
"राज्ञे भोजकटस्थाय महामात्राय
धीमते ॥")
अमात्यः । (यथा, कामन्दकीये ।
९ । ६९ ।
"दूषिते हि महामात्रे रिपुरुग्रोऽपि
धीमता ।
स्वपक्षे यस्य विश्वास इत्थंभूतश्च
निष्क्रियः ॥")
हस्तिपकाधिपः । इति मेदिनी ।
रे, १९० ।
(यथा च कथासरित्सागरे । १३ ।
१० ।
"इहत्यश्च महामात्रो
द्बिरदेङ्गितवित्तदा ।
मद्येन क्षीबतां नेयो नैतञ्चेतयते
यथा ॥"
महादेवः । यथा, महाभारते । १३
। १७ । ८५ ।
"महामूर्द्धा महामात्रो महानेत्रो
निशा-
लयः ॥")

**महामात्री**, स्त्री, (महामात्र । ङीष् ।)
आचार्य्य-
पत्नी । इति जटाधरः ॥
महामात्रपत्नी च ॥

**महामानसी**, स्त्री, (महत् मानसं भक्तान्
प्रति
सदयं चेतो यस्याः ।) जिनानां
विद्यादेवी-
भेदः । इति हेमचन्द्रः । २ । १५४
॥

**महामाया**, स्त्री, (अघटनघटनापटीयस्त्वेन
विस-

हरः । यथा, --
"योऽसौ महाभैरवाख्यः सकायः शारभो हरः ।
भैरवः पृथगेवायं गणाध्यक्षो हरात्मजः ॥"
इति कालिकापुराणे ४६ अध्यायः ॥
(स्त्री, विद्याविशेषः । तथा च प्रबोधचन्द्रोदये ।
३ । २४ । "तन्महाभैरवीं विद्यां धर्म्मश्रद्धयो-
राहरणाय प्रस्थापयामः ॥")

**महाभोगा**, स्त्री, (महान् आभोगः परिपूर्ण-
तास्याः । यद्वा, महान् भोगः सुखरूपमस्याः ।)
दुर्गा । यथा, देवीपुराणे ४५ अध्यायः ।
"महार्थसाधनी देवी महाभोगा ततः स्मृता ॥"
(महानाभोगो विशालतास्य । महाविशालता-
विशिष्टे, त्रि । यथा, कथासरित्सागरे । १७ । १०६
।
"ततस्तत्र महाभोगं सच्छायस्कन्धसुन्दरम् ।
गुहचन्द्रो ददर्शासावेकं न्यग्रोधपादपम् ॥")

"शुभयोगसमायुक्ता शनौ शतभिषा यदि ।
महामहेति विख्याता त्रिकोटिकुलमुद्धरेत्
॥"
इति तिथ्यादितत्त्वधृतस्कन्दपुराणवचनम्
॥

**महामांसं**, क्ली, (महद् गर्हितं मांसम् । अत्र
मांसशब्दस्य पूर्ब्बप्रयुक्ततया
महच्छब्दस्य गर्हि-
तार्थत्वम् ।
"शङ्खे तैले तथा मांसे वैद्ये ज्योतिषके
द्विजे ।
यात्रायां पथि निद्रायां महच्छब्दो न दीयते
॥"
इति स्मरणात् ।)
नरादिपिशितम् । यथा, --
"अष्टम्यां रुधिरैर्म्मांसैर्म्महामांसैः
सुगन्धिभिः ।
पूजयेद्बहुजातीयैर्ब्बलिभिर्भोजनैः शिवाम्
॥"
इति तिथ्यादितत्त्वधृतकालिकापुराणम्॥
अन्यच्च ।
"गोनरेभाश्वमहिषवराहोष्ट्रैरगोद्भवम् ।
महामांसाष्टकं देवि ! देवताप्रीतिकारकम्
॥"
इति कौलार्च्चनदीपिका ॥

**महामात्रः**, पुं, (महती मात्रा मर्य्यादापरिमाणं
यस्य ।) प्रधानः । इत्यमरः । २ । ८ । ५
॥ सेना-
पत्यादिषु महती मात्रा धनं परिच्छदो वा
येषां ते तथा । इति तट्टीकायां भरतः ॥
(यथा,
रामायणे । २ । ३६ । १८ ।

दृशप्रतीतिसाधनं माया । महती
चासौ माया
चेति । यद्वा, महती माया
विश्वनिर्म्माणशक्ति-
र्यस्याः सा ।) दुर्गा । इति
शब्दरत्नावली ॥
तस्याः स्वरूपं यथा, --
"गर्भान्तर्ज्ञानसम्पन्नं प्रेरितं
सूतिमारुतैः ।
उत्पन्नं ज्ञानरहितं कुरुते या
निरन्तरम् ॥
पूर्ब्बातिपूर्ब्बसंबद्धसंस्कारेण
नियोज्य च ।
आहारादौ ततो मोहं ममत्वं
ज्ञानसंशयम् ॥
क्रोधोपरोधलोभेषु क्षिप्त्वा क्षिप्त्वा
पुनः पुनः ।
पश्चात् कामे नियोज्याशु
चिन्तायुक्तमह-
र्न्निशम् ॥
आमोदयुक्तं व्यसनासक्तं जन्तुं
करोति या ।
महामायेति सा प्रोक्ता तेन सा
जगदीश्वरी ॥"
इति कालिकापुराणे ६ अध्यायः
॥
(यथा च देवीभागते । १ । ९ ।
४० ।
"नमो देवि ! महामाये !
सृष्टिसंहार-
कारिणि ! ॥"
गङ्गादेवी । यथा, काशीखण्डे ।
२९ । १३९ ।
"महाविद्या महामाया महामेधा
महौ-
षधम् ॥")
महती माया च ॥ (यथा,
मार्कण्डेये । ८१ । ४१ ।
"महामाया हरेश्चैतत् तया
संमोह्यते जगत् ॥")

**महामायी**, स्त्री, (महती मायास्य । स्त्रियां

ङीष् ।) दुर्गा । इति शब्दरत्नावली ॥

**महामारी**, स्त्री, (महतः दुर्द्धान्तान् दानवादीन्

मारयति इति । मृङ् + णिच् + अण् । ङीप् ।)
महाकाली । यथा, --
“व्याप्तं तयैतत् सकलं ब्रह्माण्डं मनुजेश्वर ! ।
महाकाल्या महाकाले महामारीस्वरूपया ॥
सैव काले महामारी सैव सृष्टिर्भवत्यजा ।
स्थितिं करोति भूतानां सैव काले सनातनी ॥”
इति मार्कण्डेयपुराणम् ॥

(म्रियन्त प्राणिनो यस्या इति । मृङ् + घञ् । ङीष् । महती मारी ।) अतिशयमरकश्च ॥

**महामाषः**, पुं, (महांश्चासौ माषश्चेति ।) राज-

माषः । इति शब्दचन्द्रिका ॥ (यथा, सुश्रुते सूत्र-स्थाने २१ अध्याये । "माषमहामाषगोधूमतिल-पिष्टविकृतिदधिदुग्धकृशरापायसेक्षुविकारानू-पौदकमांसवसाविसमृणालकशेरुकशृङ्गाटक-मधुरवल्लीफलसमशनाध्यशनप्रभृतिभिःश्लेष्मा प्रकोपमापद्यते ॥" तथास्य पर्य्यायो गुणाश्च ।
"राजमाषो महामाषश्चपलश्चवनःस्मृतः ।
श्वेतो रक्तस्तथाकृष्णस्त्रिविधः स प्रकीर्त्तितः ॥
यो महांस्तेषु भवति स एवोक्तो गुणाधिकः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**महामुखः**, पुं, (महत् मुखमस्य ।) कुम्भीरः ।

इति हेमचन्द्रः । ४ । ४१६ ॥ (महत् मुखम् ।) बृहन्मुखे, क्ली । (यथा, बृहत्संहितायाम् । ६७ । ५४ ।
"वक्त्रं सौम्यं संवृतममलं श्लक्ष्णं समञ्च भूपा-नाम् ।
विपरीतं क्लेशभुजां महामुखं दुर्भगानाञ्च ॥"
महत् मुखं यस्य ।) तद्वति, त्रि ॥ (महादेवः । यथा, महाभारते । १३ । १७ । ८७ ।
"महादन्तो महादंष्ट्रो महाजिह्वः महामुखः ॥"
सिन्धुराजस्य सैनिकभेदः । यथा, महाभारते । ३ । २७० । १६ ।
"नकुलन्त्वभिसन्धाय क्षेमङ्करमहामुखौ ।
उभावुभयतस्तीक्ष्णैः शरवर्षैरवर्षताम् ॥")

**महामुनिः**, पुं, (महांश्चासौ मुनिश्चेति ।)

अगस्त्यः । बुद्धः । इति शब्दरत्नावली ॥ कृपा-चार्य्यः । कालः । इत्यजयपालः ॥ व्यासः । (श्रीनारायणः ।) यथा, श्रीभागवते । १ । १ । २ ।
"धर्म्मः प्रोज्झितकैतवोऽत्र परमो निर्म्मत्-सराणां सतां
वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्-मूलनम् ।
श्रीमद्भागवते महामुनिकृते किंवापरैरीश्वरः
सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्-

**महामूल्यं**, क्ली, महार्घम् । बहुमूल्यम् । महच्च

तन्मूल्यं चेति कर्म्मधारयसमासनिष्पन्नम् । (महत् मूल्यं यस्य ।) तद्युक्ते, त्रि ॥

**महामूषिकः**, पुं, (महान् मूषिकः ।) बृहदुन्दुरुः ।

तत्पर्य्यायः । मूषी २ विघ्नेशवाहनः ३ महाङ्गः ४ शस्यमारी ५ भूफलः ६ भित्तिपातनः ७ ।
इति राजनिर्घण्टः ॥

**महामृगः**, पुं, (महान् मृगः पशुः ।) हस्ती ।

इति हेमचन्द्रः । ४ । २८३ ॥ शरभः । इति राज-निर्घण्टः ॥

**महामृत्युञ्जयः**, पुं, (महामृत्युं यमं जयतीति ।

जि + खच् मुम् च ।) शिवस्य मन्त्रविशेषः ।
यथा, --
देव्युवाच ।
"यदि मे महती प्रीतिस्तवास्ति कुलभैरव ! ।
कथयस्व विशेषेण महामृत्युञ्जयाभिधम् ॥
भैरव उवाच ।
शृणु देवि ! प्रवक्ष्यामि महामृत्युञ्जयाभिधम् ।
आयुर्वृद्धिकरं पुंसां मृत्योर्मृत्युकरं परम् ॥
यस्य विज्ञानमात्रेण चिरजीवी निरामयः ।
नित्यमष्टशतं जप्त्वा मृत्युं मृत्युपथं नयेत् ॥"
इति मृत्युञ्जयतन्त्रम् ॥

**महामेघः**, पुं, (महान् मेघ इव ।) शिवः । इति

महाभारते तस्य सहस्रनामस्तोत्रम् ॥ (महान्

महामेदा वसुच्छिद्रा त्रिदन्ती देवतामणिः ॥
मेदायुगं गुरु स्वादु वृष्यं स्तन्यकफापहम् ।
बृंहणं शीतलं पित्तरक्तवातज्वरप्रणुत् ॥"
इति भावप्रकाशः ॥

**महामैत्रः**, पुं, (मित्रस्य भावः । मित्र + अण् ।

मैत्रम् । महद्भिः सह महद्वा हृदि मैत्र-मस्येति ।) बुद्धभेदः । इति हेमचन्द्रः । २ । १४९ ॥

**महामोहः**, पुं, (मोहः भ्रान्तिज्ञानम् । अतथाभूते

वस्तुनि तथात्वज्ञानमित्यर्थः । महान् मोहः ।)
भोगेच्छारूपाज्ञानम् । इति केचित् ॥ संसार-मूलकारणरागरूपमोहः । (महान् मोहो यस्मादिति च ।)
महामोहजनककामराज-बीजम् । इति चण्डीप्रथममाहात्म्यटीकायां नागोजीभट्टः ॥ अपि च ।
"ससर्ज्जाग्रेऽन्धतामिस्रमथ तामिस्रमादिकृत् ।
महामोहञ्च मोहञ्च तमश्चाज्ञानवृत्तयः ॥"
इति श्रीभागवते ३ स्कन्धे १२ अध्यायः ॥
अग्र इति ब्रह्मा स्वसृष्टौ प्रथममविद्यासृष्टीः ससर्ज्ज तत्र तमो नाम स्वरूपाप्रकाशः ।
मोहो देहाद्यहंबुद्धिः । महामोहो भोगेच्छा ।
तामिस्रः तत्प्रतिघाते क्रोधः ।
अन्धतामिस्रः तन्नाशे अहमेव मृतोऽस्मीति बुद्धिः । तदे-

क्षणात् ॥

(महामुनिः श्रीनारायणः । इति तट्टीकायां श्रीधरः ।) तुम्बुरुवृक्षः । इति राजनिर्घण्टः ॥

**महामुनि**, क्ली, (महान् मुनिरिवेति । सर्व्वोप-

कारित्वात्तथात्वम् । अभिधानात् क्लीवत्वम् ।) औषधम् । इति शब्दरत्नावली ॥ धन्याकम् । इति जटाधरः ॥

**महामूर्द्धा**, [न्] पुं, (महान् मूर्द्धा यस्य । व्याप-

कत्वात् तथात्वम् ।) शिवः । इति महाभारते तस्य सहस्रनामस्तोत्रम् ॥ बृहन्मस्तकयुक्ते, त्रि ॥

**महामूलः**, पुं, (महत् स्थूलं मूलं यस्य ।) राज-

पलाण्डुः । इति राजनिर्घण्टः ॥ (छिलिहिण्टः ॥ यथास्य पर्य्यायः ।
"छिलिहिण्टो महामूलः पातालगरुडाह्वयः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

मेघः ।) अतिशयमेघश्च ॥ (यथा, महाभारते ।
१२ । ११७ । ४ ।
"महामेषनिभं दृष्ट्वा स भीतो ह्यभवत् गजः ॥"
क्षत्त्रियराजविशेषः । यथा, महाभारते । ७ ।
४७ । १५ ।
"शत्रुञ्जयं चन्द्रकेतुं महामेघं सुवर्च्चसम् ।
सूर्य्यभासञ्च पञ्चैतान् हत्वा विव्याध सौवलम् ॥")

**महामेदः**, पुं, (मेदयति स्निग्धीकरोतीति । मिद्-

+ णिच् + अच् । महान् मेदः ।) अष्टवर्गे प्रसिद्धौषधबिशेषः । तत्पर्य्यायः । पुरोद्भवः २ ।
इति रत्नमाला ॥ बृहन्मेदश्च ॥

**महामेदा**, स्त्री, (मेदयतीति । मिद + णिच् +

घञ् । टाप् । महती मेदा ।) अष्टवर्गे प्रसिद्धौ-
षधविशेषः ॥ तत्पर्य्यायः । वसुच्छिद्रा २ जीवनी
३ पांशुरागिणी ४ देवेष्टा ५ सुरामेदा ६ दिव्या
७ देवमणिः ८ देवगन्धा ९ महाच्छिद्रा १०
वृक्षार्हा ११ । अस्याः गुणाः । हिमत्वम् ।
रुच्यत्वम् । कफशुक्रवृद्धिकारित्वम् । दाहास्र-
पित्तक्षयवातज्वरनाशित्वञ्च । इति राज-
निर्घण्टः ॥ * ॥ अथ मेदमहामेदयोरुत्पत्ति-
लक्षणनामगुणाः ।
"महामेदाभिधः कन्दो मोरङ्गादौ प्रजायते ।
महामेदा वनौमेदा स्यादित्युक्तं मुनीश्वरैः ॥

वोक्तं वैष्णवे ।
"तमोऽविवेको मोहः स्यादन्तःकरणविभ्रमः ।
महामोहश्च विज्ञेयो ग्राम्यभोगसुखैषणा ॥
मरणं ह्यन्धतामिस्रं तामिस्रं क्रोध उच्यते ।
अविद्या पञ्चपर्व्वा या प्रादुर्भूता महात्मनः ॥"
इति तट्टीकायां श्रीधरस्वामी ॥

**महाम्लं**, क्ली, (महत् अम्लं अम्लरसयुक्तम् । यद्वा,

महान् अम्लः अम्लरसो यस्मिन् ।) तिन्तिडी-
कम् । इति जटाधरः ॥ (अत्यम्लरसविशिष्टे, त्रि ॥)

**महायक्षः**, पुं, (यक्षयते पूजयति इति । यक्ष् +

अच् । महान् यक्षः ।) अर्हदुपासकविशेषः ।
इति हेमचन्द्रः । १ । ४१ ॥

**महायज्ञः**, पुं, (महान् यज्ञः ।) वेदपाठादि-

रूपपञ्चप्रकारयज्ञः । यथा, --
"पाठो होमश्चातिथीनां सपर्य्या तर्पणं बलिः ।
एतैः पञ्च महायज्ञा ब्रह्मयज्ञादिनामकैः ॥"
इत्यमरः । २ । ७ । १४ ॥
अपि च ।
"दिव्यो भौमस्तथा पैत्रो मानुषो ब्राह्म एव च ।
एतैः पश्च महायज्ञा ब्रह्मणा निर्म्मिताः पुरा ॥
ब्राह्मणानां हितार्थाय इतरेषाञ्च तन्मुखाः ।
इतरेषान्तु वर्णानां ब्राह्मणैः कारिताः शुभाः ॥
एवं कृत्वा नरो भुक्त्वास्माद्धरित्रि! विशुध्यति ।

| | | |
|---|---|---|
| | शुक्लार्द्रकनिभः कन्दो लताजातः स पाण्डुरः ।<br>महामेदाभिधो ज्ञेयो मेदालक्षणमुच्यते ॥<br>शुक्लकन्दो नखच्छेद्यो मेदो धातुरिव स्रवेत् ।<br>यः स मेदेति विज्ञेया जिज्ञासातत्परैर्जनैः ॥<br>स्वल्पपर्णी मणिच्छिद्रा मेदा मेदोभवाध्वरा । | अन्यथा ब्रीहयोऽप्येते एकैके मृगपक्षिणः ॥<br>मन्तव्या दातृभोक्तॄणां महामांसन्तु तत् स्मृतम् ॥”<br>इति वराहपुराणम् ॥<br>(यथा च मनौ । २ । ३८ ।<br>महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥”) |

**महायशस्कः**, त्रि, (महत् यशो यस्य । "शेषा-

द्विभाषा ।" ५ । ४ । १५४ । इति
समामान्त
कप्प्रत्ययः ।) अतिशययशोविशिष्टः ।
इति
पाणिनिव्याकरणम् ॥

**महायशाः**, [स्] पुं, (महत् यशो यस्य विभाषा

ग्रहणात् न कप् ।) भूतार्हद्विशेषः । इति
हेमचन्द्रः । १ । ५० ॥ (शिवः । यथा,
महा-
भारते । १३ । १७ । ३४ ।
"महारूपो महाकायो वृषरूपो महायशाः
॥"
स्त्री, स्कन्दमातृगणविशेषः । यथा, महा-
भारते । ९ । ४६ । २८ ।
"पशुदा वित्तदा चैव सुस्वदा च महायशाः
॥")
अतिशययशोयुक्ते, त्रि ॥ (यथा, महाभारते
।
३ । ४२ । ४१ ।
"एवं स संक्रमंस्तत्र स्वर्गलोके महायशाः
।
ततो ददर्श शक्रस्य पुरीन्साममरावतीम्
॥")

**महारजतं**, क्ली, (महच्च तद्रजतञ्चेति ।) सुव-

र्णम् । (यथा, मार्कण्डेये । ६० । ४ ।
"महारजतसङ्काशा जायन्ते तत्र मानवाः
॥")
धुस्तूरः । इत्यमरः । २ । ९ । ९५ ॥
बृहद्रौप्यञ्च ॥

**महारजनं**, क्ली, (रज्यतेऽनेनेति । रञ्ज + करणे

ल्युट् । ततः । "अनिदितामिति ।" ६ ।
४ । २४ ।
इत्यत्र "रजकरजनरजःसूपसंख्यानं
कर्त्तव्यम् ।"
इति काशिकोक्त्या नलोपः । महच्च
तद्रजनञ्चेति

**महारसं**, क्ली, (महान् अधिको रसोऽस्य । रुचि-

प्रदत्वात् तथात्वम् ।) काञ्जिकम् । इति जटा-
धरः ॥ (गुणादयोऽस्य काञ्जिकशब्दे द्रष्टव्याः ।
महारसविशिष्टे, त्रि । यथा, महाभारते ।
३ । १११ । १४ ।
"तान्यृष्यशृङ्गस्य महारसानि
भृशं सुरूपाणि रुचिं ददुर्हि ॥")

**महारसः**, पुं, (महानतिमिष्टो रसोऽस्य ।) खर्ज्जूरः ।

कोषकारः । कशेरु । इति मेदिनी । से, ५९ ॥
इक्षुः । इति जटाधरः ॥ (अस्यपर्य्यायो यथा, --
"महारसोऽसिपत्रः स्यान्मृत्युपुष्पो मधुतृणः ।
इक्षुर्वंशककाण्डारभीरुपौण्ड्रादिभेदवान् ॥"
इति वैद्यकरत्नमालायाम् ॥
(महान् रसः धातुद्रवः ।) पारदः । इति राज-
निर्घण्टः ॥ (यथास्य पर्य्यायः ।
"पारदो रसधातुश्च रसेन्द्रश्च महारसः ।
चपलः शिववीर्य्यञ्च रसः सूतः शिवाह्वयः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**महारसाष्टकं**, क्ली, (महारसानां अष्टकम् ।)

अष्टधातुविशेषाः । यथा, --
"दरदः पारदः सस्यो वैक्रान्तं कान्तमभ्रकम् ।
माक्षिकं विमलश्चेति स्युरेतेऽष्टौ महारसाः ॥"
इति राजनिर्घण्टः ॥

**महाराजः**, पुं, (महांश्चासौ राजा प्रभाव-

विशेषवानिति ।) पूर्व्वजिनविशेषः । (महत्या
दीप्त्या राजतेऽङ्गुलिषु शोभत इति । राज् +
अच् ।) नखः । इति हेमचन्द्रः । ३ । २५८ ।
(महान्
राजा । सर्व्वत्र "राजाहःसखिभ्यष्टच् । ५ । ४
। ९१ ।
इति समासान्तष्टच् ।) श्रेष्ठराजः । यथा, --
"अर्थस्य पुरुषो दासो दासस्त्वर्थो न
कस्यचित् ।
इति सत्यं महाराज ! बद्धोऽस्म्यर्थेन कौरवैः
॥"
इति महाभारते उद्योगपर्व्व ॥

**महाराजोपचारः**, पुं, (महाराजार्थ उपचारः ।

महाराजानामुपचारो वा ।)
राजार्हपूजोप-
करणम् । तद्यथा, --
"ततश्च चामरच्छत्रपादुकादीन्
परानपि ।
महाराजोपचारांश्च दत्त्वादर्शं प्रदर्शयेत्
॥"
विष्णुधर्म्मोत्तरे ।
"यथादेशं यथाकालं राजलिङ्गं सुरालये
।
दत्त्वा भवति राजैव नात्र कार्य्या
विचारणा ॥"
तत्र चामरमाहात्म्यं विष्णुधर्म्मोत्तरे ।
'तथा चामरदानेन श्रीमान् भवति
भूतले ।
मुच्यते च तथा पापैः स्वर्गलोकञ्च
गच्छति ॥'
छत्रस्य तत्रैव ।
'छत्रं बहुशलाकञ्च झल्लरीवस्त्रसंयुतम् ।
दिव्यवस्त्रैश्च संयुक्तं
हेमदण्डसमन्वितम् ॥
यः प्रयच्छति कृष्णस्य
छत्रलक्षायुतैर्वृतः ।
प्रार्थ्यते सोऽमरैः सर्व्वैः क्रीडते
पितृभिः सह ॥'
तत्रैवान्यत्र ।
'राजा भवति लोकेऽस्मिन् छत्रं दत्त्वा
द्विजो-
त्तमाः ।
नाप्नोति रिपुजं दुःखं संग्रामे
रिपुजिद्भवेत् ॥'
'उपानत्संप्रदानेन विमानमधिरोहति ।
यथेष्टं तेन लोकेषु विचरत्यमरप्रभः ॥'
ध्वजस्य तत्रैव ।
'लोकेषु ध्वजभूतः स्याद्दत्त्वा विष्णोर्वरं
ध्वजम् ।
शक्रलोकमवाप्नोति बहूनब्दगणान्नरः
॥'

कर्म्मधारयः ।) कुसुम्भपुष्पम् । इत्यमरः । २ ।
९ । १०६ ॥ स्वर्णम् । इति मेदिनी । ने, २४४ ॥

**महारण्यं**, क्ली, (महत् अरण्यम् ।) बृहद्वनम् ।
(यथा, रामायणे । ३ । १ । १ ।
"प्रविश्य तु महारण्यं दण्डकारण्यमात्मवान् ।
रामो ददर्श दुर्द्धर्षस्तापसाश्रममण्डलम् ॥")
तत्पर्य्यायः । अरण्यानी २ । इत्यमरः । २ । ४ । १ ॥
कान्तारः ३ । इति जटाधरः ॥

**महारथः**, पुं, (रमन्ते लोका यस्मिन्निति । रम +
"हनिकुषिनीरमिकाशिभ्यःक्थन् ।" उणा०
२ । २ । इति क्थन् । महांश्चासौ रथश्चेति ।)
शिवः । इति महाभारते तस्य सहस्रनाम-
स्तोत्रम् । १३ । १७ । १२१ ॥ (महान् रथोऽस्य ।)
अयुतधन्विभिः सहास्त्रशस्त्रनिपुणयोद्धा । यथा,
"एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् ।
अस्त्रशस्त्रप्रवीणश्च महारथ इति स्मृतः ॥"
इति भगवद्गीताटीकायां श्रीधरस्वामी ॥
(महान् रथः ।) बृहद्रथश्च । (यथा, महा-
भारते । ३ । ४२ । १७ ।
"नातप्ततपसा साध्य एष दिव्यो महारथः ॥"
राजविशेषः । यथा, मार्कण्डेये । ११८ । २६ ।
"महारथस्य वाशिष्ठः पुरोधाभून्महीभृतः ॥")

**महारम्भं**, क्ली, (महान् आरम्भो प्रस्तुतकरणे
यत्नो यस्य ।) गडलवणम् । इति राजनिर्घण्टः ॥

**महाराजकः**, पुं, (राजते इति । राज + वुन् ।
महांश्चासौ राजकश्चेति ।) महाराजिकगणः ।
इत्यमरटीकायां रामाश्रमः ॥

**महाराजचूतः**, पुं, (महता मिष्टादिगुणेन राजते
आद्रियते । इत्यच् ततः कर्म्मधारयः ।) उत्त-
माम्रः । तत्पर्य्यायः । महाराजाम्रकः २ स्थूलाम्रः
३ मन्मथानन्दः ४ कङ्कः ५ नीलकपित्थकः ६
कामायुधः ७ कामफलः ८ राजपुत्त्रः ९ नृपा-
त्मजः १० महाराजफलः ११ कामः १२ महा-
चूतः १३ । कोमलस्य तस्य गुणाः । कटुत्वम् ।
अम्लत्वम् । पित्तदाहदातृत्वञ्च । सुपक्वस्य तस्य
गुणाः । स्वादुत्वम् । मधुरत्वम् । पुष्टिवीर्य्यबल-
प्रदत्वञ्च । इति राजनिर्घण्टः ॥

**महाराजद्रुमः**, पुं, (महाराजोऽतिश्रेष्ठो द्रुमः ।)
आरग्वधः । इति राजनिर्घण्टः ॥ (गुणादि-
विशेषोऽस्यारग्वधशब्दे ज्ञातव्यः ॥)

**महाराजिकः**, पुं, (महती राजिः पङ्क्तिरस्य
"शेषाद्विभाषा ।" ५ । ४ । १५४ । इति कप् ।)
गणदेवताविशेषः । स तु विंशत्यधिकशतद्वय-
संख्यकः । इत्यमरभरतौ । १ । १ । १० ॥

किञ्च ।
'युक्तं पीतपताकाभिर्न्निवेद्य गरुडध्वजम् ।
केशवाय द्विजश्रेष्ठाः शक्रलोके महीयते ॥
यत्प्रासादे ध्वजारोपमाहात्म्यं लिखितं पुरा ।
तदत्राप्यखिलं ज्ञेयं तत्रात्रत्यमिदन्तथा ॥'
किञ्च । भविष्ये ।
'विष्णोर्ध्वजे तु सौवर्णदण्डं कुर्य्याद्विचक्षणः ।
पताका चापि पीता स्यात् गरुडस्य समीपगा ॥
व्यजनस्य । विष्णुधर्म्मोत्तरे ।
'तालवृन्तप्रदानेन निर्वृतिं प्राप्नुयात् पराम् ॥'
वितानस्य तत्रैव ।
'वितानकप्रदानेन सर्व्वपापैः प्रमुच्यते ।
परां निर्वृतिमाप्नोति यत्र यत्राभिजायते ॥'
खड्गादीनाम् ।
'दत्त्वा निस्त्रिंशकान् मुख्यान् शत्रुभिर्नाभि-
भूयते ।
दत्त्वा तद्वन्धनं मुख्यमग्न्याधेयफलं लभेत् ॥'
किञ्च ।
'पतद्ग्रहं तथा दत्त्वा शुभगस्त्वभिजायते ।
पादपीठप्रदानेन स्थानं सर्व्वत्र विन्दति ॥'
'दर्पणस्य प्रदानेन रूपवान् दर्पवान् भवेत् ।
मार्ज्जयित्वा तथा तच्च सुभगस्त्वभिजायते ॥
यत्किञ्चिद्देवदेवाय दद्याद्भक्तिसमन्वितः ।
तदेवाक्षयमाप्नोति स्वर्गलोकं स गच्छति ॥'

| | | |
|---|---|---|
| (महारम्भविशिष्टे, त्रि । यथा, कामन्दकीये ।<br>४ । ५४ ।<br>"स्वाजीव्यो भूगुणैर्युक्तः सारूपः पर्व्वताश्रयः ।<br>शूद्रकारुबणिक्प्रायो महारम्भकृषीबलः ॥") | | किञ्च । वामनपुराणे श्रीबलिं प्रति प्रह्लादोक्तौ ।<br>'श्रद्दधानैर्भक्तिपरैर्यान्युद्दिश्य जनार्द्दनम् ।<br>वलिदानानि दीयन्ते अक्षयाणि विदुर्बुधाः ॥ |

अत्रापि केचिदिच्छन्ति दत्त्वा
पुष्पाञ्जलित्रयम् ।
पूर्ब्बोक्ता दश शङ्खाद्या मुद्राः
सन्दर्शयेदिति ॥”
इति श्रीहरिभक्तिविलासे ८ विलासः ॥

**महारात्रिः**, स्त्री, (महत्यां प्रलयावस्थायां राति

आत्मस्वरूपं ददाति सुप्तशक्त्या
सर्व्वान् जीवा-
नात्मरूपेणावस्थापयति त्रायते
पञ्चपर्व्वलक्ष-
णाया अविद्याया सकाशात् रक्षतीति ।
त्रै +
इ ।) ब्रह्मलयोपलक्षिता महाप्रलयरात्रिः
।
इति चण्डीटीकायां नागोजीभट्टः ॥
महत
ईश्वरस्य रात्रिः । ब्रह्ममरणोपलक्षिता
रात्रि-
रित्यर्थः । इति देवीमाहात्म्यटीकायां
विद्या-
विनोदः ॥ अपि च ।
“ब्रह्मणाञ्च निपाते च महाकल्पो
भवेन्नृप ! ।
प्रकीर्त्तिता महारात्रिः सा एव च
पुरातनैः ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५
अध्यायः ॥
(दुर्गा । यथा च मार्कण्डेये । ८१ । २०
।
“महारात्रि ! महाविद्ये ! नारायणि !
नमो-
ऽस्तु ते ॥”)
अर्द्धरात्रात् परं मुहूर्त्तद्वयम् । यथा, --
“अर्द्धरात्रात् परं यच्च मुहूर्त्तद्वयमुच्यते
।
सा महारात्रिरुदिता तद्दत्तमक्षयं भवेत्
॥”
इति तन्त्रम् ॥

शीतलत्वम् । लघुत्वम् । सन्तापशोषकुष्ठास्र-
कृमिभूतविषापहत्वञ्च । इति राजनिर्घण्टः ॥

**महारुद्रः**, पुं, (रुद्राणां महान् स्वयं ईश्वर इत्यर्थः

इति महारुद्रः ।) महादेवः । यथा, --
“महाकाल्या महाकालश्चणकाकाररूपतः ।
माययाच्छादितात्मा च तन्मध्ये समभागतः ॥
महारुद्रः स एवात्मा महाविष्णुः स एव हि ॥”
इति निर्व्वाणतन्त्रम् ॥

**महारूपः**, पुं, (महत् महत्तत्त्वादिरूपमस्य ।)

शिवः । इति महाभारते तस्य सहस्रनाम-
स्तोत्रम् । १३ । १७ । ३४ ॥ (महद्रूपं यस्य ।)
अतिशयरूपयुक्ते, त्रि ॥

**महारूपकं**, क्ली, (महत् रूपकं यत्र ।) नाट-

कम् । इति त्रिकाण्डशेषः ॥

**महारोगः**, पुं, (महान् घोरानिष्टकारकः रोगः ।

यद्वा, महा जन्मान्तरीणभुक्तावशिष्टातिशय
पातकेन जनितः रोगः ।) पापरोगः । स चाष्ट-
विधो यथा । उन्मादः १ त्वग्दोषः २ राज-
यक्ष्मा ३ श्वासः ४ मधुमेहः ५ भगन्दरः ६
उदरः ७ अश्मरी ८ । इति शुद्धितत्त्वे नारदः ॥
(यथा च आश्वलायने । २ । ७ । १७ ।
“महारोगेण वाभितप्तः प्राश्नीयादन्यतरां गतिं
गच्छति ॥”
“महारोगेण क्षयकुष्ठादिनेति” तद्वृत्तौ गार्ग्य-
नारायणः ॥ विषयोऽस्य यथा, --
“महारोगाष्टके कासे ज्वरे श्वासातिसारके ॥”
अस्य व्याख्यायां यथा, --
“वातव्याध्यश्मरीकुष्ठमेदोदरभगन्दराः ।
अर्शांसि ग्रहणीत्यष्टौ महारोगाः प्रकीर्त्तिताः ॥”
इति वैद्यकरसेन्द्रसारसंग्रहे यक्ष्मणि रत्नगर्भ-
पोट्टलीटीका ॥)

**महारोगी**, [न्] पुं, (महा रोगः क्षयादि-

रस्त्यस्येति । महारोग + इनिः । महारोग-
युक्तः । यथा, --
“क्रियाहीनस्य मूर्खस्य महारोगिण एव च ।
यथेष्टाचरणस्याहुर्म्मरणान्तमशौचकम् ॥”

“महारौरवसंज्ञन्तु अधोऽर्द्धं ताम्रसंपुटम् ।
धम्यते खदिराङ्गारैर्गुरुदारापनायकः ॥
देवद्रव्यापहारी च पच्यते कालमक्षयम्
॥”
इति वह्निपुराणे पापनाशनवृषदानाध्यायः
॥

**महार्घं**, त्रि, (महान् अधिकः अर्घो मूल्यमस्य ।)

महामूल्यम् । इति मेदिनी ॥ घे, १० ।
(यथा,
कथासरित्सागरे । १२ । १४५ ।
“ततस्तस्मै महार्घाणि रत्नानि सुबहूनि
च ।
विभीषणो ददाति स्म मथुरां गन्तुमिच्छते
॥”)

**महार्घः**, पुं, (महान् अर्घो मूल्यमादरो वास्य ।)

लावकपक्षी । इति विश्वः ॥

**महार्णवः**, पुं, (महान् सुविशालः अर्णवः ।)

महासमुद्रः । यथा, --
“आघूर्णितो वा वातेन स्थितः पोते
महार्णवे ॥”
इति मार्कण्डेयपुराणे देवीमाहात्म्यम् ॥
(महान् अर्णव इव ।
प्रसादादिगुणबाहुल्यात्
तथात्वम् ।) शिवः । इति महाभारते
तस्य
सहस्रनामस्तोत्रम् ॥
(कूर्म्मरूपिभगवन्नाराय-
णस्य दक्षपदोद्भवः जनपदः । यथा,
मार्क-
ण्डेये । ५८ । ३२ ।
“सौराष्ट्रा दरदाश्चैव द्राविडाश्च महार्णवाः
।
एते जनपदाः पादे स्थिता वै दक्षिणेऽपरे
॥”)

**महार्द्दः**, पुं, (महान् विपुलोर्द्दोऽस्य ।) वृक्षविशेषः ।

इति शब्दचन्द्रिका । महाजा इति भाषा ॥

आश्विनशुक्लाष्टमी। नवरात्रम्। यथा, --
"शुक्लाष्टमी चाश्विनस्य नवरात्रं तु तस्य वै।
महारात्रिर्महेशानि! कालरात्रिं शृणु प्रिये!॥"
इति शक्तिसङ्गमतन्त्रम्॥

**महाराष्ट्रः**, पुं, (महान् भूयान् प्रशस्तो वा राष्ट्रः। महत् राष्ट्रं यत्रेति वा।) देशविशेषः। मारहाट्टा इति भाषा॥ यथा, --
"नैरृते द्रविडानर्त्तमहाराष्ट्रश्च रैवतः।
जवनः पह्लवः सिन्धुः पारसीकादयो मताः॥"
इति ज्योतिषतत्त्वे कूर्म्मचक्रम्॥

**महाराष्ट्री**, स्त्री, (महाराष्ट्रस्तद्देश उत्पत्तिस्थान- त्वेनास्त्यस्या इत्यच्। गौरादित्वात् ङीष्।) जलपिप्पली। इति राजनिर्घण्टः॥ शाकभेदः। माराटी इति भाषा। अस्या गुणः। कफवायु- नाशित्वम्। इति राजवल्लभः॥ (विषयोऽस्या यथा, --
"जयन्ती मुण्डिरी वासा बृहती च गुडूचिका।
महाराष्ट्री जम्बुरसैस्तथा नीलोत्पलद्रवैः॥"
इति वैद्यकरसेन्द्रसारसग्रहे शूलाधिकारे पञ्चा- त्मकरसे॥ महाराष्ट्राणामियमिति। महाराष्ट्र। अण् ङीप्।) अष्टादशभाषान्तर्गतभाषा- विशेषः। यथा, साहित्यदर्पणे ६ परिच्छेदे।
"आसामेव तु गाथान्तु महाराष्ट्रीं प्रयोजयेत्।
अत्रोक्ता मागधी भाषा राजान्तःपुरचारि- णाम्॥"
इति शुद्धितत्त्वधृतकूर्म्मपुराणवचनम्॥

**महारोमा**, [न्] पुं, (महान्ति रोमाणि वृक्षादि- रूपाणि विराटरूपे यस्य।) शिवः। इति महाभारते तस्य सहस्रनामस्तोत्रम्। १३। १७। ८८॥ (महान्ति रोमाण्यस्य।) बृहद्रोम- युक्ते, त्रि॥ (कृतिरातस्य पुत्रविशेषः। यथा, भागवते। ९। १३। १७।
"मरोः प्रतीपकस्तस्माज्जातः कृतरथो यतः।
देवमीढस्तस्य पुत्रो विश्रुतोऽथ महाधृतिः॥
कृतिरातस्ततस्तस्माम्महारोमाच तत्सुतः॥")

**महारौरवः**, पुं, (रुरूणामयं इति। रुरु + अण्। महान् रौरवः। तत्र गता जीवाः क्रव्यन्- नामकैरुरुभिः पोड्यन्ते अत एवास्य तथा- त्वम्।) नरकविशेषः। इत्यमरः। १। ९। १॥
महान् रौद्रो रवोऽत्र महारौरवः मनीषादि- त्वात् द्रलोपः। इति भरतः॥ अपि च।

**महार्द्रकं**, क्ली, (महत् आर्द्रकम्।) वनार्द्रकम्। अस्य गुणाः। अग्निदीपनत्वम्। धारकत्वम्। रूक्षत्वम्। वायुकफनाशित्वञ्च। इति राज- वल्लभः॥

**महार्व्वुदं** क्ली, (महत् अर्व्वुदम्।) दशार्व्वुदम्। शतकोटिसंख्या। इति ज्योतिषम्॥

**महार्हं**, क्ली, (महान् अर्हः मूल्यं मर्य्यादा वास्य।) श्वेतचन्दनम्। इति राजनिर्घण्टः॥ (महा- मूल्यवति, त्रि। यथा, महाभारते। १। २१०। २९।
"महार्हाभरणोपेतौ विरजोऽम्बरधारिणौ॥")
महापूजायोग्यम्। यथा, रामायणे। १। ६६। १०।
"यस्माद्भागार्थिनो भागान् नाकल्पयत मे सुराः।
वराङ्गाणि महार्हाणि धनुषा शातयामि वः॥"
"महार्हाणि महापूजायोग्यानि।" इति तट्टी- कायां रामानुजः॥)

**महालयः**, पुं, (महतां जैनानामालयः। महान् आलय इति वा।) विहारः। (महतां योगि- प्रभृतीनामालयः।) तीर्थः। (महदादीनां लयो यस्मिन्।) परमात्मा। इति मेदिनी। ये, १२५॥ सौराश्विनीयकृष्णपक्षः। यथा, भविष्ये।
"येयं दीपान्विता राजन्! ख्याता पञ्चदशी भुवि।
तस्यां दद्यान्न चेद्दत्तं पितॄणां वै महालये॥"
महालये कन्यागतापरपक्षे। इति तिथ्यादि-

| | | |
|---|---|---|
| **महारिष्टः**, पुं, (महान् अरिष्टः ।) महानिम्ब-<br>विशेषः । तत्पर्य्यायः । कैटर्य्यः २<br>रामणः ३<br>रमणः ४ गिरिनिम्बः ५ शुक्लसालः ६<br>। अस्य<br>गुणाः । कटुत्वम् । तिक्तत्वम् ।<br>कषायत्वम् । | | तत्त्वम् ॥<br>**महालक्ष्मीः**, स्त्री, (महती लक्ष्मोः ।) राधा ।<br>नारायणशक्तिः । यथा, --<br>"यन्मायया मोहिताश्च<br>ब्रह्मविष्णुशिवादयः । |

वैष्णवास्तां महालक्ष्मीं परां राधां वदन्ति ते ॥
यदर्द्धाङ्गा महालक्ष्मीः प्रिया नारायणस्य
च ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५१ अध्यायः ॥
अथ महालक्ष्मीमन्त्रः ।
“तारो वाग्भवं माया रमाकामः हसौ-
र्ज्जगत्प्रसूत्यै नमः ॥”
तथा च ।
“वाग्भवं शम्भुवनिता रमा मकरकेतनः ।
तार्त्तीयञ्च जगत्पार्श्वो वह्निबीजसमुज्वलः ॥
अर्घीशाढ्यो भृगुस्त्यैहृम्मन्त्रोऽयं द्वादशाक्षरः ।
महालक्ष्म्याः समुद्दिष्टस्ताराद्यः सर्व्वसिद्धिदः
॥”
तस्या ध्यानं यथा, तन्त्रसारे ।
“बालार्कद्युतिमिन्दुखण्डविलसत्कोटीरहारो-
ज्ज्वलां
रत्नाकल्पविभूषितां कुचनतां शालेः करैर्म्मञ्ज-
रीम् ।
पद्मौ कौस्तुभरत्नमप्यविरतं संबिभ्रतीं सस्मितां
फुल्लाम्भोजविलोचनत्रययुतां ध्यायेत् परा-
म्म्बिकाम् ॥”
(अस्या बीजम् । ॐ ऐँ ह्रीँ श्रीँ क्लीँ ह्सौँ
जगत्प्रसूत्यै नमः ।)

**महालिकटभी**, स्त्री, (महान्तः अलयः । तेषां
कटभी आश्रयभूतवृक्षः ।) श्वेतकिणिही-
वृक्षः । इति राजनिर्घण्टः ॥

**महालिङ्गः**, पुं, (महान् पूज्यतमो विपुलो वा
लिङ्गोऽस्य ।) शिवः । इति महाभारते तस्य
सहस्रनामस्तोत्रम् ॥ (यथा, राजतरङ्गिण्याम् ।
२ । १३७ ।
“अकरोत् स महाहर्म्म्यैर्म्महालिङ्गैर्महावृषैः ।
महात्रिशूलैर्म्महतीं महामाहेश्वरो महीम् ॥”
महत् बृहल्लिङ्गमस्य ।) बृहल्लिङ्गयुक्तश्च ॥

**महालीलसरस्वती**, स्त्री, (लीलया सरस्वती ।
महती लीलसरस्वतीति कर्म्मधारयः ।) तारा-
विशेषः ।
“लीलया वाक्प्रदा चेति तेन लीलसरस्वती ।

**महावरा**, स्त्री, (व्रियते असौ देवादिभिरिति ।
वृ + अच् । टाप् । महती वरा ।) दूर्व्वा ।
इति शब्दरत्नावली ॥

**महावराहः**, पुं, (महानीश्वरोऽपि सन् वराहः ।
महांश्चासौ वराहश्चेति वा ।) वराहरूपी
भगवान् । यथा, --
“महावराहो गोविन्दः सुसेनः कनकाङ्गदी ॥”
इति महाभारते तस्य सहस्रनामस्तोत्रम् ॥
(राजविशेषः । यथा, कथासरित्सागरे । ५२
। ९२ ।
“अस्ति शूरपुरं नाम यथार्थं नगरं भुवि ।
महावराह इत्यासीद्राजा तत्रातिदुर्म्मदः ॥”)

**महावरोहः**, पुं, (महान् अवरोहः शिफानां
अधोऽवतरणं यस्य ।) प्लक्षवृक्षः । इति राज-
निर्घण्टः ॥ (विशेषोऽस्य प्लक्षशब्दे ज्ञातव्यः
॥)

**महावल्ली**, स्त्री, (महती चासौ वल्ली चेति ।)
माधवीलता । इति शब्दचन्द्रिका ॥ (उत्तमा
लता च । यथा, कथासरित्सागरे । ३३ ।
८५ ।
“उपायरससंसिक्ता देशकालोपबृंहिता ।
सेयं नीतिमहावल्ली किं नाम न फलेत् फलम्
॥”)

**महावसः**, पुं, (महती वसा वपास्य । ह्रस्वः ।)
शिशुमारः । इति हेमचन्द्रः । ४ । ४१६ ॥

**महावक्षाः**, [स्] पुं, (महत् वक्षः विराड्देहे
ऽस्य ।) शिवः । इति महाभारते तस्य सहस्र-
नामस्तोत्रम् । १३ । १७ । ८६ ॥ (महत्
वक्षो-
ऽस्य ।) बृहद्वक्षोयुक्ते, त्रि ॥

**महावाक्यं**, क्ली, (महत् वाक्यम् ।) योग्यता-
काङ्क्षासत्तियुक्तवाक्यसमूहः । इति साहित्य-
दर्पणः । २ । २ ॥ न्यायमते तु ।
स्वघटकानेक-

कालादिशोधनं नास्ति न
चामित्रादिदूषणम् ॥
सिद्धविद्यातया नात्र
युगसेवापरिश्रमः ।
नास्ति किञ्चिन्महादेवि !
दुःखसाध्यं कथञ्चन ॥”
मालिनीविजये ।
“अथ वक्ष्याम्यहं या या महाविद्या
महीतले ।
दोषजालैरसंस्पृष्टास्ताः सर्व्वा हि
फलैः सह ॥
काली नीला महादुर्गा त्वरिता
छिन्नमस्तका ।
वाग्वादिनी चान्नपूर्णा तथा
प्रत्यङ्गिरा पुनः ॥
कामाख्या वासली बाला मातङ्गी
शैलवासिनी ।
इत्याद्याः सकला विद्याः कलौ
पूर्णफलप्रदाः ॥
सिद्धमन्त्रतया नात्र
युगसेवापरिश्रमः ।
अथ चैता महाविद्याः कलिदोषान्न
बाधिताः ॥”
इति तन्त्रसारः ॥ * ॥
तासां दशावतारत्वं यथा, --
“प्रकृतिर्विष्णुरूपा च पुंरूपश्च
महेश्वरः ।
एवं प्रकृतिभेदेन भेदास्तु
प्रकृतेर्द्दश ॥
कृष्णरूपा कालिका स्यात्
रामरूपा च
तारिणी ।
वगला कूर्म्ममूर्त्तिः स्यान्मीनो
धूमावती भवेत् ॥
छिन्नमस्ता नृसिंहः स्याद्वराहश्चैव
भैरवी ।
सुन्दरी यामदग्न्यः स्याद्वामनो
भुवनेश्वरी ॥

तारास्त्ररहिता त्र्यर्णा महालीलसरस्वती ॥”
इति तन्त्रसारः ॥

**महालोध्रः**, पुं, (महान् लोध्रः ।) लोध्रविशेषः ।
इति रत्नमाला । पाटियालोध इति भाषा ॥

**महालोलः**, पुं, (महदतिशयं लोलं लौल्यमस्य ।)
काकः । इति राजनिर्घण्टः ॥ अतिचञ्चले, त्रि ॥

**महालोहं**, क्ली, (महत् अतिशयगुणवत् लोहम् ।)
अयस्कान्तः । इति राजनिर्घण्टः ॥

**महावनं**, क्ली, (महत् विपुलं वनम् ।) बृहद्वनम् ।
तत्पर्य्यायः । अरण्यानी २ महारण्यम् ३ महा-
टवी ४ । इति राजनिर्घण्टः ॥ (यथा, रामायणे ।
“निरस्ताः पथि धावन्ति त्रयस्ते यन्महावने ॥”)
वृन्दावनस्थचतुरशीतिवनान्तर्गतवनविशेषश्च ॥

**महावपः**, पुं, (महती वपा यस्य । यद्वा, महान्तं
धातुस्थौल्यादिकं वपतीति । वप + अच् ।)
महामेदः । इति शब्दचन्द्रिका ॥

नामलभ्यतादृशार्थकम् ।
प्रकृत्यर्थमात्रावच्छिन्न-
प्रत्ययार्थबोधं प्रत्ययोग्यवाक्यं वा । इति
शब्द-
शक्तिप्रकाशिका ॥ (महत् महदर्थप्रकाशकं
वाक्यम् ।) तत्त्वमसीति आदिवाक्यम् ।
प्रतिष्ठा-
दावुत्सर्गवाक्यञ्च ॥

**महावारुणी**, स्त्री, (वरुणो देवतास्याः । वरुण
+ अण् । ङीप् । महती वारुणी ।) गङ्गा-
स्नानस्य योगविशेषः । स तु
शनिवारशतभिषा-
नक्षत्रयुक्तगौणचान्द्रचैत्रकृष्णत्रयोदशीरूपः ।
यथा, --
“वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी ।
गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समा ॥
शनिवारसमायुक्ता सा महावारुणी स्मृता ।
गङ्गायां यदि लभ्येत कोटिसूर्य्यग्रहैः समा ॥”
इति तिथ्यादितत्त्वधृतस्कन्दपुराणवचनम्॥

**महाविद्या**, स्त्री, (विद्यते ज्ञायते इति । विद् +
क्यप् । टाप् । महती विद्या ज्ञानं
तत्त्वसाक्षात्-
कारो वा यस्याः ।) देवीविशेषः । सा दशधा ।
यथा चामुण्डातन्त्रे ।
“काली तारा महाविद्या षोडशी भुवनेश्वरी ।
भैरवी छिन्नमस्ता च विद्या धूमावती तथा ॥
वगला सिद्धविद्या च मातङ्गी कमलात्मिका ।
एता दश महाविद्याः सिद्धविद्याः प्रकीर्त्तिताः
॥
नात्र सिद्धाद्यपेक्षास्ति न नक्षत्रविचारणा ।

कमला बौद्धरूपा स्यात् दुर्गा
स्यात् कल्कि-
रूपिणी ।
स्वयं भगवती काली कृष्णस्तु
भगवान् स्वयम् ।
स्वयञ्च भगवान् कृष्णः कालीरूपो
भवेद्व्रजे ॥”
इति मुण्डमालातन्त्रम् ॥
(गङ्गा । यथा, काशीखण्डे । २९ ।
१३९ ।
“महाविद्या महामाया महामेधा
महौ-
षधम् ॥”)

**महाविराट्**, [ज्] पुं, (विशेषेण राजते
प्रकाशते ।
इति । वि + राज् + क्विप् ।
महांश्चासौ विराट्
चेति ।) महाविष्णुः । यथा, --
मुनिरुवाच ।
“विश्वानां गोलोकं राजन् !
विस्तृतञ्च नभः-
समम् ।
शश्वन्नित्यं डिम्बरूपं
श्रीकृष्णेच्छासमुद्भवम् ॥
जलेन परिपूर्णञ्च कृष्णस्य
मुखबिन्दुना ।
सृष्ट्युन्मुखस्यादिसर्गे
परिश्रान्तस्य क्रीडतः ॥
प्रकृत्या सह युक्तेन कलया
निजया नृप ! ।
तत्राधारो महद्विष्णोर्विश्वाधारस्य
विस्तृतः ॥
प्रकृतीगर्भसंभूतडिम्बोद्भूतस्य
भूमिप ! ।
सुविस्तृते जलाधारे शयानश्च
महान् विराट् ॥
राधेश्वरस्य कृष्णस्य षोडशांशः
प्रकीर्त्तितः ।
दूर्व्वादलश्यामरूपः सस्मितश्च
चतुर्भुजः ।

| | | |
|---|---|---|
| | | वनमालाधरः श्रीमान् शोभितः<br>पीतवाससा ॥"<br>इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५१<br>अध्यायः ॥<br><br>**महाविलं**, क्ली, (महच्च तत् विलञ्चेति ।)<br>आकाशम् । इति जटाधरः ॥<br>बृहच्छिद्रञ्च ॥<br><br>**महाविषः**, पुं, (महत् अत्युत्कटं विषमस्य ।)<br>द्विमुखसर्पः । यथा, --<br>"महाविषः कालसर्पो<br>राजाहिर्द्बिमुखोरगः ।"<br>इति जटाधरः ॥ |

(महाविषविशिष्टे, त्रि । यथा, सुश्रुते कल्प-
स्थाने ८ अध्याये ।
"त्रिविधा वृश्चिकाः मन्दमध्यमहाविषाः ।"
(महद् विषम् । महाविषे, क्ली । यथा, सुश्रुते
कल्पस्थाने २ अध्याये ।
"महाविषेण हृदये ग्रन्थिशूलोद्गमौ भृशम् ॥")

**महाविषुवं**, क्ली, (विषु साम्यमस्त्यत्रेति । विषु +
"वप्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम् ।"
५ । २ । १०९ । इत्यस्य वार्त्तिकात् वप्रत्ययः ।
महच्च तत् विषुवञ्चेति । अस्मिन् समये दिवा-
रात्र्योः समत्वात्तथात्वम् ।) मेषसंक्रान्तिः ।
यथा, --
"महाविषुवमाख्यातं कृतिभिश्चैत्रचिह्नितम् ॥"
इति शब्दरत्नावली ॥
तस्मिन् मसूरनिम्बपत्रद्वयभक्षणम् ।
यथा, कृत्य-
चिन्तामणौ ।
"मसूरं निम्बपत्राभ्यां योऽत्ति मेषगते रवौ ।
अपि रोषान्वितस्तस्य तक्षकः किं करिष्यति ॥"
तत्र शक्त्वादिदानं यथा, --
"मेषादौ शक्तवो देया वारिपूर्णा च गर्गरी ॥"
वारिपूर्णघटदानमन्त्रादि यथा, --
"एष धर्म्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः ।

**महावीचिः**, पुं, (न विद्यते वीचिः सुखं यत्र ।
महानवीचिरत्र ।) नरकविशेषः । यथा,
मनुः ।
"नरकं कालसूत्रञ्च महानरकमेव च ।
सञ्जीवनं महावीचिं तपनं संप्रतापनम् ॥"
यातीति पूर्ब्बवचनस्थमनुवर्त्तते ।
"महावीचिर्यत्र महाकल्लोलेन तु नीयते ॥"
इति प्रायश्चित्तविवेकः ॥

**महावीज्यं**, क्ली, (बीजाय साधु इति यत् । महत्
बीज्यम् ।) विटपम् । तत्तु मुष्कवङ्क्षणयोरन्त-
रम् । इति हेमचन्द्रः ॥

**महावीरः**, पुं, (वीन् पक्षिण ईरयतीति । ईर +
कः । ततो महांश्चासौ वीरश्चेति ।) गरुडः ।
वीरयतीति । वीर + कः । महान् वीर इति
कर्म्मधारयः । सूरः । सिंहः । मखानलः ।
(स च मनुपुत्त्रविशेषः । यथा, श्रीभागवते । ५ ।
१२५ ।
"अग्नीध्रेध्मजिह्वयज्ञबाहुमहावीरहिरण्यरेतो-
घृतपृष्ठसवनमेधातिथिवीतिहोत्रकवय इति ॥")
वज्रः । श्वेततुरङ्गः । सञ्चानपक्षी । इति
मेदिनी । रे, २८९ ॥ अन्तिमजिनः । (अयमेव
सिद्धार्थस्य त्रिशलागर्भजातः पुत्त्रः । तद्विवरणं
यथा, अरिष्टनेमिपुराणान्तर्गतजैनहरिवंशे ।
"सर्व्वार्थश्रीमतीजन्मा तस्मिन् सर्व्वार्थदर्शनः ।
सिद्धार्थोऽभवदर्काभो भूपः सिद्धार्थपौरुषः ॥
यत्र पाति धरित्रीयमभूदेकत्रदोषिणी ।
धर्म्मार्थिन्योऽपि यत्त्यक्तपरलोकभयाः प्रजाः ॥
कस्तस्य तान् गुणानुद्यान्नरस्तुलयितुं क्षमः ।
वर्द्धमानगुरुत्वं यैः प्रापितः स नराधिपः ॥
उच्चैः कुलाद्रिसम्भूता सहजस्नेहवाहिनी ।
महिषी श्रीसमुद्रस्य तस्यासीत् प्रियकारिणी ॥
चेतश्चेटकराजस्य यास्ताः सप्तशरीरिजाः ।
अतिस्नेहाकुलञ्चक्रुस्तास्वाद्या प्रियकारिणी ॥
कस्तां योजयितुं शक्तस्त्रिशलां गुणवर्णनैः ।
या स्वपुण्यैर्महावीरप्रसवाय नियोजिता ॥
सर्व्वतोऽथ नमन्तीषु सर्व्वासु सुरकोटिषु ।
प्रभावान्निपन्तीषु नभसो वसुवृष्टिषु ॥
वीरेऽवतरति त्रातुं धरित्रीमसुधारिणः ।
समाकर्ण्य सुरास्तूर्णं घूर्णितार्णवराविणः ॥
सप्तानीकमहाभेदाः सस्त्रीकाः कृतभूषणाः ।
सेन्द्राश्चतुर्णिकायास्ते प्रापुः कुण्डपुरं पुरम् ॥
त्रिःपरीत्य पुरं देवाः पुरन्दरपुरःसराः ।
जिनमिन्दुमुखं देवं तद्गुरू च ववन्दिरे ॥
मातुः शिशुं विकृत्यान्यं सुप्तायाः सुरमायया ।
इन्द्राणी प्रणता नीत्वा जिनेन्द्रं हरये ददौ ॥
गृहीत्वा करपद्माभ्यां तमभ्यर्च्य चिरं हरिः ।
चक्रे नेत्रसहस्रोरुपुण्डरीकवनार्च्चितम् ॥
ततश्चन्द्रावदाताङ्गमिन्द्रस्तुङ्गमतङ्गजम् ।
शृङ्गौघमिव हेमाद्रेर्मुक्ताधो मदनिर्झरम् ॥
गण्डस्थलमदामोदभ्रमद्भ्रमरमण्डलम् ।
तमिवाधित्यकावस्थतमालवनमण्डितम् ॥
कर्ण्णान्तरततासक्तरक्तचामरसंहतिम् ।
तं यथाधित्यकाधीनरक्ताशोकमहावनम् ॥
सुवर्णरक्षया चार्व्या परिवेष्टितविग्रहम् ।
तमेव च यथोपात्तक्वणत्कनकमेखलम् ॥
अनेकरदसंवृत्तनृत्यसङ्गीतपोषितम् ।
तमिवोत्तुङ्गशृङ्गाग्रनृत्यद्गायत्सुराङ्गनम् ॥
सुवृत्तदीर्घसञ्चारिकररुद्धदिगन्तरम् ।
तमिवात्यायतिस्थूलस्फुरद्भोगभुजङ्गमम् ॥
ऐशानधारितस्फीतधवलातपवारणम् ।
तमिवोर्द्धस्थिताभ्यर्ण्णसम्पूर्णशशिमण्डलम् ॥
चामरेन्द्रभुजोत्क्षिप्तचलच्चामरहारिणम् ।
तं यथा चमरीक्षिप्तबालव्यजनवीजितम् ॥
ऐरावतं समारोप्य जिनेन्द्रं तस्य मण्डनम् ।
देवैः सह गतः प्राप मन्दरं स पुरन्दरः ॥
तं पाण्डुकवने रम्ये मन्दरस्य जिनं हरेः ।
पाण्डुकायां प्रसिद्धायां शिलायां सिंहविष्टरे ॥
संस्थाप्य विबुधानीतक्षीरसागरवारिभिः ।
शातकुम्भमयैः कुम्भैरभिषिच्य समं सुरैः ॥
वस्त्रालङ्कारमालाद्यैरलङ्कृत्य कृतस्तुतिः ।
आनीयमातुरुत्सङ्गे जिनं कृत्वा कृतोचितः ॥
सिद्धार्थप्रियकारिण्योः सममानन्ददायकम् ।
वर्द्धमानाख्यया स्तुत्वा स देवो वासवोऽगमत् ॥
मासान् पञ्चदशाजन्मद्युम्नधारा दिने दिने ।
याः पूर्ब्बमापतंस्ताभिस्तर्पितोऽर्थी जनोऽखिलः ॥
वर्द्धमानः सुरैः सेव्यो ववृधे स यथा यथा ।

अस्य प्रदानात् सफला मम
सन्तु मनोरथाः ॥
वैशाखे यो घटं पूर्णं सभोज्यं वै
द्विजन्मने ।
ददाति सुरराजेन्द्र ! स याति
परमां गतिम् ॥”
महार्णवे ।
“यो ददाति हि मेषादौ
शक्तूनम्बुघटान्वितान् ।
पितॄनुद्दिश्य विप्रेभ्यः सर्व्वपापैः
प्रमुच्यते ॥”
तत्र छत्रपादुकादानं यथा,
“विप्रेभ्यः पादुकाच्छत्रं पितृभ्यो
विषुवे शुभम् ।”
पितृभ्यः पितॄनुद्दिश्येत्यर्थः ।
इति तिथ्यादि-
तत्त्वम् ॥

**महाविषुवचक्रं**, क्ली, (महाविषुवस्य चक्रम् ।)

नक्षत्रघटितनराकारचक्रम् ।
यथा,
“मूर्द्ध्नि सप्त मुखे त्रीणि हृदये
पञ्च विन्यसेत् ।
त्रितयं हस्तपादेषु
महाविषुवभक्रमात् ॥
मस्तके भूपतेः सौख्यं वदने
पटुता स्वभे ।
हृदये च
धनाध्यक्षोऽर्थप्राप्तिर्दक्षिणे करे ॥
वामे करे महद्दुःखं सुखं पादे च
दक्षिणे ।
भ्रमणं वामपादे च कथितं
विषुवत्फलम् ॥”
इति ज्योतिषतत्त्वम् ॥

**महाविष्णुः**, पुं, (महांश्चासौविष्णुः सर्व्वव्यापकश्चेति ।)

महाविराट् । यथा । ‘यस्या जले
कोटिकोटि-
ब्रह्माण्डानि
महाविष्णुरोमकूपगतानि तस्या

तीर्थेनाच्युतकल्पोच्चैः पुष्पोत्तरविमानतः ॥
सा तं षोडशसुस्वप्नदर्शनोत्सवपूर्व्वकम् ।
दध्रे गर्भेश्वरं गर्भे श्रीवीरं प्रियकारिणी ॥
पञ्चसप्ततिवर्षाष्टमासमासार्द्धशेषकः ।
चतुर्थस्तु तदा कालो दुःखमः सुखमोत्तरः ॥
आषाढशुक्लषष्ट्यान्तुगर्भावतरणेऽर्हतः ।
उत्तराफाल्गुनीनीडमुञ्ज्राजद्विजश्रितः ॥
दिक्कुमारीकृताभिष्यां द्योतिमूर्त्तिर्घनस्तनीम् ।
प्रच्छन्नो भासयद्गर्भस्तां रविः प्रावृषं यथा ॥
नवमासेव्वतीतेषु स जिनोऽष्टदिनेषु च ।
उत्तराफाल्गुनीष्विन्दौ वर्त्तमानेऽजनि
प्रभुः ॥
ततोऽन्त्यजिनमाहात्म्याल्लुठत्पीठकिरीटकाः ।
प्रणेमुरवधिज्ञाततद्वृत्तान्ताः सुरेश्वराः ॥
शङ्खभेरीहरिध्वानघण्टानिर्घोषघोषणम् ।

पितृबन्धुत्रिलोकानामनुरागस्तथातथा ॥
सुरासुरनराधीशमौलिमालार्च्चितक्रमः ।
त्रिंशद्वर्षप्रमाणोऽभूद्वीरो भोगैः परिष्कृतः ॥
शुद्धवृत्तं न भोगेषु चित्तं तस्य चिरं स्थिरम् ।
कुटिलेषु यथा सिंहनखरन्ध्रेषु मौक्तिकम् ॥
शान्तचित्तं कदाचित्तं स्वयं बुद्धमबोधयत् ।
नत्वा सारस्वतादित्यमुख्यालौकान्तिकाः
सुराः ॥
सौधर्म्माद्यैः सुरैरेत्य कृतोऽभिषवपूजनः ।
आरुह्य शिविकां दिव्यामुह्यमानां सुरेश्वरैः ॥
उत्तराफाल्गुनीष्वेव वर्त्तमाने निशाकरे ।
कृष्णस्य मार्गशीर्षस्य दशम्यामगमद्वनम् ॥
अपनीय तनोः सर्व्वं वस्त्रमाल्यादिभूषणम् ।
पञ्चमुष्टिभिरुद्धृत्य मूर्द्धजानभवन् मुनिः ॥
केशकुन्तलसङ्घातं जिनस्य भ्रमरासितम् ।

| | | |
|---|---|---|
| विरजायाः परिखाभूताया उपरि महावैकुण्ठ-लोकः । तस्योर्द्धभागे गोलोकः । तस्य नाथः कृष्णो देवलीलः स परिवारेण वर्त्तते । इति भागवतामृतकणिका । स च श्रीकृष्णस्य कला-विशेषः । यथा, -- "विष्णुर्महान् स इह यस्य कलाविशेषो गोविन्दमादिपुरुषं तमहं भजामि ॥" इति भागवतामृतपूर्ब्बखण्डः ॥ | | |

प्रतिगृह्य सुराधीशो निदधौ दुग्धवारिधौ ॥
इन्द्रनीलचयेनेव क्षिप्तेनेन्द्रेण चात्यभात् ।
जिनेन्द्रकेशपुञ्जेन रञ्जितः क्षीरसागरः ॥
जिननिष्क्रमणं दृष्ट्वा तुष्टाः सर्व्वे नरामराः
।
कृत्वा तृतीयकल्याणपूजाञ्जग्मुर्य्यथायथम् ॥
मनःपर्य्ययपर्य्यन्तचतुर्ज्ञानमहेक्षणः ।
तपो द्वादशवर्षाणि चकार द्वादशात्मकम् ॥
विहरन्नथ नाथोऽसौ गुणग्रामपरिग्रहः ।
ऋजुकूलापगाकूले जृम्भिकग्राममीयिवान्
॥
तत्रातापनयोगस्थः शालाभ्याससिलातले
।
वैशाखशुक्लपक्षस्य दशम्यां षष्ठमाश्रितः ॥
उत्तराफाल्गुनीं प्राप्ते शुक्लध्यानी निशाकरे
।
निहत्य घातिसङ्घातं केबलज्ञानमाप्तवान् ॥
केबलस्य प्रभावेण सहसा चलितासनाः ।
आगत्य महिमां चक्रुस्तस्य सर्व्वे सुरासुराः
॥
षट्षष्टिदिवसान् भूयो मौनेन विहरन् विभुः
।
आजगाम जगत्ख्यातं जिनो राजगृहं पुरम्
॥
आरुरोह गिरिं तत्र विपुलं विपुलश्रियम् ।
प्रबोधार्थं स लोकानां भानुमानुदयं यथा ॥
ततः प्रबुद्धवृत्तान्तैरापतद्भिरितस्ततः ।
जगत्सुरासुरैर्व्यापि जिनेन्द्रस्य गुणैरिव ॥
सौधर्म्माद्यैस्तदा देवैः परीतोऽभात् स
भूधरः ।
नाभेयाधिष्ठितः पूर्ब्बं यथाष्टापदपर्व्वतः ॥
चतुराशामुखद्वारस्थितद्वादशगोपुरम्।
कृतं रत्नमयं देवैः प्राकारबलयत्रयम् ॥
जाते योजनविस्तीर्णे शरणे समवादिके ।
विभागा द्वादशाभासन्नभःस्फाटिकभित्तयः
॥
प्रातिहार्य्यैर्युतोऽष्टाभिश्चतुस्त्रिंशन्महाद्भुतैः
।
तत्र देवैर्वृतोऽभासीज्जिनश्चन्द्रइव ग्रहैः ॥

ज्योतिर्देवस्त्रियो तच्च रेजुरुज्ज्वलमूर्त्तयः
।
तास्तारा इव संक्रान्ताः समवस्थानसागरे
॥
कान्ताव्यन्तरदेवानां ततस्तत्र विरेजिरे ।
करकुट्मलहारिण्यः साक्षादिव वनश्रियः
॥
ततो नागकुमारादिदेव्यो नागफणोज्ज्वलाः
।
नागलोकसमायाता नागवल्य इवा बभुः ॥
ततोऽप्यग्निकुमाराद्याः देवाः
पातालवासिनः ।
ज्वलितोज्ज्वलवेषास्ते दशभेदा बभासिरे
॥
ततः किन्नरगन्धर्व्वयक्षकिंपुरुषादयः ।
षोडशार्द्धविकल्पास्ते व्यन्तराश्च
चकासिरे ॥
सप्रकीर्णकनक्षत्रसूर्य्याचन्द्रमसोर्ग्रहाः।
पञ्चभेदास्तदानल्पवपुषो ज्योतिषो बभुः
॥
मौलिकुण्डलकेयूरप्रालम्बकटिसूत्रिणः।
हारिणः कल्पवृक्षाभास्ततोऽभान् कल्प-
वासिनः ॥
सपुत्त्रानमितानेकविद्याधरपुरःसराः।
न्यषीदन्मानुषा नानाभाषावेशरुचस्ततः ॥
ततो हि नकुलेभेन्द्रहर्य्यश्वमहिषादयः ।
जिनानुभावसम्भूतविश्वाद्याःस्वामिनो
बभुः ॥
इति द्वादशभेदेषु परीतिं विनुतिं नतिम् ।
गणेषु प्रथमं कृत्वा स्थितेषु परितो जिनम्
॥
प्रत्यक्षीकृतविश्वार्थं कृतदोषत्रयक्षयम् ।
जिनेन्द्रं गौतमोऽपृच्छत्तीर्थार्थं
पापनाशनम् ॥
स दिव्यध्वनिना विश्वसंशयछेदिना जिनः
।
दुन्दुभिध्वनिधीरेण योजनान्तरयायिना ॥
श्रावणस्यासिते पक्षे नक्षत्रेऽभिजिते प्रभुः
॥

कल्पञ्च पुण्डरीकञ्च सुमहापुण्डरीककम् ॥
तथा निषद्यकां प्रायः प्रायश्चित्तोपवर्ण्णनम्
।
जगत्त्रयगुरुः प्राह प्रतिपाद्यं हितोद्यतः ॥
मत्पादे केबलां तस्य स्वरूपं विषयं फलम्
।
अपरोक्षपरोक्षस्य ज्ञानस्योवाच संख्यया ॥
मार्गणास्थानभेदैश्च गुणस्थानविकल्पनैः ।
जीवस्थानप्रभेदैश्च जीवद्रव्यमुपादिशत् ॥
सत्संख्याद्यानुयोगैश्च सन्नामाद्यैः
किमादिभिः
द्रव्यं स्वलक्षणैर्भिन्नं पुद्गलादित्रिलक्षणम् ॥
द्विविधं कर्म्मबन्धञ्च सहेतुं सुखदुःखदम् ।
मोक्षं मोक्षस्य हेतञ्च फलं चाष्टगुणात्मकम्
॥
बन्धमोक्षफलं यत्र भुज्यते तत्त्रिधाकृतम् ।
अन्तस्थितं जगौ लोकमलोकञ्च
बहिःस्थितम् ॥
अथ सप्तर्षिसम्पन्नं श्रुतार्थं जिनभाषितम् ।
द्वादशाङ्गश्रुतं स्कन्धं सोपाङ्गं गौतमो
व्यधात् ॥
त्रैलोक्यं संसदि स्पृष्टं जिनार्कवचनांशुभिः
।
मुक्तमोहमहानिद्रं सुप्तोत्थितमिवाबभौ ॥
जिनभाषाधरस्यन्दमन्तरेण विजृम्भिता ।
तिर्य्यग्देवमनुष्याणां दृष्टिमोहमनीनशत् ॥
ततो जिनोक्ततत्त्वार्थमार्गश्रद्धा च लक्षणम् ।
शङ्काकाङ्क्षानिदानादिकलङ्कविगमोज्ज्वलम्
॥
सम्यग्दर्शनसद्रत्नं ज्ञानालङ्कारनायकम् ।
स्वकर्ण्हृदयेष्वेकं पिनद्धमखिलाङ्गिभिः ॥
कायेन्द्रियगुणस्थानजीवस्थानकुलायुषाम्
।
भेदाद्यो निर्व्विकल्पांश्च निरूप्यागमचक्षुषा
॥
क्रियासु स्थानपूर्ब्बासु वधादिपरिवर्ज्जनम्
।
षण्णां जीवनिकायानामहिंसाद्यं महव्रतम् ॥
चक्षुर्गोचरजीवौघान् परिहृत्य यतेर्यतः ।

इन्द्राग्निवायुभूत्याख्याः कौण्डिन्याख्याश्च पण्डिताः ।
इन्द्रनोदनयायाताः समवस्थानमर्हतः ॥
प्रत्येकं सहिताः सर्व्वे शिष्याणां पञ्चभिः शतैः ।
त्यक्ताम्बरादिसम्बन्धाः संयमं प्रतिपेदिरे ॥
सुता चेटकराजस्य कुमारी चन्दना तदा ।
धौतैकाम्बरसंवीतायातार्याणां पुरःसरी ॥
श्रेणिकोऽपि च संप्राप्तः सेनया चतुरङ्गया ।
सिंहासनोपविष्टं तं प्रणनाम जिनेश्वरम् ॥
छत्रचामरभृङ्गारैः कलसध्वजदर्पणैः ।
व्यजनैः सुप्रतीकैश्च प्रसिद्धैरष्टमङ्गलैः ॥
स्रजाचक्रदुकूलाब्जगजसिंहवृषध्वजैः ।
गरुडध्वजसंयुक्तैरष्टभेदैर्म्महाध्वजैः ॥
मानस्तम्भैस्तथास्तूपैश्चतुर्भिश्च महावनैः ।
वाप्यम्भोरुहखण्डैश्च वल्लीवनलतागृहैः ॥
तैस्तैर्देवैः कृतैः सर्व्वैरन्यैश्चातिशयैस्तथा ।
यथा स्थानस्थितैर्ज्जैनी समवस्थानभूरभूत् ॥
अथेन्दोरिव शुक्राद्या निषण्णा गुर्व्वधिष्ठिताः ।
साधवोऽभाञ्जिनस्यान्ते जातरूपाच्छविग्रहाः ॥
ततः कल्पनिवासिन्यो देव्यः कल्पलताभुजः ।
मेरोरिव जिनस्यान्ते ता बभुर्भोगभूमयः ॥
ततोऽलङ्कृतनारीभिरार्य्यिकाततिराबभौ ।
स्फुरद्विद्युद्भिराश्लिष्टा शारदीव घनावली ॥

प्रतिपद्यद्धि पूर्बाद्धि शासनार्थमुदाहरत् ॥
आचाराङ्गस्य तत्त्वार्थं तथा सूत्रकृतस्य च ।
जगाद भगवान् वीरः संस्थानसमवाययोः ॥
व्याख्या प्रज्ञप्तिहृदयं ज्ञातृधर्म्मकथास्थितम् ।
श्रावकाध्यनस्यार्थमन्तकृद्दशगोचरम् ॥
अनुत्तरदशस्यार्थं प्रश्नव्याकरणस्य च ।
तथा विपाकसूत्रस्य पवित्रार्थं ततः परम् ॥
त्रिषष्टिः त्रिशती यत्र दृष्टीनामभिधीयते ।
दृष्टिवादस्य तस्यार्थं पञ्चभेदस्य सर्व्वदृक् ॥
जगाद जगतां नाथः प्रथमं परिकर्म्मणः ।
सूत्रस्याद्यानुयोगस्य तथा पूर्बगतस्य च ॥
उत्पादपूर्ब्बपूर्ब्बस्य परमार्थं ततः परम् ।
अग्रायणीयपूर्ब्बार्थमग्रणीरभणद्विदाम् ॥
वीर्य्यप्रवादपूर्ब्बार्थमस्तिनास्तिप्रवादजम् ।
ज्ञानसत्यप्रवादार्थमात्मकर्म्मप्रवादयोः ॥
प्रत्याख्यानस्य विद्यानुवादकल्याणपूर्ब्बयोः ।
प्राणावायस्य पूर्ब्बस्य तत्त्वार्थं तदनन्तरम् ॥
क्रियाविशालपूर्ब्बस्य विशालार्थमशेषवित् ।
सल्लोकबिन्दुसारार्थं चूलिकार्थं सवस्तुकम् ॥
अङ्गप्रविष्टतत्त्वार्थं प्रतिपाद्य जिनेश्वरः ।
अङ्गवाह्यमवोचत्तत्प्रतिपाद्यार्थरूपतः ॥
सामायिकं यथार्थाख्यं स चतुर्विंशतिस्तवम् ।
वन्दनाञ्च ततः पूतां प्रतिक्रमणमेव च ॥
वैनयिकं विनेयेभ्यः कृतिकर्म्म ततोऽवदत् ।
दशवैकालिकां पृथ्वीमुत्तराध्ययनं तथा ॥
तं कल्पव्यवहारञ्च कल्पाकल्पं * * *

इर्य्यासमितिराद्या सा व्रतशुद्धिकरी मता ॥
त्यक्त्वा कार्कश्यपारुष्यं यतेर्यत्नवतः सदा ।
भाषणं धर्म्मकार्य्येषु भाषासमितिरिष्यते ॥
पिण्डशुद्धिविधानेन शरीरस्थितये तु यत् ।
आहारग्रहणं सास्यादेषणा समितिर्यतेः ॥
निक्षेपणं यदा दानमीक्षित्वा योग्यवस्तुनः ।
समितिः सा तु विज्ञेया निक्षेपादाननामिका ॥
शरीरान्तर्म्मलत्यागं प्रगतासु सुभूमिषु ।
यत्तत्समितिरेषा तु प्रतिष्ठायनिका मता ॥
एवं समितयः पञ्च गोप्यास्तिस्रस्तु गुप्तयः ।
वाङ्मनःकाययोगानां शुद्धरूपां प्रवृत्तयः ॥
चित्तेन्द्रियनिरोधश्च षडावश्यकसत्क्रियाः ।
शौचस्नानैकभक्तञ्च स्थितभुक्तिरचेलता ॥
भूमिशय्याव्रतं दन्तमलमार्ज्जनवर्ज्जनम् ।
तपः संयमचारित्रं परीषहजयः परः ॥
अनुप्रेक्षाश्च धर्म्मश्च क्षमादिदशलक्षणः ।
ज्ञानदर्शनचारित्रतपोविनयसेवनम् ॥
इति श्रवणधर्म्मोऽयं कर्म्मनिर्म्मोक्षहेतुकः ।
सुरासुरनराध्यक्षं जिनोक्तस्तं तदा नराः ॥
संसारभीरवः शुद्धजातिरूपेकुलादयः ।
सर्व्वसङ्गविनिर्मुक्ताः शतशः प्रतिपेदिरे ॥
सम्यग्दर्शनसंशुद्धाः शुद्धैकवसनावृताः ।
सहस्रशो दधुः शुद्धा नार्य्यस्तत्रार्य्यिकाव्रतम् ॥
पञ्चधाणुव्रतं केचित् त्रिविधञ्च गुणव्रतम् ।

शिष्याव्रतं चतुर्भेदं तत्र स्त्रीपुरुषा दधुः ॥
तिर्य्यञ्चोऽपि यथाशक्ति नियमेष्ववतस्थिरे ।
देवाः सद्दर्शनज्ञानजिनपूजासु रेमिरे ॥
श्रेणिकेन तु यत् पूर्ब्बं बह्वारम्भपरग्रहात् ।
परस्थितिक्रमारब्धं नारकायुस्तमस्तमे ॥
तत्तु क्षायिकसम्पक्त्वात् स्वस्थितिं प्रथमक्षितौ ।
प्रापद् वर्षसहस्राणामशीतिं चतुरुत्तराम् ॥
त्रयस्त्रिंशत् समुद्राः क्व क्व चेयमपरास्थितिः ।
अहो क्षायिकसम्पक्त्वप्रभावोऽयमनुत्तरः॥
अक्रूरो वारिषेणो यो यो मयः स तथापरे ।
कुमारा मातरश्चैषां पराश्चान्तःपुरस्त्रियः ॥
सम्पक्त्वं शीलसद्दानं प्रौषधं जिनपूजनम् ।
प्रतिपद्य विनेमुस्तं जिनेन्द्रं त्रिजगद्गुरुम् ॥
ततः प्रणम्य देवेन्द्रा जिनेन्द्रं स्तोत्रपूर्ब्बकम् ।
यथायथं ययुर्युक्ता निजवर्गैर्निजास्पदम् ॥
श्रेणिकोऽपि गुणश्रेणीमुच्चकैरभिरूढवान् ।
अभिष्टुत्य जिनं नत्वा प्रविष्टसुष्टधीपुरम् ॥
निःसरद्भिर्व्विशद्भिश्च सभा जैनी जनोर्म्मिभिः ।
चुक्षोभ क्षुभितैर्वेला नदीपूरैरिवाम्बुधिः ॥
आकीर्णमेव तैर्न्नित्यं सभामण्डलमर्ह्तः ।
हीयते वा कदा स्फीतिं भानुभिर्भानुमण्डलम् ॥
नोदयास्तमितं तत्र ज्ञायते ब्रध्नमण्डलम् ।
धर्म्मचक्रप्रभाचक्रप्रभामण्डलरोचिषाम्॥
तत्र तीर्थकरः कुर्व्वन् प्रत्यहं धर्म्मदेशनम् ।
सेवितः श्रेणिकेनास्य न हि तृप्तिस्त्रिवर्गजा ॥
गौतमञ्च समासाद्य तदा तदुपदेशतः ।
सर्व्वानुयोगमार्गेषु प्रवीणः स नृपोऽभवत् ॥
ततो जिनगृहैस्तुङ्गैराज्ञा राजगृहं पुरम् ।
कृतमन्तर्बहिव्याप्तमजस्रं महिमोत्सवैः ॥
कृतः सामन्तसंघातैर्महामन्त्रिपुरोहितैः ।
प्रजाभिर्जिनगेहाढ्यो मगधो विषयोऽखिलः ॥
पुरेषु ग्रामघोषेषु पर्व्वताग्रे ह्यदृश्यत ।
नदीतटवनान्तेषु तदा गृहजिनावली ॥
तिष्ठन्नेव महोदये विघटयन्मोहान्धकारोन्नतिं

(वितथस्य पुत्त्रभेदः । यथा, भागवते । ९ । २१ । १ ।
"वितथस्य सुतान्मन्योर्बृहत् क्षत्त्रो जयस्ततः ।
महावीर्य्यो नरो गर्गः संकृतिस्तु नरात्मजः ॥")
अतिशयबलयुक्ते, त्रि ॥ (यथा, महामारते । ५ । १७६ । ४६ ।
"ततः किल महावीर्य्यो भीष्मः शान्तनवो नृपान् ।
अधिक्षिप्य महातेजास्त्रिस्रः कन्या जहार ताः ॥"
विराजः पुत्त्रः । यथा, विष्णुपुराणे । २ । १ । ३९ ।
"नरो गयस्य तनयस्तत्पुत्त्रोऽभूद्विराट् ततः ।
तस्य पुत्त्रो महावीर्य्यो धीमांस्तस्मादजायत ॥")

**महावीर्य्या**, स्त्री, (महत् वीर्य्यमस्याः टाप् ।) संज्ञा । सा च सूर्य्यपत्नी । इति त्रिकाण्डशेषः ॥ वन-कार्पासी । इति शब्दरत्नावली ॥ महाशता-वरी । इति राजनिर्घण्टः ॥

**महावृहती**, स्त्री, (महती वृहती ।) वार्त्ताकी । इति त्रिकाण्डशेषः ॥

**महावृक्षः**, पुं, (महान् वृक्षः ।) स्नुहीवृक्षः । इति हलायुधः ॥ (यथास्य पर्य्यायः ।
"वज्रवृक्षो महावृक्षः स्नुही स्नुच्च सुधा गुडा ॥"
यथा, सुश्रुते सूत्रस्थाने ४४ अध्याये ।
"महावृक्षपयःपीतैर्यवागूस्तण्डुलैः कृता ।
पीता विरोचयत्याशु गुडेनोत्कारिका कृता ॥")

माणमहाव्रतानुरूपा धेनवो दातव्याः ।' इति प्रायश्चित्तविवेके भवदेवभट्टमतम् ॥ शरत्-कालीनदुर्गापूजनम् । यथा, --
"महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितम् ।
कर्त्तव्यं मुरराजेन्द्र ! देवीभक्तिसमन्वितैः ॥"
इति तिथ्यादितत्त्वधृतदेवीपुराणवचनम् ॥ अरुणोदयकालीनमाघस्नानम् । यथा, --
"वासुदेवं हरिं कृष्णं श्रीधरञ्च स्मरेत्ततः ॥
दिवाकर ! जगन्नाथ ! प्रभाकर ! नमोऽस्तु ते ।
परिपूर्णं कुरुष्वेद माघस्नानं महाव्रतम् ॥"
इति मलमासतत्त्वधृतपद्मपुराणवचनम्॥ (महाव्रतधारिणि, त्रि । यथा, महाभारते । १३ । ५४ । २१ ।
"ततोऽन्यस्मिन् वनोद्देशे पुनरेव ददर्श तम् ।
कौश्यां वृष्यां समासीनं जपमानं महा-व्रतम् ॥")

**महाव्रती**, [न्] पुं, (महाव्रतं योगनियमानुष्ठाना-दिकमस्यास्तीति । व्रत + इनिः ।) शिवः । इति हेमचन्द्रः । २ । १११ ॥ उरस्कटः । इति त्रिकाण्ड-शेषः ॥ महाव्रतयुक्ते, त्रि ॥ (यथा, कथासरित्-सागरे । ३७ । ५९ ।
"एतच्छ्रुत्वापि सावज्ञास्ते महव्रतिनस्तदा ।
ऊचुर्निश्चयदत्तं ते चत्वारः सहयायिनः ॥")

**महाशक्तिः**, पुं, (महत्यः शक्तयः मातृगणादयो महद्वा सामर्थ्यञ्च यस्य ।) कार्त्तिकेयः । इति शब्दमाला ॥ (महती शक्तिः ।) अतिशयपरा-

प्राग्देशप्रजया विधाय मगधादेशं प्रबुद्धप्रजम्
।
तद्धृत्या पृथुदेशमध्यमगमन्मध्यन्दिनश्रीधरं
मिथ्याज्ञानहिमान्तकृज्जिनरविर्बोधप्रभा-
मण्डलः ॥”)
कोकिलः । इति हेमचन्द्रः ॥ धनुर्धरः । इति
शब्दरत्नावली ॥ एकवीरवृक्षः । इति राज-
निर्घण्टः ॥ लक्ष्मणः । यथा, --
“लक्ष्मणञ्च महावीरं पतितं रणभूतले ॥”
अङ्गदादिः । यथा, --
“अङ्गदाद्यैर्महावीरैर्वेष्टितं रुद्ररूपिणम् ॥”
इति तन्त्रसारे हनूमत्कल्पः ॥
हनूमान् स्वयमपि महावीरत्वेन प्रसिद्धः ॥

**महावीरा**, स्त्री, (महावीर + टाप् ।) क्षीर-
काकोली । इति रत्नमाला ॥

**महावीर्य्यः**, पुं, (महत् विश्वसृष्टये विपुलं वीर्य्य-
मस्य ।) ब्रह्मा । इति शब्दरत्नावली ॥ (महत्
वीर्य्यं तपोबलमस्य ।) बुद्धभेदः । इति
त्रिकाण्ड-
शेयः ॥ वाराहीकन्दः । इति राजनिर्घण्टः ॥

बृहद्वृक्षश्च ॥

**महावेगः**, पुं, (महान् अमोघो दुर्व्वारो वा वेगो
यस्य ।) शिवः । इति महाभारते तस्य
सहस्रनाम-
स्तोत्रम् ॥ (महान् वेगः ।) अतिजवः ।
(महान्
वेगोऽस्य ।) तद्युक्ते, त्रि ॥ (यथा,
महाभारते ।
१ । १५५ । १२ ।
“विकर्षन्तौ महावेगौ गर्ज्जमानौ
परस्परम् ।
पश्य त्वं युधि विक्रान्तावेतौ च
नरराक्षसौ ॥”)

**महाव्याधिः**, पुं, (महांश्चासौ व्याधिश्चेति ।)
महारोगः । स तु कुष्ठादिः । यथा, --
“सर्व्वव्याधिविनिर्मुक्तो
महाव्याधिर्विशेषतः ।
पठनात् संप्रणश्येत्तु जीवन्मुक्तो भवेन्नरः
॥”
इति ब्रह्मयामले गायत्रीकवचम् ॥

**महाव्याहृतिः**, स्त्री, (महती चासौ व्याहृतिश्चेति
।)
प्रणवस्वाहायुक्तव्याहृतित्रयम् । यथा ।
ॐ भूः
स्वाहा ॐ भुवः स्वाहा ॐ स्वः स्वाहा ।
इति भवदेवभट्टः ॥ (यथा, मनौ । २ ।
८१ ।
“ओङ्कारपूर्ब्बिकास्तिस्रः
महाव्याहृतयोऽव्ययाः ।
त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखम्
॥”)

**महाव्रणं**, क्ली, (महच्च तद्व्रणञ्चेति ।) दुष्टव्रणम् ।
नाली घा इति भाषा । यथा, --
“कुर्य्यात् सप्तदशावृत्तं तथाष्टादशकं
प्रिये ! ।
महाव्रणविमोक्षाय विंशावृतं पठेन्नरः ॥”
इति
तिथ्यादितत्त्वधृतवाराहीतन्त्रवचनम्॥

**महाव्रतं**, क्ली, (महच्च तद्व्रतञ्चेति ।) द्वादश-
क्रमः । महतीशक्तिरस्य तद्युक्ते, त्रि ॥

**महाशङ्खः**, पुं, (महान् शङ्ख इव बृहच्छुभ्रत्वात् ।)
मानुषास्थि । संख्याविशेषः । स च दश-
निखर्व्वः । ललाटम् । इति मेदिनी । खे,
१६ ॥
(महान् महार्हः शङ्खः ।) निधिविशेषः ।
इति
विश्वः ॥ कर्णनेत्रयोर्म्मध्यगतास्थि ।
यथा, --
“कर्णनेत्रान्तरालास्थि महाशङ्खः
प्रकीर्त्तितः ।”
तस्य मालया जपविधिर्यथा, --
“महाशङ्खमयी माला नीलसारस्वते विधौ
।
नृललाटास्थिखण्डेन रचिता जपमालिका
॥
महाशङ्खमयी माला ताराविद्याजपे प्रिये !
।”
इति तन्त्रसारधृतमुण्डमालातन्त्रम्॥
(महान् शङ्खः ।) वृहच्छङ्खः । यथा, --
“पौण्ड्रं दध्मौ महाशङ्खं भीमकर्म्मा
वृकोदरः ।”
इति श्रीभगवद्गीतायाम् १ अध्यायः ॥
(सर्पभेदः । यथा, भागवते । ५ । २४ ।
३१ ।
“ततोऽधस्तात् पाताले
नागलोकपतयोवासुकि-
प्रसुखाः
शङ्खकुलिकमहाशङ्खश्वेतधनञ्जयधृत-
राष्ट्रशङ्खचूडकम्बलाश्वतरदेवदत्तादयो
महा-
भोगिनो महामर्षा निवसन्ति ।”)

**महाशठः**, पुं, राजधत्तूरः । इति राजनिर्घण्टः ॥
(महांश्चासौ शठश्चेति ।) अतिधूर्त्ते, त्रि ॥

**महाशणपुष्पिका**, स्त्री, (अल्पं पुष्पं इति अल्पार्थे
ङीष् । ततः स्वार्थे कन् स्त्रियां टाप्
पूर्ब्बस्य
ह्रस्वश्च । शणस्येव पुष्पिका यस्याः ।
महती-

तत्पर्य्यायः । वृत्तपर्णी २ श्वेतपुष्पा ३ महा-
सिता ४ महाश्वेतघण्टी ५ महाश्वेता ६ ।
अस्या गुणाः । कषायत्वम् ।
उष्णत्वम् ।
शस्तत्वम् । रसनियामकत्वम् ।
कुतूहलमोहन-
स्तम्भनादिषु प्रोक्तत्वञ्च । इति
राजनिर्घण्टः ॥

**महाशता**, स्त्री, (महत् शतञ्च मूलानि यस्याः ।
टाप् ।) महाशतावरी । इति
राजनिर्घण्टः ॥

**महाशतावरी**, स्त्री, (महती चासौ शतावरी
चेति ।) बृहच्छतावरी । तत्पर्य्यायः । शत-
वीर्य्या २ सहस्रवीर्य्या ३ सुरसा ४ महापुरुष-
दन्तिका ५ वीरा ६ तुङ्गिनी ७ बहुपुत्त्रिका ८
ऊद्‌र्ध्वकण्टी ९ महावीर्य्या १० फणिजिह्वा ११
महाशता १२ सुवीर्य्या १३ । अस्या गुणाः ।
वश्यत्वम् । मधुरत्वम् ।
पित्तनाशित्वम् ।
हिमत्वम् । मेहकफवातघ्नत्वम् ।
तिक्तत्वम् ।
श्रेष्ठत्वम् । रसायनत्वञ्च । इति
राजनिर्घण्टः ॥
तत्पर्य्यायगुणाः ।
"महाशतावरी त्वन्या
शतमूल्यूद्‌र्ध्वकण्टिका ।
सहस्रवीर्य्याहिरुश्च ऋष्यप्रोक्ता
महोदरी ॥
महाशतावरी मेध्या हृद्या वृष्या
रसायनी ।
"रक्तशालिः सकलमः पाण्डुकः
शकुनाहृतः ।
सुगन्धकः कर्द्दमको महाशालिश्च दूषकः
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**महाशिवः**, पुं, (महांश्चासौ शिवकल्याणरूपी च ।)
महादेवः । यथा, --
"रत्नसिंहासनस्थञ्च महाभूषणभूषितम् ।
महाशिवं शिवकरं शिवबीजं शिवाश्रयम्
॥"
इति ब्रह्मवैवर्त्ते गणपतिखण्डे २९
अध्यायः ॥

**महाशीता**, स्त्री, (महत्यधिका शीता शीतवीर्य्या ।)
शतमूली । इति शब्दचन्द्रिका ॥ (महत्
शीतं
शीतगुणोऽस्य ।) अतिशीतवीर्य्ययुक्ते, त्रि
॥

**महाशुक्तिः**, स्त्री, (महती शुक्तिः । मुक्ताकरत्वे-
नास्या महत्वम् ।) मुक्तामाता । सा च
शुक्तिः । इति राजनिर्घण्टः ॥ (महती
स्थला-
शुक्तिः ।) बृहच्छुक्तिश्च ॥

**महाशुक्ला**, स्त्री, (महती चासौ शुक्ला शुक्लवर्णा
च ।) सरस्वती । इति भूरिप्रयोगः ॥
अति-
शुक्लवर्णयुक्ते, त्रि ॥

**महाशुभ्रं**, क्ली, (महान् शुभ्रो वर्णोऽस्य ।) रज-
तम् । इति राजनिर्घण्टः ॥
अतिशुभ्रवर्णयुक्ते,
त्रि ॥

**महाशूद्रः**, पुं, (महान् शूद्रः ।) आभीरः । इति
महाशूद्रीशब्ददर्शनात् ॥

**महाशूद्री**, स्त्री, (महाशूद्रस्य भार्य्या इति ।
"अजाद्यतष्टाप् ।" ४ । १ । ४ । इत्यत्र ।
मुण्डनिका ११ माता १२ स्थविरा १३ लोतनी
१४ भूकदम्बः १५ अलम्बुषा १६ । अस्य गुणाः
।
उष्णत्वम् । तिक्तत्वम् । ईषन्मधुरत्वम् । वायु-
शमनत्वम् । स्वरकृत्त्वम् । रेचनत्वम् । हेम-
कृत्त्वम् । रसायनत्वञ्च । इति राजनिर्घण्टः ॥
तत्पर्य्यायगुणाः ।
"मुण्डी भिक्षुरपि प्रोक्तः श्रावणी च तपोधना ।
श्रवणाह्वा मुण्डितिका तथा श्रवणशीर्षिका ॥
महाश्रावणिकान्या तु सा स्मृता भूकदम्बिका ।
कदम्बपुष्पिका च स्यादव्यथा तु तपस्विनी ॥
मुण्डितिका कटुः पाके वीर्य्योष्णा मधुरा लघुः ।
मेध्या गण्डापचीकृच्छ्रकृमियोन्यर्त्तिपाण्डुनुत् ॥
श्लीपदारुच्यपस्मारप्लीहमेहोगुदार्त्तिहृत् ।
महामुण्डी च मुण्डी च गुणैरुक्ता महर्षिभिः ॥"
इति भावप्रकाशः ॥

**महाश्रीः**, स्त्री, (महती श्रीरिव ।) बुद्धशक्ति-
विशेषः । तत्पर्य्यायः । तारा २ ओङ्कारा ३
स्वाहा ४ श्रीः ५ मनोरमा ६ तारिणी ७
जया ८ अनन्ता ९ शिवा १० लोकेश्वरात्मजा
११
खदूरवासिनी १२ भद्रा १३ वैश्या १४ नील-
सरस्वती १५ शङ्खिनी १६ महातारा १७ वसु-
धारा १८ धनन्ददा १९ त्रिलोचना २० लोचना
२१ । इति त्रिकाण्डशेषः ॥

**महाश्वेता**, स्त्री, (महत्यतिशया श्वेता । महान्
श्वेतो वर्णो यस्या वा ।) सरस्वती । इति
त्रिकाण्डशेषः ॥ कृष्णभूमिकुष्माण्डः ।
तत्पर्य्यायः ।
क्षीरविदारी २ ऋक्षगन्धिका ३ । इत्यमरः ।
२ । ४ । ११० ॥ क्षीरविदारिका ४ क्षीरवल्ली ५
क्षीरकन्दा ६ । इति जटाधरः ॥ क्षीरिका ७ ।
इति शब्दरत्नावली ॥ श्वेतापराजिता । इति
रत्नमाला ॥ (पर्य्यायोऽस्या यथा, --
"गिरिकर्णी महाश्वेता स्थूलपुष्पा सिता
क्वचित् ॥"
इति वैद्यकरत्नमालायाम् ॥)
सिता । तत्पर्य्यायः । मधुजा २ । इति त्रिकाण्ड-

शतवीर्य्या
निहन्त्यर्शोग्रहणीनयनामयान् ॥”
इति भावप्रकाशः ॥

**महाशयः**, त्रि, महान् आशयोऽभिप्रायो मनो
वा यस्य सः । इति भरतः ॥
तत्पर्य्यायः ।
महेच्छः २ । इत्यमरः । ३ । १ । ३ ॥ महानु-
भावः ३ । इति शब्दरत्नावली ॥
उदात्तः ४
महामनाः ५ । इति जटाधरः ॥
उद्भटः ६
उदारः ७ उदीर्णः ८ महात्मा ९ । इति हेम-
चन्द्रः । ३ । १३१ ॥ (यथा,
कथासरित्सागरे ।
७२ । १२८ ।
“दैवात्प्रबुद्धः शुश्राव स वराहो महाशयः ॥”
महान् आशयो जलानामाधारः ।) समुद्रे,
पुं । इति शब्दरत्नावली ॥

**महाशय्या**, स्त्री, (महती चासौ शय्या चेति ।)
राजशय्या । इति हेमचन्द्रः । ३ । ३८० ॥ बृह-
च्छय्या च ॥

**महाशरः**, पुं, (महांश्चासौ शरश्चेति ।) स्थूल
शरः । इति राजनिर्घण्टः ॥

**महाशल्कः**, पुं, (महान् बृहन् शल्को यस्य ।)
चिङ्गटमत्स्यः । इति हारावली ।
१८७ ॥ (यथा,
मनुः । ३ । २७२ ।
“कालशाकं महाशल्काः
खड्गलोहामिषं मधु ।
आनन्त्यायैव कल्पन्ते मुन्यन्नानि च सर्व्वशः ॥”
(महान् शल्कः ।) बृहच्छल्कश्च ।
तद्युक्ते, त्रि ॥

**महाशाकं**, क्ली, (महच्च तत् शाकञ्च ।) बृह-
“महत्पूर्ब्बस्य प्रतिषेधः ।” इति
काशिकोक्त्या
पुंयोगलक्षणा ङीष् ।) आभीरी । इत्यमरः ।
२ । ६ । १३ ॥

**महाशौण्डी**, स्त्री, (महती चासौ शौण्डी च ।)
श्वेतकिणिहीवृक्षः । इति राजनिर्घण्टः ॥

**महाश्मशानं**, क्ली, (महच्च तत् श्मशानञ्च । अत्र
हि जीवानां मरणे समूलकर्म्मनाशतः पुन-
र्जन्ममरणाद्यभावादस्यातथात्वम् ।) काशी ।
इति काशीखण्डम् ॥

**महाश्यामा**, स्त्री, (महती चासौ श्यामा
च ।) श्यामालता । इति रत्नमाला ॥ शिंशपा-
वृक्षः । इति राजनिर्घण्टः ॥ (यथा, सुश्रुते
सूत्रस्थाने ३८ अध्याये ।
“श्यामामहाश्यामातृ-
वद्दन्तीत्यादि ॥” वृक्षपादिवृक्षः ।
तत्पर्य्यायो
यथा, --
“कण्टकाख्या महाश्यामा वृक्षपादीति
वक्ष्यते ॥”
इति गारुडे २०८ अध्याये ॥)

**महाश्रमणः**, पुं, (महान् श्रेष्ठश्चासौ श्रमणो बौद्ध-
भिक्षुश्चेति ।) बुद्धविशेषः । स च
शाक्यमुनिः ।
तत्पर्य्यायः । सर्व्वार्थसिद्धः २
कुलिशासनः ३
गोपेशः ४ । इति हेमचन्द्रः ॥

**महाश्रावणिका**, स्त्री, (महती चासौ श्रावणिका
च ।) क्षुपविशेषः । वड थुलकुडी इति
भाषा । तत्पर्य्यायः । महामुण्डी २
लोचनी ३
कदम्बपुष्पी ४ विकचा ५ क्रोडा ६ चोडा
७
शेषः ॥ श्वेतकिणिहीवृक्षः । इति राजनिर्घण्टः ॥
(पर्य्यायोऽस्या यथा, --
“कटभी किणिही श्वेता महाश्वेता च
रोहिणी ॥”)
दुर्गा । यथा, देवीपुराणे ४५ अध्याये ।
“श्वेतं शुक्लं शिवस्थानं यस्माच्चेह समागता ।
महाभावसमुत्पन्ना महाश्वेता ततः स्मृता ॥”
(किम्पुरुषवर्षस्थितहंसनामकगन्धर्व्वराजस्य
गौरीगर्भोत्पन्ना कन्या । तत्कथा कादम्बर्य्यां
विस्तरशो द्रष्टव्या ॥)

**महाषष्ठी**, स्त्री, (महती चासौ षष्ठी च ।
महामङ्गलदात्री षष्ठी वा ।) दुर्गा । यथा,
ॐ दुं दुं दुं दुर्गे दुर्गं नाशय नाशय हन हन
दह दह मथ मथ वधवधसर्व्वहिंस्रान् महा-
षष्ठीरूपेण बालकं रक्ष रक्ष चिरजीविनं कुरु
कुरु श्रीं ह्रीं हूं फट् स्वाहा ।” इति योगिनी-
तन्त्रे महाषष्ठीकवचम् ॥

| च्छाकविशेषः । इति केचित् ॥<br>**महाशाखा**, स्त्री, (महती शाखा यस्याः ।)<br>नागबला । इति राजनिर्घण्टः ॥<br>**महाशालिः**, पुं, (महांश्चासौ शालिश्च ।)<br>स्थूलशालिः । इति राजनिर्घण्टः ॥<br>तत्पर्य्यायः ।<br>सुगन्धिकः २ । इति हेमचन्द्रः । ४ ।<br>२४५ ॥<br>(स च धान्यविशेषः । तद्यथा, -- | पलङ्कषा ८ नदीकदम्बः ९ मुण्डाख्या<br>१० महा- | |
|---|---|---|

**महाष्टमी**, स्त्री, (महत्या महादेव्या अष्टमी ।
महती अष्टमीति वा ।) आश्विनशुक्लाष्टमी ।
यथा, --
"आश्विने शुक्लपक्षस्य भवेद् या अष्टमी
तिथिः ।
महाष्टमीति सा प्रोक्ता देव्याः प्रीतिकरा
परा ॥"
इति कालिकापुराणे ५९ अध्यायः ॥
तस्यां पूजाविधिः पुत्त्रवत् उपवासनिषेधश्च
यथा, --
"अष्टम्यां रुधिरैर्मांसैर्महामांसैः सुगन्धिभिः ।
पूजयेद्बहुजातीयैर्बलिभिर्भोजनैः शिवाम् ॥
सिन्दूरैः पट्टवासैश्च नानाविधविलेपनैः ।
पुष्पैरनेकजातीयैः फलैर्बहुविधैरपि ॥
उपवासं महाष्टम्यां पुत्त्रवान्न समाचरेत् ।
यथा तथैव पूतात्मा व्रती देवीं प्रपूजयेत् ॥
पूजयित्वा महाष्टम्यां नवम्यां वलिभिस्तथा ।
विसर्जयेद्दशम्यान्तु श्रवणे सावरोत्सवैः ॥"
इति तत्रैव ६० अध्यायः ॥
तत्रार्द्धरात्रपूजा । यथा, --
"कन्यासंस्थे रवावीशे शुक्लाष्टम्यां प्रपूजयेत्
।
सोपवासो निशार्द्धे तु महाविभवविस्तरैः ॥
पूजां समारभेद्देव्या नक्षत्रे वारुणेऽपि वा ।
पशुघातश्च कर्त्तव्यो गवलाजवधस्तथा ॥"
इति देवीपुराणवचने वारुणपदेन पूर्ब्बाषाढो-
च्यते । इति तिथ्यादितत्त्वम् ॥

**महासन्नः**, पुं, (महानतिशयः सन्नो विषण्णः
कुदेहवत्त्वात् । यद्वा, महतो हिमाद्रेर्महादेवस्य
वा आसन्नः निकटवर्त्ती ।) कुवेरः । इति
शब्द-
माला ॥ (महदतीवासन्नः) अतिनिकटश्च ॥

**महासफरः**, पुं, (महांश्चासौ सफरश्च ।) बृहत्
प्रोष्ठीमत्स्यः । अस्य गुणाः । यथा, --
"महासफरसंज्ञस्तु तिक्तः पित्तकफापहः ।
शिशिरो मधुरो रुच्यो वातसाधारणः स्मृतः
॥"
इति भावप्रकाशः ॥

**महासमङ्गा**, स्त्री, (महती चासौ समङ्गा च ।)
वृक्षविशेषः । कगहिया इति हिन्दीभाषा ।
"अम्लातोऽम्लाटनः प्रोक्तस्तथाम्लातक इत्यपि ।
कुरण्टको वर्णपुष्पः स एवोक्तो महासहः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**महासहा**, स्त्री, (महासह + स्त्रियां टाप् ।)
माषपर्णी । (पर्य्यायोऽस्या यथा, --
"सिंहपुच्छी ऋषिप्रोक्ता माषपर्णी महासहा ।
कृष्णवृन्ता च काम्बोजी पाण्डुलोमशपर्णिनी ॥"
इति वैद्यकरत्नमालायाम् ॥
पर्य्यायान्तरं यथा, --
"माषपर्णी सूर्य्यपर्णी काम्बोजी हयपुच्छिका ।
पाण्डुलोमशपर्णी च कृष्णवृन्ता महासहा ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
अम्लानवृक्षः । इत्यमरः । २ । ४ । ७३ ।
(कुब्जकः ।
तत्पर्य्यायो यथा, --
"कुब्जको भद्रतरुणी बृहत्पुष्पोऽतिकेशरः ।
महासहा कण्टकाढ्या नीलालिकुलसङ्कुला ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**महासान्तपनं**, क्ली, (महत् सान्तपनम् ।)
व्रतविशेषः । यथा । अथ महासान्तपनम् ।
तत्र द्व्यहसाध्यसान्तपनमुक्त्वायाज्ञवल्क्यः ।
"पृथक्सान्तपनैर्द्रव्यैः षडहः सोपवासकः ।
सप्ताहेनैव कृच्छ्रोऽयं महासान्तपनः स्मृतः ॥
एतत् सप्ताहसाध्यम् । जावालः ।
"गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
एकैकं क्रमशोऽश्नीयादहोरात्रमभोजनम्॥
कृच्छ्रः सान्तपनो नाम सर्व्वपापप्रणाशनः ।
एकैकमेतदेवं हि त्रिरात्रमुपयोजयेत् ॥
त्र्यहञ्चोपवसेदन्त्यं महासान्तपने विधिः ॥"
एतत् सप्ताहसाध्यसान्तपनमुक्त्वाएकविंशति-
दिनसाध्यं महासान्तपनमुक्तम् । महासान्त-
पनं धेनुषट्कदानसमम् । जावालोक्तमहा-
सान्तपनस्य एकविंशतिदिनसाध्यत्वेन सप्ताह-
साध्यसान्तपनात् त्रिगुणत्वान्महासान्तपने धेनु-
षट्कं देयम् । इति प्रायश्चित्तविवेकः ॥

**महासारः**, पुं, (महान् सारः स्थिरांशो यस्य ।)
दुष्खदिरः । इति राजनिर्घण्टः ॥

**महासाहसं**, क्ली, (महच्च तत् साहसञ्च ।) अति-
बलात्कारकृतकार्य्यम् । अतिशयदण्डः । इति
प्रसह्यापहारिणः । इति मिताक्षरायामाचा-
राध्यायः १ ॥

**महासिंहः**, पुं, (महान् सिंह इव ।) शरभः ।
इति राजनिर्घण्टः ॥ (महांश्चासौ सिंहश्च
।)
बृहत्सिंहः । स च देवीवाहनम् । यथा, --
"उत्थाय च महासिंहं देवी चण्डमधावत
।"
इति मार्कण्डेयपुराणे देवीमाहात्म्यम् ॥

**महासुखं**, क्ली, (महत् सुखमस्मिन् ।) शृङ्गारः ।
इति त्रिकाण्डशेषः ॥ (महच्च तत् सुखञ्च
।
अतिशयानन्दः । महत् सुखमस्य तद्वति,
त्रि ॥)

**महासुखः**, पुं, (महत् सुखं ईश्वरानन्दोऽस्य
अस्माद् वा ।) बुद्धः । इति त्रिकाण्डशेषः
॥

**महासुगन्धा**, स्त्री, (महान् सुगन्धोऽस्याः ।)
गन्धनाकुली । इति राजनिर्घण्टः ॥
(यथा,
सुश्रुते । उत्तरतन्त्रे २६ अध्याये ।
"महासुगन्धामथवा
पालिन्दीञ्चाम्लपेषिताम् ।
शीतांश्चात्र परीषेकान् प्रदेहानत्र योजयेत्
॥")
अतिसुगन्धयुक्ते त्रि ॥

**महासूक्ष्मा**, स्त्री, (महदतीव सूक्ष्मा ।) बालुका ।
इति राजनिर्घण्टः ॥ अतिशयसूक्ष्मे, त्रि ॥

**महासेनः**, पुं, (महती सेना यस्य ।) कार्त्तिकेयः ।
इत्यमरः । १ । १ । ४१ ॥ (यथा
अनर्घराघवे । ४ । ३२ ।
"महासेनो यस्य प्रमदयमदंष्ट्रासहचरैः
शरैर्मुक्तो जीवन्द्विरिव शरजन्मा समभवत्
।
इमाञ्च क्षत्राणां भुजवनमहादुर्गविषमा
मयं वीरो वारानजयदुपविंशान् वसुमतीम्
॥"
महती सेना अनुचरोऽस्य ।) शिवः । इति

तत्पर्य्यायः । ओदनिका २ ओदनाह्वया ३ वृक्का ४ रुहा ५ वृद्धबला ६ तण्डुला ७ भुजङ्ग-
जिह्वा ८ शीतपाकिनी ९ शीतबला १० शीता बला ११ बलोत्तरा १२ बला १३ खिर-
हिट्टी १४ व्यालजिह्वा १५ । अस्या गुणाः । मधुरत्वम् । अम्लत्वम् । दोषत्रयनाशित्वम् । युक्त्या बुद्ध्या प्रयोगे ज्वरदाहनाशित्वञ्च । इति
राजनिर्घण्टः ॥

**महासर्जः**, पुं, (महांश्चासौ सर्जश्च ।) पनसः ।

असनवृक्षः । इति राजनिर्घण्टः ॥ (पर्य्यायोऽस्य
यथा, वैद्यकरत्नमालायाम् ।
"अजकर्णो वनेसर्ज्जो महासर्ज्जोऽसनस्तु सः ॥")

**महासहः**, पुं, (सहते इति । सह + अच् । महान्

सहः ।) कुब्जकवृक्षः । इति राजनिर्घण्टः ॥ (बाणपुष्प इति गौडादौ प्रसिद्धः । यथास्य पर्य्यायः ।

साहसशब्दार्थे मेदिनी । से, ४५ ॥ (महत् साहसमत्र ।) अतिदुष्कृतकर्म्म । अतिशयद्वेषः । इति साहसशब्दार्थे हेमचन्द्रः । ३ । ४०० ॥

**महासाहसिकः**, त्रि, (महानतिशयः साह-

सिकः ।) चौरः । इति केचित् ॥ अतिसाहस-
युक्तश्च । बलपूर्ब्बापहारकः । यथा, --
"चाटतस्करदुर्व्वृत्तमहासाहसिकादिभिः ।
पीड्यमानाः प्रजा रक्षेत् कायस्थैश्च विशेषतः ॥"
इति याज्ञवल्क्यवचनम् ॥
चाटाः प्रतारकाः विश्वास्य ये परधनमप-
हरन्ति । प्रच्छन्नापहारिणः तस्कराः । दुर्व्वृत्ताः
इन्द्रजालिककितवादयः । सहो बलं सहसा
बलेन कृतं साहसं महच्च तत् साहसञ्च महा-
साहसं तेन वर्त्तन्त इति महासाहसिकाः

महाभारते तस्य सहस्रनामस्तोत्रम् ॥ महा-
सेनापतिः । इति मेदिनी । ने, २०१ ॥ (यथा
महाभारते । ५ । १९१ । ११ ।
"स च राजा दशार्नेषु महानासीत् सुदुर्जयः ।
हिरण्यवर्मा दुर्द्धर्षो महासेनो महामनाः ॥")
वृत्तार्हत्पितृविशेषः । इति हेमचन्द्रः । राज-
विशेषः । यथा, कथासरित्सागरे । ११ । ३४ ॥
"जयसेनस्य तस्याथ पुत्रोऽप्रतिमदोर्बलः ।
समुत्पन्नो महासेननामा नृपतिकुञ्जरः ॥")

**महास्कन्धा**, स्त्री, (महान् स्कन्धः शाखावधि

भागो यस्याः ।) जम्बुवृक्षः । इति राजनिर्घण्टः ॥
(महान् स्कन्धोऽस्य ॥) बृहत्स्कन्धयुक्ते त्रि ॥

**महास्थली**, स्त्री, (स्थल + "जानपदकुण्डगोणे-

त्यादि ।" ४ । १ । ४२ । इति ङीष् । महती
स्थली ।) पृथिवी । इति शब्दमाला ॥ श्रेष्ठ-
स्थानञ्च ॥

**महास्नायुः**, पुं, (महती स्नायुः अस्थिबन्धननाडी ।)

कण्डरा । इति हेमचन्द्रः । ३ । २९५ ॥

**महास्रग्वी**, [न्] पुं, (महती स्रक् अस्थिमाला ।

सा अस्त्यस्येति विनिः ।) शिवः । इति महा-
भारते तस्य सहस्रनामस्तोत्रम् । १३ । १७ । १३४ ॥

**महास्वनः**, पुं, (महान् स्वनः शब्दो यस्य ।)

मल्लतूर्य्यम् । इति त्रिकाण्डशेषः ॥ (महान्-
स्वनः ।) वृहच्छब्दः । तद्युक्ते, त्रि ॥ (यथा,
महाभारते । ५ । १५ । ५ ।

"अमर्षणश्च कौन्तेयो दृढवैरश्च पाण्डवः
।
अनर्म्महासी सोन्मादस्तिर्य्यक्प्रेक्षी महा-
स्वनः ॥")

**महाहनुः**, पुं, (महती हनुयेस्य ।) शिवः । इति
महाभारते तस्य सहस्रनामस्तोत्रम् । १३
। १७ ।
१३४ ॥ बृहद्धनुयुक्ते, त्रि ॥ (सर्पविशेषः ।
यथा,
महाभारते । १ । ५७ । १० ।
मुद्गरः शिशुरोमा च सुरोमा च महाहनुः ।
एते तक्षकजा नागाः प्रविष्टा हव्यवाहनम्
॥")

**महाहविः**, [स्] क्ली, (महत् सुप्रशस्तं हविः ।)
गव्यघृतम् । यथा, --
"गयायामथवा पिण्डं खड्गमांसं महाहविः
।
कालशाकं तिलाज्यं वा कृशरं मासतृप्तये
॥"
इति मार्कण्डेयपुराणे श्राद्धकल्पः ॥
(तदात्मतया सर्वं जगत् हूयतेऽस्मिन् ।
यद्वा,
महान्ति हवींषि आज्यपुरोडाशादिरूपा-
ण्यस्य ।) विष्णुः ॥ इति महाभारते तस्य
सहस्रनामस्तोत्रम् ॥ (महान्तिहवींष्यत्र ।
बृहद्यागविशेषः । यथा, शतपथब्राह्मणे । २
।
५ । ३ । २० ।
"अथातो महाहविष एव तद् यथा महा-
विषस्तथो तस्य ॥"
"साकमेधेषु प्रधानभूताया
महाहविराख्याया
इष्टेरारम्भं प्रतिजानीते अथात इति ।" इति
तद्भाष्यम् ॥")

**महाहासः**, पुं, (महानुच्चर्हासः ।) अट्टहासः ।
इति शब्दरत्नावली ॥

**महाहिगन्धा**, स्त्री, (अहेर्गन्धो लेश ईषर्द्धिसारूपः
सम्पर्कोऽस्त्यस्यामिति । गन्ध + अर्श
आदित्वा-
रणपण्डितोऽग्र्यविबुधारिपुरे
कलहं स राममहितः कृतवान् ।
ज्वलदग्निरावणगृहञ्च बलात्
कलहंसराममहितः कृतवान् ॥"
(पितृगणविशेषः । यथा, मार्कण्डेये । ९६ । ४६ ।
"महान्महात्मा महितो महिमावान्महाबलः ।
गणाः पञ्च तथैवेते पितॄणां पापनाशनाः ॥"
स्त्रियां टाप् । नदीभेदः । यथा, महाभारते ।
६ । ९ । २१ ।
"नीवारां महिताञ्चापि सुप्रयोगां जना-
धिप ! ॥")

**महिनं**, क्ली, (महति मह्यते वा । मह पूजायां
+ "महेरिनण् च ।" उणा० । २ । ५६ । इति
चकारादित्युक्तेः इनन् ।) राज्यम् । इत्युणा-
दिकोषः ॥ (पूजनीये, त्रि ॥ यथा, ऋग्वेदे ।
६ । २६ । ८ ।
"वयं तेऽस्यामिन्द्र ! द्युम्नहूतौ सखायः स्याम
महिन ! प्रेष्ठाः ।"
"हे महिन पूजनीय इन्द्र ! ।" इति तद्भाष्ये
सायनः ॥)

**महिमा**, [न्] पुं, (महतो भावः । महत् + "पृथ्वा-
दिभ्य इमनिज् वा ।" ५ । १ । १२२ । इति
इमनिच् ।
ततः "टेः ।" ६ । ४ । १५५ । इति टिलोपः ।)
शिवस्याष्टैश्वर्य्यान्तर्गतैश्वर्य्यविशेषः । इति हेम-
चन्द्रः । २ । ११६ ॥ स च महत्त्वं येन चतुर्द्दश
भुवनान्यस्योदरे वर्त्तन्ते । इत्यमरटीकायां
भरतः ॥ (तदुक्तं यथा, --
"अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा
तथा ।
ईशित्वञ्च वशित्वञ्च तथा कामावसायिता ॥"
माहात्म्यम् । यथा, भागवते । ८ । ५ । १३ ।
"त्वया संकथ्यमानेन महिम्ना सात्वतां पतेः ।
नाति तृप्यति मे चित्तं सुचिरं तापतापितम् ।")
उत्कर्षः । यथा, पुराणम् ।
"अधोऽधः पश्यतः कस्य महिमा नोपजायते ।
उपर्य्युपरि पश्यन्तः सर्व्व एव दरिद्रति ॥"
(मन्त्रिविशेषस्य सुतः । यथा, राजतरङ्गि-
ण्याम् । ६ । २२० ।
"सम्भूय चक्रुर्द्वैराज्यं महिम्नः पक्षमाश्रितः ॥")

"प्रियङ्गुः फलिनी कान्ता लता च महिलाह्वया
।
गुन्द्रा गुन्द्रफला श्यामा विष्वक्सेनाङ्गनाप्रिया
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**महिषः**, पुं, (मंहति पूजयति देवाननेनेति ।
महि + "अधिमह्योष्टिषच् । "उणा० । १ । ४६
।
इति टिषच् ।) स्वनामख्यातपशुविशेषः । तत्-
पर्य्यायः । लुलापः २ वाहद्विषन् ३ कासरः ४
सैरिभः ५ । इत्यमरः । २ । ५ । ४ । यम-
वाहनः ६ विषज्वरन् ७ वंशभीरुः ८ रज-
स्वलः ९ । इति शब्दरत्नावली ॥ आनूपः १०
रक्ताक्षः ११ अश्वारिः १२ । इति जटाधरः ॥
क्रोधी १३ कलुषः १४ मत्तः १५ विषाणी १६
गवली १७ बली १८ । तस्य परीक्षा यथा, --
"विपक्षे हयसन्त्रासं कुरुते येन हेतुना ।
भारं वहति वा दूरं महिषोऽस्मान्निरूप्यते ॥
ब्रह्मक्षत्रियविट्शूद्रान्त्यजभेदेन पञ्चधा ॥"
तद्यथा ।
'भृशं कृष्णाः पवित्राश्च बृहद्वृषणघोणकाः ।
बह्वाशिनो मारकाश्च महिषा ब्रह्मजातयः ॥ १
॥
केकराः कामलाः स्थूला भृशं क्रुद्धाश्च
मारकाः ।
बह्वाशिनो बहुबला महिषाः क्षत्त्रजातयः ॥ २
॥
श्लथाङ्गाः क्षीणशृङ्गाश्च सुक्रुद्धा भारवाहिनः ।
अमारका बहुबला महिषा वैश्यजातयः ॥ ३ ॥
क्षीणाः क्षीणबलाः क्षीणशृङ्गघोणारुषश्चेये ।
अल्पाशिनो भारसहा महिषाः शूद्रजातयः ॥ ४
॥
सर्व्वदा जलमिच्छन्ति येऽल्पसत्त्वा महौजसः ।
भारसहाः कुशृङ्गाश्च तेऽन्त्यजा महिषा
मताः ॥ ५ ॥
एषां दोषा गुणा वापि वृषवल्लक्षयेद्बुधः ।
पोषणञ्चापि संस्थानं वृषतुल्यं तथा मतम् ॥"
इति युक्तिकल्पतरुः ॥
वनमहिषमांसगुणाः । दोषकारित्वम् । लघु-
त्वम् । दीपनत्वम् । बलदायित्वञ्च ॥ ग्रामीण-
महिषमांसगुणाः । स्निग्धत्वम् । मलिन-

दच् टाप् च । महती अहिगन्धा ।) गन्धनाकुली । इति राजनिर्घण्टः ॥

**महाह्रस्वा**, स्त्री, (महती चासौ ह्रस्वा च ।)

कपिकच्छुः । इति शब्दमाला ॥ अतिखर्व्वे त्रि ॥

**महिः**, स्त्री, (मह्यते इति । महपूजायां अदन्तचुरादिः + "सर्व्वधातुभ्य इन् ।" उणा० ४ । ११७ । इति इन् ।) पृथिवी । इति शब्दमाला ॥
(महत् । यथा, ऋग्वेदे । २ । २४ । १४ ।
"सत्यो मन्युर्महि कर्म करिष्यतः ॥"
"महि महत् कर्म्म करिष्यतः ।" इति तद्भाष्ये सायनः ॥ महिमा । यथा, भागवते । ८ । ८ । ४ ।
"तत ऐरावतो नाम वारणेन्द्रो विनिर्गतः ।
दन्तैश्चतुर्भिः श्वेताद्रेर्हरन् भगवतो महिम् ॥"
"महिं महिमानम् ।" इति तट्टीकायां श्रीधरः ॥
महत्तत्त्वम् । यथा, भागवते । २ । १ । ३५ ।
"विज्ञानशक्तिं महिमामनन्ति ॥"
"महिं महत्तत्त्वम् ।" इति तट्टीकायां श्रीधरः ॥)

**महिका**, स्त्री, (मह + "क्वुन्शिल्पिसंज्ञयोरपूर्ब्बस्यापि ।" उणा० । २ । ३२ । इति क्वुन् टाप् ।
अत इत्वम् ।) हिमम् । इत्यमरः । १ । ३ । १८ ॥

**महितं**, त्रि, (मह्यते स्मेति । मह पूजायाम् + "मतिबुद्धिपूजार्थेभ्यश्च ।" ३ । २ । १८८ । इति क्तः ।) पूजितम् । यथा, भट्टिः । १० । २ ।

**महिरः**, पुं, (मह्यते पूज्यत इति । मह + "सलिकल्यनिमहीति ।" उणा ० । १ । ५५ । इति इलच् । लस्य रत्वम् ।) सूर्य्यः । इति त्रिकाण्डशेषः ॥

**महिला**, स्त्री, (मह्यत इति । मह पूजायाम् + "सलिकल्यनिमहीति ।" उणा ० । १ । ५५ ।
इति इलच् टाप् ।) स्त्रीमात्रम् । प्रियङ्गुलता ।
इत्यमरः । २ । ६ । २ ॥ रेणुकानामकगन्धद्रव्यम् ।
इति राजनिर्घण्टः ॥ मदमत्ता स्त्री । इति शब्दरत्नावली ॥

**महिलाह्वया**, स्त्री, (महिला इत्याह्वयो यस्याः ।)

प्रियङ्गुलता । इत्यमरः । २ । ४ । ५५ ।
(यथास्याः पर्य्यायः ।

करत्वम् । पित्तहरत्वञ्च । इति राजनिर्घण्टः ॥
तर्पणत्वम् । स्निग्धत्वम् । उष्णत्वम् । मधुरत्वम् । गुरुत्वम् । निद्रापुंस्त्वस्तन्यवर्द्धनत्वम् ।
मांसदार्ढ्यकृत्त्वञ्च । इति राजवल्लभः ॥ अपि च ।
"महिषो घोटकारिः स्यात् कासरश्च रजस्वलः ।
पीनस्कन्धः कृष्णकायो लुलापो यमवाहनः ॥
महिषस्यामिषं स्वादु स्निग्धोष्णं वातनाशनम् ।
निद्राशुक्रबलस्तन्यतनुदीर्ढ्यकरं गुरु ॥
वृष्यञ्च सृष्टविण्मूत्रं वातपित्तास्रनाशनम् ।"
इति भावप्रकाशः ॥
श्मश्रुधारिम्लेच्छजातिविशेषः ॥ स च पुरा क्षत्त्रिय आसीत् सगरराजेनास्य वेदयागादावनधिकारो वेशान्यत्वं धर्म्मनाशश्च कृतः । यथा, हरिवंशे ।
"सगरस्तां प्रतिज्ञाञ्च गुरोर्व्वाक्यं निशम्य च ।
धर्म्मं जघान तेषां वै वेशान्यत्वं चकार ह ॥
अर्द्धं शकानां शिरसो मुण्डयित्वा व्यसर्ज्जयत् ।
जवनानां शिरः सर्व्वं काम्बोजानां तथैव च ॥
पारदा मुक्तकेशाश्च पह्रवाः श्मश्रुधारिणः ।

निःस्वाध्यायवषट्काराःकृतास्तेन महात्मना ॥
शका जवनकाम्बोजाः पारदाः पह्नवास्तथा ।
कोलिसर्पाः समहिषा दार्व्वाश्चोलाः सकेरलाः ।
वशिष्ठवचनाद्राजन् ! सगरेण महात्मना ॥”
इति प्रायश्चित्ततत्त्वम् ॥ * ॥
अर्हद्ध्वजविशेषः । इति हेमचन्द्रः । ४ । ३४७ ॥
महिषासुरः । यथा, मार्कण्डेये । ८२ । १-२ ।
“महिषेऽसुराणामधिपे देवानाञ्च पुरन्दरे ।
तत्रासुरैर्म्महावीर्य्यैर्द्देवसैन्यं पराजितम् ॥
जित्वा च सकलान् देवानिन्द्रोऽभून्महिषासुरः ॥”
(देवगणभेदः । यथा, निरुक्ते । ७ । २६ ।
“अपा-
मुपस्थे महिषा अगृभणत् विशो राजानमुपतस्थु-
रृग्मियम् ।” महिषाः माध्यमिका देवगणाः ।
अथवा महिषाः त एव “भहान्तः ।” इति
तट्टीकायाम् दुर्गाचार्य्यः ॥ कुशद्वीपस्थपर्व्वत-
विशेषः । यथा, मात्स्ये । १२१ । ५९ ।
“षष्ठस्तु पर्व्वतस्तत्र महिषो मेघसन्निभः ॥”
अग्निविशेषः । यथा, तत्रैव । १२१ । ६० ।
“तस्मिन् सोऽग्निर्निवसति महिषो नाम योऽप्-
सुजः ।”
कुशद्वीपस्य वर्षविशेषः । यथा, तत्रैव । १२१ । ६८ ।
“महिषं महिषस्यापि पुनश्चापि प्रभाकरम् ॥”
कृताभिषेकः भूपालः ।
‘कृताभिषेके भूपाले लुलापे महिषः स्मृतः ॥’
इत्यमरटीकायां रुद्रः ॥ देशभेदः । यथा, बृहत्-
संहितायाम् । ९ । १० ।
“भरणीपूर्ब्बं मण्डलमृक्षचतुष्कं मुभिक्षकर-
माद्यम् ।
वङ्गाङ्गमहिषवाह्लिककलिङ्गदेशेषु भयजन-
नम् ॥”
अनुह्लादस्य पुत्रभेदः । यथा भागवते । ६ । १८ । १६ ।
“अनुह्लादस्य सूर्य्यायां वास्कलो महिषस्तथा ॥”
साध्यापुत्त्रः । यथा, हरिवंशे । १९६ । ४५ ।
“महिषञ्च तनूजञ्च विज्ञातमनसावपि ॥”)

**महिषकन्दः**, पुं, (महिषाख्यया प्रसिद्धः कन्दः ।)

**महिषध्वजः**, पुं, (महिषो ध्वजश्चिह्नं वाहनत्वेन
यस्य ।) यमः । अर्हद्विशेषः । इति हेमचन्द्रः ।
२ । ९९ ॥

**महिषमर्द्दिनी**, स्त्री, (महिषं महिषाख्यमसुरं
मृद्नातीति । मृद् + णिनिः । ङीप् ।) दुर्गा ।
इति शब्दरत्नावली ॥ अस्या मन्त्रा यथा, शार-
दायाम् ।
“भान्तं वियत् सनयनं श्वेतो मर्द्दिनि ठद्वयम् ।
अष्टाक्षरी समाख्याता विद्या महिषमर्द्दिनी ॥”
नारायणीतन्त्रे ।
“विषं हि मज्जा कालोऽग्निरद्रिरिस्थो निठ-
द्वयम् ॥”
विषं मकारः । हि स्वरूपम् । मज्जा षकारः ।
कालो मकारः । अग्नी रेफः । अद्रिर्द्दकारः ।
इस्थ इति वचनादिकारयुक्तो दकारः । अयं
मन्त्रस्तारादिर्मायादिः कामादिर्वाग्भवादि-
र्व्वधूबीजादिः कवचादिश्च नवाक्षरः । तथा च
विश्वसारे ।
“प्रणवाद्यां जपेद्विद्यां मायाद्यां वा जपेत् सुधीः ।
बधूबीजादिकां वापि कवचाद्यां जपेत्तथा ॥
सर्व्वकालेषु सर्व्वत्र कामाद्यां प्रजपेत् सुधीः ।
वाग्भवाद्यां जपेत्तान्तु देवीं वाक्यविशुद्धये ॥
अस्या ध्यानम् । गारुडोपलसन्निभां मणिमय-
कुण्डलमण्डितां नौमि भालविलोचनां महिषो-
त्तमाङ्गनिषेदुषीम् ।
शङ्खचक्रकृपाणखेटकबाण-
कार्मुकशूलकान् तर्ज्जनीमपि बिभ्रतीं निज-
बाहुभिः शशिशेखराम् ॥ इति तन्त्रसारः ॥

**महिषवल्ली**, स्त्री, (महिषशब्दवाच्या वल्ली ।
शाकपार्थिवादिवत् समासः ।) लताविशेषः ।
छिरहिट्टी इति हिन्दी भाषा ॥ तत्पर्य्यायः ।
सौम्या २ प्रतिसोमा ३ अन्त्रवल्लिका ४ खण्ड-

पथि गच्छन् स रम्भोऽथ ददृशे महिषीं शुभाम् ।
त्रिहायणीं चित्रवर्णां सुन्दरीं ऋतुशालिनीम् ॥
स तां दृष्ट्वाथ महिषीं रम्भः कामेन मोहितः ।
दोर्भ्यां गृहीत्वा च तदा चकार सुरतोत्सवम् ॥
तयोः प्रवृत्ते सुरते सा तदा तस्य तेजसा ।
दधार महिषी गर्भं तदाभून्महिषासुरः ॥
तस्यां स्वाङ्गेषु गिरिशस्तत्पुत्त्रत्वमवाप्तवान् ।
ववृधे स तदा वाग्भिः शुक्लपक्षे समुद्रवत् ॥”
तस्य योषिद्वध्यत्वं यथा, --
“तन्तु कात्यायनमुनिः शप्तवान् महिषासुरम् ।
दुर्णयं वीक्ष्य शिष्यार्थे शिष्यानुग्रहकारकः ॥
कात्यायनेन शप्तं तं विज्ञाय महिषासुरम् ।
प्राह प्रणयपूर्ब्बन्तु चण्डिकां चन्द्रशेखरः ॥”
ईश्वर उवाच ।
“देवि ! कात्यायनेनापि शप्तोऽयं महिषा-
सुरः ।
योषिद्विनाशकर्त्त्रीति भवितेति जगन्मयि ! ।
निःसंशयमृषेर्व्वाक्यं भविष्यति न संशयः ॥
मदीयो माहिषः कायस्त्वया देवि ! जगन्मयि ! ।
हन्तव्यः सततं योगयुक्तः पूर्ब्बे परेऽपि च ॥
हरिर्हरिस्वरूपेण त्वां वोढुमक्षमोऽधुना ।
ममायं माहिषः कायस्तव वोढा भविष्यति ॥
इति पूर्ब्बं महादेवो देवों प्रार्थितवान् पुरा ॥
तेन देवी महादेवं जग्राह महिषासुरम् ॥
त्रिषु जन्मसु पुत्त्रोऽभूत् रम्भस्य भगवान् शिवः ।
सृष्टित्रयं स रम्भोऽपि रम्भ एव व्यजायत ॥
असुरस्तादृशस्तेपे तपः परमदारुणम् ।
तथैवाराधितः शम्भुः पुत्त्रार्थे प्रददौ वरम् ॥
तथैव महिषीं भेजे प्रथमं सुरताय सः ।
तस्यां तथाभवद्वीरो दानवो महिषासुरः ।
तथैव शेपे भगवान् मुनिः कात्यायनस्तु तम् ॥
इति प्रवृत्ते पूर्ब्बस्मिन् परस्मिन् स तु जन्मनि ।
महिषः पूजयित्वाथ देवीं वरमयाचत ॥
तृतीये जन्मनि वरं प्राप्य कल्पानशेषतः ।
नेह मे जन्म भवितेत्येवं वरमयाचत ॥
तेन देवीपदतले तिष्ठत्येषोऽसुरोऽधुना ।
नोत्पत्तिरपि तस्यास्ति संवर्त्तांस्तान् बहून् नृप ! ॥

महाकन्दविशेषः । तत्पर्य्यायः । शुभ्रालुः २ लुलापकन्दः ३ शुक्लकन्दः ४ महिषीकन्दः ५ ।
अस्य गुणाः । कटुत्वम् । उष्णत्वम् । कफवाता-
मयापहत्वम् । मुखजाड्यहरत्वम् । रुच्यत्वम् । असितश्चेत् महासिद्धिकरत्वञ्च । इति राज-
निर्घण्टः ॥

**महिषघ्नी**, स्त्री, (महिषं महिषासुरं हन्तीति ।

हन् + बाहुलकात् टक् । ङीप् ।) दुर्गा ।
यथा, दुर्गोत्सवपद्धतौ ।
"महिषघ्नि ! महामाये चामुण्डे मुण्ड-
मालिनि ! ।
आयुरारोग्यविजयं देहि देवि ! नमोऽस्तुते ॥"
अपि च । देवीपुराणे ।
"सिंहमारुह्य कल्पान्ते निहतो महिषो यया ।
महिषघ्नी ततो देवी कन्या वै सिंहवाहिनी ॥"

शाखा ५ । अस्या गुणाः । रसवीर्य्यविपाके सोमवल्लीसमत्वम् । इति राजनिर्घण्टः ॥

**महिषवाहनः**, पुं, (महिषो वाहनं यस्य ।) यमः ।

इति शब्दरत्नावली ॥

**महिषासुरः**, पुं, (महिष एव महिषाख्यो वा

असुरः ।) रम्भासुरपुत्त्रः । तस्य
उत्पत्तिर्यथा, --
श्रीऔर्व्व उवाच
"आराधिता महादेवो रम्भेण सुरवैरिणा ।
चिरेण स च सुप्रीतस्तपसा तस्य शङ्करः ॥
अथ तुष्टो महादेवः प्रत्यक्षं रम्भमुक्तवान् ।
प्रीतोऽस्मि ते वरं रम्भ ! वरयस्व यथेप्सितम् ॥
एवमुक्तः प्रत्युवाच रम्भस्तं चन्द्रशेखरम् ॥
अपुत्त्रोऽहं महादेव ! यदि ते मय्यनुग्रहः ।
मम जन्मत्रये पुत्त्रो भवान् भवतु शङ्कर ! ॥
अवध्यः सर्व्वभूतानां जेता च त्रिदिवौकसाम् ।
चिरायुश्च यशस्वी च लक्ष्मीवान् सत्यसङ्गरः ॥
एवमुक्तस्तु दैत्येन प्रत्युवाच वृषध्वजः ।
भवत्वेतद्वाञ्छितन्ते भविष्यामि सुतस्तव ॥
इत्युक्त्वा स महादेवस्तत्रैवान्तरधीयत ।
रम्भोऽपि यातः स्वस्थानं हर्षोत्फुल्लविलो-
चनः ॥

एवं देवीप्रसादेन महादेवाङ्गसम्भवः ।
परामवाप सततं प्रतिपत्तिं महासुरः ॥
इति ते कथितं राजन् ! यथा स महिषा-
सुरः ।
देवीपादतलं प्राप्य यथा सोऽद्यापि मोदते ॥"
इति कालिकापुराणे ५९ अध्यायः ॥ * ॥
अपि च ।
नारद उवाच ।
"कश्चासौ महिषो नाम रक्तबीजादयश्च के ।
कासौ कात्यायनी नाम या जघ्ने महिषा-
सुरम् ।
एतान् विस्तरतस्तात ! यथावद्वक्तुमर्हसि ॥"

पुलस्त्य उवाच ।
"श्रूयतां संप्रवक्ष्यामि कथां पापप्रणाशिनीम् ।
सर्व्वदा वरदा दुर्गा सेयं कात्यायनी मुने ! ॥
सुरासुरवरौ रौद्रौ जगत्क्षोभकरावुभौ ।
रम्भश्चैव करम्भश्च द्वावास्तां सुमहाबलौ ॥
तावपुत्रौ च देवर्षे ! पुत्त्रार्थं तेपतुस्तपः ।
बहुवर्षगणान् दैत्यौ स्थितौ पञ्चनदे जले ॥
तत्रैको जलमध्यस्थो द्वितीयोऽप्यग्निपञ्चमी ।
करम्भश्चैव रम्भश्च यक्षं मालवटं प्रति ॥
एकं निमग्नं सलिले ग्राहरूपेण वासवः ।
चरणाभ्यां समादाय निजघान यथेच्छया ॥
ततो भ्रातरि नष्टे च रम्भः कोपपरिप्लुतः ।
वह्नौ स्वशीर्षं संछिद्य होतुमैच्छन्महाबलः ॥
ततः प्रगृह्य केशेषु खड्गञ्च रविसंप्रभम् ।
छेत्तुकामो निजं शीर्षं वह्निना प्रतिषेधितः ॥
उत्तिष्ठासुर ! मा मैवं नाशयात्मानमात्मना ।
दुस्तरा परवध्यापि स्ववध्याप्यतिदुस्तरा ॥
यच्च प्रार्थयसे वीर ! तद्ददामि यथेप्सितम् ।
मा म्रियस्व मृतस्येह नष्टा भवति वै कथा ॥
ततोऽब्रवीद्वचो रम्भो वरं चेन्मे ददासि हि ।
त्रैलोक्यविजयी पुत्त्रः स्यान्मे त्वत्तेजसाधिकः ॥
अजेयो दैवतैः सर्व्वैः पुंभिर्द्दैत्यैश्च पावक ! ।
महाबलो वायुरिव कामरूपी कृतास्त्रवित् ॥
तं प्रोवाच कविर्ब्रह्मन् ! वाढमेवं भविष्यति ।
यस्यां चित्तं समालम्बि करिष्यसि ततोऽसुर ! ॥
इत्येवमुक्तो देवेन वह्निना दानवो ययौ ।
यष्टुं मुनिवटं याक्षं यक्षैश्च परिवारितम् ॥
तेषां पद्मनिधिस्तत्र वसते नान्यचेतनः ।
गजाश्च महिषाश्चाश्वा गावोऽजाविपरिप्लुताः ॥
तान् दृष्ट्वैव तदा चक्रे भावं दानवपार्थिवः ।
महिषाख्योऽपरः पश्चात् स वै चैत्रासुरः पुनः ।
नन्दया निहतो बिन्ध्ये महाबलपराक्रमः ॥
अथवा ज्ञानशक्तिः सा महिषोऽज्ञान-मूर्त्तिमान् ।
अज्ञानं ज्ञानसाध्यन्तु भवतीति न संशयः ॥
मूर्त्तिपक्षे चेतिहासममूर्त्ते चैकवद्धृदि ।
ख्यायते वेदवाक्यैस्तु इह सा वेदवादिभिः ॥"
इति वराहपुराणम् ॥

**महिषासुरसम्भवः**, पुं, (महिषासुरात् तन्मेदसः सम्भवतीति । सम् + भू + अच् ।) भूमिज-गुग्गुलुः । इति राजनिर्घण्टः ।

**महिषासुरहन्त्री**, स्त्री, (हन् + तृच् + ङीप् । महिषासुरस्य हन्त्री ।) दुर्गा । यथा, --
"महिषासुरहन्त्र्याश्च प्रतिष्ठा दक्षिणायने ।"
इति प्रतिष्ठातत्त्वधृतपद्मपुराणवचनम्॥

**महिषाक्षः**, पुं, (महिषस्य अक्षीवेति । "अक्ष्णोऽदर्शनात् ।" ५ । ४ । ७६ । इति समासान्तोऽच् ।) गुग्गुलुः । इति राजनिर्घण्टः ॥ (तथास्य पर्य्यायः ।
"जटाषुः कालनिर्य्यासः कौशिको गुग्गुलुः पुरः ।
देवधूपः सर्व्वसहो महिषाक्षः पलङ्कषा ॥"
इति वैद्यकरत्नमालायाम् ॥
अस्य व्यवहारविषयो यथा, --
"महिषाक्षो महानीलो गजेन्द्राणां हितावुभौ ।
विशेषेण मनुष्याणां कनकः परिकीर्त्तितः ॥
कदाचिन्महिषाक्षश्च यतः कैश्चिन्नृणामपि ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**महिषाक्षकः**, पुं, (महिषाक्ष । स्वार्थे कन् ।) गुग्गुलुः । इति राजनिर्घण्टः ॥

**महिषी**, स्त्री, (महिषस्य कृताभिषेकस्य नृपस्य पत्नी । "पुंयोगादाख्यायाम् ।" ४ । १ । ४८ । इति ङीष् ।) कृताभिषेका राजपत्नी । इत्य-मरः । २ । ६ । ५ ॥ (यथा, रघौ । २ । २५ ।
"इत्थं व्रतं धारयतः प्रजार्थं
समं महिष्या महनीयकीर्त्तेः ।
सप्त व्यतीयुस्त्रिगुणानि तस्य
दिनानि दीनोद्धरणोचितस्य ॥")
स्वादुपाकमभिष्यन्दि वृष्यं गुर्व्वस्रदूषणम् ॥ * ॥"
अस्या नवनीतगुणाः । कषायत्वम् । मधुर-रसत्वम् । शीतत्वम् । वृष्यत्वम् । बल्यत्वम् । ग्राहित्वम् । पित्तघ्नत्वम् । तुन्ददत्वञ्च ।
"नवनीतं महिष्यास्तु वातश्लेष्मकरं गुरु ।
दाहपित्तश्रमहरं मेदःशुक्रविवर्द्धनम् ॥"
अस्या घृतगुणाः । उत्तमत्वम् । धृतिकरत्वम् । सुखदत्वम् । कान्तिकृत्त्वम् । वातश्लेष्मनाशित्वम् । बलकरत्वम् । वर्णप्रदाने क्षमत्वम् । दुर्नाम-ग्रहणीविकारशमनत्वम् । मन्दानलोद्दीप-नत्वम् । चक्षुष्यत्वम् । गव्यतो न श्रेष्ठत्वम् । हृद्यत्वम् । मनोहारित्वञ्च ।
"माहिषन्तु घृतं स्वादु पित्तरक्तानिलापहम् ।
शीतलं श्लेष्मलं वृष्यं गुरु स्वादु विपच्यते ॥"
इति भावप्रकाशः ॥ * ॥
अस्या मूत्रगुणाः । आनाहशोफगुल्मदोष-नाशित्वम् । कटुत्वम् । उष्णत्वम् । कुष्ट-कण्डूतिशूलोदररोगनाशित्वञ्च । इति राज-निर्घण्टः ॥ (अस्या दुग्धगुणाश्च यथा, चरके सूत्रस्थाने २७ अध्याये ।
"महिषीणां गुरुतरं गव्याच्छीततरं पयः ।
स्नेहानूनमनिद्राय हितमत्यग्नये च तत् ॥"

**महिषीप्रिया**, स्त्री, (महिषीणां प्रिया ।) शूली-तृणम् । इति राजनिर्घण्टः ॥

**मही**, स्त्री, (मह्यते इति । मह् + अच् । मह + "गौरादिभ्यश्च । ४ । १ । ४१ । इति ङीष् । यद्वा, महि । कृदिकारादिति ङीष् ।) पृथिवी । इत्यमरः । २ । १ । ३ । (यथा विष्णुपुराणे । १ । ४ । २९ ।
"उत्तिष्ठतस्तस्य जलार्द्रकुक्षे
र्महावराहस्य महीं विधार्य्य ।
विधुन्वतो वेदमयं शरीरं
रोमान्तरस्था मुनयो जुषन्ति ॥")
नदीविशेषः । सा च मालवदेशे वर्त्तते । इति मेदिनी । हे, । ७ ॥ तज्जलगुणाः ।
"महीजलन्तु सुस्वादु बल्यं पित्तहरं गुरु ।"
इति राजनिर्घण्टः ॥
गौः । इति जटाधरः ॥ हिलमोचिका । इति त्रिकाण्डशेषः ॥ (लोकः । यथा, ऋग्वेदे । ३ ।

महिष्यां रूपयुक्तायां त्रिहायण्यां तपोधन !
॥
समागच्छच्च दैत्येन्द्रं कामयन्ती तरस्विनी
।
स चाभिगमनं चक्रे भवितव्यप्रचोदितः ॥
तस्यां समभवद्गर्भस्तां प्रगृह्याथ दानवः ।
पातालं प्रविवेशाथ ततः स्वभवनं गतः ॥
दृष्टश्च दानवैः सर्व्वैः परित्यक्तश्च बन्धुभिः
।
अकार्य्यं कारयत्येवं भूयो मालवटं गतः ॥
सापि तेनैव पतिना महिषी चारुदर्शना ।
समं जगाम तत्पुण्यं यक्षमण्डलमुत्तमम् ॥
ततस्तु वसतस्तस्य श्यामा सा सुषुवे मुने !
।
अजीजनत् सुतं शुभ्रं महिषं कामरूपिणम्
॥
इति वामनपुराणे १७ अध्यायः ॥ * ॥
अन्यच्च । धरण्युवाच ।
“या सा माया शरीरात्तु
ब्रह्मणोऽव्यक्तजन्मनः ।
गायत्र्यष्टभुजा भूत्वा चैत्रासुरमयोधयत् ॥
सैव नन्दाभवद्देवी देवकार्य्यचिकीर्षया ।
महिषाख्यासुरवधं कुर्व्वती ब्रह्मणेरिता ॥
वैष्णव्या च हतो देव ! कथमेतद्धि संशयः
॥
वराह उवाच ।
इयं जगद्धिता देवी गङ्गा शङ्करसुप्रिया ।
क्वचित् किञ्चित् भवेद्वृत्तं सपदं वेद
सर्व्ववित् ।
स्वायम्भुवे हतो दैत्यो वैष्णव्या मन्दरे गिरौ
॥

सैरिन्ध्री । औषधिभेदः । इति मेदिनी । षे, ४३
॥
महिषयोषित् । तत्पर्य्यायः । मन्दगमना २
महाक्षीरा ३ पयस्विनी ४ लुलापकान्ता ५
कलुषा ६ तुरङ्गद्विषणी ७ ॥ अस्याः क्षीर-
गुणाः । मधुरत्वम् । विपाके शीतलत्वम् ।
गुरुत्वम् । बलपुष्टिप्रदत्वम् । वृष्यत्वम् ।
पित्तदाहास्रनाशित्वञ्च ।
“माहिषं मधुरं गव्यात् स्निग्धं शुक्रकरं गुरु ।
निद्राकरमभिष्यन्दि क्षुधाधिक्यकरं हिमम् ॥
तस्या दधिगुणाः । मधुरत्वम् । स्निग्धत्वम् ।
श्लेष्मकारित्वम् । रक्तपित्तनाशित्वम् । बलास्र-
वर्द्धनत्वम् । बल्यत्वम् । श्रमघ्नत्वम् । शोधन-
त्वञ्च ।
“माहिषं दधि सुस्निग्धं श्लेष्मलं वातपित्तनुत् ।

५६ । २ ।
“तिस्रो महीरुपरास्तस्थुः ॥”
“महीः लोकाः ।” इति तद्भाष्ये सायनः ॥)

**महीक्षित्**, पुं, (मह्यां क्षयते ईष्टे । क्षि + क्विप् ।
तुक् च ।) राजा । इत्यमरः । २ । ८ । १ ॥
(यथा, महाभारते । ७ । ४४ । २४ ॥
“रथचर्य्यास्त्रमायाभिर्मोहयित्वापरन्तपः ।
बिभेद शतधा राजन् ! शरीराणि मही-
क्षिताम् ॥”)

**महीजं**, क्ली, (मह्यां जायते इति । जन + डः ।)
आर्द्रकम् । इति राजनिर्घण्टः ॥ भूमि-
जाते । त्रि ॥ (यथा, महाभारते । ६ । ८७ ।
३-४ ।
“आरट्टानां महीजानां सिन्धुजानाञ्च सर्वशः ।

वानायुजानां शुभ्राणां तथा
पर्व्वतवासिनान् ।
वाजिनांबहुभिः संख्ये समन्तात्
पर्य्यवारयन् ॥”)

**महीजः**, पुं, (मह्यां जातः । जन + डः ।) मङ्गल-
ग्रहः । यथा, समयप्रदीपे ।
“रवौ रसाब्धी सितगौ हयाब्धी
द्वयं महीजे विधुजे शराष्टौ ।
गुरौ शराष्टौ भृगुजे तृतीयं
शनौ रसाद्यन्तमिति क्षपायाम् ॥”

**महीध्रः**, पुं, (महीं धरतीति । धृ + कः ।)
पर्व्वतः । इत्यमरः । २ । ३ । १ ॥
(यथा,
श्रीभागवते । २ । ७ । ३२ ।
“गौपैर्मखे प्रतिहते ब्रजविप्लवाय
देवेऽभिवर्षति पशून् कृपया रिरक्षुः ।
धर्त्तोच्छिलीन्ध्रमिव सप्तदिनानि सप्त-
वर्षो महीध्रमनघैककरे सलीलम् ॥”
महीं धरति उद्धरतीति । धृ + कः ।
महेरु-
द्धर्त्ता । यथा, तत्रैव । ३ । १३ । २६
।
“उत्क्षिप्तबालः खचरः कठोरः
सटा विधुन्वन् खररोमशत्वक् ।
खुराहताभ्रः सितदंष्ट्र ईक्षा-
ज्योतिर्बभासे भगवान् महीध्रः ॥”
“महीध्रः पृथिव्या उद्धर्त्ता ।” इति
तट्टीकायां
स्वामी ॥)

**महीपालः**, पुं, (महीं पालयतीति । पाल +
अण् ।) राजा । यथा, मार्कण्डेयपुराणे
।
८८ । ६१ ।
“स पपात महीपृष्ठे शस्त्रसंघसमाहतः
।
नीरक्तश्च महीपाल ! रक्तवीजो
महासुरः ॥”
(राजविशेषः । यथा, कथासरित्सागरे
।

“तौ तस्मिन् पुलिने देव्याः कृत्वा मूर्त्तिं
महीमयीम् ।
अर्हणाञ्चक्रतुस्तस्याः पुष्पधूपाग्नितर्पणैः ॥”

**महीरुहः**, पुं, (मह्यां रोहति जायत इति ।
रुह + कः ।) वृक्षः । इत्यमरः । २ । ४ । ५ ।
(यथा, विष्णुपुराणे । १ । १५ । १ ।
“तपश्चरत्सु पृथिवीं प्रचेतःसु महीरुहाः ।
अरक्ष्यमाणामावब्रुर्बभूवाथ प्रजाक्षयः ॥”)
शाकवृक्षः । इति राजनिर्घण्टः ॥

**महीलता**, स्त्री, (मह्या लतेव ।) किञ्चुलुकः ।
इत्यमरः । १ । १० । २१ ॥ (विशेषोऽस्याः
किञ्चुलुकशब्दे ज्ञातव्यः ॥)

**महीसुतः**, पुं, (मह्याः सुतः ।) मङ्गलः । इत्य-
मरः । १ । ३ । २५ ॥ (यथा, बृहत्संहि-
तायाम् । १०४ । १४ ।
“रिपुगदकोपभयानि पञ्चमे
तनयकृताश्च शुचो महीसुते ।
द्युतिरपि नास्य चिरं भवेत् स्थिरा
शिरसि कपेरिव मालती कृता ॥”)

**महेच्छः**, पुं, (महती इच्छा यस्य । ह्रस्वश्च
सामासिकः ।) महाशयः । इत्यमरः । ३ । १ । ३ ॥
(यथा, बृहत्संहितायाम् । १६ । ३८ ।
“प्रत्यन्तधनिमहेच्छव्यवसायपराक्रमोपेताः ॥”)

**महेन्द्रः**, पुं, (महांश्चासाविन्द्रश्च ऐश्वर्य्यवानि-
त्यर्थः ।) विष्णुः । इति महाभारते तस्य सहस्र-
नामस्तोत्रम् ॥ शक्रः । (यथा, भागवते । ६ । १३ ।
६ ।
“ऋषयस्तदुपाकर्ण्य महेन्द्रमिदमब्रवीत् ॥”)
जम्बुद्वीपस्य पर्व्वतविशेषः । इति मेदिनी । रे,
२०० ॥ (स च सप्तकुलाचलानामन्यतमः ।
यथा, मार्कण्डेये । ५७ । १० ।
“महेन्द्रो मलयः सह्यः सुक्तिमानृक्षपर्व्वतः ।
बिन्ध्यश्च पारिपात्रश्च सप्तैवात्र कुलाचलाः ॥”)

**महेन्द्रकदली**, स्त्री, (महेन्द्रसम्भवा तद्वर्णा वा
कदली ।) कदलीभेदः । इति राजनिर्घण्टः ॥

**महेन्द्रनगरी**, स्त्री, (महेन्द्रस्य नगरी ।) अमरा-
वती । इति शब्दरत्नावली ॥

“ततो मुहूर्त्ताद्भगवानैरावतशिरोगतः ।
आजगाम महेन्द्राण्या शक्रः सुरगणैर्वृतः ॥”)

**महेरणा**, स्त्री, (महत् ईरणं प्रेरणमस्याः ।
यद्वा, महं गजोत्सवमीरयतीति । ईर + ल्युः ।
टाप् ।) शल्लकीवृक्षः । इत्यमरः । २ । ४ । ३४ ॥
महेरुणा इत्यपि पाठः । इत्यमरटीकायां
भरतः ॥ (यथास्याः पर्य्यायः ।
“शल्लकी गजभक्ष्या च सुवहा सुरभीरसा ।
महेरणा कुन्दुरुकी वल्लकी च बहुस्रवा ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**महेला**, स्त्री, (मह्यते पूज्यत इति । मह् +
“सलिकल्यनिमहीति ।” उणा ०१ । ५५ । इति
इलच् । पृषोदरादित्वादिकारस्यैकारः । यद्वा,
महस्योत्सवस्य इला भूमिः ।) नारी । इति
शब्दरत्नावली ॥ (यथा, नलोदये । २ । ५८ ।
“ससमुद्रमहेलाभिस्फुरित-
गुणाभिस्ततस्मरमहेलाभि
श्रीः प्रवरमहेलाभिस्तथैव
युवपंक्तिभिः परमहेलाभिः ॥”)

**महेलिका**, स्त्री, (महेल + स्वार्थे कन् । टाप् ।
अकारस्येत्वम् ।) नारी । इति शब्दरत्ना-
वली ॥

**महेशः**, पुं, (महान् ईशः ।) शिवः । इति
शब्दरत्नावली ॥ (यथा, शिवध्यानम् ।
“ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारु-
चन्द्रावतंसम् ॥”)

**महेशबन्धुः**, पुं, (महेशो बध्यते वशीक्रियते येन
लक्ष्मीस्तनजन्यत्वात् ।) श्रीफलवृक्षः । इति
शब्दचन्द्रिका ॥

**महेश्वरः**, पुं, (महांश्चासावीश्वरश्च कर्त्तुमकर्त्तु-
मन्यथाकर्त्तुं वा समर्थः । यद्वा, महत्या
महामायया ईश्वरः ।) शिवः । इत्यमरः ।
१ । १ । ३२ ॥ अस्य व्युत्पत्तिर्यथा, --
“विश्वस्थानाञ्च सर्व्वेषां महतामीश्वरः स्वयम् ।
महेश्वरञ्च तेनेमं प्रवदन्ति मनीषिणः ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५३ अध्यायः ॥
अस्य विवाहस्मरणफलं यथा, --
“महेश्वरसमायुक्तमीदृशं यः स्मरेत् हृदा ।

५६ । ७ ।
"चन्द्रस्वामिन्! महीपालो नाम्ना
कार्य्यः
सुतस्त्वया ।
राजा भूत्वाचिरं यस्मात्
पालयिष्यत्ययं
महीम् ॥")

**महीप्राचीरं**, क्ली, (मह्याः प्राचीरमिव । सर्व्वदिक्षु
स्थितत्वात्तथात्वम् ।) समुद्रः । इति
त्रिकाण्ड-
शेषः ॥

**महीभृत्**, पुं, (महीं बिभर्त्ति धरतीति । भृ +
क्विप् । "ह्रस्वस्य पिति कृति तुक् ।"
६ । १ । ७१ ।
इति तुगागमश्च ।) पर्व्वतः । यथा,
कुमार-
सम्भवे । १ । २७ ।
"महीभृतः पुत्त्रवतोऽपि दृष्टि-
स्तस्मिन्नपत्ये न जगाम तृप्तिम् ।
अनन्तपुष्पस्य मधोर्हि चूते
द्विरेफमालाः सविशेषसङ्गाः ॥"
(महीं बिभर्त्ति पालयतीति । भृ +
क्विप् ।)
राजा । यथा, मार्कण्डेयपुराणे । ८१ ।
१३ ।
"ये ममानुगता नित्यं
प्रसादधनभोजनैः ।
अनुवृत्तिं ध्रुवं तेऽद्य
कुर्व्वन्त्यन्यमहीभृताम् ॥"

**महीमयः**, त्रि, (मह्या विकारोऽवयवो वेति ।
मही + मयट् ।) मृत्तिकानिर्म्मितः ।
यथा, --
मार्कण्डेयपुराणे । ९३ । ७ ।

**महेन्द्रवारुणी**, स्त्री, (महेन्द्रवरुणयोरियं प्रिय-
त्वात् । अण् । ङीष् ।) लताविशेषः । वड
माकाल इति भाषा ॥ तत्पर्य्यायः । चित्रवल्ली २
महाफला ३ महेन्द्री ४ चित्रफला ५ त्रपुसी ६
त्रपुसा ७ आत्मरक्षा ८ विशाला ९ दीर्घवल्ली १०
महत्फला ११ महद्वारुणी १२ बृहत्फला १३
बृहद्वारुणी १४ सौम्या १५ गजचिर्भिटा १६
चित्रदेवी १७ धनुःश्रेणी १८ स्थाणुकर्णी १९
मरुसम्भवा २० । अस्या गुणाः । इन्द्रवारुणी-
गुणभागित्वम् । रसे वीर्य्ये विपाके च किञ्चिद्-
गुणाधिकत्वञ्च । इति राजनिर्घण्टः ॥

**महेन्द्राणी**, स्त्री, (महेन्द्रस्य भार्य्येति । महेन्द्र ।
"पुंयोगादाख्यायाम् ।" ४ । १ । ४८ । इति ङीष् ।
"इन्द्रवरुणेति ।" ४ । १ । ४९ । इति आनुगा-
गमः ।) इन्द्रभार्य्या । इति शब्दरत्नावली ॥
(यथा, महाभारते । ३ । ४१ । १३ ।
सततं तस्य कल्याणं वाञ्छितञ्च भविष्यति ॥"
इति कालिकापुराणे शिवविवाहे ४३ अध्यायः ॥
(परमेश्वरः । तदुक्तं न्यायशास्त्रे ।
वायोर्नवैकादश तेजसो गुणा
जलक्षितिप्राणभृतां चतुर्द्दश ।
दिक्कालयोः पञ्च षडेव चाम्बरे
महेश्वरोऽष्टौ मनसस्तथैव च ॥"
महान् ईश्वरः प्रजानां प्रभुः । ऐश्वर्य्यशाली
राजा । यथा, महाभारते । १ । २२८ । २९ ।
"ततः शक्रोऽतिसंक्रुद्धस्त्रिदशानां महेश्वरः ।
पाण्डरं गजमास्थाय तावुभौ समुपाद्रवत् ॥")

**महेश्वरकरच्युता**, स्त्री, (महेश्वरस्य करात् च्युता ।)
करतोया नदी । इति केचित् ॥ गौरीविवाह-
समये शङ्करकरगलितसंप्रदानतोय्नप्रभवत्वात्

करस्य तोयं विद्यतेऽत्रेति करतोया ।
इत्यमर-
टीकायां भरतश्च ॥

**महेश्वरी**, स्त्री, (महेश्वरस्य स्त्री । महेश्वर +
ङीष् । महती चासौ ईश्वरी महदादीनां
निय-
न्त्रीति वा ।) महेश्वरपत्नी । यथा, --
ऐं पातु दक्षनेत्रं मे ह्रीं पातु वामलोचनम् ।
श्रीं पातु दक्षकर्णं मे त्रिवर्णात्मा महेश्वरी ॥"
इति तन्त्रसारे भुवनेश्वरीकवचम् ॥
अपराजिता । इति शब्दचन्द्रिका ॥ कांस्यम्
।
इति हेमचन्द्रः । ४ । ११४ ॥ राजरीतिः ।
इति राजनिर्घण्टः ॥

**महैरण्डः**, पुं, (महांश्चासावेरण्डश्च ।) स्थूलैरण्डः ।
इति राजनिर्घण्टः ॥

**महैला**, स्त्री, (महती चासावेला च ।) स्थूलैला ।
इति राजनिर्घण्टः ॥ (गुणादिविषयोऽस्याः
स्थूलैलाशब्दे द्रष्टव्यः ॥)

**महोक्षः**, पुं, (महान् उक्षा । "अचतुरविचतु-
रेति ।" ५ । ४ । ७७ । इति समासान्तः
अच् ।
निपातितश्च ।) बृहद्वृषः । इत्यमरः । २ । ९
।
६१ ॥ तत्पर्य्यायः । वृषभः २ वृषः ३
पुङ्गवः ४
बली ५ गोनाथः ६ ऋषभः ७ गोप्रियः ८
उक्षा ९ गोपतिः १० । इति राजनिर्घण्टः ॥
(यथा, कथासरित्सागरे । ६० । ६६ ।
"महोक्षः स त्वया दृष्टः संस्तवश्च कृतो
यदि ।
तदिहानय तं युक्त्या तावत् पश्यामि
कीदृशः ॥")

**महोटिका**, स्त्री, (महान्तः फलेभ्यः स्थूला उटा
पत्राण्यस्याः । ततः स्वार्थे कन् । टाप् ।
अकार-
स्येत्वम् ।) बृहती । इति राजनिर्घण्टः ॥

**महोटी**, स्त्री, (महान्त उटाः पत्राणि यस्याः ।)

**महोत्साहः**, पुं, (महान् उत्साहो यस्य ।)
राज्याङ्गप्राप्तराजपुरुषः । यथा, --
"सम्पन्नस्तु प्रकृतिभिर्महोत्साहः कृतश्रमः
॥"
इति शब्दमाला ॥
अतिशयोद्यमश्च ॥

**महोदधिः**, पुं, (महांश्चासावुदधिश्च ।) समुद्रः ।
यथा, महानाटके ।
"लङ्का दग्धा वनं भग्नं लङ्घितश्च महोदधिः ।
यत् कृतं रामदूतेन स रामः किं करिष्यति
॥"

**महोदयं**, क्ली, (महान् उदय उन्नतिर्यस्मिन् ।)
पुरविशेषः । तत्पर्य्यायः । कान्यकुब्जम् २
कन्या-
कुब्जम् ३ गाधिपुरम् ४ कौशम् ५
कुशस्थलम् ६ ।
इति हेमचन्द्रः ॥

**महोदयः**, पुं, (महान् उदयः समुन्नतिर्यस्मिन् ।)
कान्यकुब्जदेशः । आधिपत्यम् । (महान्
उदय
उत्कर्षो यस्मिन् ।) अपवर्गः । इति मेदिनी ।
ये, १२६ ॥ (महान् उदय उत्कर्षो यस्य ।)
स्वामी । इति हेमचन्द्रः । ३ । ४९७ ॥
(महान् उदयः फलं यस्मिन् यस्माद्वा । महा-
फले, त्रि । यथा, मनौ । ७ । ५५ ।
"अपि यत् सुकरं कर्म्म तदप्येकेन दुष्करम् ।
विशेषतोऽसहायेन किन्तु राज्यं महोदयम्
॥"
"महोदयं महाफलम् ।" इति तट्टीकायां
कुल्लूकभट्टः ॥)

**महोदया**, स्त्री, (महानुदयो यस्याः । टाप् ।)
नागबला । इति राजनिर्घण्टः ॥

**महोदरी**, स्त्री, महाशतावरी । इति भाव-
प्रकाशः ॥ (महत् उदरमस्य ।) बृहदुदरयुक्ते,
त्रि ॥ (महच्च तदुदरञ्च । बृहदुदरे, क्ली ।
यथा, श्रीभागवते । ९ । ७ । १७ ।
"पितरं वरुणग्रस्तं श्रुत्वा जातमहोदरम् ।
रोहितो ग्राममेयाय तमिन्द्रः प्रत्यवेधत ॥"

"भूयात्ते महदैश्वर्य्यं पुत्त्रादीनां महोन्नतिः ।
अव्याधिना शरीरेण चिरं जीव सुखी भव ॥"
इत्युद्भटः ॥

**महोन्मदः**, पुं, (महानतिशय उन्मदः ।) मत्स्य-
विशेषः । फलुइ इति भाषा । यथा, --
"राजग्रीवश्चित्रफलः फलकी च महोन्मदः ॥"
इति शब्दरत्नावली ॥
अत्युन्मत्ते त्रि ॥

**महोरगं**, क्ली, (महान् उरग इव ।) तगर-
मूलम् । इति रत्नमाला ॥

**महोरगः**, पुं, (महांश्चासावुरगश्च ।) सर्पगण-
विशेषः । इति हेमचन्द्रः । २ । ४ ॥ बृहत्सर्प-
मात्रञ्च ॥ (यथा, भागवते । ८ । १० । ४७ ।
"महोरगाः समुत्पेतुः दन्दशूकाः सवृश्चिकाः ॥")

**महोल्का**, स्त्री, (महती चासावुल्का च ।)
उल्काविशेषः । यथा, --
"विदुत्स्तनितनिर्घातमहोल्कानाञ्चसंप्लवे ।
आकालिकमनध्यायमेतेषु मनुरब्रवीत् ॥
महोल्कानाञ्च संप्लवे इतस्ततोऽनेकमहोल्कानां
सन्निपाते । उल्कालक्षणमाह बृहद्वशिष्ठः ।
"बृहच्छिखा च सूक्ष्माग्रा रक्तनीलशिखो-
ज्ज्वला ।
पौरुषी च प्रमाणेन उल्का नानाविधा
स्मृता ॥"
इति तिथ्यादितत्त्वम् ॥

**महौजाः**, [स्] त्रि, अतितेजोयुक्तः । महदोजो
यस्येतिविग्रहे बहुब्रीहौ प्रथमैकवचने अत्वसो-
ऽधावित्यनेन दीर्घे कृते महौजा इतिपदं
निष्पन्नम् ॥ (यथा, मनौ । १ । ६१ ।
"स्वायम्भुवस्यास्य मनोः षड्वंश्या मनवोऽपरे ।
सृष्टवन्तः प्रजाः स्वाः स्वा महात्मानो महौ-
जसः ॥"
कालेयपुत्त्रासुरविशेषः । यथा, महाभारते
१ । ६७ । ५३ ।
"पञ्चमस्तु बभूवैषां प्रवरो यो महासुरः ।
महौजा इति विख्यातो बभूवेह परन्तपः ॥")

**महौषधं**, क्ली, (महत् औषधम् ।) भूम्या-
हुल्यम् । शुण्ठी । (पर्य्यायो यथा, --

बृहती । इति भावप्रकाशः ॥ बृहदुत्पलञ्च ॥

**महोत्क**, स्त्री, (महान् उत्कः दर्शनोत्सुको लोको यस्याः ।) विद्युत् । इति केचित् ॥

**महोत्पलं**, क्ली, (महच्च तत् उत्पलञ्च ।) पद्मम् । सारसपक्षी । इत्यमरः । १ । ३० । ३९ ॥

**महोत्सवः**, पुं, (महांश्चासावुत्सवश्च ।) अतिशय-सुखजनककर्म्म । यथा, --
"सर्व्वैश्च जन्मदिवसे
स्नातैर्म्मङ्गलपाणिभिः ।
गुरुदेवाग्निविप्राश्व पूजनीयाः प्रयत्नतः ॥
स्वनक्षत्रञ्च पितरौ तथा देवप्रजापतिः ।
प्रतिसंवत्सरञ्चैव कर्त्तव्यश्च महोत्सवः ॥"
इति तिथ्यादितत्त्वे ब्रह्मपुराणवचनम् ॥
अपि च । कालिकापुराणे ६९ अध्याये ।
"दुर्गातन्त्रेण मन्त्रेण कुर्य्याद्दुर्गामहोत्सवम् ।
महानवम्यां शरदि बलिदानं नृपादयः ॥"

**महोत्साहः**, त्रि, (महान् उत्साहो यस्य ।) अति-शयोत्साहयुक्तः । (यथा, महाभारते । ५ । ५१ । १ ।
"सर्व्व एते महोत्साहा ये त्वया परिकीर्त्तिताः ।
एकतस्त्वेव ते सर्व्वे समेता भीम एकतः ॥")
तत्पर्य्यायः । महोद्यमः २ । इत्यमरः । ३ । १ । ३ ॥
(विष्णुः । यथा, महाभारते । १३ । १४९ । ३१ ।
"अतीन्द्रियो महामायो महोत्साहोमहाबलः ॥")

पुं, नागविशेषः । यथा, महाभारते । १ । ३५ । १६ ।
"कर्करार्कर्करौ नागौ कुण्डोदरमहोदरौ ॥"
दानवविशेषः । यथा, तत्रैव । १ । ६५ । २५ ।
"एकपादेकचक्रश्च विरूपाक्षमहोदरौ ॥"
धृतराष्ट्रस्य पुत्रविशेषः । यथा, तत्रैव । १ । ६७ । ९७ ।
"सेनापतिः सुसेनश्च कुण्डोदरमहोदरौ ।")

**महोद्यमः**, त्रि, (महान् उद्यमो यस्य ।) महोत्-साहः । इत्यमरः । ३ । १ । ३ । (यथा, राज-तरङ्गिण्याम् । ५ । १४१ ।
"अथ निर्ज्जित्य दायादांल्लब्ध्वा लक्ष्मीं क्षिती-श्वरः ।
जिष्णुर्द्दिग्विजयं कर्त्तुं श्रीमानासीन्महो-द्यमः ॥"
महानुद्यमः ।) अतिशयोद्योगे, पुं ॥

**महोन्नतः**, पुं, (महानतिशय उन्नतः ।) ताल-वृक्षः । इति भावप्रकाशः ॥ अत्युन्नतियुक्ते, त्रि ॥

**महोन्नतिः**, स्त्री, (महती चासावुन्नतिश्च ।) अतिशयवृद्धिः । यथा, --

"शुण्ठी विश्वा च विश्वञ्च नागरं विश्वभेषजम् ऊषणं कटुभद्रञ्च शृङ्गवेरं महौषधम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
लशुनम् । (पर्य्यायो यथा, --
"लशुनस्तु रसोनः स्यादुग्रगन्धो महौषधम् ।
अरिष्टो म्लेच्छकन्दश्च यवनेष्टो रसोनकः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
वाराहीकन्दः । वत्सनाभः । इति राजनिर्घण्टः ॥
पिप्पली । इति शब्दचन्द्रिका ॥ अतिविषा ।
इत्यमरः । २ । ९ । ३८ ॥ (महाभेषजम् । यथा, कथासरित्सागरे । ६६ । ३९ ।
"स्वभर्त्तॄन् प्रेर्य्य तेषाञ्च महासत्त्वान्महौषधैः ।
चिकित्सां कारयामासुर्नोत्तस्थुश्च तदन्ति-कात् ॥")

**महौषधिः**, स्त्री, (महती ओषधिः ।) दूर्व्वा ।
लज्जालुक्षुपः । इति शब्दचन्द्रिका ॥ महा-
स्नानीयद्रव्यविशेषः । यथा, --
“सहदेवी तथा व्याघ्री बला चातिबला तथा ।
शङ्खपुष्पी तथा सिंही अष्टमी च सुवर्च्चला ॥
महौषध्यष्टकं प्रोक्तं महास्नाने नियोजयेत् ॥”
इति गोविन्दानन्दधृतमत्स्यपुराणवचनम्॥
अपिच ।
“पृश्निपर्णी श्यामलता भृङ्गराजः शतावरी ।
गुडूची सहदेवी च महौषधिगणः स्मृतः ॥”
इति शब्दचन्द्रिका ॥
श्रेष्ठौषधिश्च । (यथा, महाभारते । ३ ।
२८८ । ६ ।
“विशल्यौ चापि सुग्रीवः क्षणेनैतौ चकार ह ।
विशल्यया महौषध्या दिव्यमन्त्रप्रयुक्तया ॥”
सञ्जीवनी । यथा, रघौ । १२ । ६१ ।
“दृष्टा विचिन्वता तेन लङ्कायां राक्षसीवृता ।
जानकीविषवल्लीभिः परीतेव महौषधिः ॥”
“महौषधीः सञ्जीवनी लतेव ।” इति
तट्टीकायां
मल्लिनाथः ॥)

**महौषधी**, स्त्री, (महौषधि + ङीप् ।) श्वेतकण्ट-
कारी । ब्राह्मी । (पर्य्यायोऽस्या यथा, --
“ब्राह्मी कपोतवङ्का च सोमवल्ली सरस्वती ।
मण्डूकपर्णी माण्डूकी त्वाष्ट्री दिव्या महौषधी
॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
कटुका । अतिविषा । इति राजनिर्घण्टः ॥
हिलमोचिका । इति त्रिकाण्डशेषः ॥

**मा** ङ य माने । इति कविकल्पद्रुमः ॥ (दिवा०-
आत्म०-सक०-अनिट् ।) ङ य मायते । इति
दुर्गादासः ॥

**मा** ङ लि शब्दे । माने । इति कविकल्पद्रुमः ॥
(ह्वा०-आत्म०-सक०-अनिट् ।) ङ लि
मिमीते । श्रुत्या धर्म्मं मिमीते यः । इति
हलायुधः ॥ इति तट्टीकायां दुर्गादासः ॥

**मा** ल माने । इति कविकल्पद्रुमः ॥ (अदा०-पर०-
सक०-अनिट् ।) ल माति भूमिं नलेन राजा ।
न मान्ति मानिनो यस्य यशस्त्रिभुवनोदरे ॥”
मदीया कर्म्मता । आमाके इति भाषा ॥
अस्मच्छब्दात् द्वितीयैकवचननिष्पन्नं पदम् ।
इति व्याकरणम् ॥ (यथा, देवीभागवते । १ ।
५ । ६६ ।
मदीया कर्म्मता । आमाके इति भाषा ॥
अस्मच्छब्दात् द्वितीयैकवचननिष्पन्नं पदम् ।
इति व्याकरणम् ॥ (यथा, देवीभागवते । १ ।
५ । ६६ ।
“सिन्धोः पुत्र्यां रोषिता किं त्वमाद्ये !
कस्मादेनां प्रेक्षसे नाथहीनाम् ।
क्षन्तव्यस्ते स्वांशजातापराधो
व्युत्थाप्यैनं मोदितां मां कुरुष्व ॥”)

**मांसं**, क्ली, (मन्यते इति । मनज्ञाने + “मने-
र्दीर्घश्च ।” उणा० ३ । ६४ । इति सः
दीर्घश्च ।)
रक्तजधातुविशेषः । मास् इति भाषा ॥ स तु
गर्भस्थबालकस्याष्टभिर्मासैर्भवति । इति
सुख-
बोधः ॥ भागवतमते चतुभिर्मासैर्भवति ।
तत्प-
र्य्यायः । पिशितम् २ तरसम् ३ पललम् ४
क्रव्यम्
५ आमिषम् ६ पलम् ७ । इत्यमरः । २ । ६ ।
६३ ॥
अस्रजम् ८ जाङ्गलम् ९ कीरम् १० ।
सर्व्वसांस-
गुणाः । वातनाशित्वम् । वृष्यत्वम् । बल्य-
त्वम् । रुच्यत्वम् । बृंहणत्वम् ।
देशस्थानसात्म्य-
संस्थास्वभावैर्भूयो नानारूपत्वञ्च ॥ * ॥
प्रसह-
भूशयानूपवारिजवारिचारिमांसगुणाः। गुरु-
त्वम् । उष्णत्वम् । मधुरत्वम् । स्निग्धत्वम् ।
वातघ्नत्वम् । शुक्रवर्द्धनत्वञ्च ॥ * ॥
विष्किर-
प्रतुदजाङ्गलमांसगुणाः । लघुत्वम् । शीतत्वम्
।
मधुरत्वम् । कषायत्वम् । नृणां हितत्वञ्च ॥ *
॥
अङ्गविशेषमांसगुणाः ।
‘एकदेहेऽपि पूर्ब्बार्द्धं मृगाणां पक्षिणां परम् ।
मूकतां मिन्मिनत्वञ्च गद्गदत्वार्द्दिते तथा ॥
वाधिर्य्यमरुचिं छर्द्दिप्रमेहमुखजान् गदान् ।
श्लीपदं गलगण्डञ्च नाशयन्त्यनिलामयान् ॥’ *
॥
अथानूपस्य लक्षणं गुणाश्च ।
‘कूलेचराः प्लवाश्चापि कोषस्थाः पादिनस्तथा
।
मत्स्या एते समाख्याताः पञ्चधानूपजातयः ॥
आनूपा मधुराः स्निग्धा गुरवो वह्निसादनाः ।
श्लेष्मलाः पिच्छिलाश्चापि मांसपुष्टिप्रदा भृशम्
॥
तथाभिष्यन्दिनस्ते हि प्रायोऽपथ्यतमाः
स्मृताः ॥’ * ॥
अथ जाङ्गलानां गणना विशिष्टा गुणाश्च ।
‘हरिणैणकुरङ्गर्ष्यपृषतन्यङ्कुशम्बराः ।
राजीवोऽपि च मुण्डी चेत्याद्या जाङ्गल-
संज्ञकाः ॥
हरिणस्ताम्रवर्णः स्यादेणः कृष्णः प्रकीर्त्तितः ।
कुरङ्ग ईषत्ताम्रः स्याद्धरिणाकृतिको महान् ॥
ऋष्यो नीलाण्डको लोके सरोरु इति कीर्त्तितः
।
पृषतश्चन्द्रबिन्दुः स्याद्धरिणात् किञ्चिदल्पकः
॥
न्यङ्कुर्व्वहुविषाणोऽथ शम्बरो गवयो महान् ।
राजीवस्तु मृगो ज्ञेयो राजीभिः परितो वृतः ॥
यो मृगः शृङ्गहीनः स्यात् स मुण्डीति निगद्यते ।
जङ्गालाः प्रायशः सर्व्वे पित्तश्लेष्महराः स्मृताः
।
किञ्चिद्वातकराश्चापि लघवो बलवर्द्धनाः ॥’
अथ विलेशयानां गणना गुणाश्च ।
‘गोधाशशभुजङ्गाखुशल्लक्याद्या विलेशयाः ।
विलेशया वातहरा मधुरा रसपाकयोः ।
वृंहणा बद्धविण्मूत्रा वीर्य्योष्णा अपि कीर्त्तिताः ॥
अथ गुहाशयानां गणना गुणाश्च ।
‘सिंहव्याघ्रवृका ऋक्षतरक्षुद्वीपिनस्तथा ।
बभ्रुजम्बुकमार्ज्जारा इत्याद्यास्तु गुहाशयाः ॥
स्थूलपुच्छो रक्तनेत्रो बभ्रुभेदः सनाकुलः ।
गुहाशया वातहरा गुरूष्णमधुराश्च ते ।
स्निग्धा बल्या हिता नित्यं नेत्रगुह्यविका-
रिणाम् ॥’
अथ पर्णमृगाणां गणना गुणाश्च ।
‘वनौकोवृक्षमार्ज्जारवृक्षमर्क्कटिकादयः ।

इति हलायुधः ॥ इति दुर्गादासः ॥

**मा**, व्य (मा + क्विप् ।) वारणम् । (यथा

रामायणे । १ । २ । १५ ।

"मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः

समाः ॥")

विकल्पः । इति मेदिनी । अव्ययवर्गे, ४९ ॥

**मा**, स्त्री, (मा + क्विप् । यद्वा, मा + क । तत

ष्टाप् ।) लक्ष्मीः । इति मेदिनी । मे, १ ॥

माता । (यथा, साहित्यदर्पणे । १० म ।

"मारमा सुषमा चारुरुचा मारबधूत्तमा ।

मात्तधूर्त्तमावासा सा वामा मेऽस्तु मा

रमा ॥")

मानम् । इत्येकाक्षरकोषः शब्दरत्नावली च ॥

**मा**, त्रि, (अस्मद् + द्वितीयैकवचने । "त्वा

मौ द्वितीयायायाः ।" ८ । १ । २३ ।

इति मामित्यस्य स्थाने विकल्पेन मादेशः ।)

**मां** त्रि, (अस्मद् + द्वितीयैकवचने । "त्वा

मौ द्वितीयायायाः ।" ८ । १ । २३ ।

इति मामित्यस्य स्थाने विकल्पेन मादेशः ।)

सर्व्वेषाञ्च शिरस्कन्धप्लीहचर्म्म्यकृद्गुदम् ॥

पादपुच्छान्तमस्तिष्कमुष्कक्रोडाश्चमेहनाः ।

धातवः शोणिताद्याश्च गुरवः स्युर्य्यथोत्तरम्

॥'

प्रशस्ताप्रशस्तमांसं यथा, --

'वयस्थं निर्व्विषं सद्योहतं मांसं प्रशस्यते ॥

मृतञ्च व्याधितं व्युष्टं वृद्धं बालं विषैर्हतम् ।

अगोचरहतं व्याडसूदितं मांसमुत्सृजेत् ॥'

अष्टविधा मांसयोनिर्य्यथा । प्रसहाः १ प्रसह्य-

भक्षणात् कुररश्येनादयः । भूशयाः २ विल-

शायित्वात् नकुलगोधादयः । आनूपाः ३

खड्गमहिषवराहादयः । जलजाः ४ कुम्भीरा

दयः । जलेचराः ५ हंसवकप्रभृतयः ।

जाङ्गलाः ६ हरिणच्छागादयः । विष्किराः ७

विकीर्णचरणात् तित्तिरमयूरकुक्कुटादयः ।

प्रतुदाः ८ प्रतुद्यचरणात् कपोतपारावतादयः

।

इति राजनिर्घण्टः ॥ * ॥ अपि च ।

'मांसं वातहरं सर्व्वं बृंहणं बलपुष्टिकृत् ।

प्रीणनं गुरु हृद्यञ्च मधुरं रसपाकयोः ॥' * ॥

अथ तद्भेदाः ।

'मांसवर्गो द्विधा ज्ञेयो जाङ्गलानूपभेदतः ॥'

तत्र जाङ्गलस्य लक्षणं गुणाश्च ।

'मांसवर्गोऽत्र जङ्गाला विलस्थाश्च गुहाशयाः

।

तथा पर्णमृगा ज्ञेया विष्किराः प्रतुदा अपि ॥

प्रसहा अथच ग्राम्या अष्टौ जाङ्गलजातयः ।

जाङ्गला मधुरा रूक्षास्तुवरा लघवस्तथा ॥

बल्यास्ते बृंहणा वृष्या दीपना दोषहारिणः ।

एते पर्णमृगाः प्रोक्ताः सुश्रुताद्यैर्महर्षिभिः ॥

स्मृताः पर्णमृगा वृष्याश्चक्षुष्याः शोषिणे

हिताः ।

श्वासार्शःकाशशमनाः सृष्टमूत्रपुरीषकाः ॥'

अथ विष्किराणां गणना गुणाश्च ।

'वर्त्तकालावविकिरकपिञ्जलकतित्तिराः।

कुलिङ्गकुक्कुटाद्याश्च विष्किराः समुदाहृताः ॥

विकीर्य्य भक्षयन्त्येते यस्मात् तस्माद्वि

विष्किराः ।

कपिञ्जला इति प्राज्ञैः कथिता गौरतित्तिराः ॥

विष्किरा मधुराः शीताः कषायाः कटुपाकिनः ।

बल्या वृष्यास्त्रिदोषघ्नाः पथ्यास्ते लघवः

स्मृताः ॥'

अथ प्रतुदानां गणना गुणाश्च ।

'कालकण्ठकहारीतकपोतशशपत्रकाः।

सारिका खञ्जरीटश्च पिकाद्याः प्रतुदाः स्मृताः

॥

प्रतुद्य भक्षयन्त्येते तुण्डेन प्रतुदास्ततः ।

कपोतो धवलः पाण्डुः शतपत्रो बृहच्छुकः ।
प्रतुदा मधुराः पित्तकफघ्नास्तु वरा हिमाः ।
लघवो बद्धवर्च्चस्काः किञ्चिद्वातकराः स्मृताः ॥'
अथ प्रसहानां गणना गुणाश्च ।
'काको गृध्र उलूकश्च चिल्लश्च शशघातकः ।
चाषो भाषश्च कुरर इत्याद्याः प्रसहाः स्मृताः ।
प्रसहाः कीर्त्तिता एते प्रसह्याच्छिद्य भक्षणात् ।
प्रसहाः खलु वीर्य्योष्णाः षण्मासं भक्षयन्ति ये ॥
ते शोषभस्मकोन्मादैः शुक्रक्षीणा भवन्ति हि ॥'
शशघातकस्थाने शतघातकोऽपि पाठः । वाज इति लोके ॥ * ॥ अथ ग्राम्याणां गणना गुणाश्च ।
'छागमेषबृषाश्वाद्या ग्राम्याः प्रोक्ता महर्षिभिः ।
ग्राम्या वातहराः सर्व्वे दीपनाः कफपित्तलाः ।
मधुरा रसपाकाभ्यां बृंहणा बलवर्द्धनाः ॥'
अथ कूलेचराणां गणना गुणाश्च ।
'लुलापगण्डवाराहचमरीवारणादयः।
एते कूलेचराः प्रोक्ता यतः कूले चरन्त्यमी ॥
कूलेचरा मरुत्पित्तहरा वृष्या बलावहाः ।
मधुराः शीतलाः स्निग्धा मूत्रलाः श्लेष्मवर्द्धनाः ॥'
अथ प्लवानां गणना गुणाश्च ।
'हंससारसकाचाक्षवकक्रौञ्चसरारिकाः।
नन्दीमुखी सकादम्बा बलाकाद्याः प्लवाः स्मृताः ।
प्लवन्ते सलिले यस्मादेते तस्मात् प्लवाः स्मृताः ॥
स्थूला कठोरा वृत्ता च यस्याश्चञ्चूपरिस्थिता।
गुटिका चञ्चुसदृशी ज्ञेया नन्दीमुखीति सा ॥
प्लवाः पित्तहराः स्निग्धा मधुरा गुरवो हिमाः ।
वातश्लेष्मप्रदाश्चापि बलशुक्रकराः सराः ॥'
अथ कोषस्थानां गणना गुणाश्च ।
'शङ्खः शङ्खनखश्चापि शुक्तिशम्बूककर्कटाः ।
जीवा एवम्बिधाश्चान्ये कोषस्थाः परिकीर्त्तिताः ॥
कोषस्था मधुराः स्निग्धाः पित्तवातहरा हिमाः ।
बृंहणा बहुवर्च्चस्का वृष्याश्च बलवर्द्धनाः ॥'
अथ पादिनां गणना गुणाश्च ।
'कुम्भीरकूर्म्मनक्राश्च गोधामकरशङ्कराः ।
घण्टिकः शिशुमारश्चेत्यादयः पादिनः स्मृताः ॥
पादिनोऽपि च ये ते तु कोषस्थानां गुणैः समाः ॥'
इति भावप्रकाशः ॥

'रसो मांसस्य चक्षुष्यो वृं हणः प्राणवर्द्धनः ।
वृष्यो वातविकारघ्नः स्मृत्योजःस्वरवर्द्धनः ।
भग्नविश्लिष्टसन्धीनां क्षतानां व्रणिनां हितः ॥'
अथ तैलपक्वमांसगुणाः ।
'मांसं यत्तलसंसिद्ध्वं वीर्य्योष्णं पित्तलं कटु ।
अग्निसन्दीपनं रुच्यं दृष्टिनुत् पुष्टिनुद्गुरु ॥'
घृतपक्वमांसगुणाः ।
'मांसन्तु घृतसंसिद्धं दृष्टिदं पुष्टिनुल्लघु ।
प्रीणनं सर्व्वधातूनां विशेषान्मुखशोषिणाम् ॥'
परिशुष्कप्रदिग्धमांसयोर्लक्षणं गुणाश्च ।
मांसं बहुघृते भृष्टं सिक्त्रा चोष्णाम्बुना मुहुः ।
जीरकाद्यैः समायुक्तं परिशुष्कं तदुच्यते ॥
परिशुष्कं स्थिरं स्निग्धं हर्षणं प्रीणनं गुरु ।
पित्तघ्नं बलमेधाग्निमांसौजःशुक्रवर्द्धनम्॥
तदेव घनतक्राढ्यं प्रदिग्धं सत्त्रिजातकम् ।
प्रदिग्धं बलमांसाग्निवर्द्धनं वातपित्तजित् ॥
शूलिकापक्वमांसगुणाः।
'मांसन्तु शूलिकाप्रोतमङ्गारेण विपाचितम् ।
ज्ञेयं गुरुतरं वृष्यं दीप्ताग्नीनां सदा हितम् ॥'
वेशवारमांसस्य लक्षणं गुणाश्च ।
'निरस्थि पिशितं पिष्टं सिद्धं गुडघृतान्वितम् ।
कृष्णामरिचसंयुक्तं वेशवार इति स्मृतम् ॥
वेशवारो गुरुः स्निग्धो बलोपचयवर्द्धनः ।
द्रव्येण येन येनेह व्यञ्जनं मत्स्यमांसयोः ।
तस्य तस्य तयोश्चैतद्गुणदोषैर्व्विभावयेत् ॥'
एकत्र सर्व्वमांसभक्षणदोषो यथा, --
'एकत्र सर्व्वमांसानि विरुध्यन्ते परस्परम् ॥'
मांसस्य गुरुत्वं यथा, --
'अन्नादष्टगुणं पिष्टं पिष्टादष्टगुणं पयः ।
पयसोऽष्टगुणं मांसं मांसादष्टगुणं घृतम् ।
घृतादष्टगुणं तैलं मर्द्दनान्न च भक्षणात् ॥'
इति राजवल्लभः ॥
वर्ज्जनीयमांसानि यथा, --
'क्रव्यादपक्षिदात्यूहशुकमांसानि वर्जयेत् ।
सारसैकशफान् हंसान् बलाकावकटिट्टिभान् ॥
कुररं जालपादञ्च खञ्जरीटमृगद्विजान्।
चासान् मात्स्यान् रक्तपादान् जग्ध्वा वै कामतो नरः ॥
बन्धुरं कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत् ।'

सिंहव्याघ्रञ्च माज्जारं श्वानं शूकरमेव च ॥
शृगालं मर्कटञ्चैव गर्द्दभञ्च न भक्षयेत् ।
न भक्षयेत् सर्व्वमृगान् पक्षिणोऽन्यान् वने-चरान् ॥
जलेचरान् स्थलेचरान् प्राणिनश्चति धारणा ॥'
इति कूर्म्मपुराणे उपविभागे १६ अध्यायः ॥
अन्यच्च ।
'नाद्यादविधिना मांसं विधिज्ञो नापदि द्विजः ।
जग्ध्वा ह्यविधिना मांसं प्रेत्य तैरद्यतेऽवशः ॥
न तादृशं भवत्येनो मृगहन्तुर्धनार्थिनः ।
यादृशं भवति प्रेत्य वृथामांसानि खादतः ॥
कुर्य्याद्घृतपशुं साङ्गं कुर्य्यात् पिष्टपशुं तथा ।
न त्वेव तु वृथा हन्तुं पशुमिच्छेत् कदाचन ॥
यावन्ति पशुरोमाणि तावत्कृत्वो ह मारणम् ।
वृथापशुघ्नः प्राप्नोति प्रेत्य जन्मनि जन्मनि ॥
नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् ।
न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्ज्जयेत् ॥
समुत्पत्तिञ्च मांसस्य वधबन्धौ च देहिनाम् ।
प्रसमीक्ष्य निवर्त्तेत सर्व्वमांसस्य भक्षणात् ॥
न भक्षयति यो मांसं विधिं हित्वा पिशाचवत् ।
स लोकप्रियतां याति व्याधिभिश्च न पीड्यते ॥
स्वमांसं परमांसेन यो वर्द्धयितुमिच्छति ।
अनभ्यर्च्च्य पितॄन् देवान् ततोऽन्यो नास्त्य-पुण्यकृत् ॥
वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः ।
मांसानि च न खादेद्यस्तयोः पुण्यफलं समम् ॥
फलमूलाशनैर्मेध्यैर्मुन्यन्नानाञ्च भोजनैः ।
न तत्फलमवाप्नोति यन्मांसपरिवर्ज्जनात् ॥
मांसभक्षयितामुत्र यस्य मांसमिहाद्म्यहम् ।
एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥
यो यस्य मांसमश्नाति स तन्मांसाद उच्यते ।

अन्यच्च ।
मांसं वातहरं वृष्यं वृं हणं बलवर्द्धनम् ।
प्रीणनं गुरु हृद्यञ्च मधुरं रसपाकयोः ॥’
तस्योत्पत्तिस्थानमष्टविधंयथा, --
‘प्रसह्य भक्षयन्त्यते प्रसहास्तेन कीर्त्तिताः ।
भूशया बिलशायित्वादानूपोऽनूपसंश्रयात् ॥
जले निवासाज्जलजा जले चर्य्याज्जलेचराः ।
स्थलजा जाङ्गलाः प्रोक्ता मृगा जङ्गलचारिणः ॥
विकीर्य्य विष्किराश्चैव प्रतुद्य प्रतुदास्तथा ।
योनिरष्टविधा ह्येषां मांसानां संप्रकीर्त्तिता ॥’
‘प्रसहा भूशयानूपवारिजा वारिचारिणः ।
गुरूष्णमधुराः स्निग्धा वातघ्नाः शुक्रवर्द्धनाः ॥
लावाद्यो वैष्किरो वर्गः प्रतुदा जाङ्गला मृगाः ।
लघवः शीतमधुराः सकषाया हिता नृणाम् ॥’
अथ भांसयूषगुणाः ।

इति गारुडे ९६ अध्यायः ॥
मांसभक्षणे दोषो यथा, --
‘लोभात् स्वभक्षणार्थाय जीविनं हन्ति यो नरः ।
मज्जाकुण्डे वसेत् सोऽपि तद्भोजी लक्षवर्षकम् ॥
ततो भवेत् स शशको मीनश्च सप्तजन्मसु ।
तृणादयश्च कर्म्मभ्यस्ततः शुद्धिं लभेद्ध्रुवम् ॥’
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २७ अध्यायः ॥
अपि च ।
‘बलाकं हंसदात्यूहं कलविङ्कं शुकं तथा ।
कुररञ्च चकोरञ्च जालपादञ्च कोकिलम् ॥
चाषञ्च खञ्जरीटञ्च श्येनं गृध्रं तथैव च ।
उलूकं चक्रवाकञ्च भाषं पारावतन्त्वपि ॥
कपोतं टिटिकञ्चैव ग्रामटिट्टिभमेव च ।

मत्स्यादः सर्व्वमांसादस्तस्मान्मत्स्यान् विव-
र्ज्जयेत् ॥’
इति मानवे ५ अध्यायः ॥
अन्यच्च । श्रीभागवतपञ्चमस्कन्धगद्यम् ।
‘ये त्विह
वै पुरुषाः पुरुषमेधेन यजन्ते । याश्च स्त्रियो नृपशून् खादन्ति तांश्च ताश्च ते पशवो इह निहता यमसदने यातयन्तो रक्षोगणाः । शौनिका इव सुधितिना वदायासृक पिबन्तीति ॥’
ब्रह्मपुराणम् ।
‘पशोस्तु मार्य्यमाणस्य न मांसं ग्राहयेत् क्वचित् ।
पृष्ठमांसं गर्भशय्यां शुष्कमांसमथापि वा ॥’
महाभारतम् ।
‘रोगार्त्तोऽभ्यर्थितो वापि यो मांसं नात्त्य-लोलुपः ।
फलमाप्नोत्ययत्नेन सोऽश्वमेधशतस्य च ॥’
नन्दिपुराणम् ।
‘यश्चोपदेशं कुरुते परस्य तु महात्मनः ।
मांसस्य वर्ज्जनफलं सोऽमांसादफलं लभेत् ॥’
भविष्यपुराणम् ।
‘आमिषं रक्तशाकञ्च यो भुङ्क्ते च रवेर्द्दिने ।
सप्तजन्म भवेत् कुष्ठी दरिद्रश्चोपजायते ॥’

विष्णुपुराणम् ।
चतुर्द्दश्यष्टमी चैव अमावास्याथ पूर्णिमा ।
पर्व्वाण्येतानि राजेन्द्र ! रविसंक्रान्तिरेव च ॥
स्त्रीतैलमांससंभोगी पर्व्वस्वेतेषु वै पुमान् ।
विण्मूत्रभोजनं नाम प्रयाति नरकं मृतः ॥'
इति तिथ्यादितत्त्वम् ॥
अथ मांसभक्षणविधिः ।
'श्राद्धे देवान् पितॄन् प्राच्चर्य्य खादन् मांसं न दोषभाक् ।
वसेत् स नरके घोरे दिनानि पशुरोमभिः ॥
सम्मितानि दुराचारो यो हन्त्यविधिना पशून् ।
मांसं संत्यज्य संप्राप्य कामान् याति ततो हरिम् ॥'
इति गारुडे ९६ अध्यायः ॥
अपि च ।
'गोधा कूर्म्मः शशः खड्गी शल्यकश्चेति सत्तमाः ।
भक्ष्यान् पञ्चनखान्नित्यं मनुराह प्रजापतिः ॥
मत्स्यान् सशल्कान् भुञ्जीत मांसं रौरवमेव च ।
नवेद्य देवताभ्यश्च ब्राह्मणेभ्यश्च नान्यथा ॥
मायूरं तैत्तिरञ्चैव कपोतञ्च कपिञ्जलम् ।
वार्द्धीनसं वकं भक्ष्यं नीलहंसं पराजिताः ॥
सफरः सिंहतुण्डश्च तथा पाठीनरोहितौ ।
मत्स्यास्त्वेते समुद्दिष्टा भक्षणाय तपोधनैः ॥
प्रोक्षितं भक्षयेदेषां मांसञ्च द्बिजकाम्यया ।
यथाविधिनियुक्तश्च प्राणानामपि चात्यये ॥
भक्षयन्नपि मांसानि शेषभोजी न लिप्यते ।
औषधार्थमशक्तौ वा नियोगाद्यज्ञकारणात् ॥
आमन्त्रितस्तु यः श्राद्धे दैवे वा मांसमुत्सृजेत् ।
यायन्ति पशुरोमाणि तावतो नरकान् व्रजेत् ॥
मत्स्यमांसोपहारेण दद्यान्नैवेद्यमुत्तमम् ।
तेनैव विधिनान्नन्तु स्वयं भुञ्जीत नान्यथा ॥
याज्ञवल्क्यः ।
'प्राणात्यये तथा श्राद्धे प्रोक्षितं द्बिजकाम्यया ।
देवान् पितॄन् समभ्यच्चर्य्य खादन् मांसं न दोषभाक् ॥'
यमः ।
'भक्षयेत् प्रोक्षितं मांसं सकृत् ब्राह्मणकाम्यया ।
दैवे नियुक्तः श्राद्धे वा नियमे च विवर्ज्जयेत् ॥'
इति तिथ्यादितत्त्वम् ॥ * ॥
भाक्तामिषं यथा, --
'गोवर्ज्यमामिषं क्षीरं फले जम्बीरमामिषम् ।
आमिषं रक्तशाकञ्च सर्व्वञ्च दग्धमामिषम् ॥'
गोवर्ज्यमामिषं क्षीरमित्यत्र पत्राणामामिषं पर्णमिति च पाठः । इति कर्म्मलोचनः ॥
(अस्योत्पत्तिर्यथा, --
'रसाद्रक्तं ततो मांसं मांसान् मेदः प्रजायते ॥'
इति सुश्रुते सूत्रस्थाने १४ अध्याये ॥)

**मांसः**, पुं, (मन + सः । दीर्घश्च ।) कालः ।
कीटः । इति शब्दरत्नावली ॥ (वर्णसङ्करजातिविशेषः । यथा, महाभारते । १३ । ४८ । २२ ।
"चतुरो भागधी सूते क्रूरान्मायोपजीविनः ।
मांसं स्वादुकरं क्षौद्रं सौगन्धमिति विश्रुतम् ॥")

**मांसकारि**, क्ली, (मांसं करोतीति । कृ + णिनिः ।)
रक्तम् । इति हेमचन्द्रः । ३ । २८६ ॥

**मांसच्छदा**, स्त्री, (मांस इव छदः पर्णमस्याः ।
तदुपरिलोमोत्पत्तेरस्यास्तथात्वम् ।) मांसरोहिणीविशेषः । तत्पर्य्यायः । मांसी २ मांसरोही ३ रसायनी ४ सुलोमा ५ लोमकरिणी ६ । इति राजनिर्घण्टः ॥

**मांसजं**, क्ली, (मांसाज्जायते इति । जन् + डः ।)
मेदः । इति हेमचन्द्रः । ३ । १८८ ॥ (मांसजाते, त्रि ॥)

**मांसतेजः**, [स्] क्ली, (मांसात् तेजोऽस्य ।)
मेदः । इति हेमचन्द्रः । ३ । १८८ ॥

**मांसदलनः**, पुं, (मांसं प्लीहात्मकं दलति कृशीकरोतीति । दल + ल्युः ।) प्लीहघ्नवृक्षः । इति शब्दचन्द्रिका ॥

अनुप्रविश्य पिशितं पेशीर्व्विभजते तथा ॥"
यथार्थं यथाप्रयोजनम् ॥ * ॥ मांसपेशीनां संख्यामाह ।
"मांसपेश्यः समाख्याता नृणां पञ्चशतानि च ।
तासां शतानि चत्वारि शाखासु कथितान्यथ ॥
कोष्ठे षड्ुत्तरा षष्टिः कथिता मुनिपुङ्गवैः ।
ग्रीवाया ऊदर्ध्वगास्तास्तु चतुस्त्रिंशत् प्रकीर्त्तिताः ॥"
ताः शाखागताः प्राह । एकैकस्यां पादाङ्गुल्यां तिस्रस्तिस्रस्ताः पञ्चदश १५ पादाग्रे दश १० पादोपरिकूर्च्चसन्निविष्टा दश १० गुल्फतलयोर्दश १० गुल्फजानुनोः अन्तरे विंशतिः २० जानुनि पञ्च ५ ऊरौ विंशतिः २० वंक्षणे दश १० एवमेकस्मिन् सक्थिनि शतम् १०० भवन्ति । एतेनेतरसक्थिबाहू च व्याख्यातौ ॥
अथ कोष्ठगताः प्राह । गुदे तिस्रः शेफस्येका १ सेवन्यामेका १ वृषणयोर्द्वे २ स्फिचोः पञ्च पञ्च ५ । ५ वस्तिमूर्द्धनि द्वे २ उदरे पञ्च ५ नाभौ एका १ पृष्ठोर्द्ध्वसन्निविष्टा उभयतः पञ्च पञ्च दीर्घाः ५ । ५ पार्श्वयोः षट् ६ वक्षसि दश १० अक्षकांसौ प्रति समन्तात् सप्त ७ । अक्षकौ अंसुया इति लोके । अंसौ स्कन्धौ । हृदि द्वे २ यकृति द्वे २ प्लीह्नि द्वे २ उण्डुके द्वे २ ॥ * ॥ अथ ग्रीवोर्द्ध्वगा आह । ग्रीवायां चतस्रः ४ हन्वोरष्टौ ८ कण्ठमणौ घण्टिकायामिति यावत् एका १ गले एका १ तालुनि द्वे २ जिह्वायामेका १ ओष्ठयोर्द्वे २ नासायां द्वे ललाटे चतस्रः ४ शिरस्येका १ एवं मांसपेश्यः पञ्चशतानि भवन्ति ॥ * ॥
"स्त्रीणामपि भवन्त्येताः किन्तु विंशतिरुत्तराः ।
गर्भाशये गर्भमार्गे योनौ च स्तनयोरपि ॥"
एताः पञ्चशतानि मांसपेश्यः । अधिका विंशतिर्यथा । गर्भाशये तिस्रः ३ गर्भच्छिद्रसंस्थिताः । शुक्रार्त्तवप्रवेशिन्यां तिस्रः ३ योना-
वभ्यन्तरतो मुखाश्रिते प्रसृते द्वे २ योनावेव बहिर्निर्गतस्रोतःपार्श्वद्वयस्थिते वर्त्तले योनिकर्णिके इति यावत् द्वे २ स्तनयोः पञ्च पञ्च ५ । ५ । यौवने तासां वृद्धिर्भवति ।
"पुंसां पेश्यः पुरस्तात् याः प्रोक्ता मेहनसुष्कजाः ।
स्त्रीणामावृत्य तिष्ठन्ति फलमन्तर्गतं हि ताः ॥"

इति कूर्म्मपुराणे उपविभागे १६ अध्यायः ॥
अपि च ।
मांसस्यातः प्रवक्ष्यामि विधिं भक्षणवर्ज्जने ।
प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानाञ्च काम्यया ॥
यथाविधिनियुक्तश्चु प्राणानामेव चात्यये ।
प्राणस्थान्नमिदं सर्व्वं प्रजापतिरकल्पयत् ॥
स्थावरं जङ्गमञ्चैव सर्व्वं प्राणस्य भोजनम् ।
चराणामन्नमचरा दंष्ट्रिणामप्यदंष्ट्रिणः ॥
अहस्ताश्च सहस्तानां शूराणाञ्चैव भीरवः ।
नात्ता दुष्यत्यदन्नाद्यान् प्राणिनोऽहन्यहन्यपि ॥
धात्रैव सृष्टा ह्याद्याश्च प्राणिनोत्तार एव च ।
यज्ञाय जग्धिर्मांसस्येत्येष दैवो विधिः स्मृतः ॥
अतोऽन्यथा प्रवृत्तिस्तु राक्षसो विधिरुच्यते ।
क्रीत्वा स्वयं वाप्युत्पाद्य परोपकृतमेव वा ।
देवान् पितॄनर्च्चयित्वा खादन् मांसं न दुष्यति ॥
नियुक्तस्तु यथान्यायं यो मांसं नात्ति मानवः ।
स प्रेत्य पशुतां याति सम्भवानेकविंशतिम् ॥
न मांसभक्षणे दोषो न मद्ये न च मैथुने ।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥'
इति मानवे ५ अध्यायः ॥ * ॥
देवीपुराणम् ।
'अष्टमों समुपोष्यैव नवम्यामपरेऽहनि ।

**मांसद्रावी**, [न्] पुं, (मांसं द्रावयति शिथिलीकरोतीति । द्रु + णिच् + णिनिः ।) अम्लवेतसः । इति राजनिर्घण्टः ॥ (विशेषोऽस्याम्लवेतस-शब्दे द्रष्टव्यः ॥)

**मांसपचनं**, क्ली, (मांसस्य पचनम् ।) मांसपाकः । तस्य रूपान्तरं मांस्पाकः । इति व्याकरणम् ॥

**मांसपेशी**, स्त्री, (मांसस्य पेशी ।) गर्भस्थावयवविशेषः । यथा, --
"वुद्बुदः सप्तरात्रेण मांसपेशी भवेत्ततः ।
द्विसप्ताहात् भवेत् पेशी रक्तमांसचिता दृढा ॥
बीजस्यैवाङ्कुराः पेश्यः पञ्चविंशतिरात्रतः ॥"
इति सुखबोधः ॥ * ॥
अथ मांसस्य पेशीराह ।
यथार्थमुष्मणा युक्तो वायुः श्रोतांसि दारयेत् ।
अस्यायमर्थः । पुंसां मेहनसुष्कयोश्च याश्चिस्रो मांसपेश्यः पूर्ब्बमुक्तास्ताः स्त्रीणां मेहनमुष्काभावात् फलं गर्भाशयं आवृत्य तिष्ठन्ति । गयदासस्त्वास । स्त्रीणां मांसपेश्यस्त्रिभिर्हीनानि पञ्चशतानि । तथा च भोजः ।
"पञ्चपेशीशतान्येव स्त्रीवर्ज्जं विद्धि भूमिप ! ।
अतश्च तिस्रो हीयन्ते स्त्रीणां शेफसि मुष्कयोः ॥
अथ मांसपेशीनां कर्म्माण्याह ।
"शिरास्नाय्वस्थिपर्व्वाणिसन्धयस्तु शरीरिणाम् ।
पेशीभिः सहितान्येव बलवन्ति भवन्ति हि ॥"
इति भावप्रकाशः ॥

(यथा, महाभारते । १ । ११५ । १२ ।
“ततो जज्ञे मांसपेशी लोहाष्ठीलेव संहता ॥”)

**मांसफला**, स्त्री, (मांसमिव फलमस्याः ।) वार्त्ताकी ।
इति राजनिर्घण्टः ॥

**मांसभक्षः**, त्रि, (मांसं भक्षयतीति । भक्ष +
“कर्म्मण्यण ।” ३ । २ । ४ । इत्यण् ।) मांसभक्षण-
कर्त्ता । मांसं भक्षयतीति ढात् षण्णिति कर्त्तरि
षणप्रत्ययेन निष्पन्नः ॥ (दानवविशेषः । यथा,
हरिवंशे भविष्यपर्व्वणि । २३२ । ९ ।
“मांसपो मांसभक्षश्च वेगवान् केतुमाञ्छिविः ॥”)

**मांसमासा**, स्त्री, माषपर्णी । इति राजनिर्घण्टः ॥

**मांसरोहिणी**, स्त्री, (मांसं रोपयतीति । रुह +
णिच् + णिनिः । ङीप् । न पुक् ।) सुगन्धिद्रव्यभेदः ।
तत्पर्य्यायः । अग्निरुहा २ वृत्ता ३ चर्म्मकषा ४
वसा ५ विकषा ६ मांसरोही ७ । अस्या गुणाः ।
वृष्यत्वम् । सारकत्वम् ।
दोषत्रयनाशित्वञ्च ।
इति राजनिर्घण्टः ॥ (तथाचास्याः पर्य्यायो
गुणाश्च ।
“मांसरोहिण्यतिरुहा वृत्ता चर्म्मकरी कृशा ।
प्रहारवल्ली विकशा वीरवत्यपि कथ्यते ॥
स्यान्मांसरोहिणी वृष्या सरा दोषत्रयापहा ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**मांसलं**, क्ली, (मांसं तद्वत् पुष्टिकरो गुणोऽस्त्य-
स्यास्मिन् वा । मांस + “सिध्मादिभ्यश्च ।” ५ ।

**मांससारः**, पुं, (मांसस्य सारः ।) मेदः । इति राज-
निर्घण्टः ॥ (मांसेष्वपि सारो बलं यस्य । सबल-
स्थूलकायः । यथा, बृहत्संहितायाम् । ६८ । १०० ।
“उपचितदेहो विद्वान् धनी सुरूपश्च मांस-
सारो यः ।
सङ्घात इति च सुश्लिष्टसन्धितासुखभुजो ज्ञेयाः ॥”)

**मांसस्नेहः**, पुं, (मांसानां स्नेहः ।) मेदः । इति
राजनिर्घण्टः ॥

**मांसहासा**, स्त्री, (मांसेन हासः प्रकाशो यस्याः ।)
चर्म्म । इति शब्दरत्नावली ॥

**मांसाष्टका**, स्त्री, (मांसेन सम्पाद्या अष्टका ।
मांसप्रधाना अष्टका वा ।) गौणचान्द्रमाघ-
कृष्णाष्टमी । तत्र मांसोपकरणकश्राद्धमाबश्य-
कम् । यथा । अथाष्टकाश्राद्धम् ।
“पित्र्यदानाय मूले स्युरष्टकास्तिस्र एव च ।
कृष्णपक्षे वरिष्ठा हि पूर्ब्बा चैन्द्री विभाव्यते ॥
प्राजापत्या द्वितीया स्यात् तृतीया वैश्वदेवकी ।
आद्या पूपैः सदा कार्य्या मांसैरन्या भवेत्तथा ॥
शाकैः कार्य्या तृतीया स्यादेष द्रव्यगतो विधिः ॥”
मूले प्रधानस्थाने । अमावास्या हि श्राद्धस्य
प्रधानकालः तद्वदिति यावत् । ऐन्द्री साग्ने-
रिन्द्रदेवताकयागसम्बन्धात् । एवं प्राजापत्या
वैश्वदेवकी च । मांसैः पशोः । तथा च
गोभिलः । यद्युवाल्पतरसंभारः स्यात् तदा
पशुनैव कुर्य्यादिति । यद्युवेति निपातसमुदायो
यद्यर्थे । पशुरपि छाग एव । छागोऽनादेशे
पशुरिति गोतमात् । न च तैष्या ऊर्द्ध्वं अष्टम्यां
गौरिति गोभिलसूत्रेण गवोपदेशात् कथमनु-
पदिष्टत्वमिति वाच्यम् । तदसम्भवे पशुने-
त्यनेन यः पशुरुपदिष्टस्तस्य विशेषतोऽनुप-

“श्रावणामांसौदनाट्टिठन् ।” ४ । ४ । ६७ । इति
टिठन् ।) मांसविक्रयी । इत्यमरः । २ । १० । १४ ॥

**मांसिनी**, स्त्री, (मांसवत् पदार्थोऽस्यामस्तीति ।
इनिः । ङीप् ।) जटामांसी । इति राज-
निर्घण्टः ॥

**मांसी**, स्त्री, (मांसवत् पदार्थोऽस्त्यास्यामिति ।
मांस + अर्शआदित्वादच् । गौरादित्वात् ङीष् ।)
जटामांसी । कक्कोली । इति मेदिनी । से, ८ ।
मांसच्छदा । इति राजनिर्घण्टः ॥ (यथा,
वैद्यकरत्नमालायाम् ।
“नलदं नन्दिनी पेषी मांसी कृष्णजटा जटी ॥”)

**मांसेष्टा**, स्त्री, (मांसमिष्टं प्रियमस्याः ।) वल्गुला ।
इति राजनिर्घण्टः ॥

**माकन्दः**, पुं, (मातीति । मा + क्विप् । माः परि-
मितः सुघटितः कन्द इव फलमस्य ।) आम्र-
वृक्षः । इति मेदिनी । दे, ३८ ॥ (यथा, गीतगोविन्दे ।
“माकब्द ! क्रन्द कान्ताधर ! धरणितलं गच्छ यच्छन्ति यावद्
भावं शृङ्गारसारस्वतमिह जयदेवस्य विष्व-
ग्वचांसि ॥”
तथास्य पर्य्यायः ।
“आम्रः प्रोक्तो रसालश्च सहकारोऽतिसौरभः ।
कामाङ्गो मधुदूतश्च माकन्दः पिकावल्लभः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**माकन्दी**, स्त्री, (माकन्द + ङीष् ।) आमलकी ।
नगरभेदः । इति मेदिनी । दे, ३८ ॥ (यथा,
महाभारते । ५ । ७२ । १५ ।
“-- पञ्चग्रामा वृता मया ।
अविस्थलं वृकस्थलं माकन्दीं वारणावतम् ।
अवसानञ्च गोविन्द ! कञ्चिदेवात्र पञ्चमम् ॥”)
पीतचन्दनम् । इति शब्दमाला ॥ माद्राणी
इति माङ्गनी इति च हिन्दी भाषा । तत्-
पर्य्यायः । बहुमूली २ मादनी ३ गन्धमूलिका ४ ।
अस्या गुणाः । कटुत्बम् । तिक्तत्वम् । मधु,
रत्वम् । दीपनत्वम् । रुच्यत्वम् । अल्पवात-
कारित्वम् । पथ्यत्वम् । वर्षासु न सिताधिक-
त्वञ्च । एका विशदमूली च श्यामला च तथा-

२ । ९७ । इति लच् ।) काव्यस्य गौडीरीत्य-
न्तर्गतस्य ओजोगुणस्याङ्गविशेषः । यथा, --
“ओजः समासभूयस्त्वं मांसलं पदडम्बरम् ॥”
इति काव्यचन्द्रिका ॥

**मांसलः**, त्रि, (अतिशयमांसमस्त्यस्येति । मांस +

“सिध्मादिभ्यश्च ।” ५ । २ । ५७ । इति लच् ।)
बलवान् । इत्यमरः । ३ । ६ । ४४ । स्थूलः ।
यथा, गारुडे ६६ अध्याये ।
“निस्वाश्च बहुरेखाः स्युर्निर्द्रव्याश्चिवुकैः कृशैः ।
मांसलैश्च धनोपेतैरवक्रैरधरैर्नृपाः ॥”
(मांसयुक्तः । यथा, बृहत्संहितायाम् । ६८ । २८ ।
“हृदयं समुन्नतं पृथु न वेपनं मांसलञ्च नृपतीनाम् ॥”
अतिबहुलः । यथा, नैषधे । ९ । २७ ।
“ह्रदस्य हंसावलिमांसलश्रियो
बलाकयेव प्रबला विडम्बना ॥”)

**मांसलफला**, स्त्री, (मांसलं फलमस्याः ।) वृन्ताकी ।

इति राजनिर्घण्टः ॥

**मांसविक्रयी**, [न्] त्रि, (मांसविक्रयोऽस्यास्तीति ।

मांसविक्रयेण जीवति वेति इनिः ।) आमिष-
विक्रयकर्त्ता । इति हलायुधः ॥ तत्पर्य्यायः ।
वैतंसिकः २ कौटिकः ३ मांसिकः ४ । इत्य-
मरः । २ । १० । १४ ॥ शौनिकः ५ । इति
जटाधरः ॥ कौटकिकः ६ । इति शब्दरत्ना-
बली ॥ (यथा मनौ । ३ । १५१ ।
“चिकित्सकान् देवलकान् मांसविक्रयिणस्तथा ।
विपणेन च जीवन्तो वर्ज्याः स्युर्हव्यकव्ययोः ॥”)

दिष्टत्वात् । वस्तुतस्तु हरिवंशे मृगोऽपि विहितः ।
“इक्ष्वाकुस्तु विकुक्षिं वै अष्टकायामथादिशत् ।
मांसमानय श्राद्धाय मृगं हत्वा महाबल ! ॥”
इत्यादिना मृगमांसबोधनात् ॥ पश्वभावे स्थाली-
पाकेन । यथा, गोभिलः । अपि वा स्थाली-
पाकं कुर्व्वीतेति । तद्विधानन्तु ।
“स्थालीपाकं पशुस्थाने कुर्य्याद्यद्यानुकल्पिकम् ।
श्रपयेत्तं सवत्सायास्तरुण्या गोः पयस्यनु ॥”
इति छन्दोगपरिशिष्टीयं ग्राह्यम् ॥ अन्विति
ओदनचरोः पश्चात् । अतएव ।
“पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च ।
तस्माद्दद्यात् सदा युक्तो विद्वत्सु ब्राह्मणेषु च ॥”
इति शातातपेनोक्तम् ॥ तस्मादन्नं प्रधानं
पूपादिकन्तु उपकरणत्वेन शक्तानामावश्यकं
सदेति श्रवणात् । इति श्राद्धतत्त्वम् ॥

**मांसिकः**, पुं, (मांसाय प्रभवति “तस्मै प्रभवति

सन्तापादिभ्यः ।” ५ । १ । १०१ । इति । मांस +
ठञ् । मांसेन जीवतीति ठञ् वा । मांसं पण्य-
मस्य । “तदस्य पण्यम् ।” ४ । ४ । ५१ । इति ठक्
वा । अथवा, मांसं नियुक्तमस्मै दीयते । इति

परा । इति राजनिर्घण्टः ॥

**माकरी**, स्त्री, (मकरयुक्ता पौर्णमास्यत्रेति ।

मकर + अण् + ङीष् ।) माघशुक्लसप्तमी । अत्र
स्नानादिविधिर्यथा । भविष्ये ।
“सूर्य्यग्रहणतुल्या हि शुक्ला माघस्य सप्तमी ।
अरुणोदयवेलायां तस्यां स्नानं महाफलम् ॥
माघे मासि सिते पक्षे सप्तमी कोटिभास्करा ।
दद्यात् स्नानार्घ्यदानाभ्यामायुरारोग्यसम्पदः ॥
अरुणोदयवेलायां शुक्ला माघस्य सप्तमी ।
गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समाः ॥”
कोटिभास्करा कोटिसप्तमीतुल्या सप्तम्या
भास्करदेवताकत्वात् । सूर्य्यग्रहणफलं स्नान-
जम् । सन्निहिते बुद्धिरन्तरङ्गेतिन्यायात् ।
तेन बहुशतसूर्य्यग्रहणकालीनगङ्गास्नानजन्य-
फलसमफलमत्र ज्ञेयम् ॥ * ॥ स्नानपरिपाटी

माह कृत्यकल्पलतायां विष्णुः ।
सप्तवदरपत्राणि
सप्तार्कपत्राणि च शिरसि निधाय, --
"ॐ यद्यज्जन्मकृतं पापं मया सप्तसु जन्मसु
।
तन्मे रोकञ्च शोकञ्च माकरी हन्तु सप्तमी ॥"
इत्युच्चार्य्य स्नायादिति शेषः । रोकं छिद्रम्
।
तिथिकृत्यस्य पौर्णमास्यन्तमासाङ्गत्वात्
माक-
रीपदं मकरार्कारब्धचान्द्रमासीयतिथिपरम्।
तिथिकृत्ये च कृष्णादिं व्रते शुक्लादिमेव च
।
विवाहादौ च सौरादिं मासं कृत्ये विनिर्द्दिशे-
दिति ब्रह्मपुराणात् मन्वन्तरादित्वेन तथा
युक्तत्वाच्च । यथा, मत्स्यपुराणम् ।
"यस्मान्मन्वन्तरादौ तु रथमापुर्द्दिवाकराः ।
माघमासस्य सप्तम्यां तस्मात् सा रथसप्तमी
॥
अरुणोदयवेलायां तस्यां स्नानं महाफलम्
।"
अतएव नारसिंहे रथाख्यायामित्युक्तम् ॥ *
॥
अर्घ्यदानपरिपाटी यथा, --
"अर्कपत्रैः सवदरैर्द्दूर्व्वाक्षतसचन्दनैः ।
अष्टाङ्गविधिनाचार्य्यं दद्यादादित्यतुष्टये ।
अष्टाङ्गमर्घ्यमापूर्य्य भानोर्मूर्द्धि्र्न निवेदयेत्
॥
अर्घ्यमन्त्रस्तु ।
जननी सर्व्वभूतानां सप्तमी सप्तसप्तिके ।
सप्तव्याहृतिके देवि नमस्ते रविमण्डले ॥
प्रणाममन्त्रस्तु ।
सप्तसप्तिवह प्रीत सप्तलोकप्रदीपन ।
सप्तम्याञ्च नमस्तुभ्यं नमोऽनन्ताय वेधसे
॥"
इति तिथ्यादितत्त्वम् ॥ * ॥
तस्यां सूर्य्यमुद्दिश्य रथयात्राफलं यथा, --
"माघमासस्य सप्तम्यां देवं शाम्बपुरं नराः ।
रथयात्रां प्रकुर्व्वन्ति सर्व्वद्वन्द्वविवर्जिताः ॥
गच्छन्ति तत्पदं शान्तं सूर्य्यमण्डलभेदकम्
।
एतत्ते कथितं देवि ! साम्बशापसमुद्भवम् ।

अस्य गुणाः । मधुरत्वम् । तिक्तत्वम् । अम्ल-
त्वम् ।
कफभ्रमहृल्लासमूर्च्छार्त्तिश्वासकासविषप्र
पहत्वञ्च ।
"माक्षिकं द्विविधं प्रोक्तं हेमाह्वं तारमाक्षिकम् ।
भिन्नवर्णविशेषत्वाद्रसवीर्य्यादिकं पृथक् ॥
तारपादादिके तारमाक्षिकञ्च प्रशस्यते ।
देहे हेमाभकं शस्तं रोगहृद्बलपुष्टिदम् ॥"
इति राजनिर्घण्टः ॥
अपि च ।
"लेखनो माक्षिको धातुः सुवर्णरजतद्युतिः ।
जराजित् पाण्डुरोगघ्नः क्षयकुष्ठज्वरापहः ॥
मधुरोऽम्लः कटुःपाके किञ्चिदुष्णोऽमृतोपमः ॥"
इति कश्चिद्राजवल्लभः ॥
(उपधातुविशेषः । यथा, सुखबोधे ।
"माक्षिकं तुत्थिताभ्रे च नीलाञ्जनशिलालकाः ।
रसकञ्चेति विज्ञेया एते सप्तोपधातवः ॥")

**माक्षिकजं**, क्ली, (माक्षिकात् जातम् । जन +
डः ।) शिक्थकम् । इति राजनिर्घण्टः ॥

**माक्षिकफलः**, पुं, (माक्षिकवत् मधुरं फलमस्य ।)
मधुनालिकेरिकः । इति राजनिर्घण्टः ॥

**माक्षिकाश्रयं**, क्ली, (माक्षिकानामाश्रयः ।
अभिधानात् क्लीवत्वम् ।) शिक्थकम् । इति
राजनिर्घण्टः ॥

**माक्षीकं**, क्ली, (मक्षिकाभिः कृतमित्यण् । निपा-
तादीर्घत्वम् ।) मधु । इति राजनिर्घण्टः ॥
(धातुविशेपः । यथा, कथासरित्सागरे ।
७६ । ३ ।
"माक्षीकधातुमधुपारदलोहाचूर्ण-
पथ्याशिलाजतुविडङ्गघृतानियोऽद्यात् ।
सैकानि विंशतिरहानि जरान्वितोऽपि
सोऽशीतिकोऽपि रमयत्यवलां युवेव ॥")

**माक्षीकशर्करा**, स्त्री, (माक्षीककृता शर्करा
शाकपार्थिवादिवत् समासः ।) सिताखण्डः ।
इति राजनिर्घण्टः ॥

**मागधः**, पुं, (मगधस्य तद्वंशस्यापत्यम् । "द्व्यञ्-
मगधकलिङ्गसूरमसादण् ।" ४ । १ । १७० ।
इति । अण् ।) पाणिस्वनकः । इति महा-
(यथा, महाभारते । १३ । ४८ । १२ ।
"वन्दी तु जायते वैश्यान्मागधो वाक्य-
जीवनः ।")
वर्णसङ्करजातिविशेषः । (यथा, मानवे ।
१० । ११ ।
"क्षत्त्रियाद्विप्रकन्यायां सूतो भवति जातितः ।
वैश्यान्मागधवैदेहौ राजविप्राङ्गनासुतौ ॥")
स तु क्षत्त्रियायां वैश्याज्जातः । भाट् इति
ख्यातः । मगधेषु भवो मागधः ष्णः इत्यमर-
भरतौ । २ । १० । २ । जरासन्धराजः ।
तथा, --
"मागधो न च हन्तव्यो भूयः कर्त्ता बलोद्यमम्
।"
इति श्रीभागवते १० स्कन्धः ॥
शुक्लजीरकः । मगधदेशोद्भवे त्रि । इति
मेदिनी । मे, ३४ ॥ (यथा, महाभारते ।
६ । ९ । ४९ ।
"अन्ध्राश्च बहवो राजन्नन्तर्गिर्य्यास्तथैव च ।
बहिर्गिर्य्याङ्गमलदा मागधा मालवाज्जटाः ॥")

**मागधादेवी**, स्त्री, राधिका । यथा, --
"तासान्तु मागधादेवी तप्तचामीकरप्रभा ।
वृन्दावनेश्वरी राधा नाम्ना धात्वर्थकारणात्
॥"
इति पाद्मे पातालखण्डे ९
अध्यायश्लोकार्द्धद्वयम् ॥

**मागधी**, स्त्री, (मागधे जाता । मगध + अण्,
ङीष् ।) यूथिका । पिप्पली । इत्यमरमेदिनी-
करौ । धे, । ३४ । २ । ४ । ९६ । (यथास्याः
पर्य्यायः ।
"पिप्पली च पलाशौण्डी वैदेही मागधी-
कणा ।
कृष्णोपकुल्या मगधी कोलास्यात्तिक्त तण्डुला
॥"
इति वैद्यकरत्नमालायाम् ॥)
त्रुटिः । गुजराटी एलाचि इति भाषा । इति
शब्दचन्द्रिका ॥ शर्करा । इति जटाधरः ॥
भाषाविशेषः । इति हेमचन्द्रः ॥ यथा च
साहित्यदर्पणे । ६ । १६० ।
"अत्रोक्ता मागधी भाषा राजान्तःपुरचारि-
णाम् ॥"

पापप्रशमनाख्यानं महापातकनाशनम् ॥”

इति वराहपुराणम् ॥

**माक्ष**, इ स्पृहि । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) इ माङ्क्षति नमध्यपाठे-

नैवेष्टसिद्धे इदनुबन्धो वेदेषूच्चारणभेदार्थः ।

इति दुर्गादासः ॥

**माक्षिकं**, क्ली, (मक्षिकाभिः कृतम् । मक्षिका +

“संज्ञायाम् ।” ४ । ३ । ११७ । इति ठक् ।)

मधु । इत्यमरः । २ । ९ । १०७ ॥

नीलवर्ण-

मध्यममक्षिकाकृततैलवर्णमधु । अस्य गुणाः

।

क्षौद्राल्लघुतरत्वम् । रूक्षत्वम् । श्रेष्ठत्वम् ।

श्वासादिरोगे विशेषतः प्रशस्ततरत्वञ्च ।

इति

राजवल्लभः ॥ धातुविशेषः । धातुमाखी इति

हिन्दीभाषा । तद्द्विविधम् । स्वर्णमाक्षिकं

रौप्यमाक्षिकञ्च । तत्पर्य्यायः । माक्षीकम् २

पीतकम् ३ धातुमाक्षिकम् ४ तापिच्छम् ५

ताप्यकम् ६ ताप्यम् ७ आपीतम् ८ पीत-

माक्षिकम् ९ आवर्त्तम् १० मधुधातुः ११

क्षौद्र-

धातुः १२ माक्षिकधातुः १३ । इति राज-

निर्घण्टः ॥ कदम्बः १४ चक्रनाम १५ अज-

नामकम् १६ । इति हेमचन्द्रः । ४ । १२०

॥

भारतम् ॥ वंशक्रमेण महत्त्ववेदिराजाग्रस्तुति-

कारी । तत्पर्य्यायः । मधुकः २ वन्दी ३ स्तुति-

पाठकः ४ । इत्यमरभरतौ । २ । ८ । ९७ ।

तस्योत्पत्तिर्यथा, --

ततोऽस्य दक्षिणं हस्तं ममन्थुस्ते तदा द्विजाः ।

मथ्यमाने च तत्राभूत् पृथुर्वैण्यः प्रतापवान् ॥

तस्य वै जातमात्रस्य यज्ञे पैतामहे शुभे ।

सूतः सूत्यां समुत्पन्नः सौत्येऽहनि महामते ! ॥

तस्मिन्नेव महायज्ञे जज्ञे प्राज्ञोऽथ मागधः ।

प्रोक्तौ तदा मुनिवरैस्तावुभौ सूतमागधौ ॥

स्तूयतामेष नृपतिः पृथुर्वैण्यः प्रतापवान् ।”

सूत्यामिति सूतिरभिषूतिः अभिषूयते कण्ड्यते

सोमोऽस्यामिति सूतिः सोमाभिषवभूमिस्त-

स्याम् । सौत्येऽहनि तस्मिन्नेव दिने । इति

विष्णुपुराणे १ अंशे ४१ अध्यायस्तट्टीका च ॥

(तद्देशभवे, त्रि । यथा, महाभारते । १ । ९५ ।

४१ ।

“अनश्वा खलु मागधीमुपयेमे अमृतां नाम

तस्यामस्य जज्ञे परीक्षित् ॥)

**माघः**, पुं, श्रीदत्तकसूनुशिशुपालवधमहाकाव्य-

कर्त्ता । इति तद्ग्रन्थशेषपुष्पिका ॥ स्वनाम-

ख्यातमहाकाव्यम् । यथा, --

पुष्पेषु जाती नगरेषु काञ्ची

नारीषु रम्भा पुरुषेषु विष्णुः ।

नदीषु गङ्गा नृपतौ च रामः

काव्येषु माघः कविकालिदासः ॥”

इति प्राचीनाः ॥

वैशाखादिद्वादशमासान्तर्गतदशममासः ।

मघायुक्ता पौर्णमासी यत्र मासे सः ॥ तत्-

पर्य्यायः । तपाः २ । इत्यमरः । ४ । १ । ४ ।

१५ ॥

स च त्रिविधः । मकरस्थरव्यारब्धशुक्लप्रति-

पदादिदर्शान्तो मुख्यचान्द्रः १ । कृष्णप्रति-

पदादिपौर्णमास्यन्तो गौणचान्द्रः २ । मकरस्थ-
रविकः सौरः ३ । इति मलमासतत्त्वीयलिखन-
स्वरसात् ॥ तत्र जातफलम् ।
“विद्याविनीतः स्वकुलप्रधानः
सदा सदाचारयुतः प्रवीणः ।
योगानुरक्तो विषयेष्वसक्तो
माघेऽथ मासे मघवानिवेशः ॥”
इति कोष्ठीप्रदीपः ॥ * ॥
अथ, माघकृत्यम् । पाद्मे ।
“स्वर्गलोके चिरं वासो येषां मनसि वर्त्तते ।
यत्र क्वापि जले तैस्तु स्नातव्यं मृगभास्करे ॥”
मृगो मृगास्यत्वेन मकरः । तत्स्थे भास्करे ।
तत्र सङ्कल्पः । अरुणोदयकाले जले मज्जनं
कृत्वा आचम्य उत्तराभिमुखः ॐ तत् सदित्यु-
च्चार्य्य कुशकुसुमतिलजलान्यादाय ओमद्य
माघे
मासि अमुकपक्षे अमुकतिथावारभ्य मकरस्थ-
रविं यावत् प्रत्यहममुकगोत्रोऽमुकदेवशर्म्मा
स्वर्गलोके चिरकालवासकामो विष्णुप्रीतिकामो
वा प्रातःस्नानमहं करिष्ये इति संकल्प्य
गङ्गाव्यतिरिक्तजलमात्रेऽपिस्नानं कर्त्तव्यम् ।
प्रतिदिनसङ्कल्पे तु आरभ्य मकरस्थरविं यावत्
प्रत्यहमिति न वक्तव्यं किन्तु मास्यनन्तरं
मकरस्थे
रवावित्यधिकं वक्तव्यम् । चान्द्रस्नानवाक्यन्तु
वैशाखकृत्येऽनुसन्धेयम् । तत्र सङ्कल्पं कृत्वा
यथोक्तविधिना स्नानेति कर्त्तव्यतां विधाय, --
“ॐ दुःखदारिद्र्यनाशाय श्रीविष्णोस्तोषणाय च
।
प्रातःस्नानं करोम्यद्य माघे पापप्रणाशनम् ॥
मकरस्थे रवौ माघे गोविन्दाच्युत माधव ।
स्नानेनानेन मे देव ! यथोक्तफलदो भव ॥”
इत्युच्चार्य्य स्नायात् । ततो वासुदेवं हरिं कृष्णं
श्रीधरञ्च स्मरेत्ततः ॥
“ॐ दिवाकर जगन्नाथ प्रभाकर नमोऽस्तु ते ।
परिपूर्णं कुरुष्वेदं माघस्नानं महाव्रतम् ॥”
चान्द्रस्नाने मकरार्कास्पष्टकाले मकरस्थे रवा-
वित्यस्य न पाठः । असमवेतार्थत्वात् । तीर्थे तु
।
“माघमासमिमं पुण्यं स्नाम्यहं देव माधव ।
तीर्थस्यास्य जले नित्यं प्रसीद भगवन् हरे ॥”
इति पठित्वा दुःखदारिद्र्यनाशायेत्यादिकं

प्रातःस्नानं करोम्यद्य माघे पापप्रणाशनम्
॥
मकरस्थे रवौ माघे गोविन्दाच्युत माधब ।
स्नानेनानेन मे देव यथोक्तफलदो भव ॥”
इति पठित्वा स्नायात् । ततः
वासुदेवं हरिं कृष्णं श्रीधरञ्च स्मरेत्ततः ॥
“दिवाकर जगन्नाथ प्रभाकर नमोऽस्तु ते ।
परिपूर्णं कुरुष्वेदं माघस्नानं महाब्रतम् ॥”
इति पठेत् ॥ * ॥
स्कन्दपुराणम् ।
“सम्प्राप्ते मकरादित्ये पुण्ये पुण्यप्रदे शुभे ।
कर्त्तव्यो नियमः कश्चिद्व्रतरूपी नरोत्तमैः
॥”
तत्तत्पुण्यकामः श्रीविष्णुप्रीतिकामो वा
इति
वाक्ये विशेषः ॥ * ॥ पौष्याः पौर्णमास्या
ऊर्द्ध्वं
माघपौर्णमासीपर्य्यन्तं
मदिरातुल्यत्वान्मूलकं न
भोक्तव्यम् ॥ * ॥ पौष्या ऊर्द्ध्वं
माघकृष्णाष्टम्यां
छागमांसेन श्राद्धं कर्त्तव्यम् । मांसाभावे
पायसोपकरणेन । तदभावे केवलान्नेन वा
श्राद्धं कर्त्तव्यम् ॥ * ॥ अथ रटन्तीचतुर्द्दशी
।
“माघे मास्यसिते पक्षे रटन्त्याख्यचतुर्द्दशी
।
तस्यामुदयवेलायां स्नाता नावेक्षते यमम्
॥”
उदयवेलायां अरुणोदयवेलायाम् ।
“अनर्काभ्युदिते काले माघे कृष्णचतुर्द्दशी ।
सतारव्योमकाले तु तस्यां स्नानं
महाफलम् ॥
स्नात्वा सन्तर्प्य तु यमान् सर्ब्बपापैः
प्रमुच्यते ।”
अत्र तिथिकृत्यत्वाद्गौणचान्द्रादरः ।
तत्रोभय-
दिने अरुणोदयसतारकाले
मुहूर्त्तान्यूनचतुर्द्दशी-
लाभे पूर्ब्बदिने स्नानं यमतर्पणञ्च ।
एकदिन-

सरस्वतीपूजनमहं करिष्ये इति सङ्कल्प्य शाल-
ग्रामे घटादिस्थजले वा पूजयेत् ।
“ॐ तरुणशकलमिन्दोर्बिभ्रती शुभ्रकान्तिः
कुचभरनमिताङ्गी सन्निषण्णा सिताब्जे ।
निजकरकमलोद्यल्लेखनीपुस्तकश्रीः
सकलविभवसिद्ध्यै पातु वाग्देवता नः ॥”
इति ध्यात्वावाह्य एतत् पाद्यं ॐ सरस्वत्यै
नमः ।
इत्यादिना नैवेद्यान्तेन पूजयेत् । ततः
“ॐ भद्रकाल्यै नमो नित्यं सरस्वत्यै नमो नभः
।
वेदवेदाङ्गवेदान्तविद्यास्थानेभ्य एव च स्वाहा
॥”
इति ब्रह्मपुराणीयेन पुष्पाञ्जलिना त्रिः पूजयेत् ।
मत्स्यसूक्ते । सरस्वतीं संपूज्य ।
“ॐ यथा न देवो भगवान् ब्रह्मा लोकपिता-
महः ।
त्वां परित्यज्य सन्तिष्ठेत्तथा भव वरप्रदा ॥
वेदाः शास्त्राणि सर्व्वाणि नृत्यगीतादिकञ्च यत्
।
न विहीनं त्वया देवि ! तथा मे सन्तु सिद्धयः ॥
लक्ष्मीर्मेधा धरा पुष्टिर्गौरी तुष्टिः प्रभा धृतिः ।
एताभिः पाहि तनुभिरष्टाभिर्मां सरस्वति ! ॥”
इति मत्स्यपुराणीयैः प्रार्थ्य प्रणमेत् ॥ * ॥
“बन्धुजीवञ्च द्रोणञ्च सरस्वत्यै न दापयेत् ।
आचारात् पुस्तकञ्च पूजयेत् । ॐ मस्याधाराय
नमः । इति मस्याधारं पूजयेत् । ॐ लेखन्यै
नमः । इति लेखनीं पूजयेत् ॥ * ॥
अथ माघसप्तमी ।
तत्रोभयदिने अरुणोदयकाले सप्तमीलाभे पूर्ब्ब-
दिने एकदिने तल्लाभे तद्दिने । अरुणोदयकाले
सामान्यजले ॐ अद्येत्यादिं
सूर्य्यग्रहणकालीन-
गङ्गास्नानजन्यफलसमफलप्राप्तिकामआयुरा-
रोग्यसम्पत्कामो वारुणोदयवेलायां स्नानमहं
करिष्ये । इति सङ्कल्प्य यथाविधि स्नानेति
कर्त्तव्यतां विधाय सप्तवदरपत्राणि सप्तार्क-
पत्राणि च शिरसि निधाय ।
“ॐ यद्यज्जन्मकृतं पापं मया सप्तसु जन्मसु ।
तन्मे रोकञ्च शोकञ्च माकरी हन्तु सप्तमी ॥”
इत्युच्चार्य्य स्नायात् । ततो यथाकालं सप्त-
वदरीफलार्कपत्रशालितिलदूर्व्वाक्षतचन्दनयुक्त-

पठितव्यम् । गङ्गायान्तु पद्मपुराणे ।
“दिने दिने सहस्रन्तु सुवर्णानां विशाम्पते ! ।
तेन दत्तं हि गङ्गायां यो माघे स्नाति माधव ॥”
मानव इति क्वचित् पाठः । एकदा सङ्कल्पे तु
प्रतिदिनसहस्रसुवर्णदानजन्यफलसमफलप्राप्ति-
कामः श्रीविष्णुप्रीतिकामो वा माघमासं यावत्
प्रत्यहं गङ्गायां प्रातःस्नानमहं करिष्ये । इति
वाक्ये विशेषः । प्रतिदिनसंकल्पे तु
सहस्रसुवर्ण-
दानजन्यफलसमफलप्राप्तिकामोविष्णुप्रीति-
कामो वा गङ्गायां प्रातःस्नानमहं करिष्ये इति
यथोक्तविधिना स्नानेतिकर्त्तव्यतां विधाय ।
“ॐ माघमासमिमं पुण्यं स्नाम्यहं देव माधव ।
तीर्थस्यास्य जले नित्यं प्रसीद भगवन् हरे ॥
दुःखदारिद्र्यनाशाय श्रीविष्णोस्तोषणाय च ।

मात्रे तल्लाभे तद्दिने ।
माघस्नानकालाभ्यन्तरे
तादृशचतुर्द्दशीलाभे माघप्रातःस्नायिना
तन्त्रेण
द्वयं कार्य्यम् । तत्र ॐ तत् सदद्य माघे
मासि
कृष्णे पक्षे रटन्त्यां चतुर्द्दश्यां तिथौ
अरुणोदय-
वेलायां अमुकगोत्रः श्रीअमुकदेवशर्म्मा
यमा-
दर्शनकामो गङ्गायां स्नानमहं करिष्ये इति
सङ्क्यल्प्य यथाविधि स्नानं प्रागुक्तं
चतुर्द्दशयम-
तर्पणञ्च कुर्य्यात् ॥
अथ श्रीपञ्चमी ।
‘तत्रोभयदिने पूर्ब्बाह्णे पञ्चमीलाभे पूर्ब्बदिने
लक्ष्मीसरस्वत्योः पूजनं युग्मात् ।
एकदिनप्राप्ते
तद्दिने । एवं षड्वर्षं शुक्लपञ्चमीव्रतेऽपि ।
ततश्च ॐ तत् सदित्युच्चार्य्य ॐ
मद्येत्यादि लक्ष्मी-
प्रीतिकामो लक्ष्मीपूजनमहं करिष्ये इति
सङ्कल्प्य शालग्रामे जले वा पूजयेत् । ॐ
पाशक्षमालिकाम्भोजशृणिभिर्याम्यसौम्ययोः
।
पद्मासनस्थां ध्यायेच्च श्रियं
त्रैलोक्यमातरम् ॥
गौरवर्णां सुरूपाञ्च सर्व्वालङ्कारभूषिताम् ॥
रौक्मपद्मव्यग्रकरां वरदां दक्षिणेन तु ॥
इत्यनेन ध्यात्वा एतत् पाद्यं ॐ लक्ष्म्यै
नमः ।
इत्यादिना नैवेद्यान्तेन पूजयेत् ।
ॐ नमस्ते सर्व्वदेवानां वरदासि हरिप्रिये !
।
या गतिस्त्वत्प्रपन्नानां सा मे
भूयात्त्वदर्च्चनात् ॥
इत्यनेन पुष्पाञ्जलित्रयेण प्रणमेत् ॥ * ॥ ॐ
तत्
सदित्युच्चार्य्य ओमद्येत्यादि
सरस्वतीप्रीतिकामः

जलमादाय ओमद्येत्यादि आयुरारोग्यसम्पत्-
कामः श्रीसूर्य्यायार्घ्यमहं ददे । इति सङ्कल्प्य
‘ॐ नमो विवस्वते ब्रह्मन् भास्वते विष्णु तेजसे
जगत्सवित्रे शुचये सवित्रे कर्म्मदायिने ॥’
इत्यनन्तरम् ।
“ॐ जननी सर्व्वभूतानां सप्तमी सप्तसप्तिके ।
सप्तव्याहृतिके देवि ! नमस्ते रविमण्डले ॥”
इति प्रठित्वा इदमर्घ्यं श्रीसूर्य्याय नम इत्यर्घ्यं
दत्त्वा ।
“ॐ सप्तसप्तिवह प्रीत सप्तलोकप्रदीपन ।
सप्तम्यां हि नमस्तुभ्यं नमोऽनन्ताय वेधसे ॥
इत्यनेन प्रणमेत् । शूद्रेणापि स्नाने तूष्णीं
विधा-
नात् स्नानमन्त्रं विना अर्घ्यप्रणाममन्त्राः
पाठ्याः
पौराणिकत्वात् । गङ्गायान्तु बहुशतसूर्य्यग्रहण-
कालीनगङ्गास्नानजन्यफलसमफलप्राप्तिकामो

गङ्गायां स्नानमहं करिष्ये इति वाक्ये विशेषः ।
अत्रार्घ्यदानमङ्गं एतत् स्नानादेव माघप्रातः-
स्नानं तन्त्रेणैव सिध्यति ॥ * ॥
अथ विधानसप्तमीव्रतम् ।
प्रथमतो ब्राह्मणान् स्वस्तिवाच्य ॐ सूर्य्यः सोम
इत्यादि पठित्वा ताम्रादिपात्रे कुशतिलजला-
न्यादाय ॐ तत् सदित्युच्चार्य्य ओमद्य माघे
मासि शुक्ले पक्षे सप्तम्यान्तिथावारभ्य प्रति-
मासीयशुक्लसप्तम्यां पौषसप्तमीं यावत् आरो-
ग्यसम्पत्कामोऽभीष्टतत्तत्फलकामोवा अर्का-
ग्रादीतरभोजनविच्छित्तिविधान्म सप्तमीव्रत-
महं करिष्ये इति सङ्कल्प्य संयमपारणसहितं
तत्तन्मासि तत्तन्नियमं कुर्य्यात् । तत्र माघे
अर्काग्रमात्रं भुञ्जीत । फाल्गुने अन्तरीक्ष-
गृहीतं कपिलाविड्यवमात्रप्रमाणंतदभावे
अन्यगोमयमपीति । चैत्रे मरीचमेकम् ।
वैशाखे किञ्चिज्जलम् । ज्यैष्ठे अपक्वकदली-
फलमध्यकणामात्रम् । आषाढे स्वच्छायद्विगुण-
समये यवप्रमाणं कुशमूलम् । श्रावणे नक्तं
काले अल्पहविष्यौदनम् । भाद्रे शुद्धोपवासः ।
आश्वेने पञ्चमार्द्धयामे मयूराण्डप्रमाणं हवि-
ष्यान्नम् । कार्त्तिके अर्द्धप्रसृतिमात्रं कपिला-
क्षीरं तदभावे क्षारान्तरम् । मार्गशीर्षे प्राङ्-
मुखो वाय्वशनम् । पौषे स्वल्पं घृतम् । तदन-
न्तरञ्च ।
"ब्राह्मणान्भक्षयेत् भक्त्या गुडक्षीरनिरामिषैः ।
विप्राय दक्षिणा देया विभवस्यानुरूपतः ॥
अष्टम्यां पारणं कुर्य्यात् कट्वम्लरहितेन च ।
मुद्गमाषतिलादीनि घृतञ्चैव विवर्ज्जयेत् ॥
एकसिद्धं भक्ष्यमुक्तमर्कतन्त्रानुसारतः ॥"
चान्द्रमासविशेषोल्लेखवत् अनन्तादिव्रतवत्
मलमासेतरे तत्तु कर्त्तव्यम् ॥ * ॥
अथारोग्यसप्तमी ।
तत्र पूर्ब्बवत् सप्तम्यान्तिथावारभ्य ऐहिकारोग्य
धनधान्यपारलौकिकशुभस्थानप्राप्तिकामःसंव-
त्सरं यावत् आरोग्यसप्तमीव्रतमहंकरिष्ये
इति सङ्कल्प्य प्रतिमासशुक्लसप्तम्यां शालग्रामे
घटादिस्थजले वा पूजयेत् । रक्ताम्बुजासन-
मिति ध्यात्वा एतत् पाद्यं ॐ सूर्य्याय नम
इत्यादिभिः संपूज्य ।
"आदित्य भास्कर रवे भानो सूर्य्य दिवाकर ।
प्रभाकर नमस्तेऽस्तु रोगादस्मान् प्रमोचय ॥"

आभिरद्भिरवाप्नोतु पुत्त्रपौत्त्रोचितां क्रियाम्
॥"
इत्यनेन प्रार्थयेत् । क्षत्त्रियादिभिः
पितृतर्पणात्
पूर्ब्बं एतत् कर्त्तव्यम् ॥ * ॥ भैम्यामेकादश्या-
मुपोष्य द्वादश्यां तिलोद्वर्त्तनमावश्यकं कर्त्त-
व्यम् । स्नानतर्पणमहादानभोजनादि यथा-
लाभं कुर्य्यात् ॥ * ॥ माघपौर्णमास्यां
युगाद्या-
त्वेन पार्व्वणविधिना श्राद्धं कर्त्तव्यम् ।
अनन्त-
फलकामनया स्नानदानञ्च कर्त्तव्यम् ।
तस्यां दानप्रमाणन्तु तिथितत्त्वेऽनुसन्धेयम् ॥
इति कृत्यतत्त्वम् ॥ * ॥ * ॥
अथ माघस्नानफलम् ।
"व्रतदानैस्तपोभिश्च न तथा प्रीयते हरिः ।
माघमज्जनमात्रेण यथा प्रीणाति केशवः ॥
न समं विद्यते किञ्चित् तेजः सौरेण तेजसा ।
तद्वत् स्नानेन माघस्य न समाः क्रतुजाः
क्रियाः ॥
प्रीतये वासुदेवस्य सर्व्वपापाद्विमुक्तये ।
माघस्नानं प्रकुर्व्वीत स्वर्गलाभाय मानवः ॥
किं रक्षितेन देहेन सुपुष्टेन बलीयसा ।
अध्रुवेणाशु हेयेन माघस्नानं विना भवेत् ॥
मकरस्थे रवौ यो हि न स्नात्यनुदिते रवौ ।
कथं पापैः प्रसुच्येत कथं स त्रिदिवं व्रजेत् ॥
ब्रह्महा हेमहारी च सुरापो गुरुतल्पगः ।
माघस्नायी विपापः स्यात्तत्संसर्गी च पञ्चमः
॥
उपपातकानि सर्व्वाणि पातकानि महान्ति च
।
भस्मीभवन्ति सर्व्वाणि माघस्नायिनि मानवे
॥
पावका इव दीप्यन्ते माघस्नाता नरोत्तमाः ।
विमुक्ताः सर्व्वपापेभ्यो मेघेभ्य इव चन्द्रमाः ॥
आर्द्रं शुष्कं लघु स्थूलं वाङ्मनःकर्म्मभिः कृतम्
।
माघस्नानं दहेत् सर्व्वं पावकः समिधो यथा ॥
प्रामादिकञ्च यत् पापं ज्ञानाज्ञानकृतञ्च यत् ।
स्नानमात्रेण तन्नश्येत् मकरस्थे दिवाकरे ॥
निष्पापास्त्रिदिवं यान्ति पापिष्ठा यान्ति शुद्ध-
ताम् ।

व्याकरणम् ॥ (मघवन् + अण् । "मघवा
बहु-
लम् ।" ६ । ४ । १२८ । इति विकल्पान्न-
त्रादेशः । त्रि, यथा, माघे । ९ । २५ ।
"वसुधान्तनिःसृतमिवाहिपते
पटलं फणामणिसहस्ररुचाम् ।
स्फुरदंशुजालमथ शीतरुचः
ककुभं समस्कुरुत माघवनीम् ॥")

**माघी**, स्त्री, (मघया युक्तः कालः अस्यां इति ।
मघा + "नक्षत्रेण युक्तः कालः ।" ४ । २ ।
३ ।
इत्यण् ङीप् ।) मघायुक्ता पौर्णमासी ।
यथा,
"पुष्ययुक्ता पौर्णमासी पौषी मासे तु यत्र सा
।
नाम्ना स पौषो माघाद्याश्चैवमेकादशापरे
॥"
इत्यमरः । १ । ४ । १३ ॥ माघी पूर्णिमा ।
यथा, अयोध्याकाण्डे भरतशपथे ।
"आषाढी कार्त्तिकी माघी तिथयः पुण्य-
सम्भवाः ।
अप्रदानवतो यान्तु यस्यार्य्योऽनुमतो गतः
॥"
विष्णुधर्म्मोत्तरे ।
"पौर्णमासी तथा माघी श्रावणी च नरो-
त्तम ! ।
प्रौष्ठपद्यामतीतायां तथा कृष्णा त्रयोदशी ॥
एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजा-
पतिः ॥"
सा च कलियुगाद्या । यथा, --
"अथ भाद्रपदे कृष्णे त्रयोदश्यान्तु द्वापरम्
।
माघे च पौर्णमास्यां वै घोरं कलियुगं
स्मृतम् ॥"
अस्यां कर्म्मणोऽनन्तफल यथा, मात्स्ये ।
"शतमिन्दुक्षये पुण्यं सहस्रन्तु दिनक्षये ।
विषुवे शतसाहस्रमा का मा वैष्वनन्तकम्
॥"
आ का मा वैषु आषाढीकार्त्तिकीमाघीवैशा-
खीषु । इति तिथ्यादितत्त्वम् ॥ माघ्यां
मघा-

इति त्रिःपूजयेत् । एवं संवत्सरे पूर्णे दक्षिणां दद्यात् । ब्राह्मणांश्च भोजयेत् । विशेषमासानु-द्देशादमावास्याव्रतवत् मलमासेऽपि कर्त्तव्यम् ॥

अथ भीष्माष्टमी ।

अष्टम्यां ब्राह्मणः पितृतर्पणं कृत्वा

"ॐ वैयाघ्रपद्यगोत्राय साङ्कृतिप्रवराय च ।

अपुत्राय ददाम्येतत् सलिलं भीष्मवर्म्मणे ॥"

इति पितृवत् भीष्मं तर्पयेत् ॥ ततः कृता-ञ्जलिः ।

"भीष्मः शान्तनवो वीरः सत्यवादी जितेन्द्रियः ।

सन्देहोऽत्र न कर्त्तव्यो माघस्नाने नराधिप ! ॥

सर्व्वेऽधिकारिणो ह्यत्र विष्णुभक्तौ यथा नृप ! ।

सर्व्वेषां स्वर्गदो माघः सर्व्वेषां पापनाशनः ॥

एतदेव परो मन्त्रो ह्येतदेव परं तपः ।

प्रायश्चित्तं परञ्चैव माघस्नानमनुत्तमम् ॥

नृणां जन्मान्तराभ्यासात् माघस्नानमतिर्भ्भवेत् ।

अध्यात्मज्ञानकौशल्यं जन्माभ्यासाद्यथा नृप ! ॥

संसारकर्द्दमालेपप्रक्षालनविशारदम् ।

पावनं पावनानाञ्च माघस्नानं परन्तप ! ॥

स्नाता माघे च ये राजन् ! सर्व्वकामफलप्रदे ।

ते तांश्च भुञ्जते लोकांश्चन्द्रसूर्य्यग्रहोपमान् ॥"

इति श्रीपद्मपुराणे उत्तरखण्डे ४ अध्यायः ॥

**माघवती**, स्त्री, (मघवान् देवताऽस्याः यद्वा, मघवत इयमिति । मघवत् + अण् । "मघवा बहुलम् ।" ६ । ४ । १२८ । इति त्रादेशः । ङीप् ।) पूर्ब्बदिक् । इति राजनिर्घण्टः ॥

**माघवनं**, क्ली, इन्द्रसम्बन्धि वस्तु । मघवत इद-मित्यर्थे ष्णप्रत्ययेन निष्पन्नम् । इति मुग्धबोध-

योगाभावे सिंहस्थगुरावकालप्रतिप्रसवो यथा,

शातातपः ।

"माघ्यां वदि मघा नास्ति सिंहे गुरुरकार-णम् ॥"

राजमार्त्तण्ड दक्षः ।

"गुरौ हरिस्थे न विवाहमाहु-र्हारीतगर्गप्रमुखा मुनीन्द्राः ।

यदा न माघी मघसंयुता स्यात्-तदा च कन्योद्वहनं वदन्ति ॥"

इत्थञ्च माघ्यां मघायोगाभावेऽपि श्रुतिवेधादि-मघास्थेऽपि गुरौ भवति विवाहस्तु गुरोर्म्मघा-परित्यागाद्वेव । इति मलमासतत्त्वम् ॥

**माघोनी**, स्त्री, (मघवान् देवताऽस्याः । मघोन इयमिति वा । इति मघवन् + अण् ङीप् ।) पूर्ब्बा दिक् । इति राजनिर्घण्टः ॥ (इन्द्रसम्ब-न्धिनि, त्रि । यथा, ऋग्वेदे । १० । ६६ । २ ।

"मरुद्गणे वृजने मन्म धीमहि

माघोने यज्ञं जनयन्त सूरयः ॥"

"माघोने मघवत इन्द्रस्य सम्बन्धिनि मरुद्गणे ।"

इति तद्भाष्ये सायनः ॥)

**माघ्यं**, क्ली, (माघे जातमिति । माघ + "तत्र

जातः । ४ । ३ । २५ । इति यत् ।) कुन्दपुष्पम् । इत्यमरः । २ । ४ । ७३ ॥

**माङ्गल्यं**, त्रि, (मङ्गलाय हितमिति । मङ्गल +

ष्यञ् ।) मङ्गलाय हितम् । यथा, राजमार्त्तण्डे ।
"माङ्गल्येषु विवाहेषु कन्यासंवरणेषु च ।
दश मासाः प्रशस्यन्ते चैत्रपौषविवर्ज्जिताः ॥"
इत्युद्वाहतत्त्वम् ॥
अपि च । भीमपराक्रमे ।
"अधिमासे दिनपाते धनुषि रवौ भानुलङ्घिते मासि ।
चक्रिणि सुप्ते कुर्य्यान्न माङ्गल्यं विवाहञ्च ॥"
इति मलमासतत्त्वम् ॥
(मङ्गलस्य भावः । "मङ्गेरलच् ।" उणा० ५ । ७० । इत्यस्य वृत्तौ "भावे ष्यञि माङ्-ल्यम् ।" इत्युज्ज्वलदत्तः ॥)

**माङ्गल्यार्हा**, स्त्री, (माङ्गल्यस्य अर्हा ।) त्राय-

माणा लता । इति राजनिर्घण्टः ॥

**माचः**, पुं, (मा अञ्चतीति । अन्च + कः ।)

पन्थाः । इति शब्दरत्नावली ॥

**माचलः**, पुं, (मा चलति भोगमदत्वाचिरेणैव

स्थानं न मुञ्चतीति । चल + अच् ।) ग्रहः । रोगः । (मा चलति स्वच्छन्दं न प्रसरतीति । चल् + अच् ।) । वन्दी । चौरः । इति शब्द-रत्नावली ॥ मेदिन्यां ग्रहस्थाने ग्राह इति पाठः ॥

**माचिका**, स्त्री, (मा अञ्चति क्षतादिकं त्यक्त्वा

न गच्छतीति । अन्च् + कः । ततः कन् । टाप् । अत इत्वम् ।) मक्षिका । इति त्रिकाण्ड-शेषः ॥ अम्बष्ठा । इति राजनिर्घण्टः ॥

**माचिरं**, व्य (मा चिरम् ।) शीघ्रम् । यथा, --

"अथाब्रवीत्तदा मत्स्यस्तानृषीन् प्रहसन् शनैः ।
अस्मिन् हिमवतः शृङ्गे नावं बध्नीत मारिचम् ॥"
इति वनपर्व्वणि मात्स्योपाख्यानम् ॥

**माचीपत्रं**, क्ली, सुरपर्णम् । इति राजनिर्घण्टः ॥

**माजलः**, पुं, (मा जलमित्यभिप्रायोऽस्य । वर्षण-

वारिभ्योऽस्य पक्षयोर्भारजडत्त्वात् तथात्वम् ।) चासपक्षी । यथा, शब्दचन्द्रिकायाम् ।

मठति निवसति सूर्य्यसमीपे माठरः मठ वास-
मर्द्दयोः नाम्नीति अरण् मठरस्यापत्यं माठर इति स्वामी ॥ पिङ्गलवर्णत्वात् पिङ्गलः । दण्ड-
कारित्वाद्दण्डः । इति स्वामी ॥ परितः पार्श्वे
वर्त्तन्ते पारिपार्श्विकाः ढघे कादिति ष्णिकः ।
सूर्य्यः कारुणिकत्वाद्दैत्यानां वरं दास्यतीति
धिया इन्द्रादयोऽष्टादशनामान्तरेण प्रच्छन्ना अस्य पार्श्वेषु स्थिताः । अत्र प्राधान्यात्त्रयो
ऽभिहिताः । अत्र माठरनामा यमः । पिङ्गल-नामा वह्निः । दण्डनामा शक्रः ।
तथाचागमः ।
"तत्र शक्रो वामपार्श्वे दण्डाख्यो दण्डनायकः ।
वह्निस्तु दक्षिणे पार्श्वे पिङ्गलो नामतश्च सः ॥
यमोऽपि दक्षिणे पार्श्वे ख्यातो माठरसंज्ञकः ।"
एवमपरे हरगुहादयः कुल्माषपक्ष्यादिसंज्ञकाः
पूर्ब्बद्वारादिषु स्थिताः । इति तट्टीकायां भरतः ॥
व्यासः । इति मेदिनी । रे, २०३ ॥ विप्रः । इति
हेमचन्द्रः । ३ । ५१० ॥ शौण्डिकः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**माडः**, पुं, वृक्षविशेषः । माडवेनौ इति कोकणे

प्रसिद्धः । तत्पर्य्यायः । माडाद्रुमः २ दीर्घः ३
ध्वजवृक्षः ४ वितानकः ५ मद्यद्रुमः ६ । अस्य
गुणाः । मोहकारित्वम् । श्रमहरत्वम् । श्लेष्म-
कारकत्वञ्च । इति राजनिर्घण्टः ॥

**माडवः**, पुं, वर्णसङ्करजातिविशेषः । यथा, --

इति भाषा । तत्पर्य्यायः । स्थलपद्मः २ इति
रत्नमाला ॥ माणः ३ बृहच्छदः ४ छत्रपत्रः ५ ।
इति केचित् ॥ (यथा, सुश्रुते सूत्रस्थाने ४७ अः ।
"स्थूलशूरणमाणकप्रभृतयः ॥")

**माणवः**, पुं, (मनोरपत्यं पुमान् । मनु + अपत्य-

विवक्षायां अण् ।
"अपत्ये कुत्सिते मूढेमनोरौत्सर्गिकः स्मृतः ।
नकारस्य च मूर्द्धन्यस्तेन सिद्ध्यति माणवः ॥"
४ । १ । १६१ । इत्यत्र काशिका सूत्रवृत्तिः ।)
मनुष्यः । बालकः । इति शब्दरत्नावली ॥
षोडशयष्टिकहारः । इति हेमचन्द्रः । ३ । ३२४ । ४ ॥

**माणवकः**, पुं, (अल्पो मानवः । "अल्पे ।" ५ ।

३ । ८५ । इति कन् ।) बालकः । स च षोडश-
वर्षपर्य्यन्तप्रथमवयस्कः ॥ (यथा, श्रीभागवते ।
८ । १९ । ३२ ।
"एष ते स्थानमैश्वर्य्यं श्रियं तेजोयशः श्रुतम् ।
दास्यत्याच्छिद्य शक्राय मायामाणवको हरिः ॥"
माणवको बालः स इव ।) हारभेदः । स तु
विंशतियष्टिकः । विशनरहार इति भाषा ।
इत्यमरभरतौ । २ । ६ । १०६ ॥ (बृहत्संहिता-
मते तु षोडशयष्टिको हारः । यथा, तत्रैव ।
८१ । ३३ ।
"द्वात्रिंशता गुच्छो विंशत्या कीर्त्तितोऽर्द्ध-गुच्छाख्यः ।
षोडषभिर्माणवको द्वादशभिश्चार्द्धमाणवकः ॥")
कुपुरुषः । इति मेदिनी । के, २०९ ॥ वटुः ।
इति हेमचन्द्रः ॥

"माजलश्चासकः कुब्जो विहारो बिन्दुरेखकः ।"

**माञ्जिष्ठं**, क्ली, (मञ्जिष्ठया रक्तम् । "तेन रक्तं

रागात् ।" ४ । २ । ४ । इत्यण् ।) लोहितवर्णः ।
(यथा, बृहत्संहितायाम् । ३० । १२ ।
"कल्माषबभ्रुकपिलाविचित्रमाञ्जिष्ठहरितशब
लाभाः ।"
तद्वति, त्रि । इति हेमचन्द्रः ॥

**माटाम्रकः**, पुं, (माटाख्य आम्रः । तत्रः कन् ।)

वृक्षभेदः । यथा, --
"वल्वङ्की कर्क्वठीर्व्वारुः सेटुमाटाम्रकौ समौ ।"
इति भूरिप्रयोगः ॥

**माठरः**, पुं, सूर्य्यपार्श्वपरिवर्त्तिविशेषः । यथा, --

"माठरः पिङ्गलो दण्डश्चण्डांशोः पारि-
पार्श्विकाः ।"
इत्यमरः । १ । ३ । ३१ ॥

"लेटस्तीवरकन्यायां जनयामास षण्णरान्
।
माल्लं मल्लं माडवञ्च भडं कोलञ्च कन्दरम्
॥"
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १० अध्यायः ॥
पुस्तकान्तरे माडवस्थाने मातर इति पाठः
।
कन्दरस्थाने कलन्दर इति पाठः ॥

**माड्डुकः**, पुं, (मड्डुकवादनं शिल्पमस्येति ।

"मड्डुकझर्झरादणन्यतरस्याम् ।" ४ । ४ ।
५६ ।
इति अण् ।) माड्डुकिकः । मड्डुवादकः ।
इति सिद्धान्तकौमुदी ॥

**माढिः**, स्त्री, (माहतीति । माह + "अन्येभ्यो-

ऽपि दृश्यन्ते ।" उणा० ४ । १०५ । इति
क्तिन् ।)
देशभेदः । पत्रशिरा । इति रत्नकोषः ॥
दन्त-
भेदः । इति केचित् । इत्यमरटीकायां
भरतः ॥
पत्रभङ्गम् । दैन्यप्रकाशनम् । इति मेदिनी ।
ढे, २ ।
शब्दरत्नावली च ॥ माढिर्दैन्यं पत्रशिरार्च्चा
मूढस्तन्द्रिते जडे । इति हेमचन्द्रः । ४ ।
१९० ॥

**माढी**, स्त्री, (माढि + कृदिकारादिति ङीष ।)

दन्तशिरा । इति शब्दरत्नावली ॥

**माणकं**, क्ली, (मीयते पूज्यते परिमीयते वेति ।

मान मा वा + घञ् । स्वार्थे कन् ।
निपातनाण्ण-
त्वम् ।) कन्दविशेषः । माणकचु इति भाषा
।
अस्य गुणाः । स्वादुत्वम् । शीतत्वम् ।
गुरुत्वम् ।
शोथहरत्वम् । कटुत्वञ्च । इति राजवल्लभः
॥
यथा सुश्रुते सूत्रस्थाने । ४६ अध्याये ।
"माणकं स्वादु शीतञ्च गुरु चापि प्रकी-
र्त्तितम् ॥")

**माणकः**, पुं, (मान् + घञ् । ततः कन् निपातना-

**माणवीनं**, त्रि, माणवसम्बन्धि । माणवस्येदमित्यर्थे

णीनप्रत्ययेन निष्पन्नम् ॥ (माणवाय हितं ।
"माणवचरकाभ्यां खञ् ।" ५ । १ । ११ ।
इति
माणव + खञ् ।)

**माणव्यं**, क्ली, शिशुसमूहः । इत्यमरः । ३ । २ ।
४१ ॥

माणवानां समूहो माणव्यं विकारसंघेति
ष्यः । माणवो बालः मूर्द्धन्यमध्यः
दन्त्यमध्य
इत्येके । इति तट्टीकायां भरतः ॥
(माणवानां
समूहः । "ब्राह्मणमाणवबाडवाद्यन् ।" ४
।
२ । ४२ । इति यन् ।)

**माणिका**, स्त्री, (माणक + टाप् अकारस्येत्वम् ।)

अष्टपलपरिमाणम् । इति शब्दमाला ॥

**माणिक्यं**, क्ली, (मणिप्रकारः । मणि "+
स्थूलादिभ्यः

प्रकारवचने कन् ।" ५ । ४ । ३ । इति
प्रशं-
सायां कन् । ततो मणिकमेवेति । मणिक +
"चातुर्वर्णादीनामुपसंख्यानम् ।" ५ । १ ।
१२४ ।
इति वार्त्तिकबलात् ष्यञ् ।) रत्नविशेषः ।
माणिक् इति भाषा । तत्पर्य्यायः । शोण-
रत्नम् २ रत्नराट् ३ रविरत्नकम् ४ शृङ्गारी
५
रङ्गमाणिक्यम् ६ तरुणम् ७ रत्ननामकम्
८
रागयुक् ९ पद्मरागः १० रत्नम् ११
शोणो-
पलः १२ सौगन्धिकम् १३ लोहितकम्
१४
कुरुबिन्दम् १५ । अस्य गुणाः । मधुरत्वम्
।

स्निग्धत्वम् । वातपित्तनाशित्वम् । रत्नप्रयोगे प्रधानत्वम् । परं रसायनकारित्वञ्च । तस्य लक्षणं यथा, --
"स्निग्धं गुरुगात्रयुतं दीप्तं स्वच्छं समाङ्गञ्च सुरङ्गदञ्च ॥"
इति जात्यमाणिक्यं कल्याणं धारणात् कुरुते ॥
तस्य दोषो यथा, --
"द्विच्छायमभ्रपिहितं कर्कशं शार्करिलं भिन्नं धूम्रञ्च ।
विरूपं रागविमलं लघुमाणिक्यं न धारये-द्धीमान् ॥"
तस्य चतुर्विधा जातिर्यथा ।
"तद्रक्तं यदि पद्मरागमथ तत्पीतातिरक्तं द्विधा ।
जानीयात् कुरुबिन्दकं यदरुणं स्यादेषु सौग-न्धिकम् ।
तन्नीलं यदि नीलगन्धिकमिति ज्ञेयं चतुर्धा बुधैः
माणिक्यं कषघर्षणेऽप्यविकलं रागेण जात्यं जगुः ॥
इति राजनिर्घण्टः ॥ * ॥
मतान्तरे तस्य दोषा यथा, --
"माणिक्यस्य समाख्याता अष्टौ दोषा मुनीश्वरैः
द्विच्छायञ्च द्विरूपञ्च सम्भेदः कर्करन्तथा ॥
अशोभनं कोकिलञ्च जलं धूम्राभिधञ्च वै ।
गुणाश्चत्वार आख्याताश्छायाः षोडश कीर्त्तिताः ॥"
छायास्तु पूर्ब्बोक्ता एव तास्तु पद्मरागशब्दे द्रष्टव्याः ।
"छायाद्वितयसम्बन्धाद्द्विच्छायंबन्धुनाशनम् ।
द्विरूपं द्विपदं तेन माणिक्येन पराभवः ॥
सम्भेदो भिन्नमित्युक्तं शस्त्रघातविधायकम् ।
कर्करं कर्करायुक्तं पशुबन्धुविनाशकृत् ॥
दुग्धेनेव समालिप्तमघनीपुटमुच्यते ।
अशोभनं समुद्दिष्टं माणिक्यं बहुदुःखकृत् ॥
मधुबिन्दुसमच्छायं कोकिलं परिकीर्त्तितम् ।
आयुर्लक्ष्मीयशो हन्ति सदोषं तन्न धारयेत् ॥
रागहीनं जलं प्रोक्तं धनधान्यापवादकृत् ।
धूम्रं धूमसमाकारं वैद्यतं भयमावहेत् ॥"

प्रभाविमुक्ताः परुषा विवर्णाः ।
न ते प्रशस्ता मणयो भवन्ति
समासतो जातिगुणैः समस्तैः ॥
दोषोपसृष्टं मणिमप्रबोधाद्
बिभर्त्ति यः कश्चन कश्चिदेकम् ।
तं बन्धुदुःखामयबन्धुवित्त-
नाशादयो दोषगणा भजन्ते ॥
सपत्नमध्येऽपि कृताधिवासं
प्रमादवृत्तावपि वर्त्तमानम् ।
न पद्मरागस्य महागुणस्य
भर्त्तारमापत् समुपैति काचित् ॥
दोषोपसर्गप्रभवाश्च ये ते
नोपद्रवास्तं समभिद्रवन्ति ।
गुणैः समुख्यैः सकलैरुपेतं
यः पद्मरागं प्रयतो बिभर्त्ति ॥
बालार्क्ककरसंस्पर्शात् यः शिखां लोहितां वमेत् ।
रञ्जयेदाश्रमं वापि स महागुण उच्यते ॥
दुग्धे शतगुणे क्षिप्तो रञ्जयेद्यः समन्ततः ।
वमेच्छिखां लोहितां वा पद्मरागः स उत्तमः ॥
अन्धकारे महाघोरे यो न्यस्तः सन् महामणिः ।
प्रकाशयति सूर्य्याभः स श्रेष्ठः पद्मरागकः ॥
पद्मकोषे तु यो न्यस्तो विकाशयति तत्क्षणात् ।
पद्मरागवरो ह्येष देवानामपि दुर्लभः ॥
सर्व्वरिष्टप्रशमनाः सर्व्वसम्पत्तिदायकाः ।
चत्वारस्तु मयोद्दिष्टा गुणिनश्च यथोत्तरम् ॥
यो मणिर्दृश्यते दूराज्ज्वलदग्निसमच्छविः ।
वंशकान्तिः स विज्ञेयः सर्व्वसम्पत्तिदायकः ॥
पञ्चसप्तनवविंशतिरागः
सम्भृतोऽपि सकलः खलु वस्त्रे ।
वर्जयेद्भ्रमति वा करजालं
उत्तरोत्तरमहागुणिनस्ते ॥
नीलीरसं दुग्धरसं जलं वा
ये रञ्जयन्ति द्विशतप्रमाणम् ।
ते ते यथापूर्ब्बमतिप्रशस्ताः
सौभाग्यसम्पत्तिविधानदायकाः ॥
गुञ्जाफलप्रमाणस्तु दशसप्तत्रिगुञ्जकान् ।
पद्मरागस्तुलयति यथापूर्व्वं महागुणः ॥
क्रोष्टुकोलफलाकारो द्वादशाष्टाब्धिगुञ्जकान् ।
पद्मरागस्तुलयति यथापूर्ब्बं महागुणः ॥
वदरीफलतुल्यो यः स्वरदिग्वसुमासकः ।
तथा धात्रीफलत्रिंशत्त्रिंशतिद्व्यष्टमासकः ॥

मणिः स्वभावादपि तुम्बुरूत्थः ।
कार्ष्णात्तथा सिंहलदेशजातं
मुक्ताभिधानं नभसः स्वभावात् ।
श्रीपर्णकं दीप्तिनिराकृतित्वा-
द्विजातिलिङ्गाश्रयभेद एषः ॥ * ॥"
तथा च ।
"स्नेहप्रदेहो मृदुता लघुत्वं
विजातिलिङ्गं खलु सार्व्वजन्यम् ।
यः श्यामिकां पुष्यति पद्मरागो
यो वा तुषाणामिव चूर्णमध्यः ॥
स्नेहप्रदिग्धो न च यो विभाति
यो वा प्रमृज्यः प्रजहाति दीप्तिम् ।
आक्रान्तमूर्द्धा च तथाङ्गुलिभ्यां
यः कालिकां पार्श्वगतां बिभर्त्ति ॥
संप्राप्य तार्क्ष्योऽपि कथं स्ववृत्तं
बिभर्त्ति यः सर्व्वगुणानतीव ।
तुल्यप्रमाणस्य च तुल्यजाते-
र्यो वा गुरुत्वेन भवेन्न तुल्यः ।
प्राप्यापि नानाकरदेशजातं
ज्ञात्वा बुधो जातिगुणेन लक्षेत् ॥
अप्रणश्यति सन्देहे शिलायां परिघर्षयेत् ।
घृष्ट्वा योऽत्यन्तशोभावान् परिमाणं न मुञ्चति ॥
स ज्ञेयः शुद्धजातिस्तु ज्ञेयाश्चान्ये विजातयः ।
स्वजातकं संमुखेन विलिखेद्वा परस्परम् ॥
वज्रं वा कुरुबिन्दं वा विमुच्यान्योन्यकेन चेत् ।
न शक्यं लेखनं कर्त्तुं पद्मरागेन्द्रनीलयोः ॥
गुणोपपन्नेन सहावबन्धो
मणिस्त्वजात्यो विगुणेन जातः ।
सुखं न कुर्य्यादपि कौस्तुभेन
विद्वान् विजातिं न भृयाद्बुधस्तम् ॥
चण्डाल एकोऽपि तथाभिजातान्
समेत्य दूरानपहन्ति यत्नात् ।
तथा मणीन् भूरिगुणोपपन्नान्
शक्तोऽतिविद्रावयितुं विजातः ॥" * ॥
अथ मूल्यम् ।
"बालार्काभिमुखं कृत्वा दर्पणे धारयेन्मणिम् ।

तथा ।
“शोभाद्वितयवन्तो ये मणयः क्षतिकारकाः ।
उभयत्र पदं येषां तेन च स्यात् पराभवः ॥
भिन्नेन युद्धे मृत्युः स्यात् कर्करन्धननाशकृत् ।
दुग्धेनेव समालिप्तः पुटके यस्तु सम्भवेत् ॥
दुःखकृत् स समाख्यातो न नृपै रक्षणीयकः ।
भधुबिन्दुसमा शोभा कोकिलानां प्रकीर्त्तिता ।
तेषाञ्च बहुभेदाः स्युर्न ते धार्य्याः कदाचन ॥”
अथ गुणाः ।
“गुरुत्वं स्निग्धता चैव वैमल्यमतिरक्तता ।”
तथा च ।
“वर्णाधिकं गुरुत्वञ्च स्निग्धता च तथाच्छता ।
अर्च्चिष्मत्ता महत्ता च मणीनां गुणसंग्रहः ॥”
फलम् ।
“ये कर्कराश्छिद्रमयोऽपदिग्धाः

तथाक्षफलतुल्यो यो वह्निपक्षैकमासकः ।
ताम्बूलफलमानो यश्चतुस्त्रिद्विकतोलकः ।
विम्बीफलसमाकारो वसुषड्दशतोलकः ॥
अतःपरं प्रमाणेन मानेन च न लभ्यते ।
यदि लभ्येत पुण्येन तदा सिद्धिमवाप्नुयात् ॥
केचिच्चारतराः सन्ति जात्यानां प्रतिरूपकाः ।
विजातयः प्रयत्नेन सिद्धास्ता मूल्यमाहरेत् ॥
काङ्कलकाः सिंहलदेशोत्थमुक्तमालीयाः ।
श्रीपर्णिकाश्च सदृशा विजातयः पद्मरागाणाम् ॥
तुषोपसङ्गाद्दलनाभिधानं

तत्र कान्तिविभागेन च्छायाभागं विनिर्द्दिशेत्
॥
वज्रस्य यत्तण्डुलसंख्ययोक्तं
मूल्यं समुन्मापितगौरवस्य ।
तत् पद्मरागस्य गुणान्वितस्य
स्यान्माषकाख्यातुलितस्यमूल्यम् ॥
यन्मूल्यं पद्मरागस्य सगुणस्य प्रकीर्त्तितम् ।
तावन्मूल्यं तथा शुद्धे कुरुबिन्दे विधीयते ॥
सगुणे कुरुबिन्दे च यावन्मूल्यं प्रकीर्त्तितम् ।
तावन्मूल्यं चतुर्थांशहीनं स्याद्वै सुगन्धिके ॥
यावन्मूल्यं समाख्यातं वैश्यवर्णे च सूरिभिः
।
तावन्मूल्यचतुर्थांशं हीयते शूद्रजन्मनि ॥
पद्मरागः पणं यस्तु धत्ते लाक्षारसप्रभः ।
कार्षापणसहस्राणि त्रिंशन्मूल्यं लभेत सः ॥
इन्द्रगोपकसङ्काशः कर्षत्रयधृतो मणिः ।
द्वाविंशतिसहस्राणि तस्य मूल्यं विनिर्द्दिशेत्
॥
एकोनो नूयते यस्तु जवाकुसुमसन्निभः ।

कार्षापणसहस्राणि तस्य मूल्यं चतुर्द्दश ॥
बालादित्यद्युतिनिभः कर्षं यस्तु प्रतुल्यते ।
कार्षापणशतानान्तु मूल्यं सद्भिः प्रकीर्त्तितम् ॥
यस्तु दाडिमपुष्पाभः कर्षार्द्धेन तु सम्मितः ।
कार्षापणशतानान्तु विंशतिर्मूल्यमादिशेत् ॥
चत्वारो माषका यस्तु रक्तोत्पलदलप्रभः ।
मूल्यं तस्य विधातव्यं सूरिभिः शतपञ्चकम् ॥
द्विमाषको यस्तु गुणैः सर्व्वैरेव समन्वितः ।
तस्य मूल्यं विधातव्यं द्विशतं तत्त्ववेदिभिः ॥
माषकैकमितो यस्तु पद्मरागो गुणान्वितः ।
शतैकसम्मितं वाच्यं मूल्यं रत्नविचक्षणैः ॥
अतो न्यूनप्रमाणास्तु पद्मरागा गुणोत्तराः ।
स्वर्णद्विगुणमूल्येन मूल्यं तेषां प्रकल्पयेत् ॥
कार्षापणः समाख्यातः पुराणद्वयसम्मितः ।
अन्ये कुसुम्भपानीयमञ्जिष्ठोदकसन्निभाः ॥
काषाया इति विख्याताः स्फटिकप्रभावाश्च ते ।
तेषां दोषो गुणो वापि पद्मरागवदादिशेत् ॥
मूल्यमल्पन्तु विज्ञेयं धारणेऽल्पफलं तथा ।
ब्रह्मक्षत्त्रियवैश्यान्त्याश्चतुर्धा ये प्रकीर्त्तिताः ॥
चतुर्विधैर्नृपतिभिर्धार्य्याः सम्पत्तिहेतवे ।
अतोऽन्यथा धृतः कुर्य्याद्रोगशोकभयक्षयम् ॥”
इति युक्तिकल्पतरुः ॥
(यथा, कथासरित्सागरे । २६ । ४४ ।
“सोऽपि
प्राप्तस्तदद्राक्षीन्माणिक्यस्तम्भभास्वरम्।
सौवर्णभित्ति सङ्केतकेतनं सम्पदामिव ॥”
कदलीविशेषः । तद्यथा, --
“माणिक्यमर्त्यामृतचम्पकाद्या
भेदाः कदल्या बहवोऽपि सन्ति ।”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**माणिक्या**, स्त्री, (माणिक्य + टाप् ।) ज्येष्ठी ।
तत्पर्य्यायः । मुषली २ गृहगोधिका ३ गृह-
गोलिका ४ भित्तिका ५ पल्ली ६ कुड्यमत्स्यः ७
गृहोलिका ८ । इति हेमचन्द्रः । ४ । ३६४ ॥

**माणिबन्धं**, क्ली, (मणिबन्धे गिरौ भवम् । मणि-

**मातङ्गमकरः**, पुं, (मातङ्गाकारो मकरः ।) महा-
मत्स्यभेदः । इति राजनिर्घण्टः ॥

**मातङ्गी**, स्त्री, (मतङ्गस्य मुनेरपत्यं स्त्री । मातङ्ग +
अण् ङीष् ।) दशमहाविद्यान्तर्गतनवमविद्या ।
अथ मातङ्गीमन्त्रः । वामकेश्वरतन्त्रे ।
“अथ वक्ष्ये महादेवीं मातङ्गीं सर्व्वसिद्धिदाम् ।
अस्योपासनमात्रेण वाक्सिद्धिं लभते ध्रुवम् ॥
प्रणवञ्च ततो मायां कामबीजञ्च कूर्च्चकम् ।
मातङ्गी ङेयुता चास्त्रं वह्निजायावधिर्म्मनुः ॥
ऋषिः स्याद्दक्षिणामूर्त्तिर्व्विराट छब्दः प्रकी-
र्त्तितम् ।
मातङ्गीदेवता देवी सर्व्वसिद्धिप्रदायिनी ॥
अङ्गन्यासकरन्यासौ कुर्य्यान्मन्त्री समाहितः ।
षड्दीर्घभाजा बीजेन प्रणवाद्येन कल्पयेत् ॥
षट्कोणाष्टदलं पद्मं लिखेद्यन्त्रं मनोरमम् ।
तत्र पूजा प्रकर्त्तव्या जवापुष्पेण मन्त्रवित् ॥
अष्टशक्तीश्चाष्टदले पूजयेत् सुसमाहितः ।
रतिः प्रीतिर्मनोभवा क्रिया श्रद्धा च शक्तयः ॥
अनङ्गकुसुमानङ्गमदना मदनालसा ।
इत्यष्टशक्तीः संपूज्य उपहारसमन्वितः ॥
ततो देवीं परां ध्यायेत् साधकः
स्थिरमानसः ॥
श्यामाङ्गीं शशिशेखरां त्रिनयनां रत्नसिंहा-
सनस्थिताम् ।
वेदैर्वाहुदण्डैरसिखेटकपाशाङ्कुशधराम् ॥
एवं ध्यात्वा महादेवीं गन्धपूष्पैर्मनोरमैः ।
नैवेद्यन्तु महादेव्यै पायसं शर्करान्वितम् ॥
पुरश्चरणकाले तु षट्सहस्रं मनुं जपेत् ।
तद्दशांशं हुनेदाज्यैः शर्करामधुभिः सह ॥
ब्रह्मवृक्षोद्भवैः काष्ठैः साधकः शक्तिभिः सह ।
एवं पुरश्क्रियां कृत्वा प्रयोगविधिमाचरेत् ॥
चतुष्पथे श्मशाने वा कलामध्ये च मान्त्रिकः ।
मत्स्यं मांसं पायसञ्च दद्याद्धूपञ्च गुग्गुलुम् ॥
रात्रियोगेन कर्त्तव्यं सदा पूर्णश्च साधकः ।
एवं प्रयोगमात्रेण कविता जायते ध्रुवम् ॥

“आन्यं दिवो मातरिश्वाजभारामथ्नादन्यं
परिश्येनो अद्रेः ॥”
“मातरिश्वा वायुः ।” इति तद्भाष्ये सायनः ॥
मातर्य्यन्तरिक्षे श्वसिति चेष्टते इति । श्वस् +
कनिन् । अग्निभेदः । यथा, ऋगवेदे । ३ । २९ ।
११ ।
“तनूनपादुच्यते गर्भं आसुरो
नराशंसो भवति यद्विजायते ।
मातरिश्वा यदमिमीत मातरि
वातस्य सर्गो अभवत् सरीमणि ॥”
“यदाग्निररणीषु गर्भरूपतया वर्त्तते तदा तनू-
नपान्नामको भवति यदान्तरिक्षे विद्योतते तदा
मातरिश्वनामको भवति ।” इति तद्भाष्ये
सायनः ॥)

**मातलिः**, पुं, (मतं लातीति । ला + कः । पृषो-
दरादित्वात् साधुः । मतलस्यापत्यं पुमानिति
वा । मतल + “अत इञ् ।” ४ । १ । ९५ ।
इतीञ् ।) इन्द्रसारथिः । इत्यमरः । १ । १ ।
३८ ॥
(यथा, महाभारते । ५ । ९७ । ११ ।
“मतस्त्रिलोकराजस्य मातलिर्नाम सारथिः ।
तस्यैकैव कुले कन्या रूपतो लोकविश्रुता ॥”)

**माता**, [ऋ] स्त्री, मान्यते पूज्यते या सा । मान
ङ पूजायां नाम्नीति डातृ इति भरतः ॥ (यद्वा,
“नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृ
दुहितृ ।” उणा० २ । ९६ । इति तृच् ।
निपातितश्च । स्वस्रादित्वाट्टाप् निषेधः ।)
मा इति भाषा । तत्पर्य्यायः । जनयित्री २
प्रसूः ३ जननी ४ । इत्यमरः । २ । ६ । २९ ॥
सवित्री ५ जनिः ६ जनी ७ जनित्री ८
अक्का ९ अम्बा १० अम्बिका ११ अम्बा-
लिका १२ । इति शब्दरत्नावली ॥ मातृका १३ ।
इति जटाधरः ॥ * ॥ षोडशप्रकारा मातरो
यथा, --
“स्तनदात्री गर्भधात्री भक्षदात्री गुरुप्रिया ।
अभीष्टदेवपत्नी च पितुः पत्नी च कन्यका ॥
सगर्भजा या भगिनी पुत्त्रपत्नी प्रियाप्रसूः ।
मातुर्माता पितुर्माता सोदरस्य प्रिया तथा ॥
मातुः पितुश्च भगिनी मातुलानी तथैव च ।
जनानां वेदविहिता मातरः षोडश स्मृताः ॥”

बन्ध + अण् ।) सैन्धवलवणम् ।
इत्यमरटीकायां
स्वामी ॥

**माणिमन्थं**, क्ली, (मणिमन्थगिरौ भवम् । मणि-

मन्थ + अण् ।) सिन्धुजलवणम् । इत्यमरः ।
२ । ९ । ४ ॥ (अस्य पर्य्यायः ।
"सैन्धवोऽस्त्री शीतशिवं माणिमन्थञ्च सिन्धु
जम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**मातङ्गः**, पुं, (मतङ्गस्येदं । मतङ्गस्यापत्यं पुमान् वा ।

मतङ्ग + अण् ।) हस्ती । इत्यमरः । ३ । ३ ।
२१ ॥
(यथा, रामायणे । १ । ६ । २३ ।
"बिन्ध्यपर्व्वतजैर्मत्तैः पूर्णा हैमवतैरपि ।
मदान्वितैरतिवलैर्मातङ्गैः पर्व्वतोपमैः ॥")
अश्वत्थवृक्षः । किरातजातिविशेषः । इति
तट्टीकायां मथुरेशः ॥ श्वपचः । इति मेदिनी ।
गे, ४७ ॥ (यथा, कथासरित्सागरे । ७३ । २
।
"सुदूरमन्वगायातं कार्य्याय कृतसंविदम् ।
सख्या दुर्गपिशाचेन मातङ्गपतिना युतम् ॥")
अर्हदुपासकविशेषः । इति हेमचन्द्रः । ४ ।
२८३ ।

अग्निस्तम्भं जलस्तम्भं वाक्स्तम्भं कारयेत्
ध्रुवम् ।
मन्त्री जयति शत्रूंश्च तार्क्ष्यो भोगिकुलं यथा
॥
शास्त्रे वादे कवित्वे च बृहस्पतिरिवापरः ।
अनेनैव विधानेन मातङ्गी सिद्धिदायिनी ॥
नूनं तद्गृहमागत्य कुवेरैर्दीयते वसु ।
विना मत्स्यैर्विना मांसैर्नार्च्चयेत् परदेवताम्
॥"
इति तन्त्रसारः ॥

**मातरपितरौ**, पुं, (माता च पिता च । "मातर

पितरावुदीचाम् ।" ६ । ३ । ३२ ।
इत्यारङा-
देशो मातृशब्दस्य निपात्यते ।)
तातजनयित्र्यौ ।
नित्यद्विवचनान्तौ । इत्यमरः । २ । ६ । ३७
॥

**मातरिश्वा**, पुं, (मातरि अन्तरीक्षे श्वयति

वर्द्धते इति । यद्वा, मातरि जनन्यां श्वयति
वर्द्धते सप्तसप्तकत्वादिति । श्वि + "श्वन्
उक्ष-
न्निति ।" उणा० १ । १५८ । इति कनिन् ।
नाम्नि सप्तम्या अलुक् । धातोरिकारलोपश्च
निपातितः ।) वायुः । इत्यमरः । २ । ४ ।
६४ ।
(यथा, ऋग्वेदे । १ । ९३ । ६ ।

इति ब्रह्मवैवर्त्ते गणपतिखण्डे कार्त्तिक्य-
संवादे १५ अध्यायः ॥ तस्या गौरवं यथा, --
"जनको जन्मदातृत्वात् पालनाच्च पिता स्मृतः
।
गरीयान् जन्मदातुश्च योऽन्नदाता पिता मुने ॥
विनान्नान्नश्वरो देहो न नित्यः पितुरुद्भवः ॥
तयोः शतगुणे माता पूज्या मान्या च बन्दिता ।
गर्भधारणपोषाभ्यां सा च ताभ्यां गरीयसी ॥"
इति तत्रैव ४० अध्यायः ॥
अपि च ।
"स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति ।
उपनीय ददद्वेदमाचार्य्यः स प्रकीर्त्तितः ॥
एकादश उपाध्याया ऋत्विग्यज्ञकृदुच्यते ।
एते मान्या यथापूर्ब्बमेभ्यो माता गरीयसी ॥"
इति गारुडे ९४ अध्यायः ॥

अन्यच्च ।
“न पितुर्व्वचनं कार्य्यं यथा मातुः सुतेन हि ।
पिता च पतितस्त्याज्यो न माता सत्सुतेन हि ।
गर्भधारणपोषाद्धि ततो माता गरीयसी ॥
दशविप्रादुपाध्यायो गौरवेणातिरिच्यते ।
तेभ्यः पिता दशभ्यस्तु माता चैव गरीयसी ।
मातृतोऽन्यो न देवोऽस्ति तस्मात् पूज्या सदा
सुतैः ॥
मातुश्च यद्धितं किञ्चित् कुरुते भक्तितः पूमान् ।
तद्धर्म्मं हि विजानीयादेवं धर्म्मविदो विदुः ॥”
इति वह्निपुराणम् ॥
अपरञ्च ।
“गुरूणामपि सर्व्वेषां पूज्याः पञ्च विशेषतः ।
तेषामाद्यास्त्रयः श्रेष्ठास्तेषां माता सुपूजिता ॥
यो भावयति या सूते येन विद्योपदिश्यते ।
ज्येष्ठभ्राता च भर्त्ता च पञ्चैते गुरवः स्मृताः ॥
आत्मनः सर्व्वयत्नेन प्राणत्यागेन वा पुनः ।
पूजनीया विशेषेण पञ्चैते भूतिमिच्छता ॥
यावत् पिता च माता च द्वावेतौ निर्व्विकारिणौ ।
तावत् सर्व्वं परित्यज्य पुत्त्रः स्यात्तत्परायणः ॥
पिता माता च सुप्रीतौ स्यातां पुत्त्रगुणैर्यदि ।
स पुत्त्रः सकलं धर्म्मं प्राप्नुयात्तेन कर्म्मणा ॥
नास्ति मातृसमं दैवं नास्ति पितृसमो गुरुः ।
तयोः प्रत्युपकारोऽपि न कथञ्चन विद्यते ॥
तयोर्नित्यं प्रियं कुर्य्यात् कर्म्मणा मनसापि वा ।
न ताभ्यामननुज्ञातो धर्म्ममन्यं समाश्रयेत् ॥”
इति कौर्म्मे उपविभागे ११ अध्यायः ॥
मातृशब्दसम्भाषया मातृतुल्यत्वम् यथा, --
“मातरित्येव शब्देन याञ्च संभाषते नरः ।
सा मातृतुल्या सत्येन धर्म्मः साक्षी सतामपि ॥
तया सहितशृङ्गारे कालसूत्रं प्रयाति सः ।
तत्र घोरे वसत्येव यावद्वै ब्रह्मणो वयः ॥
सदा भागवती पोर्णमासी पद्मान्तरङ्गिका ॥
गङ्गाकलिन्दतनयागोपीवृन्दावतीस्तथा।
गायत्त्रीतुलसीवाणीपृथिवीगाश्चवैष्णवीः ॥
श्रीयशोदादेवहूतीदेवकीरोहिणीमुखाः ।
श्रीसीता द्रौपदी कुन्ती ह्यपरा या महर्षयः ।
रुक्मिण्याद्यास्तथा चाष्ट महिषीर्याश्च ता अपि ॥”
इति पाद्मे उत्तरखण्डे ७८ अध्यायः ॥
सप्त मातरो यथा, --
“आदौ माता गुरोः पत्नी ब्राह्मणी राजपत्निका ।
गावी धात्री तथा पृथ्वी सप्तैता मातरःस्मृताः ॥”
इति कैश्चित् पठितम् ॥
मातृतुल्या यथा ।
“मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा ।
श्वश्रूः पूर्ब्बजपत्नी च मातृतुल्याः प्रकीर्त्तिताः ॥”
इति दायभागः ॥
गौः । भूमिः । इति मेदिनी । ते, ४३ ॥ (निरुक्ते च । ८ । ३ । “यदूर्द्ध्वस्तिष्ठा द्रविणेह धत्ताद्यद्वा-क्षयो मातुरस्या उपस्थे ।” “मातुः अस्या पृथिव्याः ।” इति तट्टीकायां दुर्गाचार्य्यः ।)
विभूतिः । इति शब्दरत्नावली ॥ लक्ष्मीः । इति हेमचन्द्रः । ३ । ३२१ । रेवती । इत्यजयपालः ॥ आखुकर्णी । इन्द्रवारुणी । महाश्रावणी । जटा-मांसी । इति राजनिर्घण्टः ॥ परिमाणकर्त्तरि, त्रि । अस्मिन्नर्थे परिमाणार्थमाधातोः कर्त्तरि तृन्प्रत्ययेन निष्पन्नः ॥ (निर्म्माणकर्त्तरि च । यथा, ऋग्वेदे । १ । ६१ । ७ ।
“अस्येदु मातुः सवनेषु सद्योमहः ।”
“मातुः वृष्टिद्वारेण सकलस्य जगतो निर्मातुः ।”
इति तद्भाष्ये सायनः ॥)

**माता**, स्त्री, (मान्यते पूज्यते इति । मान पूजायां + तन् ततष्टापि निपातनात् साधुः ।) जननी । यथा,
‘विश्वेश्वरीं विश्वमातां चण्डिकां प्रणमाम्यहम् ।’
इति शिवरहस्ये दुर्गास्तवदर्शनात् आबन्तोऽयं शब्दः ॥

**मातापितरौ**, पुं, (माता च पिता च । “आनङ् ऋतोद्वन्द्वे ।” ६ । ३ । २५ । इत्यानङादेशः ।) जननीजनकौ । तत्पर्य्यायः । पितरौ २ मातर-पितरौ ३ तातजनयित्र्यौ ४ । इत्यमरभरतौ । २ । ६ । ३७ ॥ नित्यद्विवचनान्तोऽयम् ॥ (यथा, मनौ । ३ । १५७ ॥
सगुणां निर्गुणां वापि यान्ति मातामहीं तनुम् ॥”
इत्यग्निपुराणम् ॥
तन्मरणे त्रिरात्राशौचं यथा । मातामहानां मरणे त्रिरात्रं स्यादशौचकम् । इति शुद्धितत्त्वे
कूर्म्मपुराणम् ॥ * ॥ दुहितृपर्य्यन्ताभावे तस्य
श्राद्धे दौहित्रस्याधिकारो यथा, --
“मातामहानां दौहित्राः कुर्व्वन्त्यहनि चापरे ।
ते च तेषां प्रकुर्ब्बन्ति द्वितीयेऽहनि सर्व्वदा ॥”
इति शुद्धितत्त्वम् ।
दुहितृपर्य्यन्ताभावे तस्य धने दौहित्रस्याधि-कारो यथा । तदभावे दौहित्रः ।
“पौत्रदौहित्रयोर्लोके विशेषो नास्ति धर्म्मतः ।
तयोर्हि मातापितरौ सम्भूतौ तस्य देहतः ॥”
इति मनुवचने पौत्त्रतुल्याभिधानेन यथा पुत्त्राभावे पौत्त्रस्तथा दुहित्रभावे दौहित्रः ।
अतएव गोबिन्दराजधृतो विष्णुः ।
अपुत्त्रपौत्रे संसारे दौहित्रा धनमाप्नु युः ।
पूर्व्वेषां हि स्वधाकारे पौत्रदौहित्रकाः समाः ॥”
इति दायतत्त्वम् ॥

**मातामही**, स्त्री, (मातामहस्य पत्नीति । “पुंयो-गादाख्यायाम् ।” ४ । १ । ४८ । इति + ङीष् ।)
मातामहपत्नी । मातृमाता । आइ इति भाषा । यथा, --
“मातामही मातृमाता मातृतुल्या च पूजिता ।
प्रमातामहीति विज्ञाता प्रमातामहकामिनी ।
वृद्धप्रमातामही ज्ञेया तत्पितुः कामिनी तथा ॥”
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १० अध्यायः ॥
तन्मरणे पक्षिण्यशौचं यथा, --

प्रायश्चित्तं पापिनश्च तस्य नैव श्रुतौ श्रुतम् ॥”
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १० अध्यायः ॥
शिवस्य परिवारविशेषः । स च असुरमारणे ब्रह्मादीनां स्वेदनिर्गतत्वात् अष्टशक्तिदेवता-रूपो यथा, --
“ब्राह्मी माहेश्वरी चैन्द्री वाराही वैष्णवी तथा ।
कौमारी चैव चामुण्डा चर्च्चिकेत्यष्ट मातरः ॥”
सप्तविधोऽपि यथा, --
“ब्राह्मी च वैष्णवी चैन्द्री रौद्री वाराहिकी तथा ।
कौवेरी चैव कौमारी मातरः सप्त कीर्त्तिताः ॥”
इत्यमरटीकायां भरतः ॥
गौर्य्यादिषोडशमातृकाः । यथा, --
“गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥
शान्तिः पुष्टिर्धृतिस्तुष्टिरात्मदेवतया सह ।
आदौ विनायकः पूज्यो अन्ते च कुलदेवता ॥”
इति श्राद्धतत्त्वे बह्वृचगृह्यपरिशिष्टम् ॥
वैष्णवपूज्या मातृगणा यथा, --
“यत्र मातृगणाः पूज्यास्तत्र ह्येताः प्रपूजयेत् ।
“अकारणपरित्यक्ता मातापित्रोर्गुरोस्तथा ॥”)

**मातामहः**, पुं, (मातुः पिता । “पितृव्यमातुल मातामहपितामहाः । ४ । २ । ३६ । इति डामहच् निपातितश्च ।) मातुः पिता । इत्य-मरः । २ । ६ । ३३ ॥ दौहित्रस्य मातामह-साधर्म्यं यथा, --
“आसीदङ्गो नृपश्रेष्ठो यज्ञशीलो दृढव्रतः ।
यजतः सुमहत्कालाद्व्रेण एकोऽभवत्ततः ॥
मृत्योः कन्या सुनीथा या मातुर्दुःशीलकारणात् ।
क्रूरा बुद्धिरभूत्तस्य जगतोऽस्यापि पीडने ॥
तपस्विनां कुले जाता ऋषीणाञ्च यशस्विनाम् ।
“मातुले श्वशुरे मित्रे गुरौ गुर्व्वङ्गनासु च ।
अशौचं पक्षिणीं रात्रिं मृता मातामही यदि ॥”
इति शुद्धितत्त्वम् ॥
दुहितृपर्य्यन्ताभावे तच्छ्राद्धे दौहित्रस्याधि-कारो यथा । तदभावे दौहित्रः ।
प्रागुक्तब्रह्म-पुराणे तथादर्शनात् ।
“पौत्रदौहित्रयोलोके न विशेषोऽस्ति धर्म्मतः ।
तयोर्हि मातापितरौ सम्भूतौ तस्य देहतः ॥”
इत्यनेन यथा पुत्राभावे पौत्रस्तथा दुहित्रभावे दौहित्रः । इति प्रागेवोक्तत्वात् ।
“मातुलो भागिनेयस्य स्वस्रीयो मातुलस्य च ।
श्वशुरस्य गुरोश्चैव सख्युर्म्मातामहस्य च ॥
एतेषाञ्चैव भार्य्याभ्यः स्वसुर्मातुः पितुस्तथा ।
पिण्डदानन्तु कर्त्तव्यमिति वेदविदां स्थितिः ॥”
इति वृद्धशातातपवचनेन मातामह्याश्च साक्षा-द्दौहित्रेण पिण्डदानश्रुतेः धनाधिकारित्वाच्च ।
इति शुद्धितत्त्वम् ॥ * ॥ तस्या अयौतुकधने पौत्रपर्य्यन्ताभावे दौहित्राधिकारः । यौतुकधने तु पुत्रपर्य्यन्ताभावे दौहित्राधिकारो यथा ।
“दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति पौत्रवत् ॥”
इति मनुवचने दौहित्रे पौत्रधर्म्मातिदेशात् पुत्रेण परिणीतदुहितुर्बाधात् बाधकपुत्रेण बाध्यदुहितृपुत्रबाधस्य न्याय्यत्वात् । इति दाय-तत्त्वम् ॥ पुत्राभावे दौहित्रोऽधिकारी । पुत्रा-

धिकारात् प्राक्दुहित्रधिकारश्रुतेः
तद्बाधिकाया
दुहितुः पुत्त्रेण बाध्यपुत्त्रबाधस्यैव
न्याय्यत्वात्।
इति दायक्रमसंग्रहश्च ॥

**माताली**, स्त्री, (मातुः आली। पृषोदरादित्वात्

ऋकारलोपः। यद्वा, माताया आली।)
मातुः
सखी। इति शब्दमाला ॥

**मातुलः**, पुं, (मातुर्भ्राता। "पितृव्यमातुलेति।"

४। २। ३६। इति निपात्यते। तत्र
"मातुर्डुलच्।"
इति वार्त्तिकात् डुलच्।) मातृभ्राता।
पितृश्यालकः। इत्यमरः। २। ६। ३१
।
मामा इति भाषा ॥ तन्मरणे भागिनेयस्य
पक्षिण्यशौचम्। यथा, शुद्धितत्त्वे।
"मातुले पक्षिणीं रात्रिं शिष्यर्त्त्विग्वान्धवेषु
च।"
स च मातामहपर्य्यन्तरहितस्य मृतस्य
प्रेत-
क्रियाद्यधिकारी। यथा, --
"मातुलो भागिनेयस्य स्वस्रीयो मातुलस्य
च।"
इति शातातपीयपाठक्रमात्। इति
शुद्धितत्त्वम् ॥
(मात्यते खार्य्यादिना मीयते। मात +
बाहु-
लकात् डुलच्।) ब्रीहिभेदः। मदनद्रुमः।
(मादयतीति। मद + णिच् + बाहुलकात्
उलच् पृषोदराद् दस्य तकारत्वञ्च।)
धुस्तूरः।
इति मेदिनी। ले, १२३ ॥ पर्य्यायो यथा,
--
"धत्तूर धूर्त्त धुत्तूरा उन्मत्तः कनकाह्वयः।
देवता कितवस्तूरी महामोहः शिवप्रियः।
मातुलो मदनश्चास्य फले मातुलपुत्त्रकः
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥

"भङ्गा गञ्जा मातुलानी मादीनि विजया
जया ॥")
शणः। इति हेमचन्द्रः। ४। २४५ ॥ प्रियङ्गु-
वृक्षः। इति शब्दचन्द्रिका ॥

**मातुलाहिः**, पुं, (मा तुल्यतेऽसौ इति। तुल +

मूलविभुजादित्वात् कः। मातुलश्चासौ अहिश्च।)
सर्पविशेषः। मालुया साप इति फेयुयाटी इति
च भाषा। अयं खड्गाकृतिः आयतदेहः दीर्घ-
लाङ्गूलः चतुष्पात्। इति मधुमाधवादयः ॥
तत्पर्य्यायः। मालुधानः २। इत्यमरः। १। ८। ३
॥

**मातुली**, स्त्री, (मातुलस्य स्त्री। "मातुल + इन्द्र-

वरुणभवेति।" ४। १। ४९। इति ङीष् "मातु-
लोपाध्याययोरानुग्वा।" इति वार्त्तिकोक्तेः
पक्षे आनुगभावः।) मातुलपत्नी। इत्यमरः।
२। ६। ३० ॥ भङ्गा इति शब्दचन्द्रिका ॥

**मातुलुङ्गः**, पुं, (मा न तुलं गच्छतीति। गम +

डः। पृषोदरादित्वात् अकारस्योकारः मुम्च।)
बीजपूरः। इत्यमरटीकायां भरतः ॥ (यथा,
सुश्रुते उत्तरतन्त्रे ३९ अध्याये।
"केशरं मातुलुङ्गस्य मधुसैन्धवसंयुतम्।
शर्करादाडिमाभ्यां वा द्राक्षाखर्ज्जूरयोस्तथा ॥"
(तथास्य पर्य्यायः।
"बीजपूरो मातुलुङ्गः सुफलः फलपूरकः।
लुङ्गुषः पूरकः पूरो बीजपूर्णोऽम्बुकेशरः ॥"
इति वैद्यकरत्नमालायाम्।
तथास्य गुणाः।
स्यान्मातुलुङ्गः कफवातहन्ता
हन्ता कृमीणां जठरामयघ्नः।
स दोषरक्तादिविकारपित्त-
सन्दीपनः शूलविकारहारी ॥
श्वासकासारुचिहरं तृष्णाघ्नं कण्ठशोधनम्।
दीपनं लघु रुच्यञ्च मातुलुङ्गमुदाहृतम् ॥
त्वक्तिक्ता दुर्ज्जराति स्यात् कृमिवातकफा-
पहा।
स्वादु शीता गुरुः स्निग्धा त्वङ्गांसं वात-
पित्तजित् ॥
मेध्यं शूलानिलच्छर्द्दिकफारोचकनाशनम्।
दीपनं लघु संग्राहि गुल्मार्शोघ्नन्तु केशरम् ॥
हृद्यं वर्णकरं रुच्यं रक्तमांसबलप्रदम्।

**मातुलुङ्गकः**, पुं, (मातुलुङ्ग + संज्ञायां स्वार्थे वा

कन्।) छोलङ्गवृक्षः। तत्पर्य्यायः।
फलपूरः २
बीजपूरः ३ रुचकः ४। इत्यमरः। २। ४।
७८ ॥
मातुलुङ्गः ५ श्वफलः ६ फलपूरकः ७
लुङ्गुषः ८
पूरकः ९ पूरः १० बीजपूर्णः ११
अम्बुकेशरः
१२ छोलङ्गः १३। इति रत्नमाला ॥ अस्य
गुणाः। हृद्यत्वम्। अम्लत्वम्। लघुत्वम्।
अग्निदीपनत्वम्।
आध्मानगुल्मप्लीहहृद्रोगो-
दावर्त्तनाशित्वम्।
विबन्धहिक्काशूलच्छर्द्दिरोगे
प्रशस्तत्वञ्च। अस्य त्वग्गुणाः। तिक्तत्वम्।
दुर्ज्जरत्वम्। कफवातनाशित्वम्।
विगतरस-
त्वञ्च। तन्मांसगुणाः। स्वादुत्वम्।
शीतत्वम्।
गुरुत्वम्। वायुपित्तनाशित्वञ्च। इति राज-
वल्लभः ॥

**मातुलुङ्गा**, स्त्री, (मातुलुङ्ग + टाप्।) मधु-

कुक्कुटी। यथा, --
"मातुलुङ्गा सुगन्धान्या गिरिजा
पूतिपुष्पिका।
अत्यम्ला देवदूती च सा
क्वचिन्मधुकुक्कुटी ॥"
इति रत्नमाला ॥

**मातुलुङ्गिका**, स्त्री, (मातुलुङ्ग + संज्ञायां कन्।

टाप् अकारस्येत्वम्।) वनबीजपूरः। इति
राजनिर्घण्टः ॥

**मातृकच्छिदः**, पुं, (मातुः कं शिरश्छिनत्तीति।

छिद + कः। पित्रादेशात्
मातृशिरश्छेदनादस्य
तथात्वम्।) परशुरामः। इति केचित् ॥

**मातृका**, स्त्री, (मातेव। मातृ + "इवे प्रतिकृतौ।"

५। ३। ९६। इति कन् टाप्।) धातृका ॥
(यथा, बृहत्संहितायाम्। ४३। ६६।

मा विद्यते तुला तुलना यस्य ।)
सर्पविशेषः ।
इति हेमचन्द्रः । ३ । २१६ ॥

**मातुलकः**, पुं, (मातुल + स्वार्थे कन् ।) धुस्तूर-
वृक्षः । इति राजनिर्घण्टः ॥ (मातुलः ।
यथा,
पञ्चतन्त्रे । १ । २४१ ॥
"सोऽपि तव मातुलको न समायातः ॥")

**मातुलपुत्त्रकः**, पुं, (मातुलस्य धुस्तूरस्य पुत्त्रकः ।)
धुस्तूरफलम् । इत्यमरः । २ । ४ । ७८
॥ (यथास्य
पर्य्यायः ।
"मातुलो मदनश्चास्य फले
मातुलपुत्त्रकः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)
मातुलतनयः । इति मेदिनी । के, २३५
॥

**मातुला**, स्त्री, (मातुल + टाप् । मातुलस्य
स्त्री । "इन्द्रवरुणेति । ४ । १ । ४९ ।
ङीष् आनुक् च ।) मातुलपत्नी । इत्यमर-
भरतौ । २ । ६ । ३० । मामी इति भाषा
॥ तन्मरणे
पक्षिण्यशौचम् । यथा, --

**मातुलानी**, स्त्री, (मातुल + टाप् । मातुलस्य
स्त्री । "इन्द्रवरुणेति । ४ । १ । ४९ ।
ङीष् आनुक् च ।) मातुलपत्नी । इत्यमर-
भरतौ । २ । ६ । ३० । मामी इति भाषा
॥ तन्मरणे
पक्षिण्यशौचम् । यथा, --
"श्वशुरयोर्भगिन्याञ्च मातुलान्याञ्च मातुले
।
पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्नि-
शाम् ॥"
इति शुद्धितत्त्वम् ॥

**मातुलानी**, स्त्री, (मा निषेधे तुलां नयति प्राप्नो-
तीति । नी + क्विप् । ङीष् ।) कलायः ।
भङ्गा । इति मेदिनी । ने, २०३ ॥
(यथास्या
शूला जीर्णादिरोगेषु मन्दाग्नौ कफमारुते ॥
अरुचिश्वासकासेषु स्वरसोऽस्योपदिश्यते ।
रसोऽतिमधुरो हृद्यो वीर्य्यपित्तानिलापहा ॥
कफकृद्दुर्ज्जरः पाके मातुलुङ्गस्य कल्ककः ।
तिक्तं पुष्पन्तु बीजञ्च गुल्मनुत्स्यात्तथाषरम् ॥"
इति हारीते प्रथमे स्थाने दशमेऽध्याये ॥
"त्वक्तिक्ता कटुका स्निग्धा मातुलुङ्गस्य
वातजित् ।
वृंहणं मधुरं मांसं वातपित्तहरं गुरु ॥
लघु तत्केसरं श्वासकासहिक्कामदात्ययान् ।
आस्यशोषानिलश्लेष्मविबन्धच्छर्द्यरोचकान् ॥
गुल्मोदरार्शः शूलानि मन्दाग्नित्वञ्च नाशयेत् ॥"
इति च वाभटे सूत्रस्थाने षष्ठेऽध्याये ॥)
"रज्जूत्सङ्गच्छेदने बालपीडा
राज्ञो मातुः पीडनं मातृकायाः ॥"
मातैव । मातृ + स्वार्थे कन् ।) माता ।
देवीभेदः । वर्णमाला । इति मेदिनी । के,
१३८ ॥
करणम् । स्वरः । उपमाता । इति हेमचन्द्रः
।
मातृकागणोत्पत्तिर्यथा, --
"तत्र देवोऽप्यसौ दैत्यं त्रिशुलेनाहनद्भृशम् ।
तस्याहतस्य यद्रक्तमपतद्भूतले किल ॥
तत्रान्धका असंख्याता बभूबुरपरे भृशम् ।
तद्दृष्ट्वा महदाश्चर्य्यं रुद्रः शूलेऽन्धकं मृघे
॥
गृहीत्वा त्रिशिखाग्रेण ननर्त्त परभेश्वरः ।
इतरेऽप्यन्धकाः सर्व्वे चक्रेण परमेष्ठिना ॥
नारायणेन निहतास्तत्र येऽन्ये समुत्थिताः ।
असृग्धारास्तुषास्तैस्तु शूलप्रोतस्य चासकृत्
॥
अनारतं समुत्तस्थुः स्वतो रुद्रो रुषान्वितः
।
तस्य क्रोधेन महता मुखाज्ज्वाला विनिर्ययौ
॥
तद्रूपधारिणीं देवीं यान्तीं योगीश्वरीं विदुः ।
स्वरूपधारिणी चान्या विष्णुनापि
विनिर्म्मिता ॥
ब्रह्मणा कार्त्तिकेयेन इन्द्रेण च यमेन च ।
वाराहेण च देवेन विष्णुना परमेष्ठिना ॥
पातालोद्धरणं रूपं तस्या देव्या विनिर्ममे ।
माहेश्वरी च माहेन्द्री इत्येता अष्ट मातरः ॥
कारणं यस्य यत् प्रोक्तं क्षेत्रज्ञेनावधारितम् ॥
शरीरादेव नाना तु तदिदं कीर्त्तितं मया ।

कामः क्रोधस्तथा लोभो मदो मोहाऽथ
पञ्चमः ॥
मात्सर्य्यं षष्ठमित्याहुः पैशुन्यं सप्तमं तथा ॥
अनसूयाष्टमी ज्ञेया इत्येता अष्ट मातरः ॥
कामं योगीश्वरीं विद्धि क्रोधं माहेश्वरीं तथा ॥
लोभस्तु वैष्णवी प्रोक्ता ब्रह्माणी मद एव च ।
मोहः स्वयन्तु कौमारी मात्सर्य्यं चैन्द्रजां विदुः ॥
यामी दण्डधरा देवी पैशुन्यं स्वयमेव च ।
अनुसूया वराहाख्या इत्येताः परिकीर्त्तिताः ॥
कामादिगण एषोऽयं शरीरं परिकीर्त्तितम् ।
जग्राह मूर्त्तिन्तु यथा तथा ते कीर्त्तितं मया ॥
एताभिर्देवताभिश्च तस्य रक्ते तु शोषिते ।
क्षयं गतासुरी माया स च सिद्धोऽन्धकोऽभवत् ॥
एतत्ते सर्व्वमाख्यातमात्मविद्यामृतं मया ।
य एतच्छृणुयान्नित्यं मातृणामुद्भवं शुभम् ॥
तस्य ताः सर्व्वदा रक्षां कुर्व्वन्त्यनुदिनं नृप ! ।
येनैतत् पट्यते जन्म मातृणां पुरुषोत्तम ! ॥
स धन्यः सर्व्वदा लोके शिवलोकञ्च गच्छति ।
तासाञ्च ब्रह्मणा दत्ता अष्टमी तिथिरुत्तमा ॥
एताः संपूजयेद्भक्त्या बिल्वाहारो नरः सदा ।
तस्य ताः परितुष्टास्थ क्षेमारोग्यं ददन्ति च ॥”
इत्यादि वाराहपुराणे कामादिमातृगणोत्पत्ति-
र्नामाध्यायः ॥ अपि च ।
“ब्रह्मेशगुहविष्णूनां तथेन्द्रस्य च शक्तयः ।
शरीरेभ्यो विनिष्क्रम्य तद्रूपैश्चण्डिकां ययुः ॥
यस्य देवस्य यद्रूपं यथाभूषणवाहनम् ।
तद्वदेव हि तच्छक्तिरसुरान् योद्धुमाययौ ॥
हंसयुक्तविमानाग्रे साक्षसूत्रकमण्डलुः ।
आयाता ब्रह्मणः शक्तिर्ब्रह्माणी साभिधीयते ॥
माहेश्वरी वृषारूढा त्रिशूलवरधारिणी ।
महाहिबलया प्राप्ता चन्द्ररेखाविभूषणा ॥
कौमारी शक्तिहस्ता च मयूरवरवाहना ।
योद्धुमम्याययौ दैत्यानम्बिका गुहरूपिणी ॥
तथैव वैष्णवी शक्तिर्गरुडोपरि संस्थिता ।
शङ्खचक्रगदाशार्ङ्गखड्गहस्ताभ्युपाययौ ॥
यज्ञवाराहमतुलं रूपं या बिभ्रतो हरेः ।
शक्तिः साप्याययौ तत्र वाराहीं बिभ्रती तनुम् ॥
नारसिंही नृसिंहस्य बिभ्रती सदृशं वपुः ।
प्राप्ता तत्र शटाक्षेपक्षिप्तनक्षत्रसंहतिः ॥
बज्रहस्ता तथैवैन्द्री गजराजोपरिस्थिता ।
प्राप्ता सहस्रनयना यथा शक्रस्तथैव सा ॥
ततः परिवृतस्ताभिरीशानो देवशक्तिभिः ।

गर्भधात्रीस्वनाम्नी च भयात्त्रातुश्च कामिनी ॥
एता वेदप्रणीताश्च सर्व्वेषां मातरः स्मृताः ।
एतास्वपि च सर्व्वासु न्यूनता नास्ति कासु च
॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे २५ अध्यायः
॥
षोडश मातरो यथा, --
“गुरुपत्नी राजपत्नी देवपत्नी तथा वधूः ।
पित्रोः स्वसा शिष्यपत्नी भृत्यपत्नी च मातुली ॥
पितृपत्नी भ्रातृपत्नी श्वश्रूश्च भगिनीसुता ।
गर्भधात्रीष्टदेवी च पुंसः षोडश मातरः ॥”
इति तत्रैव ५९ अध्यायः ॥
अथ मातृकान्यासः ।
भगवानुवाच ।
“मातृकान्यासमधुना शृणु वेतालभैरव ! ।
येन देवत्वमायाति नरोऽपि विहितेन वै ॥
वाग्ब्रह्माणीमुखा देव्यो मातृकाः परि-
कीर्त्तिताः ।
तासां मन्त्राणि सर्व्वाणि व्यञ्जनानि स्वरास्तथा
॥
चन्द्रबिन्दुप्रयुक्तानि सर्व्वकामप्रदानि च ।
ऋषिस्तु मातृमन्त्राणां ब्रह्मैव परिकीर्त्तितः ॥
प्रोक्ता छन्दस्तु गायत्री देवता च सरस्वती ।
शरीरशुद्धिप्रमुखसर्व्वकामार्थसाधने ॥
विनियोगः समुद्दिष्टो मन्त्राणां न्यूनपूरणे ।
अकारेण समं कादिवर्गो यः प्रथमः स्मृतः ॥
तैश्चन्द्रबिन्दुसंयुक्तैस्तत्रस्थैरक्षरैर्बहिः ।
आकारञ्च तथोच्चार्य्य अङ्गुष्ठाभ्यां नमस्तथा ।
प्रथमं मातृकामन्त्रमङ्गुष्ठद्वयतो न्यसेत् ॥
परे वर्गाः स्वरैः सार्द्धं ये वान्ये न्यासकर्म्मणि ।
ते सर्व्वे चन्द्रबिन्दुभ्यां युक्ताः कार्य्यास्तु सर्व्वतः
॥
ह्रस्वेकारश्च वर्गेण दीर्घेकारान्तगेन तु ।
तर्जन्योर्विन्यसेत् सम्यक् स्वाहान्ते न तु
पूर्ब्बवत् ॥
ह्रस्वोकारष्टवर्गेण दीर्घोकारान्तगेन तु ।
मध्यमायुगले सम्यक् वषडन्तेन विन्यसेत् ॥
एकारादितवर्गान्त ऐकारान्तेन चैव हुम् ।
न्यसेदनामिकायुग्मे नियतं तत्र भैरव ! ॥
ओकारादिपवर्गन्तु औकारान्तेन शेषितम् ।
वौषडन्तं कनिष्ठायां विन्यसेत् कार्य्यसिद्धये ॥
अंकारादियकारादिवर्गेण क्षान्तकेन च ।

नातः परतरं मन्त्रं विद्यते क्वचिदेव हि ।
यः सर्व्वकामदं पुण्यं चतुर्व्वर्गफलप्रदम् ॥
वाग्देवतां हृदि ध्यात्वा मूर्द्ध्नि
सर्व्वाक्षराणि
च ॥
त्रिधा च मातृकामन्त्रैः संक्रमैश्च
पिबेज्जलम् ।
स वाग्मी पण्डितो धीमान् जायते च वरः
कविः ॥
चन्द्रबिन्दुसमायुक्तान् स्वरान् पूर्ब्बान्
पठेद्बुधः ।
व्यञ्जनानि च सर्व्वाणि केवलानि पठेत्ततः
॥
अकारादिक्षकारान्तान्येवं श्वासैस्तु
पूर्ब्बकैः ।
जलं करतले गृह्य पठित्वाक्षरसंघकम् ॥
अभिमन्त्र्य तु तत्तोयं प्रथमं पूरकैः पिबेत्
।
कुम्भकेन द्वितीयन्तु तृतीयन्त्वथ रेचकैः
॥
एवं सकृत्त्रिवारन्तु पीत्वा तोयं विचक्षणः
।
दृढाङ्गः पण्डितो भूयात्
पुत्त्रपौत्त्रसमन्वितः ॥
त्रिसन्ध्यमथ पीत्वैव
मातृकामन्त्रमन्त्रितम् ।
तोयं कवित्वमाप्नोति सर्व्वान्
कामांस्तथैव च ॥
सततं कुरुते यस्तु मातृकामन्त्रमन्त्रितम्
।
तोयपानं महाभागः पूरकस्तम्भरेचकैः ॥
स सर्व्वकामान् संप्राप्य
पुत्त्रपौत्त्रसमृद्धिमान् ।
भूत्वा महाकविर्लोके बलवान्
सत्यविक्रमः ॥
सर्व्वत्र वल्लभो भूत्वा चान्ते
मोक्षमवाप्नुयात् ।
राजानमथवा राजभार्य्यां पुत्त्रमथापि वा
॥
वशीकरोति न चिरात्
मातृकामन्त्रपालकः ।
न्यासक्रमे क्रमः प्रोक्तो वर्गक्रम इहैव तु ॥

हन्यन्तामसुराः शीघ्रं मम प्रीत्याह चण्डिकाम् ॥
ततो देवीशरीरात्तु विनिष्क्रान्तातिभीषणा ।
चण्डिका शक्तिरत्युग्रा शिवाशतनिनादिनी ॥"
इति मार्कण्डेयपुराणम् ॥
मातृवर्गो यथा, --
"गुरोः पत्नी राजपत्नी विप्रपत्नी च या सती ।
पत्नी च भ्रातृसुतयोर्म्मित्रपत्नी च तत्प्रसूः ॥
प्रसूः पित्रोस्तयोर्भ्रातुः पत्नी श्वश्रूः स्वकन्यका ।
जननी तत्सपत्नी च भगिनी सुरभी तथा ॥
स्वामीष्टसुरपत्नी च धात्री कान्ताप्रदायिका ।

अः इत्यन्तेन तलयोर्विन्यसेत् पाणिपृष्ठयोः ॥
वषट्कारं शेषभागे मन्त्रन्यासे नियोजयेत् ।
हृदयादिषडङ्गेषु पूर्ब्बवत् क्रमतो न्यसेत् ॥
अङ्गुष्ठाद्युक्तवर्गैस्तु क्रमात् षड्भिस्तथाविधैः ।
पुनस्तथा पादजानुसक्थिगुह्ये तु पार्श्वयोः ।
वस्तौ च विन्यसेन्मन्त्रान् क्रमात् पूर्ब्बवदक्षरैः ॥
बाह्वोः पाण्योस्तथा कण्ठे नाभौ च जठरे
तथा ।
स्तनयोरपि विन्यासं तथा षड्भिः समाचरेत् ॥
वक्त्रे च चिवुके गण्डे कर्णयोश्च ललाटके ।
असे कक्षे च षड्वर्गैः पूर्ब्बवन्न्यासमाचरेत् ॥
रोमकूपे ब्रह्मरन्ध्रे गुदे जङ्घायुगे तथा ।
नखेषु पादपार्ष्ण्योश्च तथा पूर्ब्बवदाचरेत् ॥
एवन्तु मातृकान्यासं यः कुर्य्यान्नरसत्तमः ।
स धर्म्मयज्ञे पूजासु पूतो योग्यश्च जायते ॥

अक्षराणां क्रमेणाथ तोयपानं समाचरेत् ।
ये ये मन्त्रा देवतानामृषीणामथ रक्षसाम् ॥
ते मन्त्रा मातृकामन्त्रे नित्यमेव प्रतिष्ठिताः
।
सर्व्वमन्त्रमयश्चायं सर्व्वदेवमयस्तथा ॥
चतुर्व्वर्गप्रदश्चायं मातृकामन्त्र उच्यते ।
इति ते कथितः पुत्त्र ! मातृकान्यास
उत्तमः ॥"
इति श्रीकालिकापुराणे मातृकान्यासः
७६ अः ॥
अथ तस्य प्रयोगः ।
अस्य मातृकामन्त्रस्य ब्रह्मा
ऋषिर्गायत्रीच्छन्दो
मातृकासरस्वती देवता हलो बीजानि
स्वराः
शक्तयो मातृकान्यासे विनियोगः ।
शिरसि ॐ
ब्रह्मणे ऋषये नमः । मुखे ॐ
मायत्त्रीच्छन्दसे
नमः । हृदि ॐ मातृकासरस्वत्यै देवतायै
नमः । गुह्ये ॐ व्यञ्जनेभ्यो बीजेभ्यो नमः
।
पादयोः ॐ स्वरेभ्यः शक्तिभ्यो नमः ।
तथा च
ज्ञानार्णवे ।
"मातृकां शृणु देवेशि ! न्यसेत्
पापनिकृन्त-
नीम् ।
ऋषिब्रह्मास्य मन्त्रस्य गायत्रीच्छन्द
उच्यते ॥
देवता मातृकादेवी ब्रीजं व्यञ्जनसञ्चयम् ।
शक्तयस्तु स्वरा देवि !
षडङ्गन्यासमाचरेत् ॥"
ततः षडङ्गन्यासौ । अं कं खं गं घं ङं आं
अङ्गुष्ठाभ्यां नमः । इं चं छं जं झं ञं ईं
तर्जनीभ्यां स्वाहा । उं टं ठं डं ढं णं ऊं
मध्यमाभ्यां वषट् । एं तं थं दं धं नं ऐं
अना-
मिकाभ्यां हुम् । ॐ पं फं बं भं मं औं
कनि-
ष्ठाभ्यां वौषट् । अं यं रं लं वं शं षं सं हं लं

क्षं अः करतलपृष्ठाभ्यां फट् । एवं हृदयादिषु ।
अं कं ५ आं हृदयाय नमः । इत्यादि । तथा
च ज्ञानार्णवे ।
"अं आं मध्ये कवर्गन्तु इं ईं मध्ये चवर्गकम् ।
उं ऊं मध्ये टवर्गन्तु एं ऐं मध्ये तवर्गकम् ॥
ॐ औं मध्ये पवर्गन्तु बिन्दुयुक्तं न्यसेत् प्रिये ! ।
अनुस्वारविसर्गान्तर्यशवर्गौ सलक्षकौ ॥
हृदयञ्च शिरो देवि ! शिखा कवचकं तथा ।
नेत्रमन्त्रं न्यसेत् ङेऽन्तं नमः स्वाहा क्रमेण तु ॥
वषट् हुं वौषडन्तञ्च फडन्तं योजयेत् प्रिये ! ।
षडङ्गोऽयं मातृकायाः सर्व्वपापहरः स्मृतः ॥ * ॥
अथान्तर्मातृकान्यासः ।
अकारादिषोडशस्वरान् सबिन्दून् षोडशदल-
कमले कण्ठमूले न्यसेत् । ककारादिद्वादश-
वर्णान् सबिन्दून् द्वादशदलकमले हृदये न्यसेत् ।
डकारादिदशवर्णान् सबिन्दून् दशदलकमले
नाभौ न्यसेत् । वकारादिषड्वर्णान् सबिन्दून्
षड्दलकमले लिङ्गमूले न्यसेत् । वकारादि-
चतुरो वर्णान् सबिन्दून् चतुर्दलकमले मूला-
धारे न्यसेत् । हक्षवर्णद्वयं सबिन्दुं द्विदलपद्म-
भ्रूमध्ये न्यसेत् । तथा च ज्ञानार्णवे ।
"द्व्यष्टपत्राम्बुजे कण्ठे स्वरान् षोडष विन्यसेत् ।
द्वादशच्छदहृत्पद्मे कादीन् द्वादश विन्यसेत् ॥
दशपत्राम्बुजे नाभौ डकारादीन्न्यसेद्दश ।
षट्पत्रमध्ये लिङ्गस्थे बकारादीन्न्यसेच्च षट् ॥
आधारे चतुरो वर्णान्न्यसेद्वादीन् चतुर्द्दले ।
हक्षौ भ्रूमध्यगे पद्मे द्विदले विन्यसेत् प्रिये ! ॥"
अगस्त्यसहितायाम् ।
"एकैकवर्णमेकैकपत्रान्ते विन्यसेत् प्रिये ! ।
एवमन्तः प्रविन्यस्य मनसातो बहिर्न्यसेत् ॥" * ॥
वैष्णवे तु ।
एकैकवर्णमुच्चार्य्य मूलाधाराच्छिरोऽन्तकम् ।
नमोऽन्तमिति विन्यास आन्तरः परिकीर्त्तितः ॥
अथान्तर्मातृकान्यासो मूलाधारे चतुर्द्दले ।
सुवर्णाभे व श ष स चतुर्व्वर्गविभूषिते ॥
षड्दले वैद्युतनिभे स्वाधिष्ठानेऽनलत्विषि ।
ब भ मैर्य ब लैर्युक्ते वर्णैः षड् भिश्च सुव्रते ! ॥
मणिपूरे दशदले नीलजीमूतसन्निभे ।
डादिफान्तदलैर्युक्ते बिन्दूद्भासितमस्तकैः ॥
अनाहते द्वादशारे प्रवालरुचिसन्निभे ।
कादिठान्तदलैर्युक्ते योगिनां हृदयङ्गमे ॥
विशुद्धे षोडदशदले धूम्राभे स्वरभूषिते ।
बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवता-
माश्रये ॥"
एवं ध्यात्वा न्यसेत् । तत्राङ्गुलिनियमस्तन्त्रे
।
"ललाटेऽनामिकामध्ये विन्यसेम्मुखपङ्कजे ।
तर्जनीमध्यमानामा वृद्धानामे च नेत्रयोः ॥
अङ्गुष्ठं कर्णयोर्न्यस्य कनिष्ठाङ्गुष्ठकौ नसोः ।
मध्यास्तिस्रो गण्डयोश्च
मध्यमाञ्चोष्ठयोर्न्यसेत् ॥
अनामां दन्तयोर्न्यस्य मध्यमामुत्तमाङ्गके ।
मुखेऽनामां मध्यमाञ्च हस्तपादे च पार्श्वयोः
॥
कनिष्ठानामिकामध्यास्तास्तुपृष्ठे च
विन्यसेत् ।
ताः साङ्गुष्ठा नाभिदेशे सर्व्वाः कुक्षौ च
विन्यसेत् ॥
हृदये च तलं सर्व्वं अंसयोश्च ककुत्स्थले ।
हृत्पूर्व्वं हस्तपत्कुक्षि मुखेषु तलमेव च ॥
एतास्तु मातृकामुद्राः क्रमेण परिकोर्त्तिताः ।
अज्ञात्वा विन्यसेद्यस्तु न्यासः स्यात्तस्य
निष्फलः ॥"
गौतमीये ।
"ललाटमुखबृत्ताक्षिश्रुतिघ्राणेषु गण्डयोः ।
ओष्ठदन्तोत्तमाङ्गास्यदोःपत्सन्ध्यग्रकेषु च
॥
पाश्वयोः पृष्ठतो नाभौ जठरे हृदयेऽसके ।
ककुद्यंसे च हृत्पूर्ब्बं पाणिपादयुगे तथा ।
जठराननयोर्न्यस्येन्मातृकार्णान् यथाक्रमात्
॥"
तद्यथा । अं नमो ललाटे । आं नमो मुख-
वृत्ते । इं ईं चक्षुषोः । उं ऊं कर्णयोः ।
ऋं ॠं नसोः । ऌं ॡं गण्डयोः । एं ओष्ठे ।
ऐं अधरे । ओं ऊर्द्ध्वदन्ते औं अधोदन्ते ।
अं
ब्रह्मरन्ध्रे । अः सुखे । कं दक्षबाहुमूले । खं
कुर्परे । गं मणिबन्धे । घं अङ्गुलिमूले । ङं
अङ्गुल्यग्रे । एवं चं ५
वामबाहुमूलसन्ध्यग्रकेषु ।
एवं टं ५ दक्षिणपादमूलसन्ध्यग्रकेषु । एवं तं
५
वामपादमूलसन्ध्यग्रकेषु । पं दक्षिणपार्श्वे ।
फं
विद्याकरी केबला च सोभया
भुक्तिदायिनी ।
पुत्त्रदा सविसर्गा तु
सबिन्दुर्व्वित्तदायिनी ॥"
विशुद्धेश्वरे ।
वाग्भवाद्या च वाक्सिद्ध्यै रमाद्या
श्रीप्रवृद्धये ।
हृल्लेखाद्या सर्व्वसिद्ध्यै कामाद्या
लोकवश्यदा ।
श्रीकण्ठाद्यानिमान्न्यस्येत् सर्व्वमन्त्रः
प्रसीदति ॥"
श्रीविद्याबिषये नवरत्नेश्वरे ।
"वाग्भवाद्या नमोऽन्ताश्च न्यस्तव्या
मातृका-
क्षराः ।
श्रीविद्याविषये मन्त्री वाग्भवाद्यष्टसिद्धये
॥"
इति तन्त्रसारः ॥
(मातृ + "ऋतष्ठञ् ।" ४ । ३ । ७८ ।
इति ठञ् ।
त्रि । मातुरागतम् । यथा, महाभारते । ६
।
८७ । ६७ ।
"योऽन्वयो मातृकस्तस्य स
एनमभिपेदि-
वान् ॥")

**मातृकेशटः**, पुं, (मातृके कुले शटति पुत्त्ररूपेण
गच्छतीति । शट + अच् ।) मातुलः ।
इति
त्रिकाण्डशेषः ॥

**मातृनन्दनः**, पुं, (मातॄणां नन्दनः पुत्त्र आनन्द-
वर्द्ध्वनो वा । कार्त्तिकेयः । यथा, --
"कथं त्वं कृत्तिकापुत्त्रमुक्तवान् तं सुरं
गुहम् ।
कथञ्च पावकिरसौ कथं वा मातृनन्दनः
॥"
इत्यादि वाराहपुराणे
स्कन्धोत्पत्तिर्नामाध्यायः ॥

**मातृमण्डलं**, क्ली, (मातॄणां मण्डलम् ।) नेत्रयो-

आज्ञाचक्रे तु चन्द्राभे द्विदले हक्षलाञ्छिते ॥
सहस्रारे हिमनिभे सर्व्ववर्णविभूषिते ।
अकथादित्रिरेखात्म ह ल क्ष त्रयभूषिते ॥
तन्मध्ये परबिन्दुञ्च सृष्टिस्थितिलयात्मकम् ।
एवं समाहितमना ध्यायेन्न्यासोऽयमान्तरः ॥”
ततो वाह्यमातृकाध्यानम् ।
“पञ्चाशल्लिपिभिर्विभक्तमुखदोःपन्मध्यवक्षःस्थलां
भास्व मौलिनिबद्धचन्द्रशकलामापीनतुङ्गस्तनीम् ।
मुद्रामक्षगुणं सुधाढ्यकलसं विद्याञ्च हस्ता-
म्वुजै-

वामपार्श्वे । बं पृष्ठे । भं नाभौ । मं जठरे ।
यं हृदि । रं दक्षबाहुमूले । लं ककुदि ।
वं वामबाहुमूले । शं हृदादिदक्षहस्ते । षं
हृदादिवामहस्ते । सं हृदादिदक्षपादे । हं
हृदादिवामपादे । लं हृदाद्युदरे । क्षं हृदादि-
मुखे । सर्व्वत्र नमोऽन्तेन न्यसेत् । तथा च ।
“ओमाद्यन्तो नमोऽन्तो वा सबिन्दुर्व्विन्दु-
वर्ज्जितः ।
पञ्चाशद्वर्णविन्यासः क्रमादुक्तो मनीषिभिः
॥”
इति भट्टः ॥ * ॥
अथ संहारमातृकान्यासः ।
तस्या ध्यानं यथा, --
“अक्षस्रजं हरिणपोतमुदग्रटङ्कं
विद्याः करैरविरतं दधतीं त्रिनेत्राम् ।
अर्द्धेन्दुमौलिमरुणामरबिन्दरामां
वर्णेश्वरीं प्रणमत स्तनभारनम्राम् ॥
न्यासस्तु क्षकाराद्यकारान्तः । यथा क्षं नमो
हृदादिमुखे इत्यादि ॥ * ॥ अपरञ्च ।
“चतुर्धा मातृका प्रोक्ता केवला बिन्दुसंयुता
।
सविसर्गा सोभया च रहस्यं शृणु कथ्यते ॥

र्म्मध्यम् । तत्तु आसन्नमृत्युर्न्न पश्यति ।
यथा,
काशीखण्डे ४२ अध्याये ।
“अरुन्धतीं ध्रुवञ्चैव विष्णोस्त्रीणि पदानि
च ।
आसन्नमृत्युर्न्नो पश्येच्चतुर्थं
मातृमण्डलम् ॥
अरुन्धती भवेज्जिह्वा ध्रुवो
नासाग्रमुच्यते ।
विष्णोः पदानि भ्रूमध्ये
नेत्रयोर्म्मातृमण्डलम् ॥”
(यथा च बृहत्संहिताथाम् ।
“मातृणामपि
मातृमण्डलविदो विप्रान् विदुर्ब्रह्मणः
॥”)

**मातृमुखः**, पुं, जडः । इति हेमचन्द्रः । ३ । १६ ॥

**मातृबन्धुः**, पुं, (मातुर्बन्धुः ।) मातृबान्धवः ।

यथा । बन्धवस्त्रिविधाः । आत्मबन्धवः
पितृ-
बन्धवो मातृबन्धवश्चेति । यथोक्तम् ।
“आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः
सुताः ।
आत्ममातुलपुत्राश्च घिज्ञेया
ह्यात्मबान्धवाः ॥
पितुः पितृष्वमुः पुत्राः पितुर्मातृष्वसुः
सुताः ।
पितुर्मातुलपुत्राञ्च विज्ञेयाः
पितृबान्धवाः ॥
मातुः पितृस्वसुः पुत्रा मातुर्मातृष्वसुः
सुताः ।
मातुर्मातुलपुत्राश्च विज्ञेया
मातृबान्धवाः ॥”
इति मिताक्षरा ॥

**मातृबान्धवः**, पुं, (मातुर्बान्धवः ।) मातृबन्धुः ।

स च मातामहभगिनीपुत्त्रः । मातामही-
भगिनीपुत्त्रः । मातृमातुलपुत्त्रश्च ।
यथा, --
“मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः
सुताः ।
मातुर्मातुलपुत्राश्च विज्ञेया
मातृबान्धवाः ॥”
इत्युद्वाहतत्त्वम् ॥

**मातृवाहिनी**, स्त्री, (मातरं वहतीति । वह +
णिनिः ।) वल्गुलापक्षी । इति
राजनिर्घण्टः ॥

**मातृशासितः**, पुं, (मात्रा शासितः । स्नेहाधि-
क्यात् केवलं मात्रैव शासितः न तु
पित्रा-
चार्य्यादिभिरिति भावः ।) मूर्खः । इति
हेम-
चन्द्रः । ३ । १६ ॥

**मातृष्वसा**, स्त्री, (मातुः स्वसा । "मातृपितृभ्यां
स्वसा ।" ८ । ३ । ८४ । इति षत्वम् ।)
मातृ-
भगिनी । मासी इति भाषा । सा मातृ
तुल्या यथा, --
"मातृष्वसा मातुलानी पितृव्यस्त्री
पितृष्वसा ।
श्वश्रूः पूर्ब्बजपत्नी च मातृतुल्याः
प्रकीर्त्तिताः ॥"
इति दायभागः ॥

**मातृष्वसेयः**, पुं, (मातृष्वसुरपत्यं पुमान् । मातृ-
स्वसृ + "मातृष्वसुश्च ।" ४ । १ ।
१३४ । इत्यत्र
"छण्प्रत्ययो ढकि लोपश्च ।" इति
काशिकोक्तेः
ढक् ।) मातृष्वसृपुत्त्रः । मासितुता भाइ
इति
भाषा । तत्पर्य्यायः । मातृष्वस्रीयः २ ।
इति
हेमचन्द्रः । ३ । २०९ ॥

**मातृष्वसेयी**, स्त्री, (मातृष्वसुरपत्यं स्त्री । मातृ-
ष्वसृ + "मातृष्वसुश्च ।" ४ । १ ।
१३४ । इति
ढक् । ढकिलोपश्च । ङीष् ।)
मातृभगिनी-
कन्या । इत्यमरः । २ । ६ । २५ ।
मासितुता

सा मात्रा कविभिः प्रोक्ता ह्रस्वदीर्घप्लुते मता ॥
इति प्राचीनाः ॥
अपि च ।
"वामजानुनि तद्धस्तभ्रमणं यावता भवेत् ।
कालेन मात्रा सा ज्ञेया मुनिभिर्व्वेदपारगैः ॥"
इति तन्त्रसारः ॥
इन्द्रियवृत्तिः । यथा, --
"मात्रास्पर्शास्तु कौन्तेय !
शीतोष्णसुखदुःखदाः ।
आगमापायिनो नित्यास्तांस्तितिक्षस्व भारत !
॥"
इति भगवद्गीता ॥
"मीयन्ते आभिर्विषयाः मात्रा इन्द्रियवृत्तयः ।"
इति तट्टीकायां श्रीधरस्वामी ॥
इन्द्रियम् । इति पूर्ब्बोक्तश्लोकटीकायां मधु-
सूदनसरस्वती ॥ अंशः । यथा, --
"न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते।
स्वभर्त्तृपिण्डमात्राभ्यस्तृप्तिरासांयतः स्मृता
॥"
इति श्राद्धतत्त्वम् ॥
(शिलोच्चयः । यथा, ऋग्वेदे । ३ । ४ । ६ । ३
।
"प्र मात्राभी रिरिचे ।"
"मात्राभिः मीयन्ते परिच्छिद्यन्त इति मात्राः
शिलोच्चयाः ।" इति तद्भाष्ये सायनः ॥ शक्तिः
।
यथा, पञ्चतन्त्रे । १ । ३५९ । "का मात्रा समु-
द्रस्य यो मम प्रसूतिं दूषयिष्यति ॥" अव-
यवः । यथा, मनौ । ७ । ४ ।
"चन्द्रवित्तेशयोश्चैव मात्रानिर्हृत्य शाश्वतीः ॥"
"मात्रा अवयवाः ।" इति तट्टीकायां मेधा-
तिथिः ॥ रूपम् । यथा, भागवते । २ । ५ ।
२५ ॥
"तस्य मात्रा गुणः शब्दः ॥" "मात्रा सूक्ष्मं
रूपम् ।" इति तट्टीकायां स्वामी ॥)

**मात्सर्य्यं**, क्ली, (मत्सर + ष्यञ् ।) मत्सरस्य भावः ।
परशुभद्वेषः । यथा, --
"मागाश्चिरायैकतरः प्रमादं
वसन्नसम्बाधशिवेऽपि देशे ।

"ततः स दृष्टबहुलक्लेशस्तां
पुरुषोऽब्रवीत् ।
मुग्धे ! पवनसेनाख्यो बणिक्पुत्त्रोऽस्मि
माथुरः ॥"
अन्येन कृता माथुरेण प्रोक्ता । "तेन
प्रोक्तम् ।"
४ । ३ । १०४ । इति अण् ङीप् ।
माथुरी-
वृत्तिः । इति व्याकरणम् ॥)

**मादः**, पुं, (माद्यत इति मद + घञ् । नुमभावः ।)
दर्पः । इत्यमरः । ३ । २ । १२ ॥ हर्षः ।
इति
तट्टीकायां भरतः । मत्तता । इति
शब्दरत्ना-
वली ॥

**मादकः**, पुं, (माद्यति वर्षागमे हृष्यतीति । मद +
ण्वुल् ।) दात्यूहपक्षी । इति शब्दमाला ॥
(मादयति स्वगुणेन भूतानीति । मद +
णिच्
ण्वुल् ।) मदकारकद्रव्ये, त्रि ॥ (यथा,
देवी-
भागवते । १ । १४ । ६४ ।
"इन्द्रियाणि महाभाग ! मादकानि सुनि-
श्चितम् ।
अदारस्य दुरन्तानि पञ्चैव मनसा सह
॥")

**मादनं**, क्ली, (मादयति विरहिणः । इति मद +
णिच् + ल्युः ।) लवङ्गम् । इति
शब्दचन्द्रिका ॥
(मादयतीति मद + णिच् + ल्युः ।)
हर्षकारयि-
तरि, त्रि ॥)

**मादनः**, पुं, (मादयति चित्तविकारमुत्पादयतीति।
मद + णिच् + ल्युः ।) कामदेवः ।
मदनवृक्षः ।
धुस्तूरः । इति केचित् ॥

भगिनी । इति भाषा ॥ (टाबन्तोऽप्ययं शब्दः ।
यथा, महाभारते । ३ । २२३ । ५ ।
(“मम मातृष्वषेया त्वं माता दाक्षायणी मम ॥”)

**मातृष्वस्रीयः**, स्त्री, (मातृस्वसुरपत्यं पुमान् ।
मातृव्वसृ + “मातृष्वसुश्च ।” ४ । १ । १३४ ।
इति छण् ।) मातृभगिनीपुत्त्रः । इत्यमरः ।
२ । ६ । २५ । मासितुता भाइ इति भाषा ॥

**मातृष्वस्रीया**, स्त्री, (मातृष्वस्रीय + टाप् ।)
मातृभगिनीकन्या । इत्यमरः । २ । ६ । २५ ।
मासितुता भगिनी इति भाषा ॥

**मातृसिंही**, स्त्री, वासकः । इति शब्दरत्नावली ।

**मात्रं**, क्ली, (मीयत इति । मा + त्रन् ।) कार्त्-
स्न्यम् । अवधारणम् । इत्यमरः । ३ । ३ । १७७ ॥
कात्स्न्र्ये यथा जीवमात्रं न हिंसेत । अवधा-
रणे यथा पयोमात्रं भुङ्क्ते । इति तट्टीकायां
भरतः ॥

**मात्रा**, स्त्री, (मीयते अनया । मा + “हुयामाश्रुभ-
सिभ्यस्त्रन् ।” उणा० ४ । १६८ । इति त्रन् टाप् ।)
परिच्छदः । अल्पः । परिमाणम् । इत्यमरः ।
३ । ३ । १७७ ॥ परिच्छदो हस्त्यश्वादिः । अल्पे
यथा । शाकमात्रा । परिमाणे यथा । किं
हस्तिमात्रोऽङ्कुशः । इति तट्टीकायां भरतः ॥
(यथा, बृहत्संहितायाम् । ५८ । २ ॥ “अङ्गुलमेकं
भवति मात्रा ।”) कर्णभूषा । वित्तम् । अक्ष-
मात्सर्य्यरागोपहतात्मनां हि
स्खलन्ति साधुष्वपि मानसानि ॥
इति भारवौ ३ अध्यायः ॥

**मात्सिकः**, त्रि, (मत्स्योऽस्य पण्यम् । “तदस्य
पण्यम् ।” ४ । ४ । ५१ । इति मत्स्य + ठक् ।)
जालिकः । मत्स्यघातकः । इति सिद्धान्त-
कौमुदी ॥

**माथ** इ कुन्थे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) इ, मान्थ्यते । कुन्थो वधक्लेशौ ।
इति दुर्गादासः ॥

**माथः**, पुं, (मान्थ्यते पीड्यते जनः अस्मिन् ।
माथ + घञ् । ज्वलादित्वात् णो वा । निपा-
तनात् नुमभावः ।) पन्थाः । इति त्रिकाण्ड-
शेषः ॥ (मथ + भावे घञ् ।) मन्थनम् । इति
शब्दरत्नावली ॥

**माथुरः**, पुं, (मथुरा + अण् ।) मथुराया
आगतः । इति मुग्धबोधव्याकरणम् ॥ (तत्र
जात इत्यण् वा । मथुराजातः । यथा, कथा-
सरित्सागरे । ३६ । ७३ ।

**मादनी**, स्त्री, (मादन + स्त्रियां ङीप् ।) माकन्दी ।
इति राजनिर्घण्टः ॥ विजया । इति भाव-
प्रकाशः ॥

**मादृशः**, त्रि, (अहमिव दृश्यत इति । दृश +
“त्यदादिषु दृशोऽनालोचने कञ्च ।” ३ । २ । ६० ।
इति कञ् ।) मत्सदृशः । इति व्याकरणम् ॥
(यथा, महाभारते । ७ । १०८ । ८९ ।
“तस्य त्वं पदवीं गच्छ गच्छेयुस्त्वादृशा यथा ।
तादृशस्येदृशे काले मादृशैरभिचोदितः ॥
कथं नु भार्य्या पार्थानां तव कृष्ण ! सखी
विभो ! ।
धृष्टद्युम्नस्य भगिनी सभां कृष्येत मादृशी ॥”)

**माद्री**, स्त्री, (मद्रे जाता । मद्र + अण् ङीप् ।
भर्गादित्वात् न प्रत्ययलुक् ।) पाण्डुराजपत्नी ।
सा मृगीभूतस्य मुनेः शापात् मैथुनरहितस्य
स्वामिन आज्ञया अश्विनीकुमाराभ्यां नकुल-
सहदेवौ जनयामास । इति महाभारतश्रीभाग-
वतमतम् ॥ (यथा, महाभारते । १ । ६७ । १५९ ।
“कुन्ती माद्री च जज्ञाते मतिश्च सुबलात्मजा ।”)
अतिविषा । इति राजनिर्घण्टः ॥

**माद्रीपतिः**, पुं, (माद्र्याः पतिः ।) पाण्डुराजः ।
इति शब्दरत्नावली ॥

**माधवः**, पुं, (यदुपुत्त्रस्य मधोरपत्यं पुमान् । इति
मधु + अण् । मा लक्ष्मीस्तस्याः धवः । माया
विद्याया धव इति वा ।) विष्णुः । तस्य व्युत्पत्ति-

|  |  |  |
| --- | --- | --- |
| रावयवः । इति मेदिनी । रे, ७५ ॥ * ॥<br>(छन्दसां<br>ह्रस्वदीर्घादिप्रभेदः । यथा, श्रुतबोधे ।<br>“यस्याः पादे प्रथमे द्वादश मात्रा तथा<br>तृतीये-<br>ऽपि ॥”)<br>कालविशेषः । यथा, --<br>“कालेन यावता पाणिः पर्य्येति<br>जानुमण्डले । |  | र्यथा, --<br>“मा च ब्रह्मस्वरूपा या<br>मूलप्रकृतिरीश्वरी । |

नारायणीति विख्याता विष्णुमाया सनातनी
॥
महालक्ष्मीस्वरूपा च वेदमाता सरस्वती ।
राधा वसुन्धरा गङ्गा तासां स्वामी च
माधवः ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ११०
अध्यायः ॥
(यथा, महाभारते । ५ । ७० । ४ ।
“मौनाद्ध्यानाच्च योगाच्च विद्धि भारत !
माधवम् ।”)
तन्नाममाहात्म्यं यथा, --
ओमित्येकाक्षरे मन्त्रे स्थितः सर्व्वगतो हरिः ।
माधवायेति वै नाम धर्म्मकामार्थमोक्षदम् ॥”
इति वह्निपुराणम् ॥
(मधोर्वसन्तस्यायम् मधूनि मधुमन्ति
कुसुमानि
अस्मिन् वा । मधु + “मधोर्ञ च ।” ४ । ४ ।
१२९ । इति ञः ।) वैशाखमासः । इत्यमरः
।
१ । ४ । १६ ॥ (यथा, मार्कण्डेये । ११७ ।
२७ ।
“स तेन सख्या सहितो जगामाम्रवणं वनम् ।
पत्नीभिः स समं रन्तुं माधवे मासि पार्थिव !
॥”
(मधु + स्वार्थे अण् ।) वसन्तः । इति विश्वः
॥
(यथा, सुश्रुते । १ । १९ । ९ । “मधुमाधवौ
वसन्तः ।”
“माधवप्रथमे मासि नभस्यप्रथमे पुनः ॥”
इति चरके सूत्रस्थाने सप्तमेऽध्याये ॥
“माधवनभस्यसहस्यानांयथासंख्यं वैशाख-
भाद्रपौषाणां सुश्रुतेऽभिहितत्वात् तेषां प्रथमे-
ऽग्रेऽग्रवर्त्तिनि मासि चैत्रादौ विषय इति
निष्कर्षः । इति चरकटीकाकृद्भिप्रायः ॥)
मधुकवृक्षः । कृष्णमुद्गः । इति राजनिर्घण्टः
॥
(भौत्यमन्वन्तरीयसप्तर्षीणामन्यतमऋषि-
विशेषः । यथा, मार्कण्डेये । १०० । ३१ ।
“अग्नीध्रश्चाग्निबाहुश्च शुचिर्मुक्तोऽथ माधवः ।

अस्या गुणाः । कटुत्वम् । तिक्तत्वम्
। कषाय-
त्वम् । मदगन्धित्वम् ।
पित्तकासव्रणदाहशोष-
नाशित्वञ्च । इति राजनिर्घण्टः ॥
अपि च ।
“माधवी स्यात्तु वासन्ती पुण्ड्रको
मण्डकोऽपि
च ।
अतिमुक्तो विमुक्तञ्च कामुको
भ्रमरोत्सवः ॥
माधवी मधुरा शीता लघ्वी
दोषत्रयापहा ।”
इति भावप्रकाशः ॥
मिसिः । मधुशर्करा । कुट्टनी ।
(मधुनो विकार
इत्यण् ङीप् ।) मदिरा । इति मेदिनी
। वे,
४६ -- ४७ ॥ (यथा, महाभारते । ४
। १५ । ३ ।
“अस्ति मे शयनं दिव्यं
त्वदर्थमुपकल्पितम् ।
एहि तत्र मया सार्द्धं पिबस्व
मधुमाधवीम् ॥”
माधवस्येयमित्यण् ङोप् ।
तत्प्रियत्वात्तथा-
त्वम् ।) तुलसी । इति शब्दमाला ॥
(मधौ वसन्ते
सेव्यार्च्चनीयेति अण् ।) दुर्गा । इति
शब्दरत्ना-
वली ॥ माधवस्य पत्नी च ॥
(मधुवंशजा कन्या ।
यथा, महाभारते । १ । ९५ । १२ ।
‘जनमेजयः
खल्वनन्तां नामोपयेमे माधवीं
तस्यामस्य जज्ञे
प्राचिन्वान् ॥’)

**माधवीलता**, स्त्री, (माधव्याख्या लता ।) स्वनाम-

**माधुर्य्यं**, क्ली, (मधुरस्थ भावः : मधुर + “वर्ण-
दृढाभ्यः ष्यञ् च ।” ५ । १ । १२३ । इति
ष्यञ् ।)
मधुरस्य भावः । मधुरत्वम् । इति हेमचन्द्रः ।
३ । १७३ । (यथा, सुश्रुते सूत्रस्थाने एका-
दशाध्याधे ।
“माधुर्य्यं भजतेऽत्यर्थं तीक्ष्णभावं विमुञ्चति
॥”)
लावण्यम् । यथा, --
“रूपं किमप्यनिर्व्वाच्यं तनोर्माधुर्य्यमुच्यते ।”
इत्युज्ज्वलनीलमणिः ॥
पाञ्चालीरीतिविशिष्टकाव्यगुणः। यथा, --
“मधुरां सुकुमाराञ्च पाञ्चालीं कवयो विदुः ।”
इति साहित्यदर्पणे ९ परिच्छेदः ॥ तस्य
लक्षणं
यथा, साहित्यदर्पणे ८ परिच्छेदे ।
“चित्तद्रवीभावमयो ह्लादो माधुर्य्यमुच्यते ।
सम्भोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात्
॥
मूर्द्ध्नि वर्गान्त्यवर्णेन युक्ताष्ट ठ ड ढान् विना
।
रणौ लघु च तद्व्यक्तौ वर्णाः कारणतां गताः
॥
अवृत्तिरल्पवृत्तिर्वा मधुरा रचना तथा ।”
(नायिकानामयत्नजोऽलङ्कारविशेषः । यथा,
साहित्यदर्पणे । ३ । १२९ ।
“सङ्क्षोभेष्वप्यनुद्वेगो माधुर्य्यं परिकीर्त्तितम् ।”
सात्त्विकनायकगुणभेदः । यथा, तत्रैव । ३ ।
९१ ।
“सर्व्वावस्थाविशेषेषु माधुर्य्यं रमणीयता ।”)

**माध्यन्दिनं**, त्रि, (मध्ये भवम् । मध्य + “अन्तः-
पूर्ब्बपदात् ठञ् ।” ४ । ३ । ६० ।
इत्यत्रकाशिका
सूत्रवृत्तौ “मध्योमध्यं दिनण् चास्मात् ।”
इति दिनण् ।) मध्यमम् । इति हेमचन्द्रः ।
६ । ९६ ॥ (मध्यन्दिनसम्बन्धि । यथा,
ऋग्वेदे ।
३ । २८ । ४ ।

शुक्रोऽजितश्च सप्तैते तदा सप्तर्षयः स्मृताः ॥”
सायनाचार्य्यस्य भ्राता । यथा, सायनकृतधातु-
वृत्तौ । इति पूर्ब्बदक्षिणपश्चिमसमुद्राधीश्वर-
कम्पराजसुतसङ्गमराजमहामन्त्रिणासायन-
पुत्त्रेण माधवसहोदरेण सायनाचार्य्येण विर-
चिता माधवीया धातुवृत्तिः ॥)

**माधविका**, स्त्री, (माधवी + कन् टाप् । पूर्ब्ब-
ह्रस्वश्च ।) माधवीलता । इत्यमरटीकायां भरतः ॥

**माधवी**, स्त्री, (मधौ साधुपुष्प्यति । मधु + “कालात्
साधुपुष्प्यत्पच्यमानेषु ।” ४ । ३ । ४३ । इत्यण् ।
ङीप् ।) स्वनामख्यातपुष्पलता । तत्पर्य्यायः ।
अतिमुक्तः २ पुण्ड्रकः ३ वासन्ती ४ लता ५ ।
इत्यमरः । २ । ४ । ७२ ॥ अतिमुक्तकः ६
माधविका ७ माधवीलता ८ । इति तट्टीकायां
भरतः ॥ चन्द्रवल्ली ९ सुगन्धा १० भ्रमरोत्सवा
११ भृङ्गप्रिया १२ भद्रलता १३ भूमिमण्डप-
भूषणा १४ वसन्तीदूती १५ । इति जटाधरः ॥
लतामाधवी १६ । इति शब्दरत्नावली ॥ (यथा,
देवीभागवते । १ । १२ । ७ ।
“आम्रैर्नीपैर्मधूकैश्च माधवीमण्डपावृताम् ।”)
ख्यातपुष्पलता । इत्यमरटीकायां भरतः ॥

**माधवेष्टा**, स्त्री, (माधवस्य इष्टा ।) वाराहीकन्दः ।
इति राजनिर्घण्टः ॥

**माधवोचितं**, क्ली, (माधवस्योचितम् । सुगन्धि-
त्वात् तथात्वम् ।) कक्कोलकम् । इति
राजनिर्घण्टः ॥ (विशेषोऽस्य कक्कोलशब्दे
ज्ञातव्यः ॥)

**माधवोद्भवः**, पुं, (माधवादुद्भवोऽस्य ।) राजा-
दनी । इति राजनिर्घण्टः ॥

**माधुकः**, पुं, वर्णसङ्करजातिविशेषः । इति जटा-
धरः ॥ (यथा, महाभारते । १३ । ४८ । २० ।
“मैरेयकञ्च वैदेहः सम्प्रसूतेऽथ माधुकम् ॥”)

**माधुमताः**, पुं, (मधुमत्सु भवाः । मधुमत् +
“कच्छादिभ्यश्च ।” ४ । २ । १३३ । इत्यण् ।)
काश्मीरदेशभवाः । इति हेमचन्द्रः । ४ । २४ ॥

**माधुरं**, क्ली, (मधु अस्ति अस्य अस्मिन् वेति ।
मधु + “ऊषसुषिमुष्कमधोः रः ।” ५ । २ । १०७ ।
इति रः । ततः स्वार्थेऽण् ।) मल्लिका । इति
त्रिकाण्डशेषः ॥ (मधुरात् सम्प्रभवतीत्यण् ।)
मधुरसम्भवे, त्रि ॥

**माधुरी**, स्त्री, (माधुर + गौरादित्वात् ङीष् ।)
मद्यम् । इति भूरिप्रयोगः ॥ माधुर्य्यम् । यथा,
“माध्यन्दिने सवने जातवेदः पुरोडाशमिह
कवे ! जुषस्व ।”
“माध्यन्दिने मध्यन्दिनसम्बन्धिनि” तथा “माध्य-
न्दिने मध्यं दिनस्येदमित्यर्थे उत्सादित्वादञ्
ञित्वादादिवृद्धिः ञित्वादेवाद्युदात्तत्वम् ।” इति
च तद्भाष्ये सायनः ॥ मध्यन्दिनेन प्रोक्ताधीता
वा । इत्यण् ङीप् । शुक्लयजुर्वेदस्य शाखाभेदः ।
यथा, आश्वलायनीयश्रौतसूत्रे । ५ । ५ । १९ ।
“पिबा सोममभियमुग्रतर्द इति तिस्रोऽर्वाङिहि
सोमकामं त्वाहुस्तवायं सोमस्त्वमेह्यर्वाङिन्द्राय
सोमाः प्र दिवो विदाना आ पूर्णो अस्य कलशः
स्वाहेति माध्यन्दिन्यः ।”)

**माध्यमं**, त्रि, (मध्ये भवं । मध्य + “अन्तःपूर्व्वपदाट्-
ठञ् ।” ४ । ३ । ६० । इत्यस्य काशिकासूत्र-
वृत्तौ “मण्मीयौ च प्रत्ययौ वक्तव्यौ ।” इति
मण् ।) मध्ये भवम् । यथा, --
“मध्यमं माध्यमं मध्यमीयं माध्यन्दिनञ्च तत् ।”
इति हेमचन्द्रः । ६ । ९६ ॥

**माध्यस्थं**, क्ली, (मध्यस्थ + ष्यञ् ।) मध्यस्थस्य
भावः । मध्यस्थकरणम् । यथा, कुमारसम्भवे ।
१ । ५२ ।
“अयाचितारं नहि देवदेव-
मद्रिः सुतां ग्राहयितुं शशाक ।

| | | |
|---|---|---|
| | “तानि स्पर्शसुखानि ते च तरलाः स्निग्धा दृशोर्विभ्रमा-स्तद्वक्त्राम्बुजसौरभं स च सुधास्यन्दी गिरां वक्रिमा । सा बिम्बाधरमाधुरीति विषयासङ्गेऽपि चेन्मानसं तस्यां लग्नसमाधि हन्त विरहव्याधिः कथं वर्द्धते ॥”<br>इति गीतगोविन्दे ३ सर्गः ॥ | |

अभ्यर्थनाभङ्गभयेन साधु-
र्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे ॥”

**माध्वकं**, क्ली, (माध्वीक । पृषोदरादित्वादीका-
रस्याकारः ।) माध्वीकम् । इत्यमरटीकायां
भानुदीक्षितः ॥

**माध्वी**, स्त्री, (मधुनो विकारः । मधु + अण् ।
ङीप् । “ऋत्व्यवास्त्व्यवास्त्वमाध्वीति ।” ६ ।
४ । १७५ । अणि स्त्रियां यणादेशो निपा-
त्यते ।) मद्यम् । इति त्रिकाण्डशेषः ॥ मध्वादि-
कृता सुरा । इति राजनिर्घण्टः ॥ (यथा,
मनौ । ११ । ९५ ।
“गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा
सुरा ।”
मधु मधुररसोऽस्त्यस्य कण्टकावच्छेदे अण् ।)
मधुरकण्टकमत्स्यः । इति शब्दरत्नावली ॥
(मधुमति, त्रि । यथा, ऋग्वेदे । ७ । ७१ । २ ।
“दिवानक्तं माध्वी त्रासीथां नः ॥”
हे माध्वी ! मधुमन्तौ ॥ इति तद्भाष्ये सायनः ॥
नदीविशेषः । यथा, मात्स्ये । १२० । ७१ ।
“तेभ्यः शान्ता च माध्वी च द्वे नद्यौ सम्प्रसू-
याताम् ।”)

**माध्वीकं**, क्ली, (माध्वी + स्वार्थे कन् ।) मधूक-
पुष्पकृतमद्यम् । तत्पर्य्यायः । मध्वासवः २
माधवकः ३ मधु ४ । इत्यमरः । २ । १० ।
४१ ॥
मधुमाध्वीकमित्येकं नामेति केचित् ॥ पूर्व्वौ
द्वौ पुष्पमद्ये । (यथा, महाभारते । ३ ।
२७७ । ३९ ।
“कथं हि पीत्वा माध्वीकं पीत्वा च मधुमाध-
वीम् ।
लोभं सौवीरके कुर्य्यान्नारी काचिदिति स्मरे ॥”)
परौ द्वौ द्राक्षाविकारे । इति भरतः ॥ माद्वीक-
मिति वा पाठः । इति रमानाथः । माध्वीक-
स्थाने माध्वकमिति भानुदीक्षितः ॥ (मधु ।
यथा, नैषधे । १९ । ३३ ।
“धयतु नलिने माध्वीकं वा न वाऽभिनवागतः ।
कुमुदमकरन्दौघैः कुक्षिम्भरिर्भ्रमरोत्करः ।
शास्त्रं धीरः । अर्च्चायां तिबादयो न
स्युरिति
रमानाथः । इति दुर्गादासः ॥

**मानं**, क्ली, (मीयतेऽनेनेति । मा + करणे ल्युट्
।)
परिमाणम् । तत्पर्य्यायः । यौतवम् २
द्रुव-
यम् ३ पाय्यम् ४ पौतवम् ५ । तत्तु
तुलाङ्गुलि-
प्रस्थैस्त्रिविधं भवति । तत्र
तुलाग्रहणेनोन्मा-
नाद्युपलक्ष्यते । अङ्गुल्या हस्तादि ।
प्रस्थेन
द्रोणादि । इत्यमरभरतौ । २ । ९ ।
८५ ॥ प्रमाणम् ।
इति मेदिनी । ने, १५ ॥ यत्र तालो
विरमति
तत् । तदेव गृहसुच्यते । तच्चतुर्विधम्
। समं
विषमं अतीतं अनागतञ्च । इति
सङ्गीत-
शास्त्रम् ॥ * ॥
अथ मानपरिभाषा ।
“न मानेन विना युक्तिर्द्रव्याणां जायते
क्वचित् ।
अतः प्रयोगकार्य्यार्थं मानमत्रोच्यते
मया ॥
चरकस्य मतं वैद्यैराद्यैर्यस्मान्मतं ततः
।
विहाय सर्व्वमानानि मागधं मानमुच्यते
॥
त्रसरेणुर्व्वुधैः प्रोक्तस्त्रिंशता
परमाणुभिः ।
त्रसरेणुस्तु पर्य्यायनाम्ना ध्वंसीति
गद्यते ॥
जालान्तरगतैः सूर्य्यकरैर्ध्वंसी
विलोक्यते ।
षड्ध्वंसीभिर्म्मरीचिः स्यात्ताभिः
षड्भिश्च
पलानां द्विसहस्रञ्च भार एकः प्रकीर्त्तितः
।
तुलापलशतं ज्ञेया सर्व्वत्रैवैष निश्चयः ॥
माषटङ्काक्षविल्वानि कुडवः प्रस्थमाढकम्
।
राशिर्गोणी खारिकेति यथोत्तरचतुर्गुणाः
॥” * ॥
मागधपरिभाषायां षड्रत्तिको
माषश्चतुर्व्विंशति-
रत्तिकष्टङ्कः षण्णवतिरत्तिकः कर्षः । अयं
चरक-
सम्मतः ॥ सुश्रुतमते । पञ्चरत्तिको माषो
विंशतिरत्तिकष्टङ्कोऽशीतिरत्तिकःकर्षः ।
अय-
मेव कलिङ्गपरिभाषायामपि । यतस्तत्राष्ट-
रत्तिको माषो द्वात्रिंशद्रत्तिकष्टङ्कः । सार्द्ध-
टङ्कद्वयमितः कर्षः ।
“गुञ्जादिमानमारभ्य यावत् स्यात्
कुडवस्थितिः ।
द्रवार्द्रशुष्कद्रव्याणां तावन्मानं समं मतम्
॥
प्रस्थादिमानमारभ्य द्विगुणन्तु द्रवार्द्रयोः ।
मानं तथा तुलायास्तु द्विगुणं न क्वचित्
स्मृतम् ॥
मृद्वृक्षवेणुलोहादेर्भाण्डं यच्चतुरङ्गुलम् ।
विस्तीर्णञ्च तथोच्चञ्च तन्मानं कुडवं
वदेत् ॥”
इति मागधमानम् ॥ * ॥
अथ कालिङ्गमानम् ।
“यतो मन्दाग्नयो ह्रस्वा हीनसत्त्वा नराः
कलौ ।
अतस्तु मात्रा तद्योग्या प्रोच्यते
सुज्ञसम्मता ॥
यवो द्वादशभिर्गौरैः सर्षपैः प्रोच्यते बुधैः ।
यवद्वयेन गुञ्जा स्यात्त्रिगुञ्जो वल्ल उच्यते ।
माषो गुञ्जाभिरष्टाभिः सप्तभिर्वा भवेत्
क्वचित् ॥
चतुर्भिर्माषकैः शाणः स निष्कष्टङ्क एव च
।

इह तु लिहते रात्रीतर्षं रथाङ्गविहङ्गमा
मधु निजबधूवक्त्राम्भोजेऽधुनाऽधरनामकम् ॥”
“माध्वीकं मकरन्दम् । इति तट्टीकायां नारा-
यणः ॥) तत्पर्य्यायो यथा, --
“मधुमाक्षीकमाध्वीकक्षौद्रसारध्यमीरितम्।
मक्षिकावरटीभृङ्गवातपुष्परसोद्भवम्॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥)

**माध्वीकफलः**, पुं, (माध्वीकं मधुमत् फलमस्य ।)

मधुनालिकेरिकः । इति राजनिर्घण्टः ॥

**माध्वीमधुरा**, स्त्री, (माध्वीमदतएव मधुरेति ।)

मधुरखर्ज्जूरिका । इति राजनिर्घण्टः ॥

**मान**, कि अर्च्चे । इति कविकल्पद्रुमः ॥ (चु०-

पक्षे भ्वा०-पर०-सक०-सेट् ।) कि मानयति
मानति । इति दुर्गादासः ॥

**मान**, ङ विचारे । अर्च्चे । इति कविकल्पद्रुमः ॥

(भ्वा०-आत्म०-सक०-सेट् ।) ङ मीमांसते
राजिका ।
तिसृभी राजिकाभिश्च सर्षपः प्रोच्यते
बुधैः ।
यवोऽष्टसर्षपैः प्रोक्तो गुञ्जा
स्यात्तच्चतुष्टयम् ॥
षड्भिस्तु रत्तिकाभिः स्यान्माषको
हेम-
धानकौ ।
माषैश्चतुर्भिः शाणः स्याद्धरणः स
निगद्यते ॥
टङ्कः स एव कथितस्तद्द्वयं
कोलमुच्यते ।
क्षुद्रमो वटकश्चैव द्रङ्क्षणः स निगद्यते
॥
कोलद्वयस्तु कर्षः स्यात् स प्रोक्तः
पाणि-
मानिकः ।
अक्षः पिचुः पाणितलं किञ्चित्
पाणिश्च तिन्दु-
कम् ॥
विडालपदकञ्चैव तथा षोडशिका
मताः ।
करमध्यो हंसपदं सुवर्णं कवलग्रहम् ॥
उडुम्बरञ्च पर्य्यायैः कर्ष एब निगद्यते ।
स्यात् कर्षाभ्यामर्द्धपलं शुक्तिरष्टमिका
तथा ।
शुक्तिभ्याञ्च पलं ज्ञेयं मुष्टिराम्रं
चतुर्थिका ।
प्रकुञ्चः षोडशी विल्वं पलमेमात्र
कीर्त्त्यते ॥
पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतञ्च निगद्यते
।
प्रसृतिभ्यामञ्जलिः स्यात्
कुडवोऽर्द्धसरावकः ॥
अष्टमानञ्च स ज्ञेयः कुडवाभ्याञ्च
मानिका ।
सरावोऽष्टपलं तद्वज्ज्ञेयमत्र विचक्षणैः
॥
शरावाभ्यां भवेत्
प्रस्थश्चतुःप्रस्थैस्तथाढकः ।
गद्यानो माषकैः षडभिः कर्षः स्याद्दशमा-
षिकः ॥
चतुःकर्षैः पलं प्रोक्तं दशशाणमितं बुधैः ।
चतुःपलैश्च कुडवः प्रस्थाद्याः
पूर्ब्बवन्मताः ॥
स्थितिर्नास्त्येव मात्रायाः कालमग्निं वयो
बलम् ।
प्रकृतिं दोषदेशौ च दृष्ट्वा मात्रां प्रकल्पयेत्
॥
नाल्पं हन्त्यौषधं व्याधिं यथाम्भोऽल्पं
महा-
नलम् ।
अतिमात्रञ्च दोषाय यथा शस्ये बहूदकम्
॥”
इति मानपरिभाषा । इति भावप्रकाशः ॥

**मानः**, पुं, (मन्यते बुद्ध्यतेऽनेन इति मन + घञ् ।)

चित्तसमुन्नतिः । इत्यमरः । १ । ७ । २२
॥
चित्तस्य समुन्नतिरक्षुद्रता मानः । साञ्जे
धना-
द्युत्कर्षेणात्मनि चित्तोन्नतिर्मान इति ।
मत्समो
नास्तीति मननं मानः । इति तट्टीकायां
भरतः ॥
(यथा, मनौ । ४ । १६३ ।
“द्वेषं दम्भञ्च मानञ्च क्रोधं तैक्ष्ण्यञ्च
वर्जयेत् ॥”)
आत्मनि पूज्यताबुद्धिः । इति नीलकण्ठः
॥
अनुरक्तयोर्दम्पत्योर्भावविशेषः । यथा, --
“दम्पत्योर्भाव एकत्र सतोरप्यनुरक्तयोः ।
स्वाभीष्टाश्लेषवीक्षादिनिरोधी मान
उच्यते ॥”
इत्युज्वलनीलमणिः ॥
पूज्यत्वम् । यथा, --
“अधमाः कलिमिच्छन्ति सन्धिमिच्छन्ति
मध्यमाः ।

|  |  |  |  |
| --- | --- | --- | --- |
|  |  | भाजनं कांस्यपात्रञ्च चतुःषष्टिपलश्च सः ॥<br>चतुर्भिराढकैर्द्रोणः कलशो नल्वणोर्मणः ।<br>उन्मानश्च घटो राशिर्द्रोणपर्य्यायसंज्ञितः ॥<br>द्रोणाभ्यां सूर्पकुम्भौ च चतुःषष्टिशरावकः ।<br>सूर्पाभ्याञ्च भवेद्द्रोणी वाहो गोणी च सा<br>स्मृता ॥<br>द्रोणीचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः ।<br>चतुःसहस्रपलिका षण्णवत्यधिका च सा ॥ |  |

उत्तमा मानमिच्छन्ति मानो हि
महतां धनम् ॥
मानो हि मूलमर्थस्य माने म्लाने
धनेन किम् ।
प्रभ्रष्टमानदर्पस्य किं धनेन
किमायुषा ॥
अधमा धनमिच्छन्ति धनमानौ हि
मध्यमाः ।
उत्तमा मानमिच्छन्ति मानो हि
महतां
धनम् ॥”
इति गारुडे ११५ अध्यायः ॥
प्रियापराधसूचिका चेष्टा मानः । स
च लघु-
र्मध्यमो गुरुश्चेति । अल्पापनेयो
लघुः । कष्टा-
पनेयो मध्यमः । कष्टतमापनेयो
गुरुः । असा-
ध्यस्तु रसाभासः ।
अपरस्त्रीदर्शनादिजन्मा
लघुः । गोत्रस्खलनादिजन्मा
मध्यमः । अपर-
स्त्रीसम्भोगदर्शनादिजन्मा गुरुः ।
अन्यथासिद्ध-
कुतूहलाद्यपनेयो लघुः ।
अन्यथावादशपथाद्य-
पनेयो मध्यमः ।
चरणपातभूषणदानाद्यपनेयो
गुरुः । अपरस्त्रीदर्शनादिजन्मा
यथा, --
“स्वेदाम्बुभिः क्वचन
पिच्छिलमङ्गभूमौ
क्षामोदरि क्वचन
कण्टकितञ्चकास्ति ।
अन्यां बिलोकयति भासयति
प्रियेऽपि
मानः क्व धास्यति पदं तव तन्न
विद्मः ॥”
गोत्रस्खलनादिजन्मा यथा, --
“स्थलकन्दो ग्राम्यकन्दः स्थलपद्मस्तु
मानकः ।”
इति रत्नमाला ॥
अस्य गुणाः ।
“मानकं स्वादु शीतञ्च गुरु शोथहरं कटु
।”
इति राजवल्लभः ॥
अपि च ।
“मानकः स्यान्महापत्रः कथ्यते तद्गुणा
अथ ।
मानकः शोथहृच्छीतः पित्तरक्तहरो लघुः
॥”
इति भावप्रकाशः ॥
(विषयोऽस्य यथा, --
“पुराणं मानकं पिष्ट्वा
द्विगुणीकृततण्डुलम् ।
साधितं क्षीरतोयाभ्यामभ्यसेत् पायसन्तु
तत् ॥
हन्तुं वातोदरं शोथं ग्रहणीं पाण्डुतामपि ।
सिद्धो भिषग्भिराख्यातः प्रयोगोऽयं
निरत्ययः ॥”
इति वैद्यकचक्रपाणिसंग्रह उदराधिकारे
॥)

**मानग्रन्थिः**, पुं, (मानस्य ग्रन्थिरिव । बाधकत्वात्
।)
अपराधः । इति हारावली ॥ (मानस्य
ग्रन्थिः । अभिमानवर्द्धनम् । यथा,
छन्दोमञ्ज-
र्य्याम् । ५ । ७ ।
“केशववंशजगीतिर्लोकमनोमृगहारिणी
जयति ।
गोपीमानग्रन्थेर्विमोचनी
दिव्यगायनाश्चर्य्या ॥”)

**मानधानिका**, स्त्री, कर्कटी । इति शब्दमाला ॥

**माननीयं**, त्रि, (मान्यते पूज्यत इति । मान +
अनीयर् ।) मान्यम् । यथा, --
“मानो मान्योऽसि वृक्षेषु माननीयः सुरा-
सुरैः ।

**मानवी**, स्त्री, (मानव + स्त्रीत्वात् ङीप् ।) मनुष्य-
स्त्रीजातिः । तत्पर्य्यायः । मानुष्यी २ मानुषी ३
नारी ४ । इति शब्दरत्नावली ॥ (यथा,
नैषधे । ९ । ४१ ।
“दिवौकसं कामयत न मानवी
नवीनमश्रावि तवाननादिदम् ।”)
शासनदेवताविशेषः । इति हेमचन्द्रः । १ । ४५ ॥
स्वायम्भुवमनुकन्या । इति महाभारतम् ॥
(यथा, भागवते । ३ । २३ । ३ ।
“स वै देवर्षिवर्य्यस्तां मानवीं समनुव्रताम् ।”)

**मानवौघः**, पुं, (मानवानां ओघः यस्मिन् ।) तारा-
विद्यायाः पीठस्य उत्तरे वायव्यादीशपर्य्यन्तं
पूज्यगुरुपङ्क्तिविशेषः । यथा । तारावत्यम्बभानु-
मत्यम्बजयाम्बविद्याम्बमहोदर्य्यम्बसुखानन्दनाथ-
परानन्दनाथपारिजातानन्दनाथकुलेश्वरानन्द-
नाथविरूपाक्षानन्दनाथफेरव्यम्बाः पूजयेत् ।
एते मानवौघाः । तथा च तन्त्रे ।
“अथ तारागुरून् वक्ष्ये दृष्टादृष्टफलप्रदान् ।
ऊर्द्ध्वकेशो व्योमकेशो नीलकण्ठो वृषध्वजः ॥
दिव्यौघाः सिद्धिदा वत्स ! सिद्धौघान् शृणु
यत्नतः ।
वशिष्ठः कूर्म्मनाथश्च मीननाथो महेश्वरः ॥
हरिनाथो मानवौघान शृण वक्ष्यामि तद्-
गुरून् ।
तारावती भानुमती जयाविद्या महोदरी ॥
सुखानन्दः परानन्दः पारिजातः कुलेश्वरः ।
विरूपाक्षः फेरवी च कथितं तारिणीकुलम् ॥
आनन्दनाथशब्दान्ता गुरुवः सर्व्वसिद्धिदाः ।
स्त्रियोऽपि गुरुरूपाश्च अम्बान्ताः परिकी-
र्त्तिताः ॥”
इति तन्त्रसारः ॥

**मानव्यं**, क्ली, (मानवानां समूहः इति । “ब्राह्मण-
माणववाडवाद्यन् ।” ४ । २ । ४२ । इति यन् ।)
मानवसमूहः । माणवानां समूहो माणव्यं
विकारसंघेति ष्ण्यः माणवो बालः । मूर्द्धन्य-
मध्यः दन्त्यमध्य इत्येके । इत्यमरटीकायां भरतः
॥
(मनोर्गोत्रापत्यं । “मनु + गोत्रादिभ्यो

"यद्गोत्रस्खलनं तत्तु भ्रमो यदि न
मन्यते ।
रोमालिव्यालसंस्पर्शं शपथं
तन्वि ! कारय ॥"
अपरस्त्रीसम्भोगदर्शनादिजन्मा
यथा, --
"दयितस्य निरीक्ष्य भालदेशं
चरणालक्तकपिञ्जरं सपत्न्याः ।
सुदृशो नयनस्य कोणभासः
श्रुतिमुक्ताः शिखरोपमा बभूवुः ॥"
इति रसमञ्जरी ॥
ग्रहः । इति मेदिनी । ने, १५ ॥
(परिच्छेदके,
त्रि । यथा, ऋग्वेदे । ७ । ८८ । ५
।
"बृहन्तं मानं वरुण स्वधावः
सहस्रद्वारं जगमा गृहन्ते ।"
"मान्त्यस्मिन् सर्वाणि भूतानि इति
मानं सर्वस्य
भूतजातस्य पुरिच्छेदकमित्यर्थः
।" इति तद्भाष्ये
सायनः ॥ पुं, मन्त्रः । यथा, ऋग्वेदे
। १ ।
१८९ । ८ ।
"अवोचाम
निवचनान्यस्मिन्मानस्यसूनुः
सहसाने अग्नौ ।"
"मीयत इति मानो मन्त्रः तस्य
सूनुरग्निः
मन्त्रेणोत्पद्यमानत्वात् सप्तम्यर्थे
प्रथमा ।" इति
तद्भाष्ये सायनः ॥ निर्माता ।
यथात्रैव ।
१० । १४४ । ५ ।
"यं ते श्येनश्चारुमवृकं
पदाभरदरुणं मान-
मन्धसः ।"
"मानं यागद्वारा निर्मातारम् ।" इति
तद्भाष्ये
सायनः ॥)

**मानकं**, क्ली, पुं, (मानं बृहत्परिमाणमस्य ।
स्नापयामि महादेवीं मानं देहि गृहे मम
॥"
इति दुर्गोत्सवपद्धतिः ॥

**मानरन्ध्रा**, स्त्री, (मानार्थं समयपरिमाणज्ञापकं
रन्ध्रमस्याम् ।) ताम्री । ताँवी । इति भाषा
।
यथा, --
"यामघोषोऽथ ताम्री स्यान्मानरन्ध्रा
विका-
लिका ।"
इति त्रिकाण्डशेषः ॥

**मानवः**, पुं, (मनोरपत्यम् मनोर्गोत्रापत्यं वा
पुमान् । मनु + अण् ।) मनोरपत्यम् ।
मनुष्यः ।
इत्यमरः । २ । ६ । १ ॥ (यथा,
महाभारते ।
१ । ७५ । १२ -- १३ ।
"मनोर्वंशो मानवानां ततोऽयं
प्रथितोऽभवत् ।
ब्रह्मक्षत्रादयस्तस्मान्मनोर्जातास्तु
मानवाः ॥")
बालः । इति शब्दरत्नावली ॥ (मनुना
प्रोक्तम् ।
मनु + अण् ॥ उपपुराणविशेषः । यथा,
देवी-
भागवते । १ । ३ । १३ -- १४ ।
"सनत्कुमारं प्रथमं नारसिंहं ततः परम् ।
नारदीयं शिवञ्चैव दौर्वाससमनूत्तमम् ।
कापिलं मानवञ्चैव तथा चौशनसं स्मृतम्
॥")

**मानवर्जितः**, त्रि, (मानेन वर्ज्जितः ।) मान-
रहितः । यथा, महाभारते । ३ । ४६ ।
४८ ।
"तस्मात् त्वं नर्त्तनः पार्थ ! स्त्रीमध्ये
मान-
वर्ज्जितः ।")
नीचः । इति धरणिः ॥
यञ् ।" ४ । १ । १०५ । इत्यनेन यञ् । मनु-
वंशीये, त्रि ॥)

**मानसं**, क्ली, (मन एव । मनस् "प्रज्ञादिभ्यश्च ।"
५ । ४ । ३८ । इति स्वार्थे अण् ।) मनः । इत्य-
मरः । १ । ४ । ३१ ॥ (यथा, मार्कण्डेये । १५ ।
६१ ।
"यज्ञदानतपांसीह परत्र च न भूतये ।
भवन्ति तस्य यस्यार्त्तपरित्राणे न मानसम् ॥")
तस्य गुणा यथा, --
"परापरत्वं संख्याद्याः पञ्च वेगश्च मानसे ।"
इति भाषापरिच्छेदः ॥
(मनसि भवो जातो वा । मनस् + अण् ।)
मनोभवे, त्रि । यथा, सङ्कल्पः कर्म्ममानसम् ॥
इत्यमरः । १ । ५ । २ ॥
"विषयेष्वतिसंरागो मानसो मल उच्यते ।"
इत्येकादशीतत्त्वम् ॥

| | | |
|---|---|---|
| “शेषाद्विभाषा ।” ५ । ४ । १५४ । इति कप् ।) माणकम् । माणकचु इति भाषा । “कच्वीतु पिच्छिला प्रोक्ता विस्तीर्णपर्णमानके ।” इति शब्दचन्द्रिका ॥ | | |

"अनूढानङ्गपीडेव ममेयं मानसी व्यथा ॥"
इति प्राञ्चः ॥
मानसतापो यथा, --
"कामक्रोधभयद्वेषलोभमोहविषादजः।
शोकासूयावमानेर्ष्या मात्सर्य्यादिभयन्तथा ॥
मानसोऽपि द्विजश्रेष्ठ ! तापो भवति नैकधा ॥"
इति विष्णुपुराणे ६ अंशे ५ अध्यायः ॥
त्रिविधमानसकर्म्म । यथा, --
"परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् ।
वितथाभिनिवेशश्च त्रिविधं कर्म्म मानसम् ॥"
इति तिथ्यादितत्त्वम् ॥
मानसरोगा यथा, --
कामक्रोधलोभमोहभयाभिमानैक्यपैशुन्य-
विषादेर्ष्यासूयामात्सर्य्यप्रभृतयः । अथवा ।
उन्मादापस्मारमूर्च्छाभ्रमतमःसंन्यासप्रभृतयः ।
इति भावप्रकाशः ॥ * ॥ (मनसा सङ्कल्पेन कृत-
मित्यण् ।) सरोवरविशेषः । इति मेदिनी ।
से, ३१ ॥ स च कैलासे ब्रह्मणा निर्म्मितः ।
यथा, --
"कैलासश्चापि दुष्कम्पो दानवेन्द्रेण कम्पितः ।
यक्षराक्षसगन्धर्व्वैर्नित्यं सेवितकन्दरः ॥
श्रीमान्मनोहरश्चैव नित्यं पुष्पितपादपः ।
हेमपुष्करसंछन्नं तेन वैखानसं सरः ॥
कम्पितं मानसञ्चैव राजहंसनिषेवितम् ॥"
इति महाभारते हरिवंशे नारसिंहे २२८ अः ॥
अपि च ।
"कैलासपर्व्वते राम ! मनसा निर्म्मितं परम् ।
ब्रह्मणा नरशार्दूल ! तेनेदं मानसं सरः ॥
तस्मात् सुस्राव सरसः सायोध्यामुपगूहते ।
सरःप्रवृत्ता सरयूः पुण्या ब्रह्मसरश्च्युता ॥"
इति रामायणे आदिकाण्डे २४ सर्गः ॥ * ॥
(पुं, नागविशेषः । यथा, महाभारते । १ । ५७ ।
१६ ।
"अमाहठः कामठकः सुषेणो मानसो व्ययः ।"
शाल्मलीद्वीपस्य वर्षविशेषः । यथा, मात्स्ये ।
५३ । २३ ।
"श्वेतश्च हरितश्चैव जीमूतो रोहितस्तथा ।
वैद्यतो मानसश्चैव केतुमान् सप्तमस्तथा ॥"
पुष्करद्वीपस्थपर्व्वतविशेषः । यथा, मात्स्ये ।
सूत उवाच ।
"तीर्थानि कथितान्येवं भौमानि
मुनिसत्तम ! ।
मानसानीह तीर्थानि फलदानि विशेषतः
॥
मनो निर्म्मलतीर्थं हि रागादिभिरनाविलम्
॥"
इति नारसिंहपुराणे ४६ अध्यायः ॥

**मानसपूजा**, स्त्री, (मानसकृता पूजा । शाक-
पार्थिववत् समासः ।)
मनोरचितद्रव्यकरणक-
सपर्य्या । यथा, हृत्पद्ममध्ये देवीं विभाव्य
कुण्डलीपात्रसंस्थेन स्रहस्रारामृतेन पाद्यं
देव्या-
श्चरणे दद्यात् । ततो मनश्चार्घ्यं दत्त्वा
सहस्र-
दलपद्मभृङ्गारललितपरमामृतजलेन
आचम-
नीयं मुखे । पञ्चविंशति तत्त्वेन गन्धञ्च ।
अहिंसां विज्ञानं क्षमां दयां अलोभं अमोहं
अमात्सर्य्यं अमायां अनहङ्कारं अरागं
अद्वेषं
इन्द्रियाणि द्वादश एतानि पुष्पाणि च
प्रदाप-
येत् । ततस्तेजोरूपं दीपं वायुरूपं धूपं
दद्यात्
अम्बरं चामरं दर्पणं सूर्य्यं चन्द्रं छत्रं
पद्मन्तु
मेखलां आनन्दं हारमुत्तमं
अनाहतध्वनिमयीं
घण्टां निवेदयेत् । ततः सुधारसाम्बुधि
मांस-
पर्व्वतं ब्रह्माण्डपूरितं पायसञ्च दत्त्वा ।
"मनोनर्त्तनसत्तालैः शृङ्गारादिरसोद्भवैः ।
नृत्यैर्गीतैश्च वाद्यैश्च तोषयेत् परमेश्वरीम्
॥"
एवं संपूज्य अभेदेन जपः कार्य्यः । इति
तन्त्र-
पूजाक्रमस्तु । निजगुरुं
ध्यात्वामुकानन्दनाथा-
मुकशक्ताम्बाश्रीपादुकां पूजयामीति
मानसै-
र्गन्धाक्षतकुसुमैरर्च्चयेत् ।
कनिष्ठाभ्यां लं पृथि-
व्यात्मकं गन्धं समर्पयामि नमः ।
अङ्गुष्ठाभ्यां हं
आकाशात्मकं पुष्पं समर्पयामि नमः
। तर्ज्ज-
नीभ्यां यं वाय्वात्मकं धूपं समर्पयामि
नमः ।
मध्यमाभ्यां रं वह्न्यात्मकं दीपं
समर्पयामि
नमः । अनामिकाभ्यां वं अमृतात्मकं
नैवेद्यं
समपैयामि नमः । इति
कुलमूलावतारकल्प-
सूत्रटीकायां तृतीयकाण्डम् ॥

**मानसव्रतं**, क्ली, (मानसकृतं व्रतम् ।
शाकपार्थिव-
वत् समासः ।) अहिंसादि । यथा, --
"अहिंसा सत्यमस्तेयं
ब्रह्मचर्य्यमकल्कता ।
एतानि मानसान्याहुर्व्रतानि तु घराधरे
॥"
इति वराहपुराणम् ॥

**मानसालयः**, पुं, (मानसे आलयो यस्य ।)
हंसः ।
इति राजनिर्घण्टः ॥

**मानसिकं**, त्रि, (मानस + ठञ् ।) मनोभवम् ।
मानसशब्दात् ष्णिकप्रत्ययेन
निष्पन्नम् ॥ (पुं,
विष्णुः । यथा, महाभारते । १२ ।
३३८ । ४ ।
"नमस्ते देवदेवेश ! निष्क्रिय !
निर्गुण ! मानसिक ! नामनामिक !
।")

"द्वीपार्द्धस्य परिक्षिप्तः पश्चिमे मानसो गिरिः ।")

**मानसजपः**, पुं, (मानसेन कृतो जपः ।) धिया

वर्णश्रेण्युच्चारणम् । यथा,
"धिया यदक्षरश्रेणीं वर्णस्वरपदात्मिकाम् ।
उच्चरेदर्थमुद्दिश्य मानसः स जपः स्मृतः ॥
तज्जपे नियमो नास्त्येव । तथा च ।
"अशुचिर्वा शुचिर्वापि गच्छंस्तिष्ठन् स्वप-
न्नपि ।
मन्त्रैकशरणो विद्वान् मनसैव समभ्यसेत् ॥
न दोषो मानसे जाप्ये सर्व्वदेशेऽपि सर्व्वदा ॥"
इति तन्त्रसारः ॥

**मानसतीर्थं**, क्ली, (मानसं तीर्थमिव । रागाद्य-

मावात् तथात्वम् ।) रागादिरहितं मनः ।
यथा,

सारे त्रिपुराप्रकरणम् ॥ * ॥ मानसैर्गु
रुपूजा
यथा, नीलतन्त्रे ।
"ततो मानसगन्धाद्यैः पूजयेत्
स्वस्वमुद्रया ।
कनिष्ठा पृथिवीतत्त्वं
तद्योगाद्गन्धयोजनम् ॥
अङ्गुष्ठो गगनं तत्त्वं तेनैव पुष्पयोजनम् ।
तर्ज्जनी वायुतत्त्वं स्याद्धूपं तेनैव
योजयेत् ॥
अनामा जलतत्त्वं स्यात्तेनैव योजयेच्च
कम् ।
ततस्तु वाग्भवं जप्यादष्टोत्तरशतं सुधीः
॥
जपं समर्प्य भक्त्या च प्रणमेद्दण्डवद्भुवि
॥"
अपि च ।
"मिथुनं चिन्तयित्वा तु मानसैरुपचारकैः
।
भौतिकैः पूजयेद्विद्वान् मुद्रामन्त्रसमन्वितैः
॥
भूम्याकाशमरुद्वह्निवारिमन्त्रैःसबिन्दुकैः
।
कनिष्ठाङ्गुलितर्ज्जन्यौ मध्यमानामिके
तथा ॥
अङ्गुष्ठेन समायोगान्मुद्राः पञ्च प्रकीर्त्तिताः
।
पृथिव्यात्मकगन्धः
स्यादाकाशात्मकपुष्पकम् ॥
धूपो वाय्वात्मकः प्रोक्तो दीपो
वह्न्यात्मकः परः ।
रसात्मकञ्च नैवेद्यं पूजा पञ्चोपचारिका ॥
ततस्तु वाग्भवं जप्यादष्टोत्तरशतं सुधीः
॥"
इत्यन्नदानकल्पः ॥
अन्यच्च ।
"मानसैरुपचारैश्च संपूज्य कल्पयेन्मुदा
।
गन्धं भूम्यात्मकं दद्याद्वावपुष्पं ततः परम्
॥
धपं वाय्वात्मकं देयं तेजसा दीपमेव च ।

**मानसी**, स्त्री, (मानस + स्त्रीत्वात् ङीप् ।) विद्या-

देवीविशेषः । इति हेमचन्द्रः । २ ।
१५ ॥ मनो-
भवा च ॥ (यथा, बिष्णुपुराणे । १ ।
७ । १ ।
"ततोऽभिध्यायतस्तस्य जज्ञिरे
मानसीः प्रजाः ॥")

**मानसूत्रं**, क्ली, (मानस्य गात्रप्रमाणस्य तन्

मानार्थं वा सूत्रम् ।)
स्वर्णादिनिर्म्मितकटि-
सूत्रम् । इति धनञ्जयः । गोट् इति
भाषा ॥

**मानसौकाः**, [स्] पुं, (मानसं सर ओको वासस्थानं

यस्य ।) हंसः । इत्यमरः । २ । ५ ।
२३ ।
(यथा, महाभारते । ८ । ४१ । १३ ।
"वयं हंसाश्चरामेमां पृथिवीं
मानसौकसः ।")

**मानिका**, स्त्री, (मानयति गर्व्वीकरोतीति । मन +

णिच् + ण्वुल् टाप् अकारस्येत्वञ्च ।)
मद्यम् ।
इति शब्दरत्नावली ॥ (माने
प्रभवतीति । मान
+ ठक् ।) शरावः । इति
वैद्यकपरिभाषा ।
शेर इति भाषा ॥

**मानिनी**, स्त्री, फली वृक्षः । इति मेदिनी । ने,

१०९ ॥ (मानं अस्त्यस्याः । मान +
इनिः । ङीप् ।
मानवती च ॥ (यथा, गीतगोविन्दे ।
९ । २ ।
"हरिरभिसरति वहति मृदुपवने ।
किमपरमधिकसुखं सखि ! भवने ॥
माधवे माकुरु मानिनि ! मानमये ॥"
अभिमानवती च । यथा, कुमारे । ५
। ५३ ।
"इयं महेन्द्रप्रभृतीनधिश्रिय-

| | | |
|---|---|---|
| | नैवेद्यममृतं दद्यात् पानीयं वरुणात्मकम् ॥<br>अम्बरं मुकुरं दद्याच्चामरं छत्रमेव च ।<br>तत्रन्मुद्राविधानेन संपूज्यात्मगुरुं जपेत् ॥<br>यथाशक्ति जपं कृत्वा समाप्य कवचं पठेत् ॥"<br>इति कङ्कालमालिनीतन्त्रम् ॥ | श्चतुर्दिगीशानवमत्य मानिनी ।<br>अरूपहार्य्यं मदनस्य निग्रहात्<br>पिनाकपाणिं पतिमाप्तुमिच्छति ॥"<br>"मानिनीन्द्राणीप्रभृतीरतिशय्य वर्त्तितव्यमित्यभि-<br>मानवती ।" इति तट्टीकायां मल्लिनाथः ॥)<br>राज्यवर्द्धनस्य पत्नी । यथा, मार्कण्डेये । १०९ । १० । |

"विदूरथस्य तनया दाक्षिणात्यस्य भूभृतः ।
तस्य पत्नी बभूवाथ मानिनी नाम मानिनी ॥")

**मानी**, [न्] त्रि, (मानोऽस्यास्तीति । मान + इनिः ।)
मानविशिष्टः । इति मेदिनी । ने, १०९ ॥
(यथा, मार्कण्डेये । १२३ । २२ ।
"ततस्ते भूभृतः सर्व्वे बहुशस्तेन मानिना ।
निराकृताः सुनिर्विण्णाः प्रोचुरन्योन्यमाकुलाः ॥")
सिंहः । इति राजनिर्घण्टः ॥

**मानुषः**, पुं, (मनोर्जातः । मनु + "मनोर्जाता-
वञ् यतौ षुक् च ।" ४ । १ । १६१ । इत्यञ्
षुगागमश्च ।) मनुष्यः । इत्यमरः । २ । ६ । १ ॥
(यथा, मनौ । ९ । २८४ ।
"चिकित्सकानां सर्व्वेषां मिथ्याप्रचरतां दमः ।
अमानुषेषु प्रथमो मानुषेषु तु मध्यमः ॥"
मनुष्यस्येदम् । अण् । मनुष्यसम्बन्धिनि, त्रि ।
यथा, महाभारते । १३ । ६ । २० ।
"अकृत्वा मानुषं कर्म्म यो दैवमनुवर्त्तते ।
वृथा श्राम्यति संप्राप्य पतिं क्लीवमिवाङ्गना ॥")

**मानुषिकं**, त्रि, (मनुष्यस्य भावः कर्म्म वा ।
मनुष्य + ठञ् ।) मनुष्यस्य कर्म्मादि । मनुष्य-
स्येदमितीदमर्थे ष्णिकप्रत्ययेन निष्पन्नम् ॥

**मानुषी**, स्त्री, (मानुषस्य स्त्री । मानुष + जातित्वात्
ङीष् ।) मनुष्यस्त्रीजातिः । यथा, --
वुञ् ।) मनोज्ञता । मनोज्ञस्य भाव इत्यर्थे
कण् प्रत्ययेन निष्पन्नम् ॥

**मान्द्यं**, क्ली, (मन्दस्य भावः कर्म्म वा । मन्द +
"पत्यन्तपुरोहितादिभ्योयक् ।" ५ । १ । १२८ । इति
यक् ।) रोगः । इति हेमचन्द्रः ॥ मन्दता च ।
(यथा, कथासरित्सागरे । २४ । १३५ ।
"विश्वस्ते च ततस्तस्मिन् पुरोधसि चकार सः ।
मान्द्यमल्पतराहारकृशीकृततनुर्मृषा ॥")

**मान्धाता**, [ऋ] पुं, (मां धास्यतीति । धेट् +
तृच् ।) युवनाश्वराजपुत्रः । तत्पर्य्यायः ।
युवनाश्वजः २ । इति हेमचन्द्रः । ३ । ३६४ ।
तद्विवरणं यथा । 'तस्मात् प्रसेनजित् ततो युव-
नाश्वोऽभवत् । तस्य च पुत्रस्यातिनिर्व्वेदान्-
मुनीनामाश्रममण्डले निवसतः कृपालुभिस्तै-
र्मुनिभिरपत्योत्पादनायेष्टिः कृता । तस्याञ्चार्द्ध-
रात्रे निवृत्तायां मन्त्रपूतजलपूर्णकलसं वेदी-
मध्ये निवेश्य ते मुनयः सुषुपुः । सुप्तेषु च तेष्व-
तीवतृट्परीतः स भूपालस्तमाश्रममण्डलं
विवेश । सुषुप्तांश्च तानृषीन् नैवोत्थापयामास ॥
तच्च कलसजलमपरिमेयमाहात्म्यं मन्त्रपूतं
पपौ । प्रबुद्धाश्च ऋषयः पप्रच्छुः । केनैतन्मन्त्र-
पूतं वारि पीतम् । अत्र हि पीते राज्ञोऽस्य
युवनाश्वस्य पत्नी महाबलपराक्रमं पुत्रं जन-
यिष्यति । इत्याकर्ण्य स राजा अजानता मया
पीतमित्याह । गर्भश्च युवनाश्वोदरेऽभवत् ।
क्रमेण च ववृधे । प्राप्तसमयश्च दक्षिणं कुक्षि-
मवनीपतेर्निर्भिद्य निश्चक्राम । न चासौ राजा
ममार । जातो नामैष कं धास्यतीति ते मुनयः
प्रोचुः । अथागम्य देवराडब्रवीत् । मामयं
धास्यति । ततोऽसौ मान्धाता नामतोऽभवत् ।
वक्त्रे चास्य प्रदेशिनी देवेन्द्रेण न्यस्ता तां पपौ ।
ताञ्चामृतस्राविणीमासाद्याह्नैवैकेन व्यवर्द्धत ।
स तु मान्धाता चक्रवर्त्ती सप्तद्वीपां महीं
बुभुजे । भवति चात्र श्लोकः ।
"यावत् सूर्य्य उदेतिस्म यावच्च प्रतितिष्ठति ।
सर्व्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥"

**मान्यस्थानं**, क्ली, (मान्यस्य स्थानं ।) पूज्यत्व-
कारणम् । यथा, --
"वित्तं बन्धुर्वयः कर्म्म विद्या भवति पञ्चमी ।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ॥
पञ्चानां त्रिषु वर्णेषु भूयांसि गुणवन्ति च ।
यत्र स्युः सोऽत्र मानार्हः शूद्रोऽपि दशमीं गतः ॥"
इति मानवे २ अध्यायः । कौर्म्मे ११ अध्याये-
ऽप्येवम् ॥

**मान्या**, स्त्री, (मान्य + स्त्रियां टाप् ।) मरुन्माला ।
यथा, --
"अनिर्मान्या तु मान्या च मरुन्माला च मोहना ॥"
इति शब्दमाला ॥
पूज्या च ॥

**मापत्यः**, पुं, (मा विद्यतेऽपत्यमस्य ।) कामः ।
इति हलायुधः ॥

**मापनः**, पुं, (मापयति स्वर्णादिकमनेनेति । मा +
णिच् + करणे ल्युट् ।) तूलः । इति शब्द-
चन्द्रिका ॥ परिमाणे, क्ली ॥ (स्त्रियामप्यत्र ।
यथा, महाभारते । १ । ५१ । १५ ।
"यस्मिन् देशे च काले च मापनेयं प्रवर्त्तिता ॥")

**मामकं**, त्रि, (ममेदम् । अस्मद् + "तवकममका-
वेकवचने ।" ४ । ३ । ३ । इति अण् ममका-
देशश्च ।) मदीयम् । इति मेदिनी । के, १३८ ॥
(यथा, महाभारते । १ । १०५ । १२ ।

मनुष्यी मानुषी नारी मानवी मानुषस्त्रियाम् ।
इति शब्दरत्नावली ॥
(मनुष्य + अण् + ङीष् ।)
चिकित्साविशेषः ।
यथा, --
"आसुरी मानुषी दैवी चिकित्सा सा त्रिधा मता ।"
इति शब्दचन्द्रिका ॥

**मानुष्यं**, क्ली, (मनुष्यस्य भावः । मनुष्यस्येदमिति वा । मनुष्य + अण् ।) मनुष्यस्य भावः । मनुष्यत्वम् । (यथा, भागवते । ४ । २३ । २८ ।
"स वञ्चितो वतात्मध्रुक् कृच्छ्रेण महता भुवि ।
लब्ध्वापवर्ग्यं मानुष्यं विषयेषु विषज्जते ॥")
मनुष्यशरीरम् । यथा, --
"मानुष्ये कदलीस्तम्भे निःसारे सारमार्गणम् ।
यः करोति स संमूढो जलवुद्बुदसन्निभे ॥"
इति शुद्धितत्त्वे याज्ञवल्क्यवचनम् ॥
(मनुष्यसम्बन्धिनि, त्रि । यथा, महाभारते । १ । १५३ । ११ ।
"गच्छ जानीहि के न्वेते शेरते वनमाश्रिताः ।
मानुष्यो बलवान् गन्धो घ्राणं तर्पयतीव मे ॥")

**मानुष्यकं**, क्ली, (मनुष्याणां समूहः । मनुष्य + "गोत्रोक्षोष्ट्रोरभ्रेति ।" ४ । २ । ३९ । इति वुञ् ।)
मनुष्यसमूहः । इत्यमरः । ३ । २ । ४३ । (मनुषस्येदं मानुष + यत् । स्वार्थे कन् । (मनुष्यसम्बन्धिनि,

मान्धाता शशबिन्दुदुहितरं बिन्दुमतीमुपयेमे । पुरुकुत्समम्बरीषं मुचुकुन्दञ्च तस्यां पुत्त्रत्रयमुत्पादयामास । पञ्चाशच्च दुहितरस्तस्यामेव तस्य नृपतेर्ब्बभूवुः ।" इति विष्णुपुराणे ४ अंशे २ अध्यायः ॥

**मान्यः**, त्रि, (मान्यत इति । मान + कर्म्मणि ण्यत् ।) अर्च्चयः । तत्पर्य्यायः । पूज्यः २ प्रतीक्ष्यः ३ भगवान् ४ भट्टारकः ५ । इति जटाधरः ॥ (यथा च मनौ । २ । १३९ ।
"तेषान्तु समवेतानां मान्यौ स्नातकपार्थिवौ ।"
प्रार्थनीयः । यथा, रामायणे । २ । ८ । १८ ।
"यथा वै भरतो मान्यस्तथा भूयोऽपि राघवः ।
कौशल्यातोऽतिरिक्तञ्च मम सुश्रूषते बहु ॥"
"मान्यः प्रार्थनीयः श्रेयस्करः । तथा तद्वत् ।"
इति तट्टीकायां रामानुजः ॥)

"ततो मामाह स मुनिर्गर्भमुत्सृज मामकम् ॥")
ममतायुक्तः । इति शब्दमाला ॥ यथा च महाभारते । ४ । ५० । १७ ।
"अत्र या मामिका बुद्धिः श्रूयतां यदि रोचते ॥")

**मामकः**, पुं, (माम + स्वार्थे कन् ।) मातुलः । इति मेदिनी ॥ के, १३८ ॥ ममायं वा ममेदमिति बुद्धिर्यस्य । कप् ।) कृपणः । इति शब्दमाला ॥

**मामकीनं**, त्रि, (ममेदम् । अस्मद् + "तवकममकावेकवचने ।" ४ । ३ । ३ । इति खञ् । ममकादेशश्च ।) मदीयम् । ममेदमित्यर्थे णीने क्रेर्लुकि अस्मद एकत्वान्मदादेशे अस्य च ममकादेशे वृद्धौ मामकीनम् । इति दुर्गादासः ॥ (यथा, कथासरित्सारे । ३२ । १४५ ।
"एतच्च मे कियत् किं हि न बुद्ध्या साधयाम्यहम् ।
प्रज्ञानं मामकीनं च श्रूयतां वर्णयामि ते ॥")

**मायः**, पुं, (माया अस्यास्तीति । माया + अर्श आदित्वादच् ।) पीताम्बरः । (यथा, महाभारते । १३ । २४ । ३११ ।
"नमो विश्वाय मायाय चिन्त्याचिन्त्याय वै नमः ॥")
(मयस्यापत्यं पुमान् । मय + अण् ।) असुरः ।
इति मेदिनी ॥ ये, ४६ ॥

**माया**, स्त्री, (मीयते अपरोक्षवत् प्रदर्श्यतेऽनया

| | | |
|---|---|---|
| त्रि । यथा, महाभारते । ५ । ७७ । ८ ।<br>"सुमन्त्रितं सुनीतञ्च<br>न्यायतश्चोपपादितम् ।<br>कृतं मानुष्यकं कर्म्म दैवेनापि विरुध्यते<br>॥")<br>**मानोज्ञकं**, क्ली, (मनोज्ञस्य भावः कर्म्म वेति ।<br>"द्वन्द्वमनोज्ञादिभ्यश्च ।" ५ । १ ।<br>१३३ । इति | | इति । मा + "माच्छाससिसूभ्यो यः ।"<br>उणा०<br>४ । १०९ । इति यः टाप् ।)<br>इन्द्रजालादिः । |

तत्पर्य्यायः । शाम्बरी २ । इत्यमरः । २ । १० ।
११ ॥ इन्द्रजालिः ३ कुहकम् ४ कुसृतिः ५
शाम्बरिः ६ । इति जटाधरः । साम्बरी ७ ।
इति शब्दरत्नावली ॥ माति विश्वमस्यां मनी-
षादिः । शम्बरस्य दैत्यस्य इयं शाम्बरी तेन
प्राङ्निर्म्मितत्वात् । इति भरतः ॥ * ॥ बुद्धिः ।
इति मेदिनी । ये, ४६ । (मीमिते जानाति
संख्यात्यनयेति । मा + यः टाप् ।) कृपा ।
दम्भः । इति नानार्थे हेमचन्द्रः ॥ शठता ।
यथा, --
"माया तु शठता शाठ्यं कुसृतिर्निकृतिश्च सा ॥"
(प्रज्ञा । यथा, ऋग्वेदे । २ । १७ । ५ ।
"अधारयत् पृथिवीं विश्वधायस मस्तभ्नान्
मायया द्यामवस्रसः ।"
"मायया प्रज्ञया ।" इति तद्भाष्ये सायनः ॥)
राज्ञां क्षुद्रोपायविशेषः । यथा, --
"मायोपेक्षेन्द्रजालानि क्षुद्रोपाया इमे त्रयः ॥"
लक्ष्मीः । इति च हेमचन्द्रः ॥ बुद्धमाता ।
इत्यमरकोषे मायादेवीसुतशब्ददर्शनात् ।
दुर्गा । यथा, --
"दुर्गे शिवेऽभये माये नारायणि सनातनि ।
जये मे मङ्गलं देहि नमस्ते सर्व्वमङ्गले ॥
राजन् ! श्रीवचनो माश्च याश्च प्रापणवाचकः ।
तां प्रापयति या सद्यः सा माया परिकीर्त्तिता ॥
माश्च मोहार्थवचनो याश्च प्रापणवाचनः ।
तं प्रापयति या नित्यं सा माया परिकीर्त्तिता ॥

आबालगोपं स्पष्टत्वादानन्त्यं तस्य साब्रषीत् ॥
अचिदात्मघटादीनां यत् स्वरूपं जडं हि तत् ।
यत्र कुण्ठीभवेद् बुद्धिः स मोह इति लौकिकाः ॥
इत्थं लौकिकदृष्ट्यैतत् सर्वैरप्यनुभूयते ।
युक्तिदृष्ट्या त्वनिर्वाच्यं नासदासीदिति श्रुतेः ॥
नासदासीद् विभातत्वान्नो सदासीच्च बाधनात् ।
विद्यादृष्ट्या श्रुतं तुच्छं तस्य नित्यनिवृत्तितः ॥
तुच्छानिर्व्वचनीया च वास्तवी चेत्यसौ त्रिधा ।
ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः ॥
अस्य सत्त्वमसत्त्वञ्च जगतो दर्शयत्यसौ ।
प्रसारणाच्च सङ्कोचात् यथा चित्रपटस्तथा ॥
अस्वतन्त्रा हि माया स्यादप्रतीतेर्व्विना चितिम् ।
स्वतन्त्रापि तथैव स्यादसङ्गस्यान्यथाकृतेः ॥
कूटस्थासङ्गमात्मानं जडत्वेन करोति सा ।
चिदाभासस्वरूपेण जीवेशावपि निर्म्ममे ॥
कूटस्थमनपाकृत्य करोति जगदादिकम् ।
दुर्घटैकविधायिन्यां मायायां का चमत्कृतिः ॥
द्रवत्वमुदके वह्नावौष्ण्यं काठिन्यमश्मनि ।
मायाया दुर्घटत्वञ्च स्वतः सिध्यति नान्यथा ॥
न वेत्ति मायिनं लोको यावत् तावच्चमत्कृतिम् ।
धत्ते मनसि पश्चात्तु मायैषेत्युपशाम्यति ॥
प्रसरन्ति हि चोद्यानि जगद्वस्तुत्ववादिषु ।

जीवः प्रविश्य गर्भे तु सुखदुःखानि बिन्दति ।
जातश्च विस्मरेत् सर्व्वमेषा माया ममोत्तमा ॥
आत्मकर्म्माश्रितो जीवो नष्टसंज्ञो गतस्पृहः ।
कर्म्मणा नीयतेऽन्यत्र मायैषा मम चोत्तमा ॥
शुक्रशोणितसंयोगाज्जायन्ते यदि जन्तवः ।
अङ्गुल्यश्चरणौ चैव भुजौ शीर्षं कटिस्तथा ॥
पृष्ठं तथोदरञ्चैव दन्तौष्ठपुटनासिका ।
कर्णौ नेत्रकपोलौ च ललाटं जिह्वया सदा ॥
एतया मायया युक्ता जायन्ते यदि जन्तवः ।
तस्यैव जीर्य्यते जन्तोर्भुक्तं पीतञ्च वह्निना ।
अयञ्च स्रवते जन्तुरेषा माया ममोत्तमा ॥
शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चमः ।
अन्नात् प्रवर्त्तते जन्तुरेषा माया मम प्रिये ! ॥
सर्व्वर्त्तुषु निजाकारः स्थावरे जङ्गमे तथा ।
तत्त्वं न ज्ञायते तस्य मायैषा मम सुन्दरि ! ॥
आपो विद्यास्तथा भौमा आपो येषु प्रतिष्ठिताः ।
न च वृद्धिं प्रयान्त्यत्र मायैषा परमा मम ॥
वृष्टौ बहूदकाः सर्व्व पल्वलानि सरांसि च ।
ग्रीष्मे सर्व्वाणि शुष्यन्ति एतन्मायाबलं मम ॥
हिमवच्छिखरान्मुक्ता नाम्ना मन्दाकिनी नदी ।
गाङ्गता सा भवेद्गङ्गा मायैषा मम कीर्त्तिता ॥
मेघा गृह्णन्ति सलिलं लवणात् सलिलार्णवात् ।
वर्षन्ति मधुरं लीके सर्व्वं भायाबलं मम ॥
रोगार्त्ता जन्तवः केचित् भक्षयन्ति महौषधम् ।
तस्य वीर्य्यं समाश्रित्य मायां तु विसृजाम्यहम् ॥
औषधे दीयमाने तु जन्तुः पञ्चत्वमेति यत् ।

इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे २७ अध्यायः ॥
अपि च ।
"विचित्रकार्य्यकारणा अचिन्तितफलप्रदा ।
स्वप्नेन्द्रजालवल्लोके माया तेन प्रकीर्त्तिता ॥"
इति देवीपुराणे ४५ अध्यायः ॥ * ॥
विसदृशप्रतीतिसाधनं माया । इति नागोजी-
भट्टः ॥ अघटनघटनपटीयसी माया । इति केचित् ॥ ईश्वरशक्तिः । तस्या नामान्तरं यथा ।
प्रकृतिः २ अविद्या ३ अज्ञानम् ४ प्रधानम् ५
शक्तिः ६ अजा ७ । सृष्टिकाले भगवान् आदौ
मायां प्रकाशयामास । सा द्रष्टृदृश्यानुसन्धानरूपा कार्य्यकारणरूपा च ।
सत्वरजस्तमोगुणमयी ।
तस्याः शक्तिद्वयं आवरणं विक्षेपश्च । तस्या
मायाया महत्तत्त्वं जातम् । तस्मादहङ्कारः ।
तस्मात् पञ्चभूतम् । तस्मात् ब्रह्माण्डम् । इति
श्रीभागवतमतम् ॥ (मायास्वरूपम् । यथा च
पञ्चदश्याम् । ६ । १२२ -- १४१ ।
"तत्त्वनिश्चयकाम्नेन न्यायागमविचारिणाम् ।
एकैव प्रतिपत्तिः स्यात् साप्यत्र स्फुटमुच्यते ॥
मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम् ।
अस्यावयवभूतैस्तु व्याप्तं सर्व्वमिदं जगत् ॥
इति श्रुत्यनुसारेण न्यायो निर्णय ईश्वरे ।
तथा सत्यविरोधः स्यात् स्थावरान्तेशवादिनाम् ॥
न चोदनीयं मायायां तस्याश्चोद्यैकरूपतः ॥
चोद्येऽपि यदि चोद्यं स्यात् तच्चोद्ये चोद्यते मया ।
परिहार्य्यं ततश्चोद्यं न पुनः प्रतिचोद्यताम् ॥
विस्मयैकशरीराया मायायाश्चोद्यरूपतः ।
अन्वेष्यः परिहारोऽस्या बुद्धिमद्भिः प्रयत्नतः ॥
मायात्वमेव निश्चेयमिति चेत् तर्हि निश्चिनु ।
लोकप्रसिद्धमायाया लक्षणं यत् तदीक्ष्यताम् ॥
न निरूपयितुं शक्या विस्पष्टं भासते च या ।
सा मायेतीन्द्रजालादौ लोकाः सम्प्रतिपेदिरे ॥")
विष्णुमायास्वरूपं यथा, --
"यामेतां भाषसे देव ! मम मायेति नित्यशः ।
का माया कीदृशी विष्णो ! किं वा मायेति चोच्यते ।
ज्ञातुमिच्छामि मायार्थं रहस्यं परमुत्तमम् ॥
ततस्तस्या वचः श्रुत्वा विष्णुर्मायाकरण्डकः ।
प्रहस्य मधुरं वाक्यं प्रत्युवाच वसुन्धराम् ॥
भूमे ! मा पृच्छ मायां मे यन्मां पृच्छसि सादरम् ।
वृथा क्लेशं किमर्थं त्वं प्राप्स्यसे मद्विलोकनात् ।
अद्यापि मां न जानन्ति रुद्रेन्द्राः सपितामहाः ॥
मम माया विशालाक्षि ! किं पुनस्त्वं वसुन्धरे ! ॥
पर्ज्जन्यो वर्षते यत्र तज्जलेन प्रपूर्य्यते ।
देशो निर्ज्जलतां याति एषा माया मम प्रिये ! ॥
सोमोऽपि हीयते पक्षे पक्षे वापि विवर्द्धते ।
निर्वीर्य्यमौषधं कृत्वा कालो भूत्वा हराम्यहम् ॥
प्रथमं जायते गर्भः पश्चाज्जायत वै पुमान् ।
जायते मध्यमं रूपं ततोऽपि जरया पुनः ।
तत इन्द्रियनाशश्च एतन्मायाबलं मम ॥
एकबीजात् प्रकीर्णाद्वै जायन्ते तानि भूरिशः ।
तत्रामृतं विसृजामि मायायोगेन माधवि ! ॥
लोक एवं विजानाति गरुडो वहतेऽच्युतम् ।
भूत्वा वेगेन गरुडो वहाम्यात्मानमात्मना ॥
या एता देवताः सर्व्वा यज्ञभागेन तोषिताः ।
मायामेतामहं कृत्वा तोषयामि दिवौकसः ॥
लोकाः सर्व्वे विजानन्ति देवा नित्यं मखाशिनः ।
मायामेतामहं कृत्वा यक्ष्यामि त्रिदशान् सदा ॥
सर्व्वोऽपि यजते लोको यष्टारञ्च बृहस्पतिम् ।
मायामाङ्गिरसीं कृत्वा याजयामि दिघोकसः ॥
सर्व्वे लोका विजानन्ति वरुणः पाति सागरम् ।
मायान्तु वारुणीं कृत्वाहं रक्षामि महोदधिम् ॥
सर्व्वे लोका विजानन्ति कुवेरोऽयं धनेश्वरः ।
कुवेरमायामादाय अहं रक्षामि तद्धनम् ॥
एवं लोका विजानन्ति वृत्रः शक्रेण सूदितः ।
शाक्रीं मायां समास्थाय मया वृत्रो निसूदितः ॥
एवं लोका विजानन्ति आदित्यश्च ध्रुवो महान् ।
मेरुं मायामयं कृत्वा वहाम्यादित्यमेव च ॥
एवं चाभाषते लोको जलं किन्नश्यतेऽखिलम् ।
बडवामुखमास्थाय पिबामि तदहं जलम् ॥
वायुं मायामयं कृत्वा मेधेषु विसृजाम्यहम् ।
यदिदं भाषते लोकः कुत्रैवं तिष्ठते जलम् ॥

| | | |
|---|---|---|
| माया चेयं तमोरूपा तापनीये तदीरणात् ।<br>अनुभूतिं तत्र मानं प्रतिजज्ञे श्रुतिः स्वयम् ॥<br>जडं मोहात्मकं तच्चेत्यनुभावयति श्रुतिः । | अमायां स न दृश्येत मायेयं मम सुन्दरि ! ॥<br>हेमन्ते सलिलं कूपे उष्णं भवति तत्त्वतः ।<br>भवेच्च शीतलं ग्रीष्मे मायेयं मम तत्त्वतः ॥<br>पश्चिमां दिशमास्थाय यदस्तं याति भास्करः ।<br>उदेति पूर्ब्बतः प्रातर्मायेयं मम सुन्दरि ! ॥<br>शोणितञ्चैव शुक्रञ्च उभे प्राणिषु संस्थिते ।<br>गर्भे च जायते जन्तुर्मम मायैव चोत्तमा ॥ | |

देवा अपि न जानन्ति अमृतं कुत्र तिष्ठति ।
मम मायानियोगेन तिष्ठते ह्यौषधं वने ॥
लोको ह्येवं विजानाति राजा पालयते
प्रजाः ।
राजमायामहं कृत्वा पालयामि वसुन्धराम्
॥
ये तु वै द्वादशादित्या उदेष्यन्ति युगक्षये ।
प्रविश्य तानहं भूमे ! मायां लोके
सृजाम्यहम् ॥
वर्षञ्च पांशुना भूमिलोकेषु यतते सदा ।
मायां पांशुमयीं कृत्वा पूरयाम्यखिलं जगत्
॥
वर्षते यत्र सं बर्त्तो धाराभिर्मुषलाकृति ।
मायां सांवर्त्तकीं गृह्य पूरयाम्यखिलं जगत्
॥
यत् स्वपामि वरारोहे ! शेषस्योपरि
वारिणि ।
अनन्तमायया चाहं धारयामि स्वपामि च
॥
वराहमायामादाय भूमे ! जानामि किन्न वै ।
देवा यत्र निलीयन्ते सा माया मम
कीर्त्तिता ॥
त्वञ्चापि वैष्णवीं मायां कृत्वा जानासि
किन्न
तत् ।
धारितासि च सुश्रोणि ! वारान् सप्तदशैव
तु ॥
माया तु मम देवीयं कृत्वा ह्येकार्णवां महीम्
।
मम मायाबलं ह्येतद्येन तिष्ठाम्यहं जले ॥
प्रजापतिं शतं रुद्रं सृजामि च हरामि च ।
तेऽपि मायां न जानन्ति मम मायाविमो-
हिताः ॥
अथ पितृगणाश्चैव य एते सूर्य्यवर्च्चसः ।
मायां पितृमयीं ह्येतां गृह्णामि हि च तत्त्वतः
॥
किन्तु मायैव सुश्रोणि ! अन्यच्च शृणु
सुन्दरि ! ॥"
इति वाराहे मायाचक्रम् ॥ * ॥

विद्वद्गीतां कालकल्लोललोलां
नीलापाङ्गीं क्षिप्तसंसारदुर्गाम् ॥
पूर्णां प्राप्यां द्वैतलभ्यां शरण्या-
माद्ये शेषे मध्यतो या विभाति ।
कालो दैवं कर्म्म सोपाधयो ये
तस्यां तासां तां विशिष्टां नमामि ॥
भूमौ गन्धो रसताप्सु प्रतिष्ठा
रूपं तेजस्येव वायौ स्पृशत्वम् ।
खे शब्दो वै यद्भिदा भाति नाना
तामाद्यां तां विश्वरूपां नमामि ॥
साबित्री त्वं ब्रह्मरूपा भवानी
भूतेशस्य श्रीपतेः श्रीस्वरूपा ।
शची शक्रस्यापि नाकेश्वरस्य
पत्नी श्रेष्ठा भासि माये ! जगत्सु ॥
बाल्ये बाला युवती योवने त्वं
वार्द्धक्ये या स्थविरा कालकल्पा ।
नानाकारैर्योगयोगैश्च धर्म्मो
भक्त्या वै त्वं कामवज्रा विभासि ॥
वरेण्या त्वं वरदा लोकसिद्धा
साध्वी धन्या लोकमान्या सुकन्या ।
चण्डी दुर्गा कालिका कालिकाख्या
नानादेशे रूपवेशैर्विभासि ॥
तव चरणसरोजं देवि ! देवादिवन्द्यं
यदि हृदयसरोजे भावयन्तीह भक्त्या ।
शुककृतमतिशुद्धं हृत्सरोजे स्मरन्ति
श्रुतियुगकुहरे वा संश्रुतं धर्म्मसम्पत् ॥
जनयति जगदाद्ये सर्व्वसिद्धिञ्च तेषाम् ॥
मायास्तवमिदं पुण्यं शुकदेवेन भाषितम् ।
मार्कण्डेयादयश्चापि सिद्धिं लेभे
शशिध्वजः ॥
कोकामुखे तपस्तप्त्वा हरिं ध्यात्वा वना-
न्तरे ।
सुदर्शनेन निहतो वैकुण्ठशरणं ययौ ॥"
इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
माया-
स्तव ऊनत्रिंशोऽध्यायः ॥ (शक्तिः
सामर्थ्यं वा ।
यथा, ऋग्वेदे । ४ । ३ । २१ ।
"दासानामिन्द्रो मायया ।"

गमश्च । करोतिरत्रान्तर्भूतण्यर्थः ।) माया
कारः । यथा, --
"शाम्बरी साम्बरी माया मायाकृत् भिक्षुके
नटे ।"
इति शब्दरत्नावली ॥

**मायाजीवी**, [न्] पुं, (मायया इन्द्रजालविद्यया
जीवति जीवनयात्रां सम्पादयति इति ।
जीव + णिनिः ।) प्रातिहारिकः । इति हेम-
चन्द्रः । ३ । ५८९ ॥

**मायातिः**, पुं, (मायया सह अतति । यद्वा, मा
अततीति । अत + "अज्यतिभ्यां च ।"
उणा०
४ । १३० । इति इण् ।) नरबलिः । यथा,
--
"मायातीनाञ्च निर्णीतं श्रूयतां मुनिसत्तम !
।
वक्ष्याम्यथर्व्ववेदोक्तं फलहानिर्व्यतिक्रमे ॥
पितृमातृविहीनञ्च युवकं व्याधिवर्जितम् ।
विवाहितं दीक्षितञ्च परदारविहीनकम् ॥
अजारिकं विशुद्धञ्च सच्छूद्रं मूलकं वरम् ।
तद्बन्धुभ्यो धनं दत्त्वा क्रीतं मूल्यातिरेकतः
॥
स्नापयित्वा च तं धर्म्मी संपूज्य
वस्त्रचन्दनैः ।
माल्यैर्धूपैश्च सिन्दूरैर्दधिगोरोचनादिभिः ॥
तञ्च वर्षं भ्रामयित्वा चरद्वारेण यत्नतः ।
वर्षान्ते च समुत्सृज्य दुर्गायै तं निवेदयेत् ॥
अष्टमीनवमीसन्धौ दद्यान्मायातिमेव च ।
इत्येवं कथितं सर्व्वं बलिदानप्रसङ्गतः ॥
बलिं दत्त्वा च स्तुत्वा च धृत्वा च कवचं
बुधः ।
प्रणम्य दण्डवद्भूमौ दद्याद्विप्राय दक्षिणाम्
॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे १६ अध्यायः
॥

**मायादः**, पुं, (मायया छलेन धृत्वेत्यर्थः अत्ति
भक्षयतीति । अद + अच् ।) कुम्भीरः ।
इति

अथ मायास्तोत्रम् ।
शौनक उवाच ।
“शशिध्वजो महाराजः स्तुत्वा मायां गतः कुतः ।
का वा मायास्तुतिः सूत ! वद तत्त्वविदांवर ! ।
या त्वत्कथा विष्णुकथा वक्तव्या सा विशुद्धये ॥”
सूत उवाच ।
“शृणुध्वं मुनयः सर्व्वे मार्कण्डेयाय पृच्छते ।
शुकः प्राह विशुद्धात्मा मायास्तवमनुत्तमम् ॥
तत् शृणुष्व प्रवक्ष्यामि यथाधीतं यथाश्रुतम् ।
सर्व्वकामप्रदं नृणां पापतापविनाशनम् ॥”
शुक उवाच ।
“भल्लाटनगरं त्यक्त्वा विष्णुभक्तः शशिध्वजः ।
आत्मसंसारमोक्षाय मायास्तवमलं जगौ ॥”
शशिध्वज उवाच ।
“ॐ ह्रींकारां सत्त्वसारां विशुद्धां ब्रह्मादीनां मातरं वेदबोध्याम् ।
तन्वीं स्वाहां भूततन्मात्रकक्षां बन्दे बन्द्यां देवगन्धर्व्वसिद्धैः ॥
लोकातीतां द्वैतभीतां समीडे भूतैर्भव्यां व्याससामासिकार्थैः ।
नानारूपैर्देवतिर्य्यङ्मनुष्यै-स्तामाधारां ब्रह्मरूपां नमामि ॥
यस्या भाषा त्रिजगद्भाति भूतै-र्न भात्येतत्तदभावे विधातुः ।
“मायया स्वकीयया शक्त्या ।” इति तद्भाष्ये सायणः ॥)

**मायाकारः**, पुं, (मायां इन्द्रजालव्यापारं करोतीति । कृ + अण् ।) ऐन्द्रजालिकः । वाजीकर इति भाषा । तत्पर्य्यायः । प्रातिहारिकः २ । इत्यमरः । २ । १० । ११ ॥ मायां स्थलजलादौ जलस्थलादिज्ञानं करोतीति मायाकारः षण् । प्रतिहरणं प्रतिहारो व्याजः भावे घञ् स प्रयोजनमस्य प्रातिहारिकः ष्णिकः णित्त्वे व्रिरिति वृद्धिः । प्रतिहारक इत्यपि पाठः । तत्र प्रति प्रथमं सुष्ठु मनो नयने च हरति ज्ञाते न किञ्चिदिति प्रतिहारकः ॥ णकान्तात् स्वार्थे ष्णे प्रातिहारकश्च घञि प्रतिहारश्च । इति तट्टीकायां भरतः ॥

**मायाकृत्**, पुं, (मायां स्थलजलादौ जलस्थलादि ज्ञानं करोति कारयतीति । कृ + क्विप् । तुगात्रिकाण्डशेषः ॥

**मायादेवीसुतः**, पुं, (मायादेव्याः सुतः ।) बुद्धः । इत्यमरः । १ । १ । १५ ॥

**मायाफलं**, क्ली, फलविशेषः । माइफल इति भाषा । तत्पर्य्यायः । मायिफलम् २ मायिकम् ३ छिद्राफलम् ४ मायि ५ । अस्य गुणाः । वातहरत्वम् । कटुत्वम् । उष्णत्वम् । शैथिल्यसङ्कोचककेशकार्ष्ण्यदातृत्वञ्च । इति राजनिर्घण्टः ॥

**मायामोहः**, पुं, (मायया मोहयति असुरानिति । मुह + णिच् + अच् । माया च मोहश्च तौ यस्येति वा ।) विष्णुदेहनिर्गतासुरमोहकपुरुषविशेषः । यथा, --
श्रीपराशर उवाच ।
“इत्युक्तो भगवांस्तेभ्यो मायामोहं शरीरतः ।
तमुत्पाद्य ददौ विष्णुः प्राह चेदं सुरोत्तमान् ॥”
श्रीभगवानुवात्त ।
“मायामोहोऽयमखिलान् दैत्यांस्तान् मोहयिष्यति ।
ततो वध्या भविष्यन्ति वेदमार्गबहिष्कृताः ॥
स्थितौ स्थितस्य मे वध्या यावन्तः परिपन्थिनः ।
ब्रह्मणो येऽधिकारस्य देवदैत्यादिकाः सुराः ॥
तद्गच्छत न भीः कार्य्या मायामोहोऽयमग्रतः ।
गच्छत्वद्योपकाराय भवतां भविता सुराः ॥”

श्रीपराशर उवाच ।
"इत्युक्त्वा प्रणिपत्यैनं ययुर्देवा यथागतम्
।
मायामोहोऽपि तैः सार्द्धं ययौ यत्र महा-
सुराः ॥"
इति विष्णुपुराणे ३ अंशे १७ अध्यायः ॥

**मायावती**, स्त्री, (मायास्यास्तीति । माया +
मतुप् । मस्य वः । उगित्त्वान् ङीप् ।) रतिः
।
कामपत्नी । इति जटाधरः ॥ तस्या
नामकारणं
यथा, --
श्रीपराशर उवाच ।
"एतस्मिन्नन्तरे प्राप्तः सह कृष्णेन नारदः ।
अन्तःपुरचरीं देवीं रुक्मिणीं प्राह हर्षयन् ॥
एष ते तनयः सुभ्रु ! हत्वा शम्बरमागतः ।
हृतो येनाभवद्बालो भवत्याः सूतिकागृहात्
॥
इयं मायावती भार्य्या तनयस्यास्य ते सती
।
शम्बरस्य न भार्य्येयं श्रूयतामत्र कारणम् ॥
मन्मथे तु गते नाशं तदुद्भवपरायणा ।
शम्बरं मोहयामास मायारूपेण रूपिणी ॥
व्यवायाद्युपभोगेषु रूपं मायामयं शुभम् ।
दर्शयामास दैत्यस्य तस्येयं मदिरेक्षणा ॥"
इति विष्णुपुराणे ५ अंशे २७ अध्यायः ॥
(विद्याधरीविशेषः । यथा, कथासरित्सागरे
।
१३ । ३५ ।
"अहं मायावती नाम राजन् !
विद्याधराङ्गना ।
इयन्तं कालमभवं शापदोषेण हस्तिनी ॥"
राजकन्याविशेषः । यथात्रैव । ११२ ।
११२ ।
"अभून्मलयसिंहाख्यो राजा राजगृहे पुरा ।
तस्य मायावतीत्यासीद्रूपेणाप्रतिमा सुता
॥")

**मायावसिकः**, त्रि, (मायया वसं आच्छादनं

**मायासीता**, स्त्री, (मायाकल्पिता सीता ।) योगेन
अग्निकृतसीताप्रतिकृतिः । यथा, --
अग्निरुवाच ।
"भगवन् ! श्रूयतां वाक्यं कालेन
यदुपस्थितम् ।
सीताहरणकालोऽयं तत्रैव समुपस्थितः
॥
दैवञ्च दुर्निवारञ्च न च दैवात् परं बलम् ।
मत्प्रसूं मयि संन्यस्य छाया
रक्ष्यान्तिकेऽधुना ॥
दास्यामि सीतां तुभ्यञ्च परीक्षासमये मम
।
देवैः प्रस्थापितोऽहञ्च न च विप्रो हुता-
शनः ॥
रामस्तद्वचनं श्रुत्वा न प्रकाश्य च
लक्ष्मणम् ।
स्वीचकार च स्वच्छन्दं हृदयेन विदूयता
॥
वह्नियोगेन सीताया मायासीतां चकार
सः ।
तद्रूपगुणसर्व्वांशां ददौ रामाय नारद ! ॥
सीतां गृहीत्वा स ययौ गोप्यं वक्तुं
निषिध्य च ।
लक्ष्मणो नैव बुबुधे गोप्यमन्यस्य का
कथा ॥
लङ्कां गत्वा रघुश्रेष्ठो जघान शायकेन च
।
सबान्धवं रावणञ्च सीतां संप्राप
दुःखिताम् ॥
ताञ्च वह्निपरीक्षाञ्च कारयामास सत्वरम्
।
हुताशस्तत्र काले च वास्तवीं जानकीं
ददौ ॥
उवाच छाया वह्निञ्च रामञ्च विनयान्विता
।
करिष्यामीति किमहं तदुपायं वदस्व मे
॥"
वह्निरुवाच ।

(मायायुक्ते, त्रि । यथा, कुमारे । २ । ४६ ।
"यज्वभिः सम्भृतं हव्यं विततेष्वध्वरेषु सः ।
जातवेदोमुखान्मायी मिषतामाच्छिनत्ति नः
॥"
मायोपाधिके परमेश्वरे च । यथा, पञ्चदश्याम्
।
६ । १२३ ।
"मायान्तु प्रकृतिं विद्यान् मायिनन्तु महे-
श्वरम् ॥")

**मायुः**, पुं, (मिनोति प्रक्षिपति देहे उष्माणमिति ।
मिञ् प्रक्षेपणे +
"कृवापाजिमिस्वदिसाध्यशूभ्य
उण् ।" उणा० १ । १ । इति उण् ।
"मीनाति
मिनोतिदीङां लपि च ।" ६ । १ । ५० ।
इत्या-
त्वम् । "आतो युक् चिण्कृतोः ।" ७ । ३ ।
३३ ।
इति युक् ।) पित्तम् । इत्यमरः । २ । ६ ।
६२ ॥
(शब्दः । यथा, ऋग्वेदे । १ । १६४ । २८ ।
"सृक्काणं घर्म्ममभिवावशाना मिमाति मायुं
पयते पयोभिः ॥"
"मायुं शब्दं मिमाति निर्म्माति करोति ।"
इति
तद्भाष्ये सायणः ॥ वाक् । इति निरुक्ते । १ ।
११ ॥)

**मायुराजः**, पुं, कुवेरपुत्त्रः । इति त्रिकाण्डशेषः ॥

**मायूरं**, क्ली, (मयूराणां समूहः । मयूर + "प्राणि-
रजतादिभ्योऽञ् ।" ४ । ३ । १५४ । इत्यञ्
।)
मयूरसमूहः । इत्यमरः । २ । ५ । ४३ ॥
(मयूराणामिदमित्यण् ।) तत्सम्बन्धिनि, त्रि
॥
यथा, महाभारते । १३ । १०४ । ९० ।
"आजं गव्यं तथा मांसं मायूरञ्चैव वर्ज्जयेत्
॥)

**मायूरिकः**, पुं, (मयूरं हन्ति । मयूर + "पक्षि-

करोतीति ठन् ।) परप्रतारकः । इति शब्द-
माला ॥ (मायारसिक इति वा पाठः ॥)

**मायावान्**, [त्] पुं, (माया अस्त्यस्य । माया +
"अस्मायामेधास्रजो विनिः ।" ५ । २ ।
१२१ ।
इति पक्षे मतुप् । मस्य वः ।) कंसराजः ।
इति शब्दरत्नावली ॥ मायायुक्ते, कपटयुक्ते
च त्रि । (यथा, ऋग्वेदे । ४ । १६ । ९ ।
"ऊतिभिस्तमिषणो द्युम्नहूतौ नि
मायावान-
ब्रह्मा दस्युरर्त्त ।"
"मायावान् कपटवान् ।" इति तद्भाष्ये
सायणः ॥)

**मायावी**, [त्] पुं, (प्रशस्ता मायाकापट्यमस्त्य-
स्येति । माया + "अस्मायामेधास्रजो
विनिः ।"
५ । २ । १२१ । इति विनिः ।) मायाकारः
।
तत्पर्य्यायः । व्यंसकः २ मायी ३ मायिकः
४
ऐन्द्रजालिकः ५ । इति जटाधरः ॥ (यथा,
मार्कण्डेये । २२ । ७ ।
"मायावी दानवः सोऽथ मुनिरूपं
समास्थितः ।
स प्राह राजपुत्त्रं तं पूर्ब्बवैरमनुस्मरन् ॥")
विडालः । इति राजनिर्घण्टः ॥ (मोहन-
शक्तियुक्तः परमात्मा । यथा, पञ्चदश्याम् ।
६ । ४ ।
"स्ततश्चिदन्तर्यामी तु मायावी
सूक्ष्मसृष्टितः ।
सूत्रात्मा स्थूलसृष्ट्यैव विराडित्युच्यते
परः ॥")

"त्वं गच्छ तपसे देवि ! पुष्करञ्च
सुपुण्यदम् ।
कृत्वा तपस्यां तत्रैव
स्वर्गलक्ष्मीर्भविष्यसि ॥
सा च तद्वचनं श्रुत्वा प्रतप्य पुष्करे तपः
।
दिव्यं त्रिलक्षवर्षञ्च स्वर्गलक्ष्मीर्ब्बभूव ह
॥
सा च कालेन तपसा यज्ञकुण्डसमुद्भवा
।
कामिनी पाण्डवानाञ्च द्रौपदी
द्रुपदात्मजा ॥
कृते युगे वेदवती कुशध्वजसुता शुभा ।
त्रेतायां रामपत्नी सा सीतेति
जनकात्मजा ॥
तच्छाया द्रौपदी देवी द्वापरे द्रुपदात्मजा
।
त्रिहायणीति सा प्रोक्ता विद्यमाना युगत्रये
॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे १४
अध्यायः ॥

**मायासुतः**, पुं, (मायायाः मायादेव्याः सुतः ।)
बुद्धः । इति हेमचन्द्रः । १ । १५१ ॥

**मायिकं**, क्ली, (माया मोहनगुणः विद्यतेऽस्मिन् ।
माया + "ब्रीह्यादिभ्यश्च ।" ५ । २ ।
११६ । इति
ठन् ।) मायाफलम् । इति राजनिर्घण्टः
॥
ग्रन्थान्तरे मायिका माद्रका इत्यपि पाठः
॥

**मायिकः**, पुं, (माया अस्त्यस्य । माया +
"ब्रीह्यादि-
भ्यश्च ।" ५ । २ । ११६ । इति ठन् ।)
माया-
कारः । इति जटाधरः ॥ (यथा,
देवीभाग-
वते । ४ । १९ । ४ ।
"यन्मायामोहितश्चाहं सदा वर्त्ते
परात्मनः ।

मत्स्यमृगान् हन्ति ।" ४ । ४ । ३५ । इति
ठक् । मयूरग्राही । इति सिद्धान्तकौमुदी ॥

**मायूरी**, स्त्री, अजमोदा । इति राजनिर्घण्टः ॥

**मारः**, पुं, (मृ + भावे घञ् ।) मृतिः । (यथा,
बृहत्संहितायाम् । ३ । ३१ ।
"क्षुन्मारकृद्धटनिभः खण्डो नृपहा विदी-
धितिर्भयदः ।")
म्रियन्ते प्राणिनोऽनेन । मृ + घञ् ।) काम-
देवः । (यथा, नैषधे । ४ । ७९ ।
"अनुममार न मार ! कथं नु सा
रतिरतिप्रथितापि पतिव्रता ।
विरहिणीशतघातनपातकी
दयितयापि तयासि किमुज्झितः ॥")
विघ्नः । इति मेदिनी । रे, ७६ ॥ (मृ + णिच्
+
घञ् ।) मारणम् । इति हेमचन्द्रः । २ । ३६
॥
धुस्तूरः । इति शब्दचन्द्रिका ॥
मारगणोत्पत्ति-
र्यथा, --
माकेण्डेय उवाच ।
"मनोभवस्य वचनं श्रुत्वाथ चतुराननः ।
विवक्षुरपि तद्वाक्यं श्रुत्वानुत्साहकारकम् ॥
सर्व्वस्य मोहने ब्रह्मा चिन्ताविष्टोऽभवन्नहि ।
समर्थो मोहितुमिति निशश्वास मुहुर्मुहुः ॥
निश्वासमारुतात्तस्य नानारूपा महाबलाः ।
जाता गणा लोलजिह्वा लोलाश्चातिभयङ्कराः
तुरङ्गवदनाः केचित् केचिद्गजमुखास्तथा ।
सिंहव्याघ्रमुखाश्चान्ये श्ववराहखराननाः ॥

| | | |
|---|---|---|
| | परवान् दारुपाञ्चाली मायिकस्य यथा वशे ॥"<br>मायाविशिष्टे, त्रि ॥)<br>**मायी**, [न्] पुं, (मायाऽस्त्यस्य । माया + "व्रीह्यादिभ्यश्च ।" ५ । २ । ११६ । इति इनिः ।)<br>मायाकारः । तत्पर्य्यायः । धूर्त्तः २ वञ्चकः ३<br>व्यंसकः ४ कुहकः ५ दाण्डाजिनिकः ६ जालिकः ७ । इति हेमचन्द्रः । ३ । ४१ ॥ | |

ऋक्षमार्ज्जारवदनाः शरभास्याः शुकाननाः ।
प्लवगोमायुवक्त्राश्च सरीसृपमुखाः परे ॥
गोरूपा गोमुखाः केचित्तथा पक्षिमुखाः परे ।
महादीर्घा महाह्रस्वा महास्थूला महाकृशाः ॥
पिङ्गाक्षा विरलाक्षाश्च त्र्यक्षैकाक्षा महो-
दराः ।
एककर्णास्त्रिकर्णाश्च चतुष्कर्णास्तथापरे ।
स्थूलकर्णा दीर्घकर्णा बहुकर्णा विकर्णकाः ।
दीर्घाक्षा स्थूलनेत्राश्च सूक्ष्मनेत्रा विदृष्टयः ॥
चतुष्पादाः पञ्चपादास्त्रिपादैकपदास्तथा ।
ह्रस्वपादा दीर्घपादाः स्थूलपादा महापदाः ॥
एकहस्ताश्चतुर्हस्ता द्विहस्तास्त्रिशयास्तथा ।
विहस्ताश्च विरूपाक्षा गोधिकाकृतयः परे ॥
मनुष्याकृतयः केचित् शिशुमारमुखाः परे ।
क्रौञ्चाकारा बकाकारा हंससारसरूपिणः ॥
तथैव मद्गुरबककङ्ककाकमुखास्तथा ।
अर्द्धनीला अर्द्धरक्ताः कपिलाः पिङ्गलास्तथा ॥
नीलाः शुक्लास्तथा पीता हरिताश्चित्ररूपिणः
।
अवादयन्त ते शङ्खान् पटहान् परिवादिनः ॥
मृदङ्गान् डिण्डिमांश्चैव गोमुखान् पणवांस्तथा ।
सर्व्वे जटाभिः पिङ्गाभिस्तुङ्गाभिश्च करान्विताः
॥
निरन्तराभिर्व्विप्रेन्द्रा गणाः स्यन्दनगामिनः ।
शूलहस्ताः पाशहस्ताः खड्गहस्ता धनुर्धराः ॥
शक्त्यङ्कुशगदाबाणपट्टिसप्रासपाणयः ।
नानायुधा महानादं कुर्व्वन्तस्ते महाबलाः ॥
मारय च्छेदयेत्यूचुर्ब्रह्मणः पुरतो गणाः ।
तेषान्तु वदतां तत्र मारय च्छेदयेत्युत ।
योगनिद्राप्रभावात् स विधिर्वक्तुं प्रचक्रमे ॥
अथ ब्रह्माणमाभाष्य तान् दृष्ट्वा मदनो गणान् ।
उवाच वारयन् वक्तुं गणानामग्रतः स्मरः ॥
मदन उवाच ।
किं कर्म्मैते करिष्यन्ति कुत्र स्थास्यन्ति वा
विधे ! ।
किं नामधेया एते वा तत्रैतान् विनियोजय ॥
नियुज्यैतान् निजे कृत्ये स्थानं दत्त्वा च नाम च
।
कृत्वा पश्चान्महामायाप्रभावं कथयस्व मे ॥"

त्वमेवैषां गणाध्यक्षः पञ्चयज्ञाङ्गभोजिनः ।
नित्यक्रियावतां तोयभोगिनोऽपि
भवन्त्विमे ॥"
इति कालिकापुराणे ६ अध्यायः ॥

**मारकः**, पुं, (म्रियन्ते प्राणिनः यस्मिन् येनेति वा ।
मृ + घञ् । ततः संज्ञायां कन् ।) मरकः ।
तत्-
पर्य्यायः । मारिः २ उत्पातः ३ । इति
त्रिकाण्ड-
शेषः ॥ पक्षिविशेषः । वाज् इति भाषा ।
तत्पर्य्यायः । घातिपक्षी २ ग्राहकः ३ ।
इति
भूरिप्रयोगः ॥ मारणकर्त्तरि त्रि ॥

**मारजित्**, पुं, (मारं कामं जितवान् । जि +
क्विप् । तुगागमः ।) बुद्धः । इत्यमरः । १
।
१ । १३ ॥

**मारणं**, क्ली, (मार्य्यते इति । मृ + णिच् + भावे
ल्युट् ।) वधः । इत्यमरः । २ । ८ ।
११४ ॥
(यथा, मनौ । ५ । ३८ ।
"यावन्ति पशुरोमाणि तावत्कृत्वो ह
मारणम् ।
वृथापशुघ्नः प्राप्नोति प्रेत्य जन्मनि
जन्मनि ॥")
अभिचारविशेषः । यथा, --
"एवन्तु मारणं देवि ! विशेषात् कथयामि
ते ।
सान्तं वह्निसमायुक्तं वामनेत्रविभूषितम् ॥
कूर्च्चयुग्मं ततो देवि ! अमुकं मारय मारय
।
चतुर्दशाक्षरो मन्त्रो स्वाहान्तः शत्रुनाशकः
॥
खदिराङ्गारमादाय कुजाष्टम्यां विशेषतः ।
लेखयेत् पुत्तलीं शत्रुस्वरूपां लौहपत्रके ॥
निशायां मस्तके नेत्रे ललाटे हृदये करे ।
नाभौ गुह्ये कटौ पृष्ठे क्रमोक्तेन पदद्वये ॥

पिनाकधृक् इहागच्छागच्छ
इत्यादिनावाह्य
यत्नतः ।
शूलपाणये नम इति स्नापयेत्
साधकोत्तमः ॥
महेश्वराय नम इति पाद्यादिना
प्रपूजयेत् ।
ईशानादिस्तथा मूर्त्तिर्व्युत्क्रमेण
प्रपूजयेत् ॥
अग्निकोणादिपर्य्यन्तं पूर्ब्बरीत्या
महेश्वरि ! ।
नमः शिवायेति मूलमष्टाविंशति
संजपेत् ।
हुँ क्षमस्वेति वामेन करेण तु
विसर्ज्जयेत् ॥
अजित केशव विष्णो हरे सत्य
जनार्द्दन ।
हंस नारायण स्वाहा मन्त्रमेव
सकृज्जपेत् ॥
हुँ नमो भगवते वासुदेवाय स्वाहा नम
इत्यपि
सकृज्जपेत् ।
एवमेकादशाहेन शत्रूच्छेदनमञ्जसा ।
अवश्यं जायते देवि ! सत्यं सत्यं
त्रिलोचने ! ॥"
इति योगिनीतन्त्रे पूर्ब्बखण्डे ४ पटलः
॥
अपि च ।
"गृध्रास्थिञ्च गवास्थिञ्च
मूत्रनिर्म्माल्यमेव च ।
अरेर्यो निखनेत् द्वारे पञ्चत्वमुपयाति
सः ॥"
इति गारुडे १८६ अध्यायः ॥

**मारिः**, स्त्री, (मार्य्यते इति । मृ + णिच् + इन् ।)
मारणम् । वर्षः । इति मेदिनी । रे, ७७
॥
जनक्षयः । तत्पर्य्यायः । मारकः २
मरकः ३
उत्पातः ४ । इति त्रिकाण्डशेषः ॥

मार्कण्डेय उवाच ।
“अथ तद्वाक्य माकर्ण्य सर्व्वलोकपितामहः ।
गणान् समदनानाह तेषां कर्म्मादिकं दिशन् ॥
ब्रह्मोवाच ।
“एते तूत्पन्नमात्रा हि मारयेति यदब्रुवन् ।
मुहुर्मुहुरतोऽमीषां नाम मारेति जायताम् ॥
मारात्मकत्वादप्येते माराः सन्तु च नामतः ।
सदैव विघ्नं जन्तूनां करिष्यन्ति विनार्च्चनम् ।
तवानुगमनं कर्म्म मुख्यमेषां मनोभव ! ॥
यत्र यत्र भवान् याता स्वकर्म्मार्थं यदा यदा ।
गन्तारस्तत्र तत्रैते साहाय्याय तदा तदा ॥
चित्तोद्भ्रान्तिं करिष्यन्ति त्वदस्त्रवशवर्त्तिनाम्
।
ज्ञानिनां ज्ञानमार्गञ्च विघ्नयिष्यन्ति सर्व्वदा ॥
यथा सांसारिकं कर्म्म सर्व्वे कुर्व्वन्ति जन्तवः ।
तथा चैते करिष्यन्ति सविघ्नमपि सर्व्वतः ॥
इमे स्यास्यन्ति सर्व्वत्र वेगिवः कामरूपिणः ।

मन्त्रवर्णान् समालिख्य प्रतिष्ठां तत्र
कारयेत् ।
संहारमुद्रां बद्ध्वा तु ध्यायेद्देवीं जयप्रदाम्
॥
दीर्घाकारां कृष्णवर्णां
सदार्द्धस्तनमस्तकाम् ।
नृमुण्डयुगलं हस्तं चर्व्वयन्तीं दिगम्बरीम्
॥
शत्रुनाशकरीं देवीं ध्यायेत् शत्रुक्षयाय च ।
एवं ध्यात्वेष्टिकाचूर्णैर्व्वामहस्तेन शङ्करि !
॥
ॐशत्रुनाशकर्य्यै नमः इति दत्त्वा
महेश्वरि ! ।
हरिद्राचूर्णसहितां धारां दद्यादनेन तु ॥
अमुकस्य शोणितं पिब पिबेति तत्परम् ।
मांसं खादय खादय ह्रीँ नम इति मन्त्रम् ॥
मध्याह्ने मध्यरात्रौ तु पूजयित्वा शताष्टकम्
।
जपेदेकादशाहे च रोगः स्यान्नात्र संशयः ॥
दण्डाधिकैकविंशाहे मृत्युरेव रिपोर्भवेत् ॥
* ॥
अथवान्यप्रकारेण शत्रुक्षयमहं वदे ।
पुंगोशकृत् समादाय पूजयेदुष्णवारिणा ॥
विपरीतक्रमेणैव जपपूजादिकं चरेत् ।
महादेवाय नम इति पुंगोशकृत् समाहरेत्
॥
शिवाय नम इति मन्त्रेण घटनञ्च समाचरेत्
।
पशुपतये नम इति प्राणान् संस्थापयेत्ततः
॥
लौहपात्र महेशानि ! खदिराङ्गारयोगतः ।
शत्रुप्रतिकृतिं लिख्य तत्र संस्थापयेत्
शिवम् ॥
ततो ध्यायेन्महारुद्रं ध्यानन्तु सुसमाहितः
।
शत्रोर्व्वक्षःस्थितं रुद्रं ज्वलदग्निसमप्रभम्
॥
वामहस्तधरं केशं दक्षिणं प्राणकर्षणम् ।
नरचर्म्माम्बरं देवं महाव्यालादिवेष्टितम् ॥

**मारिचिकं**, त्रि, (मरिच + “संस्कृतम् ।” ४ । ४ । ३
इति ठक् ।) मरिचेन संस्कृतम् । इति
सिद्धान्त-
कौमुदी ॥

**मारितः**, पुं, (मार्यते नाश्यते भस्मीक्रियत इति ।
मृ + णिच् + कर्मणि क्तः ।) नष्टीकृतः
। भस्मी-
कृतः । यथा, भावप्रकाशे ।
“असम्यङ्मारितं स्वर्णं बलं वीर्य्यञ्च
नाशयेत् ।
करोति रोगान् मृत्युञ्च तद्धन्यात्
यत्नतस्ततः ॥”
अपि च ।
“पूर्ब्बं वङ्गसमं तालं क्षिप्त्वाम्लेन
विमर्द्दयेत् ।
ततो गजपुटे पक्त्वा पुनरम्लेन मर्द्दयेत्
॥
तालेन दशमांशेन याममेकं ततः पुटेत्
।
एवं दशपुटैः पक्वं वङ्गं भवति मारितम्
॥”
अपरञ्च ।
आर्द्रत्वञ्च घनत्वञ्च तेजो
गौरवचापलम् ।
यस्यैतानि न दृश्यन्ते तं
विद्यान्मृतसूतकम् ॥”
अन्यच्च ।
“शुद्धो रसो भवेद्ब्रह्मा मूर्च्छितस्तु
जनार्द्दनः ।
मारितो रुद्ररूपी स्यात् बद्धः साक्षात्
सदा-
शिवः ॥”
इति वैद्यदर्पणः ॥

**मारिव्यसनवारकः**, पुं, (मारिजन्यं व्यसनं तद्वारय-
तीति । वृ + णिच् + अण् ।)
राजर्षिविशेषः ।
यथा, --
“कुमारपालश्चौलुक्यो राजर्षिः
परमार्हतः ।

|  |  |  |
|---|---|---|
|  |  | मृतस्वमोक्ता धर्म्मात्मा<br>मारिव्यसनवारकः ॥”<br>इति हेमचन्द्रः । ३ । ३७७ ॥<br>**मारिषः**, पुं, (मर्षति दोषानिति । मृष + अच् ।<br>निपातनात् सिद्धम् । यद्वा, मा रिष्यति<br>हिनस्ति |

कश्चिदपीति । रिष + कः ।) नाट्योक्तौ
श्रेष्ठः ।
इत्यमरः । १ । ७ । १४ ॥ (क्वचित्
पुराणा-
दावपि । यथा, देवीभागवते । १ । ११ ।
६५ ।
"साहार्य्यं ते करिष्यामि मन्त्रशक्त्या महा-
मते ! ।
भविता यदि संग्रामस्तव चेन्द्रेण मारिष !
॥"
तथा च महाभारते । ७ । २६ । १२ ।
"दार्य्यमाणाञ्चमूं दृष्ट्वाभगदत्तेन मारिष !
॥")
तण्डुलीयशाकविशेषः । मरसा इति हिन्दी
भाषा । तत्पर्य्यायः । कन्धरः २ मार्षिकः
३ ।
(शाकार्थे पर्य्यायो गुणाश्च यथा ॥ [अथ
श्वेत-
मरुसा । लोहितमरुसा नवडा इति च
लोके ।]
"मारिषो वाष्पको मार्षः श्वेतो रक्तश्च स
स्मृतः ।
मारिषो मधुरः शीतो विष्टम्भी पित्तनुद्गुरुः
॥
वातश्लेष्मकरो रक्तपित्तनुद्विषमग्निजित्।
रक्तमार्षो गुरुर्नाति सक्षारो मधुरः सरः ।
श्लेष्मलः कटुकः पाके स्वल्पदोष
उदीरितः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**मारिषा**, स्त्री, (मारिष + टाप् ।) दक्षमाता ।
इति मेदिनी । षे, ४४ ॥ (यथा,
मत्स्यपुराणे ।
४ । ४९ ।
"सोमकन्याभवत् पत्नी मारिषा नाम
विश्रुता ।
तेभ्यस्तु दक्षमेकं सा पुत्त्रमग्र्यमजीजनत्
॥"
अस्या जन्मवृत्तान्तो यथा, विष्णुपुराणे ।
"मारी त्रिशूलेन जघान चान्यान्
खट्वाङ्गपातैरपरांश्च कौशिकी ।"
इति वामने ५२ अध्यायः ॥

**मारीचः**, पुं, (मरीचेरपत्यं पुमान् । मरीचि +
अण् ।) राक्षसविशेषः । स च
तारकाराक्षसी-
पुत्त्रः रावणस्यानुचरः सीताहरणकाले
माया-
मृगरूपोऽसौ श्रीरामेण हतश्च । इति
रामा-
यणम् ॥ अस्य विवरणं यथा, --
"एतस्मिन्नन्तरे रामो ददर्श कनकं मृगम् ।
सीता तं प्रेरयामास तदर्थे यत्नपूर्ब्बकम् ॥
संन्यस्य लक्ष्मणं रामो जानक्या रक्षणे वने
।
स्वयं जगाम तूर्णं तं विव्याध शायकेन च
॥
हा लक्ष्मणेति शब्दञ्च कृत्वाथ मायया
मृगः ।
प्राणांस्तत्याज सहसा पुरो दृष्ट्वा हरिं
स्मरन् ॥
मृगदेहं परित्यज्य दिव्यं देहं विधाय च ।
रत्ननिर्म्माणयानेन वैकुण्ठं स जगाम ह ॥
वैकुण्ठद्वारे द्वार्य्यासीत् किङ्करो
द्वारपालयोः ।
जयश्च विजयश्चैव बलवांश्चाजिताभिधः
॥
शापेन शनकादीनां संप्राप्य राक्षसीं तनुम्
।
पुनर्जगाम च द्वारमादौ च द्वारपालयोः ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे १२ अध्यायः
॥
कश्यपः । यथा, --
"इति संचिन्त्य भगवान् मारीचः
कुरुनन्दन ! ।
उवाच किञ्चित् कुपित आत्मानञ्च
विगर्हयन् ॥"
इति श्रीभागवते ६ स्कन्धे १८ अध्यायः
॥
धारयिष्यसि चेत्तुभ्यं शक्रहा भविता सुतः
॥
वाढमित्यभ्युपेत्याथ दिती राजन् !
महामनाः ।
कश्यपाद्गर्भमाधत्त व्रतञ्चाञ्जो दधार सा ।
मातृष्वसुरभिप्रायमिन्द्र आज्ञाय मानद ! ॥
शुश्रूषणेनाश्रमस्थां दितिं पर्य्यचरत् कविः ।
एवं तस्या व्रतस्थाया व्रतच्छिद्रं हरिर्नृप ! ॥
प्रेप्सुः पर्य्यचरत् जिह्मो मृगस्येव मृगाकृतिः
।
नाध्यगच्छद्व्रतच्छिद्रं तत्परोऽथ महीपते !
॥
चिन्तां तीव्रां गतः शक्रः केन मे स्याच्छिवं
त्विह ॥
एकदा सा तु सन्ध्यायामुच्छिष्टा व्रतकर्षिता
।
अस्पृष्टवार्य्यधौताङ्घ्रिः सुष्वाप
विधिमोहिता ॥
लब्ध्वा तदन्तरं शक्रो निद्रापहृतचेतसः ।
दितेः प्रविष्ट उदरं योगेशो योगमायया ॥
चकर्त्त सप्तधा गर्भं वज्रेण कनकप्रभम् ॥
रुदन्तं सप्तधैकैकं मा रोदीरिति तान् पुनः ।
तमूचुः पाट्यमानास्ते सर्व्वे प्राञ्जलयो नृप !
॥
किं न इन्द्र जिघांससि भ्रातरो मरुतस्तव ।
मा भैष्ट भ्रातरो मह्यं यूयमित्याह कौशिकः
॥
अनन्यभावान् पार्षदानात्मनो मरुतां गणान्
।
न ममार दितेर्गर्भः श्रीनिवासानुकम्पया ॥
सजूरिन्द्रेण पञ्चाशत् देवास्ते मरुतोऽभवन्
।
व्यपोह्य मातृदोषं ते हरिणा सोमपाः कृताः
॥
दितिरुत्थाय ददृशे कुमाराननलप्रभान् ।
इन्द्रेण सहितान्देवी पर्य्यतुष्यदनिन्दिता ॥
अथेन्द्रमाह ताताहमादित्यानां भयावहम् ।
अपत्यमिच्छन्त्यचरं ब्रतमेतं सुदुष्करम् ॥

प्रथमांशे १५ अध्याये ।
"कण्डुर्नाम मुनिः पूर्ब्बमासीद्वेदविदांवरः ।
सुरम्ये गोमतीतीरे स तेपे परमं तपः ॥
तत्क्षोभाय सुरेन्द्रेण प्रम्लोचाख्या
वराप्सराः ।
प्रयुक्ता क्षोभयामास तमृषिं सा शुचिस्मिता
॥"
इत्यारभ्य --
"यावदित्थं स विप्रर्षिस्तां ब्रवीति
सुमध्यमाम् ।
तावद्गलत्स्वेदजला सा बभूवातिवेपथुः ॥
प्रवेपमाणां सततं स्विन्नगात्रलतां सतीम् ।
गच्छ गच्छेति सक्रोधमुवाच मुनिसत्तमः ॥
सा तु निर्भर्त्सिता तेन विनिष्क्रम्य
तदाश्रमात् ।
आकाशगामिनी स्वेदं ममार्ज्ज तरुपल्लवैः
॥
वृक्षाद्वृक्षं ययौ बाला तदग्रारुणपल्लवैः ।
निर्मार्ज्जमाणा गात्राणि गलत्स्वेदजलानि
वै ॥
ऋषिणा यस्तदा गर्भस्तस्या देहे समाहितः
।
निर्ज्जगाम स रोमाच्च स्वेदरूपी तदङ्गतः
॥
तं वृक्षा जगृहुर्गर्भं एकं चक्रे तु मारुतः ।
मया चाप्यायितो गोभिः स तदा ववृधे
शनैः ॥
वृक्षाग्रगर्भसंभूता मारिषाख्या वरानना ।
तां प्रदास्यन्ति वो वृक्षाः कोप एष
प्रशाम्यताम् ॥
कण्डोरपत्यमेवं सा वृक्षेभ्यश्च समुद्गता ।
ममापत्यं तथा वायोः प्रम्लोचातनया च
सा ॥"
शूरस्य पत्नी । यथा, भागवते । ९ । २४ ।
२७ ।
"देवमीढस्य शूरस्य मारिषा नाम पत्न्य-
भूत् ॥")

**मारी**, स्त्री, (मारि + कृदिकारादिति पक्षे
ङीष् ।) चण्डी । जनक्षयः । इति मेदिनी ।
रे, ७६ । माहेश्वरी शक्तिः । यथा, --
(तथा च महाभारते । १३ । ८५ । १०७
।
मरीचिभ्यो मरीचिस्तु मारीचः कश्यपोऽह्य
भूत् ॥")
कक्कोलकम् । याजकब्राह्मणः । इति
मेदिनी ।
चे, १७ ॥ राजहस्ती । इति जटाधरः ॥

**मारीची**, स्त्री, (मरीचेरियम् । इत्यण् । ङीप् ।)
देवताभेदः । इति मेदिनी । चे, १७ ॥ सा
तु
मायादेवी । तत्पर्य्यायः । त्रिमुखा २ वज्र-
कालिका ३ विकटा ४ वज्रवाराही ५ गौरी
६
पोत्रिरथा ७ । इति त्रिकाण्डशेषः ॥

**मारुण्डः**, पुं, सर्पाण्डः । पन्थाः । गोमयमण्डलम् ।
इति मेदिनी । डे, ३५ ॥

**मारुतः**, पुं, (मरुदेव । मरुत् + "प्रज्ञादिभ्यश्च ।"
५ । ४ । ३८ । इति स्वार्थेऽण् ।) वायुः ।
इत्यमरः । १ । १ । ६५ ॥ म्रियतेऽनेन
क्रुद्धेन
नाम्नीति मृ ङ उत् मरुत् मरुदेव मारुतः
स्वार्थे ष्णः । इति तट्टीकायां भरतः ॥
(यथा, मनौ । ४ । १२२ -- १२३ ।
"अतिथिञ्चाननुज्ञाप्य मारुते वाति वा
भृशम् ।
रुचिरे च श्रुते गात्राच्छस्त्रेण च परिक्षते ।
सामध्वनावृग्यजुषी नाधीयीत कदाचन ॥)
अस्योत्पत्तिर्य्यथा, --
कश्यप उवाच ।
"पुत्त्रस्ते भविता भद्रे ! इन्द्रहा
देवबान्धवः ।
संवत्सरं व्रतमिदं यद्यञ्जो धारयिष्यसि ॥"
अञ्जो यथावत् ।
"संवत्सरं पुंसवनं व्रतमेतदविप्लुतम् ।
एकः सङ्कल्पितः पुत्त्रः सप्तसप्ताभवन्
कथम् ।
यदि ते विदितं पुत्त्र ! सत्यं कथय मा मृषा
॥
इन्द्र उवाच ।
अम्ब ! तेऽहं व्यवसितमुपधार्य्य
गतोऽन्तिकम् ।
लब्ध्वान्तरोऽच्छिनं गर्भमर्थबुद्धिर्न धर्म्मदृक्
॥
कृत्तो मे सप्तधा गर्भ आसन् सप्त कुमारकाः
।
तेऽपि चैकैकशो वृक्नाः सप्तधा नापि मम्रिरे
॥
ततस्तत्परमाश्चर्य्यं वीक्ष्य व्यवसितं मया ।
महापुरुषपूजायाः सिद्धिः काप्यानुषङ्गिकी
॥
तदिदं मम दौर्ज्जन्यं बालिशस्य महीयसि !
।
क्षन्तुमर्हसि मातस्त्वं दिष्ट्या गर्भो
मृतोत्थितः ॥
श्रीशुक उवाच ।
इन्द्रस्तयाभ्यनुज्ञातः शुद्धभावेन तुष्टया ।
मरुद्भिः सह तां नत्वा जगाम त्रिदिवं प्रभुः
॥"
इति श्रीभागवते ६ स्कन्धे १८ अध्यायः ॥
(जनपदविशेषः । यथा, महाभारते । ६ ।
४७ । ४९ -- ५० ।
"मारुता धेनुकाश्चैव तङ्गणाः परतङ्गणाः ।
वाह्लीकास्तित्तिराश्चैव चोलाः पाण्ड्याश्च
भारत ! ॥
एते जनपदा राजन् ! दक्षिणं पक्षमा-
श्रिताः ॥"
अग्निभेदः । यथा, गृह्यसंग्रहपरिशिष्टे । १ ।
२ ।
"अग्निस्तु मारुतो नाम गर्भाधाने विधीयते
॥"
मरुत्सम्बन्धिनि, त्रि । यथा, ऋग्वेदे । २ ।
११ । १४ ।

"रासि क्षयं रासि मित्रमम्मे रासि शर्ध इन्द्र मारुतं नः ॥"
"मारुतं मरुतां देवविशां सम्बन्धि ।" इति तद्भाष्ये सायणः ॥)

**मारुतव्रतं**, क्ली, (मारुतस्य व्रतमिव व्रतं नियमोऽस्य ।) राजधर्म्मविशेषः । यथा, --
"प्रविश्य सर्व्वभूतानि यथा चरति मारुतः ।
तथा चरैः प्रवेष्टव्यं व्रतमेतद्धि मारुतम् ॥"
इति मात्स्ये २०० अध्यायः ॥

**मारुतात्मजः**, पुं, (मारुतस्यात्मजः ।) हनूमान् । इति जटाधरः ॥ (भीमश्च ॥)

**मारुतापहः**, पुं, (मारुतमपहन्ति । हन + डः ।) वरुणवृक्षः । इति राजनिर्घण्टः ॥
वायुनाशके,
त्रि ॥

**मारुताशनः**, पुं, (मारुतोऽशनमस्य । अश्नातीति । अश + ल्युः । मारुतानां अशनो भक्षकः ।) सर्पः । पवनाशन इत्यमरदर्शनात् । (यथा, महाभारते । ५ । १०६ । १३ ।
"भक्तः प्रगृह्य मूद्‌र्ध्ना वै बाहुभ्यां संशितव्रतः ।
स्थितः स्थाणुरिवाभ्यासे निश्चेष्टो मारुताशनः ॥")
वायुमात्रभक्षके, त्रि ॥ (कार्त्तिकेयसैनिकविशेषः । यथा, महाभारते । ९ । ४५ । ६० ।
"विद्युताक्षो धनुर्वक्त्रो जाठरो मारुताशनः ॥")

**मारुतिः**, पुं, (मारुतस्यापत्यं पुमान् । मरुत + "अत इञ् ।" ४ । १ । ९५ । इति इञ् ।) हनूमान् । इति शब्दरत्नावली ॥ (यथा, रघौ । १२ । ६० ।
"प्रवृत्तावुपलब्धायां तस्याः सम्पातिदर्शनात् ।

"चिरजीवी यथा त्वं भो भविष्यामि तथा मुने ! ।
रूपवान् वित्तवांश्चैव श्रिया युक्तश्च सर्व्वदा ॥
मार्कण्डेय महाभाग ! सप्तकल्पान्तजीवन ! ।
आयुरिष्टार्थसिद्‌ध्यर्थमस्माकं वरदो भव ॥"
इति तिथ्यादितत्त्वम् ॥
तस्योत्पत्त्यादिर्यथा,
मार्कण्डेय उवाच ।
"देवौ धातृविधातारौ भृगोः ख्यातिरसूयत ।
श्रियञ्च देवदेवस्य पत्नी नारायणस्य या ॥
आयतिर्नियतिश्चैव मेरोः कन्ये महात्मनः ।
भार्य्ये धातृविधात्रोस्ते तयोर्जातौ सुतावुभौ ॥
प्राणश्चैव मृकण्डुश्च पिता मम महायशाः ।
मनस्विन्यामहं तस्मात् पुत्त्रो वेदशिरा मम ॥
धूम्रवत्यां समभवत् प्राणस्यापि निबोध मे ॥"
इति श्रीमार्कण्डेयपुराणे रुद्रसर्गाध्यायः ॥
अपि च ।
पुलस्त्य उवाच ।
"अथ ते संप्रवक्ष्यामि
मार्कण्डोत्पत्तिमुत्तमाम् ।
पुरा कल्पे मुनिः पूर्ब्बं मृकण्डुर्नाम विश्रुतः ॥
भृगोः पुत्त्रो महाभागः सभार्य्यस्तप्तवांस्तपः ।
तस्य पुत्त्रस्तदा जातो वसतस्तु वनान्तरे ॥
स पञ्चवर्षको जातो बाल एव गुणान्वितः ।
ज्ञानिना स तदा दृष्टो भ्रमित्वा लघुप्राङ्गणे ॥
स्थित्वा स सुचिरं कालं जीवनञ्च ततो दितम् ।
वीक्ष्य चिन्तापरो ज्ञानी किं वर्षो बालकस्तव ॥
दितं खण्डितम् ।
संख्ययया चाष्टवर्षाणि जातानीति न्यवेदयत् ।

यं कञ्चित् पश्यसे लोकं भ्रमन्तं भूतले जनम् ॥
तस्याभिवादनं कार्य्यमेवमाह पितामहः ।
तावद्वयमनेनाथ क्षितौ दृष्टाः परिभ्रमन् ॥
एकत्वमार्षम् ।
तीर्थयात्राप्रसङ्गेन दैवयोगात् पितामह ! ।
चिरायुर्भव वै विप्र !
बालेत्यस्माभिरीरितम् ॥
कथं चिरायुः स्याद्विप्रबालकः साम्प्रतं प्रभो ! ।
कथं नानृतिनो देव ! भवामो भवता वयम् ॥
एवमुक्तस्तदा तैस्तु ब्रह्मा लोकपितामहः ।
ऋतवाचो भविष्यामः सर्व्वे एव वयं स्थिताः ॥
मत्समश्चायुषा बालो मार्कण्डेयो भविष्यति ।
ऋषीणां मुख्यतश्चासौ मत्सहायो भविष्यति ।
कल्पस्यादौ तथा चान्ते वृतो मुनिभिरुत्तमैः ॥
एवन्ते मुनयो बालं ब्रह्मा लोकपितामहः ।
सम्बोध्य प्रेषयामास भूयोऽप्येवं परन्तप ! ॥
तीर्थयात्रां गता विप्रा मार्कण्डेयो निजं गृहम् ।
जगाम गत्वा तं विप्रं पितरं स तथाब्रवीत् ॥"
इति पाद्मे सृष्टिखण्डे ३० अध्यायः ॥
अपरञ्च ।
व्यास उवाच ।
"मार्कण्डेयेन मुनिना यथा मृत्युः पराजितः ।
तथा ते कथयिष्यामि शृणु वत्स ! महामते ! ॥
भृगोः पौत्त्रो महाभागो बालत्वे च महाद्युतिः ।

मारुतिः सागरं तीर्णः संसारमिव निर्म्ममः
॥”)
भीमसेनः । इति जटाधरः ॥ (यथा, देवी-
भागवते । २ । ७ । २१ ।
“तच्छ्रुत्वा वचनं भ्रातुर्ज्येष्ठस्यामिततेजसः
।
संग्रहेऽस्य महाबाहुर्मारुतिः कुपितोऽब्रवीत्
॥”)

**मार्कः**, पुं, भृङ्गराजः । इति रत्नमाला ॥

**मार्कण्डः**, पुं, (मृकण्डोरपत्यम् । मृकण्डु + अण् ।)
मार्कण्डेयमुनिः । इति शब्दरत्नावली ॥

**मार्कण्डिका**, स्त्री, लताविशेषः । भूइ खखसा इति
हिन्दीभाषा ॥ सा तु काकरोलभेदः । तत्-
पर्य्यायः । भूमिचरी २ मार्कण्डी ३
मृदुरचनी
४ । अस्या गुणाः । कुष्ठहरत्वम् ।
ऊर्द्ध्वाधः-
कायशोधनत्वम् ।
विषदुर्गन्धकासगुल्मोदरना-
शित्वञ्च । इति भावप्रकाशः ॥

**मार्कण्डीयं**, क्ली, भूम्याहुल्यम् । इति राज-
निर्घण्टः ॥

**मार्कण्डेयः**, पुं, (मृकण्डोरपत्यं । मृकण्डु + शुभ्रा-
दिभ्यश्च ।” ४ । १ । १२३ । इति ढक् ।)
मृकण्डु-
मुनिपुत्त्रः । जन्मतिथ्यादौ पूजायां तस्य
ध्यानं
यथा,
“द्विभुजं जटिलं सौम्यं सुवृद्धं चिरजीविनम्
।
मार्कण्डेयं नरो भक्त्या पूजयेच्च चिरायुषम्
॥”
तस्य प्रार्थनामन्त्रः ।

मृकण्डुनैव मुक्तस्तु स ज्ञानी वाक्यमब्रवीत्
॥
मासमायुश्च पुत्त्रस्य तेऽवशिष्टं मुनीश्वर ! ।
नैव शोकस्त्वया कार्य्यः सत्यमेतदुदाहृतम्
॥
एतत् श्रुत्वा वचो भीष्म ! ज्ञानिना
यदुदाहृतम् ।
व्रतोपनयनं चक्रे बालकस्य पिता तदा ॥
आह चैनं पिता पुत्रमृषिं त्वमभिवादय ।
एवमुक्तः स वै पित्रा ऋषिं भक्त्या ननाम सः
॥
एतस्मिन्नन्तरे तत्र प्रदीप्ताः पावकोपमाः ।
मार्गेणापि समायातास्तेन सप्तर्षयोऽमलाः ॥
बालेन तेन दृष्टास्ते सर्व्वे समभिवादिताः ।
आयुष्मान् भव तैरुक्तः स जहौ
दण्डमेखलाम् ॥
उक्तास्ते च पुनर्व्वाणीं पश्यन्तः
क्षीणजीवितम् ।
दिनानि पञ्च ते चायुर्ज्ञात्वा भीताभवन् पुनः
॥
तमुत्क्षिप्य ब्राह्मणा वै गतास्ते
ब्रह्मणोऽन्तिकम् ।
प्रतिमुच्य च तं बालं प्रणिपेतुः पितामहम् ॥
आयुष्मान् भव इत्याह तेन ब्रह्माभिवादितः ।
चिरायुर्ब्रह्मणा बालः प्रोक्तः स ऋषिसन्निधौ
॥
ततस्ते मुनयः प्रीताः श्रुत्वा वाक्यं
पितामहात् ।
पितामहस्तु सप्तर्षीन् दृष्ट्वा प्रोवाच
विस्मितान् ॥
कार्य्येण येन वा याताः कोऽयं बालो
निवेद्यताम् ।
ततः सप्तर्षयो राजन् ! सर्व्वं तस्मै न्यवेदयन्
॥
भृगोः सूनुर्मृकण्डुस्तु क्षीणायुस्तस्य बालकः
।
अल्पायुषस्ततस्तस्य बद्धास्तेनास्य
मेखलाः ॥
यज्ञोपवीतं दण्डञ्च दत्त्वा तेन प्रबोधितः ।

ववृधे वल्लभो बालः पिता तस्य
कृतक्रियः ॥
स तस्मिन् वै जातमात्रे आदेशी
कश्चिदब्रवीत् ।
वर्षे द्वादशमे पूर्णे मृत्युरस्य भविष्यति ॥
शुत्वा तन्मातापितरौ दुःखितौ तौ
बभूवतुः ।
तौ दृष्ट्वा दुःखसम्पन्नौ मार्कण्डेयो
महामतिः ॥
उवाच वचनं तत्र किमर्थं दुःखमीदृशम् ।
वक्तुमर्हसि दुःखस्य कारणं मम पृच्छतः
॥
कथयामास तत् सर्व्वमादेशी यदुवाच ह
।
तत् श्रुत्वा तौ मुनिः प्राह मातरं पितरं
पुनः ॥
पित्रा सार्द्धं त्वया मातर्न कार्य्यं
दुःखमन्वहम् ।
अपनेष्यामि मे मृत्युं तपसा नात्र संशयः
।
यथा चाहं चिरायुः स्यां तथा कुर्य्यामहं
तपः ॥
सूत उवाच ।
इत्युक्त्वा तौ समाश्वास्य पितरौ
वनमभ्यगात् ।
तत्र विष्णुं प्रतिष्ठाप्य गन्धपुष्पादिभिः
क्रमात् ।
पूजयामास देवेशं मार्कण्डेयो महामुनिः
॥
पूजयित्वा हरिं तत्र तपस्तेपे सुदुष्करम् ।
निराहारो मुनिस्तत्र वर्षमेकमतन्द्रितः ॥
मात्रोक्तमरणासन्नदिने तत्र महामतिः ।
स्नात्वा यथोक्तविधिना कृत्वा
विष्णोस्तथार्च्चनम् ॥
हृदि कृत्वेन्द्रियग्रामं विशुद्धेनान्तरात्मना
।
आसनं स्वस्तिकं बद्ध्वा कृत्वासौ
प्राणसंयमम् ॥
ॐकारोच्चारणाद्धीमान् हृदि पद्मं
विकाशयन् ।

| | | |
|---|---|---|
| | | तन्मध्ये रविसोमाग्निमण्डलानि यथाक्रमम् ॥<br>कल्पयित्वा हरेः पीठं तस्मिन्नेव सनातनम् ।<br>पीताम्बरधरं विष्णुं शङ्खचक्रगदाधरम् ।<br>ब्रह्मरूपं हरिं ध्यायंस्ततो मनुमुदीरयन् ॥<br>इत्येवं ध्यायतस्तस्य मार्कण्डेयस्य धीमतः ।<br>मनस्तत्रैव संलग्नं देवदेवजगत्पतौ ॥ |

ततो यमालयात्तत्र आगता यमकिङ्कराः ।
पाशहस्तास्तु तं नेतुं विष्णुदूतैस्तु ते हताः ॥
मुषलैर्हन्यमानास्ते इदमुक्त्वा पुनः पुनः ।
वयं निवृत्ता गच्छामो मृत्युरेवागमिष्यति ॥
आगत्य स्वयमेवात्र मृत्युः पार्श्वे महात्मनः ।
मार्कण्डेयस्य बभ्राम विष्णुकिङ्करशङ्कया ॥
ते चाप्युद्गम्य मुषलान्यभ्ययुर्विष्णुकिङ्कराः ।
विष्ण्वाज्ञया हनिष्यामो मृत्युमस्येति संस्थिताः ॥
ततो विष्ण्वर्पितमना मार्कण्डेयो महामतिः ।
तुष्टाव प्रणतो भूत्वा देवदेवं जनार्द्दनम् ॥
विष्णुनैवोपदिष्टन्तु स्तोत्रं कर्णे महात्मनः ।
स्वभावितेन मनसा तेन तुष्टाव माधवम् ॥
ॐ नमो भगवते वासुदेवाय ।
नारायणं सहस्राक्षं पद्मनाभं पुरातनम् ।
प्रणतोऽस्मि हृषीकेशं किन्नो मृत्युः करिष्यति ॥
गोविन्दं पुण्डरीकाक्षमनन्तमजमव्ययम् ।
केशवञ्च प्रपन्नोऽस्मि किन्नो मृत्युः करिष्यति ॥
वासुदेवं जगद्योनिं भानुमन्तमतीन्द्रियम् ।
दामोदरं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥
शङ्खचक्रधरं देवं छद्मरूपिणमव्ययम् ।
अधोक्षजं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥
बाराहं वामनं विष्णुं नारसिंहं जनार्द्दनम् ।
माधवञ्च प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥

मर्क सर्पे नाम्नीति अवः निपातनाद्वृद्धिः ।
मार्कवोऽन्तःस्थचतुर्थान्तः
मर्केर्विशादित्वाद्वः
पृषोदरादित्वांददागमो दीर्घश्चेति परेण साधि-
तत्वात् । (यथा, सुश्रुते चिकित्सास्थाने । १७अः ।
मर्क सर्पे नाम्नीति अवः निपातनाद्वृद्धिः ।
मार्कवोऽन्तःस्थचतुर्थान्तः
मर्केर्विशादित्वाद्वः
पृषोदरादित्वांददागमो दीर्घश्चेति परेण साधि-
तत्वात् । (यथा, सुश्रुते चिकित्सास्थाने । १७अः ।
"स्यान्मार्कवस्य च रसेन निहन्ति तैलं
नाडीं कफानिलकृतामपचीं व्रणांश्च ।")
मार्करो रेफान्त इति केचित् । इति तट्टीकायां
भरतः ॥ (अथानयोः पर्य्याया यथा, --
"भृङ्गराजः केशराजो भृङ्गः पत्तङ्गमार्कवम् ।
इति वैद्यकरत्नमालायाम् ॥
भृङ्गराजो भृङ्गरजो मार्कवो भृङ्ग एवच ।
अङ्गारकः केशराजो भृङ्गारः केशरञ्जनः ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
मार्करः केशराजश्च भृङ्गराजो निगद्यते ॥"
इति गारुडेऽष्टाधिकद्विशततमेऽध्याये ॥)

**मार्ग**, क संस्कारे । सर्पणे । इति कविकल्प-
द्रुमः ॥ (चु०-पर०-सक०-सेट् ।) क मार्गयति ।
इति दुर्गादासः ॥

**मार्ग** कि अन्वेषे । इति कविकल्पद्रुमः ॥ (चु०-पक्षे
भ्वा०-पर०-सक०-सेट् ।) अन्वेषः प्रतिसन्धा-
नम् । कि मार्गयति मार्गति गुणं गुणी ।
मार्गन्तां हे देहभावानित्यात्मनेपदं गणकृता-
मृग् + अण् ।) मार्गशीर्षमासः । अन्वेषणम् ।
इति मेदिनी ॥ गे, १७ । मृगशिरो नक्षत्रम् ।
इति हेमचन्द्रः ॥ विष्णुः । इति तस्य सहस्रनाम
स्तोत्रम् ॥ (यथा, महाभारते । १३ । १९९ । ५३ ।
"विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः ॥")

**मार्गकः**, पुं, (मार्ग । स्वार्थे कन् ।) अग्रहायण-
मासः । इति शब्दमाला ॥

**मार्गणं**, क्ली, (मार्ग्यते अन्विष्यत इति । मार्ग +
भावे ल्युट् ।) अन्वेषणम् । तत्पर्य्यायः । सम्बी-
क्षणम् २ विचयनम् ३ मृगणा ४ मृगः ५
इत्यमरः । ३ । २ । ३० ॥ याच्ञा । इति
मेदिनी ॥ णे, ७१ । प्रणयः । इति जटाधरः ॥
(मार्गयतीति । मार्ग + ल्युः ।) याचके, त्रि ।
इत्यमरः । ३ । १ । ४९ ॥

**मार्गणः**, पुं, (मार्गयति लक्ष्यमिति । मार्ग + ल्युः ।)
शरः । इत्यमरः । २ । ८ । ८७ ॥ यथा, महा-
भारते । ६ । ११५ । ४४ ।
"ते सर्वे दृढधन्वानः संयुगेष्वपलायिनः ।
बहुधा भीष्ममानर्च्छुर्मार्गणैः कृतमार्गणैः ॥
मार्गयति धनाथ दातारमिति । मार्ग + ल्युः ।)
याचकः । इति मेदिनी । णे, ७१ ॥

**मार्गणकः**, पुं, (मार्गण + स्वार्थे कन् ।) याचकः ।
इति हलायुधः ॥

**मार्गधेनुः**, पुं, (मार्गस्य धेनुः परिमाणम् ।)
योजनपरिमाणम् । इति शब्दमाला ॥

**मार्गधेनुकं**, क्ली, (मार्गधेनु + स्वार्थे कन् ।)
योजनम् । इति त्रिकाण्डशेषः ॥

**मार्गपाली**, स्त्री, (मार्गं पालयति हिंस्रेभ्यो

पुरुषं पुष्करं बीजं क्षेमबीजं जगत्पतिम् ।
लोकनाथं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥
भूतात्मानं महात्मानं यज्ञयोनिमयोनिजम् ।
विश्वरूपं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥
सहस्रशिरसं देवं व्यक्ताव्यक्तं सनातनम् ।
महायोगं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥
इत्युदीरितमाकर्ण्य स्तोत्रं तत्र महात्मनः ।
अपयातस्ततो मृत्युर्विष्णुदूतैश्च पीडितः ॥
इति तेन जितो मृत्युर्मार्कण्डेयेन धीमता ।
प्रसन्ने पुण्डरीकाक्षे नृसिंहे नास्ति दुर्लभम् ॥
मृत्य्यष्टकमिदं पुण्यं मृत्युप्रशमनं शुभम् ।
मार्कण्डेयहितार्थाय स्वयं विष्णुरुवाच ह ॥"
श्रीभगवानुवाच ।
"य इदं पठते भक्त्या त्रिकालं नियतः शुचिः ।
नाकाले तस्य मृत्युः स्यान्नरस्याच्युतचेतसः ॥"
व्यास उवाच ।
"हृत्पद्ममध्ये पुरुषं पुराणं
नारायणं शाश्वतमादिदेवम् ।
सञ्चिन्त्य सूर्य्यादपि राजमानो
मृत्युं स योगी जितवांस्तदैव ॥"
इति नारसिंहपुराणे मार्कण्डेयमृत्युञ्जयो नाम
अध्यायः ॥ (मार्कण्डेयेन प्रोक्तम् । मार्कण्डेय
+ अण् । पुराणविशेषः । यथा, देवीभाग-
वते । १ । ३ । १ -- ३ ।
"शृण्वन्तु संप्रवक्ष्यामि पुराणानि मुनीश्वराः ।"
इत्यारभ्य --
नित्यत्वात् । इति दुर्गादासः ॥

**मार्गः**, पुं, (मार्ग्यते संस्क्रियते पादेन मृग्यते
गमनायान्विष्यते इति वा । मार्ग वा मृग +
+ घञ् ।) पन्थाः । इत्यमरः । २ । १ । १५ ॥
तत्परिमाणं यथा, --
"त्रिंशद्धनूंषि विस्तीर्णो देशमार्गस्तु तैः कृतः ।
विंशद्धनुर्ग्राममार्गः सीमामार्गो दशैव तु ॥
धनूंषि दशविस्तीर्णः श्रीमान्राजपथः कृतः ।
नृवाजिरथनागानामसम्बाधःसुसञ्चरः ॥
धनूंषि चैव चत्वारि शाखारथ्यास्तु निर्म्मिताः ।
त्रिकराश्चोपरथ्यास्तु द्विकराप्युपरक्षका ॥
जङ्घापथश्चतुष्पादस्त्रिपादश्चगृहान्तरम् ।
व्रतीपादस्त्वर्द्धपादः प्राग्वंशः पादकः स्मृतः ॥
अवकरः परिवारः पादमात्रः समन्ततः ।
प्रावृट्काले तु प्रावृत्ती कर्त्तव्या अन्यथा नहि ॥
इति देवीपुराणे त्रैलोक्याभ्युदये गोपुरद्वार-
लक्षणाध्यायः ॥ * ॥ (यथा, महाभारते । ३ ।
६७ । १७ ।
"एका बालानभिज्ञा च मार्गाणामतथोचिता ।
क्षुत्पिपासापरीताङ्गी दुष्करं यदि जीवति ॥")
गुदम् । तत्पर्य्यायः । पायुः २ तनुह्रदः ३ ।
इति त्रिकाण्डशेषः ॥ अपानम् ४ । इत्यमरः ।
२ । ६ । ७३ ॥ मृगमदः । (मृगस्येदम् । मृग
+ अण् । मृगसम्बन्धिनि, त्रि । यथा, सुश्रुते ।
शारीरे ३ अः ।
"मार्गाद्विक्रान्तजङ्घालं सदा वनचरं सुतम् ।"
यथा च मार्कण्डेये । ३२ । १७ ॥
रक्षतीति । पाल + अच् । गौरादित्वात् ङीष् ।)
स्तम्भः । यथा,
"ततोऽपराह्णसमये पूर्ब्बस्यां दिशि नारद ! ।
मार्गपालीं प्रबध्नीयाद्दुर्गस्तम्भे च पादपे ॥
कुशकाशमयैर्दिव्यां संस्कारैर्ब्बहुभिर्मुदा ।
भूषयित्वा गजानश्वानङ्कुशग्राहिसंयुतान् ॥
गोवृषान् महिषांश्चैव घण्टाभरणभूषितान् ।
भेरीमृदङ्गपटहवादित्रध्वनिनादितान् ।
तस्याः स्थाने नयेत् सायं शान्तिपाठादि-
नन्दितः ॥
मार्गपालि नमस्तुभ्यं सर्व्वानन्दप्रवर्षिके ।
तले तव सुखेनाश्वा गजा गावः प्रयान्तु मे ॥
राजानो राजपुत्राश्च ब्राह्मणाः शूद्रजातयः ।
मार्गपालीं समालिख्य वार्त्ताः स्युश्च सदैव हि ॥
ततो गावश्च संपूज्या गन्धपुष्पादिभिः क्रमात् ।
आत्मनः श्रेयसे भूप इति पूजां करोति हि ॥
अग्रतः सन्तु मे गावो गावो मे सन्तु पृष्ठतः ।
गावो मे सर्व्वतः सन्तु गवां मध्ये वसाम्यहम् ॥
या लक्ष्मीर्लोकपालानां धेनुरूपेण संस्थिता ।
क्षीरं वहति यज्ञार्थे मम पापं व्यपोहतु ॥
या कामधेनुर्भवने च विष्णो-
र्या कामधेनुर्यमदग्निगेहे ।
या सौरभेयी तु वशिष्ठगेहे
सा कामधेनुर्वरदा ममास्तु ॥

| | | |
|---|---|---|
| तथा ग्रहसहस्रन्तु मार्कण्डेयं महाद्भुतम् ॥”)<br>**मार्करः** पुं, भृङ्गराजः । इत्यमरः । २ । ४ । १५१ ।<br>मर्कति केशरञ्जनार्थं गच्छति मर्कवः ।<br>**मार्कवः** पुं, भृङ्गराजः । इत्यमरः । २ । ४ । १५१ ।<br>मर्कति केशरञ्जनार्थं गच्छति मर्कवः । | “तद्वर्ज्यं सलिलं तात ! सदैव पितृकर्म्मणि ।<br>मार्गमाविकमौष्ट्रञ्च सर्वमैकशफञ्च यत् ॥”<br>(मृगो मृगशिरास्तद्युक्ता पौर्णमास्यत्र । | |

कृत्वैतत् सर्व्वमानन्दाद्रात्रौ दैत्यपतेर्बलेः ।
पूजां कृत्वा ततः पश्चात् सम्यग्दूतं समारभेत् ॥”
इति पाद्मे उत्तरखण्डे कार्त्तिकमाहात्म्ये १२४ अध्यायः ॥

**मार्गशिरः**, पुं, (मृगाशरानक्षत्रयुक्ता पौर्ण-
मास्यत्र । मृगशिरा + अण् ।) मार्गशीर्ष-
मासः । इति शब्दरत्नावली ॥ (यथा, भाग-
वते । ६ । १९ । २ ।
“शुक्ले मार्गशिरे पक्षे योषिद्भर्त्तुरनुज्ञया ।
आरभेत ब्रतमिदं सर्व्वकामिकमादितः ॥”)

**मार्गशीर्षः**, पुं, (मार्गशीर्षी + अण् ।) अग्र-
हायणमासः । मृगशीर्षेण युक्ता पौर्णमासी
मार्गशीर्षी सास्मिन् मासे भवति मार्गशीर्षः
ष्णः । इत्यमरटीकायां भरतः ॥ तत्पर्य्यायः ।
सहाः २ मार्गः ३ आग्रहायणिकः ४ । इत्य-
मरः । १ । ४ । १४ ॥ मार्गशिरः ५ सहः ६ ।
इति शब्दरत्नावली ॥ वृश्चिकस्थरविप्रारब्ध-
शुक्लप्रतिपदादिदर्शान्तोऽयंमुख्यचान्द्रः ।
एता-
दृशमुख्यचान्द्रमासीयपौर्णमास्यन्तः अयं गौण-
चान्द्रः । वृश्चिकराशिरविकोऽयंसौरः । इति
स्मृतिः ॥ * ॥ तत्र जातफलम् ।
“यस्य प्रसूतिः खलु मार्गमासे
तीर्थे प्रवासे सततं मतिः स्यात् ।
परोपकारी धृतसाधुवृत्तिः
सद्वृत्तियुक्तो ललनाभिलाषी ॥”
इति कोष्ठीप्रदीपः ॥ * ॥
(तथास्य विषयः ॥ कार्त्तिकमार्गशीर्षौ शरत् ।
इति सुश्रुते सूत्रस्थाने षष्ठेऽध्याये ॥)
अथ मार्गशीर्षकृत्यम् ।
आश्विनशुक्लपक्षे नवान्नश्राद्धाकरणे मार्ग-
शीर्षस्य विंशतिदण्डाधिकत्रयोविंशतिदिनाभ्य-
न्तरे शुक्लपक्षे तत् श्राद्धं कर्त्तव्यम् । तत्र मार्ग-
शीर्षस्य विंशतिदण्डाधिकप्रथमदिनत्रयेतरेषु
कुजशनिशुक्रवारेतरेषु नन्दारिक्तात्रयोदशीतर-
तिथिषु जन्माष्टमचन्द्रजन्मतिथिजन्मनक्षत्रत्रय
पञ्चमतारात्रयेतरेषु पूर्ब्बात्रयमघाभरण्यश्लेषा-
पलन्तु लौकिकैर्मानैः
साष्टरत्तिद्विमाषकम् ।
तोलकत्रितयं ज्ञेयं ज्योतिर्ज्ञैः
स्मृतिसम्मतम् ॥
तत एवं दध्याज्यसंयुक्तं नवं
विप्राभिमन्त्रितम् ।
मन्त्रानादेशे गायत्रीति
गायत्र्यभिमन्त्रितम् ॥
नवमन्नं ब्राह्मणानुज्ञां गृहीत्वा
प्राश्नीयात् ।
नूतनधान्यासम्भवे पुरातनेनापि श्राद्धं
कर्त्तव्यम् ।
वृश्चिके शुक्लपक्षे तदकरणे
हरिशयनात् पूर्ब्बं
मीनधनुस्थरवीतरत्र माघादौ
कर्त्तव्यम् ॥ * ॥
वृश्चिकस्थरवौ शुक्लचतुर्द्दश्यां
सौभाग्यकामः
पाषाणाकारपिष्टकैर्द्देवीं पूजयेत् तदपि
भक्षये-
न्नक्तम् ॥ * ॥ अग्रहायण्यां
पौर्णमास्यां पार्व्वण-
विधिना श्राद्धमावश्यकम् ॥ * ॥
भविष्यपुराणे ।
“रोहिण्या प्रतिपद्युक्ता मार्गे मासि
सितेतरा ।
गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः
समा ॥”
इति कृत्यतत्त्वम् ॥
(स्त्रियां आग्रहायणी पूर्णिमा । यथा,
महा-
भारते । ३ । ९३ । २६ ।
“मार्गशीर्ष्यामतीतायां पुष्येण
प्रययुस्ततः ॥”)

**मार्गिकः**, त्रि, (मृगान् हन्तीति । मृग + “पक्षि-
मत्स्यमृगान् हन्ति ।” ४ । ४ । ३५ ।
इति ठक् ।)
मृगहन्ता । (मार्गो गम्यत्वेनास्त्यस्य ।
ठन् ।)
स्नानकाले शरीरमार्ज्जनगुणाः ।
“दौर्गन्ध्यं गौरवं कण्डूं कच्छुं
मलमरोचकम् ।
स्वेदं वीभत्सतां हन्ति शरीरपरिमार्ज्जनम्
॥
इति राजवल्लभः ॥
देवीगृहमार्ज्जनफलं यथा, --
“देव्या गृहन्तु यः शुक्र ! संमार्ज्जयति
नित्यशः ।
स भवेद्बलवान् सौख्यसर्व्वसम्पत्तिसंयुतः
॥
देव्या गृहन्तु यः शुक्र ! गोमयेनानुलेपयेत्
।
स्त्रियो वा यदि वा पुंसः षण्मासन्तु
निरन्तरम् ।
स लभेदीप्सितान् कामान् देव्या लोकञ्च
गच्छति ॥”
इति देवीपुराणे ४२ अध्यायः ॥
अथ भगवन्मन्दिरमार्जनमाहात्म्यम् ।
“नरसिंहगृहे नित्यं यः संमार्जनमाचरेत् ।
समस्तपापनिर्मुक्तो विष्णुलोके स मोदते
॥”
इति नृसिंहपुराणम् ॥
“संमार्जनन्तु यः कुर्य्यात् पुरुषः
केशवालये ।
रजस्तमोभ्यां निर्मुक्तः स भवेन्नात्र संशयः
॥
पांशूनां यावतां राजन् ! कुर्य्यात् संमार्जनं
नरः ।
तावन्त्यब्दानि स सुखी नाकमासाद्य
मोदते ॥”
इति विष्णुधर्म्मोत्तरम् ॥
“यावत्कानि प्रवाहाणि भूमिसंमार्जने ददुः
।
तावद्वर्षसहस्राणि शाकद्वीपे महीयते ॥
जायते मम भक्तश्च सर्व्वधर्म्मसमन्वितः ।
शुचिर्भागवतः शुद्धो ह्यपराधविवर्जितः ॥
ततो भुक्त्वा सर्व्वभोगान् तीर्त्वा
संसारसागरम् ।

द्रेतरेषु नक्षत्रेषु श्राद्धं तच्छेषभोजनञ्च कुर्य्यात् । श्राद्धानधिकारिणा तु प्रागुक्तकाले देवादिभ्यो नवान्नं दत्त्वा भोक्तव्यम् । किन्तु अश्लेषाकृत्तिका-ज्येष्ठामूलापूर्ब्बभाद्रपदकेषु अपि नवान्नभोजनं न कर्त्तव्यम् । चन्दताराद्यशुद्धौ प्रतीकारमाह देवलः ।
"कर्म्म कुर्य्यात् फलावाप्त्यै चन्द्रादिशोभने बुधः ।
सुस्थकाले त्विदं सर्व्वं नार्त्तः कालमपेक्षते ॥
चन्द्रे च शङ्खं लवणञ्च तारे
तिथावभद्रे सिततण्डुलांश्च ।
धान्यञ्च दद्यात् करणर्क्षवारे
योगे तिलान् हेममणिञ्च लग्ने ॥
राजमार्त्तण्डे ताराभेदाल्लवणपरिमाणमाह ।
"एकत्रिपञ्चसप्त च द्विजाय दद्यात् पलानि लवणस्य ।
क्रमशो जन्मविपत्प्रत्यरिमरणाख्यतारासु॥

पथिकः । इति सिद्धान्तकौमुदी ॥

**मार्गितं**, त्रि, (मार्ग अन्वेषणे + क्तः ।) अन्वेषितम् । इत्यमरः । ३ । १ । १०५ ॥

**मार्ग्यं**, त्रि, (मृज्यते इति । मृज् + "मृजेर्विभाषा ।" ३ । १ । ११३ । इति पक्षे ण्यत् ।
वृद्धिश्च । "चजोः कुघिण्ण्यतोः ।" ७ । ३ । ५२ ।
इति कुत्वम् ।) मार्ज्जनीयम् । इति सिद्धान्त-कौमुदी ॥ (यथा, भट्टिकाव्ये । ६ । ५६ ।
"मन्युस्तस्य त्वया मार्ग्यो मृज्यः शोकश्च तेन ते ।")
अन्वेषणीयञ्च ॥

**मार्ज्ज** क मार्ज्जने । ध्वनौ । इति कविकल्पद्रुमः ॥
(चुरा०-पर०-सक०-सेट् ।) क मार्ज्जयति ।
इति दुर्गादासः ॥

**मार्ज्जः**, पुं, (मार्ज्जयति पापमलं प्रक्षाल्य उद्धरति जनानिति । मार्ज्ज + णिच् + अच् ।) विष्णुः ।
इति हेमचन्द्रः । २ । ४४ ॥ (मार्ज्जयति वसन-मलमिति । मार्ज्ज् + अच् ।) रजकः । इति शब्दमाला ॥ मार्जनम् । इत्यमरटीकायां भरतः ॥

**मार्ज्जनं**, क्ली, (मार्ज्यते इति । मार्ज्ज् + भावे ल्युट् ।) प्रोञ्छनादिना अङ्गनिर्म्मलीकरणम् ।
माजा इति भाषा । तत्पर्य्यायः । मार्ष्टिः २ मार्ष्टी ३ मार्ज्जना ४ मृजा ५ । इति शब्द-

शाकद्वीपात् परिभ्रष्टः स्वर्गलोकं स गच्छति ॥
नन्दनं वनमाश्रित्य मोदते चाप्सरैः सह ।
नन्दनाच्च परिभ्रष्टो मम कर्म्मव्यवस्थितः ।
सर्व्वसङ्गान् परित्यज्य मम लोकन्तु गच्छति ॥"
इति वराहपुराणम् ॥ * ॥
स्नानविशेषः । यथा । आतुराणान्तु ।
"अशिरस्कं भवेत् स्नानं स्नानाशक्तौ तु कर्म्मिणाम् ।
आर्द्रेण वाससा वापि मार्ज्जनं दैहिकं विदुः ॥"
इति जावालवचनाच्छिरो विहाय गात्रप्रक्षा-लनं तदशक्तौ सर्व्वगात्रमार्ज्जनं आर्द्रेण वाससा कुर्य्यात् । इत्याह्निकाचारतत्त्वम् ॥ * ॥ वैदिक-सन्ध्योपासनान्तर्गतमार्जनं यथा । छन्दोगपरि-शिष्टम् ।
"शिरसो मार्जनं कुर्य्यात् कुशैः सोदक-बिन्दुभिः ।
प्रणवो भूर्भुवः स्वश्च गायत्री च तृतीयिका ॥
अब्दैवत्यं त्र्यृचञ्चैव चतुर्थमिति मार्जनम् ॥"
ओङ्कारो भूरादिव्याहृतित्रयं तृतीया च गायत्री चतुर्थमापोहिष्ठेति ऋक्त्रयम् । इतीदं मार्जनं मार्जनक्रियाकरणमित्यर्थः । रामायणम् ।
"ऋगन्ते मार्जनं कुर्य्यात् पादान्ते वा समाहितः ।
आपोहिष्ठेत्यृचा कार्य्यं मार्जनन्तु कुशोदकैः ॥
प्रतिप्रणवसंयुक्तं क्षिपेन्मुद्दिर्ध्ने पदे पदे ।
त्र्यृचस्यान्तेऽथवा कुर्य्यादृषीणां मतमीदृशम् ॥

| | | |
|---|---|---|
| | रत्नावली ॥ मार्ज्जः ६ मार्ज्जा ७ । इत्यमर- टीकायां भरतः ॥ (यथा, श्रीमद्भागवते । ९ । ४ । १८ । "स वै मनः कृष्णपदारबिन्दयो र्वचांसि वैकुण्ठगुणानुवर्णने । करौ हरेर्मन्दिरमार्ज्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये ॥") | |

आपोहिष्ठेतिसूक्तस्य सिन्धुद्वीप ऋषिः
स्मृतः ।
आपो वै देवता च्छन्दो गायत्री मार्जनं
स्मृतम् ॥”
इत्याह्निकाचारतत्त्वम् ॥

**मार्ज्जनः**, पुं, (मार्ज्यतेऽनेनेति । मार्ज्ज + ल्युट् ।)

लोध्रवृक्षः । इत्यमरः । २ । ४ । ३३ ॥
श्वेतलोध्रः ।
इति सुभूतिः ॥ रक्तलोध्रः । इति स्वामी ॥

**मार्ज्जना**, स्त्री, (मार्ज्यत इति । मार्ज्ज + भावे

युच् ।) मार्जनम् । इत्यमरः । २ । ६ ।
१२१ ॥
मुरजध्वनिः । इति हेमचन्द्रः । ३ । ३००
॥

**मार्ज्जनी**, स्त्री, (मार्ज्यते अनयेति । मार्ज्ज + करणे

ल्युट् + स्त्रियां ङीप् ।) सम्मार्जनी । झाँटा
इति भाषा । यथा, --
“नमामि शीतलां देवीं रासभस्थां
दिगम्बरीम् ।
मार्जनीकलसोपेतां शूर्पालङ्कृतमस्तकाम्
॥”
इति स्कान्दे शीतलास्तोत्रम् ॥

**मार्ज्जनीयः**, त्रि, (मार्ज्यते इति । मृज् + अनी-

यर् ।) मार्जनयोग्यः । मार्ज्यः ॥ इति मृज-
धातोः कर्म्मण्यनीयप्रत्ययेन निष्पन्नः ।
अग्निः ।
शोधनम् । इति संक्षिप्तसारोणादिवृत्तिः ॥

**मार्ज्जारः**, पुं, (मृज् + “कञ्जिमृजिभ्यां चित् ।”

उणा० ३ । १३७ । इति आरन् चित् ।
“मृजे-
र्वृद्धिः ।” इत्युज्ज्वलदत्तोक्तेर्वृद्धिश्च ।) रक्त-
चित्रकः । इति राजनिर्घण्टः ॥ विडालः ।
इत्यमरः । २ । ५ । ६ ॥ (यथा, महाभारते
।
५ । १५९ । १६ ।
“माज्जारः किल दुष्टात्मा निश्चेष्टः सर्व्व-
पूर्ब्बस्य ह्रस्वत्वञ्च ।) चामुण्डा । यथा, --
“चामुण्डा चर्च्चिका चर्म्ममुण्डा मार्जार-
कर्णिका ॥”
इति हेमचन्द्रः ॥

**मार्ज्जारकर्णी**, स्त्री, माज्जारस्येव कर्णावस्याः ।

ङीप् । चामुण्डा । यथा, --
“मार्जारकर्णी चामुण्डा कर्णमोटिश्च चर्च्चिका
॥”
इति त्रिकाण्डशेषः ॥

**मार्ज्जारगन्धा**, स्त्री, (माज्जारस्येव गन्धोऽस्याः ।)

मुद्गपर्णीविशेषः । इति रत्नमाला ॥

**मार्ज्जारगन्धिका**, स्त्री, (माज्जारगन्ध । कन् ।

टाप् । अत इत्वञ्च ।) मुद्गपर्णी । इति राज-
निर्घण्टः ॥ (तथास्याः पर्य्यायः ।
“मुद्गपर्णी काकपर्णी सूर्य्यपर्ण्यल्पिका सहा ।
काकमुद्गा च सा प्रोक्ता तथा मार्जारगन्धिका
॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**मार्ज्जारी**, स्त्री, (मार्ष्टि शोधयति केशादिकम-

नया । मृज् + आरन् । स्त्रियां ङीष् ।) कस्तूरी
।
जन्तुविशेषः । गन्धगकुला इति खाटासी इति
च भाषा । तत्पर्य्यायः । पूतिका २ पूतिकजः
३
गन्धचेलिका ४ । अस्या गुणाः । वान्तिधार-
कत्वम् । चक्षुष्यत्वम् । कफवातनाशित्वञ्च ।
इति राजनिर्घण्टः ॥

**मार्ज्जारीयः**, पुं, (माज्जारस्यायम् । मार्जार +

“गहादिभ्यश्च ।” ४ । २ । १३८ । इति छः ।)
विडालः । शूद्रः । कायशोधनम् । इति मेदिनी
।
ये, १२७ ॥

**मार्ज्जालः**, पुं, मार्जारः । रलयोरेकत्वात् ॥

**मार्ज्जालीयः**, पुं, (मृज् + “स्थाचतिमृजेरा-

मार्कण्डेय उवाच ।
“एवं सा नियता देवी चक्रे
स्तोत्रमहनिशम् ।
निराहारा
विवस्वन्तमारिराधयिषुर्म्मुने ! ॥
ततः कालेन महता भगवांस्तपनो
मुने ! ।
प्रत्यक्षतामगात्तस्या दाक्षायण्या
द्विजोत्तम ! ॥
सा ददर्श महाकूटं
तेजसोऽम्बरसंस्थितम् ।
भूमौ च संस्थितं
भास्वज्ज्वालामालातिदुर्द्दृशम् ॥
तञ्च दृष्ट्वा ततो देवी साध्वसं परमं
गता ।
जगादाद्य ! प्रसीदेति न त्वां पश्यामि
गोपते ! ॥
यथा दृष्टवती पूर्ब्बमम्बरस्थं सुदुर्द्दृशम्
।
संघातं तेजसस्तस्मादिह पश्यामि
भूतले ॥
प्रसादं कुरु पश्येयं यद्रूपं ते प्रभाकर !
।
भक्तानुकम्पन ! विभो ! भक्ताहं पाहि
मे
सुतान् ॥”
श्रीमार्कण्डेय उवाच ।
“ततः स तेजसस्तस्मादाविर्भूतो
विभावसुः ।
अदृश्यत तदादित्यस्तप्तताम्रोपमप्रभः
॥
अथ तां प्रागतां देवीं तस्य
सन्दर्शनान्मुने ! ।
प्राह भास्वान् वृणुष्वेष्टं वरं मत्तो
यमिच्छसि ॥
प्रणता शिरसा सा च
जानुपीडितमेदिनी ।
प्रत्युवाच विवस्वन्तं वरदं
समुपस्थितम् ॥

कर्म्मसु ॥”)
खट्टासः । इति हेमचन्द्रः । ४ । ३६७ ॥ * ॥
मार्जारस्पर्शने दोषो यथा, --
“अभोज्यसूतिकाषण्डमार्जाराखूंश्च कुक्कुरान् ।
पतितापविद्धचण्डालमृतहारांश्चधर्म्मवित् ।
संस्पृश्य शुध्यते स्नानादुदक्याग्रामशूकरौ ॥”
इति मार्कण्डेयपुराणे सदाचाराध्यायः ॥ * ॥
पारिभाषिकमार्जारो यथा, --
“दम्भार्थं जपते यश्च तप्यते यजते तथा ।
न परत्रार्थमुद्युक्तो मार्जारः परिकीर्त्तितः ॥”
तस्यान्नमभोज्यं यथा, --
‘अभोज्याः सूतिकाषण्डमार्जाराख्वश्वकुक्कुटाः ॥’
इति वामनपुराणे १५ अध्यायः ॥

**मार्जारकः**, पुं, (मृज् + आरन् वृद्धिश्च । “संज्ञायां कन् ।” ४ । ३ । १४७ । इति कन् च ।)
मयूरः । इति त्रिकाण्डशेषः ॥ (माज्र्जार + स्वार्थे कन् । विडालः । यथा, महाभारते । १ । २३३ । २४ ।
“इमे माज्र्जारकाः शुक्र ! नित्यमुद्वेजयन्ति नः ॥”)

**मार्जारकण्ठः**, पुं, (माज्र्जारस्येव कण्ठः कण्ठ-स्वरो यस्य । यद्वा माज्र्जारो मसृणः कण्ठो यस्य ।) मयूरः । इति शब्दरत्नावली ॥

**मार्जारकर्णिका**, स्त्री, (माज्र्जारस्य कर्णौ इव कर्णौ यस्याः । स्त्रियां ङीप् स्वार्थे कन् । ठाप् लच् वालञालीयचः ।” उणा० १ । ११५ । इति आलीयच् ।) विडालः । शूद्रः । कायशोध-नम् । इति हेमचन्द्रः ॥ (महादेवः । यथा, महाभारते । ३ । ३९ । ७७ ।
“ललाटाक्षाय सर्व्वाय मीढुषे शूलपाणये ।
पिनाकगोप्त्रे सूर्य्याय मार्जालीयाय वेधसे ॥”)

**मार्जिता**, स्त्री, (माज्र्यते घृष्यते पाणिनेति । मृज् + णिच् + कर्म्मणि क्तः । स्त्रियां टाप् ।) रसाला । इत्यमरः । २ । ९ । ४४ ॥ सा तु दधिखण्डमधु-सर्पिर्मरिचादिकृतकर्पूरादिवासितसद्भक्ष्य-विशेषः । इत्यमरटीकायां भरतः ॥ (गुणादयो-ऽस्या रसालाशब्दे ज्ञातव्याः ॥) शोधिते, त्रि ॥

**मार्त्तण्डः**, पुं, (मृतश्चासौ अण्डश्चेति । मृताण्डे भवतीति । मृताण्ड + “तत्र भवः ।” ४ । ३ । ५३ । इति अण् ।) सूर्य्यः । (तन्निरुक्तिश्च । यथा, --
“अनिष्पन्नेषु गात्रेषु पुत्त्रं दृष्ट्वा पिताब्रवीत् ।
आर्त्तस्त्वं भव माण्डेति मार्त्तण्डस्तेन स स्मृतः ॥”
यथा, मार्कण्डेये । ७७ । १ ।
“मार्त्तण्डस्य रवेर्भार्य्या तनया विश्वकर्म्मणः ।
संज्ञा नाम महाभाग ! तस्यां भानुरजीजनत् ॥”
अर्कवृक्षः । इत्यमरः ॥ शूकरः । इति मेदिनी । ते, ३५ ॥ मार्त्तण्डोत्पत्तिर्यथा, --
देव ! प्रसीद पुत्त्राणां हृतं त्रिभुवनं मम ।
यज्ञभागाश्च दैतेयैर्दानवैश्च बलाधिकैः ॥
तन्निमित्तं प्रसादं त्वं कुरुष्व मम गोपते ! ।
अंशेन तेषां भ्रातृत्वं गत्वा नाशय तद्रिपून् ॥
यथा मे तनया भूयो यज्ञभागभुजः प्रभो ! ।
भवेयुरधिपाश्चैव त्रैलोक्यस्य दिवाकर ! ॥
तथानुकम्पां पुत्त्राणां सुप्रसन्नो रवे ! मम ।
कुरु प्रसन्नार्त्तिहर ! स्थितिकर्त्ता त्वमद्य मे ॥”
मार्कण्डेय उवाच ।
“ततस्तामाह भगवान् भास्करो वारितस्करः ।
प्रणतामदितिं विप्र ! प्रसादसुमुखो विभुः ॥
सहस्रांशेन ते गर्भे सम्भूयाहमशेषतः ।
तत्पुत्त्रशत्रूनदिते ! नाशयाम्याशु निर्वृता ॥
इत्युक्त्वा भगवान् भास्वानन्तर्द्धानमुपागमत् ।
निवृत्ता सापि तपसः संप्राप्ताखिलवाञ्छिता ॥
ततो रश्मिसहस्रान्तः सुषुम्नाख्यो रवेः करः ।
विप्रावतारं संचक्रे देवमातुरथोदरे ॥
कृच्छ्रचान्द्रायणादीनि सा चक्रे सुसमाहिता ।
शुचिः सन्धारयाम्येनं दिव्यं गर्भमिति द्विज ! ॥
ततस्तां कश्यपः प्राह किञ्चित्कोपप्लुताक्षरम् ।
किं मारयसि गर्भाण्डमिति नित्योपवासिनी ॥
सा च तं प्राह गर्भाण्डमेतत् पश्येति कोपना ।

| | | |
|---|---|---|
| | | न मारितं विपक्षाणां मृत्यवे यद्भविष्यति ॥<br>इत्युक्त्रा तं तदा गर्भमुत्ससर्ज्ज सुरारणिः ।<br>जाज्वल्यमानं तेजोभिः प्रत्युवाच न कोपिता ।<br>तं दृष्ट्वा कश्यपो गर्भमुद्यद्भास्करवर्च्चसम् ।<br>तुष्टाव प्रणतो भूत्वा ऋग्भिराद्याभिरादरात् ॥<br>संस्तूयमानः स तदा गर्भाण्डात् प्रकटोऽभवत् ।<br>पद्मपत्रसवर्णाभस्तेजसा व्याप्तदिङ्मुखः ॥<br>अथान्तरीक्षादाभाष्य कश्यपं मुनिसत्तमम् ।<br>सतोयमेघगम्भीरा वागुवाचाशरीरिणी ॥ |

मारितञ्च यतः प्रोक्तमेतदण्डं त्वयादितिम् ॥
तस्मान्मुने ! सुतस्तेऽयं मार्त्तण्डाख्यो भविष्यति ॥
सूर्य्याधिकारञ्च विभुर्जगत्येष करिष्यति ।
हनिष्यत्यसुरांश्चायं यज्ञभागहरानरीन् ॥
देवा निशम्येति वचो गगनात् समुपागतम् ।
प्रहर्षमतुलं याता दानवाश्च हतौजसः ॥
ततो युद्धाय दैतेयानाजुहाव शतक्रतुः ।
सह देवैर्मुदायुक्तो दानवाश्च तमाययुः ॥
तेषां युद्धमभूद्घोरं देवानामसुरैः सह ।
शस्त्रास्त्रदीप्तिसन्दीप्तसमस्तभुवनान्तरम्॥
तस्मिन् युद्धे भगवता मार्त्तण्डेन निरीक्षिताः ।
तेजसा दह्यमानास्तु भस्मीभूता महासुराः ॥
ततः प्रहर्षमतुलं प्रापुः सर्व्वे दिवौकसः ॥
तुष्टवुस्तेजसां योनिं मार्त्तण्डमदितिन्तथा ॥
स्वाधिकारं ततः प्रापुर्यज्ञभागांश्च पूर्ब्बवत् ।
भगवानपि मार्त्तण्डः स्वाधिकारमथाकरोत् ॥
कदम्बपुष्पवद्भास्वानधश्चोद्र्ध्वञ्च रश्मिभिः ।
वृत्तोऽग्निपिण्डसदृशो दध्रे नातिस्फुटं वपुः ॥”
इति मार्कण्डेयपुराणे सूर्य्यमाहात्म्ये मार्त्त-ण्डोत्पत्तिनामाध्यायः ॥

**मार्त्तण्डबल्लभा**, स्त्री, (मार्त्तण्डस्य बल्लभा प्रिया । यद्वा, मार्त्तण्डो वल्लभः प्रियोऽस्याः ।) आदित्य-भक्ता । इति राजनिर्घण्टः ॥ सूर्य्यपत्नी च ॥

**मार्त्तिकः**, पुं, (मृत्तिकाया विकार इति । मृत्तिका + “तस्य विकारः ।” ४ । ३ । १३४ । इति ठक् ।) शरावः । इति शब्दरत्नावली ॥ मृत्तिकानिर्म्मिते, त्रि ॥

**मार्द्दङ्गं**, क्ली, (मृत् अङ्गमस्य । ततः स्वार्थे अण् ।) पत्तनम् । इति हारावली ॥ (मृदङ्ग-वादनं शिल्पमस्येति । अण् ।) मृदङ्गवादके, त्रि ॥

**मार्द्दङ्गिकः**, त्रि, (मृदङ्गवादनं शिल्पमस्य । मृदङ्ग + “शिल्पम् ।” ४ । ४ । ५५ । इति ठक् ।) मृदङ्गवादकः । तत्पर्य्यायः । मौर-जिकः २ । इत्यमरः । २ । १० । १३ ॥ सार्ङ्किकः ३
मध्यमं यथा, --
“चित्रं धनिष्ठे तनुवाससोऽपि
चीनस्य पीनस्तनि ! सङ्गमेन ।
लिप्तेन तल्लोहितचन्दनेन
मूर्त्तिर्विदूना सखि ! लोहितासीत् ॥
कनिष्ठं यथा, --
रससुधाकरे आमोदमामोदन-
मादधानं निलीननीलालकचञ्चरीकम् ।
क्षणेन पद्मामुखपद्ममासीत्
त्विषा रवेः कोमलयापि ताम्रम् ॥”
इत्युज्वलनीलमणिः ॥
(अकाठिन्यम् । यथा, रघौ । ८ । ४३ ।
“विललाप सवाष्पगद्गदं
सहजामप्यपहाय धीरताम् ।
अभितप्तमयोऽपि मार्द्दवं
भजते कैव कथा शरीरिषु ॥”)

**मार्द्दवः**, पुं, (मार्द्दवं मृदुत्वमस्यास्तीति । मार्द्दव + अर्श आद्यच् ।) वर्णसङ्करजातिविशेषः ।
“माधुको मार्दवश्चञ्चुकारुषा
हिण्डिकादयः ।”
इति जटाधरः ॥

**मार्षः**, पुं, (मृष्यति क्षमते जनानिति । मृष् + “इगुपधज्ञाप्रीकिरः कः ।” ३ । १ । १३५ ।
इति कः । मृषः । ततः । स्वार्थे अण् ।)
नाठ्योक्तौ श्रेष्ठः । इति हेमचन्द्रः । २ । २४ ॥
मारिषशाकः । इत्यमरटीकायां भरतः ॥
(शाकार्थे पर्य्यायो यथा, --
“मारिषो वाष्पको मार्षः श्वेतो रक्तश्च स स्मृतः ।”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**मार्षिकः**, पुं, (मार्ष + ठक् ।) मारिषशाकः । इति राजनिर्घण्टः ॥

**मार्ष्टिः**, स्त्री, (मृज् + क्तिन् । “मृजेर्वृद्धिः ।”
(यथा, महाभारते । ६ । ९ । ३९ ।
“तत्रेमे कुरुपाञ्चालाः शाल्वा
माद्रेयजाङ्गलाः ।
शूरसेनाः पुलिन्दाश्च योधा
मालास्तथैव च ॥”)
जनः । इति च हेमचन्द्रः । ३ । ५९८ ॥ देश-
विशेषः । स च मेदिनीपुरप्रदेशे
मालभूमित्वेन
ख्यातः । विष्णुः । यथा, --
‘मां लक्ष्मीं लातीति मालो विष्णुः तं अत-
तीति मालती ।’
इति मालतीशब्दटीकायां भरतः ॥

**मालकं**, क्ली, (मलते धारयति शोभामिति । मलधारणे + ण्वुल् ।) स्थलपद्मम् । इति जटा-धरः ॥

**मालकः**, पुं, (मलते धारयत्युग्रवीर्य्यं रोगनाशने इति । मलधारणे + ण्वुल् ।)
निम्बवृक्षः । इत्य-मरः । २ । ४ । ६२ ॥
(निम्बशब्देऽस्य विवरणं
ज्ञातव्यम् ॥)

**मालका**, स्त्री, (मलते धारयति शोभाम् । मल + ण्वुल् । स्त्रियां टाप् ।) माल्यम् । इति शब्द-रत्नावली ॥

**मालकौशः**, पुं, (मालस्य हरेः कोशात् कण्ठा-न्निर्गत इति । अण् ।) रागविशेषः । तस्य
नामान्तरं कौशिकः । स च हनूमन्मते षड्-
रागाणां मध्ये द्वितीयरागः । हरस्य हरेर्वा

और्द्धिकः ४ । इति शब्दरत्नावली ॥ (यथा, रामायणे । २ । ९१ । ४९ ।
"बिल्वा मार्द्दङ्गिका आसंश्छम्याग्राहा विभी-
तकाः ।
अश्वत्था नर्त्तकाश्चासन् भरद्वाजस्य तेजसा ॥")

**मार्द्दवं**, क्ली, (मृदोर्भाव इति । मृदु + "पृथ्वादिभ्य इमणिज् वा ।" ५ । १ । १२२ । इत्यत्र । "वावचन-
मणादेः समावेशार्थम् ।" इति काशिको-
क्तेरण् ।) परदुःखप्रदर्शनात् पीडाबुद्धिः । मृदुता । यथा, --
"मार्द्दवं कोमलस्यापि संस्पर्शासहतोच्यते ।
उत्तमं मध्यमं प्रोक्तं कनिष्ठञ्चेति तत्त्रिधा ॥"
उत्तमं यथा, --
"अभिनवमालिकामियं साशय-
नववंशिराधिका विशिष्ये ।
न कुसुमपटलं दरापि जग्लौ
तदनुभवात्तनुरेव सव्रणासीत् ॥"

७ । २ । ११४ । इति वृद्धिश्च ।)
मार्जनम् ।
इत्यमरः । २ । ६ । १२१ ॥ तैलम्रक्षणम् । यथा,
"तैलमल्पं यदङ्गेषु न भवेत् बाहुसङ्गतम् ।
सा मार्ष्टिः पृथगभ्यङ्गो मस्तकादौ प्रकीर्त्तितः ॥"
इत्याह्निकतत्त्वम् ॥

**मालं**, क्ली, (माति मानहेतुर्भवतीति । मा +
"ऋज्रेन्द्राग्रवज्रेत्यादि ।" उणा० २ । २८ । इति
रण् । पृषोदरादित्वाद्रस्य लत्वम् ।) क्षेत्रम् ।
इति मेदिनी ॥ ले, ४५ । (यथा, मेघदूते । १६ ।
"सद्यः सीरोत्कषणसुरभि क्षेत्रमारुह्य मालं
किञ्चित्पश्चाद् व्रज लघुगतिर्भूय एवोत्तरेण ॥")
कपटम् । वनम् । इति हेमचन्द्रः ॥ (हरि-
तालम् । यथा, --
"हरितालं तालमालं मालं शैलूषभूषणम् ।
पिञ्जकं रोमहरणं तालकं पातमित्यपि ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणाद्य-
धिकारे ।)

**मालः**, पुं, (मातीति । मा + रन् । रस्य लत्वम् ।)
जातिविशेषः । इति मेदिनी ॥ ले, ४५ । स च
म्लेच्छजातिः । यथा, --
"माला भिल्लाः किराताश्च सर्व्वेऽपि म्लेच्छजातयः ॥"

कण्ठान्निर्गतः । अस्य जातिः सम्पूर्णा तत्र सप्त-
स्वरक्रमः ष ऋ ग म प ध नि । अस्य गृहं
षड्जस्वरः । शरदृतौ रात्रिशेषे गानसमयः ।
रागमालायामस्य स्वरूपम् ।
पाटलवर्णपुरुषः ।
नीलपरिच्छदः । यष्टिहस्तः । यौवनमदमत्तः
स्त्रीभिः सह हास्यकौतुकान्वितः शत्रुमस्तक-
माल्यगलोऽथवा बृहन्मुक्तामाल्यगलः । अस्य
रागिण्यः पञ्च यथा । टोडी १ गौरी २ गुण-
करी ३ खम्भावती ४ कोकभा ५ । अस्याष्टौ
पुत्त्रा यथा । मारुः १ मेवाडः २ वडहंसः ३
प्रबलः ४ चन्द्रकः ५ नन्दः ६ भ्रमरः ७ खुखरः ८
अत्र मिष्टाङ्गोऽपि पाठः । भरतमते तस्य
रागिण्यः पञ्च यथा । गौरी १ दयावती २
देवदाली ३ खम्भावती ४ कोकभा ५ । तन्मते
अष्टौ पुत्त्रा यथा । गान्धारः १ शुद्धः २ मकरः ३
त्रिञ्छनः ४ सहानः ५ शक्तबल्लभः ६ माली-
गौरः ७ कामोदः ८ । अष्टपुत्त्रभार्य्या यथा ।
धनाश्रीः १ मालश्रीः २ जयतश्रीः ३ सुघोरायी ४
दुर्गा ५ गान्धारी ६ भीमपलाशी ७ कामोदी
८ । इति सङ्गीतशास्त्रम् ॥

**मालचक्रकं**, क्ली, (माला समूहः अस्थ्नामस्त्य-

| | | स्येति । अर्श आदित्वादच् । स<br>चक्रमिवेति ।<br>कन् ।) सक्थ्यूरुपर्व्वसन्धिः । इति<br>शब्द-<br>चन्द्रिका । मालाइचाकि इति भाषा ॥ |
| --- | --- | --- |
| | | **मालती**, स्त्री, (मलते शोभां धारयतीति । मल् +<br>“भृदृशियजीत्यादि ।” उणा० ३ ।<br>११० । इत्यत्र<br>“बाहुलकात् मलतेरतच् ।<br>गौरादिनिपातना-<br>दुपधाया दीर्घत्वम् ।”<br>इत्युज्ज्वलदत्तोक्तेः अतच्<br>उपधाया दीर्घत्वम् ङीष् च । मां<br>लक्ष्मीं |

लातीति मालो विष्णुः तं अततीति । अच् । इत्यमरटीकायां भरतः ॥) स्वनामख्यात-पुष्पलता । तत्पर्य्यायः । सुमना २ जातिः ३ ।
इत्यमरः ॥ सुमनाः ४ जाती ५ । इति भरतः ॥
(यथा, शिशुपालवधे । ११ । १७ ।
“ज्वलयति मदनाग्निं मालतीनां रजोभिः ।”)
अस्या गुणाः ।
कफपित्तमुखरोगव्रणक्रिमिकुष्ठ-
नाशित्वम् । इति राजबल्लभः ॥ तस्या उत्-पत्तिर्यथा, --
आद्याशक्तिरुवाच ।
‘अहमेतत्त्रिधा भिन्ना तिष्ठामि त्रिविधैर्गुणैः ।
गौरी लक्ष्मीः स्वधा चेति रजःसत्त्वतमोगुणैः ॥
तत्र गत्वा तथा कार्य्यं विधास्यन्ते च ताः सुराः ॥
नारद उवाच ।
शृण्वतामिति तां वाचमन्तद्र्ध्वानभगान्महः ।
देवानां विस्मयोत्फुल्लनेत्राणाञ्च तदा नृप ! ॥
ततः सर्व्वेऽपि ते देवा गत्वा तद्वाक्यचोदिताः ।
गौरीं लक्ष्मीं स्वधाञ्चैव प्रणेमुर्भक्तितत्पराः ॥
तास्तथा तान् सुरान् दृष्ट्वा प्रणतान् भक्तवत्-
सलाः ।
बीजानि प्रददुस्तेभ्यो वाक्यानि जगदुस्तथा ॥
देव्य ऊचुः ।
इमानि देवा बीजानि विष्णुर्यत्रावतिष्ठति ।
निर्व्वपस्व ततः कार्य्यं भवतां सिद्धिमेष्यति ॥
नारद उवाच ।
ततः प्रहृष्टाः सुरसिद्धसंघाः
प्रगृह्य बीजानि विचिक्षिपुश्च ।

**मालतीपत्रिका**, स्त्री, (मालत्याः पत्रीव । मालती-
पत्र + प्रतिकृतौ कन् टाप् अत इत्वम् ।) जातीपत्री । इति राजनिर्घण्टः ॥ (जाती-पत्रीशब्देऽस्य विषयो द्रष्टव्यः ॥)

**मालतीफलं**, क्ली, (मालत्याः फलम् ।) जाती-
फलम् । इति राजनिर्घण्टः ॥ (तथास्य पर्य्यायः ।
“जातीफलं जातिकोशं
मालतीफलमित्यपि ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**मालयः**, पुं, (मा शोभा तस्याः लयः आस्पदम् ।)
चन्दनवृक्षः । इति त्रिकाण्डशेषः ॥ मलय-सम्बन्धिनि, त्रि ॥ (यथा, नलोदये । २ । ३७ ।
“तनुच्छटोत्तमालया तया भुवोत्तमालया ।
अहारि शीतमालयानिलाबधूतमालया ॥”
क्ली, अभिसारस्थानभेदः । यथा, साहित्य-
दर्पणे । ३ । अभिसारिकाप्रकरणे ।
“क्षेत्रं वाटी भग्नदेवालयो दूतीगृहं वनम् ।
मालयञ्च श्मशानञ्च नद्यादीनां तटी तथा ॥”)

**मालवः**, पुं, (मालः उन्नतक्षेत्रमस्त्यत्र । माल +
“केशाद्वोऽन्यतरस्याम् ।” ५ । २ । १०९ । इत्यत्र
“अन्येभ्योऽपि दृश्यन्ते ।” इति काशिकोक्तेः
वप्रत्ययः ।) अवन्तिदेशः । इति हेमचन्द्रः ।
४ । २२ ॥ मालओया इति हिन्दीभाषा ॥
(यथा, मात्स्ये । ११३ । ४४ ॥
“अङ्गा वङ्गा मद्गुरका अन्तर्गिरि बहि-र्गिरी ।
सुह्योत्तराः प्रविजया मार्गवागेयमालवाः ॥”
मालवेषु जात इत्यण् । तद्देशजे, त्रि ॥)
रागविशेषः । स च षड्रागाणां मध्ये प्रथम-

**मालसी**, स्त्री, (मल + स्वार्थे अण् । मलं स्यति-
नाशयति । सो + डः । ङीप् ।)
केशपुष्पवृक्षः ।
यथा, --
‘मालसी दुर्गपुष्पी च बालाक्षी केशधारिणी ॥’
इति शब्दचन्द्रिका ॥
रागिणीविशेषः । सा तु मालवरागस्य पत्नी ।
यथा, --
“धानुषी मालसी रामकिरी च सिन्धुडा तथा ।
अश्ववारी भैरवी च मालवस्य प्रिया इमाः ॥”
इति हारीतः ॥
मतान्तरे मेघरागस्य पत्नी । यथा, --
“ललिता मालसी गौडी नाटी देवकिरी तथा ।
मेघरागस्य रागिण्यो भवन्तीमाः सुमध्यमाः ॥”
तस्याः स्वरूपं यथा, --
“नीलारविन्दस्य दलानि बाला
विधारयन्ती तनुदेहयष्टिः ।
मालूरवृक्षस्य तले निषण्णा
शोणा मृदुर्मालसिका प्रदिष्टा ॥”
तस्या गानसमयो यथा, --
“इन्द्रोत्थानात् समारभ्य
यावद्दुर्गामहोत्सवम् ।
गेया भवेद्बुधैर्नित्यं मालसी सा मनोहरा ॥”
अपि च ।
“गान्धारी दीपिका चैव कल्याणी पुरवी तथा ।
अश्ववारी कानडा च गौरी केदारपाहिडा ॥
माधवी मालसी नाटी भूपाली सिन्धुडा तथा ।
सायाह्ने रागिणीरेताः प्रगायन्ति चतुर्द्दश ॥”

विन्दारिकाभूमितले स यत्र
विष्णुः सदा तिष्ठति सौख्यवृत्तिः
नारद उवाच ।
क्षिप्तेभ्यस्तत्र बीजेभ्यो
वनस्पत्यस्त्रयोऽभवन् ।
धात्री च मालती चैव तुलसी च नृपोत्तम !
॥
धात्र्युद्भवा स्मृता धात्री माभवा मालती
स्मृता ।
गौरीभवा च तुलसी रजःसत्त्वतमोगुणाः ॥”
इति पाद्मे उत्तरखण्डे १४९ । १५०
अध्यायौ ॥ * ॥
युवती । काचमाली । विशल्या । ज्योत्स्ना
।
निशा । नदीविशेषः । इति हेमचन्द्रः । ४ ।
२१३ ।
(सुवर्च्चला मालतीत्यर्थः । तत्पर्य्यायो
यथा, --
“चणको मालती क्षौमी रुद्रपत्नी सुवर्च्चला
॥”
पुष्पार्थे पर्य्यायो यथा, --
“मालती सुमना जातिः ।” इत्युभे
वैद्यकरत्न-
मालायाम् ॥ तथाच ।
जातिर्जाती च सुमना मालती राजपुत्त्रिका
।
चेतिका हृद्यगन्धा च सा पीता
स्वर्णजातिका ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**मालतीतीरजः**, पुं, (मालती तदाख्या नदी तस्या-
स्तीरे जायते इति । जन् + डः ।) टङ्कणः ।
इति
हेमचन्द्रः । ४ । १० ॥

**मालतीतीरसम्भवं**, क्ली, (मालत्या तीरे सम्भवो-
ऽस्य ।) श्वेतटङ्कणम् । इति राजनिर्घण्टः ॥

रागः । मतान्तरे भैरवरागोऽयम् । यथा, --
“आदौ मालवरागेन्द्रस्ततो मल्लारसंज्ञितः
।
श्रीरागस्तस्य पश्चाद्वै वसन्तस्तदनन्तरम्
॥
हिल्लोलश्चाथ कर्णाट एते रागाः प्रकी-
र्त्तिताः ॥
तस्य स्वरूपं यथा, --
“नितम्बिनीचुम्बितवक्त्रपद्मः
शुकद्युतिः कुण्डलवान् प्रमत्तः ।
सङ्गीतशालां प्रविशन् प्रदोषे
मालाधरो मालवरागराजः ॥”
इति सङ्गीतदामोदरः ॥
(मालव्यां तन्नामिकायां सावित्रीमातरि
जातः
इत्यण् । अश्वपतेराज्ञो मालव्यां जातः
पुत्त्र
गणः । यथा, महाभारते । ३ । २९६ ।
५८ ।
“पितुश्च ते पुत्त्रशतं भविता तव मातरि ।
मालव्यां मालवा नाम शाश्वताः
पुत्त्रपौत्त्रिणः ॥
भ्रातरस्ते भविष्यन्ति
क्ष्यत्रियास्त्रिदशोपमाः ॥”
स्त्री, नदीविशेषः । यथा, महाभारते । १३
।
१६५ । २५ ।
“हिरण्वती वितस्ता च तथा प्लक्षवती
नदी ।
वेदस्मृतिर्वेदवती मालवाथाश्ववत्यपि ॥”)

**मालविका**, स्त्री, (मालवेषु जाता । मालव + ठक्
टाप् ।) त्रिवृत् । इति राजनिर्घण्टः ॥

इति सङ्गीतदामोदरः ॥

**माला**, स्त्री, (माति मानहेतुर्भवतीति । मा +
“ऋज्रेन्द्राग्रवज्रे ।” उणा० २ । २८ । इति
रन्
रस्य लत्वम् टाप् च । यद्वा, मां शोभां
लाति इति ।
ला + कः टाप् ।) श्रेणी । तत्पर्य्यायः ।
राजिः २
लेखा ३ तती ४ वीची ५ आली ६
आवलिः ७
पङ्क्तिः ८ धारणी ९ । इति हेमचन्द्रः ।
३ । ३१५ ।
मूर्द्ध्नि न्यस्तपुष्पदाम ।
अन्यत्राप्युपचारात् ॥
तत्पर्य्यायः । माल्यम् २ स्रक् ३ ।
इत्यमरः । २ ।
६ । १३५ ॥ मालिका ४ मालाका ५
मालका ६ ।
इति शब्दरत्नावली ॥ गणनिका ७ गुणा-
न्तिका ८ । इति वराहपुराणम् ॥ सा
त्रिविधा
यथा, --
“माला तु त्रिविधा देवि !
वर्णाक्षपर्व्वभेदतः ।”
इति मत्स्यसूक्तवचनम् ॥ * ॥
अथ मालानिर्णयः । तत्र करमाला ।
सनत्-
कुमारसंहितायाम् ।
‘तर्जनी मध्यमानामा कनिष्ठा चेति ताः
क्रमात् ॥
तिस्रोऽङ्गुल्यस्त्रिपर्व्वाणो मध्यमा
चैकपर्व्विका ।
पर्व्वद्वयं मध्यमाया मेरुत्वेनोपकल्पयेत् ॥
क्रममाह ।
अनामामध्यमारभ्य कनिष्ठादित एव च ।
तर्जनीमूलपर्य्यन्तं दशपर्व्वसु संजपेत् ॥
तथा, --
अनामामूलमारभ्य कनिष्ठादित एव च ।
तर्जनीमध्यपर्य्यन्तमष्टपर्व्वम संजपेत् ॥

एतद्वचनन्तु अष्टोत्तरशतादिविषयम्॥
* ॥
शक्तिविषये पुनः । श्रीक्रमे ।
अनामिकात्रयं पर्व्व
कनिष्ठादित्रिपर्व्विका ।
मध्यमायाश्च त्रितयं तर्जनीमूलपर्व्वणि
।
तर्जन्यग्रे तथा मध्ये यो जपेत् स तु
पापकृत् ॥
हंसपारमेश्वरे ।
पर्व्वद्वयमनामायाः परिवर्त्तेन वै क्रमात्
।
पर्व्वत्रयं मध्यमायास्तर्जन्येकं समाहरेत्
॥
पर्व्वद्वयन्तु तर्जन्या मेरुं तद्विद्धि
पार्व्वति ! ।
शक्तिमाला समाख्याता
सर्व्वतन्त्रप्रदीपिका ॥
तथा ।
अनामामूलमारभ्य प्रादक्षिण्यक्रमेण च
।
मध्यमामूलपर्य्यन्तमष्टपर्व्वसु संजपेत्
॥ * ॥
श्रीविद्यायामयं विशेषः ।
अनामाया मध्यमाया मूलाग्रञ्च द्वयं द्वयं
।
कनिष्ठायाश्च तर्जन्यास्त्रयं पर्व्व
सुरेश्वरि ! ॥
अनामामध्यमायाश्च मेरुः स्याद्द्वितयं
शुभम् ।
प्रदक्षिणक्रमाद्देवि ! जपेत्त्रिपुरसुन्दरीम्
॥”
इति यामलवचनात् ॥
मुण्डमालातन्त्रे ।
“अनामिका द्वयं पर्व्वप्रादक्षिण्यक्रमेण
तु ।
तर्जनीमूलपर्य्यन्तं करमाला प्रकीर्त्तिता
॥

कृत्वा शतं संजप्य अकारादीनां वर्णानां
कवर्गादीनाञ्चान्तिमं वर्णं सानुस्वारं कृत्वा पूर्ब्ब-
मुच्चार्य्य शेषाष्टवारमन्त्रजपः कार्य्यः । अनेन
प्रकारेण अष्टोत्तरशतसंख्यो जपो भवति ।
अन्तर्यजनेत्युपलक्षणम् । तथा ।
सबिन्दुं वर्णमुच्चार्य्य पश्चान्मन्त्रं जपेद्बुधः ।
अकारादिक्षकारान्तं बिन्दुयुक्तं विभाव्य च ।
वर्णमाला समाख्याता अनुलोमविलोमतः ॥
इति नारदवचनात् ।
विशुद्धेश्वरे ।
अनुलोमविलोमेन वर्गाष्टकविभेदतः ।
मन्त्रेणान्तरितान् वर्णान् वर्णेनान्तरितान्
मनून् ।
कुर्य्याद्वर्णमयीं मालां सर्व्वतन्त्रप्रकाशिनीम् ॥ * ॥
मालिनीविजये सूत्रनियमः ।
अन्तर्विद्रुमभासमानभुजगीसूत्रोतवर्णोज्ज्वलाम्।
आरोहप्रतिरोहतः शतमयीं वर्गाष्टकाष्टोत्त-
राम् ॥
इति वर्णमाला ॥ * ॥
अथाक्षमाला । तत्र मालायां मणिनिर्णयः ।
पद्मबीजादिभिर्माला बहिर्यागे शृणुष्व ताः ।
रुद्राक्षशङ्खपद्माक्षपुत्त्रजीवकमौक्तिकैः ॥
स्फाटिकैर्म्मणिरत्नैश्च सुवर्णैर्विद्रुमैस्तथा ।
राजतैः कुशमूलैश्च गृहस्थस्याक्षमालिका ॥ * ॥
अङ्गुलीगणनादेकं पर्व्वण्यष्टगुणं भवेत् ।
पुत्त्रजीवैर्दशगुणं शतं शङ्खैः सहस्रकम् ॥
प्रबालैर्म्मणिरत्नैश्च दशसाहस्रकं मतम् ।
तदेव स्फाटिकैः प्रोक्तं मौक्तिकैर्लक्षमुच्यते ॥
पद्माक्षैर्द्दशलक्षं स्यात् सौवर्णैः कोटिरुच्यते ।
कुशग्रन्थ्या कोटिशतं रुद्राक्षैः स्यादनन्तकम् ॥
सर्व्वैर्व्विरचिता माला नृणां मुक्तिफलप्रदा ।
कालिकापुराणे ।
रुद्राक्षैर्व्वा यदि जपेत् इन्द्राक्षैः स्फाटिकैस्तथा ।
नान्यन्मध्ये प्रयोक्तव्यं पुत्त्रजीवादिकञ्च यत् ॥
यद्यन्यत्तु प्रयुञ्जीत मालायां जपकर्म्मणि ।
तस्य कामञ्च मोक्षञ्च न ददाति प्रियङ्करी ॥
मुण्डमालायाम् ।
श्मशानधुस्तुरैर्माला ज्ञेया धूमावतीविधौ ।
नराङ्गुल्यस्थिभिर्माला ग्रथिता सर्व्वकामदा ॥

त्रिपुरामन्त्रजपादौ तु
रक्तचन्दनबीजादिभि-
रतिप्रशस्ता । तथा च तन्त्रराजे ।
रक्तचन्दनमाला तु भोगदा मोक्षदा
भवेत् ॥
तथा ।
वैष्णवे तुलसीमाला गजदन्तैर्गजानने
।
त्रिपुराया जपे शस्ता रुद्राक्षै
रक्तचन्दनैः ॥ * ॥
कुमारीकल्पे ।
रुद्राक्षैः शक्तिमन्त्रञ्च मन्त्री यः
प्रजपेत् प्रिये ! ।
स दुर्गतिमवाप्नोति निष्फलस्तस्य
तज्जपः ॥
कालिका च्छिन्नमस्ता च त्रिपुरा
तारिणी तथा ।
एताः सर्व्वा न दुष्यन्ति जपे
रुद्राक्षमालया ॥
दिवा नैव प्रजप्तव्यं रुद्राक्षमालयापि
च ।
पुरश्चर्य्यामृते चात्र दूषणन्तु वरानने !
॥
महाशङ्खमयी माला नीलसारस्वते
विधौ ।
नृललाटास्थिखण्डेन रचिता
जपमालिका ॥
महाशङ्खमयी माला ताराविद्याजपे
प्रिये ! ।
कर्णनेत्रान्तरालास्थि महाशङ्खः
प्रकीर्त्तितः ॥
मणिनियमस्तु मुण्डमालायाम् ।
अन्योन्यसमरूपाणि
नातिस्थूलकृशानि च ।
कीटादिभिरदुष्टानि न जीर्णानि
नवानि वै ॥
तथा गौतमीये ।
पञ्चाशल्लिपिभिर्माला विहिता
सर्व्वकर्म्मसु ।

कनिष्ठामूलमारभ्य प्रादक्षिण्यक्रमेण च
।
तर्जनीमूलपर्य्यन्तमष्टपर्व्वसु संजपेत्
॥”
इदमपि अष्टोत्तरशतादिविषयम् ॥ * ॥
अङ्गुलीर्न वियुञ्जीत किञ्चिदाकुञ्चिते
तले ।
अङ्गुलीनां वियोगाच्च छिद्रे च स्रवते
जपः ॥
अन्यत्रापि ।
अङ्गुल्यग्रेषु यज्जप्तं यज्जप्तं मेरुलङ्घने ।
पर्व्वसन्धिषु यज्जप्तं तत्सर्व्वं निष्फलं
भवेत् ॥
गणनाविधिमुल्लङ्घ्य यो जपेत्तज्जपं
यतः ।
गृह्णन्ति राक्षसास्तेन गणयेत् सर्व्वथा
बुधः ॥
तत्राङ्गुलिजपं कुर्व्वन्
साङ्गुष्ठाङ्गुलिभिर्जपेत् ।
साङ्गुष्ठेन विना कर्म्म कृतं तदफलं
भवेत् ॥
विश्वसारे ।
जपसंख्या तु कर्त्तव्या नासंख्यातं
जपेत् सुधीः ।
नसंख्याकारकस्यास्य सर्व्वं भवति
निष्फलम् ॥
तन्त्रे ।
हृदये हस्तमारोप्य तिर्य्यक् कृत्वा
कराङ्गुलीः ।
आच्छाद्य वाससा हस्तौ दक्षिणेन सदा
जपेत् ॥
इति करमाला ॥ * ॥
जपसंख्यायां निषिद्धद्रव्यमाह यामले ।
नाक्षतैर्हस्तपर्व्वैर्वा न धान्यैर्नच पुष्पकैः
।
न चन्दनैर्मृत्तिकया जपसंख्यां न
कारयेत् ॥
विहितद्रव्यमाह ।
लाक्षाकुशीदसिन्दूरगोमयञ्च करीषकम्
।

नाड्या संग्रथनं कार्य्यं रक्तेन वाससा प्रिये ! ।
सदा गोप्या प्रयत्नेन जनन्या जारवत् प्रिये ! ॥
कामनाविशेषे तु ।
पद्माक्षैर्व्विहिता माला शत्रूनाशकरी मता ।
कुशग्रन्थिमयी माला सर्व्वपापप्रणाशिनी ॥
पुत्त्रजीवफलैः कॢप्ता कुरुते पुत्त्रसम्पदम् ।
निर्म्मिता रूप्यमणिभिर्जपमालेप्सितप्रदा ।
प्रबालैर्विहिता माला प्रयच्छेत् विपुलं धनम् ॥
भैरवीविद्यायान्तु वाराहीतन्त्रे ।
सुवर्णमणिभिर्म्मालां स्फाटिकीं शङ्खनिर्म्मि-
ताम् ।
प्रबालैरेव वा कुर्य्यात् पुत्त्रजीवं विवर्ज्जयेत् ।
पद्माक्षञ्चैव रुद्राक्षमिन्द्राक्षञ्च विशेषतः ॥ * ॥

अकारादिक्षकारान्ता वर्णमाला
प्रकीर्त्तिता ॥
क्षार्णं मेरुमुखं तत्र
कल्पयेन्मुनिसत्तम ! ।
अनया सर्व्वमन्त्राणां जपः
सर्व्वसमृद्धिदः ॥ * ॥
चामुण्डातन्त्रे ।
नित्यं जपं करे कुर्य्यात् न तु
काम्यमबोधनात् ।
काम्यमपि करे कुर्य्यात् मालाभावेऽपि
सुन्दरि ! ॥
तेन मालायाः प्राधान्यम् ॥ * ॥
कामनाभेदे तु
गौतमीये ।
समासेनाक्षसूत्रस्य विधानमिह
कथ्यते ।
पञ्चविंशतिभिर्मोक्षं त्रिंशद्भिर्धनसिद्धये
॥
सर्व्वार्थाः सप्तविंशत्या
पञ्चदश्यभिचारके ।
पञ्चाशद्भिः काम्यसिद्धिः स्यात्तथा
चतुरुत्तरैः ।
अष्टोत्तरशतैः सर्व्वसिद्धिरुक्ता
मनीषिभिः ॥
अथ मालासंस्कारः । तत्र
सनत्कुमारीये ।
‘कार्पाससम्भवं सूत्रं
धर्म्मकामार्थमोक्षदम् ।
तच्च विप्रेन्द्रकन्याभिर्निर्म्मितञ्च
सुशोभनम् ॥’
यद्वा ।
‘शुक्लं रक्तं तथा कृष्णं
पट्टसूत्रमथापि वा ।
शान्तिवश्याभिचारेषु मोक्षैश्वर्य्यजयेषु
च ॥
शुक्लं रक्तं तथा पीतं कृष्णं वर्णेषु च
क्रमात् ।
सर्व्वेषामेव वर्णानां रक्तं
सर्व्वेप्सितप्रदम् ॥
आश्रमेषु तथा चैवं रक्तं
सर्व्वसुसिद्धिदम् ।

| | | |
|---|---|---|
| एभिर्निर्म्माय गुटिकां जपसंख्यान्तु कारयेत् ॥<br>अथ वर्णमाला । सनत्कुमारे ।<br>क्रमोत्क्रमगतैर्मालामातृकार्णैः क्षमेरुकैः ।<br>सबिन्दुकैः साष्टवर्गैरन्तर्यजनकर्म्मणि ॥<br>आदिकु चु टु पु यु शवोऽष्टौ वर्गाः प्रकीर्त्तिताः ।<br>तद्यंथा । अकारादिवर्णान् सबिन्दून् प्रत्येकं | | त्रिगुणं त्रिगुणीकृत्य ग्रथयेत् शिल्पशास्त्रतः ॥<br>एकैकं मातृकावर्णं सतारं प्रजपन् सुधीः ।<br>मणिमादाय सूत्रेण ग्रथयेन्मध्यमध्यतः ॥<br>ब्रह्मग्रन्थिं विधायेत्थं मेरुञ्च ग्रन्थिसंयुतम् ।<br>ग्रथयित्वा पुरो मालां ततः संस्कारमारभेत् ॥<br>कस्यचिन्मते मूलविद्यया ग्रथयेत् । तथा च<br>एकवीराकल्पे ।<br>‘मातृकामन्त्रतो ग्रन्थिं विद्यया वाथ कारयेत् । |

सुवर्णादिगुणैर्व्वापि ग्रथयेत्
साधकोत्तमः ॥
ब्रह्मग्रन्थिं ततो दद्यान्नागपाशमथापि
वा ।
कवचेनावबध्नीयान्मालां
ध्यानपरायणः ॥
सर्व्वशेषं ततो मेरुं सूत्रद्वयसमन्वितम्
।
ग्रथयेत्तारयोगेण बध्नीयात्
साधकोत्तमः ।
एवं निष्पाद्य देवेशि ! प्रतिष्ठाञ्च
समाचरेत् ॥'
गौतमीये ।
'मुखे मुखञ्च संयोज्य पुच्छे पुच्छं
नियोजयेत् ।
गोपुच्छसदृशी माला यद्वा सर्पाकृतिः
शुभा ।
एवं निर्म्माय मालां वै
शोधयेन्मुनिसत्तमः ॥
अश्वत्थपत्रनवकैः पद्माकारन्तु
कारयेत् ।
तन्मध्ये स्थापयेन्मालां मातृकां
मूलमुच्चरन् ।
क्षालयेत् पञ्चगव्येन सद्यीजातेन
सज्जलैः ॥'
सद्योंजातस्तु ।
'ॐ सद्योजातं प्रपद्यामि सद्योजाताय
वै नमः ।
भवेऽभवेऽनादिभवे भजस्व मां
भवोद्भवाय नमः ॥
चन्दनागुरुकर्पूरैर्षामदेवेन घर्षयेत् ॥'
वामदेवमन्त्रस्तु । ॐ वामदेवाथ नमो
ज्येष्ठाय
नमो रुद्राय नमः कालाय नमः
कलविकरणाय
नमो बलविकरणाब नमो
बलप्रमथनाय नमः
सर्व्वभूतदमनाय नमो मनोन्मनाय
नमः ।

योगिनीतन्त्रे ।
'होमकर्म्म ततः कुर्य्याद्देवताभावसिद्धये ।
अष्टोत्तरशतं हुत्वा सम्पाताज्यं विनिःक्षिपेत् ।
होमकर्म्मण्यशक्तश्चेत् द्विगुणं जपमाचरेत् ॥
नान्यमन्त्रं जपेन्मन्त्री कम्पयेन्न विधूनयेत् ।
कम्पनात् सिद्धिहानिः स्याद्धूननं बहुदुःखदम् ॥
शब्दे जाते भवेद्रोगः करभ्रष्टा विनाशिका ।
छिन्ने सूत्रे भवेन्मृत्युस्तत्माद्यत्नपरो भवेत् ॥
जपान्ते कर्णदेशे वा उच्चदेशे तथा न्यसेत् ।
त्वं माले सर्व्वभूतानां सर्व्वसिद्धिप्रदा मता ॥
तेन सत्येन मे सिद्धिं देहि मातर्नमोऽस्तु ते ।
इत्युक्त्रा परिपूज्याथ गोपयेद्यत्नतो गृही ॥'
मालासंस्कारस्य नित्यतामाह रुद्रयामले ।
'अप्रतिष्ठितमालाभिर्म्मन्त्रं जपति यो नरः ।
सर्व्वं तद्विफलं विद्यात् क्रुद्धा भवति देवता ॥'
कामनाभेदे तु अङ्गुलिनियमः । गौतमीये ।
'तर्जन्यङ्गुष्ठयोगेन शत्रूच्चाटनमुत्तमम् ।
अङ्गुष्ठमध्यमायोगात् मन्त्रसिद्धिः सुनिश्चिता ॥
अङ्गुष्ठानामिकायोगादुच्चाटोत्सादने मते ।
ज्येष्ठाकनिष्ठायोगेन शत्रूणां नाशनं मतम् ॥'
वैशम्पायनसंहितायाम् ।
'अङ्गुष्ठमध्यमाभ्याञ्च चालयेन्मध्यमध्यतः ।
तर्जन्यां न स्पृशेदेनां मुक्तिदो गणनक्रमः ॥
जीर्णे सूत्रे पुनः सूत्रं ग्रथयित्वा शतं जपेत् ।
प्रमादात् पतिता हस्तात् शतमष्टोत्तरं जपेत् ॥
जपेन्निषिद्धसंस्पर्शे क्षालयित्वा यथोदितम् ।
छिन्नेऽप्यष्टोत्तरशतजपः कार्य्यः । करभ्रष्ट-
च्छिन्नयोस्तुल्यत्वात् ॥ * ॥ प्रकारान्तरं
आगम-
कल्पद्रुमे ।
'भूतशुद्ध्यादिकां पूजां समाप्य तत्र पूजयेत् ।
गणेशसूर्य्यविष्णवीशान् दुर्गामावाह्य मन्त्रवित् ॥
पञ्चगव्ये ततः क्षिप्त्वा ह्सौर्मन्त्रेण मन्त्रवित् ।
तस्मादुत्तोल्य तां मालां स्वर्णपात्रे विधाय च ॥
पयोदधिघृतक्षौद्रशर्कराद्यैरनुक्रमात् ।
तोयधूपान्तरैः कृत्वा पञ्चामृतविधिं बुधः ॥
क्रमादत्रैव संस्थाप्य स्थापयेच्छीतले जले ॥
ततश्चन्दनसौगन्धिकस्तूरीकुङ्कुमादिभिः ।
तामालिप्य हसौर्मन्त्रमष्टोत्तरशतं जपेत् ॥

धात्रीपुत्त्रजीवफलैर्म्माला या परिकीर्त्तिता ॥
मुक्तामणिमयी रौप्या स्फाटिकी वैद्रुमी
तथा ।
जपकर्म्मसु सर्व्वेषु चाक्षमाला प्रकीर्त्तिता ॥
* ॥
कृष्णमन्त्रजपे माला बृन्दारण्यसमुद्भवा ।
नान्या माला अनन्यानां हस्ताङ्गुलिमयीं
विना ॥
हैमी मणिमयी माला प्रशस्ता कमलाजपे ।
सरस्वत्या मन्त्रजपे रौप्या मुक्ताविनिर्म्मिता
॥
प्रजापतिजपे माला पुत्त्रजीवसमुद्भवा ।
पुत्त्रकामनराणाञ्च सदा पुत्त्रप्रदा तु सा ॥
राममन्त्रजपे माला पद्मबीजसमुद्भवा ।
धात्रीफलमयी माला विष्णोः कामनया जपे
॥
रुद्राक्षेन्द्राक्षभद्राक्षवृक्षबीजसमुद्भवा ।
महेशानमन्त्रजपे त्वेता मालाः फलप्रदाः ॥
कुशग्रन्थिमयी शुद्धा गायत्त्री वैष्णवी जपे ।
स्फाटिकी सर्व्वदेवानामथवा तरणेर्जपे ।
श्रीहरेरङ्गुलिमयी जपे माला द्बिजन्मनाम्
॥'
इति पाद्मोत्तरखण्डे १०८ अध्यायः ॥
अपरञ्च ।
'जपादौ पूजयेन्मालां तोयैरभ्युक्ष्य यत्नतः
।
निधाय मण्डलस्यान्तः सव्यहस्तगताञ्च
वा ॥
ॐ मां माले महामाये
सर्व्वशक्तिस्वरूपिणि ! ।
चतुर्व्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा
भव ॥
पूजयित्वा ततो मालां गृहीत्वा दक्षिणे करे ।
मध्यमाया मध्यभागे वर्ज्जयित्वा तु
तर्ज्जनीम् ॥
अनामिकाकनिष्ठाभ्यांयुताया नम्रभावतः ।
स्थापयित्वा तत्र मालामङ्गुष्ठाग्रेण तद्गतम्
॥
प्रत्येकं बीजमादाय जपं कुर्य्यात्तु भैरव ! ।

धूपयेत्तामघोरेण । अघोरमन्त्रस्तु ।
अघोरेभ्यो-
ऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्व्वतः
सर्व्व-
सर्व्वेभ्यो नमस्तेऽस्तु रुद्ररूपेभ्यः ।
लेपयेत्तत्-
पुरुषेण तु । तत्पुरुषमन्त्रस्तु । ॐ
तत्पुरुषाय
विद्महे महादेवाय धीमहि तन्नो रुद्रः
प्रचो-
दयात् ।
'मन्त्रयेत् पञ्चमेनव प्रत्येकन्तु शतं
शतम् ।
मेरुञ्च मन्त्रयेच्चैव मनुना च शतं
शतम् ॥'
मन्त्रस्तु । ॐ ईशानः
सर्व्वविद्यानामीश्वरः
सर्व्वभूतानां
ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिःशिरो
मेऽस्तु सदाशिवोम् । प्रत्येकन्तु
सकृत् सकृत् ।
इति वा । तथा च तत्रैव ।
'प्रत्येकं मन्त्रयेन्मन्त्री पञ्चमेन सकृत्
सकृत् ।'
तथा च गौतमीये
समुदायमालामधिकृत्य ।
'पञ्चमेनैव सूक्तेन शतान्यूनेन मन्त्रयेत्
।'
इति दर्शनान्मालायां वा शतजपः ।
तत्रावाह्य यजेद्देवं यथाविभवविस्तरैः
।
मालायाः प्राणप्रतिष्ठानन्तरं देवतां
पूजयेत् ॥
तथा सनत्कुमारे ।
'संस्कृत्यैवं बुधो मालां तत्प्राणांस्तत्र
स्थापयेत् ।
मूलमन्त्रेण तां मालां
पूजयेद्द्विजसत्तम ! ॥'
वाराहीतन्त्रे ।
'माले माले महामाले
सर्व्वतत्त्वस्वरूपिणि ! ।

तस्यां नवग्रहांश्चैव दिक्पालांश्च प्रपूजयेत् ।
ततः संपूज्य च गुरुं गृह्णीयान्मालिकां शुभाम् ॥
अक्षमालाञ्च मुद्राञ्च गुरोरपि न दर्शयेत् ।
भूतराक्षसवेतालाः सिद्धगन्धर्व्वचारणाः ।
हरन्ति प्रकटं यस्मात्तस्माद्गुप्तं समाचरेत् ॥'
इति अक्षमाला । इति तन्त्रसारः ॥
अपि च ।
'विद्याधराप्सरोयक्षा विबुधासुरराक्षसाः ।
भूतानि किन्नराः सिद्धाः प्रेताश्च चारणादयः ॥
हरन्ति जपफलान्येते यानि तानि च नारद ! ।
अतूर्ष्णीं चेद्बहिर्जानु चार्द्रवासादिभिर्जपेत् ॥
वृन्दाटवीन्धनमयी तुलसीकाष्ठसम्भवा ।
हस्ताङ्गुलिमयी हैमी दर्भग्रन्थिमयी तथा ॥
भद्राक्षेन्द्राक्षरुद्राक्षपद्मबीजभवाप्यथ।

प्रतिवारं पठेन्मन्त्रं शनैरोष्ठं न चालयेत् ॥
मालाबीजन्तु जप्तव्यं स्पृशेन्न हि परस्परम्
।
पूर्ब्बजापप्रयुक्तेनैवाङ्गुष्ठाग्रेण भैरव ! ॥
पूर्ब्बबीजं जपन् यस्तु परबीजन्तु संस्पृशेत्
।
अङ्गुष्ठेन भवेत्तस्य निष्फलस्तस्य तज्जपः
॥
मालां स्वहृदयासन्ने धृत्वा दक्षिणपाणिना ।
देवीं विचिन्तयन् जप्यं कुर्य्याद्वामेन न
स्पृशेत् ॥
स्फाटिकेन्द्राक्षरुद्राक्षैः पुत्त्रजीवसमुद्भवैः ।
सुवर्णमणिभिः सम्यक् प्रबालैरथवाब्जकैः
॥
अक्षमाला तु कर्त्तव्या देवी प्रीतिकरा परा ।
जपेदुपांशु सततं कुशग्रन्थ्या तु पाणिना ॥
नानाबीजेषु सर्व्वेषु रुद्राक्षो मत्प्रियात्प्रियः
।
रुद्रप्रीतिकरो यस्मात्तस्माद्रुद्राक्षको बली ॥
प्रबालैरथवा कुर्य्यादष्टाविंशति बीजकैः ।
पञ्चपञ्चशता वापि न न्यूनैर्नाधिकैश्च वा ॥
रुद्राक्षैर्यदि जप्येत इन्द्राक्षैः
स्फाटिकैस्तथा ।
नान्यं मध्ये प्रयोक्तव्यं पुत्त्रजीवादिकञ्च
यत् ॥
यदन्यत्तु प्रयुज्येत मालायां जपकर्म्मणि ।
तस्य कामञ्च मोक्षञ्च न ददाति प्रियङ्करी ॥
जन्मान्तरे जायते स वेदवेदाङ्गपारगः ।
मित्रीभावं तदा याति चाण्डालैः
पापकर्म्मभिः ॥
एको मेरुस्तत्र देयः सर्व्वेभ्यः
स्थूलसम्भवः ।
आद्यं मूलं ततस्तस्मात् न्यूनं न्यूनतरं
तथा ॥
विन्यसेत् क्रमतस्तस्मात् सर्पाकारा हि सा
यतः ।
ब्रह्मग्रन्थियुतं कुर्य्यात् प्रतिबीजं यथा
स्थितम् ॥

| | | |
|---|---|---|
| चतुर्व्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥<br>मायाबीजादिकां कृत्वा रक्तपुष्पैः समर्च्चयेत् ॥'<br>इति शक्तिविषये ॥<br>विष्णुविपये तु रुद्रयामले ।<br>'वागभवञ्च तथा लक्ष्मीमक्षादिमालिकां ततः ।<br>ङेऽन्तां हृदयवर्णान्तां मन्त्रेणानेन पूजयेत् ॥<br>मन्त्रयेन्मूलमन्त्रेण क्रमेणोत्क्रमयोगतः ।<br>तथैव मातृकावर्णैर्मन्त्रयेत्तान्तु मन्त्रवित् ॥' | | |

अथवा ग्रन्थिरहितं
दृढरज्जुसमन्वितम्।
त्रिरावृत्याथ
मध्येनैवार्द्धावृत्यान्तदेशतः ॥
ग्रन्थिः प्रदक्षिणावर्त्तः स ब्रह्मग्रन्थि
संज्ञकः ।
नात्मना योजयेन्मालां नामन्त्रो
योजयेद्बुधः ॥
दृढं सूत्रं नियुञ्जीत जपे त्रुठ्यति नो
यथा ।
यथा हस्तान्न च्यवते जपतः स्रक्
तथाचरेत् ।
हस्ताच्च्युतायां विघ्नः
स्याच्छिन्नायां मरणं
भवेत् ।
एवं यः कुरुते मालां जप्यं च
मयकोदितम्।
स प्राप्नोतीप्सितं कामं हीने स्यात्तु
विपर्य्ययः ॥
अन्यत्रापि जपेन्मालां जप्यं
देवमनोहरम्।
ईदृशं साधकः कुर्य्यात् नान्यथा तु
कदाचन ॥
यथाशक्ति जपं कुर्य्यात् संख्ययैव
प्रयत्नतः ।
असंख्यातन्तु यज्जप्तं तत् सर्व्वं
निष्फलं भवेत् ।
जप्त्वा मालां
शिरोदेशेप्रांशुस्थानेऽथवा न्यसेत् ॥
इति कालिकापुराणे ५४ अध्यायः
॥ * ॥ * ॥
अथ मालादिधारणम्
ततः कृष्णार्पिता माला
धारयेत्तुलसीदलैः ।
पद्माक्षैस्तुलसीकाष्ठैः फलैर्धात्र्याश्च
निर्म्मिता ॥
धारयेत्तुलसीकाष्ठभूषणानि च
वैष्णवः ।
यः कुर्य्यात्तुलसीकाष्ठैरक्षमालास्वरूपिणीम्।
कण्ठमालाञ्च यत्नेन कृतं तस्याक्षयं भवेत्
॥”
नारदीये ।
“ये कण्ठलग्नतुलसीनलिनाक्षमाला
ये वा ललाटफलके लसदूर्द्ध्वपुण्ड्राः ।
ये बाहुमूलपरिचिह्नितशङ्खचक्रा-
स्ते वैष्णवा भुवनमाशु पवित्रयन्ति ॥”
किञ्च ।
“भुजयुगमपि चिह्नैरङ्कितं यस्य विष्णोः
परमपुरुषनाम्नां कीर्त्तनं यस्य वाचि ।
ऋजुतरमपि पुण्ड्रं मस्तके यस्य कण्ठे
सरसिजमणिमाला यस्य तस्यास्मि दासः
॥”
विष्णुधर्म्मोत्तरे श्रीभगवदुक्तौ ।
“तुलसीकाष्ठमालाञ्च कण्ठस्थां वहते तु यः ।
अप्यशौचोऽप्यनाचारो मामेवैति न संशयः
॥”
स्कान्दे ।
“धात्रीफलकृता माला तुलसीकाष्ठसम्भवा।
वृश्यते यस्य देहे तु स वै भागवतो नरः ॥
तुलसीदलजां मालां कण्ठस्थां वहते तु यः ।
विष्णूत्तीर्णां विशेषेण स नमस्यो दिवौकसाम्
॥
तुलसीदलजा माला धात्रीफलकृतापि वा ।
ददाति पापिनां मुक्तिं किं पुनर्विष्णुसेविनाम् ॥
तत्रैव कार्त्तिकप्रसङ्गे ।
यः पुनस्तुलसीमालां कृत्वा कण्ठे जनार्द्दनम्
।
पूजयेत् पुण्यमाप्नोति प्रतिपुष्पं गवायुतम् ॥
अयुतसंख्यगोदानफलमित्यर्थः ।
यावल्लुठति कण्ठस्था धात्रीमाला नरस्य हि ।
तावत्तस्य शरीरे तु प्रीत्या लुठति केशवः ॥
स्पृशेच्च यानि लोमानि धात्रीमाला कलौ
नृणाम्।
तावद्वर्षसहस्राणि वसते केशवालये ॥
यावद्दिनानि वहते धात्रीमालां कलौ नरः ।
तावद्युगसहस्राणि वैकुण्ठे वसतिर्भवेत् ॥
मालायुग्मञ्च यो नित्यं धात्रीतुलसिसम्भवम्।
दृष्ट्वा नश्यन्ति दूरेण वातोद्धूतं यथादलम् ॥
तुलसीकाष्ठमालाभिर्भूषितो भ्रमते यदि ।
दुःस्वप्नं दुर्निमित्तञ्च न भयं शस्त्रजं क्वचित्
॥”
गौतमीये पुरश्चरणप्रसङ्गे ।
“तथामलकसम्भूतैस्तुलसीकाष्ठनिर्म्मितैः ।
इत्यादि ॥ * ॥ तत्रैव ।
पुण्डरीकभवा माला गोपालमनुसिद्धिदा ।
आमलकीभवा माला सर्व्वसिद्धिप्रदा मता ।
तुलसीसम्भवा या तु मोक्षं वितनुतेऽचिरात् ॥
इति हरिभक्तिविलासः ॥ * ॥ * ॥
अथ रुद्राक्षमालाधारणफलादि।
लिङ्गपुराणे ।
विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालबा ।
पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः ॥
संवत्सरप्रदीपे ।
त्रिपुरस्य वधे काले रुद्रस्याक्ष्णोऽपतंस्तु ये ।
अश्रुणो बिन्दवस्ते तु रुद्राक्षा अभवन् भुवि ॥
यद्यप्येकादिचतुर्द्दशमुखरुद्राक्षेषु मन्त्रफल-
विशेषाः सन्ति तथापि सुलभत्वात्
पञ्चवक्त्रस्य
फलमन्त्रावभिधीयेते । यथा, स्कान्दे ।
“पञ्चवक्त्रः स्वयं रुद्रः कालाग्निर्नाम नामतः ।
अगम्यागमनाच्चैव अभक्षस्य च भक्षणात् ।
मुच्यते सर्व्वपापेभ्यः पञ्चवक्त्रस्य धारणात् ॥”
इति तिथ्यादितत्त्वम् ॥

**मालाकण्टः**, पुं, (मालाकाराः कण्टाः कण्टका अस्य ।) अपामार्गः । इति राजनिर्घण्टः ॥

**मालाकन्दः**, पुं, (माला गण्डमाला नाशकः कन्दः । शाकपार्थिववत् मध्यपदलोपी ।) मूलविशेषः । तत्पर्य्यायः । आविलकन्दः २ त्रिशिखिदला ३ ग्रन्थिदला ४ पादिकन्दः ५ कन्दलता ६ । अस्य गुणाः । सुतीक्ष्णत्वम् । गण्डमालानाशित्वम् । दीपनत्वम् । गुल्महारित्वम् । वातश्लेष्मापकर्ष-कारित्वञ्च । इति राजनिर्घण्टः ॥

मस्तके कर्णयोर्बाह्वोः करयोश्च यथारुचि ॥ * ॥
अथ मालाधारणविधिः ।
स्कान्दे ।
संनिवेद्यैव हरये तुलसीकाष्ठसम्भवाम् ।
मालां पश्चात् स्वयं धत्ते स वै भागवतोत्तमः ॥
हरये नार्पयेद्यस्तु तुलसीकाष्ठसम्भवाम् ।
मालां धत्ते स्वयं मूढः स याति नरकं ध्रुवम् ॥
क्षालितां पञ्चगव्येन मूलमन्त्रेण मन्त्रिताम् ।
गायत्र्या चाष्टकृत्वो वै मन्त्रितां धूपयेच्च ताम् ।
विधिवत् परया भक्त्या सद्योजातेन पूजयेत् ॥
तुलसीकाष्ठसम्भूते माले कृष्णजनप्रिये ।
बिभर्म्मि त्वामहं कण्ठे कुरु मां कृष्णवल्लभम् ॥
यथा त्वं वल्लभा विष्णोर्नित्यं विष्णुजनप्रिया ।
तथा मां कुरु देवेशि ! नित्यं विष्णुजनप्रियम् ॥
दाने मा धातुरुद्दिष्टो लासि मां हरिवल्लभे ! ।
भक्तेभ्यश्च समस्तेभ्यस्तेन माला निगद्यसे ॥
एवं संप्रार्थ्य विधिवन्मालां कृष्णगलेऽर्पिताम् ।
धारयेद्वैष्णवो यो वै स गच्छेद्वैष्णवं पदम् ॥" * ॥
अथ मालाधारणनित्यता ।
तत्रैव स्कान्दे कार्त्तिकप्रसङ्गे ।
"धात्रीफलकृतां मालां कण्ठस्थां यो वहेन्न हि ।
वैष्णवो न स विज्ञेयो विष्णुपूजारतो यदि ॥"
गारुडे ।
वहते कण्ठदेशे च कल्पकोटिं दिवं वसेत् ॥"
तुलसिसम्भवमिति ह्रस्वश्छान्दसः । गारुडे च
मार्कण्डेयोक्तौ ।
"तुलसीदलजां मालां कृष्णोत्तीर्णां वहेत्तु यः ।
पत्रे पत्रेऽश्वमेधानां दशानां लभते फलम् ॥ * ॥
तुलसीकाष्ठसम्भूतां यो मालां वहते नरः ।
फलं यच्छति दैत्यारिः प्रत्यहं द्वारकोद्भवम् ॥
निवेद्य केशवे मालां तुलसीकाष्ठसम्भवाम् ।
वहते यो नरो भक्त्या तस्य वै नास्ति पातकम् ।
सदा प्रीतमनास्तस्य कृष्णो देवकिनन्दनः ॥
तुलसीकाष्ठसम्भूतां यो मालां वहते नरः ।
प्रायश्चित्तं न तस्यास्ति नाशौचं तस्य विग्रहे ।
तुलसीकाष्ठसम्भूतां यो मालां वहते नरः ।
तुलसोकाष्ठसम्भूतं शिरसो बहुभूषणम् ।
बाह्वोः करे च मर्त्यस्य देहे तस्य सदा हरिः ॥
तुलसीकाष्ठमालाभिर्भूषितः पुण्यमाचरेत् ।
पितॄणां देवतानाञ्च कृतं कोटिगुणं कलौ ॥
तुलसीकाष्ठमालान्तु प्रेतराजस्य दूतकाः ।

**मालाका**, स्त्री, (माला एव । माला + स्वार्थे कन् टाप् ।) माला । इति शब्दरत्नावली ॥

**मालाकारः**, पुं, (मालां करोतीति । कृ + अण् ।) वर्णसङ्करजातिविशेषः । मालिंकः । माली इति ख्यातः । तत्पर्य्यायः । मालिकः २ । इत्य-मरः । २ । १० । ५ । मालाकरः ३ पुष्पा-जीवी ४ वनार्च्चकः ५ पुष्पलावः ६ । इति जटा-धरः ॥ पुष्पलावकः ७ । इति शब्दरत्नावली ॥ स तु शूद्रायां विश्वकर्म्मणो जातः । इति ब्रह्म-वैवर्त्तपुराणम् ॥ अपि च ।
"तैलिक्यां कर्म्मकाराच्च मालाकारस्य सम्भवः ॥
इति पराशरपद्धतिः ॥
तद्गृहस्थितपुष्पस्य पर्य्युषितदोषाभावो यथा,
"न पर्य्युषितदोषोऽस्ति तुलसीविल्वचम्पके ।
जलजे बकुलेऽगस्त्ये मालाकारगृहेषु च ॥"
इति मेरुतन्त्रे ५ प्रकाशः ॥
(यथा, बृहत्संहितायाम् । १० । ९ ।
"हस्ते नापितचाक्रिक-चौरभिषक्सूचिकद्वीपग्राहाः ।

| | | |
|---|---|---|
| "धारयन्ति न ये मालां हैतुकाः पापबुद्धयः ।<br>नरकान्न निवर्त्तन्ते दग्धाः कोपाग्निना हरेः ॥"<br>अतएव स्कान्दे तत्रैव ।<br>"न जह्यात्तुलसीमालां धात्रीमालां विशेषतः ।<br>महापातकसंहन्त्रीं धर्म्मकामार्थदायिनीम् ॥ * ॥<br>अथ मालामाहात्म्यम् ।<br>अगस्त्यसंहितायाम् ।<br>"निर्म्माल्यतुलसीमालायुक्तो यश्चार्च्चयेद्धरिम् ।<br>यद्यंत् करोति तत् सर्व्वमनन्तफलदं भवेत् ॥ | | |

बन्धक्यः कौशलका मालाकाराश्च
पीड्यन्ते ॥”
स्त्रियां ङीप् । यथा तत्रैव । ७८ । ९ ।
“भिक्षुणिका प्रव्रजिता दासी धात्री
कुमारिका
रजिका ।
मालाकारी दुष्टाङ्गना सखी नापिती दूत्यः
।”)

**मालाग्रन्थिः**, पुं, (मालेव ग्रन्थिरस्य ।) माला-
दूर्व्वा । इति राजनिर्घण्टः ॥

**मालातृणं**, क्ली, (मालाकारं तृणम् ।) भूतृणम् ।
इति राजनिर्घण्टः ॥

**मालातृणकं**, क्ली, (मालातृण । स्वार्थे कन् ।)
भूस्तृणम् । इत्यमरः । २ । ४ । १६७ ॥ द्वे
गन्धखड
इति ख्याते । मालारूपं तृणं मालातृणं
स्वार्थे
कः । भुवस्तृणं भूलग्नत्वात् भूस्तृणं
मनीषादित्वात्
सागमः । मालातृणकभूस्तृणे । इति क्लीवे
।
इति सुभूत्यादयः ॥
मालातृणकभूस्तृणाविति
पुंसि पठन्ति केचित् ॥ स्वामी तु । छत्राति-
च्छत्रादिभूस्तृणान्तं पर्य्यायमाह यथा, --
“भूस्तृणो रौहिषो भूतिर्भूमिकोऽथ
कुटुम्बकः ।
मालातृणश्च
पालघ्नश्छत्रातिच्छत्रकस्तथेति ॥”
रामकर्पूरं बहुपत्रकाण्डं कर्पूरसुगन्धि ।
इदन्तु शतपुष्पिकावदुत्कटगन्धं भूलग्नञ्च
भवती-
त्यनयोर्भेदः । इति तट्टीकायां भरतः ॥
(तथास्य
पर्य्यायः ।
“गुह्यबीजन्तु भूतीकं सुगन्धं जम्बुकप्रियम्
।
माल्यवन्तं सुमालिञ्च मालिञ्च बलिनांवरम् ॥”
इति रामायणे उत्तरकाण्डे ५ सर्गः ॥

**मालिकः**, पुं, (मालास्य पण्यम् । माला + “तदस्य
पण्यम् ।” ४ । ४ । ५१ । इति ठक् । यद्वा,
मालाग्रथनं शिल्पमस्येति । “शिल्पम् ।” ४ ।
४ । ५५ । इति ठक् ।) मालाकारः । इत्य-
मरः । २ । १० । ५ ॥ (यथा, राजतरङ्गिण्याम्
। ६ । १९ ।
“निदाघे पुष्पताम्बूलीपर्णाद्यत्रातिशीतले।
न्यस्यद्भिर्मालिकैर्दत्तात् सा जीवेद्वाटकादिति
॥”)
पक्षिभेदः । इति मेदिनी । के, १३९ ॥ रञ्जकः ।
इति शब्दरत्नावली ॥

**मालिका**, स्त्री, (मालैव । माला + कन् टाप् अत
इत्वञ्च ।) सप्तला । पुत्त्री । ग्रीवालङ्करणम् ।
पुष्पमाल्यम् । नदीविशेषः । इति मेदिनी ।
के, १३९ ॥ मुरा । इति हारावली ॥ क्षुमा ।
इति शब्दचन्द्रिका ॥

**मालिनी**, स्त्री, (माला मुण्डमालास्त्यस्याः
अस्यां वा । माला + “ब्रीह्यादिभ्यश्च ।” ५ । २
।
११६ । इति इनिः ङीप् ।) मातृकाभेदः ।
वृत्तभेदः । (मालिन् + ङीष् ।) मालिकपत्नी ॥
गौरी । चम्पानगरी । (यथा, महाभारते । १२ ।
५ । ६ -- ७ ।
“प्रीत्या ददौ स कर्णाय मालिनीं नगरीमथ ।
अङ्गेषु नरशार्द्दूल ! स राजासीत् सपत्नजित् ॥
पालयामास चम्पाञ्च कर्णः परबलार्द्दनः ॥”)
मन्दाकिनी । नदीभेदः । इति मेदिनी ॥ (यथा,
महाभारते । १ । ७२ । ८ ।
“जनयामास मुनिर्मेनकायां शकुन्तलाम् ।
प्रस्थे हिमवतो रम्ये मालिनीमभितो नदीम् ।”)
अग्निशिखावृक्षः । दुरालभा । इति शब्द-
चन्द्रिका ॥ स च वृत्तभेदः पञ्चदशाक्षरपाद-
च्छन्दः । यथा, --
“न न म य य युतेयं मालिनी भोगिलोकैः ।
मृगमदकृतचर्च्चा पीतकौशेयवासा
राक्षसीभेदः । सा च विभीषणस्य
माता ।
यथा, महाभारते । ३ । २७४ । ३ --
८ ।
“स राजराजो लङ्कायां
निवसन्नरवाहनः ।
राक्षसीः प्रददौ तिस्रः पितुर्वै
परिचारिकाः ॥
ताः सदा तं महात्मानं
सन्तोषयितुमुद्यताः ।
ऋषिं भरतशार्द्दूल !
नृत्यगीतविशारदाः ॥
पुष्पोत्कटा च राका च मालिनी च
विशाम्पते ! ।
अन्योन्यस्पर्द्धया राजन् !
श्रेयस्कामा सुमध्यमाः ॥
स तासां भगवांस्तुष्टो महात्मा प्रददौ
वरान् ।
लोकपालोपमान् पुत्त्रानेकैकस्या
यथेप्सितान् ॥
पुष्पोत्कटाया जज्ञाते द्वौ पुत्त्रौ
राक्षसेश्वरौ ।
कुम्भकर्णदशग्रीवौ बलेनाप्रतिमौ भुवि
॥
मालिनी जनयामास पुत्त्रमेकं
विभीषणम् ।
राकायां मिथुनं यज्ञे खरः शूर्पणखा
तथा ॥”
रौच्यमनुमाता । यथा, मार्कण्डेये ।
९८ । ५ -- ७ ।
“तथेति तेन साप्युक्ता
तस्मात्तोयाद्वपुष्मतीम् ।
उज्जहार ततः कन्यां मालिनीं नाम
नामतः ॥
नद्याश्च पुलिने तस्मिन् स
रुचिर्मुनिसत्तमः ।
जग्राह पाणिं विधिवत् समानाय्य
महामुनीन् ॥

भूतृणन्तु भवेच्छत्रा मालातृणकमित्यपि ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**मालादूर्व्वा**, स्त्री, (माला इव ग्रन्थियुक्ता दूर्वा ।)
दूर्व्वाविशेषः । गाठिया दूर्व्वा इति भाषा । तत्पर्य्यायः । वल्लिदूर्व्वा २ अलिदूर्व्वा ३ माला-
ग्रन्थिः ४ ग्रन्थिला ५ ग्रन्थिदूर्व्वा ६ शूलग्रन्थिः ७
वेल्लनी ८ ग्रन्थिमूला ९ रोहत्पर्व्वा १० पर्व्व-
वल्ली ११ शिवाख्या १२ । अस्या गुणाः । मुमधुरत्वम् । तिक्तत्वम् । शिशिरत्वम् । पित्त-
दोषप्रशमनत्वम् । कफवान्तितृषापहत्वञ्च । इति राजनिर्घण्टः ॥

**मालारिष्टा**, स्त्री, पाची । इति राजनिर्घण्टः ॥

**मालालिका**, स्त्री, (मालां अलतीति । अल + ण्वुल्
टाप् अत इत्यञ्च ।) पृक्का । इति राजनिर्घण्टः ॥

**मालाली**, स्त्री, (मालामलति । अल + अच् ।
ङीप् ।) पृक्का । इति राजनिर्घण्टः ॥

**मालिः**, पुं, सुकेशराक्षसपुत्त्रः । यथा, --
“ग्रामणीर्नाम गन्धर्व्वो विश्वावसुसमप्रभः ।
तस्य देववती नाम द्बितीया श्रीरिवात्मजा ॥
त्रिषु लोकेषु विख्याता रूपयौवनशालिनी ।
तां सुकेशाय धर्म्मात्मा ददौ रक्षःश्रियं यथा ॥
वरदानकृतैश्वर्य्यं सा तं प्राप्य पतिं प्रियम् ।
आसीद्देववती तुष्टा धनं प्राप्येव निर्द्धनः ॥
स तया सह सन्तुष्टो रराज रजनीचरः ।
ततः काले सुकेशस्तु जनयामास राघव ! ॥
त्रीन् पुत्त्रान् जनयामास त्रेताग्निसमविग्र-
हान् ।
रुचिरशिखिशिखण्डाबद्धधम्मिल्लपाशा।
अनृजुनिहितमंसे वंशमुत्क्वाणयन्ती
धृतमधुरिपुलीला मालिनी पातु राधा ॥”
इति छन्दोमञ्जरी ॥
अप्सरोविशेषः । यथा, कथासरित्सागरे । ४५ । ३५२ ।
“पिङ्गलाच्च गणाज्जाता दशमी केशरावली ।
एकादशी मालिनीति नाम्ना कम्बलनन्दिनी ॥
स्कन्दमातृणामन्यतमा । सैव शिशुमातृणा-
मन्यतमा । यथात्रैव । ३ । २२७ । १० ।
“काकी च हलिमा चैव मालिनी बृंहिला तथा ।
आर्य्या पलाला वैमित्रा सप्तैताः शिशुमातरः ॥”
मालाग्रथनं शिल्पमस्याः । इनिः । ङीप् ।
द्रौपद्या नामान्तरम् । यथा, महाभारते । ४ । ८ । २१ ।
“मालिनीत्येव भे नाम स्वयं देवि चकार सा ।
साहमभ्यागता देवि ! सुदेष्णे ! त्वन्निवेशनम् ॥”
तस्यां तस्य सुतो जज्ञे महावीर्य्यो महामतिः ।
रौच्योऽभवत् पितुर्नाम्ना ख्यातोऽत्र वसुधातले ॥”
श्वेतकर्णस्य पत्नी । यथा, हरिवंशे । १८५ । ७ ।
“तस्माद्वनगताद्गर्भं यादवी प्रत्यपद्यत ।
सुचारोर्दुहिता सुभ्रूर्मालिनी भ्रातृमालिनी ॥”)

**मालिन्यं**, क्ली, (मलिन + “वुञ् छण् कठजिलसेनिर-
ढञ् ण्येति ।” ४ । २ । ८० । इति संकाशादित्वात्
ण्यप्रत्ययः ।) मलिनत्वम् । मलिनस्य भाव इत्यर्थे
ष्ण्यप्रत्ययेन निष्पन्नम् ॥ (यथा, राजतरङ्गि-
ण्याम् । १ । १७८ ।
“भोगयोगेन मालिन्यं नेतुं मध्यगतोऽपि सः ।
न शक्यते स्म पङ्केन प्रतिमेन्दुरिवामलः ॥”)

**माली**, [न्] पुं, (माला पण्यत्वेनास्त्यस्य । माला +
“ब्रीह्यादिभ्यश्च ।” ५ । २ । ११६ । इति इनिः ।)
मालाकारः । इति मालिनीशब्ददर्शनात् ॥
सुकेशराक्षसपुत्त्रः । यथा, --
“सुकेशपुत्त्रैर्भगवन् ! पितामहवरोद्धतैः ।
अहं विष्णुरहं रुद्रो ब्रह्माहं देवराडहम् ॥
अहं यमश्च वरुणश्चन्द्रोऽहं रविरप्यहम् ।
इति माली सुमाली च माल्यवांश्चैव राक्षसः ।
बाधन्ते समरोद्धर्षा ये च तेषां पुरःसराः ॥”
इति रामायणे उत्तरकाण्डे ६ सर्गः ॥

| | | (अस्थिमाला अस्त्यस्येतीनिः । महादेवः । यथा, महाभारते । १३ । १७ । ६० । “व्यालरूपो गुहावासी गुहो माली तरङ्गवित् ।” माला अस्त्यस्येतीनिः । मालायुक्ते, त्रि । यथा, रामायणे । २ । ५६ । ६ । “आदीप्तानिव वैदेहि ! सर्व्वतः पुष्पितान्नगान् । स्वैः पुष्पैः किंशुकान् पश्य मालिनः शिशिरा- त्यये ॥”) |
|---|---|---|

**मालुः**, पुं, (मृ + “त्रो रश्च लः ।” १ । ५ । इत्यत्र
बाहुलकात् ञुण् । इत्युज्ज्वलदत्तोक्त्या ञुण् ।)
पत्रलता । नारी । इति मेदिनी । ले, ४५ ॥

**मालुधानः**, पुं, (मालु मरणं विदधातीति । धा +
ल्युः ।) मातुलाहिः । इत्यमरः । १ । ८ । ६ ।
मालुया साप इति भाषा ॥ अष्टनागान्तर्गत-
नागविशेषः । यथा, --
“मालधानश्चित्रसर्पे महापद्मेऽपि दृश्यते ।”
इति हारावली ॥

**मालुधानी**, स्त्री, लताभेदः । इति मेदिनी । ने,
२०३ ॥

**मालूकः**, पुं, कृष्णार्जकः । इति राजनिर्घण्टः ॥

**मालूरः**, पुं, (मां परेषां वृक्षान्तराणां श्रियं
प्रभावं लुनातीति । लूञ् + बाहुलकात् रः ।)
विल्ववृक्षः । इत्यमरः । २ । ४ । ३२ ॥
(यथा,
नैषधे । १ । ९४ ।
“स वारनारीकुचसञ्चितोपमं
ददर्श मालूरफलं पचेलिमम् ।”)
कपित्थवृक्षः । इति राजनिर्घण्टः ॥ (विस्त्व-
वृक्षार्थे पर्य्यायो यथा, --
विल्वो महाकपित्थाख्यः श्रीफलो
गोहरीतकी ।
पूतिवातोऽथ माङ्गल्यो मालूरश्च महाफलम् ॥”
इति वैद्यकरत्नमालायाम् ॥
“विल्वः शाण्डिल्यशैलूषौ मालूरश्रीफलावपि ।”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे च ॥)

**मालेया**, स्त्री, (मल + ढक् टाप् ।) स्थूलैला । इति
रत्नमाला ॥ (स्थूलैलाशब्देऽस्या विशेषो
ज्ञेयः ॥)

**माल्यं**, क्ली, (मालेव । माला + चतुर्व्वर्णादित्वात्

दत्त्वा शिरसि विप्रेन्द्र ! वाजिमेधफलं
लभेत् ॥
तत्रैव ।
मालतीमालया विष्णुः पूजितो येन
कार्त्तिके ।
पापाक्षरकृतां मालां पटात् सौरिः
प्रमार्ज्जति ॥
सौरिर्यमः । विष्णुरहस्ये ।
स्वर्णलक्षाधिकं पुष्पं माला
कोटिगुणाधिका ॥
इति श्रीहरिभक्तिविलासे ७ विलासः ॥
* ॥
माल्यगलस्य बहिर्गमननिषेधो यथा, --
“बहिर्माल्यं बहिर्गन्धं भार्य्यया सह
भोजनम् ।
विसृज्य वादं कृत्वा वा प्रवेशञ्च
विवर्जयेत् ॥”
इति कूर्म्मपुराणे उपविभागे १५
जध्यायः ॥ * ॥
स्वयं माल्यापकर्षणनिषेधो यथा, --
“नाश्नीयात् सन्धिवेलायां न
गच्छेन्नापि संवि-
शेत् ।
न चैव प्रलिखेद्भूमिं नात्मनोपहरेत्
स्रजम् ॥”
इति मानवे ४ अध्यायः ॥
न च मालां धृतां स्वयमेवापनयेत् ।
अर्था-
दन्येनापनयेदित्युक्तम् । इति
कुल्लूकभट्टः ॥ * ॥
केशवाह्ये माल्यधारणनिषेधो यथा, --
“नहि गर्ह्यकथां कुर्य्यात् बहिर्माल्यं न
धार-
येत् ।
गवाञ्च यानं पृष्ठेन सर्व्वथैव विगर्हितम् ॥”
इति च मानवे ४ अध्यायः ॥
केशकलापाद्बहिर्माल्यं न धारयेदिति
कुल्लूक-

स्त्रियां ङीप् । नदीभेदः । यथा, रामायणे
२ । ५६ । ३५ ।
“सुरम्यमासाद्य तु चित्रकूटं
नदीञ्च तां माल्यवतीं सुतीर्थाम् ।
ननन्द हृष्टो मृगपक्षिजुष्टां
जहौ च दुःखं पुरविप्रवासात् ॥”)

**माल्लः**, पुं, (मल्ल + चातुरार्थकत्वात् अञ् ।) वर्ण-
सङ्करजातिविशेषः । स च
लेटात्तीवरकन्यायां
जातः । इति ब्रह्मवैवर्त्तपुराणम् ॥

**माल्लवी**, स्त्री, (मल्ल + स्वार्थेऽण् । तस्य वी
गमनं यत्र ।) मल्लयात्रा । इति हारावली ॥

**माशब्दिकः**, त्रि, (मा इत्याहेति । माशब्द +
“प्राग्वहतेष्ठक् ।” ४ । ४ । १ । इत्यत्र ।
“तदाहेति माशब्दादिभ्य उपसंख्यानम् ।”
इति वार्त्तिकात् ठक् ।) निषेधकर्त्ता । तत्-
पर्य्यायः । प्रतिषेद्धा २ । इति त्रिकाण्ड-
शेषः ॥

**माषः**, पुं, (माषस्य फलम् । माष + अण् । “लुप्
च ।” ४ । ३ । १६६ । इत्यस्य
“फलपाकशुषा-
मुपसंख्यानम् ।” इति काशिकोक्तेरणो लुप् ।
यद्वा, मस + घञ् पृषोदरादित्वात् साधुः ।)
व्रीहिभेदः । माषकलाइ इति उरिद् इति च
भाषा । तत्पर्य्यायः । कुरुविन्दः २ धान्य-
वीरः ३ वृषाकरः ४ मांसलः ५ बलाढ्यः ६
पित्र्यः ७ पितृभोजनः ८ । अस्य गुणाः ।
स्निग्धत्वम् । बहुमलकरत्वम् । शोषणत्वम् ।
श्लेष्मकारित्वम् । अनुष्णवीर्य्यत्वम् ।
झटिति-
रक्तपित्तप्रकोपणत्वम् । वातहरत्वम् । गुरु-
त्वम् । बलकरत्वम् । रोचकत्वम् ।
स्वादुत्वम् ।
श्रमसुखवतां नराणां नित्यं सेवनीयत्वम् ।
इति
राजनिर्घण्टः ॥ अपि च ।

ष्यञ् ।) पुष्पम् । पुष्पस्रक् । इति मेदिनी । ये, ४५ ॥ पुष्पार्थकमाल्यशब्दस्य प्रयीगो यथा,
"यथा चाल्पेन माल्येन वासितं तिलसर्षपम् ।
न मुञ्चति स्वकं गग्धं तद्वत् सूक्ष्मस्य दर्शनम् ॥"
इति महाभारते मोक्षधर्म्मे १०५ अध्यायः ॥
मूद्ध्र्न्नि न्यस्तपुष्पदाम । इत्यमरः । २ । ७ । १३५ ॥
अस्य पर्य्यायादिर्मालाशब्दे द्रष्टव्यः ॥ * ॥
(पुष्पस्रगर्थे गुणा यथा, --
"वृष्यं सौगन्ध्यमायुष्यं काम्यं पुष्टिबलप्रदम् ।
सौमनस्यमलक्ष्मीघ्नं गन्धमाल्यनिषेवणम् ॥"
इति चरके सूत्रस्थाने पञ्चमेऽध्याये ॥)
माल्यदानफलं यथा, --
"गन्धमाल्यैरलङ्कारैस्तुष्टा हृष्टाश्च नित्यशः ।
गन्धमाल्यप्रदा ये तु दाननिश्चयतत्पराः ॥
धर्म्मज्ञाः सत्यशीलाश्च
सर्व्वदुःखविवर्ज्जिताः ।
सुचिरं दैवतैः सार्द्धं क्रीडन्ति हि महामुने ! ॥"
इति वह्निपुराणम् ॥
अपि च । नारसिंहे ।
"जातीपुष्पसहस्रेण यच्छेन्मालां सुशोभनाम् ।
वैष्णवो विधिवद्भक्त्या तस्य पुण्यफलं शृणु ॥
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।
वसेद्विष्णुपुरे श्रीमान् विष्णुतुल्यपराक्रमः ॥
जातीपुष्पकृतां मालां कर्पूरपटवासिताम् ।
निवेद्य देवदेवाय यत्फलं प्राप्नुयान्नरः ।
न तद्वर्णयितु शक्यमपि वर्षशतैरपि ॥
स्कान्दे ।
मालतीकलिकामालामीषद्विकसितांहरेः ।
भक्तः ॥ * ॥ स्वयं माल्यधारणनिषेधो यथा, --
"स्वयं माल्यं स्वयं पुष्पं स्वयं घृष्टञ्च चन्दनम् ।
नापितस्य गृहे क्षौरं शक्रादपि हरेत् श्रियम् ॥
इति कर्म्मलोचनम् ॥ * ॥
माल्यचन्दनदानविधिर्य्यथा, --
"आमन्त्रयित्वा यो विप्रान्
गन्धमाल्यैश्च मानवः ।
तर्पयेच्छ्रद्धया युक्तः स मामर्च्चयते सदा ॥"
इति वह्निपुराणम् ॥

**माल्यपुष्पः**, पुं, (माल्याकाराणि पुष्पाण्यस्य ।) शणवृक्षः । इति राजनिर्घण्टः ॥

**माल्यपुष्पिका**, स्त्री, (माल्यपुष्प + कन् टाप् । अत इत्वञ्च ।) शणपुष्पी । इति राजनिर्घण्ठः ॥
(गुणादयोऽस्याः शणपुष्पीशब्दे ज्ञेयाः ॥)

**माल्यवान्**, [त्] पुं, (माल्य + मतुप् । मस्य वः ।)
पर्व्वतविशेषः । इत्यमरः । २ । ३ । ३ ।
माल्यं मालाकारता विद्यतेऽत्र माल्यवान् वतु ।
इति तट्टीकायां भरतः ॥ स च केतुमालेलावृत-
वर्षयोः सीमापर्व्वतः ।
नीलनिषधपर्व्वतपर्य्यन्त-
विस्तारः । इति सिद्धान्तशिरोमणिः ॥ (यथा,
महाभारते । ३ । १५८ । ३५ ।
"उपतस्थुर्महाभागा माल्यवन्तं महागिरिम् ।")
राक्षसविशेषः । स च सुकेशराक्षसात् ग्रामणी-
नामकगन्धर्व्वस्य कन्यायां देववत्यां जातः । अस्य
"माषो गुरुः स्वादुपाकः स्निग्धो रुच्योऽनिला-
पहः ।
उष्णः सन्तर्पणो बल्यः शुक्रलो वृंहणः परः ॥
भिन्नमूत्रमलस्तन्यमेद्‌पित्तकफप्रदः ।
गुदकीलार्द्दितश्वासपंक्तिशूलानि नाशयेत् ॥"
इति ।
कफपित्तकरा माषाः । इति च भावप्रकाशः ॥
अन्यच्च ।
"माषो बहुमलो वृष्यः स्निग्धोष्णो मघुरो गुरुः ।
वातनुद्वृंहणो बल्यो मेदोमांसकफप्रदः ॥"
इति राजवल्लभः ॥
माषसूपेन मूलकभक्षणं निषिद्धं यथा, --
"मूलकं माषसूपेन मधुना च न भक्षयेत् ॥"
इति च राजवल्लभः ॥
चतुर्द्दश्यां रविवारे च माषभक्षणनिषेधो यथा,
चिररोगी च माषके । इति ।
"माषमामिषमांसञ्च मसूरं निम्बपत्रकम् ।
भक्षयेद्यो रवेवरि सप्तजन्मन्यपुत्रकः ॥"
इति च तिथ्यादितत्त्वम् ॥ * ॥
परिमाणविशेषः । माषा इति भाषा । तत

| | | |
|---|---|---|
| | भ्राता सुमाली तस्य कन्यायां निकषायां पुलस्त्य-पुत्त्रविश्रवसो रावणो जातः । इति रामायणे उत्तरकाण्डे ५ सर्गः ॥ (मालाविशिष्टे, त्रि । यथा, महाभारते । १ । १७१ । ३१ । "शिरोरुहेषु जग्राह माल्यवतसु धनञ्जयः ।" | |

पर्य्यायः । माषकः २ मासः ३ । इत्यमर-
भरतौ ॥ हेमः ४ धानकः ५ । स च मागध-
माने सुश्रुतमते ५ गुञ्जापरिमाणम् । चरकमते
६ । ८ गुञ्जापरिमाणम् । कालिङ्गमाने सुश्रुत-
मते ५ । ७ । ८ गुञ्जापरिमाणम् । इति भाव-
प्रकाशः ॥ वैद्यकान्तरे १० गुञ्जापरिमाणम् ।
यथा, --
"गुञ्जाभिर्दशभिर्माषः शाणो माषचतुष्टयम् ।"
इति वैद्यकपरिभाषा ॥
(माषार्थे यथा, --
"द्वात्रिंशन्माषकैर्माषश्चरकस्य तु तैः पलम् ।
चरकार्द्धपलोन्मानं चरके दशरक्तिकैः ।
माषैः पलं चतुःषष्ट्या यद्भवेत्तत्तथेरितम् ॥"
इति वैद्यकचक्रपाणिसंग्रहे ज्वराधिकारे ।)
ज्योतिःस्मृतिमते १२ गुञ्जापरिमाणम् । यथा,
"पलं तु लौकिकैर्मानैः साष्टरत्तिद्विमाषकम् ।
तोलकत्रितयं ज्ञेयं ज्योतिर्ज्ञैः स्मृतिसम्मतम् ॥"
इति तिथ्यादितत्त्वधृतवचनेन पलं अष्टरत्तिका-
धिकमाषद्वयाधिकतोलकत्रयम् । एतेन माषक-
परिमाणं द्वादशरत्तिकं भवति ॥ * ॥ मूर्खः ।
त्वग्दोषभेदः । इति मेदिनी षे, २१ ॥

पाण्डुरा १५ माषपर्णिका १६ कल्याणी १७
वज्रमूली १८ शालिपर्णी १९ विसारिणी २०
आत्मोद्भवा २१ बहुफला २२ स्वयम्भूः २३
सुलभा २४ घना २५ सिंहविन्ना २६ विशा-
चिका २७ । अस्या गुणाः । तिक्तरसत्वम् ।
वृष्यत्वम् । दाहज्वरापहत्वम् । शुक्रवृद्धिकारि-
त्वम् । बल्यत्वम् । शीतलत्वम् । पुष्टिवर्द्धनत्वञ्च ।
इति राजनिर्घण्टः ॥ अपि च भावप्रकाशे ।
"माषपर्णी सूर्य्यपर्णी काम्बोजी हयपुच्छिका ।
पाण्डुलोमशपर्णी च कृष्णवृन्ता महासहा ॥
माषपर्णी हिमा तिक्ता रूक्षा शुक्रबलाशकृत् ।
मधुरा ग्राहिणी शोषा वातपित्तज्वरास्रजित् ॥"

**माषभक्तबलिः**, पुं, (माषश्च भक्तञ्च तद्युक्तो बलिः ।) माषतण्डुलदधिमिश्रितपूजोपहार-
विशेषः । अत्र केचित् हरिद्राघृतमध्वपि
मिश्रयन्ति । यथा । एष माषभक्तबलिः ।
"ॐ जय त्वं कालि ! सर्व्वेशे सर्व्वभूतसमावृते ।
रक्ष मां निजभूतेभ्यो बलिं गृह्ण शिवप्रिये ! ॥"
ॐ काल्यै नमः । प्रार्थनामन्त्रो यथा, --
"ॐमातर्मातर्व्वरे दुर्गे सर्व्वकामार्थसाधिनि ! ।
अनेन बलिदानेन सर्ब्बान् कामान् प्रयच्छ मे ॥"
इति कृत्यतत्त्वम् ॥
भूतेभ्योऽप्ययं बलिर्देयः ॥

**माषवर्द्धकः**, पुं, (माषं वर्द्धयतीति । वृध + णिच् ण्वुल् ।) स्वर्णकारः । इति शब्दमाला ॥

**माषशः**, [स्] व्य, प्रतिमाषम् । माषं माषं ददाति

षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गल कुले ॥"
मांसे, क्ली । यथा, ऋग्वेदे । ५ । २९ । ८ ।
"त्रीयच्छता महिषाणामघो
मास्त्रीसरांसि मघवा सोम्यापाः ।"
"माः मांसानि ।" इति तद्भाष्ये सायणः ॥)

**मासः**, पुं, (मस् परिमाणे + भावे घञ् ।) माष-
परिमाणम् । इत्यमरटीकायां भरतः । माषा
इति भाषा ॥ (मस्यते परिमीयते असावने-
नवेति मस् + घञ् ।) शुक्लकृष्णपक्षद्वयात्मकः
कालः । स च पौषमाघादिद्वादशसंज्ञकः ।
इत्यमरः । १ । ४ । १२ ॥ माश्चन्द्रस्तस्यायं मासः
ष्णः । चान्द्रमासस्येयं व्युत्पत्तिः । सौरादिषु तु
मस्यते परिमीयतेऽनेनासौ वा मासः । मसिर्य
ई परिमाणे घञ् । माः सान्तोऽपि । मास्तु
मासोऽपि दृश्यते । इति हड्डः । इति भरतः ॥ * ॥
स्मृतिमतेऽपि पौषादिद्वादशसंज्ञकः । यथा, --
"चक्रवत् परिवर्त्तेत सूर्य्यः कालवशाद्यतः ।
अतः सांवत्सरं श्राद्धं कर्त्तव्यं मासचिह्नितम् ॥
मासचिह्नन्तु कर्त्तव्यं पौषमाघाद्यमेव हि ।
यतस्तत्र विधानेन स मासः परिकीर्त्तितः ॥"
इति लघुहारीतः ॥
कार्त्तिकादिद्वादशसंज्ञकोऽपि । यथा, --
"अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गुनश्च त्रिभो मतः ।
शेषा मासा द्विभा ज्ञेयाः कृत्तिकादिव्यव-
स्थया ॥"
स च चैत्रादिद्वादशसंज्ञकश्च । यथा व्यक्तं
ब्रह्मपुराणम् ।
"चैत्रे मासि जगद्ब्रह्मा ससर्ज्ज प्रथमेऽहनि ।
शुक्लपक्षे समग्रन्तु तदा सूर्य्योदये सति ॥
प्रवर्त्तयामास तदा कालस्य गणनामपि ।
ग्रहान्राशीनृतून् मासान् वत्सरान् वत्सराधि-
पान् ।
इत्यनेन मासर्त्तुवत्सराणां चान्द्रत्वमुक्तम् ।
ब्रह्मसिद्धान्तेऽपि ।
"चैत्रसितादेरुदयाद्भानोर्व्वर्षर्त्तुमासयुगकल्पाः ।
सृष्ट्यादौ लङ्कायामिह प्रवृत्ता दिनैर्व्वत्स ॥"

**माषकः**, पुं, (माषप्रकारः । माष + "स्थूला-

दिभ्यः प्रकारवचने कन् ।" ५ । ४
। ३ । इति
कन् ।) मासकः ।
पञ्चरत्तिकपरिमाणम् ।
यथा । गुञ्जाः पञ्चाद्यमाषकः ।
इत्यमरः ॥
"दशार्द्धगुञ्जं प्रवदन्ति माषं
माषाह्वयैः षोडशभिश्च कर्षम् ॥"
इति लीलावती च ॥
"षड्भिस्तु रत्तिकाभिः
स्यान्माषको हेम-
धानकौ ।
माषो गुञ्जाभिरष्टाभिः सप्तभिर्वा
भवेत्
क्वचित् ॥"
इति भावप्रकाशः ॥
(बीहिविशेषः । तदर्थे विषयो यथा,
--
"द्वात्रिंशन्माषकैर्म्माषः ।"
परिमाणार्थे यथा, --
"--सुश्रुतस्य तु माषकः ।
द्वादशभिर्धान्यमाषैश्चतुःषष्ट्या तु
तैः पलम् ॥"
इत्युभे वैद्यकचक्रपाणिसंग्रहे
ज्वराधिकारे ॥)

**माषकलायः**, पुं, (माषसंज्ञः कलायः शाक-

पार्थिववत् समासः ।)
स्वनामख्यातशस्यम् ।
यथा । कलायशब्दो विशेषे
सामान्ये च अत-
एव माषकलाय इत्यादि प्रयोगः ।
इत्यमर-
टीकायां भरतः ॥

**माषपर्णी**, स्त्री, (माषस्य पर्णमिव पर्णं यस्याः
।

ततो ङीष् ।) वनमाषः । माषाणी
इति
भाषा । तत्पर्य्यायः । हयपुच्छी २
काम्बोजी ३
इत्यर्थे शस्प्रत्ययेन निष्पन्नम् । इति
सिद्धान्त-
कौमुदी ॥

**माषादः**, पुं, (माषमत्तीति । अद् + अण् ।)

कच्छपः । इति शब्दरत्नावली ॥
माषभक्षके,
त्रि ॥

**माषीणं**, क्ली, (माषाणां भवनं क्षेत्रम् । माष +

"विभाषा तिलमाषोमाभङ्गाणुभ्यः ।"
५ । २ । ४ । इति यत् पक्षे खञ् ।)
माषक्षेत्रम् ।
यथा, --

**माष्यं**, क्ली, (माषाणां भवनं क्षेत्रम् । माष +

"विभाषा तिलमाषोमाभङ्गाणुभ्यः ।"
५ । २ । ४ । इति यत् पक्षे खञ् ।)
माषक्षेत्रम् ।
यथा, --
"तिल्यतैलीनवन्माषोमाणुभङ्गाद्द्विरूपता
।"
इत्यमरः ॥
यथा तिलस्य क्षेत्रं तिल्यं तैलीनञ्च भवति
तथा
माषादीनामपि द्विरूपता द्वैरूप्यं भवति ।
इति
तट्टीकायां भरतः ॥

**मास्**, पुं, (माङ + माने "सर्व्वधातुभ्योऽसुन् ।"

४ । १८८ । इत्यसुन् ।) चन्द्रः । (यथा,
ऋग्वेदे ।
१० । १२ । ७ ।
"सूर्य्ये ज्योतिरदधुर्मास्यक्तून्
परिद्योतनिं चरतो अजस्रा ॥"
"मासि चन्द्रमसि ।" इति तद्भाष्ये सायणः ॥
मीयतेऽनेनेति । मा + "चन्द्रे मो डित् ।"
उणा०
४ । २२७ । इत्यत्र "बाहुलकात् केवलादपि
मोऽसिः ।" इत्युज्ज्वलोदत्तोक्तेरसिः ।) मासः
।
इति मेदिनी । से, ७ ॥ अस्य प्रथमैकवच-
नान्तरूपं माः ॥ (यथा, मनौ । २ । ३४ ।
चैत्रसितादेश्चैत्रशुक्लप्रतिपदस्तामारभ्येत्यर्थः
॥
अपि च ।
"मीनादिस्थो रविर्य्येषामारम्भप्रथमक्षणे ।
भवेत्तेऽब्दे चान्द्रमासाश्चैत्राद्या द्वादश स्मृताः
॥"
चान्द्रसावनसौरनाक्षत्रभेदेन स च चतुर्व्विधः ।
शुक्लप्रतिपदादिदर्शान्तश्चान्द्रः । तत्र चान्द्रो-
ऽपि द्विविधः । शुक्लप्रतिपदादिदर्शान्तोमुख्यः
।
कृष्णप्रतिपदादिपौर्णमास्यन्तो गौणः । यत्-
किञ्चित्त्रिंशत्तिथ्यात्मकश्चेति द्विविधो गौणः ।
त्रिंशदहोरात्रात्मकः सावनः । आदित्यैक-
राशिभोगावच्छिन्नः सौरः । सप्तविंशतिनक्षत्रा-
वच्छिन्नस्त्रिंशन्नाक्षत्रदिनात्मकश्चनाक्षत्रः ।
तथा च ब्रह्मसिद्धान्ते ।
"चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः
।
एकराशौ रविर्य्यावत् कालं मासः संभास्करः ॥

| | | |
|---|---|---|
| महासहा ४ । इत्यमरः । २ । ४ । १३८ ॥ सिंह-<br>पुच्छी ५ ऋषिप्रोक्ता ६ कृष्णवृन्ता ७ पाण्डु-<br>लोमशपर्णिनी ८ । इति रत्नमाला ॥ आर्द्र-<br>माषा ९ मांसमाषा १० मङ्गल्या ११ हय-<br>पुच्छिका १२ हंसमाषा १३ अश्वपुच्छा १४ | “चतुर्थे मासि कर्त्तव्यं शिशोर्निष्क्रमणं गृहात् । | |

सर्व्वर्क्षपरिवर्त्तैस्तु नाक्षत्र इति चोच्यते ॥”
सूर्य्यसिद्धान्ते ।
“नाडीषष्ट्या तु नाक्षत्रमहोरात्रं प्रचक्षते ।
तत्त्रिंशता भवेन्मासः सावनोऽर्कोदयैस्तथा ॥
ऐन्दवस्तिथिभिस्तद्वत् संक्रान्त्या सौर उच्यते ॥”
तत्त्रिंशता नाक्षत्रदिनत्रिंशता मासो नाक्षत्र-
मासः । तथा त्रिंशता ॥ * ॥ स्मार्त्तशूलपाणि-
मते मुख्यचान्द्र एव मासपदशक्यः । जीमूत-
वाहनमते सौर एव शक्यः । चान्द्रप्रमाणं
प्रागुक्तम् । सौरप्रमाणन्तु । सौरास्तु माघादयो
द्वादश एव श्रौताः । तथा च श्रुतिः । तप-
स्तपस्यौ शैशिरावृतुः । मधुश्च माधवश्च वास-
न्तिकावृतुः । शुक्रश्च शुचिश्च ग्रैष्मावृतुः । अथै-
तदुदगयनं देवानां दिनम् । नभाश्च नभस्यश्च
वार्षिकावृतुः । इषश्च ऊर्ज्जश्च शारदावृतुः ।
सहाश्च सहस्यश्च हैमन्तिकावृतुः । अथैत-
द्दक्षिणायनं देवानां रात्रिरिति । अत्रायनस्य
सौरत्वेन तद्घटकतपस्तपस्यादीनामपिसौर
परतेति । अतो भूयसामनुरोधेन वैशाखादयः
सौरवाचिनोऽवधार्य्यन्ते । इति मलमासतत्त्वम् ॥
अपि च ।
“मेषस्थित्या रवेर्मासो वैशाखोऽब्दमुखः
स्मृतः ।”
इति सङ्केतकौमुदी ॥
अथ कर्म्मविशेषे मासविशेषादिः । तत्र पिता-
महः ।
“आब्दिके पितृकृत्ये च मासश्चान्द्रमसः स्मृतः ।
विवाहादौ स्मृतः सौरो यज्ञादौ सावनो मतः ॥”
प्रथमादिपदं यात्राग्रहचारपरम् । यत् कर्म्म
सूर्य्यभोग्यराश्युल्लेखेन यच्च विशिष्योदगयनादि
विहितं तत्परञ्च अयनस्य सौरमासघटित-
त्वात् । तच्च चूडोपनयनादि । द्वितीयादिपदं
सत्रभृतिवृद्धिप्रायश्चित्तायुर्द्दायाशौचगर्भाधान-
पुंसवनसीमन्तोन्नयननामकरणान्नप्राशननिष्क्र
मणचूडादिपरम् । तथा च विष्णुधर्म्मोत्तरे ।
“अध्वायनञ्च ग्रहचारकर्म्म
सौरेण मासेन सदाध्यवस्येत् ।
सत्राण्युपास्यान्यथ सावनेन
लौक्यञ्च यत् स्याद्व्यवहारकर्म्म ॥”

नाक्षत्रमासप्रयोजनं विष्णुधर्म्मोत्तरे ।
“नक्षत्रसत्राण्ययनानि चेन्दो-
र्म्मासेन कुर्य्याद्भगणात्मकेन ।”
नक्षत्रसत्राणि माससाध्ययागविशेषरूपाणि
याज्ञिकप्रसिद्धानि । इन्दोरयनानि
सोमाय-
नाख्यसत्राणि । इति समयप्रकाशः ॥ एवं
जन्म-
नक्षत्रे शनिभौमवारे फलं नाक्षत्रमासेन
योग्य-
त्वात् । यथा, मलमासतत्त्वे ।
“जन्मन्यृक्षे यदि स्यातां वारौ
भौमशनैश्चरौ ।
स मासः कल्मषो नाम मनोदुःखप्रदायकः
॥”
मलमासविवरणं मलमासशब्दे द्रष्टव्यम् ॥
* ॥
अथ मासकृत्यम् ।
“आषाढशुक्लैकादश्यां कुर्य्यात् स्वापं
महोत्-
सवम् ।
आषाढे च रथं कुर्य्यात् श्रावणे
श्रवणाविधिम् ॥
भाद्रे च जन्मदिवसे उपवासपरो भवेत् ।
प्रसुप्तञ्च पारिवर्त्तमाश्विने मासि कारयेत्
॥
उत्थानं श्रीहरेः कुर्य्यादन्यथा
विष्णुद्रोहकृत् ।
शुभे चैवाश्विने मासि महामायाञ्च पूजयेत्
॥
कार्त्तिके मासि यत् कृत्यं शृणु देवि
वरानने ! ।
सप्तवर्त्त्याः प्रमाणेन दीपः स्याच्चतुरङ्गुलः
॥
पक्षान्ते च प्रकर्त्तव्या दीपमाला बलिः
शुभा ।
मार्गशीर्षे सिते पक्षे षष्ठीञ्च सितवस्त्रकैः ॥
पूजयेज्जगदीशञ्च तूलवस्त्रैर्विशेषतः ।

पञ्चाहानि त्र्यहाणि स्युर्द्दोलोत्सवो
विधीयते ॥
दक्षिणाभिमुखं कृष्णं दोलयानं
सकृन्नराः ।
दृष्ट्वापराधनिचयैर्मुक्तास्ते नात्र
संशयः ॥
निक्षिप्य जलमात्रे तु मासे
माधवसंज्ञिते ।
सौवर्णपात्रे ताम्रे वा रौप्ये वा
मृण्मयेऽपि वा ॥
तोयस्थं योऽर्च्चयेद्देवं
शालग्रामसमुद्भवम् ।
प्रत्यहं मां महाभागे ! तस्य पुण्यं न
गण्यते ॥
दमनारोपणं कृत्वा श्रीविष्णौ च
समर्पयेत् ।
वैशाख्यां श्रावणे भाद्रे कर्त्तव्यञ्च
तदर्पणम् ॥
वैशाखे च तृतीयायां जलमध्ये
विशेषतः ।
अथवा मण्डपे कुर्य्यात् मण्डले वा
बृहद्ध्वजे ॥
सुगन्धचन्दनेनाङ्गसुपुष्टाङ्गो दिने
दिने ।
यथा प्रयत्नतः कार्य्यः कृशाङ्गो नैव
पूजितः ॥
चन्दनागुरुकस्तूरीकुष्ठं
कुङ्कुमरोचना ।
जटामांसी वचा चैव
विष्णोर्गन्धाष्टकं तथा ।
एतैर्गन्धयुतैश्चापि हरेरङ्गानि
लेपयेत् ॥
घृष्टञ्च तुलसीकाष्ठं कर्पूरागुरुयोगतः
।
अथवा केशरैर्योज्यं
हरिचन्दनमुच्यते ॥
अस्मिन् काले कृष्णभक्त्या ये
प्रपश्यन्ति मानवाः ॥

अध्वायनं अध्वगमनं यात्रेति यावत् ॥ * ॥
अथ सौरादिमासविहितकर्म्माणि।
“विवाहोत्सवयज्ञेषु सौरं मासं प्रशस्यते ।
पार्व्वणे त्वष्टकाश्राद्धे चान्द्रमिष्टं तथाब्दिके ॥”
अत्र यज्ञपदमुदगयनादिविहितपशुयागाभिप्रायं
पितामहोक्तन्तु विष्णुधर्म्मोत्तरोक्तसत्रपरम्।
गर्गः ।
“आयुर्दायविभागश्च प्रायश्चित्तक्रिया तथा ।
सावनेन तु कर्त्तव्या मन्त्राणामप्युपासना ॥”
सूर्य्यसिद्धान्ते ।
“सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा।
मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तिता ॥”
मध्यमग्रहभुक्तिर्ज्योतिर्गणना प्रसिद्धा ॥ * ॥

पौषे पुण्याभिषेकञ्च वर्ज्जयेच्चन्दनं तथा ॥
संक्रान्त्यां माघमासे च साधिवासिततण्डुलान् ।
निवेद्य विष्णवे भक्त्या इमं मन्त्रमुदीरयेत् ॥
जीवनं सर्व्वभूतानां जनकस्त्वं जगद्गुरो ! ।
तन्मायालीनता प्राप्ता त्वयैव जनिता प्रभो ! ॥
कर्पूराकृतिद्रव्याणि घृताक्तानि निवेदयेत् ।
ब्राह्मणान् भोजयेद्भक्त्या देवदेवपुरःस्थितान् ॥
अभ्यर्च्चर्य भगवद्भक्त्या द्विजांश्च भगवद्धिया ।
एकस्मिन् भोजिते भक्ते कोटिर्भवति भक्तितः ॥
विप्रभोजनमात्रेण व्यङ्गं साङ्गं भवेद्ध्रुवम् ।
पञ्चम्यां शुक्लपक्षे तु स्नापयित्वा च केशवम् ॥
पूजयेद्भगवद्भक्त्या चूतपल्लवसम्मितैः ॥
फल्गुचूर्णैश्च विविधैर्वासितैः पटवासितम् ।
काननं रमणीयञ्च प्रदीप्तदीपदीपितम् ॥
द्राक्षेक्षुरम्भाजम्बीरनागरङ्गकपूगकम्।
नारिकेलञ्च धात्री च वंशतालहरीतकी ॥
अन्यैश्च वृक्षषण्डैश्च सर्व्वर्त्तकुसुमाचितम् ।
पुष्पैश्च विविधैश्चैव फलपुष्पसमन्वितम् ॥
वितानैः कुसुमोद्यानैर्वारिपूर्णघटैस्तथा ।
चूतशाखोपशाखाभिः शोभितं छत्रचामरैः ॥
विशेषतः कलियुगे दोलोत्सवो विधीयते ।
फाल्गुने च चतुर्द्दश्यामष्टमे यामसंज्ञके ॥
अथवा पौर्णमास्यान्तु प्रतिपत्सन्धिसम्मितौ।
पूजयेद्विधिवद्भक्त्या फल्गुचूर्णैश्चतुर्व्विधैः ॥
सितरक्तैर्गौरपीतैः कर्पूरादिविमिश्रितैः ।
हरिद्राक्षारयोगाच्च रङ्गरम्यैर्मनोहरैः ॥

न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥
सुगन्धिमिश्रितैस्तोयैः स्नापयित्वा जगद्गुरुम् ।
अथवा पुष्पमध्ये च स्थापयेज्जगदीश्वरम् ॥
बृन्दावनं तत्र कृत्वा उपस्कृतफलानि च ।
विष्णुभक्तेन योग्येन भोजयेत्तदशेषतः ॥
नारिकेलफलं नीरं कोषञ्चोद्धृत्य दापयेत् ।
कण्टाफलञ्च पनसं कोषमुद्धृत्य दीयते ॥
यथा पचेत्तथा दद्याद्यथाशक्ति नियोगतः ।
दध्ना विमिश्रितञ्चान्नं घृतेनाप्लुत्य दापयेत् ॥
पाचितं पिष्टकं धातुरष्टादश घृतेन च ।
तिलैश्च तिलसंमिश्रैः फलं शुद्धञ्च दापयेत् ॥
यद्यदेवात्मनः श्रेयस्तत्तदीशाय कल्पयेत् ।
दत्त्वा नैवेद्यवस्त्रादीनाददीत कथञ्चन ।
त्यक्तव्यं विष्णुमुद्दिश्य तद्भक्तेभ्यो विशेषतः ॥
इति ते कथितं किञ्चित् समासेन महेश्वरि ! ।
गोप्तव्यञ्च प्रयत्नेन स्वयोनिरिव पार्व्वति ! ॥”
इति पाद्मे पातालखण्डे १२ अध्यायः ॥

**मासकः**, पुं, माषकपरिमाणम् । यथा । गुञ्जाः पञ्चाद्यमासकः । इत्यमरः ॥ पञ्चगुञ्जाः कृष्णलाः आद्यः प्रथमो मासकः । दशगुञ्जापेक्षया आद्यत्वम् । शास्त्रीयत्वात् मुख्यो मास इत्यर्थो

| | | |
|---|---|---|
| | अन्यैर्व्वा रङ्गरम्यैश्च प्रीणयेत् परमेश्वरम् ॥<br>एकादश्यां समारभ्य पञ्चम्यन्तं समापयेत् । | वा । मस्यते परिमीयतेऽनेन मासः मसिर्य ई<br>परिमाणे परीणामे घञ् स्वार्थे कः मासोऽयं<br>दन्त्यान्तः । मष हिंसार्थो मूर्द्धन्यान्तस्तस्माद्-<br>घञ् तेन माषो मूर्द्धन्यान्त इति जिनेन्द्रप्रभृ-<br>तयः । इत्यमरटीकायां भरतः ॥<br>**मासज्ञः**, पुं, दात्यूहपक्षी । इति शब्दरत्ना-<br>वली ॥ (मासं जानातीति । ज्ञा + कः ॥)<br>मासज्ञातरि, त्रि ॥<br>**मासनं**, क्ली, सोमराजी । इति शब्दचन्द्रिका ॥<br>**मासमानः**, पुं, (मासैर्द्वादशभिर्मानमस्य ।) वत्-<br>सरः । इति त्रिकाण्डशेषः ॥<br>(मासस्य मानम् ॥)<br>मासपरिमाणे, क्ली ॥ |

**मासरः**, पुं, (मस + णिच् + बाहुलकात् अरन् ।)

भक्तसमुद्भवमण्डः । तत्पर्य्यायः । आचामः २ निस्रावः ३ । इत्यमरः । २ । ९ । ४९ ॥

**मासवर्त्तिका**, स्त्री, सर्षपीपक्षिविशेषः । इति शब्द-

माला ॥

**मासान्तः**, पुं, (मासस्यान्तः ।) अमावस्या ।

यथा, --
‘पक्षान्ते निष्फला यात्रा मासान्ते मरणं ध्रुवम् ।
इति समयप्रदीपः ॥
संक्रान्तिदिनम् । यथा, --
“मासान्ते म्रियते कन्या तिथ्यन्ते
स्यादपुत्त्रिणी ।
नक्षत्रान्ते च वैधव्यं विष्ट्यां मृत्युर्द्वयोर्भवेत् ॥
मासान्ते दिनमेकन्तु तिथ्यन्ते घटिकाद्वयम् ।
घटिकात्रितयं भान्ते विवाहे परिवर्जयेत् ॥”
इति रत्नमाला ॥

**मासिकं**, क्ली, (मासे भवम् । मास + “कालाट्

ठञ् ।” ४ । ३ । ११ । इति ठञ् ।) प्रेतस्य संवत्सराभ्यन्तरे प्रतिमासीयमृतसजातीयतिथि कर्त्तव्यश्राद्धम् ।
प्रतिमासकर्त्तव्यकृष्णपक्षनिमित्तक श्राद्धम् । तत्पर्य्यायः । अन्वाहार्य्यम् २ । इत्य-मरः । ३ । ७ । ३१ ॥ मासि भवं मासिकं पार्व्वणश्राद्धं तत्र अन्वाहार्य्यं वर्त्तते । पक्षशेषे अमावास्यायां देयत्वात् । अनु पश्चादाह्रियते अन्वाहार्य्यं हसृय्वासोरिति घ्यण् स्वार्थेके अन्वा-
हार्य्यकञ्च । अकृतसपिण्डीकरणस्य वत्सराभ्य-
न्तरे प्रतिमासं यत् श्राद्धं तत्रान्वाहार्य्यमिति केचित् । इत्यमरटीकायां भरतः ॥ तयोः प्रमाणम् ।
“षाण्मासिकाब्दिके श्राद्धे स्यातां पूर्ब्बेद्युरेव ते ।
मासिकानि स्वकीये तु दिवसे द्वादशापि च ॥”
इति पैठीनसिः ॥
‘पितॄणां मासिकं श्राद्धमन्वाहार्य्यं विदुर्बुधाः ।
तच्चामिषेण कर्त्तव्यं प्रशस्तेन प्रयत्नतः ॥’

स्नानादिकं कृत्वा
एकोद्दिष्टश्राद्धविहितकाले
भोज्यमुतसृज्य कुशब्राह्मणं
स्नापयित्वा वास्तु-
पुरुषादि पूजयित्वा भूम्वामिपितृभ्यः श्राद्धाग्र-
भागं दत्त्वा दक्षिणामुखः अनुज्ञां कुर्य्यात् ।
यथा अद्यामुके मासि अमुकपक्षे
अमुकतिथौ
अमुकगोत्रस्य प्रेतस्य
अमुकदेवशर्म्मणः प्रथम-
मासिकैकोद्दिष्टश्राद्धं
दर्भमयब्राह्मणेऽहं करिष्ये ।
ॐ कुरुष्वेत्युत्तरम् । ततो गायत्त्रीं
जपेत् ।
देवताभ्य इत्यादि त्रिधा पठेत् । ततः पुण्डरी-
काक्षं स्मृत्वा मृज्जलेन श्राद्धीयद्रव्यं प्रोक्षयेत् ।
रक्षार्थमुदकपूर्णपात्रमेकदेशे
स्थापयेत् । ततः
ॐ अमुकगात्र प्रेत
अमुकदेवशर्म्मन्नेतत्ते
दर्भासनं स्वधा । इत्यनेन
ब्राह्मणवामपार्श्वे
दद्यात् । अपहतेत्यादिना तिलान्
विकीर्य्य जलं
स्पृष्ट्वा ब्राह्मणाग्रभूमौ कुशपत्रमेकं
पातयित्वा
तदुपरि अर्घ्यपात्रं संस्थाप्य ॐ
पवित्रासि
वैष्णवीत्यनेनानखच्छिन्नं ॐ
विष्णोर्मनसा पूत-
मसीत्यनेन प्रोक्षितमेकदलं पवित्रं
तत्पात्रे
निधाय ॐ शन्नोदेवीरित्यादिमन्त्रेण
जलं

वल्क्यश्लोकत्रयं ॐ तद्विष्णोरित्यादि ॐ
दुर्य्यो-
धन इत्यादि ॐ युधिष्ठिर इत्यादि सर्व्वं
पठेत् ।
ततो दक्षिणाग्रान् कुशान् भूमौ संस्थाप्य
भूमिं
प्रोक्ष्य सर्व्वप्रकारमन्नमुद्धृत्य
सतिलमेकीकृत्य
वारिणाप्लुत्य ॐ
अग्निदग्धाश्चेत्यादिमन्त्रद्वयेन
कुशोपरि विकिरेत् । ततो हस्तौ
प्रक्षाल्याचम्य
दक्षिणकर्णं स्पृष्ट्वा वा हरिं स्मृत्वा ब्राह्मणाय
जलगण्डूषं दत्त्वा पूर्ब्बवद्गायत्त्रीं मधुवाता
इत्या-
दिकं मधु मधु मध्विति च जप्त्वा ॐ
शेषमन्नं
क्व देयमित्यनुज्ञाप्य ॐ इष्टाय
दीयतामित्युत्तरं
गृहीत्वा ॐ पिण्डदानमहं करिष्ये ॐ
कुरुष्वे-
त्युक्ते ब्राह्मणसम्मुखे ॐ निहन्मीत्यादिना
नैरृतिमारभ्य दक्षिणाग्ररेखया जलेन वामा-
वर्त्तेन चतुष्कोणमण्डलं कृत्वा पवित्रं
वामहस्ता-
द्दक्षिणहस्तेन गृहीत्वा वामहस्तान्वारब्ध-
दक्षिणपाणिना दक्षिणाग्रां रेखां मण्डलमध्य-
स्थाने ॐ
अपहतेत्यादिनिहन्मीत्यादिमन्त्राभ्यां
कुर्य्यात् । तद्दर्भमुत्तरस्यां दिशि क्षिपेत् ।
रेखोपरि समूलान् साग्रान् कुशानास्तीर्य्य
ॐ
देवताभ्य इति पठित्वा ॐ एहि प्रेत सौम्य
गम्भीरेभिः पथिभिः पूर्ब्बिणेभिर्देह्यस्मभ्यं
द्रवि-
णेह भद्रं रयिञ्चनः सर्व्ववीरं नियच्छ इत्या-
वाह्य तिलांश्चास्तीर्णकुशेषु विकिरेत् । ततो
वामहस्तेन सतिलजलं गृहीत्वा वामहस्ता-

इति मनुः । ३ । १२३ ॥ * ॥
मासिककरणस्य व्यवस्था यथा । पीठच्छत्रो-
पानहरहितानि इहलोकं परित्यज्य इत्यादि
सर्व्वः सुर्गन्ध इत्यादि श्रिया देव्या इत्यादि वन-
स्पतिरस इत्यादिमन्त्रचतुष्टयरहितानिच
आद्यै-
कोद्दिष्टवत् मृताहे मृताहे द्वादश मासिकानि
कार्य्याणि । एकादशमासाभ्यन्तरे मलमासपाते
त्रयोदशमासिकानि । षष्ठमासाभ्यन्तरे मल-
मासपातेऽपि षष्ठमासिकपूर्ब्बतिथावेव प्रथम-
षाण्मासिकम् । तथा त्रयोदशमासिकस्य पूर्ब्ब-
तिथौ द्वितीयषाण्मासिकम् । एवं षाण्मासिकी-
ल्लखे प्रथमषाण्मासिकद्वितीयषाण्मासिकत्वेनो-
ल्लेखः । एषां मध्ये यत् पतितं तत्
कृष्णैकादश्यां
अमावस्यायां मासिकान्तरतिथौ वा कृत्वा
प्रकृतं कर्त्तव्यम् । अशौचपतितञ्चेत्तदशौचान्ते
कर्त्तव्यम् । एकादशाहादिश्राद्धानि कतिचित्
कृत्वा यदि मृतस्तदा शेषाण्यन्येनाधिकारिणा
समाप्यानि ॥ * ॥ अथ मासिकैकोद्दिष्टश्राद्ध-
प्रयोगः । पूर्ब्बदिने निरामिषैकभक्तः परदिने
दद्यात् । ततः ॐ तिलोऽसि
सोमदैवत्यो गोसवो
देवनिर्म्मितः । प्रत्नमद्भिः पृक्तः
स्वधया प्रेतान्
लोकान् प्रीणाहि नः स्वाहा ।
इत्यनेन तिलान्
दत्त्वा गन्धपुष्पादिना अर्घ्यं निर्म्माय
कुशा-
न्तरेणाच्छाद्य तत् कुशमुद्घाट्य
ब्राह्मणे पवित्रं
दत्त्वा जलान्तरञ्च दत्त्वा पुष्पान्तरेण
शिरः-
प्रभृतिसर्व्वगात्रेभ्यो नम इति संपूज्य
तत् पात्रं
वामहस्ततले विन्यस्य
दक्षिणहस्तेनाच्छाद्य
ॐ या दिव्या इति पठित्वा ॐ
अमुकगोत्र
प्रेतामुकदेवशर्म्मन्नेतत्तेऽर्घ्यं स्वधा ।
ततः
ॐ अमुकगोत्र
प्रेतामुकदेवशर्म्मन्नेतानि ते गन्ध-
पुष्पधूपदीपाच्छादनानिस्वधा ।
इत्युत्सृज्य एष
ते गन्धः एतत्ते पुष्पं एष ते धूप एष ते
दीपः
एतत्ते आच्छादनम् । ततो
ब्राह्मणाग्रभूमौ
कुशादिकमपनीय नैरृतिमारभ्य
दक्षिणा-
ग्रान्तरेखया वामावर्त्तेन जलेन
चतुष्कोण-
मण्डलं कृत्वा तत्र भोजनपात्रं
निदध्यात् ।
तत्र सामिषं सर्व्वमन्नादिकं परिवेश्य
ॐ इदं
विष्णुरित्यादिमन्त्रेण
अन्नादावनखाङ्गुष्ठं निक्षिप्य
ॐ अपहतेत्यादिना तिलान्
विकीर्य्य ब्राह्मणे
द्दक्षिणहस्तेन संगृह्य ॐ अमुकगोत्र
प्रेतामुक-
देवशर्म्मन्नवने निक्ष्व स्वधा इत्यनेन दद्यात्
ततः
श्राद्धशेषमन्नं सव्यञ्जनं मध्वाज्यतिलसंयुक्तं
सामिषं गृहीत्वा पिण्डं कृत्वा ॐ
मधुवातेत्यादि
ऋक्त्रयं अक्षन्नमीत्यादि च पठित्वा विल्व-
प्रमाणं पिण्डं सतिलं
द्विगुणभुग्नकुशत्रयसहितं
वामहस्तस्थितपात्राद्दक्षिणहस्तेन गृहीत्वा
ॐ
अमुकगोत्र प्रेतामुकदेवशर्म्मन्नेष ते सामिष-
पिण्डः स्वधा इत्यवनेजनस्थाने
वामहस्तान्वा-
रब्धदक्षिणहस्तेन दद्यात् । ततः आचम्य
हरिं
स्मृत्वा पिण्डपात्रं प्रक्षाल्य वामहस्ताद्दक्षिण-
हस्तेन गृहीत्वा प्रक्षालितजलं ॐ अमुकगोत्र
प्रेतामुकदेवशर्म्मन्नवने निक्ष्व स्वधा इति
पिण्डो-
परि दद्यात् । ततः ॐ अत्र प्रेत मादयस्व
यथा
भागमा वृषायस्व इति जप्त्वा वामावर्त्तेनोद-
ङ्मुखो भूत्वा आगमनाच्छ्वासं धृत्वा तेनैव
पथा परावर्त्तमानः प्रेतं भास्वरमूर्त्तिं ध्यायन्
ॐ अमीमदत् प्रेत यथा भागमा वृषायिष्ट
इति दक्षिणाभिमुखो भवन् जपेत् । ततः
श्वासं
त्यजेत् । ॐ नमस्ते प्रेत प्रेत नमस्ते इति
कृताञ्जलिर्जपेत् । ॐ गृहान्नः प्रेत देहि इति
गृहिणीं पश्येत् । ॐ सदस्ते प्रेत देस्म इति
पिण्डं पश्येत् । ततो नवमनवं वा
शुक्लवस्त्र-
दशाभवं सूत्रं वामहस्ताद्दक्षिणहस्तेन
गृहीत्वा
ॐ एतद्वः प्रता वास इति पठित्वा
पिण्डोपरि
निदध्यात् । ततः ॐ अमुकगोत्र
प्रेतामुकदेव-

| | | |
|---|---|---|
| | जलगण्डूषं दत्त्वा गायत्रीं जप्त्वा अन्ने मधु दत्त्वा<br>तदभावे गुडं दत्त्वा घृतं दत्त्वा ॐ मधुवाते-<br>त्यादि मधु मधु मध्विति च पठित्वा अन्नमभि-<br>मन्त्र्य प्रोक्ष्य ब्राह्मणे जलगण्डूषं दत्त्वा वाम<br>हस्तेनान्नपात्रं धृत्वा ॐ अमुकगोत्र प्रेतामुक-<br>देवशर्म्मन्नेतत्ते सामिषान्नं सोपकरणं स्वथेत्युत्-<br>सृजेत् । इदं सामिषान्नं इदं हविः इमा गङ्गाया<br>आपः एतान्युपकरणानि यथासुखं वाग्यतः<br>सद । इत्यनेन जलगण्डूषं दद्यात् । ततो गायत्रीं<br>त्रिः सकृद्वा ॐ मधुवाता इत्यादि मधु मधु<br>मध्विति ॐ अन्नहीनमित्यादि च पठेत् । कुश-<br>ब्राह्मणपक्षे पुनर्गायत्र्यादि पठेत् । ॐ यज्ञे-<br>श्वरो हव्य इत्यादि ॐ<br>योगीश्वरमित्यादि याज्ञ- | शर्म्मन्नेतत्ते वासः स्वधा । इत्यनेनोत्सृजेत्<br>।<br>ततस्तूष्णीं पिण्डं संपूज्य ॐ<br>वसन्तायेत्यादि- |

मन्त्रेण षड़्तून्नमस्कुर्य्यात् । तत ॐ सुसुप्रोक्षित-
मस्तु इति ब्राह्मणाग्रभूमिमासिञ्चेत्। ॐ शिवा आपः सन्त इति ब्राह्मणे जल दद्यात । ॐ सन्त्विति प्रतिवचनम । ॐ सौमनस्यमस्त्विति
पुष्पं ॐ अस्त्विति प्रतिवचनम । ॐ अक्षत-ञ्चारिष्टञ्चास्तु इति यवान् दद्यात् । ॐ अस्त्वि-त्युत्तरम् । ततस्तिलाज्यमधुयुक्तं जलं गृहीत्वा ॐ अमुकगोत्रस्य प्रेतस्यामुकदेवशर्म्मणो दत्त-मिदमन्नपानादिकमुपतिष्ठताम्। ॐ उपतिष्ठ-तामिति प्रतिवचनम् । ॐ अघोरः प्रेतोऽस्तु इति वदेत् । ॐ अस्त्विति प्रतिवचनम् । ॐ गोत्रं नो वर्द्धतामिति वदेत् । ॐ वर्द्धतामिति प्रतिवचनम् । ततः पिण्डोपरि सपवित्रकुशा-नास्तीर्य्य ॐ ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधास्थ तर्पयत मे प्रेतमित्य-
नेन वारिधारया सिञ्चेत् । ततः ॐ अद्येत्यादि अमुकगोत्रस्य प्रेतस्य अमुकदेवशर्म्मणः कृतै-तत्प्रथममासिकैकोद्दिष्टश्राद्धकर्म्मणः प्रतिष्ठार्थं दक्षिणामिदं रजतं तन्मूल्यं वा विष्णुदैवतं यथा नामगोत्राय ब्राह्मणायाहं ददानीति दद्यात् । ततो दक्षिणां दिशं पश्यन् वरं याचेत । नात्र पात्रमालभ्य जपेत् । नाशिषः प्रार्थयेदिति प्रचेतोवचनादाशिषं न प्रार्थयेत् । ततः ॐ देव-ताभ्य इति त्रिः पटेत् । ॐ अभिरम्यतामिति विसर्ज्जनम् । ॐअभिरतोऽस्मीति प्रतिवचनम् ।
ॐ आमावाजेति प्रदक्षिणवारिधारया वेष्टयेत् पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा क्षिपेत् । श्राद्धीयद्रव्यं ब्राह्मणाय दद्यात् जले वा क्षिपेत् । ततो वामदेव्यं गायेत् अच्छिद्रावधारणं दीपाच्छादनं विष्णुस्मरणञ्च कुर्य्यात् । एवं प्रकारेण द्वितीयादिमासिकं कर्त्त-
व्यम् । इति स्मार्त्तभट्टाचार्य्यकृतश्राद्धप्रयोग-तत्त्वम् ॥ * ॥ अन्यत् श्राद्धशब्दे द्रष्टव्यम् ॥

**मासिकः**, त्रि, माससम्बन्धी । मासि भव इत्यर्थे

अज् ।) महाकुलोद्भवः । इत्यमरटीकायां रायमुकुटः ॥

**माहाकुलीनः**, त्रि, (महाकुलस्यापत्यमिति ।
महाकुलादञ्खञौ ।” ४ । १ । १४१ । इति खञ् ।) महाकुलोद्भवः । इत्यमरटीकायां रायमुकुटः ॥

**माहात्म्यं**, क्ली, (महात्मनो भावः इति । महा-
त्मन् + व्यञ् ।) महात्मता । महिमेति यावत् ।
यथा, तिथ्यादितत्त्वे ।
“माहात्म्यं भगवत्याश्च पुराणादिषु कीर्त्तितम् ।
पाठस्तस्य जपः प्रोक्तः पठेद्देवीमनास्ततः ॥”

**माहानामिकः**, पुं, (“तदस्य ब्रह्मचर्य्यम् ।”
५ । १ । ९४ । इत्यत्र । “माहा नाम्न्यादिभ्यः षष्ठ्यन्तेभ्य उपसंख्यानम् ॥” महा-
नाम्न्यो नाम विदामघवन् ।’ इत्याद्या ऋचः ।
तासां ब्रह्मचर्य्यमस्य इति ठञ् । हरदत्तस्तु “भस्याढे ।” इति पुंवद्भावान् माहानामिक इत्याह । इति सिद्धान्तकौमुदी ।) महानाम्नी-
ऋचावेत्ता ब्राह्मणः । इति केचित् ॥

**माहानाम्निकः**, पुं, (“तदस्य ब्रह्मचर्य्यम् ।”
५ । १ । ९४ । इत्यत्र । “माहा नाम्न्यादिभ्यः षष्ठ्यन्तेभ्य उपसंख्यानम् ॥” महा-
नाम्न्यो नाम विदामघवन् ।’ इत्याद्या ऋचः ।
तासां ब्रह्मचर्य्यमस्य इति ठञ् । हरदत्तस्तु “भस्याढे ।” इति पुंवद्भावान् माहानामिक इत्याह । इति सिद्धान्तकौमुदी ।) महानाम्नी-
ऋचावेत्ता ब्राह्मणः । इति केचित् ॥

माहेन्द्रयोर्द्दण्डौ शुभौ ।
वायुयमयोर्द्दण्डावशुभौ ।
यथा,
“ख्यातं वा व यमा सूर्य्ये मा वा व य कला
निधौ ।
व य मा वा कुजे ज्ञेया मा वा व य सुधां
शुजे ॥
गुरौ वा व य मा चैव मा वा व य तथा भृगौ ।
सूर्य्यपुत्रे य मा वा व घटीयुग्मं शुभाशुभम् ॥
माहेन्द्रे विजयो नित्यं वारुणे च धनागमः ।
वायौ च भ्रमते नित्यं यमेऽपि मरणं ध्रुवम् ॥”)
इति सारसंग्रहः ॥
(माहेन्द्रकायपुरुषस्य लक्षणं यथा, --
“माहात्म्यं शौर्य्यमाज्ञा च सततं शास्तबुद्धिता ।
भृत्यानां भरणञ्चापि माहेन्द्रं कायलक्षणम् ॥”
इति सुश्रुते शारीरस्थाने चतुर्थऽध्याये ॥
महेन्द्रो देवतास्येति । महेन्द्र + “महेन्द्राद्-
घाणौ च ।” ४ । २ । २९ । इति अण् ।
महेन्द्रदैवत्ये, त्रि । यथा, भट्टिकाव्ये । १५ । ९३ ।
“अविभ्रजत्ततः शस्त्रमैषीकं राक्षसो रणे ।
तदप्यध्वसदासाद्य माहेन्द्रं लक्ष्मणेरितम् ॥”)
महेन्द्रसम्बन्धिनि च । (यथा, रघौ । १२ । ८६ ।
“मातलिस्तस्य माहेन्द्रं ह्यामुमोच तनुच्छदम् ॥”)

ष्णिक्प्रत्ययेन निष्पन्नः ॥ (यथा, मनौ । ७ । १२६ ।
"पणो देयोऽवकृष्टस्य षड्डत्कृष्टस्य वेतनम् ।
षाण्मासिकस्तथाच्छादो धान्यद्रोणस्तु मासिकः ॥")

**मासुरी**, स्त्री, (मसुर + अण् ङीष् ।) श्मश्रुः ।
इति हेमचन्द्रः । ३ । २२७ ॥ (मातृभग्नी ।
यथा, ब्रह्मवैवर्त्ते । १ । १० । १४५ ।
"पितृष्वसा पितुर्भग्नी मातृभग्नी च मासुरी ।")

**मास्म**, व्य, (मा च स्म च तयोः समाहारः ।)
वारणम् । तत्पर्य्यायः । मा २ अलम् ३ । इत्य-
मरः । ३ । ४ । ११ । (यथा, रामायणे । २ । १२ । ९२ ।
"मास्म मे भरतः कार्षीत् प्रेतकृत्यं गतायुषः ।")

**माह** ऋ ञ माने । इति कविकल्पद्रुमः ॥ (भ्वा०-
उभ०-सक०-सेट् ।) ऋ अममाहत् । ऋदनु-
बन्धस्थाने षष्ठस्वरानुबन्ध इत्यके । ञ माहति
माहते । इति दुर्गादासः ॥

**माहाकुलः**, त्रि, (महाकुलस्यापत्यमिति ।)
"महाकुलादञ् खञौ ।" ४ । १ । १४१ । इति

**माहिनं**, क्ली, (मह्यते पूज्यते अस्मिन् इति ।
मह् + "महेरिनण् च ।" उणा० । २ । ५६ ।
इति इनण् ।) राज्यम् । इत्युणादिकोषः ॥
(मंहनीये, त्रि । यथा, ऋग्वेदे । ३ । ३६ । ९ ।
"इन्द्र ! यत्ते माहिनं दत्रमस्ति ।"
"माहिनं मंहनीयम् ।" इति तद्भाष्ये सायणः ॥
प्रवृद्धे च । यथा, तत्रैव । १ । ५६ । ६ ।
"इन्द्र ! सदनेषु माहिनः ।"
"माहिनः प्रवृद्धः ।" इति तद्भाष्ये सायणः ॥)

**माहिरः**, पुं, (मह्यते पूज्यतेऽसौ । मह् + बाहु-
लकात् इरण् ।) इन्द्रः । इति त्रिकाण्डशेषः ॥

**माहिषिकः**, पुं, (महिष्यै रोचतेऽसौ । महिषी +
ठक् ।) महिषीपतिः । व्यभिचारिण्यनुरक्त-
पतिः ॥ यथा, --
"महिषीत्युच्यते नारी या च स्याद्व्यभिचारिणी ।
तां दुष्टां कामयतियः स वै माहिषिकः स्मृतः ॥"
इति स्कान्दे काशीखण्डम् ॥
महिषोपजीवी ॥ (महिषी नारी पण्यमस्येति ।
महिषी + "तदस्य पण्यम् ।" ४ । ४ । ५१ । इति
ठक् ।) भगद्वारोपार्ज्जितस्त्रीधनोपजीवी । यथा,
"महिषीत्युच्यते नार्य्या भगेनोपार्ज्जितं धनम् ।
उपजीवति यस्तस्याः स वै माहिषिकः स्मृतः ॥"
इति विष्णुपुराणे २ । ६ । १५ श्लोकस्य टीकायां
श्रीधरस्वामी ॥

**माहिष्यः**, पुं, (महिष्यां साधुरिति महिषी +
ष्यञ् ।) वर्णसङ्करजातिविशेषः । स च

**माहेन्द्री**, स्त्री, (महेन्द्रस्येयम् । महेन्द्र + अण् ।
स्त्रियां ङीष् ।) इन्द्राणी । इति
शब्दरत्नावली ॥
गौः । इति राजनिर्घण्टः ॥

**माहेयः**, त्रि, (मही + ढक्) मह्या अपत्यम् ।
इति मुग्धबोधव्याकरणम् ॥
(जनपदभेदे, पुं ।
यथा, महाभारते । ६ । ९ । ४८ ।
"कुट्टाः परान्ता माहेयाः कक्षाः सामुद्र-
निष्कुटाः ॥"
मङ्गलग्रहः । यथा, समयामृते ।
"कफपित्तसमुद्भूतां शिरःपीडां भयावहाम् ।
माहेयः कुरुते शोकं बुधस्यान्तर्दशां गतः ॥")

**माहेयी**, स्त्री, (मह्याः सुरभ्याः अपत्यमिति ।
मही + "नद्यादिभ्यो ढक् ।" ४ । २ । ९७ ।
इति ढक् । स्त्रियां ङीष् ।) गौः ।
इत्यमरः । २ ।
९ । ६० ॥ (यथा, महाभारते । ४ । १६ । १० ।
"सर्व्वश्वेतेव माहेथी वने जाता त्रिहायणी ।
उपातिष्ठत पाञ्चाली वासितेव महावृषम् ॥"
अस्याः पर्य्यायो यथा, --
"सुरभिः सौरभेयी च माहेयी गौरुदाहृता ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**माहेशी**, स्त्री, (महेशस्येयम् । महेश + अण् +
स्त्रियां ङीष् ।) दुर्गा । यथा, --
"महादेवात् समुत्पन्ना महान्तैरीक्ष्यते यतः ।
माहेश्वर्य्या तनुर्यस्या माहेशी तेन सा स्मृता ॥"
इति देवीपुराणे ४५ अध्यायः ॥

| | | |
|---|---|---|
| | क्षत्त्रियाद्वैश्यायां जातः । इत्यमरः । २ । १० । ३ ॥<br>(यथा, याज्ञवल्क्यसंहितायाम् । १ । ९२ ।<br>“वैश्याशूद्र्योस्तु राजन्यान् माहिष्योग्रौ सुतौ<br>स्मृतौ ॥”)<br>**माहेन्द्रः**, पुं, (महेन्द्रस्यायम् । महेन्द्र + अण् ।)<br>शुभदण्डविशेषः । रव्यादिसप्तवारेषु वायुवरुण-<br>यममाहेन्द्राणामेकैकदण्डा भवन्ति । तत्र वरुण- | (महेशेन कृतमित्यण् । क्ली, व्याकरणविशेषः ।<br>“यान्युज्जहार माहेशाद् व्यासो व्याकरणा-<br>र्णवात् ।<br>तानि किं पदरत्नानि सन्ति पाणिनिगोष्पदे ॥”<br>इत्युद्भटः ॥) |

**माहेश्वरी**, स्त्री, (महेश्वरस्यायम् । महेश्वर + अण् ।
ङीष् ।) यवतिक्ता । इति राजनिर्घण्टः ।
दुर्गा ॥ (यथा, महाभारते । १४ । ४३ ।
१४ ।
"भगदेवानुयातायां सर्व्वासां वामलोचना ।
माहेश्वरी महादेवी प्रीच्यते पार्व्वती हि सा
॥")
मातृ-भेदः । इति शब्दरत्नावली ॥ (यथा,
मन्त्रकोषे । ६ । ॐ ह्रीं नमो भगवति माहे-
श्वरि अन्नपूर्णे स्वाहा ।) विष्णुः । यथा, --
कन्या उचुः ॥
"कस्त्वं विभ्राजसे कान्त्या केयं वा
नवविप्रभा ।
कोन्वयं भाति वपुषा पङ्कजायतलोचनः ॥
निशम्य तासां वचनं वृषेन्द्रवरवाहनः ।
व्याजहार महायोगी भूताधिपतिरव्ययः ॥
अयं नारायणो गौरी जगन्माता सनातनः ।
विभज्य संस्थितो देवः स्वात्मानं
बहुधेश्वरः ॥
न मे विदुः परं तत्त्वं देवाद्या न महर्षयः ।
एकोऽयं देवदेवात्मा भवानी विष्णुरेव च ॥
अहं हि निष्क्रियः शान्तः केवलो
नित्यविग्रहः ।
मामेव केशवं देवमाहुर्देवीमथाम्बिकाम् ॥
एष धाता विधाता च कारणं कार्य्यमेव च ।
कर्त्ता कारयिता विष्णुर्भक्तिमुक्तिफलप्रदः
॥
भोक्ता पुमानप्रमेयः संहर्त्ता कालरूपधृक् ।
स्रष्टा धाता वासुदेवो विश्वात्मा
विश्वतोमुखः ॥
कूटस्थो ह्यवरो व्यापी योगी नारायणः
स्वयम् ।
तारकः पुरुषो ह्यात्मा केवलं परमं पदम् ॥
एषा माहेश्वरी गौरी मम शक्तिर्निरञ्जना ।
शान्ता सत्या सदानन्दा परं पदमिति शुतिः
॥
अस्याः सर्व्वमिदं जातमत्रैव लयमेष्यति ।
एषैव सर्व्वभूतानां गतीनामुत्तमा गतिः ॥"
इति कौर्म्मे १४ अध्यायः ॥

प्रोक्तान्येभिर्मितः कल्पो
युगसाहस्रपर्य्ययः ॥"
यथा च नैषधचरिते । ९ । ८ ।
"मितञ्च सारञ्च वचो हि वाग्मिता ॥")

**मितङ्गमः**, पुं, स्त्री, (मितं परिमितं गच्छतीति ।
गम + "प्रियवशेवदः खच् ।" ३ । २ ।
३८ । इत्यत्र
"खच् प्रकरणे गमेः सुप्युपसंख्यानम् ।"
इति
काशिकोक्तेः खच् । मुम् च ।) हस्ती ।
इति
सिद्धान्तकौमुदी ॥ परिमितगामिनि, त्रि ॥

**मितद्रुः**, पुं, (मितं द्रवतीति । द्रु + "हरिमितयो-
र्द्रुवः ।" उणा० १ । ३५ । इति कुः । स
च
डित् ।) समुद्रः । इति हेमचन्द्रः । ४ ।
१३९ ॥
(परिमितगतौ, त्रि । यथा, ऋग्वेदे । ४ ।
६ । ५ ।
परित्मना मितद्रुरेति होताग्निर्मन्द्रो
मधुवचा
ऋता वा ।"
"मितद्रुः परिमितगतिः सन् ।" इति
तद्भाष्ये
सायणः ॥ मितमार्गे च । यथा, अत्रैव ।
१० ।
६४ । ६ ।
"तेनो अर्वन्तोहवनश्रुतोहवं विश्वे
शृण्वन्तु
वाजिनो मितद्रवः ।"
"मितद्रवो मितमार्गाः अध्वानं
परिच्छिन्दन्तः ।"
इति तद्भाष्ये सायणः ॥")

**मितम्पचः**, त्रि, कृपणः । इत्यमरः ॥ ३ । २ । ४८
॥
(मितं परिमितं पचतीति । मित + पच् +
"मितनखे च ।" ३ । २ । ३४ । इति
खश् ।

"न कश्चित् कस्यचिन्मित्रं न कश्चित्
कस्यचि-
द्रिपुः ।
कारणादेव जायन्ते मित्राणि रिपवस्तथा ॥"
वर्ज्यमित्रं यथा, --
कुभार्य्याञ्च कुमित्रञ्च कुराजानं कुसौहृदम् ।
कुबन्धुञ्च कुदेशञ्च दूरतः परिवर्जयेत् ॥
कुमित्रे नास्ति विश्वासः कुराजे नास्ति
जीवितम् ॥
परोक्षे कार्य्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत्तादृशं मित्रं मायामयमरिन्तथा ॥"
विश्वस्तस्यैव मित्रत्वं यथा, --
"सा श्रीर्या न मदं कुर्य्यात् स सुखी
तृष्णयोज्-
झितः ।
तन्मित्रं यस्य विश्वासः पुरुषः स
जितेन्द्रियः ॥"
इति गारुडे १३ । १४ । १५ । अध्यायाः
॥ * ॥
मित्रप्रशंसादिर्यथा, --
"यस्य मित्रेण संभाषो यस्य मित्रेण
संस्थितिः ।
यस्य मित्रेण संलापस्ततो नास्तीह
पुण्यवान् ॥
यानि कानि च मित्राणि कर्त्तव्यानि शतानि
च ।
पश्य मूषिकमित्रेण कपोता मुक्तबन्धनाः ॥
परोक्षे कार्य्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥
यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य
बान्धवाः ।
यस्यार्थाः स पुमान् लोके यस्यार्थाः स हि
पण्डितः ॥
अपुत्त्रस्य गृहं शून्यं सन्मित्ररहितस्य च ।
मूर्खस्य च दिशः शून्याः सर्व्वशून्या
दरिद्रता ॥"
इति हितोपदेशः ॥

**मित्रः**, पुं, सूर्य्यः । इत्यमरः । १ । ३ । ३० ॥
(यथा, गोः रामायणे । २ । २५ । २२ ।

(पीठस्थानभेदः । इति देवीभागवते । ७ । ३० । ७२ ।
महेश्वरेण कृतम् । महेश्वर + अण् । क्ली । उपपुराणविशेषः । यथा, देवीभागवते । १ । ३ । १६ ।
"माहेश्वरं भागवतं वाशिष्ठञ्च सविस्तरम् ।
एतान्युपपुराणानि कथितानि महात्मभिः ॥"
महेश्वरसम्बन्धिनि, त्रि । यथा, मार्कण्डेये । १०९ । ७१ ।
"ब्राह्मी माहेश्वरी चैव वैष्णवी चैव ते तनुः ।
त्रिधा यस्य स्वरूपन्तु भानोर्भास्वान् प्रसीदतु ॥")

**मि** डु ञ न क्षेपे । इति कविकल्पद्रुमः ॥ (भ्वा०-उभ०-सक०-अनिट् ।) डु मित्रिमम् । ञ न मिनोति मिनुते । इति दुर्गादासः ॥

**मिच्छ**, श बाधे । इति कविकल्पद्रुमः ॥ (तुदा०-पर०-सक०-सेट् ।) श मिच्छती मिच्छन्ती । बाधो विहतिः । इति दुर्गादासः ॥

**मितः**, त्रि, (मा + क्तः "द्यतिस्यतिमास्थामित्ति किति ।" ७ । ४ । ४० । इत्याकारस्येकारादेशः ।) परिमितः । शब्दितः । क्षिप्तः । इति माधातोमिधातोश्च क्तप्रत्ययेन निष्पन्नम् ॥ (यथा, भागवते । ८ । १३ । ३६ ।
"राजंश्चतुर्द्दशैतानि त्रिकालानुगतानि ते ।
"अरुर्द्विषदजन्तस्य मुम् ।" ६ । ३ । ६३ । इति मुम् च ।) परिमितपाककर्त्ता च ॥

**मिताशनः**, त्रि, परिमितभोजी । मितमश्नाति यः इति व्युत्पत्त्या कर्त्तरि (ल्यु) अनप्रत्ययेन निष्पन्नः ॥

**मितिः**, स्त्री, (मीयते इति । मा + भावे क्तिन् ।) मानम् । विज्ञानम् । अवच्छेदः । इति शब्द-रत्नावली ॥ (यथा, कुसुमाञ्जलौ । ४६ । ४ ।
"मितिः सम्यक् परिच्छित्तिः ॥")

**मित्त्रं**, क्ली, (मिनोति मानं करोति इति ।
"अमिचिमिदिशसिभ्य क्त्रः ।" उणा० ४ । १६३ । इति क्त्रः ।) शत्रोः परम् । इत्यमरः । २ । ८ । ९ ॥ अतः शत्रोः परमवस्थितो राजा मित्त्रं उपकारित्वात् । मेद्यति स्निह्यतीति त्रासु-सिति त्रः निपातात् गुणाभावः । द्वितकारं एकतकारञ्चेत्येके । इति तट्टीकायां भरतः ॥
अपि च ।
"राजा शत्रुरिति ख्यात एकार्थाभिनिवेशतः ।
भूम्यैकान्तरितो राजा स मित्त्रं मित्त्रकार्य्यतः ॥"
इति शब्दरत्नावली ॥

**मित्रं**, क्ली, बन्धुः । मिता इति भाषा । तत्पर्य्यायः । सखा २ सुहृत् ३ । इत्यमरः । २ । ८ । १२ ॥
माययति जानाति सर्व्वं मित्रं मी कि गत्यां नाम्नीति डित्रः मित्रमजहल्लिङ्गम् । निपाता-त्तस्य द्वित्वे द्वितकारञ्च । इति तट्टीकायां
"स्वस्ति मित्रः सहादित्यैः स्वस्ति रुद्रा दिशन्तु ते ॥")
द्वादशादित्यानामन्यतमः । यथा, महाभारते । १ । ६५ । १५ ।
"धाता मित्रोऽर्य्यमा शक्रो वरुणस्त्वंश एव च ।"
मरुतामन्यतमः । यथा, हरिवंशे । १९६ । ५२ ।
"मरुत्वती मरुत्वन्तो देवानजनयत् सुतान् ।
अग्निश्चक्षुर्हविर्ज्योतिः सावित्रो मित्र एव च ॥"
वशिष्ठस्य ऊर्ज्जागर्भजातः पुत्त्रभेदः । यथा, भागवते । ४ । १ । ३७ ।
चित्रकेतुः सुरोचिश्च विरजा मित्र एव च ।
उल्वणो वसुभृद्यानो द्युमान् शक्त्यादयो-ऽपरे ॥")

**मित्रयुः**, त्रि, (मित्रं यातीति । या + "क्याच्छ-न्दसि ।" ३ । २ । १७० । इति उः ।) मित्र-वत्सलः । इति हेमचन्द्रः । ३ । १५३ ॥

**मित्रयुः**, पुं, (मित्रं यातीति । या + "मृगय्वाद-यश्च ।" उणा० १ । ३८ । इति कुः । निपाति-तश्च ।) लोकयात्रिकः । इत्युणादिकोषः । संक्षिप्तसारोणादिवृत्तिश्च ॥ (ऋषिभेदः सलोम-हर्षणशिष्यः । यथा, विष्णुपुराणे । ३ । ६ । १८ ।
"सुमतिश्चाग्निवर्च्चाश्च मित्रयुः शांशपायनः ॥)

|  |  |  |
| --- | --- | --- |
|  | भरतः ॥ तच्चतुर्व्विधम् । सहार्थः १<br>भजमानः २<br>सहजः ३ कृत्रिमः ४ । इति महाभारते<br>राज-<br>धर्म्मः ॥ * ॥ मित्रत्वोत्पत्तिर्य्यथा, -- |  |

**मित्रयुद्धं**, क्ली, (मित्रेण सह युद्धम् ।) सुहृत्-
संग्रामः । तत्पर्य्यायः । मैत्रेयिका २ । इति
त्रिकाण्डशेषः ॥

**मित्रलब्धिः**, स्त्री, पुं, (मित्रस्य लब्धिः । यद्वा ।
मित्रस्य लब्धिर्यस्मात् ।) सुहृत्-
प्राप्तिः । यथा, हितोपदेशे ।

**मित्रलाभः**, स्त्री, पुं, (मित्रस्य लब्धिः । यद्वा ।
मित्रस्य लब्धिर्यस्मात् ।) सुहृत्-
प्राप्तिः । यथा, हितोपदेशे ।
"मित्रलाभः सुहृद्भेदो विग्रहः सन्धिरेव च ॥"

**मित्रवत्सलः**, त्रि, (मित्रस्य मित्रे वा वत्सलः ।)
मित्रप्रियः । तत्पर्य्यायः । मित्रयुः २ । इति
हेमचन्द्रः ॥

**मित्रशीः**, [स्] त्रि, (मित्रं शास्ति इति ।
शास् + "शास इदङ्हलोः ।" ६ । ४ । ३४ ।
इत्यत्र "क्वौ च शास इत्वं भवतीति वक्तव्यम् ।"
इति काशिकोक्तेः क्विप् इत्वं ततो दीर्घश्च ।)
सुहृच्छास्ता । मित्रं शास्ति यः । इति मुग्ध-
बोधव्याकरणम् ॥

**मित्रसप्तमी**, स्त्री, (मित्राय मित्रजन्मने मित्रस्य
वा सप्तमीति समासः ।) मार्गशीर्षशुक्लसप्तमी ।
यथा, --
"अदितेः कश्यपाज्जज्ञे मित्रो नाम दिवाकरः ।
मार्गशीर्षस्य मासस्य शुक्ले पक्षे शुभे तिथौ ॥
सप्तम्यां तेन सा ख्याता लोकेऽस्मिन् मित्रसप्तमी
।
तत्रोपवासः कर्त्तव्यो भक्ष्याण्यथ फलानि वा ॥"
इति श्रीगोविन्दानन्दाचार्य्यकृतसंवत्सरकौमुदी-
धृतभविष्यपुराणवचनम् ॥

**मित्रा**, स्त्री, (मित्र + स्त्रियां टाप् ।) सुमित्रा ।
शत्रुघ्नजननी । इति शब्दरत्नावली ॥ (अप्सरो-
विशेषः । यथा, महाभारते । १३ । १९ । ४४ ।
"अलम्बुषा घृताची च मित्रा चित्राङ्गदा
रुचिः ॥"
पराशरशिष्यमैत्रेयजननी । यथा, श्रीमद्भाग-
"निमिः परमधर्म्मात्मा सर्व्वसत्त्ववतां
वरः ।
तस्य पुत्त्रो मिथिर्नाम जनको
मिथिपुत्त्रकः ॥")

**मिथिला**, स्त्री, (मथ्यन्ते शत्रवो यस्याम् । मथ्
+
"मिथिलादयश्च" उणा० १ । ५८ ।
इति इलच्
अकारस्येत्वं निपात्यते ।)
स्वनामख्यातनगरी ।
सा तु जनकराजपुरी । यथा । विदेहा
मिथिला
प्रोक्ता । इति हलायुधः ॥ (यथा,
महाभारते ।
१ । ११३ । २८ ।
"ततः कोषं समादाय वाहनानि च
भूरिशः ।
पाण्डुना मिथिलां गत्वा विदेहाः समरे
जिताः ॥")
अपिचास्य निरुक्त्यादिकं यथा, --
"गण्डकीतीरमारभ्य चम्पारण्यान्तकं
शिवे ! ।
विदेहभूः समाख्याता तैरभुक्ताभिधः
स तु ॥"
इति शक्तिसङ्गमतन्त्रे ७ पटलः ।
तैरभुक्ता
त्रिहुत इति ख्याता ॥ तन्नामकारणं
यथा, --
"अराजकभयं नृणां मन्यमाना महर्षयः
।
देहं ममन्थुः स्म निमेः कुमारः
समजायत ॥
जन्मना जनकः सोऽभूद्वैदेहस्तु
विदेहजः ।
मिथिलो मथनाज्जातो मिथिला येन
निर्म्मिता ॥"
इति श्रीमद्भागवते ९ स्कन्धे १३
अध्यायः ॥
अपि च ।
"दन्तसंख्यभवने झसाकृता-
वन्तभे लसदनन्तमध्यगे ।
कोमलाङ्गि ! मिथुनोदयात् प्रिये !
कालखानलकलाः प्रियेऽचलन् ॥" ५ ।
६ ।
इति कालिदासकृतरात्रिलग्ननिरूपणम् ॥

**मिथ्या**, व्य, (मथते इति । मथविलोडने । मेथते
हिनस्ति वेति । मथ वा मेथ + क्यप् ।
निपा-
तनात् साधु ।) असत्यम् । तत्पर्य्यायः ।
मृषा २
वितथः ३ अनृतम् ४ । इति
शब्दरत्नावली ॥
मिछा इति भाषा ॥ (यथा, --
"यदसद्भासमानं तन्मिथ्या
स्वाप्नगजादिवत् ।"
इति सांख्यप्रवचनभाष्यधृतम् ॥
सा चाधर्म्मपत्नी । यथा, --
"अधर्म्मपत्नी मिथ्या सा सर्व्वधूर्त्तैश्च
पूजिता ।
यया विना जगन्मुक्तमुच्छन्नं
विधिनिर्म्मितम् ॥
सत्ये चादर्शना या च त्रेतायां
सूक्ष्मरूपिणी ।
अर्द्धावयवरूपा च द्वापरे संवृता भिया ॥
कलौ महाप्रमत्ता च सर्व्वत्र व्यापिका
बलात् ।
कपटेन समं भ्रात्रा भ्रमत्येव गृहे गृहे ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे १ अध्यायः
॥
अपि च ।
"अधर्म्मस्य प्रिया रम्या मिथ्या
माज्जार-
लोचना ।
तस्याः पुत्त्रोऽतितेजस्वी दम्भः
परमकोपनः ॥
स मायायां भगिन्यान्तु लोभं पुत्त्रञ्च
कन्यकाम् ।

वते । ३ । ४ । ३५ ।
"कालिन्द्याः कतिभिः सिद्धः अहोभिर्भरतर्षभ !
।
पापद्यत स्वःसरितं यत्र मित्रासुतो मुनिः ॥")

**मिथ** ऋ ञ वधे । मेधायाम् । इति कविकल्पद्रुमः ॥

(भ्वा०-उभ०-सक०-सेट् ।) ऋ अमिमेथत् ।
ञ मेथति मेथते शास्त्रार्थं शिष्यः धारयतीत्यर्थः
।
इति दुर्गादासः ॥

**मिथः**, [स्] व्य, (मेथति इति मेथृसङ्गमे असुन् ।

पृषोदरादित्वात् ह्रस्वः ।) अन्योन्यम् । रहः ।
इत्यमरः । ३ । ४ । २५५ ॥ (यथा, मनुः । १०
। ५३ ।
"व्यवहारी मिथस्तेषां विवाहः सदृशैः सह ॥")

**मिथिः**, पुं, (मेथते हिनस्ति शत्रुकुलं इति । मिथ् +

"सर्व्वधातुभ्य इन् ।" उणा० ४ । ११७ । इति
इन् ।)
निमिराजपुत्त्रः । स तु जनकराजः । यथा ।
अपुत्त्रस्य तस्य निमेर्भूभुजः शरीरमराजक-
भीरवस्ते मुनयः अरण्यां ममन्थुः । तत्र च
कुमारी जज्ञे । जननाज्जनकसंज्ञां चासाव-
वाप । अभूद्विदेहोऽस्य पितेति वैदेहः । मथ-
नान्मिथिरभूत् । तस्योदावसुः पुत्त्रोऽभवत् ।
इति
विष्णुपुराणे ४ अंशे ५ अध्यायः ॥ (तथाच
रामायणे । १ । ७१ । ४ ।
"निमेः पुत्त्रस्तु तत्रैव मिथिर्नाम महान्
स्मृतः ।
प्रथमं भुजबलैर्येन तैरहूतस्य पार्श्वतः
।
निर्म्मितं स्वीयनाम्ना च
मिथिलापुरमुत्तमम् ॥
पुरीजननसामर्थ्यात् जनकः स च
कीर्त्तितः ॥"
इति भविष्यपुराणम् ॥

**मिथुनं**, क्ली, (मेथतीति । मिथ् + "क्षुधिपिशि

मिथः कित् ।" उणा० ३ । ५५ । इति
उनन् किद्भावाद्गुणाभावश्च ।)
स्त्रीपुंसयो-
र्युग्मम् । तत्पर्य्यायः । द्वन्द्वम् २ ।
इत्यमरः । २ ।
५ । ३८ ॥ (यथा, रामायणे । १ । २ ।
१५ ।
"मानिषाद ! प्रतिष्ठां त्वमगमः
शाश्वतीः समाः ।
यत् क्रौञ्चमिथुनादेकमवधीः
काममोहितम् ॥")
युगलम् । इति तट्टीकायां रामाश्रमः ॥
मेषादि
द्वादशराश्यन्तर्गततृतीयराशिः ।
तत्पर्य्यायः ।
जितुमः २ । तच्च द्विपदं ग्राम्यं
समसंज्ञकम् ।
अस्योदयस्य स्थूलमानं
षट्पलाधिकपञ्चदण्डाः ।
इति ज्योतिषतत्त्वम् ॥
अस्याधिष्ठातृदेवता
गदाधारिपुरुषः वीणाधारिस्त्री च ।
मृगशिरः-
शेषार्द्धं आर्द्रासमुदायः
पुनर्व्वसोस्त्रिपादं एतै-
र्भवति । तत्तु शीर्षोदयं
पश्चिमदिक्स्वामिवायु-
प्रकृतिहरिद्वर्णं वनस्थितं शूद्रवर्णं
स्निग्धं
मध्यस्त्रीसङ्गं मध्यमसन्तानञ्च । तत्र
जातो जनः
निकृतिं जनयामास तयोः क्रोधः
सुतोऽभवत् ॥"
इति कल्किपुराणे १ अध्यायः ॥
विषयभेदे मिथ्याभाषणे दोषाभावो यथा,
--
शर्म्मिष्ठोवाच ।
"न नर्म्मयुक्तं वचनं हिनस्ति
न स्त्रीषु राजन्न विवाहकाले ।
प्राणात्यये सर्व्वधनापहारे
पञ्चानृतान्याहुरपातकानि ॥"
मिथ्याकथने दोषो यथा, --
"पृष्टास्तु साक्ष्ये प्रवदन्ति येऽन्यथ
भवन्ति मिथ्यापतिता नरेन्द्र ! ।
एकार्थतायान्तु समाहितायां
मिथ्या वदन्तं ह्यनृतं हिनस्ति ॥"
ययातिरुवाच ।
"राजा प्रमाणं भूतानां स विनश्येन्मृषा
वदन् ।
अर्थकृच्छ्रमपि प्राप्य न मिथ्या
कर्त्तुमुत्सहे ॥"
इति मात्स्ये ३१ अध्यायः ॥
अथासत्याभिधानप्रायश्चित्तम् । तत्र
सकृद-
सत्यभाषणे कृष्णानुस्मरणं प्रायश्चित्तम्
। यथा,
विष्णुपुराणम् ।
"कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते
।
प्रायश्चित्तन्तु तस्यैकं कृष्णानुस्मरणं
परम् ॥"
अत्यन्ताभ्यासे विष्णुः । निन्दितेभ्यो
धनादानं
बाणिज्यं कुसीदजीवनम् । असत्यभाषणं
शूद्र-
सेवनमित्यपात्रीकरणं कृत्वा तप्तकृच्छ्रेण
शुध्यति । अतिबहुतरकालाभ्यासे मनुः ।
"सङ्करापात्रकृत्यासु मासं शोधनमैन्दवम्
।"

|  | मृगचक्षुः मिष्टभाषी कृशः वञ्चकः<br>धर्म्ममतिः<br>विनयभाजनञ्च भवति । इति<br>बृहज्जातकादयः ॥<br>अथ मिथुनलग्नजातफलम् ।<br>“मिथुनोदयसंजातो मानी<br>स्वजनवत्सलः ।<br>त्यागी भोगी धनी कामी दीर्घसूत्रोऽरि-<br>मर्द्दनः ॥”<br>इति कोष्ठीप्रदीपः ॥ * ॥<br>रात्रौ तल्लग्ननिरूपणं यथा, -- |  |
|---|---|---|

चातुर्व्वर्णवधे
साक्ष्येऽनृतभाषणेऽनुपातकत्वाभा-
वाल्लघु प्रायश्चित्तमाह याज्ञवल्क्यः ।
"वर्णिनां हि वधो यत्र तत्र साक्ष्येऽनृतं वदेत् ।
तत्पावनाय निर्व्वाप्यश्चरुः सारस्वतो द्विजैः
॥"
शूद्रे तु विष्णः । तत्पावनाय कुष्माण्डीभिर्द्विजो-
ऽग्निं जुहुयात् । शूद्रश्चैकोद्दिष्टं गोदशकस्य
ग्रासं विदध्यात् । विषयविशेषेऽपवादमाह
हारीतः । सोमविक्रयकन्याविवाहभयमैथुन-
बालकसंज्ञपनं गोब्राह्मणहितञ्च कुर्व्वन् मिथ्या
न लिप्यत इति । तथा च यमः ।
"न नर्म्मयुक्तं वचनं हिनस्ति
न स्वैरवाक्यं न च मैथुनार्थे ।
प्राणात्यये सर्व्वधनापहारे
पञ्चानृतान्याहुरपातकानि ॥"
इति प्रायश्चित्तविवेकः ॥

**मिथ्याचारः**, त्रि, (मिथ्या आचारोऽस्य ।)

कपटाचारः । दाम्भिक इत्यर्थः । इति वक्ष्य-
माणश्लोकटीकायां श्रीधरस्वामी ॥ यथा, --
"कर्म्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्
।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स
उच्यते ॥"
इति श्रीभगवद्गीतायां ३ अध्यायः ॥

**मिथ्यादृष्टिः**, स्त्री, (मिथ्या च सा दृष्टिश्चेति ।)

कर्म्मफलापवादकज्ञानम् । तत्पर्य्यायः ।
नास्ति-
कता २ । इत्यमरभरतौ । १ । ५ । ४ ॥
असत्य-
दर्शनञ्च ॥

**मिथ्याध्यवसितिः**, स्त्री, (मिथ्या असत्या च सा

अध्यवसितिश्चेति ।) मिथ्याध्यवसायः ।
अस-
त्योत्साहः । इति केचित् ॥

**मिथ्यानिरसनं**, क्ली, (मिथ्या असत्यं निरस्यते

अनेन । निर् + अस् + करणे ल्युट् ।) शपथः ।
द्विगुणा वान्यथा ब्रूयुः कूटाः स्युः पूर्ब्ब-
साक्षिणः ॥"
मिथ्यासाक्ष्यकथने दोषमाह
याशवल्क्यः ।
"ये पातककृतां लोका महापातकिनां
तथा ।
अग्निदानाञ्च ये लोका ये च
स्त्रीबालघाति-
नाम् ॥
एतान् सर्व्वानवाप्नोति यः साक्ष्यमनृतं
वदेत् ।
सुकृतं यत्त्वया किञ्चित् जन्मान्तरशतैः
कृतम् ।
तत् सर्व्वं तस्य जानीहि यं पराजयसे
मृषा ॥"
इति मिताक्षरा ॥

**मिथ्योत्तरं**, क्ली, (मिथ्या असत्यमुत्तरं ।) चतुर्धो-

त्तरान्तर्गतोत्तरविशेषः । तस्य लक्षणम् ।
"अभियुक्तोऽभियोगस्य यदि
कुर्य्यादपह्नवम् ।
मिथ्या तत्त विजानीयादुत्तरं व्यवहारतः
॥"
इति नारदः ॥
तच्चतुर्व्विधम् । मिथ्यैतत् १ अहं
नाभिजानामि
२ मम तत्र न सन्निधिः ३
तत्कालेऽहमजातः
४ । यथा, व्यासनारदौ ।
"मिथ्यैतन्नाभिजानामि मम तत्र न
सन्निधिः ।
अजातश्चास्मि तत्काले इति मिथ्या
चतु-
र्व्विधम् ॥"
इति व्यवहारतत्त्वम् ॥

**मिद** इ क स्निहि । इति कविकल्पद्रुमः ॥ (चुरा०-

पर०-अक०-सेट् ।) इ क मिन्दयति
वर्त्तिका
वशाद्वा भेदो बोद्धव्यः ॥ * ॥ अथ तेषां
चिकित्सा ।
"प्रस्थं घृतस्य पलिकैः
शिग्रुवचालवणधातकी
लोध्रैः ।
आजे पयसि विपक्वं सिद्धं सारस्वतं
नाम्ना ॥
विधिवदुपयुज्यमानं जडगद्गदमूकतां
क्षणात्
जित्वा ।
स्मृतिमतिमेधाप्रतिभाः कुर्य्यात्
संस्पष्टवाग्-
भवति ॥
सारस्वतं घृतम् ।
"सहरिद्रा वचा कुष्ठं पिप्पली
विश्वभेषजम् ।
अजाजी चाजमोदा च
यष्टीमधुकसैन्धवम् ॥
एतानि समभागानि सूक्ष्मचूर्णानि
कारयेत् ।
तच्चूर्णं सर्पिषालोड्य प्रत्यहं भक्षयेन्नरः
॥
एकविंशतिरात्रेण भवेच्छ्रुतिधरो नरः ।
मेघदुन्दुभिनिर्घोषो मत्तकोकिलनिस्वनः
॥"
इति भावप्रकाशस्य द्वितीये भागे
मध्यखण्डे
वातव्याध्यधिकारे ॥

**मिल**, श ञ श्लिषि । इति कविकल्पद्रुमः ॥ (तुदा०-

उभ०-अक०-सेट् ।) श्लिषि
सम्बन्धीभावे । श ञ
मिलति मिलते लता वृक्षेण । अयं
कुटादि-
रिति कुलचन्द्रः । तेन
व्यालनिलयमिलनेन
गरलमिव कलयति मलयसमीरम् । इति
जय-
देवः । मिलिष्यन्ति ।

इत्यमरटीकायां भरतः ॥

**मिथ्याभियोगः**, पुं, (मिथ्या असत्यमभियोगः ।)

मिथ्यावादः । शतं मे धारयसीत्यादि मिथ्यो-
द्भावनम् । तत्पर्य्यायः । अभ्याख्यानम् २ ।
इत्यमरभरतौ ॥

**मिथ्याभिशंसनं** क्ली, (मिथ्या असत्यस्य अभिशंसनं

कथनम् ।) स्वर्णस्तेयं त्वया कृतमित्यादि
मिथ्या-
दूषणं वाक्यम् । तत्पर्य्यायः । अभिशापः २ ।
इत्यमरभरतौ ॥

**मिथ्याभिशापः**, पुं, (मिथ्या अभिशापः ।)

मिथ्यापवादः । यथा, भोजराजः ।
"शुक्लपक्षे चतुर्थ्यान्तु सिंहे चन्द्रस्य दर्शनम् ।
मिथ्याभिशापं कुरुते न पश्येत्तत्र तं ततः ॥"
इति तिथ्यादितत्त्वम् ॥

**मिथ्यामतिः**, स्त्री, (मिथ्या चासौ मतिश्चेति ।)

भ्रान्तिः । इत्यमरः । १ । ५ । ४ ॥ असत्य-
बुद्धिश्च ॥

**मिथ्यासाक्षी**, [न्] त्रि, (मिथ्याभाषी साक्षी-

साक्षाद् द्रष्टा चेति ।) कूटसाक्षी । तस्य ज्ञान-
प्रकारमाह याज्ञवल्क्यः ।
"उक्तेऽपि साक्षिभिः साक्ष्ये यदन्ये गुणवत्तमाः
।

तैलेन । इति दुर्गादासः ॥

**मिद** इर् य आ स्निहि । इति कविकल्पद्रुमः ॥

(दिवा०-पर०-अक०-सेट् ।) इर्
अमिदत्
अमेदीत् । य इति व्यायामशीलोऽसौ
महा-
कायो न मेद्यतीति हलायुधः । आ मेदितं
मिन्नं तेन । इति दुर्गादासः ॥

**मिद** ऋ ञ वधमेधयोः । इति कविकल्पद्रुमः ॥

(भ्वा०-उभ०-सक०-सेट् ।) ऋ
अमिमेदत् ।
ञ मेदति मेदते शास्त्रार्थं शिष्यो
धारयती-
त्यर्थः । मिमिदुः मिमेदुः । इति दुर्गा-
दासः ॥

**मिद**, ॡ आ ञि ङ स्निहि । इति कविकल्पद्रुमः
॥

(भ्वा०-आत्म०-सक०-सेट् ।) ॡ
अमिदत् ।
ञि मिन्नोऽस्ति । ङ मेदते । इति
दुर्गादासः ॥

**मिद**, क स्निहि । इति कविकल्पद्रुमः ॥ (चुरा०-

पर०-अक०-सेट् ।) क मेदयति वर्त्तिका
तैलेन ।
इति दुर्गादासः ॥

**मिन्मिनः**, त्रि, सानुनासिकवाग्विशिष्टः । खोना

इति भाषा । तस्य निदानं यथा, --
"आवृत्य वायुः सकफो धमनीः
शब्दवाहिनीः ।
नरान् करोत्यक्रियकान्
मूकमिन्मिनगद्गदान् ॥"
इति माधवकरः ॥
अक्रियकान् इत्यत्रावचनानिति च पाठः
।
अवचनान् अत्रेषदर्थे नञ् । तेन
ईषद्वचनान् ।
स एव वायुः प्रबलश्चेत्तदा मूकान्
अवचनान् ।

"महापातकिनः पञ्च मिलितव्यं न तैः
सह ।"
इति दुर्गादासः ॥

**मिलितः**, त्रि, मिलधातोः कर्त्तरि क्तप्रत्ययेन

निष्पन्नः । श्लिष्टः । सम्बन्धषिशिष्टः ।
युक्तः ।
(यथा, देवीभागवते । १ । ११ । ८० ।
"पुनर्विवादः सञ्जातो मिलिता
देवदानवाः ।
युद्धार्थमागतास्तेषां समाजः समजायत
॥")

**मिव**, इ सेके । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) इ मिम्वति । इति
दुर्गा-
दासः ॥

**मिश**, ध्वनौ । कोपे । इति कविकल्पद्रुमः ॥
(भ्वा०-

पर०-अक०-सेट् ।) मेशति । इति
दुर्गादासः ॥

**मिशिः**, स्त्री, (मिश + इन् ।) मधुरिका । शत-

पुष्पा । इत्यमरटीकायां मरतः ॥
जटामांसी ।
इति शब्दरत्नावली ॥

**मिशी**, स्त्री, (मिशि + कृदिकारादिति पक्षे

ङीष् ।) जटामांसी । इति शब्दरत्नावली
॥
मधुरिका । इत्यमरटीकायां भरतः ॥

**मिश्र**, त् क युत्याम् । इति कविकल्पद्रुमः ॥

(चुरा०-पर०-सक०-सेट् ।)
तालव्यमध्योऽयम् ।
दन्त्यमध्य इति वर्णदेशनायाम् । युतिः
संयो-
जनम् । मिश्रयति मिश्रापयति घृतेनान्नं
लोकः । इति दुर्गादासः ॥

**मिश्रं**, क्ली, (मिश्र + बाहुलकात् रक् ।) चाणक्य-

मूलकम् । इति राजनिर्घण्टः ॥ मिश्रितम्
।

|  | मिन्मिनान् सानुनासिकान्। गद्गदान् लुप्तपद-<br>व्यञ्जनाभिधायिनः करोतीत्यन्वयः। एषां<br>समानकारणत्वेऽपि दुष्टेरुत्कर्षादिना अदृष्ट- | यथा, --<br>“केचिदाहुः क्वचिद्देशे यावत्तु दिननाडिकाः।<br>तावदेव त्वनध्यायो न तन्मिश्रे दिनान्तरे ॥”<br>इति तिथ्यादितत्त्वम्॥ |
| --- | --- | --- |

**मिश्रः**, पुं, (मिश्र + बाहुलकात् रक् ।) गजजाति-

विशेषः । यथा, --

"भद्रो मन्दो मृगो मिश्रश्चतस्रो गजजातयः ।"

इति हेमचन्द्रः । ४ । २८४ ॥

श्रेष्ठः । यथा । गौरवितास्त्वार्य्यमिश्राः । इति

भूरिप्रयोगः ॥ संयुक्ते, त्रि । यथा, --

"करम्बः कवरो मिश्रः संपृक्तः खचितः समाः ।

इति हेमचन्द्रः । ६ । १०५ ॥

उग्रादिसप्तगणान्तर्गतसप्तमगणः । स तु कृत्तिका

विशाखाभ्यां भवति । इति ज्योतिषतत्त्वम् ॥

**मिश्रकं**, क्ली, (मिश्र + कन् ।) देवोद्यानम् । इति

जटाधरः ॥ औषरलवणम् । इति राज-

निर्घण्टः ॥ (मिश्र + ण्वुल् । त्रि, मिश्रणकर्त्ता ।

यथा, मनौ । ११ । ५० ।

"पिशुनः पौतिनासिक्यं सूचकः पूतिवक्त्रताम् ।

धान्यचौरोऽङ्गहीनत्वमातिरैक्यन्तु मिश्रकः ।"

तीर्थभेदः । यथा, महाभारते । ३ । ८३ । ८२ ।

"ततो गच्छेत धर्म्मज्ञ ! मिश्रकं लोकविश्रुतम् ।

तत्र तीर्थानि राजेन्द्र ! मिश्रितानि महा-

त्मना ॥")

**मिश्रकावणं**, क्ली, (मिश्रकाणां वनम् । "वनगिर्य्योः

संज्ञायां कोटरकिंशुलकादीनाम् ।" ६ । ३ ।

११७ । अकारस्याकारः "वनं पुरगामिश्रका-

सिध्रकाशारिकाकोटराग्रेभ्यः ।" ८ । ४ । ४ ।

इति णत्वम् ।) इन्द्रस्योद्यानम् । यथा, --

"नन्दनं कन्दसारं स्यान्मिश्रकावणमित्यपि ।"

मिश्रिता चैव विज्ञेया मिश्रितर्क्षैस्तु संक्रमे ॥"

इति तिथ्यादितत्त्वम् ॥

**मिश्रेया**, स्त्री, मधुरिका । इत्यमरः । २ । ४ । १०५ ॥

मौरि इति भाषा ।

"मिश्रेया सुरसा पेया तृषाहा स्कन्दबन्धना ।"

इति शब्दचन्द्रिका च ॥ शाकविशेषः । शत-

पुष्पा । शलुफा इति भाषा । तत्पर्य्यायः ।

ताल्लपर्णी २ तालपर्णी ३ मिषिः ४ शालेया ५

शीतशिवा ६ शालीना ७ वनजा ८ अवाक्-

पुष्पी ९ मधुरिका १० छत्रा ११ संहित-

पुष्पिका १२ सुपुष्पा १३ सुरसा १४ बल्या १५ ।

अस्या गुणाः । मधुरत्वम् । स्निग्धत्वम् ।

कटुत्वम् । परमकफहरत्वम् । वातपित्तोत्थ-

दोषप्लीहजन्तुविनाशित्वञ्च। इति राजनिर्घण्टः ।

तत्पर्य्यायगुणाः ।

"शतपुष्पा शताह्वा च मधुरा कारवी मिसिः ।

अतिच्छत्रा सितच्छत्रा संहितच्छत्रिकापि च ॥

छत्रा शालेयशालिन्यौ मिश्रेया मधुरा मिषिः ।

शतपुष्पा लघुस्तीक्ष्णा पित्तकृद्दीपनी कटुः ॥

उष्णा ज्वरानिलश्वासव्रणशूलाक्षिरोगहृत् ।

मिश्रेया तद्गुणा प्रोक्ता विशेषाद्यीनिशूलनुत् ॥

अग्निमान्द्यहरी हृद्या बद्धविट्कृमिशूलहृत् ।

रूक्षोष्णा पाचनी कासवमिश्लेष्मानिलान्

**मिष्टं**, त्रि, सिक्तम् । स्पर्द्धितम् । इति मिष्धातोः

क्तप्रत्ययेन निष्पन्नम् ॥

**मिष्टः**, पुं, (मिष् + क्तः ।) मधुररसः । यथा,

"मिष्टः कटुश्च मधुरमम्लेऽम्लं पच्यते रसः ।

कटुतिक्तकषायाणां पाकः स्यात् प्रायशः कटुः ॥"

इति भावप्रकाशः ॥

"नूतनसर्षपशाकं नवौदनं पिच्छिलानि च दधीनि ।

अल्पव्ययेन सुन्दरि ! ग्राम्यजनो मिष्ट-

मश्नाति ॥"

इति छन्दोमञ्जरी च ॥

**मिष्टपाकः**, पुं, (मिष्टेन पाको यस्य ।) शर्क्करा-

रसपक्वफलादिः । मोरव्वा इति पारस्यभाषा ॥

तदेकप्रकारो यथा । अपक्वाम्रं द्विखण्डं कृत्वा

तद्गात्रे शलाकया छिद्रजालकरणान्तरं चूर्ण-

मिश्रितजले दण्डचतुष्टयं स्थापयित्वा जलेन

धौतं कुर्य्यात् । ततो जलेन सिद्धं कृत्वा जल-

त्यागपूर्ब्बकमेकतारबद्धशर्क्करारसे मग्नकरणा-

नन्तरं तापं दद्यात् । रसे घनीभूते अर्द्धदण्डं

यावत् तापेन निष्पन्नो भविष्यति । इति पाक-

राजेश्वरः ॥

**मिष्टान्नं**, क्ली, (मिष्टमन्नम् ।) मधुरद्रव्यम् । इति

हलायुधः ॥ अपि च ।

"मिष्टान्नपानदाताथ सततं श्रद्धयान्वितः ।

देवपूजापरो नित्यं न प्रेतो जायते मृतः ॥"

इत्यग्निपुराणम् ॥

**मिसिः**, स्त्री, (मस्यति परिणमतीति + इन्

इति त्रिकाण्डशेषः ॥

**मिश्रजः**, पुं, (मिश्रात् भिन्नजातीययोः सम्मेलनात्

जात इति । जन + डः ।) खेसरः । इति
राजनिर्घण्टः ॥

**मिश्रणं**, क्ली, मिश्रधातोर्भावेऽनट् (ल्युट्) प्रत्य-

येन निष्पन्नम् । संयोजनम् । एकत्रीकरणम् ।
(यथा, प्रबोधचन्द्रोदये । २ । ५ ।
"तदेतैर्वाङ्गिश्रणमपि गुरुतरदुरितोदयाय
॥")

**मिश्रपुष्पा**, स्त्री, (मिश्राणि परस्परं संश्लिष्टानि

पुष्पाण्यस्याः ।) मेथिका । इति
राजनिर्घण्टः ॥

**मिश्रवर्णं**, क्ली, (मिश्रः मिलितः वर्णोऽस्य ।)

कृष्णागुरु । इति राजनिर्घण्टः ॥ नानावर्ण-
युक्तं, त्रि ॥

**मिश्रवर्णफला**, स्त्री, (मिश्रवर्णं फलमस्याः ।)

वार्त्ताकी । इति राजनिर्घण्टः ॥

**मिश्रशब्दः**, पुं, (मिश्रः मिलितः अश्वरासभयो-

रिव शब्दोऽस्य ।) खेसरः । इति
राजनिर्घण्टः ॥

**मिश्रितं**, त्रि, (मिश्रः श्रेष्ठत्वमस्य संजातम् । मिश्र

+ इतच् । यद्वा, मिश्र + क्तः ।) गौरवितम् ।
इति जटाधरः ॥ मिलितञ्च ॥

**मिश्रिता**, स्त्री, (मिश्रित + टाप् ।) मन्दादि-

सप्तधासंक्रान्त्यन्तर्गतसंक्रान्तिविशेषः ।
यथा,
"मन्दा ध्रुवेषु विज्ञेया मृदौ मन्दाकिनी तथा ।
क्षिप्रे ध्वाङ्क्षीं विजानीयादुग्रे घोरा प्रकी-
र्त्तिता ॥
चरैर्महोदरी ज्ञेया क्रूरैरृक्षैस्तु राक्षसी ।

हरेत् ॥"
इति भावप्रकाशः ॥

**मिष** उ सेचने । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) उ मेषित्वा मिष्ट्वा ।
इति
दुर्गादासः ॥

**मिष** श स्पर्द्धे । इति कविकल्पद्रुमः ॥ (तुदा०-

पर०-सक०-सेट् ।) स्पर्द्धः
पराभिभवेच्छा । इति
वोपदेवः ॥ श मिषति बली बलवन्तम् ।
इति
दुर्गादासः ॥

**मिषं**, क्ली, (मिष् + कः ।) छलम् । इति मेदिनी ।

षे, २१ ॥ (यथा, नैषधे । १ । ११८ ।
"प्रियासु बालासु रतक्षमासु च
द्विपत्रितं पल्लवितञ्च बिभ्रतम् ।
स्मरार्जितं रागमहीरुहाङ्कुरं
मिषेण चञ्च्वाश्चरणद्वयस्य च ॥")

**मिषः**, पुं, (मिष् + कः ।) स्पर्द्धनम् । इति मेदिनी ।

षे, २१ ॥ (यथा, कथासरित्सागरे । ६४
।
१२५ ।
"इति ध्यायन् मिषं कृत्वा तदैवास्फुटया
गिरा ।
निर्गत्यैव विरक्तात्मा धनदेवान्तिकं ययौ
॥")

**मिषिः** स्त्री, (मिष् + इन् ।) जटामांसी । इति

शब्दरत्नावली ॥ मधुरिका । इति शब्द-
चन्द्रिका ॥ (यथास्य पर्य्यायः ।
"अवाक्पुष्पी च छत्रा स्यान्मङ्गल्या मधुरा
मिषिः ।"
इति वैद्यकरत्नमालायाम् ॥)
शतपुष्पा । इत्यमरटीकायां भरतः ॥

**मिषिका**, स्त्री, (मिषि + कन् + टाप् ।) जटा-

मांसी । इति शब्दरत्नावली ॥

बाहुलकादत इकारः । पक्षे ङीष् ।)
मधुरिका । (यथास्य पर्य्यायः ।

**मिसी**, स्त्री, (मस्यति परिणमतीति + इन्

बाहुलकादत इकारः । पक्षे ङीष् ।)
मधुरिका । (यथास्य पर्य्यायः ।
"मिसिर्मधुरिका मता ।"
इति गारुडे । २०८ अः ॥) जटामांसी ।
शत-
पुष्पा । इत्यमरभरतौ ॥ (शतपुष्पार्थे
पर्य्यायो
यथा, --
"शतपुष्पा शताह्वा च मधुरा कारवी मिसिः
।
अतिलम्बी सितच्छत्रा संहितच्छत्रिकापि
च ॥
छत्रा शालेयशालिन्यौ मिश्रेया मधुरा
मिषिः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)
उशीरी । इति राजनिर्घण्टः ॥ अजमोदा ।
इति मेदिनी । से, ८ ॥

**मिस्र** त् क युत्याम् । इति कविकल्पद्रुमः ॥
(चुरा०-

पर०-सक०-सेट् ।) तालव्यमध्योऽयम् ।
दन्त्य-
मध्य इति वर्णदेशनायाम् । युतिः
संयोजनम् ।
मिस्रयति मिस्रापयति घृतेनान्नं लोकः ।
इति
दुर्गादासः ॥

**मिह** औ सेचने । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-अनिट् ।) औ अमिक्षत ।
इति
दुर्गादासः ॥

**मिहिका**, स्त्री, (मेहति स्निह्यतीति । मिह +

संज्ञायां क्वुन् टाप् अत इत्वम् ।) नीहारः
।
इति शब्दरत्नावली ॥ (यथा, नैषधे । १९
। ३५ ।

| | | “विशति युवतित्यागे रात्रीमुचं मिहिकारुचम् ।<br>दिनमणिमणिं तापेचित्तान्निजाच्च यियासति ॥”) |
|---|---|---|

**मिहिरः**, पुं, (मेहयति सेचयति मेघजलेन भूमि-
मिति । मिह + "इषिमदिमुदिखिदिच्छिदि-
भिदिमन्दिचन्दितिमिमिहीति ।" उणा० १
।
५२ । इति किरच् ।) सूर्य्यः । (यथा, मार्क-
ण्डेये । १०७ । ७ ।
"भव तिमिरासवपानमदात्
भवति विलोहितविग्रहात् ।
मिहिर ! विभासि यतः सुतरां
त्रिभुवनभावनभानिकरैः ॥")
अर्कवृक्षः । इत्यमरः । १ । ३ । २९ ॥
वृद्धः ।
इति मेदिनीशब्दरत्नावल्यौ । रे, २०४ ॥
मेघः ।
इति हेमचन्द्रः । २ । ११ ॥ वायुः । चन्द्रः
।
इति नानार्थरत्नमाला ॥
विक्रमादित्यभूपस्य
नवरत्नान्तर्गतरत्नविशेषः । यथा, --
"धन्वन्तरिक्षपणकामरसिंहशङ्कु-
वेतालभट्टघटकर्पकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य ॥"
इति नवरत्नम् ॥

**मिहिराणः**, पुं, (मिहिरेणाप्यण्यतेस्तूयत इति ।
अण् + घञ् ।) शिवः । इति त्रिकाण्डशेषः
॥

**मी** ओ ग ञ वधे । इति कविकल्पद्रुमः ॥
(क्रा०-उभ०-सक०-सेट् ।) ओ मीनः । ग
ञ
मीनाति मीनीते । इति दुर्गादासः ॥

**मी** कि गत्याम् । मत्याम् । इति कविकल्पद्रुमः ॥
(चुरा०-पक्षे भ्वा०-सक०-अनिट् ।) कि
माय-
यति मयति । इति दुर्गादासः ॥

**मी** ङ य वधे । इति कविकल्पद्रुमः ॥ (दिवा०-
"मीढ्वान् सेक्ता स्तुतेर्वर्षिता ।" इति तद्भाष्ये
सायणः ॥)

**मीनः**, पुं, (मीयते इति मीञ् हिंसायाम् । "फेन-
मीनौ ।" उणा० ३ । ३ । इति नक्
निपातितश्च ।)
मत्स्यः । इत्यमरः । १ । १० । १७ ॥ (यथा,
भागवते । ३ । २ । ८ ।
"दुर्भगो वत् लोकोऽयं यदवो नितरामपि ।
ये संवसन्तो न विदुर्हरिं मीन इवोडुपम् ॥")
मेषादिद्वादशराश्यन्तर्गतान्तिमराशिः । तत्-
पर्य्यायः । अन्त्यभम् २ । स च पूर्ब्बभाद्रपदा-
शेषपादोत्तरभाद्रपदारेवतीसमुदायेन भवति ।
अस्याधिष्ठातृदेवता स्त्रीमत्स्यद्बयं स च कीट-
संज्ञः । जलजः । सौम्यः । अङ्गना । युग्मः ।
समः । द्व्यात्मकः । भक्ष्यः । उत्तरदिङ्नाथः
।
गुरुक्षेत्रम् । दिनात्मकश्च । इति
ज्योतिस्तत्त्वम् ॥
अपि च । शीर्षपृष्ठोदयः । चरणरहितः ।
कफप्रकृतिः । जलचारी । निःशब्दः । पिङ्गल-
वर्णः । स्निग्धः । अत्यन्तस्त्रीसङ्गः । बहु-
सन्तानः । ब्राह्मणवर्णः । श्लथाङ्गश्च । तत्र
जातः अतिक्रोधनः । शीघ्रगतिः । अशुचिः ।
कर्म्मभोगी । प्रचुरविवाहश्च भवति । इति
बृहज्जातकादयः ॥ अपि च ।
"मीनलग्ने समुत्पन्नो रत्नकाञ्चनपूरितः ।
अल्परोमा महाप्राज्ञो दीर्घकालपरीक्षकः ॥"
इति कोष्ठीप्रदीपः ॥ * ॥
रात्री तल्लग्ननिरूपणं यथा । सूर्पाकारतारा-
चतुष्टयात्मकपूर्ब्बाषाढानक्षत्रेमस्तकोपरि दृष्टे
सति मीनलग्नस्य १ । ४९ ऊनपञ्चाशत्पला-
धिकैकदण्डो भवति । प्रकारान्तरे । सूर्पाकृति-
ताराचतुष्टयात्मकोत्तराषाढानक्षत्रेमस्तको-
परि उदिते सति मीनलग्नस्य २ । ३६ षट्-
त्रिंशत्पलाधिकदण्डद्वयंभवति । यथा, --
"सूर्पमूर्त्तिनि शिरोगते
चतुस्तारके करिकरोरुवारिभे ।
अन्त्यभादमृतवाणि ! निर्गताः
खेचराम्बरशशाङ्कलिप्तिकाः ॥ दं १ । ४९ ।
कृष्णरूपा कालिका स्याद्रामरूपा च
तारिणी ।
वगला कूर्म्ममूर्त्तिः स्यान्मीनो
धूमावती भवेत् ॥
छिन्नमस्ता नृसिंहः स्याद्वराहश्चैव
भैरवी ।
सुन्दरी जामदग्न्यः स्याद्वामनो
भुवनेश्वरी ॥
कमला बौद्धरूपा स्यात् मातङ्गी
कल्किरूपिणी ।
स्वयं भगवती काली कृष्णस्तु
भगवान् स्वयम् ॥
स्वयञ्च भगवान् कृष्णः कालीरूपो
भवेद्व्रजे ।"
दुर्गा स्यात् कल्किरूपिणीति
पाठान्तरम् ।
इति मुण्डमालातन्त्रम् ॥

**मीनकेतनः**, पुं, (मीनः केतने अस्य ।) कन्दर्पः
।
इत्यमरः । १ । १ । २६ ॥ (यथा,
दशकुमार-
चरिते । ५ ।
"अथ मीनकेतनसेनानायकेन ।"

**मीनगोधिका**, स्त्री, (मीनगोधिकानामावासोऽत्र
।)
जलाशयः । यथा, --
'पल्वलं दीर्घिका वापी यष्टिका
मीनगोधिका ।'
इति त्रिकाण्डशेषः ॥

**मीनघाती**, [न्] पुं, (मीनं हन्तीति । हन +
णिनिः ।) वकः । इति राजनिर्घण्टः ॥
मत्स्य-
घातके, त्रि ॥

**मीननेत्रा**, स्त्री, (मीनस्य नेत्राकारा ग्रन्थि-
रस्याः ।) गण्डदूर्व्वा । इति
राजनिर्घण्टः ॥

**मीनरः**, पुं, (मीनाः भक्ष्यत्वेन सन्त्यस्य । मीन
+

आत्म०-सक० अनिट् ।) ङ य मीयते ।
इति
दुर्गादासः ॥

**मीढं**, त्रि, मूत्रितम् । इत्यमरः । ३ । १ । ९६ ॥

द्वे कृतमूत्रोत्सर्गे । मिहौ सिचि मूत्रत् क
प्रसावे आभ्यां
धात्वर्थेनोपसंग्रहादकर्म्मत्वात्
कर्त्तरि क्तः । इति भरतः ॥

**मीढष्टमः**, पुं, (मीढ्वस् तमप्प्रत्ययेन पृषोदरादि-

त्वात् साधुः ।) शिवः । यथा, --
"तदा सर्व्वाणि भूतानि ! श्रुत्वा
मीढुष्टमोदितम् ।
परितुष्टात्मभिस्तात साधु साध्वित्यथाब्रुवन्
॥"
इति श्रीमद्भागवते ४ स्कन्धे ६ अध्यायः ॥
"मीढुष्टमः शिवस्तेनोक्तम् ।" इति
तट्टीकायां
श्रीधरस्वामी ॥

**मीढ्वान्**, [स्] पुं, (मिह सेचने । "दाश्वान्

साह्वान् मीढ्वांश्च ।" ६ । १ । १२ । इति
छन्दसि क्वसुः । द्वित्वाभावः अनिट्त्वं
उपधा-
दीर्घत्वं ढत्वञ्च निपात्यते ।) शिवः । यथा, -
-
"ततो मीढ्वांसमामन्त्र्य सुनासीराः
सहर्षिभिः ।
भूयस्तद्देवयजनं समीढ्वद्वेधसो ययुः ॥"
इति श्रीमद्भागवते ४ स्कन्धे ६ अध्यायः ॥
"मीढ्वांसं शिवं मीढुषा वेधसा च वर्त्तमानाः
।"
इति तट्टीकायां श्रीधरस्वामी ॥ (वर्षितरि,
त्रि ।
यथा, ऋग्वेदे । २ । २४ । १ ।
"यथा नो मीढ्वान् स्तवते सखा तव
बृहस्पते ।"

शीर्षभाजिभचतुष्टयाङ्किते
विश्वभे तरुणि सूर्पकाकृतौ ।
भूतिरस्कृतमनोजकार्म्मुके !
यान्ति कालतिथिलिप्तिका झषात् ॥"
दं २ । ३६ ॥
इति कालिदासकृतरात्रिलग्ननिरूपणम् ॥ * ॥
भगवद्दशावतारान्तर्गतप्रथमावतारः । यथा,
"शेते स चित्तशयने मम मीन कूर्म्म-
कोलोऽभवन् नृहरिवामनजामदग्न्यः ।
योऽभूद्बभूव भरताग्रजकृष्णबुद्धः
कल्की सताञ्च भविता प्रहरिष्यतेऽरीन् ॥"
इति मुग्धबोधव्याकरणम् ॥
अस्य विवरणं मत्स्यशब्दे द्रष्टव्यम् ॥ * ॥
विशेषस्त्वत्र कथ्यते ।
"प्रकृतिर्विष्णुरूपा च पुंरूपश्च महेश्वरः ।
एवं प्रकृतिभेदेन भेदास्तु प्रकृतेर्दश ॥

"वुञ् छण्कठजिलेति ।" ४ । २ ।
८० । इति
अश्मादित्वात् रः ।) हारकः । इति
त्रिकाण्ड-
शेषः ॥ हाङ्गर इति भाषा ॥

**मीनरङ्कः**, पुं, (मीनरङ्ग । पृषोदरादित्वात्

साधुः ।) मत्स्याशनपक्षी । इति
त्रिकाण्ड-
शेषः । माछराङ्गा इति भाषा ॥
क्वचित् पुस्तके
मत्स्यरङ्ग इत्यपि पाठः ॥

**मीना**, स्त्री, उषाकन्या । सा तु कश्यपभार्य्या ।

यथा, वह्निपुराणे ।
"उषायास्तु प्रवक्ष्यामि सर्गं पञ्च
सुतास्ततः ।
मीना मेना तथा वृत्ता अनुवृत्ता तथैव
च ॥
परिवृत्ता च विज्ञेया तासाञ्च शृणुत
प्रजाः ।"

**मीनाण्डी**, स्त्री, शर्करा । इति राजनिर्घण्टः ॥

(विशेषोऽस्याः शर्कराशब्दे विधेयः ॥)

**मीनाम्रीणः**, पुं, दर्दुराम्रः । खञ्जनः । इति

मेदिनी । णे, १०५ ॥

**मीनालयः**, पुं, (मीनानामालयः ।) समुद्रः । इति

धनञ्जयः ॥

**मीनाक्षी**, स्त्री, (मीनस्याक्षिणी इव अक्षिणी

अस्याः ।) मत्स्याक्षी । गण्डदूर्व्वा ।
इति राज-
निर्घण्टः ॥ कुवेरकन्या । इति पुराणम्
॥

**मीम** ऋ शब्दे गतौ । इति कविकल्पद्रुमः ॥

(भ्वा०-शब्दे अक०-गतौ सकं पर०-
सेट् ।) ऋ
अमिमीमत् । इति दुर्गादासः ॥

**मीमांसकः**, पुं, (मीमांसामधीते वेद वेति ।

| | | |
|---|---|---|
| | | मीमांसा + “क्रमादिभ्यो वुन् ।” ४ । २ । ६१ । इति वुन् ।) मीमांसाशास्त्रवेत्ता । तत्पर्य्यायः । सिद्धान्ती २ । इति जटाधरः ॥ मीमांसा- शास्त्राध्येता च । (विषयोऽस्य यथा, - - |

"द्रव्यत्वं तमसोऽपि शोभनधियां मीमांसकानां
मतम् ।"
छायायास्तमसश्चापि सम्बन्धात्गुणकर्म्मणोः ।
द्रव्यत्वं केचिदिच्छन्ति मीमांसकमताश्रयाः ॥"
इति वैद्यकराजबल्लभकृतवादार्थदर्पणे प्रथम-
श्लोके ॥)
पूर्ब्बमीमांसासूत्रकर्त्ता जैमिनिः । वृत्तिकर्त्ता
कुमारिलभट्टः । भाष्यकर्त्ता शवरस्वामी ।
प्रभाकरः कुमारिलभट्टस्य छात्रः । स एव
गुरुत्वेन भण्यते । तन्मतं गुरुमतम् तच्छिष्याः
प्राभाकराः । अतएव स्मार्त्तभट्टाचार्य्येण प्राभा-
करैरभिहितमित्युक्तम् । उत्तरमीमांसासूत्र-
कर्त्ता वेदव्यासः । तस्य भाष्यकर्त्ता शङ्करा-
चार्य्यः । स च अद्वैतवादी । रामानुजः विशिष्टा-
द्वैतवादी । माध्वः द्वैतवादी च ॥ (यथा,
भक्तिरसामृतसिन्धौ । १ । १ । ३ ।
"मीमांसको बडवाग्नेः कठिनामपि
कुण्ठयन्नसौ जिह्वाम् ॥")

**मीमांसा**, स्त्री, (मानविचारे + "मान् बधदान्
शानभ्यो दीर्घश्चाभ्यासस्य ।" ३ । १
। ६ । इति सन् ।
अः टाप् । अभ्यासस्येकारस्य दीर्घश्च ।) षड्-
दर्शनान्तर्गतदर्शनशास्त्रविशेषः । तत्पर्य्यायः ।

१० । एकादशे बहूनामाग्नेयादीनां प्रधानानां
सकृदनुष्ठितेन प्रयाजाद्यङ्गेनोपकार इत्यादि
तन्त्रम् । ११ । द्वादशे प्रधानस्य पशोरुपकाराय
अनुष्ठितेन प्रयाजाद्यङ्गेन पश्वङ्गपुरोडाशेऽप्युप-
कार इत्यादिप्रसङ्गः । १२ ॥ (एतदध्यायप्रति-
पाद्यार्थानां विवरणं यथा, --

'प्रथमाध्यायस्य प्रथमे पादे विधिरूपं मान-
मीरितम् । द्वितीयेऽर्थवादरूपम् अर्थवादो
मन्त्रस्याप्युपलक्षकः । तृतीये स्मृतिरूपम् ।
स्मृतिराचारमप्युपलक्षयति । चतुर्थे उद्भिच्चित्रा-
दिनामरूपम् । द्वितीयाध्यायस्य प्रथमे पादे
आख्यातमेवापूर्ब्बबोधकम् । अपूर्ब्बसद्भाव
इत्यादिकः कर्म्मभेदचिन्तोपयुक्त उपोद्घातो
वर्णितः । द्वितीये धातुभेदपुनरुक्त्यादिभिः
कर्म्मभेदः । तृतीये रथन्तरादीनां कर्म्मभेद-
प्रामाण्यापवादः । चतुर्थे नित्यकाम्ययोः प्रयो-
गयोर्भेदः ।

तृतीयाध्यायस्य प्रथमे पादे शेषत्वबोधकानां
श्रुतिलिङ्गादीनां मध्ये श्रुतिर्विचारिता । द्वितीये
लिङ्गम् । तृतीये वाक्यप्रकरणादि । चतुर्थे
निवीतोपवीतादिष्वर्थवादत्वविधित्वादिनिर्णय-
हेतुः श्रुत्यादेः परस्परविरोधसदसद्भावः । पञ्चमे
प्रतिपत्तिकर्म्माणि । षष्ठेऽनारभ्याधीतानि ।
सप्तमे बहुप्रधानोपकारकप्रयाजादीनि । अष्टमे
याजमानानि ।

चतुर्थाध्यायस्य प्रथमे पादे प्रधानभूतामिक्षा-
दध्यानयनस्य प्रयोजिकेत्यादि प्रधानप्रयोक्तृत्वं
विचारितम् । द्वितीये त्वप्रधानं वत्सापकरणं
शाखाच्छेदे प्रयोजकमित्याद्यप्रधानप्रयोक्तृत्वम् ।
तृतीये जुहूपर्णमयीत्वादेरपापश्लोकश्रवणादि-
फलभावाभावचिन्ता । चतुर्थे राजसूयगत-

द्वादशदीक्ष्या इत्यादि निरूपितम् । षष्ठे
सत्राधिकारिणस्तुल्यकल्पाएव सत्रं विप्रस्यै-
वेत्येवमादिकं चिन्तितम् । सप्तमे पित्रादिकं
न देयम् । महाभूमिर्न देयेत्येवमादिदेय-
विचारः । अष्टमे लौकिकाग्नावुपनयन-होमः ।
स्थपतीष्टिस्तत्रैवेत्येवमाद्यग्निविचारः कृतः ।

सप्तमाध्यायस्य प्रथमे पादे समानमितरच्छ्येने-
नेत्यादिप्रत्यक्षवचनातिदेशः । द्वितीये पूर्ब्बो-
क्तातिदेशस्य शेषो विचारितः । तृतीयेऽग्नि-
होत्रनाम्नातिदेशः । चतुर्थे निर्व्वापौषधद्रव्यादि-
लिङ्गातिदेशः ।

अष्टमाध्यायस्य प्रथमे पादे स्पष्टेन लिङ्गे-
नातिदेशविशेषः । तद्यथा सौर्य्यचरावति-
देशकानि निर्व्वापस्तद्धितेन देवतानिर्द्देश एक-
देवतात्वमौषधद्रव्यकत्वमित्यादीनि स्पष्टान्याग्नेय-
लिङ्गानि । द्वितीये त्वस्पष्टैर्लिङ्गैरतिदेशः । तद्-
यथा वाजिने हविःसामान्येन लिङ्गेन पयो-
विध्यन्तोऽतिदिश्यते तत्र लिङ्गमस्पष्टम् । शीघ्रं
तद्बुद्ध्यनुत्पादनात् । तृतीये प्रबलेन लिङ्गे-
नातिदेशः । तद्यथा । आभिचारिकेष्टा-

विचारणा २ । इति हेमचन्द्रः । २ । १६५ ॥ अस्या
अध्याया विंशतिः । तत्र पर्ब्बमीमांसा द्वादशा-
ध्यायात्मिका जैमिनिप्रणीता यज्ञादिकर्म्मकाण्ड-
निरूपिका । अस्या अन्तर्गतानि लोकव्यव-
हारनियमार्थं मनुयाज्ञवल्क्यादिभिः बहूनि
धर्म्मशास्त्राणि कृतानि । तत्रोत्तरमीमांसा
चतुरध्यायात्मिका वेदव्यासप्रणीता ब्रह्मनिरू-
पिका । अस्या नाम वेदान्तः । अपराध्याय-
चतुष्टयं सङ्कर्षणप्रणीतं उपासनाकाण्डं षड्-
दर्शनबहिर्भूतम् ॥ * ॥ प्रमाणादयः प्रसङ्गान्ता
द्वादश पदार्थाः क्रमात् द्वादशानामध्यायानां
विषयाः । प्रथमेऽध्याये विध्यर्थवादादिरूपं
धर्म्मे प्रमाणं निरूपितम् । १ । द्वितीये याग-
दानादिकर्म्मभेदः । २ । तृतीये प्रयाजादीनां
दर्शपूर्णमासार्थकत्वेन तच्छेषत्वम् । ३ । चतुर्थे
गोदोहनस्य पुरुषार्थत्वप्रयुक्त्या अनुष्ठानं न तु
क्रत्वर्थत्वप्रयुक्त्येत्येवमादयः । ४ । पञ्चमे क्रम-
नियतिविधेयत्वादयः । ५ । षष्ठे कर्त्तुरधिकारो
नान्धादेरित्यादयः । ६ । सप्तमे समानमितर-
च्छयेनेन इत्यादि प्रत्यक्षवचनेनाग्निहोत्रादि-
जघन्याङ्गाक्षद्यूतादिचिन्ता।
पञ्चमाध्यायस्य प्रथमे पादे श्रुत्यर्थपाठादिभिः
क्रमो निरूपितः । द्वितीये वाजपेयगतेषु
सप्तदशसु पशुष्वेकैकधर्म्मसमापनमित्यादिक्रम-
विशेषः । तृतीये पञ्चप्रयाजादीनामावर्त्तनैः-
कादश्यमित्यादिवृद्धिः । अदम्यग्रहचित्रिण्यो-
रनावृत्तिरित्यादि वृद्ध्यभावः । चतुर्थे क्रमनि-
यामकानां श्रुत्यर्थपाठादीनां प्रबलदुर्ब्बलभावः ।

षष्ठाध्यायस्य प्रथमे पादे कर्म्माधिकारः ।

कर्त्तुरस्त्यन्धादेर्नास्ति स्त्रिया अस्ति । योऽस्ति
स च पत्या सहेत्येवमादिनाधिकारी निरूपितः ।
द्वितीये सत्राधिकारिणां प्रत्येकं कृत्स्नं फलम् ।
दर्शपौर्णमासयोः कर्त्रैक्यनियमः काम्यकर्म्म-
समापनीयमित्येवमादयोऽधिकारिधर्म्मा उक्ताः
तृतीये द्रव्यस्य प्रतिनिधिरस्ति । देवादीना-
मग्न्यादीनामधिकारिणाञ्चस नास्तीत्यादि-
निरूपणम् । चतुर्थे पदार्थलोपनं विचारितम् ।
अवत्तनाशे सत्याज्येन यजेत् । इडाद्यर्थनाशे
सति शेषान्नग्राह्यमित्यादिकम् । पञ्चमे कालाप-
राधेन चन्द्रोदये सत्यभ्युदयेष्टिः प्रायश्चित्तम् ।
ज्योतिष्टोमस्यैकादयोदीक्ष्याः । द्वादशाहस्य
वाग्नावैष्णवसारस्वतबार्हस्पत्येषु हविःषु त्रित्वेन
लिङ्गेन यथाक्रममाग्नेयादिविध्यन्तेप्राप्ते द्विदे-
वत्यत्वेन लिङ्गेन प्रथम आग्नावैष्णवे तृतीय-
स्याग्नीषोमीयस्य विध्यन्तोऽतिदिष्टः । प्रबलञ्च
द्विदेवत्यत्वम् । शब्दोच्चारणमात्रेण सहसा
प्रतिभासात् । क्रमस्तु विलम्बितप्रतीत्या दुर्ब्बलः ।
चतुर्थे दर्व्विहोमेष्वतिदेशोऽपोह्यते ।

नवमाध्यायस्य प्रथमे पादे उपोद्धातपूर्ब्बक-

मूहविचारप्रारम्भः । तत्र प्रयाजादयो धर्म्मा
अपूर्ब्बप्रयुक्ताः । अवघातमन्त्रादिष्वविवक्षितं
ब्रीह्यग्न्यादिस्वरूपं साधनविशेषत्वमात्रं विव-
क्षितमित्यादिरूपोपोद्धातः। सवित्रश्विपूष-
शब्दानां विकृतिषु नास्त्यूहः । अग्निशब्दस्या-
स्त्यूह इत्यादि ऊहविचारारम्भः । द्वितीये
सपरिकरः सामोहः । तृतीये मन्त्रोहः ।
चतुर्थे मन्त्रोहप्रसङ्गापतितो विचारः ।
दशमाध्यायस्य प्रथमे पादे बाधहेतुर्द्वारलोपो
निरूपितः । तद्यथा स्वयं कृता वेदिर्भवतीत्यत्र
वेदिनिष्पादनरूपस्य द्वारस्य लोपेन निष्पाद-
कानामुद्धननादीनां बाधः । कृष्णलेषु वितुषी-
करणरूपस्य द्वारस्य लोपेनावघातस्य बाधः ।

| | | |
|---|---|---|
| नाम्नानुमितवचनेन च सामान्यतोऽतिदेशः । ७ । अष्टमे सौर्य्यं चरुं निर्ब्बपेदित्यत्र निर्व्वापस्तद्धि- तेन देवतानिर्द्देशः एकदैवतत्त्वमौषधद्रव्यकत्व- मित्यादिना लिङ्गेनाग्नेयपुरोडाशेतिकर्त्तव्यता- नान्यस्येत्येवमादिविशेषातिदेशः । ८ । नवमे प्रकृतावग्नये युष्टं निर्व्वपामीति पठिते मन्त्रे विकृतौ सौर्य्यचरावग्निपदपरित्यागेन सूर्य्यपद- प्रक्षेपेण सूर्य्याय युष्टं निर्व्वपामीत्येवमादिरूहः । ९ । दशमे कृष्णलेषु चोदकप्राप्तस्यावघातस्य वितुषीकरणासम्भवेन लोप इत्येवमादिर्व्वाधः । | | द्वितीये संक्षेपेणोक्तस्य द्वारलोपस्य बहुभि- रुदाहरणैर्व्विस्तारः । तृतीये बाधकारणं कार्य्यैकत्वम् । तद्यथा प्रकृतौ गवाश्वादिदक्षि- णायाः ऋत्विक्परिक्रयः कार्य्यम् । तथा विकृतिरूपे भूनाम्न्येकाहे धेनुरूपाया दक्षि- णायास्तदेव कार्य्यम् ततो धेन्वा गवाश्वादि- दक्षिणाविकृतौ चोदकप्राप्ता बाध्यते । चतुर्थे नक्षत्रेष्टिविहिता उपहोमाश्चोदकप्राप्तैर्नारिष्ट- होमैः सह समुच्चीयन्ते इत्यादिः समुच्चयः । पञ्चमे षोडशिग्रहः प्रकृतिगामी । स चाग्रयण- |

पात्रादेव ग्रहीतव्य
इत्यादिवाधप्रसङ्गागतो
ग्रहादिविचारः । षष्ठे सामतृचे
गेयमित्यादि-
बाधप्रसङ्गागतः सामविचारः । सप्तमे
पशव-
ङ्गेषु हविर्भेदः ।
गृहमेधीयमपूर्ब्बकर्म्मेत्यादि-
बाधप्रसङ्गागतः प्रकीर्णविचारः ।
अष्टमेनानु-
याजेष्वितिपर्य्युदासो न सोम
इत्यर्थवादो नाति-
रात्र इति प्रतिषेध इत्यादिर्बाधोपयुक्तो
नञर्थ-
विचारः ।

एकादशाध्यायस्य प्रथमे पादे
तन्त्रस्योपोद्-

धातो वर्णितः । द्बितीये तन्त्रावापौ
संक्षेपे-
णोक्तौ । तृतीये तन्त्रमुदाहरणबाहुल्येन
प्रप-
ञ्चितम् । चतुर्थे तथैवावापः प्रपञ्चितः ।

द्बादशाध्यायस्य प्रथमे पादे
पशुधर्म्माणां पशु-

पुरोडाशे प्रसङ्गः ।
सौमिकबेदेरुत्तरकालीन-
कर्म्मसु प्रसङ्ग इत्यादि विचारः ।
द्बितीये
सवनीयपशोस्तन्त्रित्वम् । न तु
सवनीयपुरो-
डाशानाम् । विकृतिस्तन्त्रिणी न
प्रकृतिः ।
अन्वारम्भणीया विकृतिष्वपि स्यात् ।
न तु
प्रकृतावेवेत्यादिविचारः । तृतीये
त्वग्वाससोः

भगवन्नामधेयास्तु द्बिजा वेदान्तदर्शने ।
विप्रगेहभुजस्त्यक्तोपवीता ब्रह्मवादिनः ॥
चत्वारो भगवद्भेदाः कुटीचरबहूदकौ ।
हंसः परमहंसश्चाधिकोमीषु परः परः ॥”
इति जिनदत्तकृतविवेकविलासः । सर्व्वदर्शन-
संग्रहधृत जैमिनिमतसंग्रहो यथा । अथातो
धर्म्मजिज्ञासा इति प्रथमाधिककरणसूत्रम् ।
तच्चाधिकरणं पञ्चावयवमाचक्षते परीक्षकाः ।
अस्मिन् सूत्रे स्वाध्यायोऽध्येतव्य इतिश्रुति-
वाक्यमाश्रित्य विषयसंशयपूर्ब्बपक्षसिद्धान्त-
निर्णयरूपपञ्चाङ्गात्मकाधिकरणेन मीमांसा-
शास्त्रारम्भस्यावश्यकताप्रदर्शिता । मीमांसा
हि वेदविचारशास्त्रं तदारम्भो निष्प्रयो-
जनः स्वाध्यायोऽध्येतव्य इतिश्रुत्या वेदा-
ध्ययनं विहितं तत्र विश्वजिन्न्यायात् स्वर्गरूपं
फलमक्षरग्रहणमात्रेणापि सम्भवति न तत्रार्थ-
बोधापेक्षाप्यस्ति असत्याञ्च वेदार्थबोधापेक्षयां
तदधीनायाः विचारणाया अपि अनावश्यक-
त्वात् अथवा यागादिकर्म्मावबोधाय स्वाध्यायो-
ऽध्येतव्यः तस्य चार्थबोधरूपं दृष्टमेवफलं ततश्च
दृष्टार्थत्वेन तस्य वैधत्वाभावात् वेदार्थविचार-
स्यापि तदेकप्रयोजनस्य वैधत्वं नास्तीति तद्बि-
चारशास्त्रमनारम्भणीयम् । स्वाध्यायाध्ययना-
नन्तरं विचारशास्त्रेऽध्येत्तव्यतया स्वीकृते वेद-
मधीत्य स्नायादितिविधिबोधितंवेदाध्ययनसमा-
वर्त्तनयोरानन्तर्य्यं बाध्येत तस्मान्नविचारशास्त्र-
मारम्भणीयमितिपूर्ब्बपक्षमुद्भाव्य अध्ययनस्य
दृष्ट-
फलकत्वेपि अध्येतव्य इत्यत्र तव्यप्रत्ययेन
भावना-
प्रतिपादनात् अर्थबोधस्य तत्र भाव्यत्वेनान्वया-
दध्ययनविधेरवघातादिविधिवन्नियमापूर्ब्बार्थत्वं ।
तथाच यथा दर्शपौर्णमासजन्यं परमापूर्ब्बमव-
घातादिजन्यमवान्तरापूर्ब्बं कल्पयति तथा
समस्तक्रतुजन्यमपूर्ब्बजातं क्रतुज्ञानसाधनाध्य
यननियमजन्यमपूर्ब्बं कल्पयिष्यति । अन्यथा
अध्ययनविधेर्वैफल्यं स्यात् । अर्थबोधरूपदृष्ट-
फलस्य सम्भवे विश्वजिन्न्यायान्न
स्वर्गफलकल्पना

जन्यत्वे सति तदतिरिक्तहेत्वजन्यत्वं
प्रमायाः
स्वतस्त्वमिति ॥

**मीरः**, पुं, (मिन्वन्ति प्रक्षिपन्ति नद्यो जलान्यत्रेति ।

मिञ् + “शुसिचिमिञां दीर्घश्च ।”
उणा० २ ।
२५ । इति क्रन् दीर्घत्वञ्च ।) समुद्रः ।
इत्यु-
णादिकोषः ॥ पर्ब्बतैकदेशः । सीमा ।
पानी-
यम् । इति संक्षिप्तसारोणादिवृत्तिः ॥

**मील**, ऋ निमेषे । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-अक०-सेट् ।) ऋ अमिमीलत्
अमी-
मिलत् । मीलति चक्षुः पक्ष्मभिरावृतं
स्यादि-
त्यर्थः । इति दुर्गादासः ॥

**मीलं**, क्ली, (मीलतीति । मील + कः ।) वनम् ।

इति केचित् ॥

**मीलनं**, क्ली, पक्ष्मभिरावरणम् । मीलधातोभावे-

ऽनट् (ल्युट्) प्रत्ययेन निष्पन्नम् ॥

**मीलितं**, त्रि, (मील + क्तः ।) अप्रफुल्लम् ।

तत्पर्य्यायः । सङ्कुचितम् २ निद्राणम्
३ मुद्रि-
तम् ४ । इति हेमचन्द्रः ॥
(अलङ्कारविशेषः ।
यथा, साहित्यदर्पणे । १० । ११५ ।
(“मीलितं वस्तुनो गुप्तिः केनचित्
तुल्य-
लक्ष्मणा ।”)

**मीव**, पीवे । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-अक०-सेट् ।) मीवति । पीवः
स्थूली-

समुच्चयः ।
आधारगतानामृजुत्वसन्ततत्त्वा
दीनां समुच्चय इत्यादिकं प्राधान्येन ।
यव-
ब्रीह्योर्व्विकल्प इत्यादिकं
समुच्चयापवादत्वेने-
त्युभयं चिन्तितम् । चतुर्थे
चैन्द्राबार्हस्पत्य-
याज्यानुवाक्ययुग्मलयोर्व्विकल्प
इत्यादिकं प्राधा-
न्येन । याज्यानुवाक्ययोः समुच्चय
इत्यादिकं
विकल्पापवादत्वेनेत्युभयं चिन्तितम् ।
तदेवं द्वाद-
शाध्यायगतेषु षष्टिसंख्यकेषु पादेषु
प्रति-
पाद्या अर्थाः संगृहीताः ।”
इत्यधिकरणमाला ॥
उत्तरमीमांसाध्यायपादपतिपाद्यार्था
यथा, --
“शास्त्रं ब्रह्मविचाराख्यमध्यायाः
स्युश्चतुर्व्विधाः ।
समन्वगाविरोधौ द्वौ साधनञ्चफलन्तथा
॥
समन्वये
स्पष्टलिङ्गमस्पष्टत्वेप्युपास्यगम् ।
ज्ञेयगं पदमात्रञ्च चिन्त्यं पादेष्वनुक्रमात्
॥
द्बितीये
स्मृतितर्काभ्यामविरोधोऽन्यदुष्टता ।
भूतभोक्तृश्रुते र्लिङ्गश्रुतेरप्यविरुद्धता ॥
तृतीये विरतिस्तत्त्वं पदार्थपरिशोधनम्
।
गुणोपसंहृतिज्ञांनेबहिरङ्गादि साधनम् ॥
चतुर्थे जीवतो
मुक्तिरुत्क्रान्तिर्गतिरुत्तरा ।
ब्रह्मप्राप्तिब्रह्मलोकाविति
पाणदार्थसंग्रहः ॥”
इति व्यासाधिकरणमाला ॥
मीमांसाद्वयमत-
संग्रहो यथा, --
इति सिद्धान्तितम् । यथा यागे यवादेर्नखादि
नापि वितुषीकरणसम्भवे अवघातविधिना अव-
घातो नियम्यते तथा अध्ययनविधिना अध्ययनं
नियम्यते । तथाच अध्ययनेन च वेदार्थे परि-
ज्ञाते तत्र संशये तन्निर्णयार्थं विचारशास्त्र-
मवश्यमपेक्षितव्यमिति विचारशास्त्रमारम्भ-
णीयमेवेति प्रथमाधिकरणनिष्कर्षः एवंरीत्या
अधिकरणसहस्रात्मकंकर्म्ममीमांसाशास्त्रं
जैमिनिना प्रणीतम् । अस्मिन् शास्त्रे वेदस्या-
पौरुषेयत्वम् । वर्णानां ककारादीनां नित्यत्वं
तत्र सोऽयं क इत्यादिप्रत्यभिज्ञैव प्रमाणं कण्ठ-
ताल्वाद्यभिघात एव तदभिव्यञ्जकः । ततश्च
वेदस्यापौरुषेयतया निरस्तसमस्तशङ्काकलङ्का-
ङ्कुरत्वेन स्वतः सिद्धं धर्म्मे प्रामाण्यमिति सुस्थि-
तम् ।
प्रमाज्ञानस्य स्वत प्रामाण्यम् । विज्ञानसामग्री-

भावः । इति दुर्गादासः ॥

**मीवरः**, त्रि, (मीनाति हिनस्तीति । मीञ् +
“छित्वरच्छत्वरधीवरपीवरमीवर्चेति ।” उणा०
३ । १ । इति ष्वरच् निपातितश्च ।
अत्रो-
ज्वलेन तु माधातोः ष्वरच्
निपातितश्चेत्युच्यते
स्म ।) हिंस्रः । इत्युणादिकोषः ॥
(मीयते इति ।
मा + ष्वरच् । निपातितः ।) सेनानी ।
पूज्यः ।
इति संक्षिप्तसारोणादिवृत्तिः ॥

**मीवा**, स्त्री, (मीनाति हिनस्तीति । मी +
“शेवायह्व
जिह्वाग्रीवाप्वामीवाः ।” उणा० १ ।
१५४ ।
इति वन् निपात्यते च ।) उदरकृमिः ।
इत्यु-
णादिकोषः ॥ वायुः । इति
सिद्धान्तकौसुद्या-
मुणादिवृत्तिः ॥ शीकरः । सारः । इति
संक्षिप्त-
सारोणादिवृत्तिः ॥

**मुः**, पुं, (मव् + बाहुलकात् डुन् । टिलोपश्च ।)
बन्धनम् । इत्येकाक्षरकोषः ॥ महेशः ।
इति
हड्डचन्द्रः ॥

**मुकुन्दकः**, पुं, पलाण्डुः । केचित्तु
सुकन्दकस्थाने
मुकन्दक इति पठित्वा जवनानां मुदं
हर्षं
प्रायेण कन्दति आह्वयति कदि आह्वाने
रोदने
च णकः पृषोदरादित्वात् दलुक्
मुकन्दक इति
व्याचक्षते । इत्यमरटीकायां भरतः ॥

**मुकुः**, पुं, (मुच् + बाहुलकात् कुः । पृषोदरादि-
त्वात् साधुः ।) मुक्तिः । यथा, --

| | | |
|---|---|---|
| अथ मैमांसकम् ।<br>“मीमांसको द्विधा कर्म्मब्रह्ममीमांसकः स्मृतः ।<br>वेदान्ती मन्यते ब्रह्म कर्म्म भट्टप्रभाकरौ ॥<br>प्रत्यक्षमनुमानञ्च वेदाश्चोपमया सह ।<br>अर्थापत्तिरभावश्च भट्टानां षट्प्रमाण्यऽसौ ॥<br>प्रभाकरमते पञ्चैतान्यभावस्य वर्ज्जनात् ।<br>अद्वैतवादी वेदान्ती प्रमाणन्तु यथातथा ॥<br>सर्व्वमेतदिदं ब्रह्म वेदान्तेऽद्वैतवादिनाम् ।<br>आत्मन्येव लयो मुक्तिर्वैदान्तिकमते मता ॥<br>अकुकर्म्मा सषट्कर्म्मा शूद्रान्नादिविवर्ज्जकः ।<br>ब्रह्मसूत्री द्विजो भट्टो गृहस्थाश्रमसंस्थितः ॥ | | “मुकुर्मुक्तौ महेशे मुः कुः पृथिव्यामशोभने ।”<br>इति दुर्गादासधृतहड्डचन्द्रः ॥<br>**मुकुटं**, क्ली, (मङ्कते मण्डयति । मकि + उटन् नलीपश्चेति न्यासः ।) स्वनामख्यातशिरोभूषणम् । तत्पर्य्यायः । किरीटम् २ । इत्यमरः । |

२ । ६ । १०२ ॥ मौलिः ३ कोटीरम् ४ उष्णी-
षम् ५ । इति हेमचन्द्रः । ३ । ३१४ ॥ मकुटम् ६
मौलीकः ७ शेखरम् ८ अवतंसः ९ वतंसः १०
उत्तंसः ११ उष्णीषकम् १२ कौटीरकम् १३ । इति
शब्दरत्नावली ॥ (यथा, हरिवंशे । ८६ । ७७ ।
"मुकुटश्चापतत्तस्य काञ्चनो वज्रभूषितः ।"
तथा च महाभारते । १ । ३० । ३८ ।
"रजांसि मुकुटान्येषा मुत्थितानि व्यधर्षयन् ।"
टाप् । स्त्री, मातृगणविशेषः । यथात्रैव । ९ ।
४६ । २३ ।
"कालेहिका वामनिका मुकुटा चैव भारत ! ॥")

**मुकुटी**, स्त्री, अङ्गुलिमोटनम् । इति शब्दरत्नावली ॥

**मुकुन्दः**, पुं, विष्णुः । तस्य व्युत्पत्तिर्यथा, --
"मुकुमव्ययमान्तञ्च निर्व्वाणमोक्षवाचकम् ।
तद्ददाति च यो देवो मुकुन्दस्तेन कीर्त्तितः ॥
मुकुं भक्तिरसप्रेमवचनं वेदसम्मतम् ।
यस्तद्ददाति विप्रेभ्यो मुकुन्दस्तेन कीर्त्तितः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ११० अध्यायः ॥
निधिविशेषः । (यथा, मार्कण्डेये । ६८ । ५ ।
"यत्र पद्ममहापद्मौ तथा मकरकच्छपौ ।
मुकुन्दो नन्दकश्चैव नीलः शङ्खोऽष्टमो निधिः ॥"
अस्य गुणादिकं निधिशब्दे उक्तम् ।)
रत्नभेदः ।
वकुलद्रुमः । कुलालदण्डः । इति मेदिनी । रे,
२०३ ॥ मल्लिकापुष्पवृक्षः । इति विश्वः ॥ (यथा,
मुकुरकुसुमभृङ्गानातपत्रं ध्वजं वा
दधिफलमथ नौकामन्नताम्बूलवस्त्रम् ।
कमलकलसशङ्खं भूषणं काञ्चनं वा
भवति सकलसिद्ध्यै श्रेयसे रोगिणाञ्च ॥"
इति हारीते द्वितीयस्थाने द्वितीयेऽध्याये ॥)
कुलवृक्षः । इति शब्दरत्नावली ॥ कोरकः ।
इति हेमचन्द्रः ॥

**मुकुलः**, पुं, क्ली, (मुञ्चति कलिकात्वम् । मुच् +
घुलक् । इति भरतः ॥ मुचेरलः । कत्वमुत्वञ्चेति
कत्वे अकारस्योत्वे मुकुल इति रायः ।) ईषद्-
विकसितकलिका । तत्पर्य्यायः । कुट्मलः २ ।
इत्यमरः । २ । ४ । १६ ॥ (यथा, रघौ । ९ । ३१ ।
उपहितं शिशिरापगमश्रिया
मुकुलजालमशोभत किंशुके ।")
मकुलः ३ पौटकोरकः ४ । इति शब्दरत्नावली ॥
शरीरम् । आत्मा । इति धरणिः ॥ (राज-
पुरुषविशेषः । यथा, राजतरङ्गिण्याम् । ६ । २५३ ।
"इत्थं लब्धजया राज्ञी तत्क्षणान्न्यग्रहीद्रुषा ।
यशोधरं शुभधरं मुकुलञ्च सबान्धवम् ॥")

**मुकुष्टः**, पुं, वनमुद्गः । तत्पर्य्यायः । मपष्टः २ । इति
रत्नमाला ॥ अस्य गुणाः । शीतलत्वम् । ग्राहि-
त्वम् । कफपित्तज्वरनाशित्वञ्च । इति राज-
वल्लभः ॥

**मुक्तः**, त्रि, (मुच् + क्तः ।) प्राप्तमोक्षः । मोचितः ।
इति मेदिनी । ते, ४४ ॥ नन्दितः । इति शब्द-
रत्नावली ॥ (नृपविशेषः । यथा, राजतरङ्गि-
ण्याम् । ७ । १६३५ ।
"सूदश्चम्पकभृत्यस्य जेलकाख्यस्य तत्क्षणम् ।
मुक्तो नामान्तिकं प्राप्तो नृपतेराप्ततामगात् ॥"
ऋषिविशेषः । यथा, मार्कण्डेये । १०० । ३१ ।
"अग्नीध्रश्चाग्निबाहुश्च शुचिर्मुक्तोऽथ माधवः ।
शुक्रोऽजितश्च सप्तैते तदा सप्तर्षयः स्मृताः ॥")

**मुक्तकं**, क्ली, (मुच्यते स्मेति । मुच् + क्तः । संज्ञायां
कन् ।) क्षेपणीयास्त्रम् । इति केचित् ॥ (काव्य-
विशेषः । यथा, साहित्यदर्पणे । ६ । २९५ ।
"वृत्तगन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च ॥")

**मुक्तकञ्चुकः**, पुं, (कञ्चुक इव कञ्चुकः मुक्तः
कञ्चुको येन ।) अचिरत्यक्तत्वक्सर्पः । तत्-
पर्य्यायः । निर्मुक्तः २ । इत्यमरः । १ । ८ । ६ ।
उज्झितकञ्चुके, त्रि ॥

**मुक्तचक्षुः**, [स्] पुं, (मुक्तं सर्वतः क्षिप्तं चक्षु-
र्येन ।) सिंहः । इति शब्दमाला ॥ मुक्तनेत्रे, त्रि ॥

**मुक्तरसा**, स्त्री, (मुक्तः रसो यस्याः ।) रास्ना ।
इति रत्नमाला ॥ (विवरणमस्या रास्नाशब्दे
ज्ञातव्यम् ।) त्यक्तरसे, त्रि ॥

**मुक्ता**, स्त्री, (मुच्यते स्म । मोच्यते निःसार्य्यते
इति वा । मुच् + क्तः । टाप् ।) रास्ना । इति

कुन्दुरुः । इति मेदिनी । दे, ३८ ॥ (यथा च
पर्य्यायः ।
"कुन्दुरुस्तु मुकुन्दः स्यात् सुगन्धः कुन्द इत्यपि ।"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
पारदः । इति हेमचन्द्रः । २ । १२९ ॥

**मुकुन्दकः**, पुं, पलाण्डुः । केचिच्च सुकन्दकस्थाने
मुकुन्दक इति पठित्वा जवनानां मुदं कन्दतीति
पृषोदरादित्वात् दलुक् कन्देरत उच्चेति व्याच-
क्षते । इत्यमरटीकायां भरतः ॥ (यथा, सुश्रुते ।
१ । ४६ ।
"विशोषी तत्र भूयिष्ठं वरुकः समुकुन्दकः ।")
षष्टिकब्रीहिः । यथा, भावप्रकाशे ।
"षष्टिकः शतपुष्पश्च प्रमोदकमुकुन्दकौ ।
महाषष्टिक इत्याद्याः षष्टिकाः समुदाहृताः ॥"

**मुकुन्दुः**, पुं, (मोचयति विषयान्तरानुरागमिति ।
अन्तर्भूतण्यर्थ मुच् + कः । न्यङ्क्वादित्वात् कुत्वम् ।
तं उन्दत्यार्द्रीकरोतीति । उन्द + उण् । पृषो-
दरादित्वात् साधुः ।) कुन्दुरुः । इत्यमरटीकायां
मथुरानाथः ॥

**मुकुम्**, व्य, निर्व्वाणम् । भक्तिरसः । प्रेम । यथा,
"मुकुमव्ययमान्तञ्च निर्व्वाणमोक्षवाचकम् ।
तद्ददाति च यो देवो मुकुन्दस्तेन कीर्त्तितः ॥
मुकुं भक्तिरसप्रेमवचनं वेदसम्मतम् ।
यस्तद्ददाति विप्रेभ्यो मुकुन्दस्तेन कीर्त्तितः ॥"

**मुकुष्टकः**, पुं, (मुकुं स्तकति प्रतिहन्ति । स्तक +
अच् पृषोदरादित्वात् साधुः ।) वनमुद्गः ।
मुगानी इति भाषा । तत्पर्य्यायः । मयष्टकः २ ।
इत्यमरः । २ । ९ । १७ ॥ मुकुष्ठः ३ मयष्ठः ४ । इति
श्रीधरः ॥ मपष्टकः ५ । इत्यन्ये । इति भरतः ॥
मुद्गष्टकः ६ मकुष्टकः ७ मयुष्टकः ८ । इति
टीकान्तरम् ॥ (तथास्य विषयः ॥
"विदलान्नानि वक्ष्यामि शृणु पुत्त्र ! यथा-क्रमम् ।
यवगोधूमचणका माषामुद्गाढकी तथा ॥
मुकुष्टकाः कुलत्थाश्च मसूरास्त्रिपुटास्तथा ।
निष्पावकाः कलायाद्या विदलान्नानि कीर्त्तयेत् ॥
इति हारीते प्रथमे स्थाने दशमेऽध्याये ॥
मुद्गान् मसूरांश्चणकान् कुलत्थान् समुकुष्ट-
कान् ।
आहारकाले यूषार्थे ज्वरिताय प्रदापयेत् ॥"
इति वैद्यकचक्रपाणिसंग्रहे ज्वराधिकारे ॥)

**मुकूलकः**, पुं, (मुच् + बाहुलकादूलच् पृषोदरा-
दित्वात् कुत्वम् । ततः संज्ञायां कन् ।) दन्ति-
वृक्षः । इत्यमरटीकायां रामाश्रमः ॥ (तथास्य
पर्य्यायः ॥
"चित्रा दन्ती निकुम्भः स्यादुपचित्रा मुकूलकः ।
दाक्षायणी विशल्या च तथोडुम्बरपर्ण्यपि ॥"
इति वैद्यकरत्नमालायाम् ॥
"दन्त्युदुम्बरपर्णी स्यान्निकुम्भोऽथ मुकूलकः ।
द्रवन्ती नामतश्चित्रान्यग्रोधा मूषिकाह्वया ॥"
इति चरके कल्पस्थाने द्वादशेऽध्याये ॥)

रत्नमाला ॥ रत्नविशेषः । मोती इति हिन्दी-
भाषा । अस्या अधिष्ठात्री देवता चन्द्रः । इति
ज्योतिषम् ॥ तत्पर्य्यायः । मौक्तिकम् २ । इत्य-
मरः । २ । ९ । ९३ ॥ सौम्या ३ शौक्तिकेय्यम् ४
तारम् ५ तारा ६ भौतिकम् ७ तौतिकम् ८
अम्भःसारम् ९ शीतलम् १० नीरजम् ११
नक्षत्रम् १२ इन्दुरत्नम् १३ लक्ष्मीः १४ मुक्ता-
फलम् १५ बिन्दुफलम् १६ मुक्तिका १७ शौक्ते-
यकम् १८ शुक्तिमणिः १९ शशिप्रभम् २०
स्वच्छम् २१ हिमम् २२ हिमबलम् २३ सुधां-
शुभम् २४ शुधांशुरत्नम् २५ । लक्ष्मीस्थाने लक्षं
शशिप्रभस्थाने शशिप्रियं हिमबलस्थाने हेम-
वतं सुधांशुभस्थाने भूरुहं इति च पाठः । इति
राजनिर्घण्टः ॥ शौक्तिकम् २६ । इति भाव-
प्रकाशः ॥ शुक्तिबीजम् २७ हारी २८ । इति
शब्दरत्नावली ॥ कुवलम् २९ । इति जटाधरः ॥
अस्या गुणाः । सारकत्वम् । शीतत्वम् । कषा-
यत्वम् । स्वादुत्वम् । लेखनत्वम् । चक्षुष्यत्वञ्च ।
तद्धारणगुणः । पापालक्ष्मीविनाशित्वम् । इति
राजवल्लभः ॥ वृष्यत्वम् । बलपुष्टिदत्वञ्च । इति
भावप्रकाशः ॥ * ॥ अपि च ।
"मौक्तिकञ्च मधुरं सुशीतलं
दृष्टिरोगशमनं विषापहम् ।
राजयक्ष्मपरिकोपनाशनं
क्षीणवीर्य्यबलपुष्टिवर्द्धनम् ॥"

इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ११० अः ॥

**मुकुरः**, पुं, (मक + “मकुरदर्द्दुरौ ।” उणा० १ । ४१ ।

इत्यत्र । बाहुलकादकारस्थाने उकारः इत्युज्ज्वल-

दत्तोक्तेः उरच् ।) दर्पणः । (यथा, नैषधे । ४ । ५९ ।

“कुरु करे गुरुमेकमयोघनं

बहिरितो मुकुरञ्च कुरुष्व मे ॥”)

अस्या लक्षणं यथा, --

“नक्षत्राभं शुद्धमत्यन्तमुक्तं

स्निग्धं स्थूलं निर्म्मलं निर्व्रणञ्च ।

न्यस्तं धत्ते गौरवं यत्तुलायां
तन्निर्मौल्यं मौक्तिकं सौख्यदायि ॥”
अस्या दोषलक्षणं यथा, --
“यद्विच्छायं मौक्तिकं व्यङ्गकायं
शुक्तिस्पर्शं रक्तताञ्चातिधत्ते ।
मत्स्याक्ष्यङ्कं रूक्षमुत्तानननम्रं
नैतद्धार्य्यं धीमता दोषदायि ॥”
अष्टधा मौक्तिकं यथा, --
“मातङ्गोरगमीनपोत्रिशिरसस्त्वक्सारशङ्खाम्बुभृ
च्छुक्तीनामुदराच्च मौक्तिकमणिः स्पष्टं भवत्य-
वृधा ॥”
मौक्तिकविशेषो यथा, --
“छायापाटलनीलपीतधवलास्तत्रापिसामान्यतः
सप्तानां बहुशो न लब्धिरिति चेच्छौक्तेयकं
तूल्यणम् ॥” * ॥
मौक्तिकपरीक्षा यथा, --
“लवणक्षारक्षोदिनि पात्रेऽजगोमूत्रपूरिते
क्षिप्तम् ।
मर्द्दितमपि शालीतुषैर्यदविकृतं तन्मौक्तिकं
जात्यम् ॥”
इति राजनिर्घण्टः ॥ * ॥
तदुत्पत्तिस्थानानि यथा, --
“शङ्खो गजश्च क्रोडश्च फणी मत्स्यश्च दर्दुरः ।
वेणुरेते समाख्यातास्तज्ज्ञैर्मौक्तिकयोनयः ॥”
इति भावप्रकाशः ॥ * ॥
अथ प्रकारान्तरमुक्तापरीक्षा ।
“द्विपेन्द्रजीमूतवराहशङ्ख-
मत्स्याहिशुक्त्युद्भववेणुजानि ।
मुक्ताफलानि प्रथितानि लोके-
तेषान्तु शुक्त्युद्भवमेव भूरि ॥
वेध्यन्तु शुक्त्युद्भवमेव तेषां
शेषाण्यवेध्यानि वदन्ति तज्ज्ञाः ।
मतङ्गजा ये तु विशुद्धवंश्या-
स्ते मौक्तिकानां प्रभवाः प्रदिष्टाः ॥
उत्पद्यते मौक्तिकमेषु वृत्त-
मापीतवर्णं प्रभया विहीनम् ॥
वक्ष्ये गजपरीक्षायां गजजातिश्चतुर्व्विधा ।
मौक्तिकं तेषु जातं हि चतुर्व्विधमुदीर्य्यते ॥
ब्राह्मणं पीतशुक्लन्तु क्षत्त्रियं पीतरक्तकम् ।

तेजस्तिरस्कृत्य हुताशनेन्दु-
नक्षत्रताराग्रहसम्भवञ्च ।
दिवा यथा दीप्तिकरन्तथैव
तमोऽवगाढास्वपि तन्निशासु ॥
विचित्ररत्नद्युतिचारुतोय-
चतुःसमुद्रा भवनाभिरामा ।
मूल्यं न वा स्यादिति निश्चयो मे
कृत्स्ना मही तस्य सुवर्णपूर्णा ॥
हीनोऽपि यस्तल्लभते कथञ्चित्
विपाकयोगान्महतः शुभस्य ।
सपत्नहीनः पृथिवीं समग्रां
भुनक्ति तत्तिष्ठति यावदेव ॥
न केवलं तच्छुभकृन्नृपस्य
भाग्यैः प्रजानामपि जन्म तस्य ।
तद्योजनानां परितः शतस्य
सर्व्वाननर्थान् विमुखीकरोति ॥
जलज्योतिर्म्मरुज्जानां मेघानां
त्रिविधं भवेत् ।
जलाधिकेऽधिकं स्वच्छं कोमलं
पुरु कान्ति-
मत् ॥
ज्योतिषं कान्तिमद्वृत्तं दुर्न्निरीक्षं
रविप्रभम् ।
कान्तिमत् कोमलं वृत्तं मारुतं
विमलं लघु ॥
वराहदंष्ट्राप्रभवं वरिष्ठं
तस्यैव दंष्ट्राङ्कुरतुल्यवर्णम् ।
क्वचित् कथञ्चित् स भुवः प्रदेशे
प्रजायते शूकरवद्वरिष्ठः ॥
ब्रह्मादिजातिभेदेन वराहोऽपि
चतुर्व्विधः ।
तेषु जाता भवेन्मुक्ता समासेन
चतुर्व्विधा ॥
ब्राह्मणः शुक्लवर्णस्तु शूद्रमन्तेऽस्य
लक्षते ।
क्षत्त्रियः शुक्लरक्तस्तु स्पर्शे
कर्क्कश एव च ॥
वैश्यः स्यात् शुक्लपीतस्तु कोमलः
कोलसन्निभः ।

उत्पाद्यते वारिचराननेषु
मीनाश्च ते मध्यचराः पयोधेः ॥”
तथा च ।
“गुञ्जाफलकायस्थौल्यं मौक्तिकं तिमिजं
लघु ।
पाटलापुष्पसङ्काशमल्पकान्तिसुवर्त्तुलम्
॥
वातपित्तकफद्वन्द्वसन्निपातप्रभेदतः ।
सप्त प्रकृतयो मीने सप्तधा तेन मौक्तिकम्
॥
लघिष्ठमरुणं वातात् आपीतं मृदु पित्ततः
।
शुक्लं गुरु कफोद्रेकात्
वातपित्तान्मृदुर्लघु ॥
वातश्लेष्मभवं स्थूलं
पित्तश्लेष्मजमच्छकम् ।
सर्व्वलिङ्गप्रयोगेण सान्निपातिकमुच्यते ॥
एकजाः शुभदाः प्रोक्तास्तथा वै सान्नि-
पातिकाः ॥ * ॥
भौजङ्गमं नीलविशुद्धवर्णं
सर्व्वं भवेत् प्रज्वलवर्णशोभम् ।
नितान्तधौतप्रतिकल्प्यमान-
निस्त्रिंशधारासमवर्णशोभम् ॥
भुजङ्गमास्ते विषवेगदृप्ताः
श्रीवासुकेर्व्वंशभवाः पृथिव्याम् ।
क्वचित् कदाचित् खलु पुण्यदेशे
तिष्ठन्ति ते पश्यति तान्मनुष्यः ॥
फणिजं वर्त्तुलं रम्यं नीलच्छायं महाद्युति
।
पुण्यहीना न पश्यन्ति वासुकेः
कुलसम्भवम् ॥
शृगालकोलामलकोलगुञ्जा-
फलप्रमाणास्तु चतुर्विधास्ते ।
स्युर्ब्रह्मबाहूद्भववैश्यशूद्र-
सर्पेषु जाताः प्रवरास्तु सर्व्वे ॥
प्राप्यापि रत्नानि धनं श्रियंवा
राजश्रियंवा महतीं दुरापाम् ।
तेजोऽन्विताः पुण्यकृतो भवन्ति
मुक्ताफलस्यास्य विधारणेन ॥

पीतश्यामन्तु वैश्यं स्यात् शूद्रं स्यात् पीत-
नीलकम् ॥
काम्बोजकुम्भसम्भूतं धात्रीफलनिभं गुरु ।
अतिपिञ्जरसच्छायं मौक्तिकं मन्ददीधिति ॥
धाराधरेषु जायेत मौक्तिकं जलबिन्दुभिः ।
दुर्लभं तन्मनुष्याणां देवैस्तत् ह्रियतेऽम्बरात् ॥
कुक्कुटाण्डसमं वृत्तं मौक्तिकं निविडं गुरु ।
घनजं भानुसङ्काशं देवयोग्यममानुषम् ॥" * ॥
तथाहि गारुडे ।
"नाभ्येति मेघप्रभवं धरित्रीं
वियद्गतं तद्विबुधा हरन्ति ।
अर्च्चिःप्रभानावृतदिग्विभाग-
मादित्यवद्दुःखविभाव्यविम्बम् ॥

शूद्रः स्याच्छुक्लनीलस्तु कर्क्कशः
श्याम एव च ॥"
तथा च ।
"कोलजं कोलसदृशं
तद्दंष्ट्रासदृशच्छवि ।
अलभ्यं मनुजै रम्यं मौक्तिकं
पुण्यवर्ज्जितैः ॥ * ॥
ये कम्बवः शार्ङ्गमुखावमर्ष-
पीतस्य शङ्खप्रवरस्य गोत्रे ।
स्यान्मौक्तिकानामिह तेषु जन्म
तल्लक्षणं संप्रति कीर्त्तयामः ॥
स्वयोनिमध्यच्छवितुल्यवर्णं
शङ्खाद्बृहत्कोलफलप्रमाणम् ॥
तथा च ।
वर्षोपलसमं दीप्त्या
पाञ्चजन्यकुलोद्भवम् ।
कपोताण्डप्रमाणं तदतिकान्ति
मनोहरम् ॥ * ॥
विशेषो यथा, --
"अश्विन्यादिकनक्षत्रे ये जाताः
कम्बवः शुभाः ।
मौक्तिकं तेषु जातं हि
सप्तविंशतिभेदभाक् ॥
शुक्लाशुक्लाः पीतरक्ता नीला
लोहितपिञ्जराः ।
आकर्व्वुराः पाटलाश्च नववर्णाः
प्रकीर्त्तिताः ॥
महन्मध्यलघून्मानैः सप्तविंशतिधा
भवेत् ।
क्रमतस्तेषु विज्ञेयं नक्षत्रेषु
मनीषिभिः ॥ * ॥
पाठीनपृष्ठस्य समानवर्णं
मीनात् सुवृत्तं लघु नातिसूक्ष्मम् ।

जिज्ञासया रत्नविनिश्चयज्ञैः
शुभे मुहूर्त्ते प्रयतैः प्रयत्नात् ।
रक्षाविधानं सुमहद्विधाय
हर्म्म्योपविष्टं क्रियते यदा तत् ।
तदा महद्दुन्दुभितूर्य्यघोषै-
र्घनैर्घनैराव्रियतेऽन्तरीक्षम् ॥
न तं भुजङ्गा न तु जातुधाना
न राक्षसा नापि च दुष्टलोकाः ।
हिंसन्ति यस्याहिशिरःसमुत्थं
मुक्ताफलं तिष्ठति कोषमध्ये ॥
भेकादिष्वपि जायन्ते मणयो ये क्वचित्
क्वचित् ।
भौजङ्गममणेस्तुल्यास्ते विज्ञेया बुधोत्तमैः
॥
नक्षत्रमालेव दिवो विशीर्णा
दन्तावली तस्य महासुरस्य ।
विचित्ररूपेषु विचित्रवर्णा
पयःसु पत्युः पयसां पपात ॥
सम्पूर्णचन्द्रांशुकलापकान्ते-
र्भणिप्रवेकस्य महागुणस्य ।
तच्छुक्तिमत्सुस्थितिमाप बीज-
मासन् पुराप्यन्यभवानि यानि ॥

यस्मिन् प्रदेशेऽम्बुनिधौ पपात
सुचारुमुक्तामणिरत्नबीजम्।
तस्मिन् पयस्तोयधरावकीर्णं
शुक्तौ स्थितं मौक्तिकतामवाप ॥ * ॥
सैंहलिकपारलौकिक-
सौराष्ट्रिकताम्रपर्णपार-
सवाः ।
कौवेरपाण्ड्यविराटमुक्ता इत्याकराश्चाष्टौ
॥
"स्वात्यां स्थिते रवौ मेघैर्ये मुक्ता
जलबिन्दवः ।
शीर्णाः शुक्तिषु जायन्ते तैर्मुक्ता
निर्म्मलत्विषः ॥
स्थूला मध्यास्तथा सूक्ष्मा
बिन्दुमानानुसारतः ।
सुस्निग्धमधुरच्छायं मौक्तिकं सिंहलोद्भवम्
॥
पारलौकिकसम्भूतं मौक्तिकं निविडं गुरु ।
सौराष्ट्रिकभवं स्थूलं वृत्तं स्वच्छं सितं
घनम् ॥
ताम्रपर्णभवं ताम्रं पीतं पारसवोद्भवम् ।
ईषत् श्यामञ्च रूक्षञ्च कौवेरोद्भवमौक्तिकम्
॥
पाण्ड्यदेशोद्भवं पाण्डु सितं रूक्षं
विराटजम् ।
रुक्मिण्याख्या तु या शुक्तिस्तत्प्रसूतिः
सुदुर्लभा ॥
तत्र जातं सितं स्वच्छं जातीफलसमं वरम्
।
छायावद्बहुलं रम्यं निर्द्दोषं यदि लभ्यते ॥
अमूल्यं तद्विनिर्द्दिष्टं रत्नलक्षणकोविदैः ।
दुर्लभं नृपयोग्यं स्यादल्पभाग्यैर्न लभ्यते
॥"
अन्यस्त्वाह ।
"सर्व्वस्य तस्याकरजा विशेषात्
रूपप्रमाणे च यथैव विद्वान् ।
नहि व्यवस्थास्ति गुणागुणेषु
सर्व्वत्र सर्व्वाकृतयो भवन्ति ॥"

हरिच्छ्वेतं तथा वंशे पीतश्वेतञ्च शूकरे ।
शङ्खशुक्त्युद्भवं श्वेतं मुक्तारत्नमनुत्तमम् ॥
चतुर्धा मौक्तिके च्छाया पीता च मधुरा
सिता ।
नीला चैव समाख्याता रत्नतत्त्वपरीक्षकैः
॥
पीता लक्ष्मीप्रदा छाया मधुरा बुद्धिवर्द्धिनी
।
शुक्ला यशस्करी छाया नीला
सौभाग्यदायिनी ॥
सिता छाया भवेद्विप्रः
क्षत्त्रियश्चार्करश्मिवान् ।
पीतच्छाया भवेद्वैश्यः शूद्रः
कृष्णरुचिर्म्मतः ॥ *
अथ गुणाः ।
सुतारञ्च सवृत्तञ्च स्वच्छञ्च निर्म्मलं तथा
।
घनं स्निग्धञ्च सच्छायं तथा स्फुटितमेव
च ।
अष्टौ गुणाः समाख्याता
मौक्तिकानामशेषतः ॥
तद्यथा, --
तारकाद्युतिसङ्काशं सुतारमिति गद्यते ।
सर्व्वतो वर्त्तुलं यच्च सुवृत्तं तन्निगद्यते ॥
स्वच्छं दोषविनिर्म्मुक्तं निर्म्मलं
मलवर्ज्जितम् ।
गुरुत्वं तुलने यस्य तद्घनं मौक्तिकं वरम् ॥
स्नेहेनैव विलिप्तं यत्तत् स्निग्धमिति गद्यते
।
छायासमन्वितं यच्च सच्छायं तन्निगद्यते
॥
व्रणरेखाविहीनं यत्तत् स्यादस्फुटितं
शुभम् ॥
भ्राजिष्णु कोमलं कान्तं मनोज्ञं स्फुरतीव
च ।
स्रवतीव च सत्त्वानि तन्महारत्नसंज्ञितम्
॥
श्वेतकाचसमाकारं शुभ्रांशुशतयोजितम् ।

उपर्य्युपरि तिष्ठन्ति बलयो यत्र मौक्तिके ।
त्रिवृत्तं नाम तस्योक्तं सौभाग्यक्षयकारकम्
।
अवृत्तं मौक्तिकं यच्च चिपिटं यन्निगद्यते ।
मौक्तिकं घ्रियते येन तस्याकीर्त्तिर्भवेत् सदा
॥
त्रिकोणं त्र्यस्रमाख्यातं
सौभाग्यक्षयकारकम् ।
दीर्घं यत्तत् कृशं प्रोक्तं प्रज्ञाविध्वंसकारकम्
॥
निर्भग्नमेकतो यच्च कृशपार्श्वं तदुच्यते ।
सदोषं मौक्तिकं निन्द्यं निरुद्योगकरं हि
तत् ।
अवृत्तं पिडकोपेतं सर्व्वसम्पत्तिहारकम् ॥
* ॥
यत्र कृत्रिमसन्देहः क्वचिद्भवति मौक्तिके ।
उष्णे सलवणे स्नेहे निशान्तद्वासयेज्जले
॥
ब्रीहिभिर्म्मर्दनीयंवा शुष्कवस्त्रोपवेष्टितम् ।
यत्तु नायाति वैवर्ण्यं विज्ञेयं तदकृत्रिमम् ॥
* ॥
तथा हि ।
क्षिपेद्गोमूत्रभाण्डे तु लवणक्षारसंयुते ।
स्वेदयेद्वह्निना वापि शुष्कवस्त्रेण वेष्टयेत् ॥
हस्ते मौक्तिकमादाय ब्रीहिभिश्चोपघर्षयेत्
।
कृत्रिमं भङ्गमाप्नोति सहजञ्चाति दीप्यते ॥
कृत्वा पचेत् सुपिहिते शुभदारभाण्डे
मुक्ताफलं निहितनूतनशुक्तिकाण्डम्।
स्फीटन्तथा प्रणिदधीत ततश्च भाण्डात् ।
संस्थाप्य धान्यनिचये च तमेकमासम् ॥
आदाय तत् सकलमेव ततोऽन्नभाण्डं
जम्बीरजातरसयोजनयाविपक्वम् ।
घृष्टं ततो मृदुतनूकृतपिण्डमूलैः
कुर्य्याद्यथेच्छमिह मौक्तिकमाशु विद्धम् ॥
मृल्लिप्तमत्स्यपुटमध्यगतन्तुकृत्वा
पश्चात् पचेत्तनु ततश्च वितानपत्या ।
दुग्ध ततः पयसि तद्विपचेत् सुरायां
पक्वन्ततोऽपि पयसा शुचि चिक्वणेन ।

ब्रह्मादिजातिभेदेन शुक्तयोऽपि चतुर्व्विधाः ।
तासु सर्व्वासु जातं हि मौक्तिकं स्याच्चतुर्व्विधम् ॥
ब्राह्मणस्तु सितः स्वच्छो गुरुः शुक्लः प्रभान्वितः ।
आरक्तः क्षत्त्रियः स्थूलस्तथारुणविभान्वितः ॥
वैश्यस्त्वापीतवर्णोऽपि स्निग्धः श्वेतः प्रभान्वितः ।
शूद्रः शुक्लवपुः सूक्ष्मस्तथा स्थूलोऽसितद्युतिः ॥
वर्षोपलानां समवर्णशोभं त्वक्सारमध्यप्रभवं प्रदिष्टम् ।
ते वेणवो दिव्यजनोपभोग्ये स्थाने प्ररोहन्ति न सार्व्वजन्ये ॥
वंशजं शशिसङ्काशं कक्कोलीफलमार्द्रकम् ।
प्राप्यते बहुभिः पुण्यैस्तद्रक्ष्यं वेदमन्त्रतः ॥
पञ्चभूतसमुद्रेकाद्वंशे पञ्चविधे भवेत् ।
मुक्ता पञ्चविधा तासां यथालक्षणमुच्यते ॥
पार्थिवी गुरुवत्सा च तैजसी तेजसा लघुः ।
वायवी च मृदुः स्थूला गागनी कोमला लघुः ।
आप्याः स्निग्धा भृशं शुक्लाः पञ्चैताः प्रवरा मताः ।
आसां धारणमात्रेण व्याधिः कोऽपि न जायते ॥” * ॥
एवमन्यत्रापि ।
“गजाहिकोलमत्स्यनां शीर्षे मुक्ताफलोद्भवः ।
त्वक्सारशुक्तिशङ्खानां गर्भे मुक्ताफलोद्भवः ॥
धाराधरेषु जायेत मौक्तिकं जलबिन्दुभिः ।
जीमूते शुचिरूपञ्च गजे पाटलभास्वरम् ॥
मत्स्ये श्वेतञ्च निस्तेजः फणिन्द्रे नीलभास्वरम् ।
शशिराजप्रतिच्छायं मौक्तिकं देवभूषणम् ॥” * ॥
गारुडे ।
त्वक्सारनागेन्द्रतिमिप्रभूतं यच्छङ्खजं यच्च वराहजातम् ।
प्रायो वियुक्तानि भवन्ति भासा शस्तानि माङ्गल्यतया तथापि ॥
प्रमाणवद्गौरवरश्मियुक्तं सितं सुवृत्तं समसूक्ष्मरन्ध्रम् ।
अक्रेतुरप्यावहति प्रमोदं यन्मौक्तिकं तद्गुणवत् प्रदिष्टम् ॥
एवं समस्तेन गुणोदयेन यन्मौक्तिकं योगमुपागतं स्यात् ।
न तस्य भर्त्तारमनर्थजात एकोऽपि दोषः समुपैति सद्यः ॥
एवं सर्व्वगुणोपेतं मौक्तिकं येन धार्य्यते ।
तस्यायुर्व्वर्द्धते लक्ष्मीः सर्व्वपापं प्रणश्यति ॥
गुणवद्गुरु यद्देहे मौक्तिकैकं हि तिष्ठति ।
चञ्चलापि स्थिरा भूत्वा कमला तत्र तिष्ठति ॥”
दोषो यथा, --
“चत्वारः स्युर्महादोषाः षण्मध्याश्च प्रकीर्त्तिताः ।
एवं दश समाख्यातास्तेषां वक्ष्यामि लक्षणम् ॥
यत्रैकदेशे संलग्नः शुक्तिखण्डो विभाव्यते ।
शुक्तिलग्नः समाख्यातः स दोषः कुष्ठकारकः ॥
मीनलोचनसङ्काशो दृश्यते मौक्तिके तु यः ।
मत्स्याक्षः स तु दोषः स्यात् पुत्त्रनाशकरो ध्रुवम् ॥
दीप्तिहीनं गतच्छायं जठरं तद्विदुर्व्वुधाः ।
तस्मिन् संधारिते मृत्युर्जायते नात्र संशयः ॥
मौक्तिकं विद्रुमच्छायमतिरक्तं विदुर्व्वुधाः ।
दारिद्रजनकं यस्मात् तस्मात्तत् परिवर्जयेत् ॥
शुद्धं ततो विमलवस्त्रनिघर्षणेन स्यात् मौक्तिकं विमलसद्गुणकान्तिजालम् ॥”
अथ मूल्यम् ।
“पञ्चभिर्माषको ज्ञेयो गुञ्जाभिर्माषकैस्तथा ।
चतुर्भिः शाणमाख्यातं माषकैर्मणिवेदिभिः ॥
एकस्य शुक्तिप्रभवस्य शुद्ध-मुक्तामणेः शाणकसम्मितस्य ।
मूल्यं सहस्राणि कपर्द्दकानि त्रिभिः शतैरभ्यधिकानि पञ्च ॥
यन्माषकार्द्धेन ततो विहीनं चतुःसहस्रं लभतेऽस्य मूल्यम् ।
यन्माषकांस्त्रीन् बिभृयाद्गुरुत्वे द्वे तस्य मूल्यं परमं प्रदिष्टम् ॥
अर्द्धाधिकद्वौ वहतोऽस्य मूल्यं त्रिभिः शतैरभ्यधिकं सहस्रम् ।
द्विमाषकोन्मापितगौरवस्य शतानि चाष्टौ कथितानि मूल्यम् ॥
अर्द्धाधिकमाषकसम्मितस्य सपञ्चविंशं त्रितयं शतानाम् ।
यन्माषकोन्मापितमानम्कं तस्याधिकं विंशतिभिः शतं स्यात् ॥

गुञ्जाश्च षड्धारयतः शते द्वे
मूल्यं परं तस्य वदन्ति तज्ज्ञाः ।
गुञ्जाश्चतस्रो विधृतं शतार्द्धा-
दर्द्धं लभेताप्यधिकं त्रिभिर्व्वा ॥
अतः परं स्याद्धरणप्रमाणं
संख्याविनिर्द्देशविनिश्चयोक्तिः ।
त्रयोदशानां धरणे धृतानां
हिक्केति नाम प्रवदन्ति तज्ज्ञाः ॥
अध्यर्द्धमात्रञ्च शतं कृतं स्यान्-
मूल्यं गुणैस्तस्य समन्वितस्य ।
यदि षोडषभिर्भवेत् सुपूर्णं
धरणं तत्प्रवदन्ति दार्व्विकाख्यम् ॥
अधिकं दशभिः शतञ्च मूल्यं
समवाप्नोत्यपि बालिशस्य हस्तात् ।
यदि विंशतिभिर्भवेत् सुपूर्णं
धरणं मौक्तिकजं वदन्ति तज्ज्ञाः ॥
नवसप्ततिमाप्नुयात् स्वमूल्यं
यदि न स्याद्गुणयुक्तितो विहीनम् ॥
त्रिंशता धरणं पूर्णं शिक्येति परिकीर्त्त्यते ।
चत्वारिंशत्परं तस्य मूल्यमेष विनिश्चयः ॥
चत्वारिंशत् भवेत् शिक्या त्रिशन्मूल्यं लभेत सा ।
पञ्चाशत्तु भवेत् सोमस्तस्य मूल्यन्तु विंशतिः ॥
षष्टिर्निकरशीर्षं स्यात्तस्य मूल्यं चतुर्द्दश ।
अशीतिर्नवतिश्चेति कुप्येति परिकल्प्यते ॥
एकादश स्युर्नव च तयोर्मूल्यमनुक्रमात् ।
शतमर्द्धाधिकं द्वे च चूर्णोऽयं परिकीर्त्तितः ॥
सप्त पञ्च त्रयश्चैव तेषां मूल्यमनुक्रमात् ॥
शाणात् परं माषकमेकमेकं
यावद्विवर्द्धेत गुणैरपीदम् ।
मूल्येन तावद्द्विगुणेन योग-
माप्नोत्यनावृष्टिहतेऽपि देशे ॥
सूक्ष्मातिसूक्ष्मोत्तममध्यमानां
यन्मौक्तिकानामिह मूल्यमुक्तम् ।
तज्जातिमात्रेण न जातु कार्य्यं
गुणैरहीनस्य हि तत् प्रदिष्टम् ॥
यत्तु चन्दांशुसङ्काशमीषद्बिम्बफलाकृति ।
नवमात् पञ्चमं याबत् कलञ्जेन समं यदा ।
तत्क्रमादुत्तमं ज्ञेयं मौक्तिकं रत्नवेदिभिः ॥
चतुर्द्दशात् समारभ्य दशसंख्याविधि क्रमात् ।
कलञ्जस्य समानं वा मौक्तिकं मध्यमं विदुः ॥
आरभ्य विंशतितमात् क्रमात् पञ्चदशावधि ।
लङ्घ्यास्ताः कथिता मुक्ता मूल्यञ्च तदनुक्रमात् ॥
कलञ्जद्वयमानेन यद्येकं मौक्तिकं भवेत् ।
न धार्य्यं नरनाथैस्तु देवयोग्यममानुषम् ॥
इत्थं विचार्य्य यो मुक्तां परिधत्ते नराधिपः ।
तस्यायुश्च यशो वीर्य्यं विपरीतमतोऽन्यथा ॥”
इति युक्तिकल्पतरुः ॥
(अथास्याः शोधनम् ।
“स्वेदयेद्दोलिकायन्त्रे जयन्त्याः स्वरसेन च ।
मणिमुक्ताप्रबालानि यामैकं शोधनं भवेत् ॥”
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणाधि-
कारे ॥) अन्यत् मुक्ताफलशब्दे द्रष्टव्यम् ॥ * ॥ अथ मुक्ताधारणदिनम् ।
“रेवत्यश्विधनिष्ठासु हस्तादिषु च पञ्चसु ।
शङ्खविद्रुममुक्तानां परिधानं प्रशस्यते ॥”
इति समयप्रदीपः ॥

**मुक्ताकलापः**, पुं, (मुक्तानां कलापः समूहोऽत्र ।) मुक्ताहारः । यथा, --
“हारो मुक्तातः प्रालम्बस्रक्कलापावलीलताः ।”
इति हेमचन्द्रः । ३ । ३२२ ॥
(यथा, कुमारसम्भवे । १ । ४२ ।
“कण्ठस्य तस्याः स्तनबन्धुरस्य
“मुक्ताफलानि शुद्धानि खल्ले पिष्ट्वा पुटेल्लघु ।
एवं भस्मत्वमाप्नोति -- ॥”
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमाराणाधि-
कारे ॥) वोपदेवकृतग्रन्थविशेषः । यथा, --
“मुक्ताफलेन ग्रन्थेन सद्भागवतशुक्तिना ।
भक्तिस्वात्यम्बुना मुग्धमार्कण्डेयशिशुश्रिया ॥
विद्वद्धनेशशिष्येण भिषक्केशवसूनुना ।
हेमाद्रिर्वोपदेवेन मुक्ताफलमचीकरत् ॥”
इति तस्य चतुर्थोपान्त्यश्लोकद्वयम् ॥
अथ मुक्ताफल परीक्षा ।
“द्विपेन्द्रजीमूतवराहशङ्ख-
मत्स्याहिशुक्त्युद्भववेणुजानि ।
मुक्ताफलानि प्रथितानि लोके
तेषाञ्च शुक्त्युद्भवमेव भूरि ॥
तत्रैव चैकस्य हि मूलमात्रा
निविश्यते रत्नपरस्य जातु ।
वेध्यन्तु शुक्त्युद्भवमेव तेषां
शेषाण्यवेध्यानि वदन्ति तज्ज्ञाः ॥
त्वक्सारनागेन्द्रतिमिप्रसूतं
यत् शङ्खजं यच्च वराहजातम् ।
प्रायो विमुक्तानि भवन्ति भासा
शस्तानि माङ्गल्यतया तथापि ॥
या मौक्तिकानामिह जातयोऽष्टौ
प्रकीर्त्तिता रत्नविनिश्चयज्ञैः ।
कम्बूद्भवं तेष्वध मम्प्रदिष्ट-
मुत्पद्यते यच्च गजेन्द्रकुम्भात् ॥
स्वयोनिमध्यच्छवितुल्यवर्णं
शाङ्खं बृहत्कोलफलप्रमाणम् ।
उत्पद्यते वारणकुम्भमध्या-
दापीतवर्णं प्रभया विहीनम् ॥
ये कम्बवः शार्ङ्गमुखावमर्ष-
पीतस्य शङ्खप्रवरस्य गोत्रे
मतङ्गजाश्चापि विशुद्धवंश्या-
स्ते मौक्तिकानां प्रभवाः प्रदिष्टाः ॥
पाठीनपृष्ठस्य समानवर्णं
मीनात् सुवृत्तं लघुनातिसूक्ष्मम् ।

स्वमूल्यात् सप्तमं भागमवृत्तत्वाल्लभेत तत्
॥
पीतकस्य भवेदर्द्धमवृत्तस्य त्रिभागतः ।
विषमव्यस्तजातीनां षड्भागं मूल्यमादिशेत्
॥
अर्द्धरूपाणि सस्फोटात् पङ्कचूर्णानि यानि च
।
असाराणि च यानि स्युः करकाकारवन्ति च
॥
एकदेशप्रभावन्ति सकलाश्लेषितानि च ।
यानि चातकवर्णानि कांस्यवर्णानि यानि च
॥
मीननेत्रसवर्णानि ग्रन्थिभिः संवृतानि च ।
सदोषाणि च यानि स्युस्तेषां मूल्यं
पदांशिकम् ॥
अन्यत्र तु ।
सञ्चाली प्रोच्यते गुञ्जा सा तिस्रो रूपकं
भवेत् ।
रूपकैर्दशभिः प्रोक्तः कलञ्जो नाम नामतः ॥
कलञ्जनामकं द्रव्यमेकदेशे निघापयेत् ।
अन्यतो जलबिन्दूंस्तु तोलनार्थं
विनिःक्षिपेत् ॥
चत्वारि त्रीणि युग्मंवा तथैकं बहु वा स्थितम्
।
समं कलञ्जमानेन तुलामानादतः क्रमात् ॥

मुक्ताकलापस्य च निस्तलस्य
अन्योन्यशोभाजननाद्बभूव
साधारणो भूषणभूष्यभावः ॥”)

**मुक्तागारं**, क्ली, (मुक्ताया आगारमिव । मुक्तोत्-

पादनाधारत्वादस्य तथात्वम् ।) शुक्तिः ।
इति
शब्दचन्द्रिका ॥ मौक्तिकगृहञ्च ॥

**मुक्तापुष्पः**, पुं, (मुक्ता इव पुष्पाण्यस्य ।) कुन्द-

वृक्षः । इति राजनिर्घण्टः ॥
(गुणादिविवृति-
रस्य कुन्दशब्दे द्रष्टव्या ॥)

**मुक्ताप्रसूः**, स्त्री, (मुक्तां प्रकर्षेण सूते जनयतीति

प्र + सू + क्विप् ।) शुक्तिः । इति राज-
निर्घण्टः ॥

**मुक्ताप्रालम्बः**, पुं, (मुक्तानां प्रालम्बः हारभेदः ।)

मुक्ताहारः । इति हेमचन्द्रः । ३ । ३२२
॥

**मुक्ताफलं**, क्ली, (मुक्ताफलमिव ।) कर्पूरम् ।

(मुक्तैव फलमिव ।) मौक्तिकम् । (यथा,
मुग्ध-
बोघटीकायां कारके । ढेनार्थादित्यत्र ।
दुर्गा-
दासधृतम् ।
“मुक्ताफलाय करिणं हरिणं पलाय
सिंहं निहन्ति भुजविक्रमसूचनाय ॥”)
लवलीफलम् । इति मेदिनी । ले, १६६
॥
(मौक्तिकार्थेऽस्य पर्य्यायः ।
“मौक्तिकं शौक्तिकं मुक्ता तथा
मुक्ताफलञ्च
तत् ।”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥
यथास्य भस्मकरणविधिः ।

उत्पद्यते वारिचराननेषु
मत्स्याश्च ते मध्यचराः पयोधेः ॥
वराहदंष्ट्राप्रभवं प्रदिष्ठं
तस्यैव दंष्ट्राङ्कुरतुल्यवर्णम् ।
क्वचित् कथञ्चित् स भुवः प्रदेशे
प्रजायते शूकरवद्विशिष्टः ॥
वर्षोपलानां समवर्णशोभं-
त्वक्सारपर्व्वप्रभवम्प्रदिष्टम् ।
ते वेणवो दिव्यजनोपभोग्ये
स्थाने प्ररोहन्ति न सार्व्वजन्ये ॥
भौजङ्गमं मीनविशुद्धवृत्तं
संस्थानतोऽत्युज्ज्वलवर्णशोभम् ।
नितान्तधौतप्रविकल्प्यमान-
निस्त्रिंशधारासमवर्णकान्ति ॥
प्राप्यैति रत्नानि महाप्रभाणि
राज्यं श्रियं वा महतीं दुरापाम् ।

पात्रं हि नापुण्यकृतो भवन्ति
मुक्ताफलस्याहिशिरोभवस्य॥
जिज्ञासया रत्नधनं विधिज्ञैः
शुभे मुहूर्त्ते प्रयतैः प्रयत्नात्।
रक्षाविधानं सुमहद्विधाय
हर्म्म्योपरिस्थं क्रियते यदा तत्॥
तदा महादुन्दुभिमन्द्रघोषै-
र्विद्युल्लताविस्फुरितान्तरालैः।
पयोधराक्रान्तिविलम्बलम्बै-
र्घनैर्घनैर्व्वा व्रियतेऽन्तरीक्षम्॥
न तं भुजङ्गा न च जातुधाना
न व्याधयो नाप्युपसर्गदोषाः।
हिंसन्ति यस्याहिशिरःसमुत्थं
मुक्ताफलं तिष्ठति पूज्यमानम्॥
नाभ्येति मेघप्रभवं धरित्रीं
वियद्गतं तद्विबुधा हरन्ति।
अर्च्चिःप्रभानावृतदिग्विभाग-
मादित्यवद्दुःखविभाव्यविम्बम्॥
तेजस्तिरस्कृत्य हुताशनेन्दु-
नक्षत्रताराप्रभवं समग्रम्।
दिवा यथा दीप्तिकरं तथैव
तमोऽवगाढास्वपि तन्निशासु॥
विचित्ररत्नद्युतिसारतोय-
चतुःसमुद्राभरणोपपन्ना।
कृत्स्ना न वा स्यादिति निश्चयो मे
मूल्यं मही तस्य सुवर्णपूर्णा॥
हीनोऽपि यस्तल्लभते कदाचिद्-
विपाकयोगान्महतः शुभस्य।
सपत्नहीनां स महीं समग्रां
भुनक्ति तत्तिष्ठति यावदेव॥
न केवलं तच्छुभकृन्नृपस्य
भाग्यैः प्रजानामपि तस्य जन्म।
यद्योजनानां परितः सहस्रं
सर्व्वाननर्थान् विमुखीकरोति॥
नक्षत्रमालेव दिवो विशीर्णा
दन्तावली तस्य महासुरस्य।
विचित्रवर्णेषु विशुद्धवर्णा
पयःसु पत्युः पयसां पपात॥
सम्पूर्णचन्द्रांशुकलापकान्ते-
उत्पद्यते वर्द्धनपारसीक-
पाताललोकान्तरसिंहलेषु॥
चिन्त्या न तस्याकरजा विशेषा
रूपे प्रमाणे च यतेत विद्वान्।
न च व्यवस्थास्ति गुणागुणेषु
सर्व्वत्र सर्व्वाकृतयो वसन्ति॥
एकस्य शुक्तिप्रभवस्य मुक्ता-
फलस्य शाणेन समुन्मितस्य।
मूल्यं सहस्राणि तु रूपकाणां
त्रिभिः शतैरभ्यधिकानि पञ्च॥
यन्माषकार्द्धेन ततो विहीनं
तत्पञ्चभागद्वयहीनमूल्यम्।
यन्माषकांस्त्रीन् बिभृयात् सहस्रे
द्वे तस्य मूल्यं परमं प्रदिष्टम्॥
अर्द्धाधिकौ द्वौ वहतोऽस्य मूल्यं
त्रिभिः शतैरभ्यधिकं सहस्रम्।
द्विमाषकोन्मापितगौरवस्य
शतानि चाष्टौ कथितानि मूल्यम्॥
अर्द्धाधिकं माषकमुन्मितस्य
सपञ्चविंशत्रितयं शतानाम्।
गुञ्जाश्च षड् धारयतः शते द्वे
मूल्यं परं तस्य वदन्ति तज्ज्ञाः॥
अध्यर्द्धमुन्मापकृतं शतं स्यान्
मूल्यं गुणैस्तस्य समन्वितस्य।
यदि षोडशभिर्भवेदनूनं
धरणं तत्प्रवदन्ति दार्व्विकाख्यम्॥
अधिकं दशभिः शतञ्च मूल्यं
समवाप्नोत्यपि वालिशस्य हस्तात्।
द्विगुणैर्दशभिर्भवेदनूनं
धरणं तद्भवकं वदन्ति तज्ज्ञाः॥
नवसप्ततिमाप्नुयात् स्वमूल्यं
यदि न स्याद्गुणसम्पदा विहीनम्॥
त्रिंशता धरणं पूर्णं शिक्यं तस्येति
कीर्त्त्यते॥
चत्वारिंशद्भवेत्तस्याः परं मूल्यं
विनिश्चयः।
चत्वारिंशद्भवेच्छिक्थो विंशंमूल्यं
लभेत सा॥
एवं हि सिंहले देशे कुर्व्वन्ति कुशला जनाः।
यस्मिन् कृत्रिमसन्देहः क्वचिद्भवति मौक्तिके॥
उष्णे सलवणे स्नेहे निशां तद्वासयेज्जले।
ब्रीहिभिर्म्मर्द्दनीयं वा शुष्कवस्त्रोपवेष्टितम्॥
यत्तु नायाति वैवर्णं विज्ञेयं तदकृत्रिमम्॥
सितं प्रमाणवत् स्निग्धं गुरु स्वच्छं सुनिर्म्मलम्।
तेजोऽधिकं सुवृत्तञ्च मौक्तिकं गुणवत् स्मृतम्॥
प्रमाणवद्गौरवरश्मियुक्तं
सितं सुवृत्तं सममूक्ष्मवेधम्।
अक्रेतुरप्यावहति प्रमोदं
यन्मौक्तिकं तद्गुणवत् प्रदिष्टम्॥
एवं समस्तेन गुणोदयेन
यन्मौक्तिकं योगमुपागतं स्यात्।
न तस्य भर्त्तारमनर्थेजात
एकोऽपि कश्चित् समुपैति दोषः॥”
इति गारुडे ६९ अध्यायः॥

**मुक्तामुक्तः**, त्रि, (मुक्तश्च अमुक्तश्चेति विशेषणयोर्द्वन्द्वम्।) क्षिप्ताक्षिप्तः। अस्य प्रयोगो अस्त्रे शस्त्रे च प्रायो वर्त्तते। इति हलायुधः॥

**मुक्तालता**, स्त्री, (मुक्ताभिर्लतेव।) मुक्ताहारः। इति हेमचन्द्रः। ३। ३२२॥

**मुक्तावली**, स्त्री, (मुक्तानां आवल्यत्र) मुक्ताहारः। इत्यमरः। २। ६। १०५॥ (मुक्तानामावली।) मौक्तिकश्रेणी च॥ (तालविशेषः। यथा, सङ्गीतदामोदरे।
“खत्रयं सविरामान्तं नौ पुनः खत्रयं तथा।
प्लुतौगः खयुगं गश्च यत्र मुक्तावली तु सा॥”)

**मुक्तास्फोटः**, पुं, (मुक्तानां स्फोटः विकाशोऽत्र।) शुक्तिः। इत्यमरः। १। १०। २३॥

**मुक्तास्फोटा**, स्त्री, (मुक्तास्फोट + टाप्।) शुक्तिः। इति राजनिर्घण्टः॥

**मुक्तिः**, स्त्री, (मुच् + भावे क्तिन्।) आत्यन्तिकदुःखनिवृत्तिः। इति नैयायिकाः॥ नित्यसुखावाप्तिः। इति वैदान्तिकाः। शरीरेन्द्रियाभ्यां आत्मनो मुक्तत्वं मुक्तिः। इति भरतः। मोक्षः।

र्मणिप्रवेकस्य महागुणस्य ।
तच्छुक्तिमप्सु स्थितमापबीज-
मासन् पुराप्यन्यभवानि यानि ॥
यस्मिन् प्रदेशेऽम्बुनिधौ पपात
सुचारु मुक्तामणिरत्नबीजम् ।
तस्मिन् पयस्तोयधरावकीर्णं
शुक्तौ स्थितं मौक्तिकतामवाप ॥
सैंहलिकपारलौकिकसौरा-
ष्ट्रिकताम्रपर्णपारसवाः ।
कौवेरपाण्ड्यहाटक-
हेमका इत्याकरास्त्वष्टौ ॥
शुक्त्युद्भवं नातिनिकृष्टवर्णं
प्रमाणसंस्थानगुणप्रभाभिः ।

षष्टिर्निकरशीर्षं स्यात्तस्य मूल्यं
चतुर्द्दश ।
अशीतिर्नवतिश्चैव कुप्येति
परिकीर्त्तिता ।
एकादश स्यान्नव च
तयोर्मूल्यमनुक्रमात् ॥
आदाय तत् सकलमेव ततोऽन्नभाण्डं
जम्बीरजातरसयोजनया विपक्वम् ।
घृष्टं ततो मृदुतनूकृतपिण्डमूलैः
कुर्य्याद्यथेष्टमनुमौक्तिकमाशु विद्धम् ॥
मृल्लिप्तमत्स्यपुटमध्यगतन्तु कृत्वा
पश्चात् पचेत्तनु ततश्च वितानपत्या ।
दुग्धे ततः पयसि तं विपचेत् सुधायां
पक्वं ततोऽपि पयसा शुचि चिक्वणेन
॥
शुद्धं ततो विमलवस्त्रनिघर्षणेन
स्यान्मौक्तिकं
विपुलसद्गुणकान्तियुक्तम् ।
व्याडिर्जगाद जगतां हि महाप्रभाव-
सिद्धो विदग्धहिततत्परया दयालुः ॥
श्वेतकाचसमं तारं हेमांशशतयोजितम्
।
रसमध्ये प्रधार्य्येत मौक्तिकं देहभूषणम्
॥

तत्पर्य्यायः । कैवल्यम् २ निर्व्वाणम् ३ श्रेयः ४
निःश्रेयसम् ५ अमृतम् ६ मोक्षः ७ अपवर्गः ८ ।
इत्यमरः । १ । ५ । ६ ॥ अपुनर्भवः ९ स्थिरः
१०
अक्षरम् ११ । इति जटाधरः ॥ सा पञ्चविधा ।
सार्ष्टिः १ सालोक्यम् २ सारूप्यम् ३ सायुज्यम्
४
निर्व्वाणम् ५ । यथा, --
सार्ष्टिसारूप्यसालोक्यसामीप्यैकत्वमप्युत ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥"
इति श्रीभागवतम् ॥
"मुक्तिस्तु द्विविधा साध्वि ! श्रुत्युक्ता
सर्व्वसम्मता ।
निर्व्वाणपददात्री च हरिभक्तिप्रदा नृणाम् ॥
हरिभक्तिस्वरूपाञ्च मुक्तिं वाञ्छन्ति वैष्णवाः ।
अन्ये निर्व्वाणरूपाञ्च मुक्तिमिच्छन्ति साधवः ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २२ अध्यायः ॥ * ॥
मुक्तिकरयोगो यथा, --
"वक्ष्ये साङ्गमहायोगं भुक्तिमुक्तिकरं परम् ।
सर्व्वपापप्रशमनं भक्त्यानुपठितं शृणु ॥

ममेति मूलं दुःखस्य न ममेति च
निर्व्वृतेः ।
दत्तात्रेयो ह्यलर्काय इममाह महामतिः ॥
अहमित्यङ्कुरोत्पन्नौ ममेति स्कन्धवान्
महान् ।
गृहक्षेत्रोपशाखश्च पुत्त्रदारादिपल्लवः ॥
धनधान्यमहापत्रोऽनेककालैर्हि वर्द्धितः ।
पुण्यापुण्यसपुष्पश्च सुखदुःखमहाफलः
।
विधिवत् सुखशान्त्यर्थं
जातोऽज्ञानमहातरुः ॥
संसाराध्वपरिश्रान्ता येऽत्र च्छायां समा-
श्रिताः ।
भ्रान्तिज्ञानसुखासीनास्तेषामात्यन्तिकं
कुतः ॥
यैस्तु सत्सङ्गपाषाणनिशितेन महातरुः
।
छिन्नो विद्याकुठारेण ते गता लयमीश्वरे
॥
प्राप्य ब्रह्मरसं पीतं नीरजस्कमकण्टकम्
।
प्राप्नुवन्ति पराः प्राज्ञा ज्ञाननिर्वृत्तिमेव
च ॥
मूर्त्तेन्द्रियमयं मूलं नत्वं राजा नचाप्यहम्
।
न तन्मात्रादिकं वाचा
नैवान्तःकरणन्तथा ॥
कं वा पश्यसि राजेन्द्र !
प्रधानमिदमावयोः ।
मृतः परेऽह्नि क्षेत्रज्ञः संजातोऽयं
गुणात्मकः ॥
ममको दुःखमाप्त्यर्थं जातो
मत्स्योऽम्भसा यथा ।
एकत्वेऽपि पृथग्भावस्तथा क्षेत्रात्मनो
नृप ! ॥
ज्ञानपूर्ब्बाभियोगोऽतिज्ञाने सह
योगिनः ।
सा मुक्तिर्ब्रह्मणा चैक्यमनैक्यं पुत्त्र ! ते
गुणैः ।

निर्गुणः स तु विज्ञेयः सुखदुःखमतीतवान् ।
जीवनाशो भवेद्यत्र तत् सुखं निष्प्रयोजनम्
॥
मृत्पिण्डदण्डवन्मोक्षस्तन्मोक्षस्तुभवेद्वृथा
।
तिष्ठन्ति काष्ठवद्ये च संवित्तिपरिवर्जिताः ॥
ते च मायोदरे लीना जडान्धवधिरोपमाः ।
आकाशवद्भवेदात्मा विदेहो निष्प्रचेतनः ॥
अलं ह्यनेन मोक्षेण चेतनारहितेन च ।
वरमेव च संसारी विषयासक्तचेतनः ॥
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं
सुखम् ।
भुञ्जन्नात्मा उभौ पाशौ संसारे
संव्यवस्थितः ॥
ईदृशं हि परं ज्ञानं वेदादीनामशेषतः ।
सुखस्य च फलं भुङ्क्ते स्वर्गे चेह
द्विजोत्तम ! ॥
यत्र वासः परे स्थाने सुखदुःखविवर्जितः ।
केवलं जीवनाशोऽयं प्रोक्तज्ञानमजानता ॥
चेतनारहितो ज्ञानमाकाशस्थोऽप्यचेतनः ।
मृत्पिण्डदण्डलोष्टादिशिलापट्टककुड्यवत्
॥
अथ श्रान्तो नरो यद्वत् सुसुप्तः सुखमश्नुते
।
बोध्यमानः सचेतापि सुखाद्बोद्धुं न मन्यते
॥ * ॥
केषां मुक्तमिदं मोक्षः सुखमत्यन्तकेवलम् ।
तदहं संप्रवक्ष्यामि शृणुष्व गदतो मम ॥
दुःखानामागमो नास्ति यत्र सौख्यं
निरन्तरम् ।
विद्यते तत् परं दृष्ट्वा योऽप्यानन्दसुखी
भवेत् ॥
ब्रह्मज्ञानप्रविन्नाश्च
स्वच्छन्दात्मबलान्विताः ।
न तेषां पुनरावृत्तिर्यान्ति विष्णुलयं बुधाः ॥
अस्ति देवो हरिः शान्तः
कारणोपायवर्जितः ।
तं ज्ञात्वा तु भवेन्मुक्तिर्निर्म्मला
काययोगिनः ॥

प्राह नारायणायेति नमोऽन्ताद्यो नियोगतः ।
ओमित्येकाक्षरे मन्त्रे स्थितः सर्व्वगतो हरिः
।
माधवायेति वै नाम धर्म्मकामार्थमोक्षदम् ॥”
इति वह्निपुराणम् ॥
मुक्तिदातरि, त्रि ॥ (यथा, देवीभागवते । १ ।
२ । १० ।
“तां ध्यात्वा सगुणां मायां मुक्तिदां निर्गुणा-
न्तथा ॥”)

**मुक्तिमण्डपः**, पुं, (मुक्तिदायकः मण्डपः । यद्वा
मुक्तेर्मण्डपः ।) विश्वेश्वरस्य
दक्षिणपार्श्वस्थ-
मण्डपः । यथा, --
“निमेषमात्रं स्थितचित्तवृत्ता-
स्तिष्ठन्ति ये दक्षिणमण्डपेऽत्र ।
अनन्यभावा अपि गाढमानसा
न ते पुनर्गर्भदशामुपासते ॥”
इति काशीखण्डम् ॥
श्रीजगन्नाथमन्दिरदक्षिणपार्श्वस्थमण्डपश्च
॥

**मुक्तिमुक्तः** पुं, (मुक्त्या मोचनेन मुक्तः हीनः ।)
शिह्लकम् । इति रत्नमाला ॥

**मुखं**, क्ली, (खनति विदारयति अन्नादिकमनेन
खन्यते विधात्रा सुखमनेति वेति । खन् +
“डित्-
खनेर्मुट् चोदात्तः ।” उणा० । ५ । २० ।
इति
करणे अच् । स च डित् मुडागमश्च ।)
शरीरावयवविशेषः । स तु मुखविवरम् ॥
(तन्निरुक्तिर्यथा, --
‘प्रजासृजा यतः खातं तस्मादाहुर्मुखं बुधाः
।’
इत्यमरटीकाधृतम् ।)
कवयस्तु तदुपलक्षिते समुदाये प्रयुञ्जते ।
इति
भरतः ॥ तत्तु गर्भस्थस्य पञ्चमासैर्भवति ।
इति

तद्गृहं यत्र वसतिस्तद्भोज्यं येन जीवति ॥”
इति गारुडे २३० अध्यायः ॥ * ॥
अपि च ।
“हरिरात्मा न सन्देहो यदा तत् समजायत ।
तदा मुक्तः स संसारी विष्णोरेवात्मतां व्रजेत् ।
नान्यथा मुच्यते चात्मा भ्रमन् वै घटियन्त्रवत् ॥
पूर्ब्बकर्म्मनिबद्धोऽपि सर्व्वयोनिषु नित्यशः ।
कूटस्थः पशुतां याति आत्मज्ञानविवर्ज्जितः ॥
कुर्व्वन्नहं ममेतीदमेवं दुःखाय कल्पते ।
मृद्धेतोर्हि यथा कार्य्यं लिप्यते वै न्वनीश्वरः ॥
क्षीराधानादिभिर्यद्वद्भाण्डं तद्वन्महानसे ।
चन्द्रकान्तमणिर्यद्वद् गृह्णीते सोपचान् गुणान् ।
सुखं दुःखं तथा क्षेमं संसरन् नूनमीश्वरः ॥
स्वप्ने यः पुरुषो नित्यमटते कर्म्मबन्धनात् ।
मन्यमानः सुखं दुःखं सोऽप्येव विप्र ! मुच्यते ॥
जगन्मुक्ते न सृष्टिः स्यादमुक्ते वर्द्धते सदा ।
तस्माज्जगत्क्षयं विद्यात् ज्ञानं नाधिकमेव च ॥
यत्र तत्र स्थितो ज्ञानी परमाक्षरवित् सदा ।
विषयान्तरसक्तो वा याति देहे मृते हरिम् ॥
न तस्य प्रतिबन्धोऽस्ति यद्यनीहोऽपि लीलया ।
कुरुते गृह्यते नैव पद्मपत्रमिवाम्भसा ॥
यथा दुर्द्दिनसंघातं मेघवृन्दैर्व्यवस्थितम् ।
तदिच्छुर्न्निर्मलावस्थो ज्ञानी विषयसंज्ञितः ॥
ब्रह्मा विष्णुश्च रुद्रश्च चन्द्रसूर्य्यादयः सुराः ।
न विभक्तिं शरीरस्य यान्ति मुक्तिर्न विद्यते ॥
तस्मादाराधनीयोऽपि संयमेन्द्रियगोचरः ।
विष्णुर्मायापतिर्यो वै यदीच्छेन्मुक्तिमात्मनः ॥
नान्यत्र विद्यातपसो नान्यत्रेन्द्रियनिग्रहात् ।
नान्यत्र सर्व्वसंत्यागात् मोक्षं बिन्दति मानवः ॥
तस्माद्धर्म्ममुखो भूत्वा संयम्यात्मानमात्मना ।
धर्म्मं कुर्य्याद्विहायैनो धर्म्मात्मा सुखमेधते ॥
धर्म्मादिवाप्यते देहो दाराः पुत्त्रा धनं तथा ।
धर्म्मात् स्वर्गश्च मोक्षश्च यदन्यदपि दुर्लभम् ॥
ऋषयो देवगन्धर्व्वाः स्वधर्म्ममनुगामिनः ।
स्वर्गे तिष्ठन्ति विप्रर्षे ! ततो यास्यन्ति सद्गतिम् ॥
धर्म्ममर्थञ्च कामञ्च मोक्षञ्च ऋषिसत्तम ! ।
समाप्नोति पुमान्नित्यं नारायणपरायणः ॥”
इति वह्निपुराणम् ॥
(निरुक्तिर्यथा, सांख्यसूत्रम् । ६ । २० ।
“मुक्तिरन्तरायध्वस्तेर्न्न परः ।”
यथाच, अष्टावक्रसंहितायाम् । १ । २ ।
“मुक्तिमिच्छसि रे तात ! विषयान् विषवत्त्यज ।
क्षमार्ज्जवदयातोषसत्यं पीयूषवद्भज ॥”)

**मुक्तिदं**, क्ली, (मुक्तिं ददातीति । मुक्ति + दा + कः ।) भगवन्नामविशेषः । यथा, --
“अल्पाक्षरञ्च बह्वर्थं महासारञ्च मुक्तिदम् ।
नानासिद्धिप्रदातारं परं चित्तानुरञ्जकम् ॥
गुह्यात् गुह्यतरं चान्यन्नाम चाष्टाक्षरं परम् ।
मन्त्रं सुखसमुच्चार्य्यमशेषार्थप्रसाधकम् ॥
सुखबोधः ॥ तत्पर्य्यायः । वक्त्रस् २ आस्यम् ३
वदनम् ४ तुण्डम् ५ आननम् ६ लपनम् ७ ।
इत्यमरः । २ । ६ । ८९ ॥ (यथा, नैषधचरिते
९ । ४४ ।
“मुखं विमुच्य श्वसितस्य धारया
वृथैव नासापथधावनश्रमः ।”)
तस्य स्वरूपं यथा, --
‘ओष्ठौ च दन्तमूलानि दन्ता जिह्वा च तालु च ।
गलो गलादि सकलं सप्ताङ्गं मुखमुच्यते ॥’
इति भावप्रकाशः ॥
रतिक्रियायां स्वस्त्रीमुखस्य स्नेहात् स्वबालक-
मुखस्य च चुम्बने शुद्धत्वं यथा, --
“मक्षिका सन्तता धारा मार्ज्जारो ब्रह्मबिन्दवः ।
स्त्रीमुखं बालकमुखं न दुष्टं मनुरब्रवीत् ॥”
इति कर्म्मलोचनम् ॥ * ॥
निःसरणम् । इत्यमरः । २ । ३ । १९ ॥ तत्तु
गृहस्य निष्क्रमणप्रवेशनवर्त्म । इति सर्व्वधरा-
दयः । गृहादिद्वारप्रवेशः । इति स्वामी । हट्ट-
मण्डपादेः प्रवेशनिर्गमः । इति कोक्कटः ।
गृहाङ्गणादिनिःसरणपथः । इति रमानाथः ।
इत्यमरटीकायां भरतः ॥ प्रारम्भः ॥ (यथा, रघुवंशे । ३ । १ ।
“अथेप्सितं भर्त्तुरुपस्थितोदयं
सखीजनोद्वीक्षणकौमुदीमुखम् ।

| सर्व्वावस्थोऽपि मुच्येत भावयुक्तः परे पदे ।<br>जीवन्मुक्तः स मुक्तः स्यान्निद्राविरहितस्तुयः ॥<br>कर्त्ता हर्त्ता च भोक्ता च सर्व्वज्ञः सर्व्वगो हरिः ।<br>एकं स्वच्छन्दलीलस्य मुक्तिरित्यभिधीयते ॥<br>जीवमुक्तिमजानन्तो मूर्च्छिताकारविग्रहाः ।<br>विषमुग्धा इवाभान्ति सूढाश्चैतन्यवर्जिताः ॥ | | |
|---|---|---|

निदानमिक्षाकुकुलस्य सन्ततेः
सुदक्षिणा दौर्हृदलक्षणं दधौ ॥”
“कौमुद्याः मुखं प्रारम्भम् ।” इति
तट्टीकायां
मल्लिनाथः ।) उपायः ॥ सन्धिविशेषः
॥ (यथा,
दशरूपके । १ । २३ ।
“मुखं बीजसमुत्पत्तिर्नानार्थरससम्भवा
।
अङ्गानि द्वादशैतस्य
बीजारम्भसमन्वयात् ॥”)
नाटकादेः शब्दः । इति मेदिनी । खे,
४ ॥
आद्यम् ॥ (यथा, रामायणे । २ । ५० ।
७ ।
“अचक्षुर्विषयं प्रायाद् यथार्कः
क्षणदामुखे ॥”)
प्रधानम् ॥ (यथा, महाभारते । २ ।
३८ ।
२७ -- २९ ।
“राजा मुखं मनुष्याणां नदीनां सागरो
मुखम् ।
नक्षत्राणां मुखं चन्द्र आदित्यस्तेजसां
मुखम् ॥
पर्व्वतानां मुखं मेरुर्गरुडः पततां मुखम्
।
सदेवकेषु लोकेषु भगवान् केशवो
मुखम् ॥”)
शब्दः । नाटकः । वेदः । इति
शब्दरत्नावली ॥
(द्वारम् । यथा, रघुवंशे । ३ । २८ ।
“लिपेर्यथावद्ग्रहणेन वाङ्मयं
नदीमुखेनेव समुद्रमाविशत् ॥”
“नद्या मुखं द्वारम् । मुखन्तु वदने
मुख्यारम्भे
द्वाराभ्युपाययोरिति यादवः ।” इति
तट्टीकायां
मल्लिनाथः ॥ अग्रभागः । यथा,
हठयोगप्रदीपि-

जायन्ते पिडका यूनां ज्ञेयास्ता मुखदूषिकाः
॥”
प्रख्याः सदृश्यः । एता यूनामेव मुखे भवन्ति
स्वभावात् ॥ * ॥ अथ तच्चिकित्सा ।
“अङ्गुलस्य चतुर्थांशो मुखे लेपः कनिष्ठकः ।
मध्यमस्तु त्रिभागः स्यादुत्तमोर्द्धाङ्गुलो भवेत्
॥
स्थितिकालोऽपि तस्योक्तो यावत् कल्को न
शुष्यति ।
शुष्कस्तु गुणहीनः स्यात्तथा दूषयति त्वचम्
॥”
मुखलेपमाह ।
“लोध्रधान्यवचालेपस्तारुण्यपिडकापहः ।
तद्वद्गोरोचनायुक्तं मरिचं मुखलेपनम् ॥
सिद्धार्थकवचालोध्रैः सैन्धवैश्च प्रलेपनम् ।
वमनञ्च निहन्त्याशु पिडकां यौवनोद्भवाम् ॥
केवलाः पयसा पिष्टास्तीक्ष्णाः शाल्मलि-
कण्टकाः ।
आलिप्तं त्र्यहमेतेन भवेत् पद्मोपमं मुखम् ॥”
इति भावप्रकाशः ॥

**मुखधावनं**, क्ली, (मुखस्य धावनं । धावुञ् जवे
मृजि + ल्युट् ।) आस्यप्रक्षालनम् । मुखधोया
इति भाषा । यथा, भावप्रकाशे ।
“पटोलनिम्बजम्ब्वाम्रमालतीवनपल्लवैः ।
पञ्चपल्लवजः श्रेष्ठः कषायो मुखधावने ॥”

**मुखधौता**, स्त्री, (मुखं धौतं मार्ज्जितमनेनेति ।
धाव् + कर्म्मणि + क्तः स्त्रियां टाप् ।) ब्राह्मण-
यष्टिका । इति शब्दचन्द्रिका ॥

**मुखनिवासिनी**, स्त्री, (मुखे निवसति या सा ।
नि + वस् + णिनिः स्त्रियां ङीप् । वाणीरूप-
त्वादस्यास्तथात्वम् ।) सरस्वती । इति
केचित् ॥

**मुखनिरीक्षकः**, पुं, (मुखं निरीक्षते इति । निर् +
ईक्ष् + ण्वुल् । उद्योगं विहायान्यमुखापेक्षि-
त्वेनावस्थानादस्य तथात्वम् ।) अलसः ।
इति
शब्दरत्नावली ॥

**मुखरः**, त्रि, (मुखं अस्यास्तीति । मुख + उष-
सुषिमुष्कमधो रः ।” ५ । २ । १०७ ।
इत्यत्र
“रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम् ।”
इति
काशिकोक्त्या सर्व्वस्मिन् वक्तव्ये रः ।
“निन्दितं
मुखमस्यास्तीति रः ।” इत्यमरटीका ।)
अप्रिय-
वादी । तत्पर्य्यायः । दुर्मुखः २ अबद्धमुखः
३ ।
इत्यमरः । ३ । १ । ३६ ॥ (यथा, --
“एका भार्य्या प्रकृतिमुखरा चञ्चला च
द्वितीया ।”
इत्युद्भटः ॥
शब्दायमानः । यथा, मृच्छकटिकनाटके १
अङ्के ।
“त्वां सूचयिष्यति तु माल्यसमुद्भवोऽयं
गन्धश्च भीरु ! मुखराणि च नूपुराणि ॥”
अग्रयायी । यथा, हितोपदेशे ।
“यदि कार्य्ये विपत्तिः स्यान् मुखरस्तत्र
हन्यते ॥”)

**मुखरः**, पुं, (मुख + रः ।) काकः । शङ्खः । इति
राजनिर्घण्टः ॥

**मुखरोगः**, पुं, (मुखस्य रोगः ।) वक्त्रामयः । (यथा,
मार्कण्डेये । १५ । ३५ ।
“पङ्ग्वन्धो वधिरः कुष्ठी यक्ष्मणा च
प्रपीडितः ।
मुखरोगाक्षिरोगैश्च गुदरोगैश्च बाध्यते ॥”)
तत्र मुखस्य स्वरूपमाह ।
“ओष्ठौ च दन्तमूलानि दन्ता जिह्वा च तालु
च ।
गलो गलादि सकलं सप्ताङ्गं मुखमुच्यते ॥”
अथ मुखरोगाणां संख्यामाह ।
‘स्युरष्टावोष्ठयोर्दन्तमूले तु दश षट् तथा ।
दन्तेष्वष्टौ रसज्ञायां पञ्च स्युर्नव तालुनि ॥
कण्ठे त्वष्टादश प्रोक्तास्त्रयः सर्व्वसराः
स्मृताः ।

कायाम् । ३ । ५ ।
"तस्मात् सर्व्वप्रयत्नेन
प्रबोधयितुमीश्वरीम् ।
ब्रह्मद्वारमुखे सुप्तां मुद्राभ्यासं समाचरेत्
॥")

**मुखः**, पुं, डहुः । यथा, --

'लकुचो लिकुचो नुत्तः खगवक्त्रो मुखो
डहुः ।'
इति शब्दचन्द्रिका ॥

**मुखगन्धकः**, पुं, (मुखे गन्धः अस्मात् । कप् ।)

पलाण्डुः । इति राजनिर्घण्टः ॥

**मुखघण्टा**, स्त्री, (मुखे घण्ठेव शब्दसादृश्यात् ।)

हुलहुलीध्वनिः । इति त्रिकाण्डशेषः ॥

**मुखचीरी**, स्त्री, (मुखस्य चीरं वस्त्रविशेष इव ।

मुखचीर + स्वल्पार्थे ङीष् ।) जिह्वा ।
इति
शब्दमाला ॥

**मुखजः**, पुं, (मुखात् जायते इति । जन् + डः ।)

ब्राह्मणः । इति पुराणम् ॥ वक्त्रजाते त्रि
॥

**मुखतीयं**, त्रि, (मुखस्य इति । मुख + तसिल् ।

मुखतः । ततः "मुखपार्श्वशब्दाभ्यां
तसन्ताभ्या-
मीयप्रत्ययो वक्तव्यः ।" ४ । ३ । ६०
। इत्यस्य वार्त्ति-
कोक्त्या ईयः ।
"मुखपार्श्वतसोर्लोपश्च ।"
४ । २ । १३८ । इत्यत्र
काशिकोक्तेश्च टिलोपः ।)
मुखसम्बन्धि । इति सिद्धान्तकौमुदी
॥

**मुखदूषणः**, पुं, (मुखं दूष्यते अनेनेति । दुष् +

णिच् + करणे ल्युट् ।) पलाण्डुः । इति
राज-
निर्घण्टः ॥

**मुखदूषिका**, स्त्री, (मुखं दूषयति विवर्णं करो-

**मुखपूरणं**, क्ली, (मुखं पूर्य्यते अनेनेति । पूर् +

करणे ल्युट् ।) गण्डूषः । इति वैद्यकम् ॥

**मुखप्रियः**, पुं, (मुखस्य प्रियः ।) नारङ्गः ।

इति भावप्रकाशः ॥ वक्त्ररोचके, त्रि ॥ (यथा,
सुश्रुते सूत्रस्थाने ४५ अध्याये ।
"मुखप्रियः स्थिरमदो विज्ञेयोऽनिलनाशकः
।")

**मुखभूषणं**, क्ली, (मुखं भूषयति रक्तिम्नालङ्करो-

तीति । भूष् + णिच् + ल्युः ।) ताम्बूलम् ।
इति
वैद्यकम् ॥

**मुखमण्डनकः**, पुं, (मुखं मण्डयति भूषयतीति । मडि

+ ल्युः स्वार्थे कन् ।) तिलकवृक्षः । इति
राज-
निर्घण्टः ॥ आस्यभूषके, त्रि । (मुखमण्डन-
मप्यत्र ॥)

**मुखमोदः**, पुं, (मुखस्य मोदः हर्षः अस्मात् ।)

शोभाञ्जनः । इति राजनिर्घण्टः ॥

**मुखयन्त्रणं**, क्ली, (मुखं अश्वादीनां यन्त्र्यते सङ्को-

च्यते येनेति यत्रि सङ्कोचने + करणे ल्युट् ।)
कविका । यथा, --
"कवी खलीनं कविका कवियं मुखयन्त्रणम्
।"
इति हेमचन्द्रः । ४ । ३१६ ॥

एवं मुखामयाः सर्व्वे सप्तषष्टिर्मता बुधैः ॥'
मुखरोगाणां निदानान्याह ।
'अनूपपिशितक्षीरदधिमाषादिसेवनात् ।
मुखमध्ये गदान् कुर्य्युः क्रुद्धा दोषाः
कफोत्तराः ॥'
तत्रौष्ठरोगाः ।
तेषां निदानपूर्ब्बिकां संख्याञ्चाह ।
'पृथग्दोषैः समस्तैश्च रक्तजो मांसजस्तथा
।
मेदोजश्चाभिघातोत्थ एवमष्टौष्ठजा गदाः
॥'
तत्र वातिकस्य लक्षणमाह ।
'कर्क्कशौ परुषौ स्तब्धौ कृष्णौ
तीव्रसुगन्धिनौ ।
दाल्येते परिपाट्येते ओष्ठौ मारुतकोपतः
॥'
परुषौ रूक्षौ । दाल्येते विदार्य्येते ।
परिपाट्येते
किञ्चिद्विदीर्णत्वचौ क्रियेते ॥ पैत्तिकमाह ।
'चीयेते पिडकाभिस्तु सरुजाभिः
समन्ततः ।
सदाहपाकपिडकौ पीताभासौ च पित्ततः
॥'
श्लैष्मिकमाह ।
'सवर्णाभिस्तु चीयेते पिडकाभिरवेदनौ ।
कण्डूमन्तौ कफादोष्ठौ पिच्छिलौ शीतलौ
गुरू ॥'
सान्निपातिकमाह ।
'सकृत् कृष्णौ सकृत् पीतौ सकृत् श्वेतौ
तथैव च ।
सन्निपातेन विज्ञेयावनेकपिडकान्वितौ ॥'

| तीति । दुष् + णिच् + ण्वुल् टाप् अत इत्वञ्च ।) मुखजातक्षुद्ररोगविशषः। वयस्फोडा इति भाषा । तल्लक्षणमाह । “शाल्मलीकण्टकप्रख्याः कफमारुतपित्तजाः । | | |
|---|---|---|

रक्तजमाह ।
'खर्ज्जूरफलवर्णाभिः
पिडकाभिर्निपीडितौ ।
रक्तोपसृष्टौ रुधिरं स्रवन्तौ
शोणितप्रभौ ॥'
मांसजमाह ।
'मांसदुष्टौ गुरू स्थूलौ
मांसपिण्डवदुद्गतौ ।
जन्तवश्चात्र मूर्च्छन्ति
नरस्योभयतो मुखात् ॥'
जन्तवः कृमयः । मूर्च्छन्ति
वर्द्धन्ते । मुखादुभ-
यतः सृक्कण्योः ॥ * ॥
मेदोजमाह ।
'सर्पिर्मण्डप्रतीकासो मेदसा
कण्डुरौ गुरू ।
स्वच्छस्फटिकसङ्काशमास्रावं
स्रवतो भृशम् ॥'
अभिघातजमाह ।
'क्षतजाभौ विदीर्य्येते पीड्येते
चाभिघाततः ।
मथितौ च समाख्यातावोष्ठौ
कण्डूसमन्वितौ ॥'
मथितौ मृदिताविव । अतएव
क्षतजाभौ रुधि-
राभाविति सङ्गतम् ॥ * ॥
अथौष्ठरोगाणां
चिकित्सा ।
'गलदन्तमूलदशनच्छद्वेषु रोगाः
कफास्र-
भूयिष्ठाः ।
तस्मादेतेष्वसकृद्रुधिरं
विस्रावयेद्दुष्टम् ॥
चतुर्व्विधेन स्नेहेन मधूच्छिष्टयुतेन
च ।
वातजेऽभ्यञ्जनं कुर्य्यान्नाडीस्वेदञ्च
बुद्धिमान् ॥'
चतुर्विधेन स्नेहेन
तैलघृतवसामज्जरूपेण ।

शोणितं मांसानि पचति ॥ दन्तपुप्पुटमाह ।
'दन्तयोस्त्रिषु वा यत्र श्वयथुर्जायते महान् ।
दन्तपुप्पुटको नाम स व्याधिः कफरक्तजः ॥'
दन्तवेष्टमाह ।
'स्रवन्ति पूयं रुधिरं चला दन्ता भवन्ति च ।
दन्तवेष्टः स विज्ञेयो दुष्टशोणितसम्भवः ॥'
अत्र दन्तमूलानीति कर्त्तृपदमध्याहरणीयम् ॥
शैशिरमाह ।
'श्वयथुर्दन्तमूलेषु रुजावान् कफवातजः ।
लालास्रावी कण्डुरश्च विज्ञेयः शैशिरो गदः ॥
महाशैशिरमाह ।
'दन्ताश्चलन्ति वेष्टेभ्यस्तालु चाप्यवदीर्य्यते ।
यस्मिन् स सर्व्वजो व्याधिर्महाशैशिरसंज्ञकः ॥'
तालु चाप्यवदीर्य्यते चकारात् दन्तवेष्टौ चाप्यव-
दीर्य्येते । सप्तरात्रान् मारकश्चायं यत आह
भोजः । महाशैशिर इत्येष सप्तरात्रान् निह-
न्त्यसून् ॥ * ॥ परिदरमाह ।
'दन्तमांसानि शीर्य्यन्ते यस्मिन् स्रवति चाप्यसृक्
।
पित्तासृक्कफजो व्याधिर्ज्ञेयः परिदरो हि सः ॥'
उपकुशमाह ।
'वेष्टेषु दाहः पाकश्च ताभ्यां दन्ताश्चलन्ति हि ।
आघट्टिताः प्रस्रवन्ति शोणितं मन्दवेदनम् ॥
आध्मायते श्रुते रक्ते मुखं पूति च जायते ।
यस्मिन्नुपकुशः स स्यात् पित्तरक्तसमुद्भवः ॥'
आघट्टिताः घृष्टाः ॥ * ॥ वैदर्भमाह ।
'घृष्टेषु दन्तमूलेषु संरम्भो जायते महान् ।
चलन्ति च रदा यस्मिन् स वैदर्भोऽभिघातजः ॥'
संरम्भः शोथः । चलन्ति चेति चकाराद्वेदना-
दाहपाकाः ॥ * ॥ खलिवर्द्धनमाह ।
'मारुतेनाधिको दन्तो जायते तीव्रवेदनः ।
खलिवर्द्धनसंज्ञोऽसौ संजाते रुक् प्रशाम्यति ॥'
सञ्जाते दन्ते ॥ * ॥ अधिमांसकमाह ।
हानव्ये पश्चिमे दन्ते महान् शोथो महारुजः ।
लालास्रावी कफकृतो विज्ञेयः सोऽधिमांसकः ॥
हानव्ये हनुभवे पश्चिमे दन्ते ॥ * ॥ पञ्चदन्त-
नाडीराह ।
'दन्तमूलगता नाड्यः पञ्च ज्ञेया यथेरिताः ।'
यथेरिता यथा नाडीव्रणे वातपित्तकफसन्नि-

शिरोविरेकश्च हितो नस्यं स्निग्धञ्च
भोजनम् ॥
विस्राविते दन्तवेष्टे व्रणन्तु प्रतिसारयेत् ।
लोध्रपत्तङ्गमधुकलाक्षाचूर्णैर्मधुप्लुतैः ॥'
प्रतिसारयेत् अङ्गुल्या घर्षयेत् । पत्तङ्गं
चोचकं
इति लोके ।
'गण्डूषे क्षीरिणो योज्याः
सक्षौद्रघृतशर्क्कराः ।
चलदन्तस्थैर्य्यकरं कार्य्यं बकुलचर्व्वणम् ॥
भद्रमुस्ताभयाव्योषविडङ्गारिष्टपल्लवैः ।
गोमूत्रपिष्टैर्गुटिकां छायाशुष्कां प्रकल्पयेत्
तां निधाय मुखे शोथशूलदन्तातुरो नरः ।
नातःपरतरं किञ्चिच्चलदन्तस्य भेषजम् ॥'
भद्रमुस्तादिवटिका ।
'तुला घृतं नीलसहाचरस्य
द्रोणाम्भसा संश्रपयेद्यथावत् ।
ततश्चतुर्भागरसेन तैलं
पचेच्छनैरर्द्धपलप्रमाणैः ॥
कल्कैरनन्ताखदिरारिमेद-
जङ्घाम्रयष्टीमधुकोत्पलानाम् ।
तत्तैलमाश्वेव धृतं मुखेन
स्थैर्य्यं द्विजानां विदधाति सद्यः ॥
नीलसहाचरः नीलपुष्पकटसैया । अनन्ता
दुरालभा तदलाभे यवासो ग्राह्यः । अरिमेदो
दुर्गन्धखदिरः । सहाचराद्यतैलम् ॥ * ॥
'शैशिरे हृतरक्ते तु लोध्रमुस्तारसाञ्जनैः ।
सक्षौद्रैः शस्यते लेपो गण्डूषे क्षीरिणो हिताः
॥
क्रियां परिदरे कुर्य्याच्छीतादोक्तां विचक्षणः
।
संशोध्योभयतः कायं शिरश्चोपकुशे तथा ॥
काकोडुम्बरिकापत्रैर्व्रणं विस्रावयेद्भिषक् ।
लवणैः क्षौद्रयुक्तैश्च सव्योषैः परिसारयेत् ॥
* ॥
'शस्त्रेणोत्कृत्य वै दर्भं दन्तमूलानि शोधयेत्
।
ततः क्षारं प्रयुञ्जीत क्रियाः सर्व्वाश्च
शीतलाः ॥

वेधं शिराणां वमनं विरेकं
तिक्तस्य पानं रसभोजनञ्च।
शीताः प्रदेहाः परिषेचनञ्च
पित्तोपसृष्टेष्वधरेषु कुर्य्यात् ॥
शिरोविरेचनं धूमः स्वेदः कवल
एव च ।
हृते रक्ते प्रयोक्तव्यं ओष्ठकोपे
कफात्मके ॥
मेदोजे स्वेदिते भिन्ने शोधिते
कषलो हितः ।
प्रियङ्गु त्रिफला लोध्रं सक्षौद्रं
प्रतिसार-
णम् ॥'
प्रतिसारस्य विधिमाह ।
'दन्तजिह्वामुखानां
यच्चूर्णकल्कावलेहनैः ।
शनैर्घर्षणमङ्गुल्या तदुक्तं
प्रतिसारणम् ॥
ओष्ठरोगेष्वशेषेषु दृष्ट्वा
दोषमुपाचरेत् ।
तेषु व्रणत्वं यातेषु व्रणवत्
समुपाचरेत् ॥'
अथ दन्तवेष्टरोगाः । तत्र
दन्तवेष्टरोगाणां
नामानि संख्याञ्चाह ।
'शीतादो गदितः पूर्ब्बं
दन्तपुप्पुटकस्तथा।
दन्तवेष्टः शैशिरश्च महाशैशिर एव
च ॥
ततः परिदरः प्रोक्तस्ततस्तूपकुशः
स्मृतः ।
वैदर्भश्च ततः प्रोक्तः खलिवर्द्धन
एव च ॥
अधिमांसकनामा च
दन्तनाड्यश्च पञ्च च ।
दन्तविद्रधिरप्यत्र दन्तवेष्टेषु
षोडश ॥'
तत्र शीतादस्य लक्षणमाह ।
'शोणितं दन्तवेष्टेभ्यो यत्राकस्मात्
प्रवर्त्तते ।

पातागन्तुनिमित्ताः पञ्चनाड्यः कथितास्तथात्रा-
पीत्यर्थः ॥ * ॥ दन्तविद्रधिमाह ।
'दन्तमांसमलैः सास्रैर्वाह्यान्तःश्वयथुर्म्महान् ।
सदाहरुक् स्रवेद्भिन्नः पूयास्रं दन्तविद्रधिः ॥'
दन्तमांसमलैः दन्तवेष्टगतदोषैः । सास्रैः सरक्तै-
र्हेतुभिः ॥ * ॥ अथ दन्तवेष्टरोगाणां चिकित्सा ।
'शीतादे हृतरक्ते तु तोये नागरसर्षपान् ।
निष्क्वाथ्य त्रिफलाञ्चापि कुर्य्याद्गण्डूषधारणम्
॥
'कासीसलोध्रकृष्णामनःशिलासप्रियङ्गुतेजाह्वाः ।
एषां चूर्णं मधुयुक् शीतादे पूतिमांसहरम् ॥'
तेजाह्वा तेजबल्कल इति लोके ।
'तैलं घृतं वा वातघ्नं शीतादे संप्रशस्यते । * ।
'दन्तपुप्पुटके कार्य्यं तरुणे रक्तमोक्षणम् ॥
सपञ्चलवणः क्षारः सक्षौद्रः प्रतिसारणम् ।

उद्धृत्याधिकदन्तन्तु ततोऽग्निमवचारयेत् ।
कृमिदन्तकवच्चात्र विधिः कार्य्यो विजानता
॥'
इयं खलिवर्द्धनस्य चिकित्सा ॥ * ॥
'छित्त्वाधिमांसं सक्षौद्रैरेतैश्चूर्णैरुपाचरेत् ।
वचातेजोवतीपाठास्वर्ज्जिकायावशूकजैः
॥'
तेजोवती तेजवल्कलं स्वर्णजीवन्तीति च ।
'क्षौद्रद्वितीयापिप्पल्यः कवले चात्र
कीर्त्तिताः ।
पटोलनिम्बत्रिफलाकषायश्चात्रधावने ॥' *
॥
'नाडीव्रणहरं कर्म्म दन्तनाडीषु कारयेत् ।
यद्दन्तमध्ये जायेत नाडीदन्तं तदुद्धरेत् ॥
छित्त्वा मांसानि शस्त्रेण यदि नोपरितो भवेत्
।
उद्धृत्य च दहेच्चापि क्षारेण ज्वलनेन वा ॥
भिनत्त्युपेक्षिते दन्ते हनूकास्थिगतं ध्रुवम् ।
समूलं दशनं तस्मादुद्धरेद्भग्नमस्थि च ॥
उद्धृते तूत्तरे दन्ते शोणितं प्रस्रवेदति ।
रक्ताभिषेकात् पूर्ब्बोक्ता घोरा रोगा भवन्ति
हि ॥
काणः संजायते जन्तुरर्द्दितं तस्य जायते ।
चलमप्युत्तरं दन्तमतो नैवोद्धरेद् भिषक् ॥
धावनं जातिमदनस्वादुकण्टकखादिरैः ।"
कशायैरितिशेषः ।
कषायैर्जातिमदनकटुकी-स्वादुकण्टकैः ।

| | | |
|---|---|---|
| दुर्गन्धीनि सकृष्णानि उत्क्लेदीनि मृदूनि च ॥ दन्तमांसानि शीर्य्यन्ते पचन्ति च परस्परम् । शीतादो नाम स व्याधिः कफशोणितसम्भवः ॥' दन्तवेष्टेभ्यः दन्तवेष्टनमांसेभ्यः । अकस्मात् अमिघातं विना शीर्य्यन्ते पतन्ति । पचन्ति च परस्परं पाकोष्मणा मांसानि शोणितं पचन्ति | | |

‘मञ्जिष्ठालोध्रखदिरषष्ट्याह्वैश्चापि यत् कृतम् ।
तैलं तत्साधितं तत्र हन्यात् दन्तगतां गतिम् ॥’
जात्यादिचतुष्टयस्य कषायेण मञ्जिष्ठादिचतुष्ट-
यस्य च कषायेण तैलमिदं पचेत् ।
जातिः
चमेली इति लोके । तस्याः पत्रं ग्राह्यम् ।
मदनो धुत्तुरस्तस्यापि पत्रमत्र ग्राह्यम् ।
कण्टकी बृहत्कटाइ तस्या मूलं ग्राह्यम् ।
स्वादुकण्टकोगोक्षुरः तस्य पञ्चाङ्गं ग्राह्यम् ।
जात्यादितैलम् ॥ * ॥
‘विद्रध्युक्तं विधिं युक्तं विदध्याद्दन्तविद्रधौ ।
शस्त्रकर्म्म नरस्तत्र कुशलेनैव कारयेत् ॥’ * ॥
अथ दन्तरोगाः । तत्र रोगाणां नामानि संख्याञ्चाह ।
‘दालनः कथितः पूर्ब्बं कृमिदन्तक एव च ।
प्रोक्तो भञ्जनको दन्तहर्षो वै दन्तशर्क्करा ॥
कपालिकात्र कथिता श्यावदन्तक एव च ।
करालसंज्ञ इत्यष्टौ दन्तरोगाः प्रकीर्त्तिताः ॥’
तत्र दालनस्य लक्षणमाह ।
‘दीर्य्यमाणेष्विव रुजा यत्र दन्तेषु जायते ।
दालनो नाम स व्याधिः सदागतिनिमित्तजः ॥’
कृमिदन्तकमाह ।
‘कृष्णच्छिद्रचलस्रावी ससंरम्भो महारुजः ।
द्रव्यैः पलमितैरेतैः क्वाथैश्चापि चतुर्गुणैः ॥
लोध्रकट्फलमञ्जिष्ठापद्मकेशरपद्मकैः ।
चन्दनोत्पलयष्ट्याह्वैस्तत्तैलं वदने धृतम् ॥’
कट्फलस्थाने पत्तङ्ग इति च पाठः ।
‘दालनं दन्तचालञ्च दन्तमोक्षं कपालिकाम् ।
शीतादं पूतिवक्त्रञ्च विरुचिं विरसास्यताम् ॥
हन्यादाशु गदानेतान् कुर्य्याद्दन्तानपि स्थिरान् ।
लाक्षादिकमिदं तैलं दन्तरोगेषु पूजितम् ॥’
लाक्षाद्यतैलम् ॥ * ॥
‘जयेत् विस्रावणैः स्विन्नमचलं कृमिदन्तकम् ।
तथावपीडैर्व्वातघ्नैः स्नेहगण्डूषधारणैः ॥
भद्रदार्व्वादिवर्षाभूलेपैः स्निग्धैश्च भोजनैः ।
कृमिदन्तापहं कोष्णं हिङ्गु दन्तान्तरे स्थितम् ॥
बृहतीभूमिकदम्बीपञ्चाङ्गुलकण्टकारिकाक्वाथः ।
गण्डूषस्तैलयुतः कृमिदन्तकवेदनाशमनः ॥
नीली वायसजङ्घा कटुतुम्बी मूलमेकैकम् ।
सञ्चूर्ण्य दशनविधृतं दशनकृमिपातनं प्राहुः ॥
स्नेहानां कवलाः कोष्णाः सर्पिषस्त्रैवृतस्य च ।
निर्यूहाश्चानिलघ्नानां दन्तहर्षप्रमर्दनाः ॥’
त्रैवृतस्य सर्पिषः त्रिवृता पक्वस्य सर्पिषः कबल इत्यर्थः ।
‘स्नैहिकोऽत्र हितो धूमो नस्यं स्नैहिकमेव च ।
पेया रसा यवाग्वश्च क्षीरसन्तानिकाघृतम् ॥
शिरोवस्तिहितश्चापि क्रमो यश्चानिलापहः ।’
अत्र दन्तहर्षे ।
‘अच्छिद्रं दन्तमूलानि शर्क्करामुद्धरेद् भिषक् ।
लाक्षाचूर्णैर्मधुयुतैस्ततस्तां प्रतिसारयेत् ॥
दन्तहर्षक्रियां चात्र कुर्य्यान्निरवशेषतः ।
कपालिका कृच्छ्रतमा तत्राप्येषा क्रिया हिता ॥’
अत्र दन्तशर्क्करायाम् । एषा क्रिया दन्तहर्ष-क्रिया ॥ * ॥
‘फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम् ।
तथातिकठिनं भक्ष्यं दन्तरोगी विवर्ज्जयेत् ॥’
अथ जिह्वारोगाः ।
तत्र जिह्वारोगाणां निदाननामसंख्याः प्राह ।
‘वातजः पित्तजश्चापि कफजोऽलाससंज्ञकः ।
उपजिह्विका च गदा जिह्वायां पञ्च कीर्त्तिताः ॥’
तत्र वातजस्य लक्षणमाह ।
‘जिह्वानिलेन स्फुटिता प्रसुप्ता
‘जिह्वातले यः श्वयथुः प्रगाढः
सोऽलाससंज्ञः कफरक्तमूर्त्तिः ।
जिह्वां स तु स्तम्भयति प्रवृद्धो
मूले च जिह्वा भृशमेति पाकम् ॥’
प्रगाढः प्रकर्षेण गाढो दारुणः ।
कफरक्तमूर्त्तिः
कफरक्ताभ्यां मूर्त्तिर्यस्य कफरक्तज इत्यर्थः ।
जिह्वास्तम्भेन वायुरप्यत्र बोद्धव्यः ।
भृशपाकेन
पित्तञ्च ।
अतस्त्रिदोषोऽयमसाध्यत्वञ्चास्य॥ * ॥
उपजिह्विकामाह ।
‘जिह्वाग्ररूपश्वयथुर्हि जिह्वा-
मुत्ताम्य जातः कफपित्तयोनिः ।
प्रसेककण्डूपरिदाहयुक्तः
प्रकथ्यतेऽसादुपजिह्विकेति ॥’
जिह्वाग्ररूपो जिह्वाग्राकृतिः ॥ * ॥ अथ जिह्वारोगाणां चिकित्सा ।
‘जिह्वागतविकाराणां शस्तं शोणितमोक्ष-
णम् ।
गुडूचीपिप्पलीनिम्बकवलः कटुभिः सुखः ॥
ओष्ठप्रकोपेऽनिलजे यदुक्तं प्राक् चिकित्सितम् ।
कण्ठजेष्वनिलोत्थेषु तत्कार्य्यं भिषजा खलु ॥
पित्तजे परिघृष्टे तु निःसृते दुष्टशोणिते ।
प्रतिसारणगण्डूषनस्यानि मधुरं हितम् ।
कण्टकेषु कफोत्थेषु लिखितेष्वसृजः क्षये ॥
पिप्पल्यादिर्मधुयुतः कार्य्यस्तु प्रतिसारणे ॥
उपजिह्वान्तु संलिख्य क्षारेण प्रतिसारयेत् ।
शिरोविरेकगण्डूषधूमैश्चैनामुपाचरेत् ॥
व्योषक्षाराभयावह्निचूर्णमेतत् प्रघर्षणम् ।

अनिमित्तरुजो वातात् स ज्ञेयः
कृमिदन्तकः ॥'
ससंरम्भः दन्तमूलशोथयुक्तः । तत्रैव
स्रावो
बोद्धव्यः । अनिमित्तरुजः
अवघटनादिनिमित्तं
विनैव महारुजावान् ॥ * ॥
भञ्जनकमाह ।
'वक्त्रं वक्रं भवेद्यत्र दन्तभङ्गश्च
जायते ।
कफवातकृतो व्याधिः स
भञ्जनकसंज्ञकः ॥'
दन्तहर्षमाह ।
'शीतरूक्षप्रवाताम्लस्पर्शानामसहा
द्विजाः ।
यत्र स्युर्व्वातपित्ताभ्यां दन्तहर्षः स
कीर्त्तितः ॥'
दन्तशर्करामाह ।
'मलो दन्तगतो यस्तु
कफश्चानिलशोषितः ।
शर्करेव खरस्पर्शा सा ज्ञेया दन्तशर्करा
॥'
शर्क्करा सिकता ॥ * ॥
कपालिकामाह ।
'कपालेष्विव दीर्य्यत्सु दन्तेषु समलेषु
च ।
कपालिकेति विज्ञेया दन्तच्छित्
दन्तशर्क्करा ॥'
कपालानि मृण्मयघटादिघटकानि
तेष्विव ।
समलेषु दन्तेषु मलसहितदन्तावयवेषु
दीर्य्यत्सु
या दन्तशर्क्करा सा कपालिकेति
विज्ञेया ।
सा कपालिका दन्तच्छित्
दन्तनाशिनी ॥ * ॥
श्यावदन्तकमाह ।
'योऽसृङ्मिश्रेण पित्तेन दग्धो
दन्तस्त्वशेषतः ।
श्यावतां नीलतां वापि गतः स
श्यावदन्तकः ॥'

भवेच्च शाकच्छदनप्रकाशा ।'
स्फुटिता मनाग्विदीर्णा । प्रसुप्ता रसानभिज्ञ-
तया सुप्तेव । शाकच्छदनप्रकाशा शाको मरु-
भूमिजो द्रुमस्तद्वत् कण्टकचिता ॥ * ॥ पित्तज-
माह ।
'पित्तात् सदाहैरुपचीयते च
दीर्घैः सरक्तैरपि कण्टकैश्च ॥'
अयं रोगो लोके जली इति ख्यातः ॥ * ॥
कफजमाह ।
'कफेन गुर्व्वी बहला चिता च
मांसोच्छ्रयैः शाल्मलिकण्टकाभैः ।'
बहलाः स्थूलाः मांसोच्छ्रयैः मांसजकण्टकैः ॥
अलासमाह ।

उपजिह्वाप्रशान्त्यर्थमेभिस्तैलञ्च
पाचयेत् ॥'
अथ तालुरोगाः । तत्र तालुरोगाणां
नामानि
संख्याञ्चाह ।
'गलशुण्डी तुण्डिकेर्य्यध्रुषः कच्छप एव
च ।
ताल्वर्व्वुदश्च कथितो मांससंघात एव
च ।
तालुपुप्पुटनामा च तालुशोषस्तथैवच ॥
तालुपाकश्च कथितास्तालुरोगा अमी
नव ॥'
तत्र गलशुण्डीलक्षणमाह ।
'श्लेष्मासृग्भ्यां तालुमूलात् प्रवृद्धो
दीर्घः शोथो ध्मातवस्तिप्रकाशः ।
तृष्णाकासश्वासजुष्टं वदन्ति
वैद्या व्याधिं कण्ठशुण्डीति नाम्ना ॥
ध्मातवस्तिप्रकाशः
वातपूरितचर्म्मपुटतुल्यः ॥ * ॥
तुण्डिकेरीमाह ।
'शोथः स्थूलस्तोददाहप्रपाकी
प्रागुक्ताभ्यां तुण्डिकेरी मता तु ।'
प्रागुक्ताभ्यां श्लेष्मासृग्भ्याम् ।
तुण्डिकेरी वन-
कार्पासीफलं तत्तुल्येति ॥ * ॥
अध्रुषमाह ।
'शोथस्तन्द्रा लोहितः शोणितोत्थो
ज्ञेयोऽध्रुषः सज्वरस्तीव्ररुक् च ।'
कच्छपमाह ।
'कूर्म्मोत्सन्नो वेदनोऽशीघ्रजन्मा
रोगो ज्ञेयः कच्छपः श्लेष्मणा स्यात् ।'
कूर्म्मोत्सन्नः मध्ये प्रोच्चं प्रान्ते नतः ॥
* ॥
ताल्वर्व्वदमाह ।

| दग्धः दग्ध इव ॥ * ॥ करालमाह ।<br>‘शनैः शनैः प्रकुरुते यत्र<br>दन्ताश्रितोऽनिलः ।<br>करालान् विकटान् दन्तान् स करालो<br>न<br>सिध्यति ॥’<br>करालान् भयानकान् । अयं<br>सुश्रुतेनोक्तः ।<br>संग्रहकारेण गृहीतश्च ॥ * ॥ अथ<br>दन्तरोगाणां<br>चिकित्सा ।<br>‘तैलं लाक्षारसं क्षीरं पृथक् प्रस्थमितं<br>पचेत् । | | |
|---|---|---|

‘पद्माकारं तालुमध्ये तु शोथं
विद्याद्रक्तादर्व्वुदं पित्तलिङ्गम् ।’
पद्माकारं पद्मकर्णिकाकेशरैरिव पार्श्वतो दीर्घ-
मांसाङ्कुरैर्व्वेष्टितम् ॥ * ॥ मांससंघातमाह ।
‘दुष्टं मांसं श्लेष्मणा नीरुजञ्च
ताल्वन्तस्थं मांससंघातमाह ।’
तालुपुप्पुटमाह ।
‘नीरुक् स्थायी कोलमात्रः कफात्मा
मेदोयुक्तः पुप्पुटस्तालुदेशे ॥’
तालुशोषमाह ।
‘शोषोऽत्यर्थं दीर्य्यते त्तापि तालु
श्वासो वातात्तालुशोषोऽयमुक्तः ।’
तालुपाकमाह ।
‘पित्तं कुर्य्यात् पाकमत्यर्थघोरं
तालुन्येनं तालुपाकं वदन्ति ॥’
अथ तालुरोगाणां चिकित्सा ।
‘कुष्ठोषणवचासिन्धुकणापाठाप्लवैः सह ।
सक्षौद्रैर्भिषजा कार्य्यं गलशुण्डीप्रघर्षणम् ॥’
प्लवः केवचीमोथा गुडतची इति च लोके ।
‘अङ्गुष्ठाङ्गुलिसन्दंशेनाकृष्य गलशुण्डिकाम् ।
छेदयेन्मण्डलाग्रेण जिह्वोपरि तु संस्थिताम् ॥’
मण्डलाग्रेण शस्त्रविशेषेण ।
‘अतिच्छेदात् स्रवेद्रक्तं ततो हेतोर्म्रियेत च ।
हीनच्छेदाद्भवेच्छोथो लालास्रावो भ्रम-
स्तथा ॥
तस्मात् वैद्यः प्रयत्नेन दृष्टकर्म्मा विशारदः ।
गलशुण्डीं तु संछिद्य कुर्य्यात् प्राप्तामिमां
क्रियाम् ॥
पिप्पल्यतिविषाकुष्ठवचामरिचनागरैः ।
क्षौद्रयुक्तैः सलवणैस्ततस्तां प्रतिसारयेत् ॥
वचामतिविषापाठारास्नाकुक्क्ररोहिणीः ।
निष्क्वाथ्य पिचुमर्द्दञ्च कवलं तत्र कारयेत् ॥
तुण्डिकेर्य्यध्रुषे कूर्म्मे संघाते तालुपुप्पुटे ।
एष एव विधिः कार्य्यो विशेषः शस्त्रकर्म्मणि ॥
तालुपाके तु कर्त्तव्यं विधानं पित्तनाशनम् ।
स्नेहस्वेदौ तालुशोषे विधिश्चानिलनाशनः ॥’
अथ गलरोगाः । तत्र गलरोगाणां नामानि
संख्याञ्चाह ।
‘रोहिणी पञ्चधा प्रोक्ता कण्ठशालूक एव च ।
वक्षमाणत्वात् ॥ * ॥ तस्य वातजाया
लक्षण-
माह ।
‘जिह्वासमन्ताद्भृशवेदनास्तु
मांसाङ्कुराः कण्ठनिरोधनाः स्युः ।
सा रोहिणी वातकृता प्रदिष्टा
वातात्मकोपद्रवगाढयुक्ता ॥’
समन्तात् जिह्वायाः सर्व्वतः ।
वातात्मकोपद्रव-
गाढयुक्ता स्तम्भादिभिरतिशयेन युक्ता ॥
* ॥
पित्तजामाह ।
‘क्षिप्रोद्गमाक्षिप्रविदाहपाका
तीव्रज्वरा पित्तनिमित्तजाता ।’
श्लेष्मजामाह ।
‘स्रोतोनिरोधिन्यपि मन्दपाका
गुर्व्वी स्थिरा सा कफसम्भवा तु ।’
स्रोतोऽत्र कण्ठस्रोतः ॥ * ॥
सन्निपातजामाह ।
‘गम्भीरपाकिन्यनिवार्य्यवीर्य्या
त्रिदोषलिङ्गा त्रिभवा भवेत् सा ।’
रक्तजामाह ।
‘स्फोटैश्चिता पित्तसमानलिङ्गा
साध्या प्रदिष्टा रुधिरात्मिका तु ।’
रक्तजेतरा संहारकत्वावधिमाह ।
‘सद्यस्त्रिदोषजा हन्ति त्र्यहात्
कफसमुद्भवा ।
पञ्चाहात् पित्तसंभूता सप्ताहात्
पवनोत्थिता ॥’
कण्ठशालूकमाह ।
‘कोलास्थिमात्रः कफसम्भवो यो
ग्रन्थिर्गले कण्टकशूकभूतः ।
खरः स्थिरः शस्त्रनिपातसाध्य-
स्तं कण्ठशालूकमिति ब्रुवन्ति ॥’
कण्टकशूकभूतः कण्टकवच्छूकवच्च
वेदनाजनकः ।
अधिजिह्वामाह ।
‘जिह्वाग्ररूपः श्वयथुः कफात्तु
जिह्वोपरिष्टादसृजैव मिश्रात् ।
‘समुन्नतं वृन्दममन्ददाहं
तीव्रज्वरं वृन्दमुदाहरन्ति ।
तच्चापि पित्तक्षतजप्रकोपाद्
विद्यात् सतोदं पवनात्मकन्तु ॥’
शतघ्नीमाह ।
‘वर्त्तिर्घना कण्ठनिरोधिनी तु
चितातिमात्रं पिशितं प्ररोहैः ।
अनेकरुक् प्राणहरी त्रिदोषा
ज्ञेया शतघ्नीसदृशी शतघ्नी ॥’
घना कठिना । अनेकरुक्
वातपित्तकफजतोद-
दाहकण्ड्वादियुक्ता । शतघ्नीसदृशी
लौहकण्टक-
संछन्ना शतघ्नी महती शिला तत्तुल्या
यतः
प्राणहरी ॥ * ॥ गिलायुमाह ।
‘ग्रन्थिर्गले त्वामलकास्थिमात्रः
स्थिरोऽल्परुक् स्यात् कफरक्तमूर्त्तिः ।
संलक्ष्यते सक्तमिवासितञ्च
स शस्त्रसाध्यस्तु गिलायुसंज्ञः ॥’
गलविद्रधिमाह ।
‘सर्व्वं गलं व्याप्य समुत्थितो यः
शोथो रुजः सन्ति च यत्र सर्व्वाः ।
स सर्व्वदोषैर्गलविद्रधिस्तु
तस्यैव तुल्यः खलु सर्व्वजस्य ॥’
गलौघमाह ।
‘शोथो महान् यस्तु गलावरोधी
तीव्रज्वरो वायुगतेर्निहन्ता ।
कफेन जातो रुधिरान्वितेन
गले गलौघः परिकीर्त्त्यतेऽसौ ॥’
वायुगतेर्निहन्ता उदानवायुगतिरोधकः
॥ * ॥
स्वरघ्नमाह ।
‘यस्ताम्यमानः श्वसिति प्रसक्तं
भिन्नस्वरः शुष्कविमुक्तकण्ठः ।
कफोपदिग्धेष्वनिलायनेषु
ज्ञेयः स रोगः श्वसनात् स्वरघ्नः ॥’
ताम्यमानस्तमः पश्यन् ।
शुष्कविमुक्तकण्ठः

अधिजिह्वश्च बलयोऽलासनाम्नैकवृन्दकः ॥
ततो वृन्दः शतघ्नी च गिलायुः कण्ठविद्रधिः ।
गलौघः प्रस्वरघ्नश्च मांसतानस्तथैव च ॥
विदारी कण्ठदेशे तु रोगा अष्टादश स्मृताः ॥'
तत्र पञ्चानामपि रोहिणीनां सामान्यसंप्राप्ति-
माह ।
'गलेऽनिलः पित्तकफौ च मूर्च्छितौ
प्रदूष्य मांसञ्च तथैव शोणितम् ।
गलोपसंरोधकरैस्तथाङ्कुरै-
र्निहन्त्यसून् व्याधिरयं हि रोहिणी ॥'
अनिलः मूर्च्छितः प्रवृद्धः । पित्तकफौ च
मूर्च्छितौ पित्तं वा मूर्च्छितं कफो वा मूर्च्छितः ।
ननु त्रयोऽपि मूर्च्छिताः पृथग्दोषजाया अवि-

ज्ञेयोऽधिजिह्वः खलु रोग एष
विवर्ज्जयेदागतपाकमेनम् ॥'
असृजा मिश्रादेवेत्यन्वयः ॥ * ॥
बलयमाह ।
'बलाश एवायतमुन्नतञ्च
शोथं करोत्यन्नगतिं निवार्य्य ।
तं सर्व्वथैवाप्रतिवार्य्यवीर्य्यं
विवर्ज्जनीयं बलयं वदन्ति ॥'
अलासमाह ।
'गले तु शोथं कुरुतः प्रवृद्धौ
श्लेष्मानिलौ श्वासरुजोपपन्नम् ।
मर्म्मच्छिदं दुस्तरमेतदाहु-
रलाससंज्ञं भिषजो विकारम् ॥'
मर्म्मच्छिदं हृदयमर्म्मणि छेदेनेव
वेदनाजनकम् ॥
एकवृन्दमाह ।
'वृत्तोन्नतोऽन्तः श्वयथुः सदाहः
सकण्डुरोऽपाक्यमृ दुर्गुरुश्च ।
नाम्नैकवृन्दः परिकीर्त्त्यतेऽसौ
व्याधिर्ब्बलाशः क्षतजप्रसूतः ॥'
अन्तः गलमध्ये । अपाकी ईषत्पाकी ।
अमृदुः
ईषन्मृदुः ॥ * ॥ वृन्दमाह ।

शुष्को विमुक्तोऽस्वाधीनः कण्ठो यस्य
सः ।
अखाधीनता भुक्तं गिलितुमशक्यत्वात्
। अनि-
नायनेषु वायुवर्त्मसु श्वसनात् वातात्
॥ * ॥
मांसतानमाह ।
'प्रतानवान् यः श्वयथुः सुकष्टो
गलोपरोधं कुरुते क्रमेण ।
स मांसतानः कथितावलम्बी
प्राणप्रणुत् सर्व्वकृतो विकारः ॥'
प्रतानवान् विस्तारवान् । सुकष्टः
अतिशयितं
कष्टं यत्र सः ॥ * ॥
विदारीमाह ।
'सदाहतोदं श्वयथुं सुताम्र-
मन्तर्गले पूतिविशीर्णमांसम् ।
पित्तेन विद्याद्वदने विदारीं
पार्श्वं विशेषात् स तु येन शेते ॥'
पार्श्वे विशेषात् स तु येन शेते स
पुरुपो येन
पाश्वेन विशेषाद्बाहुल्येन शेते तस्मिन्
पार्श्वे सा
विदारी भवति इत्यर्थः ॥ * ॥

अथ गलरोगाणां चिकित्सा ।
‘रोहिणीनान्तु साध्यानां हितं शोणितमोक्षणम्
।
वमनं धूमपानञ्च गण्डूषो नस्यकर्म्म वा ॥
वातजान्तु हृते रक्ते लवणैः प्रतिसारयेत् ।
सुखोष्णान् स्नेहगण्डूषान्
धारयेच्चाप्यभीक्ष्णशः ॥
विस्राव्य पित्तसंभूतां सिताक्षौद्रप्रियङ्गुभिः ।
घर्षयेत् कवलो द्राक्षापरूषैः क्वथितैर्हितः ॥
आगारधूमकटुकैः कफजां प्रतिसारयेत् ॥’
आगारधूम झुल इति लोके । कटुकानि शुण्ठी-
पिप्पलीमरिचानि ।
‘श्वेताविडङ्गदन्तीषु तैलं सिद्धं ससैन्धवम् ।
नस्यकर्म्मणि दातव्यं कवले च कफोदये ॥’
श्वेता अपराजिता ।
‘पित्तवत् साधयेद्वैद्यो रोहिणीं रक्तसम्भवाम् ।
विस्राव्य कण्ठशालूकं साधयेत्तुण्डिकेरिवत् ॥
एककालं यवान्नं वा भुञ्जीत स्निग्धमल्पशः ।
उपजिह्वकवच्चापि साधयेदधिजिह्वकम् ॥
एकवृन्दन्तु विस्राव्य विधिं शोधनमाचरेत् ।
एकवृन्दमिव प्रायो वृन्दञ्च समुपाचरेत् ॥
गिलायुश्चापि यो व्याधिस्तञ्च शस्त्रेण साधयेत्
।
अमर्म्मस्थं सुसम्पक्वं छेदयेत् गलविद्रधिम् ॥’
अथ सामान्यानां कण्ठरोगाणां चिकित्सा ।
‘कण्ठरोगेष्वसृङ्मोक्षैस्तीक्ष्णैर्नस्यादिकर्म्मभिः ।
चिकित्सकश्चिकित्सान्तुकुशलोऽत्र समाचरेत्
॥
क्वाथं दद्याच्च
दार्व्वीत्वङ्निम्बताक्ष्र्यक्रलिङ्गजम् ।
हरीतकीकषायो वा हितो माक्षिकसंयुतः ॥
कटुकातिविषादारुपाठामुस्ताकलिङ्गकाः।
गोमूत्रक्वथिताः पीताः कण्ठरोगविनाशनाः ॥
मृद्वीकाकटुकाव्योषदार्व्वीत्वक्त्रिफलाघनम्।
पाठां रसाञ्जनं दारु तेजोह्वेति सुचूर्णितम् ॥
क्षौद्रयुक्तं विधातव्यं गलरोगे महौषधम् ।
योगास्त्वेते त्रयः प्रोक्ता वातपित्तकफापहाः ॥
यवाग्रजं तेजवतीञ्च पाठां
रसाञ्जनं दारु निशां सकृष्णाम् ।

‘ओष्ठप्रकोपे वर्ज्याः
स्युर्मांसरक्तत्रिदोषजाः ।
दन्तवेष्टेषु वर्ज्यौ तु त्रिलिङ्गगतिशौषिरौ ॥’
त्रिलिङ्गगतिः त्रिदोषजा नाडी । महाशौषि-
रश्च ।
‘दन्तेषु च न सिध्यन्ति
स्यावदालनभञ्जनाः ।
जिह्वारोगेष्वालसस्तु तालुजेष्ववंदन्तथा ॥
स्वरघ्नो बलयो वृन्दो बलाशः स हि
दारुणः ।
गलौघो मांसतानश्च शतघ्नी रोहिणी गले
॥
असाध्याः कीर्त्तिता ह्येते रोगा दश नवो-
त्तराः ।
तेषु चापि क्रियां वैद्यः प्रत्याख्याय
समाचरेत् ॥’
अथ समस्तमुखरोगाणां चिकित्सा ।
‘वातात् सर्व्वसरं चूर्णैर्लवणैः प्रतिसारयेत्
।
तैलं वातहरैः सिद्धं हितं कवलनस्ययोः ॥
* ॥
पित्तात्मके सर्व्वसरे शुद्धकायस्य देहिनः ।
सर्व्वपित्तहरः कार्य्यो विधिर्मधुरशीतलः ॥
* ॥
प्रतिसारणगण्डूषधूमसंशोधनानि च ।
कफात्मके सर्व्वसरे क्रमं कुर्य्यात्
कफापहम् ॥ * ॥
मुखपाके सिरावेधः शिरसश्च विरेचनम् ।
मधुमूत्रघृतक्षीरैः शीतैश्च कवलग्रहः ॥ १
॥
जातीपत्रामृताद्राक्षायासदार्व्वीफलत्रिकैः ।
क्वाथः क्षौद्रयुतः शीतो गण्डूषो
मुखपाकनुत् ॥ २ ॥
कार्य्यञ्च बहुधा नित्यं जातीपत्रस्य
चर्व्वणम् ।
कृष्णजीरककुष्ठेन्द्रयवचर्व्वणतस्त्र्यहात् ।
मुखपाकव्रणक्लेददौर्गन्ध्यमुपशाम्यति ॥
३ ॥
पटोलनिम्बजम्बाम्रमालतीनवपल्लवैः ।

शुष्कं चतुर्गुणं दद्यात्तैलमेतैर्व्विपाचयेत्
॥
बाधिर्य्यं कर्णशूलञ्च पूयस्रावश्च
कर्णयोः ।
पूरणादस्य तैलस्य कृमयः कर्णयोः
खिलाः ॥
क्षिप्रं विनाशमायान्ति
शशाङ्ककृतशेखर ! ।
क्षारतैलमिदं श्रेष्ठं मुखदन्तामयापहम्
॥ १३ ॥’
इति गारुडे १८८ । १९८ अध्यायौ ॥
(तथाचास्य सलक्षणचिकित्सितम् ।
“मुखामये मारुतजे तु शोष-
कार्कश्यरौक्ष्याणि चलारुजश्च ।
कृष्णारुणं निष्पतनं सुशीतं
प्रस्रंसनस्पन्दनतोदभेदाः ॥
तृष्णाज्वरस्फोटकतालुदाह-
धूमायनञ्चाप्यवदीर्णता च ।
पित्तात् समूर्च्छा विविधारुजश्च
वर्णाश्च शुक्लारुणवर्णवर्ज्याः ॥
कण्डुर्गुरुत्वं सितविज्जलत्वं
स्नेहोऽरुचिर्जाड्यकफप्रसेकौ ।
उत्क्लेशमन्दानिलता च तन्द्रा
रुजश्च मन्दाः कफवक्त्ररोगे ॥
सर्व्वाणि रूपाणि तु वक्त्ररोगे
भवन्ति यस्मिन् स तु सर्व्वजः स्यात् ।
संस्थानदूष्याकृतिनामभेदा-
चैते चतुःषष्टिविधा भवन्ति ॥
शालाक्यतन्त्रे विहितानि तेषां
निमित्तरूपाकृतिभेषजानि ।
यथाप्रदेशन्तु चतुर्व्विधस्य
क्रियां प्रवक्ष्यामि मुखामयस्य ॥”
इति मुखरोगः ॥ * ॥
‘शुक्ततिक्तकटुक्षौद्रकषायैः कवलग्रहः
।
धूमः प्रधमनं शुद्धिरधश्छर्द्दनलङ्घनम् ॥
भोज्यञ्च मुखरोगेषु
यथास्वन्दोषनुद्धितम् ।

क्षौद्रेण कुर्य्यात् गुटिकां मुखेन
तां धारयेत् सर्व्वगलामयेषु ॥'
अथ समस्तमुखरोगाः । तत्र तेषां निदानं
संख्याञ्चाह ।
'पृथग्दोषैस्त्रयो रोगाः समस्तमुखजाः
स्मृताः ।'
तत्र वातिकस्य लक्षणञ्चाह ।
"स्फोटैः सतोदैर्व्वदनं समन्ताद्-
यत्राचितं सर्ब्बसरः सवातात् ॥ * ॥
पैत्तिकमाह ।
'रक्तैः सदाहैः पिडकैः सुपीतै-
र्यत्राचितं चापि स पित्तकोपात् ॥' * ॥
श्लैष्मिकमाह ।
'अवेदनैः कण्डुयुतैः सवर्णै
र्यत्राचितं चापि स वै कफेन ।'
अवेदनैः ईषद्वेदनैः । यत उक्तं सुश्रुतेन ।
अल्पवेदनैरिति ॥ * ॥ मुखरोगेष्वसाध्यानाह ।

पञ्चपल्लवजः श्रेष्ठः कषायो मुखधावने ॥ ४
॥
पञ्चपल्लवजः क्वाथस्त्रिफलासम्भवोऽथवा
।
मुखपाके प्रयोक्तव्यः सक्षौद्रो मुखधावने ॥
५ ॥
स्वरसः क्वथितो दार्व्व्या घनीभूतो
रसक्रिया ।
सक्षौद्रा मुखरोगासृग्दोषनाडीव्रणापहा॥ ६
॥
सप्तच्छदोशीरपटोलमुस्त-
हरीतकीतिक्तकरोहिणीभिः।
यष्ट्याह्वराजद्रुमचन्दनैश्च
क्वाथं पिबेत् पाकहरं मुखस्य ॥ ७ ॥'
राजद्रुमः धनवहेरा इति लोके ।
'तिला नीलोत्पलं सर्पिः शर्करा क्षीरमेव च
।
क्षौद्राज्यदिग्धकल्कस्यगण्डूषो
मुखपाकनुत् ॥ ८ ॥
आस्वादिता सकृदपि मुखगन्धं
सकलमपनयति ।
त्वग्वीजपूरफलजा पवनमबाध्यञ्च
नाशयति ॥ ९ ॥
हरिद्रां निम्बपत्राणि मधूकं नीलमुत्पलम् ।
तैलमेभिर्व्विपक्तव्यं मुखपाकहरं परम् ॥
१० ॥
यष्टीमधुपलमेकं त्रिंशन्नीलोत्पलस्य
तैलस्य ।
प्रस्थं तद्द्विगुणपयोविधिना पक्वं तु
नस्येन ॥
निशि वदनस्य स्रावं क्षपयति गात्रस्य दोष-
संघातम् ।
कचखर्व्वत्वमवश्यं क्रमशोऽभ्यङ्गेन
जन्तूनाम् ॥ ११
इति मुखरोगाधिकारः । इति भावप्रकाशः
॥ * ॥
अपि च ।
तण्डूलीयकगोक्षूरमूलं पीतं पयोऽन्वितम् ।
कामलादिहरं प्रोक्तं मुखरोगहरं तथा ॥
१२ ॥
शुष्कमूलकशुण्ठीनां क्षारो हिङ्गुलनागरम् ।

पिप्पल्यगुरुदार्व्वीत्वग्यवक्षारो
रसाञ्जनम् ॥
पाठां तेजोवतीं पथ्यां समभागं
सुचूर्णितम् ।
मुखरोगेषु सर्व्वेषु सक्षौद्रं तद्विधारयेत्
॥
सीधुमाधवमाध्वीकैः श्रेष्ठोऽयं
कवलग्रहः ।
तेजोह्वामभयामेलां समङ्गां कटुकां
घनम् ।
पाठां ज्योतिष्मतीं लोघ्रं दार्व्वीं कुष्ठञ्च
चूर्णयेत् ।
दन्तानां घर्षणञ्चैव स्रावकण्डूरुजापहम्
॥'
'गृहधूमो यवक्षारपाठाव्योषं रसाञ्जनम्
।
तेजोह्वा त्रिफला लोध्रं चित्रकञ्चेति
चूर्णितम् ॥
सक्षौद्रं धारयेदेतत् गलरोगविनाशनम्
॥'
इति कालकचूर्णम् ॥ * ॥
मनःशिला यवक्षारो हरितालं
ससैन्धवम् ।
दार्व्वीत्वक् चेति तच्चूर्णं माक्षिकेण
समायुतम् ॥
मूर्च्छितं घृतमण्डेन कण्ठरोगेषु धारयेत्
।
मुखरोगेषु च श्रेष्ठं पीतकं नामकीर्त्तितम्
॥'
इति पीतकचूर्णम् ॥ * ॥
'कटुकातिविषापाठा
दार्व्वीमुस्तकलिङ्गकाः ।
गोमूत्रक्वथिताः पेयाः
कण्ठरोगविनाशनाः ॥
स्वरसः क्वथितो दार्व्व्या
घनीभूतीरसक्रिया ।
सक्षौद्रमुखरोगासृग्दोषनाडीव्रणापहा॥
तालुशोषे त्वतृष्णास्य
सर्पिरौत्तरभक्तिकम् ॥

लावणं मधुराः स्निग्धाः शीताश्चैव रसा
हिताः ।
मुखपाके शिराकर्म्म शिरःकायविरेचनम् ।
मूत्रतैलघृतक्षौद्रक्षीरैश्च कवलग्रहः ॥
सक्षौद्रास्त्रिफलापाठा मृद्वीकाजातिपल्लवाः ।
कषायतिक्तकाः शीताः क्वाथाश्च
मुखधावनाः ।
तुलां खदिरसारस्य द्विगुणामरिमेदसः ॥
प्रक्षाल्य जर्ज्जरीकृत्य चतुर्द्रोणेऽम्भसः
पचेत् ।
द्रोणशेषं कषायन्तं पूत्वा भूयः पचेच्छनैः ॥
ततस्तस्मिन् घनीभूते चूर्णीकृत्थाक्षभागिकम्
।
चन्दनं पद्मकोशीरं मञ्जिष्ठां धातकीं घनम् ॥
प्रपुण्डरीकं यष्ट्याह्वत्वगेलापत्रकेशरम् ।
लाक्षां रसाञ्जनं मांसीं त्रिफलां लोध्रबालकम्
॥
रजन्यौ फलिनीमेलां समङ्गां कट्फलं वचाम्
।
यवामगुरुपत्तङ्गगैरिकाञ्जनमावपेत् ॥
लवङ्गनखकक्कोलजातिकोशान्
पलोन्मितान् ।
कर्पूरकुडवञ्चापि पुनःशीतेऽवतारिते ॥
ततस्तु गुलिकाः कार्य्याः शुष्काश्चास्येन
धार-
येत् ।
तैलञ्चानेन कल्केन कषायेण च साधयेत् ॥
दन्तानाञ्चलनभ्रंशशौषिर्य्यक्रिमिरोगनुत् ।
मुखपाकास्यदौर्गन्ध्यजाड्यारोचकनाशनम्
॥
स्रावोपलेपपैच्छिल्यवैस्वर्य्यगलरोगनुत् ।
दन्तास्यगलरोगेषु सर्व्वेषां तत्परायणम् ॥’
इति खदिरादिगुटिकातैलञ्च ॥ इति मुख-
रोगचिकित्सा ॥ इति चरके चिकित्सास्थाने
२६ अध्यायः ॥)

**मुखलाङ्गलः**, पुं, (मुखं लाङ्गलमिव भूविदारक-
मस्य ।) शूकरः । इति जटाधरः ॥

**मुखवन्धनं**, क्ली, (मुखं प्रारम्भविषयः तस्य वन्धनं
अनेनैव विधानेन मुखवाद्यं करोति यः ।
स सिद्धः सगणः सोऽपि स शिवो नात्र
संशयः ।
मृत्युञ्जयोऽहं देवेशि ! मुखवाद्यप्रसादतः
॥
यस्मिन् काले महेशानि ! असुरो बलवान्
भवेत् ।
तस्मिन् काले महेशानि ! मुखवाद्यं
करोम्यहम् ॥
तत् श्रुत्वा परमेशानि ! असुरा राक्षसाश्च
ये ।
पलायन्ते महेशानि ! तत्श्रुत्वा
परमेश्वरि ! ॥
ये नरा भुवि तिष्ठन्ति मुखवाद्यं विना
प्रिये ! ।
स सर्व्वयातनाभोगी अन्ते कुम्भीरतां
व्रजेत् ॥”
इति च लिङ्गार्च्चनतन्त्रे ८ पटलः ॥

**मुखवासः**, पुं, (मुखस्य वासः सौरभ्यमस्मात् ।)
गन्धतृणम् । इति राजनिर्घण्टः ॥

**मुखवासनः**, पुं, (मुखं वासयतीति । वस् +
णिच् + ल्युः ।)
मुखसद्गन्धकारकद्रव्यम् । तत्-
पर्य्यायः । आमोदी २ । इत्यमरः । १ ।
५ । ११ ॥ द्वे
मुखवासनवटिकादौ आमोदयुक्तः
कर्पूरादि-
रामोदी इन् । मुखं वासयति मुखवासनः
नन्द्यादित्वादनः । नानाद्रव्यरचित
एकैकश
एव वा
कर्पूरादिभिर्मुखोपयोग्यमुखवासनवटि-
रामोदीति सर्व्वस्वम् । शुभवासन इति
पाठे
शुभं मनोहरं वासनं वासो यस्य केशादेः
स
आमीदीत्याहुरितिसुभूतिः ।
क्षीरस्वामिना तु

**मुखसम्भवः**, पुं, (मुखात् सम्भव उत्पत्तिरस्य ।
ब्राह्मणः । इति हेमचन्द्रः । ३ । ४७६ ॥

**मुखसुरं**, क्ली, (मुखस्य सुरा इति “विभाषा
सेनासुराच्छायाशालानिशानाम् । २ । ४ ।
२५ ।
इति षष्ठीसमासे सुराशब्दस्य ह्रस्वत्वम् ।)
तालसुरा । इति त्रिकाण्डशेषः । ताडी
इति
भाषा ॥

**मुखस्रावः**, पुं, (स्रु भावे + घञ् । मुखात् स्रावः
पतनमस्य ।) लाला । इति राजनिर्घण्टः
॥

**मुखाग्निः**, पुं, (मुखं मुख्योऽग्निः ।) दावाग्निः ।
यथा, --
“हेमकेलिर्द्वयोश्चाथ मृदाकुः स्याद्दवानलः
।
मुखोल्का भूतसश्चारी मुखाग्निर्भरघस्मरः
॥”
इति शब्दमाला ॥
शवमुखे दन्तवह्निः । इति लोके । शास्त्रे तु
शिरःस्थाने । यथा, --
“देवाश्चाग्निमुखाः सर्व्वे गृहीत्वा तु हुता-
शनम् ।
गृहीत्वा पाणिना चैव मन्त्रमेतदुदीरयेत् ॥
कृत्वा तु दुष्कृतं कर्म्म जानता
वाप्यजानता ।
मृत्युकालवशं प्राप्य नरं पञ्चत्वमागतम् ॥
धर्म्माधर्म्मसमायुक्तं लोभमोहसमावृतम् ।
दहेयं सर्व्वगात्राणि दिव्यान् लोकान् स
गच्छतु ॥
एवमुक्त्वा ततः शीघ्रं कृत्वा चैव
प्रदक्षिणम् ।
ज्वलमानं तथा वह्निं शिरः स्थाने
प्रदापयेत् ॥
चातुर्व्वर्णेषु संस्थानमेवं भवति पुत्त्रिके !
।”
इति शुद्धितत्त्वम् ॥

संग्रहोऽत्र ।) ग्रन्थारम्भे तत्र वक्तव्यकथनम् । तस्य नामान्तरम् । अनुक्रमणिका । भूमिका ।
इति छन्दोमञ्जर्य्यां
मुखबन्धनाख्यप्रथमस्तवकः।
इति तद्ग्रन्थकर्त्तृगङ्गादासवैद्येन लिखितम् ॥

**मुखवल्लभः**, पुं, (मुखस्य वल्लभः प्रीतिकरः ।) दाडिमवृक्षः । इति शब्दमाला ॥ मुखप्रिये, त्रि ॥

**मुखवाचिका**, स्त्री, (मुखं वाचयति शोधयतीति । वच् + णिच् + ण्वुल् + स्त्रियां टाप् । अत इत्वं च ।) अम्बष्ठा । इति राजनिर्घण्टः ॥

**मुखवाद्यं**, क्ली, (मुखेन वाद्यम् ।) वक्रनालवाद्यम् । वाँक इति भाषा । इति त्रिकाण्डशेषः ॥
मुखस्य मुखेन च वाद्यञ्च । शिवपूजान्ते वम् इति शब्देन गालवाद्यम् । यथा, --
"लिङ्गं निर्म्माय विधिवत् विधिवत् पूजयेच्च तम् ।
षडक्षरं जपित्वा वै मुखवाद्यं शुचिस्मिते ! ॥"
इति लिङ्गार्च्चनतन्त्रे १५ पटलः ॥
अपि च ।
"मुखवाद्यं सनृर्त्य हि कृत्वा तु परमेश्वरि ! ।
मातृकामन्त्रसहितं मुखवाद्यं सुदुर्ल्लभम् ॥
अकारादिक्षकारान्तमनुलोमविलोमतः।
उच्चार्य्य परमेशानि ! मुखवाद्यं शुचिस्मिते ! ॥
सबिन्दुं वर्णमुच्चार्य्य पञ्चाशन्मातृकां प्रिये ! ।
अनुलोमविलोम्नेन सर्व्वेण च वरानने ! ॥
समाकर्षादिचतुष्टयेन
इष्टगन्धादिचतुष्टयेन च
पर्य्यायिद्वयमाख्यातम् । शब्दार्णवे तु ।
"कस्तूरिकायामामोदः कर्पूरे मुखवासनः ।
बकुले स्यात् परिमलश्चम्पके
सुरभिस्तथा ।
गन्धा द्विषष्टिरप्येते गुणिवृत्तौ त्रिलिङ्गका ॥"
इति भरतः ॥

**मुखविलुण्ठिका**, स्त्री, (मुखेन विलुण्ठयतीति । लुण्ठ + णिच् ण्वुल् । स्त्रियां टाप् । अत इत्वं च ।) छागी । इति शब्दरत्नावली ॥

**मुखविष्ठा**, स्त्री, (मुखे विष्ठा मलमस्याः ।) तैलपायिका । यथा, --
"वल्गुलिका मुखविष्ठा परोष्णी
तैलपायिका ।"
इति हेमचन्द्रः ॥

**मुखशफः**, पुं, (मुखं शफं क्षुर इव तीक्ष्णमस्य ।) दुर्म्मुखः । इति शब्दमाला ॥

**मुखशुद्धिः**, स्त्री, (मुखस्य शुद्धिः ।) वक्तशोधनम् । यथा, आह्निकतत्त्वे ।
"अभावे दन्तकाष्ठानां प्रतिषिद्धदिने तथा ।
अपां द्वादशगण्डूषैर्मुखशुद्धिर्व्विधीयते ॥"

**मुखशोधनं**, क्ली, (मुखस्य शोधनम् ।) त्वचम् । इति राजनिर्घण्टः ॥

**मुखशोधनः**, पुं, (मुखं शोधयत्यनेनेति । शुघ् + णिच् + करणे ल्युट् ।) कटुरसः । इति हेमचन्द्रः ॥

**मुखशोधी**, [न्] पुं, (मुखं शोधयतीति । शुध् + णिच् + णिनिः ।) जम्बीरः । इति राजनिर्घण्टः ॥
(गुणादयोऽस्य जम्बीरशब्दे ज्ञातव्याः ॥)

**मुखषीलः**, त्रि, (मुखं ष्ठीवति निरस्यति विकृतं

**मुखामयः**, पुं, (मुण्यस्यामयः ।) मुखरोगः । इति राजनिर्घण्टः ॥

**मुखार्जकः**, पुं, अर्जकः । इति राजनिर्घण्टः ॥

**मुखास्त्रः**, पुं, (मुखं अस्त्रमिवास्य ।) कर्क्कटः । इति त्रिकाण्डशेषः ॥

**मुखोल्का**, स्त्री, (मुखं उल्केव यस्याः ।) दावानलः । इति शब्दमाला ॥

**मुख्यः**, पुं, प्रथमः कल्पः । इत्यमरः । २ । ७ । ४० ॥
यागादिषु शास्त्रोक्तः प्रथमः कल्पो मुख्यः स्यात् । यथा, ब्रीहिभिर्यजेतेत्यादिना उत्कृष्ट-
त्वात् मुखमिव मुख्यः विकारसंघेत्यादिना इवार्थे यः । इति तट्टीकायां भरतः ॥

**मुख्यः**, त्रि, श्रेष्ठः । इत्यमरः । ३ । १ । ५७ ॥
(तथास्य पर्य्यायः ।
"प्रधानमुत्तमं रम्यं श्रेष्ठं मुख्यमनुत्तमम् ।
वरं वरेण्यं प्रमुखं परार्द्धं प्रवरन्तथा ॥"
इति वैद्यकरत्नमालायाम् ॥
यथा, भागवते । ४ । २५ । ४९ ।
"मुख्यानामपुरस्ताद्द्वास्तयापणबह्वनौ ॥")

**मुख्यसर्गः**, पुं, (मुख्यानां सर्ग इति ।) स्थावर-सृष्टिः । यथा, --
"मुख्यसर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः ।"
इति वराहपुराणम् ॥

**मुगूहः**, पुं, दात्यूहपक्षी । इति भूरिप्रयोगः ॥

**मुग्धः**, त्रि, (मुह् + कर्त्तरि क्तः ।) मूढः । (यथा,
ऋग्वेदे । ५ । ४० । ५ ।
"अक्षेत्रविद् यथा मुग्धो
भुवनान्यदीधयुः ॥")
सुन्दरः । इति विश्वः ॥ (यथा,
मेघदूते । १४ ।
"दृष्टोत्साहश्चकितचकितं
मुग्धसिद्धा-
ङ्गनाभिः ॥")

**मुग्धबोधं**, क्ली, (मुग्धः सुन्दरः बोधः ज्ञानं पद-
पदार्थानां भवत्यस्मात् । यद्वा,
मुग्धान् मूढान्
अल्पबुद्धीन् जनान् बोधयतीति ।
मुग्धबोधम् ।
इति दुर्गादासः । मुग्ध + बुध् +
"कर्म्मण्यण् ।
३ । २ । १ । इति अण् ।)
वोपदेवकृतव्याकरण-
विशेषः । यथास्याद्यश्लोकः ।
"मुकुन्दं सच्चिदानन्दं प्रणिपत्य
प्रणीयते ।
मुग्धबोधं व्याकरणं परोपकृतये मया
॥"

**मुग्धा**, स्त्री, (मुग्ध + टाप् ।) नायिकाविशेषः । (सा
च नायिका स्वीयापरकीयाभेदेन
द्विविधा ।) तत्र
स्वीयापि त्रिविधा । मुग्धा मध्या
प्रगल्भा च ।
तत्राङ्कुरितयौवना मुग्धा । सा च
ज्ञातयौवना
अज्ञातयौवना च । सैव क्रमशो
लज्जाभय-
पराधीनरतिर्नवोढा । सैव
जातप्रश्रया विश्रब्ध-
"दरमुकुलितनेत्रपालिनीवी-
नियमितबाहुकृतोरुयुग्मबन्धम् ।
करकलितकुचस्थलं नवोढा
स्वपिति समीपमुपेत्य कस्य यूनः ॥"
इति रसमञ्जरी ॥

**मुच** इ ङ कल्कने । दम्भे । शाठ्ये । इति कवि-
कल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-
सेट् ।) द्वौ पञ्चमस्वरिणौ । इ मुञ्च्यते । ङ
मुञ्चते ङ मोचते । इति दुर्गादासः ॥

**मुच** ङ कल्कने । दम्भे । शाठ्ये । इति कवि-
कल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-
सेट् ।) द्वौ पञ्चमस्वरिणौ । इ मुञ्च्यते । ङ
मुञ्चते ङ मोचते । इति दुर्गादासः ॥

**मुच** ऌ श प ञ औ मोक्षे । इति कविकल्पद्रुमः ॥
(तुदा०-उभ०-सक०-बन्धनरहितीभावे
अक०-
अनिट् ।) मोक्षस्त्यागः । ऌ अमुचत् । श
प ञ मुञ्चति मुञ्चते धनं दाता । बन्धन-
रहितीभावे अकर्म्मकोऽयम् । आलानान्मुक्तो
गजः कर्त्तरि क्तः । एवं पापान्मुक्त इत्यादौ
पापबन्धनान्मुक्त इत्यर्थः । इति दुर्गादासः ॥

**मुच** क मोक्षे । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-सक०-सेट् ।) क मोचयति ।
मोक्षस्त्यागः ।
इति दुर्गादासः ॥

**मुचिरः**, त्रि, (मुञ्चति धनादिकं ददातीति ।
मुच् + "इषिमदिमुदिखिदिच्छिदिभिदिमन्दि
चन्दितिमिमिहिमुहिमुचीति ।" उणा० १ ।
५२ । इति किरच् ।) दाता । इति त्रिकाण्ड-
शेषः ॥

**मुचिरः**, पुं, (मुच् + किरच् ।) धर्म्मः । वायुः ।
देवता । इति संक्षिप्तसारोणादिवृत्तिः ॥

**मुचुकुन्दः**, पुं, (मुच् + बाहुलकात् कुः । मुचुः
कुन्द इवेति । राजदन्तादित्वात् पूर्ब्बनिपातः
।)

**मुज** इ क मृजाध्वन्योः । इति कविकल्पद्रुमः ॥
(चुरा०-पर०-मार्ज्जने सक०-ध्वनौ
अक०-सेट् ।) द्वौ पञ्चमस्वरिणौ । इ क मुञ्ज-
यति । क मोजयति । इति दुर्गादासः ॥

**मुज** क मृजाध्वन्योः । इति कविकल्पद्रुमः ॥
(चुरा०-पर०-मार्ज्जने सक०-ध्वनौ
अक०-सेट् ।) द्वौ पञ्चमस्वरिणौ । इ क मुञ्ज-
यति । क मोजयति । इति दुर्गादासः ॥

**मुञ्चकः**, पुं, (मुचिङ + ण्वुल् ।) मुष्ककवृक्षः ।
इति राजनिर्घण्टः ॥

**मुञ्जः**, पुं, (मुञ्ज्यते मृज्यते अनेन । मुञ्ज + करणे
अच् ।) तृणविशेषः । मुँज इति भाषा ॥
(यथा, पञ्चदश्याम् । १ । ४२ ।
"यथा मुञ्जादीषिकैवमात्मा युक्त्या समुद्धृतः ।
शरीरत्रितयाद्धीरैः परं ब्रह्मैव जायते ॥")
तत्पर्य्यायः । मौञ्जीतृणाख्यः २ ब्राह्मण्यः ३
तेजनाह्वयः ४ वाणीरकः ५ मुञ्जनकः ६
शीरी ७ दर्भाह्वयः ८ दूरमूलः ९ दृढतृणः १०
दृढमूलः ११ बहुप्रजः १२ रञ्जनः १३ शत्रु-
भङ्गः १४ । अस्य गुणाः । मधुरत्वम् । शीत-
त्वम् । कफपित्तजदोषनाशित्वम् । ग्रहरक्षासु
दीक्षासु च पावनत्वम् । भूतनाशित्वञ्च । इति
राजनिर्घण्टः ॥ अपि च ।
"मुञ्जो मुञ्जातको बाणः स्थूलदर्भः सुमेधसः ।
मुञ्जद्वयन्तु मधुरं तुवरं शिशिरं तथा ॥
दाहतृष्णाविसर्पास्रमूत्रवस्त्यक्षिरोगजित् ।
दोषत्रयहरं वृष्यं मेखलासूपयुज्यते ॥"
इति भावप्रकाशः ॥
शरः । इति रत्नमाला । उपनयनकाले मुञ्ज-
मेखलाधारणविधिर्य्यथा । अथैनं माणवक-
माचार्य्यस्त्रिःप्रदक्षिणं त्रिवृतं मुञ्जमेखलां परि-
धापयन् मन्त्रद्वयं वाचयति । इति भवदेव-
भट्टः ॥

**मुञ्जकेशी**, [न्] पुं, (मुञ्जा इव केशाः सन्त्यस्य ।
इनिः ।) विष्णुः । इति हेमचन्द्रः । २ । १३१
॥

नवोढा । अस्याश्चेष्टा क्रिया
मनोहरा । कोपे
मार्द्दवं नवविभूषणे समीहा च ॥
मुग्धा यथा ।
“आज्ञप्तं किल कामदेवधरणीपालेन
काले शुभे
वस्तुं वास्तुविधिं विधास्यति तनौ
तारुण्य-
मेणीदृशः ।
दृष्ट्या खञ्जनचातुरी मुखरुचा
सौधाकरी
माधुरी
वाचा किञ्च सुधासमुद्रलहरी
लाषण्यमाम-
न्त्र्यते ॥” * ॥
अज्ञातयौवना यथा, --
“नीरात्तीरमुपागता श्रवणयोः सीम्नि
स्फुर-
न्नेत्रयोः
श्रोत्रे लग्नमिदं किमुत्पलमिति ज्ञातुं
करं-
न्यस्यति ।
शैबालाङ्कुरशङ्कया शशिमुखी
रोमावलीं
प्रोञ्छति
श्रान्तास्माति मुहुः
सखीमविदितश्रोणीभरा
पृच्छति ॥”
ज्ञातयौवना यथा, --
“स्वयम्भूः शम्भुरम्भोजलोचने
त्वत्पयोधरः ।
नखेन कस्य धन्यस्य चन्द्रचूडो
भविष्यति ॥”
नवोढा यथा, --
“हस्ते धृतापि शयने विनिवेशितापि
क्रोडे कृतापि यतते बहिरेव गन्तुम् ।
जानीमहे नवबधूरथ तस्य वश्या
यः पारदं स्थिरयितुं क्षमते करेण ॥”
द्बितीया यथा, --
“बलान्नीता पार्श्वं मुखमनुमुखं नैव
कुरुते

पुष्पवृक्षविशेषः । मेकचन्द इति हिन्दी भाषा
।
(यथा, राजेन्द्रकर्णपूरे । १० ।
“आनन्दं मुचुकुन्दकन्दलि ! भज स्वस्थासि
वासन्तिके ! ।”)
तत्पर्य्यायः । छत्रवृक्षः २ चित्रकः ३ प्रति-
विष्णुकः ४ । इति भावप्रकाशः ॥ बहुपुत्त्रः
५
सुदलः ६ हरिवल्लभः ७ सुपुष्पः ८ अर्घ्यार्हः
९
लक्षणकः १० रक्तप्रस्रवः ११ । अस्य गुणाः
।
कटुत्वम् । तिक्तत्वम् । कफवातनाशित्वम् ।
कण्ठकरत्वम् । त्वग्दोषशोफशमनत्वम् ।
जीर्ण-
ज्वरविनाशनत्वञ्च । इति राजनिर्घण्टः ॥
शिरःपीडापित्तास्रविषनाशित्वम् । इति भाव-
प्रकाशः ॥ * ॥ मान्धातृराजपुत्त्रः । इति
श्रीभागवतम् । ९ । ७ । ३८ ।
(यथा च देवीभागवते । ७ । १० । ४ ।
“तस्यामुत्पादयामास मान्धाता द्बौ सुतौ
नृप ! ।
पुरुकुत्सं सुविख्यातं मुचुकुन्दं तथापरम् ॥”)

**मुचुटी**, स्त्री, अङ्गुलिमोटनम् । आङ्गुलमट्कान

इति भाषा । यथा, --
“मुचुटीं मुकुटी चैव भवेदङ्गुलिमोटने ।”
इति शब्दरत्नावली ॥
मुष्टिः । मुठा इति भाषा । यथा, --
“सम्पिण्डिताङ्गुलिः पाणिर्मुष्टिर्मुस्तु
बुचुट्यपि ।”
इति हेमचन्द्रः । ३ । २६१ ॥

**मुञ्जरं**, क्ली, (मुञ्ज्यते प्रक्षाल्यते इति । मुञ्ज +

बाहुलकात् अरन् ।) शालूकम् । इति
शब्दमाला ॥

**मुञ्जातकः**, पुं, (मुञ्जं अतति तत्सादृश्यं प्राप्नो-

तीति । अत + अच् । ततः स्वार्थे कन् ।)
पुष्प-
शाकभेदः । अस्य गुणाः । परं स्वादुत्वम् ।
वृष्यत्वम् । पित्तानिलापहत्वञ्चं । इति राज-
वल्लभः ॥ (यथा, सुश्रुते सूत्रस्थाने ३९
अध्याये ।
“हस्तिकर्णमुञ्जातकलामज्जकप्रभृतीनि ।”)

**मुट** इ मर्द्दे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

सक०-सेट् ।) पञ्चमस्वरी । इ मुण्ट्यते । मर्द्दो
मर्द्दनम् । इति दुर्गादासः ॥

**मुट** कि क्षुदि । इति कविकल्पद्रुमः ॥ (चुरा०

पक्षे भ्वा०-सक०-सेट् ।) क्षुदि चूर्णीकरणे ।
कि मोटयति तण्डुलं शिला । यस्तु दुर्गञ्च
मोटतीति हलायुधः ॥

**मुट** शि आक्षेपे च । इति कविकल्पद्रुमः ॥

(तुदा०-पर०-सक०-सेट् ।) पवर्गशेषादिः ।
शि मुटति अमुठीत् मुमोट । चकारात् क्षुदि
च । मुटति द्बिषां दर्पं य इति हलायुधः ।
इति दुर्गादासः ॥

| | | |
|---|---|---|
| धुनाना मूर्द्धानं क्षिपति वदनं चुम्बनविधौ ।<br>हृदि न्यस्तं हस्तं क्षिपति गमनारोपितमना<br>नवोढा वोढारं रमयति च सन्तापयति च ॥"<br>विश्रब्धनवोढा यथा, -- | | |

**मुठ** इ ङ पलायने । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-अक०-पालने सक०-सेट् ।) पवर्ग-

शेषादिः । पञ्चमस्वरी । इ मुण्ठ्यते । ङ मुण्ठते

चौरः । इति दुर्गादासः ॥

**मुड** इ छिदि । मर्द्दे । इति कविकल्पद्रुमः ॥

(भ्वा०-पर०-सक०-सेट् ।) पञ्चमस्वरी । इ

मुण्ड्यते । छेद इह लोमच्छेद एव । मुण्डति

मुण्डं नापितः । लोमरहितं करोतीत्यर्थः ।

इति गुर्गादासः ॥

**मुड** इ ङ मग्ने । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-अक०-सेट् ।) पवर्गशेषादिः । पञ्चम-

स्वरी । मग्नमिति मज्जधातोः क्ते रूपं मज्जन-

मित्यर्थः । इ मुण्ड्यते । ङ मुण्डते प्रस्तरो जले

।

चतुर्भुजस्तु मार्ज्जन इति पठित्वा मार्ज्जनं

शुद्धिरिति व्याख्याय मुण्डते जलेन गात्रं लोक

इत्युदाहृतवान् । इति दुर्गादासः ॥

**मुण** श प्रतिज्ञाने । इति कविकल्पद्रुमः ॥ (तुदा०-

पर०-सक०-सेट् ।) श मुणति व्रतं लोकः ।

प्रतिजानातीत्यर्थः । मोणिता । इति दुर्गा-

दासः ॥

**मुण्डं**, क्ली, (मुण्ड्यन्ते उप्यन्ते केशा अस्मात् यद्वा,

मुण्डते मज्जतीति । मुण्ड + अच् ।) शिरः ।

इति नपुंसकलिङ्गसंग्रहे अमरः । ३ । ५ । ३४

॥

(यथा, मोहमुद्गरे । १५ ।

"अङ्गं गलितं पलितं मुण्डं

दन्तविहीनं यातं तुण्डम् ।

करधृतकम्पितशोभितदण्डं

तदपि न मुञ्चत्याशाभाण्डम् ॥"

उपनिषद्विशेषः । तदुक्तं यथा, --

"ईशाकेनकठप्रश्नमुण्डमाण्डुक्यतित्तिरि ।

छान्दोग्यं बृहदारण्यमैतरेयं तथा दश ॥")

वोलम् । मुण्डायसम् । इति राजनिर्घण्टः ॥

**मुण्डः**, पुं, (मुण्डनं मुण्डः केशापनयनं मुडि खण्डने

भावे घञ् । ततः अर्श आद्यच् इत्यमर-

भरतः ॥ (यथा, महाभारते । १ ।

११९ । ८ ।

'चरन् भैक्षं मुनिर्मुण्डश्चरिष्यामि

महीमिमाम् ॥')

**मुण्डकं**, क्ली, (मुण्डमेवेति मुण्ड + स्वार्थे
कन् ।)

मस्तकम् ॥ (उपनिषद्विशेषश्च ॥)

**मुण्डकः**, पुं, (मुण्डयतीति । मुडि + ण्वुल् ।)

नापितः । इति हेमचन्द्रः । ३ ।

२३० ॥

**मुण्डचणकः**, पुं, (मुण्डित इव चणकः ।)
कलायः ।

इति राजनिर्घण्टः ॥

**मुण्डनं**, क्ली, (मुण्ड + ल्युट् ।)
केशच्छेदनम् ।

तत्पर्य्यायः । भद्रकरणम् २

वपनम् ३ परि-

वापनम् ४ क्षौरम् ५ । इति

हेमचन्द्रः । ३ । ५८७ ॥

(यथा, महाभारते । १२ । २३ ।

४६ ।

"भ्रातुरस्य हितं वाक्यं शृणु

धर्म्मज्ञसत्तम ! ।

दण्ड एव हि राजेन्द्र ! क्षत्त्रधर्म्मो

न मुण्डनम् ॥")

**मुण्डफलः**, पुं, (मुण्डवत् फलमस्य ।)
नारिकेल-

वृक्षः । यथा, --

"तथा मुण्डफलश्चापि

विश्वामित्रप्रियोऽपि च ।"

इति शब्दरत्नावली ॥

**मुण्डशालिः**, पुं, (मुण्डो मुण्डित इव शालिः
।)

शालिभेदः । तत्पर्य्यायः ।

मुण्डनकः २

निःशूकः ३ अशूककः ४ । अस्य

गुणाः ।

दण्डी मुण्डी कुशी चीरी घृताक्तो मेखली-

कृतः ॥")

**मुण्डीरिका**, स्त्री, (मुण्डि + बाहुलकात् ईरच् ।

स्त्रियां ङीष् स्वार्थे कन् । स्त्रियां टाप्

"केऽणः ।" ७ । ४ । १३ । इति पूर्ब्बस्य

ह्रस्वः ।)

मुण्डितिका । इति जटाधरः ॥

**मुत्**, स्त्री, (मोदतेऽनया इति । मुद् + क्विप् ।)

वृद्धिनामौषधम् । इति राजनिर्घण्टः ॥

**मुत्**, [द्] स्त्री, (मोदनमिति । मुद् + भावे क्विप् ।)

हर्षः । इत्यमरः । १ । ४ । २४ ॥ (यथा,

रघु-

वंशे । ३ । २५ ।

"उवाच धात्र्या प्रथमोदितं वचो

ययौ तदीयामवलम्ब्य चाङ्गुलिम् ।

अभूच्च नम्रः प्रणिपातशिक्षया

पितुर्मुदं तेन ततान सोऽर्भकः ॥")

**मुद** क संसर्गे । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-

सक०-सेट् ।) क मोदयति घृतेनान्नं लोकः ।

इति दुर्गादासः ॥

**मुद** ञि ङ हर्षे । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-अक०-सेट् ।) हर्षश्चित्तोत्साहः ।

ञि

मुदितोऽस्ति ङ मोदते धनी । इति दुर्गा-

दासः ॥

**मुदा**, स्त्री, (मुद् + घञर्थे कः ततष्टाप् ।) र्षःह ।

यथा । सुखमानन्दथुर्मुदा । इति शब्दरत्ना-

वली ॥ (यथा, मार्कण्डेये । ११६ । ३० ।

"तं मन्त्रं क्रियमाणं तु मन्त्रिभिस्तेन भूभृता ।

तत्पार्श्ववर्त्तिनी कन्या शुश्रावाथ मुदा-

वती ॥")

**मुदितः**, त्रि, (मुद् + क्त । यद्वा, मुदा अस्य जाता ।

मुदा + इतच् ।) आनन्दितः । यथा, --

"आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा ।

टीकायां रायभरतौ ।) वलिराजस्य सैनिक-
दैत्यविशेषः ॥ (यथा, हरिवंशे भविष्यपर्व्वणि ।
२३२ । ५ ।
"एकाक्ष एकपान्मुण्डो विद्युदक्षश्चतुर्भुजः ।"
शुम्भसेनापतिर्दैत्यभेदः । यथा, माकण्डेयपुराणे
।
८७ । २८ ।
"हे चण्ड ! हे मुण्ड ! वलैर्बहुलैः परिवारितौ ।")
मुण्डमेवावयवत्वेनास्त्यस्य । अच् ।) राहुग्रहः ।
इति मेदिनी । डे, २२ ॥ (मुण्डं मुण्डनं जीवि-
कात्वेनास्त्यस्य । अच् ।) नापितः । इति
जटाधरः ॥ (मुण्डनं स्कन्धावच्छेदे खण्डनम-
स्त्यस्य । अच् ।) स्थाणुवृक्षः । इति केचित् ॥

**मुण्डः**, पुं, क्ली, (मुण्ड + अच् ।) मूर्द्धा । इति
मेदिनी । डे, २२ ॥

**मुण्डः**, त्रि, मुण्डितः । इत्यमरः । २ । ६ । ४८ ॥
द्वे मुण्डितमुण्डे । मुडि खण्डने भावे घञि मुण्डो
मुण्डनं केशापनयनं तद्योगात् अर्श आद्यचि
मुण्डः पुमान् स्त्रियां मुण्डा । इत्यमरटीकायां
त्रिदोषनाशित्वम् । मधुराम्लत्वम् ।
बलप्रदत्वम् ।
रुचिकारित्वम् । दीपनत्वम् ।
पथ्यत्वम् । मुख-
जाड्यरुजापहत्वञ्च । इति
राजनिर्घण्टः ॥

**मुण्डा**, स्त्री, (मुण्ड + स्त्रियां टाप् ।) मुण्डीरिका ।
इति मेदिनी । डे, २२ ॥ मुण्डिता
स्त्री । इत्य-
मरटीकायां भरतः ॥

**मुण्डाख्या**, स्त्री, (मुण्डेत्याख्यास्याः ।) महाश्राव-
णिका । इति राजनिर्घण्टः ॥

**मुण्डायसं**, क्ली, (मुण्डञ्च तत् अयश्चेति । मुण्ड +
अयस् + "अनोश्मायः सरसां
जातिसंज्ञयोः ।"
५ । ४ । ९४ । इति टच् ।) लोहम्
। इति राज-
निर्घण्टः ॥

**मुण्डितं**, क्ली, (मुण्ड्यते खण्ड्यते इति । मुडि खण्डने
+ कर्म्मणि क्तः ।) लोहम् । इति
राजनिर्घण्टः ॥
वापितमुण्डे, त्रि । इत्यमरः । ३ ।
१ । ८५ ॥

**मुण्डितिका**, स्त्री, (मुण्डित + स्वार्थे कन् + स्त्रियां
टाप् अत इच्च ।) वृक्षविशेषः ।
मुण्डीरी इति
भाषा । तत्पर्य्यायः । अलम्बुषा २
श्रावणी ३
पलङ्कषा ४ कदम्बपुष्पा ५ श्रवणा
६ भूतघ्नी ७
कुम्भला ८ अरुणा ९ । इति
रत्नमाला ॥

**मुण्डी**, [न्] पुं, (मुण्डयति केशान् वपति इति ।
मृते म्रियेत या पत्यौ साध्वी ज्ञेया पतिव्रता
॥"
इति शुद्धितत्त्वम् ॥
आलिङ्गनविशेषः । तस्य लक्षणं यथा ।
नायि-
कया नायकस्य वामपार्श्वे उषित्वा वामपादं
तस्योरुद्वयमध्ये स्थापयित्वा उभौ मिलित्वा
यदवस्थानम् । इति कामशास्त्रम् ॥

**मुदिता**, स्त्री, (मोदते इति मुद् + सर्व्वधातुभ्य
इन् संज्ञापूर्ब्बकविधेरनित्यत्वात् गुणाभावः ।
मुदिः तस्य भावः इति तल् + टाप् ।) मुदा ।
हर्षः । इत्यमरटीकायां मथुरेशः ॥ (यथा,
पातञ्जलसूत्रम् । १ । ३३ ।
"मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्या-
पुण्यविषयाणां भावनातश्चित्तप्रसादनम् ॥")

**मुदिरः**, पुं, (मोदन्ते अनेन प्रजा इति । मुद् +
"इषिमदिमुदीति ।" उणा० १ । ५२ । इति
किरच् ।) मेघः । इत्यमरः । १ । ३ । ७ ॥
(यथा, --
गीतगोविन्दे । २ । ३ ।
"प्रचुरपुरन्दरधनुरनुरञ्जितमेदुरमुदिर-
सुवेशम् ।")
कामुकः । इति मेदिनी । रे, २०५ । भेकः ।
इति संक्षिप्तसारोणादिवृत्तिः ॥

|  | मुण्ड + णिनिः ।) नापितः । इत्यमरः । २ । १० । १० ॥ (योगाचार्य्यविशेषः । यथा, शिव- पुराणे वायुसंहितायाम् । २ । १० । ५ -- ६ ॥ ‘महाकालश्च शूली च दण्डी मुण्डी सएव च ।’ इत्यादावारभ्य । अष्टाविंशतिसंख्याता योगाचार्य्या युगक्रमात् ।’ सम्पादितकेशच्छेदनः । यथा, महाभारते । १३ । १४ । ३७४ । “दिनेऽष्टमे तु विप्रेण दीक्षितोऽहं यथाविधि । |  |
| --- | --- | --- |

**मुद्गः**, पुं, (मोदते अनेन इति । मुद् + "मुदिग्रो-
र्ग्गगौ ।" उणा० १ । १२७ । इति गक् ।)
पक्षिविशेषः । तत्पर्य्यायः । जलवायसः २ ।
इति हेमचन्द्रः । ४ । ३३८ ॥
शमीधान्यभेदः ।
मुग इति माषा । (यथा, मनुः । ९ । ३९ ।
"ब्रीहयः शालयो मुद्गास्तिलामाषास्तथायवाः ।")
तत्पर्य्यायः । सूपश्रेष्ठः २ वर्णार्हः ३ रसोत्तमः ४
भुक्तिप्रदः ५ हयानन्दः ६ सुफलः ७ वाजि-
भोजनः ८ । अस्य गुणाः । कषायत्वम् । मधु-
रत्वम् । कफपित्तास्रजित्त्वम् । लघुत्वम् । ग्राहि-
त्वम् । शीतत्वम् । पाके कटुत्वम् । चक्षुष्यत्वम् ।
नातिवातलत्वञ्च । तद्यूषगुणाः । पित्तश्रमार्त्ति-
शमनत्वम् । लघुत्वम् । सन्तापहारित्वम् ।
अरोचकनाशित्वम् । तत्सैन्धवयुक्तञ्चेत् रक्त-
प्रसादनत्वम् । सर्व्वरुजापहारित्वञ्च । इति
राजनिर्घण्टः ॥ अपि च । रूक्षत्वम् । स्वादु-
त्वम् । अल्पानिलत्वम् । ज्वरघ्नत्वञ्च । इति
भावप्रकाशः ॥ * ॥ वनमुद्गगुणाः ।
"मुकुष्टः शीतलो ग्राही कफपित्तज्वरापहः ॥"
तद्विशेषा यथा, राजवल्लभे ।
"प्रधाना हरितास्तत्र वन्यमुद्गास्तु मुद्गवत् ।
लघुर्ग्राही त्रिदोषघ्नः स्वादुः शीतो रुचिप्रदः ।
चक्षुष्यो ज्वरहृत् बल्यस्तर्पणो मुद्गमोदकः ॥"

**मुद्गरं**, क्ली, (मुदं आनन्दं गिरति विकिरतीति । गॄ
+ अच् ।) मल्लिकाभेदः । लोष्टादिभेदने, पुं ।
इति मेदिनी । रे, २०४ ॥ (यथा, महाभारते ।
१ । २११ । ३ ।
"गदापट्टिशधारिण्या शूलमुद्गरहस्तया ।
प्रस्थितौ सहधर्म्मिण्या महत्या दैत्यसेनया ॥")

**मुद्गरः**, पुं, (मुद् + गॄ + अच् ।) कर्म्मारवृक्षः ।
पुष्पवृक्षविशेषः । तत्पर्य्यायः । गन्धसारः २
सप्तपत्रः ३ अतिगन्धः ४ गन्धराजः ५ विट-
प्रियः ६ प्रियः ७ जनेष्टः ८ मृगेष्टः ९ । अस्य
गुणाः । मधुरत्वम् । शीतत्वम् । सुरभित्वम् ।
सौख्यदायकत्वम् । मनोजकारित्वम् । मधु-
पानन्दकारित्वम् । पित्तप्रकोपनाशित्वञ्च । इति
राजनिर्घण्टः ॥ * ॥ अस्त्रविशेषः । मुगुर
इति भाषा । तत्पर्य्यायः । द्रुघणः २ घनः ३ ।
इत्यमरः ॥ द्रुघनः ४ । इति भरतः ॥ प्रघणः ५ ।
इति जटाधरः ॥ मुद्गरः कोरकास्त्रयोः । इति
हेमचन्द्रः ॥ (यथा, रघौ । १२ । ७३ ।
"पादपाविद्धपरिघः शिलानिष्पिष्टमुद्गरः ॥")

**मुद्गरकः**, पुं, (मुद्गरमिवेति प्रतिकृतौ कन् ।)
कर्म्मारः । इति राजनिर्घण्टः । कामराङ्गा
इति भाषा ॥

**मुद्गलं**, क्ली, रोहिषतृणम् । इति राजनिर्घण्ठः ॥

**मुद्गलः**, पुं, हर्य्यश्वराजपुत्रः । यथा, --
"सुशान्तेः पुरुजानुः तस्माच्चर्क्षः ततश्च हर्य्यश्वः
हर्य्यश्वान्मुद्गलसृञ्जयबृहदिषुयवीनरकाम्पिल्य
संज्ञाः । पञ्चानामेतेषां विषयाणां रक्षणाया-
लमेते मत्पुत्रा इति पित्राभिहिता इति
पञ्चालाः । इति विष्णुपुराणे ४ अंशे १९
अध्यायः ॥ (मुद्गं लातीति । ला + कः । इत्यु-
णादिवृत्तौ उज्ज्वलदत्तः ।) गोत्रकारकमुनि-
विशेषः । तस्य भार्य्या इन्द्रसेना । इति पुराणम् ॥
(उपनिषद्विशेषः ॥)

**मुद्गष्टः**, पुं, वनमुद्गः । इति शब्दरत्नावली ॥

**मुद्रा**, स्त्री, (मोदते अनयेति । मुद् + "स्फायि-
तञ्चीत्यादि ।" उणा० २ । १३ । इति रक् अतः
टाप् ।) प्रत्ययकारिणी ॥ इति त्रिकाण्ड-
शेषः । नामेर मोहर इति भाषा ॥ अङ्गुलि-
मुद्रा । इति शब्दरत्नावली ॥ छापेर आङ्गुटी
इति भाषा । स्वर्णरौप्यादिमुद्रिका च । (यथा,
अभिज्ञानशाकुन्तले । २ ।
"इमां मुद्रां त्वदङ्गुलौ निवेशयता मया ।"
चिह्नम् । यथा, श्रीमद्भागवते । ३ । २४ । १७ ।
"ज्ञानविज्ञानयोगेन कर्म्मणामुद्धरन् जटाः ।
हिरण्यकेशः पद्माक्षः पद्ममुद्रापदाम्बुजः ॥")
मोहर टाका इत्यादि भाषा । इति लोक-
प्रसिद्धिः ॥ * ॥
पञ्चधालिप्यन्तर्गतलिपिविशेषः ।
छापार अक्षर इति भाषा । यथा, --
"मुद्रालिपिः शिल्पलिपिर्लिपिर्लेखनिसम्भवा ।
गुण्डिकाघुणसम्भूता लिपयः पञ्चधा स्मृताः ।
एताभिर्लिपिभिर्व्याप्ता धरित्रीं शुभदा हर ! ॥"
इति वाराहीतन्त्रम् ॥
"लेखन्या लिखितं विप्रैर्मुद्राभिरङ्कितञ्च यत् ॥
शिल्पादिनिर्म्मितं यच्च पाठ्यं धार्य्यञ्च सर्व्वदा ॥
इति खड्गमालातन्त्रम् ॥ * ॥
पञ्चमकारान्तर्गतभृष्टद्रव्यविशेषः ।
यथा, --

कृष्णमुद्गा महामुद्गा गौरा हरितपीतकाः ।
श्वेता रक्ताश्च निर्द्दिष्टा लघवः पूर्ब्बपूर्ब्बवत् ॥”

**मुद्गपर्णी**, स्त्री, (मुद्गस्येव पर्णान्यस्याः मुद्गपर्ण + जातौ ङीष् ।) वनमुद्गः । मुगानी इति भाषा । तत्पर्य्यायः । काकमुद्गा २ सहा ३ । इत्यमरः ॥ क्षुद्रसहा ४ शिम्बी ५ माज्जार्र-गन्धिका ६ वनजा ७ रिङ्गिणी ८ ह्रस्वा ९ सूर्पपर्णी १० कुरङ्गिका ११ कोशिला १२ वनोद्भवा १३ वनमुद्गा १४ आरण्यमुद्गा १५ वन्या १६ । कुरङ्गिकास्थाने करञ्जिका इति च पाठः । अस्या गुणाः । हिमत्वम् । कास-वातरक्तक्षयपित्तदाहज्वरनाशित्वम्। चक्षुष्य-त्वम् । शुक्रवृद्धिकारित्वञ्च । इति राजनिर्घण्टः ॥ अपि च । यथा, भावप्रकाशे ।
“मुद्गपर्णी काकपर्णी सूर्पपर्ण्यल्पपर्णिका ।
काकमुद्गा च सा प्रोक्ता तथा माज्जार्रगन्धिका ॥
मुद्गपर्णी हिमा रूक्षा तिक्ता स्वादुश्च शुक्रला ।
चक्षुष्या क्षयशोथघ्नी ग्राहिणी ज्वरदाहनुत् ।
दोषत्रयहरी लघ्वी ग्रहण्यर्शोऽतिसारहृत् ॥”

**मुद्गभुक्**, [ज्] पुं, (मुद्गं भुंक्ते इति । भुज् + क्विप् ।) घोटकः । इति जटाधरः ॥

**मुद्गभोजी**, [न्] पुं, (मुद्गं भुंक्ते इति । भुज् + णिनिः ।) अश्वः । इति राजनिर्घण्टः ॥

**मुद्गष्टकः**, पुं, (मुद्गष्ट + स्वार्थे कन् ।) वनमुद्गः । इत्यमरः । २ । ९ । १७ ॥

**मुद्गार्द्रवटः**, पुं, (मुद्गेनार्द्रः वटः ।) वटक-विशेषः । आदावडा इति भाषा । यथा, --
“मुद्गपिष्टीविरचितान् वटकांस्तैलपाचितान् ।
हस्तेन चूर्णयेत् सम्यक् तस्मिंश्चूर्णे विनिक्षिपेत् ॥
भृष्टं हिङ्ग्वार्द्रकं सूक्ष्मं मरिचं जीरकं तथा ।
निम्बूरसं यवानीञ्च युक्त्या सर्व्वं विमिश्रयेत् ॥
मुद्गपिष्टीं पचेत् सम्यक् स्थाल्यामङ्गारकोपरि ।
तस्यास्तु गोलकं कुर्य्यात्तन्मध्ये पूरणं क्षिपेत् ॥
तैले तान् गोलकान् पक्त्वा क्वथितायां निम-ज्जयेत् ।
गोलकाः पाचकैः प्रोक्तास्ते त्वार्द्रकवटा अपि ॥”
अस्य गुणाः । यथा, भावप्रकाशे ।
“मुद्गार्द्रकवटा रुच्या लघवो बलकारकाः ।
दीपनास्तर्पणाः पथ्यास्त्रिदोषेषु प्रपूजिताः ॥”

“पृथुकास्तण्डुला भृष्टा गोधूमचणकादयः ।
तस्य नाम भवेद्देवि ! मुद्रा मुक्तिप्रदायिनी ॥”
इति निर्व्वाणतन्त्रे ११ पटलः ॥
तस्याः शोधनं यथा, --
“ॐ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः
दिवीव चक्षुराततम् । ॐ तद्विप्रासो विपन्यवो
जागृवांसः समिन्धते विष्णोर्यत् परमं पदम् ।
इति मन्त्राभ्यां शाधनम् । इति स्वतन्त्रतन्त्रम् ॥
शरीरे धार्य्यभगवदायुधादिचिह्नम् । छाप इति भाषा । यथा, --
“ततो नारायणीं मुद्रां धारयेत् प्रीतये हरेः ।
मत्स्यकूर्म्मादिचिह्नानि चक्रादीन्यायुधानि च ॥
अथ मुद्राधारणनित्यता स्मृतौ ।
“अङ्कितः शङ्खचक्राभ्यामुभयोर्व्वाहुमूलयोः ।
समर्च्चयेद्धरिं नित्यं नान्यथा पूजनं भवेत् ॥”
आदिपुराणे ।
“शङ्खचक्रोर्द्ध्वपुण्ड्रादिरहितं ब्राह्मणाधमम् ।
गर्द्दभं तु समारोप्यराजा राष्ट्रात् प्रवासयेत् ॥”
गारुडे श्रीभगवदुक्तौ ।
“सर्व्वकर्म्माधिकारश्च शुचीनामेव चोदितः ।
शुचित्वञ्च विजानीयान्सदीयायुधधारणात् ॥”
इति पाद्मे चोत्तरखण्डे ।
“शङ्खचक्रादिभिश्चिह्नैर्व्विप्रः प्रियतमैर्हरेः ।
रहितः सर्व्वधर्म्मेभ्यः प्रच्युतो नरकं व्रजेत् ॥”

**मुद्गमोदकः**, पुं, (मुद्गेन साधितो मोदकः ।) मोदक-

विशेषः । मतिचुर इति भाषा । यथा, --

“मुद्गानां धूमसीं

सम्यग्घोलयेन्निर्म्मलाम्बुना ।

कटाहस्थघृतस्योर्द्ध्वं झर्झरं

स्थापयेत्ततः ॥

धूमसीन्तु द्रवीभूतां प्रक्षिपेत् झर्झरोपरि

।

पतन्ति बिन्दवस्तस्मात्तान् सुपक्वान्

समुद्धरेत् ।

सितापाकेन संयोज्य कुर्य्यात् युक्तेन

भादकान् ॥”

अस्य गुणाः । यथा, भावप्रकाशे ।

श्रुतौ च यजुःकठशाखायाम् ।

“धृतोर्द्ध्वपुण्ड्रः कृतचक्रधारी

विष्णुं परं ध्यायति यो महात्मा ।

स्मरेण मन्त्रेण सदा हृदि स्थितं

परात्परं यन्महतो महान्तम् ॥”

अथर्व्वणि च ।
‘एभिर्व्वयमुरुक्रमस्य चिह्नै-
रङ्किता लोके शुभगा भवेम ।’
तद्विष्णोः परमं पदं ये गच्छन्ति
लाञ्छिताः ।
इत्यादि ॥
अतएव ब्रह्मपुराणे ।
‘कृष्णायुधाङ्कितं दृष्ट्वा सम्मानं न
करोति यः ।
द्वादशाब्दार्जितं
पुण्यञ्चाफलायोपगच्छति ॥’ * ॥
अथ मुद्राधारणमाहात्म्यम् ।
स्कान्दे
श्रीसनत्कुमारमार्कण्डेयसम्बादे ।
‘यो विष्णुभक्तो विप्रेन्द्र !
शङ्खचक्रादिचिह्नितः ।
स याति विष्णुलोकं वै
दाहप्रलयवर्जितम् ॥’
तत्रैवान्यत्र ।
‘नारायणायुधैर्नित्यं चिह्नितं यस्य
विग्रहम् ।
पापकोटिप्रयुक्तस्य तस्य किं कुरुते
यमः ॥
शङ्खोद्धारे तु यत् प्रोक्तं वसतां
वर्षकोटिभिः ।
तत् फलं लिखिते शङ्खे प्रत्यहं दक्षिणे
भुजे ॥
यत् फलं पुष्करे नित्यं
पुण्डरीकाक्षदर्शने ।
शङ्खोपरिकृते पद्मे तत् फलं
समवाप्नुयात् ॥
वामे भुजे गदा यस्य लिखिता दृश्यते
कलौ ।
गदाधरो गयापुण्यं प्रत्यहं तस्य
यच्छति ॥
यच्चानन्दपुरे प्रोक्तं
चक्रस्वामिसमीपतः ।
गदाधो लिखिते चक्रे तत् फलं
कृष्णदर्शने ॥’

किञ्च ।
‘कृष्णायुधाङ्किता मुद्रा यस्य नारायणी करे ।
ऊर्द्ध्वलोकाधिकारी च स ज्ञेयस्त्रिदशां पतिः
॥
कृष्णमुद्राप्रयुक्तस्तु दैवं पित्र्यं करोति यः ।
नित्यं नैमित्तिकं काम्यं प्रत्यहञ्चाक्षयं भवेत् ॥
पीडयन्ति न तत्रैव ग्रहा ऋक्षाणि राशयः ।
अष्टाक्षराङ्किता मुद्रा यस्य धातुमयी करे ॥’
वाराहे श्रीसनत्कुमारोक्तौ ।
‘कृष्णायुधाङ्कितं देहं गोपीचन्दनमृत्स्नया ।
प्रयागादिषु तीर्थेषु स गत्वा किं करिष्यति ॥
यदा यस्य प्रपश्येत देहं शङ्खादिचिह्नितं ।
तदा तदा जगत्स्वामी तुष्टो हरति पातकम् ॥
भवते यस्य देहे तु अहोरात्रं दिने दिने ।
शङ्खचक्रगदापद्मं लिखितं सोऽच्युतः स्वयम् ॥
नारायणायुधैर्युक्तं कृत्वात्मानं कलौ युगे ।
कुरुते पुण्यकर्म्माणि मेरुतुल्यानि तस्य वै ॥
शङ्खादिनाङ्कितो भक्त्या श्राद्धं यः कुरुते
द्विजः ।
विधिहीनन्तु संपूर्णं पितृणान्तु गयासमम् ॥
यथाग्निर्दहते कक्षं वायुना प्रेरितो भृशम् ।
तथा दह्यन्ति पापानि दृष्ट्वा कृष्णायुधानि वै
॥’
ब्राह्म्ये श्रीब्रह्मनारदसंबादे ।
‘विष्णुनामाङ्कितां मुद्रां अष्टाक्षरसमन्विताम् ।
शङ्खादिकायुधैर्युक्तां स्वर्णरूप्यमयीमपि ॥
धत्ते भागवतो यस्तु कलिकाले विशेषतः ।
प्रह्लादस्य समो ज्ञेयो नान्यथा कलिवल्लभ !
॥’
किञ्च ।
‘शङ्खाङ्किततनुर्विप्रो भुङ्क्ते यस्य च वेश्मनि ।
तदन्नं स्वयमश्नाति पितृभिः सह केशवः ॥
कृष्णायुधाङ्कितो यस्तु श्मशाने म्रियते यदि ।
प्रयागे या गतिः प्रोक्ता सा गतिस्तस्य नारद !
॥
कृष्णायुधैः कलौ नित्यं मण्डितं यस्य विग्रहम्
।
तत्राश्रयं प्रकुर्व्वन्ति विबुधा वासवादयः ॥
यः करोति हरेः पूजां कृष्णशस्त्राङ्कितो नरः ।

द्वादशाक्षरमन्त्रैस्तु नियुक्तानि कलेवरे ।
आयुधानि च विप्रस्य मत्समः स च वैष्णवः
॥’
किञ्च ।
‘यस्य नारायणी मुद्रा देहे शङ्खादिचिह्निता ।
सर्व्वाङ्गं चिह्नितं यस्य शस्त्रैर्नारायणोद्भवैः ॥
प्रवेशो नास्ति पापस्य कवचं तस्य वैष्णवम्
॥’
अन्यत्र च ।
‘एभिर्भागवतैश्चिह्नैः कलिकाले द्विजातयः ।
भवन्ति मर्त्यलोके ते शापानुग्रहकारकाः ॥’
* ॥
अथ मुद्राधारणविधिः । गौतमीये ।
“ललाटे च गदा कार्य्या मूर्द्ध्नि चापः
शरःस्तथा ।
नन्दकञ्चैव हृन्मध्ये शङ्खचक्रं भुजद्वये ॥
शङ्खचक्राङ्कितो विप्रः श्मशाने म्रियते यदि ।
प्रयागे या गतिः प्रोक्ता सा गतिस्तस्य
गौतम ! ॥
चक्रञ्च दक्षिणे बाहौ शङ्खं वामेऽपि दक्षिणे ।
गदां वामे गदाधस्तात् पुनश्चक्रञ्च धारयेत्
॥
शङ्खोपरि तथा पद्मं पुनः पद्मञ्च दक्षिणे ।
खड्गं वक्षसि चापञ्च शरं शिरसि धारयेत् ॥
इति पञ्चायुधान्यादौ धारयेद्वैष्णवो जनः ।
मत्स्यञ्च दक्षिणे हस्ते कूर्म्मं वामकरे तथा
॥’
तथा चोक्तम् ।
‘दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् ।
मत्स्यं पद्मञ्चापरेऽथ शङ्खं कूर्म्मं गदां तथा ॥
साम्प्रदायिकशिष्टानामाचाराच्चयथारुचि ।
शङ्खचक्रादिचिह्नानि सर्व्वेष्वङ्गेषु धारयेत् ॥
भक्त्या निजेष्ठदेवस्य धारयेल्लक्षणान्यपि ।
चक्रशङ्खौ च धार्य्येते संमिश्रावेव कैश्चन ॥’
यत उक्तं ब्रह्मवैवर्त्ते ।
‘केवलं नोद्वहेच्छङ्खमादौ चासुरविग्रहम् ।
अतश्चक्रविमिश्रं तं बिभृयाद्वैष्णवः सदा ॥
श्रीगोपीचन्दनेनैवं चक्रादीनि बुधोऽन्वहम् ।

श्रीभगवदुक्तौ च ।
'यः पुनः कलिकाले तु मत्पुरीसम्भवां मृदम् ।
मत्स्यकूर्म्मादिकं चिह्नं गृहीत्वा कुरुते नरः ॥
देहे तस्य प्रविष्टोऽहं जानन्तु त्रिदशोत्तमाः ।
तस्य मे नान्तरं किञ्चित् कर्त्तव्यं श्रेय इच्छता ॥
ममावतारचिह्नानि दृश्यन्ते यस्य विग्रहे ।
मर्त्यैर्मर्त्यो न विज्ञेयः स नूनं मामकी तनुः ॥
पापं सुकृतरूपन्तु जायते तस्य देहिनः ।
ममायुधानि यस्याङ्गे लिखितानि कलौ युगे ॥
उभाभ्यामपि चिह्नाभ्यां योऽङ्कितो मत्स्य-
मुद्रया ।
कूर्म्मयापि स्वकं तेजो निक्षिप्तं तस्य विग्रहे ॥
शङ्खञ्च पद्मञ्च गदां रथाङ्गं मत्स्यञ्च कूर्म्मं रचितं स्वदेहे ।
करोति नित्यं सुकृतस्य वृद्धिं पापक्षयं जन्मशतार्जितस्य ॥'
तत्रैव श्रीब्रह्मनारदसंवादे ।
'कृष्णशस्त्राङ्ककवचं दुर्भेद्यं देवदानवैः ।
अधृष्यं सर्व्वभूतानां शत्रूणां रक्षसामपि ॥
लक्ष्मीः सरस्वती दुर्गा सावित्री हरवल्लभा ।
नित्यं तस्य वसेद्देहे यस्य शङ्खाङ्किता तनुः ॥
गङ्गा गया कुरुक्षेत्रं प्रयागं पुष्करादि च ।
नित्यं तस्य सदा तिष्ठेद्यस्य पद्माङ्कितं वपुः ॥
यस्य कौमोदकीचिह्नं भुजे वाथ कलिप्रिय ! ।
अपराधसहस्राणि नित्यं हरति केशवः ॥
कृत्वा काष्ठमयं विम्बं कृष्णशस्त्रैस्तु चिह्नितम् ।
यो ह्यङ्कयति चात्मानं तत्समो नास्मि वैष्णवः ॥
पाषण्डपतितव्रात्यैर्नास्तिकालापपातकैः ।
न लिप्यते कलिकृतैः कृष्णशस्त्राङ्कितो नरः ॥'
किञ्च ।
'अष्टाक्षराङ्किता मुद्रा यस्य धातुमया भवेत् ।
शङ्खपद्मादिभिर्युक्ता पूज्यतेऽसौ सुरासुरैः ॥
धृता नारायणी मुद्रा प्रह्लादेन पुरा कृता ।
विभीषणेन बलिना ध्रुवेण च शुकेन च ॥
मान्धातृणाम्बरीषेण मार्कण्डप्रमुखैर्द्विजैः ।
शङ्खादिचिह्नितैः शस्त्रैर्देहे कृत्वा कलिप्रिय ! ।
आराध्य केशवात् प्राप्तं समीहितफलं महत् ॥'
किञ्च ।
'गोपीचन्दनमृत्स्नाया लिखितं यस्य विग्रहे ।
शङ्खपद्मादिचक्रं वा तस्य देहे वसेद्धरिः ॥'
तत्रैव श्रीसनत्कुमारोक्तौ ।
'यस्य नारायणी मुद्रा देहे शङ्खादिचिह्निता ।
धात्रीफलकृता माला तुलसीकाष्ठसम्भवा ॥
धारयेच्छयनादौ तु तप्तानि किल तानि हि ॥'
अथ चक्रादीनां लक्षणानि ।
'द्वादशाक्षरन्तु षट्कोणं बलयत्रयसंयुतम् ।
चक्रं स्याद्दक्षिणावर्त्तः शङ्खश्च श्रीहरेः स्मृतः ॥
गदापद्मादिकं लोकसिद्धमेव मतं बुधैः ।
मुद्रा च भगवान्नाम्नाङ्किता याष्टाक्षरादिभिः ॥'
इति श्रीहरिभक्तिविलासः ॥ * ॥
अपि च ।
'यथा मुद्रा शीतलाख्या तथा तप्ता न संशयः ।
तप्तायाः शीतलायाश्च विभेदो नैव वर्त्तते ॥
नामचिह्नादिना देहे वह्निना वा मृदाङ्कनम् ।
सा दीक्षा प्रोच्यते भूप ! वाह्यानां ज्ञानिना-
मपि ॥
वैष्णवैर्विष्णुभक्तेश्च ब्राह्मणैर्वेदपारगैः ।
सन्धार्य्या सतिला मुद्रा गोपीचन्दनसंयुता ॥'
इति नारदपञ्चरात्रम् ॥
'कृष्णनामाक्षरैर्गात्रमङ्कयेच्चन्दनादिना ।
स लोकपावनो भूत्वा विष्णुलोकमवाप्नुयात् ॥
अग्नितप्तेन चक्रेण ब्राह्मणो बाहुमूलयोः ।
अङ्कयित्वा जपेन्मन्त्रं संसारान्मोक्षमाप्नुयात् ॥'
इति पद्मपुराणम् ॥

| | | |
|---|---|---|
| प्रत्यहं तत्र द्रष्टव्यो गङ्गासागरसङ्गमः ॥<br>सव्ये करे गदाधस्ताद्रथाङ्गं तिष्ठते यदि ।<br>कृष्णेन सहितं तत्र त्रैलोक्यं सचराचरम् ॥<br>त्रयोऽग्रयस्त्रयो देवा विष्णोस्त्रीणि पदानि च ।<br>निवसन्ति सदा तस्य यस्य देहे सुदर्शनम् ॥' | | |

'तन्नाम्ना चाङ्कितं सर्व्वं वसनं भाजनादिकम् ।'
इति हारीतस्मृतिः ॥ * ॥
देवताविशेषप्रीतिजनिकाङ्गुलिरचना । यथा,
मुद्रापदव्युत्पत्तिमाह तन्त्रे ।
'मोदनात् सर्व्वदेवानां द्रावणात् पापसन्ततेः ।
तस्मान्मुद्रेति सा ख्याता सर्व्वकामार्थसाधनी ॥
अथ मुद्राः प्रवक्ष्यामि सर्व्वतन्त्रेषु कल्पिताः ।
याभिर्व्विरचिताभिश्च मोदन्ते मन्त्रदेवताः ॥
अर्च्चने जपकाले च ध्याने काम्ये च कर्म्मणि ।
स्नाने चावाहने शङ्खे प्रतिष्ठायाञ्च रक्षणे ॥
नैवेद्ये च तथान्यत्र तत्तत्कल्पप्रकाशिते ।
स्थाने मुद्राः प्रद्रष्टव्याः स्वस्वलक्षणलक्षिताः ॥
आवाहनादिका मुद्रा नव साधारणा मताः ।
तथा षडङ्गमुद्राश्च सर्व्वमन्त्रेषु योजयेत् ॥
एकोनविंशतिर्म्मुद्रा विष्णोरुक्ता मनीषिभिः ।
शङ्खचक्रगदापद्मवेणुश्रीवत्सकौस्तुभाः ॥
वनमाला तथा ज्ञानमुद्रा विल्वाह्वया तथा ।
गरुडाख्या परा मुद्रा विष्णोः सन्तोषवर्द्धिनी ॥
नारसिंही च वाराही हायग्रीवी धनुस्तथा ।
बाणमुद्रा ततः परशुर्ज्जगन्मोहनिका परा ॥
काममुद्रा पराख्याता शिवस्य दश मुद्रिकाः ।
लिङ्गयोनित्रिशूलाख्यामालेष्टाभीमृगाह्वयाः ।
खट्वाङ्गा च कपालाख्या डमरुः शिवतोषदाः ॥
सूर्य्यस्यैकैव पद्माख्या सप्तमुद्रा गणेशितुः ।
दन्तपाशाङ्कुशा विघ्नपरशुलड्डुकसंज्ञिताः ।
बीजपूराह्वया मुद्रा विज्ञेया विघ्नपूजने ॥
पाशाङ्कुशवराभीतिखड्गचर्म्मधनुःशराः ।
हस्ताभ्यामञ्जलिं बद्ध्वानामिकामूलपर्व्वणोः ॥
अङ्गुष्ठौ निक्षिपेत् सेयं मुद्रा त्वावाहनी स्मृता । १ ।
अधोमुखी त्वियं चेत् स्यात् स्थापनी मुद्रिका स्मृता ॥ २ ॥
उच्छ्रिताङ्गुष्ठमुष्ट्योस्तु संयोगात् सन्निधापनी । ३ ।
अन्तःप्रवेशिताङ्गुष्ठा सैव संबोधनी मता ॥ ४ ॥
उत्तानमुष्टियुगला संमुखीकरणी मता । ५ ।
देवताङ्गे षडङ्गानां न्यासः स्यात् सकलीकृतिः ॥ ६ ॥
सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्ज्जनी ।
अवगुण्ठनमुद्रेयमभितो भ्रामिता मता ॥ ७ ॥
अन्योन्याभिमुखाश्लिष्टाकनिष्ठानामिका पुनः ।
तथैव तर्ज्जनी मध्या धेनुमुद्रा प्रकीर्त्तिता ॥
अमृतीकरणं कुर्य्यात्तया साधकसत्तमः । ८ ।
अन्योन्यग्रथिताङ्गुष्ठा प्रसारितपराङ्गुली ॥
महामुद्रेयमुदिता परमीकरणे बुधैः ।
प्रयोजयेदिमा मुद्रा देवताह्वानकर्म्मणि ॥ ९ ॥ * ॥
वैष्णवीनान्तु मुद्राणां कथ्यन्ते लक्षणान्यथ ।
वामाङ्गुष्ठन्तु संगृह्य दक्षिणेन तु मुष्टिना ॥
कृत्वोत्तानं ततो मुष्टिमङ्गुष्ठन्तु प्रसारयेत् ।
वामाङ्गुल्यस्तथाश्लिष्टाः संयुक्ताः स्युः प्रसारिताः ॥
दक्षिणाङ्गुष्ठसंस्पृष्टा ज्ञेयैषा शङ्खमुद्रिका । १ ।
हस्तौ तु संमुखौ कृत्वा सन्नतप्रोथिताङ्गुली ॥
विल्वाख्या मुद्रिकैषा स्फुटमिह गदिता गोप-
नीया विधिज्ञैः ॥ १० ॥
हस्तौ तु विमुखौ कृत्वा ग्रथयित्वा कनिष्ठिके ।
मिथस्तर्ज्जनिके श्लिष्टे श्लिष्टावङ्गुष्ठकौ तथा ॥
मध्यमानामिके द्वे तु द्वौ पक्षाविव चालयेत् ।
एषा गरुडमुद्रा स्याद्विष्णोः सन्तोषवर्द्धिनी ॥ ११ ॥
जानुमध्ये करौ कृत्वा चिवुकौष्ठौ समावुभौ ।
हस्तौ तु भूमिसंलग्नौ कम्पमानः पुनः पुनः ॥
मुखं विवृतकं कुर्य्यात् लेलिहानाञ्च जिह्विकाम् ।
नारसिंही भवेदेषा मुद्रा तत्प्रीतिवर्द्धिनी ॥'
अथवा ।
'अङ्गुष्ठाभ्यान्तु करयोस्तथाक्रम्य कनिष्ठिके ।
अधोमुखीभिः सर्व्वाभिर्म्मुद्रेयं नृहरेर्म्मता ॥ १२ ॥
देवोपरि करं वामं कृत्वोत्तानमधः सुधीः ।
नमयेदिति संप्रोक्ता मुद्रा वाराहसंज्ञिका ॥'
यद्वा ।
'दक्षहस्तञ्चोर्द्ध्वमुखं वामहस्तमधोमुखम् ।
अङ्गुल्यग्रन्तु संयुक्तं मुद्रां वाराहसंज्ञिका ॥ १३ ॥
वामहस्ततले दक्षा अङ्गुलीस्तास्त्वधोमुखीः ।
संरोप्य मध्यमां तासामुन्नम्याधो विकुञ्चयेत् ॥
हयग्रीवप्रिया मुद्रा तन्मूर्त्तेरनुकारिणी । १४ ।
वामस्य मध्यमाग्रन्तु तर्ज्जन्यग्रेण योजयेत् ॥
अनामिकां कनिष्ठाञ्च तस्याङ्गुष्ठेन पीडयेत् ।

मौषली मुद्रिका दौर्गी मुद्राः शक्तेः प्रियङ्कराः ॥
लक्ष्मीमुद्रार्च्चने लक्ष्म्या वाग्वादिन्याश्च पूजने ।
अक्षमाला तथा वीणाव्याख्यापुस्तकमुद्रिकाः॥
सप्तजिह्वाह्वया मुद्रा विज्ञेया वह्निपूजने ।
मत्स्यमुद्रा च कूर्म्माख्या लेलिहा मुण्डसंज्ञिका ॥
महायोनिरिति ख्याता सर्व्वसिद्धिसमृद्धिदा ।
शक्त्यर्च्चने महायोनिः श्यामादौ मुण्डमुद्रिका ॥
मत्स्यकूर्म्मलेलिहाख्या मुद्रा साधारणी मता ।
ताराच्चने विशेषास्तु कथ्यन्ते पञ्च मुद्रिकाः ॥
योनिश्च भूतिनी चैव बीजाख्या दैत्यधूमिनी ।
लेलिहानेति संप्रोक्ताः पञ्चमुद्राः प्रकाशिताः ॥
दशका मुद्रिका ज्ञेयास्त्रिपुरायाः प्रपूजने ।
संक्षोभद्रावणाकर्षवश्योन्मादमहाङ्कुशाः ।
खेचरी बीजयोन्याख्या त्रिखण्डा परिकीर्त्तिताः ॥
कुम्ममुद्राभिषेके स्यात् पद्ममुद्रासने तथा ।
कालकर्णी प्रयोक्तव्या विघ्नप्रशमकर्म्मणि ॥
गालिनी च प्रयोक्तव्या जलशोधनकर्म्मणि ।
श्रीगोपालार्च्चने वेणुर्नृहरेर्नारसिंहिका ॥
वराहस्य च पूजायां वाराहाख्यां प्रयोजयेत् ।
हयग्रीवार्च्चने चैव हायग्रीवीं प्रदर्शयेत् ॥
रामार्च्चने धनुर्व्वाणमुद्रे परशुस्तथार्च्चने ।
परशुरामस्य विज्ञेया जगन्मोहनसंज्ञिका ॥
वासुदेवाह्वया ध्याने कुन्तमुद्रा तु रक्षणे ।
सर्व्वत्र प्रार्थने चैव प्रार्थनाख्यां प्रयोजयेत् ॥ * ॥
उद्देशानुक्रमादासामुच्यन्तेलक्षणान्यथ ।
तलान्तर्मिलिताङ्गुष्ठौ सुभुग्नौ सुप्रसारितौ ।
कनिष्ठाङ्गुष्ठकौ लग्नौ मुद्रैषा चक्रसंज्ञिका ॥ २ ॥
अन्योन्याभिमुखौ हस्तौ कृत्वा तु ग्रथिताङ्गुली ।
अङ्गुल्यौ मध्यमे भूयः सुलग्ने सुप्रसारिते ॥
गदा मुद्रेयमुदिता विष्णोः सन्तोषवर्द्धिनी । ३ ।
हस्तौ तु संमुखौ कृत्वा सन्नतप्रोथिताङ्गुली ॥
तलान्तर्मिलिताङ्गुष्ठौ कृत्वैषा पद्ममुद्रिका । ४ ।
ओष्ठे वामकराङ्गुष्ठो लग्नस्तस्य कनिष्ठिका ॥
दक्षिणाङ्गुष्ठसंयुक्ता तत्कनिष्ठा प्रसारिता ।
तर्जनीमध्यमानामाः किञ्चित्संकुच्य चालिताः ॥
वेणुमुद्रा भवत्येषा सुगुप्ता प्रेयसी हरेः । ५ ।
अन्योन्यपृष्ठकरयोर्म्मध्यमानामिकाङ्गुली ॥
अङ्गुष्ठेन तु बध्नीयात् कनिष्ठामूलसंस्थिते ।
तर्जन्यौ कारयेदेषा मुद्रा श्रीवत्ससंज्ञिका ॥ ६ ॥
अनामापृष्ठसंलग्ना दक्षिणस्य कनिष्ठिका ।
कनिष्ठयान्यया बद्ध्वा तर्ज्जन्या दक्षया तथा ॥
वामानामाञ्च बध्नीयात् दक्षिणाङ्गुष्ठमूलके ।
अङ्गुष्ठमध्यभे वामे संयोज्य सरलाः पराः ॥
चतस्रोऽप्यग्रसंलग्ना मुद्रा कौस्तुभसंज्ञिका । ७ ।
स्पृशेत् कण्ठादिपादान्तं तर्ज्जन्याङ्गुष्ठया तथा ॥
करद्वयेन मालावत् मुद्रेयं वनमालिका । ८ ।
तर्ज्जन्यङ्गुष्ठकौ सक्तावग्रतो विन्यसेत् हृदि ॥
दर्शयेद्वामके स्कन्धे धनुर्म्मुद्रेयमीरिता ॥ १५ ॥
दक्षमुष्टेस्तु तर्ज्जन्या दीर्घैषा बाणमुद्रिका ।' १६ ।
यद्वा ज्ञानार्णवे ।
‘यथा हस्तगतं चापं तथा हस्तं कुरु प्रिये ! ।
चापमुद्रेयमाख्याता वामहस्ते व्यवस्थिता ॥ १७ ॥
यथा हस्तगता बाणास्तथा हस्तं कुरु प्रिये ! ।
बाणमुद्रेयमाख्याता रिपुवर्गनिकृन्तनी ॥ १८ ॥
तले तलन्तु करयोस्तिर्य्यक् संयोज्य चाङ्गुलीः ।
संहताः प्रसृताः कुर्य्यात् मुद्रा परशुसंज्ञिका ॥ १९
उच्छ्रिताङ्गुष्ठमुष्टी द्वे मुद्रा त्रैलोक्यमोहिनी ॥ २० ॥
हस्तौ तु संपुटौ कृत्वा प्रसृताङ्गुलिकौ तथा ।
तर्ज्जन्यौ मध्यमापृष्ठे अङ्गुष्ठौ मध्यमाश्रितौ ।
काममुद्रेयमुदिता सर्व्वदेवप्रियङ्करी ॥ २१ ॥ * ॥
महादेवप्रियाणान्तु कथ्यन्ते लक्षणान्यथ ।
उच्छ्रितं दक्षिणाङ्गुष्ठं वामाङ्गुष्ठेन वेष्टयेत् ॥
वामाङ्गुलीर्द्दक्षिणाभिरङ्गुलीभिश्च बन्धयेत् ।
लिङ्गमुद्रेयमाख्याता शिवसान्निध्यकारिणी ॥ १ ॥
मिथः कनिष्ठिके बद्ध्वा तर्ज्जनीभ्यामनामिके ।
अनामिकोद्ध्र्वसंश्लिष्टदीर्घमध्यमयोरधः ॥
अङ्गुष्ठाग्रद्वयं न्यस्येत् योनिमुद्रेयमीरिता । २ ।
अङ्गुष्ठेन कनिष्ठान्तु बद्ध्वा शिष्टाङ्गुलीत्रयम् ॥
प्रसारयेत् त्रिशूलाख्या मुद्रैषा परिकीर्त्तिता । ३
अङ्गुष्ठतर्ज्जन्यग्रेतु ग्रथयित्वाङ्गुलित्रयम् ॥

| | | |
|---|---|---|
| | वामहस्ताम्बुजं वामजानुमूर्द्धनि विन्यसेत् ।<br>ज्ञानमुद्रा भवेदेषा रामचन्द्रस्य प्रेयसी ॥ ९ ॥<br>अङ्गुष्ठं वाममुद्दण्डितमितरकराङ्गुष्ठकेनापि बद्धा<br>तस्याग्रं पीडयित्वाङ्गुलिभिरपि च ता वाम-<br>हस्ताङ्गुलीभिः ।<br>बद्ध्वा गाढं हृदि स्थापयतु विमलधीर्व्याहरन्<br>मारबीजं | प्रसारयेदक्षमाला मुद्रेयं परिकीर्त्तिता । ४ ।<br>अधःस्थितो दक्षहस्तः प्रसृतो वरमुद्रिका ॥ ५ ॥<br>ऊद्ध्वींकृतो वामहस्तः<br>प्रसृतोऽभयमुद्रिका । ६ ।<br>मिलितानामिकाङ्गुष्ठं मध्यमाग्रे नियोजयेत् ॥<br>श्लिष्टाङ्गुल्युच्छ्रिते कुर्य्यात्<br>मृगमुद्रेयमीरिता । ७<br>पञ्चाङ्गुल्यो दक्षिणास्तु मिलिता ह्यूद्र्ध्वमुन्नताः ॥ |

खट्वाङ्गमुद्रा विख्याता शिवस्यातिप्रिया मता
। ८ ।
पात्रवद्वामहस्तन्तु कृत्वाङ्के वामके तथा ॥
निधायोच्छ्रितवत् कुर्य्यात् मुद्रा कापालिकी
मता । ९ ।
मुष्टिञ्च शिथिलां बद्ध्वा ईषदुच्छ्रितमध्यमाम्
॥
दक्षिणामूद्‌र्ध्वमुन्नम्य कर्णदेशे प्रचालयेत् ।
एषा मुद्रा डमरुका सर्व्वविघ्नविनाशिनी ॥
१० ॥ * ॥
तथा गणेशमुद्राणामुच्यन्ते लक्षणान्यथ ।
उत्तानोद्‌र्ध्वमुखी मध्या सरला बद्धमुष्टिका ॥
दन्तमुद्रा समाख्याता सर्व्वागमविशारदैः । १
।
वाममुष्टेस्तु तर्ज्जन्या दक्षमुष्टेस्तु तर्ज्जनीम्
॥
संयोज्याङ्गुष्ठकाग्राभ्यां तर्ज्जन्यग्रे स्वके
क्षिपेत् ।
एषा पाशाह्वया मुद्रा विद्वद्भिः परिकीर्त्तिता ॥
२ ॥
ऋज्वीञ्च मध्यमां कृत्वा तर्ज्जनीमध्यपर्व्वणि
।
संयोज्याकुञ्चयेत् किञ्चिन्मुद्रैषाङ्कुशसंज्ञिका ॥
३ ॥
तर्ज्जनीमध्यमानामाकनिष्ठाङ्गुष्ठमुष्टिका ।
अधोमुखी दीर्घरूपा मध्यमा विघ्नमुद्रिका ॥
४ ॥
परशुमुद्रा ५ निगदिता प्रसिद्धा लड्डुमुद्रिका ।
६ ।
बीजपूराह्वया मुद्रा प्रसिद्धत्वादुपेक्षिता ॥ ७ ॥
* ॥
शाक्तेयीनाञ्च मुद्राणां कथ्यन्ते लक्षणान्यथ ।
पाशा १ ङ्कुश २ वरा ३ भीति ४ धनु ५
र्ब्बाणाः समीरिताः ॥ ६ ॥
कनिष्ठानामिके बद्ध्वा स्वाङ्गुष्ठेनैव दक्षतः ।
श्लिष्टाङ्गुली तु प्रसृते संश्लिष्टे खड्गमुद्रिका
॥ ७ ॥
वामहस्तं तथा तिर्य्यक् कृत्वा चैव प्रसार्य्य च
।

अङ्गुष्ठावुन्नतौ कृत्वा मुष्ट्योः संलग्नयोर्द्वयोः ॥
तावेवाभिमुखौ कुर्य्यात् मुद्रैषा कालकर्णिका ।
* ।
दक्षिणा निविडा मुष्टिर्नासिकार्पिततर्ज्जनी ॥
मुद्रा विस्मयसंज्ञा स्यात् विस्मयावेशकारिणी
।
मुष्टिरूद्‌र्ध्वीकृताङ्गुष्ठा दक्षिणा नादमुद्रिका ॥
तज्जन्यङ्गुष्ठसंयोगादग्रतो बिन्दुमुद्रिका । * ।
अधोमुखे वामहस्ते ऊद्‌र्ध्वास्यं दक्षहस्तकम्
॥
क्षिप्त्वाङ्गुलीरङ्गुलीभिः संग्रथ्य परिवर्त्तयेत् ।
एषा संहारमुद्रा स्यात् विसर्ज्जनविधौ स्मृता
॥
दक्षपाणिपृष्ठदेशे वामपाणितलं न्यसेत् ।
अङ्गुष्ठौ चालयेत् सम्यक् मुद्रेयं मत्स्यरूपिणी
॥
वामहस्तस्य तर्ज्जन्यां दक्षिणस्य कनिष्ठया ।
तथा दक्षिणतर्जन्यां वामाङ्गुष्ठेन योजयेत् ॥
उन्नतं दक्षिणाङ्गुष्ठं वामस्य मध्यमादिकाः ।
अङ्गुलीर्योजयेत् पृष्ठे दक्षिणस्य करस्य च ॥
वामस्य पितृतीर्थेन मध्यमानामिके तथा ।
अधोमुखे च ते कुर्य्यात् दक्षिणस्य करस्य च
॥
कूर्म्मपृष्ठसमं कुर्य्यात् दक्षपाणिञ्च सर्व्वतः ।
कूर्म्ममुद्रेयमाख्याता देवताध्यानकर्म्मणि ॥’
पृष्ठे क्रोडे ॥ * ॥
‘अन्तराङ्गुष्ठमुष्टिन्तु कृत्वा वामकरस्य च ।
मध्यमाग्रं दक्षिणस्य तथालम्ब्य प्रयत्नतः ॥
मध्यमेनाथ तर्जन्यामङ्गुष्ठाग्रेण योजयेत् ।
दक्षिणं योजयेत् पाणिं वाममुष्टौ तु साधकः ॥
दर्शयेद्दक्षिणे भागे मुण्डमुद्रेयमुच्यते ॥ * ॥
तर्जनीमध्यमानामाः समं कुर्य्यादधोमुखम् ।
अनामायां क्षिपेद्वृद्धां ऋज्वीं कृत्वा कनि-
ष्ठिकाम् ॥
लेलिहा नाम मुद्रेयं जीवन्यासे प्रकीर्त्तिता ।
तर्जन्यनामिकामध्याकनिष्ठाक्रमयोगतः॥
करयोर्योजयत्येव कनिष्ठामूलयोगतः।
अङ्गुष्ठाग्रे तु निःक्षिप्य महायोनिः प्रकीर्त्तिता
॥’

मध्यमामध्यगे कृत्वा
कनिष्ठेऽङ्गुष्ठरोधिते ।
तर्ज्जन्यौ दण्डवत् कृत्वा
मध्यमोपर्य्यनामिके ।
एषा च प्रथमा मुद्रा
सर्व्वसंक्षोभकारिणी ॥
एतस्या एव मुद्राया मध्यमे सरले
यदा ।
क्रियेते परमेशानि ! सर्व्वविद्राविणी
तदा ॥
मध्यमातर्जनीभ्याञ्च कनिष्ठानामिकें
समे ।
अङ्कुशाकाररूपाभ्यां मध्यमे
परमेश्वरि ! ॥
अङ्गुष्ठौ तु नियुञ्जीत
कनिष्ठानामिकोपरि।
इयमाकर्षिणी मुद्रा त्रैलोक्याकर्षिणी
परा ॥
पुटाकारौ करौ कृत्वा
तर्जन्यावङ्कुशाकृती ।
परिवर्त्तक्रमेणैव मध्यमे तदधोगते ॥
क्रमेण देवि ! तेनैव कनिष्ठानामिके
तथा ।
संयोज्य निविडाः सर्व्वा
अङ्गुष्ठावग्रदेशतः ॥
मुद्रेयं परमेशानि ! सर्व्ववश्यकरी
मता ।
सम्मुखौ तु करौ कृत्वा
मध्यमामध्यगेऽन्त्यजे ॥
अनामिके तु सरले
तद्बहिस्तर्जनीद्वयम् ।
दण्डाकारौ तदङ्गुष्ठौ
मध्यमानखदेशगौ ॥
मुद्रैषोन्मादिनी नाम्ना कर्षिणी
सर्ब्बयोषिताम् ।
अस्यास्त्वनामिकायुग्ममधः
कृताङ्कुशाकृती ॥
तर्जन्यावपि तेनैव क्रमेण
विनियोजयेत् ।

आकुञ्चिताङ्गुलीः कुर्य्यात् चर्म्ममुद्रेयमीरिता
॥ ८
मुष्टिं कृत्वा तु हस्ताभ्यां वामस्योपरिदक्षिणम्
।
कुर्य्यान्मुसलमुद्रेयं सर्व्वविघ्नविनाशिनी ॥ ९
॥
मुष्टिं कृत्वा कराभ्याञ्च वामस्योपरि दक्षिणाम्
।
कृत्वा शिरसि संयोज्य दुर्गा मुद्रेयमीरिता ॥
१० ॥
चक्रमुद्रां तथा बद्ध्वा मध्यमे द्वे प्रसार्य्य च ।
कनिष्ठिके तथानीय तदग्रेऽङ्गुष्ठकौ क्षिपेत् ॥
लक्ष्मीमुद्रा परा ह्येषा सर्व्वसम्पत्प्रदायिनी ॥
१ ॥
वीणावादनवद्धस्तौ कृत्वा सञ्चालयेच्छिरः ।
वीणामुद्रेयमाख्याता सरस्वत्याः प्रियङ्करी ।
१ ।
वाममुष्टिं स्वाभिमुखीं कृत्वा पुस्तकमुद्रिका ।
२ ।
दक्षिणाङ्गुष्ठतर्ज्जन्यावग्रलग्ने पराङ्गुलीः ॥
प्रसार्य्य संहतोत्ताना एषा व्याख्यानमुद्रिका ।
३ ।
श्रीरामस्य सरस्वत्या अत्यन्तप्रेयसी मता ॥
* ॥
मणिबन्धस्थितौ कृत्वा प्रसृताङ्गुलिकौ करौ ।
कनिष्ठाङ्गुष्ठयुगले मिलित्वान्तः प्रसारयेत् ॥
सप्तजिह्वाख्यमुद्रेयं वैश्वानरप्रियङ्करी । १ । *
।
कनिष्ठाङ्गुष्ठकौ सक्तौ करयोरितरेतरम् ॥
तर्ज्जनी मध्यमानामा संहता भुग्नवर्ज्जिता ।
मुद्रैषा गालिनी प्रोक्ता शङ्खस्योपरि चालिता ॥
दक्षाङ्गुष्ठं पराङ्गुष्ठे क्षिप्त्वा हस्तद्वयेन तु ।
सावकाशामेकमुष्टिं कुर्य्यात् सा कुम्भमुद्रिका
॥
मुष्ट्योरूद्ध्र्वीकृताङ्गुष्ठौ तर्ज्जन्यग्रे तु
विन्यसेत् ।
सर्व्वेरक्षाकरी ह्येषा दन्तमुद्रा प्रकीर्त्तिता ॥ *
॥
प्रसृताङ्गुलिकौ हस्तौ मिथःश्लिष्टौ च संमुखौ
।

ताराया योन्यादिमुद्रा -- यथा । योनिमुद्रा च
वक्तव्या भूतिनी वक्तव्या बीजाख्यापि ॥
‘परिवर्त्त्य करौ स्पृष्टौ कनिष्ठाकृष्टमध्यमे ।
अनामायुगलञ्चाधस्तर्जनीयुगलं पृथक् ॥
अन्योन्यं निविडं बद्ध्वाङ्गुष्ठाग्रेऽनामिके ततः
।
दानवधूमकेत्वाख्या मुद्रैषा कथिता प्रिये ! ॥
अस्यास्तु बन्धनान्मन्त्री बन्धनान्मुच्यते
ध्रुवम् ॥
वक्त्वं विस्तारितं कृत्वाप्यधो जिह्वाञ्च
चालयेत् ।
पार्श्वस्थं मुष्टियुगलं लेलिहानेति कीर्त्तिता ॥’
एषा ताराराधनेऽन्या लेलिहाना वक्तव्या ।
‘योनिर्मायाधरः सेन्दुर्बधूः कूर्च्चः क्रमाद्विदुः ।
बीजानि चोच्चरन् मन्त्री मुद्राबन्धनमा चरेत्
॥
तर्जन्यङ्गुष्ठसंयोगादग्रतो बिन्दुमुद्रिका ।
वामकेश्वरतन्त्रोक्ताः प्रकाश्यन्तेऽथ मुद्रिकाः
॥
शृणु देवि ! प्रवक्ष्यामि मुद्राः सर्व्वार्थसिद्धिदाः
।
याभिर्विरचिताभिस्तु सान्निध्यं त्रैपूरं भवेत् ॥
परिवर्त्त्य करौ स्पृष्टावङ्गुष्ठौ कारयेत् समौ ।
अनामान्तर्गते कृत्वा तर्जन्यौ कुटिलाकृती ॥
कनिष्ठिके नियुञ्जीत निजस्थाने महेश्वरि ! ।
त्रिखण्डेयं समाख्याता त्रिपुराध्यानकर्म्मणि ॥

इयं महाङ्कुशा मुद्रा
सर्व्वकामार्थसाधिनी ॥ * ॥
सव्यं दक्षिणदेशे तु सव्यदेशे तु
दक्षिणम् ।
बाहुं कृत्वा महादेवि ! हस्तौ
संपरिवर्त्त्य च ।
कनिष्ठेऽनामिके देवि ! युक्ते तेन
क्रमेण च ।
तर्जनीभ्यां समाक्रान्ते सर्व्वोद्ध्र्वमपि
मध्यमे ॥
अङ्गुष्ठौ तु महेशानि ! सरलावपिं
कारयेत् ।
इयं सा खेचरी नाम्ना
पार्थिवस्थानयोजिता ॥
परिवर्त्त्य करौ स्पृष्टावर्द्धचन्द्राकृती
प्रिये ! ।
तर्जन्यङ्गुष्ठयुगलं युगपत् कारयेत्ततः
॥
अधः कनिष्ठावष्टब्धे मध्यमे
विनियोजयेत् ।
तथैव कुटिले योज्ये
सर्व्वाधस्तादनामिके।
बीजमुद्रेयमचिरात्
सर्व्वसिद्धिविवर्द्धिनी । * ।
मध्यमे कुटिले कृत्वा
तर्जन्युपरिसंस्थिते ॥
अनामिके मध्यगते तथैव हि
कनिष्ठिके ।
सर्व्वा एकत्र संयोज्या
अङ्गुष्ठपरिपीडिताः ॥
एषा तु परमा मुद्रा योनिमुद्रेयमीरिता
। * ।
एता मुद्रा महेशानि ! त्रिपुराया
मयोदिताः ।
पूजाकाले प्रयोक्तव्या
यथानुक्रमयोगतः ॥
वामहस्तेन मुष्टिन्तु बद्ध्वा कर्णप्रदेशके
।
तर्ज्जनीं सरलां कृत्वा
भ्रामयेन्मनुवित्तमः ॥

| | | |
|---|---|---|
| कुर्य्यात् स्वे हृदये स्त्रेयं मुद्रा प्रार्थनसंज्ञिका ॥<br>* ॥<br>अञ्जल्यञ्जलिमुद्रा स्याद्वासुदेवाह्वया च सा । | | सौभाग्यदण्डिनी मुद्रा न्यासकालेऽपि सूचिता ।<br>अन्तरङ्गुष्ठमुष्ट्या तु निरुध्य तर्जनीमिमाम् ॥<br>रिपुजिह्वाग्रहा मुद्रा न्यासकाले तु सूचिता ।<br>बद्ध्वा तु योनिमुद्रां वै मध्यमे कुटिले कुरु ॥<br>अङ्गुष्ठेन तदग्रे तु मुद्रेयं भूतिनी मता ।<br>* ।<br>वाममुष्टिं विधायाथ तर्जनीमध्यमे ततः ॥<br>प्रसार्य्य तर्जनीमुद्रा निर्द्दिष्टा वज्रपाणिना ॥'<br>इति तन्त्रसारे मुद्राप्रकरणं समाप्तम्<br>॥ * ॥ * ॥<br>अपि च ।<br>'उक्ताः स्तवनमस्काराः शृणुतं पुरतो युवाम् ।<br>मुद्राणां परिसंख्यानं स्वरूपञ्च यथाक्रमम् ॥<br>धेनुश्च सम्पुटश्चैव प्राञ्जलिर्व्विल्वपद्मकौ । |

नाराचो मुण्डदण्डौ च योनिरर्द्धं तथैव च ॥
वन्दनी च महामुद्रा महायोनिस्तथैव च ।
भगश्च पुटकश्चैव निःशङ्कोऽथार्द्धचन्द्रकः ॥
अङ्गञ्च द्विमुखञ्चैव शङ्खमुद्राय मुष्टिकः ।
वज्रञ्चैव तथा बद्धं सयोनिर्व्विमलस्तथा ॥
घटः शिखरिणी तुङ्गः पुण्ड्रोऽथ ह्यर्द्धधेनुकः ॥
संमीलनी च कुण्डञ्च चक्रं शूलं तथैव च ॥
सिंहवक्त्रं गोमुखञ्च प्रोन्नामोन्नमनं तथा ।
विम्बं पाशुपतं शुद्धं त्यागोऽथ साधनी तथा ॥
प्रसाधनी चोग्रमुद्रा कुण्डली व्यूहमेव च ।
त्रिमुखञ्चासिवल्ली च योगो भेदोऽथ मोहनम् ॥
बाणो धनुश्च तूणीरं मुद्रा एतास्तु सत्तमाः ।
अष्टोत्तरशतं मुद्रा ब्रह्मणा याः प्रकीर्त्तिताः ॥
तासान्तु पञ्चपञ्चाशदेताः ग्राह्यास्तु पूजने ।
शेषास्तु यास्त्रिपञ्चाशन्मुद्रास्ताःसमयेषु च ।
द्रव्यानयनसंकेतनटनादिषु ताः स्मृताः ॥
देवानां चिन्तने योगे ध्याने जप्ये विसर्ज्जने ।
आद्यास्तु पञ्चपञ्चाशन्मुद्रा भैरव ! कीर्त्तिताः ॥
मुद्रां विना तु यज्जप्यं प्राणायामः सुरार्च्चनम् ।
योगो ध्यानासने चापि निष्फलानि च भैरव ! ॥
प्रत्येकं लक्षणं तेषां शृणुतं तनयौ युवाम् ॥
दक्षिणामध्यमाग्रेण सव्यहस्तस्य तर्ज्जनीम् ।
योजयेत् सव्यमध्यान्तु तर्ज्जन्या दक्षिणेन वै ॥
तथा दक्षानामिकया वामहस्तकनिष्ठिकाम् ।
प्रसार्य्य दण्डमुद्रेति दक्षिणस्य करस्य तु । ८ ।
सर्व्वाङ्गुलीस्तु संयोज्य करयोरुभयोरपि ॥
संवेष्ट्य रज्जुवद्द्वे तु पाण्योरपि कनिष्ठिके ।
वामस्य वाममूलेन तदग्रं विनियोजयेत् ॥
दक्षस्य मध्यमूलेन तथाग्रं वाममेव च ।
योजयेत् योजनात् पश्चादावर्त्त्य करशाखिकाः ॥
योन्याकारन्तु तन्मध्यं योनिमुद्रा प्रकीर्त्तिता ।
कामाख्यायाः पञ्चमूर्त्तेर्दुर्गाया अपि भैरव ! ॥
प्रीतिदा योनिमुद्रेयं मम कामस्य च प्रिया । ९ ।
संयुक्तास्त्वङ्गुलीः सर्व्वाः प्रसार्य्याङ्गुष्ठपर्व्वणा ॥
अग्रेण च कनिष्ठाया अग्रेणापि च योजयेत् ।
करस्य दक्षिणस्येयमर्द्धयोनिः प्रकीर्त्तिता ॥ १० ॥
संपुटं प्राञ्जलिं वापि यदि शीर्षे नियोजयेत् ।
वन्दनीया समाख्याता मुद्रा विष्णुप्रमोदिनी ॥ ११ ॥
सैव चेत् श्रवणासक्ता महामुद्रा प्रकीर्त्तिता । १२ ।
दक्षिणाङ्गे तु सा सक्ता वैष्णवी परिकीर्त्तिता ॥ १३ ॥
महायोनिस्तु कथिता वैष्णवीतन्त्रगोचरे ।
द्वयोर्मूले त्वङ्गुष्ठाग्रमङ्गुलीश्च कनिष्ठयोः ॥
नियोज्य प्रसृतीकृत्य द्वे पाणी योजयेत् पुनः ।
भगमुद्रा च सा ख्याता लक्ष्मीवाणीशिवाप्रिया ॥ १४ ॥
सर्व्वाङ्गुलीनामग्रौघं दक्षिणस्य करस्य च ।
संयोज्यैकत्र पुरतो निर्द्देशः पुटकः स्मृतः ॥ १५ ॥
कनिष्ठानामिकाङ्गुष्ठाङ्गुलीनां योजयेद्बुधः ।
अग्राण्येकत्र मध्यान्तु तर्ज्जनीञ्च प्रसार्य्य वै ॥
कुब्जीकृत्य करद्वन्द्वं पृथगग्रे नियोजयेत् ।
सा स्यात् शिखरिणी मुद्रा ब्राह्मीसूर्य्यप्रिया च सा ॥ २९ ॥
अनामिके कनिष्ठे तु संयोज्य ऋजुना पुनः ।
मध्यमातर्ज्जनीनान्तु धेनुमुद्रेव बन्धनम् ॥
सार्द्धधेनुरिति ख्याता चन्द्रप्रीतिविवर्द्धिनी । ३० ।
करयोरङ्गुलीः सर्व्वाः सर्व्वाग्राण्येकतः स्थिता ॥
नियोज्यार्द्धतले चैव तदधोऽपि वियुज्य च ।
अग्रैरग्रं योजयेत्तु मुद्रा सम्मीलनी तु सा ॥ ३१ ॥
भौमभूमिमुनीशानामियंप्रीतिविवर्द्धिनी ।
सर्व्वाङ्गुलीस्तु संसक्ता दक्षिणस्य करस्य च ॥
कियद्भागं तथान्यस्य तलं कुर्य्यात्तु कुण्डवत् ।
समाख्याता कुण्डमुद्रा बुधवाणीशिवाप्रिया ॥ ३२ ॥
सर्ब्बाङ्गुलीनां मध्यैस्तु वामहस्तस्य चाङ्गुलीः ।
प्रसार्य्याङ्गुष्ठयुगलं संयोज्याग्रेण भैरव ! ॥
तदङ्गुष्ठद्वयं कार्य्यं सम्मुखं वितरेत्ततः ।
चक्रमुद्रा समाख्याता गुरुविष्णुशिवप्रिया ॥ ३३ ॥
अङ्गुष्ठं मध्यमाञ्चैव नामयित्वा करस्य च ।
दक्षिणस्यापरास्तिस्रोयोजयेदग्रतः पुनः ॥
शूलमुद्रा समाख्याता मम शुक्रगुहप्रिया । ३४ ।
निकुब्जीकृत्य तु करौ वामाङ्गुलिगणस्य तु ॥
अग्राणि योजयेन्मध्ये तलस्यासव्यहस्ततः ।

अनामिकान्तु वामस्य दक्षिणस्य कनिष्ठया ॥
योजयेद्भक्तिमान् सम्यक् दक्षिणावर्त्तनेन तु ।
धेनुमुद्रा समाख्याता सर्व्वदेवस्य तुष्टिदा ॥ १ ॥
संयोज्य द्वौ तलौ सर्व्वाण्यङ्गुष्ठाग्राणि हस्तयोः ।
संयोज्य पार्श्वतोऽङ्गुष्ठौ संपुटः प्रोच्यते सुरैः ॥
सर्व्वेषामथ देवानां संपुटः शस्यते सदा ।
ध्यानसंपुटयोगादौ सम्पुटः शस्यते सदा ॥ २ ॥
निकुब्जयुगलं पाण्योः संयोज्यार्द्धेन एव च ।
मध्यशून्यः पुटाकारः प्राञ्जलि परिकीर्त्तितः ॥ ३ ॥
अङ्गुष्ठमन्तरं कृत्वा पाण्योर्म्मुष्टिं विधाय च ।
संयोज्य विल्ववत्ते तु विल्वमुद्रा प्रकीर्त्तिता ॥ ४ ॥
मणिबन्धादाकरभं संयोज्य करयोर्द्वयोः ।
अङ्गुष्ठे चापि संयोज्य तथैव च कनिष्ठिके ॥
तिस्रस्तिस्रो द्वयोः पाण्योरङ्गुलीर्व्विरलास्ततः ।
पद्ममुद्रा समाख्याता चतुर्वर्गप्रदा नृणाम् ॥ ५ ॥
अङ्गुष्ठाग्रेण तर्ज्जन्याः संयोज्याथोद्ध्वरेखया ।
अन्याङ्गुलीस्तथानम्य नाराचः स्यात् प्रसा-
र्य्यते ॥
मम चेव शिवायाश्च प्रीतिदेयं प्रियङ्करी ।
नाराचमुद्रा सततं प्रीत्यै वेतालभैरव ! ॥ ६ ॥
अन्तराङ्गुष्ठमुष्टिञ्च कृत्वा वामकरस्य तु ।
मध्यमाभ्यां दक्षिणस्य तथानम्य प्रयत्नतः ॥
मध्याङ्केनाथ तर्ज्जन्या अङ्गुष्ठाग्रान्नियोज्य च ।

निःशङ्को नाम मुद्रेयं नरसिंहवराहयोः ॥ १६ ॥
कनिष्ठानामिकामध्यामाकुञ्च्य दक्षिणस्य च ।
करस्य तर्ज्जन्यङ्गुष्ठे प्रसार्य्य क्रियते तु या ॥
सा मुद्रा ह्यर्द्धचन्द्राख्या ग्रहाणां प्रीतिदा-
यिनी । १७ ।
ऊद्ध्र्वीकृत्य तथाङ्गुष्ठं दक्षिणस्य करस्य च ।
कृत्वा मध्यं तदङ्गुष्ठं वाममुष्टिं तथोद्ध्र्वतः ।
ऊद्ध्र्वाङ्गुष्ठं तथा कुर्य्यादङ्गमुद्रा प्रकीर्त्तिता ॥ १८ ॥
एतस्या एव मुद्रायाः कनिष्ठादिविमोचतः ।
अष्टौ मुद्राः समाख्याता नाम तासां पृथक् पृथक् ॥
द्विमुखञ्चैव १९ मुष्टिश्च २० वज्र २१ माबद्ध २२
मेव च ।
विमलश्च २३ घटश्चैव २४ तुङ्गः २५ पुण्ड्र २६
स्तथैव च ॥
नवानां विष्णुमूर्त्तीनां सार्द्धमङ्गेन मुद्रिकाः ।
क्रमान्नव समाख्याता नायिकानां तथैव च ॥
संयोज्य करयोः पृष्ठे तथावर्त्य तु वै समम् ।
प्रसार्य्य तर्ज्जनीयुग्मं संयुक्तं सर्व्वतः पुनः ॥
अङ्गुष्ठौ च तथा सक्तौ शङ्खमुद्रा प्रकीर्त्तिता । २७ ।
उत्तानमञ्जलिं कृत्वा अङ्गुष्ठे द्वे कनिष्ठयोः ॥
मूले निःक्षिप्य तु करौ संयोज्याथ प्रदर्शयेत् ।
सयोनिरिति सा ख्याता मुद्रा देवौघतुष्टिदा ॥ २८ ॥
मुष्टिर्द्दक्षिणहस्तस्य यदोद्ध्र्वाङ्गुष्ठिका भवेत् ।

अधः कृत्वा वामहस्तं मुद्रा सिंहमुखी स्मृता ॥ ३५ ॥
इयं प्रीत्यै तु दुर्गायाः सूर्य्यपुत्रस्य चक्रिणः ।
भगमुद्रा कर्णमूले गोमुखाख्या प्रकीर्त्तिता ॥
मम विष्णोस्तथा राहोः सर्व्वदा प्रीति-
दायिनी । ३६ ।
मुष्टिद्वयमथोत्तानं कृत्वा संयोज्य पार्श्वतः ॥
दक्षिणस्यं कनिष्ठादीन् प्रसार्य्य क्रमतः पुनः ।
तथा वामकनिष्ठाभ्यामेकैकेन प्रसारयेत् ॥
अष्टौ मुद्राः समाख्याता नामतः क्रमतः शृणु ।
प्रोन्नामो ३७ न्नमन ३८ ञ्चैव विम्बं ३९ पाशु-
पतं ४० तथा ॥
शुद्धं ४१ त्यागः ४२ साधनी ४३ च तथा चैव
प्रसाधनी ४४ ।
आकुञ्च्य करशाखास्तु दक्षिणाः सा तु मुद्रिका ॥
उग्रमुद्रा समाख्याता स्वहस्तस्य विपर्य्ययात् । ४५ ।
इन्द्रादिलोकपालानां दश मुद्राः प्रकीर्त्तिताः ॥
सर्व्वेषामपि देवानां परमप्रीतिवर्द्धनाः ।
अङ्गुष्ठाग्रन्तु तर्ज्जन्या अग्रभागेण योजयेत् ॥
आकुञ्च्य मध्यमाभ्यान्तु दक्षहस्तस्य चाङ्गुलीः ।
दर्शयेत् कुण्डलाकारं कुण्डलीशक्तितुष्टिदम् ॥
सर्व्वेषामपि देवानां तथा तुष्टिकरं महत् । ४६ ।
अङ्गुष्ठतर्ज्जनीमध्या अग्रभागे नियोज्य च ॥
मध्यमाञ्च कनिष्ठाञ्च आकुञ्च्य दक्षिणे करे ।

| | | |
|---|---|---|
| दक्षिणं योजयेत् पाणिं वाममुष्टौ तु साधकः ॥<br>दर्शयेद्दक्षिणे भागे मुण्डमुद्रेयमिष्यते ।<br>इयन्तु गणनाथस्य प्रीतिदा मुद्रिकोत्तमा ॥<br>सर्व्वेषामपि देवानां तुष्टिदा सर्व्वकर्म्मसु । ७ ।<br>अङ्गुष्ठमध्यमादींश्च सम्यगानम्य तर्ज्जनीम् ॥ | | त्रिमुखाख्या समाख्याता विश्वेदेवप्रिया सदा ॥<br>केतोः प्रियेयं सततं मातृणामपि तुष्टिदा । ४७ ।<br>तर्ज्जन्यङ्गुष्ठयोरग्रभागौ संयोज्य चाङ्गुलीः ॥<br>अन्या आकुञ्चयेत् तिस्रः सासिवल्ली प्रकीर्त्तिता ।<br>पितृणामथ साध्यानां रुद्राणां विश्वकर्म्मणः ॥<br>सर्व्वदा प्रीतिजननी असिवल्ली प्रकीर्त्तिता । ४८ ।<br>पादौ तलाभ्यां संयोज्य तदङ्गुष्ठद्वयं ततः ॥ |

ऊर्द्ध्वं संयोजयेन्नाभौ अस्योपरि तथाञ्जलिः ।
योगमुद्रा समाख्याता योगिनां तत्त्वदायिनी ॥
सर्व्वेषामपि देवानां पूजने चिन्तने तथा ।
योगमुद्रा समाख्याता तुष्टिप्रीतिकरी सदा ॥ ४९ ॥
प्राञ्जलिर्नाम मुद्रा तु उद्र्ध्वाधोभावयोजिताम्।
विभिद्य दर्शयेद्धस्तौ उद्र्ध्वाधः प्रसृतीकृतौ ॥
भेदमुद्रा समाख्याता मम विष्णोर्विधेः प्रिया । ५० ।
अङ्गुष्ठे द्वे तु निःक्षिप्य करयोरुभयोस्तले ॥
अग्रेण योजयेत् पश्चात् कनिष्ठायुगलं ततः ।
उभयोर्हस्तयोश्चान्यास्तर्ज्जन्याद्याश्च योजयेत् ॥
अग्राग्रैस्तु पृथक्कृत्य दर्शयेत्तत् कनिष्ठिकाम् ।
मुद्रा सम्मोहनं नाम कामदुर्गारमाप्रिया ॥
सर्व्वेषामपि देवानां मोहनं प्रीतिदं स्मृतम् । ५१ ।
आनम्य सव्यहस्तस्य मध्यमानामिके तथा ॥
तयोः पृष्ठे तु संयोज्य अङ्गुष्ठाग्रं ततः परम् ।
कनिष्ठां तर्ज्जनीञ्चैव अग्रेण योजयेत्ततः ॥
बाणमुद्रा समाख्याता सर्व्वदेवस्य तुष्टिदा । ५२ ।
सर्व्वाङ्गुलीस्तु सङ्कोच्य अङ्गुष्ठमथ तर्जनीम् ॥
प्रसार्य्य करयोः पश्चादङ्गुष्ठाग्रन्तु योजयेत् ।
अङ्गुष्ठाग्रेण तर्ज्जन्या अग्रेणापि च तर्ज्जनीम् ॥
यथाशक्ति प्रसार्य्यापि धनुर्मुद्रा प्रकीर्त्तिता । ५३ ।
सर्व्वाङ्गुलीनामग्राणि ब्राह्म्यतीर्थे नियोजयेत् ॥
अनामिकायाः पृष्ठे तु अङ्गुष्ठाग्रं नियोजयेत् ।

"धाता विश्वविसृष्टिमात्रनिरतो देवोऽपि गौरी-भुजा-
श्लेषानन्दविघूर्णमाननयनो दक्षाध्वरध्वंसकृत् ।
दैत्यारिः कमलाकपोलमकरीमुद्राङ्कितोरःस्थलः
शेतेऽब्धावितरेषु जन्तुषु पुनः का नाम शान्तेः कथा ॥"
इति प्रबोधचन्द्रोदयनाटके १ अङ्कः ॥

**मुद्रालिपिः**, स्त्री, (मुद्रया लिपिः ।) पञ्चधा-लिप्यन्तर्गतलिपिविशेषः । छापार अक्षर इति भाषा । यथा, --
"मुद्रालिपिःशिल्पलिपिर्लिपिर्लेखनिसम्भवा ।
गुण्डिकाघुणसम्भूता लिपयः पञ्चधा स्मृताः ।
एताभिर्लिपिभिर्व्याप्ता धरित्री शुभदा हर ! ॥"
इति वाराहीतन्त्रम् ॥
अस्याः पाठ्यत्वं धार्य्यत्वञ्च यथा, --
"लेखन्या लिखितं विप्रैर्मुद्राभिरङ्कितञ्च यत् ।
शिल्पादिनिर्म्मितं यच्च पाठ्यं धार्य्यञ्च सर्व्वदा ॥"
इति खड्गमालातन्त्रम् ॥

**मुद्रिका**, स्त्री, (मुद्रा स्वार्थे कन् + स्त्रियां टाप् । पूर्व्वाकारस्य ह्रस्वत्वम् । अत इत्वं च ।) स्वर्ण-रूप्यादिनिर्म्मितमुद्रा । मोहर टाका इत्यादि भाषा । यथा, --
"सौवर्णीं राजतीं ताम्रीमायसीं वा सुशो-भिताम् ।
सलिलेन सकृद्धौतां प्रक्षिपेत् तत्र मुद्रिकाम् ॥"
इति मिताक्षरायां व्यवहाराध्यायः ॥

**मुद्रितं**, त्रि, (मुद्रा मुद्रणं अस्य जातेति । मुद्रा इतच् ।) अप्रफुल्लम् । मोदा इति भाषा । तत्पर्य्यायः । सङ्कुचितम् २ निद्राणं ३ मीलि-तम् ४ । इति हेमचन्द्रः ॥ मुद्राङ्कितञ्च ॥ (परि-त्यक्तम् । यथा, नैषधचरिते । ५ । १२ ।
"मुद्रितान्यजनसंकथनः सन्
नारदं बलिरिपुः समवादीत् ।"
"मुद्रितं परित्यक्तम् ।" इति तट्टीका ॥)

**मुधा**, व्य, (मुह्यतीति । मुह् + बाहुलकात् का ।

ब्रह्मोवाच ।
"मुनिभिश्चरिता धर्म्मा उक्ता व्यास ! मया तव ।
यैर्विष्णुस्तुष्यते देवः सुखादिपरिभाविकः ॥
तर्पणेन च होमेन सन्ध्यया बन्दनेन च ।
प्राप्यते भगवान् विष्णुर्व्वर्म्मकामार्थमीक्षदः ॥
धर्म्मो विष्णुर्व्रतो विष्णुः पूजा विष्णुस्तु तर्पणम् ।
होमः सन्ध्या तथा ध्यानं धारणा सकलं हरिः ॥"
इति गारुडे २२६ अध्यायः ॥ * ॥
तस्याश्रमे वर्णनीयानि यथा ।
अतिथिपूजा १
हरिणविश्वासः २
हिंस्रजन्तुशान्तता ३ यज्ञ-धूमः ४ मुनिसुतः ५ द्रुमसेकः ६ वल्कलः ७
वृक्षश्च ८ । इति कविकल्पलता ॥ * ॥ मुनिविशे-षाणां ब्रह्मणोऽङ्गविशेषादुत्पत्तिर्यथा, --
"पुलस्त्यो दक्षकर्णाच्च पुलही वामकर्णतः ।
दक्षनेत्रात्तथात्रिश्च वामनेत्रात् क्रतुः स्वयम् ॥
अरणिर्नासिकारन्ध्रात् अङ्गिराश्च मुखाद्रुचिः ।
भृगुश्च वामपार्श्वाच्च दक्षो दक्षिणपार्श्वतः ॥
छायायाः कर्द्दमो जातो नाभेः पञ्चशिखस्तथा ।
वक्षसश्चैव वोढुश्च कण्ठदेशाच्च नारदः ॥
मरीचिः स्कन्धदेशाच्च आपस्तम्बस्तथा गलात् ।

शून्यं तूणीरवत् कृत्वा तेषामन्तस्तु भैरव ! ।
तूणीरमुद्रा चाख्याता सर्व्वेषां प्रीतिवर्द्धिनी ॥ ५४ ॥
मुद्रासु संस्थिता पूजा मुद्रासु परिचिन्तनम् ।
मुद्रासु संस्थिता योगा मुद्रा मोदकरास्ततः ॥
यदा यदा पूजनेषु चिन्तने ध्यानकर्म्मणि ।
यज्ञादौ स्तवने वापि हस्तकृत्यं न विद्यते ।
तदा मुद्रायुतं कुर्य्यादिष्टापूर्त्ते करद्वयम् ॥
यज्ञकृत्येषु चेच्छक्तो हस्तो मुद्रासु च क्षमः ।
तदा मुद्रां विधायैव तत्तु कृत्यं समाचरेत् ॥
मुद्रावियुक्तहस्तन्तु क्रियते कर्म्मदैविकम् ।
कृत्वा तन्निष्फलं यस्मात्तस्मान्मुद्रान्वितो भवेत् ॥
विसर्जने तु देवानां यस्य या परिकीर्त्तिता ।
मुद्रां तां पूजनादौ तु तस्य नैव प्रयोजयेत् ॥
विसृष्ट्युक्तामृते मुद्रां मुद्रायुक्तः समाचरेत् ।
पूजनादि समस्तञ्च कर्म्म वृद्ध्यै विचक्षणः ॥
ततो मुद्रा परं धाम मुद्रा पुण्यप्रदायिनी ।
देवानां मोददा मुद्रा तस्मात्तां यत्नतश्चरेत् ॥
अर्द्धयोनिर्म्महायोनिर्योनिर्ब्राह्मी च वैष्णवी ।
मुद्रा विसर्ज्जने प्रोक्ता शिवात्रिपुरयोः सदा ॥
दुर्गायाः सर्व्वरूपेषु मुद्रा एताः प्रकीर्त्तिताः ।
योनिञ्च सम्पुटञ्चैव महायोनिन्तथैव च ॥
वर्ज्जयित्वा व्यस्तभावादुक्तादन्यत्र योजयेत् ।
भवेयुस्तु त्रिपञ्चाशदन्या मुद्राः समन्ततः ॥
ता व्यस्तभावाद्वामाः स्युर्मुद्रा मोदकराः पराः ।
एवं वां कथिता मुद्राः पूजने पूज्यतुष्टिदाः ॥”
इति कालिकापुराणे ६५ अध्यायः ॥

**मुद्राङ्कितः**, त्रि, (मुद्रया अङ्कितः ।) मुद्रया चिह्नितः । छापाकरा मोहरकरा इत्यादि भाषा । यथा, --
पृषोदरादित्वात् हस्य धः ।) व्यर्थकम् । इत्यमरः । ३ । ४ । ४ । (यथा, महाभारते । १४ । ३७ । ४ ।
“मुधा ज्ञानं मुधा वृत्तं मुधा सेवा मुधा श्रमः ।
एवं यो युक्तधर्म्मः स्यात् सोऽमुत्रात्यन्तमश्नुते ॥”)

**मुनिः**, पुं, मनुते जानाति यः । (इति मन् + “मनेरुश्च ।” उणा० ४ । १२२ । इति इन् + अत उच्च ।) मौनव्रती । इत्यन्ये । इति भरतः ॥
तत्पर्य्यायः । वाचंयमः २ । इत्यमरः । २ । ७ । ४२ ।
मौनी ३ व्रती ४ ऋषिः ५ शापास्त्रः ६ सत्यवाक् ७ । इति जटाधरः ॥ (यथा, नैषधे । १ । १३३ ।
“फलेन मूलेन च वारिभूरुहां
मुनेरिवेत्थं मम यस्य वृत्तयः ॥”)
लस्य लक्षणं यथा, --
“दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥”
इति श्रीभगवद्गीता ॥ * ॥
तस्य धर्म्मो यथा, --
वशिष्ठो रसनादेशात् प्रचेता अधरोष्ठतः ॥
हंसश्च वामकुक्षेश्च दक्षकुक्षेर्यतिः स्वयम् ।
सृष्टिं विधातुञ्च विधिश्चकाराज्ञां सुतानपि ॥”
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे ८ अध्यायः ॥ * ॥
गयासुरशरीरे यज्ञार्थं ब्रह्मणो मानसात् सृष्टा मुनयो यथा, --
“ब्रह्मा सम्भृतसम्भारो मानसानृत्विजोऽसृजत् ।
अग्निशर्म्माणममृतं शौनकं जाजलिं मृदुम् ॥
कुमुखिं वेदकौण्डिन्यं हारीतं कश्यपं कृपम् ।
गर्गं कौशिकवाशिष्ठौ मुनिं भार्गवमव्ययम् ॥
वृद्धं पाराशरं कण्वं माण्डव्यं श्रुतिकेवलम् ।
श्वेतं सुतालं दमनं सुहोत्रं कक्षमेव च ॥
नौगाक्षिञ्च महाबाहुं जेगीषव्यं तथैव च ।
दधिपञ्चमुखं विप्र ! ऋषभं कर्कमेव च ॥
कामायनं गोभिलञ्च मुनिमुग्रं महाव्रतम् ।
जटामालिनमव्यग्रं चाटुहासञ्च दारुणम् ॥
आत्रेयञ्चाप्यङ्गिरसमौपमन्युं महाव्रतम् ॥
गोकर्णञ्च गुहावासं शिखण्डिनमुमाव्रतम् ॥
सुपालकं गौतमञ्च तथा वेदशिरो व्रतम् ।
एतानन्यांश्च विप्रेन्द्रान् ब्रह्मा लोकपितामहः ।
परिकल्प्याकरोद्यागं गयासुरशरीरके ॥”

| | | |
|---|---|---|
| | | इति वायुपुराणे गयामाहात्म्यम् ॥ * ॥<br>मुनिविशेषनाम्नां व्युत्पत्तिर्यथा, --<br>“कतिकल्पान्तरेऽतीते स्रष्टुः सृष्टिविधौ पुनः ।<br>मरीचिमिश्रैर्म्मुनिभिः सार्द्धं कण्ठाद्बभूव सः ॥<br>विधेर्नरदनाम्नश्च कण्ठदेशाद्बभूव सः ।<br>नारदश्चेति विख्यातो मुनीन्द्रस्तेन हेतुना ॥<br>यः पुत्रश्चेतसो धातुर्ब्बभूव मुनिपुङ्गवः ।<br>तेन प्रचेता इति तन्नाम चक्रे पितामहः ॥<br>बभूव धातुर्यः पुत्रः सहसा दक्षपार्श्वतः ।<br>सर्व्वकर्म्मणि दक्षश्च तेन दक्षः प्रकीर्त्तितः ॥ |

वेदेषु कर्द्दमः शब्दश्छायायां वर्त्तते स्फुटः ।
बभूव कर्द्दमाद्बालः कर्द्दमस्तेन कीर्त्तितः ॥
तेजोभेदे मरीचिश्च वेदेषु वर्त्तते स्फुटम् ।
जातः सद्योऽतितेजस्वी मरीचिस्तेन
कीर्त्तितः ॥
क्रतुसंघश्च बालेन कृतो जन्मान्तरेऽधुना ।
ब्रह्मपुत्त्रोऽपि तन्नाम्ना क्रतुरित्यभिधीयते ॥
प्रधानाङ्गं मुखं धातुस्ततो जातश्च बालकः ।
इरस्तेजस्विवचनोऽङ्गिरास्तेन प्रकीर्त्तितः ॥
अतितेजस्विनि भृगुर्व्वर्त्तते नाम्नि शौनक ! ।
जातः सद्योऽतितेजस्वी भृगुस्तेन प्रकीर्त्तितः
॥
वशीभूतश्च शिष्टश्च जातः सद्यो हि बालकः
।
अतिप्रियश्च धातुश्च वशिष्ठस्तेन कीर्त्तितः
॥
बालोऽप्यरुणवर्णश्च जातः सद्यो हि तेजसा
।
प्रज्वलन् पूर्ब्बतपसा चारुणस्तेन कीर्त्तितः
॥
हंस आत्मा वशो यस्य योगेन योगिनो ध्रुवम्
।
बालः परमयोगीन्द्रस्तेन हंसः प्रकीर्त्तितः ॥
सन्ततं यस्य यत्नञ्च तपःसु बालकस्य च ।
प्रकीर्त्तितो यतिस्तेन संयतः सर्व्वकर्म्मसु ॥
पुलस्तपःसु वेदेषु वर्त्तते ह स्फुटेऽपि च ।
स्फुटं तपःस्वरूपश्च पुलहस्तेन कीर्त्तितः ॥
पुलस्तपःसमूहश्च यस्यास्ति पूर्ब्बजन्मनाम्
।
तपःसंघः समूहश्च पुलस्त्यस्तेन बालकः ॥
त्रिगुणायां प्रकृत्यां त्रिर्विष्णावश्च प्रवर्त्तते ।
तयोर्भक्तिः समा यस्य तेन बालोऽत्रिरुच्यते
॥
जटाश्चाग्निशिखारूपाः पञ्च सन्ति च
मस्तके ।
तपस्तेजोभवा यस्य स च पञ्चशिखः स्मृतः
॥
अपान्तरतमे देशे तपस्तेपेऽन्यजन्मनि ।
अपान्तरतमा नाम शिशोस्तेन प्रकीर्त्तितम् ॥

उष्णात् परे पावनकः
पावनादन्धकारकः ।
अन्धकारकद्देशात्तु मुनिदेशस्तथापरः
॥"
(द्युतिमतः पुत्त्राणामन्यतमः । यथा,
मार्कण्डेये ।
५३ । २२ ।
"तथा द्युतिमतः सप्तपुत्त्रास्तांश्च
निबोध मे ।
मुनिश्च दुन्दुभिश्चैव सप्तमः
परिकीर्त्तितः ॥"
कुरुपुत्त्रभेदः । यथा, महाभारते । १ ।
९४ । ४९ ॥
"अविक्षितमभिष्वस्तं तथा चैत्ररथं
मुनिम् ॥")

**मुनिखर्ज्जूरिका**, स्त्री, (मुनिप्रिया खर्ज्जूरिका इति
मध्यपदलोपी समासः ।)
खर्ज्जूरीप्रभेदः । यथा,
"मुनिखर्ज्जूरिका त्वन्या राजेष्टा
ऋतुसंमिता ॥"
इति राजनिर्घण्टः ॥

**मुनिच्छदः**, पुं, (मुनयः अत्र्यादयः सप्त तत्-
संख्यकाः छदाः पत्राण्यस्य ।)
सप्तच्छदवृक्षः ।
इति राजनिर्घण्टः ॥ (स्त्री । मेथिका ।
यथा,
भावप्रकाशे पूर्ब्बखण्डे प्रथमे भागे ।
'मेथिका मेथिनी मेथी दीपनी
बहुपुत्त्रिका ।'
इत्यादि ।
'कुञ्चिका बहुपर्णी च पीतबीजा
मुनिच्छदा ।'
इत्यन्तम् ॥)

**मुनितरुः**, पुं, (मुनेरगस्त्यस्य प्रियः तरुः । इति
मध्यपदलोपी समासः ।) वकवृक्षः ।
इति
रत्नमाला ॥

"त्वं योगयुक्तो मुनिपुत्त्रकस्त्वं
अदृश्यतामेषि शिखोद्गमेन ।
संदृश्यसे प्रावृषि निर्गतायाम्
त्वं खञ्जनाश्चर्य्यमयो नमस्ते ॥")

**मुनिपुष्पं**, क्ली, (मुनिद्रुम इति । "ठाजा दावूद्र्ध्वं
द्वितीयादचः ।" ५ । ३ । ८३ । इत्यत्र
"विनापि
प्रत्ययेन पूर्ब्बोत्तरपदयोर्व्विभाषालोपो
वक्तव्यः ।"
इति काशिकोक्तेः द्रुम इत्यस्य लोपे मुनिः
तस्य
पुष्पम् ।) वकपुष्पम् ॥ (यथा, तिथितत्त्वे ।
"विहाय सर्व्वपुष्पाणि मुनिपुष्पेण केशवम् ।
कार्त्तिके योऽर्च्चयेद्भक्त्या वाजिमेधफलं
लभेत् ॥"
वकवृक्षे, पुं, । तत्पर्य्यायो यथा, --
"अथागस्त्यो वङ्गसेनो मुनिपुष्पो मुनिद्रुमः
।"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**मुनिपुष्पकं**, क्ली, (मुनिपुष्प + संज्ञायां कन् ।) वक-
पुष्पम् । यथा, योगिनीतन्त्रे ।
"विल्वपत्रञ्च माध्यञ्च तमालामलकीदलम् ।
कह्लारं तुलसीञ्चैव पद्मञ्च मुनिपुष्पकम् ।
एतत् पर्य्युषितं न स्यात् यच्चान्यत्
कलिका-
त्मकम् ॥"
इत्येकादशीतत्त्वम् ॥

**मुनिपूगः**, पुं, (मुनिप्रियः पूगः ।) गुवाकविशेषः ।
तत्पर्य्यायः । रामपूगः २ कामीनः ३ सुरे-
वटः ४ । इति त्रिकाण्डशेषः ॥

**मुनिभेषजं**, क्ली, (मुनीनां भेषजम् ।) आगस्त्यः ।
हरीतकी । लङ्घनम् । इति मेदिनी । जे, ३६
॥

**मुनिसुव्रतः**, पुं, (मुनिषु सुव्रतः ।) वृत्तार्हन् । स च
बुद्धविशेषः । इति हेमचन्द्रः । १ । ५१ ॥

स्वयन्तपः समाप्नोति वाहयेत् प्रापयेत् परान् ।
ऊढुः समर्थस्तपसि वोढुस्तेन प्रकीर्त्तितः ॥
तपसस्तेजसा बालो दीप्तिमान् सूनृतो मुने ! ।
तपःसु रोचते चित्तं रुचिस्तेन प्रकीर्त्तितः ॥”
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे २२ अध्यायः ॥
वङ्गसेनतरुः । जिनः । इति मेदिनी । ने, १५ ॥
प्रियालवृक्षः । पलाशवृक्षः । इति हेमचन्द्रः । १ । ७६ ॥ दमनकवृक्षः । इति राजनिर्घण्टः ॥
(स्त्री, दक्षकन्या । सा च कश्यपपत्नीनामन्य-
तमा । यथा, महाभारते । १ । ६५ । ११-१२ ।
“मरीचेः कश्यपः पुत्त्रः कश्यपात्तु इमाः प्रजाः ।
प्रजज्ञिरे महाभागा दक्षकन्यास्त्रयोदश ॥
अदितिर्दितिर्दनुः काला दनायुः सिंहिका तथा ।
क्रोधा प्राधा च विश्वा च विनता कपिला मुनिः ॥”
अष्टवस्वन्तर्गतस्य आपनामकस्य वसोः पुत्त्रे,
पुं । यथा, हरिवंशे भविष्यपर्व्वणि । ३ । ४० ।
“आपस्य पुत्त्रो वैतण्ड्यः श्रमः श्रान्तो मुनि-
स्तथा ।”
क्रौञ्चद्वीपस्य देशविशेषः । यथा, मत्स्यपुराणे ।
१२१ । ८३-८५ ।
“क्रौञ्चस्य कुशलो देशो वामनस्य मनोऽनुगः ।
मनोऽनुगात् परे चोष्णस्तृतीयोऽपि स उच्यते ॥

**मुनिद्रुमः**, पुं, (मुनेरगस्त्यस्य प्रियः द्रुमः । इति
मध्यपदलोपी समासः ।) श्योनाकवृक्षः । इति
रत्नमाला ॥ श्योनाकप्रभेदः । वकवृक्षः । इति
राजनिर्घण्टः ॥ (यथा, नैषधचरिते । १ । ९६ ।
“मुनिद्रुमः कोरकितः शितिद्युति-
र्वनेऽमुनाऽमन्यत सिंहिकामुतः ॥”
“मुनिद्रुमः वकवृक्षः ।” इति तट्टीका ॥ अस्य
पर्य्यायो यथा, --
“अथागस्त्यो वङ्गसेनो मुनिपुष्पो मुनिद्रुमः ।”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
“श्योनाको भूतपुष्पश्च पूतिवृक्षो मुनिद्रुमः ।
दीर्घवृन्तश्च कट्वङ्गो भल्लुकष्टुण्टकोऽरुणुः ॥”
इति वैद्यकरत्नमालायाञ्च ॥)

**मुनिनिर्म्मितः**, पुं, (मुनिनां निर्म्मितः ।) डिण्डिशः ।
यथा, भावप्रकाशे ।
“डिण्डिशो रोमशफलो मुनिनिर्म्मित इत्यपि ।
डिण्डिशो रुचिकृत् भेदी पित्तश्लेष्मापहः स्मृतः ।
सुशीतो वातलो रूक्षो मूत्रलश्चाश्मरीहरः ॥”

**मुनिपित्तलं**, क्ली, (मुनीनां पित्तलमिव ।) ताम्रम् ।
इति त्रिकाण्डशेषः ॥

**मुनिपुङ्गवः**, पुं, (मुनिः पुङ्गव इव ।) मुनिश्रेष्ठः ।
इत्यमरटीका ॥ (यथा, रामायणे । १ । १ । १ ।
“तपःस्वाध्यायनिरतं तपस्वी वाग्विदांवरम् ।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् ॥”)

**मुनिस्थानं**, क्ली, (मुनीनां स्थानम् ।) आश्रमः ।
इति हेमचन्द्रः । ४ । ६७ ॥

**मुनीन्द्रः**, पुं, (मुनीनां मननशीलानां योगिनामिन्द्रः
श्रेष्ठः ।) बुद्धः । इत्यमरः । १ । १ । १४ ॥ ऋषि-
श्रेष्ठश्च ॥ (यथा, कथासरित्सागरे । ७२ । ३०९ ।
“पतन्तमेव तस्माच्च पाणिभ्यां स तमग्रहीत् ।
मुनीन्द्रः प्रकटीभूय समाश्वास्य जगाद च ॥”
दानवभेदः । यथा, हरिवंशे । २५५ । ५ ।
“वृषपर्व्वा विरूपाक्षो मुनीन्द्रश्चन्द्रलोचनः ।”)

**मुन्च** उ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।) पञ्चमस्वरी । ओष्ठ्यवर्ग-
शेषादिः । नोपधः । उ मुञ्चित्वा मुक्त्वा । इति
दुर्गादासः ॥

**मुमुक्षुः**, पुं, (मोक्तुमिच्छतीति । मुच् + सन् + उः ।)
मुक्तिमिच्छुः ॥ (यथा, श्रीमद्भगवद्गीतायाम् ।
४ । १५ ।
“एवं ज्ञात्वा कृतं कर्म्म पूर्ब्बैरपि मुमुक्षुभिः ।
कुरु कर्म्मैव तस्मात्त्वं पूर्ब्बैः पूर्ब्बतरं कृतम् ॥”)
तत्पर्य्यायः । श्रमणः २ यतिः ३ वाचंयमः ४
व्रती ५ साधुः ६ अनगारः ७ ऋषि, ८ मुनिः ९
निर्ग्रन्थः १० भिक्षुः ११ । इति हेमचन्द्रः
१ । ७५ ॥ अथ मुमुक्षुकृत्यम् । मनुः ।
“इह चामुत्र वा काम्यं प्रवृत्तं कर्म्म कीर्त्त्यते ।
निष्कामं ज्ञानपूर्ब्बन्तु निवृत्तमुपदिश्यते ॥

| | **मुनिपुत्त्रः**, पुं, (मुनीनां पुत्त्र इव । मुनिप्रियत्वादस्य तथात्वम् ।) दमनकवृक्षः । इति भावप्रकाशः ॥ ऋषिसुतश्च ॥ **मुनिपुत्त्रकः**, पुं, खञ्जनः । इति त्रिकाण्डशेषः ॥ (यथा, तिथितत्त्वे कुण्डविधिप्रकरणे । | |
|---|---|---|

प्रवृत्तं कर्म्म संसेव्य देवानामेति
सार्ष्टिताम् ।
निवृत्तं मेवमानस्तु भूतान्यत्येति पञ्च वै
॥"
कामनापूर्ब्बकं कर्म्म
शरीरप्रवृत्तिहेतुत्वात्
प्रवृत्त तदेव कर्म्म कामनारहितं
पुनर्ब्रह्म-
ज्ञानाभ्यासपूर्ब्बकं
संसारनिवृत्तिहेतुत्वात् निवृत्त-
मुच्यते । सार्ष्टितां समानगतितां
ऋषेर्गत्यर्थत्वात्
पञ्चभूतान्यत्येति अतिक्रामति मोक्षं
प्राप्नोती-
त्यर्थः । विष्णुपुराणे च । ६ । ७ । ३८
। विशिष्टफलदा
काम्या निष्कामाणाञ्च मुक्तिदा ।
भगवद्गीतापि ।
"युक्तः कर्म्मफलं त्यक्त्वा
शान्तिमाप्नोति नैष्ठि-
कीम् ।
अयुक्तः कामकारेण फले सक्तो
निबध्यते ॥"
युक्तः ईश्वराय कर्म्माणि न फलाय
इत्येवं
समाहितः । फलं त्यक्त्वा कर्म्माणि
कुर्व्वन्निति
शेषः । शान्तिं मोक्षाख्यां नैष्ठिकीं
निष्ठायां
भवाम् । सत्त्वशुद्धिः ज्ञानप्राप्तिः
सर्व्वकर्म्म-
संन्यासः ज्ञाननिष्ठाक्रमेणेति
वाक्यशेषः ।
अयुक्तस्तद्बहिर्म्मुखः । कामकारेण
कामप्रेरित-
तया कामतः प्रवृत्तेरिति यावत् । फले
सक्तः
सन् फलायेदं कर्म्म करोमीत्येवं फले
सक्तो

एवं व्यवसितं केचिदविज्ञाय
कुबुद्ध्वयः ।
फलश्रुतिं कुसुमितां न वेदज्ञा वदन्ति
हि ॥"
इयं फलश्रुतिर्न श्रेयःपरमपुरुषार्थपरा
न भवति
किन्तु बहिर्मुखानां नृणां मोक्षविवक्षया
अवा-
न्तरकर्म्मफलैः कर्म्मसु
रुच्युत्पादनमात्रं यथा,
भैषज्ये औषधे रुच्युत्पादनम् । यथा, -
-
"पिब निम्बं प्रदास्यामि खलु ते
खण्डलड्डुकान् ।
पित्रैवमुक्तः पिबति न फलं तावदेव तु
॥"
तत्रागदपानस्य न खलु खण्डादिलाभ
एव
प्रयोजनं किन्त्वारोग्यम् । तथा
वेदोऽप्यवान्तर-
फलैः प्रलोभयन् मोक्षायैव कर्म्माणि
विधत्ते ।
ननु कर्म्मकाण्डे मोक्षस्य नामापि न
श्रूयते कथ-
मेवं व्याख्यायते यथाश्रुतस्यैव घटनात्
इत्याह
उत्पत्त्येति द्वाभ्याम् । उत्पत्त्या
स्वभावत एव
कामेषु पश्वादिषु प्राणेषु
आयुरिन्द्रियबल-
वीर्य्यादिषु स्वजनेषु पुत्रदारादिषु
अनर्थहेतुषु
परिपाकतो दुःखहेतुषु अतस्तान्
स्वार्थं परम-
सुखमविदुषः अजानतः अतो न तान्
प्रह्वी-
भूतान् बुधो वेदो यद्बोधयति तदेव श्रेयः
इति
विश्वसितान् इत्यर्थः । तान्
एवम्भूतान् वृजिना-

इदं दानं ब्राह्मणसम्प्रदानकमेव विष्णुप्रीतिमु-
द्दिश्य एवं सर्व्वत्र दाने । विष्णुप्रीतेः सामान्यतः
श्रुतत्वात् । अथ विष्णुप्रीतौ देवताधिकरणन्याय-
विरोध इति चेन्न स्वर्गवदधिकारिविशेषणत्वेन
तत्सत्त्वप्रसाधनात् इत्याहुः । ब्राह्मणसम्प्रदान-
कत्वे किं मानमिति चेत् वामनपुराणे तत्तन्-
मासभेदेन तत्तद्दानमभिधाय ।
"विष्णुप्रीत्यर्थमेतानि देयानि ब्राह्मणेष्वथ ।
देयानि विप्रमुख्येभ्यो मधुसूदनतुष्टये ॥"
इत्यभिधाय दासीदासमित्यादिवचनद्वयाभि
धानात् । तथा च विष्णुधर्म्मोत्तराग्निपुराणयोः ।
"यत्र यत्र भवेत् प्रीतिर्विषयेभ्यो महामुने ! ।
तत्तदच्युतमुद्दिश्य विप्रेभ्यः प्रतिपादयेत् ॥"
विष्णुधर्म्मोत्तरतृतीयकाण्डे तु विष्णुसंप्रदानक-
मेव दानं यथा, --
'विष्णोः शङ्खप्रदानेन वारुणं लोकमाप्नुयात् ।'
इत्यादिना ।
"क्षीरपल्लवसंयुक्तान् कलसान् सुविभूषितान् ।
दत्त्वा वै देवदेवाय वाजिमेधफलं लभेत् ॥"
इत्यन्तेन तत्तत् फलं तत्तद्दानमभिधायोक्तम् ।
"अकामः सात्विको लोको यत्किञ्चिद्विनिवे-
दयेत् ।
तेनैव स्थानमाप्नोति यत्र गत्वा न शोचति ॥
धर्म्मबाणिजिका मूढाः फलकामा नराधमाः ।
अर्च्चयन्ति जगन्नाथं ते कामानाप्नुवन्त्युत ॥
अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ॥"
तथा ।
"पद्भ्यां प्रतीच्छते देवः सकामेन निवेदितम् ।
मूद्ध्‌र्ना प्रतीच्छते दत्तमकामेन द्विजोत्तमाः ॥"
उक्तवामनपुराणवचने सार्व्वकालिकमित्यन्तेन
मलमासादावपि विष्णुप्रीत्यर्थं देयमिति । इति
मलमासतत्त्वम् ॥
(तत्र मुमुक्षतामुदयनानि व्याख्यास्यामः । तत्र
लोकदोषदर्शिनो मुमुक्षोरादित एवाचार्य्या-
भिगमनं तस्योपदेशानुष्ठानम् । अग्नेरेवोप-
चर्य्या धर्म्मशास्त्रानुगमनं तदर्थावबोधस्तेनाव-
ष्टम्भस्तत्र यथोक्ताः क्रियाः सतामुपासनमसतां
परिवर्ज्जनं न सङ्गतिर्दुर्ज्जनेन सत्यं
सर्व्वभूतहित-

नितरां बन्धं प्राप्नोति । तथा च
अर्ज्जुनं प्रति
भगवद्वाक्यम् ।
“मयि सर्व्वाणि कर्म्माणि
संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्म्ममो भूत्वा युध्यस्व
विगतज्वरः ॥”
संन्यस्य निःक्षिप्य समर्प्य इति यावत् ।
अध्यात्म-
चेतसा विवेकबुद्ध्या ईश्वराय भृत्यवत्
करोमि
इत्यनया बुद्ध्या
निराशीस्त्यक्तकामसङ्कल्पः ।
अतएव निर्म्ममः ममतारहितः ।
विगतज्वरः
विगतसन्तापः । व्यक्तमाह स एव ।
“यत् करोषि यदश्नासि यज्जुहोषि
ददासि यत् ।
यत् तपस्यसि कौन्तेय ! तत् कुरुष्व
मदर्पणम् ॥”
विष्णुपुराणम् ।
“कर्म्माण्यसङ्कल्पिततत्फलानि
संन्यस्य विष्णौ परमात्मरूपे ।
अवाप्य तां कर्म्ममहीमनन्ते
तस्मिन् लयं ये त्वमलाः प्रयान्ति ॥”
कर्म्ममहीं भारतवर्षरूपाम् ।
एकादशस्कन्धे ।
“वेदोक्तमेव कुर्व्वाणो
निःसङ्गोऽर्पितुमीश्वरे ।
नैष्कर्म्यां लभते सिद्धिं रोचनार्था
फलश्रुतिः ॥”
वेदोक्तमेव कुर्व्वाणो न तु निषिद्धम् ।
ननु कर्म्मणि-
क्रियमाणे तस्मिन्नासक्तितस्तत्फलं
स्यादेव न तु
नैष्कर्म्म्यरूपा फलसिद्धिरत एवाह
निःसङ्गो-
ऽनभिनिवेशवान् ईश्वरेऽर्पितुं न तु
फलोद्देशेन ।
अथ फलस्य श्रुतत्वात् कर्म्मणि कृते
फलं भवत्येव
ध्वनि कामवर्त्मनि देवादियोनौ
भ्राम्यतः ततः
पुनस्तमोभूतवृक्षादियोनिं विशत इति ।
पशु-
काम इति च सुखपुत्त्रादिकाम इति च
कथं
पुनस्तेष्वेव कामेषु अयं बुधो वेदो
युञ्ज्यात् प्रव-
र्त्तयेत् । तथा सत्यनाप्तः स्यात् इति
भावः ।
कथं तर्हि कर्म्ममीमांसकाः फलपरतां
वदन्ति
तत्राह । एवमिति व्यवसितं
वेदस्याभिप्रायं
अविज्ञाय
कुसुमितामवान्तरफलरोचनयारम-
णीयां परमफलश्रुतिं वदन्ति कुतस्ते
कुबुद्धय-
स्तत्राह हि यस्मात् वेदज्ञा व्यासादयः
न तथा
वदन्ति इति । अतएव निष्कामकर्म्मण
आत्म-
ज्ञानार्थतोक्ता यथा, --
“अयमेव क्रियायोगो ज्ञानयोगस्य
साधकः ।
कर्म्मयोगं विना ज्ञानं कस्यचिन्नेह
दृश्यते ॥”
सोऽपि दुरितक्षयद्वारा न साक्षात् ।
तथा च ।
“ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य
कर्म्मणः ॥”
तथा श्रुतिः ।
“तमेवं वेदार्थवचनेन ब्राह्मणा
विविदिषन्ति
ब्रह्मचर्य्येण तपसा श्रद्धया
दानेनयज्ञेनानशनेन
चेति ।”
तं आत्मतत्त्वसाक्षात्कारं अतएव
यज्ञादीनां
ज्ञानशेषताञ्चावधार्य्य निष्कामेषु
कर्म्मसु प्रव-
मपरुषमनतिकाले परीक्ष्य वचनं सर्व्वप्राणिषु
आत्मनीवावेक्षा सर्व्वासामस्मरणमसङ्कल्पन-
मप्रार्थना अनभिभाषणञ्च स्त्रीणां सर्व्वपरिग्रह-
त्यागः कौपीनं प्रच्छादनार्थं धातुरागनिवसनं
कन्थासीवनहेतोः सूची पिप्पलकं शौचाधान-
हेतोः जलकुण्डिका दण्डधारणं भक्ष्याचर्य्यार्थ-
पात्रं प्राणधारणार्थमेककालमग्राम्यो यथो-
पपन्न एवाभ्यवहारः । श्रमापनयनार्थं शीर्ण-
शुष्कपर्णतृणास्तरणोपधानं ध्यानहेतोः काय-
निबन्धनं वनेष्वनिकेतवासः तन्द्रानिद्रालस्यादि-
कर्म्मवर्ज्जनं इन्द्रियार्थेष्वनुरागोपतापनिग्रहः
सुप्तस्थितगतप्रेक्षिताहारविहारप्रत्यङ्गचेष्टादि-
केष्वारम्भेषु स्मृतिपूर्ब्बिका प्रवृत्तिः सत्कार-
स्तुतिगर्हावमानक्षमत्वं क्षुत्पिपासायासश्रम-

| | | |
|---|---|---|
| इत्याह रोचनार्थेति कर्म्मणि रुच्युत्पादनार्था ।<br>अतएव तत्रैव ।<br>“फलश्रुतिरियं नृणां न श्रेयो रोचनं परम् ।<br>श्रेयोविवक्षया प्रोक्ता यथा भैषज्यरोचनम् ॥<br>उत्पत्त्यैव हि कामेषु प्राणेषु स्वजनेषु च ।<br>आसक्तमनसो मर्त्त्या आत्मनोऽनर्थहेतुषु ॥<br>न तानविदुषः स्वार्थं भ्राम्यतो वृजिनाध्वनि ।<br>कथं युञ्ज्यात् पुनस्तेषु तांस्तमो विशतो बुधः ॥ | र्त्तते । पण्डितेनापि मूर्खः काम्ये कर्म्मणि न प्रवर्त्तयितव्य इत्याह षष्ठस्कन्धे ।<br>“स्वयं निःश्रेयसं विद्वान्नवक्त्यज्ञाय कर्म्म हि ।<br>न राति रोगिणेऽपथ्यं वाञ्छतेऽपि भिषक्-<br>तमः ॥”<br>राति ददाति इति समयप्रदीपे श्रीदत्तः ॥<br>“दासीदासमलङ्कारमन्नं षड्रससम्भवम् ।<br>पुरुषोत्तमतुष्ट्यर्थं प्रदेयं सार्व्वकालिकम् ॥<br>यद्यदिष्टतमं लोके यच्चाप्यस्ति गृहे शुचि ।<br>तत्तद्धि देयं प्रीत्यर्थं देवदेवस्य चक्रिणः ॥” | |

शीतोष्णवातवर्षासुखदुःखसंस्पर्शसहत्वं शोक-
दैन्यद्वेषमदमानलोभरागेर्ष्याभयक्रोधादिभिरस-
ञ्चलनं अहङ्कारादिषूपसर्गसंज्ञा लोकपुरुषयोः
स्वर्गादिसामान्यावेक्षणं कार्य्यकालात्ययभयं
योगारम्भे सततमनिर्व्वेदः सत्त्वोत्साहोऽपवर्गाय
धीधृतिस्मृतिबलाधानं नियमनमिन्द्रियाणां
चेतसि चेतस आत्मन्यात्मनश्च धातुभेदेन शरी-
रावयवसंख्यानं अभीक्ष्णं सर्व्वं कारणवद्दुःख-
मस्वमनित्यमित्यभ्युपगमः । सर्व्वप्रवृत्तिषु दुःख-
संज्ञा सर्व्वसंन्यासे सुखमित्यभिनिवेशः एष-
मार्गोऽपवर्गाय अतोऽन्यथा बध्यते इत्युदयनानि
व्याख्यातानि ॥ इति चरके शारीरस्थाने पञ्चमे-
ऽध्याये ॥)

**मुमुचानः**, पुं, (मुञ्चति जलं इति । मुच् + "मुचि
युधिभ्यां सन्वच्च ।" उणा० । २ । ९१ । इति
आनच् । कित् सन्वच्च । मेघः । इति संक्षिप्त-
सारोणादिवृत्तिः ॥ (मुक्तः । यथा, सन्ध्यामन्त्रे ।
"द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव ।"
"स्निन्नो घर्म्माक्तो जनो मुमुचानो मुक्तो-
भवति ।" इति तत्र गुणविष्णुटीका ॥)

**मुमूर्षुः** त्रि, (मर्त्तुमिच्छुः । मृ + सन् + उः ।)
आसन्नमृत्युः । (यथा श्रीमद्भागवते । ७ । ८ । ११
।
"व्यक्तं त्वं मर्त्तुकामोऽसि योऽतिमात्रं विकत्थसे ।
मुमूर्षूणां हि मन्दात्मन् ! ननु स्युर्विक्लवा
गिरः ॥")
अथ मुमूर्षुकृत्यानि । हारीतः ।
'शूद्रान्नेन तु भुक्तेन उदरस्थेन यो मृतः ।
स वै खरत्वमुष्ट्रत्वं शूद्रत्वञ्चाधिगच्छति ॥'
शूद्रान्नं शूद्रस्वामिकान्नम् । तद्दत्तमपि भोजन-
काले तद्गृहावस्थितं यत् तदपि शूद्रान्नम् ।
तदाहाङ्गिराः ।
'शूद्रवेश्मनि विप्रेण क्षीरं वा यदि वा दधि ।
निवृत्तेन न भोक्तव्यं शूद्रान्नं तदपि स्मृतम् ॥'
अपिशब्दात् साक्षात् तद्दत्तघृततण्डुलादि न तु
तद्दत्तकपर्द्दकादिना क्रीतमपि । स्वगृहागते पुन-
रङ्गिराः ।
'यथायतस्ततो ह्यापः शुद्धिं यान्ति नदीं गताः ।
पूजारत्नाकरे ।
'शालग्रामशिला यत्र तत्र
सन्निहितो हरिः ।
तत्सन्निधौ त्यजेत् प्राणान् याति
विष्णोः परं
पदम् ॥'
लिङ्गपुराणे ।
'शालग्रामसमीपे तु क्रोशमात्रं
समन्ततः ।
कीकटेऽपि मृतो याति वैकुण्ठभवनं
नरः ॥'
कीकटो मगधः ॥ * ॥ वैष्णवामृते
व्यासः ।
'तुलसीकानने जन्तोर्यदि
मृत्युर्भवेत् क्वचित् ।
स निर्भर्त्स्य यमं पापी लीलयैव
हरिं विशेत् ॥
प्रयाणकाले यस्यास्ये दीयते
तुलसीदलम् ।
निर्व्वाणं याति पक्षीन्द्र !
पापकोटियुतोऽपि सः ॥'
कूर्म्मपुराणम् ।
'गङ्गायाञ्च जले मोक्षो वाराणस्यां
जले स्थले ।
जले स्थले चान्तरीक्षे
गङ्गासागरसङ्गमे ॥'
स्कान्दे ।
'गङ्गायां त्यजतः प्राणान् कथयामि
वरानने ! ।
कर्णे तत् परमं ब्रह्म ददामि मामकं
पदम् ॥'
तथा ।
'तीराद्गव्यूतिमात्रन्तु परितः
क्षेत्रमुच्यते ।
अत्र दानं जपो होमो गङ्गायां नात्र
संशयः ॥
अत्रस्थास्त्रिदिवं यान्ति ये
मृतास्तेऽपुनर्भवाः ॥'
'सार्थः प्रवसतो मित्रं भार्य्या मित्रं गृहे
सतः ।
आतुरस्य भिषङ्मित्रं दानं मित्रं मरिष्यतः
॥'
वराहपुराणे ।
"व्यतीपातोऽथ संक्रान्तिस्तथैव ग्रहणं
रवेः ।
पुण्यकालास्तदा सर्व्वे यदा
मृत्युरुपस्थितः ॥
गोभूतिलहिरण्यादि दत्तमक्षयतामियात्
॥"
निरवकाशत्वादत्र मलमासादिदोषो नास्ति
सूतकमपि न । तथा च शुद्धिरत्नाकरे
दक्षः ।
"सुस्थकाले त्विदं सर्व्वं सूतकं
परिकीर्त्तितम् ।
आपद्गतस्य सर्व्वस्य सूतकेऽपि न
सूतकम् ॥"
इति शुद्धितत्त्वम् ॥

**मुर**, श वेष्टने । इति कविकल्पद्रुमः ॥ (तुदा०-
पर०-सक०-सेट् ।) पवर्गशेषादिः । श
मुरति
वृक्षं लता । मोरिता । इति दुर्गादासः ॥

**मुरं** क्ली, (मूर्य्यते इति । मुर् + अन्यत्रापीति
भावे कः ।) वेष्टनम् । इत्यमरटीकायां
मथुरेशः ॥

**मुरः**, पुं, (मुरति वेष्टतेऽसौ । मुर् + इगुपधत्वात्
कर्त्तरि कः ) दैत्यविशेषः । इति मेदिनी ।
रे,
७७ ॥ यं हत्वा विष्णुर्मुरारिनामाभूत् ॥
(यथा,
श्रीमद्भागवते । ३ । ३ । ११ ।
"शम्बरं द्विविदं बाणं मुरं बल्कलमेव च ।
अन्यांश्च दन्तवक्रादीनवधीत् कांश्च
घातयत् ॥")

**मुरगण्डः**, पुं, (मुरं वेष्टनमिव गण्डति रजति

शूद्राद्विप्रगृहेष्वन्नं प्रविष्टन्तु सदा शुचि ॥’
प्रविष्टं सत्त्वापादकप्रतिग्रहादिनाइति शेषः ।
अतएव पराशरः ।
‘तावद्भवति शूद्रान्नं यावन्न स्पृशति द्बिजः ।
द्बिजातिकरसंस्पृष्टं सर्व्वं तद्धविरुच्यते ॥’
स्पृशति प्रतिगृह्णाति इति कल्पतरुः ॥ तच्च
संप्रोक्ष्य ग्राह्यमाह विष्णुपुराणम् ।
‘संप्रोक्षयित्वा गृह्णीयाच्छूद्रान्नं गृहमागतम् ।’
तच्च पात्रान्तरे ग्राह्यमाह अङ्गिराः ।
‘स्वपात्रे यत्तु विन्यस्तं शूद्रो यच्छति नित्यशः ।
पात्रान्तरगतं ग्राह्यं दुग्धं स्वगृहमागतम् ॥’
एतेन स्वगृहमागतस्यैव शुद्धत्वम् ।
तद्गृहगतस्य शूद्रान्नदोषभागित्वं प्रतीयते ।
ततश्चैतादृगपि मुमूर्षुणा सर्व्वथा शूद्रान्नं न
भोक्तव्यम् ॥ * ॥

गव्यूतिः क्रोशयुगम् ।
तीर्थचिन्तामणौ ब्रह्म-
पुराणम् ।
‘अत्र दूरे समीपे च सदृशं
योजनद्बयम् ।
गङ्गायां मरणेनेह नात्र कार्य्या
विचारणा ॥’ * ॥
एवं गङ्गादिमरणेन
प्राप्तब्रह्मलोकस्याप्यौर्द्ध-
देहिकी क्रिया तदधिकारिणा
कर्त्तव्या नित्य-
त्वात् । तथा च श्रीमद्भागवते ।
‘कृष्ण एवं भगवति
मनोवाक्दृष्टिवृत्तिभिः ।
आत्मन्यात्मानमावेश्य
सोऽन्तःश्वासमुपारमत् ॥
संपद्यमानमाज्ञाय भीष्मं ब्रह्मणि
निष्कले ।
सर्व्वे बभूवुस्ते तूष्णीं वयांसीव
दिनात्यये ॥
तस्य निर्हरणादीनि संपरेतस्य
भार्गव ! ।
युधिष्ठिरः कारयित्वा मुहूर्त्तं
दुःखितोऽभवत् ॥’
कृष्णे आत्मनि परमात्मनि
आत्मानं स्वीयात्मानं
निवेश्य एकीकृत्य स भीष्मः
उपारमत् मुक्तिं
गतवान् । निष्कले निरुपाधौ
ब्रह्मणि संपद्य-
मानं मिलितं आज्ञाय आलक्ष्य
तस्य भीष्मस्य
निर्हरणादीनि संस्कारादीनि
संपरेतस्य सम्यक्
परेतस्य मुक्तस्यापि । भार्गवेति
शौनकस्य
सम्बोधनम् । एवञ्च एतेषामपि
तत्तत्कर्म्मणि
तत्तद्वचनोपात्तप्रेतपदस्य
पितृपदस्य च मन्त्रा-

अनेन । गण्ड + अच् ।) वरण्डः । इति
जटा-
धरः । वर्णक इति भाषा ॥

**मुरजः**, पुं, (मुरात् संवेष्टनात् जायतेऽसौ । मुर +
जन + डः ।) मृदङ्गः । इत्यमरः । १ । ७
। ५ ॥
(यथा, रामायणे । २ । ३९ । ४१ ।
“मुरजपणवमेघघोषवद्-
दशरथवेश्म बभूव यत् पुरा ।
विलपितपरिदेवनाकुलं
व्यसनगतं तदभूत् सुदुःखितम् ॥”)

**मुरजफलः**, पुं, (मुरजवत् फलमस्य ।) पनसवृक्षः ।
इति त्रिकाण्डशेषः ॥

**मुरण्डः**, पुं, (मुरेण वेष्टनेन अण्ड इव गोलाकृति-
रिव । शकन्ध्वादित्वादकारस्यपररूपम्
।)
लम्पकदेशः । तद्देशस्थे, पुं भूम्नि । इति
हेमचन्द्रः । ४ । २७ ॥

**मुरन्दला**, स्त्री, (मुरं वेष्टनं सेतुं दलति
भिनत्ति । दल् + अच् + स्त्रियां टाप् ।)
नर्म्मदा-
नदी । इति त्रिकाण्डशेषः ॥

**मुरमर्द्दनः**, पुं, (मुरं तन्नामानमसुरं मृद्नाति
चूर्णीकरोतीति । मृद् + ल्युः ।) विष्णुः ।
इति
पुराणम् ॥

**मुररिपुः**, पुं, (मुरस्य रिपुः ।) विष्णुः । इति
शब्दरत्नावली ॥ (यथा, छन्दोमञ्जर्य्याम् ।
२ । ३ ।
“त्वरितगतिर्व्रजयुवतिस्तरणिसुता
विपिनगता ।
मुररिपुणा रतिगुरुणा सहमिलिता प्रमद-
मिता ॥”)

**मुरला**, स्त्री, (मुरं वेष्टनं लाति । ला + कः ।)
नर्म्मदानदी । इति त्रिकाण्डशेषः ॥ (यथा,
उत्तररामचरिते । ३ । १ ॥ ततः प्रदिशति
नदीद्वयं

| | | |
|---|---|---|
| | दिषु यथायथं वाचनिकत्वात्<br>प्रयोगः सङ्गच्छते ।<br>‘आसन्नमृत्युना देया गौः सवत्सा<br>च पूर्ब्बवत् ।<br>तदभावे च गौरेका नरकोद्धारणाय<br>वै ॥<br>तदा यदि न शक्नोति दातुं<br>वैतरणीञ्च गाम् ।<br>शक्तोऽन्योऽरुक् तदा दत्त्वा श्रेयो<br>दद्यान्-<br>मृतंस्य च ॥’<br>पूर्ब्बवद्धेमशृङ्गादिना ।<br>अत्र मृतस्य चेति श्रवणात्<br>एकादशाहेऽपि<br>वैतरणीदानाचारः । वनपर्व्वणि । | |

तमसा मुरला च । तमसा । सखि मुरले ! किमसि सन्म्रान्तेव । केरलदेशस्था काचिन्नदी ।
यथा च । रघुवंशे । ४ । ५५ ।
"मुरलामारुतोद्धूतमगमत् कैतकं रजः ।
तद्योधवारवाणानामयत्नपटवासताम्॥"
"मुरला नाम केरलदेशेषु काचिन्नदी ।" इति तट्टीकाकृन् मल्लिनाथः ॥)

**मुरली**, स्त्री, (मुरं अङ्गुलिवेष्टनं लाति प्राप्नोतीति ला + कः + स्त्रियां ङीष् ।) स्वनामख्यात-शुषिरवाद्यम् । तत्पर्य्यायः । वंशी २ वंशिका ३
वंशनालिका ४ सानेयिका ५ सानेयी ६ सानिका ७ मुरलासिका ८ । शेषचतुष्टयं सानायि । इति शब्दरत्नावली ॥ (यथा, राधा-तन्त्रे । २३ ।
"वादयन् मुरलीं कृष्णः शृङ्गं वेणुं तथापरम् ।
कात्यायनीं नमस्कृत्य हरिः पद्मदलेक्षणः ॥")

**मुरलीधरः**, पुं, (धृ + अच् । मुरल्याः धरः ।) श्रीकृष्णः । इति शब्दरत्नावली ॥ (यथा, तन्त्रे ।
"वैकुण्ठदक्षिणे भागे गोलोकं सर्व्वमोहनम् ।
तत्रैव राधिका देवी द्विभुजो मुरलीधरः ॥")

**मुरहा**, [न्] पुं, (मुरं हन्तीति । हन् + क्विप् ।) विष्णुः । इति हेमचन्द्रः ॥

**मुरा**, स्त्री, (मुरति सौरभेण वेष्टयति । मुर + इगुपधत्वात् कः टाप् च ।) स्वनामख्यातगन्ध-द्रव्यम् । (यथा, गरुडपुराणे । १९० ।
"तथा हिक्वां हरेत् पीता सौवर्च्चलसुतामुरा ।"
तत्पर्य्यायः । तालपर्णी २ दैत्या ३ गन्धकुटी ४
गन्धिनी ५ । इत्यमरः । २ । ४ । १२३ ॥ (तथास्याः पर्य्यायान्तरं गुणाश्च ।
"मुरा गन्धकटी दैत्या सुरभिः शालपणिका ।
मुरा तिक्ता हिमा स्वाद्वी लघ्वी पित्तानिला-

श्रीनारद उवाच ।
"योऽसौ मुर इति ख्यातः कस्य पुत्त्रश्च गीयते ।
कथञ्च निहतः संख्ये विष्णुना तद्वदस्व मे ॥"
पुलस्त्य उवाच ।
"श्रूयतां कथयिष्यामि मुरासुरनिवर्हणम् ।
विचित्रमिदमाख्यानं पुण्यं पापप्रणाशनम् ॥
कश्यपस्यौरसः पुत्त्रो मुरो नाम महाबलः ।
स ददर्श रणे शम्भुं दितिपुत्त्रोऽसुरोत्तमः ॥
ततः स मरणाद् भीतस्तप्त्वा वर्षगणान् बहून् ।
आराधयामास विभुं ब्रह्माणमपराजितम् ॥
ततोऽस्य तुष्टो वरदः प्राह वत्स ! वरं वृणु ।
स च वव्रे तदा दैत्यो वरमेनं पितामहात् ॥
यं यं करतलेनाहं स्पृशेयं समरे विभो ! ।
स स मद्धस्तसंस्पृष्टस्त्वमरोऽपि म्रियत्वज ! ॥
बाढमुक्त्वा स भगवान् ब्रह्मा लोकपितामहः ।
ततोऽभ्यगान्महातेजा मुरः सुरगिरिं बली ।
जगाम धर्म्मराजानं विजेतुं दण्डपाणिनम् ॥"
मुर उवाच ।
"यम ! प्रजासंयमनान्निवृत्तिं कर्त्तुमर्हसि ।
नो चेत्तवाद्य छित्त्वाहं मूद्ध्वानं पातये भुवि ॥
तमाह धर्म्मराड्वाक्यं यदि मां संयमेद्भवान् ।
गोपितासि पुरा सत्यं करिष्ये वचनं तव ॥
मुरस्तमाह भवतः कः संयन्ता वदस्व माम् ।
अहं तञ्च पराजित्य वारयामि न संशयः ॥
यमस्तं प्राह मां विष्णुर्देवश्चक्रगदाधरः ।
श्वेतद्वीपनिवासी यः स मां संयमतेऽव्ययः ॥
इत्येव मुक्तो वत्तनं दुग्धाब्धिमगमन्मुरः ॥
तमागतं प्राह मुने ! मधुघ्नः
प्राप्तोऽसि केनासुर ! कारणेन ।

**मुर्च्छ** आ मोहे । उच्छ्राये । इति कविकल्पद्रुमः ॥
(भ्वा०-पर०-अक०-सेट् ।) पवर्गशेषादिः । ह्रस्वी । तेन क्विपि राल्लोप इति छलो मुरौ
मुरः । आ मूर्च्छितं मूर्त्तं तेन । मोहो ज्ञान-रहितीभावः । उच्छ्रायो वृद्धिः । मूर्च्छति
रोगी । मुमूर्च्छ संख्यं रामस्य समानव्यसने
हराविति रघुः । इति दुर्गादासः ॥

**मुर्भिणी**, स्त्री, अङ्गारधानिका । इति शब्द-चन्द्रिका ॥

**मुर्मुरः**, पुं, तुषाग्निः ॥ (यथा, माघे । ६ । ६ ।
"स्मरहुताशनमुर्मुरचूर्णतां
दधुरिवाम्रवणस्य रजःकणाः ।
निपतिताः परितः पथिकव्रजा-
नुपरि ते परितेपुरतो भृशम् ॥")
मन्मथः । रविवाजिः । इति मेदिनी । रे, २०५ ॥
(स्त्रियां टाप् । नदीभेदः । यथा, महाभारते ।
३ । २२१ । २५ ।
"भारती सुप्रयोगा च कावेरी मुर्म्मुरा तथा ।
तुङ्गवेण्णा कृष्णवेण्णा कपिला शोण एव च ॥")

**मुर्व्व** ई नहे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् । निष्ठायामनिट् ।) आद्यः पञ्चम-स्वरी । मूः मुरौ मुरः । नहो बन्धनम् । ई
मूर्णः । इति दुर्गादासः ॥

**मुल** क रोपणे । इति कविकल्पद्रुमः ॥ (चुरा०-

पहा ।
ज्वरासृग्भूतरक्षोघ्नी कुष्ठकासविनाशिनी ।”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
तस्या लक्षणं यथा । मुरा पीता वरा प्रोक्ता ।
इति वैद्यकचक्रपाणिसंग्रहे वातव्याध्यधिकारे ॥)
अस्या अनुलेपनगुणाः । अलक्ष्मीरक्षोज्वर-
नाशित्वम् । इति राजवल्लभः ॥
राजनिर्घण्टोक्त-
गुणपर्य्यायौ पुराशब्दे द्रष्टव्यौ ॥

**मुरारिः**, पुं, (पुरस्यारिः ।) श्रीकृष्णः । अस्य

व्युत्पत्तिर्यथा, --
“मुरः क्लेशे च सन्तापे कर्म्मभोगे च
कर्म्मिणाम् ।
दैत्यभेदेऽप्यरिस्तेषां मुरारिस्तेन कीर्त्तितः ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ११० अध्यायः ॥
अस्य स्वरूपं यथा, --
श्रीनारद उवाच ।
“कोऽसौ मुरारिर्देवर्षे ! देवो यक्षो नु किं नरः ।
दैत्यो वा राक्षसो वापि पार्थिवो वा तदुच्यताम् ॥”
पुलस्त्य उवाव ।
“योऽसौ रजःसत्त्वमायागुणवांश्चतमोमयः ।
निर्गणः सर्व्वगो व्यापी मुरारिर्म्मधुसूदनः ॥”

स प्राह युद्धं सह वै त्वयाद्य
तं प्राह भूयः सुरशत्रुहन्ता ॥
यदीह मां योद्धुमुपागतोऽसि
तत् कम्पते ते हृदयं किमर्थम् ।
ज्वरातुरस्येव मुहुर्मुहुर्व्वै
तन्नैव योत्स्ये सह कातरेण ॥
इत्येवमुक्तो मधुसूदनेन
मुरस्तदा स्वे हृदये स्वहस्तम् ।
कथं नु कम्पेति मुहुस्तदोक्त्वा
निपातयामास विपन्नबुद्धिः ॥
हरिश्च चक्रं मृदुलाघवेन
मुमोच तत्तस्य शिरस्तु शत्रोः ।
चिच्छेद देवास्तु गतव्यथाभवन्
देवं प्रशंसन्ति च पद्मनाभम् ।
इतः प्रसिद्धं समुपाजगाम
मुरारिरित्येव हरिर्महात्मा ॥”
इति वामने ५७ । ५८ अध्यायौ ॥ * ॥
अनर्घराघवग्रन्थकर्त्ता । यथा । ‘अस्ति मौद्गल्य-
गोत्रसमुद्भूतस्य
महाकवेर्भट्टश्रीवर्द्धमानात्मजस्य
तन्तुमतीहृदयनन्दनस्यमुरारिनामधेयस्य कवेः
कृतिरनर्घराघवं नाम नाटकं तत्प्रयुञ्जानाः
सामाजिकानुपास्महे ।’ इति तत्कृतनाटक-
गद्यम् ॥

पर०-सक०-सेट् । जन्मार्थे भ्वा०-उभ०-अक०-
सेट् ।) रोपणं आरोपणम् । क
मोलयति वृक्षं
लोकः । गोविन्दभट्टस्तु रोहणे इति पठित्वा
रोहणं जन्म इति व्याख्याति । इति
दुर्गादासः ॥

**मुशटी**, स्त्री, (मुष + अटन् । पृषोदरादित्वात्

साधुः ।) सितकङ्गुः । इति हेमचन्द्रः ॥

**मुश(ष)लिका**, स्त्री, (मुष + “वृषादिभ्यश्चित् ।”

उणा० १ । १०८ । इति कलश्चित्
स्यात् । टाप् ।
ततः संज्ञायां कन् । अकारस्येत्वम् ।)
पल्ली ।
तालमूली । तत्पर्य्यायः सुवहा २
तालपत्रिका ३
गोधापदी ४ हेमपुष्पी ५ भूताली ६ दीर्घ-
कन्दिका ७ मुषली ८ तालिका ९
तालमूलिका
१० । इति शब्दरत्नावली ॥ अर्शोघ्नी ११ । इति
जटाधरः ॥ अस्या गुणाः । मधुरत्वम् । शीत-
त्वम् । वृष्यत्वम् । पुष्टिबलप्रदत्वम् । पिच्छिल-
त्वम् । कफदत्वम् ।
पित्तदाहश्रमहरत्वञ्च ।
“मुशली च द्विधा प्रोक्ता श्वेता चापर-
संज्ञिका ।
श्वेता स्वल्पगुणोपेता अपरा च
रसायनी ॥”
इति राजनिर्घण्टः ॥
“तालमूली तु विद्वद्भिर्म्मुषली
परिकीर्त्तिता ।
मुषली मधुरा वृष्या वीर्य्योष्णा बृंहणी
गुरुः ।
तिक्ता रसायनी हन्ति गुदजान्यनिलं
तथा ॥”

| | | इति भावप्रकाशः ॥<br>**मुष** वधे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-<br>सक०-सेट् ।) मोषति । इति दुर्गादासः ॥<br>**मुष** ग लुण्ठने । इति कविकल्पद्रुमः ॥ (क्रा०-पर०-<br>सक०-सेट् ।) ग मुष्णाति । इति दुर्गादासः ॥ |
|---|---|---|

**मुष्** य इर् छिदि । इति कविकल्पद्रुमः ॥ (दिवा०-
पर०-सक०-सेट् ।) छेद इह खण्डनम् । य
मुष्यति विपक्षं चतुरः । इर् अमुषत् अमोषीत्
अस्मात् पुषादित्वान्नित्यं ङ इत्यन्ये । इति
दुर्गादासः ॥

**मुषलः**, पुं, क्ली, (मोषति मुष्यतेऽनेन वेति । मुष् +
"वृषादिभ्यश्चित् ।" उणा० १ । १०८ । इति
कलश्चित् स्यात् ।) अयोऽग्रम् । इत्यमरटीकायां
भरतः ॥ दन्त्यमध्योऽपि ॥ (यथा, मार्कण्डेये ।
११६ । १८ ।
"मुनन्दं नाम मुषलं त्वष्ट्रा यन्निर्म्मितं पुरा ।
तज्जहार स दुष्टात्मा तेन हन्ति रणे रिपून् ॥"
विश्वामित्रसुतः । यथा, महाभारते । १३ । ४ । ५२ ।
"बाहुलिर्मुषलश्चैव वक्षोग्रीवस्तथैव च ॥"
(तालव्यमध्योऽप्ययम् । "मुश् खण्डने मुशलः ।"
उणा० १ । १०८ । इत्यत्रोज्ज्वलदत्तवृत्तिः ॥)

**मुषली**, स्त्री, (मुष्यत इति । मुष् + कलः ङीष् ।)
तालमूलिका । गृहगोधिका । इति शब्द-
रत्नावली ॥

**मुषल्यः**, त्रि, (मुषलमर्हतीति । मुषल + "दण्डा-
दिभ्यो यः ।" ५ । १ । ६६ । इति यः ।) मुषल-
कटुत्वम् । तिक्तत्वम् । ग्राहित्वम् । उष्णत्वम् ।
कफवातकारित्वम् । विषमेदोगुल्मकण्डुवस्ति-
रोगकृमिशुक्रनाशित्वञ्च । इति भावप्रकाशः ॥
रेचनत्वम् । पाचनत्वम् । प्लीहोदरार्त्तिनाशि-
त्वञ्च । इति राजनिर्घण्टः ॥ (यथा, सुश्रुते ।
चिकित्सास्थाने । ९ अध्यायः ।
"जीर्णं पक्वं तद्बदरिद्राद्वयेन
हन्यात् कुष्ठं मुष्कके चापि सर्पिः ॥")

**मुष्करः**, पुं, (प्रशस्तः मुष्कोऽस्यास्ति । मुष्क +
"ऊषमुषिमुष्कमधो रः ।" ५ । २ । १०७ । इति रः ।)
प्रलम्बाण्डः । इति हेमचन्द्रः । ३ । १२१ ॥
(यथा, शतपथब्राह्मणे । ३ । ७ । २ । ८ ।
"रेतो विकरोति मुष्करो भवत्येष वै प्रजनयिता
यन्मुष्करस्तस्मान्मुष्करोभवति तं न स ॥")

**मुष्कशून्यः**, पुं, (मुष्केण शून्यः ।) वृषणरहितः ।
स तु राज्ञोऽन्तःपुररक्षकः । खोजा इति भाषा ।
तत्पर्य्यायः । अनुपस्थः २ स्त्रीस्वभावः ३
महल्लिकः ४ । इति शब्दमाला ॥

**मुष्टिः**, पुं, स्त्री, (मुष् + क्तिच् ।) पलपरिमाणम् ।
चारि तोला इति भाषा । (वैद्यके आठतोला
इति प्रसिद्धिः ।
"स्यात् कर्षाभ्यामर्द्धपलं शुक्तिरष्टमिका तथा ।
"मुष्टिः शस्यानां गोपनकालः दुर्भिक्षमिति
यावत् ॥" इति तट्टीकायां नीलकण्ठः ॥)

**मुष्टिकः**, पुं, (मुष्णाति परवीर्य्यमिति । मुष् + क्तिच्
संज्ञायां कन् ।) कंसराजमल्लविशेषः । इति
श्रीमद्भागवतम् ॥ (यथा च हरिवंशे । ४१ । १६० ।
"नागं कुवलयापीडं चाणूरं मुष्टिकं तथा ।"
मुष्टिः प्रयोजनमस्य । मुष्टि + कन् ।) स्वर्ण-
कारः ॥ इति हेमचन्द्रः । ३ । ५७२ ॥

**मुष्टिकान्तकः**, पुं, (मुष्टिकस्यान्तकः ।) बल-
देवः । इति शब्दरत्नावली ॥

**मुष्टिद्यूतं**, क्ली, (मुष्ट्या द्यूतं क्रीडितम् ।) द्यूत-
क्रीडाविशेषः । पुरमुट् खेला इति भाषा ।
तत्पर्य्यायः । क्षुल्लकम् २ । इति शब्दमाला ॥

**मुष्टिन्धयः**, पुं, (मुष्टिं धयति पिबति । धेट् +
"नाडीमुष्ट्योश्च ।" ३ । २ । ३० । इति खश् ।
"अरुर्द्विषदजन्तस्य मुम् ।" ६ । ३ । ६७ । इति
मुम् ।) बालकः । इति त्रिकाण्डशेषः ॥

**मुष्टिबन्धः**, पुं, मुष्टिबन्धनक्रिया । मुटावाँधा इति
भाषा । तत्पर्य्यायः । संग्राहः २ । इत्यमरः ।
३ । २ । १४ ॥ मुष्टेर्बन्धोऽङ्गुलिविन्यासो मुष्टि-
बन्धः । मुष्टिना बन्धो दृढग्रहणं संग्राह
इत्यपरे । मुष्ट्यामेव संग्रह इत्यन्ये । मुष्टिः
स्त्रियाञ्च संग्रह इति वोपालितः । इति
भरतः ॥

**मुष्टीमुष्टि**, व्य, मुष्टामुष्टि । मुष्टिभिर्मुष्टिभिः प्रहृत्य
यद्युद्धं वृत्तं तत् । किलाकिलि इति भाषा ।
इति मुग्धबोधव्याकरणम् ॥

**मुष्ठकः**, पुं, (मुष् + बाहुलकात् क्थन् । ततः
संज्ञायां कन् ।) राजसर्षपः । इति रत्नमाला ॥
व्यष्टक इति वा पाठः ॥

**मुस** य इर् छिदि । खण्डने । इति कविकल्पद्रुमः ॥
(दिवा०-पर०-सक०-सेट् ।) य मुस्यति विपक्षं
चतुरः । इर् अमुसत् अमोसीत् । अस्मात्
पुषादित्वान्नित्यं ङ इत्यन्ये । इति दुर्गादासः ॥

वध्यः । इत्यमरटीकायां भरतः ॥

**मुषा**, स्त्री, (मुष् + कः टाप् ।) मूषा । इत्यमरटीकायां रायमुकुटः । २ । १० । ३३ । मुची इति भाषा ॥

**मुषितं**, त्रि, (मुष् + कर्म्मणि क्तः ।) चोरितद्रव्यम् । तत्पर्य्यायः ॥ मूषितम् २ । इत्यमरः । ३ । १ । ८८ ॥ (वञ्चितः । यथा, भागवते । १ । १३ । ३७ ।
"नाहं वेद्मि व्यवसितं पित्रोर्वः कुलनन्दन ! ।
गान्धार्य्या वा महाबाहो ! मुषितोऽस्मि महात्मभिः ॥"
"मुषितो वञ्चितोऽस्मि ॥" इति तट्टीकायां श्रीधरः ॥)

**मुष्कः**, पुं, (मुष्णाति वीर्य्यमिति । मुष् + "सृवृभूशुषिमुषिभ्यः कक् । उणा० ३ । ४१ । इति कक् ।) अण्डकोषः । इत्यमरः । २ । ६ । ६ ॥
(यथा, वाग्भटे निदानस्थाने नवमे अध्याये ॥
"स्थानाच्च्युतममुक्तं हि मुष्कयोरन्तरेऽनिलः ॥")
मोक्षकवृक्षः । संघातः । इति मेदिनी । के, ३१ ॥
तस्करः । मांसलः । इति हेमचन्द्रः । २ । २७६ ॥

**मुष्ककः**, पुं, (मुष्क । संज्ञायां कन् ।) वृक्षविशेषः ।
घण्टापारुल इति वङ्गभाषा । मोषा इति हिन्दी भाषा । तत्पर्य्यायः । गोलीढः २ झाटलः ३ घण्टापाटलिः ४ मोक्षः ५ । इत्य-

शुक्तिभ्याञ्च पलं ज्ञेयं मुष्टिराम्रञ्चतुर्थिका ॥"
इति वैद्यकशार्ङ्गधरे पूर्ब्बखण्डे प्रथमेऽध्याये ॥
'पलार्द्धं शुक्तिमिच्छन्ति तथाष्टमाषकास्त्विति ।'
पलं विल्वञ्च मुष्टिः स्यात् -- ॥"
इति गारुडे अष्टाधिकद्विशततमेऽध्याये ।)
बद्धपाणिः । मुटा इति भाषा । तत्पर्य्यायः ।
सम्पिण्डिताङ्गुलिपाणिः २ मुस्तुः ३ मुचुटी ४ ।
इति हेमचन्द्रः । ३ । २६१ ॥ त्सरुः । इति मेदिनी । टे, २५ ॥ खड्गेर मुट् इति भाषा ।
(यथा, महाभारते । १ । १९ । १७ ।
"परिघैरायसैस्तीक्ष्णैः सन्निकर्षे च मुष्टिभिः ।
निघ्नतां समरेऽन्योन्यं शब्दो दिवमिवास्पृशत् ॥")
कुञ्च्यष्टभागः । छटाक इति भाषा । यथा, --
"अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलः ।"
इति प्रायश्चित्ततत्त्वम् ॥
(मुष् + क्तिन् ।) मोषणम् । इति मुषधात्वर्थदर्शनात् । प्रहारविशेषः । किल इति भाषा ।
यथा, मार्कण्डेयपुराणे । ९० । १५ -- १६ ।
"चिच्छेदापततस्तस्य मुद्गरं निशितैः शरैः ।
तथापि सोऽभ्यधावत्तां मुष्टिमुद्यम्य वेगवान् ॥
स मुष्टिं पातयामास हृदये दैत्यपुङ्गवः ।
देव्यास्तञ्चापि सा देवी तलेनोरस्यताडयत् ॥"

**मुसलः**, पुं, क्ली, (मुस्यति खण्डयतीति । मुस् + "वृषादिभ्यश्चित् ।" उणा० १ । १०८ । कलः चित् स्यात् ।) स्वनामख्याततण्डुलादिकण्डनार्थनिर्म्मितलौहाग्रयष्टिः । तत्पर्य्यायः । अयोऽग्रम् २ । इत्यमरः । २ । ९ । २५ ॥ मुषलम् ३ कण्डनीदण्डः ४ । इति शब्दरत्नावली ॥ मुस्यति मुसल मुस यिर्छिदि नाम्नीति कलः । मुसलो दन्त्यसकारः । एवं मुष्य इर्छिदीति मूर्द्धन्यान्तात् कलः मूद्ध्र्वन्यषकारश्च । इत्यमरटीकायां भरतः ॥
(आयुधविशेषः । तत्प्रकारो यथा, वैशम्पायनोक्तधनुर्वेदे ।
"मुसलस्त्वक्षिशीर्षाभ्यांकरैः पादैर्विवर्ज्जितः ।
मूले चान्तेऽतिसम्बन्धः पातनं पोथनं द्वयम् ॥")
यथा, मनौ । ८ । ३१५ ।
"स्कन्धेनादाय मुसलं लगुडं वापि स्वादिरम् ।
शक्तिञ्चोभयतस्तीक्ष्णामायसंदण्डमेव वा ॥")

**मुसलामुसलि**, व्य, मुसलैश्च प्रहृत्ययुद्धं वृत्तम् । इति सिद्धान्तकौमुदी ॥

| | | |
|---|---|---|
| मरः । २ । ४ । ३९ ॥ मोक्षकः ६ मुष्कः ७ मोचकः ८ मुञ्चकः ९ गौलिकः १० मेहनः ११ क्षारवृक्षः १२ पाटली १३ विषापहः १४ जटालः १५ वनवासी १६ सुतीक्ष्णकः १७ । इति राजनिर्घण्टः ॥ गोलिहः १८ क्षार- श्रेष्ठः १९ घण्टा २० घण्टाकः २१ झाटः २२ । इति शब्दरत्नावली ॥ स तु पलाशवत्पर्व्वत- वृक्षः । श्वेतकृष्णभेदेन द्विविधः । तस्य गुणाः । | पथि क्षुधार्त्तस्य तिलादीनां मुष्टिग्रहणे चौर्य्या- भावः । यथा, कौर्म्मे उपविभागे १५ अध्याये । “तिलमुद्गयवादीनां मुष्टिर्ग्राह्या पथि स्थितैः । क्षुधार्त्तैर्नान्यथा विप्र ! विधिविद्भिरिति स्थितिः ॥” (मुष् स्तेये + अधिकरणे क्तिन् । शस्यगोपन- कालः । यथा, महाभारते । २ । ५ । ६५ । “कच्चिल्लवञ्च मुष्टिञ्च परराष्ट्रे परन्तप ! । अविहाय महाराज ! निहंसि समरे रिपून् ॥” | |

**मुसली**, स्त्री, (मुसल + गौरादित्वात् ङीष् ।) तालमूलिका । गृहगोधिका । इत्यमरः । २ । ५ । १२ ।

**मुसली**, [न्] पुं, (मुसलं प्रहरणत्वेनास्यास्तीति । मुसल + इनिः ।) बलदेवः । इत्यमरः । १ । १ । २५ ॥

**मुसल्यः**, त्रि, (मुसलमर्हतीति । मुसल + यः ।) मुसलेन वध्यः । इत्यमरः । ३ । १ । ४५ ॥

**मुस्त** क संहतौ । इति कविकल्पद्रुमः ॥ (चुरा०-उभ०-अकं-सेट् ।) पवर्गशेषादिः । क मुस्तयति । इति दुर्गादासः ॥

**मुस्तः**, पुं, (मुस्तयति एकत्र संहतीभवन्तीति । मुस्त + कः । एकशिफायामस्य बहुमूलसम्बद्धतया तथात्वम् ।) मुस्तकम् । इति हारावली ॥ (यथा बृहत्संहितायाम् । ७७ । ११ ।
"भागैश्चतुर्भिः सितशैलमुस्ताः
श्रीसर्ज्जभागौ नखगुग्गुलू च ।
कर्पूरबोधो मधुपिण्डितोऽयं
कोपच्छदो नाम नरेन्द्रधूपः ॥")

**मुस्तकः**, पुं क्ली, (मुस्त + स्वार्थे कन् ।) तृणमूलविशेषः । मुता इति भाषा । तत्पर्य्यायः । कुरुबिन्दः २ मेघनामा ३ मुस्ता ४ । इत्यमरः । २ । ४ । १५९ ॥ मुस्तः ५ राजकसेरुः ६ । इति हारावली ॥ मेघाख्यम् ७ गाङ्गेयम् ८ भद्रमुस्तकम् ९ । इति रत्नमाला ॥ अभ्रनामकः १० टम् २ पुरम् ३ बल्यम् ४ परिपेलवम् ५ । इति रत्नमाला ॥ (गुणा अस्य कुटन्नटशब्दे ज्ञातव्याः ॥)

**मुस्तुः**, पुं, (मुस्यति खण्डयत्यनेन । मुस् + बाहुलकात् तुक् ।) मुष्टिः । इति हेमचन्द्रः । ३ । २६१ ॥

**मुस्नं**, क्ली, मुसलम् । मुसधातोरौणादिकरक्प्रत्ययेन निष्पन्नम् । २ । १३ । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ (नयनजलमित्युज्ज्वलः ॥)

**मुह** यौ ऌ क्ति वैचित्त्ये । इति कविकल्पद्रुमः ॥ (दिवा०-पर०-अक०-सेट् । रुधादित्वाद्वेट् ।) वैचित्त्यं ज्ञानरहितीभावः । य, तेन मुह्यति चिराय मे मनः । इति मुरारिः । ऊ मोहिष्यति मोक्ष्यति । ऌ अमुहत् । ञि मुग्धः मूढोऽस्ति । इति दुर्गादासः ॥

**मुहिरः**, पुं, (मुह्यति ज्ञानरहितोभवत्यनेन लोकः मुह्यति सभायामिति वा । मुह + "इषिमदीति उणा० ।" १ । ५२ । इति किरच् ।) कामः । मूर्खः । इति मेदिनी । र, । २०५ ॥ (असभ्यः इत्युज्ज्वलदत्तः ॥)

**मुहुः**, [स्] व्य, (मुह + "मुहेः किच्च् ।" उणा० २ । १२१ । इति उसिः किच्च ।) पुनः पुनः । इत्यमरः । ३ । ४ । १ ॥ (यथा, पञ्चदश्याम् । ७ । १७१ ।
"स्वस्वप्नमापरोक्षेण दृष्ट्वा पश्यन् स्वजागरम् ।
चिन्तयेदप्रमत्तः सन्नुभावनुदिनं मुहुः ॥")

धृतलिखिष्यमाणत्रियामामितिवचनयोरेकमूलयोश्च उभयत्र प्रयोगदर्शनादिति संशयः । अत्रोच्यते । श्राद्धादावस्तगामिनीति घटिकानियामकवचनचतुर्थचरणे पार्व्वणयोग्यतया घटिकाया मुहूर्त्तात्मकत्वस्यावश्यमङ्गीकारात् तात्पर्य्यलाघवेन व्रतादावपि तथात्वम् ।
"घटिकैकाप्यमावास्याप्रतिपत्सुन चेद्यदा ।
सर्व्वं तदासुरं दानं दैवे कर्म्मणि चोदितम् ॥"
इति घटिकान्यूने निन्दामभिधाय घटिकालाभे कर्म्मार्हेति वक्तव्ये मुहूर्त्तमप्यमावास्याप्रतिपत्सु भवेद्यदा । तद्दानमुत्तमं ज्ञेयं शेषं पूर्ब्बं हि पूर्ब्बवदित्यनेन मुहूर्त्तलाभे कर्म्मार्हत्वज्ञापनाच्च । तत्रापि मुहूर्त्तः किं तत्तद्दिवारात्रिपञ्चदशांश उत दण्डद्वयम् । नाद्यः प्रतिदिनदिवारात्र्योर्ह्रासवृद्धिभ्यां तद्भागानामपि न्यूनाधिक्याद्विधिभेदापत्तेः । नापि द्वितीयः दण्डद्वयस्य त्रिंशद्दण्डात्मकदिवारात्रिपञ्चदशांशस्यमुहूर्त्तत्वञ्च दण्डद्वयाधिकन्यूनकालानामपि त्रिंशद्दण्डाधिकन्यूनदिवारात्रिपञ्चदशांशानांमुहूर्त्तत्वप्रतिपादनेन विनिगमनाविरहात् किन्त्वन्तरङ्गतया कर्म्माङ्गदिवारात्र्यन्यतरपञ्चदशांशस्य ग्रहणप्रसक्तौ अयनांशक्रमेणोत्तरायणपूर्ब्बाह्दिनमानसपादषड्विंशतिदण्डानां पञ्चदशांशस्य पादोनदण्डद्वयस्य मुहूर्त्तत्वात्तद्दिनविहितक्रियायां तावन्न्यूनकालस्यापि ग्रहणात् सर्व्वत्र न्यूनकालव्यवच्छेदे आवश्यकतया तस्यैव पादोनदण्डद्वयात्मकस्य मुहूर्त्तस्य ग्रहणं लाघवात् ।
"यदा चतुर्द्दशीयामं तुरीयमनुपूरयेत् ।
अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते ॥"
इति कात्यायनोक्तस्य चतुर्द्दशीसम्बन्धिदिनचतुर्थयाममात्रव्याप्यमावास्यायांश्राद्धविधानस्य मत्स्यपुराणोक्तमुख्यापराह्णीयमुहूर्त्ताबाधेन

श्रीभद्रा ११ भद्रकः १२ भद्रा १३ ।
इति शब्द-
रत्नावली ॥ अस्य गुणाः । तिक्तत्वम् ।
कटु-
त्वम् । वायुनाशित्वम् । ग्राहित्वम् ।
दीपनत्वञ्च ।
इति राजवल्लभः ॥ अपि च ।
“मुस्तकं न स्त्रियां मुस्तं त्रिषु
वारिदनामकः ।
कुरुबिन्दश्च स ख्यातोऽपरः
कोरकसेरुकः ॥
भद्रमुस्तश्च गुन्द्रा च तथा
नागरमुस्तकः ।
मुस्तं कटु हिमं ग्राहि तिक्तं
दीपनपाचनम् ॥
कषायं
कफपित्तासतृड्ज्वरारुचिजन्तुहृत् ।
अनूपदेशे यज्जातं मुस्तकं तत्
प्रशस्यते ।
तत्रापि मुनिभिः प्रोक्तं वरं
नागरमुस्तकम् ॥”
इति भावप्रकाशः ॥

**मुस्तकः**, पुं, (मुस्तयति संहतीकरोति रुधिर-

मिति । मुस्त + कः । ततः संज्ञायां
कन् ।)
स्थावरविषभेदः । इति हेमचन्द्रः । २ ।
२५६ ॥
(यथा, सुश्रुते कल्पस्थाने । २ ।
“चत्वारिवत्सनाभानि मुस्तके द्वे
प्रकीर्त्तिते ॥”)

**मुस्ता**, स्त्री, (मुस्त + टाप् ।) मुस्तकः । इत्य-

मरः । २ । ४ । १५९ ॥ (तथास्याः
पर्य्यायः ।
“मेघाख्यं मुस्तकं मुस्ता गाङ्गेयं
भद्रमुस्तकम् ।”
इति वैद्यकरत्नमालायाम् ॥
यथा सुशुते सूत्रस्थाने । ४४ ।
“दोषघ्ना
ग्रहणीपाण्डुरोगार्शःकुष्ठनाशनाः ।

**मुहुभाषा**, स्त्री, (मुहुः भाषा भाषणम् ।) पुनः

पुनःकथनम् । तत्पर्य्यायः । अनुलापः २
।
इत्यमरः । १ । ६ । १६ ॥

**मुहूर्त्तः**, पुं क्ली, (हूर्च्छतीति । “अञ्जिघृसिभ्यः

क्तः ।” उणा० ३ । ८९ । इत्यत्र
बाहुलकात्
हुर्च्छेरपि इति उज्ज्वलदत्तः । मुडागमश्च
प्राक् ।
“राल्लोपः ।” ६ । ४ । २१ । इति सूत्रेण
छस्य
लोपः ।) द्वादशक्षणपरिमितकालः । इत्य-
मरः । १ । १ । ११३ ॥ घटिकाद्बयम् ।
इति
राजनिर्घण्टः ॥ (अस्य विवृतिर्यथा । तत्र
लघ्वक्षरोच्चारणमात्रोऽक्षिनिमेषः ।
पञ्चदशाक्षि-
निमेषाः काष्ठा ॥ त्रिंशत्काष्ठाः कलाः ।
विंशतिकलो मुहूर्त्तः कलादशभागश्च ।
त्रिंश-
न्मुहूर्त्तमहोरात्रम् । इति सुश्रुते सूत्रस्थाने
षष्ठेऽध्याये ॥) दिनपञ्चदशभागैकभागः ।
यथा,
“प्रातःकालो महूर्त्तांस्त्रीन् सङ्गवस्तावदेव
तु ।
मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्लस्ततः परम्
॥
सायाह्नस्त्रिमहूर्त्तः स्यात् श्राद्धं तत्र न
कारयेत् ।
राक्षसी नाम सा वेला गर्हिता सर्व्वकर्म्मसु
॥”
इति तिथ्यादितत्त्वधृतवचनम् ॥ * ॥
कर्म्मविशेषे तस्य परिमाणं यथा । ननु
व्रतोप-
वासस्नानादौ घटिकैकापि या भवेदित्यत्र
घटिकापदं दण्डपरं महूर्त्तपरं वा स्मृत्या-
चारधृतचतुर्द्दण्डात्मकारुणोदयज्ञापेक
चतस्रो
घटिकाः प्रातररुणोदय उच्यते इत्यादौ
प्रभाते
घटिकायुग्मं प्रदोषे घटिकाद्बयम् । दिनवत्

विषयलाभाय
पादोनदण्डद्बयात्मकमुहूर्त्तग्रहण-
स्यावश्यकत्वाच्च । तादृशामावास्यायां तद-
धिकमुख्यापराह्णासम्भवात् । तत्र च मुख्या-
पराह्णीयपादोनदण्डद्बयात्मकदर्शलाभस्तु
चत्वा-
रिंशत्पलाधिकत्रयस्त्रिंशद्दण्डात्मकदिवसएव
।
अत एव स्मार्त्तभट्टाचार्य्यैरपि यदा चतुर्द्दशी-
याममित्यस्य व्याख्याने तिथ्यादितत्त्वे तथा
लिखितम् । न च निरूढलक्षणातो रूढशक्ते-
र्बलवत्त्वात् । तास्तु त्रिंशत्क्षणस्ते तु मुहूर्त्तो
द्वादशास्त्रियाम् । ते तु त्रिंशदहोरात्र इत्य-
मरोक्तो द्वादशक्षणात्मकः अहोरात्रत्रिंशांशो
दण्डद्बयरूपमुहूर्त्तो लाघवतः सर्व्वत्रानुगततया
न्यूनकालव्यवच्छेदको वक्तव्य इति वाच्यं
निरूढ-
लक्षणापि शक्तितुल्येति शाब्दिकस्मरणात्
स्मार्त्तत्वेनान्तरङ्गेति सन्निहिते
बुद्धिरन्तरङ्गेति-
न्यायाच्च निरूढलक्षणाया एव बलवत्त्वात् ।
दक्षिणः सपवित्रक इत्यत्र पवित्रपदस्य कुश-
गतकोषोक्तरूढिशक्त्यपेक्षया विशिष्टकुशपत्र-
द्बयगतकात्यायनोक्तनिरूढलक्षणायाइव ।
निरूढलक्षणायाः शक्तितुल्यत्वन्तु
रूढशक्तेरिव

व्योषं त्रिजातकं मुस्ता विडङ्गामलके तथा ॥”)

**मुस्तादः**, पुं, (मुस्तामत्तीति । अद + अण् ।)

शूकरः । इति जटाधरः ॥

**मुस्ताभं**, क्ली, (मुस्तस्येवाभा यस्य ।) मुस्तकविशेषः ।

नागर मुता इति भाषा । तत्पर्य्यायः । कुटन्न-

सर्व्वकार्य्याणि कारयेन्न विचारयेदिति हलायुध-

शक्यार्थबाधज्ञानं शक्यसम्बन्धज्ञानञ्च विना पद-
तात्पर्य्यज्ञानानुपदमेव पदार्थोपस्थापकत्वात् ।
सा च निरूढलक्षणा क्वचित्तात्पर्य्यबोधक-
शास्त्रात् क्वचिच्चार्षप्रयोगतोऽनुमानादपि निर्णी
यते । वस्तुतस्तु द्युनिशोः पञ्चदशांशाश्रित-
स्मृत्युक्तनिरूढमुहूर्त्तपदलक्षणा विनिगमना-
विरहगौरवाभ्याम्बे कुण्ठिता अतोऽत्यन्तन्यून-
पादोनदण्डद्वयात्मकमुहूर्त्तग्रहणं अशक्यमेव ।
अथात्यन्तन्यूनतया सर्व्वानुगमाय तद्ग्रहणमिति
चेत् अत्यन्ताधिकतया सपाददण्डद्वयात्मक-
मुहूर्त्तस्यैव कुतो न ग्रहणं स्यात् तस्मात्
"प्रभाते घटिकायुग्मं प्रदोषे घटिकाद्वयम् ।
दिनवत् सर्व्वकार्य्याणि कारयेन्न विचारयेत् ॥"
इति लघुहारीतवचनत्रियामांरजनीं प्राहु
स्त्यक्त्वाद्यन्तचतुष्टयम् । नाडीनान्तदुभे सन्ध्ये
दिवसाद्यन्तसंज्ञित इति ब्रह्मवैवर्त्तवचनयोरेक-
दण्डद्वयात्मककाले घटिकापदनिरूढलक्षणासिद्धौ
तया पर्य्यायद्वारा कोषोक्तरूढ्या च समञ्जसतः
पार्व्वणयोग्यदण्डद्वयात्मककालएव घठिका-
पदादुपस्थाप्यते अतः सर्व्वसाधारण्येन न्यून-
कालव्यवच्छेदाय सैव ग्राह्या लाघवात् ।
अतएव यदा चतुर्द्दशीयामं तुरीयमनुपूरये-
दत्यत्र यदा यत्र दिने अमावास्यामुख्यापराह्णीय-
दण्डद्वयान्यूनकालव्यापनं यथा स्यात्तथैव चतु-
र्द्दशीयामं तद्युक्ततृतीययाममनुलक्षीकृत्य तत्र साचोवकास्योठ् इत्यादेशः ।) बन्धनम् । इति
सिद्धान्तकौमुदी ॥

**मूकः**, त्रि, (मव्यते बध्यतेऽसौ । मव + बाहुलकात्
कक् ।" उणा० ३ । ४१ । इति उपधायाया
वकारस्य चोठ् ।) वाक्यरहितः । वोवा इति
भाषा । तत्पर्य्यायः । अवाक् २ । इत्यमरः ।
३ । १ । १३ । (यथा, महाभारते । २ । ५ ।
१२५ ।
"कच्चिदन्धांश्च मूकांश्च पङ्गून् व्यङ्गानबान्धवान् ।
पितेव पासि धर्म्मज्ञ ! तथा प्रव्रजितानपि ॥"
अस्योत्पत्तिहेतुर्यथा, गर्भवैकृत्यात्
"गर्भो वातप्रकोपेण दौर्हृदे चावमानिते ।
भवेत् कुब्जः कुणिः पङ्गुर्मूको मिण्मिण एवच ॥"
इति सुश्रुते शारीरस्थाने द्वितीयेऽध्याये ॥
रोगत्वेनास्य विषयो यथा, --
"आवृत्य वायुः सकफो धमनीः शब्दवाहिनीः ।
नरान् करोत्यक्रियकान् मूकमिण्मिण गद्-
गदान् ॥"
इति च तत्र निदानस्थाने प्रथमेऽध्याये ॥)

**मूकः**, पुं, (मव्यते बध्यते जालिकैरिति । मव +
कक् । पूर्व्ववत्सर्व्वम् ।) मत्स्यः । इति त्रिकाण्ड-
शेषः ॥ दैत्यः । इति मेदिनी । के, ३१ ॥

उपस्थनिर्गतजलम् । तत्पर्य्यायः । प्रस्रावः २ ।
इत्यमरः । २ । ६ । ६७ ॥ मेहनम् ३ । इति
जटाधरः ॥ गुह्यनिस्यन्दः ४ स्रवणम् ५ स्रवः
६ । इति राजनिर्घण्टः ॥ * ॥ (अस्योत्पत्ति-
विषयो यथा, --
"आहारस्य रसः सारः सारहीनो मलद्रवः ।
शिराभिस्तज्जलं नीतं वस्तौमूत्रत्वमाप्नुयात् ॥"
इति पूर्ब्बखण्डे चतुर्थेऽध्याये शार्ङ्गधरेणोक्तम् ॥
"विस्तिपूरणविक्लेदकृन्मूत्रम् ।"
तथास्य क्षयवृद्धिलक्षणं यथा, --
"मूत्रक्षये वस्तितोदोऽल्पमूत्रता च ।"
"मूत्रं मुहुर्मुहुः प्रवृत्तिं वस्तितोदमाध्मानश्च ।"
इति सुश्रुते सूत्रस्थाने पञ्चदशेऽध्याये ॥
तथास्य दोषादि विकृतस्य परीक्षा लक्षणम् ॥
"वातेन पाण्डुरं मूत्रं रक्तनीलञ्च पित्ततः ।
रक्तमेव भवेद्रक्तात् धवलं फेनिलं कफात् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥)
तस्योत्सर्गविधिर्यथा, --
"दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ।
कुर्य्यान्मूत्रपुरीषे तु रात्रौ वै दक्षिणामुखः ॥"
इति गारुडे ९४ अध्यायः ॥
अपि च ।
"मूत्रोच्चारसमुत्सर्गं दिवा कुर्य्यादुदङ्मुखः ।
दक्षिणाभिमुखो रात्रौ सन्ध्ययोश्च यथा दिवा ॥
इति मनुः । ४ । ५० ॥
"कृत्वा यज्ञोपवीतन्तु पृष्ठतः कण्ठलम्बितम् ।

प्रवृत्य चतुर्थयामं पूरयेत् व्याप्नोतीत्यन्वयः ।
अन्यथा चतुर्द्दशमुहूर्त्ताधिकपूरणाभिधानं व्यर्थं
स्यात् । एतेनैव दर्शश्राद्धेऽपि मुख्यापराह्णादरः
कार्य्यः । प्रातःकालादिपञ्चधाविभागेकुत-
पादिसंज्ञायाञ्च दिनमानपञ्चदशांशमुहूर्त्तस्यैव
स्यैव ग्रहणम् । तद्बोधकशास्त्रसंवादात् । अत
एकोदिष्टे दिनमानपञ्चदशांशमुहूर्त्तो योग्य-
तया च न्यूनकालव्यवच्छेदको ग्राह्यः । कुतप
रौहिणान्यतरमांत्रग्राहकयुक्तेः । एवं विशेषा-
भिधानात् सुखरात्रौ दण्डमात्रं जन्माष्टम्पे-
कादशीद्वादशीषु च कलाकाष्ठारूपोऽपि प्रति-
ष्ठादौ तूक्तयुक्त्या । स्वयोग्यकाल एव न्यूनकाल-
व्यवच्छेदको ग्राह्यः । ततश्च विशेषकालप्राप्त-
कर्म्मतरकर्म्मणः प्रशस्तादिकाले स्वयोग्य-
दण्डद्वयान्यूनकतिथिरेव ग्राह्येत्यनुगतविधिः
सर्व्वसामञ्जस्यादिति तत्त्वम् । इति चन्द्रशेखर-
वाचस्पतिकृतद्वैतनिर्णयः ॥

**मुहेरः**, पुं, (मुह्यति विचित्तीभवतीति । मुह +
"मूलेरादयः ।" उणा० १ । ६२ । इति एरक् ।)
मूर्खः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**मू** ङ बन्धे । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-
सक० सेट् ।) पवर्गपञ्चमादिः । ङ मवते ।
इति दुर्गादासः ॥

**मूः**, [र्] स्त्री, मूर्च्छा । इति मूर्च्छधातोभवि
क्विवा निस्पन्नम् । इति मुग्धबोधव्याकरणम् ॥

**मूः**, स्त्री, (मव्यते इति । मन + क्विप् । "ज्वर-
त्वरश्रिव्यविमवामुपधायाश्च ।" ६ । ४ ।
२० । इति

(दानवभेदः । यथा, महाभारते । ३ ।
३९ । ७ ।
"स सन्निकर्षमागम्य
पार्थस्याक्लिष्टकर्म्मणः ।
मूकं नाम दनोः पुत्त्रं ददर्शाद्भुतदर्शनम् ॥")
दीनः । इति हेमचन्द्रः । ३ । १३ । (तक्षक-
पुत्त्रः । यथा, महाभारते । १ । ५७ । १० ।
"शिली शलकरो मूकः सुकुमारः प्रवेपनः ।
मुद्गरः शिशुरोमा च सुरोमा च महाहनुः ॥
एते तक्षकजा नागाः प्रविष्टा हव्यवाहनम् ॥")

**मूढः**, त्रि, (मूह + क्तः ।) मूर्खः । इत्यमरः ।
३ । १ । ४८ ॥ (यथा, पञ्चदश्याम् । ७ । १० ।
"अन्योन्याध्यासरूपेण कूटस्थाभासयोर्वपुः ।
एकीभूय भवेन्मुख्यस्तत्र मूढैः प्रयुज्यते ॥")
बालः । तन्द्रितः । इति मेदिनी । ढे, ३ ॥ जडः ।
इति हेमचन्द्रः ॥

**मूतः**, त्रि, (मव मू मूर्व वा क्तः ।) बद्धः । इत्य-
मरः । ३ । १ । ९५ ॥ (धान्यरक्षणार्थं तृणमय
आधारविशेषः । यथा, शतपथब्राह्मणे । २ ।
६ । २ । १७ । "तान् द्वयोर्मूतकयोरुपनह्य
वेणुयष्ट्यां वा कुपे वोभयत आबध्योदं परेत्य यदि
वृक्षं वा स्थाणुं वा वेणुं वा वल्मीकं वा
विन्देत् ॥" 'यत्र तृणमये आवपने धान्यं बध्यते
तन्मूतं मूतमेव मूतकम् । वेणुमय्यां यष्ट्यामुभ-

विण्मूत्रे च गृही कुर्य्याद् यद्वा कर्णे समा-
हितः ॥"
इति यमः ॥
यद्येकवस्त्रो यज्ञोपवीतं कर्णे कृत्वा अवगुण्ठित
इति । कर्णे दक्षिणकर्णे । इति सांख्यायनः ॥
"छायायामन्धकारे वा रात्रावहनि वा द्विजः ।
यथासुखमुखः कुर्य्यात् प्राणबाधभयेषु च ॥ * ॥
न मूत्रं पथि कुर्व्वीत न भस्मनि न गोव्रजे ।
न फालकृष्टे न जले न चित्यां न च पर्व्वते ॥
न जीर्णदेवायतने न वल्मीके कदाचन ।
न ससत्त्वेषु गर्त्तेषु न गच्छन्नापि संस्थितः ॥
न नदीतीरमासाद्य न च पर्व्वतमस्तके ।
वाय्वग्निविप्रानादित्यमपः पश्यंस्तथेव गाः ।
न कदाचन कुर्व्वीत विण्मूत्रस्य विसर्जनम् ॥"
इति मनुः । ४ । ४५ -- ४८ ॥ * ॥
"आहारनिर्हारविहारयोगाः
सुसंवृता धर्म्मविदा तु कार्य्याः ।
वाग्गुप्तिकार्य्याणि तपस्तथैव
धनायुषी गुप्ततमे तु कार्य्ये ॥"
इति वशिष्ठः ॥
निर्हारो मूत्रपुरीषोत्सर्गः ॥ * ॥
"सोमाग्न्यर्कांम्बुवायूनां पूज्यानाञ्च न संमुखे ।
कुर्य्यात् ष्ठीवनविण्मूत्रसमुत्सर्गञ्च पण्डितः ॥"
इति विष्णुपुराणम् ॥
न च सोपानत्को मूत्रपुरीषे कुर्य्यादिति ।
इत्यापस्तम्बः ।

| | | |
|---|---|---|
| | यतः बद्ध्वा ।’ इति तद्भाष्ये महीधरः ॥)<br><br>**मूत्र**, त् क प्रस्रावे । इति कविकल्पद्रुमः ॥ (अदन्त<br>चुरा०-उभ०-सक०-सेट् ।) दीर्घी । मूत्रयति<br>मूत्रापयति । इति दुर्गादासः ॥<br><br>**मूत्रं**, क्ली, (मूत्र्यते इति । मूत्र + घञ् । लोका-<br>श्रयत्वात् क्लीवत्वम् । यद्वा, सुच्यते त्यज्यते इति ।<br>मूच + “सिविमुच्योष्टेरू च ।” उणा० ४ । १६२ ।<br>इति ष्ट्रन् किद्भवति । टेरूकारादेशः ।) | |

"करगृहीतपात्रेण कृत्वा मूत्रपुरीयके ।
मूत्रतुल्यन्तु पानीयं पीत्वा चान्द्रायणञ्चरेत् ॥"
इति बृहम्मनुः ॥ * ॥
गृहीतजलपात्रस्य मूत्रोत्मर्गे दोषो यथा, --
"वारिपात्रं करे धृत्वा मूत्रं त्यजति यो नरः ।
सुरापात्रसमं पात्रं तज्जलं मदिरासमम् ॥"
इति कर्म्मलोचनम् ॥ * ॥
सशब्दमूत्रस्य दोषो यथा, --
"निःस्वाः सशब्दमूत्राः स्युर्नृपा निःशब्दधारया ।
भोगाढ्याः समजठरा निःस्वाः स्युर्घट-
सन्निभाः ॥"
इति गारुडे ६३ अध्यायः ॥ * ॥
"विष्णुक्रान्ताजमूत्रेण चौरव्याघ्रादिरक्षणम् ।"
इति तत्रैव १८८ अध्यायः ॥ * ॥ अथ गोमूत्र-
गुणाः । तीक्ष्णत्वम् । उष्णत्वम् । लवणत्वम् ।
पित्तकारित्वम् । कटुत्वम् । लघुत्वम् । रूक्ष-
त्वम् । कृम्युदरानाहशोथार्शोविषकुष्ठनाशि-
त्वञ्च । इति राजवल्लभः ॥

**मूत्रकृच्छ्रं**, क्ली, (मूत्रे कृच्छ्रम् । मूत्रजन्यं
कृच्छ्रमिति वा ।) रोगविशेषः । तत्पर्य्यायः ।
मूत्ररोघः २ अश्मरी ३ कृच्छ्रम् ४ । इति
राजनिर्घण्टः ॥ * ॥ अथ मूत्रकृच्छ्राधिकारः ।
तत्र मूत्रकृच्छ्रस्य विप्रकृष्टं निदानमाह ।
"व्यायामतीक्ष्णौषधरूक्षमद्य-
प्रसङ्गनृत्यद्रुतपृष्ठयानात् ।
आनूपमत्स्याध्यशनादजीर्णात
स्युर्मूत्रकृच्छ्राणि नृणां तथाष्टौ ॥"
तीक्ष्णौषधं राजिकाशूरणादियुक्तम् । रूक्षेति
मद्यविशेषणम् । प्रसङ्गः सततं सेवा । नृत्यं
नर्त्तनम् । नित्येति द्विविधः पाठः । द्रुतपृष्ठ-
यानात् अश्वादिना गमनात् । आनूपं प्रचुर-
जलदेशभवं भक्ष्यम् । अष्टौ वातिकपैत्तिक-
श्लैष्मिकसान्निपातिकशल्यजपुरीषजशुक्रजाश्मरी
जानि । तस्य संप्राप्तिपूर्ब्बकं लक्षणमाह ।
"पृथङ्मलाः स्वैः कुपिता निदानैः
सर्व्वेऽथवा कोपमुपेत्य वस्तौ ।
मूत्रस्य मार्गं परिपीडयन्ति
यदा तदा मूत्रयतीह कृच्छ्रात् ॥"
तेषु वातिकमाह ।
"मूत्रवाहिषु शल्येन क्षतेष्वभिहतेषु वा ।
मूत्रकृच्छ्रं तदाघाताज्जायते
भृशदारुणम् ॥
वातकृच्छ्रेण तुल्यानि तस्य लिङ्गानि
निर्द्दिशेत् ।"
मूत्रवाहिषु स्रोतःसु । शल्येन कण्टकेन
। क्षतेषु
सक्षतीकृतेषु अथवा अभिहतेषु
मुद्गरादिभि-
रभिहतेषु । तदाघातात्
मूत्रमार्गाघातात्
मूत्रकृच्छ्रं जायते । भृशदारुणं मारकं
तस्य
शल्यजस्य ॥ * ॥ पुरीषजमाह ।
"शकृतस्तु प्रतीघाताद्वायुर्विगुणतां
गतः ।
आध्मानं वातशूलञ्च मूत्रकृच्छ्रं करोति
च ॥"
प्रतीघातात् निरोधात् । विगुणतां
दुष्टताम् ॥
शुक्रजमाह ।
"शुक्रदोषैरुपहते मूत्रमार्गे विधारिते ।
सशुक्रं मूत्रयेत्
कृच्छ्राद्वस्तिमेहनशूलवान् ॥"
उपहते दूषिते ॥ * ॥ अश्मरीजमाह ।
अश्मरी-
हेतुकञ्चापि मूत्रकृच्छ्रमुदाहृतम् ।
सुश्रुतैः
शर्कराजमपि मूत्रकृच्छ्रमुक्तमत्र तु तस्य
नव-
संख्यानिरासार्थमश्मरीशर्करयोः
साम्यमाह ।
"अश्मरी शर्करा चैव
तुल्यसम्भवलक्षणे ।
विशेषणं शर्करायाः शृणु कीर्तयतो मम
॥"
सम्भवः कारणम् ।
"पच्यमानाश्मरी पित्ताच्छोष्यमाणा च
वायुना ।
क्वाथो गोक्षुरबीजस्य
यवक्षारसमन्वितः ।
पीतः प्रशमयत्येव कृच्छ्रं
विड्धारणोत्थितम् ॥ ६ ॥
त्रिफलायाः सुपिष्टायाः कल्कं
कोलसमन्वितम् ।
वारिणा लवणीकृत्य
पिबेन्मूत्ररुजापहम् ॥" ७ ॥
कोलं वदरम् ।
गुडमामलकं वृष्यं श्रमघ्नं तर्पणं
प्रियम् ।
पित्तासृग्दाहशूलघ्नं मूत्रकृच्छ्रहरं
परम् ॥ ८ ॥
सपादशाणतुलितो यवक्षारः
सितायुतः ।
भक्षितो नाशयत्येव मूत्रकृच्छ्रं न
संशयः ॥ ९ ॥
द्राक्षासितोपलाकल्कः पीतः
कर्षमितो नरैः ।
मस्तुना पलमात्रेण मूत्रकृच्छ्रं
व्यपोहति ॥ १० ॥
समूलगोक्षुरक्वाथः
सितामाक्षिकसंयुतः ।
नाशयेन्मूत्रकृच्छ्राणि
तथैवोष्णसमीरणम् ॥" ११ ॥
उष्णसमीरणं उष्णवातं
मूत्राघातविशेषम् ।
इति भावप्रकाशः ॥ (तथास्य
चिकित्सा-
प्रकारान्तरम् ।
"सुशीतलं जलं कर्षमात्रं स्यात्
मूत्रकृच्छ्रहृत् ।
दध्यम्बुना च संमिश्रमयश्चूर्णं
सुखप्रदम् ॥
मूत्रकृच्छ्रे यवक्षारचूर्णं हिङ्गुप्रयोजितम्
।
कुष्माण्डञ्च समादाय शर्करासहितं
पिबेत् ॥

"तीव्रा रुजो वङ्क्षणवस्तिमेढ्रे
स्वल्पं मुहुर्मूत्रयतीह वातात् ।"
तीव्रा मारणात्मिका वङ्क्षणावूरुमेढ्राणामन्त-
रालसन्धी ॥ * ॥ पैत्तिकमाह ।
"पीतं सरक्तं सरुजं सदाहं
कृच्छ्रं मुहुर्मूत्रयतीह पित्तात् ।"
कृच्छ्रमिति क्रियाविशेषणम् ॥ श्लैष्मिकमाह ।
"वस्तेः सलिङ्गस्य गुरुत्वशोथौ
मूत्रं सपिच्छं कफमूत्रकृच्छ्रे ।"
सपिच्छं पिच्छिलम् ॥ सान्निपातिकमाह ।
सर्व्वाणि रूपाणि च सन्निपातात्
भवन्ति तत् कृच्छ्रतमं हि कृच्छ्रम् ॥"
कृच्छ्रं मूत्रकृच्छ्रम् ॥ * ॥ शल्यजमाह ।

विमुक्तकफसन्धाना क्षरन्ती शर्करा
मता ॥"
पित्तेन पच्यमाना मूत्रशुक्रश्लेष्मसंहतिः
प्रथमं
पित्तेन बन्धनकर्म्मणा पच्यमाना ।
पश्चाद्वातेन
शोषिता कफेनाश्लिष्टा अश्मरी । सैव
विमुक्त
कफसन्धाना त्यक्तकफाश्लेषा सती
शर्करारूपा
मूत्रमार्गात् क्षरन्ती शर्करा मता ।
एतावता
किञ्चिदेव भेदः ॥ * ॥ शर्कराया
उपद्रवानाह ।
"हृत्पीडा वेपथुः शूलं कुक्षावग्निश्च
दुर्बलः ।
तया भवति मूर्च्छा च मूत्रकृच्छ्रञ्च
दारुणम् ॥"
शूलं कुक्षावित्यन्वयः । तया शर्करया
॥ * ॥
अथ मूत्रकृच्छ्रस्य चिकित्सा ।
"त्रिकण्टकारग्वधदर्भकाश-
यवासधात्रीगिरिभिद्पथ्याः ।
विघ्नन्ति पीता मधुनाश्मरीञ्च
समीपमृत्योरपि मूत्रकृच्छ्रम् ॥"
त्रिकण्टादिक्वाथः ॥ १ ॥
"एलाश्मभेदकशिलाजतुगोक्षुराणा-
मेर्व्वारुबीजलवणोत्तमकुङ्कुमानाम् ।
चूर्णानि तण्डुलजले तुलितानि पीत्वा
प्रत्यक्षमृत्युरपि जीवति मूत्रकृच्छ्री ॥"
एलादिचूणम् ॥ २ ॥
"अयोरजः सूक्ष्मपिष्टं मधुना सह
योजितम् ।
मूत्रकृच्छ्रं निहन्त्याशु संलीढं
दिवसत्रयात् ॥ ३ ॥
गुडेन मिश्रितं क्षीरं कटूष्णं कामतः
पिबेत् ।
मूत्रकृच्छ्रेषु सर्व्वेषु शर्करायाञ्च नित्यश
॥ ४ ॥
धात्रीरसञ्चेक्षुरसं पिबेद्वा
कृच्छ्रे सरक्ते मधुना निमिश्रम् ।

यो हि
त्रिदोषसम्भूतमूत्रकृच्छ्रनिवारणः ॥"
"आरग्वधफलं मूलं दुरालभा
धान्यकशता-
वर्य्यः ।
पाषाणभेदपथ्ये क्वाथोऽयं मूत्रकृच्छ्रे
स्यात् ॥"
इति हारीते चिकित्सितस्थाने २९
अध्याये ॥
अथात्र पथ्यानि ।
"अथो यथादोषमयं गणोऽपि
पुरातना लोहितशालयश्च ।
तक्रं पयो दध्यपि गोप्रसूतं
धन्वामिषं मुद्गरसाः सिता च ॥
पुराणकुष्माण्डफलं पटोलं
महार्द्रकं गोक्षुरकः कुमारी ।
गुवाकखर्ज्जूरकनारिकेल-
तालद्रुमाणाञ्च शिरांसि पथ्या ॥
तालास्थिमज्जात्रपुषं त्रुटिश्च
शीतानि पानान्यशनानि चापि ।
प्रनीरनीरं हिमबालुका च
मित्रं नृणां स्यात् सति मूत्रकृच्छ्रे ॥"
अथापथ्यानि ।
"मद्यं श्रमं निधुवनं गजवाजियानं
सर्व्वं विरुद्धमशनं विषमाशनञ्च ।
ताम्बूलमत्स्यलवणार्द्रकतैलभृष्टं
पिन्याकहिङ्गुतिलसर्षपवेगरोधान् ॥
माषान् करीरमतितीक्ष्ण विदाहिरूक्ष-
मम्लञ्च मुञ्चतु जनः सति मूत्रकृच्छ्रे
॥"
इति वैद्यकपथ्यापथ्यविधिग्रन्थे
मूत्रकृच्छ्राधि-
कारे ॥)

**मूत्रदोषः**, पुं, (मूत्रस्य दोषो यस्मात् ।) प्रमेहः ।
इति राजनिर्घण्टः ॥ (यथा, सुश्रुते ।
सूत्र-
स्थाने ३८ अः ।
"परुषकादिरित्येष
गणोऽनिलविनाशनः ।
मूत्रदोषहरो हृद्यः पिपासावो रुचिप्रदः
॥"

|  | शल्याभिघातोत्थितमूत्रकृच्छ्रे<br>कार्य्या क्रिया मारुतकृच्छ्रतुल्या ॥ ५ ॥ |  |
| --- | --- | --- |

मूत्राघातादिः । अस्य चिकित्सा यथा, --
“निदिग्धिकायाः स्वरसं पिबेत् कुडवसम्मितम् ।
मूत्रदोषहरं कल्कमथवा क्षौद्रसंयुतम् ॥”
“अत ऊद्‌र्ध्वं प्रवक्ष्यामि मूत्रदोषे क्रमं हितम् ।
स्नेहस्वेदोपपन्नानां हितन्तेषु विरेचनम् ॥
ततः संशुद्धदेहानां हिताश्चोत्तरवस्तयः ॥”
“क्षौद्रार्द्धपात्रं दत्त्वा तु पात्रन्तु क्षीरसर्पिषोः ।
स्वयङ्गुप्ताफलञ्चैव तथैव क्षुरकस्य च ॥
पिप्पलीचूर्णसंयुक्तमर्द्धभागं प्रदापयेत् ।
एतदैकध्यमानीय खजेनाभिप्रमन्थयेत् ॥
तस्य पाणितलं चूर्णं लीढ्वा क्षीरं ततः पिबेत् ।
एतत्सर्पिः प्रयुञ्जानः शुद्धदेहो नरः सदा ॥
मूत्रदोषान् जयेत् सर्व्वानन्ययोगैः सुदुर्ज्जयान् ।
जयेत् शोणितदोषांश्च बन्ध्या गर्भं लभेत च ।
नारी चैतत् प्रयुञ्जाना योनिदोषात् प्रमुच्यते ॥”
इत्युत्तरतन्त्रेऽष्टपञ्चाशत्तमेऽध्याये सुश्रुतेनोक्तम् ॥)

**मूत्रनिरोधः**, पुं, (मूत्रस्य निरोधः । यद्वा मूत्रं
निरुणद्धीति । रुध् + अण् ।) मूत्रप्रतिबन्धक-
रोगविशेषः । अस्य चिकित्सा यथा, --
“पिष्टं वै मालतीमूलं ग्रीष्मकाले समाहृतम् ।
साधितं छागदुग्धेन पीतं शर्करयान्वितम् ।
हरेन्मूत्रनिरोधञ्च हरेद्वै पाण्डुशर्कराम् ॥”
इति गारुडे १९१ अध्यायः ॥
(चिकित्सान्तरं यथा, --
“तैलेन पद्मिनीकन्दं पक्वगोमूत्रमिश्रितम् ।
पिबेन्मूत्रनिरोधे तु सतीव्रवेदनान्विते ॥”
इति हारीते चिकित्सितस्थाने त्रिंशेऽध्याये ॥)

**मूत्रपतनः**, पुं, (मूत्रस्य पतनमस्मात् पुरीष-
निरोधकरणादस्य सततमूत्रपतनात् तथा-
त्वम् ।) गन्धमार्जारः । इति राजनिर्घण्टः ॥

**मूत्रपुटं**, क्ली, (मूत्रस्य पुटम् ।) नाभेरधो भागः ।
यथा, --
“नाभेरधो मूत्रपुटं वस्तिर्मूत्राशयोऽपि च ।”
इति हेमचन्द्रः । ३ । २७० ॥

**मूत्रफला**, स्त्री, (मूत्रं मूत्रवर्द्धनं फलं परिणमन-

विघाताद्यैः कुपितैर्दोषैरित्यन्वयः ।
ननु मूत्र-
कृच्छ्रमूत्राघातयोः को भेदः । उच्यते
। मूत्र-
कृच्छ्रे कृच्छ्रमधिकं विबन्धोऽल्पः ।
मूत्राघाते तु
विबन्धो बलवान् कृच्छ्रमल्पं
इत्यनयोर्भेदः ॥ * ॥
वातकुण्डलिकाया निदानं संप्राप्तिं
लक्षण-
ञ्चाह ।
“रौक्ष्याद्वेगविघाताद्वा वायुर्व्वस्तौ
सवेदनः ।
मूत्रमाविश्य चरति विगुणः
कुण्डलीकृतः ॥
मूत्रमल्पाल्पमथवा सरुजं संप्रवर्त्तते ।
वातकुण्डलिकां तान्तु व्याधिं विद्यात्
सुदा-
रुणम् ॥”
रौक्ष्यात् कायस्य । वेगविघातात्
मूत्रादि-
वेगनिरोधात् आविश्य प्रावृत्य
रौक्ष्यादिभि-
र्वेगविघातादिभिश्च विगुणो दुष्टः
कुण्डलीकृतो
वायुर्वस्तौ मूत्राशये चरति प्रतिधावति
आबद्धत्वादभ्रमंस्तिष्ठति इत्यर्थः ।
वात्यावत् ।
मूत्रमिति तस्मान्मूत्रमल्पमल्पं सव्यथं
प्रवर्त्तते ।
तद्‌व्याधिं वातकुण्डलिकामाहुः ।
सुदारुणम् ।
मारणात्मकत्वात् ॥ १ ॥ * ॥
अष्ठीलामाह ।
“आध्मापयन् वस्तिगुदं रुद्‌ध्वा
वातश्चलोन्नताम् ।
कुर्य्यात्तीव्रार्त्तिमष्ठीलां
मूत्रविण्मार्गरोधिनीम् ॥”

स्यात् सरक्तं सत् वा प्रवर्त्तते । प्रवाहत
इति
कण्ठहृद्बलेन सशब्दं मूत्रपुरीषवातानामधः
प्रेरणं प्रवाहनं तेन कुपितेन वायुना
वस्त्यादि-
भेदात् सरक्तं मूत्रं स्रवेदित्यर्थः ॥ ६ ॥
मूत्रक्षय-
माह ।
“रूक्षस्य क्लान्तदेहस्य वस्तिस्थौ
पित्तमारुतौ ।
मूत्रक्षयं सरुग्दाहं जनयेतां तदाह्वयम् ॥”
क्लान्तदेहस्य म्लानदेहस्य तदाह्वयं
मूत्रक्षय-
संज्ञम् ॥ ७ ॥ मूत्रग्रन्थिमाह ।
“अन्तर्व्वस्तिमुखे वृत्तः स्थिरोऽल्पः
सहसा भवेत् ।
अश्मरीतुल्यरुग्ग्रन्थिर्मूत्रग्रन्थिः स उच्यते
॥”
अन्तर्व्वस्तिसुखे वस्तिमुखस्याभ्यन्तरे
अल्पः
क्षुद्रामलकप्रमाणः । नन्वस्य अश्मर्य्या
सह को
भेदः । उचय्ते । अश्मरी क्रमशः सञ्चयेन
स्यादयन्तु सहसा भवेदिति भेदः । अपरो
भेदः । अश्मर्य्यां पित्तादिकं संहन्यते अत्र
तु
रक्तमेव । यत उक्तं तन्त्रान्तरे ।
“रक्तं वातकफाद्दुष्टं वस्तिद्वारे सुदारुणम् ।
ग्रन्थिं कुर्य्यात् स कृच्छ्रेण सृजेन्मूत्रं तदा-
वृतम् ॥” ८ ॥ इति ॥
मूत्रशुक्रमाह ।
“मूत्रितस्य स्त्रियं यातो वायुना
शुक्रमुद्‌गतम् ।
स्थानच्युतं मूत्रयतः प्राक् पश्चाद्वा
प्रवर्त्तते ।
भस्मोदकप्रतीकाशं मूत्रशुक्रं तदुच्यते ॥”
मूत्रितस्य मूत्रवेगयुक्तस्य शुक्रं स्थानात्
च्युतं

मस्याः ।) कर्कटी । त्रपुषी । इति राजनिर्घण्टः ॥

(कर्कटीत्रपुषीशब्दयोरस्या विषयो ज्ञेयः ॥)

**मूत्रलं**, क्ली, (मूत्रं लाति आदत्ते वर्द्धयतीत्यर्थः । ला + कः ।) त्रपुषम् । इति शब्दचन्द्रिका ॥ मूत्रवर्द्धके, त्रि ॥ (यथा, सुश्रुते । सूत्र-स्थाने । ४५ अः ।

"जाम्बवो बद्धनिस्यन्दस्तुवरो वातकोपनः ।
तीक्ष्णः सुरासवो हृद्यो मूत्रलः कफवातनुत् ॥")

**मूत्रला**, स्त्री, (मूत्रल + टाप् ।) कर्कटी । इति त्रिकाण्डशेषः ॥ बालुकी । इति राजनिर्घण्टः ॥

**मूत्राघातः**, पुं, (मूत्रस्याघातो निरोधो येन ।) प्रस्रावरोधकरोगविशेषः । अथ मूत्राघातस्य विप्रकृष्ट सन्निकृष्टञ्च निदानं संख्याञ्चाह ।

"प्रायोमूत्रविघाताद्यैर्व्वातकुण्डलिकादयः ।
जायन्ते कुपितैर्दोषैर्मूत्राघातास्त्रयोदश ॥"

मूत्रविघाताद्यैरित्याद्यशब्देन पुरीषशुक्रादिवेग-विघातानां रूक्षाशनादीनाञ्च ग्रहणम् । मूत्र-वातः वस्तिगुदं रुद्ध्वा अर्थात् तदन्तर्गतं मूत्रं मलञ्च निरुध्य वस्तिगुदं वस्तिं गुदञ्च आध्मा-पयन् आध्मानं कुर्व्वन् अष्ठीलां ष्ठीलातुल्यां व्याधिं कुर्य्यात् । चलोन्नतां चलां उन्नताञ्च ॥ २ ॥ वातवस्तिमाह ।

"वेगं विधारयेद्यस्तु मूत्रस्याकुशलो नरः ।
निरुणद्धि मुखं तस्य वस्तेर्वस्तिगतोऽनिलः ॥
मूत्रसङ्गो भवेत्तेन वस्तिकुक्षिनिपीडितः ।
वातवस्तिः स विज्ञेयो व्याधिः कष्टप्रसाधनः ॥"

अकुशलो मूर्खः । तस्य पुरुषस्य वस्तिमुखं निरुणद्धि वस्तिगतो वायुः । तेन वायुना मूत्रसङ्गो मूत्रविघातो भवति वस्तिकुक्षिनिपी-डित इति वस्तौ कुक्षौ च निपीडितः संपी-डितो वायुरिति सम्बन्धः ॥ ३ ॥ मूत्रातीतमाह ।

"चिरं धारयते मूत्रं त्वरया न प्रवर्त्तते ।
मेहमानस्य मन्दं वा मूत्रातीतः स उच्यते ॥"

मेहमानस्य मूत्रमुत्सृजतः । मन्दं वा अल्पं वा ॥ ४ ॥ * ॥ मूत्रजठरमाह ।

"मूत्रस्य वेगेऽभिहते तदुदावर्त्तहेतुकः ।
अपानः कुपितो वायुरुदरं पूरयेद्भृशम् ॥
नाभेरधस्तादाध्मानं जनयेत्तीव्रवेदनाम् ।
तं मूत्रजठरं विद्यादधोवस्तिनिरोधनम् ॥"

पश्चाद्वायुना उद्गतं ऊद्ध्वं नीतम् । भस्मोदक-प्रतीकाशं भस्मसहितजलसदृशम् । ९ ॥ उष्ण-वातमाह ।

"व्यायामाध्वातपैः पित्तं वस्तिं प्राप्यानिला-वृतम् ।
वस्तिं मेढ्रं गुदञ्चैव प्रदहत् स्रावयेदधः ॥
मूत्रं हारिद्रमथवा सरक्तं रक्तमेव वा ।
कृच्छ्रं पुनः पुनर्जन्तोरुष्णवातं वदन्ति तम् ॥"

व्यायामादिविरोधत्वेन सौम्यधातुक्षयात् तेजो-वृद्ध्या पित्तवृद्धिः स्यात्तत्कुपितं पित्तं असंयुतं वस्तिं प्राप्य वस्त्यादिकं प्रदहत् मूत्रमधः स्रावयेत् । कीदृशं हारिद्रं अथवा सरक्तं ईषल्लोहितम् ॥ १० ॥ मूत्रसादमाह ।

"पित्तं कफो द्वावपि वा संहन्येतेऽनिलेन चेत् ।
कृच्छ्रान्मूत्रं तदा पीतं रक्तं श्वेतं घनं सृजेत् ॥
सरक्तं रोचनाशङ्खचूर्णवर्णं भवेत्ततः ।
शुष्कं समस्तवर्णं वा मूत्रसादं वदन्ति हि ॥"

संहन्येते घनीक्रियेते । शुष्कं अल्पं समस्तवर्णं उक्तसकलवर्णयुक्तम् ॥ ११ ॥ विड्विघातमाह ।

"रूक्षदुर्ब्बलयोर्घातेनोदावृत्तं शकृद् यदा ।
मूत्रस्रोतोऽनुपद्येत विट्संसृष्टं तदा नरः ॥
विड्गन्धं मूत्रयेत् कृच्छ्राद्विड्विघातं तमा-दिशेत् ॥"

उदावृत्तं ऊद्ध्वं नीतं विड्गन्धं वा । वाशब्दो-ऽत्र योजनीयः ॥ १२ ॥ * ॥ वस्तिकुण्डलमाह ।

"द्रुताध्वलङ्घनायासैरभिघातात् प्रपीडनात् ।

|  | तदुदावर्त्तहेतुक इति<br>मूत्रवेगधारणगणितो-<br>दावर्त्तनिदानमाध्मानं कुर्य्यात् ।<br>अधोवस्ति-<br>निरोधनं वस्तेरधोदेशे<br>विबन्धकारकम् ॥ ५ ॥<br>मूत्रोत्सङ्गमाह ।<br>“वस्तौ वाप्यथवा नाले मणौ वा यस्य देहिनः ।<br>मूत्रं प्रवृत्तं सज्येत सरक्तं वा प्रवाहतः ॥<br>स्रवेच्छनैरल्पमल्पं सरुजं वाथ नीरुजम् ।<br>विगुणानिलजो व्याधिः स मूत्रोत्सङ्गसंज्ञितः ॥<br>नाले मेढ्रे मणौ मेहनाग्रग्रन्थौ सज्येत निरुद्धं | स्वस्थानाद्वस्तिरुद्वृत्तः स्थूलस्तिष्ठति गर्भवत् ॥ |
|---|---|---|

शूलस्यन्दनदाहार्त्तो बिन्दुबिन्दु स्रवत्यपि ।
पीडितस्तु सृजेद्धारां संस्तम्भोद्वेष्टनार्त्तिमान्
॥
वस्तिकुण्डलमाहुस्तं घोरं शस्त्रविषोपमम् ।
पवनप्रबलं प्रायो दुर्निरोधमबुद्धिभिः ॥
तस्मिन् पित्तान्विते दाहः शूलं मूत्रविवर्णता ।
श्लेष्मणा गौरवं शोथो मूत्रं स्निग्धं घनं
सितम् ॥”
द्रुताध्वलङ्घनं शीघ्रं मार्गचलनम् । उद्वृत्तः
उत्थितः । स्यन्दनं किञ्चिच्चलनम् । घोरं
मारकम् । शस्त्रविषोपमं शस्त्रं खडगादि
तद्वच्छीघ्रमारकम् । विषमत्र गरः तद्वत्
विलम्बमारकम् । एतावता मारकमवश्यं
शीघ्रं
विलम्बेन वा ॥ १३ ॥ * ॥ तस्यैवासाध्यस्य
च
लक्षणमाह ।
“श्लेष्मरुद्धविलो वस्तिः पित्तोदीर्णो न
सिध्यति ।
अविभ्रान्तविलः साध्यो न च यः
कुण्डलीकृतः ॥
स्याद्वस्तौ कुण्डलीभूते तृण्मोहः श्वास एव
च ॥”
विलं वस्तिमुखरन्ध्रं पित्तोदीर्णः पित्तेनोद्धतः
।
अविभ्रान्तविलः कफेनावृतविलः पश्चात्
कुण्डली-
कृतः स साध्यः । एतेन
कुण्डलीभूतोऽसाध्यः ।
कुण्डलीभूतस्य लक्षणमाह । तृडित्यादि-
कुण्डलीभूतस्यायमर्थः । कफेन
विलावरोधा-
त्तत्र वातः कुण्डलाकारेण तिष्ठतीत्यर्थः ॥ *
॥
अथ मूत्राघातस्य चिकित्सा ।
“नलकुशकाशेक्षुबलाक्वाथं प्रातः सुशीतलं
ससितम् ।
पिबतो नश्यति नियतं मूत्रग्रह इत्युवाच
कविः ॥”
महार्द्रकं तालफलास्थिमज्जा
हरीतकीकोमलनारिकेलम् ॥
गुवाकखर्ज्जूरकनारिकेल-
तालद्रुमाणामपि मस्तकानि ।
यथामलं सर्व्वमिदञ्च मूत्रा-
घातातुराणां हितमावहन्ति ॥
विरुद्धानि च सर्व्वाणि व्यायामं
मार्गशीलनम् ।
रूक्षं विदाहिविष्टम्भिव्यायामं वेगधारणम् ।
करीरं वमनञ्चापि मूत्राघाती विवर्ज्जयेत् ॥”
इति वैद्यकपथ्यापथ्यविधिग्रन्थे
मूत्राघाताधि-
कारे ॥)

**मूत्राशयः**, पुं, (मूत्रस्याशयः आधारः ।) नाभे-
रधोदेशः । तत्पर्य्यायः । मूत्रपुटम् २
वस्तिः ३ ।
इति हेमचन्द्रः । २ । २७० ॥ (अथास्य
विषयः ।
“मूत्राशये वा गुदमुष्कयोश्च
शोफो रुजा मूत्रविनिग्रहश्च ॥”
इति सुश्रुते उत्तरतन्त्रे ५५ अध्यायः ॥
यथा च तत्रैव निदानस्थाने ३ अध्याये ।
“एकसम्बन्धिनो ह्येते
गुदास्थिविवरस्थिताः ।
मूत्राशयो मलाधारः प्राणायतनमुत्तमम् ॥”)

**मूत्रितः**, त्रि, (मूत्रमस्य संजातम् । मूत्र +
इतच् । यद्वा मूत्रयति स्म इति । मूत्र + क्तः
।)
कृतमूत्रोत्सर्गः । तत्पर्य्यायः । मीढः २ ।
इत्य-
मरः । ३ । १ । ९६ ॥

**मूर्खः**, पुं, (मुह् + “मुहेः खो मूर् च ।” उणा०
५ । २२ । इति खः धातोः मूरादेशश्च ।)
माषः ।
इति त्रिकाण्डशेषः ॥ गायत्त्रीरहितः ।
यथा,
“क्रियाहीनस्य मूर्खस्य महारोगिण एव च ।

**मूर्खता**, स्त्री, (मूर्खस्य भावः । मूर्ख + “तस्य
भावस्त्वतलौ ।” ५ । १ । ११९ । इति
तल्
टाप् ।) मूर्खत्वम् । यथा, --
“अदाता वंशदोषेण कर्म्मदोषाद्दरिद्रता ।
उन्मादो मातृदोषेण पितृदोषेण मूर्खता
॥”
इति चाणक्यम् ॥
“अष्टम्यां नारिकेलभक्षणे मूर्खत्वं यथा,
--
“कलङ्की जायते विल्वे तिर्य्यग् योनिश्च
निम्बके ।
ताले शरीरनाशः स्यान्नारिकेले च
मूर्खता ॥”
इति तिथ्यादितत्त्वम् ॥

**मूर्खभ्रातृकः**, पुं, (मूर्खो भ्रातास्येति नित्यं कप् ।)
मूर्खो भ्राता यस्य सः । इति
सिद्धान्तकौमुदी ॥

**मूर्च्छना**, स्त्री, (मूर्च्छि + युच् । टाप् ।) गीताङ्ग-
विशेषः । सा तु ग्रामस्य सप्तमभागः ।
तस्या
लक्षणं एकविंशतिनामानि च यथा, --
“स्वरः संमूर्च्छितो यत्र रागतां
प्रतिपद्यते ।
मूर्च्छनामिति तामाहुः कवयो
ग्रामसम्भवाम् ॥
ललिता मध्यमा चित्रा रोहिणी च
मतङ्गजा ।
सौवीरी षण्डमध्या च
षड्जमध्यमपञ्चमा ॥
मत्सरी मृदुमध्या च शुद्धान्ता च
कलावती ।
तीव्रा रौद्री तथा ब्राह्मी वैष्णवी स्वेदरी
सुरा ॥
नादावती विशाला च त्रिषु यामेषु
विश्रुताः ।
एकविंशतिरित्युक्ता मूर्च्छना
चन्द्रमौलिना ॥

कविः शुक्रः ।
"कर्पूररजसा युक्ता वस्त्रवर्त्तिः शनैः शनैः ।
मेढ्रमार्गान्तरे न्यस्ता मूत्राघातं व्यपोहति ॥
धान्यगोक्षुरकः क्वाथः कल्कसिद्धं हितं घृतम् ।
मूत्राघाते मूत्रकृच्छ्रे शुक्रदोषे च दारुणे ॥"
धान्यगोक्षुरकं घृतम् ।
"मूत्रकृच्छ्रेऽश्मरीरोगे भेषजं यत् प्रकीर्त्तितम् ।
मूत्राघातेषु सर्व्वेषु तत् कुर्य्याद्देशकालवित् ॥"
इति मूत्राघाताधिकारः । इति भावप्रकाशः ॥
गरुडपुराणोक्तनिदानं तस्य १६३ अध्याये द्रष्टव्यम् ॥ (तथास्य विषयः ।
"वस्तिवस्तिशिरोमेढ्रकटीवृषणपायवः ।
एकसम्बन्धनाः प्रोक्ता गुदास्थिविवराश्रयाः ॥
अधोमुखोऽपि वस्तिर्हि मूत्रवाहिसिरामुखैः ।
पार्श्वेभ्यः पूर्य्यते सूक्ष्मैः स्यन्दमानैरनारतम् ॥
यैस्तैरेव प्रविश्यैनं दोषाः कुर्व्वन्ति विंशतिम् ।
मूत्राघातान् प्रमेहांश्च
कृच्छ्रान्मर्म्मसमाश्रयान् ॥"
इति वाग्भटे निदानस्थाने नवमेऽध्याये ॥
अथास्य पथ्यापथ्यानि ।
"अभ्यञ्जनस्नेहविरेकवस्ति-
स्वेदावगाहोत्तरवस्तयश्च ।
पुरातना लोहितशालयश्च
मांसानि धन्वप्रभवानि मद्यम् ॥
तक्रं पयोदध्यपि माषयूषः
पुराणकुष्माण्डफलं पटोलम् ।
यथेष्टाचरणस्याहुर्म्मरणान्तमशौचकम् ॥
क्रियाहीनस्य
नित्यनैमित्तिकक्रियाननुष्ठायिनः ।
मूर्खस्य गायत्त्रीरहितस्य ।
सार्थगायत्त्रीरहि-
तस्येति रुद्रधरः ॥ महारोगिणः पापरोगा-
ष्टकान्यतमरोगवतः ते च उन्मादस्त्वग्दोषो
राजयक्ष्मा श्वासो मधुमेहो भगन्दरः ।
उदरो-
ऽश्मरीत्यष्टौ पापरोगा नारदोक्ताः । यथेष्टा-
चरणस्य द्यूतवेश्याद्यासक्तस्य । इति शुद्धि-
तत्त्वम् ॥

**मूर्खः**, त्रि, (मुह् + खः । मूरादेशः ।) मुह्यति
यः । तत्पर्य्यायः । अज्ञः २ मूढः ३
यथाजातः
४ वैधेयः ५ वालिशः ६ । इत्यमरः । ३ ।
१ । ४८ ॥
तस्य वशीकरणोपायो यथा, --
"मित्रं स्वच्छतया रिपुं नयबलैर्लुब्धं
धनैरीश्वरं
कार्य्येण द्विजमादरेण युवतीं प्रेम्णा गुणै-
र्बान्धवान् ।
अत्युग्रं स्तुतिभिर्गुरुं प्रणतिभिर्मूर्खं कथाभि
र्बुधं
विद्याभी रसिकं रसेन सकलं शीलेन
कुर्य्याद्-
वशम् ॥"
इति नवरत्नानि ॥
"पयःपानं भुजङ्गानां केवलं विषवर्द्धनम् ।
उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये ॥"
इति हितोपदेशः ॥
मूर्च्छनां कलयतो मुरशत्रो-
र्वंशिकाध्वनिविशेषवितानैः ।
मूर्च्छनां ययुरनङ्गशरौघै-
रङ्गना रतिपतेरिव सेनाः ॥"
इति सङ्गीतदामोदरः ॥
हनूमन्मते षड्जादिस्वरत
ऋषभादिस्वरोत्थाने
यत्र स्वरो विरमति सा मूर्च्छना ।
भरतमते
वाद्यस्य गानस्य वा समये यत्र हस्तस्य
गलस्य
वा कम्पनं सा मूर्च्छना । सा
एकविंशति-
प्रकारा । तत्र षड्जग्रामस्य मूर्च्छना
ललिता
१ मध्यमा २ चित्रा ३ रोहिणी ४
मतङ्गजा
५ सौवीरो ६ षण्डमध्या च ७ ।
मध्यमग्रामस्य
मूर्च्छना पञ्चमा १ मत्सरी २ मृदुमध्या
३
शुद्धा ४ अन्ता ५ कलावती ६ तीव्रा च
७ ॥
गान्धारग्रामस्य मूर्च्छना रौद्री १ ब्राह्मी
२
वैष्णवी ३ स्वेदरी ४ सुरा ५ नादावती
६
विशाला च ७ । इति सङ्गीतशास्त्रम् ॥

**मूर्च्छा**, स्त्री, (मूर्च्छ् + "गुरोश्च हलः ।" ३ । ३ ।
१०३ । इति अः टाप् ।) संमोहः ।
तत्पर्य्यायः ।
कश्मलम् २ मोहः ३ । इत्यमरः । २ ।
८ । १०९ ।
मूर्च्छनम् ४ । इति शब्दरत्नावली ॥
मूर्च्छायः
५ । अथ मूर्च्छाधिकारः । तत्र मूर्च्छाया
निदानपूर्ब्बिकां संप्राप्तिमाह ।
"क्षीणस्य बहुदोषस्य विरुद्धाहारसेविनः ।
वेगाघातादभिघाताद्धीनसत्त्वस्यवा
पुनः ॥

| | | |
|---|---|---|
| | | करणायतनेषूग्रा वाह्येष्वभ्यन्तरेषु च । निविशन्ते यदा दोषास्तदा मूर्च्छन्ति मानवाः ॥" बहुदोषस्य अधिकदोषस्य । न त्वनेकदोषस्य तदा मूर्च्छा त्रिदोषजैव स्यात् तथवास्तु को |

दोषः तन्न । पृथग्दोषजानां
मूर्च्छानां वक्ष्य-
माणत्वात् । वेगाघातात् मलादौ
अभिघातात्
लगुडादिना हीनसत्त्वस्य
स्वल्पसत्त्वगुणस्य
अर्थादधिकतमोगुणस्य यत उक्तं
मूर्च्छा पित्त-
तमःप्रायेति करणायतनेषु करणं
मनस्तस्या-
यतनेषु स्थानेषु वाह्येषु
कर्म्मेन्द्रियेषु । अभ्यन्त-
रेषु बुद्धीन्द्रियेषु ॥ * ॥ सामान्यं
लक्षणमाह ।
"संज्ञावहासु नाडीषु
पिहितास्वनिलादिभिः ।
तमोऽभ्युपैति सहसा
सुखदुःखव्यपोहकृत् ॥
सुखदुःखव्यपोहाच्च नरः पतति
काष्ठवत् ।
मोहो मूर्च्छेति तां प्राहुः सड्विधा
सा प्रकी-
र्त्तिता ॥"
तमोगुणः अज्ञानहेतुः । अभ्युपैति
आगच्छति ।
सुखदुःखव्यपोहकृत्
सुखदुःखज्ञाननाशकरम् ।
नष्टे सुखदुःखज्ञाने नरः काष्ठवत्
पतति तां
मोहो मूर्च्छेति प्राहुरित्यन्वयः ।
मूर्च्छाया
मूर्च्छायोऽपि पर्य्यायः । यत उक्तम्
।
"संज्ञोपघातो मूर्च्छायो मूर्च्छा
स्यान्मूर्च्छनं
तथा ।
कश्मलं प्रलयो मोहः संन्यासस्तु
मृतोपमः ॥"
इति ॥

स जन्तुं पातयत्याशु विना बीभत्सचेष्टितैः
॥"
अपस्मार इव तेन महताभिघातेन पतात
चिरेण प्रतिबुध्यते । तर्हि तयोः को भेद
इत्यत
आह । स सान्निपातिको मूर्च्छायः विना
बीभत्स-
चेष्ठितैः
फेनवमनदन्तघट्टनाक्षिविकृत्यादिभिः
विना पातयति ॥ * ॥ रक्तजाया मूर्च्छाया
निदानमाह ।
"पृथिव्यम्भस्तमोरूपं रक्तगन्धस्तदन्वयः ।
तस्माद्रक्तस्य गन्धेन मूर्च्छन्ति भुवि मानवाः
॥"
तमोरूपं तमोबहुलम् । मानवाश्च ये तामसाः
न तु सात्त्विका राजसाश्च । अत्रैके वदन्ति
नैषा युक्तिः समीचीना तर्हि चम्पकादिगन्धे-
नापि मूर्च्छा प्रसज्येत तत्रापि गन्धस्य
पार्थिव-
त्वात् । अत आह ।
"द्रव्यस्वभाव इत्येके यद्दृष्ट्वापि विमुह्यति
।"
अत्राह भोजः ।
"दर्शनादसृजस्तज्जाद्गन्धाच्चैव प्रमुह्यति
॥"
रक्तेन मूर्च्छितस्य लक्षणमाह ।
"स्तब्धाङ्गदृष्टिस्त्वसृजा गूढोच्छ्वासस्तु
मूर्च्छितः ।"
मद्यजविषजयोर्न्निदानमाह ।
"गुणास्तीव्रतरत्वेन स्थितास्तु विषमद्ययोः ।
त एव तस्मात्ताभ्यान्तु मोहौ स्यातां
यथेरितौ ॥"
ये गुणा लघुरूक्षासु विशदव्यवायितीक्ष्णा-
विकासिसूक्ष्मोष्णानिर्द्देश्यरसत्वादयः।
तैलादौ
द्रव्ये व्यस्ताः तीव्राश्च सन्ति त एव गुणाः
विषमद्ययोस्तु तीव्रतरत्वेन स्थिताः । तत्रापि
भेदः । त एव मद्ये दृश्यन्ते विषे तु बलवत्तरा
इति ॥ * ॥ मद्यजाया मूर्च्छाया लक्षणमाह ।

विषयेषु असंवित्तिः असम्यक् ज्ञानम् । इति
इन्द्रियार्थासम्यग्ज्ञानादि। निद्रायां प्रबुद्धस्य
क्लमाभावस्तन्द्रायान्तु प्रबोधितस्यापि क्लम
इत्य-
नयोर्भेदः ॥ * ॥ क्लमस्य लक्षणमाह ।
"योऽनायासः श्रमो देहे प्रवृद्धः श्वासवर्जितः ।
क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः ॥"
इन्द्रियार्थप्रबाधकः इन्द्रियाणां बुद्धीन्द्रियाणां
कर्म्मेन्द्रियाणाञ्च अर्थः प्रयोजनं विषयग्रहणं
तस्य प्रबाधकः आवल्येन ॥ * ॥ निद्रालक्षण-
माह ।
"यदा तु मनसि क्लान्ते कर्म्मात्मानः क्लमा-
न्विताः ।
विष्येभ्यो निवर्त्तन्ते तदा स्वपिति मानवः ॥"
क्लान्ते ग्लाने श्रान्त इति यावत् । कर्म्मात्मानः
कर्म्मेन्द्रियाणि ज्ञानेन्द्रियाणि च क्लमान्विताः
श्रान्ताः ॥ * ॥ संन्यासस्य संप्राप्तिपूर्ब्बकं
लक्षणमाह ।
"वाग्देहमनसां चेष्टामाक्षिप्यातिबला मलाः ।
संन्यस्यन्त्यबलं जन्तुं प्राणायतनमाश्रिताः ॥
स ना संन्याससंन्यस्तः काष्ठीभूतो मृतोपमः ।
प्राणैर्विमुच्यते शीघ्रं मुक्त्वा सद्यःफलां क्रियाम्
॥"
आक्षिप्य विनाश्य संन्यस्यन्ति मूर्च्छयन्ति ।
प्राणायतनं हृदयम् । संन्यस्तः मूर्च्छितः ।
काष्ठीभूतः क्रियारहितः । अतएव मृतोपम
इति । सद्यःफलां क्रियां
सूचीव्यधनजनावपीडन-
कपिकच्छुघर्षणवृश्चिकादिदंशनादिरूपाम् ॥ *
॥
संन्यासस्य मूर्च्छातो भेदमाह ।
"दोषेषु मदमूर्च्छाया गतवेगेषु देहिनः ।
स्वयमप्युपशाम्यन्ति संन्यासो नौषधैर्विना ॥"
मदमूर्च्छायाः मदः अप्रवृद्ध उन्मादः । मूर्च्छायाः
मूर्च्छा ॥ * ॥ अथ मूर्च्छायाश्चिकित्सा।
"सेकावगाहा मणयः सहाराः
शीताः प्रदेहा व्यजनानिलाश्च ।
शीतानि पानानि च गन्धवन्ति
सर्व्वासु मूर्च्छास्वनिवारितानि ॥"

षडपि मूर्च्छा विवृणोति ।
"वातादिभिः शोणितेन मद्येन च
विषेण च ।
षट्स्वप्येतासु पित्तन्तु
प्रभुत्वेनावतिष्ठते ॥"
यत उक्तम् । मूर्च्छा
पित्ततमःप्रायेति ॥ * ॥
पूर्ब्बरूपमाह ।
"हृत्पीडा जृम्भणं ग्लानिः
संज्ञादौर्ब्बल्यमेव च ।
सर्व्वासां पूर्ब्बरूपाणि यथास्वं ता
विभावयेत् ॥"
तत्र वातिकं मूर्च्छायमाह ।
"नीलं वा यदि वा
कृष्णमाकाशमथवारुणम् ।
पश्यंस्तमः प्रविशति शीघ्रञ्च
प्रतिबुध्यते ॥
वेपथुश्चाङ्गमर्द्दश्च प्रपीडा हृदयस्य
च ।
कार्श्यं श्यावारुणा छाया मूर्च्छाये
वातसम्भवे ॥"
नीलं नीलवर्णम् । कृष्णं
कज्जलाभम् । अरुणं
अव्यक्तरागम् । तमः प्रविशति
मूर्च्छति ।
श्यावारुणा च्छाया गात्रस्य ॥ * ॥
पैत्तिकमाह ।
"रक्तं हरितवर्णं वा वियत्
पीतमथापि वा ।
पश्यंस्तमः प्रविशति सस्वेदः
प्रतिबुध्यते ॥
सपिपासः ससन्तापो
रक्तपीताकुलेक्षणः ।
सम्भिन्नवर्च्चाः पीताभो मूर्च्छाये
पित्तसम्भवे ॥"
श्लैष्मिकमाह ।
"मेघसङ्काशमाकाशं तमोभिर्व्वा
घनैर्वृतम् ।
पश्यंस्तमः प्रविशति चिराच्च
प्रतिबुध्यते ॥

"मद्येन प्रलपन् शेते नष्टविभ्रान्तमानसः ।
गात्राणि विक्षिपन् भूमौ जरां यावन्न याति
तत् ॥"
नष्टविभ्रान्तमानसः नष्टं सर्व्वथा स्मृतिहीनं
विभ्रान्तं रज्जौ सर्पज्ञानयुक्तं मानसं यस्य
सः ।
जरां जीर्णताम् । तत् मद्यम् ॥ * ॥ विषजाया
लक्षणमाह ।
"वेपथुस्वप्नतृष्णाः स्युस्तमश्च विषमूर्च्छिते
।
वेदितव्यं तीव्रतरं यथास्वं विषलक्षणम् ॥"
विषस्य मूलकन्दफलपत्रक्षीरादिभेद्भिन्नस्य
यथा
स्वकं स्वकं लक्षणमुक्तं सौश्रुते कल्पस्थाने
तल्ल-
क्षणं मद्यापेक्षया तीव्रतरं वेदितव्यम् । ननु
संज्ञानाशेन साधर्म्म्यान्मूर्च्छाभ्रमतन्द्रादीनां
को
भेद इत्यत आह ।
"मूर्च्छा पित्ततमःप्रायारजःपित्तानिलाद्भ्रमः
।
तमोवातकफात्तन्द्रा निद्रा श्लेष्मतमोभवा
॥"
रजःपित्तानिलाद्भ्रम इति नात्र समुच्चयः ।
केवलपित्तज्वरे भ्रमस्योक्तत्वात् ।
भ्रमश्चक्रारूढ-
स्येव भ्रमद्वस्तुज्ञानं स्वदेहस्य भ्रमत इव
ज्ञानं
वा ॥ * ॥ तन्द्राया लक्षणमाह ।
"इन्द्रियार्थेष्वसंवित्तिर्गौरवं जृम्भणं क्लमः ।
निद्रार्त्तस्येव यस्येहा तस्य तन्द्रां विनिर्द्दिशेत्
॥"
इन्द्रियाणामर्थः प्रयोजनं येषु तेषु अर्थाद्

मणयश्चन्द्रकान्तादयः । हाराः मुक्तादिहाराः ।
शीताः प्रदेहाः सकर्पूरचन्दनाद्यनुलेपनानि ।
शीतानि पानानि सितामलकादिपानकानि ।
गन्धवन्ति कर्पूरादिसुगन्धवन्ति । सर्व्वासु
मूर्च्छा-
स्वनिवारितानि । अस्यायमभिप्रायः । सेकादी-
न्यासु मूर्च्छासु हितान्येव किन्तु वातश्लेष्मजा-
स्वपि मूर्च्छासु न निवारितानि । तत्रापि
पित्तस्य प्राधान्यात् ।
"सिद्धानि वर्गे मधुरे पयांसि
सदाडिमा जाङ्गलजा रसाश्च ।
तथा यवा लोहितशालयश्च
मूर्च्छासु पथ्याः ससतीनमुद्गाः ॥"
सतीनः कलायः ।
"कोलमज्जोषणोशीरं केशरं शीतवारिणा ।
पीतं मूर्च्छा जयेल्लीढा कृष्णा वा मधुसंयुता ॥
शीतेन तोयेन भृशं मृणालं
कृष्णाञ्च पथ्यां मधुनावलिह्यात् ।

| | | |
|---|---|---|
| गुरुभिः प्रावृतैरङ्गैर्यथैवार्द्रेण चर्म्मणा ।<br>सप्रसेकः सहृल्लासो मूर्च्छाये कफसम्भवे ॥”<br>मेघसङ्काशं शुभ्रमेघसङ्काशमित्यर्थः । यत आह सुश्रुतः ।<br>“कफेन पश्येद्रूपाणि श्वेताभ्रप्रतिमानि तु ।”<br>घनैर्निविडैस्तमोभिः ।<br>गुरुभिरङ्गैरुपलक्षितः ।<br>सुश्रुतेन मूर्च्छायः षड्विघ उक्तः ॥ * ॥ चरकस्तु सान्निपातिकमपि मूर्च्छायमाह ।<br>“सर्व्वाकृतिः सन्निपातादपस्मार इवागतः । | | |

कुर्य्याच्च नासावदनावरोधं
क्षीरं पिबेद्वाप्यथ मानुषीणाम् ॥
द्राक्षासितादाडिमलाजवन्ति
कह्लारनीलोत्पलपद्मवन्ति।
पिबेत् कषायाणि च शीतलानि
पित्तज्वरं यानि च यापयन्ति ॥
शिरीषबीजगोमूत्रकृष्णामरिचसैन्धवैः ।
अञ्जनं स्यात् प्रबोधाय सरसोनशिलावचैः ॥”
अन्यच्च ।
“अञ्जनं सम्यगारब्धं मधुसिन्धुशिलोषणैः ।
प्रमोहद्रोहि भवति भाषितं भिषजांवरैः ॥”
शिला मनःशिला । उषणं मरीचम् ।
“मधूकसारसिन्धूत्थवचोषणकणाःसमाः ।
श्लक्ष्णं पिष्ट्वाम्भसा नस्यं कुर्य्यात् संज्ञाप्रबो-
धनम् ॥”
अथ रक्तजादीनां मूर्च्छानां चिकित्सा ।
“रक्तजायान्तु मूर्च्छायां हितः शीतकृइया-
विधिः ।
मद्यजायां पिबेन्मद्यं निद्रां सेवेत वा सुखम् ।
विषजानां विषघ्नानि भेषजानि प्रयोजयेत् ॥”
अथ संन्यासस्य चिकित्सा ।
“प्रभूतदोषस्तमसोऽतिरेकात्
संमूर्च्छितो नैव विबुध्यते यः ।
संन्यस्तसंज्ञः स हि दुश्चिकित्स्यो
नरो भिषग्भिः परिकीर्त्तितोऽसौ ॥
अञ्जनान्यवपीडश्च धूमाः प्रधमनानि च ।
सूचीभिस्तोदनं शस्तं दाहः पीडा नखान्तरे ॥
लुञ्चनं केशलोम्नाञ्च दन्तैर्दशनमेव च ।
आत्मगुप्तावघर्षश्च हितस्तस्य प्रबोधने ॥”
अवपीडः कल्कीकृतौषधरसस्य नासापुटे
दानम् । तस्य संन्यस्तस्य ॥ * ॥ अथ
मूर्च्छायां
रसः ।
“कणामधुयुतं सूतं मूर्च्छायां प्राशयेद् भिषक् ।
शीतसेकावगाहादि सर्व्वाङ्गे पीडनं हठात् ॥”
सूतं मारितम् ।
“ताम्रचूर्णं समोशीरं केशरं शीतवारिणा ।
पीतं मूर्च्छां द्रुतं हन्यात् वृक्षमिन्द्राशनिर्यथा ॥”
ताम्रचूर्णं मारितताम्रचूर्णम् ॥ * ॥ अथ भ्रमस्य
वस्तमूत्रेण संपिष्टं नस्यं तन्द्रानिवारणम्
॥”
श्वेतमरिचं सिग्रुबीजम् ।
“शुण्ठीकणागस्तिरसोषणानि
नस्येन तन्द्राधिजयोल्वणानि ।
क्षुद्रामृतापौष्करनागराणि
भार्गीशिवाभ्यां क्वथितानि पानात् ॥”
शिवा हरीतकी । इति मूर्च्छाभ्रमतन्द्राति-
निद्रासंन्यासाधिकारः । इति भावप्रकाशः
॥
(अथास्यां पथ्यविधिः ।
“सेकावगाहौ मणयः सहाराः
शीताः प्रदेहा व्यजनानिलश्च ।
शीतानि पानानि च गन्धवन्ति
धारागृहं शीतमरीचिरोचिः ॥
धूमोऽञ्जनं लावणमस्रमोक्षो
दाहश्च सूचीपरितोदनानि ।
रोम्नां कचानामपि कर्षणानि
नखान्तपीडा दशनोपदंशः ॥
नासामुखद्वारमरुन्निरोधो
विरेचनच्छर्द्दनलङ्घनानि ।
क्रोधो भयं दुःखकरी च शय्या
कथा विचित्रा च मनोहरा च ॥
छायानभोऽम्भःशतधौतसर्पि
र्मृदूनि तिक्तानि च लाजमण्डः ।
जीर्णा यवा लोहितशालयश्च
कौम्भं हविर्मुद्गसतीनयूषाः ॥
धन्वोद्भवा मांसरसाश्च रागाः
सषाडवा गव्यपयः सिता च ।
पुराणकुष्माण्डपटोलमोच-
हरीतकीदाडिमनारिकेलम् ॥
मधूकपुष्पाणि च तण्डुलीय
उपोदिकान्नानि लघूनि चापि ।
प्रनीरनीरं सितचन्दनानि
कर्पूरनीरं हिमवालुका च ॥
अत्युच्चशब्दोऽद्भुतदर्शनानि
गीतानि वाद्यान्यपि चोत्कटानि ।
श्रमः स्मृतिश्चिन्तनमात्मबोधा-
धैर्य्यञ्च मूर्च्छावति पथ्यवर्गः ॥”
“किं नु खल्वद्य गम्भीरो मूर्च्छितो न
निशाम्यते ।
यथापुरमयोध्यायां गीतवादित्रनिस्वनः
॥
वारुणीमदगन्धश्च माल्यगन्धश्च
मूर्च्छितः ।
चन्दनागुरुगन्धश्च न प्रवाति समन्ततः
॥”)

**मूर्णः**, त्रि, (मुर्व्वनहे + क्तः ।) बद्धः । इति मूर्त्त-
शब्दटीकायां रायमुकुटः ॥

**मूर्त्तः**, त्रि, (मूर्च्छ + क्तः “राल्लोपः ।” ६ । ४ ।
२१ ।
इति छलोपः । “न
ध्याख्यापॄमूर्च्छिमदाम् ।” ८ ।
२ । ५७ । इति निष्ठातकारस्य
नत्वाभावः ।)
मूर्च्छितः । इत्यमरः । २ । ६ । ६१ ॥
कठिनः ।
मूर्त्तिमान् । इति मेदिनी । ते, ४५ ॥
न्यायमते पृथिवी जलं तेजः वायुः
मनश्च ।
एषां गुणाः । रूपं रसः गन्धः स्पर्शः
परत्वं
अरपत्वं गुरुत्वम् । स्नेहः वेगश्च ।
मूर्त्तामूर्त्त-
साधारणगुणाः । यथा, भाषापरिच्छेदे ।
संख्या परिमितिः पृथक्त्वं संयोगः
विभागश्च ।
(यथा, मार्कण्डेये । २३ । ४७ ।
“यच्चामूर्त्तं यच्च मूर्त्तं समस्तं
यद्वा भूतेष्वेकमेकञ्च किञ्चित् ।
यद्विव्यस्ति क्ष्मातले खेऽन्यतो वा
त्वत्सम्बन्ध त्वत्स्वरैर्व्यञ्जनैश्च ॥”)

**मूर्त्तिः**, स्त्री, (मूर्च्छ + क्तिन् । “न ध्याख्येति ।”
८ । २ । ५७ । इत्यस्मान्न तकारस्य
नत्वम् ।)
काठिन्यम् । शरीरम् । इत्यमरः । ३ ।
३ ॥

चिकित्सा ।
पिबेद्दुरालभाक्वाथं सघृतं भ्रमशान्तये ।
पथ्याक्वाथेन संसिद्धं घृतं धात्रीरसेन वा ॥
शुण्ठीकृष्णाशताह्वानां साभयानां पलं पलम् ।
गुडस्य षट् पलान्येषा गुटिका भ्रमनाशिनी ॥
ताम्रं दुरालभाक्वाथैः पीतन्तु घृतसंयुतम् ।
निवारवेद्भ्रमं शीघ्रं तं यथा शम्भुभाषितम् ॥"
अथ तन्द्राया अतिनिद्रायाश्चिकित्सा।
"तुरङ्गलालालवणोत्तमेन्दु-
मनःशिलामागधिकामधूनि।
नियोजितान्यक्षिणि विनिश्चयेन
तन्द्रां सनिद्रां विनिवारयन्ति ॥"
इन्द्रः कर्पूरम् ।
"सैन्धवं श्वेतमरिचं सर्षपः कुष्ठमेव च ।

अथापथ्यविधिः ।
"ताम्बूलं पत्रशाकानि दन्तघर्षणमातपम् ।
विरुद्धान्यन्नपानानि व्यवायं स्वेदनं कटुम्
।
तृड्निद्रयोर्वेगरोधं तक्रं मूर्च्छामयी त्यजेत्
॥"
इति वैद्यकपथ्यापथ्यविधौ मूर्च्छाधिकारे
॥)

**मूर्च्छालः**, त्रि, (मूर्च्छा अस्त्यस्येति । "सिध्मादि-

भ्यश्च ।" ५ । २ । ९७ । इति लच् ।)
मूर्च्छितः ।
इत्यमरः । २ । ६ । ६१ ॥

**मूर्च्छितः**, त्रि, (मूर्च्छास्य संजाता । मूर्च्छा +

तारकादित्वात् इतच् ।) मूर्च्छायुक्तः ।
तत्-
पर्य्यायः । मूर्त्तः २ मूर्च्छालः ३ ।
इत्यमरः । २ ।
६ । ६१ ॥ (यथा, भट्टौ । ६ । २३ ।
"तथाभ्यषिक्तवारीणि पितृभ्यः
शोकमूर्च्छितः ।")
उच्छ्रयः । मूढः । इति मेदिनी ॥ वृद्धः ।
इत्य-
जयः ॥ (व्याप्तः यथा, रामायणे । २ ।
११४ । १९-२० ॥

६६ ॥ (यथा, मनौ । १२ । १२० ।
"खं सन्निवेशयेत् खेषु
चेष्टनस्पर्शनेऽनिलम् ।
पक्तिदृष्ट्योः परं तेजः स्नेहेऽपो गाञ्च
मूर्त्तिषु ॥")
प्रतिमा । इति हेमचन्द्रः ॥ स्वरूपः ।
यथा, --
"आचार्य्यो ब्रह्मणो मूर्त्तिः पिता मूर्त्तिः
प्रजापतेः ।
भ्राता मरुत्पतेर्म्मूर्त्तिर्म्माता साक्षात्
क्षिते-
स्तनूः ॥
दयाया भगिनी
मूर्त्तिर्द्धर्म्मस्यात्मातिथिः स्वयम् ।
अग्नेरभ्यागतो मूर्त्तिः सर्व्वभूतानि
चात्मनः ॥"
इति श्रीभागवते । ६ । ७ । २९ -- ३०
॥
(ब्रह्मसावर्णिपुत्रविशेषः । यथा, तत्रैव ।
८ ।
१३ । २१ -- २२ ।
"तत्सुता भूरिषेणाद्या हविष्मत्प्रमुखा
द्विजाः ।
सुवासना विरुद्धाद्या जयो मूर्त्तिस्तदा
द्विजाः ॥")

**मूर्त्तिमत्**, क्ली, (मूर्त्तिः काठिन्यमस्यास्ति । मूर्त्ति +

मतुप् ।) शरीरम् । इति हेमचन्द्रः । ३ ।
२२७ ॥

**मूर्त्तिमान्**, [त्] त्रि, (मूर्त्तिरस्यास्ति । मूर्त्ति +

मतुप् ।) मूर्त्तिविशिष्टः । यथा, --
"मल्लानामशनिर्नृणां नरवरः स्त्रीणां
स्मरो
मूर्त्तिमान् ।"
इत्यादि श्रीभागवतम् ॥ (यथा च रघौ ।
१२ । ६४ ।
"हृदयं स्वयमायातं वैदेह्या इव
मूर्त्तिमत् ।"
कुशपुत्त्रः । यथा, हरिवंशे । २७ । १२
।

| | | |
|---|---|---|
| | | “कुशपुत्रा बभूवुर्हि चत्वारो देववर्च्चसः ।<br>कुशिकः कुशनाभश्च कुशाम्बो मूर्त्तिमांस्तथा ॥”<br>स्त्रियां ङीप् । यथा, महाभारते । ३ । १०८ । १४ ।<br>“दर्शयामास तं गङ्गा तदा मूर्त्तिमती स्वयम् ।”) |

**मूर्द्धकः**, पुं, (मूर्द्धन्यभिषिक्त इति । मूर्द्धन् + संज्ञायां कन् ।) क्षत्त्रियः । इति शब्दरत्नावली ॥

**मूर्द्धकर्णी**, स्त्री, छत्रम् । इति हारावली ॥

**मूर्द्धखोलं**, क्ली, (मूद्‌र्ध्नः खोल इव ।) छत्रम् । इति त्रिकाण्डशेषः ॥

**मूर्द्धजः**, पुं, (मूद्‌र्ध्नि जायते । जन + डः ।) केशः । इति जटाधरः ॥ (यथा, बृहत्संहितायाम् । ६८ । ८२ ।
"बहुमूलविषमकपिला स्थूलस्फुटिताग्रपरुषह्रस्वाश्च । अतिकुटिलाश्चातिघनाश्च मूर्द्धजा वित्तहीनानाम् ॥")
मूद्‌र्ध्नि जाते, त्रि ॥

**मूर्द्धन्यः**, त्रि, (मूर्द्धन् + यत् ।) मूर्द्धनि भवः । यथा ।
ऋत्रयं ट ठ ड ढ ण र षा मूर्द्धन्याः । इति मुग्धबोधव्याकरणम् ॥ (यथा च भागवते । १ । ७ । ५५ ।
"अर्जुनः सहसाज्ञाय हरेर्हार्द्दमथासिना । मणिं जहार मूद्‌र्ध्वन्यं द्विजस्य सहमूर्द्धजम् ॥")

**मूर्द्धपुष्पः**, पुं, (मूद्‌र्ध्नि पुष्पमस्य ।) शिरीषवृक्षः । इति शब्दमाला ॥ (गुणादयोऽस्य शिरीषशब्दे विधेयाः ॥)

**मूर्द्धरसः**, पुं, (मूर्द्धस्थस्तदुपरिस्थो रसः ।) भक्त-फेनः । इति शब्दचन्द्रिका ॥

**मूर्द्धवेष्टनं**, क्ली, (मूद्‌र्ध्नः वेष्टनम् ।) उष्णीषः । यासु भार्य्यासु द्विजातिभिर्य उत्पादिताः पुत्त्राः । यथा । ब्राह्मणेन क्षत्त्रियायां क्षत्त्रियेण वैश्यायां वैश्येन शूद्रायाम् । तान् मातुर्हीन-जातीयत्वदोषेण गर्हितान् पितृसदृशान् न तु पितृसजातीयान् मन्वादय आहुः । पितृसदृश-ग्रहणात् मातृजातेरुत्कृष्टाः पितृजातितो निकृष्टा ज्ञेयाः । एतेषाञ्च नामानि मूर्द्धा-वसिक्तमाहिष्यकरणाख्यानि याज्ञवल्क्यादिभि-रुक्तानि । वृत्तयश्चैषामुशनसोक्ताः । हस्त्य-श्वरथशिक्षास्त्रधारणञ्च मूर्द्धावसिक्तानाम् । नृत्यगीतनक्षत्रजीवनं शस्यरक्षा च माहि-ष्याणाम् । द्विजातिशुश्रूषा धनधान्याध्यक्षता राजसेवा दुर्गान्तःपुररक्षा च पारशवोग्र-करणानामिति । इति तट्टीकायां कुल्लूक-भट्टः ॥

**मूर्द्धा**, [न्] पुं, (मूर्व + कनिन् । वस्य धः दीर्घश्चोकारस्य ।) शिरः । यथा, --
मूर्द्धा मूद्‌र्ध्वा शिरोदेशे पुंसि स्याताममिमौ समौ । इत्युणादिकोषः ॥
मूर्व्वी नहे मूर्द्धा मूद्‌र्ध्वा च । अस्य धङ्ध्वङौ । इति तट्टीका ॥ (यथा, देवीभागवते । २ । ७ । २८ ।
"दृष्ट्वा वेणीं कृतां मूद्‌र्ध्नि कज्जलं लोचने तथा । असिं गृहीत्वा तरसा छेद्म्यहं नान्यथा सुखम् ॥")

**मूर्व्वा**, स्त्री, (मूर्वति इति । मूर्व + अच् टाप् ।) लताविशेषः । धनुर्गुणोपयुक्ता मुरगा इति

**मूल** ञ प्रतिष्ठायाम् । इति कविकल्पद्रुमः ॥ (भ्वा०-उभ०-अक०-सेट् ।) पवर्गशेषादिर्दीर्घी । प्रतिष्ठा स्थितिरिति गोविन्दभट्टः । ञ मूलति मूलते यशः । अयं परस्मैपदीत्यन्ये । इति दुर्गादासः ॥

**मूलं**, क्ली, (मवते बध्नाति वृक्षादिकमिति । मू + "मूङ्शक्यविभ्यः क्लः ।" उणा० ४ । १०८ । इति क्लः ।) शिफा । शिकड इति भाषा । तत्पर्य्यायः । व्रध्नः २ अङ्घ्रिनामकः ३ । इत्यमरः । २ । ४ । १२ ॥ कन्दः ४ वृध्नः ५ । इति शब्दरत्नावली ॥ जटा ६ । इति जटाधरः ॥ (यथा, मनौ । ३ । २२७ ।
"भक्ष्यं भोज्यञ्च विविधं मूलानि च फलानि च । हृद्यानिचैव मांसानि पानानि सुरभीणि च ॥")
आद्यम् ॥ (यथा, महाभारते । १ । १६१ । १ ।
"कुतोमूलमिदं दुःखं ज्ञातुमिच्छामि तत्त्वतः । विदित्वाप्यपकर्ष्येयं शक्यञ्चेदपकर्षितुम् ॥")
नक्षत्रविशेषः ॥ (यथा, मार्कण्डेये । ३३ । १३ ।
"कुर्वन्तश्चानुराधासु लभन्ते चक्रवर्त्तिताम् । आधिपत्यञ्च ज्येष्ठासु मूले चारोग्यमुत्तमम् ॥"
निकुञ्जः । अन्तिकम् । इति विश्वः ॥ (यथा, मार्कण्डेये । ८६ । ६ ।
'जगादोच्चैः प्रयाहीति मूलं शुम्भनिशुम्भयोः ।)
मूलवित्तम् । इति भरतधृतमेदिनी ॥ (यथा, मनौ । ८ । २०२ ।
"अथ मूलमनाहार्य्यं प्रकाशक्रयशोधितः । अदण्ड्यो मुच्यते राज्ञा नाष्टिको लभते धनम् ॥")
निजम् । इत्यजयपालः ॥ चरणम् । इत्युणादि-कोषः ॥ (यथा, ऋग्वेदे । १० । ८७ । १० ।
"त्रेधा मूलं यातुधानस्य वृश्च ।"
"मूलं पादम् ।" इति तद्भाष्ये सायणः ॥)
टीकार्हग्रन्थः । यथा । समानवलेत्यादि मूलम् । इति सत्प्रतिपक्षे गदाधरभट्टाचार्य्यः । शूरणम् । इति शब्दचन्द्रिका ॥ पिप्पलीमूलम् । पुष्कर-मूलम् । इति राजनिर्घण्टः ॥ विशेषमूलस्य अन्वेषणनिषेधो यथा, --
"नदीनामग्निहोत्राणां भारतस्य कुलस्य च ।

इति हेमचन्द्रः । ३ । ३३१ ॥

**मूर्द्धा**, [न्] पुं, (मूर्वति बध्नाति यत्रेति । मुर्व्व +
"श्वन् उक्षन् पूषन् । उणा० १ । १५८ । इति
कनिन् । उकारस्य दीर्घः बकारस्य धकारश्च ।)
मस्तकः । इत्यमरः । २ । ६ । ९५ । (यथा,
बृहत्संहितायाम् । ७७ । २ ।
"लोहे पात्रे तण्डुलान् कोद्रवाणां
शुक्ले पक्वाँल्लोहचूर्णेन साकम् ।
पिष्टान् सूक्ष्मं मूर्द्ध्नि शुक्लाम्लकेशे
दत्त्वा तिष्ठेद्वेष्टयित्वार्कपत्रैः ॥")

**मूर्द्धाभिषिक्तः**, पुं, क्षत्त्रियः । राजा । इत्यमरः ।
३ । ३ । ६१ ॥ मूर्द्धन्यभिषिक्तो मूर्द्धाभिषिक्तः
राज्यारोपणसमये प्रथमः क्षत्त्रियो मूर्द्धाभि-
षिक्तः । तत्प्रभवत्वात् योग्यतयानभिषिक्तोऽपि
मूर्द्धाभिषिक्तः । (यथा, भागवते । ९ । १५ । ४१ ।
"राज्ञो मूर्द्धाभिषिक्तस्य वधो ब्रह्मवधाद्गुरुः ।
तीर्थसंसेवया चांहो जह्याङ्गाच्युतचेतनः ॥")
वर्णसङ्करविशेषः । स तु विप्रात् क्षत्त्रियायां
जातः ॥ प्रधानः । इति भरतः ॥ मन्त्री । इति
मेदिनी । ते, २३२ ॥

**मूर्द्धावसिक्तः**, पुं, वर्णसङ्करभेदः । स तु क्षत्त्रियायां
ब्राह्मणेनोत्पादितः । यथा, --
"स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान् ।
ख्याता । तत्पर्य्यायः । देवी २ मधुरसा ३
मोरटा ४ तेजनी ५ स्रवा ६ मधूलिका ७
धनुःश्रेणी ८ गोकर्णी ९ पीलुपर्णी १० । इत्य-
मरः । २ । ४ । ८३ ॥ स्रुवा ११ मूर्व्वी १२ ।
मधुश्रेणी १३ धुनुः १४ श्रेणी १५ । इति तट्टी-
कायां भरतः ॥ सुरङ्गिका १६ । देवश्रेणी १७
पृथक्त्वचा १८ मधुस्रवा १९ अतिरसा २०
पीलुपर्णिका २१ दिव्यलता २२ ज्वलिनी २३
गोपवल्ली २४ । अस्या गुणाः । अतितिक्तत्वम् ।
कषायत्वम् । उष्णत्वम् । हृद्रोगकफवातवमि-
प्रमेहकुष्ठविषमज्वरनाशित्वञ्च । इति राज-
निर्घण्टः ॥ अपि च ।
"मूर्व्वा सरा गुरुः स्वादुस्तिक्ता पित्तास्रमेहनुत् ।
त्रिदोषतृष्णाहृद्रोगकण्डुकुष्ठज्वरापहा ॥"
इति भावप्रकाशः ॥
(तथास्याः पर्य्यायः ।
"तेजनी पिलुनी देवा तिक्तवल्ली पृथक्त्वचा ।
धनुःश्रेणी मधुरसा मूर्व्वा निर्द्दहनीति च ॥"
इति वैद्यकरत्नमालायाम् ॥
"मूर्व्वा मधुरसा ज्ञेया तेजनी तिक्तवल्कला ।"
इति गारुडे २०८ अध्याये ॥)

**मूल** क रोपणे । इति कविकल्पद्रुमः ॥ (चुरा०-
उभ०-सक०-सेट् ।) दीर्घी रोपणमारोपणम् ।
क मूलयति वृक्षं लोकः । गोविन्दभट्टस्तु रोहणे
मूलान्वेषो न कर्त्तव्यो मूलाद्दोषो न हीयते ॥"
इति गारुडे ११६ अध्यायः ॥
(कारणम् । यथा, मनौ । ११ । ८४ ॥
"धर्म्मस्य ब्राह्मणो मूलमग्रं राजन्य उच्यते ।
"मूलं कारणम् ।" इति तट्टीकायां कुल्लूक-
भट्टः ॥)

**मूलः**, त्रि, (मूलतीति । मूलप्रतिष्ठायाम् + कः ।)
अश्विन्यादिसप्तविंशतिनक्षत्रान्तर्गतोनविंशनक्ष-
त्रम् । यथा, --
"हस्ता स्वाती श्रवणा अक्लीवे मृगशिरो नपुंसि ।
स्यात् पुंसि पुनर्व्वसुपुष्यौ मूलन्त्वस्त्री स्त्रियां शेषाः ॥"
इति तिथ्यादितत्त्वम् ॥
"मूलमाद्ये शिफायाञ्च निकटे भे तु वास्त्रि-
याम् ।"
इति शब्दरत्नावली च ॥

| | | |
|---|---|---|
| सदृशानेव तानाहुर्म्मातृदोषविगर्ह्हितान् ॥” इति मानवे १० अध्याये ६ श्लोकः ॥ * ॥ ‘स्त्रीष्विति आनुलोम्येन अव्यवहितवर्णजाती- | इति पठित्वा रोहणं जन्मेति व्याख्याति । इति दुर्गादासः ॥ | |

स तु निरृतिदेवताकः । इति
ज्योतिस्तत्त्वम् ॥
सिंहपुच्छाकारः । इति मुहूर्त्तचिन्तामणिः
॥
शङ्कमूर्त्तिर्नवतारामयश्च । अस्मिन्
मस्तकोप-
र्य्युदिते मीनलग्नस्याष्टौ पलानि गतानि
भवन्ति ।
यथा, --
"मौलिभाजि नवतारकाङ्किते
मूलभे सुतनु ! शङ्कमूर्त्तिनि ।
लिप्तिकाष्टकमरालकुन्तले
निर्जगाम पृथुरोमलग्नतः ॥"
इति कालिदासकृतरात्रिलग्ननिरूपणम् ॥
अस्मिन् नक्षत्रे जातस्य फलम् ।
"मूलं विरुद्धावयवं समूलं
कुलं दहत्येव वदन्ति सन्तः ।
चेदन्यथातः पुरुषा विशेषात्
सौभाग्यमायुश्च कुलानुवृद्धिः ॥"
इति कोष्ठीप्रदीपः ॥
अस्मिन् मांसभक्षणनिषेधो यथा, --
"चित्रास्वहस्ताश्रवणासु तैलं
क्षौरं विशाखाप्रतिपत्सु वर्ज्यम् ।
मूले मृगे भाद्रपदासु मांसं
योषिन्मघाकृत्तिकसोत्तरासु ॥"
इति तिथ्यादितत्त्वम् ॥

**मूलकं**, क्ली, पुं, (मूल + संज्ञायां कन् ।) कन्द-
विशेषः । मूला इति भाषा । तत्पर्य्यायः ।
राजालुकः २ महाकन्दः ३ हस्तिदन्तकः
४ ।
इति हारावली ॥ नीलकण्ठम् ५ मूलाह्वम्
६
दीर्घमूलकम् ७ अत्र दीर्घपत्रकमपि पाठः ।
मृत्क्षारम् ८ कन्दमूलम् ९ हस्तिदन्तम्
१०
सितम् ११ शङ्कमूलम् १२ हरित्पर्णम् १३
रुचिरम् १४ दीर्घकन्दकम् १५
कुञ्जरक्षारमूलम्
(तथाचास्य गुणाः ।
"बालं दोषहरं वृद्धं त्रिदोषं मारुतापहम् ।
स्निग्धसिद्धं विशुष्कन्तु मूलकं कफवातजित्
॥"
इति चरके सूत्रस्थाने । २७ अध्यायः ॥)
सौरमाघे तद्भक्षणे दोषो यथा, --
"मकरे मूलकञ्चैव सिंहे चालावुकन्तथा ।
कार्त्तिके शूरणञ्चैव सद्यो गोमांसभक्षणम् ॥"
इति कर्म्मलोचनम् ॥
पौर्णमास्यान्तमाघमुपक्रम्य ।
"पितॄणां देवतानाञ्च मूलकं नैव दापयेत् ।
ददन्नरकमाप्नोति भुञ्जीत ब्राह्मणो यदि ॥
ब्राह्मणो मूलकं भुक्त्वा चरेच्चान्द्रायणं व्रतम् ।
अन्यथा याति नरकं क्षत्त्रो विट् शूद्र एव च ॥
तथा ।
"वरं भक्ष्यमभक्ष्यञ्च पिबेद्वा गर्हितञ्च यत् ।
वर्ज्जनीयं प्रयत्नेन मूलकं मदिरासमम् ॥"
इति मलमासतत्त्वम् ॥

**मूलकः**, पुं, (मूले जातः । मूल + "पूर्ब्बाह्णापरा-
ह्णार्द्रामूलप्रदोषावस्कराद्वुन् ।" ४ । ३ । २८ ।
इति वुन् ।) चतुस्त्रिंशत्स्थावरविषजात्यन्त-
र्गतविषभेदः । इति हेमचन्द्रः । ४ । २६८ ॥
(मूलप्रकार इति । मूल + "स्थूलादिभ्यः
प्रकार-
वचने कन् ।" ५ । ४ । ३ । इति कन् । मूल-
स्वरूपः । यथा, भागवते । ९ । ९ । ४१ ।
"नारीकवच इत्युक्तो निःक्षत्रे मूलकोऽभवत्
॥")

**मूलकपर्णी**, स्त्री, (मूलकस्य पर्णमिव समानस्वादं
पर्णमस्याः । ङीष् ।) शोभाञ्जनः । इति रत्न-
माला ॥

**मूलकर्म्म**, क्ली, (मूलञ्च तत् कर्म्म चेति ।) ओष-
ध्यादिमूलेन यत् त्रासनोच्चाटनस्तम्भनवशी-
करणादिकर्म्म । जो इति ख्यातम् । इति भरतः
॥
टोना इति मुकुटः ॥ तत्पर्य्यायः । कार्म्मणम् २
।
यदा क्वथितानि वृक्षमूलानि मासं
पीयन्ते तदा
मूलकृच्छ्रव्यपदेशं लभते । यथाह
मार्कण्डेयः ।
"फलैर्मासेन कथितः फलकृच्छ्रो
मनीषिभिः ।
श्रीकृच्छ्रः श्रीफलैः प्रोक्तः
पद्माक्षैरपरस्तथा ॥
मासेनामलकैरेवं श्रीकृच्छ्रमपरं स्मृतम्
।
पत्रैर्मतः पत्रकृच्छ्रः पुष्पैस्तत्कृच्छ्र
उच्यते ॥
मूलकृच्छ्रः स्मृतो मूलैस्तोयकृच्छ्रो
जलेन तु ॥"
इति मिताक्षरायां प्रायश्चित्ताध्यायः ॥
(पुंलिङ्गोऽप्ययं
मार्कण्डेयपुराणोक्तत्वात् ।)

**मूलजं**, क्ली, (मूलात् जायते इति । जन + डः
।)
आर्द्रकम् । इति राजनिर्घण्टः ॥
(विशेषो-
ऽस्यार्द्रकशब्दे ज्ञातव्यः ॥)

**मूलजः**, पुं, (मूलाद् जायते । जन + डः ।)
उत्पलादिः । इति हेमचन्द्रः । ४ ।
२६६ ॥
मूलोद्भवे त्रि ॥

**मूलत्रिकोणं**, क्ली, (मूलञ्च तत्त्रिकोणञ्चेति ।)
अर्कादिग्रहाणां राशिरूपगृहविशेषः ।
स तु
रवेः सिंहः । चन्द्रस्य वृषः । कुजस्य
मेषः ।
बुधस्य कन्या । गुरोर्धनुः । भृगोस्तुला
। शनेः
कुम्भः । यथा, --
"सिंहो वृषश्च मेषश्च कन्या धन्वी
धटो घटः ।
अर्कादीनां त्रिकोणानि मूलानि राशयः
क्रमात् ॥"

१६ । अस्य गुणाः । तीक्ष्णत्वम् ।
उष्णत्वम् ।
कटूष्णेनाग्निदीपनत्वम् ।
दुर्नामगुल्महृद्रोगवात-
नाशित्वम् । रुचिदत्वम् । गुरुत्वञ्च । इति राज-
निर्घण्टः ॥ * ॥ अपि च ।
"बालमूलकपत्री तु रोचनी वह्निदीपनी ।
मूलकं गुरु विष्टम्भि तीक्ष्णमामं त्रिदोष-
कृत् ॥
तदेव स्निग्धसिद्धन्तु पित्तलं कफवातनुत् ।
शुष्कं त्रिदोषशमनं शोथघ्नं गरजिल्लघु ॥
तत्पुष्पं कफपित्तघ्नं तत्फलं
कफवातजित् ॥"
इति राजवल्लभः ॥
अन्यच्च ।
"मूलकं द्विविधं प्रोक्तं तत्रैकं लघुमूलकम् ।
शालामकटकं विस्रं शालेयं मरुसम्भवम् ॥
चाणक्यमूलकं तीक्ष्णं तथा मूलकपोतिका ।
नैपालमूलकञ्चान्यत्तद्भवेद्गजदन्तवत् ॥
लघुमूलकमुष्णं स्याद्रुच्यं लघु च पाचनम् ।
दोषत्रयहरं स्वर्य्यं ज्वरश्वासविनाशनम् ॥
नासिकाकण्ठरोगघ्नं नयनामयनाशनम् ।
महत्तदेवरूक्षोष्णं गुरु दोषत्रयप्रदम् ।
स्नेहसिद्धं तदेव स्याद्दोषत्रयविनाशनम् ॥"
इति भावप्रकाशः ॥

इत्यमरः । ३ । २ । ४ ॥ ऊनपञ्चाशदुपपात-
कान्तर्गतोपपातकविशेषः । यथा, --
"सर्व्वाकरेष्वधीकारो महायन्त्रप्रवर्त्तनम् ।
हिंसौषधीनां स्त्र्याजीवोऽभिचारो मूलकर्म्म
च ॥"
इति मनुः । ११ । ६४ ॥
"मन्त्रौषधादिना वशीकरणम् ।" इति मूल-
कर्म्मशब्दव्याख्यायां कुल्लूकभट्टः ॥

**मूलकमूला**, स्त्री, (मूलकमिव मूलमस्याः ।) क्षीर-
कञ्चुकीवृक्षः । इति रत्नमाला ॥

**मूलकारः**, पुं, (मूलं करोतीति । कृ + कर्म्मण्यण् ।
इत्यण् ।) मूलग्रन्थकर्त्ता । यथा । नायं
गणकारः किन्तु मूलकारः । इति संक्षिप्त-
सारटीकायां गोयीचन्द्रः ॥

**मूलकारिका**, स्त्री, (मूलकारक + स्त्रियां टाप् ।
अकारस्येत्वम् ।) चुल्ली । इति हारावली ॥
मूलग्रन्थार्थप्रकाशकपद्यम् । मूलधनस्य वृद्धि-
विशेषश्च ॥

**मूलकृच्छ्रं**, क्ली, (मूलेन तद्रमपानेन कृच्छ्रम् ।)
एकादशविधपर्णकृच्छ्रव्रतान्तर्गतव्रतविशेषः ।

अथ मूलत्रिकोणांशव्यवस्था ।
"रविभौमजीवभार्गवशनैश्चराणां
त्रिकोण-
भागाः स्युः ।
नखरविदिक्तिथिनखरा
ज्ञेन्दोर्दिग्भांशका
सूच्चात् ॥"
इति ज्योतिस्तत्त्वम् ॥

**मूलदेवः**, पुं, (मूलश्चासौ देवो राजा चेति ।)
कंसराजः । इति त्रिकाण्डशेषः ॥

**मूलद्रव्यं**, क्ली, (मूलञ्च तद्द्रव्यञ्चेति ।)
मूलधनम् ।
इति हेमचन्द्रः । ३ । ५३३ ॥

**मूलधनं**, क्ली, (मूलञ्च तद्धनञ्चेति ।)
आदिद्रव्यम् ।
पुँजी इति भाषा । तत्पर्य्यायः ।
परिपणम् २
नीवी ३ । इत्यमरः । २ । ९ । ८० ।

**मूलपर्णी**, स्त्री, (मूले पर्णमस्याः । ङीष् ।)
मण्डूक-
पर्णी । इति रत्नमाला ॥

**मूलपुष्करं**, क्ली, (मूले पुष्करमस्य ।
पुष्करमिव
मूलमस्येति वा ।) पुष्पकमूलम् । इति राज-
निर्घण्टः ॥

**मूलपोती**, स्त्री, (मूलप्रधाना पोती ।) पूतिका-
शाकभेदः । तत्पर्य्यायः । क्षुद्रवल्ली २
पोतिका ३
क्षुद्रपोतिका ४ क्षुपोपोदकनाम्नी ५
वल्लि-
शाकटपोतिका ६ । अस्या गुणाः ।
त्रिदोष-
घ्नत्वम् । वृष्यत्वम् । बल्यत्वम् ।
लघुत्वम् । बल-
पुष्टिकारित्वम् । रुच्यत्वम् ।
जठरानलदीपन-
त्वञ्च । इति राजनिर्घण्टः ॥

**मूलप्रकृतिः**, स्त्री, (मूला चासौ प्रकृतिश्चेति ।)

| | | |
|---|---|---|
| | | आद्या शक्तिः । यथा, --<br>“सर्व्वप्रसूता प्रकृतिः श्रीकृष्णः प्रकृतेः परः ।<br>न शक्तः परमेशोऽपि तां शक्तिं प्रकृतिं विना । |

सृष्टिं विधातुं मायेशो न सृष्टिर्मायया विना ॥
सा च कृष्णे तिरोभूता सृष्टिसंहारकारके ।
आविर्भूता सृष्टिकाले सा च नित्या यथेश्वरः ॥
कुलालश्च घटं कर्त्तुं यथाशक्तो मृदं विना ।
स्वर्णं विना स्वर्णकारः कुण्डलं कर्त्तुमक्षमः ॥
सा शक्तिः सृष्टिकाले च पञ्चधा चेश्वरेच्छया ।
राधा पद्मा च सावित्री दुर्गा देवी सरस्वती ॥
प्राणाधिष्ठातृद्वेवी या कृष्णस्य परमात्मनः ।
प्राणाधिकप्रियतमा सा राधा परिकीर्त्तिता ॥
ऐश्वर्य्याधिष्ठातृद्वेवी सर्व्वमङ्गलकारिणी ।
परमानन्दरूपा च सा लक्ष्मीः परिकीर्त्तिता ॥
विद्याधिष्ठातृद्वेवी या परमेशस्य दुर्लभा ।
वेदशास्त्रयोगमाता सा सावित्री प्रकीर्त्तिता ॥
बुद्ध्यधिष्ठातृद्वेवी या सर्व्वशक्तिस्वरूपिणी ।
सर्व्वज्ञानात्मिका सर्व्वा सा दुर्गा दुर्गनाशिनी ॥
वागाधिष्ठातृद्वेवी या शास्त्रज्ञानप्रदा सदा ।
कृष्णकण्ठोद्भवा या च सा च देवी सरस्वती ॥
पञ्चधादौ स्वयं देवी मूलप्रकृतिरीश्वरी ।
ततः सृष्टिक्रमेणैव बहुधा कलया च सा ॥

तत्रैव मृणालसूत्रवत् सूक्ष्मसार्द्धत्रिबलयाकार-स्वयम्भुलिङ्गवेष्टितविद्युत्तुल्यप्रभकुलकुण्डलिनी वर्त्तते । यथा, --
“मूलाधारे त्रिकोणाख्ये इच्छाज्ञानक्रिया-त्मके ।
मध्ये स्वयम्भुलिङ्गन्तु कोटिसूर्य्यसमप्रभम् ॥
तद्बाह्ये हेमवर्णाभं व स वर्णचतुर्द्दलम् ॥”
इति तन्त्रसारः ॥
“अथाधारपद्मं सुषुम्नास्यलग्नं
ध्वजाधो गुदोद्ध्वं चतुःशोणपत्रम् ।
अधोवक्त्रमुद्यत्सुवर्णाभवर्णै-
र्वकारादिसान्तैर्युतं वेदवर्णैः ॥
अमुष्मिन् धरायाश्चतुष्कोणचक्रं
समुद्भासि शूलाष्टकैरावृतं तत् ।
लसत्पीतवर्णं तडित्कोमलाङ्गं
तदन्तः समास्ते धरायाः स्वबीजम् ॥
वज्राख्या वक्त्रदेशे विलसति सततं कर्णिका-मध्यसंस्थं
कोणं तत्त्रैपुराख्यं तडिदिव विलसत् कोमलं कामरूपम् ।
कन्दर्पो नाम वायुर्विवसति सततं तस्य मध्ये समन्तात्
जीवेशो बन्धुजीवप्रकरमभिहसन्कोटिसूर्य्य-प्रकाशः ॥
तन्मध्ये लिङ्गरूपी द्रुतकनककलाकोमलः पश्चिमास्यो
ज्ञानध्यानप्रकाशः प्रथमकिशलयाकाररूपः स्वयम्भूः ।
भिद्यत्पूर्णेन्दुविम्बप्रकरकरचयस्निग्धसन्तानहासी
काशीवासी विलासी विलसति सरिदावर्त्तरूपः प्रकारः ॥
अस्योद्र्ध्वे विषतन्तुसोदरलसत् सूक्ष्मा जगन्मोहिनी
ब्रह्मद्वारमुखं मुखेन मधुरं साच्छादयन्ती स्वयम् ।
शङ्खावर्त्तनिभा नवीनचपलामाला विलासा-स्पदा
सुप्ता सर्पसमा शिरोपरिलसत्सार्द्धत्रिवृत्ता-कृतिः ॥”
इति श्रीतत्त्वचिन्तामणौ षट्चक्रभेदः ॥ * ॥

करोति पापक्षयमेव मुक्तिं
ददाति साक्षादमलार्थपुण्यदा ॥”

**मूलाह्वं**, क्ली, (मूलमाह्वा आख्या यस्य ।) मूल-कम् । इति राजनिर्घण्टः ॥

**मूली**, [न्] पुं, (मूलमस्यास्तीति । मूल + इनिः ।) वृक्षः । इति शब्दचन्द्रिका ॥ (स्त्रियां ङीप् ।
ओषधिः । यथा, सुश्रुते चिकित्सितस्थाने ३० अध्याये ।
“चक्रकामोषधिं विद्याज्जरामृत्युनिवारिणीम् ।
मूलिनीपञ्चभिः पत्रैः सुरक्तांशुककोमलैः ॥”)

**मूली**, स्त्री (मूल + गौरादित्वात् ङीष् ।) ज्येष्ठी । इति त्रिकाण्डशेषः ॥ (नदीभेदः । यथा,
मात्स्ये । ११३ । ३१ ।
“ताम्रपर्णी तथा मूली शरवा विमला तथा ॥”)

**मूलेरः**, पुं, (मूलतीति । मूल + “मूलेरादयः ।” उणा० १ । ६२ । इत्येरक् । जटा । इत्युणादि-कोषः ॥ राजा । इत्युज्ज्वलदत्तः ।)

**मूल्यं**, क्ली, (मूलेन आनाम्यते अभिभूयते मूलेन-समं वा इति । मूल + “नौवयोधर्म्मेत्यादिना ।” ४ । ४ । ९१ । इति यत् ।) पटादीनामुत्पत्ति-कारणम् । मूलं मूलेन क्रयविक्रयार्थमिदं ढघे कादिति यः । इति भरतः ॥ दर इति दाम
इति च भाषा । तत्पर्य्यायः । वस्नः २ अव-

थोषितः प्रकृतेरंशाः पुमांसः
पुरुषस्य च ।
मायया सृष्टिकाले च तद्विना न
भवेद्भवः ॥
सृष्टिश्च प्रतिविश्वे च ब्रह्मन् !
ब्रह्मोद्भवा सदा ।
पाता विष्णुश्च संहर्त्ता शिवः
शश्वच्छिवप्रदः ॥”
इति ब्रह्मवैवर्त्तपुराणे गणपतिखण्डे
४० अः ॥

**मूलफलदः**, पुं, (मूले च फलं ददातीति । दा +
कः ।) पनसवृक्षः । इति
राजनिर्घण्टः ॥
(पनसशब्देऽस्य विषयो ज्ञातव्यः
॥)

**मूलभद्रः**, पुं, (मूलश्चासौ भद्रश्चेति ।) कंसराजः ।
इति त्रिकाण्डशेषः ॥

**मूलरसः**, पुं, (मूले रसोऽस्याः ।) मोरटलता ।
इति रत्नमाला ॥

**मूलशाकटः**, त्रि, (मूलानां भवनं क्षेत्रम् । मूल
+ “भवने क्षेत्रे इक्ष्वादिभ्यः
शाकटशाकिनौ ।”
५ । २ । २९ । इत्यत्र
वार्त्तिकबलात् शाकटः ।)
मूलक्षेत्रम् । क्षेत्रवाच्ये
शाकटप्रत्ययेन निष्प-
न्नम् ॥

**मूलशाकिनः**, त्रि, (मूल + शाकिनः ।) क्षेत्र-
वाच्ये शाकिनप्रत्ययेन निष्पन्नम् ॥

**मूला**, स्त्री, (मूलानि बहुलानि सन्त्यस्याः । मूल
+ अर्श आदित्वादच् टाप् ।)
शतावरी ।
इति राजनिर्घण्टः ॥ मूलनक्षत्रम् ।
इति शब्द-
तत्रस्थतीर्थानि यथा, रुद्रयामले ।
“इडा मलस्थाननिवासिनी या
सूर्य्यात्मिका या यमुनाप्रवाहिका ।
तथा सुषुम्ना मलदेशगामिनी
सरस्वती रक्षति मज्जनात्मकम् ॥
मनोगतस्नानपरो मनुष्यो
मन्त्रक्रियायोगविशिष्टतत्त्ववित् ।
महीस्थतीर्थे विमले जले मुदा
मूलाम्बुजे स्नाति सुमुक्तिभाग्भवेत् ॥
सर्व्वाणि तीर्थे सुरतीर्थपावनी
गङ्गा महासत्त्वविनिर्गता सती ।
क्रयः ३ । इत्यमरः । २ । १० । ३९
॥ (यथा,
मनौ । ८ । ३२२ ।
“पञ्चाशतस्त्वभ्यधिके
हस्तच्छेदनमिष्यते ।
शेषे त्वेकादशगुणं मूल्याद्दण्डं
प्रकल्पयेत् ॥”)
मूल्यते अर्प्यते इदम् । माहिना इति
भाडा
इति च भाषा । तत्पर्य्यायः । कर्म्मण्या
२
विधा ३ भृत्या ४ भृतिः ५ भर्म्म ६
वेतनम् ७
भरण्यम् ८ भरणम् ९ निर्व्वेशः १०
पणः ११ ।
इति च अमरः । २ । १० । ३८ ॥
(यथा,
मिताक्षरायाम् ।
“मूल्येन यः कर्म्म करोति स भृतकः
।”)

**मूल्यं**, त्रि, (मूलं रोपणमर्हतीति । मूल + यत् ।)
प्रतिष्ठायोम्यः । रोपणयोग्यः । इति
मूलधात्वर्थ-
दर्शनात् ॥ (मूलत उत्पाट्यते इति ।
“मूल-
मस्यावर्हि ।” ४ । ४ । ८८ । इति यत्
। मूलत-
उत्पाटनयोग्ये मुद्गादौ ॥)

**मूष** लुण्ठने । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) षष्ठस्वरी । यो मूषति
परद्रव्यम् ।
इति हलायुधः ॥ ह्रस्वीत्येके । मोषति
। इति
दुर्गादासः ॥

**मूषः**, पुं-स्त्री, (मोषति अपहरतीति । मूष् +
इगुपधत्वात् कः ।) मूषिकः ॥ (यथा,
पञ्च-
तन्त्रे । ३ । २२२ । “एष प्रतिभाति ते
मूष-

रत्नावली ॥ (यथा, कालनाथविरचिते इन्द्र-जाले १ अध्यायः ।
"द्वितीयां षष्ठीमष्टम्यां कारयेत् शान्तिकर्म्म च ।
अश्विनोमृगमूलाश्च पुष्या पुनर्व्वसुस्तथा ॥")

**मूलाधारः**, पुं, (मूलानामाधारः । मूलं प्रधानं आधार इति वा ।) गुह्यलिङ्गयोर्मध्ये अङ्गुलि-द्वयमितस्थानम् । स तु शरीरस्थसकलनाडीनां मूलस्थानम् । अत्र व श ष स अक्षरयुक्तस्वर्ण-वर्णचतुर्द्दलपद्ममस्ति । तन्मध्ये इच्छाज्ञानक्रिया-स्वरूपत्रिकोणं वर्त्तते । तन्मध्ये कोटिसूर्य्यसम-प्रभस्वयम्भुलिङ्गमस्ति । अत्र पृथिवी वर्त्तते ।

राजः ।") तैजसावर्त्तनी । इति शब्दरत्नावली ॥

**मूषकः**, पुं-स्त्री, (मूष + स्वार्थे कन् ।) उन्दुरुः । इति शब्दरत्नावली ॥ (यथा, रामायणे । २ । ३३ । १९ ।
"रजसाभ्यवकीर्णानि परित्यक्तानि दैवतैः ।
मूषकैः परिधावद्भिरुद्बिलैरावृतानि च ॥")

**मूषककर्णी**, स्त्री, (मूषिकस्य कर्णवत् पत्राण्यस्याः ।
ङीष् ।) आखुकर्णी । इति राजनिर्घण्टः ॥

**मूषकमारी**, स्त्री, (मूषकं उन्दुरुं मारयतीति ।
मृ + णिच् + "कर्म्मण्यण् ।" ३ । २ । १ । इति
अण् । ङीष् ।) सुतश्रेणीवृक्षः । इति राज-
निर्घण्टः ॥

**मूषका**, स्त्री, (मूषक + स्त्रियां टाप् । क्षिपका-
दित्वात् न अत इत्वम् ।) मूषिका । इति शब्द-
रत्नावली ॥

**मूषकारातिः** पुं, (मूषकाणां अरातिः घातकः ।)
विडालः । इति राजनिर्घण्टः ॥ मूषिकारातिः ।
इति च पाठः ॥

**मूषा**, स्त्री, (मूषति गृह्णातीति । मूष + कः +
स्त्रियां टाप् ।) स्वर्णाद्यावर्त्तनपात्रम् । मूची
इति भाषा ॥ (यथा, पञ्चदश्याम् । ४ । २ ।
"मूषासिक्तं यथा ताम्रं तन्निभं जायते तथा ।
रूपादीन्व्याप्नुवच्चित्तं तन्निभं दृश्यते ध्रुवम् ॥")
तत्पर्य्यायः । तैजसावर्त्तनी २ । इत्यमरः । २ ।
१० । ३३ ॥ मुषा ३ मुषी ४ आवर्त्तनी ५
मूषी ६ । इति भरतः ॥
"बृहद्भाण्डे तुषैः पूर्णो मध्ये मूषां विधारयेत् ।
क्षिप्त्वाग्निं मुद्रयेद्भाण्डं तद्भाण्डं पुटसुच्यते ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥)
मूषिका ७ । इति रमानाथः ॥ देवताडकः ।
इति शब्दचन्द्रिका ॥ मूषिकस्त्रीजातिः ।
इति शब्दरत्नावली ॥ गवाक्षः । यथा, --
"एकद्वित्र्यादिमूषावहनभितिमहोब्रूहि मे भूमिभर्त्तु-
र्हर्म्म्ये रम्येऽष्टमूषे चतुरविरचिते श्लक्ष्णशाला-
विशाले ।"
इत्यादि लीलावत्यां श्रेढीव्यवहारः ॥
श्वासानिलकाशहरं तन्मांसं पित्तदाहकरम् ॥
अन्ये विलेशया ये स्युः केङ्किडोन्दुरुकादयः ।
गर्हितं तस्य मांसञ्च मद्यगौरवदुर्ज्जरम् ॥"
इति राजनिर्घण्टः ॥
अपि च ।
"मूषिको मधुरः स्निग्धो व्यवायी बलबर्द्धनः ।"
इति राजवल्लभः ॥ * ॥
पारिभाषिकमूषिको यथा, --
"विभवे सति नैवात्ति न ददाति जुहोति च ।
तमाहुराखुं तस्यान्नं भुक्त्वा कृच्छ्रेण शुध्यति ॥"
इति मार्कण्डेयपुराणे आचाराध्यायः ॥
(जनपदविशेषः । यथा, महाभारते । ६ । ९ । ५८ ।
"द्रविडाः केरलाः प्राच्या मूषिका वन-
वासिका ॥")

**मूषिकपर्णी**, स्त्री, (मूषिककर्णवत् पर्णाणि
यस्याः ।) र्जलजतृणविशेषः । इँदुरकाणीपाना
इति भाषा । (यथा, चरके विमानस्थाने सप्तमे-
ऽध्याये ।
"मूषिकपर्णीं समूलाग्रप्रतानामपहृत्य ॥")
तत्पर्य्यायः । चित्रा २ उपचित्रा ३ न्यग्रोधी ४
द्रवन्ती ५ सम्बरी ६ वृषा ७ प्रत्यक्श्रेणी ८
सुतश्रेणी ९ रण्डा १० । इत्यमरः । २ । ४ । ८८ ॥
पुत्त्रश्रेणी ११ आखुपर्णिका १२ वृषपर्णी १३
आखुपर्णी १४ मूषिका १५ फञ्जिपत्रिका १६ ।
"अन्यो महामूपिकः स्यान्मूषी विघ्नेशवाहनः ।
महाङ्गः शस्यमारी च भूफलो भित्तिपातनः ॥"
इति राजनिर्घण्टः ॥

**मूषीकः**, पुं, स्त्री, (मोषति इति । मूष + बाहुल-
कात् ईकन् ।) मूषिकः । इति शब्दरत्नावली ॥

**मूषीककर्णी**, स्त्री, (मूषीकस्य कर्णवत् पर्ण-
मस्याः ।) मूषिकपर्णी । इति शब्दरत्नावली ॥

**मूषीका**, स्त्री, (मूषीक + टाप् ।) उन्दुरुः । यथा,
"दीना मूषीका मूषा च मूषीका मूषिकेत्यपि ।"
इति शब्दरत्नावली ॥

**मूष्यायणः**, त्रि, (मोषति अपहरतीति । मूष +
कः चौरजारः । तस्यापत्यम् इति । मूष +
फक् । बाहुलकात् वृद्ध्यभावः ।) अज्ञात-
पितृकः । गृढोत्पन्नः । इति केचित् ॥

**मृ**, ङ श मृतौ । इति कविकल्पद्रुमः ॥ (तुदा०-
आत्म०-अक०-अनिट् ।) मृतिः प्राणत्यागः । ङ
श म्रियते प्राणी । ङित्त्वेऽऽप्यस्य मृ ङ ष्टीढ्ये
ममिति नियमेन अन्यत्र परस्मैपदम् । ममार
मर्त्ता मरिष्यति अमरिष्यत् । इति दुर्गादासः ॥

**मृकण्डकः**, पुं, (मृगस्य कण्डुरिति समासे पृषो-
दरादित्वात् गलोपे मृकण्डुः मृकण्ड इति केचि-
त्तत्र पठन्ति इत्युज्ज्वलदत्तः । ततः संज्ञायां
कन् ।) मृकण्डुमुनिः । इति शब्दरत्नावली ॥

**मूषाकर्णी**, स्त्री, (मूषायाः कर्णा इव पत्त्राण्यस्याः ।) आखुकर्णी । इति शब्दरत्नावली ॥

**मूषातूत्थं**, क्ली, (मूषाजातं तूत्थम् ।) नील-तूत्थम् । तत्पर्य्यायः । कांस्यनीलम् २ हेम-तूत्थम् ३ वितुन्नकम् ४ । इति हेमचन्द्रः । ४ । ११८ ॥

**मूषिकः**, पुं, (मूष्णाति द्रव्याणीति । मूष् + "मुषेर्दीर्घश्च ।" उणा० २ । ४२ । इति किकन् दीर्घश्च ।) जन्तुविशेषः । इन्दुर इति भाषा । (यथा, हितोपदेशे मित्रलाभप्रकरणे । १३१ । "धनेन बलवान् सर्व्वो धनाद्भवति पण्डितः । पश्यायं मूषिकः पापः स्वजातिसमतां गतः ॥") तत्पर्य्यायः । उन्दुरुः २ आखुः ३ । इत्यमरः । २ । ५ । १२ ॥ मूषः ४ मूषीकः ५ उन्दूरुः ६ बभ्रुः ७ वृषः ८ आखनिकः ९ वृशः १० । इति शब्दरत्नावली ॥ मूषकः ११ पिङ्गः १२ उन्दु-रुकः १३ नखी १४ खनकः १५ विलकारी १६ धान्यारिः १७ बहुप्रजः १८ । अस्य मांस-गुणाः । "अहिनकुलशल्यगोधामूषकमुख्या विलेशयाः कथिताः । इति रत्नमाला ॥ मूषिपर्णिका १७ सञ्चित्रा १८ मूषीकर्णी १९ सुकर्णिका २० । इति शब्द-रत्नावली ॥

**मूषिका**, स्त्री, (मूषिक + अजादित्वात् टाबित्युज्ज्वल-दत्तः ।) मूषिकपर्णी । इति रत्नमाला ॥ उन्दुरुः । इति शब्दरत्नावली ॥ मूषा । इत्य-मरटीकायां रमानाथः ॥ (यथा, सुश्रुते चिकित्-सितस्थाने २० अध्याये । "क्षीरं महापञ्चमूलं मूषिकां चान्द्रवर्ज्जि-ताम् ।")

**मूषिकाङ्कः**, पुं, (मूषिकः उन्दुरुर्वाहनत्वेन अङ्कः चिह्नमस्य ।) गणेशः । इति जटाधरः ॥

**मूषिकाञ्चनः**, पुं, (मूषिकं अञ्चति स्ववाहनतया प्राप्नोतीति । अन्च् + ल्युः ।) गणेशः । इति त्रिकाण्डशेषः ॥

**मूषिकारातिः**, पुं, (मूषिकाणामरातिः ।) विडालः । इति राजनिर्घण्टः ॥

**मूषिकाह्वयः**, पुं, (मूषिकस्य आह्वा आह्वा आख्या यस्य ।) मूषिकपर्णी । इति जटाधरः ॥ (तथास्य पर्य्यायः । "दन्त्युडुम्बरपर्णी स्यान्निकुम्भोऽथ मुकूलकः । द्रवन्तीनामतश्चित्रा न्यग्रोधा मूषिकाह्वयाः ॥" इति चरके कल्पस्थाने द्वादशेऽध्याये ॥)

**मूषिपर्णिका**, स्त्री, (मूषिपर्ण + कन् टाप् अत-इत्वम् ।) मूषिकपर्णी । इति शब्दरत्नावली ॥

**मूषी**, स्त्री, (मूष् + कः । स्त्रियां ङीष् । मूषा ।

**मृकण्डुः**, पुं, (मृगस्य कण्डुरिति समासे पृषोदरा-दित्वात् गलोपः । इत्युज्ज्वलदत्तः ।) मुनि-विशेषः । (यथा, मार्कण्डेये । ५२ । १६ । "प्राणश्चैव मृकण्डुश्च पिता मम महायशाः ।") तस्य पुत्रो मार्कण्डेयः । यथा, -- "मार्कण्डेयोऽपि मार्कण्डो मृकण्डुश्च मृक-ण्डकः ।" इति शब्दरत्नावली ॥

**मृग** त् क ङ मार्गणे । (चुरा०-आत्म०-सक०-सेट् ।) ङ रामो मृगं मृगयते वनवीथिकासु । इति महानाटकम् । कातन्त्रादौ मृग्ये अन्ये-षणे इति दिवादिपरस्मैपदी धातुश्च दृश्यते दुर्गत्रिलोचनयोरसम्मतत्वात् अनेनोपेक्षितः । मृग्यन्तः पदवीं तथाप्यकरुणा व्याधा न मुञ्चन्ति माम् । इति तु अकारान्तस्यैव भावे क्विपि अकारलोपे मृगं करोतीति कण्ड्वादित्वात् क्ये साध्यम् । इति दुर्गादासः ॥

**मृगः**, पुं, (मृगयते अन्वेषयति तृणादिकं मृग्यते वा इति । मृग् + इगुपधत्वात् कर्त्तरि च कः ।) पशुमात्रम् । (यथा, मनुः । ५ । ९ । "आरण्यानाञ्च सर्व्वेषां मृगाणां माहिषं विना ।" मृगशब्दोऽत्र महिषपर्य्युदासात् पशुमात्रपरः । इति तट्टीकायां कुल्लूकः ।) हस्तिविशेषः । नक्षत्रभेदः । (यथा, इन्द्रजालतन्त्रे । "अश्विनीमृगमूलाश्च पुष्या पुनर्व्वसुस्तथा ॥") अन्वेषणम् । (यथा, साहित्यदर्पणे । ४ । १७ । "जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।

कृतालङ्काभर्त्तर्व्वदनपरिपाटीषुघटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥”
कनकस्य सुवर्णस्य मृगे अन्वेषणे । पक्षे ।
कनकमृगे हेमहरिणे या तृष्णा इत्यर्थः ।)
याच्ञा । इति मेदिनी । गे, १८ ॥ मार्गशीर्ष-
मासः । यज्ञविशेषः । इत्यजयपालः ॥ मृग-
नाभिः । इत्यमरटीकायां भरतः ॥ मकर-
राशिः । यथा, --
“मृगकर्कटसंक्रान्ती द्वे तूदग्दक्षिणायने ।
विषुवती तुलामेषे गोलमध्ये तथापराः ॥”
इति तिथ्यादितत्त्वम् ॥
स्वनामख्यातपशुविशेषः । मृग्यते
अन्विष्यतेऽसौ
व्याधैः । (यथा, अभिज्ञानशाकुन्तले । १ ।
१० ।
“न खलु न खलु बाणः सन्निपात्योऽयमस्मिन्
मृदुनि मृगशरीरे तूलराशाविवाग्निः ।”)
तत्पर्य्यायः । कुरङ्गः २ वातायुः ३ हरिणः ४
अजिनयोनिः ५ । इत्यमरः ॥ शारङ्गः ६
चारुलोचनः ७ जिनयोनिः ८ कुरङ्गमः ९
ऋष्यः १० ऋश्यः ११ रिष्यः १२ रिश्यः
१३
एणः १४ एणकः १५ । इति शब्दरत्नावली ॥
स नवविधः । यथा, --
“सम्बरो रोहितो न्यङ्कुकुरङ्गसुदृशो रुरुः ।
एणश्च हरिणश्चेति मृगा नवविधा मताः ॥
पाठान्तरं यथा, --
“समूरू रोहितो न्यङ्कुः सम्बरो बभ्रुणो रुरुः ।
शशैणहरिणाश्चेति मृगा नवविधा मताः ॥
हरिणश्चापि विज्ञेयः पञ्चभेदोऽत्र भैरव ! ।
ऋष्यः खड्गो रुरुश्चैव पृषतश्च मृगस्तथा ।
एते बलिप्रदाने च चर्म्मदाने च कीर्त्तिताः ॥”
इति कालिकापुराणे ६७ अध्यायः ॥ * ॥
अपि च । अथ जाङ्गलानां गणना ।
“हरिणैणकुरङ्गर्ष्यपृषतन्यङ्कुसम्बराः ।
राजीवोऽपि च मुण्डी चेत्याद्या जाङ्गलसंज्ञकाः
॥
हरिणस्ताम्रवर्णः स्यादेणः कृष्णः प्रकीर्त्तितः ।
कुरङ्ग ईषत्ताम्रः स्याद्धरिणाकृतिको महान् ॥
तद्यथा, --
‘ये गन्धिनः क्षीणशरीरकर्णा-
स्ते पार्थिवा गन्धमृगाः प्रदिष्टाः ।
सर्व्वाङ्गमेषां सुरभि प्रकामं
पुण्ये प्रदेशे प्रभवन्ति ते तु ॥
ये वै विशाला गुरुदीर्घशृङ्गा
अमांसलास्तीब्रखुरप्रदेशाः ।
आप्यास्तु ते वै प्रसरन्ति भूरि
सर्व्वत्र देशे प्रभवन्ति चैव ॥
धावन्ति ये वातमिवान्तरीक्षे
दीर्घास्तु ते वातमृगाः प्रदिष्टाः ।
ते यत्र यत्रैव भवन्ति शक्ता-
स्तत्रैव सर्व्वाणि शुभानि सन्ति ॥
लघुप्रमाणा लघुवीर्य्यसत्त्वा
निर्गन्धदेहाश्छगलप्रमाणाः ।
ते गागना वेगकरा नराणां
स्पृश्या न ते नापि निरीक्षणीयाः ॥
ये कृष्णवर्णा गुरुदीर्घशृङ्गाः
क्रुद्धा भृशं यान्ति च वायुवेगाः ।
ते कृष्णसाराः खलु तैजसास्तु
पुण्यप्रदेशे प्रभवन्ति ते तु ॥’
भोजोऽप्याह ।
‘पार्थिवादिर्मृगः सर्व्वश्चतुर्जातिर्भवेत्
पृथक् ।
सुशृङ्गास्तनुलोमानो ब्राह्मणा मृगजातयः
॥
क्रुद्धाः पश्वरिशृङ्गाश्च क्षत्त्रियाः
खरलोमशाः ।
आवर्त्तशृङ्गास्तनवो हरिणा वैश्यजातयः
॥
कुशृङ्गा वाप्यशृङ्गा वा शूद्राः खरतनूरुहाः
।
अश्वानां ये गुणा दोषास्ते ज्ञेया
हरिणेष्वपि ॥
तथापि दोषाः पञ्चामी वक्ष्यन्ते
हरिणाश्रयाः ।
नेत्रयोरन्तरे यस्य लोमावर्त्ताः स पापकृत्
॥
गर्ग उवाच ।
“प्रविशन्ति यदा ग्राममारण्या मृगपक्षिणः
।
अरण्यं यान्ति वा ग्राम्याः स्थलं यान्ति
जलोद्भवाः ॥
स्थलजाश्च जलं यान्ति घोरं रासन्ति
निर्भयाः ।
गृहं कपोतः प्रविशेत् क्रव्यादो मूद्‌र्ध्नि
नीयते ॥
मधु वा मक्षिकाः कुर्य्युर्मृत्युं गृहपतेर्वदेत्
॥
मृगपक्षिविकारेषु कुर्य्याद्धोमं सदक्षिणम् ।
देवाः कपोते इति च जप्तव्याः
पञ्चभिर्द्विजैः ॥
गावश्च देया विधिवत् द्विजानां
सकाञ्चना वस्त्रयुगोत्तरीयाः ।
एवं कृते शान्तिमुपैति पापं
मृगैर्द्विजैर्व्वा विनिवेदितं यत् ॥”
इति मात्स्ये २११ अध्यायः ॥
चतुर्व्विधपुरुषमध्ये पुरुषविशेषः । तस्य
लक्षणं
यथा, --
वदति मधुरवार्णी दीर्घनेत्रोऽतिभीरु-
श्चपलमतिसुदेहः शीघ्रवेगो मृगोऽयम् ।
“शशके पद्मिनी तुष्टा मृगे तुष्टा च
चित्रिणी ।
वृषभे शङ्खिनी तुष्टा हये तुष्टा च हस्तिनी
॥
पद्मिनीशशयोर्योनिमेढ्रकौ चतुरङ्गुलौ ।
चित्रिणीमृगयोर्योनिमेढ्रकौ च तथाविधौ
॥”
इति रतिमञ्जरी ॥
(अन्वेष्टा । यथा, ऋग्वेदे । १ । १५४ ।
२ ।
“मृगो न भीमः कुचरो गिरिष्ठा ।”
“मृगः अन्वेष्टा ।” इति तद्भाष्ये सायणः
॥)

**मृगक्षीरं**, क्ली, मृगीदुग्धम् । तरादौ चेति चकार-

ऋष्यो नीलाण्डको लोके सरोरुरिति कीर्त्तितः ।
पृषतश्चन्द्रबिन्दुः स्याद्धरिणात् कियदल्पकः ॥
न्यङ्कुर्बहुविषाणोऽथ शम्बरो गवयो महान् ।
राजीवस्तु मृगो ज्ञेयो राजीभिः परितो वृतः ।
यो मृगः शृङ्गहीनः स्यात् स मुण्डीति निग-द्यते ॥”
अथ तेषां गुणाः ।
जङ्गालाः प्रायशः सर्वे पित्तश्लेष्महराः स्मृताः ।
किञ्चिद्वातकराश्चापि लघवो बलवर्द्धनाः ॥”
इति भावप्रकाशः ॥
अथ मृगपरीक्षा ।
“मृगनाभिं समादातुं कौतुकार्थं तथा पुनः ।
मृगाः पोष्या महीन्द्राणां तेषां वक्ष्यामि लक्षणम् ॥
पृथिव्यब्वायुगगनास्तेजोऽधिकास्तु पञ्चधा ।
मिद्यन्ते नैकभेदास्तु समस्ता मृगजातयः ॥”
विषमौ विकृतौ शृङ्गौ यस्य सं क्षेमनाशनः ।
आवर्त्तः पृष्ठतो यस्य आनाभिमभिबिन्दति ॥
पश्चार्द्ध यस्य वावर्त्तस्तौ त्याज्यौ भयकारकौ ।
वर्णनेत्रपदादीनां वैकृताद्धननाशनः ॥’
गार्ग्यः ।
‘दोषवन्मृगजातीनां विजातीनामथापि वा ।
दर्शनात् स्पर्शनाच्चैव गन्धादानाच्च पोषणात् ।
भवेयुर्व्विपदः सर्व्वास्तथा चैवाद्यपोषणात् ॥’
शङ्खोऽपि ।
‘हरिणपोषणतो धरणीभुजां नहि भवेन्मरुद्भवपीडनम् ।
न पविवह्निरुजारिपुजं भयं तदव तं हरिणं गुणिनं नृप ! ॥’
इति मृगपरीक्षा ॥ इति युक्तिकल्पतरुः ॥
(अस्य गुणविशेषो यथा, --
“दूरे जनान्तनिलया दूरे पानीयगोचराः ।
ये मृगाश्च विहङ्गाश्च तेऽल्पाभिष्यन्दिनो मताः ॥
अतीवासन्ननिलयाः समीपोदकगोचराः ।
ये मृगाश्च विहङ्गाश्च महाभिष्यन्दिनस्तु ते ॥”
इति सुश्रुते सूत्रस्थाने ४५ अध्यायः ॥)
मृगादिविकारोपशमो यथा, --
स्यानुक्तसमुच्चयार्थत्वात् मृग्याः क्षीरं मृगक्षीरं
मृग्याः पदं मृगपदं इत्यादिष्वपि पुंवद्भावः ।
इति मुग्धबोधटीकायां दुर्गादासः ॥

**मृगगामिनी**, स्त्री, (मृग इव गच्छतीति । गम + णिनिः । ङीप् ।) विडङ्गा । इति राजनिर्घण्टः ॥
मृगसदृशगमनशीला च ॥

**मृगघर्म्मजं**, क्ली, (मृगघर्म्मात् मृगनाभिघर्म्मात् मृगगन्धवत् जायते इत्यर्थः । जन् + डः ।)
जवादिनामकगन्धद्रव्यम् । इति राजनिर्घण्टः ॥
मृगघर्म्मजाते, त्रि ॥

**मृगचेटकः**, पुं, (मृगान् पशून् चेटयति प्रेरयति स्वशब्देन रात्रिशेषं ज्ञापयतीति । चिट् + णिच् + ण्वुल् ।) खट्टासः । इति शब्दमाला ॥

**मृगजालिका**, स्त्री, (मृगाणां जालिका ।) मृग-बन्धनार्थजालम् । तत्पर्य्यायः । वागुरा २ ।
इति हेमचन्द्रः । ३ । ५९२ ॥

**मृगजीवनः**, पुं, (मृगैः पशुभिः जीवतीति । जीव + ल्युः ।) व्याधः । इति शब्दरत्नावली ॥
(यथा, महाभारते । ३ । ६३ । २८ ।
“निर्विचेष्टं भुजङ्गं तं विशस्य मृगजीवनः ।”)

**मृगणा**, स्त्री, (मृग + युच् ।) अपहृतद्रव्यस्यान्व-षणम् । यथा, --
“संवीक्षणं विचयनं मार्गणं मृगणा मृगः ।”
इत्यमरः । ३ । २ । ३० ॥

**मृगतृट्**, [ष्] स्त्री, (मृगाणां तृट् पिपासा अत्र जलभासकत्वात् ।) मृगतृष्णा । इति शब्द-रत्नावली ॥

**मृगतृषा**, स्त्री, (मृगाणां तृषा अस्त्यस्यामिति । अर्श आदित्वात् अच् । टाप् ।) मृगतृष्णा । इति शब्दरत्नावली ॥ (यथा, कामन्दकिनीति-सारे । ३ । १३ ।
"जगन्मृगतृषातुल्यं वीक्ष्येदं क्षणभङ्गुरम् ।
स्वजनैः सङ्गतः कुर्य्यात् धर्म्माय च सुखाय च ॥")

**मृगतृष्णा**, स्त्री, जलाभासत्वात् मृगाणां तृष्णा विद्यतेऽस्याम् । ग्रीष्मे मरुदेशे सिकतादावर्क-कराः प्रतिफलिताः दूरस्थानां जलत्वेनाभान्ति तद्वाचिका । इति टीकाकारः ॥ उत्कटरवि-रश्मिजन्यक्षितिवास्पजालंमरीचिका । दूर-शून्ये यन्मयूखैर्जलमिव दृश्यते इत्यपरे । इति भरतः ॥ तत्पर्य्यायः । मरीचिका २ । इत्य-मरः । १ । ४ । ३५ ॥ मृगतृष्णिका ३ । इति भरतः ॥ मृगतृट् ४ मृगतृषा ५ । इति शब्द-रत्नावली ॥

**मृगतृष्णिका**, स्त्री, (मृगतृष्णा + स्वार्थे कन् + स्त्रियां टाप् अत इत्वञ्च ।) मृगतृष्णा । इत्य-मरटीकायां भरतः ॥ (यथा, अभिज्ञान-शाकुन्तले । ६ ।
"स्रोतोवहां पथि निकामजलामतीत्य
जातः सखे ! प्रणयवान् मृगतृष्णिकायाम् ॥")

**मृगदंशकः**, पुं, (मृगान् पशून् दशति । दन्श् + ण्वुल् ।) कुक्कुरः । इत्यमरः ॥

**मृगधूर्त्तः**, पुं, (मृगेषु पशुषु धूर्त्तः । वञ्चकत्वात् ।) शृगालः । इति संक्षिप्तसारे समासपादः ॥

**मृगधूर्त्तकः**, पुं, (मृगधूर्त्त + स्वार्थे कन् ।) शृगालः । इत्यमरः । २ । १० । २१ ॥

**मृगनाभिः**, पुं, (मृगस्य नाभिः । तदभ्यन्तरे मृगनाभिर्मृगमदः कस्तूरी गन्धधूल्यपि ॥"
इति हेमचन्द्रः । ३ । ३०७-८ ॥

**मृगनेत्रा**, स्त्री, (मृगनेतृ + "नेतृर्नक्षत्र उपसंख्या-नम् ।" ५ । ४ । ११६ । इत्यत्र काशिकोक्तेः अप् ।)
मृगो मृगशिरा नेता प्रापयिता यस्या रात्रेः सा रात्रिः । इति मुग्धबोधटीकायां दुर्गादासः ॥ सा अग्रहायणस्य विंशतिदण्डाधिकत्रयोविंश-दिनावधिसंक्रान्तिपर्य्यन्तं प्रायः सम्भवति । तत्र
नवान्नश्राद्धनिषेधो यथा । ब्रह्मपुराणे ।
"वृश्चिके शुक्लपक्षे तु नवान्नं शस्यते बुधैः ।
अपरे क्रियमाणं हि धनुष्येव कृतं भवेत् ॥
धनुषि यत् कृतं श्राद्धं मृगनेत्रासु रात्रिषु ।
पितरस्तन्न गृह्णन्ति नवान्नामिषकाङ्क्षिणः ॥"
अपरे कृष्णपक्षे । मृगो नेता प्रापयिता यासां रात्रीणामितिव्युत्पत्त्या नक्षत्रान्नेतुरित्यनेनाद्-विधानात्तत्पदं सिद्धम् । ततश्च
मृगशिरःपूर्ब्बा-र्द्धेन वृश्चिकशेषभागे रात्र्यारम्भाच्चत्वारिं-शद्दण्डाधिकषड्रात्रयो मृगनेत्राः । इति मल-मासतत्त्वम् ॥ (मृगस्य नेत्रे इव नेत्रे यस्य । मृग तुल्यनेत्रे, त्रि ॥)

**मृगपतिः**, पुं, (मृगाणां पशूनां पतिः ।) सिंहः । इति हेमचन्द्रः ॥ (यथा, भागवते । ५ । २५ । १० ।
"यल्लीलां मृगपतिराददेऽनवद्या-
मादातुं स्वजनमनांस्युदारवीर्य्यः ।"
'मृगपतिः सिंहः ।' इति तट्टीकायां श्रीधर-स्वामी ॥ कामप्रदश्रेष्ठः । यथा तत्रैव टीकायाम् ।
"मृग्यन्त इति मृगाः कामप्रदास्तेषां पति-र्मुख्यः ॥")

**मृगपिप्लुः**, पुं, (अपिप्लवते भासते इति । अपि + प्लु + बाहुलकात् संज्ञायां डुः । अपेरल्लोपश्च ।
मृगः हरिणः पिप्लुरत्र ।) चन्द्रः । इति कौमुदी ॥) राज्ञां वनेषु मृगहननक्रिया ।
मृग्यन्ते अन्विष्यन्तेऽस्याम् । शिकार इति भाषा । तत्पर्य्यायः । आच्छोदनम् २ मृगव्यम् ३ आखेटः ४ । इत्यमरः ॥
तन्नियमविधिर्य्यथा, --
"चचार मृगयां तत्र दृप्त आत्तेषुकार्म्मुकः ।
विहाय जायामतदर्हां मृगव्यसनलालसः ॥ ५ ॥
आसुरीं वृत्तिमाश्रित्य घोरात्मा निरनुग्रहः ।
न्यहनन् निशितैर्ब्बाणैर्वनेषु वनगोचरान् ॥ ६ ॥
तीर्थेषु श्रुतिदृष्टेषु राजा मेध्यान् पशून् वने ।
यावदर्थमलं लुब्धो हन्यादिति नियम्यते ॥" ७ ॥
इति श्रीभागवते ४ स्कन्धे २६ अध्यायः ॥
आत्ता गृहीता इषवो रागद्वेषादिरूपाः कार्म्मुकञ्च भोगाद्यभिनिवेशरूपं येन । जायां विवेकवतीं बुद्धिं विहाय । अतदर्हां त्यागान-र्हाम् । त्यागे हेतुः मृग्यन्ते इति मृगाः विषयाः तेषु व्यसनं भोगासक्तिस्तेन लालसा अतिस्पृहा यस्य ॥ ५ ॥ बाणै रागादिभिः । वनेषु भजनीय-देशेषु । वनगोचरान् भजनीयविषयान् ।
न्यहनत् भजनीयदेशादात्मसात् कृतवान् ।

जातत्वात् तथात्वम् ।) कस्तूरी । तत्पर्य्यायः ।
"मृगनाभिर्मृगमदः कथितस्तु सहस्रभित् ।
कस्तूरिका च कस्तूरी बोधमुख्या च सा स्मृता ॥"
सा त्रिविधा यथा, --
'कामरूपोद्भवा कृष्णां नेपाली नीलवर्णयुक् ।
काश्मीरी कपिलच्छाया कस्तूरी त्रिविधा स्मृता ॥
कामरूपोद्भवा श्रेष्ठा नैपाली मध्यमा भवेत् ।
काश्मीरदेशसंभूता कस्तूरी ह्यधमा स्मृता ॥'
अस्या गुणाः ।
'कस्तूरिका कटुस्तिक्ता क्षारोष्णा शुक्रला गुरुः ।
कफवातविषच्छर्द्दिशीतदौर्गन्ध्यदोषहृत् ॥'
इति भावप्रकाशः ॥
अन्यत् कस्तूरीशब्दे द्रष्टव्यम् ॥ (तथास्य पर्य्यायान्तरम् ।
'मृगनाभिर्मृगमदो मदः कस्तूरिकाण्डजः ।'
इति वैद्यकरत्नमालायाम् ॥)

**मृगनाभिजा**, (स्त्री, मृगनाभेर्जायते । जन् + डः ।
स्त्रियां ङीष् ।) कस्तूरी । यथा, --
"घनसारः सिताभ्रश्च चन्द्रोऽथ मृगनाभिजा ।
त्रिकाण्डशेषः ॥

**मृगप्रियं**, क्ली, (मृगाणां प्रियम् ।) पर्व्वततृणम् ।
इति राजनिर्घण्टः ॥

**मृगबधाजीवः**, पुं, (मृगबधेन आजीवतीति । आ
+ जीव् + अच् ।) व्याधः । इत्यमरः । २ । १० । २१ ॥

**मृगबन्धनी**, स्त्री, (मृगः बध्यते अनयेति । बन्ध +
ल्युट् + स्त्रियां ङीष् ।) मृगबन्धनार्थजालम् ।
तत्पर्य्यायः । वागुरा २ । इत्यमरः । २ । १० । २६ ॥

**मृगभक्षा**, स्त्री, (मृगैर्भक्ष्यतेऽसौ । भक्ष + कर्म्मणि
अप् टाप् ।) जटामांसी । इति राजनिर्घण्टः ॥

**मृगमदः**, पुं, (मृगाः माद्यन्ति अनेनेति । मद् +
अप् ।) कस्तूरी । इत्यमरः । २ । ६ । १२९ ।
(यथा, छन्दोमञ्जर्य्याम् । २ । १५ । ४ ।
"मृगमदकृतचर्च्चापीतकौषेयवासा
रुचिरशिखिशिखण्डा बद्धधम्मिल्लपाशा ।"

**मृगमदवासा**, स्त्रो, (मृगमदस्येव वासः सौरभो-
ऽस्याः ।) कस्तूरीमल्लिका । इति राजनिर्घण्टः ॥

**मृगया**, स्त्री, (मृग्यन्ते पशवोऽस्यां इति । मृग +
णिच् । "इच्छा ।" ३ । ३ । १०१ । इत्यत्र परिचर्य्या
परिसर्य्यामृगयाटाट्यानामुपसंख्यानम् । इति
वार्त्तिकोक्त्या से यकि णिलोपः । इति सिद्धान्त-
कथापक्षे तु स्पष्टमेव ॥ ६ ॥
नन्वासुरीं वृत्ति-
माश्रित्य इति किमिति मृगया निन्द्यते ।
कथापक्षे तावद्राज्ञो विहितैव सा । अध्यात्म-
पक्षेऽपि जीवस्य विषयभोगो विहित एव
इत्याशङ्क्याह तीर्थेष्विति त्रिभिः । अयं भावः ।
न हि मृगया विधीयते रागप्राप्तत्वात् किन्तु
नियम्यते प्रवृत्तिः सङ्कोच्यते । नियममेव षड्-
विधं दर्शयति । यदि अलमत्यर्थं लुब्धो रागी
सन् हन्यात् तर्हि तीर्थेषु श्राद्धादिष्वेव तत्रापि
श्रुतिदृष्टेषु प्रख्यातेष्वेव न नित्यश्राद्धादिषु ।
तत्रापि राजैव । मेध्यानेव । वन एव । यावदु-
पयोगमेव इति । एवं जीवस्य विषयसेवापि
यावदुपयोगं न यथेष्टमिति नियम एव
इत्यर्थः ॥ ७ ॥ इति तट्टीकायां श्रीधरस्वामी ॥
सा राज्ञां पापाय न स्यात् । यथा, --
"अबलस्वकुलाशिनो झसा-
न्निजनीडद्रुमपीडिनः खगान् ।
अनवद्यतृणार्द्दिनो मृगान्
मृगयाघाय न भूभृतां घ्नताम् ॥"
इति नैषधे २ सर्गे १० श्लोकः ॥
सा च कामजव्यसनविशेषः । यथा, --
"मृगयाक्षो दिवास्वप्नः परीवादः स्त्रियो
मदः ।
तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः ॥"

| | | |
|---|---|---|
| | | इति मलमासतत्त्वम् ॥<br><br>**मृगयुः**, पुं, (मृगं यातीति । मृग + “मृगय्वादयश्च ।”<br><br>उणा० १ । ३८ । इति कुः ।<br>निपात्यते च ।) ब्रह्मा ।<br>शृगालः । व्याधः । इति मेदिनी ।<br>ये, १०१ ॥<br>(यथा, भट्टिकाव्ये । ४ । ४४ ।<br>“मृगयुमिव मृगोऽथ दक्षिणेर्म्मा<br>दिशमिव दाहवतीं मरावुदन्यन् ।”)<br><br>**मृगरसा**, स्त्री, (मृगस्य मृगमांसस्येव रसोऽस्याः ।<br><br>सहदेवी । इति राजनिर्घण्टः ॥ |

**मृगराजः**, पुं, (मृगाणां पशूनां राजा अधिपतिः ।
“राजाहःसखिभ्यष्टच् ।” ५ । ४ । ९१ । इति
टच् ॥) सिंहः । इति शब्दरत्नावली ॥ (यथा,
रघुवंशे । ६ । ३ ।
“शिलाविभङ्गैर्मृगराजशाव-
स्तुङ्गं नगोत्सङ्गमिवारुरोह ॥”
व्याघ्रः । यथा, महाभारते । १ । १४१ । ३४ ।
“शृणु मे त्वं महाबाहो ! यद्वाक्यं मूषिकोऽब्रवीत् ।
धिग्बलं मृगराजस्य मयाद्यायं मृगो हतः ।”)

**मृगराट्**, [ज्] पुं, (राजते दीप्यतेऽसौ राज् +
क्विप् । ततः मृगाणां राट् ।) सिंहः । इति
शब्दरत्नावली ॥ (यथा, शिशुपालवधे । ९ । १८ ।
“पतिते पतङ्गमृगराजि निज-
प्रतिविम्बरोषित इवाम्बुनिधौ ।”)

**मृगराटिका**, स्त्री, (मृग + रट् + ण्वुल् + स्त्रियां टाप्
अत इत्वञ्च ।) जीवन्ती । इति
राजनिर्घण्टः ॥

**मृगरिपुः**, पुं, (मृगाणां रिपुः ।) सिंहः । इति
हलायुधः ॥

**मृगरोमजं**, त्रि, (मृगाणां रोमभ्यो जायते इति ।
जन् + डः । पशुलोमजातवस्त्रादि । तत्पर्य्यायः ।
राङ्कवम् २ । इत्यमरः । २ । ६ । १११ ॥

**मृगलाञ्छनः**, पुं, (मृगः लाञ्छनं चिह्नमस्य ।)
चन्द्रः । इति शब्दरत्नावली ॥

**मृगवल्लभः**, पुं, (मृगाणां वल्लभः प्रियः ।) कुन्दर-
तृणम् । इति राजनिर्घण्टः ॥

**मृगवाहनः**, पुं, (मृगो वाहनमस्येति ।) वायुः ।
भक्तानुपस्नेहभरेण पूर्णः
सन्मार्गवर्त्ती मृगजन्मभागी ॥”
इति कोष्ठीप्रदीपः ॥

**मृगशिरा**, स्त्री, (सर्व्वे सान्ता अकारान्ताश्चेति
मृगशिरोऽदन्तः । मृगशिर + टाप् ।) मृग-
शिरोनक्षत्रम् । इति शब्दरत्नावली ॥

**मृगशिराः**, [स्] पुं, (मृगस्येव शिरो यस्य ।)
मृगशिरोनक्षत्रम् । इत्यमरटीकायां राय-
मुकुटः ॥

**मृगशीर्षं**, क्ली, (मृगस्य शीर्षमिव शीर्षमस्य ।)
मृगशिरोनक्षत्रम् । इत्यमरः ॥ (यथा, भाग-
वते । ५ । २३ । ६ ।
“तथैव मृगशीर्षादीन्युद्गयनानि ।”)

**मृगशीर्षः**, पुं, (मृगस्येव शिर्षोऽस्य ।) मृगशिरो-
नक्षत्रम् । इति केचित् ॥ इत्यमरटीकायां
भरतः ॥

**मृगशीर्षा**, स्त्री, (मृगशीर्ष + टाप् ।) मृगशिरो-
नक्षत्रम् । इति त्रिकाण्डे वोपालितः । इत्यमर-
टीकायां भरतः ॥ (यथा, बृहत्संहितायाम् ।
२१ । ९ ।
“मृगशीर्षाद्या गर्भा मन्दफलाः पौषशुक्ल-
जाताश्च ।”)

**मृगशीर्षा**, [न्] पुं, (शीर्षस्य शीर्षन् इत्यादेशः ।
ततो मृगस्येव शीर्षास्य ।) मृगशिरोनक्षत्रम् ।
इति केचित् ॥ इत्यमरटीकायां भरतः ॥

**मृगा**, स्त्री, (मृगः मृगमांसतुल्यः रसोऽस्ति
अस्याः अर्श आदिभ्योऽच् ।) सहदेवीलता ।
यथा, दर्पणं प्राप्य परावृत्ता नयनरश्मयो
ग्रीवास्थमेव मुखं दर्पणगतमिव पश्यन्ति एवं
चन्द्रमण्डलं प्राप्य परावृत्तास्ते दूरत्वदोषात्
पृथिवीमव्यक्तरूपामिव चन्द्रमण्डलगतां पश्यन्ति
स एव चन्द्रे कलङ्क इत्युपचर्य्यते । इति
तट्टीका ॥ यक्ष्मरोगस्य औषधविशेषः । यथा,
“स्याद्रसेन समं हेम मौक्तिकं द्विगुणं भवेत् ।
गन्धकस्तु समस्तेन रसपादस्तु टङ्कणः ॥
सर्व्वं तद्गोलकं कृत्वा काञ्जिकेन विशोषयेत् ।
भाण्डे लवणपूर्णेऽथ पचेद् यामचतुष्टयम् ।
मृगाङ्कसंज्ञको ज्ञेयो रोगराजनिकृन्तनः ॥”
अपि च ।
‘रसस्य भस्मनो हेम पिष्टीकृत्य प्रयोजयेत् ।
गुञ्जाचतुष्टयञ्चाज्यमरिचैर्भक्षयेन्नरः ॥’
इति मधुमती ॥
(एतन्नामकौषधान्तरं यथा, --
“रसभस्म हेमभस्म तुल्यं गुञ्जाद्वयं द्वयम् ।
दोषं बुद्ध्वानुपानेन मृगाङ्कोऽयं क्षयापहः ॥” * ॥
इति वैद्यकरसेन्द्रसारसंग्रहे यक्ष्माधिकारे ॥)

**मृगाजीवः**, पुं, (मृगैः आजीवतीति । जीव् +
अच् ।) व्याधः । इत्यमरः । २ । १० । २१ ॥

**मृगाण्डजा**, स्त्री, (मृगाण्डात् जायते इति ॥
जन् + डः + स्त्रियां टाप् ।) कस्तूरी । इति
राजनिर्घण्टः ॥ (तथास्या विषयः ।
“एतैः समस्तैर्द्विपलप्रमाणै-
रालोड्य सर्व्वं विधिना विपक्वम् ।
कर्पूरकाश्मीरमृगाण्डजानां
चूर्णीकृतानां त्रिपलप्रमाणम् ॥”
इति भैषज्यधन्वन्तरौ वातरोगे मध्यमनारायण-
तैले ॥)

**मृगात्**, [द्] पुं, स्त्री, (मृगान् अत्तीति । अद् +
क्विप् ।) व्याघ्रः । इति केचित् ॥

इति जटाधरः ॥

**मृगव्यं**, क्ली, (मृगान् विध्यति अत्र इति । व्यध् +

"अन्येष्वपि दृश्यते ।" ३ । २ । ४८ ।
इति
काशिकोक्त्या अधिकरणे डः ।) मृगया ।
इत्यमरः । २ । १० । २३ ॥ (यथा,
मार्कण्डेये ।
१२७ । १ ।
"कदाचिद्राजपुत्त्रोऽसौ मृगव्यमचरद्वने ।")

**मृगशिरः**, [स्] क्ली, (मृगस्येव शिरोऽस्य ।)

सप्तविंशतिनक्षत्रान्तर्गतपञ्चमनक्षत्रम् ।
तत्-
पर्य्यायः । मृगशीर्षम् २ आग्रहायणी ३ ।
इत्यमरः । १ । ३ । २३ ॥ (यथा,
बृहत्संहिता-
याम् । १० । ५ ।
"मृगशिरसि वत्सयाजक-
यजमानार्य्यजनमध्यदेशाश्च ।")
तत्तु विडालपदाकृति तारात्रयात्मकं
चन्द्राधि-
दैवतम् । इति ज्योतिषम् ॥ गगनमध्ये
तस्योदये
कन्यालग्नस्य द्वात्रिंशत्पलानि गतानि
भवन्ति ।
यथा, --
"मूषिकाशनपदाकृतौ विधौ
व्योममध्यमिलिते त्रितारके ।
शारदेन्दुमुखि ! कन्यकोदया-
दीक्षणानलकलाः कलावति ! ॥"
इति कालिदासकृतरात्रिलग्ननिरूपणम् ॥
तत्र जातफलम् । यथा, --
"शरासनाभ्यासरतो विनीतः
सदानुरक्तो गुणिनां गुणेषु ।

इति राजनिर्घण्टः ॥

**मृगाक्षी**, स्त्री, (मृगस्येव अक्षि तद्वत्पुष्पं अक्षिणी

वा अस्याः । अक्षि +
"अक्ष्णोऽन्यतरस्याम् ।"
५ । ४ । ७६ । इति अच् । स्त्रियां ङीष्
।)
विशाला ॥ (यथास्याः पर्य्यायः ।
"ऐन्द्रीन्द्रवारुणी चित्रा गवाक्षी च
गवादनी ।
वारुणी चामराप्युक्ता सा विशाला
महाफला ।
श्वेतपुष्पा मृगाक्षी च मृगेर्व्वारुर्मृगादनी
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)
मृगलोचनतुल्यनेत्रा स्त्री । इति मेदिनी ।
षे,
४४ ॥ (यथा, छन्दोमञ्जर्य्याम् । २ ।
११ । ८ ।
"वल्लववेशा मुररिपुमूर्त्ति-
र्गोपमृगाक्षीकृतरतिपूर्त्तिः ।
वाञ्छितसिद्ध्यै प्रणतिपरस्य
स्यादनुकूला जगति न कस्य ॥")

**मृगाङ्कः**, पुं, (मृगः अङ्को, यस्य ।) चन्द्रः ॥

(यथा, नैषधचरिते । १ । ७८ ।
"विनिद्रपत्त्रालिगतालिकैतवान्
मृगाङ्कचूडामणिवर्ज्जनार्ज्जितम् ।")
कर्पूरः । इत्यमरः । १ । ३ । १४ ॥
वायुः ।
इति विश्वः ॥ मृगचिह्नम् । चन्द्रे
तच्चिह्नकारणं
यथा, --
"लोकच्छायामयं लक्ष्म तवाङ्के
शशसंस्थितम् ।
न विदुः सोमदेवापि ये च नक्षत्रयोगिनः
॥"
इति महाभारते हरिवंशः ॥

**मृगादनः**, पुं, (अत्तीति । अद् + ल्युः । मृगस्य

अदनः ।) क्षुद्रव्याघ्रः । तत्पर्य्यायः । तरक्षुः
२ ।
इत्यमरः । २ । ५ । १ ॥ तर्क्षुः ३ तरूक्षुः ४
तर-
क्षकः ५ । इति शब्दरत्नावली ॥
बृहत्कुक्कुरा-
कारे कृष्णरेखाचित्रे नेकडा इति ख्याते । इति
भरतः ॥ चीता इति ख्याते । इत्यच्युतः ॥

**मृगादनी**, स्त्री, (मृगैरद्यते भुज्यतेऽसौ इति ॥

अद् + कर्म्मणि ल्युट् + स्त्रियां ङीष् ।) इन्द्र-
वारुणी । सहदेवी । मृगेर्व्वारुः । इति राज-
निर्घण्टः ॥ (यथा, --
"शिरीषञ्च महातिक्ता जरातुम्बी मृगादनी ।"
इति गोविन्दविशारदकृतभैषज्यरत्नावल्याम्
कुष्ठचिकित्सायाम् ।) क्षुद्रव्याघ्री च ॥

**मृगान्तकः**, पुं, (मृगाणां अन्तकः नाशकः ।)

चित्रव्याघ्रः । इति राजनिर्घण्टः ॥

**मृगारातिः**, पुं, (मृगाणां अरातिः ।) कुक्कुरः ।

इति शब्दमाला ॥ मृगशत्रुः । यथा, --
"मार्गं मार्गं मृगयति मृगारातिरामे विरामे
शोकं शोकं गतवति गते लक्ष्मणे लक्ष्मणेन ।"
इति महानाटकम् ॥

**मृगारिः**, पुं, (मृगाणामरिः ।) सिंहः । व्याघ्रः ।
इति मेदिनी । रे, २०६ ॥ कुक्कुरः । रक्तशिग्रुः ।
इति राजनिर्घण्टः ॥

**मृगावित्,** [ध्] पुं, (मृगान् विध्यति इति । व्यध् +
क्विप् । "अन्येषामपि दृश्यते ।" ६ । ४ । १३७ ।
इति दीर्घश्च ।) व्याधः । इति जटाधरः ॥
(मृगावेधनशीलः । यथा, भट्टिकाव्ये । ५ । ८२ ।
"भ्रातरि न्यस्य यातो मां मृगाविन् मृगयामसौ ।")

**मृगितः**, त्रि, (मृग + क्तः ।) अन्वेषितः । इत्य-
मरः ॥

**मृगी**, स्त्री, (मृग + जातौ ङीष् ।) मृगजातिस्त्री ।
इति व्याकरणम् ॥ (यथाभिज्ञानशाकुन्तले । ६ ।
"शाखालम्बितवल्कलस्यच तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥")
अस्या दुग्धगुणाः छागीदुग्धगुणतुल्याः । यथा,
'मृगीणां जाङ्गलोत्थानां अजाक्षीरगुणं पयः ।'
इति भावप्रकाशः ॥
पुलहभार्य्या । सा कश्यपकन्या । तस्या अपत्यं
हरिणादि । यथा, --
"क्रोधाच्च जज्ञिरे कन्या द्वादशैवात्मसम्भवाः ।
ता भार्य्याः पुलहस्य स्युर्मृगी मन्दा इरावती ॥
भूता च कपिला दंष्ट्रा कषा तिष्या तथैव च ।
श्वेता च सरमा चैव सरसा चेति विश्रुताः ॥
मृग्यास्तु हरिणाः पुत्त्रा मृगाश्चान्ये शशा-
स्तथा ।
न्यङ्कवः शरभा ये च पुरवः पृषताश्च ये ॥"
इति वह्निपुराणम् ॥
त्र्यक्षरच्छन्दोविशेषः । यथा । रो मृगी । 'सा
मृगीलोचना । राधिका श्रीपतेः ॥' वृमध्या ।
इति छन्दोमञ्जरी ॥ अपस्माररोगः । इति लोके
ख्यातः ॥ (होमोक्तमुद्राविशेषः ॥)

**मृगेक्षणा**, स्त्री, (मृगैरीक्ष्यते प्रियत्वात् इति ।
ईक्ष् + ल्युट् + स्त्रियां टाप् ।) मृगेर्व्वारुः ।
इति राजनिर्घण्टः ॥ मृगनयना स्त्री च ॥

**मृगेन्द्राशी**, स्त्री, (मृगेन्द्रेण अश्यते इति । अश्
+ घञ् + गौरादित्वात् ङीष् ।) वासकः । इति
राजनिर्घण्टः ॥ (विशेषोऽस्या वासकशब्दे
ज्ञातव्यः ॥)

**मृगेर्व्वारुः**, स्त्री, (मृगस्य प्रिया इर्व्वारुः ।)
श्वेतेन्द्रवारुणी । सैँधिनी इति हिन्दीभाषा ॥
तत्पर्य्यायः । मृगाक्षी २ श्वेतपुष्पा ३ मृगा-
दनी ४ चित्रवल्ली ५ बहुफली ६ कपिलाक्षी ७
मृगेक्षणा ८ चित्रा ९ चित्रफला १० पथ्या ११
विचित्रा १२ मृगचिर्भिटा १३ मरुजा १४
कुम्भिनी १५ देवी १६ कट्फला १७ लघु-
चिर्भिटा १८ । अस्या गुणाः । दुर्ज्जरत्वम् ।
गुरुत्वम् । मन्दानलकारित्वम् । रक्तपित्तहारि-
त्वञ्च । इति राजनिर्घण्टः ॥

**मृगेष्टः**, पुं, (मृगाणामिष्टः ।) मुद्गरवृक्षः । इति
राजनिर्घण्टः ॥

**मृग्यः**, त्रि, (मृग्यते अन्विष्यते असौ । मृग्
+ कर्म्मणि यत् ।) मृगितव्यः । अन्वेषणीयः ।
इति व्याकरणम् ॥ (यथा, श्रीमद्भागवते । ७ ।
७ । २३ ।
"देहस्तु सर्व्वसंघातो जगत्तस्थुरिति द्विधा ।
अत्रैव मृग्यः पुरुषो नेति नेतीत्यतत्त्यजन् ॥")

हलायुधः । श मृडति दीनं दाता ।
अमृडित्वा
सहस्राक्षमिति भट्टिः । मर्डिता । इति दुर्गा-
दासः ॥

**मृडः**, पुं, (मृडति हृष्यतीति । मृड् + इगुप-
धत्वात् कर्त्तरि कः ।) शिवः । इत्यमरः । १ ।
१ । २३ ॥ (यथा, श्रीमद्भागवते । ४ । २ । ७ ।
"प्राङ्निषण्णं मृडं दृष्ट्वा नामृष्यत्तदनादृतः ।")

**मृडङ्कणः**, पुं, (मृड्णाति सुखयतीति । मृड् +
"मृडः कीकन् कंकणौ ।" उणा० ४ । २४ ।
इति कंकणः ।) बालकः । इत्युणादिकोषः ॥

**मृडा**, स्त्री, (मृड + टाप् ङीप् च ।) दुर्गा ।
इति हलायुधः ॥

**मृडी**, स्त्री, (मृड + टाप् ङीप् च ।) दुर्गा ।
इति हलायुधः ॥

**मृडीकः**, पुं, (मृडतीति । मृड् + "मृडः कीकन्
कङ्कणौ ।" उणा० ४ । २४ । इति कीकन् ।)
हरिणः ॥

**मृण**, श हिंसे । इति कविकल्पद्रुमः ॥ (तुदा०-
पर०-सक०-सेट् ।) मर्णिता । इति
दुर्गादासः ॥

**मृणालं**, क्ली, पुं, मृण्यते हिंस्यते भक्षणाद्यर्थं
यत् । (मृण् +
"तमिविशिविडिमृणिकुलिकपि-
पलिपञ्चिभ्यः कालन् ।" उणा० १ । ११७ ।
इति कालन् । पङ्कजादीनां नालम् ।)
मोलाम

(यथा, बृहत्संहितायाम् । ४८ । १४ ।
“काञ्चीकलापनूपुरगुरुजघनोद्वहनविघ्नित पदाभिः ।
श्रीमति मृगेक्षणाभिर्गृहेऽन्यभृतवल्गुवच-नाभिः ॥”)

**मृगेन्द्रः**, पुं, (मृगाणामिन्द्रः श्रेष्ठः ।) सिंहः ।
इत्यमरः । २ । ५ । १ ॥ (यथा, श्रीमद्भागवते । १ । १२ । २२ ।
“मृगेन्द्र इव विक्रान्तो निषेव्यो हिमवानिव ।
तितिक्षुर्वसुधेवासौ सहिष्णुः पितराविव ॥”
भगवद् विभूतिः । यथा, श्रीमद्भगवद्गीतायाम् । १० । ३० ।
“मृगाणाञ्च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥”
छन्दोविशेषश्च ॥)

**मृगेन्द्रचटकः**, पुं, (मृगेन्द्र इव विक्रमी चटकः ।)
श्येनपक्षी । इति जटाधरः ॥

**मृज** ऊ ष कि भूषे । शुद्धौ । इति कविकल्पद्रुमः ॥
(चुरा०-पक्षे भ्वा०-पर०-सक०-सेट् ।) ऊ
अमार्जीत् अमार्क्षीत् । ष मृजा । कि मार्जत्या-लेपनैर्द्विजान् । यो मार्ज्जयति शास्त्रार्थमिति हलाषुधः । इति दुर्गादासः ॥

**मृज** ल ऊ ष शुद्धौ । इति कविकल्पद्रुमः ॥
(अदा०-पर०-सक०-सेट् ।) शुद्धिरिह शुद्धी-भावः शुद्धीकरणञ्च । ल मार्ष्टि तीर्थोदकैर्नित्य-मिति हलायुधः । ऊ अमार्ज्जीत् भस्मतो मलम् । अमार्क्षीच्चासि पत्रादीनिति भट्टिः ।
ष मृजा । इति दुर्गादासः ॥

**मृजः**, पुं, (मृज्यतेऽसौ । इति मृज् + कृत्यल्युटो
बहुलमिति कर्म्मणि कः ।) वाद्यविशेषः । मादल इति भाषा । यथा । मर्दलो दारुजो मृजः ।
इति शब्दरत्नावली ॥

**मृजा**, स्त्री, (मृज्यते इति । मृज् + “षिद्भिदा-
दिभ्योऽङ् ।” ३ । ३ । १०४ । इति अङ् +
टाप् च ।) मार्जनम् । इत्यमरः । २ । ६ । १२१ ॥
(यथा, सुश्रुते चिकित्सितस्थाने २४ अध्याये ।
“अभ्यङ्गो मार्द्दवकरः कफवातनिरोधनः ।
धातूनां पुष्टिजननो मृजावर्णबलप्रदः ।”)

**मृज्यं**, त्रि, मृज्यते यत् इति । मृज् । “मृजेर्वि-

इति ख्यातम् । इति भरतः ॥ (यथा, नैषध-
चरिते । १ । १३७ ।
“मदर्थसन्देशमृणालमन्थरः
प्रियः कियद्दूर इति त्वयोदिते ।”)
तत्पर्य्यायः । विसम् २ । इत्यमरः । १ । १० । ४२ ॥
विशम् ३ । इति द्विरूपकोषः ॥ पद्मनालम् ४
मृणाली ५ मृणालिनी ६ पद्मतन्तुः ७ विसिनी
८ नलिनीरुहम् ९ । अस्य गुणाः । शिशिर-
त्वम् । तिक्तत्वम् । कषायत्वम् । पित्तदाहमूत्र-
कृच्छ्रविकाररक्तवान्तिहरत्वञ्च । इति राज-
निर्घण्टः ॥ (शालूकविशेषः । तत्पर्य्यायो यथा,
“पद्मादिकन्दः शालूकं करहाटश्च कथ्यते ।
मृणालं मूलं भिष्माण्डं लज्जाशूकञ्च कथ्यते ॥”
तथास्य गुणाः । विशार्थे शालूकार्थे च ॥
“मृणालं शीतलं वृष्यं पित्तदाहास्रजिद्गुरु ॥
दुर्ज्जरं स्वादुपाकञ्च स्तन्यानिलकफप्रदम् ।
संग्राहि मधुरं रूक्षं शालूकमपि तद्गुणम् ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**मृणालं**, क्ली, (मृण + कालन् ।) वीरणमूलम् ।
इति मेदिनी । ले, १२४ ॥ (अस्य पर्य्यायो यथा,
मृणालमभयं सेव्यं लामज्जकमुशीरकम् ॥”
इति वैद्यकरत्नमालायाम् ॥
“स्यादुशीरं मृणालञ्च सेव्यं लामज्जकन्तथा ॥”
इति गारुडे पूर्ब्बखण्डे २०८ अः ॥)

भाषा ।” ३ । १ । ११३ । इति
क्यप् ।) मार्ग्यम् ।
मार्जनीयम् । इति
मुग्धबोधव्याकरणम् ॥ (यथा,
भट्टौ । ६ । ५६ ।
“मन्युस्तस्य त्वया मार्ग्यो मृज्यः
शोकश्च
तेन ते ॥”)

**मृड** ग श मोदे । इति कविकल्पद्रुमः ॥ (क्रा०-

वा तुदा०-अक०-सेट् ।) मोद इह
हृष्टी-
करणम् ॥ ग मृड्णाति सरस्वत्या
च यः सदेति

**मृणालिनी**, स्त्री, (मृणालानि अस्याः सन्तीति ।

मृणाल + “पुष्करादिभ्यो देशे ।” ५ । २ ।
१३५ ।
इति इनिः । ङीप् च ।) पद्मिनी । इति
जटा-
धरः ॥ सा तु पद्मयुक्तदेशः पद्मसमूहः
पद्मलता
च ॥ (यथा, रघुवंशे । १६ । ७ ।
“विमर्षि चाकारमनिर्वृतानां
मृणालिनी हैममिवोपरागम् ।”)

**मृणाली**, स्त्री, (मृणाल + गोरादित्वात् ङीष् ।)
मृणालम् । इति राजनिर्घण्टः ॥ (यथा, उत्तर-
चरिते । १ ।
"परिमृदितमृणालीदुर्ब्बलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥")
(अल्पं मृणालं इति । मृणाल + अल्पार्थे
ङीष् ।) स्वल्पमृणालजातिः । यथा, --
"सान्द्रं चन्दनमङ्गके बलयिताः पाणौ मृणाली-
लताः ।
इति राजशेखरः । इत्यमरटीकायां भरतः ॥

**मृणाली**, [न्] पुं, (मृणालमस्यास्तीति । मृणाल
+ इनिः ।) पद्मः । इति केचित् ॥

**मृत्**, [द्] स्त्री, (मृद्नाति प्रलये चूर्णतया स्वकारणे
लीयत इति । मृद् + कर्त्तरि क्विप् ।) मृत्तिका ।
इत्यमरः । २ । १ । ४ । (यथा, मनुसंहिता-
याम् । ४ । ३९ ।
"मृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम् ।
प्रदक्षिणानि कुर्व्वीत प्रज्ञातांश्च वनस्पतीन् ॥"
(यथास्या गुणाः ।
"कषाया मारुतं पित्तमुषरा मधुरा कफम् ॥
कोपयेन्मृद्रसादींश्च रौक्ष्याद्भुक्तञ्च रूक्षयेत् ।
पूरयत्यविपक्वैव स्रोतांसि निरुणद्ध्यपि ।
इन्द्रियाणां बलं हत्वा तेजोवीर्य्यौजसी तथा ।
पाण्डुरोगं करोत्याशु बलवर्णाग्निनाशनम् ॥"
इति माधवकरकृतरुग्विनिश्चये पाण्डुरोगाधि-
कारे ।) तुवरी । इति राजनिर्घण्टः ॥ * ॥
मृत्तिकाशौचं यथा, --
"दिवासन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ।
कुर्य्यात् मूत्रपुरीषे तु रात्रौ वै दक्षिणामुखः ॥
गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ।
गन्धलेपक्षयकरं शौचं कुर्य्यान्महाव्रताः ॥"
इति गारुडे ९४ अध्यायः ॥

कार्य्याकार्य्यविभागाज्ञो मृतादप्यपरो मृतः ॥"
इति माधवकरकृतरुग्विनिश्चये पानात्यया-
द्यधिकारे । यथा च ।
"उत्तिष्ठोत्तिष्ठ गच्छ त्वं वद मौनं समाचर ।
ये पराधीनतां यान्ति तेऽपि जीवन्ति के मृताः ॥"
इत्युद्भटः ॥)

**मृतकं**, क्ली, (मृत + स्वार्थे कन् ।) शवः । इति
हेमचन्द्रः । ३ । २२९ ॥ मरणाशौचम् । यथा,
"यदि स्यात् सूतके सूतिर्मृतके च मृतिस्तथा ।
शेषेणैव भवेच्छुद्धिरहःशेषे द्विरात्रकम् ॥"
इति शुद्धितत्त्वम् ॥

**मृतकल्पः**, त्रि, (मृत + "ईषदसमाप्तौ कल्पब् ।
देश्यदेशीयरः ।" ५ । ३ । ६७ । इति कल्पप् ।)
मृतप्रायः । ईषदूनो मृतः । इति मृतशब्दा-
दीषदूनार्थे कल्पप्रत्ययेन निष्पन्नम् ॥

**मृतकान्तकः**, पुं, (मृतकस्य अन्तकः नाशको
भक्षकत्वात् ।) शृगालः । इति हारावली ॥

**मृतजीवः**, पुं, (मृतश्चासौ जीवश्चेति नील-
लोहितादिवत् विशेषणसमासः ।) तिलकवृक्षः ।
इति राजनिर्घण्टः ॥ (विवरणमस्य तिलकशब्दे
ज्ञातव्यम् ॥)

**मृतण्डः**, पुं, (मृतः अण्डः कारणत्वेन यस्य शक-
न्धादित्वात् पररूपम् ।) सूर्य्यपिता । इति
मार्त्तण्डशब्दटीकायां भरतः ॥

सौरेण तीर्थतोयेन पञ्चरत्नसमन्वितम् ॥
सर्व्वान् सर्व्वौषधैर्युक्तान् पञ्चगव्यसमन्वितान् ।
पञ्चरत्नफलैर्युक्तान् वासोभिरभिवेष्टयेत् ॥
गजाश्वरथ्यावल्मीकसङ्गमात्ह्रदगोकुलात् ।
राजद्वारप्रदेशाच्च मृदमानीय निःक्षिपेत् ॥
चतुर्ष्वपि च कुम्भेषु रत्नगर्भेषु मध्यमम् ।
गृहीत्वा ब्राह्मणस्तन्तु सौरान्मन्त्रानुदीरयेत् ॥
सप्तभिरपि नारीभिरव्यङ्गाभिरथाप्यलम् ।
पूजिताभिर्यथाशक्त्या माल्यवस्त्रविभूषणैः ।
सविप्राभिश्च कर्त्तव्यं मृतवत्साभिषेचनम् ।
दीर्घायुरस्तु बालोऽयं जीवपुत्त्रा च भाविनी ॥
आदित्यश्चन्द्रमाः सार्द्धं ग्रहनक्षत्रमण्डलैः ।
शक्रः सलोकपालो वै ब्रह्मविष्णुमहेश्वराः ।
एते चान्ये च देवौघाः सदा पान्तु कुमारकम् ॥
मित्रोऽशनिर्मा हुतभुङ्मा च बालग्रहाः क्वचित् ।
पीडां कुर्व्वन्तु बालस्य मा मातुर्जनकस्य वै ॥
ततः शुक्लाम्बरधरा कुमारी पतिसंयुता ।
सप्तकं पूजयेद्भक्त्या स्त्रीणामथ गुरुं पुनः ॥
काञ्चनीञ्च ततः कृत्वा तिलपात्रोपरिस्थिताम् ।
प्रतिमां कूर्म्मराजस्य गुरवे विनिवेदयेत् ॥
वस्त्रकाञ्चनरत्नौघैर्भक्ष्यैः सघृतपायसैः ।
पूजयेद्ब्राह्मणं तद्वद्वित्तशाठ्यविवर्ज्जितः ॥
भुक्त्वा च गुरुणा चेयमुच्चार्य्या मन्त्रसन्ततिः ।
दीर्घायुरस्तु बालोऽयं यावद्वर्षशतं समम् ।
यत्किञ्चिदस्य दुरितं निःक्षिप्तं बडवानले ॥
ब्रह्मा रुद्रो वसु स्कन्दो विष्णुर्देवो हुताशनः ।

**मृतं**, क्ली, (मृ + क्तः ।) याचितम् । इत्यमरः ।

२ । ९ । ३ ॥ याचनवृत्तिर्म्मरणमिव दुःखजन-
कत्वात् मृतं भावे कर्म्मणि वा क्तः । इति
भरतः ॥ मृत्युः । इति हेमचन्द्रः ॥

**मृतं**, त्रि, याचितवस्तु । गतप्राणः । मरा इति

भाषा । तत्पर्य्यायः । परासुः २ प्राप्तपञ्चत्वः ३
परेतः ४ प्रेतः ५ संस्थितः ६ प्रमीतः ७ ।
इत्यमरः । २ । ९ । ३ ॥ कलौ मृतस्य
धन्यत्वं यथा,
"धर्म्मः प्रव्रजितस्तपः प्रवसितं सत्यञ्च दूरे गतं
पृथ्वी मन्दफला जनाः कपटिनो लौल्ये स्थिता
ब्राह्मणाः ।
मर्त्याः स्त्रीवशगाः स्त्रियश्च चपला नीचा जना
उन्नता
हा कष्टं खलु जीवितं कलियुगे धन्या नरा
ये मृताः ॥"
इति गारुडे ११५ अध्यायः ॥
(कार्य्यवशाज्जीवितावस्थायामपिमृतत्वं तद्-
यथा, --
"चतुर्थे तु मदे मूढो भग्नदार्व्विव निष्क्रियः ।

**मृतमत्तः**, पुं, (मृतेन शवेन मत्तः । भक्ष्यलाभात् ।)

श्रृगालः । इति त्रिकाण्डशेषः ॥

**मृतमत्तकः**, पुं, (मृतमत्त + स्वार्थे कन् ।) शृगालः ।

इति शब्दरत्नावली ॥

**मृतवत्सा**, स्त्री, (मृता वत्सा यस्याः ।) मृता-

पत्या । अजीवत्सन्ताना ।
गर्भावधिवर्षत्रयं
यावत् पुनःपुनर्म्मृतसन्ताना । अस्या दोषशान्ति-
र्यथा, --
"सप्तमीस्नपनं वक्ष्ये सर्व्वलोकहिताय वै ।
जातस्य मृतवत्सायाः सप्तमे मासि नारद ! ।
अथवा शुक्लसप्तम्यामेतत् सर्व्वञ्च शस्यते ॥
ग्रहताराबलं लब्ध्वा कृत्वा वा विप्रवाचनम् ।
बालस्य जन्मनक्षत्रतिथिद्वेवान् यजेद्बुधः ॥
तद्वद्वृद्धातुराणान्तु कृत्यं स्यादितरेषु च ।
गोमयेनानुलिप्तायां भूमावेकाग्निवत्तदा ॥
तण्डुलै रक्तशालीयैश्चरुं गोक्षीरसंयुतम् ।
निर्व्वपेत् सूर्य्यरुद्राभ्यां तन्मन्त्राभ्यां विधानतः ॥
कीर्त्तयेत् सूर्य्यदैवत्यं सप्तर्च्चञ्च घृताहुतीः ।
जुहुयाद्रुद्रसूक्तेन तद्वद्रुद्राय नारद ! ॥
होतव्याः समिधस्तद्वत्तथैवार्कपलाशयोः ।
यवकृष्णतिलैर्होमः कर्त्तव्योऽष्टशतं पुनः ॥
व्याहृतिभिरथाज्येन तथैवाष्टशतं द्विज ! ।
हुत्वा स्नानञ्च कर्त्तव्यमङ्ग्यङ्गेन च धीमता ॥
विप्रेण वेदविदुषा विधिवद्दर्भपाणिना ।
रक्षन्तु सर्व्वदुष्टेभ्यो वरदाः सन्तु सर्व्वदा ॥
एवमादीनि वाक्यानि वदन्तं पूजयेद्गुरुम् ।
शक्तितः कपिलां दद्यात् प्रणिपत्य विसर्ज्जयेत् ॥
गुरुञ्च पुत्त्रसहिता प्रणम्य रविशङ्करौ ।
हुतशेषं तदाश्नीयादादित्याय नमोऽस्तु ते ॥
इदमेवाद्भुतोद्वेगदुःखस्वप्नेषु शस्यते ।
कर्त्तृजन्मदिनर्क्षाणां देवान् संपूजयेत् सदा ॥
शान्त्यर्थं शुक्लसप्तम्यामेतत् कुर्व्वन्न सीदति ॥
स चानेन विधानेन दीर्घायुरभवत्ततः ।
सम्बत्सराणामयुतं शशास पृथिवीमिमाम् ॥"
इति मात्स्ये ६४ अध्यायः ॥
तल्लक्षणशान्त्यौषधानि यथा, --
"गर्भः संजातमात्राद्वा पक्षात् मासाच्च वत्सरात् ।
म्रियते द्वित्रिवर्षाद्वा यस्याः सा मृतवत्सिका ॥
तत्र योगं प्रकर्त्तव्यं यथा शङ्करभाषितम् ॥
मार्गशीर्षे तथा ज्येष्ठे पूर्णिमालेपिते गृहे ।
नूतनं कलसं पूर्णं पूजयेन्मातृकाः सुधीः ॥
शाखाफलसमायुक्तं नवरत्नसमन्वितम् ।
सुवर्णसूत्रिकायुक्तं षट्कोणमण्डले स्थितम् ।
तन्मध्ये पूजयेद्देवीं एकान्तीनामविश्रुताम् ॥
गन्धपुष्पाक्षतैर्धूपैर्दीपनैवेद्यसंयुतैः ।
पूजयेद्भक्तिभावेन मद्यमांसैः समत्स्यकैः ॥
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही च तथा चैन्द्री षट्पत्रेषु च मातरः ॥
पूजयेन्मन्त्रपूतेन फैंकारे नाम विश्रुते ।

| | | |
|---|---|---|
| | स्नापयित्वा तु चतुरः कुम्भान् कोणेषु शोभनान् ॥<br>पञ्चमञ्च पुनर्मध्ये दध्यक्षतविभूषितम्।<br>स्थापयेदव्रणं कुम्भं सप्तर्च्चेनाभिमन्त्रितम्। | |

दधिभक्तानि पिण्डानि सप्तसङ्ख्यानि कारयेत् ॥
षट्सङ्ख्येषु च पत्रेषु मातृभ्यः कल्पयेत् पृथक् ।
चिल्लेभ्यः सप्तमं पिण्डं शुचिस्थाने बहिः क्षिपेत् ।
तैर्भुक्ते गृहमागच्छेच्चक्राग्रे यागमारभेत् ॥
कन्यकां योगिनीं वामां भोजयेत् सकुटुम्बकैः ।
दक्षिणां दापयेत्तासां देवताग्रे न चान्यथा ॥
विसृज्य देवताञ्चाथ नद्यां तत्कलसोदकम् ।
शकुनं वीक्षयेद्धीमान् शुभेन शुभमादिशेत् ॥
विपरीते पुनः कार्य्यं यागं तन्तु सुसिद्धिदम् ।
प्रतिवर्षमिदं कार्य्यं दीर्घजीविसुतं लभेत् ॥”
ॐ ह्रीं फैँ एकान्तीदेवतायै नमः । अनेन मन्त्रेण पूजा जपश्च कार्य्यः ॥ * ॥
“प्राङ्मुखः कृत्तिकाऋक्षे बन्ध्याकर्कोटकीं हरेत् ।
तत्कन्दं पेषयेत्तोयैः कर्षमात्रं सदा पिवेत् ॥
या बीजपूरं द्रवमूलमेकं क्षीरेण पक्वं प्रपिवेत् विमिश्रम् ।
ऋतौ निजं या तु पतिं प्रयाति दीर्घायुषं सा तनयं प्रसूते ॥
मञ्जिष्ठा मधुकं कुष्ठं त्रिफला शर्करा बला ।
मेदा पयस्या काकोलीमूलञ्चैवाश्वगन्धजम्॥
अजमोदा हरिद्रे द्वे हिङ्गुः कटुकरोहिणी ।
उत्पलं कुमुदं द्राक्षा काकोल्योर्म्मूलकद्वयम् ।
एतेषां कर्षकैर्भागैर्घृतप्रस्थं विभावयेत् ॥
शतावरीरसं क्षीरं घृतस्येदं चतुर्गुणम् ।
संपिवेन्नियतं नारी नित्यं स्त्रीषु च शस्यते ।
सुवर्णमुद्रिकायुक्तं षट्कोणमण्डले स्थितम् ।
तन्मध्ये पूजयेद्देवीमेकान्तीनामविश्रुताम् ॥
गन्धपुष्पाक्षतैर्धूपैर्द्दीपैर्नैवेद्यसंयुतैः ।
अर्च्चयेद्भक्तिभावेन दुग्धं माषं तथा मधु ॥
वाराही च तथा चैन्द्री ब्राह्मी माहेश्वरी तथा ।
कौमारी वैष्णवी देवी षट्सु कोणेषु मातरः ।
पूजयेन्मन्त्रभावेन दधिपिण्डानि कारयेत् ॥
सप्तसङ्ख्याप्रमाणानि षट्सङ्ख्या षट्सु पात्रतः ।
सप्तमन्तु पृथक् कृत्वा शुचिस्थाने विशेषतः ॥
तद्भुक्तं गृहमागच्छेत् कन्यका वटुकस्त्रियः ।
भोजयेद्दक्षिणां दत्त्वा प्रणामं कारयेत्ततः ॥
विसृज्य स्वेष्टदेवीञ्च आद्यां तत्सकलेष्टदाम् ॥
शकुनं वीक्षयेद्धीमान् शुभेन शुभमादिशेत् ॥
विपरीते पुनः कार्य्यं यागं तावत् सुसिद्धिदम् ।
प्रतिवर्षमिदं कुर्य्यात् दीर्घजीविसुतं लभेत् ।
सिद्धियोगमिदं ख्यातं नान्यथा शङ्करोदितम् ॥”
अथ मन्त्रः । ॐ परं ब्रह्म परमात्मने अमुकी-गृहे दीर्घजीविसुतं कुरु कुरु स्वाहा ॥ * ॥
अथ काकबन्ध्या । ईश्वर उवाव ।
“पूर्ब्बं पुत्त्रवती या सा क्वचिद्बन्ध्या भवेद्यदि ।
काकबन्ध्या तु सा ज्ञेया चिकित्सा तत्र कथ्यते ॥
विष्णुक्रान्तां समूलान्तु पिष्ट्वा माहिषदुग्धके ।
महिषीनवनीतेन ऋतुकाले तु भक्षयेत् ॥
एवं सप्तदिनं कुर्य्यात् पथ्ययुक्तिश्च पूर्ब्बवत् ।
गर्भं सा लभते नारी काकबन्ध्या सुशोभनम् ॥
अश्वगन्धीयमूलन्तु ग्राहयेत् पुष्यभास्करे ।
पेषयेन्महिषीक्षीरे पलार्द्धं भक्षयेत् सदा ॥
सप्ताहाल्लभते गर्भं काकबन्ध्या चिरायुषम् ।
द्वितीयपादानन्तरं उर्व्वारुकमिव बन्धनात् ।
तृतीयपादानन्तरं मृत्योर्मुक्षीयमामृतात् ॥
अस्य ध्यानम् ।
“स्वच्छं स्वच्छारविन्दस्थितमुभयकरे संस्थितौ पूर्णकुम्भौ
द्वाभ्यामेणाक्षमाले निजकरकमले द्वौ घटौ नित्यपूर्णौ ।
द्वाभ्यां द्वौ च स्रवन्तौ शिरसि शशिकलां चामृतैः प्लावयन्तं
देहं देवो दधानः प्रदिशतु विशदाकल्पजालः श्रियं वः ॥”
एवं ध्यात्वावाह्य प्रणवादित्र्यम्बकाय रुद्राय नमः । इत्यनेन पूजयेत् । अस्य जपात् सर्व्व-सिद्धिः । इत्यागमतत्त्वविलासः ॥ (तथा च ब्रह्मवैवर्त्तपुराणे प्रकृतिखण्डे ४५ । ११ ।
“महाज्ञानञ्च गोप्यञ्च मृतसञ्जीवनीं पराम् ।
महाज्ञानयुतां ताञ्च प्रवन्दन्ति मनीषिणः ॥”
(क्ली । यथा, मार्कण्डेये । २४ । ४२ ।
“ततः कुवलयाश्वं तं समाश्वास्य भुजङ्गमः ।
कथयामास तत्सर्व्वं मृतसञ्जीवनादिकम् ॥)

**मृतस्नातः**, त्रि, (ज्ञातिबन्ध्वादीनामन्यतमस्मिन् मृते सति मृतमुद्दिश्य विधिना स्नातः ।) मृतो-द्देशेन स्नातः । तत्पर्य्यायः । अपस्नातः २ । इत्य-मरः । ३ । १ । १९ ॥ मृतमुद्दिश्य कृतस्नाने जने । संस्कारार्थं स्नापिते मृते । इति स्वामी । इति तट्टीकायां भरतः ॥

पुत्रान् जनयते नारी मेधाट्यान् प्रियदर्शनान् ॥
या चैवास्थिरगर्भा स्यात् या नारी जनयेन् मृतम् ।
अल्पायुषञ्च जनयेत् या च कन्याः प्रसूयते ॥
योनिदोषे रजोदोषे गर्भस्रावे च शस्यते ।
प्रजावर्द्धनमायुष्यं सर्व्वग्रहनिवारणम् ॥
नाम्ना फलघृतं ह्येतदायुष्यं परिकीर्त्तितम् ।
नोक्तञ्च लक्ष्मणामूलं वदन्त्यत्र चिकित्सकाः ॥
जीववत्साशुक्लवर्णाघृतमत्रतु दीयते ।
अरण्यगोमयेनात्र वह्नेर्ज्वाला प्रदीयते ॥”
अत्र पयस्या क्षीरयुक्तभूमिकुष्माण्डम् । उत्-
पलं नीलम् । इति इन्द्रजालतन्त्रे मृतवत्सा-
चिकित्सा ॥ * ॥ अन्यच्च । अथ मृतवत्सासुत-
जीवनोपायः ।
ईश्वर उवाच ।
“गर्भः संजातमात्रेण पक्षान् मासाच्च वत्सरात् ।
म्रियते द्वित्रिवर्षादिर्य्यस्याः सा मृतवत्सका ॥
गृहीत्वा शुभनक्षत्रे अपामार्गस्य मूलकम् ।
गृहीत्वा लक्ष्मणामूलं एकवर्णगवां पयः ।
पीत्वा सा लभते गर्भं दीर्घजीविसुता भवेत् ॥
यस्यै कस्यै व दातव्यं नान्यथा शङ्करोदितम् ॥
बन्ध्याकर्कोटिकाकन्दंमोचाराजेन पेषयेत् ।
ऋतुकाले तु सप्ताहं दीर्घजीविसुता भवेत् ।
सत्यं सत्यं प्रकर्त्तव्यं यथा शङ्करभाषितम् ॥ * ॥
मार्गशीर्षेऽथवा ज्येष्ठे पूर्णायां लेपिते गृहे ।
नूतनं कलसं पूर्णं गन्धतोयेन कारयेत् ॥
शाखाफलसमायुक्तं नवरत्नसमन्वितम् ।
यस्यै कस्यै न दातव्यं नान्यथा शङ्करोदितम् ॥”
अथ मन्त्रः । ॐनमः शक्तिरूपाय अस्या गृहे
पुत्रं कुरु कुरु स्वाहा । १०००० जपात् सिद्धिः ।
इति श्रीदत्तात्रेयतन्त्रे ईश्वरदत्तात्रेयसंवादे
जन्मबन्ध्यादीनां पुत्त्रकरणं नाम सप्तदशपटलः ॥
क्वचिद्ग्रन्थे २० पटलः ॥

**मृतसञ्जीवनी**, स्त्री, (मृतं मृतशस्यम् जीवय-
तीति । जीव् + ल्युट् + ङीप् च ।) गोरक्ष-
दुग्धा । इति राजनिर्घण्टः ॥
मृतजीवनार्थिका विद्या । यथा । अथ मृत-
सञ्जीवनी विद्या ।
“आदौ प्रासादबीजं तदनु मृतिहरं तारकं व्याहृतीश्च
प्रोच्चार्य्य त्र्यम्बकं यो जपति च सततं संपुटं चानुलोमम् ।”
मृतिहरं त्र्यक्षरमृत्युञ्जयमन्त्रम् । संपुटितमिति
अनुलोमक्रमेणैव संपुटमित्यर्थः । तेन हौं
ततः प्रणवः ततो जूं सः ततः सप्रणवव्याहृतिः ।
मध्ये त्र्यम्बकमन्त्रः । ततो हौं प्रणवः जूं सः
ततः सप्रणवव्याहृतिः । अस्य जपात् सर्व्व-
सिद्धिर्भवति ॥ * ॥ अथ शुक्रोपासिता मृतसञ्जी-
वनी विद्या । गायत्र्या एकैकपादानन्तरं
त्र्यम्बकमन्त्रस्य एकैकपादञ्च । ततश्च गायत्र्याः
प्रथमपादानन्तरं सुगन्धिं पुष्टिवर्द्धनम् ।

**मृतस्नानं**, क्ली, (मृतमुद्दिश्य स्नानम् ।) मृतो-
द्देशेन स्नानम् । तत्पर्य्यायः । अपस्नानम् २ ।
इति हेमचन्द्रः । ३ । ३९ ॥

**मृतस्वमोक्ता**, [ऋ] पुं, (मृतवत् स्वराज्यधनादिकं
मुञ्चतीति । मुच् + वासरूपोऽस्त्रियाम् । ३ । १ ।
९४ । इति पक्षे तृच् ।) राजर्षिः । इति
हेमचन्द्रः । ३ । ३७७ ॥

**मृतामदं**, क्ली, (मृतः नष्टः आमदः अस्मात् ।)
तुत्थम् । इति शब्दचन्द्रिका ॥

**मृतालकं**, क्ली, (मृतमालयति भूषयतीति । अल् +
णिच् + ण्वुल् ।) आढकी । इत्यमरः । २ । ४ । १३१ ॥
(तथास्य पर्य्यायः ।
“सौराष्ट्री तुरवी कांक्षी मृतालकमुराष्ट्रजे ।
आढकी चापि सा ख्याता मृत्स्ना च सुर-
मृत्तिका ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**मृतिः**, स्त्री, (मृ + क्तिः ।) मरणम् । इति हेम-
चन्द्रः । २ । २३६ । (यथा, श्रीमद्भागवते ।
६ । १४ । ५४ ।
“परे नु जीवत्यपरस्य या मृति-
र्व्विपर्य्ययश्चेत्त्वमसि ध्रुवः परः ॥”
यथास्या विषयः ।
“यो गौरवर्णो विदधाति कार्ष्ण्यं
कृष्णोऽपि गौरत्वमुपैति यश्च ।
तथा मृतिं याति नरप्रकृत्या
शीघ्रं विकृत्या जडतोऽपि यो वै ॥

यो वैपरीत्यं श्रवणेन शब्दं
गृह्णाति वा नो शृणुते स शीघ्रं ।
स वै मृतिं पश्यति यो न पश्येत्
छायां स्वकीयां धरणीप्रपन्नाम् ॥”
इति हारीते द्वितीयेऽस्थाने तृतीयेऽध्याये ॥)

**मृत्करः**, पुं, (करोतीति कृ + अच् । मृदां
करः । घटादिनिर्म्मातृत्वादस्य तथात्वम् ।)
कुम्भकारः । इति त्रिकाण्डशेषः ॥

**मृत्कांस्यं**, क्ली, शरावः । इति त्रिकाण्डशेषः ॥

**मृत्किरा**, स्त्री, (मृदं किरतीति । कॄ + “इगु-
पधज्ञाप्रीकिरः कः ।” ३ । १ । १३५ ।
इति कः ।
“ऋत इद्धातोः ।” ७ । १ । १०० ॥ इति
इत् ।)
घुर्घुरी । इति त्रिकाण्डशेषः । घुर्घुरिया इति
भाषा ॥

**मृत्खलिनी**, स्त्री, चर्म्मकषावृक्षः । इति शब्द-
चन्द्रिका ॥

**मृत्तालं**, क्ली, (मृदं तालयति प्रतिष्ठापयतीति ।
तल् + णिच् + “कर्म्मण्यण् ।” ३ । २ ।
१ । इति
अण् ।) आढकी । इति शब्दरत्नावली ॥

**मृत्तालकं**, क्ली, (मृत्ताल + संज्ञायां कन् ।)
तुवरिका । तुवरिकलाय इति अडर इति च
ख्यातम् । इत्यमरटीकायां भरतः ।
सौराष्ट्र-
मृत्तिका । इति राजनिर्घण्टः ॥

**मृत्तिका**, स्त्री, (मृदेव इति । मृद् + “मृदस्तिकन् ।”
५ । ४ । ३९ । इति स्वार्थे तिकन् । स्त्रियां
टाप् ।)
तुवरी । इति राजनिर्घण्टः ॥ मृत् । इत्य-
मरः । २ । १ । ४ ॥ माटी । इति माषा ।
तत्पर्य्यायः । मृदा २ मृत्तिः ३ । इति
भरतः ॥
न मार्गान्नोषराद्देशाच्छौचशिष्टांपरस्य च ॥
न देवायतनात् कूपात् गेहान्न च जलात्तथा ।
उपस्पृशेत्ततो नित्यं पूर्ब्बोक्तेन विधानतः ॥”
इति कौर्म्मे उपविभागे १२ अध्यायः ॥
तस्याः परीक्षा मन्दिरशब्दे द्रष्टव्याः ॥

**मृत्फली**, स्त्री, (मृदि फलनमस्याः । ङीष् ।)
कुष्ठौषधम् । इति हारावली ॥

**मृत्युः**, पुं, (म्रियते अस्मादिति मृ + “भुजिमृङ्भ्यां
युक् त्युकौ ।” उणा० । ३ । २१ । इति त्युक्
।)
यमः । इति हेमचन्द्रः ॥ कंसः । यथा, --
“प्रत्यर्प्य मृत्यवे पुत्त्रान् मोचये कृपणामिमाम् ।
सुता मे यदि जायेरन् मृत्युर्व्वा न म्रियेत
चेत् ॥”
इति श्रीभागवते १० स्कन्धे १ । ४९ ॥

**मृत्युः**, पुं, क्ली, प्राणवियोगः । तत्पर्य्यायः । पञ्चता
२ कालधर्म्मः ३ दिष्टान्तः ४ प्रलयः ५
अत्ययः ६
अन्तः ७ नाशः ८ मरणम् ९ निधनः १० ।
इत्यमरः ॥ पञ्चत्वम् ११ मृतम् १२ मृतिः १३
।
इति तट्टीकायां रमानाथः ॥ नैधनम् १४ ।
इति तट्टीकासारसुन्दरी ॥ संस्था १५ कालः
१६
परलोकगमः १७ दीर्घनिद्रा १८ निमीलनम्
१९
अस्तम् २० अवसानम् २१ । इति हेमचन्द्रः ॥
भूमिलाभः २२ निपातः २३ विलयः २४
आत्य-
यिकम् २५ । इति शब्दरत्नावली ॥ अप्ययः
२६ । (मरणार्थे यथा, --
“क्षीणस्य यस्य क्षुत्तृष्णे हृद्यैर्मिष्टैर्हितैस्तथा ।
न शाम्यतोऽन्नपानैश्च तस्य मृत्युरुपस्थितः ॥
प्रवाहिका शिरःशूलं कोष्ठशूलञ्च दारुणम् ।
पिपासा बलहानिश्च तस्य मृत्युरुपस्थितः ॥”
इति सुश्रुते सूत्रस्थाने ३१ अः ॥
“एकोत्तरं मृत्युशतमथर्व्वाणः प्रचक्षते ।
नैषां भार्य्यास्ति पुत्त्रो वा सर्व्वे ते
ह्यूर्द्ध्वरेतसः ॥
निरृतिश्च तथा चान्या
मृत्योर्भार्य्याभवन् मुने ! ।
अलक्ष्मीर्नाम तस्याञ्च मृत्योः
पुत्त्राश्चतुर्द्दश ॥
अलक्ष्मीसूचका ह्येते
मृत्योरादेशकारिणः ।
विनाशकाले च नरान् भजन्त्येते
शृणुष्व तान् ॥
इन्द्रियेषु दशस्वेते तथा मनसि च
स्थिताः ।
स्वे स्वे नरं स्त्रियं वापि विषये
योजयन्ति च ॥
तथेन्द्रियाणि चाक्रम्य
रागलोभादिभिर्न्नरान् ।
योजयन्ति तथा हानिं यान्ति
धर्म्मादिभिर्द्विज ! ॥
अहङ्कारगताश्चान्ये तथान्ये
बुद्धिसंस्थिताः ।
विनाशाय नरस्त्रीणां यतन्ते
मोहसंश्रयाः ।
एवं त्वधर्म्मेणोत्पन्नाः सर्व्वे चापि
भयङ्कराः ॥”
इति मार्कण्डेयपुराणे दुःसहानुशासनं
नामा-
ध्यायः ॥ विष्णुपुराणे प्रथमेऽंशे
सप्तमोऽध्यायश्च ॥
मृत्युज्ञापकारिष्टानि यथा, --
दत्तात्रेय उवाच ।
“अरिष्टानि महाराज ! शृणु वक्ष्यामि
तानि ते ।
येषामालोकनान्मृत्युं निजं जानाति
योगवित् ॥
देवमार्गं ध्रुवं शुक्रं
सोमच्छायामरुन्धतीम् ।
यो न पश्येन्न जीवेत् स नरः
संबत्सरात् परम् ॥

(अस्या भक्षणात् पाण्डुरोगोत्पत्तिः ।
तद्यथा,
“मृत्तिकादनशीलस्य कुप्यत्यन्यतमो मलः ॥
कषाया मारुतं पित्तं उषरा मधुरा कफम् ॥”
इति माधवकरसंगृहीतरुग्विनिश्चये पाण्डु-रोगाधिकारे । अन्यत् मृत्शब्दे द्रष्टव्यम् ।)
स्नानकाले मृत्तिकालेपनविधिर्य्यथा, --
“मृदा प्रक्षाल्य लिङ्गन्तु द्वाभ्यां नाभेस्तथोपरि ।
अधश्च तिसृभिः कायं षड्भिः पादौ तथैव च ॥
कटिञ्च तिसृभिश्चापि हस्तयोर्द्विश्च मृत्तिकाः ।
प्रक्षाल्य कायं हस्तौ च द्विराचम्य यथाविधि ।
ततः संमार्जनं कृत्वा मृदमेवाभिमन्त्रयेत् ॥
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ! ।
उद्धृतासि वराहेण कृष्णेनामितबाहुना ॥
मृत्तिके हर मे पापं यन्मया पूर्ब्बसञ्चितम् ।
मृत्तिके ब्रह्मदत्तासि प्रजया च धनेन च ॥
मृत्तिके त्वाञ्च गृह्णामि काश्यपेनाभिमन्त्रिताम् ।
मृत्तिके जहि मे पापं यन्मया दुष्कृतं कृतम् ।
त्वया हृतेन पापेन ब्रह्मलोकं व्रजाम्यहम् ॥”
इति वह्निपुराणम् ॥ * ॥
शौचार्थमृत्तिकाग्रहणविधिर्य्यथा, --
“आहृत्य मृत्तिकां कूलाल्लेपगन्धापकर्षणम् ।
कुर्य्यादतन्द्रितः शौचं विशुद्धैरुद्धृतोदकैः ॥
नाहरेत् मृत्तिकां विप्रः पांशुलान्न च कर्द्द-मात् ।

तत्रैकः कालसंज्ञस्तु शेषास्त्वागन्तवः स्मृताः ॥
दोषागन्तुजमृत्युभ्यो रसमन्त्रविशारदौ ।
रक्षेतां नृपतिं नित्यं यत्नाद्वैद्यपुरोहितौ ॥”
इति च तत्र तत्स्थाने । ३४ अः ॥)
तत्प्रमाणं यथा, --
“अहमात्मोद्भवामीषां भूतानां सुहृदीश्वरः ।
अहं सर्व्वाणि भूतानि तेषां स्थित्युद्भवाप्ययः ॥”
इति श्रीमद्भागवते ११ स्कन्धे । १६ । १० ॥
स तु ब्रह्मणो गुदतो जातः । यर्था, --
“पायुर्यमस्य मित्रस्य परिमोक्षस्य नारद ! ।
हिंसाया निरृते मृर्त्योर्निरयस्य गुदं स्मृतम् ॥”
इति श्रीभागवते २ स्कन्धे ५ अध्यायः ॥
कल्पान्तरे भयात् मायायां जातः । यथा, --
“हिंसा भार्य्या त्वधर्म्मस्य तयोर्जज्ञे तथानृतम् ।
कन्या च निकृतिस्ताभ्यां भयं नरकमेव च ॥
माया च वेदना चैव मिथुनं त्विदमेतयोः ।
भयाज्जज्ञेऽथ वै माया मृत्युं भूतापहारिणम् ॥
वेदना च सुतञ्चापि दुःखं जज्ञेऽथ रौरवात् । * ।
अस्यापत्यादि यथा, --
“मृत्योर्व्याधिर्जराशोकतृष्णाक्रोधाश्च जज्ञिरे ।
दुःखोत्तराः स्मृता ह्येते सर्व्वे चाधर्म्मलक्षणाः ।

अरश्मि विम्बं सूर्य्यस्य वह्निञ्चैवांशुमालिनम् ।
दृष्ट्वैकादशमासेभ्यो नरो नोद्‌र्ध्वं स जीवति ॥
वान्त्यां मूत्रे पुरीषे वा सुवर्णं रजतं यथा ।
प्रत्यक्षमथवा स्वप्ने जीवितं दशमासिकम् ॥
दृष्ट्वा प्रेतपिशाचादीन् गन्धर्व्वनगराणि च ।
सुवर्णवर्णान् वृक्षांश्च नव मासान् स जीवति ॥
स्थूलः कृशः कृशः स्थूलो योऽकस्मादेव जायते ।
प्रकृतेश्च निवर्त्तेत तस्यायुश्चाष्टमासिकम् ॥
खण्डं यस्य पदं पार्ष्ण्योः पादस्याग्रेऽथवा भवेत् ।
पांशुकर्द्दमयोर्म्मध्ये सप्त मासान् स जीवति ॥
कपोतगृध्रकाकोला वायसो वापि मूर्द्धनि ।
क्रव्यादो वा खगो लीनः षण्मासायुःप्रदर्शकः ॥
हन्यते काकपङ्क्तीभिः पांशुवर्षेण वा पुनः ।
स्वच्छायाञ्चान्यथा दृष्ट्वा पञ्च मासान् स जीवति ॥
अनभ्रे विद्युतं दृष्ट्वा दक्षिणां दिशमाश्रिताम् ।
पयसीन्द्रधनुर्व्वापि जीवितं द्वित्रिमासिकम् ॥
घृते तैले तथादर्शे तोये वा चात्मनस्तनुम् ।
यः पश्येदशिरस्कां वा मासादूर्द्ध्वं न जीवति ॥
यस्य वस्तसमो गन्धो गात्रे शवसमोऽपि वा ।
तस्यार्द्धमासिकं ज्ञेयं योगिनो नृप ! जीवितम् ॥

|  |  |  |
| --- | --- | --- |
|  |  | यस्य वै स्नातमात्रस्य हृत्पादमवशुष्यति। पिवतश्च जलं शोषो दशाहं सोऽपि जीवति ॥ स्तम्भितो मारुतो यस्य मर्म्मस्थानानि कृन्तति । न हृष्यत्यम्बुसंस्पर्शात्तस्य मृत्युरुपस्थितः ॥ ऋक्षवानरयुग्मस्थो गायन् यो दक्षिणां दिशम् । स्वप्ने प्रयाति तस्यापि न मृत्युः कालमृच्छति ॥ रक्तकृष्णाम्बरधरा गायन्ती हसती च यम् । दक्षिणाशां नयेन्नारी स्वप्ने सोऽपि न जीवति ॥ नग्नं क्षपणकं स्वप्ने हसमानं प्रदृश्य वै । एणं वा वीक्ष्य वल्गन्तं विद्यान्मृत्युमुपस्थितम् ॥ आमस्तकतलाद्यस्तु निमग्नं पङ्कसागरे । स्वप्ने पश्येत्तथात्मानं नरः सद्यो म्रियेत सः ॥ |

केशाङ्गारांस्तथा भस्म भुजगं निर्जलां महीम् ।
दृष्ट्वा स्वप्ने दशाहन्तु मृत्युरेकादशेऽहनि ॥
करालैर्व्विकटैः कृष्णैः पुरुषैरुद्यतायुधैः ।
पाषाणैस्ताडितः स्वप्ने सद्यो मृत्युं समाप्नुयात् ॥
सूर्य्योदये यस्य शिवा क्रोशन्ती याति सम्मुखम् ।
विपरीतं परीतं वा स सद्यो मृत्युमृच्छति ॥
यस्य वै मुक्तमात्रेऽपि हृदयं पीड्यते क्षुधा ।
जायते दन्तसंघर्षः स गतायुरसंशयम् ॥
दीपादिगन्धं नो वेत्ति वमत्यग्निं तथा निशि ।
नात्मानं परनेत्रस्थं वीक्षते न स जीवति ॥
शक्रायुधञ्चार्द्धरात्रे दिवा ग्रहगणं तथा ।
दृष्ट्वा मन्येत संक्षीणमात्मजीवितमात्मवान् ॥
नासिका वक्रतामेति कर्णयोर्नम्रतोन्नती ।
नेत्रञ्च वामं स्रवति यस्य तस्यायुरुद्गतम् ॥
आरक्ततामेति मुखं जिह्वा वापि सिता तथा ।
तदा प्राज्ञो विजानीयान्मृत्युमासन्नमात्मनः ॥
उष्ट्रासभयानेन यः स्वप्ने दक्षिणां दिशम् ।
प्रयाति तं विजानीयात् सद्यो मृत्युं नरेश्वर ! ॥
पिधाय कर्णं निर्घोषं न शृणोत्यात्मसम्भवम् ।
नश्यते चक्षुषोर्ज्योतिर्यस्य सोऽपि न जीवति ॥
पततो यस्य वै गर्त्ते स्वप्ने द्वारं पिधीयते ।
न चोत्तिष्ठति यः श्वभ्रात्तदन्तं तस्य जीवितम् ॥
ऊद्‌र्ध्वा च दृष्टिर्न च संप्रतिष्ठा
यथोक्तकारी सौम्यश्च स सुखं मृत्युमृच्छति ॥
शीतं जयन्तीन्धनदास्तापं चोदकदायिनः ।
प्राणघ्नीं वेदनां कष्टां ये चान्ये द्वेषकारिणः ॥
मोहाज्ञानप्रदातारः प्राप्नुवन्ति महद्भयम् ।
कूटसाक्षी मृषावादी यश्चासदनुशास्ति वै ।
ते मोहमृत्यवः सर्व्वे तथान्ये वेदनिन्दकाः ॥”
इति मार्कण्डेयपुराणे पितापुत्त्रसम्बादे १० अध्यायः ॥ * ॥
मृत्युकालकर्त्तव्यक्षुद्रजन्तुबधप्रायश्चित्तं यथा, --
“बधेऽपि क्षुद्रजन्तूनां हिंसकानाञ्च पण्डितः ।
कार्षापणं समुत्सृज्य मृत्युकाले प्रमुच्यते ॥
अहिंसकानां क्षुद्राणां वधे शतगुणं ध्रुवम् ।
प्रायश्चित्तं मृत्युकाले कथितं पद्मयोनिना ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ७ अध्यायः ॥
मृत्युसमये गङ्गागमनमावश्यकं यथा, --
“अहो सगरवंशेभ्यो निर्व्वाणमुक्तिदायिनी ।
वैकुण्ठगामिनां मार्गसोपानरूपिणी वरा ॥
अतोऽपि मृत्युसमये सतां पुण्यस्वरूपिणाम् ।
आदौ पादौ च विन्यस्य मुखे तोयं प्रदीयते ॥
गङ्गासोपानमारुह्य सन्तो यान्ति ममालयम् ॥”
इति तत्रैव ३४ अध्यायः ॥ * ॥
जन्मवतां मृत्योरपरिहार्य्यत्वं यथा, --
“मृत्युर्जन्मवतां वीर ! देहेन सह जायते ।
अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ॥”
इति श्रीभागवते १० स्कन्धे १ अध्यायः ॥
अपि च ।
“जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्य्येऽर्थे न त्वं शोचितुमर्हसि ॥”
इति श्रीभगवद्गीता ॥ * ॥
अकालमृत्युप्रशमनं स्तोत्रं यथा, --
सूत उवाच ।
“स्तोत्रं तत्संप्रवक्ष्यामि मार्कण्डेयेन भाषितम् ।
नारायणं सहस्राक्षं पद्मनाभं पुरातनम् ।
प्रणतोऽस्मि हृषीकेशं किं मे मृत्युः करिष्यति ॥ १ ॥
गोविन्दं पुण्डरीकाक्षमनन्तमजमव्ययम् ।
केशवञ्च प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥ २ ॥
मृत्व्यष्टकमिदं पुण्यं मृत्युप्रशमनं शुभम् ।
मार्कण्डेयहितार्थाय स्वयं विष्णुरुवाच ह ॥
य इदं पठति स्तोत्रं त्रिकालं नियतः शुचिः ।
नाकाले तस्य मृत्युः स्यान्नरस्याच्युतचेतसः ॥
हृत्पद्ममध्ये पुरुषं पुराणं नारायणं शाश्वतमादिदेवम् ।
विचिन्त्य सूर्य्यादतिराजमानं मृत्युं स योगी जितवांस्तदैव ॥”
इति गारुडे २३८ अध्यायः ॥ * ॥
शुभकर्म्मप्रतिबन्धकमृत्युदा योगा यथा, --
“आदित्यभौमयोर्न्नन्दा भद्रा शुक्रशशाङ्कयोः ।
बुधे जया गुरौ रिक्ता शनौ पूर्णा च मृत्युदा ॥”
अपि च ।
“रव्यादिदिवसैर्युक्ता विशाखादिचतुश्चतुः ।
उत्पाटा मृत्यवः काला अमृतानि यथाक्रमम् ॥”
इति ज्योतिस्तत्त्वम् ॥

**मृत्युञ्जयः**, पुं, (मृत्युं जितवान् । जि + खच् + मुम् च ।) शिवः । इत्यमरः ॥ तन्नामकारणं यथा, --
सुयज्ञ उवाच ।
“शिवो लीनो निर्गुणे चेत् श्रीकृष्णे प्राकृते लये ।
कथं तव गुरोर्नाम मृत्युञ्जय इति श्रुतौ ॥”
सुतपा उवाच ।
“ब्रह्मणोऽन्ते मृत्युकन्या प्रनष्टा जलबिन्दुवत् ।
संहर्त्री सर्व्वलोकाणां ब्रह्मादीनां नराधिप ! ॥

रक्ता पुनः संपरिवर्त्तमाना ।
मुखस्य चोष्मा शिशिरा च नाभिः
शंसन्ति पुंसामपरं शरीरम् ॥
स्वप्नेऽग्निं प्रविशेद्यस्तु न च निष्क्रमते
नरः ।
जलप्रवेशादपिवा तदन्तं तस्य जीवितम्
॥
यश्चाभिहन्यते दुष्टैर्भूतै रात्रावथो दिवा ।
स मृत्युं सप्तरात्रान्तात्
पुमानाप्नोत्यसंशयम् ॥
स्ववस्त्रममलं शुक्लं रक्तं
पश्यत्यथोऽसितम् ।
यः पुमान् मृत्युमापन्नं तस्यापि हि
विनिर्द्दिशेत् ॥
स्वभाववैपरीत्यन्तु प्रकृतेश्च विपर्य्ययः ।
कथयन्ति मनुष्याणां समासन्नौ
यमान्तकौ ॥
येषां विनीतः सततं यस्य पूज्यतमा मताः
।
तानेव योऽवजानाति तानेव च विनिन्दति
॥
देवता नार्च्चयेद्वृद्धान् गुरून् विप्रांश्च
निन्दति ।
मातापित्रोरसत्कारं जामातॄणां करोति यः
॥
योगिनां ज्ञानविदुषामन्येषाञ्च महात्मनाम्
।
प्राप्तान्तकालः पुरुषस्तद्विज्ञेयं विचक्षणैः
॥
योगिना सततं यत्नादरिष्टान्यवनीपते ! ।
मंवत्सरान्ते तज्ज्ञेन फलदानि
दिवानिशम् ।
विलोक्यानि सदा चैव फलपङ्क्तिषु
भीरुणा ॥”
इति मार्कण्डेयपुराणे अलर्कोपाख्याने
४३ अः ॥
कर्म्मविशेषान्मृत्युविशेषो यथा, --
“येनानृतानि नोक्तानि प्रीतिभेदः कृतो
नच ।
आस्तिकः श्रद्दधानश्च स सुखं
मृत्युमृच्छति ॥

वासुदेवं जगद्योनिं भानुमन्तमतीन्द्रियम् ।
दामोदरं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥
३ ॥
शङ्खचक्रधरं देवं छद्मरूपिणमव्ययम् ।
अधोक्षजं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥
४ ॥
वाराहं वामनं विष्णुं नारसिंहं जनार्द्दनम् ।
माधवञ्च प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥
५ ॥
पुरुषं पुष्करं पुण्यं क्षेत्रबीजं जगत्पतिम् ।
लोकनाथं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति
॥ ६ ॥
सहस्रशीर्षं देवेशं व्यक्ताव्यक्तं सनातनम् ।
महायोगं प्रपन्नोऽसि किन्नो मृत्युः करिष्यति ॥
७ ॥
भूतात्मानं महात्मानं यज्ञयोनिमयोनिजम् ।
विश्वरूपं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥
८ ॥
इत्युदीरितमाकर्ण्य स्तोत्रं तस्य महात्मनः ।
अपयातस्ततो मृत्युर्विष्णुदूतैः प्रपीडितः ॥
इति तेन जितो मृत्युर्मार्कण्डेयेन धीमता ॥
प्रसन्ने पुण्डरीकाक्षे नृसिंहे नास्ति दुर्लभम् ॥

कतिधा मृत्युकन्यानां ब्रह्मणां कोटिशो
लये ।
कालेन लीनः शम्भुश्च सत्त्वरूपी च
निर्गुणे ॥
मृत्युकन्या जिता शश्वत् शिवेन गुरुणा
मम ।
न मृत्युना जितः शम्भुः कल्पे कल्पे
श्रुतौ
श्रुतम् ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५१
अध्यायः ॥
रोगशान्त्यर्थं तस्य पूजाविधिर्यथा, --
“मृत्युञ्जयं समापूज्य लिङ्गं
त्रिभुवनेश्वरम् ।
रोगात्ता मुच्यते रोगाद्बद्धो मुच्येत
बन्धनात् ॥
यस्तु संपूजयेद्भक्त्या लिङ्गं
मृत्युञ्जयाभिधम् ।
यमोऽपि प्रणमेद्भक्त्या किं करिष्यति
चामयः ॥
तस्य पूजाविधिं वक्ष्ये शृणु
मत्प्राणबल्लभे ! ।
जातिभेदे मृत्तिकान्तु
गृहीत्वाशीतितोलकम् ॥
निर्म्माय पार्थिवं लिङ्गं कांस्याधारे
निवेशयेत् ।
पौराणिकेन मन्त्रेण कुर्य्याच्च गठनं
बुधः ॥
स्नापयेत् पञ्चगव्येन
प्रत्येकस्याष्टतोलकम् ।
स्वस्वमन्त्रैश्च प्रत्येकद्रव्येण स्नापयेत्
सुधीः ॥
रोगक्षयकामनया नामगोत्रादिपूर्ब्बकम् ।
उपविश्यासने विप्रो धृत्वा धौते च
वाससी ॥
रुद्राक्षमालां कण्ठे वै धृत्वा
भस्मत्रिपुण्ड्रकम् ।
उपचारं षोडशकं देयं भक्त्या
प्रयत्नतः ॥
सुवर्णस्यासनं देयं तथैवाभरणानि च ।

| | | |
|---|---|---|
| आगारदाहिनो दाहं क्षुधं चानन्नदायिनः ।<br>प्राप्नुवन्ति नराः काले तस्मिन्<br>मृत्यावुपस्थिते ॥<br>देवब्राह्मणपूजायां ये रताश्चानसूयवः ।<br>श्लक्ष्णा वदान्या ह्रीमन्तस्ते नराः<br>सुखमृत्यवः ॥<br>यो न कामान्न संरम्भान्न द्वेषाद्<br>धर्म्ममुत्सृजेत् । | | वस्त्रयुग्मं प्रदद्यात्तु परिधेयं यथा भवेत्<br>॥<br>मधुपर्कं कांस्यपात्रे<br>दद्याद्भोजनयोग्यकम् ।<br>विल्वपत्रसहस्रञ्च अभग्नं विनिवेदयेत् ॥<br>एवं संपूज्य लिङ्गैकं जपेन्मन्त्रं<br>सहस्रकम् ।<br>ततो होमं प्रकुर्य्याच्च दक्षिणां ब्राह्मणे<br>ददेत् ॥ |

सुवर्णं वा तदर्द्धं वा देवि ! विभवमानतः ।
अङ्गहीना न कर्त्तव्या पूजा चाफलदा यतः ॥
एकलिङ्गं समाराध्य फलं स्यादन्यके युगे ।
तत् फलं लभते देवि ! कलौ संख्या चतुर्गुणा ॥
ताम्रपात्रे तु संस्थाप्य अशीतितोलकं जलम् ।
तज्जलेनैव देवेशि ! कुशैः संमार्ज्य रोगिणम् ॥
क्षिपेद्दीपशिखायाञ्च मन्त्रमुच्चार्य्य मामकम् ।
एवंविधिविधानेन पूजयेन्मम लिङ्गकम् ॥
यादृग्यादृग्भवेद्रोगो नाशमेति मयोदितः ।
साङ्गेन पूजयित्वा च लभते वाञ्छितं फलम् ॥
अङ्गव्यतिक्रमेणैव वृथा भवति वासना ।
रोगी प्रमुच्यते सद्यो भोगीव कञ्चुकोज्झितः ।
यदि मद्वचने भक्तिस्तदा मुक्तो भवेन्नरः ॥”
इति मृत्युञ्जयतन्त्रम् ॥
(ज्वरनाशकौषधविशेषः । तद्यथा, --
“अव्यक्तः सिद्धिदः शुद्धो रोगघ्नः कीर्त्तिवर्द्धनः ।
यशःप्रदः शिवः साक्षात् मत्युञ्जयरसः स्मृतः ॥
विषस्यैकस्तथा भागो मरीचं पिप्पली कणा ।
गन्धकस्य तथा भागो भागः स्याट्टङ्गणस्य वै ॥
सर्व्वत्र समभागः स्याद्धिङ्गुलन्तु द्विभागकम् ।
चूर्णयेत् खल्लमध्ये तु मुद्गमानां वटीञ्चरेत् ॥
रसश्चेत् समभागः स्याद्धिङ्गुलं नेष्यते तदा ।

**मृत्युबीजः**, पुं, (मृत्यवे स्वनाशाय बीजमस्य ।) वंशः । इति त्रिकाण्डशेषः ॥

**मृत्युभङ्गुरकः**, पुं, मरणकालवादनीयपटहः । यथा,
“भवरुत् प्रेतपटहो मृत्युभङ्गुरकश्च सः ।”
इति त्रिकाण्डशेषः ॥

**मृत्युभृत्यः**, पुं, (मृत्योर्भृत्यः किङ्कर इव । मरण-हेतुत्वात् ।) रोगः । इति राजनिर्घण्टः ॥

**मृत्युवञ्चनः**, पुं, (मृत्युं वञ्चयतीति । वञ्चि + ल्युः ।) शिवः । विल्ववृक्षः । दण्डकाकः । इति मेदिनी ।
ने, २४५ ॥

**मृत्युसूतिः**, स्त्री, मृत्यवे सूतिः प्रसवो यस्याः सा । कर्कटी । यथा, --
“यथा कर्कटकी गर्भमाधत्ते मृत्युमात्मनः ।”
इति महाभारते विराटपर्व्व ॥

**मृत्सा**, स्त्री, (प्रशस्ता मृत् इति । मृत् + “सस्नौ प्रशंसायाम् ।” ५ । ४ । ४० । इति सः । टाप् ।)
प्रशस्तमृत्तिका । इत्यमरः । २ । १ । ४ ॥

**मृत्स्ना**, स्त्री, (प्रशस्ता मृत् इति । मृत् + स्नः । टाप् ।) प्रशस्तमृत्तिका । (यथा, श्रीमद्भागवते ।
८ । ६ । १० ।
“त्वमादिरन्तो जगतोऽस्य मध्यम्
घटस्य मृत्स्नेव परः परस्मात् ॥”)
काक्षी । इत्यमरः । २ । १ । ४ ॥ (अस्याः पर्य्यायो
यथा, --
“सौराष्ट्री पार्व्वती मृत्स्ना काक्षी च पङ्क-पर्पटी ।”
इति वैद्यकरत्नमालायाम् ॥)

**मृत्स्नाभाण्डकः**, पुं, (मृत्स्नानिर्म्मितं भाण्डम् । ततः कन् । अभिधानात् पुंस्त्वम् ।)
भाण्डविशेषः ।

अथ मृदङ्गादिविवरणम् ।
“मर्द्दलः खादिरः श्रेष्ठो हीनः स्यादन्यदारुजः ।
रक्तचन्दनजो वाद्यो गभीरध्वनिरुच्चकैः ॥
सार्द्धहस्तप्रमाणन्तु दैर्घ्यमस्य विधीयते ।
त्रयोदशाङ्गुलं वाममथवा द्वादशाङ्गुलम् ॥
दक्षिणञ्च भवेद्धीनमेकेनार्द्धाङ्गुलेन वा ।
करणानद्धवदनो मध्ये चैव पृथुर्भवेत् ॥
षण्मासीयो भवेद्वस्तस्तच्चर्म्मकरणं मतम् ।
मृत्तिकानिर्म्मितश्चैव मृदङ्गः परिकीर्त्तितः ॥
पातयेत् खरलिं वाद्यवादनार्थञ्च मर्दले ।
विभूतिर्गैरिकं भक्तं केन्दुकेन च संयुतम् ॥
यद्वा चिपीटकं देयं जीवनीसत्त्वमिश्रितम् ।
सर्व्वमेफत्र पिष्टन्तल्लेपः खरलिरुच्यते ॥
वामास्ये पूरिकां कृत्वा लेपं दद्याच्च दक्षिणे ।
एवं मर्द्दलकः प्रोक्तः सर्व्ववाद्योत्तमो मतः ॥
अस्य संयोगमासाद्य सर्व्वं वाद्यञ्च शोभते ।
एतदङ्गे बीजकाष्ठे दलमर्द्धाङ्गुलं विदुः ॥ * ॥
तधि धोतेमिति ज्ञेयाः पाढवर्णा मृदङ्गजाः ।
थों दं ढें धिक्वटस्तद्धी ताकं दं दं थोगं धिधि ॥
खर्झझिं नं गटं दं था कुटपाटा मता अमी ।
तथिं थोंढें तक्कधी दों दं दं धिग्णां ततं तधि ॥
तक्क तं धं धि दों ताधि पाढखण्डे त्वयं क्रमः ।”
तथा च यतिमाने पाढखण्डः । द्रगतथेजां

मृत्युरूपं ज्वरं हन्ति मृत्युञ्जयरसः स्मृतः ॥
मृत्युर्विनिर्जितो यस्मात्तस्मान्मृत्युञ्जयः स्मृतः ।
मधुना लेहनं प्रोक्तं सर्व्वज्वरनिवृत्तये ॥
दध्योदकानुपानेन वातज्वरनिवर्हणः ।
आर्द्रकस्य रसैः पानं दारुणे सान्निपातिके ॥
जम्बीररसयोगेन सर्व्वज्वरविनाशनः ।
अजाजीगुडसंयुक्तो विषमज्वरनाशनः ॥
तीव्रज्वरे महाघोरे पुरुषे यौवनान्विते ।
पूर्णमात्रा प्रदातव्या पूर्णं वटीचतुष्टयम् ॥
स्त्रीबालवृद्धक्षीणे च अर्द्धमात्राः प्रकीर्त्तिताः ।
नवज्वरे महाघोरे यामैकान्नाशयेद्ध्रुवम् ॥
मध्यज्वरे तथाजीर्णे त्रिरात्रान्नाशयेद्ध्रुवम् ।
सप्ताहात् सन्निपातोत्थं ज्वराजीर्णकसंज्ञ-
कम् ॥"
इति मृत्युञ्जयो रसः ॥ इति वैद्यकरसेन्द्रसार-
संग्रहे ज्वराधिकारे ॥ क्ली, ज्ञानविशेषः । यथा,
ब्रह्मवैवर्त्तपुराणे प्रकृतिखण्डे । ४६ । ९५ ।
"शम्भुश्च चतुरो वेदान् वेदाङ्गानितरांस्तथा ।
बालकं पाठयामास ज्ञानं मृत्युञ्जयं परम् ॥")

**मृत्युनाशकः**, पुं, (नाशयतीति । नश् + णिच् + ण्वुल् । मृत्योर्नाशकः ।) पारदः । इति राज-
निर्घण्टः ॥ मरणहारके, त्रि ॥

**मृत्युपुष्पः**, पुं, (मृत्यवे निजनाशाय पुष्पमस्य । सति पुष्पोद्गमे अस्य नाशात्तथात्वम् ।) इक्षुः । इति रत्नमाला ॥

तत्पर्य्यायः । मुष्टिका २ । इति त्रिकाण्डशेषः ॥

**मृद**, ग क्षुदि । इति कविकल्पद्रुमः ॥ (क्र्या०-पर०-सक०-सेट् ।) ग, मृद्नाति ममर्द । क्षुदि चूर्णीकरणे । इति दुर्गादासः ॥

**मृद्**, [त्] स्त्री, (मृद्यते चूर्णीक्रियते इति । मृद् + कर्म्मणि क्विप् ।) मृत् । मृत्तिका । इत्यमरः । २ । १ । ४ ॥ (यथा, मनौ । ४ । ३९ ।
"मृदं गां दैवतं विप्रं घृतं मधुचतुष्पथम् ॥")

**मृदङ्कुरः**, पुं, हारीतपक्षी । इति हेमचन्द्रः । ४ । ४०७ ॥

**मृदङ्गः**, पुं, (मृद्यते आहन्यते असौ इति । मृद् + "विडादिभ्यः कित् ।" उणा० १ । १२० । इति अङ्गच् । स च कित् । यद्वा, मृत् अङ्गमस्येत्यमर-टीकायां रघुनाथः ।) स्वनामख्यातवाद्यम् । तत्पर्य्यायः । मुरजः २ । इत्यमरः । १ । ७ । ५ ॥
(यथा, शिशुपालवधे । ११ । २ ।
"रजनिविरतिशंसी कामिनीनां भविष्यद्-
विरहविहितनिद्राभङ्गमुच्चैर्मृदङ्गः ॥")
पटहः । घोषः । इति मेदिनी । गे, ४७ ॥
वंशः । इति शब्दमाला ॥ (मृदङ्गादेर्मङ्गल-जनकत्वमाह स्मृतिः ।
"रोचनं चन्दनं हेम मृदङ्गं दर्पणं मणिम् ।
गुरूनग्निं तथा सूर्य्यं प्रातः पश्येत् सदा बुधः ॥")

द्रगतथेजां धो धो धिकता धिका थोजां थोजां
तक तता धिका थोता द्रग तता धि धि धिधि
कड ताकड नाथोधिक थोजां धोताद्रगत
ताद्रगत ताद्रगत ताधि । इति यतिमाने पाढ
खण्डः ॥ * ॥
"यतिरोढोऽप्यवच्छेदो गजरो रूपकं ध्रुवम् ।
गलपः सारिगोणी च नादश्च कथितं तथा ।
प्रहरणं वृन्दनञ्च प्रबन्धा द्वादश स्मृताः ॥"
यथा । दं थात इत्येकताल्यां यतिः ॥ * ॥
ओढवाद्यं यथा । दां तथो तधिक तधिक दं
थादं था थोधि थोधि तत्त तत्तथ विथ विदिश्यां
दिश्यां टट्ठु न कि टट्ठु नकि तद टङ्ग तद टङ्ग
खवटङ्ग खवटङ्ग तगि नगि तगि नगि दां दां
दं दं दीं दीं दं ता तथा । इत्योढवाद्यम् ॥ * ॥
अवच्छेदवाद्यं यथा । दं थातः दं थातः धिक्कि
धिक्कि दिगणं दं थातः ।
इत्यवच्छेदवाद्यम् ॥ * ॥
गजरवाद्यं यथा । थोक टेञ नेञ ढें डें गथो
गथोङ्क टेङ्क थोगतकि धिक तकि धिक टेङ्कन
धि धि कट तक थोक तधिकट तक्कक तथोग
तद्धीम् । इत्येकताल्यां गजरः ॥ * ॥ रूपक-
वाद्यं यथा । तकधिक् तकधिक्क थवितकि थवि-

**मृत्युफलः**, पुं, (मृत्यवे स्वनाशाय फलमस्य ।) महा-

कालफलम् । इति मेदिनी । ले, १६२ ॥

**मृत्युफला**, स्त्री, (मृत्यवे फलमस्याः ।) कदली ।

इति मेदिनी । ले, १६२ ॥

(कदलीशब्देऽस्या

विवरणं ज्ञातव्यम् ॥)

तक्कि धिक्क दं थातः । इति

रूपकवाद्यम् ॥ * ॥

ध्रुवकवाद्यं यथा । तक्क तक्कट धिक्क

धिक्कट ।

इति निसारताले ध्रुवकः ॥ * ॥ गलपो

यथा ।

तधिद्धि धिक तक तधि गलगं था था दें

तथा

ढञन । इत्येकताल्यां गलपः ॥ * ॥

सारिगोणी

यथा । थोङ्गटेञ तक्क धिक्क तकधिक्

तकथो

हटङ्गन हटङ्गन थोगक्क थोः । इति

प्रथम-

खण्डः ॥ * ॥ टेञ थोः धि खोहः टेञ

टेञ

दक्क तगदक्क धिक्क तदिदक्क दं गदं गखो
गखोक तक तक धिक तधिक् तधो ढेञ धोटेञ
धटे गल खोगगल खोग खोहट गें टगें खोह-
टञ । इत्यस्य छन्दनम् । इति सारिगोणी ॥
नादो यथा, --
"दांकारत्रितयं पूर्ब्बं दां धिगिति ततस्त्रयम् ।
दां दां धिकत्रयं यत्र इति नादः शचीप्रियः ॥"
इति नादः ॥
"द्रुतं मानसमारब्धं शुद्धं कूटविनिर्म्मितम् ।
सप्तषण्डमयं वाद्यं कथितं तदिहोच्यते ॥"
* ॥
द्रुतमानत्वात् प्रतिताले यथा । तत्तत तत्तत
तक्कि तक्कि दिदं धिगनथो धिगनथो धिक्क
धिक् धिक्क धिक्क धिक नगि नगमि थो थो धि
धि धिः दां दां धिक्क थो थो हथो हनत्रि
थो नत्रिथो थोह थोह डेढि डेढि थोह थोह
तटि तटि तटुक गीं गीं धगि धगि तत तधे
तत तधे ततत गिङी ञङी थोग थोग थों
थोगग थोगथो तत्ततो ।
"इति सप्तपदान्याहुः कथितं वाद्यपण्डिताः ।
प्रतितालेन तालेन पादवर्णसमासतः ॥
गन्धर्व्वपतिना पूर्ब्बमुर्व्वशीलास्यनर्त्तने ।
सुधर्म्मारञ्जनार्थञ्च कथितं प्रकटीकृतम् ॥"
प्रहरणं यथा । थोगक्का तद्धिका थाग कट

उणा० १ । २९ । इति कुः ।)
अतीक्ष्णः ।
कोमलः । इत्यमरः । ३ । १ । ७८ ॥
(यथा, --
"मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च ।"
इति वैद्यकचक्रपाणिसंग्रहे ज्वराधिकारे ॥)
गृहकन्यायां स्त्री । इति राजनिर्घण्टः ॥ (पुं,
नृपञ्जयराजपुत्त्रः । इति विष्णुपुराणे । ४ ।
२१ । ३ ॥)

**मृदुकृष्णायसं**, क्ली, (मृदु च तत् कृष्णायसं चेति ।)
सीसकम् । इति राजनिर्घण्टः ॥

**मृदुगणः**, पुं, (मृदूनां गणः ।) चित्रानुराधा-
मृगशिरोरेवतीनक्षत्राणि । यथा । चित्रामित्र
मृगान्त्यभं मृदुगणः । इति ज्योतिस्तत्त्वम् ॥

**मृदुगमना**, स्त्री, (मृदु गमनमस्याः ।) हंसी । इति
राजनिर्घण्टः ॥ मन्दगमना स्त्री चं ॥

**मृदुचर्म्मी**, [न्] पुं, (मृदु कोमलं चर्म्म त्वक् ।
तदस्त्यस्य । चर्म्म + "ब्रीह्यादिभ्यश्च ।" ५ । २ । १२ ।
इति इनिः ।) भूर्ज्जवृक्षः । इति राजनिर्घण्टः ॥
कोमलत्वग्विशिष्टे, त्रि ॥

**मृदुच्छदः**, पुं, (मृदुः छदः पत्रमस्य ।) भूर्जवृक्षः ।
इति हेमचन्द्रः । ४ । २१० ॥
गिरिजपीलुवृक्षः ।
इति जटाधरः ॥ कुक्कुरद्रुः ।
श्रीतालः । इति राजनिर्घण्टः ॥

**मृदुफलः**, पुं, (मृदूनि फलान्यस्य ।) विकङ्कतः ।
मधुनालिकेरिकः । विकण्टकवृक्षः । इति राज-
निर्घण्टः ॥ कोमलफलवति, त्रि ॥

**मृदुलं**, क्ली, (मृदु मृदुत्वमस्त्यस्य । मृदु + "सिध्मा-
दिभ्यश्च ।" ५ । २ । ९७ । इति लच् ।) जलम् ।
इति शब्दचन्द्रिका ॥ कोमले, त्रि । इत्यमरः ।
३ । १ । ७८ ॥ (यथा, शिशुपालवधे । ६ । २ ।
"मृदुलतान्तलतान्तमलोकयत्
स सुरभिं सुरभिं सुमनोभरैः ॥")

**मृदुलोमकः**, पुं, (मृदूनि स्पर्शसुखानि लोमानि
यस्य सः । स्वार्थे कन् ।) शशकः । इति
हेमचन्द्रः । ४ । ३६१ ॥ कोमलरोमविशिष्टे, त्रि ॥

**मृदूत्पलं**, क्ली, (मृदु कोमलं उत्पलम् ।) नील-
पद्मम् । इति शब्दचन्द्रिका ॥

**मृद्गः**, पुं, (मृदं पङ्कं गच्छति कारणत्वेन प्राप्नो-
तीति । गम् + डः ।) मत्स्यभेदः । इति संक्षिप्त-
सारोणादिवृत्तिः ॥

**मृद्वङ्गं**, क्ली, (मृदु कोमलं अङ्गं यस्य ।) वङ्गम् ।
इति हेमचन्द्रः ॥ (मृदु च तदङ्गञ्चेति ।)
कोमलावयवश्च ॥

**मृद्वी**, स्त्री, (मृदु + "वोतोगुणवचनात् ।" ४ । १ ।
४४ । इति ङीष् ।) कोमलाङ्गी । इति मुग्ध-
बोधव्याकरणम् ॥ अपि च ।
"सद्यः पुरीपरिसरेषु शिरीषमृद्वी
सीता जवात्त्रिचतुराणि पदानि गत्वा ।
गन्तव्यमस्ति कियदित्यसकृद्ब्रुवाणा
रामाश्रुणः कृतवती प्रथमावतारम् ॥"
इति महानाटकम् ॥
कपिलद्राक्षा । इति राजनिर्घण्टः ॥

**मृद्वीका**, स्त्री, (मृदु + बाहुलकात् ईकन् टाप्
च ।) द्राक्षा । इत्यमरः । २ । ४ । १०७ ॥
(यथा, बृहत्संहितायाम् । ५५ । १० ।

गगों दं थोग दिद्धिक धिक्क धिकटेञ ।
इत्येक-
ताल्यां प्रहरणम् ॥ * ॥
“वाद्यं विमुच्यते येन छन्दनं तन्निगद्यते ।”
यथा, तद्धिथो दिञ टेञ तन्नः । इति
छन्दनम् ॥ * ॥
मर्द्दलस्त्रयोदशाङ्गुलवाममुखो द्वादशाङ्गुल-
दक्षिणमुखः ।
मुरजस्त्वष्टादशाङ्गुलवाममुखः
सप्तदशाङ्गुलदक्षिणमुखः मर्द्दलमुरजयोरयं
भेदः । इति सङ्गीतदामोदरः ॥

**मृदङ्गफलः**, पुं, (मृदङ्गस्तदाकृति फलमस्य ।)

पनसवृक्षः । इति शब्दरत्नावली ॥

**मृदङ्गफलिनी**, स्त्री, (मृदङ्गवत् फलमस्त्यस्याः । इनिः

ङीप् च ।) कोषातकी । इति राजनिर्घण्टः
॥
(विषयोऽस्याः कोषातकीशब्दे ज्ञेयः ॥)

**मृदङ्गी**, स्त्री, (मृदङ्गः तदाकारफलमस्त्यस्या

इति । मृदङ्ग + अर्शआद्यच् ङीष् च ।)
घोषातकी । इति रत्नमाला ॥ श्वेतघोषा
इति
भाषा ॥

**मृदा**, स्त्री, (मृद् + टाप् ।) मृत्तिका । इति

द्विरूपकोषः ॥

**मृदाकरः**, पुं, वज्रम् । इति शब्दमाला ॥

**मृदितः**, त्रि, मृदधातोः कर्म्मणि क्तः । चूर्णी-

कृतः । (यथा, --
“क्षिप्त्वोष्णतोये मृदितः फाण्ट
इत्यभिधीयते ॥”
इति वैद्यकपरिभाषायाम् ॥)

**मृदिनी**, स्त्री, (मृद् + भावे कः । मृदः चूर्णी-

करणमस्त्यस्याः । मृद + इनिः । स्त्रियां
ङीप् ।)
प्रशस्तमृत्तिका । इति शब्दचन्द्रिका ॥

**मृदुः**, त्रि, (म्रद्यते म्रदितुं शक्यते इति । म्रद् +

“प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च ।”

**मृदुता**, स्त्री, (मृदु + तल् + टाप् ।) मृदुत्वम् ।

मृदोर्भावः । इति व्याकरणम् ॥
(यथा, रघौ ।
५ । ५४ ॥
“स चानुनीतः प्रणतेन पश्चात्
मया महर्षिर्मृदुतामगच्छत् ॥”)

**मृदुतालः**, पुं, (मृदूनि तालफलान्यस्य ।) श्रीताल-

वृक्षः । इति राजनिर्घण्टः ॥
कोमलतालश्च ॥

**मृदुत्वक्**, [च्] पुं, भूर्ज्जवृक्षः । इत्यमरः । २ । ४ । ४६ ॥

मृदवस्त्वचोऽस्य मृदुत्वक् चान्तः ।
भूर्ज्जोऽथ भूर्जपत्रः स्यात् मृदुत्वक्
पत्रपुष्पकः ।
इति कोषान्तरमिति मधुः ।
अदन्तनपुंसकत्वच-
शब्देन आबन्तत्वचाशब्देन वा विग्रहे
मृदु-
त्वचोऽदन्तोऽपि भूर्जो भुजो बहुपटो
बहुत्वक्को
मृदुत्वचः । इति स्वामी ।
इत्यमरटीकायां
भरतः ॥

**मृदुत्वचः**, पुं, भूर्ज्जवृक्षः । इत्यमरः । २ । ४ । ४६ ॥

मृदवस्त्वचोऽस्य मृदुत्वक् चान्तः ।
भूर्ज्जोऽथ भूर्जपत्रः स्यात् मृदुत्वक्
पत्रपुष्पकः ।
इति कोषान्तरमिति मधुः ।
अदन्तनपुंसकत्वच-
शब्देन आबन्तत्वचाशब्देन वा विग्रहे
मृदु-
त्वचोऽदन्तोऽपि भूर्जो भुजो बहुपटो
बहुत्वक्को
मृदुत्वचः । इति स्वामी ।
इत्यमरटीकायां
भरतः ॥

**मृदुन्नकं**, क्ली, (मृदा मृत्परिणामेन उत् ऊर्द्ध्वं

“जम्बूवेतसवाणीरकदम्बोदुम्बरार्ज्जुनाः ।
बीजपूरकमृद्वीकालकुच्चाश्च सदाडिमाः ॥”)
कपिलद्राक्षा । इति राजनिर्घण्टः ॥

**मृध**, उ ञ क्लिदि । इति कविकल्पद्रुमः ॥ (भ्वा०-

उभ०-अक०-सेट् । क्त्वावेट् ।) उ, मर्द्धित्वा
मृद्ध्वा । ञ, मर्धति मर्धते । क्लिदि आर्द्रीभावे ।
इति दुर्गादासः ॥

**मृधं**, क्ली, (मर्धते क्लिद्यतीति । मृध् + कः ।)

युद्धम् । इत्यमरः । २ । ८ । १०४ ॥ (यथा,
हरिवंशे । १८२ । १ ।
“अपयाते ततो देवे कृष्णे चैव महात्मनि ।
पुनश्चावर्त्तत मृधं परेषां लोमहर्षणम् ॥”)

**मृधा**, व्य, मृषा । इत्यमरटीकासारसुन्दरी ॥

**मृन्मरुः**, पुं, (मृत्सु मरुः ।) पाषाणः । इति

त्रिकाण्डशेषः ॥

**मृश**, श औ मृशि । इति कविकल्पद्रुमः ॥

(तुदा०-पर० सक०-अनिट् ।) श, मृशति । औ,
अमार्क्षीत् अम्राक्षीत् अमृक्षत् । मृशि इति
तालव्यान्तस्यैव क्विपि रूपम् । तेन अनि-

नीयते यत् इति । उत् + नी + डप्रकरणे "अन्येष्वपि दृश्यते ।" ३ । २ । ४८ । इत्यत्र काशिकोक्त्या डः । ततः स्वार्थे कन् ।) सुवर्णम् । इति शब्दचन्द्रिका ॥

**मृदुपत्रः**, पुं, (मृदूनि पत्राण्यस्य ।) नलः । इति राजनिर्घण्टः ॥ कोमलपर्णे, क्ली । तद्वति, त्रि ॥

**मृदुपत्री**, स्त्री, (मृदूनि पत्राणि यस्याः ।) चिल्ली-शाकम् । इति राजनिर्घण्टः ॥

**मृदुपर्व्वकः**, पुं, (मृदूनि पर्व्वाण्यस्य कप् ।) वेत्रः । इति राजनिर्घण्टः ॥ कोमलपर्व्वविशिष्टे, त्रि ॥

**मृदुपुष्पः**, पुं, (मृदूनि कोमलानि पुष्पाण्यस्य ।) शिरीषवृक्षः । इति रत्नमाला ॥ कोमलकुसुम-युक्ते, त्रि ॥

र्दि ष्टार्थत्वात् स्पर्शनं प्रणिधानञ्च
अस्यार्थः ।
स्पर्शने । यथा, रघौ । ३ । ६८ ।
“परामृशन् हर्षजडेन पाणिना
तदीयमङ्गं कुलिशव्रणाङ्कितम् ।”
प्रणिधाने ।
“रामप्रवासे व्यमृशन्न दोषं
जनापवादं सनरेन्द्रमृत्युम् ।”
केकयीति भट्टिः । ३ । ७ ॥
विमर्शं परामर्शः । मृषि इति
मूर्द्धन्यान्तपाठो
हेयः । तर्हि क्षमैवार्थः स्यात् । इति दुर्गा-
दासः ॥

**मृष**, त् क क्षान्तौ । इति कविकल्पद्रुमः ॥
(अदन्त चुरा०-पर०-सक०-सेट् ।
अन्यत्र, अदन्त भ्वा०-उभ०-सक०-
सेट् ।)
मूर्द्धन्योपधौ । क, मृषयति । ञ, मृषति
मृषते ।
इति दुर्गादासः ॥

**मृष**, त् ञ क्षान्तौ । इति कविकल्पद्रुमः ॥
(अदन्त चुरा०-पर०-सक०-सेट् ।
अन्यत्र, अदन्त भ्वा०-उभ०-सक०-
सेट् ।)
मूर्द्धन्योपधौ । क, मृषयति । ञ, मृषति
मृषते ।
इति दुर्गादासः ॥

**मृष**, उ सेचने । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् । क्त्वावेट् ।) उ,
मर्षित्वा
मृष्ट्वा । इति दुर्गादासः ॥

**मृष**, क क्षान्तौ । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-सक०-सेट् ।) क, मर्षयति ।
अयमात्मने-
पदीत्येके । इति दुर्गादासः ॥

**मृष**, ञ ङ उ क्षान्तौ । इति कविकल्पद्रुमः ॥

**मृषालकः**, पुं, (मृषा मिथ्या अचिरस्थायित्वेन
मुकुलोद्गमकाल एवेत्यर्थः । अलं
अलङ्करणं
कायति प्रकाशयतीति । कै + कः ।)
आम्र-
वृक्षः । इति शब्दचन्द्रिका ॥

**मृषावादः**, पुं, (मृषा मिथ्या वादः कथनम् ।)
मिथ्यावाक्यम् । तत्पर्य्यायः । चट्टरी २ ।
इति
जटाधरः ॥ (यथा, महाभारते । ३ ।
१८८ । ३३ ।
“बहवो म्लेच्छराजानः पृथिव्यां
मनुजाधिप ! ।
मृषानुशालिनः पापाः मृषावादपरायणाः
॥”)

**मृषावादी**, [न्] त्रि, (मृषा वदतीति । वद् +
णिनिः ।) मिथ्यावादकः । तत्पर्य्यायः ।
मृषोद्यः ।
इति शब्दमाला ॥ मिथ्याभियोक्ता, च ॥

**मृषोद्यं**, क्ली, (मृषा + वद् + “राजसूयसूर्य्यमृषोद्य-
रुच्यकुप्यकृष्टपच्याव्यथ्याः ।” ३ । १ ।
११४ । इति
कर्म्मणि क्यप् । निपातितश्च ।)
मिथ्यावाक्यम् ।
इति मुग्धबोधव्याकरणम् ॥ (यथा,
भट्टिकाव्ये ।
५ । ६० ।
“मृषोद्यं प्रवदन्तीं तां सत्यवद्यो रघूत्तमः
॥”)

**मृषोद्यः**, त्रि, मिथ्यावादी । इति शब्दमाला ॥

**मृष्टं**, क्ली, (मृज + क्तः ।) मरिचम् । इति राज-
निर्घण्टः ॥

**मृष्टः**, त्रि, (मृज + क्त ।) शोधितम् । इत्यमरः ।
३ । ४ । ५६ ॥ (यथा, बृहत्संहितायाम् ।
८५ । ९ ।
“अशुभकरमतोऽन्यथाप्रदिष्टं
वृत्तं वार्क्षञ्च पृथ्वग्रमवदानक्रियाक्षमम् ॥”
इध्मार्द्धप्रमाणम् ।
प्रादेशद्वयमिध्मस्य प्रमाणं परिकल्पितमिति ।
तदर्द्धम् । एषैव दर्व्वी । विशेषस्तु महास्रुवे ।
“दर्व्वी द्व्यङ्गुलपृथ्वग्रा तुरीयेण तु मेक्षणम् ।
मुषलोदूखले वार्क्षे स्वायते सुदृढे तथा ॥”
इति संस्कारतत्त्वम् ॥

**मेखला**, स्त्री, (मीयते प्रक्षिप्यते कायमध्यभागे
इति । मि + संज्ञायां खलः गुणश्च स्त्रियां टाप्
।
इत्यमरटीकायां भरतमतम् ।) स्त्रीकट्याभ-
रणम् । चन्द्रहार गोट् इत्यादि भाषा ॥
(यथा, रघुवंशे । ८ । ६४ ।
“असमाप्य विलासमेखलां
किमिदं किन्नरकण्ठि ! सुप्यते ॥”)
तत्पर्य्यायः । काञ्ची २ सप्तकी ३ रसना ४
सारसनम् ५ । इत्यमरः । २ । ६ । १०८ ॥
काञ्चिः ६
रशना ७ कक्षा ८ रसनम् ९ रशनम् १०
कक्ष्या ११ सप्तका १२ सारशनम् १३ । इति
शब्दरत्नावली ॥ कलापः १४ । इति
जटाधरः ॥
सारसनं स्त्रीकट्यां वस्त्रग्रन्थनम् । इति
स्वामी ॥
केचित्तु ।
“एकयष्टिर्भवेत् काञ्ची मेखला त्वष्टयष्टिका ।
रसना षोडश ज्ञेया कलापः पञ्चविंशकः ॥”
इति पठन्ति । इह त्वभेदात् पर्य्यायता । इति
भरतः ॥ खड्गादिनिबन्धनम् । इत्यमरः । २
।
८ । ९० ॥ शिक्कनिका । चर्म्मरज्वादि ।
मुष्टि-
दार्ढ्यार्थं उपर्य्यधो लौहबन्धः । इत्येके ।
इत्यपि
भरतः ॥ * ॥ शैलनितम्बः । इति मेदिनी ।
ले,
१२५ ॥ नर्म्मदानदी । इति शब्दरत्नावली ॥
पृश्निपर्णी । इति राजनिर्घण्टः ॥ * ॥
उपनयन-

(भ्वा०-उभ०-आत्म०-च-सक०-सेट् ।
क्त्वावेट् ।)
ञ, मर्षति मर्षते । ङ, मर्षते । उ,
मर्षित्वा
मृष्ट्वा । अपि गुरुमपराधं मर्षति
ब्राह्मणाना-
मिति हलायुधः । इति दुर्गादासः ॥

**मृष**, य ञ क्षान्तौ । इति कविकल्पद्रुमः ॥ (दिवा०-
उभ०-सक०-सेट् ।) य ञ्, मृष्यति
मृष्यते ममर्ष ।
इति दुर्गादासः ॥

**मृषा**, व्य, (मृष्यत इति । मृष् + का ।) मिथ्या ।
इत्यमरः । ३ । ४ । १५ ॥ (यथा,
नैषधचरिते । १ । ६८ ।
"मृषामृधं सादिबले कुतूहला-
न्नलस्य नासीरगते वितेनतुः ॥")
वृथा । इति तट्टीकासारसुन्दरी ॥

**मृषार्थकं**, क्ली, (मृषा अर्थोऽस्य । बहुब्रीहौ कप् ।)
अत्यन्तासम्भवार्थबाक्यम् । तत्पर्य्यायः
। आह-
तम् २ । इत्यमरः । १ । ६ । २१ ।
अत्यन्ता-
सम्भवार्थे वचसि । आहन्यते स्म आहतं
क्तः ।
मृषा मिथ्या अर्थोऽस्य मृषार्थकं इह
मृषार्थं
यत् सर्व्वथा न घटते । यथा, --
"एष बन्ध्यासुतो याति
खपुष्पकृतशेखरः ।
कूर्म्मलोमतनूत्राणः शशशृङ्गधनुर्द्धर इति
॥
यावज्जीवमहं मौनी ब्रह्मचारी पिता
ममेति ।
अस्य चायं भेदः मौनित्वं ब्रह्मचारित्वं
अन्यत्र
सिद्धमेव बन्ध्यासुतत्वं
खपुष्पत्वञ्चान्यत्रासिद्ध
मिति । इति भरतः ॥

स्थितपतितं च करोति मृष्टमन्नम् ॥")

**मृष्टेरुकः**, पुं, वदान्यः । मिष्टाशी । अतिथिद्विट् ।
इति मेदिनी । के, २०९ ॥

**मॄ**, गि वधे । इति कविकल्पद्रुमः ॥ (क्र्या०-पर०-
सक०-सेट् ।) गि, मृणाति । मूर्णः । मूर्त्तिः
।
इति दुर्गादासः ॥

**मे**, ङ प्रतीदाने । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-अनिट् ।) प्रतीदानं
परिवर्त्तः ।
ङ, मयते धान्येन माषं लोकः । इति
दुर्गादासः ॥

**मे**, त्रि, मह्यम् । आमाके इति भाषा । मम
आमार इतिभाषा । एते अस्मच्छब्दस्य
चतुर्थी-
षष्ठ्येकवचनाभ्यां निष्पन्ने । इति
व्याकरणम् ॥

**मेकः**, पुं, (मे इति कायति शब्दं करोतीति ।
कै शब्दे + कः ।) छागः । इति
राजनिर्घण्टः ॥

**मेक(ख)लकन्यका**, स्त्री, (मेक(ख)लः मेखलायुक्तः
बिन्ध्यपर्व्वतः तस्य कन्यका । तस्य
नितम्बदेशात्
निःसृतेत्यर्थः ।) नर्म्मदानदी । इत्यमरः ।
१ ।
१० । ३२ ॥

**मेक(ख)लाद्रिजा**, स्त्री, (मेक(ख)लात् नितम्बदेशोप-
लक्षितात् अद्रेर्जाता । जन + डः + स्त्रियां
टाप् ।) नर्म्मदानदी । यथा, --
"रेवेन्दुजा पूर्ब्बगङ्गा नर्म्मदा मेकलाद्रिजा
।"
इति हेमचन्द्रः ॥

**मेक्षणं**, क्ली, यज्ञीयपात्रविशेषः । (यथा, आश्व-
लायनश्रौतसूत्रे । २ । ६ । १२ ।
"मेक्षणेनादायावदानसम्पदा जुहुयात् ॥")

काले धारणीयमुञ्जनिर्म्मितसूत्रत्रयम् । यथा ।
अथैनं माणवकमाचार्य्यस्त्रिः प्रदक्षिणं त्रिवृत्त-
मुञ्जमेखलां परिधापयन् मन्त्रद्वयं वाचयति ।
इति भवदेवभट्टः ॥ अपि च । गोभिलः । मुञ्ज-
काशतासून्यो रसनाः । मुञ्जः शरः । तासूनः
शणस्तद्भवा तासूनी । रसना मेखला । तथा
च
मनुः ।
"मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्य्या विप्रस्य
मेखला ।
क्षत्त्रियस्य च मौर्व्वीया वैश्यस्य शणतान्तवी
॥
मुञ्जालाभे तु कर्त्तव्या कुशाश्मन्तकवल्वजैः ।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा ॥"
इति संस्कारतत्त्वम् ॥
अन्यच्च ।
"गर्भाष्टमेऽष्टमे वाब्दे स्वसूत्रोक्तविधानतः ।
दण्डी च मेखली सूत्री कृष्णाजिनधरो मुनिः ॥
मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्य्या विप्रस्य
मेखला ।
मौञ्ज्यभावे कुशेनाहुर्ग्रन्थिनैकेन च त्रिभिः ॥"
इति कौर्म्म्ये उपविभागे ११ अध्यायः ॥
होमकुण्डोपरिमृद्घटितवेष्टनविशेषः । यथा,
वशिष्ठपञ्चरात्रे ।

| | | |
|---|---|---|
| **मृषाध्यायी**, [न्] पुं, (मृषा ध्यायति चिन्तयतीति । ध्यै + णिनिः ।) वकः । यथा, --<br>“कङ्को वको वकोटश्च तीर्थसेवी च तापसः ।<br>मीनघाती मृषाध्यायी निश्चलाङ्गश्च दाम्भिकः ॥”<br>इति राजनिर्घण्टः ॥ | यथा, मेक्षणादीनाह छन्दोगपरिशिष्टम् ।<br>“इध्मजातीयमिध्मार्द्धप्रमाणंमेक्षणं भवेत् । | |

"यावान् कुण्डस्य विस्तारः खननं
तावदिष्यते ।
हस्तैके मेखलास्तिस्रो वेदाग्निनयनाङ्गुलाः
॥
कुण्डे द्विहस्ते ता ज्ञेया रसवेदगुणाङ्गुलाः ।
चतुर्हस्ते तु कुण्डे ता वसुतर्क्युगाङ्गुलाः
॥"
मेखला ब्रह्मचारिमेखलावत् कुण्डवेष्टिता
मृद्-
घटिता ताश्च खातदेशाद्बाह्ये एकाङ्गुलिरूपं
कण्ठं परित्यज्य उच्छ्रायेण विस्तारेण
चेत्यादि
क्रमेण वेदाद्यङ्गुलाः
एतद्विपरीतास्तन्त्रान्तरोक्ता
व्यवहारविरुद्धाः । वेदाश्चत्वारः
अग्नयस्त्रयः
नयने द्वे रसाः षट् गुणास्त्रयः ।
वसुतर्क्युगानि
अष्टषट्चत्वारि । पिङ्गलामतेऽपि । खाता-
देकाङ्गुलं त्यक्त्वा मेखलानां विधिर्भवेत् ।
इति
तिथ्यादितत्त्वे दुर्गोत्सवतत्त्वम् ॥
(यज्ञवेष्टन-
सूत्रम् । यथा, श्रीमद्भागवते । ४ । ५ । १५
।
"रुरुजुर्यज्ञपात्राणि तथैकेऽग्नीननाशयन् ।
कुण्डेष्वमूत्रयन् केचिद्बिभिदुर्वेदिमेखलाः
॥"
"मेखलाः सीमासूत्राणि ।" इति तट्टीकायां
श्रीधरस्वामी ॥)

**मेखलकन्यका**, स्त्री, (मेखलस्य मेखलोपलक्षितस्य
बिन्ध्यगिरेः कन्यकेव प्रसूता ।)
नर्म्मदानदी ।
इत्यमरटीकायां भरतः ॥

**मेघः**, पुं, (मेहतीति । मिह् + अच् । "न्यङ्क्वा-
दीनाञ्च ।" ७ । ३ । ५३ । इति कुत्वम् ।)
मुस्तकः । राक्षसः । इति शब्दरत्नावली ॥
स्वनामख्यातद्रव्यपदार्थः । मेहति सिञ्चति
"मेघमालेव यश्चायमारादपि विभाव्यते ॥")
मेघनायका यथा, --
"त्रियुते शाकवर्षे तु चतुर्भिः शोधिते क्रमात्
।
आवर्त्तं विद्धि सम्बर्त्तं पुष्करं द्रोणमम्बुदम्
॥"
एषां फलानि ।
"आवर्त्तो निर्जलो मेघः सम्बर्त्तश्च बहूदकः
।
पुष्करो दुष्करजलो द्रोणः शस्यप्रपूरकः ॥"
इति ज्योतिस्तत्त्वम् ॥ * ॥
त्रेतायुगे तस्योत्पत्तिर्यथा, --
"अपां सिद्धे प्रतिगते तदा मेघाम्बुना तु वै ।
मेघेभ्यस्तनयित्नुभ्यः प्रवृत्तं वृष्टिसर्ज्जनम्
॥
सकृदेव तया वृष्ट्या संपृक्ते पृथिवीतले ।
प्रादुरासंस्तदा तासां वृक्षा वै गृहसञ्ज्ञिताः ॥
सर्व्वप्रत्युपभोगस्तु तासां तेभ्यः प्रजायते ।
वर्त्तयिष्यन्ति ते स्वस्थास्त्रेतायुगमुखे प्रजाः
॥"
इति कौर्म्मे २६ अध्यायः ॥ * ॥
प्रलयकालीनमेघा यथा, --
"ततो गजकुलोन्नादास्तनितैः समलङ्कृताः ।
उत्तिष्ठन्ति सदा व्योम्नि घोराः सम्बर्त्तका
घनाः ॥
केचिन्नीलोत्पलश्यामाः केचित्
कुसुमसन्निभाः ।
धूम्रवर्णास्तथा केचित्तथा पीताः पयोधराः
॥
केचिद्रक्ताभ्रवर्णाश्च स्थूलाः
क्षारनिभास्तथा ।
शङ्खकुन्दनिभाश्चान्ये जात्याञ्जननिभाः परे
॥
मनःशिलानिभास्त्वन्ये कपोतसदृशाः परे ।
केचिद्द्राक्षवर्णाभास्तथान्ये क्षीरसन्निभाः ॥
तथा कर्व्वूरवर्णाभा भिन्नाञ्जननिभास्तथा ।
इन्द्रगोपनिभाः केचित् हरितालनिभास्तथा
॥
अभ्रस्थाः प्रपतन्त्यापो वायुना
समुदीरिताः ।
सर्व्वभूतहितार्थाय वायुभूताः समन्ततः
॥
ततो वर्षति सोऽम्भांसि सर्व्वभूतविवृद्धये
।
वायव्यं स्तनितञ्चैव विद्युदग्निसमप्रभम् ॥
मेरुसानुमिहेत्यातो मेघत्वं व्यञ्जयन्ति च
।
भ्रमिष्यन्ति यथा चापस्तदन्तं कवयो
विदुः ॥"
अपि च ।
"मेघानां पुनरुत्पत्तौ त्रिविधा
योनिरुच्यते ।
अग्निजा ब्रह्मजाश्चैव पक्षजाश्च
पृथग्विधाः ।
त्रिधा त्रिधायनात्तेषां वक्ष्यामि
वित्तसम्भवम् ॥
आग्नेयाः स्वन्नजाः प्रोक्तास्तेषां धूमः
प्रवर्त्तनम् ।
जाता दुर्दिनवाताद्ये सगुणास्ते
व्यवस्थिताः ॥
महिषाश्च वराहाश्च मत्तमातङ्गरूपिणः ।
भूत्वा धरणिमभ्येत्य रमन्ते विचरन्ति च
॥
जीमूता नाम ते मेघा ये तेभ्यो
जीवसम्भवाः ।
विद्युद्गुणविहीनाश्च जलधारावलम्बिनः
॥
मृदुसेका महाकाया आवहस्य च सानुगाः
।
क्रोशमात्राच्च वर्षन्ति क्रोशार्द्धादपि वा
पुनः ।
पर्व्वताग्रनितम्बेषु वर्षन्ति विपिनेषु च ॥
बलाका गर्द्दभाश्चैव बलाकागर्भधारिणः ।
ब्रह्मजा नाम ते मेघा ब्रह्मनिश्वाससंभवाः
॥
द्वितीयं प्रवहं वायुं मेघास्ते तु समाश्रिताः
।

यः । तत्पर्य्यायः । अभ्रम् २ वारिवाहः ३
स्तनयित्नुः ४ वलाहकः ५ धाराधरः ६
जल-
धरः ७ तडित्वान् ८ वारिदः ९ अम्बुभृत्
१० घनः ११ जीमूतः १२ मुदिरः १३
जलमुक्
१४ धूमयोनिः १५ । इत्यमरः । १ । ३ ।
७ ॥
अभ्रम् १६ पयोधरः १७ अम्भोधरः १८
व्योमधूमः १९ घनाघनः २० वायुदारुः
२१
नभश्चरः २२ कन्धरः २३ कन्धः २४
नीरदः २५
गगनध्वजः २६ वारिमुक् २७ वार्मुक् २८
वनमुक् २९ अब्दः ३० पर्ज्जन्यः ३१
नभोगजः
३२ मदयित्नुः ३३ कदः ३४ कन्दः ३५
गवेडुः
३६ गदामरः ३७ खतमालः ३८ वातरथः
३९
श्वेतनीलः ४० नागः ४१ जलकरङ्कः ४२
पेचकः ४३ भेकः ४४ दर्दुरः ४५ । इति
शब्द-
रत्नावली ॥ अम्बुदः ४६ तोयदः ४७
अम्बुवाहः
४८ । इति रत्नमाला ॥ पाथोदः ४९
गदाम्बरः
५० गाडवः ५१ वारिमसिः ५२ । इति
त्रिकाण्ड-
शेषः ॥ तद्वैदिकपर्य्यायाः । अद्रिः १ ग्रावा
२
गोत्रः ३ बलः ४ अश्नः ५ पुरुभोजाः ६
वलि-
शानः ७ अश्मा ८ पर्व्वतः ९ गिरिः १०
व्रजः
११ चरुः १२ वराहः १३ शम्बरः १४
रौहिणः
१५ रैवतः १६ फलिगः १७ उपरः १८
उपलः
१९ चममः २० अहिः २१ अभ्रम् २२
वलाहकः

काकाण्डकनिभाः केचिदुत्तिष्ठन्ति घना
दिवि ।
केचित् पर्व्वतसङ्काशाः केचिद्गजकुलोपमाः
॥
कूटागारनिभाश्चान्ये केचिन्मीनकुलोद्वहाः ।
बहुरूपा घोररूपा घोरस्वरनिनादिनः ।
तदा जलधराः सर्व्वे पूरयन्ति नभस्थलम् ॥
ततस्ते जलदा घोरा वारिणा
भास्करात्मजाः ।
सप्तधा संवृतात्मानस्तमग्निं शमयन्त्युत ॥
ततस्ते जलदा वर्षं वर्षन्तीह महौघवत् ।
सुघोरमशिवं सर्ब्बं नाशयन्ति च पावकम् ॥
प्रवृत्तेन तदात्यर्थमम्भसा पूर्य्यते किल ।
अद्भिस्तेजोऽंशभूतत्वात्तदाग्निं प्रविशत्यपि ॥
नष्टे चाग्नौ वर्षशतैः पयोदा जलसम्भवाः ।
प्लावयन्तोऽथ भुवनं महाजलपरिस्रवैः ॥
धाराभिः पूरयन्तीदं चोद्यमानाः स्वयम्भुवा
।
उद्यन्तं सलिलौघैश्च वेला इव महोदधेः ॥
साद्रिद्वीपा तथा पृथ्वी जलैः संछाद्यते शनैः
।
आदित्यरश्मिभिः पीतं जलमभ्रेषु तिष्ठति ॥
पुनः पतति तद्भूमौ पूर्य्यन्ते तेन चार्णवाः ॥”
इति कौर्म्मे उपविभागे ४२ अध्यायः ॥ * ॥
मेघस्य उत्पत्तिर्यथा, --
“तेजो ह सर्व्वभूतेभ्य आदत्ते रश्मिभिर्जलम्
।
समुद्रात्त्वम्भसां योगाद्रश्मयः प्रवहन्त्यपः ॥
ततोऽयनवशात् काले परिवृत्तो दिवाकरः ।
नियच्छति पयो मेघे
शुक्लाशुक्लैर्गभस्तिभिः ॥

इतो योजनमात्राश्च सार्द्धार्द्धात्
विकृतादपि ।
वृष्टिसर्गाद्विवस्तेषां धारासाराः
प्रकीर्त्तिताः ॥
शक्रेण पक्षा यच्छिन्नाः पर्व्वतानां
महौजसाम् ।
कामगानां प्रवृत्तानां प्रजानां शिवमिच्छता
।
पुष्करावर्त्तकास्तने करणेनेह विश्रुताः ॥
नानारूपधराश्चैव महाघोरस्वनाश्च ते ।
कल्पान्तवृष्टेः स्रष्टारः
सम्बर्त्ताग्निर्नियामकाः ।
वर्षन्ति ते युगान्तेषु तृतीयास्ते
प्रकीर्त्तिताः ॥
अनेकरूपसंस्थानाः पूरयन्तो महीं जलैः
।
वायुं परिवहन्ते स्युराश्रिताः
कल्पसाधकाः ॥
योऽन्यस्याण्डस्य भिन्नस्य
प्राकृतप्रभवस्तदा ॥
यस्माद्ब्रह्मा समुत्पन्नश्चतुर्व्वक्त्रः
स्वयम्भुवः ।
तस्यैवाण्डस्य पाला हि सर्व्वे मेघाः
प्रकीर्त्तिताः ॥
तेषामध्यायनं धूमः सर्व्वेषामविशेषतः ।
तेषां श्रेष्ठस्तु पर्ज्जन्यश्चत्वारश्चैव
दिग्गजाः ॥
गजानां पर्व्वतानाञ्च मेघानां भोगिभिः
सह ।
कुलमेकं पृथग्भूतं योनिस्त्वेका जलं
स्मृतम् ॥
पर्ज्जन्यो दिग्गजाश्चैव हेमन्ते
शीतसंभवाम् ।
तुषारवृष्टिं वर्षन्ति हिमशस्यविवृद्धये ॥”
इति ब्रह्माण्डे ५८ अध्यायः ॥ * ॥
षड्रागान्तर्गतरागविशेषः । यथा, --
“भैरवोऽथ वसन्तश्च नटो
नारायणस्तथा ।
श्रीरागो मेघरागश्च षडेते पुरुषाह्वयाः ॥”
तस्य रागिण्यो यथा, --

| | | |
|---|---|---|
| २३ मेवः २४ दृतिः २५ ओदनः २६ वृषन्धिः<br>२७ वृत्रः २८ असुरः २९ कोशः ३० । इति<br>त्रिंशन्मेघनामानि । इति वेदनिघण्टौ । १ । १० ॥<br>(यथा, उत्तररामचरिते । २ । | | "ललिता मालसी गौडी नाटी देवकिरी तथा ।<br>मेघरागस्य रागिण्यो भवन्तीमाः सुमध्यमाः ॥"<br>अयं हनूमन्मते षष्ठरागो ब्रह्मणो मस्तकात्<br>निर्गतः । आकाशाज्जात इति च वदन्ति ।<br>अस्य जातिः औडवः । अर्थात् ध न ष ऋ ग<br>इति पञ्चस्वरमिलितः । अस्य गृहं धैवतस्वरः । |

घर्षर्त्तौ रात्रिशेषे गानसमयः ।
अस्याकारः ।
सुन्दरपुरुषः । श्यामवर्णः ।
उष्णीषवद्बद्धकेशः ।
शाणितखड्गहस्तः । हनूमन्मते
अस्य पञ्च-
रागिण्यो यथा । टङ्का १ मल्लारी २
गुर्ज्जरी ३
भूपाली ४ देशकारी च ५ ।
अस्याष्टपुत्रा
यथा । जालन्धरः १ सारः २
नटनारायणः ३
शङ्कराभरणः ४ कल्याणः ५ गजधरः
६
गान्धारः ७ सहाना ८ ॥
कलानाथमते । अस्य
रागिण्यः षट् यथा । वङ्गाली १ मधुरा
२
कामोदा ३ धनाश्रीः ४ तीर्थकी ५
देवाली ६ ।
एतन्मतेऽपि अष्टौ पुत्राः किन्तु
नटनारायण-
शङ्कराभरणकल्याणस्थाने
केदारामारुजलभरता
ज्ञेयाः ॥ सोमेश्वरमते अस्य
षड्रागिण्यो यथा ।
मल्लारी १ सौरटी २ सावेरी ३
कौशिकी ४
गान्धारी ५ हरशृङ्गारी ६ ।
एतन्मतेऽपि
पुत्राः पूर्ब्बवत् ।
रागिणीसहितस्यैतद्रागस्य
वर्षर्त्तौ गानसमयः ॥ भरतमते तस्य
पञ्च
रागिण्यो यथा । मल्लारः १ मूलतानी
२
देशी ३ रतिबल्लभा ४ कावेरी ५ ।
तनम्ते अष्टौ

ऽपीरम्मदः सोऽपि हि इरया जलेन माद्यतीति
कौमुदी । मेघाग्न्यादिरिरम्मद इति शब्दार्णवः ।
इति तट्टीकायां भरतः ॥

**मेघडम्बरः**, पुं, मेघस्याडम्बरः । मेघगर्जनम् ।

यथा, --
"अजायुद्धे ऋषिश्राद्धे प्रभाते मेघडम्बरे ।
दम्पत्योः कलहे चैव बह्वारम्भे लघुक्रिया ॥"
इत्युद्भटः ॥

**मेघतिमिरं**, क्ली, (मेघेन तिमिरं अन्धकारो यत्र ।)

मेघाच्छन्नदिनम् । इति हलायुधः ॥

**मेघदीपः**, पुं, (मेघजनितो दीप इव ।) विद्युत् ।

इति शब्दमाला ॥

**मेघनादः**, पुं, (मेघं नादयतीति । नद् + णिच् +

अण् ।) वरुणः । (मेघस्य नाद इव नादो यस्य ।)
रावणपुत्त्रः । इति मेदिनी । दे, ५२ ॥ (यथा,
रघौ । १२ । ७६ ।
"गरुडापातविश्लिष्टमेघनादास्त्रबन्धनः ॥"
मेघस्य नादः ।) मेघशब्दः । इति हेमचन्द्रः ॥
(यथा, महाभारते । ३ । ७३ । ७ ।
"ते श्रुत्वा रथनिर्घोषं वारणाः शिखिनस्तथा ।
प्रणेदुरुन्मुखा राजन् ! मेघनाद इवोत्-
सुकाः ॥")
पलाशवृक्षः । इति शब्दचन्द्रिका ॥ तण्डुलीय-
शाकः । इति राजनिर्घण्टः ॥ (यथा, भाव-
प्रकाशे ।
"तण्डुलीयो मेघनादः काण्डेरस्तण्डुलेरकः ॥"
अस्य गुणादिकं तण्डुलीयशब्दे द्रष्टव्यम् ॥
दानवभेदः । यथा, हरिवंशे । ३३२ । ३० ।
"सुबाहुर्मेघनादश्च भीमगर्भश्च वीर्य्यवान् ॥"
मेघसदृशशब्दविशिष्टे, त्रि । यथा, रामायणे ।
२ । १६ । २९ ।
"मेघनादमसम्बाधं मणिहेमविभूषितम् ॥")

**मेघनादजित्**, पुं, (मेघनादं जितवानिति । जि +

क्विप् ।) लक्ष्मणः । इति त्रिकाण्डशेषः ॥

**मेघनादानुलासकः**, पुं, (मेघनादं अनु लक्ष्यीकृत्य

**मेघपुष्पं**, क्ली, (मेघस्य पुष्पमिव ।) जलम् । इत्य-

मरः । १ । १० । ५ ॥ पिण्डाभ्रम् ।
नदीजलम् ।
इति मेदिनी । पे, २८ ॥

**मेघपुष्पः**, पुं, (मेघ इव पुष्प्यति प्रकाशते इति ।

पुष्प विकाशने + अच् ।) शक्रहयः । इति
शब्द-
रत्नावली ॥ श्रीकृष्णाश्वश्च ॥ (यथा,
महाभारते ।
४ । ४३ । २१ ।
"तं मन्ये मेघपुष्पस्य जवेन सदृशं हयम्
॥")

**मेघप्रसवः**, पुं, (मेघः प्रसवः उत्पत्तिस्थानमस्य

इति ।) जलम् । इति राजनिर्घण्टः ॥ मेघ-
जाते, त्रि ॥

**मेघभूतिः**, पुं, (मेघात् भूतिर्जन्मास्य ।) वज्रम् ।

इति शब्दरत्नावली ॥

**मेघमालः**, पुं, (मेघमाला वर्णसादृश्येन अस्त्यस्य ।

अर्श आद्यच् ।)
रमागर्भजातकल्किदेवपुत्त्रः ।
यथा । "तथा रमा सिते पक्षे ।"
इत्युपक्रम्य ।
"सा पुत्त्रं सुषुवे साध्वी मेघमालबलाहकौ
।
महोत्साहौ महावीर्य्यौ सुभगौ
कल्किसम्मतौ ॥"
इति कल्किपुराणे ३१ अध्यायः ॥
(प्लक्षद्वीपस्थपर्व्वतविशेषः । यथा,
भागवते । ५ ।
२० । ४ । "सुवर्णो हिरण्यष्ठीवो मेघमाल
इति सेतु-
शैलाः ॥" राक्षसविशेषः । इति रामायणे ।
३ । २९ । ३१ ॥)

**मेघमाला**, स्त्री, (मेघानां माला ।) मेघश्रेणी ।

तत्पर्य्यायः । कादम्बिनी २ । इत्यमरः ।
१ । ३ । ८ ॥

पुत्रा यथा । कलायरः १ वागेश्वरी २
सहाना ३
पुरीया ४ कानरा ५ तिलकः ६
स्तम्भः ७
शङ्कराभरणः ८ । तन्मते अष्टपुत्राणां
भार्य्या
यथा । करणाटी १ कादवी २
कदमनाटः ३
पाहारी ४ माँझः ५ परजः ६
नटमञ्जरी ७
शुद्धनटः ८ । इति सङ्गीतशास्त्रम् ॥

**मेघकफः**, पुं, (मेघानां कफ इव ।) करका ।

इति हारावली । ५८ ॥

**मेघकालः**, पुं, (मेघानां कालः समयः ।) वर्षर्त्तुः ।

इति जटाधरः ॥ (यथा,
बृहत्संहितायाम् ।
९५ । ५८ ।
"स्थलसलिलचराणांव्यत्ययो
मेघकाले ।
प्रचुरसलिलवृष्ट्यै शेषकाले भयाय
॥")

**मेघचिन्तकः**, पुं, (चिन्तयतीति । चिन्ति + ण्वुल् ।

मेघानां चिन्तकः तस्यैव
जलपायित्वात् ।)
चातकपक्षी । इति शब्दचन्द्रिका ॥
(मेघ-
चिन्तनविशिष्टे, त्रि ॥)

**मेघजं**, त्रि, मेघभववस्तु । मेघाज्जायते इति व्युत्-

पत्त्या जनधातोः डप्रत्ययेन निष्पन्नम्
॥

**मेघजालं**, क्ली, (मेघानां जालम् ।) अभ्रिग्रम् ।

इति शब्दचन्द्रिका ॥

**मेघजीवनः**, पुं, (मेघो जीवनं जीवनोपायो यस्य ।)

चातकपक्षी । इति राजनिर्घण्टः ॥

**मेघज्योतिः**, [स्] पुं, (मेघस्य ज्योतिरग्निर्मेघा-

लसति क्रीडतीति । लस + ण्वुल् ।) मयूरः ।
इति राजनिर्घण्टः ॥

**मेघनादानुलासी**, [न्] पुं, (मेघनादमनुलसतीति ।

लस + णिनिः ।) मयूरः । इत्यमरः । २ । ५ ।
३० ॥

**मेघनामा**, [न्] पुं, (मेघस्य नाम नाम यस्य ।)

मुस्तकः । इत्यमरः । २ । ४ । १५९ ॥
(पर्य्यायो-
ऽस्य यथा, --
"मुस्तको मेघनामा स्यात् ।"
इति गारुडे २०८ अध्यायः ॥)

**मेघनिर्घोषः**, पुं, (मेघस्य निर्घोषः ।) मेघशब्दः ।

तत्पर्य्यायः । स्तनितम् २ गर्जितम् ३ रसितम्
४ । इत्यमरः । १ । ३ । ८ ॥ ध्वनितम् ५
ह्लादितम्
६ । इति भरतः ॥ (मेघस्य निर्घोष इव निर्घोषो
यस्य । मेघतुल्यशब्दविशिष्टे, त्रि । यथा, महा-
भारते । ३ । ७३ । ११ ।
"यदि मां मेघनिर्घोषो नोपगच्छति नैषधः ।
अद्य चामीकरप्रख्यं प्रवेक्ष्यामि हुताशनम् ॥")

(यथा, उत्तररामचरिते । २ ।
"मेघमालेव यश्चायमारादपि विभाव्यते ।"
स्कन्दमातृगणानामन्यतमा । यथा,
महाभारते ।
९ । ४६ । २९ ।
"एकवक्त्रा मेघरवा मेघमाला विरोचना
॥")

**मेघयोनिः**, पुं, (मेघस्य योनिः उत्पत्तिकारणम् ।)

धूमः । इति शब्दरत्नावली ॥

**मेघरागः**, पुं, (मेघनामको रागः ।) षड्रागान्त-

र्गतरागविशेषः । इति हलायुधः ॥ (यथा,
संगीतदर्पणे रागाध्याये । ३१ ।
"भैरवः कौशिकश्चैव हिन्दोलो
दीपकस्तथा ।
श्रीरागो मेघरागश्च षडेते पुरुषाह्वयाः ॥")
अस्य विवरणं मेघशब्दे द्रष्टव्यम् ॥

**मेघवर्णा**, स्त्री, (मेघस्येव वर्णोऽस्याः । स्त्रियां

टाप् ।) नीलीवृक्षः । इति शब्दचन्द्रिका ॥
(मेघतुल्यवर्णे, त्रि । यथा, महाभारते । ३
।
४६ । १५ ।
"सुसूक्ष्मेणोत्तरीयेण मेघवर्णेन राजता ॥")

**मेघवर्त्म**, [न्] क्ली, (मेघानां वर्त्म पन्थाः ।) आका-

शम् । इति त्रिकाण्डशेषः ॥

**मेघवह्निः**, पुं, (मेघस्य मेघजन्यो वा वह्निः ।)

वज्राग्निः । तत्पर्य्यायः । इरम्मदः २ । इति
हेमचन्द्रः । ४ । १६७ ॥

**मेघवाहनः**, पुं, (मेघो वाहनमस्य ।) इन्द्रः । इत्य-

मरः । १ । १ । ४७ ॥ (यथा,
शिशुपालवधे । १३ । १८ ।
"अविलम्बितैलविलपाणिपल्लवः
श्रयति स्म मेघमिव मेघवाहनः ॥")

| | | |
|---|---|---|
| दुत्पन्नो ज्योतिर्वा ।) वज्राग्निः । तत्पर्य्यायः । इरम्मदः २ । इत्यमरः । १ । ३ । १० ॥ मेघस्य ज्योति- रग्निर्मेघज्योतिः । ज्योतिरग्नौ समाख्यातं ज्योतिश्चन्द्रो निगद्यते । इति रन्तिः ॥ इरया जलेन माद्यति दीप्यते इति इरम्मदः । मेघाग्निर्हि जलेनैव दीप्यते । मदीभिर्य्यञि हर्षे तॄ भॄ वॄ दॄ जीति खः खित्यव्याजिति मन्स्वौ । अन्योन्य- संघट्टेन मेघान्निःसृत्य यज्ज्योतिर्वृक्षादौ पतति स इरम्मदः । मेघ इत्युपलक्षणं तेन वातजो- | | |

**मेघवेश्म**, [न्] क्ली, (मेघानां वेश्म भवनम् ।)
आकाशम् । इति जटाधरः ॥

**मेघसारः**, पुं, (मेघस्य सार इव ।) चीनकर्पूरः ।
इति राजनिर्घण्टः ॥

**मेघसुहृत्**, [द्] पुं, (मेघाः सुहृदो मित्राणि यस्य ।)
मयूरः । इति हेमचन्द्रः ॥

**मेघस्तनितोद्भवः**, पुं, (मेघस्य स्तनितादुद्भव उत्-
पत्तिरस्य । नवमेघशब्देनास्य अङ्कुरोत्पत्ते-
स्तथात्वम् ।) विकंण्टकवृक्षः । इति राज-
निर्घण्टः ॥ (विशेषोऽस्य विकण्टकशब्दे ज्ञेयः ॥)

**मेघाख्यं**, क्ली, (मेघस्य आख्या नामास्य ।) मुस्तकम् ।
इति रत्नमाला ॥

**मेघागमः**, पुं, (मेघानां आगमोऽत्र ।) वर्षाकालः ।
इति शब्दरत्नावली ॥ (यथा, घटकर्परकाव्ये । २ ।
"नवाम्बुमत्ताः शिखिनो नदन्ति
मेघागमे कुन्दसमानदन्ति ! ॥")
मेघस्यागमनञ्च ॥

**मेघानन्दा**, स्त्री, (मेघेन आनन्दोऽस्याः ।) वलाका ।
इति राजनिर्घण्टः ॥

**मेघानन्दी**, [न्] पुं, (मेघेन आनन्दतीति । आ +
नन्द + णिनिः ।) मयूरः । इति राजनिर्घण्टः ॥

**मेघान्तः**, पुं, (मेघानां अन्तोऽवसानमत्र ।)
शरत्कालः । इति राजनिर्घण्टः ॥

**मेघास्थि**, क्ली, (मेघानां अस्थीव ।) करका । इति
त्रिकाण्डशेषः ॥

**मेघास्पदं**, क्ली, (मेघानां आस्पदं स्थानम् ।)
आकाशम् । इति धनञ्जयः ॥

**मेघोदरः**, पुं, (मेघस्येव उदरमस्य ।) अर्हत्पिता ।
इति हेमचन्द्रः ॥

**मेचकं**, क्ली, (मचति वर्णान्तरेण मिश्रीभवतीति ।
"गजकदम्बकमेचकमुच्चकै-
र्नभसि वीक्ष्य नवाम्बुदमम्बरे ॥")

**मेचकाभिधा**, स्त्री, (मेचकस्याभिधा नामास्याः ।)
पातालगरुडीलता । इति राजनिर्घण्टः ॥

**मेट्**, ऋ उन्मादे । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-अक०-सेट् ।) ऋ, अमिमेटत् । मेटति
लोकः । उन्माद्यतीत्यर्थः । इति दुर्गादासः ॥

**मेटुला**, स्त्री, (मेटतीति । मेट् बाहुलकात् उलच् ।
टाप् च ।) आमलकी । इति शब्दचन्द्रिका ॥

**मेठः**, पुं, (मेटति उन्माद्यतीति । मेट् + अच् ।
पृषोदरादित्वात् साधुः ।) हस्तिपकः । इति
त्रिकाण्डशेषः ॥

**मेड**, ऋ उन्मादे । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-अक०-सेट् ।) ऋ, अमिमेडत् । मेडति
उन्माद्यतीत्यर्थः । इति दुर्गादासः ॥

**मेढ्रः**, पुं, (मेहत्यनेनेति । मिह सेचने + "दाम्नी-
शसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ।"
३ । २ । १८२ । इति ष्ट्रन् ॥) शिश्नः । (यथा,
मनौ । ८ । २८२ ।
"अवमूत्रयतो मेढ्रमवशर्द्धयतो गुदम् ॥")
स तु गर्भस्थस्य सप्तभिर्मासैर्भवति । इति सुख-
बोधः ॥ (यथा,
"श्रवणनयनवदनघ्राणगुदमेढ्राणि
नवस्रोतांसि नराणां बहिर्मुखान्येतान्येव ॥" इति
सुश्रुते शारीरस्थाने पञ्चमेऽध्याये ॥ शिरः
पर्य्यन्तं गताया वज्रनाड्या मूलस्थानम् । यथा,
पूर्णानन्दकृतषट्चक्रनिरूपणे । "वज्राख्या
मेढ्रदेशाच्छिरसि परिगता मध्यमे
स्याज्ज्वलन्ती ।"

**मेण्टः**, पुं, हस्तिपकः । इति हारावली ॥

**मेण्डः**, पुं, हस्तिपकः । इति त्रिकाण्डशेषः ॥

**मेण्ढः**, पुं, मेषः । इति शब्दरत्नावली ॥

**मेथ**, ञ ऋ सङ्गे । वधे । मेधायाम् । इति कवि-
कल्पद्रुमः ॥ (भ्वा०-उभ०-सङ्गे अक०-वधे-मेधा-
याञ्च सक०-सेट् ।) ञ, मेथति मेथते धीरो
गुणिना सङ्गत इत्यर्थः । ऋ, अमिमेथत् ।
मिमेथ । इति दुर्गादासः ॥

**मेथिः**, पुं, (मेथन्ते पशवोऽत्रेति । मेथ सङ्गे +
"सर्व्वधातुभ्य इन् ।" उणा० ४ । ११७ । इति
इन् ।) खले पशुबन्धनार्थन्यस्तदारु । मेइ काठ
इति भाषा । यथा, --
"मेधिर्मेथिः खलेवाली खले गोबन्धदारु यत् ।"
इति हेमचन्द्रः । ३ । ५५८ ॥
(स्त्री, मेथिका । तत्पर्य्यायो यथा, --
"मेथिका मेथिनी मेथिर्दीपनी बहुपत्रिका ।
बोधिनी बहुबीजा च ज्योतिर्गन्धफला तथा ॥
वल्लरी चन्द्रिका मन्था मिश्रपुष्पा च कैरवी ।"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
क्वचित् मेथीति पाठो दृश्यते ॥)

**मेथिका**, स्त्री, (मेथतीति । मेथ् + ण्वुल् । टापि
अत इत्वम् ।) क्षुपविशेषः । मेथिशाक इति

मच् + "कृञादिभ्यः संज्ञायां वुन् ।" उणा० ५ । ३५ । इति वुन् । ततः "पचिमच्योरिच्च ।" उणा० ५ । ३७ । इति इत्वे लघूपधगुणः । यद्वा, मच मचि कल्कने + अकन् । मचि परिमुचां नाम्नीत्येत्वम् ।
मेचकः कृष्णनीलः स्यादतसीपुष्पसन्निभः । इति शब्दार्णवः । व्युत्पत्तिस्तु मचति मिश्रीभवति वर्णान्तरेण इति भरतः । इत्यमरटीकायां रघुनाथचक्रवर्त्ती ।) श्रोतोऽञ्जनम् । अन्धकारः । इति मेदिनी । के, १४० ॥ नीलाञ्जनम् । इति राजनिर्घण्टः ॥ (यथा, --
"मेचकं मर्द्दनाञ्जनपिण्डवदीषत्कृष्णरूक्षम् ।" इति माधवकरकृतरुग्विनिश्चयव्याख्यानेऽतीसाराधिकारे विजयरक्षितः ॥)

**मेचकः**, पुं, मयूरचन्द्रकः । श्यामलः । इति मेदिनी । के, १४० ॥ (यथा, "मेचकामं आगारधूमाभञ्च ससारगन्धकादिमणिमसृणीकृतकृष्णवर्णस्येव वर्णो मेचक इति जेज्जडादयः प्राहुः चिक्कणकृष्ण इत्यर्थः ।" इति रुग्विनिश्चयस्य रक्तपित्तव्याख्याने विजयेनोक्तम् ॥) धूमः । मेघः । शोभाञ्जनः । इति शब्दरत्नावली ॥ श्यामलगुणयुक्ते, त्रि । इत्यमरः । १ । ५ । १४ ॥
(यथा, शिशुपालवधे । ६ । २६ ।

मेढ्रस्याप्रावृतत्वं जन्मान्तरे कृतस्य महापापस्य चिह्नं कुष्ठविशेषः । यथा, भविष्यपुराणीयमध्यतन्त्रषष्ठाध्याये ।
"शृणु कुष्ठगणं विप्र ! उत्तरोत्तरतो गुरुम् ।
विचर्च्चिका तु दुश्चर्म्मा चर्च्चरीयस्तृतीयकः ॥
विकर्च्चुर्व्रणताम्रौ च कृष्णश्वेते तथाष्टकम् ।
एषां मध्ये तु यः कुष्ठी गर्हितः सर्व्वकर्म्मसु ॥
ब्रणवत्सर्व्वगात्रेषु गण्डे भाले तथा नसि ॥"
दुश्चर्म्मा अपावृतमेढ्रः इति स्मृतिसंग्रहितारः ॥
पञ्चभूतानां मध्ये पृथिव्या रजोगुणांशत उत्पन्नो मेढ्रः तथाच वेदान्तपञ्चदश्याम् ।
"रजोऽंशैः पञ्चभिस्तेषां क्रमात् कर्म्मेन्द्रियाणि तु ।
वाक्पाणिपादपायूपस्थाभिधानानि जज्ञिरे ॥"
उपस्थेन्द्रियं नाम उपस्थव्यतिरिक्तं उपस्थाश्रयं मूत्रशुक्रोत्सर्गशक्तिमदिन्द्रियं इत्यात्मानात्मविवेके शङ्कराचार्य्यः । अस्य लक्षणादकं लिङ्गशब्दे उपस्थशब्दे च द्रष्टव्यम् ॥) मेषः । इत्यमरः । २ । ९ । ९६ ॥ (यथास्य पर्य्यायः ।
"मेढ्रो भेढो हुडो मेष उरभ्र उरणोऽपि च ।
अविर्वृ ष्णिस्तथोर्णायुःकथ्यन्ते तद्गुणा अथ ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥)

**मेढ्रशृङ्गी**, स्त्री, (मेढ्रस्य शृङ्गमिव शृङ्गमस्याः । गौरादित्वात् ङीष् ।) मेषशृङ्गीवृक्षः । इति रत्नमाला ॥

भाषा । तत्पर्य्यायः । मेथिनी २ मेथी ३ दीपनी ४ बहुपुत्रिका ५ बोधिनी ६ गन्धबीजा ७ ज्योतिः ८ गन्धफला ९ वल्लरी १० चन्द्रिका ११ मन्था १२ मिश्रपुष्पा १३ कैरवी १४ कुञ्चिका १५ बहुपर्णी १६ पीतबीजा १७ । अस्या गुणाः । कटुत्वम् । उष्णत्वम् । रक्तपित्तप्रकोपणत्वम् । अरोचकहरत्वम् । दीप्तिकारित्वम् । वातघ्नत्वम् । दीपनत्वञ्च । इति राजनिर्घण्टः ॥ अथ मेथी वनमेथी । तयोर्नामगुणाः ।
"मेथिका मेथिनी मेथी दीपनी बहुपत्रिका ।
बोधिनी गन्धबीजा च ज्योतिर्गन्धफला तथा ॥
वल्लरी चन्द्रिका मन्था मिश्रंपुष्पा च कैरवी ।
कुञ्चिका बहुपर्णी च पीतबीजा मुनिच्छदा ॥
मेथिका वातशमनी श्लेष्मघ्नी ज्वरनाशिनी ।
ततः स्वल्पगुणा वन्या वाजिनां सा तु पूजिता ॥"
इति भावप्रकाशे पूर्ब्बखण्डे प्रथमे भागे ॥

**मेथिनी**, स्त्री, (मेथतीति । मेथ् + णिनिः । ङीप् ।) मेथिका । इति राजनिर्घण्टः ॥

**मेथी**, स्त्री, (मेथिः + कृदिकारादिति पक्षे ङीष् ।) मेथिका । इति राजनिर्घण्टः ॥ (स्तम्भः । यथा, शतपथब्राह्मणे । ३ । ५ । ३ । २१ ।

| | | “विष्णवे त्वेति मेथीमुपनिहन्तीतरतस्ततो यदु च मानुषे ॥”<br>“मेथीं स्तम्भम् ।” इति तद्भाष्यम् ॥)<br>**मेद**, ऋ ञ वधमेधयोः । इति कविकल्पद्रुमः ॥<br>(भ्वा०-उभ०-सक०-सेट् ।) ऋ, अमिमेदत् ।<br>ञ, मेदति मेदते शास्त्रार्थं शिष्यः धारयतीत्यर्थः ।<br>मिमेदुः । इति दुर्गादासः ॥<br>**मेदः**, [स्] क्ली, (मेद्यति स्निह्यतीति । मिद् +<br>“सर्व्वधातुभ्योऽसुन् ।” उणा० ४ । १८८ । इति |
|---|---|---|

असुन् ।) मांसप्रभवधातुविशेषः । तत्पर्य्यायः ।
वपा २ वसा ३ । इत्यमरः । २ । ६ । ६४ ॥
मेदः ४ ।
अकारान्त इति भरतः ॥ अस्य गुणाः । वात-
नाशित्वम् । बलपित्तकफदातृत्वञ्च । इति राज-
वल्लभः ॥ अथ मेदसः स्वरूपमाह ।
“यन्मांसं स्वाग्निना पक्वं तन्मेद इति कथ्यते ।
तदतीव गुरु स्निग्धं बलकार्य्यतिबृंहणम् ॥”
अथ मेदसः स्थानमाह ।
“मेदो हि सर्व्वभूतानामुदरेष्वस्थिषु स्थितम् ।
अतएवोदरे वृद्धिः प्रायो मेदस्विनो भवेत् ॥”
इति भावप्रकाशः ॥
रोगविशेषः । तत्र मेदसो विप्रकृष्टं निदान-
माह ।
“अव्यायामदिवास्वप्नश्लेष्मलाहारसेविनः ।
मधुरोऽन्नरसः प्रायः स्नेहान्मेदो विवर्द्धयेत् ॥”
अन्नरसः आमद्रवः । तथा च सुश्रुतः ।
आमद्रवान्नरसो मधुरश्च भवतीति । मेदसो-
ऽतिप्रवृद्धौ वैगुण्यमाह ।
“मेदसावृतमार्गत्वात् पुष्यन्त्यन्ये न धातवः ।
मेदस्तु चीयते तस्मादशक्तः सर्व्वकर्म्मसु ॥”
अन्ये धातवः अस्थ्यादयः शुक्रान्ताः । न पुष्यन्ति
न पुष्टा भवन्ति । चीयते सञ्चितं भवति वर्द्धत
इति यावत् । तस्मात् मेदस्वी सर्व्वकर्म्मसु
अशक्तः स्यात् । मेदसः सौकुमार्य्यात् । अपरा-
नपि दोषानाह ।
“क्षुद्रश्वासतृषामोहस्वप्नक्रन्थनसादनैः ।
युक्तः क्षुत्स्वेददौर्गन्धैरल्पप्राणोऽल्पमैथुनः ।
मेदसः स्वेददौर्गन्ध्याज्जायन्ते जन्तवो नरः ॥”
क्रन्थनं उच्छ्वासावरोधः । कण्ठेन घुर्घुर
इत्यन्ये ।
जन्तवः क्रिमयः । मेदसः स्थानमाह ।
“मेदस्तु सर्व्वभूतानामुदरेष्वस्थिषु स्थितम् ।
अतएवोदरे वृद्धिः प्रायो मेदस्विनो भवेत् ॥”
विकारान्
प्रमेहपिडकज्वरभगन्दरविद्रधिवात-
रोगाणामन्यतमान् । अतिस्थूलतया वैगुण्य-
माह ।
“अतिस्थूलेषु संदृष्टा विसर्पाः सभगन्दराः ।
ज्वरातीसारमेहार्शःश्लीपदा यषिकादयः ॥”
अतिस्थूलस्य लक्षणमाह ।
“मेदो मांसातिवृद्धत्वाच्चलस्फिगुदरस्तनः ।
अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते ॥”
अयथोपचयोत्साहः न यथा उपचयो मांसोप-
चयः उत्साहो बलञ्च यस्य सः ॥ * ॥ * ॥ अथ
मेदस्य चिकित्सा ।
“पुराणाः शालयो मुद्गाः
कुलत्थोद्दालकोद्रवाः ।
लेखना वस्तयश्चापि सेव्या मेदस्विना सदा ॥
श्रमचिन्ताव्यवायाध्वक्षौद्रजागरणप्रियः ।
हन्त्यवश्यमतिस्थौल्यं यवश्यामाकभोजनः ॥
क्षारं वातारिपत्रस्य हिङ्गुयुक्तं पिबेन्नरः ।
सहितं भक्तमण्डेन मेदोवृद्धिनिवृत्तये ॥
गुडूचीत्रिफलाक्वाथः पीतो मेदोहरः स्मृतः ।
गुडूचीत्रिफलाक्वाथस्तथा लोहरजोयुतम् ।
क्षौद्रेण त्रिफलाक्वाथः पीतो मेदहरः परः ॥
प्रातर्मधुयुतं वारि सेवितं स्थौल्यनाशनम् ।
उष्णमन्नस्य मण्डं वा पिबेत् कृशतनुर्भवेत् ॥
व्योषाग्नित्रिफलामुस्तविडङ्गैर्गुग्गुलुं समम् ।
स्वादेत् सर्व्वान्
जयेद्रोगान्मेदःश्लेष्मामवातजान् ॥
पिप्पली मधुना सेव्या मेदःकफविनाशिनी ॥
धत्तूरपत्रस्वरसेन गाढ-
मुद्वर्त्तनं स्थौल्यहरं प्रदिष्टम् ॥
वासादलरसो लेपाच्छङ्खचूर्णेन संयुतः ।
विल्वपत्ररसो वापि देहदौर्गन्ध्यनाशनः ॥
निम्बूपत्रस्वरसः प्रक्षितकक्षादियोजितं जयति ।
दग्धहरिद्रोद्वर्त्तनमचिराच्चिरदेहदौर्गन्ध्यम् ॥
शिरीषलामज्जकहेमलोध्रै-
स्त्वग्दोषसंस्वेदहरः प्रघर्षः ।
“मेदः स्निग्धाङ्गतामुदरपार्श्ववृद्धिं कासश्वासा-
दीन् दौर्गन्ध्यञ्च ।”
“पूर्ब्बः पूर्ब्बोऽतिवृद्धत्वाद्वर्द्धयेद्धि परं परम् ।
तस्मादतिप्रवृद्धानां धातूनां ह्रासनं हितम् ॥”
“क्षपयेद्वृंहयेच्चापि दोषधातुमलान् भिषक् ।
तावद्यावदरोगः स्यान्नरो रोगसमन्वितः ॥”
इति सुश्रुते सूत्रस्थाने १५ अध्यायः ॥
“तृतीया मेदोधरा नाम मेदो हि सर्व्वभूताना-
मुदरस्थमन्वस्थिषु च महत्सु च मज्जा भवति ॥”
इति तत्रैव शारीरस्थाने ४ अध्याये ॥)

**मेदः**, पुं, (मेद्यति स्निह्यतीति । मिद् + अच् ।)
वपा । इति शब्दचन्द्रिका ॥
“तृष्णाकण्डुकृमिहरो मलघ्नो मेदकुष्ठहा ॥”
इति भरतधृतशालिहोत्रः ॥)
म्लेच्छजातिविशेषः । इति जटाधरः ॥ अल-
म्बुषा । इति राजनिर्घण्टः ॥
(ऐरावतकुलजो नागविशेषः । यथा, महाभारते । १ । ५७ । ११ ।
“विहङ्गः शरभो मेदः प्रमोदः संहतापनः ।
ऐरावतकुलादेते प्रविष्टा हव्यवाहनम् ॥”)

**मेदकः**, पुं, (मिद् + ण्वुल् ।) जगलः । इत्यमरः ।
२ । १० । ४२ ॥ मेया इति भाषा ॥

मेदस्विनोऽपि वृद्धौ हेतुमाह ।
"मेदसावृतमार्गत्वाद्वायुः कोष्ठे विशेषतः ।
चरन् सन्धुक्षयत्यग्निमाहारं शोषयत्यपि ॥
तस्मात् शीघ्रन्तु जरयत्याहारञ्चापि काङ्क्षति ।
विकारान् सोऽश्नुते घोरान् कांश्चित् काल-
व्यतिक्रमात् ॥"
सन्धुक्षयति प्रदीपयति । स मेदस्वी आहारं
शीघ्रं जरयति पुनर्भोक्तुं काङ्क्षति स दीप्ताग्निः
कालव्यतिक्रमात् भोजनकालातिक्रमात् ।
कां-
श्चिद्विकरान् वातपित्तकरान् घोरान् अश्नुते
प्राप्नोति । एते वातपित्ते मेदसावरुद्धे विशेषा-
दुपद्रवकरे इत्याह ।
"एतावुपद्रवकरौ विशेषात् पित्तमारुतौ ।
एतौ हि दहतः स्थूलं वनं दावानलो यथा ॥"
एतौ पित्तमारुतौ मेदसा रुद्धमार्गत्वात् कोष्ठ-
मध्ये प्रवृद्धौ सन्तौ विशेषादुपद्रवकरौ दहतः
नाशयेताम् । मेदसोऽतिवृद्धेर्व्विनाशहेतुत्वमाह ।
"मेदस्यतीवसंवृद्धे सहसैवानिलादयः ।
विकारान् दारुणान् कृत्वा नाशन्त्या जीवि-
तम् ॥"

शरीरदौर्गन्ध्यहरः प्रदेहः
पत्राम्बुलोध्राभयचन्दनानाम् ॥"
शिरीषस्यात्र पत्रं ग्राह्यं व्यवहारात् । लाम-
ज्जकं सुगन्धितृणविशेषस्तदलाभे उशीरं
ग्राह्यम् । हेम नागकेशरम् । अम्बु बालकम् ।
अभयं उशीरम् ।
"हरीतकीं तु संपिष्य देहमुद्वर्त्तनं नरः ।
पश्चात् स्नानं प्रकुर्व्वीत देहस्वेदोपशान्तये ॥
वकुलस्य दलैः सम्यग्वारिणा परिपेषितैः ।
देहमुद्वर्त्तयेत् पश्चाद्धरीतक्या सुपिष्टया ॥
भूय उद्वर्त्तनं कुर्य्यात् पश्चात् स्नानं समाचरेत्
।
प्रस्वेदान् मुच्यते शीघ्रं मेदोवृद्धिसमुद्भवात् ॥"
इति मेदोऽधिकारः ॥ इति भावप्रकाशः ॥
(तथास्य विशेषः । यथा, --
"मेदः स्नेहस्वेदौ दृढत्वं पुष्टिमस्थ्नाञ्च ॥"
अस्य क्षीणलक्षणं यथा, --
"मेदः क्षये प्लीहाभिवृद्धिः सन्धिशून्यता
रौक्ष्यं
मेदुरमांसप्रार्थना च ।" अस्यातिवृद्धिलक्षणं
यथा, --

**मेदजः**, पुं, (मेदात् जायते इति । जन् + डः
।)
भूमिजगुग्गुलुः । इति राजनिर्घण्टः
॥ मेदो-
भवश्च ॥

**मेदःसारा**, स्त्री, (मेदः सारोऽस्याः ।) मेदा ।
इति राजनिर्घण्टः ॥ (विवृतिरस्या
मेदाशब्दे
द्रष्टव्या ॥)

**मेदस्कृत्**, क्ली, (मेदः करोतीति । मेदस् +
कृ +
क्विप् ।) मांसम् । इति हेमचन्द्रः ॥

**मेदा**, स्त्री, (मेदो अस्याः अस्तीति । मेद +
अच् । टाप् ।)
अष्टवर्गप्रसिद्धौषधिविशेषः ।
तत्पर्य्यायः । मेदोद्भवा २ जीवनी ३
श्रेष्ठा ४
मणिच्छिद्रा ५ विभावरी ६ । इति
रत्नमाला ॥
वसा ७ स्वल्पपर्णिका ८ मेदःसारा
९ स्नेह-
वती १० मेदिनी ११ मधुरा १२
स्निग्धा १३
मेधा १४ द्रवा १५ साध्वी १६
शल्यदा १७
बहुरन्ध्रिका १८ पुरुषदन्तिका १९
। अस्या
गुणाः । मधुरत्वम् । शीतत्वम् ।
पित्तदाहार्त्ति-
काशराजयक्ष्मज्वरनाशित्वम् ।
वातदोषकारि-
त्वञ्च । इति राजनिर्घण्टः ॥ तस्य
लक्षणं यथा,
"शुक्लकन्दो नखच्छेद्यो मेदो
धातुमिव श्रवेत् ।
यः स मेदेति विज्ञेयो
जिज्ञासातत्परैर्ज्जनैः ॥"
मेदामहामेदास्थाने शतावरी मूली ।
इति

| | | |
|---|---|---|
| | | भावप्रकाशः ॥ अस्या विवरणं महामेदाशब्दे द्रष्टव्यम् ॥ (अनुकल्पोऽस्या यथा । “मेदाभावे चाश्वगन्धा ।” इति वैद्यकपरिभाषायाम् ॥) **मेदिनी**, स्त्री, (मेदोऽस्या अस्तीति । मेद + इनिः । ङीष् ।) मेदा । काश्मरी । इति राज- निर्घण्टः ॥ पृथिवी । इत्यमरः । २ । १ । ३ ॥ मेदो विद्यतेऽस्यां मेदिनी सान्तान्मेदःशब्दादिन् सलोपश्च निपात्यते इति परे । स्वमते मेदः समानार्थोऽदन्तो मेदशब्दोऽस्ति । तृष्णाकण्डु- |

कृमिहरो मलघ्नो मेदकुष्ठहेति शालिहोत्रः ।
नैकाजादिति इन् । यथा चोक्तम् ।
“मधुकैटभयोरासीन्मेदसैव परिप्लुता ।
तेनेयं मेदिनी देवी प्रोच्यते ब्रह्मवादिभिः
॥”
मेद्यतीति वा मेदिनी इन्मिद्या स्निहि
ग्रहादि-
त्वाण्णिन् । इति तट्टीकायां भरतः ॥
(एतन्नाम-
निरुक्तिर्यथा, देवीभागवते । १ । ९ ।
८३-८४ ।
“गतप्राणौ तदा जातौ दानवौ मधुकैटभौ ।
सागरः सकलो व्याप्तस्तदा वै मेदसा तयोः
॥
मेदिनीति ततो जातं नाम पृथ्व्याः
समन्ततः ।
अभक्ष्या मृत्तिका तेन कारणेन मुनीश्वराः
॥”
अपि च । तत्रैव । ३ । १३ । ८ ।
“मधुकैटभयोर्मेदःसंयोगान्मेदिनी स्मृता ।
धारणाच्च धरा प्रोक्ता पृथ्वी
विस्तारयोगतः ॥”)
तस्या उत्पत्तिर्यथा, --
“श्रूयतां वसुधाजन्म सर्व्वमङ्गलकारणम् ।
विघ्ननिघ्नकरं पापनाशनं पुण्यवर्द्धनम् ॥
अहो केचिद्वदन्तीति मधुकैटभमेदसा ।
बभूव वसुधाजन्म तद्विरुद्धमतं शृणु ॥
ऊचतुस्तौ पुरा विष्णुं तुष्टौ युद्धेन तेजसा ।
आवां वध न यत्रोर्व्वी पाथसा संवृतेति च
॥
तयोर्ज्जीवनकालेन प्रत्यक्षा सा भवेत्
स्फुटम् ।
ततो बभूव मेदश्च मरणस्यान्तरं तयोः ।
मेदिनीति च विख्यातेत्युक्ता यैस्तन्मतं
शृणु ॥
जलधौता कृशा पूर्ब्बं वर्द्धिता मेदसा यतः ।
कथयामि च तज्जन्म सार्थकं
सर्व्वसम्मतम् ॥

**मेदोन्ध्रः** पुं, (मेदोबहुलः अन्ध्रः ।) वर्णसङ्करजाति-

भेदः । इति जटाधरः ॥ (यथा, मनुः । १० ।
४८ ।
“मेदोन्ध्रचुञ्चुमद्गूनामारण्यपशुह्निसनम् ॥”
क्वचित् मेदान्ध्र इत्यपि पाठः ॥)

**मेदोवती**, स्त्री, (मेदोऽस्याः अस्तीति । मेदस् +

मतुप् । मस्य वः ।) मेदा । इति राजनिर्घण्टः ॥
(मेदोविशिष्टे, त्रि ॥)

**मेध**, ऋ ञ वधमेधासङ्गेषु । इति कविकल्पद्रुमः ॥

(भ्वा०-उभ०-वधे सक०-अन्यत्र अक०-सेट्
।)
ऋ, अमिमेधत् । ञ, मेधति मेधते । इति दुर्गा-
दासः ॥

**मेधः**, पुं, (मेध्यते वध्यते पश्वादिरत्रेति । मेध +

घञ् ।) यज्ञः । इति जटाधरः ॥ (यथा, महा-
भारते । १ । १२३ । ३९ ।
“ग्रामणीश्च महीपालानेष जित्वा महाबलः ।
भ्रातृभिः सहितो वीरस्त्रीन् मेधानाहरिष्यति ॥”
हविः । इति ऋग्वेदे । १० । १०० । ६ । मन्त्र-
भाष्ये सायणः ॥)

**मेधा**, स्त्री, (मेधते सङ्गच्छते अस्यामिति । मेध् +

“षिद्भिदादिभ्योऽङ् ।” ३ । ३ । १०४ । इत्यङ्
।
टाप् ।) धारणावती बुद्धिः । इत्यमरः । १ । ५
। २ ॥
धारणाशक्तियुक्ता धीर्मेधा मेधते सङ्गच्छतेऽस्यां
सर्व्वं बहुश्रुतं विषयीकरोति इति वा मेधा मेधृ-
ञ सङ्गे मेधायां सेमक्तात् सरोरित्यः आपबहु-
श्रुतविषयीकरणं धारणा यदुक्तं धारणा बुद्धे-
र्गुणविशेषः इति ॥ इति भरतः ॥ * ॥ (यथा,
मुण्डकोपनिषदि । ३ । २ । ३ ।
“नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्य-
स्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥”)
मेधाकरं औषधं यथा, --

शब्द उपपदे धातोः घञर्थे कविधानम्
इति
कः । पृषोदरादित्वात् मतिशब्दस्य
मेभावः ।”
इति तद्भाष्ये देवराजयज्वा ॥)

**मेधाः**, [स्] पुं, (मेधते इति । मेध् + असुन् ।)

स्वायम्भुवमनुपुत्त्रः । यथा, --
“अग्निध्रश्चाग्निबाहुश्च सहः सबल एव
च ।
ज्योतिष्मान् द्युतिमान् हव्यो मेधा
मेधातिथि-
र्ब्बसुः ।
स्वायम्भुवस्यास्य मनोर्दशैते
वंशवर्द्धनाः ॥”
इति मात्स्ये ९ अध्यायः ॥

**मेधाकृत्**, क्ली, (मेधां करोतीति । कृ + क्विप्
।)

सितावरशाकम् । इति राजनिर्घण्टः ॥
मेधा-
कारके, त्रि ॥

**मेधाजित्**, पुं, (मेधां जितवानिति । जि + क्विप्
।)

कात्यायनमुनिः । इति त्रिकाण्डशेषः
॥

**मेधातिथिः**, पुं, (मेधायाः धारणावद्बुद्धेरतिथि-

रिव ।) मनुसंहिताटीकाकृत् ।
मुनिविशेषः ।
यथा, श्रीभागवते । १ । १९ । १० ।
“मेधातिथिर्द्देवल आर्ष्टिषेणो
भरद्वाजो गौतमः पिप्पलादः ॥”
(प्रियव्रतपुत्त्रः स च शाकद्वीपाधिपतिः
। यथा,
श्रीमद्भागवते । ५ । २० । २४ -- २५
।
“यस्मिन् हि शाको नाम महीरुहः
स्वक्षेत्र-

पुरा श्रुतं यत् श्रुत्युक्तं धर्म्मवक्त्राच्च पुष्करे ।
महाविराट्शरीरस्य जलस्थस्य चिरं स्फुटम् ॥
मलो बभूव कालेन सर्व्वाङ्गव्यापको ध्रुवम् ।
स च प्रविष्टः सर्व्वेषां तल्लोम्नां विवरेषु च ॥
कालेन महता तस्माद्बभूव वसुधा मुने ! ।
प्रत्येकं प्रतिलोम्नाञ्च कूपेषु सा स्थिरा स्थिता ॥
आविर्भूता तिरोभूता सा जले च पुनः पुनः ।
आविर्भूता सृष्टिकाले तज्जलोपर्य्यवस्थिता ।
प्रलये च तिरोभूता जलाभ्यन्तरवस्थिता ॥"
इति श्रीब्रह्मवैवर्त्ते प्रकृतिखण्डे नारायणनारद-
संवादे पृथिव्युपाख्याने ७ अध्यायः ॥

**मेदिनीद्रवः**, त्रि, (मेदिन्याः द्रवः ।) धूलिः । इति त्रिकाण्डशेषः ॥

**मेदुरः**, त्रि, (मेद्यति स्निह्यतीति । मिद् + "भञ्ज-भासमिदो घुरच् ।" ३ । २ । १६१ । इति घुरच् ।) अतिशयस्निग्धः । तत्पर्य्यायः । सान्द्रस्निग्धः २ । इत्यमरः । ३ । १ । ३० ॥ (यथा, गीतगोविन्दे । १ । १ ।
"मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमै-
र्नक्तं भीरुरयं त्वमेव तदिमं राधे ! गृहं प्रापय ॥")

**मेदुरा**, स्त्री, (मेदुर + टाप् ।) काकोली । इति राजनिर्घण्टः ॥ (गुणादयोऽस्याः काकोली-शब्दे ज्ञेयाः ॥)

**मेदोजं**, क्ली, (मेदसो जायते इति । जन् + डः ।) अस्थि । इति राजनिर्घण्टः ॥

**मेदोद्भवा**, स्त्री, (मेदादुद्भवोऽस्याः ।) मेदा । इति

"शङ्खपुष्पी वचा सोमा ब्राह्मी ब्रह्मसुवर्च्चला ।
अभया च गुडूची च अटरूषकवाकुची ।
एतैरक्षसमैभर्गैर्घृतं प्रस्थं विपाचयेत् ॥
कण्टकार्य्या रस प्रस्थं बृहत्या च समन्वितम् ।
एतद्ब्राह्मीघृतं नाम स्मृतिमेधाकरं परम् ॥"
इति गारुडे १९८ अध्यायः ॥ * ॥
मेधाकरगणो यथा । सतताध्ययनम् । तत्त्व-ज्ञानकथा । श्रेष्ठतन्त्रशास्त्रावलोकनम् । सद्विद्व-ज्जाचार्य्यसेवा च । इति पुराणम् ॥ (दक्षप्रजा-पतिकन्याविशेषः । यथा, --
"कीर्त्तिलक्ष्मी र्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ॥"
इति वह्निपुराणे गणभेदनामाध्याये ॥
धनम् । इति निघण्टुः । २ । १० ॥ "मिधृ मेधृ सङ्गमे च । चकारात् हिंसामेधयोश्च । मिधिः सङ्गत्यर्थः । इति माधवः । घज् । सङ्गच्छतेऽनेन सर्व्वं तद्वता हिंस्यते वा तद्वान् चौरादिभिः घ्नन्ति चैवार्थकारणात् इति महाभारतम् ॥ यद्वा, मतौ धीयते अर्जयितव्यं रक्षितव्यं दातव्य-मिति धनवता बुद्धौ धनं धार्य्यते । तत्र मति-

व्यपदेशकः । यस्य ह महासुरभिगन्धस्तद्द्वीप-मनुवासयति । तस्यापि प्रैयव्रत एवाधिपति-र्नाम्ना मेधातिथिः ॥" * ॥ सप्तदश द्वापरयुगस्य व्यासः । यथा, देवीभागवते । १ । ३ । ३० ।
"मेधातिथिः सप्तदशे व्रती ह्यष्टादशे तथा ॥"
प्रजापतेः कर्द्दमस्य पुत्त्रः । यथा, मार्कण्डेये । ५३ । १५ ।
"अग्निध्रो मेधातिथिश्च वपुष्मांश्च तथापरः ॥"
दक्षसावर्णिमन्वन्तरे सप्तर्षीणामेकतमः । यथा, मार्कण्डेये । ९४ । ८ ।
"मेधातिथिर्व्वसुः सत्यो ज्योतिष्मान् द्युतिमां-स्तथा ।
सप्तर्षयोऽन्यः सबलस्तथान्वो हव्यवाहनः ॥"
नदीविशेषे, स्त्री । यथा, महाभारते । ३ । २२१ । २३ ।
"चर्म्मण्वती मही चैव मेध्या मेधातिथिस्तथा ।
ताम्रावती वेत्रवती नद्यस्तिस्रोऽथ कौशिकी ॥")

**मेधारुद्रः**, पुं, (मेधया रुद्र इव ।) कालिदासः । इति त्रिकाण्डशेषः ॥

**मेधावती**, स्त्री, (मेधा देयत्वेन अस्ति अस्याः इति । मेधा + मतुप् । मस्य वः । ङीप् । मेधा-बर्द्धकत्वादस्यास्तथात्वम् ।) महाज्योतिष्मती । इति राजनिर्घण्टः ॥ मेधाविशिष्टा च ॥

**मेधाविनी**, स्त्री, (मेधास्याः अस्तीति । मेधा +

| | | |
|---|---|---|
| राजनिर्घण्टः ॥ | | “अस्मायामेधास्रजो विनिः ।” ५ । २ । १२१ ।<br>इति विनिः । ततो ङीप् ।) ब्रह्मणः पत्नी ।<br>इति मेदिनी । ने, २०४ ॥<br>**मेधावी**, [न्] पुं, (मेधास्त्यस्येति । मेधा + “अस-<br>मायामेधास्रजो विनिः ।” ५ । २ । १२१ । इति |

विनिः) शुकपक्षी । इति मेदिनी । ने, २०४ ॥
मदिरा । इति राजनिर्घण्टः ॥ पण्डितः । इति
हेमचन्द्रः । ३ । ६ ॥ व्याडिः । इति त्रिकाण्डशेषः ॥
(कस्यचित् ब्राह्मणस्य पुत्त्रः । यथा, महाभारते,
१२ । १७५ । ३ ।
"द्विजातेः कस्यचित् पार्थ ! स्वाध्यायनिरतस्य
वै ।
बभूव पुत्त्रो मेधावी मेधावी नाम नामतः ॥")
मेधायुक्ते, त्रि । इति मेदिनी । ने, २०४ ॥
(यथा, रामायणे । १ । ४ । ६ ।
"स तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ ।
वेदोपबृंहणार्थाय तावग्राहयत प्रभुः ॥")
तद्वैदिकपर्य्यायः । विप्रः १ विग्रः २ गृत्शः ३
धीरः ४ वेनः ५ वेधाः ६ कण्वः ७ ऋभुः ८
नवेदाः ९ कविः १० मनीषी ११ मन्धाता १२
विधाता १३ विपः १४ मनश्चित् १५ विपश्चित्
१६ विपन्यवः १७ आकेनिपः १८ उशिजः १९
कीस्तासः २० अद्धातयः २१ मतयः २२ मतुथाः
२३ वाघतः २४ । इति चतुर्व्विंशतिर्म्मेधावि-
नामानि । इति वेदनिघण्टौ । ३ । १५ ॥

**मेधिः**, पुं, (मेध्यते खले स्थाप्यते इति । मेध + "सर्व्वधातुभ्य इन् ।" उणा० ४ । ११३ । इति इन् ।)
ब्रह्मज्ञाने समुत्पन्ने मेध्यामेध्यं न विद्यते ॥"
इति चिन्तामणिधृतवचनम् ॥)
"पवित्रः प्रयतः पूत इति ब्रह्मवर्गे प्राणिविषय-
मात्र उक्तं इह त्वप्राणिद्रव्ये ।" इति भरतः ॥
"पूतं मेध्यं पवित्रं स्याद्वीध्रं प्रयतनिर्म्मलम् ।
निशोध्यं शोधितं मृष्टं निर्णिक्तमनवस्करम् ॥"
इति शब्दरत्नावली ॥
(नित्यमेध्यम् । यथा, मनुः । ५ । १२९ ।
"नित्यं शुद्धः कारुहस्तः पण्ये यच्च प्रसारितम् ।
ब्रह्मचारिगतं भैक्ष्यं नित्यमेध्यमितिस्थितिः ॥")
शुचिः । इति मेदिनी । ये, ४७ ॥ (यथा, अनर्घराघवे । २ । १४ ।
"तत्तादृक् तृणपूलकोपनयनक्लेशाच्चिर-द्वेषिभि-
र्मेध्या वत्सतरी विहस्य बटुभिः सोल्लुण्ठमाल-
भ्यते ॥"
मेधाजनकः । यथा, --
"मण्डूकपर्ण्याः स्वरसः प्रयोज्यः
क्षीरेण यष्टीमधुकस्य चूर्णं ।
रसो गुडूच्यास्तु समूलपुष्पाः
कल्कः प्रयोज्यः खलु शङ्खपुष्पाः ॥
आयुः प्रदान्यामयनाशनानि
बलाग्निवर्णस्वरवर्द्धनानि ।
मेध्या विशेषेण च शङ्खपुष्पी ॥"
इति चरके चिकित्सास्थाने प्रथमेऽध्याये ॥)

**मेध्यः**, पुं, (मेधायै हितः । मेधा + "उगवादिभ्यो यत् ।" ५ । १ । २ । इति यत् ।) खदिरः । यवः । छागः । इति राजनिर्घण्टः ॥

**मेध्या**, स्त्री, (मेधायै हिता । मेधा + यत् । टाप् ।)
रक्तवचा । रोचना । इति मेदिनी । ये, ४७ ॥
केतकी । ज्योतिष्मती । शङ्खपुष्पी । ब्राह्मी ।
श्वेतवचा । शमी । मण्डूकी । इति राज-

पुलस्त्य उवाच ।
मेनायां कन्यकास्तिस्रो जाता रूपगुणान्विताः ।
सुनाभ इति विख्यातश्चतुर्थस्तनयोऽभवत् ॥
नीलाञ्जनचयप्रख्या नीलेन्दीवरलोचना ।
रूपेणानुपमा काली जघन्या मेनकासुता ॥
जातास्ताः कन्यकास्तिस्रः षडब्दात् परतो मुने ! ।
कर्त्तुं तपः प्रयातास्ता देवास्ता ददृशुः शुभाः ॥
ततो गते कन्यके द्वे ज्ञात्वा मेना तपस्विनी ।
तपसो वारयामास उमे त्येवाब्रवीच्च सा ॥
तदैव माता नामास्याश्चक्रे पितृसुता शुभा ।
उमेत्येव हि कन्यायाः सा जगाम तपोवनम् ॥"
इति वामने ७४ -- ७५ अध्यायः ॥ * ॥
अपि च ।
"कथं गिरिसुता काली बभूव जगतां प्रसूः ।
दाक्षायणी त्यक्ततनुः कथमाप हरं पतिम् ॥"
मार्कण्डेय उवाच ।
यदात्यजत्तनुं देवी पूर्ब्बं दाक्षायणी सती ।
तदैव मनसागच्छन्मेनकां हिमवद्गिरिम् ।
त्यक्तप्राणा तदा देवी भूता हिमघतः सुता ॥
शिवाविन्यस्तमनसा सप्तविंशतिवत्सरान् ।
निनाय मेनका देवी परमामृतिमिच्छती ॥
सप्तविंशतिवर्षन्ते जगन्माता जगन्मयी ।
सुप्रीता भवदत्यर्थं प्राह प्रत्यक्षतां गता ॥
श्रीदेव्युवाच ।
यत् प्रार्थितं त्वया देवि ! मत्तस्तत् प्रार्थयाधुना ।
ततः सा प्रथमं पुत्त्रशतं वव्रे यशस्विनी ॥
पश्चात्तु तनयामेकां स्वरूपगुणशालिनीम् ।
कुलद्वयानन्दकरीं भुवनत्रयदुर्लभाम् ॥
ततो भगवती प्राह मेनकां मुनिसन्निभाम् ॥
श्रीदेव्युवाच ।
शतं पुत्त्राः संभवन्तु भवत्या वीर्य्यसंयुताः ।
सुता च तव देवानां मानुषाणाञ्च रक्षसाम् ॥
हिताय सर्व्वजगतां भविष्याम्यहमेव ते ।

खले पशुबन्धनार्थन्यस्तदारु ।
इत्यमरः । २ ।
९ । १५ ॥ खले धान्यमर्द्दनस्थानमध्ये पशुबन्धन-
निमित्तं निहितं यद्दारु स मेधिः । मेइ इति
ख्याते । इति भरतः ॥ तत्पर्य्यायः । मेथिः ३
खलेवाली ३ । इति हेमचन्द्रः ॥ अस्य स्थापन-
दिनं तत्र वारौ शुक्रबृहस्पती । नक्षत्राणि
रेवती स्वाती हस्ता मूलं मृगशिरश्च । तत्र
लग्नं स्थिरम् । इति ज्योतिस्तत्त्वम् ॥

**मेधिरः**, त्रि, (मेधास्यास्तीति । मेधा + "मेधारथा-
भ्यामिरन्निरचौ वक्तव्यौ ।" ५ । २ । १०९ । इति
काशिकोक्त्या इरन् ।) मेधावी । इति त्रिकाण्ड-
शेषः ॥ (यथा, ऋग्वेदे । १ । २५ । २० ।
"त्वं विश्वस्य मेधिर ! दिवश्च ग्मश्च राजसि ।"
"हे मेधिर ! मेधाविन् ! वरुण ।" इति तद्भाष्ये
सायणः ॥ यज्ञवान् । हविष्मान् । यथा, ऋग्-
वेदे । १० । १०० । ६ ।
"इन्द्रस्य सुनुकृतं दैव्यं सहोग्निर्गृहेजरिता
मेधिरः कविः ।"
"मेधो यज्ञः हविर्वा तद्वान् ।" इति तद्भाष्ये
सायणः ॥)

**मेधिष्ठः**, त्रि, (अयमेषामतिशयेन मेधावीति । मेधा-
विन् + "अतिशायने तमबिष्ठनौ ।" ५ । ३ । ५५ ।
इति इष्ठन् । "विन्मतोर्लुक् ।" ५ । ३ । ६५ ।
निर्घण्टः ॥ (नदीविशेषः । यथा, महाभारते ।
३ । २२१ । २३ ।
"चर्म्मण्वती मही चैव मेध्या मेधातिथिस्तथा ॥")

**मेनका**, स्त्री, (मन्यते इति । मन् + "मनेराशिषि
च ।" इति वुन् । ततः "नशिमन्योरलिट्येत्वं
वक्तव्यम् ।" ६ । ४ । १२० । इत्यत्र काशिकोक्त्या
अकारस्य एत्वम् ।) सर्व्वेश्या । इति शब्दरत्ना-
वली ॥ तस्याः कन्या शकुन्तला । यथा, --
"विश्वामित्रात्मजैवाहं त्यक्ता मेनकया वने ।
वेदैतद्भगवान् कण्बो वीर ! किं करवाम ते ॥"
इति श्रीभागवते । ९ । २० । १३ ॥
(मेनैव । मेना + स्वार्थे कन् ।) उमामाता । यथा,
"ततः प्रीतास्तु पितरस्तां ददुस्तनयां निजाम् ।
मेनां देवाश्च शैलाय हिमयुक्ताय वै ददुः ॥
तां मेनां हिमवाँल्लब्ध्वा प्रसादाद्दैवतेष्वथ ।
प्रीतिमानभवच्चासौ रराम च यथेच्छया ॥
ततो हिमाद्रिः पितृकन्यया समं
सुखं सिषेवे विषयं यथेप्सितम् ।
अजीजनत् सा तनयास्तु मेना
रूपाभियुक्ताः सुरयोषितोपमाः ॥
एवमुक्त्वा जगद्धात्री तत्रैवान्तरधीयत ॥
ततः सा कालिका देवी योगनिद्रा जगन्मयी ।
पूर्ब्बत्यक्तसतीरूपा जन्मार्थं मेनकां ययौ ॥
समयस्यानुरूपेण मेनकाजठरे शिवा ।
समुद्भूय समुत्पन्ना सा लक्ष्मीरिव सागरात् ॥
वसन्तसमये देवी नवम्यां मृगयोगतः ।
अर्द्धरात्रौ समुत्पन्ना गङ्गेव शशिमण्डलात् ॥"
इति कालिकापुराणे ४० अध्यायः ॥

**मेनकात्मजा**, स्त्री, (मेनकाया आत्मजा ।) दुर्गा ।
इति हलायुधः ॥ (शकुन्तला । यथा, महा-
भारते । १ । ७२ । ११ ।
"नेमां हिंस्युर्वने बालां क्रव्यादा मांसगृद्धिनः ।
पर्य्यरक्षन्त तां तत्र शकुन्ता मेनकात्मजाम् ॥")

**मेनकाप्राणेशः**, पुं, (मेनकायाः प्राणेशः पतिः ।)
हिमालयः । इति हेमचन्द्रः । ४ । ९३ ॥

**मेना**, स्त्री, (मान्यते पूज्यते इति । मान पूजायाम्
"बहुलमन्यत्रापि ।" उणा० २ । ४६ । इति
इनच् प्रत्ययेन निपातनात् साधुः ।) मेनका ।
इति भरतद्विरूपकोषः ॥ सा पितृकन्या । यथा,

| | | |
|---|---|---|
| इति विनो लुक् ।) अतिशयमेधायुक्तः । इति व्याकरणम् ॥<br>**मेध्यं**, त्रि, (मेध्यते इति । मेध् + "ऋहलोर्ण्यत् ।" ३ । १ । १२४ । इति ण्यत् । यद्वा, मेधामर्ह- तीति । मेधा + दण्डादित्वात् यत् ।) पवित्रम् । इत्यमरः । ३ । १ । ५५ ॥ (यथा, -- "ज्ञानेन मेध्यमखिलममेध्यं ज्ञानतो भवेत् | | |

"तां मानसीं मेरुसखः पितॄणां
कन्यां कुलस्य स्थितये स्थितिज्ञः
।
मेनां मुनीनामपि माननीया-
मात्मानुरूपां विधिनोपयेमे ॥"
इति कुमारसम्भवे । १ । १८ ॥ *
॥
यथा च, कौर्म्मे १२ अध्याये ।
"अग्निस्वात्ता वर्हिषदो द्विधा तेषां
व्यवस्थितिः ।
तेभ्यः स्वाहा स्वधा जज्ञे मेना
वैतरणी तथा ॥"
(स्त्री । यथा, ऋग्वेदे । १ । ६२ । ७
।
"भगो न मेने परमे
व्योमन्नधारयद्रोदसी सुदं-
साः ।"
"मेनेति स्त्रीनाम । मेने
स्त्रीरूपमापन्ने रोदसी ।"
इति तद्भाष्ये सायणः ॥ * ॥
वृषणश्वकन्या ।
यथा, ऋग्वेदे । १ । ५१ । १३ ।
"मेना भवो वृषणश्वस्य ।"
"हे इन्द्र ! त्वं वृषणश्वस्य
एतदाख्यस्य राज्ञो
मेना भवः मेनानाम कन्यका भूः ।"
इति तद्भाष्ये
सायणः ॥ * ॥ वाक् । इति
निघण्टुः । १ । ११ ॥
"मानपूजायां इत्यस्मात्
'बहुलमन्यत्रापि इनच्
भवति ।' इति वचनादिनच् ।
बहुलग्रहणात्
नलोपः । पूज्यतेऽनया
गुर्व्वादिरुपदेशवाक्येन
पूज्या वा देवतात्वात् ।" इति
तट्टीकायां देव-
राजयज्वा ॥ * ॥ नदीविशेषः ।
यथा, महा-

"मालामेकैकमादाय सूत्रे सम्पातयेत् सुधीः ।
मुखे मुखन्तु संयोज्य पुच्छे पुच्छन्तु योजयेत् ॥
गोपुच्छसदृशी कार्य्याथवा सर्पाकृतिर्भवेत् ।
तत्सजातीयमेकाक्षं मेरुत्वेनाग्रतो न्यसेत् ॥"
इत्युत्पत्तितन्त्रे ६० पटलः ॥ * ॥
करमालायां मेरुर्यथा, --
"तिस्रोऽङ्गुल्यस्त्रिपर्व्वाणो मध्यमा चैकपर्व्विका ।
पर्व्वद्वयं मध्यमाया मेरुत्वे नोपकल्पयेत् ॥"
इदन्तु शक्तिभिन्नविषयम् ॥ * ॥
शक्तिविषये मेरुर्यथा, --
"पर्व्वद्वयमनामायाः परिवर्त्तेन वै क्रमात् ।
पर्व्वत्रयं मध्यमायास्तर्ज्जन्येकं समाहरेत् ।
पर्व्वद्वयन्तु तर्ज्जन्या मेरुं तद्विद्धि पार्व्वति ! ॥"
श्रीविद्याविषये मेरुर्यथा, --
"अनामामध्यमायाश्च मूलाग्रन्तु द्वयं द्वयम् ।
कनिष्ठायाश्च तर्ज्जन्यास्त्रयं पर्व्व सुरेश्वरि ! ।
अनामामध्यमायाश्च मेरुः स्याद्द्वितयं शुभम् ॥"
तल्लङ्घितजपे दोषो यथा, --
"अङ्गुल्यग्रेषु यज्जप्तं यज्जप्तं मेरुलङ्घने ।
पर्व्वसन्धिषु यज्जप्तं तत् सर्व्वं निष्फलं भवेत् ॥"
इति तन्त्रसारः ॥

**मेरुकः**, पुं, (मिनोति क्षिपति गन्धानिति । मि +
रुः । संज्ञायां कन् ।) यक्षधूपः । इति शब्द-
चन्द्रिका ॥ धुना इति भाषा । (मध्यदेशस्य
प्रदेशभेदः । यथा, बृहत्संहितायाम् । १४ । २९ ।
"ऐशान्यां मेरुकनष्टराज्यपशुपालकीरकाश्मी
राः ।
अभिसारदरदतङ्गणकुलूतसैरिन्धवनराष्ट्राः ॥")

**मेरुसावर्णः**, पुं, एकादशमनुः । यथा, --
"ततस्तु मेरुसावर्णो ब्रह्मसूनुर्मनुः स्मृतः ।
ऋतुश्च ऋतुधामा च विश्वक्सेनो मनुस्तथा ॥"
इति मात्स्ये ९ अध्यायः ॥

**मेलकः**, पुं, (मिल् + भावे घञ् । स्वार्थे कन् ।)
सङ्गः । इत्यमरः । ३ । २ । २९ ॥ ("बहुमान्य-
मेलके बलाबलमुक्तम् ।" इति । २ । १३६ ।
मनुटीकायां कुल्लूकभट्टः ॥)

**मेलकलवणं**, क्ली, (मिलतीति । मिल + ण्वुल् ।)

**मेषः**, पुं, (मिषति अन्योन्यं स्पर्द्धते इति । मिष्
स्पर्द्धायाम् + अच् ।) पशुविशेषः । मेडा
इति
भेडा इति च भाषा ॥ (यथा, पञ्चतन्त्रे । ५
। ६२ ।
"मेषेण सूपकाराणां कलहो यत्र वर्त्तते ।
स भविष्यत्यसन्दिग्धं वानराणां भयावहः
॥")
तत्पर्य्यायः । मेढ्रः २ उरभ्रः ३ उरणः ४
ऊर्णायुः ५ वृष्णिः ६ एडकः ७ । इत्यमरः
। २ ।
९ । ७६ ॥ भेडः ८ हुडः ९ शृङ्गिणः १०
अविः ११ लोमशः १२ बली १३ रोमशः
१४
भेड्डः १५ भेडकः १६ मेण्टः १७ हुलुः
१८ ।
इति शब्दरत्नावली ॥ मेण्टकः १९ हुड्ः
२०
संफलः २१ । इति हेमचन्द्रः । ४ । ३४१
॥
अस्य मांसगुणाः । मधुरत्वम् । शीतत्वम् ।
गुरुत्वम् । विष्टम्भित्वम् । वृंहणत्वञ्च ।
इति
राजनिर्घण्टः ॥ अपि च ।
पित्तश्लेष्मकरत्वम् ।
कुसुम्भशाकेन सह त्याज्यत्वञ्च । इति
राज-
वल्लभः ॥ * ॥ लग्नविशेषः । औषधविशेषः
।
इति मेदिनी । षे, १२१ ॥ (यथा, सुश्रुते
उत्तरतन्त्रे । १७ अध्याये ।
"मेषस्य पुष्पैर्मधुकेन संयुतं
तदञ्जनं सर्व्वकृते प्रयोजयेत् ।
क्रियाश्च सर्व्वाः क्षतजोद्भवे हितः
क्रमः परिम्नायिनि चापि पित्तहृत् ॥")
राशिविशेषः ॥ तत्पर्य्यायः । क्रियः २ ।
(यथा,
श्रीमद्भागवते । ५ । २१ । ४ । "यदा
मेषतुलयोर्व्वर्त्तते

भारते । ६ । ९ । २३ ।
“करिषिणीमसिक्नीञ्च कुशचीरां महानदीम् ।
मरुहीं प्रवरां मेनां हेमां घृतवतीं तथा ॥”)

**मेनाजा**, स्त्री, (मेनायाः जायते इति । जन् + डः ।
स्त्रियां टाप् ।) पार्व्वती । इति हेमचन्द्रः ॥

**मेनादः**, पुं, (मे इति नादोऽस्य ।) विडालः ।
छागः । मयूरः । इति मेदिनी । दे, ३९ ॥

**मेनाधवः**, पुं, (मेनाया धवः स्वामी ।) हिमालयः ।
इति त्रिकाण्डशेषः ॥

**मेन्धिका**, स्त्री, (मां शोभामिन्धयति प्रकाशयतीति ।
इन्ध + णिच् + ण्वुल् । टापि अत इत्वम् ।)
क्षुपविशेषः । इति केचित् । मेहदी इति
भाषा ॥

**मेन्धी**, स्त्री, (मां शोभामिन्धयतीति । इन्ध +
णिच् + अण् । गौरादित्वात् ङीष् ।) क्षुप-
विशेषः । इति केचित् । मेहदी इति भाषा ॥

**मेप**, ऋ ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) ङ, मेपते । ऋ, अमि-
मेपत् । इति दुर्गादासः ॥

**मेरकः**, पुं, विष्णुशत्रुभेदः । इति हेमचन्द्रः ॥

**मेरुः**, पुं, (मि + “मिपीभ्यां रुः ।” उणा० ४ ।
१०१ । इति रुः ।) पर्व्वतविशेषः । तत्पर्य्यायः ।
सुमेरुः २ हेमाद्रिः ३ रत्नसानुः ४ सुरा-

मेलकं लवणम् ।) औषरलवणम् । इति राज-
निर्घण्टः ॥

**मेला**, स्त्री, (मिल् + णिच् + अङ् । टाप् ।)
मेलकः । मसिः । इति मेदिनी । ले, ४६ ॥
अञ्जनम् । इति हेमचन्द्रः ॥ महानीली । इति
राजनिर्घण्टः ॥

**मेलानन्दा**, स्त्री, (मेलया मस्या आनन्दी यस्याः ।)
मस्याधारः । इति हारावली ॥

**मेलान्धुः**, स्त्री, (मेलानां अन्धुः कूपिका ।) मस्या-
धारः । इति जटाधरः ॥

**मेलाम्बुः**, पुं, (मेलेव अम्बु अत्र ।) मस्याधारः ।
इति शब्दरत्नावली ॥

**मेव**, ऋ ङ सेवने । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) ऋ, अमिमेवत् । ङ,
मेवते । इति दुर्गादासः ॥

तदाहोरात्राणि समानानि भवन्ति । यदा
वृषभादिषु पञ्चसु च राशिषु चरति तदाहा-
न्येव वर्द्धन्ते ह्रसति च मासि मासि एकैका
घटिका रात्रिषु ॥”) अस्याधिष्ठात्री देवता
पुंमेषः । अश्विनीभरणीकृत्तिकापादैकेन मेष-
राशिर्भवति । अत्र जात ईदृशो भवति ।
शेषदशायां नेत्रदुःखी दयालुः धनी गानसुखी
धार्म्मिकः धीरः मत्स्यमांसाशी च । स तु
पृष्ठोदयः । अस्य वर्णः । आरक्तः पीतश्च ।
अयं क्रूरः । पित्तोष्णस्वभावः । कान्तिरहितः ।
समानाङ्गः । पर्व्वतचारी । पूर्ब्बदिगधिपतिः ।
वैश्यवर्णः । अल्पस्त्रीसङ्गः । अल्पसन्तानः ।
सुदृढः । अतिरवश्च । इति ज्योतिषम् ॥ * ॥
रव्याश्रिततद्राशिजातफलंयथा, --
“मेषे दिनेशे पुरुषः सुवेशः
सत्साहसः स्यान्नृपतेः समानः ।
बुद्ध्या युतः पित्तकृता च पीडा
वक्त्रोद्भवा वा सततं महौजाः ॥” * ॥
चन्द्राश्रिततद्राशिजातफलंयथा, --
“स्थिरजनो रहितः स्वजनैर्नरः
सुतयुतः प्रमदाविजितो भवेत् ।
अजगते द्विजराज इतीरितं
विभुतयाद्भुतया सहितः श्रिया ॥” * ॥
तल्लग्नजातफलं यथा, --
“मेषलग्ने समुत्पन्नश्चण्डो मानी धनी शुभः ।
क्रोधी स्वजनहन्ता च विक्रमी परवत्सलः ॥”
इति कोष्ठीप्रदीपः ॥

| | | |
|---|---|---|
| लयः ५ । इत्यमरः ॥ मिनोति क्षिपति ज्योतींषि उच्चत्वात् मेरुः । डुमि ञ्न क्षेपे नाम्नीति रुः । इति भरतः ॥ * ॥ (यथा, मात्स्ये । १२१ । ८ । "देवर्षिगन्धर्व्वयुतः प्रथमो मेरुरुच्यते । प्रागायतः ससौवर्ण उदयो नाम पर्व्वतः ॥") जपमालाग्रवर्त्तिन्येका माला । यथा, -- | | |

तल्लग्नस्य स्थूलमानम् । ३ । ४७ । इति ज्योति-
स्तत्त्वम् ॥ * ॥ त्रितारकशराकृतिश्रवणानक्ष-
त्रस्य गगनमध्योदये मेषलग्नस्य अष्टादशपला-
धिकदण्डैको गतो भवेत् । यथा, --
"तारकात्रयमिते शराकृतौ
केशवे गगनमध्यवर्त्तिनि ।
मत्तवारणगतेऽजलग्नतो
निर्य्युर्गजमहीध्रलिप्तिकाः ॥"
मर्द्दलाकृतिपञ्चतारकधनिष्ठानक्षत्रस्य मस्तको-
पर्य्युदये मेषलग्नस्य षट्त्रिंशत्पलाधिकदण्डद्वयं
गतं स्यात् । यथा, --
"मस्तकोपरि समागते धने
मर्द्दलाकृतिनि पञ्चतारके ।
यान्ति कान्तिमति मेषलग्नतः
सारसाक्षि रसघस्रलिप्तिकाः ॥"
इति कालिदासकृतरात्रिलग्ननिरूपणम् ॥

**मेषकः**, पुं, (मिषतीति । मिष् + अच् । संज्ञायां
कन् ।) जीवशाकः । राजनिर्घण्टः ॥

**मेषकम्बलः**, पुं, (मेषलोमनिर्म्मितः कम्बलः । मध्य-
पदलोपी कर्म्मधारयः ।) मेषलोमनिर्म्मित-
वस्त्रम् । तत्पर्य्यायः । ऊर्णायुः २ । इत्यमरः ।
२ । ९ । १०७ ॥

**मेषलोचनः**, पुं, (मेषस्य लोचनमिव पुष्पमस्य ।)
चक्रमर्द्दः । इति भावप्रकाशः ॥ मेषचक्षुस्तुल्य-
चक्षुषि, त्रि ॥

**मेषवल्ली**, स्त्री, (मेषप्रिया वल्ली ।) अजशृङ्गी ।
इति भावप्रकाशः ॥

**मेषविषाणिका**, स्त्री, (मेषस्य विषाणं शृङ्गमिव
प्रतिकृतिरस्याः । विषाण + प्रतिकृतौ कन् ।
टापि अत इत्वम् ।) मेषशृङ्गी । इति रत्न-

**मेषाक्षिकुसुमः**, पुं, (मेषाणां अक्षिवत् कुसु-
मान्यस्य ।) चक्रमर्द्दः । इति रत्नमाला ॥

**मेषाण्डः**, पुं, (मेषस्याण्डमिवाण्डमस्य ।) इन्द्रः ।
इति पुराणम् ॥

**मेषान्त्री**, स्त्री, (मेषस्य अन्त्रमिव अन्त्रं सूक्ष्मत्व-
गस्याः ।) वस्तान्त्रीवृक्षः । इति राजनिर्घण्टः ॥

**मेषालुः**, पुं, (मेषप्रियः आलुः ।) वर्व्वरावृक्षः ।
इति शब्दचन्द्रिका ॥

**मेषाह्वयः**, पुं, (मेषस्याह्वयः आह्वास्य ।) चक्रमर्द्दः ।
इति राजनिर्घण्टः ॥ (विवरणमस्य चक्रमर्द्द-
शब्दे ज्ञातव्यम् ॥)

**मेषिका**, स्त्री, (मेषी + स्वार्थे कन् । टाप् ।
ह्रस्वः ।) मेषी । इति शब्दरत्नावली ॥

**मेषी**, स्त्री, (मिष्यते गृह्यते असौ इति । मिष +
घञ् । ङीष् ।) तिनिशवृक्षः । जटामांसी ।
इति राजनिर्घण्टः ॥ मेषस्त्रीजातिः । भेडी ।
(यथा, वाजसनेयसंहितायाम् । ३ । ५९ ।
"भेषजमसि भेषजं गवेऽश्वाय पुरुषाय भेषजं
सुखं मेषाय मेष्यै ॥")
तत्पर्य्यायः । जालकिनी २ अविः ३ । इति
त्रिकाण्डशेषः ॥ एडका ४ मेषिका ५ इति

**मेहः**, पुं, (मेहति क्षरति शुक्रादिरनेनेति । मिह्
+ घञ् ।) प्रमेहरोगः । इत्यमरः । २ । ६ । ५६ ॥
(अस्यौषधं यथा, --
"वङ्गभस्य द्विवल्लञ्च लेहयेन्मधुना सह ।
ततो गुडसमं गन्धं भक्षयेत् कर्षमात्रकम् ॥
गुडूचीसत्त्वमथवा शर्करासहितन्तथा ।
सर्व्वमेहहरो ज्ञेयो वङ्गावलेह उत्तमः ॥"
इति वङ्गावलेहः ॥
"भस्मसूतं समं कान्तमभ्रकन्तु शिलाजतु ।
शुद्धताप्यं शिलाव्योषं त्रिफलाङ्कोठजीरकम् ॥
कार्पासमज्जारजनी समं भाव्यञ्च भृङ्गिणा ।
विंशद्वारं विशोष्याथ मधुयुक्तं लिहेत्सदा ॥
माषमात्रं हरेन्मेहं मेघनादरसो महान् ॥"
इति मेघनादरसः ॥
"रसभस्म समायुक्तं वङ्गभस्म प्रकल्पयेत् ।
अस्य माषद्वयं हन्ति मेहान् क्षौद्रसमन्वितम् ॥"
इति वङ्गेश्वररसः ॥
इति वैद्यकरसेन्द्रसारसंग्रहे प्रमेहाधिकारे ॥
अन्यत् प्रमेहशब्दे द्रष्टव्यम् ॥ * ॥ मिहतीति ।
मिह + अच् ।) मेषः । इति शब्दचन्द्रिका ॥
प्रस्रावः । इति हेमचन्द्रः । ३ । २९७ ॥ (अग्न्या-
द्यभिमुखं तत्करणे दोषो यथा, मनौ । ४ । ५२ ।
"प्रत्यग्निं प्रतिसूर्य्यञ्च प्रतिसोमोदकद्विजान् ।
प्रतिगां प्रतिवातञ्च प्रज्ञा नश्यति मेहतः ॥"
"अग्निसूर्य्यचन्द्रजलब्राह्मणगोवाताभिमुखंमूत्र-
पुरीषे कुर्व्वतः प्रज्ञा नश्यति ।" इति तट्टीकायां
कुल्लूकभट्टः ॥)

**मेहघ्नी**, स्त्री, (मेहं हन्तीति । हन् + टक् । ङीष् ।)
हरिद्रा । इति रत्नमाला ॥

**मेहनं**, क्ली, (मेहति सिञ्चति मूत्ररेतसीति । मिह्
सेचने + ल्युः ।) शिश्नः । इत्यमरः । २ । ६ ।
७६ ॥
(यथा, ऋग्वेदे । १० । १६३ । ५ ।
"मेहनाद्वनं कारणाल्लीम ।"
"मेहनात् मेढ्रात् ।" इति तद्भाष्ये सायणः ॥
यथा, च सुश्रुते । १ । ३५ ।

माला ॥

**मेषशृङ्गः**, पुं, (मेषस्य शृङ्गमिव । तदाकृतित्वात् ।)

स्थावरविषभेदः । इति हेमचन्द्रः । ४ । २६३ ॥
(यथा, सुश्रुते उत्तरतन्त्रे । १७ अध्याये ।
"मेषशृङ्गस्य पुष्पाणि शिरीषधवयोरपि ॥")

**मेषशृङ्गी**, स्त्री, (मेषशृङ्ग + गौरादित्वात् ङीष् ।)

अजशृङ्गीवृक्षः । मेढाशृङ्गी इति भाषा ।
(यथा, सुश्रुते । १ । ३९ ।
"मेषशृङ्गी मातुलुङ्गी मुरुङ्गीत्यादि ॥")
तत्पर्य्यायः । नन्दीवृक्षः २ मेषविषाणिका ३ चक्षुः ४ चक्षुर्व्वहनम् ५ मेढ्रशृङ्गी ६ गृहद्रुमा ७ ।
इति रत्नमाला ॥ (तथास्याः पर्य्यायो गुणाश्च ।
"मेषशृङ्गी विषाणी स्यान्मेषवल्ल्यजशृङ्गिका ॥
मेषशृङ्गी रसे तिक्ता वातला श्वासकासहृत् ।
रूक्षा पाके कटुस्तिक्ता व्रणश्लेष्माक्षिशूल-नुत् ॥
मेषशृङ्गीफलं तिक्तं कुष्ठमेहकफप्रणुत् ।
दीपनं स्रंसनं कासकृमिव्रणविषापहम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**मेषा**, स्त्री, (मिष्यतेऽसौ । मिष् + कर्म्मणि घञ् ।

टाप् ।) त्रुटिः । इति शब्दचन्द्रिका । गुज-राटी एलाइच इति भाषा ॥

शब्दरत्नावली । क्रुररी ६ रुजा ७ अविला ८
वेणी ९ । इति हेमचन्द्रः । ४ । ३४३ । अस्या
दुग्धगुणाः । मधुरत्वम् । गाढत्वम् । स्निग्ध-
त्वम् । कफापहत्वम् ।
वातामयकरत्वम् । स्थौल्य-
त्वम् । लोमशायाश्चेत् गुरुत्वम् ।
वृद्धिदत्वञ्च ।
इति राजनिर्घण्टः ॥ * ॥ अपि च ।
"आविकं लवणं स्वादु स्निग्धोष्णं चाश्मरी-
प्रणुत् ।
अहृद्यं तर्पणं केश्यं
शुक्रपित्तकफप्रदम् ।
गुरुकासेऽनिलोद्भूते केवले वानिले वरम् ॥"
इति भावप्रकाशः ॥
अस्या दधिगुणाः । सुस्निग्धत्वम् । कफपित्त-
करत्वम् । गुरुत्वम् । वाते रक्तवाते च पथ्य-
त्वम् । शोफव्रणनाशित्वञ्च ॥ * ॥ अस्या नव-
नीतगुणाः । क्लिष्टगन्धत्वम् ।
शीतलत्वम् । मेधा-
हरत्वम् । पुष्टिदत्वम् ।
स्थौल्यत्वम् । मन्दाग्नि-
दीपनत्वम् । सारकत्वम् । पाके हिमत्वम् ।
लघुत्वम् । योनिशूले कफे वाते दुर्नाम्नि च
हितत्वञ्च । दुर्नाम्नि स्थाने गुदशूले इति
पुस्तकान्तरे पाठः ॥ * ॥ तस्या घृतगुणाः ।
अतीवगौरवात् सुकुमारदेहिनां वर्ज्यत्वम् ।

"ह्रस्वानि यस्य पर्व्वाणि सुमहच्चापि मेहनम् ।
तथोरस्यवलीढानि न च स्यात् पृष्ठमायतम् ॥
ऊर्द्ध्वञ्च श्रवणौ स्थानान्नासा चोच्चा शरीरिणः ।
हसतो जल्पतो वापि दन्तमांसं प्रदृश्यते ।
प्रेक्षते यश्च विभ्रान्तं स जीवेत् पञ्चविंशतिम् ॥")
मूत्रम् । इति मेदिनी । ने, ११० ॥ (यथा, सुश्रुते । १ । ३२ ।
"वस्तवद्विलपन् यश्च भूमौ पतति स्रस्तमुष्क-
स्तब्धमेढ्रो भग्नग्रीवः प्रणष्टमेहनश्च मनुष्यः ॥")
भावेऽनट् प्रत्यये मूत्रोत्सर्गश्च ॥

**मेहनः**, पुं, (मेहति सिञ्चति रसमिति । मिह +

ल्युः ।) मुष्ककवृक्षः । इति राजनिर्घण्टः ॥

**मेहना**, स्त्री, (मेह्यते क्षार्य्यते शुक्रमस्यामिति ।

मिह क्षरणे + णिच् + अधिकरणे युच् । स्त्रियां
टाप् ।) महिला । इति केचित् ॥ (मेहनीयम् ।
यथा, ऋग्वेदे । ५ । ३९ । १ ।
"यदिन्द्रचित्रमेहनास्ति त्वादातमद्रिवः ॥")

बुद्धिपाटवहरत्वम् । बलावहत्वम् ।
वपुषां विस्र-
गन्धिकारित्वञ्च । इति
राजनिर्घण्टः ॥ तन्-
मांसगुणाः । यथा, भावप्रकाशे ।
"छागमेषवृषाश्वाद्याः ग्राम्याः
प्रोक्ता मह-
र्षिभिः ।
ग्राम्या वातहराः सर्व्वे दीपनाः
कफपित्तलाः ।
मधुरा रसपाकाभ्यां वृंहणा
बलवर्द्धनाः ॥"

**मेसूरणं**, क्ली, दशमलग्नम् । यथा, --

"कर्म्मस्थानञ्च दशमं खं
मेसूरणमास्पदम् ।"
इति ज्योतिस्तत्त्वम् ॥

**मैत्रं**, क्ली, (मित्रादागतमिति । यद्वा, मित्रस्येद-
मिति । मित्र + "तस्येदम् ।" ४ । ३ । १२० । इति
अण् ।) अनुराधानक्षत्रम् १७ । यथा, --
"मैत्राद्यपादे स्वपितीह विष्णु-
र्व्वैष्णव्यमध्ये परिवर्त्तते च ।
पौष्णावसाने च सुरारिहन्ता
प्रबुध्यते मासचतुष्टयेन ॥"
इति तिथ्यादितत्त्वम् ॥ * ॥
(मित्रः सूर्य्यो देवतास्येति । आदित्यलोकः ।
यथा, महाभारते । १२ । ३१७ । ३ ।
"पायुनोत्क्रममाणन्तु मैत्रं स्थानमवाप्नुयात् ।
पृथिवीं जघनेनाथ ऊरुभ्याञ्च प्रजापतिम् ॥"
यद्वा, मनुः । १२ । ७२ ।
"मेत्राक्षज्योतिकः प्रेतो वैश्यो भवति पूयभुक् ॥")
पुरीषोत्सर्गः । यथा, --
"ततः कल्यं समुत्थाय कुर्य्यान्मैत्रं नरेश्वर ! ।
नैरृत्यामिषुविक्षेपमतीत्याभ्यधिकं भुवः ॥
कल्यं उषःकालम् । मैत्रं मित्रदेवताकपायुसम्ब-
न्धात् पुरीषोत्सर्गः ।" इत्याह्निकाचारतत्त्वम् ॥
अपि च ।
"ब्राह्म्ये मुहूर्त्ते चोत्तिष्ठेत् सुस्थो रक्षार्थमायुषः ।
शरीरचिन्तां निर्व्वर्त्य मैत्रं कर्म्म समाचरेत् ॥"
मैत्रं मलमूत्रोत्सर्गः । इति राजवल्लभः ॥ * ॥
तत्र निषिद्धस्थानादि यथा, --
"छायाकूपनदीगोष्ठचैत्याम्भःपथिभस्मसु ।
अग्नौ चैव श्मशाने च विण्मूत्रे न समाचरेत् ॥
न गोमये न दृष्टे वा महावृक्षे च शाद्वले ।
न तिष्ठन् वा न निर्व्वासा न च पर्व्वतमस्तके ॥
न जीर्णदेवायतने न वल्मीके कदाचन ।
न ससत्त्वेषु गर्त्तेषु न गच्छन् वा समाचरेत् ॥
तुषाङ्गारकपालेषु राजमार्गे तथैव च ।
न क्षेत्रे न विले वापि न तीर्थे न चतुष्पथे ॥
नद्यां नदसमीपे वा नोषरे न पराशुचौ ।
न सोपानत्पादुको हि छत्री वा नान्तरीक्षके ॥
न चैवामिमुखः स्त्रीणां गुरुब्राह्मणयोर्गवाम् ।
न देवदेवालययोरपामपि कदाचन ॥
"अद्वेष्टा सर्व्वभूतानां मैत्रः करुणं एवच ।
निर्म्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥"
"मित्रभावो मैत्रो मित्रतया वर्त्तते ।" इति
श्रीशङ्करभाष्यम् ॥ "मैत्रः हीनेषु कृपालुः ।"
इति श्रीधरस्वामी ॥ "मैत्री मित्रता तद्वान्
मैत्रः ।" इति श्रीमधुसूदनसरस्वती ॥)

**मैत्रः**, पुं, ब्राह्मणः । इति त्रिकाण्डशेषः ॥ (यथा,
मनुसंहितायाम् । २ । ८७ ।
"जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः ।
कुर्य्यादन्यन्न वा कुर्य्यान् मैत्रो ब्राह्मण उच्यते ॥"
"मित्रमेव मैत्रः स्वार्थे अण् ।" इति तट्टीकायां
मेधातिथिकुल्लूकौ ॥ (उदयमुहूर्त्तात् तृतीय-
मुहूर्त्तः । तथा च बृहस्पतिः ।
"आर्द्रः सार्द्रस्तथा मैत्रः शुभो वासव एव
च ॥"
यथा, कुमारे । ७ । ६ ।
"मैत्रे मुहूर्त्ते शशलाञ्छनेन
योगं गतासूत्तरफल्गुनीषु ॥"
वर्णशङ्करविशेषः । यथा, मनुः । १० । २३ ।
"वैश्यात्तु जायते व्रात्यात् मुधन्वाचार्य्य एव च ।
कारूषश्च विजन्मा च मैत्रः सात्वत एव च ॥")

**मैत्रभं**, क्ली, (मैत्रञ्च तत् भञ्चेति ।) अनुराधा-
नक्षत्रम् । इति जटाधरः ॥

कुम्भे त्वगस्त्यः सम्भूतो जले मत्स्यो महा-
द्युतिः ।
उदियाय ततोऽगस्त्यः शम्यामात्रो महातपाः ॥
मानेन सम्मितो यस्मात्तस्मान्मान्य इहोच्यते ।
यद्वा कुम्भादृषिर्जातः कुम्भेनापि हि मीयते ।
कुम्भ इत्यभिधानञ्च परिमाणञ्च लक्ष्यते ।
ततोऽप्सु गृह्यमाणासु वसिष्ठः पुष्करे स्थितः ।
सर्व्वतः पुष्करे तं हि विश्वे देवा अधारयन् ॥"
इति तद्भाष्ये सायणः ॥)

**मैत्रावरुणिः**, पुं, (मैत्रावरुणयोरपत्यमिति । मैत्रा
वरुण + "अत इञ् ।" ४ । १ । ९५ । इति
इञ् ।) अगस्त्यः । इत्यमरः । १ । ३ । २०-
(यथा, महाभारते । ३ । १०३ । १४ ।
"तेऽभिगम्य महात्मानं मैत्रारुणिमच्युतम् ।
आश्रमस्थं तपोराशिं कर्म्मभिः स्वैरभिष्टुवन् ॥")

**मैत्री**, स्त्री, (मैत्र + ङीप् । यद्वा, मित्र + भावे
ष्यञ् + ङीष् । ततः "हलस्तद्धितस्य ।" ६ । ४ ।
१५० ।" इति यलोपः ।) मित्रस्य भावः ।
मित्रस्य कर्म्म । इत्यमरभरतौ ॥
व्यक्तिविशेषै-
र्मैत्रीकरणनिषेधो यथा, --
"विद्विष्टपतितोन्मत्तबह्वैरातिकीटकैः ।
बन्धकीबन्धकीभर्त्तृक्षुद्रानृतकथैः सह ॥
तथातिव्ययशीलैश्च परीवादरतैः शठैः ।
बुधो मैत्रीं न कुर्व्वीत नैकः पन्थानमाश्रयेत् ॥"
इति विष्णुपुराणे तृतीयेऽंशे ११ अध्यायः ॥
"विद्विष्टादिभिर्म्मैत्रीं न कुर्व्वीत । बहुभिर्व्वैरं
यस्य । अतिकीटकः अत्यन्तं कीटवत् पीडकः ।
कण्टकैरिति पाठेऽपि स एवार्थः । बन्धकी
असती ।" इति तट्टीका ॥

न ज्योतींषि निरीक्षन् वा न वाय्वभिमुखोऽथवा ।
प्रत्यादित्यं प्रत्यनलं प्रतिसोमं तथैव च ॥”
इति कौर्म्मे उपविभागे १२ अध्यायः ॥
अस्य विस्तारस्तु पाद्मे उत्तरखण्डे १९० अध्याये
द्रष्टव्यः ॥ * ॥ (मित्रस्य भावः । मित्र + अण् ।
मित्रता । यथा, मनुः । ८ । ११८ ।
“लोभात् मोहात् भयात् मैत्रात् कामात्
क्रोधात् तथैव च ।
अज्ञानात् बालभावाच्च साक्ष्यं वितथमुच्यते ॥”)
त्रि, मित्रसम्बन्धी ॥ (यथा, महाभारते । १२ ।
१४४ । २३ ।
“पिशुनां ये न भाषन्ते मित्रभेदकरीं गिरम् ।
ऋतं मैत्रञ्च भाषन्ते ते नराः स्वर्गगामिनः ॥”
मित्रताशाली । यथा, श्रीमद्भगवद्गीतायाम् ।
१२ । १३ ।

**मैत्रावरुणः**, पुं, (मित्रश्च वरुणश्चेति । “देवता-
द्वन्द्वे च ।” ६ । ३ । २६ । इत्यनङ्
। ततः “देवता-
द्वन्द्वे च ।” ७ । ३ । २१ । इति
मित्रस्य वृद्धिः ।
“दीर्घाच्च वरुणस्य ।” ७ । ३ । २३ । इति
वरुणस्य न वृद्धिः । तयोरपत्यमिति । मित्रा-
वरुण + अण् ।) अगस्त्यः । इति शब्दरत्ना-
वली ॥ (यथा, अथर्व्ववेदे । ५ ।
१९ । १५ ।
“न वर्षं मैत्रावरुणं ब्रह्मज्यमभिवर्षति ॥”
अस्य विवरणं यथा, ऋग्वेदे । ७ ।
३३ । ११ ।
“उतासि मैत्रावरुणो वसिष्ठोर्व्वश्या ब्रह्मन्
मनसोऽधिजातः ।
द्रप्सं स्कन्नं ब्रह्मणा दैव्ये न विश्वे देवा पुष्करे
त्वाददन्त ॥”
“उतापि च हे वसिष्ठ ! मैत्रावरुण ! मित्रावरु-
णयोः पुत्रोऽसि ब्रह्मन् वसिष्ठ ! उर्व्वश्या अप्स-
रसो मनसो ममायं पुत्रः स्यादिति ईदृशात्
संकल्पात् द्रप्सं रेतः
मित्रावरुणयोरुर्व्वशीदर्श-
नात् स्कन्नमासीत् ।
तस्मादधिजातोऽसि । तथा
च वक्ष्यते । सत्रेहजातावित्यृचि ।
एवं जातं
त्वा त्वां दैव्येन देवसम्बन्धिना
ब्रह्मणा वेद-
राशिना अहम्भुवा युक्तं पुष्करे
विश्वेदेवा
अददन्त अधारयन्त ।
तथाचादितेर्मित्रा-

**मैत्रीबलः**, पुं, (मैत्री मित्रता बलमस्य ।) बुद्धः ।
इति त्रिकाण्डशेषः ॥

**मैत्रेयः**, पुं, (मैत्रे मित्रतायां साधुरिति । मैत्र +
ढञ् ।) बुद्धभेदः । इति त्रिकाण्डशेषः ॥
(मित्रयोः अपत्यमिति । मित्रयु + “गृष्ट्यादि-
भ्यश्च ।” ४ । १ । १३६ । इति ढञ् । ततः
“केकयमित्रयुप्रलयानां यादेरियः ।” ७ । ३ । २ ।
इति युस्थाने इयादेशे प्राप्ते । “दाण्डिनायन-
हास्तिनायन ।” ६ । ४ । १७४ । इति युलोपो
निपातितः ।) मुनिविशेषः । यथा, --
“एवं ब्रुवाणं मैत्रेयं द्वैपायनसुतो बुधः ।
प्रीणयन्निव भारत्या विदुरः प्रत्यभाषत ॥”
इति श्रीभागवते । ३ । ७ । १ ॥
(सूर्य्यः । यथा, महाभारते । ३ । ३ । २७ ।
“देहकर्त्ता प्रशान्तात्मा विश्वात्मा विश्वतोमुखः ।
चराचरात्मा सूक्ष्मात्मा मैत्रेयः करुणान्वितः ॥”
वर्णसं करजातिविशेषः । यथा, मनुसंहिता-
याम् । १० । ३३ ।
“मैत्रेयकन्तु वैदेहो माधूकं सम्प्रसूयते ।
नॄन् प्रशंसत्यजस्रं यो घण्टाताडोऽरुणोदये ॥”
“मैत्रेयकं नाम्ना वर्णम् ।” इति तत्र
मेधातिथिः ॥
स्त्री । मैत्रेयेन उच्चारिता मैत्रेयी उपनिषद् ॥
याज्ञवल्कस्य पत्नी च ॥) मित्रसम्बन्धिनि,
त्रि ॥

|  | वरुणौ जज्ञाते इति प्रकृत्य पठ्यते ।<br>तयोरादित्ययोः सत्रे दृष्ट्वाप्सरसमुर्वशीम् ।<br>रेतश्चस्कन्द तत्कुम्भे न्यपतद्वासतीवरे ॥<br>तेनैव तु मुहूर्त्तेन वीर्य्यवन्तौ तपस्विनौ ।<br>अगस्त्यश्च वसिष्ठश्च तत्रर्षी सम्बभूवतुः ॥<br>बहुधापतितं रेतः कलशे च जले स्थले ।<br>स्थले वसिष्ठस्तु मुनिः सम्भूत ऋषिसत्तमः ॥ |  |
|---|---|---|

(मित्रयुवंशोद्भवादौ च । यथा,
हरिवंशे । ३२ ।
७७ -- ७८ ।
“अत ऊद्‌र्ध्वं प्रवक्ष्यामि
दिवोदासस्य सन्ततिम् ।
दिवोदासस्य दायादो
ब्रह्मर्षिर्मित्रयुर्नृपः ।
मैत्रायणी ततः शाखा मैत्रेयास्तु ततः
स्मृताः ॥”)

**मैत्रेयिका**, स्त्री, मित्रयुद्धम् । इति त्रिकाण्डशेषः ॥

(मित्रयूनां भावः कर्म्म वा । मित्रयु +
“गोत्र-
चरणाच्छलाघात्याकारतदवेतेषु ।”
५ । १ । १३४ ।
इति वुञ् । ततः
“केकयमित्रयुप्रलयानां यादे-
रियः ।” ७ । ३ । २ । इति इयादेशः
। यथा,
“मैत्रेयिकया श्लाघते ।” इति
काशिका । ७ ।
३ । २ ॥)

**मैत्र्यं**, क्ली, स्त्री, (मित्र + ष्यञ् ।) मित्रस्य भावः ।

मित्रस्य कर्म्म । इत्यमरभरतौ । ३ ।
५ । ३९ ॥
(यथा, पञ्चतन्त्रे । ४ । ७० ।
“प्राहुः साप्तपदं मैत्र्यं जनाः
शास्त्रविचक्षणाः ।
मित्रताञ्च पुरस्कृत्य किञ्चिद्वक्ष्यामि
तच्छृणु ॥”)

**मैथिली**, स्त्री, (मिथिला निवासोऽस्येति । मिथिला

+ “सोऽस्य निवासः ।” ४ । ३ ।
८९ । इति
अण् । मैथिलस्तन्नामा राजा
तस्यापत्यं स्त्री ।

ग्रन्थिरोगाग्निमान्द्यकारित्वम् । स्त्रीसंसर्गरहि-
तस्य आयुरजराशरीरबलवर्णस्थिरोपचित-
मांसानि भवन्ति । पूज्यस्थानाशुचिस्थान-
सेकस्थानलोकसमीपप्रातःकालसन्ध्याकालपर्व्व
कालेषु तस्य त्याज्यत्वम् । एतत्कर्म्मणि रज-
स्वलाकामा मलिना बन्ध्या वर्णज्येष्ठा वयोज्येष्ठा
व्याधियुक्ताङ्गहीनासती वेश्या योनिदोषयुक्ता
सगोत्रा गुरुपत्नी भिक्षुकी कपटव्रतधारिणी
वृद्धा च त्याज्या ॥ रजस्वलागमने दृष्ट्यायुस्तेजः-
क्षयोऽधर्म्मश्च भवति । कपटव्रतयुक्तागुरुपत्नी
सगोत्रावृद्धागमने एवं पर्व्वकाले सन्ध्याकाले च
स्त्रीमैथुने पापमायुःक्षयश्च भवति । वयोरूप-
गुणोपेतां कुलशीलसमन्विताम् । अधिकामां
हृष्टामलङ्कृतां वाजीकरणपीडिताञ्च प्रमदां
हृष्टोऽधिकामश्च पुरुषः सेवेत । शुक्रवर्द्धकद्रव्यं
सशर्करं शीतलजलं वा पीत्वा कामबाणचञ्चलां
सुरूपामनिन्द्यां हृष्टां प्रमदामाद्यप्रहरे हृष्टः
कामुको गत्वा तदनु सुखं स्वपेत् । असकृद्-
गमने तु नरो धातुवैषम्यमेति । रतान्ते स्नानं
सशर्करक्षीरपानं निद्रा गौडिकरसभोजनञ्च
हितम् । इति राजवल्लभः ॥ * ॥ (“तत्र प्रथमे
दिवसे ऋतुमत्यां मैथुनगमनमनायुष्यं पुंसां
भवति । यश्च तत्राधीयते गर्भः स प्रसवमानो
विमुच्यते । द्वितीयेऽप्येवं सूतिकागृहे वा ।
तृतीयेऽप्येवमसम्पूर्णाङ्गोऽल्पायुर्वा भवति । न च
प्रवर्त्तमाने रक्ते बीजं प्रविष्टं गुणकरं भवति
यथा नद्यां प्रतिस्रोतः प्लाविद्रव्यं प्रक्षिप्तं प्रति-
निवर्त्तते नोद्‌र्ध्वं गच्छति तद्वदेव द्रष्टव्यम् । तस्मा
न्नियमवतीं त्रिरात्रं परिहरेत् । अतःपरं मासा-
दुपेयात् ।”
“ऋतुस्नाता तु या नारी स्वप्ने मैथुनमावहेत् ।
आर्त्तवं वायुरादाय कुक्षौ गर्भं करोति हि ॥
मासि मासि विवर्द्धेत गर्भिण्या गर्भलक्षणम् ।
कललं जायते तस्या वर्ज्जितं पैतृकैर्गुणैः ॥”
इति सुश्रुते शारीरस्थाने द्वितीयेऽध्याये ॥)
व्रतदिवसे अष्टाङ्गमैथुनस्य त्याज्यत्वं यथा, --
“स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।
सङ्कल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च ।
मैथुनं विविधं त्याज्यं व्रते क्रीडाविवृद्धये ॥”

तैलस्त्रीमांससंभोगी पर्व्वस्वेतेषु वै
पुमान् ।
विण्मूत्रभोजनं नाम प्रयाति नरकं मृतः
॥
अशेषपर्व्वस्वेतेषु तस्मात्
संयमिभिर्ब्बुधैः ।
भाव्यं
सच्छास्त्रदेवेज्याध्यानजप्यपरैर्नरैः ॥
नान्ययोनावयोनौ वा
नोपभुक्तौषधस्तथा ।
देवद्विजगुरूणाञ्च व्यवायी नाश्रयी
भवेत् ॥
चैत्यचत्वरतीर्थेषु नैव गोष्ठे चतुष्पथे ।
नैव श्मशानोपवने सलिलेषु महीपते !
॥
प्रोक्तपर्व्वस्वशेषेषु नैव भूपाल !
सन्ध्ययोः ।
गच्छेद्व्यवायं मतिमान्न
मूत्रोच्चारपीडितः ॥
पर्व्वस्वभिगमोऽधन्यो दिवा पापप्रदो
नृप ! ।
भुवि रोगावहो नृणामप्रशस्तो जलाशये
॥
परदारान्न गच्छेत मनसापि कदाचन ।
किमु वाचास्थिबन्धोऽपि नास्ति तेषु
व्यवा-
यिनाम् ॥
मृतो नरकमभ्येति हीयतेऽत्रापि चायुषः
।
परदारगतिः पुंसामुभयत्रापि भीतिदा ॥
इति मत्वा स्वदारेषु ऋतुमत्सु बुधो
व्रजेत् ।
यथोक्तदोषहीनेषु सकामेष्वनृतावपि
॥”
इति विष्णुपुराणे । ३ । ११ ।
१११-१२४ ॥ * ॥
परस्त्र्यादिगमने दण्डो यथा, --
“ब्राह्मणः क्षत्त्रियो वैश्यः
क्षत्त्रविट्शूद्रयोषितः ।

मैथिल + इञ् । ङीष् ।) सीता ।
इति हेम-
चन्द्रः ॥ (यथा, भट्टिकाव्ये । २ ।
४७ ।
“हिरण्मयी शाललतेव जङ्गमा
च्युतादिवः स्थास्नुरिवाचिरप्रभा ।
शशाङ्ककान्तेरधिदेवताकृतिः
सुता ददे तस्य सुताय मैथिली ॥”
मिथिलापतिमात्रे, पुं । यथा,
महाभारते ।
१२ । ९९ । ३ ।
“जनको मैथिलो राजा महात्मा
सर्व्वतत्त्ववित् ।
योधान् स्वान् दर्शयामास स्वर्गं
नरकमेव च ॥”)

**मैथुनं**, क्ली, (मिथुने सम्भवतीति । मिथुन +
“संभूते ।” ४ । ३ । ४१ । इति अण्
। मिथुनस्येद-
मित्यण् वा ।) अग्न्याधानम् । यथा,
मनुशाता-
तपौ ।
“असपिण्डा च या मातुरसगोत्रा च
या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्म्मणि
मैथुने ॥
मैथुने मिथुनशब्दवाच्ये
स्त्रीपुंससाध्ये अग्न्याधान-
पुत्त्रोत्पत्त्यादौ ।” इत्युद्वाहतत्त्वम् ॥
* ॥ सङ्गतम् ।
रतम् । इत्यमरः । ३ । ३ । १२१ ॥
“सङ्गतिः सङ्गमो
दारसंयोगः विवाह इति कलिङ्गः ॥
रतं सुर-
तम् । अनयोर्मैथुनम् । मिथुनात्
सङ्गमे इदमर्थे
स्वार्थे रतौ निष्पाद्यार्थे वा ष्णः ।
सम्बन्धे सुरते
युग्मे राशौ मिथुनमिष्यते । इति
व्याडिः ।” इति
तट्टीकायां भरतः ॥ * ॥ शेषस्य
पर्य्यायः । सुरतम्

इति ब्रह्मवैवर्त्ते गणपतिखण्डे ४ अध्यायः ॥
अस्य विधिनिषेधौ यथा, --
“ऋतायुपगमः शस्तः स्वपत्न्यामवनोपते ! ।
पुन्नामर्क्षे शुभे काले ज्येष्ठयुग्मासु रात्रिषु ॥
नास्नातां तु स्त्रियं गच्छेन्नातुरां न रजस्वलाम् ।
नानिष्टां न प्रकुपितां नाप्रशस्तां न गुर्व्विणीम् ॥
नादक्षिणां नान्यकामां नाकामां नान्ययोषितम् ।
क्षुत्क्षामामतिभुक्तां वा स्वयं वैभिर्गुणैर्युतः ॥
स्नातः स्रग्गन्धधृक् प्रीतो नाध्मातः क्षुधितो-
ऽपि वा ।
सकामः सानुरागश्च व्यवायं पुरुयो व्रजेत् ॥
चतुर्दश्यष्टमी चैव अमावास्याथ पूर्णिमा ।
पर्व्वाण्येतानि राजेन्द्र ! रविसंक्रान्तिरेव च ॥

व्रजन्दाप्यो भवेद्राज्ञा दण्ड
उत्तमसाहसम् ॥
वैश्यागमे च विप्रस्य
क्षत्त्रियस्यान्त्यजागमे ।
मध्यमं प्रथमं वैश्यो दण्ड्यः
शूद्रागमाद्भवेत् ॥
शूद्रः सवर्णागमने शतं दण्ड्यो
महीभुजा ।
वैश्यश्च द्विगुणं राजन् ! क्षत्त्रियस्त्रिगुणं
तथा ॥
ब्राह्मणश्च भवेद्दण्ड्यस्तथा
राजंश्चतुर्गुणम् ।
अगुप्तासु भवेद्दण्डः स्वगुप्तास्वधिको
भवेत् ॥
माता मातृष्वसा श्वश्रूर्मातुलानी
पितृष्वसा ।
पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी
तथा ॥
भागिनेयी तथा चैव राजपत्नी तथैव च
।
तथा प्रव्रजिता नारी वर्णोत्कृष्टा तथैव
च ॥
इत्यगम्यास्तु निर्द्दिष्टास्तासान्तु गमने
नरः ।
शिश्नस्योत्कर्त्तनं कृत्वा ततस्तु
वधमर्हति ॥
भ्रातृभार्य्यागमे पूर्ब्बाद्दण्डस्तु द्विगुणो
भवेत् ।
चाण्डालीञ्च श्वपाकीं वा गच्छन्
वधमवाप्नुयात् ।
तिर्य्यग्योनौ च गोवर्ज्यं मैथुनं
योऽभिसेवते ।
स पणं प्राप्नुयाद्दण्डं तस्याश्च
यवसोदकम् ॥
सुवर्णञ्च भवेद्दण्ड्यो गां व्रजन्
मनुजोत्तम ! ।
वैश्यागामी द्विजो दण्ड्यो
वैश्यशुल्कसमं पणम् ॥
गृहीत्वा वेतनं वेश्या लोभादन्यत्र
गच्छति ।

२ अभिमानितम् ३ धर्षितम् ४
संप्रयोगः ५
अनारतम् ६ अब्रह्मचर्य्यकम् ७
उपसृष्टम् ८
त्रिभद्रम् ९ क्रीडारत्नम् १०
महासुखम् ११ ।
इति त्रिकाण्डशेषः ॥ व्यवायः १२
ग्राम्य-
धर्म्मः १३ रतम् १४ निधुवनम् १५
। इत्यमरः ।
२ । ७ । ५७ ॥ अस्य गुणाः ।
धातुक्षयकारि-
त्वम् । रतिसन्तानदातृत्वञ्च ।
अतिशयमैथुनस्य
श्वासकासज्वरकारित्वम् ।
अमैथुनस्य प्रमेहमेद

वेतनं द्विगुणं दद्याद्दण्डञ्च द्विगुणन्तथा
॥
अन्यमुद्दिश्य यो दद्यात् नयेदन्यस्य
कारणात् ।
तस्य दण्डं भवेद्राजन् ! सुवर्णस्य च
माषकम् ॥
नीत्वा भोगान्न यो दद्याद्वाप्यो
द्विगुणवेतनम् ।
राज्ञश्च द्विगुणं दण्डन्तथा धर्म्मो न
हीयते ॥
बहूनां व्रजतामेकां सर्व्वे ते द्विगुणं दमम्
।
दद्युः पृथक् पृथक् सर्व्वे दण्डञ्च द्विगुणं
परम् ॥”
इति मात्स्ये २०१ अध्यायः ॥

**मैनाकः**, पुं, (मेनकाया अपत्यं पुमान् । मेनकायां
भव इति वा । मेनका + अण् ।
पृषोदरादित्वात्

साधुः ।) पर्व्वतविशेषः । तत्पर्य्यायः । हिरण्य-
नाभः २ सुनाभः ३ हिमवत्सुतः ४ । इति जटा-
धरः ॥ स तु हिमालयस्य ज्येष्ठपुत्त्रः । यथा, --
“ततो भगवती प्राह मेनकां मुनिसन्निभाम् ।
स्मितपूर्ब्बं तदा तस्याः पूरयन्ती मनोरथम् ॥
श्रीदेव्युवाच ।
शतं पुत्त्राः संभवन्तु भवत्या वीर्य्यसंयुताः ।
तत्रैको बलवान् मुख्यः प्रथमं संभविष्यति ॥
एवमुक्त्वा जगद्धात्री तत्रैवान्तरधीयत ।
मेनका च मुदं लब्ध्वा स्वस्थानं प्रविवेश ह ॥
ततः काले तु संप्राप्ते मैनाकमचलोत्तमम् ।
पक्षेण सह योऽद्यापि सिन्धुमध्ये प्रवर्त्तते ॥
मेनका सुषुवे देवी देवेन्द्रं स्पर्द्धया गतम् ।
अन्यानूनशतं पुत्त्रान् क्रमात् सा सुषुवे च ह ॥”
इति कालिकापुराणे ४० अध्यायः ॥
(दानवविशेषः । इति हरिवंशे भविष्यपर्व्वणि ।
२३२ । ३ ॥

**मैनाकस्वसा**, [ऋ] स्त्री, (मैनाकस्य स्वसा ।)

पार्व्वती । इति हेमचन्द्रः । २ । ११८ ॥

**मैनिकः**, पुं, (मीनं हन्तीति । मीन + “पक्षि-

मत्स्यमृगान् हन्ति ।” ४ । ४ । ३५ । इति ठक्
।)
जालिकः । इति सिद्धान्तकौमुदी ॥

**मैन्दः**, पुं, विष्णुवध्यासुरविशेषः । इति हेमचन्द्रः ।

२ । १३४ ॥ (यथा, हरिवंशे । ४१ । १५८ --
१६० ।
“अपरः केशवस्यायं प्रादुर्भावो महात्मनः ।
विख्यातो माथुरे कल्पे सर्व्वलोकहिताय वै ॥
यत्र शाम्बञ्च मैन्दञ्च द्विविदं कंसमेव च ।
दैत्यान् मानुषदेहस्थान् सूदयामास वीर्य्य-
वान् ॥”
वानरविशेषः । इति रामायणम् ॥ (यथा,
महाभारते । २ । ३१ । १८ ।
“तत्र वानरराजाभ्यां मैन्दैन द्विविदेन च ।
युयुधे दिवसान् सप्त न च तौ विकृतिं गतौ ॥”)

**मैन्दहा**, [न्] पुं, (मैन्दं हतवानिति । हन् +

क्विप् ।) विष्णुः । इति हेमचन्द्रः ॥

तमनोमैलन्द इत्यादि ।” इति
वररुचिकृतपत्र-
कौमुद्यां राजप्रशस्तिः ॥

**मोक्ष**, कि क्षेपे । इति कविकल्पद्रुमः ॥ (चुरा०-

पक्षे भ्वा०-पर०-सक०-सेट् ।)
कि, मोक्षयति
मोक्षति । इति दुर्गादासः ॥

**मोक्षः**, पुं, (मोक्ष + भावे घञ् । मोक्ष्यते दुःखमनेन ।

मोक्ष + करणे घञ् । इति भरतः
।) मुक्तिः ॥
(यथा, सांख्यसारे । २ । ७ । २५
।
“न मोक्षो नभसः पृष्ठे न पाताले न
भूतले ।
सर्व्वाशासंक्षये चेतःक्षयो मोक्ष
इति श्रुतेः ॥”)
मोक्षधर्म्मस्तु महाभारते
शान्तिपर्व्वणि द्रष्टव्यः ॥
पाटलिवृक्षः । मोचनम् ॥ इति
मेदिनी । षे,
२५ ॥ (यथा, मेघदूते । ६३ ।
“ताभ्यो मोक्षस्तव यदि सखे !
धर्म्मलब्धस्य
न स्यात्
क्रीडालोलाः
श्रवणपरुषैर्गर्ज्जितैर्भापयेस्ताः
॥”)
मृत्युः । इति हेमचन्द्रः । १ । ७५
॥ (विश्लेषः ।
यथा, श्रीमद्भगवद्गीतायाम् । ७ ।
१९ ।
“जरामरणमोक्षाय मामाश्रित्य
यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं
कर्म्म चाखिलम् ॥”
“मोक्षाय विश्लेषणार्थम् ।”
इत्यानन्दगिरिः ॥

तस्मान्मोघाः क्रियाः सर्व्वा भवन्त्येव
गतायुषः ॥”
इति सुश्रुते सूत्रस्थाने ३१ अध्याये ॥)
हीनम् । इति मेदिनी । घे, ४ ॥ (यथा,
आर्य्यासप्तशत्याम् । ६७० ।
“सज्जन एव हि विद्या शोभायै भवति दुर्ज्जने
मोघा ॥”)

**मोघः**, पुं, (मुह्यत्यस्मिन् । मुह + घञ् । कुत्वम् ।)

प्राचीरम् । इति शब्दमाला ॥

**मोघपुष्पा**, स्त्री, (मोघं पुष्पं रजो यस्याः ।)

बन्ध्या । इति राजनिर्घण्टः ॥

**मोघा**, स्त्री, पुं, (मुह्यत्यनया । मुह + घञ् ।

कुत्वम् । स्त्रियां टाप् ।) पाटला । इति
मेदिनी । घे, ४ ॥ (अस्याः पर्य्यायो यथा, --
“पाटलिः पाटला मोघा मधुदूती फलेरुहा ।
कृष्णवृन्ता कुवेराक्षी कालस्थाल्यलिवल्लभा
॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
विडङ्गम् । इति शब्दमाला ॥

**मोघोलिः**, पुं, प्राचीरम् । इति हारावली । ९८ ॥

**मोचं**, क्ली, (मुञ्चति त्वगादिकमिति । मुच् + अच् ।)

कदलीफलम् । इत्यमरः ॥ (यथा, सुश्रुते
चिकित्-
सितस्थाने । ३१ अः ।
“तालनाडिकेरपनसमोच-
पियालविल्वमधुकश्लेष्मातकाम्रफलस्नेहाः
पित्त-
संसृष्टे वायौ ॥” विवरणमस्य कदलीफलशब्दे
ज्ञातव्यम् ॥)

**मोचः**, पुं, (मुञ्चति त्वचमिति । मुच् + अच् ।)

शोभाञ्जनवृक्षः । इति मेदिनी । चे, ८ ॥
(यथा,
महाभारते । ३ । १५८ । ४३ ।
“पनसाल्लँकुचान् मोचान् खर्ज्जूरानम्बुवेत-
सान् ॥”)

**मोचकः**, पुं, (मोचयति संसारादिति । मुच् +

**मैरेयं**, क्ली, (मारं कामं जनयतीति । मार +

ढक् । निपातनात् साधुः ।) मद्यविशेषः । इत्य-
मरः । २ । १० । ४२ ॥ “यद्यपि ।
‘सीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत् ।
मैरेयं धातकीपुष्पगुडधानाम्लसंहितम् ॥’
इति माधवेन भेदः कृतः । तथापि सूक्ष्ममनादृ-
त्येदमुक्तम् । मारं कामं जनयति मैरेयं ष्णेयः ।
निपातनादात् ऐत्वम् ।” इति भरतः ॥ (यथा,
“मद्यन्तु सीधुर्म्मैरयमिरा च मदिरा सुरा ।
कादम्बरी वारुणी च हालापि बलवल्लभा ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे द्बितीये भागे ॥
क्वचित्, पुंलिङ्गेऽपि दृश्यते । यथा, --
“तीक्ष्णः कषायो मदकृत् दुर्नामकफगुल्महृत् ।
कृमिमेदोऽनिलहरो मैरयो मधुरो गुरुः ॥”
इति सुश्रुते सूत्रस्थाने ४५ अध्याये ॥)

**मैलन्दः**, पुं, भ्रमरः । यथा । “श्रीमन्मुरहरपद-

पाथोरुहनिःसरन्मकरन्दसन्दोहास्वादनतुन्दि

आत्मस्वरूपदर्शनम् । इति
रामानुजः ॥ निर-
सनम् । इति श्रीधरस्वामी ॥
पतनम् । यथा,
कुमारसम्भवे । ३ । ३१ ।
“मदोद्धताः प्रत्यनिलं विचेरु-
र्वनस्थलीर्म्मर्म्मरपत्रमोक्षाः ।”
“मर्म्मरपत्रमोक्षाः जीर्णपर्णपाताः
।” इति
तट्टीकायां मल्लिनाथः ॥)

**मोक्षकः**, पुं, (मोक्षतीति । मोक्ष + ण्वुल् ।)

मुष्ककवृक्षः । इति राजनिर्घण्टः
॥ (यथा,
बृहत्संहितायाम् । ५४ । ११३ ।
“तोयं श्रृतं मोक्षकभस्मना वा
यत्सप्तकृत्वः परिषेचनं तत् ॥”
त्रि, मोचनकर्त्ता । यथा,
मनुसंहितायाम् ।
४ । ३४२ ।
“असन्धितानां सन्धाता
सन्धितानाञ्च
मोक्षकः ॥”)

**मोक्षोपायः**, पुं, (मोक्षस्य मुक्तेरुपायः ।) मुक्ति

साधनम् ॥ तत्तु तपः । शमादिः ।
योगः ।
ज्ञानञ्च । इति हेमचन्द्रः । १ ।
७७ ॥ (यथा,
हरिवंशे । २५५ । ६३ ।
“स तं कृच्छ्रगतं दृष्ट्वा
कृपयाभिपरिप्लुतः ।
उवाच दानवश्रेष्ठं मोक्षोपायं
ददामि ते ॥”)

**मोघं**, त्रि, (मुह्यतेऽस्मिन्निति । मुह + घञ् ।

न्यङ्क्वादित्वात् कुत्वम् ।)
निरर्थकम् । इत्यमरः ।
३ । १ । ८१ ॥ (यथा, मनौ । ९
। ५० ।
“यदन्यगोषु वृषभो वत्सानां
जनयेच्छतम् ।

णिच् + ण्वुल् ।) मोक्षः । (मुञ्चति गन्धं त्वच-
मिति वा । मुच् + ण्वुल् ।) कदली । शिग्रुः ।
(मुञ्चति विषयानिति ।) विरागी । इति
हेमचन्द्रः । ४ । २०० ॥ मुष्ककवृक्षः । इति
राजनिर्घण्टः ॥ (मुक्तिकारके, त्रि । यथा,
शिवपुराणे वायुसंहितायां पूर्ब्बभागे । २ । ५१
।
“अमुक्तो मोचकश्चायमकालः कालचोदकः
॥”)

**मोचनं**, क्ली, (मुच् + ल्युट् ।) मोक्षः । (यथा,

महाभारते । ५ । ८४ । २१ ।
“अवतीर्य्य रथात्तूर्णं कृत्वाशौचं यथाविधि ।
रथमोचनमादिश्य सन्ध्यामुपविवेश ह ॥”)
कल्कनम् । दम्भः । शाठ्यम् । इति
मुचधातो-
र्भावेऽनट्प्रत्ययेन निष्पन्नम् ॥ (मोचयतीति ।
मोचि + ल्युः । मोचनकर्त्तरि, त्रि । यथा,
भागवते । ६ । १३ । २३ ।
“धन्यं यशस्यं निखिलाघमोचनं
रिपुञ्जयं स्वस्त्ययनं तथायुषम् ॥”)

**मोचनी**, स्त्री, (मोचयति रोगादिति । मुच् +

णिच् + ल्युः । स्त्रियां ङीप् ।) कण्टकारी ।
इति जटाधरः ॥ मोक्षकर्त्री च ॥

**मोचरसः** पुं, (मोचस्य रसः ।) शाल्मलिनिर्यासः ।

तत्पर्य्यायः । मोचस्रुत् २ मोचस्रावः ३ मोच-

|  | गोमिनामेव ते वत्सा मोघं<br>स्कन्दितमार्षभम् ॥”<br>यथा च ।<br>“प्रेतभूतपिशाचाश्च रक्षांसि<br>विविधानि च ।<br>मरणाभिमुखं नित्यमुपसर्पन्ति<br>मानवम् ॥<br>तानि भेषजवीर्य्याणि प्रतिघ्नन्ति<br>जिघांसया । |  |
| --- | --- | --- |

निर्यासः ४ पिच्छिलसारः ५ सुरसः ६ शाल्मली-
वेष्टः ७ मोचसारः ८ । अस्य गुणाः ।
कषायत्वम् । कफवातहरत्वम् ।
रसायनत्वम् ।
बलपुष्टिवर्णवीर्य्यप्रज्ञायुर्द्देहसिद्धिदत्वम् । ग्राहि-
त्वञ्च । इति राजनिर्घण्टः ॥ (यथा, मुश्रुते ।
उत्तरतन्त्रे । ४० अध्याये ।
"तिलामोचरसो लोध्रं तथैव मधुकोत्पलम् ।
कच्छरातिलकल्कश्च योगाश्चत्वार एव तु ॥
आजेन पयसा पेयाः सरक्ते मधुसंयुताः ॥")

**मोचा**, स्त्री, (मुञ्चति त्वचमिति । मुच् + अच् ।
टाप् ।) शाल्मलिवृक्षः । (यथा, --
"शाल्मलिस्तु भवेन्मोचा पिच्छिला पूरणीति च ।
रक्तपुष्पा स्थिरायुश्च कण्टकाढ्या च तूलिनी ॥"
इति मावप्रकाशे पूर्ब्बखण्डे प्रथमे भागे ॥)
कदलीवृक्षः । इत्यमरः । २ । ४ । १३३ ॥
(यथास्याः पर्य्यायः ।
"कदली वारणा मोचाम्बुसारांशुमतीफला ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
नीलीवृक्षः । इति राजनिर्घण्टः ॥

**मोचाटः**, पुं, कृष्णजीरः । रम्भास्थि । मलयोद्भवः ।
इति मेदिनी । टे, ५४ ॥

**मोची**, स्त्री, (मुच्यते रोगो ययेति । मुच् + घञ् ।
ङीष् ।) हिलमोचिका । इति रत्नमाला ॥
(विवृतिरस्या हिलमोचिकाशब्दे ज्ञातव्या ॥)

**मोटकं**, क्ली, (मुट्यते भुग्नीक्रियते इति । मुट् +

**मोणः**, पुं, (मुण् + अच् ।) शुष्कफलम् । नक्रः ।
मक्षिका । सर्पकरण्डः । इति
मेदिनी । णे, २४ ॥

**मोदः**, पुं, (मुद + भावे घञ् ।) हर्षः । इति
शब्दरत्नावली ॥ (यथा, ऋग्वेदे ।
९ । १३३ । ११ ।
"यत्रानन्दाश्च मोदश्च मुदः प्रमुद आसते ॥")

**मोदकः**, पुं, क्ली, (मोदयति बालादीनिति । मुद
+ णिच् + ण्वुल् ।) खाद्यविशेषः ।
इत्यमरः ।
३ । ५ । ३३ ॥ मोया इति भाषा । अस्य दान-
मन्त्रो यथा, --
"मोदकं स्वादुसंयुक्तं शर्करादिविनिर्म्मितम् ।
मया निवेदितं भक्त्या गृहाण परमेश्वरि ! ॥"
इति दुर्गोत्सवपद्धतिः ॥
गुडः । यवासशर्करा । इति
राजनिर्घण्टः ॥
शर्करादिद्वारापक्वौषधविशेषः ।
अस्य पूर्णवीर्य्यं
षण्मासं तिष्ठति । इति सुखबोधः ॥
(यथा, --
"वटका अथ कथ्यन्ते तन्नाम गुटिका वटी ।
मोदको वटिका पिण्डी गुडो वर्त्तिस्तथोच्यते ॥
द्रवन्तु द्विगुणं देयं मोदकेषु भिषग्वरैः ॥
द्रवं द्रवरूपद्रव्यं कर्षप्रमाणं तन्मात्रा बलं दृष्ट्वा
प्रयुज्यते । बलमिति
कालादेरप्युपलक्षणम् ।"
इति भावप्रकाशस्य पूर्ब्बखण्डे
द्वितीये भागे ॥)

**मोदाख्यः**, पुं, (मोदमाख्याति रसपल्लवादिना
विस्तारयतीति । आ + ख्या + कः ।) आम्र-
वृक्षः । इति राजनिर्घण्टः ॥

**मोदाढ्या**, स्त्री, (मोदेन आमोदगन्धेन आढ्या
बहुला ।) अजमोदा । इति राजनिर्घण्टः ॥
मोदेन आढ्या । हर्षयुक्ता च ॥

**मोदितः**, त्रि, (मोदो हर्षोऽस्यजातः । मोद +
तारकादित्वात् इतच् ।) हर्षयुक्तः । इति
व्याकरणम् ॥

**मोदिनी**, स्त्री, (मोदयति गन्धेनेति । मुद +
निच् + णिनिः । ङीप् ।) अजमोदा । मल्लिका ।
यूथिका । कस्तूरी । मदिरा । मल्लिकापुष्प-
विशेषः । तत्पर्य्यायः । वटपत्री २ कुमारिका ३
वृत्तमल्लिका ४ । अस्या गुणाः । नेत्ररोगाप-
हन्तृत्वम् । कटुत्वम् । उष्णत्वम् । व्रणघ्नत्वम् ।
गन्धबहुलत्वम् । आस्यजरोगनाशित्वञ्च । इति
राजनिर्घण्टः ॥ (हर्षदायके, त्रि । यथा,
महाभारते । ९ । ५६ । १३ ।
"वराश्वनरनागानां शरीरप्रभवा तदा ।
परलोकार्णवमुखा गृध्रगोमायुमोदिनी ॥")

**मोरटं**, क्ली, (मुर वेष्टने + "शकादिभ्योऽटन् ।"
उणा० ४ । ८१ । इति अटन् ।) इक्षुमूलम् ।
अङ्कोठपुष्पम् ॥ सप्तरात्रात् परक्षीरम् । इति
मेदिनी । टे, ५४ ॥ (यथा, वैद्यकरत्नमालायाम् ।
"परतो मोरटं विद्यादप्रासन्नं कफात्मकम् ॥"
यथा च ।
"नष्टदुग्धभवन्नीरं मोरटञ्जेज्जडोऽब्रवीत् ।"
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥)

**मोरटः**, पुं, (मुर + अटन् ।) लताप्रमेदः । क्षीर-
मोरटा इति भाषा । तत्पर्य्यायः । कर्ण-
पुष्पः २ पीलुपत्रः ३ मधुस्रवः ४ घनमूलः ५
दीर्घमूलः ६ पुरुषः ७ क्षीरमोरटः ८ । क्वचित्
पुस्तके कर्णपुष्पस्थाने क्षीरपुष्प इति पीलुपत्र-
स्थाने पीलुपुत्र इति च पाठः ॥ (तथास्य
पर्य्यायान्तरम् ।
"पीलुपर्णी घनरसो हस्तिपर्णी च मोरटः ॥"

घञ् । ततः कन् ।)
पितृदानार्थद्विगुणभुग्नकुश-
त्रयम् । यथा । “इति द्विगुणभुग्नदर्भमोटकं
पितृब्राह्मणवामपार्श्वे दद्यात् ।” इति श्राद्ध-
प्रयोगतत्त्वम् ॥

**मोटकी**, स्त्री, (मोटक + ङीष् ।) रागिणी-
विशेषः । इति हलायुधः ॥

**मोटनं**, क्ली, (मुट् + ल्युट् ।) चूर्णीकरणम् ।
आक्षेपः । इति मुटधात्वर्थदर्शनात् ॥

**मोटनः**, पुं, (मोटतीति । मुट् + ल्युः ।) वायुः ।
इति राजनिर्घण्टः ॥

**मोटनकं**, क्ली, (मोटनेन कायतीति । कै + कः ।)
एकादशाक्षरच्छन्दोविशेषः । यथा, --
“स्यान्मोटनकं तजजाश्च लगौ ॥”
“रङ्गे खलु मल्लकलाकुशल-
श्चाणूरमहाभटमोटनकम् ।
यः केलिलवेन चकार स मे
संसाररिपुं प्रति मोटयतु ॥”
इति छन्दोमञ्जरी ॥

**मोटा**, स्त्री, (मुट् + अच् । टाप् ।) बला । इति
राजनिर्घण्टः ॥

**मोट्टायितं**, क्ली, (मुट् + भावे घञ् । बाहुलकात्
घञस्तुट् । ततो भृशादित्वात् क्यङ् ।
ततो भावे
क्तः ।) स्त्रीणां
स्वाभाविकदशविधालङ्कारान्त-
र्गतालङ्कारविशेषः । इति हेमचन्द्रः ॥
तल्लक्षणं
यथा, उज्ज्वलनीलमणिः ॥
“कान्तस्मरणवार्त्तादौ हृदि तद्भावभावतः ।
प्राकट्यमभिलाषस्य मोट्टायितमुदीर्य्यते
॥”
हर्षके, त्रि । इति मेदिनी । के,
१४१ ॥ (यथा,
महाभारते । ७ । ३५ । ३८ ।
“हतारोहांश्छिन्नघण्टान्
क्रव्यादगणमोद-
कान् ॥”)

**मोदकः**, पुं, (मोदयति मिष्टान्ननिर्म्माणेनेति । मुद्
+ णिच् + ण्वुल् ।)
वर्णसङ्करजातिविशेषः ।
मयरा इति भाषा । स च शूद्रायां
क्षत्त्रिया-
ज्जातः । इति स्मृतिः ॥

**मोदनं**, क्ली, (मोदयतीति । मुद + णिच् + ल्युः ।)
शिक्थकम् । इति राजनिर्घण्टः ॥
(मुद + भावे
ल्युट् ।) हर्षः । मुदधात्वर्थदर्शनात्
॥ (हर्ष-
जनके, त्रि । यथा, महाभारते । ९ ।
२३ । ७६ ।
“वृकगृध्रशृगालानां तुमुले
मोदनेऽहनि ।
आसीद्वलक्षयो घोरस्तव पुत्त्रस्य
पश्यतः ॥”)

**मोदमोदिनी**, स्त्री, (मोदात् मोदो महान् हर्षः
सोऽस्या अस्तीति । मोदमोद +
इनि । ङीप् ।)
जम्बूः । इति राजनिर्घण्टः ॥

**मोदयन्ती**, स्त्री, (मोदयतीति । मुद + णिच् +
शतृ । ङीप् ।) वनमल्लिका ।
काठमल्लिका
इति भाषा ॥ यथा, --
“मदयन्ती गन्धवती मोदयन्ती
खरस्वरा ।”
इति रत्नमाला ॥
अपि च ।
“तृणशून्या मोदयन्ती भूपदी
मद्यन्तिका ॥”
इति वैद्यकरत्नमालायाम् ॥)
अस्य गुणाः । क्षीरबहुलत्वम् । मधुरत्वम् ।
कषायत्वम् । पित्तदाहज्वरनाशित्वम् । वृष्य-
त्वम् । बलविवर्द्धनत्वञ्च । इति राजनिर्घण्टः ॥
(यथा, सुश्रुते । १ । ४५ अध्याये ।
“गुरुः किलाटोऽनिलहा पुंस्त्वनिद्राप्रदः
स्मृतः ।
मधुरौ बृंहणौ वृष्यौ तद्वत्पीयूषमोरटौ ॥”)

**मोरटकं**, क्ली, (मोरट + स्वार्थे कन् ।) इक्षुमूलम् ।
इति राजनिर्घण्टः ॥

**मोरटा**, स्त्री, (मोरट + टाप् ।) मूर्व्वा । इत्य-
मरः । २ । ४ । ८३ ॥ (यथा, सुश्रुते । १ । ३८
अः ।
“वीरतरुसहचरद्वयदर्भवृक्षादनी गुन्द्रानल-
कुशकाशाश्यभेदकाग्निमन्थमोरटावसुकवसिर-
मल्लूक कुरुण्टकेन्दीवरकपोतवङ्काः ॥” तथास्याः
पर्य्यायो यथा, --

| | | |
|---|---|---|
| | इति शब्दरत्नावली ॥<br>(यथा च सुश्रुते । २ । २५ ।<br>“पिष्ट्वाथ सर्व्वं सह मोदयन्त्या<br>माराम्भसा बीजकसम्भवेन ॥”)<br><br>**मोदा**, स्त्री, (मोदयति गन्धेन तोषयतीति ।<br>मुद + णिच् + अच् । टाप् ।)<br>अजमोदा । इति<br>राजनिर्घण्टः ॥ | |

"मूर्ब्बा मधुरसा देवी मोरटा तेजनी स्रुवा ।
मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**मोषकः**, पुं, (मुष्णातीति । मुष् + ण्वुल् ।) तस्करः ।
इत्यमरः । २ । १० । २४ ॥

**मोषणं**, क्ली, लुण्ठनम् । छेदनम् । वधः । इति
मुषधातोभविऽनट् । (ल्युट् ॥ * ॥ मुष्णातीति ।
मुष् + ल्युः । अपहारके, त्रि ।
यथा, भागवते ।
५ । २४ । २२ । "न वैभगवान् नूनममुष्यानुजग्राह
यदुत पुनरात्मानुस्मृतिमोषणं मायामयं भोगै-
श्वर्य्यमेवातनुतेति ॥")

**मोषिता**, [ऋ] त्रि, मोषणकर्त्ता । चौरः । इति
मुषधातोस्तृन्प्रत्ययेन निष्पन्नः ॥

**मोहः**, पुं, (मोहनमिति । मुह् + भावे घञ् ।)
मूर्च्छा । इत्यमरः । २ । ८ । १०९ ॥ (यथा,
उत्तररामचरिते ३ अङ्के ।
"वीचिवातैः शीकरक्षोदशीतै-
राकर्षद्भिः पद्मकिञ्जल्कगन्धान् ।
मोहे मोहे रामभद्रस्य जीवं
स्वैरं स्वैरं प्रेषितैस्तर्पयेति ॥"
अस्य विषयो यथा, --
"संज्ञावहासु नाडीषु पिहितास्वनिलादिभिः ।
तमोऽभ्युपैति सहसा सुखदुःखव्यपोहकृत् ॥
सुखदुःखव्यपोहाच्च नरः पतति काष्ठवत् ।
विमूढत्वं मोहः स चाधर्म्मबुद्धौ सत्यामप्यकर्त्तव्ये
रागात् कर्त्तव्यताभ्रमः । यथा, व्यासः ।
"मोहो धर्म्मविमूढत्वं मानस्त्वात्माभिमानिता ।"
एवञ्च भविष्यपुराणीयबुद्धिशब्दोऽप्यधर्म्मज्ञान-
मेवाभिधत्ते सत्यधर्म्मज्ञाने पापगौरवार्थमिद-
मुक्तं मोहादिति । इति प्रायश्चित्तविवेकः ॥ * ॥
मोहवृक्षो यथा, --
सुमनोवाच ।
"श्रूयतामभिधास्यामि सर्व्वसन्देहनाशनम् ।
स्वरूपमुपदेशस्य सर्व्वविज्ञानदर्शनम् ॥
लोभः पापस्य बीजोऽयं मोहो मूलन्तु तस्य हि ।
असत्यं तस्य च स्कन्धो माया शाखासुविस्तरः ॥
दम्भकौटिल्यपत्राणि कुकृत्या पुष्पितः सदा ।
पैशुन्यं तस्य सौगन्ध्यमज्ञानं फलमेव हि ॥
छद्मपाषण्डचौराश्च कूटाः क्रूराश्च पापिनः ।
पक्षिणो मोहवृक्षस्य मायाशाख्याः समा-
श्रिताः ॥
अज्ञानन्तु फलं तस्य रसोऽधर्म्मफलस्य हि ।
भावोदकेन संवृद्धस्तस्य सत्त्वात् स तु प्रियः ॥
अधर्म्मस्तस्य सुरभिः क्लेदश्च मधुरायते ।
तादृशैश्च फलैश्चैव सुफलो लोभपादपः ॥
तस्य च्छायां समाश्रित्य यो नरः परिवर्त्तते ।
फलानि तस्य योऽश्नाति सुपक्वानि दिने दिने ॥
फलानान्तु रसेनैव अधर्म्मेण तु पोषितः ।
सुसंपुष्टो भवेन्मर्त्यः पतनाय प्रयच्छति ॥"
इति पाद्मे भूमिखण्डे ११ अध्यायः ॥

**मोहनं**, क्ली, (मुह्यतेऽनेनेति । मुह् + ल्युट् ।)
सुरतम् । इति हेमचन्द्रः । ३ । २०० ॥
यथा, मार्कण्डेये । ५१ । ७७ ।
"प्रविश्य गर्भमत्त्येको भुक्त्वा मोहयतेऽपरा ।
जायन्ते मोहनात्तस्याः सर्व्वमण्डूककच्छपाः ॥")
होममन्त्रौषध्यादिद्वारामुग्धताकरणम् । तत्र
सन्निपत्याट्टहासं तं ताडयामास सायकैः ॥"
मोहकारके, त्रि ॥ यथा, गीतायाम् । १८ । ३९ ।
"यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्य प्रमादोत्थं तत्तामसमुदाहृतम् ॥"
"अत्र मोहनं मोहकरम् ।" इति आनन्द-
गिरिः ॥)

**मोहनभोगः**, पुं, (मोहनश्चासौ भोगश्चेति ।)
समिताशर्क्कराघृतादियुक्तमिष्टान्नविशेषः । इति
पाकराजेश्वरः ॥

**मोहना**, स्त्री, (मोहयति पुष्पेणेति । मुह +
ल्युः । टाप् ।) त्रिपुरमालीपुष्पम् । इति रत्न-
माला ॥ मरुन्माला । इति शब्दमाला ॥

**मोहनी**, स्त्री, (मुह्यत्यनयेति । मुह् + ल्युट् ।
स्त्रियां ङीष् ।) उपोदकी । इति राज-
निर्घण्टः ॥ वटपत्री । इति भावप्रकाशः ॥
(तथास्याः पर्य्यायः ।
"मोहनी मल्लिकाख्या तु वटपत्रा च मोहना ।"
इति वैद्यकरत्नमालायाम् ॥)
माया । यथा, महाभारते । १४ । ८० । ४५ ।
"मया तु मोहनी नाम मायैषा संप्रदर्शिता ॥")

**मोहरात्रिः**, स्त्री, (मोहस्य रात्रिः ।) दैनन्दिन-
प्रलयः । यथा, --
"एवं पञ्चाशदब्दे च गते तु ब्रह्मणो नृप ! ।
दैनन्दिनन्तु प्रलयं वेदेषु परिकीर्त्तितम् ॥
मोहरात्रिश्च सा प्रोक्ता वेदविद्भिः पुरातनैः ।
तत्र सर्व्वे प्रनष्टाश्च चन्द्रार्कादिदिगीश्वराः ॥
आदित्या वसवो रुद्रा मन्विन्द्रा मानवादयः ।
ऋषयो मुनयश्चैव गन्धर्व्वा राक्षसादयः ॥
मार्कण्डेयो लोमशश्च पेचकश्चिरजीविनः ।
इन्द्रद्युम्नश्च नृपतिश्चाकूपारश्च कच्छपः ।
नाडीजङ्घो वकश्चैव सर्व्वे नष्टाश्च तत्र वै ॥
ब्रह्मलोकादधः सर्व्वे लोका नागालयास्तथा ।
ब्रह्मलोकं ययुः सर्व्वे ब्रह्मलोकादधस्तथा ॥
गते दैनन्दिने ब्रह्मा लोकांश्चं ससृजे पुनः ।
एवं शताब्दपर्य्यन्तं परमायुश्च ब्रह्मणः ॥

मोहो मूर्च्छेति तां प्राहुः षड्विधा सा प्रकी-
र्त्तिता ॥”
इति सुश्रुते उत्तरतन्त्रे ४६ अध्याये ॥)
अविद्या । इति मेदिनी । हे, ७ ॥
दुःखम् ।
इति शब्दरत्नावली ॥ देहादिषु आत्मबुद्धिः ।
इति गीतासुबोधिन्यां श्रीधरस्वामी ॥ असौ
ब्रह्मणो बुद्धितो जातः । यथा, --
“बुद्धेर्मोहः समभवदहङ्कारादभून्मदः ।
प्रमोदश्चाभवत् कण्ठान्मृत्युर्लोचनतो नृप ! ॥”
इति मात्स्ये २ अध्यायः ॥
मोहस्वरूपं यथा, --
“मम माता मम पिता ममेयं गृहिणी गृहम् ।
एतदन्यं ममत्वं यत् स मोह इति कीर्त्तितः ॥”
इति पाद्मे क्रियायोगसारे १६ अध्यायः ॥ * ॥
धर्म्मविमूढत्वम् । यथा, --
“अकामतः कृतं पापं वेदाभ्यासेन नश्यति ।
कामतस्तु कृतं मोहात् प्रायश्चित्तैः पृथग्विधै-
रिति ॥”
नन्वत्र मोहादिति को मोहः । अत्र ।
“मोहशब्देन देवेन्द्र ! बुद्धिपूर्ब्बो व्यतिक्रमः ।
उच्यते पण्डितैर्नित्यं पुराणे सांशपायनः ॥”
इति भविष्यपुराणवचनात् जातबुद्धिपूर्ब्बो व्यति-
क्रमो मोहः । इति जिकनः । तन्न कामना-
होमेऽङ्गुलिनियमो यथा, --
“मोहनं वश्यकामश्च प्रीतिसंवर्द्धनं तथा ।
प्रदेशिनीकनिष्ठाभ्यां सर्व्वमेतत् प्रसिध्यति ॥
मोहनाकर्षणञ्चैव क्षोभणोच्चाटनं तथा ।
कनिष्ठामध्यमाङ्गुष्ठसंयोगेन तु लीलया ॥
विधियुक्तेन होमेन तथा द्रव्यानुयोगतः ।
सर्व्वे मन्त्राः प्रसिध्यन्ति मुद्रामन्त्रप्रयोगतः ॥”
इति तन्त्रसारः ॥
(नगरभेदः । यथा, महाभारते । २ । २५३ । ९ ।
“मोहनं पत्तनञ्चैव त्रिपुरां कोशलां तथा ।
एतान् सर्व्वान् विनिर्जित्य करमादाय सर्व्वशः ॥”)

**मोहनः**, पुं, (मोहयतीति । मुह + निच् + ल्युः ।)

धुस्तूरवृक्षः । इति राजनिर्घण्टः ॥ कामदेवस्य
पञ्चबाणान्तर्गतबाणविशेषः । इति त्रिकाण्ड-
शेषः ॥ (यथा, कथासरित्सागरे । ७१ । १३२ ।
“कामस्यैव जगज्जैत्रमोहनास्त्राधिदैवतम् ।
तद्रूपहृतचित्ताभूत् समाधिस्थेव तत्क्षणम् ॥”
नृपविशेषः । यथा, कथासरित्सागरे । ४७ । ६१ ।
“वीक्ष्य प्रलम्बं निहतं मोहनो नाम भूपतिः ।
ब्रह्मणश्च निपातेन महाकल्पो भवेन्नृप ! ।
प्रकीर्त्तिता महारात्रिः सा एव च पुरातनैः ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे । ५४ । ७२ --
७९ ॥ * ॥
मोहः कर्त्तव्याग्रहः स एव रात्रिरिव रात्रि-
र्बुद्धिमोहकत्वान्निद्रारूपा । इदानीन्तनजनानां
रात्रिरिति वा । इति देवीमाहात्म्यटीकायां
विद्याविनोदः ॥ * ॥ जन्माष्टमीरात्रिः । यथा, --
“दीपोत्सवचतुर्द्दश्याममयायोग एव चेत् ।
कालरात्रिर्म्महेशानि ! ताराकालीप्रियङ्करी ।
जन्माष्टमी महेशानि ! मोहरात्रिः प्रकीर्त्तिता ॥
तृतीया माधवे शुक्ला कुलवारर्क्षसंयुता ।
दारुणा कीर्त्तिता देवि ! सर्व्वसिद्धेश्वरी परा ॥”
इति शक्तिसङ्गमतन्त्रम् ॥

**मोहशास्त्रं**, क्ली, (मोहोत्पादकं शास्त्रमिति

मध्यपदलोपिकर्म्मधारयः ।)
अविद्याजनकग्रन्थः ।
यथा, --
“गोपतिं प्राह विप्रेन्द्रानालोक्य भगवान् हरि ।

| | | |
|---|---|---|
| सामर्थ्यदिव बुद्धेर्लब्धत्वात् । उच्यते । शूद्रस्य ब्रह्माणीं मोहाद्गच्छत इत्यादौ मुह वैचित्त्ये इति धात्यर्थानुसारात् अज्ञानमात्रं मोहः । यत्र तु कामनाशब्दोऽस्ति तत्र भविष्यपुराण-सङ्केतितमोहशब्दो न ग्राह्यः । किन्तु घर्म्म- | | |

न वेदवाह्यपुरुषे पुण्यलेशोऽपि शङ्कर ! ॥
सङ्गच्छते महादेव ! धर्म्मो वेदाद्धि निर्ब्बभौ ।
तथापि भक्तबात्सल्याद्रक्षितव्यामहेश्वर ! ॥
अस्माभिः सर्व्व एवेमे गन्तारो नरकानपि ।
अस्माद्वै वेदवाह्यानां रक्षणाय च पापिनाम् ।
विमोहनाय शास्त्राणि करिष्यावो वृषध्वज ! ॥
एवं सम्बोधितो रुद्रो माधवेन मुरारिणा ।
चकार मोहशास्त्राणि केशवोऽपि शिवेरितः ॥
कापालं नाकुलं वामं भैरवं पूर्ब्बपश्चिमम् ।
पञ्चरात्रं पाशुपतं तथान्यानि सहस्रशः ॥"
इति कौर्म्मे १४ अध्यायः ॥

**मोहिनी**, स्त्री, (मोहयति सौन्दर्य्यादिनेति । मुह
+ णिच् + णिनिः । स्त्रियां ङीप् ।) त्रिपुर-
मालीपुष्पम् । इति रत्नमाला ॥ (वटपत्री ।
तत्पर्य्यायो यथा, --
"वटपत्री तु कथिता मोहिनी रेचनी बुधैः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
समुद्रमन्थनकाले देवानाममृतपानायासुराणां
मोहनाय च भगवदवतारविशेषः । यथा, --
"धान्वन्तरं द्वादशमं त्रयोदशममेव च ।
अपाययत् सुरानन्यान् मोहिन्या मोहयन्
स्त्रिया ॥"
इति श्रीभागवते १ स्कन्धे ३ अध्यायः ॥
स्वर्व्वेश्याविशेषः । यस्याः शापात् ब्रह्मणो-
ऽपूज्यत्वं जातम् । यथा, --
"यतो हससि गर्व्वेण ततोऽपूज्यो भवाचिरम् ।
अचिराद्दर्पभङ्गं ते करिष्यति हरिः स्वयम् ॥
निबोध शरणं ब्रह्मन् ! स्वर्व्वेश्यायाश्च
साम्प्रतम् ॥
तवैव कवचं स्तोत्रं मन्त्रं गृह्णाति यो नरः ।
भविता तस्य विघ्नश्च स
यास्यत्युपहास्यताम् ॥
भविता वार्षिकी पूजा देवतानां युगे युगे ।
तव माघ्याञ्च संक्रान्त्यां न भविष्यति सा पुनः
॥
इत्युक्त्वा मोहिनी शीघ्रं जगाम मदनालयम् ।
तेन सार्द्धं रतिं कृत्वा बभूव विज्वरा पुनः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ३३
अध्यायः ॥

"शैले शैले न माणिक्यं मौक्तिकं न गजे
गजे ।
साधवो नहि सर्व्वत्र चन्दनं न वने वने
॥"
तथास्य पर्य्यायः ।
"मौक्तिकं शौक्तिकं मुक्ता तथा
मुक्ताफलञ्च तत् ।
अभावे मौक्तिकस्यापि मुक्ताशुक्तिं
प्रयोजयेत् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये
भागे ॥)

**मौक्तिकतण्डुलः**, पुं, (मौक्तिकमिव शुक्लः तण्डुलो-
ऽस्य ।) धवलयावनालः । इति
राजनिर्घण्टः ॥

**मौक्तिकप्रसवा**, स्त्री, (मौक्तिकस्य प्रसवा ।)
शुक्तिः । इति राजनिर्घण्टः ॥

**मौक्तिकशुक्तिः**, स्त्री, (मौक्तिकानां शुक्तिः ।)
शुक्तिः । इति राजनिर्घण्टः ॥ मुक्तार
झिनुक्
इति भाषा ॥

**मौखं**, क्ली, (मुखस्येदमिति । मुख + अण् ।)
मुखसम्बन्धाधीनपापम् । तत्तु
अभक्ष्यभक्षणरूपं
तत्र क्लीवम् । संसर्गरूपस्य तस्य
प्रायश्चित्तं
यथा । सुमन्तुः । यश्च
तैर्यौनमौखश्रौवाणां
सम्बन्धानामन्यतमेन सह
सम्पर्क्कमियात् तस्या-
प्येतदेव प्रायश्चित्तं विदध्यात् । इयात्
कुर्य्यात् ।
एतदेवेति द्वादशवार्षिकमित्यर्थः । अत्र
याज-
नादीनामन्यतमेन संवत्सरेण
पततीत्यवगम्यते ।

मौञ्जीबन्धः शुभः प्रोक्तश्चैत्रे मीनगते रवौ
॥"
इति ज्योतिर्निबन्धे नारदवचनम् ॥

**मौढ्यं**, क्ली, (मूढस्य भावःकर्म्म वा । मूढ + "गुण-
वचनब्राह्मणादीभ्यःकर्म्मणि च ।" ५ । १
। १२४ ।
इति ष्यञ् ।) मोहः । इति हेमचन्द्रः । २ ।
२३४ ॥
(यथा, श्रीमद्भागवते । ३ । २९ । २२ ।
"योमां सर्व्वेषु भूतेषु
सन्तमात्मानमीश्वरम् ।
हित्वार्च्चां भजते मौढ्याद्भस्मन्येव
जुहोति सः ॥"
पुं, मूढस्यापत्यम् । मूढ + "कुर्व्वादिभ्यो
ण्यः ।"
४ । १ । १५१ । इति ण्यः । मूढपुत्त्रः ।
इति
व्याकरणम् ॥)

**मौद्गलिः**, पुं, काकः । इति त्रिकाण्डशेषः ॥

**मौद्गल्यः**, पुं, (मुद्गलस्यापत्यमिति । मुद्गल + ष्यञ् ।)
मुद्गलमुनिपुत्त्रः । स च गोत्रकारकः ।
अस्य
पञ्च प्रवराः यथा ।
और्व्वच्यवनभार्गवजाम-
दग्न्याप्नुवन्तः । इति कुलदीपिका ॥
(यथा,
हरिवंशे । ३२ । ७० ।
"मुद्गलस्य तु दायादो मौद्गल्यः
सुमहायशाः ॥)

**मौद्गीनं**, क्ली, (मुद्गानां भवनं क्षेत्रमिति । मुद्ग +
"धान्यानां भवने क्षेत्रे खञ् ।" ५ । २ । १
।
इति खञ् ।) मुद्गभवोचितक्षेत्रम् ।
इत्यमरः ।
२ । ९ । ८ ॥

**मौनं**, क्ली, (मुनेर्भाव इति । मुनि + अण् ।) शब्द-

विस्तरस्तु ब्रह्मन्शब्दे द्रष्टव्यः ॥ (मोहकर्त्तरि त्रि । यथा, भागवते । ३ । ६ । ३५ ।
"अतो भागवती माया मायिनानपि मोहिनी ।
यत् स्वयञ्चात्मवर्त्मात्मा न वेद किमुतापरे ॥")

**मौकुलिः**, पुं, काकः । इति हेमचन्द्रः । ४ । ३८८ ॥

(यथा, उत्तररामचरिते २ अङ्के ।
"कूजत्कुञ्जकुटीरकौशिकघटाघुत्कारवत् कीचक-
स्तम्बाडम्बरमूकमौकुलिकुलः क्रौञ्चावतोऽयं गिरिः ।
एतस्मिन् प्रचलाकिनां प्रचलतामुद्वेजिताः कूजितै-
रुद्वेल्लन्ति पुराणचन्दनतरुस्कन्धेषु कुम्भी-नसाः ॥")

**मौक्तिकं**, क्ली, (मुक्तेव । मुक्ता + "विनयादिभ्य-

ष्ठक् ।" ५ । ४ । ३४ । इति ठक् ।) मुक्ता । इत्यमरः । २ । ९ । ९२ ॥ (यथा, चाणक्यशतके । ५५ ।

इति शूलपाणिकृतप्रायश्चित्तविवेकः ॥ मुख-
सम्बन्धिनि, त्रि ॥

**मौखर्य्यं**, क्ली, मुखरत्वत् । मुखरस्य भाव इत्यर्थे

ष्णयप्रत्ययेन निष्पन्नम् ॥

**मौखिकं**, त्रि, मुखसम्बन्धि । सुखस्येदमित्यर्थे ष्णिक्

(ठक्) प्रत्ययेन निष्पन्नम् ॥

**मौञ्जी**, स्त्री, (मुञ्जस्येयमिति । मुञ्ज + अण् ।

स्त्रियां ङीप् ।) मुञ्जनिर्म्मितमेखला ॥ (यथा,
शिशुपालवधे । १ । ६ ।
"पिशङ्गमौञ्जीयुजमर्ज्जुनच्छविं
वसानमेणाजिनमञ्जनद्युति ।
सुवर्णसूत्राकलिताम्बराधरां
विडम्बयन्तं शितिवाससस्तनुम् ॥"
"मुञ्जस्तृणविशेषस्तन्मयीमेखला मौञ्जी ।" इति
तट्टीकायां मल्लीनाथः ॥) यथा, --
"विप्रस्य क्षत्त्रियस्यापि मौञ्जी स्याद्दक्षिणायने ।
दक्षिणे च विशां कार्य्यं नानध्याये न संक्रमे ॥"
मनुः ।
"मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्य्या विप्रस्य
मेखला ।
क्षत्त्रियस्य च मौर्व्वी ज्यावैश्यस्य शणतान्तवी ॥
मुञ्जालाभे तु कर्त्तव्या कुशाश्मन्तकवल्वजैः ।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा ॥"
इति संस्कारतत्त्वम् ॥

**मौञ्जीतृणाख्यः**, पुं, (मौञ्जीतृणमित्याख्यास्य ।)

मुञ्जः । इति राजनिर्घण्टः ॥

**मौञ्जीपत्रा**, स्त्री, (मौञ्जीपत्रमिव पत्रमस्याः ।)

वल्वजा । इति राजनिर्घण्टः ॥

प्रयोगराहित्यम् ॥ तत्पर्य्यायः ।
अभाषणम् २ ।
तूष्णीम् ३ तूष्णीकाम् ४ । इत्यमरः । २ । ७ । ३६ ॥
(यथा, रघुवंशे । १ । २२ ।
"ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्य्ययः ।
गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव ॥")
कर्म्मविशेषे मौनाचरणं यथा, --
"उच्चारे मैथुने चैव प्रस्रावे दन्तधावने ।
स्नाने भोजनकाले च षट्सु मौनं समाचरेत् ॥"
इति तिथ्यादितत्त्वम् ॥

**मौनी**, [न्] पुं, (मौनमस्यास्तीति । मौन + "अत

इनिठनौ ।" ५ । २ । ११५ । इति इनिः ।) मुनिः ।
इति जटाधरः ॥ (यथा, मार्कण्डेये । ७५ । ३९ ।
"ततः स चिन्तथामास राजा जामातृकारणम् ।
विवेद च न तन्मौनी जगृहेऽर्घञ्च तं नृपः ॥")
मौनयुक्ते, त्रि । यथा, --
"सिनीवाली कुहूर्व्वापि यदि सोमदिने भवेत् ।
गोसहस्रफलं दद्यात् स्नानं यन्मौनिना कृतम् ॥
एतच्च मौनमरुणोदयमारभ्य स्नानपर्य्यन्तं कार्य्यं
न तु स्नानकालमात्रे ।" इति तिथ्यादितत्त्वम् ॥

**मौनेयः**, पुं, (मुनेरपत्यं पुमान् । मुनि + "इत

श्चानिञ् ।" ४ । १ । १२२ । इति ढक् ।) गन्धर्व्व-
गणविशेषः । यथा, --
"गन्धर्व्वाप्सरसः पुण्या मौनेयांस्तु निबोधत ।
चित्रसेनोग्रसेनौ तु ऊर्णायुरनिधस्तथा ॥

| | **मौञ्जीबन्धः**, पुं, (मौञ्ज्या बन्धः बन्धनम् ।) मुञ्ज-<br>मेखलाबन्धनम् । उपनयनमिति यावत् । यथा,<br>"जन्मभादष्टमे सिंहे नीचस्थे शत्रुभे गुरौ । | धृतराष्ट्रस्तथोमांश्च सूर्य्यवर्च्चास्तथैव च ।<br>युगतत्तृणपत्कार्ष्णो निदिश्चित्ररथस्तथा ॥<br>त्रयोदशः शालिशिराः पर्य्यण्यश्च चतुर्द्दशः ।<br>इत्येते देवगन्धर्व्वाश्चतुस्त्रिंशच्छुभाप्सराः ॥"<br>इति वह्निपुराणम् ॥ |
|---|---|---|

(अप्सरोभेदे, स्त्री । यथा, हरिवंशे । २१८ । ४७ ।
"काश्या शारद्वती चैव
मौनेयाप्सरसः स्मृताः ॥")

**मौरजिकः**, त्रि, (मुरजस्तद्वादनं शिल्पमस्य ।
मुरज + "शिल्पम् ।" ४ । ४ । ५५ । इति ठक् ।)
मुरजवादकः । इत्यमरः । २ । १० । १३ ॥

**मौर्ख्यं**, क्ली, (मूर्खस्य भावः । मूर्ख + "वर्णदृढा-
दिभ्यः ष्यञ् च ।" ५ । १ । १२३ । इति ष्यञ् ।)
जाड्यम् । इति हेमचन्द्रः । २ । २२६ ॥ (यथा,
सुश्रुते शारीरस्थाने ४ अः ।
"अनवस्थितता मौर्ख्यं भीरुत्वं
सलिलार्थिता ॥")

**मौर्व्वी**, स्त्री, (मूर्व्वाया विकारः । मूर्व्वा + "अव-
यवे च प्राण्यौषधिवृक्षेभ्यः ।" ४ । ३ । १३५ ।
इति अण् । ङीप् ।) धनुर्गुणः । इत्यमरः ।
२ । ८ । ८५ । (यथा, रघुः । १ । १९ ।
"शास्त्रेष्वकुण्ठिता बुद्धिर्मौर्व्वी
धनुषि चातता ॥"
अजशृङ्गी । इति रत्नमाला ॥ काँगा इति
भाषा ॥ (मूर्व्वामयी । यथा, पनौ । २ । ४२ ।
"मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्य्या विप्रस्य
मेखला ।
क्षत्त्रियस्य तु मौर्व्वी ज्या वैश्यस्य शणता-
न्तवी ॥")

"भालनयनेऽग्निरिन्दुर्मौलौ गात्रे भुजङ्गमणि-
दीपाः ॥"
प्रधानः । यथा, मार्कण्डेये । ५९ । १४ ।
"मौलयस्ते महाकायाः शाकपोतकरम्भकाः
॥")

**मौलिः**, पुं, (मूलस्यादूरभवः । मूल + सुतङ्ग-
मादित्वादिञ् ।) अशोकवृक्षः । इति मेदिनी
॥

**मौलिः**, स्त्री, (मूले जाता । मूल + इञ् ।)
भूमिः । इति मेदिनी ॥

**मौलिकः**, पुं, (मूले आद्ये जातः । मूल + ठञ् ।)
कुलीनभिन्नः । यथा राढीयवारेन्द्रब्राह्मणस्य
श्रोत्रियः तथा कायस्थस्य मौलिकः । एवं दाक्षि-
णात्यवैदिकब्राह्मणस्य अन्यपूर्ब्बापरिणेतापि तत्-
पदवाच्यः । वङ्गजकायस्थस्य स च मध्यन्यशब्द-
वाच्यः । यथा । अथ मध्यन्यलक्षणमाह ।
मध्यन्यशब्दो रूढ इत्यन्यः ।
डित्थडवित्थवत् ।
मध्यन्यः कुलमध्यस्थकुलीनस्य विश्रामस्थल-
मित्यर्थः । मध्यन्यशब्दस्य लक्षणान्तरम् । कुली-
नेतरसिद्धवंशजातकत्वे सति दशपुरुषावधि
अनवच्छिन्नकुलार्च्चनत्वं मध्यन्यत्वम् । स च
द्विविधः । सिद्धः साध्यश्च । सिद्धत्वं प्रकृत-
मध्यन्यत्वम् । प्रकृतसिद्धवंशजातत्वे सति दश-
पुरुषावधिकुलार्च्चकत्वं सिद्धत्वम् । सिद्धपदा-
काङ्क्षित्वे सति दशपुरुषावधिकुलार्च्चकत्वं साध्य-
त्वम् । अस्य प्रशंसामाह ।
"कुलीनकुलरक्षार्थं विवादेषु मीमांसया ।
खामः क्षोमो घर वै ओषः
वीदस्तेजश्चार्णव आशः ।
शक्तिर्भूतो ब्रह्मो शानः
क्षेमो हेमो बर्द्धन रङ्गः ।
गुइः कीर्त्तिर्यशः कुण्डो
नन्दी शीलो धनुर्गुणः ॥"
इति द्विसप्ततिमौलिकाः ॥ * ॥
अन्यच्च ।
"देवो भूदेवभक्तो गुहसदृशगुणो दास ईशानदासः
सेनो दत्तः सुदत्तामहितजनचयःपालितो धर्म्मपालः ।
सिंहः सिंहप्रतापः क्षितिनिकरकरादानदक्षः करोऽसौ
गौडेऽष्टौ संस्थितास्ते गुणगणनिपुणा मौलिक-
त्वेन सिद्धाः ॥ * ॥
होडबाणधरणीखिलसोमा
भुञ्जबिन्दगुहराजराह्नुताः ।
रुद्रपालबलसामरक्षिता
लोधशर्म्मभुँयिवर्म्मबन्धराः ॥
चन्द्रशाँयिगुयिभद्रपैसुरा
गण्डगुप्तघरकीर्त्तिवर्द्धनाः ।
क्षेमहेमगणनाथविष्णवो
ब्रह्मरङ्गपिलहुइधनुर्गुणाः ॥
तेजोऽर्णवस्वरधरायिच शक्तिभूताः
क्षोमौष शान विदशील यशोम नन्दी ।
दाहाङ्कुरेन्द्रशुभकुण्डमनोपमाना
दानाशगूतविदिता भुवि कीर्त्तिमन्तः ॥
हेशादित्यौ राण राहा साना च खामक-
स्तथा ।
द्विसप्ततिमिताः साध्या मौलिका विदिताः
क्षितौ ॥"
इति कुलाचार्य्यकारिका ॥ * ॥
(देशविशेषः । यथा, मार्कण्डेये । ५७ । ४८ ।
"पौरिका मौलिकाश्चैव अश्मका भोग-
वर्द्धनाः ॥")
त्रि, मूलसम्बन्धिनि मौलसम्बन्धिनि च ॥ (भार-
भूतं मूलं हरति वहत्यावहति वा । मूल +

**मौलः**, पुं, (मूलं वेदेति । मूल + अण् ।) भूम्यादे-
र्मूलज्ञाता । मोडल् इति भाषा ।
यथा, --
"यत् परम्परया मौलाः सामन्ताः
स्वामिनं
विदुः ।
तदन्वयस्यागतस्य दातव्या
गोत्रजैर्म्मही ॥"
इति दायतत्त्वम् ॥
तस्य लक्षणं यथा, --
"ये तत्र पूर्ब्बं सामन्ताः
पश्चाद्देशान्तरं गताः ।
तन्मूलत्वात्तु ते मौला ऋषिभिः
परिकीर्त्तिताः ॥"
इति मिताक्षरा ॥
(विजिगीष्वरिमध्योदासीनः। यथा,
कामन्द-
कीये । ८ । ३४ ।
"चत्वारः पार्थिवा मौलाः पृथङ्मित्रैः
सहा-
ष्टकम् ॥"
मूलभूते, त्रि । यथा, तत्रैव । ८ ।
२५ ।
"मौला द्वादश यास्त्वेता
ह्यमात्याद्यास्तथा च याः ।
सप्ततिश्चाधिका ह्यताः सर्व्वं
प्रकृतिमण्डलम् ॥")

**मौलिः**, पुं, स्त्री, (मूल + सुतङ्गमादित्वात् इञ् ।)
चूडा । (यथा, महाभारते । ९ ।
५९ । ५ ।
"एवमुक्त्वा स वामेन पदा
मौलिमुपास्पृशत् ॥
शिरश्च राजसिंहस्य पादेन
समलोडयेत् ॥")
किरीटम् । (यथा, हरिवंशे । ९७ ।
३० ।
"इयञ्च सा मया मौलिरुद्धृता
वरुणालयात् ॥")
एतेषां गुणमाश्रित्य मध्यन्यः कुलमुत्तमम् ॥"
इति कुलदीपिका ॥ * ॥
दक्षिणराढीयकायस्थस्याष्टसन्मौलिका
यथा, --
"गौडेऽष्टौ कीर्त्तिमन्तश्चिरवसतिकृता
मौलिका
ये हि सिद्धा-
स्ते दत्ताः सेनदासाः
करगुहसहिताःपालिताः
सिंहदेवाः ।
ये वा पद्माभिमुख्याः स्थितिविनययुषः
सप्ततिस्ते
द्विपूर्ब्बा
मित्राद्या वीक्ष्य राज्ञा चरणगुणयुता मौलिक-
त्वेन साध्याः ॥"
अपि च ।
"सेनो दत्तः करो ज्ञेयो दासो देवः प्रतिष्ठितः
।
पालितः सिंहधर्म्मज्ञो गुहः सन्मौलिकाः
स्मृताः ॥" * ॥
द्विसप्ततिसाध्यमौलिकायथा, --
"होडः स्वरधरधरणी बाण
आयिच सोमः पैसुर सामः ।
भञ्जो विन्दो गुह बल लोघः
शर्म्मा वर्म्मा हुइ भूँयि चन्द्रः ॥
रुद्रो रक्षित राजादित्यो
विष्णुर्नागः खिल पिल गूतः ।
इन्द्रो गुप्तः पालो भद्र
ओमश्चाङ्कुर बन्धुर नाथः ॥
शाँयिर्हेशो मानो गण्डो
राहा राणा राहुत साना ।
दाहा दाना गण उपमाना ॥
"तद्धरति वहत्यावहति भारात् वंशादिभ्यः ।"
५ । १ । ५० । इति ठञ् । मूलभारहारके
मूलभार-
वाहके मूलभारानेतरि च । इति व्याकरणम् ॥)

**मौषलं**, क्ली, (मूषलमिव । मूषलस्येदमिति वा ।
मूषल + अण् ।) मूषलवत् । यथा, --
"गङ्गायां मौषलं स्नानं महापातकनाश-
नम् ।"
इति प्रायश्चित्ततत्त्वधृतभविष्यपुराणवचनम्॥
महाभारतस्याष्टादशपर्व्वान्तर्गतपर्व्वविशेषः ।
यथा, --
"मौषलं पर्व्व चोद्दिष्टं ततो घोरं सुदारुणम् ।
महाप्रस्थानिकं पर्व्व स्वर्गारोहणिकं ततः ॥"
इति महाभारते आदिपर्व्व ॥
मुषलसम्बन्धिनि, त्रि ॥

| | | |
|---|---|---|
| संयतकेशः । इत्यमरः । ३ । ३ । १९२ । (यथा, रघौ । ७ । ६६ । “स चापकोटीनिहितैकबाहुः शिरस्त्रनिष्कर्षणभिन्नमौलिः । ललाटबद्धश्रमवारिविन्दुः भीतां प्रियामेत्य वचो बभाषे ॥”) मस्तकम् । इति हेमचन्द्रः । ३ । २ । २३० ॥ (यथा, आर्य्यासप्तशत्याम् । ४२४ । | | |

**मौष्टा**, स्त्री, मुष्टिप्रहरणक्रीडा । इत्यमरः । ३ । ५ । ५ ॥

"मुष्टिप्रहरणं अस्यां क्रीडायां मौष्टा ष्णः (अण्)
णित्त्वे व्रिरिति वृद्धिः ययोर्लप इति इकार-
लोपः । स्त्रियामत इत्याप् ।" इति तट्टीकायां
भरतः ॥

**मौहूर्त्तः**, पुं, (मूहूर्त्तं अधीते वेद वा । मुहूर्त्त +

"तदधीते तद्वेद ।" ४ । २ । ५० । इत्यण् ।)
ज्योतिर्व्वेत्ता । इत्यमरः । २ । ८ । १४ ॥ (यथा,
महाभारते । १२ । १२१ । ४६ ।
"भिक्षुकाः प्राड्विवाकाश्च मौहूर्त्ता दैव-
चिन्तकाः ॥")

**मौहूर्त्तिकः**, पुं, (मुहूर्त्तं तद्बोधकं शास्त्रमधीते

वेद वा । मूहूर्त्त +
"क्रतूक्थादिसूत्रान्तात्
ठक् ।" ४ । २ । ६० । इति ठक् ।)
ज्योतिर्व्वेत्ता ।
इत्यमरः । २ । ८ । १४ ॥ (यथा, कथासरित्-
सागरे । २२ । १३३ ।
"ततो
मौहूर्त्तिकादेशादन्येद्युर्व्वरकन्यका ।
सा मया परिणीता
भून्मिलिताखिलबन्धुना ॥"
दक्षकन्यामुहूर्त्तोद्भवदेवगणविशेषः ।
यथा, भाग-
वते । ६ । ६ । ९ ।
"मौहूर्त्तिका देवगणा मुहूर्त्तायाश्च
जज्ञिरे ॥"
मुहूर्त्तोद्भवे, त्रि । यथा, भागवते । ५ ।
१३ । २२ ।
"मौहूर्त्तिकाद्यस्य समागमाच्च मे
दुस्तर्कमूलोऽपहतोऽविवेकः ॥")

इति ऋकारस्य रादेशः । "टेः ।" ६ । ४ ।
१५५ ।
इति टेर्लोपः ।) मृदुता । यथा, राजतरङ्गि-
ण्याम् । ८ । ५६६ ।
"म्रदिम्ना पापिनस्तस्य नाज्ञायि क्रूरता जनैः
।
मधुरिम्नी विषस्येव शक्तिः प्राणापहारिणी
॥")

**म्रदिष्ठः**, त्रि, अतिशयमृदुः । मृदुशब्दादिष्ठप्रत्य-

येन निष्पन्नः ॥

**म्रदीयान्** [स्] त्रि, अतिशयमृदुः । मृदुशब्दा-

दीयसुप्रत्ययेन निष्पन्नः ॥

**म्रातनं**, क्ली, कैवर्त्तीमुस्तकम् । इति शब्दचन्द्रिका ॥

**म्रुच**, उ इर् गत्याम् । इति कविकल्पद्रुमः ॥

(भ्वा०-पर०-सक०-सेट् । क्त्वावेट् ।) उ,
म्रोचित्वा
म्रोक्त्वा । इर्, अम्रुचत् अम्रोचीत् । इति दुर्गा-
दासः ॥

**म्रुन्च**, उ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) उ, म्रुञ्चित्वा म्रुक्त्वा ।
इति
दुर्गादासः ॥

**म्रेट**, ऋ उन्मादे । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-अक०-सेट् ।) ऋ, अमिम्रेटत् । म्रेटति
लोकः उन्माद्यतीत्यर्थः । इति दुर्गादासः ॥

**म्रेड**, ऋ उन्मादे । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-अक०-सेट् ।) ऋ, अमिम्रेडत् । म्रेडति
लोक उन्माद्यतीत्यर्थः । इति दुर्गादासः ॥

**म्लक्तं**, क्ली, (म्लच् + क्तः ।) चोरितम् ॥ यथा, --

"चोरितं मुषितं म्लक्तं प्रतीतन्तु प्रतीच्छितम्
॥"
इति भूरिप्रयोगः ॥

**म्लानं**, त्रि, (म्ल हर्षक्षये + क्तः । "संयोगादेरातो-

**म्लिष्टः**, त्रि, (म्लेच्छ + क्तः ।) अव्यक्तवाक् । म्लानः ।

इति मेदिनी । टे, २५ ॥

**म्लुच**, उ इर् गत्याम् । इति कविकल्पद्रुमः ॥

(भ्वा०-पर०-सक०-सेट् ।) उ, म्लोचित्वा
म्लुक्त्वा ।
इर्, अम्लु चत् अम्लोचीत् । इति
दुर्गादासः ॥

**म्लेच्छ**, कि देश्योक्तौ । इति कविकल्पद्रुमः ॥ (चुरा०-

वा भ्वा०-पर०-अक०-सक० च-सेट् ।)
देश्या
ग्राम्या
उक्तिर्देश्योक्तिरसंस्कृतकथनमित्यर्थः ।
कि, म्लेच्छयति म्लेच्छति मूढः ।
अन्तर्विद्यामसौ
विद्वान्न म्लेच्छति धृतव्रत इति हलायुधः ॥
अनेकार्थत्वादव्यक्तशब्देऽपि । तथा चामरः
।
अथ म्लिष्टमविस्पष्टमिति । म्लेच्छ
व्यक्तायां वाचि
इति प्राञ्चः । तत्र रमानाथस्तु । म्लेच्छति
वटु-
र्व्यक्तं वदतीत्यर्थः । अव्यक्तायामिति पाठे
कुत्-
सितायां वाचीत्यर्थः ।
'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट्
प्रकीर्त्तिताः ॥'
इति भाष्यवचनेन नञोऽप्राशस्त्यार्थत्वात्
इति
व्याख्यानाय हलायुधोक्तमुदाहृतवान् ।
इति
दुर्गादासः ॥

**म्लेच्छं**, क्ली, (म्लेच्छस्तद्देशः उत्पत्तिस्थानत्वेना-

स्त्यस्य । अर्शआद्यच् ।) हिङ्गुलम् । इति
राजनिर्घण्टः ॥ (तथास्य पर्य्यायः ।

**म्रा**, अभ्यासे । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-अनिट् ।) अभ्यासः पौनःपुन्येनानु-
शीलनम् । मनति सन्ध्यां ब्राह्मणः । इति दुर्गा-
दासः ॥

**म्रक्ष**, संघाते । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

सक०-सेट् ।) रेफयुक्तादिः । म्रक्षति पयसा
शक्तून् लोकः । इति दुर्गादासः ॥

**म्रक्ष**, क म्रक्षणे । स्नेहने । इति कविकल्पद्रुमः ॥

(चुरा०-पर०-सक०-सेट् ।) रेफयुक्तादिः ।
म्रक्षणं द्रव्यस्य द्रव्यान्तरेण योजनम् । क, म्रक्ष-
यति घृतेनान्नं लोकः । इति दुर्गादासः ॥

**म्रक्षः**, पुं, (म्रक्ष + घञ् ।) स्वदोषगूहनम् ।

इति त्रिकाण्डशेषः ॥ म्रक्षणञ्च ॥ (वधः । यथा,
ऋग्वेदे । ८ । ५० । १० ।
"उग्रबाहुर्म्रक्षकृत्वा पुरन्दरो यदिमे शृणवद्ध-
वम् ।"
"म्रक्षकृत्वा वधकर्त्ता ।" इति तद्भाष्ये सायणः ॥)

**म्रक्षणं**, क्ली, (म्रक्ष + कर्म्मणि ल्युट् ।) तैलम् ।

इति हेमचन्द्रः । ३ । ८१ ॥ द्रव्यस्य द्रव्यान्तरेण
संयोजनम् । स्नेहनम् । राशीकरणम् । इति
म्रक्षधातोभर्व्वेनट् प्रत्ययेन निष्पन्नम् ॥

**म्रद**, म ष ङ क्षोदे । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-सक०-सेट् ।) रेफयुक्तः । क्षोदश्चूर्णी-
करणम् । म, म्रदयति । ष, म्रदा । ङ, म्रदते

र्यण्वतः ।" ८ । २ । ४३ । इति निष्ठातस्य नः ।)
मलिनम् । यथा, --
"मलिनं कच्चरं म्लानं कश्मलञ्च मलीमसम् ॥"
इति हेमचन्द्रः ॥
(यथा, मार्कण्डेये । ६२ । १६ ।
"स चिन्तयामास तदा किं न्वेषा गजगामिनी ।
निश्वासपवनम्लाना गिरावत्र वरूथिनी ॥")
दुर्बलम् । (यथा, --
"अन्तेषु शूणं परिहीनमध्यं
म्लानन्तथान्तेषु च मध्यशूणम् ॥"
इति माधवकृतरुग्विनिश्चयस्य पाण्डुरोगव्या-
ख्याने विजयेनोक्तम् ॥ (म्लै + भावे क्तः ।
ग्लानिः ।
यथा, मार्कण्डेये । ३५ । २४ ।
"रथ्यावसषणस्नानक्षुत्पानम्लानकर्म्मसु ।
आचामेच्च यथान्यायं वासो विपरिधाय च ॥")

**म्लानिः**, स्त्री, (म्लै + निः । स च नित् । इत्युज्ज्वल-

दत्तः । ४ । ५१ ।) कान्तिक्षयः । यथा, देवी-
भागवते । १ । ९ । १८ ।
"प्रेक्षकस्तु तदा ब्रह्मा देवी चैवान्तरीक्षगा ॥
न मम्लतुस्तदा तौ तु विष्णुस्तु म्लानिमाप्त-
वान् ॥")

**म्लिष्टं**, क्ली, (म्लेच्छ + क्तः + "क्षुब्धस्वान्तध्वान्तलग्न-

म्लिष्टविरिब्धेत्यादि ।" ७ । २ । १८ । इति
निपातितम् ।) अस्पष्टवाक्यम् । तत्पर्य्यायः ।
अविस्पष्टम् २ । इत्यमरः । १ । ६ । २१ ॥

"हिङ्गुलन्दरदं म्लेच्छमिङ्गुलञ्चूर्णपारदम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**म्लेच्छः**, पुं, (म्लेच्छयति वा म्लेच्छति असंस्कृतं

वदतीति । म्लेच्छ + अच् ।) किरातशवरपुलि-
न्दादिजातिः । इत्यमरः ॥ पामरभेदः । पाप-
रक्तः । अपभाषणम् । इति मेदिनी । छे, ६ ॥
म्लेच्छादीनां सर्व्वधर्म्मराहित्यमुक्तं यथा, हरि-
वंशे । १४ । १५ -- १९ ।
"सगरः स्वां प्रतिज्ञाञ्च गुरोर्व्वाक्यं निशम्य च ।
धर्म्मं जघान तेषां वै वेशान्यत्वं चकार ह ॥
अर्द्धं शकानां शिरसो मुण्डयित्वा व्यसर्जयत् ।
जवनानां शिरः सर्व्वं काम्बोजानान्तथैव च ॥
पारदा मुक्तकेशाश्च पह्लवाः श्मश्रुधारिणः ।
निःस्वाध्यायवषट्काराःकृतास्तेन महात्मना ॥
शका जवनकाम्बोजाः पारदाः पह्लवास्तथा ।
कोलसर्प्याः समहिषा दार्व्वाश्चोलाः सकेरलाः ।
सर्व्वे ते क्षत्त्रियास्तात धर्म्मस्तेषां निराकृतः ॥
वशिष्ठवचनाद्राजन् सगरेण महात्मना ॥"
शकानां शकदेशोद्भवानां क्षत्त्रियाणाम् । एवं
जवनादीनामिति । अत्र जवनशब्दस्तद्देशोद्भव-
वाची चवर्गतृतीयादिः । जवनो देशवेगिनो-
रिति त्रिकाण्डशेषाभिधानदर्शनात् ॥ * ॥ तेषां
म्लेच्छत्वमप्युक्तं विष्णुपुराणे । तथाकृतान् जवना-
दीनुपक्रम्य ते चात्मधर्म्मपरित्यागात् म्लेच्छत्वं

| | | |
|---|---|---|
| कानन दन्ती । इति दुर्गादासः ॥<br>**म्रदिमा**, [न्] पुं, (मृदोर्भावः । मृदु + "पृथ्वा-<br>दिभ्य इमनिज्वा ।" ५ । १ । १२२ । इति इम-<br>णिच् । "र ऋतो हलादेर्लघोः ।" ६ । ४ । १६१ । | | ययुरिति । बौधायनः ।<br>"गोमांसखादको यश्च विरुद्धं बहु भाषते ।<br>सर्व्वाचारविहीनश्चम्लेच्छ इत्यभिधीयते ॥"<br>इति प्रायश्चित्ततत्त्वम् ॥ * ॥<br>अपिच । देवयान्यां ययातेर्द्वौ पुत्त्रौ यदुः<br>तुर्व्वसुश्च । |

शर्म्मिष्ठायां त्रयः पुत्राः द्रुह्युः अनुः पुरुश्च । तत्र यदुप्रभृतयश्चत्वारः पितुराज्ञाहेलनं कृत-
वन्तः पित्रा शप्ताः । ज्येष्ठपुत्त्रं यदुं शशाप तव वंशे राजा चक्रवर्त्ती मा भूदिति । तुर्व्वसु-
द्रुह्य्वनून् शशाप युष्माकं वंश्या वेदवाह्या म्लेच्छा
भविष्यन्ति । इति श्रीभागवतमतम् ॥ * ॥
("असृजत् पह्लवान् पुच्छात् प्रस्रावाद्द्राविडान् शकान् ।
योनिदेशाच्च यवनान् शकृतः शवरान् बहून् ॥
मूत्रतश्चासृजत् काञ्चीञ्छरभांश्चैव पार्श्वतः
पौण्ड्रान् किरातान् यवनान् सिंहलान् वर्व्वरान् खशान् ॥
चियुकांश्च पुलिन्दांश्च चीनान् हूनान् सके-
रलान् ।
ससर्ज्ज फेनतः सा गौर्म्लेच्छान् बहुविधानपि ॥"
सा वशिष्ठस्य धेनुः । इति महाभारते । १ । १७६ ।
३५ -- ३७ ॥) अन्यच्च । "शकजवनकाम्बोज-
पारदपह्लवा हन्यमानास्तत्कुलगुरुं वशिष्ठं शरणं ययुः । अथैतान् वशिष्ठो जीवन्मृतकान्
कृत्वा सगरमाह । वत्स वत्सालमेभिर्जीवन्मृत-
कैरनुसृतैः । एते च मयैव त्वत्प्रतिज्ञापालनाय निजधर्म्मद्विजसङ्गपरित्यागं कारिताः । स
तथेति तद्गुरुवचनमभिनन्द्य तेषां वेशान्य-
त्वमकारयत् ।
जवनान्मुण्डितशिरसोऽर्द्धमुण्डान्
शकान् प्रलम्बकेशान् पारदान् पह्लवांश्च श्मश्रु-
धरान्निःस्वाध्यायवषट्कारान्तानन्यांश्च क्षत्त्रि-
यांश्चकार । ते चात्मधर्म्मपरित्यागाद्ब्राह्मणैश्च
परित्यक्ता म्लेच्छतां ययुः ।" इति विष्णुपुराणे । ४ ।
३ । १८ -- २१ ॥ * ॥ प्रकारान्तरेण तस्योत्-
पत्तिर्यया, --
सूत उवाच ।
"वंशे स्वायम्भुवस्यासीदङ्गो नाम प्रजापतिः ।
मृत्योस्तु दुहिता तेन परिणीतातिदुर्म्मुखी ॥
तस्य मध्यमा तामसी गतिर्यथा, मानवे । १२ । ४३ ।
"हस्तिनश्च तुरङ्गाश्च शूद्रा म्लेच्छाश्च गर्हिताः ।
सिंहा व्याघ्रा वराहाश्च मध्यमा तामसी गतिः ॥"
(मन्त्रणाकाले म्लेच्छापसारणमुक्तं यथा, मनु-
संहितायाम् । ७ । १४९ ।
"जडमूकान्धवधिरांस्तैर्य्यग्योनान् वयोऽति-
गान् ।
स्त्रीम्लेच्छव्याधितव्यङ्गान् मन्त्रकालेऽपसार-
येत् ॥"
"अथवा एवंविधा मन्त्रिणो न कर्त्तव्याः । बुद्धि-
विभ्रमसम्भवात् ।" इति तद्भाष्ये मेधातिथिः ॥
म्लेच्छानां पशुधर्म्मित्वम् । यथा, महाभारते । १ ।
८४ । १५ ।
"गुरुदारप्रसक्तेषु तिर्य्यग्योनिगतेषु च ।
पशुधर्म्मिषु पापेषु म्लेच्छेषु त्वं भविष्यसि ॥")

**म्लेच्छकन्दः**, पुं, (म्लेच्छप्रियः कन्द इति मध्यपद
लोपी कर्म्मधारयः ।) लशुनम् । इति राज-
निर्घण्टः ॥ (तस्य पर्य्यायो यथा, --
"लशुनस्तु रसोनः स्यादुग्रगन्धो महौषधम् ।
अरिष्टो म्लेच्छकन्दश्च पवनेष्टो रसोनकः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**म्लेच्छजातिः**, स्त्री, (म्लेच्छस्य जातिरिति षष्ठी-
तत्पुरुषः म्लेच्छरूपा जातिरिति कर्म्मधारयो
वा ।) गोमांसखादकबहुविरुद्धभाषकसर्व्वा-
चारविहीनवर्णः । यथा, --
"गोमांसखादको यस्तु विरुद्धं बहु भाषते ।
सर्व्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते ॥"
इति प्रायश्चित्ततत्त्वधृतबौधायनवचनम् ॥
अपि च ।
"भेदाः किरातशवरपुलिन्दा म्लेच्छजातयः ॥"
चारहीना भवन्तीति वा पचाद्यचि म्लेच्छा
नीचजातयः तेषां देशो म्लेच्छदेशः । भारतवर्ष-
स्यान्तः शिष्टाचाररहितः कामरूपवङ्गादिः ।
उक्तञ्च ।
चातुर्व्वर्ण्यव्यवस्थानं यस्मिन् देशे न विद्यते ।
म्लेच्छदेशः स विज्ञेय आर्य्यावर्त्तस्ततः पर-
मिति ॥"
इति भरतः ॥
(अपि च, मनुः । २ । २३ ।
"कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततःपरम् ॥")

**म्लेच्छभोजनं**, क्ली, (भुज्यते यदिति । भुज् + कर्म्मणि
ल्युट् । ततो म्लेच्छानां भोजनम् ।) यावकः ।
इति शब्दरत्नावली ॥

**म्लेच्छभोजनः**, पुं, (भुज्यतेऽसौ इति । भुज् +
ल्युट् । म्लेच्छानां भोजनः । (गोधूमः । इति
त्रिकाण्डशेषः ॥

**म्लेच्छमण्डलं**, क्ली, (म्लेच्छानां मण्डलं समूहोऽत्र ।)
म्लेच्छदेशः । इति हेमचन्द्रः ॥

**म्लेच्छमुखं**, क्ली, (म्लेच्छे म्लेच्छदेशे मुखमुत्पत्ति-
रस्य । इत्यमरटीकायां रघुनाथः ।) ताम्रम् ।
इत्यमरः । २ । ९ । ९७ ॥
(तथास्य पर्य्यायः ।

सुतीर्था नाम तस्यास्तु वेनो नाम सुतः
पुरा ।
अधर्म्मनिरतः कामी बलवान् वसुधाधिपः ।
लोकेऽप्यधर्म्मकृज्जातः परभार्य्यापहारकः ॥
धर्म्मचारप्रसिद्ध्यर्थं जगतोऽस्य महर्षिभिः ।
अनुनीतोऽपि न ददावनुक्षां स यदा ततः ॥
शापेन मारयित्वैनमराजकभयार्द्दिताः ।
ममन्थुर्ब्राह्मणास्तस्य बलाद्देहमकल्भषाः ॥
तत्कायान्मथ्यमानात्तु निपेतुर्म्लेच्छजातयः ।
शरीरे मातुरंशेन कृष्णाञ्जनसमप्रभाः ॥"
इति मत्स्यपुराणे । १० । ३ -- ८ ॥ * ॥
म्लेच्छभाषाभ्यासनिषेधो यथा, --
"न सातयेदिष्टकाभिः फलानि वै फलेन तु ।
न म्लेच्छभाषां शिक्षेत नाकर्षेच्च पदासनम् ॥"
इति कौर्म्म्ये उपविभागे १५ अध्यायः ॥ * ॥
इत्यमरः । २ । ४० । २० ॥
अन्यच्च ।
"पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा शवनाः
शकाः ।
पारदाः पह्नवाश्चीनाः किराताः दरदाः
खशाः ॥
मुखबाहूरुपज्जानां या लोके जातयो बहिः ।
म्लेच्छवाचश्चार्य्यवाचः सर्व्वे ते दस्यवः
स्मृताः ॥"
इति मानवे १० अध्यायः ॥

**म्लेच्छदेशः**, पुं, (म्लेच्छानां देशः म्लेच्छप्रधानो
देशो वा ।) चातुर्व्वर्ण्यव्यवस्थादिरहित-
स्थानम् । तत्पर्य्यायः । प्रत्यन्तः २ ।
इत्यमरः ।
२ । १ । ७ ॥ भारतवर्षस्यान्तं प्रतिगः
प्रत्यन्तः । म्लेच्छति शिष्टाचारहीनो भवत्यत्र
म्लेच्छः अल् । स चासौ देशश्चेति
म्लेच्छदेशः ।
किंवा म्लेच्छयन्ति असंस्कृतं वदन्ति शिष्टा-
"ताम्रमौदुम्बरं शुल्वमुदुम्बरमपि
स्मृतम् ।
रविप्रियं म्लेच्छमुखं
सूर्य्यपर्य्यायनामकम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ॥
"ताम्रमौडुम्बरं शूल्वं विद्यात्
म्लेच्छमुख-
न्तथा ॥"
इति गारुडे २०८ अध्याये ॥)

**म्लेच्छाशः**, पुं, (म्लेच्छैरश्यते इति । अश् + कर्म्मणि
+ घञ् ।) म्लेच्छभोजनः । गोधूमः
। इति
केचित् ॥

**म्लेच्छास्यं**, क्ली, (म्लेच्छे म्लेच्छदेशे आस्यमुत्पत्ति-
रस्य ।) ताम्रम् । इति हारावली ॥

**म्लेच्छितं**, क्ली, (म्लेछ् देश्योक्तौ + क्तः ।) म्लेच्छ-
भाषा । अपशब्दः । तत्पर्य्यायः ।
परभाषा २ ।
इति हारावली ॥

**म्लेट**, ऋ उन्मादे । इति कविकल्वद्रुमः ॥ (भ्वा०-
पर०-अक०-सेट् ।) ऋ,
अमिम्लेटत् । म्लेटति
लोकः उन्माद्यतीत्यर्थः । इति
दुर्गादासः ॥

**म्लेड**, ऋ उन्मादे । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-अक०-सेट् ।) ऋ,
अमिम्लेडत् । म्लेडति ।
उन्माद्यतीत्यर्थः । इति दुर्गादासः
॥

**म्लेव**, ऋ ङ सेवने । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) ऋ,
अमिम्लेवत् । ङ,
म्लेवते । इति दुर्गादासः ॥

**शब्दकल्पद्रुमः । चतुर्थकाण्डम् ।**

**य**

**य**, अन्तःस्थयकारः । स च षड्विंशहलवर्णः ॥

अस्योच्चारणस्थानं तालु । (यदुक्तं सिद्धान्त-कौमुद्याम् । “इचुयशानां तालु ॥” तथा च शिक्षायाम् । १७ ।
“कण्ठ्यावहाविचुयशास्तालव्याओष्ठजावुपू ॥”)
तस्य स्वरूपं यथा, --
“यकारं शृणु चार्व्वङ्गि ! चतुष्कोणमयं सदा ।
पलालधूमसङ्काशं स्वयं परमकुण्डली ॥
पञ्चप्राणमयं वर्णं पञ्चदेवमयं सदा ।
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं तथा ।
प्रणमामि सदा वर्णं मूर्त्तिमन्मोक्षमव्ययम् ॥”
इति कामधेनुतन्त्रे ५ पटलः ॥
वङ्गीयवर्णमालायामस्य लेखनप्रकारो यथा, --
“ऊद्ध्वार्धःक्रमतो रेखा चतुष्कोणमयी शुभा ।
नारायणेशविधयस्तासु तिष्ठन्ति नित्यशः ॥
मात्रा कुण्डलिनी ज्ञेया ध्यानमस्य प्रचक्ष्यते ॥”
तस्य ध्यानं यथा, --
“धूम्रवर्णां महारौद्रीं षड्भुजां रक्तलोचनाम् ।
रक्ताम्बरपरीधानां नानालङ्कारभूषिताम् ॥
महामोक्षप्रदां नित्यामष्टसिद्धिप्रदायिनीम्।
एवं ध्यात्वा यकारन्तु तन्मन्त्रं दशधा जपेत् ॥” * ॥
तत्प्रणाममन्त्रो यथा, --
“त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा ।
प्रणमामि सदा वर्णं शक्तिमामोक्षमव्ययम् ॥”
इति वर्णोद्धारतन्त्रम् ॥
अस्य नामानि यथा, --
“यो वाणी वसुधा वायुर्व्विकृतिः पुरुषोत्तमः ।
युगान्तः श्वसनः शीघ्रो धूमार्च्चिः प्राणिसेवकः ॥
शङ्काभ्रमो जटी लोला वायुवेगी यशस्करी ।
सङ्कर्षणः क्षपा बालो हृदयं कपिलाप्रभा ॥
आग्नेयो व्यापकस्त्यागो होमो यानं प्रमा सुखम् ।
चण्डः सर्व्वेश्वरी धूमश्चामुण्डा सुमुखेश्वरी ॥
(धात्वनुबन्धविशेषः । स तु दिवादिगणसूचकः ।
तथा च कविकल्पद्रुमे । “दिवाद्यो य्लादादिकः ॥”
छन्दःशास्त्रान्तर्गतगणविशेषः । तथा च छन्दो-मञ्जर्य्याम् ।
“भादिगुरुः पुनरादिलघुर्यः ॥”
अस्य साङ्केतिकचिह्नं यथा, ।ऽऽ;
काव्यादौ अस्य प्रथमप्रयोगे लक्ष्मीलाभः फलम् ।
यथा, वृत्तरत्नाकरटीकायाम्।
“यो लक्ष्मीं रस्तु दाहं व्यसनमथ लवौ शः सुखं षस्तु खेदम् ॥”)

**यः**, पुं, (याति वातीति । या गतौ + डः ।) वायुः ।

यशः । योगः । यानम् । याता । इति शब्द-रत्नावली ॥ सर्व्वनाम । यच्छब्दार्थ इति यावत् ।
इति विश्वः ॥

**यकः**, त्रि, यः । ये इति भाषा । यच्छब्दस्य टेरत्वे

टेः पूर्ब्बं अकागमेन निष्पन्नः ॥
(“अव्ययसर्व्व-नाम्नामकच् प्राक् टेः ।” ५ । ३ । ७१ । इति पाणिनिसूत्रम् । यथा, ऋग्वेदे । ८ । २१ । १८ ।
“चित्र इद्राजा राजका इदन्यके यके सरस्वती-मनु ॥”)

**यकृत्**, क्ली, (यज् + “शकेरृतिन् ।” उणा० ४ । ५८ । इत्यत्र “बाहुलकात् यजेः कश्च ।”
इत्युज्ज्वलदत्तोक्त्या ऋतिन् जस्य च कः ।) कुक्षे-र्दक्षिणभागस्थमांसखण्डम् । तत्पर्य्यायः । काल-खण्डम् २ । इत्यमरः । २ । ६ । ६६ ॥ काल-खञ्जम् ३ कालेयम् ४ कालकम् ५ । इति
किन्तु स्थितिस्तयोर्ज्ञेया वामदक्षिणपार्श्वयोः ॥”
अथ यकृद्रोगचिकित्सा ।
“प्लीहोद्दिष्टाः क्रियाः सर्व्वा यकृत्यपि समा-चरेत् ।
कार्य्यञ्च दक्षिणे बाहौ तत्र शोणितमोक्षणम् ॥
क्षारञ्च विडकृष्णाभ्यां पूतिकस्याम्बु निस्रुतम् ।
पिबेत् प्रातर्यथावह्नि यकृत्प्लीहप्रशान्तये ॥”
इति भावप्रकाशः ॥
(तथा च ।
“वातेनोदीरितं रक्तं कफेन च घनीकृतम् ।
पित्तेन पाकतां प्राप्तं त्रिदोषसंश्रितं यकृत् ॥
लक्षणं तस्य वक्ष्यामि तेन तच्चापि लक्षयेत् ।
क्षीयते तेन मनुजो मृत्युराशु प्रवर्त्तते ॥
वमिक्लमस्तथोद्गारो हृल्लासः श्वसनं भ्रमः ।
दाहोऽरुचिस्तृषामूर्च्छा कण्ठे दाहः शिरो-व्यथा ॥
हृच्छूलञ्च प्रतिश्यायः ष्ठीवनं कटुकासह ।
सशल्यं हृदि शूलञ्च निद्रानाशः प्रलापतः ॥
हृदये मन्यते जाड्यं उदरं गर्ज्जते भृशम् ।
एतैर्लिङ्गैर्विजानीयात् यकृत् कोष्ठे च वक्षसि ॥”
अथास्य चिकित्सा ।
“निम्बनीपधवचेतसं निशा
काश्मरी च तुलसी च सिंहिका ।
क्वाथ एव हृदयामयापह
आशु शूलयकृतश्च नाशकृत् ॥
सौराष्ट्रीकासीसमहौषधानि
दुरालभाजातिप्रबालकञ्च।
दार्व्वी यमानी ककुभः समङ्गा
क्वाथः ससर्पिर्यकृदाशु हन्ति ॥”
इति हारीते चिकित्सितस्थाने चतुर्थेऽध्याये ॥
“प्लीहवद्दक्षिणात् पार्श्वात् कुर्य्याद्यकृदपि च्युतम् ॥”

त्वगात्मा मलयो माता हंसिनी भृङ्गिनायकः ।
तेनमः शोषको मीनो धनिष्ठानङ्गवेदिनी ।
मेष्ठः सोमः पक्तिनामा पापहा प्राणसंज्ञकः ॥”
इति नानातन्त्रशास्त्रम् ॥

हेमचन्द्रः ॥ करण्डा ६ महास्नायुः ७ । इति रभसः ॥ * ॥ (यथा, ऋग्वेदे । १० । १६३ । ३ ।
“यक्ष्मं मतस्नाभ्यां यक्नः प्लाशिभ्यो विवृहामि ते ।”
“यक्नः हृदयसमीपे वर्त्तमानः कालमांसविशेषो
यकृत् तस्मात् ।” इति तद्भाष्ये सायणः ॥)
अथ शरीरावयवविशेषस्य यकृतः स्वरूपमाह ।
“अधो दक्षिणतश्चापि हृदयाद्यकृतः स्थितिः ।
तत्तु रञ्जकपित्तस्य स्थानं शोणितजं मतम् ॥”
अथ यकृद्रोगमाह ।
“प्लीहामयस्य हेत्वादि समस्तं यकृदामये ।
इति वाभटे निदानस्थाने द्वादशेऽध्याये ॥)

**यकृदात्मिका**, स्त्री, (यकृत इवात्मा स्वरूपं यस्याः । बहुव्रीहौ कः । टापि अत इत्वम् ।) तैल-पायिका । इति शब्दचन्द्रिका ॥

**यकृद्वैरी**, [न्] पुं, (यकृतो वैरी नाशकः ।) रोहि-
तकवृक्षः । यथा, --
"प्लीहघ्नो मांसदलनो यकृद्वैरी चलच्छदः ॥"
इति शब्दचन्द्रिका ॥

**यक्ष**, क ङ महि । इति कविकल्पद्रुमः ॥ (चुरा०-
आत्म०-सक०-सेट् ।) क ङ, यक्षयते । महि
पूजायाम् । इति दुर्गादासः ॥

**यक्षः**, पुं, (यक्ष्यते पूज्यत इति । यक्ष + घञ् ।
यद्वा, ईं लक्ष्मीमक्ष्णोतीति । अक्ष + अण् ।)
गुह्यकमात्रम् । गुह्यकेश्वरः । इति मेदिनी । षे,
२२ ॥ इन्द्रगृहम् । धनरक्षकः । इति सारस्वतः
॥
यक्षस्वरूपं यथा, --
"आजग्मुर्यक्षनिकराः कुबेरवरकिङ्कराः ।
शैलजप्रस्तरकरा अञ्जनाकारमूर्त्तयः ॥
विकृताकारवदनाः पिङ्गलाक्षा महोदराः ।
स्फटिका रक्तवेशाश्च दीर्घस्कन्धाश्च केचन ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १७ अध्यायः
॥
यक्षगणो यथा, --
"प्रचेतसः सुता यक्षास्तेषां नामानि मे शृणु ।
केवलो हरिकेशश्च कपिलः काञ्चनस्तथा ।
मेघमाली च यक्षाणां गण एष उदाहृतः ॥"
तस्य व्युत्पत्तिर्यथा, --
"धातुर्यक्षत्यथोक्तस्त्वददने क्षपणे च सः ।
यद्यक्षत्युक्तवानेष तस्माद्यक्षो भवत्ययम् ॥"
इति वह्निपुराणे काश्यपीयवंशः ॥
(अपरा निरुक्तिर्यथा, विष्णुपुराणे । १ । ५ । ४१
।
"मैवं भो रक्ष्यतामेष यैरुक्तं राक्षसास्तु ते ।
ऊचुः खादाम इत्यन्ये ये ते यक्षास्तु जक्षणात्
॥"
पुं, क्ली, पूजा । यथा, ऋग्वेदे । ७ । ६१ । ५ ।
"अमूरा विश्वा वृषणा विमा वां
न यामु चित्रं ददृशे न यक्षम् ॥"
"न यक्षं न पूजा दृश्यते ।" इति तद्भाष्ये
सायणः ॥ तथाच अथर्व्ववेदे । १६ । २ । २४ ।
"तव यक्षं पशुपते अप्स्वन्तः ॥")

**यक्षकर्द्दमः**, पुं, (यक्षप्रियः कर्द्दमः ।) कर्पूरागुरु-
इति केचित् । इति भरतः ॥ तत्पर्य्यायः ।
सर्ज-
रसः २ अरालः ३ सर्व्वरसः ४ बहुरूपः ५ ।
इत्यमरः । २ । ६ । १२७ ॥ रालः ६ धूनकः
७
वह्निवल्लभः ८ । इति रभसः ॥ सालसारः ९
सालजः १० सालनिर्यासः ११ सर्ज्यः १२
।
इति रत्नमाला ॥ (अस्य पर्य्यायान्तरं यथा, -
-
"रालस्तु शालनिर्यासस्तथा सर्ज्जरसः
स्मृतः ।
देवधूपो यक्षधूपस्तथा सर्व्वरसश्च सः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
एतेन माधवपूजननिषेधो देवीपूजा चोक्ता
यथा
कालिकापुराणे ६८ अध्याये ।
"न यक्षधूपं वितरेत् माधवाय कदाचन ।"
"यक्षधूपेन वा देवीं महामायां प्रपूजयेत् ॥")
सरलवृक्षरसः । टारपिन तेल इति भाषा ।
तत्पर्य्यायः । पायसः २ श्रीवासः ३
सरलद्रवः ४ ।
इति हेमचन्द्रः । ३ । ३११ ॥

**यक्षरसः**, पुं, (यक्षप्रियो रसः । शाकपार्थिववत्
समासः ।) पुष्पमद्यम् । तत्पर्य्यायः । मध्वा-
सवः २ । इति त्रिकाण्डशेषः ॥

**यक्षराजः**, पुं, (यक्षाणां राजा । "राजाहः-
सखिभ्यष्टच् ।" ५ । ४ । ९१ । इति
समासान्त-
ष्टच् ।) कुबेरः । इति शब्दरत्नावली ॥ (यथा,
महाभारते । ५ । १९४ । ४९ ।
"इत्युक्त्वा भगवान्देवो यक्षराजः सुपूजितः ।
प्रययौ सहितैः सर्व्वैर्निमेषान्तरचारिभिः ॥")

**यक्षराट्**, [ज्] पुं, (यक्षेषु राजते इति । राज् +
"सत्सूद्विषद्रुहेति ।" ३ । २ । ६१ । इति
क्विप् ।)
कुबेरः । (यथा, भागवते । ८ । १८ । १७ ।
"तस्मा इत्युपनीताय यक्षराट् पात्रिकाम-
दात् ॥"
वली ॥ यक्षभार्य्या च ॥ (यथा,
कथासरित्-
सागरे । १० । १७८ ।
"सोऽपि मुक्त्वाशु विजने भ्रातुः पुत्रं
तमभ्यधात् ।
अधृतिं मा कृथाः पुत्र ! मम सिद्धा हि
यक्षिणी ॥")

**यक्षी**, स्त्री, (यक्षस्य भार्य्या । यक्ष + पुंयोगा-
दिति ङीष् ।) कुबेरपत्नी । इति
शब्दरत्ना-
वली ॥ (यक्षभार्य्या । यथा, महाभारते ।
३ ।
६४ । ११७ ।
"यक्षी वा राक्षसी वापि उताहोस्वित्
सुरा-
ङ्गना ।
सर्व्वथा कुरु नः स्वस्ति रक्षस्वास्मान-
निन्दिते ! ॥")

**यक्षोडुम्बरकं**, क्ली, (यक्षप्रियमुडुम्बरम् । ततः
स्वार्थे
कन् ।) अश्वत्थफलम् । इति
त्रिकाण्डशेषः ॥

**यक्ष्मघ्नी**, स्त्री, (यक्ष्माणं हन्ति । हन् + "अम-
नुष्यकर्त्तृके च ।" ३ । २ । ५३ । इति
टक् ।
ततो ङीप् ।) द्राक्षा । इति शब्दमाला ॥

**यक्ष्मा**, [न्] पुं, (यक्ष + "बाहुलकात् यक्षयते-
रपि ।" उणा० ४ । १५० । इत्यत्र
उज्ज्वलदत्तोक्त्या
मनिन्प्रत्ययेन साधुः ।) रोगविशेषः ।
तत्पर्य्यायः ।
क्षयः २ शोषः ३ । इत्यमरः । २ । ६ ।
५१ ॥
राजयक्ष्मा ४ रोगराट् ५ ॥ अथ
राजयक्ष्माधि-
कारः । "तत्र राजयक्ष्मणो विप्रकृष्टं
सन्निकृष्टञ्च
निदानमाह ।

कस्तूरीकक्कोलानां मिश्रितसमभागः । इत्य-
मरः । २ । ६ । १३३ ॥ “कर्पूरादिभिर्गन्धद्रव्यैः
समभागैः साधितोऽनुलेपनभेदो यक्षकर्द्दम
उच्यते । यक्षप्रियः कर्द्दमो यक्षकर्द्दमः ।
‘कुङ्कुमागुरुकस्तूरीकर्पूरं चन्दनन्तथा ।
महासुगन्धमित्युक्तं न तो यक्षकर्द्दमः ॥’
इति धन्वन्तरिः ॥
अन्यत्रापि ।
कर्पूरागुरुकस्तूरीकक्कोलघर्षणादि च ।
एकीकृतमिदं सर्व्वं यक्षकर्द्दम इष्यते ॥”
इति तट्टीकायां भरतः ॥

**यक्षतरुः**, पुं, (यक्षप्रियो यक्षाश्रितो वा तरुः ।

शाकपार्थिवादिवत् समासः ।) वटवृक्षः । इति
राजनिर्घण्टः ॥ (विवरणमस्य वटशब्दे ज्ञात-
व्यम् ॥)

**यक्षधूपः**, पुं, (यक्षप्रियो धूपः ।) धूपसामान्यम् ।

धूनकधूपः । इति केचित् । धुना इति ख्यात

यक्षराजमात्रम् । मणिभद्रः । यथा, महा-
भारते । ३ । ६४ । १२७ ।
“तथा नो यक्षराडद्य मणिभद्रः प्रसीदतु ॥” *
॥
यक्षा इव मल्ला राजन्तेऽत्र । राज् + क्विप् ।)
रङ्गमण्डपः । इति मेदिनी । जे, ३५ ॥

**यक्षराट्पुरी**, स्त्री, (यक्षराजः पुरी ।) अलका ।

सा च कैलासपर्व्वतस्थितकुबेरपुरी । इति
जटा-
धरः ॥

**यक्षरात्रिः**, स्त्री, (यक्षप्रिया यक्षाणां वा रात्रिः ।)

कार्त्तिकी पूर्णिमा । तत्पर्य्यायः । दीपाली २ ।
इति त्रिकाण्डशेषः ॥

**यक्षसाधनं**, क्ली, (यक्षाणां साधनम् ।) यक्षो-

पासना । यथा, वाराहीतन्त्रे ।
“यक्षाणां यक्षिणीनाञ्च पैशाचीनाञ्च साधनम् ।
भूतवेतालगान्धर्व्वं मारणोच्चाटनानि च ।
अधोगमनमेतेषां साधने ऐहिकं हितम् ॥”

**यक्षामलकं**, क्ली, (यक्षाणामामलकम् ।) पिण्ड-

खर्ज्जूरफलम् । इति शब्दमाला ॥

**यक्षावासः**, पुं, (यक्षाणामावासो वासस्थानम् ।)

वटवृक्षः । इति राजनिर्घण्टः ॥

**यक्षिणी**, स्त्री, (यक्षः पूजा अस्त्यस्याः । यक्ष +

इनिः । ङीप् ।) कुबेरपत्नी । इति शब्दरत्ना-

‘वेगरोधात् क्षयाच्चैव
साहसाद्विषमाशनात् ।
त्रिदोषो जायते यक्ष्मा गदो हेतुचतुष्टयात्
॥’
वेगोऽत्र वातमूत्रपुरीषाणाम् ।
‘वातमूत्रपुरीषाणि निगृह्णाति यदा नरः ॥’
इति चरकवचनात् ॥
क्षथात् क्षीयतेऽनेनेति क्षयः
तेनातिव्यवाया-
नशनेर्ष्यादयो धातुक्षयहेतवः
क्षयशब्देनोच्यन्ते ।
साहसात् बलवता समं मल्लयुद्धादितः ।
विषमा-
शनात् बहु स्तोकमकाले वा भुक्तं तत्
विषमा-
शनम् । तस्मात् । त्रिदोषः सान्निपातिकः
।
हेतुचतुष्टयात् अन्येऽपि हेतवः हेतुचतुष्टय
एवान्तर्भवन्ति । यक्ष्मणः पर्य्यायाः
राजयक्ष्म-
क्षयशोषाः ॥ * ॥ यक्ष्मादीनां शब्दानां
निरुक्ति-
माह ।
‘वैद्यो व्याधिमतां यस्मात् व्याधेर्यत्नेन
यक्ष्यते ।
स यक्ष्मा प्रोच्यते लोके
शब्दशास्त्रविशारदैः ॥’
यक्ष्यते पूज्यते ।
‘राज्ञश्चन्द्रमसो यस्मादभूदेष किलामयः
।
तस्मात्तं राजयक्ष्मेति केचिदाहुर्मनीषिणः
॥
क्रियाक्षयकरत्वात्तु क्षय इत्युच्यते बुधैः ।
संशोषणाद्रसादीनां शोष इत्यभिधीयते
॥’ * ॥
संप्राप्तिमाह ।
‘कफप्रधानैर्दोषैस्तु रुद्धेषु रसवर्त्मसु ।
अतिव्यवायिनो वापि क्षीणे रेतस्यनन्तरा
।
क्षीयन्ते धातवः सर्व्वे ततः शुष्यति
मानवः ॥’
कफप्रधानैर्द्दोषैः रसवर्त्मसु रुद्धेषु
अनन्तरा

कारणभूतस्य रसस्य क्षये कार्य्याणां
रक्तादी-
नामनुक्रमेण क्षीयमाणत्वात् ॥ * ॥
मार्गाव-
रोधे रसक्षयहेतुमाह चरकः ।
‘रसश्रोतःसु रुद्धेषु स्वस्थानस्थो
विदह्यते ।
स ऊद्‌र्ध्वं कासवेगेन बहुरूपः प्रवर्त्तते ॥’
स्वस्थानस्थः हृदयस्थः । कासं विनापि
रसक्षयो
भवति मार्गावरोधकुपितवातेन रसस्य
शोष-
णात् । उक्तञ्च ।
‘वायोर्द्धातुक्षयात् कोपो मार्गस्यावरणेन च
।
अनुलोमक्षयं दृष्ट्वा प्रतिलोमक्षयावहः ॥’
अनुलोमक्षयं दर्शयित्वा
प्रतिलोमक्षयमप्याह ।
अतिव्यवायिनो वा रेतसि क्षीणे
प्रतिलोमक्रमे-
णानन्तरा सर्व्वे धातवो रसपर्य्यन्ताः
क्षीयन्ते ।
तद्यथा । शुक्रे क्षीणे मज्जा क्षीयते
मज्जनि
क्षीणेऽस्थि क्षीयते । एवं पूर्ब्बं पूर्ब्बं क्षीयते
।
ननु कार्य्यस्य शुक्रस्य क्षये कथं
कारणभूतानां
मज्जादीनां क्षयः । उच्यते ।
शुक्रक्षयाद्वायुः
कुप्यति । यदुक्तम् ।
‘वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन
चेति ।’
स वायुः सान्निध्यक्रमेण मज्जादीन्
सर्व्वान्
धातून् संशोषयति । ततस्तदनन्तरं
मानवः
शुष्यति ॥ * ॥ पूर्ब्बरूपमाह ।
‘श्वासाङ्गसादकफसंस्रवतालुशोष-
वम्यग्निसादमदपीनसकासनिद्राः ।
शोषे भविष्यति भवन्ति स चापि जन्तुः
असाध्ययक्ष्मिणमाह ।
‘एकादशभिरेभिर्व्वा षड्‌भिर्वापि समन्वितम् ।
त्रिभिर्व्वा पीडितं लिङ्गैर्ज्वरकासासृगामयैः ।
जह्याच्छोषार्द्दितं जन्तुमिच्छेत् सुविपुलं यशः ॥’
तत्र विशेषमाह ।
‘सर्व्वैरर्द्धैस्त्रिभिर्व्वापि लिङ्गैर्मांसबलक्षये ।
युक्तो वर्ज्यश्चिकित्स्यस्तु
सर्व्वरूपोऽप्यतोऽन्यथा ॥’
सर्व्वैर्लिङ्गैरेकादशभिः । अर्द्धैः षड्‌भिः त्रिभि-
र्ज्वरकासरुधिरवमनैः । अतोऽन्यथा मांसे बले
सति सर्व्वरूपोऽपि प्रत्याख्याय चिकित्स्यः ।
‘महाशनं क्षीयमाणमतीसारनिपीडितम् ।
शूनमुष्कोदरञ्चैव यक्ष्मिणं परिवर्जयेत् ॥’
महाशनं क्षीयमाणमित्येकमसाध्यलक्षणम् ।
अतीसारनिपीडितमिति द्वितीयम् । यत
उक्तम् ।
‘मलायत्तं बलं पुंसां शुक्रायत्तन्तु जीवनम् ।
तस्माद्यत्नेन संरक्षेद्यक्ष्मिणो मलरेतसी ॥’
शूनमुष्कोदरमिति तृतीयम् ॥ * ॥ अरिष्ट-
माह ।
‘शुक्लाक्षमन्नद्वेष्टारमूद्‌र्ध्वश्वासनिपीडितम् ।
कृच्छ्रेण बहु मेहन्तं यक्ष्मा हन्तीह मानवम् ॥’
मेहन्तं शुक्रं क्षरन्तम् । शुक्लाक्षत्वादीनि
एकैकशोऽरिष्टलक्षणानि ॥ * ॥ अवधिमाह ।
‘परं दिनसहस्रन्तु यदि जीवति मानवः ।
सुभिषग्भिरुपक्रान्तस्तरुणःशोषपीडितः ॥’
शोषपीडितो मानवश्चेत्तरुणो भवति । सुभि-
षग्भिरुपक्रान्तो भवति । तदा परं दिनसह-
स्रम् । द्वितीयदिनसहस्रं यदि जीवति तत्र
जीवनविकल्प इत्यर्थः । एतेन शोषपीडितो
मानवश्चेत्तरुणो भवति । सद्वैद्यैश्चिकित्स्यो
भवति । तदा प्रथमदिनसहस्रं जीवेदेव इत्युक्त्वा
चिकित्सामाह ।
‘ज्वरानुबन्धरहितं बलवन्तं क्रियासहम् ।
उपक्रमेदात्मवन्तं दीप्ताग्निमकृशं नरम् ॥’
आत्मवन्तं यत्नवन्तं धृतिमन्तं वा ॥ * ॥
अथ निदानविशेषैः शोषविशेषानाह ।
‘व्यवायशोकवार्द्धक्यव्यायामाध्वप्रशोषितान् ।
व्रणोरःक्षतसंज्ञौ च शोषिणौ लक्षणैः शृणु ॥’
व्रणोरःक्षतसंज्ञौ शोषिणौ । व्रणशोषी उरः-
क्षतशोषी च ॥ * ॥ तत्र व्यवायशोषिणो
प्रध्यानशीलः यस्याभावेन शोको जनितस्त-
द्ध्यानपरः । स्रस्ताङ्गः शिथिलाङ्गः ।
तादृशः
व्यवायशोषिसदृशः । तेन
शुक्रादिसर्व्वधातुक्षय-
युक्तो भवति । परं शुक्रक्षयकृतैर्विकारैर्मेढ्र-
वृषणवेदनादिभिर्वर्जितो भवति । व्याधिस्व-
भावात् ॥ * ॥ जराशोषिणो लक्षणमाह ।
‘जराशोषी कृषो मन्दवीर्य्यबुद्धिबलेन्द्रियः ।
कम्पनोऽरुचिमान् भिन्नकांस्यपात्रहतस्वरः
॥
ष्ठीवति श्लेष्मणा हीनं गौरवारुचिपीडितः ।
संप्रस्रुतास्यनासाक्षः शुष्करूक्षमलच्छविः
॥’
मन्दशब्दः स्वल्पार्थः । शुष्करूक्षमलच्छविः
शुष्करूक्षे मलच्छवी यस्य सः ॥ * ॥ अध्व-
शोषिणो लक्षणमाह ।
‘अध्वप्रशोषी स्रस्ताङ्गः संभृष्टपरुषच्छविः ।
प्रसुप्तगात्रावयवः शुष्कक्लोमगलाननः ॥’
संभृष्टस्येव परुषा छविर्यस्य सः ।
प्रसुप्तगात्रां-
वयवः प्रसुप्तः स्पर्शाज्ञः । क्लोमं तिलकं
पिपासा-
स्थानम् ॥ * ॥ व्यायामशोषिणो लक्षणमाह ।
‘व्यायामशोषी भूयिष्ठमेभिरेव समन्वितः ।
लिङ्गैरुरःक्षतकृतैः संयुक्तश्च क्षतं विना ॥’
एभिरेव स्रस्ताङ्गत्वादिभिरध्वशोषिणो
लक्षणै-
रेव । भूयिष्ठं अत्यर्थम् ॥ * ॥ सनिदानं
व्रणशोष-
माह ।
‘रक्तक्षयाद्वेदनाभिस्तथैवाहारयन्त्रणात् ।
व्रणितस्य भवेच्छोषो याप्योऽसाध्यश्च स
स्मृतः ॥’
उरःक्षतस्य निदानमाह ।
‘धनुषायास्यतोऽत्यर्थं भारमुद्वहतो गुरुम् ।
युध्यमानस्य बलिभिः पततो विषमोच्चतः ॥
वृषं हयं वा धावन्तं दम्यं चान्यं निगृह्णतः ।
शिलाकाष्ठाश्मनिर्घातान् क्षिपतो निघ्नतः
परान् ॥
अधीयानस्य चात्युच्चैर्दूरं वा व्रजतो द्रुतम् ।

शुक्लेक्षणो भवति मांसपरो रिरंसुः ॥
स्वप्नेषु काकशुकशल्लकिनीलकण्ठ-
गृध्रास्तथैव कपयः कृकलासकाश्च ।
तं वाहयन्ति स नदीर्विजलाश्च पश्येत्
शुष्कांस्तरून् पवनधूमदवार्द्दितांश्च ॥' *
॥
यक्ष्मणो लक्षणमाह्न ।
'अंसपार्श्वाभितापश्च सन्तापः
करपादयोः ।
ज्वरः सर्व्वाङ्गगश्चेति लक्षणं राजयक्ष्मणः
॥'
अंसयोः पार्श्वयोः अभितापः पीडा अत्र
सकलधातुक्षयपूर्ब्बकः
सकलशरीरशोषोऽपि
बोद्धव्यः । क्षीयन्ते धातवः सर्व्वे ततः
शुष्यति
मानव इति संप्राप्तेः । एवं षड्रूपे एकादश-
रूपे च बोद्धव्यम् । एतानि त्रीणि लक्षणानि
प्रायोभावित्वेन चरकेणोक्तानि । सुश्रुतेन
यक्ष्मणि षट्लक्षणान्युक्तानि ।
'भक्तद्वेषो ज्वरः कासः श्वासः
शोणितदर्शनम् ।
स्वरभेदश्च जायेत षड्रूपे राजयक्ष्मणि ॥'
* ॥
उल्वणतया दोषाणां भेदादेकादश
लक्षणा-
न्याह ।
'स्वरभेदोऽनिलाच्छूलं
सङ्कोचश्चांसपार्श्वयोः ।
ज्वरो दाहोऽतिसारश्च पित्ताद्रक्तस्य
चागमः ॥
शिरसः परिपूर्णत्वमभक्तच्छन्द एव च ।
कासः कण्ठस्य चोद्ध्वंसो विज्ञेयः
कफकोपतः ॥'
अनिलादुल्वणात् एवं पित्तात् कफाच्च ।
यत
आह सुश्रुतः ।
'एक एवमतः शोषः सन्निपातात्मको गदः
।
उद्रेकात्तत्र लिङ्गानि दोषाणां निपतन्ति च
॥'

लक्षणमाह ।
'व्यवायशोषी शुक्रस्य क्षयलिङ्गैरुपद्रुतः ।
पाण्डुदेहो यथापूर्ब्बं क्षीयन्ते चास्य धातवः ॥'
शुक्रस्य क्षयलिङ्गैः सुश्रुतोक्तैः । तानि यथा,
शुक्रक्षये मेढ्रवृषणयोर्वेदना अशक्तिर्मैथुने
चिराद्वा प्रसेकः प्रसेके चाल्पशुक्रदर्शनमिति ।
यथापूर्ब्बं क्षीयन्ते चास्य धातवः प्रथमं शुक्रं
क्षीयते पश्चात् शुक्रक्षयजनितवायुना मज्जा-
दयोऽपि धातवो यथापूर्ब्बं क्षीयन्ते ॥ * ॥
शोकशोषिणो लक्षणमाह ।
'प्रध्यानशीलः स्रस्ताङ्गः शोकशोष्यपि तादृशः ।
विना शुक्रक्षयकृतैर्विकारैरुपलक्षितः ॥'

महानदीं वा तरतो हयैर्व्वा सह धावतः ॥
सहसोत्पततो दूरं तूर्णञ्चातिप्रनृत्यतः ।
अथान्यैः कर्म्मभिः क्रूरैर्भृशमप्याहतस्य वा
॥
स्त्रीषु चातिप्रसक्तस्य रूक्षाल्पप्रमिताशिनः ।
विक्षते वक्षसि व्याधिर्ब्बलवान् समुदीर्य्यते
॥'
आयास्यतः आयासं कुर्व्वतः । दम्यं
वृषादिकम् ।
अन्यच्च गजोष्ट्रादिकम् । शिला दीर्घपाषाणः ।
अश्म प्रस्तरखण्डः । निर्घातोऽस्त्रविशेषः ।
व्याधिः उरःक्षताखाः ॥ * ॥ उरःक्षतस्य
लक्षण-
माह ।
'उरो विरुज्यतेऽत्यर्थं भिद्यते च विभज्यते ।
शूलं भवति तत्पादं शुष्यत्यङ्गं प्रवेपते ॥
प्रपीड्यते ततः पार्श्वे शुष्यत्यङ्गं प्रकम्पते ।
क्रमाद्वीर्य्यं बलं वर्णो रुचिरग्निश्च हीयते ॥
ज्वरो व्यथा मनोदैन्यं विड्भेदोऽग्निवधस्तथा
॥
दुष्टः श्यावः सुदुर्गन्धः पीतो विग्रथितो बहु ।
कासमानस्य चाभीक्ष्णं कफः सासृक्
प्रवर्त्तते ॥
स क्षतः क्षीयतेऽत्यर्थं तथा शुक्रौजसोः
क्षयात् ।
अव्यक्तं लक्षणं तस्य पूर्ब्बरूपमिति स्मृतम्
॥'
विरुज्यते पीड्यते । भिद्यते विदार्य्यत इव ।

विभज्यते द्विधा क्रियत इव । स पुरुषः ।
क्षतः
उरःक्षतवान् । अत्यर्थं क्षीयते क्षीणो भवति ।
न केवलं सास्रकफक्षयात्वे क्षीणो भवति ।
तथा शुक्रौजसोः क्षयात् । स्त्र्यतिसेवनादिना
शुक्रौजसोः क्षयादपि क्षीणो भवति ॥ * ॥
उरः-
क्षतस्य विशिष्टं लक्षणमाह ।
‘उरोरुक् शोणितच्छर्द्दिः कासो वैशेशिकः
क्षते ।
क्षीणे सरक्तमूत्रत्वं पार्श्वपृष्ठकटिग्रहः ॥’
क्षते उरःक्षतवति । उरोरुक् शोणितच्छर्द्दिः
कासो वैशेषिकः विशेषतो भवत्येव ।
तस्मिन्ने-
वोरःक्षतवति सास्रकफशुक्रौजसां क्षयात्
क्षीणे
सरक्तमूत्रत्वं पार्श्वपृष्ठकटिग्रहश्च भवति ॥ *
॥
निदानविशेषेणोरःक्षतस्य लक्षणविशेषमाह ।
‘व्रणारोधात् क्षयाच्चैव कोष्ठात् प्रतिमलात्तथा
।
क्षतोरस्कस्यान्नपाके निःश्वासो वाति
पूतिकः ॥’
क्षयात् धातुक्षयहेतोरतिव्यवायादितः कोष्ठात्
प्रतिमलात् कोष्ठात् प्रतिमलवातेन प्रतिलोम-
मलात् पूतिकः पूतिगन्धः ॥ * ॥ उरःक्षतस्य
साध्ययाप्यासाध्यलक्षणमाह।
‘अल्पलिङ्गस्य दीप्ताग्नेः साध्यो बलवतो नवः
।
परिसंवत्सरो याप्यः सर्व्वलिङ्गन्तु वर्जयेत् ॥’
* ॥
अथ राजयक्ष्मचिकित्सा।
‘बलिनो बहुदोषस्य पञ्च कर्म्माणि कारयेत् ।
यक्ष्मिणः क्षीणदेहस्य तत्कृतं स्याद्विषोपमम्
॥
मलायत्तं बलं पुंसां शुक्रायत्तन्तु जीवनम् ।
तस्माद्यत्नेन संरक्षेत् यक्ष्मिणो मलरेतसी ॥
शालियष्टिकगोधूमयवमुद्गादयोहिताः ।
मद्यानि जाङ्गलाः पक्षिमृगाः शस्ता विशो-
षिणः ॥
सपिप्पलीकं सयवं सकुलत्थं सनागरम् ।
लेहयेद्राजरोगार्त्तं कासश्वासक्षयातुरम् ।
पार्श्वशूलिनमल्पाग्निं सुप्तजिह्वं रुचिच्युतम्
।
हस्तपादाङ्गदाहे च ज्वरे रक्ते तथोर्द्ध्वगे
॥’
सितोपला मिश्री । बहुला सूक्ष्मैला । इति
सतोपलादिरवलेहः ॥ * ॥
‘जातीफलं विडङ्गानि चित्रकं तगरं तिला ।
तालीशं चन्दनं शुण्ठी लवङ्गमुपकुञ्चिका ॥
कर्पूरश्चाभया धात्री मरीचं पिप्पली तुगा ।
एषामक्षसमा भागाश्चातुर्जातकसंयुताः ।
पलानि सप्त भङ्गायाः सिता सर्व्वसमा मता
॥
चूर्णमेतत् क्षयं कासं श्वासञ्च ग्रहणीगदम् ।
अरोचकं प्रतिश्यायं तथा चानलमन्दताम्
।
एतान् रोगान् निहन्त्येव
वृक्षमिन्द्राशनिर्य्यथा ॥
बालरोगाधिकारोक्तं तैलं लाक्षादि योजयेत्
।
अभ्यङ्गे यक्ष्मिणो नित्यं वृद्धवैद्योपदेशतः
॥’
इति जातीफलाद्यचूर्णम् ॥ * ॥
‘वासकस्य रसप्रस्थं माणिकासितशर्करा
।
पिप्पली द्विपलं तावत् सर्पिषश्च शनैः
पचेत् ॥
तस्मिन् लेहत्वमायाते शीते क्षौद्रपलाष्टकम्
।
दत्त्वावतारयेद्वैद्यो लीढो लेहोऽयमुत्तमः ॥
निहन्ति राजयक्ष्माणं कासं श्वासञ्च
दारुणम् ।
पार्श्वशूलञ्च हृच्छलं रक्तपित्तं ज्वरन्तथा
॥’
इति वासावलेहः ॥ * ॥
अथ व्यवायादिहेतुकशोषचिकित्सा । तत्र
व्यवायशोषचिकित्सा।
‘व्यवायशोषिणं क्षीररसमांसाज्यभोजनैः ।
सुकूलैर्म्मधुरैर्हृद्यैर्जीवनीयैरुपाचरेत् ॥’
रसो मांसरसः सुकूलैर्हितैः ॥ * ॥
शोकशोष-
प्लीहानमामवातञ्च रक्तपित्तं स्वरक्षयम् ।
एलादिगुटिका हन्ति वृष्या सन्तर्पणी परा ॥
द्राक्षायाः प्रस्थमेकन्तु मधूकस्य पलाष्टकम् ।
पचेत्तोयाष्टके शुद्धे पादशेषेण तेन तु ॥
पलिके मधुकद्राक्षे पिष्टे कृष्णापलद्वयम् ।
प्रदाय सर्पिषः प्रस्थं पचेत् क्षीरे चतुर्गुणे ॥
सिद्धे शीते पलान्यष्टौ शर्करायाः प्रदापयेत् ।
एतद्राक्षाघृतं सिद्धं क्षतक्षीणे सुखावहम् ॥
वातपित्तज्वरश्वासविस्फोटकहलीमकान्।
प्रदरं रक्तपित्तञ्च हन्यान्मांसबलप्रदम् ॥’
इति द्राक्षादिघृतम् ॥ * ॥
‘क्षीरे धात्रीविदारीक्षुवरीणाञ्च तथा रसे ।
पचेत् समे घृतप्रस्थं मधुरैः कर्षसम्मितैः ॥
द्राक्षाद्विचन्दनोशीरशर्करोत्पलपद्मकैः ।
मधूककुसुमानन्ताकाश्मरीतृणसंज्ञकैः ॥
प्रस्थार्द्धं मधुनः शीते शर्करार्द्धतुलान्तथा ।
पलार्द्धकांश्च संचूर्ण्य त्वगेलापत्रकेशरान् ॥
विनीय तत्र संलिह्यान्मात्रां नित्यं सुयन्त्रितः ।
अमृतप्राशमित्येतदश्विभ्यां परिकीर्त्तितम् ॥
क्षीरमांसाशिनां हन्ति रक्तपित्तक्षतक्षयम् ।
तृष्णारुचिश्वासकासच्छर्द्दिमूर्च्छाप्रमर्द्दनम् ।
मूत्रकृच्छ्रज्वरघ्नञ्च बल्यं स्त्रीरतिवर्द्धनम् ॥’
इति अमृतप्राशावलेहः ॥ * ॥
‘यद्यच्च तर्पणं शीतमविदाहि हितं लघु ।
अन्नपानं निषेव्यन्तत् क्षतक्षीणैः सुखार्थिभिः ॥
शोकं स्त्रियः क्रोधमसूयताञ्च
त्यजेदुदारान् विषयान् भजेच्च ।
तथा द्विजातींस्त्रिदशान् गुरूंश्च
वाचश्च पुण्याः शृणुयाद्द्विजेभ्यः ॥’ * ॥
अथ राजयक्ष्मणि रसाः । अमृतेश्वरो रसो
राजयक्ष्मणि रसेन्द्रचिन्तामणौ ।
‘रसभस्मामृतासत्त्वं लौहं मधुघृतान्वितम् ।
अमृतेश्वरनामायं षड्भुजो राजयक्ष्मजित् ॥’
इति अमृतेश्वरो रसः ॥
रसभस्मः मारितो रसः । अमृतासत्त्वं गुडूची-
सत्त्वम् । लौहं मारितम् ॥ * ॥
‘त्रयोऽंशा मारितात् सूतादेकोऽंशो हेम-
भस्मतः ।
एकोऽंशो मृतताम्रस्य शिला गन्धश्च तालकम् ।
प्रत्येकं भागयुग्मं स्यादेतत् सर्व्वं विचूर्णयेत् ॥
वराटीः पूरयेत्तेन छागीक्षीरेण टङ्कणम् ।

दाडिमामलकोपेतं स्निग्धमाजं रसं पिबेत् ॥
तेन षड्विनिवर्त्तन्ते विकाराः पीनसादयः ॥
द्रव्यतो द्विगुणं मांसं सर्व्वतोऽष्टगुणं जलम् ।
पादस्थं संस्कृतञ्चाज्ये षडङ्गी यूष उच्यते ॥'
तद्यथा । यवपल १ कुलत्थपल १ छागमांस-
पल ४ जलपल ४८ शेषपल १२ ततः
पलमिते
घृते संस्करणीयम् । तत्र कर्षमितं सैन्धवं देयं
सौरभार्थं हिङ्गु च देयम् । पिप्पली नागरञ्च
पृथक् माषमितं कल्कीकृत्य देयम् । दाडि-
मामलकाभ्यामम्लत्वं साध्यम् । षडङ्गयूषः ॥
* ॥
'ककुभत्वक् नागवला वानरीबीजं विचूर्णितं
पयसा ।
पक्वं मधुघृतयुक्तं ससितं यक्ष्मादिकासहरम्
॥
छागमांसं पयश्छागं छागं सर्पिश्च नागरम् ।
छागोपसेवा शयनं छागमध्ये तु यक्ष्मनुत् ॥
मधुताप्यविडङ्गाश्मं जतुलोहघृताभयाः ।
घ्नन्ति यक्ष्माणमत्युग्रं सेव्यमाना हिताशिनः
॥
ताप्यं सुवर्णमाक्षीकम् ।
'शर्करामधुसंयुक्तं नवनीतं लिहन् क्षयी ।
क्षीराशी लभते पुष्टिमतुल्ये चाज्यमाक्षिके ॥
सितीपलातुगाक्षीरीपिप्पलीबहुलात्वचः ।
अन्त्यादूद्ध्वं द्विगुणिताश्चूर्णिता मधुसर्पिषा
॥

चिकित्सा ।
'हर्षणाश्वासनैः क्षीरैः स्निग्धैर्मधुरशीतलैः
।
दोपनैर्लघुभिश्चान्नैः शोकशोषमुपाचरेत् ॥'
* ॥
व्यायामशोषचिकित्सा ।
'व्यायामशोषिणं स्निग्धैः क्षतक्षयहितैर्हिमै
।
उपाचरेज्जीवनीयैर्विधिना श्लैष्मिकेण तु
॥' * ॥
अध्वशोषचिकित्सा ।
'आस्यासुखैर्दिबास्वप्नैः शीतैर्मधुरवृंहणैः
।
अन्नमांसरसाहारैरध्वशोषमुपाचरेत् ॥' *
॥
व्रणशोषचिकित्सा ।
'व्रणशोषं जयेत् स्निग्धैर्दीपनैः
स्वादुशीतलैः
ईषदम्लैरनम्लैर्व्वा यूषमांसरसादिभिः ॥'
* ॥
अथोरःक्षतचिकित्सा ।
'बलाश्वगन्धा श्रीपर्णी बहुपुत्त्री पुनर्नवा ।
पयसा नित्यमभ्यस्ताः शमयन्ति
क्षतक्षयम् ॥'
श्रीपर्णी गम्भारी । बहुपुत्त्री शतावरी । इति
बलादिचूर्णम् ॥ * ॥
'एला पत्रत्वचो द्राक्षा पिप्पल्यर्द्धपलं
पृथक् ।
सितामधुकखर्ज्जूरमृद्वीकाश्च पलोन्मिताः
॥
संचूर्ण्य मधुना युक्ता वटिका संप्रकल्पयेत्
।
अक्षमात्रा ततश्चैव भक्षयेच्च दिने दिने ॥
क्षतक्षयं ज्वरं कासं श्वासं हिक्कां वमिं
भ्रमम् ।
मूर्च्छां मदं तृषां शोषं पार्श्वशुलमरोचकम्
॥

पिष्ट्वा तेन मुखं रुद्ध्वा मृद्भाण्डे ताश्च पूरयेत्
॥
ततो गजपुटे पक्त्वा चूर्णयेत् स्वाङ्गशीतलम् ।
रसो राजमृगाङ्कोऽयं चतुर्गुञ्जः क्षयापहः ॥
मरिचैरूनविंशत्या कणाभिर्दशभिस्तथा ।
मधुना सर्पिषा चापि दद्यादेतं रसं भिषक् ॥
अनेन नश्यति क्षिप्रं वातश्लेष्मभवक्षयः ॥'
इति राजमृगाङ्को रसो राजयक्ष्मणि रसेन्द्र-
चिन्तामणौ ॥ * ॥
'शुद्धसूतं द्विधा गन्धं कुर्य्यात् खल्लेन कज्जलीम्
।
तयोः समं तीक्ष्णचूर्णं मर्द्दयेत् कन्यकाद्रवैः ॥
त्रियाममातपे गोलं ताम्रपात्रे विधारयेत् ।

आच्छाद्यैरण्डपत्रेण स्यादुष्णं यामयुग्मतः ॥
धान्यराशौ न्यसेत् पश्चादहोरात्रात्तदुद्धरेत् ।
संचूर्ण्य गालयेद्वस्त्रे सत्यं वारितरं भवेत् ॥
त्रिकटुत्रिफलैलाभिर्जातीफललवङ्गकैः ।
नवभागोन्मितैरेतैः सम एष रसो भवेत् ॥
निष्कद्वयमितं नित्यं मधुना सह लेहयेत् ।
अयमग्निरसो नाम्ना कासक्षयहरः परः ॥'
इति अग्निरसः शार्ङ्गधरे ॥"
इति भावप्रकाशस्य मध्यखण्डे द्वितीयभागे राजयक्ष्माधिकारः ॥ * ॥ (अथास्य पौराणिकं
विवरणं यथा, --
"दिवौकसां कथयतामृषिभिर्वै श्रुता कथा ।
कामव्यसनसंयुक्ता पौराणी शशिनं प्रति ॥
रोहिण्यामतिसक्तस्य शरीरं नानुरक्षतः ।
आजगामाल्पतामिन्दोर्देहः स्नेहपरिक्षयात् ॥
दुहितॄणामसम्भोगाच्छषाणाञ्च प्रजापतेः ।
क्रोधो निश्वासरूपेण मूर्त्तिमान्निःसृतो मुखात् ॥
प्रजापतेर्हि दुहितॄरष्टाविंशतिमंशुमान् ।
भार्य्यार्थं प्रतिजग्राह न च सर्व्वास्ववर्त्तत ॥
गुरुणा तमवध्यातं भार्य्यास्वसमवर्त्तिनम् ।
रजोऽन्धमबलं दीनं यक्ष्मा शशिनमाविशत् ॥
सोऽभिभूतोऽतिगुरुणा गुरुक्रोधेन निष्प्रभः ।
देवदेवर्षिसहितो जगाम शरणं गुरुम् ॥
अथ चन्द्रमसः शुद्धां मतिं बुद्ध्वा प्रजापतिः ।
प्रसादं कृतवान् सोमस्ततोऽश्विभ्यां चिकित्-
सितः ॥
स विमुक्तग्रहश्चन्द्रो विरराज विशेषतः ।
तेजसा वर्द्धितोऽश्विभ्यां शुद्धं सत्त्वमवाप च ॥
क्रोधो यक्ष्मा ज्वरो रोग एकोऽर्थो दुःखसंज्ञितः ।
यस्मात् स राज्ञः प्रागासीद्राजयक्ष्मा ततो

ऊर्द्ध्वं तिर्य्यगधः कुर्य्याद्विकारान् कुपितोऽनिलः ॥
प्रतिश्यायञ्च कासञ्च स्वरभेदमरोचकम् ।
पार्श्वशूलं शिरःशूलं ज्वरमंसावमर्द्दनम् ॥
अङ्गमर्द्दं मुहुश्छर्द्दिर्वर्च्चोभेदं त्रिलक्षणम् ।
रूपाण्येकादशैतानि यक्षा यैरुच्यते महान् ॥"
इति चरके चिकित्सास्थाने अष्टमेऽध्याये ॥
अस्य चिकित्सा यथा, --
"काञ्चनं रससिन्दूरं मौक्तिकं लौहमभ्र-
कम् ।
विद्रुमं मृतवैक्रान्तं तारं ताम्रञ्च वङ्गकम् ॥
कस्तूरिका लवङ्गञ्च जातिकोषैलवालुका ।
प्रत्येकं बिन्दुमात्रञ्च सर्व्वं मर्द्द्यं प्रयत्नतः ।
कन्यानीरेण संमर्द्द्यं केशराजरसेन च ।
अजाक्षीरेण संभाव्यं प्रत्येकं दिवसत्रयम् ॥
चतुर्गुञ्जाप्रमाणेन वटिकां कारयेद्भिषक् ।
अनुपानं प्रदातव्यं यथादोषानुसारतः ॥
नानारोगप्रशमनं सर्व्वोपद्रवसंयुतम् ।
क्षयं हन्ति तथा कासं यक्ष्माणं श्वासमेव च ॥
प्रमेहान् विंशतिञ्चैव दोषत्रयसमुत्थितान् ।
सर्व्वान् रोगान् निहन्त्याशु भास्करस्तिमिरं
यथा ॥"
इति बृहत्काञ्चनाभ्रवटी ॥
"शिलाजतुमधुव्योषताप्यलौहरजांसि च ।
क्षीरेणालोडितस्यासु यक्ष्मा क्षयमवाप्नुयात् ॥"
इति शिलाजत्वादिलौहम् ॥ * ॥
इति वैद्यकरसेन्द्रसारसंग्रहे राजयक्ष्माधि-
कारे ॥ * ॥)

**यच्छन्,** [त्] त्रि, दानकर्त्ता । उपरमकर्त्ता ।

**यजत्रः**, पुं, (यजतीति । यज् + "अमिनक्षियजि-
वधिपतिभ्योऽत्रन् ।" उणा० ३ । १०५ । इति
अत्रन् ।) अग्निहोत्री । इत्युणादिकोषः ॥
(यजनशीले, त्रि । यथा, ऋग्वेदे । ७ । ५२ । १९ ।
"पिता च तन्नो महान् यजत्रो
विश्वेदेवाः समनसो जुषन्त ॥"
"यजत्रः यजनशीलः ।" इति तद्भाष्ये सायणः ॥)

**यजन्,** [त्] पुं, यागकर्त्ता । यजधातोः शतृप्रत्ययेन
निष्पन्नः ॥

**यजनं**, क्ली, (इज्यते इति । यज् + ल्युट् ।) यागः ।
(यथा, महाभारते । ७ । ५३ । ३७ ।
"यस्य सेन्द्रामरगणा बृहस्पतिपुरोगमाः ।
देवा विश्वसृजः सर्व्वे यजनान्ते समासते ॥")
तत्तु ब्राह्मणस्य षट्कर्म्मान्तर्गतकर्म्मविशेषः ।
यथा, मानवे १ अध्याये ।
"अध्यापनं अध्ययनं यजनं याजनं यथा ।
दानं प्रतिग्रहश्चैव ब्राह्मणानामकल्पयत् ॥"
अस्य लक्षणं यथा । पशुक्षीराज्यपुरोडास-
सोमौषधिचरुप्रभृतिभिहविर्भिः खदिरपलाशा-
श्वत्थन्यग्रोधोडुम्बरप्रभृतिभिः समिद्भिः स्रुक्स्रुवो-
दूखलमुषलकुठारखनित्रयूपदारुदर्भचर्म्मग्राव-
पवित्रभाजनादिभिर्द्रव्योपकरणैरुद्गातृहोत्रध्वर्य्यु-
ब्रह्मादिभिरृत्विग्भिः काम्यनैमित्तिकानां
पक्षादिपूर्ब्बकाणां यथोक्तदक्षिणानां समापनं
यजनम् । इति श्राद्धविवेकधृतदेवलवचनम् ॥
(इज्यतेऽत्रेति । यज् + अधिकरणे ल्युट् । यज्ञ-
स्थानम् । यथा, श्रीमद्भागवते । ४ । ४ । ६ ।
"नृद्दार्व्वयःकाञ्चनदर्भचर्म्मभि-
र्निसृष्टभाण्डं यजनं समाविशत् ॥"
"यजनं यज्ञस्थानम् ।" इति तट्टीकायां श्रीधर-
स्वामी ॥)

**यजन्तः**, पुं, यागकर्त्ता । यजधातोर्झच् प्रत्ययेन
निष्पन्नः । इति सिद्धान्तकौमुदी ॥

**यजमानः**, पुं, (यजतीति । यज् + शनच् ।) अध्वरे
आदेष्टा । तत्पर्य्यायः । व्रती २ यष्टा ३ । इत्य-
मरः । २ । ७ । ८ ॥ (यथा, श्रीमद्भागवते । ३ । १६
। ८ ।
"नाहं तथाद्मि यजमानहविर्व्वितान

मतः ॥
स यक्ष्मा हुङ्कृतोऽश्विभ्यां मानुषं
लोकमागतः ।
लब्ध्वा चतुर्व्विधं हेतुं समाविशति मानवान्
॥
अयथाबलमारम्भं वेगसन्धारणं क्षयम् ।
यक्ष्मणः कारणं विद्यात् चतुर्थं विषमाशनम्
॥”
अस्य विशेषहेतुर्यथा, --
“युद्धाध्ययनभाराध्वलङ्घनप्लवनादिभिः।
पतनैरभिघातैर्वा साहसैर्वा तथापरैः ॥
अयथाबलमारम्भैर्जन्तोरुरसि विक्षते ।
वायुः प्रकुपितो दोषावुदीर्य्योभौ विधावति
॥”
तथास्य लक्षणादिकं यथा, --
“स शिरःस्थः शिरःशूलं करोति
गलमाश्रितः ।
कण्ठोद्ध्वंसञ्च कासञ्च स्वरभेदमरोचकम् ॥
पार्श्वशूलञ्च पार्श्वस्थो वर्च्चोभेदं गुदे
स्थितः ।
जृम्भां ज्वरञ्च सन्धिस्थ उरःस्थश्चोरसो
रुजम् ॥
क्षणनाच्चोरसो रक्तं कासमानः कफानुगम् ।
जर्ज्जरेणोरसा कृच्छ्रमुरःशूली निरस्यति ॥
इति साहसिकं यक्ष्मा रूपैरेतैः प्रपद्यते ।
एकादशभिरात्मज्ञो भजेत्तस्मान्न साहसम् ॥
ह्रीमत्त्वाद्वा घृणित्वाद्वा भयाद्वा वेगमागतम् ।
वातमूत्रपुरीषाणां निगृह्णाति यदा नरः ॥
तदा वेगप्रतीघातात् कफपित्ते समीरयन् ।

दानधातोर्यमधातोश्च शतृप्रत्ययेन
निष्पन्नः ॥

**यज**, ऐ ञ औ देवार्च्चादानसङ्गकृतौ । इति कवि-

कल्पद्रुमः ॥ (भ्वा०-उभ०-सक०-
अनिट् ।)
सङ्गस्य कृतिः सङ्गकृतिः । ऐ, इज्यात् ।
ञ,
यजति यजते विष्णुं सुधीः
पूजयतीत्यर्थः ।
पशुना रुद्रं यजते पशुं रुद्राय
ददातीत्यर्थः ।
यजति सन्तं सन् सता सह सङ्गं
करोतीत्यर्थः ।
औ, यष्टा । इति दुर्गादासः ॥

**यजतः**, पुं, (यजतीति । यज् + “भृमृदृशियजि-

पर्व्विपच्यमितमिनमिहर्य्यिभ्योऽतच् ।”
उणा०
३ । ११० । इति अतच् ।) ऋत्विक् ।
इति सिद्धान्त-
कौमुदी ॥ (ऋषिविशेषः । स तु
ऋग्वेदस्य ५
म० ६७ । ६८ । सूक्तयोः ऋषिः ॥ त्रि,
यष्टव्यः ।
यथा, ऋग्वेदे । १ । १८१ । ३ ।
“अहंपूर्ब्बो यजतो धिष्ण्या यः ॥”
“यजतो यष्टव्यः ।” इति तद्भाष्ये सायणः
॥
तथा च तत्रैव । २ । ५ । ८ ।
“यथा विद्वाँ अरं करद्विश्वेभ्यो यजतेभ्यः
।”
“यजतेभ्यः सर्व्वेभ्यो यजनीयेभ्यो
देवेभ्यः ।”
इति तद्भाष्ये सायणः ॥)

**यजतिः**, पुं, (यज् + बाहुलकात् अतिः ।) यागः ।

यथा, --
“यजतिषु येयजामहं कुर्य्यान्नानुयाजेषु
।”
इति मलमासतत्त्वधृता श्रुतिः ॥

श्चोतद्धृतप्लुतमदन् हुतभुङ्मुखेन ॥”)
“व्रत्यादित्रयं यजमाने । अध्वरे यागविषये मम
इष्टसम्पादनाय यथार्थं कर्म्म कुरु इति ऋत्वि-
जामादेशको यागस्वामी व्रत्यादिशब्दत्रयवाच्य
इत्यर्थः । व्रतमणाजिनादिधारणं विद्यतेऽस्य
व्रती इन् । यजते इति तृनि यष्टा । शाने
यजमानः । स व्रती सोमपानवति अध्वरे यज-
मानः सन् दीक्षित उच्यते अन्यत्राप्युपचारात् ।
दीक्ष मौण्ड्येज्योपनयनव्रतादेशेषु क्तः दीक्षा-
शब्दादितो वा ।” इति भरतः ॥

**यजाकः**, त्रि, (यजतीति । यज् दाने + आकन् ।)

दानकर्त्ता । इत्युणादिकोषः ॥

**यजिः**, पुं, (यजतीति । यज् + “सर्व्वधातुभ्य इन् ।”

उणा० ४ । ११७ । इति इन् ।) यष्टा । इत्युणादि-
कोषः ॥

**यजुः**, [स्] क्ली, (इज्यतेऽनेनेति । यज् + “अर्त्ति-
पृवपियजीति ।” उणा० २ । ११८ । इति
उसिः ।) वेदविशेषः । इत्यमरः । १ । ६ । ३
॥
“इज्यतेऽनेनेति यजुः । यजै ञौ
देवार्च्चादानसङ्ग-
कृतौ । त्रासुसिस् इति उस् ।” इति भरतः ॥
* ॥
अपि च । यजुराह जैमिनिः । शेषे वा यजुः-
शब्दः । शेषे ऋक्सामभिन्ने मन्त्रजाते ततश्च
यन्मन्त्रजातं प्रश्लिष्य पठितं
गानादिविच्छेद-
रहितं तत् यजुरिति । इति तिथ्यादितत्त्वम् ॥
यजुर्व्वेदस्य षडशीतिर्भेदा भवन्ति । तत्र
चरका
नाम द्वादश भेदा भवन्ति । चरकाः १ आह्व-
रकाः २ कठाः ३ प्राच्यकठाः ४
कपिष्ठलकठाः ५
औपमन्याः ६ आष्ठालकठाः ७ चाराय-
णीयाः ८ वारायणीयाः ९ वार्त्तान्तवेयाः १०
श्वेताश्वतराः ११ मैत्रायणीयाश्चेति १२ ।
तत्र
मैत्रायणीया नाम सप्त भेदा भवन्ति ।
मानवाः १ दुन्दुभाः २ चैकेयाः ३ वाराहाः ४
हारिद्रवेयाः ५ श्यामाः ६ श्यामायनीया-
श्चेति ७ । तेषामध्ययनमष्टौ शतम् । यजुः-
महस्राण्यधीत्य शाखापारो भवति । तान्येव
द्विगुणान्यधीत्य पदपारो भवति । तान्येव
त्रिगु-
णान्यधीत्य क्रमपारो भवति ।
षडङ्गान्यधीत्य
षडङ्गविद्भवति । शिक्षा कल्पो व्याकरणं
निरुक्तं
च्छन्दो ज्योतिषमित्यङ्गानि । तत्र
प्राच्योदीच्यां
नैरृत्यां निरृत्यः । तत्र वाजसनेया नाम सप्त-
दश भेदा भवन्ति । जाबालाः १ औधेघाः २
काण्वाः ३ माध्यन्दिनाः ४ शापीयाः ५
तापायनीयाः ६ कापालाः ७ पौण्ड्रवत्साः ८
आवटिकाः ९ पामावटिकाः १० पारा-
यजुर्व्वेदः स विज्ञेयोऽन्ये शाखान्तराः स्मृताः
॥”
यजुर्व्वेदस्य धनुर्व्वेद उपवेदः । यजुर्व्वेदस्य
भार-
द्वाजगोत्रम् । रुद्रदैवत्यम् । त्रैष्टुभं छन्दः ।
यजु-
र्व्वेदः कृशः । दीर्घः । कपाली । ताम्रवर्णः ।
काञ्चननयनः । आदित्यवर्णः वर्णेन ।
पञ्चारत्नि-
मात्रः । अस्य ध्यानम् ।
“वन्दे रौद्रं त्रैष्टभं ताम्रवर्णं
भारद्वाजं रुक्मनेत्रं कृशाङ्गम् ।
यजुर्व्वेदं दीर्घमादित्यवर्णं
कापालीनं पञ्च चारत्निमात्रम् ॥”
य इदं दैवतं रूपं गोत्रं प्रमाणं छन्दो वर्णं
वर्णयति स विद्यां लभते स विद्यां लभते ।
जन्मजन्मनि वेदपारो भवति । जन्मजन्मनि
वेदधारो भवति । अव्रतो व्रती भवति ।
अप्रयतः प्रयतो भवति । अब्रह्मचारी ब्रह्म-
चारी भवति । जातिस्मरो जायते । इति
चरणव्यूहम् ॥ (ऋक्सामभिन्नो मन्त्रविशेषः ।
इति केचित् ॥)

**यजुर्व्वेदः**, पुं, (यजुरेव वेदः । यजुषां वेद इति
वा ।) वेदविशेषः । तस्याधिपतिर्यथा, --
“ऋग्वेदाधिपतिर्जीवः सामवेदाधिपः कुजः ।
यजुर्व्वेदाधिपः शुक्रः शशिजोऽथर्व्ववेदराट्
॥”
इति ज्योतिषम् ॥
अस्य वक्ता वैशम्पायनः । स तु आदावेक
एवासीत् । यथा, --
“ऋग्वेदंश्रावकं पैलं जग्राह स महामुनिः ।
यजुर्व्वेदप्रवक्तारं वैशम्पायनमेव च ॥
जैमिनं सामवेदस्य श्रावकं सोऽन्वपद्यत ।
तथैवाथर्व्ववेदस्य सुमन्तुमृषिसत्तमम् ॥
एक आसीद्यजुर्व्वेदस्तञ्चतुर्धा व्यकल्पयत् ।
चातुर्होत्रमभूद्यस्मिंस्तेन यज्ञमथाकरोत् ॥
अध्वर्य्यवं यजुर्भिः स्यादृग्भिर्होत्रं द्विजोत्तमाः ।
उद्गात्रं सामभिश्चक्रे ब्रह्मत्वञ्चाप्यथर्व्वभिः
॥
ततः स ऋच उद्धृत्य ऋग्वेदं कृतावान् प्रभुः ।
राजसिकयज्ञो यथा, --
“अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ ! तं यज्ञं विद्धि राजसम् ॥”
तामसिकयज्ञो यथा, --
“विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥”
इति श्रीभगवद्गीतायाम् १७ अध्यायः ॥ * ॥
स च नानाविधः । यथा, --
“द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः शंसितव्रताः
॥”
इति श्रीभगवद्गीतायाम् ४ अध्यायः ॥ * ॥
पञ्च यज्ञा यथा, --
“अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥”
इति गारुडे ११५ अध्यायः ॥ * ॥
(तथाच मनुः । ४ । २१ -- २२ ।
“ऋषियज्ञं देवयज्ञं भूतयज्ञञ्च सर्व्वदा ।
नृयज्ञं पितृयज्ञञ्च यथाशक्ति न हापयेत् ॥
एतानेके महायज्ञान् यज्ञशास्त्रविदो जनाः ।
अनीहमानाः सततमिन्द्रियेष्वेव जुह्वति ॥”
अपरपञ्चयज्ञा उक्ता यथा, शिवपुराणे वायु-
संहितायामुत्तरभागे । १८ । ८९ -- १०६ ।
“कर्म्मयज्ञस्तपोयज्ञो जपयज्ञस्तदुत्तरः ।
ध्यानयज्ञो ज्ञानयज्ञः पञ्च यज्ञाः प्रकीर्त्तिताः
॥
कर्म्मयज्ञरताः केचित्तपोयज्ञरताः परे ।
जपयज्ञरताश्चान्ये ध्यानयज्ञरतास्तथा ॥
ज्ञानयज्ञरताश्चान्ये विशिष्टाश्चोत्तरोत्तरम् ।
कर्म्मयज्ञो द्विधा प्रोक्तः कामाकामविभेदतः ॥
कामान् कामी ततो भुक्त्वा कामासक्तः
पुनर्भवेत् ।
अकामो रुद्रभवने भोगान् भुक्त्वा ततश्चुतः
॥
तपोयज्ञरतो भूत्वा जायते नात्र संशयः ।
तपस्वी च पुनस्तस्मिन् भोगान् भुक्त्वा
ततश्चुतः ॥
जपध्यानरतो भूत्वा जायते भुवि मानवः ।
जपध्यानरतो मर्त्यस्तद्वैशिष्टवशादिह ॥
ज्ञानं लब्ध्वा चिरादेव शिवसायुज्यमाप्नुयात्
।

शर्य्याः ११ वैधेयाः १२ वैनेयाः १३
औधेयाः १४
गालवाः १५ वैजवाः १६ कात्यायनीया-
श्चेति १७ । प्रतिपदमनुपदं छन्दो भाषा
धर्म्मो
मीमांसा न्यायस्तर्क इत्युपाङ्गानि भवन्ति ।
उपज्योतिषम् १ साङ्गलक्षणम् २ प्रतिज्ञा ३
अनुवाक्यम् ४ परिसंख्या ५ चरणच्यूहम् ६
श्राद्धकल्पः ७ प्रवराध्यायश्च ८ शास्त्रम् ९
क्रतुः १० संख्या ११ अनुगमः १२ यज्ञम्
१३
पाश्वानः १४ होत्रकम् १५ पशवः १५ उक्-
थानि १७ कूर्म्मलक्षणम् १८ ।
इत्यष्टादशपरि-
शिष्टानि ।
"द्वे सहस्रे शते न्यूने मन्त्रे वाजसनेयके ।
इत्युक्तं परिसंख्यातमेतत् सकलं सशुक्रियम्
॥
ग्रन्थांश्च परिसंख्यातं ब्राह्मणञ्च चतुर्गुणम् ।
आदावारभ्य वेदान्तं ब्रह्मव्याहृतिपूर्ब्बकम् ।
वेदमध्याय एतेषां होमान्ते तु समारभेत् ॥"
तत्र तैत्तिरीयका नाम द्विभेदा भवन्ति ।
औख्याः खाण्डिकेयाश्चेति । तत्र
खाण्डिकेया
नाम पञ्च भेदा भवन्ति । आपस्तम्बी १
बौधा-
यनी २ सत्याषाढी ३ हिरण्यकेशी ४
औधेया-
श्चेति ५ । तत्र कठानान्तूपगानविशेषः ।
चतु-
श्चत्वारिंशत्युपग्रन्थान् ।
"मन्त्रब्राह्मणयोर्व्वेदस्त्रिगुणं यत्र पठ्यते ।

यजूंषि च यजुर्व्वेदं सामवेदञ्च सामभिः ॥
एकविंशतिभेदेन ऋग्वेदं कृतवान् पुरा ।
शाखानान्तु शतेनाथ यजुर्व्वेदमथाकरोत् ॥
सामवेदं सहस्रेण शाखानाञ्च विभेदतः ।
अथर्व्वाणमथो वेदं बिभेद नवकेन तु ॥"
इति कौर्म्म्ये ४९ अध्यायः ॥

**यज्ञः**, पुं, इज्यते हविर्दीयतेऽत्र । (इज्यन्ते देवता
अत्र इति वा । यज् +
"यजयाचयतविच्छप्रच्छ-
रक्षो नङ् ।" ३ । ३ । ९० । इति नङ् ।)
यागः ।
तत्पर्य्यायः । सवः २ अध्वरः ३ यागः ४
सप्त-
तन्तुः ५ मखः ६ क्रतुः ७ । इत्यमरः । २ ।
७ । १३ ॥
इष्टिः ८ इष्टम् ९ वितानम् १० मन्युः ११
आहवः
१२ सवनम् १३ हवः १४ अभिषवः १५
होमः
१६ हवनम् १७ महः १८ । इति शब्दरत्ना-
वली ॥ स त्रिविधः । सात्त्विको
राजसिकस्ताम-
सिकश्च । सात्विकयज्ञो यथा, --
"अफलाकाङ्क्षिभिर्य्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्विकः ॥"

तस्मान्मुक्तौ शिवाज्ञाप्तः कर्म्मयज्ञोऽपि
देहिनाम् ॥
अकामः कामसंयुक्तो बन्धायैव भविष्यति ।
तस्मात् पञ्चसु यज्ञेषु ध्यानज्ञानपरो भवेत् ॥
ध्यानं ज्ञानञ्च यस्यास्ति तीर्णस्तेन भवार्णवः
।
हिंसादिदोषनिर्मुक्तो विशुद्धश्चित्तसाधनः ॥
ध्यानयज्ञः परस्तस्मादपवर्गफलप्रदः ।
बहिः कर्म्मकरा यद्वन्नातीवफलभागिनः ॥
दृष्टा नरेन्द्रभवने तद्वदत्रापि कर्म्मिणः ।
ध्यानिनां हि वपुः सूक्ष्मं भवेत् प्रत्यक्षमैश्वरम्
॥
तथेह कर्म्मिणां स्थूलं मृत्काष्ठाद्यैः
प्रकल्पितम् ।
ध्यानयज्ञरतास्तस्माद्देवान्पाषाणमृन्मयान्
॥
नात्यन्तं प्रतिपद्यन्ते शिवयाथात्म्यवेदनात् ।
आत्मस्थं यः शिवन्त्यक्त्वा
बहिरभ्यर्च्चयेन्नरः ॥
हस्तस्थं फलमुत्सृज्य लिहेत् कूर्परमात्मनः ।
ज्ञानात् ध्यानं भवेत् ध्यानाज्ज्ञानं भूयः
प्रवर्त्तते ॥
तदुभाभ्यां भवेन्मक्तिस्तस्मात् ध्यानरतो
भवेत् ।
द्वादशान्ते तथा मूद्र्ध्नि ललाटे भ्रूयुगान्तरे ॥

नासाग्रे वा तथास्ये वा कन्धरे हृदये तथा ।
नाभौ वा शाश्वतस्थाने श्रद्धाविद्धेन चेतसा ॥
बहिर्य्यागोपचारेण देवं देवीञ्च पूजयेत् ।
अथवा पूजयेन्नित्यं लिङ्गे वा कृतकेपि वा ॥
वह्नौ वा स्थण्डिले वाथ भक्त्या वित्तानुसारतः ॥
अथवान्तर्ब्बहिश्चैव पूजयेत् परमेश्वरम् ।
अन्तर्य्यागरतः पूजां बहिः कुर्व्वीत वा न वा ॥”)
अस्योत्पत्तिर्यथा, --
ऋषय ऊचुः ।
“कथं यज्ञवराहस्य देहो यज्ञत्वमाप्तवान् ।
त्रेतात्वमगमन् पुत्त्रा वराहस्य कथं त्रयः ।
तन्नोऽद्य श्रोष्यमाणानां कथयस्व महामते ! ॥
श्रीमार्कण्डेय उवाच ।
शृणुध्वं द्विजशार्दूला यत् पृष्टोऽहं महाद्भुतम् ।
यज्ञेषु देवास्तिष्ठन्ति यज्ञे सर्व्वं प्रतिष्ठितम् ॥
यज्ञेन ध्रियते पृथ्वी यज्ञस्तारयति प्रजाः ।
अन्नेन भूता जीवन्ति पर्जन्यादन्नसम्भवः ॥
पर्जन्यो जायते यज्ञात् सर्व्वं यज्ञमयं ततः ।
स यज्ञोऽभूद्वराहस्य कायात् शम्भुविदारितात् ॥
यथाहं कथये तद्वः शृण्वन्त्ववहिता द्विजाः ।
विदारिते वराहस्य काये भर्गेण तत्क्षणात् ॥
ब्रह्मविष्णुशिवा देवाः सर्व्वैश्च प्रमथः सह ।
निन्युर्जलात् समुद्धृत्य तच्छरीरं नभः प्रति ॥
तद्विभेजुः शरीरन्ते विष्णोश्चक्रेण खण्डशः ।
तस्याङ्गसन्धयो यज्ञा जातास्ते वै पृथक् पृथक् ॥
यस्माद्यस्माच्च ये यज्ञास्तत् शृण्वन्तु महर्षयः ।
भ्रूनासासन्धिना जातो ज्योतिष्टोमो महाध्वरः ॥
हनुश्रवणसन्ध्योस्तु वह्निष्टोमो व्यजायत ।
चक्षुर्भ्रुवोः सन्धिना तु व्रात्यष्टोमो व्यजायत ॥
राजः पौनर्भवष्टोमस्तस्य पोत्रोष्ठसन्धिना ।
वृद्धष्टोमबृहष्टोमौ जिह्वामूलाद्व्यजायत ॥
अतिरात्रं सवैराजमधोजिह्वान्तरादभूत् ॥
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो वलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥
स्नानं तर्पणपर्य्यन्तं नित्ययज्ञाश्च सर्व्वशः ।
कण्ठसन्धेः समुत्पन्ना जिह्वातो विधयस्तथा ॥ ॥
वाजिमेधो महामेधो नरमेधस्तथैव च ।
प्राणिहिंसाकरा येऽन्ये ते जाताः पादसन्धितः ॥
राजसूयोऽथ कारीषो वाजपेयस्तथैव च ॥
पृष्ठसन्धौ समुत्पन्ना ग्रहयज्ञास्तथैव च ॥
प्रतिष्ठोत्सर्गयज्ञाश्च दानश्राद्धादयस्तथा ।
आर्कमाथर्व्वणञ्चैव नाभिसन्धेः समुद्गताः ॥
ऋचोत्कर्षः क्षेत्रयज्ञः पञ्चमार्गोऽतियोजनः ।
लिङ्गसंस्थानहैरम्बयज्ञा जाताश्च जानुनि ॥
एवमष्टाधिकं जातं सहस्रं द्विजसत्तमाः ॥
यज्ञानां सततं लोका यैर्भाव्यन्तेऽधुनापि च ।
स्रुगस्य पोत्रात् संजाता नासिकायाः स्रुवो
ऽभवत् ॥
अन्ये स्रुक्स्रुवभेदा ये ते जाताः पोत्रनासयोः
।
ग्रीवाभागेन तस्याभूत् प्राग्वंशो मुनिसत्तमाः ॥
इष्टापूर्त्तं यजुर्धर्म्मो जाताः श्रवणरन्ध्रतः ।
दंष्ट्राभ्यो ह्यभवन् यूपाः कुशा रोमाणि चाभ-
वन् ॥
उद्गाता च तथाध्वर्य्युर्होता समिध एव च ।
अग्रदक्षिणवामाङ्गपश्चात्पादेषु सङ्गताः ॥
पुरोडाशाः सचरवो जाता मस्तिष्कसञ्चयात्
।
कर्षुर्नेत्रयुगाज्जाता यज्ञकेतुस्तथा खुरात् ॥
मध्यभागोऽभवद्वेदी मेढ्रात् कुण्डमजायत ।
रेतोधारास्तथैवाज्यं स्वरान्मन्त्राः समुद्गताः
॥
यज्ञालयः पृष्ठभागात् हृत्पद्मात् यज्ञ एव च ।
तदात्मा यज्ञपुरुषो मुञ्जाः कक्षात् समुद्गताः
॥
एवं यावन्ति यज्ञानां भाण्डानि च हवींषि च ।
तानि यज्ञवराहस्य शरीरादेव चाभवन् ॥
एवं यज्ञवराहस्य शरीरं यज्ञतामगात् ।
यज्ञरूपेण सकलमाप्यायितुमिदं जगत् ॥
एवं विधाय यज्ञन्तु ब्रह्मविष्णुमहेश्वराः ।
सुवृत्तं कनकं घोरमासेदुर्यत्नतत्पराः ॥
ततस्तेषां शरीराणि पिण्डीकृत्य पृथक् पृथक्
।
त्रिदेवास्त्रिशरीराणि व्यधमन्मुखवायुभिः ॥
सुवृत्तस्य शरीरन्तु व्यधमन्मुखवायुना ।
स्वयमेव जगत्स्रष्टा दक्षिणाग्निस्ततोऽभवत् ॥
कनकस्य शरीरन्तु ध्मापयामास केशवः ।
ततोऽभूद्गार्हपत्याग्निः पञ्चवैतानभोजनः ॥
घोरस्य तु वपुः शम्भुर्ध्मापयामास वै स्वयम् ।
तत आहवनीयोऽग्निस्तत्क्षणात्समजायत ॥
एतैस्त्रिभिर्जगत् व्याप्तं त्रिमूलं सकलं जगत् ।
एतत् यत्र त्रयं नित्यं तिष्ठति द्विजसत्तमाः ।
ब्रह्मोद्गाता होताध्वर्य्युश्चत्वारो
यज्ञवाहकाः ।
एकैकस्य त्रयश्चान्ये परिवाराः स्वयं
कृताः ॥
एते वै षोडश प्रोक्ता ऋत्विजो
वेदचिन्तकाः ।
शतानि त्रीणि षड्भिश्च यज्ञाः सृष्टाः
स्वय-
म्भुवा ॥
भीष्म उवाच ।
यज्ञस्य ब्रह्मणो विप्र ! समाप्तिं वद
साम्प्रतम् ॥
पुलस्त्य उवाच ।
मन्वन्तरे व्यतीते तु
यज्ञस्यावभृथोऽभवत् ।
दक्षिणा ब्रह्मणा दत्ता प्राची होतुस्तु
दक्षिणा ॥
अध्वर्य्यवे प्रतीची तु उद्गातुश्चोत्तरा
तथा ।
त्रैलोक्यं सकलं ब्रह्मा ददौ तेषान्तु दक्षि-
णाम् ॥
धेनूनाञ्च शतं साष्टं दातव्यं यज्ञसिद्धये ।
अध्वर्य्यूणां सहस्राणि स्वेच्छया
दानमिष्यते ॥”
इति पाद्मे सृष्टिखण्डे ३१ अध्यायः ॥ *
॥
ब्राह्मणादीनां स्वधर्म्मयज्ञा यथा, --
“आरम्भयज्ञाः क्षत्त्राः स्युर्हविर्यज्ञा विशः
स्मृताः ।
परिचारयज्ञाः शूद्रास्तु जपयज्ञास्तु
ब्राह्मणाः ॥”
इति मात्स्ये ११८ अध्यायः ॥ * ॥
हिंसायज्ञस्य अधर्म्मजनकत्वं यथा, --
“तथा विश्वभुगिन्द्रस्तु यज्ञं प्रावर्त्तयत्
प्रभुः ।
दैवतैः सह संहृत्य सर्व्वसाधनसंभृतम् ॥
तस्याश्वमेधे वितते समाजग्मुर्महर्षयः ।
महर्षयश्च तान् दृष्ट्वा दीनान्
पशुगणांस्तदा ॥
विश्वं भुजन्ते त्वपृच्छन् कोऽयं
यज्ञविधिस्तब ।

हृत्सन्धितः समुत्पन्नाः सावित्रीयज्ञ एव च ॥
सर्व्वेषां साधका यज्ञाः प्रायश्चित्तकराश्च ये ।
ते मेढ्रसन्धितो जाता यज्ञास्तस्य महात्मनः ॥
रक्षःसत्रं सर्पसत्रं सर्व्वञ्चैवाभिचारिकम् ।
गोमेधो वृक्षजापश्च खुरेभ्यो ह्यभवन्निमे ॥
मायेष्टिः परमेष्टिश्च गीष्पतिर्भोगसम्भवः ।
लाङ्गूलसन्धौ संजाता अग्निष्टोमस्तथैव च ॥
नैमित्तिकाश्च ये यज्ञाः संक्रान्त्यादौ प्रकी-
र्त्तिताः ।
लाङ्गूलसन्धौ ते जातास्तथा द्वादशवार्षिकम् ॥
तीर्थप्रयोगसामौजयजुःसङ्कर्षणस्तथा ।

समस्ता देवतास्तत्र वसन्तेऽनुचरैः सह ॥
एतद्वन्द्वप्रदं नित्यमेतदेव त्रयात्मकम् ।
एतत् त्रयीविधिस्नानमेतत् पुण्यकरं परम् ॥
यस्मिन् जनपदे चैते हूयन्ते अग्र्यस्त्रयः ।
तस्मिन् जनपदे नित्यं चतुर्व्वर्गो विवर्द्धते ॥
एतद्वः कथितं सर्व्वं यत् पृष्टं द्विजसत्तमाः ।
यथा यज्ञवराहस्य देहो यज्ञत्वमाप्तवान् ।
तथा च तस्य पुत्त्राणां देहास्त्रेतात्वमागमन्
॥”
इति कालिकापुराणे ३० अध्यायः ॥ * ॥
ब्रह्मण आदियज्ञा यथा, --
पुलस्त्य उवाच ।
“पूर्ब्बमेव मया ख्यातं यदा स्वायम्भुवो मनुः ।
जातः परमधर्म्मात्मा शतरूपापतिः स्वयम् ॥
स्रष्टा प्रजापतिः पूर्ब्बं सृष्टिकर्म्मण्ययोजयत् ।
वत्स ! त्वमेव संकल्प्य स्वल्पां सृष्टिं कुरु
ह्यथ ॥
स्वयं तु पुष्करं गत्वा कृत्वा यज्ञन्तु विस्तरम्
।

अधर्म्मो बलवानेष हिंसाधर्म्मेप्सया तव
॥
न नः पशुबधस्त्विष्टस्तव यज्ञेश्वरोत्तम !
।
अधर्म्मो धर्म्मघाताय प्रारब्धः
पशुभिस्त्वया ॥
नायं धर्म्मो ह्यधर्म्मोऽयं न हिंसा धर्म्म
उच्यते ।
आगमेन भवान् धर्म्मं प्रकरोतु यदीच्छति
॥
विधिदृष्टेन यज्ञेन धर्म्मेणाव्ययसेतुना ॥
एवं विश्वभुगिन्द्रस्तु
ऋषिभिस्तत्त्वदर्शिभिः ।
उक्तो न प्रतिजग्राह मानमोहसमन्वितः ॥
तेषां विवादः सुमहान् जज्ञे इन्द्रमहर्षि-
णाम् ।
जङ्गमैः स्थावरैः केन यष्टव्यमिति
चोच्यते ॥
ते तु खिन्ना विवादेन तथ्यमुक्त्वा
महर्षयः ।
सन्ध्याय वाक्यमिन्द्रेण पप्रच्छुः खचरं
वसुम् ॥
ऋषय ऊचुः ।
महाप्राज्ञ कथं दृष्टस्तव यज्ञविधिर्नृप ! ।
उत्तानपादे ! प्रब्रूहि संशयं नो नुद प्रभो !
॥
सूत उवाच ।
श्रुत्वा वाक्यं वसुस्तेषामविचार्य्य
बलाबलम् ।
वेदशास्त्रमनुस्मृत्य यज्ञतत्त्वमुवाच ह ॥
यष्टव्यं पशुभिर्मेध्यैरथ मूलफलैरपि ।
हिंसा स्वभावो यज्ञस्य इति मे दर्शनागमः
एवं कृतोत्तरास्ते तु युक्त्वात्मानं ततो
धिया ।
अवश्यं भाविनं दृष्ट्वा तमधो ह्यशपंस्तदा
॥
इत्युक्तमात्रो नृपतिः प्रविवेश रसातलम् ।
धर्म्माणां संशयच्छेत्ता राजा वसुरधो
गतः ॥

तस्मान्न वाच्यो ह्येकेन बहुज्ञेनापि संशयः ।
तस्मान्न हिंसा यज्ञस्य यदुक्तमृषिभिः पुरा ॥”
इति मात्स्ये ११९ अध्यायः ॥
तद्वैदिकपर्य्यायः । वेनः २ अध्वरः ३ मेधः ४
विदथः ५ नार्य्यः ६ सवनम् ७ होत्रा ८ इष्टिः ९ देवताता १० मखः ११ विष्णुः १२ इन्दुः १३
प्रजापतिः १४ धर्म्मः १५ । इति पञ्चदश यज्ञ-
नामानि । इति वेदनिघण्टौ । ३ । १७ ॥
(विष्णुः । यथा, महाभारते । १३ । १४९ । ११७ ।
“यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥”)

**यज्ञकृत्**, त्रि, (यज्ञं करोतीति । कृ + क्विप् ।
यागकर्त्ता । (यथा, श्रीमद्भागवते । ४ । ४ । ७ ।
“तामागतां तत्र न कश्चनाद्रियद्-
विमानितां यज्ञकृतो भयाज्जनः ।
ऋते स्वसॄर्वै जननीञ्च सादराः
प्रेमाश्रुकण्ठ्यः परिषस्वजुर्मुदा ॥”
पुं, विष्णुः । यथा, महाभारते । १३ । १४९ । ११८ ।
“यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग् यज्ञसाधनः ॥”)

**यज्ञपशुः**, पुं, (यज्ञार्थः पशुः ।) घोटकः । इति
शब्दमाला ॥ (यथा, श्रीमद्भागवते । ४ । १९ । ११ ।
“चरमेणाश्वमेधेन यजमाने यजुष्पतिम् ।
वैण्ये यज्ञपशुं स्पर्द्धन्नपोवाह तिरोहितः ॥”)
छागश्च ॥

**यज्ञपुरुषः**, पुं, (यज्ञरूपी पुरुषः ।) विष्णुः । इति
हेमचन्द्रः । २ । २३ ॥ (यथा, श्रीमद्भागवते । २ । ७ । ११ ।
“सत्रे ममास भगवान् हयशीरषाथो
साक्षात् स यज्ञपुरुषस्तपनीयवर्णः ।
“विकङ्कतः स्रुवावृक्षो ग्रन्थिला स्वादुकण्टकः ।
स एव यज्ञवृक्षश्च कण्टकी व्याघ्रपादपि ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**यज्ञश्रेष्ठा**, स्त्री, (यज्ञे श्रेष्ठा ।) सोमवल्ली । इति
राजनिर्घण्टः ॥

**यज्ञसाधनः**, पुं, (यज्ञं साधयतीति । सिध + णिच्
+ ल्युः ।) विष्णुः । इति महाभारते तस्य
सहस्रनामस्तोत्रम् । १३ । १४९ । ११८ ॥
(यज्ञसाधके, त्रि । यथा, ऋग्वेदे । १ । १४५ । ३ ।
“पुरुप्रैषस्ततुरिर्यज्ञसाधनः ।”
“यज्ञसाधनः यज्ञसाधकः अग्न्यधीनत्वात् यज्ञस्य ।”
इति तद्भाष्ये सायणः ॥)

**यज्ञसारः**, पुं, (यज्ञे सारः उत्कृष्टः ।) यज्ञोडुम्बर-
वृक्षः । इति राजनिर्घण्टः ॥

**यज्ञसूत्रं**, क्ली, (यज्ञे धृतं सूत्रम् ।) यज्ञोपवीतम् ।
यथा, --
“पवित्रं यज्ञसूत्रञ्च यज्ञोपवीतमित्यपि ।
यज्ञसूत्रं तदेवोपवीतं स्याद्दक्षिणे भुजे ॥
उद्धृते वामवाहौ तु प्राचीनावीतमप्यदः ।
निवीतन्तु तदेव स्यादूद्र्ध्ववक्षसि लम्बितम् ॥”
इति जटाधरः ॥
तस्य प्रमाणं यथा, --
“ऊदर्ध्वन्तु त्रिवृतं सूत्रं सधवानिर्म्मितं शनैः ।
तन्तुत्रयमधोवृत्तं यज्ञसूत्रं विदुर्बुधाः ॥
त्रिगुणं तद्ग्रन्थियुक्तं वेदप्रवरसम्मितम् ।
शिरोधरान्नाभिमध्यात् पृष्ठार्द्धपरिमाणकम् ॥
यजुर्व्विदां नाभिमितं सामगानामयं विधिः ।
वामस्कन्धेन विधृतं यज्ञसूत्रं बलप्रदम् ॥”
इति कल्किपुराणे ४ अध्यायः ॥
अस्य धारणे मन्त्रो यथा, --
“यज्ञोपवीतमसि यज्ञस्य त्वोपवीतेनोपन-
ह्यामि ।”
इति संस्कारतत्त्वधृतभट्टभाष्यम् ॥
यजुषान्तु, --
“यज्ञोपवीतं परमं पवित्रं
बृहस्पतेर्यत् सहजं पुरस्तात् ।

**यज्ञाङ्गः**, पुं, (यज्ञं अङ्गति प्राप्नोतीति । अङ्ग +
अण् ।) उडुम्बरः । इत्यमरः । २ । ४ । २२ ॥
(अस्य पर्य्यायो यथा, --
“यज्ञाङ्गो ब्रह्मवृक्षश्च हेमदुग्धोऽप्युडुम्बरः ॥”
इति वैद्यकरत्नमालायाम् ॥
“उडुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
खदिरवृक्षः । इति राजनिर्घण्टः ॥ ब्राह्मण-
यष्टिका । इति शब्दचन्द्रिका ॥ (यज्ञ एव अङ्गं
यस्य । विष्णुः । यथा, महाभारते । १३ । १४९ । ११७ ।
“भूर्भुवःस्वस्तरुस्तारः स्वपिता प्रपितामहः ।
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥” * ॥
यज्ञस्याङ्गमिति ।) यागावयवे यज्ञसाधने च
क्ली ॥ (यथा, कुमारसम्भवे । १ । १७ ।
“यज्ञाङ्गयोनित्वमवेक्ष्य यस्य
सारं धरित्रीधरणक्षमञ्च ॥”)

**यज्ञाङ्गा**, स्त्री, (यज्ञमङ्गति प्राप्नोति या । अङ्ग +
अण् । टाप् ।) सोमवल्ली । इति
राजनिर्घण्टः ॥
(विषयोऽस्याः सोमवल्लीशब्दे ज्ञातव्यः ॥)

**यज्ञान्तः**, पुं, (यज्ञस्य अन्तोऽवसानं यस्मिन् ।)
अवभृथः । इति हेमचन्द्रः । ३ । ३९८ ॥ याग-
शेषश्च ॥ (यथा, महाभारते । १३ । १४९ । ११८ ।
“यज्ञान्तकृत् यज्ञगुह्यमन्नमन्नाद एव च ॥”)

**यज्ञारिः**, पुं, (यज्ञस्य दक्षयज्ञस्य अरिर्नाशकः ।)
शिवः । इति धनञ्जयः ॥ राक्षसश्च ॥

**यज्ञिकः**, पुं, पलाशवृक्षः । इति जटाधरः ॥

छन्दोमयो मखमयोऽखिलदेवतात्मा
वाचो बभूवुरुशतीः श्वसतोऽस्य नस्तः ॥”)

**यज्ञभाजनं**, क्ली, (यज्ञस्य भाजनम् ।) यज्ञ-
पात्रम् । इति जटाधरः ॥

**यज्ञभूषणः**, पुं, (यज्ञं भूषयतीति । भूष + णिच् +
ल्युः ।) श्वेतदर्भः । इति राजनिर्घण्टः ॥ (कुश-
मात्रम् । यथा, भावप्रकाशे पूर्ब्बखण्डे प्रथमे भागे ।
“कुशो दर्भस्तथा वर्हिः सूच्यग्रो यज्ञभूषणः ।
ततोऽन्यो दीर्घपत्रः स्यात् क्षुरपत्रस्तथैव च ॥”)

**यज्ञयोग्यः**, पुं, (यज्ञ योग्यः उचितः ।) उडु-
म्बरवृक्षः । इति राजनिर्घण्टः ॥ यागार्हे, त्रि ॥

**यज्ञवल्ली**, स्त्री, (यज्ञस्य वल्ली ।) सोमवल्ली ।
इति राजनिर्घण्टः ॥ (गुणादयोऽस्याः सोम-
लताशब्दे ज्ञातव्याः ॥)

**यज्ञवाटः**, पुं, (यज्ञस्य वाटो गृहम् ।) यज्ञस्थानम् ।
इति हेमचन्द्रः ॥ (यथा, श्रीमद्भागवते । १० ।
२३ । ३३ ।
“इत्युक्त्वा मुनिपत्न्यस्ता यज्ञवाटं पुनर्गताः ।
ते चानसूयवः स्वाभिः स्त्रीभिः सत्रमपारयन् ॥”)

**यज्ञवृक्षः**, पुं, (यज्ञस्य वृक्षः ।) वटीवृक्षः । इति
राजनिर्घण्टः ॥ (विकङ्कतः । तत्पर्य्यायो यथा,
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं
यज्ञोपवीतं बलमस्तु तेजः ॥”
इति पशुपतिः ॥
युगभेदे तत्सूत्रनियमो यथा, --
“सत्ये स्वर्णमयं सूत्रं त्रेतायां राजतं तथा ।
द्वापरे ताम्रजं प्रोक्तं कलौ कार्पाससम्भवम् ॥”
इति बृहद्राजमार्त्तण्डः ॥
अन्यच्च ।
“यज्ञार्थं धार्य्यते सूत्रं यज्ञं ब्रह्मण्यमिष्यते ।
स्वर्णं रौप्यं ताम्रमूर्णं पट्टं कार्पासवार्हिषम् ॥
मृगाजिनं गुटं शङ्खी यथालब्धं निधाय च ।
यज्ञसूत्रं परिचरेद्ब्रह्मलिङ्गक्रियात्मकम् ॥
न तत्र नियमो ग्राह्यः सूत्रब्रह्मण्यशङ्कया ॥”
इति बृद्धादित्यसंहिता ॥

**यज्ञस्थानं**, क्ली, (यज्ञस्य स्थानम् ।) यज्ञवाटः ।
इति जटाधरः ॥

(अनुकम्पितो यज्ञदत्तः । “बह्वचो मनुष्य-
नाम्नष्ठच् वा ।” ५ । ३ । ३८ । इति ठच् ।
“ठाजादावूद्र्ध्वं द्वितीयादचः ।” ५ । ३ ।
८३ । इति
प्रकृतेर्द्वितीयादच ऊद्र्ध्वस्य लोपः ।
यज्ञदत्तकः ।
इति काशिका ॥)

**यज्ञियं**, त्रि, (यज्ञमर्हतीति । यज्ञ + “यज्ञर्त्विग्भ्यां
घखञौ ।” ५ । १ । ७१ । इति घः ।) यज्ञकर्म्मा-
र्हम् । इत्यमरः । २ । ७ । २७ ॥ (यथा, हरिवंशे ।
२९ । १६ ।
“कृतो यज्ञविभागो हि यज्ञियैर्हि सुरैः पुरा ॥”)
यज्ञाय हितम् । इति मुग्धबोधव्याकरणम् ॥
(यथा, मनुः । २ । २३ ।
“कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततः परः ॥”)

**यज्ञियः**, पुं, (यज्ञाय हितः । यज्ञ + घः ।) द्वापर-
युगम् । इति त्रिकाण्डशेषः ॥ (खदिरवृक्षः ।
तत्पर्य्यायो यथा, --
“खदिरो रक्तसारश्च गायत्री दन्तधावनः ।
कण्टकी बालपत्रश्च बहुशल्यश्च यज्ञियः ॥”
इति भावप्रकाशे पूर्ब्बखण्डे प्रथमे भागे ॥
पलाशः । तत्पर्य्यायो यथा, --
“पलाशः किंशुकः पर्णो यज्ञियो रक्तपुष्पकः ।
क्षारश्रेष्ठो वातहरो ब्रह्मवृक्षो सरिद्वरः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**यज्ञियदेशः**, पुं, (यज्ञियश्चासौ देशश्चेति ।)

यागकरणोपयुक्तदेशः । यथा, मनुः । २ ।
२३ ।
"कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः
परः ॥"

**यज्ञियशाला**, स्त्री, (यज्ञिया शाला ।) याग-

मण्डपम् । इति जटाधरः ॥

**यज्ञीयः**, पुं, (यज्ञे भवः इति । यज्ञ + "गहादि-

भ्यश्च ।" ४ । २ । १३८ । इति छः ।)
उडुम्बर-
वृक्षः । इति राजनिर्घण्टः ॥
यागसम्बन्धिनि,
त्रि ॥ (यथा, महाभारते । ३ । १२४ । ६ ।
"प्रशस्तेऽहनि यज्ञीये सर्व्वकामसमृद्धिमत्
।
कारयामास शर्यातिर्यज्ञायतनमुत्तमम् ॥")

**यज्ञीयब्रह्मपादपः**, पुं, (यज्ञीयश्चासौ ब्रह्मपादप-

श्चेति ।) विकङ्कतवृक्षः । इति राजनिर्घण्टः
॥

**यज्ञेश्वरः**, पुं, (यज्ञानामीश्वरः ।) विष्णुः । यथा,

"यज्ञेश्वरो हव्यसमस्तकव्य-
भोक्ताव्ययात्मा हरिरीश्वरोऽत्र ।
तत्सन्निधानादपयान्तु सद्यो
रक्षांस्यशेषाण्यसुराश्च सर्व्वे ॥"
इति श्राद्धतत्वम् ॥

**यज्ञेष्टं**, क्ली, (यज्ञे इष्टम् ।) दीर्घरोहिषकतृणम् ।

इति राजनिर्घण्टः ॥

**यज्ञोडुम्बरः**, पुं, (यज्ञोचितः उडुम्बरः ।) उडु-

म्बरवृक्षः । यज्ञडुमुर इति भाषा ॥
तत्पर्य्यायः ।
हेमदुग्धी २ यज्ञफलः ३ यज्ञाङ्गः ४
हेमदुग्धकः
५ उडुम्बरः ६ जन्तुफलः ७ । इति
शब्दरत्ना-
वली ॥ अस्य गुणाः यथा, भावप्रकाशे ।

तन्त्वसम्भवे षट्तन्तुविधायकम् । नवतन्तुत्वं
व्यक्तमाह देवलः ।
"यज्ञोपवीतं कुर्व्वीत सूत्राणि नव तन्तवः ।
एकेन ग्रन्थिना तन्तुर्द्विगुणस्त्रिगुणोऽथवा ॥"
एकेन ग्रन्थिना युक्त इति शेषः । द्विगुण-
स्त्रिगुणोऽथवेति । तन्तुबलेन द्विसवस्त्रिसवो वा
कर्त्तव्यः । द्विसवत्वं त्रिसवत्वासम्भवे । गोभिले
वाशब्दो विकल्पार्थः । अपिशब्दो वस्त्रकुश-
रज्वोः सूत्रानुकल्पत्वप्रदर्शनार्थः । एवकार-
स्त्रिसवत्वव्यवच्छेदार्थः । द्वितीयो वाशब्दः
अनुक्तमौञ्जबालादिसमुच्चयार्थः । तथा निगम-
परिशिष्टम् । वाससा यज्ञोपवीतानि कुरुते तद-
भावे त्रिवृता सूत्रेण । कुशमुञ्जबालप्रतिसर-
रज्जुभिर्व्वा । बालोऽत्र गोबालः । यथा देवलः ।
"कार्पासक्षौमगोबालशररज्जुतृणोद्भवम् ।
सदा सम्भवतो धार्य्यमुपवीतं द्विजातिभिः ॥"
तदभाव इति करणाद्वस्त्राभावे कुशरज्जुभिरिति
बोद्धव्यम् । इति श्राद्धविवेकः ॥ * ॥ अथोप-
नयनदिनम् । तत्र गर्भाष्टमेऽब्दे ब्राह्मणस्योप-
नयनं शस्तम् । क्षत्त्रियस्य गर्भैकादशे । गर्भ-
द्वादशे वैश्यस्य शस्तम् । अत्रासामर्थ्ये ब्राह्म-
णस्य षोडशवर्षपर्य्यन्तमेव । क्षत्त्रियस्य द्वावि-
शतिवर्षपर्य्यन्तम् । वैश्यस्य चतुर्व्विंशतिवर्ष-
पर्य्यन्तं तदनुष्ठानकालः । तत्र मासाः माघ-
फाल्गुनचैत्रवैशाखज्यैष्ठाषाढा विहिताः । तत्र
तिथयः द्वितीयैकादशीद्वादशीपञ्चमीदशमी-
तृतीया विहिताः । तत्र वाराः बृहस्पति-
शुक्ररवीणां प्रशस्ताः । सामगानां मङ्गल-
वारोऽपि । तत्र नक्षत्राणि । स्वाती ज्येष्ठा
धनिष्ठा अश्विनी अनुराधा हस्ता रेवती पुष्या
चित्रा श्रवणा मृगशिरः शतभिषा पूर्ब्बफल्गुनी
उत्तरफल्गुनी पूर्ब्बभाद्रपदा उत्तरभाद्रपदा
रोहिणी पूर्ब्बाषाढा । तत्र लग्नानि वृषसिंह-
तुलाधनुर्मीनसंज्ञकानि । तत्र पक्षः शुक्लः ।
तच्चन्द्रादिशोभने अनध्यायादीन् परित्यज्य
कर्त्तव्यम् । इति ज्योतिषतत्त्वमतम् ॥ * ॥
अथोपनयनम् । तत्र गोभिलः । गर्भाष्टमेषु
ब्राह्मणमुपनयेत् गर्भैकादशेषु क्षत्त्रियं गर्भ-
द्वादशेषु वैश्यम् । आषोडशात् ब्राह्मणस्यान-
तीतः कालो भवति आद्वाविंशात् क्षत्त्रियस्य
आचतुर्व्विंशात् वैश्यस्य । अत ऊर्द्ध्वं पतित-

जन्मगणनाभ्यामविरुद्धता । तथा च
माण्डव्यः ।
"व्रतबन्धविवाहे च
वत्सरपरिगणनमाहुराचार्य्याः ।
आधानपूर्ब्बकमेके प्रसूतिपूर्ब्बं सदान्ये तु
॥"
यत्तु द्विजानामित्युपक्रम्य पैठीनसिवचनम् ।
द्वादशषोडशविंशतिश्चेदतीता
अवरुद्धकाला
भवन्ति । तद्द्वादशवर्षाद्युपरि ब्राह्मणादीनां
महा-
व्याहृतिहोमप्रायश्चित्तार्थं षोडशवर्षोपरि
गुरु-
प्रायश्चित्तमिति । तथा च शङ्खलिखितौ ।
व्रात्य-
श्चान्द्रायणं चरेत् गोप्रदानञ्च कुर्य्यात् ।
चान्द्रा-
यणाशक्तौ धेन्वष्टकं तन्मूल्यं वा
सार्द्धद्वाविंशति-
कार्षापणाः गोमूल्यं कार्षापण एकः मिलित्वा
सार्द्धत्रयोविंशतिकार्षापणाः देयाः ।
पितृमातृ-
रहितस्य निःस्वस्य देशोपप्लवादिना
पतित-
सावित्रीकस्य वा विषये तु मनुविष्णू ।
"येषां द्विजानां सावित्री नानुतिष्ठेद्
यथाविधि ।
तांश्चारयित्वा त्रीन् कृच्छ्रान्
यथाविध्युपना-
ययेत् ॥
कृच्छ्रं प्राजापत्यम् । तदशक्तौ धेनुत्रयं
तन्मूल्यं
वा नव कार्षापणाः । अकृतप्रायश्चित्तं
प्रत्याह
नैतानित्यादि । तत्र बहुवचनं
तत्कर्त्तृसंसर्गिणां
प्रायश्चित्तप्रदर्शनार्थम् । तथा च
स्मृत्यन्तरम् ।
"व्रात्याचार्य्यस्य भुक्त्वान्नं कृच्छ्रपादेन
शुध्यति ।

“उडुम्बरो हिमो रूक्षो गुरुः
पित्तकफास्रनुत्।
मधुरस्तुवरो वर्ण्यो व्रणशोधनरोपणः॥”

**यज्ञोपवीतं**, क्ली, (यज्ञधृतं उपवीतम्।) यज्ञ-
सूत्रम्। पैता इति भाषा। तत्पर्य्यायः। पवि-
त्रम् २ ब्रह्मसूत्रम् ३ द्विजायनी ४। इति
त्रिकाण्डशेषः॥ तस्य निरूपणं यथा। उप-
वीतमाह गोभिलः। यज्ञोपवीतं कुरुते सूत्रं
वस्तं वा अपि वा कुशरज्जुमेव। यज्ञोपवीतं
विशिष्टविन्यासधारणकर्म्मतया कुरुते। किं
तत् सूत्रम्। सूत्रं विशेषयति छन्दोगपरिशिष्टम्।
“ऊद्‌र्ध्वन्तु त्रिवृतं कार्य्यं तन्तुत्रयमधोवृतम्।
त्रिवृतञ्चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते॥”
वामावर्त्तवलितं तन्तुत्रयं त्रिगुणं कृत्वा दक्षिणा-
वर्त्तवलितं कार्य्यं एवं त्रिवृतं त्रिसवं उपवीतं
स्यात्। एको ग्रन्थिरिति नानात्वनिषेधार्थम्।
तथा बौधायनः।
“कौषं सौत्रं त्रिस्त्रिवृतं यज्ञोपवीतमानाभेः॥”
कौषं कृमिकोषोद्भवं पट्टसूत्रादिमयमित्यर्थः।
सौत्रं कार्पासोद्भवम्। तथा मनुः।
“कार्पासमुपवीतं स्यात् विप्रस्योद्‌र्ध्ववृतं त्रिवृत्।
शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम्॥”
त्रिस्त्रिवृतमित्युक्तत्वात् मनुवचनेऽपि त्रिवृन्मात्रं
त्रिसवत्वेन विशेष्यम्। यत्तु पैठीनसिवचनम्।
कार्पासमुपवीतं षट्‌तन्तु त्रिवृतं ब्राह्मणस्य।
क्षौमं राजन्यस्य। आविकं वैश्यस्य। तन्नव-
सावित्रीका भवन्ति। नैतानुपनयेयुर्नाध्याप-
येयु र्न एभिर्व्विवाहयेयुः॥ आषोडशादित्यभि-
विधावाङ्। तथा च विष्णुधर्म्मोत्तरम्।
“षोडशाब्दो हि विप्रस्य राजन्यस्य द्विविंशतिः।
विंशतिः सचतुर्थी च वैश्यस्य परिकीर्त्तिता॥
सावित्री नातिवर्त्तेत अत ऊद्‌र्ध्वं निवर्त्तते॥”
अत्र षोडशवर्षाणामुपनयनाङ्गताप्रतीयते।
“पतिता यस्य सावित्री दश वर्षाणि पञ्च च।
ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः॥
प्रायश्चित्तं भवेदेषां प्रोवाच वदतां वरः॥”
इति यमवचनेन तदनङ्गता प्रतीयते अनयोर्गर्भ-
यश्चोपनयते व्रात्यान् त्रिभिः कृच्छ्रैः स
शुध्यति॥”
भुजबलभीमकृत्यचिन्तामण्योः।
“स्वातीशक्रधनाश्विमित्रकरभे पौष्णेज्यचित्राहरि-
ष्विन्दौ तोयपतौ भगेऽदितिसुते भाद्रद्वये सागरे।
केन्द्रस्थे भृगुजेऽङ्गिरःशशिसुते चन्द्रे च तारे शुभे
कर्त्तव्यं व्रतकर्म्म मङ्गलतिथौ वाराः सितार्के-
ज्यकाः॥”
अदितिसुत उत्तरफल्गुनी। सागरः पूर्ब्बा-
षाढा। दीपिकायाम्।
“जीवार्केन्दूडुशुद्धौ हरिशयनबहिर्भास्करे चोत्तरस्थे
स्वाध्याये वेदवर्णाधिप इह शुभदे क्षौरिभे नादितौ च।
शुक्रार्केज्यर्क्षलग्ने रविमदनतिथिं प्रोज्झ्य षष्ठाष्टमेन्दूं
नो जीवास्तातिचारेऽर्कसितगुरुदिने काल-
शुद्धौ व्रतं स्यात्॥”
रविमदनतिथिं सप्तमीं त्रयोदशीम्। षष्ठाष्ट-
मेन्दुं लग्नापेक्षया। कृत्यचिन्तामणौ।
“माघे द्रविणशीलाढ्यः फाल्गुने च दृढव्रतः।
चैत्रे भवति मेधावी वैशाखे कोविदो भवेत्॥
ज्यैष्ठे गहननीतिज्ञ आषाढे क्रतुभाजनः।
शेषेष्वन्येषु रात्रिः स्यान्निषिद्धं निशि च व्रतम्॥”
राजमार्त्तण्डः।
“पुनर्व्वसौ कृतो विप्रः पुनःसंस्कारमर्हति॥”
आश्वलायनः। उदगयने आपूर्य्यमाणे पक्षे
कल्याणे नक्षत्रे चूडोपनयनगोदानविवाहाः।
विवाहः सार्व्वकालिक इत्येके। आपूर्य्यमाणे
पक्षे शुक्ले पक्षे। वृद्धगर्गः।

"स्मृतिषूक्ताननध्यायान् सप्तमीञ्च त्रयोदशीम् ।
पक्षयोर्माघमासस्य द्बितीयां परिवर्ज्जयेत् ॥"
श्रीपतिव्यवहारसमुच्चये ।
"कार्त्तिकस्याश्विनस्यापि फाल्गुनाषाढयो-
रपि ।
कृष्णपक्षे द्बितीयायामनध्यायं विदुर्ब्बुधाः ॥"
भुजबलः ।
"चैत्रकृष्णद्बितीयायां तिसृष्वेवाष्टकासु च ।
मार्गे च फाल्गुने चैव आषाढे कार्त्तिके तथा ॥
पक्षयोर्माघमासस्य द्बितीयां परिवर्ज्जयेत् ।
नाकालवृष्टौ कुर्व्वीत व्रतबन्धशुभक्रियाम् ॥"
उपनयने उत्तरायणशुक्लपक्षयोर्व्विधानात्
कार्त्ति-
कादौ कृष्णपक्षे च द्बितीयानिषेधः पुनः-
संस्कारमर्हति
इत्युक्तप्रायश्चित्तरूपोपनयनपरः ।
वैश्योपनयनपरश्च । तथा च गर्गः ।
"विप्रस्य क्षत्त्रियस्यापि मौञ्जी स्यादुत्तरायणे ।
दक्षिणे च विशां कार्य्यं नानध्याये न संक्रमे ।
अनध्यायेऽपि कुर्व्वीत यस्य नैमित्तिकं भवेत्
॥"
अपिना दक्षिणायनकृष्णपक्षयोः समुच्चयः ।
नैमित्तिकं प्रायश्चित्तरूपम् । चैत्रशुक्लतृतीया
आषाढशुक्लदशमी मन्वन्तरादित्वेन निषिद्धा
।
वैशाखशुक्लतृतीया युगादित्वेन निषिद्धा ।
षष्ठ्यामशुचिरुग्भार्य्यो रिक्तासु बहुदोषभाक् ।
सामगानां कुजवारेऽप्युपनयनम् । शाखाधि-
पत्वात् । यथा च ।
"शाखाधिपे बलिनि केन्द्रगतेऽथवास्मिन्
वारेऽस्य चोपनयनं कथितं द्बिजानाम् ।
मीचस्थितेऽरिगृहगेऽथ पराजिते वा
जीवे भृगावुपनयः स्मृतिकर्म्महीनः ॥"
अस्य शाखाधिपस्य । कृत्यचिन्तामणौ ।
"जन्मोदये जन्मसु तारकासु
मासेऽथवा जन्मनि जन्मभे वा ।
व्रतेन विप्रो न बहुश्रुतोऽपि
विद्याविशेषैः प्रथितः पृथिव्याम् ॥
अस्तं गते दैत्यगुरौ गुरौ वा
ऋक्षेऽपि वा पापयुतेऽप्यनुक्ते ।
व्रतोपनीतो दिवसैः प्रणाशं
"राजा स यज्वा विबुधव्रजत्रा
कृत्वाध्वराज्योपमयैव राज्यम् ।
भुङ्क्ते श्रितश्रोत्रियसात्कृतश्रीः
पूर्ब्बं त्वहो शेषमशेषमन्त्यम् ॥")

**यज्वनांपतिः**, पुं, चन्द्रः । इति त्रिकाण्डशेषः ॥

**यत्**, ई ङ यत्ने । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-अक०-सेट् । अनिड्निष्ठः ।) ई,
यत्तः ।
ङ, यतते पठितुं शिष्यः । इति दुर्गादासः ॥

**यत्**, क खेदोपस्करयोः । इति कविकल्पद्रुमः ॥
(चुरा०-पर०-सक०-सेट् ।) खेद इह
ताडनम् ।
क, यातयति पुत्त्रं पिता ताडयति इत्यर्थः ।
यातयति गृहं गृहिणी उपस्करोति इत्यर्थः ।
निरः प्रत्यर्पणे । प्रत्यर्पणं परीवर्त्तः । निर्यात-
यति धान्येन माषान् लोकः धान्यं दत्त्वा
माषान्
गृह्णाति इत्यर्थः । इति दुर्गादासः ॥

**यत्**, व्य, हेतुः । यस्मात् । इत्यमरः । ३ । ४ । ३ ॥
(यथा, उत्तररामचरिते ।
"अत्र स्थिता तृणमदात् बहुशो यदेभ्यः
सीता ततो हरिणकैर्न विमुच्यते स्म ॥")

**यत्**, [द्] त्रि, (यजति सर्व्वैः पदार्थैः सह सङ्गतो
भवतीति । यज् + "त्यजितनियजिभ्यो डित्
।"
उणा० १ । १३१ । इति अदिः डित् ।)
बुद्धिस्थ-
त्वोपलक्षितधर्म्मावच्छिन्नम् । इति न्यायमतं
सिद्धान्तकौमुद्युणादिवृत्तिश्च ॥ ये इति भाषा
॥
(एकविंशतिविभक्तिषु पुंलिङ्गे तस्य रूपाणि
यथा, यः १ यौ २ ये ३ । प्रथमा । यम् ४ यौ
५
यान् ६ । द्बितीया । येन ७ याभ्याम् ८ यैः ९
।
तृतीया । यस्मै १० याभ्याम् ११ येभ्यः १२
।
येभ्यः । यथा, भागवते । १ । १५ । २१ ।
"तद्वै धनुस्त इषवः सरथो हयास्ते
सोऽहं रथी नृपतयो यत आनमन्ति ॥"
यत्र । यथा, अभिज्ञानशकुन्तले ।
"यतो यतः षट्चरणोऽभिवर्त्तते
ततस्ततः प्रेरितवामलोचना ॥")

**यतमः**, त्रि, (यत् + "वा बहूनां जातिपरिप्रश्ने
डतमच् ।" ५ । ३ । ९३ । इति डतमच् ।)
बहूनां मध्ये निर्द्धारिंत एकः । एषां मध्ये यः
।
यच्छब्दात् डतमप्रत्ययेन निष्पन्नः । इति
मुग्ध-
बोधव्याकरणम् ॥ ("यतमो भवतां कठः ।"
इति काशिका ॥)

**यतरः**, त्रि, (यत् + "किं यत्तदो निर्द्धारणे द्बयो-
रेकस्य डतरच् ।" ९ । ३ । ९२ । इति
डतरच् ।)
द्बयोर्मध्ये निर्द्धारित एकः । अनयोर्मध्ये यः
।
यच्छब्दात् डतरप्रत्ययेन निष्पन्नः । इति
मुग्ध-
बोधव्याकरणम् ॥ (यथा, ऋग्वेदे । ७ ।
१०४ । १२ ।
"तयोर्यत् सत्यं यतरदृजीयस्तदित्सोमोवति
हन्त्यासत् ॥")

**यति**, त्रि, बहुवचनान्तयावच्छब्दार्थकः । यतगुलि
इति भाषा । यच्छब्दात् निपातनात्
डतिप्रत्य-
येन निष्पन्नम् । इति मुग्धबोधव्याकरणम् ॥
(यथा, ऋग्वेदे । १० । १५ । १३ ।
"त्वं वेत्थ यति ते जातवेदः ।"
"यति ते यावन्तस्ते भवन्ति ।" इति तद्भाष्ये
सायणः ॥)

**यतिः**, पुं, (यतते चेष्टते मोक्षार्थमिति । यत् +
"सर्व्वधातुभ्य इन् ।" उणा ० ४ । ११७ ।
इति
इन् ।) निर्ज्जितेन्द्रियग्रामः । तत्पर्य्यायः ।

प्रयाति देवैरपि रक्षितो यः ॥”
उदये लग्ने । व्रतेन उपनयनेन । इति संस्कार-
तत्त्वम् ॥

**यज्युः**, त्रि, (यजतीति । यज् + “यजिमनिशुन्धि-

दसिलनिभ्यो युच् ।” उणा० ३ । २० । इति
युच् ।) यजुर्व्वेदवेत्ता ब्राह्मणः । इत्युणादि-
कोषः ॥ यजमानः । इति संक्षिप्तसारोणादि-
वृत्तिः ॥ (यथा, ऋग्वेदे । १ । ३१ । १३ ।
“त्वमग्ने यज्यवे पायुरन्तरोऽनिषङ्गाय ।”
“हे अग्ने त्वं यज्यवे यज्योर्यजमानस्य पायुः
पालकः ।” इति तद्भाष्ये सायणः ॥)

**यज्वा**, [न्] पुं, (यज् + “सुयजोर्ङ्वनिप् ।” ३ ।

२ । १०३ । इति ङ्वनिप् ।) विधिना इष्टवान्
।
वेदविधानेन कृतयागः । इत्यमरः । २ । ७ ।
८ ॥
(यथा, नैषधचरिते । ३ । २४ ।

चतुर्थी । यस्मात् १३ याभ्याम् १४ येभ्यः
१५ ।
पञ्चमी । यस्य १६ ययोः १७ येषाम् १८ ।
षष्ठी । यस्मिन् १९ ययोः २० येषु २१ ।
सप्तमी ॥ * ॥ स्त्रीलिङ्गे तस्य रूपाणि यथा,
या १ ये २ याः ३ । प्रथमा । याम् ४ ये ५
याः ६ । द्वितीया । यया ७ याभ्याम् ८
याभिः ९ । तृतीया । यस्यै १० याभ्याम् ११
याभ्यः १२ । चतुर्थी । यस्याः १३ याभ्याम्
१४
याभ्यः १५ । पञ्चमी । यस्याः १६ ययोः
१७
यासाम् १८ । षष्ठी । यस्याम् १९ ययोः २०
यासु २१ । सप्तमी ॥ * ॥ क्लीवलिङ्गे तस्य
रूपाणि । यत् १ ये २ यानि ३ । प्रथमा ।
यत् ४ ये ५ यानि ६ । द्वितीया । शेषः पुंवत्
॥)

**यतः**, व्य, (यद् + “पञ्चम्यास्तसिल् ।” ५ । ३ । ७ ।

इति तसिल् । “तद्धितश्चासर्व्वविभक्तिः ।”
१ । १ ।
३८ । इति तसिल्प्रत्ययान्तस्याव्ययत्वम् ।)
हेतुः । यस्मात् । इत्यमरः । ३ । ४ । ३ ॥
(यथा,
मनुः । २ । ११७ ।
“लौकिकं वैदिकं वापि तथाध्यात्मिकम्मेव च
।
अददीत यतो ज्ञानं तं पूर्ब्बमभिवादयेत् ॥”
यद् + “इतराभ्योऽपि दृश्यन्ते ।” ५ । ३ ।
१४ ।
इति तसिल्प्रत्ययेन । येन । यथा, भागवते ।
२ । ५ । २ ।
“यद्रूपं यदधिष्ठानं यतः सृष्टमिदं प्रभो ! ॥”

यती २ । इत्यमरः । २ । ७ । ४४ ॥ भिक्षुः
३
संन्यासिकः ४ कर्म्मन्दी ५ रक्तवसनः ६
परि-
व्राजकः ७ तापसः ८ पराशरी ९ परिकाङ्क्षी
१० मस्करी ११ पारिरक्षकः १२ । इति
हेम-
चन्द्रः ॥ निकारः । विरतिः । इति तत्रैव
नानार्थे ॥ * ॥ तस्य वाराणस्यां वासो यथा,
--
“अष्टौ मासान् विहारस्य यतीनां संयतात्म-
नाम् ।
एकत्र चतुरो मासानब्दं वा निवसेत् पुनः ॥
अविमुक्ते प्रविष्टानां विहारस्तु न विद्यते ।
यतिभिर्मोक्षकामैश्च अविमुक्तं निषेव्यते ॥”
इति मात्स्ये अविमुक्तमाहात्म्ये १५९
अध्यायः ॥
यतिधर्म्मो यथा, --
“अलावुं दारुपात्रञ्च मृण्मयं वैदलं तथा ।
एतानि यतिपात्राणि मनुः स्वायम्भुवोऽब्रवीत्
॥
एककालं चरेद्भैक्ष्यं न प्रसज्जत विस्तरे ।
भक्ष्य प्रसक्तो हि यतिर्विषयेष्वपि सज्जति
॥
विधूमे सन्नमुषले व्यङ्गारे भुक्तवज्जने ।
वृत्ते शरावसम्पाते भिक्षां नित्यं यतिश्चरेत्
॥
अलाभे न विषादी स्याल्लाभे चैव न हर्षयेत् ।
प्राणयात्रिकमात्रः स्यान्मात्रासङ्गाद्विनिर्गतः
॥
अभिपूजितलाभांस्तु जुगुप्सेतैव सर्व्वशः ।
अभिपूजितलाभैश्च यतिर्मुक्तोऽपि वध्यते ॥

अल्पान्नाभ्यवहारेण रहःस्थानासनेन च ।
ह्रियमाणानि विषयैरिन्द्रियाणि निवर्त्तयेत् ॥
इन्द्रियाणां निरोधेन रागद्वेषक्षयेण च ।
अहिंसया च भूतानाममृतत्वाय कल्पते ॥
अवेक्षेत गतीर्नॄणां कर्म्मदोषसमुद्भवाः ।
निरये चैव पतनं यातनाश्च यमक्षये ॥
विप्रयोगं प्रियैश्चैव संयोगञ्च तथाप्रियैः ।
जरया चाभिभवनं व्याधिभिश्चोपपीडनम् ॥
देहादुत्क्रमणञ्चास्मात् पुनर्गर्भे च सम्भवम् ।
योनिकोटिसहस्रेषु सृतीश्चास्यान्तरात्मनः
॥
अधर्म्मप्रभवञ्चैव दुःखयोगं शरीरिणाम् ।
धर्म्मार्थप्रभवञ्चैव सुखसंयोगमक्षयम् ॥
सूक्ष्मताञ्चान्ववेक्षेत योगेन परमात्मनः ।
देहेषु च समुत्पत्तिमुत्तमेष्वधमेषु च ॥
दूषितोऽपि चरेद्धर्म्मं यत्र तत्राश्रमे रतः ।
समः सर्व्वेषु भूतेषु न लिङ्गं धर्म्मकारणम् ॥
फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादकम् ।
न नामग्रहणादेव तस्य वारि प्रसीदति ॥
संरक्षणार्थं जन्तूनां रात्रावहनि वा सदा ।
शरीरस्यात्यये चैव समीक्ष्य वसुधां चरेत् ॥
अह्ना रात्र्या च यान् जन्तून्
हिनस्त्यज्ञानतो
यतिः ।
तेषां स्नात्वा विशुद्ध्यर्थं प्राणायामान्
समाचरेत् ॥
प्राणायामा ब्राह्मणस्य त्रयोऽपि विधिवत्
कृताः ।
व्याहृतिप्रणवैर्युक्ता विज्ञेयं परमं तपः ॥
दह्यन्ते ध्मायमानानां धातूनां हि यथा
मलाः ।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य
निग्रहात् ॥
प्राणायामैर्द्दहेद्दोषान् धारणाभिश्च
किल्विषम् ।
प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान्
गुणान् ।
उच्चावचेषु भूतेषु दुर्ज्ञेयामकृतात्मभिः ।
ध्यानयोगेन सम्पश्येत्
गतिमस्यान्तरात्मनः ॥
सम्यग्दर्शनसम्पन्नः कर्म्मभिर्न निवध्यते ।
इदमन्विच्छतां स्वर्गमिदमानन्त्यमिच्छताम् ॥
अनेन क्रमयोगेन परिव्रजति यो द्विजः ।
स विधूयेहपाप्मानं परं ब्रह्माधिगच्छति ॥”
इति मानवे ६ अध्यायः ॥
(ब्रह्मणः पुत्त्रविशेषः । यथा, श्रीमद्भागवते । ४
।
८ । १ ।
“सनकाद्या नारदश्च ऋभुर्हंसोऽरुणिर्यतिः ।
नैते गृहान् ब्रह्मसुता ह्यावसन्नूर्द्ध्वरेतसः ॥”
नहुषपुत्त्रः । यथा, महाभारते । १ । ७५ । ३०
।
“यतिं ययातिं संयातिमायातिमयतिं ध्रुवम् ।
नहुषो जनयामास षट्सुतान् प्रियवाससि ॥”
विश्वामित्रपुत्त्रः । यथा, महाभारते । १३ । ४
। ५७ ।
“आराणिर्नाचिकश्चैव चाम्पेयोज्जयनौ तथा ।
नवतन्तुर्वकनखः सयनो यतिरेव च ॥”
त्रि । कर्म्मसूपरतोऽयष्टा । यथा, ऋग्वेदे ।
८ । ३ । ९ ।
“येनायतिभ्यो भृगवे धने हिते
येन प्रस्कण्वमाविथ ॥”
“येन सुवीर्य्येण यतिभ्यः
कर्म्मसूपरतेभ्योऽयष्टृभ्यो
जनेभ्यः सकाशात् धनमाहृत्य भृगवे महर्षये
प्रयच्छसि ।” इति तद्भाष्ये सायणः ॥)

**यतिः**, स्त्री, (यम्यते रसनात्रेति । यम् + “स्त्रियां
क्तिन् ।” ३ । ३ । ९४ । इति क्तिन् । “अनु-
दात्तोपदेशवनतितनोत्यादीनामिति।” । ६ ।
४ ।
३७ । इति मकारलोपः ।) पाठविच्छेदः । इति
मेदिनी । ते, ४६ ॥ जिह्वेष्टविश्रामस्थानम् ।
यथा, --
“यतिर्जिह्वेष्टविश्रामस्थानं कविभिरुच्यते ।
सा विच्छेदविरामाद्यैः पदैर्व्वाच्या निजेच्छया
॥
क्वचिच्छन्दस्यास्ते यतिरभिहिता
पूर्ब्बकृतिभिः
पदान्ते सा शोभां व्रजति पदमध्ये त्यजति च ।
पुनस्तत्रैवासौ स्वरविहितसन्धिः श्रयति तां
यथा कृष्णः पुष्णात्वतुलमहिमा मां करुणया ॥
नियतात्मा हविष्याशी यतिचान्द्रायणं चरन्
॥”
इति मानवे ११ अध्यायः ॥
यतिचान्द्रायणे पादोनधेनुचतुष्टयं तदशक्तौ
सपादैकादशकार्षपणाः । इति प्रायश्चित्त-
विवेकः ॥

**यतिनी**, स्त्री, (यतं संयमोऽस्या अस्तीति । यत +
इनिः । स्त्रियां ङीप् ।) विधवा । यथा, --
“विघवा जानिका रण्डा विश्वस्ता यतिनी
यतिः ॥”
इति शब्दरत्नावली ॥

**यतिमैथुनं**, क्ली, (यतीनां दुष्टयतीनामिव गोप-
नीयं मैथुनम् ।) यतिगोप्यरतिः । तत्पर्य्यायः
।
खञ्जनरतम् २ । इति त्रिकाण्डशेषः ॥

**यती**, स्त्री, (यतिः । कृदिकारादिति स्त्रियां ङीष् ।)
विधवा । इति शब्दरत्नावली ॥

**यती**, [न्] पुं, (यतं संयमोऽस्यास्तीति । यत् +
इनिः ।) यतिः । जितेन्द्रियः । इत्यमरः । २ ।
७ । ४४ ॥ (यथा, मुग्धबोधे कारकप्रकरणे ।
“सृष्ट्वा दधिं शारुकमेतदर्च्चका-
नुन्नीतवन्तं यतिभिः सुदर्शनम् ॥”)

**यतुका**, स्त्री, (यत् + बाहुलकात् उकन् पक्षे
ऊक । स्त्रियां टाप् ।) वृक्षविशेषः ।
यथा, --

**यतूका**, स्त्री, (यत् + बाहुलकात् उकन् पक्षे
ऊक । स्त्रियां टाप् ।) वृक्षविशेषः ।
यथा, --
“रजनी स्यात्तु यतुका यतूका जननीति च ॥”
इति शब्दरत्नावली ॥

**यत्नः**, पुं, (यत + “यजयाचयतविच्छप्रच्छरक्षो
नङ् ।” ३ । ३ । ९० । इति नङ् ।) रूपादि-
चतुर्व्विंशतिगुणान्तर्गतगुणविशेषः । स च
त्रिविधः । प्रवृत्तिः १ निवृत्तिः २ जीवन-
योनिः ३ । यथा, --
“प्रवृत्तिश्च निवृत्तिश्च तथा जीवनयोनयः ।

दर्शनेन विहीनस्तु संसारं प्रतिपद्यते ॥
अहिंसयेन्द्रियासङ्गैर्वैदिकैश्चैव कर्म्मभिः ।
तपसश्चरणैश्चोग्रैः साधयन्तीह तत् पदम् ॥
अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम् ।
चर्म्मावनद्धं दुर्गन्धिपूर्णं मूत्रपुरीषयोः ॥
जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यञ्च भूतावासमिमं त्यजेत् ॥
नदीकूलं यथा वृक्षो वृक्षं वा शकुनिर्यथा ।
तथा त्यजन्निमं देहं कृच्छ्राद्ग्राहाद्विमुच्यते ॥
प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ।
विसृज्य ध्यानयोगेन ब्रह्माभ्येति सनातनम् ॥
यदा भावेन भवति सर्व्वभावेषु निष्पृहः ।
तदा सुखमवाप्नोति प्रेत्य चेह च शाश्वतम् ॥
अनेन विधिना सर्व्वांस्त्यक्त्वा सङ्गान् शनैः शनैः ।
सर्व्वद्वन्द्वविनिर्म्मुक्तो ब्रह्मण्येवावतिष्ठते ॥
ध्यानिकं सर्व्वमेवैतत् यदेतदभिशब्दितम् ।
न ह्यनध्यात्मवित् कश्चित् क्रियाफलमुपाश्नुते ॥
अधियज्ञं ब्रह्म जपेदाधिदैविकमेव च ।
आध्यात्मिकञ्च सततं वेदान्ताभिहितञ्च यत् ॥
इदं शरणमज्ञानामिदमेव विजानताम् ।
श्वेतमाण्डव्यमुख्यास्तु नेच्छन्ति मुनयो यतिम् ।
इत्याह भट्टः स्वग्रन्थे गुरुर्मे पुरुषोत्तमः ॥”
इति च्छन्दोमञ्जरी । १ । १६ -- १८ ॥
(नियम्यते इति । यम् + क्तिन् । यतते चेष्टते व्रतादिरक्षार्थं इति वा । यत + “सर्व्वधातुभ्य इन् ।” उणा० ४ । ११७ । इति इन् ।) विधवा ।
रागः । सन्धिः । इति शब्दरत्नावली ॥
वाद्याङ्ग-
प्रबन्धविशेषः । यथा, --
“यतिरोढाप्यवच्छेदो गजरो रूपकं ध्रुवम् ।
गनपः सारिगोणी च नादश्च कथितं तथा ।
प्रहरणं वृन्दनञ्च प्रबन्धा द्वादश स्मृताः ॥”
यथा दं थातः । इत्येकताल्यां यतिः । इति सङ्गीतदामोदरः ॥ (सा त्रिविधा । यथा, मार्कण्डेयपुराणे । २३ । ५३ ।
“चतुर्विधं पदं तालं त्रिःप्रकारं लयत्रयम् ।
यतित्रयं तथा तोद्यं मया दत्तं चतुर्विधम् ॥”)

**यतिचान्द्रायणं**, क्ली, (यतिभिरनुष्ठेयं चान्द्रायणम् ।)

व्रतविशेषः । यथा, --
“अष्टावष्टौ समश्नीयात् पिण्डान् मध्यदिने स्थिते ।
एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिकीर्त्तितम् ॥”
तेषां कारणं यथा, --
“चिकीर्षा कृतिसाध्येष्टसाधनत्वमतिस्तथा ।
उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत् ॥
निवृत्तिस्तु भवेद्द्वेषाद्द्विष्टसाधनताधियः ।
यत्नो जीवनयोनिस्तु सर्व्वदातीन्द्रियो भवेत् ।
शरीरे प्राणसञ्चारे कारणं तत् प्रकीर्त्तितम् ॥”
इति भाषापरिच्छेदः ॥
उद्योगः । यथा, --
“उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
र्दैवेन देयमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥”
इति हितोपदेशः ॥

**यत्नवान्**, [त्] त्रि, यत्नविशिष्टः । यत्नशब्दात्

वतुप्रत्ययेन निष्पन्नः ॥ (यथा, हरिवंशे । ८६ । ९ ।
“कंसेनापि समाज्ञप्तश्चानूरः पूर्ब्बमेव तु ।
योद्धव्यं सह कृष्णेन त्वया यत्नवतेति वै ॥”)

**यत्र**, इ क संकोचने । इति कविकल्पद्रुमः ॥

(चुरा०-पर०-सक०-सेट् ।)
दन्त्यवर्गाद्योपधः ।
इ क, यन्त्रयति मन्त्रेण सर्पं जाङ्गलिकः ।
यन्त्र

इत्यनेनैवेष्टसिद्धे इदनुबन्धो
वेदेषूच्चारणभेदार्थः ।
इति दुर्गादासः ॥

**यत्र**, व्य, यस्मिन् । येखाने इति भाषा । यच्छब्दात्
सप्तम्यास्त्रल्प्रत्ययेन निष्पन्नम् । इति
सिद्धान्त-
कौमुदी ॥ (यथा, श्रीमद्भगवद्गीतायाम् ।
"यत्र यत्र मनो देही धारयेत् सकलं धिया ।
स्नेहाद्वा यदि वा लोभाद् याति तत्तत्
सरूप-
ताम् ॥")

**यथा**, व्य, सादृश्यम् । साम्यम् । तत्पर्य्यायः । वत्
२
वा ३ तथा ४ एव ५ एवम् ६ । इत्यमरः ।
३ ।
४ । ९ ॥ (यथा, उत्तररामचरिते । २ । ४
।
"वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे
न च खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति
च ।
भवति च तयोर्भूयान् भेदः फलं प्रति
तद्यथा
प्रभवति शुचिर्बिम्बोद्ग्राहे मणिर्न मृदां चयः
॥")

**यथाकामी**, [न्] त्रि, (यथा कामयते इति ।
कामि + णिनिः । यद्वा, काममनतिक्रम्य
प्रवृत्ति-
रस्यास्तीति । यथाकाम + अत
इनिठनाविति
इनिः ।) स्वेच्छाचारी ॥ तत्पर्य्यायः ।
स्वरुचिः २
स्वच्छन्दः ३ स्वैरी ४ अपावृतः ५
स्वतन्त्रः ६
निरवग्रहः ७ । इति हेमचन्द्रः । ३ । १९ ॥
निर्यन्त्रणः ८ । इति जटाधरः ॥ (यथा,
याज्ञवल्क्यसंहितायाम् । १ । ८१ ।
"यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन्
।
यथापूर्ब्बं यथा भावः स्वर्णादीनां न विष्णुता ॥"
इति तिथ्यादितत्त्वधृतकालिकापुराणवचनम्॥

**यथामुखीनः**, त्रि, (यथामुख + "यथामुखसंमु-
खस्य दर्शनः खः ।" ५ । २ । ६ । इति खः ।)
मुखप्रतिविम्बाश्रयः । मुखस्य सदृशं यथामुखं
प्रतिविम्बं निपातनात् सादृश्येऽव्ययीभावः ।
यथामुखं दर्शनः यथामुखीनः । इति सिद्धान्त-
कौमुदी ॥ अपि च ।
"ततश्चित्रीयमाणोऽसौ हेमरत्नमयो मृगः ।
यथामुखीनः सीतायाः पुप्लुवे बहु लोभयन् ॥"
इति भट्टिः ॥
मुखस्य सदृशं यथामुखं दर्पणादिस्थप्रतिविम्ब-
मुच्यते । सादृश्यार्थेऽव्ययीभावः । इति भरतः
॥
निर्म्मलत्वात् सीताया अग्रतो यथामुखीनः
प्रतिविम्बाश्रय इव भूत्वा पुप्लुवे भ्रमति स्म
इव-
शब्दलोपो द्रष्टव्यः । इति जयमङ्गलः ॥

**यथायथं**, व्य, क्ली, ("यथास्वे यथायथम् ।" ८ ।
१ । १४ । योऽयमात्मा यच्चात्मीयं
तद्यथास्वम् ।
तस्मिन् यथाशब्दस्य द्वित्वं क्लीवत्वञ्च निपा-
त्यते । यथायथं ज्ञाता यथास्वभावमित्यर्थः
यथा-
त्मीयमितिवेति । इति सिद्धान्तकौमुदी ।)
यथा-
स्वम् । इत्यमरः । ३ । ४ । १५ ॥ (अनुरूपम्
।
यथा, श्रीमद्भागवते । १० । १८ । १९ ।
"तत्रोपाहूय गोपालान् कृष्णः प्राह विहार-
वित् ।
हे गोपा विहरिष्यामो द्वन्द्वीभूय यथायथम् ॥"
"यथायथं वयोवर्णाद्यनुरूपम् ।" इति तट्टी-
कायां श्रीधरस्वामी ॥ यथा च, --
"लिङ्गमव्यक्तमल्पत्वात् व्याधीनां तद्यथा
यथम् ॥"
इति वाग्भटे निदानस्थाने प्रथमेऽध्याये ॥
"यथायथं यस्य व्याधेर्यद्रूपं तदेवाव्यक्तम् ।"
इति तद्व्याख्याने विजयरक्षितः ॥)

**यथाशक्ति**, व्य, क्ली, शक्त्यनुसारेण । शक्तिमनति-
क्रम्य । इति मुग्धबोधव्याकरणम् ॥ (यथा,
श्रीमद्भागवते । ६ । १२ । १६ ।
"पश्य मां निर्जितं शक्र ! वृक्णायुधभुजं मृधे ।
घटमानं यथाशक्ति तव प्राणजिहीर्षया ॥")

**यथाशास्त्रं**, व्य, क्ली, शास्त्रानुसारेण । शास्त्रमनति-
क्रम्य । यथा, मलमासतत्त्वे ।
"यथाशास्त्रञ्च निर्णीतो यथाव्याधि चिकित्-
सितः ।
न शमं याति यो व्याधिः स ज्ञेयः कर्म्मजो
बुधैः ॥"

**यथास्थितं**, त्रि, सत्यम् । इति हेमचन्द्रः । २ । १७९
॥

**यथास्वं**, व्य, क्ली, (स्वमनतिक्रम्येत्यव्ययीभावः ।)
यथावाञ्छितम् । इत्यमरः ॥ (यथा, सुश्रुते
चिकित्सास्थाने ८ अध्याये ।
"बन्धं ततोऽनुकुर्व्वीत परिषेकन्तु सर्पिषा ।
तृतीये दिवसे मुक्त्वा यथास्वं शोधयेद्भिषक्
॥")

**यथेप्सितं**, व्य, क्ली, (ईप्सितमनतिक्रम्येति ।) यथा-
वाञ्छितम् । (यथा, भट्टिकाव्ये । २ । २८ ।
"तान् प्रत्यवादीदथ राघवोऽपि
यथेप्सितं प्रस्तुतकर्म्म धर्म्म्यम् ।
तपो मरुद्भिर्भवतां शराग्निः
सन्धुक्ष्यतां नोऽरिसमिन्धनेषु ॥")
तत्पर्य्यायः । कामम् २ प्रकामम् ३ पर्य्याप्तम्
४
निकामम् ५ इष्टम् ६ । इत्यमरः । २ । ९ ।
५७ ॥
षट् इष्टानतिक्रमे स्वच्छन्दप्रवृत्तौ कामादीनि
प्रायः क्रियाविशेषणानि क्रियाविशेषणत्वात्
क्लीवत्वमेषाम् । ईप्सितस्यानतिक्रमो
यथेप्सित-
मित्यव्ययीभावः । इति भरतः ॥

**यथेष्टं**, व्य, क्ली, इष्टमनतिक्रम्य । यथेप्सितम् ।
यथा, --
"कुर्य्युर्यथेष्टं तत् सर्व्वमीशास्ते स्वधनस्य वै
॥"
इति दायभागः ॥

स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः ॥”)

**यथाक्रमं**, व्य, क्ली, क्रमानुरूपम् । क्रममनतिक्रम्येति व्याकरणम् ॥ (यथा, रघुवंशे । ३ । १० ।
“यथाक्रमं पुंसवनादिकाः क्रियाः
धृतेश्च धीरः सदृशीर्व्यधत्त सः ॥”)
अपि च ।
“यथाक्रमेण पुत्त्रण कार्य्या प्रेतक्रिया सदा ।
पतितापतिता वापि एकोद्दिष्टविधानतः ॥”
इति श्राद्धतत्त्वम् ॥

**यथाजातः**, त्रि, (यथा न जातः इति यथा-जातः । जातोऽपि पुत्त्रादिरजात इव प्रतीयते विद्यया शौर्य्येण वा न कैरपि विदितत्वात् ।)
मूर्खः । इत्यमरः । ३ । १ । ४८ ॥ नीचः । इति जटाधरः ॥

**यथातथं**, व्य, क्ली, (यथा वर्त्तते तथानतिक्रम्य इति अनतिवृत्तौ अव्ययीभावः । अव्ययीभावश्च । २ । ४ । १८ । इति नपुंसकत्वम् । “ह्रस्वो नपुंसके प्रातिपदिकस्य ।” १ । २ । ४७ । इति ह्रस्वः । “नाव्ययीभावादतोऽम्त्वपञ्चम्याः ।” २ । ४ । ८३ । इति प्रथमाविभक्तेरमादेशः ।) यथार्थम् । इति हारावली ॥ (यथा, श्रीमद्भाग-वते । ६ । १ । ४१ ।
“येन स्वधाम्न्यमी भावा
रजःसत्त्वतमोमयाः ।
गुणनामक्रियारूपैर्विभाव्यन्ते यथातथम् ॥”)

**यथापूर्व्वं**, व्य, क्ली, (पूर्व्वमनतिक्रम्य इत्यव्ययी-भावः ।) पूर्ब्बदिग्देशकालानुरूपम् । यथा, --
“अकृतायां प्रतिष्ठायां प्राणानां प्रतिमासु च ।

**यथार्थं**, व्य, क्ली, यथातथम् । इत्यमरः । ३ । ४ । १५ ॥
“द्वे अव्यभिचारिणि । अर्थमनतिक्रान्तं यथार्थं यथास्वरूपं यथातथं उभयत्र अव्ययीभावः । यथार्थमेवेदम् । यथातथं वक्ति सभासु विद्वान् ।”
इति भरतः ॥ तत्पर्य्यायः ।
“सत्यं सम्यक् समीचीनमृतं तथ्यं यथातथम् ।
यथास्थितञ्च सद्भूतेऽलीके तु वितथानृते ॥”
इति हेमचन्द्रः ॥
(यथा, महाभारते । १३ । ६ । १८ ।
“कृतञ्चापकृतं किञ्चित् कृते कर्म्मणि सिध्यति ।
सुकृतं दुष्कृतं कर्म्म न यथार्थं प्रपद्यते ॥”)

**यथार्हं**, व्य, क्ली, (अर्हं योग्यमनतिक्रम्य इत्य-व्ययीभावः ।) यथायोग्यम् । यथा, --
“कृत्वा तु तौ यथान्यायं यथार्हन्तेन संविदम् ।
उपविष्टौ कथाः काश्चिच्चक्रतुर्व्वैश्यपार्थिवौ ॥”
इति देवीमाहात्म्यम् ॥

**यथार्हवर्णः**, पुं, (यथार्हं यथायोग्यं वर्णयतीति । वर्ण + अच् ।) चरः । इत्यमरः । २ । ८ । १३ ॥
यथायोग्यमक्षरं रूपं जातिश्च ॥

**यथेष्टचारी**, [न्] पुं, (यथेष्टं चरतीति । चर + णिनिः ।) पक्षी । इति शब्दचन्द्रिका ॥

**यथेष्टाचरणः**, त्रि, (यथेष्टं आचरणं यस्य ।) यथेष्टाचारी । यथा, --
“क्रियाहीनस्य मूर्खस्य महारोगिण एव च ।
यथेष्टारचणस्याहुर्म्मरणान्तमशौचकम् ॥”
यथेष्टाचरणस्य द्यूतवेश्याद्यासक्तस्य । इति शुद्धितत्त्वम् ॥

**यथेष्टाचारी**, [न्] पुं, स्वेच्छाचारी । यथेष्ट-माचरितुं शीलमस्य इत्यर्थे इन्प्रत्ययेन निष्पन्नः ॥

**यथोचितं**, व्य, क्ली, (उचितमनतिक्रम्येति ।) यथायोग्यम् । यथाप्राप्तम् । यथा । “भ्रेषो भ्रंशो यथोचितात् ।” इत्यमरः । २ । ८ । २३ ॥
(यथा च श्रीमद्भागवते । ४ । २२ ५० ।
“कर्म्माणि च यथाकालं यथादेशं यथाबलम् ।
यथोचितं यथावित्तमकरोद्ब्रह्मसात्कृतम् ॥”
त्रि, यथोचितमस्यास्तीति । अर्श आद्यच् ।
यथार्हः । यथा, मार्कण्डेये । १६ । ३८ ।
“वयमाप्यायिता मर्त्यर्यज्ञभागैर्यथोचितैः ।
वृष्ण्याताननुगृह्णीमो मर्त्यान् शस्यादिसिद्धये ॥”)

**यथोदितं**, व्य, क्ली, (उदितं कथितमनतिक्रम्य

इत्यव्ययीभावः ।) यथोक्तम् । यथा, --
"यथोदितन्ते पितृभिः कुरु दारपरिग्रहम्
॥"
इति मार्कण्डेयपुराणे रुचिस्तोत्रम् ॥

**यदा**, व्य, (यस्मिन् काले इति । यद् + "सर्व्वै-

कान्यकिंयत्तदः काले दा ।" ५ । ३ ।
१५ । इति दा ।)
यस्मिन् काले । यथा, --
"यदा यदा सतां
हानिर्व्वेदमार्गानुसारिणाम् ।
तदा तदा कलेर्वृद्धिरनुमेया विचक्षणैः ॥"
इति तिथ्यादितत्त्वधृतवचनम् ॥

**यदि**, व्य, पक्षान्तरम् । सम्भावना । तत्पर्य्यायः ।

चेत् २ यद्युवा ३ । यथा, --
"यदीच्छेद्विपुलान् भोगान्
चन्द्रसूर्य्यग्रहोपमान् ।
प्रातःस्नायी भवेन्नित्यं द्वौ मासौ
माघफाल्गुनौ ॥"
इति मलमासतत्त्वम् ॥
"अपि चेत् सुदुराचारो भजते मामन्यभाक्
।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि
सः ॥"
इति श्रीभगवद्गीता ॥
"यद्युवाल्पतरसम्भारः स्यादपि पशुनैव
कुर्य्यात्
इति । यद्युवेति निपातसमुदायो यद्यर्थे ।"
इति
तिथ्यादितत्त्वम् ॥

**यदीयं**, त्रि, (यस्येदमिति । यद् + "वृद्धाच्छः ।"

९ । २ । ११४ । इति छः ।) यत्सम्बन्धि
। यथा,
"यदीयहलतो विलोक्य विपदं
कलिन्दतनया जलोद्धतगतिः ।
विलासविपिनं विवेश सहसा
करोतु कुशलं हली स जगताम् ॥"
इति छन्दोमञ्जर्य्यां द्वितीयस्तवकः ॥

**यदुः**, पुं, (यजते इति । यज् + उः । पृषोदरादि-

"तस्यैवं सुप्रवृत्तस्य पुत्त्रकामस्य धीमतः
।
मधुमत्यां सुतो जज्ञे यदुर्नाम महायशाः
॥")

**यदुनाथः**, पुं, (यदूनां नाथः ।) श्रीकृष्णः । इति

हेमचन्द्रः । २ । १३३ ॥

**यदुपतिः**, पुं, (यदूनां पतिः ।) श्रीकृष्णः । यथा --

"यदुपतेः क्व गता मथुरापुरी
रघुपतेः क्व गतोत्तरकोशला ।
इति विचिन्त्य कुरुष्व मनः स्थिरं
न सदिदं जगदित्यवधारय ॥"
इति रूपसनातनगोस्वामिनौ ॥

**यदृच्छा**, स्त्री, स्वातन्त्र्यम् । तत्पर्य्यायः । स्वैरिता २ ।

इत्यमरः । ३ । २ । २ ॥ स्वरिता ३ ।
इति तट्टीका ॥
(यथा, गीतायाम् । २ । ३२ ।
"यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्त्रियाः पार्थ ! लभन्ते
युद्धमीदृशम् ॥")

**यद्युवा**, व्य, यदि । यथा । "यद्युवाल्पतरसम्भारः

स्यादपि पशुनैव कुर्य्यात् । यद्युवेति
निपातसमु-
दायो यद्यर्थे । अपि च । यद्युवा उभयं
चिकीर्षेद्धौत्रं ब्रह्मत्वञ्च इति तेनैव कल्पेन
छत्रमुत्तरासङ्गं सोदकं कमण्डलुं दर्भवटुं
वा
ब्रह्मासने निधाय तेनैव
प्रत्यावृत्यान्यच्चेष्टेत् ।"
इति तिथ्यादितत्त्वम् ॥

**यद्वा**, स्त्री, बुद्धिः । इति संक्षिप्तसारोणादिवृत्तिः ॥

पक्षान्तरञ्च ॥

**यन्ता**, [ऋ] पुं, (यम् + तृच् ।) सारथिः । (यथा,

रघौ । ७ । ४४ ।
"प्रहारमूर्च्छापगमे रथस्था
यन्तॄनुपालभ्य निवर्त्तिताश्वान् ।
यैः सादिता लक्षितपूर्ब्बकेतून्

भ्रामयन् सर्व्वभूतानि यन्त्रारूढानि मायया ॥"
इति श्रीभगवद्गीतायाम् । १८ । ६१ ॥
अस्यार्थः । "सर्व्वभूतानां हृन्मध्ये इश्वरोऽन्तर्यामी
तिष्ठति । किं कुर्व्वन् सर्व्वाणि भूतानि मायया
निजशक्त्या भ्रामयंस्तत्तत्कर्म्मसु प्रवर्त्तयन् यथा
दारुयन्त्रमारूढानि कृत्रिमाणि भूतानि सूत्र-
धारो लोके भ्रामयति तद्वदिति । यद्वा यन्त्राणि
शरीराणि आरूढानि भूतानि देहाभिमानिनो
जीवान् भ्रामयन्नित्यर्थः ।" इति श्रीधरस्वामी ॥
अथ पूजाधारयन्त्रम् । तत्र नारदीये ।
"आपोऽग्निर्हृदयं चक्रं विष्णोः क्षेत्रसमुद्भवम् ।
यन्त्रञ्च प्रतिमास्थानमर्च्चने सर्व्वदा हरेः ॥"
गौतमीये ।
"शालग्रामे मणौ यन्त्रे प्रतिमामण्डलेषु च ।
नित्यं पूजा हरेः कार्य्या न तु केवलभूतले ॥"
योगिनीतन्त्रे ।
"लिङ्गस्थां पूजयेद्देवीं पुस्तकस्थां तथैव च ।
मण्डलस्थां महामायां यन्त्रस्थां प्रतिमासु च ।
जलस्थां वा शिलास्थां वा पूजयेत् परमेश्वरीम् ॥"
एतत् सर्व्वं यन्त्राभावे । कौलावलीये ।
"यत्रापराजितापुष्पं जवापुष्पञ्च विद्यते ।
करवीरे शुक्लरक्ते द्रोणं वा यत्र तिष्ठति ।
तत्र देवी वसेन्नित्यं तद्यन्त्रे चण्डिकार्च्चनम् ॥"
एतत् सर्व्वयन्त्राभावे । तथा च ।
"यन्त्रं मन्त्रमयं प्रोक्तं मन्त्रात्मा देवतैव हि ।
देहात्मनोर्यथा भेदो यन्त्रदेवतयोस्तथा ॥"
तथा ।
"आदौ लिखेद्यन्त्रराजं देवतायाश्च विग्रहम् ।
कामक्रोधादिदोषोत्थसर्व्वदुःखनियन्त्रणात् ॥
यन्त्रमित्याहुरेतस्मिन् देवः प्रीणाति पूजितः ।
विना यन्त्रेण पूजायां देवता न प्रसीदति ॥
दुःखनिर्यन्त्रणाद्यन्त्रमित्याहुस्तन्त्रवेदिनः ॥"
इति यन्त्रपूजाप्राधान्यम् ॥ * ॥
अथ धारणयन्त्राणि । तत्रादौ भुवनेश्वरी-
यन्त्रम् । शारदायाम् ।
"आलिख्याष्टदिगर्गलान्युदरगं पाशादिकं
त्र्यक्षरं
कोष्ठेष्वङ्गमनून् परेषु विलिखेदष्टार्णमन्त्रद्वयम् ।
अच्पूर्ब्बापरषट्कयुग् लयवरान् व्योमास-
नानर्गले-
ष्वालिख्येन्द्रजलाधिपादिगुणशः पंक्तिद्वयात्तत्-

त्वात् जस्थाने दकारः ।) देवयान्यां जातो
ययातेर्ज्येष्ठपुत्त्रः । तस्य वंशे पितृशापात् राजा-
चक्रवर्त्ती नासीत् । तद्वंशे द्वापरयुगस्यान्ते
श्रीकृष्णोऽवतीर्णः । इति श्रीभागवतमतम् ॥
तस्य मातुलकन्याविवाहकारणंयथा, --
"जरां प्राप्य ययातिस्तु स्वपुरं प्राप्य चैव ह ।
पुत्त्रं ज्येष्ठं वरिष्ठञ्च यदुमित्यब्रवीद्वचः ॥
त्वं यदो ! प्रतिमद्यस्व पाप्मानं जरया सह ।
यौवनेन त्वदीयेन चरेयं विषयानहम् ॥
पूर्णे वर्षसहस्रे तु पुनस्ते यौवनं त्वहम् ।
दत्त्वा संप्रतिपत्स्यामि पाप्मानं जरया सह ॥
यदुरुवाव ।
सितश्मश्रुधरो दीनो जरया शिथिलीकृतः ।
बलीसन्ततगात्रश्च दुर्द्धर्षो दुर्ब्बलः कृशः ॥
अशक्तः कार्य्यकरणे पापभूतश्च यौवने ।
सहोपजीविभिश्चैव तां जरां नैव कामये ॥
सन्ति ते बहवः पुत्त्रा मत्तः प्रियतरा नृप ! ।
जरां ग्रहीतुं धर्म्मज्ञ ! पुत्त्रमन्यं वृणीष्व वै ॥
ययातिरुवाच ।
यो मे त्वं हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
पापान्मातुलसम्बन्धात्प्रजा वै ते भविष्यति ॥"
इति मात्स्ये ३१ अध्यायः ॥ * ॥
(हर्य्यश्वराजपुत्त्रः । यथा, हरिवंशे । ९३ । ४४ ।
तानेव सामर्षतया निजघ्नुः ॥)
हस्तिपकः । इत्यमरः । ३ । ३ । ५९ ॥ (यथा,
माघे । ५ । ४२ ।
"सेव्योऽपि सानुनयमाकलनाय यन्त्रा
नीतेन वन्यकरिदानकृताधिवासः ।
नाभाजि केवलमभाजि गजेन शाखी
नान्यस्य गन्धमपि मानभृतः सहन्ते ॥")
विरतिकारके, त्रि ॥

**यन्त्रं**, क्ली, (यच्छत्यत्रेति । यम + "गुधृवीपचिवचि-
यमिसदिक्षदिभ्यस्त्रः ।" उणा० ४ । १६६ ।
इति त्रः ।) देवाद्यधिष्ठानम् ॥ (यथा, देवी-
भागवते । ३ । २६ । २१ ।
"अर्च्चाभावे तथा यन्त्रं नवार्णमन्त्रसंयुतम् ।
स्थापयेत् पीठपूजार्थं कलसं तत्र पार्श्वतः ॥")
पात्रभेदः । नियन्त्रणम् । इति हेमचन्द्रः ॥
अग्नियन्त्रम् । इति महाभारतटीकायां नील-
कण्ठः ॥ कामान् वन्दूक इत्यादि भाषा ॥ * ॥
वाद्यम् । यथा, --
"यन्त्रस्य गुणदोषौ न विचार्य्यौ मधुसूदन ! ।
अहं यन्त्रं भवान् यन्त्री न मे दोषा न मे गुणाः ॥"
इति महाभारतम् ॥
दारुयन्त्रादि । कल इति भाषा । यथा, --
"ईश्वरः सर्व्वभूतानां हृद्देशेऽर्ज्जुन ! तिष्ठति ।
परम् ॥
कोष्ठेष्वष्टयुगार्णमात्मसहितां युग्मस्वरान्तर्गतां
मायां केशरगां दलेषु विलिखेन्मलं त्रिपंक्ति-क्रमात् ।
त्रिः पाशाङ्कुशवेष्टितञ्च लिपिभिर्व्वीतं क्रमाद्-व्युत्क्रमात्
पद्मस्थेन घटेन पङ्कजमुखेनावेष्टितं तद्बहिः ॥"
घटार्गलमिदं यन्त्रं मन्त्रिणां श्रीप्रदं महत् ।
पाशश्रीशक्तिकन्दर्पकामशक्तीन्दिराङ्कुशाः ॥
प्रथमोऽष्टाक्षरो मन्त्रस्ततः कामिनि रञ्जिनि ।
स्वाहान्तोऽष्टाक्षरः सद्भिरपरः परिकीर्त्तितः ॥

ह्रीं गौरि रुद्रदयिते योगेश्वरि सवर्म्मफट्
।
द्विठान्तः षोडशार्णोऽयं मन्त्रः
सद्भिरुदीरितः ॥”
इति घटार्गलयन्त्रम् ॥ * ॥
“तारे हुँ विलिखेत् सरोजकुहरे
साध्याभि-
धानान्वितं
मन्त्रार्णान् वसुसंख्यकान्
वसुदलेष्वालिख्य
तद्बाह्यतः ।
शक्त्या त्रिः परिवेष्टितं घटगतं
पद्मस्थमब्जाननं
यन्त्रं वश्यकरं ग्रहादिभयहृल्लक्ष्मीप्रदं
कीर्त्तिदम् ॥”
इति त्वरितायन्त्रम् ॥ * ॥
“पद्मं भानुदलान्वितं प्रविलिखेत्
तत्कर्णिकायां
पुन-
स्तारं शक्तिगबीजसाध्यसहितं
तत्केशरेषु
क्रमात् ।
मर्दिन्यामनुसम्भवान् युगलशो वर्णान्
पुनः
पत्रगान्
मन्त्रार्णान् गुणशो विधाय विलिखेदन्त्यं
तदन्त्ये दले ॥”
मन्त्रस्तु ।
“उत्तिष्ठ पुरुषि किं स्वपिषि भयं मे
समुपस्थितम् ।
यदि शक्यमशक्यं वा तन्मे भगवति
शमय
स्वाहा ॥
मातृकार्णेन संवीतं भूपुरद्वयमध्यगम् ।
यन्त्रञ्च विन्ध्यवासिन्याः प्रोक्तं
सर्व्वसमृद्धिदम् ॥
रक्षाकरं विशेषेण क्षुद्रभूतादिनाशनम् ।
राज्यदं भ्रष्टराज्यानां वश्यदं
वश्यमिच्छताम् ॥
सुतार्थिनीनां सुतदं रोगिणां
रोगशान्तिदम् ।

गायत्र्येषा समाख्याता त्रैपुरी सर्व्वसिद्धिदा ॥”
यन्त्रान्तरम् ।
“वह्नेर्गेहयुगान्तरस्थमदने मायां लिखेद्वाग्भवं
षट्कोणेष्वथ सन्धिषु प्रविलिखेत् हुंकार-
मावेष्टितम् ।
स्त्रींबीजेन समीरितं त्रिभुवनप्रक्षोभणं त्रैपुरं
यन्त्रं पञ्चमनोभवात्मकमिदं सौन्दर्य्यसम्पत्-
करम् ॥”
इति त्रिपुरायन्त्रम् ॥ * ॥
अथ श्रीविद्यायन्त्रम् ।
“विशेषं धारणं यन्त्रं प्रसङ्गात् कथयामि ते ॥
रेफहकारयोर्मध्ये देवीनामभिमुख्यकम् ।
साध्यनाम द्वितीयान्तं तस्योर्द्ध्वे विलिखेन्मनुम् ॥
तत्रैव मातृकां सर्व्वां विलिखेच्चक्रबाह्यतः ।
पञ्चगव्यामृतेनैव मूलेन परिवेष्टयेत् ॥
तत्र प्राणं प्रतिष्ठाप्य विद्यामष्टोत्तरं शतम् ।
तत् स्पृष्ट्वा प्रजपेन्मन्त्रं देवीध्यानपरायणः ॥
हेम्नो मध्यगतं कृत्वा रजतस्याथवा पुनः ।
करे धृत्वा जगद्वश्यं हृदये स्त्रीषु वल्लभम् ॥
कण्ठे धनं लभेद्भाले स्तम्भनं जम्भनं भवेत् ।
शिखायां मोक्षमाप्नोति तस्माद्यत्नेन धार-
येत् ॥” * ॥
अथ गणेशयन्त्रम् ।
“बीजं षट्कोणमध्ये स्फुरदनलपुरे तारगं
दिक्षु लक्ष्मी-
मायाकन्दर्पभूमीस्तदनुरसपुटेष्वालिखेद्बीज-
षट्कम् ।
तत्सन्धिष्वङ्गमन्त्रान् वसुदलकमले मूलमन्त्रस्य
वर्णान्
शिष्टान् पत्रेषु विद्वान् विलिखतु गुणशश्चान्त्य-
मन्त्ये पलाशे ॥
आवीतं लिपिभिः क्रमोत्क्रमवशात् पाशा-
ङ्कुशाभ्यामपि
भूविम्बद्वितयेन विष्टितमिदं यन्त्रं गणाधीशितुः ।
लाक्षाकुङ्कुमरोचनामृगमदैर्भूर्जोदरे हेम्नि वा
संलिख्याभिवहन् लभेत सकलैः संप्रार्थनीयां
श्रियम् ॥
उक्तं महागणपतेर्व्विधानं सुरपूजितम् ।
सर्व्वसिद्धिकरं पुंसां समस्तपुरुषार्थदम् ॥” * ॥
अथ श्रीरामयन्त्रम् ।
“तारं मध्ये विलिखतु मनुं षट्सु कोणेषु सन्धि-

अथ नृसिंहयन्त्रम् ।
“बीजं साध्यसमन्वितं
प्रविलिखेन्मध्येऽष्टपत्रेष्वथो
मन्त्रार्णान् श्रुतिशो विभज्य विलिखेल्लिप्या
बहिर्व्वेष्टयेत् ।
बाह्ये कोणगबीजबद्धवसुधागेहद्वयेनावृतं
यन्त्रं क्षुद्रविषग्रहामयरिपुप्रध्वंसनं श्रीप्रदम् ॥”
* ॥
अय गोपालयन्त्रम् ।
“पिण्डं मूलेन वीतं दहनपुरयुगे
कोणराजत्षडर्णं
कुर्य्यात् पद्मं दशार्णस्फुरितदशदलं
कामबीजेन
वीतम् ।
पद्मं किञ्जल्कसंस्थस्वरविकृतिदलप्रोल्लसत्-
षोडशार्णं
किञ्जल्कव्यञ्जनाढ्यं
विकृतियुगदलेष्वर्पितानष्ट-
वर्णान् ॥
पाशाङ्कुशाभ्यामावीतं क्षौणीपुरयुगास्त्रिषु ।
अष्टाक्षरेण लसितं यन्त्रं गोपालदैवतम् ॥
धर्म्मार्थकामफलदं सर्व्वरक्षाकरं स्मृतम् ।
पञ्चान्तको धरासंस्थो मनुर्बिन्दुविभूषितः ॥
पिण्डबीजमिदं प्रोक्तं सर्व्वसिद्धिकरं परम् ।
स्मरः कृष्णाय ठद्वन्द्वं षडर्णो मनुरीरितः ॥
गोपीजनान्ते प्रददेद्वल्लभायाग्निवल्लभा ।
अयं दशाक्षरो मन्त्रो दृष्टादृष्टफलप्रदः ॥
प्रणवं हृदयं कृष्णं ङेऽन्तमुक्त्वा ततः परम् ।
तादृशं देवकीपुत्रं हुं फट्स्वाहासमन्वितम् ।
षोडशाक्षरमन्त्रोऽयं गोविन्दस्य जगत्पतेः ॥
पिण्डं रतिपतेर्ब्बीजं नमो भगवते ततः ।
नन्दपुत्राय बालादिवपुषे श्यामलाय च ॥
गोपीजनपदस्यान्ते वल्लभाय द्विठावधि ।
अनुष्टुप् मन्त्र आख्यातो गोपालस्य जगत्पतेः
॥
अनङ्गः कृष्णगोविन्दौ ङेऽन्तावष्टाक्षरो मनुः
॥”
इति गोपालयन्त्रम् ॥ * ॥
अथ गोपालस्य यन्त्रान्तरम् ।
“प्राक् प्रत्यक् दक्षिणोदक् विधिवदभिलिखेत्
स्पष्टरेखाचतुष्कं

बहुना किमिहोक्तेन यन्त्रं यत् कामदो
मणिः ॥”
इति वनदुर्गायन्त्रम् ॥ * ॥
अथ लक्ष्मीयन्त्रम् ।
“वेदादिस्थितसाध्यनामयुग्गाशः
श्रीशक्ति-
मारान्वितं
किञ्जल्केषु दिनेशपत्रविलसन्मन्त्राक्षरं
तद्बहिः ।
पद्मं व्यञ्जनकेशरं स्वरलसत्पत्राष्टयुग्मं
धरा-
विम्बाभ्यां वषडन्तया त्वरितया यन्त्रं
लिखेद्-
बेष्टितम् ।
भूपुरद्वयकोणेषु हक्षौ लेख्यौ पुनः पुनः
।
महालक्ष्मीयन्त्रमिदं
सर्व्वैश्वर्य्यफलप्रदम् ॥
सर्व्वदुःखप्रशमनं सर्व्वापद्विनिवारकम्
।
बहुना किमिहोक्तेन परमस्मान्न विद्यते
॥” * ॥
अथ त्रिपुरभैरवीयन्त्रम् ।
“मध्याद्यं नवयोनिषु प्रविलिखेद्बीजानि
वर्णांस्त्रिशो
गायत्र्याः पुनरष्टपत्रविवरेष्वालिख्य
लिप्या-
वृतम् ।
भूविम्बद्वितयेन मन्मथयुजा कोणेषु
संवेष्टितं
यन्त्रं त्रैपुरमीरितं त्रिभुवनप्रक्षोभणं
श्रीप्रदम् ॥”
गायत्री तु ।
“मन्मथं त्रिपुरादेवि विद्महे पदमुद्धरेत् ।
उक्त्वा कामेश्वरिपदं प्रवदेदथ धीमहि
॥
अन्ते च प्रवदेद्भूयस्तन्नः क्लिन्ने
प्रचोदयात् ।

ष्वङ्गं मायां स्मरमपि लिखेत् कोणगण्डेषु
पश्चात् ।
किञ्जल्केषु स्वरगणमतो पत्रमध्येषु माला-
मन्त्रस्यार्णान् गुहमुखमितानष्टमे पञ्चवर्णान् ॥
दशाक्षरेण संवेष्ट्य कादिवर्णैश्च भूपुरे ।
दिग्विदिक्षु लिखेद्बीजे नरसिंहवराहयोः ॥
नमो भगवते ब्रूयाच्चतुर्थ्या रघुनन्दनम् ।
रक्षोघ्नविषदायान्ते मधुरादि समीरयेत् ॥
प्रसन्नवदनायेति पश्चादमिततेजसे ।
बलाय पश्चाद्रामाय विष्णवे तदनन्तरम् ।
प्रणवादिनमोऽन्तोऽयं मालामन्त्रः प्रकीर्त्तितः ॥”

कोणोद्यच्छूलयुक्तं बलययुगयुतं मध्यपूर्ब्बं
तदन्तम् ।
श्लोकस्यार्णान् पुरस्ताद्वसुपदविवरेष्वष्टवर्णं
लिखित्वा
तद्बाह्य द्वादशार्णैस्तदनुपरिवृतं देवकीपुत्र-
यन्त्रम् ॥
तं सुकी देव देवेतं तं वेदे वरतो वतम् ।
तं वतो रूढतो ख्यातं तं ख्यातो देवकीसुतम्
॥
लिखितं भूर्ज्जपत्रादौ यन्त्रमेतद्यथाविधि ।
विधृतं बाहुना नित्यं सर्व्वकामफलप्रदम् ॥
पलाशवृक्षफलके लिखितं साधु साधितम् ।
गोस्थाने निखनेदेतत् गवां बृद्धिर्भवेत्तदा ॥” *
॥
अथ शिवयन्त्रम् । तत्रादौ षट्कोणमण्डलं
कृत्वा तदन्तः साध्यनामयुक्तं प्रासादबीजं
विलिख्य षट्कोणेषु प्रणवसहितपञ्चाक्षरवर्णान्
विलिख्य विवरेषु षडङ्गमन्त्रान् तद्बहिः पञ्च-
दलानि विरचय्य तद्दलेषु ॐ ईशानाय नमः
ॐ तत्पुरुषाय नमः ॐ अघोराय नमः

ॐ सद्योजाताय नमः ॐ वामदेवाय नमः ।
इति पञ्चमन्त्रान् प्रागादिक्रमेण लिखेत् ।
तद्बहिरष्टदलानि रचयित्वा तद्दलेषु मातृका-
घर्णान् लिखेत् । तद्बहिर्वृत्तं त्र्यम्बकेन
वेष्टयेत् ।
एतद्यन्त्रं जपहोमादिना सम्पूज्य धारयेत् ।
आयुरारोग्यैश्वर्य्यादिसिद्धिर्भवति ॥ * ॥
अथ
मृत्युञ्जयस्य यन्त्रम् ।
“मध्ये साध्याक्षराढ्यं
ध्रुवमभिविलिखेन्मध्यमं
दिग्दलेषु
कोणेष्वन्त्यं मनोस्तत् क्षितिभुवनमथो दिक्षु
चन्द्रं विदिक्षु ।
टान्तं यन्त्रं तदुक्तं सकलभयहरं
क्षेडभूतापमृत्यु-
व्याधिव्यामोहदुःखप्रशमनमुदितं श्रीप्रदं
कीर्त्तिदायि ॥” * ॥
अथकालीयन्त्रम् । यामले ।
“आद्यं बीजं ससाध्यं प्रथमवसुगृहे तद्बहि-
श्चाष्टकोणे
पूर्ब्बाद्यं चाष्टबीजं तदनु वसुगृहद्वन्द्वके
बीजषट्कम् ।
किञ्जल्कं तत् स्वराढ्यं वसुदलविवरे
स्वाहया
बीजषट्कं
कूर्च्चाभ्यामेव वीतं क्षितिगृहयुगयोरन्तरे
यन्त्रराजम् ॥
देवीबीजत्रयं तत् प्रतिदिशमपरं शक्तिबीज-
द्वयं तत्
कोणे कोणे लिखेद्यस्त्रिजगति स गुरुः
शङ्करस्यापि विष्णोः ॥”
अथ शान्तिकादौ ताराधारणयन्त्रम् ।
तदुक्तं
फेत्कारीये ।
“योनियुग्मे लिखेन्मन्त्रं मन्त्री हेमशलाकया
।
क्लीवहीनान् दीर्घवर्णान् षट्कोणे
विलिखेत्ततः ॥
अष्टपत्रेष्वष्टवर्णान् तद्बहिर्भूपुरद्वयम् ।
अष्टवज्रं भूपुरे च विलिख्य साधकोत्तमः ॥

“स्वराणां मध्यगं यच्च तच्चतुष्कं
नपुंसकमिति ।”
अष्टपत्रेष्वष्टवर्णान् । ऐं ह्रीं ॐ ऐं ह्रीं फट्
स्वाहेति लिखेत् । तदुक्तम् ।
“वाग्भवं कुलदेवीञ्च तारकं वाग्भवं तथा ।
हृल्लेखा चास्त्रमन्त्रान्ते वह्निजायावधिर्म्मनुः ॥
अष्टाक्षरो मनुः प्रोक्तो मन्त्राणां सार ईरितः ॥”
अथ यन्त्रलिखनद्रव्यम् ।
“काश्मीररोचनालाक्षामृगेभमदचन्दनैः ।
विलिखेद्धेमलेखन्या यन्त्राण्येतानि देशिकः ॥
भूमिस्पृष्टं शवस्पृष्टं यन्त्रं निर्म्माल्यसङ्गतम् ।
विदीर्णं लङ्घितं मन्त्री यन्त्रं नैव च धारयेत् ॥
सौवर्णे राजते पात्रे भूर्जे वा सम्यगालिखेत् ।
अथवा ताम्रपट्टे वा गुटिकां कृत्य धारयेम् ॥
यावज्जीवं सुवर्णे स्यात् रौप्ये विंशतिवार्षिकम्
।
भूर्ज्जे द्वादश वर्षाणि तदर्द्ध्वं ताम्रपट्टके ॥”
इति तन्त्रसारः ॥ * ॥
अन्यत् कालिकापुराणे ७७ । ७८ । ७९
अध्यायेषु
द्रष्टव्यम् ॥ * ॥ अथ यन्त्रसंस्कारः । वामके-
श्वरतन्त्रे ।
“स्नात्वा संकल्पयेन्मन्त्री गुरोरर्च्चनमाचरेत् ।
पञ्चगव्यं ततः कृत्वा शिवमन्त्रेण मन्त्रितम् ॥
तत्र चक्रं क्षिपेन्मन्त्री प्रणवेन समाकुलम् ।
तदुद्धृत्य ततश्चक्रं स्थापयेत् स्वर्णपात्रके ॥
पञ्चामृतेन दुग्धेन शीतलेन जलेन च ।
चन्दनेन सुगन्धेन कस्तूरीकुङ्कुमेन च ॥
पयोदधिघृतक्षौद्रशर्कराद्यैरनुक्रमात् ।
तोयधूपान्तरैः कुर्य्यात् पञ्चामृतविधिं बुधः ॥
हाटकैः कलसैर्देवीमष्टभिर्व्वारिपूरितैः ।
कषायजलसम्पन्नैः कारयेत् स्नानमुत्तमम् ॥
स्नानं समाप्य तां देवीं स्थापयेत् स्वर्णपाठके ।
यन्त्रराजाय विद्महे महायन्त्राय धीमहि तन्नो
यन्त्रं प्रचोदयात् ॥
स्पृष्ट्वा यन्त्रं कुशाग्रेण गायत्र्या चाभिमन्त्रयेत्
।
अष्टोत्तरशतं देवि ! देवताभावसिद्धये ॥
आत्मशुद्धिं ततः कृत्वा षडङ्गैर्द्देवतां यजेत् ।
तत्रावाह्य महादेवीं जीवन्यासञ्च कारयेत् ॥
उपचारैः षोढशभिर्म्महामुद्रादिभिः सदा ।

शतं अभिमन्त्र्य प्रणवेन यन्त्रं तत्र क्षिपेत् ।
तत उत्तोल्य स्थापयेत् । ततः
शीतलजलचन्दन-
गन्धकस्तूकीकुङ्कुमैः स्नापयित्वा
पञ्चगव्यमानीय
हौमिति मन्त्रेणाष्टोत्तरशतमभिमन्त्र्यप्रणवेन
पूर्ब्बवत् शोधयित्वा स्नापयेत् । तत्र क्रमः ।
प्रथमं क्षीरेण स्नापयित्वा धूपं दद्यात् । एवं
दध्ना घृतेन मधुना शर्करया च । ततोऽष्टभिः
कलसैः कुङ्कुमगोरोचनाचन्दनमिश्रितैस्तोयैः
स्नापयेत् । सर्व्वत्र स्नानं मूलमन्त्रेण ततो
यन्त्रमुत्तोल्य कुशाग्रेण तत् स्पृष्ट्वा
यन्त्रराजाय
विद्महे महायन्त्राय धीमहि तन्नो यन्त्रं प्रचो-
दयात् । इत्यष्टोत्तरशतमभिमन्त्र्यप्राणप्रतिष्ठां
कुर्य्यात् । अस्य प्राणप्रतिष्ठामन्त्रस्य
ब्रह्मविष्णु-
महेश्वरा ऋषय ऋग्यजुःसामानि छन्दांसि
चैतन्यं देवता प्राणप्रतिष्ठायां विनियोगः ।
तद्यथा । आं ह्रीं क्रों यं रं लं वं शं षं सं हौं
हं सः अमुकदेवतायाः प्राणा इह प्राणाः ।
एवं आमित्यादि अमुकदेवतायाः जीव इह
स्थितः । एयं आमित्यादि अमुकदेवतायाः
सर्व्वे-
न्द्रियाणि । एवं आमित्यादि अमुकदेवताया
वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणाइहागत्य सुखं
चिरं
तिष्ठन्तु स्वाहा । इति प्राणान् प्रतिष्ठाप्य तत्र
प्रकृतदेवतामावाह्य षोडशोपचारैः पञ्चोप-
चारैर्व्वा पूजयेत् । ततः पट्टसूत्रादिकं दत्त्वा
अष्टोत्तरशतं अप्त्वा शक्तश्चेत् बलिं दद्यात् ।
ततोऽष्टोत्तरशतहोमं कृत्वा प्रत्याहुतिसम्पातं
दद्यात् । होमाभावे द्विगुणजपः कार्य्यः । ततो
दक्षिणां दत्त्वा अच्छिद्रावधारणं कुर्य्यात् ।
इति तन्त्रसारः ॥ * ॥ औषधपाकार्थयन्त्राणि
यथा, --
“भाण्डे वितस्तिगम्भीरे मध्ये निहितकूपिके ।
कूपिकाकण्ठपर्य्यन्तं बालुकाभिश्च पूरिते ॥
भेषजं कूपिकासंस्थं वह्निना यत्र पच्यते ।
बालुकायन्त्रमेतद्धि यन्त्रतन्त्रबुधैः स्मृतम् ॥”
इति बालुकायन्त्रम् ॥

सुवर्णपट्टे भूर्ज्जे वा रूप्ये वाप्यथ सुव्रते ।
विलिखेद्धेमलेखन्या गन्धाष्टकसमन्वितम्
॥
दूर्व्वाकाण्डेन वालिख्य कुशमूलेन वा पुनः
॥”
एकवीराकल्पे ।
“वेष्टितं पीतवस्त्रेण जतुना परिवेष्टयेत् ॥
बध्नीयात् पट्टसूत्रेण शिशूनां कण्ठभूषणम् ।
स्त्रीणां वामभुजे चैवमन्येषां दक्षिणे भुजे ।
बन्ध्यापि लभते पुत्त्रं निर्धनो धनवान्
भवेत् ॥
इमां रक्षां पुरा बध्वा ज्ञानार्थं गौतमादिभिः
।
प्रीत्यर्थं पार्थिवैश्चान्यैः संग्रामे
जयकाङ्क्षिभिः ॥”
अस्यार्थः । योनियुग्मे षट्कोणे । तस्य
मध्ये
हेमशलाकादिना भूर्ज्जपत्रादौ
कुङ्कुमरोचना-
रक्तचन्दनजटामांसीनां समांशं विधाय
पङ्क्ति
क्रमेण मूलमन्त्रं लिखित्वा तस्य
हृल्लेखारेफ-
मध्ये अमुकस्य रक्षां कुरु कुरु अमुकीनां
शुभं
पुत्त्रमुत्पादयेति वा अस्य ज्ञानं कुरु कुरु
इत्यादि वा साध्यसहितं विलिख्य षट्कोणे
क्लीवभिन्नान् दीर्घवर्णान् आ ई ऊ ऐ औ
अः
इत्येकैकं लिखेत् । तदुक्तम् ।

फलताम्बूलनैवेद्यैर्देवीं तत्र समर्च्चयेत् ॥
पट्टसूत्रादिकं दद्यात् वस्त्रालङ्कारमेव च ।
अगुरुं चामरं घण्टां यथायोग्यं महेश्वरि ! ।
सर्व्वमेतत् प्रयत्नेन दद्यादात्महिते रतः ॥
ततो जपेत् सहस्रञ्च सकलेप्सितसिद्धये ।
बलिदानं ततः कृत्वा प्रणमेच्चक्रराजकम् ॥
अष्टोत्तरशतं हुत्वा सम्पाताज्यं विनिःक्षिपेत् ।
होमकर्म्मण्यशक्तश्चेत् द्विगुणं जपमाचरेत् ॥
धेनुमेकां समानीय स्वर्णशृङ्गाद्यलङ्कृताम् ।
गुरवे दक्षिणां दद्यात् ततो देव्या विसर्ज्जनम्
॥”
अस्य प्रयोगः । कृतनित्यक्रियः स्वस्तिवाचन-
पूर्ब्बकं सङ्कल्पं कुर्य्यात् । आद्येत्यादि अमुक-
गोत्रः श्रीअमुकदेवशर्म्मा अमुकदेवतायाः
पूजार्थं अमुकयन्त्रसंस्कारमहं करिष्ये । इति
संकल्प्य पञ्चगव्यमानीय
हौमितिमन्त्रेणाष्टोत्तर-

“निबद्धमौषधं सूतं भूर्ज्जे तत्त्रिगुणान्तरे ।
रसपोटलिकां काष्ठे दृढं बद्ध्वा गुणेन हि ॥
सन्धानपूर्णं कुम्भान्तः स्वावलम्बनसंस्थितम्
।
अधस्ताज्ज्वालयेदग्निं तत्तदुक्तक्रमेण हि ।
दोलायन्त्रमिदं प्रोक्तं स्वेदनाख्यं तदेव हि ॥”
सन्धानं काञ्जिकादि । इति दोलायन्त्रम् ॥ *
॥
“साम्बुस्थालीमुखे बद्धे वस्त्रे स्वेद्यं निधाय च
।
पिधाय पच्यते यत्र तद्यन्त्रं स्वेदनं स्मृतम् ॥”
इति स्वेदनयन्त्रम् ॥
“अधःस्थाल्यां रसं क्षिप्त्वा
निदध्यात्तन्मुखोपरि ।
स्थालीमूर्द्ध्वमुखीं सम्यक् निरुध्य
मृदुमृत्सया ॥
ऊद्र्ध्वस्थाल्यां जलं क्षिप्त्वा चुल्ल्यामारोप्य
यत्नतः ॥
अधस्ताज्ज्वालयेदग्निं यावत् प्रहरपञ्चकम् ।
स्वाङ्गशीतं ततो यन्त्राद्गृह्णीयाद्रसमुत्तमम् ।
विद्याधराभिधं यन्त्रमेतत्तज्ज्ञैरुदाहृतम् ॥”
इति विद्याधरयन्त्रम् ॥
“बालुकासु समस्ताङ्गं गर्त्ते मूषारसान्विता ।

दीप्तोपलैः मंवृणुयाद्यन्त्रं भूधरनामकम् ॥”
इति भूधरयन्त्रम् ॥
“यन्त्रं डमरुसंज्ञं स्यात्तत् स्थाल्योर्मुद्रिते मुखे ॥”
इति डमरुयन्त्रम् । इति भावप्रकाशः ॥ (तथाच ।
“अन्धमूषा तु कर्त्तव्या गोस्तनाकारसन्निभा ।
सैव छिद्रान्विता मध्ये गम्भीरामारणोचिता ॥”
इति अन्धमूषायन्त्रम् ॥
“द्वौ भागौ तु सदुग्धस्य एकावल्मीकमृत्तिका ।
लोहकिट्टस्य भागैकं श्वेतपाषाणभागिकम् ॥
नरकेशसमं किञ्चित् छागीदुग्धेन पेषयेत् ।
माषद्वयं दृढं मर्द्दं तेन मूषां सुसम्पुटाम् ॥
शोषयित्वा रसं क्षिप्त्वा तत्कल्कैः सन्धि लेपयेत् ।
रौद्रमूषा समाख्याता सम्यक्पारदसाधिका ॥”
इति मूषायन्त्रम् ॥ * ॥
“बालुकापूरितं भाण्डं तन्मध्ये सूतकं क्षिपेत् ।
रसं मूषागतञ्चैव भाण्डं स्रावेण रोधयेत् ॥
लिप्त्वा मृल्लवणैः सन्धिं पाचयेच्चुल्लिकाग्निना ।
बालुकायन्त्रमेतद्धि योजयेद्रसकर्म्मणि ॥”
इति बालुकायन्त्रम् ॥
“तिर्य्यक्कण्ठं काचकुप्या गिलयेत् स्वल्पभाण्डकैः ।
तिर्य्यक्कृत्वा पचेत् भाण्डं वकयन्त्रमिति स्मृतम् ॥”
इति वकयन्त्रम् ॥
“ऊद्र्ध्वाधः संपुटाकारं तन्मध्ये रससंस्थितम् ।
कवचीयन्त्रमेतद्धि रसादिद्रव्यसाधनम् ॥”
इति कवचीयन्त्रम् ॥ * ॥
इति वैद्यकरसेन्द्रसारसंग्रहे जारणाद्यधिकारे ॥
चिकित्सोपयग्यपरयन्त्रविवृतिर्य्यथा, --

“यन्त्रशतमेकोत्तरमत्र हस्तमेव प्रधानतमं

यन्त्राणामवगच्छ । किं कारणम् । यस्माद्धस्ता-दृते यन्त्राणामप्रवृत्तिरेव तदधीनत्वाद्यन्त्रकर्म्म-णाम् । तत्र मनःशरीरावाधकराणि शल्यानि तेषामाहरणोपायो यन्त्राणि । तानि षट्प्रका-राणि । तद्यथा । स्वस्तिकयन्त्राणि । सन्दंश-ऽनिग्रहश्च सन्दंशौ षोडशाङ्गुलौ भवतस्त्वग्मांस-सिरास्नायुगतशल्योद्धरणार्थमुपदिश्येते ।

तालयन्त्रे द्वादशाङ्गुले मत्स्यतालुवदेकतालद्वि-तालके कर्णनासानाडीशल्यानामाहरणार्थम् ।

नाडीयन्त्राण्यनेकप्रकाराण्यनेकप्रयोजनान्येक-तोमुखान्युभयतोमुखानि च तानि स्रोतोगत-शल्योद्धरणार्थं रोगदर्शनार्थमाचूषणार्थं क्रिया-सौकर्य्यार्थञ्चेति तानि स्रोतोद्वारपरिणाहानि यथायोगपरिणाहदीर्घाणिच ।

भगन्दरार्शोऽर्व्वुदव्रणवस्त्युत्तरवस्तिमूत्रवृद्धिद-कोदरधूमनिरुद्धप्रकशसन्निरुद्धगुदयत्राण्यलावु शृङ्गयन्त्राणि चोपरिष्टाद्वक्ष्यामः ।

शलाकायन्त्राण्यपि नानाप्रकाराणि नाना-प्रयोजनानि यथायोगपरिणाहदीर्घाणिच तेषां गण्डूपदशरपुङ्खसर्पफणवडिशमुखे द्वे द्वे एषण-व्यूहनचालनाहरणार्थमुपपदिश्येते । मसूरदल-मात्रमुखे द्वे किञ्चिदानताग्रे स्रोतोगतशल्योद्ध-रणार्थम् । षट्कार्पासकृतोष्णीषाणि प्रमार्ज्जन-क्रियासु । त्रीणि दर्व्याकृतीनि खल्लमुखानि क्षारौषधप्रणिधानार्थम् । त्रीण्यन्यानि जाम्बव-वदनानि त्रीण्यङ्कुशवदनानि षडवाग्निकर्म्मस्व-भिप्रेतानि । नासार्वुदहरणार्थमेकं कोलास्थि-दलमात्रमुखं खल्लतीक्ष्णोष्ठम् । अञ्जनार्थमेकं कलायपरिमण्डलमुभयतोमुकुलाग्रम् । मूत्र-मार्गविशोधनार्थमेकं मालतीपुष्पवृन्ताग्रप्रमाण-परिमण्डलमिति ।

उपयन्त्राण्यपि रज्जुवेणिकापट्टचर्म्मान्तवल्कल-लतावस्त्राष्ठीलाश्म-मुद्गर-पाणिपाद-तलाङ्गुलि-जिह्वा-दन्तनखमुख-बालाश्वकटकशाखाष्ठीवन-प्रवाहणहर्षायस्कान्तमयानिक्षाराग्निभेषजानि चेति ।
एतानि देहे सर्व्वस्मिन् देहस्यावयवे तथा ।
सन्धौ कोष्ठे धमन्याञ्च यथायोगं प्रयोजयेत् ॥
यन्त्रकर्म्माणि तु निर्घातनपूरणबन्धनव्यूहनवर्त्तन-चालनविवर्त्तनविवरणपीडनमार्गविशोधनविक-

गोलाध्यायोक्तयन्त्राणियथा, --
“अथ यन्त्राध्यायो व्याख्यायते । तत्रादौ तदा-रम्भप्रयोजनमाह ।
दिनगतकालावयवा ज्ञातुमशक्या यतो विना यन्त्रैः ।
वक्ष्ये यन्त्राणि ततः स्फुटानि संक्षेपतः कति-चित् ॥
गोलो नाडीवलयं यष्टिः शङ्कुर्घटी चक्रम् ।
त्रापं तुर्यं फलकं धीरेकं पारमार्थिकं यन्त्रम् ॥”
“अथ प्रथमं गोलयन्त्रमाह ।
अपवृत्तगरविचिह्नं क्षितिजे धृत्वा कुजेन संसक्ते ।
नाडीवृत्ते बिन्दुं कृत्वा धृत्वाथ जलसमं क्षिति-जम् ॥
रविचिह्नस्य च्छाया पतति कुमध्य यथा तथा विधृते ।
उडुगोले कुजबिन्द्वोर्मध्ये नाड्यो द्युयाताः स्युः ॥”
“अथ नाडीवलयमाह ।
अपवृत्ते कुजलग्ने लग्नं चाथो खगोलनलिकान्तः ।
भूस्थं ध्रुवयष्टिस्थं चक्रं षष्ट्या निजोदयैश्चाङ्क्यम् ॥
व्यस्तैर्यष्टीभायामुदयेऽर्कं न्यस्य नाडिका ज्ञेयाः ।
इष्टच्छायासूर्य्यान्तरेऽथ लग्नं प्रभायाञ्च ॥
केनचिदाधारेण ध्रुवाभिमुखकीलकेऽत्र धृते ।
अथवा कीलच्छायातलमध्ये स्युर्नता नाड्यः ॥”

यन्त्राणि । तालयन्त्राणि । नाडीयन्त्राणि ।
शलाकायन्त्राणि । उपयन्त्राणि चेति ॥
तत्र चतुर्व्विंशतिः स्वस्तिकयन्त्राणि । द्वे सन्दंश-
यन्त्रे । द्वे एव तालयन्त्रे । विंशतिर्नाड्यः । अष्टा-
विंशतिः शलाकाः । पञ्चविंशतिरुपयन्त्राणि ॥
तानि प्रायशो लौहानि भवन्ति तत्प्रतिरूप-
काणि वा तदलाभे । तत्र नानाप्रकाराणां
व्यालानां मृगपक्षिणां मुखैर्मुखानि यन्त्राणां
प्रायशः सदृशानि तस्मात् तत्सारूप्यादागमादु-
पदेशादन्ययन्त्रदर्शनाद्युक्तितश्च कारयेत् ।
समाहितानि यन्त्राणि खरश्लक्ष्णमुखानि च ।
सुदृढानि सुरूपाणि सुग्रहाणि च कारयेत् ॥

तत्र
स्वस्तिकयन्त्राण्यष्टादशाङ्गुलप्रमाणानि

सिंहव्याघ्रवृकतरक्ष्वृक्षद्वीपिमार्जारशृगाल-
मृगैर्व्वारुककाककङ्ककुररचासभासशशघात्यु-
लूकचिल्लिश्येनगृध्रक्रौञ्चभृङ्गराजाञ्जलिकर्णाव-
भञ्जननन्दिमुखमुखानि मसूराकृतिभिः कीलैः-
रवबद्धानि मूलेऽङ्कुशवदावृत्तवारङ्गाण्यस्थि-
विनष्टशल्योद्धरणार्थमुपदिश्यन्ते ॥ * ॥
सनिग्रहो-

र्षणाहरणाञ्चनोन्नमनविनमनभञ्जनोन्मथनम-
चूषणैषणदारणर्ज्जूकरणप्रक्षालनप्रधमनप्रमा-
र्ज्जनानि चतुर्विंशतिः ॥
स्वबुद्ध्या चापि विभजेद्यन्त्रकर्म्माणि बुद्धिमान् ।
असंख्येयविकल्पत्वाच्छल्यानामितिनिश्चयः ॥

तत्रातिस्थूलमसारमतिदीर्घमतिह्रस्वमग्राहि

विषमग्राहि वक्रं शिथिलमत्युन्नतं मृदुकीलं
मृदुमुखं मृदुपाशमिति द्वादश यन्त्रदोषाः ।
एतैर्दोषैर्विनिर्म्मुक्तं यन्त्रमष्टादशाङ्गुलम् ।
प्रशस्तं भिषजा ज्ञेयं तद्धि कर्म्मसु योजयेत् ॥
दृश्यं सिंहमुखाद्यैस्तु गूढं कङ्कमुखादिभिः ।
निर्हरेत्तु शनैः शल्यं शस्त्रयुक्तिव्यपेक्षया ॥
विवर्त्तते साध्ववगाहते च
शल्यं निगृह्योद्धरते च यस्मात् ।
यन्त्रेष्वतः कङ्कमुखं प्रधानं
स्थानेषु सर्व्वेष्वविकारि चैव ॥”
इति सुश्रुते सूत्रस्थाने सप्तमेऽध्याये ॥ * ॥

घटिकायन्त्रलक्षणादिकं
घटीयन्त्रशब्दे द्रष्टव्यम् ॥
“अथ शङ्कुमाह ।
समतलमस्तकपरिधिर्भ्रमसिद्धो
दन्तिदन्तजः शङ्कुः ।
तच्छायातः प्रोक्तं ज्ञानं
दिग्देशकालानाम् ॥
इति शङ्कुयन्त्रम् ॥
अथ चक्रमाह ।
चक्रं चक्रांशाङ्कं परिधौ
श्लथशृङ्खलादिकाधारम् ।
धात्री त्रिभ आधारात् कल्प्या
भार्द्धेऽत्र
स्वार्द्धञ्च ॥
तन्मध्ये सूक्ष्माक्षं
क्षिप्त्वार्काभिमुखनेमिकं
धार्य्यम् ।
भूमेरुन्नतभागास्तत्राक्षच्छायया
भुक्तः ॥
तत्खार्द्धान्तश्च नता
उन्नतलवसंगुणीकृतं द्युद-
लम् ।
द्युदलोन्नतांशभक्तं नाड्यः
स्थूलाः परैः प्रोक्ताः ॥”
“अथ वेधेन ग्रहज्ञानमाह ।
“पैत्रर्क्षपुष्यान्तिमवारुणाना-
मृक्षद्वयं नेमिगतं यथा स्यात् ।
दूरेऽन्तरेऽल्पेषुभखेचरौ वा
तथात्र यन्त्रं सुधिया प्रधार्य्यम्
॥
नेमिस्थदृष्ट्याक्षगतं प्रपश्येत्
खेटञ्च धिष्ण्यस्य च
योगताराम् ।
नेम्यङ्कयोरक्षयुजोस्तु मध्ये
येऽंशाः स्थिता भध्नुवको
युतस्तैः ॥
प्रत्यक् स्थिते भेऽथ पुरःस्थिते तै-
र्हीनो ध्रुवः स्यात् खचरस्य
भुक्तम् ॥”
“अथ चापं तुर्यगोलं चाह ।
दलीकृतं चक्रमुशन्ति चापं

“अथ फलकयन्त्रार्थमाह ।
दृङ्मण्डलेऽत्र स्फुटकाल उक्तः
सुखेन नान्यैर्यतितं मयातः ।
सद्गोलयुक्तेर्गणितस्य सारं
स्पष्टं प्रवक्ष्ये फलकाख्ययन्त्रम् ॥”
“इदानीं यन्त्रलक्षणमाह ।
कर्त्तव्यं चतुरस्रकं सुफलकं खाङ्का-९०
ङ्गुलै-
र्विस्तृतं
विस्ताराद्द्विगुणा-१८० यतं
सुगणकेनायाममध्ये
तथा ।
आधारः श्लथशृङ्खलादिघटितः कार्य्या च
रेखा तत-
स्त्वाधारादवलम्बसूत्रसदृशीसा
लम्बरेखोच्यते ॥
लम्बं नवत्य-९० ङ्गुलकैर्विभज्य
प्रत्यङ्गुलं तिर्य्यगतः प्रसार्य्य ।
सूत्राणि तत्रायतसूक्ष्मरेखा
जीवाभिधानाः सुधिया विधेयाः ॥
आधारतोऽधः खगुणा-३० ङ्गुलेषु
ज्यालम्बयोगे सुषिरञ्च सूक्ष्मम् ।
इष्टप्रमाणा सुषिरे शलाका
क्षेप्याक्षसंज्ञा खलु सा प्रकल्प्या ॥
षष्ट्यङ्गुलव्यासमतश्च रन्ध्रात्
कृत्वा सुवृत्तं परिधौ तदङ्क्यम् ।
षष्ट्या घटीनां भगणांश-३६० कैश्च
प्रत्यंशकं चाम्बुपलैश्च दिग्भिः ॥
अग्रे सरन्ध्रा तनुपट्टिकैका
षष्ट्यङ्गुला दीर्घतया तथाङ्क्या ॥”
“इदानीं यन्त्रोपकरणमाह ।
यत् खण्डकैः स्थूलचरं पलाद्यं
तद्गोकु-१९ हृत् स्याच्चरशिञ्जिनीह ॥”
“इदानीं यष्टिसाधनमाह ।
वेदाः ४ भवाः ११ शैलभुवो १७ धृतिश्च
१८
विश्वे १३ च बाणाः ५ पलकर्णनिघ्नाः ।
अर्कोद्धृताः स्युः क्रमशः स्वदेशे
राश्यर्द्धलभ्यानि हि खण्डकानि ॥
तैः क्रान्तिपाताढ्यरवेर्भुजज्या
षष्ट्युद्धृताक्षश्रवणेन युक्ता ।
त्रिज्याङ्गुला निधेया यष्ट्यग्राग्रान्तरं यावत्
॥
तावत्या मौर्व्या यद्द्वितीयवृत्ते धनुर्भवेत् तत्र
।
दिनगतशेषा नाड्यः प्राक् पश्चात् स्युः
क्रमेणै-
वम् ॥”
“इदानीं धीयन्त्रं विवक्षुरादौ तत्प्रशंसामाह ।
अथ किमु पृथुतन्त्रैर्धीमतो भूरियन्त्रैः
स्वकरकलितयष्टेर्दत्तमूलाग्रदृष्टेः ।
न तदविदितमानं वस्तु यद्दृश्यमानं
दिवि भुवि च जलस्थं प्रोच्यतेऽथ
स्थलस्थम् ॥
अत्र प्रश्नः ।
वंशस्य मूलं प्रविलोक्य चाग्रं
तत्स्वान्तरं तस्य समुच्छ्रयञ्च ।
यो वेत्ति यष्ट्यैव करस्थयासौ
धीयन्त्रवेदी वद किं न वेत्ति ॥”
“अथ यष्ट्या ध्रुववेधेन पलभामाह ।
यष्ट्यग्रमूलसंस्थं विद्ध्वा
ध्रुवमग्रमूलयोर्लम्बी ।
बाहुर्लम्बान्तरभूर्लम्बोच्छ्रायान्तरं कोटिः ॥
कोटिर्द्वादशगुणिता बाहुविभक्ता पलप्रभा
ज्ञेया ॥”
“इदानीं वंशादिवेधमाह ।
विद्ध्वैवं वंशतलं दृष्ट्युच्छ्रायाहताद्बाहोः ।
कोट्या लब्धं ज्ञेयं स्ववंशमध्ये महीमानम् ॥
विद्ध्वाथो वंशाग्रं भूमानं कोटिसंगुणं भक्तम्
।
दोष्णा वंशोच्छ्रायो दृष्ट्युच्छ्रायेण
संयुतोज्ञेयः ॥
उदाहरणम् ।
पञ्चशक्राङ्गुला १४५ यष्टिरष्टषष्टिर्दृगुच्छ्रयः ।
षट्करास्तलवेधे दोः कोटिः सप्तदशाङ्गुला
॥
अग्रवेधे रसेशा ११६ दोः
कोटिस्तुरगकुञ्जराः ।
वंशस्य यस्य तन्मानं चात्मवंशान्तरं वद ॥”
“अथ केवलाग्रवेधेनाह ।
अग्रं विध्वोर्ध्वस्थः पुनरुपविष्टश्च
तद्विद्ध्येत् ॥
त्वां सर्वज्ञमतीन्द्रियज्ञमनुजव्याजेन मन्ये भुवि ॥
उदाहरणम् ।
दृष्टा चेत् व्यङ्गुला कोटिर्बाहुश्च चतुरङ्गुलः ।
ऊर्ध्वस्थेनोपविष्टेन बाहुरेकादशाङ्गुलः ॥
कोटिरष्टाङ्गुला तोये वंशाग्रं विध्यता सखे ! ।
त्र्यकहस्तौ दृगुच्छ्रायौ वंशौच्च्यं चान्तरं वद ॥”
“किंवा यष्ट्येत्यस्योदाहरणम् ।
षडङ्कैरमरैस्तुल्यान्यङ्गुलान्यथवा क्रमात् ।
आत्मतोयान्तरं दृष्ट्वा वंशौच्च्यं चान्तरं वद ॥”
“अथ स्वयंवहमाह ।
लघुदारुजसमचक्रे समसुषिराराः समान्तरा
नेम्याम् ।
किञ्चिद्वक्रातोज्याः सुषिरस्यार्धे पृथक् तासाम् ॥
रसपूर्णे तच्चक्रं द्व्याधाराक्षस्थितं स्वयं भ्रमति
॥”
“अथान्यदाह ।
उत्कीर्य नेमिमथवा परितो मदनेन संलग्नम् ।
तदुपरि तालदलाद्यं कृत्वा सुषिरे रसं क्षिपेत्
तावत् ॥
यावद्रसैकपार्श्वे क्षिप्तजलं नान्यतो याति ।
पिहितच्छिद्रं तदतश्चक्रं भ्रमति स्वयं जला-
कृष्टम् ॥”
“अथान्यदाह ।
ताम्रादिमयस्याङ्कुशरूपनलस्याम्बुपूर्णस्य ॥
एकं कुण्डजलान्तर्द्वितीयमग्रं त्वधोमुखञ्च
बहिः ।
युगपन्मुक्तं चेत् कं नलेन कुण्डाद्बहिः पतति ॥
नेम्यां बद्ध्वा घटिकाश्चक्रं जलयन्त्रवत् तथा
धार्य्यम् ।
नलकप्रच्युतसलिलं पतति यथा तद्घटीमध्ये ॥
भ्रमति ततस्तत् सततं पूर्णघटीभिः समाकृष्टम् ।
चक्रच्युतं तदुदकं कुण्डे याति प्रणालिकया ॥”
“इदानीमन्येषां स्वयंवहमुपहसन्नाह ।
यद्वधोरन्ध्रनलं तत् सापेक्षत्वात् स्वयंवहं ग्राम्यम्
।
चतुरचमत्कारकरी युक्तिर्यन्त्रं नहि ग्राम्या ॥
एवं बहुधा यन्त्रं स्वयंवहं कुहकविद्यया भवति ।
नेदं गोलाश्रितया पूर्बोक्तत्वान्मयाप्युक्तम् ॥”
इति सिद्धान्तशिरोमणौ गोले यन्त्राध्यायः ॥)

**यन्त्रकं**, क्ली, यन्त्रकाष्ठम् । (कुन्दम् । इति हेमचन्द्रः ।

दिग्घ्नी कृताप्ता भवतीह यष्टिः
सा पट्टिकायां सुषिरात् प्रदेया ॥”
“इदानीं यष्टिप्रयोजनमाह ।
धार्य्यं तथा फलकयन्त्रमिदं यथैव
तत्पार्श्वयोर्लगति तुल्यमिनस्य तेजः ।
छायाक्षजा स्पृशति तत्परिधौ यमंशं
तत्रांशके मतिमता तरणिः प्रकल्प्यः ॥
अक्षप्रोतां रविलवगतां पट्टिकां न्यस्य तस्माद्-
यष्टेरग्रादुपरि फलकेऽधश्च गोलक्रमेण ।
यत्नाद्वेयश्चरदलगुणस्तत्रया ज्या तयात्र
छिन्ने वृत्ते तलगघटिकाः स्युर्नता लम्बकान्ताः ॥”
“अथ यष्टियन्त्रमाह ।
त्रिज्याविष्कम्भार्द्धं वृत्तं कृत्वा दिगङ्कितं तत्र ।
दत्त्वाग्रां प्राक् पश्चाद्युज्यावृत्तञ्च तन्मध्ये ॥
तत्परिधौ षष्ट्यङ्कं यष्टिर्नष्टद्युतिस्ततः केन्द्रे ।
निजभुजभक्ते कोटी तदन्तरहृतो
दृगौच्च्यविश्लेषः
भूमिर्वंशौच्च्यमतः पृथक् पृथक्
पूर्ब्बवज्ज्ञेयम् ॥
अत्र प्रश्नः ।
ऊर्ध्वस्थस्य गृहादिभिर्व्यवहितस्याप्यग्रमात्रं सखे !
वंशस्य प्रगुणस्य यस्य सुसमे देशे समालोक्यते ।
अत्रैव त्वमवस्थितो यदि वदस्यस्यान्तरं चोच्छ्र्यं
मन्ये यन्त्रविदां वरिष्ठपदवीं यातोऽसि धीयन्त्र-
वित् ॥
उराहरणम् ।
इष्टयष्ट्योद्‌र्ध्वसंस्थेन वंशाग्रं विध्यता भुजः ।
दृष्टश्चतुष्करोऽथान्ययष्ट्याखाङ्काङ्गुलः सखे ॥
निविष्टेन तथा कोटिरङ्गुलं वेधयोरपि ।
आत्मवंशान्तरं ब्रूहि वंशोच्छ्रायञ्च वेधवित् ॥”
“अथ जलान्तर्वेधमाह ।
एवं तोयेऽप्यौच्च्यं तत्र दृगौच्च्योनितं भवति ।
किंवा यष्ट्या कोटी दृष्ट्युच्छ्रायौ जलान्तरे बाहू ॥
अत्र प्रश्नः ।
दूरस्थस्य न दूरगस्य यदि वादृष्टस्य दृष्टस्य वा
वंशस्य प्रतिविम्बितस्य सलिले दृष्ट्वाग्रमात्रं सखे ।
अत्रैव त्वमवस्थितो यदि वदस्यस्यान्तरं चोच्छ्र्यं
३ । ५७३ ॥) कुँद् इति भाषा । यम्यते काष्ठमनेनेति यमधातोस्त्रप्रत्ययेन यन्त्रं ततः स्वार्थे कप्रत्य-
येन निष्पन्नम् ॥ (यथा, सुश्रुते । ४ । २ ।
“कार्य्यो गोफणिकाबन्धः कट्यामावेश्य यन्त्रकम् ।
न कुर्य्यात् स्नहसेकञ्च तेन क्लिद्यति हि व्रणः ॥”
यन्त्रयति बध्नाति सेतुप्रभृतीनीति । यन्त्रि + ण्वुल् । सेतुप्रभृतिनिर्म्मातरि, त्रि । यथा, रामा-
यणे । २ । ८० । १ ।
“स्वकर्म्माभिरताः शूराः खनका यन्त्रकास्तथा ॥”
“यन्त्रका जलप्रवाहादियन्त्रणस्मर्थाः ।” इति तट्टीका ॥)

**यन्त्रगृहं**, क्ली, (यन्त्रस्य गृहम् ।) तैलिशाला ।
इति हेमचन्द्रः । ४ । ६३ ॥ घानिघर इति भाषा ॥

**यन्त्रगोलः**, पुं, कलायविशेषः । इति शब्दचन्द्रिका ॥

मटर इति भाषा ॥

**यन्त्रणं**, क्ली, (यन्त्र + ल्युट् ।) रक्षणम् । बन्धनम् ।

(यथा, सुश्रुते सूत्रस्थाने अष्टादशाध्याये ।
"यन्त्रणमत ऊर्द्धमधस्तिर्य्यक् ॥") नियमनम् ।
इति मेदिनी । णे, ७१ ॥ (यथा, सुश्रुते उत्तर-
तन्त्रे ४१ अध्याये ।
"रक्तक्षयाद्वेदनाभिस्तथैवाहारयन्त्रणात् ।
व्रणितस्य भवेच्छोषः स चासाध्यतमस्ततः
॥")

**यन्त्रणा**, स्त्री, (यन्त्रि + "ण्यासश्रन्थो युच् ।" ३ ।

३ । १०७ । इति युच् । टाप् ।) पीडा । यथा,
नैषधे । ४ । १० ।
"मदनतापभरेण विदीर्य्य नो
यदुदपाति हृदा दमनस्वसुः ।
निविडपीनकुचद्वययन्त्रणा
तमपराधमधात् प्रतिबध्नती ॥"
(पीडाशब्देऽस्या विशेषो विज्ञेयः ॥)

**यन्त्रपेषणी**, स्त्री, (पिष्यतेऽनयेति । पिष् । करणे

ल्युट् । ङीप् । यन्त्रमेव पेषणी ।) पेषणार्थयन्त्रम्
।
इति जटाधरः ॥ याँता इति भाषा ॥

**यन्त्रिका**, स्त्री, (यन्त्रयति कृतकौतुका पीडय-

तीति । यन्त्रि + ण्वुल् । टापि अत इत्वम् ।)
पत्न्याः कनिष्ठा भगिनी । यथा, हेमचन्द्रे ।
"कनिष्ठा श्यालिका हाली यन्त्रिका केलि-
कुञ्चिका ॥"

**यन्त्रितः**, त्रि, (यन्त्रि + क्तः ।) बद्धः । इति धरणिः ॥

(यथा, देवीभागवते । ३ । १७ । १७ ।
"ते भृत्या जगृहुर्धेनुं हठादाक्रम्य यन्त्रिताम् ।
वेगमाना मुनिं प्राह सुरभिः साश्रुलोचना ॥")

**यन्त्री**, [न्] त्रि, यन्त्रविशिष्टः । यन्त्रशब्दादस्त्यर्थे

इन्प्रत्ययेन निष्पन्नः ॥ (यन्त्रयति बध्नातीति ।
यन्त्रि बन्धने + णिनिः । बन्धनकारकः । यथा,
रामायणे । १ । १ । ७६ ।
"अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पैतामहाद्-
वरात् ।
विमार्गप्रस्थितानान्तु दण्डम् ।' इति शाकुन्तले ।
परिवेषणे तु यामयत्यन्नं द्विजाय गृही इत्याहुः ।
तेन उभयस्य प्रामाणिकत्वादुभयत्र विकल्प-
ज्ञापनार्थञ्चानुबन्धः कृतः । इति दुर्गादासः ॥

**यमः**, पुं, (यमयति नियमयति जीवानां फलाफल-

मिति । यम् + अच् ।) दक्षिणदिक्पालः ।
तत्पर्य्यायः । धर्म्मराजः २ पितृपतिः ३ सम-
वर्त्ती ४ परेतराट् ५ कृतान्तः ६ यमुनाभ्राता ७
शमनः ८ यमराट् ९ कालः १० दण्डधरः ११
श्राद्धदेवः १२ वैवस्वतः १३ अन्तकः १४ ।
इत्यमरः । १ । १ । ६१ ॥ धर्म्मः १५ धर्म्मराट्
१६
जीवितेशः १७ महिषध्वजः १८ औडम्बरः १९
दण्डधारः २० कीनाशः २१ दध्नः २२ महिष-
वाहनः २३ शीर्णपादः २४ भीमशासनः २५
कङ्कः २६ हरिः २७ । इति शब्दरत्नावली ॥
कर्म्मकरः २८ । इति जटाधरः ॥ * ॥ चतुर्द्दश-
यमतर्पणं यथा, --
"यां काञ्चित् सरितं प्राप्य कृष्णपक्षे चतुर्द्दशीम् ।
यमुनायां विशेषेण नियतस्तर्पयेद्यमान् ॥
यमाय धर्म्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्व्वभूतक्षयाय च ॥
औडम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥
एकैकस्य तिलैर्म्मिश्रांस्त्रींस्त्रीन् दद्यात् जला-
ञ्जलीन् ।
संवत्सरकृतं पापं तत्क्षणादेव नश्यति ॥"
इति तिथ्यादितत्त्वधृतभविष्यपुराणवचनम्॥
तस्योत्पत्तिर्यथा, --
"संज्ञा च रविणा दृष्टा निमीलयति लोचने ।
यतस्ततः सरोषोऽर्कः संज्ञां निष्ठुरमब्रवीत् ॥
मयि दृष्टे सदा यस्मात् कुरुषे नेत्रसंयमम् ।
तस्माज्जनिष्यसे मूढे ! प्रजासंयमनं यमम् ॥"
मार्कण्डेय उवाच ।
"ततस्तस्यास्तु संजज्ञे भर्त्तृशापेन तेन वै ।
यमश्च यसुना चेयं प्रख्याता सुमहानदी ॥"
इति मार्कण्डेयपुराणे वैवस्वतमन्वन्तरे ७७ अः ॥
पुण्यात्मनां सम्बन्धे तस्य रूपं यथा, --
"तानागतांस्ततो दृष्ट्वा नरान् धर्म्मपरायणान् ।
भास्करिः प्रीतिमासाद्य स्वयं नारायणो भवेत् ॥
अस्यानधिकारो यथा, --
"प्रोवाच धर्म्मं यदहं ब्रवीमि
कार्य्यं त्वया तत् खलु धर्म्मराज ! ॥
ब्रह्मोवाच ।
ये भक्ताः पुण्डरीकाक्षे कर्म्मणा मनसा
गिरा ।
स्वकर्म्मनिरता दान्ता न नियम्या हि
ते त्वया ॥
कृष्णः संपूजितो यैस्तु यैः कृष्णः
समुपासितः ।
यैश्च नित्यं स्मृतः कृष्णो न ते
त्वद्विषयोपगाः ॥
नमः कृष्णाच्युतानन्तं
वासुदेवेत्युदीरितम् ।
यैर्भावभावितो धर्म्म ! न ते
त्वद्विषयोपगाः ॥
दानं ददद्भिर्यैरुक्तमच्युतः प्रीयतामिति
।
श्रद्धापुरःसरैर्धर्म्म ! न ते
त्वद्विषयोपगाः ॥
उत्तिष्ठद्भिः स्वपांद्भश्च व्रजद्भिश्च
जनार्दनः ।
यैः स्मृतस्तु सदा धर्म्म ! न ते
त्वद्विषयोपगाः ॥
सर्व्ववाधासु ये कृष्णं
संस्मरन्त्युच्चरन्ति च ।
तद्भावभाविनो ये च न ते
त्वद्विषयोपगाः ॥
स एव धाता सर्व्वस्य तन्नियोगकरा
वयम् ।
यमसंयमने त्यक्तः सोऽस्मत्संयमको
हरिः ॥"
इति वह्निपुराणे
नरसिंहप्रादुर्भावाध्यायः ॥
अपि च ।
ब्राह्मण उवाच ।
"यत् कृत्वा सुमहत् पुण्यं
धर्म्माधर्म्मविनिणये ।
प्रमाणं त्वं हि लोकानां फलं मे ब्रूहि
तद्-
यम् ! ॥"

मर्षयन् राक्षसान् वीरो यन्त्रिणस्तान् यदृ-
च्छया ॥”)

**यभ**, औ मैथुने । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-अक०-अनिट् ।) औ, अयाप्सीत् ।
यभति
युवा । इति दुर्गादासः ॥

**यम**, औ उ विरतौ । इति कविकल्पद्रुमः ॥
(भ्वा०-पर०-अक०-अनिट् । क्त्वावेट् ।) औ,
यन्ता । उ, यमित्वा यन्त्वा । विरतिर्न्निवृत्तिः ।
यच्छति पापात् साधुः । इति दुर्गादासः ॥

**यम**, क मि परिवेषणे । तदभावे । इति कवि-
कल्पद्रुमः ॥ (चुरा०-पर०-सक०-सेट् ।) क
मि, यमयति यामयति । परिवेषणं अन्नादेर-
र्पणम् । वेष्टनमित्येके । विषत्यव्याप्ताविव्यस्य
रूपमिति रमानाथः । केचित्तु परिवेषण एवायं
मानुबन्धः । यमयत्यन्नं द्विजाय गृही । अन्यत्र
नियामयति संयामयति इत्याहुः । अन्ये तु
अपरिवेषण एवायं मानुबन्धः । ‘नियमयति

चतुर्ब्बाहुः श्यामवर्णः प्रफुल्लकमलेक्षणः ।
शङ्खचक्रगदापद्मधारी गरुडवाहनः ॥
स्वर्णयज्ञोपवीती च स्मेरचारुतराननः ।
किरीटी कुण्डली चैव वनमालाविभूषितः ॥”
पापिनां सम्बन्धे तस्य रूपं यथा, --
“त्रिंशद्योजनदीर्घाङ्गो वापीसदृशलोचनः ।
धूम्रवर्णो महातेजाः प्रलयाम्भोधरध्वनिः ॥
तृणाधिराजलोमां च ज्वलदग्निशिखाग्रवत् ।
नासारन्ध्रस्फुरच्छ्वासस्वनैर्ज्जितमहानिलः ॥
सुदीर्घदशनश्रेणिः सूर्पोपमनखावलिः ।
प्रचण्डमहिषारूढः संदष्टदशनच्छदः ॥
दण्डहस्तश्चर्म्मवासा भ्रूकुटीकुटिलाननः ॥”
इति पाद्मे क्रियायागसारे २२ अध्यायः ॥

यम उवाच ।
यमो यम इति श्रुत्वा वृथा ह्युद्विजते
जनः ।
आत्मा च यमितो येन न तस्यैव यमः
स्मृतः ॥
आनृशंस्यं क्षमा सत्यमहिंसा दम
आर्जवम् ।
ध्यानं प्रसादो माधुर्य्यं सन्तोषश्च
यमा दश ॥
यमैश्च नियमैश्चैव यः
करोत्यात्मसंयमम् ।
स चादृष्ट्वा तु मां याति परं ब्रह्म
सनातनम् ॥”
इति तत्रैव यमशर्म्मिलोपाख्यानम् ॥
* ॥
सावित्रीकृतं यमाष्टकं स्तोत्रं यथा, --
सावित्र्युवाच ।
“तपसा धर्म्ममाराध्य पुष्करे भास्करः
पुरा ।
धर्म्मांशं यं सुतं प्राप धर्म्मराजं
नमाम्यहम् ॥ १ ॥
समता सर्व्वभूतेषु यस्य सर्व्वस्य
साक्षिणः ।
अतो यन्नाम शमनमिति तं
प्रणमाम्यहम् ॥ २ ॥
येनान्तश्च कृतो विश्वे सर्व्वेषां
जीविनां परम् ।
कर्म्मानुरूपकाले च तं कृतान्तं
नमाम्यहम् ॥ ३ ॥
बिभर्त्ति दण्डं दण्डाय पापिनां
शुद्धिहेतवे ।
नमामि तं दण्डधरं यः शास्ता
सर्व्वदेहिनाम् ॥ ४ ॥
विश्वे च कलयत्येव यः सर्व्वायुश्च
सन्ततम् ।
अतीव दुर्निवार्य्यञ्च तं कालं
प्रणमाम्यहम् ॥ ५ ॥
तपस्वी वैष्णवो धर्म्मी संयमी
विजितेन्द्रियः ।
जीविनां कर्म्मफलदस्तं यमं
प्रणमाम्यहम् ॥ ६ ॥
स्वात्मारामश्च सर्व्वज्ञो मित्रः
पुण्यकृतां भवे ।

| | | |
|---|---|---|
| | | पापिनां क्लेशदो यस्तं पुण्यमित्रं नमाम्यहम् ॥ ७ ॥<br>यज्जन्म ब्रह्मणो वंशे ज्वलन्तं ब्रह्मतेजसा ।<br>यो ध्यायति परं ब्रह्म ब्रह्मवंशं नमाम्यहम् ॥ ८ ॥<br>इत्युक्त्वा सा च सावित्री प्रणनाम यमं मुने ।<br>यमस्तां विष्णुभजनं कर्म्मपाकमुवाच ह ॥ |

इदं यमाष्टकं नित्यं प्रातरुत्थाय यः पठेत् ।
यमात्तस्य भयं नास्ति सर्व्वपापात्
प्रमुच्यते ॥
महापापी यदि पठेत् नित्यं भक्त्या च
नारद ! ।
यमः करोति तं शुद्धं कायव्यूहेन निश्चितम्
॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २६ अध्यायः
॥ * ॥
पारिभाषिकयमदन्ता यथा, --
“कार्त्तिकस्य दिनान्यष्टावष्टाग्रहायणस्यच
।
यमस्य दशना एते लघ्वाहारी स जीवति
॥”
इति वैद्यकम् ॥ * ॥
(“पङ्कमत्स्यवसातैलघृतगन्धांश्च ये नराः
।
मृष्टगन्धांश्च ये वान्ति गन्तारस्ते
यमालयम् ॥
यूका ललाटमायान्ति बलिं नाश्नन्ति
वायसाः ।
येषां वापि रतिर्नास्ति यातारस्ते यमालयम्
॥”
इति सुश्रुते सूत्रस्थाने ३१ अध्यायः ॥
अस्य शापवृत्तान्तं शापान्तवृत्तान्तञ्च यम-
राजशब्दे द्रष्टव्यम् ॥ * ॥) शरीरसाधना-
पेक्षनित्यकर्म्म । इत्यमरः । २ । ७ । ४९
॥
“उपायान्तरनिरपेक्षं शरीरमात्रसाध्यं नित्यं
यावज्जीवमवश्यकार्य्यं यत्कर्म्म
सत्यास्तेयादि तद्-
यमः । यमेरल् ।
‘अहिंसा सत्यवचनं ब्रह्मचर्य्यमकल्कता ।
अस्तेयमिति पञ्चैते यमाश्चैव व्रतानि च ॥’
इति मनुः ।” इति तट्टीकायां भरतः ॥
स च अष्टाङ्गयोगान्तर्गताङ्गविशेषः । स तु
दशविधो यथा, --
“ब्रह्मचर्य्यं दया क्षान्तिर्ध्यानं
सत्यमकल्कता ।
अहिंसास्तेयमाधुर्य्यं दमश्चैते यमाः
स्मृताः ॥”

यमावित्यभिधीयेते धर्म्मेतरपुरःसरौ ॥”
इति सुश्रुते शारीरस्थाने द्बितीयेऽध्याये ॥
अनयोरेकस्य वृद्धिरपरस्य क्षीणताकथमित्यत
आह ।
“कर्म्मात्मकत्वाद्विषमांशभेद्गात्
शुक्रासृजं वृद्धिमुपैति कुक्षौ ।
एकोऽधिको न्यूनतरो द्वितीय
एवं यमेऽप्यभ्यधिको विशेषः ॥”
इति चरके शारीरस्थाने द्बितीयेऽध्याये ॥)

**यमकं**, क्ली, (यमं युग्मभावं कायति प्राप्नीतीति ।
कै + कः ।) शब्दालङ्कारः । तस्य लक्षणादि
यथा, --
“सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः ।
क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते ॥
अत्र द्वयोरपि पदयोः क्वचित् सार्थकत्वं
क्वचिन्निरर्थकत्वं क्वचिदेकस्य सार्थकत्वमपरस्य
निरर्थकत्वमत उक्तं सत्यर्थ इति । तेनैव
क्रमेणेति दमो मोद इत्यादेर्विभक्तविषयत्वं
सूचितम् । एतच्च पदपादार्द्धश्लोकावृत्तित्वे
पादाद्यावृत्तेश्चानेकविषयतया प्रभूततमभेदं
दिङ्मात्रमुदाह्रियते ।
‘नवपलाशपलाशवनं पुरः
स्फुटपरागपरागतपङ्कजम् ।
मृदुलतान्तलतान्तमलोकयत्
ससुरभिं सुरभिं सुमनोभरैः ॥’
इति माघे । ६ । २ ॥
अत्र पदावृत्तिः पलाशपलाशेति सुरभिं
सुरभिमित्यत्र च द्वयोः सार्थकत्वम् । लतान्त-
लतान्तेत्यत्र प्रथमस्य निरर्थकत्वं परागपरागे-
त्यत्र द्वितीयस्य एवमन्यत्राप्युदाहार्य्यम् । यम-
कादौ भवेदैक्यं डलोर्ब्बबोर्लरोस्तथा । इत्युक्त-
नयात् । भुजलतां जडतामबलाजन इत्यत्र
न यमकत्वहानिः ।” इति साहित्यदर्पणे दशमः
परिच्छेदः । १० ॥ (यमकालङ्कारस्तु युग्मपाद-
यमकायुग्मपादयमकाद्यन्तयमक-पादमध्ययमक-
पादान्तयमक-पादादियमक-पादादिमध्ययमक-
पादाद्यन्तयमक-मध्यान्तयमक-काञ्चीयमकगर्भ-
यमकचक्रबालयमकपुष्पयमकमहायमकमिथुन
यमकवृन्तयमकविपथयमकसमुद्गयमकसर्व्वामक
यमकावलीभेदात् बहुविधः । तत्तल्लक्षणोदाह-

**यमकः**, पुं, (यम् + भावे घञ् । स्वार्थे कन् ।)
संयमः । इति मेदिनी । के, १४२ ॥

**यमकालिन्दी**, स्त्री, (यमः कालिन्दी च सुतः सुता
च यस्याः ।) संज्ञा । सा च सूर्य्यपत्नी । इति
शब्दरत्नावली ॥

**यमकीटः**, पुं, (यमसूचकः कीटः ।) घुर्घूरनामा
कीटः । इति त्रिकाण्डशेषः ॥

**यमकोटिः**, स्त्री, लङ्कायाः पूर्ब्बं पृथिव्याश्चतुर्थभागे
देशविशेषः । यथा, --
“लङ्का कुमध्ये यमकोटिरस्याः
प्राक्पश्चिमे रोमकपत्तनञ्च ।
अधस्ततः सिद्धपुरं सुमेरुः
सौम्येऽथ याम्ये वडवानलश्च ।
कुवृत्तपादान्तरितानि तानि
स्थानानि षड्गोलविदो वदन्ति ॥”
इति सिद्धान्तशिरोमणिः ॥

**यमघण्टः**, पुं, (यमं घण्टयतीति । घण्टि +
अण् ।) योगविशेषः । यथा, --
“द्बे मघापूर्ब्बफल्गुन्यौ पुष्याश्लेषा च
चन्द्रयोः ।
ज्येष्ठानुराधा भरणी चाश्विनी
कुजवासरे ॥
हस्तार्द्रा चन्द्रजे मूला पूर्ब्बाषाढा च
रेवती ।
जीवे ह्युत्तरभाद्रश्च शुक्राहे
स्वातिरोहिणी ।
शनिवारे शतभिषा श्रवणा यमघण्टकः
॥”
इति सारसंग्रहः ॥
अपि च ।
“घण्टोऽखण्डर्क्षयुक्ते स्वगृहपतिदिने
सौम्यवारे-
ऽर्य्यमापि ।”
अस्य वर्ज्यकालनिर्णयो यथा, --
“यमघण्टे त्यजेदष्टौ मृत्यौ द्वादश
नाडिकाः ।

इति गारुडे १०९ अध्यायः ॥ * ॥
स च पञ्चविधो यथा, --
"अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यापरिग्रहौ ।
यमाः पञ्चाथ नियमाः शौचं द्विविधमीरितम् ॥"
इति तत्रैव २३० अध्यायः ॥
"अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहा यमाः ।"
इति पातञ्जले साधनपादे । ३० ॥ यच्छति निय-
च्छति इन्द्रियग्राममनेनेति । यम + घञ् ।)
संयमः ॥ यथा, अमरः । ३ । २ । १८ ।
"वियामो वियमो यामो यमः संयामसंयमौ ॥"
काकः । शनिः । इति मेदिनी । मे, २३ ॥
(विष्णुः । यथा, महाभारते । १३ । १४९ । ३० ।
"अतीन्द्रः संग्रहः सर्गो धृतात्मा नियमो यमः ॥"
"अन्तर्यच्छतीति यमः ।" इति तद्भाष्ये शङ्करा-
चार्य्यः ॥)

**यमः**, त्रि, (यच्छति एकत्र गर्भाशये निरतो भवतीति । यम् + अच् ।) यमजः । इति मेदिनी । मे, २३ ॥ तयोर्ज्येष्ठत्वनिरूपणं यथा,
"बहिर्व्वर्णेषु चारित्राद्यमयोः पूर्व्वजन्मतः ।
यस्य जातस्य यमयोः पश्यन्ति प्रथमं मुखम् ।
सन्तानः पितरश्चैव तस्मिन् ज्यैष्ठं प्रतिष्ठितम् ॥
जन्मप्राथम्यात् ज्यैष्ठं यमयोः न तु निषेक-
प्राथम्यात् जन्मप्राथम्यसन्देहे मुखदर्शनप्राथ-
म्यत् ।" इति उद्वाहतत्त्वम् ॥ (यथा, --
"बीजेऽन्तर्वायुना भिन्ने द्वौ जीवौ कुक्षिमागतौ ।
रणादिकं भट्टिकाव्ये दशमसर्गे यमकचक्रे काव्या-
दर्शे दशमपरिच्छेदे च द्रष्टव्यम् ॥ व्यूहविशेषः ।
यथा, महाभारते । ४ । ५५ । ४२ ।
"ततो विराटस्य सुतः सव्यमावृत्य वाजिनः ।
यमकं मण्डलं कृत्वा तान् योधान् प्रत्यवारयत् ॥"
"यमकं शत्रणां निरोधकं मण्डलं कृत्वा ।" इति
तट्टीकायं नीलकण्ठः ॥ सदृशम् । यथा, महा-
भारते । ३ । १९ । ८ ।
"मण्डलानि विचित्राणि यमकानीतराणि च ।
सव्यानि च विचित्राणि दक्षिणानि च सर्व्वशः ॥"
"यमकानि सदृशानि ।" इति तट्टीकायां नील-
कण्ठः ॥) त्रि, यमजः । इति मेदिनी । के, १४२ ॥
अन्येषां पापयोगानां मध्याह्नात् परतः शुभम् ॥"
अस्य दोषा यथा, --
"एभिर्जातो न जीवेत यदि शक्रसमो भवेत् ।
विवाहे विधवा नारी यात्रायां मरणं भवेत् ॥
निष्फलं कृषिवाणिज्यं विद्यारम्भे च मूर्खता ।
गृहप्रवेशे भङ्गः ष्याच्चूडायां मरणं ध्रुवम् ॥
ऋणदाने फलं नास्ति व्रतदाने च निष्फले ।
शुभकर्म्माणि सर्व्वानि नैव कुर्य्याद्विचक्षणः ॥"
इति ज्योतिस्तत्त्वम् ॥
रविवारे १० । ११ । सोमवारे ८ । ९ । मङ्गल-
वारे १७ । १८ । १ । २ । बुधवारे १३ । ६ ।
बृहस्पतिवारे १९ । २० । २६ । २७ । शुक्र-
वारे १५ । ४ । शनिवारे २४ । २२ । इति
यमघण्टयोगः ॥

**यमजः**, त्रि, (यमो यमकः सन् जायते इति । जन् + डः ।) एककालीनैकगर्भजातसन्तान-द्वयम् । यथा, मेदिनी । मे, २३ ।
"यमोऽन्यलिङ्गो यमजे ना काके शमने शनौ ॥"
(यथा च कथासरित्सागरे । २३ । ९१ ।
"शान्तिकरोऽपि पुरोधा भ्रातृसुतं शान्ति-
सोममपरञ्च ।
वैश्वानरमर्पितवान् पिङ्गलिकापुत्त्रकौ यमत्रौ ॥")

अस्य ज्येष्ठत्वं यमशब्द द्रष्टव्यम् ॥
(अश्वविशेषे,
पुं । यथा, अश्ववैद्यके । ३ । १५२ ।
“एकेनाङ्गेन हीनेन भिन्नेन च विशेषतः
।
यमजं वाजिनं बिन्द्यात् वामनं
वामना-
कृतिम् ॥”)

**यमदग्निः**, पुं, (जमन् हुतभक्षणशीलः प्रज्वलितो

ऽग्निरिव । पृषोदरादित्वात् जस्य यः
।) जम-
दग्निमुनिः । स तु परशुरामपिता ।
इति
भरतद्विरूपकोषः ॥ (विवृतिस्तु
जमदग्निशब्दे
द्रष्टव्या ॥)

**यमदूतः**, पुं, (यमस्य दूतः ।) यमस्य चरः ।

यथा, --
“यमदूतपिशाचाद्यैर्यत्
परासुरुपास्यते ।
सद्भिरौषधवीर्य्याणि तस्मात्तं
परिवर्ज्जयेत् ॥”
इति वाग्भटे शरीरस्थाने पञ्चमेऽध्याये
॥)
धर्म्मस्व उवाच ।
“के यूयं विकृताकाराः
पाशमुद्गरपाणयः ।
दंष्ट्राकरालवदना अङ्गारसदृशप्रभाः ॥
यूयं सर्व्वे महावीराः
ज्वलत्पावकलोचनाः ।
कृता तथापि युष्माकमियं केन
सुदुर्गतिः ॥”
यमदूता ऊचुः ।
यमदूता वयं सर्व्वे यमाज्ञाकारिणः
सदा ।
त्वद्वत्तोऽयं द्विजास्माकं सुमहान्
कश्मलो-
दयः ॥”

अर्घ्यश्चात्र प्रदातव्यो यमाय सहजद्वयैः ॥”
सहजद्वयैर्भगिनीभ्रातृभिः । अर्घ्यमन्त्रः ।
“एह्येहि मार्त्तण्डज पाशहस्त
यमान्तकालोकधरामरेश ।
भ्रातृद्वितीयाकृतदेवपूजां
गृहाण चार्घ्यं भगवन्नमस्ते ॥
धर्म्मराज नमस्तुभ्यं नमस्ते यमुनाग्रज ।
पाहि मां किङ्करैः सार्द्धं सूर्य्यपुत्र नमोऽस्तु ते ॥”
यमुनाञ्च संपूज्य नमस्कुर्य्यात् ।
“यमस्वसर्नमस्तेऽस्तु यमुने लोकपूजिते ।
वरदा भव मे नित्यं सूर्य्यपूत्रि नमोऽस्तु ते ॥”
अन्नं दत्त्वा पठेत् ।
“भ्रातस्तवानुजाताहं भुङ्क्ष्व भक्तमिदं शुभम् ।
प्रीतये यमराजस्य यमुनाया विशेषतः ॥”
ज्येष्ठा चेत् तदाग्रजाताहमिति वदेत् ॥ अत्र
भोक्तव्यं पुष्टिवर्द्धनं इति विधिसमभिव्याहृत-
फलश्रुत्या भोजननियमस्य प्राधान्यात्तस्य
मुख्य-
कालोऽष्टधाविभक्तदिनपञ्चमांशोग्राह्यः । यथा
दक्षः ।
“पञ्चमे च तथा भागे संविभागो यथार्हतः ।
पितृदेवममनुष्याणां कीटानाञ्चोपदिश्यते ॥
संविभागं ततः कृत्वा गृहस्थः शेषभुग्भवेत् ।
इतिहासपुराणाद्यैः षष्ठञ्च सप्तमं नयेत् ॥”
संविभागो विभज्यान्नस्य प्रतिपादनम् । देवोऽत्र
वैश्वदेवसम्बन्धी । पञ्चमांशालाभे तु ।
“न भुञ्जीतोद्धृतस्नेहं नातिसौहित्यमाचरेत् ।
नातिप्रगे नातिसायं नातिसन्ध्यासमीपतः ॥”
इति मनूक्तपर्य्यूदस्तसूर्य्योदस्तेतरकालोऽपि
ग्राह्यः । सौहित्यं तृप्तिः । अत्र भोजनस्य राग-
प्राप्तत्वेऽपि तत्कालस्य ।
“मुनिभिर्द्विरशनं प्रोक्तं विप्राणां मर्त्यवासिनां
नित्यम् ।
अहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्तः
॥”
इति कात्यायनीयेन नियमितत्वाद्भोजनकालस्य
वैधत्वेन शास्त्रीयत्वात् न सामान्यशास्त्रप्राप्त्युप-
जीविपर्य्युदासासङ्गतिः । अत्रानध्ययनं भ्रान्ता-
नाम् । प्रेतपक्षोत्तरद्वितीयायां तन्निषेधात् ।
यथा च राजमार्त्तण्डे ।
“प्रे को चै चा द्वितीयास्ताः प्रेतपक्षे गते तु या ।

ब्रह्मोवाच ।
यदि चेच्छसि विप्रेन्द्र व्रतानां व्रतमुत्तमम् ।
व्रतं यमद्वितीयाख्यं शृणु त्वं मृत्युवारणम् ॥
कार्त्तिके मासि शुक्लायां द्वितीयायां मुनीश्वर ! ।
कर्त्तव्यं तद्विधानेन ह्यपमृत्युनिवारणम् ॥
ब्राह्मे मुहूर्त्ते चोत्थाय चिन्तयेदात्मनो हितम् ।
प्रातः कृत्वा द्विजः स्नानं दन्तधावनपूर्ब्बकम् ॥
ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ।
कृतनित्यक्रियो हृष्टः कुण्डलाङ्गदभूषितः ॥
विधिं विष्णुञ्च रुद्रञ्च संस्थाप्यौडम्बरे शुभे ।
पद्मं सप्तदलं कृत्वा पूजयेत् सुस्थमानसः ॥
चन्दनागुरुकर्पूरकुङ्कुमैर्द्विजसत्तम् ! ।
पुष्पैर्धूपैश्च नैवेद्यैर्नारिकेलादिभिः फलैः ॥
सरस्वतीञ्च वरदां वीणापुस्तकधारिणीम् ।
ध्यायेत् शुक्लाम्बरधरां हंसवाहनसंस्थिताम् ॥
ततो मृत्युविनाशार्थं सालङ्कारां पयस्विनीम् ।
विप्राय वेदविदुषे गाञ्च दद्यात् सवत्सकाम् ॥
अपमृत्युविनाशाय संसारार्णवतारिकाम् ।
विप्र तुभ्यमिमां रौद्रीं धेनुं सम्प्रददे ह्यहम् ॥
इति वाक्यविचारेण धेनुं दद्याद्द्विजातये ।
कुलीनाय सुशान्ताय रोगहीनद्विजाय वै ॥
तदभावे चोदकुम्भं सवस्त्रं सहिरण्यकम् ।
औडुम्बरविधानेन सम्प्रदद्याद्द्विजातये ॥
तस्याप्यलाभे विप्रेन्द्र ! विप्राय सदुपानहौ ।
दद्यात् कार्त्तिकशुक्लायां द्वितीयायां विशेषतः ॥
ज्ञातिश्रेष्ठान् तथा वृद्धान् संपूज्य चाभिवादयेत् ।
नारिकेलादिदानेन तोषयेत् स्वजनानपि ॥
ततः सोदरसम्पन्ना भगिनी याभवन्मुने ! ।
तस्या गृहं समागत्य श्रद्दधानोऽभिराजयेत् ॥
भद्रे भगिनि ! शुभगे त्वदङ्घ्रिसरसीरुहे ।
श्रेयसेऽद्य नमस्कर्त्तुमागतोऽहं तवालयम् ॥
इति श्रुत्वा भगिन्यादिः सोदरं विनयान्वितम् ।
मृदुवाक्यैस्ततस्तस्य पूजनं क्रियते महत् ॥
अद्य भ्रातृमती भ्रातस्त्वं नो वयसि बान्धवः ।
भोक्तव्यं भोऽद्य मद्गेहे त्वायुषे कुलदीपक ! ॥
कार्त्तिके शुक्लपक्षस्य द्वितीयायां सहोदरः ।
यमो यमुनया पूर्ब्बं भोजितः स्वगृहेऽर्च्चितः ।
अस्मिन् दिने यमेनापि पूजिता भगिनी शुभा ॥
स्वसुर्नरो वेश्मनि यो न भुङ्क्ते
यमद्वितीयादिनमेव लब्ध्वा ।
तं पापिनं सर्व्वसुराः प्रबुध्य

इति पद्मपुराणे क्रियायोगसारे ६ अध्यायः ॥

**यमदूतकः**, पुं, (यमस्य दूत इवेति कन् ।) काकः ।

इति शब्दरत्नावली ॥ (यमदूत + स्वार्थे कन् ।)

यमदूतश्च ॥

**यमदूतिका**, स्त्री, (यमस्य दूतिकेव ।) तिन्तिडी-

वृक्षः । (यथा, --

"जीवनं जीवनं हन्ति प्राणान् हन्ति समीरणः ।

किमाश्चर्य्यं क्षारभूमौ प्राणदा यमदूतिका ॥"

इत्युद्भटः ॥)

**यमदेवता**, स्त्री, (यमो देवता अधिष्ठात्री यस्याः ।)

भरणीनक्षत्रम् । इति हेमचन्द्रः । २ । २२ ॥

**यमद्रुमः**, पुं, (यम इव भयावहो द्रुमः ।) शाल्मलि-

वृक्षः । इति राजनिर्घण्टः ॥ (विवरणमस्य शाल्मलिशब्दे ज्ञातव्यम् ॥)

**यमद्वितीया**, स्त्री, (यमप्रिया द्वितीया इति मध्य-

पदलोपिकर्म्मधारयः ।)

कार्त्तिकशुक्लद्वितीया ।

भ्रातृद्वितीया इति ख्याता । तत्कृत्यं यथा ।

लिङ्गपुराणे ।

"कार्त्तिके तु द्वितीयायां शुक्लायां भ्रातृपूजनम् ।

या न कुर्य्याद्विनश्यन्ति भातरः सप्तजन्मनि ॥"

तस्या इति शेषः । महाभारते ।

"कार्त्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर ! ।

यमो यमुनया पूर्ब्बं भोजितः स्वगृहे स्वयम् ।

तस्मान्निजगृहे पार्थ ! न भोक्तव्यमतो बुधैः ॥

या तु कोजागरे याते चैत्र्यावल्याः परेऽपि च ॥

चातुर्मास्ये मसाप्ते च द्वितीया या भवेत्तिथिः ।

परास्वेतास्वनध्यायः पुराणैः परिकीर्त्तितः ॥"

ज्यातिषे । तथा यमद्वितीयायां यात्रायां मरणं भवेत् । इति तिथ्यादितत्त्वम् ॥ * ॥ अस्यां व्रत-

विधानं यथा, --

नारद उवाच ।

"भगवन् ! प्रष्टुमिच्छामि त्वामहं विनया-

न्वितः ।

तद्व्रतं ब्रूहि मे स्वामिन् ! मृत्युं येन न पश्यति ॥

अल्पदोषं महत्पुण्यं शोभनं व्रतमुत्तमम् ।

प्रसादं कुरु मे स्वामिन् ! यथाहं तत् करोमि भोः ॥

संसारमार्गे रटयन्ति विप्र ! ॥

तस्माद्भ्रात्रा स्वसृगृहे भोक्तव्यं मासि कार्त्तिके ।

शुक्लायाञ्च द्वितीयायां सर्व्वैश्वर्य्याय भो द्विज ! ॥

वर्षे वर्षे च कर्त्तव्यं यशसे आयुषे श्रिये ।

ततः सम्प्राप्य सुमते भगिन्यै सुविधानतः ॥

स्वर्णालङ्कारवस्त्रादिदानसत्कारमादरात्।

प्रदद्यान्मुनिशार्द्दूल प्रश्रयावनतः सुधीः ॥

स आशीषं प्रगृह्यास्या नमस्कृत्य क्षमापयेत् ।

सर्व्वा भगिन्यः सन्तोष्या ज्येष्ठानुक्रमशस्तदा ॥

वस्त्रान्नपानसत्कारैर्भोजनैः पुष्टिवर्द्धनैः ।

करोत्येवं नरो विद्वान्न याति यमयातनाम् ॥

| यत्नेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम् ।<br>दानानि च प्रदेयानि भगिनीभ्यो विशेषतः ॥”<br>तथा ।<br>“यमञ्च चित्रगुप्तञ्च यमदूतांश्च पूजयेत् । | | |
|---|---|---|

अपमृत्युं न चाप्नोति सत्यं सत्यं हि नान्यथा ॥
यैर्भगिन्यः सुवासिन्यो वस्त्रालङ्कारतोषिताः ।
न तेषां वत्सरं यावत् कलहो न रिपोर्भयम् ॥
व्रतस्यास्य प्रसादेन भूताः प्रेताश्च राक्षसाः ।
दूरादेव पलायन्ते धर्म्मराजेन ताडिताः ॥
यो देवो महिषारूढो दण्डमुद्गरधारकः ।
वेष्टितः किङ्करैर्दष्टैस्तस्मै कालात्मने नमः ॥
इत्थं त्वं दिजशार्द्दूल ! कुरुष्व तद्व्रतं शुभम् ।
रम्यं यमद्वितीयाख्यमपमृत्युनिवारणम् ॥
व्रतस्यास्य प्रभावेन पुत्त्रपौत्त्रसमन्वितः ।
सत्यं वदामि ते विप्र ! गृहस्थः स्यात् सदैव हि ॥
गार्हस्थ्येन समो धर्म्मो न भूतो न भविष्यति ।
सन्देहोऽत्र न कर्त्तव्य इह लोके परत्र च ॥
ये वै यमद्वितीयाख्यं व्रतं कुर्व्वन्ति मानवाः ।
सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ॥
अपुत्त्रो लभते पुत्त्रं धनहीनो लभेद्धनम् ।
भार्य्याहीनो लभेद्भार्य्यां सुरूपां कुलसम्भवाम् ॥
यस्यां तिथौ यमुनया यमराजदेवः
संभोजितः सकललोकनिपातदक्षः ।
तस्यां भुनक्ति सुतिथौ च गृहे भगिन्याः
प्राप्नोति वित्तमतुलं स चिरायुरेव ॥”
इति पाद्मे उत्तरखण्डे १२५ अध्यायः ॥

**यमधारः**, पुं, (यमा युग्मीभूता धारास्य । यद्वा, यमवत् विनाशिका धारा यत्र ।) पार्श्वद्वय-धारायुक्तास्त्रविशेषः । किरीच काटार इत्यादि भाषा ॥

**यमनं**, क्ली, (यम् + भावे ल्युट् ।) बन्धनम् । उपरतिः । इति मेदिनी । ने, १११ ॥ (संयमः । यथा, हरिवंशे भविष्यपर्व्वणि । १६ । ४८ ।
“अणुर्वामननामासि यतस्त्वं वामनाख्यया ।
मननान्मुनिरेवासि यमनाद् यतिरुच्यसे ॥”)

**यमनः**, पुं, (यमयति नियमयतीति । यम् + ल्युः ।) यमः । इति मेदिनी । ने, १११ ॥ (यमयति वशमानयतीन्द्रियग्राममिति। संयमकर्त्तरि, त्रि ।

**यमराजः**, पुं, (यमश्चासौ राजा चेति । “राजाहः सखिभ्यष्टच् ।” ५ । ४ । ९१ । इति टच् ।) यमः । इति हेमचन्द्रः । २ । ९९ ॥ अस्य पुर्य्यादि यथा,
“पुरी संयमनी तस्य चित्रगुप्तस्तु लेखकः ।
भृत्यौ चण्डमहाचण्डौ धूमोर्णाविजये प्रिये ।
विचार भूमिका नीचिः सहायाः कालपूरुषाः ॥”
इति जटाधरः ॥ * ॥
स च विमात्रा छायया शप्तः । (यथा, मार्क-ण्डेये । ७७ । २५ -- २९ ।
“छायासंज्ञा त्वपत्येषु यथा स्वेष्वतिवत्सला ।
तथा न संज्ञाकन्यायां पुत्त्रयोश्चान्ववर्त्तत ॥
नलिनाद्युपभोगेषु विशेषमनुवासरम् ।
मनुस्तत्क्षान्तवानस्या यमस्तस्या न चक्षमे ॥
ताडनाय च वै कोपात् पादस्तेन समुद्यतः ।
तस्याः पुनः क्षान्तिमता न तु देहे निपातितः ॥
ततः शशाप तं कोपात् छायासंज्ञा यमं द्विज ।
किञ्चित् प्रस्फुरमाणोष्ठी विचलत्पाणिपल्लवा ॥
पितुः पत्नीममर्य्यादं यन्मां तर्ज्जयसे पदा ।
भुवि तस्मादयं पादस्तवाद्यैव पतिष्यति ॥”)
तच्छापान्तं यथा, --
“स्वरूपधारिणीं चेमामानिनाय निजाश्रमम् ।
संज्ञां भार्य्यां प्रीतिमतीं भास्करो वारितस्करः ॥
ततः पूर्ब्बसुतो योऽस्याः सोऽभूद्वैवस्वतो मनुः ।

अतोऽर्हतः स्थावरतां स्यातां नैवं यथा पुनः ।
स्मृतिः स्यान्मत्प्रसादेन तत्रापि मदनुग्रहात् ॥
वासुदेवस्य सान्निध्यं लब्ध्वा दिव्यशरच्छते ।
वृत्ते स्वलोकतां भूयो लब्धभक्ती भविष्यतः ॥
श्रीशुक उवाच ।
स एवमुक्त्वा देवर्षिर्गतो नारायणाश्रमम् ।
नलकूवरमणिग्रीवावासतुर्य्यमलार्ज्जुनौ ॥
ऋषेर्भागवतमुख्यस्य सत्यं कर्त्तुं वचो हरिः ।
जगाम शनकैस्तत्र यत्र स्तो यमलार्ज्जुनौ ॥
देवर्षिर्मे प्रियतमौ यदिमौ धनदात्मजौ ।
तत्तथा साधयिष्यामि यद्गीतं तन्महात्मना ॥
इत्यन्तरेणार्ज्जुनयोः कृष्णस्तु यमयोर्ययौ ।
आत्मनिर्व्वेशमात्रेण तीर्य्यग्गतमुदूखलम् ॥
बालेन निष्कर्षतान्वगुदूखलं तत्
दामोदरेण तर्षोत्कलिताङ्घ्रिबन्धौ ।
निष्पेततुः परमविक्रमितातिवेप-
स्कन्धप्रबालविटपौ कृतचण्डशब्दौ ॥
तत्र श्रिया परमया ककुभः स्फुरन्तौ
सिद्धावुपेत्य कुजयोरिव जातवेदाः ।
कृष्णं प्रणम्य शिरसाखिललोकनाथं
बद्धाञ्जली विरजसाविदमूचतुःस्म ॥
वाणी गुणानुकथने श्रवणौ कथायां
हस्तौ च कर्म्मसु मनस्तव पादयोर्नः ।
स्मृत्यां शिरस्तव निवासजगत्प्रणामे
दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम् ॥
श्रीभगवानुवाच ।
तद्गच्छतं मत्परमौ नलकूवरसादनम् ।
संजातो मयि भावौ वामीप्सितः परमोऽभवः ॥
श्रीशुक उवाच ।
इत्युक्तौ तं परिक्रम्य प्रणम्य च पुनः पुनः ।
बद्धालूखलमामन्त्र्य जग्मतुर्दिशमुत्तराम् ॥”
इति श्रीभागवते १० स्कन्धे १० अध्यायः ॥

**यमली**, स्त्री, (यमल + स्त्रियां ङीष् ।) चोटिका-द्वयम् । इति मेदिनी । ने, १२६ ॥ चोटी शाटीपर्य्यायि हेमचन्द्रेण गणिता सैव चोटिका ॥

**यमवाहनः**, पुं, (यमस्य वाहनः ।) महिषः । इति हेमचन्द्रः । ४ । ३४७ ॥ (तथास्य पर्य्यायः ।
“महिषो घोटकारिः स्यात् कासरश्च रजस्वलः ।
पीनस्कन्धः कृष्णकायो लुलापो यमवाहनः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥)

यथा, वाजसनेयसंहितायाम् । ९ । २२ ।
"यन्तासि यमनो ध्रुवोऽसि धरुणः ।"
"यमनः स्वयं संयमनकर्त्ता भवसि ।" इति
तद्-
भाष्ये महीधरः ॥ नियमकारिणि च त्रि ।
यथा,
तत्रैव । १४ । २२ ।
"यन्त्री राड्यन्त्र्यसि यमनी ध्रुवासि धरित्री ।"
"यमनी सर्व्वेषां नियमकारिण्यसि ।" इति
तद्भाष्ये महीधरः ॥)

**यमनिका**, स्त्री, (यच्छति आवृणोतीति । यम् +

ल्युः । कन् । टाप् ।) यवनिका । इत्यमर-
टीकायां रामाश्रमः ॥ कानात् इति भाषा ॥

**यमपत्नी**, स्त्री, (यमस्य पत्नी ।) यमस्य भार्य्या ।

यमस्य द्वे भार्य्ये । धूमोर्णा १ विजया २ ।
इति
जटाधरः ॥

**यमप्रियः**, पुं, (प्रीणातीति । प्री + कः । यमस्य

प्रियः ।) वटवृक्षः । इति शब्दरत्नावली ॥

**यमभगिनी**, स्त्री, (यमस्य भगिनी स्वसा ।) यमुना ।

इति हेमचन्द्रः । ४ । १४९ ॥

द्वितीयस्तु यमः शापाद्धर्म्मदृष्टिरभूत्
सुतः ॥
क्रिमयो मांसमादाय पादतस्ते महीतलम्
।
पतिष्यन्तीति शापान्तं तस्य चक्रे पिता
स्वयम् ॥
धर्म्मदृष्टिर्यतश्चासौ समो मित्रे तथाहिते ।
ततो नियोगं तं याम्ये चकार तिमिरापहः
॥
यमुना च नदी जज्ञे कलिन्दान्तरवाहिणी
॥"
इति मार्कण्डेयपुराणे वैवस्वतमन्वन्तरे ।
७८ ।
२५ -- २९ ॥

**यमराट्**, [ज्] पुं, (प्राणिसंयमनात् यमप्रभृतयः

किङ्करास्तेषु राजते यमेन संयमेन राजते
इति
वा । राज् + क्विप् । इत्यमरटीकायां
रघु-
नाथः ।) यमः । इत्यमरः । १ । १ । १६
॥

**यमलं**, क्ली, (यमं लातीति । ला + कः ।) युग्मम् ।

इति हेमचन्द्रः । ६ । ६० ॥ (त्रि, यमजः
।
यथा, देवीभागवते । ३ । २८ । ५ ।
"सुमित्रातनयौ जातौ यमलौ द्वौ मनोहरौ
।
ते जाता वै किशोराश्च धनुर्व्वाणधराः
किल ॥")

**यमलपत्रकः**, पुं, (यमलं यमजं पत्रमस्य । बहुव्रीहौ

कः ।) अश्मन्तकवृक्षः । कोविदारवृक्षः ।
इति
राजनिघण्टः ॥

**यमलार्ज्जुनहा**, [न्] पुं, (यमलार्ज्जुनौ हतवान्

इति । हन् + क्विप् ।) श्रीकृष्णः । इति
हेम-
चन्द्रः ॥

**यमलार्ज्जुनौ**, पुं, (यमलौ च तावर्ज्जुनौ चेति

कर्म्मधारयः ।) गोकुलस्थार्ज्जुनवृक्षद्वयम्
। तौ

**यमव्रतं**, क्ली, (यमस्य धर्म्मराजस्येव व्रतम् ।)

राजधर्म्मविशेषः । स तु पक्षपातं विना
पानिनां शासनरूपः । इति पुराणम् ॥

**यमस्वसा**, [ऋ] स्त्री, (यमस्य स्वसा भगिनी ।)

यमुना । दुर्गा । इति मेदिनी । से, ६० ॥
(यदुक्तं हरिवंशे आर्य्यास्तवप्रकरणे । ५८ । ४ ।
"जया च विजया च त्वं तुष्टिः पुष्टिः क्षमा दया ।
ज्येष्ठा यमस्य भगिनी नीलकौशेयवासिनी ॥")

**यमानिका**, स्त्री, (यमानी + स्वार्थे कन् ।)

यमानी । तत्पर्य्यायः । अजमोदा २ उग्रगन्धा ३
ब्रह्मदर्भा ४ । इत्यमरः । २ । ४ । १४५ ॥
"चत्वारि यमान्याम् । यमानी द्विविधा एका

| | | |
|---|---|---|
| | कुवेरपुत्त्रौ नलकूवरमनिग्रीवौ । नारदशापात् वृक्षतां गतौ श्रीकृष्णेन उद्धारितौ । यथा, -- “यदिमौ लोकपालस्य पुत्त्रौ भूत्वा तमःप्लुतौ । न विवाससमात्मानं विजानीतः सुदुर्म्मदौ ॥ | |

क्षेत्रयमानी सा अजमोदा इत्येव ख्याता ।
अपरा यमानी इत्येव ख्याता अविशेषात्
द्वरोरपीति सुभूतिः । केचित्तु
अजमोदादिद्वयं
वनयमान्यां ब्रह्मदर्भादिद्वयं यमान्यामित्याहुः
।
उग्रगन्धाजमोदाख्यास्मृता क्षेत्रयमानिका
इति । 'यमानी दीपको दोप्यो भूतिकश्च
यमानिका ।' इति च रत्नः । यच्छति विर-
मति निवर्त्तते अग्निमान्द्यमनया यमानी ।
यमौ
उ विरतौ नाम्नीति अनट् ईप् यमानी स्वार्थे
के यमानिका यमानी पञ्चमवर्गपञ्चममध्या ।
यवानीति अन्तःस्थचतुर्थमध्या इति केचित्
।"
इति भरतः ॥ * ॥ अस्या गुणाः । कुष्ठशूल-
नाशित्वम् । हृद्यत्वम् । पित्ताग्निकारित्वम् ।
वायुकफकृमिनाशित्वञ्च । इति राजवल्लभः
॥

**यमानी**, स्त्री, (यच्छति विरमति निवर्त्तते अग्नि-

मान्द्यमनयेति । यम + करणे ल्युट् । ङीष् ।
पृषोदरादित्वात् साधुः ।) यमानिका । इति
शब्दरत्नावली ॥ (यथास्याः पर्य्यायः ।
"यमानी दीपको दीप्यो भूतिकश्च
यमानिका ॥"
इति वैद्यकरत्नमालायाम् ॥)

**यमान्तकः**, पुं, (यमस्यान्तकः । मृत्युञ्जयत्वादेवास्य

तथात्वम् ।) शिवः । इति शब्दरत्नावली ॥
(यमश्च अन्तकश्च तौ इति विग्रहे ।
वैवस्वत-
कालौ । यथा, महाभारते । २ । १७ । १५
।
"तेजसा सूर्य्यसङ्काशः क्षमया पृथिवीसमः ।
यमान्तकसमः क्रोधे श्रिया वैश्रवणोपमः ॥"
"यमो वैवस्वतः अन्तकः कालः ।" इति
तट्टी-
कायां नीलकण्ठः ॥)

**यमी**, स्त्री, यमुनानदी । इति त्रिकाण्डशेषः ॥

(यथा, श्रीमद्भागवते । ८ । १३ । ९ ।

अस्या जलगुणाः । पित्तदाहवमनश्रमापहत्वम्
।
स्वादुत्वम् । वातजननत्वम् । पावनत्वम् ।
वह्नि-
दीपनकरत्वम् । रोचनत्वम् । बलप्रदत्वञ्च ।
इति राजनिर्घण्टः ॥ * ॥ सा यमस्य भगिनी ।
यथा, --
"सावर्णिर्मेरुपृष्ठे तु तपो घोरं चकार ह ।
अद्यादि भविता लोके मनुः सावर्णिकेऽन्तरे ॥
भ्राता शनैश्चरश्चास्य ग्रहत्वं स तु लब्धवान् ।
तयोर्यवीयसी या तु यमस्वसा यशस्विनी ।
अभवत् सा सरिच्छ्रेष्ठा यमुना लोकपावनी ॥"
इति बह्विपुराणे सागरोपाख्यानम् ॥ * ॥
सा च वृन्दावने सुषुम्नाख्या परा शक्तिः ।
यथा,
श्रीभगवानुवाच ।
"इदं वृन्दावनं रम्यं मम धामैव केवलम् ।
तत्र ये पशवः साक्षाद्वृक्षाः कीटा नराधमाः ।
ये वसन्ति ममाधिष्ठं मृता यान्ति ममान्तिकम्
॥
तत्र या गोपपत्न्यश्च निवसन्ति ममालये ।
योगिन्यस्तात ! एवं हि मम देवाः परायणाः ॥
पञ्चयोजनमेवं हि वनं मे देहरूपकम् ।
कालिन्दीयं सुषुम्नाख्या परमामृतवाहिनी ॥"
इति पाद्मे पातालखण्डे ७ अध्यायः ॥ * ॥
अस्या जलस्य कृष्णवर्णत्वकारणं यथा, --
पुलस्त्य उवाच ।
"यदा दक्षसुता ब्रह्मन् ! सती याता यमक्षयम् ।
विनाश्य दक्षयज्ञं तं विचचार त्रिलोचनः ॥
ततो वृषध्वजं दृष्ट्वा कन्दर्पः कुसुमायुधः ।
अपत्नीकं तदास्त्रेण औन्मादेनाभ्यताडयत् ॥
ततो हरः शरेणाथ औन्मादेनाभिताडितः ।
विचचार तदोन्मत्तः काननानि सरांसि च ॥
स्मरन् सतीं महादेवस्तथोन्मादेन ताडितः ।
न शर्म्म लेभे देवर्षे वाणबिद्ध इव द्विपः ॥
ततः पपात देवेशः कालिन्दीसरिते मुने ।
निमग्ने शङ्करे चापे दग्धा कृष्णत्वमागता ॥
तदाप्रभृति कालिन्द्या दृगञ्जननिभं जलम् ॥"
इति वामने ६ अध्यायः ॥ * ॥
ज्यैष्ठशुक्लद्वादश्यादिष्वस्यां
स्नानपिण्डदानफलं

"स हलेनानताग्रेण कुले गृह्य महानदीम् ।
चकर्ष यमुनां रामो व्युत्थितां वनितामिव ॥
सा विह्वलजलस्रोता ह्रदप्रस्थितसञ्चया ।
व्यावर्त्तत नदी भीता हलमार्गानुसारिणी ॥
लाङ्गलादिष्टमार्गा सा वेगगा वक्रगामिनी ।
सङ्कर्षणभयत्रस्ता योषेवाकुलतां गता ॥")

**यमुनाभ्राता**, [ऋ] पुं, (यमुनाया भ्राता ।)

यमः । इत्यमरः । १ । १ । ६१ ॥

**यमेरुका**, स्त्री, (यमं ईरयति प्रेरयतीति । ईरि +

बाहुलकात् उकः । टाप् ।) दण्डढक्वा ।
इति
त्रिकाण्डशेषः ॥

**ययातिः**, पुं, नहुषराजपुत्रः । तत्पर्य्यायः । नाहुषिः

२ । इति त्रिकाण्डशेषः ॥ नाहुषः ३ । इति
जटाधरः ॥ तस्योपाख्यानं यथा, --
"नहुषस्य प्रवक्ष्यामि पुत्रान् सप्तैव
धार्म्मिकान् ।
यतिर्य्ययातिः संयातिरुद्भवः पञ्चमस्तथा ॥
स्वर्यातिर्मेघयातिश्च सप्तैते वंशवर्द्धनाः ।
ययातिरकरोद्राज्यं धर्म्मैकशरणस्तदा ॥
शर्म्मिष्ठा तस्य भार्य्याभूत् दुहिता वृषपर्व्वणः
।
भार्गवस्याङ्गजा तद्वद्देवयानी च सुव्रता ॥
ययातिर्देवयान्यान्तु पुत्रावजनयन्नृपः ।
यदुञ्च तुर्व्वसुञ्चैव शक्रविष्णू इवापरौ ॥
तस्मादेव तु राजर्षेः शर्म्मिष्ठा वार्षपर्व्वणी ।
द्रुह्यञ्चानुञ्च पूरुञ्च त्रीन् कुमारानजीजनत् ॥
ततः काले च कस्मिंश्चिद्देवयानी
शुचिस्मिता ।
ययातिसहिता राजन् जगाम हरितं वनम् ॥
ददर्श च तदा तत्र कुमारान् देवरूपिणः ।
क्रीडमानान् सुविश्रब्धान् विस्मिता
चेदमब्रवीत् ॥
किन्नामधेयं गोत्रं वः पुत्रकाः ! ब्राह्मणः पिता
।
विब्रूत मे यथातथ्यं श्रोतुमिच्छामि तं ह्यहम्
॥
तेऽदर्शयन् प्रदेशिन्या तमेव नृपसत्तमम् ॥

"तृतीयां वडकामेके तासां संज्ञासुतास्त्रयः ।
यमो यमी श्राद्धदेवश्छायायाश्च सुतान् शृणु
॥")

**यमुना**, स्त्री, (यमयतीति । यमि + "अजियमि
शीङ्भ्यश्च ।" उणा ० ३ । ६१ । इति उनन् ।
टाप् ।) दुर्गा । यथा, --
"सर्व्वाणि हृदयस्थानि मङ्गलानि शुभानि च
।
ददाति चेप्सितान् लोके तेन सा सर्व्वमङ्गला
॥
सङ्गमाद्‌गमनाद्‌गङ्गा लोके देवी विभाव्यते ।
यमस्य भगिनी जाता यमुना तेन सा मता
॥"
इति देवीपुराणे ४५ अध्यायः ॥ * ॥
यच्छति विरमति गङ्गायामिति । नदी-
विशेषः । सा तु हिमालयदक्षिणदेशान्नि-
र्गत्य प्रयागे गङ्गायां मिश्रिता । तत्पर्य्यायः ।
कालिन्दी २ सूर्य्यतनया ३ शमनस्वसा ४ ।
इत्यमरः । २ । १० । ३२ ॥ तपनतनूजा ५ कलिन्द-
कन्या ६ यमस्वसा ७ श्यामा ८ तापी ९ कलिन्द-
नन्दिनी १० यमनी ११ यमी १२ । इति
शब्दरत्नावली ॥ कलिन्दशैलजा १३ सूर्य्य-
सुता १४ । इति जटाधरः ॥ (यथा, --
"गङ्गा सरस्वती शोणयमुना सरयूः सची ।
वेणा इरावती नीला उत्तरात् पूर्ब्बवाहिनी
॥"
इति हारीते प्रथमे स्थाने अष्टमेऽध्याये ॥)

यथा, --
"यज्यैष्ठशुक्लद्वादश्यां स्नात्वा वै यमुनाजले ।
मथुरायां हरिं दृष्ट्वा प्राप्नोति परमां गतिम् ॥
यमुनासलिले स्नातः पुरुषो मुनिसत्तम ! ।
ज्येष्ठामूलामले पक्षे द्वादश्यामुपवासकृत् ॥
समभ्यर्च्च्याच्युतं सम्यक् मथुरायां समाहितः
।
अश्वमेधस्य यज्ञस्य प्राप्नोत्यविकलं फलम् ॥
ज्येष्ठामूले सिते पक्षे समभ्यर्च्च्य जनार्द्दनम् ।
धन्यो नः पिण्डनिर्व्वापं यमुनायां प्रदास्यति
॥"
इति विष्णुपुराणे ६ अंशे ८ अध्यायः ॥

**यमुनाजनकः**, पुं, (यमुनाया जनकः ।) सूर्य्यः ।
इति हेमचन्द्रः । २ । ९ ॥

**यमुनाभित्**, [द्] पुं, (यमुनां भिनत्तीति । भिद् +
क्विप् ।) बलदेवः । इति हेमचन्द्रः । २ । १३८ ॥
(एतद्वृत्तान्तमुक्तं यथा, हरिवंशे । १०२ ।
३४ -- ३६ ।

बुद्‌ध्वा च तत्त्वतो देवी शर्म्मिष्ठामिदमब्रवीत्
॥
ममाधीना सती कस्मादकार्षीर्व्विप्रियं मम ॥
शर्म्मिष्ठोवाच ।
यदा तया वृतो राजा वृत एव तदा मया ।
त्वत्तो हि मे पूज्यतमो राजर्षिः किं न वेत्सि
तत् ॥
शौनक उवाच ।
श्रुत्वा तस्यास्ततो वाक्यं देवयान्यब्रवीदिदम्
।
राजन्नाद्येह वत्स्यामि विप्रियं मे त्वया कृतम्
॥
अविब्रुवन्ती किञ्चिच्च राजानं साश्रुलोचना ।
अचिरादेव संप्राप्ता काव्यस्योशनसोऽन्तिके
॥
देवयान्युवाच ।
शर्म्मिष्ठयातिवृत्तास्मि दुहित्रा वृषपर्व्वणः ।
त्रयोऽस्यां जनिताः पुत्रा राज्ञानेन ययातिना
।
दुर्भगाया मम द्वौ तु पुत्रौ तात ! ब्रवीमि वः ॥
शुक्र उवाच ।
धर्म्मज्ञः सन् महाराज ! योऽधर्म्ममकृथाः
प्रियम् ।
तस्माज्जरा त्वामचिराद्धर्षयिष्यति दुर्ज्जया
॥
ययातिरुवाच ।
ऋतुकामां स्त्रियं यस्तु गम्यां रहसि याचितः
।
नोपैति सह धर्म्मेण भ्रूणहेत्युच्यते बुधैः ॥

अधर्म्मभयसंविग्नः शर्म्मिष्ठामुपजग्मिवान् ॥
अतृप्तो यौवनस्याहं देवयान्या भृगूद्वह ! ।
प्रसादं कुरु मे ब्रह्मन् जरेयं मा विशेत माम्
॥
शुक्र उवाच ।
नाहं मृषा ब्रवीम्येतत् जरां प्राप्तोऽसि
भूमिप ! ।
जरां त्वेतां त्वमन्यस्मै संक्रामय यदीच्छसि
॥
वयो दास्यति पुत्त्रो यः स ते
राजाभविष्यति ॥”
इति मात्स्ये ३२ अध्यायः ॥ * ॥
शौनक उवाच ।
“जरां प्राप्य ययातिस्तु स्वपुरं प्राप्य चैव
हि ।
पुत्त्रं ज्येष्ठं वरिष्ठञ्च यदुमित्यब्रवीद्वचः ॥
त्वं यदो ! प्रतिपद्यस्व पाप्मानं जरया सह
।
यौवनेन त्वदीयेन चरेयं विषयानहम् ॥
पूर्णे वर्षसहस्रे तु पुनस्ते यौवनं त्वहम् ।
दत्त्वा सम्प्रतिपत्स्यामि पाप्मानं जरया सह
॥
यदुरुवाच ।
सन्ति ते बहवः पुत्रा मत्तः प्रियतरा नृप ! ।
जरां ग्रहीतुं धर्म्मज्ञ ! पुत्रमन्यं वृणीष्व वै ॥
ययातिरुवाच ।
यो मे त्वं हृदयाज्जातो वयः स्वं न
प्रयच्छसि ।
पापान्मातुलसम्बन्धात्दुष्प्रजा ते
भविष्यति ॥
तुर्व्वसो प्रतिपद्यस्व पाप्मानं जरया सह ।
यौवनेन चरेयं वै विषयांस्तव पुत्रक ! ॥
तुर्व्वसुरुवाच ।
न कामये जरां तात ! कामभोगप्रणाशिनीम्
।
बलरूपान्तकरणीं बुद्धिमानविनाशिनीम् ॥
ययातिरुवाच ।
यस्त्वं मे हृदयाज्जातो वयः स्वं न
प्रयच्छसि ।
तस्मात् प्रजा समुच्छेदं तुर्व्वसो ! तव
यास्यति ॥

शौनक उवाच ।
एवमुक्तः प्रत्युवाच पूरुः पितरमञ्जसा ।
यथात्थ त्वं महाराज ! तत् करिष्यामि ते
वचः ॥
ययातिरुवाच ।
पूरो ! प्रीतोऽस्मि ते वत्स प्रीतश्चेदं ददामि ते
।
सर्व्वकामसमृद्धा ते प्रजा राज्ये भविष्यति ॥”
इति मात्स्ये ३३ अध्यायः ॥ * ॥
शौनक उवाच ।
“पौरवेणाथ वयसा ययातिर्नहुषात्मजः ।
प्रीतियुक्तो नरश्रेष्ठश्चचार विषयान् सुखी ॥
पूर्णं मत्वा ततः कालं पूरुं पुत्रमुवाच ह ।
पूरो ! प्रीतोऽस्मि भद्रं ते गृहाणेदं स्वयौ-
वनम् ॥
राज्यञ्चापि गृहाणेदं यत् त्वयोपकृतं पुरा ॥
शौनक उवाच ।
एवं स नाहुषो राजा ययातिः पुत्त्रमीप्सितम् ।
राज्येऽभिषिच्य मुदितो वानप्रस्थोऽभवन्मुनिः
॥
उषित्वा वनवासं स ब्राह्मणैः सह संश्रितः ।
फलमूलाशनो दान्तो यथा स्वर्गमितो गतः
॥”
इति मात्स्ये ३५ अध्यायः ॥ * ॥

**ययीः**, पुं (यायते प्राप्यते भक्तैरिति । या + “यापोः कित् द्वे च” । उणा० ३ । १५९ । इति ईः द्वित्वञ्च ।) महादेवः । इत्युणादिकोषः । १ । ३५४ ॥
(यातिद्रुतं गच्छतीति । अश्वः ।
इत्युज्ज्वलदत्तः ॥)

**ययुः**, पुं, (यातीति । या + “यो द्वे च ।” उणा० १ । २२ । इति उः द्वित्वञ्च । यजन्त्यनेनेति
।
यज + उः । पृषोदरादित्वात् जस्य
यत्वमित्यमर-
टीकायां रघुनाथः ।) अश्वमेधीयाश्वः ।
सामान्यघोटकः । इति मेदिनी । ये, ४७ ॥

**यवः**, पुं, (यूयते अम्भसा इति । यु मिश्रणे + अप् ।)

एभिर्गुणैर्हीनतरांस्तु किञ्चिद्-
विद्याद् यवेभ्योऽतियवान् विशेषैः ॥”
इति सुश्रुते सूत्रस्थाने ४६ अध्यायः ॥
“रूक्षः शीतो गुरुः स्वादुर्वहुवातशकृद्यवः ।
स्थैर्य्यकृत् सकषायस्तु बल्यः श्लेष्मविकारनुत्
॥
रूक्षः कषायानुरसो मधुरः कफपित्तहा ।
मेदःक्रिमिविषघ्नश्च वल्यो वेणुयवः स्मृतः ॥”
इति चरके सूत्रस्थाने २७ अध्याये ॥
“क्वचिद्वाक्यशेषादपि शक्तिग्रहः यथा
यवपदस्य
कङ्गुप्रभृतौ म्लेच्छानां दीर्घशूके च शिष्टानां
व्यवहारादेकमात्रशक्तेः परिच्छेत्तुमशक्यत्वात्
नानार्थत्वस्य चान्याय्यत्वात्
यवमयश्चरुर्भवतीति
श्रुतौ यवपदस्यार्थ सन्देहे ।
‘वसन्ते सर्व्वशस्यानां जायते पत्रशातनम् ।
मोदमानास्तु तिष्ठन्ति यवाः कणिशशालिनः ॥’
इति विध्यर्थाकाङ्क्षया
प्रवर्त्तमानाद्वाक्यशेषाद्दीर्घ-
शूक एव यवपदस्य शक्तिग्रहः ।” इति
शब्दशक्ति-
प्रकाशिकायां नैमित्तिकर्संज्ञायाम् ॥ * ॥
हविष्ये
यवानामेव मुख्यत्वम् । यथा, --
“हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः ।
माषकोद्रवगौरादिसर्व्वालाभेऽपि वर्ज्जयत् ॥”
इति कत्यायनसंहिता । ९ । १० ॥
नवयवागमे तैरवश्यं श्राद्धं कार्य्यं अकरणे
प्रत्यवायश्रवणात् । यथा, --
“नक्षत्रग्रहपीडासु दुष्टस्वप्नावलोकने ।
इच्छाश्राद्धानि कुर्व्वीत नवशस्यागमे तथा ॥
इति विष्णुपुराणात् वक्षमाणबहुतरवचनेषु
नवान्नश्रुतेः नवान्नागमत्वेनैव निमित्तं लाघवात्
।
अमावस्यास्तिस्रोऽष्टकामाघी प्रौष्ठपद्यूद्र्ध्वं
कृष्ण-
त्रयोदशी व्रीहियवपाकौ च ।
एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः ।
श्राद्धमेतेष्वकुर्व्वाणो नरकं प्रतिपद्यते ॥”
इति श्राद्धतत्वे नवान्नश्राद्धे ॥)

द्रुह्यो ! त्वं प्रतिपद्यस्व वर्णरूपविनाशिनीम्
।
जरां वर्षसहस्राणि यौवनं स्वं प्रयच्छ च ॥
द्रुह्युरुवाच ।
न गजं न रथं चाश्वं जीर्णो भुङ्क्ते
वरस्त्रियम् ।
नारोगश्चास्य भवति तां जरां ते न कामये
॥
ययातिरुवाच ।
यस्त्व मे हृदयाज्जातो वयः स्वं न
प्रयच्छसि ।
तस्मात् द्रुह्यो ! प्रियः कामो न ते
सम्पत्स्यते
क्वचित् ॥
अनो ! त्वं प्रतिपद्यस्व पाप्मानं जरया सह
।
एकं वर्षसहस्रन्तु चरेयं यौवनेन ते ॥
अनुरुवाच ।
जीर्नः शिशुरिवादत्ते कालेऽन्नमशुचिर्यथा ।
न जुहोति च कालेऽग्निं तां जरां नैव कामये
॥
ययातिरुवाच ।
यस्त्वं मे हृदयाज्जातो वयः स्वं न
प्रयच्छसि ।
जरादोषस्त्वयोक्तो यस्तस्मात्तं
प्रतिपत्स्यसे ॥
पूरो ! मे त्वं प्रियः पुत्त्र ! त्वं वरीयान्
भविष्यसि ।
काव्यस्योशनसः शापान्न च तृप्तोऽस्मि
यौवने ॥
पूरो ! त्वं प्रतिपद्यस्व पाप्मानं जरया सह ।
किञ्चित्कालं चरेयं वै विषयान् वयसा तव
॥
पूर्णे वर्षसहस्रे तु प्रतिदास्यामि यौवनम् ।
स्वञ्चैव प्रतिपत्स्यामि पाप्मानं जरया सह
॥

स्वनामख्यातशूकधान्यम् । तत्पर्य्यायः ।
सित-
शूकः २ । इत्यमरः । २ । ९ । १५ ॥
शितशूकः ३ ।
इति शब्दरत्नावली ॥ मेध्यः ४ दिव्यः ५
अक्षतः ६
कञ्चुकी ७ धान्यराजः ८ तीक्ष्णशूकः ९
तुरग-
प्रियः १० शक्तुः ११ महेष्टः १२
पवित्रधान्यम्
१३ । तस्य गुणाः । कषायत्वम् । मधुरत्वम् ।
सुशीतलत्वम् । प्रमेहपित्तकफापहारकत्वञ्च ।
अशूकमुण्डयवगुणाः । बलप्रदत्वम् ।
वृष्यत्वम् ।
नृणां बहुवीर्य्यपुष्टिदत्वञ्च । इति राजनिर्घण्टः
॥
अपि च ।
"यवः कषायमधुरो बहुवातशकृद्गुरुः ।
रूक्षः स्थैर्य्यकरः शीतो मूत्रमेदकफापहः ॥"
इति राजवल्लभः ॥ * ॥
(अपि च ।
"यवः कषायो मधुरो हिमश्च
कटुर्विपाके कफपित्तहारी ।
व्रणेषु पथ्यस्तिलवच्च नित्यं
प्रबद्धमूत्रो बहुवातबर्च्चाः ॥
स्थैर्य्याग्निमेधा स्वरवर्णकृच्च
स पिच्छिलः स्थूलविलेखनश्च ।
मेदो मरुत्तृढरणोऽतिरूक्षः
प्रसादनः शोणितपित्तयोश्च ॥

परिमाणविशेषः । स तु चतुर्धान्यमानरूपः ।
इति
शुभङ्करः ॥ षट्सर्षपपरिमाणात्मकश्च । यथा, -
-
"जालान्तरगते भानौ यच्चानु दृश्यते रजः ।
तैश्चतुर्भिर्भवेल्लिख्या लिख्याषड्भिश्च सर्षपः ।
षट्सर्षपैर्यवस्त्वेको गुञ्जैका तु यवैस्त्रिभिः ॥"
इति शब्दचन्द्रिका ॥ * ॥
अङ्गुलिस्थयवाकारेखाविशेषः । यथा, --
"तर्ज्जनीमूलसंपृक्तौ यवौ पुत्रार्थदौ क्रमात् ।
मध्यमायां यवश्चैवाङ्गुष्ठेऽपूर्व्वधनप्रदः ॥"
अपि च सामुद्रके ।
"मध्यमायां यदि यवो दृश्यते च सुशोभनः ।
तदान्यसञ्चितं द्रव्यं प्राप्नोत्यङ्गुष्ठके यवे ॥
यस्यापि चक्रमङ्गुष्ठे यवपूर्णञ्च दृश्यते ।
तदा पितामहादीनामर्ज्जितं लभते धनम् ॥"
(पूर्ब्बपक्षः । यथा, वाजसनेयसंहितायाम् । १४
।
३१ । "एकत्रिंशतास्तु वत प्रजा असृज्यन्त
यवा-
श्चायवाश्चाधिपतय आसन् ।" "यवाः पूर्ब्ब-
पक्षाः अयवाः अपरपक्षाः ।" इति तट्टी-
कायां महीधरः ॥)

**यवकः**, पुं, (यवप्रकारः । यव + “स्थूलादिभ्यः
प्रकारवचने कन् ।” ५ । ४ । ३ । इति कन् ।) यवः ।
इत्यमरटीकायां रामाश्रमः ॥ (यथा, --
“यवका हायनाः पांशुवाप्यनैषधकादयः ।
शालीनं शालयः कुर्व्वन्त्यनुकारं गुणा गुणैः ॥”
इति चरके सूत्रस्थाने २७ अध्याये ॥)

**यवक्यं**, त्रि, (यवकानां भवनं क्षेत्रमिति । यवक +
“यवयवकषष्टिकाद् यत् ।” ५ । २ । ३ । इति
यत् ।) यवभवनोचितक्षेत्रम् । इत्यमरः । २ ।
९ । ७ ॥

**यवक्षारः**, पुं, (यवजातः क्षारः । शाकपार्थिव-
वत् समासः ।) क्षारविशेषः । यथा, --
“नरसारयवक्षारस्फटिकारितएव काचवक-
यन्त्रैः ।
बहुशः पात्यं सत्त्वं तद्धि महाद्रावकन्नाम ॥”
इति रत्नावली ॥
तत्पर्य्यायः । यवाग्रजः २ पाक्यम् ३ । इत्यमरः ।
२ । ९ । १०८ ॥ यवलासः ४ यवशूकः ५ सारकः ६
रेचकः ७ यवनालकः ८ । इति शब्दरत्नावली ॥
यावशूकः ९ क्षारः १० तर्क्ष्यः ११ तीक्ष्णरसः
१२ यवनालजः १३ इति रत्नमाला ॥ यवजः १४
यवशूकजः १५ यवाह्वः १६ यवापत्यम् १७ ।
अस्य गुणाः । कटुत्वम् । उष्णत्वम् । कफवातो-
दरार्त्तिनाशित्वम् । आमशूलाश्मरुक्कृत्स्नविष-
दोषहरत्वम् । सरत्वञ्च । इति राजनिर्घण्टः ॥
अर्शःश्वासगुल्मग्रहणीपाण्डुप्लीहानाहगलामय-
नाशित्वञ्च । इति राजवल्लभः ॥ (तथा च ।
“पाक्यः क्षारो यवक्षारो यवशूको यवाग्रजः ।
यवक्षारो लघुः स्निग्धः सुसूक्ष्मो वह्निदीपनः ॥
निहन्ति शूलवातामश्लेष्मस्वासगलामयान् ।
पाण्ड्वर्शोग्रहणीगुल्मानाहप्लीहहृद्दामयान्॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**यवक्षोदः**, पुं, (यवानां क्षोदः ।) यवचूर्णम् ।
तत्पर्य्यायः । चिक्वसः २ । इति हेमचन्द्रः ॥

**यवगण्डः**, पुं, (यूनो गण्डः स्फोटकः । पृषोदरादि-
त्वात् यवादेशः ।) युवगण्डः । इति शब्दरत्ना-
यशस्विनी ११ माहेश्वरी १२ तिक्तफला १३
यावी १४ तिक्ता १५ । अस्या गुणाः । सतिक्ता-
म्लत्वम् । दीपनत्वम् । रुचिकारित्वम् । कृमि-
कुष्ठविवर्णास्रदोषनाशित्वम् । रेचनत्वञ्च । इति
राजनिर्घण्टः ॥

**यवतैलं**, क्ली, (यवनिर्म्मितं तैलम् ।) यवचूर्णादि-
युक्तपक्वतैलविशेषः । तत्प्रकारं गुणञ्चाह ।
“यवचूर्णार्द्धकुडवं मञ्जिष्ठार्द्धपलेन तु ।
तैलप्रस्थः शतगुणे काञ्जिके साधितो जयेत् ।
ज्वरं दाहं महावेगमङ्गानाञ्च प्रहर्षणम् ॥”
इति सुखबोधः ॥

**यवद्वीपः**, पुं, (यवनामा द्वीपः इति मध्यपद-
लोपिकर्म्मधारयः ।) उपद्वीपविशेषः । यावा
इति भाषा । यथा, --
“यत्नवन्तो यवद्वीपं सप्तराज्योपशोभितम् ।
सुवर्णरूप्यकं द्वीपं सुवर्णकरमण्डितम् ॥”
इति वाल्मीकीये रामायणे किष्किन्ध्याकाण्डे
४० सर्गः ॥ * ॥ “अतः परं यत्नवन्तो भूत्वा सप्त-
राज्योपशोभितं यवद्वीपं तथा सुवर्णद्वीपं
विचेतव्यमिति शेषः । सुवर्णकरमण्डितमिति
सुवर्णं कुर्व्वन्ति ये तैः शोभितम् ।” इति
रामायणतिलकनामतट्टीका॥

**यवनः**, पुं, देशविशेषः । (यथा, मात्स्ये । १२० । ४३ ।
“तान् देशान् प्लावयन्ति स्मम्लेच्छप्रायांश्च सर्व्वशः ।
सशैलान् कुकुरान् रौध्रान् वर्वरान् यवनान्
खसान् ॥”)
शकानां शकदेशोद्भवानां क्षत्त्रियाणां एवं जव-
नादीनामिति । अत्र जवनशब्दस्तद्देशोद्भव-
वाची चवर्गतृतीयादिः । जवनो देशवेगिनो-
रिति त्रिकाण्डशेषाभिधानदर्शनात् । तेषां
म्लेच्छत्वमप्युक्तं विष्णुपुराणे । तथा कृतान्
जवनादीनुपक्रम्य । ते चात्मधर्म्मपरित्यागात्
म्लेच्छत्वं ययुरिति । बौधायनः ।
“गोमांसखादको यश्च विरुद्धं वहु भाषते ।
धर्म्माचारविहीनश्च म्लेच्छ इत्यभिधीयते ॥”
इति प्रायश्चित्ततत्त्वम् ॥ * ॥
यवनादीनां राज्यकालो यथा, --
“सप्त गर्द्दभिनश्चापि शकाश्चाष्टादश स्मृताः ।
यवनाष्टौ भविष्यन्ति तुखारश्च भविष्यति ॥
अष्टौ ते यवना राज्यं वर्षाणां परिसङ्ख्यया ।
भोक्ष्यन्त्यशीति तद्वच्च येऽपि गर्द्दभिनः स्मृताः ॥
शतानि त्रीणि वर्षाणां द्व्यशीतीनि शतानि वै ।
शकानां राज्यकालः स्याद्भविष्यो निश्चयो गतः ॥
शतस्यार्द्धं चतुर्थानि वर्षाणां राज्यभागिनः ।
मरुत्तानां सुताः काला यस्मिन् भोक्ष्यन्ति ते महीम् ॥
मरुत्ता वृषलैः सार्द्धं तथान्ये म्लेच्छसम्भवाः ।

वली ॥ वयस्फोडा इति भाषा ॥

**यवजः**, पुं, (यवाज्जायते इति । जन् + डः ।)

यवक्षारः । इति रत्नमाला ॥ (यथास्य पर्य्यायः ।
"यावशूको यवक्षारो यवशूको यवाग्रजः ।
क्षारस्तीक्ष्णस्तीक्ष्णरसोयवजो यवनालजः ॥"
इति वैद्यकरत्नमालायाम् ॥)
यवानी । इति राजनिर्घण्टः ॥

**यवजोद्भवं**, क्ली, (यवजादुद्भवोऽस्य ।) तवक्षीरम् ।

इति राजनिर्घण्टः ॥

**यवतिक्ता**, स्त्री, लताप्रभेदः । शङ्खिनीति यवेची

इति च ख्याता । (यथा, सुश्रुते सूत्रस्थाने ४५ अः ।
"यवतिक्तातैलं सर्व्वदोषप्रशमनमीषत्तिक्तम् ।
अग्निदीपनं लेखनं मेध्यं पथ्यं रसायनञ्च ॥")
तत्पर्य्यायः । महातिक्ता २ दृढपादविसर्पिणी ३
नाकुली ४ नेत्रमीना ५ शङ्खिनी ६ पत्रतण्डुली
७ तण्डली ८ अक्षपीडा ९ सूक्ष्मपुष्पी १०

वेगः । वेगाधिकाश्वः । इति मेदिनी ॥
गोधूमः ।
गर्जरतृणम् । तुरुष्कः । इति राजनिर्घण्टः
॥
(यौति मिश्रीभवतीति । यु + "सुयुरुवृञो
युच् ।" उणा० २ । ७४ । इति युच् ।)
जाति-
विशेषः । इति शब्दरत्नावली ॥ स तु
यवन-
देशोद्भवययातिराजपुत्त्रतुर्व्वसुवंशः । यथा,
--
"यदोस्तु जाता यदवस्तुर्व्वसोर्यवनाः
सुताः ।
द्रुह्योस्तु तनया भोजा अनोस्तु
म्लेच्छजातयः ।
पूरोस्तु पौरवो वंशो यत्र जातोऽसि
पार्थिव ! ॥"
इति मात्स्ये ३४ अध्यायः ॥ * ॥
सगरराजेनैषां सर्व्वशिरोमुण्डनं
सर्व्वधर्म्मराहि-
त्यञ्च कृतं ते चात्मधर्म्मपरित्यागात्
म्लेच्छत्वं
ययुरिति विष्णुपुराणोक्तत्वात् यवनः
मोसल-
मानेङ्गरेजोभयजातिवाचकः ।
यवनशब्दश्चवर्ग-
तृतीयादिरिति रघुनन्दनभट्टाचार्य्येण
लिखि-
तम् ॥ जवनादीनान्तु
सर्व्वधर्म्मराहित्यमुक्तं
हरिवंशे । यथा, --
"सगरस्तां प्रतिज्ञाञ्च गुरोर्वाक्यं निशम्य च
।
धर्म्मं जघान तेषां वै वेशान्यत्वं चकार ह ॥
अर्द्धं शकानां शिरसो मुण्डयित्वा
व्यसर्जयत् ।
जवनानां शिरः सर्व्वं काम्बोजानान्तथैव च
॥
पारदा मुक्तकेशाश्च पह्लवाः श्मश्रुधारिणः ।
निःस्वाध्यायवषट्काराःकृतास्तेन
महात्मना ॥
शका जवनकाम्बोजाः पारदाः पह्लवास्तथा
।

भोक्ष्यन्ति राज्यं प्राच्येषु भविष्ये
तद्विधारितम् ॥
शतानि त्रीणि वर्षाणां पौण्ड्रा
राज्यभुजः
स्मृताः ।
अश्नन्ति पार्व्वतेयास्तु द्वे शते
परिसङ्ख्यया ॥
शतार्द्धमन्यच्च तथा राज्यं भोक्ष्यन्ति
ते नृपाः ।
सप्तषष्टिस्तु वर्षाणि दशातीवाह्यतः
स्मृताः ॥
तेषु च्छन्नेषु कालेषु ततः किलकिला
नराः ।
भविष्यन्तीह यवना धर्म्मतः
कामतोऽर्थतः ॥
तैविमिश्रा जनपदा आर्य्या म्लेच्छाश्च
सर्व्वशः ।
विपर्य्ययेण वर्त्तन्ते जनयिष्यन्ति वै
प्रजाः ॥
लब्ध्वानिष्टवरञ्चैव भवितारस्तदा
नृपाः ।
तेषां व्यतीते पर्य्यये बहुवर्षयुगांस्तदा
॥
राजानः संप्रणश्यन्ति कालेन महता
ततः ।
कल्किना ताडिताः सर्व्वे आर्य्या
म्लेच्छाश्च
सर्व्वशः ॥
अधार्म्मिकाश्च ये सर्व्वे पाषण्डाश्चैव
सर्व्वशः ।
व्युष्टे नृपतिशब्दे वै सन्ध्याशिष्टे च वै
कलौ ॥"
इति ब्रह्माण्डपुराणे ३९ अध्यायः ॥
मुनिविशेषः । यथा, --
"जातं दिनं दूषयते वशिष्ठ-
श्चाष्टौ च गर्गो यवनो दशाहम् ।
जन्माख्यमासं किल भागुरिश्च
व्रते विवाहे क्षुरकर्णवेधे ॥"
इति तिथ्यादितत्त्वम् ॥ * ॥
कालयवनोत्पत्तिर्यथा, --
श्रीपराशर उवाच ।
"गार्ग्यं गोष्ठे द्विजं श्यालः
षण्ढेत्युक्तवान् द्विज ।

| | | |
|---|---|---|
| | कोलिसर्पाः समहिषा दार्व्वाश्चोलाः सकेरलाः ॥<br>वशिष्ठवचनाद्राजन्! सगरेण महात्मना । | यदूनां सन्निधौ सर्व्वे जहसुर्यादवास्ततः ॥<br>ततः कोपसमाविष्टो दक्षिणापथमेत्य सः ।<br>सुतमिच्छं स्तपस्तेपे यदुचक्रभयावहम् ॥ |

आराधयन्महादेवं सोऽयश्चूर्णमभक्षयत्
।
ददौ वरञ्च तुष्टोऽस्मै वर्षे द्वादशमे हरः
॥
सभाजयामास च तं यवनेशो
ह्यनात्मजः ।
तद्योषित्सङ्गमाच्चास्य
पुत्त्रोऽभूदलिसन्निभः ॥
तं कालयवनं नाम राज्ये स्वे
यवनेश्वरः ।
अभिषिच्य वनं यातो
वज्राग्रकठिनोरसम् ॥
स च वीर्य्यमदोन्मत्तः पृथिव्यां बलिनो
नृपान् ।
पप्रच्छ नारदश्चास्मै कथयामास
यादवान् ॥
म्लेच्छकोटिसहस्राणां सहस्रैः
सोऽभिसंवृतः ।
गजाश्वरथसम्पन्नैश्चकारपरमोद्यमम्
॥
प्रययौ चाव्यवच्छिन्नं छिन्नयानो दिने
दिने ।
यादवान् प्रति सामर्षो मैत्रेय मथुरां
पुरीम् ॥
कृष्णोऽपि चिन्तयामास क्षयितं यादवं
कुलम् ।
यवनेन रणे गम्यं मागधस्य भविष्यति
॥
मागधस्य बलं क्षीणं स कालयवनो
बली ।
हन्ता तदिदमायातं यदूनां व्यसनं
द्विधा ॥
तस्माद्दुर्गं करिष्यामि यदूनामतिदुर्जयम्
।
स्त्रियोऽपि यत्र युध्येयुः किं
पुनर्वृष्णिपुङ्गवाः ॥”
“इति सञ्चिन्त्य गोविन्दो योजनानि
महोदधिम् ।
ययाचे द्वादशपुरीं द्वारकां तत्र निर्म्ममे
॥

**यवनालः**, पुं, (यवानां नाला इव नाला यस्य ।)

धान्यविशेषः । देधान् इति भाषा । तत्पर्य्यायः ।
योनालः २ जूर्णह्वयः ३ देवधान्यम् ४
जोन्ताला ५ बीजपुष्पिका ६ । इति हेम-
चन्द्रः । ४ । २४४ ॥ (यथा, सुश्रुते उत्तरतन्त्रे
१५ अध्याये ।
“यवनालस्य चूर्णेन त्रिकटोर्लवणस्य च ।
स्वेदयित्वा ततः पश्चाद्बध्नीयात् कुशलो भिषक्
॥”)

**यवनालजः**, पुं, (यवानां नालेभ्यो जायते इति ।

जन् + डः ।) यवक्षारः । इति हेमचन्द्रः । ४ ।
१० ॥ (यथा, वैद्यकरत्नमालायाम् ।
“क्षारस्तीक्ष्णस्तीक्ष्णरसोयवजो यवनालजः
॥”)

**यवनिका**, स्त्री, (युनात्यावृणोत्यनया । यु + ल्युट् ।

ङीष् । स्वार्थे कन् । टाप् ।) जवनिका । इत्य-
मरटीका ॥ कानात् इति भाषा । (यथा,
भागवते । १ । ८ । १९ ।
“मायायवनिकाच्छन्नमज्ञाधोक्षजमव्ययम् ।
न लक्ष्यसे मूढदृशा नटो नाट्यधरो यथा ॥”)

**यवनी**, स्त्री, (यूयते पच्यते भुक्तमनया । यु +

ल्युट् । ङीप् ।) यवानीनामकौषधिभेदः ।
इति मेदिनी । ने, ११२ ॥ (यवनस्य स्त्रीति ।
यवन + ङीष् ।) यवनभार्य्या ॥ (यथा, रघुः ।
४ । ६१ ।
“यवनीमुखपद्मानां सेहे मधुमदं न सः ।
वालातपमिवाब्जानामकालजलदोदयः॥”)

**यवनेष्टं**, क्ली, (यवनानां इष्टम् ।) सीसकम् ।

इति हेमचन्द्रः । ४ । १०७ ॥ मरीचम् ।
गृञ्जनम् । इति राजनिर्घण्टः ॥

**यवनेष्टः**, पुं, (यवनानामिष्टः ।) लशुनः । राज-

पलाण्डुः । निम्बः । पलाण्डुः । इति
राजनिर्घण्टः ॥
(तथास्य पर्य्यायः ।
“पलाण्डुर्य्यवनेष्टश्च दुर्गन्धो मुखदूषकः ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**यवप्रख्या**, स्त्री, (यव इति प्रख्या यस्याः ।)

“शिशुचान्द्रायणं प्रोक्तं यतिचान्द्रायणन्तथा ।
यवमध्यं तथा प्रोक्तं तथा पिपीलिकाकृति ॥”
इति प्रायश्चित्ततत्त्वम् ॥
(पुं, यज्ञभेदः । यथा, शतपथब्राह्मणे । १३ ।
६ ।
१ । ९ ।
“यवमध्यः पञ्चरात्रो भवति ॥”
यवाकारमध्ये, त्रि । यथा, सुश्रुते चिकित्सा-
स्थाने १ अध्याये ।
“शरावनिम्नमध्याश्च यवमध्यास्तथापरे ।
एवंप्रकाराकृतयो भवन्त्यागन्तवो व्रणाः ॥”)

**यवमयः**, त्रि, (यवस्य विकारोऽवयवो वा । यव +

“असंज्ञायां तिलयवाभ्याम् ।” ४ । ३ ।
१४९ । इति
मयट् ।) यवनिर्म्मितः । यवशब्दात् मयट्-
प्रत्ययेन निष्पन्नः ॥ (यथा, शतपथब्राह्मणे ।
२ ।
२ । ३ । १३ ।
“अर्कपलाशाभ्यां यवमयमपूपं कृत्वा यत्रा-
हवनीयमाधास्य न भवति तन्निदधाति ॥”)

**यवलासः**, पुं, (यवात् लासो यस्य ।) यवक्षारः ।

इति शब्दरत्नावली ॥ (विशेषोऽस्य यवक्षार-
शब्दे ज्ञातव्यः ॥)

**यवशूकः**, पुं, (यवानां शूकः कारणत्वेनास्त्यस्य ।

अर्शआद्यच् ।) यवक्षारः । इति त्रिकाण्ड-
शेषः ॥ (यथास्य पर्य्यायः ।
“यावशूको यवक्षारो यवशूको यवाग्रजः ।
क्षारस्तीक्ष्णस्तीक्ष्णरसोयवजो यवनालजः
॥”
इति वैद्यकरत्नमालायाम् ॥)

**यवशूकजः**, पुं, (यवशूकात् जायते इति । जन् +

डः ।) यवक्षारः । इति राजनिर्घण्टः ॥
(विवरणमस्य यवक्षारशब्दे ज्ञातव्यम् ॥)

**यवसं**, क्ली, (यौतीति । यु + “वहियुभ्यां णित् ।”

उणा० ३ । ११९ । इत्यसच् ।
संज्ञापूर्व्वकत्वान्न

मथुरावासिनो लोकांस्तत्रानीय जनार्द्दनः ।
आसन्ने कालयवने मथुराञ्च स्वयं ययौ ॥
वहिरावासिते सैन्ये मथुराया निरायुधः ।
निर्जगाम स गोविन्दो ददृशे यवनश्च तम् ॥
स ज्ञात्वा वासुदेवं तं बाहुप्रहरणो नृपः ।
अनुयातो महायोगिचेतोभिः प्राप्यते न यः ॥
तेनानुयातः कृष्णोऽपि प्रविवेश महागुहाम् ।
तत्र शेते महावीर्य्यो मुचुकुन्दो नरेश्वरः ॥
सोऽपि प्रविष्टो यवनो दृष्ट्वा शय्यागतं नरम् ।
पादेन ताडयामास कृष्णं मत्वा सुदुर्म्मतिः ॥
दृष्टमात्रश्च तेनासौ जज्वाल यवनोऽग्निबा ।
तत्क्रोधजेन मैत्रेय ! भस्मीभूतश्च तत्क्षणात् ॥"
इति विष्णुपुराणे ५ अंशे २३ अध्यायः ॥

**यवनः**, त्रि, (यौतीति । यु + "नन्दिग्रहीति ।" ३ । १ । १३४ । इति ल्युः ।) वेगी । इति मेदिनी । ने, १११ ॥ (यथा, नैषधचरिते । १ । ६५ ।
"तमश्ववारा यवनाश्वयायिनं
प्रकाशरूपा मनुजेशमन्वयुः ॥")

**यवनद्विष्टः**, पुं, (यवनैर्द्विष्टः । हिन्दुप्रियत्वात् तथात्वम् ।) गुग्गुलुः । इति राजनिर्घण्टः ॥

**यवनप्रियं**, क्ली, (यवनानां प्रियम् ।) मरिचम् । इति हेमचन्द्रः । ३ । ४८ ॥ (विवरणमस्य मरिचशब्दे ज्ञातव्यम् ॥)

क्षुद्ररोगविशेषः । तल्लक्षणं यथा, भावप्रकाशे ।
"यवाकारा सुकठिना ग्रथिता मांसमिश्रिता ।
पीडका श्लेष्मवाताभ्यां यवप्रख्येति सोच्यते ॥"
यवाकारा मध्ये स्थूला प्रान्ते कृशा ॥ तच्चिकित्सा यथा, --
"अन्त्रालजीं यवप्रख्यां पूर्ब्बं स्वेदैरुपाचरेत् ।
मनःशिलादेवदारुकुष्ठकल्कैः प्रलेपयेत् ।
पक्वां व्रणविधानेन यथोक्तेन प्रसाधयेत् ॥"

**यवफलः**, पुं, (यववत् फलमस्य ।) वंशः । इत्यमरः । २ । ४ । १६१ ॥ जटामांसी । कुटजः । इति मेदिनी । ले, १६२ ॥ (अस्य पर्य्यायो यथा,
"कुटजः कूटजः कौटो वत्सको गिरिमल्लिका ।
कालिङ्गः शक्रशाखी च मल्लिकापुष्प इत्यपि ।
इन्द्रो यवफलः प्रोक्तो वृक्षकः पाण्डुरद्रुमः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमभागे ॥) प्लक्षवृक्षः । इति शब्दरत्नावली ॥

**यवमध्यं**, क्ली, (यववत् मध्यं यस्य ।) चान्द्रायणप्रभेदः । यथा, --

वृद्धिः ।) तृणम् । घासः । इत्यमरः । २ । ४ । १६७ ॥
(यथा, मनौ । ७ । ७५ ।
"तत्स्यादायुधसम्पन्नं धनधान्येन वाहनैः ।
ब्राह्मणैः शिल्पिभिर्यन्त्रैर्यवसेनोदकेन च ॥")

**यवसुरं**, क्ली, (यवनिर्म्मिता सुरा । "सुरासेनाच्छायाशालानिशा स्त्रियाञ्च ।" लिङ्गानुशासने नपुंसकाधिकारे १२ । इति क्लीवत्वम् ।) यवजातसुरा । इति सिद्धान्तकौमुदी ॥

**यवागूः**, स्त्री, (यूयते मिश्र्यते इति । यु + "सृयुवचिभ्योऽन्युजागूजक्नुचः ।" उणा० ३ । ८१ । इति आगूच् ।) षड्गुणजलपक्वघनद्रवद्रव्यविशेषः । याउ इति भाषा ॥ तत्पर्य्यायः । उष्णिका २ श्राणा ३ विलेपी ४ तरला ५ । इत्यमरः । २ । ९ । ५० ॥ "यूयते मिश्र्यते यावागूः यु ल मिश्रणे नाम्नीति आगूः गुणः । ओषति हिनस्ति ज्वरादिरोगं उष्णिका उषू ष वाधे दहि पूर्व्वेण निक् । श्रायते पच्यते स्म श्राणा श्रा ल पाके क्तः सुल्वाद्योदिति नः । विलिम्पति विलेपी ञि लिपौ शप ञ लेपे पचादित्वादन् । नदादित्वादीप् । तरति प्लवति तरला त तरेऽभिभवे प्लुत्यां नाम्नीति अलः ।

**यवनाचार्य्यः**, पुं, (यवनो नामाचार्य्यः ।) ज्योतिः-

शास्त्रकर्त्तृमुनिविशेषः । इति

वराहमिहिरौ ॥

**यवनानी**, स्त्री, (यवनानां लिपिः । “यवनाल्लि-

प्याम् ।” ४ । १ । ४९ । इति

वार्त्तिकोक्त्या

ङीष् आनुगागमश्च ।) यवनस्य लिपिः

। इति

मुग्धबोधटीकायां दुर्गादासः ॥

**यवनारिः**, पुं, (यवनानामरिः । यवनः कालयवनो-

ऽरिर्यस्येति वा ।) श्रीकृष्णः । इति

त्रिकाण्ड-

शेषः ॥

'अन्नं पञ्चगुणे साध्यं विलेपी च चतुर्गुणे ।
मण्डश्चतुर्द्दशगुणे यवागूः षड्गुणेऽम्भसि ॥'
इति वैद्यकोक्तो भेद इह नादृतः ॥" इति तट्टी-
कायां भरतः ॥ अस्या गुणाः ।
"यवागूर्ज्वरतृष्णाघ्नी लघ्वी वस्तिविशोधनी ।
अतीसारे ज्वरे दाहे हिता वह्निप्रदीपनी ॥"
इति राजवल्लभः ॥
(अथास्या गुणा लक्षणञ्च ।
"सन्दीपनी स्वेदकरी यवागूः
सम्पाचनी दोषमलामयानाम् ।
सन्तर्पणी धातु बलेन्द्रियाणां
शस्ता भवेत् सा ज्वररोगिणाञ्च ॥"
भागैकञ्च भवेत्तत्र द्विभागेन जलं क्षिपेत् ।
चित्रकं पिप्पलीमूलं पिप्पलीचव्यनागरम् ॥
धान्यकस्य समांशानि पिष्ट्वा श्वेतांश्च तण्डुलान्
।
संशुद्धा शिथिला किञ्चित् सा यवागूर्निगद्यते ॥
यवागूमुपभुञ्जानो जनो नारुचिमाचरेत् ।
शाकमाषफलैर्युक्ता यवागूः स्याच्च दुर्ज्जरा ॥"
इति हारीते प्रथमस्थाने १२ अध्याये ॥
"यावागूः षड्गुणजले सिद्धा स्यात् कृशरा घना ।
यवागूर्ग्राहिणी वल्या तर्पणी वातनाशिनी ॥"
इति मध्यखण्डे द्वितीयेऽध्याये शार्ङ्गधरेणोक्तम्
॥)

**यवाग्रजः**, पुं, (यवाग्रात् जावते इति । जन् + डः ।)
यवक्षारः । इत्यमरः । २ । ९ । १०८ ॥
(यथा, भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ।
"पाक्यः क्षारो यवक्षारो यावशूको यवा-
ग्रजः ॥")
यवानी । इति राजनिर्घण्टः ॥

**यवानः**, त्रि, (यवेन वेगेन अनिति जीवतीति ।
अन् + अच् ।) वेगी । इति मेदिनी । ने, १११ ॥

**यवानिका**, स्त्री, (दुष्टो यवः । "यवाद्दोषे ।"
४ । १ । ४९ । इत्यस्य वर्त्तिकोक्त्या
ङीष् आनुगागमश्च । पक्षे स्वार्थे कन् ।)
ओषधिभेदः । योयानि इति भाषा । तत्पर्य्यायः ।
दीप्यकः २ दीप्यः ३ यवसाह्वः ४ यवाग्रजः ५
दीपनी ६ उग्रगन्धा ७ वातारिः ८ भूकद-
नेत्रामयकृमिच्छर्द्दिहिक्कावस्तिरुजोहरेत् ॥
अथ खुरासानीयवानीनामगुणाः ।
पारसीकयवानी तु यवानीसदृशी गुणः ।
विशेषात् पाचनी रुच्या ग्राहिणी मादिनी
गुरुः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥

**यवापत्यं**, क्ली, (यवस्यापत्यम् । तज्जातत्वात्तथा-
त्वम् ।) यव्क्षारः । रति राजनिर्घण्टः ॥

**यवाम्लजं**, क्ली, (यवाम्लाभ्यां जायते इति । जन् +
डः ।) सौवीरम् । इति राजनिर्घण्टः ॥

**यवासः**, पुं, (यौतीति । यु + "ऋतन्यञ्जीति ।"
उणा० ४ । २ । इत्यादिना आसः ।) दुरालभा
।
यथा, --
"यासो यवासो दुष्पर्शो धनुर्यासो दुरालभा ॥"
इति रत्नमाला ॥
खदिरभेदः । यथा, --
"कण्टकी वासपत्रश्च यवासः खदिरस्तथा ॥"
इति शब्दमाला ॥
यवासा इति ख्याता कण्टकीक्षुपविशेषः ।
तत्-
पर्य्यायः । यासः २ बहुकण्टकः ३ अल्पकः ४
क्षुद्रेङ्गुदी ५ रोदनिका ६ कच्छुरा ७ बाल-
पत्रः ८ विषघ्नः ९ कण्टकालुकः १० त्रिक-
र्णिका ११ गान्धारी १२ अनन्ता १३ । अस्य
गुणाः । मधुरतिक्तत्वम् । शीतत्वम् । पित्तार्त्ति-
दाहनाशित्वम् । बलदीपनकारित्वम् । तृष्णा-
कफच्छर्द्दिविसर्पजित्त्वञ्च । इति राजनिर्घण्टः
॥

**यवासकः**, पुं, (यवास + स्वार्थे कन् ।) दुरालभा ।
इति शब्दरत्नावली ॥ (यथा, सुश्रुते उत्तर-
तन्त्रे ३९ अध्याये ।
"क्षयकासं ससन्तापं पार्श्वशूलानपास्यति ।
गुडचीत्रिफलावासात्रायमाणायवासैक ॥")

**यवासशर्करा**, स्त्री, (यवासेन तद्रसेन कृता शर्करा ।
शाकपार्थिववत् समासः ।) यवासरसघटित-
"वोधा मे अस्य वचसो यविष्ठ ।")
कनिष्ठभ्रातरि, पुं, । इति हेमचन्द्रः ।
३ । ११६ ॥
(त्रिष्वपि । यथा, भागवते । ३ । १ ।
५ ।
"भ्रातुर्य्यविष्ठस्य सुतान् विबन्धून्
प्रवेश्य लाक्षाभवने ददाह ॥")

**यवीयान्**, [स्] त्रि, (अयमनयोरतिशयेन युवा ।
युवन् + "द्विवचनविभज्योपपदे
तरबीयसुनौ ।"
५ । ३ । ५७ । इति ईयसुन् ।)
कनिष्ठः । (यथा,
मनौ । २ । १२८ ।
"अवाच्यो दीक्षितो नाम्ना
यवीयानपि यो
भवेत् ॥"
अतिशय युवा । इति मेदिनी । से,
६१ ॥

**यवोत्थं**, क्ली, (यवेभ्य उत्तिष्ठतीति । उद् + स्था
कः ।) सौवीरकम् । इति
राजनिर्घण्टः ॥

**यव्यं**, त्रि, (यवानां भवनं क्षेत्रम् । यव + "यव-
यवकषष्टिकाद् यत् ।" ५ । २ । ३ ।
इति यत् ।)
यवादिभवनोचितक्षेत्रम् । तत्पर्य्यायः
। यव-
क्यम् २ षष्टिक्यम् ३ । इत्यमरः । २
। ९ । ७ ॥
यवोचितम् ४ यवकोचितम् ५ । इति
शब्द-
रत्नावली ॥ (यवेभ्यो हितम् । यव +
"खल-
यवमाषतिलवृषब्रह्मणश्च ।" ५ । १ ।
७ । इति
यत् । यवहितः । इति व्याकरणम् ॥)

**यव्यः**, पुं, (यवेभ्यो हितः । यव + यत् ।) मासः ।
यथा, --

म्बकः ९ यवजः १० दीपनीयः ११ शूलहन्त्री १२
यवानिका १३ उग्रा १४ तीव्रगन्धा १५ ।
अस्या गुणाः । कटुत्वम् । तिक्तत्वम् । उष्ण-त्वम् ।
वातार्शःश्लेष्मशूलाध्मानकृमिच्छर्द्दिनाशि-त्वम् । दीपनत्वञ्च । इति राजनिर्घण्टः ॥ अपि च । अथ यवान्या नामगुणाः ।

**यावानी**, स्त्री, (दुष्टो यवः । "यवाद्दोषे ।"
४ । १ । ४९ । इत्यस्य वर्त्तिकोक्त्या ङीष् आनुगागमश्च । पक्षे स्वार्थे कन् ।) ओषधिभेदः । योयानि इति भाषा । तत्पर्य्यायः । दीप्यकः २ दीप्यः ३ यवसाह्वः ४ यवाग्रजः ५ दीपनी ६ उग्रगन्धा ७ वातारिः ८ भूकद-म्बकः ९ यवजः १० दीपनीयः ११ शूलहन्त्री १२
यवानिका १३ उग्रा १४ तीव्रगन्धा १५ ।
अस्या गुणाः । कटुत्वम् । तिक्तत्वम् । उष्ण-त्वम् ।
वातार्शःश्लेष्मशूलाध्मानकृमिच्छर्द्दिनाशि-त्वम् । दीपनत्वञ्च । इति राजनिर्घण्टः ॥ अपि च । अथ यवान्या नामगुणाः ।
"यवानिकोग्रगन्धा च ब्रह्मदर्भाजमोदिका ।
सवोक्ता दीप्यका दीप्या तथा स्याद्यवसाह्वया ॥
यवानी पाचनी रुच्या तीक्ष्णोष्णा कटुका लघुः ।
दीपनी च तथा तिक्ता पित्तला शुक्रशूलहृत् ।
वातश्लेष्मोदरानाहगुल्मप्लीहकृमिप्रणुत् ॥
अथ अजमोदाया नामानि गुणाश्च ।
अजमोदा खराश्वा च मायूरी दीप्यकस्तथा ।
तथा ब्रह्मकुशा प्रोक्ता कारवी लोचमस्तका ॥
अजमोदा कटुस्तीक्ष्णा दीपनी कफवातनुत् ।
उष्णा विदाहिनी हृद्या वृष्या बलकरी लघुः ॥
शर्करा । तत्पर्य्यायः । सुधामोदकः २ मोदकः ३
तवराजः ४ खण्डसरः ५ खण्डजः ६ खण्ड-मोदकः ७ । अस्या गुणाः । अतिमधुरत्वम् । पित्तश्रमतृषापहत्वम् । वृष्यत्वम् । विदाह-मूर्च्छार्त्तिभ्रान्तिशान्तिकरत्वम् । सरत्वञ्च । इति
राजनिर्घण्टः ॥ (यथा, सुश्रुते सूत्रस्थाने ४६ अध्याये ।
"यवासशर्करा मधुरकषाया तिक्तानुरसा श्लेष्म-
हरी सरा चेति ॥")

**यवासा**, स्त्री, (यवास + टाप् ।) गुण्डासिनीतृणम् ।
इति राजनिर्घण्टः ॥

**यवाह्वः**, पुं, (यवमाह्वयति स्वकारणत्वादिति । आ
+ ह्वे + कः ।) यवक्षारः । इति राजनिर्घण्टः ॥ (यथा, सुश्रुते चिकित्सितस्थाने २० अध्याये ।
"यवाह्वगौरिकोन्मिश्रैः पादलेपः प्रशस्यते ॥"
गुणादिविशेषोऽस्य यवक्षारशब्दे विज्ञेयः ॥)

**यविष्ठः**, त्रि, (अयमेषामतिशयेन युवा इति ।
युवन् + इष्ठन् । "स्थूलदूरेति ।"
यणादिलोपगुणौ ।)
अतिशययुवा । (यथा, ऋग्वेदे । १ । १४७ । २ ।
"यव्यद्वयं श्रावणादि सर्व्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्व्वीत वर्ज्जयित्बा समुद्रगाः ॥"
इति प्रायश्चित्ततत्त्वे गङ्गामाहात्म्यम् ॥
(स्त्री, नदीभेदः । यथा, ऋग्वेदे । ८ । ८७ । ८ ।
"वार्णत्वा यव्याभिर्व्वर्द्धन्ति शूरब्रह्माणि ।"
"यव्याभिः नदीभिः । अवनयः यव्याः इति
नदीनामसु पाठात् ।" इति तद्भाष्ये सायणः ॥)

**यशः**, [स्] क्ली, (अश्नुते व्याप्नोतीति । अश +
"अशेर्देवने युट् च ।" उणा० ४ । १९० । इत्य-
सुन् युट्च ।) सुख्यातिः । तत्पर्य्यायः । कीर्त्तिः
२ समज्ञा ३ । इत्यमरः । १ । ६ । ११ ॥ समाख्या ४
कीर्त्तना ५ अभिख्यानम् ६ आज्ञा ७ समज्या
८ । इति शब्दरत्नावली ॥
"दानादिपभवा कीर्त्तिः शौर्य्यादिप्रभवं यशः ।
इति माधवी ॥
अतएव यशःकीर्त्त्योर्भेदस्यापि दर्शनात् यशः-
कीर्त्तिपरिभ्रष्टो जीवन्नपि न जीवति । इति
कस्यचित् प्रयोगः । जीवतः ख्यातिर्यशो मृतस्य
स्वातिः कीर्त्तिरिति केचित् । तन्न साधु कीर्त्तिस्ते
नृप दूतिकेति प्रयोगदर्शनात् ।" इत्यमरटीकायां
भरतः ॥ कीर्त्तिनाशे दोषो यथा, --
"हन्ति यः परकीर्त्तिञ्च स्वकीर्त्तिं मानवाधमः ।

| | | |
|---|---|---|
| | | स कृतघ्न इति ख्यातस्तत्फलञ्च निशामय ॥<br>अन्धकूपे वसेत् सोऽपि यावदिन्द्राश्चतुर्द्दश।<br>कीटैर्नकुलमानैश्च भक्षितः सततं नृप ! ॥<br>तप्तक्षारोदकं पापी नित्यं पिबति खादति।<br>ततः सर्पो जन्म सप्त काकः पञ्च ततः शुचिः ॥”<br>इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ४९ अध्यायः ॥ |

(अन्नम् । यथा, ऋग्वेदे । ४ । ५२ ।
११ ।
“वयं स्याम यशसो जनेषु ।”
“यशसः कीर्त्तेरन्नस्य वा ।” इति
तद्भाष्ये
सायणः ॥ त्रि, यशस्वी । यथा, ऋग्वेदे
। ८ ।
७९ । ५ ।
“त्वमिन्द्र यशा अस्यृजीषी शवसस्पते
।”
“त्वं यशाः यशस्व्यसि भवसि ।” इति
तद्भाष्ये
सायणः ॥)

**यशःपटहः**, पुं, (यशःसूचकः पटहः । शाकपार्थिव-

वत् समासः ।) ढक्वा । इत्यमरः । १ ।
७ । ६ ॥

**यशःशेषः**, त्रि, (यश एव शेषोऽस्य ।) मृतः ।

इति हेमचन्द्रः । ३ । ३८ ॥ (यथा,
कथासरित्-
सागरे । ९१ । ४४ ।
“ततः क्रमेण तेनैव स्मरज्वरभरोष्मणा
।
प्रक्षीणदेहः प्रययौ स यशःशेषतां नृपः
॥”)
मरणे, पुं ॥

**यशदं**, क्ली, धातुविशेषः । दस्ता इति भाषा । यथा,

“यशदं रङ्गसदृशं रीतिहेतुश्च तन्मतम्
।
यशदं तुवरं तिक्तं शीतलं कफपित्तहृत्
।
चक्षुष्यं परमं मेहान् पाण्डुं श्वासञ्च
नाशयेत् ॥”
इति भावप्रकाशः ॥

**यशस्करः**, त्रि, कीर्त्तिकारकः । सुख्यातिजनकः ।

यशस्करोति य इत्यर्थे (“कृञो
हेतुताच्छील्यानु-

**यशस्वी**, [न्] त्रि, (यशोऽस्त्यस्येति । यशस् +

“अस्मायेति ।” ५ । २ । १२१ । इति
विनिः ।)
यशोविशिष्टः । कीर्त्तिमान् । इति व्याकरणम्
॥
(यथा, मनौ । ९ । ३३४ ।
“विप्राणां वेदविदुषां गृहस्थानां यशस्वि-
नाम् ।
शुश्रूषैव तु शूद्रस्य धर्म्मो नैःश्रेयसः परः ॥”)

**यशोदः**, पुं, (यशो ददातीति । दा + कः ।)

पारदः । इति राजनिर्घण्टः ॥ (क्लीबेऽपि-
दृश्यते । यथा, वाराहे ।
“सुवर्णं रजतं ताम्रं रङ्गं यशोदमेव च ।
सीसं लौहञ्च सप्तैते धातवो गिरिसम्भवाः
॥”)
यशोदातरि, त्रि ॥

**यशोदा**, स्त्री, (यशो ददातीति । दा + कः । टाप् ।)

नन्दपत्नी । यथा, श्रीभागवते १० स्कन्धे ।
“नन्दः किमकरोद्ब्रह्मन् श्रेय एवं महोदयम् ।
यशोदा वा महाभागा पपौ यस्यास्तनं
हरिः ॥”
(दिलीपमाता । यथा, हरिवंशे । १८ । ६० ।
“तेषान्तु मानसी कन्या यशोदा नाम विश्रुता
।
पत्नी सा विश्वमहतः स्नुषा वै वृद्धशर्म्मणः ।
राजर्षेर्जननी चापि दिलीपस्य महात्मनः ॥”
यशोदातरि, त्रि । यथा, तैत्तिरीयसंहिता-
याम् । ४ । ४ । ६ । २ ।
“यशोदां त्वा यशसि तेजोदां त्वा तेजसीति
॥”)

**यष्टा**, [ऋ] पुं, (यजते इति । यज् + तृच् ।) याग-

कर्त्ता । तत्पर्य्यायः । यजमानः २ ।
इत्यमरः । २ ।
७ । ८ ॥ (यथा, मार्कण्डेये । १२० । २ ।
“स दानशीलो यष्टा च यज्ञानामवनीपतिः
॥”)

**यष्टिः**, पुं, (इज्यते इति । यज् + बाहुलकात्

यष्टिमधु स्थलेजाता जलजातिरसा पुरा ॥”
इति वैद्यकरत्नमालायाम् ॥)

**यष्टिकः**, पुं, (यष्टिरिव । कन् ।) जलकुक्कुटः ।

इति शब्दरत्नावली ॥ (यष्टि + स्वार्थे कन् ।)
दण्डश्च ॥

**यष्टिका**, स्त्री, (यष्टि + स्वार्थे कन् । टाप् ।) हार-

भेदः । यथा, --
“यष्टिका दण्डिका चैव तिलका सारिकेत्यपि ॥”
इति जटाधरः ॥
वापी । यथा, --
“पल्वलं दीर्घिका वापी यष्टिका मीनगोधिका ॥”
इति त्रिकाण्डशेषः ॥
यष्टिमधुका । यथा, --
“अथ यष्टीमधुकं स्यान्मधुयष्टी तु यष्टिका ।”
इति शब्दरत्नावली ॥
लगुडः । यथा, --
“अथ शक्तिश्च शक्ती च यष्टिर्य्यष्टी च यष्टिका ।
दण्डः काण्डोऽपि लगुडः पशुघ्नो दण्डको-
ऽपि च ॥”
इति शब्दरत्नावली ॥

**यष्टिग्रहः**, पुं, (यष्टिं गृह्णातीति । यष्टि + ग्रह +

“शक्तिलाङ्गलाङ्कुशयष्टितोमरेति ।” ३ । २ । ९ ।
इत्यस्य वार्त्ति० अच् ।) यष्टिधारकः । लगुड-
ग्राही । इति मुग्धबोधटीकायां दुर्गादासः ॥

**यष्टिमधु**, क्ली, (यष्ट्यां मधु माधुर्य्यमस्य ।) यष्टि-

मधुका । इति हलायुधः ॥ (यथास्य पर्य्यायः ।
“यष्ट्याह्वं मधुकं यष्टिः क्लीतकं मधुयष्टिका ।
यष्टिमधु स्थलेजाता जलजातिरसा पुरा ॥”
इति वैद्यकरत्नमालायाम् ॥)

**यष्टिमधुका**, स्त्री, (यष्टिमधुवत् कायतीति । कै +

कः ।) यष्टिमधु । तत्पर्य्यायः । क्लीतेकम् २
मधु-
कम् ३ मधुयष्टिका ४ । इत्यमरः । २ । ४ ।
१०९ ॥
यष्ट्याह्वम् ५ यष्टिः ६ स्थलेजातं चेत् यष्टिमधु
७
जलजा चेत् अतिरसा ८ । इति रत्नमाला ॥

लोम्येषु ।” ३ । २ । २० ।) इति
टप्रत्ययेन निष्पन्नः ।
यशस्करी विद्या इति व्याकरणम् ॥
(यथा,
मनौ । ८ । ३८३ ।
“एतेषां निग्रहो राज्ञः पञ्चानां विषये
स्वके ।
साम्राज्यकृत् सजात्येषु लोके चैव
यशस्करः ॥”
विष्णुक्षेत्रविशेषे, क्ली । यथा, नारसिंहे
६२ अः ।
“विरजं पुष्पवत्यायां बालञ्चामीकरे
विदुः ।
यशस्करं विपाशायां माहिष्मत्यां
हुताशनम् ॥”
शोभावतीपुर्य्यां जाते ब्राह्मणविशेषे, पुं ।
यथा,
कथासरित्सागरे । १०४ । १९ ।
“तस्यां यशस्करो नाम विद्वानाढ्यो
बहुक्रतुः ।
ब्राह्मणोऽभूदभूत्तस्य सत्पत्नी मेखलेति
च ॥”)

**यशस्या**, स्त्री, (यशसे हिता । यशस् + यत् ।)

जीवन्ती । ऋद्धिनामौषधिः । इति
राज-
निर्घण्टः ॥

**यशस्वान्**, [त्] त्रि, (यशोऽस्त्यस्य । यशस् + मतुप् ।

मस्य वः ।) कीर्त्तिविशिष्टः । इति
व्याकरणम् ॥
(यथा, अथर्व्ववेदे । ६ । ५८ । २ ।
“यथेन्द्रो द्यावापृथिव्योर्यशस्वान्
यथाप ओषधीषु यशस्वतीः ॥”)

**यशस्विनी**, स्त्री, (यशस्विन् + ङीष् ।) वनका-

र्पासी । इति शब्दरत्नावली ॥
यवतिक्ता । महा-
ज्योतिष्मती । इति राजनिर्घण्टः ॥
(सत्यव्रतस्य
पत्नी । यथा, कथासरित्सागरे । ७३ ।
२५७ ।

तिः । इति उणादिवृत्तौ उज्ज्वलदत्तः । ४ ।
१७९ ।)
ध्वजदण्डः । इति विश्वशब्दरत्नावल्यौ ॥
भुज-
दण्डः । इति मेदिनी । टे, २६ ॥

**यष्टिः**, पुं, स्त्री, (यजते सङ्गच्छते । यज् + तिः ।)

तन्तुः । इति शब्दमाला ॥ हारलता । (हारा-
वलिः । यथा, रघौ । १३ । ५४ ।
“क्वचित्प्रभालेपिभिरिन्द्रनीलै-
र्मुक्तामयी यष्टिरिवानुविद्धा ।
अन्यत्र माला सितपङ्कजानां
इन्दीवरैरुत्खचितान्तरेव ॥”
“यष्टिः हारावलिः ।” इति मल्लिनाथः ॥ *
॥)
भार्गी । मधुका । शस्त्रभेदः । इति मेदिनी ।
टे, २६ ॥ शेषस्य पर्य्यायः । दण्डः २ ।
लगुडः ३
इति हेमचन्द्रः । ३ । ४४९ ॥ तद्दानफलं
यथा,
वह्निपुराणे ।
“यष्टिं ये तु प्रयच्छन्ति नेत्रहीने सुदुर्ब्बले ।
तेषान्तु विपुलः पुंसां सन्तानो मोहवर्ज्जितः
॥”
(स्त्री, शाखा । यथा, कुमारे । ६ । २ ।
“चूतयष्टिरिवाभ्यासे मधौ परभृतोन्मुखी ॥”
“चूतयष्टिः चूतशाखा इव ।” इति तत्र मल्लि-
नाथः ॥ यष्टिमधु । तत्पर्य्यायः । यथा,
“यष्ट्याह्वं मधुकं यष्टिः क्लीतकं मधुयष्टिका
।

अपि च ।
“ज्यैष्ठीमधु तथा यष्टीमधुकं क्लीतकं तथा ।
अन्यक्लीतनकं तत्तु भवेत्तोये मघूलिका ॥”
अस्या गुणाः ।
“यष्टी हिमा गुरुः स्वाद्वी चक्षुष्या बलवर्ण-
कृत् ।
सुस्निग्धा शुक्रला केश्या स्वर्य्या पित्तानिला-
स्रजित् ।
व्रणशोथविषच्छर्द्दितृष्णाग्लानिक्षयापहा॥”
इति भावप्रकाशः ॥

**यष्टी**, स्त्री, (यष्टि + “कृदिकारादक्तिनः ।” इति

ङीष् ।) यष्टिमधु । इति भावप्रकाशः ॥
(यथास्याः पर्य्यायः ।
“यष्टी यष्ट्याह्वयं प्रोक्तं मधुकं मधुयष्टिका ।”
इति गारुडे २०८ अध्यायः ॥
तथास्या गुणाः । भावप्रकाशस्य पूर्ब्बखण्डे १ ।
“यष्टी हिमा गुरुः साद्वी चक्षुष्या बलवर्ण-
कृत् ।

| “अहं यशस्वती नाम<br>राजसेवानुजीविनः ।<br>भार्य्या सत्यव्रताख्यस्य<br>विप्रस्येहामलान्वया ॥”<br>गङ्गा । यथा, काशीखण्डे<br>तत्सहस्रनामकथने ।<br>२९ । १४१ ।<br>“यशस्विनी यशोदा च योग्या<br>युक्तात्मसेविता ॥”) | | |
|---|---|---|

सुस्निग्धा शुक्रला केश्या स्वर्य्या पित्तानिला-
स्रजित् ।
व्रणशोथविषच्छर्द्दितृष्णाग्लानिक्षयापहा॥”
(हारभेदः । तल्लक्षणं यथा, बृहत्संहिता-
याम् । ८१ । ३६ ।
“संयोजिता या मणिना तु मध्ये
यष्टीति सा भूषणविद्भिरुक्ता ॥”)

**यष्टीकं**, क्ली, (यष्टी + कन् ।) यष्टिमधु । इति
राजनिर्घण्टः ॥

**यष्टीपुष्पः**, पुं, (यष्टीपुष्पमिव पुष्पं यस्य ।) पुत्र
जीववृक्षः । इति भावप्रकाशः ॥

**यष्टीमधु**, क्ली, (यष्ट्यां मधु माधुर्य्यमस्य ।) मिष्ट-
मूलविशेषः । जेठीमधु इति मूलहटी इति च
हिन्दी भाषा । तत्पर्य्यायः । मधुयष्टी २ मधु-
वल्ली ३ मधुस्रवा ४ मधूकम् ५ मधु ६ यष्टी-
कम् ७ यष्ट्याह्वम् ८ ॥ (तथा च ।
“यष्टीमधु तथा यष्टी मधुकं क्लीतकन्तथा ।
अन्यत् क्लीतनकन्तत्तु भवेत्तोये मधूलिका ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
अस्य गुणाः । मधुरत्वम् । किञ्चित्तिक्तत्वम् ।
शीतलत्वम् । चक्षुष्यत्वम् । पित्तहरत्वम् ।
रुच्य-
त्वम् । शोषतृष्णाव्रणापहत्वञ्च । इति राज-
निर्घण्टः ॥ (यथा, सुश्रुते चिकित्सास्थाने
२७ अध्याये । “तत्र विडङ्गतण्डूलचूर्णमाहृत्य
यष्टीमधुयुक्तं यथाबलं शीततोयेनोपयुञ्जीत ॥”)

**यष्ट्याह्वं**, क्ली, (यष्टीत्याह्वा यस्य ।) यष्टिमधु ।
इति राजनिर्घण्टः ॥ (यथा, सुश्रुते सूत्रस्थाने
१६ अध्याये ।
“यवाश्वगन्धा यष्ट्याह्वैस्तिलैश्चोद्वर्त्तनं
हितम् ॥”)

**यस**, इर् य उ यतने । इति कविकल्पद्रुमः ॥
(दिवा०-पर०-अक०-सेट् । क्त्वावेट् ।) इर्,
अयसत् अयासीत् अयसीत् । अस्मात् पुषा-
दित्वान्नित्यं ङ इत्यन्ये । य, प्रयस्यति । क्रम
क्लम इत्यादिना केवलात् संपूर्ब्बाच्च अस्मात्
श्यन् विकल्पात् यसति यस्यति संयस्यति

**या**, ल गतौ । इति कविकल्पद्रुमः ॥ (अदा०-
पर०-सक०-अनिट् ।) ल, याति । इति
दुर्गा-
दासः ॥

**यागः**, पुं, (इज्यते इति । यज् + घञ् ।) यज्ञः ।
इत्यमरः । २ । ७ । १३ ॥ तत्र
श्रौताग्निकृत्य-
हविर्यज्ञाः सप्त । यथा । आग्न्याधानं
तदे
वाग्निहोत्रम् १ दर्शपौर्णमासौ २
पिण्डपितृ-
यज्ञः ३ आग्रयणम् ४ चातुर्म्मास्यः ५
निरूढ-
पशुबन्धः ६ सौत्रामणिः ७ ।
स्मार्त्ताग्निकृत्य-
पाकयज्ञाः सप्त । यथा । औपासनम् १
वैश्व-
देवः २ स्थालीपाकः ३ आग्रयणम् ४
सर्प-
वलिः ५ ईशानवलिः ६ अष्टकान्यष्टका
७ ।
श्रौताग्निसप्तसंस्थाः । यथा । सोमयागः
स
एवाग्निष्टोमः १ अत्यग्निष्टोमः २ उक्थ्यः
३
षोडशी ४ वाजपेयः ५ स द्विविधः
संस्था
कुरुश्च । अतिरात्रः ६ असूर्य्यामः ७ ।
उत्तर-
क्रतवो बहवः । यथा । महाव्रतम् १
सर्व्वतो-
मुखम् २ राजसूयः ३ पौण्डरीकम् ४
अभि-
जित् ५ विश्वजित् ६ अश्वमेधः ७
बृहस्पतिसवः
८ आङ्गिरसः ९ चयनान्यष्टादश २७ ।
इत्यादि
श्रौतसूत्रम् ॥ * ॥ सर्व्वदेवानां
यागकालो यथा,
शुक्र उवाच ।

आरोग्यं सप्रतापत्वं भास्करात् प्राप्यते ध्रुवम्
॥
गतिमिष्टां यथाकामं प्रयच्छति त्रिविक्रमः ।
विघ्नो न भवते तस्य यस्तु पश्येद्विनायकम् ॥
विगतारिर्भवेत् षष्ठ्यां दृष्ट्वा स्कन्दं मखे
क्षणात् ।
मातृयागान्महासिद्धिः सर्व्वेषामपि जायते ॥
भवते धनवान् पुंसः प्रथमाहे हुताशनात् ।
स्वर्गापवर्गसंसिद्धिर्दुर्गायागात् प्रजायते ॥
माघाद्यैर्मङ्गलांशोत्था ज्यैष्ठाद्यैर्ब्रह्म जायते ।
ईशाद्यैः कालिकाद्यास्तु यष्टव्या विधिना मुने
॥”
इत्याद्ये देव्यवतारे
उदयतिथ्यृक्षयोगमाहात्म्य-
कीर्त्तनम् ॥ * ॥
अथ ग्रहयागविधिः ।
“प्रणम्य नव रव्यादीन् शुभाशुभफलप्रदान् ।
ग्रहयागविधिं सम्यक् वक्ति श्रीरघुनन्दनः ॥
अथ ग्रहयागप्रयोगः ।
तत्र रविसोमबुधगुरुशुक्रवारेषु चित्रानुराधा-
मृगशिरोरेवतीपुष्याश्विनीहस्तारोहिण्युत्तरा-
त्रयेषु चन्द्रतारानुकूले शुभलग्ने यागः कार्य्यः ।
अत्र बालग्रहभूतग्रहप्रबलतरनराधिपशत्र
दुःसहरोगाभिभवाद्भूतदुःस्वप्नावलोकनग्रहदौ-
स्थ्यादिनिमित्तकं शान्तिकं मलमासादावपि
कर्त्तव्यम् । अवग्रहं विना
केवलवृष्ट्यायुःपुष्टिपुत्र-
श्रीकामादिपौष्टिकन्तु मलमासादीतरकाल एव
कार्य्यम् ॥ * ॥ तत्र यजमानः कृतस्नानादिः
गोमयोपलिप्ते देशे सदर्भासनोपविष्ट उदङ्मुखः
स्वस्तिवाच्यः सूर्य्यः सोम इति पठित्वा
फलपुष्प-
तिलदर्भत्रयसहितजलपूर्णताम्रपात्रं गृहीत्वा,
ॐ तद्विष्णोरिति विष्णुं संस्मृत्य ॐ तत्
सदि-
त्युच्चार्य्य ॐ अद्येतादि अमुकगोत्रः
श्रीअमुक-
देवशर्म्मा अमुककामो ग्रहयज्ञमहं करिष्ये
इति सङ्कल्प्य तज्जलमेवैशान्यां निःक्षिपेत् ।
अन्यार्थत्वे गोत्रनाम्नोः षष्ठ्यन्तता । करिष्ये

संयसति । उ, यसित्वा यस्त्वा । यतनं यत्नः । इति दुर्गादासः ॥

**यस्कः**, पुं, (यसति मोक्षायेति । यस् + क्विप् ।

संज्ञायां कन् ।) मुनिविशेषः । इति मुग्धबोध-व्याकरणम् ॥ (यथा, आश्वलायनश्रौतसूत्रे उत्त-
रार्द्धे । ६ । १० । १० ।
"यस्कवाधौलमौनमौकशार्क-राक्षिसार्ष्टिसावर्णिशालङ्कायनजैमिनिदैवन्त्याय-नानां भार्गववैतहव्यसावेतसेति ॥")

**यह्वः**, पुं, (यजतीति । यज + "शेवायह्वजिह्वा-

ग्रीवाप्वामीवाः ।" उणा० १ । १५४ । इति वन्प्रत्ययेन निपातितः ।) यक्षमानः । इत्यु-णादिकोषः ॥ (त्रि, महान् । यथा, ऋग्वेदे । ३ । १ । १२ ।
"उदुस्रिया जनिता यो जजानापां गर्भो नृतमो यह्वो अग्निः ।"
"यह्वो महान् ।" इति तद्भाष्ये सायणः ॥)

"स्वल्पेनैव तु द्रव्येण महापुण्यं यथा भदेत् ।
तदहं श्रोतुमिच्छामि ग्रहयागं सुरेश्वर ! ॥
ब्रह्मोवाच ।
शृणु वत्स प्रवक्ष्यामि यथा त्वं परिपृच्छसि ।
अल्पकेन महापुण्यं ग्रहर्क्षतिथियौगिकम् ॥
भृगुपूर्णाष्टमीयोगं शिवयागेषु चोत्तमम् ।
मृदुवर्गञ्च भाग्यञ्च उमाया भृगुवासरे ॥
दैवयोगात् यदा षष्ठी पुष्यर्क्षरविवासरम् ।
स्कन्दयागस्तदा कार्य्यः सर्व्वकामप्रसाधकः ॥
वारेण वा यदा सूर्य्यः सप्तमी विजया मता ।
तदा तु भवते भानोर्यागः सर्व्वगुणावहः ॥
शशिरिक्तानुसंयोगे अर्कर्क्षे सोत्तरासु च ।
नवम्यां मङ्गलायोगो भानुमूलदिनं यदा ॥
अष्टम्यां वाथ चन्द्राहे श्रवणेन शुभावहम् ।
अहिव्रध्ने कुजाहे तु गणेशे तस्य वाहनि ॥
पुनर्व्वसौ गुरोव्वरि द्वादश्यां श्रवणेन वा ।
सोमग्रस्तं यदा योगं विष्णोः सर्व्वार्थसाधकम् ॥
द्वितीयायां यदा सौम्ये कृत्तिकर्क्षं भवेत् क्वचित् ।
ग्रहयागस्तदा कार्य्यः सर्व्वशान्तिप्रदायकः ॥
स्वातीसौमी चतुर्थी च उमायागे वरा स्मृता ॥
उत्तरासु च सर्व्वासु भानुपौर्णाष्टमीषु च ।
शान्त्यभिषेकयागेयु सर्व्वकामार्थदाष्टमी ॥
गुरावेकादशी पुष्ये रोहिण्या वा यदा शनिः ।

इत्यत्र करिष्यामीति विशेषः । ततः श्वेतसर्षपा-
नादाय ।
ॐ वेतालाश्च पिशाचाश्च राक्षसाश्च सरी-सृपाः ।
अपसर्पन्तु ते सर्व्वे ये चान्ये विघ्नकारकाः ॥
ॐ विनायका विघ्नकरा महोग्रा
यज्ञद्विषो ये पिशिताशनाश्च ।
सिद्धार्थकैर्व्वज्रसमानकल्पै-
र्मया निरस्ता विदिशः प्रयान्तु ॥
इत्येताभ्यां मन्त्राभ्यां श्वेतसर्षपप्रक्षेपैर्व्विघ्नका-रकानपसारयेत् । ततः सगणाधिपषोडश-मातृकापूजा वसोर्धारा आयुष्यजपं तदज्ञाने गायत्रीजपं वृद्धिश्राद्धञ्च कृत्वा तदशक्तौ भोज्य-
मुत्सृज्य ब्राह्मणान् परितोष्य ततः स्वय-मशक्तौ कर्त्ता प्राङमुखं गुरुम् ॐ साधु भवा-नास्तामिति वदेत् ॐ साध्वहमासे इति प्रति-वचनम् । ततो गन्धपुष्पवस्त्राङ्गुरीयकादिना गुरुमलङ्कृत्य दक्षिणं जानु स्पृष्ट्वा ॐ अद्ये-त्यादि मत्सङ्कल्पितग्रहयागकर्म्मणि ग्रहपूजा-होमकर्म्मकरणाय अमुकगोत्रं अमुकदेव-

| | | |
|---|---|---|
| | सुतसौगाग्यकामाय यागो रुद्रविनायके ॥<br>पूर्णिमासु च सर्व्वासु अष्टमीद्वादशीषु च ।<br>चतुर्द्दश्यां तृतीयासु ग्रह ऋक्षे शुभेषु च ।<br>सर्व्वेषां भवते यागो भक्तिपूर्व्वो महामुने ! ॥<br>मन्त्रसाधनद्रव्यायो रुद्रयागादवाप्यते ।<br>श्रीमेधाज्ञानवात्सल्यमुमायागाज्महामुने ॥<br>योगज्ञानयशःसिद्धिं महादेवादवाप्नुयात् । | |

शर्म्मणं गन्धादिभिरभ्यर्च्य भवन्तमहं वृणे ।
ॐ
वृतोऽस्मीति प्रतिवचनम् । ॐ यथाविहितं
पूजादिकर्म्म कुरु । ॐ यथाज्ञानं करवाणीति
प्रतिवचनम् ॥ * ॥ ततो मण्डपोत्तरपूर्ब्बभागे
वितस्तिद्वयविस्तृतायां वितस्त्युच्छ्रितायां
उदक्-
प्लवायां वेद्यां गोमयेनोपलिप्तायां रक्तचन्दना-
दिना मध्ये वर्त्तुलं सूर्य्यम् । आग्नेय्यां श्वेतमर्द्ध-
चन्द्राकारं सोमम् । दक्षिणस्यां त्रिकोणं रक्तं
मङ्गलम् । ऐशान्यां पीतं धनुराकारं बुधम् ।
उत्तरस्यां पीतं पद्माकारं बृहस्पतिम् । प्राच्यां
श्वेतं चतुष्कोणं शुक्रम् । प्रतीच्यां श्यामं सर्पा-
कारं शनिम् । नैरृत्यां श्यामं मकराकारं
राहुम् । वायव्यां धूम्रवर्णान् खड्गाकारान्
केतून् विलिख्य स्वगृह्योक्तविधिना अग्निस्थाप-
नादिब्रह्मस्थापनपर्य्यन्तं कर्म्म कृत्वा मण्डले
ग्रहानावाहयेत् ॥ * ॥ तत्र क्रमः । मध्ये ।
ॐ क्षत्त्रियं काश्यपं रक्तं कालिङ्गं द्वादशा-
ङ्गुलम् ।
पद्महस्तद्वयं पूर्ब्बाननं सप्ताश्ववाहनम् ।
शिवाधिदैवतं ध्यायेद्वह्निप्रत्यधिदैवतम् ॥
सप्तम्यां जायमानं विशाखानक्षत्रं रक्तमाल्या-
म्बरधरम् । इति ध्यात्वा ॐभूर्भुवः स्वः
सूर्य्यग्रह
इहागच्छ इहागच्छ इह तिष्ठ इह तिष्ठ इति
शुक्लतण्डुलैरावाह्य स्थापयेत् ॥ १ ॥ आग्नेये
।
ॐसामुद्रं वैश्यमात्रेयं हस्तमात्रं सिताम्बरम् ।
श्वेतं द्बिबाहुं वरदं दक्षिणं सगदेतरम् ॥
दशाश्वं श्वेतपद्मस्थं विचिन्त्योमाधिदैवतम् ।
जलप्रत्यधिदैवञ्च सूर्य्यास्यमाह्वयेत्तथा ॥
चतुर्द्दश्यां जातं कृत्तिकानक्षत्रमिति ध्यात्वा
ॐभूर्भवः स्वः सोमग्रह इहागच्छ इहागच्छ
इह तिष्ठ इह तिष्ठ इति शुक्लतण्डुलैरावाह्य
स्थापयेत् ॥ २ ॥ दक्षिणस्याम् ।
ॐ आवन्त्यं क्षत्त्रियं रक्तं मेषस्थं चतुरङ्गुलम् ।
आरक्तमाल्यवसनं भारद्वाजं चतुर्भुजम् ॥
दक्षिणोर्द्ध्वक्रमात् शक्तिवराभयगदाकरम् ।
आदित्याभिमुखं देवं तद्वदेव समाह्वयेत् ।

ब्रह्माधिदैवं सूर्य्यास्यमिन्द्रप्रत्यधिदैवतम् ॥
एकादश्यां जातं उत्तरफल्गुनीनक्षत्रमिति-
ध्यात्वा ॐ भूर्भुवः स्वः बृहस्पते इहागच्छ
इहागच्छ इह तिष्ठ इह तिष्ठ इति शुक्ल-
तण्डुलैरावाह्य स्थापयेत् ॥ ५ ॥ ततः
प्राच्याम् ।
ॐ शुक्रं भोजकटं विप्रं भार्गवञ्च नवाङ्गुलम् ।
पद्मस्थमाह्वयेत् सूर्य्यमुखं श्वेतं चतुर्भुजम् ॥
सदाक्षवरकरकादण्डहस्तंसिताम्बरम् ।
शक्राधिदैवतं ध्यायेत् शचीप्रत्यधिदैवतम् ॥
नवम्यां जातं पुष्यनक्षत्रमिति ध्यात्वा ॐ
भूर्भुवः
स्वः शुक्र इहागच्छ इहागच्छ इह तिष्ठ इह
तिष्ठ इति शुक्लतण्डुलैरावाह्य स्थापयेत् ॥
६ ॥
पश्चिमायाम् ।
सौराष्ट्रं काश्यपं शूद्रं सूर्य्यास्यं चतुरङ्गुलम् ।
कृष्णं कृष्णाम्बरं गृध्रगतं सौरिं चतुर्भुजम् ॥
तद्वद्बाणवरशूलधनुर्हस्तं समाह्वयेत् ।
यमाधिदैवतं प्रजापतिप्रत्यधिदैवतम् ॥
कृष्णचतुर्द्दश्यां जातं रोहिणीनक्षत्रमिति
ध्यात्वा
ॐ भूर्भुवः स्वः शनैश्चर इहागच्छ इहागच्छ
इह तिष्ठ इह तिष्ठ इति शुक्लतण्डुलैरावाह्य
स्थापयेत् ॥ ७ ॥ नैरृत्याम् ।
राहुं मलयजं शूद्रं पैठीनं द्वादशाङ्गुलम् ।
कृष्णं कृष्णाम्बरं सिंहासनं ध्यात्वा तथाह्वयेत्
॥
चतुर्ब्बाहुं खड्गवरशूलचर्म्मकरं तथा ।
कालाधिदैवं सूर्य्यास्यं सर्पप्रत्यधिदैवतम् ॥
पौर्णमास्यां जातं भरणीनक्षत्रमिति ध्यात्वा
ॐ भूर्भुवः स्वः भगवन् राहो इहागच्छ
इहागच्छ इह तिष्ठ इह तिष्ठ इति
शुक्लतण्डुलै-
रावाह्य स्थापयेत् ॥ ८ ॥ वायव्याम् ।
कौशद्वीपं केतुगणं जैमिनीयं षडङ्गुलम् ।
धूम्रं गृध्रगतं शूद्रमाह्वयेत् विकृताननम् ॥
सूर्य्यास्यं धूम्रवसनं वरदं गदिनं तथा ।
चित्रगुप्ताधिदैवञ्च ब्रह्मप्रत्यधिदैवतम् ॥

सोमस्य उमा जलम् । मङ्गलस्य स्कन्दः
क्षितिः ।
बुधस्य नारायणविष्णू । बृहस्पतेः ब्रह्मा
इन्द्रश्च । शुक्रस्य शक्रः शची ।
शनैश्चरस्य यमः
प्रजापतिश्च । राहोः कालः सर्पश्च ।
केतूनां
चित्रगुप्तः ब्रह्मा च । एतत्तु अयुतादिहोमे
ज्ञेयम् ॥ * ॥ सूर्य्याय गुडौदनबलिः ।
एवं
सोमादीनामपि । सति सामर्थ्ये
षोडशोपचारा-
दिना । वलौ तु । सूर्य्याय गुडौदनम् ।
सोमाय
घृतपायसम् । मङ्गलाय
पक्वयवचूर्णात्मिकयाव-
कम् । बुधाय क्षीरान्नम् । गुरवे
दध्योदनम् ।
शुक्राय घृतौदनम् । शनैश्चराय कृशरम्
।
राहवे छागमांसम् । केतुभ्यः अजाक्षीर-
साधिताजकर्णरक्तमिश्रित-यव-तिल-
तण्डुलरूपं
चित्रौदनम् तत्तद्द्रव्यालाभे भक्ष्यान्तरं
दद्यात् ॥ * ॥ ततश्चरुं श्रपयेत् । तत्र
साम-
गानां क्रमः । अग्नेः पश्चिमायां दिशि
प्राग-
ग्रान् कुशानास्तीर्य्य तदुपरि
प्रक्षालितवारुण-
मुदूखलं वैणवञ्च सूर्पं
वारुणचमसस्थजल-
प्रोक्षितं संस्थाप्य व्रीहीन् यवान् वा
अशक्तौ
शालितण्डुलान् सूर्पे निधाय ॐ सूर्य्याय
त्वा
जुष्टं निर्व्वपामि इति गृहीत्वा उदूखले
स्थापयेत् । एवं सोमाय । एवं
मङ्गलादीनामपि

स्कन्दाधिदैवतं भौमं क्षितिप्रत्यधिदैवतम् ॥
दशम्यां जातं पूर्बाषाढानक्षत्रमिति ध्यात्वा
ॐ भूर्भुवः स्वः मङ्गलग्रह इहागच्छ इहागच्छ
इह तिष्ठ इह तिष्ठ इति शुक्लतण्डलैरावाह्य
स्थापयेत् ॥ ३ ॥ ऐशान्याम् ।
ॐ मागधं द्व्यङ्गुलात्रेयं वैश्यं पीतं चतुर्भुजम् ।
वामोर्द्ध्वक्रमतश्चर्म्मगदावरदखड्गिनम् ॥
सूर्य्यास्यं सिंहगं सौम्यं पीतवस्त्रं तथाह्वयेत् ।
नारायणाधिदैवञ्च विष्णुप्रत्यधिदैवतम् ॥
द्वादश्यां जातं धनिष्ठानक्षत्रमिति ध्यात्वा
ॐ भूर्भुवः स्वः बुधग्रह इहागच्छ इहागच्छ
इह तिष्ठ इह तिष्ठ इति शुक्लतण्डुलैरावाह्य
स्थापयेत् ॥ ४ ॥ उत्तरस्याम् ।
द्विजमाङ्गिरसं पीतं सैन्धवञ्च षडङ्गुलम् ।
ध्यात्वा पीताम्बरं जीवं सरोजस्थं चतुर्भुजम् ॥
दक्षोर्द्ध्वादिक्षवरदकरकादण्डमाह्वयेत् ।

अमावास्यायां जातं अश्लेषानक्षत्रमिति
ध्यात्वा
ॐ भूर्भुवः स्वः भगवन्तः केतव इहागच्छत
इहागच्छत इह तिष्ठत इह तिष्ठत इति
शुक्लतण्डुलैरावाह्य स्थापयेत् ॥ ९ ॥
अधिदैवत-
प्रत्यधिदैवतपूजनञ्च अयुतहोमादौ । तत-
स्तत्तद्वर्णवस्त्रतत्तद्वर्णगन्धतत्तद्वर्णपुष्पं दद्यात्
॥
धूपे विशेषः । रवये गुग्गुलुधूपम् । सोमाय
सरलम् । मङ्गलाय देवदारुम् । बुधाय घृत-
मिश्रितदेवदारुम् । बृहस्पतये दशाङ्गम् ।
शुक्राय अगुरु । शणैश्चराय कालागुरु । राहवे
गुडत्वचम् । केतुभ्यो मधुमिश्रितगुडत्वचम् ।
अभावे षोडशाङ्गं वा ॥ * ॥ गन्धे विशेषः ।
सूर्य्याय रक्तचन्दनम् । सोमाय श्वेतचन्दनम्
।
मङ्गलाय कुङ्कुमम् । बुधाय सरलम् । गुरवे
रक्तचन्दनश्वेतचन्दनकुङ्कुमसरलं
मिश्रितसम-
भागत्वेन दद्यात् । शनैश्चराय कस्तूरीम् ।
राहवे पद्मकाष्ठम् । केतुभ्यश्च पद्मकाष्ठम् ।
अधिदेवताप्रत्यधिदेवताः पूजयेत् ॥ * ॥
अधि-
देवता प्रत्यधिदेवता यथा । सूर्य्यस्य
शिववह्नी ।

निर्व्वपणं कृत्वा उदूखले स्थापयेत् ।
द्विस्तूष्णीम् ।
ततो दक्षिणहस्तमुपरि कृत्वा
मुषलेनावहत्य
सूर्पेण प्रस्फोटयेत् । इत्थमेव वारत्रयम् ।
तत-
श्चरुस्थाल्याममन्त्रकं कृतोत्तराग्रं पवित्रं
निःक्षिप्य तत्र प्रक्षालिततण्डुलान्
निधाय
तदुपरि दुग्धं दत्त्वा यथा पायसचरुर्भवति
तथा स्तोकं स्तोकमुदकं दत्त्वा तन्मध्ये
खदिर-
पलाशोडुम्बराणामन्यतमस्य
प्रादेशप्रमाणं
उभयथा सार्द्धाङ्गुष्ठप्रमाणं
चतुष्कोणपुष्कलं
मेक्षणं दक्षिणावर्त्तेन भ्रामयित्वा तथा
पचेत्
यथा अन्तरोष्मणा सम्यक् पाको भवति
मण्ड-
गालनं दाहश्च न भवति । सम्यक्पाके
भूते
चरुमध्ये घृतस्रुवं दत्त्वा
प्रागादिदिक्चिह्नितं
कृत्वा चरुमवतार्य्य अग्नेरुत्तरतः
कुशोपरि
स्थापयित्वा पुनर्मध्ये घृतस्रुवं दद्यात् ।
ततो
भूमिजपादिस्रुवसंस्कारपर्य्यन्तं कर्म्म
कृत्वा
अग्नेः पश्चिमतः स्तरणकुशोपरि
पूर्बमाज्यं
पश्चाच्चरुं निधाय उदकाञ्जलिसेकं
कृत्वा
विरूपाक्षजपान्तां कुशण्डिकां समापयेत्
॥ * ॥
यजुर्व्वेदिनान्तु
आज्यस्थाल्यामाज्यनिर्व्वपणा-
नन्तरं सूर्पं पुरतो दक्षिणभागे संस्थाप्य
तत्रो-
दूखलं विन्यस्य व्रीह्याद्यन्यतमं तत्र
निघाय

| | | |
|---|---|---|
| | | ॐ सूर्य्याय त्वा जुष्टं गृह्णामि इत्येकां मुष्टिं<br>गृहीत्वा ॐ सूर्य्याय त्वा जुष्टं निर्व्वपामीति<br>डदूखले स्थापयित्वा ॐ सूर्य्याय त्वा जुष्ठं<br>प्रोक्षामीति प्रोक्षणीजलेन प्रोक्षयेत् । एवं सोमाय त्वा इत्यादि । तत ॐ अग्नये स्विष्टि-<br>कृते त्वा इत्यादिना ग्रहणनिर्व्वपणप्रोक्षणानि<br>कृत्वा द्विस्तूष्णीं कुर्य्यात् । ततः पूर्ब्बवत्<br>श्रपणम् । पक्वं ज्ञात्वा ज्वलदग्निं गृहीत्वा |

चरुमध्ये दक्षिणावर्त्तेन भ्रामयित्वा
तमग्निं
तत्रैवाग्नौ क्षिपेत् । तत
आघाराज्यभागान्तं
कर्म्म कुर्य्यात् ॥ * ॥ ऋग्वेदिनान्तु
प्रोक्षणी-
पात्रस्थापनानन्तरं पवित्रान्तर्हिते ॐ
सूर्य्याय
त्वा जुष्टं निर्व्वपामीति
व्रीह्याद्यन्यतममुष्टिं
प्रक्षिप्य ॐ सूर्य्याय त्वा जुष्टं
प्रोक्षामीति
प्रणीताजलेन प्रोक्षयेत् । एवं सोमाय
त्वा
इत्यादि । ततः
स्विष्टिकृदर्थकिञ्चिदधिकं तूर्ष्णीं
तथा कृत्वा पवित्रान्तर्हितं कृत्वा
पूर्ब्बग्रीवोद्ध्र्व-
लोमकृष्णाजिने उदूखलं निधाय तत्र
सूर्पस्थ-
व्रीह्याद्यन्यतमं प्रक्षिप्य मुषलेनावहत्य
सूर्पेण
वितुषीकृत्य प्रस्फोट्य त्रिः प्रक्षाल्य
पवित्रं
चरुस्थाल्यां प्रक्षिप्य तथैव
श्रापयित्वा उदीच्यां
दक्षिणभागे ॐ सोमाय स्वाहेति
होमपर्य्यन्तं
कुर्य्यात् । ततः शान्तिकर्म्मणि अग्ने
त्वं वरद-
नामासीति नाम कृत्वा ।
ॐ पिङ्गभ्रूश्मश्रुकेशाक्षः
पीनाङ्गजठरोऽरुणः ।
छागस्थः साक्षसूत्रोऽग्निः सप्तार्च्चिः
शक्तिधा-
रकः ॥
इत्यादिपुराणीयं ध्यात्वा ॐ
वरदनामन्नग्ने
इहागच्छ इहागच्छ इह तिष्ठ इह तिष्ठ

सीदत स्वाहा । इदं बुधाय ॥ ४ ॥ बृहस्पतेः बृह-
स्पते अतीतिमन्त्रस्य गृत्समद ऋषिस्तृष्टुप् छन्दो
ब्रह्मा देवता जीवस्य पूजाहोमकर्म्मणि विनि-
योगः । ॐ बृहस्पते अतियदर्य्योऽर्हाद्युमद्बिभाति
क्रतुमज्जनेषु । यद्दीदयत्सरस ऋतु प्रजात तद-
स्मासु द्रविणं धेहि चित्रं स्वाहा । इदं बृह-
स्पतये ॥ ५ ॥ शुक्रस्य अन्नात् परिश्रुत इति मन्त्रस्य
प्रजापतिरृषिरतिजगतीच्छन्दोऽग्निसरस्वतीन्द्रा
देवताः शुक्रस्य पूजाहोमकर्म्मणि विनियोगः ।
ॐ अन्नात् परिश्रुतो रसं ब्रह्मणा व्यपिवत् क्षत्त्रं
पयः सोमं प्रजापतिः । ऋतेन सत्यमिन्द्रियं
विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं
मधु स्वाहा । इदं शुक्राय ॥ ६ ॥ शनैश्चरस्य
शन्नो देवीतिमन्त्रस्य दध्यङ्गाथर्व्वण ऋषिर्गायत्री
च्छन्द आपो देवता शनैश्चरस्य पूजाहोम-
कर्म्मणि विनियोगः । ॐ शन्नो देवीरभीष्टये
आपो भवन्तु पीतये संयोरभिस्रवन्तु नः स्वाहा ।
इदं शनैश्चराय ॥ ७ ॥ राहोः काण्डात् काण्डा-
दिति मन्त्रस्य अग्निरृषिर्गायत्री च्छन्दो दूर्व्वे-
ष्टका देवता राहोः पूजाहोमकर्म्मणि विनि-
योगः । ॐ काण्डात् काण्डात् प्ररोहन्ती परुषः
परुषः परि एवानो दूर्व्वे प्रतनु सहस्रेण शतेन
च स्वाहा । इदं राहवे ॥ ८ ॥ केतूनां केतुं
कृण्वन्निति मन्त्रस्य मधुच्छन्द ऋषिरनिरुद्गायत्री-
च्छन्दोऽग्निर्द्देवता केतूनां पूजाहोमकर्म्मणि
विनियोगः । ॐ केतुं कृण्वन्न केतवे पेषो मर्य्या
अपेषसे । समुषद्भिरजायथा स्वाहा । इदं
केतुभ्यः ॥ ९ ॥ ततो मधुघृताक्तां घृताक्तां
क्षीराक्तां वा प्रादेशप्रमाणां साग्रामर्कसमिध-
मादाय ॐ आकृष्णेन इत्यादिमन्त्रेण सूर्य्याया-
ष्टोत्तरशतं अष्टाविंशतिमष्टौ वा अशक्त्या ।
शक्त्या ग्रहस्यातिपीडाकरत्वाद्वा अष्टोत्तर-
सहस्रं जुहुयात् ॥ * ॥ समिधमाह याज्ञ-
वल्क्यः ।
अर्कः पलाशः खदिरस्त्वपामार्गोऽथ पिप्पलः ।
उडुम्बरः शमी दूर्व्वा कुशाश्च समिघः क्रमात् ॥
होमो ग्रहादिपूजायां शतमष्टोत्तरं भवेत् ।
अष्टाविंशतिरष्टौ वा यथाशक्ति विधीयते ।
अतिपीडाकरो यस्तु तन्तु यत्नेन पूजयेत् ॥
ततो होमानन्तरं उदीच्यं कर्म्म कुर्य्यात् । ततो

रुद्रदेवताकां अमुकगोत्राय
अमुकदेवशर्म्मणे
ब्राह्मणाय ऋत्विजे तुभ्यमहं संप्रददे ।
अन्यार्थ-
ञ्चेत् ददानीति ब्रूयात् । कपिलाभावे गोमात्रं
वा । तदभावे काञ्चनम् । तदभावे
रजतादिकं
वा दद्यात् । काञ्चनादिकन्तु शङ्खादि
दक्षिणा-
भवेऽपि दद्यात् ॥ १ ॥ एवम् ।
पुण्यस्त्वं शङ्खपुण्यानां मङ्गलानाञ्च मङ्गलम्
।
विष्णुना विधृतो नित्यमतः शान्तिं प्रयच्छ
मे ॥
इत्युच्चार्य्य पूर्ब्बोक्तक्रमेण सोमग्रहयज्ञे
शङ्खं
दद्यात् ॥ २ ॥
ॐ धर्म्मस्त्वं वृषरूपेण जगदानन्दकारकः
।
अष्टमूर्त्तेरधिष्ठानमतः शान्तिं प्रयच्छ मे ॥
इत्युच्चार्य्य मङ्गलयज्ञे वृषं दद्यात् ॥ ३ ॥
ॐ हिरण्यगर्भगर्भस्त्वं हेमरूपं विभावसोः
।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥
इत्युच्चार्य्य बुधयज्ञे काञ्चनं दद्यात् ॥ ४ ॥
ॐ पीतवस्त्रयुगं यस्माद्वासुदेवस्य वल्लभम्
।
वरप्रदानात्तद्विष्णोरतः शान्तिं प्रयच्छ मे ॥
इत्युच्चार्य्य गुरुयज्ञे पीतवस्त्रयुगं दद्यात्
तद-
भावेऽन्यवर्णवासोयुगमपि दद्यात् ॥ ५ ॥
ॐ विष्णुस्त्वमश्वरूपेण
यस्मादर्णवसम्भवः ।
चन्द्रार्कवाहनस्त्वं वै अतः शान्तिं प्रयच्छ
मे ॥
इत्युच्चार्य्य शुक्रयज्ञे अश्वं दद्यात् ॥ ६ ॥
ॐ यस्मात्त्वं पृथिवी सर्व्वा धेनुः
केशवसम्भवा ।
सर्व्वपापहरा नित्यमतः शान्तिं प्रयच्छ मे
॥

इत्यावाह्य पाद्यादिना पूजयेत् ॥ * ॥
पौष्टिक-
कर्म्मणि तु वलदनामाग्निः । ग्रहहोमे
अग्नी-
नाह गोभिलः ।
आदित्ये कपिलो नाम पिङ्गलः सोम
उच्यते ।
धूमकेतुस्तथा भौमे जठरोऽग्निर्बुधे
स्मृतः ॥
बृहस्पतौ शिखी नाम शुक्रे भवति
हाटकः ।
शनैश्चरे महातेजा राहौ चैव हुताशनः
।
केतुषु लोहितोऽग्निः स्यादिति
वह्निविनिर्णयः ॥
ततः स्वगृह्योक्तविधिनान्नेन चरुणा
सूर्य्यादि-
ग्रहेभ्यः प्रत्यकाहुतिं दद्यात् ॥ * ॥
अत्र मन्त्राः ।
सूर्य्यस्य आकृष्णेनेतिमन्त्रस्य
हिरण्यस्तूपाङ्गिरा
ऋषिस्त्रृष्टुप् छन्दः सविता देवता
आदित्यस्य
पूजाहोमकर्म्मणि विनियोगः । ॐ
आकृष्णेन
रजसा वर्त्तमानो निवेशयन्नमृतं
मर्त्यञ्च हिर-
ण्ययेन सविता रथेना देवो याति
भुवनानि
पश्यन् स्वाहा । इदं सूर्य्याय इति
देवतोद्देशः
सामगेतरैः कार्य्यः ॥ १ ॥ सोमस्य
इमन्देवेति-
मन्त्रस्य वरुण ऋषिरग्निर्देवता
सोमस्य पूजा-
होमकर्म्मणि विनियोगः । ॐ
इमन्देवा अस-
पत्नं सुवद्धं महते क्षत्राय महते
ज्येष्ठाय ।
इमममुष्य पुत्त्रममुष्यै पुत्त्रमस्यै विशे
स्वाहा ।
इदं सोमाय ॥ २ ॥ मङ्गलस्य
अग्निर्मूर्द्धेति-

गुडौदनादीन् ऋत्विजे भोजयेत् । तत्तद्द्रव्या-
लाभे भोज्यान्तराणि वा दद्यात् । भोजना-
सामर्थ्ये तत्तद्द्रव्याणि पाणिना प्रतिग्राहयेत् ।
ततो मत्स्यपुराणोक्तैर्मन्त्रैर्दक्षिणां दद्यात् ।
धेनुः शङ्खस्तथानड्वान् हेम वासो हयस्तथा ।
कृष्णा गौरायसं छाग एता वै दक्षिणाः
क्रमात् ॥
तत्र ।
कपिले सर्व्वदेवानां पूजनीयासि रीहिणी ।
तीर्थदेवमयी यस्मादतः शान्तिं प्रयच्छ मे ॥
इति पठित्वा ॐ अद्येत्यादि कृतैतत्सूर्य्यग्रह-
यज्ञकर्म्मणः प्रतिष्ठार्थं दक्षिणां कपिलां धेनुं

इत्युच्चार्य्य शनैश्चरयज्ञे कृष्णां धेनुं
अन्यवर्णां वा
दद्यात् ॥ ७ ॥
ॐ यस्मादायुधकर्म्माणि त्वदधीनानि
सर्व्वदा ।
लाङ्गलाद्यायुधादीनि ततः शान्तिं प्रयच्छ
मे ॥
इत्युच्चार्य्य राहुयज्ञे लौहं दद्यात् ॥ ८ ॥
ॐ यस्मात्त्वं सर्व्वभूतानां मङ्गलाय व्यव-
स्थितः ।
यानं विभावसोर्न्नित्यमतः शान्तिं प्रयच्छ मे
॥
इत्युच्चार्य्य केतुयज्ञे छागं दद्यात् ॥ ९ ॥
दक्षिणाजलं
शान्तिकुम्भजलेन संमिश्य शान्तिं कुर्य्यात्
।
ततः कृताञ्जलिः ।
ॐ गच्छध्वममराः सर्व्वे गृहीत्वार्च्चां
स्वमा-
लयम् ।
सन्तुष्टा वरमस्माकं दत्त्वेदानीं सुपूजिताः ॥
इति विष्णुधर्म्मोत्तरीयं पठित्वा ग्रहान्
विस-
र्जयेत् । दक्षिणा च प्रदातव्या ग्रहाणाञ्च
विस-
र्जनमिति वशिष्ठवचनात् ।” इति
रघुनन्दन-
भट्टाचार्य्यविरचितग्रहयागप्रयोगः समाप्तः
॥

**याच**, टु डु ऋ ञ याचने । इति कविकल्पद्रुमः ॥
(भ्वा०-उभ०-द्विक०-सेट् ।)
याचनमात्मने
दानार्थं प्रेरणम् । टु, याचथुः । डु, याचि-
त्रिमम् । ऋ, अययाचत् । ञ, याचति
याचते
नृपं विप्रः । ग्रहणार्थं प्रेरणेऽपि याचति वित्तं
गुरवे शिष्यः । इति दुर्गादासः ॥

**याचकः**, त्रि, (याचत इति । याच् + ण्वुल् ।)
याच्ञाकर्त्ता । तत्पर्य्यायः । वनीयकः २
याचनकः ३ मार्गणः ४ अर्थी ५ । इत्यमरः
।

| | | |
|---|---|---|
| मन्त्रस्य अपाङ्गिरा ऋषिर्गायत्री च्छन्दोऽग्नि-<br>र्देवता मङ्गलस्य पूजाहोमकर्म्मणि विनि-<br>योगः । ॐ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या<br>अयमपां रेतांसि जिन्वति स्वाहा । इदं<br>मङ्गलाय ॥ ३ ॥ बुधस्य उद्बुध्यस्वेतिमन्त्रस्य पर-<br>मेष्ठिरृषिस्तृष्टुप् छन्दोऽग्निर्देवता बुधस्य पूजा-<br>होमकर्म्मणि विनियोगः । ॐ उद्बुध्यस्वाग्ने<br>प्रतिजागृहि त्वमिष्टापूर्त्ते संसृजेथामयञ्चास्मिन्<br>सधस्थे अध्युत्तरस्मिन् विश्वेदेवा यजमानश्च | | |

३ । १ । १९ ॥ वनीपकः ६ भिक्षुकः ७ भिक्षा-
करः ८ । इति शब्दरत्नावली ॥ तस्य लघुत्वं
यथा, --
"तृणादपि लघुस्तूलस्तूलादपि च याचकः ।
वायुना किं न नीतोऽसौ किञ्चित्प्रार्थनशङ्कया ॥"
इति प्राचीनाः ॥
अपि च ।
"कुब्जस्य कीटघातस्य वातान्निष्कासितस्य च ।
शिखरे वसतस्तस्य वरं जन्म न याचितम् ॥
जगत्पतिर्हि याचित्वा विष्णुर्वामनतां गतः ।
कोऽन्योऽधिकतरस्तस्य योऽर्थी याति न लाघ-
वम् ॥"
इति गारुडे नीतिसारे ११५ अध्यायः ॥

**याचन्,** [त्] त्रि, (याचतीति । याच् + शतृ ।)
याचकः । यथा, --
"मुखभङ्गः स्वरो दीनो गात्रस्वेदो महद्भयम् ।
मरणे यानि चिह्नानि तानि चिह्नानि याचतः ॥"
इति गारुडे नीतिसारे ११५ अध्यायः ॥

**याचनं**, क्ली, (याच् + भावे ल्युट् ।) याच्ञा ।
(यथा, नैषधे । ५ । ११२ ।
"भीमजार्थयाचनवाचे यूयमेव गुरवः करणीयाः ॥")

**याचनकः**, त्रि, (याचन + स्वार्थे कन् ।) याचकः ।
इत्यमरः । ३ । १ । ४९ ॥ (यथा, मनौ । ३ । १६५ ।

**याचितकं**, क्ली, (याचितेन निर्वृत्तम् । याचित +
"अपमित्ययाचिताभ्यां कक्कनौ ।" ४ । ४ । २१ ।
इति कन् ।) याच्ञाप्राप्तम् । इत्यमरः । २ । ९ । ४ ॥
"याच्ञया । प्रत्यर्पणीयत्वेन याच्ञया यत्
प्राप्तमलङ्कारादिवस्तु तत् याचितकम् । कार्य्या-
नन्तरं वस्तुस्वामी यत् पुनर्गृह्णाति तदित्यर्थः ।
याचितेन प्राप्तमिति ढघे कादिति कः ।" इति भरतः ॥

**याच्ञा**, स्त्री, (याचनमिति । याच् + "यजयाच्-
यतविच्छप्रच्छरक्षो नङ् ।" ३ । ३ । ९० । इति
नङ् ।) याचनम् । तत्पर्य्यायः । अभिशस्तिः २
याचना ३ अर्थना ४ भिक्षा ५ अर्दना ६ ।
इत्यमरः । २ । ७ । ३२ ॥ लालसा ७ । इति
जटाधरः ॥ (यथा, भागवते । २ । ७ । १७ ।
"ज्यायान् गुणैरवरजोऽप्यदितेः सुतानां
लोकान् विचक्रम इमान् यदथाधियज्ञः ।
क्ष्मां वामनेन जगृहे त्रिपदच्छलेन
याच्ञामृते पथि चरन् प्रभुभिर्न चाल्यः ॥")
तद्वैदिकपर्य्यायः । ईमहे १ यामि २ मन्महे ३
दद्धि ४ शग्धि ५ पूर्द्धि ६ मिमिड्ढि ७ मिमीहि
८ रिरिड्ढि ९ रिरीहि १० पीपरत् ११
यन्तारः १२ यन्धि १३ इषुध्यति १४ मदेमहि
१५ मनामहे १६ मायते १७ । इति सप्तदश
याच्ञाकर्म्माणः । इति वेदनिघण्टौ ३ अः ॥

**याजः**, पुं, अन्नम् । इति हेमचन्द्रः । ३ । ५९ ॥
(ऋषिभेदः । यथा, महाभारते । १ । १६८ । ७ ।
"याजोपयाजौ ब्रह्मर्षी शाम्यन्तां परमेष्ठिनौ ।
संहिताध्ययने युक्तौ गोत्रतश्चापि काश्यपौ ॥")

**याजकः**, पुं, (यजतीति । यज् + ण्वुल् ।) याज्ञिकः ।
राज्ञो गजः । इति मेदिनी । के, १४२ ॥
मत्तहस्ती । इति जटाधरः ॥ ऋत्विक् । यथा,
"अग्नीध्राद्या धनैर्व्वार्य्या ऋत्विजो याज-
काश्च ते ॥"
इत्यमरः । २ । ७ । १७ ॥
"यजमानेन धनैर्व्वार्य्याः धनानि दत्त्वा इष्टसम्पा-
दनाय व्रियन्ते प्रार्थ्यन्ते ये अग्नीध्रप्रभृतयस्ते
नोपासीत द्विजः सन्ध्यां स षष्ठोऽब्राह्मणः स्मृतः ॥"
इत्याह्निकतत्त्वे सन्ध्योपासनम् ॥
अपि च ।
"शूद्रसप्तोद्रिक्तयाजी ग्रामयाजीति कीर्त्तितः ।
शूद्रपाकोपजीवी यः सूपकारः प्रकीर्त्तितः ॥
सन्ध्यापूजाविहीनश्च प्रमत्तः पतितः स्मृतः ।
एते महापातकिनः कुम्भीपाकं प्रयान्ति ते ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २७ अध्यायः ॥

**याजनं**, क्ली, (याज्यते इति । यज् + णिच् + ल्युट् ।)
यागक्रियाकारणा । याग कराण इति भाषा ।
तत्तु ब्राह्मणस्य षट्कर्म्मान्तर्गतकर्म्मविशेषः ।
यथा, --
"अध्यापनमध्ययनं यजनं याजनन्तथा ।
दानं प्रतिग्रहश्चैव ब्राह्मणानामकल्पयत् ॥"
इति मानवे १ अध्यायः ॥

**याजिः**, पुं, (यज् + "वसिंवपियजिराजीति ।"
उणा० ४ । १२४ । इति इञ् ।) यज्ञः । इति
संक्षिप्तसारोणादिवृत्तिः ॥ यागकर्त्ता । इत्यु-
णादिकोषः ॥

**याजुषं**, त्रि, (यजुष इदमिति । यजुष् + अण् ।)
यजुर्व्वेदसम्बन्धि । इति सिद्धान्तकौमुदी ॥

**याज्ञवल्क्यः**, पुं, (वल्कयतीति । वल्क + अच् ।
यज्ञस्य वल्को वक्ता । तस्य गोत्रापत्यम् ।
यज्ञवल्क + "गर्गादिभ्यो यञ् ।" ४ । २ । १०५ ।
इति यञ् ।) धर्म्मशास्त्रप्रयोजकमुनिविशेषः ।
तत्पर्य्यायः । ब्रह्मरात्रिः २ योगेशः ३ । इति
हेमचन्द्रः ॥ योगीश्वरः ४ । इति मिताक्षरा ॥
(महर्षिरयं याज्ञवल्क्यः सूर्य्यात् शुक्लयजुर्व्वेदं
प्राप्तवान् । तत्रादौ ब्रह्मपरम्परया प्राप्तं वेदं
वेदव्यासो मन्दमतीन् मनुष्यान् विचिन्त्य तेषु

“आचारहीनः क्लीवश्च नित्यं याचनकस्तथा ॥”)

**याचना**, स्त्री, (याच् + स्वार्थे णिच् + युच् । टाप् ।) याच्ञा । इत्यमरः । २ । ७ । ३२ ॥
(यथा, रामायणे । २ । २७ । २३ ।
“नयस्व मां साधु कुरुष्व याचनाम् ॥”)

**याचमानः**, त्रि, (याचते इति । याच् + शानच् ।) याचकः । यथा, --
“नवीनदीनभावस्य याचमानस्य मानिनः ।
वचोजीवितयोरासीत् पुरोनिःसरणे रणः ॥”
इति वररुचिः ॥
अपि च ।
“द्विजेभ्यो याचमानेभ्यो यजमानः प्रयच्छति ।
स याति चाक्षयान् लोकान् येभ्यो नावर्त्तते पुनः ॥
षष्टिवर्षसहस्राणां सहस्राणि वसेद्दिवि ।
योऽनुमन्तापि भवति निरये प्रतिषेधकः ॥”
इति वह्निपुराणे वामनप्रादुर्भावो नामाध्यायः ॥

**याचितं**, क्ली, (याच् + क्तः ।) याचनवृत्तिः । तत्पर्य्यायः । मृतम् २ । यथा, --
“द्वे याचितायाचितयोर्य्यथासंख्यं मृतामृते ॥”
इत्यमरः । २ । ७ । ३२ ॥
“द्वे । याचनवृत्तिर्म्मरणमिव दुःखजनकत्वात्
मृतम् । अयाचितं अमृतमिव अमृतम् ।
याचितायाचितयोमविकर्म्मणि वा क्तः ।” इति
भरतः ॥ प्रार्थितवस्तुनि, त्रि ॥ (यथा, देवी-
भागवते । ३ । २८ । ६७ ।
“पिता ते याचितः पूर्ब्बं मया वै त्वत्कृते-

ऋत्विजो याचकाश्च कथ्यन्ते । अग्निं इन्धयन्ति दीपयन्ति अग्नीध्राः इन्धी ञि ध ङ द्युतौ ञिः नाम्नीति रः मनीषादित्वान्नलोपः । आदिना ब्रह्मोद्गातृहोत्रध्वर्य्युब्राह्मणाच्छंसिप्रभृतयः षो-डश गृह्यन्ते । वार्य्या इति हसृय्वासोरिति घ्यण् दृभृजुषेत्यादौ वृ ञ इति ञानुबन्धनिर्द्देशात् अन्यवृधातोर्न क्यप् ऋतौ यजन्ति ऋत्विजः क्विप् । यजन्ति याचकाः णकः ।” इति भरतः ॥ * ॥ बहुयाजकग्रामयाजकयोर्न्निन्दा यथा, --
“अब्राह्मणास्तु षट् प्रोक्ता ऋषिभिस्तत्त्वदर्शिभिः ।
आद्यो राजभृतस्तेषां द्बितीयः क्रयविक्रयी ॥
तृतीयो बहुयाज्यः स्याच्चतुर्थो ग्रामयाजकः ।
पञ्चमस्तु भृतस्तेषां ग्रामस्य नगरस्य च ॥
अनादित्वाञ्च यः पूर्ब्बां सादित्याञ्चैव पश्चि-माम् ।

कृपापरः चतुर्धा व्यस्य ऋग्यजुःसामाथर्व्वाख्यां-श्चतुरो वेदान् पैलवैशम्पायनजैमिनिसुमन्तुभ्यः क्रमादुपदिदेश ते च स्वशिष्येभ्यः । तत्र व्यास-शिष्यो वैशम्पायनो याज्ञवल्क्यादिभ्यः स्वशि-ष्येभ्यो यजुर्व्वेदमध्यापयत् । तत्र दैवात् केनापि हेतुना क्रुद्धो गुरुः शिष्यं याज्ञवल्क्यं अधीतवेद-परित्यागार्थमादिष्टवान् । याज्ञवल्क्योऽपि योग-बलेन अधीतयजुर्व्विद्यां मूर्त्तिमतीं विधायोद्व-वाम । वान्तानि यजूंषि गृह्णीतेति गुरूक्ता अन्ये शिष्यास्तित्तिरयो भूत्वा यजूंष्यभक्षयन् । तान्येव यजूंषि बुद्धिमालिन्यात् कृष्णानि जातानि । ततो वेदहीनोऽतिदुःखितो याज्ञ-वल्क्यः सूर्य्यमाराध्य शुक्लानि यजूंषि प्राप्तवान् तानि च जाबालगौधेयकाण्वमाध्यन्दिनादीन् पञ्चदशशिष्यानध्यापयामास। तथाहि भागवते द्वादशस्कन्धे ६ अध्याये ।
“तेनासौ चतुरो वेदांश्चतुर्भिर्व्वदनैर्व्विभुः ।
सव्याहृतिकान् सोङ्कारांश्चातुर्होत्रविवक्षया॥
पुत्त्रानध्यापयत् तांस्तु ब्रह्मर्षीन् ब्रह्मकोविदान् ।
ते तु धर्म्मोपदेष्टारः स्वपुत्त्रेभ्यः समादिशन् ॥
ते परम्परया प्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः ।

चतुर्युगेष्वथ व्यस्ता द्वापरादौ महर्षिभिः ॥
क्षीणायुषः क्षीणसत्त्वान्दुर्म्मेधान् वीक्ष्य कालतः ।
वेदान् ब्रह्मर्षयो व्यस्यन् हृदिस्थाच्युतचोदिताः ॥
अस्मिन्नप्यन्तरे ब्रह्मन् भगवान् लोकभावनः ।
ब्रह्मेशाद्यैर्लोकपालैर्याचियो धर्म्मगुप्तये ॥
पराशरात् सत्यवत्यामंशांशकलया विभुः ।
अवतीर्णो महाभाग वेदं चक्रे चतुर्व्विधम् ॥
ऋगथर्व्वयजुःसाम्नां राशीनुद्धृत्य वर्गशः ।
चतस्रः संहिताश्चक्रे मन्त्रैर्मणिगणा इव ॥
तासां स चतुरः शिष्यानुपाहूय महामतिः ।
एकैकां संहितां ब्रह्मन्नेकैकस्मै ददौ विभुः ॥
पैलाय संहितामाद्यां बह्वृचाख्यामुवाच ह ।
वैशम्पायनसंज्ञाय निगदाख्यं यजुर्गणम् ॥
साम्नां जैमिनये प्राह तथा छन्दोगसंहिताम् ।
अथर्व्वाङ्गिरसीं नाम स्वशिष्याय सुमन्तवे ॥"
"वैशम्पायनशिष्या वै चरकाध्वर्य्यवोऽभवन् ।
यच्चेरुर्ब्रह्महत्यांहःक्षपणं स्वगुरोर्व्रतम् ॥
याज्ञवल्क्यश्च तच्छिष्य आहाहो भगवन्
कियत् ।
चरितेनाल्पसाराणां चरिष्येऽहं सुदुश्चरम् ॥
इत्युक्तो गुरुरप्याह कुपितो याह्यलं त्वया ।
विप्रावमन्त्रा शिष्येण मदधीतं त्यजाश्विति ॥
देवरातसुतः सोऽपि च्छर्द्दित्वा यजुषां गणम् ।
ततो गतोऽथ मुनयो ददृशुस्तान् यजुर्गणान् ॥
यजूंषि तित्तिरा भूत्वा तल्लोलुपतयाददुः ।
तैत्तिरीया इति यजुःशाखा आसन् सुपेशलाः ॥
याज्ञवल्क्यस्ततो ब्रह्मंश्छन्दांस्यधि गवेषयन् ।
गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम् ॥"
"एवं स्तुतः स भगवान् वाजिरूपधरो रविः ।
यजूंष्ययातयामानि मुनयेऽदात् प्रसादितः ॥
यजुर्भिरकरोच्छाखा दश पञ्च शतैर्विभुः ।
जगृहुर्वाजसन्यस्ताः काण्वमाध्यन्दिनादयः ॥"
अयमेव महर्षिर्मिथिलास्थ एव सामश्रवःप्रभृ-
तिभिः ऋषिभिर्वर्णाश्रमेतरधर्म्मज्ञानार्थमादिष्ट
आचारव्यवहारप्रायश्चित्ताख्यकाण्डत्रयात्मकं
धर्म्मशास्त्रं प्रणीय तेभ्यः श्रावितवान् । यदुक्तं
याज्ञवल्क्यसंहितायां ग्रन्थारम्भे ।
"योगीश्वरं याज्ञवल्क्यं संपूज्य मुनयोऽब्रुवन् ।
वर्णाश्रमेतराणां नो ब्रूहि धर्म्मानशेषतः ।
मिथिलास्थः स योगीन्द्रः क्षणं ध्यात्वाब्रवीन्-

इति शब्दरत्नावली ॥ (यथा,
भागवते । ११ ।
१० । २३ ।
"इष्ट्वेह देवता यज्ञैः स्वर्लोकं याति
याज्ञिकः ॥")
रक्तखदिरः । पलाशः । अश्वत्थः ।
इति राज-
निर्घण्टः ॥

**याज्ञिक्यं**, क्ली, (याज्ञिकानां धर्म्म आम्नायो वा ।

याज्ञिक +
"छन्दोगौक्थिकयाज्ञिकबह्वृच नटा-
ञ्ज्यः ।" ४ । ३ । १२९ । इति
ञ्यः ।) यज्ञः ।
इति सिद्धान्तकौमुदी ॥

**याज्यं**, क्ली, (इज्यत इति । यज् + ण्यत् । "यज-

याचरुचप्रवचर्चश्च ।" ७ । ३ ।
६६ । इति कुत्व-
निषेधः ।) यागलब्धधनादि । इति
सिद्धान्त-
कौमुदी ॥ यजनीये, त्रि ॥ (यथा,
मनौ । ८ । ३१७ ।
"अन्नादेर्भ्रूणहा मार्ष्टि पत्यौ
भार्य्यापचारिणी ।
गुरौ शिष्यश्च याज्यश्च स्तेनो
राजनि किल्वि-
षात् ॥"
शिष्यः । शासनार्हः । यथा,
देवीभागवते । १ ।
१८ । ९ ।
"याज्योऽस्ति जनकस्तत्र
जीवन्मुक्तो नराधिपः ।
विदेहो लोकविदितः पाति
राज्यमकण्टकम् ॥")

**याज्या**, स्त्री, (यजन्त्यनया । यज् + ण्यत् + टाप् ।)

ऋक् । इति मुग्धबोधव्याकरणम् ॥
(गङ्गा ।

परिभुक्तम् । इत्यमरः । ३ । ३ । १४५ ॥
उज्झि-
तम् । इति मेदिनी । मे, ६२ ॥ (प्राप्तशैत्या-
वस्थम् । यथा, गीतायाम् । १७ । १० ।
"यातयामं गतरसं पूतिपर्य्युषितञ्च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥"
गतरसः । यथा, ताण्ड्यमहाब्राह्मणे । ४ । ३ ।
१३ ।
"ब्रह्मवादिनो वदन्ति यातयामाः संवत्मरा
अयातयामा इति ते नायातयामेति वक्तव्यम् ।"
"यातयामः गतरसः ।" इति सायणः ॥)

**याता**, [ऋ] स्त्री, (यततेऽन्योन्यभेदायेति । यत् +

"तृन् ।" उणा० २ । ९८ । इति तृन् ।)
पतिभ्रातृपत्नी । इत्यमरः । १ । ६ । ३० ॥ या
इति भाषा । (यथा, साहित्यदर्पणे । ३ । ७८ ।
"स्वामी निश्वसितेऽप्यसूयति मनो जिघ्रः
सपत्नीजनः
श्वश्रूरिङ्गितदैवतं नयनयोरीहालिहो यातरः ॥"
या + तृच् । गमनकर्त्तरि, त्रि ॥ (यथा, बृहत्-
संहितायाम् । ३३ । १३ ।
"उल्का शुभदा पुरतो दिवाकरविनिःसृता यातुः
॥"
सारथ्यादिः । यथा, मनौ । ८ । २९० ।
"यानस्य चैव यातुश्च यानस्वामिन एव च ।
दशातिवर्त्तनान्याहुः शेषे दण्डो विधीयते ॥"
"यातुः सारथ्यादेः ।" इति कुल्लूकः ॥ हन्ता ।
यथा, ऋग्वेदे । १ । ३२ । १४ ।
"अहेर्यातारं कमपश्य इन्द्र ।"
"यातारं हन्तारम् ।" इति तद्भाष्ये सायणः ॥)

**यातायातं**, क्ली, गमनागमनम् । यथा, --

"पृष्ठे भ्राम्यदमन्दमन्दरगिरिग्रावाग्रकण्डूयनान्
निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः
पान्तु वः ।
यत्संस्कारकलानुवर्त्तनवशाद्वेलानिभेनाम्भसां
यातायातमतन्द्रितं जलनिधेर्नाद्यापि विश्रा-
म्यति ॥"
इति श्रीभागवते १२ स्कन्धे १३ अध्यायः ॥

**यातिकः**, पुं, (यातं गमनं प्राशस्त्येनास्त्यस्येति ।

मुनीन् ॥”)

क्ली, उपनिषत्विशेषः । यथा, मुक्तिकोपनिषदि ।
“गोपालतापनं कृष्णं याज्ञवल्क्यं वराहकम् ॥”)

**याज्ञसेनी**, स्त्री, यज्ञसेनस्य स्त्र्यपत्यम् ॥ (यज्ञ-

सेन् + अण् । ङीप् ।) सा च द्रौपदी । इति हेम-
चन्द्रः । ३ । ३७५ ॥ (यथा, महाभारते । ४ ।
४ । ५६ ।
“याज्ञसेनीं पुरस्कृत्य षडेवाथ प्रवव्रजुः ॥”
अस्या विवरणं द्रौपदीशब्दे द्रष्टव्यम् ॥)

**याज्ञिकः**, पुं, (यज्ञमर्हति यज्ञाय हितो वा ।

यज्ञ + ठक् ।) दर्भमेदः ॥ (यज्ञं यज्ञविद्यामधीते
वेद वा । वज्ञ + ठक् ।) याजकः । यज्ञकर्त्ता ।

यथा, काशीखण्डे
सहस्रनामकीर्त्तने । २९ । १४२ ।
“योगसिद्धिप्रदा याज्या
यज्ञेशपरिपूजिता ॥”)

**यात्**, व्य, आख्यातप्रत्ययविशेषः । स च विधिलिङा-

शीर्लिङः
परस्मैपदप्रथमपुरुषैकवचनम् । स
तु
विध्याद्यर्थक आशीर्व्वादार्थकश्च ।
इति व्याक
रणम् ॥ मुग्धबोधमते विध्याद्यर्थे
अस्य स्वीसंज्ञा ।
आशीरर्थे ढीसंज्ञा ॥

**यातं**, क्ली, (या + क्तः ।) निषादिनां पादकर्म्म ।

इति हेमचन्द्रः । ४ । १९७ ॥
पुस्तकान्तरे यत-
मिति पाठः । यथा, --
“अपष्टन्त्वङ्कुशस्याग्रं
घातमङ्कुशवारणम् ।
निषादिनां पादकर्म्म या(य)तं
वीतन्तु तद्द्वयम् ॥”

**यातः** त्रि, गतः । याधातोः क्तप्रत्ययेन निष्पन्नः ॥

(यथा, मनुः । ४ । १७८ ।
“येनास्य पितरो याता येन याताः
पितामहाः ।
तेन यायात् सतां मार्गं तेन गच्छन्
न
रिष्यते ॥”)

**यातना**, स्त्री, (यत् + णिच् + “न्यासश्रन्थो युच् ।”

३ । ३ । १०७ । इति युच् । टाप्
।) गाढवेदना ।
तत्पर्य्यायः । कारणा २ तीव्रवेदना
३ । इत्य-
मरः । २ । ८ । ३ ॥ अतिव्यथा ४
। इति शब्द-
रत्नावली ॥ (यथा, भागवते । ७ ।
१ । ४१ ।

यात + ठन् ।) पान्थः । इति शब्दरत्नावली ॥

**यातु**, क्ली, (सर्व्वेषामन्तं यातीति । या + “कमि-

मनिजनीति ।” उणा० १ । ७३ । इति तुः ।)
राक्षसः । इत्यमरः । १ । १ । ६३ ॥ (यथा, --
“यातु यातुप्रवीराणां प्रणम्य चरणानसौ ॥”
इत्यमरटीकायां रघुनाथचक्रवर्त्ती ॥
(पुंलिङ्गेऽपि दृश्यते । यथा, ऋग्वेदे । ७ । २१ ।
५ ।
“न यातव इन्द्र जूजुवुर्नो न ।”
“यातवो राक्षसाः ।” इति तद्भाष्ये सायणः ॥)

**यातुः**, पुं, (सर्वान्तं याति गच्छतीति । या + “कमि-

मनिजनिगाभायाहिभ्यश्च ।” उणा० १ । ७३ ।
इति तुः ।) कालः । अध्वगः । इति सिद्धान्त-
कौमुद्यामुणादिवृत्तिः ॥ वायुः । इति संक्षिप्त-
सारोणादिवृत्तिः ॥ (स्त्री, यातना । यथा,
ऋग्वेदे । ८ । ४९ । २० ।
“मा नो रक्ष आवेशीदाघृणीवसो मायातुर्यातु
मावताम् ॥”

“हिरण्यकशिपुः पुत्त्रं प्रह्लादं
केशवप्रियम् ।
जिघांसुरकरोन्नानायातना
मृत्युहेतवे ॥”)
नरकरुजा । इति केचिदिति भरतः
॥

**यातयामं**, त्रि, (यातो गतो याम
उपभोगकालो

वीर्य्यं वा यस्य ।) जीर्णम् । (यथा,
भट्टि-
काव्ये । ५ । ३९ ।
“तं भीतङ्कारमाक्रुश्य रावणः
प्रत्यभाषत ।
यातयामं विजितवान् स रामं यदि
किन्ततः ॥”)

"यातुर्यातना पीडा ।" इति सायणः ॥
कर्म्म-
नाशकरी हिंसा । यथा, तत्रैव । ५ । १२
। २ ।
"नाहं यातुं सहसा न द्वयेन ऋतं
शपाम्य-
रुषस्य वृष्णः ।"
"यातुं कर्म्मणां नाशकरीं हिंसाम् ।" इति
तद्भाष्ये सायणः ॥)

**यातु**, त्रि, (यातीति । या + "कमिमनीति ।"
उणा० १ । ७३ । इति तुः ।) गन्ता ।
इत्यु-
णादिकोषः ॥ क्रियापदं चेत् गच्छतु ॥

**यातुघ्नः**, पुं, (यातु हन्तीति । हन् + "अमनुष्य-
कर्त्तृके च ।" ३ । २ । ५३ । इति टक्
।) गुग्-
गुलुः । इति राजनिर्घण्टः ॥

**यातुधानः**, पुं, (यातूनि रक्षांसि दधाति पुष्णा-
तीति । धा + बहुलमन्यत्रापीति युच् ।
स्वजाति-
पोषकत्वात्तथात्वम् ।) राक्षसः ।
इत्यमरः । १ ।
१ । ६३ ॥ (यथा, भट्टिकाव्ये । २ । २९
।
"दक्षिण्यदिष्टां कृतमार्त्विजीनै-
स्तद्यातुधानैश्चिचिते प्रसर्पत् ॥")

**यातृकः**, पुं, (यातैवेति । यातृ + स्वार्थे कन् ।)
पान्थः । इति शब्दरत्नावली ॥

**यात्यं**, त्रि, यतितव्यम् । यतनीयम् । यतधातोः
कर्म्मणि घ्यण्प्रत्ययेन निष्पन्नम् ॥

**यात्रा**, स्त्री, (या + "हुयामाश्रुभसिभ्यस्त्रन् ।"
उणा० ४ । १६७ । इति त्रन् । टाप् ।)
विजिगीषोः प्रयाणम् । तत्पर्य्यायः ।
व्रज्या १
अभिनिर्याणम् ३ प्रस्थानम् ४ गमनम् ५
विशाखा मघा आर्द्रा भरणी कृत्तिका अश्लेषा ।
तत्र नक्षत्रशूलकथनम् । स्वात्यां जेष्ठायाञ्च
पूर्ब्बदिग्गमनं निषिद्धम् । एवं पूर्ब्बभाद्रपदे
अश्विन्याञ्च दक्षिणदिग्गमनं पुष्ये रोहिण्याञ्च
पश्चिमदिग्गमनं उत्तरफल्गुन्यां हस्तायाञ्च
उत्तरदिग्गमनं निषिद्धम् । तत्रानुक्तकरणानि ।
गरं बणिजं विष्टिः । गरमपि कैश्चिच्छस्तं
मन्यते । अत्र उत्तमलग्नानि । सिंहवृषकुम्भ-
कन्यामिथुनानि । तत्र योगिनीनिर्णयः । प्रति-
पदि नवम्याञ्च प्राच्यां योगिनी । तृतीयायां
एकादश्याञ्चाग्निकोणे । पञ्चम्यां त्रयोदश्याञ्च
दक्षिणे । द्वादश्यां चतुर्थ्याञ्च नैरृतकोणे ।
षष्ठ्यां चतुर्द्दश्याञ्च पश्चिमे । सप्तम्यां पूर्णिमा-
याञ्च वायुकोणे । द्वितीयायां दशम्याञ्च उत्तर-
दिशि । अष्टम्याममावास्यायाञ्चईशानकोणे ।
तां दक्षिणे सम्मुखे च कृत्वा न गन्तव्यम् ।
पापयोगत्र्यहस्पर्शमासदग्धादिषु यात्रा न
कर्त्तव्या । वारवेलाकालवेलाकुलिकवेलावृष्टि-
भद्रादिषु च यात्रा न कर्त्तव्या । द्विरागमनदिनं
नववधूशब्दे द्रष्टव्यम् ॥ * ॥ अथ गोयात्राप्रवेश-
विक्रयाः । तत्र तिथयः । अमावस्याष्टमी-
चतुर्द्दशीविष्टिभिन्नाः । तत्र नक्षत्राणि ।
रोहिणी पूर्ब्बफल्गुनी पूर्व्वाषाढा पूर्व्वभाद्रपत्
उत्तरफल्गुनी उत्तराषाढा उत्रभाद्रपत्
श्रवणा भरणी चित्रा एतद्व्यतिरिक्तानि ।
योगाः । व्यतीपातभिन्नाः । वाराः । क्रूर-
भिन्नाः ॥ * ॥ अथ नौकायात्रा । तत्र विहित-
नक्षत्राणि । अश्विनीहस्तापुष्यमृगशिरःपूर्ब्ब-
फल्गुनी-पूर्ब्बाषाढा-पूर्ब्बभाद्रपदनुराधाधनिष्ठा-
श्रवणाः । वाराः शुभग्रहाणाम् । तत्र लग्नं
शोभनम् । तत्र शोभनश्चन्द्रः । तारा च शोभना
विहिता । इति ज्योतिस्तत्त्वम् ॥ * ॥
अथ यात्रायां शुभजनकद्रव्यदर्शनादि यथा, --
"धेनुर्व्वत्सप्रयुक्ता वृषगजतुरगा दक्षिणावर्त्तवह्नि-
र्दिव्यस्त्रीपूर्णकुम्भा द्विजनृपगणिकाः पुष्पमाला
पताका ।
सद्योमांसं घृतं वा दधि मधु रजतं काञ्चनं
शुक्लधान्यं
दृष्ट्वा श्रुत्वा पठित्वा फलमिह लभते मानवो
गन्तुकामः ॥"
वेणुस्त्रीपूर्णकुम्भानां यात्रायां दर्शनं शुभम् ॥"
यात्राकाले अशुभलक्षणं यथा, --
"कार्पासौषधतैलञ्च पङ्काङ्गारभुजङ्गमाः ।
मुक्तकेशो रक्तमाल्यं नग्नाद्यशुभलक्षणम् ॥"
* ॥
यात्राकाले छिक्कायाः फलं यथा, --
"छिक्काया लक्षणं वक्ष्ये लभेत् पूर्ब्बे
महाफलम् ।
आग्नेये शोकसन्तापौ दक्षिणे हानिमाप्नुयात्
॥
नैरृत्ये शोकसन्तापौ मिष्टान्नञ्चैव पश्चिमे ।
अन्नं प्राप्नोति वायव्ये उत्तरे कलहो भवेत् ।
ईशाने मरणं प्रोक्तं प्रोक्तं छिक्काफलाफलम्
॥"
अथ यात्रायां दिग्विशेषे विशेषनक्षत्राणि ।
"कृत्तिकादौ तु पूर्ब्बेण सप्त ऋक्षाणि वै व्रजेत्
।
मघादौ दक्षिणे गच्छेदनुराधादि पश्चिमे ॥
प्रशस्ता चोत्तरे यात्रा धनिष्ठादिषु सप्तसु ।
अश्विनीरेवतीचित्राधनिष्ठाः सदलङ्कृताः ।
मृगाश्विचित्रापुष्याश्चमूलहस्तौ शुभौ सदा
॥"
यात्रादौ लग्नादिषु ग्रहस्थितिफलं यथा, --
"कन्याप्रदाने यात्रायां प्रतिष्ठादिषु कर्म्मसु ।
शुक्रचन्द्रौ च जन्मस्थौ शुभदौ च द्वितीयगौ
॥
शशिज्ञशुक्रजीवाश्चराशौ चाथ तृतीयके ।
भौममन्दशशाङ्कार्का बुधः श्रेष्ठश्चतुर्थके ॥
शुक्रजीवौ पञ्चमौ च श्रेष्ठौ सद्भिरुदाहृतौ ।
मन्दार्केन्दुकुजाः षष्ठे गुरुचन्द्रौ च सप्तमे ॥
शुक्रज्ञावष्टमे श्रेष्ठौ नवमस्थौ गुरुः शुभः ।
अर्कार्किचन्द्रा दशमे एकादशेऽखिला ग्रहाः
॥
बुधोऽथ द्वादशे चैव भार्गवः सुखदो भवेत् ॥"
इति गारुडे ६० । ६१ अध्यायौ ॥ * ॥
अथ राजयात्रा ।
"इदानीं सर्व्वधर्म्मज्ञ धर्म्मशास्त्रविशारद ! ।
यात्राकालविधानं मे कथयस्व महीक्षिताम् ॥
यदा मन्येत नृपतिराक्रन्देन बलीयसा ।

गमः ६ । इत्यमरः । २ । ८ । ९५ ॥
प्रस्थितिः ७
यानम् ८ प्राणनम् ९ । इति
शब्दरत्नावली ॥
यापनम् ॥ (यथा, भागवते । १० । ८६
। १५ ।
"यात्रामात्रं त्वहरहर्दैवादुपनमत्युत ॥")
उत्सवः । इति मेदिनी । रे, ७८ ॥
(यथा, कथा-
सरित्सागरे । १० । ८७ ।
"यात्रामुपवने द्रष्टुं जगाम सखिभिः सह
॥"
व्यवहारः । यथा, गीतायाम् । ३ । ८ ।
"शरीरयात्रापि च ते न
प्रसिद्ध्येदकर्म्मणः ॥"
"शरीरयात्रा देहव्यवहारः ।" इति तत्र
नील-
कण्ठः ॥) उपायः । इति विश्वः ॥ * ॥
अथ यात्रा-
दिनम् । भाद्रपौषचैत्रेतरमासेषु दूरयात्रा
कर्त्तव्या । पूर्ब्बस्यां दिशि
रविशुक्रवारस्य प्राश-
स्त्यम् । दक्षिणस्यां मङ्गलवारस्य
प्राशस्त्यम् ।
पश्चिमायां सोमशनिवारस्य प्राशस्त्यम्
। उत्त-
रस्यां बृहस्पतिवारस्य प्राशस्त्यम् ।
पूर्व्वस्यां
दिशि सोमशनिवारे न गन्तव्यम् ।
दक्षिणस्यां
बृहस्पतिवारे केषाञ्चिन्मते बुधवारे च न
गन्त-
व्यम् । पश्चिमायां रविशुक्रवारे । एवं
उत्तरस्यां
बुधमङ्गलवारे न गन्तव्यम् । द्वितीया
तृतीया
सप्तमी पञ्चमी दशमी एकादशी त्रयोदशी
च
एता यात्रायां प्रशस्ताः ।
अत्रोत्तमनक्षत्राणि ।
अश्विनी अनुराधा रेवती मृगशिरा मूला
पुन-

इति समयप्रदीपः ॥
तत्राशुभजनकदर्शनं यथा, --
"सम्मुखे रजकं पश्चात् क्षुरिणं यदि पश्यति ।
न गन्तव्यं तदा तस्मात् तैलवाप्यग्रगोऽशुभः ॥
अजो लुण्ठति गौः कासी क्षुतं वा कुरुते नरः ।
पश्यन् यात्रा न कर्त्तव्या क्लीवं पश्यति वाग्रतः
॥"
इति ज्योतिराकरः ॥
यात्राकाले विशेषदर्शनफलं यथा, --
"मृगाहिकपिमार्ज्जारश्वानःशूकरपक्षिणः ।
नकुलो मूषिकश्चैव यात्रायां दक्षिणे शुभाः ॥
विप्रकन्या शवो रुद्रशङ्खभेरीवसुन्धराः ।
जम्बुकोष्ट्रखराद्याश्च यात्रायां वामके शुभाः ॥

पार्ष्णिग्राहाभिभूतोऽरिस्तदा यात्रां प्रयोजयेत्
॥
योधान्मत्वा प्रभूतांश्च प्रभूतञ्च बलं मम ।
मूलरक्षासमर्थोऽस्मि तदा यात्रां प्रयोजयेत् ॥
अशुद्धपार्ष्णिर्नृपतिर्न तु यात्रां प्रयोजयेत् ।
पार्ष्णिग्राहाधिकं सैन्यं मूले निःक्षिप्य वा
व्रजेत् ॥
चैत्रं वा मार्गशीर्षं वा यात्रां यायान्नराधिपः ।
चैत्री नश्यति नैदाघं हन्ति पुष्टिञ्च शारदी ॥
एतदेव विपर्य्यस्तं मार्गशीर्षं नराधिपः ।
शत्रोर्व्वा व्यसने यायात् कालः स तु
सुदुर्लभः ॥
दिव्यान्तरीक्षक्षितिजैरुत्पातैः पीड्२इतं
परम् ।
सदृक्षपीडासंतप्तं पीडितञ्च तथा ग्रहैः ॥
ज्वलन्तीव तथैवोल्का दिशं यस्य प्रपद्यते ।
भूकम्पोल्का दिशं यान्ति याञ्च केतुः प्रसूयते
॥
निर्घातश्च पतेद्यत्र तं यायाद्वसुधाधिपः ।
सबलव्यसनोपेतं तथा दुर्भिक्षपीडितम् ॥
सम्भूतान्तरकोपञ्च क्षिप्रं यायादरिं नृपः ।
यूकमाक्षीकबहुलं बहुपङ्कं तथाविलम् ॥
नास्तिकं भिन्नमर्य्यादं तथामङ्गलवादिनम् ।
अपेतप्रकृतिञ्चैव निरापञ्च तथा जयेत् ॥
विद्विष्टनायकां सेनां तथा भिन्नां परस्परम् ।
व्यसनासक्तनृपतिं बलं राजाभियोजयेत् ॥

| | | |
|---|---|---|
| र्व्वसु पुष्या हस्ता ज्येष्ठा ।<br>मध्यमनक्षत्राणि ।<br>रोहिणी पूर्ब्बात्रयं चित्रा स्वाती शतभिषा श्रवणा धनिष्ठा । अधमनक्षत्राणि ।<br>उत्तरात्रयं | | |

सैनिकानामशस्त्राणि स्फूरन्त्यङ्गानि यत्र च ।
दुःस्वप्नान्यपि पश्यन्ति बलन्तदभियोजयेत् ॥
उत्साहबलसम्पन्नश्चानुरक्तबलस्तथा।
तुष्टपुष्टबलो राजा परानभिमुखो व्रजेत् ॥
शरीरस्फुरणे धन्ये तथा दुःस्वप्ननाशने ।
निमित्ते सङ्कुले धन्ये जाते शत्रुपुरं व्रजेत् ॥
ऋक्षेषु षट्सु शुद्धेषु ग्रहेष्वनुगुणेषु च ।
प्रश्नकाले शुभे जाते परान् यायान्नराधिपः ॥
एवन्तु दैवसम्पन्नस्तथा पौरुषसंयुतः ।
देशकालोपपन्नान्तु यात्रां यायान्नराधिपः ॥
उलूकस्य निशि ध्वाङ्कः स च तस्य दिवा वशे ।
एवं देशञ्च कालञ्च ज्ञात्वा यात्रां प्रयोजयेत् ॥
पदातिनागबहुलां सेनां प्रावृषि योजयेत् ।
हेमन्ते शिशिरे चैव रथवाजिसमाकुलाम् ॥
खरोष्ट्रबहुलां सेनां तथा ग्रीपे नराधिपः ।
चतुरङ्गबलोपेतां वसन्ते वा शरद्यथ ॥
सेना पदातिबहुला यस्य स्यात् पृथिवीपतेः ।
अभियोज्यो भवेत्तेन शत्रुर्विषयमाश्रितः ॥
गम्ये वृक्षावृते देशे स्थितं शत्रुं तथैव च ।
किञ्चित्पङ्के तथा यायाद्बहुनागो नराधिपः ॥
रथाश्वबहुलो यायात् शत्रुं समपथाश्रितम् ।
तदाश्रयन्तो बहुलास्तथा राजाभिपूजयेत् ॥
खरोष्ट्रबहुलो राजा शत्रुं बन्धनसंस्थितम् ।
बन्धनस्थोऽपि योज्योऽरिस्तदा प्रावृषि भूभुजा ॥
हिमपातयुते देशे स्थितं ग्रीष्मेऽभियोजयेत् ।
शरद्वसन्तौ धर्म्मज्ञ कालौ साधारणौ स्मृतौ ॥
विज्ञाय राजा द्विजदेशकालौ
दैवं त्रिकालञ्च तथैव बुद्ध्वा ।
प्रायात् परं कालविदां मतेन
सञ्चिन्त्य सार्द्धं द्विजमन्त्रविद्भिः ॥"
इति मात्स्ये २१४ अध्यायः ॥ * ॥
यात्राकाले माङ्गल्यद्रव्याणि यथा, --
"पौर्व्वापर्य्यं स्ववृत्तान्तं तानुक्त्वा च शुभक्षणे ।
तैरेव सार्द्धं बलवान् बभूव गमनोन्मुखः ॥
ददर्श मङ्गलं रामः शुश्राव जयसूचकम् ।
बुबुधे मनसा सर्व्वं विजयं वैरिसंक्षयम् ॥
यात्राकाले च पुरतः शुश्राव सहसा मुनिः ।
हरिशब्दं शङ्खरवं घण्टादुन्दुभिवादनम् ॥
आकाशवाणीं सङ्गीतां जयस्ते भवितेति च ।
माणिक्यं रजतं मुक्तां मणीन्द्रञ्च प्रबालकम् ।
दधि लाजं शुक्लधान्यं शुक्लपुष्पञ्च कुङ्कुमम् ॥
शुक्लच्छत्रं पताकाञ्च दर्पणं श्वेतचामरम् ।
धेनुं वत्सप्रयुक्ताञ्च रथस्थं भूमिपं तथा ॥
दुग्धञ्च रोचनामाज्यममृतं पायसं तथा ।
शालग्रामं पक्वफलं स्वस्तिकं शर्करां मधु ॥
मार्ज्जारञ्च वृषेन्द्रञ्च मेघपर्व्वतमूषिकम् ।
मेघाच्छन्नस्य च रवेरुदयं चन्द्रमण्डलम् ॥
कस्तूरीं कज्जलं तोयं हरिद्रां तीर्थमृत्तिकाम् ।
सिद्धार्थं सर्षपं दूर्व्वां विप्रबालञ्च बालिकाम् ॥
मृगं वेश्याञ्च भ्रमरं कर्पूरं पीतवाससम् ।
गोमूत्रं गोपुरीषञ्च गोधूलिं गोपदाङ्कितम् ॥
गोष्ठं गवां वर्त्म रम्यं गोशालं गोरतिं शुभाम् ।
भूषणं देवप्रतिमां ज्वलदग्निं महोत्सवम् ॥
ताम्रं स्फटिकं रैत्यञ्च सिन्दूरं माल्यचन्दनम् ।
गन्धञ्च हीरकं रत्नं ददर्श दक्षिणे शुभम् ॥
सुगन्धि वायोराघ्राणं प्राप विप्राशिषं शुभम् ।
इत्येवं मङ्गलं ज्ञात्वा प्रययौ स मुदान्वितः ॥"
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ३३ अध्यायः ॥ * ॥
यात्राकाले अमङ्गलसूचकानि यथा, --
"राजा जगाम समरं हृदयेन विदूयता ।
व्रतोपवासहीनञ्च दीक्षाहीनं नपुंसकम् ।
गलितव्याधिगात्रञ्च गुरुलङ्घनमेव च ॥
पुक्कसं छिन्नलिङ्गञ्च सुरामत्तं सुरां तथा ।
क्षिप्तं वमन्तं रुधिरं महिषं गर्द्दभं तथा ॥
मूत्रं पुरीषं श्लेष्माणं कन्थिनं नृकपालिनम् ।
झञ्झावातं रक्तवृष्टिं वाद्यञ्च नृपघातकम् ॥
वृद्धञ्च शूकरं गृध्रं श्येनं कङ्कञ्च भल्लुकम् ।
पाशञ्च शुष्ककाष्ठञ्च वायसं गन्धकं तथा ॥
अग्रदानिब्राह्मणञ्च तन्त्रमन्त्रोपजीविनम् ।
वैद्यञ्च रक्तपुष्पञ्चैवौषधन्तुषमेव च ॥
कुवार्त्तां मृतवार्त्ताञ्च विप्रशापञ्च दारुणम् ।
दुर्गन्धवातं दुःशब्दं राजा संप्राप वर्त्मनि ॥
मनश्च कुत्सितं प्राणाः क्षुभिताश्च निरन्तरम् ।
वामाङ्गस्पन्दनं देहजाड्यं राज्ञो बभूव ह ॥"
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ३५ अध्यायः ॥
श्रीकृष्णस्य मथुरायात्रा यथा, --
"राधिकायाञ्च सुप्तायां सुप्तासु गोपिकासु च ।
पुष्पचन्दनतल्पे च वायुना सुरभीकृते ॥
तृतीयप्रहरेऽतीते निशायाश्च शुभक्षणे ।
शुभचन्द्रक्षयोगे चामृतयोगसमन्विते ॥
सौम्यस्वामियुते लग्ने सौम्यग्रहविलोकने ।
पापग्रहसमासक्तदृष्टिदोषादिवर्ज्जिते ॥
यशोदां बोधयामास कारयामास मङ्गलम् ।
बन्धूनाश्वासयामास समुत्थाय हरिः स्वयम् ॥
वाद्यं निषेधयामास राधिकाभयभीतवत् ।
स्वतन्त्रो विश्वकर्त्ता च पाता भर्त्ता स्वतन्त्रवत् ॥
प्रक्षाल्य पादयुगलं धृत्वा धौते च वाससी ।
उवास संस्कृते स्थाने विलिप्ते चन्दनादिना ॥
फलपल्लवसंयुक्तं संस्कृतं चन्दनादिभिः ।
वामे कृत्वा पूर्णकुम्भं वह्निं विप्रं स्वदक्षिणे ।
पतिपुत्त्रवतीं दीपं दर्पणं पुरतस्तथा ॥
दूर्व्वाकाण्डञ्च सुस्निग्धं पुष्पं धान्यं सितं शुभम् ।
गुरुदत्तं गृहीत्वा च प्रददौ मस्तकोपरि ॥
घृतं ददर्श माध्वीकं रजतं काञ्चनं दधि ।
चन्दनं लेपनं कृत्वा पुष्पमालां गले ददौ ॥
गुरुवर्गं ब्राह्मणश्च वन्दयामास भक्तितः ।
शङ्खध्वनिं वेदपाठं सङ्गीतं मङ्गलाष्टकम् ॥
विप्राशीर्व्वचनं रम्यं शुश्राव परमादरम् ।

नरोक्तं तञ्च कल्याणं मेघशब्दं जयावहम् ॥
चकार यात्रां भगवान् श्रुत्वेत्येवंविधं शुभम् ।
ददर्श पुरतो विप्रवन्दिदैवज्ञभिक्षुकान् ॥
जलत्प्रदीपं विभ्रन्तीं पतिपुत्त्रवतीं सतीम् ।
पुरो ददर्श स्मेरास्यां नानाभूषणभूषिताम् ॥
शिवं शिवां पूर्णकुम्भं चासञ्च नकुलन्तथा ।
गच्छन् ददर्श रामेशो यात्रामङ्गलसूचकम् ॥
कृष्णसारं गजं सिंहं तुरगं गण्डकं द्विपम् ।
चमरीं राजहंसञ्च चक्रवाकं शुकं पिकम् ॥
मयूरं खञ्जनञ्चैव शङ्खचिल्लञ्चकोरकम् ।
पारावतं वलाकाञ्च कारण्डं चातकं चटम् ॥
सौदामिनीं शक्रचापं सूर्य्यं सूर्य्यसभां शुभाम् ।
सद्योमांसं सजीवञ्च मत्स्यं शङ्खं सुवर्णकम् ॥

सार्द्धं सैन्यसमूहैश्च
वाद्यभाण्डैरसंख्यकैः ॥
ददर्शामङ्गलं राजा पुरो वर्त्मनि वर्त्मनि
।
ययौ तथापि समरं न जगाम गृहं पुनः
॥
मुक्तकेशीं छिन्ननासां रुदन्तीञ्च
दिगम्बरीम् ।
कृष्णवस्त्रपरीधानामपरां विधवामपि ॥
मुखदुष्टां योनिदुष्टां व्याधियुक्ताञ्च
कुट्टनीम् ।
पतिपुत्त्रविहीनाञ्च डाकिनीं
पुंश्चलीमहो ॥
कुम्भकारं तैलकारं व्याधं
सर्पोपजीविनम् ।
कुचेलमपि रूक्षाङ्गं नग्नं
काषायवासिनम् ॥
वत्सविक्रयिणञ्चैव कन्याविक्रयिणं
तथा ।
चितां दग्धशवं भस्म निर्व्वाणाङ्गारमेव
च ॥
सर्पक्षतनरं सर्पं गोधाञ्च शशकं विषम् ।
श्राद्धपाकञ्च पिण्डञ्च मोदकञ्च
तिलांस्तथा ॥
देवलं वृषवाहञ्च शूद्रश्राद्धान्नभोजिनम् ।
शूद्रान्नपाचकं शूद्रयाजकं ग्रामयाजकम्
॥
कुशपुत्तलिकाञ्चैव शवदाहनकारिणम् ।
शून्यकुम्भं चूर्णकुम्भं तैलं लवणमस्थि
च ॥
कार्पासं कच्छपं चूर्णं कुक्कुरं
शब्दकारिणम् ।
दक्षिणे च शृगालाञ्च कुर्व्वन्तं भरवं रवम्
॥
कपर्द्दकञ्च क्षौरञ्च छिन्नकेशं नखं मलम्
।
कलहञ्च विलापञ्च विलापकारिणं
जनम् ॥
अमङ्गलं वदन्तञ्च रुदन्तं
शोककारिणम् ।
मिथ्यासाक्षिप्रदातारं चौरञ्च
नरघातिनम् ॥

ध्यात्वा मङ्गलरूपञ्च सर्व्वत्रं मङ्गलप्रदम् ॥
चिक्षेप दक्षिणं पादं सुन्दरं स्वात्मविग्रहम् ।
विधृत्यं नासिकावामभागं मध्यमया विभुः ॥
विसृज्य वायुमिष्टञ्च नासादक्षिणरन्ध्रतः ।
ततो ययौ नन्दनन्दो नन्दस्य प्राङ्गणं वरम् ॥”
इति ब्रह्मवैवर्त्तै श्रीकृष्णजन्मखण्डे ७१
अध्यायः ॥
अथ यात्रायुक्तिः । तत्र समयः ।
“यात्रायां द्विविधः कालो वैकारः सहजस्तथा
।
प्रोक्त आत्ययिके कार्य्ये विकारो नात्र निर्णयः ।
सहजः स्वेच्छया राज्ञां तस्य निर्णय उच्यते ॥
यात्राजसिंहमध्या शनैश्चरबुधोशनसां गृहेषु ।
भानौ कुलीरवृषवृश्चिकगोभिर्दीर्घा
शस्तस्तु देवलमतेऽध्वनि पृष्ठतोऽर्कः ॥
अश्विनी रेवती ज्येष्ठा तथा पुष्यपुनर्वसू ।

| | | |
|---|---|---|
| | पुंश्चलीपतिपुत्रौ च<br>पुंश्चल्योदनभोजिनम्।<br>देवतागुरुविप्राणां वस्तुवित्तापहारिणम्<br>॥<br>दत्तापहारिणं दस्युं हिंसकं सूचकं<br>खलम्।<br>पितृमातृविरक्तञ्च<br>द्विजाश्वत्थविघातिनम्॥<br>सत्यघ्नञ्च कृतघ्नञ्च स्थाप्यापहारिणं<br>जनम्।<br>मित्रद्रुहं मित्रघ्नञ्च क्षतं<br>विश्वासघातिनम्॥<br>गुरुदेवद्विजानाञ्च निन्दकं<br>स्वाङ्गघातकम्।<br>जीवानां घातकञ्चैव स्वाङ्गहीनञ्च<br>निर्दयम्॥ | |

मैत्रं मृगशिरो मुला यात्रायामुत्तमाः स्मृताः ॥
भरणी कृत्तिकाश्लेषा विशाखा चोत्तरात्रयम् ।
मघा पशुपतिश्चैव यात्रायां मरणप्रदाः ॥
पूर्ब्बे कुवेरे दहने निशाटे
यमे जलेशे पवने महेशे ।
त्याज्यं नरस्य प्रतिपत्क्रमेण
युग्मं तिथीनां प्रवदन्ति तज्ज्ञाः ।
स्यात् संमुखे यानमसुक्षयाय
पश्चाद्भवेत् सर्व्वशुभाय पुंसाम् ॥
सूर्य्यः शुक्रः कुजो राहुर्मन्दश्चन्द्रो गुरुर्बुधः ।
अग्रतः शोभना यात्रा पृष्ठतो मरणं ध्रुवम् ॥
पूर्ब्बेणेन्द्रं दक्षिणे यानपादं
रोहिण्ये तच्चार्य्यमाख्याञ्च शूलम् ।
कामं यायात् साम्परायेषु कार्य्ये-
ष्वन्यद्वापि प्रेक्ष्य शूलानि भानि ॥”
तत्र दिक्शूलम् ।
“षष्ठ्यष्टमी चतुर्थी च नवमी द्वादशी तथा ।
चतुर्द्दशी कुहूस्त्याज्या यात्रायामशुभप्रदाः ॥
प्रायो जगुः सहजशत्रुदशाय संस्थाः
पापाः शुभाः सवितृजं परिमुच्य खस्थम् ।
सर्व्वत्रगाः शुभफलं जनयन्ति सौम्या-
स्त्यक्त्वारिसंस्थममरारिगुरुं जिगीषोः ॥
नाकालवर्षविद्युत्स्तनितेष्विष्टं कथञ्चिदपि यानम्
।
आसप्ताहात् दिव्यान्तरीक्षभौमैस्तथोत्पातैः ॥”
तत्र क्रमः ।
“राज्ञां यात्राविधिं वक्ष्ये जिगीषूणां परावनीम् ।
नीराजनाविधिं कृत्वा सैनिकाश्चानयेत्ततः ।
गजानन्यान् मृगानन्यानिति यात्राक्रमो मतः ॥”
तत्र नीराजनाविधिः ।
“वर्षान्तेऽभ्युदिते शुक्रे चन्द्रे पूर्णे शुभक्षणे ।
अश्वनीराजनं कुर्य्यात् यथोक्तमृषिसत्तमैः ॥
उदीचीं प्रस्थिते भानौ संक्रान्त्यां वा शुभे दिने ।
गजनीराजनं कुर्य्यात् महीपालो जिगीर्षिवान् ॥
वृश्चिकस्थे रवौ कुर्य्यात् पत्तिनीराजनाविधिम् ।
नौकानीराजनं कुर्य्यात् दक्षिणाशां प्रतिष्ठति ॥
अन्येषाञ्चैव यानानां विजयादशमीतिथिम् ।
ध्वजादीनाञ्च सर्व्वेषां शक्रोत्थाने नीराजनम् ॥
छत्रस्य नवदण्डस्य तथा सिंहासनस्य च ।
गृहस्य नगरस्यापि महाविषुवसंक्रमे ॥

भव्यं वा सहस्रांशुदिने नीराजयेद्राजा ।
द्वादशवाहै रुचिरैः
साङ्गोपाङ्गैरतोर्द्धतश्चोष्ट्रैः ॥
तस्यार्द्धतो व्याघ्रैर्गजशतनीराजनं
सम्भवति ।
छागलशतं वृषभशतं शतञ्च मेषाणाम् ॥
तुरगा दश हृष्टाङ्गा व्याघ्राः पञ्च द्विपश्चैकः
।
भल्लुका हि कुक्कुराश्चैकैकाः
पत्तिलक्षणस्य ॥
नौकाशतकं साङ्गं नवदशकं काञ्चनादिभि-
र्घटितम् ।
बहुशतमपि जन्तूनां नौकानीराजने राज्ञाम्
॥
यद्वा द्विपदं यानं सर्व्वेषामिष्यते तुरगैः ।
सुदशावत्सरवसितैर्योग्याङ्गैर्योग्यवर्णैश्च ॥
अष्टाभिर्धातुभिः
कुर्य्यादस्त्रनीराजनाविधिम् ।
गजाश्वनरनौकाभिर्द्विगुणाभिर्यथोत्तरम् ।
रत्नैर्नानाविधैरस्त्रैर्धातुभिर्वसनैस्तथा ॥
सिंहासनैश्च योग्यैश्व
कुर्य्यान्नीराजनाविधिम्
गृहनीराजनाप्येवं नरस्याथ निगद्यते ॥
श्वभिः खरैः शृगालैश्च
व्याघ्रैरुष्ट्रैस्तथोद्धतैः ।
पुरं नीराजयेद्राजा चिरसम्पत्तिहेतवे ॥
श्वा दशाश्वस्तदर्द्धेन नरश्चैव तदर्द्धतः ।
व्याघ्रादीनां तथैवैकं रत्नं नानाविधन्तथा
॥
अस्त्राणि धातवश्चैव वस्त्राणि च फलानि
च ।
वनजाः स्थलजाश्चैव जलजाश्चैव
जन्तवः ॥
नवग्रहाश्च सूर्य्याद्याः शैलाः सप्त
घटास्तथा ।
योग्यधातुसमुद्भूता नौकाखण्डत्रयन्तथा ॥
निजदेहमितं स्वर्णं रजतं ताम्रमेव वा ।
आत्मनीराजने
दद्याद्यदिच्छेच्चिरसंस्थितिम् ॥
अस्त्रैर्नानाविधैः कुर्य्याद्युवराजनीराजनम् ।

संज्ञायान्यत्र यायाद्वा पार्ष्णिग्राहेण शत्रुणा
॥
रात्रावुलुको विनिहन्ति काकान्
काकोऽप्युलूकान् रजनीव्यपाये ।
इति स्वकालं समुदीक्ष्य यायात्
काले फलन्तीह समीहितानि ॥
प्रबलव्यसनोपेतं दुर्भिक्षादिप्रपीडितम् ।
सम्भूतान्तरकोपेतं न यायात्
पृथिवीपतिः ॥
निजदैवानुकूल्ये हि प्रातिकूल्ये परस्य च
।
यायाद्भूपो यतो दैवं बलमेतत् परं मतम्
॥”
अन्यत्र तु ।
“निरातङ्के निरुत्पाते निरुद्विग्ने निरामये ।
विपक्षे जयमिच्छन्ति राजानो
विजिगीषवः ॥”
इति युक्तिकल्पतरुः ॥
युद्धयात्रायाममङ्गलदर्शनं यथा, --
“तस्य निर्गच्छतो गेहात् श्वानोऽस्थि
मुखतो-
ऽभवत् ।
ध्वजे रुरोह कापोतः शिवा श्यामा च
दक्षिणा ॥
पिङ्गला चञ्चुगोधा च शूकरी केवली तथा
।
गजवानरसेनाजशिखिच्छिक्काश्च
वामतः ॥
पथं विभिन्दते सर्पः कुम्भोदकं
व्यशीर्य्यत ।
रुराव वानरो ऋक्षो मार्जारो ह्यतिभैरवम्
॥
तैलतक्रतृणकेशयुक्ताभ्यक्तादिदर्शनम् ।
वान्तोन्मत्तजडमूकक्षुत्क्षामनक्रंजरवम् ॥
तुषकार्पासलवणानां निन्दितानाञ्च
दर्शनम् ।
रक्ताम्बरधरो मुण्डः पङ्कामिषं तथा वसा
॥
ललाटं शक्रजश्चाप
उल्कापातध्वजारुणाः ।

आत्मनो युवराजस्य महिष्या मन्त्रिणान्तथा ।
स्वजन्मदिवसे राजा कुर्य्यान्नीराजनाविधिम् ॥
अभिषेकदिनं प्रोक्तमेषां जन्मदिनं मया ॥”
तद्यथा, --
“अश्वानां भास्करो देवो रेवन्तमिति संज्ञया ।
गजानां देवता शक्रः पत्तीनां कालिका मता ॥
नौकानां वरुणो देवो यानानान्तु जयन्तकः ।
अस्त्राणां देवता रामो यमः खड्गस्य पूज्यते ॥
ध्वजानां हनुमान् पूज्यो बृहस्पतिरिति क्रमात् ।
तान् पूजयित्वा विधिवदेतान्नीराजयेन्नृपः ॥
द्वादशमहिषैःपुष्टैश्चामरघण्टास्वनादिभूषाढ्यैः।
छागलैर्म्महिषद्विगुणैः पुरुषैस्तद्द्विगुणैश्चारुदीपि-
काभिः ॥

अलङ्कारैश्च विविधैर्द्देवीनीराजनं मतम् ॥
मन्त्रिनीराजनं राजा हयेनैव समाचरेत् ॥
अमात्यानां सैनिकानां विप्राणां
धनिनान्तथा ।
वस्त्रैर्नीराजनं कुर्य्यादिति भोजस्य
सम्मतम् ॥
नीराजनाया वस्तूनि न पश्येन्न पुनः
स्पृशेत् ।
सप्तकृत्वः परिभ्राम्य
कुर्य्यान्नीराजनाविधिम् ॥
न्यसेद्वा परराष्ट्रेषु गहने वा जलेऽपि वा ।
दैवज्ञवैद्यदीनेभ्यः प्रयच्छेद्वा यथायथम् ॥
इति संक्षेपतः प्रोक्तो मया नीराजनाविधिः
।
अनेन विधिना राजा सुचिरं सुखमश्नुते ॥”
तथा हि गर्गः ।
“नीराजना महीन्द्राणां निहन्ति
विपदोऽखिलाः ।
सैव सन्नहनं राज्ञां कञ्चुकेनेव संयतः ॥
नीराजनावन्दितानां न भयं विद्यते क्वचित्
।
नीराजनाविहीनानां नश्येयुः सर्व्वसम्पदः
॥”
तथा च वात्स्यः ।
“ये भूमिपालाः प्रतिवत्सरान्त
कुर्व्वन्ति नीराजनकर्म्म सम्यक् ।
तेषां न लक्ष्मीः क्षयतामुपैति
साम्राज्यलक्ष्मीः करगैव तेषाम् ॥
एवं नीराजनं कृत्वा राजा प्रस्थानमाचरेत्
॥”
इति नीराजनाविधिः ॥ * ॥
अथ यात्रा ।
“गुणातिशयसम्पन्नः शत्रुं यायाज्जिगीषया
।
यदि पश्चात् प्रकोपो न यदि राष्ट्रे न
कण्टकाः ॥

दिशां दाहमहीकम्पाः सरजः कलुषं नभः
॥
निस्तेजस्तेपते भानुर्नद्यः प्रतिमुखावहाः
।
उष्णोदकं महाकूपं दरणं दीर्घिकासु च ॥
अकालविकृतिः पुष्पफलानामन्वभूत्तदा
।
शीत उष्णविपर्य्यासा मेघनादाश्च
दारुणाः ॥
आरण्यसत्त्वा ग्रामेषु ग्रामजारण्यवासिनः
।
क्रोष्टृसर्पसमूहाश्च शशश्वानः
पिपीलिकाः ॥
ऋक्षाणां महती सेना मृगाणाञ्च तथैव च ।
एते च पुरप्राकारे निपतन्त्युत्पतन्ति च ॥
दुर्गन्धः शार्करो वायुर्दीनां योधा हतप्रभाः
।
शकृन्मूत्राश्रुपातानि गजा अश्वाः प्रचक्रिरे
।
ध्वजच्छत्रपताकानां स्फुटनं
दण्डभिन्दनम् ।
कलङ्कमसि चक्रे च हता दुन्दुभिरेव च ॥
ज्यातलाकूटनश्चापि नाराचानाञ्च
कुञ्चता ।
गदानां मुद्गराणाञ्च शीर्णता ह्यनुभिन्दता
॥
शुष्कप्ररोहणञ्चार्कसार्द्रपातस्तथैव च ।
प्रतिमारुदितं स्वेदो मृतकानाञ्च जल्पनम्
॥
गवां रासभमारोहः स्त्रीणाञ्च बह्वपत्यता ।
स्त्रीसूते अविच्छागादि ह्यजावि
शिशुशोभनम् ।
बालानां घातनं युद्धे निस्त्रिंशाः सकलाः
प्रजाः ।
मक्षिकादंशमण्डूकबहुगोनासदर्शनम् ॥
निस्तेजा न वहेद्वह्निः सधूमः स्फुटते
मुहुः ॥
एवंविधान् तथोत्पातान् दृष्टान् घोरेण
वासव ।
पप्रच्छ नारदं सोऽथ किमेतद्विकृतं द्विज !
॥”
इत्याद्ये देव्यवतारे घोरवधाध्यायः ॥

अथ द्वादश यात्रा ।
"प्रणम्य जगतां नाथं
कलिकल्मषनाशनम् ।
द्वादशयात्रातत्त्वानि वक्ति श्रीरघुनन्दनः
॥"
तत्रादौ द्वादशयात्राकालस्य
मुख्योपादेयत्वात्
आदौ स एव निरूप्यते । तद्यथा
स्कन्दपुराणे ।
इन्द्रद्युम्न उवाच ।
"वैशाखादिषु मासेषु यात्रापूजाविधिं
मुने ! ।
श्रोतुमिच्छामि देवेशे यथावद्वक्तुमर्हसि
॥
जैमिनिरुवाच ।
वैशाखादिषु मासेषु देवदेवस्य शार्ङ्गिणः
।
या या द्वादश यात्राः स्युस्ता हि
वक्ष्यामि ते
शृणु ॥
वैशाखे चान्दनी यात्रा ज्यैष्ठे
स्नापन्युदीरिता ।
आषाढे रथयात्रा स्यात् श्रावणे शयनी
तथा ॥
भाद्रे दक्षिणपार्श्वीया आश्विने
वामपार्श्विका ।
उत्थानी कार्त्तिके मासि छादनी
मार्गशीर्षके ॥
पौषे पुष्याभिषेकः स्यान्माघे
शाल्योदनी तथा ।
फाल्गुने दोलयात्रा स्याच्चैत्रे
मदनभञ्जिका ॥
एकैका मुक्तिदा सर्व्वा
धर्म्मकामार्थसाधनाः ॥"
अथ यात्राविधिः । स्कान्दे ।
"वैशाखस्य सिते पक्षे
तृतीयाक्षयसंज्ञिता
तत्र मां लेपयेद्गन्धलेपनैरतिशोभनैः ॥
वैशाखस्यामले पक्षे तृतीया पापनाशिनी
।

न ते भवाब्धौ मज्जन्ति यात्रायां
यतमानसाः ।
ज्यैष्ठे च स्नपनं कुर्य्यात्
श्रीविष्णोर्जन्मवासरे ॥
दैनन्दिनन्तु दुरितं पक्षमासर्त्तुवर्षजम् ।
ब्रह्महत्यासहस्राणि ज्ञानाज्ञानकृतानि च ॥
स्वर्णस्तेयसुरापानगुरुतल्पयुतानि च ।
कोटिकोटिसहस्राणि क्षुद्रपापानि यानि च ॥
सर्व्वाण्येव प्रणश्यति पौर्णमास्यान्तु वासरे
।
पुरुषसूक्तमन्त्रेण पावमान्या तथैव च ॥
नारिकेलोदकेनाथ तथा तालफलाम्बुना ।
पञ्चामृतैः शीततोयैर्द्दूर्व्वाकर्पूरवासितैः ॥
यवोदकेन शुद्धेन तथा पुष्पोदकेन च ।
स्नापयित्वा जगन्नाथं पूजयेत् परमेश्वरम् ॥
ॐ घं घण्टायै नमः इति घण्टावाद्यं
निवेदयेत् ।
य एवं कुरुते विद्वान् ब्राह्मणः क्षत्त्रियः
शुचिः ।
सर्व्वपापैः प्रमुच्येत विष्णुलोकं स गच्छति
।
चतुर्द्दश्यां दृढं मञ्चं कारयित्वा सुशोभनम् ॥
सुगन्धिधूपसुरभिं चन्दनाम्भःसमुक्षितम् ।
एवं मञ्चं प्रतिष्ठाप्य कलसानधिवासयेत् ॥
सुवासितं जलपूर्णं पावकं कलसं न्यसेत् ।
जयशब्दैश्च स्तुतिभिर्नीयते जगदीश्वरः ॥
जयस्व राम कृष्णेति जयभद्रेति चोदिते ।
नीयते मञ्चदेशन्तु निशीथे ब्राह्मणादिभिः
॥"
अथ रथयात्रा । स्कन्दपुराणे ।
"गुण्डिकाख्यां महायात्रां प्रकुर्व्वीथाः क्षिती-
श्वर ! ।
आषाढस्य सिते पक्षे द्बितीया पुष्यसंयुता ॥
तस्यां रथे समारोप्य रामं मां भद्रया सह ।
यात्रोत्सवं प्रवृत्त्याथ प्रीणयेच्च द्विजान्
बहून् ॥
ऋक्षाभावे तिथौ कार्य्या सदा सा प्रीतये
मम ।
सप्ताहं सरितस्तीरे मम यात्रा भविष्यति ॥

रथयात्रैव यात्राणां मुख्येत्याह प्रजापतिः ॥
महावेदीं व्रजन्तं तं रथस्थं पुरुषोत्तमम् ।
बलभद्रं सुभद्राञ्च दृष्ट्वा मुक्तिर्न चान्यथा ॥
आषाढस्य सिते पक्षे दिने विष्णोः शुभप्रदे ।
प्रतिष्ठाप्य समृद्धेन विधिना पूर्ब्बवद्द्विजाः ॥
रथं नरो हरेः कुर्य्यात् स्वासनं सुपरिष्कृतम् ।
भूषयेद्विविधैर्भक्त्या वस्त्रालङ्कारमाल्यकैः ॥
मृदङ्गपणबाद्यैश्च भेरीढक्कादयस्तथा ।
नटनर्त्तकमुख्याश्च गायना बहवस्तथा ॥
वेश्या यौवनदर्पाढ्या रूपालङ्कारभूषिताः ।
ध्वजाश्च बहवस्तत्र पताकाधिष्ठितान्तराः ॥
गरुडञ्च ध्वजं कुर्य्यात् रक्तचन्दनमिश्रितम् ।
दीर्घनासं पीतदेहं कुण्डलाभ्यां विभूषितम् ॥
चञ्च्वग्रदष्टभुजगं सर्व्वालङ्कारभूषितम् ।
देव्याः पद्मध्वजं कुर्य्यात् पद्मकाष्ठविनिर्म्मितम् ॥
सप्तच्छदमयं कुर्य्याच्छीरिणो लाङ्गलध्वजम् ।
सारथिं वाजिनञ्चैव बलं बलमुदान्वितम् ॥
हीरकैर्मङ्गलैर्दान्तैर्व्वलिवर्गैः सुशोभनम् ।
इत्थं सुघटितं तन्तु रथं देवत्रयस्य च ॥
अरुणोदयवेलायां देवं तस्मात् प्रपूजयेत् ।
ब्राह्मणैर्व्वैष्णवैः सार्द्धं यतिभिश्च तपस्विभिः ॥
विज्ञापयेद्देवदेवं यात्रायै स कृताञ्जलिः ।
ततः कर्पूरपर्णैश्च सुमनोभिरवाकिरत् ॥
पथि शोभनसूक्तानि प्रपठन्ति द्विजातयः ।
केचिन्मङ्गलगाथाश्च केचिज्जय जयेति च ॥
जितन्तु इति मन्त्रं वै केचित् पुष्पे जपन्ति च ।
सूतमागधमुख्याश्च कीर्त्तिं कार्ष्णीं मुदा जगुः ॥
चर्च्चरीझर्झरीवेणुवीणामाधुरिकादयः ।
शब्दायन्ते सुमधुरं गोविन्दविजयान्तरे ॥
एवं प्रवृत्ते समये कृष्णं रामपुरःसरम् ।
नयन्ति विप्रा भद्राञ्च क्षत्त्रियाश्च विशस्तथा ॥
करे धृत्वा जगन्नाथं भ्रामयित्वा रथत्रयम् ।
रामं भद्राञ्च कृष्णञ्च रथमध्ये निवेशयेत् ॥
पूजयेदुपत्तारैस्तैः श्रद्धाभक्तिसुसंयतः ।
रथच्छायां समाक्रम्य ब्रह्महत्यां व्यपोहति ॥
तद्रेणुसं सक्ततनुस्त्यजेद्वै पापसंहतिम् ।
घनाम्बुवृष्टिसिक्तेन स्वर्गङ्गास्नानजं फलम् ॥
ये प्रणामं प्रकुर्व्वन्ति तेऽपि मोक्षमवाप्नुयुः ।
अनुगच्छन्ति ये कृष्णं ते देवतुल्यविग्रहाः ॥
वेदैः स्तुवन्ति वेदानां वक्तारो मोक्षभागिनः ।

स्वयमाविष्कृता चैषा
प्राजापत्यर्क्षसंयुता ॥
यः पश्यति तृतीयायां कृष्णं
चन्दनभूषितम्
वैशाखस्य सिते पक्षे स
यात्यच्युतमन्दिरम् ॥
वैष्णवा जयशब्दैश्च पूजयित्वा तदा
हरिम् ।
नानासूक्तोपनिषदैर्व्विश्वेशं संस्तुवन्ति
च ॥
वेणुवीणादिवाद्यैश्च तथा नानोपहारकैः
।
सन्तोषयन् जगन्नाथं तृतीयादौ
विलेपयेत् ॥
वैशाखस्य तृतीयायां जलमध्ये
विशेषतः ।
लेपनं मण्डपे कुर्य्यान्मण्डले वा बृहद्वने
॥
चन्दनागुरुह्रीवेरं कुष्ठकुङ्कुमरोचनाः ।
जटामांसी मुरा चैव विष्णोर्गन्धाष्टकं
विदुः ॥
एतैर्गन्धैस्तथान्यैश्च विष्णोर्गात्राणि
लेपयेत् ।
घृतञ्च तुलसीकाष्ठं कुर्य्याल्लेपनकर्म्मणि
॥” १ ॥
अथ स्नानयात्रा । स्कन्दपुराणे ।
“ज्यैष्ठ्यामहञ्चावतीर्णस्तत् पूण्यं
जन्मवासरम् ।
तस्याञ्च स्नापणं कार्य्यं
महास्नानविधानतः ।
तस्यां प्रातःस्नानकाले ब्रह्मणा सहितञ्च
माम् ।
रामं मुभद्रां सुस्नाप्य मम
लोकमवाप्नयात् ॥”
तथा ।
“मासि ज्यैष्ठे तु संप्राप्ते नक्षत्रे शक्रदेवते
।
पौर्णमास्यां हरेः स्नानं
सर्व्वकामफलप्रदम् ॥
सर्व्वतीर्थसमः कूपस्तदास्ते निर्म्मलः
शुचिः ।
तदा भोगवती तत्र प्रत्यक्षं भवति द्विजाः
॥

अष्टमे दिवसे सर्व्वान् रथान्
माल्यैर्व्विभूषयेत् ।
नवम्यामानयेद्देवांस्तेषु प्रीतः समृद्धिदान् ॥
दक्षिणाभिमुखी यात्रा विष्णोरेषा सुदुर्लभा ।
यथा पूर्ब्बा तथा चेयं ते द्वे मुक्तिप्रदायिके ॥
अष्टाहे विसृजेच्छक्रं तदर्द्धेन तु पार्व्वतीम्
॥”
इतिवत् तिथिना एकाहो बोद्धव्यः ।
“तिथिनैकेन दिवसश्चान्द्रमानेन कीर्त्तितः
॥”
इति विष्णुधर्म्मोत्तरात् ॥
यत्तु ।
“आषाढस्य सिते पक्षे भद्रा सा पुष्यसंयुता
।
यात्रोत्सवं प्रकुर्व्वीथास्त्वभावे पुष्य एव हि
॥”
इति ईश्वरसंहितायां वचनान्तरम् ॥
तद्वैकल्पिकप्रयोगान्तरविधायकम्। पाद्मे ।
“आषाढस्य द्वितीयायां रथं कुर्य्याद्विशेषतः
।
आषाढशुक्लैकादश्यां जपहोममहोत्सवम्
॥
नातः परं हि कृष्णस्य यात्रान्तरमपेक्षते ।
अत्र स्वयं त्रिलोकेशः स्यन्दनेन कुतूहलात्
॥
नाशयन् सर्व्वपापानि वर्षे वर्षे व्रजेदसौ ।
रथस्थितं व्रजन्तं तं महावेदीमहोत्सवे ॥
ये पश्यन्ति मुदा भक्त्या वासस्तेषां हरेः
पदे ।
सत्यं सत्यं पुनः सत्यं प्रतिज्ञातं द्विजोत्तमाः
॥
नातः श्रेयःपदो विष्णोरुत्सवः
शास्त्रसम्मतः ।

इतिहासपुराणाद्यैः स्तोत्रैर्व्वापि सुसंस्कृतैः ॥
स्तुवन्ति पुण्डरीकाक्षं ये वै विगतकल्मषाः ।
ते वै जयन्ति पापानि जयशब्दैः स्तुवन्ति ये ॥
नर्त्तनं कुरुते वापि गायन्त्यथ नरोत्तमाः ।
वैष्णवोत्तमसंसर्गान्मुक्तिं प्राप्नोत्यसंशयम् ॥
नामानि कीर्त्तयिष्यन्ति न ते यान्ति यमालयम् ॥
जयस्व रामकृष्णेति जयभद्रेति यो वदेत् ।
न मातृगर्भे वासोऽस्य स च देवत्वमाप्नुयात् ॥
चामरैर्व्यजनैः पुष्पैः स्तवकैश्चीनचेलकैः ।
रथस्याग्रे स्थितो यो वै वीजयेत् पुरुषोत्तमम् ॥
संवीज्यमानोऽप्सरोभिर्व्विगन्धर्व्वयोजितान् ।
भुङ्क्ते तु भोगानखिलान् यावदाहूतसंप्लवम् ॥

| तस्मात् ज्यैष्ठ्यां समुद्धृत्य होमाज्यैः कलसैर्ज्जलैः ।<br>स्नापयन्ति तदा कृष्णं सततं तं हलायुधम् ॥<br>जन्माहनि हरेः स्नानमुत्सवं परमाद्भुतम् ।<br>उत्सवो वै न हीयेत तस्मात्तद्यत्नतश्चरेत् ॥<br>जन्मनां क्षयकारित्वाज्जन्मयात्रा प्रतिष्ठिता ।<br>ज्यैष्ठस्नानं भगवतो ये पश्यन्ति मुदान्विताः ॥ | | |
|---|---|---|

नातः परतरो लोके महावेदीमहोत्सवात् ।
सर्व्वपापहरो योगः सर्व्वतीर्थफलप्रदः ॥
कृष्णमुद्दिश्य ये तत्र दानं ददति वै नराः ।
यत्किञ्चिदक्षयफलं मेरुदानेन संमितम् ॥
गुण्डिकामण्डपे यान्तं भद्राकृष्णं सहाग्रजम्
।
तत्रातपश्रान्तगात्रं दर्पणेष्वभिषेचयेत् ॥
पञ्चामृतैः शीततोयैः पुष्पकर्पूरवासितैः ।
नारिकेलजलेनाथ तथा तालफलाम्बुना ॥
रत्नोदकेन शुद्धेन तथा पुष्पोदकेन च ।
सर्व्वाङ्गमनुलिप्येच्च चन्दनेन्दुमृदुद्रवैः ॥
सुगन्धिमाल्याभरणैश्चीनचेलैः सुशोभनैः ।
चामरैश्च जलाभैश्च शीतलैर्व्यजनैस्तथा ॥
वीजयेत् पुण्डरीकाक्षं सुभद्रां बलमेव च ।
सिताभिः पानकैर्हृद्यैस्तथा खण्डविकारकैः
॥
खर्ज्जुरैर्नारिकेलैश्च नानारम्भाफलादिभिः ।
तथा क्षीरविकारैश्च पनसैरिक्षुभिस्तथा ॥
वासितैः शीततोयैश्च गन्धताम्बूलपत्रकैः ।
सकर्पूरलवङ्गाद्यैः पूजयेत् परमेश्वरम् ॥
रथत्रयस्थितं देवत्रयं ये पुरुषर्षभाः ।
प्रदक्षिणं प्रकुर्व्वन्ति त्रिचतुःसप्त एव च ॥
ततोऽपराह्ने देवेशं दक्षिणानिलवीजितम् ।
शनैः शनैर्नयेद्विष्णुं मञ्चकस्य च मध्यमे ॥
एवं व्रजति देवेशे सूर्य्यश्चास्तं गतोऽभवत् ।
दीपकानां सहस्राणि ज्जालितानि नरैस्ततः
॥
मण्डपे वासयेद्देवान् गुण्डिकाख्ये मनोहरे ।
चारुचन्द्रातपे चारुमाल्यचामरभूषिते ॥
पूजयित्वा जगन्नाथं तोषयेत् गीतनृत्यकैः ।
उपहारादिभिस्तत्र सप्ताहानि जनार्द्दनम् ॥
सप्ताहं ये प्रपश्यन्ति गुण्डिकामण्डपे स्थितम्
।
माञ्च रामं सुभद्राञ्च विष्णुसायुज्यमाप्नुयात्
॥
दिवा तद्दर्शनं पुण्यं रात्रौ दशगुणं भवेत् ।
यत्किञ्चित् कुरुते कर्म्म कोटिकोटिगुणं
भवेत् ॥
सर्व्वं मेरुसमं दानं सर्व्वे व्याससमा द्विजाः ।
महावेद्यां गते कृष्णे योगोऽयं खलु दुर्लभः ॥

पुष्पगन्धयुतां मुक्तारञ्जितां
चन्दनाङ्किताम् ॥
साधुद्वारां शुभां स्निग्धां
नानाचित्रोपशोभिताम् ।
एवं स्वापगृहं कृत्वा निशीथे
स्वापयेद्विभुम् ॥
संपूज्य भावयेदैक्यं तेषां कृष्णादिभिः
सह ।
एह्येहीति च संप्रार्थ्य स्वापार्थं
परमेश्वरम् ॥
नयेच्छय्यागृहद्वारं वासयेत् घटिकात्रयम्
।
पञ्चामृतैः स्नापयेत्तान्
पृथक्पलशताधिकैः ॥
सुगन्धिचन्दनैर्लिप्तान्
वस्त्रालङ्करणादिभिः ।
पूजयित्वा यथान्यायं
प्राञ्जलिर्मन्त्रमुच्चरेत् ॥”
जगद्वन्द्य इत्यादि ।
“सुदृढं कारयेद्द्वारं विष्णोः
शयनवेश्मनः ।
स्वापयित्वा जगन्नाथं लभते सुखमुत्तमम्
॥” ५ ॥
अथ पार्श्वपरिवर्त्तनयात्रा ।
“अथ ते संप्रवक्ष्यामि पार्श्वस्य
परिवर्त्तनम् ।
नभस्यविमले पक्षे संप्राप्ते हरिवासरे ॥
विष्णोः स्वापगृहद्वारं शनैर्गत्वा प्रविश्य
च ।
नमस्कृत्य जगन्नाथं पर्य्यङ्कशयितं मुदा
॥
अवघाट्य शनैर्द्वारं पूजयेदुपचारकैः ।
प्रणम्य भक्त्या तत्पादौ
स्वापयेदुत्तरामुखम् ॥”
मन्त्रञ्चेमं पठेत् ।
“ॐ देवदेव ! जगन्नाथ ! कल्याणं
परिकल्पय ।
परिवृत्तमिदं सर्व्वं यथा स्थावरजङ्गमम्
॥

जयशब्दैस्तथा देवं नयेयुर्नृत्यमण्डपम् ॥
तैलेनाभ्यज्य तोयेन स्नापयेत् पूरुषोत्तमम् ।
पञ्चामृतैर्नारिकेलरसैः फलरसैस्तथा ॥
सुगन्धामलकेनाथ यवकल्केन लेपयेत् ।
घर्षयेत्तुलसीचूर्णैर्लेपयेद्गन्धचन्दनैः ॥
पुष्पवासिततोयैश्च कुशरत्नोदकैस्तथा ।
स्नापयित्वा क्षयेत् पापं बहुजन्मोपपादितम् ॥
महोपचारैः संपूज्य विष्णुं नीराजयेत्ततः ।
कृताञ्जलिपुटो भूत्वा प्रार्थयेत् परया मुदा ॥” ७
॥
अथ प्रावरणयात्रा ।
“मार्गशीर्षे सिते पक्षे कुर्य्यात् प्रावरणोत्सवम् ।
कृत्वा दृष्ट्वा नरो भक्त्या वैष्णवं लोकमाप्नुयात्
॥
वासोऽधिवासं कुर्व्वीत पञ्चम्यां निशि कर्म्म-
वित् ।
प्रभाते मण्डलं कुर्य्यात् पद्ममष्टदलान्वितम् ॥
दिक्पालान् पूजयेद्दिक्षु क्षेत्रपालं गणाधिपम् ।
चण्डप्रचण्डौ च बहिश्चतुर्द्दिक्षु प्रपूजयेत् ॥
तन्मध्ये स्थापयेद्यन्त्रं क्षालयेदुष्णवारिणा ।
पूजयित्वा जगन्नाथं गन्धतैलेन दीपकम् ॥
दत्त्वा कृष्णाय भक्त्या तु गीतवाद्यैर्नयेन्निशाम् ।
प्रातः प्रपूजयेद्देवं नानाद्रव्यैः सुशोभनैः ॥
सप्तभिः सप्तभिर्द्देवान् वासोभिः परिवेष्टयेत् ।
मुखवर्जञ्च सर्व्वाङ्गे शीतप्रावरणैर्द्विजाः ॥
दूर्व्वाक्षतैः प्रपूज्याथ कुर्य्यान्नीराजनां विभोः ।
भगवन्तं समुद्दिश्य ब्राह्मणेभ्यः प्रदापयेत् ॥
गुरुभ्यश्चान्यदेवेभ्यो दीनानाथेभ्य एव च ।
शीतप्रावरणं दद्यात् स्रकृत् परमया मुदा ॥
ददाति भगवान् प्रीतस्तस्मै वरमनुत्तमम् ॥” ८
॥
अथ पुष्यस्नानयात्रा ।
“पुष्यस्नानोत्सवं वक्ष्ये यथोक्तं ब्रह्मणा पुरा ।
पुष्यर्क्षेण च संयुक्ता पौर्णमासी यदा भवेत् ।
पौषे मासि तु तत् कुर्य्यात् पुष्यस्नानोत्सवं हरेः
॥
चतुर्द्दशीनिशायान्तु कुम्भानामधिवासनम् ।
रात्रौ जागरणं कृत्वा प्रातर्वह्निं प्रकीरयेत् ॥
ब्रह्मविष्णुशिवेभ्यश्च प्रत्येकं समिधं क्रमात् ।
जुहुयात् पूजयित्वा तु तदन्ते पुरुषोत्तमम् ॥

अर्द्धोदयादयो योगाः स्कन्देन परिभाषिताः
।
महावेद्याख्ययोगस्य कलां नार्हन्ति षोडशीम्
॥
अष्टाहे च पुनः कृत्वा दक्षिणाभिमुखान्रथान्
।
दक्षिणाभिमुखी यात्रा विष्णोरेषा प्रकीर्त्तिता
॥
कार्य्या प्रयत्नतः सा हि भुक्तिमुक्तिप्रदा
भवेत् ।
दक्षिणाभिमुखं यान्तं कृष्णं पश्यति ये नराः
॥
न तेषां पुनरावृत्तिः सत्यमेतन्न संशयः ।
पुराविदो वदन्त्येतां यात्रां नवदिनात्मिकाम्
॥
तस्याः संकीर्त्तनादेव निर्म्मलो जायते नरः ।
तावतीयं महायात्रा यो यथा कर्त्तुमिच्छति ॥
सोऽपि विष्णुप्रभावेन वैकुण्ठभवनं व्रजेत् ।
उद्धृत्य सप्तपुरुषान् पापाबलिसमन्वितान्
॥” ४ ॥
अथ शयनयात्रा । स्कान्दे ।
“आषाढे शुक्लद्वादश्यां कुर्य्यात्
स्वापमहोत्सवम् ।
मण्डले रचयेत्तत्र शयनागारमुत्तमम् ॥
देवस्य पुरतः शय्यां रत्नादिनिर्म्मितोपरि ।
आस्तीर्य्य मृदुचेलादि मृदुचीनोत्तरच्छदाम्
॥
कर्पूरधूलिविक्षिप्तां साधुचन्द्रातपां शुभाम् ।
यत् दृष्ट्वा चेष्टितैरेव
जाग्रत्स्वप्नसुषुप्तिभिः ।
जगद्धिताय सुप्तोऽसि पार्श्वेन परिवर्त्तय
॥
परिवर्त्तनकालोऽयं जगतः पालनाय ते ।
त्वदग्रजोऽयं शक्रोऽपि ध्वजे तिष्ठेत्
समुत्सुकः ।
दृष्टं त्वत्पादकमलं विमुञ्च मूद्र्ध्नि
तज्जलम् ।
महीं जलं प्लावयति प्रजापालनहेतुकम्
॥
इति संप्रार्थ्य देवेशं विनयात्तोषयेत्ततः ।
व्यजनैश्चामरैश्चैव वीजयेत् परमेश्वरम्
॥
सुगन्धिचन्दनैरस्य सर्व्वाङ्गं परिलेपयेत्
।
स्वादूनि भक्ष्यद्रव्याणि पायसादीनि
दापयेत् ॥
शय्यागृहद्वारि विभोः शनैर्भक्त्या
निवेदयेत् ।
देवमुद्दिश्य यत् कुर्य्यात् सर्व्वमक्षयतां
व्रजेत् ॥
पार्श्वे च जन्मदिवसे उपवासपरो भवेत्
॥”
एवं आश्विनशुक्लैकादश्यां
पूर्व्वोक्तविधानेन
श्रीकृष्णस्य वामपार्श्वपरिवर्त्तनं कार्य्यम्
॥
मतान्तरे ।
“शुभे चैवाश्विने मासि महामायां
प्रपूजयेत् ।
सौवर्णीं राजतीं मार्त्तीं विष्णुमायां
महेश्वरीम् ।
हिंसा चैव न कर्त्तव्या
कदाचिद्विष्णुपूजकैः ॥” ६ ॥
अथोत्थानयात्रा ।
“एकादश्यान्तु कार्त्तिक्यां शुक्लायां
पृथिवीपते ।
कृष्णमुत्थापयेद्भक्त्या पूजयित्वा
जगद्गुरुम् ।
पूर्ब्बवत् पूजयित्वा तु प्रातर्मन्त्रं
समुच्चरेत् ॥”
मन्त्रस्तु ।
पूजयेदुपचारैस्तु आदर्शे प्रतिविम्बितम् ।
ततः पुरुषसूक्तेन कुम्भांस्तानभिमन्त्रयेत् ।
क्रमात् देवस्य शिरसि स्नापयेद्विधिवत्ततः ॥”
सूक्तमुच्चरन् ।
“ततः पञ्चामृतेनैव वासुदेवञ्च क्षालयेत् ।
लक्ष्म्या युक्तं पुनर्विप्र उपचारैः प्रपूजयेत् ॥
दूर्व्वाङ्कुराद्यैः स्तुतिभिर्वाद्यैः संपूज्य केशवम् ।
समन्ताद्विकिरेद्देवं कर्पूराद्यैः सुतण्डुलान् ॥
नीराजयेज्जगन्नाथं कर्पूरयुतवर्त्तिभिः ।
ततः प्रदक्षिणं कृत्वा दण्डवत् प्रणमेत् क्षितौ ॥
पुष्यस्नानोत्सवं पुण्यं ये पश्यन्ति मुदान्विताः ।
सर्व्वसम्पन्नकामास्ते व्रजेयुर्व्वैष्णवं पदम् ॥” ९
॥
अथ नवशस्ययात्रा ।
“कुर्य्यादयनसंक्रान्त्यां नवशस्यमहोत्सवम् ।
संक्रान्तेः पूर्व्वदिवसे नवं शालिं सुकुट्टिमम् ।
प्रासादपूर्ब्बदेशे तु स्थापयित्वाधिवासयेत् ॥”

| | | |
|---|---|---|
| | "ॐ उत्तिष्ठ देवदेवेश ! तेजोराशे जगत्पते ! ।<br>वीक्ष्यैतत् सकलं देव ! प्रसुप्तं तव मायया ॥<br>प्रफुल्लपुण्डरीकाक्ष ! श्रीहरे ! शयनेन वै ।<br>त्वया दृष्टं जगदिदं परमं सुखमेष्यति ॥<br>ये ते स्मार्त्ताः क्रियाः सर्व्वाः प्रवर्त्तन्ते ततो ध्रुवम् ।<br>इत्युत्थाप्य जगन्नाथं<br>वेणुवीणादिनिःस्वनैः ॥ | |

तथा च पाद्मे ।
“संक्रान्त्यां माघमासस्य
साधिवासिततण्डुलान् ।
निवेद्य विष्णवे भक्त्या इमं मन्त्रमुदीरयेत् ॥
त्वयि तुष्टे जगत् सर्व्वमन्नेन प्रभविष्यति ।
रक्ष सर्व्वं जगन्नाथ ! गृह्यतां पिष्टकं शुभम् ॥
ब्राह्मणान् भोजयेत् भक्त्या
देवदेवपुरःस्थितान् ॥”
अभ्यर्च्च्य भगवद्भक्तानित्यादि ॥
“नवेन वाससावेष्ट्य दूर्व्वासर्षपपुष्पकैः ।
पूजयित्वाभिमन्त्रेण कृष्णस्त्वामभिरक्षतु ॥
पुनः प्रभाते देवेशं प्रलिपेद्गन्धचन्दनैः ।
वस्त्रालङ्कारमाल्यैश्च पूजयित्वा यथाविधि ॥
नीराजयित्वा देवेशं तण्डुलानधिवासितान् ।
स्थालीषु पाकपात्रेषु मधुखण्डाज्यमिश्रितान्
॥
पङ्क्तिशः स्थापयेदग्रे गन्धपुष्पाक्षतान्वितान्
।
सपूपं पायसं कृत्वा दद्याद्वै चक्रपाणये ।
दशवर्णकपिष्टञ्च विष्णोः प्रियतरं परम् ॥
ॐ जीवनं सर्व्वभूतानां जनकस्त्वं
जगद्गुरो ! ।
तन्मयाः शालिनो ह्येते त्वयैव जनिताः
प्रभो ! ॥
लोकानुग्रहणार्थाय गृहीत्वा चित्रविग्रहम् ।
तव प्रीत्यै कृतानेतान् गृहाण परमेश्वर ! ॥
त्वयि तुष्टे जगत् सर्व्वमनेन प्रभविष्यति ।
स्वाहाकारस्वधाकारवषट्कारादिवौकसाम्
॥
आप्यायना भविष्यन्ति तेनैवाप्यायितं जगत्
।
रक्ष सर्व्वं जगन्नाथ ! तन्मयं सचराचरम् ॥
इति संप्रार्थ्य देवेशं शालींस्तान् विनिवेदयेत्
॥” १० ॥
अथ दोलयात्रा ।
“फाल्गुने मासि कुर्व्वीत दोलारोहणमुत्तमम् ।
यत्र क्रीडति गोविन्दो लोकानुग्रहणाय वै ॥
प्रत्यर्च्चां देवदेवस्य गोविन्दाख्यान्तु कारयेत्
।
फल्गूत्सवं प्रकुर्व्वीत पञ्चाहानि त्र्यहानि वा ॥
दोलाकेलिः फाल्गुने च चैत्रे यात्रा चतुष्टयी ।
दूतीयात्रा रासयात्रा वासन्ती नीलयात्रिका ।
एवं यात्रा मया प्रोक्ता षोडशी भवमोचनी ॥”
इति वामकेश्वरतन्त्रे ५४ पटलः ॥
(रोगिदर्शनार्थं भिषजां यात्राविवरणम् । यथा,
“इदानीं निर्गमे पुत्त्र ! प्रवेशे वा गृहस्य च ।
शुभाशुभाणि सर्व्वाणि वक्ष्यामि शकुनानि च ॥
राजा गजो द्विजमयूरकखञ्जरीटा-
श्चाषः शकुन्तरजकः सितवस्त्रयुक्तः ।
पुत्त्रान्विता च युवती गणिका च कन्या
श्रेयः सुखाय यशसां प्रतिदर्शयन्ति ॥
नटाश्चाषो भासहारीतचक्रो
भारद्वाजोच्छिक्करश्छागसञ्ज्ञः ।
एते श्रेष्ठा दक्षिणे वाथ सव्ये
वैद्यावेशो निर्गमे श्रेयसे च ॥
सर्पोलूको वानरः शूकरश्च
गोधा ऋक्षः कृकलाशः शशश्च ।
एते रिष्टानिर्गमे वा प्रवेशे
कार्य्याघातो नोपकारेषु शस्ताः ॥
मृगो वा पिङ्गलो वापि प्रशस्ता दक्षिणे सदा ।
निर्गमे वा प्रवेशे च दक्षिणाः शुभदायकाः ॥
एको वा त्रीणि वा पञ्च सप्त वा नवसंख्यया ।
भाग्यकाले नराणान्तु मृगा यान्ति प्रदक्षिणाः ॥
शिखिहयगजगोधारासभोभृङ्गराजो
मुखरपिककपोतो पोतकी शूकरी वा ।
तदनुविहगराजो मङ्गलाशंसिनः स्यु-
र्वदति शकुनवेत्ता वामतो निर्गमे वः ॥
तित्तिरिः कुररः क्रौञ्चः सारसाभासशूकरः ।
वामे तु शुभशंसी च निर्गमे कार्य्यसिद्धये ॥
काको दक्षिणतः श्रेष्ठो निर्गमे शुभदायकः ।
प्रवेशे गदितः श्रेष्ठो वामतः कृष्णवायसः ॥
जालको हि शशकोऽपि कर्कटो-
कीर्त्तनञ्च गदितं न सुखाय ।
न शुभदर्शना अमी भवेयुः
सर्पगोधाकृकलाशविडालाः ॥
दर्शनं हितकरं प्रवदन्ति
खञ्जरीटमरालछिक्कराणाम् ।
वामतः शुभकराः प्रवदन्ति
दार्व्वाघाटवराटकशुकश्च ॥
इति शुभाशुभशकुनानि ॥”
प्रतिषिद्धं तथा भग्नं क्षुतं
स्खलितमाहतम् ।
दौर्म्मनस्यञ्च वैद्यस्य यात्रायां न
प्रशस्यते ॥”
इति सुश्रुते सूत्रस्थाने २९ अध्यायः
॥)

**यादईशः**, पुं, (यादसां जलानां जलजन्तूनां वा
ईशः ।) समुद्रः । इति हेमचन्द्रः । ४ ।
१३९ ॥

**यादः**, [स्] क्ली, (यान्ति वेगेनेति । या + असुन्
।
बाहुलकात् दागमश्च ।) जलजन्तुः ।
इत्यमरः ।
१ । १० । २० ॥ (यथा,
भगवद्गीतायाम् । १० । २९ ।
“अनन्तश्चास्मि नागानां वरुणो
यादसा-
महम् ॥”
जलम् । इति निघण्टुः । १ । १२ ॥)

**यादःपतिः**, पुं, (यादसां पतिः ।) समुद्रः । इत्य-
मरः । १ । १९ । २० ॥ वरुणः ।
इत्यजयपालः ॥

**यादवः**, पुं, (यदोरपत्यम् । यदु + अण् ।)
श्रीकृष्णः । इति शब्दरत्नावली ॥
(यथा, भग-
वद्गीतायाम् । ११ । ४१ ।
“सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण ! हे यादव ! हे सखेति ।
अजानता महिमानं तवेदं
मया प्रमादात् प्रणयेन वापि ॥”)
ययातेर्ज्येष्ठपुत्त्रो यदुस्तस्य वंशः ।
यथा, --
“ययातेर्ज्येष्ठपुत्त्रस्य यदोर्वंशं नरर्षभ !
।”
इत्युपक्रम्य ।
“माधवा वृष्णयो राजन्
यादवाश्चेतिसंज्ञितम् ॥”

फाल्गुन्याः पूर्ब्बतो विप्राश्चतुर्द्दश्यां
निशामुखे ।
वह्न्यत्सवं प्रकुर्व्वीत दोलमण्डपपूर्ब्बतः ॥”
पाद्मे ।
“पौर्णमास्यां समारभ्य पञ्चम्याञ्च समाप-
येत् ॥” ११ ॥
अथ मदनभञ्जिका यात्रा ।
“वासन्तिकां समाख्यास्ये यात्रां मदनभञ्जि-
काम् ।
यस्यां कृतायां दृष्टायां प्रीणाति पुरुषोत्तमः ॥
चैत्रशुक्लत्रयोदश्यामाहरेत्तत् समूलकम् ।
देवस्याग्रे विरचिते मण्डपे साधिवासिते ॥”
१२ ॥
इति यात्रातत्त्वम् ॥
देव्याः षोडशप्रकारोत्सवः । यथा, --
“वैशाखे मञ्चयात्रा च चन्दनागुरुकल्पना ।
ज्यैष्ठे महास्नानयात्रा अम्बुवाचीदिनत्रयम् ॥
आषाढे रथयात्रा च दिग्दिनव्यापिनी परा ।
श्रावणे जलयात्रा च वस्त्रभूषणचामरैः ॥
भाद्रे यात्रा धूननाख्या चण्डिकाया दिनत्रयम्
।
आश्विने च महापूजा यात्रा यज्ञवलिप्रिया ॥
कार्त्तिके दोपयात्रा च नवान्नमग्रहायणे ।
पौषे चाङ्गरागयात्रा वस्त्रालङ्कारभूषणैः ॥
माथे मासि महादेवी रटन्ती च चतुर्द्दशी ।

इति हारीते द्वितीयस्थाने सप्तमेऽध्याये ॥ * ॥
तथा च ।
“शवकाष्ठपलाशानां शुष्कानां पथि सङ्गमाः ।
नेष्यन्ते पतितान्तस्थदीनान्धरिपवस्तथा॥
मृदुशीतोऽनुकूलश्च सुगन्धिश्चानिलः शुभः ।
खरोष्णोऽनिष्टगन्धश्च प्रतिलोमश्च गर्हितः ।
ग्रन्थ्यर्व्वुदादिषु सदा छेदशब्दश्च पूजितः ।
विद्रध्युदरगुल्मेषु भेदशब्दस्तथैव च ॥
रक्तपित्तातिसारेषु रुद्धशब्दः प्रशस्यते ।
एवं व्याधिविशेषेण निमित्तमुपधारयेत् ॥
तथैवाक्रुष्टहाकष्टमाक्रन्दरुदितस्वनाः ।
छर्द्यां वातपुरीषाणां शब्दो वै गर्द्दभोष्ट्रयोः ॥

इति श्रीभागवते ९ स्कन्धे २३
अध्यायः ॥
(यदुसम्बन्धिनि, त्रि । यथा, भागवते ।
११ । १ । ३ ।
“मन्येऽवनेर्ननु गतोऽप्यगतं हि भारं
यद्यादवं कुलमहो अविसह्यमास्ते ॥”)

**यादवी**, स्त्री, (यदोरियमिति । यदु + अण् । ङीप् ।)
दुर्गा । इति त्रिकाण्डशेषः ॥
(यदुवंशीयस्त्री-
सामान्ये । यथा, महाभारते । १ । ९५
। १३ ।
“प्राचीन्वान् खल्वश्मकीमुपयेमे यादवीं
तस्या-
मस्य जज्ञे संयातिः ॥”)

**यादसांनाथः**, पुं, (यादसां जलजन्तूनां नाथः ।
षष्ठ्या अलुक् ।) वरुणः । इति
हलायुधः ॥

**यादसांपतिः**, पुं, (यादसां जलजन्तूनां पतिः ।
षष्ठ्या अलुक् ।) समुद्रः । इत्यमरः ।
१ । १ । ६४ ॥
वरुणः । इति मेदिनी । ते, २३२ ॥
(यथा,
देवीभागवते । ३ । ९ । ३५ ।
“अश्विनौ वसवस्त्वष्टा कुवेरो
यादसांपतिः ॥”
क्वचित् विशेषणमपि । यथा,
मार्कण्डेये । २२ । ११ ।
“यावदन्तर्जले देवं वरुणं यादसांपतिम्
॥”)

**यादृक्**, [श्] त्रि, (य इव दृश्यते । दृश् + “त्यदा-
दिषु दृशोऽनालोचने कञ्च् ।” ३ । २ ।
६० । इति
चकारात् क्विन् । “आ सर्व्वनाम्नः ।”
६ । ३ । ९१ ।
इत्याकारादेशः ।) य इव दृश्यते सः ।
इति
मुग्धबोधव्याकरणम् ॥ येमन इति भाषा
।
(यथा, भागवते । ४ । २९ । ६४ ।

| | | “नानुभूतं क्वचानेन देहेनादृष्टमश्रुतम् ।<br>कदाचिदुपलभ्येत यद्रूपं यादृगात्मनि ॥”)<br>**यादृक्षः**, त्रि, (य इव दृश्यते यमिव पश्यति वा ।<br>दृश् + “दृशेः क्सश्च वक्तव्यः ।” ३ । २ । ६० । इति |
|---|---|---|

वार्त्तिकोक्तेः क्सः । “आसर्व्वनाम्नः ।” ६ । ३ । ९१ ।
इत्यत्र “दृक्षे चेति वक्तव्यम् ।” इत्यात्वम् ।)
य इव दृश्यते सः । इति मुग्धबोधव्याकरणम् ॥
येमन इति भाषा ॥

**यादृशः**, त्रि, (य इव दृश्यते । दृश् + “त्यदादिषु दृशः इति ।” ३ । २ । ६० । इति कञ् । “आसर्व्व-नाम्नः ।” ६ । ३ । ९१ । इत्याकारादेशः ।) य इव दृश्यते सः । इति मुग्धबोधव्याकरणम् ॥ येमन इति भाषा । (यथा, मनुः । ४ । २५४ ।
“यादृशोऽस्य भवेदात्मा यादृशञ्च चिकीर्षितम् ।
यथा चोपचरेदेनं तथात्मानं निवेदयेत् ॥”
स्त्रियां यादृशी ॥)

**यादोनाथः**, पुं, (यादसां नाथः ।) समुद्रः । इति राजनिर्घण्टः ॥ (वरुणः । इति यादसां-नाथशब्ददर्शनात् ॥)

**यादोनिवासः**, पुं, (यादसां निवासः ।) जलम् । इति हेमचन्द्रः । ४ । १३५ ॥

**यानं**, क्ली, (या + ल्युट् । अर्द्धर्च्चादित्वात् पुंलिङ्ग-मपि ।) राज्ञां सन्ध्यादिषड्गुणान्तर्गतगुण-विशेषः । तत्तु उपचितशक्तेः कृतमूलराष्ट्र-रक्षस्य शत्रोरास्कन्दनाय यात्रा । इति भरतः ॥
(यथा, देवीभागवते । ५ । ४ । ११ ।
“यानमप्यधुना नैव कर्त्तव्यं सहसा पुनः ॥”
यान्त्यनेनेति । या + ल्युट् ।) हस्त्यश्वरथदोलादि ।
तत्र सामान्यं यथा, --
“यानं यद्द्विपदाभ्यां सत् तद्दोलादिकमुच्यते ।
चतुर्भिर्युक्तिसंयुक्तैर्दण्डधातुगुणाम्बरैः ।
दोलेति कथ्यते तेषां नियमोऽयं प्रदर्श्यते ॥”
तत्र समयः ।
“उपेन्द्रमूलाहिशिवाग्निवर्जं
शस्तेन्दुताराततिथियोगलग्ने ।
वृष्टिक्षमापुत्त्रयमाहवर्जं
दोलादिकारोहणमाद्यमिष्टम् ॥
दण्डकाष्ठस्य नियमे नियमश्छत्रदण्डवत् ।
कनकं रजतं ताम्रं लौहं धातुचतुष्टयम् ॥
चतुर्विधानामुद्दिष्टं ब्रह्मादीनां यथाक्रमम् ।
सुराणामसुराणाञ्च चातुर्व्वर्ण्यमुदाहृतम् ॥
त्रिहस्तसम्मितो मध्ये तदर्द्धं पार्श्वयोर्द्वयोः ।
विजया नाम दोलेयं विजयाय महीक्षिताम् ॥
विजया मङ्गला क्रूरा शिवा क्लेशा शुभा क्रमात् ।
वितस्त्येकैकसंवृद्ध्या दोलाः षट् स्युः सुखान्नदाः ॥
कुम्भश्च पद्मकोषश्च शङ्खः पर्व्वत एव च ।
चतुर्विधानां दोलासु कल्याणाय चतुष्टयम् ॥
हंसः केकी शुको भृङ्गश्चतुष्टयमिदं क्रमात् ।
कुम्भाद्यग्रे निधातव्यं चतुर्विधमहीक्षिताम् ॥
अत्रापि वर्त्मविन्यासो विज्ञेयो नवदण्डवत् ॥”
भोजस्तु ।
“गजः प्रस्थानदोलायां रणदोलासु केशरी ।
मृगो भ्रमणदोलायां क्रीडादोलासु षट्पदः ॥
भुजङ्गमः शत्रुराज्ये वृषभो दानकर्म्मणि ।
दोलोपर्य्युपरि न्यस्यो बहुभिर्मुनिशासनम् ॥
यद्वक्रदण्डं यानं स्यात् तत् पर्य्यङ्कमिति स्मृतम् ।
त्रिहस्तसम्मितो यानस्तदर्द्धपरिणाहवान् ।
पर्य्यङ्कः क्षेमनामायं भर्त्तुः सर्व्वार्थसाधकः ॥
क्षेमो मृत्युर्जयो दुःखश्चत्वारस्ते यथाक्रमम् ।
वितस्त्येकैकसंवृद्ध्या यथा चाणुर्न सङ्गिनः ॥
मणिधातुगुणादीनां नियमः पूर्ब्बवन्मतः ।
विशेषमथ वक्ष्यामि पर्य्यङ्कस्य यथाक्रमम् ॥
शुक्तिश्च गजदन्तश्च मृगशृङ्गन्तथैव च ।
अनूपादिकजातानां पर्य्यङ्केषु न्यसेत् क्रमात् ॥
पद्मशङ्खगजाश्वालिहंसकोकशुकान् क्रमात् ।
इति युक्तिकल्पतरुः ॥ * ॥
विशेषद्विपदयानन्तु चतुर्दालशब्दे निष्पदयानोद्देशस्तु नौकाशब्दे द्रष्टव्यम् ॥ (फलप्राप्तिहेतौ, त्रि । यथा, ऋग्वेदे । १० । ११० । २ ।
“तनूनपात् पथ ऋतस्य यानान्
मध्वा समञ्जन् स्वदयासुजिह्व ॥”
“यानान् फलप्राप्तिहेतून् पथो मार्गान् ।” इति तद्भाष्ये सायणः ॥ या + भावे ल्युट् । गतिः ।
यथा, वाभटे शारीरस्थाने षष्ठेऽध्याये ।
“यानं खरोष्ट्रमार्ज्जारकपिशार्द्दलशूकरैः ।
यस्य प्रतैः शृगालैर्वा स मृत्योर्व्वर्त्तते मुखे ॥”)

**यानपात्रं**, क्ली, (यानसाधनं पात्रम् । शाकपार्थिव-वत् समासः ।) निष्पदयानविशेषः । जाहाज इति भाषा ॥ तत्पर्य्यायः । वहित्रकम् २ वोहित्थम् ३ वहनम् ४ पोतः ५ । इति हेमचन्द्रः । ३ । ५३९ ॥ समुद्रयानम् ६ । इति वराहपुराणम् ॥ (यथा, हरिवंशे । १४५ । ६३ ।
“समुच्छ्रितैः सितै पोतैः यानपात्रैस्तथैव च ।
नौभिश्च झिल्लिकाभिश्च शुशुभे वरुणालयः ॥”)

**यानमुखं**, क्ली, (यानस्य मुखम् पुरोभागः ।) रथादेः पुरोभागः । तत्पर्य्यायः । धूः २ । इत्यमरः । २ । ८ । ५५ ॥

**यापनं**, क्ली, (या + णिच् + ल्युट् ।) वर्त्तनम् । कालक्षेपणम् ॥ (मथा, कामन्दकीये । १७ । ३१ ।
“पूर्ब्बसेनापतिर्नीचः कालयापनमाश्रितः ॥”)
निरशनम् । इति मेदिनी । ने, ११२ ॥ (यापय-

तत्पर्य्यायः । वाहनम् २ युग्यम् ३ पत्रम् ४ धोर-
णम् ५ । इत्यमरः । २ । ८ । ५८ ॥ विमानम् ६ चङ्कु-
रम् ७ यापनम् ८ गतिमित्रकम् ९ । इति शब्द-
रत्नावली ॥ * ॥ (यथा, मनुः । ३ । ६४-६५ ।
“शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः ।
गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया ॥
अयाज्ययाजनैश्चैव नास्तिक्येन च कर्म्मणाम् ।
कुलान्याशु विनश्यन्ति यानि हीनानि मन्त्रतः ॥”)
अथ चतुष्पदयानीद्देशः ।
“ये ब्रह्मजात्यादिविभेदतोऽमी
मया निरुक्ता इह वाजिमुख्याः ।
दिशानया सर्व्वचतुष्पदानां
भेदो विधेयो विदुषादरेण ॥
तथा यथाश्वादिकपोषणेन
यानेन वा दोषगुणौ भवेताम् ।
तथा तथैवान्यचतुष्पदानां
प्रकीर्त्तितौ दोषगुणौ बुधेन ॥
वरमयानमपोषणमेव वा
वरमिवान्यशरीरमपोषणम् ।
न खलु दोषयुतं च चतुष्पदं
स्तृशति पश्यति शोभनचेतनः ॥
सुराविन्दुर्दूषयति पयोघटशतं यथा ।
तथा सर्व्वं दूषयति दोषदुष्टश्चतुष्पदः ॥”
इति चतुष्पदयानोद्देशः ॥ * ॥
अथ द्विपदयानोद्देशः ।
“मानुषैः पक्षिभिर्व्वापि तथान्यैर्द्विपदैरपि ।
यानं स्याद्द्विपदं नाम तस्य भेदो ह्यनेकधा ॥
सामान्यञ्च विशेषश्च तस्य भेदो द्विधा भवेत् ॥”

आदित्यादिदशाजानां मणिरूपेण विन्यसेत् ॥
महीन्द्राणां विशेषेण सिंहमानेव शस्यते ।
निर्म्माणे शुक्तिदण्डाश्च राज्यभोगसुखप्रदाः ॥
तदेवावक्रदण्डन्तु खट्टायानमिति स्मृतम् ।
अस्यापि पूर्ब्बवन्मानमणिधात्वादिनिर्णयः ॥
विशेषश्चरणोच्छ्रायः परिणाहार्द्धसम्मितः ।
तदेव चेन्निश्चरणं पीठयानमिति स्मृतम् ॥
तस्य भेदो द्विधा दण्डवक्रावक्रप्रभेदतः ।
मानादिकं पूर्ब्बतुल्यं विशेषाच्चतुरस्रता ॥
एवमन्यानि मिश्राणि यानानि विविधानि च ।
सामान्याख्यानि जानीयात् शिल्पिभिर्निर्म्मि-
तानि वै ॥
मनोहरत्वं लघुता दृढतेति गुणत्रयम् ।
प्रोक्तं द्विपदयानानां सहजं भोजभूभुजा ॥
इति सामान्यद्विपदयानकथनम् ॥”

तीति । या + णिच् + ल्युः । प्रापके, त्रि । यथा,
भागवते । ३ । २२ । ३३ ।
“अयातयामास्तस्यासन्यामाः स्वान्तर-
यापनाः ॥”)

**याप्ता**, स्त्री, जटा । इति भूरिप्रयोगः ॥

**याप्यः**, त्रि, (यापि + यत् ।) अधमः । निन्दितः ।
इत्यमरः । ३ । १ । ५४ ॥ (यथा, बृहत्संहितायाम् ।
१९ । २२ ।
“यदशुभमशुभेऽब्दे मासजं तस्य वृद्धिः
शुभफलमपि चैवं याप्यमन्योऽन्यतायाम् ॥”)
यापनीयः । (यथा, सुश्रुते निदानस्ताने प्रथमे
अध्याये ।
“शोणितं तदसाध्यं स्यात् याप्यं संवत्सरोत्थि-
तम् ॥”)
क्षेपणीयकालादिः । इति मेदिनी । ये, ४८ ॥
व्याधिविशेषः । यथा, --
“साध्या याप्या असाध्याश्च व्याधयस्त्रिविधाः
स्मृताः ।
सुखसाध्यः कष्टसाध्यो द्विविधः साध्य उच्यते ॥
याप्यलक्षणमाह ।
यापनीयन्तु तं विद्यात् क्रियां धारयते हिताम् ।
क्रियायान्तु निवृत्तायां सद्यो यश्च विनश्यति ॥
प्राप्ता क्रिया धारयति सुखिनं याप्यमातुरम् ।
प्रपतिष्यदिवागारं स्तम्भो यत्नेन योजितः ॥
साध्या याप्यत्वमायान्ति याप्याश्चासाध्यतां तथा ।
घ्नन्ति प्राणानसाध्यास्तु नराणामक्रियावताम् ॥

अक्रियावतां चिकित्सारहितानाम् ।”
इति
भावप्रकाशः ॥

**याप्ययानं**, क्ली, (याप्यं अधमं यानम् ।) शिविका ।

इत्यमरः । २ । ८ । ५३ ॥

**याभः**, पुं, (यभ्यते इति । यभ + घञ् ।) मैथु-

नम् । यथा । वृषाश्वयोयभिऽर्थे सन् ।
इति
लिधुपादे वोपदेवः । ८४६ ॥ (यथा,
भागवते ।
९ । १९ । ६ ।
“पीबानं श्मश्रुलं प्रेष्ठं मीढ्वांसं
याभकोविदम् ।
स एकोऽजवृषस्तासां वह्वीनां रतिवर्द्धकः
।
रेमे कामग्रहग्रस्त आत्मानं नावबुध्यत
॥”)

**यामः**, पुं, (याति यायते वा । या + “अर्त्तिस्तु-

सुहुमृधृक्षिक्षुभायावापदियक्षिनीभ्योमन्
।”
उणा० १ । १४० । इति मन् । यम् +
घञ् वा ।)
दिवारात्र्योश्चतुर्थभागैकभागः ।
तत्पर्य्यायः ।
प्रहरः २ । इत्यमरः । १ । ४ । ६ ॥
(यथा, मनौ ।
७ । १४५ ।
“उत्थाय पश्चिमे यामे कृतशौचः
समाहितः ।
हुताग्निर्ब्राह्मणांश्चाच्चर्य्य प्रविशेत् स शुभां
सभाम् ॥”)
संयमः । इति मेदिनी । मे, २४ ॥
(गमनम् ।
यथा, ऋग्वेदे । १ । ४८ । ४ ।
“उषो ये ते प्र यामेषु युञ्जते ।”
“यामेषु गमनेषु ।” इति तद्भाष्ये सायणः
॥ गमन-
साधनः । यथा, ऋग्वेदे । ४ । ५१ । ४ ।

**यामवती**, स्त्री, (यामः प्रहरः अस्त्यस्यामिति ॥

याम + मतुप् । पस्य व ङीष् ।) रात्रिः । इति
राजनिर्घण्टः ॥

**यामाता**, [ऋ] पुं, (जामाता पृषोदरादित्वात् ।

जस्य यः ।) जामाता । दुहितुः पतिः । इत्य-
मरटीका शब्दरत्नावली च ॥ यामातुर्विष्णु-
तुल्यत्वं तस्य गृहे कन्यादातुर्दौहित्रजननात्
प्राक् भोजननिषेधश्च यथा,
कामधेनावादित्य-
पुराणम् ।
“विष्णुं यामातरं मन्ये तस्य मन्युं न कारयेत्
।
अप्रजायान्तु कन्यायां नाश्नीयात्तस्य वै गृहे
॥”
इत्युद्वाहतत्त्वम् ॥

**यामार्द्धं**, क्ली, (यामस्यार्द्धम् ।) प्रहरस्यार्द्धम् ।

तस्याधिपा यथा, --
“वारेशादर्द्धयामेषु रात्र्यह्नोः पञ्च षट्क्रमात् ।
अधिपाः स्युर्ग्रहास्तत्र यथाकहि भवन्ति हि
॥
रवीज्येन्दुभृगुक्ष्माजशनिज्ञरवयो निशि ।
रविशुक्रज्ञरात्रीशशनीज्यकुजभास्कराः ॥
दिने तूह्याः परेष्वेवं तत्राध्यक्षाश्चतुर्ग्रहाः ।
पापदण्डे भवेद्रिष्टिः शुभदण्डे शुभं भवेत् ॥
शुभग्रहस्य दण्डे तु कर्म्मारम्भाच्छुभं भवेत् ।
आरम्भात् पापदण्डे तु कर्म्म निष्फलतां
व्रजेत् ॥
यस्यार्द्धयामस्तस्यैव प्राग्दण्डः समुदाहृतः ।
षट् षट् परीत्य दण्डाश्च त्रयो रात्रौ
मतास्तथा ॥
यामार्द्धाधिपसंख्यातो द्वितीयस्तु तदर्द्धतः ।
तदर्द्धात्तु तृतीयः स्यात्तदर्द्धात्तु तुरीयकः ॥
अङ्काभावे तु राहुः स्यात्तदङ्को वसुसंख्यकः
।
भग्नाङ्कस्य परित्यागाद्विवादण्डाधिपायथा
॥”
इति ज्जोतिषतत्त्वम् ॥

**यामिः**, स्त्री, (याति कुलात् कुलान्तरमिति ।

“उन्नादाम्बुदवर्द्धितान्धतमसःप्रभ्रष्टदिङ्मण्डले
काले जाग्रदुदग्रयामिकभटप्रारब्धकोलाहले ।
कर्णस्यासुहृदर्णवाम्बुवडवावह्नेर्य्यदन्तःपुरा-
दायातासि यदम्बुजाक्षि ! कृतकं मन्ये भयं
योषिताम् ॥”
इति कर्णाटः ॥

**यामित्रं**, क्ली, लग्नात् सप्तमराशिः । यथा, --

“धीस्थानं पञ्चमं ज्ञेयं यामित्रं सप्तमं स्मृतम् ।
द्युनं द्यूनं तथास्ताख्यं षट्कोणं रिपुमन्दिरम्
॥”
यामित्रवेधो यथा, --
“पापात् सप्तमगः शशी यदि भवेत् पापेन
युक्तोऽथवा
यत्नेनाशु विवर्जयन्मुनिमतो दोषोऽप्ययं कथ्यते
।
यात्रायां विपदो गृहे सुतवधः क्षौरेषु रोगोद्भवो-
ऽप्युद्वाहे विधवा व्रते तु मरणं शूलञ्च पुंस्कर्म्मणि
॥
रविमन्दकुजाक्रान्त्रं मृगाङ्कात् सप्तमं त्यजेत् ।
विवाहयात्राचूडासु गृहकर्म्मप्रवेशने ॥”
इति यामित्रवेधः ॥ * ॥
अस्य प्रतिप्रसवो यथा ।
“मूलत्रिकोणनिजमन्दिरगोऽथपूर्णो
मित्रर्क्षसौम्यगृहगोऽथ तदीक्षितो वा ।
यामित्रवेधविहितानपहृत्य दोषान्
दोषाकरः सुखमनेकविधं विधत्ते ॥”
इति ज्योतिस्तत्त्वम् ॥

**यामिनी**, स्त्री, (यामाः सन्त्यस्याम् । याम + इनिः ।

ङीप् ।) रात्रिः ॥ (यथा, महाभारते । १२ । ५३
। १ ।
“ततः शयनमाविश्य प्रसुप्तो मधुसूदनः ।
याममात्रार्द्धशेषायां यामिन्यां प्रत्यबुध्यत ॥”)
हरिद्रा । इत्यमरः । १ । ४ । ४ ॥ (कश्यपपत्नी
।
यथा, भागवते । ६ । ६ । २१ ।
“तार्क्षस्य विनता कद्रुः पतङ्गी यामिनीति च ।
पतङ्ग्यसूत पतगान् यामिनी शलभानथ ॥”
प्रह्लादस्य द्वितीया तनया । यथा, कथासरित्-
सागरे । ४६ । २२ ।

"कुवित्स देवीः सनयो नवो वा
यामो बभूयादुषसो वो अद्य ॥"
"यामो गमनसाधनः स रथः ।" इति
सायणः ॥
देवगणभेदः । यथा, मार्कण्डेयपुराणे ।
१५ । १८ ।
"यज्ञस्य दक्षिणायान्तु पुत्त्रा द्वादश
जज्ञिरे ।
यामा इति समाख्याता देवाः
स्वायम्भुवेऽन्तरे ॥")

**यामघोषः**, पुं, (यामे प्रतियामे घोषः रवोऽस्य ।

प्रतिप्रहरं रवकरणाद्वेवास्य तथात्वम् ।)
कुक्कटः । इति शब्दमाला ॥

**यामघोषा**, स्त्री, (यामे यामे घोषोऽस्याः । यामान्

प्रहरान् घोषति शब्दायत इति वा । घुष्
+
अच् । टाप् ।) यन्त्रविशेषः । घडी इति
भाषा ।
तत्पयार्य्यः । नाली २ घटी ३ यामनाली
४
यमेरुका ५ दण्डढक्का ६ । इति
त्रिकाण्डशेषः ॥

**यामनालीः**, स्त्री, (यामस्य नालीव ।) याम-

घोषा । इति त्रिकाण्डशेषः ॥

**यामनेमिः**, पुं, इन्द्रः । इति त्रिकाण्डशेषः ॥

**यामलं**, क्ली, युगलम् । इति हेमचन्द्रः । ६ । ६०
॥

तन्त्रशास्त्रविशेषः । तस्य लक्षणं यथा, --
"सृष्टिश्च ज्योतिषाख्यानं
नित्यकृत्यप्रदीपनम् ।
क्रमसूत्रं वर्णभेदो जातिभेदस्तथैव च ।
युगधर्म्मश्च संख्यान्तो
यामलस्याष्टलक्षणम् ॥"
तत्तु षड्विधम् । आदियामलम् १ ब्रह्म-
यामलम् २ विष्णुयामलम् ३ रुद्रयामलम्
४
गणेशयामलम् ५ आदित्ययामलम् ६ ।
इति
वाराहीतन्त्रम् ॥ एषां श्लोकसंख्या
तन्त्रशब्दे
द्रष्टव्या ॥

या + बाहुलकात् मिः ।) स्वसा । कुलस्त्री ।
इत्यमरः । २ । ३ । १४२ ॥ "स्वसा
भगिनी ।
कुलस्त्री कुलबधूः । प्रहरे संयमे यामो यामिः
स्वसृकुलस्त्रियोरित्यन्तःस्थादौरभसः ॥
जिह्मस्तु
कुटिले निन्द्ये जामिः स्वसृकुलस्त्रियोरिति
चवर्गतृतीयादावजयः इति भरतमुकुटौ ॥
यथा,
जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः ॥
इनि स्वामी ॥ जै क्षये बाहुलकान्मिः । यद्वा
जमु अदने बाहुलकादिण् जामिरिति ।
अन्तः-
स्थादौ या प्रापणे धातुर्बोध्यः ।" इति रामा-
श्रमः ॥ (यथा, मनौ । ४ । १८३ ।
"यामयोऽप्सरसां लोके वैश्वदेवस्य
वान्धवाः ॥")
यामिनी । इति शब्दरत्नावली ॥ धर्म्मस्य
पत्नी ।
तस्याः कन्या नागवीथी । यथा, --
"अरुन्धती वसुर्यामिर्लम्बा भानुर्मरुत्वती ।
सङ्कल्पा च मुहूर्त्ता च साध्या विश्वा च
नामतः ।
धर्म्मपत्न्यो दश त्वैतास्तास्वपत्यानि मे शृणु
।
लम्बायाश्चैव घोषोऽसौ नागवीथी तु
यामिजा ॥"
इति वह्निपुराणे कश्यपीयप्रजासर्गः ॥

**यामिकभटः**, पुं, (यामे यामे नियुक्तः । याम +

ठक् । स चासौ भटश्चेति ।) प्रहरिकः ।
चौकी-
दार इति भाषा । यथा, --

"प्रह्लादो यामिनीं नाम द्वितीयां तनयां ददौ ॥")

**यामिनीपतिः**, पुं, (यामिन्याः पतिः ।) चन्द्रः ।

इति शब्दरत्नावली ॥ (यथा, भागवते । १० ।
३५ । २५ ।
"यदुपतिर्द्विजराजविहारो
यामिनीपतिरिवैष दिनान्ते ।
मुदितवक्त्र उपयाति दुरन्तं
मोचयन् व्रजगवां दिनतापम् ॥")
कर्पूरम् । इत्यमरः ॥

**यामी**, स्त्री, (यमस्येयम् । यमो देवतास्याः इति

वा । यम + अण् । ङीप् ।) दक्षिणदिक् । इति
राजनिर्घण्टः ॥ (यथा, ज्योतिषे ।
"--याम्यां गुरौ न व्रजेत् ।"
यामि + ङीष् ।) कुलस्त्री । इति शब्दरत्ना-
वली ॥ (यथा, मनौ । ४ । १८० ।
"मातापितृभ्यां यामीभिर्भ्रात्रा पुत्त्रेण भार्य्यया ।
दुहित्रा दासवर्गेण विवादं न समाचरेत् ॥"

धर्म्मपत्नी । यथा, विष्णुपुराणे । १ । १५ । १०५ ।
"अरुन्धती वसुर्यामी लम्बा भानुमरुत्वती ।
सङ्कल्पा च मुहूर्त्ता च साध्या विश्वा च ता दश ॥")

**यामुनं**, क्ली, (यमुनायां भवम् । यमुना + अण् ।
यमुनाया इदमित्यण् वा ।) श्रोतोऽञ्जनम् । इत्य-
मरः । २ । ९ । १०० ॥ (अस्य पर्य्यायो यथा, --
"अञ्जनं यामुनञ्चापि कापोताञ्जनमित्यपि ।
तत्तु श्रोतोऽञ्जनं कृष्णं सौवीरं श्वेतमीरितम् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
पुं, जनपदभेदः । यथा, भागवते । १ । १० । ३४ ।
"कुरुजाङ्गलपाञ्चालान् शूरसेनान् स यामुनान् ।
ब्रह्मावर्त्तं कुरुक्षेत्रं मत्स्यान् सारस्वतानथ ॥"
पर्व्वतविशेषः । यथा, रामायणे । ४ । ४० । २१ ।
"कालिन्दीं यमुनां रम्यां यामुनञ्च महा-
गिरिम् ।"
तीर्थभेदः । यथा, महाभारते । ३ । ८४ । ४१ ।
"यमुनाप्रभवं गत्वा समुपस्पृश्य यामुनम् ।
अश्वमेधफलं लब्ध्वा स्वर्गलोके महीयते ॥")
यमुनासम्बन्धिनि, त्रि । (यथा, प्रायश्चित्ततत्त्वे ।
"त्रिभिः सारस्वतं तोयं सप्तभिस्त्वथ यामुनम् ।
नार्म्मदं दशभिर्मासैर्गाङ्गं वर्षेण जीर्य्यति ॥")

**यामुनेष्टकं**, क्ली, (यामुनमिवेष्टकम् ।) सीसकम् ।
इति जटाधरः ॥ (विशेषोऽस्य सीसकशब्दे

**याययूकः**, पुं, (पुनः पुनर्यजति । यज् + यङ् ।
"यजजपदशां यङः ।" ३ । २ । १६६ । इति
ऊकः ।) पुनःपुनर्यागकर्त्ता । तत्पर्य्यायः ।
इज्याशीलः । इत्यमरः । २ । ७ । ८ ॥ (यथा,
रामायणे । २ । ७२ । १५ ।
"या गतिः सर्व्वभूतानां तां गतिं ते पिता गतः ।
राजा महात्मा तेजस्वी याययूकः सतां गतिः ॥")

**यायावरः**, पुं, (पुनःपुनरतिशयेन वा याति देशा-
द्देशान्तरं गच्छतीति । या + यङ् । "यश्च यङः ।"
३ । २ । १७६ । इति वरच् ।)
अश्वमेधीयाश्वः । इति
जटाधरः ॥ जरत्कारुमुनिः । इति त्रिकाण्ड-
शेषः ॥ (ऋषीणां गणविशेषः । यथा, महा-
भारते । १२ । २४३ । १७ ।
"तात प्रत्यक्षधर्म्मिणस्तथा यायावरा गणाः ॥"
जरत्कारुमुनिश्चैतद्वंशीयः । यथा, महाभारते ।
१ । १३ । ११ ।
"जरत्कारुरिति ख्यात ऊर्द्ध्वरेता महातपाः ।
यायावराणां प्रवरो धर्म्मज्ञः संशितव्रतः ॥")
त्रि, पुनःपुनर्गमनशीलः । यथा, --
"यायावराः पुष्पफलेन चान्ये
प्रानर्च्चुरर्च्या जगदर्च्चनीयम् ॥"
इति भट्टिः । २ । २० ॥
(क्ली, याच्ञा । यथा, भागवते । ७ । ११ । १६ ।
"वार्त्ता विचित्रा शालीनयायावरशिलोञ्छनम् ।
विप्रवृत्तिश्चतुर्द्धेयं श्रेयसी चोत्तरोत्तरा ॥"
"यायावरं प्रत्यहं धान्ययाच्ञा ।" इति तत्र
श्रीधरस्वामी ॥)

**यावः**, पुं, (यौति यूयते वा । यु + अच् अप् वा ।
ततः प्रज्ञाद्यण् ।) अलक्तः । इत्यमरः । २ ।

"यवकः स्यात्तु कुल्माषः कुल्मासो यावकोऽपि च
वोरवाख्ये षष्टिके वा कुल्मे काश्मीरदेशजे ।
शालिधान्येषु चत्वार इति केचित् प्रचक्षते ॥"
इति शब्दरत्नावली ॥ * ॥
यावान्नम् । इति हेमचन्द्रः ॥ (यथा, मनौ । ११ ।
१२६ ।
"सङ्करापात्रकृत्यासु मासं शोधनमैन्दवम् ।
मलिनी करणीयेषु तप्तः स्याद्यावकैस्त्र्यहम् ॥")
अलक्तकः । इति शब्दरत्नावली ॥ (यथा,
किराते । ५ । ३९ ।
"इह सनियमयोः सुरापगाया-
मुषसि सयावकसव्यपादलेखा ।
कथयति शिवयोः शरीरयोगं
विषमपदा पदवी विवर्त्तनेषु ॥")

**यावज्जीवं**, व्य, क्ली, (यावत् जीवतीति । जीव +
"यावति विन्दजीवोः ।" ३ । ४ । ३० । इति
णमुल् ।) यावदायुः । जीवनपर्य्यन्तम् । यथा,
"यावज्जीवमहं मौनी ब्रह्मचारी च मे पिता ।
माता च मम बन्ध्यासीदपुत्रश्च पिता मम ॥"
इति आहतशब्दटीकायां भरतः ॥

**यावत्**, व्य, (यद् + डावतुः ।) साकल्यम् ।
अवधिः । मानम् । अवधारणम् । इत्यमरः ।
३ । ३ । २४५ ॥ "साकल्ये निरवशेषे । यथा ।
यावद्दत्तं तावद्भुङ्क्ते ॥ अवधौ मर्य्यादायाम् ।
मूलात् शाखां यावत् प्रकाण्डः ॥ मानं प्रमा-
णम् । यावद्गृहाणि तावद्भिक्षवः ॥ अवधारण-
मियत्तापरिच्छेदः । इयतो भाव इयत्ता परि-
माणं तस्य परिच्छेदो निश्चयः । यथा यावत्
पात्रं तावद्ब्राह्मणानामन्त्रयस्व । यावत् कार्त्स्न्ये-
ऽवधारणे प्रशंसायां परिच्छेदे मानाधिकार-

विज्ञेयः ॥)

**यामेयः**, पुं, भागिनेयः । यामिः स्वसृकुलस्त्रियो-

रित्यनुशासनात् यामेरपत्यमित्यर्थे ष्णेय-
(ढक्)
प्रत्ययनिष्पन्नः ॥ (याम्या धर्म्मपत्न्या
अपत्य-
मिति । यामिपुत्त्रः । यथा, भागवते । ६ ।
६ । ६ ।
"ककुदः सङ्कटस्तस्य कीकटस्तनयो यतः
।
भुवो दुर्गाणि यामेयः स्वर्गो
नन्दिस्ततोऽभवत् ॥")

**याम्यः**, पुं, (यामी निवासोऽस्य । यामी + यत् ।)

अगस्त्यमुनिः । चन्दनवृक्षः । इति मेदिनी
। ये,
४८ ॥ (यमस्यायमिति । यम + ण्यः ।
यमदूतः ।
यथा, मार्कण्डेये । ११ । ३० ।
"कृष्यमाणस्य याम्यैश्च नरकेषु च
पात्यतः ।
पूनश्च गर्भो जन्माथ मरणं नरकस्तथा
॥")

**याम्या**, स्त्री, (यमस्येयं यमो देवतास्या इति वा ।

यम + "यमाच्चेति वक्तव्यम् ।" ४ । १ ।
८५ । इति
वार्त्तिकोक्त्या ण्यः । टाप् ।) दक्षिणदिक् ।
(यथा,
रामायणे । २ । १०३ । २६ ।
"प्रगृह्य तु महीपालो जलपूरितमञ्जलिम् ।
दिशं याम्यामभिमुखो रुदन् वचनमब्रवीत्
॥")
भरणीनक्षत्रम् । इति मेदिनी । ये, ४८ ॥
(यमसम्बन्धिनि, त्रि । यथा, महाभारते ।
२ । ८ । १ ।
"कथयिष्ये सभां याम्यां युधिष्ठिर ! निबोध
ताम् ।
वैवस्वतस्य यां पार्थ ! विश्वकर्म्मा चकार
ह ॥")

**याम्यायनं**, क्ली, (याम्यायामयनं याम्यं अयन-

६ । २२५ ॥ (तथास्य पर्य्यायः ।
"लाक्षा पलङ्कषालक्तो यावो वृक्षामयो जतु ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
यथा, नैषधे । २२ । ४६ ।
"ततस्तदीयाधरयावयोगा-
दुदेति विम्बारुणविम्ब एषः ॥"
यव एव । स्वार्थेऽण् । यावः । यथा, तैत्तिरीय-
संहितायाम् । ४ । ३ । ९ । २ ।
"यावानां भागोऽस्य यावानामाधिपत्यमिति
॥")

**यावकः**, पुं, (यव एव यावः स इवेति इवार्थे कन् ।

यद्वा, याव एव । याव + "यावादिभ्यः कन् ।"
५ । ४ । २९ । इति स्वार्थे कन् ।) कुल्मासः
।
इत्यमरः । २ । ९ । १९ ॥ "द्वे वोरोध्यान्ये ।
कुलत्थ इत्यन्ये माषाकृतिपत्रे काश्मीरेषु तुल-
सीति ख्याते । इति सुभूतिः ॥ यव इव गुणेन
इति यवकः विकारसंघेति कः । यवक एव
यावकः स्वार्थे ष्णः । कुलेन मस्यति
परिणमति
कुल्मासः मसीर्य ई परिमाणे परीणामे घञ्
मनीषादित्वादलुक् । कुल्मासो
दन्त्यसकारवान्
मूदर्ध्वन्यषकारवांश्च । कुल्मासो रभसश्चेति
दन्त्यान्ते रक्षित इति मधुः ॥ कुल्माषो यावके
पुंसि काञ्जिके तु नपुंसकमिति, मूर्द्धन्यान्ते
रभसः ।" इति भरतः ॥

सम्भ्रमे पक्षान्तरे चेति मेदिनी ।" इति भरतः
॥
(यत्परिमाणमस्य इत्यर्थे । यत् +
"यत्तदेतेभ्यः
परिमाणे वतुप् ।" ५ । २ । ३९ । इति वतुप्
।
"आसर्व्वनाम्नः ।" ६ । ३ । ९१ ।
इत्यात्वम् ।)
यत्परिमिते, त्रि । तत्र यावान् यावती यावत्
इति रूपत्रयं भवति । यच्छब्दात्
निपातनाद्वतु-
प्रत्ययनिष्पन्नः । इति तद्धितपादे वोपदेवः ॥
(यथा, भागवते । २ । ९ । ३१ ।
"यावानहं यथा भावो यद्रूपगुणकर्म्मकः ।
तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात् ॥"
यथाच मनुः । ८ । १५५ ।
"यावती सम्भवेद्‌दृद्यद्धस्तावतीं दातुमर्हसि
॥"
तथाच याज्ञवल्क्यः । २ । २६४ ।
"यावत् शस्यं विनश्येत्तु तावत् स्यात्
क्षेत्रिणः
फलम् ॥")

**यावतिथः**, त्रि, (यावतां पूरणः । यावत् + "तस्य

पूरणे डट् ।" ५ । २ । ४८ । इति डट् ।
"वतोरि-
थुक् ।" ५ । २ । ५३ । इति इथुगागमश्च ।)
यावत्परि-
माणम् । इति मुग्धबोधव्याकरणम् ॥ (यथा,
मनुः । १ । २० ।
"आद्याद्यस्य गुणस्त्वेषामवाप्नोति परः परः
।
यो यो यावतिथश्चैषां स स तावद्गुणः
स्मृतः ॥")

मिति वा ।) दक्षिणायनम् । यथा,
मलमासतत्त्वे ।
“याम्यायने हरौ सुप्ते सर्व्वकर्म्माणि वर्ज्जयेत् ॥”

**याम्योद्भूतः**, पुं, (याम्यायामुद्भूतः ।) श्रीतालवृक्षः ।
इति राजनिर्घण्टः ॥

**यावनः**, पुं, (यवने यवनदेशे भवः । यवन + अण् ।) सिह्लाख्यगन्धद्रव्यम् । इत्यमरः । २ । ६ । १२८ ॥ (विवृतिरस्य सिह्लकशब्दे ज्ञातव्या ॥)

**यावनालः**, पुं, (यवनाल एवेति । यवनाल + स्वार्थे अण् ।) धान्यविशेषः । जोयार इति भाषा । तत्पर्य्यायः । यवनालः २ शिखरी ३ वृत्त-तण्डूलः ४ दीर्घनालः ५ दीर्घशरः ६ क्षेत्रेक्षुः ७ इक्षुपत्रकः ८ । तस्य गुणाः । धवलत्वम् । गौल्यत्वम् । बल्यत्वम् । त्रिदोषजित्त्वम् । वृष्य-त्वम् । रुच्यत्वम् । अर्शो यक्ष्मगुल्मव्रणनाशित्वञ्च । इति राजनिर्घण्टः ॥

**यावनालशरः**, पुं, (यावनाल इव शरः ।) शर-मेदः । जोहुरली इति हिन्दी भाषा । तत्प-र्य्यायः । नदीजः २ दृढत्वव् ३ वारिसम्भवः ४ यावनालनिभः ५ खरपत्रः ६ । अस्य मूल-गुणाः । ईषन्मधुरत्वम् । रुच्यत्वम् । शीतत्वम् । पित्ततृषानाशित्वम् । पशूनामबलप्रदत्वञ्च । इति राजनिर्घण्टः ॥

**यावनाली**, स्त्री, (यवनालस्य विकारः । यव-नाल + अण् । ततो ङीप् ।) यावनालशर्करा । तत्पर्य्यायः । हिमोत्पन्ना २ हिमानी ३ हिम-शर्करा ४ क्षुद्रशर्करिका ५ क्षुद्रा ६ गडभा ७

**यासः**, पुं, (यस + घञ् ।) दुरालभा । इत्यमरः । २ । ४ । ९१ ॥ (यथा, --
"यासो यवासो दुःष्पर्शो धन्वयासः कुनाशकः ।
दुरालभा दुरालम्भा समुद्रान्ता च रोदिनी ॥
गान्धारी कच्छुरानन्ता कषाया दुरभिग्रहा ।
यासः स्वादुः सरस्तिक्तस्तुवरः शीतलो लघुः ॥
कफमेदोमदभ्रान्तिपित्तासृक्कुष्ठकासजित् ।
तृष्णाविसर्पवातास्रवमिज्वरहरः परः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**यासा**, स्त्री, (यासः प्रयत्नोऽस्त्यस्या इति अर्श-आद्यच् । टाप् ।) मदनशलाकापक्षी । इति शब्दमाला ॥

**यु**, ङ क निन्दने । इति कविकल्पद्रुमः ॥ (चुरा०-आत्म०-सक०-सेट् ।) ङ क, यावयते । इति दुर्गादासः ॥ ("यावयते बाला वृद्धम् ।" इति मनोरमा ॥)

**यु**, ञ ग बन्धे । इति कविकल्पद्रुमः ॥ (क्रया०-उभ०-सक०-सेट् ।) ञ ग, युनाति यो वयस्थोऽपि न वेश्यावन्धकीजनैरिति हलायुधः । इति दुर्गादासः ॥

**यु**, ल मिश्रणे । अमिश्रणे । इति कविकल्पद्रुमः ॥ (अदा०-पर०-अक०-सेट् ।) ल, यौति ।
मिश्रणे यथा, --
"यौति काले कुलस्त्रीभिः क्षत्त्रसन्तानवृद्धये ॥"
इति हलायुधः ॥
अमिश्रणे समवायलक्षणे । अयुतसिद्धानामिति मिलितसिंद्धानामित्यर्थः । इति दुर्गादासः ॥

**युक्**, [ज्] त्रि, (युज्यते समाधत्ते इति । युज्यौ ङ् समाधौ + क्विप् ।) समाधिमान् । इति मुग्ध-बोधव्याकरणम् ॥ (युज्यते परस्परमिति ।) युग्मम् । इति शब्दरत्नावली ॥ (यथा, मनुः । ३ । २७७ ।
"युक्षु कुर्व्वन् दिनर्क्षेषु सर्व्वान् कामान् समश्नुते ।
अयुक्षु तु पितॄन् सर्व्वान् प्रजां प्राप्नोति पुष्क-लाम् ॥")

**युक्**, व्य, निन्दा । युज क ङ, निन्दे इत्यस्माद्भावे

"योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः ।
युक्तस्य सर्व्वदा भानं चिन्तासहकृतोऽपरः ॥"
इति भाषापरिच्छेदे । ६६ ॥
तस्य लक्षणं यथा, गीतायाम् । ६ । ८ ।
"ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥"
"योगारूढस्य लक्षणं श्रैष्ठ्यं चोक्तमुपसंहरति ज्ञानेति । ज्ञानमौपदेशिकं विज्ञानमपरोक्षानु-भवः ताभ्यां तृप्तो निराकाङ्क्ष आत्मा चित्तं यस्य । अतः कूटस्थो निर्व्विकारः । अतएव विजितानि इन्द्रियाणि येन । अतएव समानि लोष्टादीनि यस्य । मृत्खण्डपाषाणसुवर्णेषु हेयोपादेयबुद्धिशून्यः स युक्तो योगारूढ इत्यु-च्यते ॥" इति तट्टीकायां श्रीधरस्वामी ॥
(रैवतमनोः पुत्त्रः । यथा, हरिवंशे । ७ । २८ ।
"अथ पुत्त्रानिमांस्तस्य निबोध गदतो मम ।
धृतिमानव्ययो युक्तस्तत्त्वदर्शी निरुत्सुकः ॥")

**युक्तरसा**, स्त्री, (युक्तः रसोऽस्याः ।) रास्ना । इत्यमरभरतौ । २ । ४ । १४० ॥ काँटा आमरुली इति भाषा । (तथास्याः पर्य्यायः ।
"रास्ना युक्तरसा रस्या सुवहा रसना रसा ।
एलापर्णी च सुरसा सुगन्धा श्रेयसी तथा ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**युक्ता**, स्त्री, (युक्त + टाप् ।) वृक्षविशेषः । इति रत्नमाला ॥ एलानी इति भाषा ॥

**युक्तिः**, स्त्री, (युज्यते इति । युज् + क्तिन् ।) न्यायः । इति मेदिनी । ते, ४७ ॥ (यथा, पञ्चतन्त्रे । ३ । १६३ ।
"तस्य तद्वचनं श्रुत्वा धर्म्मयुक्तिसमन्वितम् ।
उपगम्य ततोऽधृष्टः कपोतः प्राह लुब्धकम् ॥")
लोकव्यवहारः । इति व्यवहारमातृका ॥
"धर्म्मशास्त्रविरोधे तु युक्तियुक्तो विधिः स्मतः ॥"

जलविन्दुजा ८ । अस्या गुणाः ।
गौल्यत्वम् ।
उष्णत्वम् । तिक्तत्वम् ।
अतिपिच्छिलत्वम् ।
वातघ्नत्वम् । सारकत्वम् ।
रुच्यत्वम् । दाह-
पित्तास्रदायित्वञ्च । इति
राजनिर्घण्टः ॥

**यावशूकः**, पुं, (यवशूक एव । यवशूक + स्वार्थे-
ऽण् । यद्वा, यावस्य यवस्य शूकः
कारणत्वेना-
स्त्यस्येति । अर्शआद्यच् ।) यवक्षारः
। इति
रत्नमाला ॥ (यथा, सुश्रुते
चिकित्सास्थाने
१ अध्याये ।
"क्षौमं प्लोतं पिचुं फेनं यावशूकं
ससन्धवम् ।
कर्कशानि च पत्राणि लेखनार्थे
प्रदापयेत् ॥")

**यावसः**, पुं, (यूयते इति । यु + "वहियुभ्यां णित् ।")
उणा० ३ । ११९ । इति असच् ।
तस्य णित्त्वञ्च ।
यद्वा, यवसानां समूहः । यवस +
"तस्य
समूहः ।" ४ । २ । ३७ । इत्यण् ।)
यवससमूहः ।
इति सिद्धान्तकौमुदी ॥

**याव्यं**, त्रि, (यूयते इति । यु + "आसुयुवपिरपि-
लपित्रपिचमश्च ।" ३ । १ । १२६ ।
इति ण्यत् ।)
मिश्रणीयम् । यूयते यत् । इति
मुग्धबोध-
व्याकरणम् ॥

**याशोधरेयः**, पुं, (यशोधरस्यापत्यं पुमान् । यशो-
धर + ढ ।) शाक्यमुनिपुत्त्रः । इति
हेम-
क्विप्प्रत्ययेन निष्पन्नम् ॥ (एतच्चिन्त्यम् ॥)

**युक्तं**, त्रि, (युज्यत स्म इति । युज् + क्तः ।)
न्याय्यम् । तत्तु न्यायागतद्रव्यादिकम् । इत्यमरः
।
२ । ८ । २४ ॥ (यथा, शाकुन्तले । १ अङ्के ।
"जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव ।
पुत्त्रमेवं गुणोपेतं चक्रवर्त्तिनमाप्नुहि ॥")
अपृथग्भूतम् । मिलितमित्यर्थः । इति मेदिनी ।
ते, ४७ ॥ (यथा, आनन्दलहर्य्याम् । १ ।
"शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं
न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि ।
अतस्त्वामाराध्यां हरिहरविरिञ्च्यादिभिरपि
प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति ॥")

**युक्तं**, क्ली, (युज् + क्तः ।) हस्तचतुष्टयम् । इति
मेदिनी । ते, ४७ ॥

**युक्तः**, पुं, (युज्यते स्म योगेनेति । युज् + क्तः ।)
अभ्यस्तयोगः । यथा, --
इति स्मृतिश्च ॥
अनुमानम् । यथा, --
"युक्तिष्वप्यवसन्नासु सपथैनैनमर्द्दयेत् ॥
युक्तिरनुमानम् ।
अनुमानेन विज्ञेयं न स्यातां पत्रसाक्षिणौ ।
इत्येकवाक्यत्वादिति विवरणम् ॥ अथ युक्तिः
।
नारदः ।
उल्काहस्तोऽग्निदो ज्ञेयः शस्त्रपाणिश्च
घातकः ।
केशाकेशिगृहीतश्च युगपत् पारदारिकः ॥
कुद्दालपाणिर्विज्ञेयः सेतुभेत्ता समीपगः ।
तथा कुठारहस्तश्च वनच्छेत्ता प्रकीर्त्तितः ॥
प्रत्यक्षचिह्नैर्विज्ञेयो दण्डपारुष्यकृन्नरः ।
असाक्षिप्रत्यता ह्येते पारुष्ये तु परीक्षणम् ॥
प्रत्यक्षचिह्नैः रुधिराक्तखड्गादिभिः । पारुष्ये
वाक्पारुष्ये । शङ्कः । लोप्तहस्तश्च चौर इति
।
नारदः ।
अभीक्ष्णं दिश्यमानोऽपि प्रतिहन्यान्न तद्वचः ।
त्रिचतुःपञ्चकृत्वो वा परतोऽर्थं तमावहेत् ॥
यदा धनिकेनाधमर्णिकस्त्रिचतुःपञ्चकृत्वो वा
त्वं मे ऋणं धारयसीति पुनःपुनर्दिश्यमानोऽपि

| | | |
|---|---|---|
| चन्द्रः ॥<br><br>**याष्टीकः**, पुं, (यष्टिः प्रहरणमस्य । यष्टि + "शक्ति-<br>यष्ट्योरीकक् ।" ४ । ४ । ५९ ।<br>इति ईकक् ।)<br>यष्टिधारियोद्धा । लेठेरा इति भाषा ।<br>तत्-<br>पर्य्यायः । यष्टिहेतिकः २ । इत्यमरः<br>। २ । ८ । ७० ॥<br>(यथा, राजतरङ्गिण्याम् । ६ । २०३<br>।<br>"आकलप्य द्रुतं दिष्ठ्या सन्त्यज्य<br>प्रार्थनादिकम् ।<br>पृष्ठे प्रत्युत याष्ठीकांस्तस्य हन्तुं<br>व्यसर्जयत् ॥") | | |

न तद्वाक्यं प्रतिहन्ति
तदोत्तरकालमनेनाभ्युप-
गतोऽयमर्थ इत्यवधार्य्य तमर्थमृणिकाय
दापये-
दित्यर्थः ।” इति व्यवहारतत्त्वम् ॥ * ॥
नाट्या-
लङ्कारविशेषः । तस्य लक्षणम् । यथा ।
“युक्ति-
रर्थावधारणम् । उदाहरणं यथा, --
‘यदिसमरमपास्य नास्ति मृत्यो-
र्भयमिति युक्तमितोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः कुरुध्वम् ॥’
इति वेणीसंहारः ।” इति साहित्यदर्पणम् ॥
(उपायः । यथा, कथासरित्सागरे । ३९ ।
५६ ।
“तत्स शृङ्गभुजो देशान्निर्व्वास्येताचिरात्
यथा ।
तां पुत्त्र ! चिन्तयेर्युक्तिं त्वमन्यैर्भ्रातृभिः
सह ॥”
भोगः । यथा, सूर्य्यसिद्धान्ते । ७ । २४ ।
“त्रिचतुःकर्णयुक्त्याप्तास्ते द्विघ्नास्त्रिज्यया
हताः ।
स्फुटाः स्वकर्णस्तिथ्याप्ता
भवेयुर्मानलिप्तिकाः ॥”
प्रमाणविशेषः । तद्यथा, --
“अत्रासां तन्त्रयुक्तीनां किं
प्रयोजनमित्युच्यते
वाक्ययोजनमर्थ्योजनञ्च ।”
“असद्वादिप्रयुक्तानां वाक्यानां प्रतिषेधनम्
।
स्ववाक्यसिद्धिरपि च क्रियते तन्त्रयुक्तितः
॥
व्यक्ता नोक्ताश्च ये ह्यर्था लीना ये चाप्य-
निर्म्मलाः ।
लेशोक्ता ये क्वचित्तन्त्रे तेषाञ्चापि
प्रसाधनम् ॥
यथाम्बुजवनस्यार्कः प्रदीपो वेश्मनो यथा ।
प्रबोध्यस्य प्रकाशार्थास्तथा तन्त्रस्य
युक्तयः ॥”

वर्षाः । द्वापरयुगस्य ८६४००० वर्षाः ।
कलि-
युगस्य ४३२००० वर्षाः । इति
श्रीभागवतमतम् ॥
तेषां भारतवर्षवर्त्तित्वं विवरणञ्च यथा, --
“चत्वारि भारते वर्षे युगानि ऋषयोऽब्रुवन्
।
कृतं त्रेता द्वापरञ्च कलिश्चेति चतुर्युगम्
॥
पूर्व्वं कृतयुगं नाम ततस्त्रेता विधीयते ।
द्वापरञ्च कलिश्चैव युगानि परिकल्पयन्
॥
चत्वार्य्याहुः सहस्राणि वर्षाणान्तु कृतं
युगम् ।
तस्य तावत् शती सन्ध्या सन्ध्यां शश्च
तथाविधः ॥
इतरेषु ससन्ध्येषु ससन्ध्यांशेषु च त्रिषु ।
एकापायेन वर्त्तन्ते सहस्राणि शतानि च
॥
त्रेतां त्रीणि सहस्राणि युगसंख्याविदो
विदुः ।
तस्यापि त्रिशती सन्ध्या सन्ध्यांशः
सन्ध्यया समः ॥
द्वे सहस्रे द्वापरे तु सन्ध्यांशौ तु चतुःशते
।
सहस्रमेकं वर्षाणां दिव्यं कलौ
प्रकीर्त्तितम् ॥
द्वे शते च तथान्ये वै संख्यातञ्च
मनीषिभिः ।
एषा द्वादशसाहस्री युगसंख्या तु संज्ञिता
॥
कृतं त्रेता द्वापरञ्च कलिश्चेति चतुर्युगम् ।
तत्र संवत्सराः सृष्टा मानुषास्तान्निबोधत
॥
चत्वारिंशत्तथा त्रीणि कृतं युगमथोच्यते ।
विंशतिश्च सहस्राणि कालो ह्येष
चतुर्युगः ॥
पृथक्त्वेनेह वक्ष्यामि युगानि तु निबोधत
।

दुष्टानां निग्रहं कुर्व्वन् परिपाति जगत्त्रयम् ॥
वेदमेकं चतुर्भेदं कृत्वा शाखाशतैर्विभुः ।
करोति बहुलं भूयो वेदव्यासस्वरूपधृक् ॥
वेदांस्तु द्वापरे व्यस्य कलेरन्ते पुनर्हरिः ।
कल्किस्वरूपी दुर्वृत्तान् मार्गे स्थापयति प्रभुः ॥
एवमेष जगत् सर्व्वं परिपाति करोति च ।
हन्ति चान्येष्वनन्तात्मा नास्त्यस्माद्‌व्यतिरेकि
यत् ॥”
इति विष्णुपुराणे ३ अंशे २ अध्यायः ॥ * ॥
युगधर्म्मान्तिरं यथा, --
जैमिनिरुवाच ।
“कलौ युगे महाभाग ! समायाते सुदारुणे ।
भविष्यन्ति जनाः सर्व्वे कीदृशास्तद्वदस्व मे ॥
व्यास उवाच ।
आद्यं सत्ययुगं प्राहुस्ततस्त्रेताह्वयं युगम् ।
ततश्च द्वापरं विप्र ! कलिमन्त्यं विदुर्बुधाः ॥
कृते धर्म्मश्चतुष्पादः सर्व्वधर्म्मरता जनाः ।
वर्णाश्रमाचाररतास्तपोव्रतपरायणाः॥
नारायणार्च्चनपराः शोकव्याधिविवर्जिताः ।
सत्योक्तिभाषिणः सर्व्वे सदया दीर्घजीविनः ॥
धनधान्यादिसम्पन्ना हिंसादम्भविवर्ज्जिताः ।
परोपकारिणश्चैव सर्व्वशास्त्रविदस्तथा ॥
एवंविधाः सत्ययुगे सर्व्वे लोका द्विजोत्तम ! ।
राजधर्म्मग्राहिणश्च भूपाला जनपालिनः ॥
अहो सत्ययुगस्यास्ति कः संख्यातुं गुणान् क्षमः
॥
अधर्म्माचरणं तत्र जनाः केचिन्न कुर्व्वते ॥ * ॥
त्रेतायुगे समायाते धर्म्मः पादोनतां गतः ।
अल्पक्लेशान्विता लोकाःकेचित् केचिद्दयाशयाः
।
विष्णुध्यानरता लोका यज्ञदानपरायणाः ।
वर्णाश्रमाचाररताः सुखिनः सुस्थचेतसः ॥
क्षत्त्रा भूमिस्पृशः शूद्राः सर्व्वे ब्राह्मणसेविनः ।
ब्राह्मणाश्च महात्मानो वेदवेदाङ्गपारगाः ॥
प्रतिग्रहनिवृत्ताश्च सत्यसन्धा जितेन्द्रियाः ।
तपोव्रतरता नित्यं दातारो विष्णुसेविनः ॥
कालवर्षी तडित्वांश्च स्त्रियः सर्व्वाः पतिव्रताः ।
वसुन्धरा च शस्याढ्या पुत्त्राश्च पितृसेविनः ॥
* ॥
त्रेतायुगस्यावसाने द्वापरे युग आगते ।

इति सुश्रुते उत्तरतन्त्रे ६५ अध्यायः ॥)

**युग**, इ वर्ज्जने । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।) अन्तःस्थादिः । इ,
युङ्ग्यते ।
इति दुर्गादासः ॥

**युगं**, क्ली, (युज्यत इति । युज् + घञ् । कुत्वम् ।
न गुणः । "युजेर्घञन्तस्य
निपातनादगुणत्वं
विशिष्टविषये च निपातनमिदमिष्यते ।
काल-
विशेषे रथाद्युपकरणे च युगशब्दस्य
प्रयोगो-
ऽन्यत्र योग एव भवति ।" इति काशिका ।
६ ।
१ । १६० ।) युग्मम् । (यथा, शिशुपालवधे
।
९ । ७२ ।
"उपनेतुमुन्नतिमतेव दिवं
कुचयोर्युगेन तरसा कलिताम् ।
रभसोत्थितामुपगतः सहसा
परिरंभ्य कश्चन बधूमरुधत् ॥")
कृतादिकालचतुष्टयम् । (यथा, गीतायाम् ।
४ । ८ ।
"परित्राणाय साधूनां विनाशाय च दुष्कृताम्
।
धर्म्मसंस्थापनार्थाय सम्भवामि युगे युगे
॥")
वृद्धिनामौषधम् । हस्तचतुष्कम् । इति
मेदिनी ।
गे, १९ ॥ (यथा, मार्कण्डेये । ४९ । ३९ ।
"द्वे वितस्ती तथा हस्तो
ब्राह्म्यतीर्य्यादिवेष्टयन् ।
चतुर्हस्तं धनुर्दण्डो नाडिका युगमेव च ॥")
देवानां द्वादशसहस्रवत्सरेण चतुर्युगं भवति
।
मनुष्यमानेन चतुर्युगपरिमाणं
विंशतिसहस्रा-
धिकत्रिचत्वारिंशल्लक्षम् । तत्र सत्ययुगस्य
मानम्
१७२८००० वर्षाः । त्रेतायुगस्य
१२९६०००
नियुतानि दश द्वे च पञ्च चैवात्र संख्यया
॥
अष्टाविंशसहस्राणि कृतं युगमथोच्यते ।
अयुतन्तु तथा पूर्णं द्वे चान्ये नियुते पुनः
॥
षट्त्रिंशच्च सहस्राणि संख्यातानि तु
संख्यया ।
त्रेतायुगस्य संख्यैषा मानुषेण तु कीर्त्तिता
॥
अष्टौ शतसहस्राणि वर्षाणां मानुषाणि तु
।
चतुःषष्टिसहस्राणि वर्षाणां द्वापरं युगम् ॥
चत्वारि नियुतानि स्युर्वर्षाणान्तु
चतुर्युगम् ।
द्वात्रिंशच्च तथान्यानि सहस्राणि तु
संख्यया ॥
एतत् कलियुगं प्रोक्तं मानुषेण प्रमाणतः ।
एषा चतुर्युगावस्था मानुषेण प्रकीर्त्तिता ॥
चतुर्युगस्य संख्याता सन्ध्या
सन्ध्यांशकेन च । ।
एषा चतुर्युगाख्या तु साधिका
त्वेकसप्ततिः ।
कृतत्रेतादियुक्ता सा मनोरन्तरमुच्यते ॥"
इति मात्स्ये ११८ अध्यायः ॥ * ॥
युगधर्म्मो यथा, --
"ध्यानं परं कृतयुगे त्रेतायां ज्ञानमध्वरः ।
द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे ॥
ब्रह्मा कृतयुगे देवस्त्रेतायां भगवान् रविः ।
द्वापरे दैवतं विष्णुः कलौ रुद्रो महेश्वरः
॥
ब्रह्मा विष्णुस्तथा सूर्य्यः सर्व्व एव
कलिष्वपि ।
पूज्यते भगवान् रुद्रश्चतुर्ष्वपि
पिनाकधृक् ॥
आद्ये कृतयुगे धर्म्मश्चतुष्पादः सनातनः
।
त्रेतायुगे त्रिपादः स्याद्द्विपादो द्वापरे
स्थितः ।
त्रिपादहीनस्तिष्ये तु सत्तामात्रेण तिष्ठति
॥"
इति कूर्म्मपुराणे युगधर्म्मकीर्त्तनं नाम
२८
अध्यायः ॥ * ॥ युगावतारा यथा, --
द्विपादो भूतवान् धर्म्मः सुखदुःखान्विता नराः ॥
केचित् केचित् पापरताः केचिद्धर्म्मरतास्तथा ।
केचित् केचित् गुणैर्हीनाः केचित् केचिन्महा-
गुणाः ॥
अत्यन्तदुःखिनः केचित् केचित् चातिधनास्तथा
।
प्रतिग्रहे ब्राह्मणाश्च कदाचित् कुर्व्वते स्पृहाम् ।
भूभुजा धनलोभेन कदाचिद्दण्ड्यते प्रजाः ।
विष्णुपूजापरा विप्राः शूद्राश्च द्विजसेविनः ॥
तदा विष्णुर्व्यासरूपी वेदभागं चकार ह ॥ * ॥
कलौ युगे च विप्रेन्द्र ! सर्व्वपापैकमन्दिरे ।
एकपादोऽभवद्धर्म्मः सर्व्वे पापरता जनाः ॥
ब्राह्मणाः क्षत्त्रिया वैश्याः शूद्राः पापपरायणाः ।
निजाचारविहीनाश्च भविष्यन्ति कलौ युगे ॥
विप्रा वेदविहीनाश्च प्रतिग्रहपरायणाः ।
अत्यन्तकामिनः क्रूरा भविष्यन्ति कलौ युगे ॥

| | | |
|---|---|---|
| | "कृते युगे परं ज्ञानं कपिलादिस्वरूपभृत्<br>।<br>ददाति सर्व्वभूतात्मा सर्व्वभूतहिते रत्रः<br>॥<br>चक्रवर्त्तिस्वरूपेण त्रेतायामपि स प्रभुः । | |

परान्नलोलुपा नित्यं तपोव्रतपराङ्मुखाः ।
पाषण्डसङ्गलुब्धाश्च भविष्यन्ति कलौ युगे ॥
वित्तार्थं ब्राह्मणाः केचिन्महाकपटधर्म्मिणः ।
बल्काधरा भविष्यन्ति जटिलाः श्मश्रुधारिणः ।
कलौ युगे भविष्यन्ति ब्राह्मणाः शूद्रधर्म्मिणः ॥
शूद्राश्च दीक्षागुरवो नित्यं ब्राह्मणधर्म्मिणः ।
कलौ यास्यन्ति निर्वृत्ता उत्तमा अपि नीचताम् ॥
नीचाश्च धनसम्पन्ना यास्यन्त्युच्चपदं प्रति ।
प्रदास्यन्त्युपकारिभ्यो दानानि सकला जनाः ॥
यत्नादपि च नेष्यन्ति वृषला विप्रवर्त्तनम् ।
मित्रस्नेहाद्वदिष्यन्ति कुसाक्ष्यञ्च कलौ जनाः ॥
अधर्म्मबुद्धिदातारो धर्म्मबुद्धिविलोपिनः ।
परोक्षनिन्दकाः क्रूराः संमुखप्रियवादिनः ॥
परश्रीर्हिंसकाश्चैव मिथ्यावचनभाषिणः ।
भविष्यन्ति कलौ विप्राः परवित्ताभिलाषिणः ॥
गृहमायान्तमतिथिं समाराध्य विधानतः ।
धनलोभाद्धनिष्यन्ति नरा नरकभागिनः ।
ऋणोपजीविनश्चैव भविष्यन्ति कलौ युगे ॥
स्त्रीजिताः पुरुषाः सर्व्वे स्त्रियोऽप्यत्यन्तचञ्चलाः ।
दुर्नीतिर्व्वाधते तासां स्वामिनञ्च न संशयः ॥
जैमिनिरुवाच ।
वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम् ॥
ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतन्तथा ।
भविष्यं नारदीयञ्च पुराणञ्चेति विस्तरम् ॥
मार्कण्डेयं तथाग्नेयं ब्रह्मवैवर्त्तमेव च ।
कौर्म्मं मात्स्यं गारुडञ्च वायवीयमनन्तरम् ॥
अष्टादशं समुदितं ब्रह्माण्डमिति संज्ञितम् ।
अन्यान्युपपुराणानि मुनिभिः कथितानि तु ॥
आद्यं सनत्कुमारोक्तं नारसिंहमथापरम् ।
तृतीयं स्कान्दमुद्दिष्टं कुमारेण तु भाषितम् ॥
चतुर्थं शिवधर्म्माख्यं साक्षान्नन्दीशभाषितम् ।
दुर्व्वाससोक्तमाश्चर्य्यं नारदोक्तमतः परम् ॥
कापिलं वामनञ्चैव तथैवोशनसेरितम् ।
ब्रह्माण्डं वारुणञ्चाथ कालिकाह्वयमेव च ॥
माहेश्वरं तथा शाम्बं सौरसर्व्वार्थसञ्चयम् ।
पराशरोक्तमपरं मारीचं भार्गवाह्वयम् ॥
पुराणं धर्म्मशास्त्रञ्च वेदा अङ्गानि यन्मुने ! ।
न्यायः शौनक ! मीमांसा आयुर्व्वेदार्थशास्त्रकम् ।
गान्धर्व्वश्च धनुर्व्वेदो विद्या ह्यष्टादश स्मृताः ।
द्वापरान्ते स च हरिर्भुवो भारमपाहरत् ॥ * ॥
एकपादस्थिते धर्म्मे कृष्णताञ्चाच्युते गते ।
जनास्तदा दुराचारा भविष्यन्ति च निर्द्दयाः ॥
सत्त्वं रजस्तम इति दृश्यन्ते पुरुषे गुणाः ।
कालसञ्चोदितास्तेऽपि परिवर्त्तन्त आत्मनि ॥
प्रभूतञ्च यदा सत्त्वं मनोबुद्धीन्द्रियाणि च ।
तदा कृतयुगं विद्याद्दाने तपसि यद्रतिः ॥
यदा कर्म्मसु कार्य्येषु शक्तिर्यशसि देहिनाम् ।
तदा त्रेता रजीवृत्तिरिति जानीहि शौनक ! ॥
यदा लोभस्त्वसन्तोषो मानो दम्भोऽथ मत्सरः ।
कर्म्मणाञ्चापि काम्यानां द्वापरन्तद्रजस्तमः ॥
यदा सदानृतं तन्द्रीनिद्राहिंसादिसाधनम् ।
शोकमोहभयं दैन्यं स कलिस्तु तदा स्मृतः ॥
यस्मिन् जनाः कामिनोपि शश्वत्कटुकभाषिणः ।
दस्युकृष्टा जनपदा वेदाः पाषण्डदूषिताः ॥
राजानश्च प्रजाभक्षाः शिश्नोदरपरा द्विजाः ।
अव्रता वटवोऽशौचा भिक्षवश्च कुटुम्बिनः ॥
तपस्विनो ग्रामवासा न्यासिनो नित्यलोलुपाः ।
ह्रस्वकाया महाहाराश्चौर्य्यमायोरुसाहसाः ॥
त्यक्ष्यन्ति भृत्याश्च पतिं भृत्यं भर्त्तार एव च ।
शूद्राः प्रतिग्रहीष्यन्ति तपोवेशोपजीविनः ॥
उद्विग्नाश्चानलङ्काराः पिशाचसदृशाः प्रजाः ।

**युगः**, पुं, (युज्येते वलीवर्द्धौ अस्मिन्निति । युज् + घञ् । युजेर्घञन्तस्य निपातनादगुणत्वम् । इति काशिका । ६ । १ । १६० ।) रथहलाद्यङ्गम् । इति मेदिनी । गे, १९ ॥ जोयालि इति भाषा । (यथा, --
“नावेव नः पारयतं युगेव नभ्येव न उपधीव प्रधीव ॥”
इति ऋग्वेदे । २ । ३९ । ४ ॥
“युगा इव यथा रथस्य युगे नभ्या इव ।” इति तद्भाष्ये सायणः ॥ तथा च कथासरित्सागरे । ६० । १२ ।
“तस्यैकदा बणिज्यार्थं गच्छतो मथुरां पुरीम् ।
भारवोढा युगं कर्षन् भारेण युगभग्नतः ॥”)

**युगकीलकः**, पुं, (युगस्य कीलकः ।) युगकाष्ठस्य कीलकः । जोयालेर खिल इति भाषा । तत्पर्य्यायः । शम्या २ । इत्यमरः । २ । ९ । १४ ॥

**युगन्धरः**, पुं, (युगं धारयतीति । धारि + “संज्ञायां भृतॄवृजिधारिसहितपिदमः ।” ३ । २ । ४६ । इति खच् । “अरुर्द्विषदन्तस्य मुम् ।” ६ । ३ । ६७ । इति मुम् ।) यत्र रथस्य युगकाष्ठमासज्यते तत्र ।
रथस्याश्वा यत्र वध्यन्ते तद्युगकाष्ठं तद्युगं धरति युगन्धरः । इति भरतः ॥ तत्पर्य्यायः । कूवरः २ । इत्यमरः । २ । ८ । ५७ ॥ पर्व्वतविशेषः । यथा, --
“निषधो माल्यवान् विन्ध्यो हेमकूटो युगन्धरः ॥”
इति शब्दरत्नावली ॥

मनःशुद्धिविहीनत्वात् सर्व्वेषां प्राणिनां मुने ! ।
अतः सर्व्वं त्वया प्रोक्तं मनो विस्मयदं मम ॥
कलौ सर्व्वे भविष्यन्ति
मनःशुद्धिविवर्जिताः ।
तेषां यथा भवेत् कर्म्म सफलं ब्रूहि तद्गुरो ! ॥
व्यास उवाच ।
अनर्पितन्तु यत् कर्म्म तद्भवेन्निष्फलं खलु ।
एकेन मनसा विप्र ! सुदृढं कथ्यते मया ॥
विष्णुभक्तिमतां पुंसां न किञ्चिद्विफलं भवेत् ।
इति ते कथितं सर्व्वं व्यक्तं
ब्राह्मणसत्तम ! ।
यत् श्रुत्वा भक्तिभावेन नरो
मोक्षमवाप्नुयात् ॥”
इति पाद्मे क्रियायोगसारे २५ अध्यायः ॥ * ॥
अपि च ।
“कृते धर्म्मश्चतुष्पाच्च सत्यं दानं तपो दया ।
धर्म्मपाता हरिः श्वेतः सन्तुष्टा ज्ञानिनो नराः ।
चतुर्व्वर्षसहस्राणि नरा जीवन्ति वै तदा ॥
कृतान्ते क्षत्त्रियैर्व्विप्रा विट्शूद्राश्च जिता द्विजैः ।
शूरस्य प्रणतिः पुत्त्रो विष्णुः क्षत्त्रं जघान ह ॥ * ॥
त्रेतायुगे त्रिपाद्धर्म्मः सत्यदानदयात्मकः ।
नरा यज्ञपरास्तस्मिंस्तथा क्षत्त्रोद्भवं जगत् ॥
रक्तो हरिर्न्नरैः पूज्यो नरा दशशतायुषः ।
तत्र विष्णुर्भीमरथः क्षत्त्रियो राक्षसानहन् ॥ * ॥
द्विपाच्च द्वापरे धर्म्मः पीतताञ्चाच्युते गते ।
चतुःशतायुषो लोका द्विजक्षत्त्रोत्तराः प्रजाः ॥
अस्नातभोजनेन्नाग्निदेवतातिथिपूजनम् ।
करिष्यन्ति कलौ प्राप्ते न च पिण्डोदकक्रियाम् ॥
स्त्रीपराश्च जनाः सर्व्वे शूद्रप्रायाश्च शौनक ! ।
बहुप्रजाल्पभाग्याश्च भविष्यन्ति कलौ स्त्रियः ॥
शिरःकण्डूयनपरा आज्ञां मेत्स्यन्ति सत्पतेः ।
विष्णुं न पूजयिष्यन्ति पाषण्डोपहता जनाः ॥
कलेर्दोषनिधेर्व्विप्र अस्ति ह्येको महान् गुणः ।
कीर्त्तनदेव कृष्णस्य मुक्तबन्धः परं व्रजेत् ॥
कृते यद्ध्यायतो विष्णुं त्रेतायां यजतः फलम् ।
द्वापरे परिचर्य्यायां कलौ तद्धरिकीर्त्तनात् ॥
तस्माज्ज्ञेयो हरिर्नित्यं ध्येयः पूज्यश्च शौनक ॥”
इति गारुडे युगधर्म्माः । २२७ अध्यायः ॥
(तूणिपुत्त्रः । स च सात्यकेः पौत्त्रः । यथा,
हरिवंशे । १६० । ३१ ।
“तूणेर्युगन्धरः पुत्त्र इति वंशः समाप्यते ॥”)

**युगपत्**, व्य, एकदा । एककालीनम् । इत्यमरः । ३ । ४ । २२ ॥ (यथा, भागवते । ३ । ६ । २ ।
“कालसंज्ञां तदा देवीं बिभ्रच्छक्तिमुरुक्रमः ।
त्रयोविंशतितत्त्वानां गणं युगपदाविशत् ॥”)

**युगपत्रः**, पुं, (युगं पत्रमस्य ।) कोविदारवृक्षः । इति हेमचन्द्रः । ४ । ११८ ॥
युग्मपर्णवृक्षमात्रञ्च ॥

**युगपत्रकः**, पुं, (युगपत्र + स्वार्थे कन् ।) कोविदार-वृक्षः । इत्यमरः । २ । ४ । २२ ॥
(यथास्य पर्य्यायः ।
“कोविदारश्चमरिकः कुद्दालो युगपत्रकः ।
कुण्डली ताम्रपुष्पश्च स्मन्तकः स्वल्पकेशरी ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**युगपत्रिका**, स्त्री, (युगं पत्रमस्याः । कप् । टाप् । अकारस्येत्वञ्च ।) शिंशपावृक्षः । इति त्रिकाण्ड-शेषः ॥ (विवरणमस्याः शिंशपाशब्दे ज्ञातव्यम् ॥)

**युगपार्श्वगः**, पुं, (युगस्य पार्श्वं गच्छतीति । गम् + डः ।) अभ्यासार्थं लाङ्गलपार्श्वबद्धो गौः ।
पाँटे वाँधा गरु इति भाषा । तत्पर्य्यायः । प्रष्ठ-वाट् २ । इत्यमरः । २ । ९ । ६३ ॥

**युगलं**, क्ली, (युज्यते परस्परं संगच्छत इति । युज् + वृषादिभ्यः कलच् । न्यङ्क्वादित्वात् कुत्वम् ।)
युग्मम् । इत्यमरः । २ । ५ । ३८ ॥ (यथा, भागवते ।
४ । २६ । २० ।

| | | |
|---|---|---|
| तदा दृष्ट्वाल्पबुद्धींश्च विष्णुर्व्यासस्वरूपधृक् ।<br>तदेकन्तु यजुर्व्वेदं चतुर्धा विभजत् पुनः ॥<br>शिष्यानध्यापयामास नामतस्तान्निबोध मे ।<br>ऋग्वेदमथ पौलस्त्यं सामवेदञ्च जैमिनिम् ॥<br>अथर्व्वाणं सुमन्तुन्तु यजुर्व्वेदं महामुनिम् ।<br>वैशम्पायनसंज्ञन्तु पुराणं सूतमेव च ॥<br>अष्टादश पुराणानि येषु वै हरिरेव हि ।<br>सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ॥ | | "पस्पर्श पादयुगलमाह चोत्सङ्गलालिताम् ॥") |

**युगलमन्त्रः**, पुं, (युगलाख्यो मन्त्रः । शाकपार्थिववत् समासः ।) लक्ष्मीनारायणमन्त्रः । यथा, --
"इदं रहस्यं परमं लक्ष्मीनारायणाह्वयम् ।
राजंस्तवापि वक्ष्यामि प्रपत्तिं शरणागतिम् ॥
द्वयात् परतरो मन्त्रो नास्ति सत्यं ब्रवीमि ते ।
द्वयात् परतरो धर्म्मो नास्ति लोकेषु कश्चन ॥
सर्व्वेषां कृष्णमन्त्राणां मध्ये युगलसंज्ञकम् ।
मन्त्रं हि सर्व्वतः श्रेष्ठं कृष्णजप्यमनुत्तमम् ॥
सर्व्वतो युगलं मन्त्रं कार्ष्णं परतरं नृप ! ।
गुह्याद्गुह्यतमं जातु ज्ञेयं तत्तदुपासकैः ॥"
इति पाद्मोत्तरखण्डे २५ अध्यायः ॥

**युगलाख्यः**, पुं, (युगलमित्याख्या यस्य ।) वर्व्वूर-वृक्षः । इति राजनिर्घण्टः ॥ त्रि, युग्मनामकः ॥

**युगांशकः**, पुं, (युगस्य अंशकः क्षुद्रांशः इति ।) वत्सरः । इति हारावली । २८ ॥ युगविभाजकश्च ॥

**युगाद्या**, स्त्री, (युगस्याद्यादिभूता ।) युगारम्भ-तिथिः । यथा । "अथ युगाद्याः । तासु च ।
'युगाद्या वर्षवृद्धिश्च सप्तमी पार्व्वतीप्रिया ।
रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता ॥'
इत्यनेन व्यवस्था ॥
ब्रह्मपुराणे ।
'वैशाखे शुक्लपक्षे तु तृतीयायां कृतं युगम् ।
कार्त्तिके शुक्लपक्षे तु त्रेताथ नवमेऽहनि ॥
अथ भाद्रपदे कृष्णत्रयोदश्यान्तु द्वापरम् ।
माघे च पौर्णमास्यां वै घोरं कलियुगं स्मृतम् ॥
युगारम्भास्तु तिथयो युगाद्यास्तेन विश्रुताः ॥'
अत्र वैशाखादयः पौर्णमास्यन्ता एव । ब्रह्म-पुराणे तथैव तिथिकृत्याभिधानात् । मुख्य-
"उद्वर्त्तयन् दस्युसंघान् समेतान्
प्रवर्त्तयन् युगमन्यद्युगान्ते ।
यदा धक्ष्याम्यग्निवत् कौरवेयां-
स्तदा तप्ता धार्त्तराष्ट्रः सपुत्रः ॥)
युगशेषश्च ॥

**युग्मं**, क्ली, (युज्यते इति । युज् + "युजिरुचि-तिजां कुश्च ।" उणा० १ । १४५ । इति मक् ।) द्वयम् । योडा इति भाषा । तत्पर्य्यायः । द्वन्द्वम् २ युगलम् ३ युगम् ४ । इत्यमरः । २ । ५ । ३८ ॥ (यथा, रामायणे । २ । ९१ । ७६ ।
"पादुकोपानहाञ्चैव युगान्यत्र सहस्रशः ॥")
द्वितीयचतुर्थषष्ठाष्टमदशमद्वादशराशयः । यथा
"क्रूरोऽथ सौम्यः पुरुषोऽङ्गना च
ओजोऽथ युग्मं विषमः समश्च ।
चरस्थिरद्व्यात्मकनामधेया
मेषादयोऽमी क्रमशः प्रदिष्टाः ॥"
इति ज्योतिस्तत्त्वम् ॥
(द्वितीया ।) मेलनम् । यथा, --
"युग्माग्निकृतभूतानि षण्मून्योर्व्वसुरन्ध्रयोः ।
रुद्रेण द्वादशी युक्ता चतुर्दश्याथ पूर्णिमा ॥
प्रतिपदाप्यमावास्या तिथ्योर्युग्मं महाफलम् ।
एतद्व्यस्तं महाघोरं हन्ति पुण्यं पुराकृतम् ॥
द्वितीयातृतीययोश्चतुर्थीपञ्चम्योःषष्ठीसप्तम्यो-रष्टमीनवम्योरेकादशीद्वादश्योः चतुर्द्दशीपौर्ण-मास्योः प्रतिपदमावास्ययोर्युग्मं मेलनम् । तत्त-त्तिथिमात्रनिमित्तके कर्म्मणि महाफलम् । एतत् प्रयोजनन्तु तिथिविशेषविहिते कर्म्मणि तिथिखण्डविशेषनियमनम् । स्वतिथ्या कर्म्मानि-र्व्वाहे सहायभावेनान्यतिथ्यनुप्रवेशादुपवासा-द्याचरणञ्च ।" इति तिथ्यादितत्त्वम् ॥ (द्वय-विशिष्टे, त्रि । यथा, मनुः । ३ । ४८ ।
"युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ।
तस्मात् युग्मासु पुत्त्रार्थी संविशेदार्त्तवे स्त्रियम् ॥")

**युग्मपत्रः**, पुं, (युग्मं पत्रमस्य ।) रक्तकाञ्चनवृक्षः । इति रत्नमाला ॥ (युग्मं पत्रम् ।) युगलपर्णे, क्ली ॥

**युग्मपत्रिका**, स्त्री, (युग्मं पत्रमस्याः । "शेषाद्वि-भाषा ।" ५ । ४ । १५४ । इति कप् । टापि अत इत्वम् ।) शिंशपावृक्षः । इति शब्दरत्नावली ॥
"त्रिसन्ध्यव्यापिनी या तु सैव पूज्या सदा तिथिः ।
न तत्र युग्मादरणमन्यत्र हरिवासरात् ॥"
इति तिथ्यादितत्त्वम् ॥

**युग्यं**, क्ली, (युगाय हितम् । युग + "उगवादिभ्यो यत् ।" ५ । १ । २ । इति यत् । युगमर्हतीति वा । दण्डादित्वात् यत् । यद्वा, युज्यत इति । युज् + "युग्यं च पत्रे ।" ३ । १ । १२१ । इति क्यबन्तो निपातितः ।) वाहनम् । यानम् इत्यमरः । २ । ८ । ५८ ॥ (यथा, महाभारते । ३ । ५९ । ९ ।
"हिरण्यस्य सुवर्णस्य यानयुग्यस्य वाससाम् ।
आविष्टः कलिना द्यूते जीयते स्म नलस्तदा ॥"
यथा च मनौ । ८ । २९३ ।
"यत्रापवर्त्तते युग्यं वैगुण्यात् प्राजकस्य तु ।
तत्र स्वामी भवेद्दण्ड्यो हिंसायां द्विशतं दमम् ॥"
वाच्यलिङ्गेऽपि दृश्यते । यथा, "युग्यो गौः । युग्योऽश्वः । युग्यो हस्ती ।" इति काशिका । ३ । १ । १२१ ॥)

**युग्यः**, पुं, (युगं वहतीति । युग + "तद्वहति रथ-युगप्रासङ्गम् ।" ४ । ४ । ७६ । इति यत्प्रत्ययः ।) युगवोढा । इत्यमरः । २ । ९ । ६४ ॥ ("रथं वहतीति रथ्यः युग्यः प्रासङ्ग्यः ।" इति काशिका ॥)

**युज्** [ज्] त्रि, (युजिर् योगे + क्विन् । "युजेर-

वाचित्वे कार्त्तिकि नवमेऽहनीत्यनैवेष्टसिद्धौ शुक्ल-
पक्ष इति व्यर्थं स्यात् । तेन भाद्रकृष्णत्रयोदशी
अश्वयुक्कृष्णपक्षीयेति मैथिलोक्तं निरस्तम् ॥ * ॥
आसां प्रशंसामाह विष्णुपुराणम् ।
‘वैशाखमासस्य सिता तृतीया
नवम्यसौ कार्त्तिकशुक्लपक्षे ।
नभस्यमासस्य तमिस्रपक्षे
त्रयोदशी पञ्चदशी च माघे ॥
एता युगाद्याः कथिताः पुराणै-
रनन्तपुण्यास्तिथयश्चतस्रः ।
उपप्लवे चन्द्रमसो रवेश्च
त्रिष्वष्टकास्वप्ययनद्वयेच ॥’
उपप्लवे ग्रहणे ।
‘पानीयमप्यत्र तिलैर्व्विमिश्रं
दद्यात् पितृभ्यः प्रयतो मनुष्यः ।
श्राद्धं कृतं तेन समाः सहस्रं
रहस्यमेतत् पितरो वदन्ति ॥’
स्नानमधिकृत्य भविष्ये ।
संवत्सरफलं तत्र नवम्यां कार्त्तिके तथा ।
मन्वादौ च युगादौ च माषत्रयफलं लभेत् ॥”
इति तिथ्यादितत्त्वम् ॥

**युगान्तः**, पुं, (युगानामन्तो यत्र । युगानामन्तो वा ।) प्रलयः । इति हलायुधः ॥ (यथा, महा-
भारते । ५ । ४८ । ६५ ।
(विषयोऽस्याः शिंशपाशब्दे ज्ञातव्यः ॥)

**युग्मपर्णः** पुं, (युग्मं पर्णमस्य ।) कोविदारवृक्षः सप्तपर्णवृक्षः । इति राजनिर्घण्टः ॥

**युग्मफला**, स्त्री, (युग्मं फलमस्याः ।) इन्द्रचिर्भिटी । वृश्चिकाली । इति राजनिर्घण्टः ॥ गन्धिका । इति रत्नमाला ॥

**युग्मादरः**, पुं, (युग्मस्यादरः ।) तिथिविशेषयोगेन तिथिखण्डविशेषस्यादरणम् । यथा । “पञ्चमी सप्तमी चैवेत्यादिना विशेषतः सायाह्नव्यापि-तिथेर्ग्रहणादुपवासेऽपि न रात्रियुग्मादरः ।” इति तिथ्यादितत्त्वम् ॥ अस्य विवरणं युग्मशब्दे द्रष्टव्यम् ॥

**युग्मादरणं**, क्ली, (युग्मस्यादरणम् ।) युग्मतिथि-पूज्यता । यथा, --
समासे ।” ७ । १ । ७१ । इति नुमागमः ।)
योगकर्त्ता । मेलनकर्त्ता । इति मुग्धबोध-
व्याकरणम् ॥ (यथा, भट्टिकाव्ये । ६ । ११८ ।
“गुहाया निरगाद्वाली सिंहो मृगमिव द्युवन् ।
भ्रातरं युङ्भियः संख्ये घोषेणापूरयन्दिशः ॥”
युग्मम् । यथा, मनौ । ३ । २७७ ।
“युक्षु कुर्व्वन् दिनर्क्षेषु सर्व्वान् कामान् समश्नुते ।
अयुक्षु तु पितॄन् सर्व्वान् प्रजां प्राप्नोति पुष्क-
लाम् ॥”
समः । स च छन्दसि द्वितीयचतुर्थपादरूपः ।
यथा, छन्दोमञ्जर्य्याम् । ३ । १ ।
“विषमे यदि सौ सलगा दले
भौ युजि भाद्गुरुकावुपचित्रम् ॥”)

**युङ्गी**, [न्] पुं, वर्णसङ्करजातिविशेषः । स तु गङ्गापुत्त्रकन्यायां वेशधारिणो जातः । यथा, --
“गङ्गापुत्त्रस्य कन्यायां वीर्य्येण वेशधारिणः ।
बभूव वेशधारी च पुत्त्रो युङ्गी प्रकीर्त्तितः ॥”
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डम् ॥

**युच्छ**, प्रमादे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट् ।) अन्तःस्थाद्यादिः पञ्चम-
स्वरी । प्रमादोऽनवधानता । युच्छति पापे
साधुः । ओष्ठ्यवर्गाद्यादिरिति रमानाथः ।
पचादित्वादनि पुच्छो लाङ्गूलम् । ओष्ठ्यवर्ग-
शेषादिरिति त्रिलोचनः । मुच्छति । इति दुर्गादासः ॥

**युज**, इर् ध ञ औ युतौ । इति कविकल्पद्रुमः ॥

(रुधा०-उभ०-सक०-अनिट् ।) इर्, अयुजत् अयौक्षीत् । ध, युनक्ति युङ्क्ते घृतेनान्नं लोकः ।
औ, योक्ता । इति दुर्गादासः ॥

**युज**, कि संयमे । युतौ । इति कविकल्पद्रुमः ॥

(चुरा०-पक्षे भ्वा०-पर०-सक०-सेट् ।) अन्तः-
स्थाद्यादिः । कि, योजयति योजति । संयमो बन्धनम् । इति दुर्गादासः ॥

**युज**, ङ क निन्दे । इति कविकल्पद्रुमः ॥ (चुरा०-

आत्म०-सक०-सेट् ।) ङ क, योजयते । इति दुर्गादासः ॥

**युज**, य औ ङ समाधौ । इति कविकल्पद्रुमः ॥

(दिवा०-आत्म०-अक०-अनिट् ।) समाधि-र्योग्यभावः । य ङ, स्वयमर्थे नियुज्यते । इति हलायुधः । औ, योक्ता । इति दुर्गादासः ॥

**युजानः**, पुं, सारथिः । इति संक्षिप्तसारोणादि-

वृत्तिः ॥

**युजौ**, [ज्] पुं, (युज् + क्विप् ।) अश्विनीकुमारौ ।

इति त्रिकाण्डशेषः ॥ नित्यद्विवचनान्तोऽयम् ॥

**युञ्जानः**, पुं, (युज् + शानच् ।) सारथिः । विप्रः ।

इति मेदिनी । ने, ११३ ॥ भावनासहकारेण सर्व्वज्ञः । यथा, --
"योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः ।
युक्तस्य सर्व्वदा भानं चिन्तासहकृतोऽपरः ॥"
इति भाषापरिच्छेदे । ६५ ॥
"युक्तस्यति । योगाभ्यासावगत्या वशीकृतसमाधि-
समासादितो विविधसिद्ध्युक्त इत्युच्यते अयमेव
विशिष्टयोगवत्त्वात् युक्त इत्युच्यते । सर्व्वदेति चिन्तासहकारं विनेत्यर्थः । भानं सर्व्वविषयाणां
प्रत्यक्षम् । अपरो युञ्जानः । विषयव्यावृत्त्या

**युद्**, [ध्] स्त्री, (योधनमिति । युध् + क्विप् ।)

युद्धम् । इत्यमरः । २ । ८ । १०६ ॥ (यथा, रामायणे । २ । ५१ । १० ।
"यो न देवासुरैः सर्व्वैः शक्यः प्रसहितुं युधि ।
तं पश्य सुखसंसुप्तं तृणेषु सह सीतया ॥")

**युद्धं**, क्ली, (युध्यते इति । युध् + भावे क्तः ।) योध-

नम् । लडाइ इति भाषा । तत्पर्य्यायः । आयो-
धनम् २ जन्यम् ३ प्रधनम् ४ प्रविदारणम् ५ मृधम् ६
आस्कन्दनम् ७ संख्यम् ८ समीकम् ९ साम्प-
रायिकम् १० समरम् ११ अनीकम् १२ रणः १३ कलहः १४ विग्रहः १५ संप्रहारः १६
अभिसम्पातः १७ कलिः १८ संस्फोटः १९ संयुगः २० अभ्यामर्द्दः २१ समाघातः २२ संग्रामः २३ अभ्यागमः २४ आहवः २५ समु-
दायः २६ संयत् २७ समितिः २८ आजिः २९
समित् ३० युत् ३१ । इत्यमरः । २ । ८ । १०३-१०६ ॥
संरावः ३२ आनाहः ३३ सम्परायकः ३४ विदारः ३५ दारणम् ३६ संवित् ३७ सम्परायः
३८ । इति शब्दरत्नावली ॥ तीक्ष्णम् ३९ अम्बरीषम् ४० बलजम् ४१ आनर्त्तः ४२ अभि-
मरः ४३ समुदयः ४४ । इति जटाधरः ॥ * ॥
युद्धे वर्णनीयानि यथा । चर्म्म १ वर्म्म २ बलम् ३
चरः ४ धूलिः ५ तूर्य्यस्वनः ६ सिंहनादः ७ शवमण्डलम् ८ रक्तनदी ९ छिन्नच्छत्रम् १० रथः ११ चामरः १२ हस्ती १३ अश्वः १४ केतुः १५ विदीर्णकुम्भकहस्तिकुम्भमुक्ता १६ व्यूहरचनावस्थितसेना १७ सुरपुष्पवृष्टिः १८ ।
इति कविकल्पलता ॥ * ॥ अथ युद्धफलम् ।

दंष्ट्रिभिः शृङ्गिभिर्व्वापि तथा म्लेच्छैश्च तस्करैः ।
स्वाम्यर्थे ये हता राजंस्तेषां स्वर्गो न संशयः ॥
शस्त्राग्निना सुनिर्द्दग्धः स्वगृहे च च्युतो यदि ।
संग्रामान्म्रियते राजंस्तस्य स्वर्गो न संशयः ॥
भयेन लज्जया वापि स्नेहेन च रणाजिरे ।
सम्मुखो म्रियते राजंस्तदा स्वर्गो न संशयः ॥
यन्नु भिन्नीकृतं गात्रं शरशक्त्यृष्टितोमरैः ।
देवकन्यास्तु तं वीरं रामयन्ति रमन्ति च ॥
वराप्सरःसहस्राणि शूरमायोधने हतम् ।
त्वरितान्यभिधावन्ति मम भर्त्ता भवेति च ॥
यत्र तत्र हतः शूरः शत्रुभिः परिवेष्टितः ।
अक्षयान् लभते लोकान् यदि क्लीवं न भाषते ॥
जितेन लभ्यते लक्ष्मीर्मृतेनापि सुराङ्गनाः ।
क्षणविध्वंसिनि काये का चिन्ता मरणे रणे ॥
हतस्याभिमुखस्थस्य ये लोका न निवर्त्तिनः ।
हते गोस्वामिविप्रार्थे नरमेधफलं हि तत् ॥
स्थानाभिघाते शरणागते च
राज्ञो विपत्तौ द्विजसार्थघाते ।
स्त्रीबालवृद्धाजनगोग्रहे च
शस्त्रं मुनीनामपि धारणीयम् ॥
यां यज्ञसंघैस्तपसा च विप्राः
स्वर्गैषिणो यत्र न वै प्रयान्ति ।
क्षणेन तामेव गतिं प्रयान्ति
महाहवे स्वां तनुं संत्यजन्तः ॥
सर्व्वांश्च वेदान् सुमहद्भिरङ्गैः
सांख्यञ्च योगञ्च वने विवासम् ।
कृते गुणा एकपदे प्रविष्टा
महाहवे स्वां तनुं संत्यजेद्यः ॥
इमां गिरं वेदविदः शुभाक्षरां
सुभाषितां वृत्रभिदा दिवौकसाम् ।

मानससमाधिस्थः । अयञ्च युञ्जान उच्यते । चिन्ता ध्यानं तदेव कारणं तत्सहकारात् स्थूलसूक्ष्मव्यवहितविप्रकृष्टान् अर्थान् मनः प्रत्यक्षीकरोतीत्यर्थः ।” इति सिद्धान्तमुक्तावली ॥

**युत्,** क्ली, निन्दा । यु ङ क निन्दे इत्यस्माद्भावे क्विप्प्रत्ययेन निष्पन्नम् ॥

**युत्,** [ध्] स्त्री, (योधनमिति । युध् + क्विप् ।) युद्धम् । इत्यमरः । ३ । ८ । १०६ ॥ (त्रि, युद्धकर्त्ता ।
यथा, भागवते । ६ । १२ । २३ ।
“इति ब्रुवाणावन्योन्यं धर्म्मजिज्ञासया नृप ! ।
युयुधाते महावीर्य्याविन्द्रवृत्रौ युधां पती ॥”)

**युत**, ऋ ङ दीप्तौ । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-सेट् ।) ऋ, अयुयोतत् । ङ, योतते । इति दुर्गादासः ॥

**युतं**, क्ली, (यु + क्तः ।) हस्तचतुष्टयम् । इति मेदिनी । ते, ४७ ॥

**युतः**, त्रि, (यु + क्तः ।) युक्तः । अपृथग्-भूतः । इति मेदिनी । ते, ४७ ॥ (यथा, भट्टिकाव्ये । १ । ७ ।
“स्त्रीभिर्युतान्यप्सरसामिवौघै-
र्मरोः शिरांसीव गृहाणि यस्याम् ॥”)

**युतकं**, क्ली, संशयः । युगम् । नारीवस्त्राञ्चलम् । युक्तम् । चलनाग्रम् । यौतुकम् । इति विश्व-मेदिन्यौ । के, १४३ ॥ मैत्रीकरणम् । इति शन्दरत्नावली ॥ स्त्रीवस्त्रभेदः । इति हेमचन्द्रः ॥
संश्रयः । शूर्पाग्रम् । इति नानार्थरत्नमाला ॥

“अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः ।
ब तत् फलमवाप्नोति संग्रामे यदवाप्नुयात् ॥
इति यज्ञविदः प्राहुर्यज्ञकर्म्मविशारदाः ।
तस्मात्तत्ते प्रवक्ष्यामि यत् फलं शस्त्रजीविनाम् ॥”
युद्धे मरणफलं यथा, --
“धर्म्मलाभोऽर्थलाभश्च यशोलाभस्तथैव च ।
यः शूरो वध्यते युद्धे विमृदन् परवाहिनीम् ॥
यस्य धर्म्मार्थकामौ च यज्ञश्चैव सदक्षिणः ।
परं ह्यभिमुखे हत्वा तयोः पन्थाधिरोहति ॥
विष्णोः स्थानमवप्नोति एवं युध्यन् रणाजिरे ।
अश्वमेधानवाप्नोति चतुरस्तेन कर्म्मणा ॥
यस्तु शस्त्रं समुत्सृज्य वीर्य्यवान् वाहिनीमुखे ।
सम्मुखो वर्त्तते शूरः स स्वर्गान्न निवर्त्तते ॥
राजा वा राजपुत्त्रो वा सेनापतिरथापि वा ।
हतः क्षत्त्रेण यः शूरस्तस्य लोकोऽक्षयो ध्रुवः ॥
यावन्ति तस्य गात्राणि भिन्दन्ति शस्त्रमाहवे ।
तावता लभते लोकान् सर्व्वकामदुहोऽक्षयान् ॥
बीरासनं वीरशय्या वीरस्थानस्थितिः स्थिरा ।
गवार्थे ब्राह्मणस्यार्थे गोस्वाम्यर्थे च ये हताः ।
ते गच्छन्त्यमरस्थानं ये स्युः सुकृतिनस्तथा ॥
अभग्नो यः परं सैन्यं भग्नञ्च परिरक्षति ।
पृष्ठस्थितः पालयति सोऽपि गच्छति तद्गतिम् ॥
अनुत्तीर्णस्तथा सद्यः प्राणान् यस्त्यजते युधि ।
हतश्च स्वपते युद्धे स स्वर्गान्न निवर्त्तते ॥

चमूमुखे यः स्मरते दृढस्मृति-
र्न हन्यते हन्ति च सोऽपि वैरिणः ॥
सदा पुण्यतमः स्वर्ग्यः सुयज्ञः सर्व्वतो मुखः ।
सर्व्वेषामेव वर्णानां क्षत्त्रियस्य विशेषतः ॥
भूयश्चैव तु वक्ष्यामि रणधर्म्मं सनातनम् ।
यादृशाय प्रवर्त्तव्यं यादृशं परिवर्जयेत् ॥
आततायिनमायान्तमपि वेदान्तगं द्विजम् ।
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥
कोदण्डशस्त्रपाणिन्तु प्रहरन्तं द्विजं यदि ।
हन्यात्तमासुरं भावं हत्वा न ब्रह्महा भवेत् ॥
ब्रह्महा जायते यैस्तु हतैस्तत्त्वं शृणुष्व मे ॥
वचःसंख्ये नृपश्रेष्ठ ! काययज्ञे सनानने ।
विरथं विगतं व्यश्वं विवर्णं विमुखस्थितम् ।
युद्धोत्साहहतं हत्वा ब्रह्महा जायते नरः ॥
विशस्त्रं विधनुष्कञ्च तं भीतोऽस्मीतिवादिनम् ।
वर्णशाखायुतांस्तांस्तु हत्वा स ब्रह्महा भवेत् ॥
अन्याहतो ब हन्तव्यो बालो वृद्धो नपुंसकः ।
तवाहं प्रवदन्मूत्रशकृत्कृतोऽथ भीरवः ॥
तस्मादेतान् परिहरेच्छूरो धर्म्मभृतां वरः ।
सम्यग्यज्ञफलन्त्वीहन् हत्वासौ ब्रह्महा भवेत् ॥
शक्यन्त्विह समृद्धैस्तु यज्ञैः क्रतुशतैर्नृपाः ।
आत्मदेहपरित्यागः कर्त्तुं युद्धे सुद्रष्करः ॥

ब्रह्महा शुध्यतेऽशुद्धो देहं त्यक्त्वा रणाजिरे ।
न शुद्धी रणभग्नानां ऋते क्वचिन्महापथात् ॥
संग्रामे युध्यतो लक्ष्मीः कीर्त्तिः स्यात् स्वर्गति-
स्तथा ।
भग्नस्य तेऽपि नश्यन्ति महासत्यान्महारणात् ॥
तस्मात् सत्येन यत्किञ्चित् क्रियते तच्छुभप्रदम् ।
यज्ञं दानं व्रतं वापि संग्रामे नृपसत्तम ! ॥”
इत्याद्ये वह्निपुराणे संग्रामप्रशंसा ॥ * ॥
अथ युद्धनिर्णयः ।
“यत्रायुद्धे ध्रुवं नाशो युद्धे जीवितसंशयः ।
तं कालमेकं युद्धस्य प्रवदन्ति मनीषिणः ॥
आत्मोदये विगृह्णीयात् क्षोभो नात्मबले यदि ।
व्यसने च प्रहर्त्तव्यं शत्रौ न तु विपर्य्यये ॥
स्वयं राज्ञा न योद्धव्यं येऽपि शस्त्रास्त्रको-
विदाः ।
मृता युद्धेषु दृश्यन्ते शक्तेभ्यः शक्तिमत्तराः ॥
रथयुद्धं समे देशे विषमे हस्तिसङ्गरः ।
अश्वयुद्धं मरौ देशे पत्तियुद्धञ्च दुर्गमे ॥
अत्यये सर्व्वयुद्धं स्यान्नौकायुद्धं जलप्लुते ।
संहत्य योधयेदन्यान् कामं विस्तारयेद्बहून् ॥
सूचीमुखमनीकं स्यादल्पं हि बहुभिः सह ।
अपि पञ्चाशतः शूरान् निघ्नन्ति परवाहिनीम् ।
येऽपि वा पञ्चषट्सप्तसहिताः कृतनिश्चयाः ॥”
अथ युद्धासननिर्णयः ।
“अन्यद्वारा विपक्षन्तु विगृह्यासनमुच्यते ।
अरिं विगृह्य वा स्थानं विग्रहासनमुच्यते ॥
अरेश्च विजिगीषोश्च विग्रहे हीयमानयोः ।
सन्धाय यदवस्थानं सन्धायासनमुच्यते ॥
उदासीने मध्यमे वा समाने प्रतिशङ्कया ।
एकीभूय व्यवस्थानं सम्भूयासनमुच्यते ॥
सर्व्वेषां प्रीतिजननं निजराष्ट्रस्य लक्षणम् ।
एतत् प्रीत्यासनं नाम सर्व्वासनमहत्तरम् ॥”
अथ द्वन्द्वयुक्तिः ।
“राज्ञो बलं नहि बलं द्वन्द्वमेव बलं बलम् ।
अप्यल्पबलवान् राजा स्थिरो द्वन्द्वबलाद्भवेत् ॥”
तथा च ।
“एकः शतं योधयति प्राकारस्थो धनुर्धरः ।
शतं दशसहस्राणि तस्माद्दुर्गं विशिष्यते ॥
अकृत्रिमं कृत्रिमञ्च तत् पुनर्द्विविधं भवेत् ॥
यद्दैवमुचितं द्वन्द्वं गिरिनद्यादिसंश्रियम् ।
अकृत्रिममियं ज्ञेयं दुर्लङ्घ्यमरिभूभुजाम् ॥

कृत्रिमद्वन्द्वयुक्तिर्यथा, --
“यस्मिन्राज्ये गिरिर्नास्ति नद्यो वा
गहनोदकाः ।
तस्य मध्ये महीपालः कृत्रिमं द्वन्द्वमारभेत् ॥
गजैरलङ्घ्या विस्तीर्णा गम्भीराः पूर्णवारयः
।
द्वन्द्वत्वेन समादिष्टाः परिखा बहुयादसः ॥
विशालशालं सुघनं बहुकण्टकि सङ्कटम् ।
द्वन्द्वत्वेन समादिष्टं विस्तीर्णं विषमं वनम् ॥
अधोऽधो वध्यमानोऽपि कन्दरोऽल्पजलं
स्रवन् ।
द्वन्द्वत्वेन समुद्दिष्टः स दुर्लङ्घ्यो हि भूभुजाम्
॥
सर्व्वतः परिखां कृत्वा निवन्धोपरि कन्दरम् ।
तज्जलप्लुतदेशत्वाज्जलद्वन्द्वं तदुच्यते ॥
एषामभावे निम्नस्य भूप्रदेशस्य बन्धना ।
वर्षासूपगते वारि जलद्वन्द्वं ततो भवेत् ॥
एतयोरपि संमिश्रात् संमिश्रं द्वन्द्वमाचरेत् ।
आश्रित्य कृत्रिमं द्वन्द्वं बलवद्वैरिणी दिशि ॥
अन्यत्र कृत्रिमं द्वन्द्वं कृत्वा नरपतिर्विशेत् ।
रथपतिर्यदा वैरी स्थलद्वन्द्वं तदाचरेत् ॥
गजाश्वनाथश्चेद्वैरी जलद्वन्द्वं तदाचरेत् ।
गिरिद्वन्द्वं नृपः सेवेत् यस्य स्याद्द्विविधो
रिपुः ॥
सर्व्वं हि त्रिविधं युद्धं समासादुपादिक्ष्यते ।
प्रतिराजस्य राज्यान्ते प्रकटे गुप्त एव च ॥
राज्यान्ते सैनिकान् रक्षेत् प्रकटे निवसेत्
स्वयम् ।
गुप्ते स्त्रीकोषसम्भारं संरक्षेदिति निश्चयः ॥”
अथ सामान्यतो गुणाः । तथा हि नीति-
शास्त्रम् ।
“सप्रवेशापसरणं द्वन्द्रमुत्तममुच्यत ।
अन्यत्र वन्दिशालेव न तादृग्बद्धमाश्रयेत् ॥
धनुर्द्वन्द्वं महीद्वन्द्वं गिरिद्वन्द्वं तथैव च ।
मनुष्यद्वन्द्वसंसर्गं वनद्वन्द्वञ्च तानि षट् ॥”
अन्ये तु ।
“न द्वन्द्वं द्वन्द्वमित्याहुर्योद्धृद्वन्द्वं प्रकीर्त्तितम् ।
योद्धृशून्यं हि यद्युद्धं मृतकायसमं हि तत् ॥”
अथान्यत्रापि ।
“यावत्प्रमाणं नगरं हि राज्ञां
ततो भवेदुत्तममध्यमान्त्यम् ।

सङ्गे २८ संयुगे २९ सङ्गथे ३० सङ्गमे
३१ वृत्र-
तूर्य्ये ३२ पृक्षे ३३ आणौ ३४
शूरसातौ ३५
वाजसातौ ३६ समनीके ३७ खले ३८
खजे ३९
पौंस्ये ४० महाधने ४१ वाजे ४२
अज्म ४३
सद्म ४४ संयत् ४५ संवतः ४६ । इति
षट्चत्वा-
रिंशत् संग्रामनामानि । इति
वेदनिघण्टौ
२ । १७ ॥

**युद्धरङ्गः**, पुं, (युद्धे रङ्गो रागोऽस्य ।) कार्त्तिकेयः
।
इति शब्दचन्द्रिका ॥ (युद्धस्य रङ्गः ।
युद्ध-
स्थलम् । यथा, महाभारते । ७ । ९५
। १८ ।
“अन्योऽन्यं जघ्निरे क्रुद्धाः युद्धरङ्गगता
नराः ॥”)

**युद्धसारः**, पुं, (युद्धस्य सारः ।) घोटकः । इति
शब्दचन्द्रिका ॥

**युध**, य औ ङ युद्धे । इति कविकल्पद्रुमः ॥
(दिवा०-
आत्म०-अक०-हनने सक०-अनिट् ।)
य ङ,
युध्यते । औ, योद्धा ।
संमुखस्थितयोर्द्वयोः
सांग्रामिकरीत्या परस्पराभिभवेच्छा
युद्धम् ।
युध्यते योधः कदाचिदेकस्य सह
भावविव-
क्षायां युध्यते योधः परेण ।
कदाचिद्धननेऽपि
युध्यते चौरं राजा हन्तीत्यर्थः । यो
भक्त-
पिण्डस्य कृते न युध्येदिति अस्माद्भावे
क्विपि

प्राकारपरिखारण्यसंश्रयं यद्भवेदिह ।
कृत्रिमं नाम विज्ञेयं लङ्घ्यालङ्घ्यन्तु वैरिणाम् ॥”
अथाकृत्रिमद्वन्द्वयुक्तिः ।
“अत्युच्चविस्तीर्णशिरा दुरारोहः सकाननः ।
सजलाशयसम्भारभोज्यद्रव्यसमाश्रयः॥
सुखनिःसरणो द्वन्द्वः पर्व्वताख्यो महीभुजाम् ।
नद्यो गभीरविस्तीर्णाश्चतुर्द्दिक्षु व्यवस्थिताः ॥
तन्मध्ये भूप्रदेशो यो नदीद्वन्द्वः स उच्यते ।
यद्यन्यच्चिरकालीनं दुर्लङ्घ्यविपिनादिकम् ।
तन्मध्यरचिता भूमिर्द्वन्द्वत्वेनोपतिष्ठते ।
वनद्वन्द्वमिति ख्यातं यथापूर्ब्बं महत्तरम् ॥”

त्रिंशज्जलक्ष्माष्टगुणोत्तरेण
त्रिदेशजानां धरणीपतीनाम् ॥”
गर्गस्तु ।
“यदन्यद्विविधं द्वन्द्वं प्रोच्यते धरणीभुजाम् ।
तेभ्य एवातिरिच्येत मन्त्रद्वन्द्वं विशेषतः ॥
अन्येषु दैवाद्भिन्नेषु मन्त्रद्वन्द्वाज्जयेन्नृपः ।
मन्त्रद्वन्द्वे हि भिन्ने हि न चान्यत् कार्य्यकारकम् ॥
यदैव वैरिदुर्लङ्घ्यं विस्तीर्णं विषमञ्च तत् ।
सप्रवेशापसरणं तद्युद्धमुत्तमं विदुः ॥”
इति युक्तिकल्पतरुः ॥
तद्वैदिकपर्य्यायः । रणः १ विवाक् २ विखादः ३
नदनुः ४ भरे ५ आक्रन्दे ६ आहवे ७ आजौ ८
पृतनाज्यम् ९ अभीके १० समीके ११ मम-सत्यम् १२ नेमधिता १३ सङ्काः १४ समितिः १५
समनम् १६ मीळ्हे १७ पृतनाः १८ स्पृधः १९
मृधः २० पृत्सु २१ समत्सु २२ समर्य्ये २३
समरणे २४ समोहे २५ समिथे २६ सङ्के २७

तमिच्छतीति क्ये तं करोतीति कण्ड्वादित्वात्
क्ये वा साध्यम् । इति दुर्गादासः ॥

**युधानः**, पुं, (युध्यतेऽसौ । युध् + “युधिबुधिदृशः किच्च ।” उणा० २ । ९० । इति आनच् । स च कित् ।) क्षत्त्रियः । इत्युणादिकोषः ॥ (रिपुः । इत्युज्ज्वलदत्तः ॥)

**युधिकः**, त्रि, योद्धा । युधशब्दात् ष्णिकप्रत्ययेन निष्पन्नः ॥

**युधिष्ठिरः**, पुं, (युधि संग्रामे स्थिरः । “गवि-युधिभ्यां स्थिरः ।” ८ । ३ । ९५ । इति षत्वम् ।
“हलदन्तात् सप्तम्याः संज्ञायाम् ।” ६ । ३ । ९ ।
इति सप्तम्या अलुक् ।) पाण्डवराजः । स कुन्ती-गर्भे धर्म्माज्जातः । तत्पर्य्यायः । अजातशत्रुः २
शल्यारिः ३ धर्म्मपुत्त्रः ४ अजमीढः ५ । इति हेमचन्द्रः । ३ । ३७१ ॥
(मृगशापाभितप्तः पाण्डुर्निरपत्यतया खिन्नचित्तः पुत्त्रार्थमेकदा धर्म्मपत्नीं कुन्तीमुवाच । शुचिस्मिते ! अनपत्यो हि न शुभलोकार्ह इति विचिन्त्य त्वं मदुपका-रार्थं केनापि पुत्त्रमुत्पादयेति । एवमुक्ता कुन्ती दृष्ट्वा च पत्युराग्रहातिशयं धार्म्मिकपुत्त्रलाभाय दुर्व्वासः प्रदत्तमन्त्रबलेन धर्म्ममाहूय तेन सङ्गता युधिष्ठिरं पुत्त्रमलभत । यदुक्तं महाभारते । १ । १२३ । ५ -- ८ ।
“संयुक्ता सा हि धर्म्मेण योगमूर्त्तिधरेण ह ।

| | | |
|---|---|---|
| | | लेभे पुत्त्रं वारारोहा सर्व्वप्राणभृतां हितम् ॥<br>ऐन्द्रे चन्द्रसमायुक्ते मुहूर्त्तेऽभिजितेऽष्टमे ।<br>दिवा मध्यगते सूर्य्ये तिथौ पूर्णेऽतिपूजिते ॥<br>समृद्धयशसं कुन्ती सुषाव प्रवरं सुतम् ।<br>जातमात्रे सुते तस्मिन् वागुवाचाशरीरिणी ॥<br>एष धर्म्मभृतां श्रेष्ठो भविष्यति नरोत्तमः ॥<br>विक्रान्तः सत्यवाक् चैव राजा पृथ्व्यां भविष्यति । |

युधिष्ठिर इति ख्यातः पाण्डोः प्रथमजः सुतः ॥”
अथ गच्छति काले धृतराष्ट्रेण यौवराज्ये
स्थापितोऽयं दयादाक्षिण्यादिगुणपरम्परया
प्रजासु लब्धकीर्त्तिरनुजैः सह सुखमुवास । अथ
जतुगृहदाहानन्तरं त्यक्तराज्यो द्रुपदराज्य-
मभिगम्य द्रौपदीं सानुजः परिणीय पुनः
स्वराज्यमागतवान् । ततः कृष्णसहायो राज-
सूययज्ञकरणाय दुर्जयान् जरासन्धप्रभृति-
नृपतीन् हत्वा राजसूयेष्टिं समापयामास ।
ततोऽसूयापरवशदुर्य्योधनमतानुसारिणा कैतव-
पटुना शकुनिना सह द्यूतं कृत्वा पराजितो-
ऽनुजैर्भीमादिभिः पत्न्या द्रौपद्यां च सहितो
द्वादशवर्षं वनवासाय एकवर्षमज्ञातवासाय च
प्रस्थितो द्वैतवनमध्युवास । ततो द्वादशवर्षैर्वन-
वासजातं महत् कष्टमनुभूय अज्ञातवासार्थं
त्रयोदशवर्षंविराटनगरमधिवसन्पुनः कृष्ण-
सहायः स्वराज्यप्राप्त्यर्थं महतीं चेष्टां कृतवान् ।
कृतेऽपि यत्ने यदा विगुणग्रहो दुर्य्योधनो
राज्यादिकं न दत्तवान् तदा लब्धसैन्यबलोऽसौ
कुरुक्षेत्र महत् युद्धं कृत्वा विनाश्य च दुर्य्यो-
धनादीन् हस्तिनाधिपतिः सम्राट् बभूव ।
अथाश्वमेधादिना सुरगणान् परितोष्य षट्-
त्रिंशद्वर्षं राज्यसुखमनुभूतवान् । ततः प्रभासे
विप्रशापात् यदुवंशक्षयमाकर्ण्यातिनिर्व्विण्णः
षट्त्रिंशवर्षवयस्कं अर्ज्जुनपौत्रं परीक्षितं
स्वराज्येऽभिषिच्य उत्तरामार्गेण स्वर्गारोहणं
कृतवानिति । तथाच देवीभागवते । २ । ८ ।
१५-१७ ।
“देहत्यागं हरेः श्रुत्वा यादवानां क्षयं तथा ।
गमनाय मतिं चक्रे राजा हैमाचलं प्रति ॥
षट्त्रिंशद्वार्षिकं राज्ये स्थापयित्वोत्तरासुतम् ।
निर्जगाम वनं राजा द्रौपद्या भ्रातृभिः सह ॥
षट्त्रिंशच्चैव वर्षाणि कृत्वा राज्यं गजाह्वये ।
गत्वा हिमाचले षट् ते जहुः प्राणान्
पृथासुताः ॥”
अस्यान्यद्विशेषविवरणन्तु महाभारतादौ विस्त-
रशो द्रष्टव्यम् ॥)

**युधीयः**, त्रि, योद्धा । युधधातोरीयप्रत्ययेन निष्पन्नः ॥

**युध्मः**, पुं, (युध्यते इति युध्यते येनेति वा । युध् +
“इषियुधीन्धिदसिश्याधूसूभ्योमक् ।” उणा०

**युयुक्खुरः**, पुं, (युर्निन्दितः युक् योजनास्य । तादृशः
खुरो यस्य ।) क्षुद्रव्याघ्रः । इति
शब्दचन्द्रिका ॥

**युयुधानः**, पुं, (युध्यतेऽसौ । युध + “मुचियुधिभ्यां
सन्वच्च ।” उणा० २ । ९१ । इत्यानच्
कित्कार्य्यं
सन्वत्कार्य्यञ्च ।) सात्यकिः । यथा, --
“शैनेयस्तु शिनेर्नप्ता युयुधानश्च
सात्यकिः ॥”
इति त्रिकाण्डशेषः ॥
इन्द्रः । क्षत्त्रियः । इति
संक्षिप्तसारोणादि-
वृत्तिः ॥ त्रि, योद्धा च ॥

**युवकः**, पुं, युवा । युवन्शब्दात् कन्प्रत्ययेन निष्पन्नः ॥

**युवगण्डः**, पुं, (यूणां गण्ड आश्रयत्वेनास्त्यस्य । युव-
गण्ड + अर्शआद्यच् ।) यूनो
गण्डस्थव्रणविशेषः ।
वयस्फोडा इति भाषा । यथा, --
“युवगण्डो यवगण्डः स्यात्
वयस्फोटाह्वये द्वयम् ॥”
इति शब्दरत्नावली ॥

**युवजानिः**, पुं, (युवतिर्जाया यस्येति । “जायया-
निङ् ।” ५ । ४ । १३४ । इति निङ् ।)
युवतीपतिः । यथा,
“युवजानिर्धनुष्पाणिर्भूमिष्ठः
खविचारिणः ।
रामो यज्ञद्रुहो हन्ति
कालकल्पशिलीमुखः ॥”
इति भट्टिः । ५ । १३ ॥

**युवतिः**, स्त्रि, (युवन् + “यूनस्तिः ।” ४ । १ । ७७ ।
इति तिः ।) प्राप्तयौवना ॥ (यथा,
अभिज्ञान-
शाकुन्तले ४ अङ्के ।
“शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं
सपत्नीजने

**युवतीष्टा**, स्त्री, (युवतीनामिष्टा ।) स्वर्णयूथिका ।
इति राजनिर्घण्टः ॥

**युवनाश्वः**, पुं, सूर्य्यवंशीयराजविशेषः । स च
गौरीगर्भे प्रसेनजितो जातः मान्धातृपिता च
।
यथा, --
“तस्याः प्रसेनजिज्जज्ञे लेभे भार्य्यां
पतिव्रता ।
गौरी नामाभिशप्ता सा नदीभूता तरङ्गिणी ।
तस्यां प्रसेनजिज्जज्ञे युवनाश्वं महीपतिम्
॥
यावत् सूर्य्य उदेति स्म यावच्च प्रतितिष्ठति
।
सर्व्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते
॥”
इति वह्निपुराणे सगरोपाख्यानाध्यायः॥

**युवनाश्वजः**, पुं, (युवनाश्वात् जातः । जन् + डः ।)
मान्धातृराजः । इति हेमचन्द्रः । ३ । ४६४
।

**युवराजः**, पुं, भाविबुद्धविशेषः । तत्पर्य्यायः ।
मैत्रेयः २ अजितः ३ । इति त्रिकाण्डशेषः ॥
राजपुत्त्रः । तत्पर्य्यायः । कुमारः २ भर्त्तृ-
दारकः ३ । इत्यमरः । १ । ७ । १२ ॥ युवा
बालो राजा यूनां वा राजा युवराजः ।
सख्य-
होराज्ञ इति षः । कुमारयति कुमारः ।
स्यात् कुमार कुमाल त् क केलौ अन् ।
भर्त्तुर्दरकः पुत्त्रः भर्त्ता चासौ दारकश्चेति
वा भर्त्तृदारकः । दारको भेदके शिशाविति
निगमः । इति भरतः ॥ (यथा, महाभारते ।
१ । ७३ । १६ ।
“मयि जायेत यः पुत्त्रः स भवेत्त्वदनन्तरम् ।
युवराजो महाराज ! सत्यमेतद्ब्रवीमि ते
॥”)

**युवा**, [न्] त्रि, (यौतीति । यु + “कनिन्
युवृषितक्षिराजिधन्विद्युप्रतिदिवः ।” उणा०
१ । १५६ । इति कनिन् ।) तरुणः । (यथा,
मनौ । २ । १२० ।

१ । १४४ । इति मक् । संग्रामः । धनुः । इति मेदिनी ॥ वाणः । इत्युणादिकोषः ॥ योद्धा । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥ (यथा, ऋग्वेदे । १ । ५५ । ५ ।
"स इन्महानि समिथानि मज्मना
कृणोति युघ्म ओजसा जनेभ्यः ॥"
"युध्मः योद्धा ।" इति तद्भाष्ये सायणः ॥) शेष-संग्रामः । शरभः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**युप**, य इर् विमोहे । इति कविकल्पद्रुमः ॥

(दिवा०-पर०-सक०-सेट् ।) विमोह आकुली-करणम् । य, युप्यति । इर्, अयुपत् अयोपीत् । पुषादित्वात् ङ इत्यन्ये । इति दुर्गादासः ॥

भर्त्तुर्विप्रकृतापि रोषणंतया मास्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने
भोगेष्वनुत्सेकिनी
यान्त्येवं गृहिनीपदं युवतयो वामाः कुल-स्याधयः ॥")

**युवती**, स्त्री, (यु + शतृ + ङीप् । इति सिद्धान्त-

कौमुदी । ४ । १ । ७७ । कृदिति ङीष् । इत्यु-
ज्ज्वलदत्तः । १ । १५६ ।) प्राप्तयौवना । यथा,
बृहत्संहितायाम् । ७५ । ४ ।
"यो यं विचिन्तयति यानि स तन्मयत्वं
यस्मादतः सुभगयेव गता युवत्यः ॥")
तत्पर्य्यायः । युवतिः २ यूनी ३ तरुणी ४ तलुनी
५ दिक्वरी ६ धनिका ७ धनीका ८ मध्यमा ९
दृष्टरजाः १० मध्यमिका ११ । इति शब्दरत्ना-
वली ॥ ईश्वरी १२ वर्य्या १३ । इति हेमचन्द्रः ।
३ । ५११ ॥ वयस्था १४ । इति राजनिर्घण्टः ॥
तस्या लक्षणादि यथा, --
"आषोडशाद्भवेद्बाला तरुणी त्रिंशता मता ।
पञ्चपञ्चाशतः प्रौढा वृद्धा भवति तत्परम् ॥"
इति कालिदासः ॥
"बाला तु प्राणदा प्रोक्ता युवती प्राणहारिणी ।
प्रौढा करोति वृद्धत्वं वृद्धा मरणमादिशेत् ॥
निदाघशरदोर्बाला प्रौढा वर्षावसन्तयोः ।
हेमन्ते शिशिरे योग्या न वृद्धा क्वापि शस्यते ॥"
योग्या युवती । इति राजवल्लभः ॥ स्त्रीसा-
मान्यम् । यथा । प्रमदा चेति विज्ञेया युवतिश्च

"ऊर्द्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते ॥")
श्रेष्ठः । निसर्गबलशाली । इति मेदिनी । ने, ११३ ॥

**युवा**, [न्] पुं, (यौतीति । यु + कनिन् ।)

यौवनावस्थाविशिष्टः । षोडशवर्षात् त्रिंशद्वर्ष-
पर्य्यन्तवयस्कः । इति केचित् ॥ षोडशवर्षात्
सप्ततिवर्षपर्य्यन्तवयस्कः । यथा, --
"आषोडशाद्भवेद्बालस्तरुणस्तत उच्यते ।
वृद्धः स्यात् सप्ततेरूर्द्ध्वं वर्षीयान् नवतेः परम् ॥"
इति भरतधृतस्मृतिः ॥
("आषोडशाद्भवेद्बालः पञ्चत्रिंशत् युवा नरः ।"
इति हारीते प्रथमे स्थाने पञ्चमेऽध्याये ॥)
तत्पर्य्यायः । वयस्थः २ तरुणः ३ । इत्यमरः ।
२ । ६ । ४२ ॥ वयःस्थः ४ तलुनः ५ । इति शब्द-
रत्नावली ॥ गर्भरूपः ६ वेटकः ७ । इति जटा-
धरः ॥

**युष**, भजने । इति कविकल्पद्रुमः ॥ सौत्रधातु-

रयम् । (पर०-सक०-सेट् ।) योषित् युष्मद् ।
इति दुर्गादासः ॥

**युष्मद्**, (योषति भजतीति । युष् + "युष्यसिभ्यां

मदिक् ।" उणा० १ । १३८ । इति मदिक् ।)

|  |  |  |
| --- | --- | --- |
|  | तथा स्मृतेति भागुरिः । प्राग्यौवना युवति- रिति वात्स्यायनः । इत्यमरटीकायां भरतः । २ । ६ । ८ ॥ * ॥ हरिद्रा । इति शब्दचन्द्रिका ॥ |  |

सर्व्वनामयुष्मच्छब्दः । तस्य त्रिषु लिङ्गेषु समानि रूपाणि । (एकविंशतिविभक्तिषु तस्य रूपाणि ।) यथा । त्वम् १ युवाम् २ यूयम् ३ । त्वाम् ४ युवाम् ५ युष्मान् ६ । त्वया ७ युवाभ्याम्
८ युष्माभिः ९ । तुभ्यम् १० युवाभ्याम् ११ युष्मभ्यम् १२ । त्वत् १३ युवाभ्याम् १४ युष्मत् १५ ।
तव १६ युवयोः १७ युष्माकम् १८ । त्वयि १९
युवयोः २० युष्मासु २१ । (द्वितीयाचतुर्थी-षष्ठीनामेकवचनद्विवचनबहुवचनविभक्तिषु तस्य रूपान्तराणि यथा । द्वितीयैकवचने त्वा । चतुर्थीषष्ठ्योरेकवचने ते । आसां द्विवत्तने वाम् ।
आसां बहुवचने वः । श्लोकपादे वाक्यादौ च-वा-हा-ह-एव-शब्दयोगे अदर्शनाथदृश्यर्थ-धातुयोगे च न स्युः ।) इति व्याकरणम् ॥
यथा, --
"युष्मत्कृते खञ्जनगञ्जनाक्षि !
शिरो मदीयं यदि याति यातु ।
नीतानि नाशं जनकात्मजार्थं
दशाननेनापि दशाननानि ॥"
इति मुक्तिवादे गदाधरः ॥)

**यूः**, स्त्री, यूषः । इति हेमचन्द्रः । ३ । ६८ ॥

**यूकः**, पुं, (यौतीति । यु + "अजियुधूनीभ्यो दीर्घश्च ।" उणा० ३ । ४७ । इति कन् दीर्घश्च ।) मत्कुणः । इति जटाधरः ॥
(यथा, सुश्रुते सूत्रस्थाने ३१ अध्याये ।
"यूका ललाटमयान्ति बलिं नाश्नन्ति वायसाः ।
येषां वापि रतिर्नास्ति यातारस्ते यमालयम् ॥")

**यूका**, स्त्री, (यूक + स्त्रियां टाप् ।) मत्कुणः ।
यूत्री इति उकुण इति च भाषा । तत्पर्य्यायः । केशकीटः २ स्वेदजः ३ षट्पदः ४ । इति राजनिर्घण्टः ॥ पाली ५ बालकृमिः ६ । इति जटाधरः ॥ (यथा, मनौ । १ । ४५ ।
"स्वेदजं दंशमशकं यूकामक्षिकमत्कुणम् ।
मत्कुणाद्याश्च पञ्चम्यो
वाह्योपद्रवकारिणः ॥
यूका मस्तकसंस्थाने श्वेता
वस्त्रनिवासिनी ।
चर्म्मयूका नेत्रचर्म्मे सूक्ष्मे रोमणि यष्टिका ॥"
इति हारीते चिकित्सितस्थाने
पञ्चमेऽध्याये ॥
यूकानाशकौषधं यथा, कामरत्ने ।
"विडङ्गगन्धोत्पलकल्कयोगात्
गोमूत्रसिद्धं कटुतैलमेतत् ।
अभ्यङ्गयोगेन शिरोरुहाणां
यूकादिलीक्षाप्रचयं निहन्ति ॥
गोमूत्रेण बलामूललेपो यूकानिवारणः ।
पारदं मर्द्दयेन्निष्ककृष्णधुस्तूरजद्रवैः ॥
नागवल्लीद्रवैर्व्वाथ वस्त्रखण्डं प्रलेपयेत् ।
तद्वस्त्रं वेष्टयेन्मौलौ धार्य्यं यामत्रयं
तथा ॥
यूका पतन्ति निःशेषान्मस्तकान्नात्र
संशयः ।
द्विनिशानवनीतेन लेपान्मौलौ
प्रकण्डुनुत् ॥
नीलोत्पलं तिलं यष्टि सर्षपं नागकेशरम् ।
धात्रीफलं समं पिष्ट्वा लेपो
यूकाविनाशनः ॥
निशागन्धकगोमूत्रं विडङ्गकटुतैलकम् ।
पारदेन समं मर्द्द्यं लेपो यूकानिवारणः ॥"
इति केशस्य यूकादिनिवारणम् ॥
परिमाणभेदः । यथा, मार्कण्डेये । ४९ । ३७ ।
"परमाणुः परं सूक्ष्मं त्रसरेणुर्म्महीरजः ।
बालाग्रञ्चैव निष्काञ्च यूकां चाथ
यवोदरम् ॥")

**यूतिः**, स्त्री, (यु + "ऊतियूतिजूतिसातिहेतिकीर्त्त-यश्च ।" ३ । ३ । ९७ । इति क्तिन् निपातनाद्दीर्घ-त्वञ्च ।) मिश्रणम् । इति मुग्धबोधव्याकर-

**यूथिका**, स्त्री, (यूथं पुष्पवृन्दमस्या अस्तीति । यूथ + ठन् । टाप् ।) पाठा । इति राजनिर्घण्टः । अम्लानकः । इति मेदिनी । के, १४४ ॥ पुष्प-
विशेषः । युँइ फुल इति भाषा ॥ (यथा, मेघ-दूते । १ । २८ ।
"विश्रान्तः सन् व्रजवननदीतीरजातानि सिञ्चन्
उद्यानानां नवजलकणैर्यूथिकाजालकानि ॥")
तत्पर्य्यायः । गणिका २ अम्बष्ठा ३ मागधी ४ ।
सा पीता चेत् हेमपुष्पिका । इत्यमरः । २ । ४ । ७१ ॥ यूथी ५ प्रहसन्ती ६ । इति त्रिकाण्ड-
शेषः ॥ शिखण्डिनी ७ वासन्ती ८ । इति रत्नमाला ॥ बालपुष्पिका ९ बहुगन्धा १० भृङ्गानन्दा ११ । अस्या गुणाः । स्वादुत्वम् । शिशिरत्वम् । शर्करार्त्तिपित्तदाहतृषानाना-त्वग्दोषनाशित्वञ्च । इति राजनिर्घण्टः ॥
अपि च ।
"यूथीयुगं हिमं तिक्त कटुपाकं सरं लघु ।
मधुरं तुवरं हृद्यं पित्तघ्नं कफवातलम् ।
व्रणास्रमुखदन्ताक्षिशिरोरोगविषापहम्॥"
इति भावप्रकाशः ॥
(तथा च सुश्रुते उत्तरतन्त्रे ४५ अध्यायः ।
"पटोलशेलूसुनिषण्णयूथिका
वटातिमुक्ताङ्कुरमिन्दुवारजम् ॥")

**यूथी**, स्त्री, (यूथ + अर्श आद्यच् । ततो ङीष् ।)
यूथिका । इति शब्दरत्नावली ॥

**यूथीनः**, पुं, (यूथं पातीति । यूथ + खः ।)
यूथपः । इति शब्दचन्द्रिका ॥

**यूनिः**, स्त्री, योगम् । मिश्रणम् । इति सिद्धान्त-कौमुदी ॥

**यूनी**, स्त्री, (युवन् + ङीष् । "श्वयुवमघोनाम-तद्धिते ।" ६ । ४ । १३३ । इति वस्य उत्वम् ।)
युवती । इति शब्दरत्नावली ॥ (यथा, --

उष्मणश्चोपजायन्ते यच्चान्यत् किञ्चिदीदृशम्
॥”
क्रिमिविशेषः । तद्यथा, --
“नामतो विंशतिविधा बाह्यास्तत्र मलोद्भवाः ।
तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः ॥
बहुपादाश्च सूक्ष्माश्च यूका लिख्याश्च नामतः
।
द्विधा ते कोठपिडकाः कण्डूगण्डान् प्रकुर्व्वते
॥”
इति माधवकरसंग्रहीतरुग्विनिश्चये क्रिम्यधि-
कारे ॥
“क्रिमयो द्विविधाः प्रोक्ता बाह्याभ्यन्तरसम्भवाः
।
बाह्या यूकाः प्रसिद्धाः स्युः किञ्चुलूकास्तथा-
न्तराः ॥
सप्तधा हि भवेद्बाह्याः षड्धा चान्तःसमुद्भवाः ।
तेषां वक्ष्यामि संभूतिं बाह्यानाभ्यन्तरे नृणाम् ॥
रूक्षादति बलात् स्वेदाच्चिन्तया शोचनादपि ।
कफधातुसमुद्भूतास्तीक्ष्णा यूका भवन्ति हि ॥
यूकाः कृष्णाः पराः श्वेतास्तृतीयाश्चर्म्मणि
स्थिताः ।
सूक्ष्मातिविकटा रूक्षाश्चर्म्माभाश्चर्म्मयूकिकाः
॥
चतुर्थी विन्दुकी नाम वर्त्तुला मूत्रसम्भवा ।

णम् ॥ (यथा, भट्टिकाव्ये । ७ । ६९ ।
“करोमि वो बहिर्यूतीन् पिबध्वं पाणिभि-
र्दृशः ॥”)

**यूथं**, क्ली, (यु मिश्रणे + “तिथपृष्ठगूथयूथप्रोथाः
।”
उणा० २ । १२ । इति थक्प्रत्ययेन
निपाति-
तम् ।) सजातीयसमूहः । इत्यमरः । २ ।
५ । ४१ ॥
(यथा, रामायणे । २ । ५४ । ४१ ।
“तत्र कुञ्जरयूथानि मृगयूथानि चैव हि ।
विचरन्ति वनान्तेषु तानि द्रक्ष्यसि
राघव ! ॥”)

**यूथनाथः**, पुं, (यूथस्य नाथः ।) वन्यकरिणां
समूहस्य ईश्वरः । तत्पर्य्यायः । यूथपः
२ ।
इत्यमरः । २ । ८ । ३५ ॥

**यूथपः**, पुं, (यूथं पातीति । पा + कः ।) अरण्य-
हस्तिनां प्रधानम् । इति शब्दरत्नावली
॥
(यथा, श्रीमद्भागवते । ९ । १५ । २८ ।
“घोरमादाय परशुं सतूणं वर्म्मकार्म्मुकम्
।
अन्वधावत दुर्म्मर्षो मृगेन्द्र इव यूथपम्
॥”
प्रधानमात्रे च । यथा, महाभारते । १ ।
१८ । ५ ।
“राजा पाण्डुर्महारण्ये मृगव्यालनिषेविते
।
चरन् मैथुनधर्म्मस्थं ददर्श मृगयूथपम्
॥”)

**यूथभ्रष्टः**, पुं, (यूथाद्भ्रष्टश्चलितः ।) यूथात्
पलायितहस्ती । इति शब्दमाला ॥
(यूथ-
भ्रष्टमात्रे, त्रि । यथा, श्रीमद्भागवते । ४ ।
२८ । ४६ ।
“यदा नोपलभेताङ्घ्रावुष्माणं
पत्युरर्च्चती ।
आसीत् संविग्नहृदया यूथभ्रष्टा मृगी यथा
॥”)

“यूनी काममयी दुनोति हृदयं वैध्यव्यभावा-
द्वधूः ।”
इति कलापे श्वयुवमधोनाञ्चेतिसूत्रे कुलचन्द्रः
॥)

**यूपः**, पुं क्ली, (यौति मिश्रयतीति । यूयते युज्यते-
ऽस्मिन्निति ऋग्भाष्ये सायणः । १ । ५१ ।
१४ ।
यद्वा, यु + “कुयुभ्यां च । उणा० ३ । २७ ।
इति
पः दीर्घत्वञ्च ।) यज्ञे पशुबन्धनकाष्ठम् ।
इत्य-
भरः । २ । ४ । ४१ ॥ तस्य
परिमाणादिर्य्यथा ।
स्मृतौ ।
“चतुर्हस्तो भवेद्यूपो यज्ञवृक्षसमुद्भवः ।
वर्त्तुलः शोभनः स्थूलः कर्त्तव्यो वृषमौलिकः
॥”
भविष्ये ।
“विल्वस्य वकुलस्यैव कलौ यूपः प्रशस्यते
।”
इति सामवेदिवृषोत्सर्गतत्त्वम् ॥

**यूपः**, पुं, (यु + पः । दीर्घश्च ।) जयस्तम्भः । याग-
स्तम्भः । इत्युणादिकोषः ॥ (यथा, रघुवंशे ।
६ । ३८ ।
“संग्रामनिर्व्विष्टसहस्रबाहु-
रष्टादशद्वीपनिखातयूपः ।
अनन्यसाधारणराजशब्दो
बभूव योगी किल कार्त्तवीर्य्यः ॥”)

**यूपकटकः**, पुं, (यूपस्य कटक इव ।) यज्ञसमाप्ति-
सूचकं पशुबन्धाद्यर्थं यज्ञभूमौ यत् काष्ठमारो-
प्यते स यूपः तस्य शिरसि
वलयाकृतिर्डमरुका-
कृतिर्वा यः काष्ठविकारः सः । यूपमूले निहित-
लोहबलय इति केचित् । इति भरतः ॥ तत्-
पर्य्यायः । चषालः २ । इत्यमरः । २ । ७ ।
१८ ॥

**यूपकर्णः**, पुं, (यूपस्य कर्ण इव ।) यूपैकदेशः ।
तत्पर्य्यायः । घृतावनिः २ । इति हेमचन्द्रः ।
३ । ४८९ ॥

**यूपद्रुः**, पुं, (युपाय द्रुः ।) खरिदवृक्षः । इति
त्रिकाण्डशेषः ॥

**यूपद्रुमः**, पुं, (यूपाय द्रुमः ।) खदिरवृक्षः । इति
शब्दरत्नावली ॥ रक्तखदिरः । इति राज-
निर्घण्टः ॥

**यूपलक्ष्यः** पुं, (यूपो लक्ष्य उपवेशनार्थमस्य ।)
पक्षी । इति शब्दमाला ॥

**यूपाग्रं**, क्ली, (यूपस्याग्रम् ।) यूपस्याग्रभागः ।
तत्पर्य्यायः । तर्म्म २ । इत्यमरः । २ । ७ ।
१९ ॥

**यूष**, वधे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-
सेट् ।) षष्ठस्वरी । यूषति । इति दुर्गादासः ॥

**यूषं**, पुं, क्ली, (यूष् + कः ।) मुद्गादिक्वाथरसः ।
इत्यमरः । ३ । ५ । ३५ ॥ यूषोऽन्तःस्थादिः
।
चवर्गादिश्चेति मुकुटः । इति भरतः ॥ * ॥
अथ मुद्गयूषगुणाः ।
"मुद्गयषोऽग्निदो हृद्यः शुद्धानां व्रणिनामपि ।
पथ्यो बलाशपित्तघ्नो ज्वरहा च कृताकृतः ॥
अस्नेहलवणं सर्व्वमकृतं कटुकैर्विना ।
विज्ञेयं लवणस्नेहकटुकैः संस्कृतं कृतम् ॥
स तु दाडिममृद्वीकायुक्तः स्याद्रागषाडवः ।
रुचिकृल्लघुपाकश्च दोषाणामविरोधकृत् ॥" *
॥
मसूरयूषगुणाः ।
अयमर्थः । यूषान्नं पलमितं तत् कल्कीकृतं
शुण्ठी पिप्पली च समुदितार्द्धकर्षमिता कल्की-
कृता उभयमपि प्रस्थमितेन वारिणा पचेत् ।
तद्द्रवो यूषः ।
"यूषो बल्यो लघुः पाके रुच्यः कण्ट्यः कफा-
पहः ॥"
अथ मुद्गयूषविधिः । वृन्दटीकायां तन्त्रान्तरे ।
"मुद्गानां द्विपलं तोये शृतमर्द्धाढकोन्मिते ।
पादस्थं मर्द्दितं पूतं दाडिमस्य पलेन तत् ॥
युक्तं सैन्धवविश्वाह्वधान्यकैः पादकांशिकैः ।
कणाजीरकयोश्चूर्णाच्छाणैक्केनावचूर्णितम् ।
संस्कृतो मुद्गयूषोऽयं पित्तश्लेष्महरो मतः ॥" *
॥
अथ मुद्गयूषगुणाः ।
"मुद्गानामुत्तमो यूषो दीपनः शीतलो लघुः ।
व्रणोद्र्ध्वयत्रुरुग्दाहकफपित्तज्वरास्नहृत् ॥" *
॥
अथ मुद्गामलकयूषगुणाः ।
"मुद्गामलकयूषस्तु भेदी पित्तानिलापहः ।
तृड्दाहशमनः शीतो मूर्च्छाश्रममदापहः ॥"
मसूरयूषगुणाः पूर्ब्बवत् । इति भावप्रकाशः ॥
(तथा च ।
"कुलत्थयूषो मधुरः कषायः
कफं सपित्तं विनिहन्ति शीघ्रम् ।
मेहाश्मरी पायुजमेदहन्ता
सन्दीपनो मूत्रविशोधनश्च ॥
आढक्ययूषं मधुरञ्च शीतं
विशेषतो वातनिवारणञ्च ।
श्लेष्मापहं पित्तहरं नराणां
कृमिं निहन्यादपि दारुणञ्च ॥
शीतलं मधुरं मौद्गं यूषं पित्तविकारजित् ।
वातदोषहरं प्रोक्तं ज्वराणां शमनं परम् ॥
मासूरो ग्राहको यूषो वृंही स्वादुः प्रमेह-
जित् ।
पित्तश्लेष्मज्जरघ्नः स्यात्तथातीसारनाशनः ॥
कषायं कटुकञ्चोष्णं वातघ्नं पुंस्त्वदोषकृत् ।
रक्तपित्तं निहन्त्याशु चणानां यूषमुच्यते ॥
घनं सवातं कफकृन्माषयूषं स पित्तकृत् ।
अम्लं पर्य्युषितं तच्च शस्यते तैलपाचने ॥
अन्यानि चैव शस्तानि कौलत्थान्युषितानि च ।
यवकोलकुलत्थानां यूषः
कण्ठ्योऽनिलापहः ॥"
इति सुश्रुते सूत्रस्थाने ४५ अध्यायः
॥)

**यूषः**, पुं, (यूषतीति । यूष् + कः ।) ब्रह्मदारुवृक्षः
।
इति शब्दरत्नावली ॥

**येष**, ऋ ङ यत्ने । इति कविकल्पद्रुमः ॥
(भ्वा०-
आत्म०-अक०-सेट् ।) अन्तःस्थादिः
। ऋ,
अयियेषत् । ङ, येषते यियेषे । इति
दुर्गा-
दासः ॥

**योक्ता**, [ऋ] त्रि, योगकर्त्ता । इति युजधातोः
कर्त्तरि तृन्प्रत्ययेन निष्पन्नम् ॥ (यथा,
वाज-
सनेयसंहितायाम् । ३० । १४ ।
"मन्यवेऽयस्तापं क्रोधाय निसरं
योगाय योक्तारं
शोकायाभिसर्त्तारम् ॥"
"योक्तारं योगकर्त्तारम् ।" इति
तद्भाष्यम् ॥)

**योक्त्रं**, क्ली, (युज्यतेऽनेनेति । युज् +
"दाम्नीशसयु-
युजस्तुतुदेति ।" ३ । २ । १८२ ।
इति ष्ट्रन् ।)
युगेन सह ईशादण्ड आवध्यते अनेन
तत् ।
योत् दडि इति भाषा । तत्पर्य्यायः ।
आबन्धः २
योत्रम् ३ । इत्यमरः । २ । ९ । १३ ॥
(यथा,
ऋग्वेदे । ५ । ३३ । २ ।
"स त्वं न इन्द्र धियमानो अर्कैर्हरीणां
वृषन्
योक्त्रमश्रेः ॥"
"योक्त्रं नियोजनरज्जुं अश्रः
आश्रयसि ।" इति

"मसूरयूषः संग्राही वृंही स्वादुः प्रमेहजित् ।
पित्तश्लेष्मज्वरहरस्तथातीसारनाशनः ॥" *
॥
कुलत्थयूषगुणाः ।
"कुलत्थयूषोऽनिलहा शर्कराश्मरिनाशनः ।
तूणीप्रतूणीकासार्शोगुल्ममेद्वःकफापहः ॥" *
॥
अम्लेन सह माषयूषगुणाः ।
"अम्लमाषो गुरुर्भेदी वातघ्नो दीपनो मतः ॥"
अथ खडयूषः ।
"तक्रं कपित्थचाङ्गेरीमरिचाजाजिचित्रकैः ।
सुपक्वं खडयूषोऽयमयं काम्बलिकोऽपरः ॥"
* ॥
खडकाम्बलिकयूषगुणाः ।
"दध्यम्लो लवणस्नेहतिलमाषविपाचितः ॥
खडकाम्बलिकौ यूषौ ग्राहिवातकफापहौ ॥"
रति राजवल्लभः ॥ * ॥
अपि च । अथ यूषस्य विधिर्गुणाश्च ।
"अष्टादशगुणे नीरे शमीधान्यशृतो रसः ।
विरलान्ने घनः किञ्चित् पेषातो यूष उच्यते ।
उक्तः स एव निर्यूहो रुचिकृच्च विशेषतः ॥"
यूषस्य प्रकारान्तरमाह ।
"कल्कद्रव्यपलं शुण्ठीं पिप्पलीञ्चार्द्धकार्षिकीम्
।
बारिप्रस्थेन विपचेत्तद्द्रवो यूष उच्यते ॥"

मसूरास्त्रिपुठा बल्याः कलायाद्याश्च वर्ज्जिताः
॥"
इति यूषविधिः ॥ * ॥
इति हारिते प्रथमस्थाने नवमेऽध्याये ॥
"ज्ञेयः पथ्यतमश्चापि मुद्गयूषः कृताकृतः ।
स तु दाडिममृद्वीकायुक्तः स्याद्रागषाडवः ॥"
"पटोलनिम्बयूषौ तु कफमेदोविशोषिणौ ।
पित्तघ्नौ दीपनौ हृद्यौ कृमिकुष्ठज्वरापहौ ॥
श्वासकासप्रतिश्यायप्रसेकारोचकज्वरान् ।
हन्ति मूलकयूषस्तु कफमेदोगलामयान् ॥
कुलत्थयूषोऽनिलहा श्वासपीनसनाशनः ।
तूणी प्रतूणी कासार्शोगुल्मोदावर्त्तनाशनः ॥
दाडिमामलकैर्यूषो हृद्यः संशमनो लघुः ।
प्राणाग्निजननोमूर्च्छमेद्वोघ्नः पित्तवातजित् ॥
मुद्गामलकयूषस्तु ग्राही पित्तकफे हितः ।

तद्भाष्ये सायणः ॥ मन्थनरज्जुः ।
यथा,
रामायणे । १ । ४५ । १८ ।
"ततो निश्चित्य मथनं योक्त्रं कृत्वा च
वासु-
किम् ।
मन्थानं मन्दरं कृत्वा
ममन्थुरमितौजसः ॥")

**योगः**, पुं, (युज ममाधौ + भावादौ यथायथं घञ्
।)

सन्नहनः । उपायः । ध्यानम् । सङ्गतिः
।
युक्तिः । इत्यमरः । ३ । ३ । २२ ॥
(प्रेम ।
यथा, देवीभागवते । ३ । १५ । १३ ।
"स्वीयान् गुणान् प्रविततान्
प्रवदंस्तदासौ
तां प्रेमदामनुचकार च योगयुक्तः ॥"
"योगयुक्तः प्रेमयुक्तः ।" इति तट्टीकायां
नील-
कण्ठः ॥ छलम् । इति मनुः । ८ ।
११५ ॥
अस्य प्रमाणं योगदानशब्दे द्रष्टव्यम् ॥)
अपू-
र्व्वार्थसम्प्राप्तिः । वपुःस्थैर्य्यम् ।
प्रयोगः । विष्क-
म्भादिः । भेषजम् । विश्रब्धघातकः ।
द्रव्यम् ।
कार्म्मणम् । इति मेदिनी ॥ नैयायिकः
। धनम् ।
इति हेमचन्द्रः ॥ चारः । सूत्रम् । इति
त्रिकाण्डशेषः ॥ * ॥ (येन वाक्यं
युज्यंते स
योगः । यथा, --
"तैलं पिबेच्चामृतवल्लिनिम्ब-
हिंस्राभयावृक्षकपिप्पलीभिः ।
सिद्धं बलाभ्याञ्च सदेवदारु
हिताय नित्यं गलगण्डरोगी ॥
सिद्धं पिबेदिति प्रथमं वक्तव्ये
तृतीयपादे सिद्धं
प्रयुक्तमेवं दूरस्थानामपि
पदानामेकीकरणं

|  |  | योगः ।" इत्युत्तरतन्त्रे पञ्चषष्टितमेऽध्याये सुश्रुतेनोक्तम् ॥) अथ सप्तविंशतियोगानां नामानि । यथा, -- |
|---|---|---|

"विष्कम्भः प्रीतिरायुष्मान् सौभाग्यः शोभन-
स्तथा ।
अतिगण्डः सुकर्म्मा च धृतिः शूलस्तथैव च ॥
गण्डो वृद्धिर्ध्रुवश्चैव व्याघातो हर्षणस्तथा ।
वज्रश्चासृक् व्यतीपातो वरीयान् परिघः शिवः
।
सिध्यः साध्यः शुभः शुक्रो ब्रह्मेन्द्रो
वैधृतिस्तथा ॥"
तेषां वर्ज्जनीयभागा यथा, --
"परिघस्य त्यजेदर्द्धं शुभकर्म्म ततः परम् ।
त्यजादौ पञ्च विष्कम्भे सप्त शूले च नाडिकाः
॥
गण्डव्याघातयोः षट् च नव हर्षणवजयोः ।
वैधृतिव्यतिपातौ च समस्तौ परिवर्जयेत् ॥
शेषा यथार्थनामानो योगाः कार्य्येषु शोभनाः
॥"
अथ विष्कम्भादियोगानयनक्रमः।
"रवीन्दुयोगलिप्ताभ्यो योगा भभोगभाजिताः ।
गतगम्याश्च षष्टिघ्ना नाड्यो
भुक्त्यन्तरोद्धृताः ॥"
इति सूर्य्यसिद्धान्तः ॥
विष्कम्भादिसप्तविंशतिसङ्ख्यककालविशेषः
। तत्-
साधनमाह ।
"ग्रहकलाः सरबीन्दुकलाहृताः
खखगजैश्च भयोगमिती क्रमात् ।
अथ हृता स्वगतैष्यविलिप्तिका
निजजवेन गतागत नाडिकाः ॥"
इति भास्करीयसिद्धान्तशिरोमणौगणितग्र
ध्यायः ॥ * ॥ यस्य ग्रहस्य नक्षत्रं ज्ञातु-
मिष्यते तस्य कलाः कार्य्याः । तथा
चन्द्रार्कयो-
र्योगस्य कलाः कार्य्याः । उभयत्र शताष्टकेन
हृते प्रथमस्थाने गतभानि । द्बितीयस्थाने गत-
योगाः । अथ यान्यवशिष्टानि गतानि स्वस्व-
हाराच्युतानि गम्यानि स्युः तेषां गतानां सम्ब-
न्धिन्यो विकलाः स्वस्वगतिभिर्भाज्याः ।
यकृभ्यते
ता गतनाडिका भवन्ति । यद्येष्याणां विकला
भक्तास्तदैष्या घटिका भवन्ति । इति मिता-
क्षरानाम्नी तत्कृतटीका ॥ आनन्दयोगो

"ध्रुवगुरुकरमूलापौष्णभान्यर्कवारे
हरियुगविधियुग्मे फल्गुनी भाद्रयुग्मे ।
दिवसकरतुरङ्गौ सर्व्वरीनाथवारे
गुरुयुगनलवातोपान्त्यपौष्णानिकौजे
दहनविधिशताख्यामैत्रभं सौम्यवारे
मरुददितिभपुष्यामैत्रभं जीववारे ।
भगयुगजयुगश्वो विष्णुमैत्रे सिताहे
श्वसनकमलयोनी सौरिवारेऽमृतानि ॥
यदि विष्टिव्यतीपातौ दिनं वाप्यशुभं भवेत्
।
हन्यतेऽमृतयोगेन भास्करेण तमो यथा ॥
सर्व्वदेशाविशेषेण फलं स्याच्छुभयोगजम्
॥
अमृतं सिद्धियोगश्च यद्येकस्मिन् दिने
भवेत् ।
तद्दिनन्तु भवेद्दुष्टं मधुसर्पिर्यथा विषम् ॥" *
॥
अथ सिद्धिदग्धपापयमघण्टयोगाः। यथा,
--
"नन्दाद्याः सिद्धियोगा
भृगुजबुधकुजार्कीज्य-
वारैः प्रशस्ताः ।
सूर्य्येशाशाग्निषड्द्वङ्गुनिमितितिथयोऽर्कादि-
वारैः प्रदग्धाः ॥"
राजमार्त्तण्डे ।
"मासा रुद्रादिशो रामा षट्पक्षमुनयस्तथा
।
दह्यन्ते तिथयः सप्त रव्यादिसप्तभिर्ग्रहैः ॥"
अपि च ।
"द्बादश्यर्कषुता भवेदशुभदा सोमेन
चैकादशी
भौमे चापि युता तथैव दशमी नेष्टा तृतीया
बुधे ।
षष्ठी नेष्टफलप्रदा सुरगुरौ शुक्रे द्बितीया
तथा ।
सर्व्वारम्भविनाशविघ्नजननीसूर्य्यात्मजे
सप्तमी ॥
पापोऽकहि विषाखात्र्ययममुञ्जस्याह्नि
चित्राचतुष्कं
तोयं विश्वाभिजिद्भं त्वथ कुजदिवसे
स्वत्रयं

अथ शुभचन्द्रेण करकचादिशान्तिः ।
"अयोगेषु च सर्व्वेषु पूर्ब्बयामं परित्यजेत् ।
अयोगाश्च विनश्यन्ति चन्द्रशुद्धिहता इमे ॥
करकचा मृत्युयोगाश्च दिनं दग्धं तथा परे ।
शुभे चन्द्रे प्रणश्यन्ति वृक्षा वज्रहता इव ॥" *
॥
विरुद्धयोगानां देशविशेषे प्रतिप्रसवो यथा ।
श्रीपतिः ।
"विरुद्धसंज्ञास्तिथिवारयोगा
नक्षत्रवारप्रभवाश्च ये वै ।
हूनाङ्गवङ्गेषु खशेषु वर्ज्याः
शेषेषु देशेषु न ते विरुद्धाः ॥"
इति ज्योतिस्तत्त्वम् ॥ * ॥
अथ क्रियायोगः । मुनय ऊचुः ।
"दुःखाम्बुमग्नाः पुरुषाः प्राप्य ब्रह्म महालयम्
।
उत्तरेयुर्भवाम्भोधिं तथा त्वमनुचिन्तय ॥
इत्युक्तः स तदा प्राह क्रियायोगं महात्मनाम्
।
नराणामुपकाराय दुःखविच्छित्तिकारकम्॥
वह्निरुवाच ।
आराधयध्वं विश्वेशं जगतां कारणं परम् ।
केशवन्तन्निरापेक्षा एवमुक्तं प्रवास्यथ ॥
इष्ट्या पूजानमस्कारैः शुश्रूषाभिरहर्न्निशम् ।
व्रतोपवासैर्व्विविधैर्ब्राह्मणानाञ्च तर्पणैः ॥
तैस्तैश्चात्महितैः कामैर्ये स्वचेतसि तुष्टिदाः
।
भवेयुरपरिच्छेदादाराधयत केशवम् ॥
तन्निष्ठास्तद्गतधियस्तत्कर्म्माणस्तदाश्रयाः
।
तद्दृष्टयस्तन्मनसः सर्व्वस्मिन् स इति
स्थितः ॥
समस्तान्यथ कर्म्माणि तत्र सर्व्वात्मिनात्मनि
।
संन्यस्यध्यं स वः कर्त्ता समस्तावरणक्षयः ॥
परः पराणां परमः स एको
नरोत्तमो यस्य पदन्न भिन्नम् ।
चराचरं विश्वमिदं समन्ता-
दचिन्त्यरूपन्त्वपरिग्रहंयत् ॥
तमाराध्य जगन्नाथं क्रियायोगेन वाडवाः ।
अग्नौ मोक्षं परं जग्मुस्तस्मात्तन्मोक्षकारणम्॥

यथा । भीमपराक्रमे ।
“अश्विनी सह सूर्य्येण सोमे मृगशिरस्तथा ।
अश्लेषा भौमवारेण बुधे हस्तः प्रकीर्त्तितः ॥
अनुराधा गुरोवारि विश्वदेवस्तु भार्गवे ।
वारुणं शनिसंयुक्तमानन्दोऽयं प्रकीर्त्तितः ॥”
योगवरा यथा । दीपिकायाम् ।
“भूमिपुत्त्रार्कयोरह्नि नन्दा मरु-
द्वारुणार्द्रान्त्यचित्राहिमूलाग्निभिः ।
भार्गवैणाङ्कयोरह्नि भद्रा
भवेत् फल्गुयुग्मोडुसंयुता ॥
सोमपुत्त्रस्य वारे जया स्यान्मृगो-
पेन्द्रगुर्व्विन्द्रयाम्याभिजिद्वाजिभिः ।
गीष्पतेरह्नि रिक्ता च युक्ता यदा
विश्वशक्राग्नियुक्पित्रादित्यम्बुभिः ॥
सूर्य्यसुतस्य दिने यदि पूर्व्वा
ब्रह्मदिनाधिपतिद्रविणैः स्यात् ।
योगवरास्त्रिभिरेव समेताः
सर्व्वसमीहितसिद्धिनियुक्ताः ॥”
अयमेव त्र्यमृतयोगः ॥ * ॥ अथामृतयोगः ।

विश्वरुद्रौ ।
ज्ञाहे मूला विशाखा यमधनतुरगान्त्यानि
जैवे-
ऽह्नि पित्रं
रोहिण्यार्द्रा यमेन्दूशतभमथ भृगोरह्नि
पुष्या-
त्रयेन्द्रौ ॥
सौराहे
हस्तयुग्मार्य्यमयमजलयुक्पौष्णपुष्या-
धनानि
घण्टोऽखण्डर्क्षयुक्ते स्वगृहपतिदिने
सौम्यवारे
ऽर्य्यमापि ॥” * ॥
अथोत्पाटादियोगाः ।
“रव्यादिदिवसैर्युक्ता विशाखादिचतुश्चतुः
।
उत्पाटा मृत्यवः काणा अमृतानि यथा-
क्रमम् ॥”
अथ करकचायोगः ।
“वाजिचित्रोत्तराषाढा
मूलपाशीज्यभान्तकाः ।
सूर्य्यादिवारसंयुक्ता योगाः करकचाः
स्मृताः ॥”
अथ मृत्युयोगः ।
“आदित्यभौमयोर्न्नन्दा भद्रा शुक्रशशाङ्कयोः
।
बुधे जया गुरौ रिक्ता शनौ पूर्णा च मृत्युदा
॥”
अथ यमघण्टादीनां वर्ज्यकालनिर्णयः ।
“यमघण्टे त्यजेदष्टौ मृत्यौ द्वादश नाडिकाः
।
अन्येषां पापयोगानां मध्याह्नात् परतः
शुभम् ॥”

संसारार्णवमग्नानां विषयाक्रान्तचेतसाम् ।
विष्णुपोतं विना नान्यत् किञ्चिदस्ति
परायणम् ॥
उत्तिष्ठंश्चिन्तय हरिं व्रजंश्चिन्तय केशवम् ।
भुञ्जंश्चिन्तय गोविन्दं स्वपंश्चिन्तय माधवम्
॥
यूयमेकाग्रचित्ता हि संश्रिता मधुसूदनम् ।
जन्ममृत्युजराग्राहं संसारं सन्तरिष्यथ ॥
क्रियायोगपराणीह मुक्तिकार्य्याण्यनेकशः ।
समाराध्य जगन्नाथं राजानो मोक्षमाप्नुयुः ॥”
इति वह्निपुराणम् ॥ * ॥
अथ योगसाधनम् । केशिध्वज उवाच ।
“योगस्वरूपं खाण्डिक्य ! श्रूयतां गदतो मम
।
यत्र स्थितो न च्यवते प्राप्य ब्रह्मलयं मुनिः ॥
मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धस्य विषयासङ्गि मुक्तेर्न्निर्व्विषयं तथा ॥
विषयेभ्यः समाहृत्य विज्ञानात्मा मनो मुने ।
चिन्तयेन्मुक्तये तेन ब्रह्मभूयं परेश्वरम् ॥
आत्मभावं नयत्येवं तद्ब्रह्मध्यायिनं मुने ।
विकार्य्यञ्चात्मनः शक्त्या लोहमाकर्षको
यथा ॥

आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः ।
तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते ॥
एवमत्यन्तवैशिष्ट्ययुक्तधर्म्मोपलक्षणः ।
यस्य योगः स वै योगी मुमुक्षुरभिधीयते ॥
योगयुक् प्रथमं योगी युञ्जानः सोऽभिधीयते ।
विनिष्पन्नसमाधिस्तु परब्रह्मोपलब्धिवान् ॥
यद्यन्तरायदोषेण दुष्यते चास्य मानसम् ।
जन्मान्तरैरभ्यसतो मुक्तिः पूर्व्वस्य जायते ॥
विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि ।
प्राप्नोति योगी योगाग्निदग्धकर्म्मा च यो-ऽचिरात् ॥
ब्रह्मचर्य्यमहिंसाञ्च सत्यास्तेयापरिग्रहान् ।
सेवेत योगी निष्कामो योग्यतां स्वं मनो नयन् ॥
स्वाध्यायशौचसन्तोषतपांसि नियतात्मवान् ।
कुर्व्वीत ब्रह्मणि तथा परस्मिन् प्रवणं मनः ॥
एते यमाः सनियमाः पञ्च पञ्च प्रकीर्त्तिताः ।
विशिष्टफलदाः काम्या निष्कामानां विमु-क्तिदाः ॥
एकं भद्रासनादीनां समास्थाय गुणैर्युतः ॥
यमाख्यैर्नियमाख्यैश्च युञ्जीत नियतो यतिः ॥
प्राणाख्यमनिलं वश्यमभ्यासात् कुरुते तु यत् ।
प्राणायामः स विज्ञेयः सबीजोऽबीज एव च ॥
परस्परेणाभिभवं प्राणापानौ यदानिलौ ।
कुरुतः सद्विधानेन तृतीयः संयमात्तयोः ॥
तस्य चालम्बनवतः स्थूलरूपं द्विजोत्तम ! ।
आलम्बनमनन्तस्य योगिनोऽभ्यसतः स्मृतम् ॥
शब्दादिष्वनुरक्तानि निगृह्याक्षाणि योगवित् ।
कुर्य्याच्चिन्तानुकारीणि प्रत्याहारपरायणः ॥

न तद्योगयुजा शक्यं नृप ! चिन्तयितुं यतः ।
ततः स्थूल हरे रूपं चिन्त्यं यद्विश्वगोचरम् ॥
हिरण्यगर्भो भगवान् वासवोऽथ प्रजापतिः ।
मरुतो वसवो रुद्रा भास्करास्तारका ग्रहाः ॥
गन्धर्व्वयक्षदैत्याद्याः सकला देवयोनयः ।
मनुष्याः पशवः शैलाः समुद्राः सरितो द्रुमाः ॥
भूप भूतान्यशेषाणि भूतानां ये च हेतवः ।
प्रधानादि विशेषान्तं चेतनाचेतनात्मकम् ॥
एकपादं द्विपादञ्च बहुपादमपादकम् ।
मूर्त्तमेतद्धरे रूपं भावनात्रितयात्मकम् ॥
एतत् सर्व्वमिदं विश्वं जगदेतच्चराचरम् ।
परं ब्रह्मस्वरूपस्य विष्णोः शक्तिसमन्वितम् ॥
विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथापरा ।
अविद्या कर्म्मसंज्ञान्या तृतीया शक्तिरिष्यते ॥
यया क्षेत्रज्ञशक्तिः सा चेष्टिता नृप ! सर्व्वगा ।
संसारतापा खिलानवाप्नोत्यनुसन्ततान् ॥
तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ।
सर्व्वभूतेषु भूपाल ! तारतम्येन लक्ष्यते ॥
अप्राणवत्सु स्वल्पाल्पा स्थावरेषु ततोऽधिका ।
सरीसृपेऽपि तेभ्योऽपि अतिशक्त्या पतत्त्रिषु ॥
पतत्त्रिभ्यो मृगास्तेभ्यः स्वशक्त्या पशवोऽधिकाः ।
पशुभ्यो मनुजाश्चातिशक्त्या पुंसः प्रभाविताः ॥
एभ्योऽपि नागगन्धर्व्वा यक्षाद्या देवता नृप ! ।
शक्रः समस्तदेवेभ्यस्ततश्चापि प्रजापतिः ॥
हिण्यगर्भोऽति ततः पुंसः शक्त्युपलक्षितः ।
एतान्यशेरूपस्य तस्य रूपाणि पार्थिव ! ॥
यतस्तच्छक्तियोगेन युक्तानि नभसा यथा ।
द्वितीयं विष्णुसंज्ञस्य गोगिध्येयं महामते ॥

कम्बुग्रीवं मुविस्तीर्णश्रीवत्साङ्कितवक्षसम् ॥
बलीत्रिभङ्गिना मग्ननाभिना चोदरेण वै ।
प्रलम्बाष्टभुजं विष्णुमथवापि चतुर्भुजम् ॥
समस्थितोरुजङ्घञ्च सुस्थिराङ्घ्रिकराम्बुजम् ।
चिन्तयेद्ब्रह्मभूतं तं पीतनिर्म्मलवाससम् ॥
किरीटचारुकेयूरकटकादिविभूषितम् ।
शार्ङ्गशङ्खगदाखड्गचक्राक्षवलयान्वितम् ॥
चिन्तयेत्तन्मयो योगी समाधायात्ममानसम् ॥
तावद्यावद्दृढीभूता तत्रैव नृप धारणा ॥
व्रजतस्तिष्ठतोऽन्यद्वा स्वेच्छया कर्म्म कुर्व्वतः ।
नापयाति तदा चित्तात् सिद्धां मन्येत तां तदा ॥
ततः शङ्खगदाचक्रशार्ङ्गादिरहितंबुधः ।
चिन्तयेद्भगवद्रूपं प्रशान्तं साक्षसूत्रकम् ॥
सा यदा धारणा तद्वदवस्थानवती ततः ।
किरीटकेयूरमुखैर्भुषणै रहितं स्मरेत् ॥
तदेकावयवं देवं चेतसापि पुनर्ब्बुधः ।
कुर्य्यात्ततोऽवयविनि प्रणिधानपरो भवेत् ॥
तद्रूपप्रत्ययैवैकसन्ततिश्चान्यनिस्पृहा ।
तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप ॥
तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत् ।
मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते ॥
विज्ञानं प्रापकं प्राप्य परे ब्रह्मणि पार्थिव ! ।
प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः ॥
क्षेत्रज्ञः करणी ज्ञानं करणं तेन तस्य तत् ।
निष्पाद्य मुक्तिकार्य्यं वै कृतकृत्यं निवर्त्तते ॥
तद्भावभावमापन्नस्ततोऽसौपरमात्मना ।
भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ॥
विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणी भेदमसन्तं कः करिष्यति ॥
इत्युक्तस्ते मया योगः खाण्डिक्य ! परिपृच्छते ॥”
इति विष्णुपुराणे ६ अंशे ७ अध्यायः ॥ * ॥
ब्रह्मकृतयोगो यथा ।
“सुखं योगासनं कृत्वा बभूव संपुटाञ्जलिः ।
पुलकाङ्कितसर्व्वाङ्गः सास्रु नेत्रोऽतिदीनवत् ॥
इडां सुषुम्नां मेध्याञ्च पिङ्गलां नलिनीं धुराम् ।
नाडीषट्कञ्च योगेन निरुध्य च प्रयत्नतः ॥
मूलाधारं स्वाधिष्ठानं मणिपूरमनाहतम् ।

वश्यता परमा तेन जायतेऽतिचलात्मनाम्।
इन्द्रियाणामवश्यैस्तैर्न योगी योगसाधकः ॥
प्राणायामेन पवनैः प्रत्याहारेण चेन्द्रियैः ।
वशीकृतैस्ततः कुर्य्यात् स्थितं चेतः
शुभाश्रये ॥
श्रीखाण्डिक्य उवाच ।
कथ्यतां मे महाभाग ! चेतसो यः शुभाश्रयः
।
यदाधारमशेषं तद्धन्ति दोषफलोद्भवम् ॥
श्रीकेशिध्वज उवाच ।
आश्रयश्चेतसो ब्रह्म द्विधा तच्च स्वभावतः
।
भूप ! मूर्त्तममूर्त्तञ्च परञ्चापरमेव च ॥
त्रिविधा भावना विप्र विश्वमेतन्निबोध मे ।
ब्रह्मख्या कर्म्मसंज्ञा च यथा
चैवोभयात्मिका ॥
ब्रह्मभावात्मिका ह्येका कर्म्मभावात्मिका
परा ।
उभयात्मिका तथैवान्या त्रिविधा
भावभावना ॥
सनन्दनादयो ब्रह्मभावभावनया युताः ।
कर्म्मभावनया चान्ये देवाद्याः
स्थावराश्चराः ॥
हिरण्यगर्भादिषु च ब्रह्मकर्म्मात्मिका द्विधा ।
बोधाधिकारयुक्तेषु विद्यते भावभावना ॥
अक्षीणेषु समस्तेषु विशेषज्ञानकर्म्मसु ।
विश्वमेतत् परं चान्यद्भेदभिन्नदृशां नृप ! ॥
प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥
तच्च विष्णोः परं रूपमरूपस्याजमक्षरम्।
विश्वस्वरूपवैरूप्यलक्षणं परमात्मनः ॥

अमूर्त्तं ब्रह्मणो रूपं यत् सदित्युच्यते बुधैः ।
समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः ॥
तद्विश्वरूपरूपं वै रूपमन्यद्धरेर्महत् ।
समस्तशक्तिरूपाणि तत् करोति जनेश्वर !
॥
देवतिर्य्यङ्मनुष्यादिचेष्टावन्ति स्वलीलया ।
जगतामुपकाराय न सा कर्म्म निमित्तजा ।
चेष्टा तस्याप्रमेयस्य व्यापिन्यव्याहतात्मिका
॥
तद्रूपं विश्वरूपस्य तस्य योगयुजो नृप ! ।
चिन्त्यमात्मविशुद्ध्यर्थं
सर्व्वकिल्विषनाशनम् ॥
यथाग्निरुद्धतशिखः कक्षं दहति सानिलः ।
तथा चित्ते स्थितो विष्णुर्योगिनां
सर्व्वकिल्विषम् ।
तस्मात् समस्तशक्तीनामाधारे तत्र चेतसः ।
कुर्व्वीत संस्थितिं सा तु विज्ञेया शुद्धधारणा
॥
शुभाश्रयः सचित्तस्य सर्व्वगस्य तथात्मनः ।
त्रिभावभावनातीतो मुक्तये योगिनां नृप ॥
अन्ये च पुरुषव्याघ्र ! चेतसो ये व्यपाश्रयाः
।
अशुद्धास्ते समस्तास्तु देवाद्याः
कर्म्मयोनयः ॥
मूर्त्तं भगवतो रूपं सर्व्वापाश्रयनिस्पृहम्।
एषा वै धारणा ज्ञेया यच्चित्तं तत्र धार्य्यते ॥
तच्च मूर्त्तं हरे रूपं यादृक्चिन्त्यं नराधिप ! ।
तच्छ्रूयतामनाधारा धारणा नोपपद्यते ॥
प्रसन्नचारुवदनं पद्मपत्रायतेक्षणम् ।
सुकपोलं सुविस्तीर्णललाटफलकोज्ज्वलम्
॥
समकर्णान्तविन्यस्तचारुकर्णविभूषणम् ।

विशुद्धं परमाज्ञाख्यं षट्चक्रञ्च निरुध्य च ॥
लङ्घनं कारयित्वा च तं षट्चक्रं क्रमाद्विधिः ।
ब्रह्मरन्ध्रं समानीय वायुवद्धं चकार ह ॥
निरुध्य वायुं मेध्यान्तामानीय हृदयाम्बुजम् ।
तं वायुं भ्रामयित्वा च योजयामास मेध्यया ॥
एवं कृत्वा तु निष्पन्दो यो दत्तो हरिणा पुरा)
जजाप परमं मन्त्रं तं तस्यैकादशाक्षरम् ॥
मुहूर्त्तञ्च जपं कृत्वा ध्यायं ध्यायं पदाम्बुजम् ।
ददर्श हृदयाम्भोजे सर्व्वं तेजोमयं मुने ॥
तत्तेजसोऽन्तरे रूपमती पमुमनोहरम् ।
द्विभुजं मुरलीहस्तं भूषितं पीतवाससा ॥
श्रुतिमूलस्थलन्यस्तज्वलन्मकरकुण्डलम् ।
ईषद्धास्यं प्रसन्नास्यं भक्तानुग्रहकातरम् ॥
नवीनजलदाकारश्यामसुन्दरविग्रहम्।
स्थितं जन्तुषु सर्व्वेषु निर्लिप्तं साक्षिरूपिणम् ॥

स्वात्मारामं पूर्णकामं जगद्व्यापि जगत्परम् ।
सर्व्वस्वरूपं सर्व्वेषां बीजरूपं सनातनम् ॥
सर्व्वाधारं सर्व्ववरं सर्व्वशक्तिसमन्वितम् ।
सर्व्वाराध्यं सर्व्वगुरुं सर्व्वमङ्गलकारणम् ॥
सर्व्वमन्त्रस्वरूपञ्च सर्व्वसम्पत्करं वरम् ।
यद्दृष्टं ब्रह्मरन्ध्रे च हृदि तद्बहिरेव च ।
दृष्ट्वा च परमाश्चर्य्यं तुष्टाव परमेश्वरम् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णखण्डे २० अध्यायः
॥ * ॥
अथ ध्यानयोगः । हरिरुवाच ।
"अथ योगं प्रवक्ष्यामि भुक्तिमुक्तिकरं परम् ।
ध्यायिभिः प्रोच्यते ध्येयो ध्यानेन हरिरीश्वरः
॥
तत् शृणुष्व महेशान ! सर्व्वपापविनाशनम् ।
विष्णुः सर्व्वेश्वरोऽनन्तो यद्भूमिपरिवर्ज्जितः
॥
वासुदेवो जगन्नाथो ब्रह्मात्मा अहमेव तु ।
देहिदेहस्थितो नित्यः सर्व्वदेहविवर्ज्जितः ॥
देहधर्म्मविहीनश्च क्षराक्षरविवर्ज्जितः ।
षड्विधेषु स्थितो द्रष्टा श्रोता घ्राता
ह्यतीन्द्रियः ॥
तद्धर्म्मरहितः स्रष्टा नामगोत्रविवर्ज्जितः ।
मन्ता मनःस्थितो देवो मनसा परिवर्ज्जितः
॥
मनोधर्म्मविहीनश्च विज्ञानाव्यय एव च ।
बोद्धा बुद्धिस्थितः साक्षी सर्व्वबोधविवर्ज्जितः
॥
बुद्धिधर्म्मविहीनश्च सर्व्वः सर्व्वगतोऽमलः ।
सर्व्वप्राणविनिर्मुक्तः प्राणधर्म्मविवज्जितः ॥
प्राणिप्राणो महाशान्तो भयेन परिवर्ज्जितः ।
अहङ्कारादिहीनश्च तद्धर्म्मपरिवर्ज्जितः ॥
तत्साक्षी तन्नियन्ता च परमानन्दरूपकः ।
जाग्रत्स्वप्नसुषुप्तिस्थस्तत्साक्षी
तद्विवर्ज्जितः ॥
तुरीयः परमो धाता दृग्रूपो गुणवर्ज्जितः ।
मुक्तो बुद्धो जनव्यापी सत्य आत्मास्म्यहं
शिवः ॥
एवं ये मानवा विज्ञा ध्यायन्तीशपरं पदम् ।
प्राप्नुयुस्ते च तद्रूपं नात्र कार्य्या विचारणा ॥
इति ध्यानं मया ख्यातं तव शङ्कर ! सुव्रत ! ।
पठेद्य एतत् सततं विष्णुलोकं स गच्छति ॥"

अहमात्मा परं ब्रह्म सत्यं ज्ञानमनन्तकम् ।
विज्ञानमानन्दो ब्रह्म सत्तत्त्वमसि केवलम् ॥
अहं ब्रह्मास्म्यहं ब्रह्म अशरीरमनिन्द्रियम् ।
अहं मनो बुद्धिमरुदहङ्कारादिवर्ज्जितम् ॥
जाग्रत्स्वप्नसुषुप्त्यादिमुक्तं
ज्योतिस्तदीयकम् ।
नित्यं शुद्धं बुद्धियुक्तं सत्यमानन्दमद्वयम् ॥
योऽसावादित्यपुरुषः सोऽसावहमखण्ड ॐ
।
इति ध्यायन् विमुच्येत ब्राह्मणो भवबन्धनात्
॥"
इति गारुडे ४९ अध्यायः ॥ * ॥
अपि च ।
"एतत्ते कथितं ज्ञानं योगक्षेमं निबोध मे ।
यं प्राप्य ब्रह्मणो योगी शाश्वतानन्यतां व्रजेत्
॥
प्रागात्मैवात्मना जेयो योगिनां स हि
दुर्ज्जयः ।
कुर्व्वीत तज्जये यत्नं तस्योपायं शृणुष्व मे
॥
प्राणायामैर्दहेद्दोषान् धारणाभिश्च
किल्विषम् ।
प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान्
गुणान् ॥
यथा पर्व्वतधातूनां ध्मातानां दह्यते मलम् ।
तथेन्द्रियकृता दोषा दह्यन्ते प्राणनिग्रहात् ॥
प्रथमं साधनं कुर्य्यात् प्राणायामस्य
योगवित् ।
प्राणापाननिरोधस्तु प्राणायाम उदाहृतः ॥
लघुमध्योत्तरीयाख्यः प्राणायामस्त्रिधोदितः
।
तस्य प्रमाणं वक्ष्यामि तदलर्क ! शृणुष्व मे
॥
लघुर्द्वादशमात्रस्तु द्विगुणः स तु मध्यमः ।
त्रिगुणाभिश्च मात्राभिरुत्तरीय उदाहृतः ॥
निमेषोन्मेषणे मात्रा तालो लघ्वक्षरो मतः ।
प्राणायामस्य संख्यार्थं स्मृतो द्वादशमात्रकः
॥
प्रथमेन जयेत् स्वेदं मध्यमेन तु वेपथुम् ।
विषादं हि तृतीयेन जयेद्दोषानुक्रमात् ॥
मृदुत्वं सेव्यमानास्तु सिंहशार्द्दूलकुञ्जराः ।

इन्द्रियाणीन्द्रियार्थाश्चस प्रसाद इति स्मृतः
।
शृणुष्व च महीपाल ! प्राणायामस्य लक्षणम् ।
युञ्जतश्च यथायोगं यादृग्विहितमासनम् ॥
पद्ममर्द्धासनं वापि तथा स्वस्तिकमासनम् ।
आस्थाय योगी युञ्जीत कृत्वा च प्रणवं हृदि
॥
समः समासनो भूत्वा संहृत्य चरणावुभौ ।
संवृतास्यस्तथा चोरू सम्यग्विष्टभ्य वाग्यतः
॥
पार्ष्णिभ्यां लिङ्गवृषणावस्पृशन् प्रयतः
स्थितः ।
किञ्चिदुन्नामितशिरा दन्तैर्द्दन्तान्न संस्पृशेत् ।
संपश्यन्नासिकाग्रं स्वं दिशश्चानवलोकयन्
॥
रजसा तमसो वृत्तिं सत्वेन रजसस्तथा ।
संस्थाप्य निर्म्मले सत्वे स्थितो युञ्जीत
योगवित् ॥
इन्द्रियाणीन्द्रियार्थेभ्यः प्राणादीन् मन एव च
।
निगृह्य समवायेन प्रत्याहारमुपक्रमेत् ॥
यस्तु प्रत्याहरेत् कामान् कूर्म्मोऽङ्गानीव
सर्व्वशः ।
स त्वात्मरतिरेकस्थः पश्यन्नात्मानमात्मनि
॥
सवाह्याभ्यन्तरं शौचं निष्पाद्याकण्ठनाभितः
।
पूरयित्वा बुधो देहं प्रत्याहारमुपक्रमेत् ॥
प्राणायामा दश द्वौ च धारणा साभिधीयते ।
द्विधारणा स्मृतो योगो योगिभिस्तत्त्वदृष्टिभिः
॥
तथा वै योगयुक्तस्य योगिनो नियतात्मनः ।
सर्व्वे दोषाः प्रणश्यन्ति स्वस्थश्चैवोपजायते
॥
वीक्षते च परं ब्रह्म प्राकृतांश्च गुणान् पृथक् ।
व्योमादिपरमाणूंश्च तथात्मानमकल्मषम् ॥
इत्थं योगी जिताहारः प्राणायामपरायणः ।
जितां जितां शनैर्भूमिमारोहेत यथा गृहम् ॥
दोषान् व्याधिं तथा मोहमाक्रान्ता भूरनि-
र्जिता ।
विवर्द्धयति नारोहेत्तस्माद्भूमिमनिर्ज्जिताम् ॥

इति गारुडे १४ अध्यायः ॥
अथाष्टाङ्गयोगः ।
“मुक्तिरष्टाङ्गविज्ञानात् संक्षेपात्तद्वदे शृणु ।
वमाः पञ्च त्वहिंसाद्या अहिंसा प्राण्यहिंस-
नम् ॥
सत्यं भूतहितं वाक्यमस्तेयं स्वाग्रहं परम् ।
अमैथुनं ब्रह्मचर्य्यं सर्व्वत्यागोऽपरिग्रहः ॥
नियमाः पञ्च सत्याद्या वाह्यमाभ्यन्तरं द्विधा ।
शौचं तुष्टिश्च सन्तोषस्तपश्चेन्द्रियनिग्रहः ॥
स्वाध्यायः स्यान्मत्रजापः प्रणिधानं हरेर्यजिः
।
आसनं पद्मकाद्युक्तं प्राणायामो मरुज्जयः ॥
मन्त्रध्यानयुतो गर्भो विपरीतो ह्यगर्भकः ।
अगर्भात्तु सगर्भस्थः प्राणायामस्ततोऽधिकः
॥
एवं द्विधा त्रिधाप्युक्तः पूरणात् पूरकः स च ।
कुम्भको निश्चलत्वात् स रेचकाद्रेचकस्त्रिधा
॥
लघुर्द्वादशमात्रः स्याच्चतुर्विंशतिकः परः ।
षट्त्रिंशन्मात्रिकः श्रेष्ठः प्रत्याहारश्च रोधनम्
।
ब्रह्मात्मचिन्ता ध्यानं स्याद्धारणा मनसो
धृतिः ।
अहं ब्रह्मेत्यवस्थानं समाधिर्ब्रह्मणः स्थितिः

यथा यान्ति तथा प्राणो वश्यो भवति
योगिनः ॥
वश्यं मत्तं यथेच्छातो नागं नयति हस्तिपः ।
तथैव योगी च्छन्देन प्राणं नयति साधितम्
॥
यथा हि साधितः सिंहो मृगान् हन्ति न
मानुषान् ।
तद्वन्निषिद्धः पवनः किल्विषं न नृणां तनुम्
॥
तस्माद्युक्तः सदा योगी प्राणायामपरो भवेत्
।
श्रूयतां मुक्तिफलदं तस्यावस्थाचतुष्टयम् ॥
ध्वस्तिः प्राप्तिस्तथा संवित् प्रसादश्च
महीपते ।
स्वरूपं शृणु वै तेषां कथ्यमानमनुक्रमात् ॥
कर्म्मणामिष्टदुष्टानां जायते फलसंक्षयः ।
चेतसो विकषायत्वं यत्र सा ध्वस्तिरुच्यते
॥
ऐहिकामुष्मिकान् कामान्
लोभमोहात्मकांश्च
यान् ।
निरुध्यास्ते सदा योगी प्राप्तिः सा सार्व्व-
कालिकी ॥
अतीतानागतानर्थान् विप्रकृष्टतिरोहितान् ।
विजानातीन्दुसूर्य्यर्क्षग्रहाणां ज्ञानसम्पदा ॥
तुल्यप्रभावस्तु यदा योगी प्राप्नोति संविदम्
।
तदा संविदिति ख्याता प्राणायामस्य सा
स्थितिः ॥
यान्ति प्रसादं येनास्य मनः पञ्च च वायवः ।

प्राणानामुपसंरोधात् प्राणायाम इति स्मृतः ।
धारणेत्युच्यते चेयं धार्य्यते यन्मनोऽनया ॥
शब्दादिभ्यः प्रवृत्तानि यदक्षाणि जितात्मभिः
।
प्रत्याह्रियन्ते योगेन प्रत्याहारस्ततः स्मृतः ॥
उपायश्चात्र कथितो योगिभिः परमर्षिभिः ।
येन व्याध्यादयो दोषा न जायन्ते हि योगिनः
॥
यथा तोयार्थिनस्तोयं यन्त्रनालादिभिः शनैः
।
आपिबेयुस्तथा वायुं पिबेद्योगी जितश्रमः ॥
प्राग्नाभ्यां हृदये वाथ तृतीये च तथोरसि ।
कण्ठे मुखे नासिकाग्रे नेत्रभ्रूमध्यमूर्द्धसु ॥
किञ्चित्तस्मात् परस्मिंश्च धारणा परमा
स्मृता ।
दशैता धारणाः प्राप्य प्राप्नोत्यक्षरसाम्यताम्
॥
नाध्मातः क्षुधितः श्रान्तो न च
व्याकुललोचनः ।
युञ्जीत योगं राजेन्द्र ! योगी
सिद्ध्यर्थमात्मनः ॥
नातिशीते न चैवोष्णे द्वन्द्वे नाम्ब्वनिलात्मके
।
कालेष्वेतेषु युञ्जीत न योगं ध्यानतत्परः ॥
सशब्देऽग्निजलाभ्यासे जीर्णे गोष्ठे चतुष्पथे ।
शुष्कपर्णचये नद्यां श्मशाने ससरीसृपे ॥
सभये कूपतीरे वा चैत्यबल्मीकसञ्चये ।
देशेष्वेतेषु तत्त्वज्ञो योगाभ्यासं विवर्ज्जयेत् ॥
सत्त्वस्यानुपपत्तौ च देशकालविवर्ज्जिते ।
नासतो दर्शनं योगे तस्मात्तं परिवर्ज्जयेत् ॥
दोषानेताननादृत्य मूढत्वाद्यो युनक्ति वै ।

विघ्नाय तस्य ये दोषा जायन्ते तान्निबोध मे ॥
वाधिर्य्यं जडतालोपः स्मृतेर्मू कत्वमन्धता ।
ज्वरश्च जायते सद्यस्तद्वदज्ञानयोगिनः॥
प्रमादाद्योगिनो दोषा यथैते स्युश्चिकित्सितम्।
तेषां नाशाय कर्त्तव्यं योगिनां तं निबोध मे ॥
स्निग्धां यवागूमत्युष्णां भुक्त्वा तत्रैव धारयेत्।
वातगुल्मप्रशान्त्यर्थं गुदावर्त्ते ततो दधि ॥
यवागूर्व्वापि पवने वायुग्रन्थीन् परिक्षिपेत्।
तद्वत् कम्पे महाशैलं स्थिरं मनसि धारयेत् ॥
विघाते वचसो वापि वाधिर्य्ये श्रवणेन्द्रिये।
तथैवाम्लफलं ध्यायेत्तृष्णार्त्तो रसनेन्द्रिये ॥
यस्मिन् यस्मिन् रुजा देहे तस्मिंस्तदुपकारिणीम्।
धारयेद्धारणामुष्णे शीतां शीते विदाहिनीम् ॥
कीलं शिरसि संस्थाप्य काष्ठं काष्ठेन ताडयेत्।
लुप्तस्मृतेः स्मृतिः सद्यो योगिनस्तेन जायते ॥
द्यावापृथिव्यौ वाय्वग्नी व्यापिनावनुधारयेत्।
अमानुषात् सत्त्वजाताद्वाधास्थितिचिकित्सितम्॥
अमानुषं सत्त्वमन्तर्योगिनं प्रविशेत् यदि।
वाय्वग्निधारणा चैवं देहसंस्थं विनिर्दहेत् ॥
एवं सर्व्वात्मना कार्य्या रक्षा योगविदा नृप !।
धर्म्मार्थकाममोक्षाणां शरीरं साधनं यतः ॥
प्रवृत्तिलक्षणा ख्याता योगिनो विस्मयात्तथा।
विज्ञानं विलयं याति तस्माद्गोप्याः प्रवृत्तयः ॥

द्रव्याणामप्यनादानमापद्यपियथेच्छया ॥
अपरिग्रह इत्युक्तो योगसिद्धैस्तु साधनम् ।
चान्द्रायणादिना यत्तु शरीरस्य च शोषणम् ॥
तत्तपः कथितं पुत्र ! साध्यायमधुना शृणु ।
प्रणवः शतरुद्रीयं तथाथर्व्वशिरःशिखा ॥
एतेषां यो जपः पुत्र ! स्वाध्याय इति कीर्त्तितः।
यदृच्छालाभसन्तुष्टः सन्तोष इति पठ्यते ॥
बाह्ये चाभ्यन्तरे चापि शुद्धिः शौचं विधीयते।
स्तुतिस्मरणपूजाभिर्वाङ्मनःकायकर्म्मभिः ॥
मयि भक्तिर्दृढा पुत्र एतदीश्वरपूजनम्।
यमाश्च नियमाः प्रोक्ताः संक्षेपान्न तु विस्तरात् ॥
यमैश्च नियमैर्य्युक्तो योगी मोक्षाय संस्तुतः।
स्थिरबुद्धिरसंमूढः पूर्ब्बमासनमभ्यसेत् ॥
पद्मकं स्वस्तिकं पीठं सैंहं कौक्कुटकौञ्जरम्।
कौर्म्मं वज्रासनं चैव वैयाघ्रं चार्द्धचन्द्रकम् ॥
दण्डं तार्क्ष्यासनं शूलं खड्गं मुद्गरमेव च ।
मकरं त्रिपथं काष्ठं स्थाणुर्वा हस्तिकर्णिकम्।
भीमं वीरासनं चापि वाराहं मृगवैणिकम् ॥
क्रौञ्चं चानालिकं चापि सर्व्वतोभद्रमेव च ।
इत्येतान्यासनान्यत्र सप्तविंशतिसंख्यया ॥
योगसंसिद्धिहेतोस्तु कथितानि तवानघ ! ॥
एषामेकतरं बद्ध्वा गुरुभक्तिपरायणः।
द्वन्द्वातीतो जयेत्प्राणानभ्यासक्रमयोगतः ॥
अन्तश्चराणां वायूनां बाह्याभ्यररोधनम्।

विहाय वह्निमार्गं तु अङ्गुल्यास्तु शनैः शनैः।
सौम्येनाकर्षयेद्वायुं नाभावाकृष्य धारयेत् ॥
धारयन्नियतप्राणो योगैश्वर्य्यममन्वितः।
जायते वत्सराद्योगी जरामरणवर्ज्जितः ॥
वायुमाकर्षयेद्वाह्यं वामया चोदरं भवेत्।
नाभिनासान्तराध्यायं स्त्रिः प्राणांश्च जयेद्ध्रुवम् ॥
मनःस्थैर्य्यं भवेद्वत्स ! त्रिषु स्थानेषु धारणात्।
अङ्गुष्ठनाभिनासाग्रे वायुं योगी जितासनः ॥
अपानं कटिदेशे तु पृष्ठतो वै विनिर्द्दिशेत्।
सदा तत्रैव सन्धेय एष वायुजयक्रमः ॥
रेचकः पूरकश्चैव कुम्भकश्च न विद्यते।
निरालम्बे मनः कृत्वा क्षणात्प्राणजितो भवेत् ॥
इन्द्रियाणां विचरतां विषयेषु स्वभावतः।
निग्रहः प्रोच्यते यस्तु प्रत्याहारः स उच्यते ॥
यद्यत् पश्यति तत्सर्व्वं पश्येदात्मवदात्मनि।
प्रत्याहारः स वै प्रोक्तो योगसाधनमुत्तमम्॥
कर्म्मेन्द्रियाणां पञ्चाणां पञ्चमाद्येतरे जने।
यदि तत्र स्थिरो लोको मनो याति तदालयम्॥
उद्घातान् दश पञ्चैव कारयेद्धारणां बुधः।
प्राणवायुं निवार्य्यैव मनः सूर्य्येऽन्तरे क्षिपेत् ॥
देवांश्च सिद्धान् गन्धर्व्वांश्चारणान् खेचरान् गणान्।
षण्मासाभ्यासयोगेन सूक्ष्मज्योतिः प्रपश्यति ॥
दृष्टे न स्याज्जरा मृत्युः सर्व्वज्ञश्च प्रजायते।
स्फोटाख्या नाडिका प्रोक्ता कूर्म्मलोकस्तदान्तरे ॥
उच्चार्य्य बिन्दुतत्त्वं तु तस्यान्ते गुणवत् स्मरेत्।
भूतं भव्यं भविष्यञ्च वर्त्तमानञ्च दूरतः ॥
ज्ञानं यत्तद्भवेन्नूनं स्फोटाख्ये ज्ञानमभ्यसेत्।
ललाटे मूर्ध्निहृदये सदाशिवमनुस्मरेत् ॥
शुद्धस्फटिकसङ्काशं जटाजूटेन्दुशेखरम्।
पञ्चवक्त्रं दशभुजं सर्पयज्ञोपवीतिनम्॥
ध्यात्वैवमात्मनि विभुं ध्यानं तत् सूरयो विदुः।
ततोन्मनस्त्वं भवति न शृणोति न पश्यति ॥
न जिघ्रति न स्पृशति न किञ्चिद्वा समीक्षते।
गुह्योदरादिस्थानेषु वायुं नासां विचिन्तयेत् ॥
ईशोऽहमिति योगीन्द्रः परानन्दैकविग्रहः।
जरामरणनिर्म्मुक्तः शिव एव भवेन्मुनिः ॥
गमनागमनाभ्यां यो हीनो वै विषयोज्झितः।
एकान्त्ररोन्मनीभावः समाधिरभिधीयते ॥

अलौल्यमारोग्यमनिष्ठुरत्वं
गन्धः शुभो मूत्रपुरीषमल्पम्।
कान्तिः प्रसादः स्वरसौम्यता च
योगप्रवृत्तेः प्रथमं हि चिह्नम्॥
अनुरागं जनो याति परोक्षे गुणकीर्त्तनम्।
न विभ्यति च सत्त्वानि सिद्धेर्लक्षणमुत्तमम्
॥
शीतोष्णादिभिरत्युग्रैर्यस्य बाधा न जायते
।
न भीतिमेति चान्येभ्यस्तस्य
सिद्धिरुपस्थिता॥”
इति मार्कण्डेयपुराणे योगिचिकित्सानाम
३९
अध्यायः॥ (तथा च।
ईश्वर उवाच।
“मय्येकचित्तता योग इति पूर्ब्बं निरूपितम्
।
साधनान्यष्टधा तस्य प्रवक्ष्याम्यधुना शृणु
॥
यमाश्च नियमास्तावदासनान्यपि
षण्मुख!।
प्राणायामस्ततः प्रोक्तः प्रायाहारश्च
धारणा॥
ध्यानं तथा समाधिश्च योगाङ्गानि प्रचक्षते
।
अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यापरिग्रहौ॥
यमाः संक्षेपतः प्रोक्ता नियमाः शृणु
पुत्त्रक!।
तपः स्वाध्यायसन्तोषः
शौचमीश्वरपूजनम्॥
नियमाः कथिता तत्स!
योगसिद्धिप्रदायिनः।
सर्व्वेषामेव भूतानामक्लेशजननं हि यत्॥
अहिंसा कथिता सद्भिर्योगसिद्धिप्रदायिनी
।
यथार्थकथनं सत्यमस्तेयमधुना शृणु॥
चौर्य्येण वा बलेनापि परस्वहरणं च यत्।
स्तेयमित्युच्यते सद्भिरस्तेयं तस्य
वर्ज्जनम्॥
सर्व्वत्र मैथुनत्यागो ब्रह्मचर्य्यमिहोच्यते।
प्राणायाम इति प्रोक्तो द्विविधः स च
कथ्यते॥
अगर्भश्च सगर्भश्च तयोराद्योऽजयः
स्मृतः।
द्वितीयः सजयः प्रोक्तो ध्रुवं
व्याहृतिमातृभिः॥
रेचकः शून्यकश्चैव पूरकः कुम्भकस्तथा
।
एवं चतुर्व्विधो भेदः प्राणायामेऽत्र सूरिभिः
॥
असूनां नाडयः प्रोक्ता गमागमलयाश्रयाः
।
रेचनाद्रेचकः प्रोक्तः शून्यकस्तु
यथास्थितः॥
पूरकः पूरणाद्वायोस्तन्निरोधाच्च कुम्भकः
।
देहिनो दक्षिणे भागे पिङ्गला नाडिका
स्मृता॥
पितृयोनिरिति ख्याता
भानुस्तत्राधिदैवतम्।
दक्षिणेतरगा या च इडा सा नाडिका
स्मृता।
देवयोनिरिति ख्याता
चन्द्रस्तत्राधिदैवतम्॥
एतयोरुभयोर्म्मध्ये सुषुम्ना नाम विश्रुता
॥
पद्मसूत्रनिभा नाडी कार्य्याख्या
ब्रह्मदैवतम्।
ततः शून्यं निरालम्बं मध्ये स्वात्मनि
योजयेत्॥
बाह्यस्थाद्रोधनाद्वायोः शून्यकत्वं
विनिर्द्दिशेत्।
चन्द्रदैवतया भूयः पिबेदमृतमुत्तमम्॥
आप्यायनं भवेत्तेन प्लावनं कल्मषस्य तु
।
आपूर्य्योदरसंस्थं तु उच्चैर्वायुं निरोधयेत्
॥
कुम्भकः कुम्भवत्स स्याद्रेचको
वर्त्तितस्य च।
उत्क्षिप्य प्रयतो वायुमजदैवत्यमानयेत्॥
अङ्गुष्ठाग्रान्तमारभ्य ब्रह्मरन्ध्रेण मोचयेत्।
सङ्कोच्य कूचिकाचक्रमूर्द्ध्वं नीत्वा
रसात्रयम्॥
न बृहद्वस्तुनश्चिन्ता न सूक्ष्मस्यापि चिन्तनम्।
न बहिर्नान्तरं पुत्त्र! ब्रह्मग्रन्थिविभेदनम्॥
न स्थूलं न कृशं वापि न ह्रस्वं नापि लोपितम्।
न शुक्लं नापि वा पीतं न कृष्णं नापि कर्बुरम्॥
कृत्वा हृत्पद्मनिलये विश्वाख्यं विश्वसम्भवम्।
आत्मानं सर्व्वभूतानां परस्तात्तमसं स्थितम्॥
सर्व्वस्याधारमव्यक्तमानन्दं ज्योतिरव्ययम्।
प्रधानपुरुषातीतमाकाशंदहरं शिवम्॥
तदन्तः सर्व्वभूतानामीश्वरं ब्रह्मरूपिणम्।
ध्यायेदनादिमध्यान्तमानन्दादिगुणालयम्॥
महान्तं पुरुषं ब्रह्म ब्रह्माणं ब्रह्म चाव्ययम्।

| | | |
|---|---|---|
| | संक्षोभ्य शङ्खिनीं सम्यक्ततो ब्रह्मगुहां नयेत् ।<br>अनेन शोधयेन्मार्गमैश्वरं विमलं मुनिः ॥<br>क्रमेणाभ्यासयोगेन योगसंसिद्धिभाग्भवेत् ।<br>मुमुक्षूणां सदा वत्स ! योगाङ्गं योगसिद्धये ॥ | |

ओङ्कारान्ते तथात्मानं संस्थाप्य परमात्मनि ॥
आकाशे देवमीशानं ध्यायीताकाशमध्यगम्।
कारणं सर्व्वभावानामानन्दैकरसाश्रयम् ॥
पुराणं पुरुषं शम्भुं ध्यायेन्मुच्येत बन्धनात् ।
शिवभक्तिं विना यस्तु संसारं तर्त्तुमिच्छति ॥
मूढो यथा श्वलाङ्गूलैः समुद्रं तर्त्तुमिच्छति ।
तथा विना शम्भुसेवां संसारतरणं न हि ॥
सर्व्वसौख्यप्रदः शम्भुर्नान्या काचन देवता ।
तस्मात् सर्व्वप्रयत्नेन महादेवं प्रपूजयेत् ॥
यद्वा गुहायां प्रकृतं जगत्संमोहनालये ।
विचिन्त्य परमं व्योम सर्व्वभूतैककारणम् ॥
जीवनं सर्व्वमूतानां यत्र लोकः प्रलीयते ।
आनन्दं ब्रह्मणः सूक्ष्मं यत्पश्यन्ति मुमुक्षवः ॥
तन्मध्ये निहितं ब्रह्म केवलं ज्ञानलक्षणम् ।
पातुं तिष्ठेन्महेशेन सोऽश्नुते योगमैश्वरम् ॥
नैकलक्षं द्विलक्षं वा त्रिलक्षं न नवात्मकम् ।
सर्व्वोपाधिविनिर्म्मुक्तं समाधिरभिधीयते ॥
बाह्ये चाभ्यन्तरे पुत्र ! यत्र यत्र मनः क्षिपेत् ।
तत्र तत्रात्मनो रूपमानन्दमनुभूयते ॥
संस्थाप्य मयि चात्मानं परं ज्योतिषि निर्गुणे ।
मुहूर्त्तं तिष्ठतः साक्षात्तस्य चानुभवो भवेत् ॥
सर्व्वज्ञः प्ररिपूर्णश्च जरामरणवर्ज्जितः ।
मत्प्रसादाद्भवेद्योगी नान्यथा क्रौञ्चसूदन ! ॥
तस्मात् सर्व्वं परित्यज्य कर्म्मजातं सुदुष्करम् ।
मामेकं शरणं गच्छेदज्ञानं नाशयाम्यहम् ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चान्ये च सङ्कराः ।
मद्भक्तिभावना पूता यान्ति मत्परमं पदम् ॥
जगतः प्रलये प्राप्ते नष्टे च कमलोद्भवे ।
मद्भक्ता नैव नश्यन्ति स्वेच्छाविग्रहधारिणः ॥
योगिनां कर्म्मिणां चैव तापसानां यतात्मनाम् ।
अहमेव गतिस्तेषां नान्यदस्तीति निश्चयः ॥”
इति ब्रह्मपुराणोपपुराणे श्रीसौरे शिवस्कन्द-

अनात्मन्यात्मविज्ञानमज्ञानात्तस्य सन्निधौ ।
दुःखमाध्यात्मिकं प्रोक्तं तथा चैवाधिभौतिकम् ॥
आधिदैविकमित्युक्तं त्रिविधं सहजं पुनः ।
इच्छाविघातात् सङ्क्षोभश्चेतसस्तदुदाहृतम् ॥
दौर्म्मनस्यं निरोद्धव्यं वैराग्येण परेण तु ।
तमसा रजसा चैव संस्पृष्टं दुर्म्मनः स्मृतम् ॥
तदा मनसि सञ्जातं दौर्म्मनस्यमिति स्मृतम् ।
हटात् स्वीकरणं कृत्वा योग्यायोग्यविवेकतः ॥
विषयेषु विचित्रेषु जन्तोर्व्विषयलोलता ।
अन्तराया इति ख्याता योगस्यैते हि योगि-नाम् ॥
अत्यन्तोत्साहयुक्तस्य नश्यन्ति न च शंसयः ।
प्रनष्टेष्वन्तरायेषु द्विजा पश्चाद्धि योगिनः ॥
उपसर्गाः प्रवर्त्तन्ते सर्व्वे ते सिद्धिसूचकाः ।
प्रतिभा प्रथमा सिद्धिर्द्वितीया श्रवणा स्मृता ॥
वार्त्ता तृतीया विप्रेन्द्रास्तुरीया चेह दर्शना ।
आस्वादा पञ्चमी प्रोक्ता वेदना षष्ठिका स्मृता ।
स्वल्पषट्सिद्धिसन्त्यागात्सिद्धिदाः सिद्धयो मुनेः ।
प्रतिभा प्रतिभावृत्तिः प्रतिर्भाव इति स्थितिः ॥
बुद्धिर्व्विवेचना वेद्यं बुध्यते बुद्धिरुच्यते ।
सूक्ष्मे व्यवहितेऽतीते विप्रकृष्टे त्वनागते ॥
सर्व्वत्र सर्व्वदा ज्ञानं प्रतिभानुक्रमेण तु ।
श्रवणात् सर्व्वशब्दानामप्रयत्नेन योगिनः ॥
ह्रस्वदीर्घप्लुतादीनां गुह्यानां श्रवणादपि ।
स्पर्शस्याधिगमो यस्तु वेदना तूपपादिता ॥
दर्शना दिव्यरूपाणां दर्शनञ्चाप्रयत्नतः ।
संविद्दिव्यरसे तस्मिन्नास्वादो ह्यप्रयत्नतः ॥
वार्त्ता च दिव्यगन्धानां तन्मात्रा बुद्धिसंविदा ।

यत्रेच्छति जगत्यस्मिन् तत्रास्य जलदर्शनम् ।
यद्यद्वस्तु समादाय भोक्तुमिच्छति कामतः ॥
तत्तद्रसान्वितं तस्य त्रयाणां देहधारणम् ।
भाण्डं विनाथ हस्तेन जलपिण्डस्य धारणम् ॥
अव्रणत्वं शरीरस्य पार्थिवेन समन्वितम् ।
एतत् षोडशक प्रोक्तमाप्यमैश्वर्य्यमुत्तमम् ॥
देहादग्निविनिर्म्माणं तत्तापभयवर्ज्जितम् ।
लोकं दग्धमपीहान्यददग्धं स्वविधानतः ॥
जलमध्ये हुतवहञ्चाधाय परिरक्षणम् ।
अग्निनिग्रहणं हस्ते स्मृतिमात्रेण चागमः ॥
भस्मीभूतविनिर्म्माणं यथापूर्ब्बं स्वकामतः ।
द्वाभ्यां रूपविनिष्पत्तिर्व्विना तैस्त्रिभिरात्मनः ॥
चतुर्व्विंशात्मकं ह्येतत् तैजसं मुनिपुङ्गवाः ।
मनोगतित्वं भूतानामन्तर्न्निवसनं तथा ॥
पर्व्वतादिमहाभारस्कन्धेनोद्वहनं पुनः ।
लघुत्वञ्च गुरुत्वञ्च पाणिभ्यां वायुधारणम् ॥
अङ्गुल्यग्रनिपातेन भूमेः सर्व्वत्र कम्पनम् ।
एकेन देहनिष्पत्तिवतैश्वर्य्यं स्मृतं बुधैः ॥
छायाविहीननिष्पत्तिरिन्द्रियाणाञ्चदर्शनम् ।
आकाशगमनं नित्यमिन्द्रियार्थैः समन्वितम् ॥
दूरे च शब्दग्रहणं सर्व्वशब्दावगाहनम् ।
तन्मात्रलिङ्गग्रहणं सर्व्वप्राणिनिदर्शनम् ॥
ऐन्द्रमैश्वर्य्यमित्युक्तमेतैरुक्तः पुरातनः ।
यथाकामोपलब्धिश्च यथाकामविनिर्ग्गमः ॥
सर्व्वत्राभिभवश्चैव सर्व्वगुह्यनिदर्शनम् ।
कामानुरूपनिर्म्माणं वशित्वं प्रियदर्शनम् ॥
संसारदशनञ्चैव मानसं गुणलक्षणम् ।
छेदनं ताडनं बन्धं संसारपरिवर्त्तनम् ॥
सर्व्वभूतप्रसादश्च मृत्युकालजयस्तथा ।
प्राजाप्रत्यमिदं प्रोक्तमाहङ्कारिकमुत्तमम् ॥
अकारणजगत्सृष्टिस्तथानुग्रहएव च ।
प्रलयश्चाधिकारश्च लोकवृत्तप्रवर्त्तनम् ॥
असादृश्यमिदं व्यक्तं निर्म्माणञ्च पृथक् पृथक् ।
संसारस्य च कर्त्तृत्वं ब्राह्ममेतदनुत्तमम् ॥
एतावत् तत्त्वमित्युक्तं प्राधान्यं वैष्णवं पदम् ।
ब्रह्मणा तद्गुणं शक्यं वेत्तुमन्यैर्न शक्यते ॥
विद्यते तत् परं शैवं विष्णुना नावगम्यते ।
असंख्येयगुणं शुद्धं को जानीयाच्छिवात्मकम् ॥

संवादे यमनियमप्राणायामादिकथनं १२ अः ॥

अथ योगान्तराया यथा, --

“योगान्तरायास्तस्याथ जायन्ते युञ्जतः पुनः ।
नश्यन्तेऽभ्यासतस्तेऽपि प्रणिधानेन वै गुरोः ॥”

सूत उवाच ।

“आलस्यं प्रथमं पश्चाद्व्याधिपीडा प्रजायते ।
प्रमादः संशयस्थाने चित्तस्येहानवस्थितिः ॥
अश्रद्धादर्शनं भ्रान्तिदुःखञ्च त्रिविधं ततः ।
दौर्म्मनस्यमयोग्येषु विषयेषु च योग्यता ॥
दशधाभिप्रजायन्ते मुनेर्य्योगान्तरायकाः ।
आलस्यञ्च प्रवृत्तिश्च गुरुत्वात् कायचित्तयोः ॥
व्याधयो धातुवैषम्यात् कर्म्मजा दोषजास्तथा ।
प्रमादस्तु समाधेस्तु साधनानामभावनम् ॥
इदं वेत्युभयस्पृक्तं विज्ञानं स्थानसंशयः ।
अनवस्थितचित्तत्वमप्रतिष्ठाहि योगिनः ॥
लब्धायामपि भूमौ च चित्तस्य भवबन्धनात् ।
अश्रद्धाभावरहिता वृत्तिर्वै साधनेषु च ॥
साध्ये चित्तस्य हि गुरौ ज्ञानाचारशिवादिषु ।
विपर्य्ययज्ञानमिति भ्रान्तिदर्शनमुच्यते ॥
विन्दन्ते योगिनस्तस्मादाब्रह्मभुवनं द्विजाः ॥
जगत्यस्मिन् हि देहस्थं चतुःषष्टिगुणं समम् ।
औपसर्गिकमेतेषु गुणेषु गुणितं द्विजाः ॥
सन्त्याज्यं सर्व्वथा सर्व्वमौपसर्गिकमात्मनः ।
पैशाचे पार्थिवञ्चाप्यं राक्षसानां पुरे द्विजाः ॥
याक्षे तु तैजसं प्रोक्तं गान्धर्व्वे श्वसनात्मकम् ।
ऐन्द्रे व्योमात्मकं सर्व्वं सौम्ये चैव तु मानसम् ॥
प्राजापत्ये त्वहङ्कारं ब्राह्मे बोधमनुत्तमम् ।
आद्ये चाष्टौ द्वितीये च तथा शोडशरूपकम् ॥
चतुर्व्वंशत् तृतीये तु द्वात्रिंशश्च चतुर्थके ।
चत्वारिंशत् पञ्चमे तु भूतमात्रात्मकं स्मृतम् ॥
गन्धो रसस्तथा रूपं शब्दः स्पर्शस्तथैव च ।
प्रत्येकमष्टधा सिद्धं पञ्चमे तच्छतक्रतोः ॥
तथाष्टचत्वारिंशच्च षट्पञ्चाशत् तथैव च ।
चतुःषष्टिगुणं ब्राह्मं लभते द्विजसत्तमाः ॥
औपसर्गिकमाब्रह्म भुवनेषु परियजेत् ।
लोकेष्वालोक्ययोगेन योगवितं परमं सुखम् ॥
स्थूलता ह्रस्वता बाल्यं वार्द्धक्यं यौवनं तथा ।
नानाजातिस्वरूपञ्च चतुर्भिर्द्देहधारणम् ॥
पाथिवांशं विना नित्य सुरभिर्गन्धसंयुतः ।
एतदष्टगुणं प्रोक्तमैश्वर्य्यं पार्थिवं महत् ॥
जले निवसनं यद्वद्भूम्यामिव विनिर्गमः ।
इच्छेच्छक्तः स्वयं पातुं समुद्रमपि नातुरः ॥
बुत्थाने सिद्धयश्चैता ह्युपसर्गाश्च कीर्त्तिताः ।
निरोद्धव्याः प्रयत्नेन वैराग्येण परेण तु ॥
नाशातिशयतां ज्ञात्वा विषयेषु भयेषु च ।
अश्रद्धया त्यजेत् सर्व्वं विरक्त इति कीर्त्तितः ॥
वैतृष्ण्यं पुरुषे ख्यातं गुणवैतृष्ण्यमुच्यते ।
वैराग्येणैव सन्त्याज्याः सिद्धयश्चौपसर्गिकाः ॥
औपसर्गिकमाब्रह्म भुवनेषु परित्यजेत् ।
निरुध्यैव त्यजेत् सर्व्वं प्रसीदति महेश्वरः ॥
प्रसन्ने विमला मुक्तिर्वैराग्येण परेण वै ।
अथवानुग्रहार्थञ्च लीलार्थं वा तदा मुनिः ॥
अनिरुध्य विचेष्टेदयः सोऽप्येवं हि सुखी भवेत् ।
क्वचिद्भूमिं परित्यज्य आकाशे क्रीडते श्रिया ॥
उद्गिरेच्च क्वचिद्वेदान् सूक्ष्मानर्थान् समासतः ।
क्वचिच्छ्रुते तदर्थेन श्लोकबन्धं करोति सः ॥

क्वचिद्दण्डकबन्धन्तु कुर्य्याद्बन्धं सहस्रशः ।
मृगपक्षिसमूहस्य रुतज्ञानञ्च विन्दति ॥
ब्रह्माद्यं स्थावरान्तञ्च हस्तामलकवद्भवेत् ।
बहुनात्र किमुक्तेन विज्ञानानि सहस्रशः ॥
उत्पद्यन्ते मुनिश्रेष्ठा मुनेस्तस्य महात्मनः ।
अभ्यासेनैव विज्ञानं विशुद्धञ्च स्थिरं भवेत् ॥
तेजोरूपाणि सर्व्वाणि सर्व्वं पश्यति योगवित्
।
देवविम्बान्यनेकानि विमानानि सहस्रशः ॥
पश्यति ब्रह्मविष्ण्विन्द्रयमाग्निवरुणादिकान्।
ग्रहनक्षत्रताराश्च भुवनानि सहस्रशः ॥
पातालतलसंस्थाश्च समाधिस्थः स पश्यति
।
आत्मविद्याप्रदीपेन स्वस्थेनाचलनेन तु ॥
प्रसादामृतपूर्णेन सत्त्वपात्रस्थितेन तु ।
तमो निहत्य पुरुषः पश्यति ह्यात्मनीश्वरम् ॥
तस्य प्रसादाद्धर्म्मश्च ऐश्वर्य्यं ज्ञानमेव च ।
वैराग्यमपवर्गश्च नात्र कार्य्या विचारणा ॥
न शक्यो विस्तराद्वक्तुं वर्षाणामयुतैरपि ।
योगे पाशुपते निष्ठा स्थातव्यञ्च मुनीश्वराः !
॥”
इति लिङ्गपुराणे ९ अध्यायः ॥)
अथ त्रिविधयोगः ।
श्रीभगवानुवाच ।
“योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया
।
ज्ञानं कर्म्म च भक्तिश्च नोपायोऽन्योऽस्ति
कुत्र-
चित् ॥
निर्व्विण्णानां ज्ञानयोगो न्यासिनामिह
कर्म्मसु ।
तेष्वनिर्व्विण्णचित्तानां कर्म्मयोगश्च
कामिनाम् ॥
यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान्
।
न निर्व्विण्णो नातिसक्तो भक्तियोगोऽस्य
सिद्धिदः ॥
तावत् कर्म्माणि कुर्व्वीत न निर्व्विद्येत यावता
।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥
योगक्षेमेऽन्यथा चेत्तु पालो वक्तव्यतामियात्
॥”
बृहदङ्गिराः ।
“अनागतस्य चानेता आगतस्य च रक्षकः ।
रात्रावपि यदान्योऽस्ति तदा स्वामी न दोष-
भाक् ॥”
इति प्रायश्चित्ततत्त्वम् ॥
(तथा च गीतायाम् । ९ । २२ ।
“अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासते
।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥”
“योगोऽप्राप्तस्य प्रापणं क्षेमस्तद्रक्षणं तदुभयं
वहामि ।” इति शङ्कराचार्य्यः ॥ “योगं धनादि-
लाभं क्षेमञ्च तत्पालनं मोक्षं वा तैरप्रार्थित-
मपि अहमेव वहामि प्रापयामि ।” इति
श्रीधरस्वामी ॥ योगश्च क्षेमश्च इतीतरेतरद्वन्द्वे
पुंलिङ्गद्विवचनप्रयोगो भवति ।) यथा, --
“योगक्षेमकरं कृत्वा सीताया लक्ष्मणं ततः ।
मृगस्यानुपदी रामो जगाम गजविक्रमः ॥”
इति भट्टिकाव्ये । ५ । ५० ॥
“फलपुष्पादेरलब्धस्य साधनं योगः शरीरादे-
र्लब्धस्य पालनं क्षेमः ।” इति तट्टीकायां
भरतः ॥ “योगक्षेमौ शरीरस्थितिपालने ।”
इति तत्रैव जयमङ्गलः ॥

**योगचरः**, पुं, (योगेषु चरतीति । चर + “चरेष्टः ।”
३ । २ । १६ । इति टः ।) हनूमान् । इति
शब्दरत्नावली ॥

**योगजं**, क्ली, (योगात् जायते इति । जन् + डः ।)
अगुरु । इति भावप्रकाशः ॥ योगजाते,
त्रि ॥

**योगजः**, पुं, (योगेभ्यो जायते इति । जन् + डः ।)
अलौकिकसन्निकर्षविशेषः । स च युक्तयुञ्जान-
भेदतो द्विविधः । यथा, --
“अलौकिकः सन्निकर्षस्त्रिविधः परिकीर्त्तितः ।
सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा ॥
आसत्तिराश्रयाणान्तु सामान्यज्ञानमिष्यते ।
तदिन्द्रियजतद्धर्म्मबोधसामग्र्यपेक्ष्यते ॥
विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः ।
योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः ॥

**योगदानं**, क्ली, (योगेन दानम् ।) छलेन दानम् ।
यथा, --
“योगाधमनविक्रीतं योगदानप्रतिग्रहम् ।
यत्र वाप्युपधिं पश्येत्तत् सर्व्वं विनिवर्त्तयेत्
॥”
इति मानवे ८ अध्यायः ॥
“योगाधमनेति । योगशब्दश्छलवाची
छलेन ये
बन्धकविक्रयदानप्रतिग्रहाः क्रियन्ते न
तत्त्वतो-
ऽन्यत्रापि निःक्षेपादौ यत्र छद्म जानीयात्
वस्तुतो निक्षेपादि न कृतं तत् सर्व्वं
निवर्त्त-
येत् ।” इति तट्टीकायां कुल्लूकभट्टः ॥

**योगनाविकः**, पुं, मत्स्यविशेषः । तत्पर्य्यायः ।
गर्गाटः २ । इति हारावली ॥

**योगनिद्रा**, स्त्री, (योगश्चित्तवृत्तिनिरोधलक्षणः
समाधिस्तद्रूपा निद्रा ।) दुर्गा । यथा, --
“या निम्नान्तःस्थलाधस्था
जगदण्डकपालतः ।
विभज्य पुरुषं याति योगनिद्रेति सोच्यते
॥”
इति कालिकापुराणे ६ अध्यायः ॥
(अपि च मार्कण्डेये देवीमाहात्म्ये । ८१ ।
४९ ।
“योगनिद्रां यदा विष्णुर्ज्जगत्येकार्णवीकृते
।
आस्तीर्य्य शेषमभजत् कल्पान्ते भगवान्
प्रभुः ॥”
योगेन सन्नहनोपायादिना साध्या निद्रा ।
वीराणां निद्रा । यथा, कामन्दकीयनीति-
सारे । १५ । ४४ ।
“मार्गे च दुर्गे विनिविष्टसैन्यो
विधाय रक्षां विधिवद्विधिज्ञः ।
सन्नद्धपार्श्वस्थितिवीरयोधः
सेवेत साध्वीं सुखयोगनिद्राम् ॥”)

**योगपट्टं**, क्ली, (योगस्य पट्टं वसनविशेषः ।

स्वधर्म्मस्थो यजन् यज्ञैरनाशीः काम उद्धव ! ।
न याति स्वर्गनरकौ यद्यन्यन्न समाचरेत् ॥
अस्मिँल्लोके वर्त्तमानः स्वधर्म्मस्थोऽनघः शुचिः ।
ज्ञानं विशुद्धमाप्नोति मद्भक्तिञ्च यदृच्छया ॥”
इति श्रीभागवते । ११ । २० । ६ -- ११ ॥ * ॥
सांख्ययोगः २ कर्म्मयोगः ३ ज्ञानकर्म्मन्यास-
योगः ४ सन्न्यासयोगः ५ ज्ञानयोगः ६ विज्ञान-
योगः ७ ब्रह्मयोगः ८ राजगुह्ययोगः ९ विभूति-
योगः १० भक्तियोगः ११ प्रकृतिपुरुषविवेक-
योगः १२ गुणत्रययोगः १३ पुरुषोत्तमयोगः १४
आचारविवेकयोगः १५ मोक्षयोगः १६ एते योगा एतेष्वध्यायेषु भगवद्गीतायां द्रष्टव्याः ॥ * ॥
(कलौ योगसिद्धिर्नास्ति । यदुक्तं काशीखण्डे ।
३२ अध्याये ।
“न सिध्यति कलौ योगो न सिध्यति कलौ तपः ॥
तथा च तत्रैव ४२ अध्याये ।
“चञ्चलेन्द्रियवृत्तिः स्यात् कलिकल्मषजृम्भणात् ।
अल्पायुः स्यात्तथा नृणां क्वेह योगमहोदयः ॥”)

**योगक्षेमं**, क्ली, (योगश्च क्षेमश्च तयोः समाहारः ।)
अनागतानयनागतरक्षणे । यथा मनुः ।
“दिवा वक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे ।
युक्तस्य सर्व्वदा भानं चिन्तासहकृतोऽपरः ॥”
इति भाषापरिच्छेदे । ६३ -- ६६ ॥ * ॥
“योगज इति । योगाभ्यासजनितधर्म्मविशेषः । श्रुतिपुराणादिप्रमाणकइत्यर्थः । युक्तेति । युक्तयुञ्जानरूपयोगिद्वैविध्यात् धर्म्मस्य द्वैविध्य-
मिति भावः । युक्तस्येति । योगाभ्यासावगत्या वशीकृत-समाधि-समासादित-विविधसिद्धियुक्त
इत्युच्यते । अयमेव विशेष्टयोगवत्त्वात् युक्त इत्यु-
च्यते । सर्व्वदेतिं । चिन्तासहकारं विनेत्यर्थः । भानं सर्व्वविषयाणां प्रत्यक्षम् । अपरो युञ्जानः ।
विषयव्यावृत्त्या मानससमाधिस्थः अयञ्च युञ्जान उच्यते । चिन्ता ध्यानं तदेव कारणं तत्सहकारात् स्थूलसूक्ष्मव्यवहितविप्रकृष्टा-
नर्थान् मनः प्रत्यक्षीकरोतीत्यर्थः ।” इति सिद्धान्तमुक्तावली ॥
योगार्थं पट्टमिति वा ।) यद्वस्त्रेण पृष्ठजानुबन्धनं
भवति तत् । यथा, --
“पादुके योगपट्टञ्च तर्ज्जन्यां रौप्यधारणम् ।
न जीवत्पितृकः कुर्य्यात् ज्येष्ठे भ्रातरि जीवति ॥”
तल्लक्षणं यथा, --
“पृष्ठजान्वोः समायोगे वस्त्रं वलयवद्दृढम् ।
परिवेष्ट्य यदूर्द्ध्वञ्जुस्तिष्ठेत्तद्योगपट्टकम् ॥”
इति पाद्मे कार्त्तिकमाहात्म्ये २ अध्यायः ॥
(योगपदकम् । उत्तरीयविशेषः । यथा, याज्ञ-
वल्क्यः ।
“अभावे धौतवस्त्राणां शाणक्षौमाविकानि च ।
कुतपो योगपट्टं वा द्विर्व्वासा येन वा भवेत् ॥”)
इत्याह्निकतत्त्वम् ॥)

**योगपदकं**, क्ली, (योगस्य पदकम् ।) पूजादौ
धार्य्योत्तरीयविशेषः । योगपाटा इति भाषा ॥
यथा, --
“त्रिविधं योगपदकमाद्यं व्याघ्राजिनोद्भवम् ।
द्वितीयं मृगचर्म्माढ्यं तृतीयं तन्तुनिर्म्मितम् ।
चतुर्म्मात्रप्रविस्तारं दैर्घेण यज्ञसूत्रवत् ॥
चतुर्म्मात्रं चतुरङ्गुलमात्रम् ॥” इति वीर-
मित्रोदयधृतसिद्धान्तशेखरः ॥

**योगपीठं**, क्ली, (योगस्य योगार्थं वा पीठमास-
नम् ।) देवानां योगासनम् । यथा, --

"मण्डलं योगपीठन्तु पद्मं पद्मे विचिन्तयेत् ।
शावादीन्यासनानीह चत्वार्य्यपि विचिन्तयेत् ॥
योगपीठं पृथग्ध्यात्वा मण्डलेन सहैकताम् ।
पुनर्ध्यात्वा ततः पश्चात् पूजयेदासनं ततः ॥
ध्यानेन योगपीठस्य ध्यात्वा यद्दीयते जलम् ।
नैवेद्यपुष्पधूपादि तत् स्वयञ्चोपतिष्ठते ॥
सर्व्वे देवाः सगन्धर्व्वाः सचराचरगुह्यकाः ।
चिन्तिताः पूजिताश्च स्युर्य्योगपीठस्य पूजने ॥"
इति कालिकापुराणे ५६ अध्यायः ॥

**योगमाया**, स्त्री, (योग एव माया ।) भगवती ।

सा च विष्णुमाया । यथा, --
"ततश्च शौरिर्भगवत्प्रचोदितः सुतं समादाय स सूतिकागृहात् ।
यदा बहिर्गन्तुमियेष तर्ह्यजा या योगमायाजनिनन्दजायया ॥"
इति श्रीभागवते १० स्कन्धे ३ अध्यायः ॥

**योगरङ्गः**, पुं, (योगेन रङ्गो रागो यस्य ।) नारङ्गः ।

इति राजनिर्घण्टः ॥
(नारङ्गशब्देऽस्य विशेषो ज्ञेयः ॥)

**योगराजगुग्गुलुः**, पुं, (योगराजाख्यो गुग्गुलुः ।)

वातरोगादीनामौषधविशेषः ।
यथा, --
"नागरं पिप्पलीमूलं चर्व्य मूषणचित्रकम् ।
भृष्टं हिङ्ग्वजमोदा च सर्षपो जीरकद्वयम् ॥
मधुना मेदसो वृद्धिं कुष्ठं निम्बशृतेन च ॥
छिन्नाक्वाथेन वातास्रं शोफं मूलकजात् शृतात् ।
पाटलाक्वाथसहितो विषं मूषकसम्भवम् ॥
त्रिफलाक्वाथसंयुक्तो दारुणां नेत्रवेदनाम् ।
पुनर्नवादेः क्वाथेन हन्ति सर्व्वोदरानपि ॥ * ॥
अत्र रास्नादिक्वाथो यथा, --
रास्ना पुनर्नवा शुण्ठी गुडूच्येरण्डजं शृतम् ।
सप्तधातुगते वाते सामे सर्व्वाङ्गगे पिबेत् ॥
इति योगराजो गुग्गुलुः ॥" इति भावप्रकाशः ॥

**योगरूढः**, पुं, (योगार्थप्रतिपादको रूढः ।)

योगार्थसहभावेन रूढ्यर्थबोधकशब्दः । यथा,
"योगरूढाश्च रूढाश्च यौगिकाश्चेति ते त्रिधा ॥"
"ते शब्दाः पुनस्त्रिधा भवन्ति । योगरूढाः पङ्कजादयः । पङ्कजनिडप्रत्ययैः पङ्कजनिकर्त्रभि-
धाय केन योगेनापि पदार्थ एव प्रतिपाद्यते न कुमुमाद्यर्थ इति । योगार्थपुरस्कारेणापि रूढ्यर्थ एवेति योगरूढः । एवं ईश्वरसङ्केत-महिम्ना झटिति पद्मस्यैव स्मृतेः ।" इत्यलङ्कार-कौस्तुभे २ किरणः ॥ ("योगरूढं नाम लक्षयति ।
'स्वान्तर्निविष्टशब्दार्थस्वार्थयोर्बोधकृम्मिथः ।
योगरूढं न यत्रैकं विनान्यस्यास्ति शाब्दधीः ॥'
यन्नाम स्वावयववृत्तिलभ्यार्थेन ममं स्वार्थस्या-न्वयबोधकृत् तन्नाम योगरूढं यथा पङ्कजकृष्ण-सर्पाधर्म्मादि तद्धि शान्तर्निविष्टानां पङ्कादि-शब्दानां वृत्तिलभ्येन पङ्कजनिकर्त्रादिना समं स्वशक्यस्य पद्मादेरन्वयानुभावकं पङ्कजमित्या-दितः पङ्कजनिकर्तृ पद्ममित्यनुभवस्य सर्व्वसिद्ध-
त्वात् । इयांस्तु विशेषो यद्रूढमपि मण्डपरथ-कारादिपदं योगार्थविनाकृतस्य रूढ्यर्थस्येव रूढ्यर्थविनाकृतस्यापि योगार्थस्य बोधकं मण्डपे
शेते इत्यादौ योगार्थस्य मण्डपानकत्रदिरिव मण्डपं भोजयेदित्यादौ समुदितार्थस्य गृहादेर-योग्यत्वेनान्वयाबोधात् । योगरूढन्तु पङ्कजादि-पदमवयववृत्त्या रूढ्यर्थमेव समुदायशक्त्या धानकर्म्मत्वविशिष्टायां गवीवपङ्कजादिपदस्यापि पङ्कजातत्वादिविशिष्टपद्मादौरूढिरेवास्तु नतु योगरूढिरिति साम्प्रतं अन्यत्र कॢप्तशक्तिभ्यः पङ्कजन्यादिपदेभ्य एवाकाङ्क्षादिसाचिव्येन पङ्कज-निकर्तृ त्वादेर्लभसम्भवे तद्विशिष्टस्य पद्मस्य गुरोः समुदायाशक्यत्वादनन्यलभ्यस्यैव शब्दार्थ-त्वात् । यद्यपि कर्तृवाचकडप्रत्यये एव पद्मत्व-विशिष्टस्य लक्षणया लाभसम्भवान्न पङ्कज-भागस्य तत्र शक्तिरुचिता प्रकारान्तरालभ्यस्यैव शब्दशक्यत्वमित्युक्तत्वात् कृतिवर्त्तमानत्वयोरि-वैकपदार्थयोरपि कर्तृपद्मयोर्मिथोऽन्वयस्य सम्भवित्वात् तथाप्यवयवानां शक्तेरग्रहे ग्रहेऽपि वा पद्मादौ तदर्थस्यान्वयधीविरोधिधीदशायां पङ्कजमस्तीत्यादितः पद्ममस्तीत्याद्यनुभवार्थ-मवश्यं पद्मत्वादिविशिष्टे पङ्कजादिभागस्य रूढिरुपेया इतरथा प्रकृत्यर्थावच्छिन्नस्यैव प्रत्य-यार्थस्य पदार्थान्तरेणान्वयस्य व्युत्पन्नतया डप्र त्ययोपस्थापितस्यापि पद्मस्यास्तित्वादिना सहा-न्वयानुपपत्तेः । अतएव पङ्कजादिपदागृहीत-शक्तिकस्य पुंसः पङ्कजमस्तीत्यादितो जात्वपि कर्त्तास्तीत्याकारको नान्वयबोधः प्रत्ययमात्रोप-स्थाप्यस्य कर्त्तुरन्यत्रान्वये निराकाङ्क्षत्वादिति वक्ष्यते । किञ्चैवमेकाक्षरकोषावधृतशक्तिकानां कखादिप्रत्येकवर्णानामेव निरूढलक्षणया तत्त-दर्थानुभावकत्वसम्भवाद्वकनखादिसमुदायस्यापि तत्तदर्थे शक्तिर्व्विलीयेत कादिप्रत्येकवर्णस्य शक्ति-ग्रहं विनापि वकादिशब्दाद्वकादेरनुभवार्थं तत्र समुदाये शक्तिरिति तु प्रकृतेऽपि समानं डादि-प्रत्ययमात्रस्य पद्मादौ वृत्तिमत्त्वग्रहेऽपि पङ्क-जादिसमुदायात् पद्मादेरनुभवस्य सर्व्वसिद्ध-त्वात् । नचैवं चित्रगुरित्यादावपि चित्रगोस्वा-म्यादौ समुदायस्य शक्तिप्रसङ्गः समासत्वस्या-विशिष्टत्वादिति वाच्यम् अगृहीतावयववृत्तिकस्य पुंसस्ततोऽर्थानधिगमेनावयवानां कृत्तेरवश्या-पेक्षायां तेषामेव तथाविधार्थबोधकत्वौचित्यस्य वक्ष्यमाणत्वादिति ।

पङ्कजादिपदेभ्यः केवलस्यैव योगार्थस्य रूढ्य-

र्थस्य वा बोधव्युदासार्थन्तादृशार्थयोर्मिथः साकाङ्क्षत्वनियमो न कल्प्यते परन्तु रूढ्यर्थभिन्ने

रेणुकेन्द्रयवौ पाठा विडङ्गं गजपिप्पली।
कटुकातिविषा भार्गी वचा मूर्व्वा च पत्रकम्॥
देवदारु कणा कुष्ठं रास्ना मुस्ता च सैन्धवम्।
एला त्रिकण्टकः पथ्या धान्यकञ्च विभीतकम्॥
धात्री च त्वगुशीरञ्च यवक्षारोऽखिलान्यपि।
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत्॥
यावन्त्येतानि चूर्णानि तावदेवात्र गुग्गुलुः।
संमर्द्य सर्पिषा पश्चात् सर्व्वं संमिश्रयेच्च तत्॥
एकं पिण्डं ततः कुर्य्यात् धारयेत् घृतभाजने।
गुटिकाष्टकमात्रास्तु खादेत्ताश्च यथोचितम्॥
यथोचितमिति दोषकालानलाद्यपेक्षया॥
परिभाषा च।
आदौ शाणोन्मितं खादेत् ततः कर्षार्द्ध-मात्रकम्।
ततः कर्षमितं खादेत् गुग्गुलुं क्रमतो नरः॥
दिनानां सप्तके पूर्ब्बे गुग्गुलोः शाणमाहरेत्।
द्वितीये कर्षमर्द्धन्तु पूर्णं कर्षं ततः परम्॥
गुग्गुलुर्योगराजोऽयं महान्मुख्यो रसायनः।
मैथुनाहारपानानां नियमो नात्र विद्यते॥
सर्व्वान् वातामयान् हन्यात् आमवातमप-स्मृतिम्।
वातरक्तं तथा कुष्ठं तथा दुष्टव्रणानपि॥
अर्शांसि ग्रहणीरोगं प्लीहगुल्मोदराण्यपि।

चावयवलभ्यार्थमेवानुभावयति नत्वन्यं व्युत्पत्ति-वैचित्र्यात्तथैव साकाङ्क्षत्वात्। अतएव पङ्कजं कुनुदमित्यत्र पङ्कजनिकर्तृत्वेन भूमौ पङ्कज-मुत्पन्नमित्यादौ च पद्मत्वेन पङ्कजपदस्य लक्षण-यैव कुमुदस्थलपद्मयोर्बोध इति वार्त्तिकम्। ननु पुष्पं पङ्कजेत्यादौ पङ्कजादेरन्वयस्याबोधात् बोधाच्च पङ्कजपुष्पमित्यादौ निर्व्विभक्तिकेन पङ्क-जादिपदेनोपस्थाप्यार्थस्यान्वयधीसामान्यं प्रत्येव तादृशपङ्कजादिपदोत्तरशब्दोपस्थाप्यत्वंतन्त्रम् एवं पुष्पं पङ्कजमित्यादौ अन्वयबोधदर्शनात्तदनु-रोधेन सविभक्तिकपङ्कजादिपदोपस्थाप्यार्थान्वय बोधं प्रति स्वसमानविभक्तिकपदोपस्थाप्यत्वञ्च अतस्तदुपस्थापितस्य पङ्कजातादेः कथं पदा-न्तरानुपस्थापितं पद्मादावन्वय इति चेदपङ्कज-वृत्तिः सत्तेत्यादौ च व्यभिचारादुक्तव्युत्पत्तेः ‘स्खलदक्षरसंशीभि तरुण्यामुखपङ्कजम्।’ इत्यादौ सङ्कोचेनेनि गृहाण। नच धेनुपदस्य

योगार्थस्य बोधं प्रति रूढिधियः प्रतिबन्धकत्वं तेन रूढेरप्रतिसन्धानदशायामवयवशक्त्यैव पङ्कजं कुमुदमित्यादौ पङ्कजनिकर्तृत्वादिना कैरवादेरवगमस्तथावयवशक्तेरनुपस्थितौ समु-दायशक्त्यैव भूमौ पङ्कजमुत्पन्नमित्यादौ पङ्कत्व-प्रकारेण स्थलपद्मादेरतएव च तैलपदं योगेन तिलप्रभवं रूढ्या विलक्षणद्रव्यपर्य्यवसितं स्नेहं बोधयेद्योगरूढमपि तैलं पत्रमित्यादौ सर्षपस्य तैलमित्यादौ च शक्त्यैव प्रत्येकस्य बोधकमिति मीमांसकानान्मत्मुपन्यस्यति।
‘रूढ्यर्थभिन्ने योगार्थबुद्धौ रूढेर्विरोधिताम्।
वदन्ति केचिदेकैकबुद्धिस्तैः क्वचिदिष्यते॥’
क्वचित्समुदायावयवयोस्क्रमात्रस्य शक्तिप्रति-

| | | |
|---|---|---|
| आनाहं मन्दमग्निञ्च श्वासं कासमरोचकम् ॥<br>प्रमेहं नाभिशूलञ्च कृमिं क्षयमुरोग्रहम् ।<br>शुक्रदोषं रजोदोषमुदावर्त्तं भगन्दरम् ॥ * ॥<br>रास्नादिक्वाथसंयुक्तः सर्व्ववातामयान् हरेत् ।<br>काकोल्यादिश्रितात् पित्तं कफमारखधादिना ॥<br>दार्व्वीश्रितेन मोहांश्च गोमूत्रेण च पाण्डुताम् । | | |

सन्धानस्थले यद्यपि
पद्मान्यधर्म्मिकपङ्कजातत्वा-
न्वयधीसामान्यं प्रति पङ्कजपदं
पद्मशक्तमित्येवं
रूढिज्ञानत्वेन न विरोधित्वं तादृशधीसत्त्वेऽपि
कर्दमजादिशब्देभ्यस्तादूप्येण
कैरवादेरवगमात्
नापि पङ्कजपदजन्यतादृशबोधंप्रत्येव तथा
विरो-
धित्वं रूढिज्ञानदशायामपि समुदायस्य
लक्षणया
शक्तिभ्रमेण वा पङ्कजपदात् पङ्कजातत्वेन
कुमुद-
बोधस्य सर्व्वैरुपगमात् तथाप्यवयवशक्त्या
पङ्कज-
पदजन्यपद्मान्यधर्म्मिकपङ्कजातत्वान्वयबोधं
प्रत्येव
रूढिज्ञानत्वेन प्रतिबन्धकत्वम् । नच कुमुद
एव पद्मत्वेन रूढिभ्रमदशायां ताद्रूप्येण
कुमुदस्य
बोधो न स्याद्विरोधिन्या रूढिधियः
सत्त्वादिति
वाच्यं पद्मान्यधर्म्मिकेत्यनेन
पद्मत्वानवच्छिन्नविशे-
ष्यताकत्वस्योक्तत्वात् । पद्मस्येव
कुमुदस्यापि
समुदायशक्यत्वधीदशायामवयवशक्त्या
पङ्कजातं
कुमुदमित्याकारकधीस्वीकारेतु
कुमुदादिशक्तत्व
ज्ञानाजन्यत्वे नापि प्रतिवध्यं विशेषणीयम् ।
नच
यत्र
तात्पर्य्यादिधीविलम्बादयोग्यताभ्रमादिना
प्रतिवन्धाद्वा रूढ्योपस्थिते पद्मे योगार्थस्य
पङ्कजनिकर्त्तुरनन्वयस्तत्रावयवशक्त्या
पङ्कजा-
तत्वेन कुमुदादिवोधो न स्यात् विरोधिनो
रूढिज्ञानस्य सत्त्वादिति वाच्यं मीमांसकाना-
मिष्टत्वात् ते हि मण्डपं भोजयेत्यादावपि
गृहादौ रूढिधीसत्त्वे मण्डपादिपदानामवयव-
पङ्कजननकर्तृषु पङ्कादिपदानां शक्तिसत्त्वेऽपि
पङ्कजपदान्न ताद्रूप्येण बोधः परन्तु
पद्मत्वमात्रेण
योगार्थमर्य्यादया
पङ्कजातत्वप्रकारकबोधसा-
मान्यं प्रत्येव पद्मत्वविशेष्टे रूढिज्ञानस्य
लाघ-
वेन विरोधित्वात्
पद्मान्यधर्म्मिकत्वादेर्गौरवेण
प्रतिबध्यकोट्यप्रविष्टत्वादतोयोगरूढं
नामैव
नास्ति युधिष्ठिरादिशब्दादपि
रणस्थिरत्वादिकं
योगार्थं परित्यज्यैव वैजात्वादिप्रकारेण
कुन्ती-
पुत्राद्यवगमात् । यदुक्तमभियुक्तैः ।
या वृत्तिरजहत्स्वार्था सेयमत्रोपपादिता ।
जहत्स्वार्था तु तत्रैव यत्र रूढिर्व्विरोधिनी ।
पङ्कजं मनसादेवी पद्मनाभो युधिष्ठिरः ॥
इति । तदेतद्वैयाकरणमतं
पङ्कजमस्तीत्यादितः
पङ्कजातं पद्ममस्तीत्याद्यनुभवस्य
न्यायमीमां-
सादिसकलतन्त्रसिद्धत्वेन गौरवस्य
प्रामाणि-
कत्वादनादेयमन्यथा अवयवशक्तेरपि
प्रतिवध्य-
तायामप्रवेशापत्तेर्लाघवे
पङ्कजातत्वप्रकारक-
शाब्दसामान्यं प्रत्येव रूढिधियः
प्रतिबन्धकत्वस्य
सुवचत्वात् । नन्वेवं द्रव्ये
सरसिजमस्तीत्यादितो
द्रव्यनिष्ठं सरोजमिव द्रव्याभिन्ने सरसि जातं
पद्ममपि प्रतीयेत नामार्थयोरभेदान्वये
तन्त्रस्य
नाम्नोः समानविभक्तिकत्वस्यानयादिति
चेत्
सत्यं सविभक्तिकनामार्थस्य
नामान्तरार्थान्वये
पङ्कजादियोगरूढस्य सामासिक एवान्तर्भाव
इति नाधिक्यम् ॥ * ॥)

**योगवाहः**, पुं, (योगस्य वाहः । योगं वाहय-
तीति । वह् + णिच् + अण् वा ।) अनुस्वारः
।
विसर्गः । जिह्वामूलीयः । उपाध्मानीयः ।
इति
व्याकरणम् ॥

**योगवाही**, स्त्री, (योगं वाहयतीति । वह + णिच्
+ अण् । ततो ङीष् ।) क्षारविशेषः । यथा, -
-
"स्वर्ज्जिस्तु स्वर्ज्जिकास्रुघ्नी योगवाही
सुवर्च्चिका ।"
इति हेमचन्द्रः ॥
पारदश्च ॥ (पुं, रोगविशेषे
मिलितानामौषधानां
प्रयोगः । यथा, --
"योगवाहिरसाः सर्व्वे सर्व्वरोगगलग्रहे ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे रक्तपित्ताधिकारे
॥)

**योगसारः**, पुं, (योगस्यौषधप्रयोगस्य सारः ।)
सर्व्वरोगहरणोपायः । यथा, --
धन्वन्तरिरुवाच ।
"सर्व्वरोगहरं सिद्ध्वं योगसारं वदाम्यहम् ।
शृणु सुश्रुत ! संक्षेपात् प्राणिनां जीवहेतवे ॥
निमेषादिर्हविःकालश्चिन्ताभिः षड्विधो
भवेत् ॥
कषायकटुतिक्ताम्लरूक्षाहारादभोजनात् ।
चिन्ताव्यवायव्यायामभयशोकप्रजागरात् ॥
उच्चैर्भाष्यतिभावाच्च कर्म्मयोगातिकर्षणात्
।
वायुः कुप्यति पर्य्यन्ते जीर्णान्ने दिनसंक्षये ॥
उष्णाम्ललवणक्षारकट्वक्राजीर्णभोजनात् ।
तीक्ष्णातपाग्निसन्तापमद्यक्रोधनिषेवणात् ॥
विदाहकाले भुक्तस्य मध्याह्ने जलदागमे ।
ग्रीष्मकालेऽर्द्धरात्रेऽपि पित्तं कुप्यति देहिनः
॥
स्वाद्वम्ललवणस्निग्धगुरुशीतातिभोजनात् ।
नवान्नपिच्छलानूपमाषाभिस्यन्दिसेवनात् ॥

शक्त्या मण्डपानकत्तद्भि मन्यन्ते वोधं
भ्रमत्वा
ग्रहानास्कन्दितस्यैव
रूढ्यर्थगोचरतत्तदयोग्य-
ताज्ञानाद्यभावविशिष्टस्यैव रूढिज्ञानस्य
विरो-
धितायाः सुवचत्वाच्च । यदि च समुदाय एव
पद्मत्वेन पङ्कजनिकर्तृत्वेन च शक्तेः
प्रमाप्रमाभ्यां
पङ्कजातं पद्ममित्याकारको बोधः प्रामाणिक-
स्तदानीं च पङ्कजनिकर्तृत्वेन कुमुदस्य नान्व-
यधीः तदावयवशक्त्येत्यपहाय
पङ्कजपदघटक-
शब्दशक्त्येति प्रतिबध्यकुक्षौ निक्षेपणीयं
तद्घट-
कत्वञ्चेह
तद्विषयिताव्यापकविषयिताकत्वमात्रं
तदवयव इव तत्राप्यविशिष्टम् । यत्तु
स्वावयव-
शक्त्या पङ्कजपदजन्यं
पङ्कजकर्त्तृत्वेनान्वयबाधं
प्रति पद्मत्वं हेतुस्तत्र कार्य्यस्य विशेष्यत्वं
तदव-
च्छेदकत्वं वा कारणस्य तु समवायस्तादात्म्यं
वा प्रत्यासत्तिरित्येतावतैव योगार्थमर्य्यादया
कुमुदादेर्बोधव्युदाससम्भवात् उक्तक्रमेण
प्रति-
बन्धकतायां मानाभाव पद्मत्वं पङ्कजप्रयो-
गोपाधिरिति प्राचीनप्रवादस्याप्युक्तार्थ एव
पर्य्यवसानादिति तत्तुच्छं पद्मागृहीतशक्तिक-
स्यापि पुंसः पङ्कजनिकर्तृत्वेनावयवशक्त्या
कुमु
दस्य बोधानुदयप्रसङ्गात् नचेष्टापत्तिरनुभव-
विरोधात् नच रूढिज्ञानकालीनमेव योगार्थस्य
बोधं प्रत्युक्तरीत्या पद्मत्वस्य हेतुत्वं तथा
सति रूढिधीदशायामपि तदसमानकालीनस्य
पङ्कजातत्वेन कुमुदबोधस्य सामान्यसामग्री-
महिम्रा दुर्व्वारतापत्तेः रूढिज्ञानासमानका-
लीनतादृशबोधं प्रति विशेषतो हेत्वन्तरस्या-
क्लृप्तत्वात् तत्कल्पने चातिगौरवात् । यदपि

वृत्तिशब्दैकदेशान्यैनैव
समानविभक्तिकनामा-
न्तरेण स्मारितत्वस्य तन्त्रतायाः
स्वीकार्य्यत्वा-
दिति ।
यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते ।
तेन तेनान्वितः स्वार्थः पदैः समधिगम्यते
॥
इति रूढ्यर्थयोगार्थयोर्युगपदुपस्थितौ तयो-
राकाङ्क्षादिसाचिव्यादाहत्यान्वयबुद्धिस्थल
एव
योगार्थस्य रूढ्यर्थस्य वा नान्यत्रान्वयो नतु
तयोरेव मिथः साकाङ्क्षत्वं अन्यत्र योगार्थस्य
बोधने रूढिधियः प्रतिबन्धकत्वं वा प्रमाणा-
भावात् एवञ्च यत्र
योगरूढिलभ्यार्थयोस्तात्-
पर्य्याद्यग्रहाद्विरोधिसमवधानाद्वान
प्रथममन्व-
यधीस्तत्र योगार्थमर्य्यादया पङ्कजातत्वेन
कुमु-
दादेः समुदायशक्त्या च पद्मत्वेन
स्थलकमलस्य
बोधो भवत्येवेति मणिकृन्मतं दर्शयति ।
'रूढ्यर्थेऽन्यत्र या यत्र
यदाकाङ्क्षादिनिश्चयः ।
तदैव तत्र योगार्थस्यान्वयो मणिकृन्मतः ॥'
समुदायशक्त्युपस्थापिते
पदान्तरवृत्त्युपस्थापिते
वा यत्र धर्म्मिण्यवान्तरवृत्तिलभ्यार्थस्य
यदा-
काङ्क्षानिश्चयादिस्तदैव तत्र तथान्वयबोध
उत्प-
द्यते सम्भूतसामग्रीकत्वात् रूढ्यर्थभिन्ने
योगार्थ-
स्यान्वयबोधव्युदासाय तु
रूढेर्योगापहारिता-
प्रवादोरूढ्यर्थमात्रे
योगार्थस्यान्वयबोधसामग्री-
स्थलाभिप्रायक इति चिन्तामणिकृताम्मतम्
।
योगरूढं विभजते ।
'सामासिकं तद्धिताक्तमिति तत् द्विविधं
भवेत् ।

अव्यवायो दिवास्वप्नशय्यासनसुखादिभिः
।
कफः प्रदोषे भुक्ते च वसन्ते च प्रकुप्यति ॥
पारुष्यमूलसङ्कोचतोदविष्टम्भभोजनात् ।
खरता सुप्तता हर्षरौक्षस्तम्भनशोषणम् ॥
श्यावत्वमङ्गविश्लेषवलनाशामवर्त्तनम् ।
वायोर्लिङ्गानि तैर्युक्तं रोगं वातात्मकं वदेत् ॥
दाहोष्मपादसक्लेदकोपरागपरिस्रवाः ।
कट्वम्लशवगन्ध्यस्वेदमूर्च्छातितृट्श्रमाः ॥
हारिद्रं हरितत्वञ्च पित्तलिङ्गानि तैर्लयः ।
स्नेहोपदेहमाधुर्य्यचिरकारित्ववन्धनम् ॥
स्तैमित्यदृष्टिसं घातशोथशीतत्वगौरवम् ।
कण्डुनिद्राभियोगश्च लक्षणं कक्षसम्भवम् ॥
हेतुलक्षणसंसर्गाद्विद्याद्व्याधि द्विदोषजम् ।
सर्व्वहेतुसमुत्पन्नं त्रिलिङ्ग सान्निपातिकम् ॥
दोषधातुमलाधारो देहिनां देह उच्यते ।
तेषां समत्वमारोग्यं क्षयवृद्धी विपर्य्ययः ॥
रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः
।
वातपित्तकफा दोषा विण्मूत्राद्या मलाः
स्मृताः ।
वायुः शीतो लघुः सूक्ष्मः खरो रूक्षोऽस्थिरो
बली ।
पित्तमम्लकटूष्णञ्च पक्त्योजोरोमकारणम् ॥
मधुरो लवणः स्निग्धो गुरुः
श्लेष्मातिपिच्छिलः ।

|  | योगरूढं कृदन्तस्य समासत्वव्यवस्थितेः ॥’<br>तत् योगरूढं सामासिकं समासात्मकं कृष्ण-<br>सर्पादि तद्धिताक्तं वासुदेवादि । कृदन्तस्य |  |
|---|---|---|

गुदश्रोण्याश्रयो वायुः पित्तं
पक्वाशयस्थितम् ॥
कफस्यामाशयं स्थानं कण्ठोरुमूर्द्धसन्धयः
।
कटुतिक्तकषायाश्च कफपित्तादिसंश्रयः ।
कट्वम्ललवणाः पित्तं स्वादूष्णलवणाः
कफम् ॥
एत एव विपर्य्यस्ताः समायैषां प्रयोजिताः
।
भवन्ति रोगिणां शान्त्यै सुस्थानां
सुखहेतवः ॥”
इत्यादि गारुडे १७२ अध्यायः ॥
(योगस्य सारः । शिवस्तवात्मको
ग्रन्थविशेषः ॥)

**योगाधमनं**, क्ली, (योगेनाधमनम् ।) छलेन बन्ध-
कम् । यथा, --
“योगाधमनविक्रीतं योगदानप्रतिग्रहम् ।
यत्र वाप्युपधिं पश्येत् तत् सर्व्वं
विनिवर्त्तयेत् ॥”
इति मनुः ॥
अस्य विवरणं योगदानशब्दे द्रष्टव्यम् ॥

**योगारङ्गः**, पुं, (योगेन ऋतुयोगेन आरङ्गः ।)
नारङ्गः । इति राजनिर्घण्टः ॥

**योगारूढः**, त्रि, (योगं विषयनिवृत्तिं यमादिकं वा
आरूढः ।) इन्द्रियभोग्येषु शब्दादिषु
तत्साधन-
कर्म्मसु चानासक्तः । तस्य लक्षणं यथा, --
“यदा हि नेन्द्रियार्थेषु न कर्म्मस्वनुषज्जते
।
सर्व्वसङ्कल्पसंन्यासी योगारूढस्तदोच्यते
॥”
इति श्रीभगवद्गीतायाम् । ६ । ४ ॥ * ॥
“कीदृशोऽयं योगारूढो यस्य शमः कारण-
मुच्यते इत्यत्राह यदेति । इन्द्रियार्थेषु
इन्द्रिय-
भोग्येषु शब्दादिषु तत्साधनेषु च कर्म्मसु
यदा
नानुषज्जते आसक्तिं न करोति । तत्र हेतुः
आसक्तिमूलभूतान् सर्व्वान् भोगविषयान्

मेघस्वना २४ सहस्राक्षी २५ विष्णुमाया
२६
जलोदरी २७ महोदरी २८ मुक्तकेशी २९
धोररूपा ३० महाबला ३१ श्रुतिः ३२
स्मृतिः
३३ धृतिः ३४ तुष्टिः ३५ पुष्टिः ३६ मेधा
३७
विद्या ३८ लक्ष्मीः ३९ सरस्वती ४०
अपर्णा ४१
अम्बिका ४२ योगिनी ४३ डाकिनी ४४
शाकिनी ४५ हारिणी ४६ हाकिनी ४७
लाकिनी ४८ त्रिदशेश्वरी ४९ महाषष्ठी ५०
सर्व्वमङ्गला ५१ लज्जा ५२ कौशिकी ५३
ब्रह्माणी ५४ माहेश्वरी ५५ कौमारी ५६
वैष्णवी ५७ ऐन्द्री ५८ नारसिंही ५९ वाराही
६० चामुण्डा ६१ शिवदूती ६२ विष्णुमाया
६३
मातृका ६४ । इति बृहन्नन्दिकेश्वरपुराणोक्त-
दुर्गापूजापद्धतिः ॥ अपि च ।
“ब्रह्माणी चण्डिका रौद्री गौरीन्द्राणी तथैव च
।
कौमारी वैष्णवी दुर्गा नारसिंही च कालिका
॥
चामुण्डा शिवदूती च वाराही कौशिकी तथा
।
माहेश्वरी शाङ्करी च जयन्ती सर्व्वमङ्गला ॥
काली कपालिनी मेधा शिवा शाकम्भरी तथा
।
भीमा शान्ता भ्रामरी च रुद्राणी चाम्बिका
तथा ॥
क्षमा धात्री तथा स्वाहा स्वधापर्णा महो-
दरी ।
घोररूपा महाकाली भद्रकाली भयङ्करी ॥
क्षेमङ्करी चोग्रचण्डा चण्डोग्रा चण्डनायिका ।
चण्डा चण्डवती चण्डी महामोहा प्रियङ्करी ॥
बलविकरिणी देवी बलप्रमथिनी तथा ।
मनोन्मथिनी देवी च सर्व्वभूतस्य दामिनी ॥
उमा तारा महानिद्रा विजया च जया तथा ।
पूर्ब्बोक्ताः शैलपुत्र्याद्या योगिन्यष्टौ च याः
क्रमात् ॥

अपि च ।
“प्रतिपन्नवमी पूर्व्वे रामा रुद्राश्च पावके ।
शरत्रयोदशी याम्ये वेदा मासाश्च नैरृते ॥
षष्ठी चतुर्द्दशी पश्चात् वायव्यां मुनिपूर्णिमा ।
द्वितीया दशमी यक्षे ऐश्यानां चाष्टमी कुहूः ॥
वामे शुभकरी देवी मृत्युदा दक्षिणे स्थिता ।
वधबन्धकरी चाग्रे पृष्ठे सर्व्वार्थसाधनी ॥”
इति ज्योतिस्तत्त्वम् ॥ * ॥
तत्कालयोगिनी यथा, --
“यस्यां दिश्युदयं याति ततो यामार्द्धभुक्तिका ।
भ्रमन्ती तेन मार्गेण भवेत्तत्कालयोगिनी ॥
प्राची धनेश्वरहुताशनकौणपेय-
वायव्यवारुणयमाधिपशङ्करेषु ।
एषु क्रमान्निवसति प्रतिपन्नवम्योः
पृष्ठे स्थिता शुभकरी गिरिराजपुत्री ॥”
इति समयामृतम् ॥ * ॥
अथ योगिनीसाधनम् । भूतडामरे ।
“अथातः संप्रवक्ष्यामि योगिनीसाधनोत्तमम् ।
सर्व्वार्थसाधनं नाम देहिनां सर्व्वसिद्धिदम् ॥
अतिगुह्या महाविद्या देवानामपि दुर्लभा ।
यासामभ्यर्च्चनं कृत्वा यक्षेशोऽभूद्धनाधिपः ॥
तासामाद्यां प्रवक्ष्यामि सुराणां सुन्दरीं प्रिये ।
अस्या अभ्यर्च्चनेनैव राजत्वं लभते नरः ॥
अथ प्रातः समुत्थाय कृत्वा स्नानादिकं शुभम्
।
प्रासादञ्च समासाद्य कुर्य्यादाचमनं ततः ॥
प्राणवान्ते सहस्रारे हूँ फट् दिग्बन्धनं चरेत् ॥
प्राणायामं ततः कुर्य्यात् मूलमन्त्रेण मन्त्रवित् ।
षडङ्गं मायया कुर्य्यात् पद्ममष्टदलं लिखेत् ॥
तस्मिन् पद्मे महामन्त्रं जीवन्यासं समाचरेत् ।
पीठे देवीं समावाह्य ध्यायेद्देवीं जगत्प्रियाम् ॥
पूर्णचन्द्रनिभां गौरीं विचित्राम्बरधारिणीम् ।
पीनोत्तुङ्गकुचां रामां सर्व्वेषामभयप्रदाम् ॥
इति ध्यात्वा च मूलेन दद्यात् पाद्यादिकं शुभम्
।
पुनर्धूपं निवेद्यैव नैवेद्यं मूलमन्त्रतः ।
गन्धचन्दनताम्बूलं सकर्पूरं सुशोभनम् ॥
प्रणवान्ते भुवनेशी आगच्छ सुरसुन्दरि ! ।
वह्नेर्भार्य्या जपेन्मन्त्रं त्रिसन्ध्यञ्च दिने दिने ॥
सहस्रैकप्रमाणेन ध्यात्वा देवीं सदा बुधः ।

कर्म्मविषयांश्च सङ्कल्पान् संन्यसितुं त्यक्तुं शीलं
यस्य सः । तदा योगारूढ उच्यते ।” इति तट्टी-
कायां श्रीधरस्वामी ॥

**योगासनं**, क्ली, (योगस्यासनं योगसाधनमासन-

मिति वा ।) ब्रह्मासनम् । ध्यानासनम् । इति
हेमचन्द्रः । ३ । ५०३ ॥ (तत्तु पद्मासनादि ।
यथा, भट्टिकाव्ये । ७ । ७७ ।
“इत्युक्त्वा सर्व्व एवास्थुर्बद्ध्वा योगासनानि ते ॥”
“योगासनानि पद्मासनानि ।” इति तट्टीकायां
जयमङ्गलभरलमल्लिकौ ॥)

**योगिदण्डः**, पुं, (योगिनां दण्डोऽवलम्बनयष्टिः ।)

वेत्रः । इति राजनिर्घण्टः ॥

**योगिनी**, स्त्री, (योगोऽस्त्यस्या इति । योग + इनिः ।

ङीप् ।) योगयुक्ता नारी । (यथा, मार्कण्डेये ।
५२ । ३१ ।
“ते उभे ब्रह्मवादिन्यौ योगिन्यौ चाप्युभे द्विज ॥”)
भगवत्याः सखीरूपा आवरणदेवता । सा
कोटिविधा । तासां मध्ये चतुःषष्टिः प्रधानाः ।
यथा । नारायणी १ गौरी २ शाकम्भरी ३
भीमा ४ रक्तदन्तिका ५ भ्रामरी ६ पार्व्वती ७
दुर्गा ८ कात्यायनी ९ महादेवी १० चण्डघण्टा
११ महाविद्या १२ महातपा १३ सावित्री १४
ब्रह्मवादिनी १५ भद्रकाली १६ विशालाक्षी १७
रुद्राणी १८ कृष्णपिङ्गला १९ अग्निज्वाला २०
रौद्रमुखी २१ कालरात्रिः २२ तपस्विनी २३
ताभिराभिश्च सहिताश्चतुःषष्टीश्च योगिनीः ।
पूजयेन्मण्डलस्यान्तः सर्व्वकामार्थसिद्धये ॥”
इति कालिकापुराणे ६२ अध्यायः ॥ * ॥
अष्टयोगिन्यो यथा, --
“ततोऽष्टपत्रेष्वब्जस्य पूजयेदष्टयोगिनीः ॥
शैलपुत्त्रीं चण्डघण्टां स्कन्दमातरमेव च ।
कालरात्रिञ्च पूर्ब्बादिचतुर्द्दिक्षु प्रपूजयेत् ॥
चण्डिकामथ कुष्माण्डीं तथा कात्यायनीं शुभाम् ।
महागौरीं चाग्निकोणे नैरृत्यादिषु पूजयेत् ॥”
इति तत्रैव ५३ अध्यायः ॥ * ॥
तिथिविशेषे दिग्विशेषावस्थितयोगिन्यो यथा, --
“ब्रह्माणी संस्थिता पूर्व्वे प्रतिपन्नवमीतिथौ ।
माहेश्वरी चोत्तरे च द्वितीयादशमीतिथौ ॥
स्थिताग्नेये च कौमारी तृतीयैकादशीतिथौ ।
नारायणी च नैरृत्ये चतुर्थीद्वादशीतिथौ ॥
पञ्चम्याञ्च त्रयोदश्यां वाराही दक्षिणे तथा ।
षष्ठ्याञ्चैव चतुर्द्दश्यामिन्द्राणी पश्चिमे स्थिता ॥
सप्तम्यां पौर्णमास्याञ्च चामुण्डा वायुगोचरे ।
अष्टम्यमावास्ययोश्च महालक्ष्मीशगोचरे ॥
योगिनीसंमुखे नैव गमनादि प्रकारयेत् ॥”
इति गारुडे ५९ अध्यायः ॥ * ॥
मासान्ते व्याप्य दिवसं वलिपूजां सुशोभनाम् ॥
कृत्वा च प्रजपेन्मन्त्रं निशीथे याति सुन्दरी ।
सुदृढं साधकं मत्वा याति सा साधकालये ॥
सुप्रसन्ना साधकाग्रे सदा स्मेरमुखी ततः ।
दृष्ट्वा देवीं साधकेन्द्रो दद्यात् पाद्यादिकं शुभम् ॥
सुचन्दनं मुमनसो ज्ञात्वाभिलषितं वदेत् ।
मातरं भगिनीं वापि भार्य्यां वा भक्तिभावतः ॥
यदि माता तदा वित्तं द्रव्यञ्च मुमनोहरम् ।
भूपतित्वं प्रार्थितं यत्तद्ददाति दिने दिने ।
पुत्त्रवत् पाति तं लोके सत्यं सत्यं सुनिश्चितम् ॥
स्वसा ददाति द्रव्यञ्च दिव्यवस्त्रं तथैव च ।
दिव्यां कन्यां समानीय नागकन्यां दिने दिने ॥
यद्यद्भवति भूतञ्च भविष्यतीति यत् पुनः ।
तत् सर्व्वं साधकेन्द्राय निवेदयति निश्चितम् ॥

यत् यत् प्रार्थयते सर्व्वं ददाति सा दिने दिने ।
भ्रातृवत् पाति तं लोके कामनाभिर्म्मनीगतैः ॥
भार्य्या स्याद्यदि सा देवी साधकस्य मनोहरा ।
राजेन्द्रः सर्व्वराजानां संसारे साधकोत्तमः ॥
स्वर्गे मर्त्ये च पाताले गतिः सर्व्वत्र निश्चितम् ।
यद्यद्ददाति सा देवी कथितुं नैव शक्यते ॥
तया सार्द्धञ्च संभोगं करोति साधकोत्तमः ।
अन्यस्त्रीगमनं त्यक्त्वा अन्यथा नश्यति ध्रुवम् ॥ १ * ॥
ततोऽन्यत् साधनं वक्ष्ये निर्म्मितं ब्रह्मणा पुरा ।
नदीतीरं समासाद्य कुर्य्यात् स्नानादिकं ततः ॥
पूर्ब्बवत् सकलं कार्य्यं चन्दनैर्मण्डलं लिखेत् ।
स्वमन्त्रं तत्र संलिख्यावाह्य ध्यायेन्मनोहराम् ॥
कुरङ्गनेत्रां शरदिन्दुवक्त्रां विम्बाधरां चन्दनगन्धलिप्ताम् ।
चीनांशुकां पीनकुचां मनोज्ञां श्यामां सदा कामदुघां विचित्राम् ॥
एवं ध्यात्वा जपेद्देवीमगुरुधूपदीपकैः ।
गन्धं पुष्परसञ्चैव ताम्बुलादींश्च मूलतः ॥
तारं माया गच्छ मनोहरे पावकवल्लभा ।
कृत्वायुतं प्रतिदिनं जपेन्मन्त्रं प्रसन्नधीः ॥
मासान्ते व्याप्य दिवसं कुर्य्याच्च जपमुत्तमम् ।
आनिशीथं जपेन्मन्त्रं ज्ञात्वा च साधकं दृढम् ॥
गत्वा च साधकाभ्यासे सुप्रसन्ना मनोहरा ।
ततोऽर्च्चिता प्रसन्ना सा पुष्णाति प्रार्थिञ्च यत् ॥

पूर्व्ववत् सकलं कृत्वा भूर्जपत्रे सुशोभने ॥
गोरोचनाभिः प्रतिमां विनिर्म्माय स्वलङ्कृताम् ।
शय्यामारुह्य प्रजपेन्मन्त्रमेकमनास्ततः ॥
सहस्रैकप्रमाणेन मासमेकं जपेद्बुधः ।
घृतेन मधुना दीपं दद्याच्च सुसमाहितः ॥
कामेश्वरीं शशाङ्कास्यां चलत्खञ्जनलोचनाम् ।
सदा लोलगतिं कान्तां कुसुमास्त्रशिलीमुखीम् ॥
एवं ध्यात्वा जपेन्मन्त्रं निशीथे याति सा तदा ।
दृष्ट्वा तु साधकः श्रेष्ठामाज्ञां देहीति तां वदेत् ॥
स्त्रीभावेन मुदा तस्यै दद्यात् पाद्यादिकं ततः ।
सुप्रसन्ना तदा देवी साधकं तोषयेत् सदा ॥
अन्नाद्यैरतिभोगेन पतिवत् पालयेत् सदा ।
नीत्वा रात्रौ सुखैश्वर्य्यैर्दत्त्वा च विपुलं धनम् ॥
वस्त्रालङ्कारद्रव्यावीन् प्रभाते याति निश्चितम् ।
एवं प्रतिदिनं तस्य सिद्धिः स्यात् कामरूपतः ॥ ४ ॥
ततः पटे विनिर्म्म य पुत्तलिं ध्यानरूपतः ।
सुवर्णवर्णां गौराङ्गीं सर्व्वालङ्कारभूषिताम् ॥
नूपुराङ्गदहाराढ्यां रम्याञ्च पुष्करेक्षणाम् ।
एवं ध्यात्वा जपेन्मन्त्रं दत्त्वा च पाद्यमुत्तमम् ॥
सचन्दनेन पुष्पेण जातीपुष्पेण यत्नतः ।
गुग्गुलुं धूपदीपौ च दद्यान्मूलेन साधकः ॥
मन्त्रस्तु ।
तारं मायां तथागच्छ रतिसुन्दरिपदं ततः ।
वह्निजाया चाष्टसहस्रं जपेन्मन्त्रं दिने दिने ॥
मासान्ते दिवसं प्राप्य कुर्य्यात् पूजादिकं शुभम् ।
घृतदीपं तथा गन्धं पुष्पं ताम्बूलमेव च ॥
तावन्मन्त्रं जपेद्विद्वान् यावदायाति सुन्दरी ।

प्रणवान्ते महामाया नटिनि पावकप्रिया ।
महाविद्येह कथिता गोपनीया प्रयत्नतः ॥
अशोकस्य तलं गत्वा स्नानं पूर्ब्बवदाचरेत् ।
मूलमन्त्रेण सकलं कुर्य्याच्च सुसमाहितः ॥
त्रैलोक्यमोहिनीं गौरीं विचित्राम्बरधारिणीम् ।
विचित्रालङ्कृतां रम्यां नर्त्तकीवेशंधारिणीम् ॥
एवं ध्यात्वा जपेन्मन्त्रं सहस्रञ्च दिने दिने ।
मांसोपहारैः संपूज्य धूपं दीपं निवेदयेत् ॥
गन्धचन्दनताम्बूलं दद्यात्तस्यै मुदा बुधः ।
मासमेकञ्च तां भक्त्या पूजयेत् साधकोत्तमः ॥
मासान्ते दिवसं प्राप्य कुर्य्याच्च पूजनं महत् ।
अर्द्धरात्रौ भयं दत्त्वा किञ्चित् साधकसत्तमे ।
सुदृढं साधकं मत्वा याति सा साधकालयम् ॥
विद्याभिः सकलाभिश्च किञ्चित्स्मेरमुखी ततः ।
वरं वरय शीघ्रं त्वं यत्ते मनसि वर्त्तते ॥
तत् श्रुत्वा साधकश्रेष्ठो भावयेन्मनसा धिया ।
मातरं भगिनीं वापि भार्य्यां वा प्रीतिभावतः ।
कृत्वा सन्तोषयेद्भक्त्या नटिनी तत् करोत्यलम् ॥
माता स्याद्यदि सा देवी पुत्रवत् पातितं मुदा ।
स्वर्णशतं सिद्धिद्रव्यं ददाति सा दिने दिने ॥
भगिनी यदि सा कन्यां देवस्य नागकन्यकाम् ।
राजकन्यां समानीय ददाति सा दिने दिने ।
अतीतानागतां वार्त्तां सर्व्वां जानाति साधकः ॥
भार्य्या स्यात् यदि सा देवी ददाति विपुलं धनम् ।
अन्नाद्यैरुपचारैश्च ददाति कामभोजनम् ॥
स्वर्णशतं सदा तस्मै ददाति सा ध्रुवं प्रिये ।
यत् यत् वाञ्छति तत् सर्व्वं ददाति नात्र संशयः ॥ ७
महाविद्यां प्रवक्ष्यामि सावधानावधारय ।
कुङ्कुमेन समालिख्य भूर्ज्जपत्रे स्त्रियं मुदा ॥
ततोऽष्टदलमालिख्य कुर्य्यान्न्यासादिकं प्रिये ।
जीवन्यासादिकं कृत्वा ध्यायेत् तत्र प्रसन्नधीः ॥
शुद्धस्फटिकसङ्काशां नानारत्नविभूषिताम् ।
मञ्जीरहारकेयूररत्नकुण्डलमण्डिताम् ।
एवं ध्यात्वा जपेन्मन्त्रं सहस्रन्तु दिने दिने ॥
प्रतिपद्दिनमारभ्य पूजयेत् कुसुमादिभिः ।
धूपदीपविधानैश्च त्रिसन्ध्यं पूजयेन्मुदा ॥
पूर्णिमां प्राप्य गन्धाद्यैः पूजयेत् साधकोत्तमः ।
घृतदीपं तथा धूपं नैवेद्यञ्च मनोरमम् ॥
रात्रौ च दिवसे जप्यं कुर्य्याच्च सुसमाहितः ।

स्वर्णशतं साधकाय ददाति सा दिने दिने
।
सावशेषं व्ययं कुर्य्यात् स्थिते तत्तु न
दास्यति ॥
अन्यस्त्रीगमनं तस्य न भवेत्
सत्यमीरितम् ।
अव्याहतगतिस्तस्य भवतीति न संशयः
॥
इयं ते कथिता विद्या सुगोप्या या
सुरासुरैः ।
तव स्नेहेन भक्त्या च वक्ष्येऽहं
परमेश्वरि ! ॥ २ ॥
ततोऽन्यत् साधनं वक्ष्ये शृणुष्वैकमनाः
प्रिये ।
गत्वा वटतलं देवीं पूजयेत् साधकोत्तमः
॥
प्राणायामं षडङ्गञ्च माययाथ समाचरेत् ।
सद्योमांसं वलिं दत्त्वा पूजयेत्तां समाहितः
॥
अर्घ्यमुच्छिष्टरक्तेन दद्यात्तस्यै दिने दिने ।
प्रचण्डवदनां गौरीं पक्वविम्बाधरां प्रिये ॥
रक्ताम्बरधरां बालां सर्व्वकामप्रदां शुभाम्
।
एवं ध्यात्वा जपेन्मन्त्रमयुतं साधकोत्तमः
॥
सप्तदिनं समभ्यर्च्च्य चाष्टमे विधिवच्चरेत्
।
कायेन मनसा वाचा पूजयेच्च दिने दिने ॥
तारं माया तथा कूर्च्चं रक्ष कर्म्मणि
तद्वहिः ।
आगच्छ कनकान्ते तु वतिः स्वाहा
महामनुः ।
आनिशीथं जपेन्मन्त्रं बलिं दत्त्वा मनोहरम्
॥
साधकेन्द्रं दृढं मत्वा आयाति
साधकालये ।
साधकेन्द्रोऽपि तां दृष्ट्वा दद्यादर्घ्यादिकं
ततः ॥
ततः सपरिवारेण भार्य्या स्यात्
कामभोजनैः ।
वस्त्रभूषादिकं त्यक्त्वा याति सा
निजमन्दिरम् ॥
एवंभार्य्या भवेन्नित्यं साधकाज्ञानुरूपतः ।
ज्ञात्वा दृढं साधकेन्द्रं निशीथे याति
निश्चितम् ॥
ततस्तामर्च्चयेद्भक्त्या जातीकुसुममालया
।
सुसन्तुष्टा साधकेन्द्रं तोषयेद्रतिभोजनैः ॥
भूत्वा भार्य्या च सा तस्मै ददाति वाञ्छितं
वरम् ।
भूषादिकं परित्यज्य प्रभाते याति सा ध्रुवम्
॥
साध्यकाज्ञानुरूपेण प्रयाति सा दिने दिने ।
निर्ज्जने प्रान्तरे देवि ! सिद्धिः स्यान्नात्र
संशयः ॥
त्यक्त्वा भार्य्यां भजेत्ताञ्च अन्यथा नश्यति
ध्रुवम् ॥ ५ ॥
ततोऽन्यत् साधनं वक्ष्ये स्वगृहे
शिवसन्निधौ ।
वेदाद्यं भुवनेशीञ्चागच्छ पद्मिनि वल्लभा ॥
पावकस्य महामन्त्रं पूर्ब्बवत् सकलं ततः ।
मण्डलं चन्दनैः कृत्वा मूलमन्त्रं लिखेत्ततः
॥
पद्माननां श्यामवर्णां पीनोत्तुङ्गपयोधराम् ।
कोमलाङ्गीं स्मेरमुखीं रक्तोत्पलदलेक्षणाम्
॥
एवं ध्यात्वा जपेन्मन्त्रं सहस्रञ्च दिने दिने ।
मासान्ते पूर्णिमां प्राप्य विधिवत् पूजयेत्
सदा ॥
आनिशीथं जपेन्मन्त्रं दृढाभ्यासेन साधकः
।
सर्व्वत्र कुशलं ज्ञात्वा सा याति
साधकालयम् ॥
भूत्वा भार्य्या साधकं हि साधयेद्विविधैरपि
।
भोगैर्दिव्यैर्भूषणाद्यैः पद्मिनी सा दिने दिने ॥
पतिवत् पाति तं लोके नित्यं स्वर्गे च
सर्व्वदा ।
त्यक्त्वा भार्य्यां भजेत् ताञ्च साधकेन्द्रः
सदा प्रिये ॥ ६ ॥
ततो वक्ष्ये महाविद्यां विश्वामित्रेण धीमता
।
ज्ञात्वा दृढं साधिता विद्या बला चातिबला
प्रिये ॥
मन्त्रस्तु ।
प्रभातसमये याति साधकस्यान्तिकं ध्रुवम् ॥
प्रसन्नवदना भूत्वा तोषयेद्रतिभोजनैः ।
देवदानवगन्धर्व्वविद्याधृग्यक्षरक्षसाम् ॥
कन्याभी रत्नभूषाभिः साधकेन्द्रं मुहुर्मुहुः ।
चर्व्यं चोष्यादिकं द्रव्यं दिव्यं ददाति सा ध्रुवम् ॥
स्वर्गे मर्त्ये च पाताले यद्वस्तु विद्यते प्रिये ।
आनीय दीयते सत्यं साधकाज्ञानुरूपतः ॥
स्वर्णशतं सदा तस्मै ददाति सा दिने दिने ।
साधकाय वरं दत्त्वा याति सा निजमन्दिरम् ॥
तस्या वरप्रसादेन चिरजीवी निरामयः ।
सर्व्वज्ञः सुन्दरः श्रीमान् सर्व्वगो भवति ध्रुवम् ।
रेमे सार्द्धं तया देवि साधकेन्द्रो दिने दिने ॥
मन्त्रस्तु ।

| | | |
|---|---|---|
| आत्मभार्य्यां परित्यज्य भजेत्ताञ्च विचेक्षणः ॥ ३ ॥<br>ततः कामेश्वरीं वक्ष्ये सर्व्वकामफलप्रदाम् ।<br>प्रणवं भुवनेशानी चागच्छ कामेश्वरि ततः ॥<br>वह्नेर्भार्य्या महामन्त्रं साधकानां सुखावहम् । | | |

तारं मायां तथागच्छानुरागिणि मैथुनप्रिये ।
वह्निभार्य्या मनुः प्रोक्तः
सर्व्वसिद्धिप्रदायकः ॥
एषा मधुमती तु स्यात् सर्व्वसिद्धिप्रदा प्रिये
।
गुह्यात् गुह्यतरा विद्या तव स्नेहात प्रकी-
र्त्तिता ॥ ८ ॥
देव्युवाच ।
श्रुतञ्च साधनं पुण्यं यक्षिणीनां सुखप्रदम् ।
यस्मिन् काले प्रकर्त्तव्यं विधिना केन वा
प्रभो ।
अत्राधिकारिणः के वा समासेन वदस्व मे
॥
ईश्वर उवाच ।
वसन्ते साधयेद्धीमान् हविष्याशी
जितेन्द्रियः ।
सदा ध्यानपरो भूत्वा तद्दर्शनमहोत्सुकः ॥
उज्जटे प्रान्तरे वापि कामरूपे विशेषतः ।
स्थानेष्वेकतमं प्राप्य साधयेत्
सुसमाहितः ।
अनेन विधिना साक्षात् भविष्यति न
संशयः ॥
देव्याश्च सेवकाः सर्व्वे परं
चात्राधिकारिणः ।
तारकब्रह्मणो भृत्यं विनाप्यत्राधिकारिणः
॥”
इति तन्त्रसारे योगिनीसाधनप्रकरणं
समाप्तम् ॥
दशविधदशान्तर्गतदशाविशेषः । यथा, --
“स्वनक्षत्रं ध्रुवं कृत्वा पञ्च तत्र विमिश्रयेत्
।
मङ्गलेन हृतः शेषो मङ्गलादिविनिश्चयः ॥
मङ्गला पिङ्गला धन्या भ्रामरी भद्रिका तथा
।
उल्का सिद्धा सङ्कटा च योगिन्यष्टौ
प्रकीर्त्तिताः ॥
अब्दैकं मङ्गला धत्ते शेषास्त्वेकैकवर्द्धिकाः
।
पुनस्त्र्यर्कान्निवर्त्तन्ते चक्रवत् परिवर्त्तनात्
॥”
अपि च ।
योगयुक्तः । तस्य लक्षणादि यथा, --
“स्वर्णे लोष्टे गृहेऽरण्ये सुस्निग्धे चन्दने तथा
।
समता भावना यस्य स योगी परिकीर्त्तितः
॥”
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ३५ अध्यायः
॥
अपि च ।
“आत्मौपम्येन सर्व्वत्र सभं पश्यति
योऽर्ज्जुन ! ।
सुखं वा यदि वा दुःखं स योगी परमो मतः
॥”
इति श्रीभगवद्गीतायाम् ७ अध्यायः ॥
अन्यच्च ।
ऋषय ऊचुः ।
“भगवन् ! देवतारिघ्न ! हिरण्यादिनिसूदन !
।
चत्वारो ह्याश्रमाः प्रोक्ता योगी नाम क
उच्यते ॥
सर्व्वकर्म्माणि संन्यस्य समाधिमचलं श्रितः ।
य आस्ते निश्चलो योगी स सन्न्यासी न
पञ्चमः ॥
सर्व्वेषामाश्रमाणान्तु द्वैविध्यं श्रुतिदर्शितम् ।
ब्रह्मचार्य्युपकुर्व्वाणो नैष्ठिको ब्रह्मतत्परः ॥
योऽधीत्य विधिवद्वेदान् गृहस्थाश्रममाव्रजेत् ।
उपकुर्व्वाणको ज्ञेयो नैष्ठिको मरणान्तिकः ॥
उदासीनसाधकश्च गृहस्थो द्विविधो भवेत् ।
ऋणानि त्रीण्युपाहृत्य त्यक्त्वा
भार्य्याधनादिकम् ॥
एकाकी यस्तु विचरेदुदासीनः स मोक्षिकः ।
कुटुम्बभरणायत्तः साधकोऽसौ गृही भवेत् ॥
तपस्तप्यति योऽन्येन यजेद्देवान् जुहोति च ।
स्वाध्याये चैव निरतो वनस्थस्तापसो मतः
॥
तपसा कर्षितोऽत्यर्थं यस्तु ध्यानपरो भवेत् ।
सन्न्यासिकः स विज्ञेयो वानप्रस्थाश्रमे
स्थितः ॥
योगाभ्यासरतो नित्यमारुरुक्षुर्ज्जितेन्द्रियः ।
ज्ञानाय वर्त्तते भिक्षुः प्रोच्यते परमेष्ठिकः ॥
यश्चात्मरतिरेव स्यान्नित्यतृप्तो महामुनिः ।
सम्यग्दर्शनसम्पन्नः स योगी भिक्षुरुच्यते ॥
आजादिमांसदधितक्रकुलत्थकोल-
पिन्याकहिङ्गुलसुनाद्यमपथ्यमाहुः ॥”)

**योगीश्वरः**, पुं, (योगिनामीश्वरः ।) याज्ञवल्क्य-
मुनिः । (इति हेमचन्द्रे योगेशशब्ददर्शनात् ।
३ । ८५१ ॥) यथा, --
“योगीश्वरं याज्ञवल्क्यं सम्पूज्य मुनयोऽब्रुवन्
।
वर्णाश्रमेतराणां नो ब्रूहि धर्म्मानशेषतः ॥”
“योगिनां सनकादीनां ईश्वरः श्रेष्ठस्तं याज्ञ-
वल्क्यं संपूज्य ।” इति मिताक्षरा ॥ त्रि,
यगिनां श्रेष्ठः । (यथा, मार्कण्डेये । ९६ । २८
।
“यजन्ति यानस्तमलैर्मनोभि-
र्योगीश्वराः क्लेशविमुक्तिहेतून् ॥”)

**योगीश्वरी**, स्त्री, (योगिनामीश्वरी ।) दुर्गा ।
यथा, --
“योगिशक्रादयो देवाः सनकान्तास्तपोधनाः ।
तेषां स्वामी तथा योगी ईश्वरी प्रभुपालना ॥
आत्मेन्द्रियमनादीनां संयोगो योग उच्यते ।
तेषां वा योजनाद्योगी योगैश्वर्य्यविबोधना ॥”
इति देवीपुराणे ४५ अध्यायः ॥

**योगेशः**, पुं, (योगस्य ईशः ईश्वरः ।) याज्ञ-
वल्क्यः । इति हेमचन्द्रः । ३ । ८५१ ॥
(योगे-
श्वरे, त्रि । यथा, भागवते । ४ । १९ । ६ ।
“कपिलो नारदो दत्तो यगेशाः सनकादयः ।
तमन्वीयुर्भागवता ये च तत्सेवनोत्सुकाः ॥”)

**योगेश्वरः**, पुं, (योगानां ईश्वरः ।) श्रीकृष्णः ।
यथा, --
“ब्रूहि योगेश्वरे कृष्णे ब्रह्मण्ये धर्म्मवर्म्मणि ।
स्वां काष्ठामधुनोपेते धर्म्मः कं शरणं गतः ॥”
इति श्रीभागवते १ स्कन्धे १ अध्यायः ॥
(शिवः । यथा, महाभारते । १३ । १४ ।
३२३ ।
“नमस्ते भगवन् देव ! नमस्ते भक्तवत्सल ! ।
योगेश्वर ! नमस्तेऽस्तु नमस्ते विश्वसम्भव !
॥”

"रोहिण्यादौ त्रिरावृत्त्या मङ्गलादौ यथाक्रमम् ।
उल्का सिद्धा सङ्कटा च अश्विन्यादित्रये पुनः ॥"
एतासामन्तर्द्दशा ।
"दशावर्षन्तु षट्त्रिंशद्भागं कृत्वा विनिर्द्दिशेत् ।
यन्तु यस्या हि यद्वर्षं तत्तद्भागं प्रकीर्त्तितम् ॥"
फलं यथा, --
"मङ्गला मङ्गलं धत्तेऽतुलभोगं सुखं तथा ।
गोगजाश्वसहस्राणि गृहे तस्य दिने दिने ॥
पिङ्गला विविधं दुःखमन्नचिन्तादिसम्भवम् ।
ददाति नाशं शत्रुभ्यो धनधान्यगजादिकम् ॥
धन्या च सततं दत्ते सर्व्वत्र विजयादिकम् ।
शत्रुभ्यो रक्षते नित्यं मातृवत् परिपालयेत् ॥
भ्रामरी विविधं दुःखमन्तःसम्भ्रमसम्भवम् ।
अकस्मात्तस्य दुर्द्दैवं विधिना प्रेरितं भवेत् ॥
भद्रिका विविधान् धत्ते सम्मानादिमनोरथान् ।
तुष्टा चेद्भद्रिका नित्यं दुर्ग्रहः सुग्रहायते ॥
उल्का व्याधिकरी प्रोक्ता नित्यं नानाभयप्रदा ।
उल्का यदि समायाति सुग्रहो दुर्ग्रहायते ॥
सिद्धा च साधयेत् सर्व्वं मन्त्रारम्भधनादिकम् ।
यस्य तुष्टा भवेत् सिद्धा लक्ष्मीस्तस्य करे स्थिता ॥
सङ्कटा सङ्कटं दत्ते भुङ्क्ते धान्यधनादिकम् ।
सैव भाव्या सदा नित्यं गृही कृष्णः फणी यथा ॥"
इत्युद्बोधचन्द्रिका ॥

**योगी**, [न्] पुं, (योगः अस्त्यस्येति । योग + इनिः । यद्वा, युज समाधौ । युजिर् योगे वा +
ज्ञानसन्न्यासिनः केचिद्वेदसन्न्यासिनः परे ।
कर्म्मसन्न्यासिनः केचिद्विविधाः परमेष्ठिकाः ॥
योगी च त्रिविधो ज्ञेयो भौतिकः सांख्य एव च ।
तृतीयोऽन्याश्रमी प्रोक्तो योगमुत्तममास्थितः ॥"
इति कौर्म्मे २ अध्यायः ॥
(तेषां स्त्रीसङ्गनिषेधो यथा, --
"यदि सङ्गं करोत्येव बिन्दुस्तस्य विनश्यति ।
आयुःक्षयो बिन्दुहीनादसामर्थ्यञ्च जायते ॥
तस्मात् स्त्रीणां सङ्गवर्ज्यं कुर्य्यादभ्यासमादरात् ।
योगिनोऽङ्गस्य सिद्धिः स्यात् सततं बिन्दुधारणात् ॥"
इति दत्तात्रेयसंहिता ॥
तेषां पथ्यं यथा, हठयोगप्रदीपिकायाम् ।
"गोधूमशालियवषष्टिकशोभनान्नं
क्षीराद्यखण्डनवनीतसितामधूनि ।
शूण्ठीकपोलकफलादिकपञ्चशाकं
मुद्गादिदिव्यमुदकञ्च यमीन्द्रपथ्यम् ॥"
तेषामपथ्यं यथा, तत्रैव ।
"कट्वम्लतिक्तलवणोष्णहरीतशाव
सौवीरतैलतिलसर्षपमत्स्यमद्यम् ।
देवहोत्रतनयः । यथा, भागवते । ८ । १३ । ३२ ।
"देवहोत्रस्य तनय उपहर्त्ता दिवस्पतेः ।
योगेश्वरो हरेरंशो बृहत्यां सम्भविष्यति ॥"

**योगेश्वरी**, स्त्री, बन्ध्याकर्कोटकी । इति भावप्रकाशः ॥ (योगानामीश्वरी । दुर्गा । यथा, --
"त्वचं योगेश्वरी तथा -- ।" इति चण्डीकवचम् ॥ योगयुक्ते, त्रि । यथा, मार्कण्डेये । ९७ । ८ ।
"प्रजापतेः कश्यपाय सोमाय वरुणाय च ।
योगेश्वरेभ्यश्च सदा नमस्यामि कृताञ्जलिः ॥")

**योगेष्टं**, क्ली, (योगे सन्धिच्छिद्रादिपूरणे इष्टम् ।) सीसकम् । इत्यमरः । २ । ९ । १०५ ॥ (तथास्य पर्य्यायः ।
"नागं महाबलं चीनं पिष्टं योगेष्टसीसकम् ॥"
इति वैद्यकरत्नमालायाम् ॥)

**योग्यं**, क्ली, (योज्यत इति । युज् + णिच् + ण्यत् ।) ऋद्धिनामौषधम् । वृद्धिनामौषधम् । इत्यमरः । २ । ४ । ११२ ॥

**योग्यः**, त्रि, (योगाय प्रभवति । योग् + "योगाद्यच्च ।" ५ । १ । १०२ । इति यत् ।) प्रवीणः । योगार्हः । (यथा, रघुः । ६ । २९ ।

"कान्त्या गिरा सूनृतया च योग्या
त्वमेव कल्याणि ! तयोस्तृतीया ॥")
उपायी । शक्तः । इति मेदिनी हेमचन्द्रश्च
॥
(यथा, मार्कण्डेये । ७१ । १० ।
"अपत्नीको नरो भूप न योग्यो निजकर्म्म-
णाम् ॥"
योजनसाधनभूतः । यथा, ऋग्वेदे । ३ । ६
। ६ ।
"ऋतस्य वा केशिना योग्याभिः ।"
"योग्याभिर्योजनसाधनभूताभीरज्जुभिः
।" इति
सायणः ॥ शकटादियोजनीयः । यथा,
शत-
पथब्राह्मणे । १ । ३ । १ । १३ ।
"योक्त्रण हि योग्यं युञ्जन्त्यस्ति वै पत्न्या
अमेध्यं यदवाचीनम् ।"
"योग्यं योजनीयमनड्वदश्वादिकम् ।" इति
तद्भाष्यम् ॥) पुष्यनक्षत्रे, पुं । इति मेदिनी ।
ये, ४९ ॥

**योग्यता**, स्त्री, (योग्यस्य भावः । योग्य + तल् ।
टाप् ।) क्षमता । इति लोकप्रसिद्धिः ॥
(यथा,
मार्कण्डेये । ११३ । ९ ।
"तथान्यानप्ययोग्यानियोग्यतां यान्ति
कालतः ।
योग्यान्ययोग्यतां यान्ति कालवश्या हि
योग्यता ॥")
शाब्दबोधकारणविशेषः । स तु पादार्थानां
परस्परसम्बन्धे वाधाभावः । इति
साहित्य-
दर्पणम् ॥ न्यायमते तत्पदार्थे
तत्पदार्थवत्ता ।
यथा, --
"पदार्थे तत्र तद्वत्ता योग्यता परिकीर्त्तिता
।"
इति भाषापरिच्छेदः ॥
"योग्यतां निरूपयति पदार्थ इत्यादिना ।
एकपदार्थेऽपरपदार्थसम्बन्धो योग्यता
इत्यर्थः ।
तद्भः खलूरिका । इति हेमचन्द्रः । ३ । ४५२ ॥
(यथा, सुश्रुते सूत्रस्थाने ९ अध्याये ।
"अथातो योग्यासूत्रीयमध्यायं व्याख्यास्यामः ।
अधिगतसर्व्वशास्त्रार्थमपि शिष्यं योग्याङ्कार-
येत् । छेद्यादिषु स्नेहादिषु च कर्म्मपथमुप-
दिशेत् । सुबहुश्रुतोऽप्यकृतयोग्यः कर्म्मस्वयोग्यो
भवति । तत्र पुष्पफलालावूकालिन्दकत्रपुषै-
र्व्वारुककर्कारुकप्रभृतिषुछेद्यविशेषान् दर्शये-
दुत्कर्त्तनपरिकर्त्तनानि चोपदिशेत् । दृतिवस्ति-
प्रसेकप्रभृतिषूदकपङ्कपूर्णेषु भेद्ययोग्याम् ।
सरोम्नि चर्म्मण्याततेलेख्यस्य । मृतपशुसिरा-
सूत्पलनालेषु च वेध्यस्य । घुणोपहतकाष्ठवेणु-
नलनालीशुष्कालावुमुखेष्वे ष्यस्य । पनसविम्बी-
विल्वफलमज्जमृतपशुदन्तेष्वाहार्य्यस्य । मधु-
च्छिष्टोपलिप्ते शाल्मलीफलके विस्राव्यस्य ।
सूक्ष्म-
घनवस्त्रान्तयोर्मृदुचर्म्मान्तयोश्च सीव्यस्य ।
पुस्त-
मयपुरुषाङ्गप्रत्यङ्गविशेषेषु बन्धयोग्याम् । मृदु-
मांसपेशीषूत्पलनालेषु च कर्णसन्धिबन्धयोग्याम्
।
मृदुषु मांसखण्डेष्वग्निक्षारयोग्याम् । उदक-
पूर्णघटपार्श्वस्रोतस्यलावूमुखादिषुच नेत्रप्रणि-
धानवस्तिव्रणवस्तिपीडनयोग्यामिति। भवत-
श्चात्र ।
एवमादिषु मेधावी योग्यार्हेषु यथाविधि ।
द्रव्येषु योग्यां कुर्व्वाणो न प्रमुह्यति कर्म्मसु ॥
तस्मात् कौशलमन्विच्छन् शस्त्ररक्षाग्निकर्म्मसु ।
यस्य यत्रेह साधर्म्म्यं तत्र योग्यां समा-
चरेत् ॥"
(युवती । यथा, --
"निदाघशरदोर्बाला प्रौडा वर्षावसन्तयोः ।
हेमन्ते शिशिरे योग्या न वृद्धा क्वापि शस्यते ॥"
योग्या युवती । इति राजवल्लभः ॥)

**योजनं**, क्ली, (युज्यते मनो यस्मिन्निति । युज् +
ल्युट् ।) परमात्मा । चतुःक्रोशी । योगः । इति
मेदिनी । ने, ११३ ॥ * ॥ (यथा, हरि-
वंशे । १४६ । १३ ।
"गान्धारकन्या वहने नृपाणां
रथे तथा योजनमूर्ज्जितानाम् ॥")
सत्यवती । इति मेदिनी । धे, ४८ ॥
(यथा
देवीभागवते । २ । २ । १८ ।
"इत्युक्तन तु सा कन्या क्षणमात्रेण
भाविनी ।
कृता योजनगन्धा तु सुरूपा च वरानना
॥")

**योजनगन्धिका**, स्त्री, सत्यवती । इति जटाधरः ॥
कस्तूरी । इत्यजयपालः ॥ सीता ।
योजनगन्धा-
शब्दात् स्वार्थे कप्रत्ययेन जातत्वात् ॥

**योजनपर्णी**, स्त्री, (योजनाय
सन्धिस्थानादेर्म्मेलनार्थं
पर्णं यस्याः ।) मञ्जिष्ठा । इति रत्नमाला
॥

**योजनवल्लिका**, स्त्री (योजनवल्ली + स्वार्थे कन् ।
टाप् ।) मञ्जिष्ठा । इति राजनिर्घण्टः ॥

**योजना**, स्त्री, योगकारणा । इति ञ्यन्तयुज-
धातोरनप्रत्ययेन सिद्धम् ॥

**योजनवल्ली**, स्त्री, (योजनगामिनी अतिदीर्घा
वल्ली यस्याः सा ।) मञ्जिष्ठा । इत्यमरः ।
२ ।
४ । ९१ ॥ (तथास्याः पर्य्यायः ।
"मञ्जिष्ठा विकसा जिङ्गी समङ्गा
कालमेषिका ।
मण्डूकपर्णी भण्डीरी भण्डी
योजनवल्ल्यपि ॥
रसायन्यरुणा काला रक्ताङ्गी रक्तयष्टिका
।
भण्डीतकी च गण्डीरी मञ्जूषा वस्त्ररञ्जिनी
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**योजितं**, त्रि, कारितयोजनम् । ञ्यन्तयुजधातोः
कर्म्मणि क्तप्रत्ययेन निष्पन्नम् ॥ (यथा,
भाग-
वते । ४ । २१ । २२ ।

तज्ज्ञानाभावाच्च वह्निना सिञ्चतीत्यादौ न शाब्दबोधः । नन्वेतस्या योग्यताया ज्ञानं शाब्दबोधात् प्राक् सर्व्वत्र न सम्भवति वाक्यार्थ-
स्यापूर्ब्बत्वादिति चेन्न तत्तत्पदार्थस्मरणे सति
क्वचित् संशयरूपस्य
क्वचिन्निश्चयरूपस्यापि
योग्यताया ज्ञानस्य सम्भवात् । नव्यास्तु योग्यताज्ञानं न शब्दज्ञाने कारणं वह्निना सिञ्चति इत्यादौ सेके वह्निकरणकत्वाभाव-
रूपायोग्यताया निश्चयेन प्रतिबन्धान्न ज्ञाब्द-
बोधः । तदभावनिश्चयस्य
लौकिकसन्निकर्षा-
जन्यदोषविशेषाजन्यज्ञानपात्रे
प्रतिबन्धकत्वात्
शाब्दे प्रतिबन्धकत्वं सिद्धं योग्यताज्ञान-
विलम्बाच्च शाब्दविलम्बोऽसिद्ध इति वदन्ति ।"
इति सिद्धान्तमुक्तावली ॥

**योग्या**, स्त्री, (योग्य + टाप् ।) अभ्यासः । (यथा,

रघुः । ८ । १९ ।
"अपरः प्रणिधानयोग्यया
मरुतः पञ्च शरीरगोचरान् ॥"
"अपरो रघुः प्रणिधानयोग्यया समाध्य-
भ्यासेन ।" इति मल्लिनाथः ॥) अर्कयोषित् ।
इति मेदिनी । ये, ४९ ॥ शस्त्रा भ्यासः । तत्-
पर्य्यायः । खुरली २ श्रमः ३ अभ्यासः ४ ।

चतुःक्रोश्यर्थे यथा, --
"द्वादशाङ्गुलिकः शङ्कुस्तद्द्वयन्तु शयः स्मृतः ।
तच्चतुष्कं धनुः प्रोक्तं क्रोशो धनुःसहस्रिकः ॥
तच्चतुष्कं योजनं स्यादित्यादि मानशास्त्रम् ॥
एतन्मते षोडशसहस्रहस्तैर्य्योजनं भवति ।
द्वात्रिंशत्सहस्रहस्तैरपि योजनम् । यथा, --
यवोदरैरङ्गुलमष्टसंख्यै-
र्हस्तोऽङ्गुलैः षड्गुणितैश्चतुर्भिः ।
हस्तैश्चतुर्भिर्भवतीह दण्डः
क्रोशः सहस्रद्वितयेन तेषाम् ।
स्याद्योजनं क्रोशचतुष्टयेन
तथा कराणां दशकेन वंशः ॥"
इति लीलावती ॥

**योजनगन्धः**, स्त्री, (योजनं गन्धोऽस्याः । योज-

नात् गन्धोऽस्या इति वा ।) कस्तूरी । सीता ।

"अहं दण्डधरो राजा प्रजानामिह योजितः ॥")

**योटकः**, पुं, योटनम् । मेलनमिति यावत् । विवाहे

राशियोटक-ग्रहयोटक-नक्षत्रयोटक-गणयोटक-
वर्णयोटक-योनियोटक-वर्गयोटकभेदेन सप्तविधो
योटकः । तत्र राशियोटके षडष्टकनवपञ्च-
मद्विद्वादशविषमसप्तकयोगानिषिद्धाः । तदाह
श्रीपतिसंहितायाम् ।
"षडष्टकं त्रिकोणञ्च द्विद्वादशकमेव च ।
परस्परं जन्मराशेस्त्यक्त्वा कन्याकुमारयोः ॥
षडष्टके भवेद्दोषो वैधव्यं मृत्युरेव वा ।
त्रिकोणे पुत्त्रहानिः स्यात् धनहानिर्धनव्यये ॥
पुरुषस्याष्टमे कन्या कन्यायाः षष्ठके पुमान् ।
शुभं षडष्टकं ज्ञेयं नोद्वाहे दूषणं भवेत् ॥
नवपञ्चमे ।
पुंसो गृहात् सुतगृहे सुतहा च कन्या
धर्म्मे स्थिता सुतवती पतिवल्लभा च ।
द्विद्वादशे धनगृहे धनहा च कन्या
रिप्फे स्थिता धनवती पतिवल्लभा च ॥
योटके सप्तके मेषतुलौ युग्महयौ तथा ।
सिंहघटौ सदा वर्ज्यौ मृतिस्तत्राब्रवीच्छिवः ॥
राजयोटकमाह दीपिकायाम् ।
एकराशौ च दम्पत्योः शुभं स्यात् समसप्तके ।
चतुर्थदशके चैव तृतीयैकादशे तथा ॥"
इति राशियोटकविचारः ॥ * ॥
ग्रहयोटके ग्रहशत्रुयोगो निषिद्धः । कन्यावर-
राश्यधिपग्रहयोः शत्रुत्वे ग्रहशत्रुयोगः । तत्र
विवाहे रोगादिः फलम् । तदाह गर्गः । मरणं

भावविरोधे ग्रहरिपुभावे चाचिरेण रोगादिः ।
इति ग्रहयोटकविचारः ॥ * ॥ अन्ये
योटकाः
प्रपञ्चभयान्न लिखिताः । इति ज्योतिषम् ॥
ग्रन्थान्तरे जोटकशब्दश्चवर्गतृतीयादिश्च
॥

**योतुः**, पुं, (यूयते ज्ञायते अनेनेति । यु + बाहु-
लकात् तुः ।) परिमाणम् । इत्युणादिकोषः
॥

**योत्रं**, क्ली, (यूयते अनेनेति । यु + "दाम्नीशस यु
युजस्तु तुद सि सिच मिह-पतदंश-नहः
करणे ।"
३ । २ । १८२ । इति ष्ट्रन् ।) योक्त्वम् ।
इत्यमरः ।
२ । ९ । १३ ॥ (यथा, गो० रामायणे । २
।
४५ । २९ ।
"भरतायाभिसृष्टाः स्म योत्राय पशवो यथा
॥")

**योद्धा**, [ऋ] पुं, (युध्यतीति । युध् + तृच् ।) युद्ध-
कर्त्ता । तत्पर्य्यायः । भटः २ योधः ३ ।
इत्य-
मरः । २ । ८ । ६१ ॥ (यथा, हरिवंशे
भविष्य-
पर्व्वणि । २ । १८ ।
"वाधिष्यते पुरीं योद्धा छिद्रं यदि लभेत सः
॥")

**योधः**, पुं, (युध्यतीति । युध् + अच् ।) योद्धा ।
इत्यमरः । २ । ८ । ६१ ॥ (यथा,
कथासरित्
सागरे । १२ । २२ ।
"सङ्केतमिलितैश्चान्यैर्योधास्तैः सैनिकैः
सह ।
नित्युर्वत्सेश्वरं चण्डमहासेनान्तिकञ्च तत्
॥")

**योधनं**, क्ली, युद्धम् । (यथा, मार्कण्डेये । १३५ ।
१७ ।
"योधनेषु स्वरूपेण दमो यस्य दुरात्मनः ।
"सनत्कुमारकं तन्त्रं योनितन्त्रं प्रकीर्त्तितम् ।
तन्त्रान्तरञ्च देवेशि ! नवरत्नेश्वरं तथा ॥")
प्राणिनामुत्पत्तिस्थानम् । इति त्रिकाण्डशेषः ॥
तत्तु चतुरशीतिलक्षप्रकारम् । यथा, --
"चतुरशीतिलक्षाणि चतुर्भेदाश्च जन्तवः ।
अण्डजाः स्वेदजाश्चैव उद्भिज्जाश्च
जरायुजाः ॥
एकविंशतिलक्षाणि ह्यण्डजाः परिकीर्त्तिताः ।
स्वेदजाश्च तथैवोक्ता उद्भिज्जास्तत्प्रमाणतः
॥
जरायुजाश्च तावन्तो मनुष्याद्याश्च जन्तवः ।
सर्व्वेषामेव जन्तूनां मानुषत्वं सुदुर्लभम् ॥"
इति श्रीगरुडपुराणे प्रेतकल्पे धर्म्मप्रकटनो
नाम
२ अध्यायः ॥ * ॥ अन्यच्च ।
"जलजा नव लक्षाणि स्थावरा लक्षविंशतिः ।
कृमयो रुद्रसङ्ख्याकाः पक्षिणां दशलक्षकम्
॥
त्रिंशल्लक्षाणि पशवश्चतुर्लक्षाणि मानुषाः ।
सर्व्वयोनिं परित्यज्य ब्रह्मयोनिं ततोऽभ्यगात्
॥"
इति बृहद्विष्णुपुराणम् ॥ * ॥
अपि च ।
"स्थावरास्त्रिंशल्लक्षश्च जलजो नवलक्षकः ।
कृमिजा दशलक्षश्च रुद्रलक्षश्च पक्षिणः ॥
पशवो विंशलक्षश्च चतुर्लक्षश्च मानवाः ।
एतेषु भ्रमणं कृत्वा द्विजत्वमुपजायते ॥"
इति कर्म्मविपाकः ॥
("भूतानाञ्चतुर्व्विधा योनिर्भवति जराय्वण्ड-
स्वेदोद्भिदः । तासां खलु चतसृणामपि
योनीना-
मेकैका योनिरपरिसङ्ख्येयभेदा भवति भूता-
नामाकृतिविशेषापरिसङ्ख्येयत्वात् । तत्र
जरा-
युजानामण्डजानां प्राणिनामेते गर्भकरा भावा
यां यां योनिमापद्यन्ते तस्यां तस्यां योनौ तथा
तथा रूपा भवन्ति । तद्यथा कनकरजतताम्र-
त्रपुसीसा आसिच्यमानास्तेषु तेषु "मधूच्छिष्ट-
विम्वेषु । ते यदा मनुष्यविम्बमापद्यन्ते तदा
मनुष्यविग्रहेण जायन्ते । तस्मात् समुदाया-
त्मकः सन् गर्भो मनुष्यविग्रहेण जायते मनुष्यो
तुङ्गः कमलवर्णाभः शुभोऽश्वत्थदलाकृतिः
॥
कुरङ्गखुररूपो यश्चुल्लिकोदरसन्निभः ।
रोमशो विवृतास्यश्च दृश्यनासोऽतिदुर्भगः
॥
शङ्खावर्त्तो भगो यस्याः सा गर्भमिह नेच्छति
।
चिपिटः कर्पराकारः किङ्करीपददो भगः ॥
वंशवेतसपत्राभो गजरोमोच्चनासिकः ।
विकटः कुटिलाकारो लम्बगल्लस्तथाशुभः
॥"
इति काशीखण्डे ३७ अध्यायः ॥ * ॥
अपि च ।
"शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा च
कीर्त्तिता ।
तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता
॥" * ॥
अथ योनिरोगाधिकारः ।
"तत्र योनिरोगाणां निदानान्याह ।
'मिथ्याहारविहाराभ्यां दुष्टैर्दोषैः प्रदूषितात्
।
आर्त्तवाद्वीर्य्यतश्चापि दैवाद्वा स्युर्भगे गदाः
॥'
रोगिणीनां योनीनां नामान्याह ।
'उदावर्त्ता तथा बन्ध्या विप्लुता च
परिप्लुता ।
वातला योनयो रुग्णा वातदोषेण पञ्चधा ॥
पञ्चधा पित्तदोषेण तत्रादौ लोहितक्षरा ।
प्रस्रंसिनी वामिनी च पुत्त्रघ्नी पित्तला तथा
॥
अत्यानन्दा कर्णिनी च चरणानन्दपूर्व्विका ।
अतिपूर्व्वापि सा ज्ञेया श्लेष्मला च
कफादिमाः ॥
खण्ड्यण्डिनी च महती सूचीवक्त्रा
त्रिदोषिणी ।
पञ्चैता योनयः प्रोक्ताः सर्व्वदोषप्रकोपतः ॥'
अथ तासां लक्षणान्याह ।
'सा फेणिलमुदावर्त्ता रजःकृच्छ्रेण मुञ्चति ।
बन्ध्या नष्टार्त्तवा ज्ञेया विप्लुता नित्यवेदना
॥

स दमो वारयत्येष हन्मि तस्य रिपोर्गुरुम् ॥”)
अस्त्रम् ॥ युधधातोभवि करणे चानट् (ल्युट्)
प्रत्ययेन निष्पन्नम् ।

**योधसंरावः**, पुं, (योधानां संरावः ।) अन्योन्यं योधानां युद्धायाह्वानम् । तत्पर्य्यायः । क्रन्द-
नम् २ । इत्यमरभरतौ ॥

**योधेयः**, पुं, (युध् + भावे घञ् । योधं युद्धं करो-
तीति । योध + खः ।) योद्धा । योधशब्दात् ष्णेयप्रत्ययेन निष्पन्नः ॥

**योनलः**, पुं, (यवस्य नल इव नलः काण्डोऽस्य । पृषोदरादिः ।) शस्यविशेषः । तत्पर्य्यायः । यवनालः २ जूर्णाह्वयः ३ देवधान्यम् ४ जोन्ताला ५ बीजपुष्पिका ६ । इति हेमचन्द्रः ।
४ । २४४ ॥

**योनिः**, पुं, स्त्री, (यौति संयोजयतीति । यु +
“वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् ।” उणा०
४ । ५१ । इति निः ।) आकरः । इति मेदिनी ।
ने, १६ ॥ कारणम् । (यथा, उत्तरराम-
चरिते । ६ ।
“ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः ।
सा योनिः सर्व्ववैराणां सा हि लोकस्य निरृतिः ॥”)
जलम् । इति हेमचन्द्रः । ३ । २४९ ॥ (कुश-
द्वीपस्थनदीविशेषः । यथा, मार्कण्डेये । १२१ । ७१ ।
“धूतपापा नदी नाम योनिश्चैव पुनः स्मृता ।
सीता द्वितीया विज्ञेया सा चैव हि निशा-
स्मृता ॥”
तन्त्रशास्त्रविशेषः । यथा, महासिद्धिसारस्वते ।

मनुष्यप्रभव इत्युच्यते तद्योनित्वात् ।” इति चरके शारीरस्थाने तृतीयेऽध्याये ॥ * ॥)
भगम् । इत्यमरः । २ । ६ । ७६ ॥ तत्पर्य्यायः । वरा-
ङ्गम् २ उपस्थः ३ स्मरमन्दिरम् ४ । इति राज-
निर्घण्टः ॥ रतिगृहम् ५ जन्मवर्त्म ६ अधरम् ७
अवाच्यदेशः ८ प्रकृतिः ९ अपथम् १० स्मर-
कूपकः ११ अप्रदेशः १२ प्रकूतिः १३ पुष्पी १४
संसारमार्गकः १५ संसारमार्गः १६ गुह्यम् १७
स्मरागारम् १८ स्मरध्वजम् १९ रत्यङ्गम् २०
रतिकुहरम् २१ कलत्रम् २२ अघः २३ ।
इति शब्दरत्नावली ॥ रतिमन्दिरम् २४ स्मर-
गृहम् २५ कन्दर्पकूपः २६ कन्दर्पसम्बाधः २७
कन्दर्पसन्धिः २८ स्त्रीचिह्नम् २९ । इति जटा-
धरः ॥ स तु गर्भस्थायाः सप्तभिर्मासैर्भवति । इति सुखबोधः ॥ * ॥ तस्य लक्षणं यथा, --
“शुभः क्रमठपृष्ठाभो गजस्कन्धोपमो भगः ।
वामोन्नतश्चेत् कन्याजः पुत्त्रजो दक्षिणोन्नतः ॥
आखुरोमा गूढमणिः सुश्लिष्टः संहतः पृथुः ।

परिप्लुता या भवति ग्राम्यधर्म्मे रुजा भृशम् ।
वातला कर्कशा स्तब्धा शूलनिस्तोदपीडिता ॥
चतसृष्वपि चाद्यासु भवन्त्यनिलवेदनाः ॥’
अनिलवेदनास्तोदादयः ॥ वातलायां त्वति-
शयिता वातवेदना बोद्धव्या । वातला इत्य-
न्वयात् ॥ * ॥
‘सदाहं क्षरते रक्तं यस्याः साः लोहितक्षरा ।
प्रस्रंसिनी स्रंसते च क्षोभिता दुःप्रजायिनी ॥’
क्षोभिता विमर्द्दिता स्रंसते स्वस्थानात् च्यवते
दुःप्रजायिनी दुष्टप्रजननशीला ।
‘सवातमुद्गिरेद्बीर्य्यं वामिनी रजसा युतम् ।
स्थितं स्थितं हन्ति गर्भं पुत्त्रघ्नी रक्तसंस्रवात् ॥’
पुत्त्रशब्दोऽत्रापत्योपलक्षकः ।
‘अत्यर्थं पित्तला योनिर्दाहपाकज्वरान्विता ।
चतसृष्वपि चाद्यासु पित्तलिङ्गोच्छ्र्यो भवेत् ॥’
अत्यानन्दानसन्तोषंग्राम्यधर्म्मेण विन्दति ।
कर्णिन्यां कर्णिका योनौ श्लेष्मासृग्भ्यां प्रजायते ॥’
कर्णिका मांसस्थ कर्णिकारो ग्रन्थिः ॥
‘मैथुने चरणापूर्ब्बं पुरुषादतिरिच्यते ।’
अतिरिच्यते रजो मुञ्चति इत्यर्थः ।
‘बहुशश्चातिचरणा तयोर्व्वीजं न तिष्ठति ॥’
बहुशः वारं वारं अतिरिच्यते तयोः चर-
णातिचरणयोः ।
‘श्लेष्मला पिच्छिला योनिः कण्डयुक्तातिशीतला ।

चतसृष्वपि चाद्यासु श्लेष्मलिङ्गाच्छ्र्यो भवेत् ॥
अनार्त्तवास्तनी खण्डी खरस्पर्शा च मैथुने ॥'
अस्तनी ईषत् स्तनौ यस्यां सा अत्र लक्ष्या
खण्डी । अण्डिनीमाह ।
'महामेढ्रग्रहीताया वालाया अण्डिनी भवेत् ॥'
महामेढ्रः पुरुषः तेन ग्रहीताया बालायाः
सूक्ष्मयोनिच्छिद्राया अण्डिनी
अण्डवल्लम्बमाना
योनिर्भवति ।
'विवृतातिमहायोनिः सूचीवक्त्रातिसंवृता ।
सर्व्वलिङ्गसमुत्थानात् सर्व्वदोषप्रकोपजा ।
चतसृष्वपि चाद्यासु सर्व्वलिङ्गनिदर्शनम् ॥'
असाध्या योनीराह ।
'पञ्चासाध्या भवन्तीह योनयः सर्व्वदोषजाः ॥'
पञ्च खण्डीप्रभृतयः ॥ * ॥
अथ योनिकन्दस्य निदानमाह ।
'दिवास्वप्नादतिक्रोधाद्व्यायामादतिमैथुनात् ।
क्षताच्च नखदन्ताद्यैर्व्वाताद्याः कुपिता यथा ॥'
वाताद्याः कुपिता यथा यथा निदानकुपिता
वाताद्याः ॥ * ॥ रूपमाह ।
"पूयशोणितसङ्काशं लकुचाकृतिसन्निभम् ।
जनयन्ति यदा योनौ नाम्ना कब्दः स योनिजः
॥"
लकुचाकृतिसन्निभं लकुचाकाराकारम् । गुड-
कमत्र विशेष्यं बोद्धव्यम् ॥ * ॥ वातजादिभेदेन
रूपभेदमाह ।
"रूक्षं विवर्णं स्फुटितं वातिकं तं विनिर्दिशेत् ।
दाहरागज्वरयुतं विद्यात् पित्तात्मकं तु तम् ॥
तिलपुष्पप्रतीकाशं कण्डूमन्तं कफात्मकम् ।
सर्व्वलिङ्गसमायुक्तं सन्निपातात्मकं भवेत् ॥" *
॥
अथ योनिरोगाणां चिकित्सा । तत्र बन्ध्या-
चिकित्सा । तस्या लक्षणमाह । बन्ध्या
नष्टार्त्तवा
ज्ञेयेति । ततः प्रथमतो नष्टार्त्तवाचिकित्सा ।
'आर्त्तवादर्शने नारी मत्स्यान् सेवेत नित्यशः ।
काञ्जिकञ्च तिलान् माषानुदश्विच्च तथा दधि
॥
इक्ष्वाकुवीजदन्तीचपलागुडदमनकिण्वयवशूक
।
सस्नुक्क्षीरैर्व्वर्त्तिर्योनिगता कुसुमसञ्जननी ॥'

यावला पिबति पाश्वपिप्पलं
जीरकेण सहितं हिताशना ।
श्वेतया विशिखपुङ्खया युतं
सा सुतं जनयतीह नान्यथा ॥"
श्वेतकुसुभया शरपुंखया सह ।
"पत्रमेकं पलाशस्य पिष्ट्वा दुग्धेन गर्भिणी ।
पीत्वा पुत्त्रमवाप्नोति वीर्य्यवन्तं न संशयः
॥
शूकरशिम्बीमूलं मध्यं वा दधि फलस्य
सपयस्कम्
पीत्वाथोभयलिङ्गीवीजं कन्यां न सूते स्त्री
॥
पुत्त्रमजारीमूलं
विष्णुक्रान्तेशालिङ्गिनीसहिता ।
एतत् गर्भेऽष्टदिनं पीत्वा कन्यां न सर्व्वथा
सूते ॥
पुत्त्रमजारी पतजिया तस्या मूलम् ।
इशालि-
ङ्गिनी पचगुरिया ॥ * ॥
गर्भप्रदरभेषजकथना-
वसरे गर्भाजनकमपि भेषजमाह ।
'पिप्पलीविडङ्गटङ्कणसमचूर्णया पिबेत्
पयसा ।
ऋतुसमये नहि तस्या गर्भः संजायते
क्वापि ॥
आरनालपरिपेषितं त्र्यहं
या जयाकुसुममत्ति पुष्पिणी ।
सत्पुराणगुडमुष्टिसेविनी
सा दधाति नहि गर्भमङ्गना ॥ * ॥
तासु योनिषु चाद्यासु स्नेहादिक्रम इष्यते ।
वस्त्यभ्यङ्गपरीषेकप्रलेपपिचुधारणम् ॥'
वस्तिरत्रोत्तरवस्तिः । क्रमश्चिकित्सा ।
'नतवार्त्ताकिनीकुष्ठसैन्धवामरदारुभिः ।
तिलतैलं पचेन्नारी पिचुं तस्य विधारयेत् ॥
विप्लुतायां सदा योनौ व्यथा तेन
प्रशाम्यति ॥'
नतं तगरम् ।
'वातलां कर्कशां स्तब्धामल्पस्पर्शां तथैव
च ।
कुम्भीस्वेदैरुपचरेदन्तर्व्वेश्मनि संवृते ॥
धारयेद्वा पिचुं योनौ तिलतैलस्य सा सदा ।

विम्बीं पूगञ्च संचूर्ण्य वस्त्रपूतं क्षिपेद्भगे ।
योनिर्भवति संकीर्णा न स्रवेच्च जलं ततः
॥
कपिकच्छुभवं मूलं क्वाथयेद्विधिना भिषक्
।
योनिः सङ्कीर्णतां याति क्वाथेनानेन
धावनात् ॥
जीरकद्वितयं कृष्णा सुषुवी सुरभिर्व्वचा ।
वासकः सैन्धवश्चापि यवक्षारो यवानिका
॥
एषां चूर्णं घृते किञ्चित् भृष्ट्वा खण्डेन
मोदकम् ।
कृत्वा खादेद्यथावह्नि योनिरोगाद्विमुच्यते ॥
मञ्जिष्ठा मधुकं कुष्ठं त्रिफला शर्करा बला ।
मेदे पयस्या काकोली मूलञ्चैवाश्वगन्धजम्
॥
अजमोदा हरिद्रे द्वे प्रियङ्गुकटुरोहिणी ।
उत्पलं कुमुदं द्राक्षा काकोल्यौ चन्दनद्वयम्
एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत् ॥
शतावरीरसं क्षीरं घृताज्ज्ञेयं चतुर्गुणम् ।
सर्पिरेतन्नरः पीत्वा स्त्रीषु नित्यं वृषायते ।
पुत्त्रान् जनयते वीरान् मेधाढ्यान् प्रियदर्श-
नान् ॥
या चैवास्थिरगर्भा स्यात् पुत्त्रं वा
जनयेन्मृतम् ।
अल्पायुषं वा जनयेत् या च कन्यां प्रसूयते
॥
योनिरोगे रजोदोषे परिस्रावे च शस्यते ।
प्रजावर्द्धनमायुष्यं सर्व्वग्रहनिवारणम् ।
नाम्ना फलघृतं ह्येतदश्विभ्यां परिवर्त्तितम्
॥
अनुक्तं लक्ष्मणामूलं क्षिपन्त्यत्र
चिकित्सकाः ।
जीवद्वत्सैकवर्णाया घृतञ्चात्र प्रयुज्यते ।
अरण्यगोमयेनेह वह्निज्वाला च दीयते ॥'
मेदे मेदा महामेदा तयोरभावे शतावरी
द्विगुणा देया । पयस्यात्र क्षीरकाकोली
काकोलीयुगलाभावे अश्वगन्धा द्विगुणा
देया ।
प्रियङ्गुस्थाने केचिद्धिङ्गु पठन्ति । पयस्या

इक्ष्वाकुः कटुतुम्बी । चपला पिप्पली । दमनो मदनफलम् । किण्वं सुराबीजम् ।
'पीतं ज्योतिष्मतीपत्रं राजिकोग्रासनं त्र्यहम् ।
शीतेन पयसा पिष्टं कुसुमं जनयेद्ध्रुवम् ॥'
ज्योतिष्मती कटभीवृक्षविशेषः करही इति लोके । पयसा दुग्धेन ॥ * ॥ अथ बन्ध्या-
चिकित्सा ।
'वला सिता सातिबला मधूकं
वटस्य शुङ्गं गजकेशरञ्च ।
एतन्मधुक्षीरघृतैर्निपीय
बन्ध्या सुपुत्रं नियतं प्रसूते ॥
अश्वगन्धाकषायेण सिद्धं दुग्धं घृतान्वितम् ।
ऋतुस्नाताङ्गना प्रातः पीत्वा गर्भं दधाति हि ॥
पुष्योद्धृतं लक्ष्मणाया मूलं दुग्धेन कन्यया ।
पिष्ट्वा पीत्वा ऋतुस्नाता गर्भं धत्ते न संशयः ॥
कुरण्टमूलं धातक्या कुसुमानि वटाङ्कुराः ।
नालोत्पलं पयोयुक्तमेतद्गर्भप्रदं ध्रुवम् ॥

पित्तलानाञ्च योनीनां सेकाभ्यङ्गपिचुक्रियाः
॥
शीताः पित्तहराः कार्य्याः स्नेहनार्थं
घृतानि च ।
प्रस्रंसिनीं घृताभ्यक्तां क्षीरस्विन्नां प्रवेशयेत्
॥
पिधाय वेशवारेण ततो बन्धं समाचरेत् ।
शुण्ठीमरिचकृष्णाभिर्धान्यकाजाजिदाडिमैः
॥
पिप्पलीमूलसंयुक्तैर्व्वेशवारः स्मृतो बुधैः ॥
धात्रीरसं सितायुक्तं योनिदाहे पिबेत् सदा ।
सूर्य्यक्रान्ताभवं मूलं पिबेद्वा तण्डुलाम्बुना
॥
योन्यान्तु पूयस्राविण्यां
शोधनद्रव्यनिर्म्मितैः ।
सगोमूत्रैः सलवणैः पिण्डैः संपूरणं हितम्
॥'
शोधनद्रव्याणि निम्बपत्रादीनि ।
'दुर्गन्धां पिच्छिलां वापि चूर्णैः
पञ्चकषायजैः ।
पूरयेद्धारयेद्राजवृक्षादिक्वथिताम्बुना॥"
पञ्च कषायाः ।
वचावासापटोलप्रियङ्गुनिम्बाः ।
राजवृक्षादि धनवहेरा ।
"पिप्पल्यामरिचैर्म्माषैः शताह्वाकुष्ठसैन्धवैः
।
वर्त्तिस्तुल्या प्रदेशिन्या योनौ
श्लेष्मविशोधिनी ॥
तुल्या प्रदेशिन्या दैर्घ्येण परिणाहेन च ।
कर्णिन्यां वर्त्तयो देयाः
शोधनद्रव्यनिर्म्मिताः ॥
गुडूचीत्रिफलादन्तीक्वथितोदकधारया।
योनिं प्रक्षालयेत्तेन तत्र कण्डूः प्रशाम्यति
॥
मुद्गपुष्पं सखदिरं पथ्यां जातीफलं तथा ।

काकोलीत्युक्त्वा पुनः काकोल्याविति
काकोली-
क्षीरकाकोल्यौ द्वैगुण्यार्थं एतस्य
फलघृतस्य
पाठो नानातन्त्रेषु नानाविधः । तत्र
हिङ्गुवचा-
तगरजीवकर्षभका एवाधिकाः । तत्र
जीवकर्ष-
भयोरभावे विदारीकन्दो द्विगुणो देयः ।
फल-
घृतं सकलयोनिरोगेषु ॥ * ॥
अथ योनिकन्दस्य चिकित्सा ।
'गैरिकाम्रास्थिजन्तुघ्नरजन्यञ्जनकट्फलम्
।
पूरयेद्योनिमेतेषां चूर्णैः क्षौद्रसमन्वितैः ॥
त्रिफलायाः कषायेण सक्षौद्रेण च सेचयेत् ।
प्रमदा योनिकन्देन व्याधिना परिमुच्यते ॥'
अथ प्रसङ्गात् गुर्व्विण्या रोगाणां चिकित्सा
।
'ह्रीवेरातिविषामुस्तमोचशक्रैः शृतं जलम् ।
दद्याद्गर्भे प्रचलिते प्रदरे कुक्षिरुज्यपि ॥'
कुक्षिरुक् उदरव्यथा । चलितगर्भस्थापने
ह्रीवे-
रादिक्वाथः ॥ * ॥
अथ गर्भस्रावपातयोर्न्निदानम् ।
'ग्राम्यधर्म्माध्वगमनयानासनप्रपीडनैः ।
ज्वरोपवासोत्पतनप्रहाराजीर्णधावनैः ॥
वमनाच्च विरेकाच्च कुन्थनाद्गर्भपातनात्
।
तीक्ष्णधारोष्णकटुकतिक्तरूक्षनिषेवणात् ॥
वेगाभिघाताद्विषमादासनाच्छयनाद्भयात्।
गर्भे पतति रक्तस्य सशूलं दर्शनं भवेत् ॥'

गर्भपातनात् नियमे गर्भे पातनशीलं द्रव्यं
तस्मात् ।
गर्भस्य स्रावपातयोः पूर्ब्बरूपमाह । गर्भे
पत-
तीत्यादि । पतति स्रावेण पातेन वा
पतिष्यति
स्रावपातयोरवधिमाह ।
‘आचतुर्थात्ततो मासात् प्रस्रवेद्गर्भविद्रवः
।
ततः स्थिरशरीरस्य पातः पञ्चमषष्ठयोः ॥’
आचतुर्थात् मासात् चतुर्थमासपर्य्यन्तम् ।
गर्भस्य विद्रवः । शोणितरूपगर्भः । स्रवति
शोणितमिति भोजवचनात् ।
स्थिरशरीरस्य
कठिनशरीरस्य गर्भस्य । गर्भपातस्य
दृष्टान्तं
दर्शयति ।
‘गर्भोऽभिघातविषमासनपीडनाद्यैः
पक्वं द्रुमादिव फलं पतति क्षणेन ॥’
यथा वृन्तलग्नं पक्वं फलमभिघातेनाकाल
एव
पतति तथा गर्भोऽप्यभिघातादिना
अकालेऽपि
पतति ॥ * ॥ अथ गर्भस्रावस्य चिकित्सा
।
‘गुर्व्विण्या गर्भतो रक्तं स्रवेद्यदि मुहुर्मुहुः ।
तन्निरोधाय सुस्निग्धमुत्पलादिशृतं पिबेत्
॥’
उत्पलादिगणमाह ।
‘उत्पलं नीलमारक्तं कह्लारं कुमुदं तथा ।
श्वेताम्भोजञ्च मधुकमुत्पलादिरयं गणः ॥
संशीलितो हरत्येव दाहं तृष्णां हृदामयम् ।
रक्तपित्तञ्च मूर्च्छाञ्च तथा छर्द्दिमरोचकम्
॥’
अथ गर्भपातस्य उपद्रवानाह ।
‘प्रस्रंशमाने गर्भे स्याद्दाहः शूलञ्च पार्श्वयोः
।
पृष्ठरुक् प्रदरानाहौ मूत्रसङ्गश्च जायते ॥’
प्रस्रंशमाने पतति ॥ * ॥ अथ गर्भस्य
स्थाना-
न्तरगमने चोपद्रवानाह ।

‘तृणपञ्चकमूलानां कल्केन विपचेत् पयः ।
तत् पयो गुर्व्विणी पीत्वा मूत्रसङ्गाद्विमुच्यते ॥
शालीक्षुकुशकाशैः स्यात् शरेण तृणपञ्चकम् ।
एषां मूलं तृषादाहपित्ताशृङ्मूत्रसङ्गहृत् ॥’ * ॥
अथ प्रसूताया योनेः क्षतादेश्चिकित्सा ।
‘तुम्बीपत्रं तथा लोध्रं समभागं सुपेषयेत् ।
तेन लेपो भगे कार्य्यः शीघ्रं स्याद्योनिरक्षता ॥
पलाशोडुम्बरफलं तिलतैलसमन्वितम् ।
योनौ विलिप्तं विधिना गाढीकरणमुत्तमम् ॥”
इति भावप्रकाशः ॥ * ॥
अथ कुयोनिप्राप्तिकारणानि ।
“हविर्ज्जुह्वति नाग्नौ ये गोविन्दं नार्च्चयन्ति ये
।
लभन्ते नात्मविद्याञ्च सुतीर्थविमुखाश्च ये ॥
सुवर्णं वस्त्रताम्बूलं रत्नमन्नं फलं जलम् ।
आर्त्तेभ्यो न प्रयच्छन्ति सर्व्वे सुकृतदारकाः
॥
ब्रह्मस्वञ्च स्त्रीधनानि लोभादेव हरन्ति ये ।
बलेन छद्मना वापि धूर्त्ताश्च परवञ्चकाः ॥
नास्तिकाः कुहकाश्चौरा ये चान्ये वकवृत्तयः
।
बालवृद्धातुरस्त्रीषु निर्द्दयाः सत्यवर्ज्जिताः ॥
अग्निदा गरदा ये च ये चान्ये कूटसाक्षिणः ।
अगम्यागामिनः सर्व्वे ये चान्ये ग्रामयाजिनः ॥
व्याधाचरणसम्पन्ना वर्णादिधर्म्मवर्जिताः ।
देवोपदेवदनुजरक्षोयक्षादिसेविनः ॥
सर्व्वदा मादकद्रव्यपानमत्ता हरिद्विषः ।
देवतोच्छिष्टपतितनृपश्राद्धान्नभोजिनः॥
असत्कर्म्मरता नित्यं सर्व्वपातकपापिनः ।
पाषण्डधर्म्माचरणाः पुरोधोवृत्तिजीविनः ॥
पितृमातृस्वसापत्यस्वदारत्यागिनश्चये ।
ये कदर्य्याश्च लुब्धाश्च नास्तिका
धर्म्मदूषकाः ॥
त्यजन्ति स्वामिनं युद्धे त्यजन्ति शरणागतम्
।
गवां भूमेश्च हर्त्तारो ये चान्ये रत्नदूषकाः ॥
महाक्षेत्रेषु सर्व्वेषु प्रतिग्रहरताश्च ये ।
परद्रोहरता ये च तथा ये प्राणिहिंसकाः ॥
परापवादिनः पापा देवतागुरुनिन्दकाः ॥
कुप्रतिग्राहिणः सर्व्वे सम्भवन्ति पुनः पुनः ॥
प्रेतराक्षसपैशाच्यतिर्य्यग्वृक्षकुयोनिषु ।

मरणं बालवृद्धानामन्धत्वं कुब्जता तथा ॥
ऐश्वर्य्यं सुदरिद्रत्वं पाण्डित्यं मूर्खता तथा ।
एताश्चराचरे लोके भवन्ति कथमन्यथा ॥”
इति पाद्मोत्तरखण्डे २१ अध्यायः ॥ * ॥
पक्षियोनिप्राप्तिकारणं यथा, --
“इति श्रुतकथो विप्र ! सारसं प्राह वानरः ।
सम्यग्वेत्ति भवान् नूनं त्वं कथं पक्षितां गतः ।
वृत्तान्तमेतं कथय श्रोतुमिच्छामि सारस ! ॥
सारस उवाच ।
कथयिष्यामि तत् कर्म्म येनाहं दुर्गतिं गतः ।
पक्षियोनिं गतो येन तत् सर्व्वं श्रोतुमर्हसि ॥
धान्यखारीशतं साग्रमुत्सृष्टं हि त्वया पुरा ।
बहुभ्यो ब्राह्मणेभ्यश्च नर्म्मदायाः परिग्रहे ॥
पौरोहित्यमदाल्लोभाद्वञ्चयित्वाद्विजांस्तथा ।
किञ्चिद्दत्त्वां तु तेभ्यश्च गृहीतमखिलं मया ॥
विप्रसाधारणद्रव्यग्रहणोत्पन्नपातकात्।
पतितः कालसूत्रेऽहं नरके रक्तकर्द्दमे ॥
वक्तुमत्र न शक्नोमि दुःखं वानर ! नारकम् ।
दैवात् कथमपि प्राप्त उत्तारो नरकाम्बुधेः ॥
मया यदि तथापीह शकुनत्वमुपस्थितम् ।
अपहृत्य पुरा कांस्यभाजनं भगिनीगृहात् ॥
द्यूतकर्त्रे मया दत्तं तेन मे सारसी गतिः ॥
इयञ्च ब्राह्मणी पूर्व्वं कांस्यचौरी सुदारुणा ।
तेनेह सारसी जाता मद्भार्य्या सहधर्म्मिणी ॥”
इति तत्रैव १९ । २० अध्यायौ ॥ * ॥
पापिनां नरकभोगानन्तरं
स्थावरादियोनिप्राप्ति-
र्यथा, --
“स्थावराः कृमयोऽब्जाश्च पक्षिणः पशवो
नराः ।
धार्म्मिकास्त्रिदशास्तद्वन्मोक्षिणश्चयथाक्रमम्
॥
सहस्रभागप्रथमा द्वितीयानुक्रमास्तथा ।
सर्व्वे ह्येते महाभाग यावन्मुक्तिसमाश्रयाः ॥”
इति विष्णुपुराणे २ अंशे ५ अध्यायः ॥
“पापिनां नरकभोगानन्तरं स्थावराद्यासूत्तरो-
त्तरमुत्कृष्टासु नवधा भिन्नासु योनिषु
जन्मक्रम-
माह । स्थावरा इति । अब्जा मत्स्यादयः ।
धार्म्मिका नरेष्वेव पुण्यविशेषेण केचिन्मोक्षि-
णश्च मुमुक्षवश्च यथाक्रमं भवन्तीति शेषः ।

‘स्थानात् स्थानान्तरं तस्मिन् प्रयात्यपि च
जायते ।
आमपक्वाशयादौ तु क्षोभः पूर्ब्बेऽप्युपद्रवाः ॥’
पूर्ब्बेऽप्युपद्रवाः पार्श्वशूलादयः ॥ * ॥
तच्चिकित्सामाह ।
‘स्निग्धशीताः क्रियास्तेषु दाहादिषु समाचरेत् ।
कुशकाशोरुवूकाणां मूलैर्गोक्षुरकस्य च ॥
शृतं दुग्धं सितायुक्तं गर्भिण्याः शूलहृत् परम् ।
श्वदंष्ट्रामधुकक्षुद्राम्लानैः सिद्धं पयः पिबेत् ।
शर्करामधुसंयुक्तं गुर्व्विणीवेदनापहम् ॥’
अम्लानः पुष्पजातिः । अयं बाणपुष्प इति गौडादौ प्रसिद्धः ।
‘मृत्कोष्ठागारिका गेहसम्भवात्र च मृत्तिका ।
समङ्गा धातकीपुष्पं गैरिकञ्च रसाञ्जनम् ॥
तथा सर्ज्जरसश्चैतान् यथालाभं
विचूर्णयेत् ।
तच्चूर्णं मधुना लिह्यान्नारी प्रदरशान्तये ॥’
मृत्कोष्ठागारिकासम्भवा मृत्कोष्ठागारिका वरटी तन्निर्म्मितगृहभवा मृत्तिका । समङ्गा लज्जालुः ।
‘कसेरूत्पलशृङ्गाटकल्कं वा पयसा पिबेत् ।
पक्वं वचारसोनाभ्यां
हिङ्गुसौवर्च्चलान्वितम् ।
आनाहे तु पिवेत् दुग्धं गुर्व्विणी सुखिनी भवेत् ॥
सौवर्च्चलं चौहार इति लोके ।

न तेषां सुखलेशोऽस्ति इह लोके परत्र च ॥
तस्मात् त्यक्ता निषिद्धार्थं विहितं कर्म्म कारयेत् ।
यज्ञं दानं तपस्तीर्थं मन्त्रं देवं गुरुं भरेत् ॥
नाचरेत् कुत्सितं कर्म्म मनसा च कदाचन ।
विपाकं कर्म्मणां दृष्ट्वा योनिकोटिषु दुःसहम् ॥
चतुर्भिरपि वर्णैस्तु सेव्यो धर्म्मो निरन्तरम् ॥”
इति पाद्मोत्तरखण्डे १८ अध्यायः ॥ * ॥
योनिदुष्टाया असाध्वीत्वं यथा, --
“साध्वी स्त्री मातृतुल्या च सर्व्वथा हितकारिणी ।
असाध्वी वैरतुल्या च शश्वत्सन्तापदायिका ।
मुखदुष्टा योनिदुष्टा चैवासाध्वीति विश्रुता ॥”
इति ब्रह्मवैवर्त्ते गणपतिखण्डे २ अध्यायः ॥ * ॥
पापपुण्यफलं अधमोत्तमयोनिप्राप्तिर्यथा, --
“पापपुण्यफलं लोके प्रत्यक्षं खलु दृश्यते ।
देवदानवमानुष्यतिर्य्यक्त्वं कृमियोनिता ॥
नानायोनिषु जन्मानि नानाव्याधिप्रपीडिताः ।

तेषाञ्च पूर्ब्बबाहुल्यमुत्तरोत्तराल्पत्वञ्चाहसह-स्रेति । द्वितीयानुक्रमाः द्वितीयोऽनुक्रम उद्देशो येषां द्वितीयस्थानेऽनुक्रान्ता ये क्रमयस्ते सहस्र-
भागप्रथमाः सहस्रभागाः सहस्रगुणाः प्रथमाः प्रथमनिर्द्दिष्टाः स्थावरा येषां ते । कृमिभ्यः सहस्रगुणमधिकाः स्थावराः । तत्सहस्रतम-भागाः कृमयः इत्यर्थः । पञ्चम्यन्तपाठेऽपि द्वितीयस्थानेऽनुक्रान्तात् कृमिवर्गात् सहस्रगुणाः
स्थावरा इत्येवार्थः । तथा सर्व्वे ह्येत इति ।
यथा स्थावराः स्थानान्तरनिर्द्दिष्टेभ्यः कृमिभ्यः
सहस्रगुणमधिकाः । तथा कृमयः स्थानान्तर-
निर्द्दिष्टेभ्योऽङ्गेभ्यः सहस्रगुणमधिकाः । एवं पक्ष्यादिष्वपि द्रष्टव्यम् । मोक्षं सम्यगाश्रयन्ते इति मोक्षसमाश्रया मुमुक्षवो ज्ञाननिष्ठास्तत्-पर्य्यन्तमेवं पूर्ब्बपूर्ब्बादुत्तरोत्तरन्यूनत्वेन जन्म-

क्रमः । ततः परं मुक्तिः । एतञ्च
संसारिजीव-
बाहुल्यकथनं मोक्षस्य
दुर्लभतासूचनार्थम् ।
अयञ्च नवधा निर्द्दिष्टो जन्मक्रमः
प्रायिक एव ।
तदुक्तमादित्यपुराणे ।
व्युत्क्रमेणापि मानुष्यं प्राप्यन्ते
पुण्यगौरवात् ।
विचित्रा गतयः पुंसां कर्म्मणां
गुरुलाघवैः ॥”
इति तट्टीका ॥
कुयोनिमोक्षणं यथा, --
वाराह उवाच ।
“येन गर्भं न गच्छेत तन्मे शृणु हि
माधवि ! ।
कथयिष्यामि ते ह्येवं
सर्व्वधर्म्मविनिश्चयम् ॥
कृत्वापि विपुलं कर्म्म आत्मानं न
प्रशंसति ।
कुर्व्वते बहुकर्म्माणि शुद्धेनैवान्तरात्मना
॥
कृत्वापि मम कर्म्माणि मत्प्रियाणि
वसुन्धरे ! ।
नैव कुर्व्वन्त्यहङ्कारं क्रोधञ्चैव न गृह्णति
॥
समं पश्यति चित्तेन
लाभालाभविवर्ज्जितः ।
पञ्चानामिन्द्रियाणाञ्च समर्थो निग्रहे रतः
॥
कार्य्याकार्य्ये विजानाति सर्व्वधर्म्मेषु
निष्ठितः ।
शीतोष्णवातवर्षादिक्षुत्पिपासासहश्च
यः ॥
यो दरिद्रो निरालस्यः
सत्यवागनसूयकः ।
स्वदारनिरतो नित्यं परदारविवर्जितः ॥
सत्यवादी विशुद्धात्मा नित्यं
भागवतप्रियः ।
संविभागी विशेषज्ञो नित्यं
ब्राह्मणवत्सलः ॥
मतिमान्नैव तप्येत परार्थेषु कदाचन ।
ईदृशीं बुद्धिमास्थाय मम कर्म्माणि कुर्व्वते ।
तिर्य्यग्योनिं न गच्छेत मम लोकाय गच्छति ॥”
इति वराहपुराणे योनिगर्भमोक्षणनामाध्यायः ॥

**योनिकन्दः**, पुं, (योनौ कन्द इव ।) योनिरोग-

विशेषः । तस्य निदानं यथा, --
“दिवास्वप्नादतिक्रोधाद्व्यायामादतिमैथुनात् ।
क्षताच्च नखदन्ताद्यैर्व्वाताद्याः कुपिता यथा ॥
वाताद्याः कुपिता यथा । यथा निदानकुपिता
वाताद्याः । रूपमाह ।
‘पूयशोणितसङ्काशं लकुचाकृतिसन्निभम् ।
जनयन्ति यदा योनौ नाम्ना कन्दः स योनिजः
॥’
लकुचाकृतिसन्निभं लकुचाकाराकारम् ।
गुडकमत्र विशेष्यं बोद्धव्यम् ॥ * ॥ वातजादि-
भेदेन रूपभेदमाह ।
‘रूक्षं विघर्णं स्फुटितं वातिकं तं विनिर्द्दिशेत् ।
दाहरागज्वरयुतं विद्यात् पित्तात्मकन्तु तत् ॥
तिलपुष्पप्रतीकाशं कण्डूयन्तं कफात्मकम् ।
सर्व्वलिङ्गसमायुक्तं सान्निपातात्मकं भवेत् ॥’
अस्य चिकित्सा । योनिशब्दे द्रष्टव्या ।” इति
भावप्रकाशः ॥

**योनिजं**, त्रि, (योनेर्ज्जायते इति । जन् + डः ।)

योनिनिःसृतशरीरादिकम् । यथा, --
“सा च त्रिधा भवेद्देह इन्द्रियं विषयस्तथा ।
योनिजादिर्भवेद्देह इन्द्रियं घ्राणलक्षणम् ॥”
इति भाषापरिच्छेदः ॥
“योनिजादीति । योनिजमयोनिजञ्चेत्यर्थः ।
योनिजमपि जरायुजमण्डजञ्च । जरायुजं मानु-
षादीनां अण्डजं सर्पादीनाम् । अयोनिजं
स्वेदजोद्भिदादिकम् । स्वेदजाः कृमिदंशाद्याः ।
उद्भिदस्तरुगुल्माद्याः । नारकिणां शरीरमप्य-
योनिजम् ।” इति सिद्धान्तमुक्तावली ॥

**योनिदेवता**, स्त्री, (योनेर्देवता ।) पूर्ब्बफल्गुणी-

नक्षत्रम् । इति हेमचन्द्रः ॥

**योनिमुद्रा**, स्त्री, (योन्याकृतिर्मुद्रा हस्तभङ्गी ।)

भगवत्याः पूजायां प्रदर्शनीयाङ्गुलीरचितयोन्या-
कारमुद्राविशेषः । यथा, --
“उपविश्यासने मन्त्री प्राङ्मुखो वाप्युदङ्मुखः ।
षट्चक्रं चिन्तयेद्देवि ! प्राणायामपुरःसरम् ॥
चतुर्द्दलं स्यादाधारं स्वाधिष्ठानन्तु षड्दलम् ।
नाभौ दशदलं पद्मं सूर्य्यसंख्यदलं हृदि ॥
कण्ठे स्यात् षोडशदलं भ्रूमध्ये द्विदलन्तथा ।
सहस्रदलमाख्यातं ब्रह्मरन्ध्रे महापथे ॥
आधारे कन्दमध्यस्थं त्रिकोणमतिसुन्दरम् ।
त्रिकोणमध्ये देवेशि ! कामबीजं सुलक्षणम् ॥
कामबीजोद्भवं तत्र स्वयम्भुलिङ्गमुत्तमम् ।
तस्योपरि पुनर्ध्यायेत् चित्कलां हंसमाश्रिताम्
॥
ध्यायेत् कुण्डलिनीं देवीं
स्वयम्भुलिङ्गवेष्टिताम् ।
चित्कलया कुण्डलिनीं तेजोरूपां जगन्मयीम्
॥
आधारादीनि पद्मानि भित्त्वा तेजःस्वरू-
पिणीम् ।
हंसेन मनुना देवीं ब्रह्मरन्ध्रं नयेत् सुधीः ॥
सदाशिवेन देवेशि ! क्षणमात्रं रमेत् प्रिये ! ।
अमृतं जायते देवि ! तत्क्षणात् परमेश्वरि ! ॥
तदुद्भवामृतं देवि ! लाक्षारससमोपमम् ।
तेनामृतेन देवेशि ! तर्पयेत् परदेवताम् ॥
षट्चक्रदेवतास्तत्र सन्तर्प्यामृतधारया ।
आनयेत्तेन मार्गेण मूलाधारं पुनः सुधीः ॥
ततस्तु परमेशानि ! अक्षमालां विचिन्तयेत् ।
चित्रिणी विशतन्त्वाभा ब्रह्मनाडीगतान्तरा ॥
तया संग्रथिता ध्येया साक्षाज्जाग्रत्स्वरूपिणी
।
अनुलोमविलोम्नेन मन्त्रवर्णविभेदतः ॥
मन्त्रेणान्तरितान् वर्णान् वर्णेनान्तरितं मनुम् ।
कुर्य्याद्वर्णमयीं मालां सर्व्वमन्त्रप्रकाशिनीम् ॥
चरमार्णं मेरुरूपं लङ्घनं नैव कारयेत् ।
सबिन्दुं वर्णमुच्चार्य्य पश्चान्मन्त्रं जपेत् सुधीः
॥
अष्टोत्तरशतं मूलमन्त्रं ज्ञानेन संजपेत् ।
वर्गाणामष्टवर्गेण अष्टवारं जपेत् सुधीः ॥
अ क च ट त प य शा इत्येवञ्चाष्टवर्गकाः ।
योनिमुद्रा महेशानि ! तव स्नेहात् प्रकाशिता
॥
मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रां न वेत्ति यः ।
शतकोटिजपेनापि तस्य सिद्धिर्न जायते ॥”

प्रियवादी द्विजानाञ्च मम कर्म्मपरायणः
।
कुयोनिन्तु न गच्छेत मम लोकाय
गच्छति ॥”
वियोनिमोक्षणं यथा, --
“अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व
वसुन्धरे ! ।
यो वियोनिं न गच्छेत मम कर्म्मपरायणः
॥
जीवहिंसानिवृत्तस्तु सर्व्वभूतहितः
शुचिः ।
सर्व्वत्र समतायुक्तः समलोष्टाश्मकाञ्चनः
॥
बाल्ये स्थितोऽपि वयसि क्षान्तो दान्तः
शुभे रतः ।
कृत्यं नैव विजानाति परेणापकृतं
क्वचित् ॥
कृत्यञ्च संस्मरेत् ह्येतदसत्यञ्च न
जल्पति ।
व्यलीकेषु निवृत्तो यः पर्य्येति
कृतनिश्चयः ॥
नित्यञ्च धृतिमान् किञ्चित् परोक्षेऽपि न
च
क्षिपेत् ।
ऋतुकालेऽभिगच्छेत अपत्यार्थं स्वकां
स्त्रियम् ॥
डेदृशास्तु नरा भद्रे ! मम कर्म्मपरायणाः
।
ते वियोनिं न गच्छन्ति मम गच्छन्ति
सुन्दरि ॥”
तिर्य्यग्योनिमोक्षणं यथा, --
वाराह उवाच ।
“गुह्यानां परमं गुह्यं तच्छृणुष्व
वसुन्धरे ! ।
तिर्य्यग्योनिगताश्चापि यो न गच्छन्ति
किल्वि-
षम् ॥
अष्टम्याञ्च चतुर्द्दश्यां मैथुनं यो न
गच्छति ।
भुक्त्वा परस्य चान्नानि यश्चैव न
विकुत्सति ॥
व्याल्ये वयस्यपि च यो मम
नित्यमनुव्रतः ।

“पञ्च प्रणामान् कृत्वाथ ॐ ह्रीँ श्रीमितिंमन्त्रकैः
।
अन्येषां पुरतश्चैव अधिकाल्पा यथेच्छया ।
योनिमुद्रां ततः पश्चात् दर्शयित्वा विसर्ज्जयेत्
॥
द्वौ पाणी प्रसृतीकृत्य कृत्वा तूत्तानमञ्जलिम् ।
अङ्गुष्ठाग्रद्वयं न्यस्य कनिष्ठाग्रद्वयोस्ततः ॥
अनामिकायां वामस्य तत्कनिष्ठां पुरो न्यसेत् ।
दक्षिणस्यानामिकायां कनिष्ठां दक्षिणस्य च ॥
अनामिकायाः पृष्ठे तु मध्यमे विनियोजयेत् ।
द्वे तर्ज्जन्यौ कनिष्ठाग्रे तदग्रेणैव योजयेत् ॥
योनिमुद्रा समाख्याता देव्याः प्रीतिकरी मता ॥
त्रिवारं दर्शयेदग्रे मूलमन्त्रेण साधकः ।
तां मुद्रां शिरसि न्यस्य मण्डलं विन्यसेत्ततः ॥”
इति कालिकापुराणे ५३ अध्यायः ॥ * ॥
पारिभाषिकयोनिमुद्र यथा । मन्त्रमुक्ता-
वल्याम् ।

इति शाक्तानन्दतरङ्गिणी ॥

**योनिरोगः**, पुं, (योनेः रोगः ।) भगगदः ॥ (यथा,
सुश्रुते । १ । ४५ ।
“शूलोदावर्त्तातिसारप्रवाहिकायोनिरोगगर्भ
स्रावरक्तपित्तश्रमक्लमहरम् ॥” * ॥) अस्य
निदानादिर्योनिशब्दे द्रष्टव्यः ॥

**योन्यर्शः**, [स्] क्ली, (योनिजातमर्शः ।) योनि-
जातरोगविशेषः । तत्पर्य्यायः । कन्दसंज्ञम् २
।
इति त्रिकाण्डशेषः ॥ (यथा, --
“केचित्तु भूयांसमेव देशमुपदिशन्त्यर्शसां
शिश्न-
मपथ्यपथं गलमुखनासिकाकर्णाक्षिवर्त्मानि
त्वक्च ।” इति चरके चिकित्सास्थाने अष्टमे
अध्याये ॥)

**योषा**, स्त्री, (यौति मिश्रीभवतीति । यु मिश्रणे +
बाहुलकात् सः । इत्युज्ज्वलदत्तः । ३ । ६२ ।
स्त्रियां टाप् ।) नारी । इत्यमरः । २ । ६ । २
॥
(यथा, देवीभागवते । ३ । २५ । ९ ।

| | | |
|---|---|---|
| येन केनापि सन्तुष्टः पितृमातृप्रपूजकः ॥<br>प्राप्तेन जीवति च यः प्रविभागी गुणान्वितः ।<br>अलुब्धः सर्व्वकार्य्येषु स्वतन्त्रो नित्यसंयतः ॥<br>विकर्म्म नाभिकुर्व्वीत कौमारव्रतसंस्थितः ।<br>सर्व्वभूतदयायुक्तः सत्त्वेन च समन्वितः ॥ | | |

"यथा दारुमयी योषा नटादीनां प्रचेष्टते ।
तथा स्वकर्म्मवशगो देही सर्व्वत्र वर्त्तते
॥")

**योषित्**, स्त्री, (योषति पुमांसं युष्यते पुंभिरिति
वा । युष् + "हृसृरुहियुषिभ्य इतिः ।" उणा०
१ । ९९ । इति इतिः ।) नारी । इत्यमरः । १ ।
६ । २ ॥ (यथा, मेघदूते । १ । ३९ ।
"गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तं
रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः
॥")
तस्या अवध्यत्वं यथा, वह्निपुराणे ।
"तं प्रेक्ष्य भरतं श्रेष्टं शत्रुघ्नो वाक्यमब्रवीत्
।
अवध्याः सर्व्वभूतानां योषितः
क्षम्यतामिति ॥"

**योषित्प्रिया**, स्त्री, (योषितां प्रिया ।) हरिद्रा ।
इति भावप्रकाशः ॥

**योषिता**, स्त्री, (योषित् + टाप् ।) नारी । यथा,
"स्त्री वधूरबला नारी प्रिया रामा
जनिर्ज्जनी ।
योषा योषिद्योषिता च जोषिज्जोषा च
जोषिता ॥"
इति शब्दरत्नावली ॥
(यथा, मुण्डकोपनिषदि । २ । १ । ५ ।
"तस्मादग्निः समिधो यस्य सूर्य्यः
सोमात् पर्जन्य ओषधयः पृथिव्याम् ।
पुमान् रेतः सिञ्चति योषितायां
बह्वीः प्रजाः पुरुषात् सम्प्रसूताः ॥")

**यौक्तिकः**, पुं, (युक्तिं करोतीति । युक्ति + ठञ् ।)
नर्म्मसचिवः । इति शब्दरत्नावली ॥
युक्ति-
योग्ये, त्रि ॥

**यौगकः**, त्रि, (योगस्यायमिति । योग + अण् +
स्वार्थे कन् ।) योगसम्बन्धी । इति
सिद्धान्त-
स्त्रीत्वादिमिति तत्तदर्थे रूढमेव नातो विभा-
गस्य व्याघातः ॥ यौगिकेषु समासं लक्षयति ।
'यादृशस्य महावाक्यस्यान्तस्त्वादिर्न्निजार्थके
।
यादृशार्थस्य धीहेतुः स समासस्तदर्थकः ॥'
यादृशमहावाक्योत्तरस्त्वतलादिःस्वार्थस्य
यादृ-
शार्थावच्छिन्नविषयताशालिबोधहेतुस्तादृशं
तद्वाक्यं तथाविधार्थे समासः । पाचकादिकन्तु
पाककर्त्तार्द्यर्थकं वाक्यमपि स्वघटकानेकनाम
लभ्यतादृशार्थकत्वविरहान्न महावाक्यम् । प्रकृ-
त्यर्थमात्रावच्छिन्नप्रत्ययार्थस्यान्वयबोधं
प्रत्ययो-
ग्यत्वं वा प्रकृते वाक्यस्य महत्त्वं वाच्यम् । तेन
उपकुम्भादौ नाव्याप्तिर्न्नवा
नीलघटत्वत्वमित्यादौ
नीलघटत्वादिभागेऽतिप्रसङ्गः ।
क्षीरपायीत्यादि-
कस्तु प्रकृत्यर्थावच्छिन्नकृदर्थस्यान्वयबोधे
समर्थो-
ऽपि न प्रकृत्यर्थमात्रावच्छिन्नस्य ततः पान
शीलसामान्यस्याप्रत्ययात् । राज्ञः
पुरुषत्वमित्या-
दितो राजन्येव पुरुषभावः प्रतीयते न तु राज-
पुरुषस्य भावः तद्धितानां प्रकृत्यर्थमात्रान्वित
स्वार्थबोधकत्वादतो राज्ञः पुरुषेत्यादिभागे न
प्रसङ्गः । पायंपायमित्यादिणमन्तभागस्तु
स्वार्था-
वच्छिन्नस्य धात्वन्तरार्थस्यैवान्वयबोधको न तु
त्वादिप्रत्ययार्थस्य प्रस्थायेत्यादौ समासव्यप-
देशोल्यवादिशब्दसंस्कारप्रयोजनको गौणः ॥"

▪ * * * * *

"यौगिकेषु क्रमप्राप्तं तद्धिताक्तं नाम लक्षयति ।
'यन्नाम तद्धितं यच्च यत्क्रमं सद्यदर्थकम् ।
यद्द्वयं यम्क्रमं तत्र तद्धिताक्तं निगद्यते ॥'
यद्यपि नामोत्तरतद्धितत्वं तद्धितोत्तरनामत्वं
वा प्रत्येकं बहुगुडो द्राक्षेत्यादौ दाक्षिरित्यादौ
चाव्यापकमेव तद्धिताक्ते नाम्नि तथापि यादृशं
नाम यच्च तद्धितं यादृशानुपूर्ब्यवच्छिन्नं सद्या-
अगुरुः । तत्पर्य्यायो यथा, --
"अयोगुरुः समुद्दिष्टो यौगिको लोहनामभिः
॥"
इति गारुडे २०५ अध्यायः ॥)

**यौजनशतिकः**, त्रि, (योजनशतं गच्छतीति ।
योजनशत +
"क्रोशशतयोजनशतयोरुपसंख्या-
नम् ।" ५ । १ । ७४ । इत्यस्य वार्त्ति०
इति । ठञ् ।)
योजनशतगमनकर्त्ता । इति
सिद्धान्तकौमुदी ॥
(योजनशतादभिगमनमर्हतीति वाक्ये
योजन-
शताभिगमनकर्त्ता । इति काशिका ॥)

**यौजनिकः**, त्रि, (योजनं गच्छतीति । योजन +
"योजनं गच्छति ।" ५ । १ । ७४ । इति
ठञ् ।)
एकयोजनगमनकर्त्ता । इति
सिद्धान्तकौमुदी ॥

**यौट**, ऋ सम्बन्धे । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।) चतुर्द्दशस्वरी । ऋ,
अयु-
यौटत् । यौटति काष्ठं तक्षा । इति दुर्गादासः
॥

**यौड**, ऋ सम्बन्धे । इति कविकल्पद्रुमः । (भ्वा०-
पर०-सक०-सेट् ।) चतुर्द्दशस्वरी । ऋ,
अयु-
यौडत् । यौडति काष्ठं तक्षा । इति
दुर्गादासः ॥

**यौतकं**, क्ली, (युतकयोर्बधूवरयोरिदम् । युतक +
अण् । युतकमेवेति । स्वार्थे अण् वा ।)
यौतु-
कम् । इति हलायुधरायमुकुटौ । २ । ८ ।
२८ ॥
(यथा, मनुः । ९ । १३१ ।
"मातुस्तु यौतकं यत् स्यात् कुमारीभाग एव
सः ॥"

कौमुदी ॥

**यौगिकः**, त्रि, (योगाय प्रभवतीति । योग + "योगाद्यच्च ।" ५ । १ । १२९ । इति ठञ् ।) प्रकृतिप्रत्यययोगलभ्यार्थवाचकः । यथा । योगाय प्रभवति । इति योग्यः यौगिकः । इति सिद्धान्त-कौमुदी ॥ "योगरूढाश्च रूढाश्च यौगिकाश्चेति ते त्रिधा । आदितेयादिशब्दा यौगिकाः अदितेरपत्यानीति ढक्प्रत्ययेन केवलं योगार्थ एव ।" इत्यलङ्कारकौस्तुभे २ किरणः ॥ * ॥ ("यौगिकं नाम लक्षयति विभजते च । 'योगलभ्यार्थमात्रस्य बोधकं नाम यौगिकम् । समासस्तद्धिताक्तञ्च कृदन्तञ्चेति तत्त्रिधा ॥' यन्नाम स्वान्तर्न्निविष्टशब्दानां योगलभ्यस्यैव यादृशार्थस्यान्वयबोधं प्रतिहेतुस्तन्नाम तादृशार्थे यौगिकम् । योगरूढन्तु कृष्णसर्पादिपदं योगेनावच्छिन्नस्य रूढ्यर्थस्य बोधकं न तु तन्मात्रस्य । तच्च यौगिकं त्रिविधं समासस्तद्धिताक्तं कृदन्तञ्चेति । द्वन्द्वोऽपि समासः स्वघटकशब्दानामाकाङ्क्षया लभ्यस्य धवखदिराद्यर्थस्यान्वयकोधकतया यौगिक एव । सर्व्वञ्चेदं रूढान्यत्वेन विशेषणीयं नातः कृष्णसर्पादौ वासुदेवादौ पङ्कजादौ च योगरूढेऽतिप्रसङ्गः । ब्राह्मणी श्वश्रूः शूद्रेत्यादौ ङीबादेः स्त्रीत्ववाचित्वे तादृशं नाम यौगिकमेव अन्यथा तु दृशार्थस्यान्वयबोधे समर्थं तादृशानुपूर्व्यवच्छिन्नं तद्द्वयमपि तादृशार्थे तद्धिताक्तं नामेत्यर्थः पचतितरामित्यादिकन्तुनामैव न प्रागेव तु तद्धिताक्तं तस्यापि लक्ष्यत्वे यः शब्दस्तद्धितं यच्चेति पठनीयं टाबादेरपि तद्धितत्वोपगमादजाब्राह्मणीत्यादेर्नासंग्रह इति वदन्ति । कृदन्तं नाम लक्षयति । 'यद्धात्वर्थान्वितस्वार्थधीकृत् कृद्यादृशं भवेत् । तद्धातूत्तरगं तत् कृत् कृदन्तं नाम तादृशम् ॥' यद्धात्वर्थान्वितस्वार्थान्वयबोधंप्रति यादृशानुपूर्व्यवच्छिन्नस्य यत्कृतो निश्चयः कारणं तद्धातूत्तरगं तत् कृदेव तादृशानुपूर्व्यवच्छिन्नं सत् कृदन्तं नाम । यथा पाठकपाठ्यमानादि तद्धि धात्वर्थेनान्वितस्य स्वार्थकर्त्तादिः कर्म्मत्वादान्वयबोधं प्रति द्वितीयाद्यंशे तादृशानुपूर्ब्बीकत्वेनं निश्चीयमानं हेतुः चैत्रेण ग्रामस्य गन्तव्यमित्यादौ धात्वर्थे स्वार्थमिष्टसाधनत्वादिकं बोधयदपि तव्यादिकं धात्वर्थनिष्ठविषयतानिरूपितस्वार्थविषयताकबोधजनकत्वेन धात्वर्थान्वितस्वार्थकमेव भावकृतामपि स्वरूपार्थकत्वं व्युत्पादितमेव ॥" इति शब्दशक्तिप्रकाशिका ॥ अस्य विशेषविवरणन्तु यौतुकशब्दे द्रष्टव्यम् ॥)

**यौतवं**, क्ली, परिमाणम् । इत्यमरः । २ । ९ । ८५ ॥

**यौतुकं**, क्ली, यौतकम् । विवाहकाले दम्पत्योर्लब्धं धनम् । उपचारात् अन्नप्राशनादिसंस्कारकाललब्धमपि । युतकं योनिसम्बन्धः तत्र भवमिति ष्णे यौतकम् । युतयोर्बधूवरयोरिदमिति वा कणि यौतकम् ॥ यौतकमुकारमध्यमपि । यौतकं यौतुकञ्च तत् । इति वाचस्पतिः ॥ यौतकादि तु यद्देयं स दायो हरणञ्च तदित्यत्रामरटीकायां भरतः ॥ * ॥ स्त्रिया यौतकधनस्याधिकारक्रमो यथा, -- "यत्त दुहितृमात्राधिकारार्थं गोतमवचनम् । 'स्त्रीधनं दुहितृणामप्रत्तानामप्रतिष्ठितानाञ्च ।' यच्च नारदस्य । 'मातुर्द्दुहितरोऽभावे दुहितृणां तदन्वयः ॥' यच्च कात्यायनस्यापि । 'दुहितृणामभावे तु रिक्थं पुत्त्रेषु तद्भवेत् ॥' यच्च याज्ञवल्क्यस्य । 'मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वयः ॥' तानि पूर्ब्बोक्तदेवलवचनविरोधेन यौतकधनमात्रविषयाणि । अतएव मनुः । ९ । १३१ ॥ 'मातुश्च यौतकंयत् स्यात् कुमारीभाग एव सः ॥' यौतकं परिणयनलब्धम् । यु मिश्रण इति धातोर्युत इति पदम् । मिश्रता च स्त्रीपुंसयोरेकशरीरता तच्च विवाहाद्भवति । अस्थिभिरस्थीनि मांसैर्म्मांसानि त्वचा त्वचमिति श्रुतेः । अतो

| | | | |
|---|---|---|---|
| | | | विवाहकाललब्धं यौतकम्। ततश्च परिणयन-<br>लब्धं स्त्रीधनं दुहितुरेव न पुत्त्राणाम्। तत्रैव |

क्रमार्थं गोतमवचनम्। स्त्रीधनं दुहितॄणाम-
प्रत्तानामप्रतिष्ठितानाञ्च। प्रथममप्रत्तानां तद-
भावे प्रत्तानां तदभावे समूढानाम्। स्त्रीधनं
दुहितॄणामितिसामान्यतःप्राप्तत्वात्। अप्रत्ता-
नामित्यादेस्तु क्रमार्थत्वात्। तथा, याज्ञ-
बल्क्यः।
'अप्रजःस्त्रीधनं भर्त्तुर्ब्राह्म्यादिषु चतुष्वपि।
दुहितॄणां प्रसूता चेच्छेषेषु पितृगामि तत्॥'
तत्र ब्राह्म्यादिषु विवाहेषु यल्लब्धमध्यग्निधनं
स्त्रिया तत् तस्यां मृतायां प्रथमं दुहितॄणामेव
तत्रापि प्रथमं कन्यायास्तदभावे प्रत्तायास्तद-
भावे परिणीतायाः सर्व्वदुहित्रभावे च पुत्त्र-
स्याधिकारः अप्रजःस्त्रीधने भर्त्तुरधिकारात्।
बृहस्पतिना अप्रत्तापदेन अप्रत्ताद्यभावे समू-
ढाया अप्यधिकारः सूचितः।
'ब्राह्म्यदैवार्षगान्धर्व्वप्राजापत्येषु यद्धनम्।
अप्रजायामतीतायां भर्त्तुरेव तदिष्यते॥
यत्त्वस्याः स्याद्धनं दत्तं विवाहेष्वासुरादिषु।
अतीतायामप्रजायां मातापित्रोस्तदिष्यते॥'
अस्याः स्याद्दत्तमिति पराचीनं पूर्ब्बत्रानुषज्यते।
तेन विवाहेषु यद्धनं दत्तमिति सम्बन्धात्
वैवाहिकधनमात्रप्रतीतेर्न यावद्धनविषयत्वम्।
तथा यमः।
'आसुरादिषु यद्द्रव्यं विवाहेषु प्रदीयते॥'
विवाहक्रियायां पूर्ब्बापरीभूतायां यद्द्रव्यं प्रदी-
यते इति यौतकधनमात्रगोचरत्वमेव प्रतीयते।"
इति दायभागः॥ * ॥ "ऊढाया यौतकधने प्रथमं
कुमारी तदभावे वाग्दत्ता अधिकारिणी।
एतयोरभावे ऊढयोः पुत्त्रवतीसम्भावितपुत्त्रयो-
व्यदारयत संग्रामे मघवा इव दानवम्॥"
वासुदेवस्य पत्नीविशेषे, स्त्री। यथा, हरिवंशे।
१६०। २० -- २१।
"कौशिक्यां सुतसोमायां यौधिष्ठिर्य्यां युधिष्ठिरः।
कापाली गरुडश्चैव जज्ञाते चित्रयोधिनौ॥
एवमादीनि पुत्त्राणां सहस्राणि निबोध मे।
दशायुतं समाख्याता वासुदेवस्य ते सुताः॥")

**यौधेयः**, पुं, (योधमर्हतीति। योध + ढञ्।
यद्वा, "पार्श्वादियौधेयादिभ्यामणञौ।" ५।
३। ११७। इति स्वार्थे अञ्।) योद्धा। इति
सिद्धान्तकौमुकी॥ (युधिष्ठिरपुत्त्रः। स च शैव्य-
राजदौत्रित्रः। यथा, महाभारते। १। ९५। ७६।
"युधिष्ठिरस्तु गोवासनस्य शैव्यस्य देविकां
नाम कन्यां स्वयम्बरां लेभे। तस्यां पुत्त्रं
जनयामास यौधेयं नाम॥" नृगराजपुत्त्राः
यौधेया इति ख्याताः। यथा, हरिवंशे। ३१। २५।
"दृषद्वत्यास्तु संजज्ञे शिविरौशीनरो नृपः।
शिवेस्तु शिवयस्तात! यौधेयास्तु नृगस्य ह॥")

**यौनं**, क्ली, (योनेरिदमिति। योनि + अण्।)
योनिसम्बन्धाधीनपापम्। यथा। बौधायनः।
"संवत्सरेण पतति पतितेन सहाचरन्।
याजनाध्यापनाद्यौनात् सद्यो हि शयना-
शनात्॥"
सुमन्तुः। यश्चैतैर्यौनमौखश्रौवादीनां सम्बन्धा-
"आषोडशाद्भवेद्बालस्तरुणस्तत उच्यते।
बृद्धः स्यात् सप्ततेरूर्द्ध्वं वर्षीयान् नवतेः परम्॥"
इति स्मृतिः॥
नवयौवनलक्षणं यथा, --
"दरोद्भिन्नस्तनं किञ्चित् चलाक्षं मेदुरस्मितम्।
मनागभिस्फूरद्भावं नव्यं यौवनमुच्यते॥"
इत्युज्ज्वलनीलमणिः॥
("गर्भेश्वरत्वम् अभिनवयौवनत्वमप्रतिरूपत्वम-
मानुषशक्तित्वञ्चेति महतीयं खल्वनर्थपरम्परा।
सर्व्वाविनयानामेकैकमप्येषामायतनम्। किमुत
समवायः। यौवनारम्भे च प्रायः शास्त्रजल-
प्रक्षालननिर्म्मलापि कालुष्यमुपयाति बुद्धिः।
अनुज्झितधवलतापि सरागैव भवति यूनां
दृष्टिः। अपहरति च वात्येव शुष्कपत्रं समु-
द्भूतरजोभ्रान्तिरदूरमात्मेच्छया यौवनसमये
पुरुषं प्रकृतिः। इन्द्रियहरिणहारिणी च
सततमतिदुरन्तेयमुपभोगमृगतृष्णिका। नव-
यौवनकषायितात्मनश्च सलिलानीव तान्येव
विषयस्वरूपाण्यास्वाद्यमानानिमधुरतराण्या-
पतन्ति मनसः। नाशयति च दिङ्मोह इवो-
न्मार्गप्रवर्त्तकः पुरुषमत्यासङ्गो विषयेषु।" इति
कादम्बर्य्यां चन्द्रापीडं प्रतिशुकनाशोपदेशः॥)
नवयौवनकारकमौषधं यथा, --
"अश्वगन्धानागबलागुडमांसनिषेविणाम्।
रूपं भवेद्यथा तद्वत् नवयौवनचारिणाम्॥"
इति गारुडे १८९ अध्यायः॥

**यौवनकण्टकं**, पुं, क्ली, (यौवने कण्टकमिव
दुःखदत्वात्।) युवगण्डः। इति शब्दमाला
वयस्फोडा इति भाषा॥

**यौवनपिडका**, स्त्री, (यौवने पिडका।) युवकाले
मुखे जातः क्षुद्रस्फोटकः। वयस्फोडा इति
भाषा॥ (यथा, सुश्रुते निदानस्थाने। १३।
"यौवनपिडका पद्मिणी कण्टका जतुमणिरि-
त्यादि॥") तल्लक्षणं यथा, --
"शाल्मलीकण्टकप्रख्याः कफमारुतशोणितैः।
जायन्ते पिडका यूनां वक्त्रे या मुखदूषिकाः॥"
इति सुश्रुते। १। १४ अध्यायः॥
अस्याश्चिकित्सा मुखदूषिकाशब्दे द्रष्टव्या॥

र्युगपदधिकारः । एकाभावे चापरायाः । एतयो-
रभावे बन्ध्याविधवयोस्तुल्याधिकारः। एकाभावे
चापरायाः । ततः पुत्त्रदौहित्रपौत्त्रप्रपौत्त्रस-
पत्नीपुत्त्रपौत्त्रप्रपौत्त्राणांक्रमेणाधिकारः । ग्रन्थ-
कृन्मते सपत्नीपुत्त्रानन्तरं दौहित्रस्याधिकार
इति विशेषः । ततो ब्राह्म्यादिविवाहपञ्चक-
समयलब्धयौतकधने भर्त्ता भ्राता माता पिता
चेति क्रमः । आसुरादिविवाहत्रयसमयलब्ध
यौतकधने माता पिता भ्राता भर्त्ता चेति क्रमः ।
ततो देवरः ततो देवरपुत्त्रभर्त्तृश्वशुरपुत्त्रौ
भगिनीपुत्त्रः ततो भर्त्तृभागिनेयः ततो भ्रातृपुत्त्रः
ततो जामाता ततः श्वशुरः ततो भ्रातृश्वशुरः
तत आनन्तर्य्यक्रमेण सपिण्डाः ततः सकुल्याः
ततः समानोदकाः ।” इति तट्टीकायां श्रीकृष्ण-
तर्कालङ्कारः ॥

**यौधिष्ठिरं**, त्रि, (युधिष्ठिरस्य इदमिति । युधिष्ठिर + अण् ।) युधिष्ठिरसम्बन्धि । यथा, --
“सा च यौधिष्ठिरी सेना गाङ्गेयशरताडिता ।
प्रतिपत्पाठशीलानां विद्येव तनुतां गता ॥”
इति महाभारतम् ॥
(युधिष्ठिरस्यापत्ये, पुं । यथा, महाभारते । ६ । ५० । ५९ ।
“यौधिष्ठिरः सुसंक्रुद्धः सौवलं निशितैः शरैः ।
नामन्यतमेन सह सम्पर्कमियात् तस्याप्येतदेव
प्रायश्चित्तं विदध्यादिति । इयात् कुर्य्यात् ।
एतदेवेति द्वादशवार्षिकमित्यर्थः । अत्र याज-
नादीनामन्यतमेन संवत्सरेण पततीत्यवगम्यते ।
इति प्रायश्चित्तविवेकः ॥
(उत्पत्तिकारणम् । यथा, महाभारते । १३ । १०२ । २५ ।
“यत्राग्नियौनाश्च वसन्ति लोका
अब्योनयः पर्व्वतयोनयश्च ॥”
उत्तरापथजातजातिविशेषे, पुं । यथा, महा-
भारते । १२ । २०७ । ४३ ।
“उत्तरापथजन्मानः कीर्त्तयिष्यामि तानपि ।
यौनकाम्भोजगान्धराः किराता वर्व्वरैः सह ॥”)

**यौवतं**, क्ली, (युवतीनां समूहः । युवति + “भिक्षादिभ्योऽण् ।” ४ । २ । ३८ । इति अण् ।
पुंवद्भावाभावश्च ।) युवतिसमूहः । इत्यमरः । २ ।
६ । २२ ॥ (यथा, गीतगोविन्दे । १० । १५ ।
“रतिस्तव कलावती रुचिरचित्रलेखे भ्रुवा-
वहो विबुधयौवतं वहसि तन्वि ! पृथ्वीगता ॥”
युवतिभिः कृतमिति । नृत्यविशेषः । यथा,
सङ्गीतदामोदरे ।
“मधुरं बहुलीलाभिर्नटीभिर्यत्र नृत्यते ।
वशीकरणविद्याभं तल्लास्यं यौवतं मतम् ॥”)
परिमाणम् । इति अमरटीकायां भरतः ॥

**यौवनं**, क्ली, (युवन् + “हायनान्तयुवादिभ्योऽण् ।” ५ । १ । १३० । इति अण् ।) यूनो भावः ।

**यौवनलक्षणं**, क्ली, (यौवनस्य लक्षणं चिह्नम् ।)
लावण्यम् । स्तनः । इति मेदिनी । ने, ११७ ॥
तारुण्यचिह्नम् ॥

**यौवनाश्वः**, पुं, (युवनाश्वस्यापत्यमिति । युवनाश्व + अण् ।) मान्धातृराजः । इति त्रिकाण्डशेषः ॥
अपि च ।
“यौवनाश्वोऽथ मान्धाता चक्रवर्त्त्यवनीप्रभुः ।
सप्तद्वीपवतीमेकः शशासाच्युततेजसा ॥
ईजे च यज्ञं क्रतुभिरात्मविद्भूरिदक्षिणैः ॥
सर्व्वदेवमयं देवं सर्व्वात्मकमतीन्द्रियम् ॥
द्रव्यं मन्त्रो विधिर्यज्ञो यजमानस्तथर्त्विजः ।
धर्म्मो देशश्च कालश्च सर्व्वमेतद्यदात्मकम् ॥
यावत् सूर्य्य उदेति स्म यावच्च प्रतितिष्ठति ।
तत् सर्व्वं बौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥

| | | |
|---|---|---|
| | तत्पर्य्यायः । तारुण्यम् २ । इत्यमरः ॥<br>वयः ३<br>इति जटाधरः ॥ तत्तु षोडशवर्षमारभ्य<br>सप्तति-।<br>वर्षपर्य्यन्तम । यथा, -- | |

शशविन्दोर्दुहितरि बिन्दुमत्यामधान्नृपः ।
पुरुकुत्समम्बरीषं मुचुकुन्दञ्च योगिनम् ॥
तेषां स्वसारः पञ्चाशत् सौभरिं वव्रिरे पतिम् ॥”
इति श्रीभागवते ९ स्कन्धे ६ अध्यायः ॥

**यौवनाश्वकः**, पुं, (यौवनाश्व + स्वार्थे कन् ।)
मान्धातृराजः । इति जटाधरः ॥

**यौष्माकं**, त्रि, (युष्मद् + अण् । “तस्मिन्नणि च
युष्माकास्माकौ ।” ४ । ३ । २ । इति प्रकृते-
र्युष्मकादेशः ।) युष्मत्सम्बन्धि । युष्माकमिदं
इत्यर्थे ष्णप्रत्ययेन निष्पन्नम् । इति मुग्धबोध-
व्याकरणम् ॥ (यथा, कथासरित्सागरे । ११२ ।
२०५ ।
“इत्याद्यस्मासु जल्पत्सु मिलितेष्वत्र तत्क्षणम् ।
विद्याधरो धूमशिखो यौष्माकोऽवातरद्दिवः ॥”)

**यौष्माकीनं**, त्रि, (युष्मद् + “युष्मदस्मदोरन्यतरस्यां
खञ्च ।” ४ । ३ । १ । इति खञ् । “तस्मिन्नणि चेति ।”
४ । ३ । २ । इति युष्माकादेशः ।) युष्मत्सम्बन्धि ।
युष्माकमिदं इत्यर्थे णीन् प्रत्ययेन निष्पन्नम् । इति
मुग्धबोधव्याकरणम् ॥ युष्मच्छब्दे अलिखित-
त्वादवसरसङ्गत्या गौणयुष्मदस्मच्छब्दप्रयोगोऽत्र
लिख्यते । युष्मदस्मदोर्मुख्यत्वे गौणत्वे च सिजस्
ङेङसां स्वरूपग्रहणात् तेषु परेषु त्वाहयूयवय-
तुभ्यमह्यतवममाः स्युरेव । सिजसांदेरन्यत्र युष्म-
दस्मदोर्मुख्यत्वे एकवचने परे त्वन्मदौ द्विवचने
परे युवावौ बहुवचने परे स्वरूपेणावस्थानम् ।
गौणत्वे तु परविभक्तिमनादृत्य युष्मदस्मदोरेकत्वे
त्वन्मदौ द्वित्वे युवावौ बहुत्वे स्वरूपेणावस्थान-
मिति ॥ * ॥ यथा त्वामतिक्रान्तः अतित्वं अतित्वां
अतियूयम् । अतित्वां अतित्वां अतित्वान् ।
अतित्वया अतित्वाभ्यां अतित्वाभिः । अति-
तुभ्यं अतित्वाभ्यां अतित्वभ्यम् । अतित्वत् अति
त्वाभ्यां अतित्वत् । अतितव अतित्वयोः अति-
त्वयाम् । अतित्वयि अतित्वयोः अतित्वासु ॥ * ॥
युवामतिक्रान्तः अतित्वं अतियुवां अतियूयम् ।
अतियुवां अतियुवां अतियुवान् । अतियुवया
अतियुवाभ्यां अतियुवाभिः । अतितुभ्यं अति-
युवाभ्यां अतियुवभ्यम् । अतियुवत् अतियुवाभ्यां
अतियुवत् । अतितव अतियुवयोः अतियुवयाम् ।
अतियुवयि अतियुवयोः अतियुवासु ॥ * ॥
युष्मानतिक्रान्तः अतित्वं अतियुष्मां अतियूयम् ।
अतियुष्मां अतियुष्मां अतियुष्मान् । अतियुष्मया
अतियुष्माभ्यां अतियुष्माभिः । अतितुभ्यं अति-
युष्माभ्यां अतियुष्मभ्यम् । अतियुष्मत् अति-
युष्माभ्यां अतियुष्मत् । अतितव अतियुष्मयोः
अतियुष्मयाम् । अतियुष्मयि अतियुष्मयोः अति-
युष्मासु ॥ * ॥ मामतिक्रान्तः अत्यहं अतिमां
अतिवयम् । अतिमां अतिमां अतिमान् ।
अतिमया अतिमाभ्यां अतिमाभिः । अतिमह्यं
अतिमाभ्यां अतिमभ्यम् । अतिमत् अति-
माभ्यां अतिमत् । अतिमम अतिमयोः
अतिमयाम् । अतिमयि अतिमयोः अति-
मासु ॥ * ॥ आवामतिक्रान्तः अत्यहं अत्यावां
अतिवयम् । अत्यावां अत्यावां अत्यावान् ।
अत्यावया अत्यावाभ्यां अत्यावाभिः । अति-
मह्यं अत्यावाभ्यां अत्यावभ्यम् । अत्यावत्
अत्यावाभ्यां अत्यावत् । अतिमम अत्यावयोः
अत्यावयाम् । अत्यावयि अत्यावयोः अत्या-
वासु ॥ * ॥ अस्मानतिक्रान्तः अत्यहं अत्यस्मां
अतिवयम् । अत्यस्मां अत्यस्मां अत्यस्मान् ।
अत्यस्मया अत्यस्माभ्यां अत्यस्माभिः । अतिमह्यं
अत्यस्माभ्यां अत्यस्मत् । अत्यस्मत् अत्यस्माभ्यां
अत्यस्मत् । अतिमम अत्यस्मयोः अत्यस्मयाम् ।
अत्यस्मयि अत्यस्मयोः अत्यस्मासु । इति
दुर्गादासः ॥

र

**र**, रेफः । यथा । वर्णात् कारतकारौ रादेफः ।

इति कलापसंक्षिप्तसारव्याकरणे ॥ रेफात्
कारश्च । रकारः । इति प्रक्रियाकौमुदी ॥ स तु
सप्तविंशहलवर्णः । तस्योच्चारणस्थानं मूर्द्धा ।
इति मुग्धबोधव्याकरणम् ॥ * ॥ (तथा च
शिक्षायाम् । १७ ।
"स्युर्मूर्द्धन्या ऋटुरसा दन्त्या ऌतुलसाः
स्मृताः ॥")
तस्य स्वरूपं यथा, --
"रेफञ्च चञ्चलापाङ्गि ! कुण्डलीद्वयसंयुतम् ।
रक्तविद्युल्लताकारं पञ्चदेवात्मकं सदा ।
पञ्चप्राणमयं वर्णं त्रिबिन्दुसहितं सदा ॥"
इति कामधेनुतन्त्रे ६ पटलः ॥ * ॥
तस्य लेखनप्रकारो यथा, --
"दक्षतः कुण्डली रेखा वामाद्दक्षगताप्यधः ।
पुनर्द्दक्षगता द्वेधा ततोऽधोगत्य चोद्‌र्ध्वतः ॥
भवानी शङ्करो वह्निस्तासु तिष्ठन्ति नित्यशः ।
अर्द्धमात्रा ब्रह्मरूपा महाशक्तिः प्रकीर्त्तिता ॥"
अपि च ।
"ऊद्‌र्ध्वाधःक्रमतो रेखा त्रिकोणाधोगता हि सा ।
विधिरीशः केशवश्च तासु तिष्ठन्ति नित्यशः ॥
ऊद्‌र्ध्वस्थिता तु या मात्रा सा शक्तिः परि-
कीर्त्तिता ।
तस्य मध्यगता रेखा वह्निरूपा हि सा स्मृता ।
निर्गुणोऽसौ सदा वर्णो न कदाचित् गुणीभवेत् ॥"
अस्य ध्यानं यथा, --
"ललज्जिह्वां महारौद्रीं रक्तास्यां रक्तलोच-
नाम् ।
रक्तवर्णामष्टभुजां रक्तपुष्पोपशोभिताम् ॥
रक्तमाल्याम्बरधरां रक्तालङ्कारभूषिताम् ।
महामोक्षप्रदां नित्यामष्टसिद्धिप्रदायिकाम् ॥
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत् ॥"
तत्प्रणाममन्त्रो यथा, --
"त्रिशक्तिसहितं देवि ! आत्मादितत्त्वसंयुतम् ।
सर्व्वतेजोमयं वर्णं सततं प्रणमाम्यहम् ॥"
इति वर्णोद्धारतन्त्रम् ॥ * ॥
तस्य नामानि यथा, --
"रो रक्तः क्रोधिनी रेफः पावकस्त्वोजसो मतः ।
प्रकाशादर्शनो दीपो रतकृष्णापरं बली ॥
भुजङ्गेशो मतिः सूर्य्यो धातुरक्तः प्रकाशकः ।
व्यापको रेवतीदासं कुक्ष्यंशो वह्निमण्डलम् ॥
उग्ररेखा स्थूलदण्डो वेदकण्ठपला पुरा ।
प्रकृतिः सुगलो ब्रह्मशब्दश्च गायको धनम् ॥
श्रीकण्ठ उष्मा हृदयं मुण्डी त्रिपुरसुन्दरी ।
सबिन्दुर्योनिजो ज्वाला श्रीशैलो विश्वतो-
मुखी ॥"
इति नानातन्त्रशास्त्राणि ॥
(छब्दःशास्त्रोक्तगणविशेषः । यथा, छन्दो-
मञ्जर्य्याम् । १ । ८ । "र-लमध्यः ।" लघुवर्णमध्यो
रः भवति । तस्येदं साङ्केतिकं चिह्नम् ऽ।ऽ
पद्यादौ अस्याक्षरस्य प्रयोगे दाहो भवति ।
यदुक्तं वृत्तरत्नाकरटीकायाम् ।
"यो लक्ष्मीं रस्तु दाहं व्यसनमथ लवौ शः सुखं
षस्तु खेदम् ॥"
धात्वनुबन्धविशेषः । यथा, कविकल्पद्रुमे ।
"--क्षो जक्षादि र वैदिकः ।"
"वैदिको वेदेष्वेव प्रयुक्तो न तु भाषाया-
मित्यर्थः । यथा, गार्लि स्तुतौ जगाति ॥")

**रः**, पुं, (राति ऊद्‌र्ध्वं गतच्छीति । रा + डः ।)

पावकः । तीक्ष्णः । इति मेदिनी । रे, १ ॥
कामवह्निः । इति शब्दरत्नावली ॥

**रंहः**, [स्] क्ली, (रमते येन इति । रम् +

"रमेश्च ।" उणा० ४ । २१३ । इति असुन् ।
हुगागमश्च धातोः । "अहिरहिभ्यामसुन्
इति अंहो रहः । इति धातुप्रदीपः ।" इत्यु-
ज्ज्वलदत्तः ।) वेगः । इत्यमरः । १ । १ । ६७ ॥
(यथा, रघुवंशे । २ । ३४ ।
"अलं महीपाल ! तव श्रमेण
प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ।
न पादपोन्मूलनशक्तिरंहः
शिलोच्चये मूर्च्छति मारुतस्य ॥"
महादेवः । यथा, महाभारते । १४ । ८ । १५ ।
"हरिनेत्राय मुण्डाय कृशायोत्तरणाय च ।
भास्वराय सुतीर्थाय देवदेवाय रंहसे ॥"

विष्णुः । यथा, महाभारते हरिवंशपर्व्वणि २५२ । १८ ।
"नमस्कृत्य सुरेशाय तस्मै देवाय रंहसे ।
प्रयाताः प्राग्दिशं पुण्यां विपुलं कश्यपाश्र-
मम् ॥")

**रक**, क स्वादे । आपने । इति कविकल्पद्रुमः ॥

स्वादो रसोपादनम् । क, राकयति मोदकं बालकः । इति दुर्गादासः ॥

**रक्तं**, क्ली, (रज्यत अङ्गमनेनेति । रन्ज् + क्तः ।)

कुङ्कुमम् । ताम्रम् । (अस्य पर्य्यायो यथा, --
"रक्तंवरिष्ठं म्लेच्छाख्यं ताम्रं शुल्वमुडुम्बरम् ॥"
इति वैद्यकरत्नमालायाम् ॥)
प्राचीनामलकम् । इति मेदिनी । ते, ४८ ॥
पद्मकम् । (अस्य पर्य्यायो यथा, --

"रक्तं कोकनदं
पद्ममल्पमन्यदलोहितम् ॥"
इति रत्नमाला ॥)
सिन्दूरम् । हिङ्गुलम् । इति
राजनिर्घण्टः ॥
(अस्य पर्य्यायो यथा, --
"रक्तं मर्कटशीर्षञ्च हिङ्गुलं दरदो रसः
॥"
इति रत्नमाला ॥)
(रक्तचन्दनभेदः । तत्पर्य्यायो यथा, --
"पतङ्गं रञ्जनं रक्तं पत्राङ्गञ्च कुचन्दनम्
॥"
इति रत्नमाला ॥)
शरीरस्थसप्तधात्वन्तर्गतधातुविशेषः ।
तत्-
पर्य्यायः । रुधिरम् २ असृक् ३
लोहितम् ४
अस्रम् ५ क्षतजम् ६ शोणितम् ७ ।
इत्य-
मरः । २ । ६ । ६४ ॥ पलङ्कारम् ८
रोहितम् ९
रङ्गकम् १० । इति शब्दरत्नावली ॥
कीला-
लम् ११ अङ्गजम् १२ रोधिरम् १३
स्वजम् १४ ।
इति जटाधरः ॥ त्वग्जम् १५ शोणम्
१६
लोहम् १७ चर्म्मजम् १८ । इति राज-
निर्घण्टः ॥ * ॥ अथ रक्तस्य
स्वरूपमाह ।
"यदा रसो यकृद्याति तत्र रञ्जकपित्ततः
।
रागं पाकञ्च संप्राप्य स भवेद्रक्तसंज्ञकः
॥
रक्तं सर्व्वशरीरस्थं जीवस्याधार
उत्तमः ।
स्निग्धं गुरु चलं स्वादु विदग्धं
पित्तवद्भवेत् ॥
जीवस्याधार उत्तम इति । यत आह ।
संयुक्तं काञ्जिकाभं विशेषतो दुर्गन्धि च सन्नि-
पातदुष्टम् । पित्तवद्रक्तेनातिकृष्णञ्च । द्विदोष-
लिङ्गं संसृष्टम् ॥"
"इन्द्रगोपप्रतीकाशमसंहतमविवर्णञ्च
प्रकृतिस्थं
जानीयात् ॥"
"त्वग्दोषा ग्रन्थयः शोफाः रोगाः शोणित-
जाश्च ये ।
रक्तमोक्षणशीलानां न भवन्ति कदाचन ॥"
"देहस्य रुधिरं मूलं रुधिरेणैव धार्य्यते ।
तस्माद्यत्नेन संरक्ष्यं रक्तं जीव इति स्थितिः
॥
इति सुश्रुते सूत्रस्थाने चतुर्द्दशेऽध्याये ॥ * ॥
"शीतोष्णस्निग्धरुक्षद्यैरुपक्रान्ताश्चये गदाः
।
सम्यक्साध्या न सिद्ध्यन्ति रक्तजांस्तान्
विभा-
वयेत् ॥"
अरुणाभं भवेद्वातात् फेणिलं विषदं तनु ।
पित्तात्पीतासितं रक्तं सौष्ण्यात्स्त्यायति वै
चिरात् ॥
ईषत् पाण्डुकफाद्दुष्टं पिच्छिलं तन्तुमद्धनम् ।
द्विदोषलिङ्गं संसर्गात्त्रिलिङ्गं सान्निपातिकम्
॥"
"नात्युष्णशीतं लघुदीपनीयं
रक्तेऽपनीते हितमन्नपानम् ।
तदा शरीरं ह्यनवस्थितासृ-
गग्निर्व्विशेषेण च रक्षितव्यः ॥
प्रसन्नवर्णेन्द्रियमिन्द्रियार्था
निच्छन्तमव्याहतपक्तिवेगम् ।
सुखान्वितं पुष्टिबलोपपन्नं
विशुद्धरक्तं पुरुषं वदन्ति ॥"
इति चरके सूत्रस्थाने २४ अध्यायः ॥)

**रक्तः**, पुं, लोहितवर्णः । इत्यमरः । १ । ५ । १५ ॥
कुसुम्भः । हिज्जलः । इति राजनिर्घण्टः ॥
(बन्धूकः ॥ तत्पर्य्यायो यथा, --
"बन्धूको बन्धुजीवश्च रक्तो माध्याह्निकोऽपि
च ॥"
इति भावप्रकाशष्य पूर्ब्बखण्डे प्रथभे भागे ॥)
कृष्णयोः । विद्रुमः प्रवालविशिष्टवृक्षयोः ।
कमलं पद्मपाणीयामलयोः कृष्णरत्नं
कौस्तु-
भेन्द्रनीलयोः । सिन्दूरभूषणं
सिन्दूरालङ्कार-
गजयोः । उत्पलमुत्कृष्टमांसेन्दीवरयोः ।
धन-
ञ्जयोऽग्निपार्थयोः । अम्भोजिनीदलं
पद्मपत्रपु-
टकिन्योः ।
"कमलाधिपपद्मेशौ नागजित्कान्तसूर्य्यभूः
।
रत्नाकरवरश्रीकः सदाधिकमलद्युतिः ॥"
कमलाधिपपद्मेशौ सूर्य्यकृष्णौ । नागजित्
गरुडो नागस्पर्द्धी च । कान्तः कमनीयः कं
जलं तस्यान्तश्च । सूर्य्यभूः सूर्य्योद्भवो
यमश्च ।
"सदा सिन्दूरमुज्जेता कलयन्
कमलश्रियम् ।
स्फुटशोभनताम्रश्रीर्व्वराहस्वामिदीधितिः ॥
एवं सुसम्पन्नखप्रभः विदूरमणिदीधितिः ।
प्रबालप्रबलच्छायः कलभानुमितच्छविः
॥" * ॥
रक्तश्वेतवाचकानि यथा, --
"रक्तश्वेतौ हरिशुचिपुष्करशतपत्रसूर्य्यका-
न्ताब्जः ।
नवहंसमहापद्मार्कसोदराः कमलकीलाले
॥"
हरिश्चन्द्रसूर्य्ययोः । शुचिः श्वेतवैश्वानरयोः
।
पुष्करं जलपद्मयोः । शतपत्रं हंसपद्मयोः ।
सूर्य्य-
कान्तः स्फटिके सूर्य्यवत्कान्ते च । अब्जः
शङ्खाम्बु-
जयोः । नवहंसः नवहंसे प्रत्यग्रसूर्य्ये च ।
महा-
पद्मः श्वेतनागे पद्मे च । अर्कः
स्फटिकसूर्य्ययोः ।

जीवो वसति सर्व्वस्मिन् देहे तत्र
विशेषतः ।
वीर्य्ये रक्ते मले यस्मिन् क्षीणे याति क्षयं
क्षणा-
दिति ॥
वीर्य्ये रक्ते मले च शरीरारम्भके ।
वाग्भटोक्त-
परिमाणमिते शुद्धे जीवो वसति न तु
दुष्टे
प्रवृद्धे रक्तस्रावणोपदेशस्य
वैयर्थ्यप्रसङ्गात् ।
पित्तवद्भवेत् । अम्लं भवेदित्यर्थः ॥ *
॥ अथ
रक्तस्य स्थानमाह ।
यकृत् प्लीहा च रक्तस्य मुखं स्थानं
तयोः
स्थितम् ।
अन्यत्रापि स्थितवतां रक्तानां पोषकं
भवेत् ॥"
इति भावप्रकाशः ॥
रक्तदोषनाशकौषधं यथा, --
"ब्रह्मयष्टिफलं पिष्टं वारिणा तनु लेपतः
।
तेन घृष्टं रक्तदोषः प्रणश्यति न संशयः
॥"
इति गारुडे १९२ अध्यायः ॥
("स खल्वाप्यो रसो यकृत्प्लीहानौ
प्राप्य राग
मुपैति ॥ भवतश्चात्र ।
रञ्जितास्तेजसा त्वापः शरीरस्थेन
देहिनाम् ।
अव्यापन्नाः प्रसन्नेन रक्तमित्यभिधीयते
॥
रसादेव स्त्रिया रक्तं रजःसंज्ञं प्रवर्त्तते ।
तद्वर्षाद्द्वादशाद्धूर्ध्वं याति पञ्चाशतः
क्षयम् ॥"
"रसाद्रक्तं ततो मांसम् ॥"
"तत्र फेनिलमरुणं कृष्णं परुषं तनु
शीघ्र-
गमस्कन्दि च वातेन दुष्टम् । नीलं पीतं

**रक्तः**, त्रि, अनुरक्तः । नील्यादिरञ्जितः । लोहितः ।
इति मेदिनी । ते, ४८ ॥ क्रीडारतः । इति
धरणिः ॥ * ॥ रक्तवर्णवस्तुनि यथा, --
"शोणानि भौमतीक्ष्णांशुताम्रकुङ्कुमतक्षकाः ।
गुञ्जेन्द्रगोपखद्योतविद्युत्कुञ्जरबिन्दवः ॥
दृगन्ताधरजिह्वासृङ्मांससिन्दूरधातवः ।
हिङ्गुलं कुक्कुटशिखा तेजः सारसमस्तकम्
॥
माणिक्यं हंसचञ्च्वङ्घ्री शुकमर्कटयोर्मुखम् ।
चकोरकोकिलपारावतनेत्रनखाग्रयः ॥
कुसुम्भकिंशुकाशोकजवाबन्धूकपाटलाः ।
कमलं दाडिमीपुष्पं विम्बकिम्पाकपल्लवौ ॥
ताम्बूलरागो मञ्जिष्ठालक्तकं रक्तचन्दनम् ।
त्रेता नखक्षतक्षेत्रधर्म्मरौद्ररसादयः ॥" * ॥
रक्तनीलवाचकानि यथा, --
"लोहितनीलौ पुष्करहरिविद्रुमकमलकृष्ण-
रत्नानि ।
सिन्दूरभूषणोत्पलधनञ्जयाम्भोजिनीदलानि
॥"
यथा । पुष्करं पद्माकाशयोः । हरिः सूर्य्य-
कमलं जलाम्बुजयोः । कीलालं
जलरक्तयोः ।
"सुहृद्रत्नादिभिर्भानो रत्नेनाग्ने रदांशुकैः ।
जलेभ्यो जन्मशोभाभिः सरोजकुमुदारिभिः
॥"
भानोः परस्मात् सुहृद्रत्नादिभिः ॥ * ॥
सितरक्तौ यथा । रविमित्रं चन्द्रः
रवितुल्यश्च ।
भानुरत्नं सूर्य्यकान्तः रविपद्मरागौ च ।
अग्नि-
रत्नं सूर्य्यकान्तोऽग्निपद्मरागौ च । रदांशुकं
दन्तवस्त्रे अधरश्च । जलजशोभा जलजा
चासौ
शोभा चेति पक्षे पद्मकान्तिः । एवं
सरोजारि-
शोभा सरोजस्पर्द्धिशोभा पक्षे
सरोजारिश्चन्द्रः ।
कुमुदारिशोभा कुमुदस्पर्द्धिशोभा पक्षे कुमु-
दारिरादित्यः । इति कविकल्पलतायाम् २
श्लेषस्तवके उद्दिष्टवर्णनं नाम १ कुसुमम् ॥

**रक्तकः**, पुं, (रक्तं रक्तवर्णं कायति प्राप्नोतीति ।
कै + कः ।) अम्लानवृक्षः । बन्धूकवृक्षः ।
रक्त-
वस्त्रम् । अनुरागी । इति मेदिनी । के,
१४५ ॥
विनोदी । इति शब्दरत्नावली ॥ रक्तशिग्रुः ।
रक्तैरण्डः । इति राजनिर्घण्टः ॥ (अश्व-
विशेषः । यथा, अश्ववैद्यके । ३ । १०० ।
"पीतको हरितः प्रोक्तः कषायो रक्तकः
स्मृतः ।
पक्वतालनिभो वाजी कयाहः परिकीर्त्तितः
॥"
रक्त एव स्वार्थे कन् । लोहितवर्णे, त्रि ।
यथा, बृहत्संहितायाम् । ८ । ४६ ।
"अलसस्तु जनः प्रमादिसंज्ञे
डमरं रक्तकपुष्पबीजनाशः ॥")

**रक्तकन्दः**, पुं, (रक्तः रक्तवर्णः कन्दोऽस्य ।) विद्रुमः ।
इति हेमचन्द्रः । ४ । १३२ ॥ राजपलाण्डुः
।
रक्तालुः । इति राजनिर्घण्टः ॥

| | | |
|---|---|---|
| हरितं श्यावं विस्रमनिष्टं<br>पिपीलिकामक्षि-<br>काणामस्कन्दि च पित्तदुष्टम् ।<br>गैरिकोदक-<br>प्रतीकाशं स्निग्धं शीतलं वहलं<br>पिच्छिलं चिर-<br>सावि मांसपेशीप्रभं श्लेष्मदुष्टञ्च ।<br>सर्व्वलक्षण- | | |

**रक्तकन्दलः**, पुं, (रक्तं रक्तवर्णं कन्दलं नवाङ्कुरो
यस्य ।) प्रवालम् । इति
त्रिकाण्डशेषः ॥
(गुणादयोऽस्य प्रवालशब्दे विज्ञेयाः
॥)

**रक्तकमलं**, क्ली, (रक्तं रक्तवर्णं कमलम् ।) रक्त-
वर्णोत्पलम् । तत्पर्य्यायः ।
कोकनदम् २ रक्ताम्भो-
जम् ३ अरुणकमलम् ४
शोणपद्मम् ५ रक्तोत्-
पलम् ६ अरविन्दम् ७ रविप्रियम् ८ रक्त-
वारिजम् ९ । (रक्तकम्बलम् १० ।
इति पाद्मो
त्तरखण्डे १३ अध्यायः ॥) अस्य
गुणाः । कटु-
त्वम् । तिक्तत्वम् । मधुरत्वम् ।
शिशिरत्वम् ।
रक्तदोषहरत्वम् ।
पित्तकफवातशमनत्वम् ।
सन्तर्पणकारणत्वम् । वृष्यत्वञ्च ।
इति राज-
निर्घण्टः ॥ तत्पर्य्यायगुणाः ।
"विशेषतः सितं पद्मं
पुण्डरीकमिति स्मृतम् ।
रक्तं कोकनदं ज्ञेयं नीलमिन्दीवरं
स्मृतम् ॥
धवलं कमलं शीतं मधुरं
कफपित्तजित् ।
तस्मादल्पगुणं
किञ्चिदन्यद्रक्तोत्पलादिकम् ॥"
इति भावप्रकाशः ॥

**रक्तकम्बलं**, क्ली, (कम्बलं जलमाश्रयत्वेनास्त्यस्येति ।
अर्श आद्यच् । रक्तं रक्तवर्णं
कम्बलमुत्पल-
मिति ।) रक्तोत्पलम् । यथा, --

**रक्तकुसुमः**, पुं, (रक्तानि रक्तवर्णानि कुसुमा-
न्यस्य ।) पारिभद्रः । धन्वनवृक्षः । इति राज-
निर्घण्टः ॥

**रक्तकेशरः**, पुं, (रक्ताः केशराः किञ्जल्काः अस्य ।)
पारिभद्रः । इति रत्नमाला ॥

**रक्तकैरवं**, क्ली, (रक्तं रक्तवर्णं कैरवम् ।) रक्त-
कुमुदम् । इति जटाघरः ॥ (यथास्य पर्य्यायः ।
"तदल्पगन्धं सोमाख्यं हल्लुकं रक्तकैरवम् ॥"
इति वैद्यकरत्नमाला ॥)

**रक्तकोकनदं**, क्ली, (रक्तं रक्तवर्णं कोकनदम् ।)
रक्तोत्पलम् । इति जटाधरः ॥ (विशेषोऽस्य
रक्तोत्पलशब्दे ज्ञातव्यः ॥)

**रक्तखदिरः**, पुं, (रक्तः रक्तवर्णः खदिरः ।)
रक्तवर्णखदिरवृक्षः । तत्पर्य्यायः । रक्तसारः २
सुसारः ३ ताम्रसारकः ४ बहुशल्यः ५ याज्ञिकः
६
कुष्ठनोदनः ७ यूपद्रुमः ८ अस्रखदिरः ९
अरुः १० । अस्य गुणाः । कटुत्वम् । उष्णत्वम् ।
कषायत्वम् । गुरुत्वम् । तिक्तत्वम् । आमवाता-
स्रवातव्रणभूतज्वरनाशित्वञ्च । इति राज-
निर्घण्टः ॥ तत्पर्य्यायगुणाश्च ।
"खदिरो रक्तसारश्च गायत्री दन्तधावनः ।
कण्टकी बालपत्रश्च बहुशल्यश्च यज्ञियः ॥
खदिरः शीतलो दन्त्यः कण्डूकासारुचिप्रणुत् ।
तिक्तः कषायो मेदोघ्नः कृमिमेहज्वरव्रणान् ।
श्वित्रशोथामपित्तास्रपाण्डुकुष्ठकफान् हरेत् ॥"
इति भावप्रकाशः ॥

**रक्तगन्धकं**, क्ली, (रक्तं रक्तवर्णं गन्धकम् ।)
वोलम् । इति राजनिर्घण्टः ॥

**रक्तगुल्मः**, पुं, (रक्तजो गुल्मः इति मध्यपदलोपी
कर्म्मधारयः ।) स्त्रीणां रक्तजगुल्मरोगः । तस्यौ-
षधं यथा, --
"द्विजयष्टीत्रिकटुकं चूर्णं षीतं हरेच्छिव ! ।
तिलक्वाथेन संयुक्तं रक्तगुल्मं स्त्रिया हर ! ॥"
इति गारुडे १९६ अध्यायः ॥
"न स्पन्दते नोदरमेति वृद्धिं
भवन्ति लिङ्गानि च गर्भिणीनाम् ।
तं गर्भकालातिगमे चिकित्स्य-
मसृग्भवं गुल्ममुशन्ति तज्ज्ञाः ॥"
इति सुश्रुते उत्तरतन्त्रे ४२ अध्यायः ॥
तथा च । रक्तगुल्मस्तु स्त्रिया एव प्रजायते
।
यथा, --
"ऋतौ वा नवसूता वा यदि वा योनिरोगिणी
।
सेवते वातलानिस्त्री क्रुद्धस्तस्याः समीरणः
॥
निरुणद्ध्यार्त्तवं योन्यां
प्रतिमासमवस्थितम् ।
कुक्षिं करोति तद्गर्भलिङ्गमाविष्करोति च
॥
हृल्लासदौर्हृदस्तन्यदर्शनं क्षामतादिकम् ।
क्रमेण वायुसंसर्गात् पित्तयोनितया च तत्
॥
शोणितं कुरुते तस्या
वातपित्तोत्यगुल्मजान् ।
रुक्स्तम्भदाहातीसारतृड्ज्वरादीनुपद्रवान्
॥
गर्भाशये च सुतरां शूल दुष्टासृगाश्रये ।
योन्याश्च स्रावदौर्गन्ध्यतोदस्यन्दनवेदनाः
॥
न चाङ्गैर्गर्भवद्गुल्मः स्फुरत्यपि तु शूलवान्
।
पिण्डीभूतः स एवस्याः कदाचित् स्पन्दते
चिरात् ॥
न चास्या वर्द्धते कुक्षिर्गुल्म एव तु वर्द्धते ।
स्वदोषसंश्रयो गुल्मः सर्व्वो भवति तेन सः
॥'
पाकं चिरेण भजते नैव वा -- ॥"
इति वाभटे निदानस्थाने एकादशेऽध्याये ॥
* ॥
तथास्य चिकित्सा ।
"सरक्तगुल्मे न च पाचनन्तु
न हिङ्गुपानं कटिचालनञ्च ।

"चन्दनागुरुकर्पूरकुङ्कुमैश्च सुगन्धिभिः ।
कमलैः कुमुदैः पुष्पैः कह्लारै रक्तकम्बलैः ॥
फलैर्धूपैरपूपैश्च शोभनैर्गुडमिश्रितैः ।
अर्च्चयेद्बलिराजानं मन्त्रेण द्विजसत्तमः ॥"
इति पाद्मोत्तरखण्डे १३ अध्यायः ॥

**रक्तकरवीरकः**, पुं, (करवीर + स्वार्थे कन् । ततो रक्तः रक्तवर्णः करवीरकः ।) लोहितवर्णकरवीरपुष्पवृक्षः । लाल् कनेल् इति हिन्दी भाषा । तत्पर्य्यायः । रक्तप्रसवः २ गणेशकुसुमः ३ चण्डीकुसुमः ४ क्रूरः ५ भूतद्रावी ६ रविप्रियः ७ । अस्य गुणाः । कुटुत्वम् । तीक्ष्णत्वम् । विशोधनत्वम् । त्वद्गोषव्रणकण्डूतिकुष्ठविषहरत्वञ्च । इति राजनिर्घण्टः ॥ तत्पर्य्यायगुणाः ।
"करवीरः श्वेतपुष्पः शतकुम्भोऽश्वमारकः ।
द्वितीयो रक्तपुष्पश्च चण्डलो लगुडस्तथा ॥
करवीरद्वयं तिक्तं कषायं कटुकञ्च तत् ।
व्रणलाघवकृन्नेत्रकोपकुष्ठव्रणापहम् ।
वीर्य्योष्णं कृमिकण्डूघ्नं भक्षितं विषवन्मतम् ॥"
इति भावप्रकाशः ॥

**रक्तकाञ्चनः**, पुं, (रक्तः रक्तवर्णः काञ्चनः ।) स्वनामख्यातपुष्पवृक्षविशेषः । तत्पर्य्यायः । (तथास्य निदानादिकं यथा, --
"शोणितगुल्मस्तु खलु स्त्रिया एव भवति न पुरुषस्य गर्भकोष्ठार्त्तवागमनवैशेष्यात् । पारतन्त्र्यादवैशारद्यात् सततमपचारानुरोधाद्वेगानुदीर्णानुपरुन्धन्त्या आमगर्भे वाप्यचिरात् पतिते तथाप्यचिरप्रजाताया ऋतौ वा वातप्रकोपनान्यासेवमानाया वातः प्रकोपमापद्यते । स प्रकुपितो योन्या मुखमनुप्रविश्यार्त्तवमुपरुणद्धि मासि मासि तदार्त्तवमुपरुध्यमानं कुक्षिं वर्द्धयति । तस्याः शूलकासातीसारच्छर्द्यरोचकाविपाकाङ्गमर्द्दनिद्रालस्यकफप्रसेकाः समुपजायन्ते स्तनयोश्च स्तन्यमोष्ठयोः स्तनमण्डलयोश्च कार्ष्ण्यं म्लानिः चक्षुषोर्मूर्च्छा हृल्लासो दोहदः श्वयथुः पादयोरीषच्चोद्गमो रोमराज्या योन्याश्चाजालत्वमपिच योन्या दौर्गन्ध्यमास्रावश्चोपजायते । केवलश्चास्या गुल्मः स्यन्दते तामगर्भाङ्गर्भिणीमित्याहुर्मूढाः ॥" इति चरके निदानस्थाने तृतीयेऽध्याये ॥ यथा च ।
न चैव संस्वेदनमर्द्दनञ्च
न वा क्रमेन्नोत्प्लवनं हितञ्च ॥
रोध्रार्ज्जुनं खदिरमागधिका समङ्गा
क्वाथोऽम्रवेतससमं घृतसंप्रयुक्तम् ।
गुल्मं सरक्तमपि चाथ निहन्ति शीघ्रं
हृत्क्लेदनञ्च विनिहन्ति च क्रुद्धरक्तम् ॥
क्षीरपानं प्रदातव्यं घृतसौवर्च्चलान्वितम् ।
रक्तगुल्मविनाशाय यकृद्बिक्षतजेऽपि वा ॥
न हिङ्गुसंयुतं पथ्यं न चोष्णं न विदाहि च ।
रक्तजे क्षतजे गुल्मे मांसानि जाङ्गलानि च ॥"
इति हारीते चिकित्सितस्थाने चतुर्थेऽध्याये ॥)
अन्यत् गुल्मशब्दे द्रष्टव्यम् ॥ * ॥

**रक्तघ्नः**, पुं, (रक्तं हन्तीति । हन् + "अमनुष्यकर्त्तृके च ।" ३ । २ । ५३ । इति टक् ।) रोहितकवृक्षः । इति जटाधरः ॥ (रहितकशब्देऽस्य विशेषो ज्ञेयः ॥)

**रक्तघ्नी**, स्त्री, (रक्तं हन्तीति । इन् + टक् । ङीष् ।) दूर्व्वाविशेषः । गाँठिया दूर्वा इति भाषा ॥ यथा,
"महौषधिश्च गोलोम्यां रक्तघ्नी रक्तपित्तहा ॥"
इति शब्दचन्द्रिका ॥

**रक्तचन्दनं**, क्ली, (रक्तं रक्तवर्णं चन्दनम् ।) रक्तवर्णचन्दनकाष्ठम् । (यथा, रामायणे । २ । ३३ । ९ ।
"पद्मरागोचितां सीतां रक्तचन्दनसेविनीम् ।
वर्षमुष्णञ्च शीतञ्च नेष्यत्याशु विवर्णताम् ॥")
तत्पर्य्यायः । तिलपर्णो २ पत्राङ्गम् ३ रञ्ज-

विदलः २ चमरिकः ३ । इति

शब्दरत्नावली ॥

काञ्चनालः ४ ताम्रपुष्पः ५ कुदारः

६ । इति

जटाधरः ॥

**रक्तकाण्डा**, स्त्री, (रक्तः रक्तवर्णः काण्डः दण्डो-

ऽस्याः ।) रक्तपुनर्नवा । इति

राजनिर्घण्टः ॥

(विवरणमस्या रक्तपुनर्नवाशब्दे

विज्ञेयम् ॥)

**रक्तकाष्ठं**, क्ली, (रक्तं काष्ठं यस्य ।) पत्तङ्गम् ।

इति राजनिर्घण्टः ॥

लोहितवर्णदारु च ॥

**रक्तकुमुदं**, क्ली, (रक्तं रक्तवर्णं कुमुदम् ।) रक्त-

कैरवम् । इति जटाधरः ॥

नम् ४ कुचन्दनम् ५ । इत्यमरः । १ । ६ । १३२ ॥ ताम्रसारम् ६ ताम्रवृक्षः ७ चन्दनम् ८ । इति रत्नमाला ॥ लोहितम् ९ शोणितचन्दनम् १० रक्तसारम् ११ ताम्रसारकम् १२ क्षुद्रचन्दनम् १३ अर्कचन्दनम् १४ । इति राजनिर्घण्टः ॥ रक्ताङ्गम् १५ प्रवालफलम् १६ । इति भावप्रकाशः ॥ पत्तङ्गम् १७ पत्तगम् १८ रक्तबीजम् १९ । इति शब्दरत्नावली ॥ अस्य गुणाः । अतिशीतलत्वम् । तिक्तत्वम् । ईक्षणगतास्रदोषभूतपित्तकफकासज्वरभ्रान्तिजन्तुवमथुतृषानाशित्वञ्च। इति राजनिर्घण्टः ॥ अपि च ।
"रक्तं शीतं गुरु स्वादु च्छर्द्दितृष्णास्रपित्तहृत्।
तिक्तनेत्रहितं वृष्यं ज्वरव्रणविषापहम्॥"
इति भावप्रकाशः ॥
अन्यच्च ।
"रक्तपित्तहरं बल्यं चक्षुष्यं रक्तचन्दनम् ॥"
इति राजवल्लभः ॥

**रक्तचित्रकः**, पुं, (रक्तो रक्तवर्णश्चित्रकः ।) क्षुपविशेषः । राङ्गचिता इति भाषा ॥ तत्पर्य्यायः । कालः २ अत्यालः ३ कालमूलः ४ अतिदीप्यः ५ माज्जारः ६ अग्निः ७ दाहकः ८ पावकः ९ चित्राङ्गः १० महाङ्गः ११ । अस्य गुणाः । प्रत्नकायकरत्वम् । रुच्यत्वम् । कुष्ठघ्नत्वम् । लोहवेधकत्वम् । रसनियामकत्वम् । रसायनत्वञ्च । इति राजनिर्घण्टः ॥

**रक्तचूर्णं**, क्ली, (रक्तं रक्तवर्णं चूर्णम् ।) सिन्दूरम् । इति हारावली । ४४ ॥ रक्तवर्णचूर्णमात्रञ्च ॥

**रक्तजन्तुकः**, पुं, (रक्तः रक्तवर्णो जन्तुः । ततः स्वार्थे कन् । अथवा रक्ता आसक्ता जन्तवोऽस्मिन् ।) भूनागः । इति राजनिर्घण्टः ॥ रक्तवर्णजन्तुमात्रञ्च ॥

**रक्तजिह्वः**, पुं, (रक्ता रक्तवर्णा शोणितपानादौ आसक्ता वा जिह्वा यस्य ।) सिंहः । इति शब्दमाला ॥ रक्तवर्णजिह्वायुक्ते, त्रि ॥

विष्टम्भहारित्वम् । हितकारित्वञ्च । इति राजनिर्घण्टः ॥ (अस्या विशेषो यथा, --
"तयोर्मुख्यतरं विद्धि मूलं यदरुणप्रभम् ।
सुकुमारे शिशौ वृद्धे मृदुकोष्ठे च तत् शुभम् ॥"
इति चरके कल्पस्थाने सप्तमेऽध्याये ॥
"अरुणाभं तृवृन्मूलं श्रेष्ठं मूलविरेचने ॥"
इति सुश्रुते सूत्रस्थाने ४४ अध्यायः ॥)

**रक्तदन्तिका**, स्त्री, (रक्ता दन्ताः अस्याः) रक्तदन्ता + स्वार्थे कन् । टापि अत इत्वम् ।) चण्डिका । यथा, --
"भक्षयन्त्याश्च तानुग्रान् वैप्रचित्तान् महासुरान् ।
रक्ता दन्ता भविष्यन्ति दाडिमीकुसुमोपमाः ॥
ततो मां देवताः स्वर्गे मर्त्यलोके च मानवाः ।
स्तुवन्तो व्याहरिष्यन्ति सततं रक्तदन्तिकाम् ॥"
इति मार्कण्डेयपुराणे देवीमाहात्म्ये । ९१ । ४० ॥

**रक्तदला**, स्त्री, (रक्तानि दलान्यस्याः ।) नलिका । चिविल्लिका । इति राजनिर्घण्टः ॥

**रक्तदृक्**, [श्] पुं स्त्री, (रक्ता दृक् दृष्टिर्यस्य ।) कपोतः । इति केचित् ॥ रक्त वर्णचक्षुर्व्विशिष्टे, त्रि ॥

रक्तकौषेयवस्त्रा च स्मितवक्त्रा शुभानना ।
नवयौवनसम्पन्ना चार्व्वङ्गी ललितप्रभा ॥"
इति तिथ्यादितत्त्वम् ॥

**रक्तपल्लवः**, पुं, (रक्ताः षल्लवा अस्य ।) अशोकवृक्षः । इति राजनिर्घण्टः ॥ लोहितपत्रञ्च ॥

**रक्तपा**, स्त्री, (रक्तं पिबतीति । पा + कः + स्त्रियां टाप् ।) जलौका । डाकिनी । इति मेदिनी । गे, २१ ॥ शोणितपानकर्त्तरि, त्रि ॥

**रक्तपाकी**, स्त्री, (पच्यते इति । पच् + घञ् । रक्तः रक्तवर्णः पाके यस्याः ।) बृहती । इति राजनिर्घण्टः ॥

**रक्तपाता**, स्त्री, (रक्तं पातयतीति । पत + णिच् + अच् । स्त्रियां टाप् ।) जलौका । इति शब्दरत्नावली ॥

**रक्तपादः**, पुं, (रक्तौ पादावस्य ।) शुकपक्षी । इति हेमचन्द्रः ॥ (यथा, रामायणे । ७ । ६ । ५७ ।
"रक्षोगणस्योपरिष्टात् परिभ्रमति कालवत् ।
कपोता रक्तपादाश्च सारिका विद्रुता ययुः ॥"
तथा च याज्ञवल्क्यः । १ । १७५ ।
"चाषांश्च रक्तपादांश्च सौनं वल्लूरमेव च ।
मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं चरेत् ॥")
लोहितचरणयुक्ते, त्रि ॥

**रक्तपादी**, स्त्री, (रक्ताः पादा अस्याः ।) लज्जालुः । (अस्याः पर्य्यायो यथा, --
"लज्जालुः स्यात् शमीपत्रा समङ्गा जलकारिका ।
रक्तपादी नमस्कारी नाम्ना खदिरकेत्यपि ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥) हंसपदी । इति राजनिर्घण्टः ॥

**रक्तपायिनी**, स्त्री, (रक्तं पातुं शीलमस्याः । पा + णिनि । स्त्रियां ङीष् ।) जलौका । इति राजनिर्घण्टः ॥

**रक्तझिण्टी**, स्त्री, (रक्ता रक्तवर्णा झिण्टी ।)

रक्तवर्णझिण्टीपुष्पवृक्षः । तत्पर्य्यायः । कुरु-
वकः २ । इत्यमरः ॥ (विशेषोऽस्याः कुरुवक
शब्द ज्ञातव्यः ॥)

**रक्ततुण्डः**, पुं, (रक्तौ तुण्डौ यस्य ।) शुकपक्षी ।

इति राजनिर्घण्टः ॥ लोहितमुखयुक्ते, त्रि ॥

**रक्ततुण्डकः**, पुं, (रक्तस्तुण्डो यस्य । कन् ।

भूनागः ।) इति राजनिर्घण्टः ॥

**रक्ततृणा**, स्त्री, (रक्तानि तृणान्यस्याम् ।) गोमू-

त्रिका । इति राजनिर्घण्टः ॥

**रक्तत्रिवृत्**, स्त्री, (रक्ता त्रिवृत् ।) रक्तवर्ण-

त्रिवृता । लाल तेउडी । इति भाषा ॥ तत्
पर्य्यायः । कालिन्दी २ त्रिपुटा ३ ताम्रपुष्पिका ४
कुलवर्णा ५ मसूरी ६ अमृता ७ काक
नासिका ८ । अस्या गुणाः । तिक्तत्वम् । कटु
त्वम् । उष्णत्वम् । रेचनत्वम् । ग्रहणीमल-

**रक्तधातुः**, पुं, (रक्तो रक्तवर्णो धातुः ।) गैरि

कम् । इति त्रिकाण्डशेषः ॥
(अस्य पर्य्यायो
यथा, --
"गैरिकं रक्तधातुश्च गैरेयं
गिरिजन्तथा ।
सुवर्णगैरिकन्त्वन्यत्ततो रक्ततरं
हि तत् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ॥)
ताम्रम् । इति राजनिर्घण्टः ॥
रक्तवर्णधातु
मात्रञ्च ॥

**रक्तनालः**, पुं, (रक्तो नालोऽस्य ।) जीवशाकः

इति राजनिर्घण्टः ॥
(विवरणमस्य जीव
शाकशब्दे विज्ञेयम् ॥)

**रक्तनासिकः**, पुं, (रक्ता नासिकास्य ।) पेचकः ।

इति शब्दरत्नावली ॥
लोहितनासायुक्ते, त्रि ॥

**रक्तपः**, पुं, (रक्तं पिबतीति । पा + कः ।)

राक्षसः । इति मेदिनी । पे, २१
॥ रक्तपान-
कर्त्तरि, त्रि ॥

**रक्तपक्षः**, पुं, (रक्तौ पक्षौ अस्य ।) गरुडः । इति

केचित् ॥

**रक्तपत्रिका**, स्त्री, (रक्तानि पत्राण्यस्याः । स्वार्थे

कन् । टापि अत इत्वञ्च ।)
नाकुली । रक्त-
पुनर्नवा । इति राजनिर्घण्टः ॥
लोहितपत्रञ्च ।

**रक्तपदी**, स्त्री, क्षुद्रवृक्षविशेषः । यथा, --

"शमीपत्रा रक्तपदी
समङ्गाञ्जलिकारिका ॥"

**रक्तपायी**, [न्] त्रि, (रक्तं पातुं शीलमस्य ।

पा + णिनिः ।) रक्तपानशीलः । इति व्याकर-
णम् ॥

**रक्तपारदं**, क्ली, (रक्तं रक्तवर्णं पारदम् ।) हिङ्गु-

लम् । इति हारावली । १५५ ॥ जटाधरे, पुं
॥

**रक्तपिण्डं**, क्ली, (रक्तं रक्तवर्णं पिण्डमिव ।)

जवापुष्पम् । इति शब्दरत्नावली ॥

**रक्तपिण्डकः**, पुं, (रक्तपिण्डमिवेति । रक्तपिण्ड +

इवार्थे कन् ।) रक्तालुः । इति राजनिर्घण्टः ॥

**रक्तपित्तं**, क्ली, (रक्तदूषकं पित्तमिति । मध्यपदलोपी

कर्म्मधारयः । "रक्तञ्च पित्तञ्च रक्तपित्त-
मिति द्वन्द्व इति सुश्रुतः । रक्तञ्च तत्
पित्तञ्चेति
रक्तपित्तं रागप्राप्तं पित्तमिति कर्म्मधारय इति
चरकः ।") रोगविशेषः । तस्य निदानं यथा,
धन्वन्तरिरुवाच ।
"अथातो रक्तपित्तस्य निदानं प्रवदाम्यहम् ।
भृशोष्णतिक्तकट्वम्ललवणादिविदाहिभिः॥
कोद्रवोद्दालकैश्चान्यैस्तदुक्तैरतिसेवितैः ।
कुपितं पित्तलैः पित्तं द्रवं रक्तञ्च मूर्च्छयेत् ॥

| | | |
|---|---|---|
| | इति जटाधरः ॥<br><br>**रक्तपद्मः**, पुं क्ली, (रक्तो रक्तवर्णो पद्मः ।) रक्त-<br>वर्णकमलम् । तत्पर्य्यायः ।<br>रक्तसरोरुहम् २<br>रक्तोत्पलम् ३ कोकनदम् ४ ।<br>इत्यमरः । १ ।<br>१० । ४२ ॥ अस्य प्रमाणं<br>यथा, --<br>“यैषा ललितकान्ताख्या देवी<br>मङ्गलचण्डिका ।<br>वरदाभयहस्ता च द्विभुजा<br>गौरदेहिका ॥<br>रक्तपद्मासनस्था च<br>जटामुकुटमण्डिता ॥ | |

ते मिथस्तुल्यरूपत्वमागम्यव्याप्नुवंस्तनुम्
।
पित्तरक्तस्य विकृतेः संसर्गाद्दूषणादपि ॥
गन्धवर्णानुवृत्तेषु रक्ते न व्यपदिश्यते ।
प्रभवत्यसृजस्तस्मात् प्लीहतो यकृतश्च
तत् ॥
शिरोगुरुत्वमरुचिः शीतेच्छा मधुकोत्कफः ।
छर्द्दितृट्छर्द्दिवैभत्स्यं काशः श्वासो भ्रमः
क्लमः ॥
लोहितोऽलोहितो मत्स्यामगन्ध्यास्यञ्च
विज्वरः ।
रक्तहारिद्रहरितवर्णता नयनादिषु ॥
नीललोहितपीतानां वर्णानामविचेतनम् ।
स्वप्ने तदर्थधर्म्मित्वं भवत्यस्मिन्
भविष्यति ॥
ऊद्ध्वं नासाक्षिकर्णास्यैर्म्मेढ्रयोनिगुदैरधः ।
कुपितं रोमकूपैश्च समस्तैस्तत् प्रवर्त्तते ॥
ऊद्ध्वं साध्यं कफाद्यस्मात्
तद्विरेचनसाधितम् ।
बह्वौषधञ्च पित्तस्य विरेको हि वरौषधम् ॥
अनुबन्धी कफो यश्च तत्र तस्यापि
शुद्धिकृत् ।
कषायाः स्वादवो यस्य विशुद्धे
श्लेष्मलोहिताः ॥
कटुतिक्तकषाया वा ये निसर्गात् कफावहाः
।
अधो याप्यञ्च नामुष्मात् तत्
प्रवर्द्धनसाधनम् ॥
अल्पौषधञ्च पित्तस्य वमनं ननु चौषधम् ।
अनुबन्धि च लोपस्य शान्तपित्तनरस्य तत्
॥
कषायाश्च हितास्तस्य मधुरा एव केवलम् ।
कफमारुतसंस्पृष्टमसाध्यमुपनायनम् ॥
असह्यप्रतिलोमत्वादसाध्यादौषधस्यच ।
नहि संशोधनं किञ्चिदस्य च प्रतिलोमनम् ॥
शोधनं प्रतिलोमञ्च रक्तपित्ते विनिर्ज्जितम् ।
एवमेवोपशमनं सर्व्वशोधनमिष्यते ॥
संसृष्टेष्वाह दोषेषु सर्व्वथा छर्द्दनं हितम् ।
तत्र दोषोऽत्र गमनं शिवास्त्र इव लक्ष्यते ।

सुश्रुतः ॥ रक्तञ्च तत् पित्तञ्चेति रक्तपित्तं
राग-
प्राप्तं पित्तमिति कर्म्मधारय इति चरकः
॥
मार्गानाह ।
‘ऊद्ध्वं
नासाक्षिकर्णास्यैर्म्मेढ्रयोनिगुदैरधः ।
कुपितं रोमकूपैश्च समस्तैस्तत् प्रवर्त्तते
॥’
कुपितमतिकुपितम् ॥ * ॥ पूर्ब्बरूपमाह
।
‘सदनं शीतकामित्वं कण्ठधूमायनं
वमिः ।
लोहगन्धिश्च निश्वासो भवत्यस्मिन्
भविष्यति ॥’
विशिष्टं रूपमाह ।
‘सान्द्रं सपाण्डु सस्नेहं पिच्छिलञ्च
कफान्वितम् ।
श्यावारुणं सफेणञ्च तनुरूक्षञ्च
वातिकम् ॥
रक्तपित्तं कषायाभं कृष्णं गोमूत्रसन्निभम्
।
मेचकागारधूमाभमञ्जनाभञ्चपैत्तिकम् ।
संसृष्टलिङ्गं संसर्गात्त्रिलिङ्गं
सान्निपातिकम् ॥’
सपाण्डु ईषत्पाण्डु । पिच्छिलं
मयूरपिच्छच्छवि-
युक्तम् । कृष्णं कज्जलाभम् । मेचकं
चिक्कण-
कृष्णवर्णम् । अञ्जनं श्रोतोऽञ्जनं तदाभम्
॥ * ॥
संसर्गाविशेषेण मार्गभेदमाह ।
‘ऊद्ध्वगं कफसंसृष्टमधोगं
मारुतानुगम् ।
द्विमार्गं कफवाताभ्यां उभाभ्यां
तत्प्रवर्त्तते ॥’ * ॥
उपद्रवानाह ।
‘दौर्ब्बल्यश्वासकासज्वरवमथुमदाः
पाण्डुता

दिकं वियच्च रक्तं पश्यति स नश्यति
वियच्चापि
अदृश्यमपीत्यर्थः ॥ * ॥ अरिष्टमाह ।
‘लोहितं छर्दयेद्यस्तु बहुशो लोहितेक्षणः ।
लोहितोद्गारदर्शी च म्रियते रक्तपित्तकः ॥’
लोहितोद्गारदर्शी व्याधिमहिम्नोद्गारमपि
लोहितं पश्यति इत्यर्थः ॥ * ॥ अथ
रक्तपित्तस्य
चिकित्सा ।
‘पित्तास्रं स्तम्भयेन्नादौ प्रवृत्तं बलिनोऽन्नतः
।
हृत्पाण्डुग्रहणीरोगप्लीहगुल्मज्वरादिकृत् ॥
शालिषष्टिकनीवारकोरदूषप्रसाधिकाः
श्यामाकाश्च प्रियङ्गुश्च भोजनं
रक्तपित्तिनाम् ॥’
प्रियङ्गुः कङ्गुः ।
‘मसूरमुद्गचणकाः समकुष्ठाढकीफलाः ।
प्रशस्ताः सूपयूषार्थे कल्पिता रक्तपित्तिनाम्
।
दाडिमामलकं विद्वानम्लार्थे चापि दापयेत् ।
पटोलनिम्बवेत्राग्रप्लक्षवेतसपल्लवाः ॥
शाकार्थे शाकसात्म्यानां तण्डुलीयादयो
हिताः ।
पारावतान् कपोतांश्च लावान्रक्ताक्षवर्त्तकान्
॥
शशान् कपिञ्जलानेणान् हरिणान्
कालपुच्छ-
कान् ।
रक्तपित्तहरान् विद्याद्रसांस्तेषां प्रयोजयेत् ॥
ईषदम्लाननम्लांश्च घृतभृष्टान् ससैन्धवान्
।
कफानुग्रे यूषशाके दद्याद्वातानुगे रसम् ॥
पथ्यं सतिलयूषेणससितालाजशक्तुभिः ।
धान्याकधात्रीवासानां द्राक्षापर्पटयोर्हिमः ।
रक्तपित्तं ज्वरं दाहं तृष्णां शोषञ्च नाशयेत्
॥’
धान्याकादेर्हिमः ॥ * ॥
‘ह्रीवेरमुत्पलं ध्यान्यं चन्दनं यष्टिकामृता ।
उषीरञ्च वृषश्चैषां क्वाथं समधुशर्करम् ॥

उपद्रवाश्च विकृतं फलतस्तेषु चाधिकम् ॥”
इति गारुडे १५३ अध्यायः ॥ * ॥
तस्यौषधं यथा, --
“त्रिवृता त्रिफला श्यामा पिप्पली शर्क्करा मधु ।
मोदकः सन्निपातान्तो रक्तपित्तज्वरापहः ॥
वाशायां विद्यमानायामाशायां जीवितस्य च ।
रक्तपित्ती क्षयी कासी किमर्थमवसीदति ॥
अटरूषकमृद्वीकापथ्याक्वाथःसशर्करः ।
क्षौद्राढ्यः कासनश्वासरक्तपित्तनिवर्ह्णः ॥”
इति गारुडे १७४ अध्यायः ॥ * ॥
अपि च । “तत्र रक्तपित्तस्य निदानपूर्व्विकां संप्राप्तिमाह ।
‘घर्म्मव्यायामशोकाध्वव्यवायैरतिसेवितैः ।
तीक्ष्णोष्णक्षारलवणैरम्लैः कटुभिरेव च ।
पित्तं विदग्धं स्वगुणैर्व्विदहत्याशु शोणितम् ॥’
तीक्ष्णं मरिचादि । उष्णोऽग्नितापादिः । क्षारो यवक्षारादिः । विदग्धं दूषितम् । स्वगुणैः स्वकारणैर्गुणैस्तीक्ष्णादिभिः । गुणैरिति बहु-त्वेन तीक्ष्णाम्ललवणकटूष्णघर्म्मादयो गृह्यन्ते ।
विदहति दूषयति ॥ * ॥ रक्तपित्तस्य सामान्य-
लक्षणमाह ।
‘ततः प्रवर्त्तते रक्तमूर्द्ध्वं वाधो द्विधापि वा ।’
रक्तमित्युपलक्षणम् । तत्संसर्गि पित्तञ्च । अत-
एव रक्तञ्च पित्तञ्च रक्तपित्तमिति द्वन्द्व इति
दाहमूर्च्छा
भुक्ते घोरो विदाहस्त्वधृतिरपि सदा हृद्य-
तुल्या च पीडा ।
तृष्णा कोष्ठस्य भेदः शिरसि च तपनं पूति-
निष्ठीवनञ्च
द्वेषो भुक्तेऽविपाको विकृतिरपि भवेद्रक्तपि-
त्तोपसर्गाः ॥’
उपसर्गा उपद्रवाः ।
विकृतिर्मांसप्रक्षालनाभ-
त्वादिः ॥ * ॥ साध्यत्वादिकमाह ।
‘एकदोषानुगं साध्यं द्विदोषं याप्यमुच्यते ।
यत्त्रिदोषमसाध्यं
स्यान्मन्दाग्नेरतिवेगवत् ॥
ऊर्द्ध्वं साध्यमधो याप्यमसाध्यं
युर्गपद्गतम् ।
व्याधिभिः क्षीणदेहस्य
वृद्धस्यानश्नतश्च यत् ॥’
साध्यमाह ।
‘एकमार्गं बलवतो नातिवेगं न
चोत्थितम् ।
रक्तपित्तं सुखे काले साध्यं
स्यान्निरुपद्रवम् ॥’
सुखे काले हिमशिशिरयोः ॥ * ॥
असाध्यमाह ।
‘मांसप्रक्षालनाभं क्वथितमिव च यत् कर्दमाम्भो-
निभं बा
मेदः पूयास्रकल्पं यकृदिव यदि वा पङ्कजं वा
कफाभम् ।
यत् कृष्णं यच्च नीलं भृशमपि कुणपं यत्र
चोक्ता विकारा-
स्तद्वर्ज्ज्यं रक्तपित्तं सुरपतिधनुषा यच्च तुल्यं
विभाति ॥’
पाययेत्तेन सद्यो हि रक्तपित्तं प्रणश्यति ।
रक्तपित्तं जयत्युग्रं तृष्णां दाहं ज्वरं तथा ॥ * ॥
पुराणं पीनमानीय कुष्माण्डस्य फलं दृढम् ।
तद्बीजाधारबीजत्वक्शिराशून्यंसमाचरेत् ॥
ततस्तस्य तुलां नीत्वा पचेज्जलतुलाह्वये ।
तस्मिन्नीरेऽर्द्धशिष्टे तु यत्नतः शीतलीकृते ॥
तानि कुष्माण्डखण्डानि पीडयेद्दृढवाससा ।
यत्नतस्तज्जलं नीत्वा पुनः पाकाय धारयेत् ॥
कुष्माण्डं शोषयेद्धर्म्मे ताम्रपात्रे ततः क्षिपेत् ।
क्षिप्त्वा तत्र घृतप्रस्थं कुष्माण्डं तेन भर्ज्जयेत् ॥
मधुवर्णं तदालोक्य तज्जलं तत्र निःक्षिपेत् ।
सितायाश्च तुलां तत्र क्षिप्त्वा तल्लेहवत् पचेत् ॥
सुपक्वे पिप्पलीशुण्ठीजीराणांद्वे पले पृथक् ।
पृथक् पलार्द्धं धन्याकपत्रैलामरिचं त्वचम् ॥
चूर्णमेषां क्षिपेत्तत्र घृतार्द्धं क्षौद्रमावपेत् ।
एतत् पलमितं खादेदथवाग्निबलं यथा ॥
खण्डकुष्माण्डलेहोऽयं रक्तपित्तं विनाशयेत् ।
पित्तज्वरं तृषां दाहं प्रदरं कृशतां वमिम् ॥
स्वरभेदं सहृद्रोगं कासं श्वासं क्षतं क्षयम् ।
नाशयत्येव वृष्योऽयं बृंहणो बलवर्द्धनः ॥’
इति खण्डकुष्माण्डावलेहः ॥ * ॥
‘शतावरीमूलकल्कं कल्कात् क्षीरं चतुर्गुणम् ।
क्षीरतुल्यं घृतं गव्यं सितया कल्कतुल्यया ॥

| | | |
|---|---|---|
| | उक्ता विकारा दौर्बल्यादयः। सुरपतिधनुषा तुल्यं नानावर्णम्। 'येन चोपहतो रक्तं रक्तपित्तन मानवः। पश्येद्दृश्यं वियच्चापि तच्चासाध्यमसंशयम्॥' येन रक्तपित्तेन उपहतो मनुष्यः दृश्यं घटपटा- | |

घृतशेषं पचेत्तत्तु पलार्द्धं लेहयेत् सदा ।
रक्तपित्तं ह्यम्लपित्तं क्षयं श्वासञ्च नाशयेत् ॥’
शतावरीपाकः । इति रक्तपित्ताधिकारः ॥”
इति भावप्रकाशः ॥
(तथास्य सनिदानपूर्ब्बरूपलक्षणं सम्प्राप्तिश्च ।
“पित्तं यथा भूतं लोहितपित्तसंज्ञां लभते तत्तथानुव्याख्यास्यामः । यदा यस्तु जन्तुर्यव-कोद्दालककोरदूषकप्रायाण्यन्नानि नित्यं भुङ्क्ते भृशोष्णतीक्ष्णमपि चान्यदन्नजातं निष्पावमाष-कुलत्थक्षारसूपोपहितं दधिमण्डोदश्वित् कट्वम्ल-काञ्जिकोपहितं वाराहमाहिषाविकमत्स्यगव्य-पिशितं पिण्याकं पिण्डालकशाकोपहितं मूलक-सर्षपलशुनकरञ्जशिग्रुकखरयूषभूस्तृणक-सुमुखसुरसकुठेरकण्डीरकालक-पर्णासक्षवक-फणिज्झकोपदंशं सुरासौवीरतुषोदकमैरेय-मेदकमधूलककुवरवदराम्लप्रायानुपानं पिष्टान्नो-त्तरभूयिष्ठमुष्णाभितप्तोचातिमात्रमतिवेलं वा पयसा समश्नाति रौहिणीकलकङ्कापोतं वा सर्षपतैलक्षारसिद्धं कुलत्थमाषपिण्याकजाम्बव-लकुचपक्वैः शौक्तिकैर्वा सह क्षीरमाममतिमात्र-मथवा पिबत्युष्णाभितप्तस्तस्यैवमाचरतः पित्तं प्रकोपमापद्यते । लोहितञ्च स्वप्रमाणमतिवर्त्तते । तस्मिन् प्रमाणातिप्रवृत्ते पित्तं प्रकुपितं शरीर-मनुसर्पद्यदैव यकृत्प्लीहप्रभवानां लोहित-वहानां श्रोतसां लोहिताभिष्यन्दगुरूणिमुखा-न्यासाद्य प्रतिपद्यते तदैव लोहितं दूषयति । संसर्गान्तिर्लोहितप्रदूषणाल्लोहितगन्धवर्णानु-विधानाच्च पित्तं लोहितमित्याचक्षते । तस्ये-मानि पूर्ब्बरूपाणि । तद्यथा । अनन्नाभि-लाषो भुक्तस्य विदाहः शुक्ताम्लरसगन्ध उद्-जरच्छन्दषोऽभीक्ष्णागमनंछर्द्दितस्य वीभत्सता स्वरभेदो गात्राणां सदनं परिदाहश्च मुखा-द्धूमागम इव लोहलोहितमत्स्यामगन्धित्व-मपि चास्यस्य रक्तहरितहारिद्रवत्त्वमङ्गावयव-शकृन्मूत्र-स्वेदलालाशिङ्घानकास्यकर्णमलपिड-कोलिकापिडकारामस्वेदनालोहितनीलपीत-श्यावानामर्च्चिष्मताञ्च रूपाणां स्वप्नदर्शन-मभीक्ष्णमिति लोहितपित्तपूर्ब्बरूपाणि । उप-द्रवास्तु खलु दौर्ब्बल्यारोचकाविपाकश्वास-

पुरा दक्षयज्ञोद्ध्वंसे रुद्रकोपामर्शाग्निना प्राणिनां
परिगतशरीरप्राणानामनुज्वरमभवत्।
तस्या-
शुकारिणो
दावाग्नेरिवापतितस्यात्ययिकस्याशु प्रशान्तौ यतितव्यं मात्रां देशं
कालञ्चाभि-
समीक्ष्य सन्तर्पणेनापतर्पणेन वा
मृदुमधुर-
शिशिरतिक्तकषायैरभ्यवहार्य्य
प्रदेहपरिषेका-
वगाहसंस्पर्शनैर्वमनाद्यैर्वा तत्रावहितेनेति ॥”
संक्षेपतोऽस्योपशमनोपायो यथा, --
“साध्यं लोहितपित्तं तद्यदूर्द्ध्वं प्रतिपद्यते ।
विरेचनस्य योगित्वाद्बहुत्वाद्भेषजस्य च ॥
वमनं नहि पित्तस्य हरणे श्रेष्ठमुच्यते ।
यश्च तत्रानुगो वायुस्तच्छान्त्यै चावरं मतम् ॥
स्याच्च योगावहन्तत्र कषायं तिक्तकानि च ।
तस्माद्याप्यं समाख्यातं यद्रक्तमनुलोमगम् ॥
रक्तपित्तन्तु यन्मार्गौ द्वावपि प्रतिपद्यते ।
असाध्यमपि तज्ज्ञेयं पूर्ब्बोक्तादपि कारणात् ॥
नहि संशोधनं किञ्चिदस्त्यस्य प्रतिमार्गगम् ।
प्रतिमार्गञ्च हरणं रक्तपित्ते विधीयते ॥
एवमेवोपशमनं सर्व्वशो नास्य विद्यते ।
संसृष्टेषु च दोषेषु सर्व्वजिच्छमनं मतम् ॥
इत्युक्तं त्रिविधोदर्कं रक्तं मार्गविशेषता ॥
एभ्यस्तु खलु हेतुभ्यः किञ्चित् साध्यं न सिध्यति ।
प्रेष्योपकरणाभावात्
दौरात्म्याद्वैद्यदोषतः ॥

शर्करातिलसंयुक्तं त्रिकत्रययुतन्त्वयः ।
रक्तपित्तं निहन्त्याशु अम्लपित्तहरं परम् ॥
इति शर्कराद्यं लौहम् ॥”
इति वैद्यकरसेन्द्रसारसंग्रहे रक्तपित्ताधिकारे ॥
अथास्य पथ्यापथ्यविधिः ।
“अधोगते छर्दनमूद्र्ध्वनिर्गमे
विरेचनं स्यादुभयत्र लङ्घनम् ।
पुरातनाः षष्टिकशालिकोद्रव-
प्रियङ्गुनीवारयवप्रसातिकाः ॥
मुद्गा मसूराश्चणकास्तु वर्य्यो-
मुकुष्टकाश्चिङ्गटवर्म्मिमत्स्याः ।
शशः कपोतो हरिणैनलाव-
शरालिपारावतवर्त्तकाश्च ॥
वका उरभ्राश्च सकालपुच्छाः
कपिञ्जलाश्चापि कषायवर्गः ।
गवामजायाश्च पयो घृतञ्च
घृतं महिष्याः पनसं पियालम् ॥
रम्भाफलं कञ्चटतण्डुलीय-
पटोलवेत्राग्रमहार्द्रकाणि ।
पुराणकुष्माण्डफलञ्च पक्व-
फलानि तद्बीजजलानि वासा ॥
स्वादूनि विम्बानि च दाडिमानि
खर्ज्जूरधात्रीमिषिनारिकेलम् ।
कशेरुशृङ्गाटमरुष्कराणि
कपित्थशालूकपरूषकाणि ॥
भूनिम्बशाकं पिचुमर्द्दपत्रं
तुम्बीकलिङ्गानि च लाजसक्तुः ।
द्राक्षा सिता माक्षिकमैक्षवश्च
शीतोदकञ्चौद्भिदवारि चापि ॥
सेकोऽवगाहः शतधौतसर्पि-
रभ्यङ्गयोगः शिशिरप्रदेहः ।
हिमानिलश्चन्दनमिन्दुपादाः
कथा विचित्राश्च मनोऽनुकूलाः ॥
धारागृहं भूमिगृहं सुशीतं
वैदूर्य्यमुक्तामणिधारणञ्च ।
रम्भोत्पलाम्भोरुहपत्रशय्या

कासज्वरातीसारशोफशोषपाण्डुरोगस्वरभेदाः ।
मार्गौ पुनरस्य द्वौ ऊद्र्ध्वञ्चाधश्च तद्बहुश्लेष्मणि
शरीरे श्लेष्मसंसर्गादूद्र्ध्वं प्रपद्यमानं
कर्णनासिका-
नेत्रास्येभ्यः प्रच्यवते । बहुवाते तु शरीरे वात-
संसर्गादधः प्रपद्यमानं मूत्रपुरीषमार्गाभ्यां
प्रच्यवते । बहुवातश्लेष्मणि तु शरीरे श्लेष्मवात-
संसर्गादद्वावपि मार्गौ प्रपद्यते । तौ मार्गौ
प्रपद्यमानं सर्व्वेभ्य एव यथोक्तेभ्यः खेभ्यः प्रच्य-
वते शरीरस्य । तत्र यदूद्र्ध्वभागं तत्साध्यं विरे-
चनोपक्रमणीयत्वात् बह्वौषधत्वाच्च । यदधो-
भागं तदयाप्यं वमनोपक्रमणीयत्वात् अल्पौषध-
त्याच्च । यदुभयभागं तदसाध्यं वसनविरेचना
योगित्वादनौषधत्वाच्च । रक्तपित्तप्रकोपस्तु खलु

अकर्म्मतश्च साध्यत्वं
कश्चिद्रोगोऽतिवर्त्तते ।
तत्र साध्यत्वमेकं स्यात्
साध्ययाप्यपरि-
क्रमात् ॥
रक्तपित्तस्य विज्ञानमिदं तस्योपदेक्ष्यते ।
यत् कृष्णमथवा नीलं यद्वा
शक्रधनुष्प्रभम् ॥
रक्तपित्तमसाध्यन्तद्वाससोरञ्जनञ्च यत्
।
भृशं पूत्यतिमात्रञ्च सर्व्वोपद्रववच्च यत्
॥
बलमांसक्षये यच्च तच्च रक्तमसिद्धिमत्
॥
येन चोपहतो रक्तं रक्तपित्तेन मानवः ।
पश्येद्दृश्यं वियच्चैव
तच्चासाध्यमसंशयम् ॥
तत्रासाध्यं परित्यज्यं याप्यं यत्नेन
यापयेत् ।
साध्यञ्चावहितः सिद्धैर्भेषजैः
साधयेद्भिषक् ॥
कारणं नाम निर्व्वृत्तिं पूर्ब्बरूपाण्युपद्रवान्
।
मार्गौ दोषानुबन्धञ्च साध्यत्वं न च
हेतुमत् ॥
निदाने रक्तपित्तस्य व्याजहार पुनर्व्वसुः
।
वीतमोहरजोदोषलोभमानमदस्पृहः॥”
इति चरके निदानस्थाने द्वितीयेऽध्याये
॥ * ॥
अथास्य चिकित्सायां रसाः ।
“सूतं गन्धं माक्षिकञ्चैव लौहं
सर्व्वं घृष्टं त्रैफलेनोदकेन ।
लोहे पात्रे गोमयैः पाचयित्वा
रात्रौ दद्यात् रक्तपित्तप्रशान्त्यै ॥
इति सुधानिधीरसः ॥
मृताभ्रमुण्डतीक्ष्णञ्च माक्षिकं
रसतालकम् ।
गन्धकञ्च भवेत्तुल्यं यष्टिद्राक्षामृताद्रवैः ॥
दिनैकं मर्द्दयेत् खल्वे सिताक्षौद्रयुतावटी
।

क्षौमाम्बरञ्चोपवनं सुशीतम् ॥
प्रियङ्गुकाचन्दनरूषितानां
मालिङ्गनञ्चापि वराङ्गनानाम् ।
पद्माकराणां सरितां ह्रदानां
चन्द्रोदयानां हिमवद्दरीणाम् ॥
सुशीतलानां गिरिनिर्झराणां
स्तुतिः प्रशस्तानि च कीर्त्तितानि ।
प्रणीरनीरं हिमवालुका च
मित्रं नृणां शोणितपित्तरोगे ॥”
अथापथ्यानि ।
“व्यायामाध्वनिषेवणं
रविकरस्तीक्ष्णानि
कर्म्माणि च ।
क्षोभो वेगविधारणञ्चपलता
हस्त्यश्वयानानि च ॥
स्वेदास्रस्रुतिधूमपानसुरतक्रोधाः
कुलत्थो गुडो
वार्त्ताकं तिलमाषसर्षपदधिक्षाराणि
कौपं मयः ॥”
इति वैद्यकपथ्यापथ्यविधौ
रक्तपित्ताधिकारः ॥)

|  | माषामात्रा निहन्त्याशु रक्तपित्तं सुदारुणम् ।<br>ज्वरं दाहं तृषां वान्तिं शीषं पित्तान्तको रसः ॥<br>इति रक्तपित्तान्तको रसः ॥ |  |
|---|---|---|

**रक्तपित्तहा**, स्त्री, (रक्तपित्तं हन्तीति । हन् + डः । स्त्रियां टाप् ।) रक्तघ्नी । इति शब्द-चन्द्रिका ॥ गाँठिया दूर्व्वा इति भाषा ॥ (विवृतिरस्याः रक्तघ्नीशब्दे ज्ञातव्या ॥)

**रक्तपुनर्नवा**, स्त्री, (रक्ता रक्तवर्णा पुनर्नवा ।) रक्तवर्णपुनर्नवाशाकः । तत्पर्य्यायः । क्रूरा २ मण्डलपत्रिका ३ रक्तकाण्डा ४ वर्षकेतुः ५ लोहिता ६ रक्तपत्रिका ७ वैशाखी ८ रक्त-वर्षाभूः ९ शोफघ्नी १० पुष्पिका ११ विकस्वरा १२
विषघ्नी १३ प्रावृषेण्या १४ सारिणी १५ वर्षा-
भवः १६ शोणपत्रः १७ भौमः १८ पुनर्भवः १९
नवः २० नब्यः २१ । अस्य गुणाः । तिक्तत्वम् ।
सारकत्वम् ।
शोफरक्तप्रदरदोषपाण्डुपित्तनाशि-त्वञ्च । इति राजनिर्घण्टः ॥

**रक्तपुष्पः**, पुं, (रक्तं पुष्पमस्य ।) करवीरः । इति जटाधरः ॥ (अस्य पर्य्यायो यथा, --
"करवीरः श्वेतपुष्पः शतकुम्भोऽश्वमारकः ।
द्बितीयो रक्तपुष्पश्च चण्डातो लगुडस्तथा ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
रौहितवृक्षः । इति शब्दमाला ॥ रक्तकाञ्चन-वृक्षः । दाडिमवृक्षः । वकवृक्षः । इति रत्न-माला ॥ बन्धूकवृक्षः । पुन्नागवृक्षः । इति राजनिर्घण्टः ॥ (रक्तवर्णपुष्पविशिष्टे, त्रि ।) यथा, बृहत्संहितायाम् । १५ । १४ ।
"इन्द्राग्निदैवते रक्तपुष्पफलशाखिनः सतिल-मुद्गाः ।
कार्पासमाषचणकाः पुरन्दरहुताशभक्ताश्च ॥")

**रक्तपुष्पकः**, पुं, (रक्तं पुष्पमस्य । कन् ।) पलाश-वृक्षः । (अस्य पर्य्यायो यथा, --
तत्पर्य्यायो यथा, --
"धातकी रक्तपुष्पी स्यात् कुञ्जरा मध्यवासिनी ॥"
इति वैद्यकरत्नमालायाम् ॥)

**रक्तपूरकं**, क्ली, (रक्लं पूरयतीति । पूर् + ण्वुल् ।) वृक्षाम्लम् । इति राजनिर्घण्टः ॥ (विवणमस्य बृक्षाम्लशब्दे ज्ञातव्यम् ॥)

**रक्तप्रसवः**, पुं, (रक्तः रक्तवर्णः प्रसवः पुष्पमस्य ।) रक्तकरवीरः । रक्ताम्लानः । इति राज-निर्घण्टः ॥

**रक्तफलः**, पुं, (रक्तं लोहितवर्णं फलमस्य ।) वटवृक्षः । इति जटाधरः ॥ (अस्य पर्य्यायो यथा, --
"वटो रक्तफलः शृङ्गी न्यग्रोधः स्कन्दजो ध्रुवः ।
क्षीरी वैश्रवणो वासो बहुपादो वनस्पतिः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**रक्तफला**, स्त्री, (रक्तं पक्वदशायां लोहितवर्णं फलमस्याः ।) विम्बिका । इत्यमरः । २ । ४ । १३९ ॥ (अस्याः पर्य्यायो यथा, --
"तुष्टी रक्तफला विम्बी तुण्डिकेरी च विम्बिका ॥"
इति वैद्यकरत्नमालायाम् ॥)
स्वर्णवल्ली । इति राजनिर्घण्टः ॥ (अस्याः पर्य्यायो यथा, --
"स्वर्णवल्ली रक्तफला काकायुः काकवल्लरी ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**रक्तफेनजः**, पुं, (रक्तफेनात् जायते इति । जन् +

पपात यो वै रक्तौघस्तेनासञ्छतशोऽसुराः ॥
तैश्चासुरासृक्सम्भूतैरसुरैः सकलं जगत् ।
व्याप्तमासीत्ततो देवा भयमाजग्मुरुत्तमम् ॥
तान् विषण्णान् सुरान् दृष्ट्वा चण्डिका प्राह-सत्वरा ।
उवाच कालीं चामुण्डे ! विस्तरं वदनं कुरु ॥
मच्छस्त्रपातसम्भूतान् रक्तबिन्दून् महासुरान् ।
रक्तबिन्दोः प्रतीच्छ त्वं वक्त्रेणानेन वेगिता ॥
भक्षयन्ती चर रणे तदुत्पन्नान् महासुरान् ।
एवमेष क्षयं दैत्यः क्षीणरक्तो गमिष्यति ॥
भक्ष्यमाणास्त्वया चोग्रा न चोत्पत्स्यन्ति चापरे ।
इत्युक्त्वा तां ततो देवी शूलेनाभिजघान तम् ॥
मुखेन काली जगृहे रक्तबीजस्य शोणितम् ।
तस्याहतस्य देहात्तु बहु सुस्राव शोणितम् ॥
यतस्ततस्तद्वक्त्रेण चामुण्डा संप्रतीच्छति ।
मुखे समुद्गता येऽस्या रक्तपातान्महासुराः ।
तांश्चखादाथ चामुण्डा पपौ तस्य च शोणितम् ॥
देवी शूलेन वज्रेण वाणैरसिभिरृष्टिभिः ।
जघान रक्तबीजं तं चामुण्डापीतशोणितम् ॥
स पपात महीपृष्ठे शस्त्रसंघसमाहतः ।
नीरक्तश्च महीपाल ! रक्तबीजो महासुरः ॥
ततस्ते हर्षमतुलमवापुस्त्रिदशा नृप ! ।

"पलाशः किंशुकः पर्णो यज्ञियो रक्तपुष्पकः
।
क्षारश्रेष्ठो वातहरो ब्रह्मवृक्षः समिद्वरः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)
रौहितकवृक्षः । इति जटाधरः ॥ पर्प्पटः ।
शाल्मलिवृक्षः । इति राजनिर्घण्टः ॥

**रक्तपुष्पा**, स्त्री, (रक्तं पुष्पं अस्याः ।) शाल्मलि-

वृक्षः । इति जटाधरः ॥ (अस्याः पर्य्यायो
यथा, --
"शाल्मलिस्तु भवेन्मोचा पिच्छिला पूरणीति
च ।
रक्तपुष्पा स्थिरायुश्च कण्टकाढ्या च
तूलिनी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)
पुनर्नवा । तत्पर्य्यायो यथा, --
"पुनर्नवा परारक्ता रक्तपुष्पा शिलाटिका ॥"
सिन्दूरी । तत्पर्य्यायो यथा, --
"सिन्दूरी रक्तबीजा च रक्तपुष्पा सुकोमला
॥"
इति भावप्रकाशः ॥)

**रक्तपुष्पिका**, स्त्री, (रक्तपुष्पा + कन् । टापि अत

इत्वम् ।) लज्जालुः । इति शब्दचन्द्रिका ॥
रक्तपुनर्नवा । भूपाटलिः । इति राजनिर्घण्टः
॥

**रक्तपुष्पी**, स्त्री, (रक्तं पुष्पं अस्याः । ङीष् ।)

पाटलीवृक्षः । इति जटाधरः ॥ जवा ।
आवर्त्त-
कीलता । नागदमनी । करुणीवृक्षः । उष्ट्र-
काण्डी । इति राजनिर्घण्टः ॥ (धातकी ।

डः ।) वामपार्श्वस्थक्लोम । तत्पर्य्यायः
।
पुस्फुषः २ । इति हेमचन्द्रः । ३ । २६९
॥

**रक्तबिन्दुः**, पु, (रक्तानां बिन्दुः ।) रक्तकणा ।

यथा, --
"रक्तबिन्दुर्य्यदा भूमौ पतत्यस्य शरीरतः ।
समुत्पतति मेदिन्यास्तत्प्रमाणस्तदासुरः
॥"
इति मार्कण्डेये देवीमाहात्म्यम् ॥)

**रक्तबीजः**, पुं, (रक्तवर्णं बीजमस्य ।) दाडिमः ।

इति राजनिर्घण्टः ॥ (अरिष्टकफलः ।
रीटा
इति ख्यातः । तत्पर्य्यायो यथा, --
"अरिष्टकस्तु माङ्गल्यः
कृष्णवर्णोऽर्थसाधनः ।
रक्तबीजः पीतफेनः फेनिलो गर्भपातनः
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥
रक्तं शोणितं बीजं कारणमस्य ।) असुर-
विशेषः । स च शुम्भनिशुम्भसेनापतिः
देव्या
हतश्च । यथा, --
"पलायनपरान् दृष्ट्वा दैत्यान्
मातृगणार्दितान् ।
योद्धुमभ्याययौ क्रुद्धो रक्तबीजो महासुरः
॥
रक्तबिन्दुर्य्यदा भूमौ पतत्यस्य शरीरतः ।
समुत्पतति मेदिन्यास्तत्प्रमाणस्तदासुरः
॥
युयुधे स गदापाणिरिन्द्रशक्त्या महासुरः
।
ततश्चैन्द्री स्ववज्रेण रक्तबीजमताडयत्
॥
कुलिशेनाहतस्याशु तस्य सुस्राव
शोणितम् ।
समुत्तस्थुस्ततो
योधास्तद्रूपास्तत्पराक्रमाः ॥

तेषां मातृगणो जातो ननर्त्तासृङ्मदोद्धतः
॥"
इति मार्कण्डेये देवीमाहात्म्यम् ॥
(महिषासुरपिता दानवो रम्भ एव
जन्मान्तरे
रक्तबीजो जातः । यथा, देवीभागवते । ५
।
२ । ४४ -- ४९ ।
"मृतं रम्भं समानीय यक्षास्ते परमं प्रियम्
।
चितायां रोपयामासुस्तस्य देहस्य शुद्धये
॥
महिषी सा पतिं दृष्ट्वा चितायां रोपितं तदा
।
प्रवेष्टुं सा मतिं चक्रे पतिना सह पावकम्
॥
वार्य्यमाणापि यक्षैः सा प्रविवेश हुताशनम्
।
ज्वालामालाकुलं साध्वी पतिमादाय
वल्लभम् ॥
महिषस्तु चितामध्यात् समुत्तस्थौ
महाबलः ।
रम्भोऽप्यन्यद्वपुः कृत्वा निःसृतः
पुत्त्रवत्सलः ॥
रक्तबीजोऽप्यसौ जातो महिषोऽपि
महाबलः ।
अभिषिक्तस्तु राज्येऽसौ हयारिरसुरोत्तमैः
॥
एवं स महिषो जातो रक्तबीजश्च
वीर्य्यवान् ।
अवध्यस्तु सुरैर्द्दैत्यैर्मानवैश्च नृपोत्तम !
॥")

**रक्तबीजका**, स्त्री, (रक्तो रक्तवर्णो बीजोऽस्याः ।
कन्

+ टप् ।) तरदीवृक्षः । इति राजनिर्घण्टः
॥

**रक्तमञ्जरः**, पुं, (रक्ता रक्तवर्णा मञ्जरी । सा विद्यते-

ऽस्येति । "अर्शआदिभ्यः अच् ।" ५ । २
। १२७ ।

| | | |
|---|---|---|
| | यावन्तः पतितास्तस्य शरीराद्रक्तबिन्दवः<br>।<br>तावन्तः पुरुषा<br>जातास्तद्वीर्य्यबलविक्रमाः ॥<br>तस्याहतस्य बहुधा शक्तिशूलादिभिर्भुवि<br>। | इत्यच् ।) निचुलवृक्षः । इति<br>त्रिकाण्डशेषः ॥<br>(गुणादयोऽस्य निचुलशब्दे ज्ञातव्याः ॥)<br>**रक्तमत्स्यः**, पुं, (रक्तो रक्तवर्णो मत्स्यः ।) रक्त-<br>वर्णो मस्त्यविशेषः । यथा, --<br>"यो रक्ताङ्गो नातिदीर्घो न चाल्पो<br>नातिस्थूलो रक्तमत्स्यः स तूक्तः ।<br>शीतो रुच्यः पुष्टिकृद्दीपनोऽसौ<br>नाशं धत्ते किञ्च दोषत्रयस्य ॥"<br>इति राजनिर्घण्टः ॥ |

**रक्तमूलकः**, पुं, (रक्तं रक्तवर्णं मूलमस्य । कन् ।)

देवसर्षपवृक्षः । इति राजनिर्घण्टः ॥

**रक्तमूला**, स्त्री, (रक्तं मूलं अस्याः । टाप् ।)

लज्जालुवृक्षः । इति राजनिर्घण्टः ॥

**रक्तमेहः**, पुं, (मेहनं मेहः रक्तस्य मेहः ।)

प्रमेहरोगविशेषः । तस्य लक्षणं यथा, --
"विस्रमुष्णं सलवणं रक्ताभं रक्तमेहतः ॥"
मूत्रं मूत्रयेदिति योजनीयम् । अस्यौषधम् ।
यथा, --
"चन्द्रप्रभावचामुस्ताभूनिम्बसुरदारवः।
हरिद्रातिविषादार्व्वीपिप्पलीमूत्रचित्रकम्॥
धान्यकं त्रिफला चव्यं विडङ्गं गजपिप्लली ।
सुवर्णमाक्षिकं व्योषं द्वौ क्षारौ लवणत्रयम् ॥
एतानि टङ्कमात्राणि संगृह्णीयात् पृथक् पृथक् ।
द्विकर्षहतलोहं स्याच्चतुष्कर्षा सिता भवेत् ॥
शिलाजत्वष्टकर्षं स्यादष्टौ कर्षाश्च गुग्गुलोः ।
विधिना योजितैरेतैः कर्त्तव्या गुटिका शुभा ॥
चन्द्रप्रभेति विख्याता सर्व्वरोगप्रणाशिनी ।
निहन्ति विंशतिं मेहान् कृच्छ्रमष्टविधं तथा ॥
चतस्रश्चाश्मरीस्तद्वत्मूत्राधातांस्त्रयोदश ।
अण्डवृद्धिं पाण्डुरोगं कामलाञ्च हलीमकम् ॥
कासं श्वासं तथा कुष्ठमग्निमान्द्यमरोचकम् ।
वातपित्तकफव्याधीन् बल्या वृष्या रसायनी ॥
समाराध्य शियं तस्मात् प्रयत्नात्
गुटिकामिमाम् ।
प्राप्तवांश्चन्द्रमा यस्मात् तस्माच्चन्द्रप्रभा
स्मृता ॥"
इति भावप्रकाशः ॥
(तथास्य लक्षणम् । यथा, --
"विस्रं लवणमुष्णञ्च रक्तं मेहति यो नरः ।
पित्तस्य परिकोपेन तं विद्याद्रक्तमेहिनम् ॥"
इति चरके निदानस्थाने चतुर्थेऽध्याये ॥)

**रक्तमोक्षणं**, क्ली, (रक्तस्य मोक्षणम् ।) शोणित-

स्रावः । यथा, --
"वेदनोपशमार्थाय तथा पाकशमाय च ।
अचिरोत्पतिते शोथे शोणितस्रावणञ्चरेत् ॥
चरेत् कुर्य्यात् ।

**रक्तयष्टिका**, स्त्री, (रक्तयष्टि + कन् । टाप् ।)

मञ्जिष्ठा । इति राजनिर्घण्टः ॥
(अस्याः
पर्य्यायो यथा, --
"मञ्जिष्ठा विकसा जिङ्गी काला
योजनपर्ण्यपि ।
ताम्रवल्ली चित्रपर्णी काण्डारी
रक्तयष्टिका ॥"
इति वैद्यकरत्नमालायाम् ॥
"मञ्जिष्ठा विकसा जिङ्गी समङ्गा
काल-
मेषिका ।
मण्डूकपर्णी भण्डीरी भण्डी
योजनवल्ल्यपि ॥
रसायन्यरुणा काला रक्ताङ्गी
रक्तयष्टिका ।
भण्डीतकी च गण्डीरी मञ्जषा
वस्त्ररञ्जिनी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ॥)

**रक्तयावनालः**, पुं, (रक्तवर्णः यावनालः ।) तुघर-

यावनालः । इति राजनिर्घण्टः ॥

**रक्तरेणुः**, पुं, (रक्ताः रेणवोऽस्मिन्निति ।) सिन्दू-

रम् । (अस्य पर्य्यायो यथा, --
"सिन्दूरं रक्तरेणुश्च नागगर्भश्च
सीसजम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ॥)
पलाशकलिका । इति मेदिनी । ने,
१०५ ॥
पुन्नागः । इति राजनिर्घण्टः ॥

**रक्तरेणुकां**, स्त्री, (रक्ताः रेणवः परागा अस्याम् ।

कन् । टाप् च ।) पलाशकलिका ।
तत्पर्य्यायः ।
अङ्गारिका २ । इति शब्दमाला ॥

"सितासिताः पीतकरक्तवर्णा
भवन्ति येऽनेकविधास्तु शिम्बाः ॥")

**रक्तवर्द्धनः**, पुं, (रक्तं शोणितं वर्द्धयतीति । वृध् +

णिच् + ल्युः ।) वार्त्ताकुः । इति शब्दचन्द्रिका
॥
(पारावतः । तत्पर्य्यायो यथा, --
"पारावतः कलरवः कपोतो रक्तवर्द्धनः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**रक्तवर्षाभूः**, स्त्री, (रक्तवर्णा वर्षाभूः ।) रक्त-

पुनर्नवा । इति राजनिर्घण्टः ॥

**रक्तवसनः**, पुं, (रक्तं वसनमस्य ।) सन्न्यासी ।

इति हेमचन्द्रः । ३ । ४७३ ॥

**रक्तवातः**, पुं, (रक्तप्रधानो वातः ।) रोगविशेषः ।

अस्यौषधम् । यथा, गारुडे १९३ अध्याये ।
"नारिकेलस्य वै मूलं छागक्षीरेण संयुतम् ।
पिबेच्च त्रिविधस्तस्य रक्तवातो विनश्यति ॥"

**रक्तवालुकं**, क्ली, (रक्ता वालुका चूर्णमत्र ।) सिन्दू-

रम् । इति हारावली ॥

**रक्तवालुका**, स्त्री, (रक्ता वालुकेव ।) सिन्दू-

रम् । इति शब्दरत्नावली ॥

**रक्तवृन्ता**, स्त्री, (रक्तवर्णं वृन्तं प्रसवबन्धन-

मस्याः ।) शेफालिका । इति शब्दचन्द्रिका ॥
(शेफालिकाशब्देऽस्या गुणादयो विज्ञेयाः ॥)

**रक्तवृष्टिः**, स्त्री, (रक्तानां वृष्टिः ।) रुधिरवर्ष-

णम् । तत्तु उत्पातविशेषः । तत्फलं शस्त्रोद्-
योगः । यथा । कृत्यचिन्तामणौ ।
"रक्ते शस्त्रोद्योगो मांसास्थिवसादिभिर्म्मरकः ।
धान्यहिरण्यत्वक्फलकुसुमाद्ये वर्षिते भयं
विद्यात् ॥"
इति ज्योतिस्तत्त्वम् ॥

**रक्तशालिः**, पुं, (रक्तवर्णः शालिः ।) रक्तवर्ण-

धान्यविशेषः । (यथा, सुश्रुते सूत्रस्थाने । २०

एकतस्तु क्रियाः सर्व्वा रक्तमोक्षणमेकतः ।
रक्तं हि वेदनामूलं तच्चेन्नास्ति न चापि रुक् ॥
विवर्णे कठिने श्यावे व्रणे चात्यन्तवेदने ।
सविशेषे विशेषेण जलौकोभिः पदैरपि ॥
शोणितस्रावणञ्चरेदित्यनेनान्वयः ।” इति भाव-
प्रकाशः ॥ (तथा च ।
“रक्तावसेचनं चतुर्भिः प्रकारैर्भवति ।
शिराविस्चिनेनापि अलावूभिस्तथैव च ॥
श्लक्ष्णशृङ्गैर्जलौकाभी रक्तञ्च स्रावयेद्बुधः ।
पूर्ब्बाह्णे चापराह्णे च नात्युष्णे नातिशीतले ॥
यवागूपरिपीतस्य शोणितं मोक्षयेद्भिषक् ।
शिरोरोगेषु सर्व्वेषु नासामध्यपुटे तथा ।
अमृजं रेचयेद्यत्नात् सर्व्वदा भिषगुत्तमः ॥”
एति हारीते शारीरस्थाने पञ्चमेऽध्याये ॥)

**रक्तयष्टिः**, स्त्री, (रक्ता यष्टिरिव । यद्वा रक्ता
रक्तवर्णा ग्रष्टिः शाखास्याः ।) मञ्जिष्ठा ।
इति जटाधरः ॥

**रक्तरैवतकं**, क्ली, (रक्तवर्णं रैवतकम् ।) महा-
पारेवतम् । इति राजनिर्घण्टः ॥

**रक्तलशुनः**, पुं, (रक्तवर्णो लशुनः ।) रक्तवर्ण-
मूलविशेषः । तत्पपर्य्यायः ।
महाकन्दः २
गृञ्जनः ३ दीर्घपत्रकः ४ पृथुपत्रः ५ स्थूल-
कन्दः ६ यवनेष्टः ७ । अस्य
गुणाः ।
“गृञ्जनस्य मधुरं कटु कन्दं
नालमप्युपदिशन्ति कषायम् ।
पत्रसञ्चयमुशन्ति सतिक्तं
सूरयो लवणमस्थि वदन्ति ॥”
इति राजनिर्घण्टः ॥

**रक्तला**, स्त्री, (रक्तं लाति गृह्णातीति । ला +
कः । टाप् ।) काकतुण्डी । इति
राजनिर्घण्टः ॥
(विशेषोऽस्याः काकतुण्डीशब्दे
ज्ञातव्यः ॥)

**रक्तलोचनः**, पुं, (रक्ते लोहिते लोचने अस्य ।)
कपोतः । इति हेमचन्द्रः । ४ ।
४०५ ॥ लोहित-
लोचनयुक्ते, त्रि ॥

**रक्तवटी**, स्त्री, (रक्ता वटी वटिकेव ।) मसूरिका ।
इति त्रिकाण्डशेषः ॥

**रक्तवरटी**, स्त्री (रक्ता वरटीव ।) मसूरिका ।
इति जटाधरः ॥
(मसूरिकाशब्देऽस्या गुणा-
दयो ज्ञेयाः ॥)

**रक्तवर्गः** पुं, (रक्तानां लोहितवर्णानां वर्गः
समूहोऽत्र ।) दाडिमः । किंशुकम् ।
लाक्षा ।
बन्धूकम् । निशाद्वयम् ।
कुसुम्भपुष्पम् । मञ्जिष्ठा ।
इति राजनिर्घण्टः ॥

अध्याये ।
“रक्तशालिषष्टिकगङ्गुकमुकुन्दकपाण्डु
कपीतकप्रमोदककालेक्त्यादि ॥”)
तत्पर्य्यायः ।
ताम्रशालिः २ शोणशालिः ३ लोहितः ४ ।
अस्य गुणाः । मधुरत्वम् । लघुत्वम् । स्निग्ध-
त्वम् । बलावहत्वम् । रुचिकारित्वम् । दीप-
नत्वम् । पथ्यत्वम् । पित्तदाहानिलास्रनाशि-
त्वञ्च । इति राजनिर्घण्टः ॥ (तथा च ।
“रक्तशालिर्व्वरस्तेषु बल्यो वर्ण्यस्त्रिदोषजित् ।
चक्षुष्यो मूत्रलः स्वर्य्यः शुक्रलस्तृट् ज्वरापहः
।
विषव्रणश्वासकासदाहनुद्वह्निपुष्टिदः॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**रक्तशासनं**, क्ली (रक्तं रक्तवर्णं शास्ति वशीकरो-
तीति । शास् + ल्युः ।) सिन्दूरम् । इति हारा-
वली ॥

**रक्तशिग्रुः**, पुं, (रक्तवर्णः शिग्रुः ।) रक्तशोभा-
ञ्जनवृक्षः । तत्पर्य्यायः । रक्तकः २ मधुरः ३
बहुलच्छदः ४ सुगन्धः ५ केशरी ६ सिंहः ७
मृगारिः ८ । अस्य गुणाः । महावीर्य्यत्वम् ।
मधुरत्वम् । रसायनत्वम् । शोफाध्मानसमी-
रार्त्तिपित्तश्लेष्मनाशित्वम् । सारकत्वञ्च । इति
राजनिर्घण्टः ॥

| | | |
|---|---|---|
| | **रक्तवर्णः**, पुं, (रक्तः लोहितः वर्णोऽस्य ।) इन्द्र-<br>गोपः । इति राजनिर्घण्टः ॥<br>(रक्तवर्णविशिष्टे,<br>त्रि । यथा, सुश्रुते सूत्रस्थाने ।<br>४६ अध्याये । | |

**रक्तशीर्षकः**, पुं, (रक्तं रक्तवर्णं शीर्षं अग्रमस्य । कन् ।) सरलद्रवः । इति रत्नमाला ॥

**रक्तशृङ्गिकं**, क्ली, विषम् । इति राजनिर्घण्टः ॥

**रक्तसंज्ञं**, क्ली, (रक्तमिति संज्ञास्य ।) कुङ्कुमम् । इति त्रिकाण्डशेषः ॥ (गुणादयोऽस्य कुङ्कुम-शब्दे विज्ञेयाः ॥)

**रक्तसन्दशिका**, स्त्री, (रक्ताय रक्तपानाय सम्यक् दशतीति । दन्श + ण्वुल् । टापि अत इत्वञ्च ।) जलौका । इति राजनिर्घण्टः ॥

**रक्तसन्ध्यकं**, क्ली, ("रक्तं सन्ध्येवेति रघुनाथः । रक्तान् सन्धीन् अकति गच्छति व्याप्नोतीति । कः । इति रायमुकुटभरतमल्लिकौ ।") रक्त-कह्लारम् । तत्पर्य्यायः । हल्लकम् २ । इत्य-मरः । १ । १० । ३६ ॥

**रक्तसरोरुहं**, क्ली, (रक्तं सरोरुहम् ।) रक्त-पद्मम् । इत्यमरः । १ । १० । ४१ ॥

**रक्तसर्षपः**, पुं, (रक्तवर्णः सर्षपः ।) राजिका । इति राजनिर्घण्टः ॥

**रक्तसहा**, स्त्री, (रक्तं सहते इति । सह् + अच् + टाप् ।) रक्ताम्लानः । इति राज-निर्घण्टः ॥

**रक्तसारं**, क्ली, (रक्तवर्णः सारोऽस्य ।) रक्त-चन्दनम् । (यथास्य पर्य्यायः ।
"रक्तचन्दनमाख्यातं रक्ताङ्गं क्षुद्रचन्दनम् ।
तिलपर्णं रक्तसारं तत्प्रबालफलं स्मृतम् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
पत्तङ्गम् । इति राजनिर्घण्टः ॥ (अस्य पर्य्यायो यथा, --
"पत्तङ्गं रक्तसारञ्च सुरङ्गं रञ्जनन्तथा ।
पट्टरञ्जकमाख्यातं पत्तूरञ्च कुचन्दनम् ॥")
इति भावप्रक्राशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**रक्तसारः**, पुं, (रक्तः सारो यस्य ।) अम्लवेतसः । रक्तखदिरः । इति राजनिर्घण्टः ॥ (अस्य पर्य्यायो यथा, --

**रक्ता**, स्त्री, (रक्त + टाप् ।) गुञ्जा । (अस्याः पर्य्यायो यथा, --
"रक्ता सा काकचिञ्ची स्यात् काकानन्ती च रक्तिका ।
काकादनी काकपीलुः सा स्मृता काकवल्लरी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
लाक्षा । मञ्जिष्ठा । उष्ट्रकाण्डी । इति राज-निर्घण्टः ॥

**रक्ताकारः**, पुं, (रक्तवर्ण आकारः अवयवोऽस्य ।) प्रबालः । इति राजनिर्घण्टः ॥ (विशेषोऽस्य प्रबालशब्दे विज्ञेयः ॥)

**रक्ताक्तं**, क्ली, (रक्तेन रक्तवर्णेन अक्तं म्रक्षितम् ।) रक्तचन्दनम् । इति जटाधरः ॥ शोणित-मिश्रिते, त्रि ॥

**रक्ताक्षः**, पुं, (रक्ते लोहिते अक्षिणी अस्य । "अक्ष्णोऽदर्शनात् ।" ५ । ४ । ७६ । इति अच् ।) महिषः । पारावतः । चकोरः । क्रूरः । इति मेदिनी । षे, ४४ ॥ सारसः । इति राजनिर्घण्टः ॥ (अब्दविशेषः । यथा, बृहत्-संहितायाम् । ८ । ५१ ।
"रक्ताक्षमब्दं कथितं तृतीयं यस्मिन् भयं दंष्ट्रिकृतं गदाश्च ॥")
रक्तवर्णचक्षुर्युक्ते, त्रि । (यथा, रामायणे । २ । ८८ । १९ ।

तद्दोषाज्जायते शीघ्रं रक्तातीसार उल्वणः ॥'
तस्य चिकित्सा ।
'वत्सकतरुत्वगार्द्रा दाडिमफलसम्भवा त्वक् ।
त्वग्युगलं पलमानं विपचेदष्टाङ्गसम्मिते तोये ॥
अष्टमभागं शेषं क्वाथं मधुना पिबेत् पुरुषः ।
रक्तातिसारमुल्वणमतिशयितंनाशयेन्नियतम् ॥
इति कुटजदाडिमक्वाथः ॥ * ॥
'गोदुग्धनवनीतन्तु मधुना सितया सह ।
लीढं रक्तातिसारे तु ग्राहकं परमं महत् ॥'
इति नवनीतावलेहः ॥ * ॥
'पीतं मधुसितायुक्तं चन्दनं तण्डुलाम्बुना ।
रक्तातिसारजिद्रक्तपित्ततृड्दाहमेहनुत् ॥'
चन्दनमत्र श्वेतम् । इति चन्दनकल्कः ॥"
इति भावप्रकाशः ॥ (तथा च ।
"यस्तु रक्तशुद्धविरेचने शोषदाहमतिरिच्यते ।
रक्तातिसार इति विज्ञेयो वैद्यैर्महामतिभिः ॥
धन्वनागरमुस्ता च बालकं बालविल्वकम् ।
वलानागवला चेति क्वाथो रक्तातिसारिणाम् ॥
दाडिमञ्च कपित्थञ्च पथ्याजम्ब्वाम्रपल्लवान् ।
पिष्ट्वा देया मस्तुयुक्ता रक्तातिसारवारणाः ॥
गुडेन पक्वं दातव्यं विल्वं रक्तातिसारिणे ।
मनुजे मधुयुक्ता वा दध्ना रक्तातिसारहाः ॥
वत्सकातिविषनागराभया पेषितञ्च मधुमस्तुसंयुतम् ।
लेह एव मधुना च मानुषे रक्तवाहमति वारयत्यपि ॥
कुटजत्वक् च पाठा च विश्वं विल्वञ्च धातकी ।
मधुना सहितं चूर्णं देयं रक्तातिसारहम् ॥
इति रक्तातिसारः ।" इति हारीते चिकित्-सितस्थाने तृतीयेऽध्याये ॥)

**रक्ताधारः**, पुं, (रक्तस्याधारः ।) चर्म्म । इति राजनिर्घण्टः ॥

"खदिरो रक्तसारश्च गायत्री दन्तधावनः ।
कण्टकी बालपत्रश्च बहुशल्यश्च यज्ञियः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
रक्ते सारो यस्येति । शोणितसारयुक्ते, त्रि ।
यथा, बृहत्संहितायाम् । ६८ । ९७ ।
"ताल्वोष्ठदन्तपालीजिह्वानेत्रान्तपायुकर-
चरणैः ।
रक्तैस्तु रक्तसारा बहुसुखवनितार्थपुत्त्रयुताः
॥")

**रक्तसौगन्धिकं**, क्ली, (रक्तवर्णं सौगन्धिकम् ।)

रक्तकह्लारम् । इति जटाधरः ॥

**रक्तस्रावः**, पुं, (रक्तं स्रावयतीति । स्रु + णिच् +

अच् ।) वेतसाम्लः । इति जटाधरः ॥ (रक्तस्य
स्रावः ।) रक्तपतनम् । (यथा, बृहत्संहिता-
याम् । ८७ । ३५ ।
"कलहो नैरृतभागे रक्तस्रावोऽथ शस्त्रकोपश्च ।
अपराद्येचर्मकृतं विनश्यते चर्मकारभयम् ॥")

**रक्तहंसा**, स्त्री, (रक्ताः वशीभूताः हंसा अत्र ।)

रागिणीविशेषः । इति हलायुधः ॥

"कथमिन्द्रीवरश्यामो रक्ताक्षः
प्रियदर्शनः ।
सुखभागी न दुःखार्हो शयितो
भुवि राघवः ॥"
अयन्तु सदा लक्ष्मीयुक्तो भवेत् ।
यथा, ज्योतिः-
सागरे ।
"न श्रीस्त्यजति रक्ताक्षं नार्थः
कनकपिङ्गलम् ।
न दीर्घबाहुमैश्वर्य्यं न सौख्यं
प्रहसन्मुखम् ॥")

**रक्ताङ्गं**, क्ली, (रक्तवर्णमङ्गमस्य ।) विद्रुमः
।

कुङ्कुमम् । इति मेदिनी । गे, ४८
॥ (रक्तचन्द-
नम् । यथा, भावप्रकाशे
पूर्ब्बखण्डे प्रथमे भागे ।
"रक्तचन्दनमाख्यातं रक्ताङ्गं
क्षुद्रचन्दनम् ।
तिलपर्णं रक्तसारं तत्प्रबालफलं
स्मृतम् ॥")

**रक्ताङ्गः**, पुं, (रक्तमङ्गं यस्य ।) मङ्गलग्रहः ।

कम्पिल्लः । इति मेदिनी । गे, ४७
॥ (अस्य
पर्य्यायो यथा,
वैद्यकरत्नमालायाम् ।
"कम्पिल्लकस्तु रक्ताङ्गो
गुण्डारोचनिकेति सा ॥"
"कम्पिल्लः कर्क्कशश्चन्द्रो
रक्ताङ्गो रोचनोऽपि च ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमभागे ॥)
प्रबालः । मत्कुणः । इति
राजनिर्घण्टः ॥
मण्डलम् । इति शब्दरत्नावली ॥
(नागविशेषः ।
यथा, महाभारते । १ । ५७ । १७
।
"ऋषभो वेगवान्नागः
पिण्डारकमहाहनू ।

**रक्तापहं**, क्ली, (रक्तमपहन्तीति । हन् + डः ।)

वोलम् । इति राजनिर्घण्टः ॥

**रक्तापामार्गः**, पुं, (रक्तवर्णः अपामार्गः ।)

रक्तवर्णापामार्गक्षुपः । राङ्गा आपाङ्‌ इति
वङ्गभाषा । लाल चिरचिरी इति हिन्दी भाषा ।
तत्पर्य्यायः । क्षुद्रापामार्गः २ आघट्टकः ३
दुग्धिनिका ४ रक्तविट् ५ कल्यपत्रिका ६ ।
अस्य गुणाः । शीतत्वम् । कटुत्वम् ।
कफवात-
व्रणकण्डूविषनाशित्वम् । संग्राहित्वम् ।
वान्ति-
कारित्वञ्च । इति राजनिर्घण्टः ॥ तत्पर्य्याय-
गुणाः । अथ आरक्तचिरचिरा ।
"रक्तोऽन्यो वशिरो वृत्तफलो धामार्गवोऽपि च
।
प्रत्यक्पर्णी केशपर्णी कथिता कपिपिप्पली ॥
अपामार्गोऽरुणो वातविष्टम्भी कफकृद्धिमः ।
रूक्षः पूर्ब्बगुणैर्न्यूनः कथितो गुणवेदिभिः ॥
अपामार्गफलं स्वादु रसे पाके च दुर्ज्जरम् ।
विष्टम्भि वातलं रूक्षं वातपित्तप्रसादनम् ॥"
इति भावप्रकाशः ॥

**रक्ताम्बरं**, क्ली, (रक्तं रञ्जितमम्बरम् ।) काषाय-

वस्त्रम् । यथा, --

| | | |
|---|---|---|
| | रक्ताङ्गः सर्व्वसारङ्गः समृद्धः पटवासकौ ॥”)<br><br>**रक्ताङ्गी**, स्त्री, (रक्ताङ्ग + ङीष् ।) जीवन्ती ।<br>इति मेदिनी । गे, ४९ ॥ मञ्जिष्ठा । इति भाव-<br>प्रकाशः ॥<br><br>**रक्तातिसारः**, पुं, (रक्तं अत्यन्तं सरत्यस्मात् । सृ<br>+ घञ् ।) रोगविशेषः । “तस्य संप्राप्तिमाह ।<br>‘पित्तकृत्तु यदात्यर्थं द्रव्यमश्नाति पैत्तिके । | |

"शवोपरिसमासीनां रक्ताम्बरपरिच्छदाम् ।
रक्तालङ्कारसंयुक्तां गुञ्जाहारविभूषिताम् ॥"
इति तन्त्रसारधृतमुच्छिष्टचाण्डालिनीध्यानम्॥
तद्युक्ते, त्रि ॥

**रक्ताम्रः**, पुं, (रक्तवर्णः आम्रः ।) कोशाम्रः ।
इति राजनिर्घण्टः ॥ (विवरणमस्य कोशाम्र-
शब्द ज्ञातव्यम् ॥)

**रक्ताम्लानः**, पुं, (रक्तेन रक्तवणन आ सम्यक्
म्लायते इति । म्ला + क्तः । समधिकरक्तवर्णत्वा-
त्तथात्वम् ।) रक्तवर्णपुष्पविशेषः । तत्पर्य्यायः ।
रक्तसहा २ अपरिम्लानः ३ रक्ताम्लानकः ४
राग-
प्रसवः ५ रक्तप्रसवः ६ कुरुवकः ७ रामालिङ्गन-
कामः ८ बधूत्सवप्रसवः ९ सुभगः १० भ्रमरा-
नन्दः ११ । अस्य गुणाः । कटुत्वम् । उष्णत्वम् ।
वातामयशोफज्वराध्मानशूलकाशश्वासार्त्तिप्रश्न
मनत्वम् । वर्ण्यत्वञ्च । इति राजनिर्घण्टः ॥

**रक्तार्म्म**, [न्] क्ली, (रक्तं ऋच्छतीति । ऋ + मन् ।)
नेत्ररोगभेदः । तस्य लक्षणं यथा, --
"पद्माभं मृदु रक्तार्म्म यन्मासं चीयते सिते ॥"
इति माधवकरः ॥

**रक्तार्व्वुदः**, पुं, क्ली, (रक्तानामर्व्वुदमत्र ।) रोग-
विशेषः । यथा, शातातपीयकर्म्मविपाके ।
"जलोदरयकृत्प्लीहशूलरोगव्रणानि च ।
श्वासाजीर्णज्वरच्छर्द्दिभ्रममोहगलग्रहाः ।
रक्तार्व्वुदविसर्पाद्या उपपापोद्भवा गदाः ॥"
इति मलमासतत्त्वम् ॥ * ॥
रक्तार्व्वुदमाह ।
'दोषप्रदुष्टा रुधिरं शिराश्च
सङ्कोच्य संपीड्य ततस्त्वपाकम् ।
सस्रावमुन्नह्यति मांसपिण्डं
मांसाङ्कुरैरावृतमाशु वृद्धिम् ॥
स्रवत्यजस्रं रुधिरं प्रदुष्ट-
मसाध्यमेतद्रुधिरात्मकन्तु ।
रक्तक्षयोपद्रवपीडितत्वात्
पाण्डुर्भवेदर्व्वुदपीडितश्च ॥'
दोषोऽत्र पित्तं रुधिरं शिराश्च सङ्कोच्य संपीड्य
शङ्खचूर्णेन संयुक्तो लेपः
सिद्धोऽर्व्वुदापहः ॥
वटदुग्धकुष्ठरोमकलिप्तं बद्धं वटस्य
पत्रेण ।
अध्यस्थि
सप्तरात्रान्महदप्युपशान्तिमर्व्वुदं
गच्छेत् ॥
शिग्रुमूलकयोर्ब्बीजं रक्षोघ्नं सुरसा
यवम् ।
तक्रेणाश्वरिपुं पिष्ट्वा
लिम्पेदर्व्वुदशान्तये ॥'
रक्षोघ्नं सर्षपम् । सुरसा तुलसी । यवं
इन्द्रयवम् ।
अश्वरिपुं करवीरम् ।" इति
भावप्रकाशः ॥

**रक्तार्शः**, [स्] क्ली, (रक्तजनितमर्शः ।) अर्शो-
रोगविशेषः । तस्य लक्षणमाह ।
"रक्तोल्वणा गुदे कीलाः
पित्ताकृतिसमन्विताः ।
वटप्ररोहसदृशा गुञ्जाविद्रुमसन्निभाः ॥
तेऽत्यर्थं दुष्टमुष्णञ्च गाढविड्भिः
प्रपीडिताः ।
स्रवन्ति सहसा रक्तं तस्य
चातिप्रवृत्तितः ॥
भेकाभः पीड्यते दुःखैः
शोणितक्षयसम्भवैः ।
हीनवर्णबलोत्साहो हतौजाः
कलुषेन्द्रियः ॥
विट्श्यावं कठिनं रूक्षमधो वायुर्न
वर्त्तते ।
तनु चारुणवर्णञ्च फेणिलञ्चासृगर्शसाम्
॥
कट्यूरुगुदशूलञ्च दौर्ब्बल्यं यदि
वाधिकम् ।
तत्रानुबन्धो वातस्य हेतुर्यदि च
रूक्षणम् ॥
शिथिलं श्वेतपीतञ्च विट्स्निग्धं गुरु
शीतलम् ।
समङ्गोत्पलमोचाह्वतिरीटतिलचन्दनैः ।
सिद्धं छागीपयो दद्याद्गुदजे
शोणितात्मके ॥
समङ्गा लज्जालुः । मोचाह्वो मोचरसः ।
तिरीटो लोध्रः । चन्दनमत्र रक्तचन्दनम्
। सम-
ङ्गादिदुग्धम् ।
भावितं रजनीचूर्णं स्नुहीक्षीरैः पुनः पुनः
।
बन्धनात् सुदृढं सूत्रं छिनत्त्यर्शो
भगन्दरम् ॥
क्षारसूत्रम् ॥
नासानाभिसमुत्थेषु तथा मेढ्रादिजेष्वपि
।
क्रियामर्शःसु कुर्व्वीत तत्र तत्र
यथोदिताम् ॥
चर्म्मकीलन्तु संछिद्य दहेत् क्षारेण
चाग्निना ।
वेगावरोधन्त्रीपृष्ठयानान्युत्कटकासनम् ।
यथास्वं दोषलञ्चान्नमर्शसः परिवर्ज्जयेत्
॥"
इति भावप्रकाशः ॥
(यथा चास्य लक्षणानि ।
"रक्तजानि
न्यग्रोधप्ररोहविद्रुमकाकणन्तिका-
फलसदृशानि पित्तलक्षणानि च
यदावगाढ-
पुरीषप्रपीडितानि भवन्ति तदात्यर्थं
दुष्टमनल्प-
मसृक् सहसा विमृजन्ति
तस्यैवातिप्रवृत्तौ शोणि-
तातियोगोपद्रवा भवन्ति ।" इति सुश्रुते
निदान-
स्थाने द्वितीयेऽध्याये ॥ अथास्य
चिकित्सा ।
"रक्तार्शसामुपचारं वक्ष्यामि शृणु
पुत्रक ! ।
प्रातस्तिलान् भक्षयेच्च
नवनीतविमिश्रितान् ॥

संहतीकृत्य मांसासृजोः सर्व्वेष्वर्व्वुदेषु दूष्यत्वं
रक्तजे तु विशेषतो रक्तदुष्टिः एवं मांसार्व्वुदे
विशेषतो मांसदुष्टिर्बोद्धव्या । ततो मांसपिण्ड-
मुन्नह्यति उद्गतं करोति । अपाकं ईषत्पाकं
यथा स्यादेवमिति क्रियाविशेषणम् । ईषत्-
पाकश्चैकदेशपाकेन । रक्तक्षयोपद्रवपीडित-
त्वात् रक्तक्षयोपद्रवाः सुश्रुतेनोक्ताः । तैः
पीडितत्वात् अर्व्वुदपीडितः ॥ * ॥ अथार्व्वुदस्य
चिकित्सा ।
'ग्रन्थ्यर्व्वुदानां न यतो विशेषः
प्रदेशहेत्वाकृतिदोषदूष्यैः ।
अतश्चिकित्सेद्भिषगर्व्वुदानि
विधानविद्ग्रन्थिचिकित्सितेन ॥
हरिद्रालोध्रपत्तङ्गगृहधूममनःशिलाः।
मधुप्रगाढो लेपोऽयं मेदोऽर्व्वुदहरः परः ॥
मूलकस्य कृतः क्षारो हरिद्रायास्तथैव च ।
यद्यर्शसां घनञ्चासृक् तत्तु सत्पाण्डु
पिच्छिलम् ॥
गुदं सपिच्छं स्तिमितं गुरु स्निग्धञ्च
कारणम् ।
श्लेष्मानुबन्धो विज्ञेयस्तत्र रक्तार्शसां
बुधैः ॥
गुदे कीला अर्शांसि ।
पित्ताकृतिसमन्विताः
पित्तार्शोलक्षणयुक्ताः । आकारेण च
वटप्ररो-
हादिसदृशाः । दुःखैः रोगैः ।
त्वक्पारुष्याम्बु-
शीतप्रार्थनादिभिः कलुषेन्द्रियः
व्याकुलसर्व्वे-
न्द्रियः । रक्तजस्यापि वातोल्वणस्य
लक्षण-
माह । तत्र रक्तार्शसि अनुबन्धः
उल्वणत्वम् ।
रूक्षणं रूक्षयतीति रूक्षणं रूक्षं द्रव्यम्
।
पित्तोल्वणस्य लक्षणं रक्तोल्वणा गुदे
कीला
पित्ताकृतिसमन्विता इत्यादिनैवोक्तम्
। रक्त-
पित्तयोः समानलिङ्गत्वात् ॥ * ॥
कफोल्वणस्य
लक्षणमाह । सपिच्छं
पिच्छिलार्द्रस्तिमित-
मार्द्रञ्चर्म्मावगुण्ठितमिव । तस्य
चिकित्सा ।
रक्तार्शसामुपेक्षेत रक्तमादौ स्रवद्भिषक्
।
दुष्टाश्रेणिगृहीते स्युः
शूलानाहासृगामयाः ॥
चन्दनकिराततिक्तकधन्वयवासाः
सनागराः
कथिताः ।
रक्तार्शसां प्रशमना
दार्व्वीत्वगुशीरनिम्बा वा ॥
चन्दनमत्र रक्तचन्दनम् । इति
चन्दनादिक्वाथः ॥
सितानागरसंयुक्तं नवनीतं सशर्करम् ।
केशरं मातुलुङ्गस्य विडङ्गशर्करायुतम् ॥
भक्षेत् कुष्माण्डाषलेहं नवनीतेन
शर्कराम् ।
एतेन रक्तगुदजान् शमयन्ति विचक्षणाः
॥
समङ्गा शाल्मलीपुष्पं चन्दनं
ककुभत्वचम् ।
नीलोत्पलमजाक्षीरं पिष्ट्वा
पानमसृग्गदान् ॥
कुटजमूलसकेशरमुत्पलं
खदिरधातकिमूलशृतं पयः ।
पिबति म्रक्षणयोगमसृग्भवं
गुदजवैकृतसङ्गविनाशनम् ॥"
इति रक्तार्शश्चिकित्
इति हारीते चिकित्सितस्थाने १२
अध्यायः ॥)

**रक्तालुः**, पुं, (रक्तः रक्तवर्णः आलुः ।) रक्त-
वर्णालुविशेषः । शकरकन्द आलु इति
भाषा ॥
तत्पर्य्यायः । रक्तपिण्डालुः २
रक्तपिण्डकः ३
लोहितः ४ रक्तकन्दः ५ लोहितालुः ६
। अस्य
गुणाः । शीतत्वम् । मधुराम्लत्वम् ।
भ्रमपित्त-
दाहापहत्वम् । वृष्यत्वम् ।
बलपुष्टिकारित्वम् ।
गुरुत्वञ्च । इति राजनिर्घण्टः ॥

**रक्तिका**, स्त्री, (रक्तो रक्तवर्णोऽस्त्यस्याः । रक्त
+ "अत इनिठनौ ।" ५ । २ । ११५ ।
इति ठन् ।)
गुञ्जा । (अस्याः पर्य्यायो यथा, --
"साङ्कुष्ठा कृष्णला गुञ्जा रक्तिका
काकणन्तिका ।
काकादनी काकतिक्ता काकजङ्घा
शिखण्डनी ॥"
इति वैद्यकरत्नमालायाम् ॥
"रक्ता सा काकचिञ्ची स्यात् काकणन्ती
च

| | | | |
|---|---|---|---|
| | | नवनीततिलाभ्यासात्<br>केशरनवनीतशर्कराभ्यासात् ।<br>दधिसरमथिताभ्यासात्<br>गुदजाः शाम्यन्ति रक्तवहाः ॥<br>दध्नस्तूपरि यो भागो घनः स्नेहयुतः सरः ।<br>मथितं सररहितम् । निर्ज्जलं वस्त्रपूतं दधि ।<br>सपद्मकेशरं क्षौद्रं नवनीतं नवं लिहन् ।<br>सिताकेशरसंयुक्तं रक्तार्शःसु सुखी भवेत् ॥<br>पयसा शृतेन यूषैः सतीनमुद्गाढकीमसूराणाम्।<br>ओदनमद्यादम्लैर्मधुरैरीषत्सुगन्धैश्च ॥ | रक्तिका ।<br>काकादनी काकपीलुः सा स्मृता काकवल्लरी ॥”<br>इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥) |

राजिका । इति राजनिर्घण्टः ॥ रक्तिका-
परिमाणञ्च ॥

**रक्तेक्षुः**, पुं, (रक्तो रक्तवर्ण इक्षुः ।) रक्त-
वर्णेक्षुः । लाल आक् इति भाषा ॥ तत्पर्य्यायः
।
सूक्ष्मपत्रः २ शोणः ३ लोहितः ४ उत्कटः ५
मधुरः ६ ह्रस्वमूलः ७ लोहितेक्षुः ८ । अस्य
गुणाः । मधुरत्वम् । पाके शीतलत्वम् । मृदु-
त्वम् । पित्तदाहहरत्वम् । वृष्यत्वम् । तेजो-
बलविवर्द्धनत्वञ्च । इति राजनिर्घण्टः ॥

**रक्तैरण्डः**, पुं, (रक्तवर्णः एरण्डः ।) वृक्षविशेषः ।
लाल भेरण्डा इति भाषा ॥ तत्पर्य्यायः ।
व्याघ्रः २
हस्तिकर्णः ३ रुवुः ४ उरुवूकः ५ नाग-
वर्णः ६ चञ्चुः ७ उत्तानपत्रकः ८ करपर्णः ९
पाचनः १० स्निग्धः ११ व्याघ्रतलः १२
रक्तकः
१३ चित्रवीर्य्यः १४ ह्रस्वैरण्डः १५ । अस्य
गुणाः श्वयथुपवनश्रान्तिरक्तार्त्तिपाण्डुभ्रान्ति-
श्वासज्वरारोचकनाशित्वम् । लघुत्वञ्च । इति
राजनिर्घण्टः ॥ तत्पर्य्यायगुणाः ।
“शुक्ल एरण्ड आमण्डश्चित्रो गन्धर्व्वहस्तकः
।
पञ्चाङ्गुलो वर्द्धमानो दीर्घदण्डो व्यडम्बकः ॥
रक्तोऽपरोरुवूकः स्यादूरुवूको रुवुस्तथा ।
व्याघ्रपुच्छश्च वातारिश्चञ्चुरुत्तानपत्रकः ॥
एरण्डयुग्मं मधुरमुष्णं गुरु विनाशयेत् ।
शूलशोथकटीवस्तिशिरःपीडोदरज्वरान्॥
ब्रध्नश्वासकफानाहकासकुष्ठाममारुतान् ॥
एरण्डपत्रं वातघ्नं कफक्रिमिविनाशनम् ।
मूत्रकृच्छ्रहरञ्चापि पित्तरक्तप्रकोपणम् ॥
वातार्य्यग्रदलं गुल्मवस्तिशूलहरं परम् ।
कफवातकृमीन् हन्ति वृद्धिं सप्तविधामपि ॥
एरण्डफलमत्युष्णं गुल्मशूलानिलापहम् ।
यकृत्प्लीहोदरार्शोघ्नं कटुकं दीपनं परम् ।
तद्वन्मज्जा च विड्भेदी वातश्लेष्मोदयापहः
॥”
इति भावप्रकाशः ॥

**रक्तोपलं**, क्ली, (रक्तमुपलम् ।) गैरिकम् । इति
हारावली । ११५ ॥ (गुणादयोऽस्य
गैरिक-
शब्दे ज्ञेयाः ॥)

**रक्ष**, त्रि पालने । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।) त्रि, रक्षितोऽस्ति ।
इति
दुर्गादासः ॥

**रक्षः**, [स्] क्ली, (रक्षत्यस्मादिति । रक्ष +
“सर्व्वधातुऽभ्योसुन् ।” उणा० ४ । १८८
। इति
असुन् ।) राक्षसः । इत्यमरः । १ । १ ।
६२ ॥
तद्विशेषो यथा, --
“दृष्ट्वा तु विकलान् व्यङ्गाननाथान्
रोगिणस्तथा
दया न जायते यस्य स रक्ष इति मे मतिः
॥”
इत्याग्नेये
यमशर्म्मिलोपाख्याननामाध्यायः ॥
रक्षोघ्नौषधं यथा, --
मनुरुवाच ।
“रक्षोघ्नानि विषघ्नानि यानि धार्य्याणि
भूभुजा ।
अगदानि समाचक्ष्व तानि धर्म्मभृतांवर ॥
मत्स्य उवाच ।
पत्रिका रोहिणी चैव रक्तमाला महौषधी ।
तथामलकवन्दारं या च चित्रपटोलिका ॥
काकोली क्षीरकाकोली पीलुपर्णी तथैव च
।
केशिनी वृश्चिकाली च महानागा शतावरी
॥
तथा गरुडवेगा च स्थले कुमुदिनी तथा ।
स्थले चोत्पलिनी या च महाभूमिलता च
या ।
उन्मादिनी सोमराजी सर्व्वरत्नानि पार्थिव
।

“रक्षां विदधिरे सम्यक्
गोपुच्छभ्रमणादिभिः ।
गोभूत्रेण स्नापयित्वा
पुनर्गोरजसार्भकम् ॥
रक्षां च चक्रुः शकृता द्वादशाङ्गेषु
नामभिः ।
गोप्यः संस्पृष्टसलिला अङ्गेषु करयोः
पृथक् ॥
न्यस्यात्मन्यथ बालस्य
बीजन्यासमकुर्व्वत ॥
अव्यादजोऽङ्घ्रिमणिमांस्तव
जान्वथोरू
यज्ञोऽच्युतः कटितटं जठरं हयास्यः ।
हृत् केशवस्त्वदुर ईश इनस्तु कण्ठं
विष्णुर्भुजं मुखमुरुक्रम ईश्वरः कम् ॥
चक्र्यग्रतः सहगदो हरिरस्तु पश्चात्
त्वत्पार्श्वयोर्धनुरसी मधुहा जनश्च ।
कोणेषु शंख उरुगाय उपर्य्युपेन्द्र-
स्तार्क्षः क्षितौ हलधरः पुरुषः
समन्तात् ॥
इन्द्रियाणि हृषीकेशः प्राणान्
नारायणोऽवतु ।
श्वेतद्वीपपतिश्चित्तं मनो योगेश्वरोऽवतु
॥
पृश्निगर्भस्तु ते बुद्धिमात्मानं भगवान्
परः ।
क्रीडन्तं पातु गोविन्दः शयानं पातु
माधवः ॥
व्रजन्तमव्याद्वैकुण्ठ आसीनं त्वां श्रियः
पतिः ।
भुञ्जानं यज्ञभुक् पातु सर्व्वग्रहभयङ्करः
॥
डाकिन्यो यातुधान्यश्च कुष्माण्डा
येऽर्भकग्रहाः ॥
भूतमातृपिशाचाश्च यक्षरक्षोविनायकाः
॥
कोटरा रेवती ज्येष्ठा पूतना
मातृकादयः ।

**रक्तैर्व्वारुः**, पुं, (रक्तः रक्तवर्णः एर्व्वारुः ।) इन्द्र-

वारुणी । इति राजनिर्घण्टः ॥ (विशेषो-

ऽस्येन्द्रवारुणीशब्दे विज्ञेयः ॥)

**रक्तोत्पलं**, क्ली, (रक्तं रक्तवर्णमुत्पलम् ।) रक्त-

पद्मम् । तत्पर्य्यायः । रक्तसरोरुहम् २ कोक-

नदम् ३ । इत्यमरः । १ । १० । ४२ ॥ (यथा,

बृहत्संहितायाम् । २९ । ९ ।

"विन्द्याच्च सिन्दुवारेण मौक्तिकं कुङ्कुमं

कुसुम्भेन ।

रक्तोत्पलेन राजा मन्त्री नीलोत्पलेनोक्तः ॥"

तथास्य गुणाः ।

"धवलं कमलं शीतं मधुरं कफपित्तजित् ।

तस्मादल्पगुणं किञ्चिदन्यत् रक्तोत्पलादिकम्

॥"

इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**रक्तोत्पलः**, पुं, (रक्तोत्पलमिव पुष्पमस्त्यस्य ।

अर्शआद्यच् ।) शाल्मलिवृक्षः । इति राज-

निर्घण्टः ॥

**रक्तोत्पलाभः**, पुं, (रक्तोत्पलस्य आभेव

आभास्य ।) शोणवर्णः । इति जटाधरः । तद्-

युक्ते, त्रि ॥

विशेषान्मरकतान्यत्र कीटपक्ष्यविशेषतः

॥

जीवजाताश्च मणयः सर्व्वे धार्य्या

विशेषतः ।

रक्षोघ्नाञ्च यशस्याश्च कृत्या

वेतालनाशनाः ॥"

इति मात्स्ये १९२ अध्यायः ॥

**रक्षःसभं**, क्ली, (रक्षसां राक्षसानां सभा । क्लीव-

त्वमभिधानात् ।) रक्षःसमूहः । इत्यमरः ।

३ । ५ । २३ ॥

**रक्षकः**, त्रि, (रक्षतीति । रक्ष + ण्वुल् ।) रक्षा-

कर्त्ता । यथा, --

"गोरक्षः सहदेवश्च नकुलो हयरक्षकः ।

वैराटे कुरुदायादो नराणां मातुलक्रमः ॥"

इति पुराणम् ॥

**रक्षणं**, क्ली, (रक्ष + भावे ल्युट् ।) रक्षा । यथा,

"इति प्रणयबद्धाभिर्गोपीभिः कृतरक्षणम् ।

पाययित्वा स्तनं माता

संन्यवेशयदात्मजम् ॥"

इति श्रीभागवते १० स्कन्धे ६ अध्यायः

॥

**रक्षणारकः**, पुं, मूत्रकृच्छ्ररोगः । इति शब्द-

रत्नावली ॥ क्वचित् पुस्तके

रक्षणीरकोऽपि

पाठः ॥

**रक्षणिः**, स्त्री, त्रायमाणा लता । इति राज-

निर्घण्टः ॥

**रक्षा**, स्त्री, (रक्षणमिति । रक्ष + "गुरोश्च हलः ।"

३ । ३ । १०३ । इति अः । स्त्रियां टाप्

।)

रक्षणम् । (यथा, कुमारे । २ । २८ ।

"मयि सृष्टिर्हि लोकानां रक्षा

युष्मास्ववस्थिता ॥")

जतु । इति मेदिनी । षे, २३ ॥ भस्म ।

इति

शब्दरत्नावली ॥ यशोदाकृता रक्षा यथा,

--

उन्मादा ये ह्यपस्मारा

देहप्राणेन्द्रियद्रुहः ॥

स्वप्नदृष्टमहोत्पाता वृद्धबालग्रहाश्च ये

।

सर्व्वे नश्यन्तु ते

विष्णोर्नामग्रहणभीरवः ॥"

इति श्रीभागवते १० स्कन्धे ६

अध्यायः ॥ * ॥

अथ पौर्णमास्यां रक्षाबन्धनम् ।

राखीबाँधा

इति भाषा । यथा, --

"पौर्णमास्यां हरे रक्षाबन्धनं

विधिपूर्व्वकम् ।

व्रजराजकुमारत्वात् केचिदिच्छन्ति

साधवः ॥"

तत्र भद्रादिसद्भावे तामतिक्रम्यैव

कुर्य्यात् ।

तथा च स्मृत्यन्तरे ।

"भद्रायां द्वे न कर्त्तव्ये श्रावणी फाल्गुनी

तथा ।

श्रावणी नृपतिं हन्ति ग्रामान् दहति

फाल-

गुनीति ॥"

विधिश्च भविष्योत्तरे ।

"उपाकर्म्मदिने प्रोक्तमृषीणाञ्चैव

तर्पणम् ।

ततोऽपराह्णसमये रक्षापोटलिकां

शुभाम् ॥

कारयेदक्षतैः शस्तैः

सिद्धार्थैर्हेमभूषिताम् ।

वस्त्रैर्व्विचित्रैः कार्पासैः क्षौमैर्व्वा

मलवर्ज्जितैः ।

विचित्रं ग्रथितं सूत्रं स्थापयेद्भाजनोपरि

॥

उपलगृहमध्ये दण्डचतुष्के न्यसेच्छुभं

पीठम् ।

तत्रोपविशेद्राजा सामात्यः सपुरोहितः

ससुहृत् ॥

तदनु पुरोधा नृपते रक्षां बध्नीत मन्त्रेण

।

| | | |
|---|---|---|
| | | येन बद्धो बली राजा दानवेन्द्रो महाबलः ।<br>तेन त्वां प्रतिबध्नामि रक्षे मा चल मा चल ॥”<br>वैदिकश्च । यदा वघ्न दाक्षपणा हित्ययः<br>शतानीका मनष्य माना तन्मया बध्नामि<br>शतं शारदाया युष्मन् जरदिष्टिर्यथा सम् ।<br>“ब्राह्मणैः क्षत्त्रियैर्वैश्यैः शूद्रैश्चान्यैश्च मानवैः ।<br>कर्त्तव्यो रक्षणाचारो विप्रान् शंपूज्य शक्तितः ॥<br>अनेन विधिना यस्तु<br>रक्षिकाबन्धमाचरेत् । |

स सर्व्वदोषरहितः सुखं संवत्सरं वसेदिति ॥"
अथ तद्दिननिर्णयार्थं उपाकर्म्मदिननिर्णयः क्रियते । यदाह स्मृत्यन्तरे ।
"उपाकर्म्म तु कुर्व्वन्ति ते सामऋग्यजुर्व्विदः ।
ग्रहसंक्रान्तियुक्तेषु हस्तश्रवणपर्व्वसु ॥"
तथा च । सामवेदिनां भाद्रस्य हस्तानक्षत्रं ऋग्वेदिनां श्रावणस्य श्रवणनक्षत्रं यजुर्व्वेदिनां श्रावणी पूर्णिमोपाकर्म्मकालः ।
उपक्रमकण्डिका-
कीर्त्तनरूपं कर्म्म उपाकर्म्म । अत्र करणाभावे भाद्रे श्रावणेऽपि विधेयम् ।
"अवृष्ट्योषधयस्तस्मिन्मासे न हि भवन्ति तेत् ।
तदा भाद्रपदे मासि श्रावणेऽपि तदिष्यते ॥"
इति बह्वृच्परिशिष्टवचनात् ॥
श्रावणपञ्चम्यनुकल्पः । तदाह गर्गः ।
"यदि स्यात् श्रावणं पर्व्व ग्रहसंक्रान्तिदूषितम् ।
स्यादुपाकरणं शुक्लपञ्चम्यां श्रावणस्य च ॥"
इति ॥
अत्र भूतविद्धा पूर्णिमा च निषिद्धा । तथा च कालिकापूराणे ।
"चतुर्द्दश्यां समुत्पन्नावसुरौ मधुकैटभौ ।
वेदान् स्वीकुर्व्वतः पद्मयोनेस्तौ जघ्नतुः श्रुतीः ॥
हत्वा तावसुरौ देवः पातालतलवासिनौ ।
आहृत्य ताः श्रुतीस्तस्मै ददौ लोकगुरुः स्वयम् ॥
संप्राप्तवान् श्रुतीर्ब्रह्मा पर्व्वण्यौदयिके पुनः ।
अतो भूतयुते तस्मिन्नोपाकरणमिष्यते ।
आसुरं वर्ज्जयेत् कालं वेदाहरणशङ्कयेति ॥"
व्यासोऽपि ।
"श्रवणेन तु यत् कर्म्म उत्तराषाढसंयुतम् ।
संवत्सरकृतोऽध्यायस्तत्क्षणाद्धि नश्यति ॥
धनिष्ठासंयतं कुर्य्याच्छ्रावणं कर्म्म यद्भवेत् ।
तत् कर्म्म सफलं विद्यादुपाकरणसंज्ञकमिति ॥"
पौरुषं पुरुषश्रेष्ठो ब्रह्मात्मानं ध्रुवो ध्रुवौ ॥
एता देहे विशेषेण तव नित्या हि देवताः ।
एतास्त्वां सततं पान्तु दीर्घमायुरवाप्नुहि ॥
स्वस्ति ते भगवान् ब्रह्म स्वस्ति देवाश्च कुर्व्वताम् ।
स्वस्ति ते चन्द्रसूर्य्यौ च स्वस्ति नारदपर्व्वतौ ॥
स्वस्त्यग्निश्चैव वायुश्च स्वस्ति देवाः सहेन्द्रगाः ।
पितामहकृता रक्षा स्वस्त्यायुर्व्वर्द्धतां तव ॥
ईतयस्ते प्रशाम्यन्तु सदा भव गतव्यथः ॥"
इति स्वाहा ॥
एतैर्वेदात्मकैर्मन्त्रैः कृत्या व्याधिविनाशनैः ।
मयैवं कृतरक्षस्त्वं दीर्घमायुरवाप्नुहि ॥"
इति सुश्रुते सूत्रस्थाने पञ्चमेऽध्याये ॥)

**रक्षापत्रः**, पुं, (रक्षार्थं पत्रमस्य ।) भूर्जवृक्षः ।
इति राजनिर्घण्टः ॥ भूर्जत्यचि, क्ली ॥

**रक्षिका**, स्त्री, (रक्षैव । रक्षा + स्वार्थे कन् ।
टापि अत इत्वम् ।) रक्षा । यथा, --
"अनेन विधना यस्तु रक्षिकाबन्धमाचरेत् ।
स सर्व्वदोषरहितः सुखं संवत्सरं वसेत् ॥"
इति हरिभक्तिविलासे ५१ विलासः ॥

**रक्षितं**, त्रि, (रक्ष + क्तः ।) कृतरक्षम् । तत्-
पर्य्यायः । त्रातम् २ त्राणम् ३ अवितम् ४ गोपायितम् ५ गुप्तम् ६ । इत्यमरः । ३ । १ । १०६ ॥
(यथा, मनुः । ११ । २३ ।
"कल्पयित्वास्य वृत्तिञ्च रक्षेदेनं समन्ततः ।
राजा हि धर्म्मषड्भागं तस्मात् पाप्नोति रक्षितात् ॥"
क्ली, भावे क्तः । रक्षा ॥ * ॥ स्त्रियां टाप् ।
अप्सरोविशेषः । यथा, महाभारते । १ । ६५ । ५० ।
"अलम्बुषा मिश्रकेशी विद्युत्पर्णा तिलोत्तमा ।
कीर्त्त्या निरतिशयप्राशस्त्यस्य कीर्त्तनेन श्रव-
णेन च न केवलमहमेव प्रहृष्यामि किन्तु सर्व्व-
मेव जगच्चेतनमात्रं रक्षोविरोधि प्रहृष्यति
प्रकृष्टं हर्षमाप्नोति इति यत् तत् स्थाने युक्त-
मित्यर्थः । तथा सर्व्वं जगत् अनुरज्यते च त्वद्वि-
षयमनुरागमुपैति इति च यत्तदपि युक्तमेव ।
यथा रक्षांसि भीतानि सन्ति दिशो द्रवन्ति
सर्व्वासु दिक्षु पलायन्त इति यत्तदपि युक्तमेव ।
यथा सर्व्वेषां सिद्धानां कपिलादीनां संघा
नमस्यन्ति चेति यत्तदपि युक्तमेव ।
सर्व्वत्र तव
प्रकीर्त्त्या इत्यस्यान्वयः स्थाने इत्यस्य च ।
अयं श्लोको रक्षोघ्नमन्त्रः शास्त्रप्रसिद्धः ।" इति
तट्टीकायां मधुसूदनसरस्वती ॥
(रक्षोविनाशके,
त्रि । यथा सुश्रुते । १ । ५ ।
"वेदनारक्षोघ्नैर्धूपै-
र्धूपयेद्रक्षोघ्नैश्च मन्त्रै रक्षां कुर्व्वीत ॥")

**रक्षोघ्नी**, स्त्री, (रक्षो हन्तीति । हन + टक् ।
ङीप् ।) वचा । इति रत्नमाला ॥

**रक्षोजननी**, स्त्री, (रक्षसां जननीव ।) रात्रिः ।
इति त्रिकाण्डशेषः ॥ राक्षसमाता च ॥

**रक्षोहा**, [न्] पुं, (रक्षो हन्तीति । हन् + क्विप् ।)
गुग्गुलुः । इति राजनिर्घण्टः ॥
(ऋषिविशेषः ।

इति श्रीहरिभक्तिविलासे ५१ विलासः ॥
(रक्षाकर्म्म यथा । उदकुम्भाच्चापो गृहीत्वा
प्रोक्षयन् रक्षाकर्म्म कुर्य्यात् तद्वक्ष्यामः ।
“कृत्यानां प्रतिघातार्थं तथा रक्षोभयस्य च ।
रक्षाकर्म्म करिष्यामि ब्रह्मा तदनुमन्यताम् ॥
नागाः पिशाचा गन्धर्व्वाः पितरो यक्षराक्षसाः
।
अभिद्रवन्ति ये ये त्वां ब्रह्माद्या घ्नन्तु तान्
सदा ॥
पृथिव्यामन्तरीक्षे च ये चरन्ति निशाचराः ।
दिक्षु वास्तुनिवासाश्च पान्तु त्वान्ते
नमस्कृताः ॥
पान्तु त्वां मुनयो ब्राह्म्या दिव्या
राजर्षयस्तथा ।
पर्व्वताश्चैव नद्यश्च सर्व्वाः सर्व्वेऽपि सागराः
॥
अग्नी रक्षतु ते जिह्वां प्राणान् वायुस्तथैव च ।
सोमो व्यानमपानन्ते पर्जन्यः परिरक्षतु ॥
उदानं विद्युतः पान्तु समानं स्तनयित्नवः ।
बलमिन्द्रो बलपतिर्मनुर्मन्ये मतिन्तथा ॥
कामांस्ते पान्तु गन्धर्व्वाः
सत्त्वमिन्द्रोऽभिरक्षतु ।
प्रज्ञान्ते वरुणो राजा समुद्रो नाभिमण्डलम् ॥
चक्षुः सूर्य्यो दिशः श्रोत्रे चन्द्रमाः पातु ते मनः
।
नक्षत्राणि सदा रूपं छायां पान्तु निशास्तव ॥
रेतस्त्वाप्याययन्त्वापो रोमाण्योषधयस्तथा ।
आकाशं खानि ते पातु देहन्तव वसुन्धरा ॥
वैश्वानरः शिरः पातु विष्णुस्तव पराक्रमम् ।
अरुणा रक्षिता चैव रम्भा तद्वन्मनोरमा ॥”)

**रक्षिता**, [ऋ] पुं, (रक्षतीति । रक्ष + तृच् ।)

रक्षाकर्त्ता । यथा, --
“आयव्ययज्ञो लोकज्ञो देशोत्पत्तिविशारदः
।
कृताकृतज्ञो भृत्यानां ज्ञेयः स्यादेष रक्षिता
॥”
इति मात्स्ये १८९ अध्यायः ॥

**रक्षिवर्गः**, पुं, (रक्षिणां वर्गः समूहः ।) राजाङ्ग-

रक्षकगणः । तत्पर्य्यायः । अनीकस्थः २ ।
इत्य-
मरः । २ । ८ । ६ ॥

**रक्षोघ्नं**, क्ली, (रक्षो राक्षसं हन्तीति । हन् +

टक् ।) काञ्जिकम् । इति हेमचन्द्रः ॥ हिङ्गु
।
इति राजनिर्घण्टः ॥

**रक्षोघ्नः**, पुं, (रक्षो हन्तीति । हन् + टक् ।)

भल्लातकवृक्षः । इति त्रिकाण्डशेषः ॥
श्वेत-
सर्षपः । इति रत्नमाला ॥ रक्षोघ्नमन्त्रो
यथा, --
“स्थाने हृषीकेश तव प्रकीर्त्त्या
जगत् प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्व्वे नमस्यन्ति च सिद्धसंघाः ॥”
इति भगवद्गीतायाम् । ११ । ३६ ॥
“स्थाने इत्यव्ययं युक्तमित्यर्थे । हे हृषीकेश
सर्व्वेन्द्रियप्रवर्त्तक
यतस्त्वमेवात्यन्ताद्भुतप्रभावो
भक्तवत्सलश्च ततस्तव प्रकीर्त्त्या प्रकृष्टया
स तु ऋग्वेदस्य १० मण्डलस्य १६२
सूक्तस्य
ऋषिः ॥ राक्षसहन्तरि, त्रि । यथा,
ऋग्वेदे ।
१० । ९७ । ६ ।
“विप्रः स उच्यते भिषग्रक्षोहा
मीवचातनः ॥”
“रक्षोहा रक्षोहन्ता ।” तद्भाष्ये सायणः
॥)

**रक्ष्णः**, पुं, (रक्ष + “यजयाचयतविच्छप्रच्छरक्षो

नङ् ।” ३ । ३ । ९० । इति नङ् ।)
त्राणम् ।
इत्यमरः । ३ । २ । ८ ॥

**रख**, सर्पणे । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-

सक०-सेट् ।) रखति । इति दुर्गादासः
॥

**रख**, इ सर्पणे । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-

सक०-सेट् ।) इ, रङ्ख्यते । इति
दुर्गादासः ॥

**रग**, इ गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-

सक०-सेट् ।) इ, रङ्ग्यते । इति
दुर्गादासः ॥

**रग**, क स्वाद आपने । इति कविकल्पद्रुमः ॥

(चुरा०-पर०-सक०-अक० च-सेट् ।)
क,
रागयति । इति दुर्गादासः ॥

**रग**, म ए शङ्के । इति कविकल्पद्रुमः ॥ (भ्वा०

पर०-अक०-सेट् ।) म, रगयति । ए,
अरगीत् ।
शङ्कः शङ्का । रगति रोगी कुपथ्येभ्यः ।
इति
दुर्गादासः ॥

**रघ**, इ क भासि । इति कविकल्पद्रुमः ॥ (चुरा०-

पर०-अक०-सेट् ।) इ क, रङ्घयति ।
भासि

| | | |
|---|---|---|
| | | दीप्तौ । इति दुर्गादासः ॥<br>**रघ**, इ ङ गमने । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट् ।) इ, रङ्क्ष्यते । ङ, रङ्घते । इति दुर्गादासः ॥<br>**रघुः**, पुं, (लङ्घति ज्ञानसीमां प्राप्नोतीति । लङ्घि + “लङ्घिबंह्योर्नलोपश्च ।” उणा० १ । ३० । इति कुः नलोपश्च । “बालमूललघ्वसुराल-मङ्गुलीनां वा लो रत्वमापद्यते इति वक्त्यवम् ।” |

८ । २ । १८ । इति काशिकोक्त्या
लस्य रत्वम् ।
इत्युज्ज्वलदत्तः ।)
सूर्य्यवंशीयदिलीपराजपुत्त्रः ।
स तु अयोध्याधिपतिः ।
श्रीरामचन्द्रस्य प्रपिता-
महः । यथा, रघुः । ३ । १८ ।
"स जातकर्म्मण्यखिले तपस्विना
तपोवनादेत्य पुरोधसा कृते ।
दिलीपसूनुर्म्मणिराकरोद्भवः
प्रयुक्तसंस्कार इवाधिकं बभौ ॥"
तन्नामव्युत्पत्तिर्यथा, --
"श्रुतस्य यायादयमन्तमर्भक-
स्तथा परेषां युधि चेति पार्थिवः ।
अवेक्ष्य धातोर्गमनार्थमर्थ-वि-
च्चकार नाम्ना रघुमात्मसम्भवम् ॥"
इति रघुवंशे महाकाव्ये । ३ । २१ ॥
(अस्य पिता दिलीपः माता सुदक्षिणा
। अयं
हि अश्वमेधयज्ञदीक्षितस्य
पितुर्यज्ञीयाश्वरक्षणे
नियुक्तस्तदश्वहारिणं देवराजं
जितवान् । अथ
बहुकालं राज्यसुखमनुभूय
विश्वजिन्नामाध्वरे
सर्व्वं वित्तं ब्राह्मणसात् कृतवानपि
गुरुदक्षिणा-
र्थिना वरतन्तुशिष्येण
कौत्सेनाभ्यर्थितः कुबेरं
विजित्य धनान्यादाय तस्मै प्रदत्तवान्
। अथ
स्वपुत्त्रमजं यौवराज्येऽभिषिच्य
विगतविषयाभि-
लाषो योगसमाधिना भगवत्-
सायुज्यमाप्तवान् ।
तथा च रघुवंशे । ८ सर्गे ।
"अथ वीक्ष्य रघुः प्रतिष्ठितं
प्रकृतिष्वात्मजमात्मवत्तथा ।
विषयेषु विनाशधर्म्मसु
वाग्देवीं भजतो मम सन्तः पश्यन्तु को दोषः ॥"
यथा च ।
"सीमन्तिनी च नलिनी च कुमुद्वती च
चन्द्रप्रभा च रघुकारसरस्वती च ।
कान्तोज्झिता हिमहता रविरश्मितप्ता
मेघावृता जडधियाभिहता न भाति ॥"
इत्युद्भटः ॥)

**रघुनन्दनः**, पुं, (रघून् रघुवंशसम्भूतान् नन्दय-
तीति । नन्दि + ल्युः ।) श्रीरामः । इति शब्द-
रत्नावली ॥ (यथा, रामायणे । १ । ५२ । १२ ।
"ततो वशिष्ठो भगवान् कथान्ते रघुनन्दन ! ।
विश्वामित्रमिदं वाक्यमुवाच प्रहसन्निव ॥"
वङ्गदेशीयनवद्वीपनिवासी स्मार्त्तः पण्डित-
विशेषः । स च प्राचीनस्मृतिसंग्रहकर्त्ता ।
मलमासतत्त्वाद्यष्टाविंशतितत्त्वप्रणेता वन्द्य-
घटीयश्रीहरिहरभट्टाचार्य्यात्मजः । यथा, --
"प्रणम्य सच्चिदानन्दं परमात्मानमीश्वरम् ।
मुनीन्द्राणां स्मृतेस्तत्त्वं वक्ति श्रीरघुनन्दनः ।
मलिम्लुचे दायभागे संस्कारे शुद्धिनिर्णये ।
प्रायश्चित्ते विवाहे च तिथौ जन्माष्टमीव्रते ॥
दुर्गोत्सवे व्यवहृतावेकादश्यादिनिर्णये ।
तडागभवनोत्सर्गे वृषोत्सर्गत्रये व्रते ॥
प्रतिष्ठायां परीक्षायां ज्जोतिषे वास्तुयज्ञके ।
दीक्षायामाह्निके कृत्ये क्षेत्रे श्रीपुरुषोत्तमे ॥
सामश्राद्धे यजुःश्राद्धे शूद्रकृत्यविचारणे ।
इत्यष्टाविंशतिस्थाने तत्त्वं वक्ष्यामि यत्नतः ॥"
इति मलमासतत्त्वम् ॥
अपरः पण्डितविशेषः । स च वर्द्धमानप्रदेशान्त-
र्गतमाडग्रामनिवासिचरः । राढीयश्रेणीभुक्तः
किशोरीमोहनगोस्वामिसूनुः श्रीमन्नित्यानन्द-
वंशीयगोस्वामी । भागवतसिद्धान्तव्रजरमापरि-
णयछन्दोमञ्जरीटीकाव्याख्यानकौमुदीरामरसा-
यणप्रभृतयो बहवो ग्रन्थास्तत्प्रणीताः सन्ति ॥)

**रघुनाथः**, पुं, (रघूणां नाथः । क्षुभ्नादित्वात् णत्वा-
भावः ।) श्रीरामः । इति शब्दरत्नावली ॥
(यथा, रघुः । १५ । ५४ ।
"रघुनाथोऽप्यगस्त्येन मार्गसन्दर्शितात्मना ।
महौजसा संयुयुजे शरत्काल इवेन्दुना ॥")
हरनिवासिचरः कायस्थकुलभूषणं
मथुरान्त-
र्व्वर्त्तिगोवर्द्धनगिरितटे राधाकुण्डे
मर्त्यदेहं
विहाय स्वर्धामागमत् ।
तत्समाधिरधुनापि
तत्रैवास्ते सेव्यतेऽद्यापि बहुभिर्वैष्णवैः
॥)

**रघुवंशः**, पुं, क्ली, (रघोर्वंशः सन्ततिर्वर्णनीयो
यस्मिन् । यद्वा रघूणां वंशमधिकृत्य
कृतमिति
अण् लुक् च ।)
कालिदासकृतरघुराजान्वय-
वर्णनमहाकाव्यग्रन्थविशेषः । यथा, -
-
"रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि
सन् ।
तद्गुणैः कर्णमागत्य चापलाय
प्रचोदितः ॥"
इति रघुवंशे महाकाव्ये । १ । ९ ॥
(अयं हि ऊनविंशसर्गात्मको ग्रन्थः ।
अत्र
दिलीपादारभ्य अग्निवर्णपर्य्यन्तं वस्तु
वर्णि-
तम् ॥ पुं, रघोर्वंशः । यथा, --
"जयति रघुवंशतिलकः
कौशल्यानन्दिवर्द्धनो
रामः ॥"
इति रामायणम् ॥)

**रघुवंशतिलकः**, पुं, (रघुवंशे तिलक इव शोभा-
जनकत्वात् ।) श्रीरामः । यथा, --
"जयति रघुवंशतिलकः
कौशल्यानन्दिवर्द्धनो
रामः ।
दशवदननिधनकारी दाशरथिः
पुण्डरीकाक्षः ॥"
इति रामायणम् ॥

त्रिदिवस्थेष्वपि निःस्पृहोऽभवत् ॥”
“अथ काश्चिदजव्यपेक्षया
गमयित्वा समदर्शनः समाः ।
तमसः परमापदव्ययं
पुरुषं योगसभाधिना रघुः ॥” * ॥
भीमादिवदेकदेशग्रहणे रघुवंशकाव्यम्
। यथा,
“रघुरपि काव्यं तदपि च पाठ्यम्
तस्य च टीका सापि च पाठ्या ॥”
एवं “रघोः काव्यं पदे पदे ॥”
एतावुद्भटौ ॥
अपि च ।
“रञ्जयतीति । राजा प्रभुः । तेन ‘राजा
प्रकृतिरञ्जनात् ।’ इति रघुः ।” इति
उणादि-
वृत्तौ उज्ज्वलदत्तः । १ । १५६ ॥ * ॥
रघु-
वंशीयमात्रम् । तत्र बहुवचनान्तः ।
यथा,
रघुवंशे । १ । ९ ।
“रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि
सन् ॥”
लङ्घति द्रुतं गच्छतीति । शीघ्रगामिनि,
त्रि ।
यथा, ऋग्वेदे । ५ । ३० । १४ ।
“अत्यो न वाजी रघुरज्यमानः ॥”
“रघुः शीघ्रगामी ।” इति तद्भाष्ये
सायणः ॥”)

**रघुकारः**, पुं, (रघुं तदाख्यं काव्यं करोतीति ।
कृ + “कर्म्मण्यण् ।” ३ । २ । १ ।
इति अण् ।)
कालिदासः । इति त्रिकाण्डशेषः ॥
(यथा,
आर्य्यासप्तशत्याम् । ६९७ ।
“पूर्ब्बैर्व्विभिन्नवृत्तां
गुणाढ्यभवभूतिबाणरघुकारैः ।

**रघुपतिः**, पुं, (रघूणां पतिः ।) श्रीरामः । यथा,
“यदुपतेः क्व गता मथुरा पुरी
रघुपतेः क्व गतोत्तरकोशला ।
इति विचिन्त्य कुरुष्व मनः स्थिरं
न सदिदं जगदित्यवधारय ॥”
इति रूपगोस्वामी ॥
(केषाञ्चित् पण्डितानां नाम । यथा, रघुनाथ-
शिरोमणिः अयन्तु नैयायिकः गाङ्गेशोपाध्याय-
कृतव्याप्तिपञ्चकादेष्टीकाकारः । रघुनाथ चक्र-
वर्त्ती अयममरकोषस्य टीकाकारः । रघुनाथ
तर्कवागीशः । रघुनाथ सरस्वती । रघुनाथ
दासगोस्वामी । अयं हि श्रीचैतन्यदेवस्य
प्रियभक्तः आसीत् । स्तवावल्यादिभक्तिग्रन्थ-
प्रणेता । अयं खलु अशेषवैराग्यसम्पन्नः यशो-

**रघुवरः**, त्रि, (रघुषु वरः श्रेष्ठः ।) रघुवंशीयश्रेष्ठः
।
यथा, रामायणे ।
“रामं लक्ष्मणपूर्ब्बजं रघुवरं सीतापतिं
सुन्दरं
काकुत्स्थं करुणामयं गुणनिधिं
विप्रप्रियं
धार्म्मिकम् ॥”

**रघूद्वहः**, पुं, (उद्वहतीति । उत् + वह् + अच् ।
रघूणां उद्वहः रक्षाभारधारकः ।)
श्रीरामः ।
इति शब्दरत्नावली ॥

**रङ्कः**, पुं, (रमते तुष्यतीति । रम् + “बाहुलकात्
रमेरपि कः ।” इति कः ।
इत्युज्ज्वलदत्तः । ३ ।
४० ।) कृपणः । मन्दः । इति मेदिनी
।
के, ३१ ॥

**रङ्कुः**, पुं, (रमते इति । रम् + बाहुलकात् कुः ।)
मृगविशेषः । इत्यमरः । २ । ५ । १०
॥ स
तु शब्दलपृष्ठहरिणः । इति
राजनिर्घण्टः ॥

**रङ्गं**, क्ली पुं, (रङ्गतीति । रङ्ग + अच् । रज्यते
अस्मिन् । रन्ज् + अधिकरणे घञ् वा
।)
धातुविशेषः । राङ्ग इति भाषा ॥
तत्पर्य्यायः ।
त्रपुः २ त्रपुषम् ३ आपूषम् ४ वङ्गम् ५
मधु-
रम् ६ हिमम् ७ कुरूप्यम् ८ पिच्चटम्
९ पूति-
गन्धम् १० । अस्य गुणाः । कटुत्वम्
। तिक्त-
त्वम् । हिमत्वम् । कषायत्वम् ।
लवणरसत्वम् ।
मेहघ्नत्वम् ।
कृमिपाण्डुदाहशमनत्वम् । कान्ति-

| | | |
|---|---|---|
| | | करत्वम् । रसायनत्वञ्च । तद्विशेषो यथा, --<br>“श्वेतं मृदु लघु स्वच्छं<br>स्निग्धमुष्णसहं हिमम् ।<br>सूत्रपत्रकरं कान्तं त्रपुश्रेष्ठमुदाहृतम् ॥<br>क्षुरकं मिश्रकञ्चापि द्विविधं वङ्गमुच्यते ।<br>उत्तमं क्षुरकं तत्र मिश्रकं त्वहितं मतम् ॥”<br>इति राजनिर्घण्टः ॥ |

तस्याशुद्धस्य दोषमाह ।
"वङ्गो विधत्ते खलु शुद्धिहीन-
स्तथा ह्यपक्वश्च किलासगुल्मौ ।
कुष्ठानि शूलं किल वातशोथं
पाण्डुं प्रमेहञ्च भगन्दरञ्च ॥
विषोपमं रक्तविकारवृन्दं
क्षयञ्च कृच्छ्राणि कफज्वरञ्च ।
मेहाश्मरीविद्रधिमुख्यरोगान्
नागोऽपि कुर्य्यात् कथितान् विकारान् ॥"
तस्य शोधनमभिधीयते ।
"वङ्गनागौ प्रतप्तौ च गलितौ तौ निषेचयेत् ।
त्रिधा त्रिधा विशुद्धिः स्याद्रविदुग्धेऽपि च त्रिधा ॥
तैलतक्रकाञ्जिकगोमूत्रकुलत्थक्वाथेषु प्रत्येकं त्रिधा
त्रिधा । ततोऽर्क्दुग्धे त्रिधा ॥ * ॥
अथ वङ्गस्य मारणविधिः ।
"मृत्पात्रे द्राविते वङ्गे चिञ्चाश्वत्थत्वचो रजः ।
क्षिप्त्वा वङ्गचतुर्थांशमयोदर्व्व्या प्रचालयेत् ॥"
चिञ्चा अमिली । रजश्चूर्णम् । अग्रोदर्व्वी कर-
छुली ।
"ततो द्वियाममात्रेण वङ्गं भस्म प्रजायते ।
अथ भस्मसमं तालं क्षिप्त्वाम्लेन विवर्द्धयेत् ॥
ततो गजपुटे पक्त्वा पुनरम्लेन मर्द्दयेत् ।
तालेन दशमांशेन याममेकं ततः पुटेत् ।
एवं दशपुटैः पक्वं वङ्गं भवति मारितम् ॥"
एवं मारितस्य वङ्गस्य गुणाः ।
"वङ्गं लघु सरं रूक्षं कुष्ठमेहकफकृमीन् ।
निहन्ति पाण्डुं सश्वासं नेत्र्यमीषत्तु पित्तलम् ॥
सिंहो गजौघन्तु यथा निहन्ति
तथैव रङ्गोऽखिलहेमवर्गम् ।
देहस्य सौख्यं प्रबलेन्द्रियत्वं
नरस्य पुष्टिं विदधाति नूनम् ॥"
इति भावप्रकाशः ॥

"इयं रङ्गप्रवेशेन कलानाञ्चोपशिक्षया ।
वञ्चनापण्डितत्वेन
स्वरनैपुण्यमाश्रिता ॥"
लक्षणया नाट्यस्थानस्थितो जनः ।
यथा, अभि-
ज्ञानशकुन्तले १ प्रस्तावनायाम् ।
"सूत्रधारः । आर्य्ये ! साधु गीतम् । अहो
रागापहृतचित्तवृत्तिरालिखितइव विभाति
सर्व्वतो रङ्गः । तदिदानीं कतमं प्रयोगमाश्रित्यै-
नमाराधयामः ॥" राजमार्गः । यथा, देवी-
भागवते । ७ । २२ । ३ ।
"अवतार्य्य तदा रङ्गे तां भार्य्यां नृपसत्तमः ॥")
टङ्कणः । खादिरसारः । इति राजनिर्घण्टः ॥

**रङ्गकाष्ठं**, क्ली, (रङ्गं रञ्जितं काष्ठमस्य ।) पत्त-
ङ्गम् । इति राजनिर्घण्टः ॥

**रङ्गजं**, क्ली, (रङ्गात् जायते इति । जन् + डः ।)
सिन्दूरम् । इति रत्नमाला ॥

**रङ्गजीवकः**, पुं, (रङ्गेण रञ्जनकार्य्येण जीवतीति ।
जीव् + ण्वुल् ।) चित्रकारः । इति शब्द-
रत्नावली ॥ नाट्यकारश्च ॥

**रङ्गदः**, पुं, (रङ्गं द्यति छिनत्तीति । दो + कः ।)
टङ्कणः । खादिरसारः । इति राजनिर्घण्टः ॥

**रङ्गदा**, स्त्री, (रङ्गद + टाप् ।) स्फटी । इति
राजनिर्घण्टः ॥ (तथास्याः पर्य्यायः ।
"स्फटी च स्फटिका प्रोक्ता श्वेता शुभ्रा च रङ्गदा ।

**रङ्गमाता**, [ऋ] स्त्री, (रङ्गस्य माता जनिका ।)
कुट्टनी । लाक्षा । इति मेदिनी । ते, २१५ ॥

**रङ्गमातृका**, स्त्री, (रङ्गमातृ + स्वार्थे कन् । टाप् ।)
लाक्षा । इति त्रिकाण्डशेषः ॥

**रङ्गलासिनी**, स्त्री, (रङ्गेण रागेण लसितुं शील-
मस्याः इति । लस + णिनिः ।) शेफालिका ।
इति शब्दचन्द्रिका ॥

**रङ्गशाला**, स्त्री, (रङ्गस्य शाला ।) नाट्यगृहम् ।
इति शब्दरत्नावली ॥ नाचघर इति भाषा ॥

**रङ्गाङ्गा**, स्त्री, (रङ्गं रङ्गार्हमङ्गमस्याः ।) स्फटी ।
इति राजनिर्घण्टः ॥

**रङ्गाजीवः**, पुं, (रङ्गो हरितालादिस्तेनाजीव-
तीति । जीव् + अण् । यद्वा, रङ्ग आजी-
वोऽस्य ।) चित्रकरः । इत्यमरः । २ । १० । ७ ॥
नटः । इति हेमचन्द्रः । ३ । ५८५ ॥

**रङ्गावतारकः**, पुं, (रङ्गे सङ्गीतभवने अवतर-
तीति । तॄ + ण्वुल् । यद्वा रङ्गं नृत्यादिकमव-
तारयतीति । तॄ + णिच् + ण्वुल् ।) रङ्गाव-
तारी । तत्पपर्य्यायः । शैलूषः २ भरतः ३ सर्व्व-
वेशी ४ भरतपुत्त्रकः ५ धात्रीपुत्त्रः ६ रङ्ग-
जीवः ७ जायाजीवः ८ नटः ९ कृशाश्वी १०
शैलाली ११ । इति हेमचन्द्रः ॥
नृत्यगीतस्थाने
गीतवाद्यादिना तदनुगुणतया प्रसङ्गी । इति
प्रायश्चित्तविवेकः ॥
नटगायनव्यतिरिक्तरङ्गाव
तरणजीवी । इति कुल्लूकभट्टः ॥
तस्यान्नभक्षण-
प्रायश्चित्तं यथा, --
"मत्तक्रुद्धातुराणाञ्च न भुञ्जीत कदाचन ।
केशकीटावपन्नञ्च पदा स्पृष्टञ्च कामतः ॥"
इत्युपक्रम्य, --
"कर्म्मारस्य निषादस्य रङ्गावतारकस्य च ।

(यथाच ।
"वङ्गं तिक्ताम्लकं रूक्षं किञ्चिद्वातप्रकोपणम् ।
मेदः श्लेष्मामयघ्नञ्च क्रिमिघ्नं मेहनाशनम् ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणाधिकारे ॥)

**रङ्गः**, पुं, (रन्ज् + घञ् ।) रागः । (यथा, महा-
भारते । ५ । ३६ । १० ।
"वासो यथा रङ्गवशं प्रयाति
तथा स तेषां वशमभ्युपैति ॥")
नृत्यम् । (यथा विष्णुपुराणे । २ । ६ । २० ।
"रङ्गोपजीवी कैवर्त्तः कुण्डाशी गरदस्तथा ।
सूचीमाहिषिकश्चैव पर्व्वकारी च यो द्बिजः ॥"
रजति आसज्जति मल्लोऽत्र । रन्ज् + अधि-
करणे घञ् ।) रणभूमिः । इति मेदिनी । गे,
२१ ॥ (यथा, श्रीमद्भागवते । १० । ४३ । १७ ।
"वृष्णीनां परदेवतेति विदितो रङ्गं गतः साग्रजः ॥")
नाट्यस्थानम् । इति हेमचन्द्रः ॥ (यथा,
मृच्छकटिकप्रकरणे । १ ।
रङ्गदृढा रङ्गदा च दृढा रङ्गापि कथ्यते ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**रङ्गदायकं**, क्ली, (रङ्गस्य दायकम् ।) कङ्कुष्टम् ।
इति राजनिर्घण्टः ॥

**रङ्गदृढा**, स्त्री, (रङ्गवत् दृढा ।) स्फटी । इति
राजनिर्घण्टः ॥

**रङ्गपत्री**, स्त्री, (रङ्गं रङ्गार्थं पत्रमस्याः । ङीष् ।)
नीलीवृक्षः । इति राजनिर्घण्टः ॥

**रङ्गपुष्पी**, स्त्री, (रङ्गं रञ्जितं पुष्पमस्याः ।)
नीलीवृक्षः । इति राजनिर्घण्टः ॥

**रङ्गबीजं**, क्ली, (रङ्गं बीजं उत्पत्तिकारणमस्य ।)
रूप्यम् । इति शब्दरत्नावली ॥

**रङ्गभूतिः**, स्त्री, (रङ्गस्य रागस्य गौरिम्णः भूतिः
शोभात्र ।) कोजागरपूर्णिमा । इति शब्द-
रत्नावली ॥

**रङ्गभूमिः**, स्त्री, (रङ्गस्य भूमिः ।) मल्लभूमिः । इति
शब्दरत्नावली ॥ (यथा, महाभारते ।
१ । १३५ । ९ ।
"अवघुष्टे समाजे च तदर्थं वदतां वरः ।
रङ्गभूमौ सुविपुलं शास्त्रदृष्टं यथाविधि ॥"
रङ्गभूमिविवरणं यथा, अश्ववैद्यके ।
७ । ११-१२ ।
"सान्द्रां सुकठिनाञ्चैव पाषाणोदकसंयुताम् ।
तृणकाष्ठसमायुक्तां रङ्गभूमिन्तु वर्ज्जयेत् ॥
समाञ्च विपुलाञ्चैव किञ्चित् पांशुसमन्विताम् ।
एकान्ते विजने रम्ये रङ्गभूमिन्तु कारयेत् ॥")
सुवर्णकर्त्तुर्व्वेणस्य शस्त्रविक्रयिणस्तथा ॥"
इत्याद्युक्त्वा, --
"य एतेऽन्ये त्वभोज्यान्नाः क्रमशः परिकीर्त्तिताः ।
तेषान्त्वगस्थिरोमाणि वदन्त्यन्नं मनीषिणः ॥
भुक्त्वातोऽन्यतमस्यान्नममत्याक्षपणं त्र्यहम् ।
मत्या भुक्त्वा चरेत् कृच्छ्रं रेतोविण्मूत्रमेव च ॥"
इति मानवे ४ अध्यायः ॥

**रङ्गावतारी**, [न्] पुं, (रङ्गमवतरतीति । तॄ +
णिनिः ।) नटः । इति जटाधरः ॥ (यथा,
याज्ञवल्क्यसंहितायाम् । २ । ७२ ।
"स्त्रीवृद्धबालकितवमत्तोन्मत्ताभिसप्तकः।
रङ्गावतारिपाषण्डिकूटकृद्विकलेन्द्रियाः ॥")

**रङ्गारिः**, पुं, (रङ्गस्य तदाख्यधातोररिरिव ।)
करवीरः । इति रत्नमाला ॥

**रङ्गिणी**, स्त्री, (रङ्गोऽस्त्यस्या इति । रङ्ग +
इनिः । स्त्रियां ङीष् ।) शतमूली । इति
जटाधरः ॥ कैवर्त्तिका । इति राजनिर्घण्टः ॥
रङ्गविशिष्टे, त्रि ॥

**रङ्घः**, [स्] क्ली, (रंघ्यते प्राप्यते इति । रघि
+ "अघिरघिभ्यामसुन् ।" इति असुन् । इत्यु-
ज्ज्वलदत्तः । ४ । २१३ ।) रंहः । वेगः । इति
भरतद्विरूपकोषः ॥ (यथा, सूर्य्यशतके । ७१ ।

| | | |
|---|---|---|
| | नाट्यभूमिश्च ॥<br>**रङ्गमल्ली**, स्त्री, (रङ्गाय रागाय मल्ली ।) वीणा ।<br>इति शब्दरत्नावली ॥<br>**रङ्गमाणिक्यं**, क्ली, (रङ्गं रञ्जितं माणिक्यम् ।)<br>माणिक्यरत्नम् । इति राजनिर्घण्टः ॥ | |

"रंघः संघो सुराणां जगदुपकृतये नित्यमुक्तस्य यस्य ॥")

**रच**, त् क कृत्याम् । इति कविकल्पद्रुमः ॥

(अदन्त चुरा०-पर०-सक०-सेट् ।) रचयति । इति दुर्गादासः ॥

**रचनं**, क्ली, (रचि + भावे ल्युट् ।) निर्म्माणम् ।

ग्रन्थनम् । यथा, जयदेवः । १ । ४ ।
"वाचः पजवय त्युमापतिधरः सन्दर्भशुद्धिं गिरां
जानीते जयदेव एव शरणः श्लाघ्यो दुरूहद्रुतेः ।
शृङ्गारोत्तरसत्प्रमेयरचनैराचार्य्यगोवर्द्धनः
स्पर्द्धी कोऽपि न विश्रुतः श्रुतिधरो धोयी कविः क्ष्मापतिः ॥"

**रचना**, स्त्री, (रच्यते इति । रच + णिच् + "ण्यास-

श्रन्थो युच् ।" ३ । ३ । १०७ । इति युच् ।) कुसुमप्रकारादेः पत्रावल्यादेश्च रचनम् । तत्-पर्य्यायः । परिस्पन्दः २ । इत्यमरः । २ । ६ । १३७ ॥ परिस्यन्दः ३ । इति भरतः ॥ (यथा, साहित्यदर्पणे । ३ । १४९ ।
"भूषाणामर्द्धरचना वृथा विश्वगवेक्षणम् ।
रहस्याख्यानमीषच्च विक्षेपो दयितान्तिके ॥")
यथाक्रमेण स्थापनम् । तत्पर्य्यायः । निवेशः २ स्थितिः ३ । इति हेमचन्द्रः । ३ । ४११ ॥
(यथा, महाभारते । ८ । ४६ । १० ।
"शृणु व्यूहस्य रचनामर्ज्जुनश्च यथागतः ॥")
निर्म्मितिः । कृतिः । यथा, --
"असाधारणचमत्कारकारिणीरचना हि
निर्म्मितिः ॥" इत्यलङ्कारकौस्तुभे १ किरणः ॥
तत्पर्य्यायः । सन्दर्भः २ गुम्फः ३ स्रन्थनम् ४ ।
ग्रन्थनम् ५ । इति हेमचन्द्रः । ३ । ३१७ ॥
(उद्यमः । यथा, श्रीमद्भागवते । ३ । ९ । १० ।
"दैवाहतार्थरचना ऋषयोऽपि देव
युष्मत्प्रसङ्गविमुखा इह संसरन्ति ॥"
"दैवेनाहताः सर्व्वतः प्रतिहताः अर्थानां
रचनाः अर्थार्थोद्यमाः येषाम् ।" इति तट्टी-कायां श्रीधरस्वामी ॥ रचयतीति । रचि + ल्युः ।
रेणुः । ("अर्थाः पादरजोपमाः ॥" इति उज्ज्वलदत्तः । ४ । २१६ ॥) गुणभेदः । आर्त्तवम् । इति जान्तवर्गे शब्दरत्नावली ॥
(स्कन्दस्य सेनाविशेषः । यथा, महाभारते ।
९ । ४५ । ७१ ।
"दण्डबाहुः सुबाहुश्च रजः
कोकिलकस्तथा ॥"
विरजपुत्त्रः । यथा, विष्णुपुराणे । २ । १ । ४० ।
"त्वष्टा त्वष्टुश्च विरजो
रजस्तस्याप्यभूत्सुतः ॥"
वशिष्ठपुत्त्रः ऋषिभेदः । यथा, विष्णुपुराणे ।
१ । १० । १३ ।
"ऊर्ज्जायान्तु वशिष्ठस्य सप्ताजायन्त वै सुताः ।
रजो गात्रोद्र्ध्वबाहुश्च वसनश्चानघस्तथा ॥")

**रजः** [स्] क्ली, (रज्यते रजतीति । रन्ज् + "भू-

रञ्जिभ्यां कित् ।" उणा० ४ । २१६ । इत्यसुन् ।)
स्त्रीणां मासि मासि योनिनिःसृतरक्तम् । तत्-
पर्य्यायः । पुष्पम् २ आर्त्तवम् ३ । इत्यमरः ।
२ । ६ । २१ ॥ ऋतुः ४ कुसुमम् ५ रजम् ६ ।
इति शब्दरत्नावली ॥ (यथा, मनौ । ५ । १०८ ।
"रजसा स्त्री मनोदुष्टा सन्न्यासेन
द्विजोत्तमः ॥"
अस्य लक्षणं यथा, --
"रञ्जितास्तेजसा त्वापः शरीरस्थेन
देहिनाम् ।
अव्यापन्नाः प्रसन्नेन रक्तमित्यभिधीयते ॥
रसादेव स्त्रिया रक्तं रजःसंज्ञं प्रवर्त्तते ।
तद्वर्षाद्वादशादूर्द्ध्वं याति पञ्चाशतः क्षयम् ॥"
रजः सत्त्वं तमश्चैव तमः सत्त्वं
रजस्तथा ॥"
"लोभः प्रवृत्तिरारम्भः
कर्म्मणामसमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्ध
भरतर्षभ ! ॥"
"कर्म्मणः सुकृतस्याहुः सात्त्विकं
निर्म्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः
फलम् ॥
सत्त्वात् सञ्जायते ज्ञानं रजसो लोभ
एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥
ऊद्र्ध्वं गच्छन्ति सत्त्वस्था मध्ये
तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति
तामसाः ॥"
इति श्रीभगवद्गीतायाम् । १४ अध्यायः ॥
"सत्त्वं रजस्तम इति दृश्यन्ते पुरुषे
गुणाः ।
कालसञ्चोदितास्तेऽपि परिवर्त्तन्त
आत्मनि ॥
प्रभूतञ्च यदा सत्त्वं मनोबुद्धीन्द्रियाणि
च ।
तदा कृतयुगं विद्याद्दाने तपसि
यद्रतिः ॥
यदा कर्म्मसु कार्य्येषु शक्तिर्यशसि
देहिनाम् ।
तदा त्रेता रजोवृद्धिरिति जानीहि
शौनक ॥
यदा लोभस्त्वसन्तोषो मानो
दम्भोऽथ मत्सरः ।
कर्म्मणाञ्चापि काम्यानां द्वापरं
तद्रजस्तमः ॥
यदा सदानृतं तन्द्री निद्रा
हिंसादिसाधनम् ।

टाप् । विश्वकर्म्मणो भार्य्या । यथा, श्रीमद्भागवते । ६ । ६ । ४४ ।
“त्वष्टुर्दैत्यात्मजा भार्य्या रचना नाम कन्यका ।
सन्निवेशस्तयोर्जज्ञे विश्वरूपश्च वीर्य्यवान् ॥”)

**रचितः**, त्रि, कृतः । रचधातोः कर्म्मणि क्तप्रत्ययेन निष्पन्नः । यथा, --
“शिरः पद्मश्रेणीरचितचरणाम्भोरुहबलेः
स्थिरायास्त्वद्भक्तेस्त्रिपुरहर विस्फूर्ज्जितमिदम् ॥”
इति पुष्पदन्तकृतस्तुतिः ॥

**रजं**, क्ली, (रञ्जयतीति । रञ्ज + अच् । निपातनात् सिद्धम् ।) स्त्रीकुसुमम् । इति शब्दरत्नावली ॥

**रजः**, पुं, (रञ्जयतीति । रन्ज् + अच् । निपातनान्नलोपः ।) परागः । (यथा, गो० रामायणे । ३ । ७९ । २९ ।
“पद्मपुष्परजोन्मिश्रो वृक्षान्तरविनिःसृतः ।
निश्वास इव सीताया वायुर्वाति मनोरमः ॥”)
“नारीणां रजसि चोपचीयमाने शनैः शनैः स्तनगर्भाशययोन्यभिवृद्धिर्भ्मवति ।” इति सुश्रुते
सूत्रस्थाने १४ अध्यायः ॥
“मासि मासि रजःस्त्रीणां रसजं स्रवति त्र्यहम् ।
वत्सराद्द्वादशादूर्द्ध्वं याति पञ्चाशतः क्षयम् ॥”
इति वाभटे शारीरस्थाने प्रथमेऽध्याये ॥)
प्रकृतेर्गुणविशेषः । तत्तु रागद्वेषात्मकं दुःखहेतुः । रजोऽदन्तः पुंलिङ्गोऽपि । यथा, --
“रजोऽयं रजसा सार्द्धं स्त्रीपुष्पगुणधूलिषु ।”
इत्यमरदत्तः । इति भरतः ॥
महाभारतमते दुःखजनकगुणः । तस्य धर्म्मः
कामः क्रोधः लोभः मानः दर्पश्च । इति मोक्षधर्म्मः ॥
“तृष्णा क्रोधोऽभिसंरम्भो राजसास्ते गुणाः स्मृताः ॥”
अभिसंरम्भो द्वेषाभिनिवेशः ।
इत्याश्वमेधिकपर्व्व ॥ अपि च ।
“काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥”
इति श्रीभगवद्गीतायाम् । २ अध्यायः ॥
अपि च ।
“सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥”
“रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय ! कर्म्मसङ्गेन देहिनम् ॥”
“सत्त्वं सुखे सञ्जयति रजः कर्म्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥
शोकमोहभयं दैन्यं स कलिस्तु तदा स्मृतः ॥”
इति गारुडे २२७ अध्यायः ॥
परागः । इति मेदिनी । से, ३२ ॥
(यथा,
भागवते । ४ । २४ । २२ ।
“पद्मकोशरजो दिक्षु
विक्षिपत्पवनोत्सवम् ॥”)
रेणुः । अस्य पर्य्यायः धूलिशब्दे द्रष्टव्यः ॥
(यथा, माघे । २ । ४६ ।
“पादाहतं यदुत्थाय
मूर्द्धानमधिरोहति ।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ॥”)
निषिद्धानिषिद्धरजो यथा, --
“आयुष्कामो न सेवेत तथा
सम्मार्ज्जनीरजः ।
तथाश्वरथधान्यानां गवाञ्चैव रजः शुभम् ॥
अशुभञ्च विजानीयात्
खरोष्ट्राजाविकेषु च ।
गवां रजो धान्यरजः पुत्त्रस्याङ्गभवं रजः ॥
एतद्रजो महाशस्तं
महापातकनाशनम् ।
अजारजः खररजो यत्तु
सम्मार्ज्जनीरजः ॥
एतद्रजो महापापं
महाकिल्विषकारणम् ॥”
इति गारुडे ११४ अध्यायः ॥
(रात्रिः । इति निघण्टुः । १ । ७ ॥
उदकम् ।
यथा, ऋग्वेदे । १ । ५६ । ५ ।
“वियत्तिरोधरुणमच्युतं रजोतिष्ठिपो दिव
आतासु बर्हणा ।”
‘रज उदकम् ।’ इति तद्भाष्ये सायणः ॥
भुवनम् । यथा, तत्रैव । १० । ८२ । ४ ।

|  | रजस्तमश्चाभिभूय सत्त्वं भवति भारत । | “असूर्त्ते सूर्त्ते रजसि निषत्ते ये भूतानि सम-<br>कृण्वन्निमानि ।”<br>“रजसि लोके ।” इति तद्भाष्ये सायणः ॥<br>ज्योतिः । यथा, तत्रैव । १० । ३२ । २ ।<br>“वीन्द्र यासि दिव्यानि रोचना विपार्थिवानि<br>रजसा पुरुष्टुत ।”<br>“रजसा आत्मीयेन ज्योतिषा । विद्युल्लक्षणेन<br>यद्वा रजःशब्दाच्छस आकारः पार्थिवान्<br>लोकान् ।” इति तद्भाष्ये सायणः ॥) |
|---|---|---|

**रजःशयः**, पुं, (रजसि शेते । शी + "अधिकरणे
शेतेः ।" ३ । २ । १५ । इति अच् ।)
कुक्कुरः ।
इति शब्दमाला ॥ (धूलिशायिनि, त्रि ।
रजतमयी । यथा,
वाजसनेयसंहितायाम् ।
५ । ८ ।
"या तेऽग्ने रजःशया तनूर्वर्षिष्ठा ॥"
"रजःशयारजतमयीति ।" तद्भाष्ये
महीधरः ॥)

**रजःसारथिः**, पुं, (रजसां सारथिरिव ।) वायुः ।
इति शब्दरत्नावली ॥

**रजकः**, पुं, (रजति निर्णेजनेन श्वेतिमानमापा-
दयति वस्त्रादीनामिति । रन्ज +
"नृतिखनि-
रञ्जिभ्यः परिगणनं कर्त्तव्यम् ।" ३ । १
। १४५ ।
इति ष्वुन् ।) वर्णसङ्करजातिविशेषः ।
धोवा
इति भाषा ॥ (यथा, भागवते । १० ।
४१ । ३२ ।
"रजकं कञ्चिदायान्तं रङ्गकारं गदाग्रजः
।
दृष्ट्वायाचत वासांसि
विधौतान्युत्तमानि च ॥")
स च तीवरपत्न्यां धीवराज्जातः । इति
ब्रह्म-
वैवर्त्तपुराणम् ॥ तत्पर्य्यायः ।
निर्णेजकः २ ।
इत्यमरः । २ । १० । १० ॥ शौचेयः
३ कर्म्म-
कीलकः ४ । इति शब्दरत्नावली ॥
धावकः ५ ।
इति हेमचन्द्रः । ३ । ५ । ७८ ॥
रजकस्य वस्त्र-
निर्णेजनप्रकारो यथा, --
"वासांसि फलकैः
श्लक्ष्णैर्निर्णिज्याद्रजकः शनैः ।
वार्य्यपि श्रद्धया
दत्तमक्षयायोपकल्प्यते ॥
यथार्घ्यपिण्डभोज्यादौ पितणां राजतं
मतम् ।
शिवनेत्रोद्भवं तस्माद्दत्तं तत्
पितृवल्लभम् ।
अमङ्गलं तद्यत्नेषु देवकार्य्येषु
वर्ज्जितम् ॥"
इति मात्स्ये १७ अध्यायः ॥

**रजतद्युतिः**, पुं, (रजतस्येव द्युतिरस्य ।)
हनूमान् ।
इति शब्दरत्नावली ॥

**रजतप्रस्थः**, पुं, (रजतस्तन्मयः तद्वत् शुभ्रो वा
प्रस्थः सानुरस्य ।) कैलासपर्व्वतः ।
इति
त्रिकाण्डशेषः ॥

**रजताचलः**, पुं, (रजतप्रधानोऽचल इव । शाक-
पार्थिवादिवत्समासः ।) रौप्यपर्व्वतः ।
तस्य
परिमाणं दानविधिश्च यथा, --
"राजतो नवमस्तद्वद्दशमः
शर्क्कराचलः ।
वक्ष्ये विधानमेतेषां यथावदनुपूर्व्वशः
॥
अतः परं प्रवक्ष्यामि
रौप्याचलमनुत्तमम् ।
यत्प्रसादान्नरो याति सोमलोकं
द्विजोत्तम ॥
दशभिः पलसाहस्रैरुत्तमो रजताचलः
।
पञ्चभिर्म्मध्यमः प्रोक्तस्तदर्द्धेनावरः
स्मृतः ॥
अशक्तौ विंशतेरूर्द्ध्वं कारयेत् शक्तितः
सदा ।
विष्कम्भपर्व्वतांस्तद्वत् तुरीयांशेन
कल्पयेत् ॥
पूर्ब्बवद्राजतान् कुर्य्यान्मन्दरादीन्
विधानतः ॥"
"रजनो वै कौणेयः क्रतुजितं जानकिं चक्षुर्व्वन्
यमयात् ॥")

**रजनिः**, स्त्री, (रजन्ति लोका यत्र । रन्ज् +
बाहुलकादनिः । इत्युज्ज्वलदत्तः । २ । १०३ ।)
रात्रिः । इत्यमरटीका ॥ (यथा, कथा-
सरित्सागरे । १८ । १४५ ॥
"इत्येवं ख्याप्य समयं प्राप्तायां रजनौ च तान् ।
आमन्त्र्य विप्रान् प्रययौ श्मशानं स विदूषकः ॥")

**रजनी**, स्त्री, (रजनि + कृदिकारादिति ङीष् ।)
रात्रिः । (यथा, महाभारते । ३ । ६९ । २८ ।
"सा व्युष्ट्वा रजनीन्तत्र पितुर्वेश्मनि भाविनी ।
विश्रान्ता मातरं राजन् ! इदं वचनमब्रवीत् ॥")
हरिद्रा ॥ (अस्याः पर्य्यायो यथा, --
"हरिद्रा पीतिका गौरी काञ्चनी रजनी निशा ।
मेहघ्नी रञ्जनी पीता वर्णिनी रात्रिनामिका ॥"
इति वैद्यकरत्नमालायाम् ॥
यथा, नषधे । २२ । ४९ ।
"अस्याः सुराधीशदिशः पुरासीत्
यदम्बरं पीतमिदं रजन्या ।
चन्द्रांशुचूर्णव्यतिचुम्बितेन
तेनाधुना नूनमलोहितायि ॥")
जतुका । इत्यमरः । २ । ४ । १५३ ॥ (यथा,
बृहत्संहितायाम् । ४४ । ९ ।
"दन्त्यमृताञ्जनरजनीसुवर्णपूष्पाग्निमन्थाश्च ॥")
नीलिनी । इति मेदिनी । ने, ११६ ॥ (शाल्मली-
द्वीपस्थनदीभेदः । यथा, भागवते । ५ । २० । १०
"अनुमती सिनीवाली सरस्वती कुहू रजनी
नन्दा राकेति ॥")

**रजनीकरः**, पुं, (रजनीं करोतीति । कृ + टः ।)
चन्द्रः । इति शब्दरत्नावली ॥ (यथा, भाग-
वते । ४ । २८ । ३४ ।
"हित्वा गृहान् सुतान् भोगान् वैदर्भी मदिरे-
क्षणा ।
अन्वधावत पाण्ड्येशं ज्योत्स्नेव रजनीकरम् ॥")

**रजनीगन्धा**, स्त्री, (रजन्यां गन्धोऽस्याः । रात्रौ
विकाशात् तथात्वम् ।) स्वनामख्यातश्वेतवर्ण-
पुष्पविशेषः । इति लोकप्रसिद्धिः ॥

अतोऽन्यथा हि कुर्व्वीत दण्ड्यः स्याद्रुक्ममाषकम् ॥”
इति मात्स्ये २०१ अध्यायः ॥
(रजकान्नभक्षणप्रायश्चित्तंयथाह आपस्तम्बः ।
“रजके चैव शैलूषे वेणुचर्म्मोपजीविनि ।
एतेषां यस्तु भूञ्जीत द्विजश्चान्द्रायणञ्चरेत् ॥”
इति प्रायश्चित्तविवेकः ॥ विशेषस्तत्रैव द्रष्टव्यः ॥)
अंशुकः । इति विश्वः ॥

**रजकी**, स्त्री, रजकपत्नी । रन्जधातोः षकप्रत्ययान्तादीपि कृते सिद्धा । इति मुग्धबोधव्याकरणम् ॥ (यथा, आर्य्यासप्तशत्याम् । ४०२ ।
“परपट इव रजकीभिर्मलिनो भुक्त्वापि निर्द्दयं ताभिः ।
अर्थग्रहणेन विना जघन्य ! मुक्तोऽसि कुलटाभिः ॥)

**रजतं**, क्ली, (रजति प्रियं भवति रज्यत इति वा । रन्ज + “पृषिरञ्जिभ्यां कित् ।” उणा० । ३ । १११ । इति अतच् कित्कार्य्यञ्च ।) रूप्यम् । इत्यमरः । २ । ९ । ९६ ॥ हस्तिदन्तः । धवलः शोणितम् । हारः । ह्रदः । शैलः । (स तु शाकद्वीपस्थ एव । यथा, मात्स्ये १२१ । १४ ।
“रत्नमालान्तरमयः शाल्मलश्चान्तरालकृत् ।
तस्यापरेण रजतो महानस्तो गिरिः स्मृतः ॥”)
पूर्व्ववत् रत्नाचलवत् ।
“कलधौतमयांस्तत्र लोकेशान् रचयेद्बुधः ॥
ब्रह्मविष्ण्वर्क्कवत् कार्य्यो नितम्बोऽत्र हिरण्मयः ।
राजतं स्याद्यदन्येषां समन्तादिह काञ्चनम् ॥
शेषञ्च पूर्ब्बवत् कुर्य्यात् होमजागरणादिकम् ।
प्रदद्यात्तु प्रभाते तु गुरवे रौप्यपर्व्वतम् ॥
विष्कम्भशैलान्नृत्विग्भ्यः पूज्य वस्त्रविभूषणैः ।
इमं मन्त्रं पठन् दद्याद्दर्भपाणिर्व्विमत्सरः ॥
पितणां वल्लभं यस्मात् विष्णोर्व्वा शङ्करस्य च ।
रजतं पाहि तस्मान्नः शोकसंसारसागरात् ॥
इत्थं निवेद्य वो दद्यात् रजताचलमुत्तमम् ।
गवामयुतदानस्य फलं प्राप्नोति सानवः ॥
सोमलोके सगन्धर्व्वैः किन्नराप्सरसाङ्गणैः ।
पूज्यमानो वसेद्विद्वान् यावदाहूतसंप्लवम् ॥”
इति मात्स्ये ७ अध्यायः ॥
(कैलासपर्व्वतः । यथा, महालिङ्गार्च्चनतन्त्रे ।
“रजताचलमध्ये तु कुबेरेश्वर ईरितः ॥”)

**रजताद्रिः**, पुं, (रजतमयस्तद्वत् शुभ्रो वा अद्रिः । शाकपार्थिववत् समासः ।) कैलासपर्व्वतः । इति हेमचन्द्रः । ४ । ९४ ॥

**रजनं**, क्ली, (रज्यत इति । रन्ज् + “रञ्जेः क्युन् ।” उणा० २ । ७९ । इति क्युन् । “रजकरजन-

**रजनीचरः**, पुं, (रजन्यां चरतीति । चर + “चरेष्टः ।” ३ । २ । १६ । इति टः ।) राक्षसः । इति शब्दरत्नावली ॥ (यथा, रामायणे । ७ । ५ । ४ ।
“स तया सह संयुक्तो वराज रजनीचरः ॥”
तथा च ।
“ओजोऽशनानां रजनीचराणां आहारहेतोर्न शरीरमिष्टम् ।
गर्भं हरेयुर्यदि तेन मातुर्लब्धावकाशं न हरेयुरोजः ॥”
इति चरके शारीरस्थाने द्वितीयेऽध्याये ॥)
चौरः ॥ यामिकभटः ॥ (रात्रिविहारके, त्रि । यथा, हरिवंशे । २०२ । १८ ।
“ब्राह्मणानाञ्च राजानं शाश्वतं रजनीचरम् ॥”

**रजनीजलं**, क्ली, (रजन्या जलम् ।) नीहारः । इति हारावली । ६७ ॥

| | | |
|---|---|---|
| स्वर्णम् । इति हेमचन्द्रः । ४ । १०९<br>॥ शुक्ल-<br>वर्णविशिष्टे, त्रि । इत्यमरटीकायां<br>भरतः ॥<br>पितृकार्य्ये रजतपात्रादीनां प्राशस्त्यादि<br>यथा,<br>“सौरर्णं राजतं ताम्रं पितॄणां पात्रमुच्यते<br>।<br>रजतस्य कथा वापि दर्शनं दानमेव वा<br>॥<br>राजतैर्भाजनैरेषामथवा रजतान्वितैः । | रजःसूपसंख्यानम् ।” ६ । ४ । २४ ।<br>इति<br>वार्त्तिकोक्तेर्नलोपश्च ।) रागः । इति<br>सिद्धान्त-<br>कौमुद्यामुणादिवृत्तिः ॥ (यथा,<br>महाभारते ।<br>८ । ५२ । ९ ।<br>“यथा वा वाससी शुक्ले<br>महारजनरञ्जिते ।<br>विभृयाद् युवती श्यामा<br>तद्वदासीद्वसुन्धरा ॥”)<br>ऋषिविशेषे, पुं । यथा,<br>तैत्तिरीयसंहितायाम् ।<br>२ । ३ । ८ । १ । | |

**रजनीपुष्पः**, पुं, (रजन्या हरिद्रायाः पुष्पमिव
पुष्पमस्य ।) पूतिकरञ्जः । इति राजनिर्घण्टः ॥
(पूतिकरञ्जशब्देऽस्य विवरणं ज्ञातव्यम् ॥)

**रजनीमुखं**, क्ली, (रजन्या मुखम् ।) प्रदोषः ।
इत्यमरः । १ । ४ । ६ ॥ (यथा, राजतरङ्गि-
ण्याम् । ४ । ४३३ ।
"ततः शशाङ्कधवले सञ्जाते रजनीमुखे ।
पाणिनालभ्य भूपालं शय्यावेश्म विवेश सा ॥")

**रजनीहासा**, स्त्री, (रजन्यां हासो विकाशो
यस्याः ।) शेफालिकापुष्पम् । इति
शब्दरत्नावली ॥

**रजसानुः**, पुं, (रज्यतेऽस्मिन्निति । रन्ज् +
"असानुः सहिमन्दिभ्यां वृधिरञ्जिभ्यां तु
किदर्त्ते-
रर्शश्च ।" इत्युणादिकोषटीकाकृत्सूत्रोक्तिः
असानुप्रत्ययः ।) मेघः । चित्तम् ।
इत्यणादि-
कोषः । १ । १७४ ॥

**रजस्वलः**, पुं, (रजोऽत्रास्तीति । रजस् + "रजः-
कृष्यासुतिपरिषदो वलच् ।" ५ । २ । ११२ ।
इति वलच् ।) महिषः । इति मेदिनी । ले,
१६३ ॥ (अस्य पर्य्यायो यथा, --
"महिषो घोटकारिः स्यात् कासरश्च
रजस्वलः ।
पीनस्कः कृष्णकायोऽथ लुलापो यमवाहनः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे द्वितीये भागे ॥
त्रि, रजोयुक्तः । यथा, भागवते । ७ । १३ ।
१२ ।
"तं शयानं धरोपस्थे कावेर्य्यां सह्यसानुनि ।
रजस्वलैस्तनूदेशैर्निगूढामलतेजसम् ॥"
रजोगुणयुक्तः । स्पृहयालुः । यथा, मनुः ।

अकामतस्तदर्द्धम् । एतत्
चतुर्थाहानन्तरं
कर्त्तव्यम् ।
'चाण्डालेन श्वपाकेन संस्पृष्टा
चेद्रजस्वला ।
अतिक्रम्य तान्यहानि प्रायश्चित्तं
समाचरेत् ॥
त्रिरात्रमुपवासः स्यात् पञ्चगव्येन
शुध्यति ।
तां निशान्तु व्यतिक्रम्य स्वजात्युक्तन्तु
कारयेत् ॥'
इति वचनान्तरदर्शनात् एतत् कामतः ॥
अत्र दिनभेदोऽपि नास्ति । अज्ञाने
बृहस्पतिः ।
'पतितान्त्यश्वपाकैश्च संस्पृष्टा स्त्री
रजस्वला ।
तान्यहानि व्यतिक्रम्य प्रायश्चित्तं
समाचरेत् ॥
प्रथमेऽह्नि त्रिरात्रं तु द्वितीये
द्व्यहमाचरेत् ।
अहोरात्रं तृतीयेऽह्नि चतुर्थे नक्तमाचरेत् ॥'
चतुर्थेऽह्नीति शुद्धिस्नानात् पूर्ब्बम् ।
व्याघ्रः ।
'रजस्वला यदा स्पृष्टा श्वजम्बूकखरैः
क्वचित् ।
निराहारा भवेत्तावत् यावत् स्नानेन
शुध्यति ॥'
अत्रापि बृहस्पत्युक्तदिनभेदव्यवस्था । वृद्ध-
शातातपः ।
'रजस्वले तु ये नार्य्यावन्योन्यं स्पृशतो
यदि ।
सवर्णे पञ्चगव्यन्तु ब्रह्मकूर्च्चमतः परम् ॥'
पञ्चगव्यपानं व्रतरूपम् । तेनोपवासः । ब्रह्म-
कूर्च्चमाह जावालः ।

(अपि च ।
"रजस्वलास्त्रीगमनमेतन्नरककारणम् ।
रजस्वलावीरान्नञ्च पुंश्चल्यन्नञ्च भक्षणम् ।
अभक्ष्यान्नञ्च विप्रर्षे यदन्नं वृषलीपतेः ॥"
तथा च ।
"रजस्वलामकामाञ्च मलिनामप्रियान्तथा ।
वर्णवृद्धां वयोवृद्धां तथा व्याधिप्रपीडिताम् ॥
हीनाङ्गीं गर्भिणीं द्वेष्यां योनिदोषसमन्विताम् ।
सगोत्रां गुरुपुत्रीञ्च तथा प्रव्रजितामपि ॥
सन्ध्यापर्व्वस्वगम्याञ्च नोपेयात् प्रमदां नरः ॥
रजस्वलां प्राप्तवतो नरस्यानियतात्मनः ।
दृष्ट्यायुस्तेजसां हानि-रधर्म्मश्च ततो भवेत् ॥"
इति सुश्रुते चिकित्सितस्थाने २४ अध्यायः ॥)

**रजिः**, पुं, चन्द्रवंशीयराजविशेषः । यथा । "पुरू-
रवसो ज्येष्ठपुत्त्रश्चायुर्नामा । स
राहोर्दुहितर-
मुपयेमे । तस्यां पञ्च पुत्त्रानुत्पादयामास ।
नहुषक्षत्त्रवृद्धरम्भरजिसंज्ञाः । रजेः पञ्च
पुत्त्रशतान्यतुलवीर्य्यसाराण्यासन् ।" इति
विष्णु-
पुराणे ४ अंशे । ८ । ९ । अध्यायौ ॥
(राज्यम् ।
कन्याविशेषे, स्त्री । यथा, ऋग्वेदे । ६ । २६ ।
६ ।
"त्वं रजिं पिठीनसे दशस्यन् षष्टिं सहस्रा
शच्या सचाहन् ।"
"रजिं एतदाख्यां कन्यां वा राज्यं वा ।" इति
तद्भाष्ये सायणः ॥ रज्जुः । यथा, ऋग्वेदे ।
१० ।
१०० । १२ । "रजिष्ठया रज्या पश्व आ
गोस्तुतूर्षति पर्य्यग्रं दुवस्युः ॥"
"रजिष्ठया ऋजुतमया रज्या रज्ज्वा ।" इति
तद्भाष्ये सायणः ॥)

**रजोबलं**, क्ली, (रज इव बलति संवृणोतीति ।

६ । ७७ ।
"जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यञ्च भूतावासमिमं त्यजेत्
॥")

**रजस्वला**, स्त्री, (रजोऽस्त्यस्याः । "रजःकृष्या-
सुतीति ।" ५ । २ । ११२ । इति वलच् ।
टाप् ।)
रजोयुक्ता । तत्पर्य्यायः । स्त्रीधर्म्मिणी २
अवी ३ आत्रेयी ४ मलिनी ५ पुष्पवती ६
ऋतुमती ७ उदक्या ८ । इत्यमरः । २ । ६
। २० ॥
दुरिः ९ पुष्पहासा १० । इति शब्दरत्ना-
वली ॥ पुष्पिता ११ अवीरा १२ विफली
१३
निष्फली १४ । इति जटाधरः ॥ म्लाना
१५
पांशुला १६ । इति राजनिर्घण्टः ॥ * ॥
अथ
रजस्वलास्पर्शप्रायश्चित्तम् । "काश्यपः ।
'रजस्वला तु संस्पृष्टा ब्राह्मण्या ब्राह्मणी यदि
।
एकरात्रं निराहारा पञ्चगव्येन शुध्यति ॥
रजस्वला तु संस्पृष्टा राजन्या ब्राह्मणी तु या
।
त्रिरात्रेण विशुद्धिः स्यात् व्याघ्रस्य वचनं
यथा ॥
रजस्वला तु संस्पृष्टा वैश्यया ब्राह्मणी च या
।
पञ्चरात्रं निराहारा पञ्चगव्येन शुध्यति ॥
रजस्वला तु संस्पृष्टा शूद्रया ब्राह्मणी यदि ।
षड्रात्रेण विशुध्येत्तु ब्राह्मणी कामचारतः ॥
अकामतश्चरेद्दर्द्धं ब्राह्मणी सर्व्वजातिषु ॥'
एतेन रजस्वलाया ब्राह्मण्याः
सवर्णरजस्वला-
स्पर्शे एकरात्रोपवासः पञ्चगव्यपानं कामतः
।
अकामतस्तदर्द्धम् । नक्तव्रतम् ।
असवर्णरज-
स्वलास्पर्शे त्रिरात्रपञ्चरात्रषड् रात्रोपवासाः ।
'अहोरात्रोषितो भूत्वा पौर्णमास्यां
विशेषतः ।
पञ्चगव्यं पिबेत् प्रातर्ब्रह्मकूर्च्चविधिः
स्मृतः ॥'
तदशक्तौ पुराणैकं दातव्यम् ।" इति
प्रायश्चित्त-
तत्त्वम् ॥ * ॥ अन्यच्च ।
'शुद्धा भर्त्तुश्चतुर्थेऽह्नि अशुद्धा
दैवपैत्रयोः ।
दैवे कर्म्मणि पैत्रे च पञ्चमेऽहनि शुध्यति
॥'
इति शुद्धितत्त्वम् ॥
तस्यां गमने पापं यथा, --
"प्रथमे दिवसे कान्तां यो हि
गच्छेद्रजस्वलाम् ।
ब्रह्महत्याचतुर्थांशं लभते नात्र संशयः
॥
स पुमान्न हि कर्म्मार्हो दैवे पैत्रे च
कर्म्मणि ।
अधमः स च सर्व्वेषां
निन्दितश्चायशस्करः ॥
द्वितीयदिवसे नारीं यो व्रजेच्च
रजस्वलाम् ।
कामतः परिपूर्णाञ्च ब्रह्महत्यां
लभेद्ध्रुवम् ॥
आजीवनं नाधिकारी पितृविप्रसुरार्च्चने
॥
अमनुष्योऽयशस्यः
स्यादित्याङ्गिरसभाषितम् ॥
तृतीयदिवसे जायां यो हि
गच्छेद्रजस्वलाम् ।
स मूढो ब्रह्महत्याञ्च लभते नात्र संशयः
॥
पूर्ब्बवत् पतितः सोऽपि न चार्हः
सर्व्वकर्म्मसु ।
असत्पुत्रा चतुर्थेऽह्नि न गच्छेत्तां
विचक्षणः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ५९
अध्यायः ॥
अपि च ।
बल् + अच् ।) अन्धकारः । इति
त्रिकाण्डशेषः ॥

**रजोरसं**, क्ली, अन्धकारः । इति शब्दरत्नावली ॥

**रजोहरः**, पुं, (रजो हरतीति । हृ + "हरते-
ऽनुद्यमनेऽच् ।" ३ । २ । ९ । इति अच् ।)
रजकः ।
इति शब्दमाला ॥

**रज्जुः**, स्त्री, (सृज्यते रच्यते इति । सृज् + "सृजे-
रसुश्च ।" उणा० १ । १६ । इति उः ।
असुगागमश्च । धातुसकारलोपश्च । आगम-
सकारस्य जश्त्वम् । दकारः । तस्यापि
चुत्वम् ।
जकारः । इत्युज्ज्वलः । अप्राणिजातेश्चार-
ज्ज्वादीनामिति कथनात् न ऊङ् ।) बन्धन-
साधनवस्तु । दडी इति भाषा ॥ तत्-
पर्य्यायः । शुल्बम् २ वराटकः ३ वटी ४ गुणः
५
इत्यमरः । २ । १० । २७ ॥ शुल्बा ६ । इति
भरतधृतरत्नकोषः ॥ शुल्वम् ७ शुल्वः ८
शुल्वा ९
शुल्वी १० सुष्मम् ११ वराटः १२ वटाकरः
१३
वटीगुणः १४ । इति टीकान्तरम् ॥ (तस्या
अपहरणे दोषो यथा, मनौ । ११ । १६९ ।
"कार्पासकीटजीर्णानां द्विशफैकशफस्य च ।
पक्षिगन्धौषधीनाञ्च रज्ज्वाश्चैव त्र्यहं पयः ॥")
वेणी । इति मेदिनी । जे, १४ ॥ (प्रत्यङ्ग-
विशेषः । यथा, सुश्रुते शारीरस्थाने ५
अध्याये ।
"रज्जवः सेवन्यः सङ्घाताः ॥")

|  | “अपूर्णे ऋतुकाले तु<br>योऽभिगच्छेद्रजस्वलाम् ।<br>रेतपाः पितरस्तस्य एवमेतन्न संशयः<br>॥<br>एकस्तु पुरुषो याति द्वितीयां<br>काममोहितः ।<br>तृतीयां वा चतुर्थीञ्च तदा स पुरुषाधमः<br>॥<br>ऋतुकाले तु सर्व्वासां पित्रर्थं भोग<br>इष्यते ।<br>ऋतुकालाभिगामी यो ब्रह्मचार्य्येव<br>सम्मतः ॥<br>न गच्छति च यः क्रोधात् मोहाद्वा<br>पुरुषाधमः ।<br>ऋतौ ऋतौ भ्रूणहत्यां प्राप्नोति<br>पुरुषश्चरन् ॥”<br>इति वाराहे गुह्यकर्म्मवर्णनं नामाध्यायः<br>॥ |  |
|---|---|---|

**रञ्जकं**, क्ली, (रञ्जयतीति । रन्ज् + णिच् + ण्वुल् ।) हिङ्गुलम् । इति राजनिर्घण्टः ॥ (गुणादयोऽस्य हिङ्गुलशब्दे विज्ञेयाः ॥)

**रञ्जकः**, पुं, (रञ्जयतीति । रन्ज् + णिच् + ण्वुल् ।) कम्पिल्लकः । इति राजनिर्घण्टः ॥ प्रीतिजनकः । वस्त्रादिरागकर्त्ता च ॥ (अस्य गृहे भोजनं निषिद्धं यथा, मनौ । ४ । २१६ ।
"श्ववतां शौण्डिकानाञ्च चेलनिर्णेजकस्य च ।
रञ्जकस्य नृशंसस्य यस्य चोपपतिर्गृहे ॥"
नाद्यादिति शेषः ॥ पित्तान्तर्गतोऽग्निविशेषः । यथा, --
"यत्तु यकृत्प्लीह्नोः पित्तं तस्मिन् रञ्जकोऽग्निरिति संज्ञा सरसस्य रागकृदुक्तः ।"
इति सुश्रुते सूत्रस्थाने २१ अध्यायः ॥)

**रञ्जनं**, क्ली, (रज्यतेऽनेनेति । रन्ज् + करणे ल्युट् ।) रक्तचन्दनम् । इति मेदिनी । ने, ११५ ॥ (अस्य पर्य्यायो यथा, --
"पत्तङ्गं रक्तसारञ्च सुरङ्गं रञ्जनन्तथा ।
पट्टरञ्जनमाख्यातं पत्तूरञ्च कुचन्दनम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥) हिङ्गुलम् । इति राजनिर्घण्टः ॥ (रन्ज् +

"माघे मास्यसिते पक्षे रटन्त्याख्या चतुर्द्दशी ।
तस्यामुदयवेलायां स्नाता नावेक्षते यमम् ॥"
उदयवेलायामरुणोदयवेलायाम् ।
"अनर्काभ्युदिते काले माघे कृष्णचतुर्द्दशी ।
सतारव्योमकाले तु तत्र स्नानं महाफलम् ।
स्नात्वा सन्तर्प्य तु यमान् सर्व्वपापैः प्रमुच्यते ॥"
अत्र तिथिकृत्यत्वात् गौणचान्द्रादरः । अत्रारुणोदयकाल एव स्नानं पूर्ब्बोक्तचतुर्द्दशयमतर्पणञ्च । यत्तु उदयवेलायां सूर्य्योदयवेलायां अनर्काभ्युदित इति ईषदर्थे नञिति व्याख्यानं तत् समुद्रकरभाष्यधृतसतारव्योमइति इत्युत्तरार्द्धानवलोकनेनेति । इति तिथ्यादितत्त्वम् ॥ किञ्च ।
"अनर्काभ्युदिते काले स्नानं कुर्य्यात् सरिज्जले ।
शतजन्मकृतं पापं तत्क्षणादेव नश्यति ॥
रटन्ती नाम विख्याता सर्व्वपापहरा शिवा ॥"
इति मत्स्यसूक्ते ५५ पटलः ॥
क्वचित् पुस्तके सरिज्जले इत्यत्र वहिर्ज्जले इति पाठः ॥ * ॥ तत्र श्यामापूजाविधिर्य्यथा, --
"माघे मास्यसिते पक्षे रटन्त्याख्या चतुर्द्दशी ।
तस्यां संपूजयेत्तारां महाविभवविस्तरैः ।
चक्रवर्त्ती महाराजो भवत्येव न संशयः ॥"
इति बृहन्नीलतन्त्रे ७ पटलः ॥
अपि च ।
"माघे मास्यसिते पक्षे रटन्त्याख्या चतुर्द्दशी ।
तद्रात्रौ कालिकापूजा सर्व्वविघ्नोपशान्तये ॥"
इति कालिकापुराणम् ॥ * ॥
अपरञ्च ।
"माघे मास्यसिते पक्षे रटन्त्याख्या चतुर्द्दशी ।
तस्यां प्रदोषसमये पूजयेन्मुण्डमालिनीम् ॥"
इत्याचार्य्यचूडामणिकृतकृत्यतत्त्वार्णवधृतवचनम् ॥ अन्यत् श्यामाशब्दे द्रष्टव्यम् ॥

**रटितं**, त्रि, कथितम् । रटधातोः कर्म्मणि क्तप्रत्ययेन निष्पन्नम् । (भावे क्तः ।) कथनमात्रे, क्ली ॥ (यथा, राजतरङ्गिण्याम् । २ । १७४ ।
"वनहरिरसितैः पदे पदे
स प्रतिभटतां पटहध्वनेर्द्दधानैः ।
अमनुत रटितैश्च कर्करेटोः
परिगलितां गमनोन्तुखस्त्रियामाम् ॥")

मनौ । ७ । ९० ।
"न कूटैरायुधैर्हन्याद्युध्यमानो रणे रिपून् ।
न कर्णिभिर्नापि दिग्धैर्नाग्निज्वलिततेजनैः ॥"
रमणम् । यथा, ऋग्वेदे । ८ । १७ । १२ ।
"शाचिगो शाचि पूजनायं रणाय ते सुतः ॥"
"रणाय रमणाय ।" इति तद्भाष्ये सायणः ॥
रमणीये, त्रि । यथा, तत्रैव । १ । ११६ । २१ ।
"एकस्यावन्त्यो रावतं रणाय वशमश्विनासनये सहस्रा ।"
"रणाय रमणीयाय ।" इति तद्भाष्ये सायणः ॥)

**रणः**, पुं, (रण् + अप् ।) शब्दः । कणः । इति मेदिनी ॥ गतिः । इति शब्दरत्नावली ॥

**रणतूर्य्यं**, क्ली, (रणस्य तूर्य्यम् ।) युद्धवाद्यम् । तत्पर्य्यायः । संग्रामपटहः २ अभयडिण्डिमः ३ । इति त्रिकाण्डशेषः ॥

**रणप्रियं**, क्ली, (रणे प्रियम् ।) उशीरम् । इति राजनिर्घण्टः ॥

**रणप्रियः**, पुं, (रणः प्रियोऽस्य । तत्र मांसभक्षणात्तथात्वम् ।) श्येनकपक्षी । इति राजनिर्घण्टः ॥ (विष्णुः । यथा, महाभारते । १३ । १४९ । ८६ ।
"स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रियः ॥"
युद्धप्रियमात्रे, त्रि । यथा, कामन्दकीये । १७ । ३३ ।
"रणप्रियः साहसिक आत्मसम्भावितस्तथा ।
विच्छिन्नधर्म्मकामार्थः क्रुद्धो मानी विमानितः ॥")

**रणमत्तः**, पुं, (रणे रणं प्राप्य वा मत्तः ।) हस्ती । इति शब्दमाला ॥

णिच् । भावे ल्युट् ।
प्रीतिजननम् । यथा,
रघौ । ४ । १२ ।
"तथैव सोऽभूदन्वर्थो राजा
प्रकृतिरञ्जनात् ॥")

**रञ्जनः**, पुं, (रञ्जयतीति । रन्ज् + णिच् + ल्युः ।)

रागजनकः । इति मेदिनी । ने,
११५ ॥ मुञ्ज
तृणम् । इति राजनिर्घण्टः ॥

**रञ्जनकः**, पुं, (रञ्जन + कन् ।) कट्फलः । इति

राजनिर्घण्टः ॥
(गुणादिविशेषोऽस्य कट्फल-
शब्दे विज्ञेयः ॥)

**रञ्जनद्रुः**, पुं, (रञ्जयतीति । रन्ज् + णिच् + ल्युः ।

रञ्जनश्चासौ द्रुश्चेति ।)
अच्छुकवृक्षः । आच्-
गाछ इति भाषा ॥

**रञ्जनी**, स्त्री, (रञ्जन + ङीष् ।) शुण्डारोचनिका ।

नीली । (अस्याः पर्य्यायो यथा,
--
"नीली तु नीलिनी तूली
कालदोला च नीलिका ।
रञ्जनी श्रीफली तुच्छा ग्रामीणा
मधुपर्णिका ॥
क्लीतका कालकेशी च
नीलपुष्पा च सा स्मृता ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ॥)
मञ्जिष्ठा । इति मेदिनी । ने,
११५ ॥ शेफा-
लिका । इति शब्दचन्द्रिका ॥
हरिद्रा ।
(अस्याः पर्य्यायो यथा, --
"हरिद्रा पीतिका गौरी काञ्चनी
रजनी निशा ।
मेहघ्नी रञ्जनी पीता वर्णिनी
रात्रिनामिका ॥"

**रठ**, भाषणे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

सक०-सेट् ।) भाषणं कथनम् । रठति । इति
दुर्गादासः ॥

**रण**, रुति । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

अक०-सेट् ।) रणति । रुति शब्दे । इति
दुर्गादासः ॥

**रण**, म गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) म, रणयति । इति दुर्गा-
दासः ॥

**रणं**, क्ली पुं, (रणन्ति शब्दायन्तेऽत्रेति । रण् +

"ग्रहेति ।" ३ । ३ । ५८ । इत्यत्र । "वशिरण्यो-
रुपसंख्यानम् ।" इति काशिकोक्त्या अप् ।)
युद्धम् । इत्यमरः । २ । ८ । १०४ ॥ (यथा,

**रणमुष्टिः**, पुं, विषमुष्टिक्षुपः । इति राजनिर्घण्टः ॥

**रणरङ्कः**, पुं, (रणेषु रङ्को मन्दः ।) रणकातर-

हस्ती । तत्पर्य्यायः । प्रतिमः २ । इति हारा
वली । २०४ ॥

**रणरणं**, क्ली, उद्वाहनम् । इति त्रिकाण्डशेषः ॥

**रणरणः**, पुं, (रणरण इति शब्दोऽस्त्यस्येति ।

अर्श आदित्वादच् ।) मशकः । इति
त्रिकाण्ड-
शेषः ॥ (रणे रणः शब्दो यस्य । रणगर्ज्जन-
शीले, त्रि । यथा, --
"अव्याद्वः करणो रणो रणरणो राणो रणो
रावणो
धृत्वा येन रमा रमा रमरमा रामा रमा
सा रमा ।
सश्रीमानदयो दयो दयदयो दायो दयो वेदयो
विष्णुर्ज्जिष्णुरभीरभीरभरभीराभीरभी-
सौरभिः ॥"
इत्युद्भटः ॥)

**रणरणकः**, पुं, उत्कण्ठा । इति हेमचन्द्रः । २ ।

२२९ ॥ (यथा, उत्तररामचरिते प्रथमाङ्के ।
"अये सैवेयं रणरणकदायिणी चित्रदर्शना-
द्विरहभावना देव्याः स्वप्नोद्वेगं करोति ॥")

**रणसङ्कुलं**, क्ली, (रणस्य सङ्कुलम् ।) तुमुलम् ।

इत्यमरः । २ । ८ । १०६ ॥

**रणालङ्करणः**, पुं, (रणस्य अलङ्करणः ।) कङ्क-

पक्षी । इति राजनिर्घण्टः ॥

इति वैद्यकरत्नमालायाम् ॥)

पर्प्पटी । इति राजनिर्घण्टः ॥

**रट**, वाचि । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

सक०-सेट् ।) रटति । इति

दुर्गादासः ॥

**रटन्ती**, स्त्री, (रट्यते पुण्यजनकत्वेन कथ्यते इति ।

रट् + बहुलकात् झच् । ङीप् ।)

गौणचान्द्र-

माघीयकृष्णचतुर्द्दशी । तत्र

अरुणोदयकाले

स्नानं कर्त्तव्यम् । यथा । यमः ।

**रण्डः**, त्रि, (रम् + “अमन्तात् डः ।” उणा० १ । ११३ । इति डः ।) अर्द्धचर्म्मावच्छिन्नाव- यवः । धूर्त्तः । इति संक्षिप्तसारोणदिवृत्तिः ॥

**रण्डकः**, पुं, (रण्ड इवेति । रण्ड + कन् ।) अफल- वृक्षः । इति शब्दचन्द्रिका ॥

**रण्डा**, स्त्री, (रमन्तेऽत्रेति । रम् + “अमन्तात् डः ।” उणा० १ । ११३ । इति डः । टाप् ।) मूषिकपर्णी । इत्यमरः । २ । ४ । ८८ ॥ (यथा,
“हिङ्गुलात् सम्भवं सूतं पालिधारसमर्द्दितम् ।
रण्डाशोधितगन्धञ्च तेनैव कज्जलीकृतम् ॥”
इति वैद्यकरसेन्द्रसारसंग्रहे बृहत्सोमनाथरसे ॥)
विधवा । राँड़् इति भाषा ॥ यथा । तिष्ठते रण्डा विकर्म्मस्थेभ्यः स्वहृदयं व्यनक्तीत्यर्थः ।
इति संक्षिप्तसारे तिङन्तपादः ॥

**रण्डाश्रमी** [न्] पुं, (रण्डो विफल आश्रमः सोऽस्त्यस्य । रण्डाश्रम + इनिः ।) अष्टचत्वा- रिंशद्वत्सरोपरिभार्य्याविहीनः । यथा, भवि- ष्यपूराणम् ।
“चत्वारिंशद्वत्सराणां साष्टानाञ्च परे यदि ।
स्त्रिया वियुज्यते कश्चित् स तु रण्डाश्रमी मतः ॥”
इत्युद्वाहतत्त्वम् ॥

**रतं**, क्ली, (रमणमिलि । रम् + भावे क्तः ।) मैथुनम् । इत्यमरः । २ । ७ । ५७ ॥ (यथा, आर्य्यासप्तशत्याम् । ५४९ ।
“विपरीतमपि रतं ते स्रोतो नद्या इवानुकूल- मिदम् ।
तटतरुमिव मम हृदयं समूलमपि वेगतो हरति ॥”
तत्तु द्विविधम् । यथा, कामशास्त्रम् ।
“बाह्यमाभ्यन्तरञ्चेति द्विविधं रतमुच्यते ।

**रतताली**, स्त्री, (रते तालः प्रतिष्ठास्याः । ङीष् ।) कुट्टनी । इति त्रिकाण्डशेषः ॥

**रतनारीचः**, पुं, (रते नार्य्यां चिनोतीति । चि + डः ।) नारीणां शीत्कारः । कुक्कुरः । स्मरः । इति मेदिनी । चे, २१ ॥ षिड्गः । इति शब्दमाला ॥

**रतनिधिः**, पुं, (रतमेव निधिवत् गोप्यं यस्य ।) खञ्जनः । इति शब्दरत्नावली ॥

**रतर्द्धिकं**, क्ली, (रतस्य ऋद्धिरत्र । शेषाद्विभाषेति कप् ।) दिवसः । सुखस्नानम् । अष्टमङ्गलम् । इति मेदिनी । के, २१० ॥

**रतव्रणः**, पुं, (रतेन व्रणोऽस्य । रतं व्रण इव कष्ट- दायकं यस्येति वा ।) कुक्कुरः । इति हेम- चन्द्रः । ४ । ३४६ ॥

**रतशायी**, [न्] पुं (रतेन श्यति तनूकरोत्यात्मान- मिति । शो + णिनिः ।) कुक्कुरः । इति हेम- चन्द्रः । ४ । ३५६ ॥

**रतहिण्डकः**, पुं, (रते रतार्थं वा हिण्डते इति । हिण्ड् + ण्वुल् ।) स्त्रीचौरः । इति त्रिकाण्ड- शेषः ॥ लम्पटः । लोच्चा इति भाषा । तत्- पर्य्यायः । षिड्गः २ व्यलीकः ३ पल्लवः ४ द्रावकः ५ भुजङ्गः ६ चुम्बकः ७ लङ्गः ८ भृङ्गः ९ नारीतरङ्गकः १० स्वस्तिकः ११

मार्कण्डेय उवाच ।
इत्युक्त्वा प्रददौ दक्षो देहस्वेदजलोद्भवाम् ।
कन्दर्पायाग्रतः कृत्वा नाम कृत्वा रतीति ताम् ॥
तां वीक्ष्य मदनो रामां रत्याख्यां सुमनोहराम् ।
आत्माशुगेन विद्धोऽसौ मुमोह रतिरञ्जितः ॥”
इति कालिकापुराणे ३ अध्यायः ॥
अनुरागः । (यथा, भागवते । १ । २ । ८ ।
“नोत्पादयेद् यदि रतिं श्रम एव हि केव- लम् ॥”)
रतम् । (यथा, बृहत्संहितायाम् । ७४ । १८ ।
“कामिनीं प्रथमयौवनान्वितां मन्दवल्गुमृदुपीडितस्वनाम् ।
उत्स्तनीं समवलम्ब्य या रतिः सा न धातृभवनेऽस्ति मे मतिः ॥”)
गुह्यम् । इति मेदिनी । ते । ४९ ॥ (अप्सरो- विशेषः । यथा, महाभारते । १३ । १९ । ४५ ।
“विद्युता प्रशमी दान्ता विद्योता रतिरेव च ।
एताश्चान्याश्च वै बह्व्यः प्रनृत्ताप्सरसः शुभाः ॥”
प्रीतिः । यथा, रामायणे । १ । १८ । २४ ।
“तेषां केतुरिव ज्येष्ठो रामो रतिकरः पितुः ॥”
‘रतिः प्रीतिः ।’ इति तट्टीकायां रामानुजः ॥)
रतिबन्धा यथा, --
“न भवन्ति यदा नार्य्यस्तुष्टा वाह्यरते मताः ।
नानाविधैस्तथाबन्धै रन्तव्याः कामिभिः स्त्रियः ॥
पद्मासनो नागपाशो लतावेष्टोऽर्द्धसंपुटम् ।
कुलिशं सुन्दरश्चैव तथा केशर एव च ॥
हिल्लोलो नरसिं होऽपि विपरीतस्तथापरः ।
क्षुब्धो वै धेनुकश्चैवमुत्कण्ठस्तु ततः परम् ।
सिंहासनो रतिनागो विद्याधरस्तु षोडशः ॥”

तत्राद्यं चुम्बनाश्लेषनखदन्त क्षतादिकम् ॥
द्बितीयं सुरतं साक्षान्नानाकारेण कल्पितम्
॥”)
गुह्यम् । इति मेदिनी । ते, ४९ ॥ अनुरक्ते, त्रि
॥
(यथा, राजतरङ्गिण्याम् । ३ । ५०५ ।
“तत्तुल्यगुणनिर्व्विण्णा तद्बिपक्षस्तुतौ रता
॥”
नियुक्तः । यथा, मनुः । २ । २३५ ।
“यावत्त्रयस्ते जीवेयुस्तावन्नान्यं समाचरेत् ।
तेष्वेव नित्यं शुश्रूषां कुर्य्यात् प्रियहिते रतः
॥”)

**रतकीलः**, पुं, (रते मैथुने कीलति परस्परं संबध्ना-

तीति । कील् + कः ।) कुक्कुरः । इति हेम-
चन्द्रः । ४ । ३४६ ॥ (रतस्य कीलः ।)
सुरत-
कण्टकश्च ॥

**रतकूजितं**, क्ली, (रतस्य कूजितम् ।) मैथुन-

कालीनवाक् । तत्पर्य्यायः । मणितम् २ ।
इति
हेमचन्द्रः ॥

**रतगुरुः**, पुं, (रतस्य रते वा गुरुः ।) पतिः ।

इति त्रिकाण्डशेषः । ६ । ४४ ॥

**रतज्वरः**, पुं, (रतेन ज्वरोऽस्य ।) काकः ।

इति त्रिकाण्डशेषः ॥

**रतताली**, [न्] पुं, (रते तलति प्रतिष्ठां लभते

इति । तल + णिनिः ।) षिड्गः । इति शब्द-
माला ॥

रतनारीचः १२ बन्धकः १३ रतताली
१४
कटारः १५ कामी १६ खेटी १७
नागरः १८
दासीप्रियः १९ कुण्डकीटः २० । इति
शब्द-
माला ॥

**रतान्दुकः**, पुं, (रतार्थमन्दुक इव ।) कुक्कुरः ।

इति हेमचन्द्रः । ४ । ३४६ ॥

**रतान्ध्री**, स्त्री, (रते अन्ध्रीव ।) कुज्झटिः ।

इति त्रिकाण्डशेषः ॥

**रतामर्द्दः**, पुं, (रते रतकाले आमर्द्दोऽस्य ।)

कुक्कुरः । इति शब्दमाला ॥

**रतायनी**, स्त्री, (रतमेवायनं जीवनगतिर्यस्याः ।)

वेश्या । इति शब्दमाला ॥

**रतार्थिनी**, स्त्री, (रतमर्थयत इति । अर्थ +
णिनिः ।

ङीप् ।) मैथुनाभिलाषिणी । इति
हलायुधः ॥

**रतिः**, स्त्री, (रम्यतेऽनया इति । रम् + क्तिन् ।)

कामदेवपत्नी ॥ (अस्याः
नामनिरुक्तिर्यथा,
ब्रह्मवैवर्त्ते प्रकृतिखण्डे । ४ । ९ ।
“मनो मथ्नाति सर्व्वेषां पञ्चबाणेन
कामिनीम् ।
तन्नाम मन्मथस्तेन प्रवदन्ति
मनीषिणः ॥
तस्य पुंसो वामपार्श्वात् कामस्य
कामिनी वरा ।
बभूवातीव ललिता सर्व्वेषां
मोहकारिणी ॥
रतिर्बभूव सर्व्वेषां तां दृष्ट्वा सस्मितां
सतीम् ।
रतीति तेन तन्नाम प्रवदन्ति मनीषिणः
॥”)
तस्य उत्पत्तिः नामकारणं
कामपत्नीत्वञ्च यथा,
दक्ष उवाच ।

इति रतिमञ्जरी ॥
एतेषां लक्षणानि तत्तच्छब्दे द्रष्टव्यानि ॥

**रतिकुहरं**, क्ली, (रत्याः कुहरम् ।) योनिः ।

इति त्रिकाण्डशेषः ॥

**रतिक्रिया**, स्त्री, (रत्याः क्रिया ।) मैथुनम् ।

तत्पर्य्यायः । संवेशनम् २ । इति
त्रिकाण्डशेषः ॥
(यथा, कामन्दकीये नीतिसारे । २ । २५ ।
“अग्निहोत्रोपचरणं जीवनञ्च स्वकर्म्मभिः ।
धर्म्मोऽयं गृहिणां काले पर्व्ववर्ज्जं रतिक्रिया
॥”)

**रतिगृहं**, क्ली, (रत्याः गृहम् ।) योनिः । इति

त्रिकाण्डशेषः ॥ रमणमन्दिरञ्च ॥ (यथा,
बृहत्-
संहितायाम् । ५३ । १६ ।
“पश्वाश्रमिणाममित
धान्यायुधवह्निरतिगृहा-
णाञ्च ।
नेच्छन्ति शास्त्रकारा
हस्तशतादुच्छ्रितंपरतः ॥”)

**रतिनागः**, पुं, षोडशरतिबन्धान्तर्गतपञ्चदशबन्धः ।

तस्य लक्षणं यथा, --
“पीडयेदूरुयुग्मेन कामुकं कामिनी यदि ।
रतिनागः समाख्यातः कामिनीनां मनोरमः
॥
इति रतिमञ्जरी ॥

| | “मद्देहजेयं कन्दर्प मद्रूपगुणशालिनी ।<br>एनां गृह्णीष्व भार्य्यार्थे भवतः सदृशी गुणैः ॥<br>एषा तव महातेजाः सर्व्वदा सहचारिणी ।<br>भविष्यति यथाकामं धर्म्मतो वशवर्त्तिनी ॥ | |
|---|---|---|

**रतिपतिः**, पुं, (रत्याः पतिः ।) कामदेवः । इत्य-
मरः ॥ (यथा, महागणपतिस्तोत्रे । १० ।
"पश्चात्पिप्पलमाश्रितो रतिपतिर्देवस्य रत्योत्-
पले ।
विभ्रत्या सममैक्षवं धनुरिषून् पौष्पान् वहन्
पञ्च च ॥")
देशविशेषस्थस्त्रीणां स्थानविशेषे तस्याविर्भावो
यथा, --
"वाचि श्रीमाथुरीणां जनकजनपदस्थायिनीनां
कटाक्षे
दन्ते गौडाङ्गनानां सुललितजघने चोत्कल-
प्रेयसीनाम् ।
तैलङ्गीनां नितम्बे सजलघनरुचौ केरलीकेशपाशे
कार्णाटीनां कटौ च स्फुरति रतिपतिर्गुर्जरीणां
स्तनेषु ॥"
इति साहित्यदर्पणम् ॥

**रतिपाशकः**, पुं, (रतेः पाश इव । ततः स्वार्थे कन् ।)
रतिबन्धविशेषः । यथा, --
"पीडयेदूरुयुग्मेन कामुको यदि सुन्दरीम् ।
रतिपाशस्तथाख्यातः कामिनीनां सुखावहः ॥"
इति स्मरदीपिका ॥

**रतिप्रियः**, पुं, (रतेः प्रियः ।) कामदेवः । इति
शब्दरत्नावली ॥ सुरतप्रियश्च ॥ (स्त्री, शक्ति-
विशेषः । यथा, देवीभागवते । ७ । ३० । ६८ ।

**रतिसुन्दरः**, पुं, (रतां सुन्दरः सुखावहः ।)
रतिबन्धविशेषः । तस्य लक्षणं यथा, --
"नारीपदद्वयं कामी धारयेद्धृदये यदि ।
धृतकण्ठो रमेत् कामी बन्धः स्याद्रतिसुन्दरः ॥"
इति रतिमञ्जरी स्मरदीपिका च ॥

**रतूः**, स्त्री, (ऋतीयते इति । स्पर्शाद्यर्थक ऋत्-
सौत्रधातुः + "ऋतेरम् च ।" उणा० १ । ९४ ।
इति कूः । अम् च ।) देवनदी । सत्यवाक् ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

**रतोद्वहः**, पुं, (रतं उद्वहति प्रापयतीति । उत् +
वह् + अच् ।) कोकिलः । इति शब्दमाला ॥

**रत्नं**, क्ली, (रमयति हर्षयतीति । रम् + णिच् +
"रमेस्त च ।" उणा० ३ । १४ । इति नः
तकारश्चान्तादेशः ।) अश्मजातिः । मुक्तादि ।
तत्पर्य्यायः । मणिः २ । इत्यमरः ॥ (यथा,
कुमारे । ५ । ४५ ।
"न रत्नमन्विष्यति मृग्यते हि तत् ॥")
स्वजातिश्रेष्ठः । इति मेदिनी ॥ (यथा,
मार्कण्डेये । ८५ । ४५ ।
"स्त्रीरत्नमतिचार्व्वङ्गी द्योतयन्ती दिशस्त्विषा ॥")
माणिक्यम् । वज्रम् । इति राजनिर्घण्टः ॥ * ॥
अथ रत्नोत्पत्तिकारणम् । यथा, --
सूत उवाच ।
"वच्मि परीक्षां रत्नानां वलो नामासुरोऽभवत् ।
इन्द्राद्या निर्ज्जितास्तेन निर्जेतुं तैर्न शक्यते ॥
वरव्याजेन पशुतां याचितः स सुरैर्मखे ।
बलो ददौ स्वपशुतामतिसत्त्वो मखे हतः ॥
पशुवत्स विशेत् स्तम्भे स्ववाक्याशनियन्त्रितः ।
बलो लोकोपकाराय देवानां हितकाल्यया ॥
धारणं संग्रहो वापि कार्य्यः श्रियमभीप्सता ॥
शास्त्रज्ञाः कुशलाश्चापि रत्नभाजः परीक्षकाः ।
त एव मूल्यमात्राया वेत्तारः परिकीर्त्तिताः ॥"
इति गारुडे ६८ अध्यायः ॥
विशेषरत्नपरीक्षा तत्तच्छब्दे द्रष्टव्या ॥ * ॥ चतु-
र्द्दश महारत्नानि यथा । रुशंङ्कोश्चित्ररथः
तत्तनयः शशबिन्दुश्चतुर्द्दशमहारत्नश्चक्रवर्त्त्य-
भवत् । चतुर्द्दश महान्ति रत्नानि यस्य सः ।
रत्नानि तु स्वजातिश्रेष्ठानि धर्म्मसंहितोक्तानि ।
"चक्रं रथो मणिः खड्गश्चर्म्म रत्नञ्च पञ्चमम् ।
केतुर्निधिश्च सप्तैवमप्राणानि प्रचक्ष्यते ॥
भार्य्या पुरोहितश्चैव सेनानी रथकृच्च यः ।
पत्त्यश्वौ कलभश्चेति प्राणिनः सप्त कीर्त्तिताः ॥
चतुर्द्दशैतानि रत्नानि लर्व्वेषां चक्रवर्त्तिना-
मिति । इति विष्णुपुराणे ४ अंशे १२ अध्यायः
तट्टीका च ॥ (अथ रत्नस्य निरुक्तिः ।
"धनार्थिनो जनाः सर्व्वे रमन्तेऽस्मिन्नतीव यत् ।
ततो रत्नमिति प्रोक्तं शब्दशास्त्रविशारदैः ॥"
अथ रत्नस्य नामानि स्वरूपनिरूपणञ्च ।
यथा, --
"रत्नं क्लीवे मणिः पुंसि स्त्रियामपि निगद्यते ।
तत्तु पांषाणभेदोऽस्ति मुक्तादि च तदुच्यते ॥"
अथ रत्नानां निरूपणम् ।
"रत्नं गारुत्मतं पुष्परागो माणिक्यमेव च ।
इन्द्रनीलश्च गोमेदस्तथा वैदूर्य्यमित्यपि ॥
मौक्तिक विद्रुमश्चेति रत्नान्युक्तानि वै नव ।
रत्नं हीरा । गारुत्मतं पान्ना । माणिक्यं पद्म-
रागः । इन्द्रनीलः लीला ।
विष्णुधर्म्मोत्तरेऽपि नवरत्ननिरूपणम् ।
मुक्ताफलं हीरकञ्च वैदूर्य्यं पद्मरागकम् ।
पुष्परागञ्च गोमेदं नीलं गारुत्मतन्तथा ।
प्रवालयुक्तान्येतानि महारत्नानि वै नव ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**रत्नकन्दलः**, पुं, (रत्नानां कन्दलो नवाङ्कुर इव ।)
प्रबालम् । इति शब्दरत्नावली ॥

"गोदावर्य्यां त्रिसन्ध्या तु गङ्गाद्वारे रति-
प्रिया ॥")

**रतिमदा**, स्त्री, (रतेर्मदोऽस्याः ।) अप्सरसः ।

रथा, --
"स्पर्शानन्दा रतिमदाप्सरसः सुमदात्मजा ॥"
इति त्रिकाण्डशेषः ॥

**रतिमन्दिरं**, क्ली, (रतेर्मन्दिरमिव ।) योनिः ।

इति जटाधरः ॥ मैथुनगृहम् । यथा, --
"सञ्चारो रतिमन्दिरावधि सखीकर्णाबधि
व्याहृतं
चेतः कान्तसमीहितावधि पदन्यासावधि
प्रेक्षितम् ।
हास्यं चाधरपल्लवावधि महामानोऽपि मौनावधिः
सर्व्वं सावधि नावधिः कुलभुवां प्रेम्णः परं
केवलम् ॥"
इति रसमञ्जरी ॥

**रतिमित्रः**, पुं, (रतौ मित्रः सूर्य्य इव ।) रतिबन्ध-

विशेषः । तस्य लक्षणं यथा, --
"पातयेदूरुयुग्मे च कामुकं यदि कामुकी ।
रतिमित्रंस्तदाख्यातः कामिनीनां सुखावहः ॥"
इति रतिमञ्जरी ॥

**रतिरमण्डः**, पुं, (रत्या रमणः ।) कामदेवः । इति

त्रिकाण्डशेषः ॥

**रतिलक्षं**, क्ली, (रतिं लक्षयतीति । लक्षि + अच् ।)

निधुवनम् । इति हारावली । ५० ॥

**रतिसत्वरा**, स्त्री, (रतौ सत्वरा ।) चिरञ्जीवा ।

तस्य सत्त्वविशुद्धस्य सुविशुद्धेन कर्म्मणा ।
कायस्यावयवाः सर्व्वे रत्नबीजत्वमाययुः ॥
देवानामथ यक्षाणां सिद्धानां पवनाशिनाम् ।
रत्नबीजमयं ग्राहः सुमहानभवत्तदा ॥" * ॥
अथ तस्याकरस्थानानि यथा, --
"तेषान्तु पततां वेगाद्विमानेन विहायसा ।
यद्यत् पपात रत्नानां बीजं क्वचन किञ्चन ॥
महोदधौ सरिति वा पर्व्वते काननेऽपि वा ।
तत्तदाकरतां यातं स्थानमाधेयगौरवात् ॥
तेषु रक्षोविषव्यालव्याधिघ्नान्यघहानिच ।
प्रादुर्भवन्ति रत्नानि तथैव विगुणानि च ॥
वज्रमुक्ताश्ममणयः सपद्मरागाः समरकताः प्रोक्ताः ।
अपि चेन्द्रनीलमणिवरवैदूर्य्याश्च पुष्परागाश्च ।
कर्केतनं सपुलकं रुधिराक्षसमन्वितं तथा स्फटिकम् ।
विद्रुममणिश्च यत्नादुद्दिष्टं संग्रहे तज्ज्ञैः ॥ * ॥
आकारवर्णौ प्रथमं गुणदोषौ तत्फलं परीक्षा च ।
मूल्यञ्च रत्नकुशलैर्व्विज्ञेयं सर्व्वशास्त्राणाम् ॥
कुलग्रेषूपजायन्ते यानि चोपहतेऽहनि ।
दोषैस्तानुपयुज्यन्ते हीयन्ते गुणसम्पदा ॥
परीक्षापरिशुद्धानां रत्नानां पृथिवीभुजा ।

**रत्नकूटः**, पुं, (रत्नमयः कूटो शृङ्गमस्य ।) पर्व्वत-

विशेषः । इति शब्दरत्नावली ॥ (क्ली, द्वीप-
विशेषः । यथा, कथासरीत्सागरे । २६ । ३ ।
"अस्ति द्वीपवरं मध्ये रत्नकूटाख्यमम्बुधेः ।
कृतप्रतिष्ठस्तत्रास्ते भगवान् हरिरब्धिना ॥")

**रत्नगर्भः**, पुं, (रत्नानि गर्भे लक्षणया अधिकारे

ऽस्य ।) कुबेरः । इति त्रिकाण्डशेषः ॥ (रत्नानि-
गर्भेऽस्य ।) समुद्रः । इति राजनिर्घण्टः ॥

**रत्नगर्भा**, स्त्री, (रत्नानि गर्भे मध्येऽस्याः ।)

पृथिवी । इति हेमचन्द्रः । ४ । ३ ॥ उपचारात्
गुणवत्पुत्त्रवती च ।

**रत्नद्वीपं**, क्ली, (रत्ननिर्म्मितं द्वीपम् । शाकपार्थिववत्

समासः ।) रत्ननिर्म्मितस्थानम् । यथा, --
"सिंहस्कन्धाधिसंरूढां नानालङ्कारभूषिताम् ।
चतुर्भुजां महादेवीं नागयज्ञोपवीतिनीम् ॥
शङ्खचक्रधनुर्ब्बाणलोचनत्रितयान्विताम् ।
रक्तवस्त्रपरीधानां वालार्कसदृशीतनूम् ॥

नारदाद्यैर्म्मुनिगणैः सेवितां भवसुन्दरीम् ।
त्रिवलीबलयोपेतनाभिनालमृणालिनीम् ॥
रत्नद्वीपे महाद्वीपे सिंहासनसमन्विते ।
प्रफुल्लकमलारूढां ध्यायेत्तां भवगेहिनीत् ॥”
इति तन्त्रसारे जगद्धात्रीध्यानम् ॥

**रत्नधेनुः**, स्त्री, (रत्ननिर्म्मिता धेनुः ।) महा-
दानविशेषः । यथा, --
मत्स्य उवाच ।
“अथातः संप्रवक्ष्यामि महादानमनुत्तमम् ।
रत्नधेनुरिति ख्यातं गोलोकफलदं नृणाम् ॥
पुण्यन्दिनमथासाद्य तुलापुरुषदानवत् ।
लोकेशावाहनं कृत्वा ततो धेनुं प्रकल्पयेत् ॥
भूमौ कृष्णाजिनं कृत्वा लवणद्रोणसंयुतम् ।
धेनुं रत्नमयीं कुर्य्यात् सङ्कल्प्य विधिपूर्ब्बकम् ॥
स्थापयेत् पद्मरागाणामेकाशीतिं मुखे बुधः ।
पुष्परागशतं तद्वद्घोणायां परिकल्पयेत् ॥
ललाटे हेमतिलकं मुक्ताफलशतं दृशोः ।
भ्रूयुगे विद्रुमशतं शुक्ती कर्णद्वये स्मृते ॥
काञ्चनानि तु शृङ्गाणि शिरो वज्रशतात्मकम् ।
ग्रीवायां नेत्रपटलं गोमेदकसमन्वितम् ॥
इन्द्रनीलशतं पृष्ठे वैदूर्य्यशतपार्श्वकौ ।
स्फाटिकैरुदरं कार्य्यं सौगन्धिकशतान् हृदि ॥
खुरा हेममयाः कार्य्याः पुच्छं मुक्तावलीमयम् ।
सूर्य्यकान्तेन्दुकान्तौ च घ्राणं कर्पूरचन्दनैः ॥
कुङ्कुमानि च रोमाणि रौप्यं नाभिञ्च कारयेत् ।
गारुत्मतशतं तद्वदस्थीनि परिकल्पयेत् ॥
तथान्यानि च रत्नानि स्थापयेत् सर्व्वसन्धिषु ।
कुर्य्याच्छर्करया जिह्वां गोमयञ्च गुडात्मकम् ॥
गोमूत्रमाज्यञ्च तथा दधि दुग्धं स्वरूपतः ।
पुच्छाग्रे चामरं दद्यात् समीपे ताम्रदोहनम् ॥
कुण्डलानि च हैमानि भूषणानि च शक्तितः ।
कारयेदेवमेवन्तु चतुर्थांशेन वत्सकम् ॥
तथान्यानि च सर्व्वाणि पादांश्चेक्षुमयांस्तथा ।
नानाफलानि सर्व्वाणि पञ्चवर्णवितानकम् ॥

**रत्नपारायणं**, क्ली, (परायणमेव । अण् । रत्नस्य
पारायणम् ।) सर्व्वरत्नस्थानम् ।
यथा, --
“समुद्रोपत्यका हैमी पर्व्वताधित्यका पुरी ।
रत्नपारायणं नाम्ना लङ्केति मम मैथिलि ! ॥”
इति भट्टिः ॥

**रत्नप्रभा**, स्त्री, (रत्नानां प्रभात्र ।) जिनानां नरक-
विशेषः । यथा, --
“रत्नशर्क्करावालुकापङ्कधूमतमप्रभाः ।
महातमप्रभा वेत्यधोऽधो नरकभूमयः ॥”
इति हेमचन्द्रः ॥

**रत्नमुख्यं**, क्ली, (रत्नेषु मुख्यम् ।) हीरकम् । इति
हेमचन्द्रः ॥

**रत्नराट्**, [ज्] क्ली, (रत्नेषु राजते इति ।
राज् + क्विप् ।) माणिक्यम् । इति राज-
निर्घण्टः । रत्नश्रेष्ठश्च ॥

**रत्नवती**, स्त्री, (रत्नानि सन्त्यस्यामिति । रत्न +
मतुप् । मस्य वः । उगित्वात् ङीप् ।) पृथिवी ।
इति शब्दमाला ॥ (राज्ञो वीरकेतोः कन्या ।
यथा, कथासरित्सागरे । ८८ । ६ ।
“नन्दयन्त्यभिधानायां पत्न्यां तस्योदपद्यत ।
सुता रत्नवती नाम देवताराधनार्ज्जिता ॥”)
रत्नयुक्ते, त्रि ॥ (यथा, रघुः । ६ । ४ ।
“परार्द्ध्यवर्णास्तरणोपपन्न-
मासेदिवान् रत्नवदासनं सः ॥”

स तु ध्वनिगाथापञ्जिका-वक्रोक्तिपञ्चाशिका-
हरविजयादिग्रन्थप्रणेता । अमृतभानु सूनु-
र्विद्याधिपत्यपरनामायं कविः काश्मीरदेशे-
ऽवन्तिवर्म्मणो राज्यकाले समुत्पन्नः । तथा च
राजतरङ्गिण्याम् । ५ । ३९ ।
“मुक्ताकणः शिवस्वामी कविरानन्दवर्द्धनः ।
प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्ति-
वर्म्मणः ॥”
अवन्तिवर्म्मराज्यकालस्तु ७७७ शकाब्दादारभ्य
८०६ शकाब्दपर्य्यन्तमासीदतस्तत्कालीन एवायं
कविरिति ज्ञायते । रत्नाकरप्रणीतं हरविज-
याभिधं पञ्चाशत्सर्गात्मकं महाकाव्यं काश्मी-
रेषु प्रसिद्धमस्ति ॥)

**रत्नाङ्कः**, पुं, (रत्नानामङ्कश्चिह्नं यस्मिन् ।) विष्णु-
रथः । इति शब्दरत्नावली ॥ (रत्नानामङ्कः ।)
रत्नचिह्नञ्च ॥

**रत्नाचलः**, पुं, (रत्ननिर्म्मितः अचलः । शाक-
पार्थिववत् समासः ।) दानार्थमणिमयपर्व्वतः ।
यथा, --
“अतः परं प्रवक्ष्यामि रत्नाचलमनुत्तमम् ।
मुक्ताफलसहस्रेण पर्व्वतः स्यादनुत्तमः ॥
मध्यमः पञ्चशतिकस्त्रिशतेनाधमः स्मृतः ।
चतुर्थांशेन विष्कम्भाः पर्व्वताः स्युः समन्ततः ॥
पूर्ब्बेण वज्रगोमेदैर्द्दक्षिणेनेन्द्रनीलकैः ।
पुष्परागयुतैः कार्य्यो विद्वद्भिर्गन्धमादनः ॥
वैदूर्य्यविद्रुमैः पश्चात् संमिश्रो विमलाचलः ।
पद्मरागसमो वर्णैरुत्तरेण तु विन्यसेत् ॥
धान्यपर्व्वतवत् सर्व्वमत्रापि परिकल्पयेत् ।
तद्वदावाहनं कृत्वा वृक्षान् देवांश्च काञ्चनान् ॥
पूजयेत् पुष्पपानीयैः प्रभाते चाथ पूर्ब्बवत् ।

एवं विरचनं कृत्वा तद्वद्धोमाधिवासनम् ।
ऋत्विग्भ्यो दक्षिणां दत्त्वा धेनुमामन्त्रयेत्ततः ।
गुडधेनुवदावाह्य इदञ्चोदाहरेत्ततः ॥
त्वं सर्व्वदेवगणधाम यतः पठन्ति
रुद्रेन्दुविष्णुकमलासनवामदेवाः ।
तस्मात् समस्तभुवनत्रयहेतुयुक्ता
मां पाहि देवि भवसागरपीड्यमानम् ॥
आमन्त्र्य धेनुमभितः परिवर्त्त्य भक्त्या
दद्याद्द्विजाय गुरवे जलपूर्ब्बकं ताम् ।
यः पुण्यमाप्य दिनमत्र कृतोपवासः
पापैर्विमुक्ततनुरेति पदं मुरारेः ॥
इति सकलविधिज्ञो रत्नधेनुप्रदानं
वितरति च विमानं प्राप्य देदीप्यमानम् ।
कलिकलुषविमुक्तो बन्धुभिः पुत्त्रपौत्त्रैः
स हि मदनसुरूपः स्थानमभ्येति शम्भोः ॥"
इति मत्स्यपुराणे महादानानुकीर्त्तने रत्नधेनु-
प्रदानिको नाम २६२ अध्यायः ॥

**रत्ननिधिः**, पुं, खञ्जनपक्षी । इति त्रिकाण्डशेषः ॥

फलप्रदे च त्रि । यथा, ऋग्वेदे । ३ ।
२८ । ५ ।
"धारत्नवन्तममृतेषु जागृविम् ॥"
"रत्नवन्तं रत्नशब्देन
स्वर्गादिलक्षणमुत्तमं फल-
मभिधीयते तद्वन्तं फलप्रदम् ।" इति
तद्भाष्ये
सायणः ॥)

**रत्नवर्षुकं**, क्ली, (रत्नानि वर्षितुं शीलमस्य । वृष्

+ "लषपतपदस्थेति ।" ३ । २ ।
१५४ । इति
उकञ् ।) पुष्पकरथः । इति
शब्दरत्नावली ॥
रत्नवर्षणशीले, त्रि ॥

**रत्नसानुः**, पुं, (रत्नानि सानौ प्रस्थे यस्य ।)

सुमेरुपर्व्वतः । इत्यमरः । १ । १ ।
५२ ॥

**रत्नसूः**, स्त्री, (रत्नानि सूते इति । सू प्रसवे +

क्विप् ।) पृथिवी । इति हेमचन्द्रः । ४
। ३ ॥
(यथा, राजतरङ्गिण्याम् । १ । ४२ ।
"त्रिलोक्यां रत्नसूः श्लाघ्या तस्यां
धनपतेर्हरित् ।
तत्र गौरीगुरुः शैलो यत्तस्मिन्नपि
मण्डलम् ॥"
रत्नप्रसवकारिणि, त्रि । यथा, रघुः ।
१ । ६५ ।
"न मामवति सद्वीपा रत्नसूरपि
मेदिनी ॥")

**रत्नाकरः**, पुं, (रत्नानामाकरः उत्पत्तिस्थानम् ।)

समुद्रः । इत्यमरः । १ । १० । २ ॥
(यथा,
महाभारते । ३ । १०१ । २३ ।
"दुर्गं समाश्रित्य महोर्म्मिमन्तं
रत्नाकरं वरुणस्यालयं स्म ॥")
रत्नोत्पत्तिस्थानञ्च ॥
(स्वनामख्यातकविविशेषः ।

पूर्ब्बवद्गुरुऋत्विग्भ्यः फलमन्त्रानुदीरयेत् ।
यथा देवगणाः सर्व्वे सर्व्वरत्नेष्ववस्थिताः ।
त्वञ्च रत्नमयो नित्यमतः पाहि महाचल ! ।
यस्माद्रत्नप्रदानेन तुष्टिं प्रकुरुते हरिः ।
सदा रत्नप्रदानेन तस्मान्नः पाहि पर्व्वत ॥
अनेन विधिना यस्तु दद्याद्रत्नं महागिरिम् ।
स याति वैष्णवं लोकममरेश्वरपूजितः ॥
यावत् कल्पशतं साग्रं वसेच्चेह नराधिप ।
रूपारोग्यगुणोपेतः सप्तद्वीपाधिपो भवेत् ॥
ब्रह्महत्यादिकं किञ्चिद्यदत्रामुत्र वा कृतम् ।
तत् सर्व्वं नाशमायाति गिरिर्वज्रहतो यथा
॥"
इति मात्स्ये ९० अध्यायः ॥

**रत्नाभरणं**, क्ली, (रत्नविशिष्टमाभरणम् ।) मणि-

मयालङ्करणम् । जडाओ गहना इति भाषा ॥
तस्य धारणगुणाः ।
"धन्यं यशस्यमायुष्यं श्रीमद्व्यसनसूदनम् ।
हर्षणं काम्यमोजस्यं रत्नाभरणधारणम् ॥"
इति राजवल्लभः ॥

**रत्निः**, पुं, (ऋच्छति प्राप्नोत्यनेनेति । ऋ +

"ऋतन्यञ्जीति ।" उणा० ४ । २ । इति
कत्निच् ।) बद्धमुष्टिहस्तः । इत्यमरः । २ ।
६ । ८६ ॥ मुट्टुम् हात इति भाषा ॥
स्त्रीपुंसयो

| | | |
|---|---|---|
| | यथा, राजशेखरकृतश्लोकः ।<br>“मा स्म सन्तु हि चत्वारः प्रायो<br>रत्नाकरा<br>इमे ।<br>इतीव स कृतो धात्रा<br>कविरत्नाकरोऽपरः ॥” | |

रत्न्यरत्नी इत्यन्ये । इति भरतः ॥ (यथा, महा-
भारते । ८ । ७२ । २७ ।
“अष्टरत्निर्म्महाबाहुर्व्यूढोरस्कः सुदुर्ज्जयः ॥”)

**रत्यङ्गं**, क्ली, (रतेरङ्गम् ।) योनिः । इति शब्द-
रत्नावली ॥

**रथः**, पुं, (रम्यतेऽनेनात्र वा । रम् + “हनि
कुषिनीरमिकाशिभ्यः क्थन् ।” उणा० २ । २ ।
इति क्थन् । अनुनासिकलोपश्च ।) कायः ।
(यथा, गीतायाम् ।
“आत्मानं रथिनं विद्धि शरीरं रथमेव च ॥”)
चरणः । वेतसवृक्षः । इति विश्वः ॥ (अस्य
पर्य्यायो यथा, --
“वेतसो नम्रकः प्रोक्तो वाणीरो वञ्जुलस्तथा ।
अभ्रपुष्पश्च विदुलो रथः शीतश्च कीर्त्तितः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
तिनिशवृक्षः । इति राजनिर्घण्टः ॥ चक्र-
विशिष्टयुद्धार्थयानम् । तत्पर्य्यायः । शताङ्गः २
स्यन्दनः ३ । इत्यमरः । २ । ८ । ५१ ॥ स्यन्दन-
मात्रम् । इत्यजयः ॥ (यथा, मनुः । ८ । २९५ ।
“स चेत् तु पथि संरुद्धः पशुभिर्वा रथेन वा ।
प्रमापयेत् प्राणभृतस्तत्र दण्ड्योऽविचारितः ॥”)
तद्द्वारा भ्रमणगुणाः ।
“हस्त्यश्वरथदोलाद्यैर्भ्रमणंवातकोपनम् ।
स्थिरीकरणमङ्गानां बल्यं वह्निविवर्द्धनम् ॥”
इति राजवल्लभः ॥ * ॥
रथविशेषाणां नामानि यथा, --
“युद्धार्थे चक्रवद्याने शताङ्गः स्यन्दनो रथः ।
विप्रभार्य्या हरिं नत्वा जग्मुर्गोलोकमीप्सितम् ।
बभूवुर्गोपिकाः सद्यस्त्यक्त्वा मानुषविग्रहान् ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १८ अध्यायः ॥
देव्या रथयात्रा यथा, --
ब्रह्मोवाच ।
“भूयस्त संप्रवक्ष्यामि देव्याराधनमुत्तमम् ।
यत् कृत्वा सर्व्वकामाणां व्याप्तिस्तृप्तिर्भविष्यति ॥
दन्तिदन्तमयैर्द्दण्डैर्हेमबद्धैः सुशोभनैः ।
विचित्रपद्मरागाद्यैर्म्मणिभिरुपशोभितैः ॥
रथन्तैः कारयेद्देव्या सप्तभौमं मनोरमम् ।
दुकूलवस्त्रसंछन्नमर्द्धचन्द्रोपशोभितम् ॥
घण्टाकिङ्किणिशङ्खाढ्यंचामरैः कटकान्वितम् ।
पताकाध्वजशोभाढ्यंदर्पणैरुपशोभितम् ॥
तं रथं पूजयेच्छक्र जातीकुसुममल्लिकैः ।
पारिजातकपुष्पैश्च यक्षकर्द्दमचन्दनैः ॥
सुगन्धधूपितैः कृत्वा देवीं तत्र निवेशयेत् ।
प्रतिमां शोभनां वत्स ! महासुरक्षयङ्करीम् ॥
पूजयेद्रथविन्यस्तां सर्व्वमङ्गलमङ्गलाम् ।
दुर्गा कात्यायनी देवी वरदा विन्ध्यवासिनी ॥
निशुम्भशुम्भमथनी महिषासुर घातिनी ।
प्रसीदतु सदा मेऽस्तु यच्च नो वाञ्छितं हृदि ॥
अनेन वलिपूर्ब्बेण नमस्कारयुतेन च ।
पूजयित्वा ततो नेया समस्ताप्सरगीतकैः ॥
पञ्चमी सप्तमी पूर्णा नवम्येकादशीषु च ।
तृतीयाशिवविघ्नेशदिवसेषूत्सवेषु च ॥
महानदीनदसंज्ञपर्व्वतस्रवणेषु च ।
तत्र मण्डपविन्यासं महदाविष्टनिर्म्मितम् ॥
शैलं वा मृण्मयं वापि कृत्वा वास्तुविचारितम् ।
सर्व्वलक्षणसंपूर्णं सर्व्वशोभासमन्वितम् ॥
पूर्व्वे च कारयेच्छक्र पश्चाद्यात्रां प्रचक्रिरे ।
महाजनपदोपेतां महास्त्रीभिः ससङ्कुलाम् ॥
सर्व्वान्नपानवैद्यैः समस्तैरपि पूजयेत् ।
हेमजैर्जातिजैर्माल्यै रत्नमाल्यैरनेकधा ।
वासोभिः सुमनैश्चित्रैः पुनर्धूपं समुत्क्षिपेत् ॥
भक्षयेत तथा कन्या द्विजातीनथ दुःखितान् ।
भक्ष्यभोज्यान्नपानेन तत्र सर्व्वांश्च प्रीणयेत् ॥
भोजयित्वा क्षमायेत देवि मे प्रीयतामिति ।
रथे कृत्वा तथा देवीं पुनरेव गृहं नयेत् ॥
महता जनसंघेन समस्तविभवान्वितैः ।
शान्तरेणुपथं सर्व्वं पुष्पदूर्व्वाक्षतैर्ज्जलैः ॥
प्रक्षिप्यमाणैः कन्याभिः स्त्रीभिर्भङ्गलवादिभिः ।
सलिलेन यथा पांशुं कृत्वा पङ्कं प्रचक्रिरे ॥
पुरशोभां पथे शोभां द्वारशोभां गृहे गृहे ।
कारयीत तथा शक्र सर्व्ववाधां निवारयेत् ॥
अच्छेद्यास्तरवस्तस्मिन् प्राणिहिंसां विवर्ज्जयेत् ।
वन्धनस्था विमोक्तव्या बध्याः क्रोधादिशत्रवः ॥
अकालकौमुदीं शक्र रथयात्रान्तु कारयेत् ।
सर्व्वदा सर्व्वदेवैस्तु शङ्कराद्यैः प्रतिष्ठिता ॥
रथयात्रा तदा शक्र सुरैः स्वर्गे सदा कृता ।
तथा किन्नरगन्धर्व्वैर्भू पातालनिवासिभिः ॥
रथयात्राप्रभावेण मोदन्ते दिवि देवताः ।

संक्रीडार्थः पुष्परथो देवार्थस्तु मरुद्रथः ॥
योग्यो रथो वैनायिकोऽध्वरथः परिघातिकः
।
कर्णीरथः प्रवहणं डयनं रथगर्भकः ॥
अनस्तु शकटोऽथ स्याद्गन्त्री
कम्बलिवाह्यकम् ।
अथ काम्बलवस्त्राद्यास्तैस्तैः परिवृते रथे ॥
सपाण्डुकम्बली यः स्यात् संवीतः
पाण्डुकम्बलैः ।
सत्तु द्वैपो वैयाघ्रश्च यो वृतो द्वीपिचर्म्मणा
॥”
इति हेमचन्द्रः ॥
गोलोकस्य रथो यथा, --
“प्रदत्तं विप्रपत्नीभिर्म्मिष्टमन्नं सुधोपमम् ।
बालकान् भोजयित्वा तु स्वयञ्च बुभुजे
विभुः ॥
एतस्मिन्नन्तरे तत्र शातकुम्भरथं वरम् ।
ददृशुर्विप्रपत्न्यश्च पतन्तं गगनादहो ॥
रत्नदर्पणसंयुक्तं रत्नसारपरिच्छदम् ।
रत्नस्तम्भैर्न्निबद्धञ्च सद्रत्नकलसोज्ज्वलम् ॥
श्वेतचामरसंयुक्तं वह्निशुद्धांशुकान्वितम् ।
पारिजातप्रसूनानां मालाजालविराजितम् ॥
शतचक्रसमायुक्तं मनोयायि मनोहरम् ।
वेष्टितं पार्षदैर्द्दिव्यैर्व्वनमालाविभूषितैः ॥
पीतवस्त्रपरीधानै रत्नालङ्कारभूषितैः ।
नवयौवनसम्पन्नैः श्यामलैः सुमनोहरैः ॥
हिभुत्रैर्मुरलीहस्तैर्गोपवेशधरैर्व्वरैः ।
शिखिपुच्छगुञ्जमालाबद्धवङ्किमचूडैक ॥
अवरुह्य रथात्तर्णं ते प्रणम्य हरेः पदम् ।
रथमारोहणं कर्त्तमूचुर्ब्राह्मणकाभिनीः ॥

दद्याद्वलिं शक्र सर्व्वं सर्व्वदिक्षु समन्ततः ॥
भूयो वेतालसंघस्य मन्त्रेणानेन सुव्रत ! ।
रक्ष मां निजभूतेभ्यो वलिं गृह्ण सदा प्रियम् ॥
मातर्मातर्व्वरे देवि ! सर्व्वकामार्थसाधिनि ।
अनेन वलिदानेन सर्व्वकामान् प्रयच्छ मे ॥
एवं दत्त्वा वलिं शक्र तथा देव्यावतारयेत् ।
विन्यसेद्भद्रपीठे तु मण्डलैरुपशोभिताम् ॥
तत्रस्थां पूजयेद्देवीं हैमरूपैश्च ताम्रजैः ।
कलसैस्तु सहस्रेण गन्धोदकसुपूरितैः ॥
समस्तफलसम्पूर्णैर्यज्ञियैरथ पल्लवैः ।
स्नापयेदेकमेकेन रत्नगर्भैर्नवैर्दृढैः ॥
वेदमङ्गलशब्देन शङ्खवादित्रनिस्वनैः ।
वेणुवीणामृदङ्गैश्च घण्टाकिङ्किणिराविणैः ॥
स्नापयित्वा ततो देवीं निर्मञ्छेच्छनकैः शुभैः
।
गोमयादिकृतैः पद्मैर्दीपवर्त्त्या विशोधितैः ॥
स्वस्तिकैर्नन्दिकावर्त्तैः शङ्खैर्नीलोत्पलोत्पलैः
।
यवशाल्यङ्कुरोद्भिन्नैर्यवाचारैर्निमज्जयेत् ॥
प्रत्येकञ्च दहेद्धूपं प्रत्येकं कलसैः स्नपेत् ।
तथा कर्पूरक्षोदेन चन्दनैः कुङ्कुमेन च ॥
गोरोचनासमेतेन देवीमालिप्य पूजयेत् ॥

आदित्यो रथयात्राकृद्रथेन नभसः
क्रमेत् ॥
देव्यो दिव्यविमानस्था
रथयात्राप्रभावतः ।
क्रीडन्ते विविधैर्भोगैः
सर्व्वातङ्कविवर्जिताः ॥
तथा त्वमपि देवेन्द्र ! रथयात्राकरो
भव ।
शिवायाः शिवदायास्तु परमेण
समाधिना ॥
अगस्त्य उवाच ।
रथयात्राकृतं पुण्यं ब्रह्मणो वासवस्य तु
।
पूर्ब्बं यत् कथितं तात तत्ते सर्व्वं
मयाखिलम् ॥
व्यापितं नात्र सन्देहो
देवीमाहात्म्यमुत्तमम् ।
यः पठेत् शृणुयाद्वापि भक्तिमान्
नृपसत्तम ॥
स सुखं यशः सौभाग्यं
पुत्त्रप्राप्तिमथेप्सिताम् ।
लभते नात्र सन्देह इत्येवं
ब्रह्मणोऽब्रवीत् ॥
स्वबलेन कृते राज्ये पुरा शक्रस्य
कीर्त्तिता ।
धनदस्य पूरीप्राप्तिर्व्वरुणस्य च वायुना
॥
हृते स्थाने कृता तेन तथा श्रुत्वा च
निरृतेः ।
भुञ्जते परया दृष्ट्या पुरीर्भोगवतीः
शुभाः ॥”
इति देवीपुराणे
रथयात्राविधिमाहात्म्यम्
३९ अध्यायः ॥ * ॥ नवग्रहाणां रथा
यथा, --
“योजनानां सहस्राणि भास्करस्य रथो
नव ।
ईशादण्डस्तथैवास्माद्द्विगुणो
द्विजसत्तमाः ॥
सार्द्धकोटिस्तथा सप्त
नियुतान्यधिकानि तु ।

| | | |
|---|---|---|
| | | योजनानान्तु तस्याक्षं तत्र चक्रं प्रतिष्ठितम् ॥<br>त्रिनाभिमतिपञ्चारे षण्णेमिन्यक्षयात्मके ।<br>संवत्सरन्तु यत् कृत्स्नं कालचक्रं प्रतिष्ठितम् ॥<br>चत्वारिंसत्सहस्राणि द्वितीयोऽक्षो विवस्वतः ।<br>पञ्चान्यानि तु सार्द्धानि स्यन्दनस्य द्विजोत्तमाः ॥<br>अक्षप्रमाणमुभयोः प्रमाणं तत्परार्द्धयोः ।<br>भूयोऽक्षस्तद्युगार्द्धे च ध्रुवाधारं रथस्य वै ॥<br>द्वितीयेऽक्षे तु तच्चक्रं संस्थितं मानसाचले ।<br>हयाश्च सप्त च्छन्दांसि तन्नामानि निबोधत ॥<br>गायत्री च बृहत्युष्णिक् जगती पंक्तिरेव च ।<br>अनुष्टुप् त्रिष्टुबित्युक्ताश्छन्दांसि हरयो रवेः ॥" १ ॥<br>इति कौर्म्मे ३८ अध्यायः ॥ |

"रथस्त्रिचक्रः सोमस्य कुन्दाभास्तस्य वाजिनः ।
वामदक्षिणतो युक्ता दश तेन निशाकरः ।
वीथ्याश्रयाणि चरति नक्षत्राणि रविर्यथा ॥ २ ॥
सोमपुत्त्रस्य चाष्टाभिर्वाजिभिर्वायुवेगिभिः ।
वारिजैः स्यन्दनो युक्तस्तेनासौ याति सर्व्वतः ॥ ३ ॥
शुक्रस्य भूमिजैरश्वैः स्यन्दनो दशभिर्वृतः ॥ ४ ॥
अष्टाभिश्चाथ भौमस्य रथो हैमः सुशोभनः । ५ ।
बृहस्पतेरथाष्टाश्वः स्यन्दनो हेमनिर्म्मितः ॥ ६ ॥
रथस्तमोमयो ह्यश्वो मन्दस्यायसनिर्म्मितः । ७ ।
स्वर्भानोर्भास्करारेश्च तथा षड्भिर्हयैर्वृतः ॥ ८ ॥ ९ ॥
एते महाग्रहाणां वै समाख्याता रथा नव ।
सर्व्वे ध्रुवे महाभागा निबद्धा वातरश्मिभिः ॥
ग्रहर्क्षताराधिष्ट्यानि ध्रुवे बद्धान्यशेषतः ।
भ्रमन्ति भ्रामयन्त्येनं सर्व्वाण्यनिलरश्मिभिः ॥"
इति कौर्म्मे ४० अध्यायः ॥ * ॥
श्रीजगन्नाथदेवस्य रथः यात्राशब्दे द्रष्टव्यः ॥ * ॥
(त्रिपुरदहनार्थं महेश्वरादिष्टा देवा येन प्रकारेण
तद्रथं निर्म्मितवन्तस्तदाह । मात्स्ये । १३३ ।
१३ -- ७१ ।
"त्रिनेत्र एवमुक्तस्तु देवैः शक्रपुरोगमैः ।
उवाच देवान् देवेशो वरदो वृषबाहनः ॥
व्यपगच्छतु वो देवा महद्दानवजं भयम् ।
तदहं त्रिपुरं धक्ष्ये क्रियतां यद्ब्रवीमि तत् ॥
यदीच्छथ मया दग्धुं तत् पुरं सहदानवम् ।
रथमोपयिकं मह्यं सज्जयध्वं किलास्य ते ॥

चतुर्व्वर्णाः सलीलाश्च बभूबुः स्वर्णकुण्डलाः ॥
तंद्युगं युगसङ्काशं रथशीर्षे प्रतिष्ठितम् ।
धृतराष्ट्रेण नागेन बद्धं बलवता महत् ॥
ऋग्वेदः सामवेदश्च यजुर्व्वेदस्तथापरः ।
वेदाश्चत्वार एवैते चत्वारस्तुरगा भवन् ॥
अन्नदानपुरोगाणि यानि दानानि कानिचित् ।
तान्यासन् वाजिनां तेषां भूषणानि सहस्रशः ॥
पद्मद्वयं तक्षकश्च कर्कोटक-धनञ्जयौ ।
नागा बभूवुरेवैते हयानां बालबन्धनाः ॥
ओङ्कारप्रभवास्ता वा मन्त्रयज्ञक्रतुक्रियाः ।
उपद्रवाः प्रतीकाराः पशुबन्धेष्टयस्तथा ॥
यज्ञोपवाहान्येतानि तस्मिन् लोकरथे शुभे ।
मणि-मुक्ता-प्रबालैस्तु भूषितानि सहस्रशः ॥
प्रतोदोङ्कार एवासीत् तदग्रञ्च वषट्कृतम् ।
सिनीबाली कुहू राका तथा चानुमती शुभा ॥
योक्त्राण्यासं स्तुरङ्गाणामपसर्पणविग्रहाः ॥
कृष्णान्यथ च पीतानि श्वेतमाञ्जिष्ठकानि च ।
अवदाताः पताकास्तु बभूबुः पवनेरिताः ॥
ऋतुभिश्च कृतः षड्भिर्धनुः संवत्सरोऽभवत् ।
अजरा ज्याभवच्चापि साम्बिका धनुषो दृढा ॥
कालो हि भगवान् रुद्रस्तञ्च संवत्सरं विदुः ।
तस्मादुमा कालरात्रिर्धनुषो ज्याऽजराभवत् ॥
सगर्भं त्रिपुरं येन दग्धवान् स त्रिलोचनः ।
स इषुर्विष्णुसोमाग्नि-त्रिदैवतमयोऽभवत् ॥
आननं ह्यग्निरभवच्छल्यं सोमस्तमोनुदः ।

उज्जहार पितॄनार्त्तान् सुपुत्त्र इव दुःखितान् ॥
ततः सिंहरवो भूयो बभूव रथभैरवः ।
जयशब्दश्च देवानां सम्बभूवार्णवोपमः ॥
तदोङ्कारमयं गृह्य प्रतोदं वरदः प्रभुः ।
स्वयम्भुः प्रययौ वाहाननुमन्त्र्य यथाजवम् ॥
ग्रसमाना इवाकाशं मुष्णन्त इव मेदिनीम् ।
मुखेभ्यः ससृजुः श्वासानुच्छ्वसन्त इवोरगाः ॥
स्वयम्भुवा चोद्यमानाश्चोदितेन कपर्द्दिना ।
व्रजन्ति तेऽश्वा जवनाः क्षयकाल इवानिलाः ॥
ध्वजोच्छ्र्यविनिर्म्माणे ध्वजयष्टिमनुत्तमाम् ।
आक्रम्य नन्दी वृषभं तस्थौ तस्मिञ्छिवेच्छया ॥
भार्गवाङ्गिरसौ देवौ दण्डहस्तौ रविप्रभौ ।
रथचक्रे तु रक्षेते रुद्रस्य प्रियकाङ्क्षिणौ ॥
शेषश्च भगवान् नागः अनन्तोऽन्तकरोऽरिणाम् ।
शरहस्तो रथं पाति शयनं ब्रह्मणस्तदा ॥
यमस्तूर्णं ससास्थाय महिषञ्चातिदारुणम् ।
द्रविणाधिपतिर्व्यालं सुराणामधिपो द्विपम् ॥
मयूरं शतचन्द्रञ्च कूजन्तं किन्नरं यथा ।
गुह आस्थाय वरदो युगोपमरथं पितुः ॥
नदीश्वरश्च भगवान् शूलमादाय दीप्तिमत् ।
पृष्ठतश्चापि पार्श्वाभ्यां लोकस्य क्षयकृद्यथा ॥
प्रमथाश्चाग्निवर्णाभाः साग्निज्वाला इवाचलाः ।
अनुजग्मू रथं शार्व्वं नक्रा इव महार्णवम् ॥
भृगुर्भरद्वाज-वसिष्ठ-गौतमाः
क्रतुः पुलस्त्यः पुलहस्तपोधनाः ।
मरीचिरत्रिर्भगवानथाङ्गिराः
पराशरागस्त्यमुखा महर्षयः ॥
हरमजितमजं प्रतुष्टुवु-
र्वचनविषैर्विचित्रभूषणैः ।

दिग्वाससा तथोक्तास्ते सपितामहकाः
सुराः ।
तथेत्युक्त्वा महादेवं चक्रुस्ते रथमुत्तमम् ॥
धरां कूवरकौ द्वौ तु रुद्रपार्शचरावुभौ ।
अधिष्ठानं शिरो मेरोरक्षो मन्दर एव च ॥
चक्रुश्चन्द्रञ्च सूर्य्यञ्च चक्रे काञ्चन-राजते ।
कृष्णपक्षं शुक्लपक्षं पक्षद्वयमपीश्वराः ॥
रथनेमिद्वयं चक्रुर्देवा ब्रह्मपुरःसराः ।
आदिद्वयं पक्षयन्त्रं यन्त्रमेताश्च देवताः ॥
कम्बलाश्वतराभ्याञ्च नागाभ्यां समवेष्टितम्
।
भार्गवश्चाङ्गिराश्चैव बुधोऽङ्गारक एव च ॥
शनैश्चरस्तथा चात्र सर्व्वे ते देवसत्तमाः ।
वरूथं गगनं चक्रुश्चारुरूपं रथस्य ते ॥
कृतं द्विजिह्वनयनं त्रिवेणुं शातकौम्भिकम् ।
मणिमुक्तेन्द्रनीलैश्च वृतं हृष्टमुखैः सुरैः ॥
गङ्गा सिन्धुः शतद्रुश्च चन्द्रभागा इरावती ।
वितस्ता च विपाशा च यमुना गण्डकी तथा
॥
सरस्वती देविका च तथा च शरयूरपि ।
एताः सरिद्वराः सर्व्वा वेणुसंज्ञाः कृता रथे
॥
धृतराष्ट्रश्च ये नागास्ते च वेश्यात्मकाः
कृताः ।
वासुकेः कुलजा ये च ये च रैवतवंशजाः ॥
ते सर्पा दर्पसम्पूर्णाश्चापतूणेष्वनूनगाः ।
अवतस्थुः शरा भूत्वा नानाजातिशुभाननाः
॥
सुरसा सरमा कद्रूर्विनता शुचिरेव च ।
तृषा बुभुक्षा सर्वोग्रा मृत्युः सर्व्वशमस्तथा ॥
ब्रह्मवध्या च गोवध्या बालवध्या प्रजाभयाः
।
गदा भूत्वा शक्तयश्च तदा देवरथेऽभ्ययुः ॥
युगं कृतयुगञ्चात्र चातुर्होत्रप्रयोजकाः ।
तेजसः समवायोऽथ चेषोस्तेजो
रथाङ्गधृक् ॥
तस्मिंश्च वीर्य्यवृद्ध्यर्थं
वासुकिर्नागपार्थिवः ।
तेजः संवसनार्थं वै मुमोचातिविषो विषम्
॥
कृत्वा देवा रथञ्चापि दिव्यं दिव्यप्रभावतः
।
लोकाधिपतिमभ्येत्य इदं वचनमब्रुवन् ॥
संस्कृतोऽयं रथोऽस्माभिस्तव
दानवशत्रुजित् ।
इदमापत्परित्राणं देवान् सेन्द्रपुरोगमान् ॥
तं मेरुशिखराकारं त्रैलोक्यरथमुत्तमम् ।
प्रशस्य देवान् साध्विति रथं पश्यति
शङ्करः ॥
मुहुर्दृष्ट्वा रथं साधु साध्वित्युक्त्वा
मुहुर्म्मुहुः ।
उवाच सेन्द्रानमरानमराधिपतिःस्वयम् ॥
यादृशोऽयं रथः क्लृप्तो युष्माभिर्मम सत्तमाः
।
ईदृशो रथसम्पत्त्या यन्ता शीघ्रं
विधीयताम् ॥
इत्युक्ता देवदेवेन देवा विद्धा इवेषुभिः ।
अवापुर्महतीं चिन्तां कथं कार्य्यमिति
ब्रुवन् ॥
महादेवस्य देवोऽन्यः को नाम सदृसो
भवेत् ।
मुक्त्वा चक्रायुधं देवं सोपास्य
इषुमाश्रितः ॥
घुरि युक्ता इवोक्षाणो घटन्त इव पर्व्वतैः ।
निश्वसन्तः सुराः सर्व्वे कथमेतदिति
ब्रुवन् ॥
अहं सारथिरित्युक्त्वा
जग्राहाश्वांस्ततोऽग्रजः ॥
ततो देवैः सगन्धर्व्वैः सिंहनादो महान्
कृतः ।
प्रतोदहस्तं सम्प्रेक्ष्य ब्रह्माणं सूततां गतम्
॥
भगवानपि विश्वेशो रथस्थे वै पितामहे ।
सदृशः सूत इत्युक्त्वा चारुरोह रथं हरः
॥
रथस्त्रिपुरे सकाञ्चनाचलो
व्रजति सपक्ष इवाद्रिरम्बरे ॥
करिगिरिरविमेघसन्निभाः
सजलपयोदनिनादनादिनः ।
प्रमथगणाः परिवार्य्य देवगुप्तं
रथमभितः प्रययुः स्वदर्पयुक्ताः ॥
मकर-तिमि-तिमिङ्गिलावृतः
प्रलय इवातिसमुद्धतोऽर्णवः ।
व्रजति रथवरोऽति भास्वरो
ह्यशनिनिपातपयोदनिस्वनः ॥" * ॥)
अथ ज्योतिर्व्विदाभरणे रथकर्म्माह ।
"लोलमैत्रलघुजिष्णुकभेषु
स्यन्दनाखिलविधानमथाहुः ।
सेनसद्युषुवशाम्बुतपस्थैः
साधुराशिवति साधुभिरङ्गे ॥"
अथ रथचक्रमाह ।
"उष्णवृष्णिकरकीर्णपुरक्षा-
द्वेयमृक्षवलयं वलयस्य ।
सव्यभागनिचितभ्रममग्रा-
दाविमध्यमनसो नवभागम् ॥
अग्रभे भवति संकलिरन्तः-
कूवरोडुनि जयोऽथ रथाङ्गे ।

|  | आरोहति रथं देवे ह्यश्वा हरभरातुराः ।<br>जानुभिः पतिता भूमौ रजोग्रासश्च ग्रासितः ॥<br>देवो दृष्ट्वाथ वेदांस्तानभीरुग्रहयान् भयात् । |  |
| --- | --- | --- |

सन्धिभेऽर्थहृतिरन्तरसन्धौ
भीतिरिष्टमनसो ननु गर्भे ॥”
अथ मुहूर्त्तगणपतौ रथकृत्यम् ।
“पुष्ये पुनर्व्वसुज्येष्ठानुराधा रेवती द्वयोः ।
श्रवणादित्रिभे हस्तत्रितये रोहिणीमृगे ।
सार्के सौम्यदिने सौम्यविलग्ने रथकर्म्म सत् ॥”
अथ ज्योतिःसागरे रथचक्रम् ।
“रथाकारं लिखेच्चक्रं भानुभादौ विलोकयेत् ।
रथाग्र त्रीणि रक्षाणि सृष्टिमार्गे प्रदापयेत् ॥
शृङ्गे मृत्युर्ज्जयं चक्रे सन्धिदण्डे महद्भयम् ।
रथाग्रे च महोत्पातं मध्ये चैव सुखप्रदम् ॥”
इत्यार्य्येषु ज्योतिर्व्विद्वल्लभरामेण कृताः शुभा
दिशः ॥ * ॥ अस्यार्थः । अथानन्तरं धीराः स्यन्दनानां रथानां अखिलं सम्पूर्णं विधानं कार्य्यमाहुः कथयन्ति । केषु लोलसंज्ञानि स्वाति पुनर्व्वसुः श्रवणा धनिष्ठा शतभिषा एतानि । मैत्रसंज्ञानि मृगशिरा रेवती चित्रा अनुराधा एतानि । लघुसंज्ञानि हस्ता अश्विनी
पुष्या अभिजित् एतानि । जिष्णुरिन्द्रस्तद्भं ज्येष्ठा
को ब्रह्मा तद्भं रोहिणी एतेषु नक्षत्रेषु । पुनः केषु सेनसद्द्युषु इनः सूर्य्यः तेन सह वर्त्तमानेषु ।
सतां शुभग्रहाणां द्युषु वारेषु । पुनः कस्मिन् साधुराशिवति शुभग्रहराशियुक्ते अङ्गे लग्ने सति । पुनः कैः वशा स्त्री सप्तमं स्थानं अम्बु
चतुर्थं तपः नवमं एतद्भवनस्थैः साधुभिः शुभग्रहैरिति । अथ रथचक्रे नक्षत्रस्थापनम् ।
उष्णेति । उष्णवृष्णिः सूर्य्यस्तस्य करैः किरणैः
कीर्णं व्याप्तं पुरं कक्षामण्डलीयस्वभागप्रदेशं यस्य तच्च तदृक्षञ्चेति तस्मात् अर्थात् सूर्य्या

**रथकड्या**, स्त्री, (रथानां समूह इति । “जन-
खलादिगोरथेति ।” इति मुग्धबोधसूत्रेण कड्यः । टाप् ।) रथसमूहः । तत्पर्य्यायः । रथव्रजः २ । इत्यमरः । २ । ८ । ५५ ॥ (रथ-
कट्या । इति पाणिनिः । ४ । २ । ५१ ॥)

**रथकरः**, पुं, (करोतीति । कृ + अच् । रथानां
करः ।) रथकारः । इति शब्दरत्नावली ॥

**रथकारः**, पुं, (रथं करोतीति । कृ + अण् ।)
रथनिर्म्माणकर्त्ता । छुतार इति भाषा । स तु
करणीगर्भे माहिष्याज्जातः । (यथा, वाज-
सनेयसंहितायाम् । ३० । ६ ।
“स्त्रीषखं प्रमदे कुमारीपुत्रं
मेधायै रथकारं धैर्य्याय तक्षाणम् ।”
“रथकारं माहिष्येण करिण्यां जातम् ।”
इति तद्भाष्ये महीधरः ॥) तत्पर्य्यायः । तक्षा २
वर्द्धकिः ३ त्वष्टा ४ काष्ठतट् ५ । इत्यमरः ॥
सूत्रधारः ६ वद्धका ७ रथकरः ८ काष्ठतक्षकः
९ । इति शब्दरत्नावली ॥

**रथकुटुम्बी**, [न्] पुं, (रथं कुटुम्बयितुं धारयितुं
शीलमस्य । णिनिः । यद्वा, रथ एव कुटुम्बम् ।
तदस्यास्तीति । इनिः ।) सारथिः । इत्य-
मरः । २ । ८ । ६० ॥

**रथक्रान्तः**, पुं, (रथवत् क्रान्तं क्रमणमस्य ।)
तालविशेषः । यथा, --
“अश्वक्रान्तो रथक्रान्तो विष्णुक्रान्तस्ततः परः ।
सूर्य्यक्रान्तो विधुक्रान्तो बलभिन्नागपक्षकः ॥
इति पञ्चमहीनानां संज्ञाः सप्त क्रमान्मताः ॥”

“रथन्तरस्य कल्पस्य वृत्तान्तमधिकृत्य यत् ।
सावर्णिना नारदाय कृष्णमाहात्म्यसंयुतम् ॥
यत्र ब्रह्मवराहस्य चरितं वर्ण्यते मुहुः ।
तदष्टादशसाहस्रं ब्रह्मवैवर्त्तमुच्यते ॥”
रथेन तरतीति । तॄ + “संज्ञायां भृतॄवृजि-
धारिसहितपिदमः ।” ३ । २ । ४६ । इति
खच् । मुम्च । अत्र व्युत्पत्तिमात्रम् । नत्व-
वयवार्थानुगमः । सामभेदे, क्ली । यथा, ऋग्-
वेदे । १ । १६४ । २५ ।
“जगता सिन्धुं दिव्यस्तभायद्रथन्तरे सूर्य्यं पर्य्य-
पश्यत् ॥”
“रथन्तरे एतन्नामके साम्नि ।” इति तद्भाष्ये
सायणः । स्त्रियां ङीप् । रथन्तरी । पौरवस्य
ईलिनस्य भार्य्या । यथा, महाभारते । १ । ९४ । १७ ।
“रथन्तर्य्यां सुतान् पञ्च
पञ्चभूतोपमांस्ततः ।
ईलिनो जनयामास दुष्मन्तप्रभृतीन् नृपान् ॥”)

**रथपर्य्यायः**, पुं, (रथः पर्य्यायो यस्य ।) वेतस-
वृक्षः । इति शब्दचन्द्रिका ॥ (विवरणमस्य
वेतसशब्दे विज्ञेयम् ॥)

**रथपादः**, पुं, (रथस्य पादः ।) चक्रम् । इति
हेमचन्द्रः ॥

**रथप्सा**, स्त्री, नदीविशेषः । इति शब्दरत्ना-
वली ॥

**रथयात्रा**, स्त्री, (रथेन भगवतो यात्रा ।)

क्रान्तनक्षत्रात् अनसः शकटस्य
वलयश्चक्रं
तस्याग्रात् अग्रभागमारभ्य आविमध्यं
मध्य-
भागपर्य्यन्तं सुधिया ऋक्षवलयं भचक्रं देयं
न्यासीकर्त्तव्यं किम्भूतं ऋक्षवलयं नवभागं
नवभिभार्गैः स्थितमिति यावत् । पुनः
किंभूतं
सव्यभागनिचितभ्रमं वामभागेन
व्याप्तभ्रमण-
मिति । अथास्य फलम् । अनसः शकटस्य
अग्रभे अग्रगतवर्त्तमाने चन्द्रनक्षत्रे सङ्कुलिः
युद्धं भवति । कूवरोडुनि युगन्धरगते वर्त्त-
माननक्षत्रे अन्तो मृतिः मरणं भवति ॥
रथाङ्गे चक्रयुग्मे जयो भवति । सन्धिभे
सन्धि-
गतनक्षत्रे अर्थहृतिः द्रव्यहरणं भवति ।
अन्तरसन्धौ मध्यसन्धानगतनक्षत्रे भीति-
भयो भवति । गर्भे मध्यभागगतनक्षत्रे इष्टं
शुभं भवति । ननु निश्चितमिति । अन्यत्
सुगमम् ॥

**रथकः**, पुं, (रथ इव प्रतिकृतिः । कन् ।) मन्दिरा-
वयवविशेषः । यथा, --
"अष्टकांशेन गर्भस्य रथकानान्तु निर्गमः ।
परिधेर्गुणभागेन रथकांस्तत्र कल्पयेत् ॥
तत्तृतीयेन वा कुर्य्यात् रथकानान्तु निर्गमम्
।
रामत्रयं स्थापनीयं रथकत्रितये सदा ॥"
इति श्रीहरिभक्तिविलासे २० विलासः ॥

इति सङ्गीतरत्नाकरः ॥

**रथगर्भकः**, पुं, (रथो गर्भेऽस्य ।) स्कन्धवाह्य-
यानम् । नररथः । तत्पर्य्यायः । कर्णीरथः
२
प्रवहणम् ३ डयनम् ४ । इति हेमचन्द्रः ॥

**रथगुप्तिः**, स्त्री, परप्रहरणाभिघातरक्षार्थं रथस्य
सन्नाहवदावरणकादिद्रव्यम् । रथस्य गुप्तिः
काण्डादिभ्यो रक्षार्थमावरणम् । तत्पर्य्यायः
।
वरूथः २ । इत्यमरः भरतश्च ॥

**रथगोपनं**, क्ली, (रथस्य गोपनं शस्त्रादिभ्यो
रंक्षार्थमावरणम् ।) रथगुप्तिः । इति हला-
युधः ॥

**रथचरणः**, पुं, (रथचरणं चक्रं तदेव नामास्य ।)
चक्रवाकपक्षी । इति शब्दरत्नावली ॥ (पुं,
क्ली,
रथस्य चरणः ।) रथचक्रम् । यथा, --
"रथः क्षौणो यन्ता शतधृतिरगेन्द्रो धनुरथो
रथाङ्गे चन्द्रार्कौ रथचरणपाणिः शर इति ।"
इति महिम्नः स्तोत्रम् ॥

**रथद्रुः**, पुं, (रथनामा द्रुः । यद्वा, रथस्य द्रुर्द्रुमः ।
तत्रोपयोगित्वात् ।) तिनिशवृक्षः । इत्यमरः
।
२ । ४ । २६ ॥ (तथास्य पर्य्यायः ।
"तिनिशः स्यन्दनो नेमी रथद्रुर्व्वञ्जुलस्तथा
।"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे
॥)

**रथन्तरः**, त्रि, रथेन तरति यः । इति मुग्धबोध-
व्याकरणम् ॥ (कल्पविशेषे, पुं । यथा,
मत्स्य-
पुराणे । ५३ । ३३ -- ३४ ।

आषाढशुक्लद्वितीयायांश्रीजगन्नाथस्य
रथा-
रोपणरूपोत्सवः । यथा, स्कन्दपुराणे ।
"आषाढस्य सिते पक्षे द्वितीया
पुष्यसंयुता ।
तस्यां रथे समारोप्य रामं मां भद्रया सह
॥
यात्रोत्सवं प्रवृत्याथ प्रीणयेच्च द्विजान्
बहून् ॥
तथा ।
ऋक्षाभावे तिथौ कार्य्या सदा सा प्रीतये
मम ॥
मां जगन्नाथम् । सा यात्रा ।" इति
तिथ्यादि-
तत्त्वम् ॥ * ॥
"नातः श्रेयःपदो विष्णोरुत्सवः
शास्त्रसम्मतः ।
रथयात्रैव यात्राणां मुख्येत्याह प्रजापतिः
॥"
इति यात्रातत्त्वम् ॥ * ॥
अन्यत् यात्राशब्दे द्रष्टव्यम् ॥

**रथाङ्गं**, क्ली, (रथस्याङ्गम् ।) चक्रम् । इत्यमरः ॥
(यथा, रघुः । ७ । ४१ ।
"रथो रथाङ्गध्वनिना विजज्ञे
विलोलघण्टाक्वणितेन नागः ॥"
रथावयवमात्रम् । यथा, महाभारते । १४
।
८२ । १३ ।
"ध्वजे पताकादण्डेषु रथयन्त्रहयेषु च ।
अन्येषु च रथाङ्गेषु न शरीरे न सारथौ ॥"
सुदर्शनचक्रम् । यथा, माघे । १ । २१ ।
"रथाङ्गपाणेः पटलेन रोचिषा-
मृषित्विषः संवलिता विरेजिरे ॥")

**रथाङ्गः**, पुं, चक्रवाकपक्षी । इत्यमरः ॥ (यथा,
नैषधे । १९ । ३५ ।
"विरहतरलजिह्वा बह्वाह्वयन्त्यतिविह्वला-
मिह सहचरीं नामग्राहं रथाङ्गविहङ्गमाः
॥")

**रथाङ्गपाणिः**, पुं, (रथाङ्गं सुदर्शनचक्रं पाणौ यस्य ।) विष्णुः । इति हलायुधः ॥ (यथा, भागवते । १ । ३ । ३८ ।
"सवेद धातुः पदवीं परस्य
दुरन्तवीर्य्यस्य रथाङ्गपाणेः ॥")

**रथाङ्गी**, स्त्री, (रथस्याङ्गमिवाकृतिर्यस्याः । रथाङ्ग + ङीष् ।) ऋद्धिः । इति राजनिर्घण्टः ॥

**रथान्तरः**, पुं, कल्पभेदः । इत्यग्निपुराणम् । (रथ-न्तर इत्यपि पाठः ॥)

**रथाभ्रः**, पुं, वेतसवृक्षः । इति शब्दरत्नावली ॥

**रथाभ्रपुष्पः**, पुं, (रथाभ्रस्य पुष्पमिव पुष्पमस्य ।) वेतसः । इत्यमरटीकायां भरतः ॥

**रथावरोही**, [न्] पुं, (रथे अवरोहतीति । अव् + रुह + णिनिः ।) रथस्थयुद्धकर्त्ता । इति हेमचन्द्रः ॥

**रथिकः**, पुं, (रथोऽस्त्यस्येति । रथ् + ठन् ।) रथी । इत्यमरः । २ । ८ । ७६ ॥ (यथा, बृहत्संहितायाम् । १५ । ११ ।
"हस्ते तस्करकुञ्जर-
रथिकमहामात्रशिल्पिपण्यानि ॥")
तिनिशवृक्षः । इति राजनिर्घण्टः ॥ (रथेन चरतीति । रथ् + "पर्पादिभ्यः ष्ठन् ।" ४ । ४ । १० । इति ष्ठन् । रथचारिणि, त्रि । इति सिद्धान्तकौमुदी ॥)

**रथिनः**, पुं, (रथस्य इनः प्रभुः । शकन्ध्वादि-त्वादकारलोपः ।) रथी । इत्यमरः । २ । ८ । ७६ ॥

**रथिरः**, पुं, (रथोऽस्त्यस्येति । रथ् + "मेधा-रथाभ्यामिरन्निरचौ वक्तव्यौ ।" ५ । २ । १०९ । इत्यस्य वार्त्तिकोक्त्या इरच् ।) रथी । इति इव ।" इति तद्भाष्ये सायणः ॥
रथस्येदमिति ।
"रथात् यत् ।" ४ । ३ । १२१ । इति यत् ।)
क्ली चक्रम् ॥ (युगम् । इति काशिका ॥

**रथ्या**, स्त्री, (रथानां समूहः । रथ् + "खलगो-रथात् ।" ४ । २ । ५० । इति यत् ।) रथ-समूहः । तत्पर्य्यायः । रथकड्या (ट्या) २ रथ-व्रजः ३ । अभ्यन्तरमार्गः । नाछ इति भाषा ॥
तत्पर्य्यायः । प्रतोली २ विशिखा ३ । इत्यमरः ॥
आवर्त्तनी । इति मेदिनी ॥ (रथाय हिता । रथ् + "रथाद्यत् ।" ४ । ३ । १२१ । इति यत् ।
यद्वा, रथं वहतीति । "तद्वहतीति ।" ४ । ४ । ७६ । इति यत् ।) पन्थाः । (यथा, महा-भारते । १ । १४१ । ६० ।
"पानागारेषु रथ्यासु सर्व्वतीर्थेषु चाप्यथ ।
चत्वरेषु च कूपेषु पर्व्वतेषु वनेषु च ॥")
चत्वरम् । इति हेमचन्द्रः ॥

**रद**, उत्खाते । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) रेफादिः । उत्खातमुत्-खनननमिति गोविन्दभट्टः । रदति भूमिं शूकरः । इति दुर्गादासः ॥

**रदः**, पुं, (रदतीति । रद विलेखने + पचादित्वात् अच् ।) दन्तः । (यथा, आर्य्यासप्तशत्याम् । ४०९ ।
"भ्रमसि प्रकटयसि रदं
करं प्रसारयसि तृणमपि श्रयसि ।
धिङ्मानं तव कुञ्जर
जीवं न जुहोषि जठराग्नौ ॥")
"रदनैः पन्नगरिपुं करेण शिरसा तदा ।
ऐरावतो गजपतिराजधान नदंस्तथा ॥"
रद् + भावे ल्युट् ।) उत्खनने, क्ली ॥

**रदनच्छदः**, पुं, (रदनानां छद आच्छादकः ।) ओष्ठः । अधरः । इत्यमरः । २ । ६ । ९० ॥ तस्य शुभाशुभलक्षणं यथा, --
"मांसलैश्च धनोपेता अवक्रैरधरैर्नृपाः ।
विम्बोपमैश्च स्फुटितैरोष्ठै रूक्षैश्च खण्डितैः ।
विवर्णैर्धनहीनाश्च दन्ता स्निग्धा घनाः शुभाः ॥"
इति गारुडे ६६ अध्यायः ॥

**रदनी**, [न्] पुं, (रदनौ प्रशस्तदन्तावस्य स्त इति । रदन + इनिः ।) हस्ती । इति राज-निर्घण्टः ॥

**रदी**, [न्] पुं, (रदौ प्रशस्तदन्तावस्य स्त इति । रद + इनिः ।) हस्ती । इति हलायुधः ॥

**रध**, य ऊ ऌ हिंसने । पाके । इति कविकल्पद्रुमः ॥
(दिघा०-पर०-सक०-वेट् ।) य, रध्यति । ऊ, रधिष्यति रत्स्यति । ऌ, अरन्धत् । इति दुर्गा-दासः ॥

**रन्ज**, म औ ञ रागे । इति कविकल्पद्रुमः ॥
(भ्वा०-दिवा० च-उभ०-वर्णान्तरोत्पादने सक०-आसक्तौ अक०-अनिट् ।)
य ञ, रज्यति रज्यते । म, रजयति मृगान् मृगरमणादन्यत्र रञ्जयति पुत्त्रं पिता । औ, रङ्क्ता । ञ, रजति रजते । रागो वर्णा-न्तरोत्पादनमासक्तिश्च । इति दुर्गादासः ॥

**रन्ज**, य म औ ञ रागे । इति कविकल्पद्रुमः ॥

शब्दरत्नावली ॥ (यथा, ऋग्वेदे । ३ । १ । १७ ।
"अनुदेवान्रथिरो यासि साधन् ॥"
"रथिरः रथी ।" इति तद्भाष्ये सायणः ॥)

**रथी**, [न्] पुं, (रथोऽस्यास्तीति । रथ् + इनिः ।)

रथस्वामी राजादिः । तत्पर्य्यायः । रथिकः २
रथिनः ३ । इत्यमरः । १ । ८ । ७६ ॥ रथा-
रोही ४ रथी ५ रथिरः ६ । इति हेमचन्द्रः ॥
रथस्वामी ७ सारक्षः ८ । इति शब्दरत्ना-
वली ॥ स्यन्दनारोहः ९ । इति जटाधरः ॥
(यथा, रघुः । ७ । ३७ ।
"पत्तिः पदातिं रथिनं रथेश-
स्तुरङ्गसादी तुरगाधिरूढम् ॥")

**रथ्यः**, पुं, (रथं वहतीति । रथ् + "तद्वहति-

रथयुगप्रासङ्गम् ।" ४ । ४ । ७६ । इति यत् ।)
रथस्य वोढा घोटकः । इत्यमरः । २ । ८ । ४६ ॥
रथांसः । इति हेमचन्द्रः ॥ (रथस्य नेता ।
यथा, ऋग्वेदे । ९ । २१ । ६ ।
"ऋभुर्न रथ्यं नवं दधाता केतमादिशे ।"
"रथ्यं रथस्य नेतारम् ।" इति तद्भाष्ये
सायणः ॥ रथसम्बन्धिनि, त्रि । यथा, ऋग्वेदे ।
२ । ३१ । ७ ।
"सप्तिर्न रथ्यो अहधीतिमश्याः ।"
"रथ्यो रथसम्बन्धी सप्तिर्न सर्पणशीलोऽश्व
विलेखनम् । इति मेदिनी । दे, १४ ॥ पुरुष-
दन्तलक्षणं यथा, --
"विवर्णैर्धनहीनाश्च दन्ताः स्निग्धा घनाः शुभाः ।
तीक्ष्णा दंष्ट्राः समाः श्रेष्ठा जिह्वा रक्ता समा शुभा ॥"
स्त्रीदन्तलक्षणं यथा, --
"कुन्दपुष्पसमा दन्ता भाषितं कोकिलासमम् ।
दाक्षिण्ययुक्तमशठं हंसशब्दसुखावहम् ॥
नासा समा समपुटा स्त्रीणान्तु रुचिरा शुभा ।
करालविषमा दन्ताः क्लेशाय च भयाय च ।
चौर्य्याय कृष्टमांसाश्च दीर्घा भर्त्तुश्च मृत्यवे ॥"
इति गारुडे ६६ अध्यायः ॥ * ॥
दन्तलग्नस्य शुचित्वं यथा, --
"दन्तवद्दन्तलग्नेषु जिह्वास्पर्शेऽशुचिर्भवेत् ॥"
इति कौर्म्मे उपविभागे १२ अध्यायः ॥ * ॥
"दन्तलग्नमसंहार्य्यं लेपं मन्येत दन्तवत् ।
न तत्र बहुशः कुर्य्याद्यत्नमुद्धरणे पुनः ।
भवेदशौचमत्यर्थं तृणवेधाद्व्रणे कृते ॥"
इति प्रायश्चित्ततत्त्वधृतवचनम् ॥

**रदच्छदः**, पुं, (रदानां छद आच्छादकः ।)

ओष्ठः । इति हेमचन्द्रः ॥

**रदनः**, पुं, (रद्यतेऽनेनेति । रद + करणे ल्युट् ।

रनतीति । रद् + ल्युर्वा ।) दन्तः । इत्यमरः ।
२ । ६ । ९१ ॥ (यथा, हरिवंशे । १३० । ८७ ।
(भ्वा०-दिवा० च-उभ०-
वर्णान्तरोत्पादने सक०-आसक्तौ अक०-अनिट् ।)
य ञ, रज्यति रज्यते । म, रजयति मृगान्
मृगरमणादन्यत्र रञ्जयति पुत्त्रं पिता । औ,
रङ्क्ता । ञ, रजति रजते । रागो वर्णा-
न्तरोत्पादनमासक्तिश्च । इति दुर्गादासः ॥

**रन्तिदेवः**, पुं, (रमते इति । रम + संज्ञायां

तिक् । रन्तिश्चासौ देवश्चेति ।) विष्णुः । चन्द्र-
वंशीयनृपतिभेदः । स तु साङ्कृतिपुत्त्रः । इति
मेदिनी । वे, ६२ ॥ (यथा, भागवते । ९ । २१ । २ ।
"गुरुश्च रन्तिदेवश्च संकृतेः पाण्डुनन्दन ! ।
रन्तिदेवस्य महिमा इहामुत्र च गीयते ॥"
अयं हि याज्ञिको दाताग्रगण्य इति पुराणेषु
श्रूयते । एतद्यज्ञहतगोचर्म्मरसेनैव चर्म्मण्वती
नदी जाता । यथा, महाभारते । ३ । २०७ ।
८ -- ९ ।
"राज्ञो महानसे पूर्ब्बं रन्तिदेवस्य वै द्विज ।
द्वे सहस्रे तु वध्येते पशूनामन्वहं तदा ॥
अहन्यहनि वध्येते द्वे सहस्रे गवां तथा ।
समांसं ददतो ह्यन्नं रन्तिदेवस्य नित्यशः ॥
अतुला कीर्त्तिरभवत् नृपस्य द्विजसत्तम ! ॥"
तथाच तत्रैव । १२ । २९ । १२२ -- १२८ ।
"उपातिष्ठंश्च पशवः स्वयं तं संशितव्रतम् ।
ग्राम्यारण्या महात्मानं रन्तिदेवं यशस्विनम् ॥
महानदी चर्म्मराशेरुत्क्लेदात् सुस्रुवे यतः ।

| | | |
|---|---|---|
| | | ततश्चर्म्मण्वतीत्येवं विख्याता सा महानदी ॥<br>ब्राह्मणेभ्यो ददौ निष्कान् सदसि प्रतते नृपः ।<br>तुभ्यं निष्कं तुभ्यं निष्कमिति क्रोशन्ति वै द्विजाः ।<br>सहस्रं तुभ्यमित्युक्त्वा ब्राह्मणान् संप्रपद्यते ।<br>अन्वाहार्य्योपकरणं द्रव्योपकरणञ्च यत् ॥<br>घटाः पात्र्यः कटाहानिस्थाल्यश्च पिठराणि च ।<br>नासीत् किञ्चिदसौवर्णं रन्तिदेवस्य धीमतः ॥ |

सांकृते रन्तिदेवस्य यां रात्रिमवसन् गृहे ।
आलभ्यन्त शतं गावः सहस्राणि च विंशतिः ॥
तत्र स्म सूदाः क्रोशन्ति सुमृष्टमणिकुण्डलाः ।
सूपभूयिष्ठमश्नीध्वं नाद्यमांसं यथा पुरा ॥”)
कुक्कुरः । इति शब्दरत्नावली ॥

**रन्तुः**, स्त्री, (रमते अत्रेति । रम् + तुन् ।) वर्त्म । नदी । इति मेदिनी । ते, ४९ ॥

**रन्धनं**, क्ली, पाकः । रधधातोर्भावेऽनट्प्रत्ययेन निष्पन्नम् । यथा रन्धनाय स्थाली । इति संक्षिप्तसारव्याकरणम् ॥ (रध् + ल्युः । नाशके, त्रि । यथा, भागवते । ४ । ३० । २८ ।
“यदनुस्मर्य्यते काले स्वबुद्ध्याभद्ररन्धन ! ॥”
“हे अभद्ररन्धन ! अमङ्गलनाशन ! ।” इति तट्टीकायां श्रीधरः ॥)

**रन्धितं**, क्ली, (रध् + क्त ।) कृतरन्धनद्रव्यम् । तस्य पात्रान्तरे स्थापनविधिर्यथा, --
“सङ्कीर्णे पात्रसम्भारे मार्गे वा ग्रामवर्ज्जिते ।
स्थापयेद्गुणवान् सूदः सिद्धान्नं पात्रकान्तरे ॥
भक्तं स्वपावके स्थाप्यं न स्थाप्यं पात्रकान्तरे ॥
घृतं काष्ठायसे स्थाप्यं मांसं मांसभवं रसम् ।
स्थापयेद्राजते हैमे पात्रे लौहेऽथ काष्ठजे ।
पत्रादिषड्विधं शाकं स्थाप्यं काष्ठाश्मलौहजे ।

**रन्ध्रवंशः**, पुं, (रन्ध्रविशिष्टो वंशः ।) छिद्रयुक्तवंशः । फाँफावाँश इति भाषा । तत्पर्य्यायः । त्वक्सारः २ कीचकाह्वयः ३ मस्करः ४ वादनीयः ५ शुषिरास्यः ६ । अस्य गुणाः ।
“वंशौ त्वम्लौ कषायौ च किञ्चित्तिक्तौ च शीतलौ ।
मूत्रकृच्छ्रप्रमेहार्शःपित्तदाहास्रनाशनौ ॥
विशेषो रन्ध्रवंशस्तु दीपनोऽजीर्णनाशकः ।
रुचिकृत् पाचनो हृद्यः शूलघ्नो गुल्मनाशनः ॥”
इति राजनिर्घण्टः ॥

**रप**, वदे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) रपति । वदः कथनम् । इति दुर्गादासः ॥

**रफ**, गत्याम् । वधे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) रफति । इति दुर्गादासः ॥

**रफ**, इ गत्याम् । वधे । इति कविकल्पद्रुमः ॥ आत्मा०-पर०-सक०-सेट् ।) इ, रम्फ्यते । इति दुर्गादासः ।

**रब**, इ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) इ, रम्ब्यते । इति दुर्गादासः ॥

**रब**, इ ङ शब्दे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट् ॥)

**रबः**, पुं, शब्दः । रबधातोर्भावेऽल्प्रत्ययेन निष्पन्नः ॥ (यथा, राजतरङ्गिण्याम् । ५ । ४०८ ।
“सुप्तस्तटाद्ध्रदे भ्रष्ट इव निद्रालसेक्षणः ।
प्रबुद्धः शस्त्रपातैः स व्यमुचद् भैरवान् रबान् ॥”)

**रभ**, इ ङ शब्दे । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-सेट् ।) इ, रम्भ्यते । ङ, रम्भते ।

कलिङ्गः । स्त्रियामा रभसा च दृश्यते । इति कृष्णः । (यथा, किरातार्ज्जुनीये । ५ । १ ।
“अथ जयाय नु मेरुमहीभृतो रभसया नु दिगन्तदिदृक्षया ।
अभिययौ स हिमालयमुच्छ्रितं समुदितं नु विलङ्घयितुं नभः ॥”)
(यथा, महाभारते । ५ । ५१ । १० ।
“सर्व्वेषां मम पुत्राणां स एकः क्रूरविक्रमः ।
बह्वाशी विप्रतीपश्च बाल्येऽपि रभसः सदा ॥”
महान् । इति निघण्टुः । ३ । ३ ॥)
यदा तु रभसगुणयोगातर्श आदित्वात् अप्रत्यये तद्वति वर्त्तते तदा वाच्यलिङ्गता स्यात् ।
इति लिङ्गादिसंग्रहे भरतः ॥
स्वनामख्यातः अभिधानविशेषश्च ॥

**रम**, उ ङ ज औ क्रीडे । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-अनिट् । क्त्वावेट् ।)
रेफादिः । उ, रमित्वा । रन्त्वा । ङ, रमते । ज, रामः रमः । औ, रन्ता । इति दुर्गादासः ॥

**रमः**, पुं, (रमते इति । रम् + पचाद्यच् ।) कान्तः । (यथा, किरातार्ज्जुनीये । ५ । २० ।
“निधिगुह्यकाधिपरमैः परमैः ॥”)
रक्ताशोकवृक्षः । कामदेवः । इति मेदिनी । मे, २५ ॥ रमणञ्च । रमधातोर्भावेऽल्प्रत्ययनिष्पन्नम् ॥

**रमकः**, पुं, (रमते इति । रम् + “रमेरश्च लो वा ।” उणा० ३ । ३३ । इति क्वुन् ।) कान्तः ।
इत्युणादिकोषः ॥

**रमठं**, क्ली, (रम + अठन् ।) हिङ्गु । इत्युणादिकोषः ॥ (जनपदबिशेषे, पुं । तद्देशवासिनि, त्रि । यथा, महाभारते । ३ । ५१ । २४ ।
“जागुडान् रमठान् मुण्डान् स्त्रीराज्यानथ

पक्वान्नं पिष्टकं भक्ष्यं स्थाप्यं
कांस्येऽथ दारुजे ॥
धारयेत् सुशृतं क्षीरं पार्थिवे वाथ
काष्ठजे ।
पानीयं पायसं तक्रं मृण्मयेष्वेव
धारयेत् ॥
काचजे स्फाटिके वाथ
वैदूर्य्यादिविचित्रिते ।
धारयेत् सर्व्वदा पात्रे
रागषाडवशट्टकान् ॥
उक्तपात्रान्तरे स्थाप्यं तद्द्रव्यं
तद्‌द्रुजापहम् ।
सर्व्वदा सुखदं हृद्यमन्यथा
दोषकारकम् ॥”
इति सूपकारशास्त्रे पाकराजेश्वरः ॥

**रन्धं**, क्ली, (रन्धयति हिनस्त्यनेनेति । रध् + बाहु-
लकात् रक् ।) दूषणम् । (यथा, रघुः ।
१२ । ११ ।
“रन्ध्रान्वेषणदक्षाणां द्विषामामिषतां
ययौ ॥”)
छिद्रम् । इति मेदिनी ॥ (यथा, रघौ ।
१५ । ८२ ।
“एवसुक्ते तया साध्व्या रन्ध्रात्
सद्योभवाद्भुवः ।
शातह्रदमिव ज्योतिः
प्रभामण्डलमुद्ययौ ॥”
मनुष्यशरीरस्थरन्ध्राणियथा, --
“नासानयनकर्णानां द्वे द्वे रन्ध्रे
प्रकीर्त्तिते ।
मेहनापानवक्त्राणामेकैकं रन्ध्रमुच्यते
।
दशमं मस्तके प्रोक्तं रन्ध्राणीति नृणां
विदुः ॥
स्त्रीणान्त्रीण्यधिकानि स्युः
स्तनयोर्गर्भवर्त्मनः ।
सूक्ष्मच्छिद्राणि चान्यानि मतानि
त्वचि जन्मि-
नाम् ॥”
इति शार्ङ्गधरे पूर्ब्बखण्डे पञ्चमेऽध्याये
॥
इति दुर्गादासः ॥

**रभ**, औ ङ राभस्ये । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-अक०-अनिट् ।
राभस्यमुत्सुकीभावः ।
निर्व्विचारा प्रवृत्तिरिति गोविन्दभट्टः । औ,
रब्धा । ङ, रभते साधुः पुण्ये । आङ्पूर्व्वोऽय-
मारम्भे । शास्त्रं पठितुमारभते शिष्यः । इति
दुर्गादासः ॥

**रभसः**, पुं, (रभणमिति । रभ + “अत्यविचमि-
तमिनमिरभिलभीति ।” उणा० ३ । ११७ ।
इति असच् ।) वेगः । (यथा, माघे । ९ । ७२ ।
“रभसोत्थितामुपगतः सहसा
परिरभ्यकश्चन बधूमरुधत् ॥”)
हर्षः । इति मेदिनी । से, ३१ ॥ (प्रेमोत्साहः ।
यथा, गीतगोविन्दे । ५ । ६ ।
“मनसि रभसविभवे हरिरुदयतु सुकृतेन ॥”
“रभसस्य प्रेमोत्साहस्य ।” इति तट्टीकाबाल-
बोधिनी ॥) संरम्भः । यथा, माघे । ११ । १९
।
“प्रमदमदनमाद्यद्यौवनोद्दामरामा
रमणरभसखेदच्छेदविच्छे दक्षः ॥”
संभ्रमः । यथा, भागवते । ११ । १९ ।
“वज्रदंष्ट्राः श्वानः सप्तशतानि
विंशतिश्च सरभसं खादन्ति ॥”)
पौर्व्वापर्य्यविचारः । इत्यरुणः ।
औत्सुक्यमिति
तङ्गणान् ॥”)

**रमठध्वनिः**, पुं, (रमठ इति शब्देन ध्वन्यते कथ्यते
इति । ध्वन् + इन् ।) हिङ्गु । इति शब्द-
चन्द्रिका ॥

**रमणं**, क्ली, (रमयतीति । रम् + णिच् + ल्युः ।)
पटोलमूलम् । इति मेदिनी ॥ जघनम् । इति
हेमचन्द्रः ॥ (रम् + भावे ल्युट् ।) जम्भनम्
।
तत्पर्य्यायः । अब्रह्मचर्य्यकम् २ ग्राम्यधर्म्मः
३
सुरतम् ४ रतम् ५ संप्रयोगः ६ निधुवनम् ७
मैथुनम् ८ रतिः ९ उपसृष्टम् १० धर्षितम्
११
क्रीडारत्नम् १२ महासुखम् १३ त्रिभद्रम्
१४
योगमिथुनम् १५ अभिमानितम् १६ । इति
शब्दरत्नावली ॥ (यथा, माघे । ११ । १९
।
विकच कमलगन्धैरन्धयन् भृङ्गमालाः
सुरभितमकरन्दं मन्दमावाति वातः ।
प्रमदमदनमाद्याद्यौवनोद्दामरामा‌‌‌
रमणरभसखेदस्वेदविच्छेददक्षः ॥”)
क्रीडनम् । इति रमधात्वर्थदर्शनात् ॥
(रत्यु-
त्पादनम् । यथा, भागवते । १० । २ । १३
।
“रामेति लोकरमणाद्बलं बलवदुच्छ्रयात् ॥”
“लोकस्य रमणात् रत्यत्पादनात् ।” इति
तत्र

योनिः । यथा, महाभारते । १२ । २८२ । ५३ ।

“रन्ध्रागतमथाश्वानां शिखोद्भेदश्च वर्हिणाम् ।
नेत्ररोगः कोकिलस्य ज्वरः प्रोक्तो महात्मना ॥”)

**रन्ध्रकण्टः**, पुं, (रन्ध्रे कण्टः कण्टको यस्य ।)

जालवर्व्वूरकः । इति राजनिर्घण्टः ॥

**रन्ध्रबभ्रुः**, पुं, (रन्ध्रे गर्त्ते बभ्रुर्नकुल इव ।)

उन्दुरुः । इति त्रिकाण्डशेषः ॥

स्वामी ॥ वनविशेषः । यथा, हरिवंशे । १५५ । २१ ।
"भाति चैत्रवनञ्चैव नन्दनञ्च वनं महत् ।
रमणं भावनं चैव वेणुमद्वै समन्ततः ॥")

**रमणः**, पुं, (रमते रमयतीति वा । रम् + णिच् वा + ल्युः ।) पतिः । (यथा, कुमारे । ४ । २१ ।
"वचनीयमिदं व्यवस्थितं
रमण ! त्वामनुयामि यद्यपि ॥"
रमयति स्त्रीपुरुषाणां अन्तःकरणमिति । रम् + णिच् + ल्युः ।) कामदेवः । इति मेदिनी । णे, ७२ ॥ गर्द्दभः । इति हेमचन्द्रः । ३ । १८१ ॥
वृषणः । इति शब्दचन्द्रिका ॥
महारिष्टः ।
इति राजनिर्घण्टः ॥
(धरवसुपुत्त्राणामन्यतमः । यथा, मात्स्ये । ५ । २४ ।
"कल्याणिन्यां ततः प्राणो रमणः शिशिरोऽपि च
मनोहरा धरात् पुत्त्रानवापाथ हरेः सुता ॥"
रमणीये, त्रि । यथा, भागवते । ४ । ६ । १० ।
"रमणं विहरन्तीनां रमणैः सिद्धयोषिताम् ॥")

**रमणकं**, क्ली, (रमन्ते लोका अत्र । रम् + ल्युट् । संज्ञायां कन् ।)
जम्बुद्वीपान्तर्गतवर्षविशेषः ।
स तु रम्यकवर्षः । यथा, --
"एवमेवोत्तरे त्रीणि वर्षाणि च तपोधन ।
"वितरसि दिक्षु रणे दिक्पतिकमनीयम्
दशमुखमौलिवलिं रमणीयम् ॥")

**रमण्यं**, त्रि, (रम् + "शृरम्योश्च ।" उणा० ३ । १०१ । इति अन्यप्रत्ययः । रमणीयम् । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥)

**रमतिः**, पुं, (रमतेऽस्मिन् इति । रम् + "रमेर्न्नित् ।" उणा० ४ । ६३ । इति अतिप्रत्ययः । निच्च ।) नायकः । स्वर्गः । इति मेदिनी । ते, १४३ ॥ काकः । इति शब्दरत्नावली ॥ कालः । कामदेवः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**रमा**, स्त्री, (रमयतीति । रम् + णिच् + अच् । टाप् च ।) लक्ष्मीः । इति मेदिनी । मे, २५ ॥ (यथा, भागवते । ३ । ९ । २३ ।
"एष प्रसन्नवरदो रमयात्मशक्त्या
यद्यत् करिष्यति गृहीतगुणावतारः ॥"
यथा च ।
"रमा यत्र नवाक् तत्र यत्र वाक् तत्र नो रमा ।
ते यत्र विनयो नास्ति सा च सा च स च त्वयि ॥"
इत्युद्भटः ॥)
शशिध्वजराजकन्या । सा कल्किदेवेन विवाहिता । यथा, --
"ततः शशिध्वजो राजा युद्धादाहूय पुत्त्रकान् ।
सुशान्ताया मतिं बुद्ध्वा रमां प्रादात् स कल्कये ॥"
इति कल्किपुराणे २५ अध्यायः ॥
शोभा । इति राजनिर्घण्टः ॥ (गङ्गा । यथा, काशीखण्डे । २९ । १४५ ।
"रेवती रतिकृद्रम्या रत्नगर्भा रमा रतिः ॥"

**रमाधवः**, पुं, (रमाया लक्ष्म्या धवः पतिरिति ।) श्रीकृष्णः । यथा । रमाधवः पूज्यो माधवत्वात् । इत्यवयवग्रन्थे जगदीशः ॥

**रमानाथः**, पुं, श्रीकृष्णः । रमा लक्ष्मीस्तस्या नाथः स्वामी । इति षष्ठीतत्पुरुषसमासनिष्पन्नः ॥

**रमापतिः**, पुं, (रमायाः पतिः ।) श्रीकृष्णः ।
"व्रजयुवतिर्गोपबधूः मुररिपुणा श्रीकृष्णन परिरमिता सती प्रमदं हर्षं इता गता । किम्भूता । त्वरितगतिः त्वरिता शीघ्रा गतिर्यस्याः सा तथा । पुनः किम्भूता तरणिसुताविपिनगता यमुनासम्बन्धिवनमुपागता । किम्भूतेन रतिगुरुणा रतौ शृङ्गारे गुरुणा उपाध्यायेन । अयमभिप्रायः । स्वयं रतिकुशलो नायिकाञ्च रतिमध्यापयति ।" इति तट्टीका ॥

**रमेश्वरः**, पुं, (रमाया लक्ष्म्या ईश्वरः पतिर्नियन्ता वा ।) विष्णुः । यथा, --
"श्रीराम राघव रमेश्वर रावणारे
भूतेश मन्मथरिपो प्रमथाधिनाथ ।
चाणूरमर्द्दन हृषीकपतेऽसुरारे
त्याज्या भटा य इति सन्ततमामनन्ति ॥"
इति काशीखण्डे हरिहरस्तोत्रम् ॥

**रम्भः**, पुं, (रम्भते रागमूर्च्छनादिकमनेनेति । रभि + कर्म्मणि घञ् ।) वेणुः । (रम्मते उद्यमशीलो भवति निरन्तरमुदरभरणायेति भावः । रभि + अच् ।) वानरविशेषः । इति मेदिनी । भे, ७ ॥ महिषासुरपिता । यथा, --
श्रीऔर्व्व उवाच ।
"आराधितो महादेवो रम्भेण सुरवैरिणा ।
चिरेण स च सुप्रीतस्तपसा तस्य शङ्करः ॥

कुरुवर्षं सिन्धुकूलात् शृङ्गवानवधिः
स्मृतः ॥
हिरण्मयं ततो वर्षं श्वेतावधि निगद्यते
।
रम्यकञ्च ततो वर्षं नीलस्तस्यावधिः
स्मृतः ॥”
अपि च ।
शेष उवाच ।
“दक्षिणेन तु श्वेतस्य निषधस्योत्तरेण
तु ।
वर्षं रमणकं नाम जायन्ते तत्र मानवाः
॥
शुक्लाभिजनसम्पन्नाः सर्व्वे
सुप्रियदर्शनाः ।
दशवर्षसहस्राणि शतानि दश पञ्च च ।
जीवन्ति ते महाभाग नित्यं
मुदितमानसाः ॥”
इति पाद्मे भूखण्डे १२८ । २२९
अध्यायौ ॥
(अन्यत् रम्यकशब्दे द्रष्टव्यम् ॥
वीतिहोत्रस्य
पुत्त्रभेदः । यथा, भागवते । ५ । २०
। ३१ ।
“तद्द्वीपस्याधिपतिः प्रैयवतो
वीतिहोत्रो नाम
तस्यात्मजौ रमणकधातकनामानौ
वर्षपती
नियुज्य स्वयं
पूर्व्वजवद्भगवत्कर्म्मशील एवास्ते ॥”)

**रमणा**, स्त्री, रमणी । इत्यमरटीका ॥ (पीठस्थ
शक्तिविशेषः । यथा, देवीभागते । ७ ।
३० । ६७ ।
“रमणा रामतीर्थे तु यमुनायां मृगावती
॥”)

**रमणी**, स्त्री, (रमतेऽस्यामिति । रम + ल्युट् ।
ङीष् ।) नारी । इति मेदिनी । णे, ७२
॥
उत्कृष्टस्त्रीविशेषः । या
वपुर्गुणोपचारेण
यथा, मुग्धबोधव्याकरणे ।
“मुकुन्दस्यासितमिदमिदं यातं रमापतेः ।
भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः ॥”
(यथा च देवीभागवते । १ । ५ । ८ ।
“दत्त्वा भारं धनुष्कोट्यां निद्रामाप रमा-
पतिः ॥”)

**रमाप्रियं**, क्ली, (रमायाः प्रियम् ।) पद्मम् ।
इति शब्दचन्द्रिका ॥

**रमावेष्टः**, पुं, (रमया वेष्ट्यतेऽसौ । वेष्ट + घञ् ।)
श्रीवासः । इति राजनिर्घण्टः ॥

**रमिता**, त्रि, (रम् + णिच् + क्त । टाप् ।) रति-
प्रापिता । यथा, --
“त्वरितगतिर्व्रजयुवतिस्तरणिसुताविपिनगता।
मुररिपुणा रतिगुरुणा परिरमिता प्रमद-
मिता ॥”
इति छन्दोमञ्जरी ॥

अथ तुष्टो महादेवः प्रत्यक्षं
रम्भमुक्तवान् ।
प्रीतोऽस्मि ते वरं रम्भ वरयस्व
यथेप्सितम् ॥
एवमुक्तः प्रत्युवाच रम्भस्तं
चन्द्रशेखरम् ।
अपुत्त्रोऽहं महादेव यदि ते मय्यनुग्रहः
॥
मम जन्मत्रये पुत्त्रो भवान् भवतु शङ्कर
।
एवमुक्तस्तु दैत्येन प्रत्युवाच वृषध्वजः
॥
भवत्वेतद्वाञ्छितं ते भविष्यामि
सुतस्तव ।
इत्युक्त्वा स
महादेवस्तत्रैवान्तरधीयत ॥
रम्भोऽपि यातः स्वस्थानं
हर्षोत्फुल्लविलोचनः ।
पथि गच्छन् स रम्भोऽथ ददृशे महिषीं
शुभाम् ॥
त्रिहायणीं चित्रवर्णां सुन्दरीं
ऋतुशालिनीम् ।
स तां दृष्ट्वाथ महिषीं रम्भः कामेन
मोहितः ॥
दोर्भ्यां गृहीत्वा च तदा चकार
सुरतोत्सवम् ।
तयोः प्रवृत्ते सुरते सा तदा तस्य
तेजसा ॥
दधार महिषी गर्भं तदाभून्महिषासुरः
॥”
इति कालिकापुराणे ५९ अध्यायः ॥
(असौ एव जन्मान्तरे रक्तबीजो जातः
।
एतद्विवरणं यथा, देवीभागवते । ५ । २
। १७-४९ ।
व्यास उवाच ।
“दनोः पुत्त्रौ महाराज ! विख्यातौ
क्षिति-
मण्डले ।
रम्भश्चैव करम्भश्च द्वावास्तां
दानवोत्तमौ ॥

सौभाग्येन कान्तं रमयति सा ।

इत्यमरभरतौ ॥

(यथा, कथासरित्सागरे । ५२ । २१४ ॥

"रथेन रमणीयुक्तः प्रजानां दत्तकौतुकः ॥")

बालाख्यवृक्षः । यथा, --

"बाला च रमणी रामा बन्ध्या कामकलापि च ॥"

इति शब्दचन्द्रिका ॥

**रमणीयं** त्रि, (रम् + अनीयर् ।) सुन्दरम् ।

इत्यमरटीका ॥ (यथा, गीतगोविन्दे । १ । ११ ।

तावपुत्त्रौ महाराज ! पुत्त्रार्थं तेपतुस्तपः ।

बहून् वर्षगणान् कामं पुण्ये पञ्चनदे जले ॥

करम्भस्तु जले मग्नश्चकार परमं तपः ।

वृक्षं रसालवटं प्राप्य स रम्भोऽग्निमसेवत ॥

पञ्चाग्निसाधनासक्तः स रम्भस्तु यदाभवत् ।

ज्ञात्वा शचीपतिर्दुःखमुद्ययौ दानवौ प्रति ॥

गत्वा पञ्चनदे तत्र ग्राहरूपं चकार ह ।
वासवस्तु करम्भन्तं तदा जग्राह पादयोः ॥
निजघान च तं दुष्टं करम्भं वृत्रसूदनः ।
भ्रातरं निहतं श्रुत्वा रम्भः कोपं परङ्गतः ॥
स्वशीर्षं पावके होतुमैच्छच्छित्वा करेण ह ।
केशपाशे गृहीत्वाशु वामेन क्रोधसंयुतः ॥
दक्षिणेन करेणोग्रं गृहीत्वा खड्गमुत्तमम् ।
छिनत्ति शीर्षं तत्तावद्वह्निना प्रतिबोधितः ॥
उक्तश्च दैत्य मूर्खोऽसि स्वशीर्षं छेत्तुमिच्छसि ।
आत्महत्यातिदुःसाध्या कथं त्वं कर्त्तुमुद्यतः ॥
वरं वरय भद्रं ते यस्ते मनसि वर्त्तते ।
मा म्रियस्व मृतेनाद्य किन्ते कार्य्यं भविष्यति ॥
व्यास उवाच ।
तच्छ्रुत्वा वचनं रम्भः पावकस्य सुभाषितम् ।
ततोऽब्रवीद्वचो रम्भस्त्यक्त्वा केशकलापकम् ॥
यदि तुष्टोऽसि देवेश ! देहि मे वाञ्छितं वरम् ।
त्रैलोक्यविजयी पुत्त्रः स्यान्नः परबलार्द्दनः ॥
अजेयः सर्व्वथा स स्याद्देवदामवमानवैः ।
कामरूपी महावीर्य्यः सर्व्वलोकाभिवन्दितः ॥
पावकस्तं तथेत्याह भविष्यति तवेप्सितम् ।
पुत्त्रस्तव महाभाग ! मरणाद्विरमाधुना ॥
यस्यां चित्तं तु रम्भ ! त्वं प्रमदायां करिष्यसि ।
वार्य्यमाणापि यक्षैः सा प्रविवेश हुताशनम् ।
ज्वालामालाकुलं साध्वी पतिमादाय वल्लभम् ॥
महिषस्तु चितामध्यात् समुत्तस्थौ महाबलः ।
रम्भोऽप्यन्यद्वपुः कृत्वा निःसृतः पुत्त्रवत्सलः ॥
रक्तबीजोऽप्यसौ जातो महिषोऽपि महाबलः ।
अभिषिक्तस्तु राज्येऽसौ हयारिरसुरोत्तमैः ॥
एवं स महिषो जातो रक्तबीजश्च वीर्य्यवान् ।
अवध्यस्तु सुरैर्द्दैत्यैर्मानवैश्च नृपोत्तम ! ॥")

**रम्भा**, स्त्री, (रभि + अच् । टाप् ।) कदली ।
(यथा, नैषधे । २ । ३७ ।
"तरुमूरुयुगेन सुन्दरी
किमु रम्भां परिणाहिना परम् ॥")
अप्सरोविशेषः । इति मेदिनी । मे, ७ ॥ (यथा,
महाभारते । १ । ६५ । ५० ।
"अरुणा रक्षिता चैव रम्भा तद्वन्मनोरमा ॥")
गौरी । इति शब्दरत्नावली ॥ (सा तु पीठस्थ-
शक्तीनामन्यततमा । यथा, देवीभागवते । ७ । ३० । ५८ ।
"गौरी प्रोक्ता कान्यकुब्जे रम्भा कु मलया-
चले ॥")
गोध्वनिः । इति हेमचन्द्रः । ६ । ४२ ॥ वेश्या ।
इति धरणिः ॥

**रम्भातृतीया**, स्त्री, (रम्भाख्या तृतीया ।) व्रत-
विशेषकालः । यथा, --
ब्रह्मोवाच ।
'रम्भाख्यां वर्ज्जयित्वा तु तृतीयां मुनिसत्तम ।
अन्येषु सर्व्वकार्य्येषु गणयुक्ता प्रशस्यते ॥'
इति ब्रह्मवैवर्त्तात् ॥
ततश्च युग्मवाक्यं रम्भाव्रतपरम् ।
भविष्योत्तरे ।
'कुरुष्व भद्रे यत्नेन रम्भाख्यं व्रतमुत्तमम् ।
ज्यैष्ठे शुक्लतृतीयायां स्नातनियमतत्परा ॥'
रम्भाख्यमिति रम्भया कृतमिति रम्भाव्रतम् ।"
इति तिथ्यादितत्त्वम् ॥

**रम्भोरूः**, स्त्री, रम्भे इव ऊरू यस्याः सा । इति
व्याकरणम् ॥ (यथा, रघौ । ६ । ३५ ।
"अनेन यूना सह पार्थिवेन
रम्भोरु ! कच्चिन्मनसो रुचिस्ते ॥")

**रम्य**, क्ली, (रम + "पोरदुपधात् यत् ।" ३ । १ ।
९८ । इति यत् ।) पटोलमूलम् । इति मेदिनी ॥
प्रधानधातु । इति जटाधरः ॥

**रम्यः**, पुं, (रम्यते अनेनेति । रम + यत् ।) चम्पक-
वृक्षः । इति मेदिनी ॥ वकवृक्षः । इति शब्द-
चन्द्रिका ॥

**रम्यः**, त्रि, (रम + यत् ।) मनोज्ञः । इति मेदिनी ॥
(यथा, मनौ । ७ । ६९ ।
"रम्यमानतसामन्तं स्वाजीव्यं देशमावसेत् ॥")
बलकरः । इति जटाधरः ॥

**रम्यकं**, क्ली, (रम्यते जनोऽत्रेति । रम् + यत् । ततः
कप् संज्ञायां कन् वा ।) वर्षविशेषः । इति
जटाधरः ॥ एतस्य विवरणं यथा, --
"दक्षिणेन तु मेरोस्तु श्वेतस्य चोत्तरेण च ।
वायव्यं रम्यकं नाम जायन्ते तत्र मानवाः ॥
मतिप्रधाना विमला जरादुर्गविवर्जिताः ।
तत्रापि सुमहान् वृक्षो न्यग्रोधो रोहितः स्मृतः ।
तत्फलप्राशनाद्वै जीवन्ति बहुवासरम् ॥"

व्यास उवाच ।
तस्यां पुत्त्रो महाभाग ! भविष्यति बलाधिकः ॥
इत्युक्तो वह्निना रम्भो वचनं चित्तरञ्जनम् ।
श्रुत्वा प्रणम्य प्रययौ वह्निं तं दानवोत्तमः ॥
यक्षैः परिवृतं स्थानं रमनीयं श्रियान्वितम् ।
दृष्ट्वा चक्रे तदा भावं महिष्यां दानवोत्तमः ॥
मत्तायां रूपपूर्णायां त्रिहायन्यां च योषितम् ।
सा समागाच्च तरसा कामयन्ती मुदान्विता ॥
रम्भोऽपि गमनं चक्रे भवितव्यप्रणोदितः ।
सा तु गभवती जाता महिषी तस्य वीर्य्यतः ॥
तां गृहीत्वाथ पातालं प्रविवेश मनोहरम् ।
महिषेभ्यश्च तां रक्षन् प्रियामनुमतां किल ॥
कदाचित् महिषश्चान्यः कामार्त्तस्तामुपाद्रवत्।
स्वयमागत्य तं हन्तुं दानवः समुपाद्रवत् ॥
स्वरक्षार्थं समागम्य महिषं समताडयत् ।
सोऽपि तं निजघानाशु शृङ्गाभ्यां काममोहितः ॥
ताडितस्तेन तीक्ष्णाभ्यां शृङ्गाभ्यां हृदये भृशम् ।
भूमौ पपात तरसा ममार च विमूर्च्छितः ॥
मृते भर्त्तरि सा दीना भयार्त्ता विद्रुता भृशम् ।
सा वेगात्तं वटं प्राप्य यक्षाणां शरणं गता ॥
पृष्ठतस्तु गतस्तत्र महिषः कामपीडितः ।

“रम्भातृतीयां वक्ष्ये च सौभाग्यश्रीसुतादिदाम्।
मार्गशीर्षे सिते पक्षे तृतीयायामुपोषितः ॥
गौरीं यजेद्बिल्वपत्रैः कुशोदादः करम्भदः ।
कदम्बादो गिरिसुतां पौषे मरुवकैर्य्यजेत् ॥
कर्पूरादः कृशरदो मल्लिकादन्तकाष्ठकृत् ।
माघे सुभद्रां कह्लारैर्घृताशो मण्डकप्रदः ॥
गीतीमयं दन्तकाष्ठं फाल्गुने गोमतीं यजेत् ।
कुन्दैः कृत्वा दन्तकाष्ठं जीवाशः सस्कुलीप्रदः ॥
विशालाक्षीं दमनकैश्चैत्रे काशारसंप्रदः ।
दधिप्राशो दन्तकाष्ठं तगरं श्रीमुखीं यजेत् ॥
वैशाखे कर्णिकारैश्च अशोकाशो वटप्रदः ।
ज्यैष्ठे नारायणीमर्च्चेच्छतपत्रैश्च खण्डदः ॥
नवङ्गाशश्च तज्जाद आषाढे माधवीं यजेत् ।
तिलाशो विल्वपत्रैश्च क्षीरान्नवटकप्रदः ॥
औडुम्बरं दन्तकाष्ठं तगर्य्याः श्रावणे श्रियम् ।
दन्तकाष्ठं स्वर्णकाशः क्षीरदो ह्युत्तमां यजेत् ॥
पद्मैर्यजेत् भाद्रपदे शृङ्गोदाशो गुणादिदः ।
राजपुत्त्रीञ्चाश्वयुजे जवापुष्पैश्च जीवकम् ॥
प्राशयेन्निशि नैवेद्यैः कृशरैः कार्त्तिके यजेत् ।
जातिपुष्पैः पद्मजाञ्च पञ्चगव्याशनो यजेत् ॥
घृतोदनञ्च वर्षान्ते सपत्नीकान् द्विजान् यजेत् ।
उमामहेश्वरं स्वार्णं लवणे तु गुडे स्थितम् ॥
वस्त्रच्छत्रसुवर्णाद्यै रात्रौ च कृतजागरः ।
गीतवाद्यैर्द्देत् प्रातर्गवाद्यं सर्व्वमाप्नुयात् ॥”
इति गारुडे १२० अध्यायः ॥ * ॥
अपि च । “अथ तृतीया । सा चतुर्थीयुता

इति वराहपुराणे रुद्रगीतानामाध्यायः ॥
(तथाच देवीभागवते । ८ । ९ । १८ -- २३ ।
“रम्यके नाम वर्षे च मूर्त्तिं भगवतः पराम् ।
मात्स्यां देवासुरैर्व्वन्द्यां मनुः स्तौति निरन्तरम् ॥
मनुरुवाच ।
ॐ नमो मुख्यतमाय नमः सत्त्वाय प्राणायौजसे बलाय महामत्स्याय नमः ।
अन्तर्व्वहिश्चाखिललोकपालकै-
रदृष्टरूपो विचरस्युरुस्वनः ।
स ईश्वरस्त्वं स इदं वशे नय-
न्नाम्ना यथा दारुमयीं नरः स्त्रियम् ॥
यं लोकपालाः किल मत्सरज्वरा
हित्वा यतन्तोऽपि पृथक् समेत्य च ।
पातुं न शेकुर्द्विपदश्चतुष्पदः
सरीसृपं स्थाणु यदत्र दृश्यते ॥
भवान् युगान्तार्णव ऊर्म्मिमालिनि
क्षौणीमिमामोषधिवीरुधांनिधिम् ।
मया सहोरुक्रमतेऽज ओजसा
तस्मे जगत्प्राणगणात्मने नमः ॥
एवं स्तौति च देवेशं मनुः पार्थिवसत्तमः ।
मत्स्यावतारं देवेशं संशयच्छेदकारणम् ॥

| | | |
|---|---|---|
| कामयानस्तु तां कामी बलवीर्य्यमदोद्धतः ॥<br>रुदती सा भृशं दीना दृष्टा यक्षैर्भयातुरा ।<br>धावमानञ्च तं वीक्ष्य यक्षास्त्रातुं समाययुः ॥<br>युद्धं समभवद्घोरं यक्षाणां च हयारिणा ।<br>शरेण ताडितस्तूर्णं पपात धरणीतले ॥<br>मृतं रम्भं समानीय यक्षास्ते परमं प्रियम् ।<br>चितायां रोपयामासुस्तस्य देहस्य शुद्धये ॥<br>महिषी सा पतिं दृष्ट्वा चितायां रोपितं तदा ।<br>प्रवेष्टुं सा मतिं चक्रे पतिना सह पावकम् ॥ | रम्भाव्रतेतरदैवकर्म्मसु ग्राह्या । | |

ध्यानयोगेन देवस्य निर्धूताशेषकल्मषः ।
आस्ते परिचरन् भक्त्या महाभागवतोत्तमः ॥”
तथाच मात्स्ये । ११२ । ३० ॥ वैष्णवे । २ ।
२ । १३ ॥
ब्रह्माण्डे च । ९ । १ । ७ ॥ द्रष्टव्यम् ॥)
पटोल-
मूलम् । इति त्रिकाण्डशेषः ॥ (यथा, सुश्रुते ।
१ । २९ अध्याये ।
“कम्पिल्लकरम्यकपाटलापूगहरीतकीत्यादयः
॥”
पुं, आग्निध्रपुत्त्रभेदः । एतन्नामानुसारेणैव
रम्यक-
वर्षोऽभवत् । यथा, भागवते । ५ । २ । १९ ।
“तस्यामुह वा आत्मजान् स राजवर्य्य आग्नीध्रो
नाभिकिंपुरुषहरिवर्षेलावृतरम्यकहिरण्मय-
कुरुभद्राश्वकेतुमालसंज्ञान् नवपुत्त्रानजनयत्
॥”)

**रम्यपुष्पः**, पुं, (रम्यं दर्शनीयं पुष्पमस्य ।)
शाल्मलिवृक्षः । इति राजनिर्घण्टः ॥
(शाल्मलि-
शब्देऽस्य गुणादयो ज्ञेयाः ॥)

**रम्यफलः**, पुं, (रम्यं फलमस्य ।) कारस्करवृक्षः ।
इति राजनिर्घण्टः ॥

**रम्या**, स्त्री, (रमतेऽस्यामिति । रम + “पोर-
दुपधात् यत् ।” ३ । १ । ९८ । इति यत् ।
टाप् च ।) रात्रिः । इति मेदिनी ॥ स्थल-
पद्मिनी । इति राजनिर्घण्टः ॥ (गङ्गा ।
यथा, काशीखण्डे तत्सहस्रनामकीर्त्तने । २९
।
१४५ ।
“रेवती रतिकृद्रम्या रत्नगर्भा रमा रतिः ॥”)

**रम्रः**, पुं, (रम् + शकादित्वात् रः ।) अरुणवर्णः ।
शोभा । इत्युणादिकोषः । २ । २३८ ॥

**रय**, ङ गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-
सक०-सेट् ।) ङ, रयते । इति दुर्गादासः ॥

**रयः**, पुं, (रयते अनेनेति । रय + “पुंसि संज्ञायां

**रवः**, पुं, (रूयते इति । रु ध्वनौ + भावे अप् ।)
शब्दः । इत्यमरः ॥ (यथा, रघुः । ९ । ५४ ।
धनुरधिज्यमनाधिरुपाददे
नरवरो रवरोषितकेशरी ॥”)

**रवणं**, क्ली, (रौतीति । रु + युच् ।) कांस्यम् ।
इति हेमचन्द्रः ॥ (रु + भावे ल्युट् ।) रवश्च ॥

**रवणः**, पुं, (रौतीति । रु + “सुयुरुवृञो युच् ।”
उणा० २ । ७४ । इति युच् ।) उष्ट्रः । इति
हेमचन्द्रः ॥ (यथा, माघे । १२ । ९ ।
“उत्थातुमिच्छन् विधृतः पुरोबला-
न्निधीयमाने भरभाजि यन्त्रके ।
अर्द्धोज्झितोद्गारविझर्झरस्वरः
स्वनाम निन्ये रवणःस्फुटार्थताम् ॥”)
कोकिलः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

**रवणः**, त्रि, (रु + युच् ।) शब्दनः । तीक्ष्णः ।
भण्डकः । चञ्चलः । इति शब्दरत्नावली ॥

**रवथः**, पुं, (रु + “शीङ्शपिरुगमिवञ्चिजीवि-
प्राणिभ्योऽथः ।” उणा० ३ । ११३ । इति
अथप्रत्ययः ।) कोकिलः । इत्युणादिकोषः ॥

**रविः**, पुं, (रूयते स्तूयते इति । रु + “अच इः ।”
उणा० ४ । १३८ । इति इः ।) सूर्य्यः । अर्क-
वृक्षः । इत्यमरः ॥ सूर्य्यस्य भोग्यं दिनं वार-
रूपम् ॥ यथा, --
“रवौ वर्ज्यं चतुः पञ्च सोमे सप्त द्वयं तथा ॥”
इत्यादिवारवेलाकथने समयप्रदीपः ॥
तत्र निषिद्धानि यथा, --
“माषमामिषमांसञ्च मसूरं निम्बपत्रकम् ।
भक्षयेद्यो रवेव्वरि सप्तजन्मन्यपुत्त्रकः ॥
आर्द्रकं मधु मत्स्यञ्च भक्षयेद्यो रवेर्दिने ।
सप्तजन्म भवेद्रोगी जन्म जन्म दरिद्रता ॥
निम्बं मांसं मसूरञ्च विल्वकाञ्जिकमार्द्रकम् ।
भक्षयेद्यो रवेव्वरि सप्तजन्मन्यपुत्त्रकः ॥”
इति कर्म्मलोचनम् ॥ * ॥
रविग्रहस्य रक्तश्याममिश्रितवर्णः । अयं
पूर्ब्बदिक्पुरुषक्षत्त्रियजातिसत्त्वगुणकटुरससिंह-
राशिहस्तानक्षत्रसप्तमीतिथिताम्रकलिङ्गदेशा-

मायामयीं ततश्छायां सवर्णां
निर्म्ममे स्वतः ॥
संज्ञोवाच ततश्छायां सवर्णे शृणु
मे वचः ।
अहं यास्यामि सदनं पितुस्त्वं
पुनरत्र मे ।
भवने वस कल्याणि !
निर्व्विशङ्कं ममाज्ञया ॥
मनुरेष यमावेतौ
यमुनायमसंज्ञकौ ।
स्वापत्यदृष्ट्या
द्रष्टव्यमेतद्बालत्रयं त्वया ॥
न वक्तव्यमिदं वृत्तं त्वया पत्यौ
कदाचन ।
इत्याकर्ण्याथ सा त्वाष्ट्रीं देवी
छाया जगाद
ताम् ॥
आकचग्रहणान्नाहमाशापाच्चं
कदाचन ।
आख्यास्यामि चरित्रं ते
याहिदेवि ! यथासुखम् ॥
इति च्छायां गृहे स्थाप्य
संज्ञागात् पितुरालयम् ।
उवाच पितरं देवी जामातुस्तव
न क्षमा ॥
तेजः सोढुमहं तात !
काश्यपस्य महात्मनः ।
तन्निशम्य चुकोपासौ
भर्त्सयामास कन्यकाम् ॥
मह्यं श्रेयः कथं वा स्यादिति सा
परिचिन्त्य च ।
अगच्छद्वडवा भूत्वा चरन्ती
चोत्तरान् कुरून् ॥
तपस्तेपे च सा तीव्रं पतिमाधाय
चेतसि ।
मन्यमानोऽथ तां संज्ञां
सवर्णायां तथा रविः ॥
सावर्णिं जनयामास मनुश्रेष्ठं
महीपते ।

घः प्रायेण ।” ३ । ३ । ११८ । इति घः ।
रीणा-
त्यनेनेति वा । री गतौ + घप्रत्ययेन साधुरिति
।)
वेगः । इत्यमरः । १ । १ । ६७ ॥ प्रवाहः ।
यथा, --
“प्रवाहः पुनरोघः स्याद्वेणी धारा रयश्च सः
॥”
इति हेमचन्द्रः ॥
(यथा, महाभारते । २ । १७ । ६ ।
“कथमन्तं न गच्छेम वृक्षस्येव नदीरयाः ॥”
पुरुरवसः पुत्त्रभेदः । यथा, भागवते । ९ ।
१५ । १ ।
“ऐलस्य चोर्व्वशीगर्भात् षडासन्नात्मजा नृप ।
आयुः श्रुतायुः सत्यायू रयोऽथ विजयो जयः
॥”)

**रराटी**, स्त्री, (ललाट + रलयोरैक्यात् लस्य रत्वम् ।

ततो ङीप् ।) ललाटः । इति पुराणम् ॥ (यथा,
भागवते । २ । १ । २८ ।
“तपो रराटीं विदुरादिपुंसः
सत्यन्तु शीर्षाणि सहस्रशीर्ष्णः ॥”)

**रल्लकः**, पुं, (“रमणं रत् क्विप्यनुनासिकलोपे

रत् इच्छा तां लाति कः रल्लस्ततः स्वार्थे
कन् ।” इत्यमरटीकाकृत् रघुनाथचक्रवर्त्ती ।)
कम्बलः । इत्यमरः ॥ पक्ष्म । इति सुभूतिः ॥
मृगविशेषः । इति मुकुटः ॥

**रव**, इ व्रजे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

सक०-सेट् ।) इ, रण्व्यते । इति दुर्गा-
दासः ॥

नामधिपतिः । काश्यपगोत्रः । द्वादशाङ्गुल-
शरीरः । पद्महस्तद्वयः । पूर्ब्बाननः । सप्ताश्व-
वाहनः । शिवाधिदैवतः । रह्निप्रत्यधिदैवतश्च ।
इति ग्रहयज्ञतत्त्वादयः ॥ * ॥ अस्य
व्युत्पत्तिर्यथा,
“अवतीमांस्त्रयो लोकांस्तस्मात् सूर्य्यः परि-
भ्रमात् ।
अचिरात्तु प्रकाशेत अवनात् स रविः स्मृतः ॥”
इति मात्स्ये १०१ अध्यायः ॥ * ॥
अस्य भार्य्यापत्यानि यथा, --
“मरीचेः कश्यपो जज्ञे तस्माज्जज्ञे विभावसुः ।
तस्य भार्य्याभवत् संज्ञा पुत्त्री त्वष्टुः प्रजापतेः ॥
त्रीण्यपत्यानि राजेन्द्र ! संज्ञायां महसां
निधिः ।
आदित्यो जनयामास कन्याञ्चैकां सुलोचनाम् ।
वैवस्वतं मनुश्रेष्ठं यमञ्च यमुनां ततः ॥
नातितेजोमयं रूपं सोढुं सालं विवस्वतः ।

शनैश्चरं द्वितीयञ्च सुतां भद्रं
तृयीयिकाम् ॥
सवर्णा स्वेष्वपत्येषु सापत्न्यात्
स्त्रीस्वभावतः ।
चकाराप्यधिकं स्नेहं न तथा
पूर्व्वजेष्वहो ॥
चिरमालोक्य तां भार्य्यां उवाच
सविता वचः ।
अयि भाविनि बालेषु समेष्वपि
कुतस्त्वया ॥
विधीयतेऽधिकः स्नेहः
सावर्ण्यादिसुतान् प्रति ।
नाचचक्षे तदा साथ भास्वते
परिपृच्छते ॥
ततः समुद्यते शप्तुं छाया सर्व्वं
शशंस ह ।
यथा वृत्तं तथा तथ्यं तुतोष
भगवान् रविः ॥
निरागसं न शशाप जगाम
त्वष्टुरन्तिकम् ।
त्वष्टापि च यथान्यायं
सान्त्वयित्वाथ काश्यपम् ।
निर्द्दग्धुकामं कोपेन प्राणर्च्चच्च
मुदा तदा ॥
त्वष्टोवाच ।
तवातितेजसो भीता
प्राप्योत्तरकुरून् वने ।
बडवारूपमास्थाय संज्ञा चरति
शाद्वले ।
द्रष्टा हि तां भवानद्य स्वभार्य्यां
तात मा रुष ॥
लब्धानुज्ञोऽथ सविता
गत्वोत्तरकुरूनथ ।
स हरिर्हरिरूपेण मुखेन
समताडयत् ॥
त्वरमाणा च सवितुः
परपूरुषशङ्कया ।
सा तन्निरवमत् शक्र
नासिकाभ्यां विवस्वतः ।
देवौ तस्मादजायेतामश्विनौ
भिषजां वरौ ॥”

इति पाद्मे स्वर्गखण्डे ११

अध्यायः ॥

(अन्यत् सूर्य्यशब्दे द्रष्टव्यम् ॥)

**रविकान्तः**, पुं, (रविणा रविकरसंयोगेन कान्तः

कमनीयः ।) सूर्य्यकान्तमणिः ।

इति राज-

निर्घण्टः ॥

**रविचक्रं**, क्ली, (रवेश्चक्रम् ।) नराकारसूर्य्यचक्र-

विशेषः । यथा, --

“लिख्यते रविचक्रन्तु भास्करो

नरसन्निभः ॥

यस्मिन्नृक्षे भवेत् सूर्य्यस्तत्रादौ

त्रीणि मस्तके ।

त्रयं वक्त्रे प्रदातव्यमेकैकं

स्कन्धयोर्न्यसेत् ॥

एकैकं बाहुयुग्मे तु एकैकं

हस्तयोर्द्वयोः ।

हृदये पञ्च ऋक्षाणि एकं नाभौ प्रदापयेत् ॥
ऋक्षमेकं ददेद्गुह्ये एकैकं जानुके न्यसेत् ।
नक्षत्राणि च शेषाणि रविपादे नियोजयेत् ॥
चरणस्थेन ऋक्षेण अल्पायुर्जायते नरः ।
विदेशगमनं जानौ गुह्यस्थे परदारवान् ॥
नाभिस्थेनाल्पसन्तुष्टो हृत्स्थेन स्यान्महेश्वरः
।
पाणिस्थेन भवेच्चौरः स्थानभ्रष्टो भवेद्भुजे ॥
स्कन्धस्थिते धनपतिर्म्मुखे मिष्टान्नमाप्नुयात्
।
मस्तके पट्टबन्धस्तु नक्षत्रं स्याद्यदि स्थितम्
॥"
इति गारुडे ६० अध्यायः ॥

**रविजः**, पुं, (रवेर्जात इति । जन् + डः ।)
शनैश्चरः । यथा, ज्योतिषतत्त्वे ।
"उरगशतभिषार्द्रास्वातिमूलात्रिपूर्ब्बा
रविरविजकुजाहे भूतषष्ठीबवम्याम् ॥"
(बहुवचने तु केतवः । यथा, बृहत्संहितायाम् ।
११ । १० ।
"प्रागपरदिशोर्दृश्या
नृपतिविरोधावहा रविजाः ॥")

**रवितनयः**, पुं, (रवेः तनयः पुत्त्रः ।) सावर्णिक-
मनुः । यथा, --
"स बंभूव महाभागः सावर्णिस्तनयो रवेः ॥"
इति देवीमाहात्म्यम् ॥
वैवस्वतमनुः । शनिः । (यथा, बृहत्संहिता-
याम् । ३४ । १२ ।
"परिवेशमण्डलगतो
रवितनयो क्षुद्रधान्यनाशकरः ।")
यमः । (सुग्रीवः । कर्णः ॥ द्विवचने अश्विनी-
कुमारौ ॥)

**रविनन्दनः**, पुं, (रवेर्नन्दनः । यद्वा, रविं नन्दय-
तीति । नन्दि + ल्युः ।) सुग्रीवः । इति
त्रिकाण्ड-
शेषः ॥ सावर्णिमनुः । वैवस्वतमनुः । (यथा,
भागवते । ९ । १ । १९ ।

**रविलोचनः**, पुं, (रविर्लोचनमस्य ।) विष्णुः ।
यथा, --
"रविर्व्विरोचनः सूर्य्यः सविता
रविलोचनः ॥"
इति तस्य सहस्रनामस्तोत्रम् ॥

**रविसंज्ञकं**, क्ली, (रविः संज्ञा यस्य इति । कप् ।)
ताम्रम् । इति शब्दचन्द्रिका ॥

**रविसूनुः**, पुं, (रवेः सूनुः ।) सूर्य्यपुत्त्रः । स च
शनैश्चरादिः । यथा, --
"नीलाञ्जनचयप्रख्यं रविसूनुं महाग्रहम् ।
छायाया गर्भसंभूतं वन्दे भक्त्या
शनैश्चरम् ॥"
इति नवग्रहस्तोत्रम् ॥

**रवीन्दं**, क्ली, (रविणा सूर्य्यकरस्पर्शेन इन्दति
प्रकाशते इति । इन्द + अच् ।) पद्मम् ।
इति
धरणिः ॥

**रश**, स्वने । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
अक०-सेट् ।) रेफादिस्तालव्यान्तः ।
रशना ।
इति दुर्गादासः ॥ सौत्रधातुरयम् ॥

**रशना**, स्त्री, (अश्नुते व्याप्नोतीति । अशू व्याप्तौ
+
"अशे रश च ।" उणा० २ । ७५ । इति
युच्
धातो रशादेशश्च ।) काञ्ची ।
इत्युणादिकोषः ॥
(यथा, रघौ । ८ । ५८ ।
"इयमप्रतिबोधशायिनीं
रशना त्वां प्रथमा रहःसखी ॥")
जिह्वा । इति शब्दरत्नावली ॥
("जिह्वावाची
तु रसनाशब्दो दन्त्यसकारवान्वे ।
रसयति
स्वादयतीति । नन्द्यादित्वात् ल्युः ।
इति कलिङ्गः ।

अपि च ।
"एवमेष महादेवो देवदेवः पितामहः ।
करोति नियतं कालं कालात्मा ह्यैश्वरी
तनुः ॥
तस्य ये रश्मयो विप्राः
सर्व्वलोकप्रदीपकाः ।
तेषां श्रेष्ठा पुनः सप्त रश्मयो ग्रहयोनयः ॥
सुसुम्नो हरिकेशश्च विश्वकर्म्मा तथैव च ।
विश्वव्यचाः पुनश्चान्यः सम्पद्वसुरतः
परः ॥
अर्व्वाग्वसुरिति ख्यातः स्वराडन्यः
प्रकीर्त्तितः ॥
सुसुम्नः सूर्य्यरश्मिस्तुं पुष्णाति
शिशिरद्युतिम् ।
तिर्य्यगूर्द्ध्वप्रचारोऽसौ सुसुम्नः
परिगीयते ॥
हरिकेशस्तु यः प्रोक्तो रश्मिर्नक्षत्रपोषकः ।
विश्वकर्म्मा तथा रश्मिर्बुधं पुष्णाति
सर्व्वदा ॥
विश्वव्यचास्तु यो रश्मिः शुक्रं पुष्णाति
नित्यदा ।
सम्पद्वसुरिति ख्यातः स पुष्णाति च
लोहितम् ॥
बृहस्पतिं प्रपुष्णाति रश्मिरर्व्वाग्वसुः
प्रभोः ।
शनैश्चरं प्रपुष्णाति सप्तमश्च स्वराट् तथा
॥
एवं सूर्य्यप्रभावेन सर्व्वा नक्षत्रतारकाः ।
वर्द्धन्ते वर्द्धिता नित्यं नित्यमाप्याययन्ति
च ॥
दिव्यानां पार्थिवानाञ्च नैशानाञ्चैव सर्व्वशः
।
आदानान्नित्यमादित्यस्तेजसा तमसां
प्रभुः ।
आदत्ते स तु नाडीनां सहस्रेण समन्ततः
॥
नादेयांश्चैव सामुद्रान् कूपांश्चैव
सहस्रकम् ।

"होतुर्व्व्यतिक्रमं ज्ञात्वा बभाषे रविनन्दनम् ॥")
शनिः । यमश्च ॥ (द्विवचने अश्विनीकुमारौ ॥)

**रविनाथं**, क्ली, (रविरेव नाथोऽस्य ।) पद्मम् ।

बन्धूके, पुं । इति शब्दचन्द्रिका ॥

**रविपत्रः**, पुं, (रविवत् दीप्तिमत्पत्रं यस्य ।)

आदित्यपत्रक्षुपः । इति राजनिर्घण्टः ॥

**रविप्रियं**, क्ली, (रविरेव प्रियमस्य ।) रक्त-

कमलम् । ताम्रम् । इति राजनिर्घण्टः ॥
(अस्य पर्य्यायो यथा, --
"ताम्रमौडुम्बरं शुल्वमुदुम्बरमपि स्मृतम् ।
रविप्रियं म्लेच्छमुखं सूर्य्यपर्य्यायनामकम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रममे भागे ॥)

**रविप्रियः**, पुं, (रयेः प्रियः ।) आदित्यपत्रः ।

रक्तकरवीरः । इति राजनिर्घण्टः ॥ लकुचः । इति शब्दमाला ॥

**रविरत्नकं**, क्ली, (रवे रत्नम् । ततः कन् ।) माणि-

क्यम् । इति राजनिर्घण्टः ॥

**रविलोहं**, क्ली, (रविप्रियं लोहम् ।) ताम्रम् ।

इति राजनिर्घण्टः ॥ (गुणादयोऽस्य ताम्रशब्दे विज्ञेयाः ॥)

रसना काञ्चिजिह्वयोरिति तु धरणिः ।" इत्यु-
ज्ज्वलः । २ । ७५ ॥ रज्जुः । यथा, वाजसनेय-
संहितायाम् । २१ । ४६ ।
"होता यक्षद्वनस्पतिमभि हि पिष्टतमया रभि-
ष्ठया रशनयाधित ।" "रशनया रज्ज्वा कृत्वा
अधित धृतवान् पशून् इति शेषः ।" इति तद्भाष्ये
महीधरः ॥ अङ्गुलयः । इति निघण्टुः । २ । ५ ॥
अत्र सदा बहुवचनप्रयोगो भवति । इति देव-
राजयज्वा ॥)

**रश्मिः**, पुं, (अश्नुते व्याप्नोतीति । अशू व्याप्तौ +

"अश्नोते रश्च ।" उणा० ४ । ४६ । इति मिः
धातो रशादेशश्च ।) किरणः । (यथा, मनौ ।
५ । १३३ ।
"मक्षिका विप्रुषश्छाया गौरश्वः सूर्य्यरश्मयः ।
रजो भूर्व्वायुरग्निश्च स्पर्शे मेध्यानि निर्द्दिशेत् ॥")
पक्ष्म । अश्वरज्जुः । इति मेदिनी ॥ * ॥ (यथा,
ऋग्वेदे । १ । २८ । ४ ।
"यत्र मन्थां विबध्नते रश्मीन् यमित वा इव ॥"
"रश्मीन् अश्वबन्धनार्थान् प्रग्रहान् ।" इति
तद्भाष्ये सायणः ॥) सूर्य्यस्य रश्मिना जलादान-
दाने यथा, --
"तेजोभिः सर्व्वलोकेभ्यो ह्यादत्ते रश्मिभिर्ज्जलम् ।
समुद्राद्वायुसंयोगाद्वहन्त्यापो गभस्तयः ॥
स्थावरान् जङ्गमांश्चैव यच्च कुल्यादिकं पयः ॥
तस्य रश्मिसहस्रन्तु शीतवर्षोष्णनिस्रवम् ।
तासां चतुःशतं नाड्यो वर्षन्ते चित्रमूर्त्तयः ॥
छन्दनाश्चैत याह्याश्च कोतणा भृकणास्तथा ।
अमृता नामतः सर्व्वा रश्मयो वृष्टिसर्ज्जनाः ॥
हिमोद्वहाश्च तामस्यो रश्मयस्त्रिशतं पुनः ।
वश्यो मेष्यश्च पैष्यश्च ह्रादिन्यो हिमसर्ज्जनाः ।
चन्द्रास्ता नामतः सर्व्वाः पीताभाः स्युर्गभस्तयः ।
शुक्राश्च ककुभश्चैव गावो विश्वभृतस्तथा ।
शुक्रास्ता नामतः सर्व्वास्त्रिविधा धर्म्मसर्ज्जनाः ॥
समं विभर्त्ति ताभिः स मनुष्यपितृद्देवताः ।
मनुष्यानौषधेनेह स्वधया च पितृनपि ॥
अमृतेन सुरान् सर्व्वान्तिसस्त्रींस्तर्पयत्यसौ ।
वसन्ते ग्रीष्मके चैव शतैः सन्तर्पति त्रिभिः ॥
शरद्यपि च वर्षासु चतुर्भिः संप्रवर्षति ।
हेमन्ते शिशिरे चैव हिममुत्सृजति त्रिभिः ॥
वरुणो माघमासे तु सूर्य्यः पूषा तु फाल्गुने ।
चैत्रे मासि भवेदीशो धाता वैशाखतापनः ॥
ज्यैष्ठमूले भवेदिन्द्र आपाढे सविता रविः ।
विवस्वान् श्रावणे मासि प्रौष्ठपद्यां भगः स्मृतः ॥
पर्य्यण्योऽश्वयुजि त्वष्टा कार्त्तिके मासि भास्करः ।

| | | |
|---|---|---|
| | ततस्तु पयसां काले परिवर्त्तन्दिवाकरः ।<br>नियच्छत्यपो मेघेभ्यः शुक्लाशुक्लैस्तु रश्मिभिः ॥”<br>इति मात्स्ये १०२ अध्यायः ॥ * ॥ | मार्गशीर्षे भवेन्मित्रः पौषे विष्णुः सनातनः ॥<br>पञ्च रश्मिसहस्राणि वरुणस्यार्क्ककर्म्मणि ।<br>षड्भिः सहस्रैः पूषा तु देवेशः सप्तभिस्तथा ॥<br>धाताष्टभिः सहस्रैस्तु नवभिस्तु शतक्रतुः ।<br>विवस्वान् दशभिः पाति पात्येकादशभिर्भगः ॥<br>सप्तभिस्तपते मित्रस्त्वष्टा चैवाष्टभिस्तपेत् ।<br>अर्य्यमा दशभिः पाति पर्य्यण्यो नवभिस्तपेत् ॥<br>षड्भी रश्मिसहस्रैस्तु विष्णुस्तपति विश्वधृक् ।<br>वसन्ते कपिलः सूर्य्यो ग्रीष्मे काञ्चनसप्नभः ॥ |

श्वतो वर्षासु वर्णेन पाण्डरः शरदि प्रभुः ।
हेमन्ते ताम्रवर्णः स्यात् शिशिरे लोहितो रविः ॥
औषधीषु बलं धत्ते स्वधामपि पितृष्वथ ।
सूर्य्योऽमरत्वममृतत्रयं त्रिषु नियच्छति ॥
अन्ये चाष्टौ ग्रहाः ज्ञेयाः सूर्य्ये चाधिष्ठिता द्विजाः ।
चन्द्रमाः सोमपुत्त्रश्च शुक्रश्चैव बृहस्पतिः ॥
भौमो भानुस्तथा राहुः केतुमानपि चाष्टमः ।
सर्व्वे ध्रुवे निरुद्धा ये ग्रहास्ते वातरश्मिभिः ।
भ्राम्यमाणा यथायोगं भ्रमन्त्यनुदिवाकरम् ॥”
इति कौर्म्म्ये ४० अध्यायः ॥
तद्वैदिकपर्य्यायः । खेदयाः १ किरणाः २ गावः ३
रश्मयः ४ अभीशवः ५ दीधितयः ६ गभ-स्तयः ७ वनम् ८ उस्राः ९ वसवः १० मरी-चिपाः ११ मयूखाः १२ सप्तऋषयः १३
साध्याः १४ सुपर्णाः १५ । इति पञ्चदश रश्मि-नामानि । इति वेदनिघण्टौ । १५ ॥

**रश्मिपतिः**, पुं, (रश्मिः पतिः पोषको यस्य ।) आदित्यपत्रक्षुपः । इति राजनिर्घण्टः ॥

**रस**, शब्दे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट् ।) रसति । इति दुर्गादासः ॥

**रस**, त् क आस्वादे । स्नेहे । इति कविकल्पद्रुमः ॥ (अदन्तचुरा०-पर०-सक०-सेट् ।) दन्त्योपधः ।
रसयति मधु द्विरेफः । इति दुर्गादासः ॥

**रसं**, क्ली, बोलम् । इति राजनिर्घण्टः ॥

**रसः**, पुं, (रसतीति । रस् + पचाद्यच् । यद्वा, रस्यते इति । रस आस्वादने + “पुंसि संज्ञायां घः प्रायेण ।” ३ । ३ । ११८ । इति घः ।) रसनेन्द्रियग्राह्य-वस्तु । स च कालसहायभूमिवियदनिलानलसंस-र्गेण परिणामान्तरं गतः षट्प्रकारो भवति ।
“भेदश्चैषां त्रिषष्टिविधिविकल्पो द्रव्यदेशकाल-प्रभावात्तदुपदेक्ष्यामः ।
स्वादुरम्लादिभिर्योगं शेषैरम्लादयः पृथक् ।
यानि पञ्चदशैतानि द्रव्याणि द्विरसानि तु ॥
पृथगम्लादियुक्तस्य योगः शेषैः पृथग्भवेत् ।
मधुरस्य तथाम्लस्य लवणस्य कटोस्तथा ॥
त्रिरसानि यथासङ्ख्यं द्रव्याण्युक्तानि विंशति ।
वक्ष्यन्ते तु चतुष्केण द्रव्याणि दश पञ्च च ॥
स्वाद्वम्लौ सहितौ योगं लवणाद्यैः पृथग् गतौ
योगैः शेषं पृथग्यातश्चतुष्कं रससङ्ख्यया ॥
सहितौ स्वादुलवणौ तद्वत् कट्वादिभिः पृथक् ।
युक्तौ शेषैः पृथग् योगं यातः स्वादूषणौ तथा ॥
कट्वाद्यैरम्ललवणौ संयुक्तौ सहितौ पृथक् ।
यातः शेषैः पृथग्योगं शेषैरम्लकटू तथा ॥
युज्येते तु कषायेण सतिक्तौ लवणोषणौ ।
षट् तु पञ्च रसान्याहुरेकैकस्यापवर्ज्जनात् ॥
षट् चैवैकरसानि स्युरेकं षड्रसमेव तु ।
इति त्रिषष्टिर्द्रव्याणां निर्द्दिष्टा रससङ्ख्यया ॥
त्रिषष्टिः स्यात्त्वसङ्ख्येया रसानुरसकल्पनात् ।
रसास्तरतमाभ्यस्ताः सङ्ख्यामतिपतन्ति हि ॥
संयोगाः सप्तपञ्चाशत् कल्पना तु त्रिषष्टिधा ।
रसानां तत्र योग्यत्वात् कल्पिता रसचिन्तकैः ॥
कटुकः । अम्लतिक्तः । अम्लकषायः । एते चत्वारोऽनुक्रान्ता अम्लेन ॥ लवणकटुकः ।
लवणतिक्तः । लवणकषायः । एते त्रयोऽनु-क्रान्ता लवणेन ॥ कटुतिक्तः । कटुकषायः ।
द्वावेतावनुक्रान्तौ कटुकेन ॥ तिक्तकषाय एक एवानुक्रान्तस्तिक्तेन । एते पञ्चदशद्विकसंयोगा व्याख्यातास्त्रिकं वक्ष्यामः ॥
आदौ प्रयुज्यमानस्तु मधुरो दश गच्छति ।
षडम्लो लवणस्तस्मादर्द्धन्त्वेकं रसः कटुः ॥
मधुराम्ललवणः । मधुराम्लकटुकः । मधुराम्ल-तिक्तः । मधुराम्लकषायः । मधुरलवणकटुकः ।
मधुरलवणतिक्तः । मधुरलवणकषायः । मधुर-कटुकतिक्तः । मधुरकटुकषायः । मधुरतिक्त-कषायः । एवमेषां त्रिकसंयोगानां दशानामादौ मधुरः प्रयुज्यते । अम्ललवणकटुकः । अम्ल-लवणतिक्तः । अम्ललवणकषायः । अम्लकटु-कषायः । अम्लकटुकतिक्तः । अम्लतिक्तकषायः ।
एवमेषां षण्णामादावम्लः प्रयुज्यते । लवणकटु-तिक्तः । लवणकटुकषायः । लवणतिक्तकषायः ।
एवमेषां त्रयाणामादौ लवणः प्रयुज्यते ॥ कटु-

तत्र पृथिव्यम्बुगुणबाहुल्यान्मधुरः १
तोयाग्नि-
गुणबाहुल्यादम्लः २ पृथिव्यग्निगुण बाहुल्या-
ल्लवणः ३ वाय्वग्निगुणबाहुल्यात् कटुकः ४
वाय्वाकाशगुणबाहुल्यात् तिक्तः ५
पृथिव्यनिल-
गुणबाहुल्यात् कषायः ६ । आपो रसाना-
माधारकारणं अत आप्यो नाम । अपां
पृथिव्यामनुप्रवेशात्
पृथिव्याप्याधारकारणम्म्च ।
तेन जलक्षिती अपि तदाधारतया रसाना-
मभिव्यक्तौ कारणे । अभिव्यक्तेश्च
मधुरादिरूप-
मन्तरेणासम्भवान्मधुरादिविशेषेऽपि
जलक्षिती
कारणे । अग्न्यादयस्तु त्रयः नीरसतया मधु-
रादिविशेषे प्राधान्येन निमित्तकारणम् ।
तद्व्यतिरेकेणाम्लादिरसाभावात् ।
रसाभिव्यक्तेश्च
अग्न्यादिभूतत्रयसन्निधानं
विनानुपलब्धेरभि-
व्यक्तावपि अग्न्यादीनां कारणत्वम् । तदुक्तं
चरके ।
"रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा
।
निर्व्वृत्तौ च विशेषे च प्रत्ययाः खादयस्त्रयः
॥"
एते च रसाः परस्परसंयोगात् सप्तपञ्चाशद्भ
वन्ति । इति चक्रपाणिदत्तकृतद्रव्यगुणोपरि
शिवदासीयटीका ॥ * ॥ (तथाच ।

क्वचिदेको रसः कल्प्यः संयुक्ताश्च रसाः
क्वचित् ।
दोषौषधादीन् सञ्चिन्त्य भिषजा सिद्धि-
मिच्छता ॥"
परञ्चातः प्रवक्ष्यन्ते रसानां षड्विभक्तयः ।
षट्पञ्चभूतप्रभवाःसङ्ख्याताश्चयथा
रसाः ॥"
"सौम्याः खल्वापोऽन्तरिक्षप्रभवाःप्रकृति
शीता
लघुश्च अव्यक्तरसाश्च
तास्त्वन्तरिक्षाद्भ्रश्य-
मानाभ्रष्टाश्च पञ्च महाभूतगुणसमन्विता
जङ्गमस्थावराणां भूतानां
मूर्त्तीरभिप्रीणयन्ति
यासु मूर्त्तिषु षडभिमूर्च्छन्ति रसाः ।
तेषां षण्णां रसानां सोमगुणातिरेकान्मधुरो
रसः पृथिव्यग्निभूयिष्ठत्वादम्लः
सलिलाग्नि-
भूयिष्ठत्वाल्लवणो वाय्वग्निभूयिष्ठत्वात्
कटुको
वाय्वाकाशातिरेकात्तिक्तः
पवनपृथिव्यतिरेकात्
कषायः । एवमेषां रसानां षट्त्वमुत्पन्नम्
॥"
इति च चरके सूत्रस्थाने २६ आध्यायः ॥
तथाच ।
"दोषाणां पञ्चदशधा प्रसरोऽभिहितस्तु यः
।
त्रिषष्ट्या रसभेदानां तत्प्रयोजनमुच्यते ॥
अविदग्धा विदग्धाश्च भिद्यन्ते ते त्रिषष्टिधा
।
रसभेदत्रिषष्टिस्तु वीक्ष्य वीक्ष्यावचारयेत् ॥
एकैकेनानुगमनं भागशो यदुदीरितम् ।
दोषाणां तत्र मतिमान् त्रिषष्टिन्तु प्रयोजयेत्
॥
यथाक्रमं प्रवृत्तानां द्विकेषु मधुरो रसः ।
पञ्चानुक्रमते योगानम्लश्चतुर एव च ॥
त्रींश्चानुगच्छति रसो लवणः कटुको द्वयम्
।
तिक्तः कषायमन्वेति ते द्विक दश पञ्च च ॥
तद्यथा । मधुराम्लः । मधुरलवणः । मधुर-

तिक्तकषायः । एवमेकस्यादौ कटुकः
प्रयुज्यते ॥
एवमेति त्रिकसंयोगविंशतिर्व्याख्याताः ॥
चतु-
ष्कान् वक्ष्यामः ।
चतुष्करससंयोगान्मधुरो दश गच्छति ।
चतुरोऽम्लस्तु गच्छेच्च लवणस्त्वेकमेव
तु ॥
मधुराम्ललवणकटुकः ।
मधुराम्ललवणतिक्तः ।
मधुराम्ललवणकषायः ।
मधुराम्लकटुकतिक्तः ।
मधुराम्लकटुककषायः ।
मधुरलवणतिक्तकटुकः ।
मधुराम्लतिक्तकषायः ।
मधुरलवणकटुतिक्तः ।
मधुरलवणकटुकषायः ।
मधुरलवणतिक्तकषायः ।
एवमेषां दशानामादौ मधुरः प्रयुज्यते ॥
अम्ललवणकटुकतिक्तः ।
अम्ललवणकटुकषायः ।
अम्ललवणतिक्तकषायः ।
अम्लकटुतिक्तकषायः ।
एवमेषां चतुर्णामम्लः ॥
लवणकटुतिक्तकषायः ।
एवमेकस्यादौ लवणः । एवमेते
चतुष्करससंयोगाः
पञ्चदशकीर्त्तिताः ॥ पञ्चकान् वक्ष्यामः ।
पञ्चकान् पञ्चमधुर एकमम्लस्तु गच्छति
।
मधुराम्ललवणकटुतिक्तः ।
मधुराम्ललवणकटु-
कषायः । मधुराम्ललवणतिक्तकषायः ।
मधु-
राम्लकटुतिक्तकषायः ।
मधुरलवणकटुतिक्त-
कषायः । एवमेषां पञ्चानां
पञ्चकरससंयोगाना-
मादौ मधुरः प्रयुज्यते ॥
अम्ललवणकटुतिक्त-

| | | |
|---|---|---|
| | तिक्तः । मधुरकटुकः । मधुरकषायः । एते पञ्चानुक्रान्ता मधुरेण ॥ अम्ललवणः । अम्ल- | कषायः । एवमेकस्यादावम्लः प्रयुज्यते । एवमेते षट्पञ्चकसंयोगा व्याख्याताः ॥ षट्कमेकं वक्ष्यामः । एकस्तुषट्कसंयोगः मधुराम्ललवण- कटुकतिक्तकषायः । एवमयमेकषट्संयोगः ॥ एकैकश्च षड्रसा भवन्ति । मधुरोऽम्लो लवणः कटुकस्तिक्तः कषाय इति । भवति चात्र । एषा त्रिषष्टिर्व्याख्याता रसानां रसचिन्तकैः । दोषभेदे त्रिषष्टिस्तु प्रयोक्तव्या विचक्षणैः ॥" इत्युत्तरतन्त्रे सुश्रुतेन त्रिषष्टितमेऽध्याय उक्तः ॥ "रसास्तु प्रधानं कस्मादागमादागमो हि शास्त्र- |

मुच्यते शास्त्रे हि रसा अधिकृता यथा रसायत्त
आहार इति तस्मिंश्च प्राणाः । उपदेशा-
च्चोपदिश्यन्ते हि रसाः । यथा मधुराम्ललवणा
वातं शमयन्ति । अनुमानाच्च रसेन ह्यनुमीयते
द्रव्यं यथा मधुरमिति । ऋषिवचनाच्च ऋषि-
वचनं वेदो यथा किञ्चिदिज्यार्थं मधुरमा-
हरेदिति । तस्माद्रसाः प्रधानं रसेषु गुणसंज्ञा ।”
इति च सुश्रुते सूत्रस्थाने ४० अध्याये ॥
यथा च, वाग्भटे १० अध्याये ।
“क्ष्माम्भोऽग्निः क्ष्माम्बुतेजः खवायुग्न्यनिल-
गोऽनिलैः ।
द्वयोल्वणैः क्रमाद्भूतैर्म्मधुरादिरसोद्भवः ॥
तेषां विद्याद्रसं स्वादुं यो वक्त्रमनुलिम्पति ।
आस्वाद्य मानो देहस्य ह्लादनोऽक्षप्रसादनः ॥
प्रियः पिपिलिकादीनां अम्लः क्षालयते सुखम् ।
हर्षणो रोमदन्तानामक्षिभ्रुवनिकोचनः॥
लवणः स्यन्दयत्यास्यं कपोलगलदाहकृत् ।
तिक्तो विशदयत्यास्यं रसनं प्रतिहन्ति च ।
उद्वेजयति जिह्वाग्रं कुर्व्वंश्चिमिचिमां कटुः ॥
स्रावयत्यक्षिनासास्यं कपोलौ दहतीव च ।
कषायो जडयेज्जिह्वां कण्ठस्रोतो विबन्धकृत् ॥
रसानामिति रूपाणि कर्म्माणि मधुरो रसः ।
आजन्मसात्म्यात् कुरुते धातूनां प्रबलं बलम् ॥
बालवृद्धक्षतक्षीणवर्णकेशेन्द्रियौजसम् ।
प्रशस्तो बृंहणः कण्ठ्यः स्तन्यसन्धानकृद्गुरुः
॥
आयुष्यो जीवनः स्निग्धः पित्तानिलविषापहः ।
कुरुतेऽत्युपयोगेन सम्मेदः कफजान् गदान् ॥
स्थौल्वाग्निसादसन्न्यासमेहगण्डार्व्वुदादिकान् ॥
अम्लोऽग्निदीप्तिकृत्स्निग्धो हृद्यः पाचनरोचनः ।
उष्णवीर्य्यो हिमस्पर्शः प्रीणनः क्लेदनो लघुः ॥
करोति कफपित्तास्रं मूढवातानुलोमनम् ।
सोऽत्यभ्यस्त स्तनोः कुर्य्याच्छैथिल्यं तिमिरं
भ्रमम् ॥
कण्डूपाण्डुत्ववीसर्पशोकविस्फोटतृड्ज्वरान्॥
लवणः स्तम्भसंघातबन्धविध्मापनोऽग्निकृत् ।
स्नेहनः स्वेदनस्तीक्ष्णो रोचनश्छेदभेदकृत् ॥
सोऽतियुक्तोऽस्रपवनं खलतिं पलितं बलिम् ।
तृटकुष्ठविषवीसर्पान् जनयेत् क्षपयेद्बलम् ॥

घृतहेमगुडाक्षोडमोचचोचपरूषकम्।
अभीरुवीरापनसराजादनबलात्रयम्॥
मेदे चतस्रः पर्णिन्यो जीवन्ती जीवकर्षभौ ।
मधूकं मधुकं बिम्बी विदारी श्रावणीयुगम् ॥
क्षीरशुक्ला तुगाक्षीरी क्षीरिण्यौ काश्मरी सहे
।
क्षीरेक्षुगोक्षुरक्षौद्रद्राक्षादिर्म्मधुरो गणः ॥
अम्लो
धात्रीफलाम्लीकामातुलुङ्गाम्लवेतसम् ।
दाडिमं रजतं तक्रं चुक्रं पालेवतं दधि ।
आम्रमाम्रातकं भव्यं कपित्थं करमर्द्दकम् ॥
वरं सौवर्चलं कृष्णं विडं सामूद्रमौद्भिदम् ॥
रोमकं पांसुजं शीसं क्षारश्च लवणो गणः ।
तिक्तः पटोली त्रायन्ती बालकोशीरचन्द-
नम् ।
भूनिम्बनिम्बकटुकातगरागुरुवत्सकम् ॥
नक्तमालद्विरजनीमुस्तमूर्वाटरूषकम्।
पाठापामार्गकांस्यायोगुडूचीधन्वयासकम् ।
पञ्चमूलं महद्व्याघ्र्यौ विशालातिविषा वचा
॥
कटुको हिङ्गुमरिचकृमिजित्पञ्चकोलकम् ।
कुठेराद्या हरितकाः पित्तं मूत्रमरुष्करम् ॥
वर्गः कषायः पथ्याक्षं शिरीषः खदिरो मधु ।
कदम्बोडुम्बरं मुक्ताप्रबालाञ्जनगैरिकम् ।
बालं कपित्थं खर्जूरं विसपद्मोत्पलादि च ॥
मधुरं श्लेष्मलं प्रायो जीर्णाच्छालियवादृते ।
मुद्गाद्गोधूमतः क्षौद्रात्सिताया जाङ्गला-
मिषात् ॥
प्रायोऽम्लं पित्तजननं दाडिमामलकादृते ।
अपथ्यं लवणं प्रायश्चक्षुषोऽन्यत्र सैन्धवात्
॥
तिक्तं कटु च भूयिष्ठमबृष्यं वातकोपनम् ।
ऋतेऽमृतापटोलीम्यां शुण्ठीकृष्णारसोनतः
॥
कषायं प्रायशः शीतं स्तम्भनं चाभयामृते ॥
रसा कट्वम्ललवणा वीर्य्येणोष्णा यथोत्तरम् ।
तिक्तः कषायो मधुरस्तद्वदेव च शीतलः ॥
तिक्तः कटुः कषायश्च रुक्षा बद्धमलास्तथा
॥

अथ षड्रसगुणाः ।
“मधुरः प्रीणनो बल्यो
वृंहणोऽनिलपित्तहा ।
रसायणो गुरुः स्निग्धश्चक्षुष्यः
शीतलश्च सः ॥
आयुःकृद्व्रणहा रुच्यः
कण्ठ्योदावर्त्तनाशकः ।
अम्लो रुचिकरो हृद्यः प्रीणनो
वह्निवर्द्धनः ॥
वातहा रसनोद्वेगी स्निग्धोष्णो
रक्तमांसदः ।
क्लेदनस्तर्पणः पक्ता लघुव्यापी
कटुश्च यः ॥
लवणः क्लेदनस्तीक्ष्णः
पाचनोद्दीपनो रसः ।
स्निग्धो रुचिकरः स्यन्दी
दृष्टिशुक्लकरोऽगुरुः ॥
कटुर्ज्जिह्वास्यनासाक्षिरोचनो
रुचिराङ्गकृत् ।
उष्णस्तीक्ष्णो लघुः
कण्डूकृमिशुक्रकफापहः ॥
लघुः शोषी पक्तिकरः
श्लेष्माकर्षणकः पटुः ।
तिक्तः पित्तकफच्छेदी
विषकुष्ठज्वरापहः ॥
दीपनः पाचनो रूक्षः कण्डूकृमिहरो
लघुः ।
कषायः शोषकः स्तम्भी
व्रणग्लानार्त्तिनाशनः ॥
कफशोणितपित्तघ्नो रूक्षः शीतो
लघुस्तथा ।
शीतलः पित्तहा बल्यः कफवातहरो
गुरुः ॥
उष्णं पित्तकरो वीर्य्यो
वातश्लेष्महरो लघुः ।
शीतं वीर्य्येण यद्द्रव्यं मधुरं
रसपाकयोः ॥
तयोरम्लं कटुष्णञ्च यच्चोष्णं कटुकं
तयोः ।

तिक्तः स्वयमरोचिष्णुररुचिं कृमितृड्विषम् ।
कुष्ठमूर्च्छाज्वरोत्क्लेशदाहपित्तकफान् जयेत् ॥
क्लेदमेदो वसामज्जशकृन्मूत्रोपशोषणः ।
लघुर्मेध्यो हिमो रूक्षः स्तन्यकण्ठविशोधनः ॥
धातुक्षयानिलव्याधीनतियोगात्करोति सः ॥
कटुर्गलामयोदर्द्दकुष्ठालसकशोफजित् ।
व्रणावसादनस्नेह मेदः क्लेदोपशोषणः ॥
छिनत्ति बन्धान् स्रोतांसि विवृणोति कफापहः ।
कुरुते सोऽतियोगेन तृष्णां शुक्रबलक्षयम् ॥
मूर्च्छामाकुञ्चनं कम्पं कटिपृष्ठादिषु व्यथाम् ।
कषायः पित्तकफहा गुरुरस्रविशोधनः ।
पीडनो रोपणः शीतः क्लेदमेदोविशोषणः ॥
आमसं स्तम्भनो ग्राही रूक्षोऽतित्वक्प्रसादनः ।
करोति शीलितः सोऽतिविष्टम्भाध्मानहृद्रुजः ॥
तृट्कार्श्यपौरुषभ्रंशस्रोतोरोधमलग्रहान् ॥

पट्वम्लमधुराः स्निग्धाः सृष्टविण्मूत्रमारुता ॥
पटोः कषायस्तस्माच्च मधुरः परमं गुरुः ॥
लघुरम्लः कटुस्तस्मात्तस्मादपि च तिक्तकः
।
संयोगाः सप्तपञ्चाशत्कल्पना तु त्रिषष्टिधा ।
रसानां यौगिकत्वेन यथास्थूलं विभज्यत ॥
एकैकहीनांस्तान् पञ्च पञ्च यान्ति रसा द्विके
।
त्रिके स्वादुर्दशाम्लः षट् त्रीन् पटुस्तिक्त
एक-
कम् ॥
चतुष्केषु दश स्वादुश्चतुरोऽम्लः पटुः
सकृत् ।
पञ्चकेष्वेकमेवाम्लो मधुरः पञ्च सेवते ।
द्रव्यमेकं षडास्वादमसंयुक्ताश्च षड्रसाः ॥
षट्पञ्चकाः षट् च पृथग्रसाः स्यु-
श्चतुर्द्विकौ पञ्चदशप्रकारौ ।
भेदास्त्रिकाविंशतिरेकमेकं
द्रव्यं षडास्वादमिति त्रिषष्टिः ॥
ते रसानुरसतो रसभेदा-
स्तारतम्यपरिकल्पनया च ।
सम्भवन्ति गणनां समतीता ।
दोषभेषजवशादुपयोज्याः ॥”

कटुतिक्तकषायाणां विपाकः
प्रायशः कटुः ॥
अम्लोष्णं पच्यते स्वादु मधुरं लवणं
तथा ।
कटुर्व्विपाके शुक्रघ्नो
बद्धविड्वातलो लघुः ॥
स्वादुर्गुरुः सृष्टमलो विपाके
कफशुक्रलः ।
पाकेऽम्लः
सृष्टविम्मूत्रपित्तकृच्छुक्रकृल्लघुः ॥”
गारुडे ॥
“कटुतिक्तकषायाश्च कोपयन्ति
समीरणम् ।
कट्वम्ललवणाः पित्तं
स्वाद्वम्ललवणाः कफम् ॥
अतएव विपर्य्यस्ताः समायैषां
प्रयोजिताः ।
चक्षुष्यो मधुरो ज्ञेयो रसो
धातुविवर्द्धनः ॥
स्थौल्यालस्यविषघ्नश्च कटूद्दीपन
पाचनः ॥”
इत्याह्निकतत्त्वम् ॥)
न्यायमते तु ।
“रसस्तु रसनाग्राह्यो
मधुरादिरनेकधा ।
सहकारी रसज्ञाया नित्यत्वादि च
पूर्ब्बवत् ॥”
इति भाषापरिच्छेदः ॥
“रसस्त्विति । सहकारीति
रासनज्ञाने रस-
कारणमित्यर्थः । पूर्ब्बवदिति
जलपरमाणो रसो
नित्यः अन्यः सर्व्वोऽपि रसोऽनित्य
इत्यर्थः ।”
इति सिद्धान्तमुक्तावली ॥ * ॥
शरीरस्थधातु-
विशेषः । तत्पर्य्यायः । रसिका २
स्वेदमाता ३
वपुःस्रवः ४ चर्म्माम्भः ५
चर्म्मसारः ६ रक्त-

| | | |
|---|---|---|
| | | सारः ७ अस्रमातृका ८ । इति राजनिर्घण्टः ॥ आहारसम्भवः ९ तेजःसम्भवः १० अग्नि- सम्भवः ११ षड्रसासवः १२ आत्रेयः १३ असृक्करः १४ धातुघनः १५ मूलमहापरः १६ इति हेमचन्द्रः ॥ तस्य निरुक्तिर्यथा, -- “यत् पार्थो रसधातुर्यस्ततोऽभवदयं रसः । सदैव सकलं देहं रसतीति रसः स्मृतः ॥” तस्य स्वरूपमाह । “सम्यक्पक्कस्य भुक्तस्य सारो निगदितो रसः । स तु द्रवः सितः शीतःस्वादुः स्निग्धश्चलो भवेत् ॥” |

सारः । यथा,
गुडमधूकपुष्पवकुलत्वग्वदरी-
मूलादिभवः सारो मदिरा । तस्य
स्थानमाह ।
“सर्व्वदेहचरस्यापि रसस्य हृदयं
स्थलम् ।
समानमरुता पूर्ब्बं यदयं हृदये धृतः ॥”
तस्य कर्म्माण्याह ।
“आरुह्य धमनीर्गत्वा धातून् सर्व्वानयं
रसः ।
पुष्णाति तदनु स्वीयैर्व्याप्नोति च तनुं
गुणैः ॥”
गुणैः शीतस्निग्धपोषकत्वैः ।
“मन्दवह्निविदग्धस्तु कटुर्व्वाम्लो
भवेद्रसः ।
स कुर्य्याद्बहुलान् रोगान् विषकृत्यं
करोत्यपि ॥”
इति भावप्रकाशः ॥
(तथा च । “तत्र पाञ्चभौतिकस्य
चतुर्व्विधस्य
षड्रसस्य
द्विविधवीर्य्यस्याष्टविधवीर्य्यस्य
वानेक-
गुणस्योपयुक्तस्याहारस्य सम्यक्
परिणतस्य
यस्तेजोभूतः सारः परमसूक्ष्मः स रस
इत्युच्यते ।
तस्य च हृदयं स्थानं स
हृदयाच्चतुर्व्विंशतिं
धमनीरनुप्रविश्योर्द्ध्वगा दश दश
चाधोगामिनी-
श्चतस्रस्तिर्य्यग्गाः कृत्स्नं
शरीरमहरहस्तर्पयति
वर्द्धयति धारयति यापयति जीवयति
चादृष्ट-
हेतुकेन कर्म्मणा । तस्य
शरीरमनुधावतोऽनु-
मानाद् गतिरुपलक्षयितव्या
क्षयवृद्धिवैकृतैः ।

घृणाकरपूयरसादिजो वीभत्सः । सर्व्वाभि-
भाविता रौद्रः । यथा, रावणचरितादि ।
शान्तोऽपि रसोऽस्ति ।
“शृङ्गारवीरवीभत्सरौद्रहास्यभयानकाः ।
करुणाद्भुतशान्ताश्च नव नाट्या रसाः
स्मृताः ॥”
इति रत्नकोषः ॥
एवं वत्सलोऽपि रसोऽस्ति ।
“शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः ।
वीभत्सरौद्रौ वात्सल्यं शान्तश्चेति रसा दश
॥”
इति नामनिधानम् ॥
वत्सलः पुत्त्रादिस्नेहात् स्वारतिभेद एव ।
शान्तस्त्वलौकिकत्वान्नोक्तः । इति मुकुटः
॥
चशब्दात् शान्तवत्सलावपि संगृहीताविति
केचित् । इत्यमरटीकायां भरतः ॥ * ॥
अपि
च । तत्र
शृङ्गारादिसर्व्वरसकदम्बमूर्त्तिर्भगवान्
तत्तदभिप्रायानुसारेण बभौ न साकल्येन
सर्व्वे-
षामित्याह । मल्लानामिति । मल्लादीनां
दशानां द्रष्टॄणां अशन्यादिरूपेण दशधा
विदितः सन् साग्रजो रङ्गं गतः इत्यन्वयः ।
मल्लादिषु अभिव्यक्ता रसाः क्रमेण श्लोकेन
निवध्यन्ते ।
“रौद्रोऽद्भुतश्च शृङ्गारो हास्यवीरौ दया
तथा ।
भयानकश्च वीभत्सः शान्तः सप्रेमभक्तिकः
॥”
अविदुषां विराट् विकलः अपर्य्याप्तो जड
इति
यावत् । अनेन वीभत्स उक्तः । विकलत्वञ्च
क्व
वज्रसारसर्व्वाङ्गावित्यादिनावक्ष्यति । इति
श्रीमद्भागवते १० स्कन्धे ४३ अध्याये १५
श्लोक-
टीकायां श्रीधरस्वामी ॥ * ॥ (तथा च ।

त्वक्त्वौग्र्यमरणालस्यजुगुप्साव्यभिचारिणः
।
स्थायी भावो रतिः श्यामवर्णोऽयं विष्णुदैवतः
॥”
यथा, --
“शूण्यं वासगृहं विलोक्य शयनादुत्थाय
किञ्चि-
च्छनैः
निद्राव्याजमुपागतस्य सुचिरं निर्व्वर्ण्य पत्यु-
र्म्मुखम् ।
विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य
गण्ड-
स्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं
चुम्बिता ॥”
हास्यस्य ।
“विकृताकारवाग्वेशचेष्टादेः कुहकाद्भवेत् ।
हासो हास्यस्थायिभावः श्वेतः प्रमथदैवतः
॥
विकृताकारवाक्चेष्टं यदालोक्य हसेन्नरः ।
तदत्रालम्बनं प्राहुस्तच्चेष्टोद्दीपनं मतम् ॥
अनुभावोऽक्षिसङ्कोचवचनस्मेरतादयः ।
निद्रालस्यावहित्थाद्या अत्र स्युर्व्यभिचारिणः
॥
ज्येष्ठानां स्मितहसिते मध्यानां विहसिता-
वहसिते च ।
नीचानामपहसितं तथातिहसितञ्च षड्भेदाः
॥
ईषद्विकासिनयनं स्मितं स्यात्
स्पन्दिताधरम् ।
किञ्चिल्लक्ष्यद्विजं तत्र हसितं कथितं बुधैः ॥
मधुरस्वरं विहसितं सांसशिरःकम्पनमव-
हसितम् ।
अपहसितं सास्राक्षं विक्षिप्ताङ्गं भवत्यति-
हसितम् ॥”
यथा, --
“आकुञ्च्य पाणिमशुचिं मम मूर्द्ध्नि वेश्या
मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे ।
तारस्वरं प्रथितथूत्कमदात् प्रहारं

तस्मिन्
सर्व्वशरीरावयवदोषधातुमलाशयानु
सारिणि रसे जिज्ञासा किमयं
सौम्यस्तैजस
इति । अत्रोच्यते स खलु द्रवानुसारी
स्नेहन-
जीवनतर्पणधारनादिभिर्व्विशेषैः सौम्य
इत्यव-
गम्यते ।” इति च सुश्रुते सूत्रस्थाने
चतुर्द्दशे-
ऽध्याये ॥ * ॥)
शृङ्गारादिदशविधस्थायीभावः ।
शृङ्गारादयो-
ऽष्टौ रसशब्दवाच्याः । रस्यन्ते
आस्वाद्यन्ते
रसाः रसत् क त्वास्वादे घञ् । तथा
हि ।
विभावैरनुभावैश्च व्यक्तो वा
व्यभिचारिभिः ।
आस्वाद्यत्वात् प्रधानत्वात् स्थायी
भावो रसो
भेवेदिति ॥
रत्युत्साहशोक-
विस्मयहासभयजुगुप्साक्रोधाः
क्रमादेते स्युः स्थायिनः । यदुक्तम् ।
“रतिर्हासश्च शोकश्च क्रोधोत्साहौ
भयं तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभाभाः
क्रमादमी ॥
समये यः समुद्भूतः स्वान्ते
यश्चावतिष्ठते ।
भावः स्थायी स विज्ञेयो व्यभिचारी
ततोऽन्यथा ।
निर्व्वेदग्लानिशङ्काद्या व्यभिचारिण
ईरिताः ॥”
स्थायिनः कारणं विभावः स
चावलम्बनोद्दीप-
नत्वेन द्विविधः । यथा
रतेरवलम्बनकारणं पुंसो
युवती युवत्याश्च पुमान् ।
उद्दीपनकारणं स्रक्-
“रसे सारश्चमत्कारः सर्व्वत्राप्यनुभूयते ॥
तच्चमत्कारसारत्वे सर्व्वत्राप्यद्भुतो रसः ।
तस्मादद्भुतमेवाह कृती नारायणो रसम् ॥”
इति साहित्यदर्पणे धर्म्मदत्तः ॥
रसः कथ्यते ।
“विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा ।
रसतामेति रत्यादिः स्थायी भावः
सचेतसाम् ॥”
अस्य स्वरूपकथनगर्भ आस्वादप्रकारः
कथ्यते ।
“सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः।
वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः ॥
लोकोत्तरचमत्कारप्राणःकैश्चित् प्रमातृभिः
।
स्वाकारवदभिन्नत्वे नायमास्वाद्यते रसः ।
रजस्तमोभ्यामस्पृष्टं मनः सत्त्वमिहोच्यते ॥”
इति साहित्यदर्पणे विश्वनाथः ॥ ३ ॥
“शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।
वीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाठ्ये रसाः
स्मृताः ॥”
शृङ्गारस्य यथा, --
“शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः ।
उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते ॥
परोढां वर्ज्जयित्वा तु वेश्याञ्चाननुरागिणीम्
।
आलम्बनं नायिकाः स्युर्द्दक्षिणाद्याश्च
नायकाः ॥
चन्द्रचन्दनरोलम्बरुताद्युद्दीपनंमतम् ।
भ्रूविक्षेपकटाक्षादिरनुभावः प्रकीर्त्तितः ॥
हाहा हतोऽहमिति रोदिति विष्णुशर्म्मा ॥”
करुणस्य ।
“इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत् ।
धीरैः कपोतवर्णोऽयं कथितो यमदैवतः ॥
शोकोऽत्र स्थायिभावः स्याच्छोच्यमालम्बनं
मतम् ।
तस्य दाहादिकावस्था भवेदुद्दीपनं पुनः ।
अनुभावा दैवनिन्दा भूपातक्रन्दनादयः ॥
वैवर्णोच्छ्वासनिश्वासस्तम्भप्रलपनानिच ।
निर्व्वेदमोहापस्मारव्याधिग्लानिस्मृतिश्रमाः
॥
विषादजडतोन्मादचिन्ताद्याव्यभिचारिणः
॥”
यथा, --
“विपिने क्व जटानिबन्धनं
तव चेदं क्व मनोहरं वपुः ।
अनयोर्घटनाविधेः स्फुटं
ननु खड्गेन शिरीषकर्त्तनम् ॥”
रौद्रस्य ।
“रौद्रः क्रोधः स्थायिभावो रक्तो
रुद्राधिदैवतः ।
आलम्बनमरिस्तत्र तच्चेष्टोद्दीपनं मतम् ॥
मुष्टिप्रहारपतनविकृतच्छेदावदारणैश्चैव ।
संग्रामसंभ्रमाद्यैरस्योद्दीप्तिर्भ्भवेत् प्रौढा ॥

| | | |
|---|---|---|
| चन्दनादि। एवं सर्व्वत्रोन्नेयम्। रतिप्रमोदा- त्मको भावः स च युवभिरुत्पादितः शृङ्गारः। यदाह। “पुंसःस्त्रियां स्त्रियाःपुंसि संयोगं प्रति या स्पृहा। स शृङ्गार इति ख्यातो रतिक्रीडादिकारणम्॥ दानधर्म्मयुद्धेषु जीवानपेक्षोत्साहकारी रसो वीरः। शोकस्थायिभावः करुणः। असम्भावित- मर्त्यान्तरीक्षगमनादिजोऽद्भुतः। कौतुकोद्भवो हासः। क्रुध्यद्राक्षसादिभयजन्यो भयानकः। | | |

भ्रूविभङ्गोष्ठनिर्द्दिंशबाहुस्फोटनतर्ज्जनम् ।
आत्मावदानकथनमायुधोत्क्षेपणानि च ॥
अनुभावास्तथाक्षेपक्रूरसन्दर्शनादयः ।
उग्रतावेगरोमाञ्च स्वेदवेपथवो मदः ॥
मोहामर्षादयश्चात्र भावाः
स्युर्व्यभिचारिणः ॥”
यथा, --
“कृतमनुमतं दृष्टं वा यैरिदं गुरु पातकं
मनुजपशुभिर्निर्म्मर्य्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुना सार्द्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां
वलिम् ॥”
वीरस्य ।
“उत्तमप्रकृतिर्व्वीर उत्साहस्तायिभावकः
महेन्द्रदैवतो हेमवर्णोऽयं समुदाहृतः ॥
आलम्बनविभावाश्च विजेतव्यादयो मताः
।
विजेतव्यादिचेष्टाद्यास्तत्रोद्दीपनरूपिणः॥
अनुभावास्तु तत्र स्युः सहायान्वेषणादयः
।
सञ्चारिणस्तु
घृतिमतिगर्व्वस्मृतितर्करोमाञ्चाः ॥
स च दानधर्म्मयुद्धैर्दयया च
समन्वितश्चतुर्द्धा
स्यात् ॥”
यथा, --
“क्षुद्राः सन्त्रासमेते विजहित हरयः !
क्षुण्ण-
शक्रेभकुम्भा
युष्मद्देहेषु लज्जां दधति परममी सायका
निष्प-
तन्तः ।
सौमित्रे ! तिष्ठ पात्रं त्वमसि नहि रुषां
नन्वहं
मेघनादः
किञ्चिद् भ्रूभङ्गलीलानियमितजलधिराम-
मन्वेषयामि ॥”
भयानकस्य ।

तत्रैव कृमिपातादिरुद्दीपनमुदाहृतम्॥
निष्ठीवनास्यवलननेत्रसङ्कोचनादयः ।
अनुभावास्तत्र मतास्तत्र स्युर्व्यभिचारिणः ॥
मोहोऽपस्मार आवेगो व्याधिश्च मरणादयः ॥”
यथा, --
“उत्कृत्योत्कृत्यकृत्तिं प्रथममथ पृथूत्सेध-
भूयांसि मांसा-
न्यंशस्फिक्
पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि
जग्ध्वा ।
अन्तःपर्य्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः
करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्य-
ग्रमत्ति ॥”
अद्भुतस्य ।
“अद्भुतो विस्मयस्थायिभावो गन्धर्व्वदैवतः ।
पीतवर्णो वस्तु लोकातिगमालम्बनं मतम् ॥
गुणानां तस्य महिमा भवेदुद्दीपनं पुनः ।
स्तम्भः स्वेदोऽथ रोमाञ्चगद्गदस्वरसंभ्रमाः ॥
तथा नेत्रविकासाद्या अनुभावाः प्रकीर्त्तिताः ।
वितकर्व्वगसम्भ्रान्तिहर्षाद्या व्यभिचारिणः ॥”
यथा,
“चित्रं महानेष वतावतारः
क्व कातिरेषाभिनवैव भङ्गिः ।
लोकोत्तरं धैर्य्यमहो प्रभावः
काप्याकृतिर्नूतन एष सर्गः ॥”
शान्तस्य ।
“निर्व्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो
रसः ॥”
तथा च ।
“शान्तः शमस्थायिमाव उत्तमप्रकृतिर्म्मतः ।
कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः ॥
अनित्यत्वादिनाशेषवस्तुनिःसारता तु या ।
परमात्मस्वरूपं वा तस्यालम्बनमिष्यते ॥
पुण्याश्रमहरिक्षेत्रतीर्थरम्यवनादयः ।
महापुरुषसङ्गाद्यास्तस्योद्दीपनरूपिणः॥
रोमाञ्चाद्याश्चानुभावास्तथास्युर्व्यभिचारिणः ।
निर्व्वेदहर्षस्मरणमतिभूतदयादयः ॥”
यथा, --

रञ्चमाद्या रसा देवि ! पञ्चपञ्चाशतः
स्मृताः ।
भेदं रसानां वक्ष्यामि शृणुष्वावहिता
प्रिये ॥
शृङ्गारवीरकरुणहास्योद्भुतभयानकाः ।
वीभत्सः शान्तको रौद्रो नवधा
काव्यशास्त्रके ॥
यमश्च नियमश्चैव आसनं प्राणसंयमः
।
प्रत्याहारो धारणा च ध्यानं
समाधिरष्टधा ॥
योगशास्त्रे महादेवि कथिता विस्तरात्
प्रिये ॥
छन्दः पादौ च वेदस्य मुखं व्याकरणं
स्मृतम् ।
शिक्षा घ्राणं महेशानि ! हस्तौ कल्पोऽथ
कथ्यते ॥
ज्वोतिषं देवि तन्नेत्रं निरुक्तं श्रोत्रमुच्यते
।
अङ्गानि वेदाश्चत्वारो
मीमांसान्यायविस्तरैः ॥
धर्म्मशास्त्रं पुराणञ्च विद्या
ह्येताश्चतुर्द्दश ।
आयुर्व्वेदो धनुर्व्वेदो गान्धर्व्वाश्चेति ते
त्रयः ॥
अर्थशास्त्रसमायुक्ता विद्याष्टादशधा
रसाः ।
मननं कीर्त्तनं ध्यानं स्मरणं पादसेवनम्
॥
अर्च्चनं वन्दनं दास्यं
सख्यमात्मसमर्पणम् ।
इत्थं देवि नव रसा भक्तियोगे
प्रकीर्त्तिताः ॥
स्रग्गन्धवनिताशय्यावस्त्रालङ्करणानिच
।
कथिताः परमेशानि विषये ऋतवो
रसाः ॥
खाद्याः पञ्चरसा गौडी
माध्वीक्षुफलशस्यकाः।

“भयानको भयस्थायिभावः
कालाधिदैवतः ।
स्त्रीनीचप्रकृतिः कृष्णो मतस्तत्वविशारदैः
॥
यस्मादुत्पद्यते भीतिस्तदत्रालम्बनं मतम् ।
चेष्टा वोरतरा तस्य तदत्रोद्दीपनं पुनः ॥
अनुभावोऽत्र वैवर्ण्यगद्गदस्वरभाषणम् ।
पुलकस्वेदरोमाञ्चकम्पदिक्प्रेक्षणादयः॥
जुगुप्सावेगसम्मोहसन्त्रासग्लानिदीनताः।
शङ्कापस्मारसम्भ्रान्तिमृत्याद्याव्यभि-
चारिणः ॥”
यथा, --
“ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने
दत्तदृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा
पूर्ब्ब-
कायम् ।
शष्पैरर्द्धावलीढैः श्रमविवृतमुखभ्रंसिभिः
कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियतिबहुतरं
स्तोकमुर्व्यां
प्रयाति ॥”
वीभत्सस्य ।
“जुगुप्सा स्थायिभावस्तु वीभत्सः कथ्यते
रसः ।
नीलवर्णो महाकालदेवतोऽयमुदाहृतः ॥
दुर्गन्धमांसपिशितमेदांस्यालम्बनं मतम् ।

“अहौ वा हारे वा कुसुमशयने वा दृषदि वा
मणौ वा लोष्ट्रे वा बलवति रिपौ वा सुहृदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः
क्वचित् पुण्येऽरण्ये शिवशिवशिवेति प्रलपतः
॥”
इति काव्यप्रकाशसाहित्यदर्पणे ॥
विशेषविस्तृ-
तिस्तु साहित्यदर्पणे तृतीयपरिच्छेदे द्रष्टव्या ॥
तन्त्रशास्त्रेऽपि साधकानामुपासनासौकर्य्यार्थं
रसास्वादः रसप्रकारश्च कथ्यते । यथा, --
भैरव उवाच ।
“क्रियाकाण्डप्रकथने तन्त्रं बहुतरं भवेत् ।
किञ्चिल्लक्षणमेतेषां संक्षेपात् कथयामि ते ॥
काव्यशास्त्रेनव रसा योगे चाष्टौ रसाः स्मृताः
॥
अष्टादशप्रकारा हि विद्यायाः परिकीर्त्तिताः ।
भक्तियोगे नव रसा ऋतवो विषये स्मृताः ॥

एतेषु रसभावज्ञा ये ते वै रसिकाः
स्मृताः ॥
कृत्यविधिर्ज्जपविधिर्द्रव्यशोधनिको
विधिः ।
बाह्यमानसिकी पूजा विधिश्च
परमेश्वरि ! ॥
पुरश्चर्य्याविधिर्द्देवि ! कर्म्मकाण्डानि
पञ्चधा ।
त्रिधा कृत्य विधिर्द्देवि ! प्रातः सायं
दिनन्तथा ॥
अनुभूय रसान् सर्व्वान् क्रियाकाण्ड
विधाय च ।
साधकः स्थिरचित्तेन कुर्य्यात्
पूर्णाभिषेचनम् ॥”
इति वामकेश्वरतन्त्रे त्रयःपञ्चाशत्
पटलः ॥
देव्युवाच ।
“मन्त्रप्रकथनं नाथ ! देव प्रकथनं
कथम् ।
तत्तद्रसानां वचनैश्चित्तं मोहयसीव मे
॥
साम्प्रतं संशयच्छेदकारणं ब्रूहि मे
प्रभो ! ॥
आश्चर्य्याख्यानमेवं हि श्रवणात्
कौतुकं महत् ॥
भैरव उवाच ।
तन्त्रोक्तं वेदवाक्यञ्च सर्व्वज्ञानस्य
कारणम् ।
भेदं रसानां वक्ष्यामि शृणुष्वावहिता
सती ॥
शृङ्गारो वीरतो ज्ञेयस्तस्मिंस्ते
करुणादयः ।
शृङ्गारादिघृणादिश्च अपि शृङ्गारतो
भवेत् ॥
शृङ्गारस्तु यदा देवी परमार्थकसूचकः ।
तदैव परमा शान्ती रुद्रत्वं संप्रपद्यते ॥
तेषां प्रकरणार्थन्तु शृणु प्राणाधिके !
मयि ।
पादं विना शरीरस्य न गतिर्व्विद्यते
प्रिये ! ॥
छन्दसा वेदमार्गे तु प्रविशेन्न कदाचन ॥

|  |  |  |
| --- | --- | --- |
|  |  | अलङ्कारं विनाच्छन्दो न शोभेत प्रियंवदे ॥<br>चक्षुः परोक्षभेदः स्यात् ज्योतिःशास्त्रं तथैवच ।<br>चन्द्रसूर्य्यस्य ग्रहणात् ज्योतिः प्रत्यक्षतामियात् ॥<br>वेदशाखा निरुक्तं स्यात् शाखाभिर्ब्रह्म जायते ।<br>गानकार्य्ये श्रूयमाणे भक्तिर्भवति ब्रह्मणि ॥<br>तदैव गानकृत्यञ्च मुखनासिकयोर्भवेत् ।<br>गानं विना न नृत्यं स्यात् नृत्यं गानेन जायते ॥<br>शिक्षाशास्त्रं नाटकादि शब्दव्याकरणं स्मृतम् ।<br>अविनाभावसम्बन्धात्द्वयोश्च शुचिस्मिते ॥ ! |

वेदाः षडङ्गसहिताः
ब्रह्मव्याख्यानतत्पराः।
न्यायेन सार्द्धं मीमांसा ब्रह्म
निर्णीयते ध्रुवम् ॥
ब्रह्मज्ञाने तु जीवस्य
परमात्मविचारणम्।
धर्म्मशास्त्रानुसारेण
व्यवस्थादिर्न्निरूपितः ॥
पुराणाख्यानि तेनैव जायते सततं
प्रिये ! ।
ब्रह्मानन्दपरो जीव
आत्मसंरक्षणोत्सुकः ॥
आयुर्व्वेदं धनुर्व्वेदं गान्धर्व्वञ्च
समभ्यसेत् ।
अनुसन्धानतो देवि पूर्णज्ञानी च
साधकः ॥
मधुनेक्षुरसेनैव
दुग्धादिफलशस्यकैः ।
गन्धमाल्यादिना देवि !
वस्त्रालङ्करणादिना ॥
शय्यायां वनितारूपं
पूजयेज्जगदम्बिकाम्।
वनितापूजने देवि ! शृङ्गारो
रससाधनम् ॥
पूजनं कर्म्मकाण्डञ्च पञ्चधा
तत्प्रकीर्त्तितम्।
तत्सर्व्वं साधयेद्वीरो देवी
सम्प्राप्तिहेतवे ॥
पूजने नवधा भक्ती रसोल्लासश्च
जायते ।
तदा योगं समभ्यस्य समाधिस्थो
भवेद्यतिः ॥
अतएव महेशानि ! पुरैव कथितं
मया ।
अनुभूय रसान् सर्व्वान्
पञ्चपञ्चाशतः प्रिये ! ॥
विषये कर्म्मकाण्डेषु निष्कामी
भवति प्रिये ! ।

अल्पमात्रोपयोगित्वादरुचेरप्रसङ्गतः ।
क्षिप्रमारोग्यदायित्वादौषधेभ्योऽधिको रसः
॥
साध्येषु भेषजं सर्व्वमीरितं तत्त्ववेदिना ।
असाध्येष्वपि दातव्यो रसोऽतः श्रेष्ठ
उच्यते ॥
हतो हन्ति जराव्याधिं मूर्च्छितो
व्याधिघातकः ।
वङ्गः खेचरतां धत्ते कोऽन्यः सूतात्
कृपाकरः ॥”
अथ रसपर्य्यायमाह ।
“रसेन्द्रः पारदः सूतः सूतराजश्च सूतकः
।
शिवतेजो रसः सप्त नामान्येवं रसस्य तु
॥”
मतान्तरम् ।
“शिवबीजं रसः सूतः पारदश्च रसेन्द्रकः ।
एतानि रसनामानि तथान्यानि यथा शिवे
॥”
यथा शिवे इत्यनेन शिवपर्य्यायाणामपि
रस-
वाचकत्वम् ॥ * ॥ अथ रसलक्षणम् ।
“अन्तः सुनीलो बहिरुज्ज्वलो यो
मध्याह्नसूर्य्यप्रतिमप्रकाशः ।
शस्तोऽथ धूम्रः परिपाण्डरश्च
चित्रो न योज्यो रसकर्म्मसिद्धौ ॥”
नागो वङ्गो मलो वह्निश्चाञ्चल्यञ्च विषं
गिरिः ।
असह्याग्निर्म्महादोषा निसर्गाः पारदे स्थिताः
॥
व्रणं कुष्ठं तथा जाड्यं दाहं वीर्य्यस्य
नाशनम् ।
मरणं जडतां स्फोटं कुर्व्वन्त्येते
क्रमान्नृणाम् ॥
तस्माद्रसस्य संशुद्धिं विदध्याद्भिषजां वरः
।
शुद्धोऽयममृतं साक्षाद्दोषयुक्तो रसो विषम्
॥”
“शतं पञ्चाशतं वापि पञ्चविंशद्दशैव च ।

शुद्धसूतसमं कुर्य्यात् प्रत्येकं गैरिकं सुधीः ।
इष्टिकां खटिकां तद्वत् स्फुटिकां सिन्धुजन्म च ॥
बल्वीकक्षारलवणं भाण्डरञ्जकमृत्तिकाम्।
सर्व्वाण्यतानि संचूर्ण्य वाससा चापि शोधयेत् ॥
खटिका खडी । स्फुटिका फिट्करी । सिन्धु-
जन्म सैन्ववम् । वल्वीकं तज्जा मृत् । वल्मीक
वरौर । क्षारलवणं खारीलवण । भाण्डरञ्जक-
मृत्तिका काविसमाटी ।
एभिश्चूर्णैर्युतं सूतं यावद्यामं विमर्द्दितम् ।
तच्चूर्णसहितं सूतं स्थालीमध्ये परिक्षिपेत् ॥
तस्याः स्थाल्या मुखे स्थालीमपरां धारयेत्
समाम् ।
सवस्त्रकुट्टितमृदा मुद्रयेदुभयोर्म्मुखम् ॥
संशोष्य मुद्रयेद्भूयो भूयः संशोष्य मुद्रयेत् ।
सम्यग्विशोष्य मुद्रां तांस्थालीं चुल्ल्यां विधारयेत् ॥
अग्निं निरन्तरं दद्याद्यावद्दिनचतुष्टयम्।
अङ्गारोपरि तद्यन्त्रं रक्षेद्यत्नादहर्न्निशम् ॥
शनैरुद्धारयेद्यन्त्रभूदूर्ध्वस्थालीगतं रसम् ।
कर्पूरवत् सुविमलं गृह्णीयाद्गुणवत्तरम्॥
तं देवकुसुमचन्दनकस्तूरीकुङ्कुमैर्युक्तम् ।
खादन् हरति फिरङ्गं व्याधिं सोपद्रवं सपदि ॥
विन्दति वह्नेर्द्दीप्तिं पुष्टिं वीर्य्यं बलं विपुलम् ।
रमयति रमणीशतकं रसकर्पूरस्य सेवकः
सततम् ॥”
इति भावप्रकाशः ॥ * ॥
अपि च ।
“गैरिकतुरवीखटिकासैन्धवगडजं रजं कुडवम् ।
प्रत्येकं दृढण्ड्यामाधायास्योपरिशतं स्थाप्यः ॥
कुडवमितोऽथ तदूर्ध्वं देया हण्डीतदास्य पात-
मुखी ।
अथ तत्सन्धेर्म्मुद्रां कृता तदधो हुताशनो
ज्वाल्यः ॥
अर्म्मणषट्कप्रमितैर्द्दारुभिरनुनातिदुर्बलस्थूलैः ।
अग्निं क्रमेण दद्याद्गुरुदर्शितवर्त्मना द्विनिशम् ॥
तदनु ततो यन्त्रवराद्युक्त्या कर्पूरसन्निभं सूतम् ।
आदाय काचकुम्भे निधाय नवसादरं दद्यात् ॥
संमर्द्य चाथ काष्ठैरर्द्धार्म्मणसंमितैः पचेत् घस्रम् ।
चुल्लीडमरुकमध्यं वितस्तिचतुराङ्गुलावकाशन्तु ॥
कर्त्तव्यं क्रमदहनं तदधः प्रज्वालयेन्मध्यम् ।

निष्कामे फलमाश्चर्य्यं तेन तृप्यति देवता ॥
देही देहं समाश्रित्य न च कर्म्म परित्यजेत् ।
दिव्यां क्रियां समाप्यैवं देवीयात्रादिकर्म्मणा ॥
पूर्णज्ञानरसानन्दात् जीवन्मुक्तो भवेद्ध्रुवम् ॥”
इति वामकेश्वरतन्त्रे चतुःपञ्चाशत् पटलः ॥
रसस्य परब्रह्मस्वरूपत्वमप्युक्तम् । यथा, --
“रसो वै सः ।” इति श्रुतिः ॥
सन्ध्यामन्त्रेऽपि ।
“आपो ज्योतो रसोऽमृतं ब्रह्म ।” अत्र ब्राह्मण-सर्व्वस्वे हलायुधः ॥ “स एव ब्रह्मरूपो भर्गो रसः तृणवृक्षौषध्यादिषु स्थावरेषु च स एव रस-रूपेण वसतीत्यर्थः । तथा च योगियाज्ञ-वल्क्यः ।
“वृक्षौषधितृणानाञ्च रसरूपेण तिष्ठति ॥”
श्रीमद्भगवद्गीतायामपि ।
“रसोऽहमप्सु कौन्तेय इति ॥”)
पिथम् । (यथा, मुद्राराक्षसे २ अङ्के ।
“ये मन्त्रेषु रसेषु च प्रणिहितास्तैरेव ते घातिताः ॥”)
वीर्य्यम् । गुणः । रागः । (यथा, --
“कविता कोमलवनिता रसयति रसिकं रसेन मिलिता ।
सा यदि दुर्ज्जनहस्ते पतिता प्रतिपदभग्ना संशयमग्ना ॥”
इत्युद्भटः ॥)
द्रवः । इत्यमरः । ३ । ३ । २२६ ॥ गन्धरसः ।

पञ्चैकं वा पलञ्चैव पलार्द्धं कर्षमेव च ॥
कर्षान्न्यूनो न कर्त्तव्यो रससंस्कार उत्तमः ।
प्रयोगेषु च सर्व्वेषु यथालाभं प्रकल्पयेत् ॥
शुभेऽह्नि विष्णुं परिचिन्त्य कुर्य्यात् सम्यक्कुमारीवटुकार्च्चनञ्च ।
सुलोहपाषाणसमुद्भवेऽस्मिन् दृढे च वेदाङ्गुलिगर्भमात्रे ॥
सुतप्तखल्वे निजमन्त्रयुक्तां विधाय रक्षां स्थिरसारबुद्धिः ।
अनन्यचित्तः शिवभक्तियुक्तः समाचरेत् कर्म्मरसस्य तज्ज्ञः ॥”
“अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यश्च ।
सर्व्वतः सर्व्वसर्व्वेभ्यो नमस्ते रुद्ररूपिभ्यः ॥”
इति रक्षामन्त्रः ॥
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणाधि-कारे ॥ विस्तृतविवृतिरस्य पारदशब्देऽभिहिता ॥
शिरालसः । तत्पर्य्यायो यथा, --
“कपिनामा कपितैलं कृत्रिमं कपिलश्चलः ।
तुरुष्को मुक्तिमुक्तश्च पिण्डातेः सिह्लको रसः ॥”
हिङ्गुलम् ॥ तत्पर्य्यायो यथा, --
“रक्तं मर्कटशीर्षञ्च हिङ्गुलं दरदो रसः ॥”
इति वैद्यकरत्नमालायाम् ॥)

**रसकः**, पुं, (रस + संज्ञायां कन् ।) निष्क्वाथ-मांसः । इति हेमचन्द्रः । ३ । ७७ ॥

**रसकर्पूरं**, क्ली, कर्पूररसः । रसकापूर इति भाषा । यथा, “तत्र पारदस्य संक्षिप्तं शोधनं कर्त्तव्यम् ।

शशिधवलमुपरिलग्नं युक्त्या संगृह्य रक्षयेद्-यत्नात् ॥
वल्लं वल्लार्द्धं वा गुडेन जीर्णेन रोगिणे दद्यात् ।
दुग्धोदनन्तु पथ्यं देयं तस्मै च ताम्बूलम् ॥
हरति समस्तं रोगं कर्पू राख्यो रसो नृणाम् ॥
फिरङ्गकरिकेशरी सकलकुष्ठदावानलो-ऽखिलव्रनविनाशकृत् व्रणजगर्त्तपूर्त्तिप्रदः ।
सूवर्णसमवर्णकृत् बलहुताशतेजस्करः समस्तगदतस्करो रसपतिः स कर्पूरकः ॥”
ग्रन्थान्तरम् ।
“टङ्कणं मधु लाक्षाथ ऊर्णा गुञ्जायुतो रसः ।
मर्द्दयेत् भृङ्गजद्रावैर्द्दिनैकं ध्मापयेत् पुनः ।
ध्मातो भस्मत्वमाप्नोति शुद्धकर्पूरसन्निभः ॥

| (तत्पर्य्यायो यथा, --<br>“विद्वान् गोलः पिण्डकश्च पिण्डो वोलो रसो<br>रसः ॥”)<br>जलम् । (यथा, रघौ । १ । १८ ।<br>“प्रजानामेव भूत्यर्थं स ताभ्यो वलिमग्रहीत् ।<br>सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ॥”)<br>पारदः । इति मेदिनी ॥ (“तत्र रसप्राधान्य-<br>माह । | | |
|---|---|---|

नवसादरं पारदाच्चतुर्थांशमिति सङ्केतः ।
गडजं
साम्भरिलोण इति भाषा । शेषं स्पष्टम् ।
इत्यायुर्व्वेदप्रकाशः ॥ (तथा च ।
"पिष्टं पांशुपटु प्रगाढममलं वज्राम्बुना
नैकशः
सूतं धातुगतं खटीकवलितं तत्संपुटे रोधयेत्
॥
अन्तस्तल्लवणस्य तस्य च तले प्रज्ज्वाल्य
वह्निं
हठात्
घस्रं ग्राह्य मथेन्दुकुन्दधवलं भस्मोपरिस्थं
शनैः ॥
तद्वल्वद्वितयं लवङ्गसहितं प्रातः प्रयुक्तं
भजेत् ।
ऊर्द्ध्वं रेचयति द्वियाममसकृत् पेयं जलं
शीतलम् ॥
एतद्धन्ति च वत्सरावधि विषं षान्मासिकं
मासिकम् ।
शैलोत्थं गरलं मृगेन्द्रकुटिलोऽद्भुतञ्च तात्का-
लिकम् ॥"
इति सुधानिधिरसः ॥ * ॥ रकर्पूरमिति रस-
मञ्जरी कारः । श्वेतभस्म इति चन्द्रिका ॥
इति
वैद्यकरसेन्द्रसारसंग्रहे जारणमाराणाधिकारे
॥)

**रसकेशरं**, क्ली, कर्पूरम् । इति हारावली ॥

(कर्पूरशब्देऽस्य विवरणं ज्ञातव्यम् ॥)

**रसगन्धं**, क्ली, वोलम् । इति राजनिर्घण्टः ॥

**रसगन्धः**, पुं, गन्धरसः । यथा, --

"रसगन्धो गन्धरसो गान्धारं मसिवर्द्धनम् ॥"
इति त्रिकाण्डशेषः ॥

**रसगन्धकः**, पुं, (रसगन्ध + स्वार्थे कन् ।) गन्ध-

रसः । इति शब्दचन्द्रिका ॥ गन्धकः । इति
राजनिर्घण्टः ॥

**रसगर्भं**, क्ली, रसाञ्जनम् । इत्यमरः ॥ (तत्पर्य्यायो

**रसदालिका**, स्त्री, (रसं दालयति इति । दल +

णिच् + ण्वुल् । टापि अत इत्वम् ।)
पुण्ड्रकेक्षुः ।
इति राजनिर्घण्टः ॥

**रसद्रावी**, [न्] पुं, (रसं द्रावयतीति । द्रु +

णिच् + णिनि ।) मधुरजम्बीरः । इति
राज-
निर्घण्टः ॥

**रसधातुः**, पुं, (रसात्मको धातुः ।) पारदः । इति

राजनिर्घण्टः ॥ (अस्य पर्य्यायादिर्यथा, -
-
"रसायनार्थिभिर्लोकैः पारदो रस्यते यतः
।
ततो रस इति प्रोक्तः स च धातुरपि
स्मृतः ॥
पारदो रसधातुश्च रसेन्द्रश्च महारसः ।
चपलः शिववीर्य्यञ्च रसः सूतः शिवाह्वयः
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**रसधेनुः**, स्त्री, (रसकल्पिता धेनुः ।) दानार्थे-

क्षुरसनिर्म्मितधेनुः । यथा, --
होतोवाच ।
"रसधेनुं महाराज कथयामि समासतः ।
अनुलिप्ते महीपृष्ठे कृष्णाजिनकुशास्तरे ॥
रसस्य तु घटं राजन् संपूर्णमैक्षवस्य च ।
तद्वत् संकल्पयेत् प्राज्ञश्चतुर्थांशेन
वत्सकम् ॥
इक्षुदण्डमयाः पादा रजतक्षुरसंयुताः ।
सुवर्णशृङ्गाभरणां वस्त्रपुच्छां घृतस्तनीम्
॥
पुष्पकम्बलसंयुक्तां शर्करामुखजिह्विकाम्
।
दन्ताः फलमयास्तस्याः पृष्ठताम्रमयीं
शुभाम् ॥
पुष्परोमान्तु राजेन्द्र मुक्ताफलकृतेक्षणाम्
।

**रसनं**, क्ली, स्त्री, (रस्यते रसयत्यनेन वा । रस +

करणे ल्युट् ।) जिह्वा । इति मेदिनी ॥ सा
च
जलेन्द्रियम् । यथा, --
"नित्यतादि प्रथमवत् किन्तु
देहमयोनिजम् ।
इन्द्रियं रसनं सिन्धुर्हिमादिर्व्विषयो मतः
॥"
इति भाषापरिच्छेदः ॥
"प्रथमवदिति पृथिव्या इवेत्यर्थः । तथा
हि जलं
द्विविधं नित्यमनित्यश्च । परमानुरूपं
नित्यं
द्व्यणुकादिकं सर्व्वमनित्यम् ।
अवयवसमवेतञ्चा-
नित्यजलमपि त्रिविधम् ।
शरीरेन्द्रियविषय-
भेदात् । किन्तु पृथिवीतोययोर्यो
विशेषस्तमाह
किन्त्विति । अयोनिजमेवेत्यर्थः । जलीयं
शरीरं
अयोनिजं वरुणलोके प्रसिद्धमिति ।
इन्द्रियं
रसनं जलीयम् । तथा हि रसनं जलीयं
गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वात् ।
शक्तु-
रसाभिव्यञ्जकोदकवत् । रसनासन्निकर्षे
व्यभि-
चारवारणाय द्रव्यत्वं हेतौ देयम् । विषयं
दर्शयति सिन्धुर्हिमादिरिति । सिन्धुः
समुद्रः
हिमं तुषारः । आदिना
सरित्कासारकरकादिः
सर्व्वो ग्राह्यः ।" इति सिद्धान्तमुक्तावली ॥

**रसना**, स्त्री, (रस + युच् । टाप् च ।) जिह्वा ।

इत्यमरः ॥ (यथा, भागवते । ९ । ४ ।
१९ ।
"घ्राणञ्च तत्पादसरोजसौरभे

यथा, भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।
"रसाञ्जनन्ताक्ष्यंशैलं रसगर्भञ्च ताक्ष्यंजम्
॥")
हिङ्गुलम् । इति राजनिर्घण्टः ॥

**रसघ्नः**, पुं, (रसं रसस्य दोषावहशक्तिं हन्तीति ।
हन + टक् ।) टङ्कणः । इति राजनिर्घण्टः ॥

**रसजं**, क्ली, (रसाज्जायते इति । जन् + डः ।)
रक्तम् । इति शब्दचन्द्रिका ॥

**रसजः**, पुं, (रसाज्जातः । जन् + डः ।) गुडः ।
इति राजनिर्घण्टः ॥ (यथा, मनुः । ११ ।
१४४ ।
"अन्नाद्यजानां सत्त्वानां रसजानाञ्च सर्व्वशः
॥")
मद्यकीटः । इति हेमचन्द्रः ॥ (रसजाते, त्रि ।
यथा, --
"रसजं पुरुषं विद्याद्रसं रक्षेत् प्रयत्नतः ।
अन्नात् पानाच्च
मतिमानाचाराच्चाप्यतन्द्रितः ॥"
इति सुश्रुते सूत्रस्थाने चतुर्द्दशेऽध्याये ॥)

**रसज्ञा**, स्त्री, (रसं जानातीति । ज्ञा + कः । टाप् ।)
जिह्वा । इत्यमरः ॥ (गङ्गा । इति काशीखण्डे
।
२९ । १४६ ॥) रसवेत्तरि, त्रि ॥ (यथा, रघौ
।
२ । ३६ ।
"यो हेमकुम्भस्तननिःसृतानां
स्कन्दस्य मातुः पयसां रसज्ञः ॥")

**रसज्येष्ठः**, पुं, (रसेषु ज्येष्ठः ।) मधुररसः । इति
हेमचन्द्रः ॥ शृङ्गाररसश्च ॥

**रसतेजः**, [स्] क्ली, (रसात् रसजन्यं वा तेजो
यस्य ।) रक्तम् । इति हेमचन्द्रः ॥

सप्तव्रीहिसमायुक्तां चतुर्द्दिक्षु च दीपिकाम्
॥
सर्व्वोपस्करसंयुक्तां
सर्व्वगन्धादिवासिताम् ।
चत्वारि तिलपात्राणि चतुर्द्दिक्षु निवेशयेत्
॥
ब्रह्मणे वेदविदुषे श्रोत्रियायाहिताग्नये ।
पुराणज्ञे विशेषेण साधुवृत्ताय धीमते ॥
तादृशाय प्रदातव्या रसधेनुः कटम्बिने ।
सर्व्वलक्षणयुक्ताय श्रोत्रियाय कुटुम्बिने ॥
रसधेनुः प्रदातव्या सर्व्वकामेण नित्यदा
।
दाता स्वर्गमवाप्नोति
सर्व्वपातकवर्ज्जितः ॥
दाता च ग्राहको वाथ एककालमभोजनः
।
सोमपानफलं तस्य सर्व्वक्रतुफलं लभेत्
॥
दीयमानान्तु पश्यन्ति ते यान्ति परमां
गतिम् ।
धेनुञ्च पूजयित्वाग्रे गन्धधूपस्रगादिभिः ॥
पूर्ब्बोक्तैरेव मन्त्रैस्तु ततस्तां प्रार्थयेत्
सुधीः ।
प्रार्थनापूर्ब्बकं भक्त्या द्विजाग्र्याय
निवेदयेत् ॥
दश पूर्व्वान् परांश्चैव
आत्मानञ्चैकविंशकम् ।
प्रापयेत् परमं स्थानं स्वर्गान्नावर्त्तते पुनः
॥
एषा ते कथिता राजन् रसधेनुरनुत्तमा ।
ददस्व च महाराज परं स्थानमवाप्नुहि ॥
य इदं पठते नित्यं शृणुयादथ भक्तितः ।
सर्व्वपापविनिर्मुक्तो विष्णुलोके महीयते
॥"
इत्यादि वाराहपुराणे श्वेतोपाख्याने
रसधेनु-
माहात्म्यं समाप्तम् ॥

**रसनं**, क्ली, (रस् + भावे ल्युट् ।) स्वादनम् ।
ध्वनिः । इति मेदिनी ॥ (यथा,
बृहत्संहिता-
याम् । ४६ । ८८ ।
श्रीमत्तुलस्या रसनां तदर्पिते ॥")
तस्याः शुभलक्षणं यथा, --
"तीक्ष्णा दंष्ट्राः समाः श्रेष्ठा जिह्वा रक्ता
समा
शुभा ।
श्लक्ष्णा दीर्घा च विज्ञेया तालुः श्वेतो
धनक्षये ॥"
इति गारुडे ६६ अध्यायः ॥
न्यायमते रसनेन्द्रियग्राह्यो रसो रसत्वादि-
सहितः । यथा, --
"रसस्तु रसनाग्राह्यो मधुरादिरनेकधा ।
सहकारी रसज्ञाया नित्यतादि च पूर्ब्बवत्
॥
घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि
स्मृतः ।
तथा रसो रसज्ञायास्तथा शब्दोऽपि च
श्रुतेः ॥"
इति भाषापरिच्छेदः ॥
"तथारस इति रसत्वादिसहित इत्यर्थः
।" इति
सिद्धान्तमुक्तावली ॥ * ॥ रास्ना । इति
मेदिनी ॥
(अस्याः पर्य्यायो यथा, --
"रास्ना युक्तरसा रस्या सुवहा रसना रसा
।
एलापर्णी च सुरसा सुगन्धा श्रेयसी तथा
॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)
गन्धभद्रा । इति शब्दचन्द्रिका ॥ काञ्ची ।
इति
हेमचन्द्रः ॥ (यथा, रघौ । ७ । १० ।
"कस्याश्चिदासीद्रसना तदानीं
अङ्गुष्ठमूलार्पितसूत्रशेषा ॥")
रज्जुः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**रसनाथः**, पुं, (रसानां नाथः श्रेष्ठ इत्यर्थः ।)
पारदः । इति राजनिर्घण्टः ॥

**रसनायकः**, पुं, (रसानां नायकः नेता रसायन-
विद्याविष्कारकत्वादस्य तथात्वम् ।)
शिवः ।

**रसनालिट्**, [ह्] पुं, (रसनया लेढीति । लिह् +
क्विप् ।) कुक्कुरः । इति हेमचन्द्रः ॥ रसनया लेहनकर्त्तरि, त्रि ॥

**रसनेत्रिका**, स्त्री, (रसो नेत्रमिव तदस्त्यस्या इति ।
रसनेत्र + ठन् ।) मनःशिला । इति हेमचन्द्रः ॥ (मनःशिलाशब्देऽस्या गुणादयो ज्ञेयाः ॥)

**रसपाकजः**, पुं, (रसपाकात् जायते इति ।
जन् + डः ।) गुडः । इति राजनिर्घण्टः ॥

**रसफलः**, पुं, (रसो जलं फले यस्य रसयुक्तं फल-
मस्येति वा । शाकपार्थिववत् मध्यपदलोपी समासः ।) नारिकेलवृक्षः । इति शब्दरत्ना-
वली ॥ (नारिकेलशब्देऽस्य विशेषो विज्ञेयः ॥)

**रसभवं**, क्ली, (रसात् रसे वा भवतीति ।)
भू + अच् ।) रक्तम् । इति राजनिर्घण्टः ॥

**रसमञ्जरी**, स्त्री, (रसानां मञ्जरीव ।) नायक-
नायिकाभेदकग्रन्थविशेषः । यथा, --
“विद्वज्जनमनोभृङ्गरसव्यासङ्गहेतवे ।
एषा प्रकाश्यते श्रीमद्भानुना रसमञ्जरी ॥”
इति तस्य द्वितीयः श्लोकः ॥

**रसमयः**, त्रि, रसस्वरूपः । रसात्मकः रसशब्दात्
मयट्प्रत्ययेन निष्पन्नः ॥ (यथा, भागवते । ३ । ५ । ३४ ।
“आधत्ताम्भो रसमयं कालमायांशयोगतः ॥”)

**रसमर्द्दनं**, क्ली, (रसस्य पारदधातोर्म्मर्द्दनम् ।)
पारदपेषणम् । यथा, --
“इष्टिकाचूर्णचूर्णाभ्यामादौ मर्द्द्यो रसस्ततः ।
दध्ना गुडेन सिन्धूत्थराजिकागृहधूमकैः ॥”
अन्यच्च ।
“कुमारिकाचित्रकरक्तसर्षपैः
कृतैः कषायैर्वृहतीविमिश्रितैः ।
फलत्रिकेणापि विमर्द्दितो रसो
दिनत्रयं सर्व्वमलैर्विमुच्यते ॥”
इति भावप्रकाशः ॥

**रसमारणं**, क्ली, (रसस्य पारदस्य मारणम् ।)
सूतं कृतेन यूषेण वारान् सप्ताभिमूर्च्छयेत्
।
इत्थं संमूर्च्छितः सूतस्त्यजेत् सप्तापि
कञ्चुकान् ॥”
इति भावप्रकाशः ॥
(तथास्य विवृतिः ।
“गन्धकेन रसं प्राज्ञः सुदृढं मर्द्दयेद्भिषक् ।
कज्जलाभो यदा सूतो विहाय
घनचापलम् ॥
दृश्यतेऽसौ तदा ज्ञेयो मूर्च्छितो
रसकोविदैः ।
असौ रोगचयं हन्यादनुपानस्य योगतः
॥”
इति मूर्च्छनम् ॥ * ॥
इति वैद्यकरसेन्द्रसारसंग्रहे
जारणमारणाधि-
कारे ॥)

**रसराजः**, पुं, (रसानां धातूनां राजा इति ।
“राजाहःसखिभ्यष्टच् ।” ५ । ४ । ९१ ।
इति टच् ।)
पारदः । रसाञ्जनम् । इति राजनिर्घण्टः
॥

**रसलेहः**, पुं, (रसान् अपरान् धातून् लेढीति ।
लिह + पचाद्यच् ।) पारदः । इति राज-
निर्घण्टः ॥

**रसवती**, स्त्री, (रसो विविधखाद्यरसो विद्यतेऽस्या-
मिति । रस + “रसादिभ्यश्च ।” ५ । २ ।
९५ ।
इति मतुप् । मस्य वत्वम् ।) महानसम् ।
इत्यमरः ॥ (यथा, सांख्यतत्त्वकौमुद्याम् ।
५ ।
“यथा धूमाद्वह्नित्वसामान्यविशेषः पर्व्वते
अनु-
मीयते तस्य च वह्नित्वसामान्यविशेषस्य
स्व-
लक्षणो वह्निविशेषो दृष्टो रसवत्याम् ॥ *
॥”)

यथा, --
“शुद्धसूतस्य गृह्णीयाद्भिषग्भागचतुष्टयम्
।
शुद्धगन्धस्य भागैकं तावत्
कृत्रिमगन्धकम् ॥
अथवा पारदस्यार्द्धं शुद्धगन्धकमेव हि
।
तयोः कज्जलिकां कुर्य्याद्दिनमेकं
विवर्ज्जयेत् ॥
मृत्तिकां वाससा सार्द्धं
कुट्टयेदतियत्नतः ।
तया वारत्रयं सम्यक् काचकूपीं
प्रलेपयेत् ॥
मृत्तिकां शोषयित्वा तु कूप्यां
कज्जलिकां
क्षिपेत् ।
तां कूपीं वालुकायन्त्रे स्थापयित्वा रसं
पचेत् ॥
अग्निं निरन्तरं दद्याद्यावद्दिनचतुष्टयम् ।
गृह्णीयादूर्द्ध्वसंलग्नं सिन्दूरसदृसं रसम्
॥”
इति भावप्रकाशः ॥
(मतान्तरम् ।
“पृथक् समं समं कृत्वा पारदं
गन्धकन्तथा ।
नवसारं धूमसारं स्फटिकं याममात्रकम्
॥
निम्बूरसेन संमर्द्द्य काचकूप्यां
निवेशयेत् ।
मुखे पाषाणखटिकां दत्त्वा मुद्रां
प्रलेपयेत् ॥
सप्तभिर्मृत्तिकावस्त्रैः पृथक्संशोध्य
वेष्टयेत् ।
सच्छिद्रायां मृदस्थाल्यां कूपिकां तां
निवेशयेत् ।
पूरयेत् सिकतापूरैरागलं मतिमान्
भिषक् ।
निवेश्य चुल्ल्यां दहनं मन्दं मध्यं खरं
क्रमात् ॥

पारदस्य मारणम् । यथा, --
“धूमसारं रसं तोरिं गन्धकं नवसादरम् ।
यामैकं मर्छयेदम्लैर्भागं कृत्वा समं समम् ॥
काचकूप्यां विनिःक्षिप्य ताञ्च मृद्वस्त्रमुद्रया ।
विलिप्य परितो वक्त्रे मुद्रां दत्त्वा विशोषयेत् ॥
अधःसच्छिद्रपिठरीमध्येकूपीं निवेशयेत् ।
पिठरीवालुकापूरैर्भृत्वा वा कूपिकागलम् ॥
निवेश्य चुल्ल्यां तदधो वह्निं कुर्य्याच्छनैः शनैः
।
तस्मादप्यधिकं किञ्चित् पावकं ज्वालयेत्
क्रमात् ॥
एवं द्वादशभिर्यामैर्म्रियते रस उत्तमः ।
स्फोटयेत् स्वाङ्गशीतं तमूद्र्ध्वगं गन्धकं त्यजेत्
॥
अधस्थञ्च मृतं सूतं गृह्णीयात् तन्तु मात्रया ।
यथोचितानुपानेन सर्व्वकर्म्मसु योजयेत् ॥”
इति भावप्रकाशः ॥

**रसमूर्च्छनं**, क्ली, (रसस्य पारदस्य मूर्च्छनम् ।)

पारदस्य मूर्च्छाकरणम् । यथा, --
“त्र्युषणं त्रिफलाबन्ध्याकन्दैः क्षुद्रद्वयान्वितैः ।
चित्रकोर्णानिशाक्षारकन्याककनकद्रवैः ॥
रसविशिष्टे, त्रि ॥ (यथा, आर्य्यासप्तशती
। ४९८ ।
“रोषोऽपि रसवतीनां न कर्क्कशो वा
चिरानु-
बन्धी वा ॥”)

**रसशोधनं**, क्ली, (रसः शोध्यतेऽनेनेति । शुध् +

णिच् + ल्युट् । रसं पारदं
शोधयत्यनेनेति वा ।)
टङ्कणः । इति हेमचन्द्रः ॥ (रसस्य
शोधनम् ।)
पारदशुद्धिः । यथा, --
“कुमारिकाचित्रकरक्तसर्षपैः
कृतैः कषायैर्वृहतीविमिश्रितैः ।
फलत्रिकेणापि विमर्द्दितो रसो
दिनत्रयं सर्व्वमलैर्व्विमुच्यते ॥
एवं कदर्थितः सूतः षण्ढो भवति
निश्चितम् ।
बह्वौषधीकषायेण स्वेदितः स बली भवेत्
॥
सर्पाक्षीचिञ्चिकावन्ध्याभृङ्गारैः स्वेदितो
बली ।
ततः सपावकद्रावैः स्विन्नः
स्यादतिदीप्तिमान् ॥”
इति भावप्रकाशः ॥
(मतान्तरम् ।
“जयन्त्या वर्द्धमानस्य चार्द्रकस्य रसेन
च ।
वायस्याश्चानुपूर्व्व्यैवं मर्द्दनं रसशोधनम्
॥
एषां प्रत्येकशस्तावन्मर्द्दयेत् स्वरसेन च ।
यावच्च शुष्कतां याति सप्तवारं विचक्षणः
॥
उद्धृत्योष्णारनालेन मृद्भाण्डे क्षालयेत्
सुधीः ।
सर्व्वदोषविनिर्म्मुक्तः सप्तकञ्चुकवर्ज्जितः
॥
जायते शुद्धसूतोऽयं युज्यते सर्व्वकर्म्मसु
॥”
इति वैद्यकरसेन्द्रसारसंग्रहे
जारणमारणाधि-
कारे ॥)

प्रज्वाल्य द्वादशं यामं स्वाङ्गशीतं
समुद्धरेत् ।
स्फोटयित्वा तु मुक्ताभमूर्द्धलग्नं वलिं
त्यजेत् ।
अधःस्थं रससिन्दूरं सर्व्वरोगेषु
योजयेत् ॥”
इति रससिन्दूरम् ॥
इति वैद्यकरसेन्द्रसारसंग्रहे
जारणमारणाधि-
कारे ॥)

**रसस्थानं**, क्ली, (रसः स्थानमाधार उत्पत्ति-

स्थानं यस्य । रसस्य पारदस्य
स्थानमित्येके ।)
हिङ्गुलम् । इति शब्दचन्द्रिका ॥
शरीरस्य
रसस्थलञ्च । तस्य प्रमाणं रसशब्दे
द्रष्टव्यम् ॥

**रसा**, स्त्री, (माधुर्य्यादिरूपो विविधो रसोऽस्त्यस्या-

मिति । “अर्शआदिभ्योऽच् ।” ५ । २ ।
१२७ ।
इति अच् । रसति शब्दायते इति वा ।
रस +
अच् । टाप् च ।) पृथिवी । इत्यमरः ॥
रसना । (तत्पर्य्यायो यथा, भावप्रकाशे
। १ । १ ।
“रास्ना युक्तरसा रस्या सुवहा रसना
रसा ।
एलापर्णी च सुरसा सुगन्धा श्रेयसी
तथा ॥”)
पाठा । (अस्याः पर्य्यायो यथा,
भावप्रकाशे । १ । १ ।
“पाठाम्बष्ठाम्बष्ठकी च प्राचीना
पापचेलिका ।
एकाष्ठीला रसा प्रोक्ता पाठिका
वरतिक्तिका ॥”
शल्लकी । (अस्याः पर्य्यायो यथा, --
“शल्लकी गजभक्ष्या च सुवहा सुरभी
रसा ।

| | | |
|---|---|---|
| | **रससिन्दूरं**, क्ली, (रसजातं सिन्दूरमिति ।) औषधविशेषः । तस्य नामान्तरं सिन्दूररसः । | महेरुणा कुन्दुरुकी वल्लकी च बहुस्रवा ॥”<br>इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)<br>कङ्गुः । इति मेदिनी ॥ द्राक्षा । काकोली ।<br>इति शब्दरत्नावली ॥ (रसातलम् । यथा,<br>भागवते । १० । ६ । १२ ।<br>“रसा दिशश्च प्रतिनेदिरे जनाः<br>पेतुः क्षितौ वज्रनिपातशङ्कया ॥”<br>यथा च तत्रैव । ३ । १३ । १६ । |

"सृजतो मे क्षितिर्वार्भिः प्लाव्यमाना रसां गता ॥"
"रसां रसातलं गता ।" इति तट्टीकायां स्वामि-
पादाः ॥ नदी । यथा, ऋग्वेदे । १ । ११२ । १२ ।
"याभी रसां क्षोदसोद्नः पिपिण्वथुः ॥"
"रसां नदीम् ।" इति तद्भाष्ये सायणः ॥)

**रसाखनः**, पुं, (खनतीति । खन् विदारे + अच् ।
रसाया भूमेः खनः ।) कुक्कुटः । इति शब्द-
चन्द्रिका ॥

**रसाग्रजं**, क्ली, (रसानां अग्रजं रसस्य अग्रे
जायते इति वा । जन् + डः ।) रसाञ्जनम् ।
इति राजनिर्घण्टः ॥

**रसाञ्जनं**, क्ली, (रसजातमञ्जनं इति मध्यपदलोपी
कर्म्मधारयः ।) रसजाताञ्जनविशेषः । रसवत्
इति भाषा ॥ तत्पर्य्यायः । रसगर्भम् २ तार्क्ष्य-
शैलम् ३ । इत्यमरः ॥ रसोद्भूतम् ४ रसाग्र-
जम् ५ कृतकम् ६ बालभैषज्यम् ७ दार्व्वी-
क्वाथोद्भवम् ८ रसराजः ९ वर्य्याञ्जनम् १०
रसनार्भम् ११ अग्निसारम् १२ । अस्य गुणाः ।
हिमत्वम् । तिक्तत्वम् । चक्षुष्यत्वम् । मधुरत्वम् ।
कटुत्वम् ।
रक्तपित्तविषच्छर्द्दिहिक्कापस्मार
नाशित्वञ्च ।
"रीत्यान्तु ध्मायमानायां तत्किट्टन्तु रसाञ्जनम् ।
तदभावे तु कर्त्तव्यं दार्व्वीक्वाथसमुद्भवम् ॥"
इति राजनिर्घण्टः ॥
अपि च ।
"दार्व्वीक्वाथसमं क्षीरं पादं पक्त्वा यथाघनम् ।
तदा रसाञ्जनाख्यं तन्नेत्रयोः परमं हितम् ॥
महौजसश्चोत्पत्त्यैव महासाहसिनस्तथा ।
सकलेशस्य च हरेस्तेजसा हतविक्रमाः ॥
विलेशया इव सदा विवरे निवसन्ति हि ।
ये वै वाग्भिः सरमया शक्रदूत्या निरन्तरम् ॥
मन्त्रवर्णाभिरसुरास्ताडिताविभ्यति स्म ह ॥")

**रसादानं**, क्ली, (रसानां आदानं ग्रहणम् ।) शोष-
णम् । इति हेमचन्द्रः ॥ (रसाया दानम् ।)
भूमिदानञ्च ॥

**रसाधारः**, पुं, (रसानां जलानां आधारः । रसां
पृथिवीं धरति स्वाकर्षणेनेति वा । धृ + अण् ।)
सूर्य्यः । इति शब्दरत्नावली ॥
रसस्याधारश्च ॥

**रसाधिकः**, पुं, (रसाय स्वर्णादीनां द्रवीकरणाय
अधिकः प्रबलः ।) टङ्कणः । इति राज-
निर्घण्टः ॥ अधिकरसश्च ॥

**रसाधिका**, स्त्री, (रसेन अधिका ।) काकोली-
द्राक्षा । इति राजनिर्घण्टः ॥

**रसाभासः**, पुं, (रस इव आभासते इति । आ +
भास् + अच् ।) अनौचित्यविशिष्टरसः । तस्य
लक्षणं यथा, --
"अनौचित्यप्रवृत्तत्वे आभासो रसभावयोः ।"
अनौचित्यञ्चात्र रसानां भरतादिप्रणीतलक्ष-
णानां सामग्रीरहितत्वे सत्येकदेशयोगित्वोप-
लक्षणपरं बोध्यम् । तच्च बालव्युत्पत्तये एक-
अवचित्य गिरौ पुरो निषण्णा
स्वकचानुत्कचयाञ्चकारभर्त्रा ॥"
तिर्य्यग्गतत्वे यथा, --
"मल्लीमतल्लीषु वनान्तरेषु
वल्ल्यन्तरे वल्लभमाह्वयन्ती ।
पञ्चद्विपञ्ची कलनादभङ्गी
सङ्गीतमङ्गीकुरुते स्म भृङ्गी ॥"
आदिशब्दात्तापसादयः । रौद्राभासो यथा, --
"रक्तोत्फुल्लविशाललोलनयनः कम्पोत्तराङ्गो मुहु-
र्म्मुक्ताकर्णेमपेतभीर्धृतधनुर्व्वाणो हरेः पश्यतः ।
आध्मातः कटुकोक्तिभिः स्वमसकृद्धोर्व्विक्रमं कीर्त्तयन्
अंसास्फोटपटुर्य्युधिष्ठिरमसौ हन्तुं प्रविष्टो-ऽर्ज्जुनः ॥"
भयानकाभासो यथा, --
"अशक्नुवन् सोढुमधीरलोचनः
सहस्ररश्मेरिव यस्य दर्शनम् ।
प्रविश्य हेमाद्रिगुहागृहान्तरं
निनाय विभ्यद्दिवसानि कौशिकः ॥"
स्त्रीनीचविषयमेव हि भयं रसप्रकृतिः । एव-
मन्यत्र । इति साहित्यदर्पणे ३ परिच्छेदः ॥

**रसाम्लं**, क्ली, (रसात्मकोऽम्लो यत्र ।) वृक्षाम्लम् ।
इति राजनिर्घण्टः ॥ चुक्रम् । इति
भावप्रकाशः ॥

**रसाम्लः**, पुं, (रसेन सह अम्लो यत्र ।) अम्लवेतसः ।
इति राजनिर्घण्टः ॥

**रसायकः**, पुं, (रसं रसत्वमयति प्राप्नोति इति ।
अय + ण्वुल् ।) तृणविशेषः । इति शब्द-
चन्द्रिका ॥

**रसायनं**, क्ली, कटिः । इति राजनिर्घण्टः ॥ (रसो

रसाञ्जनं तार्क्ष्यशैलं रसगर्भञ्च तार्क्ष्यजम् ।
रसाञ्जनं कटु श्लेष्मविषनेत्रविकारनुत् ।
उष्णं रसायनं तिक्तं छेदनं व्रणदोषहृत् ॥”
इति भावप्रकाशः ॥

**रसाढ्यः**, पुं, (रसेनाढ्यः युक्तः ।) आम्रातकः ।
इति राजनिर्घण्टः ॥ (आम्रातकशब्देऽस्य
विवरणं ज्ञातव्यम् ॥)

**रसातलं**, क्ली, (रसायाः तलं निम्नभागस्थलोक-
विशेषः ।) पातालम् । इत्यमरः ॥ (यथा,
महाभारते । १२ । ३४७ । ५६ ।
“जग्राह वेदानखिलान् रसातलगतो हरिः
॥”)
पातालभेदः । यथा, --
“अतलं वितलञ्चैव नितलञ्च तलातलम् ॥
महातलञ्च सुतलं सप्तमञ्च रसातलम् ॥
पातालभेदाः सप्तैव नामतः कीर्त्तिता अमी ।
तत्र पातालमेकैकं दशसाहस्रयोजनम् ॥”
इति शब्दमाला ॥
(इदमेव निवातकवचानां निवासस्थानम् ।
तथा च देवीभागवते । ८ । २० । ८ -- १२
।
“ततोऽधस्ताच्च विवरे रसातलसमाह्वये ।
दैतेया निवसन्त्येव पणयो दानवाश्च ये ॥
निवातकवचा नाम हिरण्यपुरवासिनः ।
कालेया इति च प्रोक्ताः प्रत्यनीका हवि-
र्भुजाम् ॥

देशतो दर्श्यते । उपनायकसंस्थायां
मुनिगुरु-
पत्नीगतायाञ्च । बहुनायकविषयायां
रतौ
तथानुभयनिष्ठायां प्रतिनायकनिष्ठत्वे
तद्वदधम-
पात्रतिर्य्यगादिगते शृङ्गारे अनौचित्यम् ।
रौद्रे
गुर्व्वादिगतकोपे । शान्ते च हीननिष्ठे ।
गुर्व्वा-
द्यालम्बने हास्ये । ब्रह्मवधाद्युत्साहे ।
अधम-
पात्रगते तथा वीरे । उत्तमपात्रगतत्वे
भयानके
ज्ञेयमेवमन्यत्र । तत्र
रतेरुपनायकनिष्ठत्वे यथा
मम ।
“स्वामी मुग्धतरो वनं घनमिदं
बालाहमेकाकिनी
क्षौणीमावृणुते तमालमलिनच्छायातमः-
सन्ततिः ।
तन्मे सुन्दर ! मुञ्च कृष्ण ! सहसा
वर्त्मेति
गोप्या गिरः
श्रुत्वा तां परिरभ्य मन्मथकलासक्तो
हरिः
पातु वः ॥”
बहुनायकनिष्ठत्वे यथा, --
“कान्तास्त एव भुवनत्रितयेऽपि मन्ये
येषां कृते सुतनु ! पाण्डुरयं कपोलः ।”
अनुभयनिष्ठत्वे यथा, --
मालतीमाधवे नन्दनस्य मालत्याम् ।
पश्चा-
दुभयनिष्ठत्वेऽपि प्रथममेकनिष्ठत्वे
रतेराभासत्व-
मिति श्रीमल्लोचनकाराः । तत्रोदाहरणं
यथा
रत्नावल्याम् । सागरिकाया
अन्योऽन्यदर्शनात्
प्राक् वत्सराजे रतिः ।
प्रतिनायकनिष्ठत्वे यथा

दुग्धं अयनं मूलं यस्येति ।) तक्रम् । इति
हेम-
चन्द्रः ॥ विषम् । (रसा रसरक्तादय ईयन्ते
प्राप्यन्ते अनेनेति । इ + ल्युट् ।)
ज्वराव्याधि-
नाशकौषधम् । इति मेदिनी ॥ (यथा, माधे
।
२ । ९३ ।
“षाड्गुण्यमुपयुञ्जीत शक्त्यपेक्षं रसायनम् ।
भवन्त्यस्यैवमङ्गानि स्थास्नूनि बलवन्ति च
॥”)
“न सूतेन विना कान्तं न कान्तेन विना
रसः ।
सूतकान्तसमायोगात् रसायनमुदीरितम् ॥”
इति राजनिर्घण्टः ॥ * ॥
अथ रसायनाधिकारः । तत्र रसायनस्य
लक्षणमाह ।
“यज्जराव्याधिविध्वंसि
वयसस्तम्भकन्तथा ।
चक्षुष्यं वृंहणं वृष्यं भेषजं तद्रसायनम् ॥”
रसायनस्य फलमाह ।
“दीर्घमायुः स्मृतीर्मेधामारोग्यं तरुणं वयः ।
देहेन्द्रियबलं कान्तिं नरो विन्देद्रसायनात्
॥”
तद्विधिमाह ।
“पूर्व्वे वयसि मध्ये वा मनुष्यस्य रसायनम्
।
प्रयुञ्जीत भिषक् प्राज्ञः स्निग्धशुद्धतनोः
सदा ॥
नाविशुद्धशरीरस्य युक्तो रासायनो विधिः ।
न भाति वाससि श्लिष्टे रङ्गयोग इवाहितः
॥”

|  | हयग्रीववधे। हयग्रीवस्य जलक्रीडावर्णने। अधमपात्रगतत्वे यथा, -- “जघनस्थलनद्धपत्रवल्ली- गिरिमल्लीकुसुमानि कापि भिल्ली। |  |
| --- | --- | --- |

अथ तदुदाहरणानि ।
“शीतोदकं पयः क्षौद्रं घृतमेकैकशो
द्विशः ।
त्रिशः समस्तमथवा प्राक् पीतं
स्थापयेद्वयः ॥
मण्डूकपर्ण्याः स्वरसः प्रभाते
प्रयोज्य यष्टीमधुकस्य चूर्णम् ।
रसो गुडुच्यास्तु समूलपुष्पः
कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः ॥
आयुःप्रदान्यामयनाशनानि
बलाग्निवर्णस्वरवर्द्धनानि ।
मेध्यानि चैतानि रसायनानि
मेध्या विशेषेण च शङ्खपुष्पी ॥”
मण्डूकपर्णी ब्राह्मी । वरभी इति लोके ।
तदलाभे
मञ्जिष्ठापि ग्राह्या । तस्या अपि
रसायनत्वात् ।
“माक्षिकेण तुगाक्षीर्य्या पिप्पल्या
लवणेन च ।
त्रिफला सितया वापि युक्ता सिद्धं
रसायनम् ॥
सिन्धूत्थशर्क्कराशुण्ठीकणामधुगुडैः
क्रमात् ।
वर्षादिष्वभया प्राश्या रसायनगुणैषिणा
॥
पुनर्नवस्यार्द्धपलं नवस्य
पिष्टं पिबेद्यः पयसार्द्धमासम् ।
मासत्रयं तत्त्रिगुणं समां वा
जीर्णोऽपि भूयः स पुनर्नवः स्यात् ॥
ये मासमेकं स्वरसं पिबन्ति
दिने दिने भृङ्गरजःसमुत्थम् ।
क्षीराशिनस्ते बलवीर्य्ययुक्ताः
समाशतं जीवनमाप्नुवन्ति ॥
शतावरी मुण्डितिका गुडूची
सहस्तिकर्णा सहतालमूली ।
एतानि कृत्वा समभागयुक्ता-
न्याज्येन किंवा मधुनावलिह्यात् ॥
जरारुजामृत्युवियुक्तदेहो
भवेन्नरो वीर्य्यबलादियुक्तः ।
वाजीकरो वा मलिने वस्त्रे रङ्ग इवाफलः ॥”
“रसायनानां द्विविधं प्रयोगमृषयो विदुः ।
कुटीप्रावेशिकं मुख्यं वातातपिकमन्यथा ॥
निर्व्वाते निर्भये हर्म्ये प्राप्योपकरणे पुरे ।
दिश्युदीच्यां शुभे देशे त्रिगर्भां सूक्ष्मलोचनाम्
॥
धूमातपरजोव्यालस्त्रीमूर्खाद्यविलङ्घिताम्।
सज्जवैद्योपकरणां सुमृष्टां कारयेत् कुटीम् ॥
अथ पुण्येऽह्नि संपूज्य पूज्यांस्तां
प्रविशेच्छुचिः ।
तत्र संशोधनैः शुद्धः सुखी जातबलः पुनः ॥
ब्रह्मचारी धृतियुतः श्रद्दधानो जितेन्द्रियः ।
दानशीलदयासत्यव्रतधर्म्मपरायणः ॥
देवतानुस्मृतो युक्तो युक्तस्वप्नप्रजागरः ।
प्रियौषधः पेशलवाक् प्रारभेत रसायनम् ॥
हरीतकीमामलकं सैन्धवं नागरं वचाम् ।
हरिद्रां पिप्पलीं वेल्लं गुडञ्चोष्णाम्बुना पिबेत् ॥
स्निग्धः स्विन्नो नरः पूर्ब्बं तेन साधु
विरिच्यते ।
ततः शुद्धशरीराय कृतसंसर्ज्जनाय च ॥
त्रिरात्रं पञ्चरात्रं वा सप्ताहं वा घृतान्वितम् ।
दद्याद्यावकमाशुद्धेः पुराणशकृतोऽथ वा ॥
इत्थं संस्कृतकोष्ठस्य रसायनमुपाहरेत् ।
यस्य यद्यौगिकं पश्येत् सर्व्वमालोच्य
सात्म्य-
वित् ॥”
“कुटीप्रवेशः क्षणिनां परिच्छदवतां हितः ।
अतोऽन्यथा तु ये तेषां सूर्य्यमारुतिकोविधिः
॥
वातातपसहायोगा वक्ष्यन्तेऽतो विशेषतः ।
सुखोपचारा भ्रंशेऽपि ये न देहस्यवाधकाः ॥”
इत्युत्तरस्थानीयबाग्भटे ३९ अध्याये ॥
विशेषस्तु तस्मिन्नध्याये ज्ञातव्यः ॥ * ॥
रसः
पारदः लक्षणया तज्जातीय-हरितालादिकञ्च
अयनं आश्रय उपायो वा यस्य तत् ।
स्वर्णादि-
करणम् ।
अथरसायने ईश्वर उवाच ।
वसुराद्यं शिवञ्चाद्यं मायाबिन्दुसमन्वितम्
॥
बीजत्रयञ्चाष्टशतं प्रजपेत् सम्बलोपरि ।
अशीतितोलकमानं कृष्णधेनुसमुद्भवम् ॥
दुग्धमानीय यत्नेन चाष्टोत्तरशतं जपेत् ।
वस्त्रयुक्तेन सूत्रेण दुग्धमध्ये विनिक्षिपेत् ॥
उत्तापं ज्वालयेद्धीमान् मन्दमन्देन बह्निना
।
रिपुर्वेदार्द्धपर्य्यन्तमर्द्धशोषं भवेद्यदि ॥
तदैवोत्तोल्य तद्द्रव्यं दुग्धं तोये
विनिक्षिपेत् ॥”
ततः परीक्षा कर्त्तव्या ।
“निर्धूमं पावके द्रव्यं दृष्ट्वा उत्थाप्य
यत्नतः ।
तत्रैव प्रजपेन्मन्त्रं सर्व्वबन्धनमात्मकम् ॥
सार्द्धेन तोलकं ताम्रं दृष्ट्वा उत्थाप्य
यत्नतः ।
गुञ्जाप्रमाणं तद्द्रव्यं सत्यं सत्यं हि
शङ्करि ! ।
रौप्यं भवति तद्रव्यं नान्यथा शङ्करोदितम्
॥”
प्रकारान्तरम् ।
“कृष्णसर्पमेकं गृहीत्वा तस्य मुखे
शिववीर्य्यं पूर-
यित्वा सर्पस्य मुखं गुदञ्च बद्धा
नूतनमृण्मय-
स्थालीमध्ये संस्थाप्य स्थालीमुखं
मृदादिना
संलिप्य निर्ज्जनस्थाने प्रातरारभ्य
पुनःप्रात-
र्यावत् बह्निना ज्वालं दद्यात् । ततः
शुभक्षणे
स्थालीमुखमुद्घाट्य सर्पभस्म विहाय
शिववीर्य्यं
गृह्णीयात् । ततस्तोलकमितं ताम्रं
गालयित्वा
तस्मिन् गालितताम्रे रक्तिकमात्रं तत्
शिववीर्य्यं

विभाति देवप्रतिमः स नित्यं
प्रभामयो भूरिविवृद्धबुद्धिः ॥
पीताश्वगन्धा पयसार्द्धमासं
घृतेल तैलेन सुखाम्बुना वा ।
वीर्य्यस्य पुष्टिं वपुषो विधत्ते
बालस्य शस्यस्य यथाम्बुवृष्टिः ॥
अयःपलं गुग्गुलुरत्र योज्यः
पलत्रयं व्योषपलानि पञ्च ।
पलानि चाष्टौ त्रिफलारजश्च
कर्षं लिहन् यात्यमरत्वमेव ॥”
लोहगुग्गुलुः ।
“न केवलं दीर्घमिहायुरश्नुते
रसायनं यो विविधं निषेवते ।
गतिं स देवर्षिनिषेवितां शुभां
प्रपद्यते ब्रह्म तथैव चाक्षयम् ॥”
इति रसायनाधिकारे भावप्रकाशः ॥
(तथा च ।
“लाभोपायोहिशस्तानांरसादीनां
रसायनम् ।
पूर्व्वे वयसि मध्ये वा तत् प्रयोज्यं
जितात्मनः ।
स्निग्धस्य स्रुतरक्तस्य विशुद्धस्य च
सर्व्वथा ॥
नाविशुद्धे शरीरे हि युक्तो रासायनो
विधिः ।

“गोमूत्रं हरितालञ्च गन्धकञ्च मनःशिलाम् ।
समं समं गृहीत्वा तु यावत् शुष्यति पेषयेत् ॥
एकादशदिनं यावत् यत्नेन रक्षयेत् शुचिः ।
मन्त्रेण धूपदीपादिनैवेद्यैर्दुग्धमिश्रितैः ॥
मन्त्रस्तु ॐ हरिहराय रसायनं सिद्धिं
कुरुकुरु
स्वाहा । अयुतजपेन सिद्धिः ।
तद्वटीं गोलकं कृत्वा वस्त्रेणावेष्टयेत् पुनः ।
मृत्तिकां लेपयेत्तस्य च्छायाशुष्कन्तु कारयेत्
॥
गर्त्ते कुण्डे विनिक्षिप्ते पलाशकाष्टवह्निना ।
ज्वालयेदष्टयामन्तु नान्यथा शङ्करोदितम् ॥
तद्भस्म जायते सिद्धिर्व्विद्धि सिद्धिसमाकुलम्
।
ताम्रपात्रे अग्निमध्ये बिन्दुमात्रं नियच्छति ॥
तत्क्षणाज्जायते स्वर्णं नान्यथा शङ्करोदितम्
।
दातव्यं गुरुभक्ताय न दद्याद्दुष्टमानसे ।
सिद्धपीठे भवेत्सिद्धिर्गायत्त्रीलक्षजापनैः ॥
यस्मै कस्मै न दातव्यं दातव्यं शिवभक्तके ।
अग्निमुखं द्विजातीनां पाचकानां विशेषतः ॥
गोप्यं गोप्यं महागोप्यं देवानामपि दुर्लभम् ॥”
प्रकारान्तरम् ।
“आनीय बहुयत्नेन सम्बलं तोलकद्वयम् ।

दद्यात् तेन तत्क्षणादेव तत्ताम्रं सुवर्णीभूतम्
।
आदौ शिवार्च्चनं कृत्वा पश्चात् प्रयोग एष
कर्त्तव्यः ॥” इति दत्तात्रेयतन्त्रे
ईश्वरदत्तात्रेय-
संवादे रसायनं नाम त्रयोदशः पटलः ॥)

**रसायनः**, पुं, गरुडः । बिडङ्गः । इति मेदिनी ॥

**रसायनफला**, स्त्री, (रसायनेन फलति या ।
फल् + अच् । टाप् ।) हरीतकी । इति
त्रिकाण्डशेषः ॥

**रसायनश्रेष्ठः**, पुं, (रसायनेषु श्रेष्ठः ।) पारदः ।
इति राजनिर्घण्टः ॥

**रसायनी**, स्त्री, (रसान् तैलादीन् अयते
प्राप्नोतीति । अय् + ल्युः । ङीष् ।)
गुडूची ।
काकमाची । महाकरञ्जः । गोरक्षदुग्धा ।
मांसच्छदा । इति राजनिर्घण्टः ॥ (मञ्जिष्ठा
।
अस्याः पर्य्यायो यथा, --
“मञ्जिष्ठा विकसा जिङ्गी समङ्गा
कालमेषिका ।
मण्डूकपर्णी भण्डीरी भण्डी
योजनवल्ल्यपि ॥
रसायन्यरुणा काला रक्ताङ्गी रक्तयष्टिका ।
भण्डीतकी च गण्डीरी मञ्जूषा वस्त्ररञ्जिनी
॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**रसालं**, क्ली, (रसं आलातीति । आ + ला +
कः ।) सिह्लकम् । बीलम् । इति मेदिनी ॥

**रसालः**, पुं, (रसं आलाति गृह्णाति । आ + ला +
कः ।) इक्षुः । आम्रः । इत्यमरः ॥ (यथा,
साहित्यदर्पणे १० परिच्छेदे
अतिशयोक्त्यलङ्कारे ।
“प्रागेव हरिणाक्षीणां
चित्तमुत्कलिकाकुलम् ।
पाश्चादुद्भिन्नवकुलरसालमुकुलश्रियः ॥”)

**रसालसा**, स्त्री, (रसेन अलसा ।) नाडी । इति शब्दचन्द्रिका ॥

**रसाला**, स्त्री, (रसान् आलातीति । आ + ला + कः । टाप् ।) रसना । दूर्व्वा । विदारी । इति मेदिनी ॥ द्राक्षा । इति शब्दरत्नावली ॥ शिखरिणी । तत्पर्य्यायः । मार्ज्जिता २ । इत्यमरः ॥ तस्याः करणप्रकारो यथा, --
"आदौ माहिषमम्लमम्बुरहितं दध्याढकं शर्करां
शुभ्रां प्रस्थयुगोन्मितां शुचिपटे किंञ्चिच्च कञ्चित् क्षिपेत् ।
दुग्धेनाद्धघनेन मृण्मयनवस्थाल्यां दृढं स्रावये-
देलाबीजलवङ्गचन्द्रमरिचैर्य्योग्यैश्च तद्योजयेत् ॥
भीमेन प्रियभोजनेन रचिता नाम्ना रसाला स्वयं
श्रीकृष्णेन पुरा पुनःपुनरियं प्रीत्या समास्वादिता ।
एषा येन वसन्तवर्ज्जितदिने सेव्या परं नित्यश-
स्तस्य स्यादतिवीर्य्यवृद्धिरनिशं सर्व्वेन्द्रियाणां बलम् ॥
ग्रीष्मे तथा शरदि ये रविशोषिताङ्गा
ये च प्रमत्तवनितासुरतातिखिन्नाः।
ये चापि मार्गपरिसर्पणशीर्णगात्रा-
स्तेषामियं वपुषि पोषणमाशु कुर्य्यात् ॥
रसाला शुक्रला बल्या रोचनी वातपित्तजित् ।
दीपनी बृंहणी स्निग्धा मधुरा शिशिरा सरा ।
रक्तपित्तं तृषां दाहं प्रतिश्यायं विनाशयेत् ॥"
इति राजनिर्घण्टः ॥

कल्पानन्दास्वादनं वा । इति वेदान्तसारः ॥ * ॥
"चतुर्थं विघ्नमाह अखण्डेति । उक्तसविकल्पकसमाध्योर्म्मध्ये द्वितीयः शब्दाननुविद्धस्त्रिपुटीविशिष्टस्तस्मिन् य आनन्दो वाह्यशब्दादिविषयप्रपञ्चभारत्यागप्रयुक्तो न तु चैतन्यप्रयुक्तः । यथा निधिग्रहणाय प्रवृत्तस्य निधिपरिपालकभूतप्रेताद्यावृतस्य निधिप्राप्तेः अभावेऽपि भूताद्यनिष्टनिवृत्तिमात्रेण कोऽपि महानानन्दो भवति तथा सविकल्पकसमाधावखण्डवस्त्वनवलम्बनेन नित्यानन्दरसास्वादनाभावेऽपि अनिष्टवाह्यप्रपञ्चनिवृत्तिजन्यानन्दं सविकल्पकरूपं ब्रह्मानन्दभ्रमेण स्वादयति तद्रसास्वादनमित्यर्थः । लक्षणान्तरमाह समाधीत्यादि । निर्व्विकल्पकसमध्यारम्भकाले अनुभूय मानसविकल्पका दत्यागासहिष्णुतया पुनस्तस्यैवास्वादनं रसास्वाद इत्यर्थः ।" इति सुबोधन्याख्या तट्टीका ॥

**रसास्वादी**, [न्] पुं, (रसं मधु आस्वादयितुं शीलमस्य । आ + स्वद् + णिनिः ।) भ्रमरः । इति शब्दमाला ॥ रसास्वादविशिष्टे, त्रि ॥

**रसाह्वः**, पुं, (रसः आह्वा आख्या यस्य ।) सरलद्रवः । इति रत्नमाला ॥

**रसिकः**, पुं, (रसोऽस्त्यस्यात्रेति वा । रस् + ठन् ।) सारसपक्षी । इति राजनिर्घण्टः ॥ तुरङ्गः । हस्ती । इति सारस्वतः ॥ सरसे, त्रि । इति मेदिनी ॥ (यथा, भागवते । १ । १ । ३ ।
"पिबत भागवतं रसमालयं
मुहुरहो रसिका भुवि भावुकाः ॥")

**रसोद्भवं**, क्ली, (रसात् पारदधातोरुद्भवतीति । उत् + भू + अच् ।) हिङ्गुलम् । इति राजनिर्घण्टः ॥ रसजाते, त्रि ॥

**रसोनः**, पुं, (रसेनैकेनोनः ।) रसुनः । इति राजनिर्घण्टः ॥ (तस्योत्पत्तिर्यथा, --
"राहोरमृतचौर्य्येण लूनात् ये पतिता मलात् ।
अमृतस्य कणा भूमौ ते रसोनत्वमागताः ॥
द्विजा नाश्नन्ति तमतो दैत्यदेहसमुद्भवम् ।
साक्षादमृतसम्भूतेर्ग्रामणीः सरसायनम् ॥"
इति वाभटे उत्तरस्थाने ३९ अध्यायः ॥
"अथ वीर्य्यञ्च वक्ष्यामि रसोनस्य महामते ।
रसैश्च पञ्चभिर्युक्तो रसोनस्तेन वर्जितः ॥"
"दध्ना वातादिशमनो रसोनो विहितो बुधैः ।
जाङ्गलानि रसान्येव भोजनार्थे प्रदापयेत् ॥"
इति हारीते कल्पस्थाने तृतीयेऽध्याये ॥ अथास्यगुणाः ।
"रसोनो बृंहणो वृष्यः स्निग्धोष्णः पाचनः सरः ।
रसे पाके च कटुकस्तीक्ष्णो मधुरको मतः ॥
भग्नसन्धानकृत्कण्ठ्यो गुरुः पित्तास्रवृद्धिदः ।
बलवर्णकरो मेधाहितो नेत्र्यो रसायनः ॥"
इति च भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥

अपि च ।
"दध्नोऽर्द्धाढकमीषदम्लमधुरंखण्डस्य
चन्द्रद्युतेः
प्रस्थं क्षौद्रपलञ्च पञ्च हविषः
शुण्ठ्याश्चतुर्म्माष-
कान् ।
एलामाषचतुष्टयं मरिचतः कर्षं लवङ्गं तथा
धृत्वा शुक्लपटे शनैः करतलेनोन्मथ्य
विस्रा-
वयेत् ॥
मृद्भाण्डे मृगनाभिचन्दनरससृष्टेऽगुरूद्धूपिते
कर्पूरेण सुगन्धितं तदखिलं संलोड्य
संस्थाप-
येत् ।
स्वस्वार्थे मथुरेश्वरेण रचिता ह्येषा रसाला
स्वयं
भोक्तुर्म्मन्मथदीपनी सुखकरी कान्तेव
नित्यं
प्रिया ॥"
इति भावप्रकाशः ॥

**रसालिहा**, स्त्री, शीर्णनाला । इति शब्दचन्द्रिका ॥

चाकुलिया इति भाषा ॥

**रसाली**, स्त्री, (रसान् आलाति या । आ +

ला + कः । ङीप् ।) पुण्ड्रकेक्षुः । इति
राज-
निर्घण्टः ॥

**रसाश्वासा**, स्त्री, पलाशीलता । इति राज-

निर्घण्टः ॥

**रसास्वादः**, पुं, (रसस्य आस्वादः ।) अखण्ड-

वस्तनवलम्बनेनापि चित्तवृत्तेः
सविकल्पा-
नन्दास्वादनम् । समाध्यारम्भसमये सवि-

**रसिका**, स्त्री, (रसिक + टाप् ।) रसाला ।

इक्षुरसः । इति मेदिनी ॥ काञ्ची । रसना ।
इति
विश्वः ॥

**रसिकेश्वरः**, पुं, (रसिकानां रसज्ञानामीश्वरः ।)

श्रीकृष्णः । यथा, --
"वृन्दावनान्तरे रम्ये रासोत्सवसमुत्सुकम् ।
रासमण्डलमध्यस्थं नमामि रसिकेश्वरम् ॥"
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ३२ अध्यायः
॥
(रसिकश्रेष्ठश्च ॥)

**रसितं**, क्ली, (रस शब्दे + भावे क्तः ।) मेघ-

निर्घोषः । इत्यमरः ॥ रुतम् ।
स्वर्णादिस्वचिते,
त्रि । इति मेदिनी ॥

**रसुनः**, पुं, (रस + उनन् ।) लशुनः । इति शब्द-

चन्द्रिका ॥ (विवरणमस्य रसोनशब्दे
ज्ञातव्यम् ॥)

**रसेन्द्रः**, पुं, (रसानां धातुरसानामिन्द्रः श्रेष्ठः ।)

पारदः । इति राजनिर्घण्टः ॥ (यथा, भाव-
प्रकाशे । १ । १ ।
"असाध्यो यो भवेद्रोगो यस्य नास्ति
चिकित्सि-
सितम् ।
रसेन्द्रो हन्ति तं रोगं नरकुञ्जरवाजिनाम् ॥"
अस्य पर्य्यायादिकं रसशब्दे द्रष्टव्यम् ॥)

**रसोत्तमः**, पुं, (रसेषु उत्तमः । यद्वा, रसः

उत्तमोऽस्य ।) मुद्गः । इति राजनिर्घण्टः ॥
श्रेष्ठरसश्च ॥

अन्यद्विवरणमस्य रसोनकशब्दे
लशुनशब्दे च
द्रष्टव्यम् ॥)

**रसोनकः**, पुं, (रसोन + स्वार्थे कन् ।) रसुनः ।

तत्पर्य्यायः ।
"लशुनस्तु रसोनः स्यादुग्रगन्धो
महौषधम् ।
अरिष्टो म्लेच्छकन्दश्च यवनेष्टो
रसोनकः ॥"
तस्योत्पत्तिर्यथा, --
"यदामृतं वैनतेयो जहार सुरसत्तमात् ।
तदा ततोऽपतद्बिन्दुः भुरसोनोऽभवद्भुवि
॥
पञ्चभिश्च रसैर्युक्तो रसेनाम्लेन
वर्ज्जितः ।
तस्माद्रसोन इत्युक्तो द्रव्याणां
गुणवेदिभिः ॥"
अस्यावयवगुणाः ।
"कटुकश्चापि मूलेषु तिक्तः पत्रेषु
संस्थितः ।
नाले कषाय उद्दिष्टो नालाग्रे लवणः
स्मृतः ।
बीजे तु मधुरः प्रोक्तो
रसस्तद्गुणवेदिभिः ॥"
अस्य भक्षणगुणाः ।
"रसोनो बृंहणो वृष्यो स्निग्धोष्णः
पाचनः सरः ।
रसे पाके च कटुकस्तीक्ष्णो मधुरको
मतः ॥
भग्नसन्धानकृत् कण्ठ्यो गुरुः
पित्तास्रवृद्धिदः ।
बलवर्णकरो मेधाहितो नेत्र्यो रसायनः ॥
हृद्रोगजीर्णज्वरकुक्षिशूल-
विबन्धगुल्मारुचिकासशोफान् ।
दुर्नामकुष्ठानलसादजन्तु-
समीरणश्वासकफांश्च हन्ति ॥
मद्यं मांसं तथाम्लञ्च हितं
लशुनसेविनाम् ॥
व्यायाममातपं रोषमतिनीरपयो गुडम् ।
रसोनमश्नन् पुरुषस्त्यजेदेतन्निरन्तरम्
॥"

| | | |
|---|---|---|
| | | इति भावप्रकाशः ॥<br>(तथास्यान्या विवृतिर्यथा, --<br>“अमृतमथने जातः सुरासुरग्रहो महान् । |

जहार वैनतेयश्च चञ्चुना त्रिदिवं गतः ॥
संग्रामश्रमसम्प्राप्ते श्रमवेगप्रधाविते ।
आरूढे वैक्लवं प्राप्ते च्युता ह्यमृतबिन्दवः ॥
सकृत् सन्दूषिते देहे पतितास्तत्र संस्थिताः
।
तस्मात् कालवशाज्जातं दुर्भिक्षं द्वादशाब्दि-
कम् ॥
विशुष्काः कानने सर्व्वा
वृक्षकाण्डप्रतानिकाः ।
तस्माच्च कानने सर्व्वे प्रकृष्टं गहनं गताः ॥
तेषां मध्ये जराग्रस्तो गतिहीनोऽतिजर्ज्जरः
।
सयष्टिः सरणिक्षुण्णः शीर्णदन्तावलीमुखः ॥
सव्यक्तस्थैः क्षुधापन्नैः ऋषिभिस्तत्र विश्रुतः
।
सोऽपि क्षुधातुरः सर्व्वां पर्य्यट्त्युर्व्वरां महीम्
॥
कुत्रचित् पुण्ययोगेन दृष्टवान् विटपान् शुभान्
।
नीलशैवालसङ्काशान् शाद्वलान् बहुलान्
भुवि ।
क्षुधासंपीडनेनापि भुक्तवान् साद्वलानपि ॥
षण्मासानन्तरे शुष्कान् विटपान् तदनन्तरम्
।
भुक्तवान् कन्दकान् सोऽपि मासमेकं तथा
ऋषिः ॥
पश्चात् सुभिक्षे सञ्जाते सर्व्वे चैकत्र
संस्थिताः ।
सोऽपि वृद्धो युवा भूत्वा गतस्तत्र च यत्र ते ॥
तं दृष्ट्वा विस्मयापन्नाः पप्रच्छुः किं कृतं
त्वया ।
नोक्तवान् सोऽपि किञ्चिच्च रुषा तैः शापित-
स्ततः ॥
यत्त्वया स्वादितं द्रव्यं तदभक्ष्यं द्विजातिभिः
।
दुर्गन्धमपि चित्रञ्च तस्माज्जातं रसोनकम्
॥”
“तेन रसोनकं नाम विख्यातं भुवनत्रये ।
कुक्कुटाण्डनिभं ग्रीष्मे शीर्णपर्णं समुद्धरेत् ॥
एलापर्णी च सुरसा सुगन्धा श्रेयसी तथा
॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)
पाठा । इति राजनिर्घण्टः ॥

**रंह**, त् क गतौ । इति कविकल्पद्रुमः ॥ (अदन्त

चुरा०-पर०-सक०-सेट् ।) रंहयति रंहा-
पयति । इति दुर्गादासः ॥

**रंहः**, [स्] क्ली, (रम + “रमेश्च ।” उणा०

४ । २१३ । इति असुन् हुगागमश्च ।
“अहि
रहिभ्यामसुन् इत्यहो रंह इति
धातुप्रदीपः ।”
इत्युज्ज्वलः ।) वेगः । तत्पर्य्यायः । तरः
२
रयः ३ स्यदः ४ यवः ५ । इत्यमरः ॥
रंघः ६
यवनः ७ । इति तट्टीका ॥ (यथा, रघुः ।
२ । ३४ ।
“न पादपोन्मूलनशक्ति रंहः
शिलोच्चये मूर्च्छति मारुतस्य ॥”)

**रह**, त्यजि । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

सक०-सेट् ।) रहति सुखं दीनः । इति
दुर्गा-
दासः ॥

**रह**, इ ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-सक०-सेट् ।) इ, रंह्यते । इति
दुर्गा-
दासः ॥

**रह**, त् क त्यागे । इति कविकल्पद्रुमः ॥ (अदन्त

चुरा०-पर०-सक०-सेट् ।) रहयति
शोकं
धीरः । इति दुर्गादासः ॥

**रहः**, [स्] क्ली, (रमन्तेऽस्मिन् । रह + “देशे ह

गुरोस्तद्रहितं कृत्वा जपकर्म्म समाचरेत्
॥”
इति तन्त्रसारः ॥
अपि च ।
“दिग्घ्नोऽब्दश्चाश्विरहितोजन्मर्क्षाढ्यो
भशे-
षितः ।
भं भवेदब्दवेशेऽत्र योगेऽप्येवं विचिन्तयेत्
॥”
इति जातकपद्धतिः ॥

**रा**, ल दाने । ग्रहणे । इति कविकल्पद्रुमः ॥

(अदा०-पर०-सक०-अनिट् ।) ल, राति ।
इति दुर्गादासः ॥

**राः**, स्त्री, (रा + सम्पदादित्वात् क्विप् ।) विभ्रमः ।

दानम् । इत्येकाक्षरकोषः ॥ काञ्चनम् ।
इति
शब्दरत्नावली ॥

**राः**, [ऐ] पुं, (रा दाने + “राते डैः ।” उणा०

२ । ६६ । इति डैः ।) धनम् । (यथा, भाग-
वते । ३ । २५ । ३८ ।
“आत्मानमनु ये चेह ये रायः पशवो
गृहाः ॥”)
स्वर्णम् । इत्यमरः ॥ शब्दः । इति
शब्दरत्ना-
वली ॥ (स्त्री, श्रीः । यथा, ऋग्वेदे । १० ।
१११ । ७ ।
“स चन्तयदुषसः सूर्य्येण चित्रामस्य
केतवो
रामविन्दन् ॥”)
“चित्रां नानावर्णां रां रायं श्रियमविन्दन्
अल-
भन्त ।” इति तद्भाष्ये सायणः ॥)

**राका**, स्त्री, (रा दाने + “कृदाधारार्च्चिकलिभ्यः

कः ।” उणा० ३ । ४० । इति कः । वहुल-
वचनादेव न ह्रस्वः ।) नदीविशेषः । (सा च
शाल्मलीद्वीपस्थानां नदीनामन्यतमा ।
यथा,

बद्ध्वा पुटे सुनिर्गुप्तं धारयेत्तन्महामते ।
दीप्ताग्निदर्शनात्तेन म्रियते दीर्य्यते भुवि ॥
वर्षासु शिशिरे चैव कारयेन्मात्रया युतम् ।
रामठं जीरके द्वे च अजमोदाकटुत्रयम् ॥
घृतसौवर्च्चलोपेतं वातरोगे विशेषतः ।
मातुलुङ्गरसेनापि शूलानाहे प्रकीर्त्तितः ॥"
इति हारीते कल्पस्थाने तृतीयेऽध्याये ॥
अस्यान्यत् द्विजाभक्ष्यत्वकारणादिकं
रसोनशब्दे
द्रष्टव्यम् ॥)

**रसोपलं**, क्ली, (रसवत् पारद इव उपलम् ।)

मौक्तिकम् । इति त्रिकाण्डशेषः ॥

**रस्नं**, क्ली, (रस + "तृषिशुषिरसिभ्यः कित् ।"

उणा० ३ । १२ । इति नप्रत्ययः ।) द्रव्यम् ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

**रस्यं**, क्ली, (रसात् भुक्तान्नादिपरिपाकात् आगत-

मिति । रस + यत् ।) रक्तम् । इति शब्द-
चन्द्रिका ॥ (यथा, महाभारते । १४ । ५० ।
३२ ।
"यन्नैव गन्धिनो रस्यं नरूपं स्पर्शशब्दवत्
॥"
रसयुक्ते, त्रि । यथा, भगवद्गीतायाम् । १७
। ८ ।
"रस्याः स्निग्धाः स्थिरा हृद्या आहाराः
सात्त्विकप्रियाः ॥")

**रस्या**, स्त्री, (रसाय हिता । रस् + यत् । टाप् ।)

रास्ना । (अस्याः पर्य्यायो यथा, --
"रास्ना युक्तरसा रस्या सुवहा रसना रसा ।
च ।" उणा० ४ । २१४ । इति
असुन्प्रत्ययः ।
हकारश्चान्तादेशः । "रह त्यागे
अस्मादसुनि
रह इति यातुप्रदीपः ।" इत्युज्ज्वलः ।)
निर्ज्जनम् । तत्पर्य्यायः । विविक्तः २
विजनः ३
छन्नः ४ निःशलाकः ५ रहः ६ उपांशुः
७
इत्यमरः ॥ (यथा, रघौ । ३ । ३ ।
"तदाननं मृत्सुरभि क्षितीश्वरः
रहस्युपाघ्राय न तृप्तिमाययौ ॥")
तत्त्वम् । रतिः । गुह्यम् । इति मेदिनी ॥

**रहः**, [स्] व्य, विजनम् । इत्यमरः ॥

"रहो निधुवनेऽपि स्याद्रहो गुह्ये
नपुंसकम् ॥"
इति रभसश्च ॥
"देशादन्यत्र रहोऽव्ययं शब्दान्तरं वास्ति
सुरत-
वाचकम् ।" इत्युज्ज्वलः । ४ । २१४ ॥)

**रहस्यं**, त्रि, (रहसि भवम् । रहस् + दिगादि-

न्वात् यत् । इत्युज्ज्वलः । ४ । २१४ ।)
गोप-
नीयम् । रहसि भवम् । इति मेदिनी
अमरश्च ॥
रहस्यरोमस्पर्शनिषेधो यथा, --
"न सर्पशस्त्रैः क्रीडेत स्वानि स्वानि न
संस्पृशेत् ।
रोसाणि च रहस्यानि नाशिष्टेन सदा
व्रजेत् ॥"
इति कौर्म्मे १५ अध्यायः ॥

**रहस्या**, स्त्री, (रहस्य + टाप् ।) नदीभेदः ।

इति मेदिनी ॥ (यथा, महाभारते । ६ ।
९ । १८ ।
"रहस्यां शतकुम्भां च सरयूं च नरेश्वर !
॥")
रास्ना । पाठा । इति राजनिर्घण्टः ॥

**रहितं**, त्रि, (रह + क्तः ।) वर्ज्जितम् । यथा, --
भागवते । ५ । २० । १० ।
"तेषु वर्षाद्रयो नद्यश्च सप्तैवाभिज्ञाताः ।
सुरसः
शतशृङ्गो वामदेवः कुन्दः कुमुदः पुष्पा-
वर्षः सहस्रश्रुतिरिति । अनुमती सिनीवाली
सरस्वती कुहू रजनी नन्दा राकेति ॥")
कच्छूरोगः । नवजातरजःस्त्री । (रायते
दीयते
देवेभ्य हविर्यस्याम् । इति निघण्टुटीकायां
देव-
राजयज्वा । ५ । ५ । २१ ।)
सम्पूर्णेन्दुतिथिः ।
इति मेदिनी ॥ (यथा, ऋग्वेदे । २ । ३२ ।
४ ।
"राकामहं सुहवां सुष्टुतीहुवे
शृणोतु नः सुभगा बोधतुत्मना ॥"
"संपूर्णचन्द्रा पौर्णमासी राका ।" इति
सायणः ॥
राक्षसीविशेषः । सा च खरस्य
शूर्पणखायाश्च
जननी । यथा, महाभारते । ३ । २७४ ।
१-८ ।
मार्कण्डेय उवाच ।
"पुलस्त्यस्य तु यः
क्रोधादर्द्धदेहोऽभवन्मुनिः ।
विश्रवा नाम सक्रोधः स वैश्रवणमैक्षत ॥
बुबुधे तन्तु सक्रोधं पितरं राक्षमेश्वरः ।
कुबेरस्तत्प्रसादार्थं यतते स्म सदा नृप ! ॥
स राजराजो लङ्कायां निवसन्नरवाहनः ।
राक्षसीः प्रददौ तिसः पितुर्वै परिचारिकाः
॥
ताः सदा तं महात्मानं सन्तोषयितुमुद्यताः
।
ऋषिं भरतशार्दूल ! नृत्यगीतविशारदाः ॥

पुष्पोत्कटा च राका च मालिनी च
विशां
पते ।
अन्योऽन्यस्पर्द्धया राजन् !
श्रेयस्कामाः सुम-
ध्यमाः ॥
स तासां भगवांस्तुष्टो महात्मा
प्रददौ वरान् ।
लोकपालोपमान् पुत्त्रानेकैकस्या
यथेप्सितान् ॥
पुष्पोत्कटायां जज्ञाते द्वौ पुत्त्रौ
राक्षसेश्वरौ ।
कुम्भकर्णदशग्रीवौ बलेनाप्रतिमौ
भुवि ॥
मालिनी जनयामास पुत्त्रमेकं
विभीषणम् ।
राकायां मिथुनं जज्ञे खरः शूर्पणखा
तथा ॥")

**राक्षसः**, पुं, रक्षन्त्यस्मात् रक्षः रक्ष एव राक्षसः ।

तत्पर्य्यायः । कौणपः २ क्रव्यात्
३ क्रव्यादः ४
अस्रपः ५ आशरः ६ रात्रिञ्चरः ७
रात्रि-
चरः ८ कर्व्वूरः ९ निकषात्मजः
१० यातु-
धानः ११ पुण्यजनः १२ नैरृतः
१३ यातु १४
रक्षः १५ । इत्यमरः ॥
सन्ध्यावलः १६ क्षपाटः १७
रजनीचरः १८ कीलापाः १९
नृचक्षाः २०
नक्तञ्चरः २१ पलाशी २२ पलाशः
२३ भूतः
२४ । इति शब्दरत्नावली ॥
नीलाम्बरः २५
कल्माषः २६ कटप्रूः २७ अगिरः
२८ कीला-

रोषणं रक्तमाल्यस्त्रीरक्तमद्यामिषप्रियम्।
दृष्ट्वा च रक्तं मांसं वा लिहानं दशनच्छदौ ।
हसन्तमन्नकाले च राक्षसाधिष्ठितं वदेत् ॥"
इति वाग्भटे उत्तरस्थाने चतुर्थेऽध्याये ॥)
अष्टप्रकारविवाहान्तर्गतविवाहविशेषः । यथा,
"आसुरो द्रविणादानाद्गान्धर्व्वः
समयान्मिथः ।
राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात्
॥"
इत्युद्वाहतत्त्वम् ॥
(एतल्लक्षणान्तरञ्च यथा, मनुः । ३ । ३३ ।
"हत्वा च्छित्वा च भित्त्वा च क्रोशन्तीं रुदतीं
गृहात् ।
प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते ॥"
राक्षसविवाहस्तु क्षत्त्रियस्यैव प्रशस्तः ।
यथा,
तत्रैव । ३ । २४ ।
"चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो
विदुः ।
राक्षसं क्षत्त्रियस्यैकं आसुरं वैश्यशूद्रयोः ॥"
निन्द्यप्रजोत्पतिजनकतयातु ब्राह्माद्यपेक्षया
राक्षसादिविवाहस्य गर्हिततत्वमाह तत्रैव ।
३ । ४१ -- ४२ ।
"इतरेषु च शिष्टेषु नृशंसानृतवादिनः ।
जायन्ते दुर्व्विवाहेषु ब्रह्मधर्म्मद्विषः सुताः ॥
अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा ।
निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान् विव-
र्ज्जयेत् ॥" * ॥
अब्दविशेषे, पुं, क्ली । यथा, बृहत्संहिता-
याम् । ८ । ४५ ।
"इन्द्राग्निदैवं दशमं युगं यत्
तत्राद्यमब्दं परिधाविसंज्ञम् ।
प्रमाद्ययानन्दमतः परं यत्
स्याद्राक्षसं चानलसंज्ञितञ्च ॥")
रक्षःसम्बन्धिनि, त्रि ॥

**राक्षसी**, स्त्री, (राक्षस + ङीप् ।) कौणपी ।

राक्षसपत्नी । यथा, रघुः । १२ । ६१ ।
"दृष्ट्वा विचिन्वता तेन लङ्कायां राक्षसीवृता ।
जानकी विषवल्लीभिः परीतेव महौषधिः ॥")

**राख**, ऋ शोषालमर्थयोः । इति कविकल्पद्रुमः ॥

(भ्वा०-पर०-अक०-सक० च-सेट् ।) शोषः
स्नेहरहितीभावः । अलमर्थो भूषणं सामर्थ्यं
निवारणञ्च । ऋ, अरराखत् । इति दुर्गा-
दासः ॥

**रागः**, पुं, (रञ्जनमिति रज्यतेऽनेनेति वा । रञ्ज

+ भावे करणे वा घञ् । "घञि च भाव-
करणयोः ।" ६ । ४ । २७ । इति नलोपः ।)
मात्स्यर्य्यम् । लोहितादिः । (यथा, कुमारे ।
३ । ३० ।
"रागेण बालारुणकोमलेन
चूतप्रबालोष्ठमलञ्चकार ॥")
क्लेशादिः । अनुरागः । (यथा, आर्य्यासप्त-
शत्याम् । २७० ।
"तानवमेत्य छिन्नः परोपहितरागमदन-
सङ्घटितः ।
कर्ण इव कामिनीनां न शोभते निर्भरः प्रेमा ॥")
गान्धारादिः । नृपः । इति मेदिनी ॥ चन्द्रः ॥
सूर्य्यः । इति शब्दरत्नावली ॥ लाक्षादिः ।
(यथा, कुमारे । ४ । १९ ।
"तमिमं कुरु दक्षिणेतरं
चरणं निर्म्मितरागमेहि मे ॥")
रक्तिमत्विट् । रञ्जनम् । इति नानार्थरत्न-
माला ॥ प्रीतिः । यथा, --
"वीतरागभयक्रोधस्थितधीर्म्मुनिरुच्यते ॥"
इति भगवद्गीताश्लोकटीकायांश्रीधरस्वामी ॥
तस्य लक्षणं यथा, --
"सुखमप्यधिकं चित्ते सुखत्वेनैव रज्यते ।
यतस्तु प्रणयोत्कर्षात् स राग इति कीर्त्यते ॥"
इत्युज्वलनीलमणिः ॥ * ॥
(अभिमतविषयाभिलाषः । स तु पञ्चक्लशान्त-
र्गतः । यथा, --
"अविद्यास्मितारागद्वेशाभिनिवेशाः पञ्च-
क्लेशाः । रागोऽभिमतविषयाभिलाषः ।" इति
शिशुपालवधटीकायां मल्लिनाथः । ४ । ५६ ॥
"सुखानुशयी रागः ।" इति पतञ्जलिः । गान-
शास्त्रीयरागा यथा । भरतमते हनूमन्मते
च रागः षड्विधः । तेषां नामानि यथा ।

लपाः २९ नरधिष्मणः ३० । इति जटाधरः ॥
तस्योत्पत्तिर्य्यथा, --
“रजोमात्रात्मिकाम्बेव ततोऽन्यां जगृहे तनुम् ।
ततः क्षुद्‌ब्रह्मणो जाता जज्ञे कोपाश्रयात्ततः ॥
क्षुत्क्षामानन्याकारांश्च सोऽसृजद्भगवांस्ततः ।
विरूपाः श्मश्रुला जातास्तेऽभ्यधावन्त तं प्रभुम् ॥
नैवं भो रक्ष्यतामेष तैरुक्तं राक्षसास्तु ते ॥”
इति वह्निपुराणम् ॥ * ॥
अपि च ।
“रक्षोगणं क्रोधवशात् स्वनामानमजीजनत् ।
दंष्ट्रिणां नियुतं तेषां भीमसेनाद्‌गतं क्षयम् ॥”
इति मात्स्ये आदिसर्गे कश्यपान्वयनाम ६ अध्यायः ॥ * ॥
राक्षसभोज्यान्नानि यथा, --
“क्षुत्कीटाद्युपपन्नञ्च यच्चोच्छिष्टान्वितं भवेत् ।
केशावपन्नमाधूतं मारुतश्वासवद्भवेत् ॥
एभिः संस्पृष्टमन्नञ्च भागो वै रक्षसो भवेत् ।
तस्माज्ज्ञात्वा सदा विद्वानन्नान्येतानि वर्ज्जयेत् ॥
राक्षसा नाम ये प्रोक्तास्ते भुञ्जन्त्यन्नमीदृशम् ॥”
इति वामणपुराणे ३९ अध्यायः ॥ * ॥
तेषां विहारः सूर्य्यलोकादधः ।
यथा, --
“अन्तीक्षचरा ये च भूतप्रेतपिशाचकाः ।
दंष्ट्रा । बृहद्दन्तेति यावत् । इति हेमचन्द्रः ॥
चण्डा चोरनामगन्धद्रव्यमितियावत् । इति मेदिनी ॥ सायाह्नवेला । यथा, --
“प्रातःकालो मुहूर्त्तांस्त्रीन् सङ्गवस्तावदेव तु ।
मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्नस्ततः परम् ॥
सायाह्नस्त्रिमुहूर्त्तः स्यात् श्राद्धं तत्र न कारयेत् ।
राक्षसी नाम सा वेला गर्हिता सर्व्वकर्म्मसु ॥”
इति तिथ्यादितत्त्वम् ॥

**राक्षसेन्द्रः**, पुं, (राक्षसानामिन्द्रः ।) रावणः ।
इति त्रिकाण्डशेषः ॥ (राक्षसपतिमात्रे च ।
यथा, महाभारते । १ । १५४ । १८ ।
“धिक् ! त्वामसति पुंस्कामे मम विप्रियकारिणि ।
पूर्ब्बेषां राक्षसेन्द्राणां सर्व्वेषामयशस्करि ॥”)

**राक्षा**, स्त्री, (लाक्षा । रलयोरैक्यात् लस्य रत्वम् ।) लाक्षा । इत्यमरः ॥

भैरवः १ कौशिकः २ हिन्दोलः ३ दीपकः ४ श्रीरागः ५ मेघः ६ । हनूमद्भरतयोर्म्मते प्रत्येकमेषां पञ्च रागिण्यः । सोमेश्वरकल्लिनाथयोर्म्मते प्रत्येकमेतेषां षट् रागिण्यः । एतेषां प्रत्येकमष्टौ पुत्राः एकैकपुत्रभार्य्या च । कल्लिनाथसोमेश्वरमते षड्रागा यथा । श्रीरागः १ वसन्तः २ पञ्चमः ३ भैरवः ४ मेघः ५ नटनारायणः ६ । इति नानासंगीतशास्त्रम् ॥ * ॥
अथ रागस्य व्युत्पत्तिसंख्यास्थानानि ।
“यैस्तु चेतांसि रज्यन्ते जगत्त्रितयवर्त्तिनाम् ।
ते रागा इति कथ्यन्ते मुनिभिर्भरतादिभिः ॥
गोपीभिर्गीतमारब्धमेकैकं कृष्णसन्निधौ ।
तेन जातानि रागाणां सहस्राणि तु षोडश ॥
रागेषु तेषु षट्त्रिंशद्रागा जगति विश्रुताः ।

| | | |
|---|---|---|
| वर्ज्जयित्वा रुद्रगणांस्ते तत्रैव चरन्ति हि ॥<br>नोर्द्ध्वं विक्रमणे शक्तिस्तेषां सम्भूतपाप्मनाम् ।<br>अत ऊद्‌र्ध्वं हि विप्रेन्द्र राक्षसा ये कृतैनसः ।<br>ते तु सूर्य्यादधः सर्व्वे विहरन्त्यूर्द्ध्ववर्ज्जिताः ॥”<br>इति पाद्मे स्वर्गखण्डे १५ अध्यायः ॥ * ॥<br>(अनेनाधिष्ठितस्य रोगिनो लक्षणं यथा, --<br>“सक्रोधदृष्टिं भ्रुकुटीमुद्वहन्तं ससंभ्रमम् ।<br>प्रहरन्तं प्रधावन्तं शब्दन्तं भैरवाननम् ॥<br>अन्नाद्विनापि बलिनं नष्टनिद्रं निशाचरम् ।<br>निर्ल्लज्जमशुचिं शूरं क्रूरं परुषभाषिणम् ॥ | | |

कालक्रमेण तत्रापि ह्रास एव तु दृश्यते ।
केचिद्वदन्ति ते रागाः सर्व्वे सन्तीति निश्चितम् ॥
मेरोरुत्तरतः पूर्ब्बे पश्चिमे दक्षिणे तथा ।
समुद्रकण्ठे ये देशास्तत्रामीषां प्रचारणा ॥”
तथा च । अङ्गवङ्गकलिङ्गतैलङ्गभूलिङ्गहावङ्ग-
सुरङ्गयूपलङ्गखेलाङ्गसौवीरकीरकाश्मीरनाभी-
रनाहीरसिन्धुजालन्धरमगमगधनिषधमलयह्नी
हयगजाह्वयमालवजालवमरुमूरुचोलोत्कलुक
न्तलसिंहलहरिकेलकेरल-कोशलमल्लिवालमल्ल-
भल्लसौविदल्लवातकिञ्जातगुजूरातगुञ्जरकालञ्जर
गौडद्रविडौड्रान्तर्व्वेदिकाञ्चीपाञ्चालसौराष्ट्रश-
वरलौहावरखशकीकशवरूपकामरूपहरिगर्भ
विदर्भदुर्मटवाटकीकटदेवेङ्गनटङ्गननाटभोटक-
वाटकरहाटकर्णाटकुन्तिकावन्तिककनकाब्ज-
कान्यकुब्जभोजकाम्बोजतोजतुखारविहारवली-
हारवाजगेहविदेहवाह्लीकचञ्चरीकत्रिगर्त्तान-
र्त्तादिदेशेषु रागाः प्रचरन्तीति ।
“यस्य श्रवणमात्रेण रञ्जन्ते सकलाः प्रजाः ।
सर्व्वाघरञ्जनाद्धेतोस्तेन राग इति स्मृतः ॥” * ॥
अथ रागाः ।
“आदौ मालवरागेन्द्रस्ततो मल्लारसंज्ञितः ।
श्रीरागश्च ततः पश्चाद्वसन्तस्तदनन्तरम् ॥
हिन्दोलश्चाथ कर्णाट एते रागाः षडेव तु । ६ ।
षट्त्रिंशद्रागिणी तत्र क्रमशः कथिता मया ॥
धानसी मालसी चैव रामकिरी च सिन्धुडा ।
आशावरी भैरवी च मालवस्य प्रिया इमाः ॥ ६
वेलावली च पुरवी कानडा माधवी तथा ।
कोडा केदारिका चापि मल्लारदयिता इमाः ॥ ६
गान्धारी शुभगा चैव गौरी कौमारिका तथा ।
वेलोयारी च वैरागी श्रीरागस्य प्रिया इमाः ॥ ६
तुडी च पञ्चमी चैव ललिता पठमञ्जरी ।
गुज्जरी च विभाषा च वसन्तस्य प्रिया इमाः ॥ ६
मायूरी दीपिका चैव देशकारी च पाहिडा ।
वराडी भोरहाटी च हिन्दोलस्य प्रिया
इमाः ॥ ६ ॥
नाटिका चाथ भूपाली रामकेली गडा तथा ।
कामोदा चापि कल्याणी कर्णाटस्य प्रिया
इमाः ॥ ६ ॥ ३६ ॥ * ॥
अथ कालनियमः ।

प्रदोषे चापराह्णे च रजन्यां गानगोचराः
॥
दशदण्डात् परं रात्रौ सर्व्वेषां
गानमीरितम् ।
मेघमल्लाररागस्य गानं वर्षासु सर्व्वदा
॥
श्रीपञ्चम्यां समारभ्य यावत्
जन्मोत्सवं हरेः ।
तावद्वसन्तरागस्य गानमुक्तं
मनीषिभिः ॥
शक्रोत्थानं समारभ्य
यावद्दुर्गामहोत्सवम् ।
गीयते तद्बुधैर्नित्यं मालसी सा
मनोहरा ॥
सर्व्वेषामिह रागाणां रागिणीनाञ्च
सर्व्वशः ।
रङ्गभूमौ नृपाज्ञायां कालदोषो न
विद्यते ॥
रागञ्चालापयेदादौ
तत्पत्न्यस्तदनन्तरम् ।
नान्यपत्नी प्रगातव्या नृपाज्ञायां न
दूषणम् ॥
रागाः षडथ रागिण्यः षट्त्रिंशच्चारु-
विग्रहाः ।
आगता ब्रह्मसदनात् ब्रह्माणं
समुपासते ॥” * ॥
अथ ध्यानम् ।
“नितम्बिनीचुम्बितवक्त्रपद्मः
शुकद्युतिः कुण्डलवान् प्रमत्तः ।
सङ्गीतशालां प्रविशन् प्रदोषे
मालाधरो मालवरागराजः ॥ १ ॥
नीलोत्पलं कर्णयुगे वहन्ती
श्यामा सुकेशी च सुमध्यभागा ।
ईषत्सहासाम्बुजरम्यवक्त्रा
सा धानसी पद्मसुचारुनेत्रा ॥ १ ॥
करे युता चाम्बुजयुग्मरम्या
इतस्ततश्चारु विलोकयन्ती ।
कण्ठस्फरन्मौक्तिकरत्नहारा
सा मालसी संकथिता विचित्रा ॥ २ ॥

रहःसु कान्तप्रियमाणपत्रं
रम्यं वहन्ती कुचकुम्भयुग्मे ।
दूर्व्वादलश्यामतनुः सकामा
पुरातनैः सा पुरवी निरुक्ता ॥ २ ॥
अशोकवृक्षस्य तले निषण्णा
वियोगिनी वास्पकणाञ्चिताङ्गी ।
विभूषिताङ्गी जटिलेव बाला
सा कानडा हेमलतेव तन्वी ॥ ३ ॥
संगृथ्य संगृथ्य गले दधाना
प्रसूनमाला दयितेन बाला ।
गौरी स्वकान्ताननचुम्बितास्या
सा सुन्दरी माधविका निकुञ्जे ॥ ४ ॥
सुकच्छपीं वादयति स्वभर्त्तु-
र्गानार्थमभ्यस्यति सम्मुखेन ।
सदैव ताला विहिता च माला
कोडा कला तानवती मता सा ॥ ५ ॥
स्नात्वा समुत्तीर्णवती सुदेहा
केशप्रणिष्यन्दितवारिबिन्दुः ।
निष्पीडयन्ती तिमिरांशुकान्तं
केदारिका रक्तपरोधरश्रीः ॥” ६ ॥ *
॥
अथ श्रीरागः ।
“लीलावतारेण वनान्तराणि
चिन्वन् प्रसूनानि बधूसहायः ।
विलासवेशो ह्यतिदिव्यमूर्त्तिः
श्रीराग एष प्रथितः पृथिव्याम् ॥ १ ॥
सन्ध्यासुकाले गृहमध्यदेशे
प्रवादयन्ती ह पिनाकयन्त्रम् ।
धाराधराधातुविचित्रिताङ्गी
गान्धारिका गन्धस्रजं निधत्ते ॥ १ ॥
रसनया सुविचारकौतुकं
विदधती कविकोविदकौतुकम् ।
सुकवितामृतभावनतत्परा
भगवती सुभगा समुदाहृता ॥ २ ॥
पुष्पोद्याने सार्द्धमालीकलापैः
क्रीडन्त्येवं कोकिलाकाकलीषु ।
रामा श्यामा सद्गुणानाञ्च सीमा
गौरी गौरी गौरवालोकदिष्टा ॥ ३ ॥
अट्टालिकायां स्फुटकौमुदीभिः

“विभाषा ललिता चैव कामोदा पठमञ्जरी ।
रामकीरी रामकेली वेलोयारी च गुज्जरी ॥
देशकारी च शुभगा पञ्चमी च गडा तुडी ।
भैरवी चाथ कौमारी रागिण्यो दश पञ्च च ।
एताः पूर्व्वाह्णकाले तु गीयन्ते गायनोत्तमैः ॥
वराडी मायूरो कोडा वैरागी चाथ धानसी ।
वेलावली मोरहाटी सप्तैता रागयोषितः ।
गेया मध्याह्नकाले तु यथा भारतभाषितम् ॥
गान्धारी दीपिका चैव कल्याणी पुरवी तथा ।
कानडा शारवी चैव गौरी केदारपाहिडा ॥
मायूरी मालसी नाटी भूपाली सिन्धुडा तथा ।
सायाह्ने ताश्च रागिण्यः प्रगायन्ति चतुर्द्दश ॥
पुरुषा वस्तुभूषाढ्या रागास्ते मालवादयः ।

प्रतप्तचामीकरचारुवक्त्रा
कर्णावतंसं कमलं वहन्ती ।
पुष्पं धनुः पुष्पशरैर्दधाना
चन्द्रानना रामकिरी प्रदिष्टा ॥ ३ ॥
महेन्द्रनीलद्युतिरम्बुजाक्षी
प्रवादयन्ती कपिलाशयन्त्रम् ।
विचित्ररत्नाभरणा सुकेशी
सा सिन्धुडा कान्तसमीपसंस्था ॥ ४ ॥
जवाप्रसूनद्युतिविम्बवक्त्रा
सकञ्चुपद्मं करयोर्दधाना ।
क्षौमांशुकाच्छादितगात्रयष्टि-
राशावरी रङ्गकिला विदग्धा ॥ ५ ॥
सरोवरस्था स्फटिकस्य मन्दिरे
सरोरुहैः शङ्करमर्च्चयन्ती ।
तालप्रयोगप्रतिरङ्गगीतै-
र्गौरीतनुर्भैरविका सतीयम् ॥” ६ ॥ * ॥
अथ मल्लारः ।
“विहारशीलोऽतिसुकान्तदेहः
कान्ताप्रियो धार्म्मिकशीलयुक्तः ।
कामातुरः पिङ्गलनेत्रयुग्मो
मल्लाररागः प्रियकृत् सुवेशः ॥ १ ॥
सङ्केतितोत्फुल्ललतानिकुञ्जे
कृतस्थितिः कान्तसमागमाय ।
वेलावली चम्पकमौलिनी सा
बाला विचित्राभरणा निरुक्ता ॥ १ ॥

प्रकाशितायां रजनीविहारम् ।
अह्नाय कान्तेन समं वसन्ती
कौमारिका कामकला वहन्ती ॥ ४ ॥
गौरीपादाम्भोजमभ्यर्च्चयन्ती
गन्धोद्धूतं गन्धमाल्यं दधाना ।
नानारत्नोपायनैर्भक्तिभावै-
र्वेलोयारी कथ्यते बालिकेयम् ॥ ५ ॥
उल्लासयन्ती धम्मिल्ले रहःस्थान्
प्राणबन्धुना ।
मालतीकुसुमस्रग्भिर्व्वैरागी रागिनी स्मृता ॥” ६
अथ वसन्तः ।
“चूताङ्कुरेणैव कृतावतंसो
विघूर्णमानारुणनेत्रपद्मः ।
पीताम्बरः काञ्चनचारुदेहो
वसन्तरागो युवतिप्रियश्च ॥ १ ॥

सुनृत्यमानातिसुशीलयुक्ता
मुक्तालताकल्पितहारयष्टिः।
चूताङ्कुरं पाणियुगे वहन्ती
जवारुणाङ्गी तुडिकेरितेयम् ॥ १ ॥
संगीतगोष्ठीषु गरिष्ठभावं
समाश्रिता गायनसम्प्रदायैः ।
खर्व्वाङ्गिनी नूपुरपादपद्मा
सा पञ्चमी पञ्चमवेदवेत्त्री ॥ २ ॥
उरसि केशचयस्य सुभारं
विदधती शयनोत्थितचारुवेशम् ।
विलुलितालकवल्लिकृशाङ्गी
भासुरा ललिता कथिता बुधैः ॥ ३ ॥
सखीकलापैः परिहास्यमाना
वियोगिनी कान्तवियोगदेहा ।
पीनस्तनी चैव धराप्रसुप्ता
श्यामा सुकेशी पठमञ्जरीयम् ॥ ४ ॥
कर्णोत्पलालम्बिमधुव्रताली
शृणोति सा मञ्जुलकूजितानि ।
कान्तान्तिकं गन्तुमनाः प्रदोषे
सा गुज्जरी वेशकलोचिताङ्गी ॥ ५ ॥
अध्यापयन्ती निजशिष्यवृन्दं
सङ्गीतशास्त्राणि विवेचनाभिः ।
मनोहरा हारलताभिरामा
समस्तभाषाकुशला विशेषा ॥" ६ ॥ * ॥
अथ हिन्दोलः ।
"हासाभिलासेन पतन् पृथिव्यां
उत्थापितस्तत्क्षणमालिवृन्दैः ।
उल्लोलसङ्गीतरसैर्विदग्धो
हिन्दोलरागः कथितो रसज्ञैः ॥ १ ॥
मयूरकेकाश्रवणोल्लसन्ती
मयूरिकानृत्यततं किरन्ती ।
मयूरकान्तीव सितिं दधाना
मायूरिका संकथिता गुणज्ञैः ॥ १ ॥
प्रदोषकाले गृहसंप्रविष्टा
प्रदीपहस्तारुणगात्रवस्त्रा।
सीमन्तसिन्दूरविराजमाना
सुरक्तमाल्या किल दीपिकेयम् ॥ २ ॥
सार्द्धं सखीभिर्विजने वसन्ती
विचित्रवक्षोजनितम्बसङ्गा।

ऋजुस्वभावान्नियतं रुदन्ती
सा मोरहाटी हठकेलिरुष्टा ॥" ६ ॥ * ॥
अथ कर्णाटः ।
"कृपाणपाणिस्तुरगाधिरूढो
मयूरकण्ठातिसुकण्ठकान्तिः।
स्फुरत्सितस्निग्धरसः प्रशान्तः
कर्णाटरागो हरितालवर्णः ॥ १ ॥
चिरं नटन्ती शुभरङ्गमध्ये
संप्रार्थयन्ती नटिनं वसन्तम् ।
सुगीततालेषु कृतावधाना
नटी सुशाटीपरिधानदेहा ॥ १ ॥
स्वनायकं पुष्पलताधिरूढा
हसन्मुखी सर्व्वमुदं वहन्ती ।
स्वनानि शश्वद्वितनोति मुग्धा
भूपालिका सा स्खलदुत्तरीया ॥ २ ॥
अध्यापयन्ती शुकसारसारोः
श्रीराम रामेति सुवेशलक्ष्मीः ।
वामस्तनार्द्धस्खलितांशुकश्रीः
श्रीरामकेली कथिता कवीन्द्रैः ॥ ३ ॥
विशेषवैदग्ध्यवती समस्तान्
कलाविलासेन विमोहयन्ती ।
बृहन्नितम्बा परिपुष्टदेहा
वडा प्रलम्बस्तनभारभव्या ॥ ४ ॥
भर्त्तुः समं पाथसि सन्तरन्ती
पयोविहारेण सरोरुहाणि ।
विचिन्वती सौरभमोदमाना
कामोदरागिण्युदिता गुणज्ञैः ॥ ५ ॥
व्याधूता नटनृत्यपरिश्रमेण
बाला लीलाभिः सुदती कृतादरा ।
नटीनां कल्याणी कलयति मत्तहस्ती
एणप्रस्थानं मुखरिता किङ्किणीकलापम् ॥"
६ ॥
अथ रागरागिणीनां भावनिरूपणम् ।
"मालवः श्रीश्च हिन्दोलो
मल्लारस्तदनन्तरम् ।
गायन्ति गायका धीर सानन्देन चतुष्टयम् ॥
वसन्तो रागः कर्णाटो द्वौ वीरौ भवतः
क्रमात् ॥
धानसी मालसी चैव भैरवी माधवी तथा ।

अथ रागाणामुद्भवं दर्शयति ।
"शिवशक्तिसमायोगाद्रागाणांसम्भवो
भवेत् ।
पञ्चास्यात् पञ्च रागाः स्युः षष्ठस्तु
गिरिजा-
मुखात् ॥
सद्योवक्त्रात्तु श्रीरागो वामदेवाद्
वसन्तकः ।
अघोराद् भैरवोऽभूत् तत्पुरुषात् पञ्चमो-
ऽभवत् ॥
ईशानाख्यान्मेघरागो नाट्यारम्भे
शिवादभूत् ।
गिरिजाया मुखाल्लास्ये
नट्टनारायणोऽभवत् ॥"
अथ रागवेला ।
"मधुमाधवी च देशाख्या भूपाली भैरवी
तथा ।
वेलावली च मल्लारी वल्लारी सोमगुर्ज्जरी
॥
धनाश्रीर्मालवश्रीश्च मेघरागश्च पञ्चमः ।
देशकारी भैरवश्च ललिता च वसन्तकः ॥
एते रागाः प्रगीयन्ते प्रातरारभ्य नित्यशः ।
गुर्ज्जरी कौशिकश्चैव सावेरी पठमञ्जरी ॥
रेवा गुणकिरी चैव भैरवी रामकिर्य्यपि ।
सौराटी च तथा गेया प्रथमप्रहरोत्तरम् ॥
वैराटी तोडिका चैव कामोदी च
कुडायिका ।
गान्धारी नागशब्दी च तथा देशी विशेषतः
।
शङ्कराभरणो गेयो द्वितीयप्रहरात् परम् ॥
श्रीरागो मालवाख्यश्च गौरी
त्रिवणसंज्ञिका ।
नट्टकल्याणसंज्ञश्च सारङ्गनट्टकौ तथा ॥
सर्व्वे नाटाश्च केदारी कर्णाट्याभीरिका
तथा ।
वडहंसी पहाढी च तृतीयप्रहरात् परम् ।
अर्द्धरात्रावधि ज्ञेया एते रागाः सुखप्रदाः ॥
यथोक्तकाल एवैते गेयाः पूर्व्वविधानतः ।

निरीक्ष्यमाणाननदर्पणा या
सा देशकारी कथिता गुणज्ञैः ॥ ३ ॥
भर्त्तुर्दधाना चरणारविन्दं
निषेधयन्ती परदेशयानम् ।
प्रकामदाम्पत्यसुखे निमग्ना
सा पाहिडा संकथिता कवीन्द्रैः ॥ ४ ॥
कर्णे दधाना सुरपुष्पयुग्मं
स्फुरत्सुवक्षोजमनोहराङ्गी ।
स्मेरानना चारुविलोलनेत्रा
वराङ्गनेयं कथिता वडारी ॥ ५ ॥
उत्पन्नमात्रे प्रथमापराधे
मानं पुनः कर्त्तमनाश्चीरेण ।

सुभगा पञ्चमी नाटी वेलोयारी च गुज्जरी ॥
कामोदा चापि कल्याणी कोडा केदारिका
तुडी ।
कौमारी मायूरी चैव देशकारी च सिन्धुडा ॥
रामकेली च भूपाली रागिण्यश्चेति विंशतिः
।
आनन्दांशा इति प्रोक्ता गीयन्ते
गानकोविदैः ॥
पुरवी कानडा गौरी रामकिरी च दीपिका ।
आशावरी विभाषा च वडारी च गडा तथा ।
एताश्च नव रागिण्यो वीरांशे गानमुत्तमम् ॥
वेलावली च गान्धारी ललिता पठमञ्जरी ।
वैरागी रागिणी चापि मोरहाटी च पाहिडा ।
करुणांशा विजानीयात् सप्तैता रागयोषितः
॥
रागेण रसभागेन षट्त्रिंशद्रागिणीषु च ।
करुणानन्दवीरेषु ज्ञापनार्थं मतत्रयम् ॥”
इति संगीतदामोदरे शिवनारदसंवादे १ । ३
अध्यायौ ॥ (तथा च संगीतदर्पणे ।

राजाज्ञया सदा गेया न तु कालं विचारयेत्
॥”
इति रागवेला ।
अथ ऋतवः ।
“श्रीरागो रागिणीयुक्तः शिशिरे गीयते
बुधैः ।
वसन्तः ससहायस्तु वसन्तर्त्तौ प्रगीयते ॥
भैरवः ससहायस्तु ऋतौ ग्रीष्मे प्रगीयते ।
पञ्चमस्तु तथा गेयो रागिण्या सह शारदे ॥
मेघरागो रागिणीभिर्युक्तो वर्षासु गीयते ।
नट्टनारायणो रागो रागिण्या सह हेमके ॥
यथेच्छया वा गातव्याः सर्व्वर्त्तुषु
सुखप्रदाः ॥”
इति रायाणां ऋतुनिर्णयः । इति
सोमेश्वर-
मतम् ॥ * ॥)

**रागचूर्णः**, पुं, कामदेवः । खदिरवृक्षः । इति
मेदिनी । ने, १०६ ॥ फल्गुचूर्णम् । इति
शब्द-
रत्नावली ॥ लाक्षारसः । इति
राजनिर्घण्टः ॥

**रागच्छन्नः**, पुं, (रागेण च्छन्नः ।) कामदेवः ।
इति शब्दरत्नावली ॥ रागेणाच्छन्ने, त्रि ॥

**रागदः**, पुं, (रागं ददातीति । दा + कः ।)
तैरणीक्षुपः । इति राजनिर्घण्टः ॥
रागदातरि,
त्रि ॥

**रागदालिः**, पुं, (रागदा रागप्रदा आलिः पङ्क्ति-
र्यत्र ।) मसूरः । इति राजनिर्घण्टः ॥
(विवरण-
मस्य मसूरशब्दे विज्ञेयम् ॥)

**रागपुष्पः**, पुं, (रागविशिष्टं रक्तवर्णं पुष्पं यस्य ।) बन्धूकः । रक्ताम्लानः । इति राजनिर्घण्टः ॥

**रागपुष्पी**, स्त्री, (रागयुक्तं पुष्पं यस्याः । ङीप् ।) जवा । इति राजनिर्घण्टः ॥ (गुणादयोऽस्य जवाशब्दे ज्ञातव्याः ॥)

**रागप्रसवः**, पुं, (रागयुक्तो रक्तवर्णः प्रसवः पुष्पं यस्य ।) बन्धूकः । रक्ताम्लानः । इति राज-
निर्घण्टः ॥

**रागयुक्**, [ज्] पुं, (रागेण युज्यते इति । युज् + क्विप् ।) माणिक्यम् । इति राजनिर्घण्टः । कस्मिं-
श्चित् पुस्तके रागदृक् इति पाठोऽपि विद्यते ॥

**रागरज्जुः**, पुं, (रागो रज्जुरिव यस्य । नायकयोः परस्परानुरागबद्धत्वात्तथात्वम् ।) कामदेवः ।
इति शब्दरत्नावली ॥

**रागलता**, स्त्री, (रागस्य जनिका लतेव ।) काम-देवपत्नी । इति जटाधरः ॥

**रागवृन्तः**, पुं, (रागस्य वृन्त इव ।) कामदेवः । इति शब्दमाला ॥

**रागषाडवः**, पुं, दाडिमद्राक्षायुक्तमुद्गयूषः । अस्य गुणाः । रुचिकारित्वम् । लघुपाकित्वम् । वात-
पित्तकफाविरोधित्वञ्च । इति राजवल्लभः ॥
(यथा, सुश्रुते । १ । ४६ अध्याये कृतान्नवर्गे ।
"ज्ञेयः पथ्यतमश्चापि मुद्गयूषः कृताकृतः ।
स तु दाडिममृद्वीकायुक्तः स्याद्रागषाडवः ।

**रागी**, [न्] त्रि, (रन्ज + "संपृचानुरुधेति ।" ३ । २ । १४२ । इति तच्छीलादिषु घिणुन् ।
यद्वा, रागोऽस्यास्तीति । राग + इनिः ।) अनु-
रक्तः । (यथा, मार्कण्डेये । २१ । ४१ ।
"त्वय्यस्या हृदयं रागि भर्त्ता चान्यो भविष्यति ।
यावज्जीवमतो दुःखं सुरभ्या नान्यथा वचः ॥")
कामुकः । इति विश्वः ॥ रङ्क्ता । इति मेदिनी ॥
(विषयानुरागयुक्तः । स च द्विविधः । यथा,
देवीभागवते । १ । १७ । ३७ -- ३८ । ४१ ।
"द्वैविध्यं सर्व्वलोकेषु सर्व्वत्र द्विविधो जनः ।
रागी चैव विरागी च तयोश्चित्तं द्विधा पुनः ॥
विरागी त्रिविधः कामं ज्ञातोऽज्ञातश्च मध्यमः ।
रागी च द्विविधः प्रोक्तो मूर्खश्च चतुरस्तया ॥"
"रागो यस्यास्ति संसारे स रागीत्युच्यते ध्रुवम् ।
दुःखं बहुविधं तस्य सुखञ्च विविधं पुनः ॥"
रक्तवर्णविशिष्टः । यथा, कथासरित्सागरे ।
२१ । ९ ।
"ईर्ष्यारुषामभावेऽपि भङ्गुरभ्रुणि रागिणि ।
न मुखे तत्तयो
राज्ञ्योस्तद्दृष्टिस्तृप्तिमाययौ ॥")
पुं, तृणधान्यविशेषः । तत्पर्य्यायः । लाञ्छनः २
बहुतरकणिशः ३ गुच्छकणिशः ४ । अस्य

**राङ्कवं**, क्ली, (रङ्कौ भवम् । रङ्कु + "रङ्कोरमनुष्ये-ऽण् च ।" ४ । २ । १०० । इति अण् ।)
मृगलोमजातवस्त्रादि । तत्पर्य्यायः । मृग-
रोमजम् २ । इत्यमरः । २ । ६ । १११ ॥ रङ्कुः-
मृगभेदः ततो जाताद्यर्थे ष्णः पशवोऽपि मृगा इति रूढ्या मेषादिलोमजमपि कम्बलादि राङ्क-
वम् । इति तट्टीकायां भरतः ॥ (यथा, महा-
भारते । २ । ५० । २३ ।
"और्णञ्च राङ्कवञ्चैव पट्टजं कीटजन्तथा ॥"
पुं, गौः । इति काशिका ॥ राङ्कवाकृतौ, त्रि ।
यथा, महाभारते । ९ । ४४ । २६ ।
"क्रौञ्चपारावतनिभैर्व्वदनैराङ्कवैरपि ॥")

**राङ्गणं**, क्ली, पुष्पविशेषः । रङ्गन् इति भाषा । अस्य गुणः । रक्तपित्तनाशित्वम् । इति द्रव्य-
गुणः ॥

**राज**, ऋ ञ ण दीप्तौ । इति कविकल्पद्रुमः ॥ (भ्वा०-उभ०-अक०-सेट् ।) ऋ, अरराजत् ।
ञ, राजति राजते । ण, रेजतुः । इति दुर्गा-
दासः ॥

**राजकं**, क्ली, (राज्ञां समूहः । राजन् + "गोत्रोक्षो-ष्ट्रोरभ्रराजेति ।" ४ । २ । ३९ । इति वुञ् ।) नृप-
समूहः । इत्यमरः । २ । ८ । ३ ॥ यथा, मार्क-
ण्डेये । १०९ । ६ ।
"हृष्टपुष्टमतीवासीत् तस्मिन् राजन्यशेषतः ।
राजकं सकलं चोर्व्व्यां पौरजानपदो जनः ॥"
राजन् + स्वार्थे कन् ।) राजनि, पुं, । (यथा,
हरिवंशे भविष्यपर्व्वणि । २४ । ९ ।
"तवाङ्गं तिलशः कृत्वा श्वभ्यो दास्यामि राजक ॥"
राज् + ण्वुल् ।) दीप्तिकारके, त्रि ॥

**राजकदम्बः**, पुं, (कदम्बानां राजा । राजदन्तादि-

रुचिष्यो लघुपाकश्च दोषाणामविरोधकृत्
॥”
तथास्य गुणाः ।
“लघवो वृंहणा वृष्याः हृद्या रोचनदीपनाः
।
तृष्णामूर्च्छाभ्रमच्छर्द्दिश्रमघ्नारागषाडवाः
॥”
इति च सुश्रुते सूत्रस्थाने ४६ अध्यायः
॥)

**रागसूत्रं**, क्ली, (रागयुक्तं रक्तवर्णं सूत्रम् ।) तुला-
सूत्रम् । पट्टसूत्रम् । इति मेदिनी । रे,
२९४ ॥

**रागाङ्गी**, स्त्री, (रागविशिष्टमङ्गं यस्याः । ङीप् ।)
मञ्जिष्ठा । इति राजनिर्घण्टः ॥

**रागाढ्या**, स्त्री, (रागेण आढ्या ।) मञ्जिष्ठा ।
इति राजनिर्घण्टः ॥

**रागारुः**, त्रि, आशां दत्त्वा दानविमुखः । यथा,
“आशां बलवतीं दत्त्वा यो हन्ति पिशुनो
जनः ।
स जीवासोऽपि रागारुर्द्रणो दालस्तु दातरि
॥”
इति शब्दमाला ॥

**रागाशनिः**, पुं, (रागेषु विषयवासनासु अशनि-
रिव ।) बुद्धः । इति त्रिकाण्डशेषः ॥

**रागिणी**, स्त्री, (रागोऽस्त्यस्या इति । राग +
इनिः । ङीप् ।) विदग्धा नारी । इति जटा-
घरः ॥ मेनकाया ज्येष्ठकन्या । यथा, --
“रागिणी नाम संजाता ज्येष्ठा मेनासुता
मुने ।
शुभाङ्गी पद्मपत्राक्षी नीलकुञ्चितमूर्द्धजा ॥”
इति वामनपुराणे ४८ अध्यायः ॥
जयश्रीनाम्नी लक्ष्मीः । इति पुराणम् ॥
षड्-
रागाणां पत्नी । इति हलायुधः ॥ सा तु
हनूमन्मते भरतमते च त्रिंशत्प्रकारा ।
सोमे-
गुणाः । तिक्तत्वम् । मधुरत्वम् ।
कषायत्वम् ।
शीतत्वम् । पित्तास्रनाशित्वम् ।
बल्यत्वञ्च ।
इति राजनिर्घण्टः ॥

**राघ**, ऋ ङ शक्तौ । इति कविकल्पद्रुमः ॥
(भ्वा०-आत्म०-अक०-सेट् ।) ऋ,
अरराघत् ।
ङ, राघते । शक्तिः सामर्थ्यम् । इति
दुर्गा-
दासः ॥

**राघवः**, पुं, (रघोरपत्यमिति । रघु + अण् ।)
रामचन्द्रः । (यथा, रघुः । १२ । ३२ ।
“रावणावरजा तत्र राघवं मदनातुरा ।
अभिपेदे निदाघार्त्ता व्यालीव मलयद्रुमम्
॥”
अजः । यथा, रघुः । ८ । १६ ।
“यतिपार्थिवलिङ्गधारिणौ
ददृशाते रघुराघवौ जनैः ॥”
दशरथः । यथा, रामायणे । २ । ६४ ।
१ ।
“वधमप्रतिरूपं तु महर्षेस्तस्य राघवः ।
विलपन्नेव धर्म्मात्मा
कौशल्यामिदमब्रवीत् ॥”
रघुवंशीयमात्रम् । यथा, तत्रैव । २ । ६४
। २५ ।
“अपि ह्यद्य कुलं न स्याद्राघवाणां कुतो
भवान् ॥”)
समुद्र-महामत्स्यविशेषः । इति मेदिनी ॥
वे,
४८ ॥ (यथा, कृद्वृत्तौ प्रथमपादे
दुर्गसिंहः ।
“अस्ति मत्स्यस्तिमिर्नाम
शतयोजनविस्तृतः ।
तिमिङ्गिलगिलोऽप्यस्ति
तद्गिलोऽप्यस्ति
राघवः ॥”)

**राघवायनं**, क्ली, (राघवस्य रामस्य चरितान्वितं
अयनं शास्त्रम् ।) रामायणम् । यथा, --
त्वात् परनिपातः ।) कदम्बविशेषः । यथा, --
“कादम्बर्य्यः प्रावृषेण्यो नीपो धूलीकदम्बकः
।
कदम्बप्रियकौ राजकदम्बोऽरुष्करोऽग्निकः
॥”
इति जटाधरः ॥

**राजकन्या**, स्त्री, (राज्ञः कन्येव ।) केविकापुष्पम् ।
इति राजनिर्घण्टः ॥ नृपसुता च ॥ (यथा,
भाग-
वते । ९ । ६ । ४३ ।
“वृतः स राजकन्याभिरेकः पञ्चाशता वरः
॥”)

**राजकर्कटी**, स्त्री, चीनाकर्क्कटी । इति राज-
निर्घण्टः ॥

**राजकशेरुः**, पुं, (कशेरूणां राजा । राजदन्तादि-
त्वात् परनिपातः ।) भद्रमुस्ता । इति राज-
निर्घण्टः ॥

**राजकीयः**, त्रि, (राज्ञ इदम् । राजन् + “राज्ञः
कच ।” ४ । २ । १४० । इति छः
ककारश्चान्ता-
देशः ।) राजसम्बन्धी । राजकस्यायं इत्यर्थे
णीयप्रत्ययेन सिद्धः ॥ (यथा,
कथासरित्सागरे ॥
६२ । २२८ ।
“ततस्तदर्थं रात्रौ स राजकीयं सरो ययौ ॥”)

**राजकुमारः**, पुं, (राज्ञः कुमारः ।) राजपुत्त्रः ।
तत्र वर्णनीयानि यथा, --
“कुमारे शस्त्रशास्त्रश्रीकलाबलगुणोच्छ्र्याः ।

| | | |
|---|---|---|
| श्वरमते कल्लिनाथमते च षट्त्रिंशत्प्रकारा ॥<br>आसां विवरणं रागशब्दे द्रष्टव्यम् ॥ | "सेतिहासपुराणानि राघवायनभारतम् ।<br>समाप्तिरहितान्येव सन्ति तानि श्रुतानि ते ॥"<br>इत्यग्निपुराणे वामनप्रादुर्भावनामाध्यायः ॥<br>**राङ्कलः**, पुं, वृक्षकण्टकः । इति हारावली । ९१ ॥ | |

वाद्याली खुरली राजभक्तिः शुभगतादयः
॥"
इति कविकल्पलतायाम् १ स्तवकः ॥

**राजकुष्माण्डः**, पुं, वार्त्ताकी । इति जटा-

धरः ॥

**राजकोषातकी**, स्त्री, (राजप्रिया कोषातकी ।)

झिङ्गाकविशेषः । घिया तोरै इति हिन्दी-
भाषा ॥ तत्पर्य्यायः । हस्तिपर्णिका २
पीत-
पुष्पिका ३ धामार्गवः ४ केशफला ५
महाजाली
६ सपीतकः ७ । अस्या गुणाः । शीतत्वम्
।
ज्वरघ्नत्वम् । कफवातलत्वञ्च । इति
मदनविनोदः ॥

**राजखर्ज्जूरी**, स्त्री, (राजप्रिया खर्ज्जूरी ।)

श्रेष्ठखर्ज्जूरी । पिण्डखर्ज्जूरिका ।
तत्पर्य्यायः ।
राजपिण्डा २ नृपपिण्डा ३ । अस्या गुणाः
।
गौल्यत्वम् । स्वादे हिमत्वम् । गुरुत्वम् ।
पित्त-
दाहार्त्तिश्वासभ्रमनाशित्वम्।
वीर्य्यवृद्धिदत्वञ्च ।
इति राजनिर्घण्टः

**राजगामि**, [न्] त्रि, (राजानं गच्छतीति । गम्

+ णिनिः ।) राजसम्बन्धि । यथा, --
"अनृतञ्च समुत्कर्षे राजगामि च पैशुनम् ।
गुरोश्चालीकनिर्ब्बन्धः समानि ब्रह्महत्यया
॥"
इति मानवे ११ अध्यायः ॥
"राजनि वा स्तेनादीनां परेषां
मरणफलदोषा-
भिधानम् ।" इति कुल्लूकभट्टः ॥ अपि च ।
"अपुत्त्रस्य धनं पत्न्यभिगामि तदभावे
मातृगामि
तदभावे भ्रातृगामि तदभावे भ्रातृपुत्त्रगामि

**राजजम्बूः**, स्त्री, (जम्बूनां राजा । राजदन्ता-

दित्वात् परनिपातः ।) पिण्डखर्ज्जूरम् । इति
मेदिनी ॥ महाजम्बूः । इति राजनिर्घण्टः ॥

**राजजक्ष्मा** [न्] पुं, क्षयरोगः । "यक्ष्यते पूज्यते

रोगराजत्वात् यक्ष्मा यक्ष क ङ महि अन्तः-
स्थादिः त्रासुसिसिति मन्
चवर्गतृतीयादिरित्येके
तदा जक्ष भक्षहसनयोरित्यस्य रूपं
राजयक्ष्म-
शब्दोऽप्यत्र ।" इत्यमरटीकायां भरतः ॥
(अस्य
विवरणन्तु राजयक्ष्मशब्दे द्रष्टव्यम् ॥)

**राजतं**, त्रि, (रजतस्य विकारः । रजत + "प्राणि-

रजतादिभ्योऽञ् ।" ४ । ३ । १५४ । इति
अञ् ।) रजतनिर्म्मितम् । यथा, --
"सौवर्णं राजतं ताम्रं पितॄणां पात्रमुच्यते ।
रजतस्य कथा वापि दर्शनं दानमेव वा ॥"
इति मात्स्ये १७ अध्यायः ॥
रजते, क्ली ॥ (यथा, गो० रामायणे । ३ ।
४९ । १ ।
"तं तु सीता मृगं दृष्ट्वा वने काञ्चनसुप्रभम् ।
हेमराजतचित्राभ्यां पार्श्वाभ्यां समलङ्कृतम्
॥")

**राजतरुः**, पुं, (तरूणां राजा । राजदन्तादित्वात्

परनिपातः ।) कर्णिकारवृक्षः । आरग्वधः ।
इति राजनिर्घण्टः ॥ (यथा, सुश्रुते । ६ ।
५७ ।
"मुस्तादिराजतरुवर्गदशाङ्गसिद्धैः
क्वाथैर्जयेन्मधुयुतैर्व्विविधैश्च लेहैः ॥")

**राजतरुणी**, स्त्री, (राज्ञस्तरुणीव । सौन्दर्य्याति-

शय्यवत्त्वात् ।) पुष्पविशेषः । तत्पर्य्यायः ।
महासहा २ वर्णपुष्पः ३ अम्लानः ४
अम्लातकः
५ सुपुष्पः ६ सुवर्णपुष्पः ७ । अस्या गुणाः ।
कषायत्वम् । कफकारित्वम् । चक्षुष्यत्वम् ।

"राजदन्तौ तु मध्यस्थावुपरिश्रेणिकौ
क्वचित् ॥"
इति हेमचन्द्रः ॥

**राजदेशीयः**, पुं, (ईषदूनो राजा । राजन् +

"ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ।" ५
। ३ । ६७ ।
इति देशीयर् ।) राजदेश्यः । राजकल्पः
।
इति व्याकरणम् ॥

**राजधत्तूरकः**, पुं, (धत्तूरकाणां राजा । राज-

दन्तादित्वात् परनिपातः ।) बृहद्धुस्तूरः ।
इति
कश्चित् राजनिर्घण्टः ॥ तस्य पर्य्यायः
राज-
धुस्तूरशब्दे द्रष्टव्यः ॥

**राजधर्म्मः**, पुं, (राज्ञो धर्म्मः ।) राज्ञः कर्त्तव्यं

कर्म्म । यथा, --
"राजधर्म्मान् प्रवक्ष्यामि यथावृत्तो
भवेन्नृपः ।
सम्भवश्च यथा तस्य सिद्धिश्च परमा
यथा ॥
ब्राह्मं प्राप्तेन संस्कारं क्षत्त्रियेण यथाविधि
।
सर्व्वस्यास्य यथान्यायं कर्त्तव्यं
परिरक्षणम् ॥
अराजके हि लोकेऽस्मिन् सर्व्वतो विद्रुते
भयात् ।
रक्षार्थमस्य सर्व्वस्य राजानमसृजत् प्रभुः
॥
इन्द्रानिलयमार्क्काणामग्नेश्चवरुणस्य च
।
चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य
शाश्वतीः ॥
यस्मादेषां सुरेन्द्राणां मात्राभ्यो निर्म्मितो
नृपः ।
तस्मादभिभवत्येष सर्व्वभूतानि तेजसा ॥
तपत्यादित्यवच्चैष चक्षूंषि च मनांसि च ।

तदभावे सकुल्यगामि तदभावे बन्धुगामि तद-
भावे शिष्यगामि तदभावे सहाध्यायिगामि
तदभावे ब्राह्मणधनवर्ज्जं राजगामि ।” इति
दायभागग्रन्थधृतविष्णुवचनम् ॥

**राजगिरिः**, पुं, शाकभेदः । तत्पर्य्यायः । राजाद्रिः

२ राजशाकिनी ३ राजशाकनिका ४ । अस्य
गुणाः । रुच्यत्वम् । पित्तनाशित्वम् । शीतल-
त्वम् । स्थूलस्य तु अतिशीतलत्वम् । अतिरुच्य-
त्वञ्च । इति राजनिर्घण्टः ॥ (मगधदेशस्थः
पर्व्वतविशेषश्च ॥)

**राजग्रीवः**, पुं, (राजते इति । राज् + अच् ।

राजा दीप्तिशालिनी ग्रीवा यस्य ।) मत्स्य-
विशेषः । फलुइ इति भाषा । यथा, --
“फलकी स्याच्चित्रफली राजग्रीवो मदार्मदः ॥”
इति त्रिकाण्डशेषः ॥

**राजघः**, त्रि, तीक्ष्णः । इति त्रिकाण्डशेषः ॥

(राजानं हन्तीति । हन् + “राजघ उप-
संख्यानम् ।” ३ । २ । ५५ । इत्यस्य वार्त्तिकोक्त्या
कप्रत्ययेन साधु ।) राजहन्ता । यथा, --
“अनल्पदग्धारिपुरानलोज्ज्वलै-
र्निजप्रतापैर्व्वलयं ज्वलद्भुवः ।
प्रदक्षिणीकृत्य जयाय सृष्टया
रराज नीराजनया स राजघः ॥”
इति नैवधे । १ । १० ॥

**राजचिह्नकं**, क्ली, उपस्थः । इति शब्दचन्द्रिका ।

चिह्नानां स्त्रीपुंविभाजकानां राजा इति व्युत्-
पत्त्या सिद्धम् ॥

हर्षदत्वम् । हृद्यत्वम् । सुरभित्वम् । सुखवल्लभ-
त्वञ्च । इति राजनिर्घण्टः ॥

**राजता**, स्त्री, राजत्वम् । राज्ञो भाव इत्यर्थे राजन्

शब्दात् तल्प्रत्ययेन सिद्धा ॥ (यथा, कथासरि-
त्सागरे । ३६ । ६८ ।
“तेन मत्ताममुञ्चन्तीमपि मुक्त्वा स तां ययौ ।
रत्नकूटं स्वकार्य्यार्थं नित्यस्निग्धा हि राजता ॥”)

**राजतालः**, पुं, (राज्ञस्ताल इव ।) गुवाकवृक्षः ।

इति शब्दरत्नावली ॥

**राजतिमिशः**, पुं, सुखाशः । इति हारावली । १८१ ॥

**राजत्वं**, क्ली, राजता । राज्ञो भाव इत्यर्थे राजन्

शब्दात् त्वप्रत्ययेन निष्पन्नम् ॥ (यथा, कथा-
सरित्सागरे । २० । १९१ ।
“क्वच राजत्वमित्युक्त्रा स राजा निषिषेध तत् ॥”)

**राजदण्डः**, पुं, (राज्ञो दण्डः ।) राजशासनम् ।

यथा, --
“ऊनैकादशवर्षस्य पञ्चवर्षाधिकस्य च ।
चरेद्गुरुः सुहृद्वापि प्रायश्चित्तं विशुद्धये ॥
ततो न्यूनतरस्यास्य नापराधो न पातकम् ।
न चास्य राजदण्डोऽपि प्रायश्चित्तं न विद्यते ॥”
इति प्रायश्चित्ततत्त्वधृताङ्गिरोवचनम्॥

**राजदन्तः**, पुं, दन्तानां राजा । (“राजदन्तादिषु

परम् ।” २ । २ । ३१ । इति परनिपातः ।)
उपरिश्रेणीस्थमध्यवर्त्तिदन्तद्वयम् । यथा, --

न चैनं भूवि शक्नोति कश्चिदप्यभिवीक्षितुम्॥
सोऽग्निर्भवति वायुश्च सोऽर्क्कः सोमः स धर्म्मराट् ।
स कुबेरः स वरुणः स महेन्द्रः प्रभावतः ॥
बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥
एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम् ।
कुलं दहति राजाग्निः सपशुद्रव्यसञ्चयम् ॥
कार्य्यं सोऽवेक्ष्य शक्तिञ्च देशकालौ च तत्त्वतः ।
कुरुते धर्म्मसिद्ध्यर्थं विश्वरूपं पुनःपुनः ॥
यस्य प्रसादे पद्मा श्रीर्व्विजयश्च पराक्रमे ।
मृत्युश्च वसति क्रोधे सर्व्वतेजोमयो हि सः ॥
तं यस्तु द्वेष्टि संमोहात् स विनश्यत्यसंशयम् ।
तस्य ह्याशु विनाशाय राजा प्रकुरुते मनः ॥
तस्माद्धर्म्मं यमिष्टेषु स व्यवस्येन्नराधिपः ।
अनिष्टञ्चाप्यनिष्टेषु तं धर्म्मं न विचालयेत् ॥
तस्यार्थे सर्व्वभूतानां गोप्तारं धर्म्ममात्मजम् ।
ब्रह्मतेजोमयं दण्डमसृजत् पूर्व्वमीश्वरः ॥
तस्य सर्व्वाणि भूतानि स्थावराणि चराणि च ।
भयाद्भोगाय कल्पन्ते स्वधर्म्मान्न चलन्ति च ॥
तं देशकालौ शक्तिञ्च विद्याञ्चावेक्ष्य तत्त्वतः ।
यथार्हतः संप्रणयेन्नरेष्वन्यायवर्त्तिषु ॥
स राजा पुरुषो दण्डः स नेता शासिता च सः ।

| | | |
|---|---|---|
| | | चतुर्णामाश्रमाणाञ्च धर्म्मस्य प्रतिभूः स्मृतः ॥<br>दण्डः शास्ति प्रजाः सर्व्वा दण्ड एवाभिरक्षति ।<br>दण्डः सुप्तेषु जागर्त्ति दण्डं धर्म्मं विदुर्ब्बुधाः ॥<br>समीक्ष्य स धृतः सम्यक् सर्व्वा रञ्जयति प्रजाः ।<br>असमीक्ष्य प्रणीतस्तु विनाशयति सर्व्वतः ॥<br>यदि न प्रणयेद्राजा दण्डं दण्ड्येष्वतन्द्रितः ।<br>शूले मत्स्यानिवापक्ष्यन् दुर्ब्बलान् बलवत्तराः ॥ |

अद्यात् काकः पुरोडाशं
श्वावलिह्याद्धविस्तथा।
स्वाम्यञ्च न स्यात् कस्मिंश्चित्
प्रवर्त्तेताधरोत्तरम्॥
सर्व्वो दण्डजितो लोको दुर्लभो हि
शुचिर्नरः।
दण्डस्य हि भयात् सर्व्वं जगद्भोगाय
कल्पते॥
देवदानवगन्धर्व्वा रक्षांसि पतगोरगाः।
तेऽपि भोगाय कल्पन्ते दण्डेणैव
निपीडिताः॥
दुष्येयुः सर्व्ववर्णाश्च भिद्येरन्
सर्व्वसेतवः।
सर्व्वलोकप्रकोपश्च भवेद्दण्डस्य
विभ्रमात्॥
यत्र श्यामो लोहिताक्षो दण्डश्चरति
पापहा।
प्रजास्तत्र न मुह्यन्ति नेता चेत् साधु
पश्यति॥
तस्याहुः संप्रणेतारं राजानं
सत्यवादिनम्।
समीक्ष्य कारिणं प्राज्ञं
धर्म्मकामार्थकोविदम्॥
तं राजा प्रणयन् सम्यक्
त्रिवर्गेणाभिवर्द्धते।
कामात्मा विषमः क्षुद्रो दण्डेनैव
निहन्यते॥
दण्डो हि सुमहत्तेजो
दुर्द्धरश्चाकृतात्मभिः।
धर्म्माद्विचलितं हन्ति नृपमेव सबान्धवम्
॥
ततो दुर्गञ्च राष्ट्रञ्च लोकञ्च सचराचरम्।
अन्तरीक्षगतांश्चैव मुनीन् देवांश्च
पीडयेत्॥
सोऽसहायेन मूढेन लुब्धेनाकृतबुद्धिना।
न शक्यो न्यायतो नेतुं सक्तेन विषयेषु च
॥
शुचिना सत्यसन्धेन
यथाशास्त्रानुसारिणा।

मृगयाक्षो दिवास्वप्नः परीवादः स्त्रियो मदः।
तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः
॥
पैशुन्यं साहसं द्रोह ईर्षासूयार्थदूषणम्।
वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः
॥
द्वयोरप्येतयोर्म्मूलं यं सर्व्वे कवयो विदुः।
तं यत्नेन जयेल्लोभं तज्जावेतावुभौ गणौ॥
पानमक्षास्त्रियश्चैव मृगया च यथाक्रमम्।
एतत् कष्टतमं विद्याच्चतुष्कं कामजे गणे॥
दण्डस्य पातनञ्चैव वाक्पारुष्यार्थदूषणे।
क्रोधजेऽपि गणे विद्यात् कष्टमेतत्त्रिकं सदा॥
सप्तकस्यास्य वर्गस्य सर्व्वत्रैवानुषङ्गिणः।
पूर्ब्बं पूर्ब्बं गुरुतरं विद्याद्व्यसनमात्मवान्॥
व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते।
व्यसन्यधोऽधो व्रजति स्वर्य्यात्यव्यसनी मृतः
॥
मौलान् शास्त्रविदः शूरान् लब्धलक्षान्
कुलोद्-
गतान्।
सचिवान् सप्त चाष्टौ वा प्रकुर्व्वीत परीक्षितान्
॥
अपि यत् सुकरं कर्म्म तदप्येकेन दुष्करम्।
विशेषतोऽसहायेन किन्तु राज्यं महोदयम्॥
तैः सार्द्धं चिन्तयेन्नित्यं सामान्यं
सन्धिविग्रहम्।
स्थानं समुदयं गुप्तिं लब्धप्रशमनानि च॥
तेषां स्वं समभिप्रायमुपलभ्य पृथक् पृथक्।
समस्तानाञ्च कार्य्येषु विदध्याद्धृतमात्मनः॥
सर्व्वेषान्तु विशिष्टेन ब्राह्मणेन विपश्चिता।
मन्त्रयेत् परमं मन्त्रं राजा षाड्गुण्यसंयुतम्॥
नित्यं तस्मिन् समाश्वस्तः सर्व्वकार्य्याणि
निःक्षि-
पेत्।
तेन सार्द्धं विनिश्चित्य ततः कर्म्म समारभेत्
॥
अन्यानपि प्रकुर्व्वीत शुचीन्
प्राज्ञानवस्थितान्।
सम्यगर्थसमाहर्त्तृनमात्यान् सुपरीक्षितान्॥

एषां हि बहुगुण्येन गिरिदुर्गं विशिष्यते॥
त्रीण्याद्यान्याश्रितास्त्वेषां
मृगगर्त्ताश्रयाप्सराः।
त्रीण्युत्तराणि क्रमशः प्लवङ्गमनरामराः॥
यथा दुर्गाश्रितानेतान्नोपहिंसन्ति शत्रवः।
तथारयो न हिंसन्ति नृपं दुर्गसमाश्रितम्॥
एकः शतं योधयति प्राकारस्थो धनुर्द्धरः।
शतं दशसहस्राणि तस्माद्दुर्गं विधीयते॥
तत् स्यादायुधसम्पन्नं धनधान्येन वाहनैः
।
ब्राह्मणैः शिल्पिभिर्य्यन्त्रैर्यवसेनोदकेन च॥
तस्य मध्ये सुपर्य्याप्तं कारयेद्गृहमात्मनः।
गुप्तं सर्व्वर्त्तुकं शुभ्रं जलवृक्षसमन्वितम्॥ *
॥
तदध्यास्योद्वहेद्भार्य्यां सवर्णां
लक्षणान्विताम्।
कुले महति सम्भूतां हृद्यां रूपगुणान्विताम्
॥
पुरोहितञ्च कुर्व्वीत वृणुयादेव चर्त्विजम्।
तेऽस्य गृह्याणि कर्म्माणि
कुर्य्युर्व्वैतानिकानि च॥
यजेत राजा क्रतुभिर्व्विविधैराप्तदक्षिणैः।
धर्म्मार्थञ्चैव विप्रेभ्यो दद्याद्भोगान् धनानि
च॥
सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेद्बलिम्।
स्याच्चाम्नायपरो लोके वर्त्तेत पितृवन् नृषु
॥
अध्यक्षान् विविधान् कुर्य्यात् तत्र तत्र
विप-
श्चितः।
तेऽस्य सर्व्वाण्यवेक्षेरन् नृणां कार्य्याणि
कुर्व्व-
ताम्॥
आवृत्तानां गुरुकुलाद्विप्राणां पूजको भवेत्
।
नृपाणामक्षयो ह्येष निधिर्ब्राह्मोऽभिधीयते॥
न तं स्तेना न चामित्रा हरन्ति न च
नश्यति।

प्रणेतुं शक्यते दण्डः सुसहायेन धीमता ॥
स्वराष्ट्रे न्यायवृत्तः स्याद्भृशदण्डश्च शत्रुषु ।
सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः ॥
एवंवृत्तस्य नृपतेः शिलोञ्छेनापि जीवतः ।
विस्तीर्य्यते यशो लोके तैलबिन्दुरिवाम्भसि ॥
अतस्तु विपरीतस्य नृपतेरजितात्मनः ।
संक्षिप्यते यशो लोके घृतबिन्दुरिवाम्भसि ॥
स्वे स्वे धर्म्मे निविष्टानां सर्व्वेषामनुपूर्ब्बशः ।
वर्णानामाश्रमाणाञ्च राजा सृष्टोऽभिरक्षिता ॥
तेन यद्यत् सभृत्येन कर्त्तव्यं रक्षता प्रजाः ।
तत्तद्वोऽहं प्रवक्ष्यामि यथावदनुपूर्ब्बशः ॥
ब्राह्मणान् पर्य्युपासीत प्रातरुत्थाय पार्थिवः ।
त्रैविद्यवृद्धान् विदुषस्तिष्ठेत्तेषाञ्च शासने ॥
वृद्धांश्च नित्यं सेवेत विप्रान् वेदविदः शुचीन् ।
वृद्धसेवी हि सततं रक्षोभिरपि पूज्यते ॥
तेभ्योऽधिगच्छेद्विनयं विनीतात्मापि नित्यशः ।
विनीतात्मा हि नृपतिर्न विनश्यति कर्हिचित् ॥
बहवोऽविनयान्नष्टा राजानः सपरिच्छदाः ।
वनस्था अपि राज्यानि विनयात् प्रतिपेदिरे ॥
वेणो विनष्टोऽविनयान्नहुषश्चैव पार्थिवः ।
सुदासो यवनश्चैव सुमुखो निमिरेव च ॥
पृथुस्तु विनयाद्राज्यं प्राप्तवान् मनुरेव च ।
निर्व्वर्त्तेतास्य यावद्भिरिति कर्त्तव्यता नृभिः ।
तावतोऽतन्द्रितान् दक्षान् प्रकुर्व्वीत विचक्षणान् ॥
तेषामर्थे नियुञ्जीत शूरान् दक्षान् कुलोद्गतान् ।
शुचीनाकरकर्म्मान्ते भीरूनन्तर्न्निवेशने ॥
दूतञ्चैव प्रकुर्व्वीत सर्व्वशास्त्रविशारदम् ।
इङ्गिताकारचेष्टज्ञं शुचिं दक्षं कुलोद्गतम् ॥
अनुरक्तः शुचिर्द्दक्षः स्मृतिमान् देशकालवित् ।
वपुष्मान् वीतभीर्व्वाग्मी दूतो राज्ञः प्रशस्यते ॥
आमात्ये दण्ड आयत्तो दण्डे वैनयिकी क्रिया ।
नृपतौ कोषराष्ट्रे च दूते सन्धिविपर्य्ययौ ॥
दूत एव हि सन्धत्ते भिनत्त्येव च संहतान् ॥
दूतस्तत् कुरुते कर्म्म भिद्यन्ते येन वा न वा ॥
स विद्यादस्य कृत्येषु निगूढेङ्गितचेष्टितैः ।
आकारमिङ्गितं चेष्टा भृत्येषु च चिकीर्षितम् ॥
बुद्ध्वा च सर्व्वं तत्त्वेन परराजचिकीर्षितम् ।
तथा प्रयत्नमातिष्ठेद्यथात्मानंन पीडयेत् ॥
जाङ्गलं शस्यसम्पन्नमार्य्यप्रायमनाविलम् ।
रम्यमानतसामन्तं स्वाजीव्यं देशमावसेत् ॥
धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा ।
नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत् पुरम् ॥
सर्व्वेण तु प्रयत्नेन गिरिदुर्गं समाश्रयेत् ।
तस्माद्राज्ञा निधातव्यो ब्राह्मणेष्वक्षयो निधिः ॥
न स्कन्दते न व्यथते न विनश्यति कर्हिचित् ।
वरिष्ठमग्निहोत्रेभ्यो ब्राह्मणस्य मुखे हुतम् ॥
सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
प्राधीते शतसाहस्रमनन्तं वेदपारगे ॥
पात्रस्य हि विशेषेण श्रद्दधानतयैव च ।
अल्पं वा बहु वा प्रेत्य दानस्यावाप्यते फलम् ॥
समोत्तमाधमै राजा त्वाहूतः पालयन् प्रजाः ।
न निवर्त्तेत संग्रामात् क्षात्रं धर्म्ममनुस्मरन् ॥
संग्रामेष्वनिवर्त्तित्वं प्रजानाञ्चैव पालनम् ।
शुश्रूषा ब्राह्मणानाञ्च राज्ञां श्रेयस्करं परम् ॥
आहवेषु मिथोऽन्योन्यं जिघांसन्तो महीक्षितः ।
युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः ॥
न कूटैरायुधैर्हन्यात् युध्यमानो रणे रिपून् ।
न कर्णिभिर्नापि दिग्धैर्नाग्निज्वलिततेजनैः ॥
न च हन्यात् स्थलारूढं न क्लीवं न कृताञ्जलिम् ।
न मुक्तकेशं नासीनं न तवास्मीति वादिनम् ॥
न सुप्तं न विसन्नाहं न नग्नं न निरायुधम् ।
नायुध्यमानं पश्यन्तं न परेण समागतम् ॥
नायुधव्यसनप्राप्तं नार्त्तं नातिपरीक्षतम् ।
न भीतं न परावृत्तं सतां धर्म्ममनुस्मरन् ॥
यस्तु भीतः परावृत्तः संग्रामे हन्यते परैः ।
भर्त्तुर्यद्दष्कृतं किञ्चित्तत् सर्व्वं प्रतिपद्यते ॥
यच्चास्य सुकृतं किञ्चिदमुत्रार्थमुपार्ज्जितम् ।
भर्त्ता तत् सर्व्वमादत्ते परावृत्तहतस्य तु ॥
* ॥

| | | |
|---|---|---|
| कुवेरञ्च धनैश्वर्य्यं ब्राह्मण्यञ्चैव गाधिजः ॥<br>त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिञ्च शाश्वतीम् ।<br>आन्वीक्षिकीञ्चात्मविद्यांवार्त्तारम्भांश्च लोकतः ॥<br>इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम् ।<br>जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः ॥<br>दश कामसमुत्थानि तथाष्टौ क्रोधजानि च ।<br>व्यसनानि दुरन्तानि प्रयत्नेन विवर्ज्जयेत् ॥<br>कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः ।<br>वियुज्यतेऽर्थधर्म्माभ्यां क्रोधजेष्वात्मनैव तु ॥ | | |

रथाश्वं हस्तिनं छत्रं धनं धान्यं पशून्
स्त्रियः ।
सर्व्वद्रव्याणि कुप्यञ्च यो यज्जयति तस्य
तत् ॥
राज्ञश्च दद्युरुद्धारमित्येषा वैदिकी श्रुतिः ।
राज्ञा च सर्व्वयोधेभ्यो दातव्यमपृथग्जितम्
॥
एषोऽनुपस्कृतः प्रोक्तो योधधर्म्मः
सनातनः ।
अस्माद्धर्म्मान्न च्यवेत क्षत्त्रियो घ्नन् रणे
रिपून् ॥
अलब्धञ्चैव लिप्सेत लब्धं रक्षेत् प्रयत्नतः
।
रक्षितं वर्द्धयेच्चैव वृद्धं पात्रेषु निःक्षिपेत् ॥
एतच्चतुर्व्विधं विद्यात् पुरुषार्थप्रयोजनम् ।
अस्य नित्यमनुष्ठानं सम्यक्
कुर्य्यादतन्द्रितः ॥
अलब्धमिच्छेद्दण्डेन लब्धं रक्षेदवेक्षया ।
रक्षितं वर्द्धयेद्वृद्ध्या वृद्धं दानेन निःक्षिपेत्
॥ *
नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः
।
नित्यं संवृतसंवार्य्यो नित्यं छिद्रानुसार्य्यरेः
॥
नित्यमुद्यतदण्डस्य कृत्स्नमुद्विजते जगत्
।
तस्मात् सर्व्वाणि भूतानि दण्डेनैव
प्रसाधयेत् ॥
अमाययैव वर्त्तेत न कथञ्चन मायया ।
बुद्ध्येतारिप्रयुक्ताञ्च मायां नित्यं
स्वसंवृतः ॥
नास्य च्छिद्रं परो विद्याद्विद्याच्छिद्रं परस्य
तु ।
गूहेत् कूर्म्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥
वकवच्चिन्तयेदर्थान् सिंहवच्च पराक्रमेत्
।
वृकवच्चावलुम्पेत शशवच्च विनिष्पतेत् ॥
एवं विजयमानस्य येऽस्य स्युः
परिपन्थिनः ।

नगरे नगरे चैकं कुर्य्यात्
सर्व्वार्थचिन्तकम् ।
उच्चैः स्थानं घोररूपं नक्षत्राणामिव
ग्रहम् ।
सतानानुपरिक्रामेत् सर्व्वानेव सदा
स्वयम् ।
तेषां वृत्तं परिणयेत् सम्यग्राष्ट्रेषु तच्चरैः
॥
राज्ञो हि रक्षाधिकृताः परस्वादायिनः
शठाः ।
भृत्या भवन्ति प्रायेण तेभ्यो रक्षेदिमाः
प्रजाः ॥
ये कार्य्यिकेभ्योऽर्थमेव गृह्णीयुः
पापचेतसः ।
तेषां सर्व्वस्वमादाय राजा कुर्य्यात्
प्रवासनम् ॥
राजकर्म्मसु युक्तानां स्त्रीणां प्रेष्यजनस्य
च ।
प्रत्यहं कल्पयेद्वृत्तिं
स्थानकर्म्मानुरूपतः ॥
पणो देयोऽवकृष्टस्य षडुत्कृष्टस्य वेतनम्
।
षाण्मासिकस्तथाच्छादो धान्यद्रोणस्तु
मासिकः ॥ * ॥
क्रयविक्रयमध्वानं भक्तञ्च सपरिव्ययम् ।
योगक्षेमञ्च संप्रेक्ष्य बणिजो दापयेत्
करान् ॥
यथा फलेन युज्येत राजा कर्त्ता च
कर्म्मणाम् ।
तथावेक्ष्य नृपो राष्ट्रे कल्पयेत् सततं
करान् ॥
यथाल्पाल्पमदन्त्याद्यं वार्य्योको वत्स
षट्पदाः ।
तथाल्पाल्पो गृहीतव्यो
राष्ट्राद्राज्ञाब्दिकः
करः ॥
पञ्चाशद्भाग आदेयो राज्ञा पशुहिरण्ययोः
।

उत्थाय पश्चिमे यामे कृतशौचः समाहितः ।
हुताग्निर्ब्राह्मणांश्चार्च्य प्रविशेत् स शुभां
सभाम् ॥
तत्र स्थितः प्रजाः सर्व्वाः प्रतिनन्द्य
विसर्ज्जयेत् ।
विसृज्य च प्रजाः सर्व्वा मन्त्रयेत् सह
मन्त्रिभिः ॥
गिरिपृष्ठं समारुह्य प्रासादं वा रहोगतः ।
अरण्ये निःशलाके वा मन्त्रयेदविभावितः ॥
यस्य मन्त्रं न जानन्ति समागम्य पृथग्जनाः ।
सकृत्स्नां पृथिवीं भुङ्क्ते कोषहीनोऽपि
पार्थिवः ॥
जडमूकान्धवधिरांस्तिर्य्यग्योनान् वयोगतान्
।
स्त्रीम्लेच्छव्याधितव्यङ्गान्
मन्त्रकालेऽपसारयेत् ॥
भिन्दन्त्यवमता मन्त्रं तैर्य्यग्योनास्तथैव च ।
स्त्रियश्चैव विशेषेण तस्मात्तत्रादृतो भवेत् ॥
मध्यन्दिनेऽर्द्धरात्रे वा विश्रान्तो विगतक्लमः ।
चिन्तयेद्धर्म्मकामार्थान् सार्द्धं तैरेक एव वा ॥
परस्परविरुद्धानां तेषाञ्च समुपार्ज्जनम् ।
कन्यानां सम्प्रदानञ्च कुमाराणाञ्च रक्षणम् ॥
दूतसंप्रेषणञ्चैव कार्य्यशेषं तथैव च ।
अन्तःपुरप्रचारञ्च प्रणिधीनाञ्च चेष्टितम् ॥
कृत्स्नं चाष्टबिधं कर्म्म पञ्चवर्गञ्च तत्त्वतः ।
अनुरागापरागौ च प्रचारं मण्डलस्य च ॥
मध्यमस्य प्रचारञ्च विजिगीषोश्च चेष्टितम् ।
उदासीनप्रचारञ्च शत्रोश्चैव प्रयत्नतः ॥ * ॥
एताः प्रकृतयो मूलं मण्डलस्य समासतः ।
अष्टौ चान्याः समाख्याता द्वादशैव तु ताः
स्मृताः ॥
अमात्यराष्ट्रदुर्गार्थदण्डाख्याः पञ्च चापराः ।
प्रत्येकं कथिता ह्येताः संक्षेपेण द्विसप्ततिः ॥
अनन्तरमरिं विद्यादरिसेविनमेव च ।
अरेरनन्तरं मित्रमुदासीनं तयोः परम् ॥
तान् सर्व्वानभिसन्दध्यात्
सामादिभिरुपक्रमैः ।
व्यस्तैश्चैव समस्तैश्च पौरुषेण नयेन च ॥
सन्धिञ्च विग्रहञ्चैव यानमासनमेव च ।

तानानयेद्वशं सर्व्वान् सामादिभिरुपक्रमैः
॥
यदि ते तु न तिष्ठेयुरुपायैः प्रथमैस्त्रिभिः ।
द्दण्डेनैव प्रसह्यैताञ्छनकैर्व्वशमानयेत् ॥
सामादीनामुपायानां चतुर्णामपि पण्डिताः
।
सामदण्डौ प्रशंसन्ति नित्यं राष्ट्राभिवृद्धये
॥
यथोद्धरति निर्द्दाता कक्षं धान्यञ्च रक्षति ।
तथा रक्षेन्नृपो राष्ट्रं हन्याच्च परिपन्थिनः ॥
मोहाद्राजा स्वराष्ट्रं यः कर्षयत्यनवेक्षया ।
सोऽचिराद्भ्रश्यते राज्याज्जीविताच्च
सबान्धवः ॥
शरीरकर्षणात् प्राणाः क्षीयन्ते प्राणिनां
यथा ।
तथा राज्ञामपि प्राणाः क्षीयन्ते
राष्ट्रकर्षणात् ॥
राष्ट्रस्य संग्रहे नित्यं विधानमिदमाचरेत् ।
सुसंगृहोतराष्ट्रो हि पार्थिवः सुखमेधते ॥
द्वयोस्त्रयाणां पञ्चानां मध्ये गुल्ममधिष्ठितम्
।
तथा ग्रामशतानाञ्च कुर्य्याद्राष्ट्रस्य संग्रहम्
॥
ग्रामस्याधिपतिं कुर्य्याद्दशग्रामपतिं तथा ।
विंशतीशं शतेशञ्च सहस्रपतिमेव च ॥
ग्रामे दोषान् समुत्पन्नान् ग्रामिकः शनकैः
स्वयम् ।
शंसेद्ग्रामदशेशाय दशेशो विंशतीशिनम् ॥
विंशतीशस्तु तत्सर्व्वं शतेशाय निवेदयेत् ।
शंसेद्ग्रामशतेशस्तु सहस्रपतये स्वयम् ॥
यानि राजप्रदेयानि प्रत्यहं ग्रामवासिभिः ।
अन्नपानेन्धनादीनि
ग्रामिकस्तान्यवाप्नुयात्॥
दशो कुलन्तु भुञ्जीत विंशी पञ्च कुलानि च
।
ग्रामं ग्रामशताध्यक्षः सहस्राधिपतिः पुरम्
॥
तेषां ग्राम्याणि कार्य्याणि पृथक् कार्य्याणि
चैव
हि ।

धान्यानामष्टमो भागः षष्ठो द्वादश एव वा
॥
आददीताथ षड्भागं द्रुमांसमधुसर्पिषाम्
।
गन्धौषधिरसानाञ्च मूलपुष्पफलस्य च
॥
पत्रशाकतृणानाञ्च वैदलस्य च चर्म्मणाम्
।
मृण्मयानाञ्च भाण्डानां
सर्व्वस्याश्ममयस्य च ॥
म्रियमाणोऽप्याददीत न राजा
श्रोत्रियात्करम् ।
न च क्षुधास्य संसीदेत् श्रोत्रियो विषये
वसन् ॥
यस्य राज्ञस्तु विषये श्रोत्रियः सीदति
क्षुधा ।
तस्यापि तत्क्षुधा राष्ट्रमचिरेणैव सीदति
॥
श्रुतवित्ते विदित्वास्य वृत्तिं धर्म्म्यां
प्रकल्पयेत् ।
संरक्षेत् सर्व्वतश्चैनं पिता
पुत्रमिवौरसम् ॥
संरक्ष्यमाणो राज्ञा यं कुरुते
धर्म्ममन्वहम् ।
तेनायुर्व्वर्द्धते राज्ञो द्रविणं राष्ट्रमेव च ॥
यत्किञ्चिदपि वर्षस्य दापयेत्
करसंज्ञितम् ।
व्यवहारेण जीवन्तं राजा राष्ट्रे पृथग्जनम्
॥
कारुकान् शिल्पिनश्चैव
शूद्रांश्चात्मोपजीविनः ।
एकैकं कारयेत् कर्म्म मासि मासि
महीपतिः ॥
नोच्छिन्द्यादात्मनो मूलं
परेषाञ्चातितृष्णया ।
उच्छिन्दन् ह्यात्मनो मूलमात्मानं तांश्च
पीड-
येत् ॥
तीक्ष्णश्चैव मृदुश्च स्यात् कार्य्यं वीक्ष्य
मही-
पतिः ।

द्वैधीभावं संश्रयञ्च षड्गुणांश्चिन्तयेत् सदा ॥
आसनञ्चैव यानञ्च सन्धिं विग्रहमेव च ।
कार्य्यं वीक्ष्य प्रयुञ्जीत द्वैधं संश्रयमेव च ॥
सन्धिन्तु द्विविधं विद्याद्राजा विग्रहमेव च ।
उभे यानासने चैव द्विविधः संश्रयः स्मृतः ॥
समानयानकर्म्मा च विपरीतस्तथैव च ।
तदात्वायतिसंयुक्तः सन्धिर्ज्ञेयो द्विलक्षणः ॥
स्वयंकृतश्च कार्य्यार्थमकाले काल एव वा ।
मित्रस्य चैवापकृते द्विविधो विग्रहः स्मृतः ॥
एकाकिनश्चात्ययिके कार्य्ये प्राप्ते यदृच्छया ।
संहतस्य च मित्रेण द्विविधं यानमुच्यते ॥
क्षीणस्य चैव क्रमशो दैवात् पूर्ब्बकृतेन वा ।
मित्रस्य चानुरोधेन द्विविधं स्मृतमासनम् ॥
बलस्य स्वामिनश्चैव स्थितिः
कार्य्यार्थसिद्धये ।
द्विविधं कीर्त्त्यते द्वैधं षाड्गुण्यगुणवेदिभिः ॥
अथसम्पादनार्थञ्च पीड्यमानस्य शत्रुभिः ।
साधुषु व्यपदेशार्थं द्विविधः संश्रयः स्मृतः ॥
* ॥
यदावगच्छेदायत्यामाधिक्यं ध्रुवमात्मनः ।
तदात्वे चाल्पिकां पीडां तदा सन्धिं
समाश्रयेत् ॥”

| | | |
|---|---|---|
| राज्ञोऽन्यः सचिवः स्निग्धस्तानिपश्येदतन्द्रितः ॥ | तीक्ष्णश्चैव मृदुश्चैव राजा भवति सम्मतः ॥<br>अमात्यमुख्यं धर्म्मज्ञं प्राज्ञं दान्तं कुलोद्गतम् ।<br>स्थापयेदासने तस्मिन खिन्नः कार्य्येक्षणे नृणाम् ॥<br>एवं सर्व्वं विधायेदमिति कर्त्तव्यमात्मनः ।<br>युक्तश्चैवाप्रमत्तश्च परिरक्षेदिमाः प्रजाः ॥<br>विक्रोशन्त्यो यस्य राष्ट्राद्ध्रियन्ते दस्युभिः प्रजाः ।<br>संपश्यतः सभृत्यस्य मृतः स न तु जीवति ॥<br>क्षित्त्रियस्य परो धर्म्मः प्रजानामेव पालनम् ।<br>निर्द्दिष्टफलभोक्ता हि राजा धर्म्मेण युज्यते ॥ | |

तदात्वे तत्काले ।
"यदा प्रहृष्टा मन्येत सर्व्वास्तु प्रकृतीर्भृशम् ।
अत्युच्छ्रितं तथात्मानं तदा कुर्व्वीत विग्रहम् ॥
यदा मन्येत भावेन हृष्टं पुष्टं बलं स्वकम् ।
परस्य विपरीतञ्च तदा यायाद्रिपुं प्रति ॥
यदा तु स्यात् परिक्षीणो वाहनेन बलेन च ।
तदासीत प्रयत्नेन शनकैः सान्त्वयन्नरीन् ॥
मन्येतारिं यदा राजा सर्व्वथा बलवत्तरम् ।
तदा द्विधा बलं कृत्वा साधयेत् कार्य्यमात्मनः ॥
यदा परबलानान्तु गभनीयतमो भवेत् ।
तदा तु संश्रयेत् क्षिप्रं धार्म्मिकं बलिनं नृपम् ॥
निग्रहं प्रकृतीनाञ्च कुर्य्याद्योऽरिबलस्य च ।
उपसेवेत तं नित्यं सर्व्वयत्नैर्गुरुं यथा ॥
यदि तत्रापि संपश्येत् दोषं संश्रयकारितम् ।
सुयुद्धमेव तत्रापि निर्व्विशङ्कः समाचरेत् ॥
सर्व्वोपायैस्तथा कुर्य्यान्नीतिज्ञः पृथिवीपतिः ।
यथास्याभ्यधिका न स्युर्मित्रोदासीनशत्रवः ॥
आयतिं सर्व्वकार्य्याणां तदात्वञ्च विचारयेत् ।
अतीतानाञ्च सर्व्वेषां गुणदोषौ च तत्त्वतः ॥
आयत्यां गुणदोषज्ञस्तदात्वे क्षिप्रनिश्चयः ।
दूषयेच्चास्य सततं यवसान्नोदकेन्धनम् ॥
भिन्द्याच्चैव तडागानि प्राकारपरिखास्तथा ।
समवस्कन्दयेच्चैनं रात्रौ वित्रासयेत्तथा ॥
उपजप्यानुपजपेद्बुध्येतैव च तत्कृतम् ।
युक्ते च दैवे युध्येत जयप्रेप्सुरपेतभीः ॥
साम्ना दानेन भेदेन समस्तैरथवा पृथक् ।
विजेतुं प्रयतेतारीन्न युद्धेन कदाचन ॥
अनित्यो विजयो यस्माद्दृश्यते युध्यमानयोः ।
पराजयश्च संग्रामे तस्माद्युद्धं विवर्ज्जयेत् ॥
त्रयाणामप्युपायानां पूर्व्वोक्तानामसम्भवे ।
तथा युध्येत संयत्तो विजयेत रिपून् यथा ॥ * ॥
जित्वा सम्पूजयेद्देवान् ब्राह्मणांश्चैव धार्म्मिकान् ।
प्रदद्यात् परिहारांश्च ख्यापयेदभयानि च ॥
सर्व्वेषान्तु विदित्वैषां समासेन चिकीर्षितम् ।
स्थापयेत्तत्र तद्वश्यं कुर्य्याच्च समयक्रियाम् ॥
प्रमाणानि च कुर्व्वीत तेषां धर्म्म्यान् यथो-
दितान् ।
रत्नैश्च पूजयेदेनं प्रधानपुरुषैः सह ॥
आदानमप्रियकरं दानञ्च प्रियकारकम् ।
अभीप्सितानामर्थानां काले युक्तं प्रशस्यते ॥
सर्व्वं कर्म्मेदमायत्तं विधाने दैवमानुषे ।
तयोर्द्दैवमचिन्त्यन्तु मानुषे विद्यते क्रिया ॥
सह वापि व्रजेद्युक्तः सन्धिं कृत्वा प्रयत्नतः ।
वेशाभरणसंशुद्धाः स्पृशेयुः सुसमाहिताः ॥
एवं प्रयत्नं कुर्व्वीत यानशय्यासनाशने ।
स्नाने प्रसाधने चैव सर्व्वालङ्कारकेषु च ॥
भुक्तवात् विहरेच्चैव स्त्रीभिरन्तःपुरे सह ।
विहृत्य तु यथाकालं पुनः कार्य्याणि चिन्तयेत् ॥
अलङ्कृतश्च संपश्येदायुधीयं पुनर्ज्जनम् ।
वाहनानि च सर्व्वाणि शस्त्राण्याभरणानि च ॥
सन्ध्याञ्चोपास्य शृणुयादन्तर्व्वेश्मनि शस्त्रभृत् ।
रहस्याख्यायिनाञ्चैव प्रणिधीनाञ्च चेष्टितम् ॥
गत्वा कक्षान्तरं त्वन्यत् समनुज्ञाप्य तं जनम् ।
प्रविशेद्भोजनार्थञ्च स्त्रीवृतोऽन्तःपुरं पुनः ॥
तत्र भुक्त्वा पुनः किञ्चित्तूर्य्यघोषैः प्रहर्षितः ।
संविशेत्तु यथाकालमुत्तिष्ठेच्च गतक्लमः ॥
एतद्विधानमातिष्ठेदरोगः पृथिवीपतिः ।
अस्वस्थः सर्व्वमेतत्तु भृत्येषु विनियोजयेत् ॥"
इति मानवे ७ अध्यायः ॥ * ॥
कालीकापुराणोक्तराजधर्म्मः ८५ । ८६ अध्या-
ययोः द्रष्टव्यः । महाभारतोक्तराजधर्म्मः शान्ति-
पर्व्वणि द्रष्टव्यः । पद्मपुराणोक्तराजधर्म्मः स्वर्ग-
खण्डे १३८ अध्याये द्रष्टव्यः ॥

**राजधानकं**, क्ली, (धीयतेऽत्रेति । धा + ल्युट् । ततः कन् । राज्ञां धानकं नगरम् ।) राज-
पुरम् । इति शब्दरत्नावली ॥

**राजधानी**, स्त्री, (धीयतेऽस्यामिति । धा + अधि-
करणे ल्युट् । ङीप् । राज्ञां धानी नगरी ।)
राजधानिका । तत्पर्य्यायः । कोट्टः २ राज-
धानकम् ३ । इति शब्दरत्नावली ॥ स्कन्धा-
वारः ४ । इति हेमचन्द्रः ॥ (यथा, रघुः । २ । ७० ।
"तौ दम्पती स्वां प्रति राजधानीं
प्रस्थापयामास वशी वशिष्ठः ॥")

**राजधान्यं**, क्ली, (राजप्रियं धान्यम् ।) श्यामाकः ।
इति राजनिर्घण्टः ॥ (यथा, बृहत्संहिता-
याम् । १५ । १२ ।
"त्वाष्ट्रेभूषणमणिरागलेख्यगान्धर्व्वगन्धयुक्तिज्ञाः ।
गणितपटुतन्तुवायाः शालाक्या राजधान्यानि ॥")

**राजधुस्तूरकः**, पुं, (धुस्तूरकाणां राजा । राजदन्ता-

अतीते कार्य्यशेषज्ञः
शत्रुभिर्नाभिभूयते ॥
यथैनं
नाभिसन्दध्युर्म्मित्रोदासीनशत्रवः ।
तथा सर्व्वं संविदध्यादेष सामासिको
नयः ॥
यदा तु यानमातिष्ठेदरिराष्ट्रं प्रति
प्रभुः ।
तदानेन विधानेन यायादरिपुरं शनैः
॥
मार्गशीर्षे शुभे मासि यायाद्यात्रां
महीपतिः ।
फालगुनं वाथ चैत्रं वा मासौ प्रति
यथाबलम् ॥
अन्येष्वपि तु कालेषु यदा पश्येद्ध्रुवं
जयम् ।
तदा यायाद्विगृह्यैव व्यसने चोत्थिते
रिपोः ॥
कृत्वा विधानं मूले तु यात्रिकञ्च
यथाविधि ।
उपगृह्यास्पदञ्चैव चारान्
सम्यग्विधाय च ॥
संशोध्य त्रिविधं मार्गं षड्विधञ्च बलं
स्वकम् ।
साम्परायिककल्पेन यायादरिपुरं
शनैः ॥
शत्रुसेविनि मित्रे च गूढे युक्ततरो
भवेत् ।
गतप्रत्यागते चैव स हि कष्टतरो रिपुः
॥
दण्डव्यूहेन तन्मार्गं यायात्तु शकटेन
वा ।
वराहमकराभ्यां वा सूच्या वा गरुडेन
वा ॥
यतश्च भयमाशङ्केत्ततो
विस्तारयेद्बलम् ।
पद्मेन चैव व्यूहेन निविशेत सदा
स्वयम् ॥
सेनापतिबलाध्यक्षौ सर्व्वदिक्षु
निवेशयेत् ।

मित्रं हिरण्यं भूमिं वा सम्पश्यंस्त्रिविधं
फलम् ॥
पार्ष्णिग्राहञ्च संप्रेक्ष्य तथाक्रन्दञ्च मण्डले
।
मित्रादथाप्यमित्राद्वा यात्राफलमवाप्नुयात्
॥”
आक्रन्दः पार्ष्णिग्राहस्य नियामको राजा
।
“हिरण्यभूमिसम्प्राप्त्या पार्थिवो न
तथैधते ।
यथा मित्रं ध्रुवं लब्ध्वा
कृशमप्यायतिक्षमम् ॥ * ॥
धर्म्मज्ञञ्च कृतज्ञञ्च तुष्टप्रकृतिमेव च ।
अनुरक्तं स्थिरारम्भं लघु मित्रं प्रशस्यते
॥
प्राज्ञं कुलीनं शूरञ्च दक्षं दातारमेव च ।
कृतज्ञं धृतिमन्तञ्च कष्टमाहुररिं बुधाः ॥
आर्य्यता पुरुषज्ञानं शौर्य्यं करुणवेदिता
।
स्थौललक्ष्यञ्च सततमुदासीनगुणोदयः
॥”
स्थौललक्ष्यं बहुप्रदत्वम् ।
“क्षेम्यां शस्यप्रदां नित्यं पशुवृद्धिकरीमपि
।
परित्यजेन्नृपो भूमिमात्मार्थमविचारयन् ॥
आपदर्थं धनं रक्षेद्दारान्रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥
सह सर्व्वाः समुत्पन्नाः प्रसमीक्ष्यापदो
भृशम् ।
संयुक्तांञ्च वियुक्तांश्च सर्व्वोपायान्
सृजेद्बुधः ॥
उपेतारमुपेयञ्च सर्व्वोपायांश्च कृत्स्नशः
।
एतत् त्रयं समाश्रित्य प्रयतेतार्थसिद्धये
॥”
उपेतारं आत्मानम् । उपेयं प्राप्तव्यम् ॥ *
॥
“एवं सर्व्वमिदं राजा सह सम्मन्त्र्य
मन्त्रिभिः ।
व्यायामाप्लुत्य मध्याह्ने भोक्तुमन्तःपुरं
विशेत् ॥

दित्वात् परनिपातः ।) बृहद्धुस्तूरः । तत्पर्य्यायः ।
राजधूर्त्तः २ महाशठः ३ निस्त्रैणपुष्पकः ४
भ्रान्तः ५ राजस्वर्णः ६ । इति राजनिर्घण्टः ॥
अस्य गुणाः धुस्तूरशब्दे द्रष्टव्याः ॥

**राजनामा**, [न्] पुं, (राज्ञो नाम नाम यस्य ।)
पटोलः । इति राजनिर्घण्टः ॥

**राजनीतिः**, स्त्री, (राज्ञां नीतिः ।) राज्ञां नयः ।
यथा, चाणक्यपण्डितकृतप्रथमः श्लोकः ।
“नानाशास्त्रोद्धृतं वक्ष्ये राजनीतिसमुच्चयम् ।
सर्व्वबीजमिदं शास्त्रं चाणक्यं सारसंग्रहम् ॥”
सा यथा, --
“गदितं वलिशुक्राभ्यां श्रुत्वा भागवतोऽसुरः ।
प्राह धर्म्मार्थसंयुक्तं प्रह्लादो वाक्यमुत्तमम् ॥
यदायत्यां क्षमं राजन् ! यद्धितं भुवनस्य ह ।
अविरोधेन धर्म्मस्य अर्थस्योपार्ज्जनञ्च यत् ॥
सर्व्वसत्वानुगमनं कामवर्गफलञ्च यत् ।

| | | |
|---|---|---|
| यतश्च भयमाशङ्केत् प्राचीं तां कल्पयेद्दिशम् ॥<br>गुल्मांश्च स्थापयेदाप्तान् कृतसंज्ञान् समन्ततः ।<br>स्थाने युद्धे च कुशलानभीरूनविकारिणः ॥ * ॥<br>संहतान् योधयेदल्पान् कामं विस्तारयेद्बहून् ।<br>सूच्या वज्रेण चैवैतान् व्यूहेन व्यूह्य योधयेत् ॥<br>स्यन्दनाश्वैः समे युध्येदनूपे नौद्विपैस्तथा ।<br>वृक्षगुल्मावृते चापैरसिचर्म्मायुधैः स्थले ॥<br>कुरुक्षेत्रांश्च मत्स्यांश्च पञ्चालान् शूरसेनजान् ।<br>दीर्घान् लघूंश्चैव नरानग्रानीकेषु योधयेत् ॥<br>प्रहर्षयेद्बलं व्यूह्य तांश्च सम्यक् परीक्षयेत् ।<br>चेष्टाश्चैव विजानीयादरीन् योधयतामपि ॥<br>उपरुध्यारिमासीत राष्ट्रं चास्योपपीडयेत् । | तत्रात्मभूतैः कालज्ञैरहार्य्यैः परिचारकैः ।<br>सुपरीक्षितमन्नाद्यमद्यान्मन्त्रैर्विषापहैः ॥<br>विषघ्नैरगदैश्चास्य सर्व्वद्रव्याणि योजयेत् ।<br>विषघ्नानि च रत्नानि नियतो धारयेत् सदा ॥<br>परीक्षिताः स्त्रियश्चैनं व्यजनोदकधूपनैः । | |

परत्रेह च यच्छ्रेयः पुत्र तत् कर्म्म आचर ॥
यथा श्लाघां प्रयास्यद्य यथा कीर्त्तिर्भवेत्तव ।
यथा नापयशोयोगस्तथा कुरु महामते ॥
एतदर्थं श्रियं दीप्तां काङ्क्षन्ते पुरुषोत्तमाः ।
येनैति हि गृहेऽस्माकं निवसन्ति सुनिर्व्वृताः ।
वृद्धो ज्ञातिर्गुणा विप्रः कीर्त्तिश्च यशसा सह ॥
तस्माद्यथा ते निवसन्ति पुत्र-राज्यस्थितस्येह कुलोत्तमाद्याः ।
तथा यतस्वामलसत्त्वचेष्टया यथा यशस्वी भवितासि लोके ॥
भूम्यां सदा ब्राह्मणभूषितायां क्षेत्रान्वितायां दृढवापितायाम् ।
शुश्रूषणासक्तसमुद्भवायां ऋद्धिं प्रयान्तीह नराधिपेन्द्राः ॥
तस्माद्द्विजाग्र्याः श्रुतिशास्त्रयुक्ता नराधिपांस्ते प्रतियाजयन्ते ।
दिव्यैर्यजन्तु क्रतुभिर्द्विजेन्द्रा यज्ञाग्निधूमो न नृपस्य शान्तिः ॥
तपोऽध्ययनसम्पन्ना याजनाध्यापने रताः ।
सन्तु विप्रा बले पूज्यास्त्वत्तोऽनुज्ञामवाप्यहि ॥
स्वाध्याययज्ञनिरता दातारः शस्त्रजीविनः ।
क्षत्त्रियाः सन्तु दैत्येन्द्र प्रजापालनधर्म्मिणः ॥
यज्ञाध्ययनसम्पन्ना दातारः कृषिकारिणः ।
पाशुपाल्यं प्रकुर्व्वन्तु वैश्या विपिनजीविनः ॥
ब्राह्मणक्षत्त्रियविशां सदा शुश्रूषणे रताः ।
वर्ज्जयेत सुरापानं मृगया वर्ज्जयेत् सदा ।
वाक्यं रूक्षं न वक्तव्यं वृथा यावत् कदाचन ॥
राजगुह्यं न वक्तव्यं दूतभेदं विवर्ज्जयेत् ।
वर्ज्जयेदतिपारुष्यं असद्भिश्च समागमम् ॥
अर्थदूषणकञ्चैव न कर्त्तव्यं कदाचन ।
अमात्यं नाप्रियं ब्रूयाद्यदीच्छेद्राजकर्म्मणि ॥
नाहं निवारणीयस्ते गमनाय पथे स्थितः ।
एतन्मे क्रियतां शीघ्रं यदीच्छसि मम प्रियम् ॥
ततः पितुर्व्वचः श्रुत्वा राजपुत्रो यशस्विनः ।
उभौ तु पादौ संगृह्य कारुण्यं प्रत्युवाच तम् ॥”
इत्यादि श्रीवराहपुराणे भगवच्छास्त्रे शौकरवे तीर्थमाहात्म्ये आदित्यवरप्रदानमृगजम्बुकोपाख्यानं नामाध्यायः ॥ * ॥
अन्यच्च ।
मनुरुवाच ।
“राज्ञोऽभिषिक्तमात्रस्य किंनु कृत्यतमं भवेत् ।
एतत् सर्व्वं समाचक्ष्व सम्यग्वेत्ति यतो भवान् ॥
मत्स्य उवाच ।
अभिषेकार्द्रशिरसा राज्ञा राजीवलोचन ।
सहायावरणं कार्य्यं तत्र राज्यं प्रतिष्ठितम् ॥
यदस्याल्पतरं कर्म्म तदप्येकेन दुष्करम् ।
पुरुषेणासहायेन किन्नु राज्यं महत् पदम् ॥
तस्मात् सहायान् वरयेत् कुलीनान् नृपतिः
षाड्गुण्यविधितत्त्वज्ञो देशभाषाविशारदः ।
सन्धिविग्रहिकः कार्य्यो राज्ञा नयविशारदः ॥
आयव्ययज्ञो लोकज्ञो देशोत्पत्तिविशारदः ।
कृताकृतज्ञो भृत्यानां ज्ञेयः स्यादेष रक्षिता ॥
सुरूपस्तरुणः प्रांशुर्दृढभक्तिः कुलोचितः ।
शूरः क्लेशसहश्चैव खड्गधारी प्रकीर्त्तितः ॥
शूरश्च बलयुक्तश्च गजाश्वरथकोविदः ।
धनुर्धारी भवेद्राज्ञः सर्व्वक्लेशसहः शुचिः ॥
निमित्तशकुनज्ञानहयशिक्षाविशारदः ।
हयायुर्व्वेदतत्त्वज्ञो भूवि भागविशेषवित् ॥
स्वामिभक्तो महोत्साहः सर्व्वेषाञ्च प्रियंवदः ।
बलाबलज्ञो रथिकः स्थिरदृष्टिः प्रियंवदः ॥
शूरश्च कृतविद्यश्च सारथिः परिकीर्त्तितः ।
अनाहार्य्यः शुचिर्दक्षश्चिकित्सितविदांवरः ॥
सूदशास्त्रविशेषज्ञः सूदाध्यक्षः प्रशस्यते ।
सूदशास्त्रविधानज्ञाः पराभेद्याः कुलोद्गताः ।
सर्व्वे महानसे धार्य्या लुप्तकेशनखा जनाः ॥
समः शत्रौ च मित्रे च धर्म्मशास्त्रविशारदः ।
विप्रमुख्यः कुलीनश्च धर्म्माधिकरणो भवेत् ॥
कार्य्यास्तथाविधास्तत्र द्विजमुख्याः सभासदः ।
सर्व्वदेशाक्षराभिज्ञः सर्व्वशास्त्रविशारदः ॥
लेखकः कथितो राज्ञः सर्व्वाधिकरणेषु वै ।
शीर्षोपेतान् सुसम्पूर्णान् समश्रेणिगतान् समान् ।
अक्षरान् वै लिखेत् यस्तु लेखकः स वरःस्मृतः ॥
उपायवाक्यकुशलः सर्व्वशास्त्रविशारदः ।
बह्वर्थवक्ता चाल्पेन लेखकः स्याद्भृगूत्तम ॥
वाक्याभिप्रायतत्त्वज्ञो देशकालविभागवित् ।
अनाहार्य्यो नृपे भक्तो लेखकः स्याद्भृगूत्तम ॥
पुरुषान्तरतत्त्वज्ञाः प्रांशवश्चाप्यलोलुपाः ।
धर्म्माधिकरणे कार्य्या जनाह्वानकरा नराः ।
एवंविधास्तथा कार्य्या राज्ञा दौवारिका जनाः ।
लोहवस्त्राजिनादीनां रत्नानाञ्च विधानवित् ॥
विज्ञाता फल्गुसाराणामनाहार्य्यः शुचिः सदा ।
निपुणश्चाप्रमत्तश्च धनाध्यक्षः प्रकीर्त्तितः ॥
आयद्वारेषु सर्व्वेषु धनान्यक्षसमा नराः ।
व्ययद्वारेषु च तथा कर्त्तव्या पृथिवीक्षिता ॥
परम्परागतो यः स्यादष्टाङ्गे तु चिकित्सिते ।

शूद्राः सन्त्वसुरश्रेष्ठ तवाज्ञाकारिणः सदा ॥
यदा वर्णाः स्वधर्म्मस्था भवन्ति दितिजेश्वर ! ।
धर्म्मवृद्धिस्तदा स्याद्वै धर्म्मवृद्धौ नृपोदयः ॥
तस्माद्वर्णा सधर्म्मस्थास्त्वया कार्य्याः सदा बले ! ।
तद्वृद्धौ भवतो वृद्धिस्तद्धानौ हानिरुच्यते ॥
इत्थं वचः श्राव्य महासुरेन्द्रो बलिं महात्मा स बभूव तूष्णीम् ।
ततो यदाज्ञापयसे करिष्ये इत्थं बलिः प्राह वचो महर्षे ॥"
इति वामने ७१ अध्यायः ॥ * ॥
अपि च ।
"एवं दत्त्वा ततो राज्यं मूद्र्ध्नि चाघ्राय धर्म्मवित् ।
उवाच मधुरं वाक्यं पुत्त्रं पुत्त्रवतां वरः ॥
राज्यस्थेनापि ते पुत्त्र कर्त्तव्यं शृणु तन्मम ।
यदीच्छेत् परमं धर्म्मं पितॄणां तारणं तथा ॥
दातव्योऽर्त्तिर्न कर्त्तव्या हन्तव्या परदारिकाः ।
बालवाताश्च हन्तव्या हन्तव्या स्त्रीविघातकाः ॥
मा लोभं परद्रव्येषु अन्यायोपार्ज्जितेषु च ।
न चिरं तिष्ठते क्वापि सर्व्वे मान्याः कदाचन ॥
रक्षणीयश्च ते देशः कुलन्यायवशार्ज्जितः ।
नित्योद्युक्तेन स्थातव्यममात्यवचनं कुरु ॥
अमात्यो यद्वचो ब्रूयात् पुत्त्र कार्य्यविमर्शनम् ।
अवश्यमेव कर्त्तव्यं शरीरपरिरक्षणम् ॥
प्रजा येन प्रमोदन्ति येन तुष्यन्ति ब्राह्मणाः ।
स्वयम् ।
शूरान् कुलीनान् जातीयान् बलयुक्तान् श्रिया-
न्वितान् ॥
रूपसत्त्वगुणोपेतान् सम्मतान क्षमया युतान् ।
क्लेशक्षमान् महोत्साहान् धर्म्मज्ञांश्च प्रियं-
वदान् ॥
हितोपदेशकालज्ञान् स्वामिभक्तान् यशो-ऽर्थिनः ।
एवंविधान् सहायांश्च शुभकर्म्मसु योजयेत् ॥
गुणहीनानपि सदा विज्ञाय नृपतिः स्वयम् ॥
कर्म्मस्वेव नियुञ्जीत यथायोग्येषु भारत ! ।
कुलीनः शीलसम्पन्नो धनुर्व्वेदविशारदः ।
हस्तिशिक्षाश्वशिक्षासु कुशलः श्लक्ष्णभाषणः ॥
निमित्ते शकुनज्ञाने वेत्ता चैव चिकित्सिते ।
कृतज्ञः कर्म्मणा शूरस्तथा क्लेशसहो ऋजुः ॥
व्यूहतत्त्वविधानज्ञः फल्गुसारविशेषवित् ।
राज्ञा सेनापतिः कार्य्यो ब्राह्मणः क्षत्त्रियो यथा ॥
प्रांशुः सुरूपो दक्षश्च प्रियवादी न चोद्धतः ।
चित्तग्राहश्च सर्व्वेषां प्रतीहारो विधीयते ॥
यथोक्तवादी दूतः स्याद्देशभाषाविशारदः ।
शक्तः क्लेशसहो वाग्मी देशकालविभाषितः ॥
विज्ञातदेशकालश्च दूतः स्यात् स महीक्षितः ।
वक्ता नयस्य यः काले स दूतो भूपतेर्भवेत् ॥
अनाहार्य्यः स वैद्यः स्याद्धर्म्मात्मा च कुलोद्गतः ॥
प्राणाचार्य्यः स विज्ञेयो वचनं तस्य भूभुजः ।
राजन् राज्ञा सदा कार्य्यं यथाकार्य्यं पृथग्-जनैः ॥
हस्तिशिक्षाविधानज्ञो वनजातिविशारदः ।
क्लेशक्षमस्तथा राज्ञो गजाध्यक्षः प्रशस्यते ॥
एतैरेव गुणैर्युक्तः स्वासनश्च विशेषतः ।
गजारोहो नरेन्द्रस्य सर्व्वकर्म्मणि शस्यते ॥
हयशिक्षाविधानज्ञस्तच्चिकित्सितपारगः।
अश्वाध्यक्षो महीभर्त्तुः स्वासनश्च प्रशस्यते ॥
अनाहार्य्यश्च शूरश्च तथा प्राज्ञः कुलोद्गतः ।
दुर्गाध्यक्षः स्मृतो राज्ञ उद्युक्तः सर्व्वकर्म्मसु ॥
वास्तुविद्याविधानज्ञो लघुहस्तो जितश्रमः ।
दीर्घदर्शी च शूरश्च स्थपतिः परिकीर्त्तितः ॥

| एवं ते पुत्त्र कर्त्तव्यं मम प्रियहितैषिणा ॥<br>सप्त व्यसनं वर्ज्येत दोषो राज्ञस्तु तन्महत् ।<br>येषु राजा विनश्येत सम्पन्नोऽपि महाद्युतिः ॥ | प्रांशवो व्यायताः शूराः दृढभक्ता निराकुलाः ।<br>राज्ञा तु रक्षिणः कार्य्याः सदा क्लेशसहा हिताः ॥<br>अनाहार्य्योऽनृशंसश्च दृढभक्तिश्च पार्थिवे ।<br>ताम्बूलधारी भवति नारी वाव्यथ तद्गुणा ॥ | |
|---|---|---|

यन्त्रमुक्त पाणिमुक्ते अमुक्ते मुक्तधारिते ।
अस्त्राचार्य्यो निरुद्वेगः कुलशश्च विशिष्यते
॥
वृद्धः कुलोद्गतः सूक्तः पितृपैतामहः
शुचिः ।
राज्ञामन्तःपुराध्यक्षो विनीतश्च तथेष्यते ॥
एवं सप्ताधिकारेषु पुरुषाः सप्त तेऽपरे ।
पञ्च शब्दाधिकरणाः पुरुषाः सप्त तेऽपरम्
॥
अन्तःपुरचराः कार्य्या राज्ञा सर्व्वेषु कर्म्मसु
।
स्थापनाजातितत्त्वज्ञः सततं प्रतिजाग्रता ॥
राज्ञः स्यादायुधागारे दक्षः कर्म्मसु चोद्यतः
।
कर्म्माण्यपरिमेयाणि राज्ञां भृगुकुलोद्भव ॥
उत्तमाधममध्यानि बुद्ध्वा कर्म्माणि
पार्थिवः ।
उत्तमाधममध्येषु पुरुषेषु नियोजयेत् ॥
नरकर्म्मविपर्य्यासाद्राजा नाशमवाप्नुयात् ।
नियोगं पौरुषं भक्तिं श्रुतं शौर्य्यं कुलं नयम्
॥
ज्ञात्वा वृत्तिर्व्विधातव्या पुरुषाणां
महीक्षिता ।
पुरुषान्तरविज्ञाने तत्त्वसारनिबन्धनात् ॥
बहुभिर्म्मन्त्रयेत् कामं राजा मन्त्रं पृथक्
पृथक् ।
मंन्त्रिणामपि नो
कुर्य्यान्मन्त्रिमन्त्रप्रकाशनम् ॥
क्वचित् कस्यचिद्विश्वासो भवतीह सदा
नृणाम् ।
निश्चयश्च सदा मन्त्रे कार्य्य एकेन शूरिणा
॥
भवेद्वा निश्चयावाप्तिः परबुद्ध्यनुजीवनात्
।
एकस्यैव महीभर्त्तुर्भूयः कार्य्यो विनिश्चयः
॥
ब्राह्मणान् पर्य्युपासीत त्रयीं नाम
सुनिश्चिताम् ।

निवेदयेत् प्रयत्नेन देववच्चिरमर्च्चयेत् ॥
द्वे प्रज्ञे वेदितव्ये च ऋज्वी वक्रा च मानवैः ।
वक्रां ज्ञात्वा न सेवेत प्रतिबाधेत चागताम् ॥
नास्य च्छिद्रं परो विद्यात् विद्याच्छिद्रं परस्य
तु ।
गूहेत् कूर्म्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥
न विश्वसेदविश्वस्ते विश्वस्ते
नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥
विश्वासयेच्चाप्यपरं तत्त्वभूतेन हेतुना ।
वकवच्चिन्तयेदर्थान् सिंहवच्च पराक्रमेत् ॥
वृकवच्चावलुम्पेत शशवच्च विनिष्पतेत् ।
दृढप्रहारी च भवेत् तथा शूकरवन्नृपः ॥
चित्राकारश्च शिखिवद्दृढभक्तस्तथाश्ववत्
।
भवेच्च मधुराभाषी तथा कोकिलवन्नृपः ॥
काकशङ्की भवेन्नित्यं नाज्ञातवसतिं वसेत् ।
नापरीक्षितपूर्ब्बञ्च भोजनं शयणं व्रजेत् ॥
वस्त्रं पूष्पमलङ्कारं यच्चान्यन्मनुजोत्तम ! ।
न गाहेज्जलसम्बाधं न चाज्ञातजलाशयम् ॥
अपरीक्षितपूर्व्वन्तु पुरुषैराप्तकारिभिः ।
नारोहेत् कुञ्जरं व्यालं न जातु तुरगं तथा ॥
नाविज्ञातस्त्रियं गच्छेत् नैव देवोत्सवे वसेत्
।
नरेन्द्रलक्ष्म्या धर्म्मज्ञ त्राता यत्तो भवेन्नृपः ।
सद्वृत्ताश्च तथा पुष्टा सततं प्रतिमानिताः ।
राज्ञा सहायाः कर्त्तव्याः पृथिवीं
जेतुमिच्छता ।
यथार्हञ्चाथ सुभृतान् राजा कर्म्मसु योजयेत्
।
धर्म्मिष्ठान् धर्म्मकार्य्येषु शूरान् संग्रामकर्म्मसु
॥
निपुणानर्थकृत्येषु सर्व्वत्र च तथा शुचीन् ।
स्त्रीषु षण्डान् नियुञ्जीत तीक्ष्णान्
दारुणकर्म्मसु ।
धर्म्मे चार्थे च कामे च भये च रविनन्दन ।
राजा यथार्हञ्च कुर्य्यादुपधाभिः परीक्षणम् ॥
समतीतोपधान् भृत्यान्
कुर्य्याद्धस्तिवनेचरान् ।

अनाहार्य्यान् क्लेशसहान् नियुञ्जीत
सदा चरान् ।
जनस्याविदितान् सौम्यांस्तथाज्ञातान्
परस्परम् ॥
बणिजो मन्त्रकुशलान्
सांवत्सरचिकित्सकान् ।
तथा प्रव्रजिताकारान् चारान् राजा
नियो-
जयेत् ॥
नैकस्य राजा श्रद्दध्यात् चारस्यापि च
भाषिते ।
द्वयोः सम्बन्धमाज्ञाय
श्रद्दध्यान्नृपतिस्ततः ॥
परस्परस्याविदितौ यदि स्यातान्चरावुभौ
।
तस्माद्राजा प्रयत्नेन
गूढांश्चारान्नियोजयेत् ॥
राज्यस्य मूलमेतावत् या
राज्ञश्चारदृष्टिता ।
चाराणामपि यत्नेन राज्ञा कार्य्यं
परीक्षणम् ॥
विरज्यते तथा केन विज्ञेयं तन्महीक्षिता
।
अनुरागात् कथं लोके कर्म्म कार्य्यं
महीक्षिता ॥
लोकरागापरागौ च भृत्यानाञ्च गुणागुणान्
।
सर्व्वं राज्ञां चरायत्तं तेषु यत्नपरो भवेत्
॥
कर्म्मणा केन मे लोके जनः
सर्व्वोऽनुरज्यते ।
विरज्यते केन तथा विज्ञेयं तन्महीक्षिता
।
विरोधजनकं लोके वर्ज्जनीयं विशेषतः
॥
जनानुरागप्रभवा हि लक्ष्मी
राज्ञां मता भार्गववंशचन्द्र ।
तस्मात् प्रयत्नेन नरेन्द्रमुख्यैः
कार्य्योऽनुरागो भुवि मानवेषु ॥”

नासच्छास्त्रवतो मूढांस्ते हि लोकस्य
कण्टकाः ॥
वृद्धांश्च नित्यं सेवेत विप्रान् वेदविदः
शुचीन् ।
तेभ्यो हि शिक्षेद्विनयं विनीतात्मा हि
नित्यशः ।
समग्रां वशगां कुर्य्यात् पृथिवीं नात्र संशयः
॥
बहवोऽविनयाद्भ्रष्टा राजानः सपरिच्छदाः
।
वनस्थाश्चैव राज्यानि विनयात् प्रतिपेदिरे
॥
त्रैविद्येभ्यस्त्रयीविद्यां दण्डनीतिञ्च
शाश्वतीम् ।
आन्वीक्षिकीञ्चात्मविद्यां वार्त्तारम्भांश्च
लोकतः ॥
इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम् ।
जितेन्द्रियो हि शक्नोति वशे स्थापयितुं
प्रजाः ।
यजेत राजा क्रतुभिर्व्वहुभिश्चाप्तदक्षिणैः ।
धर्म्मार्थञ्चैव विप्रेभ्यो दद्याद्भोगान् धनानि च
॥
सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेद्बलिम् ।
स्यात् स्वाध्यायपरो लोके वर्त्तेत
पितृबन्धुषु ॥
आवृत्तानां गुरुकुलात् द्विजानां पूजको
भवेत् ।
नृपाणामक्षयो ह्येष विधिर्ब्राह्मो विधीयते ॥
ततः स्तेनानवामित्रा हरन्ति न च नश्यति
।
तस्माद्राज्ञा विधातव्यो ब्राह्मणेष्वक्षयो
निधिः ॥
समोत्तमाधमै राजा ह्याहूय पालयेत् प्रजाः
।
न निवर्त्तेत संग्रामामात् क्षत्त्रव्रतमनुस्मरन्
॥
संग्रामेष्वनिवर्त्तित्वं प्रजानां परिपालनम् ।
शुश्रूषा ब्राह्मणानाञ्च राजा निश्रेयसं परम् ॥
कृपणानाञ्च वृद्धानामातुराणाञ्च रोगिणाम् ।
योगक्षेमञ्च वृत्तिञ्च तथैव परिकल्पयेत् ॥
वर्णाश्रमव्यवस्थानं तथा कार्य्यं विशेषतः ।

तत्पादान्वेषणे यत्नांस्तदध्यक्षांश्च कारयेत्
॥
एवमादीनि कर्म्माणि नृपैः कर्य्याणि भार्गव ।
सर्व्वथा नेष्यते राज्ञस्तीक्ष्णोपकरणक्षयः ॥
पापसाध्यानि कर्म्माणि यानि राज्ञां नृपोत्तम
।
सन्तस्तानि न कुर्व्वन्ति तस्मात्तान्
विभृयान्नृपः ।
नेष्यते पृथिवीशानां तीक्ष्णोपकरणक्रिया ।
यस्मिन् कर्म्मणि यस्य स्यात् विशेषेण च
कौश-
लम् ।
तस्मिन् कर्म्मणि तं राजा परीक्ष्य
विनियोजयेत् ॥
पितृपैतामहान् भृत्यान् सर्व्वकर्म्मसु योजयेत्
।
विना दायादकृत्येषु परीक्ष्य स्वकृतान्नरान् ।
नियुञ्जीत महाभाग तस्य ते हितकारिणः ॥
परराजगृहात् प्राज्ञ जनसंग्रहकाम्यया ।
दुष्टान् वाप्यथवादुष्टानाश्रयीत प्रयत्नतः ॥
दुष्टं विज्ञाय विश्वासं न कुर्य्यात्तत्र भूमिपः ।
वृत्तिं तस्यापि वर्त्तेत जनसंग्रहकाम्यया ॥
राजा देशान्तरं प्राप्तं पुरुषं पूजयेद्भृशम् ।
ममायं देशसंप्राप्तो बहुमानेन चिन्तितः ॥
तेषाञ्चारेण चारित्रं राजा विज्ञाय नित्यशः ।
गुणिनां पूजनं कुर्य्यात् निर्गुणानाञ्च शासनम्
॥
कथिताः सततं राजन् राजानश्चारचक्षुषः ।
स्वके देशे परे देशे ज्ञातशीलान् विचक्षणान्
॥

इति मात्स्ये २१५ अध्यायः ॥ * ॥
अपरञ्च ।
राजोवाच ।
"बहवो भूपतेर्धर्म्मास्तान् वक्तुं नहि
शक्यते ।
तस्मात् समासतो वच्मि महाभाग
निशामय ॥
पृथिवी वैष्णवी पुण्या सदा प्रियतमा हरेः
।
नारायणादृते नान्यो वसुमत्याः
पतिर्भवेत् ॥
नारायणांशजो राजा मनुष्यो न कदाचन
।
अतस्तु दुर्नयं त्यक्त्वा सर्व्वां नीतिं
समाचरेत् ॥
नीतिग्राही नृपो यस्तु विपत्तिर्नास्ति
तस्य वै ।
चिरं भुनक्ति पृथिवीं कण्टकैः
परिवर्ज्जितः ॥
यस्मै न रोचते नीतिर्भूपालाय दुरात्मने ।
भ्रष्टश्रीरचिरेणैव स भवेन्नात्र संशयः ॥
आयुर्ब्बलं यशो वित्तं विजयं
सुखमिच्छता ।
मन्त्रित्वे पण्डितो राज्ञा नियोज्यः
सर्व्वदैव हि ॥
अवज्ञया महीभर्त्तुस्त्यजन्ति सदसीं
बुधाः ।
सभायां बुधहीनायां नीतिर्ब्बलवती न हि
॥
ततो नीतौ विपन्नायां सहसा धरणीपतेः
।
राजश्रियो विनश्यन्ति सकोषबलवाहनाः
॥
ब्राह्मणान् गणकांश्चैव वैद्यांश्च
बान्धवांस्तथा ।
नृपाः कल्याणमिच्छन्तो न द्विषन्ति
कदाचन ॥
गतश्रीर्गणकद्वेष्टा वैद्यद्वेष्टायुर्व्वर्ज्जितः ।
ज्ञातिद्वेष्टा निष्कुलः स्यात्
द्विजद्वेष्टास्विलार्त्ति-
भाक् ॥

| | | |
|---|---|---|
| स्वधर्म्मप्रच्युतान् राजा स्वधर्म्म स्थापयेत्तथा ॥<br>आश्रमे च यथाकार्य्यं तैलभाजनभोजनम् ।<br>स्वयमेवानयेद्राजा सत्कृतान्नावमानयेत् ॥<br>तापसे सर्व्वकार्य्याणि राज्यमात्मानमेव च । | | राजानः पितरः प्रोक्ताः पुत्त्रा जनपदास्तथा ।<br>अतो भूपाः पालयन्ति प्रजाः पुत्त्रानिवौरसान्<br>पौरलोकबधूं राजा पश्येत् पुत्त्रबधूमिव ।<br>पौरलोके तथा कुर्य्यात् यथा स्नेहो निजात्मजे ॥<br>प्रजापीडाकरा ये च भूपाला अतिपापिनः ।<br>शिरस्था विपदस्तेषां विज्ञेया दीर्घदर्शिभिः ॥ |

विवेकिनो महीपालाः पालयन्ति यथा
प्रजाः ।
तथा तानपि देवेशः पालयत्यनिशं हरिः ॥
प्रजानां पालनं दानं द्वेऽपि राज्ञां शुभावहे ।
द्वाभ्यां ये वर्जिता भूपास्ते विज्ञेया
नृपाधमाः ॥
दुष्टानां शासनञ्चैव शिष्टानां प्रतिपालनम् ।
प्रकुर्व्वन्तो महीपालाश्चिरं नन्दन्ति भूतले
॥
न्यायेनोपार्ज्जितं वित्तं यत्नाद्रक्षेन्महीपतिः
।
निर्व्वित्तो हि महीपालो विपत्त्यां न हि
निस्त-
रेत् ॥
नृपाः कल्याणमिच्छन्तो
निजराज्यशुभाशुभम् ।
पश्यन्ति नित्यं विप्रेन्द्र !
सत्वराश्चारचक्षुषः ॥
परचक्रभयं यावत् नायाति चिन्तयेद्भयम् ।
आगते तु भये भूप आचरेन्निर्भयो यथा ॥
ज्ञातौ वापि च मित्रे वा पुत्ते वापि च
मन्त्रिणि ।
कुर्य्यान्मुखेन गाम्भीर्य्यं मनसा प्रेम
केवलम् ॥
मन्त्रिणो ज्ञातयः पुत्त्राः प्रजाश्च
भ्रातरस्तथा ।
गाम्भीर्य्यहीनं भूपालं मन्यन्ते न हि भूपवत्
॥
तिष्ठन्ति प्रथमं दूरे वसन्ति पुरतस्तदा ।
लोकाः श्रियं यदिच्छन्ति
त्यक्तगाम्भीर्य्यभूपतेः ।
एकस्य मन्त्रिणो राज्ञा चिरं
राजत्वमिच्छता ।
कर्त्तव्याः सकले राज्ये वृद्धयो नैव भूसुर ॥
अत्यन्तलब्धवृद्धीनां भृत्यानां सम्पदं हरेत्
।
तस्यां सम्पदि भूपालो भृत्यमन्यं
नियोजयेत् ॥

ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो
अजायत ॥”)
राजपुत्त्रः । (राजति दीप्यते इति । राज्
+
“राजेरन्यः ।” उणा० ३ । १०० । इति
अन्यः ।)
अग्निः । इत्युणादिकोषः ॥ क्षीरिकावृक्षः ।
इति जटाधरः ॥

**राजन्यकं**, क्ली, (राजन्यानां क्षत्त्रियाणां समूहः ।
राजन्य + “गोत्रोक्षोष्ट्रोरभ्रराजराजन्येति
।”
४ । २ । ३९ । इति वुञ् ।) क्षत्त्रियसमूहः
। इत्य-
मरः ॥ (यथा, रघुः । ७ । ५६ ।
“रथी निषङ्गी कवची धनुष्मान्
दृप्तः स राजन्यकमेकवीरः ।
निवारयामास महावराहः
कल्पक्षयोवृत्तमिवार्णवाम्भः ॥” * ॥
राजन्यानां विषये देशे च पुं । इति
काशिका ॥
अत्र “राजन्यादिभ्यो वुञ् ।” ४ । २ ।
५३ ।
इति वुञ्प्रत्ययः ॥)

**राजन्वान्**, त्रि, (राजास्त्यस्यास्मिन्निति वा । राजन्
+ प्रशंसायां मतुप् । “राजन्वान् सौराज्ये
।”
८ । २ । १४ । इति निपातनात्
नलोपाभावः ।)
सुराजयुक्तदेशः । इत्यमरः ॥
“प्रजापालनादि-
स्वधर्म्मपरायणराजयुक्ते देशे राजन्वात्
राजा
विद्यतेऽस्येति मोङ्गझपादिति प्रशंसायां
वतुः ।
यदुक्तं तन्त्रान्तरे ।
‘भूम्नि निन्दाप्रशंसासु
नित्ययोगेऽतिशायने ।

“तावत्पताकाकुलमिन्दुमौलि-
रुत्तोरणं राजपथं प्रपेदे ॥”)

**राजपर्णी**, स्त्री, प्रसारिणी लता । इति राज-
निर्घण्टः ॥

**राजपलाण्डुः**, पुं, (पलाण्डूनां राजा । राज-
दन्तादित्वात् परनिपातः ।)
रक्तवर्णपलाण्डुः ।
लाल प्याँज इति भाषा ॥ तत्पर्य्यायः ।
जव-
नेष्टः २ नृपाह्वयः ३ राजप्रियः ४ महामूलः
५
दीर्घपत्रः ६ रोकः ७ नृपेष्टः ८ नृपकन्दः ९
महाकन्दः १० नृपप्रियः ११ रक्तकन्दः
१२
राजेष्टः १३ । अस्य गुणाः । शिशिरत्वम् ।
पित्तकफनाशित्वम् । दीपनत्वम् ।
बहुनिद्राकर-
त्वञ्च । इति राजनिर्घण्टः ॥

**राजपीलुः**, पुं, (राजप्रियः पीलुः ।) महापीलु-
वृक्षः । इति राजनिर्घण्टः ॥

**राजपुत्त्रः**, पुं, (राज्ञश्चन्द्रस्य पुत्त्रः ।) बुधग्रहः ।
इति शब्दरत्नावली ॥ महाराजचूतः । इति
राजनिर्घण्टः ॥ वर्णसङ्करजातिविशेषः ।
रंज-
पुत इति भाषा ॥ यथा, --
“वैश्यादम्बष्ठकन्यायां राजपुत्त्रस्य सम्भवः
॥”
इति पराशरपद्धतिः ॥
करणकन्यायां क्षत्त्रियाज्जातश्च । इति
पुरा-
णम् ॥ राजनन्दनः । तत्पर्य्यायः ।
युवराजः २
कुमारः ३ भर्त्तृदारकः ४ । इत्यमरः ॥
(यथा, --
“राजपुत्त्र ! चिरं जीव माजीव मुनिपुत्त्रक !
।

मूर्खः स्त्रीविजितो राजा गीतवाद्यरतः सदा
।
चतुरङ्गबलैर्हीनः सहसा विपदं व्रजेत् ॥
स्वाचारग्रहणं सत्त्वं स्ववाक्यप्रतिपालनम् ।
गाम्भीर्य्यञ्चेति भूपानां लक्षणानि
द्विजोत्तम ! ॥
स कथं नृपतिर्यस्तु प्रतापेन विवर्ज्जितः ।
स कथं नृपतिर्येन न जिता परमेदिनी ॥
जितायां परमेदिन्यां यावत् पादं व्रजेन्नृपः ।
प्रतिपादेऽश्वमेधस्य फलं प्राप्नोति
चाक्षयम् ॥
परभूमिजयाकाङ्क्षी हतो वा नृपतिर्युधि ।
तदा गच्छेत् परं धाम वियुक्तः सर्व्वपातकैः
॥
युधि प्राप्तजयो राजा प्राप्नोति परमं पदम् ।
स साहसप्राप्तमृत्युर्द्दिवीन्द्रसम्पदं लभेत् ॥
त्यक्तसत्त्वं त्यक्तशस्त्रं पलायनपरायणम् ।
योद्धारं युधि यो हन्यात् स भूपो यात्यधो-
गतिम् ॥
पलायनपरो युद्धे तद्धन्ता च द्विजोत्तम ! ।
तावुभावपि तिष्ठेतां नरकेऽत्यन्तदुःसहे ॥
युधि साहसवान् योद्धा तद्धन्ता च महीसुर
।
तिष्ठेतां द्वावपि स्वर्गे यावच्चन्द्रदिवाकरौ ॥
बहुनात्र किमुक्तेन संक्षेपादुच्यते मया ।
प्रजापालनकृद्राजा कदाचिन्नावसीदति ॥”
इति पाद्मे क्रियायोगसारे २० अध्यायः ॥

**राजनीलं**, क्ली, मरकतमणिः । इति शब्दरत्ना-
वली ॥

**राजन्यः**, पुं, (राज्ञोऽपत्यमिति । राजन् +
“राजश्वशुराद्यत् ।” ४ । १ । १३७ ।
इति
यत् ।) क्षत्त्रियः । इत्यमरः ॥ (यथा,
ऋग्वेदे ।
१० । ९० । १२ ।
“ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः
कृतः ।
संसर्गेऽस्ति विवक्षायां भवन्ति मतुबादयः
॥’ इति
स्वमते अस्त्यर्थे भमादयोऽमी अर्था
अर्थात्तु
लभ्यन्त एव । निपातनान्नलोपाभावः । न
सौराज्ये राज्ञो नस्य लुङ्क्ताविति परे ।
सुराज्ञि
स्वधर्म्मपरत्वात् शोभना राजानोऽत्रेति
नार्च्चायां स्वतेरिति अनिषेधः । देशो
लोकोप-
लक्षणं सुराज्ञि लोके इत्यर्थः ।” इति
तट्टीकायां
भरतः ॥ (यथा, रघुः । ६ । २२ ।
“कामं नृपाः सन्तु सहस्रशोऽन्ये
राजन्वतीमाहुरनेन भूमिम् ।
नक्षत्रताराग्रहसङ्कुलापि
ज्योतिष्मती चन्द्रमसैव रात्रिः ॥”)

**राजपटोलः**, पुं, (पटोलानां राजा । पर-
निपातः ।) मधुरपटोलः । इति रत्नमाला
॥

**राजपटोली**, स्त्री, (राजप्रिया पटोली ।) मधुर-
पटोली । इति राजनिर्घण्टः ॥

**राजपट्टः**, पुं, (राजप्रियः पट्ट इव ।) मणि-
विशेषः । तत्पर्य्यायः । विराटजः २ ।
इति
त्रिकाण्डशेषः ॥

**राजपट्टिका**, स्त्री, चातकपक्षी । इति हारा-
वली ॥

**राजपथः**, पुं, (राज्ञां पन्थाः । “ऋक्पूरब्धुःपथा-
मानक्षे ।” ५ । ४ । ७४ । इत्यः ।)
राजमार्गः ।
तस्य लक्षणं यथा, --
“धनूंषि दश विस्तीर्णः श्रीमान्राजपथः
कृतः ।
नृवाजिरथनागानामसम्बाधःसुसञ्चरः ॥”
इति देवीपुराणम् ॥
(यथा, कुमारसम्भवे । ७ । ६३ ।
जीव वा मर वा साधो व्याध माजीव मा मर
॥”
इत्युद्भटः ॥)
तस्य रक्षणं यथा, --
“राजपुत्त्रस्य रक्षा च कर्त्तव्या पृथिवीक्षिता
।
आचार्य्यैश्चास्य कर्त्तव्यं नित्यमुक्तैश्च
रक्षणम् ॥
धर्म्मकामार्थशास्त्राणि धनुर्व्वेदञ्च शिक्षयेत्
।
रथे च कुञ्जरे चैनं व्यायामं कारयेत् सदा ॥
शिल्पानि शिक्षयेच्चैव नाप्तैर्मिथ्याप्रियं
वदेत् ॥
गुणाधानमशक्यन्तु यस्य कर्त्तुं स्वभावतः ।
बन्धनं तस्य कर्त्तव्यं गुप्ते देशे सुखान्वितम्
॥
अविनीतकुमारं हि कुलमाशु विशीर्य्यते ।
अधिकारेषु सर्व्वेषु विनीतं हि नियोजयेत् ।
आदौ स्वल्पेषु तत्पश्चात् क्रमेणाथ
महत्स्वपि ॥
मृगयापानमक्षांश्च वर्ज्जयेत् पृथिवीपतिः ।
एतान्यासेवमानास्तु विनष्टाः पृथिवीक्षितः
॥
बहवो नृपशार्दू ला येषां संख्या न विद्यते ॥
वृथाटनदिवास्वप्नं विशेषेण विवर्ज्जयेत् ।
वाक्पारुष्यं न कर्त्तव्यं दण्डपारुष्यमेव च ॥
परोक्षनिन्दा च तथा वर्ज्जनीया महीक्षिता
।
अर्थस्य दूषणं राजा द्विःप्रकारं विवर्ज्जयेत्
॥
अर्थानां दूषणञ्चैव तथा चार्थेषु दूषणम् ।
अकारणात् समुच्छेदं दुर्गादीनामसत्क्रिया
॥
अर्थानां दूषणं प्रोक्तं विप्रकीर्णत्वमेव च ।
अदेशकाले यद्दानमपात्रे दानमेव च ॥
अर्थस्य दूषणं प्रोक्तमसत्कर्म्मप्रवर्त्तनम् ।
कामं क्रोधं मदं मानं लोभं हर्षन्तथैव च ।
जेतव्यमरिषड्वर्गं सादरं पृथिवीक्षिता ॥

एतेषां विजयं कृत्वा कार्य्यं भृत्यजयं ततः ।
कृत्वा भृत्यजयं सर्व्वं राजा जनपदं जयेत् ॥
कृत्वा तु विजयं तेषां शत्रून् बाह्यांस्ततो जयेत् ।
बाह्याश्च त्रिविधा ज्ञेयास्तुल्याभ्यन्तरकृत्रिमाः ॥
गुरवस्ते यथापूर्ब्बं तेषु यत्नपरो भवेत् ।
पितृपैतामहं मित्रममित्रञ्च तथा रिपोः ॥
कृत्रिमञ्च महाभाग मित्रं त्रिविधमुच्यते ।
तथापि च गुरुः पूर्ब्बं भवेत्तत्रापि चादृतः ॥
स्वाम्यमात्यो जनपदो दुर्गं सैन्यन्तथैव च ।
कोषो मित्रञ्च धर्म्मज्ञ सप्ताङ्गं राज्यमुच्यते ॥
सप्ताङ्गस्यापि राज्यस्य मूलं स्वामी प्रकीर्त्तितः ।
तन्मूलत्वात्तथाङ्गानां राजा रक्ष्यः प्रयत्नतः ।
षडङ्गरक्षा कर्त्तव्या तथा तेन प्रयत्नतः ॥
अङ्गेभ्यो यस्तथैकस्य द्रोहमाचरतेऽल्पधीः ।
वधस्तस्य तु कर्त्तव्यः शीघ्रमेव महीक्षिता ॥
न राज्ञा मृदुना भाव्यं मृदुर्हि परिभूयते ।
न भाव्यं दारुणेनापि तीक्ष्णादुद्विजते जनः ॥
काले मृदुर्यो भवति काले भवति दारुणः ।
राजा लोकद्वयापेक्षी तस्य लोकद्वयं भवेत् ॥
भृत्यैः सह महीपालः परिहासं विवर्ज्जयेत् ।
भृत्याः परिभवन्तीह नृपं हर्षवशं गतम् ॥
व्यसनानि च सर्व्वाणि भूपतिः परिवर्ज्जयेत् ।
लोकसंग्रहणार्थाय कृतकव्यसनो भवेत् ॥
शौटीरस्य नरेन्द्रस्य नित्यमुद्रिक्तचेतसः ।
जना विरागमायान्ति सदा दुःसेव्यभावतः ॥
स्मितपूर्ब्बाभिभाषी स्यात् सर्व्वस्यैव महीपतिः ।
वध्येष्वपि महाभाग भ्रुकुटीं न समाचरेत् ॥
भाव्यं धर्म्मभृतां श्रेष्ठ स्थूललक्ष्येण भूभुजा ।
सोऽचिराद्भ्रश्यते राज्यात् जीविताच्च सबा-
न्धवः ॥
भृतो वत्सो जातबलः कर्म्मयोग्यो यथा भवेत् ।
तथा राष्ट्रं महाभाग भृतं कर्म्मसहं भवेत् ॥
यो राष्ट्रमनुगृह्णाति राज्यं स्वं परिरक्षति ।
संघातमुपयाचेत्तु विन्दते स महत् फलम् ॥
राष्ट्राद्धिरण्यं धान्यञ्च महीं राजा सुरक्षिताम् ।
महता तु प्रयत्नेन स्वराष्ट्रस्य च रक्षिता ॥
नित्यं स्वेभ्यः परेभ्यश्च यथा माता यथा पिता ।
गोपितानि सदा कुर्य्यात् स विभागी प्रियाणि च ॥
अजस्रमुपयोक्तव्यं फलं तेभ्यस्तथैव च ।
धर्म्मकर्म्मेदमायत्तं विधाने दैवमानुषे ।
तयोर्दैवमचिन्त्यं हि पौरुषे विद्यते क्रिया ॥
एवं महीं पालयतोऽस्य भर्त्तु-
र्लोकानुरागः परमो भवेच्च ।
लोकानुरागप्रभवा च लक्ष्मी-
र्लक्ष्मीवतश्चैव परा च कीर्त्तिः ॥”
इति मात्स्ये २०० अध्यायः ॥

**राजपुत्त्रिका**, स्त्री, (राजपुत्री + संज्ञायां कन् ।) शरारिपक्षी । शराली इति भाषा ॥ यथा, --
“शरारिराटिराडिश्च हापुत्त्री राजपुत्त्रिका ॥”
इति जटाधरः ॥
राजकन्या च ॥ (यथा, हरिवंशे । २५ । ४६ ।

**राजबदरः**, पुं, (बदराणां राजा । राजदन्तादित्वात् परनिपातः ।) उत्तमकोलिः । तत्पर्य्यायः । नृपश्रेष्ठः २ नृपबदरः ३ राजवल्लभः ४ पृथुकोलः ५ तनुबीजः ६ मधुरफलः ७ राजकोलः ८ । अस्य गुणाः । सुमधुरत्वम् । शिशिरत्वम् । दाहार्त्तिपित्तवातहरत्वम् । वृष्यत्वम् । वीर्य्यवृद्धिकरत्वत् । शोषश्रमनाशित्वञ्च । इति राजनिर्घण्टः ॥

**राजबीजी**, [न्] त्रि, (राजा बीजी कारणं यस्य ।) राजवंश्यः । इत्यमरः । २ । ७ । २ ॥

**राजभट्टिका**, स्त्री, हापुत्त्रीपक्षी । यथा, --
“गोभण्डीरः पङ्क्कीरो हापुत्त्री राजभट्टिका ॥”
इति जटाधरः ॥

**राजभद्रकः**, पुं, कुष्ठम् । निम्बः । इति राजनिर्घण्टः ॥ पारिभद्रकः । इति साधुपाठः ॥

**राजभूयं**, क्ली, (राज्ञो भावः । राजन् + भू + क्यप् ।) राजत्वम् । यथा, --
“स्याद्ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि ।
देवभूयादिकं तद्वत् ।” इत्यमरकोषदर्शनात् ॥

**राजभोग्यं**, क्ली, (राज्ञा भोक्तुं योग्यम् । भुज् + ण्यत् । कुत्वञ्च ।) जातीकोषम् । प्रियालवृक्षे, पुं । इति शब्दचन्द्रिका ॥

**राजमण्डूकः**, पुं, (भण्डूकानां राजा । राजदन्तादित्वात् परनिपातः ।) बृहद्भेकः । वड वेङ् इति भाषा । तत्पर्य्यायः । महामण्डूकः २ पीताङ्गः ३

स्थूललक्ष्यस्य वशगा सर्व्वा भवति मेदिनी ॥
अदीर्घसूत्रश्च भवेत् सर्व्वकर्म्मसु पार्थिवः ।
दीर्घसूत्रस्य नृपतेः कर्म्महानिर्ध्रुवं भवेत् ॥
रागे द्वेषे च कामे च द्रोहे पापे च कर्म्मणि ।
अप्रिये चैव कर्त्तव्ये दीर्घसूत्रः प्रशस्यते ॥
राज्ञा संवृतमन्त्रेण सदा भाव्यं द्विजोत्तम ।
तस्यासंवृतमन्त्रस्य ज्ञेयाः सर्व्वापदो ध्रुवाः ॥
कृतान्धेव तु कर्म्माणि जायन्ते यस्य भूपतेः ।
नारब्धानि महाभाग तस्य स्वाद्वसुधा वशे ॥
मन्त्रमूलं सदा राज्यं तस्मान्मन्त्रं सुरक्षितम् ।
कर्त्तव्यं पृथिवीपालैर्मन्त्रभेदभयात् सदा ॥
मन्त्रवित् साधितो मन्त्रः संयतानां सुखावहः ।
मन्त्रच्छलेन बहवो विनष्टाः पृथिवीक्षितः ॥
आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च ।
नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः ॥
नयस्य कुशलस्तस्य वशे सर्व्वा वसुन्धरा ।
भवतीह महीभर्त्तुः सदा पार्थिननन्दन ॥
नैकस्तु मन्त्रयेन्मन्त्रं न राजा बहुभिः सह ।
नारोहेद्विषमां नावं नापरीक्षितनाविकाम् ॥
ये चास्य भूमिं जयतो भवेयुः परिपन्थिनः ।
तानानयेद्वशे सर्व्वान् सामादिभिरुपक्रमैः ॥
यथा न स्यात् कृषीभावः प्रजानामनपेक्षया ।
तथा राज्ञा प्रकर्त्तव्यं स्वराष्ट्रपरिरक्षता ॥
मोहाद्राजा स्वराष्ट्रं यः कर्षयत्यनपेक्षया ।

"उत्पादयामास ततः पुत्त्रं वै राजपुत्त्रिका ॥")

**राजपुत्त्री**, स्त्री, (राज्ञः पुत्त्रीव ।) कटुतुम्बी । रेणुका । जाती । राजरीतिः । छुछुन्दरी । इति राजनिर्घण्टः ॥ मालती । यथा, --
"अतिमुक्तश्चाथ जातिर्मालती सुमना अपि ॥"
राजपुत्त्री मनोज्ञा -- ॥" इति जटाधरः ॥
राजकन्या च ॥ (यथा, महाभारते । १ । ७३ । १ ।
"सुव्यक्तं राजपुत्त्री त्वं यथा कल्याणि ! भाषसे ।
भार्य्या मे भव शुश्रोणि ! ब्रूहि किं करवाणि ते ॥")

**राजपुष्पः**, पुं, (पुष्पाणां राजा । राजदन्तादित्वात् परनिपातः ।) नागकेशरपुष्पवृक्षः । यथा, --
"चाम्पेयः केशरो नागकेशरः कनकाह्वयः ।
महौषधं राजपुष्पः फलकः खरघातनः ॥"
इति शब्दचन्द्रिका ॥

**राजपुष्पी**, स्त्री, (राजप्रियं पुष्पमस्याः । ङीप् ।) करुणीवृक्षः । इति राजनिर्घण्टः ॥

**राजप्रिया**, स्त्री, (राज्ञः प्रिया ।) करुणीवृक्षः । इति राजनिर्घण्टः ॥

**राजफणिजझकः**, पुं, (राजते इति । राज् + अच् । राजो दीप्तिशाली फणिज्झकः ।) नागरङ्ग-वृक्षः । इति शब्दमाला ॥

**राजफलं**, क्ली, (राजाभिधेयं फलम् ।) पटोलम् । इति त्रिकाण्डशेषः ॥

पीतमण्डूकः ४ वर्षाघोषः ५ महारवः ६ । इति राजनिर्घण्टः ॥

**राजमल्लः**, पुं, राज्ञां मल्लः । राजार माल् इति भाषा । तत्पर्य्यायः । उत्सिक्तः २ उद्धतः ३ । इति त्रिकाण्डशेषः ॥

**राजमार्गः**, पुं, (राज्ञो मार्गः ।) राजपथः । तद्विवरणं यथा, --
"राजमार्गं सौधयुक्तं यः करोति पतिव्रते ।
वर्षाणामयुतं सोऽपि शक्रलोके महीयते ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २४ अध्यायः ॥
अपि च ।
"त्रिंशद्धनूंषि विस्तीर्णो देषमार्गस्तु तैः कृतः ।
विंशं धनुर्ग्राममार्गः सीमामार्गो दशैव तु ॥
धनूंषि दश विस्तीर्णः श्रीमान्राजपथः कृतः ।
नृवाजिरथनागानामसम्बाधःसुसञ्चरः ॥
धनूंषि चैव चत्वारि शाखारथ्यास्तु निर्म्मिताः ।
त्रिकराश्चोपरथ्यास्तु द्विकराप्युपरथ्यका ॥
जङ्घापथश्चतुष्पादस्त्रिपादश्चगृहान्तरम् ।
वृतीपादस्त्वर्द्धपादः प्राग्वंशः पादकः स्मृतः ।
अवकरः परिवारः पादमात्रः समन्ततः ॥"
इति देवीपुराणे गोपुरद्वारलक्षणं नामाध्यायः ॥
(अत्रामेध्योत्सर्गे दण्डविधानं कर्त्तव्यम् । यथा,
मनुः । ९ । २८२ ।
"समुत्सृजेत् राजमार्गे यस्त्वमेध्यमनापदि ।
स द्वौ कार्षापणौ दद्यादमेध्याञ्चाशु शोधयेत् ॥"
नीतिः । यथा, हरिवंशे भविष्यपर्व्वणि । ५४ । २ ।

| | | |
|---|---|---|
| | **राजफला**, स्त्री, (राजप्रियं फलमस्याः ।) जम्बूः ।<br>इति राजनिर्घण्टः ॥<br>**राजबदरं**, क्ली, (राज्ञो बदरमिव प्रियत्वात् ।)<br>रक्तामलकम् । लवणम् । इति मेदिनी ॥ | |

"ज्ञानविज्ञानसम्पन्नौ राजमार्गविशारदौ ।
युयुधाते महारङ्गे राक्षसेन दुरात्मना ॥")

**राजमाषः**, पुं, (माषाणां राजा श्रेष्ठत्वात् ।

राजदन्तादित्वात् परनिपातः ।) वर्व्वटः ।
वरवटी कडाइ इति भाषा । तत्पर्य्यायः ।
नीलमाषः २ नृपमाषः ३ नृपोचितः ४ । अस्य
गुणाः । कफपित्तहरत्वम् । रुच्यत्वम् । वात-
कारित्वम् । बलदायकत्वञ्च । इति राज-
निर्घण्टः ॥ सारकत्वम् । शुक्राम्लपित्तहरत्वम् ।
सुस्वादुत्वम् । रूक्षत्वम् । कषायत्वम् ।
विषदत्वम् ।
लघुत्वञ्च । इति राजवल्लभः ॥ अन्यच्च ।
"राजमाषो महामाषश्चपलश्च बलः स्मृतः ।
राजमाषो गुरुः स्वादुस्तुवरस्तर्पणो रसः ।
रूक्षो वातकरो रुच्यः स्तन्यो भूरिमलप्रदः ॥"
इति भावप्रकाशः ॥ * ॥
कालविशेषे अस्याभक्षत्वं यथा । नारदीये ।
"निष्पावान् राजमाषांश्च सुप्ते देवे जनार्द्दने ।
यो भक्षयति राजेन्द्र चाण्डालादधिको हि सः ॥
कार्त्तिके तु विशेषेण राजमाषांश्च वर्ज्जयेत् ।
निष्पावान् मुनिशार्द्दूल यावदाहूतनारकी ॥"
इति तिथ्यादितत्त्वम् ॥

**राजमुद्गः**, पुं, (मुद्गानां राजा । राजदन्तादि-

त्वात् परनिपातः ।) मुकुष्टकः । इति हेम-
चन्द्रः । ४ । २४० ॥

**राजयक्ष्मा**, [न्] पुं, (राज्ञश्चन्द्रस्य क्षयकारको

यक्ष्मा । राजा चासौ यक्ष्मा चेति वा ।)
क्षयरोगः । इति हेमचन्द्रः ॥ अस्य पर्य्याय-
निदानौषधादयो यक्ष्मशब्दे द्रष्टव्याः ॥ * ॥
(असौ हि सर्व्वरोगाणामाकरः । यथा,
माघे । २ । ९६ ।
"मावेदि यदसावेको जेतव्यश्चेदिराडिति ।
राजयक्ष्मेव रोगाणां समूहः स महीभृताम् ॥"
"तथाह वाग्भटः ।
अनेकरोगानुगतो बहुरोगपुरःसरः ।
राजयक्ष्मा क्षयः शोषो रोगराडिति च स्मृतः ॥
नक्षत्राणां द्विजानाञ्च राज्ञोऽभूत् यदयं पुरा ।

निश्चक्राम तदा यक्ष्मा
नासिकाग्राद्विभीषणः ॥
दंष्ट्राकरालवदनः कृष्णाङ्गारसमप्रभः ।
अतिदीर्घः स्वल्पकेशः कृशो
धमनिसन्ततः ॥
अधोमुखो दण्डहस्तः कासं विश्रम्य
सन्ततम् ।
कुर्व्वाणो निम्ननेत्रश्च
योषासम्भोगलोलुपः ॥
स चोवाच तदा दक्षं कुत्र स्थास्याम्यहं
मुने ! ।
किंवा चाहं करिष्यामि तन्मे वद महामते
॥
ततो दक्षस्तु तं प्राह सोमं यातु द्रुतं
भवान् ।
सोममत्तु भवान्नित्यं सोमे त्वं तिष्ठ
स्वेच्छया ॥
मार्कण्डेय उवाच ।
इति तस्य वचः श्रुत्वा दक्षस्याथ
महात्मनः ।
शनैः शनैस्ततः सोममाससाद स च
द्रुतम् ॥
असाद्य स तदा सोमं वल्मीकं पन्नगो
यथा ।
प्रविवेशेन्दुहृदये छिद्रं प्राप्य महागदः ॥
तस्मिन् प्रविष्टे हृदये दारुणे राजयक्ष्मणि
।
शुशोच चन्द्रस्तन्द्रीञ्च विषमां
प्राप्तवांस्ततः ॥
उत्पत्य प्रथमं यस्माल्लीनो राजन्यसौ
गदः ।
राजयक्ष्मेति लोकेऽस्मिंस्तस्य
ख्यातिरभूत्
द्विजाः ॥
ततस्तेनाभिभूतश्च यक्ष्मणा
रोहिणीपतिः ।
क्षयं जगामानुदिनं ग्रीष्मे शुष्का नदी यथा
॥

यदस्माकं दुःखबीजं यतो म्लानश्रियो
वयम् ।
न क्वचित् संप्रवर्त्तन्ते यज्ञा
लोकपितामह ॥
देवा ऊचुः ।
निराधारा तिरातङ्काः प्रजाः सर्व्वाः क्षयं
गताः ।
न च दानादिधर्म्माश्च न तपांसि क्षितौ
क्वचित् ॥
नैव वर्षति पर्य्यण्यः क्षीणतोयाभवत्
क्षितिः ।
क्षीणाः सर्व्वास्तथौषध्यः शस्या
लोकाः समा-
कुलाः ॥
दस्युभिः पीडिता विप्रा वेदवादान्न
कुर्व्वते ।
अन्नवैकल्यमासाद्य म्रियन्ते बहवः
प्रजाः ॥
क्षीणेषु यज्ञभागेषु भोगहीनास्तथा वयम्
।
दुर्ब्बलाश्च श्रिया हीना नैव शान्तिं
लभामहे ॥
रोहिण्या मन्दिरे चन्द्रो वक्रगत्या चिरं
स्थितः ।
वृषराशौ स च क्षीणो ज्योत्स्नाहीनश्च
वर्त्तते ॥
यदैवान्विष्यते देवैश्चन्द्रो नैषां पुरःसरः
।
कदाचिदपि देवानां समाजे वा भवद्विधे
॥
कदाचिद्रोहिणीं त्यक्त्वा नैव क्व च न
गच्छति ।
यद्यन्यः कोऽपि न भवेत्तदा चन्द्रो
बहिर्भवेत् ।
दृश्यते स कलाहीनः
कलामात्रावशेषितः ॥
इति सर्व्वत्र लोकेश वृत्तः
कर्म्मविपर्य्ययः ।

यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मतः ॥”
इति तट्टीकायां मल्लिनाथः ॥)
महापातकजचिह्नमप्ययम्। यथा, विष्णुः । अथ नरकानुभूतदुःखानां तिर्य्यक्त्वमुत्तीर्णानां मानुष्ये लक्षणानि भवन्ति । कुष्ठ्यतिपातकी ब्रह्महा यक्ष्मी सुरापः श्यावदन्तकः सुवर्ण-हारी कुनखी गुरुतल्पगो दुश्चर्म्मा । इत्यादि कूर्म्मपुराणम् ॥
“क्रियाहीनस्य मूर्खस्य महारोगिण एव च ।
यथेष्टाचरणस्याहुर्म्मरणान्तमशौचकम् ॥”
महारोगिणः पापरोगाष्टकान्यतमरोगवतः। ते च उन्मादस्त्वग्दोषो राजयक्ष्मा श्वासो मधु-मेहो भगन्दरः उदरोऽश्मरी इत्यष्टौ पाप-रोगा नारदोक्ताः । इति शुद्धितत्त्वम् ॥ * ॥
तस्योत्पत्तिरूपस्थानानियथा, --
“अथ कोपवतस्तस्य दक्षस्य सुमहात्मनः ।
तथा चन्द्रे क्षीयमाणे सर्व्वौषध्यः क्षयं गताः ।
क्षयं जातास्वोषधीषु न यज्ञः संप्रवर्त्तते ॥
यज्ञाभावात्तु देवानामन्नं सर्व्वं क्षयं गतम् ।
पर्य्यण्याश्च ततो नष्टास्ततो वृष्टिर्न चाभवत् ।
वृष्ट्यभावे तु लोकानामाहारो क्षीणताङ्गतः ॥
दुर्भिक्षव्यसनोपेते सर्व्वलोके द्विजोत्तमाः ।
दानधर्म्मादिकं किञ्चिन्न लोकेषु प्रवर्त्तते ॥
सत्त्वहीनाः प्रजाः सर्व्वा लोभेनोपहतेन्द्रियाः ।
पापमेव तदा चक्रुर्न धर्म्मरुचयस्तथा ॥
एतद्दृष्ट्वा तदा भावं दिक्पालाः सपुरन्दराः ।
जग्मुः क्षोभं परं देवाः सागराश्च ग्रहास्तथा ॥
ततो दृष्ट्वा जगत् सर्व्वं व्याकुलं दस्युपीडितम् ।
ब्रह्माणमगमन्देवाः सर्व्वे शक्रपुरोगमाः ॥
उपसङ्गम्य लोकेशं स्रष्टारं जगतां पतिम् ।
प्रणम्याथ यथायोग्यमुपविष्टास्ततः सुराः ॥
तान् म्लानवदनान् वीक्ष्य ब्रह्मा लोकपितामहः ।
अभिभूतान् परेणैव हृतस्वविषयानिव ।
पप्रच्छ सुमुखीकृत्य गुरुमिन्द्रं हुताशनम् ॥
ब्रह्मोवाच ।
स्वागतं भोः सुरगणाः किमर्थं यूयमागताः ।
दुःखोपहतदेहांश्च युष्मान् म्लानांश्च लक्षये ॥
निराधारान् निरातङ्कान् सुरान् सर्व्वांस्तु कामगान् ।
कृत्वा स्वविषये न्यस्तान् कथं पश्यामि दुष्खि-
तान् ॥
तं दृष्ट्वा कान्दिशीकास्तु वयं त्वां शरणं गताः ॥
पातालाद्यावदुत्थाय कालकञ्जादयोऽसुराः ।
नास्मान् लोकेषु बाधन्ते तावन्नः पाहि साध्व-
सात् ॥
स्वयं प्रवर्त्तते कस्माज्जगतां वा व्यतिक्रमः ।
न जानीमस्तु तत् सर्व्वं विप्लवे चापि कारणम् ॥
मार्कण्डेय उवाच ।
एतत् सुराणां वचनं दिव्यदर्शी पितामहः ।
श्रुत्वा क्षणमभिध्याय निजगाद सुरोत्तमान् ॥
ब्रह्मोवाच ।
शृण्वन्तु देवताः सर्व्वा यदर्थं लोकविप्लवः ।
प्रवर्त्ततेऽधुना येन शान्तिस्तस्य भविष्यति ॥
सोमो दाक्षायणीः कन्याः सप्तविंशतिसंख्यया ।
अश्विन्याद्या वरबधूर्भार्य्यार्थे परिणीतवान् ॥
परिणीय स ताः सर्व्वा रोहिण्यां सततं विधुः ।
प्रवर्त्तेतानुरागेण न सर्व्वासु प्रवर्त्तते ॥
अश्विन्याद्यास्ततः सर्व्वा दौर्भाग्यज्वरपीडिताः ।
षड्विंशतिर्वरारोहाः पितरं प्रस्थिताः स्वकम् ॥
प्रवर्त्तते निशानाथो रोहिण्यां रागतो यथा ।
तथा न तासु भजते तद्दक्षाय न्यवेदयन् ॥
अतो दक्षो महाबुद्धिः साम्ना संस्तूय विट्-
पतिम् ।
बहुसूनृतमाभाष्य पुत्त्र्यर्थेऽनुरुरोध तम् ॥

| | | |
|---|---|---|
| | यद्भभूवे दुष्खबीजं युष्मान् वा यस्तु बाधते ।<br>तत् कथ्यतामशेषेण सिद्धिं चाप्यवधार्य्यताम् ॥<br>मार्कण्डेय उवाच ।<br>ततो वृद्धश्रवा जीवः कृष्णवर्त्मा च लोककृत् ।<br>उवाचात्मभुवे तस्मै सुराणां दुष्खकारणम् ॥<br>श‍ृणु सर्व्वं जगत्कर्त्तस्त्वां येन वयमागताः । | अनुरुद्धो यथाकामं दक्षेण सुमहात्मना ।<br>समं प्रवर्त्तितं तासु समयं कृतवान् विधुः ॥<br>सममङ्गीकृते भावं तासु कर्त्तुं हिमांशुना ।<br>स्वं जगाम ततः स्थानं दक्षोऽपि मुनिसत्तमः ॥<br>गते दक्षे मुनिश्रेष्ठे वैषम्यं तासु चन्द्रमाः ।<br>जहौ न भावं ताः शश्वत् कुपिताः पितरं<br>गताः ॥<br>ततो दक्षः पुनश्चन्द्रमनुरुध्य सुतान्तरे । |

समवृत्तिं प्रतिश्राव्य वचनञ्चेदमब्रवीत् ॥
न समं वर्त्तते चन्द्र सर्व्वास्वासु भवान्
यदि ।
तदा शप्स्ये त्वहं तुभ्यं तस्माद् कुरु
समञ्ज-
सम् ॥
ततो गते पुनर्द्दक्षे न समं वर्त्तते यदा ।
तासु चन्द्रस्तदा दक्षं पुनर्गत्वाब्रुवन् रुषा ॥
न ते वचः स कुरुते नैवास्मासु प्रवर्त्तते ।
वयं तपः करिष्यामः स्थास्यामश्च
त्वदन्तिके ॥
तासामिति वचः श्रुत्वा कुपितस्य तदा
मुनेः ।
क्षयाय चन्द्रस्य मनः शापायोत्सुकतां
गतम् ॥
शापायोद्युक्तमनसः कुपितस्य महात्मनः ।
क्षयो नाम महारोगो नासिकाग्राद्विनिर्गतः
॥
प्रेषितः स च चन्द्राय दक्षेण मुनिना ततः ।
प्रविष्टवांस्तस्य देहे क्षयितस्तेन चन्द्रमाः
॥
क्षीणे चन्द्रे क्षयं याता ज्योत्स्ना तस्य महा-
त्मनः ।
क्षीणासु सर्व्वज्योत्स्नासु सर्व्वौषध्यः क्षयं
गताः ॥
ओषध्यभावाल्लोकेऽस्मिन्न यज्ञः संप्रवर्त्तते
।
यज्ञाभावादनावृष्टिस्ततः सर्व्वप्रजाक्षयः ॥
यज्ञभागोपभोगेन हीनानां भवतां तथा ।
दुर्ब्बलत्वं ससुत्पन्नं विकारश्च स्वगोचरे ॥
इति वः कथितं सर्व्वं यथाभूल्लोकपिप्लवः
।
येनोपायेन तच्छान्तिस्तत्शृणुध्वं
सुरोत्तमाः ॥”
इति कालिकापुराणे २० अध्यायः ॥ * ॥
ब्रह्मोवाच ।
“गच्छन्तु भोः सुरगणा दक्षस्य सदनं प्रति
।
तं प्रसादय चन्द्रार्थे स च पूर्णो भवेद्यथा ॥

ममास्ति यदि कर्त्तव्यं भवतां दुःखहानये
।
तदहं यदि शक्नोमि करिष्यामि हितं
समम् ॥
मार्कण्डेय उवाच ।
तत् श्रुत्वा वचनं तस्य ब्रह्मसूनोर्महर्षिणः
।
जगाद गीष्पतिः शक्रो वीतिहोत्रोऽथ तं
मुनिम् ॥
क्षयं यातो निशानाथस्तस्मिन् क्षीणे
क्षयंगताः ।
सर्व्वौषध्यो द्विजश्रेष्ठ
तद्धानिर्यज्ञहानिकृत् ॥
यज्ञे विनष्टे सकलाः प्रजाः क्षुद्भयकातराः
।
वृष्ट्यभावान्महद्दुःखं प्राप्य नष्टाश्च
काश्चन ॥
क्षयोऽयं रात्रिनाथस्य यस्ते कोपात्
प्रवर्त्तते ।
स सर्व्वजगतो ब्रह्मन्नभवार्थमुपस्थितः ॥
नाधुना तत्त्रिभुवने यन्न क्षुब्धन्तु किञ्चन
।
विप्लवं यान्ति विप्रेन्द्र सागराः
स्थावराश्चराः ॥
न यज्ञाः संप्रवर्त्तन्ते न तपस्यन्ति
तापसाः ।
आहारदुःखान्निन्द्रीकाः प्रजाः क्षीणा
भया-
तुराः ॥
एवं प्रवृत्ते विप्रेन्द्र विप्लवेऽस्मान्
रसातलात् ।
दैत्या न यावदुत्थाय बाधन्ते तावदुद्धर
॥
प्रसीद दक्ष सततं तं पूरय तपीबलात् ।
पूर्णे चन्द्रे जगत् सर्व्वं प्रकृतिस्थं
भविष्यति ॥
मार्कण्डेय उवाच ।
इति तेषां वचः श्रुत्वा प्रजापतिसुतस्तदा
।

मार्कण्डेय उवाच ।
ततो ब्रह्मापि तं पुष्टं निरीक्ष्येन्दुशरीरगैः ।
अमृतैस्तेनातिभुक्तैः क्षीणञ्चापि निशापतिम् ॥
दोर्भिः स्वयं तं गृहीत्वा गिरौ निष्पिष्य वै
मुहुः ।
अमृतं गालयामास शरीराद्राजयक्ष्मणः ॥
अमृतानि च गाल्याशु तदपूतं तदा जले ।
क्षीरोदस्य च चिक्षेप मध्ये रहसि लोकभृत् ॥
तस्मादप्यमृतादिन्दोः कलाः क्षीणाः पुराथ
याः ।
तासां जग्राह लवशश्चूर्णान् क्षीरोदसागरात् ॥
कलामात्रावशेषस्य संसर्गाद्राजयक्ष्मणः ।
क्षीणाः कलाः पञ्चदश याः पूर्व्वममृतात्मिकाः
।
ता रागयक्ष्मगर्भस्थाश्चूर्णीभूतास्तु पीडया ॥
तेजोज्योत्स्नाकलाभिस्तु निबद्धं यत् कला-
पतेः ।
शरीरं तत्त्रिधाभूतं गर्भस्थं राजयक्ष्मणः ॥
ज्योतिश्चूर्णमभूत् ज्योत्स्ना लीना राजादि-
यक्ष्मणि ।
द्रवीभूताः सुधाः सर्व्वा गर्भे रोगस्य च
स्थिताः ॥
यदा निर्गालयामास सुधां ब्रह्मा गदान्तरात् ।
तदा ज्योत्स्ना सुधा ज्योतिः सर्व्वं तस्माद्-
वहिर्गतम् ॥
क्षीरोदसागरे क्षिप्तं तत्सर्व्वं विधिना तदा ।
देवान् गिरौ परित्यज्य स्वयं गत्वा द्रुतं ततः
॥
ततोऽमृतानि प्रक्षाल्य कलाचूर्णानि वारिधेः ।
ज्योत्स्नाञ्चाप्याजगामाशुगृहीत्वा तत्त्रयं
गिरिम् ॥
क्षीरोदाद्गिरिमागम्य चन्द्रभागं तदा विधिः ।
देवमध्ये कलाचूर्णं सुधां ज्योत्स्नां
न्यवीविशत् ॥
संस्थाप्य तत्त्रयं ब्रह्मा देवानां मध्यतस्ततः ।
जगाद राजयक्ष्माणं तत्स्थानादि निदेशयन् ॥
ब्रह्मोवाच ।
सर्व्वदा यो दिवा रात्रौ सन्ध्यायां वनितारतः
।

पूर्णे चन्द्रे जगत् सर्व्वं प्रकृतिस्थं भविष्यति ।
युष्माकञ्च भवेत् शान्तिरोषधीनाञ्च सम्भवः ॥
मार्कण्डेय उवाच ।
इति ब्रह्मवचः श्रुत्वा देवाः शक्रपुरोगमाः ।
प्रययुर्हृष्टमनसस्तदा दक्षनिवेशनम् ॥
यथान्यायमुपस्थाय सर्व्वे मुनिवरं सुराः ।
प्रोचुः प्रजापतिं दक्षं प्रणम्य श्लक्ष्णया गिरा ॥
देवा ऊचुः ।
प्रसीद सीदतां ब्रह्मन्नस्माकं बहुदुःखिनाम् ।
उद्धरस्व महाबुद्धे त्राहि नः शोकसागरात् ॥
यद्रूपं ब्रह्मसंज्ञन्तु सृष्टिकृत्परमात्मनः ।
तदंशस्त्वं परं ज्योतिर्विश्वरूपं नतोऽस्मि ते ॥
दक्षणात् सर्व्वजगतां प्रजापालनकारणात् ।
दक्षप्रजापतिश्चेति योगेशस्तन्नुमो वयम् ॥
दक्षाय सर्व्वजगतां दक्षाय कुशलात्मनाम् ।
दक्षायात्महितायाशु नमस्तुभ्यं महात्मने ॥
सततं चिन्त्यमानस्य योगिभिर्न्नियतात्मभिः ।
सारस्य सारभूतस्त्वं दक्षाय परमात्मने ॥
योगविद्भिरनाधृष्टः पारगाणां परायणः ।
आद्यन्तमुक्तः सहसा तस्मै नित्यं नमो नमः ॥
इति तेषां वचः श्रुत्वा दक्षो यज्ञभुजां तदा ।
प्राह प्रसन्नवदनः शक्रमाभाष्य मुख्यतः ॥
दक्ष उवाच ।
कुतः शक्र महाभाग भवतां दुःखमागतम् ।
दुःखहेतुं वद विभो श्रोतुमिच्छाम्यहन्तु तम् ॥

उवाच तान् सुरगणान् हृदयाच्छल्यमुद्धरन् ॥
दक्ष उवाच ।
यन्मे वचो निशानाथे प्रवृत्तं शापकारणम् ।
न केनापि निदानेन मिथ्यां कर्त्तुं तदुत्सहे ॥
किन्तु मद्वचनं यस्मान्नैकान्तेन मृषा भवेत् ।
चन्द्रोऽपि वर्द्धते यस्मात् तमुपायमपेक्षते ॥
तत्राप्ययमुपायोऽस्ति मासार्द्धं यातु चन्द्रमाः ।
क्षयं वृद्धिञ्च मासार्द्धं स्वयं भार्य्यासु वर्द्धताम् ॥
तस्य तद्वचनं श्रुत्वा तं प्रसाद्य प्रजापतिम् ।
सर्व्वे सुरगणास्तत्र गता यत्रास्ति चन्द्रमाः ॥
एवमुक्ते तु वचने दक्षेण मुनिना द्विजाः ।
अथ चन्द्रं समादाय भार्य्याभिः सहितं तदा ।
जग्मुस्ते ब्रह्मसदनं मुदिताः सुरसत्तमाः ॥
तत्र गत्वा महाभागा यथा दक्षेण भाषितम् ।
तत्सर्व्वं कथयामासुर्ब्रह्मणे परमात्मने ॥
ब्रह्मा दक्षवचः श्रुत्वा देवानां सदनं तदा ।
चन्द्रभागं महाशैलं जगाम सहितः सुरैः ॥
तत्र गत्वा सुरश्रेष्ठः प्रजानां हितकाम्यया ।
स्नापयामास शुभ्रांशुं बृहल्लोहितपुष्करे ॥
भूतभव्यभवज्ज्ञानः पूर्ब्बमेव पितामहः ।
एतदर्थं चकारात्र सरः पूर्णं जगत्प्रभुः ॥
तत्र स्नातस्य लोकस्य नीरोगत्वं प्रजायते ।
चिरायुस्त्वञ्च सततं बृहल्लोहितसंज्ञके ॥
तत्र स्नातस्य चन्द्रस्य शरीरात् तत्क्षणं गदः ।

सेवते सुरतं तस्मिन् राजयक्ष्मन् वसिष्यसि ॥
प्रतिश्यायश्वासकासयुक्तो यो मैथुनं चरेत् ।
स ते प्रवेश्यः सततं श्लेष्मणश्च तथाविधः ॥
कृष्णाख्या मृत्युपुत्री या भवतः सदृशी गुणैः ।
सा तेऽस्तु भार्य्या सततं भवन्तमनुयास्यति ॥
क्षीणत्वं भवतः कृत्यं ततस्त्वं विषये कुरु ।
द्रुतं गच्छ यथाकामं चन्द्रे त्वं विमुखो भव ॥
मार्कण्डेय उवाच ।
एवं विसृष्टो विधिना राजयक्ष्मा महागदः ।
पश्यतां सर्व्वदेवानामन्तर्द्धानं जगाम ह ॥
अन्तर्हिते महारोगे ब्रह्मा लोकपितामहः ।
चन्द्रं समग्रयामास कलापञ्चदशैधितम् ॥
तेन क्षीरोदधौतेन सुधापूगेन वात्मभूः ।
सज्योत्स्नैस्तु कलाचूर्णैः पूर्व्ववच्चाकरोद्विधुम् ॥
स षोडशकलापूर्णः पूर्व्ववद्विबभौ यदा ।
चन्द्रस्तदा सर्व्वदेवा मुमुदुस्तस्य दर्शनात् ॥
अथ चन्द्रस्तदा पूर्णः प्रणिपत्य पितामहम् ॥
उवाचेदं सुरसदो मध्यगो नातिहर्षितः ॥

| | | |
|---|---|---|
| | राजयक्ष्मा निःससार पूर्व्वरूपो यथोदितः ॥<br>निःसृत्य राजयक्ष्मा तु ब्रह्माणञ्च जगत्पतिम् ।<br>प्रणम्याहं किं करिष्ये क्व गच्छामीत्युवाच ह ॥<br>स्थानं पत्नीञ्च लोकेश ! कृत्यं मम सदातनम् ।<br>निदेशयानुरूपं मे स्रष्टा त्वं जगतां यतः ॥ | |

सोम उवाच ।
न स्थानं पूर्व्ववद्ब्रह्मन् शरीरे मम
वर्त्तते ।
न वीर्य्यं वा तथोत्साहो
विसीदन्त्यङ्गसन्धयः ॥
नोत्सहे पूर्व्ववच्चेष्टां विधातुं
सुतरामहम् ।
चेष्टाहीनस्त्वनुदिनं वर्त्तेयं केन
लोकभृत् ॥
ब्रह्मोवाच ।
ग्रस्तस्य यक्ष्मणा सोम
यदभूदङ्गसन्धयः ।
पूर्व्वं विशीर्णा भवतस्तत्पूर्णमभवन्न हि
॥
अधुना भवतो देहचूर्णं निःसारितं मया
।
शरीरात् सामृतज्योत्स्ना अञ्जसा राज-
यक्ष्मणः ॥
तेषां प्रक्षालनविधौ लवशो यत् स्थितं
जले ।
ज्योत्स्नायाश्च सुधायाश्च तेन हीनो
भवान्
यतः ।
ततोऽङ्गसन्धयो राजंस्तव सीदन्ति
साम्प्रतम् ॥
अत्रोपायं विधास्यामि यथा नार्त्तिं
लभेद्भवान् ।
प्राजापत्यः पुरोडाशो हवनीयः
पुरोऽध्वरे ॥
ऐन्द्रस्ततोऽनु चाग्नेयः प्रदेयः सर्व्वतः
क्रतौ ।
ततोऽनु भवतो भागः पुरोडाशो मया
कृतः ॥
तेन भागेन भुक्तेन नित्यं यज्ञहुतेन हि ।
पूर्ब्बवत्ते समुत्साहः स्थानं वीर्य्यं
भविष्यति ॥
यश्चामृतकणास्तोये क्षीरोदस्य
स्थितास्तव ।

कलाः षोडश चन्द्रस्य तत्रैका शम्भुमूर्द्धनि ।
तिष्ठत्यद्यावधि पराः क्षयं यान्तु क्षयं विना ॥
क्षयेण यदि रोगेण मासार्द्धं दक्षवाक्यतः ।
क्षयाय पीड्यते चन्द्रो नोपशान्तिः सदा
भवेत् ॥
किन्त्वस्य या कला शम्भौ ज्योत्स्ना
गच्छन्तु तां
प्रति ।
चतुर्द्दशकलासंस्थाः प्रतिमासं सुरोत्तमाः ॥
चतुर्द्दशकलासंस्थान्यमृतानि पिबन्तु वै ।
प्रतिपत्तिथिमारभ्य भवन्तस्त्वाचतुर्द्दशीम् ॥
तेजोभागाः सूर्य्यविम्बं चतुर्द्दशतिथौ क्रमात्
।
प्रविशन्तु क्षयं त्वेवं कृष्णपक्षे विधोर्भवेत् ॥
यातु शषा कलादर्शे हरित्पत्रे पलायिता ।
तिष्ठतु प्रथमे भागे तिथौ तस्यां निशापतेः ॥
द्वितीये दर्शभ्रागे तु रोहिण्या यातु मन्दिरम् ।
तृती तु सरस्वत्यां स्नात्वा सन्धुक्षितो
विधुः ॥
चतुर्थे बलसंपूर्णस्तिथिभागे विभावसोः ।
मण्डलं यातु चन्द्रोऽयं सविम्बरथघोटकः ॥
यावत्कालेन हि कला प्रथमा क्षयमाप्नुयात्
।
एवमेवं कृष्णपक्षे तावत्स्था प्रतिपत् भवेत्
॥
द्वितीयादौ कृष्णपक्षे वृद्धिर्ह्रासस्तथाविधः ।
तिथीनां वृद्धिहेतुश्च शुक्ले कृष्णे तथा
भवेत् ॥
ततः पुनः शुक्लपक्षे यावत् पूर्ब्बा कलोदिता
।
वृद्धिमैति भवेत्तावत् प्रतिपत्तिथिरादितः ॥
ततो द्वितीयभागस्य या ज्योत्स्ना हरमूर्द्धनि
।
स्थितायां वै कलायान्तु गता सा पुनरेष्यति
॥
युष्माभिस्तु भवेत् पेयममृतं यद्दिने दिने ।
तद्द्वितीयादितिथिभिः पूर्णान्ताभिः सदैव
हि ॥

चक्रुर्लोकहितार्थाय चन्द्रस्य क्षयवृद्धये ॥
महादेवोऽपि चन्द्रार्द्धं स्वरूपं परमात्मनः ।
जग्राह देवैर्विधिना शिरसाभ्युदितो भृशम् ॥
यत्तेजः परमं नित्यमजमव्ययमक्षयम्।
तत्स्वरूपाश्चन्द्रकलाः शापतस्तु क्षयं गताः
॥
प्रविशन्ति यदा ज्योतिरानन्दमजरं परम् ।
योगिनान्तु तदा तेषां चित्तं तल्लीनमेष्यति ॥
महादेवशिरःसंस्थे लीने चित्ते सुधानिधौ ।
चन्द्रद्वारा भवेन्मुक्तिरित्येवं वैदिकी श्रुतिः ॥
एतज्ज्ञात्वा महादेवः क्षयवृद्ध्या विना कृतम्
।
हिताय सर्व्वलोकानां जग्राह शिरसा विधुम् ॥
चन्द्रज्योत्स्नासमायोगादोषध्योयान्ति वृद्धये
।
सर्व्वौषधीषु वृद्धासु प्रवर्त्तन्ते ततोऽध्वराः ॥
अध्वरेषु प्रवृत्तेषु स्वान् स्वान भागांस्तु
देवताः ।
परिगृह्णन्ति पितरस्तथा कव्यानि भूरि च ॥
अमृतं ब्रह्मणा सृष्टं यद्देवेभ्यः पूरातनम् ।
तेन तृप्यन्ति हीना ये हव्यभागेन दैवताः ॥
यज्ञेनाप्यायिते तच्च ज्योत्स्नाभिर्वृद्धिमेति वै
।
यज्ञज्योत्स्ना विना भूतं तच्च स्यात् क्षीण-
मन्यथा ॥
अतोऽमृतस्य यज्ञस्य चन्द्रमाः कारणं स्वयम्
।
अतोऽस्य दक्षशापात्तु रक्षायै तच्चिकीर्षितम्
॥
अद्यापि कृष्णपक्षेऽपि सुधा संपीयते सुरैः ।
तेजः सूर्य्यं याति शम्भोश्चन्द्रार्द्धं
ज्योत्स्निकातथा ।
पुनश्च शुक्लपक्षे तु शेषोदेति कला ततः ।
ज्योत्स्नाद्वितीयो भागस्तु तेजोभागो
द्वितीयकः ॥
अन्वेत्युग्रशिरश्चन्द्रात् सूर्य्यविम्बाद्यथाक्रमम्
।
कलाः षोडश चन्द्रस्य तत्रैका शम्भुशेखरे ॥
सितासितावुभौ पक्षौ शेषाणामुदयक्षयौ ।

शरीरचूर्णं यावत्ते ज्योत्स्नायाश्चापि ये कणाः ।
वृद्धिं यास्यन्ति सततं क्षीरसागरमध्यगाः ॥
स्वारोचिषेऽन्तरे प्राप्ते द्वितीये शङ्करांशजः ।
दुर्व्वासा भविता विप्रः प्रचण्डश्चण्डभास्वरः ॥
स महेन्द्रस्याविनयात् शापं दत्त्वा सुदारुणम् ।
करिष्यति त्रिभुवनं निःश्रीकं ससुरासुरम् ॥
श्रिया हीने ततो लोके भविता लोकविप्लवः ।
यथा तव क्षयात् सोम प्रवृत्तो लोकविप्लवः ॥
तन्मानुषप्रमाणेन तृतीये तु कृते युगे ।
भविष्यति स्थास्यति च यावद्युगचतुष्टयम् ॥
ततश्चतुर्थे सम्प्राप्ते सह देवैः कृते युगे ।
क्षीरोदं निर्म्मथिष्यामः शम्भुर्विष्णुरहं तथा ॥
मन्थानं मन्दरं कृत्वा सर्पराजं तथांशुकम् ॥
यज्ञभागेषु हीनेषु देवान्नार्थं वयं ततः ।
मथिष्यामः समं देवैः क्षीरोदं सह दानवैः ।
त्वच्छरीरामृतमिदं यत् स्थितं क्षीरसागरे ॥
तत्प्रमथ्य ग्रहीष्यामो राशीभूतं तथाक्षयम् ।
सर्व्वौषध्यन्तरे कृत्वा त्वच्छरीरं तदा वयम् ।
क्षेप्स्थामः सागरजले शरीरार्थं विधो तव ॥
निर्म्मथ्य सागरं पश्चात् समुद्धार्य्य यदामृतम् ।
तदा तव वपुस्तस्मिन्नपूर्ब्बं सम्भविष्यति ॥
स्वयमुत्पत्स्यते चन्द्रो ज्योत्स्नायोगात् सुरो-
त्तमाः ।
यथा दिने दिने भागाः क्षयं यान्ति तथा विधोः ॥
वृद्धिं गच्छन्त्यनुदिनं शुक्लपक्षेऽन्वहं सुराः ।
तेजोभागः सूर्य्यविम्बात् पुनरेव समेष्यति ॥
प्रयास्यति कृष्णपक्षे यथाभागक्रमन्तथा ।
ज्योत्स्नाहरशिरश्चन्द्रात्प्रत्यहं पुनरेष्यति ॥
तेजोभागः सूर्य्यविम्बादमृतं वत्स्यते स्वयम् ।
एवं वृद्धिः शुक्लपक्षे सुधांशोः संभविष्यति ॥
पक्षयोः शुक्लकृष्णत्वं चन्द्रवृद्धिक्षयाद्भवेत् ।
यावत्कालेन यो भागं क्षयं वृद्धिञ्च यास्यति ॥
तावत्कालमभिव्याप्य तिथिः स्थास्यति सा पुनः ॥
चिरेण वृद्धिर्यदि वा क्षयो वा
द्रुतेन वृद्धिर्यदि वा क्षयो वा ।
द्रुतात्तिथीनां तु सदा क्षयः स्या-
च्चिरात्तु वृद्धिस्थितिषु प्रवेशे ॥
हव्यं कव्यञ्च चन्द्रेण विना न संभविष्यति ।
तस्मात् तयोः प्रवृद्ध्यर्थं चन्द्रं रक्षन्तु देवताः ॥
आस्वादनीयः शुभ्रांशुः कलाशेषोऽनुमासतः ।
अमावास्यापराह्णे तु पितृभी रोहिणीगृहे ॥
तस्यैवास्वादनात् कव्यं वृद्धिं यास्यति चान्वहम् ।
तेन कव्येन पितरस्तृप्तिं यास्यन्ति वै पराम् ॥
श्रीमार्कण्डेय उवाच ।
ततः सुरगणाः सर्व्वे यथोक्तं विधिना तथा ।
इति वः सर्व्वमाख्यातं विभक्तश्चन्द्रमा यथा ॥
ब्रह्मणा पर्व्वतश्रेष्ठे तथा तच्चन्द्रभागतः ।
यज्ञभागे स्थिते यस्माद्देवार्थमकरोद्विधुम् ।
कव्ये स्थितेऽपि पित्रर्थं तिथिवृद्धिक्षयौ यथा ॥
इदं पुण्यतमाख्यानं यः शृणोति सकृन्नरः ।
राजयक्ष्मा तस्य कुले न कदाचिद्भविष्यति ॥
यक्ष्मणा परिभूतो यः शृणोति वचनं विधेः ।
अचिरात् यक्ष्मणा मुक्तः स भवेन्नरसत्तमः ॥
इदं स्वस्त्ययनं पुण्यं गुह्यात् गुह्यतरं परम् ।
यः शृणोत्येकचित्तः सन् स महापुण्यभाग्-
भवेत् ॥”
इति कालिकापुराणे २१ अध्यायः ॥

**राजयोग्यः**, त्रि, (राज्ञो योग्यः ।) राजार्हः ।
नृपोचितः । यथा, --
“त्रिकोणकण्टके सौम्ये पापे चोपचयस्थिते ।
राजयोग्या भवेन्नारी सुन्दरी कुलवर्द्धिनी ॥”
इति जातकामृतम् ॥

**राजरङ्गं**, क्ली, (राजयोग्यं रङ्गम् ।) रजतम् ।
इति शब्दरत्नावली ॥

**राजराजः**, पुं, (राज्ञामपि राजा धनाधिपत्वात् ।
“राजाहःसखिभ्यष्टच् ।” ५ । ४ । ९१ । इति
टच् ।) कुबेरः । इत्यमरः । १ । १ । ६३ ॥
(यथा, किराताज्र्जुनीये । ५ । ५१ ।

| | | |
|---|---|---|
| ओजो वीर्य्यांशुकं कान्तमक्षयञ्च सुधात्मकम् ।<br>दृढाङ्गसन्धिकं चारु भविष्यति वपुस्तव ॥<br>मार्कण्डेय उवाच ।<br>सुधांशुमेवमाभाष्य ब्रह्मा लोकपितामहः ।<br>विधोः क्षयाय मासार्द्धं वृद्धये यत्नवानभूत् ॥<br>यथा दक्षेण गदितं मासार्द्धं यातु चन्द्रमाः ।<br>क्षयं वृद्धिञ्च मासार्द्धं यत्नं तत्राकरोद्विधिः ॥<br>यतः षोडशधा चन्द्रं सुरज्येष्ठो विभक्तवान् ।<br>विभज्य च सुरान् सर्व्वान् समुवाचेदमद्भुतम् ॥ | | |

"इत्युक्त्वा सपदि हितंप्रियं प्रियार्हे
धाम स्वं गतवति राजराजभृत्ये ।
सोत्कण्टं किमपि पृथासुतः प्रदध्यौ
सन्धत्ते भृशमरतिं हि सद्वियोगः ॥")
सार्व्वभौमः । (यथा, रामायणे । २ । ९२ ।
१४ ।
"प्रयाणमिति च श्रुत्वा राजराजस्य योषितः ।
हित्वा यानानि यानार्हा ब्राह्मणं पर्य्यवारयन्
॥")
सुधाकरः । इति मेदिनी । जे, ३६ ॥

**राजरीतिः**, स्त्री, पित्तलविशेषः । तत्पर्य्यायः ।
पाकतुण्डी २ राजपुत्त्री ३ महेश्वरी ४
ब्रह्माणी ५
ब्रह्मारीतिः ६ कपिला ७ पिङ्गला ८ । अस्य
गुणाः । तिक्तत्वम् । शीतलत्वम् । लवणत्वम्
।
शोधनत्वम् । पाण्डुवातक्रिमिप्लीहपित्तनाशि-
त्वञ्च । इति राजनिर्घण्टः ॥

**राजर्षिः**, पुं, (राजा ऋषिरिव श्रेष्ठत्वात् ।)
ऋतपर्णादिराजः । इति त्रिकाण्डशेषः ॥ तस्य
स्मरणं कलिनाशनम् । यथा, --
"कर्कोटकस्य नागस्य दमयन्त्या नलस्य च ।
ऋतपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनम् ॥"
इति महाभारतम् ॥

**राजलक्ष्मा**, [न्] पुं, (राज्ञो लक्ष्म चिह्नं यत्र ।)
युधिष्ठिरः । इति धनञ्जयकोषः ॥ (राजचिह्न-
युक्ते, त्रि ॥)

**राजलक्ष्मीः**, स्त्री, (राज्ञो लक्ष्मीः ।) राजश्रीः ।
यथा, ज्योतिषतत्त्वे ।
"मन्त्रप्रभावनिपुणः प्रमदाविलासः
श्वेतातपत्रनृपपूजितदेशलाभः ।
हस्त्यश्वलाभधनपूर्णमनोरथः स्यात्
शौक्री दशा भवति निश्चलराजलक्ष्मीः ॥"

**राजवंश्यः**, त्रि, (राजवंशे भवः । राजवंश +
यत् ।) राजवंशोद्भवः । तत्पर्य्यायः । राज-
बीजी २ । इत्यमरः । २ । ७ । २ ॥

**राजवान्**, [त्] त्रि, (राजास्त्यस्येति । राजन् +
मतुप् । मस्य वः ।) राजमात्रयुक्तदेशः ।
यथा, --
"सुराज्ञि देशे राजन्वान् स्यात्ततोऽन्यत्र
राज-
वान् ॥"
इत्यमरः । २ । १ । १३ ॥
(नृपविशिष्टः । यथा, महाभारते । ५ । १
। ७ ।
"रराज सा राजवती समृद्धा
ग्रहैरिव द्यौर्व्विमलैरुपेता ॥")

**राजवाहः**, पुं, (राजानं वहतीति । वह् + अण् ।)
घोटकः । इति शब्दचन्द्रिका ॥

**राजवाह्यः**, पुं, (राज्ञां वाह्यः ।) राजवाहक-
हस्ती । तत्पर्य्यायः । उपवाह्यः २ ।
इति
हेमचन्द्रः ॥ विजयकुञ्जरः ३ । इति
त्रिकाण्ड-
शेषः ॥ राजवहनीये, त्रि ॥

**राजवृक्षः**, पुं, (वृक्षाणां राजा । राजदन्तादित्वात्
परनिपातः ।) आरग्वधवृक्षः । इत्यमरः
॥
पियालवृक्षः । इति मेदिनी ॥
लङ्कास्थायी वृक्षः ।
इति शब्दचन्द्रिका ॥ लङ्कासिज् इति
भाषा ॥

**राजशणः**, पुं, (राजः शोभमानः शणः ।) पट्टः ।
इति शब्दमाला ॥ पाट् इति भाषा ॥

**राजसफरः**, पुं, इल्लिशमत्स्यः । इति हारावली ॥

**राजशय्या**, स्त्री, (राज्ञः शय्या ।) राज्ञः शय-
नीयम् । तत्पर्य्यायः । महाशय्या २ ।
इति
हेमचन्द्रः ॥

**राजशाकः**, पुं, (राजप्रियः शाकः । शाकानां
राजा इति वा ।) वास्तूकम् । इति राज-

गन्धर्व्वा गुह्यका यक्षा विबुधानुचराश्च ये ।
तथैवाप्सरसः सर्व्वा राजसीषूत्तमा गतिः
॥"
इति वामने १२ अध्यायः ॥
राजसाहारा यथा, --
"कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः
।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः
॥"
राजसयज्ञो यथा, --
"अभिसन्धाय तु फलं दम्भार्थमपि चैव
यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम्
॥"
राजसतपो यथा, --
"सत्कारमानपूजार्थं तपो दम्भेन चैव यत्
।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥"
* ॥
राजसदानं यथा, --
"यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः
।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम्
॥"
इति श्रीभगवद्गीतायाम् १७ अध्यायः ॥
राजसत्यागो यथा, --
"दुःखमित्येव यत् कर्म्म कायक्लेशभयात्
त्यजेत् ।
स कृत्वा राजसत्यागं नैव त्यागफलं
लभेत् ॥"
राजसज्ञानं यथा, --
"पृथक्त्वेन तु यज्ज्ञानं नानाभावान्
पृथग्-
विधान् ।
वेत्ति सर्व्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम्
॥"
राजसकर्म्म यथा, --
"यत्तु कामेप्सुना कर्म्म साहङ्कारेण वा
पुनः ।

**राजवर्त्म**, [न्] क्ली, (राज्ञो वर्त्म पन्थाः ।) राज-

पथः । तत्पर्य्यायः । घण्टापथः २ संसरणम् ३
श्रीपथः ४ उपनिष्क्रमणम् ५ उपनिष्करम् ६
महापथः ७ । इति हेमचन्द्रः । ४ । ५३ ॥

**राजवला**, स्त्री, (राजते शोभते इति । राज् +

अच् । राजा वला इति कर्म्मधारयः ।)
भद्रवला । इत्यमरः । २ । ४ । १५३ ॥ गन्ध-
भादालिया इति भाषा ॥

**राजवल्लभः**, पुं, (राज्ञां वल्लभः ।) राजादनी ।

राजाम्रः । राजबदरः । इति राजनिर्घण्टः ॥
नारायणदासकविराजकृतद्रव्यगुणग्रन्थविशेषः ।
यथा, --
"श्रीनारायणदासेन कविराजेन धीमता ।
प्रतिसंस्क्रियते द्रव्यगुणोऽयं राजवल्लभः ॥"
इति तस्य द्वितीयश्लोकः ॥
नृपप्रिये, त्रि ॥ (यथा, मार्कण्डेये । ४९ । ४९ ।
"दुष्टप्रायो विना क्षेत्रैः परभूमिचरो बली ।
ग्राम एवाक्रिमीसंज्ञो राजवल्लभसंश्रयः ॥")

**राजवल्ली**, स्त्री, (राजप्रिया वल्ली ।) तोयवल्ली ।

इति रत्नमाला ॥ उक्व्या इति भाषा ॥

निर्घण्टः ॥

**राजशुकः**, पुं, (शुकानां राजा । राजदन्तादित्वात्

परनिपातः ।) पक्षिविशेषः । राजा शूगा
इति हिन्दी भाषा । तत्पर्य्यायः । प्राज्ञः २
शतपत्रः ३ नृपप्रियः ४ । इति
राजनिर्घण्टः ॥

**राजशृङ्गं**, क्ली, राजच्छत्रम् । तत्पर्य्यायः । कनक-

दण्डकम् २ । इति त्रिकाण्डशेषः ॥

**राजशृङ्गः**, पुं, मद्गुरमत्स्यः । इति हेमचन्द्रः ॥

**राजसः**, त्रि, (रजसो भवः । रजस् + अण् ।)

रजोगुणोद्भवः । लल्लक्षणं यथा, --
"आरम्भरुचिताधैर्य्यमसत्कार्य्यपरिग्रहः ।
विषयोपसेवा चाजस्रं राजसं गुणलक्षणम् ॥"
आरम्भरुचिता फलार्थं
कर्म्मानुष्ठानशीलता ॥ * ॥
संक्षेपतस्तल्लक्षणं यथा, --
"येनास्मिन् कर्म्मणा लोके ख्यातिमिच्छति
पुष्कलाम् ।
न च शोचत्यसम्पत्तौ तद्विज्ञेयन्तु
राजसम् ॥"
तस्माद्गतिर्य्यथा, --
"देवत्वं सात्त्विका यान्ति मनुष्यत्वञ्च
राजसाः ।
तिर्य्यक्त्वं तामसा नित्यमित्येषा
त्रिविधा गतिः ॥"
तद्गतिप्रकारा यथा, --
"झल्ला मल्ला नटाश्चैव पुरुषाः
शस्त्रवृत्तयः ।
द्यूतपानप्रसक्ताश्च जघन्या राजसी
गतिः ॥
राजानः क्षत्त्रियाश्चैव राज्ञश्चैव
पुरोहिताः ।
वादयुद्धप्रधानाश्च मध्यमा राजसी
गतिः ॥

क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥"
* ॥
राजसकर्त्ता यथा, --
"रागी कर्म्मफलप्रेप्सुर्लुब्धो
हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्त्ता राजसः
परिकीर्त्तितः ॥"
राजसी बुद्धिर्यथा, --
"यया धर्म्ममधर्म्मञ्च कार्य्यञ्चाकार्य्यमेव च ।
अयथावत् प्रजानाति बुद्धिः सा पार्थ
राजसी ॥"
राजसी धृतिर्यथा, --
"यया तु धर्म्मकामार्थान् धृत्या धारयते-
ऽर्ज्जुन ।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ
राजसी ॥"
राजससुखं यथा, --
"विषयेन्द्रियसंयोगात् यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत् सुखं राजसं स्मृतम् ॥"
इति श्रीभगवद्गीतायाम् १८ अध्यायः ॥
* ॥
राजसपुराणानि यथा, --
"ब्रह्माण्डं ब्रह्मवैवर्त्तं मार्कण्डेयं तथैव च ।
भविष्यं वामनं ब्राह्मं राजसानि निबोधत
॥" ॥
राजसस्मृतयो यथा, --
"च्यावनं याज्ञवल्क्यञ्च आत्रेयं दाक्षमेव च ।
कात्यायनं वैष्णवञ्च राजसाः स्वर्गदा
मताः ॥"
इति पाद्मोत्तरखण्डे ४३ अध्यायः ॥

**राजसदनं**, क्ली, (राज्ञः सदनम् ।) राजगृहम् ।

तत्पर्य्यायः । सौधः २ । इत्यमरः । २ ।
२ । १० ॥
भूपालभवनम् ३ सुधामयम् ४ । इति शब्द-
रत्नावली ॥ तद्भेदा यथा, --
"सौधोऽस्त्री
राजसदनमुपकार्य्योपकारिका ।

**राजसभा**, स्त्री, राज्ञः सभा । ("सभा राजा-

मनुष्यपूर्ब्बा ।" २ । ४ । २३ । इत्यत्र राज-
पर्य्यायस्यैव ग्रहणात् न क्लीवत्वम् ।)
नृपति-
समाजः । इत्यमरः । ३ । ५ । ९ ॥
(वाचस्पत्ये
नपुंसकलिङ्गतोक्तिस्तु प्रामादिकी ॥)

**राजसर्पः**, पुं, (सर्पाणां राजा । राजदन्तादि-

त्वात् परनिपातः ।) सर्पविशेषः ।
तत्पर्य्यायः ।
भुजङ्गभोजी २ । इति हेमचन्द्रः । ४ । ३७०
॥

**राजसर्षपः**, पुं, (सर्षपाणां राजा श्रेष्ठत्वात् । पर-

निपातः ।) सर्षपविशेषः । राजसर्षा इति
भाषा ॥ राइ इति केचित् ॥ तत्पर्य्यायः ।
कृष्णिका २ राजिका ३ सूरी ४ मुष्ठकः ५ ।
मुष्ठक इत्यत्र व्यष्टक इति वा पाठः । इति
रत्नमाला ॥ क्षवः ६ क्षुताभिजननः ७ ।
क्षुताभिजनन इत्यत्र क्षुधाभिजनन इति वा
पाठः । इति हेमचन्द्रः ॥ कृष्णा ८ तीक्ष्ण-
फला ९ राजी १० कृष्णसर्षपाख्या ११ ।
अस्य
गुणाः । तिक्तत्वम् । कटुत्वम् । उष्णत्वम् ।
वात-
शूलगुल्मकण्डुकुष्ठव्रणनाशित्वम् । पित्तदाह-
प्रदत्वञ्च । इति राजनिर्घण्टः ॥
(चतुर्व्विंशति-
त्रसरेणुपरिमित-परिमाणविशेषः । यथा,
मनुः ।
८ । १३३ ।
"त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः
।
ता राजसर्षपस्तिस्रस्ते त्रयो गौरसर्षपः ॥"
"त्रसेत्यादि । अष्टौ त्रसरेणवो लिक्षैका परि-
माणेन ज्ञेया तास्तिस्रो लिक्षा राजसर्षपो
ज्ञेयः । ते राजसर्षपास्त्रयो गौरसर्षपो ज्ञेयः
॥"
इति तट्टीकायां कुल्लूकः ॥)

"यक्ष्यन्ति च नरव्याघ्रा निर्ज्जित्य
पृथिवीमिमाम्
राजसूयाश्वमेधाद्यैः क्रतुभिर्भूरिदक्षिणैः
॥"
राजसूयमन्त्रादिकं वाजसनेयसंहितायाम्
९
अध्यायस्य ३५ कण्डिकामारभ्य १०
अध्या-
यस्य ३० कण्डिकापर्य्यन्तं द्रष्टव्यम् ॥
युधिष्ठिरस्य
राजसूययज्ञविवरणन्तु महाभारते
सभापर्व्वणि
विशेषतो द्रष्टव्यम् ॥)

**राजस्कन्धः**, पुं, (राजः शोभाशाली स्कन्धो

यस्य ।) घोटकः । इति त्रिकाण्डशेषः ॥

**राजस्वं**, पुं क्ली, (राज्ञे देयं स्वं धनम् ।) राज-

धनम् । राजकरः । इति लोकप्रसिद्धम् ॥

**राजस्वर्णः**, पुं, (स्वर्णानां धुस्तूराणां राजा ।

राजदन्तादित्वात् परनिपातः ।)
राजधुस्तू-
रकः । इति राजनिर्घण्टः ॥

**राजहंसः**, पुं, (हंसानां राजा श्रेष्ठत्वात् । राज-

दन्तादित्वात् परनिपातः ।) चञ्चुचरण-
लोहितश्वेतवर्णहंसः । इत्यमरः । २ । ५
। २४ ॥
(यथा, कुमारे । १ । ३४ ।
"सा राजहंसैरिव सन्नताङ्गी
गतेषु लीलाञ्चितविक्रमेषु ।
व्यनीयतप्रत्युपदेशलुब्धै-
रादित्सुभिर्नूपुरशिञ्जितानि ॥")
कदम्बः । कलहंसः । नृपोत्तमः । इति
मेदिनी ॥

**राजहर्षणं**, क्ली, (राजानमपि हर्षयतीति ।

हृष् + णिच् + ल्युः ।) तगरपुष्पम् । इति
राजनिर्घण्टः ॥

**राजहस्ती**, [न्] पुं, (राज्ञो हस्ती ।) राज-

भूषः ६ महीक्षित् ७ । इत्यमरः ॥ नरपतिः
८
पार्थः ९ नृपतिः १० भूपालः ११ भूभृत्
१२
महीपतिः १३ नाभिः १४ नाराट् १५
भूमीन्द्रः १६ नरेन्द्रः १७ नायकाधिपः
१८ ।
इति शब्दरत्नावली ॥ प्रजेश्वरः १९
भूमिपः २०
इनः २१ दण्डधरः २२ अवनीपतिः २३
स्कन्दः २४ स्कन्धः २५ भूभुक् २६
अर्थपतिः २७ ।
इति जटाधरः ॥ * ॥ अस्य व्युत्पत्तिर्यथा,
--
"महता राजराज्येन पृथुर्वैण्यः प्रतापवान् ।
सोऽभिषिक्तो महातेजा
विधिवद्धर्म्मकोविदैः ॥
पित्रापरञ्जितास्तस्य प्रजास्तेनानुरञ्जिताः
।
अनुरागात्ततस्तस्य नाम राजेत्यभाषत ॥"
इति विष्णुपुराणे १ अंशे १३ अध्यायः ॥
अपि च ।
"रागी राजसिकं स्वर्ग्यं कुरुते कर्म्म रागतः
।
रागान्धाश्च राजसिकास्तेन राजा
प्रकीर्त्तितः ॥"
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ३५
अध्यायः ॥ * ॥
तस्य सर्व्वपितृत्वं यथा, --
शच्युवाच ।
"शृणु वत्स ! महाराज हे तात ! भयभञ्जन
।
भयत्राता च राजा च सर्व्वेषां पालकः पिता
॥
भ्रष्टश्रीश्च महेन्द्रोऽद्य त्वञ्च स्वर्गे नृपोऽधुना
।
यो राजा स पिता पाता प्रजानामेष
निश्चयः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ५९
अध्यायः ॥

**राजसायुज्यं**, क्ली, (राज्ञः सायुज्यम् ।) राजत्वम् ।

"स्याद्ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि ।
देवभूयादिकं तद्वत् -- ॥"
इत्यमरदर्शनात् ॥

**राजसारसः**, पुं, (राज्ञः सारस इव । राजः शोभाशाली सारस इव इति वा ।) मयूरः । इति शब्दमाला ॥

**राजसी**, स्त्री, (रजस इयमिति । रजस् + अण् । ङीप् ।) दुर्गा । इति शब्दरत्नावली ॥ रजोगुणसम्बन्धिनी च ॥ (यथा, गीतायाम् ।
"यया धर्म्ममधर्म्मञ्च कार्य्यञ्चाकार्य्यमेव च ।
अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी ॥")

**राजसूयः**, पुं, ("राज्ञा लतात्मकः सोमः सूयते ऽत्र ।" इत्यमरटीका ॥ सु + अधिकरणे क्यप् ।
"राज्ञा सोतव्यः राज्ञा वा इह सूयते ।"
इति काशिका । "राजसूयसूर्य्येति ।" ३ । १ । ११४ । इति निपातनान् दीर्घः ।) राजकर्त्तव्ययज्ञविशेषः । तत्पर्य्यायः । नृपाध्वरः २ क्रतुराजः ३ क्रतूत्तमः ४ । इति शब्दरत्नावली ॥
(अमरमते क्लीवलिङ्गोऽयम् । ३ । ५ । ३१ ॥
यथा, महाभारते । १ । १५७ । १६ ।

गजः । तत्पर्य्यायः । मारीचः २ याजकगजः ३ मदोत्कटः ४ । इति हारावली । ४९ ॥

**राजहासकः**, पुं, (राजानमपि हासयतीति । हस् + णिच् + ण्वुल् ।) मत्स्यविशेषः । तत्पर्य्यायः । कातरः २ कातलः ३ राजीवः ४ । इति शब्दरत्नावली ॥

**राजक्षवकः**, पुं, सर्षपः । इति राजनिर्घण्टः ॥
(अस्य शाकगुणाः ।
"संग्राहि शीतलञ्चापि लघुदोषाविरोधि च ।
राजक्षवकशाकन्तु सटीशाकन्तु तद्विधम् ॥"
इति सुश्रुते सूत्रस्थाने ४६ अध्यायः ॥)

**राजा**, [न्] पुं, (राजते शोभते इति । राज् + "कणिन् युवृषितक्षिराजीति ।" उणा० १ । १५६ । इति कणिन् ।) प्रभुः । नृपतिः । (यथा-
रघुः । ४ । ११ ।
"यथा प्रह्लादनात् चन्द्रः प्रतापात् तपनो यथा ।
तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥")
क्षत्त्रियः । (यथा, मनुः । २ । ३२ ।
"शर्म्मवद्ब्राह्मणस्य स्यात् राज्ञो रक्षासमन्वितम् ।
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रैष्यसंयुतम् ॥")
चन्द्रः । यक्षः । इन्द्रः । इति मेदिनी ॥ उत्तरपदे चेत् श्रेष्ठार्थवाचकः ॥ अथ नृपतेः पर्य्यायः । राट् २ पार्थिवः ३ क्ष्माभृत् ४ नृपः ५

पृथोरेवादौ राजा इति संज्ञा आसीत् । यथा,
"देवैर्व्विप्रैस्तथा सर्व्वैरभिषिक्तो महामनाः ।
राज्ञाञ्चैवाधिकारे वै पृथुर्वैण्यः प्रतापवान् ॥
तदा पित्रा प्रजाः सर्व्वाः कदा नैवानुरञ्जिताः ।
तेनानुरञ्जिताः सर्व्वाः सुखैर्म्मुमुदिरे तदा ।
अनुरागात्तस्य वीरस्य नाम राजेत्यभाषत ॥"
इति पाद्मे भूखण्डे २९ अध्यायः ॥ * ॥
अथ राजलक्षणम् ।
"सोऽपि कृष्णपटे बालं दृष्ट्वाशीविषपीडितम् ।
नरेन्द्रलक्षणोपेतं चिन्तामाप नरेश्वरः ॥
तस्यास्यं चन्द्रविम्बाभं सुभ्रु रम्यं समुन्नसम् ।
नीलाः केशाः कुञ्चिताश्च समा दीर्घास्तरङ्गिताः ॥
राजीवनेत्रयुगलो विम्बोष्ठपुटसंवृतः ।
चतुर्द्दंष्ट्रश्चतुष्किष्कुर्द्दीर्घास्यो दीर्घबाहुकः ॥
चतुर्लेखाकरो मास्ययववृद्धैकपर्व्वकः ।
शिरालपादो गम्भीरः सूक्ष्मत्वक् त्रिबलीधरः ॥"
इति मार्कण्डेयपुराणे हरिश्चन्द्रोपाख्यानाध्यायः ॥ * ॥ अन्यच्च ।
"अस्वेदिनौ मृदुतरौ कमलोदरसन्निभौ ।
श्लिष्टाङ्गुली ताम्रनखौ पादावुष्णौ शिरोज्झितौ ।
कूर्म्मोन्नतौ गूढगुल्फौ सुपार्ष्णी नृपतेः स्मृतौ ॥
मृदुलोमा समा जङ्घा तथा करिकरप्रभा ।
उरवो जानवस्तुल्या नृपस्योपचिताः स्मृताः ॥
कोषगूढे नृपो दीर्घैर्भुग्नैश्च धनवर्ज्जितः ।
समाभ्यां क्षितिपः प्रोक्तः प्रलम्बेन शताब्दवान् ॥
सशब्दनिःशब्दमूत्राः स्यर्द्दरिद्राश्च मानवाः ।

एकद्वित्रिचतुःपञ्चषड्धारादिभिस्र च ॥
दक्षिणावर्त्तचलितशुभ्राभिश्चनृपाः स्मृताः ।
नृपाः पुष्पगन्धिशुक्रा मधुगन्धे धनं बहु ॥
मांसलस्फिक् सुखी स्याच्च सिंहस्फिक्
भूपतिः
स्मृतः ।
भवेत् सिंहकटी राजा निस्वः कपिकटिर्न्नरः ॥
नृपाश्चोन्नतकक्षाः स्युर्ज्जिह्मा विषमकक्षकाः ।
वलिमध्यगता नाभिः शूलधारां करोति हि ॥
अधो गवाढ्यं कुर्य्याच्च नृपत्वं पद्मकर्णिका ।
अनुद्धतैश्चुचुकैश्च भवन्ति सुभगा नराः ।
निर्द्धना विषमैर्दीर्घैः पीतोपचितकैर्नृपाः ॥
समोन्नतञ्च हृदयमकम्प्यं मांसलं पृथु ।
नृपाणामधमानाञ्च खरलोम शिरालकम् ॥
कम्बुग्रीवश्च नृपतिर्लम्बकर्णोऽतिभक्षणः ।
आजानुलम्बिनौ बाहू वृत्तौ पीनौ नृपेश्वरे ॥
मणिबन्धैर्निगूढैश्च सुश्लिष्टशुभसन्धिभिः ।
नृपा हीनैः करच्छेदमशब्दैर्धनवर्ज्जिताः ॥
निस्वाश्चक्रनखैस्तद्वद्वर्णैश्च परतर्ककाः ।
ताम्रैर्भूपा धनाढ्याश्च अङ्गुष्ठैः सयवैस्तथा ॥
घनाङ्गुलिश्च सधनस्तिस्रो रेखाश्च यस्य वै ।
नृपतेः करतलगा मणिबन्धे समुत्थिताः ॥
शङ्खातपत्रशिविका गजपद्मोपमा नृपे ।
कुम्भाङ्कुशपताकाभा मृणालाभा निरीश्वरे ॥
दामाभाश्च गवाढ्यानां स्वस्तिकाभा नृपेश्वरे
।
चक्रासितोमरधनुःकुन्ताभा नृपतेः करे ॥
मांसलैश्च धनोपेता अवक्रैरधरैर्नृपाः ।
विम्बोपमैश्च स्फुटितैरोष्ठै रूक्षैश्च खण्डितैः ॥
विवर्णैर्धनहीनाश्च दन्ताः स्निग्धा घनाः शुभाः
।
तीक्ष्णा दंष्ट्राः समाः श्रेष्ठा जिह्वा रक्ता समा
शुभा ॥
श्लक्ष्णा दीर्घा च विज्ञेया तालु श्वेतं धनेश्वरे ।
कृष्णा च परुषा वक्त्रं समं सौम्यञ्च संवृतम् ॥
भूपानाममलं श्लक्ष्णं विपरीतञ्च दुःखिनाम् ।
शङ्कुकर्णाश्च राजानो रोमकर्णाः शतायुषः ॥
कराः स्निग्धावनद्धैश्च व्यालम्बैर्म्मांसलैर्नृपाः
।

नोधश्छिन्द्यात्तु यो धेन्वाः क्षीरार्थी
लभते पयः ।
एवं राष्ट्रमयोगेन पीड्यमानं न वर्द्धते ॥
तस्मात् सर्व्वप्रयत्नेन
पृथिवीमनुपालयेत् ।
पालकस्य भवेद्भूमिः कीर्त्तिरायुर्यशो
बलम् ॥
अभ्यर्च्च्य विष्णुं धर्म्मात्मा
गोब्राह्मणहिते रतः ।
प्रजाः प्रालयितुं शक्तः पार्थिवो यो
जितेन्द्रियः ॥
ऐश्वर्य्यमध्रुवं प्राप्य राजा धर्म्मे
मतिञ्चरेत् ॥”
इति गारुडे १११ अध्यायः ॥ * ॥
ब्रह्माभिषिक्तराजानो यथा, --
श्रीपराशर उवाच ।
“यदाभिषिक्तः स पृथुः पूर्ब्बं राज्ये
महर्षिभिः ।
ततः क्रमेण राज्यानि ददौ
लोकपितामहः ॥
नक्षत्रग्रहविप्राणां वीरुधां वाप्यशेषतः ।
सोमं राज्ये दधाद्ब्रह्मा यज्ञानां
तपसामपि ॥
राज्ञां वैश्रवणं राज्ये जलानां वरुणं
तथा ।
आदित्यानां पतिं विष्णुं वसूनामथ
पावकम् ॥
प्रजापतीनां दक्षन्तु वासवं मरुतामपि ।
दैत्यानां दानवानाञ्च प्रह्लादमधिपं ददौ
॥
पितृणां धर्म्मराजानं यमं
राज्येऽभ्यसेचयत् ।
ऐरावतं गजेन्द्राणामशेषाणां पतिं ददौ
॥
पतत्रीणाञ्च गरुडं देवानामपि वासवम्
।
उच्चैःश्रवसमश्वानां वृषभन्तु गवामपि
॥

मृगाणामथ शार्दूलं गरुडं पततां वरम् ।
गन्धर्व्वाणां चित्ररथं नागानामथ वासुकिम्
॥
गन्धानां मरुतञ्चैव भूतानाञ्च शरीरिणाम् ।
सर्व्वेषां दंष्ट्रिणां शेषं सर्पाणाञ्चैव तक्षकम् ॥
सागराणां नदीनाञ्च मेघानां वर्षितस्य च ।
आदित्यानामन्यतमं पर्ज्जन्यमभिषिक्तवान्
।
सर्व्वाप्सरोगणानाञ्च कामदेवं तथा प्रभुम् ॥
ऋतूनामधिमासानां दिवसानां तथैव च ।
पक्षाणाञ्च क्षपाणाञ्च मुहूर्त्ततिथिपर्व्वणाम् ॥
कलाकाष्ठाप्रमाणानां गतेरयनयोस्तथा ।
गणितस्याथ योगस्य चक्रे संवत्सरं प्रभुम्
॥
प्रजापतेर्व्विरजसः पूर्व्वस्यामभिषेचयन् ।
पुत्त्रं नाम्ना सुधामानं राजानञ्चाभ्यषेचयत्
॥
यथाप्रदेशं राजानं दक्षिणस्यां प्रजापतेः ।
कर्द्दमस्य शङ्खपदं पुत्त्रं राज्येऽभिषिक्तवान्
॥
पश्चिमस्यां दिशि तथा रजसः पुत्त्रमुत्तमम्
।
केतुमन्तं महात्मानं राजानं ह्यभ्यषेचयत् ॥
तथा हिरण्यरोमाणं पर्ज्यन्यस्य प्रजापतेः ।
दिगुत्तरायां पुत्त्रन्तु राजानमभ्यषेचयत् ॥
मानुषाणामधिपतिं चक्रे वैवस्वतं मनुम् ।
तैरेव पृथिवी सर्व्वा सप्तद्वीपा सपत्तना ।
यथाप्रदेशमद्यापि धर्म्मेण परिगृह्यते ॥
स्वायम्भुवेऽन्तरे पूर्व्वं ब्रह्मणा
तेऽभिषेचिताः ।
इन्द्रादिलोकपालास्तु पुनर्व्वैवस्वतेऽन्तरे
॥
राजसूयेऽभिषिक्तस्तु पृथुः पूर्व्वं महर्षिभिः
।
मनुभिर्व्विधिना तद्वत् सोऽधिराजः प्रताप-
वान् ॥”
इत्याद्ये वह्निपुराणे
वराहप्रादुर्भावनामाध्यायः ॥
राजकर्त्तव्यकर्म्माणि यथा, --

स्त्रीमृत्युश्चिपिटनास ऋज्वी भाग्यवतां भवेत्
॥
अल्पच्छिद्रा सुपुटा च अवक्रा च नृपेश्वरे ।
संवृतैश्च ललाटैश्च कृपणा उन्नतैर्नृपाः ॥
ललाटोपसृतास्तिस्रो रेखाः स्युः शतवर्षिणाम्
।
नृपत्वं स्याच्चतसृभिरायुः पञ्चनवत्यथ ॥
छत्राकारैः शिरोभिस्तु नृपा निम्नशिरा धनी ।
षडुन्नतश्चतुर्ह्रस्वो रक्तः सप्तस्वसौ नृपः ॥”
इति गारुडे नरस्त्रीलक्षणं नाम ६६ अध्यायः
॥
अपि च ।
“पार्थिवस्य तु वक्ष्यामि भृत्यानाञ्चैव लक्षणम् ।
सर्व्वाणि यो महीपालः सम्यङ्नित्यं परीक्षयेत्
॥
राज्यं पालयते नित्यं सत्यधर्म्मपरायणः ।
निर्ज्जित्य परसैन्यानि क्षितिं धर्म्मेण पालयेत्
॥
पुष्पं पुष्पं विचिन्वीयान्मूलच्छेदं न कारयेत् ।
मालाकार इवारण्ये न यथाङ्गारकारकः ॥
दुग्धी क्षीरन्तु भुञ्जीत विक्रेतारो न भुञ्जते ।
परराष्ट्रं महीपालो कालव्यालांश्च दूषयेत् ॥

शेषन्तु नागराजानं मृगाणां
सिंहमीश्वरम् ।
वनस्पतीतां राजानं
प्लक्षमेवाभ्यषेचयत् ॥
एवं विभज्य राज्यानि दिशां
पालानन्तरम् ।
प्रजापतिपतिर्ब्रह्मा स्थापयामास
सर्व्वतः ॥
पूर्ब्बस्यां दिशि राजानं वैराजस्य
प्रजापतेः ।
दिशःपालं सुधन्वानं पुत्त्रं वै
सोऽभ्यषेचयत् ॥
दक्षिणस्यां दिशि तथा कर्द्दमस्य
प्रजापतेः ।
पुत्त्रं शङ्खपदं नाम राजानं
सोऽभ्यषेचयत् ॥
पश्चिमायां दिशि तथा रजसः
पुत्त्रमच्युतम् ।
केतुमन्तं महात्मानं
राजानमभिषिक्तवान् ॥
तथा हिरण्यरोमाणं पर्ज्जन्यस्य
प्रजापतेः ।
उदीच्यां दिशि दुर्द्धर्षं
राजानमभिषिक्तवान् ॥
तैरियं पृथिवी सर्व्वा सप्तद्वीपा सपत्तना
।
यथाप्रदेशमद्यापि धर्म्मतः प्रतिपाल्यते
॥
एते सर्व्वे प्रवृत्तस्य स्थितौ
विष्णोर्म्महात्मनः ।
विभूतिभूता राजानो ये चान्ये
मुनिसत्तम ॥
ये भविष्यन्ति येऽतीताः सर्व्वभूतेश्वरा
द्विज ।
ते सर्व्वे सर्व्वभूतस्य विष्णोरंशा
द्विजोत्तम ॥”
इति श्रीविष्णुपुराणे प्रथमेऽंशे २२
अध्यायः ॥ *
सूत उवाच ।
“एवं सृष्टासु सर्व्वासु स्थावरासु चरासु
च ।

मदालसोवाच ।
“वत्स ! राज्ञाभिषिक्तेन प्रजारञ्जनमादितः
।
कर्त्तव्यमविरोधेन स्वधर्म्मञ्च महीभृता ॥”
अविरोधेन धर्म्मशास्त्राविरोधेन ।
“व्यसनानि परित्यज्य सप्तमूलहराणि वै ।
आत्मा रिपुभ्यः संरक्ष्यो
वहिर्मन्त्रविनिर्गमात् ॥
अष्टधा नाशमाप्नोति स्वचक्रस्पन्दनाद्यथा
।
तथा राजाप्यसन्दिग्धं वहिर्मन्त्रं विनिगमात्
॥
दुष्टादुष्टांश्च जानीयादमात्यानरिदोषतः।
चरैश्चरास्तथा शत्रोरन्वेष्टव्याः प्रयत्नतः ॥
विश्वासो न तु कर्त्तव्यो राज्ञा
मित्रात्मबन्धुषु ।
कार्य्ययोगादमित्रेषु विश्वसीत नराधिपः ॥
स्थानवृद्धिक्षयज्ञेन षाड्गुण्यविदितात्मना।
भवितव्यं नरेन्द्रेण न कामवशवर्त्तिना ॥
प्रागात्मा मन्त्रिणश्चैव ततो भृत्यो महीभृता
।
जेयाश्चानन्तरं पौरा विरुध्येत ततोऽरिभिः
॥
यस्त्वेतानविजित्यैव वैरिणो विजिगीषते ।
सोऽजितात्मा जितामात्यः शत्रुवर्गेण
बाध्यते ॥
तस्मात् कामादयः पूर्व्वं जेयाः पुत्त्र
महीभृता ।
तज्जये हि जयो राज्ञो राजा नश्यति
तैर्जितः ॥
कामः क्रोधश्च लोभश्च मदो मानस्तथैव
च ।
हर्षश्च शत्रवो ह्येते नाशाय कुमहीभृताम् ॥
कामप्रसक्तमात्मानं स्मृत्वा दण्डं
निपातितम् ।

| | | |
|---|---|---|
| | ब्रह्मा क्रमेण राज्यानि व्यादेशमुपचक्रमे<br>॥<br>द्विजानां वीरुधाञ्चैव नक्षत्राणां ग्रहैः सह<br>।<br>यज्ञानां तपसाञ्चैव सोमं<br>राज्येऽभ्यषेचयत् ॥<br>बृहस्पतिञ्च सर्व्वेषां ददावङ्गिरसामपि ।<br>भृगूणामाधिपत्ये च काव्यं<br>राज्येऽभ्यषेचयत् ॥<br>आदित्यानां पुनर्व्विष्णुं वसूनामथ<br>पावकम् ।<br>प्रजापतीनां दक्षञ्च मरुतामथ वासवम्<br>॥<br>दैत्यानामथ राजानं प्रह्लादं<br>दितिनन्दनम् ।<br>नारायणन्तु साध्यानां रुद्राणां<br>वृषभध्वजम् ॥ | |

निवर्त्तयेत्तथा क्रोधादनुह्लादं
हतात्मजम् ॥
हतमैलं तथा लोभान्मदाद्वेणं
द्विजैर्हतम् ।
मानादनायुषः पुत्त्रं हतं हर्षात्
पुरञ्जयम् ॥
गभिर्जितैर्जितं सर्व्वं मरुत्तेन महात्मना
।
स्मृत्वा विवर्ज्जयेदेतान् षड्दोषांश्च
महीपतिः ॥
काककोकिलभृङ्गाणां
वकव्यालशिखण्डिनाम्।
हंसानां लोहकुट्टानां शिक्षेत चरितं
नृपः ॥”
काकात् सर्व्वशङ्किता । कोकिलात्
माधुर्य्यम् ।
भृङ्गात् प्रपीडया अर्थादानम् । वकात्
शत्रु-
ग्रहणे एकाग्रताम् । व्यालात्
दुरुपसर्पित्वम् ।
शिखण्डिनश्चित्रतां सर्पग्रहणाय
मूकतां रात्रा-
वात्मगोपनञ्च । हंसस्य सारग्राहित्वम्
। लोह-
कुट्टात् सन्धानम् ॥
“कौशिकस्य क्रियां कुर्य्याद्विपक्षे
मनुजेश्वरः ।
चेष्टां पिपीलिकानाञ्च काले भूपः
प्रदर्शयेत् ॥”
कौशिकस्य उलूकस्य रात्रौ
काकावस्कन्दनम्।
पिपीलिकानां सेनाबहुत्वं सर्पभक्षणञ्च
।
“ज्ञेयाग्निविस्फुलिङ्गानां बीजचेष्टा च
शाल्मलेः ।
चन्द्रसूर्य्यस्वरूपश्च नीत्यर्थे
पृथिवीक्षिता ॥”
अग्निविस्फुलिङ्गात् दूरात् दाहः ।
बीजान्मह-
राज्ञस्तस्य सुखं तात परत्रेह च शाश्वतम् ॥
एतद्राज्ञः परं कृत्यं तथैतद्वृद्धिकारणम् ।
स्वधर्म्मे स्थापनं नृणां चाल्यते न कुबुद्धिभिः ॥
पालनेनैव भृत्यानां कृतकृत्यो महीपतिः ।
सम्यक् पालयिता भागं धर्म्मस्याप्नोति वै यतः ॥
एवमाचरते राजा चातुर्व्वर्ण्यस्य रक्षणैः ।
स सुखी विहरत्येष शक्रस्येति सलोकताम् ॥”
इति मार्कण्डेयपुराणे मदालसोपाख्यानाध्यायः
तट्टीका च ॥ * ॥ राजाभिषेकस्य विहित-
नक्षत्राणि यथा, --
“पुष्यानुराधा ज्येष्ठा च रोहिणी चोत्तरात्रयम् ।
हस्ताश्विनी रेवती च नृपाभिषेचनोत्तमाः ॥”
इति ज्योतिःसारसंग्रहः ॥
अस्य विवरणं अभिषेकशब्दे द्रष्टव्यम् ॥ * ॥
राज्ञि वर्णनीयानि यथा, --
“नृपे कीर्त्तिप्रतापाज्ञाकुष्टशास्तिविवेकिताः ।
धर्म्मप्रयाणसंग्रामशस्त्राद्याः सनयक्षमाः ॥
प्रजारागोऽरिशैलादिवासोऽरिपुरशून्यता।
औदार्य्यधैर्य्यगाम्भीर्य्यशौर्य्यैश्वर्य्योद्यमादयः ॥”
इति कविकल्पलतायाम् १ स्तवके ३ कुसुमम् ॥ *
॥
राजान्नभक्षणे दोषो यथा, --
वाराह उवाच ।
“शुद्धा भागवता भूत्वा मम कर्म्मपरायणाः ।
ये तु भुञ्जन्ति राजान्नं लोभेन च भयेन च ॥
आपद्गता हि भुञ्जीत राजान्नन्तु वसुन्धरे ।
दशवर्षसहस्राणि पच्यन्ते नरके नराः ॥
भगवद्वचनं श्रुत्वा सा मही शंसितव्रता ।
उवाच मधुरं वाक्यं सर्व्वलोकसुखावहम् ॥
धरण्युवाच ।
शृणु तत्त्वेन मे देव हृदये हि व्यवस्थितम् !
को नु दोषो हि राज्ञान्तु तन्मे त्वं वक्तुमर्हसि ॥
ततो भूम्या वचः श्रुत्वा सर्व्वधर्म्मविदां वरः ।
प्राह नारायणो वाक्यं धर्म्मकामां वसुन्धराम् ॥
वाराह उवाच ।
शृणु सुन्दरि ! तत्त्वेन गुह्यमेतदनिन्दिते ।
राजान्नन्तु न भोक्तव्यं शुभैर्भागवतैः सदा ॥
यद्यप्येष समत्वेन राजा लोके प्रवर्त्तते ।
राजसस्तामसो वापि कुर्व्वन् कर्म्म सुदारुणम् ॥
वाराह उवाच ।
शृणु तत्त्वेन मे देवि यन्मां त्वं भीरु
भाषसे ।
तरन्ति मनुजा येन
राजान्नस्योपभुञ्जकाः ॥
एकं चान्द्रायणं कृत्वा तप्तकृच्छ्रञ्च
पुष्कलम् ।
कुर्य्यात् सान्तपनञ्चैकं शीघ्रं मुच्यति
किल्विषात् ॥
भुक्त्वा वै राज्ञोऽन्नानि इदं कर्म्म
समारभेत् ।
न तस्यैवापराधोऽस्ति वसुधे वै वचो
मम ॥
एवमेव न भोक्तव्यं राजान्नन्तु कदाचन
।
ममात्र प्रियकामाय यदीच्छेत् परमां
गतिम् ॥”
इत्यादि वाराहे
राजान्नभक्षणप्रायश्चित्तंनामा-
ध्यायः ॥ * ॥ अपि च ।
“राजान्नं तेज आदत्त शूद्रान्नं
ब्रह्मवर्च्चसम् ।
इत्याद्यभिधाय, --
भुक्त्वा चान्यतमस्यान्नममत्या
क्षपयेत्त्र्यहम् ।
मत्या भुक्त्वा चरेत् कृच्छ्रं रेतो
विण्मूत्रमेव च ॥”
इति प्रायश्चित्ततत्त्वम् ॥
(राजनम् । यथा, ऋग्वेदे । १० । ४९
। ४ ।
“अहं भुवं यजमानस्य राजनि ।”
“अहं यजमानस्य राजनि राजनार्थं
भुवं
अभवं समर्थ इति शेषः ।” इति
तद्भाष्ये
सायणः ॥)

**राजातनः**, पुं, (राजानं अततीति । अत
सातत्य-

दर्थनिष्पादनम् । उष्णकाले चन्द्रः सुखदायी
शीतकाले न । एवं सूर्य्यः शीते सुखदायी
उष्णकाले न । एवं कालानुसारेण सुखदुःख-
दातृत्वम् ॥
“वधकात् पद्मशरभशूलिन्या गुर्व्विणीस्तनात् ।
प्रजा नृपेण चादेया तथा चण्डालयोषितः ॥”
वधकात् निर्घृणत्वम् । पद्मात् कण्टकगोपनं
स्मितमुखता च । शरभात् हत्वापि शत्रून्
नोद्रेकः । यथा शरभोऽष्टापदः परोन्नतिं न
सहते । शूलिन्या आर्त्तिज्ञापनम् । गुर्व्विण्या
स्तनात् कालेऽर्थादानम् । चण्डालयोषित्
शौनकी छागशिरो दर्शयित्वा अन्यद्विक्रीणाति ।
“शक्रार्कयमसोमानां तद्वद्वायोर्म्महीपतिः ।
रूपाणि पञ्च कुर्व्वीत महीपालनकर्म्मणि ॥
यथेन्द्रश्चतुरो मासान् वार्य्यौघेणैव भूतलम् ।
आप्याययेत्तथा लोकान् परिचारैर्म्महीपतिः ॥”
परिचारैरर्थदानादिभिः ।
“मासानष्टौ यथा सूर्य्यस्तोयं हरति रश्मिभिः ।
सूर्य्येणैवाभ्युपायेन तथा शुल्कादिना नृपः ॥
यथा यमः प्रियद्वेष्यौ प्राप्ते काले नियच्छति ।
तथा प्रियाप्रियौ राजा दुष्टादुष्टे समो भवेत् ॥

अपि वा गर्हितं तेन राजान्नन्तु वसुन्धरे ।
धर्म्मसन्धारणार्थाय न तु मे रोचते भुवि ॥
ततोऽन्यं संप्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
यथा राज्ञान्तु भोज्यं वै शुद्धैर्भागवतैः शुभैः ॥
स्थापयित्वा तु मां देवि विधिदृष्टेन कर्म्मणा ।
धनधान्यप्रवृद्धानि दत्त्वा भागवतैरपि ॥
सिद्धं भागवतैश्चान्नं मम प्रापणशेषकम् ।
भुञ्जानस्तु वरारोहे न स पापेन लिप्यते ॥
एवं विष्णुवचः श्रुत्वा धरणी शंसितव्रता ।
वाराहरूपिणं देवं पत्युवाच वरानना ॥” * ॥
तदन्नभोजनप्रायश्चित्तानियथा, --
धरण्युवाच ।
“राजान्नन्तु ततो भुक्त्वा शुद्धो भागवतः शुचिः ।
कर्म्मणा केन शुद्ध्येत तन्मे ब्रूहि जनार्द्दन ॥

गमने + “बहुलमन्यत्रापि ।” उणा० २ । ७८ ।
इति युच् ।) पियालवृक्षः । इति शब्दमाला ॥

**राजादनं**, क्ली, (राजभिरद्यते इति । अद भक्षणे
+ कर्म्मणि ल्युट् ।) क्षीरिका । पियालः ।
किंशुकः । इति मेदिनी । ने, २०५ ॥ (यथा,
सुश्रुते । १ । ४६ । लवणवर्गे ।
“दाडिमामलकं द्राक्षा खर्ज्जूरं सपरूषकम् ।
राजादनं मातुलुङ्गं फलवर्गे प्रशस्यते ॥”
पुंलिङ्गान्तोऽपि दृश्यते । इत्यमरः । २ । ४ । ४५ ॥
हेमचन्द्रश्च । ४ । २०८ ॥ क्षीरिकार्थे पर्य्यायो
यथा, --
“राजादनः क्षीरवृक्षः पालाशी वानरप्रियः ॥”
इति वैद्यकरत्नमालायाम् ॥
किंशुकार्थे पर्य्यायो यथा, --
“वातपोथः पलाशः स्याद्वानप्रस्थश्च किंशुकः ।
राजादनो ब्रह्मवृक्षो हस्तिकर्णो दलोऽपरः ॥”)

**राजानुजीवी**, [न्] त्रि, (राज्ञः अनुजीवी ।)
राजोपजीवी । तस्य कर्म्माणि यथा, --
मत्स्य उवाच ।
“यथानुवर्त्तितव्यं स्यान्मनो राजोपजीविना ।
तथा ते कथयिष्यामि निबोध गदतो मम ॥
आज्ञा सर्व्वात्मना कार्य्या स्वशक्त्या रविनन्दन ।
आक्षिप्य वचनन्तस्य न वक्तव्यं तथा वचः ॥

| पूर्णेन्दुमालोक्य यथा प्रीतिमान् जायते नरः ।<br>एवं यत्र प्रजाः सर्व्वा निर्व्वृत्तास्तच्छशिव्रतम् ॥<br>मारुतः सर्व्वभूतेषु निगूढश्चरते यथा ।<br>एवं चरेन्नृपश्चारैः पौरामात्यारिबन्धुषु ॥<br>न लोभार्थैर्न कामार्थैर्नार्थार्थैर्यस्य मानसम् ।<br>पदार्थैः कृष्यते धर्म्मान् स राजा स्वर्गमृच्छति ॥"<br>लोभादिप्रयोजनैः ।<br>"उत्पथग्राहिणो मूढान् स्वधर्म्माच्चलितान्नरान् ।<br>यः करोति निजे धर्म्मे स राजा स्वर्गमृच्छति ॥"<br>उत्पथग्राहिणः पापिनः ।<br>"वर्णधर्म्मा न सीदन्ति यस्य राष्ट्रे तथाश्रमाः । | | अनुकूलं प्रियन्तस्य वक्तव्यं ज्ञानसंसदि ।<br>रहोगतस्य वक्तव्यमप्रियं यद्धितं भवेत् ॥<br>परार्थमस्य वक्तव्यं स्वस्थे चेतसि भार्गव ।<br>स्वार्थः सुहृद्भिर्व्वक्तव्यो न स्वयन्तु कदाचन ॥<br>कार्य्याभिघातः सर्व्वेषु रक्षितव्यः प्रयत्नतः ।<br>न च हिंस्यं धनं किञ्चिन्नियुक्तेन च कर्म्मणि ॥<br>नोपेक्ष्यं भाष्यमाणञ्च तथा राज्ञः प्रियो भवेत् । |
|---|---|---|

राज्ञश्च न तथा कार्य्यं
वेशभाषितचेष्टितम् ॥
राजलीला न कर्त्तव्या तद्विद्विष्टं
विवर्ज्जयेत् ।
राज्ञः समोऽधिको वा न कार्य्यो वेशो
विजा-
नता ॥
द्यूतादिषु तथैवास्य कौशलञ्च प्रदर्शयेत्
।
प्रदर्श्य कौशलञ्चास्य राजानञ्च
विशेषयेत् ॥
अन्तःपुरधनाध्यक्षैश्चरदूतैः समागतैः ।
संसर्गं न व्रजेद्राजन्! विना
पार्थिवशासनम् ॥
निःस्नेहताञ्चावमानं प्रयत्नेन च गोपयेत्
।
यच्च गुह्यं भवेद्राज्ञो न तल्लोके
प्रकाशयेत् ॥
नृपेण श्रावितं यत् स्याद्वाच्यावाच्यं
नृपोत्तम! ।
न तत् संश्रावयेल्लोके तदा राज्ञः प्रियो
भवेत् ॥
आज्ञाप्यमाने चान्यस्मिन् समुत्थाय
त्वरान्वितः ।
अहं किं करवाणीति वाच्यो राजा विजा-
नता ॥
कार्य्यावस्थाञ्च विज्ञाय कार्य्यमेव तथा
भवेत् ।
सततं क्रियमाणेऽस्मिन् लाघवन्तु व्रजेत्
ध्रुवम् ॥
राज्ञः प्रियाणि वाक्यानि न चात्यर्थं
पुनःपुनः ।
न हास्यशीलश्च भवेन्न चापि
भ्रुकुटीमुखः ॥
नातिवक्ता न निर्व्वक्ता न च
मत्सरिकस्तथा ।
आत्मसम्भावितश्चैव न भवेत् कथञ्चन
॥
आराधनासु सर्व्वासु सुप्तवच्च विचेष्टते ॥
कथासु दोषं क्षिपति वाक्यभङ्गं करोति च ।
लक्ष्यते विमुखैश्चैव गुणसंकीर्त्तने कृते ॥
दृष्टिं क्षिपत्यथान्यत्र क्रियमाणे च कर्म्मणि ।
विरक्तलक्षणं ह्येतत् शृणु रक्तस्य लक्षणम् ॥
दृष्ट्वा प्रसन्नो भवति वाक्यं गृह्णाति चादरात् ।
कुशलादिपरिप्रश्नी संप्रयच्छति चासनम् ॥
विरक्तदर्शने चास्य रहस्ये च न शङ्कते ।
जायते हृष्टवदनः श्रुत्वा तस्य तु तत्कथाम् ॥
अप्रियाण्यपि वाक्यानि तदुक्तान्यभिनन्दति ।
उपायनञ्च गृह्णाति स्तोकमप्यादरात्तथा ॥
कथान्तरेषु स्मरति प्रहृष्टवदनस्तथा ।
इति रक्तस्य कर्त्तव्या सेवा रविकुलोद्वह ॥
आपत्सु न त्यजेत् पूर्ब्बं विरक्तमपि सेवितम् ॥
मित्रं न चापत्सु तथा च भृत्यं
त्यजन्ति ये निर्गुणमप्रमेयम् ।
प्रभुं विशेषेण च ते व्रजन्ति
सुरेन्द्रधामामरवृन्दजुष्टम् ॥"
इति मत्स्यपुराणे राजधर्म्मे अनुजीविवृत्तिनाम
२१६ अध्यायः ॥

**राजादनी**, स्त्री, (राजभिरद्यते या । अद् +
कर्म्मणि ल्युट् । ङीप् ।) वृक्षविशेषः । क्षीरिणी
इति भाषा । तत्पर्य्यायः । राजफलः २ क्षीर-
वृक्षः ३ नृपद्रुमः ४ निम्बबीजः ५ मधुफलः ६
कपीष्टः ७ माधवोद्भवः ८ क्षीरी ९ गुच्छ-
फलः १० भूपेष्टः ११ राजवल्लभः १२ श्रीफलः
१३
दृढस्कन्धः १४ क्षीरशुक्लः १५ । अस्या गुणाः
।
मधुरत्वम् । पित्तनाशित्वम् । गुरुत्वम् । तर्पण-
त्वम् । वृष्यत्वम् । स्थौल्यकरत्वम् । हृद्यत्वम् ।
सुस्निग्धत्वम् । मेहनाशित्वञ्च । इति राज-
निर्घण्टः ॥ अपि च ।
"क्षीरिकायाः फलं वृष्यं बल्यं स्निग्धं हिमं गुरु ।
तृष्णामूर्च्छामदभ्रान्तिक्षयदोषत्रयास्रजित्॥"
इति भावप्रकाशः ॥

**राजान्नं**, क्ली, (राजयोग्यमन्नम् । अन्नानां राजा
इति वा ।) अन्ध्रदेशोद्भवशालिविशेषः । तत्प-
नृपवल्लभः ८ । अस्य फलगुणाः ।
कोमलत्वम् ।
कट्वम्लत्वम् । पित्तदाहदत्वञ्च ॥
सुपक्वस्य तस्य
गुणाः । स्वादुत्वम् । मधुरत्वम् ।
पुष्टिवीर्य्य-
बलप्रदत्वञ्च । इति राजनिर्घण्टः ॥
अपि च ।
"राजाम्रष्टङ्क आम्रातः कामाह्वो
राजपुत्रकः ।
राजाम्रं तुवरं स्वादु विषदं शीतलं गुरु
।
ग्राहि रूक्षं विबन्धाध्मवातकृत्
कफपित्तनुत् ॥"
इति भावप्रकाशः ॥

**राजाम्लः**, पुं, (अम्लानां राजा श्रेष्ठत्वात् । राज-
दन्तादित्वात् परनिपातः ।)
अम्लवेतसः । इति
राजनिर्घण्टः ॥

**राजार्कः**, पुं, (अर्काणां राजा श्रेष्ठत्वात् ।)
श्वेतार्कवृक्षः । सादा आकन्द इति
भाषा ।
तत्पर्य्यायः । वसुकः २ अर्कः ३
मन्दारः ४
गणरूपकः ५ काष्ठीलः ६ सदापुष्पः
७ । इति
राजनिर्घण्टः ॥ अलर्कः ८ प्रतापसः
९ । इति
शब्दरत्नावली ॥

**राजार्हं**, क्ली, (राजानमर्हतीति । अर्ह + अण् ।)
अगुरु । (अस्य पर्य्यायो यथा, --
"अगुरु प्रवरं लोहं राजार्हं योगजन्तथा
।
वंशिकं कृमिजं वापि
कृमिजग्धमनार्यकम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

दुष्कृतानि नरेन्द्रस्य न तु संकीर्त्तयेत् क्वचित् ।
वस्त्रं शस्त्रमलङ्कारं राज्ञा दत्तञ्च धारयेत् ॥
औदार्य्येण न तद्देयमन्यस्मै भूतिमिच्छता ।
तच्चैवोपासनं कार्य्यं दिवास्वप्नं न कारयेत् ॥
नानिर्द्दिष्टे तथा द्वारे प्रविशेत कदाचन ।
न च पश्येत्तु राजानमयोग्यासु च भूमिषु ।
राज्ञस्तु दक्षिणे पार्श्वे वामे चोपविशेत्तथा ।
पुरस्तात्तु तथा पश्चादासनन्तु विगर्हितम् ॥
जृम्भा निष्ठीवनं कासं कोपं पर्य्यस्तिकाश्रयम् ।
भ्रुकुटीं वान्तमुद्गारं तत्समीपे विवर्जयेत् ॥
स्वयं तत्र न कुर्व्वीत स्वगुणाख्यापनन्तथा ।
स्वगुणाख्यापने चैव परमेव प्रयोजयेत् ॥
हृदयं निर्म्मलं कृत्वा परां भक्तिमुपाश्रितैः ।
अनुजीविगणैर्भाव्यं नित्यं राज्ञामतन्द्रितैः ॥
शाट्यं लौल्यञ्च पैशुन्यं नास्तिक्यं क्षुद्रतान्तथा ।
चापल्यञ्च परित्याज्यं नित्यं राजानुजीविना ॥
श्रुतेन विद्याशिल्पैश्च संयोज्यात्मानमात्मना ।
राजसेवां ततः कुर्य्याद्भूतये भूतिवर्द्धिनीम् ॥
नमस्कार्य्याः सदा चास्य पुत्त्रवल्लभमन्त्रिणः ।
सचिवैश्चास्य विश्वासो न तु कार्य्यः कथञ्चन ॥
अपृष्टश्चास्य न ब्रूयात् कामं ब्रूयात्तथापदि ।

र्य्यायः । नृपान्नम् २ राजार्हम् ३ दीर्घशूककम् ४ धान्यश्रेष्ठम् ५ राजधान्यम् ६ राजेष्टम् ७ दीर्घकूरकम् ८ । अस्य गुणाः । त्रिदोषघ्नत्वम् । सुस्निग्धत्वम् । मधुरत्वम् । लघुत्वम् । दीपन-त्वम् । बलकारित्वम् । पथ्यत्वम् । कान्तिवीर्य्य-वृद्धिदत्वञ्च । इति राजनिर्घण्टः ॥ (राज्ञः अन्नम् ।) राजस्वामिकभक्तम् । तद्भोजननिषेध-प्रायश्चित्ते राजशब्दे द्रष्टव्ये ॥ (राजान्न-भक्षणेन हि तेजोहानिर्भवति । यथा, मनुः । ४ । २१८ ।
"राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मबर्च्चसम् ।
आयुः सुवर्णकारान्नं यशश्चर्म्मावकर्त्तिनः ॥")

**राजाम्रः**, पुं, (आम्राणां राजा श्रेष्ठत्वात् । राजदन्तादित्वात् परनिपातः ।) आम्रविशेषः । तत्पर्य्यायः । राजफलः २ स्मराम्रः ३ कोकि-लोत्सवः ४ मधुरः ५ कोकिलानन्दः ६ कामेष्टः ७

राजयोग्ये, त्रि । इति मेदिनी । हे, २३ ॥
(यथा, गो० रामायणे । ३ । ४९ । ४२ ।
"तथेदमुपपन्नं मे मृगरूपस्य धर्षणम् ।
राजार्हाणि च रत्नानि रत्नभाजो वयं ध्रुवम् ॥")

**राजार्हा**, स्त्री, (राज्ञोऽर्हा ।) जम्बः । इति राजनिर्घण्टः ॥

**राजालाबूः**, स्त्री, (अलावूनां राजा । राज-दन्तादित्वात् परनिपातः ।) स्वादुतुम्बी । मिठा लाउ इति भाषा । तत्पर्य्यायः । महातुम्बो २ मधुरालावुनी ३ शाकालावूः ४ तुम्बकः ५ भक्ष्यालावूः ६ अलावुनी ७ मिष्टतुम्बी ८ । अस्याः फलगुणाः । वृष्यत्वम् । कफपित्तहर-त्वम् । गुरुत्वञ्च । इति मदनविनोदः ॥

**राजालुकः**, पुं, (आलूनां राजा । ततः स्वार्थे कन् ।) महाकन्दः । इति हारावली । १०१ ॥

**राजावर्त्तः**, पुं, (राजानं आवर्त्तयति आनन्द-यतीति । आ + वृत् + णिच् + अण् । यद्वा, राजः शोभमान आवर्त्तो यत्र ।) उपरत्नभेदः । रेउटी इति हिन्दी भाषा । तत्पर्य्यायः । नृपा-वर्त्तः २ राजात्यावर्त्तकः ३ आवर्त्तमणिः ४ आवर्त्तः ५ । अस्य गुणाः । मृदुत्वम् । स्निग्ध-त्वम् । शिशिरत्वम् । पित्तनाशनत्वम् । भूषणे प्रयोजितश्चेत् नृणां बहुभाग्यकरत्वञ्च । इति

| | | |
|---|---|---|
| हितं पथ्यञ्च वचनं हितैः सह<br>सुनिश्चितम् ॥<br>चित्तञ्चैवास्य विज्ञेयं नित्यमेवोपजीविना<br>।<br>भर्त्तुराराधनं कुर्य्यात् चित्तज्ञो मानवः<br>सुखम् ॥<br>रागापरागौ चैवास्य विज्ञेयौ<br>भूतिमिच्छता ।<br>त्यजेद्वृत्तिं विरक्तस्तु रक्तो वृत्तिन्तु<br>कारयेत् ॥<br>विरक्तः कारयेन्नाशं विपक्षाभ्युदयन्तथा<br>।<br>आशावर्द्धनकं कृत्वा फलनाशं करोति च<br>॥<br>अकोपोऽपि सकोपान्तः प्रसन्नोऽपि च<br>निष्फलः ।<br>वाक्यं स मन्दं वदति वृत्तिच्छेदं करोति<br>च ॥<br>प्रदेशवाक्यमुदितो न सम्भावयतेऽन्यथा<br>। | | राजनिर्घण्टः ॥ विराटदेशजहीरकः ।<br>तत्-<br>पर्य्यायः । विराटजः २ राजपट्टः ३ ।<br>इति<br>हेमचन्द्रः । ४ । १३२ ॥ (यथा,<br>कथासरित्-<br>सागरे । ७३ । ३३९ ।<br>“राजावर्त्तोपलश्यामतले<br>सद्वासवेश्मनि ॥”<br>तथास्य गुणाः ।<br>“राजावर्त्तः कटुस्तिक्तः शिशिरः<br>पित्तनाशनः । |

राजावर्त्तः प्रमेहघ्नः छर्द्दिहिक्कानिवारणः
॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**राजाहिः**, पुं, (अहीनां राजा । राजदन्तादि-

त्वात् परनिपातः ।) द्विमुखसर्पः ।
तत्पर्य्यायः ।
द्विसुखाहिः २ विलावासी ३ विषायुधः ४
।
इति शब्दरत्नावली ॥ अहीरणिः ५ । इति
त्रिकाण्डशेषः ॥

**राजिः**, स्त्री, (राजते इति । राज + “वसिवपि-

यजिराजीति ।” उणा० ४ । १२४ । इति
इञ् ।)
श्रेणी । (यथा, अर्य्यासप्तशत्याम् । ६९३
।
“उल्लसति रोमराजिः
स्तनशम्भोर्गरललेखेव ॥”)
रेखा । इति मेदिनी । जे, १४ ॥ (यथा,
महा-
भारते । ७ । २२ । ६२ ।
“कलायपुष्पवर्णास्तु श्वेतलोहितराजयः ।
रथसेनं हयश्रेष्ठाः समूहुर्युद्धदुर्म्मदम् ॥”
पुं, आयुपुत्त्रविशेषः । स तु ऐलपौत्त्रः ।
यथा,
महाभारते । १ । ७५ । २५ ।
“नहुषं वृद्धशर्म्माणं राजिं गयमनेनसम् ।
स्वर्भानवी सुतानेतानायोः पुत्त्रान् प्रचक्षते
॥”)

**राजिका**, स्त्री, (राजते या । राज + ण्वुल् ।

टापि अत इत्वम् ।) केदारः । राजसर्षपः ।
रेखा । इति मेदिनी । के, १४५ ॥ पङ्क्तिः
।
इति हेमचन्द्रः ॥ कृष्णसर्षपः ।
तत्पर्य्यायः ।
क्षवः २ क्षुधाभिजननः ३ कृष्णिका ३
आसुरी ५ ।

“किं महोरगविसर्पिविक्रमो
राजिलेषु गरुडः प्रवर्त्तते ॥”)

**राजी**, स्त्री, (राजि + कृदिकारादिति ङीष् ।)

निच्छिद्रपङ्क्तिः । इति शब्दरत्नावली
॥
(श्रेणिः । यथा, माघे । ४ । ९ ।
“राजीवराजीवशलोलभृङ्ग-
मुष्णन्तमुष्णन्ततिभिस्तरूणाम् ॥”)
राजिका । (अस्या गुणा यथा, --
“राजी तु राजिका तीक्ष्णगन्धा
क्षुज्जनिकासुरी ।
क्षवः क्षुताभिजनकः कृमिकः
कृष्णसर्षपः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमभागे ॥)
रक्तवर्णसर्षपः । इति राजनिर्घण्टः ॥

**राजीफलः**, पुं, (राजीभूतानि श्रेणिबद्धानि

फलानि यस्य ।) पटोलः । इति
राजनिर्घण्टः ॥
(तथास्य पर्य्यायः ।
“पटोलः कूलकस्तिक्तः पाण्डुकः
कर्कशच्छदः ।
राजीफलः पाण्डुफलो
राजेयश्चामृताफलः ।
वीजगर्भः प्रतीकश्च कुष्ठहा
कासभञ्जनः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमभागे ॥)

**राजीवं**, क्ली, (राजी दलश्रेणिरस्यास्तीति ।

राजी + “अन्येभ्योऽपि दृश्यते ।” ५ ।
२ । १०९ ।
इत्यस्य वार्त्तिकोक्त्या वः ।) पद्मम् ।
इत्यमरः ।
१ । १० । ४१ ॥ (यथा, कुमारे । ३ ।
४५ ।
“उत्तानपाणिद्वयसन्निवेशात्
प्रफुल्लराजीवमिवाङ्कमध्ये ॥”)

सूर्य्यपत्नी । इति मेदिनी । ञे, २ ॥
राजपत्न्यां
वर्णनीयानि यथा, --
“देव्यां सौभाग्यलावण्यशीलशृङ्गारमन्मथाः ।
त्रपाचातुर्य्यदाक्षिण्यप्रेममानव्रतादयः ॥
वेणीधम्मिल्लसीमन्तभालश्रवणनासिकम् ।
कपोलाधरनेत्रभ्रूकटाक्षरदकन्धराः ॥
गण्डबाहुकरोरोजनाभीमध्यवलित्रयम् ।
लोमालिश्रोणिजङ्घोरुपादयुग्मनखं क्रमात् ॥”
इति कविकल्पलतायाम् १ स्तवके ३ कुसुमम्
॥
सूर्य्यपत्न्याः प्रमाणान्तरं यथा, --
सूत उवाच ।
“विवस्वान् कश्यपात् पूर्ब्बमदित्यामभवत् पुरा
।
तस्य पत्नीत्रयं तद्वत् संज्ञा राज्ञी प्रभा तथा ॥
रेवतस्य सुता राज्ञी रेवन्तं सुषुवे सुतम् ।
प्रभा प्रभावं सुषुवे त्वाष्ट्री संज्ञा तथा मनुम् ॥
यमश्च यमुना चैव यमलौ तु बभूवतुः ॥”
इति मात्स्ये ११ अध्यायः ॥
कांस्यः । इति । हेमचन्द्रः ॥ नीली इति राज-
निर्घण्टः ॥ * ॥ (प्रतीची दिक् । यथा,
छान्दोग्योपनिषदि । ३ । १५ । २ । “तस्य
प्राची
दिक् जुहूर्नाम सहमाना नाम दक्षिणा
राज्ञी नाम प्रतीची मुभूता नामोदीचीति ॥”
‘तथा राज्ञी नाम प्रतीची पश्चिमा दिक् राज्ञी
राज्ञा वरुणेनाधिष्ठिता सन्ध्यारागयोगाद्वा ।’
इति शाङ्करभाष्यम् ॥)

**राज्यं**, क्ली, (राज्ञो भावः कर्म्म वा । राजन् +

“पत्यन्तपुरोहितादिभ्योयक् ।” ५ । १ ।
१२८ ।
इयि यक् ।) राज्ञ इदम् । तत्पर्य्यायः ।
नीवृत् २ मण्डलम् ३ जनपदः ४ देशः ५
प्रदेशः ६ विषयः ७ राष्ट्रम् ८ उपवर्त्तनम् ९ ।
इति शब्दरत्नावली ॥ अमरमते नीवृज्जनपदौ
अङ्गवङ्गकलिङ्गपञ्चालमगधकोशलादौ
मण्डल-

इत्यमरः । २ । ९ । १९ ॥ क्षुताभिजननः ६ असुरी ७ ।
इति तट्टीका ॥ रक्तवर्णसर्षपः । राइ इति भाषा ।
तत्पर्य्यायः । राजी २ आसुरी ३ रक्तिका ४
रक्तसर्षपः ५ तीक्ष्णगन्धा ६ मधूलिका ७
क्षवकः ८ क्षुतकः ९ क्षवः १० । अस्या गुणाः ।
कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । वातप्लीहा-
र्त्तिशूलकफगुल्मकृमिव्रणनाशित्वम् । दाहपित्त-
प्रदत्वञ्च ॥ तत्तैलगुणाः । तीक्ष्णत्वम् । वातादि-
दोषनाशित्वम् । शिशिरत्वम् । यूककण्डूघ्नत्वम् ।
केश्यत्वम् । त्वग्दोषनाशित्वञ्च ॥ तत्पत्रगुणाः ।
कटुत्वम् । उष्णत्वम् । कृमिवातकफकण्ठामय-
हरत्वम् । स्वादुत्वम् । वह्निदीपनकारित्वञ्च ।
इति राजनिर्घण्टः ॥ अपि च ।
राजी तु राजिका तोक्ष्णगन्धा क्षुज्जनिकासुरी ।
क्षवः क्षुताभिजनकः कृमिकः कृष्णसर्षपः ॥
राजिका कफपित्तघ्नी तीक्ष्णोष्णा रक्तपित्तकृत् ।
किञ्चिद्रूक्षाग्निदा कण्डूकुष्ठकोठकृमीन् हरेत् ।
अतितीक्ष्णा विशेषेण तद्वत् कृष्णापि राजिका ॥”
इति भावप्रकाशः ॥

**राजिकाफलः**, पुं, (राजिकायाः फलमिव फलमस्य ।)

गौरसर्षपः । इति राजनिर्घण्टः ॥

**राजिफला**, स्त्री, (राजीभूतानि श्रेणिबद्धानि

**राजीवः**, पुं, (राजी अस्त्यस्येति । राजी + वः ।)

हरिणभेदः । (अस्य लक्षणं यथा, --
“राजीवस्तु मृगो ज्ञेयो राजीभिः परितो वृतः ॥”
इति भावप्रकास्य पूर्ब्बखण्डे द्वितीये भागे ॥)
बृहन्मीनभेदः । इति मेदिनी । वे, ४८ ॥ (यथा,
मनुः । ५ । १६ ।
“पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः ।
राजीवान् सिंहतुण्डांश्च सशल्कांश्चैव सर्व्वशः ॥”)
हस्ती । इति । त्रिकाण्डशेषः ॥ सारसपक्षी ।
इत्यमरः ॥ राजोपजीविनि, त्रि । इत्यजयः ॥

**राजेन्द्रः**, पुं, (राजसु इन्द्र इव श्रेष्ठत्वात् ।)

मण्डलेश्वरात् दशगुणो राजा । यथा, --
“चतुर्योजनपर्य्यन्तमधिकारं नृपस्य च ।
यो राजा तच्छतगुणः स एव मण्डलेश्वरः ।
तस्माद्दशगुणो राजा राजेन्द्रः परिकीर्त्तितः ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ८६ अध्यायः ॥
(राजश्रेष्ठः । यथा, महाभारते । २ । ४५ । ४१ ।
“कर्म्मणैतेन राजेन्द्र । धर्म्मश्च सुमहान् कृतः ॥”)

**राजोद्वेजनसंज्ञकः**, पुं, (राजोद्वेजन इति संज्ञा

यस्य । ततः कन् ।) भूताङ्कुशवृक्षः । इति
राजनिर्घण्टः ॥

**राज्ञी**, स्त्री, (राज्ञः पत्नी । राजन् + ङीप् । यद्वा,

राजते इति । राज + कनिन् । ततः स्त्रियां
ङीप् ।) राजपत्नी । राणी इति भाषा ॥

त्वेन ख्याते ग्रामसमूहे । देशविषयोपवर्त्तनानि च
जनपदे जनपदसमुदाये । जनपदैकदेशे सजल-
निर्जलस्थानमात्रे च । उपाधिभेदेन देशादित्रिकं
भिन्नार्थम् । सामान्येन प्रयोगदर्शनात् । नीवृदा-
दयः पञ्चैवैकार्थाः । इत्यपरे । एतच्चायुक्तम् ।
इति भरतः ॥ * ॥ तस्य लक्षणं अङ्गानि च यथा, --
“परस्यैवोपकारीदं सप्ताङ्गं राज्यमुच्यते ॥
अमात्रराष्ट्रदुर्गाणि कोषो दण्डश्च पञ्चमः ।
एताः प्रकृतयस्तद्वद्विजिगीषोरुदाहृताः ॥
एताः पञ्च तथा मित्रं सप्तमं पृथिवीपतिः ।
सप्तप्रकृतिकं राज्यमित्युवाच बृहस्पतिः ॥
पौरश्रेणी तदङ्गञ्च ब्रुवते शब्दवेदिनः ॥
स्वाम्यमात्यः सुहृत् कोषो राष्ट्रं दुर्गं बलं तथा ।
पौरश्रेणी च राज्याङ्गं प्रकृतिश्च भवेत् द्वयम् ॥”
इति शब्दरत्नावली ॥
अपि च ।
“लक्षाधिपत्यं राज्यं स्यात् साम्राज्यं दशलक्षके ।
शतलक्षे महेशानि महासाभ्राज्यमुच्यते ॥”
इति वरदातन्त्रम् ॥

| | | |
|---|---|---|
| फलानि यस्याः ।) चीनाकर्कटी । इति राज-<br>निर्घण्टः ॥<br>**राजिलः**, पुं, (राजी रेखास्त्यस्यति । राजि +<br>सिध्मादित्वात् लच् । यद्वा, राजिं लातीति ।<br>ला + कः ।) डुण्डुभसर्पः । इत्यमरः । १ । ८ । ५ ॥<br>(यथा, रघुः । ११ । २७ । | (यथा, रघुः । १ । ५७ ।<br>"तयोर्जगृहतुः पादान् राजा राज्ञी च मागधी ।<br>तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिननन्दतुः ॥") | |

**राज्यक्ता**, स्त्री, (राज्या सर्षपेण अक्ता म्रक्षिता ।)

पिष्टराजिकादधिलवणमिश्रितसूक्ष्मालावू
खण्डादि । रायता इति भाषा ॥ यथा, --
"संचूर्ण्य निक्षिपेत्तक्रे भृष्टं जीरकहिङ्गु च ।
लवणान्तत्र वटकान् सकलानपि मज्जयेत् ॥
शुक्रलस्तत्र वटको बलकृद्रोचनो गुरुः ।
विबन्धकृद्विदाही च श्लेष्मलः पवनापहः ।
राज्यक्तयातिरोचिन्यापाचन्या तांस्तु भक्षयेत्
॥"
इति भावप्रकाशे कृतान्नवर्गः ॥

**रज्याङ्गं**, क्ली, (राज्यस्य अङ्गम् ।) राज्यस्योपायः ।

तत्पर्य्यायः । प्रकृतिः २ । तत्तु अष्टविधं यथा ।
स्वामी १ अमात्यः २ सुहृत् ३ कोषः ४
राष्ट्रम् ५ दुर्गम् ६ बलम् ७ पौराणां श्रेण-
यश्च ८ । इत्यमरः । २ । ८ । १८ ॥ "स्वाम्या-
दयः सप्त पुरस्थलोकश्रेणयश्च राज्याङ्गपद-
प्रकृतिपदवाच्याः । राज्यं सप्ताङ्गम् । कस्य-
चिन्मते अष्टाङ्गञ्चेत्युभयमेव दर्शितम् । यदुक्तं
कामन्दकीये ।
'स्वाम्यमात्यश्च राष्ट्रञ्च दुर्गं कोषो बलं सुहृत् ।
परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते ॥'
पौरश्रेण्या सहाष्टाङ्गमपि राज्यं प्रकीर्त्तित-
मिति । स्वाम्यादयः सप्त परस्परोपकारित्वात्
राज्यस्य अङ्गानि उपायाः साधनानि राज्या-
ङ्गानि प्रकृष्टं कुर्व्वन्ति राज्यम् । प्रकृतयः कृद्धोः
कभाव इत्युक्तेः क्तिः प्रकृतिः स्त्रियाम् । स्वामी
राजा । अमात्यो मन्त्री । सुहृन्मित्रम् । स्वर्णादि-
भाण्डागारं कोषः । राष्ट्रं जनपदवती भूमिः ।
पर्व्वतादिदुर्गमं पुरं दुर्गम् । बलं सैन्यम् । पौर-
श्रेणीग्रहणे सिद्धे पुनर्व्वचनं प्राधान्यख्याप-
नार्थम् ।" इति भरतः ॥ * ॥ अपि च ।
"स्वाम्यमात्यो जनपदो दुर्गं दण्डस्तथैव च ।
कोषो मित्रञ्च धर्म्मज्ञ सप्ताङ्गं राज्यमुच्यते ॥
सप्ताङ्गस्यापि राज्यस्य मूलं स्वामी प्रकी-
र्त्तितः ।
तन्मूलत्वात्तथाङ्गानां राजा रक्ष्यः प्रयत्नतः ॥
षडङ्गरक्षा कर्त्तव्या तथा तेन प्रयत्नतः ।
अङ्गेभ्यो यस्तथैकस्य द्रोहमाचरतेऽल्पधीः ।
भूरिश्रेष्ठिकनामधाम परमं तत्रोत्तमो नः
पिता ॥"
इत्यादि प्रबोधचन्द्रोदये दम्भवाक्यम् ॥

**राढीयः**, त्रि, (राढो निवासोऽस्य । राढ +

"वृद्धाच्छः ।" ४ । २ । ११४ । इति छः
।) राढ-
देशोद्भवः । यथा, --
"अयनांशाल्लग्नमानं दुरूहमिति नोच्यते ।
राढीयश्रीनिवासोक्तं तन्मानं स्थूलतोऽत्र
तु ॥"
इति मलमासतत्त्वम् ॥

**रात्रं**, क्ली, ज्ञानम् । यथा, --

"रात्रञ्च ज्ञानवचनं ज्ञानं पञ्चविधं स्मृतम्
।
तेनेदं पञ्चरात्रञ्च प्रवदन्ति मनीषिणः ॥"
इति नारदपञ्चरात्रे प्रथमरात्रे १ अध्यायः
॥
(रात्रिः । यथा, महाभारते । १३ । १३६
। ११ ।
"क्षेत्रप्रतिग्रहे चैव ग्रहसूतकयोस्तथा ।
त्रीणि रात्राण्युपोषित्वा तेन
पापाद्विमुच्यते ॥")

**रात्रकं**, क्ली, (रात्रं ज्ञानं तेन कायतीति । कै +

कः ।) पञ्चरात्रम् । इति मेदिनी । के,
१४६ ॥

**रात्रकः**, पुं, एकवर्षं वेश्यागृहवासी । इति

मेदिनी । के, १४६ ॥

**रात्रिः**, स्त्री, राति ददाति कर्म्मभ्योऽवसरं निद्रादि-

सुखं वा । रादाने + "राशदिभ्यां त्रिप् ।"
उणा० ४ । ६७ । इति त्रिप् ।) हरिद्रा ।
(यथा, सुश्रुते चिकित्स्यितस्थाने ९
अध्याये ।
"लाक्षा कुष्ठं सर्षपाः श्रीनिकेतं
रात्रिर्व्योषं चक्रमर्द्दस्य बीजम् ।
कृत्वेकस्थं तत्र पिष्टः प्रलेपो
दद्रूयुक्तो मूलकाद्वीजयुक्तः ॥")
अथ रात्रिकृत्यम् । स्मृतिः ।
"पूर्ब्बाह्णविहितं कर्म्म न कृतं तत्
प्रमादतः ।
रात्रेस्तु प्रहरं यावत् तत् कर्त्तव्यं
यथोक्तवत् ॥
दिवोदितानि कर्म्माणि प्रमादात्
पतितानि
च ।
शर्व्वर्य्याः प्रथमे यामे तानि
कुर्य्यादतन्द्रितः ॥"
इति रत्नाकरः ॥
याज्ञवल्क्याङ्गिरसौ ।
"उपास्य पश्चिमां सन्ध्यां
हुत्वाग्नींस्तानुपास्य च ।
भृत्यैः परिवृतो भुक्त्वा नातितृप्तोऽथ
संविशेत् ॥
अग्निहोमोपासने साग्निपरे । उपास्य
चेति
चकारो वैश्वदेवादिकं समुच्चिनोति ।
संविशेत्
स्वपेत् । तथा च विष्णुपुराणम् ।
"पुनः पाकमुपादाय सायमप्यवनीपते
।
वैश्वदेवनिमित्तं वै पत्न्या सार्द्धं वलिं
हरेत् ॥
अतिथिश्चागतं तत्र स्वशक्त्या
पूजयेद्बुधः ।
दिवातिथौ तु विमुखे गते यत् पातकं
भवेत् ।
तदेवाष्टगुणं पुंसां सूर्य्योढे विमुखे गते
॥"
सूर्य्योढे अस्तं गते सूर्य्ये । तथा, --
"कृतपादादिशौचस्तु भुक्त्वा सायं
ततो गृही ।
गच्छेदस्फुटितां शय्यामति दारुमयीं
नृप ॥"
भोजने सायमिति सार्द्धप्रहरपरं
प्रागुक्तात् ॥

वधस्तस्य तु कर्त्तव्यः शीघ्रमेव महीक्षिता ॥”
इति मात्स्ये १९४ अध्यायः ॥

**राटिः**, स्त्री, (राटयति परस्परमाह्वाययत्यत्रेति ।

रट + णिच् + इन् ।) युद्धम् । इति हेमचन्द्रः ।
३ । ४६२ ॥ (राटयतीति । रट भाषणे + स्वार्थे
णिच् + इन् ।) शरारिपक्षी । इत्यमरः । २ ।
५ । २५ ॥

**राडिः**, स्त्री, शरारिपक्षी । इत्यमरः । २ । ५ । २५ ॥

**राढकः**, पुं, स्वनामख्यातदेशः । यथा, --

“प्राच्यां मागधशोणौ च वारेन्द्रीगौडराढकाः ॥”
इति ज्योतिषतत्त्वम् ॥

**राढा**, स्त्री, सूक्ष्मः । शोभा । इति मेदिनी । ढे, ३ ॥

पुरीविशेषः । यथा ।
“गौडं राष्ट्रमनुत्तमं निरुपमा तत्रापि राढा
पुरी

एतद्द्वीपावच्छिन्न-
सूर्य्यकिरणानवच्छिन्नकालः ।
राति इति भाषा । तत्पर्य्यायः । शर्व्वरी
२
निशा ३ निशीथिनी ४ त्रियामा ५
क्षणदा ६
क्षपा ७ विभावरी ८ तमस्विनी ९ रजनी
१०
यामिनी ११ तमी १२ । इत्यमरः । १ ।
४ । ४ ॥ श्यामा
१३ घोरा १४ याम्या १५ तुङ्गी १६
नक्तम् १७
दोषा १८ वासतेयी १९ तमा २० क्षमा
२१
शताक्षी २२ क्षणिनी १३ निशिथ्या २४
चक्रभेदिनी २५ शार्व्वरी २६ शय्या २७
वासुरा २८ निषद्वरी २९ । इति
शब्दरत्ना-
वली ॥ वसतिः ३० वायुरोषा ३१
निशीथः ३२
निट् ३३ । इति जटाधरः ॥ यामवती
३४
तारा ३५ भूषा ३६ ज्योतिष्मती ३७
तार-
किणी ३८ काली ३९ कलापिनी ४० ।
इति
राजनिर्घण्टः ॥ * ॥ तस्याः कारणं
यथा, --
“यदा दिक्षु च अष्टासु मेरोर्भूगोलकोद्भवा
।
छाया भवेत्तदा रात्रिः स्याच्च
तद्विरहाद्दिनम् ॥”
इति वह्निपुराशे गणभेदो नामाध्यायः ॥
* ॥
पितृदेवानां रात्रिर्यथा, --
“मासेन च नराणाञ्च पितॄणां तदहर्निशम्
।
कृष्णपक्षे दिनं प्रोक्तं शुक्ले रात्रिः
प्रकीर्त्तिता ॥
वत्सरेण नराणाञ्च देवानाञ्च दिवानिशम्
।

अथ रात्रौ शयनविधिः । सति सूर्य्ये
शय्या च न
पातनीया सा च सूर्य्योदयात्
पूर्ब्बमुत्तोलनीया ।
तथा च स्मृतिः ।
“भास्करादृष्टशय्यानि
नित्याग्निसलिलानि च ।
सूर्य्यावलोकिदीपानि लक्ष्म्या वेश्मानि
भाजनम् ॥”
व्यासः ।
“शुचौ देशे विविक्ते च गोमयेनोपलेपिते
।
प्रागुदक्प्लवने चैव संविशेत्तु सदा
बुधः ॥
मङ्गल्यं पूर्णकुम्भञ्च शिरःस्थाने
विधाय च ।
वैदिकैर्गारुडैर्मन्त्रै रक्षां कृत्वा
स्वपेत्ततः ॥”
गर्गः ।
“स्तगृहे प्राक्शिराः शेते ह्यायुषे
दक्षिणाशिराः ।
प्रत्यक्शिराः प्रवासे तु न
कदाचिदुदक्शिराः ॥”
मार्कण्डेयपुराणे ।
“प्राक्शिरः शयने विद्यात् धनमायुश्च
दक्षिणे ।
पश्चिमे प्रबलां चिन्तां हानिं मृत्युं
तथोत्तरे ॥”
तथा ।
“नमस्कृत्याव्ययं विष्णुं समाधिस्थं
स्वपेन्निशि ॥”
मार्कण्डेयः ।
“शून्यालये श्मशाने च एकवृक्षे
चतुष्पथे ।
महादेवगृहे चापि शर्करालोष्ट्रपांशुषु ॥
घान्यगोविप्रदेवानां गुरूणाञ्च तथोपरि
।
न चापि भग्नशयने नाशुचौ नाशुचिः
स्वयम् ॥
नार्द्रवासा न नग्नश्च नोत्तरापरमस्तकः
।

| | | |
|---|---|---|
| | उत्तरायणे दिनं प्रोक्तं रात्रिश्च दक्षिणायने ॥”<br>इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५१ अध्यायः ॥ | नाकाशे सर्व्वशून्ये च न च चैत्यद्रुमे तथा ॥”<br>स्वपेदिति शेषः ॥ * ॥ अथ रात्रौ दारोप-<br>गमनविधिः । याज्ञवल्क्यः ।<br>“षोडशर्त्तुर्निशाः स्त्रीणां तासु युग्मासु संविशेत् ।<br>ब्रह्मचार्य्येव पर्ब्बण्याद्याश्चतस्रस्तु वर्ज्जयेत् ॥”<br>स्त्रीणां षोडशनिशा ऋतुर्गर्भाधानयोग्यकालः । |

तत्रोक्तविधिना गच्छेत् । तत्र युग्मासु रात्रि-
ष्वपि पर्व्वणि ब्रह्मचार्य्येव भवति । तत्र
व्रतादौ
गच्छतो ब्रह्मचर्य्यस्खलनदोषो नास्ति इति
मिताक्षरा ॥ विष्णुपुराणम् ।
"षष्ठ्यष्टमीममावास्यामुभेपक्षे चतुर्द्दशीम्
।
मैथुनं नोपसेवेत द्वादशीञ्च मम प्रियाम् ॥"
हारीतः । "चतुर्थेऽहनि स्नातायां युग्मासु
च
गभाधानवदुपेत ब्रह्मगर्भं सन्दधातीति ।"
अत्र
चतुर्थ्यां रात्रौ यद्‌गर्भाधानमुक्तं
तद्रजोनिवृत्तौ
बोध्यम् । रजस्युपरते साध्वी स्नानेन स्त्री
रज-
स्वला । इति मनुवचनैकवाक्यत्वात् ।
साध्वी
गर्भाधानादिविहितकर्म्मयोग्येत्यर्थः ।
आद्याश्च-
तस्रस्तु वर्ज्जयेत् । इति तु
रजोनिवृत्तीतरपरम् ।
अनृतावपि कामुकीगमनमाह ।
विष्णुपुराणम् ।
"मृतो नरकमभ्येति हीयेदत्रापि चायुषः ।
परदाररतिः पुंसामुभयत्रापि भीतिदा ॥
इति मत्वा स्वदारेषु ऋतुमत्सु वुधो व्रजेत्
।
यथोक्तदोषहीनेषु सकामेष्वनृतावपि ॥"
पैठीनसिः । "त्वाष्ट्रं विश्वरूपं जघान
वज्रेणेन्द्रस्तं
प्रति देवा ब्रह्महन्निति अवदन् स स्त्रिय
उपा-
गृह्णीत वरं दास्यामि ततोऽस्यास्तृतीयं
ब्रह्म-
हत्यायाः प्रपद्यन्त स्त्रियः एकं
भूमिर्व्वनस्पतय-
श्चैकम् । आसां मघवा तुष्टो वरं प्रायच्छत
भूमेः

नुत्पत्त्या अप्राप्तप्रतिष्ठः सन् पतति
तस्मात्
तदुत्पत्त्यर्थं यतितव्यमिति कल्पतरुः ॥
एवञ्च
श्राद्धदिने यदभिगमनं
प्रागुक्तयाज्ञवल्क्यवच-
नात् उक्तं मिताक्षरायां तद्धेयम् । वशिष्ठः
।
"शूद्रान्नेन तु भुक्तेन मैथुनं योऽधिगच्छति
।
यस्यान्नं तस्य ते पुत्रा अस्वर्ग्याः
शूद्रवत्
द्विजाः ॥"
पराशरः ।
"ऋतुस्नाताञ्च यो भार्य्यां सन्निधौ
नोपगच्छति ।
स गच्छेन्नरकं घोरं ब्रह्महेति तथोच्यते
॥"
सन्निधावित्यभिधानात् असन्निहितस्य
गमना-
भावे न दोषः ।
पुत्रोत्पत्तिपर्य्यन्तमृत्वभिगमन-
नियममाह । कूर्म्मपुराणम् ।
"ऋतुकालाभिगामी स्यात् यावत् पुत्रो
न
जायते ।
ऋणापकर्षणार्थ हि पुत्रस्योत्पादनं प्रति
॥"
यतितव्यमिति शेषः । आपस्तम्बः ।
"ऋतौ तु गर्भशङ्कित्वात् स्नानं मैथुनिनः
स्मृतम् ।
अनृतौ तु सदा कार्य्यं शौचं
मूत्रपुरीषवदिति ॥
द्वावेतावशुची स्यातां दम्पती शयनं गतौ
।
शयनादुत्थिता नारी शुचिः स्यादशुचिः
पुमान् ॥
मैथुनशुद्धः प्राक् मलमूत्रोत्सर्गं न
कुर्य्यात् ।

ऋत्वभिगमनानन्तरं दक्षिणपार्श्वे न स्वापयेत्
।
पुरुषायिते तु गर्भानुत्पत्तिरिति विशेषः ।
दक्षः ।
"प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत्
।
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते ॥"
इत्याह्निकतत्त्वम् ॥ * ॥
अथ रात्रिजागरणदोषगुणौ ।
"रात्रौ जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा ।
अरूक्षमनभिष्यन्दि त्वासीनप्रचलायितम् ॥
कफमेदोविषार्त्तानां रात्रौ जागरणं हितम् ॥
दिवा वा यदि वा रात्रौ निद्रा स्वात्मीकृता
तु यैः ।
न तेषां स्वपतां दोषो जाग्रतां वा विधीयते ॥"
इति राजवल्लभः ॥ * ॥
रात्रौ कुलपूजा यथा । "यत्तु ।
रात्रावेव महापूजा कर्त्तव्या वीरवन्दिते ।
न दिने सर्व्वथा कार्य्या शासनान्मम सुव्रते ॥
तत् पुनः कुलपूजाविषयम् ।
अर्द्धरात्रात् परं यच्च मुहूर्त्तद्वयमेव च ।
सा महारात्रिरुद्दिष्टा तद्दत्तमक्षयन्तु वै ॥"
इति तन्त्रसारः ॥ * ॥
अथ रात्रौ विहितनिषिद्धे । छन्दोगपरिशिष्टम्
।
"मुनिभिर्द्विरशनं प्रोक्तं विप्राणां मर्त्यवासिनां
नित्यम् ।
अहनि च तथा तमस्विन्यां सार्द्धप्रहर-
यामान्तः ॥"
जावालः ।
"अहःसु तिथयः पुण्याः कर्म्मानुष्ठानतो दिवा
।
नक्तादिव्रतयोगे नु रात्रियोगो विशिष्यते ॥"
देवलः ।
"राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु ।
स्नावदानादिकं कुर्य्युर्निशि कान्यव्रतेषु च
॥"
ब्रह्माण्डपुराणम् ।

स्थिरत्वं वृक्षाणां छिन्नप्ररोहणं स्त्रीणां सर्व्व-
कालेषु सम्भवः ।” सम्भवो मेलनं सम्भोग इति
यावत् । सर्व्वकाले ऋतावनृतौ च । न तु प्रति-
षिद्धपर्व्वादौ । तथाच गोतमः ।
ऋतावुपेयात्
सर्व्वत्र वा प्रतिषिद्धवर्ज्जमिति ॥
दुष्टकालमाह
ज्योतिषे ।
“ज्येष्ठा मूला मघाश्लेषा रेवती कृत्तिका-
श्विनी ।
उत्तरात्रितयं त्यक्त्वा पर्व्ववर्ज्जं व्रजेदृतौ
॥”
एवञ्च ।
“ऋतौ नोपैति यो भार्य्यामनृतौ यश्च
गच्छति ।
तुल्यमाहुस्तयोर्दोषमयोनौ यश्च सिञ्चति
॥”
बौधायनीयमनृतौ
गमनदोषाभिधानमकामा-
विषयम् । विष्णुः ।
पर्व्वानारोग्यवर्ज्जमृताव-
गच्छन् पत्नीं त्रिरात्रमुपवसेदिति ।
वृद्धशाता-
तपः ।
“स्त्रीणां संप्रेक्षणात् स्पर्शात् ताभिः
संकथना
दपि ।
ब्रह्मचर्य्यं विपद्येत न दारेष्वृतुसङ्गमात् ॥”
संप्रेक्षणात् संकथनादित्यत्र सरागत्वं
संशब्दार्थः ।
श्राद्धानन्तरन्तु निषेधमाहतुः शङ्खलिखितौ
।
ऋतुस्नातां तदहोरात्रं परिहरेत् नार्त्तवे
दिवामैथुनं व्रजेत् क्लीवाल्पवीर्य्याश्च
दिवा
प्रसूयन्तेऽल्पायुश्च तस्मादेतद्विवर्ज्जयेत् ।
प्रजा-

तैलाभ्यक्ते तथा वान्ते श्मश्रुकर्म्मणि
मैथुने ।
मूत्रोच्चारं यदा कुर्य्यादहोरात्रेण
शुद्ध्यति ॥”
इति वचनात् ।
पुत्त्रानुत्पत्तौ पारस्करः । सा यदि गर्भं
नाद-
धीत निदिग्धिकायाः श्वेतपुष्पाया
उपोष्य
पुष्यनक्षत्रे मूलमुत्थाप्य चतुर्थेऽहनि
स्नातायां
निशायामुदकेन पिष्ट्वा दक्षिणस्यां
नासिकाया-
मासिञ्चतीति । इयमोषधीस्त्रायमाणा
सह-
माना सरस्वती । अस्या अहं वृहत्याः
पुत्त्रः
पितुरिव नाम जनयत्यभित इति । सा
परि-
णीता ऋतुकालेऽपि कृताभिगमना यदि
गर्भं न
दधाति तदा उपोष्य पुष्ये नक्षत्रे
श्वेतकण्ट-
कारिकामूलमुत्थाप्य चतुर्थेऽहनि
ऋतुस्नातायां
सत्यां रात्रावुदकेन पिष्ट्वा
दक्षिणनासापुटे
पतिः इयमोषधीरिति मन्त्रेण नस्यं
ददाति
दक्षिणहस्तानामिकाङ्गुष्ठाभ्वां गृहीत्वा
प्राक्-
शिरः संविष्टाया इति गोभिलस्मरणात् ।
आयुर्वेदीये ।
“पिप्पलीं शृङ्गवेरञ्च मरीचं नागकेशरम् ।
आज्येन सह भुञ्जीत अपि बन्ध्या
प्रसूयते ॥”
याज्ञवल्क्यः ।
“एवं गच्छन् स्त्रियं क्षामां मघां मूलाञ्च
वर्ज्ज-
येत् ।
शस्त इन्दौ सकृत् पुत्त्रं लक्षण्यं जनयेत्

“न रात्रौ पारणं कुर्य्यात् ऋते वै
रोहिणीव्रतात् ।
तत्र निश्यपि वै कुर्य्याद्वर्जयित्वा महानिशाम्
॥”
इति तिथ्यादितत्त्वम् ॥ * ॥
“एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन दानेन नैवाद्वादशिको भवेत् ॥”
स्कन्दपुराणम् ।
“प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा ।”
देवीपुराणम् ।
“हविष्यभोजनं सत्यं स्नानमाहारलाघवम् ।
अग्निकार्य्यमधःशय्यां नक्तभोजी षडाचरेत्
॥”
इत्येकादशीतत्त्वम् ॥ * ॥
देवलः ।
“रात्रौ श्राद्धं न कुर्व्वीत राक्षसी कीर्त्तिता हि
सा ।
सन्ध्ययोरुभयोश्चैव सूर्य्ये चैवाचिरोदिते ॥”
इति श्राद्धतत्त्वम् ॥ * ॥
विष्णुपुराणंम् ।
“प्रातर्निशि तथा सन्ध्यामध्याह्नादिषु
संस्मरन् ।
नारायणमवाप्नोति सद्यः पापक्षयं नरः ॥”
रात्रावपि गङ्गायां स्नानादौ प्रतिप्रसवमाह ।

| | | |
|---|---|---|
| कामश्च पितॄणां नोपहरेत तन्तुं विच्छिन्द्यात् प्रयतेताच्छेदाय येनाप्रतिष्ठो भवति तस्मात् प्रतिष्ठाकामः प्रजया प्रतिष्ठेतेति । नोशब्दो निषेधे । तन्तुं सन्तानं अच्छेदाय अविच्छेदाय सन्ताबस्य । येन यस्मात् अप्रतिष्ठः प्रजा- | पुमान् ॥" क्षामामाहारलाघवादिना। सकृदेकवारम् । अत्र सम्यगाधानहेतुतया उत्तानकरचरणा- मेव कुर्व्वीत न तिर्य्यगाहितकरचरणां स्त्रियञ्च | |

ब्रह्मपुराणम् ।
"दिवारात्रौ च सन्ध्यायां गङ्गायाञ्च प्रसङ्गतः ।
स्नात्वाश्वमेधजं पुण्यं गृहेऽप्युद्धृततज्जलैः ॥"
रात्रिञ्चराधिकारमुपक्रम्य आदिपर्व्वणि ।
"अतो रात्रौ प्राप्नुवतो जलं ब्रह्मविदो जनाः ।
गर्हयन्ति जनान् सर्व्वान् वनस्थान् नृपतीनपि ॥"
तत्रार्ज्जुनस्य प्रतिवचनम् ।
"समुद्रे हिमवत्पार्श्वे नद्यामस्याञ्च दुर्म्मते ।
रात्रावहनि सन्ध्यायां कस्य गुप्तः परिग्रहः ॥"
देवलः ।
"महानिशा तु विज्ञेया मध्यमं प्रहरद्वयम् ।
तस्यां स्नानं न कुर्व्वीत काम्यनैमित्तिकादृते ॥"
अतएव कल्पतरुः । न नक्तं स्नायादिति बौधा-
यनवचनं रागप्राप्तस्नानविषयम् । एवञ्च गङ्गा-
स्नानस्य दिवारात्रिकर्त्तव्यत्वाविशेषात् तत्त-
न्निमित्ततिथिविशेषस्यापि दिवारात्रिसम्बन्धि-
त्वेनाविशेषः । इति प्रायश्चित्ततत्त्वम् ॥
(रात्र्युक्तनियमाः यथा, --
"रात्रौ च भोजनं कुर्य्यात् प्रथमप्रहरागमे ।
किञ्चिदूनं समश्नीयात् दुर्ज्जरन्तत्र वर्ज्जयेत् ॥
शरीरे जायते नित्यं देहिनः सुरतस्पृहा ।
अव्यवायान्मेहमेदोवृद्धिः शिथिलता तनोः ॥
बालेति गीयते नारी यावद्वर्षाणि षोडश ।
विहारं भार्य्यया कुर्य्याद्देशेऽतिशयसंवृते ।
रम्ये श्रव्याङ्गनागाने सुगन्धे सुखमारुते ॥
देशे गुरुजनासन्ने विवृतेऽतित्रपाकरे ।
श्रूयमाणे व्यथाहेतुवचने न रमेत ना ॥
स्नातश्चन्दनलिप्ताङ्गः सुगन्धः सुमनोऽन्वितः ॥
भुक्तवृष्यः सुवसनः सुवेशः समलङ्कृतः ।
ताम्बूलवदनः पत्न्यामनुरक्तोऽधिकःस्मरः ॥
पुत्त्रार्थी पुरुषो नारीमुपेयाच्छयने शुभे ।
अत्याशितोऽधृतिः क्षुद्वान् सव्यथाङ्गः पिपा-
सितः ॥
बालो वृद्धोऽन्यवेगार्त्तस्त्यजेद्रोगी च मैथुनम् ॥"
रोगी मैथुनसंवर्द्धनीयरोगयुक्तः ।
"भार्य्यां रूपगुणोपेतां तुल्यशीलां कुलोद्भवाम् ।
अतिकामोऽभिकामान्तु हृष्टो हृष्टामलङ्कृताम् ॥
सेवेत प्रमदां युक्त्या बाजीकरणबृंहितः ।
रजस्वलामकामाञ्च मलिनामप्रियान्तथा ॥
वर्णवृद्धां वयोवृद्धां तथा व्याधिप्रपीडिताम् ।
हीनाङ्गीं गर्भिणीं द्वेष्यां योनिरोगसमन्विताम् ॥
सगोत्राङ्गुरुपत्नीञ्च तथा प्रव्रजितामपि ॥
नाभिगच्छेत् पुमान्नारीं भूरिवैगुण्यशङ्कया ॥"
"स्नानं सशर्करं क्षीरं भक्ष्यमैक्षवसंस्कृतम् ।
वातो मांसरसः स्वप्नः सुरतान्ते हिता अमी ॥
शूलकासज्वरश्वासकार्श्यपाण्ड्वामयक्षयः ।
अतिव्यवायाज्जायन्ते रोगाश्चाक्षेपकादयः ॥
रात्रौ जागरणं रूक्षं कफदोषविषार्त्तिजित् ।
निद्रा तु सेविता काले धातुसाम्यमतन्द्रितम् ॥
पुष्टिवर्णबलोत्साहं वह्निदीप्तिं करोति च ॥"
इति भावप्राशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
तद्वैदिकपर्य्यायः । श्यावी १ क्षपा २ शर्व्वरी ३ अक्तुः ४ ऊर्म्या ५ राम्या ६ यम्या ७ नम्या ८ दोषा ९ नक्ता १० तमः ११ रजः १२ असिक्नी १३ पयस्वती १४ तमस्वती १५ घृताची १६ शिरिणा १७ मोकी १८ शोकी १९ ऊधः २० पयः २१ हिमा २२ वस्वी २३ । इति त्रयोविंशती रात्रिनामानि । इति वेदनिघण्टौ । १ । ७ ॥ (क्रौञ्चद्वीपस्थनदीविशेषः । यथा, मात्स्ये । १२२ । ८७ ।
"श्रुतास्तत्रैव नद्यस्तु प्रतिवर्षं गताः शुभाः ।
गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा ॥")

**रात्रिजलं**, क्ली, (रात्रेर्जलम् ।) कुज्झटिका । इति शब्दमाला ॥

**रात्रिजागरः**, पुं, (रात्रौ जागर्त्तीति । जागृ + अच् ।) कुक्कुरः । इति हेमचन्द्रः ॥ रात्रौ जागरणकर्त्तरि, त्रि ॥

**रात्रिजागरदः**, पुं, (रात्रौ जागरं जागरणं ददातीति । दा + कः ।) मशकः । इति राज-निर्घण्टः ॥

**रात्रिञ्चरः**, पुं, (रात्रौ चरतीति । चर् + टः । "रात्रेः कृति विभाषा ।" ६ । ३ । ७२ । इति मुम् ।) राक्षसः । इत्यमरः । १ । १ । ६३ ॥ (स्त्रियां ङीप् । रात्रिञ्चरी ॥) रात्रौ गमनकर्त्तरि, त्रि ॥

**रात्रिपुष्पं**, क्ली, (रात्रौ पुष्प्यति विकाशते इति ॥ पुष्प् + अच् ।) उत्पलम् । इति राजनिर्घण्टः ॥

**रात्रिमटः**, पुं, (रात्रौ अटतीति । अट् + अच् ॥ "रात्रेः कृति विभाषा ।" ६ । ३ । ७२ । इति मुम् ।) राक्षसः । इति त्रिकाण्डशेषः ॥ रात्रौ गमनकर्त्तरि, त्रि ॥

**रात्रिमणिः**, पुं, (रात्रेर्मणिरिव ।) चन्द्रः । इति हारावली । १३ ॥

**रात्रिवासः**, [स्] क्ली, (रात्रेर्वासो वस्त्रमिव ।) अन्धकारः । इति शब्दमाला ॥ रात्रौ शयन-कालीनपरिधेयवस्त्रम् । यथा । ब्राह्म्ये मुहूर्त्ते उत्थाय मुक्तस्वापः रात्रिवासस्त्यक्त्वा शिरसि

ततस्तु तरुणी ज्ञेया द्वात्रिंशत्
वत्सरावधि ॥
तदूर्द्ध्वमधिरूढा स्यात्
पञ्चाशद्वत्सरावधि ।
वृद्धा तत्परतो ज्ञेया सुरतोत्सववर्ज्जिता
॥”
अधिरूढा प्रौढा ।
“निदाघशरदोर्बाला हिता विषयिणी मता
।
तरुणी शीतसमये प्रौडा वर्षावसन्तयोः
॥
नित्यं बाला सेव्यमाना नित्यं वर्द्धयते
बलम् ।
तरुणी ह्रासयेच्छक्तिं प्रौढोद्भावयते
जराम् ॥
मद्यो मांसन्नवञ्चान्नं बाला स्त्री
क्षीरभोजनम् ।
घृतमुष्णोदके स्नानं सद्यः प्राणकराणि
षट् ॥
पूतिमांसं स्त्रियो वृद्धा बालार्कस्तरुणं
दधि ।
प्रभाते मैथुनं निद्रा सद्यः प्राणकराणि
षट् ॥”
प्राणशब्दोऽत्र बलवाचकः । बालार्कः
कन्यार्कः ।
“वृद्धोऽपि तरुणीं गत्वा
तरुणत्वमवाप्नुयात् ।
वयोऽधिकां स्त्रियं गत्वा तरुणः
स्थविरायते ॥
आयुष्मन्तो मन्दजरा वपुर्वर्णबलान्विताः
।
स्थिरोपचितमांसाश्च भवन्ति स्त्रीषु
संयताः ॥
सेवेत कामतः कामं बलाद्वाजीकृतो हि
मे ।
प्रकामन्तु निषेवेत मैथुनं शिशिरागमे ॥
त्र्यहाद्वसन्तशरदोः पक्षाद्वृष्टिनिदाघयोः
॥”
सुश्रुतस्तु ।
“त्रिभिस्त्रिभिरहोभिर्हि समेयात्
प्रमदान्नरः ।

**रात्रिकरः**, पुं, (रात्रिं करोतीति । कृ + टः ।)

चन्द्रः । इति हेमचन्द्रे निशाकरशब्ददर्शनात् ॥
(कर्पूरः । इत्यमरः । २ । ६ । १३० ॥)

**रात्रिचरः**, पुं, (रात्रौ चरतीति । “चरेष्टः ।”

३ । २ । १६ । इति टः । “रात्रेः कृति विभाषा ।”
६ । ३ । ७२ । इति पक्षे मुमभावः ।) राक्षसः ।
इत्यमरः । १ । १ । ६३ ॥ रात्रौ गमनकर्त्तरि, त्रि
॥

**रात्रिचरी**, स्त्री, (रात्रिचर + टित्वात् ङीप् ।)

राक्षसी । यथा, भट्टिः । २ । २३ ।
“तं विप्रदर्शं कृतघातयत्नां
यान्तं वने रात्रिचरी डुढौके ।
जिघांसुवेदं धृतभासुरास्त्र-
स्तं ताडकाख्यां निजघान रामः ॥”

सहस्रदलकमलावस्थितंश्वेतवर्णं
द्विभुजं वरा-
भयकरं श्वेतमाल्यानुलेपनं
स्वप्रकाशरूपं
स्ववामस्थितरक्तशक्त्या
सुप्रकाशरूपया सहितं
गुरुं विभाव्य मानसोपचारैराराध्य
नम-
स्कुर्य्यात् । इति तन्त्रसारः ॥ अपि च
।
“शयनञ्चान्धकारे च रात्रिवासो दिने
तथा ।
स्नानाम्बरं कुवेशञ्च वर्ज्जयेत्
शुष्कभोजनम् ॥”
इति लक्ष्मीचरित्रम् ॥

**रात्रिविगमः**, पुं, (रात्रेर्विगमो यत्र ।) प्रभा-

तम् । इति शब्दमाला ॥

**रात्रिविश्लेषगामी**, [न्] पुं, (रात्रौ विश्लेषं

विच्छेदं गच्छतीति । गम् + णिनिः ।)
चक्र-
वाकः । इति राजनिर्घण्टः ॥

**रात्रिवेदः**, पुं, (रात्रिं रात्रिशेषं वेदयति रवे-

णेति । विद् + णिच् + अण् ।)
कुक्कुटः । इति
शब्दरत्नावली ॥

**रात्रिवेदी**, [न्] पुं, (रात्रिं रात्रिशेषं वेदयति

स्वरेणेति । रात्रि + विद् + णिच् +
णिनिः ।)
कुक्कुटः । इति त्रिकाण्डशेषः ॥

**रात्रिहासः**, पुं, (रात्रेर्हास इव शुभ्रत्वात् ।

रात्रौ हासो विकाशो यस्य इति वा ।)
श्वेतोत्पलम् । इति शब्दरत्नावली ॥

**रात्रिहिण्डकः**, पुं, (रात्रौ हिण्डति अन्तःपुर-

मध्ये भ्रमतीति । हिण्ड गतौ + ण्वुल्
।) अन्तः-
पुररक्षकः । इति शब्दरत्नावली ॥

**रात्री**, स्त्री, (रात्रि + कृदिकारादिति ङीष् ।)

| सर्व्वेष्वृतुषु घर्म्मेषु पक्षात् पक्षाद्व्रजेद्बुधः ॥”<br>समेयात् सङ्गच्छेत् घर्म्मे ग्रीष्मे ।<br>“शीते रात्रौ दिवा ग्रीष्मे वसन्ते तु दिवा-निशि ।<br>वर्षासु वारिदध्वाने शरत्सु सरसः स्मरः ॥<br>उपेयात् पुरुषो नारीं सन्ध्ययोर्न च पर्व्वसु ।<br>गोसर्गे चार्द्धरात्रे च तथा मध्यदिनेऽपि च ॥ | | निशा । इत्यमरटीकायां भरतः ॥<br>(यथा,<br>ऋग्वेदे । १० । १२७ । १ । |
|---|---|---|

"रात्री व्यख्यत् आयती पुरुत्रा देव्यक्षभिः ॥"
हरिद्रा । निशापर्य्यायत्वात् ॥)

**रात्र्यटः**, पुं, (रात्रौ अटतीति । अट् + अच् ।)
राक्षसः । इति केचित् ॥ रात्रौ गमनकर्त्तरि, त्रि ॥

**रात्र्यन्धः**, त्रि, (रात्रौ अन्धः ।) रात्रौ दृष्टि-
हीनो नरः । रातिकाणा इति भाषा ॥ रात्रौ स्वाभाविकदृष्टिहीनपक्षी । स तु काकादिः ।
यथा, मार्कण्डेयपुराणे देवीमाहात्म्यम् ।
"दिवान्धाः प्राणिनः
केचिद्रात्रावन्धास्तथापरे।
केचिद्दिवा तथा रात्रौ प्राणिनस्तुल्यदृष्टयः ॥"
तन्नाशकौषधं यथा, --
"देवदारोश्च वै चूर्णं अजामूत्रेण भावयेत् ।
एकविंशति वै वारमक्षिणी तेन चाञ्जयेत् ।
रात्र्यन्धता पटलता नश्येदिति विनिश्चयः ॥"
इति गारुडे १८९ अध्यायः ॥

**राद्धं**, त्रि, (राध सिद्धौ + क्तः ।) पक्वम् ।
सिद्धम् । इति हेमचन्द्रः । ३ । ७६ ॥
त्रिकाण्ड-
शेषश्च ॥ (यथा, भागवते । ३ । ९ । ४० ।
"पूर्त्तेन तपसा यज्ञैर्दानैर्योगैः समाधिना ।
राद्धं निःश्रेयसं पुंसां
मत्प्रीतिस्तत्त्वविन्मतम् ॥")

**राद्धान्तः**, पुं, (राद्धः सिद्धः अन्तो निर्णयो
यस्मात् ।) सिद्धान्तः । इत्यमरः । १ । ५ । ४ ॥
(यथा, भागवते । १२ । ११ । १ ।
"अथेदमर्थं पृच्छामो भवन्तं बहुवित्तमम् ।
समस्ततन्त्रराद्धान्ते भवान्
भागवततत्त्ववित् ॥")

**राधना**, स्त्री, (राध् + णिच् + युच् । टाप् ।)
भाषणम् । इति मेदिनी । ने, ११४ ॥

**राधा**, स्त्री, (राध्नोति साधयति कार्य्याणीति ।
राध + अच् । टाप् ।) धन्विनां चित्रभेदः ।
(यथा, बालभारते १ अङ्के । "इह हि महा-
राजसमाजे न जाने कमवलम्बिष्यते
राधावेध-
कीर्त्तिर्व्वैजयन्ती ॥") गोपीविशेषः ।
विशाखा-
नक्षत्रम् । आमलकी । विष्णुक्रान्ता ।
विद्युत् ।
इति मेदिनी । धे, १३ ॥
(सूतस्याधिरथस्य
पत्नी । असौ एव कुन्तीगर्भजस्य शिशोः
कर्णस्य पालयित्री अतएव कर्णो राधासुत
इति ख्यात आसीत् । यथा, महाभारते । १ ।
६७ । १३८ -- १३९ ।
"निगूहमाना जातं वै बन्धुपक्षभयात्तदा।
उत्ससर्ज्ज जले कुन्ती तं कुमारं
यशस्विनम् ॥
तमुत्सृष्टं जले गर्भं राधाभर्त्ता महायशाः ।
राधायाः कल्पयामास पुत्त्रं
सोऽधिरथस्तदा ॥"
तथा च देवीभागवते । २ । ६ । ३८ ।
"राधा सूतस्य भार्य्या वै तयासौ प्रार्थितः सुतः ।
कर्णोऽभूद्बलवान् वीरः पालितः सूतसद्मनि ॥")
श्रीराधिका । सा च श्रीकृष्णवामभागांशा
शक्तिः । यथा, --
"स कृष्णः सर्व्वसृष्ट्यादौ सिसृक्षुरेक एव च ।
सृष्ट्युन्मुखस्तदंशेन कालेन प्रेरितः प्रभुः ॥
स्वेच्छामयः स्वेच्छया च द्विधारूपो बभूव ह ।
स्त्रीरूपा वामभागांशा दक्षिणांशः पुमान्
कृष्णपाणाधिदेवी सा कृष्णप्राणाधिकप्रिया ।
कृष्णस्य सङ्गिनी शश्वत्
कृष्णवक्षःस्थलस्थिता
शतमन्वन्तरातीतकालेऽतीतेऽपि सुन्दरी ।
सुषाव डिम्बं स्वर्णाभं विश्वाधारालयं परम् ॥
दृष्ट्वा डिम्बञ्च सा देवी हृदयेन विदूयता ।
उत्ससर्ज्ज च कोपेन ब्रह्माण्डं गोलके जले ॥
दृष्ट्वा कृष्णश्च तत्त्यागं हाहाकारं चकार ह ।
शशाप देवीं देवेशस्तत्क्षणञ्च यथोचितम् ॥
यतोऽपत्यं त्वया त्यक्तं कोपशीले सुनिष्ठुरे ।
भव त्वमनपत्यापि चाद्यप्रभृति निश्चितम् ॥
या यास्तदंशरूपाश्च भविष्यन्ति सुरस्त्रियः ।
अनपत्याश्च ताः सर्व्वास्तत्समा
नित्ययौवना ॥
एतस्मिन्नन्तरे देवीजिह्वाग्रात् सहसा ततः ।
आविर्ब्बभूव कन्यैका शुक्लवर्णा मनोहरा ॥
पीतवस्त्रपरीधाना वीणापुस्तकधारिणी
रत्नभूषणभूषाढ्या सर्व्वशास्त्राधिदेवता ॥
अथ कालान्तरे सा च द्विधारूपा बभूव ह ।
वामार्द्धाङ्गा च कमला दक्षिणार्द्धा सरस्वती ॥
एतस्मिन्नन्तरे कृष्णो द्विधारूपो बभूव सः ।
दक्षिणार्द्धाच्च द्विभुजो वामार्द्धाच्च चतुर्भुजः ॥
उवाच वाणीं श्रीकृष्णस्त्वमस्य कामिनी भव ।
अत्रैव मानिनी राधा नैव भद्रं भविष्यति ॥
एवं लक्ष्मीञ्च प्रददौ तुष्टो नारायणाय च ।
स जगाम च वैकुण्ठं ताभ्यां सार्द्धं
जगत्पतिः ॥
अनपत्ये च ते द्वे च यतो राधाङ्गसम्भवा ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २ अध्यायः ॥
राधाया उत्पत्तिर्यथा, --
"पुरा वृन्दावने रम्ये गोलोके रासमण्डले ।

**राध**, न औ य सिद्धौ । इति कविकल्पद्रुमः ॥

(स्वा०-दिवा०-च-पर०-स्वादिपक्षे सक०-दिवा-
दिपक्षे अक०-अनिट् ।) रेफादिः । न,
राध्नोति । य, राध्यति । औ, अरात्सीत् ।
सिद्धिरिह स्वादिपक्षे निष्पादना ।
दिवादिपक्षे
निष्पत्तिः । अन्नं राध्नोति विप्राणां य इति
हलायुधः । निष्पादयतीत्यर्थः । सततं
राध्यति
श्रिये इति हलायुधः । निष्पन्नी
स्यादित्यर्थः ।
सिद्धिरन्तर्भूतण्यर्थत्वादुभयत्रैव
निष्पादनेति
गोविन्दभट्टः । इति दुर्गादासः ॥
(शुभाशुभ-
पर्य्यालोचने च । यथा, मुग्धबोधे । "गर्गो
राध्यति रामाय ।" रामस्य शुभाशुभं
पर्य्या-
लोचयतीत्यर्थः ॥)

**राधः**, पुं, (राधा विशाखा तद्वती पौर्णमासी
राधी । सास्मिन्नस्तीति । राधी +
"सास्मिन्
पौर्णमासीति ।" ४ । २ । २१ । इति अण्
।)
वैशाखमासः । इत्यमरः । १ । ४ । १६ ॥
(यथा,
राजतरङ्गिण्याम् । ८ । २४८२ ।
"राघमासावधि दधुस्ततः प्रभृति वारिदाः
॥"
धनम् । यथा, ऋग्वेदे । १ । ३० । ५ ।
"स्तोत्रं राधानां पते गीर्वाहो वीर यस्य ते
॥"
"हे इन्द्र राधानां पते धनानां पालक ।"
इति
तद्भाष्ये सायणः ॥)

**राधनं**, क्ली, (राध् + ल्युट् ।) साधनम् । प्राप्तिः ।
इति मेदिनी । ने, ११४ ॥ तोषः । इति
हेम-
चन्द्रः ॥

स्मृतः ॥
तां ददर्श महाकामी कामाधारः सनातनः ।
अतीवकमनीयाञ्च चारुचम्पकसन्निभाम्
॥"
इत्यादि ॥ * ॥
तस्या अनपत्यताकारणादिर्यथा, --
"दृष्टिमात्रं तया सार्द्धं रासेशो रासमण्डले ।
रासोल्लासे सुरहसि रासक्रीडाञ्चकार ह ॥
नानाप्रकारशृङ्गारं शृङ्गारो मूर्त्तिमानिव ।
चकार सुखसम्भोगं यावद्वै ब्रह्मणो दिनम् ॥
ततः स चापरिश्रान्तस्तस्या योनौ
जगत्पिता ।
चकार वीर्य्याधानञ्च नित्यानन्दः शुभे क्षणे
॥
गात्रतो योषितस्तस्याः सुरतान्ते च सुव्रत
।
निःससार श्रमजलं श्रान्तायास्तेजसा हरेः
॥
महाक्रमणक्लिष्टाया निःश्वासश्च बभूव ह
।
तदा वव्रे श्रमजलं तत्सर्व्वं विश्वगोलकम्
॥
स तु निश्वासवायुश्च सर्व्वाधारो बभूव ह
।
निःश्वासवायुः सर्व्वेषां जीविनाञ्च भवेषु च
॥
बभूव मूर्त्तिमद्वायोर्वामाङ्गात्प्राणवल्लभा।
तत्पत्नी सा च तत्पुत्त्राः प्राणाश्च पञ्च
जीविनाम् ॥
प्राणोऽपानः समानश्चैवोदानो व्यान एव च
।
बभूवुरेव तत्पुत्त्रा अधःप्राणाश्च पञ्च च ॥
घर्म्मतोयाधिदेवश्च बभूव वरुणो महान् ।
तद्वामाङ्गात्तु तत्पत्नी वरुणानी बभूव ह ॥
अथ सा कृष्णशक्तिश्च कृष्णगर्भं दधार च
।
शतमन्वन्तरं यावत् ज्वलन्ती ब्रह्मतेजसा
॥

शतशृङ्गैकदेशे च मल्लिकामाधवीवने ॥
रत्नसिंहासने रम्ये तस्थौ तत्र जगत्पतिः ।
स्वेच्छामयश्च भगवान् बभूव रमणोत्सुकः
॥
रमणं कर्त्तुमिच्छुश्च तद्बभूव सुरेश्वरी ।
इच्छया च भवेत् सर्व्वं तस्य स्वच्छामयस्य
च ॥
एतस्मिन्नन्तरे दुर्गे द्विधारूपो बभूव सः ।
दक्षिणाङ्गश्च श्रीकृष्णो वामार्द्धाङ्गा च
राधिका ॥
बभूव रमणी रम्या रासेशी रमणोत्सुका ।
अमूल्यरत्नाभरणा रत्नसिंहासनस्थिता ॥
वह्निशुद्धांशुकाधाना कोटिपूर्णशशिप्रभा ।
तप्तकाञ्चनवर्णाभा राजिता च स्वतेजसा ॥
सस्मिता सुदती शुद्धा शरत्पद्मनिभानना।
विभ्रती कवरीं रम्यां
मालतीमाल्यमण्डिताम्॥
रत्नमालाञ्च दधती ग्रीष्मसूर्य्यसमप्रभाम् ।
मुक्ताहारेण शुभ्रेण गङ्गाधारानिभेन च ॥
संयुक्तं वर्त्तुलोत्तुङ्गं सुमेरुगिरिसन्निभम्।
कठिनं सुन्दरं दृश्यं कस्तूरीपत्रचित्रितम्॥
माङ्गल्यं मङ्गलार्हञ्च स्तनयुग्मञ्च विभ्रतीम् ।
नितम्बश्रोणिभारार्त्तां नवयौवनसंयुताम् ॥
कामातुरां सस्मिताञ्च ददर्श रसिकेश्वरः ।
दृष्ट्वा कान्तां जगत्कान्तो बभूव
रमणोत्सुकः ॥
दृष्ट्वा रिरंसुं कान्तञ्च सा दधार हरेः पुरः ।
रासेशं भूय गोलोके सा दधार हरेः पुरः ॥
तेन राधा समाख्याता पुराविद्भिर्महेश्वरि ।

राधा जयति श्रीकृष्णं स च ताञ्च परस्परम् ॥
उभयोः सर्व्वसाम्यञ्च सदा सर्व्वे वदन्ति च ।
भवनं धावनं रासे स्मरत्यालिङ्गनं जपेत् ॥
तेन जल्पति सङ्केताद्रस्या राधा यदीश्वरः ।
राशब्दोच्चारणाद्भक्तो राति मुक्तिं सुदुर्लभाम् ॥
धाशब्दोच्चारणाद्दर्गे धावत्येव हरेः पदम् ।
कृष्णवामांशसम्भूता राधा रासेश्वरी पुरा ॥
तस्याश्चांशांशकलया वभूवुर्देवयोषितः ।
रा इत्यादानवचनो धा च निर्व्वाणवाचकः ॥
यतोऽवाप्नोति मुक्तिञ्च सा च राधा प्रकीर्त्तिता ।
बभूव गोपीसंघश्च राधाया लोमकूपतः ॥
श्रीकृष्णलोमकूपैश्च बभूवुः सर्व्ववल्लवाः ।
राधा वामांशभागेन महालक्ष्मीर्बभूव सा ॥
चतुर्भुजस्य सा पत्नी देवी वैकुण्ठवासिनी ।
तदंशा राजलक्ष्मीश्च राजसम्पत्प्रदायिनी ॥
तदंशा मर्त्यलक्ष्मीश्च गृहिणाञ्च गृहे गृहे ।
शस्याधिष्ठातृदेवी च सा एव गृहदेवता ॥
स्वयं राधा कृष्णपत्नी कृष्णवक्षःस्थलस्थिता ।
प्राणाधिष्ठातृदेवी च तस्यैव परमात्मनः ॥

इयं स्त्री न पुमान् किंवा सा वा कान्ता पुमानयम् ।
द्वे रूपे तेजसा तुल्ये रूपेण च गुणेन च ॥
पराक्रमेण बुद्ध्या वा ज्ञानेन सम्पदेन च ।
पुरतो गमनेनैव किन्तु सा वयसाधिका ॥
ध्यायते तामयं शश्वदिमं सा स्मरति प्रियम् ।
रचिता सास्य प्राणैश्च तत्प्राणैर्मूर्त्तिमानयम् ॥
अस्य राधानुसारेण गोकुलागमनं परम् ।
स्वीकारं सार्थकं कर्त्तुं गोलोके यत् कृतं पुरा ॥
कंसभीतिच्छलेनैव गोकुलागमनं हरेः ।
प्रतिज्ञापालनार्थञ्च भयेशस्य भयं कुतः ॥" * ॥
राधाशब्दस्य व्युत्पत्तिर्यथा --
"राधाशब्दस्य व्युत्पत्तिः सामवेदे निरूपिता ।
नारायणस्तामुवाच ब्रह्माणं नाभिपङ्कजे ॥
ब्रह्मा तां कथयामास ब्रह्मलोके च शङ्करम् ।
पुरा कैलासशिखरे मामुवाच महेश्वरः ॥
देवानां दुर्लभं नन्द निशामय वदामि ते ।
सुरासुरमुनीन्द्रानां वाञ्छितां मुक्तिदां पराम् ॥
रेफो हि कोटिजन्माघं कर्म्मभोगं शुभाशुभम् ।
आकारो गर्भवासञ्च मृत्युञ्च रोगमुत्सृजेत् ॥
धकारमायुषो हानिमाकारो भवबन्धनम् ।
श्रवणस्मरणोक्तिभ्यः प्रणश्यति न संशयः ॥
रेफो हि निश्चलां भक्तिं दास्यं कृष्णपदाम्बुजे ।
सर्व्वेप्सितं सदानन्दं सर्व्वसिद्धौघमीश्वरम् ॥
धकारः सहवासञ्च तत्तुल्यकालमेव च ।
ददाति सार्ष्णिं सारूप्यं तत्त्वज्ञानं हरेः स्वयम् ॥
आकारस्तेजसो राशिं दानशक्तिं हरौ यथा ।
योगशक्तिं योगमतिं सर्व्वकालहरिस्मृतिम् ॥
श्रुत्युक्तिस्मरणाद्योगान्मोहजालञ्चकिल्विषम् ।
रोगशोकमृत्युमया वेपन्ते नात्र संशयः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १३ अध्यायः ॥

हरेरालिङ्गनाधारात्तेन राधा प्रकीर्त्तिता ॥
रासेश्वरस्य पत्नीयं तेन रासेश्वरी स्मृता ।
रासे च वासो यस्याश्च तेन रासनिवासिनी ॥
सर्व्वांशा रसिकानाञ्च देवीनामीश्वरी परा ।
प्रवदन्ति पुरा सन्तस्तेन तां रसिकेश्वरीम् ॥
प्राणाधिका प्रेयसी सा कृष्णस्य परमात्मनः ।
कृष्णप्राणाधिका सा च कृष्णेन परिकीर्त्तिता ॥
कृष्णस्यासि प्रिया शान्ता कृष्णो वास्याः प्रियः
सदा ।
सव्व दवगणैरुक्ता तेन कृष्णप्रिया स्मृता ॥
कृष्णरूपं संविधातुं या शक्ता चावलीलया ।
सर्व्वांशैः कृष्णसदृशी तेन कृष्णस्वरूपिणी ॥
वामार्द्धाङ्गेन कृष्णस्य या सम्भूता परा सती ।
कृष्णवामांशसम्भूता तेन कृष्णेति कीर्त्तिता ॥
परमानन्दराशिश्च स्वयं मूर्त्तिमती सती ।
श्रुतिभिः कीर्त्तिता तेन परमानन्दरूपिणी ॥
कृषिर्मोक्षार्थवचनो ण एवीत्कृष्टवाचकः ॥
आकारो दातृवचनस्तेन कृष्णा प्रकीर्त्तिता ॥
अस्ति वृन्दावनं यस्यास्तेन वृन्दावनी स्मृता ।
वृन्दावनस्याधिदेवी तेन राधा प्रकीर्त्तिता ॥
वृन्दः संघवचः सख्युराकारोऽप्यस्तिवाचकः ।
सखिवृन्दास्ति यस्याश्च सा वृन्दा परिकीर्त्तिता ॥
मुद्वाचको विनोदश्च सा यस्या अस्ति तत्र च ।
वेदा वदन्ति तां तेन वृन्दावनविनोदिनीम् ॥
नखचन्द्रावलीवक्रचन्द्रोऽस्तियत्र सन्ततम् ।
तेन चन्द्रावली सा च कृष्णेन कीर्त्तिता पुरा ॥
कान्तिरस्ति चन्द्रतुल्या यदा यस्या दिवा-निशम् ।
सा चन्द्रकान्ता हर्षेण हरिणा परिकीर्त्तिता ॥
शरच्चन्द्रप्रभा यस्याश्चाननेऽस्ति दिवानिशम् ।
मुनिना कीर्त्तिता तेन शरच्चन्द्रप्रभानना ॥
इदं षोडशनामोक्तमर्थव्याख्यानसंयुतम् ।

ब्रह्मादिस्तम्बपर्य्यन्तं सर्व्वं मिथ्यैव पार्व्वति ।
भज सत्यं परं ब्रह्म राधेशं त्रिगुणात् परम् ॥
परं प्रधानं परमं परमात्मानमीश्वरम् ।
सर्व्वाद्यं सर्व्वपूज्यञ्च निरीहं प्रकृतेः परम् ॥
स्वेच्छामयं नित्यरूपं भक्तानुग्रहविग्रहम् ।
तद्भिन्नानाञ्च देवानां प्राकृतं रूपमेव च ॥
तस्य प्राणाधिका राधा बहुसौभाग्यसंयुता ।
महद्विष्णोः प्रसूः सा च मूलप्रकृतिरीश्वरी ॥
मानिनीं राधिकां सन्तः सदा सेवन्ति नित्यशः ।
मुलभं यत्पदाम्भोजं ब्रह्मादीनां सुदुर्लभम् ॥
स्वप्ने राधापदाम्भोजं न हि पश्यन्ति वल्लवाः ।
स्वयं देवी हरेः क्रोडे छाया रायाणकामिनी ॥
स च द्वादशगोपानां रायाणः परमः प्रिये ।
श्रीकृष्णांशश्च भगवान् विष्णुतुल्यपराक्रमः ॥
श्रीदामशापात् सा देवी गोलोकादागता महीम् ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे राधोपाख्यानं ४५ अध्यायः ॥ * ॥ अपि च ।
गर्ग उवाच ।
“शृणु नन्द प्रवक्ष्येऽहमितिहासं पुरातनम् ।
पुरा गोलोकवृत्तान्तं श्रुतं शङ्करवक्त्रतः ॥
श्रीदाम्नो राधया सार्द्धं बभूव कलहो महान् ।

तस्याः षोडशनामानि तेषां व्युत्पत्तिश्च यथा,
नारद उवाच ।
“कानि षोडश नामानि राधिकाया जगद्-गुरोः ।
तानि मे वद शिष्याय श्रोतुं कौतूहलं मम ॥
श्रुतं नाम्नां सहस्रञ्च सामवेदनिरूपितम् ।
तथापि श्रोतुमिच्छामि त्वत्तो नामानि षोडश ॥
अभ्यन्तराणि तेषां वा तदन्यान्येव वा विभो ।
अहो पुण्यस्वरूपाणि भक्तानां वाञ्छितानि च ॥
नामानि तेषां व्युत्पत्तिं सर्व्वेषां दुर्लभानि च ।
पावनानि जगन्मातुर्जगतां गूढरूपिणी ॥
नारायण उवाच ।
राधा रासेश्वरी रासवासिनी रसिकेश्वरी ।
कृष्णप्राणाधिका कृष्णप्रिया कृष्णस्वरूपिणी ॥
कृष्णवामांशसम्भूता परमानन्दरूपिणी ।
कृष्णा वृन्दावनी वृन्दा वृन्दावनविनोदिनी ॥
चन्द्रावती चन्द्रकान्ता शतचन्द्रनिभानना ।
नामान्येतानि साराणि तेषामभ्यन्तराणि च ॥
राधेत्येवञ्च संसिद्धा राकारो दानवाचकः ।
स्वयं निर्व्वाणधात्री या सा राधा परिकीर्त्तिता ॥
रा च रासे च भवनाद्धा एव धारणादहो ।

नारायणेन यद्दत्तं ब्रह्मणे नाभिपङ्कजे ॥
ब्रह्मणा च पुरा दत्तं धर्म्माय जनकाय मे ।
धर्म्मेण कृपया दत्तं मह्यमादित्यपर्व्वणि ॥
पुष्करे च महातीर्थे पुण्याहे देवसंसदि ।
राधाप्रभावप्रस्तावे सुप्रसन्नेन चेतसा ॥
इदं स्तोत्रं महापुण्यं तुभ्यं दत्तं महामुने ।
निन्दकायावैष्णवाय न दास्यसि महामुने ॥
यावज्जीवमिदं स्तोत्रं त्रिसन्ध्यं यः पठेन्नरः ।
राधामाधवयोः पादपद्मे भक्तिर्भवेदिह ॥
अन्ते लभेत्तयोर्द्दास्यं शश्वत् सहचरो भवेत् ।
अणिमादिकसिद्धिञ्च संप्राप्य नित्यविग्रहम् ॥
व्रतदानोपवासैश्च सर्व्वैर्नियमपूर्व्वकम् ।
चतुर्णाञ्चैव वेदानां पाठैः सर्व्वार्थसंयुतैः ॥
सर्व्वेषां यज्ञतीर्थानां करणैर्विधिबोधितैः ।
प्रादक्षिण्येन भूमेश्च कृत्स्नाया एव सप्तधा ॥
शरणागतरक्षायामज्ञानज्ञानदानतः।
देवानां वष्णवानाञ्च दर्शनेनापि यत् फलम् ॥
तदेव स्तोत्रपाठस्य कलां नार्हन्ति षोडशीम् ।
स्तोत्रस्यास्य प्रभावेन जीवन्मुक्तो भवेन्नरः ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १७ अध्यायः ॥

| | | |
|---|---|---|
| श्रीदामा शापाद्दैत्यश्च गोपी राधा च गोकुले ॥<br>वृषभानुसुता सा च माता यस्याः कलावती ।<br>कृष्णस्यार्द्धाङ्गसम्भूता नाथस्य सदृशी सती ॥<br>गोलोकवासिनी सेयमत्र कृष्णाज्ञयाधुना ।<br>अयोनिसम्भवा देवी मूलप्रकृतिरीश्वरी ॥<br>मातुर्गर्भं वायुपूर्णं कृत्वा च मायया सती ।<br>वायुनिःसारणे काले धृत्वा च शिशुविग्रहम् ॥<br>आविर्बभूव सा सद्यः पृथ्व्यां कृष्णोपदेशतः ।<br>बर्द्धते सा व्रजे राधा शुक्ले चन्द्रकला यथा ॥<br>श्रीकृष्णतेजसोऽर्द्धेन सा च मूर्त्तिमती सती ।<br>एका मूर्त्तिर्द्विधा भूता भेदो वेदे निरूपितः ॥ | | |

राधानामोच्चारणानन्तरं
कृष्णनामोच्चारण-
विधिर्यथा, --
नारद उवाच ।
“आदौ राधां समुच्चार्य्य पश्चात्
कृष्णं विदुर्बुधाः ।
निमित्तमस्य मां शक्त वद भक्तजनप्रिय
॥
श्रीनारायण उवाच ।
निमित्तमस्य त्रिविधं कथयामि
निशामय ।
जगन्माता च प्रकृतिः पुरुषश्च
जगत्पिता ॥
गरीयसीति जगतां माता शतगुणैः
पितुः ।
राधाकृष्णेति गौरीशेत्येवं शब्दः श्रुतौ
श्रुतः ॥
कृष्णराधेशगौरीति लोके न च कदा
श्रुतः ।
प्रसीद रोहिणीचन्द्र गृहाणार्घ्यमिदं मम
॥
गृहाणार्घ्यं मया दत्तं संज्ञया सह
भास्कर ।
प्रसीद कमलाकान्त गृहाण मम
पूजनम् ॥
इति दृष्टं सामवेदे कौथुमे मुनिसत्तम ॥
राशब्दोच्चारणाद्भक्त स्फीतो भवति
माधवः ।
धाशब्दोच्चारतः पश्चाद्धावत्येव
ससम्भ्रमः ॥
आदौ पुरुषमुच्चार्य्य पश्चात्
प्रकृतिमुच्चरेत् ।
स भवेन्मातृगामी च वेदातिक्रमणे मुने
॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे
५२ अध्यायः ॥
तस्या निन्दायां दोषो यथा, --
“ये वा द्विषन्ति निन्दन्ति पापिनश्च
हसन्ति च ।
अयोनिसम्भवाहञ्च मम माता च भारते ।
पुनः सार्द्धञ्च युष्माभिर्यास्यामि श्रीहरेः
पदम् ॥
इति ते कथितं सर्व्वं व्रजं व्रज व्रजेश्वरि ।
व्रजेश्वरेण सहिता स्वामिना ज्ञानिना
सति ! ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ११०
अध्यायः ॥
राधापार्व्वत्योरभेदो यथा, --
पार्व्वत्युवाच ।
“किं वा प्रश्नं करिष्यामि त्वां राधां मङ्गला-
लयाम् ।
गता ते विरहज्वाला श्रीदाम्नः शापमोक्षणे
॥
सततं तन्मनःप्राणा त्वय्येव मयि ते तथा ।
न ह्येवमावयोर्भेदः शक्तिपूरुषयोर्यथा ॥
ये त्वां निन्दन्ति मद्भक्तास्त्वद्भक्ताश्चापि
मामपि ।
कुम्भीपाके च पच्यन्ते यावच्चन्द्रदिवाकरौ
॥
राधामाधवयोर्भेदं ये कुर्व्वन्ति नराधमाः ।
वंशहानिर्भवेत्तस्य पच्यन्ते नरकं चिरम् ॥
यान्ति शूकरयोनिञ्च पितृभिः शतकैः सह ।
षष्टिं वर्षसहस्राणि विष्ठायां कृमयस्तथा ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १२३
अध्यायः ॥
गोलोके तस्या आश्रमो यथा, --
“एतान् मनोरमान् दृष्ट्वा ते देवा
गमनोन्मुखाः ।
जग्मुः शीघ्रं कियद्दूरं ददृशुः सुन्दरं ततः ॥
आश्रमं राधिकायाश्च रासेश्वर्य्याश्च नारद
।
देवाधिदेव्या गोपीनां वरायाश्चारु निर्म्मितम्
॥
प्राणाधिकायाः कृष्णस्य रम्याद्रम्यं
मनोहरम् ।
सर्व्वानिर्व्वचनीयञ्च पण्डितैर्न निरूपितम् ॥
सुचारु वर्त्तुलाकारं षड्गव्यूतिप्रमाणकम् ।
शतमन्दिरसंयुक्तं ज्वलितं रत्नतेजसा ॥
सर्व्वलक्षणसम्पन्ना राधा नाम्ना विनोदिनी ।
जगतां मोहिनी देवी गुह्यगुह्यातिसुन्दरी ।
मूढानामसताञ्चैव न कथ्यं मुनिसत्तम ॥
नारद उवाच ।
प्रणिपत्य महाभाग पृच्छामि तव किङ्करः ।
सा लक्ष्मीः किं सुरवधूर्महालक्ष्मीः सरस्वती
॥
विद्या किमन्तरङ्गाथ वैष्णवी प्रकृतिः किमु ।
वेदकन्या देवकन्या मुनिकन्याथवा वद ॥
सदाशिव उवाच ।
कोटिकोटिमहालक्ष्मीर्लक्ष्मीः का वा परा वरा
।
निन्दिता यत्पदाम्भोजे कथिता मुनिसत्तम ॥
अपरं किं निगदेऽहमेकवक्त्रेण नारद ।
श्रीराधारूपलावण्यगुणादीन्वक्तुमक्षमः ॥
तत्तद्रूपादिमाहात्म्यं लज्जेऽहमपि नारद ।
त्रैलोक्ये तु समर्थो हि न मातुं वक्तुमर्हति ॥
तद्देहरूपमाधुर्य्यं जगन्मोहनमोहनम् ।
यद्यनन्तमुखोऽपि स्यां तद्वक्तुं नास्ति मे गतिः
॥
लक्षशः कमला दास्यो यस्याः सा लाक्षकी
मता ।
एवं शतसहस्राणामीश्वरी राधिका परा ॥
नारद उवाच ।
प्रभो श्रीराधिकाजन्ममाहात्म्यंसर्व्वतः परम् ।
तदहं श्रोतुमिच्छामि समस्तं भक्तवत्सल ॥
कथ्यतां मे महाभाग व्रतानाञ्च व्रतोत्तमम् ।
ध्यानं वा कीदृशी पूजा स्तुतिर्वापि वदस्व मे
॥
तत्सर्व्वं श्रोतुमिच्छामि कथ्यतां मे सदाशिव ।
चर्य्यां पूजाविधानञ्च विशेषमर्च्चनं भव ॥
यन्त्रं मन्त्रं स्तुतिर्ध्यानं पूजनं यत्र निर्म्मितम् ।
पूजने किं विधानञ्च तत्तत्सेवार्च्चने विधौ ॥
शिव उवाच ।
वृषभानुपुरीराजा वृषभानुर्महाशयः ।
महाकुलप्रसूतोऽसौ सर्व्वशास्त्रविशारदः ॥
महाशयो धनी श्रीमानणिमाद्यष्टवैभवः ।
वैश्यः सदन्तःकरणः कुलीनः कृष्णदैवतः ॥

कृष्णप्राणाधिकां देव देवीञ्च राधिकां पराम् ॥
ब्रह्महत्याशतं ते च लभन्ते नात्र संशयः ।
तत्पापेन च पच्यन्ते कुम्भीपाके च रौरवे ॥
तप्ततैले महाघोरे ध्वान्ते कीटे च यन्त्रके ।
चतुर्द्दशेन्द्रावच्छिन्नं पितृभिः सप्तभिः सह ॥
ततः परमजायन्त जन्मैकं कोलयोनितः ।
दिव्यं वर्षसहस्रञ्च विष्ठाकीटाश्च पापतः ॥
पुंश्चलीनां योनिकीटास्तद्रक्तमलभक्षणाः।
मलकीटाश्च तन्मानवर्षञ्च पूयभक्षकाः ।
वेदे च काण्वशाखायामित्याह कमलोद्भवः ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ९७ अध्यायः ॥
राधास्वरूपं यथा, --
यशोदोवाच ।
“हरौ च निश्चला भक्तिस्तद्दास्यं वाञ्छितं मम ।
तव नाम्नश्च व्युत्पत्तिं का वा त्वं वक्तमर्हसि ॥
राधिकोवाच ।
भवेद्भक्तिर्निश्चला ते हरेर्दास्यञ्च दुर्लभम् ।
लभस्व मद्वरेणापि कथयामि स्वनिर्णयम् ॥
षुरा नन्देन दृष्टाहं भाण्डीरे बटमूलके ।
मया च कथितो नन्दो निषिद्धश्च व्रजेश्वरः ॥
अहमेव स्वयं राधा छाया रायाणकामिनी ।
रायाणः श्रीहरेरंशः पार्श्वदप्रवरो महान् ॥
अमूल्यरत्नसाराणां वरैर्विरचितं वरम् ।
दुर्लङ्घ्याभिर्गभीराभिः परिखाभिः सुशोभितम् ॥
कल्पवृक्षैः परिवृतं पुष्पोद्यानशतान्तरम्।
सुमूल्यरत्नरचितं प्राकारैः परिवेष्टितम् ॥
सद्रत्नवेदिकायुक्तं युक्तैद्वरैश्च सप्तभिः ।
संयुक्तरत्नचित्रैश्च विचित्रैर्व्वर्त्तुलैर्मुने ॥
प्रधानद्वारसप्तभ्यः क्रमशः क्रमशो मुने ।
सर्व्वतोऽपि ततस्तत्र षोडशद्वारसंयुतम् ॥
देवा दृष्ट्वा च प्राकारं सहस्रधनुरुच्छ्रितम् ।
सद्रत्नरत्नकलससमूहैः सुमनोहरम् ॥
सुदीप्तं तेजसा रम्यं परमं विस्मयं ययुः ।
ततः प्रदक्षिणीकृत्य कियद्दूरं ययुर्मुदा ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ४ अध्यायः ॥
तस्या जन्मतिथिर्यथा, --
“भाद्रस्य कृष्णपक्षे तु हरिजन्माष्टमी यदा ।
तस्याः परे तु या शुक्ला तस्यां जाता हरिप्रिया ॥
वृषभानुपुरी नाम्ना सर्व्वरत्नमयी शुभा ।
सुवर्णमणिमाणिक्यविचित्रभवनाङ्गना॥
अणिमादिसुखैश्वर्य्यपरिपूर्णमनोहरा ।
चित्रध्वजपताकादिविचित्राचित्रनिर्म्मिता ॥
चिदानन्दस्वरूपा सा चिदानन्दप्रदायिनी ।
आनन्दकलिला नार्य्यो यत्र तिष्ठन्ति सर्व्वदा ॥
विचित्रवेशालङ्कारा विचित्रवसनाम्बरा ।
नानावेशविचित्राङ्गा प्रमदामोददायिनी ॥
तस्य भार्य्या महाभागा श्रीमत्श्रीकीर्त्तिदाह्वया ।
रूपयौवनसम्पन्ना महाराजकुलोद्भवा ॥
महालक्ष्मीस्वरूपा सा भव्या परमसुन्दरी ।
महापतिव्रता कार्ष्णा सर्व्वविद्यागुणान्विता ॥
तस्यां श्रीराधिका जाता श्रीमद्वृन्दावनेश्वरी ।
भाद्रे मासि सिताष्टम्यां मध्याह्ने शुभदायिनी ॥
वेदागमपुराणादिगीता या कृष्णवल्लभा ।
सदा कृष्णप्रिया साध्वी श्रीकृष्णानन्ददायिनी ॥
शृणु मत्तो महाभाग पूजनं भजनं तथा ।
कर्त्तव्यं यदनुष्ठानं राधाजन्मगहोत्सवः ॥
समर्च्चय सदा राधां जन्मव्रतपरायणैः ।
तत् समग्रं प्रवक्ष्यामि ध्यानादिकमनुक्रमात् ॥
सर्व्वदा पश्चिमद्वारे श्रीराधाकृष्णमन्दिरे ।
ध्वजस्रग्वस्त्रकलसपताकातोरणादिभिः॥
नानासुमङ्गलद्रव्यैर्यथाविधि प्रवर्त्तते ।
सुवासितगन्धपुष्पैर्धूपैश्च धूपितैर्गृणन् ॥
मध्ये पञ्चवर्णचूर्णैर्मण्डपं ससरोरुहम् ।
सुषोडशदलाकारं तत्र निर्म्माय यत्नतः ॥
दिव्यासने पद्ममध्ये पश्चिमाभिमुखीं स्थिताम् ।

| | | |
|---|---|---|
| राशब्दश्च महद्विष्णोर्विश्वानि यस्य लोमसु ।<br>विश्वप्राणिषु विश्वेषु धा धात्रीमातृवाचकः ॥<br>धात्री माताहमेतेषां मूलप्रकृतिरीश्वरी ।<br>तेन राधा समाख्याता हरिणा च पुरा बुधैः ॥<br>अहं श्रीदामशापेन वृषभानुसुताधुना ।<br>शतवर्षञ्च विच्छेदो हरिणा सह साम्प्रतम् ॥<br>वृषभानुञ्च कृष्णस्य पार्श्वदप्रवरो महान् ।<br>पितणां मानसी कन्या मम माता कलावती ॥ | | |

श्रीयुग्ममूर्त्तिं सूपास्य ध्यानपाद्यादिभिः क्रमात् ॥
भक्तैः सह सजातीयैः शक्यानुसारवस्तुभिः ।
तद्भक्तः पूजयेद्भक्त्या तां सदा संयतेन्द्रियः ॥"
अथ ध्यानम् ।
"हेमेन्दीवरकान्तिमञ्जुलतरं श्रीमज्जगन्मोहनं नित्याभिर्ललितादिभिः परिवृतं सन्नीलपीताम्बरम् ।
नानाभूषणभूषणाङ्गमधुरं कैशोररूपं युगं गान्धर्व्वाजनमव्ययं सुललितं नित्यं शरण्यं भजे ॥
युग्गमूर्त्तिमिति ध्यात्वा शालग्रामेऽथवा पुनः ।
साक्षात् शैलादिमूर्त्तौ वा मनोमय्यां समर्च्चयेत् ॥
ततो मण्डलपूजाञ्च तयोः सम्मुखतः क्रमात् ।
कुर्य्याद्भक्तः प्रयत्नेन ध्यानपाद्यादिभिः सदा ॥
ललिता पश्चिमे पूज्या पीतवर्णदलेऽपरा ।
चन्द्रावतीं शुक्लदले तद्वामे पूजयेत् सुधीः ॥
वायव्ये श्यामलां देवीं कृष्णवर्णदलेऽर्च्चयेत् ।
तद्वामे चित्ररेखाख्यां शुक्लवर्णदले ततः ॥
उत्तरे श्रीमती त्वर्च्या रक्तवर्णदले तथा ।
तद्वामपार्श्वे चन्द्राख्यां नीलवर्णदलेऽर्च्चयेत् ॥
रक्तवर्णदलेऽप्यर्च्या ईशाने श्रीहरिप्रिया ।
तस्या वामे शुक्लदले पूज्या मदनसुन्दरी ॥
पीतवर्णदले पूर्ब्बे विशाखामर्च्चयेत्ततः ।
प्रियां तस्या वामपार्श्वे शुक्लवर्णदलेऽर्च्चयेत् ॥
अग्निकोणे श्यामवर्णां दले सव्यां समर्च्चयेत् ।
तद्वामे श्रीमधुमतीं शुक्लवर्णदलेऽर्च्चयेत् ॥
पूजयेद्दक्षिणे पद्मां रक्तवर्णदले तथा ।
शशिरेखाञ्च तद्वामे नीलवर्णदलेऽर्च्चयेत् ॥
पूजयेन्नैरृते भद्रां रक्तवर्णदले ततः ।
रसप्रियाञ्च तद्वामे शुक्लवर्णदलेऽर्च्चयेत् ॥ * ॥
श्रीराधाप्रियसङ्गिनीं विधुमुखीं कृष्णप्रियां शुद्धस्वर्णशरीरकान्तिमतुलां शुक्लाम्बरेणावृताम् ।
स्वर्णाद्याभरणां सदा पुलकिनीं श्रीकृष्णभावेन वै
गायन्तीं मधुरस्वरैरविरतं श्रीचित्रलेखां भजे ॥ ४ ॥
कनकनिभशरीरां बिभ्रतीं रक्तवस्त्रं
ललितनलिननेत्रां चारुभूषाङ्गशोभाम् ।
सुमधुरपिकवाक्यां चन्द्रवक्त्रां सुवेशां
मधुरिपुनिजदासीं श्रीमतीं तां हि वन्दे ॥ ५ ॥
वृन्दावनेशनिजसेवनसौख्यदासीं
रम्यां सुनीलवसनां सुरवावयन्त्राम् ।
नानाविभूषिततनुं स्फुरदम्बुजाक्षीं
चन्द्रां भजे सकलरागमनोज्ञगानाम् ॥ ६ ॥
सुवर्णवर्णां शुकधारिणीं तामुपाङ्गयन्त्रां मणिभूषणाङ्गीम् ।
हरिप्रियां मञ्जुलपत्रनेत्रां
भजेऽहमीड्यां कनकाङ्गशोभाम् ॥ ७ ॥
रवावकलवादिनीं सकलरागसंगायिनीं
सुचारुमणिकुण्डलां शरदपूर्णचन्द्राननाम् ।
सुरत्नवरभूषणां रुचिरशुभ्रपट्टाम्बरां
भजे मदनसुन्दरीं कनकवर्णदेहां शुभाम् ॥ ८ ॥
सुतानज्ञां गीते भ्रमरकलकण्ठीं सुचतुरां
जगद्वन्द्यां वेल्लन्नलिननयनामिन्दुवदनाम् ।
विशाखां गौराङ्गीं कलितमुरलीं पीतवसनां
भजे श्यामां सेव्यां सकलगुणपूर्णां सुखमयीम् ॥ ९
सुचामीकराभूषणाढ्यां सुवेशां
सुसङ्गीतविद्यासुधीरां वरेण्याम् ।
सुवंशीसुगानां सुहेमाङ्गशोभां
भजे श्रीप्रियां शुक्लवस्त्रां मनोज्ञाम् ॥ १० ॥
गान्धर्व्वानिजदासिकां सुगदवाग्यन्त्रं सदा बिभ्रतीं
मञ्जुस्वर्णविभूषितां वरतनुं पाथोजनेत्रां वराम् ।
वन्देऽहं मधुरस्वरां परमिकां लावण्यसारान्विताम् ।
नानायन्त्रविशारदां वरतनुं पट्टाम्बरेणावृतां
फुल्लेन्दीवरलोचनामविरतं ध्याये जगन्मोहिनीम् ॥ १५ ॥
श्रीयन्त्रं स्वरमण्डलं कलरवं गाने सदा बिभ्रतीं
श्रीभद्रां मधुरस्वरां सुललितां सद्रक्तवस्त्रावृताम् ।
राजत्स्वर्णरुचिं विभूषणवरैरङ्गैः सदा शोभितां
ध्याये श्रीयुगसेविकां परमिकां ह्लादैकमग्नां सदा ॥ १६ ॥
राधाकृष्णपदारविन्दमधुपीं सद्भृङ्गतुल्यार्थिनीं
नानाभूषणभूषिताङ्गरुचिरां सद्रक्तवस्त्रां शुभाम् ।
ध्याये सन्ततकृष्णभावललितां केयूरहेमाङ्गदां
स्वर्णाङ्गीञ्च रसप्रियां सुखमयीं सर्व्वाङ्गशोभान्विताम् ॥ १७ ॥
मधुस्वरां कोकिलभृङ्गगानां
सतुम्बरीयन्त्रविधारिणीञ्च ।
वनप्रियां शुक्लसुचीनवस्त्रां
भजे हरिद्राङ्गसमञ्जुशोभाम् ॥ १८ ॥
एवं ध्यात्वा पूजयित्वा ललिताद्या यथाक्रमात् ॥
पाद्यादिभिः सोपचारैर्विधिवद्भक्तितत्परः ॥
सङ्गिन्यो ललितादीनां दलात्पश्चिमतो मुने ! ।
प्रणवादिनमोऽन्तेन संप्रदानपदेन वै ।
तत्तन्नाम्ना तु मनुना
पुष्पगन्धादिभिर्मुने ! ॥"

प्रेयसीं
हेमाभां परिवादिनीं सुमधुरध्वानां सुवेशा-
म्बराम् ।
सद्रत्नाभरणैर्मनोज्ञसुतनुं नित्यां जगन्मोहिनीं
वन्दे श्रीललितां कुरङ्गनयनीं पीताम्बरेणावृ-
ताम् ॥ १ ॥
श्यामां श्यामपरायणां वरतनुं चामीकराङ्ग-
च्छटां
मञ्जीरैर्मधुरध्वनिंपरिलसच्चन्द्राननां
सुस्वराम् ।
सद्रत्नाभरणां सरोजनयनीं
शुक्लांशुकेनावृतां
ध्यायेत् श्रीललितासखीं सुचिवुकां
चन्द्रावती-
मुत्तमाम् ॥ २ ॥
कान्त्या काञ्चनसन्निभां सुललितां कृष्णाम्बरं
बिभ्रतीं
नानाभूषणमञ्जुलाञ्च सुदतीं मार्द्दङ्गिकीं सुन्द-
रीम् ।
श्रीवृन्दाविपिनेश्वरीं प्रियसखीं भव्यां
शशाङ्काननां
वेणीचारुसुमल्लिकास्रजममूंनित्यं भजे
श्यामलाम् ॥ ३ ॥
श्रीकृष्णप्रियवल्लभां शशिमुखीं
सच्छब्दडम्फा-
न्वितां

ध्यायेत् कृष्णपदारविन्दमधुपीं
कृष्णाम्बरेणा-
वृतां
संगीते मधुरवरामविरतं सैव्यां मनोहारि-
णीम् ॥ ११ ॥
रुचिरमधुमतीं तां तप्तचामीकराभां
पिककलरवकण्ठीं शुक्लवस्त्रं दधानाम् ।
तिलकुसुमसुनासां चारुहेमाङ्गभूषां
युगलचरणसेवातत्परामाभजेऽहम् ॥ १२ ॥
रत्नालङ्कारदेहां
जितकुसुमरुचीमङ्गलावण्य-
रूपै-
र्भव्यां सङ्गीतविद्यासुनिपुणरसिकां
तानमानाति-
विज्ञाम् ।
शारङ्गीयन्त्रगानां कनकनिभतनुं सर्व्वदा
कृष्ण-
सेवीं
वन्दे पद्मां सुवेशां शशधरवदनां बिभ्रतीं
रङ्ग-
वस्त्रम् ॥ १३ ॥
शशिरेखां मृदङ्गञ्च वादयन्तीं मुहुर्मुहुः ।
रसालापस्वरूपाञ्च रसप्रेमैकसंयुताम् ॥
१४ ॥
भव्यां श्रीशशिरेखिकां सुखमकां यन्त्रादि-
गानांवरां

इति पाद्मेउत्तरखण्डे
श्रीराधाजन्माष्टमीव्रत-
कथनमाहात्म्यं नाम १६२ अध्यायः ॥
श्रीसदाशिव उवाच ।
“प्रत्येकेऽष्टौ पूजयेद्वै क्रमतस्तु दले दले
।
शृणु नाम्ना कथ्यते ताश्चाष्टाविंशाधिकं
शतम् ।
इन्दुमुखी रसज्ञा च शुभदा सुमुखी तथा
।
वल्लवी चन्द्रिका चारुचतुरा च सुचञ्चला
॥
मधुरा हस्तकमला तथा मधुरभाविनी ।
विलासिनी रसवती तथा खञ्जनलोचना
॥
सुखदा चम्पकलिका रसदा रसमञ्जरी ।
सदा सुमञ्जरी शीला चन्द्रा
चन्द्रप्रभावती ॥
वासन्ती मालती जाती चन्द्रकान्ती
सुकुन्तला ।
रम्भा भ्रमरगम्भीरा सुशीला च
सुवेशिनी ॥
आमलकी सुधाकण्ठी श्रिता च
श्रीरतिप्रिया ।
शुकप्रिया मधुकरी सुवेशा चामृतोद्भवा
॥
मुरलीवल्लभा वृन्दा पारिजातप्रिया शुभा
।
पञ्चस्वरा रत्नमाला मदिरा रासवल्लवी
॥
मातङ्गगमनी तारावती कुण्डलधारिणी
।
केशरी मित्रवृन्दा च
लक्षणाच्युतमालिका ॥
मायावती कौशिकी च कोमलाङ्गी
सुचन्दनी ।
पीयूषभाषिणी सत्यवती च कुञ्जवासिनी
॥
कपोतमालिका लोपामुद्रा च
किंशुकप्रिया ।

| | | |
|---|---|---|
| | | दलावती कुङ्कुमा च कमला च मदालसा ॥<br>तिलोत्तमा च सावित्री बहुला प्रियवादिनी ।<br>मुक्तावली चित्ररेखा सुमित्रा लोककुण्डला ॥<br>अरुन्धती चित्रवती श्रीरक्ता पद्मगन्धिनी ।<br>मेनका कलिका रङ्केतकी काममूर्च्छनी ॥ |

कुमुदप्रिया च तानज्ञा तथा नृत्यविलासिनी।
हिरावती हारकण्ठी सिंहमध्या सुलोचना ॥
नन्दव्या नन्दकलिका सुनन्दा नन्ददायिनी।
कुरङ्गाक्षी च सुश्रोणी केलिलोला प्रियंवदा ॥
श्यामाराध्या श्यामसेव्या कस्तूरी मानभञ्जिनी।
विचित्रवसना रत्नमञ्जीरा मञ्जुकिङ्किणी ॥
पिकस्वरा भृङ्गगाना तथा रासविहारिणी।
श्रीकृष्णदक्षिणे पूज्या यत्नात् चन्द्रावली ततः।
ध्यानपाद्यादिभिः सम्यक्प्रकारेण च पूजकैः ॥
हेमाभां मधुरस्वरां विधुमुखीं गान्धर्व्वविद्यारतां
नानामूषणभूषिताङ्गमधुरांजातीसुमल्लीस्रजम्।
वीणायन्त्रसुवादिनीं वरतनुं चित्राम्बरं बिभ्रतीं
ध्याये कृष्णपरायणां सुचिवुकां चन्द्रावलीं
मञ्जुलाम् ॥
एवं राधाजन्मतिथौ कुर्य्यान्मण्डलपूजनम्।
कार्ष्णादीन् वैष्णवान् सर्व्वान् यत्नतः परि-
पूजयेत् ॥
एवं राधाकृष्णपूजां तयोर्मण्डलपूजनम्।
प्रत्यब्दे यत्नतः कुर्य्यात् कार्ष्णे रासमहोत्सवे ॥
न्यूनातिरिक्तं देवर्षे ! न कर्त्तव्यं कदाचन।
श्रीमत्कृष्णैकतानेनावश्यं तेनैव सर्व्वदा ॥
नाहूयेत् शैवशाक्तादीन् राधाजन्ममहोत्सवे।
पाषण्डान् पतितान् कोलानन्त्यजान्न निमन्त्रयेत्
॥
विना भागवताँल्लोकान्न च तत्र प्रवेशयेत्।
गन्धपुष्पादिभिर्माल्यैश्चन्दनैस्तन्निवेदितैः ॥
नानापराधभीतस्तु भक्तांस्तांस्तत्र चार्च्चयेत्।
तत्तन्महाप्रसादैश्च भक्ष्यपेयादिभिस्तथा ॥
तत्तन्मण्डलपूजायाः कार्ष्णो नान्यांश्च भोजयेत्
।
वहिर्मुखान् श्रीकृष्णस्य गान्धर्व्वाभक्तितत्परः ॥
कार्ष्णादीन् वैष्णवान् भक्त्या भोजयेत्
पूजयेत्तथा।
तन्नैवेद्यैर्गन्धपुष्पैर्माल्यैर्मलयजादिभिः ॥
सजातीयैर्भक्तवृन्दैः समं तत्र महोत्सवम्।
दिवा कुर्य्यात् प्रयत्नेन राधाभक्तिपरायणः ॥
महाप्रसादं भुञ्जीत दिनान्ते चरणोदकम्।
पूजां कृत्वा पिबेत् कार्ष्णैः सार्द्धमानन्दितैस्ततः
॥

राधाराधेति यो ब्रूयात् स्मरणं कुरुते नरः।
सर्व्वतीर्थेषु संस्कारात् सर्व्वविद्याप्रयत्नवान्
॥
राधाराधेति कुर्य्याच्चु राधाराधेति पूजयेत्।
राधाराधेति यन्निष्ठा राधाराधेति जल्पति ॥
वृन्दारण्ये महाभागा राधासहचरी भवेत्।
जगतां पृथिवी धन्या तत्र वृन्दावनं पुरी।
तत्र धन्या सती राधा ध्येया या मुनिसत्तमैः
॥
ब्रह्मादीनां महाराध्यां दूरतः सेवते सुरः।
तां राधिकां यो भजते देवर्षे तं भजेमहि ॥
तदालापं कुरुष्वैव जपस्व मन्त्रमुत्तमम्।
अहर्निशं महाभाग कुरु राधेति कीर्त्तनम् ॥
राधेति कीर्त्तनं कुर्य्यात् कृष्णेन सह यो जनः
।
तन्माहात्म्यं न शक्येऽहं वक्तुं शेषोऽत्र नैव च
॥
न गङ्गा न गया नित्यं न हिता च सरस्वती।
कदाचिन्नैव विमुखा सर्व्वतीर्थफलप्रदा ॥
सर्व्वतीर्थमयी राधा सर्व्वैश्वर्य्यमयी पुनः।
कदाचिद्विमुखा लक्ष्मीर्न भवेत्तु तदालये ॥
तस्यालये वसेत् कृष्णो राधया सह नारद ॥
राधाकृष्णेति यस्येष्टं तदेतद्व्रतमुत्तमम्।
तद्गेहे देहमनसोः कदाचिन्न चलेद्धरिः ॥
एतदेवं वचः श्रुत्वा नारदो मुनिसत्तमः।
प्रणतः पूजयामास गोष्ठाष्टम्यां यथोदितम् ॥
जन्माष्टमीव्रतकथां यः शृणोतीह मानवः।
श्रीराधायाः सुखी मानी धनी सर्व्वगुणान्वितः
॥
जपेद्वै भक्तिसंयुक्तः पठेन्नाम्ना स्मरेन्नरः।
धर्म्मार्थी लभते धर्म्ममर्थार्थी लभते धनम् ॥
कामार्थी लभते कामं मोक्षार्थी मोक्षमाप्नु-
यात् ॥
सर्व्वदानन्यशरणः कार्ष्णादिवैष्णवः सुखी।
विवेकी च तथा निष्कामी यदा भक्तिमाप्नु-
यात् ॥”
इति पाद्मे उत्तरखण्डे
श्रीसदाशिवनारदसंवादे

कालिका या महाविद्या पद्मिन्या
इष्टदेवता।
वासुदेवो महाबाहुर्दृष्ट्वा
विस्मयमागतः ॥
पद्मिन्युवाच।
व्रजं गच्छ महाबाहो शीघ्रं हि
भगवन्! प्रभो! ।
त्वया सह महाबाहो कुलाचारं
करोम्यहम् ॥
वासुदेव उवाच।
शृणु पद्मिनि मे वाक्यं कदा ते दर्शनं
भवेत्।
कृपया वद देवेशि! जपं किंवा
करोम्यहम् ॥
पद्मिन्युवाच।
तवाग्रे देवदेवेश मम जन्म
भविष्यति।
गोकुले माथुरे पीठे वृकभानुगृहे
ध्रुवम् ॥
दुःखं नास्ति महाबाहो मम
संसर्गहेतुना।
कुलाचारोपयुक्ता या सामग्री
पञ्चलक्षणा ॥
मालायां तव देवेश सदा स्थास्यति
नान्यथा।
इत्युक्त्वा पद्मिनी सा तु सुन्दर्य्या
दूतिका तदा ॥
अन्तर्ध्यानं ततो गत्वा मालायां
सहसा क्षणात्।
वासुदेवोऽपि तां दृष्ट्वा क्षीराब्धिं
प्रययौ ध्रुवम् ॥
त्यक्त्वा काशीपूरं रम्यं महापीठं
दुरासदम्।
प्रययौ माथुरं पीठं पद्मिनी
परमेश्वरी ॥
यत्र कात्यायनी दुर्गा
महामायास्वरूपिणी।
नारदाद्यैर्म्मुनिश्रेष्ठैः पूजिता
संस्तुता सदा ॥

रात्रौ जागरणं कुर्य्याद्राधाकृष्णेति वा स्मरन् ।
पूजयेन्मूर्त्तिमारोप्य रूप्यस्वर्णादिसंस्कृताम् ॥
अकृत्वान्यकथालापं पूराणाद्यनुकीर्त्तनम् ।
श्रवणीयं प्रयत्नेन नारीभिर्व्वान्धवैः सह ॥
यः करोति नरो भक्त्या राधाजन्माष्टमीं शुभाम् ।
वदन्ति विबुधाः सर्व्वे राधाभक्तोऽस्ति भूतले ॥
प्रहरे प्रहरे राधां गोष्ठाष्टम्यां दिवानिशि ।
पूजयित्वा विधानेन श्रीकृष्णसहितां तथा ॥
तद्रसिकैः सहालापै राधाकृष्णस्मृतिं मुहुः ।
तत्तन्महोत्सवं कृत्वा परमानन्दितो भवन् ॥
दण्डवत् प्रणतिं कुर्य्यादष्टाङ्गविधिबोधिताम् ।
प्रत्यब्दमेव कुरुते राधाजन्ममहोत्सवम् ॥
यः पुमानथवा नारी राधाभक्तिपरायणा ।
भूत्वा वृन्दावने वासः श्रीराधाकृष्णसङ्गिनी ॥
व्रजदासी भवेत् सोऽपि राधाभक्तिपरायणः ।
तस्यालापप्रयोगाच्च मुक्तवन्धो नरो भवेत् ॥

श्रीराधाजन्माष्टमीकथनमाहात्म्ये १६३
अध्यायः ॥
(तन्त्रमतेऽस्या उत्पत्यादिविवरणानि यथा, -
-
कात्यायन्युवाच ।
“वासुदेव महाबाहो मा भयं कुरु पुत्रक ।
मथुरां गच्छ तातेति तव सिद्धिर्भविष्यति ॥
गच्छ गच्छ महाबाहो पद्मिनीसङ्गमाचर ।
पद्मिनी मम देवेश व्रजे राधा भविष्यति ।
अन्याश्च मातृकादेव्यः सदा
तस्यानुचारिकाः ॥
वासुदेव उवाच ।
शृणु मातर्म्महामाये चतुर्वर्गप्रदायिनि ।
त्वां विना परमेशानि ! विद्यासिद्धिर्न जायते
॥
पद्मिनीं परमेशानि ! शीघ्रं दर्शय सुन्दरि ! ।
प्रत्ययं मम देवेशि ! तदा भवति मानसम् ॥
इति श्रुत्वा वचस्तस्य वासुदेवस्य तत्क्षणात्
।
आविरासीत्तदा देवी पद्मिनी परसंस्थिता ॥
रक्तविद्युल्लताकारा पद्मगन्धसमन्विता ।
रूपेण मोहयन्ती सा सखीगणसमन्विता ॥
सहस्रदलपद्मान्तर्म्मध्यस्थानस्थिता सदा ।
सखीगणयुता देवी जपन्ती परमाक्षरम् ॥
एकाक्षरी महेशानि ! सा एव परमाक्षरा ।

कात्यायनी महामाया
यमुनाजलसंस्थिता ।
यमुनायां जलं तत्र साक्षात्
कालीस्वरूपिणी ॥
बहुपत्रयुतं रम्यं शुक्लपीतं
महाप्रभम् ।
रक्तं कृष्णं तथा चित्रं हरितं
सर्व्वमोहनम् ।
कालिन्द्याख्या महेशानि यत्र
कात्यायनी परा ॥
कालिन्दी कालिका माता जगतां
हित-
काम्यया ।
साराध्यास्ते महेशानि !
देवर्षिसंस्तुता परा ।
सहस्रदलपत्रान्तर्म्मध्ये
माथुरमण्डलम् ॥
केशबन्धे महेशानि ! यत् पद्मं
सततं स्थितम् ।
पद्ममध्ये महेशानि ! केशपीठं
मनोहरम् ॥
केशबन्धं महेशानि ! व्रजं
माथुरमण्डलम् ।
यत्र कात्यायनी माया महामाया
जगन्मयी ॥
व्रजं वृन्दावनं देवि !
नानाशक्तिसमन्वितम् ।
शक्तिस्तु परमेशानि ! कलारूपेण
साक्षिणी ।
शक्तिं विना परं ब्रह्म न भाति
शवरूपवत् ॥”
इति वासुदेवरहस्ये राधातन्त्रे षष्ठः
पटलः ॥
देव्युवाच ।
“व्रजं गत्वा महादेवाकरोत् किं
पद्मिनी तदा ।
कस्य वा भवने सा तु जाता सा
पद्मिनी परा ॥
तत् सर्व्वं परमेशान विस्ताराद्वद
शङ्कर ।

| | | |
|---|---|---|
| | | यदि नो कथ्यते देव विमुञ्चामि तदा तनुम् ॥<br>ईश्वर उवाच ।<br>पद्मिनी पद्मगन्धा सा वृकभानुगृहे प्रिये ! ।<br>आविरासीत्तदा देवी कृष्णस्य प्रथमं प्रिया ।<br>चैत्रे मासि सिते पक्षे नवम्यां पुष्यसंयुते ॥<br>कालिन्दीजलकल्लोले नानापद्मगणावृते ।<br>अविरासीत्तदा पद्मा मायाडिम्बमुपाश्रिता ॥<br>डिम्बोभूत्वा तदा पद्मा स्थिता कनकमध्यतः ।<br>कोटिचन्द्रप्रतीकाशं डिम्बं मायासमन्वितम् ॥<br>पुष्ययुक्तनवम्यां वै निश्यर्द्धे पद्ममध्यतः । |

आविरासीत्तदा पद्मा रङ्गिणी कुसुमप्रभा ॥
तरुणादित्यसङ्काशे पद्मे परमकामिनी ।
वृकभानुपुरं देवि ! कालिन्दीपारमेव च ।
नाम्ना पद्मपुरं रम्यं चतुर्व्वर्गसमन्वितम् ॥
डिम्बज्योतिर्म्महेशानि !
सहस्रादित्यसन्निभम् ।
तत्क्षणात् परमेशानि
गाढध्वान्तविनाशकृत् ॥
वृकभानुर्म्महात्मा स
कालिन्दीतटमास्थितः ।
महाविद्यां महाकालीं सततं प्रजपेत्सुधीः
॥
आविरासीन्महामाया तदा कात्यायनी
परा ।
शृणु पुत्र महाबाहो वृकभानो महीधर ।
सिद्धोऽसि पुरुषश्रेष्ठ वरं वरय साम्प्रतम् ॥
वृकभानुरुवाच ।
सिद्धोऽहं सततं देवि ! त्वत्प्रसादात्
सुरेश्वरि ! ।
त्वत्प्रसादान्महामाये यथा मुक्तो
भवाम्यहम् ॥
त्वत्प्रसादान्महामाये असाध्यं नास्ति
भूतले ।
आत्मनः सदृशाकारां कन्यामेकां प्रयच्छ
मे ॥
तच्छ्रुत्वा परमेशानि ! तदा कात्यायनी
परा ।
मेषगम्भीरया वाचा यदाह वृकभानवे ॥
तच्छृणुष्व महेशानि ! पीयूषसदृशं वचः ।
भक्त्या त्वदीयपत्न्यास्तु तुष्टाहं त्वयि
सुन्दरि ! ॥
एतद्धि वचनं वत्स ! तव पत्न्या सुयुज्यते
।
इत्युक्त्वा सहसा तत्र महामाया जगन्मयी
॥
प्रददौ परमेशानि ! तस्मै डिम्बं मनोहरम् ।
वृकभानुर्म्महात्मा स तत्क्षणाद्गृहमाययौ
॥

महादेव उवाच ।
श्रूयतां पद्मपत्राक्षि रहस्यं पद्मिनीमतम् ।
सम्प्राप्ते परमेशानि ! द्वितीये वत्सरे तदा
॥
कुर्य्याद्यत्नेन देवेशि ! शिवलिङ्गप्रपूजनम्
।
प्रजपेत् परमां विद्यां कालीं
ब्रह्माण्डरूपिणीम् ॥
पूजयेद्विविधैः पुष्पैर्गन्धैश्च सुमनोहरैः ।
फलैर्ब्बहुविधैर्भद्रे पूजयेत् परमेश्वरीम् ॥
पद्मिन्युवाच ।
कात्यायनि महामाये
महायोगिन्यधीश्वरि ! ।
देहि देहि महामाये विद्यासिद्धिमनुत्तमाम्
॥
सिद्धिञ्च वासुदेवस्य देहि मातर्नमोऽस्तु ते
।
त्वां विना ब्रह्म निःशब्दं निश्चलं सततं
सदा ॥
शरीरस्थं हि कृष्णस्य कृष्णो ज्योतिर्म्मयं
सदा ।
विना देहं परं ब्रह्म शवरूपवदीरितम् ॥
अतएव महामाये ब्रह्मणः कारणं परा ।
एवं प्रार्थ्य महेशानि ! सततं परमेश्वरीम्
॥
संपूज्य परया भक्त्या लक्ष्यं जप्त्वा तु
मानसम् ।
वरं प्राप्ता महेशानि कात्यायन्याः
समीपतः ॥
कात्यायन्युवाच ।
पद्मिनि शृणु मद्वाक्यं शीघ्रं प्राप्स्यसि
केशवम् ।
इत्युक्त्वा परमेशानि ! तत्रैवान्तरधीयत
॥
कात्यायनी महामाया सदा वृन्दावनेश्वरी
।
वृकभानुसुता राधा सखीगणवृता सदा ॥
वर्द्धमाना सदा राधा यथा चन्द्रकला
प्रिये ! ।

कन्दर्पकुहरी नाम कटिका पुष्पभूषिता ।
स्वर्णमुखीतडिद्वली कुण्डा ख्याता
स्वनामतः ॥
नीपा नदीतटे यस्य रहस्यकथनस्थली ।
मन्दारश्च धनुः स्त्रीश्च रागोहृदयमन्दगौ ॥
छानिक्यं दयिता नित्यं वल्लभा रुद्रधन्वकी ।
सख्यः ख्याताः सदा
भद्राचारुचन्द्रावलीमुखाः ॥
गन्धर्व्वास्तु कलाकण्ठी सुकण्ठी
पिककण्ठिका ।
कलावती रसोल्लासा गुणवत्यादयः स्मृताः
॥
या विशाखाकृतागीतिर्गायन्त्यः सुखदा हरेः
।
वादयन्त्यद्य शुषिरंताललब्धघनन्त्वपि ॥
माणिक्या नर्म्मदा प्रेमवती कुसुमपेषलाः ।
दिवाकीर्त्तेस्तनूजे तु सुगन्धानलिनीत्युभे ॥
मञ्जिष्ठा रङ्गवत्याख्ये रजकस्य किशोरिके ।
पालिन्धिसमसैरिन्ध्री वृन्दाकन्दलतादयः ॥
धनिष्ठा गुणवत्याद्या धन्ववेश्वरगेहगाः ।
कामधा नामधा प्रेयी सखीभावविशेषभाक्
॥
लवङ्गमञ्जरी रागमञ्जरी गुणमञ्जरी ।
सुभानुसत्यनुपमा सुप्रिया रतिमञ्जरी ॥
रागलेखा कलाकेली भूविदाद्याश्च नायिकाः
।
नान्दीमुखी बिन्दुमुखी आद्याः सन्धिविधा-
यिकाः ॥
सुहृत्पद्मतया ख्याताः श्यामला मङ्गलादयः
।
प्रतिपक्षतया श्रेष्ठा राधाचन्द्रावलीत्युभे ॥
समूहास्तु ययोः सन्ति
कोटिसंख्यामृगीदृशाम् ।
तयोरप्युभयोर्म्मध्ये सर्व्वमाधुर्य्यतोऽधिका
॥
श्रीराधा त्रिपुरादूती पुराणपुरुषप्रिया ।
असमानगुणोदर्य्या धूर्य्यो गोपेन्द्रनन्दनः ॥
यस्याः प्राणपरार्द्धानां परार्द्धदतिवल्लभः ।
श्रेष्ठा सा मातृकादिभ्यस्तत्र गोपेन्द्रगेहिनी ।

भार्य्या तस्य विशालाक्षी विशालकटिमोहिनी।
रत्नप्रदीपमाभाष्य रत्नपर्य्यङ्कमाश्रिता ॥
तस्या हस्ते तदा भानुः प्रददौ डिम्बमोहनम्।
तं दृष्ट्वा परमेशानि ! विस्मयं परमं गता ॥
हस्ते कृत्वा तु डिम्बं वै निरीक्ष्य च पुनः पुनः ।
नानागन्धयुतं डिम्बं सर्व्वशक्तिसमन्वितम् ॥
नानाज्योतिर्म्मयं डिम्बं तत्क्षणाच्च द्विधाभवत्।
तत्रापश्यन्महाकन्यां पद्मिनीं कृष्णमोहिनीम् ॥
रक्तविद्युल्लताकारां सर्व्वसौभाग्यवर्द्धिनीम् ।
तां दृष्ट्वा परमेशानि सहसा विस्मयं गता ॥
कीर्त्तिदोवाच।
हे मातः पद्मिनीरूपे रूपं संहर संहर ।
ततस्तु परमेशानि ! तद्रूपं तत्क्षणात् प्रिये ! ॥
संहृत्य सहसा देवी सामान्यं रूपमास्थिता।
ततस्तु कीर्त्तिदा देवी रूपन्तस्या व्यलोकयत् ॥
रङ्गिणी कुसुमाकारा रक्तविद्युत्समप्रभा ॥
कन्योवाच।
हे मातः कीर्त्तिदे भद्रे क्षीरं पायय सुन्दरि ! ।
स्तनं देहि स्तनं देहि तव कन्या भवाम्यहम् ॥
तत्श्रुत्वा वचनं तस्याः पद्मिन्याः कमलेक्षणे ।
अपाययत् स्तनं तस्यै पद्मिन्यै नगनन्दिनि ॥
चकार नाम तस्यास्तु भानुः कीर्त्तिदयान्वितः।
रक्तविद्युत्प्रभां देवी धत्ते यस्मात् शुचिस्मिते।
सर्व्वशृङ्गारवेशाढ्या स्फुरच्चकितलोचना ॥
सर्व्वालङ्कारसंयुक्ता साक्षात् श्रीरिव पार्व्वति ।
चचार गहने घोरे पद्मिनी परसुन्दरी ॥
या राधा परमेशानि ! पद्मिनी परमेश्वरी ।
पद्मस्य वनमाश्रित्य सदा तिष्ठति कामिनी ॥
अन्यमूर्त्तिं महेशानि ! दृष्ट्वा चैवात्मसन्निभाम्।
आत्मनः सदृशाकारां राधामन्यां ससर्ज्ज सा ॥
या सा तु कृत्रिमा राधा वृकभानुगृहे सदा ।
अयोनिसम्भवा यातु पद्मिनी सा पराक्षरा ॥
कृत्रिमा या महेशानि ! तस्यास्तु चरितं शृणु ।
वृकभानुर्म्महात्मा स तस्या वैवाहिकीं क्रियाम् ॥
कारयामास यत्नेन पञ्चवर्षे तु सुन्दरि ! ।
तस्यास्तु चोभयं वंशं सावधानावधारय ॥
श्वशुरस्य वृकस्यापि वंशं परमसुन्दरम्।
श्वश्रूस्तु जटिला ख्याता पतिर्म्मान्योऽतिमन्युकः ॥
ननान्दा कुटिलानाम्नी देवरो दुर्म्मदाभिधः ।
तिलकं स्मरमादाख्यं हरोहरिमनोहरः ॥
रोचनो रत्नताडङ्को घृणियुक्तप्रभाकरी ।
छत्रं दृष्ट्वा प्रतिच्छायं पद्मञ्च मदनाभिधम् ॥
स्यमन्तकान्यपर्य्यायः शङ्खचूडशिरोमणिः ।
पुष्पवन्तोक्षिपलकः सौभाग्यमणिरुच्यते ॥
काञ्ची काञ्चनचित्राङ्गि नूपुरे चित्रगोपुरे ।
मधुसूदनमाबद्धा ययोः सिञ्जितमाधुरी ॥
वासो मेघाम्बरं नाम कुरुविन्दनिभं सदा ।
आद्यं सुप्रियमभ्राभं रक्तमन्त्यं हरेः प्रियम् ॥
सुधांशो दर्पहरणो दर्पणो मणिबान्धवः ।
वृषभानुः पिता यस्या वृषभानुविधो महान् ।
रत्नगर्भा क्षितौ ख्याता जननी कीर्त्तिदा क्षया ॥
उपास्यो जगतां चक्षुर्भगवान् पद्मबान्धवः ।
जप्यः स्वाभीष्टसंसर्गे कात्यायन्या महामनुः ॥
पौर्णमासी भगवती सर्व्वसौभाग्यवर्द्धिनी।
पितामहो महीभानुर्व्विन्दुर्म्मातामहो मतः ॥
मातामहीपितामह्यौ सुखदामोक्षदाभिधे।
रत्नभानुः स्वभानुश्च भानुश्च भ्रातरः पितुः ॥
भद्रकीर्त्तिर्म्महाकीर्त्तिः कीर्त्तिचन्द्रश्च मातुलः ।
स्वसा कीर्त्तिमती मातुर्भानुमुद्रा पितृष्वसा ॥
पितृष्वसृपतिः काश्यो मातृष्वसृपतिः कृशः ।
मातुली मेनकामेना षष्ठी धात्री तु धातकी ॥
श्रीदामा पूर्ब्बजो भ्राता कनिष्ठानङ्गमञ्जरी।
परमप्रेष्ठसख्यस्तु ललिता च विशाखिका ॥
विचित्रा चम्पकलता रङ्गदेवी सुदेविका ।
तुङ्गवेद्यङ्गलेखा च इत्यष्टौ च गणा मताः ॥
प्रियसख्यः कुरङ्गाक्षी मण्डली मानकुण्डला ।
मालती चन्द्रलतिका माधवामदनालसा ॥
मञ्जुमेया शशिकला सुमध्या मधुमेक्षणा ।
कमला कामलतिका कान्तचूडा वराङ्गना ॥
मधूरी चन्द्रिका प्रेममञ्जरी तनुमध्यमा ।
कन्दर्पसुन्दरी मञ्जुवेशी चाद्यास्तु कोटिशः ॥
रक्ताजीवितयाख्याता कलिका केलिसुन्दरी ।

| | | |
|---|---|---|
| तस्मात्तु राधिका नाम सर्व्वलोकेषु गीयते ॥<br>ईश्वर उवाच ।<br>दिने दिने वर्द्धमाना वृकभानुगृहे प्रिये ! ।<br>एवं माथुरपीठे च चकार व्रजवासिनी ॥<br>तस्माद्भाद्रपदे मासि कृष्णोऽभूत् कमलेक्षणः ॥ | शलाका नर्म्मदा हैमी स्वस्तिका नाम कङ्कतिः ॥ | |

कादम्बरी शशिमुखी चन्द्ररेखा प्रियंवदा ॥
मदोन्मादा मधुमती वासन्ती कलभाषिणी ।
रत्नवेणी मालवती कर्पूरतिलकादयः ॥
एता वृन्दावनेश्वर्य्याः प्रायः सारूप्यमागताः ।
नित्यसख्यस्तु कस्तूरी मनोज्ञा मणिमञ्जरी ॥
सिन्दूरा चन्दनवती कौमुदी मुदितादयः ।
काननादिगतास्तस्या विहारार्थं कला इव ॥
अथ तस्याः प्रकीर्त्यन्ते प्रेयस्यः परमाद्भुताः ।
वनादित्योप्युरुप्रेमसौन्दर्य्यभरभूषिताः ॥
चन्द्रावली च पद्मा च श्यामा सैका च भद्रिका ।
तारा चित्रा च गन्धर्व्वी पालिका चन्द्रमालिका ॥
मङ्गला विमला नीला भवनाक्षी मनोरमा ।
कल्पलता तथा मञ्जुभाषिणी मञ्जुमेखला ॥
कुमुदा कैरवी पारी शारदाक्षी विशारदा ।
शङ्करी कुसुमा कृष्णा सारङ्गी प्रविलाशिनी ॥
तारावती गुणवती सुमुखी केलिमञ्जरी ।
हारावली चकोराक्षी भारती कामिनीति च ॥
आसां यूथानि शतशः ख्यातान्यन्यानि सुभ्रुवाम् ।
लक्षसंख्यास्तु कथिता यूथे यूथे वराङ्गनाः ॥
मुख्यास्तु तेषु यूथेषु कान्ताः सर्व्वगुणोत्तमाः ।
राधा चन्द्रावली भद्रा श्यामला पालिकादयः ॥
जन्मनाम्नाथ सा ख्याता मधुमासे विशेषतः ।
पुष्यर्क्षे च नवम्यां वै शुक्लपक्षे शुचिस्मिते ॥
जाता राधा महेशानी स्वयं प्रकृतिपद्मिनी ।
तासु रेमे महेशानि स्वयं कृष्णः शुचिस्मिते ।
रमणं वासुदेवस्य मन्त्रसिद्धेस्तु कारणम् ॥
देव्युवाच ।
भो देव तापसां श्रेष्ठ विस्ताराद्वद ईश्वर ।
कथं सा पद्मिनी राधा सदा पद्मवने स्थिता ॥
पितरं मातरं त्यक्त्वा आत्मतुल्यां ससर्ज्ज सा ।
पद्ममाश्रित्य देवेश वृन्दावनविलासिनी ।
सदाध्यास्ते महेशानि एतद्गुह्यं वद प्रभो ! ॥"
इति वासुदेवरहस्ये राधातन्त्रे सप्तमः पटलः ॥
ईश्वर उवाच ।
"या राधा मृगशावाक्षि ! पद्मिनी विष्णुवल्लभा ।
महामाया जगद्धात्री त्रिपुरा परमेश्वरी ॥
तस्या दूती महेशानि पद्मिनी पद्मगन्धिनी ।
कृष्णस्य दृढभक्ता तु पद्मिनी तस्य बल्लभा ॥

अस्याः सहस्रनामानि यथा, --
पार्व्वत्युवाच ।
"देवदेव जगन्नाथ मक्तानुग्रहकारक ।
यद्यस्ति मयि कारुण्यं यद्यस्ति मयि ते दया ॥
यद्यत् त्वया प्रगदितं तत् सर्व्वं मे श्रुतं प्रभो ।
गुह्यात् गुह्यतरं यत्तु यत्ते मनसि काशते ॥
त्वया न गदितं यत्तु यस्मै कस्मै कदाचन ।
तन्मां कथय देवेश सहस्रं नाम चोत्तमम् ॥
श्रीराधाया महादेव्या गोप्या भक्तिप्रसाधनम् ।
ब्रह्माण्डकर्त्री हर्त्री सा कथं गोपीत्वमागता ॥
महादेवौवाच ।
शृणु देवि ! विचित्रार्थां कथां पापहरां शुभाम् ।
सन्ति जन्मानि कर्म्माणि तस्या नूनं महेश्वरि ! ॥
यदा हरिश्चरित्राणि कुरुते कार्य्यगौरवात् ।
तदा विधत्ते रूपाणि हरिसान्निध्यसाधिनी ॥
तस्या गोपीत्वभावस्य कारणं गदितं पुरा ।
इदानीं शृणु देवेशि ! नाम्नां चैव सहस्रकम् ॥
यन्मया कथितं नैव तन्त्रेष्वपि कदाचन ।
तव स्नेहात् प्रवक्ष्यामि भक्त्या धार्य्यं मुमुक्षुभिः ॥
मम प्राणसमा विद्या भाव्यते मे त्वहर्निशम् ।
शृणुष्व गिरिजे नित्यं पठस्व च यथामति ॥

गतिर्गतिमतां धात्री धात्रानन्दप्रदायिनी ॥
जगन्नाथप्रिया शैलवासिनी हेमसुन्दरी ।
विचित्रवासिनी चित्रवासिनी चित्ररूपिणी ॥
निर्गुणा सुकुलीना च निष्कुलीना निराकुला ।
गोकुलान्तरगेहा च योगानन्दकरी तथा ॥
वेणुवाद्या वेणुरतिर्वेणुवाद्यपरायणा ।
गोपालस्य प्रिया सौम्या रम्या सौम्यकुलोद्भवा ॥
अतिसौम्यातिमोहा च गतिरिष्टा गतिप्रदा ।
गीर्व्वाणवन्द्या गीर्व्वाणा गीर्ब्बाणगणसेविता ॥
ललिता च विशोका च विशाखा चित्र-मालिनी ।
जितेन्द्रिया शुद्धसत्त्वा कुलीना कुलदीपिका ॥
दीपप्रिया दीपदात्री विमला विमलोदका ।
कान्तारवासिनी कृष्णा कृष्णचन्द्रप्रिया मतिः ॥
अनुत्तरा दुःखहन्त्री दुःखकर्त्री कुलोद्भवा ।
मतिर्लक्ष्मीर्धृ तिर्लज्जा कान्तिः पुष्टिः स्मृतिः क्षमा ॥
क्षीरोदशायिनी देवी देवारिकुलमर्द्दिनी ।
वैष्णवी च महालक्ष्मीः कुलपूज्या कुलप्रिया ॥
संहर्त्री सर्व्वदैत्यानां सावित्री वेदगामिनी ।
वेदातीता निरालम्बा निरालम्बगणप्रिया ॥
निरालम्बजनैः पूज्या निरालोका निराश्रया ।

वृकभानोर्म्महेशानि दृढभक्तिः शुचिस्मिते ।
दुहितृत्वं गता देवी पद्मिनी गन्धमालिनी ॥
कृत्वा तु स्तनपानं हि राधामन्यां ससर्ज्ज सा ।
पद्मषण्डं समाश्रित्य यमुनाजलमध्यतः ॥
महाकाल्या महामन्त्रं प्रजपेन्निर्ज्जने वने ।
अन्या चन्द्रावली राधा वृकभानुगृहे स्थिता ॥
पूर्ब्बोक्तं यद्गुणं देवि पद्मिनी कमलेक्षणे ।
तत् सर्व्वं पद्मिनीसृष्टं नान्यथा परमेश्वरि ॥
राधिका त्रिविधा प्रोक्ता चन्द्रा तु पद्मिनी तथा ।
न पश्येत् परमेशानि चन्द्रसूर्य्यं शुचिस्मिते ॥
मानवानां महेशानि वराकाणां हि का कथा ।
आत्मनोऽपह्नवं कृत्वा पद्मिनी पद्ममाश्रिता ।
त्रिपुराया महेशानि पद्मिनी अनुचारिणी ॥"
इति वासुदेवरहस्ये राधातन्त्रे अष्टमः पटलः ॥)

यस्याः प्रसादात् कृष्णस्तु गोलोकेशः परः
प्रभुः । * ।
अस्या नामसहस्रस्य ऋषिर्नारद एव च
॥
देवी राधा परा प्रोक्ता चतुर्व्वर्गप्रसाधिनी
।
श्रीराधा राधिका कृष्णबल्लभा
कृष्णसंयुता ॥
वृन्दावनेश्वरी कृष्णप्रिया मदनमोहिनी
।
श्रीमती कृष्णकान्ता च
कृष्णानन्दप्रदायिनी ॥
यशस्विनी यशोगण्या
यशोदानन्दवल्लभा ।
दामोदरप्रिया गोपी गोपानन्दकरी तथा
॥
कृष्णाङ्गवासिनी हृद्या हरिकान्ता
हरिप्रिया ।
प्रधाना गोपिका गोपकन्या
त्रैलोक्यसुन्दरी ॥
वृन्दावनविहारी च
विस्फूर्ज्जितमुखाम्बुजा ।
गोपकुलानन्दकर्त्री गोकुलानन्ददायिनी
॥
गतिप्रदा गीतगम्या आगमागमनप्रिया ।
विष्णुप्रिया विष्णुकान्ता
विष्णोरङ्गनिवासिनी ॥
यशोदानन्दपत्नी च यशोदानन्दगेहिनी
।
कामारिकान्ता कामेशी
कामलालसविग्रहा ॥
जयप्रदा जया जीवा जीवानन्दप्रदायिनी
।
यशोदानन्दपत्नी च वृषभानुसुता शिवा
॥
गणाध्यक्षा गवाध्यक्षा गवां गतिरनुत्तमा
।
काञ्चनाभा हेमगात्री काञ्चनाङ्गदधारिणी
॥

एकाङ्गी सर्व्वगा सेव्या विष्णोः पत्नी
सरस्वती ॥
रासप्रिया रासगम्या रासाधिष्ठातृदेवता
।
रसिका रसिकानन्दा स्वयं रासेश्वरी
परा ॥
रासमण्डलमध्यस्था
रासमण्डलशोभिता ।
रासमण्डलसेव्या च रासक्रीडामनोहरा
॥
पुण्डरीकाक्षनिलया पुण्डरीकाक्षगेहिनी
।
पुण्डरीकाक्षसेव्या च पुण्डरीकाक्षवल्लभा
॥
सर्व्वजीवेश्वरी सर्व्वजीववन्द्या परात्परा
।
प्रकृतिः शम्भुकान्ता च
सदाशिवमनोहरा ॥
क्षुत् पिपासा दया निद्रा भ्रान्तिः श्रान्तिः
क्षमा
कुला ।
विधुरूपा गोपपत्नी भारती सिद्धयोगिनी
॥
शत्रुरूपा मित्ररूपा नित्याङ्गी
नित्यगेहिनी ।
स्थानदात्री तथा धात्री महालक्ष्मीः
स्वयंप्रभा ॥
सिन्धुकन्या स्थानदात्री द्वारकावासिनी
तथा ।
बुद्धिः स्थितिः स्थानरूपा
सर्व्वकारणकारणम् ॥
भक्तप्रिया भक्तगम्या भक्तानन्दप्रदायिनी
।
भक्तकल्पद्रुमातीता तथातीतगुणा तथा
॥
मनोऽधिष्ठातृदेवी च कृष्णप्रेमपरायणा ।
निरामया सौम्यदात्री तथा मदनमोहिनी
॥
एकानंशा शिवा क्षेमा दुर्गा दुर्गतिनाशिनी
।

| | | |
|---|---|---|
| | अशोका शोकरहिता विशोका शोकनाशिनी ।<br>गायत्री वेदमाता च वेदातीता विदुत्तमा ॥<br>नीतिशास्त्रप्रिया नीतिर्गतिर्म्मतिरभीष्टदा ।<br>वेदप्रिया वेदगर्भा वेदमार्गप्रवर्द्धिनी ॥<br>वेदगम्या वेदपरा विचित्रकनकोज्ज्वला ।<br>तथोज्ज्वलप्रदा नित्या तथैवोज्ज्वलगात्रिका ॥<br>नन्दप्रिया नन्दसुता राधानन्दप्रदा शुभा ।<br>शुभाङ्गी विमलाङ्गी च विलासिन्यपराजिता ॥<br>जननी जन्मशून्या च जन्ममृत्युज्वरापहा । | ईश्वरी सर्व्ववन्द्या च गोपनीया शुभङ्करी ॥<br>पालिनी सर्व्वभूतानां तथा कामाङ्गहारिणी ।<br>सद्योमुक्तिप्रदा देवी वेदसारा परात्परा ॥<br>हिमालयसुता सर्व्वा पार्व्वती गिरिजा सती ।<br>दक्षकन्या देवमाता मन्दलज्जा हरेस्तनुः ॥<br>वृन्दारण्यप्रिया वृन्दा वृन्दावनविलासिनी ।<br>विलासिनी वैष्णवी च ब्रह्मलोकप्रतिष्ठिता ॥<br>रुक्मिणी रेवती सत्यभामा जाम्बवती तथा ।<br>सुलक्षणा मित्रविन्दा कालिन्दी जह्नुकन्यका ॥ |

परिपूर्णा पूर्णतरा तथा हैमवती गतिः ।
अपूर्व्वा ब्रह्मरूपा च
ब्रह्माण्डपरिपालिनी ॥
ब्रह्माण्डभाण्डमध्यस्था
ब्रह्माण्डभाण्डरूपिणी ।
अण्डरूपाण्डमध्यस्था
तथाण्डपरिपालिनी ॥
अण्डवाह्याण्डसंहन्त्री
ब्रह्मशिवहरिप्रिया ।
महाविष्णुप्रिया कल्पवृक्षरूपा निरन्तरा
॥
सारभूता स्थिरा गौरी गौराङ्गी
शशिशेखरा ।
श्वेतचम्पकवर्णाभा शशिकोटिसमप्रभा
॥
मालतीमाल्यभूषाढ्या
मालतीमाल्यधारिणी ।
कृष्णस्तुता कृष्णकान्ता
वृन्दावनविलासिनी ॥
तुलस्यधिष्ठातृद्वेवी संसारार्णवपारदा ।
सारदा हारदा गोपनन्दिनी
सर्व्वसिद्धिदा ॥
अतीतगमना गौरी परानुग्रहकारिणी ।
करुणार्णवसंपूर्णा करुणार्णवधारिणी ॥
माधवी माधवमनोहारिणी श्यामवल्लभा
।
अन्धकारभयध्वस्ता मङ्गल्या
मङ्गलप्रदा ॥
श्रीप्रभा श्रीप्रदा श्रीशा
श्रीनिवासाच्युतप्रिया ।
श्रीरूपा श्रीहरा श्रीदा श्रीकामा
श्रीस्वरूपिणी ॥
श्रीदामानन्ददात्री च श्रीदामेश्वरवल्लभा
।
श्रीनितम्बा श्रीगणेशा श्रीस्वरूपाश्रिता
श्रुतिः ॥
श्रीक्रियारूपिणी श्रीला
श्रीकृष्णभजनाश्रिता ।

रतिरूपा रतिप्रीता रतिश्रेष्ठा रतिप्रदा ।
रतिलक्षणगेहस्था विरजा भुवनेश्वरी ॥
शङ्कास्पदा हरेर्जाया जामातृकुलवन्दिता ।
वकुला वकुलामोदधारिणी यमुना जया ॥
विजया जयपत्नी च यमलार्ज्जुनभञ्जिनी ।
वक्रेश्वरी वक्ररूपा वक्रवीक्षणदीक्षिता ॥
अपराजिता जगन्नाथा जगन्नाथेश्वरी मतिः ।
खेचरी खेचरसुता खेचरत्वप्रदायिनी ॥
विष्णुवक्षःस्थलस्था च विष्णुभावनतत्परा ।
चन्द्रकोटिसुगात्रा च चन्द्राननमनोहरा ॥
सर्व्वसेव्या शिवा क्षेमा तथा क्षेमङ्करी बधूः ।
यादवेन्द्रबधूः शैव्या शिवभक्ता शिवान्विता ॥
केवला निष्कला सूक्ष्मा महाभीमा भयप्रदा ।
जीमूतरूपा जैमूती जिता मित्रप्रमोदिनी ॥
गोपालवनितानङ्गा कुलजेन्द्रनिवासिनी ।
जयन्ती यमुनाङ्गी च यमुनातोषकारिणी ॥
कलिकल्मषभङ्गा च कलिकल्मषनाशिनी ।
कलिकल्मषरूपा च नित्यानन्दकरी कृपा ॥
कृपावती कुलवती कैलासाचलवासिनी ।
वामदेवी वामभागा गोविन्दप्रियकारिणी ॥
नगेन्द्रकन्या योगेशी योगिनी योगरूपिणी ।
योगसिद्धा सिद्धरूपा सिद्धक्षेत्रनिवासिनी ॥
क्षेत्राधिष्ठातृरूपा च क्षेत्रातीता कुलप्रदा ।
केशवानन्ददात्री च केशवानन्ददायिनी ॥
केशवा केशवप्रीता कैशोरी केशवप्रिया ।
रासक्रीडाकरी रासवासिनी राससुन्दरी ॥
गोकुलान्वितदेहा च गोकुलत्वप्रदायिनी ।
लवङ्गनाम्नी नारङ्गी नारङ्गकुलमण्डला ॥
एलालवङ्गकर्पूरमुखवासमुखान्विता ।
मुख्या मुख्यप्रदा मुख्यरूपा मुख्यप्रदायिनी ॥
नारायणी कृपा राधा करुणा करुणामयी ।
कारुण्या करुणाकर्णी गोकर्णा नागकर्णिका ॥
सर्पिणी कौलिनी क्षेत्रवासिनी च जगन्मयी ।
जटिला कुटिला नीला नीलाम्बरधरा शुभा ॥
नितम्बिनी रूपवती युवती कृष्णपीवरी ।
विभावरी वेत्रवती संकटा कुटिलालका ॥
नारायणप्रिया शैला सृक्कणीपरिमोहिता ।
दृक्पातमोहिता प्रातराशितनवनीतिका ॥
नवीना नवनारी च नारङ्गफलशोभिता ।

गजेन्द्रगामिनी श्यामलतानङ्गलता तथा ।
योषिच्छक्तिस्वरूपा च
योषिदानन्दकारिणी ॥
प्रेमप्रिया प्रेमरूपा प्रेमानन्दतरङ्गिणी ।
प्रेमहरा प्रेमदात्री प्रेमशक्तिमयी तथा ॥
कृष्णप्रेमवती धन्या कृष्णप्रेमतरङ्गिणी ।
प्रेमार्थदायिनी सर्व्वश्वेता नित्यतरङ्गिणी
॥
हावभावान्विता रौद्रा रुद्रानन्दप्रकाशिनी
।
कपिला शृङ्खला केशपाशसम्बर्द्धिनी धटी
॥
कुटीरवासिनी धूम्रा धूम्रकेशा जनोदरी ।
ब्रह्माण्डगोचरा ब्रह्मरूपिणी भवभाविनी ॥
संसारनाशिनी शैवा शैवानन्दप्रदायिनी ।
शिशिरा हेमरागाढ्या मेघरूपातिसुन्दरी
॥
मनोरमा वेगवती वेगाढ्या वेदवादिनी ।
दयान्विता दयाधारा दयारूपा सुसेविनी
॥
किशोरसङ्गसंसर्गा गौरचन्द्रानना कला ।
कलाधिनाथवदना कलानाथाधिरोहिणी
॥
विरागकुशला हेमपिङ्गला हेममण्डला ।
भाण्डीरतालवनगा कैवर्त्ती पीवरी शुकी ॥
शुकदेवगुणातीता शुकदेवप्रियासखी ।
विकलोत्कर्षिणी कौषा
कौषेयाम्बरधारिणी ॥
कोषावरी कोषरूपा जगदुत्पत्तिकारिका ।
सृष्टिस्थितिकरी संहारिणी संहारकारिणी
॥
केशशैवालधात्री च चन्द्रगात्रा सुकोमला ।
पद्माङ्गरागसंरागा विन्ध्याद्रिपरिवासिनी
॥
विन्ध्यालया श्यामसखी सखी
संसाररागिणी ।
भूता भविष्या भव्या च भव्यगात्रा
भवातिगा ॥

श्रीराधा श्रीमतिः श्रेष्ठा श्रेष्ठरूपा श्रुतिप्रिया ॥
योगेशा योगमाता च योगातीता युगप्रिया ।
योगप्रिया योगगम्या योगिनीगणवर्द्धिता ॥
जवाकुसुमसङ्काशा दाडिमीकुसुमोपमा ।
नीलाम्बरधरा धारी धैर्य्यरूपा धरा धृतिः ॥
रत्नसिंहासनस्था च रत्नकुण्डलभूषिता ।
रत्नालङ्कारसंयुक्ता रत्नमाल्यधरा परा ॥
रत्नेन्द्रसारहाराढ्या रत्नमालाविभूषिता ।
इन्द्रनीलमणिन्यस्तपादपद्मा शुभा शुचिः ॥
कार्त्तिकी पौर्णमासी च अमावस्या भयापहा ।
गोविन्दराजगृहिणी गोविन्दराजपूजिता ॥
गोविन्दार्पितचित्ता च गोपीजनगणान्विता ।
वैकुण्ठनाथगृहिणी गोविन्दपरमानसा ॥
गोविन्ददेवदेवाढ्या तथा वैकुण्ठसुन्दरी ।
मानदा सा वेदवती सीता साध्वी पतिव्रता ॥
अन्नपूर्णा सदानन्दरूपा कैवल्यसुन्दरी ।
कैवल्यदायिनी श्रेष्ठा गोपीनाथमनोहरा ॥
गोपीनाथेश्वरी चण्डी नायिका नयनान्विता ।
नायका नायकप्रीता नायकानन्दरूपिणी ॥
शेषा शेषवती शेषरूपा चैव जगन्मयी ।
गोपालपालिका माया नन्दजाया तथा परा ॥

हैमी हेममुखी चन्द्रमुखी शशिसुशोभना ॥
अर्द्धचन्द्राधरा चन्द्रवल्लभा रोहिणी तिमिः ।
तिमिङ्गिलकुलामोदमत्स्यरूपाङ्गहारिणी ॥
कारणी सर्व्वभूतानां कार्य्यातीता किशोरिणी ।
किशोरवल्लभा केशकारिका कामकारिका ॥
कामेश्वरी कामकला कालिन्दीकुलदीषिका ।
कलिन्दतनयातीरवासिनीतीरगेहिनी ॥
कादम्बरीपानपरा कुसुमामोदधारिणी ।
कुमुदा कुमुदानन्दा कृष्णेशी कामवल्लभा ॥
तर्कारी वैजयन्ती च निम्बदाडिम्बरूपिणी ।
विल्ववृक्षप्रिया कृष्णाम्बरा विल्वोपमस्तनी ॥
विल्वात्मिका विल्ववपुर्विल्ववृक्षनिवासिनी ।
तुलसी तोषिका चैव तैतिलानन्दकारिणी ॥

भवनाशान्तकारिण्याकाशरूपासुवेशिनी ।
रतिरङ्गपरित्यागा रतिवेशा रतिप्रिया ॥
तेजस्विनी तेजरूपा कैवल्यपथदा शुभा ।
मुक्तिहेतुर्मुक्तिहेतुलङ्घिनी लक्ष्मणा क्षमा ॥
विशालनेत्रा वैशाली विशालकुलसम्भवा ।
विशालगृहवासा च विशालवदरीरतिः ॥
भक्त्यतीता भक्तिगतिर्भक्तिवाध्या भवाकृतिः ।
वामाङ्गहारिणी विष्णोः शिवभक्तिसुखा-न्विता ॥
विजिताविजिता मोदमग्ना च गणतोषिता ।
हयास्या हेरम्बसुता गणमाता सुरेश्वरी ॥
दुःखहन्त्री दुःखहरा सेवितेप्सितसर्व्वदा ।
सर्व्वाङ्गानुविधात्री च कुलक्षेत्रविनाशिनी ॥
लवङ्गा पाण्डवसखी सखीमध्यविलासिनी ।
ग्राम्यगीता गया गम्या गमनातीतनिर्भरा ॥
सर्व्वाङ्गसुन्दरी गङ्गा गङ्गाजलमयी तथा ।
गङ्गेरिता पूतमात्रा पवित्रकुलदीपिका ॥
पवित्रगुणशीलाढ्या पवित्रानन्ददायिनी ।
पवित्रगुणसीमाढ्या पवित्रकुलपाविका ॥
गतिज्ञा गीतकुशला दनुजेन्द्रनिवारिणी ।
निर्व्वाणदात्री नैर्वाणी हेतुयुक्तागमोत्तरा ॥
पर्व्वताधिनिवासा च निवासकुशला तथा ।
सन्न्यासधर्म्मकुशला सन्न्यासे फलदा शुभा ॥
शरच्चन्द्रमुखी श्यामहारा क्षेत्रनिवासिनी ।
वसन्तरागा सुश्रोणी वसन्तवसनाकृतिः ॥
चतुर्भुजा षड्भुजा च द्विभुजा गौरविग्रहा ।

| | | |
|---|---|---|
| कुमारी यौवनानन्दी युवती गोपसुन्दरी ।<br>गोपमाता जानकी च जनकानन्दकारिणी ॥<br>कैलासवासिनी रम्भा हरतोषणतत्परा ।<br>हरेश्वरी रामरता रामरामेश्वरी रमा ॥<br>श्यामला चित्रलेखा च तथा भुवनमोहिनी ।<br>सुगोप्या गोपवनिता गोपराज्यप्रदा शुभा ॥<br>आनन्दपूर्णा माहेशी मत्स्यराजसुता सती ।<br>कौमारी नारसिंही च वाराही नवदुर्गिका ॥<br>चञ्चलाचञ्चला मोदा नारी भुवनसुन्दरी ।<br>दक्षयज्ञहरा दाक्षी दक्षकन्या सुलोचना ॥ | | |

सहस्रास्या विहास्या च मुद्रास्या मुद्रदायिनी ॥
प्राणप्रिया प्राणरूपा प्राणरूपिण्यपावृता ।
कृष्णप्रीता कृष्णरता कृष्णतोषणतत्परा ॥
कृष्णप्रेमवती कृष्णभक्ता भक्तफलप्रदा ।
कृष्णप्रेमप्रेमभक्ता हरिभक्तिप्रदायिनी ॥
चैतन्यरूपा चैतन्यप्रिया चैतन्यरूपिणी ।
उग्ररूपा शिवक्रोडा कृष्णक्रोडा जलोदरी ॥
महोदरी महादुर्गकान्तारस्थलवासिनी ।
चन्द्रावली चन्द्रकेशी चन्द्रप्रेमतरङ्गिणी ॥
समुद्रामृतरूपा च समुद्रजलवासिका ।
केशपाशरता निद्रा क्षुधा प्रेमरताम्बिका ॥
दूर्ब्बादलश्यामतनुर्दूर्व्वादलतनुच्छविः ।
नागरा नागरीवासा नगरानन्दकारिणी ॥
नागरालिङ्गनपरा नगराङ्गनमङ्गला ।
उच्चनीचा हैमवती प्रियाकृष्णतरङ्गिणी ॥
प्रेमालिङ्गनसिद्धाङ्गी सिद्धसाध्यविलासिका ।
मङ्गला मोदजननी मेखला मोदधारिणी ॥
रत्नमञ्जीरभूषाङ्गी रत्नभूषणभूषणा ॥
जम्बालमालिका कृष्णप्राणा प्राणविमोचना ॥
सत्यप्रदा सत्यवती सेवकानन्ददायिका ।
जगद्योनिर्ज्जगद्बीप्ता विचित्रमणिभूषणा ॥
राधारमणकान्ता च राध्याराधनरूपिणी ।
कैलासवासिनी कृष्णप्राणसर्व्वस्वदायिनी ॥
कृष्णावतारनिरता कृष्णभक्तफलार्थिनी ।
याचका याचकानन्दकारिणी याचकोज्ज्वला ॥
हरिभूषणभूषाढ्या नन्दयुक्ता कृपापगा ।
हैहैतालधरा थैथैशब्दशक्तिप्रकाशिनी ॥
हेहेशब्दस्वरूपा च हीहीवाक्यविशारदा ॥
जगदानन्दकर्त्री च शास्त्रानन्दविशारदा ॥
पण्डिता पण्डितगुणा पण्डितानन्दकारिणी ।
परिपालनकर्त्री च तथा स्थितिविनोदिनी ॥
तथा संहारशब्दाढ्या विद्वज्जनमनोहरा ।
विदुषां प्रीतिजननी विद्वत्प्रेमविवर्द्धिनी ॥
नादेयी नादरूपा च नादबिन्दुविधारिणी ।
शून्यस्थानस्थिता शून्यरूपा पादपवासिनी ॥
कार्त्तिकव्रतकर्त्री च रसनाहारिणी खरा ।
ज्वलना चातलतली शिलातलनिवासिनी ॥
क्षुद्रकीटाङ्गसंसर्गसङ्गदोषविनाशिनी ।

हरिभावनशीला च हरिसेवनतत्परा ।
हरिप्राणा हरप्राणा शिवप्राणा शिवान्विता ॥
नरकार्णवसंहन्त्री नरकार्णवनाशिनी ।
नरेश्वरी नरातीता नरसेव्या वराङ्गना ॥
यशोदानन्दिनीक्रीडा यशोदाक्रोडवासिनी ।
यशोदानन्दनप्राणा यशोदानन्दनार्थदा ॥
वत्सला कोषला काला करुणार्णवरूपिणी ।
स्वगलक्ष्मीर्भूमिलक्ष्मीर्द्रौपदी पाण्डवप्रिया ॥
तथार्ज्जुनसखी भौमी भीमा भैमी भयानका ।
त्रिजगन्मोहिनी क्षीणा प्राणासक्ततरा तथा ॥
पानार्थिनी पानपात्रा पानपानन्ददायिनी ।
दुग्धमन्थनकर्म्माढ्या दधिमन्थनतत्परा ॥
दधिभाण्डार्थिनी कृष्णक्रोधिनी नन्दनाङ्गना ।
घृतलिप्ता तक्रयुक्ता यमुनापारकौतुका ॥
विचित्रकर्म्मका कृष्णहास्यभाषणतत्परा ।
गोपाङ्गनावेष्टिता च कृष्णसङ्गार्थिनी तथा ॥
राससक्ता रासरतिरासवासक्तवासना ।
हरिद्रा हरितारूपा हरार्पितचेतसा ॥
निश्चैतन्या च निश्चेता तथा दारुहरिद्रिका ।
सुवलस्य स्वसा चैव कृष्णभाषातिवेगिनी ॥
श्रीदामस्य सखी दामदामिनी दामधारिणी ।
मल्लिकोल्लासिनी केशी हरिदम्बरधारिणी ॥
हरिसान्निध्यदात्री च हरिकौतुकमङ्गला ।
हरिप्रदा हरिप्राणा यमुनाजलवासिनी ॥

नातः परं शुभं स्तोत्रं तीर्थं नातः परं परम् ।
एकादश्यां शुचिर्भूत्वा यः पठेत् सुसमाहितः ॥
तस्य सर्व्वार्थसिद्धिः स्यात् शृणुयाद्वा सुशोभने ।
द्वादश्यां पौर्णमास्यां वा तुलसीसन्निधौ शिवे ! ॥
यः पठेत् शृणुयाद्वापि तस्य तत्तत् फलं शृणु ।
अश्वमेधं राजसूयं बार्हस्पत्यं तथाविधम् ॥
अतिरात्रं वाजपेयं अग्निष्टोमं तथा शुभम् ।
कृत्वा यत्फलमाप्नोति श्रुत्वा तत्फलमाप्नुयात् ॥
कार्त्तिके चाष्टमीं प्राप्य पठेद्वा शृणुयादपि ।
सहस्रयुगकल्पान्तं वैकुण्ठवसतिं लभेत् ॥
ततश्च ब्रह्मभवने शिवस्य भवने पुनः ।
सुराधिनाथभवने पुनर्याति सलोकताम् ॥
गङ्गातीरं समासाद्य यः पठेत् शृणुयादपि ।
विष्णोः स्वरूपतां याति सत्यं सत्यं सुरेश्वरि ! ॥
मम वक्त्रगिरेर्जाता पार्व्वतीसागराश्रिता ।
राधानामसहस्राख्या नदी त्रैलोक्यपावनी ॥
पट्यतेहि मयानित्यं भक्त्याशक्त्या यथोचितम् ।
मम प्राणसमं ह्येतत् तव भक्त्या प्रकाशितम् ॥
नाभक्ताय प्रदातव्यं पाषण्डाय कदाचन ।
नास्तिकाय विरागाय रागयुक्ताय सुन्दरि ! ॥
तथा देयं महास्तोत्रं हरिभक्ताय शङ्करि ! ।

कोटिकन्दर्पलावण्या कन्दर्पकोटिसुन्दरी ॥
कन्दर्पकोटिजननी कामबीजप्रदायिनी ।
कामशास्त्रविनोदा च कामशास्त्रप्रकाशिनी ॥
कामप्रकाशिका कामिन्यणिमाद्यष्टसिद्धिदा ।
यामिनी यामिनीनाथवदना यामिनीश्वरी ॥
योगेश्वरी हरयोगमुक्तिदात्री हिरण्यदा ।
कपालमालिनी देवी सीमाधामस्वरूपदा ॥
कृपान्वितगुणा गौण्या गुणातीता फलप्रदा ।
कुष्माण्डभूतवेतालनाशिनी शारदान्विता ॥
सितासिता च सरला लीलालावण्यमङ्गला ।
विद्यार्थिविद्या माया च विद्याविद्यास्वरूपिणी ॥
आन्वीक्षिकीशास्त्ररूपा शास्त्रसिद्धान्त-
कारिणी ।
नागेन्द्राणी नागमाता क्रीडाकौतुकरूपिणी ॥

तपःप्रदा जितार्था च चतुरा चातुरीतमी ।
तमिश्रा तपरूपा च रौद्ररूपा यशोऽर्थिनी ॥
कृष्णकामा कृष्णभक्ता
कृष्णानन्दप्रदायिनी ।
कृष्णार्थवासना कृष्णरागिणी भाविनी
तथा ॥
कृष्णार्थरहिता भक्ता भक्ताभक्तसुभक्तिदा ।
श्रीकृष्णरहिता दीना विरहिणी हरेः प्रिया ॥
मथुरा मधुराराजगेहभावनभाजना ।
श्रीकृष्णभावनामोदा
तस्योन्मादविधायिनी ॥
कृष्णार्थकुशला कृष्णसारचर्म्मधरा शुभा ।
अलकेश्वरपूज्या च कुबेरेश्वरवल्लभा ॥
धनधान्यविधात्री च जया काया हया
हयी ।
प्रणवा प्रणवेशी च प्रणवार्थस्वरूपिणी ॥
ब्रह्मविष्णुशिवार्द्धांशहारिणी शैवशिंशपा ।
राक्षसीनाशिनी भूतप्रेतप्राणविनाशिनी ॥
सकलेप्सितदात्री च सती साध्वी
अरुन्धती ।
पतिव्रता पतिप्राणा पतिवाक्यविनोदिनी ॥
अशेषसाधिनी कल्पवासिनी
कल्परूपिणी ॥
इत्येतत् कथितं देवि !
राधानामसहस्रकम् ।
यः पठेत् पाठयेद्वापि तस्य तुष्यति
माधवः ॥
किं तस्य यमुनाभिर्व्वा नदीभिः सर्व्वतः
प्रिये ।
कुरुक्षेत्रादितीर्थेन यस्य तुष्टो जनार्द्दनः ॥
स्तोत्रस्यास्य प्रसादेन किं न सिध्यति
भूतले ॥
ब्राह्मणो ब्रह्मवर्च्चस्वी क्षत्रियो
जगतीपतिः ।
वैश्यो निधिपतिर्भूयात् शूद्रो मुच्येत
जन्मतः ॥

वैष्णवेषु यथाशक्तिदात्रे पुण्यार्थशीलिने ॥
राधानामसुधावारि मम वक्त्रं महाखनिः ।
उद्धृतं हि त्वया यत्नात् पाता सद्वैष्णवा-
ग्रणीः ॥
विशुद्धसत्त्वाय यथार्थवादिने
द्विजस्य सेवानिरताय मन्त्रिणे ।
दात्रे यथाशक्ति सुभक्तिमानसे
राधापदध्यानपराय शोभने ॥
हरिपादाब्जमधुपमनोभूतायमानसे ।
राधापादसुधास्वादशालिनेवैष्णवाय च ॥
दद्यात् स्तोत्रं महापुण्यं
हरिभक्तिप्रसाधनम् ।
जन्मान्तरं न तस्यास्ति
राधाकृष्णपदार्थिनः ॥
मम प्राणा वैष्णवा हि तेषां रक्षार्थमेव हि ।
शूलं मया धार्य्यते हि नान्यथा
मैत्रकारणम् ॥
हरिभक्तिद्विषामर्थे शूलं संधार्य्यते मया ।
शृणु देवि यथार्थं मे गदितं त्वयि सुव्रते ! ॥
भक्तासि मे प्रियासि त्वमतः स्नेहात्
प्रका-
शितम् ।
कदापि नोच्यते देवि मया नामसहस्रकम् ॥
किं परं त्वां प्रवक्ष्यामि प्राणतुल्यं मम
प्रिये ।
स्तोत्रं मन्त्रं राधिकाया यन्त्रं कवचमेव हि ॥”
इति नारदपञ्चरात्रे
राधिकासहस्रनामसमा-
प्तोऽध्यायः ॥ * ॥
(राधातन्त्रोक्तसहस्रनामस्तोत्रं
यथा, --
ईश्वर उवाच ।
“इति ते कथितं देवि किमन्यत्
कथयामि ते ।

|  | ब्रह्महत्या सुरापानमित्यादीन्यतिपापतः ।<br>सद्यो मुच्येत देवेशि ! सत्यं सत्यं न संशयः ॥<br>राधानामसहस्रस्य समानं नास्ति भूतले ।<br>स्वर्गे वाप्यथ पाताले गिरौ वा जलतोऽपि वा ॥ | श्रोत्री त्वं परमेशानि अहं वक्ता च शाश्वतः ॥<br>देव्युवाच ।<br>कियदन्यन्महादेव पृच्छामि यदि रोचते ।<br>हृदये तव देवेश नानातन्त्राणि सन्ति वै ॥<br>नानातन्त्राणि मन्त्राणि रहस्यानि पृथक् पृथक् । |
|---|---|---|

बहूनि तव देवेश हृदये देव सुव्रत ।
कृपया परमेशान कथयस्व दयानिधे ॥
ईश्वर उवाच ।
पद्मिन्याः परमेश्वानि रहस्यं नास्ति सुन्दरी ।
त्वयि सर्व्वं महेशानि कथितं परमेश्वरि ॥
किञ्चिदन्यन्महेशानि नास्ति मे गोचरे प्रिये ।
यद्यदस्ति महेशानि रहस्यं कथितं मया ॥
देव्युवाच ।
पद्मिन्याः परमेशान रहस्यं कथय प्रभो ।
यदि नो कथ्यते देव त्यजामि विग्रहं तदा ॥
ईश्वर उवाच ।
शृणु प्रिये कुरङ्गाक्षि एतत् प्रौढं कथं तव ।
प्रौढत्वं यदि चार्व्वङ्गि रहस्यं कथयामि ते ॥
रहस्यं शृणु चार्व्वङ्गि स्तोत्रं परमदुर्लभम् ।
स्तोत्रं सहस्रनामाख्यं उपविद्यासु सम्मतम् ॥
उपविद्यासु देवेशि अतिगुप्तं मनोहरम् ।
एतत् स्तोत्रं महेशानि पद्मिनीसम्मतं सदा ॥
एतत्तु पद्मिनीस्तोत्रमाश्चर्य्यं परमाद्भुतम् ।
यन्नोक्तं सर्व्वतन्त्रेषु तव भक्त्या प्रकाशितम् ॥
अस्य श्रीपद्मिनीसहस्रनामस्तोत्रस्य श्रीकृष्ण-
ऋषिर्म्महिषमर्द्दिन्यधिष्ठात्री देवता गायत्री-
च्छन्दो महाविद्यासिद्ध्यर्थे विनियोगः ।
ॐ ह्रीं
ऐं पद्मिन्यै राधिकायै । राधा रमणीरूपा
निरुपमरूपवती रूपधन्या वश्या वामा रजोगुणा ।
रक्ताङ्गी रक्तपुष्पाभा राधा रासपरायणा ।
रम्भावती रूपशीला रदनी रञ्जिनी रतिः ॥
रतिप्रिया रमणीया रसपुण्डा रसायना ।
रासमध्ये रासरूपा रसवेशा रसोत्सुका ॥
रसवती रसोल्लासा रसिका रसभूषणा ।
रसमालाधरी रङ्गी रसपट्टपरिच्छदा ॥

छत्रातपा च छत्राङ्गी छत्रघ्नी छत्रपालिनी ।
छुरितामृतधारौघा छद्मवेशनिवासिनी ॥
छटीकृतमरालौघा छटीकृतनिजामृता ।
जयन्ती च जगन्माता जननी जन्मदायिनी ॥
जया जैत्री च जरती जीवनी जगदम्बिका ।
जीवा जीवस्वरूपा च जाड्यविध्वंसकारिणी ॥
जगज्जनिर्ज्जनश्रेष्ठा जगद्धेतुर्ज्जगन्मयी ।
जगदानन्दजननी जनयित्री जनास्पदा ॥
झङ्कारवाहिनी झञ्झा झञ्झारनिर्झरावती ।
टङ्कारटङ्किनी टङ्का टङ्किता टङ्करूपिणी ॥
डम्बरा डम्भरा डम्बा डमडम्बा च डम्बुरा ।
ढोकिताशेषनिर्घोषा ढलढेलितलोचना ॥
तापिनी त्रिपथा तीर्थवासिनी त्रिदशेश्वरी ।
त्रिलोकत्रयी त्रैलोक्यतरणी तरणे तरुः ॥
तापहन्त्री तपा तापा तपनीया तपावती ।
तापिनी त्रिपुरादेवी त्रिपुराज्ञाकरी सदा ॥
त्रिलक्षा तारिणी तारा तारामायकमोहिनी ।
त्रैलोक्यगमना तीर्णा तुष्टिता त्वरिता त्वरा ॥
तृष्णा तरङ्गिणी तीर्था त्रिविक्रमविधारिणी ।
तमोमयी तामसी च तपस्या तपसः फला ॥
त्रैलोक्यव्यापिनी तुष्टा तृप्तिस्तुत्या तुला तथा ।
त्रैलोक्यमोहिनी तूर्णा त्रैलोक्यविभवप्रदा ॥
त्रिपदी च तथा तथ्या तिमिरध्वंसचन्द्रिका ।
तेजोरूपा तपःपारा त्रिपुरा त्रिपदस्थिता ॥
त्रयी तन्वी तापहरा तपनाङ्गजवाहिनी ।
तरिस्तरणितारुण्या तपिता तरणीप्रिया ॥
तीव्रपापहरातुल्यातुलपापतनूनपात्।
दारिद्र्यनाशिनी दात्री दक्षा देया दयावती ॥
दिव्या दिव्यस्वरूपा च दीक्षादक्षा दया द्रवा ।
दिव्यरूपा दिव्यमूर्त्तिर्दैत्येन्द्रप्राणनाशिनी ॥
द्रुता च द्रुतरूपा च दन्दशूकविनाशिनी ।
दुर्व्वारादमनीया च देवकार्य्यकरी सदा ॥
देवप्रिया देवयाज्या दैवा दैवधिया सदा ।
दिक्पालपददात्री च दीर्घाद्या दीर्घलोचना ॥
दुष्टद्वेषकामदुघा दोग्ध्री दूषणवर्ज्जिता ।
दुग्धा द्युसदृशाभाषा दिव्या दिव्यगतिप्रिया ॥
द्युनदी दीनशरणा दिव्या देहविहारिणी ।
दुर्गमा दरिमा दामा दूरघ्नी दूरवासिनी ॥
दुर्व्विगाह्या दयाधारा दूरसन्तापनाशिनी ।

धर्म्मिणी धर्म्ममाता च धर्म्मदात्री धनुर्द्धरा ।
धात्री ध्येया धरा धर्म्मधारिणी धृतकल्मषी ॥
धनदा धर्म्मदा धन्या धन्यदा धान्यदा धना ।
धन्या धनाधिरूपा च धरित्री धनपूरिता ॥
धारणा धनरूपा च धर्म्मा धर्म्मप्रचारिणी ।
धर्म्मिणी धर्म्मतन्त्राख्या धम्मिल्लामलकेशिनी ॥
धर्म्मप्रचारनिरता धर्म्मरूपा धुरन्धरी ।
धनुर्व्विद्याधरी धात्री धनुर्व्विद्याविशारदा ॥
निरानन्दा निरीहा च निर्व्वाणद्वारसंस्थिता ।
निर्व्वाणपदवी दात्री नन्दिनी नाकनायिका ॥
नारायणी निषिद्धघ्नी निजरूपप्रकाशिनी ।
नमस्या निर्द्दया नन्दनता नूतनरूपिणी ॥
निर्म्मला निर्म्मलाभासा निरख्या निरपत्रपा ।
नित्यानन्दमयी नित्यानित्या न्नतनविग्रहा ॥
निषिद्धा नीतिधैर्य्या च निर्व्वाणपददीपिका ।
निःशङ्का च निरातङ्का निर्नाशितमहामनाः ॥
निर्म्मला नन्दजननी निर्म्मलश्यामवेशिनी ।
निरवद्यकुलस्रष्ट्री नित्यानन्दस्वरूपिणी ॥
निर्णया निर्णयज्ञाता निषिद्धकर्म्मवर्ज्जिता ।

कमला कल्पलतिका कुलव्रतपरायणा ।
कामिनी कमला कुन्ती
कलिकल्मषनाशिनी ।
कुलिना कुलवती कामी कामसन्दीपनी
तथा ॥
कौमारी कृष्णवनिता कामार्त्ता
कामरूपिणी ।
कामुकी कलुषघ्नी च कुलज्ञा कुलपण्डिता
॥
कृष्णवर्णा कृशाङ्गी च कृष्णवस्त्रपरिच्छदा
।
कान्ता कामस्वरूपा च कामरूपा कृपावती
॥
क्षेमा क्षमावती चैव खेलत्खञ्जनगामिनी ।
खस्था खगा खगस्थात्री खगणस्य
विहारिणी ॥
गरिष्ठा गरिमा गङ्गा गया गोदावरी गतिः
गान्धारी गुणिनी गौरी गङ्गा गोकुलवासिनी
॥
गान्धर्व्वी गानकुशला गुणा गुप्तविलासिनी ।
घर्घरा घर्म्मदा घर्म्मा घनस्था घनवासिनी
॥
घृणा घृणावती घोरा घोरकर्म्मविवर्ज्जिता
।
चन्द्रा चन्द्रप्रभा चैव चन्द्रमूर्त्तिपरिच्छदा ॥
चन्द्ररूपा च चन्द्राख्या चञ्चला चारुभूषणा
।
चतुरा चारुशीला च चम्पा चम्पावती तथा
॥
चन्द्ररेखा चन्द्रकला चारुवेशा विनोदिनी ।
चन्द्रचन्दनभूषाङ्गी चार्व्वङ्गी चन्द्रभूषणा ॥
चित्रिणी चित्ररूपा च चित्रमूर्त्तिधरा सदा ।
छद्मरूपा छद्मवेशी श्वेतच्छत्रविधारिणी ॥

दुराशया दुराधारा द्राविणी द्रुहिनस्तुता ॥
दैत्यशुद्धिकरी देवी सदादानवसिद्धिदा ।
दुर्बुद्धिनाशिनी देवी सततं दानदायिनी ॥
दानदात्री च देवेशी द्यावाभूमिविगाहिनी ।
दृष्टिदा दृष्टिफलदा देवतागृहसंस्थिता ॥
दीर्घव्रतकरी दीर्घा दीर्घधर्म्मा दयावती ।
दण्डिनी दण्डनीतिश्च दीप्तदण्डधरार्च्चिता ॥
दानार्च्चिता द्रवद्रव्या द्रव्यैकनियमा परा ।
दुष्टसन्तापशाम्या च दात्री दवथुरोधिनी ॥
देवी दिव्या बलवती दान्ता दान्तजनप्रिया ।
दारिद्राादितटा दुर्गा दुर्गादन्यप्रचारिणी ॥
धर्म्मरूपा धर्म्मधुरा धेनुरूपा धृतिर्ध्रुवा ।
धेनुदाना ध्रुवस्पर्शा धर्म्मकामार्थमोक्षदा ॥

नित्योत्सवा नित्यतप्ता नमस्कार्य्या
निरञ्जना ॥
निष्ठावती निरातङ्का निर्लेपा
निश्चलात्मिका ।
निरवद्या निरीशा च निरञ्जनपुरस्थिता
॥
पुण्यप्रदा पुण्यकरी पुण्यगर्भा पुरातनी
।
पुण्यरूपा पुण्यदेहा पुण्यगीता च
पावनी ॥
पूजा पवित्रा परमा परा पुण्यविभूषणा
।
पुण्यदात्री पुण्यधरा पुण्या
पुण्यप्रवाहिनी ॥
पुण्यदेहा पुण्यवती पूर्णिमा पूर्णचन्द्रमा
।
पौर्णमासी परा पद्मा पथज्ञा
पद्मगन्धिनी ॥
पद्मिनी पद्मवस्त्रा च पद्ममालाधरा
सदा ।
पद्मोद्भवा परथ्या च परमानन्दरूपिणी
॥
प्रकाश्या परमाश्चर्य्या
पद्मगर्भनिवासिनी ।
पावनी च तथा पूता पवित्रा परमाकला
॥
पद्मार्च्चिता पद्मसंस्था पद्ममाता
पुरातनी ।
पद्मासनगता नित्या
पद्मासनपरिच्छदा ॥
शुक्लपद्मासनगता रक्तपद्मासना तथा
।
पीतपद्मासनगता कृष्णपद्मस्थिता
तथा ॥
पदार्थदायिनी पद्मवनवासपरायणा ।
प्रकाशिनी प्रगम्या च पुण्यश्लोका च
पावनी ॥
फलहन्त्री फलहरा फलिनी
फलरूपिणी ।
फुल्लेन्दीलोचना फुल्ला
फुल्लकोरकगन्धिनी ॥

| | | |
|---|---|---|
| | | फलिनी फालिनी फेणा फुल्लच्छाटितपातका ।<br>विश्वमाता च विश्वेशी विश्वा विश्ववरप्रिया ॥<br>ब्रह्मण्या ब्राह्मणीं ब्राह्मी ब्रह्मज्ञा विमलामला ।<br>बहुला बाहुला वल्ली बल्लरी वनदायिनी ॥<br>विक्रान्ता विक्रमामाला बहुभाग्यविलोचना ।<br>विश्वामित्रा विष्णुसखी वैष्णवी विष्णुवल्लभा ॥<br>विरूपाक्षप्रिया देवी विभूतिर्विश्वतोमुखी ।<br>वेद्यवेदरता वाणी वेदाक्षरसमन्विता ॥<br>विद्या विद्यावती वन्द्या बृहती ब्रह्मवादिनी ।<br>वरदा विप्रहृष्टा च वरिष्ठा च विशोधिनी ॥<br>विद्याधरी वसुमती विप्रवृद्धा विशोधिता ।<br>व्योमस्थानावती वामा विधात्री विबुधप्रिया ॥ |

बुद्धिर्व्विनाशिनी वित्ता ब्रह्मरूपा वरानना
।
वासिनी ब्रह्मजननी ब्रह्महत्यापहारिणी ॥
ब्रह्मविष्णुस्वरूपा च सदा विभववर्द्धिनी ।
विभाषिणी व्यापिनी च व्यापिका
परिचारिका ॥
विपन्नार्त्तिहरा देवी विनयव्रतचारिणी ।
विपन्नशोकसंहर्त्री विपञ्चीवाद्यतत्परा ॥
वेणुवाद्यपरा देवी वेणुश्रुतिपरायणा ।
वर्च्चस्विनी बलकरी बलमूला विवस्वती
॥
विपाप्मा विशिखा चैव
विकल्पपरिवर्ज्जिता ।
बुद्धिदा बृहती देवी विधिविच्छिन्नसंशया
॥
विचित्राङ्गी विचित्राभा विच्छा
विभववर्द्धिनी ।
विजया विनया वन्द्या वामदेवी वरप्रदा ॥
विषघ्नी च विशालाक्ष्मी
विज्ञानवित्तमानिनी ।
भद्रा भोगवती भव्या भतानी भयवासिनी
॥
भूतधात्री भयहरी भक्तवश्या भयापहा ।
भक्तिदा भयहा भेरीभक्तदुर्गप्रदारिणी ॥
भागीरथी भानुमती भाग्यदा भगनिर्हिता ।
भवप्रिया भूततुष्टिर्भूतिदा भूतभूषणा ॥
भोगवती भूतिमती भव्यरूपा भ्रमिर्भ्रमा ।
भूरिदा भक्तिसुलभा भाग्यवृद्धिकरी सदा
॥
भिक्षुमाता भिक्षुनिभा भव्या
भवस्वरूपिणी ।
महामाया मातृप्रिया महानन्दा महोदरी ॥
मतिर्म्मुक्तिर्म्मनोज्ञा च महामङ्गलदायिनी
॥
महापुण्या महादात्री मैथुनप्रियलालसा ॥
मनोज्ञा मालिनी मान्या
मणिमाणिक्यधारिणी ।
मुनिस्तुता मोहकरी मोहहन्त्री मदोत्कटा
॥

वासुदेवप्रिया वामा वसन्तसमयप्रिया ।
वासन्ती वसुदा वज्रा वेणुवादपरायणा ॥
वीणावाद्यप्रमत्ता च वीणानादविभूषणा ।
वेणुवाद्यरता चैव वंशीनादविभूषणा ॥
शुभा शुभरतिः शान्तिः शैशवा शान्तिविग्रहा ।
शीतला शोषिता शोभा शुभदा शुभदायिनी ॥
शिवप्रिया शिवानन्दा शिवपूजासु तत्परा ।
शिवस्तुत्या शिवसत्या शिवनित्यपरायणा ॥
श्रीमती श्रीनिवासा च श्रुतिरूपा शुभव्रता ।
शुद्धविद्याजपकरी शुभकर्त्री शुभाशया ॥
श्रुतानन्दा श्रुतिः श्रोत्री शिवप्रेमपरायणा ।
शोषणी शुभवार्त्ता च शालिनी शिवनर्त्तकी ॥
षड्गुणायुपदाक्रान्ता षडङ्गश्रुतिरूपिणी ।
सरसा सुप्रभा सिद्धा सिद्धसिद्धिप्रदायिनी ॥
सेव्यासङ्गा सती सूक्ता सूक्तिरूपा सदाप्रिया ।
सम्पत्प्रदा स्तुतिः स्तुत्या स्तवनीया स्तवप्रिया
॥
स्थैर्य्यदा स्थैर्य्यगा सौख्या स्त्रैणसौभाग्यदायिनी
।
सूक्ष्मसूक्ष्मा स्वधा स्वाहा स्वधालेपप्रमोदिनी ॥
स्वर्गप्रिया समुद्राभा सर्व्वपातकनाशिनी ।
संसारवारिणी राधा सौभाग्यवर्द्धिनी सदा ॥
हरप्रिया हिरण्याभा हरिणाक्षी हिरण्मयी ।
हंसरूपा हरिद्राभा हरिद्वर्णा शुचिस्मिते ॥
क्षेमदा क्षालिता क्षेमा क्षुद्रघण्टाविधारिणी ।
अपरैकं शृणु प्रौढे स्वराक्षरसमन्वितम् ॥
स्तोत्रं सहस्रनामाख्यं स्वरव्यञ्जनसंयुतम् ।
अजपा अतुलानन्ता अनन्तामृतदायिनी ॥
अन्नदाना अशोका च अलका अमृतश्रवा ।
अनाथवल्लभानन्ता अयोनिसम्भवा प्रिये ॥
अव्यक्तलक्षणाक्षुण्णा विच्छिन्नाचापराजिता ।
अनाथानामभीष्टार्थसिद्धिदानन्दवर्द्धिनी ॥
अणिमादिगुणाधारा अगण्यालिकहारिणी ।
अचिन्त्यशक्तिवलयाङ्कुरूपा च हारिणी ॥
अद्रिराजसुता दूती अष्टयोगसमन्विता ।
अच्युता अनवच्छिन्ना अक्षुण्णशक्तिधारिणी ॥
अनन्ततीर्थरूपा च अनन्तामृतरूपिणी ।
अनन्तमहिमा पारा अनन्तसुखदायिनी ॥
अर्थदा अन्नदा अर्था सदा अमृतवर्षिणी ।

ईश्वरी ईशजननी
ईशस्यैश्वर्य्यदायिनी ॥
उतङ्कशक्तिसंयुक्ता उपमानविवर्ज्जिता
।
उत्तमश्लोकसंसेव्या
उत्तमोत्तमरूपिणी ॥
उक्षा उषा उधाराधा उर्म्मिला च
शुचिस्मिते ।
ऊहा ऊहवितर्का च ऊद्‌र्ध्वधारा च
ऊद्‌र्ध्वगा ॥
ऊद्‌र्ध्वधारा ऊद्‌र्ध्वथोनी
उपपापविनाशिनी ।
ऋषिवृन्दस्तुता
ऋद्धिकरणत्रयनाशिनी ॥
ऋतम्भरा ऋद्धिदात्री ऋक्था
ऋक्थस्वरूपिणी
ऋतुप्रिया ऋक्षमाता
ऋक्षार्च्चिरृक्षमार्गगा ॥
ऋतुलक्षणरूपा च ऋतुमार्गप्रदर्शिनी ।
एषिताखिलसर्व्वस्वा
एकैकायुतदायिनी ॥
ऐश्वर्य्यतर्प्यरूपा च
ऐतिरैन्द्रशिरोमणिः ।
ओजस्विनी ओषधी च
ओजोनादौजदायिनी ॥
ओङ्कारजननी देवि
ओङ्कारप्रतिपादिता ।
औदार्य्यप्रकरा भद्रे
औपेन्द्रौषधिविग्रहा ॥
अंश्ववस्था च अमृता अम्बा
अम्बालिका तथा ।
अम्बुजाक्षी च अन्धाना
अम्बुस्निग्धाम्बुजानना ॥
अंशुमाली अंशुमती
अंशीत्यंशांशसम्भवा ।
अन्धतामिस्रहा भद्रे
अत्यन्तशोभनस्वरा ॥
अर्थेशा अर्थदात्री च अर्णरूपा
अनाहता ।

मधुपानरता मद्या मदाघूर्णितलोचना ।
मधुपानप्रमत्ता च मधुलुब्धा मधुव्रता ॥
माधवी मालिनी मान्या मनोरथपथातिगा
।
मोक्षैश्वर्य्यप्रदामर्त्त्या महापद्मवनाश्रिता ॥
महाप्रभावा महती मृगाक्षी मीनलोचना ।
महाकाठिन्यसम्पूर्णा महाक्षी महती कला
॥
मुक्तिरूपा महामुक्ता मणिमाणिक्यभूषणा
।
मुक्ताफलविचित्राङ्गी मुक्तारञ्जितनासिका
॥
महापातकराशिघ्नी मनोनयननन्दिनी ।
महामाणिक्यरचिता महाभूषणभूषिता ॥
मायावती मोहहन्त्री महाविद्याविधारिणी
।
महामेधा महाभूतिर्म्महामाया प्रिया सखी
॥
मनोधरी महोपाया महामणिविभूषिता ।
महामोहप्रणयिनी महामङ्गलदायिनी ॥
यशस्विनी यशोदा च यमुनावारिहारिणी
।
योगसिद्धिकरी यज्ञा यज्ञेशवन्दितप्रिया ॥
यज्ञेशी यज्ञफलदा यजनीया यशस्करी ।
योगयोनिर्योगसिद्धा योगिनी योगबुद्धिदा
॥
योगयुक्ता यमाद्यष्टसिद्धिर्यज्ञैकधारिणी ।
यमुनाजलसेव्या च यमुनाजलहारिणी ॥
यामिनी यमुना याम्या
यमलोकनिवासिनी ।
लोकालोकविलासा च
लोलत्कल्लोलमालिका ॥
लोलाक्षी लोकमाता च
लोकानन्दप्रदायिनी ।
लोकबन्धुर्लोकधात्री
लोकालोकनिवासिनी ॥
लोकत्रयनिवासा च लक्षलक्षणलक्षिता ।
लीलालोका च लावण्या लघिमा
लसदीक्षणा ॥

अविद्याजालशमनी अप्रतर्कगतिप्रदा ॥
अशेषविघ्नसंहन्त्री अशेषगुणगुम्फिता ।
अज्ञाननाशिनी देवी अनन्तसिद्धिदायिनी ॥
अशेषपापसंहन्त्री अशेषदेवतामयी ।
अघोरा अमृता देवी अज्ञानतिमिरप्रदा ॥
अनुग्रहपरा देवी अभिरामविनोदिनी ।
अनवद्यपरिच्छिन्ना अत्यनन्तकलङ्किणी ॥
आरोग्यदात्रीं आनन्दा आपन्नार्त्तिविनाशिनी ।
आश्चर्य्यरूपा आद्यस्था आप्तविद्या सदा प्रिया
॥
आप्यायिनी च आलस्या आपदाहामृतप्रदा ।
इष्टारतिरिष्टदात्री इष्टपूर्णफलप्रदा ॥
इतिहासस्मृतिः श्वेता इहामूत्रफलप्रदा ।
इष्टा च इष्टरूपा च इत्यादिपरिवन्दिता ॥
इन्दिरा इतराक्षीच इलङ्कार इधारिणी ।
इन्द्राणीसेवितपदा इन्द्रियप्रीतिदायिनी ॥

शृणु नामान्तरं भद्रे ककारादि
वरानने ! ॥
अत्यन्तसुन्दरं शुद्धं
निर्म्मोलोत्पलगन्धिनी ।
कुटन्ता करुणा कान्ता
कर्म्मजालविनाशिनी ॥
कमला कल्पलतिका
कलिकल्मषनाशिनी ।
कमनीयकला कर्णा कपर्द्दिपूजनप्रिया
॥
कदम्बकुसुमाभाषा सदा कोकनदेक्षणा
।
कालिन्दीकेलिकलिता कणा
कादम्बमालिका ॥
कान्तालोकत्रया कन्था कन्थरूपा
मनोहरा ।
खड्गिनी खड्धाराभा खगा
खगेन्दुधारिणी ॥
खेखेलगामिनी खड्गा
खड्गेन्दुतलकाष्ठिता ।
खेचरी खेचरी विद्या खगतिः
ख्यातिदायिनी ॥
खण्डिपाशेषपापौघा
खलवृद्धिविनाशिनी ।
खातेन कन्दसन्दोहा
खड्गखट्वाङ्गधारिणी ॥
खरसन्तापशमनी खरदुःखनिकृन्तनी
।
गुहागन्धगतिर्गौरी गन्धर्व्वनगरप्रिया ॥
गूढरूपा गुणवती गुर्व्वी गौरवरङ्गिणी ।
ग्रहपीडाहरा गुप्ता गदस्निग्धमना प्रिया
॥
चाम्पेयलोचना चारु चार्व्वङ्गी
चारुरूपिणी ।
चन्द्रचन्दनसिक्ताङ्गी चर्व्वनीया
चिरस्थिता ॥
चारुचम्पकमालाढ्या
चलिताशेषदुष्कृता ।
चारिताशेषवृजिना चारुताशेषमस्तुला
॥

| | | |
|---|---|---|
| | | रक्तचन्दनसिक्ताङ्गी रक्ताङ्गी रक्तमालिका । शुक्लचन्दनसिक्ताङ्गी शुक्लाङ्गी शुक्लमालिका ॥ पीतचन्दनसिक्ताङ्गी पीताङ्गी पीतमालिका । कृष्णचन्दनसिक्ताङ्गी कृष्णाङ्गी कृष्णमालिका ॥ शुक्लवस्त्रपरीधाना शुक्लषस्त्रोत्तरीयिका । रक्तवस्त्रपरीधाना रक्तवस्त्रोत्तरीयिका । पीतवस्त्रपरीधाना पीतवस्त्रोत्तरीयिका । कृष्णपट्टपरीधाना कृष्णपट्टोत्तरीयिका ॥ वृन्दावनेश्वरी राधा कृष्णकार्य्यप्रकाशिनी । पद्मिनी नागिनी गोपी कालिन्दी अवगाहिनी ॥ गोपीश्वरप्रिया भृत्या सदा नगरमोहिनी । |

त्रिपुरा त्रिपुरादेवी त्रिपुराज्ञाकरी सदा ॥
त्रिपुरासन्निकर्षस्था त्रिपुरापरिचारिका ।
त्रिपुरापुरसंस्था तु या राधा पद्मिनी परा ॥
नानासौभाग्यसम्पन्ना नानाभरणभूषिता ।
स्तोत्रं सहस्रनामाख्यं कथितं तव भक्तितः ॥
एतत् स्तोत्रञ्च मन्त्रञ्च कवचञ्च वरानने ।
कल्पे कल्पे च देवेशि प्रपठेद्यदि मानवः ॥
उपास्य राधिकां विद्यां केवलं कमलेक्षणे ।
बहुकालेन देवेशि उपविद्यापि सिध्यति ॥
पद्मिनी राधिका विद्या उपविद्यासु निश्चिता
।
महाविद्यां महेशानि उपास्य यत्नतः स्वयम्
॥
प्रकटं परमेशानि राधामन्त्रेण सुन्दरि ! ।
शृणु नाम सहस्राणि प्रकटे यत्तु शस्यते ॥
कृष्णस्तु कालिका साक्षात्
राधाप्रकृतिपद्मिनी ।
हे कृष्ण राधे गोविन्द इदमुच्चार्य्य यत्नतः ॥
सदासौ वैष्णवो देवि सर्व्वत्रैव प्रकाशते ।
गोविन्दो यस्तु देवेइशि स्वयं त्रिपुरसुन्दरी ॥
विना मन्त्रं विना होमं विना पूजां विना वलिम्
।
विना गन्धं विना पुष्पं विना नित्योदितां
क्रियाम् ॥
प्राणायामं विना ध्यानं विना भूतविशोधनम् ।
विना जपं विना दानं येन राधा प्रसीदति ॥
राधासहस्रनामाख्यस्तोत्रमार्गेण पार्व्वति ।
यो जपेद्वैष्णवं मन्त्रं राधिकामन्त्रमेव च ॥
स पतेन्नरके वोरे यावदिन्द्राश्चतुर्द्दश ।
श्रुत्वा गुरुमुखान्मन्त्रं वैष्णवो भक्तितत्परः ॥
ततः पुरश्चरीं कुर्य्यादिकविंशतिसंख्यकम् ।
पूर्णाभिषेकसिक्तस्य ततो गुरुपदार्च्चनम् ॥
विना पूर्णाभिषेकञ्च भवाब्धौ पारमिच्छति ।
अज्ञस्य तस्य दुर्बुद्धेर्निरये पतनं भवेत् ॥
सत्यं सत्यं महेशानि सत्यं सत्यं वदाम्यहम् ।
भवाब्धितरणं नास्ति विना पूर्णाभिषेचनम् ॥
नानागमपुराणानि वेदवेदाङ्गशास्त्रतः ।
मयोद्धृतं महेशानि सारं पूर्णाभिषेचनम् ॥

श्रीमहादेव उवाच ।
शृणुष्व गिरिजे तुभ्यं कवचं
पूर्ब्बसूचितम् ।
सर्व्वरक्षाकरं पुण्यं सर्व्वहत्याहरं परम्
॥
हरिभक्तिप्रदं साक्षात्
भुक्तिमुक्तिप्रसाधनम् ।
त्रैलोक्याकर्षणं देवि
हरिसान्निध्यकारणम् ॥
सर्व्वत्र जयदं देवि सर्व्वशत्रुभयापहम् ।
सर्व्वेषाञ्चैव भूतानां मनोवृत्तिकरं परम्
॥
चतुर्द्धामुक्तिजनकं सदानन्दकरं परम्
।
राजसूयाश्वमेधानां यज्ञानां
फलदायकम् ॥
इदं कवचमज्ञात्वा राधामन्त्रञ्च यो
जपेत् ।
स नाप्नोति फलं तस्य विघ्नस्तस्य
पदे पदे ॥
ऋषिरस्य महादेवोऽनुष्टुप्छन्दः
प्रकीर्त्तितम् ।
राधास्य देवता प्रोक्ता रां बीजं
परिकीर्त्तितम् ॥
धर्म्मार्थकाममोक्षेषु विनियोगः
प्रकीर्त्तितः ।
श्रीराधा मे शिरः पातु ललाटं राधिका
तथा ॥
वृषभावुसुता दन्तान् चिवुकं
गोपनन्दिनी ।
चन्द्रावली पातु गण्डं जिह्वां कृष्णप्रिया
तथा ॥
कण्ठं पातु हरिप्राणा हृदयं विजया
तथा ।
बाहू द्वौ चन्द्रवदना उदरं सुवलस्वसा
॥
कटिं योगान्विता पातु पादौ सौभद्रिका
तथा ।

सर्व्वरक्षाकवचं समाप्तम् ॥ * ॥
(राधातन्त्रोक्त-
राधिकाकवचं यथा, --
देव्युवाच ।
"देवदेव महादेव सृष्टिस्थित्यन्तकारक ।
राधिकाकवचं देव कथयस्व दयानिधे ॥
ईश्वर उवाच ।
शृणु देवि वरारोहे कवचं जनमोहनम् ।
गोपितं सर्व्वतन्त्रेषु इदानीं प्रकटीकृतम् ॥
या राधा त्रिपुरा दूती उपविद्या सदा तु सा ।
उपविद्याक्रमाद्देवि कवचं शृणु पार्व्वति ॥
जपपूजाविधानस्य फलं सर्व्वस्वसिद्धिदम् ।
यत्र तत्र न वक्तव्यं कवचं गोपितं महत् ।
भक्तिहीनाय देवेशि द्विजनिन्दापराय च ।
न शूद्रयाजिविप्राय वक्तव्यं परमेश्वरि ॥
शिष्याय भक्तियुक्ताय शक्तिदीक्षारताय च ।
वैष्णवाय विशेषेण गुरुभक्तिपराय च ॥
वक्तव्यं परमेशानि मम वाक्यं न चान्यथा ॥
अस्य श्रीराधात्रैलोक्यमङ्गलकवचस्य
गोपिका
ऋषिरनुष्टुप्छन्दः श्रीराधिका देवता महा-
विद्यासाधनगोप्यर्थे विनियोगः ॥
ॐपूर्ब्बे च पातु सा देवी रुक्मिणी
शुभदायिनी ।
ह्रीं पश्चिमे पातु सत्या सर्व्वकामप्रपूरणी ।
याम्यां ह्रीं जाम्बवती पातु सर्व्वकामफलप्रदा
।
उत्तरे पातु भद्रा ह्रीं भद्रशक्तिसमन्विता ॥
ऊर्द्ध्वे पातु महादेवी क्लीं कृष्णप्रिया
यशस्विनी ।
अधश्च पातु मां देवी ऐं पातालतलवासिनी
॥
अधरे राधिका पातु ऐं पातु हृदयं मम ।
नमः पातु च सर्व्वाङ्गं ङेयुता च पुनः पुनः ।
सर्व्वत्र पातु मे देवी ईश्वरी भुवनेश्वरी ॥
ऐं ह्रीं राधिकायै ह्रीं ऐं शिरः पातु मां क्लीं
क्लीं राधिकायै क्लीं क्लीं दक्षबाहुं रक्षतु मम
।
ह्रीं ह्रीं राधिकायै ह्रीं ह्रीं वामाङ्गं रक्षतु

तस्मात् सर्व्वप्रयत्नेन कुर्य्यात् पूर्णाभिषेचनम्
।
कृत्वा पूर्णाभिषेकञ्च पठेत् राधास्तवं प्रिये ॥
स्तवपाठान्महेशानि स भवेद्व्रवनन्दनः ।
स्तोत्रं सहस्रनामाख्यं न यस्य जपतो मनुम्
॥
राधाकृष्णस्य देवेशि तस्य पापफलं शृणु ।
कुम्भीपाके स पच्येत यावद्वै ब्रह्मणः शतम् ॥
निम्नगानां यथा श्रेष्ठा भवेद्भागीरथी प्रिये ।
वैष्णवानां यथा शम्भुः प्रकृतीनां यथा सती
॥
पुरुषाणां यथा विष्णुर्नक्षत्राणां यथा शशी ।
स्तवानाञ्च तथा श्रेष्ठं राधास्तोत्रमिदं प्रिये ॥
जपपूजादिकं यद्यद्बलिहोमादिकन्तथा।
श्रीराधास्तोत्रपाठस्य कलां नार्हति षोडशीम्
॥"
इति वासुदेवरहस्ये राधातन्त्रे द्वात्रिंशत् पटले
सहस्रनामस्तोत्रम् ॥ * ॥) अथ राधाकवचम्
।
श्रीपार्व्वत्युवाच ।
"कैलासवासिन् भगवन् भक्तानुग्रहकारक ।
राधिकाकवचं पुण्यं कथयस्व मम प्रभो ॥
यद्यस्ति करुणा नाथ त्राहि मां दुःखतो
भयात्
त्वमेव शरणं नाथ शूलपाणे पिनाकधृक् ॥

नस्वान् चन्द्रमुखी पातु गुल्फौ
गोपालवल्लभा ॥
मुखं विधुमुखी पातु गोपी पदतलं तथा
॥
शुभप्रदा पातु पृष्ठं कुक्षी
श्रीकान्तवल्लभा ।
गुह्यदेशं जरा पातु हरिणी पातु सर्व्वतः
॥
वाक्यं वाणी सदा पातु धनागारं
धनेश्वरी ।
पूर्ब्बां दिशं कृष्णरता कृष्णप्राणा च
पश्चिमाम् ॥
उत्तरां हरिता पातु दक्षिणां वृषभानुजा
।
चन्द्रावली नैशमेव दिवा
खेडितमेखला ॥
सौभाग्यदा मध्यदिने सायाह्ने
कामरूपिणी ।
रौद्री प्रातः पातु मां हि गोपिनी
रजनीक्षये ॥
हेतुदा सङ्गवे पातु कोमला च
दिवार्द्धके ।
शेषापराह्णसमये शमिता सर्व्वसन्धिषु
॥
योगिनी भोगसमये रतौ रतिप्रदा सदा
।
कामेशी कौतुके नित्यं योगे रत्नावली
मम ॥
सर्व्वदा सर्व्वकार्य्येषु राधिका
कृष्णमानसा ।
इत्येतत् कथितं देवि कवचं
परमाद्भुतम् ॥
सर्व्वरक्षाकरं नाम महारक्षाकरं परम् ।
सर्व्वार्थसिद्धिस्तस्य स्यात्
यद्यन्मनसि वर्त्तते ॥
राजद्वारे सभायाञ्च संग्रामे शत्रुसङ्कटे ।
प्राणार्थनाशसमये यः पठेत् प्रयतो
नरः ।
तस्य सिद्धिर्भवेद्देवि न भयं विद्यते
क्वचित् ॥

पद्मिनी पद्मगन्धिनी । ऐं ह्रीं राधिकायै ऐं
ऐं दक्षपादं रक्षतु मम । क्लीं क्लीं ऐं ऐं
राधिकायै ह्रीं ह्रीं ऐं ऐं क्लीं क्लीं ॐ
सर्व्वाङ्गं मम रक्षतु । क्लीं राधिकाये क्लीं
वामपादं रक्षतु सदा पद्मिनी । ह्रीं राधि-
कायै ह्रीं अक्षियुग्मं रक्षतु मम । ऐ राधि-
कायै ऐं कर्णयुग्मं सदा रक्षतु मम । ह्रीं
राधिकायै ह्रीं नासायुग्मं सदा रक्षतु मम ।
ॐ ह्रीं राधिकायै ॐ ह्रीं दन्तपंक्तिं सदा
पातु सरस्वती । ह्रीं भुवनेश्वरी ललाटं पातु
ह्रीं काली मे मुखमण्डलं सदा पातु । ह्रीं ह्रीं
ह्रीं महिषमर्द्दिन्यै ह्रीं ह्रीं महिषमर्द्दिनी
द्वारकावासिनी सहस्रारं रक्षतु सदा मम ।
ऐं ह्रीं ऐं मातङ्गी हृदयं सदा मम रक्षतु ।
ह्रीं ऐं ह्रीं उग्रतारा नाभिपद्मं सदा रक्षतु
मम । क्लीं ऐं क्लीं सुन्दरी क्लीं ऐं क्लीं
स्वाधिष्ठानं लिङ्गमूलं रक्षतु मम । लं ऐं लं
पृथिवी गुदमण्डलं रक्षतु मम । ऐं ऐं ऐं
बलगा ऐं ऐं ऐं स्तनद्वयं रक्षतु मम । हसौं
भैरवी ह्सौः स्कन्धद्वयं रक्षतु मम । ह्रीं

| | आराधिता राधिका च तेन सत्यं न संशयः ।<br>गङ्गास्नानात् हरेर्नामग्रहणात् यत् फलं लभेत् ॥<br>तत् फलं तस्य भवति यः पठेत् प्रयतः शुचिः ।<br>हरिद्रारोचना चन्द्रमण्डितं हरिचन्दनम् ॥<br>कृत्वा लिखित्वा भूर्ज्जे च धारयेत् मस्तके भुजे ।<br>कण्ठे वा देवदेवेशि स हरिर्नात्र संशयः ॥<br>कवचस्य प्रसादेन ब्रह्मा सृष्टिं स्थितिं हरिः ।<br>संहारञ्चाहं नियतं करोमि कुरुते तथा ॥<br>वैष्णवाय च शुद्धाय विरागगुणशीलिने ।<br>दद्यात् कवचमव्यग्रमन्यथा नाशमाप्नुयात् ॥”<br>इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे पञ्चरात्रे | |
|---|---|---|

अन्नपूर्णा ह्रीं घाटां रक्षतु मम । ऐं ह्रीं ऐं
बीजत्रयं सदा पातु पृष्ठदेशं मम । ॐ
महा-
देवः पातु सर्व्वाङ्गं मे ॐ नारायणः
पातु
सर्व्वाङ्गं सदा मम ।
ॐ ॐ कृष्णः पातु सदा गोत्रं
रुक्मिणीनाथः ।
रुक्मिणी सत्यभामा च सैव्या
जाम्बुवती तथा ॥
लक्षणा मित्रवृन्दा च भद्रा नग्नजिता
तथा ।
एताः सर्व्वा युवतयः शोभनास्याः
सुलोचनाः ॥
रक्षेयुर्म्मां सन्तु दिक्षु सततं शुभदर्शनाः
।
ॐ नारायणश्च गोविन्दः शिरः
पद्मदलेक्षणः ॥
सर्व्वाङ्गं मे सदा रक्षेत् केशवः केशिहा
हरिः ।
इतीदं कवचं भद्रे त्रैलोक्यमङ्गलं शुभम्
॥
पद्मिन्याः परमेशानि उपविद्यासु
सङ्गतम् ।
यः पठेत् पाठयेद्वापि सततं
भक्तितत्परः ॥
निराहारो जलत्यागी अयुतं वत्सरे
सदा ।
तदैव परमेशानि पद्मिनी वशतामियात्
॥
एतत्ते कथितं देवि कवचं भुवि दुर्लभम्
।
फलमूलजलं त्यक्त्वा पठेत् संवत्सरं
यदि ॥
पद्मिनी वशमायाति तदैव नगनन्दिनि ।
अनेनैव विधानेन यः पठेत् कवचं परम्
॥
विष्णुलोकमवाप्नोति नान्यथा वचनं
मम ।

इति नारदपञ्चरात्रे ज्ञानामृतसारे द्वितीय-
रात्रौ शिवनारदसंवादे भक्तिज्ञानकथने
श्रीराधिकास्तोत्रं समाप्तम्

**राधाकान्तः**, पुं, (राधायाः कान्तः ।) श्रीकृष्णः ।

यथा, --
“गोलोके द्विभुजः कृष्णो
राधाकान्तःसनातनः ।
गोपाङ्गनादिभिर्युक्तो द्विभुजैर्गोपपार्श्वदैः
॥”
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १७ अध्यायः
॥

**राधातनयः**, पुं, (राधायाः सूतपत्न्यास्तनयः ।

तया पालितत्वात् तथात्वम् ।) कर्णः ।
इति
हेमचन्द्रे कर्णपर्य्यायि
राधासुतशब्ददर्शनात् ॥

**राधाभेदी**, [न्] पुं, (राधां धन्विचित्रभेदं भिन-

त्तीति । भिद् + णिनिः ।) अर्ज्जुनः ।
इति भूरि-
प्रयोगः ॥

**राधावेधी**, [न्] पुं, (राधां धन्विचित्रविशेषं

विध्यतीति । विध् + णिनिः ।) अर्ज्जुनः
। यथा,
“राधावेधी किरीटचैन्द्रिर्ज्जिष्णुः
श्वेतहयो नरः ।
बृहन्नलो गुडाकेशः सुभद्रेशः कपिध्वजः
।
वीभत्सुः कर्णजित्तस्य गाण्डीवं गाण्डिवं
धनुः ॥”
इति हेमचन्द्रः । ३ । ३७३ ॥

**राधासुतः**, पुं, (राधायाः सूतपत्न्याः सुतः ।)

कर्णः । यथा, --
“वेदिजा याज्ञसेनी च
कर्णश्चम्पाधिपोऽङ्गराट् ।
राधासुतोऽर्कतनयः कालपृष्ठन्तु तद्धनुः
॥”

**रामः**, पुं, (रमते इति । रम क्रीडायाम् +

“ज्वलितिकसन्तेभ्यो णः ।” ३ । १ । १४० ।
इति णः ।) परशुरामः । स तु विष्णोरंशः
जमदग्निमुनेः पुत्त्रत्वेन त्रेतायुगादाववतीर्णः
एकविंशतिवारान् पृथिवीं निःक्षत्त्रियामक-
रोत् । (असौ एव समन्तपञ्चके पञ्च क्षत्त्रिय-
शोणितह्रदान् विधाय पितॄन् सन्तर्पयामास ।
यदुक्तं महाभारते । १ । २ । २ -- ११ ।
सौतिरुवाच ।
“शृणुध्वं मम भो विप्रा ब्रुवतश्च कथाः शुभाः ।
समन्तपञ्चकाख्यञ्च श्रोतुमर्हथ सत्तमाः ॥
त्रेताद्वापरयोः सन्धौ रामः शस्त्रभृत्मंवरः ।
असकृत् पार्थिवं क्षत्त्रं जघानामर्षचोदितः ॥
स सर्व्वं क्षत्त्रमुत्साद्य स्ववीर्य्येणानलद्युतिः ।
समन्तपञ्चके पञ्च चकार रौधिरान् ह्रदान् ॥
स तेषु रुधिराम्भःसु ह्रदेषु क्रोधमूर्च्छितः ।
पितॄन् सन्तर्पयामास रुधिरेणेति नः श्रुतम् ॥
अथर्चीकादयोऽभ्येत्य पितरो राममब्रुवन् ।
राम राम महाभाग प्रीताः स्मस्तव भार्गव ॥
अनया पितृभक्त्या च विक्रमेण तव प्रभो ।
वरं वृणीष्व भद्रन्ते यमिच्छसि महाद्युते ॥
राम उवाच ।
यदि मे पितरः प्रीता यद्यनुग्राह्यता मयि ।
यच्च रोषाभिभूतेन क्षत्त्रमुत्सादितं मया ॥
अतश्च पापान्मुच्येऽहमेष मे प्रार्थितो वरः ।
ह्रदाश्च तीर्थभूता मे भवेयुर्भुवि विश्रुताः ॥
एवं भविष्यतीत्येवं पितरस्तमथाब्रुवन् ।
तं क्षमस्वेति निषिषिधुस्ततः स विरराम ह ॥
तेषां समीपे यो देशो ह्रदानां रुधिराम्भसाम् ।
समन्तपञ्चकमिति पुण्यं तत् परिकीर्त्तितम् ॥”
अस्यान्यद्विवरणं परशुरामशब्दे द्रष्टव्यम् ॥ *)
राघवः । श्रीरामचन्द्रः स च पूर्णब्रह्मस्वरूपः
अयोध्याधिपतिदशरथराजतनयत्वेन त्रेतायुग-
शेषे रावणादिवधार्थमवतीर्णः । बलदेवः । स
तु अनन्तदेवो विष्णोरंशः यदुवंशीयवसुदेव-
पुत्त्रत्वेन द्वापरयुगान्ते कंसादिवधार्थमवतीर्णः ।
(यथा, भागवते । १ । ११ । १७ ।
“निशम्य प्रेष्ठमायान्तं वासुदेवो महामनाः ।
अक्रूरश्चोग्रसेनश्च रामश्चाद्भुतविक्रमः ॥”)

संगोप्य पूजयेद्विद्यां महाविद्यां वरानने ॥
प्रकटार्थमिदं देवि कवचं प्रपठेत् सदा ।
महाविद्यां विना भद्रे यः पठेत् कवचं प्रिये ।
तदैव सहसा भद्रे कुम्भीपाकं व्रजेत् प्रिये ॥”
इति वासुदेवरहस्ये राधातन्त्रे एकत्रिंशत्
पटलः ॥) अथ राधास्तोत्रम् ।
“स्तोत्रञ्च सामवेदोक्तं प्रपठेत् भक्तिपूर्ब्बकम् ।
राधा रासेश्वरी रम्या परमा च परात्मनः ॥
रासोद्भवा कृष्णकान्ता कृष्णवक्षःस्थलस्थिता ।
कृष्णप्राणाधिदेवी च महाविष्णुप्रसूरपि ॥
सर्व्वथा विष्णुमाया च सत्यासत्या सनातनी ।
ब्रह्मस्वरूपा परमा निर्लिप्ता निर्गुणा परा ॥
वृन्दावनेशा विजया यमुनातटवासिनी ।
गोलोकवासिनी गोपी गोपीशा गोपमातृका ।
सानन्दा परमानन्दा नन्दनन्दनकामिनी ।
वृषभानुसुता शान्ता कान्ता पूर्णतमस्य च ॥
काम्या कलावतीकन्या तीर्थपूता सतीनिभा ।
सप्तत्रिंशच्च नामानि वेदोक्तानि शुभानि च ॥
सारभूतानि पुण्यानि सर्व्वनामसु नारदः ।
यः पठेत् संयतः शुद्धो विष्णुभक्तो जितेन्द्रियः ॥
इह वै निश्चलां लक्ष्मीं लब्ध्वा याति हरेः पदम् ॥
इति हेमचन्द्रः । ३ । ३७५ ॥
(यथा, महाभारते । ८ । ८६ । ३ ।
“पश्य चैनं समायुक्तं रथं कर्णस्य पाण्डव ।
श्वेतबाजिसमायुक्तं युक्तं राधासुतेन च ॥”)

**राधेयः**, पुं, (राधाया अपत्यमिति । राधा + “स्त्रीभ्यो ढक् ।” ४ । १ । १२० । इति ढक् ।)
कर्णः । इति त्रिकाण्डशेषः ॥ (यथा, महा-
भारते । १ । १३४ । ११ ।
“सूतपुत्त्रस्तु राधेयो गुरुं द्रोणमियात्तदा ॥”)

**राप्यः**, त्रि, (रप्यते इति । रप् + “आसुयुवपि-रपीति ।” ३ । १ । १२६ । इति ण्यत् ।) कथ-
नीयः । रपधातोः कर्म्मणि घ्यणप्रत्ययेन निष्पन्नः ॥

**रामं**, क्ली, (रम्यतेऽनेनेति । रम् + घञ् ।) वास्तू-कम् । कुष्ठम् । इति मेदिनी । मे, २६ ॥ तमाल-
पत्रम् । इति राजनिर्घण्टः ॥ (नैशं तमः ।
यथा, ऋग्वेदे । १० । ३ । ३ ।
“सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्
रुशद्भिर्वर्णैरभिराममस्थात् ॥”
“रामं कृष्णवर्णं शार्व्वरं तंमः अभ्यस्थात्सायं
होमकाले अभिभूय तिष्ठति ।” इति तद्भाष्ये
सायणः ॥)

**रामः**, त्रि, (रमते इति । रम् + णः । रम्यतेऽनेनेति । रम् + घञ् वा ।) मनोज्ञः । (यथा, बृहत्-
संहितायाम् । १९ । ५ ।
“गावः प्रभूतपयसो नयनाभिरामा
रामा रतैरविरतं रमयन्ति रामान् ॥”)
सितः । असितः । इति मेदिनी । मे, २७ ॥
त्रयो रामा यथा, --
“अघोरश्चाथ बाणश्च महाकालौ प्रकीर्त्तितौ ।
भार्गवो राघवो गोपस्त्रयो रामाः प्रकीर्त्तिताः ॥”
इति वह्निपुराणम् ॥ * ॥
वरुणः । घोटकः । पशुभेदः । इति मेदिनी ।
मे, २६ ॥ (रम् + भावे घञ् । रतिः । यथा,
भागवते । ७ । ६ । १४ ।
“सर्व्वत्र तापत्रयदुःखितात्मा
निर्व्विद्यते न स्वकुटुम्बरामः ॥”
“स्वकुटुम्बे रामो रतिर्यस्य ।” इति तत्र
श्रीधरस्वामी ॥) रामशब्दस्य व्युत्पत्तिर्यथा, --
“राशब्दो विश्ववचनो मश्चापीश्वरवाचकः ।
विश्वानामीश्वरो यो हि तेन रामः प्रकीर्त्तितः ॥

| | | |
|---|---|---|
| हरिभक्तिं हरेर्दास्यं लभते नात्र संशयः ॥<br>भक्तो लक्षजपेनैव स्तोत्रसिद्धिर्भवेत् ध्रुवम् ।<br>स्तोत्रस्मरणमात्रेण जीवन्मुक्तो भवेन्नरः ॥<br>पदे पदेऽश्वमेधस्य लभते निश्चितं फलम् ।<br>कोटिजन्मार्ज्जितात् पापात् ब्रह्महत्याशतादपि ।<br>स्तोत्रस्मरणमात्रेण मुच्यते नात्र संशयः ॥<br>मृतवत्मा काकबन्ध्या महाबन्ध्या प्रसूयते ।<br>शृणोति वर्षमेकं या शुद्धा स्निग्धान्नभोजनी ॥<br>शृणोति मासमेकं यः सर्व्वाभीष्टं लभेन्नरः ।<br>सामवेदे कुमारं तमित्याह कमलोद्भवः ॥” | | |

रमते रमया सार्द्धं तेन रामं विदुर्बुधाः
।
रमाणां रमणस्थानं रामं रामविदो विदुः
॥
रा चेति लक्ष्मीवचनो
मश्चापीश्वरवाचकः ।
लक्ष्मीपतिं गतिं रामं प्रवदन्ति
मनीषिणः ॥
नाम्नां सहस्रं दिव्यानां स्मरणे यत्
फलं लभेत् ।
तत् फलं लभते नूनं
रामोच्चारणमात्रतः ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे
११० अध्यायः ॥
(तथा च अध्यात्मरामायणे । १ । ३ ।
४४ ।
“यस्मिन् रमन्ते मुनयो विद्यया
ज्ञानविप्लवे ।
तं गुरुः प्राह रामेति रमणाद्राम इत्यपि
॥”
एतत्कृतराक्षसवधवृत्तान्तं विचार्य्य
यदुक्तं
रामानुजेन तदाह । “अत्र
युद्धदिवसगणनायां
कतकतीर्थौ । पूर्व्वं सुवेलारोहणदिने ।
‘ततोऽस्तमगमत् सूर्य्यः सन्ध्यया
प्रतिरञ्जितः ।
पूर्णचन्द्रप्रदीप्ता च क्षपा समतिवर्त्तते
॥’
इत्युक्तेस्तद्दिनं
चतुर्द्दशीपूर्णिमान्यतरदिति
स्पष्टम् । ततः कृष्णप्रतिपदि
युद्धारम्भस्तस्या-
मेव रात्रौ नागपाशबन्धतद्विमोक्षौ ।
द्विती-
यायां धूम्राक्षवधः । तृतीयायां
वज्रदंष्ट्रस्य ।
चतुर्थ्यामकम्पनस्य । पञ्चम्यां
प्रहस्तस्य ।

इति तीर्थोक्तश्चैत्रकृष्णस्येत्यन्त्योऽपि
परास्तः ।
पूर्णिमान्तमानेन
तिथिबद्धद्वादशमासैर्व्वर्षगणने
पञ्चदिनानां न्यूनत्वात् । अमान्तमानेन चैत्र-
कृष्णग्रहणे बहुदिनाधिक्यम् । सावनमानेन
षष्ट्युत्तरत्रिशता दिनैर्व्वर्षगणने तु
तिथिबद्धवर्षात्
तत्र षड्दिनाधिक्येन
चतुर्द्दशवर्षाणाञ्चतुरशी-
त्यहोरात्रवृद्ध्या बहुदिनन्यूनतैव । किञ्च
महा-
भारते युधिष्ठिरवनवासे त्रयोदशवर्षमिते
किञ्चित्कालादव्वाग्घि तेषां प्राकट्ये
दुर्य्योधनेन
तदसमाप्तौ एषां प्राकट्येन
पुनस्तावत्पर्य्यन्तं
पुनरेतैर्वनवासः कर्त्तव्यो भविष्यतीति भीष्मं
प्रत्युक्ते भीष्मवाक्यं विराटपर्व्वणि ।
‘पञ्चमे पञ्चमे वर्षे द्वौ मासावुपजायतः ।
एषामप्यधिका मासाः पञ्च च द्वादशक्षपाः
त्रयोदशानां वर्षाणामिति मे धीयते मतिः ।
सर्व्वं यथावच्चरितं यद्यदेभिः प्रतिश्रुतम् ॥
एवमेतद्ध्रुवं ज्ञात्वा ततो वीभत्सुरागतः ।
सर्व्वे चैव महात्मानः सर्व्वे धर्म्मार्थकोविदाः
॥
येषां युधिष्ठिरो राजा कस्माद्धर्म्मेपराध्नुयुः
॥’
इति । एवञ्चेदृशव्यवहारनिबद्धद्वादशमासैरेव
वर्षगणना । अधिकमासगणना चोचितैव ।
एवञ्चाधिकमासगणनायां धर्म्माहानौ
न्याय्यत्वे
च स्थिते कस्माद्रामस्तानुपेक्षेत । भरतो वा
तान्न गणयेत् । एवञ्चामान्तमानेन चतुर्द्दशी-
याश्विनकृष्णे । पूर्णिमान्तमानेन
कार्त्तिककृष्णे
षष्ठ्यां तत्समाप्तिरित्यायाति । अन्यथा
चैत्र-

इत्यादि । अतएव
शरबन्धबद्धराघवदर्शनकाले
सीतावाक्यम् । तीर्त्वा सागरमक्षोभ्यं भ्रातरौ
गोष्पदे हताविति । अनेन बहुदिनयुद्धे बहुषु
राक्षसेषु क्षयितेषु
यूथपकतिपयरूपेऽत्यल्पाव-
शिष्टे सैन्ये तयोः शरबन्ध इति लभ्यते । तथा
अयं ते सुमहान् कालः शयानस्य महाबलेति
कुम्भकर्णम्प्रति रावणोक्त्या
साम्प्रततन्निद्रायाः
षण्मासाधिकत्वप्रतीतेरप्येवमेवोचितम् ।
निरू-
पितञ्चैतत् प्राक् । सेतुबन्धादिवृत्तान्तं त्वं न
जानीषे इति कुम्भकर्णम्प्रति रावणोक्त्या
पूर्व्व-
मन्त्रकरणोत्तरं मध्ये जागरणाभावस्य प्रतीतेः
।
किञ्च । शरबन्धनदिनं न कृष्णप्रतिपत् ।
तस्याः
पूर्णिमोत्तरत्वेन सम्पूर्णरात्रौ चन्द्रसत्तया
तस्मिं-
स्तमसि दारुणे इत्याद्युक्तेरसङ्गत्यापत्तेरतः
सा
शुक्लप्रतिपद्वाच्या । एवञ्चामान्तपक्षमात्रं
युद्ध-
मित्यस्यात्यन्तमसङ्गत्यापत्तिः । यत्तु
अमायामेव
रावणवध इति तत्तु न युक्तम् । इन्द्रजिद्वधो-
त्तरम् ।
‘अभ्युत्थानं त्वमद्यैव कृष्णपक्षचतुर्द्दशीम् ।
कृत्वा निर्य्याह्यमावास्यां विजयाय बलैर्वृतः
॥’
इति रावणम्प्रति सुपार्श्वस्योक्त्या ।
चतुर्द्दश्यां
रावणप्रेषितबलवधोत्तरममायांनिर्गतरावणेन
रामलक्षणयोर्युद्धे रात्रौ लक्ष्मणस्य शक्ति-
घातोत्तरं रावणलङ्काप्रवेशस्योक्ततया ततो
लक्ष्मणचिकित्सोत्तरं पुना रामरावणयुद्धस्य
वाल्मीकिनैव स्पष्टमुक्ततया तदसम्भवात् ।

षष्ठ्यां रावणभङ्गः । सप्तम्यां कुम्भकर्ण-
वधः । अष्टम्यामतिकायादेः । नवम्यामिन्द्र-
जितो ब्रह्मास्त्रप्रयोगः । दशम्यां दिवा
निकुम्भवधः । तद्रात्रौ मकराक्षवधः । एका-
दश्यादित्रयोदश्यन्तदिनत्रयेण इन्द्रजिद्वधः ।
चतुर्द्दश्यां मूलबलवधः । अमायां रावणयुद्धा-
रम्भतद्वधाविति पञ्चदशदिनानि सर्व्वं युद्ध-
मिति । अत्रेदं वक्तव्यम् । केयं कृष्णप्रतिपत्
माघकृष्णस्य वा चैत्रकृष्णस्य वा । नाद्यः चैत्रे
पुष्यानक्षत्रेऽयोध्यातो वनं प्रति रामस्य प्रस्थान-
मिति स्पष्टमयोध्याकाण्डे । चैत्रे पुष्यश्च शुक्ल-
पक्ष एव तत्रापि नवम्यादिदिनत्रये एवेति
स्पष्टमेव ज्योतिषादौ । तत्र नवमीरिक्तात्वाद-
भिषेकायोग्या दशम्येव तु पूर्णत्वाद्योग्या ।
एवञ्च चैत्रशुक्लदशम्यां प्रस्थानम् । तत्र माघ-
कृष्णामायां युद्धसमाप्तौ तदुत्तरपञ्चम्यां भर-
द्वाजाश्रमगमनम् ।
‘पूर्णे चतुर्द्दशे वर्षे पञ्चम्यां लक्षणाग्रजः ।
भरद्वाजाश्रमं प्राप्य ववन्दे नियतो मुनिम् ॥’
इति वक्ष्यमाणत्वात् । तत्र न च चतुर्द्दशवर्ष-
समाप्तिरिति भगवतः प्रतिज्ञाहानिः । पूर्णे
शुक्लदशम्यामारब्धस्य वनवासस्य षष्ठ्यां चतु-
र्द्दशवर्षसमाप्तिर्न कथमप्युपपद्यते । तद्गणने तु
एकादशदिनन्यूनषण्णां मासानां चतुर्द्दशवर्षेषु
वृद्धावुपपद्यत एव सा । तस्मात् द्वादशसमाप्त्यु-
त्तरं त्रयोदशे किञ्चिद्व्यतीते अरण्यकाण्डोक्ता-
स्मद्रीत्या फाल्गुनाष्टम्यां रावणकृतसीताप-
हारः । ततश्चतुर्द्दशे किञ्चिद्व्यतीते रामस्य
लङ्कासमीपगमनम् । वर्त्तते दशमो मासो द्वौ
तु शेषौ प्लवङ्गमेति सीतोक्तिः सावनमानेन
स्वहरणदिनतः कालगणनया । तत्र पूर्णचन्द्र-
प्रदीप्ता चेति रामोक्त्या पौषशुक्लचतुर्द्दश्यां पूर्णि-
मायां वा त्रिकूटशिखरप्राप्ती रामस्य । किञ्च
हनूमतो लङ्काप्रवेशोत्तरं सीतादर्शनकाले
हिमव्यपायेन च शीतरश्मिरभ्युत्थितो नैक-
सहस्ररश्मिरिति वाक्येन द्वौ मासौ रक्षितव्यौ
मे योऽवधिस्ते मया कृत इति रावणवाक्येन
मार्गशुक्लदशम्युत्तरं हनूमतो लङ्काप्रवेशो दिन-
द्वयान्तरे लभ्यते इति निरूपितं सुन्दरकाण्डे ।
ततो मार्गकृष्णाष्टम्यां राघवप्रस्थानस्यान्यत्रोक्त-
त्वेन पौषपूर्णिमात्वमेवोचितं तत्प्राप्तिदिनस्य ।
ततो दशपञ्चदिनानि सेनानिवेशदूतप्रेषणादिना
गतानि । ततो युद्धारम्भस्तत्र तदारभ्य भाद्र-
श्रावणोभयामान्तं लङ्कापुराद् बहिः सेनयोः
सङ्कुलं युद्धम् । ततो बहुराक्षसक्षयेण भीता
राक्षसा लङ्कां प्रविष्टा इति तद्दिनेऽवहारः ।
तदुत्तरप्रतिपदि रात्राविन्द्रजित्कृतशरबन्ध
किञ्च । आदित्यहृदयस्यादित्यं प्रेक्ष्य जप्त्वेद्रं
परं हर्षमवाप्तवानित्यनेन सूर्य्यदर्शनोत्तरं
जपस्योक्ततया रावणमरणोत्तरं स्थिरप्रभ-
श्चाभ्यभवद्दिवाकर इत्युक्त्या दिवा तद्वधप्रतीत्या
च चिरकालयुद्धोत्तरं लक्ष्मणे शक्तिघातस्य
तदथमोषधीपर्व्वतानयनस्य चोक्तत्वेनामारात्रौ
शक्तिघातप्रतीत्या रणाद्रावणापगमस्य प्रतीत्या
च तद्विरोधात् । तथा पाद्मे ।
‘ततो जज्ञे महायुद्धं सङ्कुलं कपिरक्षसाम् ।
मध्याह्ने प्रथमं युद्धं प्रारब्धं प्रतिपद्यभूत् ॥’
प्रतिपदि शुक्लप्रतिपदीत्यर्थः । उक्तयुक्तेः ।
‘ततो निशि समागम्य मायावी शक्रजिद् बली ।
बबन्ध नागपाशैस्तौ राघवौ च हरिव्रजान् ॥’
ततः चिरकालसङ्कुलयुद्धोत्तरम् । अन्यथा तस्यां
निशीत्येव वदेत् । अग्रे द्वितीयेऽह्नि षष्ठ्यामिति
चोक्त्या दारुणे तमसीति रामायणोक्त्या च
भाद्रश्रावणोभयमामोत्तरप्रतिपद्येतदिति
बोध्यम् ।
‘वैनतेयस्तदाभ्येत्य तानि चास्त्राण्यमोचयत् ।
द्वितीयेऽहनि धूम्राक्षं हनूमान्निजघान वै ॥
तृतीयेऽह्निवज्रदंष्ट्रं खड्गाच्चिच्छेद चाङ्गदः ।
जघान हनूमान् भूयश्चतुर्थेऽहन्यकम्पनम् ॥
प्रहस्तं पञ्चमीतिथ्यां नीलश्चिच्छेदमूर्द्धनि ।
रावणः परिभूतोऽभूत् षष्ठ्यां रामेण धन्विना ॥
अथ लङ्केश्वरः खिन्नः कुम्भकर्णं सहोदरम् ।
शैलमुद्गरघाताश्वधावनाद्यैरबोधयत्।
जघान तं कुम्भकर्णं रामः सप्तमवासरे ॥’

| | | |
|---|---|---|
| चतुर्द्दशे वर्षे इत्युक्तेरसङ्गतिश्च । युद्धोत्तरं तावत्कालं लङ्कायामवस्थानस्यालाभाच्च। चैत्र-शुक्लपञ्चम्यां तत्रागमनेऽपि पञ्चदिनन्यूनतैवेति तद्धानिस्तदवस्थैव । तदुत्तरद्वितीयदिने एवायो-ध्याप्रवेशस्य लाभात् । अमान्तमानेन चैत्रकृ-ष्णोत्तरपञ्चम्यां तदाश्रमगतावपि चतुर्द्दशवर्षतो बहुदिनाधिक्येन चतुर्द्दशवर्षसमाप्तिदिनेऽयोध्या-नागमे "मया प्राणा हेया" इति भरतप्रतिज्ञा-हानिः । सा च प्रतिज्ञा चित्रकूटे रामसन्निधा-वित्ययोध्याकाण्डान्ते स्पष्टम् । एतेन चैत्रकृष्ण-प्रतिपदि युद्धारम्भस्तच्छुक्लप्रतिपदि रावणसंहार | | |

इदं बोधनं दिनद्वयेन । तं बोधितं कुम्भकर्णम् ।
सप्तमवासरे बोधनोत्तरं सप्तमवासरे इत्यर्थः ।
यत् तु बोधनं षष्ठ्यां रात्रौ सप्तम्याञ्चैतद्वध इति
तन्न । तदुत्थापने उक्तस्यातिप्रयासस्य रात्रि-
मात्रेणासम्भवात् । रावणमन्दिरगमनकाले
सूर्य्यप्रभया रावणमन्दिरस्यातिभास्वरत्ववर्ण-
नेन मन्त्रादिना सप्तम्यां युद्धासम्भवात् । इन्द्र-
जितो दिनत्रयेण वधोऽस्य यामषट्केनेत्यस्या-
सङ्गतत्वाच्च । एवञ्च भाद्रपूर्णिमायामेतद्वधः ।
'जघान लक्ष्मणोऽन्येद्युरतिकायं दशास्यजम् ।
बबन्धान्येद्यु रिन्द्रारिर्ब्रह्मास्त्रेण नृपौ कपीन् ॥
हनूमता समानीतो महौषधमहीधरः ।
तस्यानिलस्पर्शवशात् सर्व्व एते समुत्थिताः ॥
अन्येद्युः कपिराट्कुम्भं निकुम्भं वायुजोऽवधीत् ।
तस्यां निशि रघुश्रेष्ठो जघान मकरेक्षणम् ॥
मायासीतावधञ्चक्रे शक्रजिद्रणमूर्द्धनि ।
तेन खिन्नोऽभवद्राम आश्वस्तो लक्ष्मणेन सः ।
त्रयोदशाहे सौमित्रिस्त्रिदिनं योधयन् बली ॥
जघान शक्रजेतारं रामध्यानेन हेतुना ॥'
अन्येद्युः अन्येषु दिवसेषु । अत्रातिकायग्रहणं
त्रिशिरोदेवान्तकनरान्तकमहोदरमहापार्श्वो-
पलक्षणम् । लक्ष्मणग्रहणमङ्गदहनूमतोरप्युप-
लक्षणम् । एवं षड्भिर्द्दिनैः षण्णां वधः ।
पूर्ब्बं क्रमेणैव तद्वधोक्तेः । अन्येद्युः सप्तम्याम् ।
पर्व्वतानयनमष्टम्याम् । अम्येद्युर्नवम्याम् । तस्यां
निशि नवमीरात्रौ तदन्ते मायासीतावधः ।
ततो दशमीचतुर्थयाममारभ्य त्रयोदशीचतुर्थ-
यामपर्य्यन्तमिन्द्रजिद्वधः ।
'ततोऽवधीन्मूलबलञ्चतुर्द्दश्यांरघूद्वहः ।
दर्शेऽथ निर्य्ययौ राजा योद्धुं रामेण संयुगे ॥
चतुरङ्गबलैः सार्द्धं मन्त्रिभिर्द्दशकन्धरः ।
छत्रचामरसंयुक्तः सर्व्वाभरणभूषितः ॥
महारथगतो द्वारादुत्तरान्निर्य्ययौ बहिः ।
आगतो रक्षसां राजा ब्रह्मघ्नो देवकण्टकः ॥
योद्धुं रघुवरेणेति शुश्रुवे कलहध्वनिः ।
तत्र युद्धं समभवद्वानराणाञ्च रक्षसाम् ॥
रामरावणयोश्चैव तथा सौमित्रिणा सह ॥
शक्तिञ्चिक्षेप संक्रुद्धः सोऽनुजं प्रति रावणः ।
वक्षसा धारयामास सौमित्रिस्तां वियद्गताम् ॥

राघवाय स्वसूतेन प्रेषयामास भक्तिमान्
॥
तन्तु मातलिनानीतमारुह्य रथसत्तमम्
।
स्तूयमानः सुरगणैर्युयुधे तेन रक्षसा ॥
ततो युद्धमभूद्घोरं रामराघवयोर्म्महत् ।
सप्ताह्निकमहोरात्रं
शस्त्रास्त्रैरतिभीषणैरिति ॥'
ततो मातलिरथागमनदिनोत्तरम् । एवञ्च
नवम्यां तद्वधः । तदुक्तं कालिकापुराणे
।
'रामस्यानुग्रहार्थं वै रावणस्य वधाय च
।
रात्रावेव महादेवी ब्रह्मणा बोधिता पुरा ॥
ततस्तु त्यक्तनिद्रा सा
नन्दायामाश्विनेऽसिते ।
जगाम नगरीं लङ्कां यत्रासीद्राघवः पुरा
॥'
आगत इति शेषः । इदञ्चागमनं रात्र्यन्ते
तदैव मातलिरथागमनम
'तत्र गत्वा महादेवी तदा तौ
रामलक्ष्मणौ ।
युद्धेन योजयामास
स्वयमन्तर्हिताम्बिका ॥
राक्षसानां वानराणां जग्ध्वा सा
मांसशोणि-
तम् ।
रामरावणयोर्युद्धं सप्ताहं सा न्ययीजयत्
॥
व्यतीते सप्तमे रात्रे नवम्यां रावणं ततः ।
रामेण घातयामास महामाया जगन्मयी
॥
यावत्तयोः स्वयं देवो युद्धकेलिमुदैक्षत ।
तावत्तु अष्टरात्राणि सर्व्वैर्द्देवैः सुपूजिता
॥
निहते रावणे वीरे नवम्यां सकलैः सुरैः
।
विशेषपूजां दुर्गायाश्चक्रे लोकपितामहः
॥'

'स एव भगवान्नूनं प्रतिमन्वन्तरं मुने ! ।
वधाय दुष्टदैत्यानां भूमिभारकृतां भुवि
॥
कलिद्वापरयोः सन्धौ भविष्यति न
संशयः ।
प्रतिकल्पं त्वेवमेव भविष्यति न संशयः
॥" इति ।
सहस्रकृत्वो रामोऽपि भविता ब्रह्मणो
दिने
इति ब्रह्मवैवर्त्ते प्रथमविभागस्थे राधां
प्रति
कृष्णवाक्ये । दिने इति
जातावेकवचनम् ।
दिनेष्वित्यर्थः । पूर्ब्बं
प्रतिमन्वन्तरमित्युक्तेः ।
प्रतिचतुर्युगं रामाद्यवतार इति तु न
युक्तम् ।
चतुर्व्विंशतितमचतुर्युगे
रामावतारस्याष्टा-
विंशतितमचतुर्युगे कृष्णावतारस्य
हरिवंशे पुरा-
णान्तरे च प्रसिद्धत्वादिति दिक् ।
अग्निवेश्य-
रामायणमिति प्रसिद्धग्रन्थेषु ।
'रामः पञ्चदशे वर्षे षड्वर्षामपि
मैथिलीम् ।
उपयेमे त्वयोध्यायां द्वादशाब्दानुवास
सः ॥
सप्तविंशतिमे वर्षे वनवासमकल्पयत् ।
अष्टादश तु वर्षाणि सीतायास्तु
तदाभवन् ॥
त्रिरात्रमुदकाहारश्चतुर्थेऽह्नि फलाशनः
।
पञ्चमे चित्रकूटे तु रामो वासमकारयत्
॥
अथ त्रयोदशे वर्षे पञ्चवट्यां महामनाः
।
रामो विरूपयामास घोरां शूर्पणखां वने
॥

तया स बाध्यमानः सन् पपात धरणीतले ॥
हनमता जीवितोऽभूदोषध्यानयनात्पुनः ।
ततः क्रुद्धो महातेजा राघवो राक्षसान्तकः ॥
जघान राक्षसान् सर्व्वान् शरैः कालान्तको-
पमैः ।
भयात् प्रदुद्रावं रणे लङ्कां प्रति निशाचरः ॥
जगद्रामममयं पश्यन्निर्व्वेदात् स्वगृहं विशत् ।
निकुम्भिलां ततः प्राप्य होमञ्चक्रे जिगीषया ॥
ध्वंमितं वानरेन्द्रैस्तदभिचारात्मकं रिपोः ।
पुनरुत्थाय पौलस्त्यो रामेण सह योधितुम् ॥
दिशं स्यन्दनसारुह्य राक्षसैर्निर्य्ययौ बहिः ॥'
ददं निर्गमनमाश्विनशुक्लप्रतिपदि।
'ततः शतमखो दिव्यं रथं हर्य्यश्वसंयुतम् ।

सकलैः सुरैरित्यस्य सहेति शेषः ।
'रामरावणबाणैस्तु युद्धञ्चावेक्ष्य
भीतिदम् ।
तृतीयायान्तु लङ्कायाः पूर्ब्बोत्तरदिशि
स्थितम् ॥
स्वातिनक्षत्रयुक्तायां भीतं सुरबलं महत्
।
शान्त्यथ वारयामास देवेन्द्रो वचनाद्धरेः
॥'
शान्त्यर्थं भयशान्त्यर्थम् ।
'ततस्तु श्रवणे नाथ दशम्यां चण्डिका
शुभाम् ।
विसृज्य चक्रे शान्त्यर्थं बलनीराजनं
हरिः ॥'
रिपुजनितभयशान्त्यर्थमित्यर्थः ।
'नीराजितबलः शक्रस्तत्र रामं
सलक्ष्मणम् ।
सम्भाष्य प्रययौ स्वर्गं सह देवैः
शचीपतिः ॥
इति वृत्तं पुरा कल्पे मनोः
स्वायम्भुवेऽन्तरे ।
पुरा कल्पे यथा वृत्तं प्रतिकल्पं तथैव तु
॥
प्रवर्त्तते स्वयं देवी दैत्यानां नाशनाय वै
।'
स्वायम्भुवमन्वन्तररूपे पुरा कल्पे
इत्यर्थः ।
प्रतिकल्पं प्रतिमन्वन्तरमित्यर्थः ।
जलप्लवसामा-
न्येन तत्रापि कल्पव्यवहारात् ।
'प्रतिकल्पं भवेद्रामो रावणश्चापि
राक्षसः ।
तथैव जायते युद्धं तथैव त्रिदशागमः ॥
एवं रामसहस्राणि रावणानां तथैव च ।
भवितव्यानि भूतानि तेषु देवी प्रवर्त्तते
॥
तां पूजन्ति सुराः सर्व्वे बलं
नीराजयन्ति च ।
तथैव च नराः सर्व्वे कुर्य्युः पूजां
यथाविधि ॥

ततो माघे सिताष्टम्यां मुहूर्त्ते वृन्दसंज्ञके
।
राघवाभ्यां विना सीतां जहार
दशकन्धरः ॥'
माघे शुक्लचतुर्द्दश्यामिति पाठान्तरम् ।
'मार्गशुक्लदशम्यान्तु वसन्तीं
रावणालये ।
सम्पातिर्द्दशमे मासे आचख्यौ वानरेषु
ताम् ॥
एकादश्यां महेन्द्राग्रात् पुप्लुवे
शतयोजनम् ।
तद्रात्रिशेषे सीताया दर्शनं हि हनूमतः
॥
द्वादश्यां शिंशपावृक्षे हनूमान्
पर्य्यवस्थितः ।
तस्यां निशायां सीतायां
विश्वासालापसत्-
कथाः ॥
अक्षादिभिस्त्रयोदश्यां ततो युद्धमवर्त्तत
।
बधो ह्यक्षकुमारस्य वनविध्वंसनं तथा
॥
ब्रह्मास्त्रेण चतुर्द्दश्यां बद्धः शक्रजिता
कपिः ।
वह्निना पुच्छयुक्तेन लङ्काया दहनं तथा
॥
पौर्णमासीं महेन्द्राद्रौ पुनरागमनं कपेः ।
मार्गासितप्रतिपदः पञ्चभिः पथि वासरैः
॥
पुनरागम्य षष्ठेऽह्नि ध्वस्तं मधुवनञ्च तैः
।
सप्तम्यां प्रत्यभिज्ञानदानं
शुद्धिनिवेदनम् ॥
अष्टम्युत्तरफल्गुन्यां मुहूर्त्ते विजयाभिधे
।
मध्यं प्राप्ते सहस्रांशौ प्रस्थानं राघवस्य
तु ।
वासरे सप्तमेऽम्भोधौ
स्कन्धावारनिवेशनम् ॥
पौषशुक्लप्रतिपदस्तृतीयायावदम्बुधेः
।

| | | |
|---|---|---|
| | बलनीराजनं राजा कुर्य्याद् बलविवृद्धये ॥' इति ।<br>इयञ्च ब्रह्मबोधिता महादेवी अग्नौ प्रविष्टा सीतैव भगवच्छक्तिरूपेति प्रतिभाति ।<br>अतएव<br>ब्रह्मवैवर्त्ते प्रथमेऽंशविभागे । प्रतिकल्पं विष्णो-<br>श्चरितं कीदृशमिति नारदप्रश्ने<br>ब्रह्मवाक्यम् । | उपस्थानं ससैन्यस्य राघवस्य बभूव ह ॥<br>विभीषणश्चतुर्थ्यां वै रामेण सह सङ्गतः ।<br>समुद्रतरणार्थाय पञ्चम्यां मन्त्र उद्गमः ॥<br>प्रायोपवेशनञ्चक्रे रामो दिनचतुष्टयम् ।<br>समुद्रवरलाभश्च सेतूपायप्रकीर्त्तनम् ॥<br>सेतोर्द्दशस्यामारम्भस्त्रयोदश्यां समापनम् ।<br>चतुर्द्दश्यां सुवेलाग्रे रामः सैन्यं न्यवेशयत् ॥<br>पौर्णमास्यां द्वितीयान्तं त्रिदिनैः सैन्यतारणम् ।<br>तृतीयाया दशम्यन्तं मन्त्रो गुल्मनिवेशने ॥ |

शुकसारणयोः सैन्यप्राप्तिरेकादशे दिने ।
माघे सितायां द्वादश्यां सैन्यसंख्या कृता तु वै
॥
सारणेन कपीनान्तु सारासारोपवर्णनम् ।
त्रयोदश्याद्यमां यावल्लङ्कायां दिवसैस्त्रिभिः ॥
रावणः सैन्यसंख्यानं रणायोत्साहनं तथा ।
ययावथाङ्गदो दौत्यं माघशुक्लादिवासरे ॥
माघशुक्लद्वितीयादिदिनैः सप्तभिरेव तु ।
रक्षसां वानराणाञ्च युद्धमासीत् सुदारुणम् ॥
माघशुक्लनवम्यान्तु रात्राविन्द्रजिता रणे ।
रामलक्ष्मणयोर्नागपाशैर्ब्बन्धो बभूव ह ॥
नागपाशविमोक्षार्थं दशम्यां गरुडोऽभ्यगात् ।
अत्रावहारः कथितो दशम्यादिदिनद्वयम् ॥
द्वादश्यामाञ्जनेयेन धूम्राक्षस्य वधः कृतः ।
त्रयोदश्यान्तु तेनैव निहतोऽकम्पनो रणे ॥
माघशुक्लचतुर्द्दश्यां यावत् कृष्णादिवासरम् ।
त्रिदिनेन प्रहस्तस्य नीलेन विहितोऽवधः ॥
माघासितद्वितीयायाश्चतुर्थ्यन्तन्त्रिभिर्द्दिनैः ।
रामेण तुमुले युद्धे रावणो द्रावितो रणात् ॥
पञ्चम्यास्त्वष्टमी यावद्रावणेन प्रबोधितः ।
कुम्भकर्णः समुत्तस्थौ तावद्युद्धञ्चतुर्द्दिनम् ॥
कुम्भकर्णो दिनैः षड्भिर्न्नवम्यास्तु चतुर्द्दशीम् ।
रामेण निहतो युद्धे बहुवानरभक्षकः ॥
अमावास्यादिने शोकादवहारो बभूव ह ।
फाल्गुनादिप्रतिपदश्चतुर्थ्यन्तदिनैस्ततः ॥
नरान्तकप्रभृतयो निहताः पञ्च राक्षसाः ।
पञ्चम्याः सप्तमी यावदतिकायवधस्त्र्यहात् ॥
अष्टम्या द्वादशी यावन्निहतौ दिनपञ्चकात् ।
निकुम्भकुम्भावूद्दर्ध्वन्तु मकराक्षश्चतुर्द्दिनैः ॥
फाल्गुनस्य द्वितीयायां कृष्णे शक्रजिता
जितम् ।
तृतीयायास्तु सप्तम्यां हरयः पञ्चवासरात् ॥
ओषध्यानयने व्यग्रास्तदासीदवहारकः ।
तत्र त्रयोदशीं यावद्दिनैः षड्भिस्तु शक्रजित् ॥
लक्ष्मणेन हतो युद्धे विघ्नितोऽभिचरन् क्रमात् ।
चतुर्द्दश्यां दशग्रीवरणदीक्षाविधिः क्रमात् ॥
अमावास्यां ययौ वीरो युद्धाय दशकन्धरः ।
चैत्रशुक्लप्रतिपदः पञ्चमी दिनपञ्चकैः ॥
रावणस्य प्रधानानां युध्यतामभवत् क्षयः ।

वैशाखस्य चतुर्थ्यान्तु रामः
पुष्पकमास्थितः ॥
पूर्णे चतुर्द्दशे वर्षे पञ्चम्यां माधवस्य तु ।
भरद्वाजाश्रमं रामः ससीतः पुनरागमत् ॥
नन्दिग्रामे तु षष्ठ्यां वै भरतेन समागमः
।
सप्तम्यामभिषिक्तोऽसावयोध्यायां
रघूत्तमः ॥
जानकी रामसहिता रावणस्य निवेशने ।
मनुमासान् स्थिता पञ्चदशवासरसंयुतेति
॥'
यत्तु सर्व्वांशे अनिश्चितप्रामाण्यम् ।
कालिका-
पुराणादिविरोधात् । इदं
कल्पान्तरविषयमिति
न युक्तम् । तद्विरोधादेव । तस्मात्
क्रियाविरोधे
पुराणेषु उपसंहार एव न्याय्यः । शाखा-
न्तरोक्ताङ्गोपसंहारवत् । यथा
कुम्भकर्णवधो-
ऽत्र रामेणोक्तो भारते लक्ष्मणेन तादृशे
विषये
न तु कल्पभेदेन व्यवस्था । जन्मविषये
एव तु
हरिवंशोक्ता सेति बोध्यम् ।" इति
श्रीरामायण-
तीलके लङ्काकाण्डे ११० सर्गः ॥) तस्य
परि-
पूर्णतमत्वं यथा, --
"सर्व्वे चांशकलाः पुंसः कृष्णस्तु
भगवान्
स्वयम् ।
परिपूर्णतमो रामी ब्रह्मशापात् स्वविस्मृतः
॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ११६
अध्यायः ॥
अथ श्रीराममन्त्राः ।
"अनन्तोऽग्न्यासनः सेन्दुर्ब्बीजं रामाय
हृन्मनुः ।

सीतायै नमः । अग्रे ॐ शार्ङ्गाय नमः ।
दक्षिणवामपार्श्वयोः ॐ शरेभ्यो नमः ।
ॐ
चापाय नमः तद्बहिः केशरेषु
अग्न्यादिकोणेषु
मध्ये दिक्षु च रां हृदयाय नमः ।
इत्यादिना
षडङ्गानि पूजयेत् । ततो दलेषु
पूर्ब्बादिदिक्षु
ॐ हनुमते नमः । ॐ सुग्रीवाय नमः ।
ॐ
भरताय नमः । ॐ विभीषणाय नमः ।
ॐ
लक्ष्मणाय नमः । ॐ अङ्गदाय नमः ।
ॐ शत्रु-
घ्नाय नमः । ॐ जाम्बुवते नमः ।
दलाग्रेषु
ॐ सृष्टाय नमः । ॐ जयन्ताय नमः ।
ॐ
विजयाय नमः । ॐ सुराष्ट्राय नमः । ॐ
राष्ट्र-
वर्द्धनाय नमः । ॐ अकोपाय नमः ।
ॐ धर्म्म-
पालाय नमः । ॐ सुमन्त्राय नमः ।
तद्बहि-
रिन्द्रादीन् वज्रादींश्च पूजयेत् । ततो
धूपादि-
विसर्ज्जनान्तं कर्म्म समापयेत् ॥ * ॥
अस्य
पुरश्चरणं षड्लक्षजपः । तथा च ।
"ऋतुलक्षं जपेन्मन्त्रं दशांशं कमलैः
शुभैः ।
जुहुयादर्च्चिते बह्नौ ब्राह्मणान्
भोजयेत्ततः ॥"
अयं मन्त्रः षड्विधः । तथा च ।
"स्वकामशक्तिवाक्लक्ष्मीताराद्यः
पञ्चवर्णकः ।
षडक्षरः षड्विधः स्यात्
चतुर्व्वर्गफलप्रदः ॥

चैत्रषष्ठ्यष्टमी यावन्महापार्श्वादिमारणम्॥
चैत्रशुक्लनवम्यान्तु सौमित्रेः शक्तिभेदनम् ।
द्रोणाद्रिराञ्जनेयेन लक्ष्मणार्थमुपाहृतः ॥
दशम्यामवहारोऽभूद्रात्रौयुद्धं नृरक्षसोः ।
एकादश्यान्तु रामाय रथो मातलिसारथिः ॥
अष्टादशदिनै रामो द्वैरथे रावणं वधीत् ।
द्वादश्याः शुक्लपक्षस्य यावत् कृष्णचतुर्द्दशीम् ॥
माघशुक्लद्वितीयायाश्चैत्रकृष्णचतुर्द्दशीम् ।
अष्टाशीतिदिनं युद्धं मध्ये पञ्चदशाहकम् ॥
युद्धावहारः संग्रामस्त्रिसप्ततिदिनान्यभूत्।
संस्कारो रावणादीनाममावास्यादिनेऽभवत् ॥
वैशाखादितिथौ रामः सुवेलं पुनरागतः ।
अभिषिक्तो द्वितीयायां लङ्काराज्ये विभीषणः ॥
सीताशुद्धिस्तृतीयायां देवेभ्यो वरलम्भनम् ।

षडक्षरोऽयमादिष्टो भजतां कामदो मनुः ॥” *
तस्य तारकब्रह्ममन्त्रो यथा, --
“सर्व्वेषां राममन्त्राणां मन्त्रराजः षडक्षरः ।
तारकब्रह्म चेत्युक्तं तेन पूजा प्रशस्यते ॥”
तन्मन्त्रश्च रां रामाय स्वाहा । इति रामार्च्चनचन्द्रिकायाम् ४ पटलः ॥ अस्य पूजा-
प्रयोगः । प्रातःकृत्यादि
वैष्णवोक्तपीठन्यासान्तं
कर्म्म विधाय ऋष्यादिन्यासं कुर्य्यात् । शिरसि
ॐ ब्रह्मणे ऋषये नमः । मुखे
गायत्रीच्छन्दसे
नमः । हृदि श्रीरामाय देवतायै नमः । ततः
कराङ्गन्यासौ । रां अङ्गुष्ठाभ्यां नमः । रीं
तर्ज्जनीभ्यां स्वाहा । रूं मध्यमाभ्यां वषट् । रैं
अनामिकाभ्यां हुम् । रौं कनिष्ठाभ्यां वौषट् ।
रः करतलपृष्ठाभ्यां फट् । एवं हृदयादिषु ।
ततो मन्त्रन्यासः । ब्रह्मरन्ध्रे रां नमः । भ्रूमध्ये
रा नमः । हृदि मा नमः ॥ नाभौ य नमः ।
लिङ्गे न नमः ॥ पादयोर्म नमः । ततो मूर्त्ति-
पञ्जरादिविधिं विधाय देवं ध्यायेत् ।
“कालाम्भोधरकान्तिकान्तमनिशं वीरासनाध्यासिनं
मुद्रां ज्ञानमयीं दधानमपरं हस्ताम्बुजं जानुनि ।
सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं
पश्यन्तं
मुकुटाङ्गदादिविविधाकल्पोज्ज्वलाङ्गं भजे ॥”
एवं ध्यात्वा मानसैः संपूज्य शङ्खस्थापनं
कुर्य्यात् । ततः पीठपूजां विधाय वैष्ण-

ब्रह्मा सम्मोहनः
शक्तिर्दक्षिणामूर्त्तिरुच्यते ।
अगस्त्यः श्रीशिवः प्रोक्तो मुनयोऽत्र क्रमादिमे ॥
अथवा कामबीजादेर्विश्वामित्रो मुनिर्मनोः ।
छन्दो गायत्रीसंज्ञञ्च श्रीरामश्चैव देवता ॥
ध्यानपूजादिकं सर्व्वं पूर्व्ववच्च समाचरेत् ॥”
तथा ।
“जानकीवल्लभं ङेऽन्तं वह्नेर्जाया हुमादिकम् ।
दशाक्षरोऽयं मन्त्रः स्याद्वशिष्ठस्तु ऋषिर्विराट् ॥
छन्दस्तु देवता रामः सीतापाणिपरिग्रहः ।
आद्यं बीजं द्विठः शक्तिः कामेनाङ्गक्रिया मता ॥
शिरोललाटभ्रूमध्यतालुकण्ठेषु हृद्यपि ।
नाभ्यूरुजानुपादेषु दशवर्णान् न्यसेन्मनोः ॥” * ॥
ततो ध्यानम् ।
“अयोध्यानगरे चित्ररत्नसौवर्णमण्डपे ।
मन्दारपुष्पैराबद्धविताने तोरणाञ्चिते ॥
सिंहासनसमारूढं पुष्पकोपरि राघवम् ।
रक्षोभिर्हरिभिर्द्देवैर्द्दिव्ययानगतैः शुभैः ॥
संस्तूयमानं मुनिभिर्गन्धर्व्वैः परिशोभितम् ।
सीतालङ्कृतवामाङ्गं लक्ष्मणेनोपशोभितम् ॥
श्यामं प्रसन्नवदनं सर्व्वाभरणभूषितम् ।
ध्यायन्नेवं जपेन्मन्त्रं वर्णलक्षमनन्यधीः ॥”
अन्यत् सर्व्वं पूर्ब्बवत् ॥ * ॥
“वह्निर्नारायणेनाढ्यो जठरः केवल एव च ।
द्व्यक्षरो मन्त्रर जोऽयं सर्व्वाभीष्टफलप्रदः ॥
श्रीमाया मन्मथैकैकबीजाद्यन्तगतो मनुः ।

|  | वोक्तपीठशक्तीः पीठमनुञ्च संपूज्य पुनर्ध्यात्वा<br>वाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधाया-<br>वरणपूजामारभेत् । यथा देववामपार्श्वे श्रीं | चतुर्व्वर्णः स एव स्यात् षड्वर्णो वाञ्छितप्रदः ॥<br>स्वाहान्तो हुं फडन्तो वा नमोऽन्तो वा भवेन्मनुः ॥”<br>तथा ।<br>“तारमायारमानङ्गवाक्स्वबीजैस्तु षड्विधः ।<br>त्र्यक्षरो मन्त्रराजः स्यात्<br>सर्व्वाभीष्टफलप्रदः ॥ |
|---|---|---|

द्व्यक्षरश्चन्द्रभद्रान्तो चन्द्रोऽयं चतुरक्षरः ।
रामाय हृन्मनुः प्रोक्तो मन्त्रः पञ्चाक्षरः परः ॥
पञ्चाशन्मातृकावर्णैः प्रत्येकपूर्ब्बको मनुः ।
लक्ष्मीवाक्मन्मथादिश्च ताराद्यः
स्यादनेकधा ॥
तेन अं राम । आं राम । इत्यादि त्र्यक्षरः ।
तथा लक्ष्मीवाक्मन्मथादीनामन्यतमदानेऽपि
त्र्यक्षरः । तेन श्रीं राम । ऐं राम । क्लीं
राम इति ।
“वह्निस्थं शयनं विष्णोरर्द्धचन्द्रविभूषितम् ।
एकाक्षरो मनुः प्रोक्तो मन्त्रराजः सुरद्रुमः ॥
ब्रह्मा मुनिः स्याद्गायत्री च्छन्दो रामस्तु
देवता ॥” * ॥
एकाक्षरे तु द्वादशलक्षजपः पुरश्चरणम् ।
तथा च । भानुलक्षं जपेन्मन्त्रं इति वचनात्
अन्येषां षड्लक्षजप इति विशेषः ।
ध्यानपूजा-
दिकं षडक्षरवत् ॥ * ॥ अथ श्रीरामचन्द्र-
प्रयोगः ।
“जातीप्रसूनैर्ज्जुहुयादिन्दिरावाप्तये नरः ।
जातीप्रसूनैर्ज्जुहुयाच्चन्दनाम्भःसमुक्षितैः ॥
राजवश्याय कमलैर्धनधान्यादिसम्पदः ।
नीलोत्पलानां होमेन वशयेदखिलं जगत् ॥
विल्वप्रसूनैर्ज्जुहूयादिन्दिरावाप्तये नरः ।
दूर्व्वाहोमेन दीर्घायुर्भवेन्मन्त्री निरामयः ॥
रक्तोत्पलहुतान्मन्त्री धनमाप्नोति वाञ्छितम्
।
मेधाकामेन होतव्यं पलाशकुसुमैर्न्नरैः ॥
तज्जप्तमम्भः प्रपिबेत् कविर्भवति वत्सरात् ।
तन्मिश्रितान्नं भुञ्जीत महदारोग्यवर्द्धनम् ॥” *
॥
अथ श्रीरामचन्द्रस्तोत्रम् ।
श्रीहनूमानुवाच ।
“तिरश्चामपि राजेति समवायं समीयुषाम् ।
यथा सुग्रीवमुख्यानां यस्तमुग्रं नमाम्यहम् ॥
सकृदेव प्रपन्नाय विशिष्टायैव यत् प्रियम् ।
विभीषणायाब्धितटे यस्तं वीरं नमाम्यहम् ॥
यो महान् पूजितो व्यापी महाब्धेः करुणा-
मृतम् ।
तित्यं श्रीरामभक्तस्य किङ्करा
यमकिङ्कराः ।
शिवमय्यो दिशस्तस्य सिद्धयस्तस्य
दासिकाः ॥
इदं हनूमता प्रोक्तं मन्त्रराजात्मकं स्तवम्
।
पठेदनुदिनं यस्तु स रामे भक्तिमान्
भवेत् ॥”
इति हणूमत्कल्पे मन्त्रराजात्मकं
श्रीरामचन्द्र-
स्तोत्रं समाप्तम् ॥ * ॥ अथ
श्रीरामचन्द्रस्याष्टो-
त्तरशतकं नाम ।
वेदव्यास उवाच ।
“शृणु गाङ्गेय वक्ष्यामि
रामस्याद्भुतकर्म्मणः ।
नामाष्टशतकं पुण्यं त्रिषु लोकेषु विश्रुतम्
॥
नातः परतरं गुह्यं त्रिषु लोकेषु विद्यते ॥
कैलासशिखरे रम्ये नानारत्नविचित्रिते ।
एकाग्रप्रयतो भूत्वा विष्णुमाराध्य
भक्तितः ॥
उपविष्टस्ततो भोक्तुं पार्व्वतीं
शङ्करोऽब्रवीत् ।
पार्व्वत्येहि मया सार्द्धं भोक्तुं
भुवनवन्दिते ॥
तमाह पार्व्वती देवी जप्त्वा नाम
सहस्रकम् ।
ततो भोक्ष्याम्यहं देव भुज्यतां भवता
प्रभो ॥
ततस्तां पार्व्वतीं प्राह प्रहसन् परमेश्वरः
॥
धन्यासि कृतपुण्यासि विष्णुभक्तासि
पार्व्वती ।
दुर्लभा वैष्णवी भक्तिर्भागधेयं विनेश्वरि
॥
रकारादीनि नामानि शृण्वतो मम
पार्व्वति ।
मनः प्रसन्नतामेति रामनामाभिशङ्कया ॥
कौशलेयः खरध्वंसी विराधवधपण्डितः ।
विभीषणपरित्राता दशग्रीवशिरोहरः ॥
सप्ततालप्रभेत्ता च हरकोदण्डखण्डनः ।
जामदग्न्यमहादर्पदमनस्ताडकान्तकः ॥
वेदान्तसारोऽमेयात्मा भववैद्यश्च भेषजः ।
दूषणत्रिशिरोहन्ता त्रिमूर्त्तिस्त्रिगुणस्त्रयी ॥
त्रिविक्रमस्त्रिलोकात्मा पुण्यचारित्रकीर्त्तनः
।
त्रिलोकीरक्षको धन्वी
दण्डकारण्यपुण्यकृत् ॥
अहल्यापावनश्चैव पितृभक्तो वरप्रदः ।
जितेन्द्रियो जितक्रोधो जितलोभो
जगद्गुरुः ॥
ऋक्षवानरसंघाती चित्रकूटसमाश्रयः ।
जयन्तत्राणवरदः सुमित्रापुत्रसेवितः ॥
सर्व्वदेवाधिदेवश्च मृतवानरजीवनः ।
मायामारीचहन्ता च महाभागो महाभुजः ॥
सर्व्वदेवस्तुतः सौम्यो ब्रह्मण्यो
मुनिसंस्तुतः ।
महायोगी महोदारः सुग्रीवेप्सितराज्यदः ॥
सर्व्वपुण्याधिकफलस्तीर्थैः सर्व्वाघनाशनः
।
आदिपुरुषो महापुरुषः परमः पुरुषस्तथा
॥
पुण्योदयो दयासारः पुराणः पुरुषोत्तमः ।
स्मितवक्त्रो मितभाषी पूर्णभाषी च राघवः
॥
अनन्तगुणगम्भीरो धीरोदात्तगुणोत्तरः ।
मायामानुषचारित्रो महादेवाभिपूजितः ॥
सेतुकृत् जितवारीशः सर्व्वतीर्थमयो हरिः
।
श्यामाङ्गः सुन्दरः शूरः पीतवासा धनुर्द्धरः
॥
सर्व्वयज्ञाधिपो यज्ञो जरामरणवर्ज्जितः ।
शिवलिङ्गप्रतिष्ठाता सर्व्वाघगणवर्ज्जितः ॥
परमात्मा परं ब्रह्म सच्चिदानन्दविग्रहः ।
परं ज्योतिः परं धाम पराकाष्ठा परात्परः ।
परेशः पारगः पारः सर्व्ववेदात्मकः शिवः
॥

स्तुतं जटायुना येन महाविष्णुं नमाम्यहम् ॥
तेजसाप्यायिता यस्य ज्वलन्ति ज्वलनादयः
।
प्रकाशते स्वतन्त्रो यस्तं ज्वलन्तं नमाम्यहम्
॥
सर्व्वतोमुखता येन लीलया दर्शिता रणे ।
राक्षसेश्वरयोधानां तं वन्दे सर्व्वतोमुखम् ॥
नृभावन्तु प्रपन्नानां हिनस्ति च यथा नृषु ।
सिंहः सत्त्वेष्विवोत्कृष्टस्तं नृसिंहं नमाम्यहम्
॥
यस्माद्विभ्यति वातार्कज्वलनेन्द्राः समृत्यवः
।
भियं धिनोति पापानां भीषणं तं नमाम्यहम् ॥
परस्य योग्यतापेक्षारहितो नित्यमङ्गलम् ।
ददात्येव निजौदार्य्याद्यस्तं भद्रं नमाम्यहम् ॥
यो मृत्युं निजदासानां मारयत्यखिलेष्टदः ।
तत्रोदाहृतयो बह्व्यो मृत्युमृत्युं नमाम्यहम् ॥
यत्पादपद्मप्रणतो भवेदुत्तमपूरुषः ।
तमीशं सर्व्वदेवानां नमनीयं नमाम्यहम् ॥
आत्मभावं समुत्क्षिप्य दास्येनैव रघूत्तमम् ।
भजेऽहं प्रत्यहं रामं ससीतं सहलक्षणम् ॥

रमन्ते योगिनोऽनन्ते नित्यानन्दे
चिदात्मनि ।
इति रामपदेनासौ परं ब्रह्माभिधीयते ॥
राम रामेति रामेति रमे रामे मनोरमे ।
सहस्रनामभिस्तुल्यं रामनाम वरानने ॥
रामेत्युक्त्वा महादेवि भुङ्क्ष्व सार्द्धं
मयाधुना ।
ततो रामेति नामोक्त्वा सह भुक्त्वा च
पार्व्वती ॥
ततो भुक्त्वा महादेवी पतिना सह
संस्थिता ।
पप्रच्छ श्रीमहादेवं प्रीतिप्रवणमानसा ॥
सहस्रनामभिस्तुल्यं रामनाम
त्वयोदितम् ।
तस्यान्यान्यपि नामानि सन्ति
चेद्रावणद्विषः ।
कथ्यतां मम देवेश तत्र मे प्रीतिरुत्तमा ॥
श्रीशङ्कर उवाच ।
शृणु नामानि वक्ष्यामि रामचन्द्रस्य
पार्व्वती ।
लौकिका वैदिकाः शब्दा ये केचित्
सन्ति
पार्व्वति ॥
नामानि रामचन्द्रस्य सहस्रं तेषु
चाधिकम् ।
तेषु चात्यन्तमुख्यं हि नाम्नामष्टोत्तरं
शतम् ॥
विष्णोरेकैकनामानि सर्व्ववेदाधिकं
फलम् ।
तादृङ्नामसहस्रेषु रामनाम परं मतम् ॥
जपतः सर्व्ववेदांश्च सर्व्वमन्त्रांश्च
पार्व्वति ।
तस्मात् कोटिगुणं पुण्यं रामनाम्नैव
लभ्यते ॥
अस्य
श्रीरामनामाष्टोत्तरशतनामस्तोत्रस्य
इश्वर
ऋषिरनुष्टुप् छन्दः श्रीरामचन्द्रो देवता
श्रीराम-
चन्द्रप्रीत्यर्थं जपे विनियोगः ।

इत्येतद्रामभद्रस्य नाम्नामष्टोत्तरं शतम् ।
गुह्याद्गुह्यतरं देवि तव प्रीत्या प्रकीर्त्तितम्
॥
यः पठेत् शृणुयाद्वापि भक्तियुक्तेन चेतसा ।
स सर्व्वैर्मुच्यते पापैः कल्पकोटिसमुद्भवैः
॥
जलानि स्थलतां यान्ति शत्रवो यान्ति
मित्र-
ताम् ।
राजानो दासतां यान्ति वह्नयो यान्ति
सौम्य-
ताम् ॥
आनुकूल्यञ्च भूतानि स्थैर्य्यं यान्ति चलाः
स्त्रियः ।
अनुग्रहं ग्रहा यान्ति शान्तिमायान्त्युपद्रवाः
॥
पठतो भक्तिभावेन जनस्य गिरिसम्भवे ।
यः पठेत् परया भक्त्या तस्य वश्यं
जगत्त्रयम् ॥
यद्यत् कामयते चित्ते तत्तदाप्नोति
कीर्त्तनात् ।
यः पठेद्रामचन्द्रस्य नाम्नामष्टोत्तरं शतम्
॥
अज्ञानेनापिं कुर्व्वाणो न स पापैर्विलिप्यते
।
पुण्यकालेषु सर्व्वेषु पठनानन्त्यमाप्नयात्
॥
सर्व्ववेदेषु तीर्थेषु दानेषु च तपःसु च ।
तत्फलं कोटिगुणितं स्तवेनानेन लभ्यते ॥
पुण्यकालेषु सर्व्वेषु पठन्नामशताष्टकम् ।
कल्पकोटिसहस्राणि कल्पकोटिशतानि च
॥
वैकुण्ठे वासमाप्नोति दशपूर्ब्बैर्दशापरैः ।
रामं दूर्व्वादलश्यामं पद्माक्षं पीतवाससम् ॥
स्तुवन्ति नामभिर्दिव्यैर्न ते सांसारिणो
नराः ।

| | | |
|---|---|---|
| | श्रीरामो रामचन्द्रश्च रामभद्रश्च शाश्वतः ।<br>राजीवलोचनः श्रीमान् राजेन्द्रो रघुपुङ्गवः ॥<br>जानकीवल्लभो जैत्रो जितामित्रो जनार्द्दनः ।<br>विश्वामित्रप्रियो दान्तः शरण्यत्राणतत्परः ॥<br>वालिप्रमथनो वाग्मी सत्यवाक् सत्यविक्रमः ।<br>सत्यव्रतो व्रतफलः सदा हनुमदाश्रयः ॥ | |

रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥
इमं मन्त्रं महेशानि ! जपन्नेव दिवानिशम् ।
सर्व्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नु यात् ॥
इत्येतद्रामभद्रस्य माहात्म्यं वेदसम्मतम् ।
कथितं तव गाङ्गेय यतस्त्वं वैष्णवोत्तमः ॥
वन्दामहे महेशानं हरकोदण्डखण्डनम् ।
जानकीहृदयानन्दचन्दनं रघुनन्दनम् ॥"
इति पद्मपुराणे उमामहेश्वरसंवादे श्रीराम-
चन्द्राष्टोत्तरशतनामस्तोत्रंसमाप्तम् ॥ * ॥
(अस्य विराड्मूर्त्तिकथनं यथा, अध्यात्मरामा-
यणे । ३ । ९ । ३० -- ५४ ।
गन्धर्व्व उवाच ।
"स्तोतुमुत्सहते मेऽद्य मनो रामातिसम्भ्रमात् ।
त्वामनन्तमनाद्यन्तं मनोवाचामगोचरम् ॥
सूक्ष्मं ते रूपमव्यक्तं देहद्वयविलक्षणम् ।
दृग्रूपमितरं सर्व्वं दृश्यं जडमनात्मकम् ॥
तत्कथं त्वां विजानीयाद्व्यतिरिक्तं मनः प्रभो ।
बुद्ध्यात्माभासयोरैक्यं जीव इत्यभिधीयते ॥
बुद्ध्यादिसाक्षी ब्रह्मैव तस्मिन्
निर्व्विषयेऽखिलम् ।
आरोप्यतेऽज्ञानवशान्निर्व्विकारेऽखिलात्मनि ॥
हिरण्यगर्भस्ते सूक्ष्मं देहं स्थूलं विराट् स्मृतम् ।
भावनाविषयो राम सूक्ष्मं ते ध्यातृमङ्गलम् ॥
भूतं भव्यं भविष्यच्च यत्रेदं दृश्यते जगत् ।
स्थूलेऽण्डकोशे देहे ते महदादिभिरावृते ॥
सप्तभिरुत्तरगुणैर्वैराजो धारणाश्रयः ।
त्वमेव सर्व्वकैवल्यं लोकास्तेऽवयवाः स्मृताः ॥
पातालं ते पादमूलं पार्ष्णिस्तव महातलम् ।
रसातलं ते गुल्फौ तु तलातलमितीर्य्यते ॥
जानुनी सुतलं राम ! ऊरू ते वितलं तथा ।
अतलञ्च मही राम ! जघनं नाभिगं नभः ॥
उरःस्थलं ते ज्योतींषि ग्रीवा ते मह उच्यते ॥
वदनं जनलोकस्ते तपस्ते शङ्खदेशगम् ।
सत्यलोको रघुश्रेष्ठ ! शीर्षण्यास्ते सदा प्रभो ॥
इन्द्रादयो लोकपाला बाहवस्ते दिशः श्रुती ।
अश्विनौ नासिके राम वक्त्रं तेऽग्निरुदाहृतः ॥
चक्षुस्ते सविता राम मनश्चन्द्र उदाहृतः ।
भ्रूभङ्ग एव कालस्ते बुद्धिस्ते वाक्पतिर्भवेत् ॥

धनुर्बाणधरं श्यामं जटावल्कलभूषितम् ।
अपीव्यवयसं सीतां विचिन्वन्तं सलक्ष्मणम्
॥
इदमेव सदा मे स्यान्मानसे रघुनन्दन ।
सर्व्वज्ञः शङ्करः साक्षात् पार्व्वत्या सहितः
सदा ॥
तद्रूपमेवं सततं ध्यायन्नास्ते रघूत्तम ।
मुमूर्षूणां सदा काश्यां तारकं ब्रह्मवाचकम् ॥
राम रामेत्युपदिशन् सदा सन्तुष्टमानसः ।
अतस्त्वं जानकीनाथ परमात्मा सुनिश्चितः
॥
सर्व्वे ते मायया मूढास्त्वां न जानन्ति
तत्त्वतः ।
नमस्ते रामभद्राय वेधसे परमात्मने ॥
अयोध्याधिपते तुभ्यं नमः सौमित्रसेवित ।
त्राहि त्राहि जगन्नाथ मां माया नावृणोतु
ते ॥" * ॥)
अथ श्रीरामकवचम् ।
"ध्यात्वा नीलोत्पलश्यामं रामं राजीवलोच-
नम् ।
जानकीलक्ष्मणोपेतं जटामुकुटमण्डितम् ॥
सासितूणधनुर्ब्बाणपाणिं नक्तञ्चरान्तकम् ।
स्वलीलया जगत्त्रातुमाविर्भूतमजं विभुम् ॥
रामरक्षां पठेत् प्राज्ञः पापघ्नीं सर्व्वकाम-
दाम् ॥"
अस्य श्रीरामचन्द्रकवचस्य
बुधकौशिकऋषि-
र्गायत्री च्छन्दः श्रीरामचन्द्रो देवता श्रीराम-
चन्द्रप्रीत्यर्थं जपे विनियोगः ।
ॐ शिरो मे राघवः पातु भालं दशरथा-
त्मजः ।
कौशलेयो दृशौ पातु विश्वामित्रप्रियः श्रुती
॥
घ्राणं पातु मखत्राता मुखं सौमित्रवत्सलः ।
जिह्वां विद्यानिधिः पातु कण्ठौ भरतवन्दितः
॥
स्कन्धौ दिव्यायुधः पातु भुजौ
भग्नेशकार्म्मुकः ।

बह्वपत्या जीववत्सा सा भवेन्नात्र
संशयः ॥
वज्रपञ्जरनामेदं यो रामकवचं पठेत्
।
अव्याहताज्ञः सर्व्वत्र लभते
जयमङ्गलम् ॥
आदिष्टवान् यथा स्वप्ने
रामरक्षामिमां
हरिः ।
तथा लिखितवान् प्रातः प्रबुद्धो
बुधकौशिकः ॥
धन्विनौ बद्धनिस्त्रिंशौ काकपक्षधरौ
शुभौ ।
वीरौ मां पथि रक्षेतां तावुभौ
रामलक्ष्मणौ ।
तरुणौ रूपसम्पन्नौ सुकुमारौ
महाबलौ ।
पुण्डरीकविशालाक्षौ
चीरकृष्णाजिनाम्बरौ ॥
फलमूलाशिनौ दान्तौ तापसौ
ब्रह्मचारिणौ ।
पुत्त्रौ दशरथस्यैतौ भ्रातरौ
रामलक्ष्मणौ ॥
शरण्यौ सर्व्वसत्त्वानां श्रेष्ठौ
सर्व्वधनुष्मताम् ।
रक्षःकुलनिहन्तारौ त्रायेतां नो
रघूत्तमौ ॥
आत्तसज्यधनुषाविषुस्पृशा-
वक्षयाशुगनिषङ्गसङ्गिनौ ।
रक्षणाय मम रामलक्ष्मणा-
वग्रतः पथि सदैव गच्छताम् ॥
सन्नद्धः कवची खड्गी चापबाणधरो
युवा ।
यच्छन्मनोरथञ्चास्मान्रामःपातु
सलक्ष्मणः ॥
अग्रतस्तु नृसिंहो मे पृष्ठतो
गरुडध्वजः ।
पार्श्वयोस्तु धनुष्मन्तौ सशरौ
रामलक्ष्मणौ ॥

रुद्रोऽहङ्कारूपस्ते वाचश्छन्दांसि तेऽव्यय ।
यमस्ते दंष्ट्रदेशस्थो नक्षत्राणि द्विजालयः ॥
हासो मोहकरी माया सृष्टिस्तेऽपाङ्गमोक्षणम् ।
धर्म्मः पुरस्तेऽधर्म्मश्च पृष्ठभाग उदीरितः ॥
निमिषोन्मेषणे रात्रिर्दिवा चैव रघूत्तम ! ।
समुद्राः सप्त ते कुक्षिर्नाड्यो नद्यस्तव प्रभो ॥
रोमाणि वृक्षौषधयो रेतो वृष्टिस्तव प्रभो ।
महिमा ज्ञानशक्तिस्ते एवं स्थूलं वपुस्तव ।
यदस्मिन् स्थूलरूपे ते मनः सन्धार्य्यते नरैः ।
अनायासेन मुक्तिः स्यादतोऽन्यन्नहि किञ्चन ॥
अतोऽहं रामरूपं ते स्थूलमेवानुभावये ।
यस्मिन् ध्याते प्रेमरसः सरोमपुलको भवेत् ॥
तदैव मुक्तिः स्याद्राम यदा ते स्थूलभावकः ।
तदप्यास्तां तवैवाहमेतद्रूपं विचिन्तये ॥

करौ सीतापतिः पातु हृदयं जामदग्न्यजित्
॥
वक्षः पातु कबन्धारिः स्तनौ
गीर्ब्बाणवन्दितः ।
पार्श्वौ कुलपतिः पातु कुक्षिमिक्षाकुनन्दनः
॥
मध्यं पातु खरध्वंसी नाभिं जाम्बुवदाश्रयः ।
गुह्यं जितेन्द्रियः पातु पृष्ठं पातु रघूद्वहः ॥
सुग्रीवेशः कटिं पातु शक्थिनी हनुमत्प्रभुः ।
ऊरू रघूत्तमः पातु रक्षःकुलविनाशकृत् ॥
जानुनी सेतुकृत् पातु जङ्घे दशमुखान्तकः ।
पादौ विभीषणश्रीदः पातु रामोऽखिलं वपुः
॥
एतां रामबलोपेतां रक्षां यः सुकृती पठेत् ।
स चिरायुः सुखी पुत्री विजयी विनयी भवेत्
।
पातालभूतलव्योमचारिणश्छद्मचारिणः।
न द्रष्टुमपि शक्तास्ते रक्षितं रामनामभिः ॥
रामेति रामभद्रेति रामचन्द्रेति वा स्मरन् ।
नरो न लिप्यते पापैर्भुक्तिं मुक्तिञ्च विन्दति ॥
जगज्जैत्रैकमन्त्रेण रामनाम्नाभिरक्षितम् ।
यः करे धारयेत्तस्य करस्थाः सर्व्वसिद्धयः
॥
भूर्ज्जपत्रे त्विमां विद्यां
गन्धचन्दनचर्च्चिताम् ।
कृत्वा वै धारयेद्यस्तु सोऽभीष्टं
फलमाप्नुयात् ॥
रणे राजकुले द्यूते नित्यं तस्य जयो भवेत् ।
काकबन्ध्या च या नारी मृतापत्या च या
भवेत् ।

रामो दाशरथिः शूरो लक्ष्मणानुचरो
बली ।
काकुत्स्थः पुरुषः पूर्णः
कृऔशलेयो रघूत्तमः ॥
वेदान्तवेद्यो यज्ञेशः पुराणः
पुरुषोत्तमः ।
जानकीवल्लभः
श्रीमानप्रमेयपराक्रमः ॥
आपदामपहन्तारं दातारं
सर्व्वसम्पदाम् ।
गुणाभिरामं श्रीरामं भूयो भूयो
नमाम्य-
हम् ॥
दक्षिणे लक्ष्मणो धन्वी वामतो
जानकी शुभा ।
पुरतो मारुतिर्यस्य तं नमामि
रघूत्तमम् ॥
एतानि मम नामानि मद्भक्तो यः सदा
स्मरेत् ।
अश्वमेधायुतं पुण्यं स प्राप्नोति न
संशयः ॥”
इति पद्मपुराणे बज्रपञ्जरनामाख्यं
श्रीराम-
कवचम् । इति तन्त्रसारः ॥

**रामकरी**, स्त्री, रामकली रागिणी । इति हला-
युधः ॥ (क्वचित् रामकिरीत्यपि
पाठः । यथा,
सङ्गीतदर्पणे रागाध्याये ।
अथ रामकिरी ।
“षड्जग्रहांशकन्यासा पूर्णा
रामकिरी मता ।
मूर्च्छना प्रथमा ज्ञेया करुणे सा
प्रयुज्यते ॥
रिधत्यक्ताथवा प्रोक्ता कैश्चित्
पञ्चमवर्जिता ।
त्रिविधा सा समुद्दिष्टा सम्पूर्णा
षाडवौडवा ॥”
अस्या ध्यानम् ।
“हेमप्रमा भासुरभूषणा च
नीलं निचोलं वपुषा वहन्ती ।
कान्ते समीपे कमनीयकण्ठा

| | | |
|---|---|---|
| | | मानोन्नता रामकिरी मतेयम् ॥”<br>उदाहरणम् ।<br>स रि ग म प घ नि स । सम्पूर्णा ॥<br>अथवा<br>स ग म प नि स । औडवा ॥<br>अथवा<br>स रि ग म ध नि स । साडवा ॥<br>इति रामकिरी ॥)<br>अस्य अन्यत् विवरणं रागशब्दे द्रष्टव्यम् ॥ |

**रामकर्पूरकः**, पुं, (रामो रमणीयः कर्पूरः ।
ततः स्वार्थे संज्ञायां वा कन् ।)
स्वामख्यात-
तृणम् । यथा, --
“सौगन्धिकञ्च सौगन्धं रामकर्पूरके तृणे ।”
इति शब्दरत्नावली ॥

**रामगिरिः**, पुं, (रामाश्रितो गिरिः । रामो
रमणीयो गिरिर्वा ।) पर्व्वतविशेषः ।
चित्र-
कूटपर्व्वतः । इति कश्चित् ॥ यथा, --
“कश्चित् कान्ताविरहगुरुणा
स्वाधिकारप्रमत्तः
शापेनास्तं गमितमहिमा वर्षभोग्येन
भर्त्तुः ।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं
रामगिर्य्याश्रमेषु ॥”
इति मेघदूतः ॥ १ ॥

**रामचन्द्रः**, पुं, (रामश्चन्द्र इवाह्लादकत्वात् ।)
श्रीरामः । इति शब्दरत्नावली ॥
(लक्ष्मण-
भट्टसुतः स्वनामख्यातः कविविशेषः ।
स तु
अयोध्यानगरे वैराग्यशृङ्गारार्थद्वयोपेतं
सटीकं
रसिकरञ्जनं नाम काव्यं प्रणीतवान् ।
तस्यादि-
मश्लोको यथा, --
“शुभारम्भेऽदम्भे महितमतिडिम्भे
ङ्गितशतं
मणिस्तम्भेरम्भे क्षणसकुचकुम्भे
परिणतम् ।
अनालम्बे लम्बे पथि
पदविलम्बेऽमितसुखं
तमालम्बे स्तम्बेरमवदनमम्बेक्षितमुखम्
॥”
एतट्टीकान्तिमश्लोकौ यथा, --
“तत्र नस्याञ्जने कुष्ठं रामठं नलदं मधु ।
कुर्य्यात् शिरीषरजनीचन्दनैश्च प्रलेपनम्
॥”)

**रामठः**, पुं, (रम् + अठः । वृद्धिश्च ।) अङ्कोठ-
वृक्षः । इति रत्नमाला ॥ (जनपदविशेषः
।
यथा, बृहत्संहितायाम् । १० । ५ ।
“रौद्रस्थे पारतरामठतैलिकरजकचौराश्च
॥”
तद्देशवासिनश्च । यथा, महाभारते । २ ।
३२ । १२ ।
“रामठन् हारहूणांश्च प्रतीच्याश्चैव ये
नृपाः ।
तान् सर्व्वान् स वशे चक्रे शासनादेव
पाण्डवः ॥”)

**रामठी**, स्त्री, (रामठ + स्त्रियां ङीष् ।) नाडी-
हिङ्गु । इति राजनिर्घण्टः ॥

**रामणः**, पुं, गिरिनिम्बः । तिन्दुकः । इति राज-
निर्घण्टः ॥

**रामणीयकं**, त्रि, रमणीयम् । इत्यमरटीका ॥
(यथा, महाभारते । १ । २६ । ८ ।
“रामणीयकमागच्छन्मात्रासह भुजङ्गमाः
॥”
रामणीयकं रमणीयं द्वीपमिति शेषः ॥
क्ली, रमणीयस्य भावः कर्म्म वा ।
रमणीय +
“योपधाद्गुरूपोत्तमाद्वुञ् ।” ५ । १ ।
१३२ ।
इति वुञ् । रमणीयत्वम् ॥ यथा, किराते ।
१ । ३९ ।
“पुरोपनीतं नृप ! रामणीयकं
द्विजातिशेषेण यदेतदन्धसा ।
तदद्य ते वन्यफलाशिनः परं
परैति कार्श्यं यशसा समं वपुः ॥”)

**रामतरुणी**, स्त्री, (रामा मनोहरा तरुणीव ।)

अत्र मेषस्थसूर्य्ये चान्द्रचैत्रस्यैव सम्भवात्
तिथि-
कृत्यत्वाच्च । तथा ।
‘तस्मिन् दिने महापुण्ये राममुद्दिश्य भक्तितः ।
जपेदेकान्त आसीनो यावत् स्याद्दशमीदिनम्
॥
तेनैव स्यात् पुरश्चर्य्या दशम्यां
भोजयेद्द्विजान् ।
भक्ष्यभोज्यैर्ब्बहुविधैर्भक्त्या दद्याच्च दक्षिणाम्
।
कृतकृत्यो भवेत्तेन सद्यो रामः प्रसीदति ॥’
तथा ।
‘चैत्रशुक्ला तु नवमी पुनर्व्वसुयुता यदि ।
सैव मध्याह्नयोगेन महापुण्यतमा भवेत् ॥
नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैः ।
उपोषणं नवम्यान्तु दशम्यामेव पारणम् ॥’
एतद्वचनद्वयं कालमाधवीयेऽपि । किन्तु महा-
पुण्या इत्यत्र महाफलेति पाठः । शुद्धेति-
श्रवणात् सर्व्वत्र शुद्धायामृक्षादरो न विद्धाया-
मिति । अतएवाष्टमीविद्धा नवमी सनक्षत्रापि
नोपोष्या । इति माधवाचार्य्यः ॥ सैव तादृश्येव
नतु विद्धा । यदा तु परदिने एकादश्यां दशमी
पारणयोग्या तदा दशमीयुक्ता नवम्युपोष्या ।
वैष्णवैर्विष्णुपरायणैरितिश्रवणात् ।
अवैष्णवैस्तु
अष्टमीविद्धैव ग्राह्या । यदा तु पूर्ब्बदिने अष्टमी-
विद्धा नवमी परत्र दशमीयुता नवमी एका-
दशीदिने च न पारणयोग्या दशमी तदा
नक्षत्रयोगायोगेऽप्यष्टमीविद्धैव ग्राह्या । परदिने
दशम्यामेव पारणमिति नियमात् । तथा च
रामार्च्चनचन्द्रिकायाम् ।
‘दशम्यादिषु वृद्धिश्चेत् त्याज्या विद्धैव
वैष्णवैः ।
तदन्येषान्तु सर्व्वेषां व्रतं तत्रैव निश्चितम् ॥
दशम्यामेवशब्देन दशमीं नैव लङ्घयेत् ।
निश्चित्यैवं विचारेण नवमीव्रतमाचरेत् ॥’
इति कारिकाभ्यामगस्त्यसंहिताव्याख्यानम् ॥
वस्तुतस्तु दशमीपारणसत्त्वे सर्व्वैरेवाष्टमीबिद्धा
नोपोष्या । विष्णुपरायणैरिति तु विष्णुपरायण-

“शृङ्गारवैराग्यशतं सपञ्च-
विंशत्ययोध्यानगरे व्यधत्त ।
अब्दे वियद्वारणबाणचन्द्रे
श्रीरामचन्द्रोऽनु च तस्य टीकाम् ॥
श्रीरामन्द्रकविना काव्यमिदं व्यरचि
विरति-
बीजतया ।
रसिकानामपि रतये शृङ्गारार्थोऽपि
संगृहीतो-
ऽत्र ॥”
एतत्कविप्रणीतानि
रोमावलीशतकप्रभृतीन्य-
न्यान्यपि काव्यानि दृश्यन्ते ॥)

**रामच्छर्द्दनकः**, पुं, (रामं मनोज्ञत्वं छर्द्दयति ।

छर्द्दि + ल्युः । स्वार्थे कन् ।) मदनवृक्षः
। इति
भावप्रकाशः ॥ क्वचित् पुस्तके
रामाच्छर्दनकः
इति च पाठः ॥ (गुणादयोऽस्य
मदनशब्दे
विज्ञेयाः ॥)

**रामजननी**, स्त्री, (रामस्य जननी ।) बलदेव-

माता । यथा, --
“रोहिणी रामजननी रोहिणिश्च
बलप्रसूः ॥”
इति शब्दरत्नावली ॥
कौशल्या । रेणुका च ॥

**रामठं**, क्ली, (रम्यतेऽनेनेति । रम + “रमेर्वृद्धिश्च ।”

उणा० १ । १०३ । इति अठः वृद्धिश्च
धातोः ।)
हिङ्गु । इत्यमरः । १ । १०३ ॥ (यथा,
सुश्रुते ।
५ । १ ।
तरुणीपुंष्पम् । इति राजनिर्घण्टः ॥
सेउती
इति भाषा ॥

**रामदूतः**, पुं, (रामस्य दूतः ।) हनूमान् । इति

शब्दरत्नावली ॥

**रामदूती**, स्त्री, (रामस्य दूतीव । विष्णुप्रियत्वात् ।)

तुलसीविशेषः । तत्पर्य्यायः । पर्व्वपुष्पी
२
विशल्या ३ नागदन्तिका ४ काण्डली ५
सूक्ष्म-
पर्णी ६ भरण्याह्वा ७ फणिज्झका ७ ।
इति
शब्दचन्द्रिका ॥

**रामनवमी**, स्त्री, (रामस्य जन्मतिथिरूपा नवमी ।

मध्यपदलोपिकर्म्मधारयः ।)
चैत्रशुक्लनवमी । सा
च श्रीरामचन्द्रस्य जन्मतिथिः । यथा, --
“अगस्त्यसंहितायाम् ।
‘चैत्रे मासि नवम्यान्तु जातो रामः स्वयं
हरिः ।
पुनर्व्वस्वृक्षसंयुक्ता सा तिथिः सर्व्वकामदा
॥
पुनर्व्वस्वृक्षसंयोगः स्वल्पोऽपि यदि
लभ्यते ।
चैत्रशुक्लनवम्यान्तु सा तिथिः
सर्व्वकामदा ॥
श्रीरामनवमी प्रोक्ता कोटिसूर्य्यग्रहाधिका
।
तस्मिन् दिने महापुण्ये राममुद्दिश्य
भक्तितः ।
यत्किञ्चित् क्रियते कर्म्म
तद्भवक्षयकारकम् ॥
उपोषणं जागरणं पितॄनुद्दिश्य तर्पणम् ।
तस्मिन् दिने तु कर्त्तव्यं
ब्रह्मप्राप्तिमभीप्सुभिः ॥’
चैत्रपदं चान्द्रपरम् ।
‘मेषं पूषणि संप्राप्ते लग्ने च कर्कटाह्वये ।
आविरासीत् सकलया कौशल्यायां
परःपुमान् ॥’
त्वेन भवितव्यमित्युपदेशपरं न तु कर्त्तृविशे-
षणम् । अगस्त्येनावैष्णवस्य विद्धोपवासानुप-
देशात् । कर्त्तृभेदे विधिद्वयकल्पनापत्तेश्च ।
अत-
एव माधवाचार्य्येण सामान्यत एव विद्धा
निषिद्धा । अगस्त्यसंहितायामस्य
नित्यत्वमाह ।
‘प्राप्ते श्रीरामनवमीदिने मर्त्यो विमूढधीः ।
उपोषणं न कुरुते कुम्भीपाकेषु पच्यते ॥
यस्तु रामनवम्यान्तु भुङ्क्ते मोहाद्विमूढधीः ।
कुम्भीपाकेषु घोरेषु पच्यते नात्र संशयः ॥’
अत्र मर्त्य इत्युपादानात् नरमात्रस्याधिकारः ।
एवञ्च ।
‘कुर्य्याद्रामनवम्यां य उपोषणमतन्द्रितः ।
मातुर्गर्भमवाप्नोति नैव रामो भवेत् खयम् ॥
तस्मात् सर्व्वात्मना सर्व्वे कृत्वैवं नवमीव्रतम् ।
मुच्यन्ते पातकैः सर्व्वैर्यान्ति ब्रह्म सनातनम्
॥’
इति फलकीर्त्तनं प्रागुक्तसंयोगपृथक्त्वन्यायात्
सिद्धम् । अगस्त्यसंहितायाम् ।
‘शालग्रामशिलायाञ्च तुलसीदलकल्पिता ।
पूजा श्रीरामचन्द्रस्य कोटिकोटिगुणाधिका ॥’

तत्रानुष्ठानं अगस्त्यसंहितातः संक्षिप्य लिख्यते ।
कृतप्रातःस्नानादिः ।
‘उपोष्य नवमीन्त्वद्य यामेष्वष्टसु राघव ।
तेन प्रीतो भव त्वंभो संसारात्त्राहि मां हरे ॥’
इति निवेद्य ॥
‘कोमलाङ्गं विशालाक्षमिन्द्रनीलसमप्रभम्।
दक्षिणांशे दशरथं पुत्त्रावेक्षणतत्परम् ॥
पृष्ठतो लक्षणं देवं सच्छत्रं कनकप्रभम् ।
पार्श्वे भरतशत्रुघ्नौ तालवृन्तकरावुभौ ।
अग्रे व्यग्रं हनूमन्तं रामानुग्रहकाङ्क्षिणम् ॥’
एवं ध्यात्वा श्रीरामं पूजयेत् । स्नानमन्तस्तु ।
‘इन्द्रोऽग्निश्च यमश्चैव नैरृतो वरुणोऽनिलः ।
कुवेर ईशो ब्रह्माहिर्दिक्पालाः स्नापयन्तु ते ॥’
अहिरनन्तः । कौशल्यां पूजयेत् । मन्त्रस्तु ।
‘रामस्य जननी चासि राममयमिदं जगत् ।
अतस्त्वां पूजयिष्यामि लोकमातर्नमोऽस्तु ते ॥’
तथा ।
‘नमो दशरथायेति पूजयेत् पितरं ततः ।
ततोऽनुज्ञाप्य देवेशं परिवारान् समर्च्चयेत् ।
पूर्ब्बषट्कोणकोणेषु हृदयादीनि च क्रमात् ॥’
हृदयादीनि यथा । रां हृदयाय नमः । रीं
शिरसे स्वाहा । रूं शिखायै वषट् । रैं कव-
चाय हुम् । रौं नेत्राभ्यां वौषट् । रः अस्त्राय
फट् । तथा, --
‘हनूमन्तंससुग्रीवं भरतं सविभीषणम् ।
लक्ष्मणाङ्गदशत्रुघ्नं जाम्बवन्तं दलादिषु ॥
धूम्रं जयन्तं विजयं सुराष्ट्रं राष्ट्रवर्द्धनम् ।
अकोपं धूम्रपालाख्यं सुमन्त्रं दलमध्यतः ।
दलाग्रे लोकपालांश्च तदस्त्राणि तदग्रतः ॥’
लोकपाला इन्द्रादयो दश । तदस्त्राणि वज्र-
शक्तिदण्डखड्गपाशाङ्कुशगदाशूलपद्मचक्राणि ।
मध्याह्ने जन्म भावयेत् ।
‘उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां
तिथौ
लग्ने कर्कटके पुनर्व्वसुदिन मेर्ष गते पूषणि ।
निर्दग्धुं निखिलाः पलाशसमिधो मध्याद-
योध्यारणे-
राविर्भूतमभूदपूर्ब्बविभवं यत्किञ्चिदेकं महः ॥’
पलाशा राक्षसाः ।

योगेऽपि अष्टमीविद्धायाम् ।
पारणयोग्या चेत्
तदा अष्टमीविद्धां त्यक्त्वा परेऽहनि
उपवासः ।”
इति तिथ्यादितत्त्वम् ॥

**रामपूगः**, पुं, (रामो रमणीयः पूगः ।) गुवाक-
विशेषः । तत्पर्य्यायः । कामीनः २
मुनिपूगः ३
मुरेवटः ४ । इति त्रिकाण्डशेषः ॥

**रामबाणः**, पुं, (रामस्य बाण इव सफलत्वात् ।)
औषधविशेषः । यथा ।
रसेन्द्रचिन्तामणौ ।
“पारदामृतलवङ्गगन्धकं
भागयुग्ममरिचेन मिश्रितम् ।
तत्र जातिफलमर्द्धभागिकं
तिन्तिलीफलरसेन मर्द्दितम् ॥
वह्निमान्द्यदशवक्त्रनाशनो
रामबाण इति विश्रुतो रसः ।
संग्रहग्रहणीकुम्भकर्णक-
मामवातखरदूषणं जयेत् ॥
दीयते तु चणकानुमानतः
सद्य एव जठराग्निदीपनः ।
रोचकः कफकुलान्तकारकः
श्वासकासवमिजन्तुनाशनः॥”
पाराभागः १ विषभागः १
लवङ्गभागः १
गन्धकभागः १ मरिचभागः ८
जायफलभागः २ ।
रामबाणो रसोऽजीर्णे । इति
भावप्रकाशः ॥
(शरवृक्षभेदः । इति राजनिर्घण्टः ॥
राम-
शरश्च ॥)

**रामभद्रः**, पुं, (राम एव भद्रो मङ्गलजनकत्वात् ।)
श्रीरामः । इति शब्दरत्नावली ॥
(यथा, कथा-

**रामसेनकः**, पुं, भूनिम्बः । (अस्य पर्य्यायो यथा, --
“किराततिक्तः कैरातः कटुतिक्तः
किरातकः ।
काण्डतिक्तो नार्य्यतिक्तो भूनिम्बो
रामसेनकः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)
कट्फलः । इति राजनिर्घण्टः ॥

**रामा**, स्त्री, (रमते रमयतीति वा । रम +
ज्वलादित्वात् णः । टाप् । रमतेऽनयेति
।
करणे घञ् वा ।) उत्कृष्टस्त्रीविशेषः ।
इत्य-
मरः । २ । ६ । ४ ॥ गीतकलाभी रमते
रामा ।
इति भरतः ॥ (यथा, भागवते । ३ । २३
। ४३ ।
“विभज्य नवधात्मानं मानवीं
सुरतोत्सुकाम् ।
रामां निरमयन् रेमे वर्षपूगान् मुहूर्त्तवत्
॥”)
योषा । (यथा, रघुः । ५ । ४९ ।
“स च्छिन्नबन्धद्रुतयुग्यशून्यं
भग्नाक्षपर्य्यन्तरथं क्षणेन ।
रामापरित्राणविहस्तयोधं
सेनानिवेशं तुमुलं चकार ॥”)
हिङ्गु । नदी । इति मेदिनी ॥ हिङ्गुलम् ।
इति
शब्दरत्नावली ॥ श्वेतकण्टकारी ।
गृहकन्या ।
आरामशीतला । अशोकः । गोरोचना ।
इति
राजनिर्घण्टः ॥ वाला । गैरिकम् । इति
शब्द-
चन्द्रिका ॥

**रामायणं**, क्ली, (रामस्य चरितान्वितं अयनं

'मत्वैवं वादयेद्वाद्यानर्घ्यं दद्याज्जगत्पतेः ।
फलपुष्पाम्बुसंपूर्णं गृहीत्वा शङ्खमुत्तमम् ।
अशोकरत्नकुसुमैर्युक्तञ्च तुलसीदलैः ॥'
मन्त्रस्तु ।
'दशाननवधार्थाय धर्म्मसंस्थापनाय च ।
दानवानां विनाशाय दैत्यानां निधनाय च ॥
परित्राणाय साधूनां रामो जातः स्वयं हरिः ।
गृहाणार्घ्यं मया दत्तं भ्रातृभिः सहितो मम ॥
पुष्पाञ्जलिं पुनर्दत्त्वा यामे यामेष्वतन्द्रितः ।
पूजयेद्विधिवद्भक्त्या दिवारात्रं नयेद्बुधः ॥'
तदयं संक्षेपः । शुद्धायां नक्षत्रयुक्तायां विवादाभावः । विद्धायान्तु एकादशीदिने दशमी पारणयोग्या न चेत् तदा नक्षत्रयोगा-

सरित्सागरे । ३४ । २३६ ।
"लोकश्च सर्व्वदा रक्ष्यस्तत्प्रवादेन किं पुरा ।
रामभद्रेण शुद्धापि त्यक्ता देवी न जानकी ॥")

**रामलवणं**, क्ली, (रामं रमणीयं लवणम् ।)
शाम्भरिलवणम् । तत्पर्य्यायः । रोमकम् २ पाश्चात्याकरसम्भवम् ३ । इति रत्नमाला ॥

**रामवल्लभं**, क्ली, (रामं रमणीयं वल्लभञ्च ।)
त्वचम् । इति राजनिर्घण्टः ॥
(रामस्य वल्लभम् ।)
रामप्रिये, त्रि ॥

**रामवीणा**, स्त्री, (रामा रमणीया वीणा ।)
वीणाविशेषः । यथा, शब्दरत्नावली ॥
"कुञ्ची च कच्छपीवीणा वीणा तुम्बुरुनारदी ।
सारस्वती केलिकला रामवीणा बलाञ्चिता ॥"

**रामशरः**, पुं, (रामस्य शर इव ।) शरवृक्षभेदः ।
तत्पर्य्यायः । रामकाण्डः २ रामबाणः ३ रामेषुः ४ अपर्व्वदण्डः ५ दीर्घः ६ नृपप्रियः ७ ।
तस्य मूलगुणाः । ईषदुष्णत्वम् । रुचिप्रदत्वम् । रसे अम्लत्वम् । कषायत्वम् । पित्तकारित्वम् । कफवातनाशित्वञ्च । इति राजनिर्घण्टः ॥
(रामचन्द्रस्य बाणोऽपि ॥)

**रामशीतला**, स्त्री, आरामशीतला । इति राज-
निर्घण्टः ॥

**रामसखः**, पुं, (रामस्य सखा । "राजाहःसखि-

शास्त्रम् ।) रामेण रावणवधकाव्यम् । इति
त्रिकाण्डशेषः ॥ तच्च शतकोटिसंख्यकम् । यथा ।
स्कान्दे पातालखण्डे अयोध्यामाहात्म्ये तत्रत्य-
तीर्थाश्रमवर्णनप्रस्तावे ।
"शापोक्त्या हृदि सन्तप्तं प्राचेतसमकल्मषम् ।
प्रोवाच वचनं ब्रह्मा तत्रागत्य सुसत्कृतः ॥
न निषादः स वै रामो मृगयाञ्चर्त्तुमागतः ।
तस्य संवर्णनेनैव सुश्लोक्यस्त्वं भविष्यसि ॥
इत्युक्त्वा तं जगामाशु ब्रह्मलोकं सनातनः ।
ततः संवर्णयामास राघवं ग्रन्थकोटिभिः ॥"
कोटिभिः शतकोटिभिः । चरितं रघुनाथस्य
शतकोटिप्रविस्तरमित्यन्यत्रोक्तेः । तच्च संपूर्णं
ब्रह्मलोके इत्यैतिह्यम् ॥ इह तु कुशलवोपदिष्टा
चतुर्विंशतिसाहस्रीत्यलम् । इति रामायण-
टीकायां नागोजीभट्टः ॥ * ॥ तथा हि ।
"प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवान् ऋषिः ।
चकार चरितं कृत्स्नं विचित्रपदमर्थवत् ॥
चतुर्विंशत्सहस्राणि श्लोकानामुक्तवान् ऋषिः ।
तथा सर्गशतान् पञ्च षट् काण्डानि तथोत्तरम् ॥
इति रामायणे वाल्मीकीये बालकाण्डे ३ सर्गः ॥
संक्षिप्तरामचरित्रं यथा, --
"रामायणमथो वक्ष्ये श्रुतं पापविनाशनम् ।
विष्णुनाभ्यब्जजो ब्रह्मा मरीचिस्तत्सुतः स्मृतः ॥

|  |  |  |
| --- | --- | --- |
|  | भ्यष्टच् ।” ५ । ४ । ९१ । इति टच् ।) सुग्रीवः ।<br>इति शब्दरत्नावली ॥ | मरीचेः कश्यपस्तस्मात् परस्तस्मात् मनुः सुतः ।<br>मनोरिक्षाकुवंश्योऽभूद्वंशे राजा रघुः स्मृतः ॥<br>रघोरजस्ततो जातो राजा दशरथो बली ।<br>तस्य पुत्रास्तु चत्वारो महाबलपराक्रमाः ॥<br>कौशल्यायामभूद्रामो भरतः केकयीसुतः ।<br>सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रायां बभूवतुः ॥ |

रामो भक्तः
पितुर्मातुर्विश्वामित्रादवाप्तवान्।
अस्त्रग्रामं यतो यक्षीं ताडकां
प्रजघान ह ॥
विश्वामित्रस्य यज्ञे तु सुबाहुं
न्यवधीद्बली।
जनकस्य क्रतुं गत्वा उपयेमेऽथ
जानकीम् ॥
उर्म्मिलां लक्ष्मणो वीरो भरतो
माण्डवीं सुताम्।
शत्रुघ्नो वै कीर्त्तिमतीं
कुशध्वजसुते च ते ॥
पित्रादिभिरयोध्यायां गत्वा
रामादयः स्थिताः।
युधाजितं मातुलञ्च शत्रुघ्नभरतौ
गतौ ॥
गतयोर्नृपवर्य्येण राज्यं दातुं
समुद्यतम्।
रामाय ज्येष्ठपुत्त्राय कैकेय्या
प्रार्थितं तदा।
चतुर्द्दशसमा वासो वने रामस्य
वाञ्छितः ॥
रामः पितृहितार्थन्तु लक्ष्मणेन च
सीतया।
राज्यञ्च तृणवत्यक्त्वा शृङ्गवेरपुरं
गतः।
रथं त्यक्त्वा प्रयागञ्च चित्रकूटं
गिरिं गतः ॥
रामस्य तु वियोगेन राजा स्वर्गं
समाश्रितः।
संस्कृत्य भरतश्चागात् रामं
मातृबलान्वितः ॥
अयोध्यान्तु समागत्य राज्यं कुरु
महामते।
स नैच्छत् पादुके दत्त्वा राज्याय
भरताय तु ॥
विसर्ज्जितोऽथ भरतो
रामराज्यमपालयत्।

भर्त्सितां राक्षसीभिश्च रावणेन च रक्षसा।
भव भार्य्येति वदता चिन्तयन्तीञ्च राघवम्
॥
अङ्गुलीयं कपिर्दत्त्वा सीतां कौशल्यमब्रवीत्
।
रामस्य तस्य दूतोऽहं शोकं मा कुरु मैथिलि
॥
अभिज्ञानञ्च मे देहि येन रामः स्मरिष्यति।
तत् श्रुत्वा प्रददौ सीता वेणी रत्नं हनूमते ॥
यथा रामो नयेत् शीघ्रं तथा वाच्यं त्वया
गते।
तथेत्युक्त्वा तु हनुमान् वनं दिव्यं बभञ्ज
तत् ॥
हत्वाक्षं राक्षसांश्चान्यान् बन्धनं स्वयमागतः
।
सर्व्वैरिन्द्रजितो बाणैर्दृष्ट्वा रावणमब्रवीत् ॥
रामदूतोऽस्मि हनुमान् देहि रामाय मैथि-
लीम्।
एतत् श्रुत्वा प्रकुपितो दीपयामास पुच्छकम्
॥
कपिर्ज्ज्वलितलाङ्गूलो लङ्कागेहे महाबलः।
दग्ध्वा लङ्कां समायातो रामपार्श्वं स वानरः
॥
जग्ध्वा फलं मधुवने दृष्ट्वा सीतेत्यवेदयत्।
मणिरत्नञ्च रामाय रामो लङ्कां ययौ पुरीम् ॥
ससुग्रीवः सहनुमानङ्गदाद्यः सलक्ष्मणः।
विभीषणोऽपि संप्राप्तः शरणं राववं प्रति ॥
लङ्कैश्वर्य्येष्वभ्यसिञ्चद्रामस्तं रावणानुजम्
।
रामो नलेन सेतुञ्च कृत्वाब्धौ
चोच्छ्रितायतम् ॥
सुवेलावस्थितश्चैव पुरीं लङ्कां ददर्श ह।
अथ ये वानरा वीरा नीलाङ्गदनलादयः ॥
धूम्रधूम्राक्षधूम्रेन्द्रा जाम्बवत्प्रमुखास्तदा।
मैन्दद्विविदमुख्यास्ते पुरीं लङ्कां नभञ्जिरे ॥
राक्षसांश्च महाकायान्
कालाञ्जनचयोपमान्।
रामः सलक्ष्मणो हत्वा सकपिः
सर्व्वराक्षसान् ॥

पप्रच्छ सम्मतः शिष्यः कृताञ्जलिपुटो वशी ॥
रामायणमितिख्यातं शतकोटि प्रविस्तरम्।
प्रणीतं भवता यच्च ब्रह्मलोके प्रतिष्ठितम् ॥
श्रूयते ब्रह्मणा नित्यमृषिभिः पितृभिः सुरैः।
पञ्चविंशतिसाहस्रं रामायणमिदं भुवि।
तदाकर्णितमस्ताभिः सावशेषं महामुने ॥
शतकोटिप्रविस्तारे रामायणमहार्णवे।
किं गीतमिह यन्नास्ति तन्मे कथय सुव्रत ॥
आकर्ण्यादरिणः पृष्टं भरद्वाजस्य वै मुनिः।
हस्तामलकवत् सर्व्वं सस्मार शतकोटिकम् ॥
ओमित्युक्त्वा मुनिः शिष्यं प्रोवाच वदतां वरः।
भारद्वाज चिरं जीव साधु स्मारितमद्य नः ॥
शतकोटिप्रविस्तारे रामायणमहार्णवे।
रामस्य चरितं सर्व्वमाश्चर्य्यं सम्यगीरितम् ॥
पञ्चविंशतिसाहस्रं नृलोके यत् प्रतिष्ठितम्।
नृणां हि सदृशं रामचरितं वर्णितं मया।
सीतामाहात्म्यसारं यत् विशेषादत्र नोक्त-
वान्।
शृणुष्वावहितो ब्रह्मन् काकुत्स्थचरितं महत्।
सीताया मूलभूतायाः प्रकृतेश्चरितञ्च यत् ॥"
इत्याद्यार्षे रामायणे वाल्मीकीये अद्भुतोत्तर-
काण्डे आदिकाव्ये प्रथमः सर्गः ॥ * ॥ अन्यत्
ब्रह्माण्ड
पुराणीयोत्तरखण्डान्तर्गतैकषष्टितमाध्यायादिक-
हरपार्व्वती-संवादरूपाध्यात्म-रामायणमस्ति।
तत्र अध्यात्मबालकाण्डे सर्गाः सप्तैव शम्भु-
नोद्दिष्टाः षष्ट्युत्तरत्रिशतश्लोकाः मोक्षप्रदा
नृणाम् १ । अध्यात्मरामचरिते अयोध्याकाण्डे
नवानां सर्गाणां सप्तशतानि श्लोकाः पुण्यमोक्ष-
प्रदाः २ । काण्डेऽरण्येऽध्यात्माख्ये सर्गा द्विपञ्च
परिक्षिप्ताः पञ्चशतानि श्लोकाः पापहराः
पार्व्वतीशोक्ताः ३ । श्रीमदध्यात्मरामायणे उमा-
महेश्वरसंवादे किष्किन्ध्याकाण्डे नवमः सर्गः
पञ्चशतानि श्लोकाः दुरितहरा पञ्चपञ्चाशत् ४ ।
सुन्दरकाण्डे सर्गाः पञ्चैवाध्यात्मिकशब्दिते
प्रोक्तास्त्रीणि शतानि श्लोकास्त्रिभुवनपाप-
हराः ५ । काण्डे युद्धात्मके सर्गा नवसप्त नील-
कण्ठोक्ताः सार्द्धैकादशशतश्लोका मनुसंख्यायुता-
पुण्याः ६ । अध्यात्मोत्तरकाण्डे सर्गाः ग्रह-

नन्दिग्रामे स्थितो भक्तो ह्ययोध्यां नाविशद्व्रती ॥
रामोऽपि चित्रकूटाच्च अत्रेराश्रममाययौ ।
नत्वा अभीक्ष्णं चागस्त्यं दण्डकारण्यमागतः ॥
तत्र सूर्पनखा नाम राक्षसीसार्द्धमागता ।
निकृत्य कर्णौ नासे च रामेणाथ पराहिता ॥
तत्प्रेरितः खरश्चागाद्दूषणस्त्रिशिरास्तथा ।
चतुर्द्दशसहस्रेण रक्षसान्तु बलेन च ॥
रामोऽपि प्रेषयामास वाणैर्यमपुरञ्च तान् ।
राक्षस्या प्रेरितोऽभ्यागात् रावणो हरणाय हि ॥
मृगरूपं स मारीचं कृत्वाग्रेऽथ त्रिदण्डधृक् ।
सीतया प्रेरितो रामो मारीचं प्रजघान ह ॥
म्रियमाणः स च प्राह हा सीते लक्ष्मणेति च ।
सीतोक्तो लक्ष्मणोऽथागाद्रामश्चाशुददर्श तम् ॥
उवाच राक्षसी माया नूनं सीता हृतेति सा ।
रावणोऽन्तरमासाद्य अङ्केनादाय जानकीम् ॥
जटायुषं विनिर्ज्जित्य ययौ लङ्कां ततो बली ।
अशोकवृक्षच्छायायां रक्षितां तामधारयत् ॥
आगत्य रामः शून्यञ्च पर्णशालां ददर्श ह ।
शोकं कृत्वाथ जानक्या मार्गणं कृतवान् प्रभुः ॥
जटायुषञ्च संस्कृत्य तदुक्तो दक्षिणां दिशम् ।
विद्युज्जिह्वञ्च धूम्राक्षं वेदान्तकनरान्तकौ ।
महोदरमहापार्श्वावतिकायंमहाबलम् ॥
कुम्भं निकुम्भं मत्तञ्च मकराक्षं ह्यकम्पनम् ।
प्रहस्तं वीरमुन्मत्तं कुम्भकर्णं महाबलम् ॥
रावणिं लक्ष्मणश्छित्त्वा ह्यस्त्राद्यै राघवो बली ।
निकृत्य बाहू वक्त्राणि रावणन्तु व्यपातयत् ॥
सीतां शुद्धां गृहीत्वाथ विमाने पुष्पके स्थितः ।
सवानरः समायातो ह्ययोध्याप्रवरं पुरम् ॥
तत्र राज्यं चकाराथ पुत्त्रवत् पालयन् प्रजाः ।
दशाश्वमेधानाहृत्य गयाशिरसि पातनम् ॥
पिण्डानां विधिवत् कृत्वा दत्त्वा दानानि राघवः ।
पुत्त्रौ कुशलवौ सृष्ट्वा तौ च राज्येऽभ्यषेचयत् ॥
एकादशसहस्राणि रामो राज्यमकारयत् ।
शत्रुघ्नो लवणं हत्वा शैलूषं भरतः स्थितः ॥
अगस्त्यादीन् मुनीन् श्रुत्वा श्रुत्वोत्पत्तिञ्च रक्ष-
साम् ।
स्वर्गं गतो जनैः सार्द्धमयोध्यां वैकृतान्तकः ॥”
इति गारुडे १४८ अध्यायः ॥ * ॥
एतदतिरिक्तं वाल्मीकिप्रणीतं सप्तविंशतिसर्ग-
युक्तं सहस्रश्लोकात्मकं सीताकर्त्तृकसहस्रकन्ध-
रावणवधकाव्यरूपाद्भुतोत्तरकाण्डमस्ति । तस्य
प्रथमसर्गीयश्लोका यथा, --
“तमसातीरनिलयं सर्व्वेषां तपसां गुरुम् ।
वचसां प्रथमं स्थानं वाल्मीकं मुनिपुङ्गवम् ॥
विनयावनतो भूत्वा भारद्वाजो महामुनिः ।
संख्यया प्रक्षिप्ता ऋतुशतसंख्यश्लोकाः ७ ।
पुराणसंख्याश्च पुरा हरेणोक्ताः ।
“पार्व्वत्यै परमेश्वरेण गदिते ह्यध्यात्मरामायणे
काण्डैः सप्तभिरन्वितेऽतिशुभदे सर्गाश्चतुः-
षष्टिकाः ।
श्लोकानान्तु शतद्वयेन सहिता युक्तानि चत्वारि सा-
हस्राण्येव समासतः श्रुतिशते सूक्तानि तत्त्वा-
र्थतः ॥”
इत्यध्यात्मरामायणम् ॥ * ॥
अपरं रामवशिष्ठसंवादरूपमोक्षोपायकव्ये-
हूतोक्तवाशिष्ठनामकमहारामायणमस्ति। तत्र
प्रथमार्द्धे अष्टाविंशत्यूत्तरशतसर्गाः । तस्य
आद्यन्तश्लोकौ यथा, --

| | | |
|---|---|---|
| गत्वा सख्यं ततश्चक्रे सुग्रीवेण च राघवः ॥<br>सप्ततालान् विनिर्भिद्य शरेणानतपर्व्वणा ।<br>वालिनञ्च विनिर्भिद्य किष्किन्धायां हरीश्वरम् ॥<br>सुग्रीवं कृतवान् रामो ऋष्यमूके स्वयं स्थितः ।<br>सुग्रीवः प्रेषयामास वानरान् पर्व्वतोपमान् ॥<br>सीताया मार्गणं कर्त्तुं पूर्ब्बाद्यैः सुमहाबलान् ।<br>प्रतीचीमुत्तरां प्राचीं दिशं गत्वा समागताः ॥<br>दक्षिणान्तु दिशं ये च मार्गयन्तोऽथ जानकीम् ।<br>वनानि पर्व्वतान् द्वीपान् नदीनां पुलिनानि च ॥<br>जानकीं ते ह्यपश्यन्तो मरणे कृतनिश्चयाः ।<br>सम्पातिवचनात् ज्ञात्वा हनूमान् कपिकुञ्जरः ॥<br>शतयोजनविस्तीर्णं पुप्लुवे मकरालयम् ।<br>अपश्यज्जानकीं तत्र अशोकवनिकास्थिताम् ॥ | | |

श्रीवाल्मीकिरुवाच ।
"उपशमप्रकरणादनन्तरमिदंशृणु ।
तन्निर्व्वाणप्रकरणं ज्ञातं निर्व्वाणदायि यत् ॥ १ ॥
य इमं शृणुयान्नित्यं विधिं रामवशिष्ठयोः ।
सर्व्वावस्थोऽपि श्रवणान्मुच्यते ब्रह्म ऋच्छति ॥ २ ॥
उत्तरार्द्धे षोडशोत्तरद्विशतसर्गाः । तस्या-द्यन्तश्लोकौ यथा, --
श्रीराम उवाच ।
"नैष्कर्म्म्यात् कल्पनात्यागात् तनुः पतति रोहितः ।
कथमेतदता ब्रह्मन् सम्भवत्याशु जीवतः ॥ १ ॥
यत् तर्व्वं खल्विदं ब्रह्म तज्जलानिति च स्फुटम् ।
श्रुत्या ह्युदीर्य्यते साम्नि तस्मै ब्रह्मात्मने नमः ॥" २ ॥
अत्रादौ वैराग्यप्रकरणग्रन्थः । द्वितीयो मुमुक्षु-
ग्रन्थः । तृतीय उत्पत्तिग्रन्थः । चतुर्थः स्थिति-
ग्रन्थः । पञ्चमः सकलोपशमग्रन्थः । षष्ठप्रक-
रणे निर्व्वाणग्रन्थः । पूर्ब्बार्द्धे सटीकग्रन्थ-संख्या १३६०० । उत्तरार्द्धे सटीकग्रन्थसंख्या
२३९०० । इति श्रीमहारामायणे निर्व्वाणप्रक-
रणे बालकाण्डे मोक्षोपाये देवहूतोक्ते द्वात्रिं-शत्साहस्र्यां संहितायां वाशिष्ठे ब्रह्मदर्शने उत्तरार्द्धे षोडशोत्तरद्विशततमः सर्गः ॥

**रामालिङ्गनकामः**, पुं, (रामाणामालिङ्गनस्य कामोऽभिलाषो यस्मात् ।) रक्ताम्लानः । इति राजनिर्घण्टः ॥

**रामावक्षोजोपमः**, पुं, (रामावक्षोजयोः स्त्रीस्तनयो-रालो हिमो गुरुस्तिक्तः कषायो ग्राहको हरेत् ।
दोषास्रस्वेदवीसर्पज्वरव्रणविपादिकाः ।
ग्रहभग्नाग्निदग्धांश्चमूलातीसारनाशनः ॥"
इति भावप्रकाशः ॥

**रालकार्य्यः**, पुं, (रालस्य सालरसस्य कार्य्यं यत्र ।) सालवृक्षः । इति राजनिर्घण्टः ॥

**रावः**, पुं, (रवणमिति । रु ल ध्वनौ + भावे घञ् ।) शब्दः । इति शब्दरत्नावली ॥ (यथा, महाभारते । १ । २१ । १८ ।
"गम्भीरं तिमिमकरोग्रसंकुलं तं
गर्ज्जन्तं जलचररावरौद्रनादैः ।
विस्तीर्णं ददृशतुरम्बरप्रकाशं
तेऽगाधं निधिमुरुमम्भसामनन्तम् ॥")

**रावणः**, पुं, (रवणस्यापत्यमिति । रवण + "शिवादिभ्योऽण् ।" ४ । १ । ११२ । इति अण् । यद्वा, रावयति भीषयति सर्व्वानिति । रु + णिच् + ल्युः ।) लङ्काधिपतिः । तत्पर्य्यायः ।
पौलस्त्यः २ रक्षः ३ लङ्केशः ४ दशकन्धरः ५ ।
इति हेमचन्द्रः ॥ दशकण्ठः ६ निकषात्मजः ७
राक्षसेन्द्रः ८ लङ्केशः ९ पङ्क्तिग्रीवः १० दशा-
ननः ११ । इति शब्दरत्नावली ॥ लङ्कापतिः १२
दशास्यः १३ । इति जटाधरः ॥ (अस्य निरुक्तिर्यथा, रामायणे ।
"यस्माल्लोकत्रयं चैतद्रावितं भयमागतम् ।
तस्मात्त्वं रावणो नाम नाम्ना वीरो भवि-ष्यसि ॥")
तस्योत्पत्तिनाशौ यथा, --
सूत उवाच ।
"मानवस्य नरैष्यन्त आसीत् पुत्त्रो दमः किल ।
नवमस्तस्य दायादस्तृणबिन्दुरिति स्मृतः ॥
तस्य कन्या इडविडा रूपेणाप्रतिमा भुवि ।
षष्टिश्चैव सहस्राणि वर्षाणां हि स रावणः ।
देवतानां पितॄणाञ्च घोरं कृत्वा प्रजागरम् ॥
त्रेतायुगे चतुर्थांशे रावणस्तपसः क्षयात् ।
रामं दाशरथं प्राप्य सगणः क्षयमीयिवान् ॥"
इति वह्निपुराणे वाराहप्रादुर्भावनामाध्यायः ॥

**रावणगङ्गा**, स्त्री, (रावणेन कृता गङ्गा ।) सिंहल-देशस्थनदीविशेषः । यथा, --
सूत उवाच ।
"दिवाकरस्तस्य महामहिम्नो
महासुरस्योत्तमरत्नबीजम् ।
असृग्गृहीत्वा चरितं प्रतस्थे
निस्त्रिंशनीलेन नभस्तलेन ॥
जेत्रा सुराणां समरेष्वजस्रं
वीर्य्यावलेपोद्धतमानसेन ।
लङ्काधिपेनार्द्धपथं समेत्य
स्वर्भानुनेव प्रसभं निरुद्धम् ॥
तत् सिंहलीचारुनितम्बविम्ब-
विक्षोभितागाधमहाह्रदायाम् ।
पूगद्रुमाबद्धतटद्वयायां
मुमोच सूर्य्यः सरिदुत्तमायाम् ॥
ततः प्रभृति सा गङ्गा तुल्यपुण्यफलोदया ।
नाम्ना रावणगङ्गेति प्रथिमानगुपागता ॥
ये तु रावणगङ्गायां जायन्ते कुरुविन्दकाः ।
पद्मरागा घनं रागं विभ्राणाः स्वस्फटार्च्चिषः ॥"
इति गारुडे ७० अध्यायः ॥

**रावणारिः**, पुं, (रावणस्य अरिः शत्रुः ।) श्रीरामः । इति जटाधरः ॥ (यथा, --
"वन्दे लोकाभिरामं रघुकुलतिलकं राघवं

रुपमा यत्र ।) चक्रवाकः । इति राजनिर्घण्टः ।

**रामिलः**, पुं, रमणम् । कामः । इति मेदिनी ॥ ले, १२७ ॥

**राम्भः**, पुं, (रम्भस्य विकारः । रम्भ + "पला-शादिभ्यो वा ।" ४ । ३ । १४१ । इत्यञ् ।)
व्रते वेणुकृतो दण्डः । रम्भो वेणुः तस्य विकारः । इत्यमरभरतौ । २ । ७ । ४५ ॥

**रायणं**, क्ली, पीडा । इति काचित् शब्दरत्नावली ॥

**रायभाटी**, स्त्री, नदीस्रोतोविशेषः । आओड़ इति भाषा । यथा, --
"पूरोढि पात्रसङ्कारो रायभाटी समाह्वरे ।"
इति शब्दरत्नावली ॥

**रालः**, पुं, सालवृक्षनिर्यासः । धुना इति भाषा ।
तत्पर्य्यायः । सर्ज्जरसः २ सालः ३ कनक-लोद्भवः ४ ललनः ५ सालनिर्यासः ६ देवेष्टः ७ शीतलः ८ बहुरूपः ९ सालरसः १० सर्ज्ज-निर्यासकः ११ सुरभिः १२ सुरधूपः १३ यक्ष-धूपः १४ अग्निवल्लभः १५ कलः १६ कल-लजः १७ । अस्य गुणाः । शिशिरत्वम् । स्निग्धत्वम् । कषायत्वम् । तिक्तत्वम् । संग्रह-त्वम् । वातपित्तस्फोटकण्डूव्रणनाशित्वञ्च । अस्य पानलेपगुणौ । शिशिरत्वम् । प्रदरामयशान्ति-कारित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
"रालस्तु सालनिर्यासस्तथा सर्ज्जरसः स्मृतः ।
देवधूपो यक्षधूपस्तथा सर्व्वरसश्च सः ॥

पुलस्त्याय स राजर्षिस्तां कन्यां प्रव्यपादयत् ॥
ऋषिरैडविडो यस्यां विश्रवाः समपद्यत ।
तस्य पत्न्यश्चतस्रश्च पूर्ब्बा वै देववर्णिनी ॥
ज्येष्ठं वैश्रवणं यज्ञे कुरूपं देववर्णिनी ।
त्रिपादं सुमहाकायं स्थूलशीर्षं महाहनुम् ॥
अष्टदंष्ट्रं हरिश्मश्रुं शङ्कुकर्णविलोहितम् ।
पिङ्गलं नाम संदृश्य पिता तस्याब्रवीत्ततः ॥
कुत्सायान्तु कुशब्दोऽयं शरीरञ्चेदमुच्यते ।
कुशरीरत्वाच्च नाम्ना तेन वै स कुवेरकः ॥
ऋध्यां कुवेरो जनयद्विश्रुतं नलकूरम् ॥
रावणं कुम्भकर्णञ्च कन्यां सूर्पणखां तथा ।
विभीषणं चतुर्थन्तु नैकष्यजनयत् सुतम् ॥
शङ्कुकर्णो दशग्रीवः पिङ्गलो रक्तमूद्धजः ।
चतुष्पाद्विं शतिभुजो महाकायो महाबलः ॥
जात्यञ्जननिभो मर्द्दलोहितग्रीव एव च ।
निसर्गाद्दारुणः क्रूरः स रावण इति स्मृतः ॥
हिरण्यकशिपुस्त्वासीत् स राजा पूर्ब्बजन्मनि ॥
चतुर्युगानां राजा तु त्रयोदश स राक्षसः ॥
ताः पञ्चकोट्यो वर्षाणां संख्याताः संख्यया द्विजैः ।
नियुतानामेकषष्टिः संख्याविद्भिरुदाहृताः ॥
रावणारिम् ॥"
इति महानाटकम् ॥)

**रावणिः**, पुं, (रावणस्यापत्यमिति । वारण + "अत इञ् ।" ४ । १ । ९५ । इति इञ् ।)
रावणज्येष्ठपुत्त्रः । स च इन्द्रजित् । यथा, --
"रावणिः शत्रुजिन्मेघनादो मन्दोदरीसुतः ॥"
इति हेमचन्दः । ३ । ३७० ॥
(यथा, महाभारते । ३ । २८७ । १२ ।
"रावणिस्तु यदा नैनं विशेषयति सायकैः ।
ततो गुरुतरं यत्नमातिष्ठद्बलिनां वरः ॥"
रावणपुत्त्रमात्रे । यथा, भट्टिः । १४ । ७९ ।
"तस्याहारिषत प्राणा मुष्टिना वालिसूनुना ।
प्रादुद्रुवंस्ततः क्रुद्धाः सर्व्वे रावणयोऽङ्गदम् ॥")

**राश**, ऋ ङ शब्दे । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-सेट् ।)
दन्त्यान्तोऽयमिति गद-सिंहः । रासभः स्वरः । दुर्गसिंहन्तु इमं तालव्यान्तं मत्वा उणादौ ह्रस्वं कृत्वा रश्मि-शब्दं व्युत्पादितवान् । ऋ, अरराशत् । ङ, राशते । इति दुर्गादासः ॥

**राशिः**, पुं, (राशते इति । राश शब्द + इण् ।
यद्वा, अश्नुते व्याप्नोतीति । अशू व्याप्तौ + "अशि-पणाय्यो रुडायलुकौ च ।" उणा० ४ । १३२ ।
इति इण् रुडागमश्च ।)
धान्यादिसमूहः ।

इत्यमरः । २ । ५ । ४२ ॥ समुच्चयः ५ समाहारः ६ । इति जटाधरः ॥ अश्नुते व्याप्नोति इति राशिः । अशू ञ व्याप्तिसंहत्योरित्यस्मात् नाम्नीति इञ् निपातनाद्रेफागमः । इति भरतः ॥ * ॥ (यथा, शकुन्तलायाम् १ अङ्के ।
"न खलु न खलु बाणः सन्निपात्योऽयमस्मिन् मृदुनि मृगशरीरे तुलराशाविवाग्निः ॥")
ज्योतिश्चक्रस्य द्वादशांशः । तस्योत्पत्तिर्यथा, --
अथ सृष्ट्यां मनश्चक्रे ब्रह्माहङ्कारमूर्त्तिभृत् ।
मनसश्चन्द्रमा जज्ञे सूर्य्योऽक्ष्णोस्तेजसां निधिः ॥
मनसः खं ततो वायुरग्निरापो धरा क्रमात् ।
गुणेकवृद्ध्या पञ्चैव महाभूतानि जज्ञिरे ॥
अग्नीषोमौ भास्करेन्दू ततस्त्वङ्गारकादयः ।
तेजोभूखाम्बुवातेभ्यः क्रमशः पञ्च जज्ञिरे ॥
पुनर्द्वादशधात्मानं विभजेद्राशिशंज्ञकम् ।
नक्षत्ररूपिणं भूयः सप्तविंशात्मकं वशी ॥"
इति सूर्य्यसिद्धान्ते गोलाध्यायः ॥ * ॥
तस्य संस्थानं यथा, --
"विषुवत्क्रान्तिवृत्तैक्यात् पूर्व्वभागस्थिताः स्थिराः ।
मेषाद्या राशयः क्रान्तिवृत्तयः पूर्व्वदिक्क्रमात् ॥"
इति मुनीश्वरकृतसार्व्वभौमसिद्धान्तः ॥ * ॥
अथ राश्यादिनिर्णयः ।
"मेषवृषमिथुनकर्क्कटसिंहाः कन्या तुलाथ वृश्चिकभम् ।
धनुरथ मकरः कुम्भो मीन इति च राशयः कथिताः ॥"
इति राशिकथनम् ॥ * ॥
"अश्विन्या सह भरणी कृत्तिकापादश्च कीर्त्तितो मेषः । १ ।
वृषभः कृत्तिकाशेषं रोहिण्यर्द्धश्च मृगशिरसः ॥ २ ॥
मृगशिरसोऽर्द्धं चार्द्रा पुनर्व्वसोस्त्रिपादो मिथुनम् । ३ ।
पादः पुनर्व्वसोरन्त्यः पुष्योऽश्लेषा च कर्कटः ॥ ४ ॥
तौक्षिक आकोकेरो हृद्रोगश्चान्त्यभं चेत्थम् ॥"
इति मेषादीनां विशेषनामकथनम् ॥ * ॥
"अरुणसितहरितपाटलपाण्डुविचित्राः सितेतरपिषङ्गौ ।
पिङ्गलकर्व्वुरवभ्रुमलिना रुचयो यथासंख्यम् ॥"
इति मेषादीनां वर्णभेदकथनम् ॥ * ॥
"मत्स्यौ घटी नृमिथुनं सगदं सवीणं
चापी नरोऽश्वजघनो मकरो मृगास्यः ।
तौली सशस्यदहना प्लवगा च कन्या
शेषाः स्वनामसदृशाः स्वचराश्च सर्व्वे ॥"
अश्वजघनोऽश्वाकारजघनोनतु अश्वारूढइति जघनः । उत्तरत्र चतुश्चरणत्वकथनात् ।
राश्यधिष्ठातृदेवताकथनम् ॥ * ॥
"क्रूरोऽथ सौम्यः पुरुषोऽङ्गना च
ओजोऽथ युग्मं विषमः समश्च ।
चरास्थरद्व्यात्मकनामधेया
मेषादयोऽमी क्रमशः प्रदिष्टाः ॥"
इति राशीनां क्रूरसौम्यादिविवेकः ॥ * ॥
दैवज्ञमनोहरे ।
"पुण्यश्च पुष्करश्चैव आघानाख्यस्तथैव च ।
श्रुत्या वृत्त्या भवन्त्येते नित्यं द्वादश राशयः ॥"
इति पुण्यादिविवेकः ॥ * ॥
"मिथुनतुलाघटकन्या द्विपादाख्याश्चापपूर्ब्बभागश्च ।
मृगधनुराद्यन्तार्द्धे वृषाजसिंहाश्चरणाः ॥"
इति द्विपदचतुष्पदराशिकथनम् ॥ * ॥
"कर्कटवृश्चिकमीना मकरान्त्यार्द्धञ्च कीटसंज्ञाः स्युः ।
वृश्चिकराशिर्मुनिभिः सरीसृपत्वेन निर्दिष्टः ॥"
इति कीटसरीसृपराशिकथनम् ॥ * ॥
"द्विपदवशगाः सर्व्वे सिंहं विहाय चतुष्पदाः ।
सलिलनिलया भक्ष्या वश्याः सरीसृपजातयः ॥
मृगपतिवशे तिष्ठन्त्येते विहाय सरीसृपान् ।
जीवार्किभानुजेज्यानां क्षेत्राणि स्युरजादयः ॥
इति ग्रहाणां क्षेत्रकथनम् ॥ * ॥
"अजो गोपतियुग्मञ्च
कर्किधन्विमृगास्तथा ।
निशासंज्ञाः स्मृताश्चैते
शेषाश्चान्ये दिनात्मकाः ॥
निशासंज्ञा विमिथुनाः स्मृताः
पृष्ठोदयास्तथा ।
शेषाः शीर्षोदया ह्येते
मीनश्चोभयसंज्ञकः ॥"
इति निशादिसंज्ञाकथनम् ॥ * ॥
"रविर्मासं निशानाथः
सपाददिवसद्वयम् ।
पक्षत्रयं भूमिपुत्त्रो
बुधोऽष्टादशवासरान् ॥
वर्षमेकं सुराचार्य्यश्चाष्टाविंशदिनं भृगुः ।
शनिः सार्द्धद्वयं वर्षं स्वर्भानुः सार्द्धवत्सरम् ॥
एवं प्रमाणात् सकलाः स्वराशिं
भुञ्जते ग्रहाः ॥"
इति राशिभोगकथनम् ॥
इति ज्योतिस्तत्त्वम् ॥ * ॥
द्वादशराश्यात्मकशिवरूपं यथा, --
पुलस्त्य उवाच ।
"स्वरूपं त्रिपुरघ्नस्य वदिष्ये
कालरूपिणः ।
अश्विनी भरणी चैव
कृत्तिकाप्रथमांशकम् ॥
मेषकं हि विजानीयात्
कुजक्षेत्रमुदाहृतम् ।
आग्नेयांशास्त्रयो ब्रह्मन् प्राजापत्यं
कवेर्गृहम् ॥
सौम्यार्द्धं वृषनामेदं वदनं
परिकीर्त्तितम् ।
मृगार्द्धमार्द्रादित्यां शास्त्रयः
सौम्यगृहं त्विदम् ॥

सिंहोऽथ मघा पूर्व्वफल्गुणी पाद उत्तरायाः । ५ ।
तच्छेषं हस्ता चित्रार्द्धञ्च कन्यकाख्यः ॥ ६ ॥
तोलिनि चित्रार्द्धं स्वाती विशाखायाः पाद-त्रयम् । ७ ।
अलिनि विशाखा पादस्तथानुराधान्विता ज्येष्ठा ॥ ८ ॥
मूल पूव्वाषाढा प्रथमश्चाप्युत्तरांशको धन्वी । ९ ।
मकरस्तत्परिशेषं श्रवणा चार्द्धं धनिष्ठायाः ॥ १० ॥
धनिष्ठार्द्धं शतभिषा पुर्व्वभाद्रपदपादत्रयं कुम्भः । ११ ।
पूर्ब्बभाद्रपदाशेषस्तथोत्तरा रेवती मीनः ॥" ११ ॥
इति राशिनक्षत्रभेदकथनम् ॥ * ॥
"राशिनामानि च क्षेत्रं भमृक्षे गृहनाम च ।
मेषादीनाञ्च पर्य्यायं लोकादेव विचिन्तयेत् ॥"
इति राशिपर्य्यायकथनम् ॥ * ॥
"क्रियतावुरिजितुमकुलीरलेयपाथेययूककौ-पर्ख्याः ।
अकथितगृहेषूह्यं वश्यं जनव्यवहारतः ॥"
सरीसृपजातय इति बहुवचनात् कीटस्यापि परिग्रहः । राशीनां वश्यावश्यकथनम् ॥ * ॥
"ग्राम्या मिथुनतुलास्त्रीचापालिघटाःनिशासु वृषमेषौ ।
मकरादिमार्द्धसिंहौ वन्यौ दिवसेऽजवृषभौ च ॥
जलजौ कर्कटमीनौ मकरान्त्यार्द्धञ्च शिवमते कुम्भः ॥
इति ग्राम्यारण्यजलजराशिकथनम्॥ * ॥
"ह्रस्वास्तिमिगोऽविघटा
मिथुनधनुःकर्क्किमृग-
मुखाश्च समाः ।
वृश्चिककन्यामृगपतिबणिजोदीर्घाः समा-ख्याताः ॥"
इति राशीनां ह्रस्वदीर्घकथनम् ॥ * ॥
"प्रागादिककुभां नाथा यथासंख्यं प्रदक्षिणम् ।
मेषाद्या राशयो ज्ञयास्त्रिरावृत्तिपरिभ्रमात् ॥"
इति दिगधिपलग्नकथनम् ॥ * ॥
"कुजशुक्रबुधेन्द्वर्कसौम्यशुक्रावनीभुवाम् ।
मिथुनं भुजयोस्तस्य गगनस्थस्य शूलिनः ।
आदित्यांशश्च पुष्यश्च अश्लेषा शशिनो गृहम् ॥
राशिः कर्कटको नाम पार्श्वे मखविनाशिनः ।
पित्र्यर्क्षं भगदैवत्यं उत्तरांशश्च केशरी ॥
सूर्य्यक्षेत्रं विभोर्ब्रह्मन् हृदयं परिकीर्त्तितम् ।
उत्तरांशास्त्रयः पाणिश्चित्रार्द्धं कन्यका त्वियम् ।
सोमपुत्त्रस्य सद्मैतद्द्वितीयं जठरं विभोः ॥
चित्रांशद्वितयं स्वाती विशाखायांशकत्रयम् ।
द्वितीयं शुक्रसदनं तुला नाभिरुदाहृता ॥
विशाखांशमनुराधा ज्येष्ठा भौमगृहं त्विदम् ।
द्वितीयं वृश्चिको राशिर्मेढ्रं कालस्वरूपिणः ॥
मूलं पूर्ब्बोत्तरांशश्च देवाचार्य्यगृहं धनुः ।
उरुयुगलमीशस्य अमरर्षे प्रगीयते ॥
उत्तरांशास्त्रयो ऋक्षं श्रवणं मकरो मुने ।
धनिष्ठार्द्धं शनिक्षेत्रं जानुनी परिकीर्त्तिते ॥
धनिष्ठार्द्धं शतभिषा प्रोष्ठपदांशकत्रयम् ।
सौरं पद्मापरमिदं कुम्भो जङ्घे च विश्रुते ॥
प्रोष्ठपद्यंशमेकन्तु उत्तरा रेवती तथा ।
द्वितीयं जीवसदनं मीनन्तु चरणावुभौ ॥" * ॥
राशीनां लक्षणस्वरूपादि यथा, --
नारद उवाच ।

|  |  | "राशयः कथिता ब्रह्मन् ! त्वया द्वादश वै मम ।<br>तेषां विशेशतो ब्रूहि लक्षणानि स्वरूपतः ॥<br>पुलस्त्य उवाच ।<br>स्वरूपं तत्र वक्ष्यामि राशीनां शृणु नारद ।<br>यादृशा यत्र सञ्चारा यस्मिन् स्थाने बसन्ति हि ॥<br>सञ्चारस्थानमेकस्य धान्यरत्नाकरादिषु ।<br>नवसाद्वलसंच्छन्नो वसुधायाञ्च सर्व्वशः ॥<br>नित्यं चरति फुल्लेषु सरसां पुलिनेषु च ।<br>मेषः समानमूर्त्तिश्च अजाविकधनादिषु ॥ |
|---|---|---|

वृषः सदृशरूपेषु चरते गोकुलादिषु।
तस्याधिवासभूमिस्तु कृषीबलधराश्रया ॥
स्त्रीपुंसयोः समं भद्रशय्यासनपरिग्रहैः।
बीणावाद्यधृङ्मिथुनं गीतनर्त्तकशिल्पिषु ॥
स्थितं क्रीडा रतिर्न्नित्यं विहारोऽवनिरस्य तु।
मिथुनं नाम विख्यातं राशिर्द्वैधात्मकः स्मृतः ॥
कर्किः कुलीरेण समः सलिलस्थः प्रकीर्त्तितः।
केदारवापीपुलिनविविक्तावनिरेव च ॥
सिंहस्तु पर्व्वतारण्यदुर्गकन्दरभूमिषु।
वसते व्याधपल्लीषु गह्वरेषु गुहासु च ॥
या हि प्रदीपककरा नावारूढा च कन्यका।
चरते स्त्रीरतिस्थाने वसते तद्वनेषु च ॥
तुलापाणिश्च पुरुषो वीथ्यापणविचारकः।
नगराध्वनि शालासु वसते तत्र नारद ॥
स्वभ्रवल्मीकसञ्चारी वृश्चिको वृश्चिकाकृतिः।
वृषगोमयकीटोऽहिपाषाणादिषुसंस्थितः ॥
धनुस्तुरङ्गजघनो दीप्यमानो धनुर्द्धरः।
बाजिशूरोऽस्त्रविद्वीरः स्थायी युद्धबलादिषु ॥
मृगास्यो मकरो ब्रह्मन्! वृषस्कन्धः फणाङ्गदः।
मकरोऽसौ नदीचारी वसते च महोदधौ ॥
रिक्तकुम्भश्च पुरुषः स्कन्धधारी जलाप्लुतः।
दूतशालाचरः कुम्भस्थायी शौण्डिकसद्मसु ॥
मीनरूपत्वमासक्तो मीनस्तीर्थाम्बुसञ्चरः।
वसते पुण्यदेशेषु देवब्राह्मणपूजकः ॥
लक्षणं गदितं तुभ्यं मेषादीनां महामुने।

होरेशाः सूर्य्यतनयादधोधः क्रमशस्तथा।
भवेद्भकक्षा तीग्मांशोर्भ्रमणं षष्टिताडितम्।
सर्व्वोपरिष्टात् भ्रमति योजनैस्तैर्भमण्डलम् ॥”
तत्र कक्षाक्रममाह।
“ब्रह्माण्डमध्ये परिधिर्व्योमकक्षाभिधीयते।
तन्मध्ये भ्रमणं भानामधोऽधः क्रमशस्तथा ॥
मन्दामरेज्यभूपुत्त्रसूर्य्यशुक्रेन्दुजेन्दवः।
परिभ्रमन्त्यधोऽधःस्थाः सिद्धविद्याधरा घनाः ॥”
इति सूर्य्यसिद्धान्तः ॥ * ॥
ग्रहत्रयचन्द्रसंयोगे फलविशेषजनकं राशिचक्रं यथा, --
“राशिचक्रं प्रवक्ष्यामि नृपाणां हितकाम्यया ॥
रविर्जीवस्तथा सौम्यस्तैश्च चन्द्रे समागते।
जलपातो भवेत् सत्यमित्युक्तं विष्णुयामले ॥
रविर्जीवस्तथा शुक्रस्तैश्च चन्द्रे समागते।
वायुपातो भवेत् सत्यमित्युक्तं विष्णुयामले ॥
रविर्ज्जीवस्तथा भौमस्तैश्च चन्द्रे समागते।
अग्निपातो भवेत् सत्यमित्युक्तं ब्रह्मयामले ॥
रविर्भौमस्तथा राहुस्तैश्च चन्द्रे समागते।
लोहपातो भवेत् सत्यमित्युक्तं रुद्रयामले ॥
रवी राहुस्तथा केतुस्तैश्च चन्द्रे सगागते।
पाषाणपातोऽपि भवेदित्युक्तं भानुयामले ॥”
इति नरपतिजयचर्य्यायां तुम्बुरुचक्रे राशि-चक्रम् ॥ * ॥ जातकराशिचक्रम्। यथा, --
“तन्वादिव्ययपर्य्यन्तं राशिचक्रे व्यवस्थितम्।
तन्न बुद्ध्वाल्पमतयो जल्पयन्ति वृथा वृथा ॥”
इति पञ्चस्वरा ॥ * ॥
मन्त्रग्रहणोक्तराशिचक्रम्यथा। आगमकल्प-द्रुमे।
“रेखाद्वयं पूर्ब्बपरागतं स्यात्
तन्मध्यतो याम्यकुवेरभेदात्।
एकैकमीशाननिशाचरे तु
हुताशवाय्वोर्व्विलिखेत्ततोऽर्णान् ॥
वेदाग्निवह्नियुगलश्रवणाक्षिसंख्यान्
पञ्चेषुवाणशरपञ्चचतुष्टयार्णान्।

“साध्याद्यक्षरराश्यन्तं गणयेत् साधकाक्षरम्।
इति रामार्च्चनचन्द्रिकाधृतवचनात्।
तथा,
“अज्ञाते राशिनक्षत्रे नामाद्यक्षरराशितः ॥”
इति तन्त्रराजे ॥
“तेन मन्त्राद्यवर्णेन नाम्नश्चाद्यक्षरेण च।
गणयेद्यदि षष्ठं वाप्यष्टमं द्वादशन्तु वा।
रिपुर्मन्त्राद्यवर्णः स्यात् तेन तस्याहितं भवेत् ॥
एक पञ्च नव बान्धवाः स्मृताः
द्वौ च षट् च दशमाश्च सेवकाः।
वह्निरुद्रमुनयस्तु पोषकाः
द्वादशाष्टचतुरस्तु घातकाः ॥”
इति विष्णुविषयम् ॥
रामाच्चनचन्द्रिकाधृतत्वात्। शक्त्यादौ तु षष्ठं वर्ज्जनीयम्। तथा च।
“षष्ठाष्टमद्वादशानि वर्ज्जनीयानि यत्नतः ॥”
इति वचनात् ॥
तन्त्रान्तरे।
“लग्नं धनं भ्रातृबन्धुपुत्त्रशत्रुकलत्रकाः।
मरणं धर्म्मकर्म्मायिव्यया द्वादश राशयः ॥
नामानुरूपमेतेषां शुभाशुभफलं लभेत् ॥
लग्ने सिद्धिस्तथा नित्यं धने धनसमृद्धिदः।
भ्रातरि भ्रातृवृद्धिश्च शत्रौ शत्रुविवर्द्धनः ॥
पुत्त्रे पुत्त्रविवृद्धिः स्यात् बन्धौ बान्धववत् प्रियः।
कलत्रे मध्यमा प्रोक्ता मरणे मरणं भवेत् ॥
धर्म्मे धर्म्मविवृद्धिः स्यात् सिद्धिदः कर्म्मसंस्थितः।
आये च धनसम्पत्तिर्व्यये च सञ्चितक्षयः ॥”
वैष्णवतन्त्रे तु शत्रुस्थाने बन्धुरिति पाठः। इति तन्त्रसारः ॥

न कस्यचित्त्वयाख्येयं गुह्यमेतत्
पुरातनम् ॥
एतन्मया ते कथितं सुरर्षे
यथा त्रिनेत्रः प्रममाथ यज्ञे ।
पुण्यं पुराणं परमं पवित्रं
संशृण्वतां पापहरं शिवञ्च ॥”
इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे
हर-
ललितः पञ्चमोऽध्यायः ॥

**राशिचक्रं**, क्ली, (राशीनां चक्रम् ।) मेषादि-

द्वादशराश्यादियुक्तवृत्तम् । तस्य
नामान्तरं
भचक्रं ज्योतिषचक्रञ्च । यथा, --
“सप्तविंशतिभैर्ज्योतिश्चक्रं
स्तिमितवायुगम् ।
तदर्कांशो भवेदाशिर्नवर्क्षचरणाङ्कितः ॥”
इति दीपिका ॥ * ॥
तद्विवरणं यथा, --
“भचक्रं ध्रुवयोर्ब्बद्धमाक्षिप्तं प्रवहानिलैः ।
पर्य्येत्यजस्रं तन्नद्धा ग्रहकक्षा यथाक्रमम्
॥
उपरिस्थस्य महतीकक्षाल्पाधःस्थितस्य
च ।
महत्या कक्षया भागा
महान्तोऽल्पास्तथा-
ल्पया ॥
कालेनाल्पेन भगणं
भुङ्क्तेऽल्पभ्रमणाश्रितः ।
ग्रहः कालेन महता मण्डले महति भ्रमन्
॥
खल्पया तु बहून् भुङ्क्ते भगणान् शीत-
दीधितिः ।
महत्या कक्षयागच्छन् ततः स्वल्पः
शनैश्चरः ॥
मन्दादधःक्रमेण स्युश्चतुर्था
दिवसाधिपाः ।
वर्षाधिपतयस्तद्वत् तृतीयाः
परिकीर्त्तिताः ॥
ऊद्र्ध्वक्रमेण शशिनो मासानामधिपाः
स्मृताः ।
मेषादितः प्रविलिखेत् सकलांस्तु वर्णान्
कन्धागतान् प्रविलिखेदथ शादिवर्णान् ॥”
तथा, --
“बालं गौरं खुरं शोणं शमी शोभेति राशिषु ।
क्रमेण भेदिता वर्णाः कन्यायां शादयः स्मृताः
॥”
तेन अ आ इ ई मेषः । उ ऊ ऋ वृषः ।
ॠ ऌ ॡ मिथुनम् । ए ऐ कर्कटः । ओ औ
सिंहः । अं अः श ष स ल क्षाः कन्याः ।
कवर्गस्तुला । चवर्गो वृश्चिकः । टवर्गो धनुः ।
तवर्गो मकरः । पवर्गः कुम्भः । यवर्गो मीनः ।
स्वराशीनामनुकूलं मन्त्रं भजेत् । तथा च ।
“स्वतारराशिकोष्ठानामनुकूलान् भजेन्मनून्
॥”
इति वचनात् ॥
“राशीनां शुद्धताज्ञेया त्यजेच्छत्रुं मृतिं व्ययम्
।
स्वराशेर्मन्त्रराश्यन्तं गणनीयं विचक्षणैः ॥”
यदा तु स्वराशेरज्ञानं तदा साधकनामाद्यक्षर-
सम्बन्धिनं राशिं गृहीत्वा गणयेत् ।

**राशिव्यवहारः**, पुं, (राशेर्व्यवहारः ।) शस्य-

राशिपरिमाणज्ञापकाङ्कः । तद्विवरणं
यथा, --
अथ राशिव्यवहारे करणसूत्रं वृत्तम् ।
“अनणुषु दशमांशोऽणुष्वथैकादशांशः
परिधिनवमभागः शूकधान्येषु वेधः ।
भवति परिधिषष्ठे वर्गिते वेधनिघ्ने
घनगणितकराः स्युर्म्मागधास्ताश्च
खार्य्यः ॥”
उदाहरणम् ।
“समभुवि किल राशिर्यः स्थितः
स्थूलधान्यः
परिधिपरिमितिः स्याद्धस्तषष्टिर्यदीया ।
प्रवद गणक खार्य्यः किंमिताः सन्ति
तस्मि-
न्नथ पृथगणुधान्यैः शूकधान्यैश्च शीघ्रम्
॥”
अथ स्थूलधान्यराशिमानावबोधनाय
६०
न्यासः अनणुधान्यराशिः
वेधः
६
परिधिः ६० । वेधः ६ । परिधेः षष्ठांशः
१० ।
वर्गितः १०० । वेध ६ निघ्नः । लब्धाः
खार्य्यः ६०० ।

अथाणुधान्यराशिमानानयनाय
६०
न्यासः अणुधान्यराशिः
वेधः
६०११
परिधिः ६० । वेधः ६०११ । जातं
फलम् ५४५ ५११ ।
अथ शूकधान्यराशिमानानयनाय
६०
न्यासः शूकधान्यराशिः
वेधः
२०३
परिधिः ६० । वेधः २०३ । खार्य्यः ६६६
२३ ।
अथ भित्त्यन्तर्वाह्यकोणसंलग्नराशिप्रमाणानयने
करणसूत्रं वृत्तम् ।
"द्विवेदसत्रिभागैकनिघ्नात्तु परिधेः फलम् ।
भित्त्यन्तर्वाह्यकोणस्थराशेः खगुणभाजितम्
॥"
उदाहरणम् ।
"परिधिर्भित्तिलग्नस्य राशेस्त्रिंशत्करः किल ।
अन्तःकोणस्थितस्यापि तिथितुल्यः करः
सखे ॥
वहिः कोणस्थितस्यापि पञ्चघ्ननवसम्मितः ।
तेषामाचक्ष्वमेक्षिप्रं घनहस्तान् पृथक् पृथक्
॥"
अत्रापि स्थूलादिधान्यानां राशिमानाव-
बोधनाय स्पष्टक्षेत्रत्रयम् ।
तत्रादावनणुधान्यराशिमानबोधकं क्षेत्रम् ।
न्यासः
परिधिः ४५
नहिःकोणराशिः
वेधः
६
अनणुधान्यराशयः
परिधिः १५
वेधः
६
अन्तःकीणराशिः

अथाणुधान्यराशिमानानयनाय
न्यासः
परिधिः ४५
नहिःकोणरशिः
वेधः
६०११
अणुधान्यराशिः
परिधिः १५
वेधः
६०११
अन्तःकोणराशिः
परिधिः ३०
वेधः
६०११
मित्तिराशिः
पूर्ब्बवत्क्षेत्रत्रयाणां
स्वगुणगुणितपरिधिः ६० ।
वेधः ६०११ । फलानि २७२ ८११
। १३६ ४११ ।
४०९ १११ ।
अथ शूकधान्यराशिमानानयनाय
न्यासः
परिधिः ४५
नहिःकोणराशिः
वेधः
२०३
शूकधान्यराशयः
परिधिः १५
वेधः
२०३
अन्तःकोणुराशिः
परिधिः ३०
वेधः
२०३
मित्तिराशिः
अत्रापि पूर्ब्बवत् क्षेत्रत्रयाणां
स्वगुणगुणितः
परिधिः ६० । वेधः २०३ । फलानि
३३३ १३ ।

राष्ट्रिकैः सह तद्राष्ट्रं क्षिप्रमेव विनश्यति ॥"
राष्ट्रपतिः । यथा, हरिवंशे । १८३ । २७ --
२८ ।
"कुम्भाण्ड ! मन्त्रिणां श्रेष्ठ ! प्रीतोऽस्मि
तव
सुव्रत ।
सुकृतन्ते विजानामि राष्ट्रिकोऽस्तु भवानिह
॥
सज्ञातिपक्षः सुसुखी निर्व्वृतोऽस्तु भवानिह
।
राज्यञ्च ते मया दत्तं चिरं जीव ममा-
श्रयात् ॥")

**राष्ट्रियः**, पुं, (राष्ट्रेऽधिकृतः । राष्ट्र + "राष्ट्रा-
वारपाराद् घखौ ।" ४ । २ । ९३ । इति
घः ।
यद्वा, राष्ट्रे जातः । "तत्र जातः ।" ४ । ३ ।
२५ । इति घः ।) नाट्योक्त्यौ राजश्यालः
।
इत्यमरः । १ । ७ । १४ ॥ (राष्ट्राध्यक्षः ।
यथा, महाभरते । १२ । ८५ । १२ ।
"ततः संप्रेषयेद्राष्ट्रे राष्ट्रियाय च दर्शयेत्
॥")

**राष्ट्रीयः**, पुं, (राष्ट्रे भव इति । राष्ट्र + ढः ।)
नाट्योक्तौ राजश्यालः । इति हेमचन्द्रः ।
२ ।
२४ ॥ राष्ट्रसम्बन्धिनि, त्रि ॥ (यथा, महा-
भारते । १२ । ८७ । ९ ।
"धान्यं हिरण्यं भोगेन भोक्तुं राष्ट्रीयसङ्गतः
॥")

**रास**, ङ ऋ शब्दे । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-अक०-सेट् ।) दन्त्यान्तोऽयमिति
गद-
सिंहः । रासभः खरः । दुर्गसिंहस्त्विमं
ताल-
व्यान्तं मत्वा उणादौ ह्रस्वं कृत्वा
रश्मिशब्दं

परिधिः ३०
वेधः
६
मित्तिराशिः
अत्राद्यस्य परिधिः ३० । द्विनिघ्नः ६० ।
अन्यः १५ । चतुर्घ्नः ६० । अपरः ४५ ।
सत्रि-
भागैक ४३ निघ्नः ६० । एषा वधः ६ । एभ्यः
फलं तुल्यमेतावन्त्य एव खार्य्यः ६०० ।
एतत्-
खस्वगुणेन भक्तं जातं पृथक् पृथक् फलम्
३०० ।
१५० । ४५० ॥

१६६ २३ । ५०० ।
इति लीलावत्यां राशिव्यवहारः
समाप्तः ॥

**राष्ट्रं**, पुं, क्ली, (राजते इति । राज् + “सर्व्व-
धातुभ्यः ष्ट्रन् ।” उणा० ४ । १५८ ।
इति ष्ट्रन् ।
व्रश्चेति षः ।) विषयः । (यथा, मनुः ।
९ ।
२५४ ।
“अशासंस्तस्करान् यस्तु बलिं
गृह्णाति पार्थिवः ।
तस्य प्रक्षुभ्यते राष्ट्रं स्वर्गाच्च
परिहीयते ॥”)
उपद्रवः । इत्यमरः । ३ । ३ । १८३
॥ विषयो
जनपदः । उपद्रवो मरकादिः । इति
भरतः ॥
(राष्ट्रपालननियमादिकं महाभारते १२
।
८७ अध्याये द्रष्टव्यम् ॥ * ॥ पुं,
पुरूरवोवंश-
जातस्य काशेः पुत्त्रः । यथा, भागवते
। ९ ।
१७ । ४ ।
“काश्यस्य काशिस्तत्पुत्त्रो राष्ट्रो
दीर्घतमः
पिता ॥”)

**राष्ट्रनिवासी**, [न्] पुं, (राष्ट्रे निवसतीति ॥
नि + वस् + णिनिः ।) जानपदः ।
देशवासी ।
इति त्रिकाण्डशेषः ॥

**राष्ट्रिका**, स्त्री, (राष्ट्रं उत्पत्तिस्थानत्वनास्त्यस्या
इति । राष्ट्र + ठन् । टाप् ।)
कण्टकारिका ।
इत्यमरः । २ । ४ । ९३ ॥ (पुं,
राष्ट्रवासी ।
जानपदः । यथा, मनुः । १० । ६१ ।
“यत्र त्वेते परिध्वंसा जायन्ते
वर्णदूषकाः ।

व्युत्पादितवान् । ऋ, अररासत् । ङ,
रासते ।
इति दुर्गादासः ॥

**रासः**, पुं, (रासनमिति रासतेऽत्रेति वा । रास
शब्दे + भावे अधिकरणे वा घञ् ।) कोला-
हलः । ध्वानः । भाषाशृङ्खलकः । गोपानां
क्रीडाभेदः । इति मेदिनी । से, ११ ॥
तस्य
विधिर्यथा, --
“कार्त्तिकीपूर्णिमायाञ्च कृत्वा तु
रासमण्डलम् ।
गोपानां शतकं कृत्वा गोपीनां शतकन्तथा
॥
शिलायां प्रतिमायां वा श्रीकृष्णं राधया सह
।
भारते पूजयेत् कृत्वा चोपहाराणि षोडश ॥
गोलोके च वसेत् सोऽपि यावद्वै ब्रह्मणो
वयः ।
भारतं पुनरागत्य हरिभक्तिं लभेद्ध्रुघम् ॥
क्रमेण सुदृढां भक्तिं लब्ध्वा मन्त्रं हरेरपि ।
देहं त्यक्त्वा च गोलोकं पुनरेव प्रयाति च ॥
तत्र कृष्णस्य सारूप्यं संप्राप्य पार्श्वदो
भवेत् ।
पुनस्तत्पतनं नास्ति जरामृत्युहरो महान्
॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २५ अध्यायः
॥
विस्तारस्तु श्रीकृष्णजन्मखण्डे २८
अध्याये
श्रीमद्भागवतीयरासपञ्चाध्यायेषु च द्रष्टव्यः
॥ * ॥
कस्यचिन्मते कल्पतरुयात्रेयम् । अस्य
विधि-
र्यथा, --
“कार्त्तिके पौर्णमास्यान्तु रासयात्रा
महानिशि ।
नन्दसूनोः प्रकर्त्तव्या महाविभवविस्तरैः ॥
इह लोके सुखं प्राप्य अन्ते विष्णुपुरं व्रजेत्
॥
पूजा कार्य्यार्द्धरात्रे तु नयेत् शेषं महोत्सवैः
।

| | | |
|---|---|---|
| | | गीतैर्नानाविधैर्वाद्यैर्व्वेणुवीणामृदङ्गकैः ॥<br>नृत्यैर्वराङ्गनागीतैरङ्गनानाञ्च कीर्त्तनैः । |

चन्दनागुरुकस्तूरीपङ्कलेपैर्व्विराजितैः ॥
विहरद्भिर्व्विष्णुभक्तैः कार्य्य एष महोत्सवः ।
ध्यायेद्वृन्दावने रम्ये यमुनापुलिने वने ॥
निकुञ्जसदने कृष्णं गोपीमण्डलमण्डितम् ।
रासमण्डलयन्त्रस्य गोविन्दं कर्णिकागतम् ॥
द्वयोर्द्वयोर्गोपिकयोर्म्मध्ये सान्तमनेकधा ।
अपरं नटवेशेन मध्ये तं मुरलीधरम् ॥
गोपीगणमुखाम्भोजमधुपानमधुव्रतम् ।
कुलालचक्रप्रतिमं मण्डलं पङ्कजाङ्कितम् ॥
दलाष्टशोभितं कार्य्यं महिष्योऽष्टौ च सन्धिषु ।
मध्ये मध्ये च गोविन्दं पार्श्वयोरष्टरूपकम् ॥
मुकुन्दं माधवं कृष्णं नटनागरमेव च ।
हरिं दामोदरं विष्णुं पूजयेत् कामरूपिणम् ॥
तद्बाह्ये भूपुरे गोप्यः शतशोऽथ सहस्रशः ।
पूजनीयाः प्रयत्नेन नृत्यगीतपरायणाः ॥
असंख्या गोपिकास्तत्र मण्डलेऽष्टौ वराङ्गनाः ।
महिष्यस्ताः समाख्याताः सदासङ्गमुनिव्रताः ॥
भक्तोत्सवाभिलासेन कमला बहुरूपिणी ।
राधा विशाखा विमला सुमित्रा ललिता तथा ।
सुन्दरी कमला रम्भा महिष्योऽष्टौ प्रकीर्त्तिताः ॥
तारा राधा निरावाधा कृष्णा भेदमुपागताः ।

**रासभः**, पुं, (रासते शब्दायते इति । रास + "रासिवल्लिभ्याञ्च ।" उणा० ३ । १२५ । इति अभच् ।) गर्द्दभः । इत्यमरः । २ । ९ । ७८ ॥
(अयं हि ब्रह्मणः पद्भ्यां जातः । यथा, मार्कण्डेये । ४८ । २६ ।
"पद्भ्याञ्चाश्वान् समातङ्गान् रासभान् शशकान् मृगान् ।
उष्ट्रानश्वतरांश्चैव नानारूपाश्च जातयः ॥"
अश्वतरः । स्वच्चर इति भाषा । यथा, महाभारते । १ । १४५ । ७ ।
"स त्वं रासभयुक्तेन स्यन्दनेनाशुगामिना ।
वारणावतमद्यैव यथा यासि तथा कुरु ॥")

**रासभवन्दिनी**, स्त्री, मल्लिका । इति शब्दचन्द्रिका ॥

**रासभी**, स्त्री, (रासभ + ङीप् ।) गर्द्दभी । इति शब्दरत्नावली ॥ (यथा, महाभारते । १३ । २७ । १४ ।
"एतत् श्रुत्वा मतङ्गस्तु दारुणं रासभीवचः ।
अवतीर्य्य रथात्तूर्णं रासभीं प्रत्यभाषत ॥")

**रासमण्डलं**, क्ली, (रासस्य मण्डलम् ।) श्रीकृष्णस्य रासक्रीडास्थलम् । तद्विवरणम् । यथा, --
"तस्मादुपरि गोलोकः पञ्चाशत्कोटियोजने ।
अमूल्यरत्नरचितं शतशृङ्गं मनोहरम् ॥
कोटियोजनमूर्द्ध्वञ्च दैर्घ्यं दशगुणोत्तरम् ।
शैलप्रस्थं परिमितं पञ्चाशत्कोटियोजनम् ॥
अतीवकमनीयञ्च वेदेऽनिर्व्वचनीयकम् ।
प्राकारमिव तस्यापि गोलोकस्य मनोहरम् ॥
परितो वेष्टितं रम्यं हीराहारसमन्वितम् ।
तत्र वृन्दावनं रम्यं युक्तं चन्दनपादपैः ॥
कल्पवृक्षैश्च रम्यैश्च मन्दारैः कामधेनुभिः ।
शोभितं शोभनाढ्यञ्च पुष्पोद्यानैर्मनोहरैः ॥
क्रीडासरोवरै रम्यैः सुरम्यै रतिमन्दिरैः ।
अतीवरम्यं रहसि रासयोग्यस्थलान्वितम् ॥
रक्षितं रक्षकै रम्यैरसंख्यैर्गोपिकागणैः ।
परितो वर्त्तुलाकारं त्रिलक्षयोजनं वनम् ॥
षट्पदध्वनिसंयुक्तं पुंस्कोकिलरुतान्वितम् ।
तत्राक्षयवटो रम्यो रहस्येव हि विस्तृतः ॥
सहस्रयोजनोर्द्ध्वश्च परितश्च चतुर्गुणः ।
गोपीनां कल्पवृक्षैश्च सर्व्ववाञ्छाफलप्रदः ॥
क्रीडान्वितैरावृतश्च राधादासीत्रिलक्षकैः ।
विरजातीरनारीणां यमुनाशीतलेन च ॥
पुष्पान्वितेन मान्द्येन पवित्रश्च सुगन्धिना ।
दासीगणैरसंख्यैश्च वृन्दावनविनोदिनी ॥
तत्र क्रीडति सा राधा मम प्राणाधिदेवता ॥
सेयं श्रीदामशापेन वृषभानुसुताधुना ।
ब्रह्मादिदेवैः सिद्धेन्द्रैर्मुनीन्द्रैः पूजिता व्रज ॥"
इति ब्रह्मवैवर्त्ते भगवन्नन्दसंवादे श्रीकृष्णजन्मखण्डे ८४ अध्यायः ॥

**रासयात्रा**, स्त्री, (रासस्य यात्रा उत्सवः ।) कार्त्तिकीपौर्णमासीकर्त्तव्यश्रीकृष्णस्योत्सवविशेषः । तद्विवरणं यात्राशब्दे द्रष्टव्यम् ॥ * ॥ शक्तिविषयकरासयात्रा यथा, --
"पौर्णमास्यां रासयात्रां देव्याः कुर्य्यान्निशार्द्धके ।
पूर्ब्बवन्मञ्चमास्थाप्य देवीं देव्यासनं यजेत् ॥"
पौर्णमास्यां चैत्रपौर्णमास्याम् ।
"संमुखे राससंस्थानं भैरवीभैरवान्वितम् ।
कृत्वा तान् पूजयित्वा च भ्रामयेत् कुम्भचक्रवत् ॥
कोलाहलं मृदङ्गादिवाद्यैर्नृत्यैः सुगीतकैः ।
कुर्य्यादानन्दहृदयः साधकः स्थिरमानसः ॥

तासां ध्यानैर्व्वक्ष्यमाणैः पूजा कार्य्या
विशेषतः ॥
उत्तीर्णे सायं समये गोप्यो वृन्दावनं
ययुः ।
रासक्रीडां ततस्ताभिश्चक्रे च
जगदीश्वरः ॥
गोप्यो रासक्रीडां चक्रुः पौर्णमास्यां
महा-
निशि ।
न तत्र पक्षिनिनदो न
झिल्लीनिनदस्तथा ॥
महानिशा द्वे घटिके
रात्रेर्म्मध्यमयामयोः ।
तदप्राप्तौ च कर्त्तव्यं पौर्णमास्यां
निशामुखे ॥
एवं रासक्रीडां यस्तु कारयेद्भुवि मानवः
।
स सर्व्वदुस्कृतं त्यक्त्वा
निर्व्वाणमुक्तिमाप्नुयात् ॥"
इत्युत्कलकलिका ॥
(विलासः । यथा, भागवते । ५ । २ ।
१२ ।
"अस्मद्विधस्य मन उन्नयनौ बिभर्त्ति
बह्वद्भुतं सरसराससुधादिवक्त्रे ॥"
"बक्त्रे च बह्वद्भुतं बिभर्त्ति किं तदाह ।
रसो
मधुरालापः रासो विलासस्ताभ्यां
सहिता सुधा
अधरामृतम् । आदिशब्दात्
स्मितनर्म्मादि ।"
इति तत्र श्रीधरस्वामी ॥ क्रिया । यथा,
भाग-
वते । ५ । १३ । १७ ।
"तैर्वञ्चितो हंसकुलं समाविशत्
नरोचयन् शीलमुपैति वानरान् ।
तज्जातिरासेन सुनिर्वृतेन्द्रियः
परस्परोद्वीक्षणविस्मृतावधिः ॥"
"तैर्वञ्चितस्तत्र फलाभावं ज्ञात्वा
हंसानां ब्राह्म-
णानां कुलं पुनः प्रविशन् तेषां शीलं
प्राय-

वायुना धार्य्यमाणश्च
विचित्रपरमाश्रयः ॥
अतीवरम्यनिर्म्माणो नित्यरूपो
मदीच्छया ।
शतशृङ्गेण शैलेन पुण्यवृन्दावनेन च ॥
सुरासमण्डलेनापि नद्या विरजयावृतः
।
कोटियोजनविस्तीर्णा प्रस्थेन विरजा
व्रज ॥
दैर्घ्ये तस्य शतगुणा परितः परमा
शुभा ।
अमूल्यरत्ननिकरा
हीरामाणिक्ययोस्तथा ॥
मणीनां कौस्तुभादीनामसंख्यानां
मनोहरा ।
अमूल्यरत्ननिर्म्माणं तत्रापि
प्रतिमन्दिरम् ॥
मनोहरञ्च प्राकारमदृष्टं विश्वकर्म्मणा
।
गोपीभिर्गोपनिकरैर्व्वेष्टितं कामधेनुभिः
॥
कल्पवृक्षैः पारिजातैरसंख्यैश्च
सरोवरैः ।
पुष्पोद्यानैः सुकोटिभिः संवृतं
रासमण्डलम् ॥
वेष्टितं चेष्टितैर्गोपैर्मन्दिरैः
शतकोटिभिः ।
रत्नप्रदीपयुक्तैश्च पुष्पतल्पसमन्वितैः
॥
सुगन्धिचन्दनामोदैः
कस्तूरीकुङ्कुमान्वितैः ।
क्रीडोपयुक्तैर्भोगैश्च
ताम्बूलैर्वासितैर्जलैः ॥
धूपैः सुरभिरम्यैश्च माल्यैश्च
रत्नदर्पणैः ।
रक्षकै रक्षितैः
शश्वद्राधादासीत्रिकोटिभिः ॥
अमूल्यरत्नाभरणैर्व्वह्निशुद्धांशुकैरपि ।
लक्षमत्तगजेन्द्राणां वेष्टितैश्च बलैः
क्रमात् ॥
नवयौवनसम्पन्नै रूपैर्निरुपमैरपि ।

वित्तशाठ्यं न कुर्व्वीत देवीयात्रा सुखप्रदा ॥"
इति वामकेश्वरतन्त्रे ५४ पटलः ॥

**रासेरसः**, पुं, (रासे क्रीडाविशेषे यो रसः ।

अलुक्समासः ।) गोष्ठी । रासः । शृङ्गारः ।
रससिद्धिः । रसावासः । षष्ठीजागरकः । इति
मेदिनी । से, ६० ॥ उत्सवः । इति शब्दरत्ना-
वली ॥ परिहासः । इति जटाधरः ॥

**रासेश्वरी**, स्त्री, (रासस्य ईश्वरी ।) राधा ।

यथा, --
"राधा रासेश्वरी रासवासिनी रसिकेश्वरी ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १७ अध्यायः ॥

**रास्ना**, स्त्री, (रस्यते इति । रस आस्वादने +

"रास्नासास्नास्थूणावीणाः ।" उणा० ३ । १५ ।
इति नप्रत्ययेन साधुः ।) स्वनामख्यातलता-

| | | |
|---|---|---|
| श्चित्तपूर्ब्बकं<br>पुनरुपनयनाद्याचारमरोचयन्<br>अप्रियं पश्यन् वानरतुल्यान्<br>भ्रष्टाचारान्<br>शूद्रप्रायानुपैति । तज्जातिरासेन<br>वानरजाति-<br>क्रियया स्त्रियां मिथुनीभूय<br>परस्परमुखोद्वीक्ष-<br>णेन विस्मृतो जीविताविधिर्म्मरणकालो<br>येन ।"<br>इति तट्टीकायां श्रीधरस्वामी ॥ * ॥) | रम्यञ्च वर्त्तुलाकारं चन्द्रविम्बं यथा<br>व्रज ॥<br>अमूल्यरत्नरचितं दशयोजनविस्तृतम्<br>।<br>कस्तूरीकुङ्कुमै रम्यैः<br>सुगन्धिचन्दनार्च्चितैः ॥<br>आवृतं मङ्गलघटैः फलपल्लवसंयुतैः ।<br>दधिलाजैश्च पर्णैश्च स्निग्धदूर्व्वाङ्कुरैः<br>फलैः ॥<br>श्रीरामकदलीस्तम्भैरसंख्यैश्च<br>मनोहरैः ।<br>पट्टसूत्रनिबद्धैश्च<br>स्निग्धैश्चन्दनपल्लवैः ॥<br>चन्दनासक्तमाल्यैश्च भूषणैश्च<br>विभूषितम् । | |

विशेषः । रासन इति हिन्दी भाषा । तत्-
पर्य्यायः । नाकुली २ सुरसा ३ सुगन्धा ४ गन्ध-
नाकुली ५ नकुलेष्टा ६ भुजङ्गाक्षी ७ छत्राकी ८
सुवहा ९ । इत्यमरः ॥ नाकुल्यादिपञ्चकं
रास्नायाम् । नकुलेष्टादिचतुष्कं सर्पाक्ष्यामि-
त्याहुः । इति तट्टीकायां भरतः ॥ रस्या १०
श्रेयसी ११ रसना १२ रसा १३ सुगन्धिमूला
१४
रसाढ्या १५ अतिरसा १६ द्रोणगन्धिका १७
सर्पगन्धा १८ पलङ्कषा १९ । इति जटाधरः ॥
अस्या गुणाः । गुरुत्वम् । तिक्तत्वम् । उष्ण-
त्वम् ।
विषवातास्रकासशोफकम्पोदरश्लेष्मनाशि-
त्वम् । पाचनत्वञ्च ।
"रास्ना तु त्रिविधा प्रोक्ता मूलं पत्रं तृण-
न्तथा ।
ज्ञेयौ मूलदलौ श्लिष्टौ तृणा रास्ना तु मध्यमा ॥"
इति राजनिर्घण्टः ॥
अपि च ।
"नाकुली सुरसा रास्ना सुगन्धा गन्धनाकुली ।
नकुलेष्टा भुजङ्गाक्षी सर्पाक्षी विषनाशिनी ॥
नाकुली तुवरा तिक्ता कटुकोष्णा विनाशयेत् ।
भोगिलूतावृश्चिकाखुविषज्वरकृमिव्रणान् ॥"
इति भावप्रकाशः ॥
रास्ना शोथामवातघ्नी । इति राजवल्लभः ॥
औषधिविशेषः । काँटा आमरुली इति भाषा ।
तत्पर्य्यायः । एलापर्णी २ सुवहा ३ युक्त-
रसा ४ । इत्यमरः ॥ अपि च ।
"रास्ना युक्तरसा रस्या सुवहा रसना रसा ।
एलापर्णी च सुरसा सुस्निग्धा श्रेयसी तथा ॥
रास्नामपाचनी तिक्ता गुरूष्णा कफवातजित् ।
शोथश्वाससमीरास्रवातशूलोदरापहा।
काशज्वरविषाशीतिवातिकामयहिध्महृत्॥"
इति भावप्रकाशः ॥
(रशना । यथा, वाजसनेयसंहितायाम् । १ । ३०
।
"आदित्यै रास्नासि ।"
"हे योक्त्र आदित्यै अदित्या भूम्यास्त्वं रास्नासि
रशना असि ॥" इति तद्भाष्ये महीधरः ॥

असुरः १६ । इति ज्योतिस्तत्त्वम्
॥ तस्योत्-
पत्त्यादिर्यथा, --
"सिंहिकायामथोत्पन्ना
विप्रचित्तेश्चतुर्द्दश ।
शम्बः शम्बलगात्रश्च व्यङ्गः
शाल्वस्तथैव च ॥
इल्वलो नमुचिश्चैव वातापी हसृपो
जिकः ।
हरकल्पकलिनाभौ भौमश्च
नरकस्तथा ॥
राहुर्ज्येष्ठश्च तेषां वै
चन्द्रसूर्य्यप्रमर्द्दनः ।
इत्येते सिंहिकापुत्त्रा देवैरपि
दुरासदाः ॥
दारुणाभिजनाः क्रूराः सर्व्वे
ब्रह्मद्विषस्तु ते ।
दशान्यानि सहस्राणि सैंहिकेयो
गणः स्मृतः ॥
निहतो यामदग्न्येन भार्गवेण
बलीयसा ।
स्वर्भानोस्तु प्रभा कन्या पुलोम्नस्तु
शची सुता ॥"
इति वह्निपुराणे
प्रजापतिसर्गनामाध्यायः ॥ * ॥
तस्य शिरश्छेदकारणं यथा, --
"देवलिङ्गप्रतिच्छन्नः
स्वर्भानुर्द्देवसंसदि ।
प्रविष्टः सोममपिबत् चन्द्रार्काभ्याञ्च
सूचितः ॥
चक्रेण क्षुरधारेण जहार पिबतः
शिरः ।
हरिस्तस्य कबन्धस्तु
सुधयाप्लावितोऽपतत् ॥
शिरस्त्वमरतां नीतमजो
ग्रहमचीक्सृपत् ।
यस्तु पर्व्वणि चन्द्रार्कावभिधावति
वैरधीः ॥"

राहुभुक्तानि ऋक्षाणि जीवपक्षे त्रयोदश ॥
त्रयोदशैव भोग्यानि मृतपक्षे प्रकीर्त्तयेत् ।
मृतपक्षे मुखं तस्य गुदं जीवाङ्गमध्यगम् ॥
एवमङ्गद्वयो राहुर्ज्ञातव्यः स्वरपारगैः ।
जीवपक्षे क्षपानाथे मृतपक्षे रवौ स्थिते ।
तस्मिन् काले शुभा यात्रा विपरीते तु
हानिदा ॥"
इति स्वरोदयः ॥

**राहुच्छत्रं**, क्ली, आर्द्रकम् । इति राजनिर्घण्टः ॥

**राहुदर्शनं**, क्ली, (राहोर्दशनं यत्र ।) राहो-
श्चाक्षुषज्ञानम् । ग्रहणमिति यावत् । यथा, --
"चक्षुषा दर्शनं राहोर्यत्तद्ग्रहणमुच्यते ।
तत्र कर्म्माणि कुर्व्वीत गणनामात्रतो नतु ॥
राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु ।
स्नानमात्रन्तु कर्त्तव्यं दानश्राद्धविवर्ज्जितम्
॥"
इति तिथ्यादितत्त्वम् ॥

**राहुभेदी**, [न्] पुं, (राहुं भिनत्तीति । भिद् +
णिनिः ।) विष्णुः । इति जटाधरः ॥

**राहुमूर्द्धभित्**, पुं, (राहोर्मूर्द्धानं भिनत्ति छिन-
त्तीति । भिद् + क्विप् ।) विष्णुः । इति
त्रिकाण्ड-
शेषः ॥

**राहुरत्नं**, क्ली, (राहुप्रियं रत्नम् । राहो रत्न-
मिति वा ।) गोमेदकः । इति राजनिर्घण्टः ॥

**राहुलसूः**, पुं, बुद्धः । इति हेमचन्द्रः । २ ।
१५१ ॥

**राहुवृहस्पतियोगः**, पुं, (राहुणा वृहस्पतेर्योगो
मेलनम् ।) एकराशिस्थितगुरुराहू । गुरु-
चाण्डालियोग इति ख्यातः । तस्य काला-
शुद्धिजनकत्वं यथा,
भोजदेवव्यवहारसमुच्चये ।
"सर्व्वं कार्य्यं न कर्त्तव्यं गुरौ सिंहेऽस्तगेऽपि
च ।

रुद्रपत्नीनामन्यतमा । यथा, ब्रह्मवैवर्त्ते । १ । ९ । १३ -- १४ ।
"नामानि रुद्रपत्नीनां सावधानं निबोध मे ।
कला कलावती काष्ठा कालिका कलहप्रिया ॥
कन्दली भीषणा रास्ना प्रम्लोचा भूषणा शुकी ।
एतासां बहवः पुत्त्रा बभूवुः शिवपार्षदाः ॥")

**राहुः**, पुं, (रह त्यागे + बहुलवचनात् उण् ।)

त्यागः । इति संक्षिप्तसारोणादिवृत्तिः ॥ (रहति गृहीत्वा त्यजति चन्द्रमिति । रह त्यागे + बहुलवचनात् उण् । इत्युज्ज्वलः । १ । १ ।) ग्रहविशेषः । तत्पर्य्यायः । तमः २ स्वर्भानुः ३ सैंहिकेयः ४ विधुन्तुदः ५ । इत्यमरः ॥ अस्र-पिशाचः ६ ग्रहकल्लोलः ७ सैंहिकः ८ उप-प्लवः ९ शीर्षकः १० उपरागः ११ सिंहिका-मूनुः १२ । इति शब्दरत्नावली ॥ कृष्णवर्णः १३
कवश्रः १४ । इति जटाधरः ॥ अगुः १५
इति श्रीभागवते ८ स्कन्धे ९ अध्यायः ॥
स च मलयपर्व्वतजातः । शूद्रवर्णः । द्वादशा-ङ्गुलपरिमाणः । कृष्णवर्णः । कृष्णवस्त्रः । सिंह-वाहनः । चतुर्भुजः । खड्गवरशूलचर्म्मधारी । सूर्य्यास्यः । अस्य अधिदेवता कालः । प्रत्यधि-देवता सर्पः । इति ग्रहयज्ञतत्त्वम् ॥ अस्य स्वरूपं शनिवत् । स च चण्डालजातिः । सर्पाकृतिः । अस्थिस्वामी नैरृतदिक्स्वामी च । इति बृहज्जातकादयः ॥ (राहुचारस्य फलाफलं बृहत्संहितायाः ५ अध्यायतो द्रष्ट-व्यम् ॥)

**राहुग्राहः**, पुं, (राहोर्ग्राहो ग्रहणं यत्र ।)

चन्द्रसूर्य्ययोर्ग्रहणम् । यथा, --
"राहुग्राहोऽर्केन्दोर्ग्रह उपराग उपप्लवः ॥"
इति हेमचन्द्रः । २ । ३९ ॥
(अत्र राहुग्रास इत्यपि पाठो दृश्यते ॥)

**राहुचक्रं**, क्ली, (राहोश्चक्रम् ।) रव्यादिसप्त-

वारेषु अश्वगत्या वामावर्त्तेन यामार्द्धं प्राप्य सप्तदिक्षु राहोर्गमनम् । यथा, --
"पश्चादर्के विधौ वह्नौ सौम्यां ज्ञे वायवे कुजे ।
रक्षोदिशि भृगौ याम्यां गुरावीशे शनौ दिने ।
राहुर्भ्रमति यामार्द्धादश्वगत्या च वामतः ॥
द्यूते युद्धे विवादे च यात्रायां सम्मुखं स्थितम् ।
व्रतदीक्षे न कुर्व्वीत तमोयुक्ते बृहस्पतौ ॥"
तमोयुक्ते राहुयुक्ते । व्रतदीक्षे इति नित्येतर-वैदिककर्म्मोपलक्षणम् । तथा च स्मृतिसारे ज्योतिषम् ।
"एकराशौ स्थितौ स्यातां यदि राहुवृहस्पती ।
विवाहव्रतयज्ञादि सर्व्वं तत्र परित्यजेत् ॥"
मलमासाद्युपक्रम्य भविष्ये ।
"ऋक्षभेदेऽप्येकराशौ सम्पर्को यदि वानयोः ।
गुरो राहोरपि तथा त्यजेद्विद्वान्न संशयः ॥"
अत्र गुरोर्लज्जितत्वं हेतुः ।
"यत्र यत्र स्थितो जीवस्तमोयोगेन लज्जते ।
उपहासाय किं न स्यादसत्सङ्गो मनीषिणाम् ॥"
इति मलमासतत्त्वम् ॥ * ॥
अस्य प्रतिप्रसवो यथा, --
"कर्णाटनाटाङ्गकलिङ्गदेशे
बृहस्पती राहुयुतो विरुद्धः ।
शेषेषु देशेषु न चास्ति दोषः
सर्व्वत्र कार्य्यं मुनयो वदन्ति ॥"
इति बृहद्राजमार्त्तण्डधृतवचनमितिकेचिद्-वदन्ति ॥

**राहुस्पर्शः**, पुं, (राहोः स्पर्शो यत्र ।) उपरागः ।

इति हलायुधः ॥

| | | |
|---|---|---|
| | राहुं विवर्ज्जयेद्यत्नाद्यदीच्छेत् कर्म्मणः फलम् ॥"<br>इति सत्कृत्यमुक्तावली ॥ * ॥<br>राहुकालानलचक्रं यथा, --<br>"तस्य चक्रं प्रवक्ष्यामि राहुकालानलाख्यकम् ।<br>शलाकासप्तकं चक्रं ईशादौ कृत्तिकादिकाः ॥<br>यत्र ऋक्षे स्थितो राहुर्व्वदनं तद्विनिर्द्दिशेत् ॥<br>मुखात् पञ्चदशे ऋक्षे तस्य पुच्छं व्यवस्थितम् ।<br>अष्टोत्तरशतं ख्याता जायन्ते यत्र केतवः ॥<br>व्याप्य तस्थुर्ज्जगत् सर्वं सहस्रार्कसमत्विषः । | |

**राहुहा**, [न्] पुं, (राहुं हन्तीति । हन् +

क्विप् ।) विष्णुः । इति हेमचन्द्रः ॥

**राहूच्छिष्टः**, पुं, (राहोरुच्छिष्टः ।) लशुनः ।

इति त्रिकाण्डशेषः ॥ (अस्य विवरणन्तु रसोन-
शब्दे द्रष्टव्यम् ॥)

**राहूत्सृष्टः**, पुं, (राहुणा उत्सृष्टः परित्यक्तः ।)

लशुनः । इति हारावली । २२३ ॥ (अस्य
विवरणं रसोनशब्दे द्रष्टव्यम् ॥)

**रि**, श गतौ । इति कविकल्पद्रुमः ॥ (तुदा०-

पर०-सक०-सेट् ।) रेफादिः । श, रियति ।
इति दुर्गादासः ॥

**रिक्तं**, क्ली, (रिच् + क्तः ।) शून्यम् । वनम् । इति

मेदिनी । ते, ५० ॥

**रिक्तं**, त्रि, (रिच् + क्तः ।) निर्धनम् । इति शब्द-

रत्नावली ॥ (शून्यम् । यथा, मनुः । ८ । ४०५
।
"भाण्डपूर्णानि यानानि तार्य्यं दाप्यानि सारतः
।
रिक्तभाण्डानि यत्किञ्चित् पुमांसश्चापरि-
च्छदाः ॥")

**रिक्तकं**, त्रि, (रिक्त + कन् ।) शून्यम् । इत्य-

मरः । ३ । १ । ५६ ॥ (यथा, मनुः । ८ ।
४०४ ।
"पणं यानं तरे दाप्यं पौरुषेऽर्द्धपणं तरे ।
पादं पशुश्च योषिश्च पादार्द्धं रिक्तकः पुमान्
॥")

**रिक्ता**, स्त्री, (रिच् + क्तः । टाप् ।) तिथिभेदः ।

सा तु चतुर्थी नवमी चतुर्द्दशी च । यथा, --
"नन्दा भद्रा जया रिक्ता पूर्णा च तिथयः
क्रमात् ॥"
इति तिथ्यादितत्त्वम् ॥
कर्म्मसु तस्या निषेधविधी यथा, --
"नन्दा भद्रा जया रिक्ता पूर्णा नामसदृक्-
फलाः ।"
"पूर्ब्बाग्नियाम्यफणिचित्रशिवान्यभेषु
रिक्ताष्टमीं विगतचन्द्रतिथिं विहाय ।
द्व्यङ्गालिगोसमुदये विकुजार्किवारे
शस्तेन्दुयोगकरणेषु हलप्रवाहः ॥"
इति दीपिका ॥
"चन्द्रार्कयोर्भवेत् पूर्णा कुजे भद्रा जया गुरौ ।
बुधमन्दौ च नन्दायां शुक्रे रिक्तामृता तिथिः
॥"
इति भीमपराक्रमः ॥
"सर्व्वत्र कार्य्ये बुधजीवशुक्राः
केन्द्रत्रिकोणोपगताः प्रशस्ताः ।
तृतीयलाभारिगताश्च पापा-
स्तिथिर्विरिक्ता शुभदस्य चाहः ॥"
इति दीपिका ॥
"चतुर्थी नवमी चैव रिक्ता चैव चतुर्द्दशी ।
शुक्रे नन्दा बुधे भद्रा शनौ रिक्ता कुजे जया ।
गुरौ पूर्णा च संयुक्ता सिद्धियोगाः प्रकीर्त्तिताः
॥
बुधमन्दगता नन्दा कुजे भद्रा जया गुरौ ।
भृगुरिक्तामृतं प्रोक्तं पूर्णा च रविचन्द्रयोः ॥"
इति ज्योतिःसागरसारः ॥
"षष्ठ्यष्टमीद्वादशीषु न गच्छेत्त्रिदिनस्पशि ।
पूर्णिमाप्रतिपद्दर्शरिक्तावमदिनेषु च ।
तथा यमद्वितीयायां यात्रायां मरणं भवेत् ॥"
इति सत्कृत्यमुक्तावली ॥

**रिक्थं**, क्ली, (रिङ्क्ते वहिर्गच्छति नश्यतीति ।

रिच् + "पातृतुदिवचिरिचिसिचिभ्यस्यक् ।"
उणा० २ । ७ । इति थक् ।) धनम् ।
इत्यमरः ।
२ । ९ । ९० ॥ (यथा, मनुः । ८ । २७ ।
"बालदायादिकं रिक्थं तावत् राजानुपालयेत्
।
यावत् स स्यात् समावृत्तो
यावच्चातीतशैशवः ॥")

**रिक्थहारी**, [न्] त्रि, (रिक्थं हरतीति ।

हृ + णिनिः ।) दायादः । धनहारी । यथा ।
"यदासौ नियुक्तो देवरादिः
स्वयमप्यपुत्त्रोऽपुत्त्रस्य
विधानादन्यथाभावे इत्यर्थः ।
औचित्यात्
पिच्छिलादेश्च स्खलने । इति
रमानाथः ॥
धर्म्मविलङ्घनं रिङ्गणमिति स्वामी ॥
बालानां
हस्तपादाभ्यां चलनं रिङ्गणम् ।
पिच्छिलादौ
पतनं स्खलनमित्यन्ये । एतन्मते
भेदेऽप्यभेदोप-
चारेण समे इत्युक्तम् । रग रिग
लिगि गतौ
अनट् । रिङ्खणमिति पाठे रखि रख
रिखि
सर्पणे इत्यस्य रूपम् ।" इति भरतः
॥

**रिच**, कि सम्पर्कवियोगयोः । इति कविकल्पद्रुमः ॥

(चुरा०-पक्षे भ्वा०-पर०-अक०-
सेट् ।) कि-
रेचयति रेचति । रिङ्क्ते
रिपुर्यदाक्रान्तो धनैर्म-
न्त्रैश्च रेचति । रेचयन्ति च तन्नार्य्य
इति
हलायुधः । इति दुर्गादासः ॥

**रिच**, इर् ध ञ औ विरेके । इति कविकल्पद्रुमः ॥

(रुधा०-उभ०-अक०-अनिट् ।)
विरेकः पौनः-
पुन्येन पुरीषोत्सर्गः । इति चतुर्भुजः
। इर्,
अरिचत् अरैक्षीत् । घ, ञ, रिणक्ति
रिङ्क्ते
अतिसारकी । औ, रेक्ता । इति
दुर्गादासः ॥

**रिज**, ङ ऋज्यर्थे । इति कविकल्पद्रुमः ॥ (भ्वा०-

न रिक्ता सर्व्वकर्म्मसु । इति ज्योतिःसारः ॥
"चन्द्रे चार्ककुजार्किशुक्रवियुते मध्येऽथवा पापयोः
त्यक्त्वा च व्यतिपातवैधृतिदिनं विष्टिञ्च रिक्तां तिथिम् ।
क्रूराहायनचैत्रपौषरहिते लग्नांशके मानुषे ॥
रिक्तासु विधवा कन्या दर्शेऽपि स्याद्विवाहिता ।
शनैश्चरदिने चैव यदि रिक्ता तिथिर्भवेत् ।
तस्मिन् विवाहिता कन्या पतिसन्तानवर्द्धिनी ॥"
इति दीपिका ॥
"षष्ठे मासि निशाकरे शुभकरे रिक्तेतरे वा तिथौ
सौम्यादित्यसितेन्दुजीवदिवसे पक्षे च कृष्णेतरे ॥"
इति भुजबलभीमः ॥
"द्वादशी सप्तमी नन्दा रिक्तासु पञ्चपर्व्वसु ।
बलमायुर्यशो हन्यात् शिशूनामन्नभक्षणम् ॥"
इति कृत्यचिन्तामणिः ॥
"पूर्ब्बेशान्तकसर्पमूलरहितेष्वृक्षेष्वरिक्ते तिथौ
षष्ठे मासि सितेन्दुजीवदिवसे गोऽज्ञर्क्ष मीनोदये ।
संप्राप्ते पञ्चमे वर्षे अप्रसुप्ते जनार्द्दने ।
षष्ठीं प्रतिपदञ्चैव वर्जयित्वा तथाष्टमीम् ॥
रिक्तां पञ्चदशीञ्चैव सौरिभौमदिने तथा ।
एवं सुनिश्चिते काले विद्यारम्भन्तु कारयेत् ॥"
इति विष्णुधर्म्मोत्तरः ॥

क्षेत्रे स्वपरपुत्रार्थं प्रवृत्तोऽयं जनयति स द्विपि-
तृको द्व्यामुष्यायणो द्वयोरपि रिक्थहारी पिण्डदाता च ।" इति मिताक्षरायां दायभागः ॥

**रिक्थी**, [न्] त्रि, (रिक्थमस्यास्तीति । रिक्थ + इनिः ।) धनहारी । धनी । (यथा, याज्ञ-वल्क्यः । २ । २९ ।
"योऽभियुक्तः परेतः स्यात् तस्य रिक्थी तमु-द्धरेत् ॥")

**रिक्षा**, स्त्री, लिक्षा । यूका । इति हेमचन्द्रः । ४ । २७४ ॥

**रिख**, इ सर्पणे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) इ, रिङ्ख्यते । इति दुर्गादासः ॥

**रिग**, इ गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) इ, रिङ्ग्यते । इति दुर्गादासः ॥

**रिङ्खणं**, क्ली, (रिङ्ख + ल्युट् ।) स्खलनम् । इति हेमचन्द्रः । ६ । १५९ ॥ (यथा, --
"मुक्त्वाथ रिङ्खणविधिं पादचंक्रमणक्षमः ।
कुमारः पञ्चवर्षीयः कलाभ्यासं विधास्यति ॥")

**रिङ्गणं**, क्ली, (रिङ्ग + ल्युट् ।) स्खलनम् । इत्य-मरः ॥ "द्वे धर्म्माद्युपचिताद्प्रतिष्ठायां स्वकीय-
आत्म०-सक०-सेट् ।) ऋज्यर्थे भर्जने । ङ,
रेजते । इति दुर्गादासः ॥

**रिधमः**, पुं, कामः । वसन्तः । इति विश्वः ॥

**रिपुः**, पुं, (अनिष्टं रपतीति । रप वाचि + "रपे-रिच्चोपधायाः ।" उणा० १ । २७ । इति कुः इकारश्चोपधायाः । "रिफ कत्थनयुद्धनिन्दा-हिंसादानेषु । 'ईषेः किञ्च ।' उणा० १ । १४ ।
इति बाहुलकादुप्रत्ययः । रिपति केचित् पठन्ति ।
तत्र बाहुलकादेव ककारस्य पकारः । रिफति
मोषणार्थं युध्यते हिनस्ति वा निन्द्यते च सत्-पुरुषैः ।" इति निघण्टुटीकायां देवराजयज्वा ।
३ । २४ । ४ ।) शत्रुः । इत्यमरः । २ । ८ । १० ॥
(यथा, हितोपदेशे ।
"नकश्चित् कस्यचिन्मित्रं न कश्चित् कस्यचिद्रिपुः ।
कारणादेव जायन्ते मित्राणि रिपवस्तथा ॥")
शरीरस्थषड्रिपवो यथा । कामः क्रोधः लोभः
मोहः मदः मात्सर्य्यश्च । तथा हि ।
"आस्थाय योगमवजित्य च वैरिषट्क-
मावध्य चेन्द्रियगणं मनसि प्रसन्ने ॥"
इत्यादि तन्त्रसारे भुवनेश्वरीस्तोत्रम् ॥ * ॥
चोरकनामगन्धद्रव्यम् । इति राजनिर्घण्टः ॥
लग्नापेक्षया षष्ठलग्नम् । तत्पर्य्यायः । षट्-

| | | |
|---|---|---|
| | | कोणम् २ रिपुमन्दिरम् ३ । यथा, --<br>“धीस्थानं पञ्चमं ज्ञेयं यामित्रं सप्तमं स्मृतम् ।<br>द्युनं द्यूनं तथास्ताख्यं षट्कोणं रिपुमन्दि-<br>रम् ॥”<br>अपि च ।<br>“सुनीचगेऽस्तगेऽपि वा रिपोर्गृहेस्थिता ग्रहाः ।<br>वृथा फलं प्रकीर्त्तितं समस्तमेव सूरिभिः ॥”<br>अन्यच्च ।<br>“अरातिव्रणयोः षष्ठे चाष्टमे मृत्युरन्ध्रयोः ।<br>व्ययस्य द्वादशस्थाने वैपरित्येन चिन्तनम् ॥”<br>इति ज्योतिस्तत्त्वम् ॥ |

(ध्रुवपुत्रस्य शिष्टेः पुत्त्रः । यथा, हरिवंशे ।
२ । १४-१५ ।
“तस्मात्शिष्टिश्च भव्यश्च ध्रुवात् शम्भुर्व्व्यजायत ।
शिष्टेराधत्त सुच्छाया पञ्चपुत्रानकल्मषान् ॥
रिपुं रिपुञ्जयं पुष्पं वृकलं वृकतेजसम् ॥”
यदोः पुत्त्रः । यथा, भागवते । ९ । २३ । २० ।
“यदोः सहस्रजित् क्रोष्टानलोरिपुरितिश्रुताः ॥”)

**रिपुघातिनी**, स्त्री, (रिपुं हन्तीति । हन + णिनिः ।)
लताविशेषः । कुचुइ इति भाषा । यथा,
“कुचिका बहुविस्तीर्णा कुञ्चिका रिपुघातिनी ॥”
इति शब्दचन्द्रिका ॥

**रिन्फ**, प श वधे । इति कविकल्पद्रुमः ॥ (तुदा०-
पर०-सक०-सेट् ।) नोपधः । प श, रिम्फति
रिरिम्फ । सप्तमस्वरादिरयमित्यन्ये । इति दुर्गादासः ॥

**रिप्फं**, क्ली, लग्नापेक्षया द्वादशराशिः । यथा, --
“कर्म्मस्थानञ्च दशमं खं मेशूरणमास्पदम् ।
छिद्राख्यमष्टमं स्थानं रिप्फाख्यं द्वादशं स्मृतम् ॥”
तत्र चिन्तनीयं यथा, --
“प्राप्त्यायावथ चिन्तयेद्भवगृहे रिप्फेऽथ मन्त्रिव्ययौ
सौम्यस्वामियुतीक्षितैरुपचितिस्तेषां क्षतिस्त्व-
न्यया ॥”
इति ज्योतिस्तत्त्वम् ॥

**रिप्रः**, त्रि, (रीङ् स्रवण + “लीङ्रीङो ह्रस्वश्च पुट्च
तरौ श्लेषणकुत्सितयोः ।” उणा० ५ । ५५ ।

**रिफ**, कुत्सने । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) सौत्रधातुरयम् । रिप्फः रेफः ।
इति दुर्गादासः ॥

**रिफ**, श अर्फे । इति कविकल्पद्रुमः ॥ (तुदा०-
पर०-सक०-सेट् ।) श, रिफति । अर्फो
दानश्लाघार्हिंसानिन्दायुद्धानि । इति दुर्गा-
दासः ॥

**रिब**, इ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।) इ, रिम्ब्यते । इति दुर्गा-
दासः ॥

**रिभ**, रवे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
अक०-सेट् ।) विरिब्धः । इति दुर्गादासः ॥

**रिमेदः**, पुं, अरिमेदः । इति राजनिर्घण्टः ॥

**रिरी**, स्त्री, पित्तलः । इति हेमचन्द्रः । ४ ।
११४ ॥

**रिव**, इ व्रजे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) इ, रिण्व्यते । व्रजो गतिः । इति
दुर्गादासः ॥

**रिश**, औ श हिंसे । इति कविकल्पद्रुमः ॥ (तुदा०-
पर०-सक०-अनिट् ।) औ, अरिक्षत् । श,
रिशति । रेक्ष्यति । इति दुर्गादासः ॥

**रिश्यः**, पुं, (रिश्यते हिंस्यते इति । रिश् +
क्यप् ।) मृगः । इति त्रिकाण्डशेषः ॥

**रिष**, वधे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

**रिष्वः**, त्रि, (रिष वधे + “सर्व्वनिघृष्वरिष्वेति ।”
उणा० १ । १५३ । इति वन्प्रत्ययेन साधुः ।)
वधकः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**रिह**, वधे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) रेहति । इति दुर्गादासः ॥

**री**, ओ ङ य क्षरणे । इति कविकल्पद्रुमः ॥
(दिवा०-आत्म०-अक०-अनिट् ।) ओ, रीणः ।
ङ य, रीयते पयः । इति दुर्गादासः ॥

**री**, गि रवे । वधे । गतौ । इति कविकल्पद्रुमः ॥
(क्र्या० प्वा०-पर०-अक०-सक० च-अनिट् ।)
गि, रिणाति रीणः रिणिः । रवः शब्दः । तथा
च कातन्त्रादौ री गतिरेषणयोः । रेषणं वृक-
ध्वनिरिति रमानाथः । रिणाति रेषते वृकः ।
इति शब्दार्थे भट्टमल्लः । इति दुर्गादासः ॥

**री**, स्त्री, (री + क्विप् ।) गतिः । इति शब्दरत्ना-
वली ॥ रवः । वधः । इति रीधात्वर्थदर्शनात् ॥

**रीज्या**, स्त्री, घृणा । यथा । मोहो रीज्या
जुगुप्सा च हृणीया हृणिया घृणेति वाच-
स्पतिः । अयन्तु लज्जायां प्रसिद्धेः प्रमादात्
घृणायां प्रयुक्त इति कलिङ्गः । इत्यमरटीकायां
भरतः ॥

**रीठा**, स्त्री, रीठाकरञ्जः । इति राजनिर्घण्टः ॥

**रीठाकरञ्जः**, पुं, स्वनामख्यातवृक्षः । तत्पर्य्यायः ।
गुच्छकः २ गुच्छपुष्पकः ३ रीठा ४ गुच्छफलः ५
अरिष्टः ६ मङ्गल्यः ७ कुम्भबीजकः ८ प्रकीर्य्यः ९
सोमवल्कः १० फेणिलः ११ । अस्य फलगुणाः ।
तिक्तत्वम् । उष्णत्वम् । कटुत्वम् । स्निग्धत्वम् ।
वातकफकुष्ठकण्डूतिविषविष्फोटनाशित्वञ्च । इति
राजनिर्घण्टः ॥

**रीढकः**, पुं, पृष्ठवंशः । इति हेमचन्द्रः । ३ । २६५ ॥

**रीढा**, स्त्री, (रिह बन्धे + औणादिकः क्तः ।)

इति रप्रत्ययः । धातोर्ह्रस्वः । प्रत्ययस्य पुट् च ।)
अधमः । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥
(यथा, ऋग्वेदे । ९ । ७८ । १ ।
"गृभ्णाति रिप्रमविरस्य तान्वा ।"
"रिप्रं अनुपादेयत्वेन पापरूपम् ॥" इति तद्भाष्ये सायणः ॥ क्ली, पापम् । यथा, ऋग्वेदे ।
१० । १७ । १० ।
"विश्वं हि रिप्रं प्रवहन्ति देवीः ॥"
"देवीर्देव्यः देवनशीला आपः विश्वं सर्व्वं विप्रं
पापं प्रवहन्ति पुरुषसकाशात् प्रगमयन्ति अपनयन्तीति यावत् ।" इति तद्भाष्ये सायणः ॥)

**रिप्रवाहः**, त्रि, पापवाहकः । यथा, --

"क्रव्यादमग्निं प्रहिणोमि दूरम् ।
यमराज्यं गच्छतु रिप्रवाहः ॥"
इति भवदेवभट्टोक्तकुशण्डिकापद्धतिः ॥
"रिप्रं पापं वहतीति रिप्रवाहः ।" इति तट्टी-
कायां गुणविष्णुः ॥ "स प्रहितः क्रव्यादग्निः
यमराज्यं गच्छतु यमस्य राज्यं प्रति व्रजतु ।
किम्भूतः रिप्रवाहः रिप्रमिति पापनाम । रिप्रं
पापं वहति नाशयति रिप्रवाहः ।" इति वाज-
मनेयसंहिताभाष्ये महोधरः । ३५ । १९ ॥
"रिप्रवाहः रिप्रं पापं तस्य वोढा सोऽग्निः
यमराज्ञः यमो राजा येषां तान् यमराजकान्
अन्यप्रदेशान् गच्छतु प्राप्नोतु ।" इति ऋक्भाष्ये
सापणः । १० । १६ । ९ ॥)

सक०-सेट् ।) रेषति । इति दुर्गादासः ॥

**रिषिः**, पुं, ऋषिः । ऋषन्ति ज्ञानसंसारयोः पारं

गच्छन्ति ऋषयः । ऋषी श गतौ नाम्नीति
किः । रिषिर्हसादिश्च ।
विद्याविदग्धमतयो
रिषयः प्रसिद्धाः । इति प्रयोगात् । स्त्रियां
ऋषी च । इत्यमरटीकायां भरतः ॥

**रिष्टं**, क्ली, (रिष् + क्तः ।) क्षेमम् । कल्याणम् ।

अशुभम् । अमङ्गलम् । (यथा, मार्कण्डेये ।
५० । ८९ ।
"स्थालीपिधाने यत्राग्निर्दत्तो दर्व्वीफलेन वा ।
गृहे तत्र हि रिष्टानामशेषाणां समाश्रयः ॥")
अभावः । नाशः । इत्यमरभरतौ ॥ अशुभस्या-
भावः । इति केचित् । इति भरतः ॥ पापम् ।
इत्यजयः ॥ तद्वति, त्रि ॥

**रिष्टः**, पुं, (रिष् + क्तः ।) खड्गः । फेणिलः ।

स तु रक्तशिग्रुः । इति मेदिनी । टे, २७ ॥

**रिष्टकः**, पुं, (रिष्ट एव । स्वार्थे कन् ।) रक्तशिग्रुः ।

इति शब्दरत्नावली ॥

**रिष्टिः**, पुं, (रेषति हिनस्तीति । रिष् + क्तिच् ।)

खड्गः । इति मेदिनी । टे, २७ ॥

**रिष्टिः**, स्त्री, (रिष् + क्तिन् ।) अशुभम् । इति

मेदिनी । टे, २७ ॥ शस्त्रभेदः । इति शब्द-
रत्नावली ॥

**रिष्यः**, पुं, (रिष्यते इति । रिष् + क्यप् ।) मृग-

विशेषः । यथा, --

अवज्ञा । इत्यमरः । १ । ७ । २३ ॥

**रीणं**, त्रि, (री + क्तः । ओदितश्चेति नः ।) स्रुत-

जलादि । क्षरितम् । इत्यमरः । ३ । १ । ९२ ॥

**रीतिः**, स्त्री, (री + क्तिच् क्तिन् वा ।) आरकूटः ।

(तत्पर्य्यायगुणा यथा, --
"पित्तलन्त्वारकूटं स्यादरो रीतिश्च कथ्यते ।
राजरीतिर्ब्र ह्मरीतिः कपिला पिङ्गलापि च ॥
रीतिरप्युपधातुः स्यात्ताम्रस्य यशदस्य च ।
पित्तलस्य गुणा ज्ञेयाः स्वयोनिसदृशा जनैः ॥
संयोगजप्रभावेण तस्याप्यन्ये गुणाः स्मृताः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
प्रचारः । स्यन्दः । इत्यमरः । २ । ९ । ९७ ॥
३ । ३ । ६८ ॥ लोहकिट्टम् । इति मेदिनी । ते, ५० ॥
दग्धस्वर्णादिमलम् । इति धरणिः ॥ सीमा ।
स्रवणम् । गतिः । स्वभावः । शेषस्य पर्य्यायः ।
रूपम् २ लक्षणम् ३ भावः ४ आत्मा ५
प्रकृतिः ६ सहजः ७ रूपतत्त्वम् ८ धर्म्मः ९
सर्गः १० निसर्गः ११ शीलम् १२ सतत्त्वम् १३
संसिद्धिः १४ । इति हेमचन्द्रः ॥ (यथा, कथासरित्सागरे । १४ । ६२ ।
"निशान्तक्लिष्टचक्राह्वरीतिहृद्योरसक्रमः ॥"

|  | “ऋष्य ऋश्यो रिश्यो रिष्य एणः<br>स्यादेणकोऽपि<br>च ।”<br>इति शब्दरत्नावली ॥ |  |
|---|---|---|

स्तुतिः । यथा, ऋग्वेदे । २ । २४ । १४ ।
“महीव रीतिः शवसासरत् पृथक् ॥”
“महीव रीतिः महती स्तुतिरिव ।” इति
तद्भाष्ये सायणः ॥) काव्यस्यात्मा । इति वामन-
सूत्रम् ॥ गुणभेदेन तद्विभागमाह ।
“ओजः प्रसादमाधुर्य्यगुणत्रितयभेदतः ।
गौडवैदर्भ्यपाञ्चालरीतयः परिकीर्त्तिताः ॥”
प्रत्येकेनैषां लक्षणानि यथा, --
“ओजः समासभूयस्त्वं मांसलं पदडम्बरम् ।
व्यक्तार्थपदमग्राम्यं प्रसादः परिकीर्त्तितः ॥
शब्दार्थयोस्तु रसवन्मधुरं परिकीर्त्तितम् ।
सर्व्वलोकावगम्यं यद्ग्राम्यं तदभिधीयते ।
सुश्राव्यमपि गम्भीरं प्रसन्नमुपनागरम् ॥”
ग्राम्यं यथा, --
“कन्ये मन्येऽप्यसौ धन्यो यस्त्वामद्य विवाहयेत् ।
नाल्पेन तपसा लभ्यः सुन्दरस्त्रीसमागमः ॥”
उपनागरं यथा --
“तन्वि त्वदधरं स्वादु नाविदन्नविदो जनाः ।
वसुधायां सुधाभावान्मृषा स्वर्गं यियासवः ॥
शब्दालङ्करणं तत् स्याद्यदनुप्रासभास्वरम् ।
वर्णावृत्तिरनुप्रासः पदे पादे विधीयते ।
पदावृत्तिस्तु यमकमादिमध्यान्तसर्व्वगम् ॥” * ॥
क्रमेण रीतित्रयाणामुदाहरणानि ।
“गङ्गोत्तुङ्गतरङ्गसङ्गतजटाजूटाग्रजाग्रत्फणि
स्फूर्ज्जत्फुत्कृतिभीतिसम्भृतिचमत्कारस्फुरत्-
सम्भ्रमा ।
आनन्दामृतवापिकां विदधती चित्ते गिरीश-
प्रभो-
स्त्वां पायान्नवसङ्गमे भगवती लज्जावती
पार्व्वती ॥
भवतो विरहव्याधिमधिगम्य ससम्भ्रमा ।
कामिनी यामिनीकान्तं कृतान्तमिव पश्यति ॥
हन्तालि सन्तापनिवृत्तयेऽस्याः
किं तालवृन्तं तरलीकरोषि ।
उत्ताप एषोऽन्तरतापहेतु-
र्नतभ्रुवो नव्यजनापनेयः ॥”
इति काव्यचन्द्रिका ॥
(अस्या अन्यद्विवरणं साहित्यदर्पणे ९ परिच्छेदे
द्रष्टव्यम् ॥)

**रु**, ङ वधे । गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) ङ, रवते ।
इति दुर्गा-
दासः ॥

**रु**, ल ध्वनौ । इति कविकल्पद्रुमः ॥ (अदा०-
पर०-अक०-सेट् ।) ल, रौति
रवीति पक्षी ।
इति दुर्गादासः ॥

**रुः**, पुं, शब्दः । इत्येकाक्षरकोषः ॥

**रुकः**, त्रि, बहुप्रदः । इति शब्दमाला ॥

**रुक्**, [च्] स्त्री, (रुच् + भावे क्विप् ।) शोभा ।
(यथा, माघे । ४ । ६६ ।
“दधद्भिरभितस्तटौ
विकचवारिजाम्बूनदै-
र्व्विनोदितदिनक्लमाः कृतरुचश्च
जाम्बूनदैः ॥”)
द्युतिः । (यथा, किराते । ५ । ४५
।
“क्षिपति योऽनुवनं विततां बृहद्-
बृहतिकामिव रौचनिकीं रुचम् ॥”)
इच्छा । इति मेदिनी ॥ (यथा,
महाभारते ।
१३ । १२४ । २८ ।
“नानाबुद्धिरुचो लोके
मनुष्यान्नूनमिच्छसि ।
ग्रहीतुं स्वगुणैः सर्व्वांस्तेनासि
हरिणः कृशः ॥”
तेजः । यथा, रघुः । ९ । ६ ।
“अनुययौ यमपुण्यजनेश्वरौ
सवरुणावरुणाग्रसरं रुचा ॥”)
शारिकाशुकवाक् । इति
शब्दरत्नावली ॥

**रुक्**, [ज्] स्त्री, (रुज् + क्विप् ।) रोगः । इत्य-
ततः स्वार्थे कन् ।) स्वर्णकारः ।
इत्यमरः । २ ।
१० । ८ ॥

**रुक्माङ्गदः**, पुं, राजविशेषः । यथा । अस्ति
कलिङ्गविषये रुक्माङ्गदो नाम नरपति-
र्दिग्विजयव्यापारक्रमेणागत्य
चन्द्रभागानदी-
तीरे समावेशितकटको वर्त्तते । इत्यादि
हितो-
पदेशे १ परिच्छेदः ॥

**रुक्मिणी**, स्त्री, (रुक्मो वर्णोऽस्त्यस्या इति । रुक्म +
इनिः । ङीप् ।) कृष्णमहिषीविशेषः ।
तत्प-
र्य्यायः । ईः २ रमा ३ सिन्धुजा ४
सामा ५
चला ६ हीरा ७ चञ्चला ८ वृषाकपायी
९
चपला १० इन्दिरा ११ लक्ष्मीः १२
पद्मालया
१३ पद्मा १४ कमला १५ श्रीः १६
हरिप्रिया
१७ । इति जटाधरः ॥ अस्या विवरणं
यथा,
“विदर्भराजो धर्म्मात्मा भीष्मको नाम
धार्म्मिकः ।
बभूवुस्तस्य पुत्रास्तु नाम्ना
रुक्म्यादयः शुभाः ॥
तेषामवरजा कन्या रुक्मिणी
रुक्मवर्णिनी ।
कमलांशेन सम्भूता सर्व्वलक्षणशोभिता
॥
राघवत्वेऽभवत् सीता रुक्मिणी
कृष्णजन्मनि ।
साक्षाल्लक्ष्मीस्तु विज्ञेया प्राकट्येनैव
पार्व्वति ॥”
इति पाद्मोत्तरखण्डे ६७ अध्यायः ॥ *
॥

**रीतिकं**, क्ली, पुष्पाञ्जनम् । इति राजनिर्घण्टः ॥

**रीतिका**, स्त्री, कुसुमाञ्जनम् । इति शब्दचन्द्रिका

पित्तलञ्च ॥ (यथा, बृहत्संहितायाम् । ५७ । ८ ।
"अष्टौ सीसकभागाः कांसस्य द्वौ तु रीतिका-
भागः ।
मयकथितो योगोऽयं विज्ञेयो वज्रसंघातः ॥")

**रीतिपुष्पं**, क्ली, (रीतेः पित्तलस्य पुष्पमिव । तदा-

कृतित्वात् ।) कुसुमाञ्जनम् । इत्यमरः । २ ।
९ । १०३ ॥

**रीव**, ऋ ञ चीवे । इति कविकल्पद्रुमः ॥ (भ्वा०-

उभ०-सक०-सेट् ।) ऋ, अरिरीवत् । ञ,
रीवति रीवते । चीवो ग्रहणसंवरणयोः । इति
दुर्गादासः ॥

मरः । २ । ६ । ५१ ॥ (यथा,
भागवते । ६ । १ । ८ ।
"दोषस्य दृष्ट्वा गुरु लाघवं यथा
भिषक् चिकित्सेत रुजां
निदानवित् ॥"
रुजति पीडयतीति । पीडादायके,
त्रि । यथा,
महाभारते । ५ । ८४ । १ ।
"प्रयान्तं देवकीपुत्त्रं परवीररुजो
दश ।
महारथा महाबाहुमन्वयुः
शस्त्रपाणयः ॥"
अथवा परस्य वीराणां रुक् यैरिति
॥)

**रुक्प्रतिक्रिया**, स्त्री, (रुजः प्रतिक्रिया निर-

सनम् ।) चिकित्सा । इत्यमरः । २
। ३ । ५० ॥

**रुक्मं**, क्ली, (रोचते शोभते इति । रुच् +
"युजि-

रुचितिजां कुश्च । उणा० १ ।
१४५ । इति
मक् कवर्गश्चान्तादेशः ।) काञ्चनम्
। (यथा,
रामायणे । २ । ७० । २१ ।
"रुक्मनिष्कसहस्रे द्वे
षोडशाश्वशतानि च ।
सत्कृत्य केकयीपुत्त्रं कैकेयो
धनमादिशत् ॥")
धुस्तूरम् । इत्यमरः ॥ लोहम् ।
इति मेदिनी ।
मे, २८ ॥ (अस्य पर्य्यायो यथा, --
"कृष्णायसं काललोहं रुक्मं
तत्तीक्ष्णमप्यथ ॥"
इति वैद्यकरत्नमालायाम् ॥)
नागकेशरम् । इति राजनिर्घण्टः ॥
(वर्णे,
पुं । इति उज्ज्वलदत्तः । १ । १४५
॥ दीप्तिशीले,
त्रि । वथा, ऋग्वेदे । ५ । ६१ ।
१२ ।

(रुक्मिण्या सह शिशुपालस्य
विवाहघोषणा
श्रीकृष्णस्य रुक्मिणीहरणं हृतायाञ्च
तस्यां
यादवैः सह राज्ञां तुमुलयुद्धादिकं
हरिवंशे ।
११६ अध्याये द्रष्टव्यम् ॥ * ॥
नारदस्य रुक्मिण्यै
पारिजातपुष्पप्रदानवृत्तान्तंतत्रैव च
१२२
अध्याये द्रष्टव्यम् ॥ * ॥ अस्याः
सन्ततिनामानि
यथा तत्रैव । १६० । ४ -- ६ ।
" -- रुक्मिणीतनयान् शृणु ।
प्रद्युम्नः प्रथमं यज्ञे शम्बरान्तकरः सुतः
॥
द्वितीयश्चारुदेष्णश्च वृष्णिसिंहो
महारथः ।
चारुभद्रश्चारुगर्भः सुदंष्ट्रो द्रुम एवच ॥
सुषेणश्चारुगुप्तश्च चारुविन्दश्च
वीर्य्यवान् ।
चारुवाहुः कनीयांश्च कन्या चारुमती
तथा ॥")
स्वर्णक्षीरी । इति राजनिर्घण्टः ॥

**रुक्मिणीव्रतं**, क्ली, (रुक्मिण्या व्रतम् ।) व्रत-

विशेषः । यथा, --
सूत उवाच ।
"जामदग्न्यः समाकर्ण्य रमां तां
पुत्त्रगर्द्धिनीम्
कल्केरभिमतं बुद्ध्वा
कारयद्रुक्मिणीव्रतम् ॥
व्रतेन तेन च रमा पुत्त्राढ्या सुभगा सती
।
सर्व्वभोगेन संयुक्ता बभूव स्थिरयौवना
॥
शौनक उवाच ।
विधानं ब्रूहि मे सूत व्रतस्यास्य च यत्
फलम् ।
पुरा केन कृतं धर्म्म्यं
रुक्मिणीव्रतमुत्तमम् ॥
सूत उवाच ।

| | | |
|---|---|---|
| | "दिवि रुक्म इवोपरि ॥"<br>"दिवि द्युलोके रुक्मो रोचमान आदित्य इव ।"<br>इति तद्भाष्ये सायणः ॥)<br>**रुक्मकारकः**, पुं, (रुक्मं स्वर्णालङ्कारं करोतीति ।<br>कृ + "कर्म्मण्यण् ।" ३ । २ । १ । इत्यण् । | शृणु ब्रह्मन् ! राजपुत्त्री शर्म्मिष्ठा वार्षपर्व्वणी ।<br>अवगाह्य सरोनीरं सोमं हरमपश्यत ॥<br>सा सखीभिः परिवृता देवयान्या च संगता ।<br>शम्भुभीत्या समुत्थाय पर्य्यधुर्व्वसनं द्रुतम् ॥<br>तत्र शुक्रस्य कन्या या वस्त्रव्यत्यासमात्मनः ।<br>संलक्ष्य कुपिता प्राह वसनं त्यज भिक्षुकि ! ॥ |

इति दानवकन्या सा दासीभिः परिवारिता ।
तां तस्या वाससा वद्ध्वा कूपे क्षिप्त्वा गता
गृहम् ॥
तां कूपमग्नां रुदतीं जलार्थी नहुषात्मजः ।
करे स्पृश्य समुद्धृत्य प्राह का त्वं वरानने ॥
सा शुक्रपुत्री वसनं परिधाय ह्रिया भिया ।
शर्म्मिष्ठया कृतं सर्व्वं प्राह राजानमीक्षती ॥
ययातिस्तदभिप्रायं ज्ञात्वानुव्रज्य शोभनाम् ।
आश्वास्य तां ययौ गेहं तस्याः परिणयादृतः
॥
सा गत्वा भवनं शुक्रं प्राह शर्म्मिष्ठया कृतम् ।
तच्छ्रुत्वा कुपितं विप्रं वृषपर्व्वाह सान्त्वयन् ॥
दण्ड्यं मां दण्डय विभो रोषो यद्यस्ति ते मयि
।
शर्म्मिष्ठां वाप्यपकृतां कुरु यन्मनसेप्सितम् ॥
राजानं प्रणतं पादे पितुर्दृष्ट्वा रुषाब्रवीत् ।
देवयानी त्वियं कन्या मम दासी भवत्विति ॥
समानीय तदा राजा दास्ये तां विनियुज्य सः
।
ययौ निजगृहं ज्ञानी दैवं परमकं स्मरन् ॥
ततः शुक्रस्तमानीय ययातिं प्रतिलोमकम् ।
तस्मै ददौ तां विधिवत् देवयानीं तया सह ॥
दत्त्वा प्राह नृपं विप्रोऽप्येनां राजसुतां यदि ।
शयने नयसे सद्यो जरा त्वामुपभोक्ष्यति ॥
शुक्रस्यैतद्वचः श्रुत्वा राजा तां वरवर्णिनीम् ।
अदृश्यां स्थापयामास देवयान्यनुगां भिया ॥
सा शर्म्मिष्ठा राजपुत्री दुःखशोकभयाकुला ।
नित्यं दासीशताकीर्णा देवयानीन्तु सेवते ॥
एकदा सा वनगता रुदती जाह्नवीतटे ।
विश्वामित्रं मुनिं सा तं ददृशे स्त्रीभिरावृतम् ॥
व्रजिनं पुण्यगन्धाभिः सुरूपाभिः सुवासितम् ।
कारयन्तं व्रतं भाल्यधूपदीपोपहारकैः ॥
निर्म्मायाष्टदलं पद्मं वेदिकायां सुचिह्नितम् ।
रम्भापोतैश्चतुर्भिस्तु चतुष्कोणं विराजितम् ॥
वाससा निर्म्मितगृहे स्वर्णपट्टैर्विचित्रिते ।
निर्म्मितश्रीवासुदेवं नानारत्नविघट्टितम् ॥
पौरुषेण च सूक्तेन नानागन्धोदकैः शुभैः ।
पञ्चामृतैः पञ्चगव्यैर्यथामन्त्रैर्द्विजेरितैः ॥
स्नापयित्वा भद्रपीठे कर्णिकायां प्रपूजयन् ।
गृहाण रुक्मिणीनाथ सनाथं कुरु मां प्रभो
॥
कर्पूरागुरुगन्धाढ्यं परमानन्ददायकम् ।
धूपं गृहाण वरद वैदर्भ्या प्रियया सह ॥
भक्तानां गेहसक्तानां
संसारध्वान्तनाशनम् ।
दीपमालोकय विभो जगदालोकनादर ॥
श्यामसुन्दर पद्माक्ष पीताम्बर चतुर्भुज ।
प्रपन्नं पाहि देवेश रुक्मिण्या सहिताच्युत
॥
इति तासां व्रतं दृष्ट्वा मुनिं नत्वा
सुदुःखिता ।
शर्म्मिष्ठा मिष्टवचना कृताञ्जलिरुवाच ताः
॥
शर्म्मिष्ठोवाच ।
राजपुत्रीं दुर्भगां मां स्वामिना
परिवर्ज्जिताम् ।
त्रातुमर्हथ हे देव्यो व्रतेनानेन कर्म्मणा ॥
श्रुत्वा तु ता चस्तस्याः कारुण्याच्च
कियत्
कियत् ।
पूजोपकरणं दत्त्वा कारयामासुरादरात् ॥
व्रतं कृत्वा तु शर्म्मिष्ठा लब्ध्वा
स्वामिनमीश्वरम् ।
सूत्वा पुत्त्रान् सुसन्तुष्टा समभूत्
स्थिरयौवना ॥
सीता चाशोकवनिकामध्ये सरमया सह ।
व्रतं कृत्वा पतिं लेभे रामं राक्षसनाशनम्
॥
बृहदश्वप्रसादेन कृत्वेदं द्रौपदी व्रतम् ।
पतियुक्ता दुःखमुक्ता बभूव स्थिरयौवना
॥
तथा रमा सिते पक्षे वैशाखे द्वादशीदिने ।
जामदग्न्याद्व्रतं चक्रे पूर्णं वर्षचतुष्टयम् ॥
पट्टसूत्रं करे बद्ध्वा भोजयित्वा द्विजान्
बहून् ।
भुक्त्वा हविष्यं क्षीराक्तं सुमिष्टं स्वामिना
सह ॥
बुभुजे पृथिवीं सर्व्वामपूर्व्वां स्वजनैर्वृता ।
सहास्य पौत्र्याः परिणयस्तदा
बलदेवादस्य
मृत्युविवरणञ्च ११८ अध्याये विस्तरशो
द्रष्ट-
व्यम् ॥)

**रुक्सद्म**, [न्] क्ली, मलम् । इति केचित् ॥

**रुक्षः**, त्रि, अप्रेम । अचिक्वणः । रुहधातो-
रौणादिकसप्रत्ययेन निष्पन्नः ।
इत्युणादिकोषः ॥
(नीरसः । तद्यथा, वायुस्वरूपवर्णने ।
"दोषधातुमलादीनां नेता शीघ्रः
समीरणः ।
रजोगुणमयः सूक्ष्मो रुक्षः शीतो
लघुश्चलः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**रुग्नः**, त्रि, (रुज् + क्तः । ओदितश्चेति नः ।)
रोगादिना कुटिलीकृतः । तत्पर्य्यायः ।
भुग्नः २ ।
इत्यमरः ॥ (यथा, रामायणे । २ । १०२
। ९ ।
"त्वया विहीनस्तव शोकरुग्न-
स्त्वां संस्मरन्नेव गतः पिता ते ॥")
रोगी । इति राजनिर्घण्टः ॥

**रुच**, ङ ऌ प्रीतिप्रकाशयोः । इति कविकल्पद्रुमः
॥
(भ्वा०-आत्म०-अक०-सेट् ।) प्रीतिरिह
अनु-
रागविशेषः । तत्र यस्यानुरागस्तस्य
सम्प्रदान-
त्वम् । ङ, रोचते अन्नं बुभुक्षवे । ऌ,
अरुचत् ।
इति दुर्गादासः ॥

**रुचकं**, क्ली, (रोचतेऽनेनेति । रुच् +
"बहुलमन्य-
त्रापि ।" उणा० २ । ३७ । इति क्वुन् ।)
सर्जि-

पञ्चभिर्दशभिर्व्वापि षोडशैरुपचारकैः ॥
पाद्यमध्वश्रमहरं शीतलं सुमनोहरम् ।
परमानन्दजनकं गृहाण परमेश्वर ॥
दूर्व्वाचन्दनगन्धाढ्यमर्घ्यंयुक्तं प्रयत्नतः ।
गृहाण रुक्मिणीकान्त प्रपन्नस्य मम प्रभो ॥
नानातीर्थोद्भवं वारि सुगन्धि सुमनोहरम् ।
गृहाणाचमनीयं त्वं श्रीनिवास श्रिया सह ॥
नानाकुसुमगन्धाढ्यं सूत्रग्रथितमुत्तमम् ।
वक्षःशोभाकरं चारु माल्य नय सुरेश्वर ॥
तन्तुसन्तानसन्धानरचितंवन्दनं हरे ।
गृहाणावरणं शुद्धं निरावरण सप्रिय ॥
यज्ञसूत्रमिदं देव प्रजापतिविनिर्म्मितम् ।
गृहाण वामुदेव त्वं रुक्मिण्या रमया सह ॥
नानारत्नसमायुक्तं स्वर्णमुक्तादिषट्टितम् ।
प्रियया सह देवेश गृहाणाभरणं मम ॥
दधिक्षीरगुडाम्नादिपूपलड्डुकखण्डकान् ।

सा पुत्त्रौ सुषुवे साध्वी मेघमालवलाहकौ ॥
देवानामुपकर्त्तारौ यज्ञदानतपोव्रतौ ।
महोत्साहौ महावीर्य्यौ सुभगौ कल्किसम्मतौ ॥
व्रतवरमिति कृत्वा सर्व्वसम्पत्समृद्धा
भवति विदिततत्त्वा पूजिता पूर्णकामा ।
हरिचरणसरोजद्वन्द्वभक्तैकताना
व्रजति गतिमपूर्व्वां ब्रह्मविज्ञैरगम्याम् ॥”
इति कल्किपुराणे रुक्मिणीव्रतम् ३१ अध्यायः ॥

**रुक्मिदर्पः**, पुं, (रुक्मिणि भीष्मकपुत्रे दर्पो यस्य सः । तस्य रुक्मिनाशकत्वात् ।) बलदेवः । इति हलायुधः ॥

**रुक्मिदारी**, [न्] पुं, (रुक्मिणं दारयतीति । दॄ + णिच् + णिनिः ।) बलदेवः । इति त्रिकाण्डशेषः ॥

**रुक्मिभित्**, [द्] पुं, (रुक्मिणं भिनत्तीति । भिद् + क्विप् ।) बलदेवः । इति हेमचन्द्रः । २ । १३८ ॥

**रुक्मी**, [न्] पुं, (रुक्मो वर्णविशेषोऽस्यास्तीति । रुक्म + इनिः ।) भीष्मकराजज्येष्ठपुत्त्रः । यथा,
“राजासीद्भीष्मको नाम विदर्भाधिपतिर्म्महान् ।
तस्य पञ्चाभवन् पुत्त्राः कन्यैका रुचिरानना ॥
रुक्म्यग्रजो रुक्मरथो रुक्मबाहुरनन्तरः ।
रुक्मकेशो रुक्ममाली रुक्मिण्येषां स्वसा सती ॥”
इति श्रीभागवते १० स्कन्धे ५२ अध्यायः ॥
(रुक्मिणीहरणानन्तरं कृष्णेन सहास्य युद्धा-
दिविवरणं हरिवंशे ११७ अध्याये तथा प्रद्यु-

काक्षारम् । अश्वाभरणम् । माल्यम् । सौव-
र्च्चलम् । (यथा, --
“सौवर्च्चलं स्याद्रुचकमन्यपाकञ्च तन्मतम् ॥”
तथास्य गुणाः ।
“रुचकं रोचनम्भेदि दीपनम्पाचनम्परम् ।
सुस्नेहं वातनुन्नातिपित्तलं विशदं लघु ।
उद्गारशुद्धिदं सूक्ष्मं विवन्धानाहशूलजित् ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमभागे ॥)
माङ्गल्यद्रव्यम् । (यथा, भागवते । ३ । २३ । ३१ ।
“हारेण च महार्हेण रुचकेन च भूषितम् ॥”
“रुचकेन मङ्गलद्रव्येण ।” इति श्रीधरः ॥) उत्कटः ।
इति मेदिनी । के, १४६ ॥ स्वाद्यरसः । इति
शब्दरत्नावली ॥ रोचना । विडङ्गम् । इति
हेमचन्द्रः ॥ लवणम् । इति हारावली ॥ (दक्षिण-
दिक् । यथा, बृहत्संहितायाम् । ५३ । ३५ ।
“प्राक्पश्चिमावलिन्दावन्तगतौ तदवधिस्थितौ शेषौ ।
रुचके द्वारं न शुभदमुत्तरतोऽन्यानि शस्तानि ॥”
“रुचकं मातुलुङ्गकम् ।” इत्युज्ज्वलदत्तः । २ । ३७ ॥)

**रुचकः**, पुं, (रोचते इति । रुच् + क्वुन् ।) बीज-
पूरः । निष्कः । दन्तः । कपोतः । इति मेदिनी ॥
(यथा, बृहथंहितायाम् । ६९ । २ ।
“जीवेन भवति हंसः सौरेण शशः कुजेन रुचकश्च ॥”

| | | |
|---|---|---|
| | म्नेन सहास्य कन्यापरिणयवृत्तान्तः अनिरुद्धेन | पर्व्वतविशेषः । यथा, विष्णुपुराणे । २ । २ । २६ ।<br>“त्रिकूटः शिशिरश्चैव पतङ्गो रुचकस्तथा ॥”<br>स्तम्भः । यथा, बृहत्संहितायात् । ५३ । २८ । |

"समचतुरस्रो रुचको
वज्रोऽष्टाश्रिर्द्विवज्रको द्विगुणः ॥")

**रुचा**, स्त्री, (रुच् + क्विप् । पक्षे टाप् ।) दीप्तिः ।

शोभा । इच्छा । (यथा, महाभारते । ३ । ५ । १३ ।
"तद्वै तस्मै न रुचामभ्युपैति
ततश्चाहं क्षममन्यन्न मन्ये ॥")
शारिकाशुकवाक् । इति शब्दरत्नावली ॥

**रुचिः**, स्त्री, (रुच्यते इति । रुच् + "इगुपधात्

कित् ।" उणा० ४ । ११९ । इति इन् । सच
कित् ।) अभिष्वङ्गः । अनुरागः ।
आशक्तिर्वा ।
स्पृहा । (यथा, किराते । १० । ६२ ।
"रुचिकरमपि नार्थवद्बभूव
स्तिमितसमाधिशुचौ पृथातनूजे ॥"
"अम्लो रुचिकरो हृद्यः प्रीणनो वह्निदीपनः ॥"
इति वैद्यकराजवल्लभे द्रव्यगुणव्याख्यायाम् ॥)
अभिलाषः । गभस्तिः । किरणः । इत्यमर-
भरतौ ॥ शोभा । इति मेदिनी ॥ (यथा,
रघुः । ५ । ६७ ।
"लक्ष्मीर्विनोदयति येन दिगन्तलम्बी
सोऽयि त्वदाननरुचिं विजहाति चन्द्रः ॥")
बुभुक्षा । इति हेमचन्द्रः ॥ गोरोचना । इति
राजनिर्घण्टः ॥ आलिङ्गनविशेषः । तल्लक्षणं
यथा । नायिकाया नायकस्य संमुखे
जान्वो-
रुपर्य्युपविश्य वक्षसि वक्षो दत्त्वा
यदवस्थानम् ।
इति कामशास्त्रम् ॥

**रुचिः**, पुं, (रोचते शोभते इति । रुच् + इन् ।

सच कित् ।) प्रजापतिविशेषः । स च रौच्य-
मनुपिता । यथा, --
मार्कण्डेय उवाच ।
किन्तु लेपाय मार्गोऽयं यत्र त्वं पुत्त्र वर्त्तसे ॥"
इत्यादि ॥ * ॥
मार्कण्डेय उवाच ।
"स तेन पितृवाक्येन भृशमुद्विग्नमानसः ।
कन्याभिलाषी विप्रर्षिः परिबभ्राम मेदिनीम् ॥
कन्यामलभमानोऽसौ पितृवाक्याग्निदीपितः ।
चिन्तामवाप महतीमतीवोद्विग्नमानसः ॥
किं करोमि क्व गच्छामि कथं मे दारसंग्रहः ।
क्षिप्रं भवेत् पितॄणां यो ममाभ्युदयकारकः ॥
इति चिन्तयतस्तस्य मतिर्जाता महात्मनः ।
तपसाराधयाम्येनं ब्रह्माणं कमलोद्भवम् ॥
ततो वर्षशतं दिव्यं तपस्तेपे स वैधसम् ।
दिदृक्षुः सुचिरं कालं रुचिर्नियममास्थितः ॥
ततः स्वन्दर्शयामास ब्रह्मा लोकपितामहः ।
उवाच च
प्रसन्नोऽस्मीत्युच्यतामभिवाञ्छितम् ॥
ततोऽसौ प्रणिपत्याह ब्रह्माणं जगतः पतिम् ।
पितॄणां वचनात्तेन यत् कर्त्तुमभिवाञ्छितम् ॥
ब्रह्मा चाह रुचिं विप्रं श्रुत्वा
तस्याभिवाञ्छि-
तम् ।
प्रजापतिस्त्वं भविता सष्टव्या भवता प्रजाः ॥
सृष्ट्वा प्रजाः सुतान् विप्र समुत्पाद्य
क्रियास्तथा ।
कृत्वा हृताधिकारस्त्वं ततः
सिद्धिमवाप्स्यसि ॥
स त्वं यथोक्तं पितृभिः कुरु दारपरिग्रहम् ।
कामञ्चेममभिध्याय क्रियतां पितृपूजनम् ॥
स्वकर्म्मभिरतैर्नित्यं पुष्पधूपान्नवारिभिः ॥
नमस्येऽहं पितॄन् श्राद्धे ये शूद्रैरपि
भक्तितः ।
सन्तर्प्यन्ते जगत्यस्मिन् नाम्ना ख्याताः
सुका-
लिनः ॥
नमस्येऽहं पितॄन् श्राद्धे पाताले ये
महासुरैः ।
सन्तर्प्यन्ते स्वधाहारास्त्यक्तदम्भमदैः
सदा ॥
नमस्येऽहं पितॄन् श्राद्धैरर्च्यन्ते ये
रसातले ।
भोगैरशेषैर्विवि धैनगैः कामानभीप्सुभिः ॥
नमस्येऽहं पितॄन् श्राद्धे सर्पैः सन्तर्पितान्
सदा
तत्रैव विविधैर्म्मन्त्रैर्भोगसम्पत्समन्वितैः ॥
पितॄन्नमस्ये निवसन्ति साक्षाद्
ये देवलोकेऽथ महीतले वा ।
तथान्तरीक्षे च सुरादिपूज्या-
स्ते संप्रतीच्छन्तु मयोपनीतम् ॥
पितॄन्नमस्ये परमाणुभूता
ये वै विमाने निवसन्त्यमूर्त्ताः ।
यजन्ति यानस्तमला मनोभि-
र्योगीश्वराः क्लेशविमुक्तिहेतून् ॥
पितॄन्नमस्ये दिवि ये च मूर्त्ताः
स्वधाभुजः काम्यफलाभिसन्धौ ।
प्रदानशक्ताः सकलेप्सितानां
विमुक्तिदा येऽनभिसंहितेषु ॥
तृप्यन्तु तेऽस्मिन् पितरः समस्ता
इच्छावतां ये प्रदिशन्ति कामान् ।
सुरत्वमिन्द्रत्वमतोऽधिकंवा
वस्वात्मजान् क्ष्मामवलां गृहाणि ॥
सूर्य्यस्य ये रश्मिषु चन्द्रविम्बे
शुक्ले विमाने च सदा वसन्ति ।
तृप्यन्तु तेऽस्मिन् पितरोऽन्नतोयै-
र्गन्धादिना पुष्टिमतो व्रजन्तु ॥

“रुचिः प्रजापतिः पूर्व्वं निर्म्ममो निरहङ्कृतिः
।
यत्रास्तमितशायी च चचार पृथिवीमिमाम् ॥
अनग्निमनिकेतन्तमेकाहावसथाश्रयम् ।
विमुक्तसङ्गं तं दृष्ट्वा प्रोचुः स्वपितरो मुनिम्
॥
पितर ऊचुः ।
वत्स कस्मात् त्वया पुण्यो न कृतो
दारसंग्रहः ।
स्वर्गापवर्गहेतुत्वाद्बन्धस्तेनानिशं विना ॥
गृही समस्तदेवानां पितॄणाञ्च तथार्हणाम् ।
ऋषीणामतिथीनाञ्च कुर्ब्बन् लोकानुपाश्नुते
॥
स्वाहोच्चारणतो देवान् स्वधोच्चारणतः
पितॄन् ।
विभजन्नन्नदानेन भूताद्यानतिथीनपि ॥
स त्वं दैवादृणाद्बन्धं बन्धमस्मदृणादपि ।
आवाप्नोषि मनुष्यर्षिभूतेभ्यश्च दिने दिने ॥
अनुत्पाद्य सुतान् देवानसन्तर्प्य पितॄंस्तथा
।
भूतादींश्च कथं मौढ्यात् सुगतिं
गन्तुमिच्छसि ॥
रुचिरुवाच ।
परिग्रहोऽतिदुःखाय पापायाधोगतेस्तथा ।
भवत्यतो मया पूर्ब्बं न कृतो दारसंग्रहः ॥
प्रक्षाल्यतेऽनुदिवसं यदात्मा निष्परिग्रहैः ।
ममत्वपङ्कदिग्धोऽपि चिन्ताम्भोभिर्व्वरं हि
तत् ॥”
इत्यादि ॥
पितर ऊचुः ।
“युक्तं प्रक्षालनं कर्त्तुमात्मनो नियतेन्द्रियैः ।
त एव तुष्टाः पितरः प्रदास्यन्ति तवेप्सितम्
।
पत्नीं सुतांश्च सन्तुष्टाः किं न दद्युः
पितामहाः ॥
मार्कण्डेय उवाच ।
इत्यृषिर्व्वचनं श्रुत्वा ब्रह्मणोऽव्यक्तजन्मनः ।
नद्या विविक्ते पुलिने चकार पितृतर्पणम् ॥
तुष्टाव च पितॄन् विप्रः स्तवैरेभिरथादृतः ।
एकाग्रः प्रयतो भूत्वा भक्तिनम्रात्मको रुचिः
॥”
रुचिकृतपितृस्तोत्रं यथा, --
रुचिरुवाच ।
“नमस्येऽहं पितॄन् भक्त्या ये
वसन्त्यधिदेवतम् ।
देवैरपि हि तर्प्यन्ते ये श्राद्धेषु स्वधोत्तरैः ॥
नमस्येऽहं पितॄन् स्वर्गे ये तर्प्यन्ते महर्षिभिः
।
श्राद्धैर्मनोमयैर्भक्त्या भुक्तिमुक्तिमभीप्सुभिः
।
नमस्येऽहं पितॄन् स्वर्गे सिद्धाः सन्तर्पयन्ति
यान् ।
श्राद्धेषु दिव्यैः सकलैरुपहारैरनुत्तमैः ॥
नमस्येऽहं पितॄन् भक्त्या येऽर्च्यन्ते
गुह्यकैर्दिवि ।
तन्मयत्वेन वाञ्छद्भिरृद्धिमात्यन्तिकींपराम्
॥
नमस्येऽहं पितॄन् मर्त्यैरर्च्यन्ते भुवि ये सदा
।
श्राद्धेषु श्रद्धयाभीष्टलोकपुष्टिप्रदायिनः॥
नमस्येऽहं पितॄन् विप्रैरर्च्यन्ते भुवि ये सदा
।
वाञ्छिताभीष्टलाभाय प्राजापत्यप्रदायिनः
॥
नमस्येऽहं पितॄन्
विप्रैरर्च्यन्तऽरण्यवासिभिः ।
वन्यैः श्राद्धैयताहारैस्तपोनिर्द्धूतकल्मषैः ॥
नमस्येऽहं पितॄन् विप्रैर्नैष्ठिकव्रतधारिभिः ।
ये संयतात्सभिर्नित्यं सन्तर्प्यन्ते
समाधिभिः ।
नमस्येऽहं पितॄन् श्राद्धेराजन्यास्तर्प्पयन्ति
यान् ।
येषां हुतेऽग्नौ हविषा च तृप्ति-
र्ये भुञ्जते विप्र शरीरसंस्थाः ।
ये पिण्डदानेन मुदं प्रयान्ति
तृप्यन्तु तेऽस्मिन् पितरोऽन्नतोयैः ॥
ये खड्गमांसेन सुरैरभीष्टैः
कृष्णैस्तिलैर्दैत्यमहोरगैश्च ।
कालेन शाकेब महर्षिवर्य्यैः
संप्रीणितास्ते मुदमत्र यान्तु ॥
कव्यान्यशेषाणि च यान्यभीष्टा-
न्यतीव येषाममरार्च्चितानाम् ।
तेषान्तु सान्निध्यमिहास्तु पुष्प-
गन्धादिभोज्येषु मयाहृतेषु ॥
दिने दिने ये प्रतिगृह्णतेऽर्च्चां
मासान्तपूज्या भुवि येऽष्टकासु ।
ये वत्सरान्तेऽभ्युदये च पूज्याः
प्रयान्तु ते मे पितरोऽत्र तुष्टिम् ॥
पूज्या द्विजानां कुमुदेन्दुभासो
ये क्षत्त्रियाणाञ्च नवार्कवर्णाः ।
तथा विशां ये कनकावदाता
नीलीनिभाः शूद्रजनस्य ये च ॥
तेऽस्मिन् समस्ता मम पुष्पगन्ध-
धूपान्नतोयादिनिवेदनेन ।

|  |  |  |
| --- | --- | --- |
|  | कव्यैरशेषैर्विधिवल्लोकद्वयफलप्रदान्॥ नमस्येऽहं पितॄन् वैश्यैरर्च्यन्ते भुवि ये सदा । |  |

तथाग्निहोमेन च यान्तु तृप्तिं
सदा पितृभ्यः प्रणतोऽस्मि तेभ्यः ॥
ये देवपूर्व्वाण्यतितृप्तिहेतो-
रश्नन्ति कव्यानि शुभाहृतानि ।
तृप्ताश्च ये भूतिसृजो भवन्ति
तृप्यन्तु तेऽस्मिन् प्रणतोऽस्मि तेभ्यः ॥
रक्षांसि भूतान्यसुरांस्तथोग्रान्
विनाशयन्तस्त्वशिवं प्रजानाम् ।
आद्याः सुराणाममरेशपूज्या-
स्तृप्यन्तु तेऽस्मिन् प्रणतोऽस्मि तेभ्यः ॥
अग्निष्वात्ता बर्हिषद आज्यपाः सोमपास्तथा ।
व्रजन्तु तृप्तिं श्राद्धेऽस्मिन् पितरस्तर्पिता मया
॥
अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे
दिशम् ।
तथा बहिषदः पान्तु याम्यां ये पितरःस्थिताः
॥
प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः ।
ऊद्र्ध्वतस्त्वर्य्यमा रक्षेत्
कव्यवालोऽनलोऽप्यधः ॥
रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ।
सर्व्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे ॥
विश्वो विश्वभुगाराध्यो धन्यो धर्म्मः सनातनः
।
भूतिदो भूतिकृद्भूतिः पितृणां ये गणा नव ॥
कल्याणः कल्यदः कर्त्ता कल्यः
कल्यतराश्रयः ।
कल्यताहेतुरनघः षडित्येते गणाः स्मृताः ॥
वरो वरेण्यो वरदस्तुष्टिदः पुष्टिदस्तथा ।
विश्वपाता तथा धाता सप्त चैते गणाः स्मृताः
॥
महान्महात्मा महितो महिमावान्महाबलः ।
गणाः पञ्च तथैवैते पितृणां पापनाशनाः ॥
सुखदो धनदश्चान्यो धर्म्मदोऽन्यो विभूतिदः
।
पितृणां कथ्यते चैतत्तथा गणचतुष्टयम् ॥
एकत्रिंशत् पितृगणा यैर्व्याप्तमखिलं जगत् ।
ते मेऽत्र तृप्तास्तुष्यन्तु यच्छन्तु च समीहितम्
॥”

अग्निरूपांस्तथैवान्यान्नमस्यामि पितृनहम् ।
अग्नीषोममयं विश्वं यत एतदशेषतः ॥
ये तु तेजसि ये वायौ सोमसूर्य्याग्निमूर्त्तयः ।
जगत्स्वरूपिणश्चैव तथा ब्रह्मस्वरूपिणः ॥
तेभ्योऽखिलेभ्यो योगिभ्यः पितृभ्यो
यतमानसः ।
नमो नमो नमस्ते मे प्रसीदन्तु स्वधाभुजः
॥
श्रीमार्कण्डेय उवाच ।
एवं स्तुतास्ततस्तेन तेजसो मुनिसत्तमाः ।
निश्चक्रमुस्ते पितरो भासयन्तो दिशो दश
॥
निवेदितन्तु यत्तेन पुष्पगन्धानुलेपनम् ।
तद्भूषितानथ स तान् ददृशे पुरतः स्थितान्
॥
प्रणिषत्य रुचिर्भक्त्या पुनरेव कृताञ्जलिः ।
नमस्तुभ्यं नमस्तुभ्यमित्याह पृथगादृतः ॥
ततः प्रसन्नाः पितरस्तमूचुर्मुनिसत्तमम् ।
वरं वृणीष्वेति स तानुवाचानतकन्धरः ॥
साम्प्रतं सर्गकर्त्तृत्वमादिष्टं ब्रह्मणा मम ।
सोऽहं पत्नीमभीप्सामि धन्यां दिव्यां
प्रजाव-
तीम् ॥
पितर ऊचुः ।
अद्यैव सद्यः पत्नी ते भविष्यति मनोरमा ।
तस्याञ्च पुत्रो भविता भवतो मुनिसत्तम !
॥
मन्वन्तराधिपो धीमान्
त्वन्नाम्नैवोपलक्षितः ।
रुचे रौच्य इति ख्यातिं प्रयास्यति जगत्त्रये
॥
तस्यापि बहवः पुत्रा महाबलप्राक्रमाः ।
भविष्यन्ति महात्मानः पृथिवीपरिपालकाः
॥
त्वञ्च प्रजापतिर्भूत्वा प्रजाः सृष्ट्वा
चतुर्विधाः ।
क्षीणाधिकारो धर्म्मज्ञस्ततः
सिद्धिमवाप्स्यसि ॥

अस्माकमेतत् पुरुषैस्तृप्तिं
पञ्चदशाब्दिकीम् ॥
यस्मिन् गृहेऽपि लिखितमेतत्तिष्ठति
नित्यदा ।
सन्निधातं कृते श्राद्धे तत्रास्माकं
भविष्यति ॥
तस्मादेतत्त्वया श्राद्धे विप्राणां भुञ्जतां
पुरः ।
श्रावणीयं महाभाग अस्माकं
तुष्टिकारकम् ॥”
इति मार्कण्डेयपुराणे रौच्ये मन्वन्तरे
पितृस्तवे ॥ *
मार्कण्डेय उवाच ।
“ततस्तस्मान्नदीमध्यात् समुत्तस्थौ
मनोरमा ।
प्रम्लोचा नाम तन्वङ्गी तत्समीपे
वराप्सराः ॥
सा चोवाच महात्मानं रुचिं
सुमधुराक्षरम् ॥
प्रश्रयावनता सुभ्रूः प्रम्लोचा वै
वराप्सराः ॥
अतीवरूपिणी कन्या मत्सुता तपतांवर
।
जाता वरुणपुत्त्रेण पुष्करेण महात्मना
॥
तां गृहाण मया दत्तां भार्य्यार्थे
वरवर्णिनीम् ।
मनुर्म्महामतिस्तस्यां समुत्पस्यति ते
सुतः ॥
मार्कण्डेय उवाच ।
तथति तेन चाप्युक्ता
तस्मात्तोयाद्वपुष्मतीम् ।
उज्जहार ततः कभ्यां मालिनीं नाम
नामतः ॥
नद्याश्च पुलिने तस्मिन् स
मुनिर्मुनिसत्तम ! ।
जग्राह पाणिं विधिवत् समानाय्य
महामुनीन् ॥

इति मार्कण्डेयपुराणे रौच्ये मन्वन्तरे पितृस्तवः ॥

मार्कण्डेय उवाच ।

“एवन्तु स्तुवतस्तस्य तेजसो राशिरुच्छिखः ।

प्रादुर्बभूव सहसा गगनव्याप्तिकारकः ॥

तद्दृष्ट्वा सुमहत्तेजः समाच्छाद्य स्थितं जगत् ।

जानुभ्यामवनिं गत्वा रुचिः स्तोत्रमिदं जगौ ॥

अमूर्त्तानाञ्च मूर्त्तानां पितॄणां दीप्ततेजसाम् ।

नमस्यामि सदा तेषां ध्यानिनां दिव्यचक्षुषाम् ॥

इन्द्रादीनाञ्च नेतारो दक्षमारीचयोस्तथा ।

सप्तर्षीणान्तथान्येषां तान् नमस्यामि काम-दान् ॥

मन्वादीनाच्च नेतारः सूर्य्याचन्द्रमसोस्तथा ।

तान्नमस्याम्यहं सर्व्वान् पितॄनप्स्वर्णवेषु च ॥

नक्षत्राणां ग्रहाणाञ्च वाय्वग्निनभसां तथा ।

द्यावापृथिव्योश्च तथा नमस्यामि कृताञ्जलिः ॥

प्रजापतेः कश्यपाय सोमाय वरुणाय च ।

योगेश्वरेभ्यश्च तथा नमस्यामि कृताञ्जलिः ॥

नमो गणेभ्यः सप्तभ्यस्तथा लोकेषु सप्तसु ।

स्वयम्भुवे नमस्यामि ब्रह्मणे योगचक्षुषे ॥

सोमाधाराः पितृगणा योगमूर्त्तिधारा हि ते ।

नमस्यामि ततः सोमं पितरं जगतामहम् ॥

स्तोत्रेणानेन च नरो योऽस्मांस्तोष्यति भक्तितः ।

तस्य तुष्टा वयं भोगान् दास्यामो ज्ञानमुत्तमम् ॥

शरीरारोग्यमैश्वर्य्यं पुत्त्रपौत्त्रादिसन्ततिम् ।

प्रदास्यामो न सन्देहो यच्चान्यदभिवाञ्छितम् ॥

तस्मात् पुण्यफलं लोके वाञ्छद्भिः सततं नरैः ।

पितॄणाञ्चाक्षयां तृप्तिं स्तव्याः स्तोत्रेण मानवैः ॥

श्राद्धे च य इमं भक्त्या अस्मत्प्रीतिकरं स्तवम् ।

पठिष्यन्ति द्विजाग्र्याणां भुञ्जतां पुरतः स्थिताः ॥

स्तोत्रश्रवणसंप्रीत्या सन्निधाने परे कृते ।

अस्माभिरक्षयं श्राद्धं तद्भविष्यत्यसंशयम् ॥

यद्यप्यश्रोत्रियं श्राद्धं यद्यप्युपहतं भवेत् ।

अन्यायोपात्तवित्तेन यदि वा कृतमन्यथा ॥

अश्राद्धार्हैरुपहतैरुपहारैस्तथा कृतम् ।

अकालेऽप्यथवा देशे विधिहीनमथापि वा ॥

अश्रद्धया वा पुरुषैर्द्दम्भमाश्रित्य वा कृतम् ।

अस्माकं प्रीतये श्राद्धं तथाप्य तदुदीरणात् ॥

यत्रैतत् पठ्यते श्राद्धे स्तोत्रमस्मत्सुखावहम् ।

अस्माकं जायते तृप्तिस्तत्र द्वादशवार्षिकी ॥

हेमन्ते द्वादशाब्दानि तृप्तिमेतत् प्रयच्छति ।

शिशिरे द्विगुणाब्दानि तृप्तिं स्तोत्रमिदं श्रुतम् ॥

वसन्ते षोडशसमास्तृप्तये श्राद्धकर्म्मणि ।

ग्रीष्मे च षोडशैवैतत् पठितं तृप्तिकारकम् ॥

विकाले च कृते श्राद्धे स्तोत्रेणानेन साधिते ।

वर्षासु तृप्तिरस्माकमक्षया जायते रुचे ॥

शरत्कालेऽपि पठितं श्राद्धकाले प्रयच्छति ।

तस्यां तस्य सुतो जज्ञे महावीर्य्यो महामतिः ।

रौच्योऽभवत् पितुर्नाम्ना ख्यातोऽत्र वसुधातले ॥

तस्य मन्वन्तरे देवास्तथा सप्तर्षयश्च ये ।

तनयाश्च नृपाश्चैव ते सम्यक् कथितास्तव ॥

धर्म्मवृद्धिस्तथारोग्यं धनधान्यसुतोद्भवः ।

नृणां भवत्यसन्दिग्धमस्मिन् मन्वन्तरे श्रुते ॥

पितृस्तवं तथा श्रुत्वा पितॄणाञ्च तथा गणान् ।

सर्व्वान् कामानवाप्नोति तत्प्रसादान्नरो मुने ॥”

इति मार्कण्डेयपुराणे रौच्यमन्वन्तरं समाप्तम् ॥

गारुडे ८९ । ९० अध्यायेऽप्येवमस्ति ॥

**रुचितं**, त्रि, (रोचते इति । रुच् + “रुचिवचि-कुचिकुटिभ्यः कितच् ।” उणा० ४ । २८५ । इति कितच् ।) मिष्टवस्तु । इत्युणादिकोषः ॥ (रुच् + क्तः । अभिलषितः । यथा, महाभारते । ५ । १०० । १६ ।

“मातले कश्चिदत्रापि रुचितस्ते वरो भवेत् ॥”

क्ली, रुच् + भावे क्तः । इच्छा । अभिताषः । यथा, महाभारते । ३ । २९६ । ७९ ।

“वसावेह क्षपामेकां रुचितं यदि तेऽनघ ॥”)

**रुचिफलं**, क्ली, (रुचिजनकं फलम् ।) अमृताह्वम् । इति राजनिर्घण्टः ॥

**रुचिरं**, क्ली, (रोचते इति । रुच् + “इषिमदि-

| | | मुदीति ।” उणा० १ । ५२ । इति<br>किरच् ।)<br>मूलकम् । कुङ्कुमम् । लवङ्गम् । इति<br>राज-<br>निर्घण्टः ॥ (पुं, सेनजित्पुत्त्रः । यथा,<br>हरि-<br>वंशे । २० । २१ ।<br>“पुत्त्राः सेबजितश्चासंश्चत्वारो<br>लोकसत्तमाः ।<br>रुचिरः श्वेतकेतुश्च महिम्नारस्तथैव<br>च ॥”)<br>**रुचिरं**, त्रि, (रुच् + किरच् ।) सुन्दरम् । इत्य-<br>मरः ॥ (यथा, आर्य्यासप्तशत्याम् ।<br>११७ ।<br>“उल्लसितभ्रूधनुषा तव पृथुना लोचनेन<br>रुचि-<br>राङ्गि । |
|---|---|---|

अचला अपि न महान्तः के चञ्चलभाव-
मानीताः ॥”)
मिष्टम् । इत्युणादिकोषः ॥

**रुचिरा**, स्त्री, (रोचते इति । रुच् + किरच् ।
ततष्टाप् ।) गोरोचना । इति राजनिर्घण्टः ॥
(त्रयोदशाक्षरवृत्तिविशेषः । अस्य लक्षणोदा-
हरणादिकं छन्दःशब्दे द्रष्टव्यम् ॥)

**रुचिराञ्जनः**, पुं, (रुचिरः सुन्दरोऽञ्जनः ।)
शोभाञ्जनः । इति राजनिर्घण्टः ॥

**रुचिराश्वः**, पुं, (रुचिरः सुन्दरोऽश्वो यस्य ।)
राजविशेषः । स तु देवापेः श्वशुरः । यथा, --
“मरो भूपाललोकानां स्यस्तये कुरु मे वचः ।
रुचिराश्वसुतां शान्तां देवापे त्वं समुद्वह ॥”
इति कल्किपुराणे १८ अध्यायः ॥
सुन्दरघोटकश्च ॥

**रुचिष्यं**, त्रि, (रुच्यते इति । रुच् + “रुचि-
भुजिभ्यां किष्यन् ।” उणा० ४ । १७८ । इति
किष्यन् ।) मिष्टवस्तु । इत्युणादिकोषः ॥ (यथा,
सुश्रुते । १ । ४६ । पुष्पवर्गे ।
“सिण्डाकी वातला सान्द्रा रुचिष्यानल-
दीपनी ॥”)
अभिप्रेतम् । इति संक्षिप्तसारोणादिवृत्तिः ॥
(यथा, हरिवंशे । २५४ । ६० ।
“न पृथ्वीं कामये कृत्स्नां सन्तुष्टोऽस्मि पदै-
स्त्रिभिः ॥
एष एव रुचिष्यो मे वरो दानवसत्तम ! ॥”)

तया ते मानुषं कर्म्म व्यपोढं
भृगुनन्दन ! ॥”)
मेषी । इति हेमचन्द्रः । ४ । ३४३ ॥
कुष्ठम् ।
इति राजनिर्घण्टः ॥

**रुजाकरं**, क्ली, (रुजां रोगं करोतीति । कृ +
टः ।) कर्म्मरङ्गफलम् । इति
शब्दचन्द्रिका ॥

**रुजाकरः**, पुं, (रुजां करोतीति । कृ + टः ।)
व्याधिः । यथा । व्याधिस्त्वाधी
रुजाकरः । इति
हेमचन्द्रः । २ । २२६ ॥
(व्याधिकारके, त्रि ॥)

**रुजासहः**, पुं, (रुजां सहते इति । सह + अच् ।)
धन्वनवृक्षः । इति राजनिर्घण्टः ॥

**रुट**, इ स्तेये । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) पञ्चमस्वरी । इ,
रुण्ट्यते धनं
चौरेण । इति दुर्गादासः ॥

**रुट**, लृ ङ दीप्तिप्रतिहत्योः । इति कविकल्पद्रुमः ॥
(भ्वा०-आत्म०-सक०-अक० च-सेट् ।) लृ,
अरुटत् । ङ, रोटते । प्रतिहतिः शोकादिना
पातनं पुनर्हननं वा । इति दुर्गादासः ॥

**रुट**, क रुषि । द्युतौ । इति कविकल्पद्रुमः ॥
(चुरा०-पर०-अक०-सेट् ।) क, रोटयति ॥
इति दुर्गादासः ॥

**रुट्**, [ष्] स्त्री, (रुष् + क्विप् ।) क्रोधः । इत्य-
मरः । १ । ७ । २६ ॥ (यथा,
भागवते । १ । १८ । ३० ।

**रुद**, ल घ इर् रोदे । इति कविकल्पद्रुमः ॥
(अदा०-पर०-अक०-सेट् ।) रोदोऽश्रुविमो-
चनम् । ल घ, रोदिति लोकः शोकात् । इर्,
अरुदत् अरोदीत् । रोदिष्यमाणमात्मानमिति
भट्टौ । आह्वानविशिष्टरोदबक्रियाव्याप्यत्वात्
सकर्म्मकत्वमिति जयमङ्गला । इति दुर्गादासः ॥

**रुदथः**, पुं, (रोदितीति । रुद् रोदने + “रुदि-
विदिभ्यां ङित् ।” उणा० ३ । ११६ । इति
अथः । सच ङित् ।) कुक्कुरः । इत्युणादिकोषः ॥
शिशुः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

**रुदन्तिका**, स्त्री, (रोदनं रुत् । अति अदि
वन्धने + अच् + ङीप् । स्वार्थे कन्
च ।) क्षुद्रक्षुपविशेषः । तत्पर्य्यायः । स्रवत्तोया २
सञ्जीवनी ३ अमृतस्रवा ४ रोमाञ्चिका ५
महामांसी ६ चणपत्री ७ सुधास्रवी ८ । अस्या
गुणाः । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । कषा-
यत्वम् । कृमिरक्तपित्तकफश्वासमेहनाशित्वम् ।
रसायनत्वञ्च । अस्य स्वरूपं यथा, --
“चणपत्रसमं पत्रं क्षुपश्चैव तथाकृतिः ।
शैशिरे जलबिन्दूनां स्रवन्तीति रुदन्तिका ॥”
इति राजनिर्घण्टः ॥

**रुदन्ती** स्त्री, (रोदनं रुत् । अति अदि
वन्धने + अच् + ङीप् । स्वार्थे कन्
च ।) क्षुद्रक्षुपविशेषः । तत्पर्य्यायः । स्रवत्तोया २
सञ्जीवनी ३ अमृतस्रवा ४ रोमाञ्चिका ५
महामांसी ६ चणपत्री ७ सुधास्रवी ८ । अस्या
गुणाः । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । कषा-
यत्वम् । कृमिरक्तपित्तकफश्वासमेहनाशित्वम् ।
रसायनत्वञ्च । अस्य स्वरूपं यथा, --
“चणपत्रसमं पत्रं क्षुपश्चैव तथाकृतिः ।
शैशिरे जलबिन्दूनां स्रवन्तीति रुदन्तिका ॥”
इति राजनिर्घण्टः ॥
अस्य गुणाः ।
“रुदन्ती वह्निकृद्वृष्या पित्तघ्नी च रसायनी ॥”
इति राजवल्लभः ॥
(रोदनशीले, त्रि । यथा, --

**रुची**, स्त्री, (रुचि + कृदिकारादिति ङीष् ।)

रुचिः । यथा । रुक् रुची रुचयः समाः ।
इत्येकार्थसंग्रहः ॥

**रुच्यं**, क्ली, (रोचते इति । रुच् + "राजसूयसूर्य्य-

मृषोद्येति ।" ३ । १ । ११४ । इति
क्यप्प्रत्ययेन
निपातितम् ।) सौवर्च्चलम् । इति
राजनिर्घण्टः ॥

**रुच्यः**, पुं, (रुच् + क्यप् ।) कतकवृक्षः । शालि-

धान्यम् । इति राजनिघण्टः ॥ पतिः ।
इति
हेमचन्द्रः । ३ । १९१ ॥ सुन्दरे, त्रि ।
इत्यमरः ॥
(रुचिकरः । यथा, --
"पक्वं वर्णकरं रुच्यं मांसशुक्रबलप्रदम् ।
पित्तावरोधि वातघ्नं हृद्यं गुर्व्वनुलोमनम्
॥"
इति वैद्यकराजवल्लभे द्रव्यगुणाख्यायाम्
॥)

**रुच्यकन्दः**, पुं, (रुच्यः कन्दो यस्य ।) शूरणः ।

इति राजनिर्घण्टः ॥

**रुज**, ओ श औ भङ्गे । इति कविकल्पद्रुमः ॥

(तुदा०-पर०-सक०-अनिट् ।) ओ, रुग्नः
। श,
रुजति रोगो हस्तम् । औ, रोक्ता । इति
दुर्गादासः ॥

**रुज**, क हिंसे । इति कविकल्पद्रुमः ॥ (चुरा०-

पर०-सक०-सेट् ।) क, रोजयति । इति
दुर्गा-
दासः ॥

**रुजा**, स्त्री, (रुज् + क्विप् । पक्षे टाप् ।) रोगः ।

भङ्गः । इति मेदिनी । जे, १४ ॥ (पीडा ।
यथा, महाभारते । ८ । ३४ । १४९ ।
"निपातात् तव शस्त्राणां शरीरे
याभवद्रुजा ।
"स तुं ब्रह्म ऋषेरंशे गतासुमुरगं रुषा ।
विनिर्गच्छन् धनुष्कोट्या निधाय
पुरमागतः ॥")

**रुठ**, उपघाते । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) रोठति लोकं
शोकः ।
इति दुर्गादासः ॥

**रुठ**, इ गत्यालस्यस्तेयखोटे । इति
कविकल्पद्रुमः ॥

(भ्वा०-पर०-सक०-अक० च सेट्
।) पञ्चमस्वरी ।
इ, रुण्ठ्यते । आलस्यं मन्दीभावः ।
स्तेयं
चौर्य्यम् । खोटः खोडनम् । इति
दुर्गादासः ॥

**रुठ**, लृ ङ प्रतीघाते । इति कविकल्पद्रुमः ॥

(भ्वा०-आत्म०-सक०-सेट् ।) लृ,
अरुठत् ।
ङ, रोठते । प्रतीघातः शोकादिना
पतनं
पुनर्हननं वा । इति दुर्गादासः ॥

**रुड्**, [ष्] स्त्री, (रुष क्रुधि + क्विप् ।) रुट् ।

इति व्याकरणम् ॥

**रुणस्करा**, स्त्री, सुखसन्दोह्या गौः । इति
शब्द-

चन्द्रिका ॥

**रुण्डः**, पुं, कबन्धः । इति जटाधरः ॥
(छिन्नपाद-

हस्तः । यथा, कथासरित्सागरे । ६५
। ११ ।
"तेनारोप्य स्थलं पृष्ठः स रुण्डः
पुरुषोऽभ्यधात् ।
निकृत्तहस्तचरणो नद्यां क्षिप्तोऽस्मि
शत्रुभिः ॥")

**रुण्डिका**, स्त्री, (रुण्डः कबन्धोऽस्त्यत्रेति ।
रुण्ड +

ठन् ।) युद्धभूमिः । द्वारपिण्डिका ।
विभूतिः ।
"धरित्रि पुष्पाञ्जलिरेष तुभ्यं
सुता मदीयास्तव पालनीयाः ।
इतीव रम्भा नमिताग्रमौलिना
भृशं रुदन्ती मकरमृबिन्दुना ॥"
इति प्रसिद्धम् ॥)

**रुदितं**, क्ली, (रुद् + क्तः ।) क्रन्दनम् । इत्यमरः ॥

तद्वति, त्रि ॥ (यथा, महाभारते । १३ । २३ । ६
।
"केशकीटावपतितं क्षुतं श्वभिरवेक्षितम् ।
रुदितञ्चावधूतञ्च तं भागं रक्षसां विदुः ॥")

**रुद्धं**, त्रि, (रुध् + क्तः ।) नदीप्राकारादिना

कृतवेष्टनम् । तत्पर्य्यायः । वेष्टितम् २ बल-
यितम् ३ संवीतम् ४ आवृतम् ५ । इत्यमरः ॥
(यथा, मेघदूते । ३९ ।
"रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः ॥")

**रुद्रः**, पुं, (रोदयतीति । रुद् + णिच् + "रोदेर्णि

लुक् च ।" उणा० २ । २२ । इति रक् । णेश्च
लुक् ।) आदित्यपत्रवृक्षः । इति राजनिर्घण्टः ॥
शिवः । (यथा, महाभारते । १३ । १७ । ४६ ।
"त्रिजटश्चीरवासाश्च रुद्रः सेनापतिर्व्विभुः ॥")
गणदेवताविशेषः । इत्यमरः ॥ अयं अग्नि-
मूर्त्तिः । यथा रुद्राय अग्निमूर्त्तये नमः । इति
तिथ्यादितत्त्वे शिवपूजापद्धतिः ॥ स च ब्रह्मणः
क्रोधरूपः सृष्टिकाले भ्रूमध्याज्जातः । तत्-
सृष्टः भूतप्रेतपिशाचादिः । अयमेवान्ते संहार-
कर्त्ता । इति भागवतम् ॥ * ॥ अथैकादश-
रुद्रनामानि यथा । अजः १ एकपात् २ अहि-
ब्रघ्नः ३ पिणाकी ४ अपराजितः ५ त्र्यस्वकः ६

| | | |
|---|---|---|
| | इति शब्दरत्नावली ॥<br><br>**रुतं**, क्ली, (रु + क्तः ।) पशुपक्ष्यादीनां शब्दः ।<br><br>तत्पर्य्यायः । वाशितम् २ । इत्यमरः ॥ वासि-<br>तम् ३ । इति शब्दरत्नावली ॥<br>(यथा, शिशु-<br>पालवधे । १६ । २५ ।<br>"अनुहुंकुरुते घनध्वनिं<br>न तु गोमायुरुतानि केशरी ॥") | |

महेश्वरः ७ वृषाकपिः ८ शम्भुः ९
हरणः १०
ईश्वरः ११ । इति महाभारते
दानधर्म्मः ॥ * ॥
अपि च ।
"अजैकपादहिब्रघ्नो विरूपाक्षः
सुरेश्वरः ।
जयन्तो बहुरूपश्च
त्र्यम्बकोऽप्यपराजितः।
वैवस्वतश्च सावित्रो हरो रुद्रा इमे
स्मृताः ॥"
इति जटाधरः ॥ * ॥
अन्यच्च ।
"अजैकपादहिब्रध्नस्त्वष्टा रुद्रश्च
वीर्य्यवान् ।
त्वष्टुश्चाप्यात्मजः पुत्त्रो विश्वरूपो
महातपाः ॥
हरश्च बहुरूपश्च
त्र्यम्बकश्चापराजितः।
वृषाकपिश्च शम्भुश्च कपर्द्दो
रैवतस्तथा ॥
एकादशैते कथिता
रुद्रास्त्रिभुवनेश्वराः ॥"
इति गारुडे ६ अध्यायः ॥
अग्निपुराणे त्वष्टृस्थाने कृत्तिवासाः ॥
* ॥ अप-
रञ्च ।
"अजैकपदाहिब्रध्नो विरूपाक्षोऽथ
रैवतः ।
हरश्च बहुरूपश्च त्र्यम्बकश्च
सुरेश्वरः ॥
सावित्र्यश्च जयन्तश्च पिणाकी
चापराजितः ।
एते रुद्राः समाख्याता एकादश
गणेश्वराः ॥
एतेषां मानसानान्तु
त्रिशूलवरधारिणाम्।
कोटयश्चतुरशीतिस्तत्पुत्त्राश्चाक्षमा
मताः ॥

विष्णुरुद्रयोरभेदो यथा, --
"सदैव देवो भगवात् महादेवो न संशयः ।
मन्यन्ते ये जग्द्योनिं विभिन्नं विष्णुमीश्वरात्
।
मोहादवेदनिष्ठाद्वा ते यान्ति नरकं नराः ॥
वेदानुवर्त्तिनं रुद्रं देवं नारायणन्तथा।
एकीभावेन पश्यन्ति मुक्तिभाजो भवन्ति ते
॥"
इति च तत्रैव १३ अध्यायः ॥ * ॥
कल्पभेदे तस्योत्पत्तिनामस्थानभार्य्यादीनि
यथा,
"चुकोप च ततो ब्रह्मा ज्वलन्निव हुताशनः ।
ततः कोपं स्वपुत्त्रेभ्यः
कृतमन्याय्यमित्यपि ॥
विचार्य्य परिवर्द्धन्तं नियन्तुमुपचक्रमे।
यत्नान्नियम्यमानोऽपि स कोपः परमेष्ठिनः
॥
भ्रुवोर्म्मध्यादथोद्भूतः कुमारो नीललोहितः
।
जातमात्रः कुमारोऽसौ रुरोद भगवान् भवः
॥
ब्रह्मोवाच कथं पुत्त्ररोदिषि त्वं महाबल ।
तन्मे कथत कामन्ते सद्यः सम्पादयाम्यहम्
॥
रुद्र उवाच ।
नामानि कुरु मे ब्रह्मन् ! स्थानानि च जगद्-
गुरो ।
पत्नीश्च देहि भगवन् ततः शान्तिर्भविष्यति
॥
ब्रह्मोवाच ।
जानामि त्वां देवदेवं पूर्व्वं दत्तं वरं मम ।
सत्यं कर्त्तुं भबान् जातस्त्वं हि
सर्व्वेश्वरेश्वरः ॥
जातमात्रो रोदिषि त्वं ततो रुद्र इति स्मृतः
।
नामान्यन्यानि ते देव विधास्ये शृणु पुत्त्रक
॥
ऋतध्वजो मनुर्मन्युरुग्ररेता महान् शिवः ।
भवः कालो महिनसो वामदेवो धृतव्रतः ॥

किं करोषीति तं ब्रह्मा रुदन्तं प्रत्युवाच वै ॥
नाम धेहीति तं सोऽथ प्रत्युवाच प्रजापतिम् ।
रुद्रस्त्वं देव नामासि मारोदीर्धैर्य्यमाप्नुहि ॥
एवमुक्तः पुनः सोऽथ सप्तकृत्वो रुरोद वै ।
ततोऽन्यानि ददौ तस्मै सप्त नामानि स प्रभुः ॥
स्थानानि चैषामष्टानां पत्नीः पुत्त्रांश्च वै प्रभुः
॥
भवं शर्व्वमथेशानं तथा पशुपतिं द्विज ।
भीममुग्रं महादेवमुवाच स पितामहः ॥
चक्रे नामान्यथैतानिं स्थानान्येषां चकार सः ॥
मूर्य्यो जलं मही वह्निर्व्वायुराकाशमेव च ।
दीक्षितो ब्राह्मणः सोम इत्येतास्तनवः क्रमात्
॥
सुवर्च्चला तथैवोषा सुकेशी चापरा शिवा ।
स्वाहा दिशस्तथा दीक्षा रोहिणी च यथा-
क्रमम् ॥
सूर्य्यादीनां नरश्रेष्ठ रुद्राद्यैर्नामभिः सह ।
पत्न्यः स्मृता महाभाग तदपत्यानि मे शृणु ॥
येषां सूतिप्रसूतेश्च इदमापूरितं जगत् ।
शनैश्चरस्तथा शुक्रो लोहिताङ्गो मनोजवः ॥
स्कन्दः सर्गोऽथ सन्तानो बुधश्चानुक्रमात्
सुताः ।
एवंप्रकाररुद्रोऽसौ सतीं भार्य्यामविन्दत ॥
दक्षकोपाच्च तत्याज सा सती स्वं कलेवरम् ।
हिमवद्दुहिता साभून्मेनायां द्विजसत्तम ! ॥
उपयेमे पुनश्चोमामनन्यां भगवान् भवः ॥
देवौ धाता विधातारौ भृगोः ख्यातिरसूयत ।
श्रियञ्च देवदेवस्य पत्नी नारायणस्य या ॥"
इति विष्णुपुराणे १ अंशे ८ अध्यायः ॥ * ॥
("द्वितीये हि युगे सर्व्वमक्रोधव्रतमास्थितम् ।
दिव्यं सहस्रवर्षाणामसुरा अभिदुद्रुवुः ॥
तपोविघ्नं शमीकर्त्तुन्तपोविघ्नं महात्मनाम् ।
पश्यन् समर्थश्चोपेक्षाश्चक्रे दक्षः प्रजापतिः ॥
पुनर्महेश्वरं भागं ध्रुवं दक्षः प्रजापतिः ।
प्रायो न कल्पयामास प्रोच्यमानः सुरैरपि ॥
पाशुपत्य ऋचो याश्च शैव्यश्चाहुतयश्च याः ।
यज्ञसिद्धिकृतस्ताभिर्हीनञ्चैव स इष्टवान् ॥
अथोत्तीर्णव्रतो देवो बुद्धा दक्षव्यतिक्रमम् ।
रुद्रो रौद्रं पुरस्कृत्य भावमात्मविदात्मनः ॥

दिक्षु सर्व्वासु ये रक्षां प्रकुर्व्वन्ति गणेश्वराः ।
पुत्त्रपौत्त्रसुतास्त्वेते सुरभीगर्भसम्भवाः ॥”
इति मात्स्ये ५ अध्यायः ॥ * ॥
तस्य उत्पत्तिर्यथा, --
“प्रजाः स्रष्टुमनास्तेपे तपः परमदुश्चरम् ।
तस्यैवं तप्यमानस्य न किञ्चित् समवर्त्तत ॥
ततो दीर्घेण कालेन दुःखात् क्रोधो व्यजायत ।
क्रोधाविष्टस्य नेत्राभ्यां प्रापतन्नश्रुबिन्दवः ॥
ततस्तेभ्योऽश्रुबिन्दुभ्यो भूताः प्रेतास्तदाभवन् ।
सर्व्वांस्तानग्रजान् दृष्ट्वा ब्रह्मात्मानमविन्दत ॥
तदा प्राणमयो रुद्रः प्रादुरासीत् प्रभोर्मुखात् ।
सहस्रादित्यसङ्काशो युगान्तदहनोपमः ॥
रुरोद सस्वरं घोरं देवदेवः स्वयं शिवः ।
रोदमानं तदा ब्रह्मा मारोदीरित्यभाषत ।
रोदनाद्रुद्र इत्येवं लोके ख्यातिं गमिष्यसि ॥
अन्यानि सप्तनामाति पत्नीः पुत्त्रांश्च शाश्वतान् ।
स्थानानि चैषामष्टानां ददौ लोकपितामहः ॥
भवः शर्व्वस्तथेशानः पशूनाम्पतिरेव च ।
भीमश्चोग्रो महादेवस्तानि नामानि सप्त वै ॥
सूर्य्यो जलं मही वह्निर्व्वायुराकाशमेव च ।
दीक्षितो ब्राह्मणश्चन्द्र इत्येता अष्टमूर्त्तयः ॥
एतानि तव नामानि ये स्मरन्ति नरा भुवि ।
तेषां सदैव कल्याणं करिष्यसि महामते ॥
स्थानानि च प्रवक्ष्यामि तेषु वासो विधीयताम् ॥
इन्द्रियाण्यसुहृद्व्योम वायुरग्निर्जलं मही ।
तपश्चन्द्रश्च सूर्य्यश्च स्थानान्येतानि ते भव ॥
धृतिर्धीरसिलोमा च नियुत् सर्पिर्विलम्बिका ।
इरावती स्वधा दीक्षा योषितस्तव सुन्दरी ॥
प्रजाः सृज महाभाग जगदेतत् प्रपूरय ॥
इत्यादिष्टः स भगवान् ब्रह्मणा नीललोहितः ।
सृष्टवान् स प्रजा बह्वीर्भूतप्रेतपिशाचकान् ।
कुष्माण्डान् विकृताकारान् भैरवान् भीम-नादिनः ॥
तान दृष्ट्वा तु तदा ब्रह्मा जगद्विद्रावकान् बहून् ।
वारयामास पुत्त्र त्वं मा स्राक्षीरीदृशीः प्रजाः ॥
तपसा विष्णुमाराध्य विहरस्व यथासुखम् ।
इति ते कथितो राजन् ! रुद्रसर्गः प्रजापतेः ॥
यं श्रुत्वापि नरः सद्यो जह्याद्भूतकृतं भयम् ॥”
इति पाद्मे स्वर्गखण्डे रुद्रसर्गः ८ अध्यायः ॥ * ॥
प्रकारान्तरं यथा, --
“कथितस्तमसः सर्गो ब्रह्मंस्तेऽयं महामुने ।
रुद्रसर्गं प्रवक्ष्यामि तन्मे निगदतः शृणु ॥
कल्पादावात्मनस्तुल्यं सुतं प्रध्यायतस्ततः ।
प्रादुरासीत् प्रभोरङ्के कुमारो नीललोहितः ॥
रुदन् वै सस्वरं सोऽथ द्रवंश्च द्विजसत्तम ! ।
सृष्ट्वा ललाटे चक्षुर्वै दग्ध्वा तानसुरान् प्रभुः ।
बाणं क्रोधाग्निसन्तप्तमसृजत् शत्रुनाशनम् ॥
ततो यज्ञः स विध्वस्तो व्यथिताश्च दिवौकसः ।
दाहव्यथा परीताश्च भ्रान्ता भूतगणा दिशः ॥”
इति चरके चिकित्सास्थाने तृतीयेऽध्याये ॥)
रुद्रगीता वराहपुराणे द्रष्टव्या ॥ * ॥ (विश्व-कर्म्मपुत्त्रविशेषः । यथा, विष्णुपुराणे । १ । १५ । १२२ ।
“तस्य पुत्त्रास्तु चत्वारस्तषां नामानि मे शृणु ।
अजैकपादहिब्रध्नस्त्वष्टा रुद्रश्च बुद्धिमान् ॥”)
स्वनामख्यातः कविविशेषः । स च विद्याविलास-
पुत्त्रः भावविलासप्रणेता । कविरयं मानसिंह-पुत्त्रस्य भावसिंहमहीपतेः समये बभूव ।
स च भावसिंहमहीपतिर्व्वर्त्तमानजयपुरमहा-राजस्य षोडशः पूर्ब्बपुरुषः । तथा च भाव-विलासे । १३४ -- १३६ ।

| | | |
|---|---|---|
| स्थानेषु तेषु ये रुद्रं ध्यायन्ति मनुजाधिप ।<br>तेषामष्टतनुर्द्देवो ददाति परमं पदम् ॥<br>सुवर्च्चला तथैवोमा विकेशा च शिवा तथा ।<br>स्वाहा दिशा च दीक्षा च रोहिणीति च पत्नयः ॥<br>शनैश्चरस्तथा शुक्रो लोहिताक्षी मनोजवः ।<br>सन्दः सर्गोऽथ सन्तानो बुधश्चैषां सुताः<br>स्मृताः ॥”<br>इति कौर्म्मे १० अध्यायः ॥ * ॥ | | |

"अन्यापदेशविनिवेशविदग्धबुद्धि-
श्रीभावसिंहनरसिंहनियोगयोगात्।
सम्पादितो विविधभावविकासभाजां
प्रीत्यै भृशं भवतु भावविलास एषः ॥"
सद्गुणानां समुद्रेण रुद्रेण ग्रथिता गुणैः ।
कण्ठस्था श्लोकमालेयं केषां न कुरुते
श्रियम् ॥
विद्याविलासपुत्रस्य न्यायवाचस्पतेरियम् ।
काव्यालापविदग्धानांमुदं निर्म्मातु निर्म्मितिः
॥")

**रुद्रकवचं**, क्ली, (रुद्रस्य कवचम् ।) शिवनाम-
समूहेन सर्व्वाङ्गरक्षकम् । यथा, --
"वक्ष्यामि रुद्रकवचमाद्यं प्राणस्य रक्षणम् ।
अहोरात्रं महादेव रक्षार्थं देवनिर्म्मितम् ॥
ॐ रुद्रो मामग्रतः पातु पृष्ठतः पातु शङ्करः ।
कपर्द्दी दक्षिणे पातु वामपार्श्वे तथा हरः ॥
शिवः शिरो मे च पातु ललाटे नीललोहितः ।
नेत्रयोस्त्र्यम्बकः पातु मुखे पातु महेश्वरः ॥
कर्णयोर्नासिकायाञ्च जिह्वायां शम्भुरव्ययः ।
श्रीकण्ठस्तु गले पातु बाह्वोः पातु पिणाकधृक्
॥
हृदयं मे महादेव ईश्वरस्तु तथोदरम् ।
नाभौ कुक्षौ कटिस्थाने पातु सर्व्वं प्रजापतिः
॥
ऊरू जानू महादेवः पादौ पातु महेश्वरः ।
सर्व्वं रक्षतु भूतेशः सर्व्वगात्राणि यत्नतः ॥
परशुं शूलखट्टाङ्गं दिव्यास्त्रं रौद्रमेव च ।
नमस्काराय देवेशं रक्ष मां जगदीश्वरः ॥
रक्षोभ्यो ग्रहपीडाभ्यो रोगशोकार्णवेषु च ।
पापेभ्यो नरकेभ्यश्च त्राहि मां भक्तवत्सल ॥
जन्म मृत्युर्ज्जरा व्याधिः कामः क्रोधः शमो
दमः ।
लोभमोहमदाश्चापि त्यजन्तु भुवनेश्वर ॥
त्वं गतिस्त्वं मतिश्चैव त्वं वुद्धिस्त्वं परायणः
।
कायेन मनसा वाचा त्वयि भक्तिर्दृढास्तु मे ॥
इत्येतद्रुद्रकवचं पठतः पापनाशनम् ।
महादेवप्रसादेन दुर्व्वासःपरिकीर्त्तितम् ॥
न तस्य पापलेशोऽस्ति भयं तस्य न विद्यते ।
षट्त्रिंशत्कोटयश्चैव हरस्य सकला
गणाः ॥
वराहगणनाशार्थं हिताय जगतां तथा
।
शङ्करस्याथ सेवायै समुत्पन्ना इमे
गणाः ॥"
इति कालिकापुराणे २९ अध्यायः ॥

**रुद्रचण्डी**, स्त्री, (रुद्रा चण्डी ।) रुद्रयामलोक्त-
देवीमाहात्म्यम् । यथा । "अस्य
चण्डिका-
महामन्त्रस्य महारुद्र ऋषिरनुष्टुप्
छन्द-
श्चण्डिका देवता रुद्रचण्डीजपे
विनियोगः । ॐ
नमश्चण्डिकायै ।
श्रीशङ्कर उवाच ।
चण्डिकां हृदये न्यस्य स्मरणं यः
करोत्यपि ।
अनन्तफलमाप्नोति देवि
चण्डीप्रसादतः ॥
रविवारे यदा चण्डीं
पठेदागमसम्मताम् ।
नवावृत्तिफलं तस्य जायते नात्र
संशयः ॥
सोमवारे यदा चण्डीं पठेद्यस्तु
समाहितः ।
सहस्रावृत्तिपाटस्य फलं जानीहि
सुव्रते ॥
कुजवारे जगद्धात्रि
पठेद्यामलसम्मताम् ।
शतावृत्तिफलं तस्य बुधे लक्षफलं
भवेत् ॥
गुरौ यदि महामाये लक्षयुग्मफलं ध्रुवम्
।
शुक्रे देवि जगद्धात्रि चण्डीपाठेन
शङ्करि ॥
ज्ञेयं तुल्यफलं दुर्गे यदि चण्डीं
समाहितः ।
नान्यस्तु पाठको देवी पठने ब्रह्महा भवेत् ॥
नारदः पाठकश्चैव कैलासे रत्नभूषिते ।
वैकुण्ठे ब्रह्मलोके च देवराजपुरे शिवे ॥
यः शृणोति धरायाञ्च मुच्यते सर्व्वपातकैः ।
ब्रह्महत्या च गोहत्या स्त्रीवधोद्भवपातकम् ॥
तत् सर्व्वं पातकं दुर्गे मातुर्गमनपातकम् ।
श्वश्रूगमनपापञ्च यत् कन्यागमपातकम् ॥
सुतस्त्रीगमनञ्चैव यत् यत् पापं प्रजायते ।
परदारकृतं पापं तत्क्षणादेव नश्यति ॥
जन्मजन्मान्तरात् पापात्
गुरुहत्यादिपातकात् ।
मुच्यते मुच्यते देवि गुरुपत्नीषु सङ्गमात् ॥
मनसा वचसा पापं यत् पापं ब्रह्महिंसने ।
मिथ्यायाञ्चैव यत् पापं तत् पापं नश्यति
क्षणात् ॥
श्रवणं पठनञ्चैव यः करोति धरातले ।
स धन्यश्च कृतार्थश्च राजराजाधिपो भवेत्
॥
यः करिष्यत्यवज्ञां वै रुद्रयामलचण्डिकाम् ।
पापैरेतैः समायुक्तो रौरवं नरकं व्रजेत् ॥
अश्रद्धां ये प्रकुर्व्वन्ति ते च पातकिनो नराः ।
रौरवं रक्तकुण्डञ्च कृमिकुण्डं मलस्य वै ॥
शुक्रस्य कुण्डं स्त्रीरक्तं यान्ति तेऽप्यचिरेण वै
।
ततः पितृगणैः सार्द्धं बिष्ठायां जायते कृमिः ॥
शृणु देवि महामाये पठेत् चण्डीं शृणोत्यपि ।
गयायाञ्चैव यत् पुण्यं काश्यां विश्वेश्वराग्रतः
॥
प्रयागे मुण्डनञ्चैव हरिद्वारे हरेर्गृहे ।
तुल्यं पुण्यं भवेद्देवि सत्यं दुर्गे शिवे रमे ॥
त्रिगयायां त्रिकाश्यां वै यच्च पुण्यं शृणु प्रिये ।
तच्च पुण्यं तच्च पुण्यं तच्च पुण्यं न संशयः
॥
भवानी च भवानी च भवानीत्युच्यते बुधैः ।
भकारस्तु भकारस्तु भकारः केवलः शिवः ॥
वानी चैव जगद्धात्री वरारोहे भकारकः ।
प्रेतवद्देवि विश्वेशि भकारः प्रेतवत् सदा ॥
आरोग्यञ्च जयं दुःखनाशनं सुखवर्द्धनम् ।
धनं पुत्त्रं जयारोग्यं कुष्ठं गलितनाशकम् ॥

प्राप्नोति सुखमारोग्यं पुण्यमात्मप्रबन्धनम् ॥
पुत्त्रार्थी लभते पुत्त्रं धनार्थी लभते धनम् ।
विद्यार्थी लभते विद्यां मोक्षार्थी मोक्षमाप्नु-
यात् ॥
देहे चेदं हृदि न्यस्य शिवकल्पो भवेन्नरः ।
मुच्यते सर्व्वपापेभ्यो रुद्रलोकं स गच्छति ॥”
इति स्कन्दपुराणे रुद्रकवचं समाप्तम् । इति
तन्त्रसारः ॥

**रुद्रगणः**, पुं, (रुद्रस्य गणः ।) शिवपार्षदसमूहः ।

यथा, --
“अपरे रुद्रनामानो जटाचन्द्रार्द्धमण्डिताः ।
देवेन्द्रस्य नियोगेन वर्त्तन्ते त्रिदिवे सदा ॥
तेषां संख्या चैककोटिस्ते सर्व्वे बलवत्तराः ।
कुर्व्वन्ति हि सदा सेवां हरस्य सततं गणाः ॥
विस्मयन्ति च पापिष्ठान् धर्म्मिष्ठान्
पालयन्ति
च ।
अंनुगृह्णन्ति सततं धृतपाशुपतव्रतान् ॥
विघ्नांश्च सततं हन्ति योगिनां प्रयतात्मनाम्
।

शनिवारे जगद्धात्रि कोट्यावृत्तिफलं
ध्रुवम् ॥
अतएव जगद्धात्रीं यश्च चण्डीं
समभ्यसेत् ।
स धन्यश्च कृतार्थश्च राजराजाधिपो
भवेत् ॥
आरोग्यं विजयं सौख्यं
वस्त्ररत्नप्रवालकम् ।
पठनाच्छ्रवणाच्चैव जायते नात्र
संशयः ॥
धनं धान्यं प्रवालञ्च
वस्त्ररत्नविभूषितम् ।
चण्डीस्मरणमात्रेण कुर्य्यात् सर्व्वं
महेश्वरि ॥
ॐ घोरचण्डी महाचण्डी
चण्डमुण्डविखण्डिनी ।
चण्डवक्त्रा महामाया
महादेवविभूषिता ॥
चतुर्वक्त्रा इत्यपि पाठः ।
रक्तदन्ता वरारोहा महासुरविमर्द्दिनी ।
तारिणी जननी दुर्गा चण्डिका
चण्डविक्रमा ॥
गुह्यकाली जगद्धात्री चण्डी च
यामलोद्भवा ।
श्मशानवासिनी देवी घोरचण्डी
भयानका ॥
शिवा घोरा रुद्रचण्डी महेशगणभूषिता
।
जाह्नवी परमा कृष्णा महात्रिपुरसुन्दरी
॥
विद्या श्रीपरमा विद्या चण्डी च
वैरमर्द्दिनी ।
दुर्गे दुर्गा शिवा घोरा चण्डहन्त्री
प्रचण्डिका ॥
महेशी वगला देवी भैरवी चण्डविक्रमा
।
प्रमथैर्भूषिता कृष्णा चामुण्डा
मुण्डमर्द्दिनी ॥
रणघण्टा चण्डघण्टा रणरामवरप्रदा ।
तारिणी भद्रकाली च शिवा घोरा
भयानका ॥

अर्द्धाङ्गरोगान्मुच्येत दद्रुरोगाद्धि पार्व्वति ।
सत्यं सत्यं जगद्धात्रि महामाये शिवे रमे ॥
चण्डे चण्डे महाघोरे चण्डिके व्याधिनाशिनि
।
मन्दे दिने महेशानि विशेषफलदांयिनी ॥
सर्व्वदुःखात् प्रमुच्येत भक्त्या चण्डीं शृणोति
यः ।
ब्राह्मणो हितकारी च पठेन्नियतमानसः ॥
मङ्गलं मङ्गलं ज्ञेयं मङ्गलं जयमङ्गलम् ।
भवेद्धि पुत्त्रपौत्त्रादिकन्यादासादिभिर्युतः ॥
तत्त्वज्ञानञ्च निधने काले निर्व्वाणमाप्नुयात् ।
महादानोद्भवं पुण्यं तुलाहिरण्यके यथा ॥
चण्डीश्रवणमात्रेण पठनाद्ब्राह्मणोऽपि सः ।
निर्व्वाणमेति देवेशि महास्वस्त्ययनं हि तत् ॥
सर्व्वत्र विजयं याति श्रवणाद्ग्रहदोषतः ।
मुच्यते सर्व्वपापेभ्यो राजराजाधिपो भवेत् ॥
महाचण्डी शिवा घोरा भयानकवरप्रदा ।
काली च कमला विद्या महोरगविमर्द्दिनी ॥
गुह्यचण्डी घोरचण्डी चण्डी त्रैलोक्यदुर्लभा ।
देवानां दुर्लभा चण्डी रुद्रयामलसम्भवा ॥
अप्रकाश्या महादेवप्रिया रावणमर्दिनी ।

| | | | |
|---|---|---|---|
| | विष्णुप्रिया महामाया<br>नन्दगोपगृहोद्भवा ।<br>मङ्गला जननी चण्डी महाक्रुद्धा<br>भयङ्करी ॥<br>विमला भैरवी निद्रा जातिरूपा<br>मनोहरा ।<br>तृष्णा निद्रा क्षुधा माया शक्तिरूपा<br>मनोहरा ॥<br>तस्यै देव्यै नमस्तस्यै सर्व्वरूपेण<br>संस्थिता ।<br>प्राणप्रिया जातिमाया निद्रारूपा<br>महेश्वरी ॥<br>या देवी सर्व्वभूतेषु सर्व्वरूपेण<br>संस्थिता ।<br>नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो<br>नमः ॥<br>एतां चण्डीं जगद्धात्रीं ब्राह्मणस्तु सदा<br>पठेत् । | | |

मत्स्यप्रिया मांसरता मत्स्यमांसबलिप्रिया ॥
मदमत्ता सदा नित्या भूतप्रमथसङ्गता ।
मध्यभागा महारामा धान्यदा धनरत्नदा ॥
वस्त्रदा मणिदा राज्यप्रदा विषयवर्द्धिका ।
मुक्तिदा सर्व्वदा चण्डी महाविपदनाशिनी ॥
इमाञ्च चण्डीं पठते मनुष्यः
शृणोति भक्त्या परमां शिवस्य ।
चण्डीं धरण्यामतिपुण्ययुक्तः
पटेच्च गच्छेद्धरमन्दिरं शुभम् ॥
यद्यन्मनोरथान् दुर्गे करोति धरणीतले ।
रुद्रचण्डीप्रसादेन किं न सिध्यति भूतले ॥
रुद्रध्येया रुद्ररूपा रुद्राणी रुद्रवल्लभा ।
रुद्रभक्ता रुद्ररूपा रुद्रभूषासमन्विता ॥
शिवचण्डी महारक्ता शिवप्रीतिगणान्विता ।
भैरवी परमा विद्या महाविद्या च षोडशी ॥
सुन्दरी परमा विद्या महात्रिपुरसुन्दरी ।
गुह्यकाली भद्रकाली महाकालविमर्द्दिनी ॥
कृष्णा कृष्णस्वरूपा सा जननी मोहकारिणी ।
अतितन्द्रा महालज्जा सर्व्वमङ्गलदायिनी ॥
घोरचण्डी भीमरूपा भीमा देवी मनोहरा ।
वगला वगला सिद्धिदायिका सर्व्वदा शिवा ॥
स्मृतिरूपा कीर्त्तिरूपा बुद्धिरूपा मनोहरा ।
विष्णुप्रिया शक्रपूज्या योगेन्द्रैरपि सेविता ॥
भयानका महासूक्ष्मा देवी भयविनाशिनी ।
चण्डिका शक्तिहस्ता च कौमारी सर्व्वकामदा ॥
वाराही च वराहस्य इन्द्राणी शक्रपूजिता ।
माहेश्वरी महेशस्य महेशगणभूषिता ॥
चामुण्डा नारसिंही च नृसिंहशत्रुनाशिनी ।
सर्व्वशत्रुप्रशमनी सर्व्वारोग्यप्रदायिनी ॥

सुगन्धा ६ सुवहा ७ घना ८ ईश्वरी ९ रुद्र-
लता १० सुपत्रा ११ सुगन्धपत्रा १२ सुरभिः १३
शिवाह्वा १४ पत्रवल्ली १५ जटावल्ली १६
रुद्राणी १७ नेत्रपुष्करा १८ महाजटा १९
जटारुद्रा २० । अस्या गुणाः ।
कटुरसत्वम् ।
श्वासकासहृद्रोगभूतरक्षोनाशित्वञ्च। इति राजनिर्घण्टः ॥

**रुद्रपत्नी**, स्त्री, (रुद्रस्य पत्नी ।) दुर्गा । इत्युणादि-
कोषः ॥ (यथा, महाभारते । ३ । ८३ । १५८ ।
"सान्निध्यं तत्र राजेन्द्र रुद्रपत्न्या कुरूद्वह ।
अभिगम्य च तां देवीं न दुर्गतिमवाप्नुयात् ॥")
अतसी । इति रत्नमाला ॥

**रुद्रप्रिया**, स्त्री, (रुद्रस्य प्रिया ।) हरीतकी ।
इति शब्दरत्नावली ॥ पार्व्वती च ॥

**रुद्रभूः**, स्त्री, (रुद्रस्य भूः स्थानम् ।) श्मशानम् ।
इति केचित् ॥

**रुद्रविंशतिः**, स्त्री, (रुद्रदेवताका विंशतिः ।) प्रभ-
वादिषष्टिवर्षान्तर्गतशेषविंशतिवर्षाणि । तेषां
नामानि फलानि च यथा, --
"आद्या तु विंशतिर्ब्राह्मी द्वितीया वैष्णवी स्मृता ।
तृतीया रुद्रदैवत्या श्रेष्ठा मध्याधमा भवेत् ॥
तृणधान्यानि पीड्यन्ते ग्रीष्मे वर्षति वासवः ।
प्लवङ्गे पीडिताः सर्व्वाः प्रजाश्च सुरवन्दिते ॥ १ ॥
जायन्ते सर्व्वशस्यानि सुभिक्षं निरुपद्रवम् ।
तोयपूर्णाः स्मृता मेघा बहुशस्या च मेदिनी ।
निष्ठुराः पार्थिवा देवि सिद्धार्थे च वरानने ॥ १३ ॥
अल्पतोया घनाश्चैव कीटकाः प्रबलाः स्मृताः ।
विरुद्धाः पार्थिवा देवि रौद्रे वर्षे वरानने ॥ १४ ॥
दुर्भिक्षं मध्यमं प्रोक्तं व्यवहारो न वर्त्तते ।
भवेद्वै मध्यमा वृष्टिर्दुर्म्मतौ समुपस्थिते ॥ १५ ॥
सुभिक्षं जायते लोकः सर्व्वोपद्रववर्जितः ।
प्राणिनां जायते हर्षो दुन्दुभौ वरवर्णिनि ॥ १६ ॥
महिषीगोहिरण्यादिताम्रकांस्याद्यशेषतः ।
तत् सर्व्वं देवि विक्रीय कर्त्तव्यो धान्यसञ्चयः ॥
रक्ते संवत्सरे देवि क्रूरबुद्धिर्नराधिपः ।
मानवाः क्रूरचेष्टाश्च संग्रामे न जयो भवेत् ॥ १७ ॥
दुर्भिक्षं मरणं रोगो धान्यौषधिनिपीडनम्।
पापरोगो भवेद्देवि रक्ताख्येऽमरवन्दिते ॥ १८ ॥
रोगो मरणदुर्भिक्षं विविधोपद्रवाकुलम् ।
क्रोधे तु विषमं सर्व्वं समाख्यातं हरप्रिये ॥ १९ ॥
मेदिनी चलते देवि सर्व्वभूतं चराचरम् ।
देशभङ्गश्च दुर्भिक्षं क्षये संक्षीयते प्रजा ॥
सौराष्ट्रे मालवे देशे दक्षिणे कोङ्कणे तथा ।
दुर्भिक्षं जायते घोरं क्षये संवत्सरे प्रिये ॥
कौमुदीचर्म्मनद्योश्च यमुनानर्म्मदातटे ।
बिन्ध्यायां सैन्धवे चैव विनश्यति न संशयः ॥
सिंहलो मरुदेशश्च कालञ्जरं तथैव च ।
क्षये क्षयन्ति सर्व्वाणि नान्यथा वरवर्णिनि ॥" २०
इति ज्योतिस्तत्त्वम् ॥

**रुद्रवीणा**, स्त्री, (रुद्रस्य वीणा ।) वीणाभेदः ।
यथा, --

नैव दुःखं भयं किञ्चित् पठनात् श्रवणाज्जनः ।
इति सत्यं महेशानि सत्यं सत्यं वदाम्यहम् ॥
नेव शोकं नैव रोगं नैव दुःखं भयन्तथा ।
आरोग्यं मङ्गलं नित्यं करोति शुभमङ्गलम् ॥
महेशानि वरारोहे ब्रवीमि सत्यमुत्तमम् ।
अभक्ताय न दातव्यं मम प्राणाधिकं शुभम् ॥
मम भक्ताय शान्ताय शिवविष्णुप्रियाय च ।
दद्यात् कदाचिद्देवेशि सत्यं सत्यं न संशयः ॥
अनन्तफलमाप्नोति शिवचण्डीप्रसादतः ।
अश्वमेधवाजपेयराजसूयशतेन वै ।
तृप्ताः स्युः पितरो देवास्तथा च सर्व्वदेवताः ॥
दुर्गे त्वां मृण्मयीज्ञानं रुद्रयामलपुस्तकम् ।
मन्त्रमक्षरसंज्ञानं यः करोति नराधमः ॥
अतएव महेशानि किं वक्ष्ये तव सन्निधौ ॥
लम्बोदराधिकश्चण्डीपठनाच्छ्रवणात् जनः ।
तत्त्वमसीति वाक्येन मुक्तिमाप्नोति दुर्लभाम् ॥”
इति श्रीरुद्रयामले हरगौरीसंवादे रुद्रयामल-
चण्डी समाप्ता ॥

**रुद्रजः**, पुं, (रुद्रात् जात इति । जन् + डः ।)

पारदः । इति राजनिर्घण्टः ॥ (गुणादयोऽस्य पारदशब्दे विज्ञेयाः ॥)

**रुद्रजटा**, स्त्री, (रुद्रस्य जटेव ।) लताविशेषः ॥

तत्पर्य्यायः । रौद्री २ जटा ३ रुद्रा ४ सौम्या ५
सौम्यदृष्टिर्भवेद्राजा कालिके च शुभं वदेत् ॥ २ ॥
सुभिक्षं क्षेममारोग्यं सुखञ्च निरुपद्रवम् ।
सौम्यदृष्टिर्भवेद्राजा सौम्ये सौख्यं प्रकीर्त्तितम् ॥ ३ ॥
तोयपूर्णो भवेन्मेघो वर्षते च दिने दिने ।
निरुपद्रवाश्च राजानः सर्व्वसाधारणे प्रिये ॥ ४ ॥
वासवो वर्षते देवि देशे चाखण्डमण्डले ।
अहिच्छत्रे कान्यकुब्जे विरोधी कृषिनाशकृत् ॥ ५ ॥
अभिभूतं जगत् सर्व्वं क्लेशैर्ब्बहुविधैः प्रिये ।
मारुतैः फलदाहैश्च परिवारिणि शोभने ॥ ६ ॥
निष्पत्तिः सर्व्वशस्यानां सुभिक्षं भवति प्रिये ।
प्रमाथिनि जलोद्गारी जलदो मोदते प्रजा ॥ ७ ॥
निष्पत्तिः सर्व्वशस्यानां सर्व्वशस्यमहार्घता ।
घृतं तैलसमं याति आनन्दे नन्दिनी प्रजा ॥ ८ ॥
कोद्रवाः शालिमुद्गाश्च पीड्यन्ते वरवर्णिनि ।
सर्व्वौषधानि धान्यानि राक्षसे निष्ठुरा प्रजा ॥ ९ ॥
दुर्भिक्षं जायते घोरं धान्यौषधिप्रपीडनम् ।
अनले च समाख्यातं नात्र कार्य्या विचारणा ॥ १० ॥
देशभङ्गोऽथ दुर्भिक्षं समासात् कथयाम्यहम् ।
पिङ्गले चारुपद्माक्षि दुर्भिक्षं नर्म्मदातटे ॥ ११ ॥
गोमहिष्यो विनश्यन्ति ये चान्ये नटनर्त्तकाः ।
वासवो वर्षते देवि शस्यञ्च नहि जायते ॥
तिलसर्षपमाषादिकार्पासानां महार्घता ।
गोमहिष्यः सुवर्णानि कांस्यताम्राद्यशेषतः ॥
“दण्डः स्याद्रुद्रवीणाया मुष्ट्येकादशसम्मितः ।
भ्रमदङ्गुष्ठाग्रमितं शुषिरं तस्य कीर्त्तितम् ॥
दण्डस्योभयतो ज्ञेयं कांस्यसंवरकद्वयम् ।
पश्चात् संवरकञ्चात्र छत्रीकृतशिरो भवेत् ॥
दण्डस्य वेष्टनं सार्द्धं पञ्चाङ्गुलमिवोदितम् ।
तन्मिता लखरी तस्याः कर्त्तव्या सुन्दराकृतिः ॥
ककुभो रुद्रवीणायास्त्रिशिराः परिकीर्त्तितः ।
ऊद्‌र्ध्वे शिरसि दातव्या लोहपत्री समन्विता ॥
मूलतन्त्री तदुपरि तस्या लौही ततः परम् ।
दक्षिणे शिरसि न्यस्येत् श्रुतितन्त्रीद्वयं क्रमात् ॥
एवन्तु ककुभं तत्र वीणादण्डे निवेशयेत् ।
द्व्यङ्गुलोच्चमूद्‌र्ध्वशिरोऽङ्गुष्ठमात्रन्तु पार्श्वकम् ॥
सप्ताङ्गुलान्तरं तस्मात्तन्मूलञ्च निवेशयेत् ।
अन्यं ततश्चतुस्त्रिंशदङ्गुलान्तरमाक्षिपेत् ॥
अष्टादशाङ्गुलमुखं चक्रं वै चारुगर्भकम् ।
दण्डं समुन्नतं कान्तं वर्त्तुलं तुम्बयुग्मकम् ॥
औन्नत्ये किञ्चिदाधिक्यमलयश्च प्रशस्यते ।
अर्द्धाङ्गुलान्तरं पश्चात्तुम्बरं स्थापयेद्बुधः ॥
दण्डपृष्ठ रन्ध्रमेकं स्थापयेच्च समन्ततः ।
लोहाङ्कुशन्तु कर्त्तव्यं वर्त्तुलं पङ्कजाकृति ॥
तद्बन्धनं गुणं तस्मिन् वेष्टबन्धे निवेशयेत् ।
एतत्परायां मोटिन्यां वेष्टरन्ध्राङ्कुशं क्षिपेत् ॥
तन्मोटनीवृत्तरन्ध्रसदृशं दण्डरन्ध्रकम् ।
सुयन्त्रिते तु तत्रैव बध्नीयान्मुख्यतन्त्रिकाम् ॥
तावच्च भ्रामयेत् पूर्ब्बां मोटनीञ्च शनैः शनैः ।

| | | |
|---|---|---|
| | तत् सर्व्वं देवि विक्रीय कर्त्तव्यो धान्यसञ्चयः ।<br>तेन धान्येन लोकोऽयं निस्तरिष्यति दुर्द्दिनम् ।<br>पार्थिवा मोषका दीनाः कामयुक्ते प्रपी-डिताः ॥ १२ ॥ | |

न यावदेति स्वस्थानं तन्त्री यन्त्रविशारदः ॥
अस्यास्त्वष्टादश प्रोक्ताः शारिकाः पूर्ब्बसूरिभिः ।
तासां बृहत्तरा अष्टौ दश क्षुद्राः प्रकीर्त्तिताः ॥
एतास्तु तारवादिन्यस्तिष्ठन्ति पदिकोपरि ।
वितस्तिमात्रपदिकाङ्गुष्ठोच्चाप्यस्य गर्भकः ॥
तावत् शून्यस्तु कर्त्तव्यो यथा दण्डे स्थिरो भवेत् ।
मदनस्य च सिक्थस्य योगेन सुदृढीकृता ॥
बृहतीनाञ्च शारीणां स्वननोऽयं तलक्रमात् ।
एतास्तु सर्व्वावयवैः कथितास्त्र्यङ्गुला बुधैः ॥
स्थाप्य दण्डस्य ताः पृष्ठे यथारागस्वरं पुनः ।
मदनस्य च सिक्थस्य योगेन सुदृढीकृताः ॥
सर्व्वासां लोहकलिका मस्तके स्युः सुयन्त्रिताः ।
एकाङ्गुलोच्चाः क्षुद्राः स्युरिति शारीविनिर्णयः ॥
एवं विनिर्म्मिता रुद्रवीणा जनमनोहरा ।
अस्यां शिक्षा तु कर्त्तव्या दाक्षिणात्योपदेशतः ॥”
इति सङ्गीतनारायणः ॥

**रुद्रसर्गः**, पुं, (रुद्रकृतः सर्गः ।) रुद्रकर्त्तृकसृष्टिः । यथा, --
“इदानीं रुद्रसर्गं त्वं शृणु पार्थिवसत्तम ! ।
दशवर्षसहस्राणि तपश्चीर्त्वा महाजले ॥
प्रतिबुद्धो यदा रुद्रस्तदा चोर्व्वीं सकाननाम् ।
दृष्ट्वा शस्यवतीं रम्यां मनुष्यपशुसंकुलाम् ॥
शुश्राव च तदा शब्दानृत्विजां दक्षसद्मनि ।

**रुद्रसूः**, स्त्री, (रुद्रं तत्परिमितपुत्रं सूते इति । सू + क्विप् ।) एकादशपुत्त्रजननी । यथा, --
“विल्वसूर्द्दशपुत्त्रा स्यादेकाधिका तु रुद्रसूः ॥”
इति शब्दरत्नावली ॥

**रुद्राक्रीडः**, पुं, (रुद्रस्य आक्रीडा देवनं यत्र ।) श्मशानम् । इति त्रिकाण्डशेषः ॥

**रुद्राक्षं**, क्ली, (रुद्रस्य अक्षि कारणत्वेनास्त्य- स्येति । अर्शआदित्वादच् ।) स्वनामख्यात- वृक्षबीजम् । तस्य स्थूलत्वं प्रशस्तत्वञ्च यथा, --
“रुद्राक्षं शिवलिङ्गञ्च स्थूलं स्थूलं विशिष्यते ।
शालग्रामो नार्म्मदञ्च सूक्ष्मः सूक्ष्मो विशिष्यते ॥”
इति मेरुतन्त्रे ९ प्रकाशः ॥

**रुद्राक्षः**, पुं, स्वनामख्यातवृक्षः । तत्पर्य्यायः । तृण- मेरुः २ अमरः ३ पुष्पचामरः ४ । इति शब्द- रत्नावली ॥ तस्य फलपर्य्यायः । शिवाक्षम् १ सर्पाक्षम् २ भूतनाशनम् ३ पावनम् ४ नील- कण्ठाक्षम् ५ हराक्षम् ६ शिवप्रियम् ७ । अस्य गुणाः । अम्लत्वम् । उष्णत्वम् । वात- कृमिशिरोऽर्त्तिभूतग्रहविषनाशित्वम्। रुच्य- त्वञ्च । इति राजनिर्घण्टः ॥ शिवपूजायां अस्य मालाधारणमावश्यकम्। यथा, लिङ्गपुराणे ।
“विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया ।
रुद्राक्षं धारयेद्भक्त्या शिवलोकमवाप्नुयात् ॥
नववक्त्रन्तु रुद्राक्षं धारयेद्वामबाहुना ।
दक्षबाहौ तथा वत्स ! धारयेद्यतमानसः ॥
शिखायां दशनं धार्य्यं कण्ठे च पञ्चविंशतिम् ।
कर्णयोः पञ्च संधृत्या हृदि चाष्टोत्तरं शतम् ॥
नाभौ सप्त च रुद्राक्षं धारणान्मोक्षभाग्भवेत् ।
रुद्राक्षधारणाद्धि नरो देवत्वमाप्नुयात् ॥”
शिखायां दशनं द्वात्रिंशत्परिमितम् ॥ तथा ।
“रुद्राक्षं धारयेन्नित्यं भद्राक्षञ्च सुरेश्वर ! ।
रुद्राक्षस्य महाबाहो माहात्म्यं शृणु यत्नम्ः ॥
एकवक्त्रः शिवः साक्षात् ब्रह्महत्यां व्यपोहति ।
अवध्यत्वं प्रतिश्रोतो बह्निस्तम्भं करोति च ॥
द्विवक्त्रे हरगौरी स्यात् गोवधाद्यघनाशकृत् ।
त्रिवक्त्रोऽग्निस्त्रिजन्मोत्थपापराशिं प्रणाशयेत् ॥
तुलाराशिं यथा वह्निर्भस्मसात् कुरुते हर ! ।
त्रिवक्त्रोऽपि चरुद्राक्षस्तथा दहति किल्विषम् ॥
चतुर्व्वक्त्रस्तु धाता स्यात् नरहत्यां व्यपोहति ।
पञ्चवक्त्रस्तु कालाग्निरगम्याभक्ष्यपापनुत् ॥
षड्वक्त्रो यो गुहः साक्षात् गर्भहत्यां शमेदयम् ।
सप्तवक्त्रो ह्यनन्तश्च स्वर्णस्तेयाघनुत् सदा ॥
विनायकोऽष्टवक्त्रः स्यात् सर्व्वानृतविनाशकृत् ।

आश्रमे यज्विनाञ्चोच्चैर्योगस्थैरिति
कीर्त्तितान् ॥
ततः श्रुत्वा महातेजाः सर्व्वज्ञः परमेश्वरः
।
चुकोप सुभृशं देवो वाक्यञ्चेदमुवाच ह ॥
अहं पूर्ब्बन्तु कविना सृष्टः सर्व्वात्मना
विभुः ।
प्रजाः सृजस्वेति तदा
वाक्यमेतत्तथोक्तवान् ॥
इदानीं केन तत् कर्म्म कृतं
सृष्ट्यादिवर्णनम् ।
एवमुक्त्वा भृशं कोपान्ननाद परमेश्वरः ॥
तस्य ता नदतो ज्वालाः श्रोत्रेभ्यो
निर्य्ययुस्तदा ।
तत्र भूतानि वेताला उच्छुष्माः प्रेतपूतनाः
॥
कुष्माण्डा यातुधानाश्च सर्व्वे
प्रज्वलिताननाः ।
उत्तस्थुः कोटिशस्तत्र नानाप्रहरणावृताः
॥”
इति वराहपुराणम् ॥

**रुद्रसावर्णिः**, पुं, द्वादशो मनुः । अस्मिन् मन्वन्तरे
सुधामाख्योऽवतारः । ऋतधामा इन्द्रः ।
हरि-
तादयो देवाः । तपोमूर्त्त्यादयः सप्तर्षयः ।
देव-
वदुपदेवादयो मनुपुत्त्रा भविष्यन्ति । इति
श्रीभागवतमतम् ॥ अपि च ।
“द्वादशे रुद्रपुत्त्रस्य प्राप्ते मन्वन्तरे मनोः ।
सावर्ण्याख्यस्य ये देवा मुनयश्च शृणुष्व
तान् ॥
सुकर्म्माणः सुमनसो हरितो रौहितस्तथा ।
सुरापाश्च सुरास्तत्र पञ्चैते दशका गणाः ॥
त्रिःप्रकारा भविष्यन्ति एकैकस्त्रिंशको गणः
।
तेषामिन्द्रो हि विज्ञेयो ऋतधामा महाबलः
॥
सर्व्वैरिन्द्रगुणैर्युक्तः सप्तर्षीनपि मे शृणु ।
द्युतिस्तपस्वी
सुतपास्तपोमूर्त्तिस्तपोनिधिः॥
तपोरतिस्तथैवान्यः सप्तमस्तु तपोधृतिः ।
पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः
॥”
तस्योत्पत्तिर्य्यथा । संवत्सरप्रदीपे ।
“त्रिपुरस्य वधे काले रुद्रस्याक्ष्णोऽपतंस्तु
ये ।
अश्रुणो बिन्दवस्ते तु रुद्राक्षा अभवन् भुवि
॥”
यद्यप्येकादिचतुर्द्दशमुखरुद्राक्षेषु मन्त्रफल-
विशेषाः सन्ति तथापि सुलभत्वात् पञ्च-
वक्त्रस्य फलमन्त्रावभिधीयेते । यथा,
स्कान्दे ।
“पञ्चवक्त्रः स्वयं रुद्रः कालाग्निर्नाम
नामतः ।
अगम्यागमनाच्चैव अभक्षस्य च भक्षणात् ।
मुच्यते सर्व्वपापेभ्यः पञ्चवक्त्रस्य धारणात्
॥
हूं नमः इति प्रत्येकमष्टोत्तरशतं जप्ता
शिवा-
म्भसा प्रक्षाल्य धारणीयम् ।
“विणा मन्त्रेण यो धत्ते रुद्राक्षं भुवि मानवाः
।
स याति नरकं घोरं यावदिन्द्राश्चतुर्द्दश ॥”
इति तिथ्यादितत्त्वम् ॥ * ॥
तस्य धारणे आवश्यकत्वं यथा, संवत्सर-
प्रदीपे ।
“अरुद्राक्षधरो भूत्वा यद्यत् कर्म्म च
वैदिकम् ।
करोति जपहोमादि तत् सर्व्वं निष्फलं
भवेत् ॥”
स्कान्दे ।
“ध्यानधारणहीनोऽपि रुद्राक्षं धारयेद्बुधः ।
सर्व्वपापविनिर्मुक्तः स याति परमां गतिम्
॥”
इत्येकादशीतत्त्वम् ॥
अथ रुद्राक्षमाहात्म्यम् ।
श्रीमहादेव उवाच ।
“इदानीं देवदेवेशि ! मालानां धारणं शुभम्
।
रुद्राक्षस्य च माहात्म्यं वद मे परमेश्वरि ! ॥
श्रीदेव्युवाच ।
“शिखायां हस्तयोः कण्ठे कर्णयोश्चापि यो
भैरवो नववक्त्रः स्यात्
शिवसायुज्यदायकः ॥
दशवक्त्रः स्वयं विष्णुर्भूतप्रेतपिशाचहा ।
एकादशमुखो रुद्रो नानायज्ञफलप्रदः ॥
द्वादशास्यो भवेदर्कः सर्व्वतीर्थफलप्रदः ।
त्रयोदशमुखः कामः सर्व्वकामफलप्रदः ॥
चतुर्द्दशास्यः श्रीकण्ठो वंशोद्धारकरः
स्मृतः ।
यथोक्तन्तेऽपि रुद्राक्षे तथेन्द्राक्षे
प्रकीर्त्तितम् ॥
भद्राक्षेऽपि सुरश्रेष्ठ तद्गुणं प्ररिकीर्त्तितम्
॥”
इति योगसारे २ परिच्छेदः ॥
अपि च ।
“निश्छिद्राश्च सुपक्वाश्च रुद्राक्षा धारणे
स्मृताः ।
पञ्चामृतं पञ्चगव्यं स्नानकाले प्रयोजयेत् ॥
रुद्राक्षस्य प्रतिष्ठायां मन्त्रं पञ्चाक्षरं तथा ।
त्र्यम्बकादिकमन्त्रञ्च तथा तत्र प्रयोजयेत्
॥
ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्
।
उर्व्वारुकमिव
वन्धनान्मृत्योर्मुक्षीयमामृतात् ॥
तथा ॐ हौं अघोरे हौं घोरे हूं घोरघोरतरे
ॐ ह्रैं ह्रीं श्रीं ऐं सर्व्वतः सर्व्वसर्व्वेभ्यो
नमस्ते-
ऽस्तु रुद्ररूपिणे हूं हूं ।
अनेनापि च मन्त्रेण रुद्राक्षस्य द्विजोत्तमः
।
प्रतिष्ठां विधिवत् कुर्य्यात् ततोऽधिकफलं
लभेत् ॥
ततो यथा स्वमन्त्रेण धारयेद्भक्तिसंयुतः ॥
एकादिचतुर्द्दशवक्त्राणांसंस्कारे प्रत्येकं
क्रमेण
मन्त्रा यथा । ॐ ॐ भृशं नमः । १ । ॐ
ॐ
नमः । २ । ॐ ॐ नमः । ३ । ॐ ॐ ह्रीं
नमः ।
४ । ॐ हूं नमः । ५ । ॐ हूं नमः । ६ ।
ॐ

| | | |
|---|---|---|
| देववान् वामदेवश्च देवश्रेष्ठो विदूरथः ।<br>मित्रवान्मित्रदूतश्च भाविनस्तत्सुता मनोः ॥”<br>इति मार्कण्डेयपुराणम् ॥ | नरः । | ॐ हूं हूं नमः । ७ । ॐ नमः । ८ । हूं नमः ।<br>९ । ॐ हं नमः । १० । ॐ ह्रीं नमः । ११ । ॐ<br>ह्रीं नमः । १२ । ॐ क्षां क्षौं नमः । १३ । ॐ<br>नमो नमः । १४ ।<br>“रुद्राक्षे देहसंस्थे तु कुक्कुरो म्रियते यदि । |

सोऽपि रुद्रपदं याति किं पुनर्मानवा गुह ॥
सप्तविंशतिरुद्राक्षमालया देहसंस्थया ।
यः करोति नरः पुण्यं सर्व्वं कोटिगुणं भवेत् ॥
यो ददाति द्विजातिभ्यो रुद्राक्षं भुवि षण्मुख ।
तस्य प्रीतो भवेद्रुद्रः स्वपदञ्च प्रयच्छति ॥
विना मन्त्रेण यो धत्ते रुद्राक्षं भुवि मानवः ।
स याति नरकान् घोरान् यावदिन्द्राश्चतुर्द्दश ॥"
इति पद्मपुराणे रुद्राक्षमाहात्म्यम् । इति तन्त्रसारः ॥

**रुद्राणी**, स्त्री, (रुद्रस्य पत्नी । "इन्द्रवरुणभव-शर्व्वरुद्रेति ।" ४ । १ । ४९ । इति ङीष् ।)
दुर्गा । इत्यमरः ॥ तस्या व्युत्पत्तिर्यथा, --
"रुद्रस्येयन्तु रुद्राणी रौद्रं हन्ति करोति या ॥"
इति देवीपुराणे ४५ अध्यायः ॥
रुद्रजटा । इति राजनिर्घण्टः ॥

**रुद्रावासः**, पुं, (रुद्रस्य आवासः ।) काशी । इति केचित् ॥

**रुद्रारिः**, पुं, (रुद्रः अरिर्यस्य ।) कामदेवः । इति केचित् ॥

**रुद्री**, स्त्री, वीणाभेदः । इति शब्दरत्नावली ॥
अस्या विवरणं रुद्रवीणाशब्दे द्रष्टव्यम् ॥

**रुध**, इर् ध ञ औ ञि आवृतौ । इति कविकल्प-द्रुमः ॥ (रुधा०-उभ०-सक०-अनिट् ।) इर्,
अरुधत् अरौत्सीत् । ध ञ, रुणद्धि रुन्धे । औ,

तस्माद्यत्नेन संरक्ष्यं रक्तं जीव इति स्थितिः ॥"
इति सुश्रुते सूत्रस्थाने चतुर्द्दशेऽध्याये ॥
रुधिरस्रावेऽनध्ययनमुक्तं यथा, मनौ । ४ । १२२ ।
"रुधिरे च स्रुते गात्राच्छस्त्रेण च परिक्षते ।
सामध्वनावृग्यजुषी नाधीयीत कदाचन ॥")
कुङ्कुमम् । इत्यमरः ॥ (यथा, रघुः । ११ । २० ।
"राममन्मथशरेण ताडिता
दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता
जीवितेशवसतिं जगाम सा ॥")

**रुधिरः**, पुं, (रुध + किरच् ।) मङ्गलग्रहः । इति मेदिनी ॥

**रुधिराख्यं**, क्ली, (रुधिरमिति आख्या यस्य ।)
मणिभेदः । यथा, --
"हुतभुग्रूमादाय दानवस्य यथेप्सितम् ।
नर्म्मदायां निचिक्षेप किञ्चिद्वीनादि भूतले ॥
तत्रेन्द्रगोपकलितं शुकवक्त्रवर्णं
संस्थानतः प्रकटपीलुसमानमात्रम् ।
नानाप्रकारविहितं रुधिराख्यरत्न-
मुद्धृत्य तस्य खलु सर्व्वं समानमेव ॥
मध्येन्दुपाण्डरमतीवविशुद्धवर्णं
तच्चेन्द्रनीलसदृशं पटलं तुले स्यात् ।
सैश्वर्य्यभृत्यजननं कथितं तदेव
पक्वञ्च तत् किल भवेत् सुरवज्रवर्णम् ॥"
इति गारुडे ७८ अध्यायः ॥

**रुप**, य इर् विमोहे । इति कविकल्पद्रुमः ॥
(दिवा०-पर०-सक०-सेट् ।) विमोह आकुली-
करणम् । य, रुप्यत्रि लोकं लोकः । इर्, अरु-
पत् अरोपीत् । अस्मात् पुषादित्वान्नित्यं ङ इत्यन्ये । इति दुर्गादासः ॥

**रुमा**, स्त्री, सुग्रीवभार्य्या । विशिष्टलवणाकरः । इति मेदिनी । मे, २७ ॥

रुरुः सर्पादतिक्रूरो जन्तुरुक्तः पुरातनैः ॥"
स्वनामख्यातमुनिविशेषः । स तु च्यवनस्य पौत्त्रः ।
अयमेव निजायुषोऽर्द्धं दत्त्वाप्रियां जीवयामास ।
अस्य विवरणं देवीभागवते २ स्कन्धे ८ अध्याय-
मारभ्य तथा महाभारते १ पर्व्वणि ५ अध्याय-
मारभ्य द्रष्टव्यम् ॥)

**रुवुः**, पुं, (रु + कुः ।) एरण्डवृक्षः । इति रत्न-माला ॥ रक्तैरण्डः । इति राजनिर्घण्टः ॥ (एरण्डशब्देऽस्य विषयो ज्ञातव्यः ॥)

**रुवुकः**, पुं, (रुवुरेव । रुवु + स्वार्थे कन् ।) एरण्ड-वृक्षः । इति रत्नमाला ॥ रक्तैरण्डः । इति राजनिर्घण्टः ॥

**रुवुक्**, पुं, एरण्डवृक्षः । इति रत्नमाला ॥

**रुवूकः**, पुं, एरण्डवृक्षः । इत्यमरः ॥ (तथास्य पर्य्यायः ।
"शुल्कएरण्ड आमण्डुश्चित्रो गन्धर्व्वहस्तकः ।
पञ्चाङ्गुलो वर्द्धमानो दीर्घदण्डोऽप्यदण्डकः ॥
वातारिस्तरुणश्चापि रुवूकश्च निगद्यते ।
रक्तोऽपरो रुवूकः स्यादुरुवूको रुवूस्तथा ॥
व्याघ्रपुच्छश्च वातारिश्चञ्चुरुत्तानपादकः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**रुश**, औ श हिंसे । इति कविकल्पद्रुमः ॥ (तुदा०-पर०-सक०-अनिट् ।) औ, अरुक्षत् । श, रुशति रोक्ष्यति । इति दुर्गादासः ॥

**रुष**, क क्रुधि । इति कविकल्कद्रुमः ॥ (चुरा०-

रोद्धा । ञि, रुद्धोऽस्ति । इति दुर्गादासः ॥

**रुध**, य ङ औ कामे । अनुपूर्ब्बोऽयम् । इति कवि-
कल्पद्रुमः ॥ (दिवा०-आत्म०-सक०-अनिट् ।)
य ङ, अनुरुध्यते धनं लोकः । औ, अनुरोद्धा ।
इति दुर्गादासः ॥

**रुधिरं**, क्ली, (रुणद्धि रुध्यते इति वा । रुध +
"इषिमदिमुदीति ।" उणा० १ । ५२ । इति
किरच् ।) शरीरस्थरसभवधातुः । तत्पर्य्यायः ।
रक्तम् २ अस्रम् ३ त्वग्जम् ४ कीलालम् ५
क्षतजम् ६ शोणितम् ७ लोहितम् ८ असृक् ९
शोणम् १० लोहम् ११ चर्म्मजम् १२ । इति
राजनिर्घण्टः ॥ (यथा, --
"तद्विशुद्धं हि रुधिरं बलवर्णसुखायुषा ।
युनक्ति प्राणिनं प्राणः शोणितं ह्यनुवर्त्तते ॥"
"वलदोषप्रमाणाद्वा विशुद्ध्या रुधिरस्य वा ।
रुधिरं स्रावयेज्जन्तोराशयं प्रसमीक्ष्य वा ॥"
इति चरके सूत्रस्थाने चतुर्व्विंशेऽध्याये ॥
"चतुर्व्विधं यदेतद्धि रुधिरस्य निवारणम् ।
सन्धानं स्कन्दनञ्चैव पाचनं दहनन्तथा ॥
वणं कषायः सन्धत्ते रक्तं स्कन्दयते हिमम् ।
तथा सम्पाचयेद्भस्म दाहः सङ्कोचयेत् शिराः ॥
अस्कन्दमाने रुधिरे सन्धानानि प्रयोजयेत् ।
सन्धाने स्रस्यमाने तु पाचनैः समुपाचरेत् ॥

**रुम्रः**, पुं, (रम् + "चकिरम्योरुच्चोपधायाः ।"
उणा० २ । १४ । इति रक् उपधायाश्च उत्वम् ।)
अरुणः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**रुरुः**, पुं, (रौतीति । रु + "रुशातिभ्यां क्रुन् ।"
उणा० ४ । १०३ । इति क्रुन् ।) मृगविशेषः ।
इत्यमरः ॥ (यथा, महाभारते । ३ । ५० । ७ ।
"रुरून् कृष्णमृगांश्चैव मेध्यांश्चान्यान् वनेचरान् ।
वाणैरुन्मथ्य विविधैर्ब्राह्मणेभ्यो न्यवेदयत् ॥")
अस्य मांसगुणाः । स्निग्धत्वम् । गुरुत्वम् ।
मन्दाग्निबलप्रदत्वञ्च । इति राजनिर्घण्टः ॥
दैत्यभेदः । इति मेदिनी । रे, ७९ ॥ (यथा,
कथासरित्सागरे । ५३ । १७१ ।
"एकानंशे शिवे दुर्गे नारायणि सरस्वति ।
भद्रकालि महालक्ष्मि सिद्धिरुरुविदारिणि ॥"
क्रूरसत्त्वविशेषः । तस्य भारशृङ्ग इति नाम ।
इति भागवतटीकायां श्रीधरः । ५ । २६ । ११ ॥
यथा च देवीभागवते । ८ । २२ । १० -- ११ ।
"इह लोकेऽमुना ये तु हिंसिता जन्तवः पुरा ।
त एव रुरवो भूत्वा परत्र पीडयन्ति तम् ॥
तस्माद्रौरवमित्याहुः पुराणज्ञा मनीषिणः ।

पर०-अक०-सेट् ।) क, रोषयति । इति दुर्गा-
दासः ॥

**रुष**, ञि वधे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) ञि, रुष्टः रुषितोऽस्ति ।
रुरोष ।
इति दुर्गादासः ॥

**रुष**, य इर् ञि क्रुधि । इति कविकल्कद्रुमः ॥
(दिवा०-पर०-अक०-सेट् ।) य, रुष्यति भृत्याय
भूपालः । इर्, अरुषत् अरोषीत् । अस्मात्
पुषादित्वान्नित्यं ङ इत्यन्ये । ञि, रुष्टः रुषितो-
ऽस्ति । इति दुर्गादासः ॥

**रुषा**, स्त्री, (रुष् + क्विप् । भागुरिमते टाप् ।)
अमर्षः । तत्पर्य्यायः । क्रोधः २ मन्युः ३ क्रुधा ४
क्रुत् ५ कोपः ६ प्रतिघः ७ रोषः ८ रुट् ९ ।
इति हेमचन्द्रः । २ । २१२ ॥

**रुषितः**, त्रि, (रुष्यति स्मेति । रुष + क्तः । "रुष्य-
मत्वरसंघुषास्वनाम् ।" ७ । २ । २८ । इति
पक्षे इट् ।) क्रोधयुक्तः । यथा, --
"तं नागपाशैर्वलिनन्दनो बली
घ्नन्तं स्वसैन्यं रुषितो वबन्ध ह ॥"
इति श्रीभागवते वाणयुद्धे ६२ अध्यायः ॥

**रुष्टः**, त्रि, (रुष्यते स्मेति । रुष + क्तः । "रुष्यमत्वर-
संघुषास्वनाम् ।" ७ । २ । २८ । इति इडभावः ।)
क्रोधयुक्तः । यथा, --
"शिवे ढष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ॥"
इति तन्त्रसारः ॥

| कल्पैरेतैस्त्रिभिर्वैद्यः प्रयतेत यथाविधि ।<br>असिद्धिमत्सु चैतेषु दाहः परम इष्यते ॥<br>सशेयदोषे रुधिरे न व्याधिरतिवर्त्तते ।<br>सावशेवे ततः स्थेयं न तु<br>कुर्य्यादतिक्रमम् ॥<br>देहस्य रुधिरं मूलं रुधिरेणैव धार्य्यते । | | |
|---|---|---|

**रुह**, ञि ज औ जन्याम् । इति कविकल्पद्रुमः ॥

(भ्वा०-पर०-अक०-अनिट् ।) ञि, रुढोऽस्ति । ज, रोहः रुहः । औ, अरुक्षत् । जनिर्जन्म । रोहति जन्तुर्ज्जायते इत्यर्थः । रुह जन्मनि प्रादुर्भावे इति प्राञ्चः । जन्मप्रादुर्भावयोरेकोऽर्थः । इति गोविन्दभट्टचतुर्भुजमिश्रौ । रमानाथस्तु प्रादुर्भावः स्फूर्त्तिरिति भेदमाह । इति दुर्गादासः ॥

**रुहः**, त्रि, (रोहतीति । रुह + “इगुपधज्ञेति । ३ । १ । १३५ । इति कः ।) जातः । आरूढः । (यथा, मनुः । १ । ४८ । “बीजकाण्डरुहाण्येव प्रताना वल्ल्य एवच ॥”)

**रुहकं**, क्ली, छिद्रम् । इति शब्दचन्द्रिका ॥

**रुहा**, स्त्री, (रोहति छिन्नापि पुनरुत्पद्यते इति । रुह + कः । टाप् ।) दूर्व्वा । इत्यमरः ॥ (अस्याः पर्य्यायो यथा, -- “सहस्रवीर्य्या दूर्व्वा तु मङ्गल्या भार्गवी रुहा ॥” इति वैद्यकरत्नमालायाम् ॥ “नीलदूर्व्वा रुहानन्ता भार्गवी शतपर्व्विका । शष्पं सहस्रवीर्य्या च शतवल्ली च कीर्त्तिता ॥” इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥) महासमङ्गा । इति राजनिर्घण्टः ॥

**रुहिरुहिका**, स्त्री, (रुह + इन् । रुहिरुत्पत्तिः । रुहिरुहिणा पुनः पुनरुद्भवेन कायतीति । कै +

**रूक्षस्वादुफलः**, पुं, (रूक्षं स्वादु च फलं यस्य ।) धन्वनवृक्षः । इति राजनिर्घण्टः ॥

**रूक्षा**, स्त्री, (रूक्षयतीति । रूक्ष + अच् + टाप् ।) दन्तीवृक्षः । इति राजनिर्घण्टः ॥

**रूढं**, त्रि, (रुह + क्तः ।) जातम् । (यथा, रघुः । ६ । ४१ । “येन स्त्रियः संश्रयदोषरूढं स्वभावलोलेत्ययशः प्रमृष्टम् ॥”) प्रसिद्धम् । इति मेदिनी । ढे, ३ ॥ (यथा, रघुः । २ । ५३ । “क्षतात् किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः ॥”)

**रूढः**, पुं, (रुह + क्तः ।) प्रकृतिप्रत्ययार्थमनपेक्ष्य शाब्दबोधजनकः शब्दः । यथा, -- “मुख्यो लाक्षणिको गौणः शब्दः स्यादौपचारिकः । यौगिको योगरूढो वा रूढो वा मुख्य एव सः ॥” इति शाब्दिकाः ॥ * ॥ अपि च । रूढं नाम लक्षयति विभजते च । “रूढं सङ्केतवन्नाम सैव संज्ञेति कीर्त्त्यते । नैमित्तिकी पारिभाषिक्यौपाधिक्यपितद्विदा ॥” यन्नाम यादृशार्थे सङ्केतितमेव न तु यौगिकमपि तद्रूढम् । योगरूढन्तु पङ्कजादिकं न तथा रूढानामेव च संज्ञापदेनाभिलप्यते । न तु रूढादिवत् संज्ञापि नाम्नोऽवान्तरभेदः । येन विभागव्याघातः स्यात् । संज्ञायाश्च त्रयो भेदाः नैमित्तिकी पारिभाषिकी औपाधिकी चेति । पाचकपाठकादयस्तु न संज्ञाः सङ्केतशून्यत्वादिति वक्ष्यते ॥ ये तु रूढस्य नाम्नश्चतुर्विधत्वमाहुस्तन्मतमुपन्यस्यति । “जातिद्रव्यगुणस्पन्दैर्द्धर्म्मैः सङ्केतवत्तया । जातिशब्दादिभेदेन चातुर्विध्यं परे जगुः ॥” गोगवयादीनां गोत्वादिजात्या । पश्वाढ्यादीनां लाङ्गुलधनादिद्रव्येण । धन्यपिशुनादीनां पुण्यद्वेषादिगुणेन । चलचपलादीनाञ्च शब्दानां कर्म्मणावच्छिन्नशक्तिमत्त्वाच्चातुर्व्विध्यमेव रूढानामिति । यदुक्तं दण्ड्याचार्य्यैः । “शब्दैरेभिः प्रतीयन्ते जातिद्रव्यगुणक्रियाः । “उभयावृत्तिधर्म्मेण संज्ञा स्यात् पारिभाषिकी । औपाधिकी त्वनुगतोपाधिना या प्रवर्त्तते ॥” उभयावृत्तिधर्म्मावच्छिन्नसङ्केतवती संज्ञा पारिभाषिकी । यथाकाशडित्थादिः । या चानुगतोपाध्यवच्छिन्नसङ्केतवती संज्ञा सा त्वौपाधिकी । यथा भूतदूतादिः । सा हि सचेतनवृत्तिविशेषगुणवत्त्ववार्त्ताहारकत्वाद्यनुगतोपाधिपुरस्कारेणैव प्रवर्त्तते । इति शब्दशक्तिप्रकाशिका ॥

**रूढिः**, स्त्री, (रुह + क्तिन् ।) जन्म । प्रादुर्भावः । (प्रसिद्धिः । यथा, राजतरङ्गिण्याम् । ४ । २७१ । “रूढिः परम्परायाता सेयमस्मद्गृहे स्थिता ॥” आरोहणम् । यथा, तत्रैव । १ । २८५ । “यात्याश्रितः किल समाश्रयणीयलभ्यां निन्द्यां गतिं जगति सर्व्वजनार्च्चितां वा । गच्छत्यधस्तृणगुणः श्रितकूपयन्त्रः पुष्पाश्रया सुरशिरोभुवि रूढिमेति ॥”) रूढशब्दनिष्ठशक्तिः । यथा, -- “लब्धात्मिका सती रूढिर्भवेद्योगापहारिणी । कल्पनीया तु लभते नात्मानं योगवाधतः ॥” इति कुमारभट्टकारिका ॥

**रूप**, त् क तत्कृतौ । इति कविकल्पद्रुमः ॥

(अदन्त चुरा०-पर०-सक०-सेट् ।) तत्कृती रूपकरणम् । अरुरूपत् प्रतिमां शिल्पी । प्रतिमाया रूपं करोतीत्यर्थः । निपूर्व्वः स्वरूपकथने । अनुमानं निरूप्यत इत्यनुमानखण्डम् । इति दुर्गादासः ॥

**रूपं**, क्ली, (रूयते कीर्त्त्यते रौतीति वा । रु + “खष्पशिल्पशष्पेति ।” उणा० ३ । २८ । इति पः दीर्घश्च । रूपयतीति । रूप् + अच् वा ।) स्वभावः । सौन्दर्य्यम् । नामकम् । पशुः । शब्दः । ग्रन्थावृत्तिः । नाटकादिः । आकारः । (यथा, मनुः । ७ । ७७ । “तदध्यास्योद्वहेद्भार्य्यां सवर्णां लक्षणान्विताम् । कुले महति सम्भूतां हृद्यां रूपगुणान्विताम् ॥”) श्लोकः । इति मेदिनीशब्दरत्नावलीभूरिप्रयोगाः ॥ (स्वरूपम् । यथा, मनुः । ८ । ४५ । “देशं रूपञ्च कालञ्च व्यवहारविधौ स्थितः ॥”) शुक्लादिः । नामकस्थाने नाणकम् । इति नानार्थरत्नमालाविश्वहेमचन्द्राः ॥ * ॥ रूपन्तु

कः । टाप् ।) उत्कण्ठा । इति पुराणम् ॥

**रुह्वा**, [न्] पुं, (रोहतीति । रुह + "शीङ्क्रुशि-
रुहीति ।" उणा० ४ । ११३ । इति क्वनिप् ।)
वृक्षः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

**रूक्ष**, त् क पारुष्ये । इति कविकल्पद्रुमः ॥ (अदन्त
चुरा०-पर०-अक०-सेट् ।) "दीर्घी । तथा च ।
'स पुनातु व्रजे यश्च गोरजःपातरूक्षितौ ।
शिशुरुच्छिद्य यमजौ निष्पिपेष तरू क्षितौ ॥'
इति कीचकयमकम् ॥
पारुष्यमस्निग्धीभावः । रूक्षयति रूक्षापयति
केशः तैलाभावादिति शेषः ।" इति दुर्गादासः ॥

**रूक्षं**, त्रि, (रूक्षयतीति । रूक्ष पारुष्ये + पचा-
द्यच् ।) अप्रेम । अचिक्वणम् । इत्यमरः । ३ ।
३ । २२४ ॥ (यथा, महाभारते । १ । १५३ । ६ ।
"ऊद्ध्वाङ्गुलिः स कण्डूयन् धुन्वन् रूक्षान् शिरो-
रुहान् ॥")

**रूक्षः**, पुं, वृक्षः । इति हेमचन्द्रः ॥ वरकतृणम् ॥
इति राजनिर्घण्टः ॥

**रूक्षगन्धकः**, पुं, (रूक्षो गन्धो यस्य । कन् ।)
गुग्गुलुः । इति राजनिर्घण्टः ॥

**रूक्षणात्मिका**, स्त्री, (रूक्षण मात्मा यस्याः ।
कन् । टापि अत इत्वम् ।) लङ्काधान्यम् । इति
राजनिर्घण्टः ॥

**रूक्षदर्भः**, पुं, (रूक्षः कर्कशो दर्भः ।) हरिदर्भः ।
इति राजनिर्घण्टः ॥

**रूक्षपत्रः**, पुं, (रूक्षाणि पत्राणि यस्य ।) शाखोट-

चातुर्विध्यादमीषान्तु शब्द उक्तश्चतुर्विधः ॥" इति
तदेतज्जड-मूक-मूर्खादीनामन्यशून्यादीनाञ्च
शब्दानामपरिग्रहापत्त्या परित्यक्तमस्माभिः ॥ * ॥
नैमित्तिकसंज्ञां लक्षयति ।
"जात्यवच्छिन्नसङ्केतवती नैमित्तिकी मता ।
जातिमात्रे हि सङ्केः ताद्व्यक्तेर्भाणं सुदुष्करम् ॥"
यन्नामजात्यवच्छिन्नसङ्केतवत् सा नैमित्तिकी
संज्ञा यथा गोचैत्रादिः । सा हि गोत्वचैत्रत्वादि-
जात्यवच्छिन्नमेव गवादिकमभिधत्ते न तु गोत्वा-
दिजातिमात्रम् । गोपदं गोत्वे सङ्केतितमित्या-
कारकग्रहाद्गामानयेत्यादौ गोत्वादिना गवा-
देरन्वयानुपपत्तेश्च एकशक्तत्वग्रहस्यान्यानुभाव-
कत्वेऽतिप्रसङ्गात् ॥ * ॥ पारिभाषिकीमौपाधि-
कीञ्च संज्ञां क्रमेण लक्षयति ।

षोडशविधम् । यथा । ह्रस्वम् १ दीर्घम् २
स्थूलम् ३ चतुरस्रम् ४ वृत्तम् ५ शुक्लम् ६
कृष्णम् ७ नीलारुणम् ८ रक्तम् ९ पीतम् १०
कठिनम् ११ चिक्कणम् १२ श्लक्ष्णम् १३ पिच्छि-
लम् १४ मृदु १५ दारुणम् १६ । इति महा-
भारते मोक्षधर्म्मः ॥ * ॥ तस्य लक्षणं यथा, --
"अङ्गान्यभूषितान्येव केनचिद्भूषणादिना ।
येन भूषितवद्भान्ति तद्रूपमिति कथ्यते ॥"
इत्युज्ज्वलनीलमणिः ॥
न्यायमते तत् चक्षुरिन्द्रियग्राह्यम् । द्रव्यादि-
प्रत्यक्षकारणम् । चक्षुः सहकारि । शुक्लाद्य-
नेकप्रकारम् । जलादिपरमाणुरूपं नित्यम् ।
अन्यत्र अनित्यम् । यथा, --

| | | |
|---|---|---|
| वृक्षः । इति राजनिर्घण्टः ॥<br>**रूक्षप्रियः**, पुं, (रूक्षस्य प्रियः ।) ऋषभौषधम् ।<br>इति राजनिर्घण्टः ॥ | | |

"चक्षुर्ग्राह्यं भवेद्रूपं द्रव्यादेरुपलम्भकम् ।
चक्षुषः सहकारि स्याच्छुक्लादिकमनेकधा ।
जलादिपरमाणौ तन्नित्यमन्यत् सहेतुकम् ॥"
इति भाषापरिच्छेदः ॥
उत्तरपदस्थरूपादिशब्दस्यउपमानवाचकत्वम् । यथा, --
"स्युरुत्तरपदे प्रख्यः प्रकारः प्रतिमो निभः ।
भूतरूपोपमाः काशः सन्निभः प्रथितः परः ॥"
इति हेमचन्द्रः ॥
अतिशयरूपस्य दोषो यथा, --
उमोवाच ।
"रूपातिशयसम्पन्ना नानागुणसमन्विताः ।
किमर्थं दुःखिता जाताः कान्तसौख्यविवर्ज्जिताः ॥
ईश्वर उवाच ।
दमयन्ती तथा सीता रूपातिशयपारगा ।
दुःखिता तेन संजाता कान्तसौख्यविवर्ज्जिता ॥
अहल्या बन्धकी जाता कपिलस्य तु योषिता ।
रूपस्य तु प्रभावेण दासी जाता तिलोत्तमा ॥
तस्माद्रपञ्च नेच्छन्ति लक्षणज्ञास्तपोधनाः ।
अतिरूपेण स्वल्पायुः पुरुषो योषितोऽपि वा ।
अथवा सौख्यहीनस्तु जायते तु महातपे ॥"
इति देवीपुराणे नन्दाकुण्डप्रवेशाध्यायः ॥
तद्वैदिकपर्य्यायः । निर्णिक् १ वव्रिः २ वर्पः ३
वपुः ४ अमतिः ५ अप्सः ६ प्सुः ७ अप्नः ८
पिष्टम् ९ पेशः १० कृशनम् ११ प्सरः १२
अर्ज्जुनम् १३ ताम्रम् १४ अरुषम् १५ शिल्पम्
१६ । इति षोडशरूपनामानि । इति वेदनिघण्टौ ३ अध्यायः ॥

प्रत्येकं केवलं मालारूपञ्चेति चतुर्व्विधम् ।
अङ्गिनो यदि साङ्गस्य रूपणं साङ्गमेव तत् ॥
समस्तवस्तुविषयमेकदेशविवर्त्ति च ।
आरोप्याणामशेषाणां शाब्दत्वे प्रथमं मतम् ॥
यत्र कस्यचिदार्थत्वमेकदेशविवर्त्ति तत् ।
निरङ्गं केवलस्यैव रूपणं तदपि द्विधा ॥
माला केवलरूपत्वात् तेनाष्टौ रूपके भिदाः ॥"
इति साहित्यदर्पणे १० परिच्छेदः ॥
अपि च ।
"अभेदो भासते यस्मिन्नुपमानोपमेययोः ।
रूपकं कथ्यते सद्भिरलङ्कारोत्तमं यथा ॥
तन्वि युष्मन्मखाम्भोजं लोलालकमधुव्रतम् ।
न कस्य हरते चेतो लसद्दशनकेशरम् ॥
अस्त्यनेकप्रकारत्वं रूपकोपमयोरपि ।
संक्षेपेणोक्तमन्यत्तु सुधीभिरवधीयताम् ॥"
इति काव्यचन्द्रिका ॥
संख्याविशेषः । यथा, --
"सञ्चाली प्रोच्यते गुञ्जा सा तिस्रो रूपकं भवेत् ।
रूपकैर्द्दशभिः प्रोक्तः कलञ्जो नाम नामतः ॥"
इति युक्तिकल्पतरुः ॥
(उपमानम् । यथा, साहित्यदर्पणे १० परिच्छेदे
समासोक्त्यलङ्कारे ।
"यत्र तु रूप्यरूपकयोः सादृश्यमस्फुटमिति ॥"
पुं, मुद्रा । यथा, कथासरित्सागरे । ७८ । १३ ।
"अल्पे परिकरेऽप्येभिरियद्भिः स्वर्णरूपकैः ।
किमेष व्यसनं पुष्णात्यथ कञ्चन सद्व्ययम् ॥"
तथाच बृहत्संहितायाम् । ८१ । १२ ।
"गुञ्जात्रयस्य मूल्यं पञ्चाशद्रूपका गुणयुतस्य ॥")

**रूपतत्त्वं**, क्ली, (रूपस्य तत्त्वम् ।) शीलम् ।
यथा, --
"स्याद्रूपं लक्षणं भावश्चात्मप्रकृतिरीतयः ।
सहजो रूपतत्त्वञ्च धर्म्मसर्गो निसर्गवत् ॥"
इति हेमचन्द्रः । ६ । १२ ॥

**रूपधारी**, [न्] (रूपं धरतीति । धृ + णिनिः ।)
सौन्दर्य्ययुक्तः । (यथा, महाभारते । ३ । ४५ । १२ ।
"सत्यवाक् पूजितो वक्ता रूपवाननहङ्कृतः ॥")

**रूपाजीवा**, स्त्री, (रूपेण सौन्दर्य्येण आजीवतीति । आ + जीव् + अच् । टाप् ।) वेश्या ।
इत्यमरः । २ । ६ । १९ ॥ (यथा, रामायणे । २ । ३६ । ३ ।
"रूपाजीवाश्च वादिन्यो बणिजश्च महाधनाः ।
शोभयन्तु कुमारस्य वाहिनीः सुप्रसारिताः ॥")

**रूपास्त्रः**, पुं, (रूपमेव अस्त्रं यस्य ।) कामदेवः ।
इति त्रिकाण्डशेषः ॥

**रूपिका**, स्त्री, (रूपमस्या अस्तीति । रूप + ठन् ।)
श्वेतार्कवृक्षः । इति रत्नमाला ॥ (यथा, सुश्रुते । ५ । ६ ।
"पललं तिलतैलञ्च रूपिकायाः पयो गुडः ॥")

**रूपेश्वरी**, स्त्री, (रूपाणामीश्वरी ।) देवीविशेषः ।
सा तु प्रभवादिषष्टिवर्षान्तर्गतैकविंशवर्षे पूज्या ।
यथा, --
"रूपेश्वरी प्रकर्त्तव्या वृषयुग्मव्यवस्थिता ।
जटामुकुटभारेन्दुत्रिशूलोरगभूषणा ॥
मणिमौक्तिकशोभाढ्या सितचन्दनचर्च्चिता ।
पूजिता कुसुमैर्हृद्यैः सर्व्वकामफलप्रदा ॥"
इति देवीपुराणे संवत्सरदेवताविंशतिविधिः प्रथमः ॥

**रूप्यं**, क्ली, (आहतं रूपं अस्यास्तीति । रूप् +
"रूपादाहतप्रशंसयोर्यप् ।" ५ । २ । १२० । इति
यप् ।) आहतस्वर्णरजतम् । इत्यमरः । २ । ९ ।
९१ ॥ हेम रूप्यञ्च आहतं अश्ववराहपुरुषादिरूपमुत्थापयितुं निर्घातिकया ताडितं रूप्यमुच्यते रूपाय आहतं रूप्यं ढघे कादिति ष्ण्यः । इति भरतः ॥ * ॥ धातुविशेषः । रूपा इति भाषा ॥ (यथा, महाभारते । ५ । ३९ । ७९ ।
"सुवर्णस्य मलं रूप्यं रूप्यस्यापि मलं त्रपु ।
ज्ञेयं त्रपु मलं सीसं सीसस्यापि मलं मलम् ॥")

**रूपकं**, क्ली, (रूपयतीति । रूपि + ण्वुल् ।)

नाटकम् । (“तस्य रूपकसंज्ञाहेतुमाह । रूपा-
रोपात्तु रूपकम् । रूपकस्य भेदानाह ।
नाटकमथ प्रकरणं
भाणव्यायोगसमवकारडिमाः।
ईहामृगाङ्कवीथ्यः
प्रहसनमिति रूपकाणि दश ॥
किञ्च ।
नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम् ।
प्रस्थानोल्लाप्यकाव्यानि प्रेङ्क्षणं रासकं तथा ॥
संलापकं श्रीगदितं शिल्पकञ्च विलासिका ।
दुर्मल्लिका प्रकरणी हल्लीशो भाणिकेति च ॥
अष्टादश प्राहुरुपरूपकाणि मनीषिणः ।
विना विशेष सर्व्वेषां लक्ष्म नाटकवन्मतम् ॥”
इति साहित्यदर्पणे ६ परिच्छेदः ॥)
मूर्त्तम् । (यथा, कथासरित्सागरे । ५५ । ४३ ।
“आदिश्यताञ्च चित्रे किमालिखामीह रूप-
कम् ॥”)
काव्यालङ्करणम । इति मेदिनी । के, १४८ ॥
शेषस्य लक्षणं यथा, --
“रूपकं रूपितारोपात् विषये निरपह्नवे ।
तत् परम्परितं साङ्गं निरङ्गमिति च त्रिधा ॥
यत्र कस्यचिदारोपः परारोपणकारणम् ।
तत् परम्परितं श्लिष्टाश्लिष्टशब्दनिबन्धनम् ॥

सौन्दर्य्यविशिष्टः । यथा, --
“ततो विकटरूपोऽसौ सर्व्वशास्त्रार्थपारगः ।
विवाहयद्द्विजसुतां रूपेणानुपमां द्विजः ॥
सावमेने च भर्त्तारं सुशीलमपि भाविनी ।
विरूपमिति मन्वाना ततः सोऽभूत् सुदुःखितः ॥
ततो निर्व्वेदसंयुक्तो गत्वाश्रमपदं महत् ।
इरावत्यास्तटे श्रीमान् रूपधारिणमासदत् ॥
तमाराध्य जगन्नाथं नक्षत्रपुरुषेण हि ।
सुरूपतामवाप्याग्र्यां तस्मिन्नेव च जन्मनि ॥”
इति वामनपुराणे ७६ अध्यायः ॥

**रूपनाशनः**, पुं, (रूपस्य नाशनं अदर्शनं यत्र ।)

पेचकः । इति शब्दरत्नावली ॥

**रूपवान्,** [त्] त्रि, (रूपमस्यास्तीति । रूप +

“रसादिभ्यश्च ।” ५ । २ । ९५ । इति मतुप् ।
मस्य वः ।) आकारविशिष्टः । (यथा, भाग-
वते । २ । ५ । २७ ।
“वायोरपि विकुर्व्वाणात् कालकर्म्मस्वभावतः ।
उदपद्यत वै तेजो रूपवत् स्पर्शशब्दवत् ॥”)

तत्पर्य्यायः । शुभ्रम् २ वसुश्रेष्ठम् ३ रुधिरम् ४
चन्द्रलोहकम् ५ श्वेतकम् ६ महाशुभ्रम् ७
रजतम् ८ तप्तरूपकम् ९ चन्द्रभूति १० सितम् ११
तारम् १२ कलधूतम् १३ इन्द्रलोहकम् १४
रौप्यम् १५ धौतम् १६ सौधम् १७ चन्द्र-
हासम् १८ । इति राजनिर्घण्टः ॥ खर्ज्जूरम् १९
दुर्व्वर्णम् २० श्वेतम् २१ रङ्गबीजम् २२ राज-
रङ्गम् २३ लोहराजकम् २४ । इति शब्दरत्ना-
वली ॥ कलधौतम् २५ । इति जटाधरः ॥ अस्य
गुणाः । स्निग्धत्वम् । कषायत्वम् । अम्लत्वम् ।
विपाके मधुरत्वम् । सरत्वम् । वातपित्तहरत्वम् ।
रुच्यत्वम् । वलीपलितनाशित्वञ्च । इति राज-
निर्घण्टः ॥ * ॥ अथ रूप्यस्योत्पत्तिनामलक्षण-
गुणाः ।
“त्रिपुरस्य वधार्थाय निर्निमेषैर्व्विलोकनैः ।
निरीक्षयामास शिवः क्रोधेन परिपूरितः ॥
ततस्तूल्का समपतत्तस्यैकस्माद्विलोकनात् ।

अतो रुद्रः समभवद्वैश्वानर इव ज्वलन् ॥
द्वितीयादपतन्नेत्रादश्रुबिन्दुस्तु वामकात् ।
तस्माद्रजतमुत्पन्नमुक्तकर्म्मसु योजयेत् ॥
कृत्रिमञ्च भवेत्तद्धि रङ्गादिरसयोगतः ।
रूप्यन्तु रजतं तारं चन्द्रकान्ति सितं शुभम् ॥
गुरु स्निग्धं मृदु श्वेतं दाहच्छेदघनक्षयम् ।
स्वर्णाद्यं चन्द्रवत् स्वच्छं रूप्यं नवगुणं शुभम् ॥
कठिनं कृत्रिमं रूक्षं रक्तं पीतं दलं लघु ।
दाहच्छेदघनैर्नष्टं रूप्यं दुष्टं प्रकीर्त्तितम् ॥
रूप्यं शीतं कषायाम्लं स्वादुपाकरसं सरम् ।
वयसः स्थापनं स्निग्धं लेखनं वातपित्तजित् ॥
प्रमेहादिकरोगांश्च नाशयत्यचिरात् ध्रुवम् ।
तारं शरीरस्य करोति तापं
विध्वंसनं यच्छति शुक्रनाशम् ।
वीर्य्यं बलं हन्ति तनोश्च पुष्टिं
महागदान् पोषयति ह्यशुद्धम् ॥”
अथ मारणाय योग्यं रूप्यमाह ।
“गुरु स्निग्धं मृदु श्वेतं दाहच्छेदघनक्षयम् ।
वर्णाढ्यं चन्द्रवत् स्वच्छं तारे नवगुणं स्मृतम् ॥”
अथायोग्यम् ।
“कठिनं कृत्रिमं रूक्षं रक्तं पीतं दलं लघु ।
दाहच्छेदघनैर्नष्टं रूप्यं दुष्टं प्रकीर्त्तितम् ॥”
अथ शोधनविधिः ।
“पत्तलीकृतपत्राणि तारस्याग्नौ प्रतापयेत् ।
निषिञ्चेत् तप्ततप्तानि तैले तक्रे च काञ्जिके ॥
गोमूत्रे च कुलत्थानां कषाये च त्रिधा त्रिधा ।
एवं रजतपत्राणां विशुद्धिः संप्रजायते ॥”
अथाशुद्धस्य रूप्यस्य दोषमाह ।
“रूप्यं ह्यशुद्धन्तु करोति तापं
विध्वंसनं वीर्य्यबलक्षयञ्च ।
देहस्य पुष्टिं हरते तनोति
रोगांस्ततः शोधनमस्य कुर्य्यात् ॥”
अथ रूप्यस्य मारणविधिः ।
“भागैकं तालकं मर्द्यं याममम्लेन केनचित् ।
तेन भागत्रयं तारपत्राणि परिलेपयेत् ॥
धृत्वा मूषापुटे रुद्ध्वा पुटेत् त्रिंशद्वनोपलैः ।
समुद्धृत्य पुनस्तालं दत्त्वा रुद्ध्वा पुनः पचेत् ।

**रूप्यं**, त्रि, (प्रशस्तं रूपं अस्यास्तीति । रूप +
“रूपादाहतप्रशंसयोर्यप् ।” ५ । २ । १२० ।
इति यप् ।) सुन्दरम् । इति मेदिनी । ये, ५० ॥
(क्ली, उपमेयम् । यथा, साहित्यदर्पणे १० परि-
च्छेदे समासोक्त्यलङ्कारे ।
“तत्र हि तिमिरांशुकयोरूप्यरूपकभावो द्वयो-
रावरकत्वेन स्फुटमिति ॥” * ॥ पुं,
प्रत्ययविशेषः ।
स च तत आगत इत्येतस्मिन्विषये
“हेतुमनुष्ये-
भ्योऽन्यतरस्यां रूप्यः ।” ४ । ३ । ८१ । इति
सूत्रेण हेतुभ्यो मनुष्येभ्यश्चान्यतरस्यां भवति ॥
यथा समादागतं समरूप्यम् । देवदत्तरूप्यम् ॥)

**रूप्याध्यक्षः**, पुं, (रूप्यस्य रूप्ये वा अध्यक्षः ।)
नैष्किकः । इत्यमरः ॥ रूप्यं रजतं तदेव निष्कं
पूर्ब्बवत् ष्णिकः रजताध्यक्षो नैष्किकः । टङ्कक-
पतिर्नैष्किक इत्यन्ये । पुरुषाश्वादिरूपं गठितं
रजतं रूप्यं तस्याध्यक्षो नैष्किक इति केचित् ।
इति भरतः ॥

**रूवुकः**, पुं, एरण्डः । इति शब्दमाला ॥ (यथास्य
पर्य्यायः ।
“शुक्लएरण्ड आमण्डुश्चित्रो गन्धर्व्वहस्तकः ।
पञ्चाङ्गुलो वर्द्धमानो दीर्घदण्डोऽप्यदण्डकः ॥
वातारिस्तरुणश्चापि रूवुकश्च निगद्यते ।
रक्तोऽपरो रुवुकः स्यादुरुवुको रुवुस्तथा ।
व्याघ्रपुच्छश्च वातारिश्चञ्चुरुत्तानपादकः ॥”
इति भापप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**रूष**, त् क विस्फुरणे । इति कविकल्पद्रुमः ॥
(अदन्तचुरा०-पर०-अक०-सेट् ।) दीर्घी ।
मूर्द्धन्योपधः । अरुरूषत् । इति दुर्गादासः ॥

**रूषकः**, पुं, (रूषयतीति । रूष + ण्वुल् ।)

“वस्तिर्वातविकारान् पैत्तान् रेकः कफोद्भवान्
वमनम् ।
क्षौद्रं जयति वलासं सर्पिः पित्तं समीरणं
तैलम् ॥”
इति वाभटे उत्तरस्थाने ४० अध्याये ॥)
भेकः । इति त्रिकाण्डशेषः ॥

**रेकणः**, [स्] क्ली, (रिणक्तीति । रिच् + “रिचेर्धने
घित् किच्च ।” उणा० ४ । १९८ । इति असुन् ।
चात् प्रत्ययस्य नुट् । घित्वात् कुत्वम् ।)
स्वर्णम् ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

**रेका**, स्त्री, (रेक शङ्कायाम् + अच् । स्त्रियां
टाप् ।) सन्देहः । इति हेमचन्द्रः ॥

**रेखा**, स्त्री, (लिख्यते इति । लिख विलेखने +
“षिद्भिदादिभ्योऽङ् ।” ३ । ३ । १०४ । इति
भिदादित्वात् अङ् । टाप् । रलयोरैक्यात् लस्य
रत्वम् ।) अल्पकम् । छद्म । आभोगः ।
उल्लेखः । इति विश्वः ॥ उल्लेखस्त्वत्र दण्डाकार-
लिपिविशेषः । दाँडी इति कसी इति च भाषा ।
यथा, --
“यावती यावती रेखा ग्रहाणामष्टवर्गके ।
तावतीं द्विगुणीकृत्य अष्टाभिः परिशोधयेत् ॥
अष्टोपरि भवेद्रेखा अष्टाभ्यन्तरबिन्दवः ।
यत्र रेखा न बिन्दुश्च तत् समं परिकीर्त्तितम् ॥”
इति ज्योतिस्तत्त्वम् ॥ * ॥
शरीरस्थरेखया शुभाशुभलक्षणं यथा, --
“ललाटे यस्य दृश्यन्ते तिस्रो रेखाः समा हि
ताः ।
सुखी पुत्त्रसमायुक्तः स षष्टिं जीवते नरः ॥
चत्वारिंशच्च वर्षाणि द्विरेखादर्शनान्नरः ।
विंशत्यब्दमेकरेख आकर्णान्ताः शतायुषः ॥
आकर्णान्तरिता रेखास्तिस्रश्च स्युः
शतायुषः ।

एवं चतुर्द्दशपुटैस्तारं भस्म प्रजायते ॥”
अन्यप्रकारः ।
“स्नुहीक्षीरेण संपिष्टं माक्षिकं तेन लेप-
येत् ।
तालकस्य प्रकारेण तारपत्राणि बुद्धिमान् ।
पुटे चतुर्द्दशपुटैस्तारं भस्म प्रजायते ॥”
एवं मारितस्य रूप्यस्य गुणाः ।
“रूप्यं शीतं कषायाम्लं स्वादुपाकरसं सरम् ।
वयसः स्थापनं स्निग्धं लेखनं वातपित्तजित्
॥
प्रमेहादिकरोगांश्च नाशयत्यचिरात् ध्रुवम् ॥”
इति भावप्रकाशः ॥
अथ रूप्यकरणम् ।
“मध्वाज्यं गुडताम्रञ्च करेणा माक्षिकं रसम् ।
धमनाच्च भवेद्रौप्यं सुवर्णकरणं शृणु ॥”
इति गारुडे १८८ अध्यायः ॥

वासकः । इति जटाधरः ॥

**रूषितं**, त्रि, (रूष + क्तः ।) गुण्डितम् । इत्यमरः ॥

द्वे धूलिगुण्डकेनैव म्रक्षिते । गुडि क वेष्टे रूष
त् क स्याद्विस्फुरणे क्तः । इति भरतः ॥
(यथा,
रामायणे । २ । ४२ । १५ ।
“यः सुखेनोपधानेषु शेते चन्दनरूषितः ।
वीज्यमानो महार्हाभिः स्त्रीभिर्म्मम सुतोत्तमः
॥”)

**रे**, व्य, सम्बोधनविशेषः । यथा, --

“सम्बोधनेऽङ्ग भोः पाट् प्याट् हे है हं होऽरे
रेऽपि च ।”
इति हेमचन्द्रः । ६ । १७३ ॥
(यथा, कथासरित्सागरे । ३२ । १५५ ।
“तत्र मन्दमिवालोक्य साभिप्रायः समां नृपः ।
पप्रच्छ रे किमीदृक् त्वं सञ्जातः कथ्यता-
मिति ॥”)

**रेक**, ऋ ङ शङ्कायाम् । इति कविकल्पद्रुमः ।

(भ्वा०-आत्म०-सक०-सेट् ।) शङ्का संशया-
रोपः । ऋ, अरिरेकत् । ङ, रेकते पुरुषत्वं
स्थाणौ । स्थाणुर्व्वा पुरुषो वेति संशयमारो-
पयतीत्यर्थः । रिरेके । इति दुर्गादासः ॥

**रेकः**, पुं, (रेक शङ्कायाम् अथवा रिच् + घञ् ।)

शङ्का । नीचः । विरेचनम् । इति मेदिनी ।
के, ३१ ॥ (यथा, --

सप्तत्या मूद्दिर्ध्न रेखा तु
षष्ट्यायुस्तिसृभिर्भवेत् ॥
व्यक्ताव्यक्ताभी रेखाभिर्विंशत्यब्दायुरेव हि ।
चत्वारिंशच्च वर्षाणि हीनरेखस्तु जीवति ॥
भिन्नाभिश्चैव रेस्वाभिरपमृत्युर्नरस्य हि ॥
त्रिशूलं पट्टिशं वापि ललाटे यस्य दृश्यते ।
धनपुत्त्रसमायुक्तः स जीवेत् शरदः शतम् ॥
तर्जत्या मध्यमाङ्गुल्या आयूरेखा तु मध्यतः ।
सम्प्राप्ता या भवेद्रुद्र स जीवेत् शरदः शतम् ॥
कुलरेखा तु प्रथमा अङ्गुष्ठादनुवर्त्तते ।
मध्यमायाः करे रेखा आयूरेखा अतः परम् ॥
कनिष्ठिकां समाश्रित्य आयूरेखां समादिशेत् ।
अच्छिन्ना वाविभक्ता वा स जीवेच्छरदः शतम्
॥
यस्य पाणितले रेखा आयुस्तस्य प्रकाशयेत्
।
शतं वर्षाणि जीवेच्च भोगी रुद्र ! न संशयः ॥
कनिष्ठिकां समाश्रित्य मध्यमायामुपागता ।
षष्टिं वर्षायुषं कुर्य्यात् आयूरेखा तु मानवम्
॥”
इति गारुडे ६३ अध्यायः ॥ * ॥
अपिच ।
“घनाङ्गुलिश्च सधनस्तिस्रो रेखाश्च यस्य वै
।
नृपतेः करतलगा मणिबन्धे समुत्थिता ॥
युगमीनाङ्कितकरो भवेत् सत्रप्रदो नरः ।
वज्राकारश्च धनिनां मत्स्यपुच्छनिभो बुधे ॥

शङ्खातपत्रशिविकागजपद्मोपमानृपे ।
कुम्भाङ्कुशपताकाभा मृणालाभा निरीश्वरे ॥
दामाभाश्च गजाढ्यानां स्वस्तिकाभा नृपेश्वरे
।
चक्रासितोमरधनुःकुन्ताभा नृपतेः करे ॥
उदूखलाभा यज्ञाढ्ये वेदीभाश्चाग्निहोत्रिणि ।
वापीदेवकुलाभाश्च त्रिकोणाभाश्च धार्म्मिके ॥
अङ्गुष्ठमूलगा रेखाः पुत्राः सूक्ष्माश्च कारिकाः
।
प्रदेशिनीगता रेखा कनिष्ठामूलगामिनी ॥
शतायुषञ्च कुरुते छिन्नया तरुतो भयम् ।
निःस्वाश्च बहुरेखाः स्युर्निर्द्रव्याश्चिवुकैः
कृशैः ॥"
इति गारुडे ६६ अध्यायः ॥

**रेखागणितः**, पुं, (रेखाया गणितं प्रमाणस्वरू-
पादि यत्र ।) श्रीजयसिंहमहाराजपण्डितद्विज-
सम्राड्जगन्नाथकृतगणितग्रन्थविशेषः । तस्य
संक्षिप्तविवरणम् । यथा, --
"येनेष्टं वाजपेयाद्यैर्म्महादानानि षोडश ।
दत्तानि द्विजवर्य्येभ्यो गोग्रामगजवाजिनः ॥
तस्य श्रीजयसिंहस्य तुष्ट्यै रचयति स्फुटम् ।
द्विजः सम्राड् जगन्नाथो रेखागणितमुत्त-
मम् ॥
अपूर्ब्बं विहितं शास्त्रं यत्र कोणाववोधनात् ।
क्षेत्रेषु जायते सम्यक् व्युत्पत्तिर्गणिते तथा ॥
शिल्पशास्त्रमिदं प्रोक्तं ब्रह्मणा विश्वकर्म्मणे ।
पारम्पर्य्यवशादेतदागतं धरणीतले ॥
तदुच्छिन्नं महाराजजयसिंहाज्ञया पुनः ।
प्रकाशितं मया सम्यक् गणकानन्दहेतवे ॥" *
॥
अथ रेखागणिता । अत्र ग्रन्थे पञ्चदशा-
ध्यायाः सन्ति । अष्टसप्तोत्तरचतुःशतम्शक-
लानि सन्ति । तत्र प्रथमाध्याये अष्टचत्वारिंश-
च्छकलानि । तत्रादौ परिभाषा । यः पदार्थः
दर्शनयोग्यः विभागानर्हः स बिन्दुर्वाच्यः । यः
पदार्थः दीर्घः विस्ताररहितः विभागार्हः स
रेखाशब्दवाच्यः । विस्तारदैर्घ्ययोर्यद्विद्यते
तद्ध-
रातलं तदेव क्षेत्रम् । तद्द्विविधं एकं जलवत्
समं
द्वितीयं विषमम् । अथ रेखापि द्विविधा । एका
"यल्लङ्कोज्जयिनीपुरोपरिकुरुक्षेत्रादिदेशान्
स्पृशन्
सूत्रं मेरुगतं बुधैर्न्निगदिता सा मध्यरेखा
भुवः ।
आदौ प्रागुदयोऽपरत्र विषये पश्चाद्धि रेखो-
दयात्
स्यात्तस्मात् क्रियते तदन्तरभुवं खेटेष्वृणं स्वं
फलम् ॥"
इति सिद्धान्तशिरोमणिः ॥ * ॥
अन्यच्च । रेखोक्ता सूर्य्यसिद्धान्ते । यथा रेखा-
मधिकृत्य ।
"राक्षसालयदेवौकः शैलयोर्म्मध्यसूत्रगाः ।
रौहितकमवन्ती च तथा सन्निहितं सरः ॥"
अस्यार्थः । लङ्कासुमेरुपर्व्वतयोर्म्मध्यसूत्रगा
देशा रेखासंज्ञिताः । तान् देशानाह । राहि-
तकदेशोऽवन्तीदेशः सन्निहितं सरः कुरुक्षेत्र-
ञ्चेत्यथः । रेखायाः पूर्ब्बदेशे परदेशे च यथा-
संख्यं सूर्य्योदयकालात् परकालं पूर्ब्बकालञ्च
वारप्रवृत्तिः स्यादित्यर्थः । एतेनैतदुक्तं भवति
रेखासंज्ञकदेशस्थलोका यदा सूर्य्यं पश्यन्ति
तदैव सर्व्वदेशे वारप्रवृत्तिरित्यर्थः । तत्र रेखा
पूर्ब्बस्थाः सन्निहितत्वादादौ सूर्य्यं पश्यन्ति तद-
नन्तरञ्च रेखास्थाः । अतो रेखापूर्ब्बे सूर्य्यो-
दयात् परं वारः । तथा रेखास्थैः सूर्य्ये दृष्टे
सति पश्चात् रेखापरस्थाः पश्यन्ति अतो रेखा-
परदेशे सूर्य्योदयात् पूर्ब्बं वार इत्यथः । तत्र
कालपरिमाणमाह । रेखातो यावन्ति देशा-
न्तरयोजनानि तत्सम्मिताभिर्व्विघटीभिः पलैः
पादहीनाभिः चतुर्थभागहीनाभिर्व्वारप्रवृत्तिः
स्यादित्यर्थः । देशान्तरसाधनप्रकारस्तु सूर्य्य-
सिद्धान्ते उक्तः । अत्र तु संक्षेपेण किञ्चित्
कथ्यते । गौडे पञ्चदशाधिकशतयोजनानि ११५
।
दक्षिणराढे गङ्गातीरे दशाधिकशतम् ११० ।
भैरवीतीरे विंशत्यधिकशतम् १२० । वङ्गे सुवर्ण-
ग्रामादौ चत्वारिंशदधिकशतम् १४० । वारा-
णस्यामष्टोत्तरशतम् १०८ देशान्तरम् । एव-
मन्यत्राप्यूह्यम् । तन्मतन्तु लोकसंगृहीतमिति
किन्तु सूर्य्यसिद्धान्ते अर्द्धरात्रावेव वारप्रवृत्ति-
रुक्ता । यथा, --
"वारप्रवृत्तिः प्राग्देशे क्षपार्द्धेऽत्यधिके भवेत् ।
प्रतिषिञ्चन् विचिक्रीडे यक्षीमिर्यक्षराडिव
॥"
इति श्रीभागवते । १० । ९० । ९ ॥
(ध्यातृनासिकया
प्राणायामाङ्गमुच्यमानवायुः ।
यथा, भागवते । ३ । २८ । ९ ।
"प्राणस्य शीधयेन्मार्गं पूरकुम्भकरेचकैः
॥"
अस्यान्यद्विवरणं प्राणायामशब्दे
द्रष्टव्यम् ॥)

**रेच्यः**, पुं, ध्यातृनासिकया प्राणायामाङ्गमुच्यमान-
वायुः । यथा, --
"पूरकः कुम्भको रेच्यः
प्राणायामस्त्रिलक्षणः ।
नासिकाकृष्ट उच्छ्वासो ध्यातुः पूरक
उच्यते ।
कुम्भको निश्चलश्वासो मुच्यमानस्तु
रेचकः ॥"
इत्याह्निकाचारतत्त्वम् ॥
भेदके, त्रि ॥

**रेचनं**, (रिच् + ल्युट् ।) मलभेदनम् । तत्प-
र्य्यायः । प्रस्कन्दनम् २ विरेकः ३
विरेचनम् ४ ।
इति रत्नमाला ॥ रेकः ५ रेचना ६ ।
इति
शब्दरत्नावली ॥ (यथा, सुश्रुते । १ । ३
।
"रसज्ञानं वमनार्थमध्यायो रेचनाय च
॥"
रेचनद्रव्याणि तु सुश्रुते । १ । ४४ ।
अध्यायतो
ज्ञेयानि ॥)

**रेचनकः**, पुं, (रेचयतीति । रिच् + णिच् + ल्युः ।
ततः स्वार्थे कन् ।) कम्पिल्लकः । इति
राज-
निर्घण्टः ॥

**रेचना**, स्त्री, (रिच् + णिच् + युच् । टाप् ।)
काम्पिल्लः । इति शब्दरत्नावली ॥

**रेचनी**, स्त्री, (रिच्यतेऽनयेति । रिच् + ल्युट् +

वक्रा अन्या सरला । अथ सरलरेखालक्षणम् । यस्यां न्यस्ता बिन्दवः अवलोकिताः सन्त एक-
बिन्दुनाच्छाद्यन्ते सा सरला अन्यथा कुटला । धरातलमपि समं विषमञ्च ज्ञेयम् । समं य आवृणोति । यत् रेखाद्बयं समं समानान्तरं न भवति तस्य यस्मिन् प्रदेशे बह्वन्तरं भवति तद्दिशि वर्द्धितयो रेखयोरन्तरमुत्तरोत्तरं अधिक-
मेव भवति यत्राल्पमन्तरं भवति तद्दिशि वर्द्धितयो रेखयोरन्तरमुत्तरोत्तरमल्पमेम्ब भवति यावद्रेखासंयोगं तदनन्तरमन्तरं वर्द्धिष्णु भवति ।
यत्र कोणशब्दः तत्र सरलरेखाकृत एव कोणो ज्ञेयः । यत्र रेखाशब्दः तत्र सरलैव रेखा ज्ञेया । यत्र भूमितलशब्दः तत्र जलसमीकृत-मेव भूतलं ज्ञेयम् । इति रेखागणितस्य परि-भाषा ॥

**रेखाभूमिः**, स्त्री, (रेखास्थिता भूमिः ।) लङ्का-

सुमेरुपर्व्वतयोर्म्मध्यसूत्रगतदेशः । यथा, --

तद्देशान्तरनाडीभिः पश्चादूने विनिर्द्दिशेत् ॥" इति दीपिकाटीकायामर्थकौमुद्यां गोविन्दा-नन्दः ॥

**रेचकं**, क्ली, (रेचयतीति । रिच् + णिच् + ण्वुल् ।)

कङ्कुष्ठमृत्तिका । इति राजनिर्घण्टः ॥ (भेदके, त्रि ॥)

**रेचकः**, पुं, (रेचयतीति । रिच् + णिच् + ण्वुल् ।)

यवक्षारः । इति त्रिकाण्डशेषः ॥ जयपाल-वृक्षः । इति राजनिर्घण्टः ॥ क्रीडार्थजल-निःक्षेपयन्त्रम् । पिच्कारी इति भाषा । यथा, "सिच्यमानोऽच्युतस्ताभिर्म्महिषीभिः स्म रेचकैः ।

ङीप्) काम्पिल्लः । इति शब्दरत्नावली ॥ कालाञ्जनी । दन्तीवृक्षः । इति राजनिर्घण्टः ॥
श्वेतत्रिवृता । इति मेदिनी ॥ (अस्याः पर्य्यायो
यथा, --
"श्वेता त्रिवृत्ता भण्डी स्यात् त्रिवृता त्रिपुटापि च ।
सर्व्वानुभूतिः सरला निशोत्रा रेचनीति च ॥"
इति भावप्रकाशे पूर्ब्बखण्डे प्रथमे भागे ॥
वटपत्री । तत्पर्य्यायो यथा, --
"वटपत्री तु कथिता मोहिनी रेचनी बुधैः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**रेची**, स्त्री, (रेचयतीति । रिच् + णिच् + अच् ।

गौरादित्वात् ङीष् ।) कम्पिल्लकः । अङ्कोठः ।
इति राजनिर्घण्टः ॥

**रेज**, ऋ ङ दीप्तौ । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-अक०-सेट् ।) ऋ, अरिरेजत् । ङ,
रेजते रिरेजे । इति दुर्गादासः ॥

**रेट**, ऋ ञ याचे । वाचि । इति कविकल्पद्रुमः ॥

(भ्वा०-उभ०-द्विक०-सेट् ।) ऋ, अरिरेटत् ।
ञ, रेटति रेटते । याचो याचनम् । इति दुर्गा-
दासः ॥

**रेणुः**, पुं, स्त्री, (रिणातीति । री गतिरेषणयोः

+ "अजिवृरीभ्यो निच्च ।" उणा० ३ । ३८ ।
इति णुः ।) धूलिः । इत्यमरः ॥ (यथाह कश्चित् ।
"मानुषीकरणरेणुरस्ति ते
पादयोरिति कथा प्रत्ःइयसी ।

क्षालयामि तव पादपङ्कजं
नाथ ! दारुदृशदोस्तु का भिदा ॥”)

**रेणुः**, पुं, (री + णुः ।) पर्पटः । रेणुका । पांशुः ।
इति राजनिर्घण्टः ॥ (यथा, रघुः । ९ । २३ ।
“दिनकराभिमुखा रणरेणवो
रुरुधिरे रुधिरेण सुरद्विषाम् ॥”
विडङ्गः । तत्पर्य्यायो यथा, --
“जन्तुघ्नं भस्मकं रेणुः क्रिमिघ्नं चित्रतरु लम्
।
क्रिमिशत्रुः विडङ्गश्च गर्द्दभं तच्च केवलम् ॥”
इति वैद्यकरत्नमालायाम् ॥)

**रेणुका**, स्त्री, (रेणुना कायतीति । कै + कः ।
टाप् ।) मरिचाकृतिसुगन्धिद्रव्यविशेषः । तत्-
पर्य्यायः । द्विजा २ हरेणुः ३ कौन्ती ४
कपिला ५ भस्मगन्धिनी ६ । इत्यमरः ॥
कान्ता ७
नन्दिनी ८ महिला ९ राजपुत्त्री १० हिमा ११
रेणुः १२ पाण्डुपुत्त्री १३ हरेणुका १४ सुपर्णी
१५
शिशिरा १६ शान्ता १७ वृन्ता १८ क्वचित्
पुस्तके वृत्ता इति च पाठः । धर्म्मिणी १९
कपिलोमा २० हैमवती २१ पाण्डुपत्नी २२ ।
अस्या गुणाः । कटुत्वम् । शीतत्वम् । खर्ज्जू-
कण्डूति-तृष्णा-दाह-विषनाशित्वम् ।
मुखवैमल्य-
कारित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
अथ रेणुका मरीचसदृशी ।
“रेणुका राजपुत्त्री च नन्दिनी कपिला द्विजा ।
भम्मगन्धा पाण्डुपुत्त्री स्मृता कौन्ती हरेणुका ॥
रेणुका कटुका पाके तिक्तानुष्णा कटुर्लघुः ।
पित्तला दीपनी मेध्या पाचनी गर्भपातिनी ।
वलास-वात-वैक्लव्य-तृट्-कण्डू-विष-दाह-नुत्
॥”
इति भावप्रकाशः ॥
अन्यच्च ।
“रेणुका कफवातघ्नी दीपनी पित्तला लघुः ।”
इति राजवल्लभः ॥ * ॥
(“हरेणू रेणुका कौन्ती ब्राह्मणी हेमगन्धिनी ॥”
इति वैद्यकरत्नमालाम् ॥)
परशुराममाता । तद्विवरणं यथा, --
गङ्गातोये तथापश्यन्नाम्ना चित्ररथं नृपम्
॥
भार्य्याभिः सदृशीभिश्च जलक्रीडारतं
शुभम् ।
सुमालिनं सुकान्तञ्च तरुणं
चन्द्रसन्निभम् ॥
तथाविधं नृपं दृष्ट्वा संजातमदना भृशम्
।
रेणुका स्पृहयामास तस्मै राज्ञे च
मैथुनम् ॥
स्पृहायुतायास्तस्यास्तु संक्लेदः
समजायत ।
विचेतना तथा क्लिन्ना त्रस्ता सा
स्वाश्रमं ययौ ॥
अबोधि जमदग्निस्तां रेणुकां विकृतां
तथा ।
धिक् धिक् पापरतेत्येवं निनिन्द च
समन्ततः ॥
ततः स्वतनयान् प्राह चतुरः प्रथमं
मुनिः ।
रुषण्वत्प्रमुखान् सर्व्वान् एकैकं क्रमतो
रुतम् ॥
छिन्ध्येनां पापनिरतां रेणुकां
व्यभिचारिणीम् ।
ते तद्वचो नैव चक्रुर्मूढाश्चासन् जडा इव
॥
कुपितो जमदग्निस्तान् शशापेति
विचेतनान् ।
भवध्वं यूयं नचिरात् जडा
गोवद्विगर्हिताः ॥
अथाजगाम चरमो
जामदग्न्योऽतिवीर्य्यवान् ।
तञ्च रामं पिता प्राह पापिष्ठां छिन्धि
मात-
रम् ॥
स भ्रातृंश्च तथाभूतान् दृष्ट्वा
ज्ञानविवर्ज्जि-
तान् ।
पित्रा शप्तान् महातेजाः प्रसूं परशुना-
च्छिनत् ॥
लौहित्यात् सरसो जातो लौहित्याख्यस्ततो-
ऽभवत् ॥
स कामरूपमखिलं पीठमाप्लाव्य वारिणा ।
गोपयन् सर्व्वतीर्थानि दक्षिणं याति सागरम् ॥
प्रागेव दिव्ययमुनां संत्यक्त्वा ब्रह्मणः सुतः ।
पुनः पतति लौहित्ये गत्वा द्वादशयोजनम् ॥
चैत्रे मासि सिताष्टम्यां यो नरो नियतेन्द्रियः ।
स्नाति लौहित्यतोयेषु स याति ब्रह्मणः पदम् ॥
चैत्रन्तु सकलं मासं शुचिः प्रयतमानसः ।
लौहित्यतोये यः स्नाति स कैवल्यमवाप्नुयात् ॥
इति ते कथितं राजन् यदर्थं मातरं पुरा ।
हन्ति धीरो जामदग्न्यो यस्माद्वा क्रूरकर्म्मकृत् ॥
इदन्तु महदाख्यानं यः शृणोति दिने दिने ।
स दीर्घायुः प्रमुदितो धनवानभिजायते ॥”
इति कालिकापुराणे ८५ अध्यायः ॥

**रेणुकासुतः**, पुं, (रेणुकायाः सुतः ।) परशुरामः ।
इति हेमचन्द्रः । ३ । ५१२ ॥ (यथा, महा-
भारते । ३ । ९९ । ४३ ।
“आर्चीकनन्दनो रामो भार्गवो रेणुकासुतः ॥”)

**रेणुरुषितः**, पुं, (रेणुना रुषितः ।) गर्द्दभः । इति
त्रिकाण्डशेषः ॥ धूलिम्रक्षिते, त्रि ॥

**रेणुवासः**, पुं, (रेणौ परागे वासो यस्य ।) भ्रमरः ।
इति त्रिकाण्डशेषः ॥

**रेणुसारः**, पुं, (रेणुरेव सारो यस्य ।) कर्पूरः ।
इति त्रिकाण्डशेषः ॥ (गुणादयोऽस्य कर्पूरशब्दे-
विज्ञयाः ॥)

**रेणुसारकः**, पुं, (रेणुसार एव । स्वार्थे कन् ।)
कर्पूरः । इति शब्दरत्नावली ॥

**रेतः**, [स्] क्ली, (रीयते क्षरतीति । री य ङ
क्षरणे + “सुरीभ्यां तुट् च ।” उणा० ४ । २०१ ।
इति असुन् तस्य तुट् च ।) शुक्रम् । (यथा, --
“स्त्रीणां रजोमयं रेतो बीजाढ्यमिन्द्रियं नरे ।
तस्मात् संयोगतः पुत्त्रो जायते गर्भसम्भवः ।
प्रथमेऽहनि रेतश्च संयोगात् कलनञ्च यत् ॥”
इति हारीते शारीरस्थाने प्रथमेऽध्याये ॥
“मातापित्रोर्बीजदोषादशुभैश्चावृतात्मनः ।
गर्भस्थस्य यदा दोषाः प्राप्य रेतोवहाः शिराः ॥

मार्कण्डेय उवाच ।
"अथ काले व्यतीते तु जमदग्निर्म्महातपाः ।
विदर्भराजस्य सुतां प्रयत्नेन जितां स्वयम् ॥
भार्य्यार्थे प्रतिजग्राह रेणुकां लक्षणान्विताम् ।
सा तस्मात् सुषुवे पुत्त्रान् चतुरो वेदसम्मतान् ॥
रुषण्वन्तं सुषेणञ्च विश्वं विश्वावसुं तथा ।
पश्चात्तस्यां स्वयं जज्ञे भगवान् मधुसूदनः ॥
कार्त्तवीर्य्यवधायाशु शक्राद्यैः सकलैः सुरैः ।
याचितः पञ्चमः सोऽभूत्तेषां रामाह्वयस्तु यः ॥
भारावतारणार्थाय जातः परशुना सह ।
सहजः परशुस्तस्य तं जहाति कदापि न ॥
अयं निजपितामह्याश्चरुभुक्तिविपर्य्ययात् ।
ब्राह्मणः क्षत्त्रियाचारो रामोऽभूत् क्रूरकर्म्म-कृत् ॥
स वेदानखिलान् ज्ञात्वा धनुर्व्वेदांश्च सर्व्वतः ।
स्वतातात् कृतकृत्योऽभूद्वेदविद्याविशारदः ॥
एकदा तस्य जननी स्नानार्थं रेणुका गता ।
रामेण रेणुकां छिन्नां दृष्ट्वा चाक्रोधनोऽभवत् ।
जमदग्निः प्रसन्नः सन्निति राममुवाच ह ॥
प्रीतोऽस्मि पुत्त्र भद्रं ते यस्त्वया मद्वचः कृतम् ।
तस्मादिष्टवरान् कामान् त्वं वै वरय साम्प्रतम् ॥
स तु रामो वरान् वव्रे मातुरुत्थानमादितः ।
वधस्यास्मरणं तस्या भ्रातॄणां शापमोचनम् ॥
मातृहत्याव्यपनयं युद्धे सर्व्वत्र वै जयम् ।
आयुः कल्पान्तपर्य्यन्तं क्रमाद्वै नृपसत्तम ! ॥
सर्व्वान् वरान् स प्रददौ जमदग्निर्म्महातपाः ।
सुप्तोत्थितेव जननी रेणुकाप्यभवत्तदा ॥
वधं न चापि सस्मार सहजप्रकृतिं तथा ।
युद्धे जयं चिरायुष्ट्वं लेभे रामस्तदैव हि ॥
मातृहत्याव्यपोहाय पिता तं वाक्यमब्रवीत् ।
न पुत्त्र वरदानेन मातृहत्यापगच्छति ॥
तस्मात्त्वं ब्रह्मकुण्डाय गच्छ स्नातुञ्च तज्जले ।
तत्र स्नात्वा मुक्तपापो नचिरात् पुनरेष्यसि ।
जगद्धिताय पुत्त्र त्वं ब्रह्मकुण्डं व्रज द्रुतम् ॥
स तस्य वचनं श्रुत्वा रामः परशुधृक् तदा ।
उपदेशात् पितुर्य्यातो ब्रह्मकुण्डं वृषोदकम् ॥
तत्र स्नानं स विधिवत्कृत्वा धौतपरश्वधः ।
शरीरान्निःसृतां सम्यक् मातृहत्यां व्यलोकयत् ॥
जातसंप्रत्ययः सोऽथ तीर्थमासाद्य तं वरम् ।
वीथिं परशुना कृत्वा ब्रह्मपुत्त्रमबाहयत् ॥
ब्रह्मकुण्डात् सुतः सोऽथ कासारे लोहिताह्वये ।
शोषयन्त्याशु तन्नाशाद्रेतश्चाप्युपर्हन्यते ।
तत्र सम्पूर्णसर्व्वाङ्गः स भवत्यपुमान् पुमान् ।
एते त्वसाध्या व्याख्याताः सन्निपातसमुच्छ्रयात् ॥"
इति चरके चिकित्सास्थाने त्रिंशेऽध्याये ॥)
अप्सु रेतःपातनिषेधो यथा, --
"न वामहस्तेनोद्धृत्य पिबेद्वक्त्रेण वा जलम् ।
नोत्तरेदनुपस्पृश्य नाप्सु रेतः समुत्सृजेत् ॥"
इति कौर्म्मे उपविभागे १५ अध्यायः ॥
पारदम् । इति मेदिनी । से, ३३ ॥
(जलम् । इति निघण्टुः । १ । १२ ॥ "वृष्टि-लक्षणानां अपां देवानां रेतस्त्वाद्रेत उच्यते । तथाचोपनिषत् । देवानां रेतो वर्षमिति ।" इति तट्टीकायां देवराजयज्वा ॥ यथा, ऋग्वेदे । ६ । ७० । २ ।
"अस्मे रेतः सिञ्चतं यन्मनुर्हितम् ॥")

| | | |
|---|---|---|
| | कैलासोपत्यकायास्तु न्यपतद्ब्रह्मणः सुतः ॥<br>तस्यापि सरसस्तीरं समुत्थाय महाबलः ।<br>कुठारेण दिशं पूर्बामनयद्ब्रह्मणः सुतम् ॥<br>ततोऽपरत्रापि गिरिं हेमशृङ्गं विभिद्य च ।<br>कामरूपान्तरं पीठमवाहयदमुं हरिः ॥<br>तस्य नाम विधिश्चक्रे स्वयं लोहितगङ्गकम् । | |

**रेतजा**, स्त्री, (रेतमिव जायते इति । जन् + डः ।

टाप् । सर्व्वे सान्ता अदन्ताश्च इति न्यायात्
अत्राकारान्तरेतशब्दः ।) बालुका । इति भावप्रकाशः ॥

**रेतनं**, क्ली, शुक्रम् । इति शब्दचन्द्रिका ॥

**रेत्यं**, क्ली, पित्तलम् । इत्यमरटिकायां नीलकण्ठः ॥

**रेत्रं**, क्ली, (रीयते क्षरतीति । री + बाहुलकात्

त्रः ।) रेतः । पीयूषम् । पटवासः । सूतकम् ।
इति मेदिनी ॥

**रेप**, ङ ऋ शब्दे । गमने । इति कविकल्पद्रुमः ॥

(भ्वा०-आत्म०-शब्दे अक०-गमने सक०-सेट् ।)
ङ, रेपते रिरेपे । ऋ, अरिरेपत् । इति दुर्गादासः ॥

**रेपः**, त्रि, (रेप्यते निन्द्यते इति । रेप + घञ् ।)

निन्दितः । क्रूरः । कृपणः । इति मेदिनी । पे, १० ॥

**रेफः**, पुं, (रिफ्यते इति । रिफ + घञ् । यद्वा,

"रादिफन् ।" इत्यनेन वर्णस्वरूपार्थे रशब्दाद्-
फन्प्रत्ययः । तथाच "रेफ इत्यौणादिकः ।"
इति कृत्सु ५ पादे दुर्गः ।) रवर्णः । (यथा, --
"परैर्गतो यः शिरसापि धार्य्यते
समागते सद्मनि याति नम्रताम् ।
गुणैः परेषां द्विगुणत्वमीहते ।
रेफेण तुल्या प्रकृतिर्म्महात्मनाम् ॥"
इत्युद्भटः ॥)
रागः । इति शब्दरत्नावली ॥ (शब्दः । यथा,
भागवते । ८ । २० । २५ ।
"श्रियञ्च वक्षस्यरविन्दहस्तां
कण्ठे च सामानि समस्तरेफान् ॥")

**रेफः**, त्रि, (रिफ + "अवद्यावमाधमार्व्वरेफाः कुत्-

सिते ।" उणा० ५ । ५४ । इति अप्रत्ययेन

"पित्तप्रबले द्राक्षारेवतकट्फलपयस्यामधुक-
चन्दनकाश्मर्य्यकषायं शर्करामधुमधुरं पाय-
येत् ॥") आरग्वधवृक्षः । इति शब्दरत्नावली ॥
राजविशेषः । स तु रेवतीपिता । बलरामश्वशु-
रश्च । इति महाभारतम् ॥ (अयं हि आनर्त्तपुत्त्रः
शर्य्यातिपौत्रः । स खलु स्वपुत्र्या रेवत्या वरं
प्रष्टुकामस्तया सह ब्रह्मलोकं गतवान् आज्ञप्तश्च
ब्रह्मणा बलदेवाय कन्यां दत्तवान् । एतद्विवरणं
देवीभागते ७ स्कन्धे ७ । ८ अध्यायतो द्रष्ट-
व्यम् ॥)

**रेवतकं**, क्ली, (रेवत इव कायतीति । कै + कः ।)

पारेवतम् । इति राजनिर्घण्टः ॥

**रेवतिः**, स्त्री, कामदेवपत्नी । इति त्रिकाण्डशेषः ॥

**रेवती**, स्त्री, (रेवतस्यापत्यं स्त्री । रेवत + अण् ।

न वृद्धिः । ङीष् ।) बलदेवपत्नी । नक्षत्रभेदः ।
मातृकाभेदः । इति मेदिनी ॥ स्त्रीगवी । इत्य-
जयपालः ॥ दुर्गा । यथा,
"रेवा तु नर्म्मदा देवी नदी वा रवती मता ।
अतिखण्डनबन्धा वा लोके देवी प्रकीर्त्तिता ॥"
इति देवीपुराणे ४५ अध्यायः ॥ * ॥
रेवतीनक्षत्रन्तु अश्विन्यादिसप्तविंशतिनक्षत्रान्त-
र्गतशेषनक्षत्रम् । तस्य रूपं मत्स्याकृति द्वात्रिं-
शत्तारात्मकम् । तस्याधिष्ठातृदेवता पूषाख्यः
सूर्य्यः । यथा, --
"दन्तसंख्यभवने झसाकृता-
वन्तभे लसदनन्तमध्यगे ।
कोमलाङ्गि मिथुनोदयात् प्रिये
कालखानलकलाः प्रियेऽचलन् ॥"
इति कालिदासकृतरात्रिलग्ननिरूपणम् ॥ * ॥
तत्र जातफलं यथा, --
"चारुशीलविभवो जितेन्द्रियः
सत्कुलः स्वभवनैकमानसः ।
मानवो ननु भवेन्महीपती
रेवती भवति यस्य जन्मभम् ॥"
इति कोष्ठीप्रदीपः ॥ * ॥
बालग्रहविशेषः । तज्जुष्टस्य चिकित्सा यथा, --
"अश्वगन्धाजशृङ्गी च शारिवाथ पुनर्नवा ।
सहा विदारी ह्येतासां क्वाथेन परिषेचनम् ॥"
अजशृङ्गी मेढाशृङ्गी । सहा सेवतीपुष्प-
जातिः ।
यवफलो वंशाङ्कुरः ।
"युक्ताः सुमनसो लाजाः पयः शाल्योदनं दधि ।
वलिर्न्निवेद्यो गोतीर्थे रेवत्यै प्रयतात्मना ॥"
गोतीर्थे गोष्ठे ।
"स्नानं धात्रीकुमाराभ्यां सङ्गमे कारयेद्भिषक् ॥
नानाशस्त्रधरा देवी चित्रमाल्यानुलेपना ।
चलत्कुण्डलिनी श्यामा रेवती ते प्रसीदतु ॥
उपासते यां सततं देव्यो विविधभूषणाः ।
लम्बा कराला विनता तथैव बहुपुत्त्रिका ।
रेवती शुष्कनासा च तुभ्यं देवी प्रसीदतु ॥"
इति भावप्रकाशः ॥ * ॥
बलदेवपत्न्या विवरणं यथा, --
"रेवस्य रैवतः पुत्त्रः ककुद्मान्नाम धार्म्मिकः ।
श्रेष्ठः पुत्त्रशतस्यासीत्तस्यां पुर्य्यां नृपोऽभवत् ॥
स कन्यासहितः प्रायाद्रैवतो ब्रह्मणोऽन्तिकम् ॥
न जरा क्षुत् पिपासा वा न मृत्युस्तत्र कर्हि-
चित् ।
ऋतुचक्रञ्च भवति ब्रह्मलोके द्विजोत्तमाः ॥
रैवतस्य गतस्याथ सा पुरी राक्षसैर्हृता ।
तस्य पुत्त्रशतं यच्च त्यक्त्वा तामगमद्दिशः ॥
तस्य वंशे तु ये तत्र स्वर्याता इति विश्रुताः ।
क्षत्त्रिया ह्यभवन् विप्रा दिक्षु सर्व्वासु धार्म्मिकाः ॥
गते बहुयुगे काले आजगामाथ रैवतः ।
मुहूर्त्तमेकं मत्वासौ ददर्श यादवैर्वृताम् ॥
कृतां द्वारवतीं नाम बहुद्वारां मनोरमाम् ।
भोजवृष्ण्यन्धकैर्गुप्तां वासुदेवपुरोगमैः ॥
गत्वा तु रैवतः सम्यग्बलभद्राय रेवतीम् ।
प्रादाद्गुरुतरां तान्तु बलदेवो हलेन वै ।
समानां लघुतां नीत्वा उवाह स प्रहर्षतः ॥
दत्त्वा जगाम शिखरं मेरोस्तपसि रैवतः ।
रेमे रामोऽपि धर्म्मात्मा रेवत्या सहितः सुखी ॥"
इति वह्निपुराणम् ॥ * ॥
(ब्रह्मणो वाक्येनैव इयं रेवतेन बलदेवाय

निपातितः ।) कुत्सितः । इत्यमरः ॥

**रेफाः**, [स्] त्रि, (रिफतीति । रिफ् + असुन् ।)

क्रूरः । अधमः । दुष्टः । कृपणः । इति शब्द-
रत्नावली ॥

**रेभ**, ङ ऋ शब्दे । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-अक०-सेट् ।) ङ, रेभते रिरेभे । ऋ,
अरिरेभत् । इति दुर्गादासः ॥

**रेभणं**, क्ली, (रेभ शब्दे + भावे ल्युट् ।) गवां

ध्वनिः । इति त्रिकाण्डशेषः ॥

**रेरिहाणः**, पुं, शिवः । असुरः । इति मेदिनी ।

णे, १०६ ॥ चौरः । इति शब्दरत्नावली ॥

**रेव**, ऋ ङ प्लुतौ व्रजे । इति कविकल्पद्रुमः ॥

(भ्वा०-आत्म०-अक०-सेट् ।) प्लुतिः प्लवेन
गमनम् । ऋ, अरिरेवत् । ङ, रेवते कपिः
उत्प्लुत्य गच्छतीत्यर्थः । इति दुर्गादासः ॥

**रेवटं**, क्ली, दक्षिणावर्त्तशङ्खम् । इत्यजयपालः ॥

**रेवटः**, पुं, (रवते इति । रेव + बाहुलकात्

अटच् ।) शूकरः । वेणुः । वातुलः । विषवैद्यः ।
इत्यजयपालः ॥

**रेवतः**, पुं, जम्बीरः । इति जटाधरः ॥ (यथा,

मुश्रुते । ४ । ५ ।

"तैलमभ्यञ्जने कार्य्यं कुष्ठे सर्जरसे तथा ।
पलङ्कषायां नलदे तथा गौरकदम्बके ॥"
सर्जरसः रालः । पलङ्कषा गुग्गुलुः । नलदं
लामज्जकमुशीरवत् पीतच्छवि । गौरकदम्बको
हारिद्रकः । हरदुया कदम्ब इति लोके ।
"धवाश्वकर्णककुभशल्लकीतिन्दुकेषु च ।
काकोल्यादौ गणे चापि सिद्धं सर्पिः पिबे-
च्छिशुः ॥"
अश्वकर्णः सांखु इति लोके ।
"कुलत्थाः शङ्खचूर्णञ्च प्रदेहः साखगन्धिकः ।
गृध्रोलूकपुरीषाणि यवान् यवफलो घृतम् ।
सन्ध्ययोरुभयोः कार्य्यमेतदुद्धूपनं शिशोः ॥"

प्रदत्ता । एतद्विवरणन्तु देवीभागवते ७ स्कन्धे
८ अध्याये द्रष्टव्यम् ॥) रैवतमनुमाता । तद्-
विवरणं यथा, --
मार्कण्डेय उवाच ।
"पञ्चमोऽपि मनुर्ब्रह्मन् रैवतो नाम विश्रुतः ।
तस्योत्पत्तिं विस्तरञ्च शृणुष्व कथयामि ते ॥
ऋषिरासीन्महाभाग ऋतवागिति विश्रुतः ।
तस्यापुत्त्रस्य पुत्त्रोऽभूत् रेवत्यन्ते महात्मनः ॥
स तस्य विधिवच्चक्रे जातकर्म्मादिकाः क्रियाः ।
तथोपनयनादींश्च स चाशीलोऽभवन्मुने ॥
यतः प्रभृति जातोऽसौ ततः प्रभृति सोऽप्यृषिः ।
दीर्घरोगपरामर्शमवाप मुनिपुङ्गवः ॥
माता चास्य परामार्त्तिं कुष्ठरोगादिपीडिता ।
जगाम स पिता चास्य चिन्तयामास दुःखितः ॥
किमेतदिति सोऽप्यस्य पुत्त्रोऽत्यन्तसुदुर्म्मतिः ।
जग्राह भार्य्यामन्यस्य मुनिपुत्त्रस्य मन्दधीः ॥
ततो विषण्णो मनसा ऋतवागिदमुक्तवान् ।
अपुत्त्रता मनुष्याणां श्रेयसे न कुपुत्त्रता ॥

कुपुत्रो हृदयायासं सर्व्वदा कुरुते पितुः ।
मातुश्च स्वर्गसंस्थांश्च स्वपितॄन्
पातयत्यधः ॥
सुहृदां नोपकाराय पितॄणां नापि तृप्तये ।
पित्रोर्दुःखाय धिक् जन्म तस्य
दुष्कृतकर्म्मणः ॥
धन्यास्ते तनया येषां
सर्व्वलोकाभिसम्मताः ।
परोपकारिणः शान्ताः साधुकर्म्मण्यनुव्रताः
॥
अनिर्वृत्तं तथा मूर्खं परलोकपराङ्मुखम् ।
नरकाय न सद्गत्यै कुपुत्रालम्बि यन्मनः
॥
करोति सुहृदां दैन्यमहितानां तथा मुदम् ।
अकाले च जरां पित्रोः कुपुत्रः कुरुते हि वै
॥
मार्कण्डेय उवाच ।
एवं सोऽत्यन्तदुष्टस्य पुत्रस्य चरितैर्मुनिः ।
दह्यमानमनोवृत्तिर्वृद्धं गर्गमपृच्छत ॥
ऋषिरुवाच ।
सुव्रतेन पुरा वेदा गृहीता विधिवन्मया ।
समाप्य वेदान् विधिवत् कृतो दारपरिग्रहः
॥
सदारेण यथा कार्य्याः श्रौताः स्मार्त्तास्तथा
क्रियाः ।
नानुन्यूनाः कृताः काश्चिद्यावदद्य महामुने
॥
गर्भाधानविधानेन न काममनुरुध्यता ।
पुत्रार्थं जनितश्चायं पुन्नाम्नो विभ्यता मुने
॥
सोऽयं किमात्मदोषेण मम दोषेण वा मुने ।
अस्मद्दुःखवहो जातो
दौःशील्याद्बन्धुशोकदः ॥
गर्ग उवाच ।
रेवत्यन्ते मुनिश्रेष्ठ जातोऽयं तनयस्तव ।
तेन दुःखाय ते काले दुष्टे यस्मादजायत ॥
न तेऽपचारो नैवास्य मातुर्नापि कुलस्य ते ।
तस्य दौःशील्यहेतुत्वं रेवत्यन्तमुपागतम् ॥
ऋतवागुवाच
यस्मान्ममैकपुत्रस्य रेवत्यन्तसमुद्भवम् ।

मार्कण्डेय उवाच ।
अनन्तरञ्च मृगयाप्रसङ्गेनागतो मुने ।
तस्याश्रमपदं धीमान् दुर्द्दमः स नराधिपः ॥
प्रियव्रतान्वयभवो महाबलपराक्रमः ।
पुत्रो विक्रमशीलस्य कान्दिनीजठरोद्भवः ॥
स प्रविश्याश्रमपदं तां तन्वीं जगतीपतिः ।
अपश्यमानस्तमृषिं प्रियेत्यामन्त्र्य पृष्टवान् ॥
राजोवाच ।
क्व गतो भगवानस्मादाश्रमान्मुनिपुङ्गवः ।
तं प्रणन्तुमिहेच्छामि तत्त्वं प्रब्रूहि शोभने ॥
मार्कण्डेय उवाच ।
अग्निशालां गतो विप्रस्तच्छ्रुत्वा तस्य भाषि-
तम् ।
प्रियेत्यामन्त्रणञ्चैव निश्चक्राम त्वरान्वितः ॥
स ददर्श महात्मानं राजानं दुर्द्दमं मुनिः ।
नरेन्द्रचिह्नसहितं प्रश्रयावनतं पुरः ॥
तस्मिन् दृष्टे ततः शिष्यमुवाच स तु गोतमम् ।
गोतमानीयतां शीघ्रमर्घोऽस्य जगतां पतेः ॥
एष तावदयं भूपश्चिरकालादुपागतः ।
जामाता च विशेषेण योग्योऽर्घोऽस्य मतं मम ॥
मार्कण्डेय उवाच ।
ततः स चिन्तयामास राजा जामातृकारणम् ।
विवेद न च तन्मौनी जगृहेऽर्घञ्च तं नृपः ॥
तमासनगतं विप्र गृहीतार्घं महामुनिः ।
प्रसृतं प्राह राजेन्द्रमपि ते कुशलं पुरे ॥
कोषे बलेऽथ मित्रेषु भृत्यामात्येषु चेश्वर ।
तथात्मनि महाबाहो यत्र सर्व्वं प्रतिष्ठितम् ॥
पत्नी च ते कुशलिनी यत एवात्र तिष्ठति ।
पृच्छाम्यस्यास्ततो नाहं कुशलिन्योऽपरास्तव
॥
राजोवाच ।
त्वत्प्रसादादकुशलं न क्वचिन्मुनिसत्तम ।
जातकौतूहलश्चास्मि मम भार्य्यात्र का मुने ॥
ऋषिरुवाच ।
रेवती तु महाभागा त्रैलोक्ये सापि सुन्दरी ।
तव भार्य्या वरारोहा मानवेन्द्र न वेत्सि किम् ॥
राजोवाच ।
सुभद्रां शान्ततनयां कावेरीतनयां विभो ।
शूरात्मजां सुजाताञ्च कदम्बाञ्च वरूथजाम् ॥
विपाठां नन्दिनीञ्चैव वेद्मि भार्य्या गृहे हि याः ।
तिष्ठन्ति मे न भगवन् रेवतीं वेद्मि का त्वियम् ॥

प्रियेत्यामन्त्रिता चेयं विचारं कुरुषे कथम् ॥
श्रीमार्कण्डेय उवाच ।
ततश्च सोऽभवन्मौनी तेनोक्तः पृथिवीपतिः ।
ऋषिस्तथोद्यतः कर्त्तुं तस्या वैवाहिकं विधिम्
॥
समुद्यतञ्च पितरं विवाहाय महामुने ।
उवाच कन्या सा किञ्चित् प्रश्रयावनतानना ॥
यदि मे प्रीतिमांस्तात प्रसादं कर्त्तुमिच्छसि ।
रेवत्यृक्षे विवाहं मे तत् करोतु प्रसादितः ॥
ऋषिरुवाच ।
रेवत्यृक्षं न वै भद्रे चन्द्रयोगे दिवि स्थितम् ।
अन्यानि सन्ति ऋक्षाणि सुभ्रु वैवाहिकानि
ते ॥
कन्योवाच ।
तात तेन विना कालो विकलः प्रतिभाति मे ।
विवाहो विकले काले मद्विधायाः कथं भवेत् ॥
ऋषिरुवाच ।
ऋतवागिति विख्यातस्तपस्वी रेवतीं प्रति ।
चकार कोपं क्रोधेन तेनर्क्षं तन्निपातितम् ॥
मया चास्मै प्रतिज्ञाता भार्य्येति मदिरेक्षणे ।
न चेच्छसि विवाहं त्वं संकटं नः समागतम् ॥
कन्योवाच ।
ऋतवाक् स मुनिस्तात किं मे कस्तप्तवांस्तपः
।
न त्वया समता तेन ब्रह्मबन्धोः सुतास्मि किम्
॥
ऋषिरुवाच ।
ब्रह्मबन्धोः सुता न त्वं बाले नैवातपस्विनः ।
सुता त्वं मम यो देवान् कर्त्तुमन्यान् समुत्सहे
॥
कन्योवाच ।
तपस्वी यदि मे तातस्तत् किमृक्षमिदं दिवि ।
समारोप्य विवाहो मे नात्रर्क्षे क्रियते पितः ॥
ऋषिरुवाच ।
एवं भवतु भद्रं ते भद्रे प्रीतिमती भव ।
आरोपयामीन्दुमार्गं रेवत्यृक्षं कृते तव ॥
श्रीमार्कण्डेय उवाच ।
ततस्तपःप्रभावेन रेवत्यृक्षं महामुनिः ।
यथापूर्ब्बं तथा चक्रे सोमयोगे द्विजोत्तमः ॥
विहाहञ्चैव दुहितुर्विधिवन्मन्त्रयोगजम् ।
निष्पाद्य प्रीतिमान् भूयो जामातरमथाब्रवीत् ॥

दौःशील्यमेतत् सा तस्मात् पतताामाशु
रेवती ॥
मार्कण्डेय उवाच ।
तेनैव व्याहृते शापे रेवत्यृक्षं पपात ह ।
पश्यतः सर्व्वलोकस्य विस्मयाविष्टचेतसः
॥
रेवत्यृक्षञ्च पतितं कुमुदाद्रौ समन्ततः ।
भासयामास सहसा वनकन्दरनिर्झरान् ॥
कुमुदाद्रिश्च तत्पातात् ख्यातो
रैवतकोऽभवत् ।
अतीवरम्यः सर्व्वस्यां पृथिव्यां पृथिवीधरः
॥
तस्यर्क्षस्य तु या कान्तिर्जाता
पङ्कजिनीसरः ।
ततो जज्ञे तदा कन्या रूपेणातीव शोभना ॥
रेवतोकान्तिसंभूतां तां दृष्ट्वा प्रमुचो मुनिः ।
तस्या नाम चकारेत्थं रेवतीति हि भागुरे ॥
पोषयामास चैवैनां स्वाश्रमाभ्याससम्भवाम्
।
प्रमुचः स महाभागस्तस्मिन्नेव महाचले ॥
तान्तु यौवनिनीं दृष्ट्वा कन्यकां
रूपशालिनीम् ।
स मुनिश्चिन्तयामास कोऽस्या भर्त्ता
भवेदिति ॥
एवं चिन्तयतः कालो जगाम सुमहात्मनः ।
न चाससाद सदृशं वरं तस्या महामुनिः ॥
ततस्तस्या वरं प्रष्टुमग्निं स प्रमुचो मुनिः ।
विवेश वह्निशालां वै पृष्टस्तं प्राह हव्यभुक् ॥
महाबलो महावीर्य्यः प्रियवाक् धर्म्मवत्सलः
।
दुर्द्दमो नाम भविता भर्त्ता ह्यस्या महीपतिः
॥

ऋषिरुवाच ।
प्रियेति साम्पतं येयं त्वयोक्ता वरवर्णिनी ।
किं विस्मृतं ते भूपाल श्लाघ्येयं गृहिणी तव ॥
राजोवाच ।
सत्यमुक्तं मया किन्तु भावो दुष्टो न मे मुने ।
नात्र कोपं भवान् कर्त्तुमर्हत्यस्मासु याचितः ॥
ऋषिरुवाच ।
सत्यं ब्रवीषि भूपाल न भावस्तव दूषितः ।
व्याजहार भवानेवं वह्निना नृप नोदितः ॥
मया पृष्टो हुतवहः कोऽस्या भर्त्तेति पार्थिव ।
भविता तेन चाप्युक्तो भवानेवाद्य चागतः ॥
तद्गृह्यतां मया दत्ता कन्या तुभ्यं नराधिप ।

ऋषिरुवाच ।
औद्वाहिकं ते भूपाल कथ्यतां किं ददाम्यहम् ।
दुर्लभ्यमपि दास्यामि ममाप्रतिहतं तपः ॥
राजोवाच
मनोः स्वायम्भुवस्याहमुत्पपन्नः सन्ततौ मुने ।
मन्वन्तराधिपं पुत्रं त्वत्प्रसादाद्वृणोम्यहम् ॥
मुनिरुवाच ।
भविष्यत्येष ते कामो मनुस्तत्तनयो महान् ।
सकलां भोक्ष्यते भूमिं धर्म्मविच्च भविष्यति ॥
श्रीमार्कण्डेय उवाच ।
तामादाय ततो भूपस्तदैव नगरं ययौ ।
तस्याञ्चाजायत सुतो रेवत्यां रैवतो मनुः ॥
समेतः सकलैधर्म्मैर्मानवैरपराजितः ।
विज्ञाताखिलशास्त्रार्थो वेदविद्यार्थशास्त्रवित्
॥”
इति मार्कण्डेयपुराणे रैवतमन्वन्तरं समाप्तम् ॥

(गौः । इति निघण्टुटीकायां देवराजयज्वा । १ । १० । १६ ॥)

**रेवतीभवः**, पुं, (रेवत्यां भव उत्पत्तिर्य्यस्य ।) शनैश्चरः । इति हेमचन्द्रः । २ । ३४ ॥ (रैवत-मनुः । इति मार्कण्डेयपुराणम् ॥)

**रेवतीरमणः**, पुं, (रेवत्या रमणः पतिः ।) बल-देवः । इत्यमरः । १ । १ । २४ ॥

**रेवतीशः**, पुं, (रेवत्या ईशः ।) बलरामः । इति हेमचन्द्रः । २ । १३८ ॥

**रेवन्तः**, पुं, सूर्य्यपुत्त्रविशेषः । स च गुह्यकाधि-पतिः । तस्योत्पत्तिर्यथा, --
"ततोऽसौ योगमास्थाय स्वां भार्य्यां वडवां रविः ।
ददश नियमस्थान्तामश्वरूपमथाकरोत्॥
मैथुनायोपचक्राम सूर्य्योऽसौ च त्वरान्वितः ।
नेच्छन्ती तेन संयोगं परपुंसोऽभिशङ्कया ॥
संग्रहात् संमुखी तजो मुखनासिकया रवेः ।
देवौ यतः प्रजायेतामश्विनौ भिषजां वरौ ।
नासत्यौ द्वौ तृतीयश्च रेवन्तोऽश्वप्रवाहकः ॥"
इति वह्निपुराणम् ॥
अपि च ।
"ततोऽश्वरूपधृक् भानुरुत्तरानगमत् कुरून् ।
ददृशे तत्र संज्ञान्तु वडवारूपधारिणीम् ॥
सा च दृष्ट्वा तमायान्तं परपुंसोऽभिशङ्कया ।
जगाम संमुखं तस्य पृष्ठरक्षणतत्परा ॥
ततश्च नासिकायोगे तयोस्तत्र समेतयोः ।
नासत्यदसौ तनयावश्ववक्त्राद्विनिर्गतौ ॥
रेतसोऽन्ते च रेवन्तः खड्गी धन्वी तनुत्रधृक् ।
अश्वारूढः समुत्पन्नो वाणतूणसमन्वितः ॥
ततः स्वं रूपममलं दर्शयामास भानुमान् ।
तस्यै सा च समालोक्य स्वरूपं मुदमाददे ॥
स्वरूपधारिणीञ्चेमामानिनायनिजाश्रमम् ।
संज्ञां भार्य्यां प्रीतिमतीं भास्करो वारितस्करः ॥
ततः पूर्ब्बसुतो योऽस्याः सोऽभूद्वैवस्वतो मनुः ।
अध्यायः ॥ * ॥ कोजागरपूर्णिमारात्रौ द्वारो-पान्ते तस्य पूजाविधिर्यथा, --
"द्वारोपान्ते सुदीप्तस्तु संपूज्यो हव्यवाहनः ।
यवाक्षतघृतोपेतैस्तण्डुलैश्च सुतर्पितः ॥
संपूजितव्यः पूर्णेन्दुः पयसा पायसेन च ।
स्कन्दः सभार्य्यो रुद्रश्च तथा नन्दीश्वरो मुनिः ॥
गोमद्भिः सुरभिः पूज्या छागवद्भिर्हुताशनः ।
उरभ्रवद्भिर्व्वरुणो गजवद्भिर्व्विनायकः ।
पूज्यः साश्वैश्च रेवन्तो यथाविभवविस्तरैः ॥"
इति तिथ्यादितत्त्वम् ॥
(रेवन्तदर्शनेन लक्ष्मीं प्रति नारायणस्य शाप-वृत्तान्तं देवीभागवते ६ स्कन्धे १७ अध्याये द्रष्टव्यम् ॥)

**रेवन्तमनुसूः**, स्त्री, (रेवन्तं मनुञ्च सूते इति । सू + क्विप् ।) संज्ञा । इति त्रिकाण्डशेषः ॥

**रेवा**, स्त्री, (रेवते उत्प्लुत्य गच्छतीति । रेव + अच् । टाप् ।) नर्म्मदा नदी । इत्यमरः । १ । १० । ३२ ॥ (यथा, मेवदूते । २० ।
"रेवां द्रक्ष्यस्युपलविषमे बिन्ध्यपादे विशीर्णाम् ॥")
अस्यां शिवलिङ्गोत्पत्तिर्यथा, --
"रेवया च कृतं पूर्ब्बं तपः शिवसुतुष्टिदम् ।
मम त्वत्सदृशः पुत्त्रो भूयादिति विधो तथा ॥
अहं कस्यापि न सुतः किं करिष्यामि चिन्त-यन् ।
रेवायास्तु वरो देयस्त्ववश्यं मृगलाञ्छन ॥
निश्चित्यैवं तदा प्रोक्तं प्रसन्नेनान्तरात्मना ।
लिङ्गरूपेण ते देवि ! गजाननपुरस्कृतः ।
गर्भे तव वसिष्यामि पुत्त्रो भूत्वा शिवप्रिये ! ॥
प्रदक्षिणं गिरेः कृत्वा प्रययौ द्वारकां प्रति ॥
तामभिद्रुत्य कौन्तेयः प्रसह्यारोपयद्रथम् ।
सुभद्रां चारुसर्व्वाङ्गीं कामबाणप्रपीडितः ॥
ततः स पुरुषव्याघ्रस्तामादाय शुचिस्मिताम् ।
रथेन काञ्चनाङ्गेन प्रययौ स्वपुरं प्रति ॥")
शङ्करः । इति मेदिनी । ते ४५ ॥ दैत्यविशेषः । इति धरणिः ॥ (स तु बालग्रहाणामन्यतमः । यथा, महाभारते । ३ । २२९ । २९ ।
"अदितिं रेवतीं प्राहुर्ग्रहस्तस्यास्तु रैवतः ।
सोऽपि बालान् महाघोरो वाघते वै महा-ग्रहः ॥"
रेवत्यां भवः । रेवती + अण् ।) वर्त्तमान-कल्पीयः पञ्चमो मनुः । स तु रेवतीगर्भे दुर्दम-राजपुत्त्रः । अस्मिन् मन्वन्तरे विकुण्ठोऽव-तारः । विभुरिन्द्रः । भूतरयादयो देवाः । हिरण्यरोमादयः सप्तर्षयः । बलिबिन्धादय-स्तन्मनुसुताः । इति श्रीभागवतम् ॥ तद्विवरणं यथा, --
"पञ्चमस्य मनोस्तद्वत् रैवतस्यान्तर शृणु ।
देववाहुः सुबाहुश्च पर्य्यण्यः सोमपो मुनिः ॥
हिरण्यरोमा सप्ताश्वः सप्तैते ऋषयः स्मृताः ।
देवाश्चाभूतरजसस्तथा प्रकृतयः स्मृताः ॥
अरुणस्तत्त्वदर्शी च वित्तवान् हव्यपः कपिः ।
मुक्तो निरुत्सुकः सत्वो निर्म्मोहोऽथ प्रकाशकः ।
धर्म्मवीर्य्यबलोपेता दशैते रैवतात्मजाः ॥
भृगुः सुधामा विरजः सहिष्णुर्नाद एव च ।
विवस्वानतिनामा च षष्टिसप्तर्षयोऽपरे ॥"
इति मात्स्ये ९ अध्यायः ॥ * ॥ मार्कण्डेयपुराणोक्तरैवतमनुविवरणन्तु रेवती-शब्दे द्रष्टव्यम् ॥ (रुद्राणामन्यतमः । यथा, मात्स्ये । ५ । २९ ।
"अजैकपादहिब्रघ्नो विरूपाक्षोऽथ रैवतः ॥"
मेघः । इति निघण्टुः । १ । १० ॥
"रेवत्यो गावः 'पशवो वै रेवतीः ।' इति श्रुतेः 'तस्येदम् ।' ४ । ३ । १२० । इत्यण् । मेघो हि सर्व्वत्र वर्षति यवसं पानीयं च जनयित्वा तदीयो भवति पर्व्वतस्तद्वत्तया । यद्वा, रयि-रस्यास्तीति मतुपि 'रयेर्म्मतौ बहुलम् ।' ६ । १ । ३४ । इति सम्प्रसारणम् । 'संज्ञायाम् ।' ८ ।

द्वितीयश्च यमः शापाद्धर्म्मदृष्टिरभूत् सुतः ॥
कृमयो मांसमादाय पादतस्ते महीतलम् ।
पतिष्यन्तीति शापान्तं तस्य चक्रे पिता स्वयम् ॥
धर्म्मदृष्टिर्यतश्चासौ समो मित्रे तथाहिते ।
ततो नियोगं तं याम्ये चकार तिमिरापहः ॥
यमुना च नदी जज्ञे कलिन्दान्तरवाहिनी ।
अश्विनौ देवभिषजौ कृतौ पित्रा महात्मना ।
गुह्यकाधिपतित्वे च रेवन्तो विनियोजितः ॥"
इति मार्कण्डेयपुराणे वैवस्वतमन्वन्तरे ॥ * ॥
सप्तदिनकर्त्तव्यनीराजनविधौरेवन्तस्य राज-
कर्त्तृकपूजाविधिर्य्यथा, --
"सप्तमे हि तु रेवन्तं पूजयेत्तोरणान्तरे ।
सूर्य्यपुत्रं महाबाहुं द्विभुजं कवचोज्ज्वलम् ॥
ज्वलभ्तं शुक्लवस्त्रेण केशान् वितत्य वाससा ।
कशां वामकरे बिभ्रद्दक्षिणे तु करे पुनः ।
खड्गं न्यस्य महातीक्ष्णं
सितसैन्धवसंस्थितम् ॥
एवंविधन्तु रेवन्तं प्रतिमायां घटेऽपि वा ।
सूर्य्यपूजाविधानेन पूजयेत्तोरणान्तरे ॥"
इति कालिकापुराणे नीराजनविधिः ८६

मम त्वमपरा मूर्त्तिः ख्याता जलमयी शिवा ।
शिवशक्तिविभेदेन चावामेकत्र संस्थितौ ॥
एवं दत्तवरा रेवा मत्सान्निध्यमिहागता ।
रेवाखण्डमिति ख्यातं ततः प्रभृति गोपते ॥"
इति वाराहे सोमेश्वरादिलिङ्गमहिमाध्यायः ॥
रतिः । सा च कामपत्नी । नीलीवृक्षः । इति मेदिनी । वे, २१ ॥ दुर्गा । यथा, --
"रेवा तु नर्म्मदा देवी नदी वा रेवती मता ।
अतिखण्डनबन्धा वा लोके देवी प्रकीर्त्तिता ॥"
इति देवीपुराणे ४५ अध्यायः ॥

**रेष**, ऋ ङ ह्रेषायाम् । इति कविकल्पद्रुमः ॥

(भ्वा०-आत्म०-अक०-सेट् ।) ह्रेषा धोटक-
कर्त्तृकशब्दः । ऋ, अरिरेषत् । ङ, रेषते रिरेषे-
ऽश्वः । इति दुर्गादासः ॥

**रै**, शब्दे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

अक०-अनिट् ।) रेफादिः । रावति । इति दुर्गादासः ॥

**रैवतः**, पुं, स्वर्णालुवृक्षः । (यथा, गारुडे २०८ अः ।

"चतुरङ्गुलसम्पाको व्याधिघाताभिसंज्ञकः ।
विद्यादारग्वधं राजवृक्षं रैवतसंज्ञकम् ॥")
शैलभेदः । (अत्रैवार्ज्जुनः सुभद्रां हृतवान् ।
यथा, महाभारते । २२१ । ६ -- ८ ।
"सुभद्रा त्वथ शैलेन्द्रमभ्यर्च्च्यैव हि रैवतम् ।
दैवतानि च सर्व्वाणि ब्राह्मणान् स्वस्ति वाच्य च ॥

२ । ११ । इति वत्वम् । सर्व्वस्य धनस्येशितृ-
त्वात् रेवान् इन्द्रः मघवेति हि तस्य नाम
तदीयो रैवतः पूर्ब्बवत् तदीयत्वं द्रष्टव्यम् ॥"
इति तत्र देवराजयज्वा ॥ * ॥ सोमलता-
विशेषः । यथा, सुश्रुते । ४ । २९ ।
"अग्निष्टोमो रैवतश्च यथोक्त इति संज्ञितः ॥"
ऋषिविशेषः । यथा, महाभारते । २ । ५ । ११ ।
"नारदः सुमहातेजा ऋषिभिः सहितस्तदा ।
पारिजातेन राजेन्द्र रैवतेन च धीमता ॥"
घनवति, त्रि । यथा, ऋग्वेदे । ५ । ६० । ४ ।
"वरा इवेद्रैवतासो हिरण्यै-
रभिस्वधाभिस्तन्वः पिपिश्रे ।"
"वैरतासो धनवन्तः ।" इति तद्भाष्ये सायणः ॥)

**रैवतकं**, क्ली, (रेवतकमेव । स्वार्थे अण् ।) पारे

वतवृक्षः । इति राजनिर्घण्टः ॥ (पारेवत-
शब्देऽस्य गुणादिकं ज्ञेयम् ॥)

**रैवतकः**, पुं, (रैवत एव । स्वार्थे कन् ।) रैवत-

पर्व्वतः । तत्पर्य्यायः । उज्जयन्तः २ । इति
हेमचन्द्रः ॥ (यथा, महाभारते । १ । २२० ।
१ ।
"ततः कतिपयाहस्य तस्मिन् रैवतके गिरौ ।
वृष्ण्यन्धकानामभवत्सवो नृपसत्तम ! ॥")
तस्य नामकारणं रेवतीशब्दे द्रष्टव्यम् ॥

**रैवतिकः**, त्रि, (रेवती + "रेवत्यादिभ्यष्ठक् ।"

४ । १ । १४६ । इति ठक् ।) रेवत्या अपत्यम्
।
इति मुग्धबोधव्याकरणम् ॥

**रोकं**, क्ली, (रोचतेऽत्रेति । रुच् + घञ् । न्यङ्क्वा-

दित्वात् कुत्वम् ।) छिद्रम् । इत्यमरः । १ । ८
। २ ॥
नौका । चलम् । इति मेदिनी ॥ के, ३२ ॥

**रोकः**, पुं, (रुच् + घञ् ।) क्रयभेदः । दीप्तिः ।

इति मेदिनी । के, ३१ ॥ (यथा, ऋग्वेदे । ३ ।
६ । ७ ।
"दिवश्चिदाते रुचयन्त रोकाः ।"
"ते रोकास्त्वदीया दीप्तयः ।" इति तद्भाष्ये
सायणः ॥")

**रोगः**, पुं, (रुज्यतेऽनेनेति । रोजनमिति वा ।

रुज + घञ् । यद्वा, रुजतीति । रुज् + "पद-
रुजविशस्पृशो घञ् ।" ३ । ३ । १६ । इति
कर्त्तरि
घञ् ।) कुष्ठौषधम् । इति मेदिनी । गे, २३ ॥
देहभङ्गकारकः । तत्पर्य्यायः । रुक् २ रुजा ३
उपतापः ४ व्याधिः ५ गदः ६ आमयः ७ ।
इत्यमरः । २ । ६ । ५१ ॥ अपाटवः ८ आमः
९
आतङ्कः १० भयः ११ उपघातः १२ भङ्गः
१३
अर्त्तिः १४ तमोविकारः १५ ग्रानिः १६ क्षयः
१७ अनार्ज्जवः १८ मृत्युभृत्यः १९ । इति
राज-

निवृत्तिरामयस्यासौ संप्राप्तिर्जातिरागतिः ।
संख्याविकल्पप्राधान्यबलकालविशेषतः ॥
स भिद्यते यथात्रैव संख्यन्तेऽष्टौ ज्वरा इति ।
दोषाणां समवेतानां विकल्पांशांशकल्पना ॥
स्वातन्त्र्यपारतन्त्र्याभ्यांव्याधेः प्राधान्यमादिशेत्
।
हेत्वादिकात्स्न्र्यावयवैर्ब्बलाबलविशेषणम् ॥
नक्तं दिनर्त्तुभुक्तांशैर्व्याधिकालो यथा मलम् ।
इति प्रोक्तो निदानार्थः स व्यासेनोपदेक्ष्यते ।
सर्व्वेषामेव रोगाणां निदानं कुपिता मलाः ॥
तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम् ।
अहितस्त्रिविधो योगस्त्रयाणां प्रागुदाहृतः ॥
तिक्तोषणकषायाम्लरूक्षाप्रमितभोजनैः ।
धावनोदीरणनिशाजागरात्युच्चभाषणैः ॥
क्रियाभियोगभीशोकचिन्ताव्यायाममैथुनैः ।
ग्रीष्माहोरात्रभुक्तान्ते प्रकुप्यति समीरणः ॥
पित्तं कट्वम्लतीक्ष्णोष्णकटुक्रोधविदाहिभिः ।
शरन्मध्याह्नरात्र्यर्द्धविदाहसमयेषु च ॥
स्वाद्वम्ललवणस्निग्धगुर्व्वभिष्यन्दिशीतलैः ।
आस्यास्वप्नसुखाजीवदिवास्वप्नादिकृगुणैः ॥
प्रच्छर्दनाद्ययोगेन भुक्तमात्रवसन्तयोः ।
पूर्व्वाह्णे पूर्व्वरात्रे च श्लेष्मा वक्ष्यामि शङ्करान् ॥
मिश्रीभावात् समस्तानां सन्निपातस्तथा पुनः ।
सङ्कीर्णाजीर्णविषमविरुद्धाध्यशनादिभिः ॥
व्यापन्नमद्यपानीयशुष्कशाकाममूलकैः ।
पिण्याकमृत्यवसरापूतिशुष्ककृशामिषैः ॥
दोषत्रयकरैस्तैस्तैस्तथान्नपरिवर्त्ततः ।
ऋतोर्दुष्टात् पुरोवातात् विग्रहावेशविप्लवात् ॥
दुष्टामान्नैरतिश्लेष्मग्रहैर्जन्मर्क्षपीडनात् ।
मिथ्यायोगाच्च विविधात् पापानाञ्च निषेव-
वणात् ॥
स्त्रीणां प्रसववैषम्यात्तथा मिथ्योपचारतः ।
प्रतिरोगमिति क्रुद्धा रोगविध्यनुगामिनः ।
रसायनीं प्रपद्याशु दोषा देहे विकुर्व्वते ॥"
इति गारुडे सर्व्वरोगनिदानं १५१ अध्यायः ॥
रोगविशेषाणां औषधानि गारुडे १८९ । १९० ।
१९१ । १९२ । १९३ । १९४ । १९५ । १९६
।
१९७ । १९८ । १९९ अध्यायेषु द्रष्टव्यानि ॥
सर्व्वरोगहरवैष्णवकवचञ्च तत्रैव २०० अध्याये
द्रष्टव्यम् ॥ * ॥ अपि च ।

एषां भेदप्रभेदेन चतुःषष्टिरुजः स्मृताः ॥
मृत्युकन्यासुताश्चेते जरा तस्याश्च
कन्यका ।
जरा च भ्रातृभिः सार्द्धं शश्वद्भ्रमति
भूतलम् ॥
एते चोपायवेत्तारं न गच्छन्ति च संयुतम्
।
पलायन्ते च तं दृष्ट्वा वैनतेयमिवोरगाः ॥
* ॥
चक्षुर्जलञ्च व्यायामः पादाधस्तैलसेवनम्
।
कर्णतैलं मूर्द्ध्नितैलं
जराव्याधिविनाशकम् ॥
वसन्ते भ्रमणं वह्निसेवास्वप्नं करोति यः
।
बालाञ्च सेवते काले जरा तं नोपगच्छति
॥
खातशीतोदकस्नायी सेवते चन्दनद्रवम्
।
नोपयाति जरा तञ्च
निदाघेऽनिलसेविनम् ॥
प्रावृड्डुष्णोदकस्नायी घनतोयं न सेवते ।
समये च समाहारी जरा तं नोपगच्छति
॥
शरद्रौद्रं न गृह्णाति भ्रमणं तत्र वर्जयेत् ।
खातस्नायी समाहारी जरा तं
नोपतिष्ठति ॥
खातस्नायी च हेमन्ते काले वह्निं
निषेवते ।
भुङ्क्ते नवान्नमुष्णञ्च जरा तं
नोपगच्छति ॥
शिशिरेऽंशुकवह्निञ्च नवोष्णान्नञ्च सेवते ।
य एवोष्णोदकस्नायी जरा तं
नोपगच्छति ॥
सद्योमांसं नवान्नञ्च बाला स्त्री
क्षीरभोजनम् ।
घृतञ्च सेवते यो हि जरा तं नोपगच्छति
॥
भुङ्क्ते सदन्नं क्षुत्काले तृष्णायां पीयते
जलम् ।

निर्घण्टः ॥ अमः २० । इति जटाधरः ॥
मान्द्यम्
२१ आकल्पम् २२ । इति हेमचन्द्रः ॥ * ॥
अस्य निदानादिर्यथा, --
धन्वन्तरिरुवाच ।
"सर्व्वरोगनिदानञ्च वक्ष्ये सुश्रुत तत्त्वतः ।
आत्रेयाद्यैर्मुनिवरैर्यथापूर्व्वमुदीरितम् ॥
रोगः पाप्मा ज्वरो व्याधिर्विकारो दुष्टमामयः ।
यक्ष्मातङ्कगदावाधाः शब्दाः पर्य्यायवादिनः ॥
निदानं पूर्व्वरूपाणि रूपाण्युपशयस्तथा ।
संप्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम् ॥
निमित्तहेत्वायतनप्रत्ययोत्थानकारणैः ।
निदानमाहुः पर्य्यायैः प्राग्रूपं येन लक्ष्यते ।
उत्पित्सुरामयो दोषविशेषेणानधिष्ठितः ॥
लिङ्गमव्यक्तमल्पत्वात्व्याधीनां तद्यथातथम् ।
तदेव व्यक्ततां यातं रूपमित्यभिधीयते ॥
संस्थानं व्यञ्जनं लिङ्गं लक्षणं चिह्नमाकृतिः ।
हेतुव्याधिविप्रर्य्यस्तं विपर्य्यस्तार्थकारिणाम् ॥
औषधान्नविहाराणां उपयोगं सुखावहम् ।
विद्यादुपशयं व्याधेः स हि सात्म्यमिति स्मृतः ॥
विपरीतोऽनुपशयो व्याधिसात्म्याभिसंज्ञितः ।
यथा दुष्टेन दोषेण तथा चात्मविसर्पता ॥

"जनकः सर्व्वरोगाणां दुर्व्वारो दारुणो ज्वरः ।
शिवभक्तश्च योगी च स एव विकृताकृतिः ॥
भीमस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचनः ।
भस्मप्रहरणो रौद्रः कालान्तकयमोपमः ॥
मन्दाग्निस्तस्य जनको मन्दाग्नेर्जनकास्त्रयः ।
पित्तश्लेष्मसमीराश्च प्राणिनां दुःखदायकाः ॥
वायुजः पित्तजश्चैव श्लेष्मजश्च तथैव च ।
ज्वरभेदाश्च त्रिविधाश्चतुर्थश्च त्रिदोषजः ॥
पाण्डुकः कामलः कुष्ठः शोथः प्लीहा च शूलकः ।
ज्वरातिसारग्रहणीकाशव्रणहलीमकाः॥
मूत्रकृच्छ्रश्च गुल्मश्च रक्तदोषविकारकः ।
आरिशो मेहजः कुब्जो गोदश्च गलगण्डकः ॥
भ्रमरी सन्निपातश्च विसूची दारुणी सति ।

नित्यं भुङ्क्ते च ताम्बूलं जरा तं नोपग्च्छति ॥
दधि हैयङ्गवीनञ्च नवनीतं तथा शुभम् ।
नित्यं भुङ्क्ते संयमी यो जरा तं नैव गच्छति ॥
शुष्कमांसं स्त्रियो वृद्धा बालार्कं तरुणं दधि ।
संसेवन्तं जरा याति प्रहृष्टा भ्रातृभिः सह ॥
रात्रौ ये दधि सेवन्ते पुंश्चलीञ्च रजस्वलाम् ।
तमुपैति जरा हृष्टा भ्रातृभिः सह सुन्दरि ! ॥
रजस्वला च कुलटा चावीरा जारदूतिका ।
शूद्रयाजकपत्नी या ऋतुहीना च या सति ! ॥
यो हि तासामन्नभोजी ब्रह्महत्यां लभेत्तु सः ।
तेन पापेन सार्द्धं सा जरा तमुपगच्छति ॥
पापानां व्याधिभिः सार्द्धं मित्रता सन्ततं ध्रुवम् ।
पापं व्याधिजराबीजं विघ्नबीजञ्च निश्चितम् ॥
पापेन जायते व्याधिः पापेन जायते जरा ।
पापेन जायते दैन्यं दुःखं शोकं भयं कलिः ॥
तस्मात् पापं महावैरं दोषबीजममङ्गलम् ।
भारते सन्ततं सन्तो नाचरन्ति भयातुराः ॥
स्वधर्म्माचारयुक्तञ्च दीक्षितं हरिसेवकम् ।
गुरुदेवातिथीनाञ्च भक्तं सक्तं तपःसु च ॥
व्रतोपवासयुक्तञ्च सदा तीर्थनिषेविणम् ।
पापा द्रवन्ति तं दृष्ट्वा वैनतेयमिवोरगाः ॥
एतान् जरा न सेवेत व्याधिसङ्घश्च दुर्ज्जयः ।
सर्व्वं बोध्यमसमये काले सर्व्वं ग्रहीष्यति ॥ * ॥

| | | |
|---|---|---|
| | | ज्वरश्च सर्व्वरोगाणां जनकः कथितः सति ।<br>पित्तश्लेष्मसमीराश्च ज्वरस्य जनकास्त्रयः ॥<br>एते यथा सञ्चरन्ति स्वयं यान्ति च देहिषु ।<br>तमेव विविधोपायं साध्वि मत्तो निशामय ॥<br>क्षुधि जाज्वल्यमानायामाहाराभावएव च ।<br>प्राणिनां जायते पित्तं चक्रे च मणिपूरके ॥<br>तालं विल्वफलं भुक्त्वा जलपानञ्च तत्क्षणम् । |

तदेव तु भवेत् पित्तं सद्यःप्राणहरं परम् ॥
तप्तोदकञ्च शरदि भाद्रे तिक्तं विशेषतः ।
दैवग्रस्तश्च यो भुङ्क्ते पित्तं तस्य प्रजायते ॥
सशर्करञ्च धन्याकं पिष्टं शीतोदकान्वितम् ।
चणकं सर्व्वगव्यञ्च दधितक्रविवर्ज्जितम् ॥
विल्वतालफलं पक्वं सर्व्वमक्षारमेव च ॥
आर्द्रकं मुद्गयूषञ्च तिलपिष्टं सशर्करम् ॥”
अक्षारस्थाने ऐक्षवमिति च पाठः ।
“पित्तक्षयकरं सद्यो वलपुष्टिप्रदं परम् ।
पित्तनाशञ्च तद्वीजमुक्तमन्यं निबोध मे ॥
भोजनानन्तरं स्नानं जलपानं विना तृषा ।
तिलतैलं स्निग्धतैलं स्निग्धमामलकीद्रवम् ॥
पर्य्युषितान्नं तक्रञ्च पक्वरम्भाफलं दधि ।
छायाम्बुशर्करातोयं सुस्निग्धस्थलसेवनम् ॥
नारिकेलोदकं रूक्षस्नानं पर्य्युषितं जलम् ।
तरुमुञ्जपक्वफलं सुपक्वकर्क्कटीफलम् ॥
खातस्नानञ्च तर्षासु मूलकं श्लेष्मकारणम् ।
ब्रह्मरन्ध्रे च तज्जन्म महद्वीर्य्यविनाशनम् ॥
वह्निस्वेदं भृष्टिभङ्गं पक्वतैलं विशोषकम् ।
भ्रमणं शुष्कभक्षञ्च शुष्कपक्वहरीतकी ॥
पिण्डारकमपक्वञ्च रम्भाफलमपक्वकम् ।
वेशवारसिन्धुवारमनाहारमपानकम् ॥
सघृतं रोचनाचूर्णं सघृतं शुष्कशर्करम् ।
मरीचं पिप्पलीशुष्कमार्द्रकं जीरकं मधु ॥
द्रव्याण्येतानि गन्धर्व्वि सद्यः श्लेष्महराणि च ।
बलपुष्टिकराण्येव वायुबीजं निशामय ॥
भीजनानन्तरं सद्यो गमनं धावनं तथा ।
छेदनं वह्नितापश्च शश्वद्भ्रमणमैथुनम् ॥
वृद्धस्त्रीगमनञ्चैव मनःसन्ताप एव च ।
अतिरूक्षमनाहारं युद्धं कलहमेव च ॥
कटुवाक्यं भयं शोकः केवलं वायुकारणम् ।
आज्ञाख्यचक्रे तज्जन्म निशामय तदौषधम् ॥
पक्वरम्भाफलञ्चैव सबीजं सर्करोदकम् ।
नारिकेलोदकञ्चैव सद्यस्तक्रं सुमिष्टकम् ॥
माहिषं दधि मिष्टञ्च केवलं वा सशर्करम् ।
सद्यःपर्य्युषितान्नञ्च सौवीरं शीतलोदकम् ॥
पक्वतैलविशेषश्च तिलतैलञ्च केवलम् ।
लाङ्गलीतालखर्ज्जूरमुस्तमामलकीद्रवम् ॥
शीतलोष्णोदकस्नानं सुस्निग्धचन्दनद्रवम् ।
स्निग्धपद्मपत्रतल्पं सुस्निग्धव्यजनानिलः ॥
एतत्ते कथितं वत्से ! सद्यो वातप्रणाशनम् । * ।

ते च स्वाभाविकाः केचित् केचिदागन्तवः
स्मृताः ।
मानसाः केचिदाख्याताः कथिताः केऽपि
कायिकाः ॥”
तत्र स्वाभाविकाः शरीरस्वभावाद्धे जाताः ।
क्षुत्पिपासासुषुप्साजागरामृत्युप्रभृतयः ॥ अथवा
स्वस्य भावादुत्पत्तेर्जाताः स्वाभाविकाः सहजा
इति यावत् । ते च जन्मान्धादयः । आग-
न्तवोऽभिघातादिजनिताः । अथवा जन्मोत्तर-
भाविनः । मानसाः कामक्रोधलोभमोहभया-
भिमानदैन्यपैशुन्यविषादेर्षासूयामात्सर्य्यप्रभृ-
तयः । अथवा उन्मादापस्मारमूर्च्छाभ्रमतमः-
सन्न्यासप्रभृतयः । कायिकाः पाण्डुरोगप्रभृतयः ॥
“कर्म्मजाः कथिताः केचिद्दोषजाः सन्ति चापरे ।
कर्म्मदोषोद्भवाश्चान्ये व्याधयस्त्रिविधाः स्मृताः ॥”
तत्र कर्म्मजा व्याधयः । यत् प्राक्तनं दुष्कर्म्म-
प्रबलं व्याधिरूपं केवलं भोगनाश्यं प्रायश्चित्त-
नाश्यं वा ततो जाताः न तु दुष्टवातादिदोषेण
जनिताः । तथा ।
“यथाशास्त्रन्तु निर्णीता यथाव्याधि चिकित्-
सिताः ।
न शमं यान्ति ये रोगास्ते ज्ञेयाः कर्म्मजा बुधैः ॥”
दोषजाः मिथ्याहारविहारप्रकुपितवातपित्त-
कफजाः ॥ * ॥ ननु मिथ्याहारविहारिणामपि
प्राक्तनसुकृतेन नैरुज्यं दृश्यत एव ततो दोषजे-
ष्वपि प्राक्तनकर्म्मैव कारणं तत् कथं दोषजा
इति । उच्यते । दोषजेष्वपि वस्तुत आदिकारणं
दुष्कर्म्म वर्त्तत एव किन्तु तत्र मिथ्याहार-
विहारभूषिता दोषा हेतवो दृश्यत इति दोषजा
इत्युच्यत इति समाधिः ॥ * ॥ कर्म्मदोषोद्भवाः ।
“स्वल्पदोषो गरीयांसस्ते ज्ञेयाः कर्म्मदोषजाः ।”
अत्र कारणं दुष्कर्म्मप्रबलं यतो दोषाल्पत्वेऽपि
व्याधेर्गरीयस्त्वं तत्कर्म्मक्षयादेव क्षीणं भवति ।
दोषास्तु स्वल्पा अपि निदानत्वेनोक्ता दृश्यन्त
एवेति । दोषाणां कारणन्तु मन्यत इति कर्म्म-
दोषोद्भवाः ।
“कर्म्मक्षयात् कर्म्मकृता दोषजाः स्वस्वभेषजैः ।
कर्म्मदोषोद्भवा यान्ति कर्म्मदोषक्षयात् क्षयम् ॥”
दोषजाः स्वस्वभेषजैरिति दोषजेष्वादिकारणं
दुष्कर्म्म तद्वेषजार्थद्रव्यक्षयादिजनितदुःखभोगेन
कटुतिक्तकषायाद्यहृद्यभक्षणादिजनितदुखभो-

घ्नन्ति प्राणानसाध्यास्तु
नराणामक्रियावताम् ॥”
अक्रियावतां चिकित्सारहितानाम् ॥
* ॥
अथोपद्रवलक्षणम् ।
“रोगारम्भकदोषस्य
प्रकोपादुपजायते ।
योऽन्यो विकारः स बुधैरुपद्रव
इहोदितः ॥”
अथारिष्टस्य लक्षणमाह ।
“रोगिणो मरणं यस्मादवश्यम्भावि
लक्ष्यते ।
तल्लक्षणमरिष्टं स्यादिष्टञ्चापि तदुच्यते
॥”
अथ रोगस्य चिकित्सालक्षणमाह ।
“या क्रिया व्याधिहरणी सा
चिकित्सा निग-
द्यते ।
दोषधातुमलानां या साम्यकृत् सैव
रोगहृत् ॥”
क्रियात्र कर्म्म । व्याधिर्ह्रियतेऽनयेति
व्याधि-
हरणी । करणाधिकरणयोश्चेति
सूत्रेण करणार्थे
ल्युट् । तथा च ।
“याभिः क्रियाभिर्जायन्ते शरीरे
धातवः समाः ।
सा चिकित्सा विकाराणां कर्म्म
तद्भिषजां
मतम् ॥
या ह्युदीर्णं शमयति नान्यं व्याधिं
करोति च ।
सा क्रिया न तु या व्याधिं
हरत्यन्यमुदीरयेत् ॥”
क्रियात्र चिकित्सा । तथा चामरसिंहः
।
“आरम्भो निष्कृतिः शिक्षा पूजनं
संप्रधारणम् ।
उपायः कर्म्म चेष्टा च चिकित्सा च
नव क्रियाः ॥”
इति ॥ * ॥

वायवस्त्रिविधाः पुंसां क्लेशसन्तापकामजाः ॥
व्याधिसंघश्च कथितस्तन्त्राणि विविधानि च ।
तानि व्याधिप्रणाशाय कृताति सद्भिरेव च ॥
तन्त्राण्येतानि सर्व्वाणि व्याधिक्षयकराणि च ।
रसायनादयो येषु चोपायश्च सुदुर्ल्लभः ॥
न शक्तः कथितुं साध्वि याथार्थ्यं वत्सरेण च ।
तेषाञ्च सर्व्वतन्त्राणां कृतार्थानां विचक्षणैः ॥"
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १६ अध्यायः ॥
अथ व्याधिलक्षणम् । तत्र वाग्भटः ।
"रोगस्तु दोषवैषम्यं दोषशाम्यमरोगता ।
रोगा दुःखस्य दातारो ज्वरप्रमृतयो हि ते ॥

गेन च क्षयं याति । शेषादृष्टहेतवो दोषास्ते
स्वस्वभेषजैः क्षयं यान्तीत्यर्थः ।
"साध्या याप्या असाध्याश्च व्याधयस्त्रिविधाः
स्मृताः ।
सुखसाध्यः कष्टसाध्यो द्विविधः साध्य उच्यते ॥"
याप्यलक्षणमाह ।
"यापनीयन्तु तं विद्यात् क्रियां धारयते हि तम् ।
क्रियायान्तु निवृत्तायां सद्यो यश्च विनश्यति ॥
प्राप्ता क्रिया धारयति सुखिनं प्राप्यमातुरम् ।
प्रप्रतिष्यदिवागारं स्तम्भो यत्नेन योजितः ॥
साध्या याप्यत्वमायान्ति याप्याश्चासाध्यातां तथा ।

अथ चिकित्साविध्युपदेशः ।
"जातमात्रश्चिकित्स्यः
स्यान्नोपेक्ष्योऽल्पतया गदः ।
वह्निशत्रुविषैस्तुल्यः स्वल्पोऽपि
विकरोत्यसौ ॥
रोगमादौ परीक्षेत ततोऽनन्तरमौषधम्
।
ततः कर्म्म भिषक् पश्चात् ज्ञानपूर्ब्बं
समाचरेत् ॥"
अयमर्थः । भिषक् आदौ रोगं परीक्षेत
विचा-
रयेत् । ततोऽनन्तरं औषधं
विचारयेत् । ततः
पश्चात् रोगौषधविचारानन्तरं
ज्ञानपूर्ब्बं साव-
धानो न तु अवज्ञया कर्म्म
चिकित्सामौषध-
दानादिरूपं समाचरेदित्यर्थः ॥ * ॥
रोगाज्ञाने
चिकित्साकरणे दोषमाह ।
"यस्तु रोगमविज्ञाय कर्म्माण्यारभते
भिषक् ।
अपौषधविधानज्ञस्तस्य
सिद्धिर्यदृच्छया ॥"
यदृच्छया स्वेरितया सिद्धिर्भवति
नापि भवती-
त्यर्थः । अन्यच्च ।
"औषधं केवलं कर्त्तुं यो जानाति न
चामयम् ।
वैद्यकर्म्म स चेत् कुर्य्याद्वधमर्हति
राजतः ॥" * ॥
रोगज्ञाने भेषजाज्ञाने दोषमाह ।
"यस्तु केवलरोगज्ञो
भेषजेष्वविचक्षणः ।
तं वैद्यं प्राप्य रोगी स्याद्यथा
नौर्न्नाविकं
विना ॥"
नाविकं कर्णधारं विना यथा नौः
सङ्कटे पतति
तथा रोगीत्यर्थः । अन्यच्च ।
"यस्तु केवलशास्त्रज्ञः
क्रियास्वकुशलो भिषक् ।
स मुह्यत्यातुरं प्राप्य भीरुः शस्त्रीव
चाहवम् ॥"

|  |  | रोगौषधयोज्ञनि गुणमाह ।<br>“यस्तु रोगविशेषज्ञः<br>सर्व्वभैषज्यकोविदः ।<br>देशकालविभागज्ञस्तस्य सिद्धिर्न<br>संशयः ॥ |
|---|---|---|

आदावन्ते रुजां ज्ञाने प्रयतेत चिकित्सकः ।
भेषजानां विधानेऽथ ततः
कुर्य्याच्चिकित्सितम् ॥”
चिकित्सितमित्यत्र भावे क्तः । इति भाव-
प्रकाशे पूर्ब्बखण्डः ॥ * ॥ अथ येन रोगाणां
ज्ञानं स्यात्तत्तदाह ।
“हेतुस्तदनु संप्राप्तिः पूर्ब्बरूपञ्च लक्षणम् ।
तथैवोपशयः पञ्च रोगविज्ञानहेतवः ॥”
तत्र हेतोर्लक्षणमाह
“यत्तु न स्याद्विना येन तस्य तद्धेतुरुच्यते ।
शास्त्रे संव्यवहाराय तत्पर्य्यायान् प्रवक्ष्महे ॥
निदानं कारणं हेतुर्न्निमित्तञ्च निबन्धनम् ।
मूलमायतनं तत्तु प्रत्ययोऽपि निगद्यते ॥”
तत्र हेतुर्व्याधीनां ज्ञानाय हेतुर्यथा । वर्षा-
रूक्षश्रमहिमानशनातिमैथुनशोकचिन्ताभ्रया-
दयो वातप्रकोपहेतवो वातजान् व्याधीन्
बोध-
यन्ति ।
शरत्कट्वम्लोष्णतीक्ष्णक्रोधतृषाक्षुधाभि
घातादयः पित्तप्रकोपहेतवः पित्तजान्
व्याधीन्
बोधयन्ति । वसन्तमधुरस्निग्धशीतादयः
कफ-
प्रकोपहेतवः कफजान् व्याधीन् बोधयन्ति ॥
* ॥
अथ संप्राप्तेर्लक्षणमाह
“यथा दुष्टेन दोषेण यथा चानुविसर्पता ।
उत्पत्तिर्यामयस्यासौ संप्राप्तिर्ज्जातिरागतिः
॥”
यथा दुष्टेन दोषेण यथा कारणभेदेन दुष्टेन
दोषेण । यथा चानुविसर्पता अनेकधा
दोषाणां
विसर्पणमूर्द्ध्वाधस्तिर्य्यगादिगतिभेदेन ।
तथा च
विसर्पता आमयस्य या उत्पत्तिः असौ
संप्राप्तिः । शास्त्रे व्यवहाराय संप्राप्तेः
पर्य्याया-
वाह जातिरागतिरिति । संप्राप्तेरौपाधिक-
भेदानाह ।
“संख्याविकल्पप्राधान्यबलकालविशेषतः ।

यस्मिन्नक्तादेरंशे यस्य दोषस्य प्रकोप
उक्तोऽस्ति
सोऽंशस्तद्दोषजस्य व्याधेः काल इत्यर्थः ।
नक्तादेरंशेषु वातादिप्रकोप उक्तो वाग्भटेन ।
“ते व्यापिगोऽपि हृन्नाभ्योरधोमध्योर्द्ध्वसंश्रयाः
।
वयोऽहोरात्रिभुक्तानामन्तमध्यादिगाःक्रमात् ॥”
इति ॥
ते वातपित्तकफाः । ऋतुषु वातादिकोपो यथा,
“वर्षासु शिशिरे वायुः पित्तं शरदि उष्मके ।
वसन्ते तु कफः कुप्येदेषा प्रकृतिरार्त्तवी ॥” *
॥
संप्राप्तिर्व्याधीनां ज्ञानाय हेतुर्यथा । मिथ्या-
हारविहारकुपितवाताद्यामाशयगमनरसक्लण-
कोष्ठाग्निर्व्वहिर्न्निरसनरूपं ज्वरोत्पत्तिप्रकारं
बोधयति तथा व्याधीनां संख्यादोषांशांश-
कल्पनाप्राधान्यबलकालांश्चबोधयति । तेषु
ज्ञानेषु चिकित्साविशेषः स्यात् ॥ * ॥ अथ
पूर्ब्बरूपस्य लक्षणमाह ।
“पूर्व्वरूपन्तु तद्येन विद्याद्भाविनमामयम् ।
सामान्यञ्च विशिष्टञ्च द्विविधं तदुदाहृतम् ॥
सामान्यं तत्र दोषाणां विशेषैरनधिष्ठितम् ।
विशिष्टमीषद्व्यक्तं स्यात् विशेषैश्च समन्वितम्
॥”
दोषाणां विशेषाः जृम्भातिशयनेत्रदाहाग्नि-
मान्द्यादयः । तत्र पूर्ब्बरूपं व्याधीनां ज्ञानाय
हेतुर्यथा । श्रमादयो भाविनं ज्वरं बोधयन्ति ।
अथ च त एव श्रमादयोऽतिशयितजृम्भायुक्ता
भाविनं वातज्वरं नेत्रदाहयुक्ता भाविनं पित्त-
ज्वरं वह्निमान्द्ययुक्ता भाविनं श्लेष्मज्वरं बोध-
यन्ति ॥ * ॥ अथ लक्षणस्य लक्षणमाह ।
“पूर्ब्बरूपं विशिष्टं यद्व्यक्तं तल्लक्षणं स्मृतम् ।
संस्थानं लिङ्गचिह्ने च व्यञ्जनं रूपमाकृतिः ॥”
विशिष्टं पूर्ब्बरूपं ईषद्व्यक्तं रूपं तदेव सम्य-
ग्व्यक्तं लक्षणं स्मृतम् । तत्र शास्त्रे व्यवहाराय
पर्य्यायानाह संस्थानमित्यादि । लक्षणं व्याधे-
र्ज्ञानाय हेतुर्यथा । स्वेदावरोधः सन्तापः
सर्व्वाङ्गग्रहणञ्च युगपदेतल्लक्षणं ज्वर बोध-
यति ॥ * ॥ अथोपशयस्य लक्षणमाह ।
“औषधान्नविहाराणामुपयोगंसुखावहम् ।

तृड्घाताध्वनियुद्धजागरजलक्रीडाङ्गनासेवनं
पानाहारविहारभेषजमिदं श्लेष्माणमुग्रं हरेत्
॥”
जलक्रीडा कथं कफं हरति तदाह । जल-
क्रीडाजनितशैत्येनावरुद्धदेहोष्मा पङ्कलिप्त-
पाकाग्निरिवोग्रो भूत्वा कफं शोषयति इति
समाधिः ॥ * ॥ उपशयो व्याधेर्ज्ञानाय
हेतुर्यदुक्तं
चरकेण । गूढलिङ्गं सङ्कीर्णलक्षणञ्च
व्याधिमुप-
शयानुपशयाभ्यां परीक्षेतेति । तथा च सुश्रुते
।
“अभ्यङ्गस्वेदनस्नेहैर्विकारो वातिको न यः ।
शाम्येत्तत्र तु विज्ञेयं रक्तमात्रास्ति दूषितम् ॥
सर्व्वेषामेव रोगानां निदानं कुपिता मलाः ।
तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम् ॥”
सर्व्वेषां रोगानां निदानं सन्निकृष्टं कारणम् ।
कुपिताः स्वहेतुदुष्टाः । मला वातपित्तकफा
एवेत्यन्वयः । तथा च वाग्भटः । दोषा एव हि
सर्व्वेषां रोगाणामेककारणमिति ।
नत्वागन्तुज-
व्याधिषु व्यभिचारः स्यात् । तन्न
तत्राप्युत्पत्त्य-
नन्तरं दोषप्रकोपस्यावश्यं भावित्वात् ।
उत्पन्न-
द्रव्येषु गुणयोगस्येव । इति भावप्रकाशः ॥ *
॥
पापजरोगा यथा । शातातपीयकर्म्मविपाके ।
“कुष्ठञ्च राजयक्ष्मा च प्रमेहो ग्रहणी तथा ।
मूत्रकृच्छ्राश्मरीकाशा अतिसारभगन्दरौ ॥
दुष्टव्रणं गण्डमाला पक्षाघातोऽक्षिनाशनम् ।
इत्येवमादयो रोगा महापापोद्भवाः स्मृताः ।
जलोदरयकृत्प्लीहशूलरोगव्रणानि च ।
श्वासाजीर्णज्वरच्छर्द्दिभ्रममोहगलग्रहाः ।
रक्तार्व्वुदविसर्पाद्या उपपापोद्भवा गदाः ॥
दण्डावतानकश्चित्रवपुःकम्पविचर्च्चिकाः ।
वल्मीकपुण्डरीकाद्या रोगाः पापसमुद्भवाः ॥”
तथा ।
“अर्शआद्या नृणां रोगा अतिपापाद्भवन्ति हि ।
अन्ये च बहुधा रोगा जायन्ते रोगसङ्कराः ।
उच्यन्ते हि निदानानि प्रायश्चित्तानि च

सा भिद्यते यथात्रेव वक्ष्यन्तेऽष्टौ ज्वरा इति ॥”
संख्यादिरूपा ये विशेषास्तेभ्यः सा संप्राप्ति-र्भिद्यते भेदवती क्रियते इत्यर्थः । तत्र संख्यां विवृणोति । यथा ज्वरोऽष्टधा अतीसारः षड्-विध इत्यादि । विकल्पं विवृणोति । दोषाणां समवेतानां विकल्पोऽंशांशकल्पना । सम-वेतानां समुदितानां दोषाणां अंशांशकल्पना हीनमध्याधिकभेदैर्भागकल्पना विकल्पः ॥ * ॥
प्राधान्यं विवृणोति ।
“स्वातन्त्र्यपारतन्त्र्याभ्यांव्याधेः प्राधान्यमादि-शेत् ।
व्याधेः स्वातन्त्र्येण प्राधान्यं पारतन्त्र्येणाप्राधा-न्यञ्च वदेदित्यर्थः । यथा स्वतन्त्रस्य ज्वरस्य प्राधान्यं ज्वराधीनानां श्वासादीनामप्राधा-न्यम् ॥ * ॥ बलं विवृणोति ।
“हेत्वादिकात्स्न्यावयवैर्ब्बलाबलविशेषणम् ।”
अत्रापि व्याधेरित्यनुवर्त्तते । हेत्वादेः हेतुपूर्ब्ब-रूपाणां कात्स्न्येन साकल्येन । अवयवैः एक-देशेन । व्याधेर्ब्बलाबलयोर्व्विशेषणं विशेष-बोधः ॥ * ॥ कालं विवृणोति ।
“नक्तं दिनर्त्तुभुक्तांशैर्व्याधिकालो यथाबलम् ।”
नक्तमत्राव्ययं रात्रिवाचकम् । एतेनैतदुक्तं

नृणामुपशयं विद्यात् स हि सात्म्यमिति स्मृतः ॥”
तत्र वातस्योपशयमाह ।
“मधुरलवणसाम्लस्निग्धनस्योष्णनिद्रा-गुरुरुचिकरवस्तिस्वेदसंमद्दनानि ।
दहनजलदशेषाभ्यङ्गसन्तर्पणानि प्रकुपितपवमानं शान्तमेतानि कुर्य्युः ॥”
अथ पित्तस्योपशयमाह ।
“तिक्तस्वादुकषायशीतपवनच्छायानिशावीजन-ज्योत्स्नाभूगृहयन्त्रवारिजलदस्त्रीगात्रसंस्प-र्शनम् ।
सर्पिः क्षीरविरेकसेकरुधिरस्रावप्रदेहादिकं पानाहारविहारभेषजमिदं पित्तं प्रशान्तिं नयेत् ॥”
अथ कफस्योपशयमाह ।
“रुक्षक्षारकषायतिक्तकटुकव्यायामनिष्ठीवनं धूमात्युष्णशिरोविरेकवमनं स्वेदोपवासादिकम् ।

क्रमात् ॥”
सर्व्वरोगनाशकदानं यथा । हेमाद्रिधृतदान-खण्डे भगवद्वाक्यम् ।
“सुवर्णदानं सर्व्वेषां रोगाणां नाशकारणम् ।
तस्मात् सर्व्वप्रयत्नेन कर्त्तव्यं कमलोद्भव ॥”
इति मलमासतत्त्वम् ॥ * ॥
अथारोग्यस्नानदिनम् । तत्र तिथयो रिक्ताः प्रशस्ताः । दशमीप्रतिपद्द्वितीयात्रयोदशी-पञ्चमीभिन्ना मध्यमाः । तत्र नक्षत्राणि । स्वाती-श्रवणाधनिष्ठाशतभिषाज्येष्ठाहस्तापुष्यपूर्ब्बा-षाढापूर्ब्बफल्गुनीपूर्ब्बभाद्रपन्मघाभरणीमृग-शिरांसि । तत्र वाराः क्रूराः । तत्र योगो व्यती-पातः । अशोभनश्चन्द्रः । लग्नापेक्षया केन्द्रेषु पापग्रहः । इति ज्योतिस्तत्त्वम् ॥ अपि च ।
“चन्द्राशुद्धौ व्यतीपाते भौमार्कशनिवासरे ।
व्रणमुक्तो व्याधिमुक्तः कृशः स्नानं समाचरेत् ॥
पूर्व्वात्रयमघाश्लेषा भरणी कृत्तिका तथा ।
आर्द्रायाञ्च तिथौ रिक्ते चारोग्यस्नानमाचरेत् ॥”
इति ज्योतिःसारसंग्रहः ॥

**रोगघ्नं**, क्ली, (रोगं हन्तीति । हन + टक् ।)

औषधम् । इति वैद्यकम् ॥ रोगनाशके, त्रि ॥ (स्त्रियां ङीप् । यथा, सुश्रुते । १ । ४४ । "त्रिफला सर्व्वरोगघ्नी त्रिभागघृतमूर्च्छिता ॥")

**रोगभूः** स्त्री, (रोगाणां भूः स्थानं व्याधिमन्दिर-त्वात् ।) शरीरम् । इति शब्दचन्द्रिका ॥

**रोगराजः**, पुं, (रोगाणां राजा । टच् ।) राज-यक्ष्मा । इति राजनिर्घण्टः ॥ (यथा, --
"इति व्याधिसमूहस्य रोगराजस्य हेतुजम् ।
रूपमेकादशविधं हेतुश्चोक्तश्चतुर्विधः ॥"
इति चरके चिकित्सास्थाने ८ अध्यायः ॥)

**रोगलक्षणं**, क्ली, (रोगाणां लक्षणम् ।) निदानम् ।

इति राजनिर्घण्टः ॥

**रोगशान्तकः**, पुं, (रोगान् शान्तयतीति ।

शान्ति + ण्वुल् ।) वैद्यः । इति शब्दचन्द्रिका ॥

**रोगशिला**, स्त्री, (रोगाय रोगनिवृत्तये शिला ।)

मनःशिला । इति राजनिर्घण्टः ॥ (विवरण-मस्या मनःशिलाशब्दे विज्ञेयम् ॥)

**रोगशिल्पी**, [न्] पुं, (रोगे शिल्पीव ।) वृक्ष-विशेषः । इति जटाधरः ॥ शरालु इति भाषा ॥

**रोगश्रेष्ठः**, पुं, (रोगेषु श्रेष्ठः ।) ज्वरः । इति राजनिर्घण्टः

**रोगहं**, क्ली, (रोगान् हन्तीति । हन् + डः ।)

औषधम् । इति शब्दचन्द्रिका ॥

**रोगहरद्रव्यं**, क्ली, (रोगहरं रोगनाशकं द्रव्यम् ।)

रोगनाशकवस्तु । यथा, --
धन्वन्तरिरुवाच ।
"द्रव्याणि मधुरादीनि वक्ष्ये रोगहराण्यहम् ।
शालिषष्टिकगोधूमक्षीरञ्चैवतथा मधु ॥
मज्जाशृङ्गाटकयवकशेर्व्वारुकगोक्षुरम् ।
गम्भारी पौष्करं बीजं द्राक्षा खर्ज्जूरकं वला ॥
लवणं जम्बुजफलं मुस्ता गुग्गुलुलाङ्गली ।
कटुको दीपनः शोधी कुष्ठकण्डूकफान्तकृत् ॥
स्थौल्यालस्यक्रिमिहरः शुक्रमेदोविरोधनः ।
एकोऽत्यर्थं सेव्यमानो भ्रमदाहादिकृद्भवेत् ॥ * ॥
कृतमालः करीराणि हरिद्रेन्द्रयवास्तथा ।
स्वादुकण्टकवेत्राणि बृहतीद्वयशङ्खिनी ॥
गुडूची च द्रवन्ती च त्रिवृन्मण्डूकपर्ण्यपि ।
कारवेल्लकवार्त्ताकुकरवीरकवासकाः ॥
रोहिणी शङ्खपुष्पी च कर्कोटो वैजयन्तिका ।
जाती वरुणकं निम्बो ज्योतिष्मती पुनर्न्नवा ॥
तिक्तो रसश्छेदनः स्याद्रोचनो दीपनस्तथा ।
शोधनो जरतृष्णाघ्नो मूर्च्छाकण्डूतिकादिजित् ॥
विण्मूत्रक्लेदसंशोषे अत्यर्थं स च सेवितः ।
मन्यास्तम्भक्षेपकार्त्तिशिरःशूलव्रणादिहृत्॥ * ॥
त्रिफलाशल्लकीजम्बु आम्राम्रातवटादिकम् ।
तिन्दुकं वकुलं शाकं निष्पावं मुद्गचिल्लिका ॥"
निष्पावस्थाने पालङ्क्या इति क्वचित् पाठः ।
"कषायो ग्राहको रोपी स्तम्भनः क्लेदशोषणः ।
एकोऽत्यर्थं सेव्यमानो हृदयादथ पीडकृत् ॥
मुखशोषज्वराध्वानमन्यास्तम्भादिकारकः। * ।
हरिद्रा कुष्ठलवणमेषशृङ्गीवलाद्वयम् ॥
कच्छपी शल्लकी पत्नो पुनर्न्नवा शतावरी ।
अग्निमन्थो ब्रह्मदण्डी स्वदंष्ट्रैरण्डके तथा ॥
यवकोलकुलत्थादि कर्षासीदसमूलकम् ।
पृथक् समस्तो वातान्तो बंहुपित्तहरस्तथा ॥
शतावरी विदारी च वालकोशीरचन्दनम् ।
दूर्व्वा वटः पिप्पली च वदरी शल्लकी तथा ॥
कदली चोत्पलं पद्ममुडुम्बरपटोलकम् । * ।
अथ श्लेष्महरो वर्गो हरिद्रा गुडकुष्ठकम् ॥
शतपुष्पी च जाती च व्योषारग्वधनाकुली । * ।
सर्पिस्तैलवसामज्जा स्नेहेषु प्रवरं घृतम् ॥
तथाधीस्मृतिमेधाग्निकाङ्क्षिणां शस्यते घृतम् ।
केवलं पैत्तिके सर्पिर्व्वातिके लवणान्वितम् ॥
देयं बहुकफे वापि व्योषक्षारसमन्वितम् ।
ग्रन्थीनाडीक्रमिश्लेष्ममेदोमारुतरोगिषु ॥ * ॥
तैलं लाघवदार्ढ्याय क्रूरकोष्ठेषु देहिषु ।
अभया गुडूची चैव अट्टरूषकवाकुची ।
एतैरक्षसमैभर्गिर्घृतप्रस्थं विपाचयेत् ॥
कण्टकार्य्या रसप्रस्थः क्षीरप्रस्थसमन्वितः ।
एतद्ब्राह्मीघृतं नाम श्रुतिमेधाकरं परम् ॥ * ॥
त्रिफलाचित्रकवलानिर्गुण्डीनिम्बवासकाः ।
पुनर्नवा गुडूची च बृहती च शतावरी ॥
एतैर्घृतं यथालाभं सर्व्वरोगविमर्द्दनम् । * ।
वलाशतकषाये तु तैलस्यार्द्धाढकं पचेत् ॥
कल्कैर्म्मधुकमञ्जिष्ठाचन्दनोत्पलपद्मकैः ।
सूक्ष्मैलापिप्पलीकुष्ठत्वगेलागुरुकेशरैः ॥
गन्धाश्वजीवनीयैश्च जीराढकसमाश्रितम् ।
एतन्मृद्वग्निना पक्वं स्थापयेद्रजते शुभे ॥
सर्व्ववातविकारांस्तु सर्व्वधात्वन्तराश्रयान् ।
तैलमेतत् प्रशमयेद्वलाख्यं राजवल्लभम् ॥ * ॥
शतावरीरसप्रस्थं क्षीरप्रस्थं तथैव च ।
शतपुष्पा देवदारु मांसी शैलेयकं वला ॥
चन्दनं तगरं कुष्ठं माला चांशुमती तथा ।
एतैः कर्षसमैः कल्कैस्तैलप्रस्थं विपाचयेत् ॥
कुब्जवामनपङ्गूनां वधिरव्यङ्गकुष्ठिनाम् ।
वायुना भग्नगात्राणां ये च सीदन्ति मैथुने ॥
जराजर्ज्जरगात्राणां चाध्मानमुखशोषिणाम् ।
त्वग्गताश्चापि ये वाताः शिरास्नायुगताश्च ये ॥
स वस्तिर्नाशयत्याशु तैश्चैव स्याद्दशाङ्गकः ।
नारायणमिदं तैलं विष्णुनोक्तं रुगर्द्दनम् ॥ * ॥
पृथक् तैलं घृतं कुर्य्यात् समस्तैरौषधैः पृथक् ।
शतावर्य्या गुडूच्या वा चित्रकै रोचनायुतः ॥
निर्गण्ड्या वा प्रसारण्या कण्टकार्य्या रसा-दिभिः ।
वर्षावानलया वापि वासकेन फलत्रिकैः ॥
ब्राह्म्या चैरण्डकेनापि भृङ्गराजेन मुण्डिना ।
मूषल्या दशमूलेन खदिरेण वटादिभिः ॥
वटिका मोदको वापि चूर्णं स्यात् सर्व्वगोग-नुत् ।
घृतेन मधुना वापि युक्तं खण्डगुडादिभिः ।
लवणैः कटुकैर्युक्तं यथाभागञ्च रोगनुत् ॥
चित्रकर्कारुत्रिवृतामलघ्नहयमारकम् ।
स्वधा च वाला गणिका सप्तपर्णसुवर्च्चिकाम् ॥

नारिकेलेक्ष्वात्मगुप्ता विदारी च पियालकम् ।
मधुकं तालकुष्माण्डं मुख्योऽयं मधुरो गणः
॥
मूर्च्छादाहप्रशमनः षडिन्द्रियप्रसादनः ।
कृमिकृत् कफकृत् वृष्य एकोऽत्यर्थं
निषेवितः ॥
श्वासकाशास्यमाधुर्य्यस्वरघातार्व्वुदानि च ।
गलगण्डश्लीपदानि गुडलेपादि कारयेत् ॥ *
॥
दाडिमामलकाम्रञ्च कपित्थकरमर्द्दकौ ।
मातुलुङ्गाम्रातकञ्च वदरं तित्तिरीफलम् ॥
दधितक्रं काञ्जिकञ्च लकुचं चाम्लवेतसम् ।
अम्ला दन्तशठायुक्तो जारणः पाचनो रसः
॥
क्लेदनो वातकृत् वृष्यो विदाही चानुलोमनः
।
अम्लोऽत्यर्थं सेव्यमानः कुर्य्याद्वि दन्तहर्षकम्
॥
शरीरस्य च शैथिल्यस्वरकुण्ठनकृद्भवेत् ।
छिन्नभिन्नव्रणादीनि पाचयत्यग्निभावतः ॥ *
॥
लवणादियवक्षारः सर्ज्जकादिश्च लावणः ।
शोधनः पाचनः क्लेदी विश्लेषसर्पणादिकृत्
॥
मागरोधी मार्दवकृत् स एकः परिषेवितः ।
गात्रकण्डूकोठशोफवैवर्ण्यं जनयेद्रसः ।
रक्तवातं रक्तपित्तं पुंस्त्वेन्द्रियरु जादिकम् ॥
* ॥
व्योषशिग्रुं मूलकञ्च देवदारु च कुष्ठकम् ॥

वातातपास्वभावातिव्यायामक्षीणधातुषु॥
रूक्षे क्लेशक्षयात्यग्निवातावृतपथेषु च ।
तथा दग्धा हलभ्रष्टा योनिकर्म्मा शिरोरुजि ॥
उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमे ।
जघन्यस्य पलार्द्धेन स्नेहक्वाथौषधेषु च ॥ *
॥
जलमुष्णं घृते देयं पृथक् तैले न शस्यते ।
स्नेहे पीते तु तृष्णायां पिबे दुष्णोदकं नरः ॥
वातानुलोमदीप्ताग्निवर्च्चास्निग्धसमंमतम् ।
रूक्षस्य स्नेहणं कार्य्यमतिस्निग्धस्य रूक्षणम्
॥
श्यामाककोरदूषान्नतक्रपिण्याकषष्टिभिः ।
वातश्लेष्मणि वाते वा कफे वा स्वेद इष्यते ॥
न स्वेदयेदतिस्थूलरूक्षदुर्बलमूर्च्छितान् ॥”
इति गारुडे योगसारे १७७ अध्यायः ॥ * ॥
धन्वन्तरिरुवाच ।
“घृततैलादि वक्ष्यामि शृणु सुश्रुत रोगनुत् ।
शङ्खपुष्पी वचा सोमा ब्राह्मी ब्रह्मसुवर्च्चला ॥

ज्योतिष्मतीञ्च संभृज्य तैलं धीरो विपाचयेत्
।
एतन्निष्यन्दनं तैलं भृशं दद्यात् भगन्दरे ॥
शोधनं रोचनञ्चैव सर्व्ववर्णकरं परम् ।
चित्रकाद्यं महातैलं सर्व्वरोगप्रभञ्जनम् ॥
अजमोदः ससिन्दूरो हरितालनिशाद्वयम् ।
क्षारद्वयं फेनयुतमार्द्रकं सरलोद्भवम् ॥
इन्द्रवारुण्यपामार्गकदलैः कन्दलैः समैः ।”
कन्दलैः स्थाने स्यन्दनैः इति च पाठः ।
“एभिः सर्षपजं तैलमजामूत्रैश्च योजितम् ।
मृद्वग्निना पचेदेतत् अकक्षीरेण संयुतम् ॥
अजमोदादिकं तैलं गण्डमालां व्यपोहति ।
विदग्धस्तु पचेत् पक्वं पक्वञ्चैव विशोधयेत् ॥
रोपणं मृदुभावञ्च तैलेनानेन कारयेत् ।
अजमोदादिकं तैलं महावीर्य्यञ्च रोगहृत् ॥”
इति गारुडे १७८ अध्यायः ॥

**रोगहारी**, [न्] पुं, (रोगं हरति तच्छीलः । हृ + णिनिः ।) वैद्यः । इत्यमरः । २ । ६ । ५७ ॥ रोगनाशके, त्रि ॥

**रोगितरुः**, पुं, (रोगिणां शोकनाशकस्तरुः ।) अशोकवृक्षः । इति राजनिर्घण्टः ॥

**रोगिवल्लभं**, क्ली, (रोगिणां वल्लभं प्रियम् ।) औषधम् । इति शब्दचन्द्रिका ॥ रोगिप्रिये, त्रि ॥

**रोगी**, [न्] त्रि, (रोगोऽस्यास्तीति । रोग + इनिः ।) रोगयुक्तः । तत्पर्य्यायः । व्याधितः २ विकृतः ३ ग्लानः ४ म्लानः ५ मन्दः ६ आतुरः ७ अभ्यान्तः ८ अभ्यमितः ९ रुग्नः १० सामयः ११ अपटुः १२ । इति राजनिर्घण्टः ॥ आमयावी १३ ग्लास्नुः १४ । इत्यमरः ॥ * ॥ अथ चिकित्सार्थं रोगिणः परीक्षा । तत्र वाग्भटः ।
"दर्शनस्पर्शनप्रश्नैः परीक्षेदथ रोगिणम् ।
आयुरादि दृशा स्पर्शाच्छीतादेः प्रश्नतोऽपरम् ॥"
आयुरादि । आदिशब्दात् साध्यत्वासाध्यत्वादि । दृशा दर्शनेन । अत्र सम्पदादिभ्यश्चेति भावे क्विप् । स्पर्शात् शीतादेः । शीतोष्णमृदुकठिनत्वादिना परीक्षणञ्च । प्रश्नतः । उदरलाघवगौरवतृषाबुभुक्षाबलाबलादिना॥
"मिथ्या दृष्टा विकारा हि दुराख्यातास्तथैव च ।
तथा दुष्परिपृष्टाश्च मोहयेयुश्चिकित्सकान् ॥"
तत्र दर्शनं नेत्रजिह्वामूत्रादेः कर्त्तव्यम् ॥ * ॥ तत्र नेत्रपरीक्षा यथा, --
"नेत्रं स्यात् पवनाद्रूक्षं धूम्रवर्णं तथारुणम् ।
कोटरान्तःप्रविष्टञ्च तथास्तञ्च विलोकनम् ॥
हरिद्राखण्डवर्णञ्च रक्तंवा हरितं तथा ।
दीपद्वेषि सदाहञ्च नेत्रं स्यात् पित्तकोपतः ॥
चक्षुर्व्वलाशबाहुल्यात् स्निग्धं स्यात् सलिलप्लुतम् ।
अङ्गुलीभिस्तु तिसृभिर्नाडीमवहितः स्पृशेत् ।
तच्चेष्टया सुखं दुःखं जानीयात् कुशलोऽखिलम् ॥
सद्यःस्नातस्य सुप्तस्य क्षुत्तृष्णातपशीलिनः ।
व्यायामश्रान्तदेहस्य सम्यक् नाडी न बुध्यते ॥
वातेऽधिके भवेन्नाडी प्रव्यक्ता तर्ज्जनीतले ।
पित्ते व्यक्ता मध्यमायां तृतीयाङ्गुलिगा कफे ॥
तर्ज्जनीमध्यमामध्ये वातपित्तेऽधिके स्फुटा ।
अनामिकायां तर्ज्जन्यां व्यक्ता वातकफे भवेत् ॥
मध्यमानामिकामध्ये स्फुटा पित्तकफेऽधिके ।
अङ्गुलित्रितयेऽपि स्यात् प्रव्यक्ता सन्निपातिनः ॥
वाताद्वक्रगतिर्न्नाडी पित्तादुत्प्लुत्य गामिनी ।
कफान्मन्दगतिर्ज्ञेया सन्निपातादतिद्रुता ॥
वक्रमुत्प्लुत्य चलति धमनी वातपित्ततः ।
वहेद्वक्रञ्च मन्दञ्च वातश्लेष्माधिके ततः ॥
उत्प्लुत्य मन्दं चलति नाडी पित्तकफेऽधिके ।
कामात् क्रोधात् वेगवहा क्षीणा चिन्ताभयाप्लुता ॥
स्थित्वा स्थित्वा चलेद्या सा हन्ति स्थानच्युता तथा ।
अतिक्षीणा च शीता च प्राणान् हन्ति न संशयः ॥
ज्वरकोपेन धमनी सोष्णा वेगवती भवेत् ।
मन्दाग्नेः क्षीणधातोश्च सैव मन्दतरा मता ॥
चपला क्षुधितस्य स्यात् तृप्तस्य भवति स्थिरा ।
सुखिनोऽपि स्थिरा ज्ञेया तथा बलवती मता ॥"
इति भावप्रकाशः ॥
(लक्षणान्तरादिकमाह ।
कारी । भीरुर्भयशीलः । कृतघ्नो वैद्यकृतोपकारलोपकः । व्यग्रो व्याकुलः । विहीनः करणैश्च यः निजेन्द्रियशक्तिरहितः । वैरी न चिकित्स्यः कदाचिद्रोगोद्रेके अपवादभयात् । वैद्यविदग्धो वैद्यधूर्त्तः । तथा च सुश्रुतः ।
"स न सिद्ध्यति वैद्यस्तु गृहे यस्य न पूज्यते ।"
शङ्कितो वैद्यविश्वासरहितः ।
भिषजामविधेयाः ॥
वैद्यवचनाविधायिनः । भिषग्विधा वैद्यतुल्याः ।
एते नोपक्रम्याः न चिकित्स्याः । अथ दूतस्य लक्षणम् ।
"यश्चिकित्सकमानेतुं याति दूतः स कथ्यते ।
स च यादृक् समुचितस्तादृगत्र निगद्यते ॥
दूताः सुजातयोऽव्यङ्गाः पटवो निर्म्मलाम्बराः ।
सुखिनोऽश्ववृषारूढाः शुभ्रपुष्पफलैर्युताः ॥
सजातयः सुचेष्टाश्च सजीवदिशिसङ्गताः ।
भिषजं समये प्राप्ता रोगिणः सुखहेतवे ॥"
सजातयः रोगिसमानजातयः ।
"यस्यां प्राणमरुद्वाति सा नाडी जीवसंज्ञिता ॥"
अथ दूतस्य यात्रायां शकुनविचारः ।
"वैद्याह्वानाय दूतस्य गच्छतो रोगिणः कृते ।
न शुभं सौम्य शकुनं प्रदीप्तन्तु सुखावहम् ॥"
प्रदीप्तमग्निं दूतो रोगी रिक्तहस्तो वैद्यं न पश्येत् । तथा च ।
"रिक्तहस्तो न पश्येत्तु राजानं भिषजंगुरुम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**रोग्यं**, त्रि, (रोगाय हितमिति । रोग + यत् ।) अपथ्यम् । अहितम् । इति शब्दचन्द्रिका ॥ रोगसम्बन्धिनि च ॥

**रोचकः**, पुं, (रोचयतीति । रुच् + णिच् + ण्वुल् ।) क्षुधा । तत्पर्य्यायः । बुभुक्षा २ अशना ३ जिघत्सा ४ रुचिः ५ । इति हेमचन्द्रः । ३ । ५७ ॥ कदली । इति शब्दरत्नावली ॥ राजपलाण्डुः । अवदंशः । इति राजनिर्घण्टः ॥ ग्रन्थिपर्णभेदः । भण्डिउर इति

तथा धवलवर्णञ्च ज्योतिर्हीनं बलान्वितम् ॥
नेत्रं द्विदोषबाहुल्यात् स्याद्दोषद्वयलक्षणम् ।
त्रिदोषलिङ्गं सेवेत तन्मारयति रोगिणम् ॥
त्रिदोषदूषित नेत्रमन्तर्म्मग्नं भृशं भवेत् ।
त्रिलिङ्गं सलिलस्रावि प्रान्तेनोन्मीलयत्यपि ॥"
*
अथ जिह्वापरीक्षा ।
"शाकपत्रप्रभा रूक्षा स्फुटिता रसनानिलात् ।
रक्ता श्यामा भवेत् पित्ताल्लिप्तार्द्रा धवला
कफात् ।
परिदग्धा खरस्पर्शा कृष्णा दोषत्रयेऽधिके ।
सैव दोषद्वयाधिक्ये दोषद्वितयलक्षणा ॥"
अथ मूत्रपरीक्षा ।
"वातेन पाण्डुरं मूत्रं रक्तं नीलञ्च पित्ततः ।
रक्तमेव भवेद्रक्ताद्धवलं फेनिलं कफात् ॥"
अथ शरीरस्य उष्णत्वादिज्ञानार्थं स्पर्शनं
कार्य्यम् । तत्र नाडीपरीक्षामाह ।
"पुंसो दक्षिणहस्तस्य स्त्रियो वामकरस्य तु ।
अङ्गुष्ठमूलगा नाडी परीक्ष्येत भिषग्वरैः ॥

"रोगो यस्यास्ति रोगी स स चिकित्स्यस्तु
यादृशः ।
यादृशश्चाचिकित्स्योऽपिवक्ष्यमाणो
निशम्य-
ताम् ॥"
तत्र चिकित्स्यः ।
"निजप्रकृतिवर्णाभ्यां युक्तः सत्त्वेन चक्षुषा ।
चिकित्स्यो भिषजां रोगी वैद्यभक्तो जिते-
न्द्रियः ॥"
सत्त्वं व्यसनाभ्युदयक्रियादिष्वविह्वलताकरं
तेन
युक्तः । चक्षुषा चक्षुरुपलक्षितेन । ततोऽन्ये-
नापीन्द्रियेण चिकित्स्यः रोगान्
मोचयितव्यः ।
अन्यच्च ।
"आयुष्मान् सत्त्ववान् साध्यो द्रव्यवान्
मित्र-
वानपि ।
चिकित्स्यो भिषजा रोगी वैद्यवाक्यकृदा-
स्तिकः ॥"
आयुर्व्वेदोऽस्तीति मतिर्यस्य स आस्तिकः
॥
अथाचिकित्स्यः ।
"चण्डः साहसिको भीरुः कृतघ्नो व्यग्र एव
च ।
शोकाकुलो मुमूर्षुश्च विहीनः करणैश्च यः ॥
वैरी वैद्यविदग्धश्च श्रद्धाहीनश्च शङ्कितः ।
भिषजामविधेयाः स्युर्नोपक्रम्या भिषग्विधाः
॥
एतानुपाचरन् वैद्यो बहून् दोषानवाप्नुयात्
॥"
चण्डोऽत्यन्तक्रोधशीलः । साहसिकः
अविचार्य्य-

नेपालदेशे ख्यातः । तत्पर्य्यायः । निशाचरः
२
धनहरः ३ कितवः ४ गणहासकः ५ । अस्य
गुणाः । मधुरत्वम् । तिक्तत्वम् । कटुत्वम् ।
पाके कटुत्वम् । लघुत्वम् । तीक्ष्णत्वम् । हृद्य-
त्वम् । हिमत्वम् । कुष्ठकण्डूकफानिलरक्षोऽश्री
स्वेदमेदोऽस्रज्वरगन्धविषव्रणनाशित्वञ्च ।
इति
भावप्रकाशः ॥ (काचकूप्यादिकारकः । यथा,
रामायणे । २ । ८३ । १३ ।
"मायूरकाः क्राकचिका वेधका रोचका-
स्तथा ॥"
"रोचकाः काचकुप्यादिकर्त्तारः इति कतकः
।"
इति तट्टीका ॥) रुचिकारके, त्रि ॥ (यथा,
सुश्रुते । १ । ४६ । मांसवर्गे ।
"संग्राही रोचको बल्यस्तेषामेणो ज्वरापहः
॥")

**रोचनः**, पुं, (रोचयतीति । रोचि + नन्द्यादित्वात्
ल्युः ।) कूटशाल्मलिः । इत्यमरः ॥ (तस्य
पर्य्यायो यथा, --

"कुत्सितः शाल्मलिः प्रोक्तो रोचनः कूट-
शाल्मलिः ॥"
इति भावप्रकाशे । १ । १ ॥
काम्पिल्लः । तत्पर्य्यायो यथा, --
"काम्पिल्लः कर्कशश्चन्द्रो रक्ताङ्गो रोचनोऽपि
च ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
श्वेतशिग्रुः । पलाण्डुः । आरग्वधः । करञ्जः ।
अङ्कोठः । दाडिमः । इति राजनिर्घण्टः ॥
(देवयोनिविशेषः । यथा, हरिवंशे । १६६ ।
७५ ।
"कुम्भाण्डः कुम्भमूर्द्धा च रोचनो वैकृतोग्रहः
॥"
दक्षिणापुत्त्राणामन्यतमः । स च
स्वायम्भुवमन्व-
न्तरे देवविशेषः । इति भागवतम् । ४ । १ । ७
॥
स्वारोचिषमन्वन्तरेइन्द्रः । इति च तत्रैव । ८ ।
१ ।
२० ॥ भारतवर्षान्तर्गतपर्व्वतविशेषः । यथा,
मार्कण्डेये । ५७ । १३ ।
"तुङ्गप्रस्थो नागगिरी रोचनः पाण्डराचलः ॥")
त्रि, रोचकः । इति मेदिनी । ने, ११६ ॥ (यथा,
सुश्रुते । १ । ४६ । शाकवर्गे ।
"वृष्योष्णं रोचनं हृद्यं सस्नेहं लघु दीपनम् ॥"
दीप्तिशाली । यथा, हरिवंशे । १२९ । ३५ ।
"अन्तश्चरं रोचनं चारुशाखं
महाबलं धर्म्मनेतारमीड्यम् ।
सहस्रनेत्रं शतवर्म्माणमुग्रं
महादेवं विश्वसृजं नमस्ये ॥"
शोभमानः । यथा, भट्टिः । ६ । ७३ ।
"भृङ्गालिकोकिलक्रुङ्भिर्वाशनैः पश्य लक्ष्मण
।
रोचनैर्भूषितां पम्पामस्माकं हृदयाविधम् ॥"
अनुरागकरः । यथा, भागवते । १ । १० । ११
।
"सत्सङ्गान्मुक्तदुःसङ्गो हातुं नोत्सहते बुधः ।
कीर्त्त्यमानं यशो यस्य सकृदाकर्ण्य रोचनम्
॥")

**रोचनकः**, पुं, (रोचयतीति । रोचि + ल्युः । ततः
कन्) जम्बीरः । इति राजनिर्घण्टः ॥ (गुणा-

**रोचनी**, स्त्री, (रोचते इति । रुच् + कृत्यल्युटो
बहुलमिति ल्युट् । ततो ङीष् ।) आमलकी ।
गोरोचना । इति राजनिर्घण्टः ॥ मनःशिला ।
इति हेमचन्द्रः ॥ श्वेतत्रिवृता । गुँडारोच-
नीतिख्यातबणिग्द्रव्यम् । तत्पर्य्यायः ।
काम्पिल्लः २
कर्कशः ३ चन्द्रः ४ रक्ताङ्गः ५ । इत्यमरः ॥
कम्पिल्लः ६ कम्पीलः ७ कम्पिलः ८
काम्पिल्यः ९
रेचनी १० । इति भरतः ॥ पर्य्यायान्तरं
गुणाश्च
कम्पिल्लकशब्दे द्रष्टव्याः ॥

**रोचमानः**, पुं, (रोचते इति । रुच् + शानच् ।)
अश्वग्रीवास्थरोमावर्त्तः । यथा, --
"श्रीवृक्षो हृदयावर्त्तो रोचमानो गलोद्भवः ॥"
इति त्रिकाण्डशेषः ॥
(यथा, माघे । ५ । ४ ।
"अश्वाः ष्यधुर्वसुमतीमतिरोचमाना-
स्तूर्णं पयोधय इवोर्म्मिभिरापतन्तः ॥"
नृपविशेषः । यथा, महाभारते । १ । ६७ । १८
।
"अश्वग्रीव इति ख्यातः सत्त्ववान् यो महा-
सुरः ।
रोचमान इति ख्यातः पृथिव्यां सोऽभवन्नृपः
॥"
दीप्यमाने, त्रि । यथा, कथासरित्सागरे ।
७४ । ७८ ।
"रोचमानैः समायुक्तचूडामण्यङ्गदादिभिः ।
गन्धर्व्वकुलसम्भूतिसंसिद्धैरिव भूषितम् ॥")

**रोचिः**, [स्] क्ली, (रोचतेऽनेनेति । रुच् +
बाहुलकात् इसिन् । इत्युज्वलः । २ । ११२
।)
प्रभा । इत्यमरः ॥ (यथा, माघे । १ । २१ ।
"रथाङ्गपाणेः पटलेन रोचिषा-
मृषित्विषः संवलिता विरेजिरे ॥")

**रोचिष्णुः**, त्रि, (रोचते तच्छीलः । रुच् + "अलं
कृञ् निराकृञिति ।" ३ । २ । १३६ । इति
इष्णुच् ।) अलङ्कारादिना दीप्तिशीलः । तत्-

"शुष्कगोधूमचूर्णेन किञ्चित् पुष्टाञ्च
पोलिकाम् ।
तप्तके स्वेदयेत् कृत्वा भूयोऽङ्गारेऽपि तां
पचेत् ॥
सिद्धैषा रोटिका प्रोक्ता गुणानस्याः
प्रचक्ष्महे ।
रोटिका बलकृद्रुच्या बृंहणी धातुवर्द्धनी ॥
वातघ्नी कफकृद्गुर्व्वी दीप्ताग्नीनां प्रपूजिता
॥"
अथ लेटी ।
"मुद्गगोधूमचूर्णन्तु साम्बुगाढं विमर्द्दयेत् ।
विधाय वटकाकारं निर्धूमेऽग्नौ शनैः पचेत् ॥
अङ्गारकर्कटी ह्येषा बृंहणी शुक्रला लघुः ।
दीपनी कफहृद्बल्या पीनसश्वासकासजित्
॥"
अथ यवरोटिका ।
"यवजा रोटिका रुच्या मधुरा विषदा लघुः
।
मलशुक्रानिलकरी बल्या हन्ति कफामयान्
।
पीनसश्वासकासांश्च मेदोमेहगलामयान्
॥"
अथ माषरोटिका ।
"चूर्णं यच्छुष्कमाषाणां चमसी साभिधीयते
।
चमसीरचिता रोटी कथ्यते बलभद्रिका ॥
रूक्षोष्णा वातला बल्या दीप्ताग्नीनां
प्रपूजिता ।
माषाणां दालयस्तोये
स्थापितास्त्यक्तकञ्चुकाः ॥
आतपे शोषिता यन्त्रे पिष्टास्ता धूमसी
स्मृता ।
धूमसीरचिता सैव प्रोक्ता झर्झरिका बुधैः
॥"
झर्झरिकास्थाने भुर्भुरिका इति गुर्गुरिका
इति वा पाठः ।
"झर्झरी कफपित्तघ्नी किञ्चिद्वातकरी
स्मृता ॥"
अथ चणकरोटिका ।
"चाणक्या रोटिका रूक्षा
श्लेष्मपित्तास्रनुद्गुरुः ।

दयोऽस्य जम्बीरशब्दे ज्ञातव्याः ॥)

**रोचनफलः**, पुं, (रोचनं रुचिकरं फलमस्य ।)

बीजपूरकः ॥ इति राजनिर्घण्टः ॥

**रोचनफला**, स्त्री, (रोचनं रोचकं फलमस्याः ।)

चिर्भिटा । इति राजनिर्घण्टः ॥

**रोचना**, स्त्री, (रोचते या । रुच् + "बहुलमन्य-

त्रापि ।" उणा० २ । ७८ । इति युच् । टाप् ।)
रक्तकह्लारम् । गोपित्तम् । गोरोचना इति
ख्यातम् । (यथा, मनुः । ८ । २३४ ।
"कर्णौ चर्म्म च बालांश्च वस्तिं स्नायुञ्च रोच-
नाम् ।
पशुषु स्वामिनां दद्यात् मृतेष्वङ्गानि दर्शयेत्
॥")
वरयोषित् । इति मेदिनी । ने, ११८ ॥ (वसु-
देवपत्नी । यथा, भागवते । ९ । २४ । ४५ ।
"पौरवी रोहिणी भद्रा मदिरा रोचना इला ।
देवकी प्रमुखाश्चासन् पत्न्य आनकदुन्दुभेः
॥")

**रोचनिका**, स्त्री, (रोचनैव । स्वार्थे कन् ।

टापि अत इत्वम् ।) वंशरोचना । इति राज-
निर्घण्टः ॥ शुण्डारोचनी । इति रत्नमाला ॥

पर्य्यायः । विभ्राट् २ भ्राजिष्णुः ३ । इत्यमरः
॥
(यथा, कथासरित्सागरे । ९४ । ९ ।
"तत्र शूकरवृन्दानि भिन्दन् बाणैर्निरन्तरम् ।
श्यामलाम्बररोचिष्णुस्तमांसीव रविः करैः ॥"
रोचकः । यथा, सुश्रुते । १ । ४५ । मद्यवर्गे ।
"सुगन्धि दीपनं हृद्यं रोचिष्णु कृमिनाशनम्
॥")

**रोची**, स्त्री, (रोचते इति । रुच् + इन् । वा

ङीष् ।) हिलमोचिका । इति शब्दरत्नावली ॥

**रोची**, [न्] त्रि, (रोचते इति । रुच् + णिनिः ।)

रोचिष्णुः । इति हेमचन्द्रः ॥

**रोच्यं**, त्रि, (रुच् + ण्यः । "यजयाचरुचप्रवच-

र्च्चश्च ।" ७ । ३ । ६६ । इति कवगदिशो न
।)
प्रकाश्यम् । प्रीतिविषयः । रुचधातोः कर्म्मणि
यप्रत्ययेन निष्पन्नोऽयम् ॥

**रोट्**, [ष्] त्रि, (रुष् + "अन्येभ्योऽपि दृश्यन्ते ।"

३ । २ । ७५ । इति विच् ।) हिंस्रः । वधकः ।
रोषतीति विचि गुणः । इति मुग्धबोधटीकायां
दुर्गादासः ॥

**रोटिका**, स्त्री, पिष्टकविशेषः । रोटी इति रुटी

इति च भाषा । तत्करणप्रकारमाह ।

विष्टम्भिनी न चक्षुष्या तद्गुणा
तिलशष्कुली ॥"
इति भावप्रकाशः ॥

**रोड**, ऋ अनादरे । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) ऋ, अरुरोडत् । इति
दुर्गादासः ॥

**रोदः**, [स्] क्ली (रुद् + असुन् ।) स्वर्गः । भूमिः ।

इति मेदिनी । से, ३३ ॥ (यथा, ऋग्वेदे । ९
।
२२ । ५ ।
"एते पृष्ठानि रोदसोर्विप्रयन्तो व्यानशुः ॥")

**रोदनं**, क्ली, (रुद् + ल्युट् ।) क्रन्दनम् । (यथा,

चाणक्यशतके । ६२ ।
"दुर्ब्बलस्य बलं राजा बालानां रोदनं बलम्
।
बलं मूर्खस्य मौनित्वं चौराणामनृतं बलम्
॥")
अस्रु । इति मेदिनी । ने, ११९ ॥ तस्य
शुभाशुभं
यथा, --
"अनश्रु स्निग्धरुदितमदीनं शुभदं नृणाम् ।
प्रचुराश्रु दीनं रूक्षञ्च रुदितं न सुखावहम्
॥"
इति गारुडे ६६ अध्यायः ॥
कपिलाधेनूनां नेत्राम्बुना रत्नसमूहो जातः
।
यथा, --
"युद्धे मुनिं मृतं दृष्ट्वा रुरोद कपिला मुहुः
॥"
इत्युपक्रम्य ।
"तदश्रुबिन्दुना मर्त्ये रत्नसंघो बभूव ह ॥"
रोदनाश्रुपतनेन मृतानां नरकं स्यात् ।
यथा, --
"ज्ञानिनो मा रुदन्त्येव मा रोदीः पुत्त्र
साम्प्र-
तम् ।

रोदनाश्रुप्रपतनान्मृतानांनरकं ध्रुवम् ॥”
इति ब्रह्मवैवर्त्ते गणपतिखण्डे २७ अध्यायः ॥
मृतमुद्दिश्य रोदननिषेधो यथा, --
“श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः ।
अतो न रोदितव्यं हि क्रियाः कार्य्या विधानतः ॥”
इति शुद्धितत्त्वम् ॥

**रोदनिका**, स्त्री, (रोदनं अश्रु पात्यत्वेनास्त्यस्येति ।
रोदन + ठन् ।) यवासः । इति राजनिर्घण्टः ॥
(विषयोऽस्य यवासशब्दे ज्ञातव्यः ॥)

**रोदनी**, स्त्री, (रुद्यतेऽनयेति । रुद् + करणे ल्युट् ।
ङीप् ।) दुरालभा । इत्यमरः । २ । ४ । ९२ ॥

**रोदसी**, स्त्री, (रोदस् + गौरादित्वात् ङीष् ।)
स्वर्गः । भूमिः । इत्यमरः । ३ । ३ । २२८ ॥

**रोदसी**, व्य, स्वर्गः । भूमिः । यथा, --
“द्यावापृथिव्यौ रोदस्यौ रोदसी रोदसीति च ॥”
इति भरतधृतकोषः ॥

**रोदस्यौ**, स्त्री, भूमिस्वर्गौ । यथा, --
“प्रसूरश्वापि भूद्यावौ रोदस्यौ रोदसी च ते ॥”
इत्यमरः । ३ । ३ । २२८ ॥
“भूर्भूमिः द्यौराकाशं एते सहिते विगृहीते च
रोदसीरोदःशब्दयोर्वाच्येते इति भूद्यावौ परा-
मृष्येते एतेन ईवन्तसान्तशब्दद्वयेन एकवच-
नान्तेनापि भूद्यावौ समुदिते उच्येते ।
‘रोदश्च रोदसी चापि दिवि भूमौ पृथक् पृथक् ।
सह प्रयोगेऽप्यनयो रोदः स्यादपि रोदसी ॥’
इति विश्वः ॥
‘रोदसी रोदसा सार्द्धं पृथ्वीस्वर्गे दिवि क्षितौ ॥’
इत्यजयः ॥
रोदसीत्यव्ययमप्यस्ति । यथा । द्यावापृथिव्यौ
रोदस्यौ रोदसी रोदसीति चेति ।” इति
तट्टीकायां भरतः ॥

**रोधः**, पुं, (रुणद्धि जलमिति । रुध् + पचाद्यच् ।)
नदीतीरम् । इत्यमरटीकायां भरतः । १ । १० । ७ ॥
(रुध् + घञ् । रोधनम् । यथा, मार्कण्डेये ।
१३ । १ ।
“अहं वैश्यकुले जातो जन्मन्यस्मात्तु सप्तमे ।
समतीते गवां रोधं निपाने कृतवान् पुरा ॥”)

**रोधः**, [स्] क्ली, (रुणद्धि वार्य्यादिकमिति । रुध +

"सर्व्वधातुभ्योऽसुन् ।" उणा० ४ । १८८ । इति
असुन् ।) नदीतीरम् । इत्यमरः । १ । १० । ७ ॥
(यथा, रघुः । ५ । ४२ ।
"स नर्म्मदारोधसि सीकरार्द्रै-
र्मरुद्भिरानर्त्तितनक्तमाले ।
निवेशयामास विलङ्घिताध्वा
क्लान्तं रजोधूसरकेतु सैन्यम् ॥")

**रोधनः**, त्रि, (रुणद्धीति । रुध + ल्युः ।) रोधकर्त्ता ।

(रुध् + भावे ल्युट् ।) रोधे, क्ली । इति व्याक-
रणम् ॥ (यथा, भागवते । ३ । ३० । २७ ।
"पातनं गिरिशृङ्गेभ्यो रोधनं चाम्बुगर्त्तयोः ॥")

**रोधवक्रा**, स्त्री, (रोधेन वक्रा ।) नदी । यथा ।

निम्नगा रोधवक्रा च स्रवन्ती सिन्धुरापगेति
नदीपर्य्याये भागुरिः । इति भरतः ॥

**ल-**

**ल**, लकारः । स तु यवर्गस्य तृतीयो वर्णो व्यञ्जन-

स्याष्टाविंशवर्णश्च ।
अस्योच्चारणस्थानं दन्तः ।
इति व्याकरणम् ॥ (तथाच
सिद्धान्तकौमुद्याम् ।
"लृतुलसानां दन्ताः ॥") तस्य
स्वरूपं यथा, --
"लकारं चञ्चलापाङ्गि !
कुण्डलीत्रयसंयुतम् ।
पीतविद्युल्लताकारं
सर्व्वरत्नप्रदायकम् ॥
पञ्चदेवमयं वर्णं पञ्चप्राणमयं
सदा ।
त्रिशक्तिसहितं वर्णं
त्रिबिन्दुसहितं सदा ।
आत्मादितत्त्वसहितं हृदि
भावय पार्व्वति ! ॥"
इति कामधेनुतन्त्रम् ॥ * ॥
(वङ्गीयवर्णमालायाम् ।) अस्य
लेखनप्रकारो
यथा, --
"कुण्डलीत्रयसंयुक्ता
वामाद्दक्षगता त्वधः ।
पुनरूर्द्ध्वगता रेखा तासु
नारायणः शिवः ।
ब्रह्मशक्तिश्च
सन्तिष्ठेद्ध्यानमस्य प्रचक्षते
॥"
ध्यानं यथा, --
"चतुर्भुजां पीतवस्त्रां
रक्तपङ्कजलोचनाम् ।
सर्व्वदा वरदां भीमां
सर्व्वालङ्कारभूषिताम् ॥
योगीन्द्रसेवितां नित्यां योगिनीं
योगरूपिणीम् ।
चतुर्व्वर्गप्रदां देवीं
नागहारोपशोभिताम् ॥

आपने चुर्भ्यो ञिर्व्वेति विभाषितत्वात् न ञिः
कर्म्मणि क्तः ततः स्वार्थे कः लक्तकोऽन्तः
स्थादिः ।
अज्यते स्म अक्तं व्यक्तं अन्जोः क्तः न अक्तं कं
मुखं यस्मादिति त्रिपदबहुव्रीहौ मनीषादित्वात्
अक्तस्य पूर्व्वलोपे नक्तकस्तवर्गपञ्चमादिरपि ।
इति तट्टीकायां भरतः ॥

**लक्तकर्म्मा**, [न्] पुं, (लक्तं रक्तवर्णं करोतीति ।

कृ + मनिन् ।) रक्तवर्णलोध्रः । इति शब्द-
चन्द्रिका ॥

**लक्ष**, क ञ दर्शने । अङ्के । इति कविकल्पद्रुमः ॥

(चुरा०-उभ०-सक०-सेट् ।) क ञ, लक्षयति
लक्षयते घटं लोकः । पश्यति चिह्नयुक्तं करोती-
त्यर्थो वा । इति दुर्गादासः ॥

**लक्षं**, क्ली, (लक्षयतीति । लक्ष + अच् ।) व्याजः ।

शरव्यम् । इति मेदिनी । षे, २३ ॥ (यथा,
मनुः । ७ । ५४ ।
"मौलान् शास्त्रविदः शूरान् लब्धलक्षान्
कुलोद्गतान् ।
सचिवान् सप्त चाष्टौ वा प्रकुर्व्वीत परीक्षि-
तान् ॥")

**लक्षं**, क्ली, स्त्री, (लक्षयतीति । लक्ष + अच् ।)

दशायुतसंख्या । इति मेदिनी । षे, २३ ॥ लाक
इति भाषा । (यथा, कथासरित्सागरे । ४३ ।
१०९ ।
"तस्यैकादशभिर्म्मित्रैः सहायातैर्युतस्य हि ।
लक्षमभ्यधिकं देव वर्त्तते वरवाजिनाम् ॥")

**लक्षकं**, क्ली, (लक्षयतीति । लक्ष + ण्वुल् ।)

लक्षयति यत् । यथा । लक्षकं नाम लक्षयति ।
"यादृशार्थस्य सम्बन्धवति शक्तन्तु यद्भवेत् ।
तत्र तल्लक्षकं नाम तच्छक्तिविधुरं यदि ॥"
यादृशार्थसम्बन्धवति यन्नाम सङ्केतितं तदेव
तादृशार्थे लक्षकं यदि तादृशार्थे शक्तिशून्यं
भवेत् । सैन्धवादयस्तु शब्दाः तुरगादिसम्ब-
न्धिनि लवणादाविव तुरगादावपि शक्ता एव ।
गङ्गादयस्तु तीरादावसङ्केतिताः तत्सम्बन्धि-

कुन्ताः प्रविशन्तीत्यादौ लक्ष्यस्य कुन्तधरादेर-
न्वयविशेष्यत्वानुपपत्तेः । कुमतिः पशुरित्यादौ
लक्षार्थयोर्म्मिथोऽन्वयबोधस्याप्यनुभविकत्वाच्च
।
तस्मात् शक्तेरिव भक्तेरपि ज्ञानमनुभावकं भव-
त्येव कार्य्यतावच्छेदकस्य सङ्कोचाच्च न व्यभि-
चारः । इति शब्दशक्तिप्रकाशिका ॥

**लक्षणं**, क्ली, (लक्ष्यतेऽनेनेति । लक्ष + ल्युट् ।

यद्वा, "लक्षेरट् च ।" उणा० ३ । ७ । इति
नप्रत्ययस्तस्याडागमश्च ।) चिह्नम् । (यथा,
रघुः । १० । ६ ।
"अव्याक्षेपो भविष्यन्त्याः कार्य्यसिद्धेर्हि लक्ष-
णम् ॥")
नाम । इति मेदिनी । णे, ७५ ॥ लक्ष्यते ज्ञायते-
ऽनेनेति लक्षणम् । तद्द्विविधम् । इतरभेदानु-
मापकम् । व्यवहारप्रयोजकञ्च । इति न्याय-
मतम् ॥ व्याकरणमते तु ।
"कृत्तद्धितसमासानामभिधानं नियामकम् ।
लक्षणन्त्वनभिज्ञानां तदभिज्ञानसूचकम् ॥"
इति वोपदेवः ॥
(लक्षणलक्षणन्तु । "समानासमानजातीयो
व्यवच्छेदो लक्षणार्थः ।" इति सांख्यतत्त्वकौमु-
द्याम् । ५ ॥ सुखदुःखलक्षणं यथा, मनौ । ४ ।
१६० ।
"सर्व्वं परवशं दुःखं सर्व्वमात्मवशं सुखम् ।
एतद्विद्यात् समासेन लक्षणं सुखदुःखयोः ॥")
दर्शनम् । इति लक्षधात्वर्थदर्शनात् ॥

**लक्षणः**, पुं, (लक्ष + "लक्षेरट् च ।" उणा० ३ । ७ ।

इति नस्तस्याडागमश्च । लक्षणमस्त्यस्येति
अच्
वा ।) सौमित्रिः । यथा, हरिवंशे । ४१ । १२९ ।
"लक्षणानुगतो यश्च सर्व्वभूतहिते रतः ।
चतुर्द्दश वने तप्त्वा तपो वर्षाणि राघवः ॥")
सारसपक्षी । इति शब्दरत्नावली ॥

**लक्षणा**, स्त्री, (लक्षण + टाप् ।) सारसी । इति

मेदिनी । णे, ७५ ॥ हंसी । इति सिद्धान्त-
कौमुद्यामुणादिवृत्तिः ॥ (अप्सरोविशेषः । यथा,

एवं ध्यात्वा लकारन्तु तन्मन्त्रं
दशधा जपेत् ॥”
इति वर्णोद्धारतन्त्रम् ॥
तस्य नामानि यथा, --
“लश्चन्द्रः पूतना पृथ्वी
माधवः शक्रवाचकः ।
बलानुजः पिनाकीशो व्यापको
मांससंज्ञकः ॥
खड्गी नादोऽमृतं देवी लवणं
वारुणीपतिः ।
शिखा वाणी क्रिया माता
भामिनी कामिनी
प्रिया ॥
ज्वालिनी वेगिनी नादः
प्रद्युम्नः शोषणो हरिः ।
विश्वात्ममन्त्रौ बली चेतो
मेरुर्गिरिः कला रसः ॥”
इति नानातन्त्रशास्त्रम् ॥
(अनुबन्धविशेषः । यथा,
कविकल्पद्रुमे ।
“दिवाद्यो ल्पादादिकः ।” एतेन
अद् लौ
भक्षणे लुग्द्भ्योऽपः । अत्ति
इति ॥ छन्दः-
शास्त्रोक्तो लघुसंज्ञको
गणविशेषः । इति
छन्दोमञ्जरी ॥)

**लं**, क्ली, (लीयतेऽत्रेति । ली + अभिधानान्निरुप-
पदेऽपि डः ।) पृथ्वीबीजम् ।
इति तन्त्रम् ॥

**लः**, पुं, (लातीति । ला + अच् ।) इन्द्रः । इति
भेदिनी । ले, १ ॥

**लक**, क स्वाद आपने । इति कविकल्पद्रुमः ॥
(चुरा०-पर०-सक०-सेट् ।)
स्वादो रसो-
पादानम् । क, लाकयति
मोदकं बालकः ।
इति दुर्गादासः ॥

बीरादिशक्तत्वेन गृहीता एव तीराद्यन्वयं बोध-
यन्ति तत्र लक्षका एव । अपि च । तदेवं
विधलक्षणावत्त्वाल्लक्षकंनामापि जहत्-
स्वार्थादिभेदादनेकविधमित्यर्थः स्यादेतद्यदि
तीरादिलक्षकतया गङ्गादिपदस्य ज्ञानं तीरा-
द्यनुभवे भवेद्धेतुस्तदोक्तक्रमेण लक्षकाणां
विभागो न त्वेतदस्ति । तीराद्यन्वयबोधं प्रति
तीरादिशक्तत्वेनैव पदज्ञानस्य लाघवेन हेतु-
तया लक्षकाणामननुभावकत्वात्गुरूणामग्नौ
शैत्यं स्पृशेदित्यादौ शक्येन दहनादिनेव गङ्गायां
घोष इत्यादौ लक्षितेन तीरादिना सार्द्धम-
गृहीतासंसर्गकस्यैव सप्तम्यर्थाधेयत्वान्वयबोध-
प्रविष्टत्वादिति चेन्न । प्रकृत्यर्थावच्छिन्नस्यैव
प्रत्य-
यार्थस्य धर्म्म्यन्तरेऽन्वयबुद्धेर्व्युत्पन्नतया
तीराद्य-
विशेषितस्य
सुबर्थाधेयत्वादेर्घोषादावन्वयबोधा-
योगात् । न च शक्तस्यैव पदस्य स्वसाकाङ्क्ष-
पदान्तरोपस्थाप्यार्थान्वितस्वार्थधर्म्मिकान्वय-
बोधं प्रति हेतुत्वादन्वयबुद्धौ लक्षार्थस्य प्रवेशः
।

महाभारते । १ । १२३ । ५९ ।
“अम्बिका लक्षणा क्षेमा देवी रम्भा मनोरमा ॥”)
शक्यसम्बन्धः । यथा, --
“लक्षणा शक्यसम्बन्धस्तात्पर्य्यानुपपत्तितः॥”
इति भाषापरिच्छेदः ॥
गङ्गायां घोष इत्यादौ गङ्गापदस्य शक्यार्थे
प्रवाहरूपे घोषस्यान्वयानुपपत्तिस्तात्पर्य्यानुप
पत्तिर्व्वा यत्र प्रतिसन्धीयते तत्र लक्षणया
तीरस्य बोधः । सा च शक्यसम्बन्धरूपा । तथा
हि प्रवाहरूपशक्यार्थसम्बन्धस्य तीरे गृही-
तत्वात्तीरस्य स्मरणं ततः शाब्दबोधः । इति
सिद्धान्तमुक्तावली ॥ * ॥ अपि च ।
“जहत्स्वार्थाजहत्स्वार्थानिरूढाधुनिकाः
दिकाः ।
लक्षणा विविधास्ताभिर्लक्षकं स्यादनेकधा ॥”
काचिल्लक्षणा शक्यावृत्तिरूपेण बोधकतया
जहत्स्वार्थेत्युच्यते । यथा तीरत्वादिना गङ्गादि-
पदस्य । काचिच्छक्यलक्षोभयवृत्तिनाशक्य-

**लकचः**, पुं, लकुचवृक्षः । इति शब्दरत्नावली ॥

**लकुचः**, पुं, (लक्यते इति । लक स्वादे + बाहु-

लकादुचः ।) वृक्षविशेषः ।
डेहुया इति
मादार इति च भाषा ।
तत्पर्य्यायः । लिकुचः २
शालः ३ कषायी ४
दृढवल्कलः ५ डहुः ६
कार्श्यः ७ शूरः ८
स्थूलस्कन्धः ९ । अस्य गुणाः
।
तिक्तरसत्वम् । कषायत्वम् ।
उष्णत्वम् । लघु-
त्वम् । कण्ठदोषहरत्वम् ।
दाहित्वम् । मल-
संग्रहदायकत्वञ्च । इति
राजनिर्घण्टः ॥ * ॥
अपि च ।
“लकुचः क्षुद्रपनसो लिकुचो
डहुरित्यपि ।
आमं लकुचमुष्णञ्च गुरु
विष्टम्भकृत्तथा ॥
मधुरञ्च तथाम्लञ्च
दोषत्रितयरक्तकृत् ।
शुक्राग्निनाशनञ्चापि
नेत्रयोरहितं स्मृतम् ॥
सुपक्वं तत्तु मधुरमम्लं
चानिलपित्तकृत् ।
कफवह्निकरं रुच्यं वृष्यं
विष्टम्भकञ्च तत् ॥”
इति भावप्रकाशः ॥ * ॥
अन्यच्च ।
“लकुचं गुरु विष्टम्भि स्वाद्वम्लं
रक्तपित्तकम् ।
श्लेष्मकारि समीरघ्नमुष्णं
शुक्राग्निनाशनम् ॥”
इति वैद्यकम् ॥

**लक्तकः**, पुं, (रक्तेन रक्तवर्णेन कायतीति । कै +

| | | |
|---|---|---|
| कः । रस्य लत्वम् ।) अलक्तकः । इति शब्द-रत्नावली ॥ (यथा, गो० रामायणे । २ । ६० । १६ । “प्रकृत्या लक्तकरसप्रख्यौ तद्रसवर्ज्जितौ । तथैव रेजतुस्तस्याश्चरणौ पद्मवर्च्चसौ ॥”) जीर्णवस्त्रखण्डम् । नेकडा इति भाषा । तत्-पर्य्यायः । कर्पटः २ । इत्यमरः ॥ नक्तकः ३ । इति भरतः ॥ द्वे मलिनत्वादिदुष्टजीर्णवस्त्रखण्डे नेकडा इति ख्याते । लक्तकाद्यष्टकं वस्त्रमात्रे इति केचित् ॥ पटोऽस्त्री कर्पटः शाटः सिचय-प्रोतलक्तकाः । इति रभसः ॥ लक्यते हीनै-रास्वाद्यते अनुभूयते लक्तः रक लक क स्वाद | | |

वृत्तिनैव वा
रूपेणानुभावकत्वादजहत्स्वार्था।
यथा द्रव्यत्वादिना नीलघटत्वादिना च
घटादि-
पदस्य ।
काचिल्लक्षतावच्छेदकीभूततत्तद्रूपेण
पूर्व्वपूर्व्वं प्रत्यायकत्वान्निरूढा । यथा,
आरु-
ण्यादिप्रकारेण
तदाश्रयद्रव्यानुभावकत्वादरू-
णादिपदस्य । काचिच्च पूर्व्वपूर्व्वं
ताद्रूप्येणा-
प्रत्यायकत्वादाधुनिकी । यथा घटत्वादिना
पटादिपदस्य । आदिना
शक्यसदृशत्वप्रकारेण
बोधकतया गौणीत्युपगृह्यते । यथा अग्नि-
र्माणवक इत्यादावग्निसदृशत्वादिना
अग्न्यादि-
पदस्य । इति शब्दशक्तिप्रकाशिका ॥ * ॥
अन्यच्च ।
“मुख्यार्थवाधे तद्युक्तो ययान्योऽर्थः
प्रतीयते ।
रूढेःप्रयोजनाद्वासौ लक्षणाशक्तिरर्पिता ॥”
१ ॥
कलिङ्गः साहसिक इत्यादौ
कलिङ्गादिशब्दो
देशविशेषादिरूपे स्वार्थे असम्भवन् यया
शब्दस्य
शक्त्या स्वसंयुक्तान् पुरुषादीन्
प्रत्याययति ।
यथा च गङ्गायां घोष इत्यादौ गङ्गादिशब्दो
जलमयाद्यर्थवाचकत्वात् प्रकृतेऽसम्भवन्
स्वस्य
सामीप्यादिसम्बद्धसम्बन्धिनंतटादिं
बोधयति ।
सा शब्दस्यार्पिता स्वाभाविकेतरा
ईश्वरानुद्-
द्भाविता वा शक्तिर्लक्षणा नाम । पूर्व्वत्र हेतू
रूढिः प्रसिद्धिरेव । उत्तरत्र गङ्गातटे घोष

कृतादयः शब्दाः आत्मानमर्पयन्ति । अत्राप-
कारिणं प्रति उपकारादिप्रतिपादनान्मुख्यार्थ-
वाधः वैपरीत्यलक्षणः सम्बन्धः फलमपकारा-
द्यतिशयः । इत्यमेव जहत्स्वार्थेत्युच्यते ॥ * ॥
“आरोपाध्यवसानाभ्यां प्रत्येकं ता अपि द्विधा
।”
ताः पूर्ब्बोक्ताश्चतुर्भेदा लक्षणाः ।
“विषयस्यानिगीर्णस्यान्यतादात्म्यप्रतीतिकृत् ।
सारोपा स्यान्निगीर्णस्य मता साध्यवसा-
निका ॥ ४ ॥
रूढावुपादानलक्षणा सारोपा यथा । अश्वः
श्वेतो धावति अत्र हि श्वेतगुणवान् अश्वोऽनि-
गीर्णस्वरूपः स्वसमवेतश्वेतगुणतादात्म्येन
प्रती-
यते । प्रयोजने यथा एते कुन्ताः प्रविशन्ति
अत्र सर्व्वनाम्ना कुन्तधारिपुरुषनिर्द्देशात्
सारोपात्वम् । रूढौ लक्षणलक्षणा यथा ।
कलिङ्गः पुरुषो युध्यति । अत्र पुरुषकलिङ्गयो-
राधार्य्याधारतासम्बन्धः । प्रयोजने यथा आयु-
र्घृतम् । अत्रायुष्कारणमपि घृतं कार्य्यकारण-
भावसम्बन्धसम्बन्ध्यायुस्तादात्म्येन प्रतीयते
अन्य-
वैलक्षण्येनाव्यभिचारेणायुष्करणं प्रयोजनम् ।
यथा च राजकीये पुरुषे गच्छति राजासौ
गच्छति इत्यत्र स्वस्वामिभावलक्षणः सम्बन्धः
।
यथा वा अग्रमात्रेऽवयवे हस्तोऽयम् । अत्राव-
यवावयविभावलक्षणःसम्बन्धः । ब्राह्मणेऽपि
तक्षासौ अत्र तात्कर्म्म्यलक्षणः सम्बन्धः ।
इन्द्रा-
र्थासु स्थूणासु अमी इन्द्राः अत्र तादर्थ्यरूपः ।
एवमन्यत्रापि । निगीर्णस्य पुनर्विषयस्यान्यता-
दात्म्यप्रतीतिकृत् साध्यवसाना । अस्याश्चतुर्षु
भेदेषु पूर्ब्बोदाहरणान्येव ॥ * ॥
“सादृश्येतरसम्बन्धाः शुद्धास्ताः सकला अपि
।
सादृश्यात्तु मता गौण्यस्तेन षोडश
भेदिताः ॥” ५ ॥
ताः पूर्ब्बोक्ता अष्टभेदा लक्षणाः सादृश्येतर-

भूत्वा षोडशभेदाः । तत्र गूढः
वाक्यार्थभावना-
परिपक्वबुद्धिविभवमात्रवेद्यः । यथा
उपकृतं
बहु तत्रेत्यादि । अगूढोऽतिस्पष्टतया
सर्व्वजन-
वेद्यः । यथा उपदिशति कामिनीनां
यौवन-
मद एव ललितानि ।
अत्रोअप्दिशतीत्यनेन
आविष्करोतीति लक्ष्यते
आविष्कारातिशय-
श्चाभिधेयवत् स्फुटं प्रतीयते ॥ * ॥
“धर्म्मिधर्म्मगतत्वेन फलस्यैता अपि
द्विधा ॥” ७ ॥
एता अनन्तरोक्ताः षोडशभेदा
लक्षणाः
फलस्य धर्म्मगतत्वेन धर्म्मिगतत्वेन
च प्रत्येकं
द्विधा भूत्वा द्वात्रिंशद्भेदाः ।
क्रमेणोदाहरति ।
“स्निग्धश्यामलकान्तिलिप्तवियतो
वेल्लद्बलाका
घनाः
वाताः शीकरिणः
पयोदसुहृदामानन्दकेकाः
कलाः ।
कामं सन्तु दृढं कठोरहृदयो
रामोऽस्मि
सर्व्वं सहे
वैदेही तु कथं भविष्यति ह हा हा
देवि !
धीरा भव ॥”
अत्रात्यन्तदुःखसहिष्णुरूपे रामे
धर्म्मिणि लक्ष्ये
तस्यैवातिशयः फलम् । गङ्गायां घोष
इत्यत्र
तटादिषु लक्ष्येषु
शीतत्वपावनत्वादिरूपधर्म्म-

इति प्रतिपादनादलभ्यस्य
शीतत्वपावनत्वाति-
शयस्य बोधनरूपं प्रयोजनम् । हेतुं विनापि
यस्य कस्यचित् सम्बन्धिनो
लक्षणेऽतिप्रसङ्गः
स्यादत उक्तं रूढेः प्रयोजनाद्वेति ॥ * ॥
तद्भेदानाह ।
"मुख्यार्थस्येतराक्षेपो
वाक्यार्थेऽन्वयसिद्धये ।
स्यादात्मनोऽप्युपादानादेषोपादानलक्षणा
॥" २ ॥
रूढावुपादानलक्षणा यथा । श्वेतो यावति ।
प्रयोजने यथा । कुन्ताः प्रविशन्ति । अन-
योर्हि श्वेतादिभिः कुन्तादिभिश्च अचेतन-
तया केवलैर्धावनप्रवेशनक्रिययोः
कर्त्तृतया-
न्वयमलभमानैरेतत्सिद्धये
आत्मसम्बन्धिनो
ऽश्वादयः पुरुषादयश्च आक्षिप्यन्ते ।
पूर्ब्बत्र
प्रयोजनाभावाद्रूढिः । उत्तरत्रं कुन्तादीना-
मतिगहनत्वं प्रयोजनम् । अत्र च मुख्यार्थ-
स्यात्मनोऽप्युपादानम् ।
लक्षणलक्षणायान्तु
परस्यैवोपलक्षणमित्यनयोर्भेदः ।
इयमेवाजहत्-
स्वार्थेत्युच्यते ॥ * ॥
"अर्पणं स्वस्य वाक्यार्थे
परस्यान्वयसिद्धये ।
उपलक्षणहेतुत्वादेषा लक्षणलक्षणा ॥" ३
॥
रूढिप्रयोजनयोर्लक्षणलक्षणा यथा ।
कलिङ्गः
साहसिकः गङ्गायां घोष इति च । अनयोर्हि
पुरुषतटयोर्वाक्यार्थेऽन्वयसिद्धये
कलिङ्गगङ्गा-
शब्दावात्मानमर्प्यतः । यथा वा ।
"उपकृतं बहु तत्र किमुच्यते
सुजनता प्रथिता भवता परम् ।
विदधदीदृशमेव सदा सखे
सुखितमास्म ततः शरदां शतम् ॥"
सम्बन्धाः कार्य्यकारणभावादयः । अत्र शुद्धानां
पूर्ब्बोदाहरणान्येव । रूढावुपादानलक्षणा
सारोपा गौणी यथा । एतानि तैलानि हेमन्ते
सुखानि अत्र तैलशब्दस्तिलभवस्नेहरूपं
मुख्यार्थमुपादायैव सार्षपादिस्नेहेषु वर्त्तते ।
प्रयोजने यथा राजकुमारेषु तत्सदृशेषु च
गच्छत्सु एते राजकुमारा गच्छन्ति । रूढा
वुपादानलक्षणा साध्यवसाना गौणी यथा
तैलानि हेमन्ते सुखानि । प्रयोजने यथा
राजकुमारा गच्छन्ति । रूढौ लक्षणलक्षणा
सारोपा गौणी यथा राजा गौडेन्द्रः कण्टकं
शोधयति । प्रयोजने गौर्व्वाहिकः । रूढौ
लक्षणलक्षणा साध्यवसाना गौणी यथा
कण्टकं शोधयति । प्रयोजने यथा गौर्ज्ज-
ल्पति ॥ * ॥
"व्यङ्गस्य गूढागूढत्वाद्द्विधा स्युः फल-
लक्षणाः ॥" ६ ॥
प्रयोजने या अष्टभेदा लक्षणा दर्शितास्ताः
प्रयोजनरूपव्यङ्ग्यस्य गूढागूढतया प्रत्येकं
द्विधा
स्यातिशयः फलम् ॥ * ॥
"तदेवं लक्षणाभेदाश्चत्वारिंशन्मता
बुधैः ॥"
रूढावष्टौ फले द्वात्रिंशदिति
चत्वारिंशल्लक्षणा-
भेदाः ॥ * ॥ किञ्च ।
"पदवाक्यगतत्वेन प्रत्येकं ता अपि
द्विधा ।" ८ ।
ता अनन्तरोक्ताः । अत्र पदगतत्वेन
यथा
गङ्गायां घोषः । वाक्यगतत्वेन यया
उपकृतं
बहु तत्रेति । एवमशीतिप्रकारा लक्षणा
।
इति साहित्यदर्पणम् ॥

**लक्षा**, स्त्री, (लक्षयतीति । लक्ष् + अच् । टाप्
।)

लक्षम् । दशायुतसंख्या । इति मेदिनी
।
षे, २३ ॥

**लक्षितः**, त्रि, (लक्ष् + क्तः ।) आलोचितः ।
दृष्टः ।

(यथा, रघुः । ७ । ४४ ।
"यैः सादिता लक्षितपूर्ब्बकेतून्
तानेव सामर्षतया निजघ्नुः ॥")
अङ्कितः । इति लक्षधातोः कर्म्मणि
क्तप्रत्ययेन
निष्पन्नम् ॥ लक्षणाश्रयश्च ॥

**लक्षितलक्षणा**, स्त्री, लक्षिते लक्षणा । यथा

द्विरेफपदेन
बहुव्रीहिलक्षणयोपस्थापिताद्रेफ-
द्वययुक्तभ्रमरपदादभिधयैव
भृङ्गोपस्थितिः । अत्र
रूढिरस्ति । प्रकृते तु
रूढिप्रयोजनाभावा-
न्नेयार्थत्वं इयमेव
लक्षितलक्षणेत्युच्यते । न च
लक्षणाद्वयाभावात् कथमियं
लक्षितलक्षणेति

| | | |
|---|---|---|
| अत्रानुपकारादीनां वाक्यार्थेऽन्वयसिद्धये उप- | | वाच्यम् । यत्र लक्षिताच्छब्दादर्थाभिधानं तत्रैव लक्षितलक्षणायाः परिभाषितत्वात् । इति साहित्यदर्पणटीकाकृत् श्रीरामचरणतर्क- वागीशः ॥<br>**लक्षिता**, स्त्री, (लक्ष + क्तः । स्त्रियां टाप् ।) परकीयान्तर्गतनायिकाभेदः । अस्या लक्षणम् । |

पुंश्चलीभावनिपुणा । उदाहरणं यथा, --
"यद्भूतं तद्भूतं यद्भूयात्तदपि वा भूयात् ।
यद्भवतु तद्भवतु वा विफलस्तव गोपनोपायः ॥"
इति रसमञ्जरी ॥

**लक्ष्म**, [न्] क्ली, (लक्षयत्यनेन लक्ष्यते इति वा ।
लक्ष + मनिन् ।) चिह्नम् । (यथा, शाकुन्तले १ अङ्के ।
"सरसिजमनुविद्धं शैवलेनापि रम्यं
मनिलमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥")
प्रधानम् । इत्यमरः । ३ । ३ । १२४ ॥

**लक्ष्मणं**, क्ली, चिह्नम् । इति शब्दरत्नावली ॥
(यथा, माघे । ९ । ३१ ।
"अथ लक्ष्मणानुगतकान्तवपु
र्जलधिं विलङ्घ्य शशिदाशरथिः ।
परिवारितः परित ऋक्षगणै-
स्तिमिरौघराक्षसकुलं विभिदे ॥")
नाम । इत्यमरटीकायां भरतः ॥ (लक्ष्मीरस्त्य-
स्येति । लक्ष्मी + पामादित्वान्नः । लक्ष्म्या अच्चेति
गणसूत्रेणात्वं बोध्यम् ।)
श्रीविशिष्टे, त्रि । इति मेदिनी । णे, ७५ ॥

**लक्ष्मणः**, पुं, (लक्ष्मणमस्त्यस्येति । अर्शआदि-
स्त्रीबन्ध्यत्वनाशित्वम् । रसायनकरत्वम् । बल्य-
त्वम् । त्रिदोषशमनत्वञ्च । इति राजनिर्घण्टः ॥
अपि च ।
"पुत्त्रकाकाररक्ताल्पबिन्दुभिर्लाञ्छिता सदा ।
लक्ष्मणा पुत्त्रजननी वस्तगन्धाकृतिर्भवेत् ॥"
इति भावप्रकाशः ॥ * ॥
(मद्राधिपतिकन्या । यथा, भागवते । १० । ५८ । ५७ ।
"सुताञ्च मद्राधिपतेर्लक्ष्मणां लक्ष्मणैर्युताम् ।
स्वयंवरे जहारैकः स सुपर्णः सुधामिव ॥")
दुर्य्योधनकन्या । सा तु श्रीकृष्णपुत्त्रेण साम्बेन
विवाहिता । इति महाभारतम् ॥ (यथा, भागवते । १० । ६८ । १ ।
"दुर्य्योधनसुतां राजन् लक्ष्मणां समितिञ्जयः ।
स्वयंवरस्थामहरत् साम्बो जाम्बवतीसुतः ॥")

**लक्ष्मीः**, स्त्री, (लक्षयति पश्यति उद्योगिनमिति ।
लक्षि + "लक्षेर्मुट् च ।" उणा० ३ । १६० । इति
ईप्रत्ययो मुडागमश्च ।) विष्णुपत्नी । तत्पर्य्यायः ।
पद्मालया २ पद्मा ३ कमला ४ श्रीः ५ हरि-
प्रिया ६ इन्दिरा ७ लोकमाता ८ मा ९
क्षीराब्धितनया १० रमा ११ । इत्यमरः ॥
जलधिजा १२ भार्गवी १३ । इति शब्दरत्ना-
वली ॥ हरिवल्लभा १४ दुग्धाब्धितनया १५
क्षीरसागरसुता १६ । इति कविकल्पलता ॥ * ॥
अथ लक्ष्मीमन्त्राः ।
"वान्तं वह्निसमारूढं वामनेत्रेन्दुसंयुतम् ।
बीजमेतत् श्रियः प्रोक्तं सर्व्वकामफलप्रदम् ॥" * ॥
अस्य पूजाप्रयोगः ।
प्रातःकृत्यादिपीठन्यासान्तं
कर्म्म विधाय हृत्पद्मस्य पूर्ब्बादिकेशरेषु मध्ये च
पीठशक्तीः पीठमनुञ्च न्यसेत् । ॐ विभूत्यै
नमः । एवं उन्नत्यै कान्त्यै सृष्ट्यै कीर्त्त्यै सन्नत्यै
हनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधाय आव-
रणपूजामारभेत् । अग्न्यादिकेशरेषु मध्ये दिक्षु
च श्रां हृदयाय नमः । इत्यादिना संपूज्य दिग्-
दलेषु पूर्व्वादिषु ॐ वासुदेवाय नमः । एवं सङ्क-
र्षणाय प्रद्युम्नाय अनिरुद्धाय । विदिग्दलेषु ॐ
दमकाय ॐ सलिलाय ॐ गुग्गुलवे ॐ कुरु-
ण्टकाय । ततो देव्या दक्षिणे ॐ शङ्खनिधये
नमः । एवं वसुधारायै । वामे ॐ पद्मनिधये
वसुमत्यै । पत्राग्रेषु पूर्व्वादिषु ॐ वलाक्यै नमः ।
एवं विमलायै कमलायै वनमालिकायै विभी-
षिकायै शाङ्कर्य्यै वसुमालिकायै । तद्बहिरिन्द्रा-
दीन् वज्रादींश्च पूजयेत् । ततो धूपादिविस-
र्जनान्तं कर्म्म समापयेत् । अस्य पुरश्चरणं
द्वादशलक्षजपः । तथा च ।
"भानुलक्षं जपेन्मन्त्रं दीक्षितो विजितेन्द्रियः ।
तत्सहस्रञ्च जुहुयात् कमलैर्मधुराप्लुतैः ।
जपान्ते जुहुयान्मन्त्री तिलैर्वा मधुराप्लुतैः ।
विल्वैः फलैर्व्वा जुहुयात्त्रिभिर्व्वा साधकोत्तमः ॥
वाग्भवं वनिता विष्णोर्माया मकरकेतनः ।
चतुर्ब्बीजात्मको मन्त्रश्चतुर्व्वर्गफलप्रदः ॥"
वाग्भवं ऐँ । विष्णुवनिता श्रीँ । माया ह्रीँ ।
मकरकेतनः क्लीँ । अस्य पूजादिकं पूर्व्ववद्-
बोध्यम् । तथा च ।
"रमायाः कल्पिते पीठे तद्विधानेन पूजयेत् ।
कुर्य्यात् प्रयोगान् तत्रस्थाननेन साधकोत्तमः ॥
निधिभिः सेव्यते नित्यं मूर्त्तिमद्भिरुपस्थितैः ॥"
ध्याने तु विशेषः ।
"माणिक्यप्रतिभप्रभां हिमनिभैस्तुङ्गैश्चतुर्भिर्गजै-
र्हस्तग्राहितरत्नकुम्भसलिलैराषिच्यमानां सदा ।
हस्ताब्जैर्वरदानमम्बुजयुगाभीतीर्दधानां हरेः
कान्तां काङ्क्षितपारिजातलतिकांवन्दे सरोजा-
सनाम् ॥"
अस्य पुरश्चरणं द्वादशलक्षजपः । तथा च ।
"भानुलक्षं हविष्याशी जपेदन्ते सरोरुहैः ।
जुहुयादरुणैः पुष्पैस्तत्सहस्रं जितेन्द्रियः ॥"

त्वादच् ।) सारसः । इति हेमचन्द्रः ॥ श्रीराम- भ्राता । इति मेदिनी । णे, ७६ ॥ (यथा, अध्यात्मरामायणे । १ । ३ । ४५ ।
“भरणाद्भरतो नाम लक्ष्मणं लक्ष्मणान्वितम् ।
शत्रुघ्नं शत्रुहन्तारमेवं गुरुरभाषत ॥”)
स च त्रेतायुगे अयोध्यायां सुमित्रागर्भे दश- रथाज्जातः । इन्द्रजिद्वधार्थं तस्य त्तुर्द्दशवर्ष- पर्य्यन्तं आहारनिद्रादिरहितत्वं यथा, --
“एकदा रघुनाथश्च सीतया लक्ष्मणेन च ।
स्नातः सरसि तत्रस्थो रम्ये पञ्चवटीतटे ॥
उवाच सीतां हेमन्ते जलं सुस्वादु निर्म्मलम् ।
तथान्नव्यञ्जनं रम्यं सर्व्वं वस्तु सुशीतलम् ॥
फलञ्च चयनं चक्रे सीतायै प्रददौ पुरः ।
ततो ददौ लक्ष्मणाय पश्चाद्भुङ्क्ते स्वयं प्रभुः ॥
लक्ष्मणस्तु गृहीत्वा च नैव भुङ्क्ते फलं जलम् ।
मेघनादवधार्थञ्च सीतोद्धारणकारणात् ॥
निद्रां न याति नो भुङ्क्ते वर्षाणाञ्च चतुर्द्दश ।
य एव पुरुषो योगी तद्वध्यो रावणात्मजः ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ११५ अध्यायः ॥

**लक्ष्मणप्रसूः**, स्त्री, (लक्ष्मणस्य प्रसूर्जननी ।)

व्युष्ट्यै उत्कृष्ट्यै ऋद्‌ध्यै । ततः श्रीकमलासनाय नमः । इत्यासनं विन्यस्य ऋष्यादिन्यासं कुर्य्यात् ।
शिरसि भृगुऋषये नमः मुखे निवृच्छन्दसे नमः ।
हृदि श्रियै देवतायै नमः । ततः कराङ्गन्यासौ कुर्य्यात् । श्रां अङ्गुष्ठाभ्यां नमः । श्रीं तर्जनीभ्यां स्वाहा । श्रूं मध्यमाभ्यां वषट् । इत्यादि ।
एव श्रां हृदयाय नमः इत्यादिना च न्यसेत् ।
तथा च निबन्धे ।
“अङ्गानि दीर्घयुक्तेन रमाबीजेन कल्पयेत् ।”
ततो ध्यानम् ।
“कान्त्या काञ्चनसन्निभां हिमगिरिप्रख्यै- श्चतुर्भिर्गजै र्हस्तोत्क्षिप्तहिरण्मयामृतघटैराषिच्यमानां श्रियम् ।
बिभ्राणां वरमब्जयुग्ममभयं हस्तैः किरीटो- ज्ज्वलां क्षौमाबद्धनितम्बविम्बललितांवन्देऽरविन्द- स्थिताम् ॥”
एवं ध्यात्वा मानसैः संपूज्य शङ्खस्थापनं कुर्य्यात् ।
ततः पीठपूजां विधाय केशरेषु मध्ये च विभू- त्यादिपीठमन्वन्तपूजां विधाय पुनर्ध्यात्वा आवा-

मन्त्रान्तरम् । नमः कमलान्ते वासिन्यै ठद्वय- मिति प्रोक्तो दशाक्षरः । तथा च निबन्धे ।
“दीर्घा यादिर्विसर्गान्तो ब्रह्मा भानुर्व्वसुन्धरा ।
वान्तेसिन्यै प्रिया वह्नेर्मनुः प्रोक्तो दशाक्षरः ॥”
“दीर्घा नकारः । यादिर्मः । ब्रह्मा कः । भानुर्मः । वसुन्धरा लः । वान्तेसिन्यै वासिन्यै ।
वह्निप्रिया स्वाहा । अस्य पूजाप्रयोगः । पूर्व्व- वत् पीठमन्वन्तं विन्यस्य ऋष्यादिन्यासं कुर्य्यात् । शिरसि दक्षऋषये नमः । मुखे विराट्छन्दसे नमः । हृदि श्रियै देवतायै नमः ।
तथा च शारदायाम् ।
“ऋषिर्दक्षो विराट्छन्दो देवता श्रीः प्रकी र्त्तिता ॥”
ततः कराङ्गन्यासौ । ॐ देव्यै नमोऽङ्गुष्ठाभ्यां नमः । ॐ पद्मिन्यै नमस्तर्जनीभ्यां स्वाहा ।
ॐ विष्णुपत्न्यै नमो मध्यमाभ्यां वषट् ।
ॐ वरदायै नमोऽनामिकाभ्यां हुं ।

| | | |
|---|---|---|
| मुमित्रा । इति शब्दरत्नावली ॥<br><br>**लक्ष्मणा**, स्त्री, (लक्ष्मणमस्त्यस्या इति । अर्श<br><br>आदित्वात् अच् । टाप् ।)<br>श्वेतकण्टकारी ।<br>इति राजनिर्घण्टः ॥ सारसी ।<br>ओषधिभेदः ।<br>इति मेदिनी । ७६ ॥ शेषस्तु<br>लक्ष्मणाकन्द इति<br>नाम्ना ख्यातः । तस्याः पर्य्यायः<br>। पुत्त्रकन्दा २<br>पुत्त्रदा ३ नागिनी ४ नागाह्वा ५<br>नागपत्री ६<br>तुलिनो ७ मज्जिका ८<br>अस्रबिन्दुच्छदा ९<br>पुच्छदा १० । अस्या गुणाः ।<br>मधुरत्वम् । शीतत्वम् । | | |

ॐ कमलरूपायै नमः कनिष्ठाभ्यां फट् । एवं हृदयादिषु । ॐ देव्यै नमो हृदयाय नम इत्यादि । तथा च निबन्धे ।
"देव्यै हृदयमाख्यातं पद्मिन्यै शिर ईरितम् ।
विष्णुपत्न्यै शिखा प्रोक्ता वरदायै तनुच्छदम् ।
अस्त्रं कमलरूपायै नमोऽन्ताः प्रणवादिकाः ॥"
ततो ध्यानम् ।
"आसीना सरसीरुहे स्मितमुखी हस्ताम्बुजैर्बिभ्रती
दानं पद्मयुगाभये च वपुषा सौदामिनीसन्निभा ।
मुक्ताहारविराजमानपृथुलोत्तुङ्गस्तनोद्भाषिणी
पायाद्वः कमला कटाक्षविभवैरानन्दयन्ती हरिम् ॥"
एवं ध्यात्वा मानसैः संपूज्य शङ्खस्थापनं कृत्वा पूर्व्वोक्तपीठशक्तिसहितपीठमन्वन्तां पूजां
विधाय पूनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधायावरणपूजामारभेत् । अग्न्यादिचतुष्क दिक्षु च ॐ देव्यै नमो हृदयाय नमः । ॐ पद्मिन्यै नमः शिरसे स्वाहा । ॐ विष्णुपत्न्यै नमः शिखायै वषट् । ॐ वरदायै नमः कवचाय हुम् । ॐ कमलरूपायै नमोऽस्त्राय फट् । ततः पूर्ब्बादिदलेषु पूर्ब्बवत् वलाक्यादि पूजयेत् । तद्बहिरिन्द्रादीन् वज्रादींश्च पूजयेत् । ततो धूपादिविसर्जनान्तं कर्म्म समापयेत् ।
अस्य पुरश्चरणं दशलक्षजपः । तथा च ।
"दशलक्षं जपेन्मन्त्रं मन्त्रविद्विजितेन्द्रियः ।
दशांशं जुहुयान्मन्त्री मधुराक्तैः सरोरुहैः ॥" * ॥
अथ लक्ष्मीस्तोत्रम् ।
ईश्वर उवाच ।
"त्रैलोक्यपूजिते देवि ! कमले विष्णुवल्लभे ।
यथा त्वं सुस्थिरा कृष्णे तथा भव मयि स्थिरा ॥
ईश्वरी कमला लक्ष्मीश्चला भूतिर्हरिप्रिया ।
पद्मा पद्मालया सम्पत्सृष्टिः श्रीः पद्मधारिणी ॥
द्वादशैतानि नामानि लक्ष्मीं संपूज्य यः पठेत् ।

पौषे च दशमी शस्ता चैत्रके पञ्चमी तथा ।
नभस्ये पूर्णिमा ज्ञेया गुरुवारे विशेषतः ॥
आढकं धान्यसम्पूर्णं
नानाभरणभूषितम् ।
सुगन्धिशुक्लपुष्पेण शुक्लपक्षे प्रपूजयेत् ॥
पौषे तु पिष्टकं दद्यात् परमान्नञ्च चैत्रके ।
पिष्टकं परमान्नञ्च नभस्ये तु विशेषतः ॥
गुरुवारसमायुक्ता नभस्ये पूर्णिमा शुभा ।
कमलां पूजयेत्तत्र पुनर्ज्जन्म न विद्यते ॥
एकेन कमलेनैव कमलां पूजयेद् यदि ।
इह लोके सुखं प्राप्य परत्र केशवं व्रजेत् ॥
प्राङ्मुखी पूजयेल्लक्ष्मीं
पश्चिमाननसंस्थिताम् ।
गन्धपुष्पधूपदीपनैवेद्याद्युपचारकैः ॥
गन्धद्वारेतिमन्त्रेण गन्धेनावाहयेदसौ ।
श्रिये जात इति द्वाभ्यां
पुष्पैरावाहयेत्ततः ॥"
ततो ध्यानम् ।
"हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं
जातवेदसमावहाम् ॥
गौरवर्णान्तु द्विभुजां
सितपद्मोपरिस्थिताम् ।
विष्णोर्व्वक्षःस्थलस्थाञ्च
जगच्छोभाप्रकाशिनीम् ॥
ध्यायेदाद्यां सदा देवीं पूजाकाले विशेषतः ।
ततः पूजादिकं कुर्य्यात् श्रीं लक्ष्मीं नम इत्यृचा ॥

दीपमालापरिक्षिप्ते प्रदोषे तदनन्तरम् ॥
ब्राह्मणान् भोजयित्वादौ विभज्य च बुभुक्षितान् ।
अलङ्कृतेन भोक्तव्यं नववस्त्रोपशोभिना ।
स्निग्धैर्मुग्धैर्व्विदग्धैश्च बान्धवैर्भृतकैः सह ॥"
अत्र लक्ष्मीपूजायां पुष्पदानकाले ।
"नमस्ते सर्व्वदेवानां वरदासि हरिप्रिये ! ।
या गतिस्त्वत्प्रपन्नानां सा मे
भूयात्त्वदर्च्चनात् ॥"
लक्ष्म्यै नम इत्यनेन वारत्रयं पूजयेत् ।
"सुखरात्र्यां प्रदोषे तु कुबेरं पूजयन्ति ये ॥"
इति रुद्रधरधृतात् कुबेरमपि पूजयन्ति ।
"धनदाय नमस्तुभ्यं निधिपद्माधिपाय च ।
भवन्तु त्वत्प्रसादान्मे धनधान्यादिसम्पदः ॥"
इति पठित्वा कुबेराय नम इति त्रिः पूजयेत् ।
ततो देवगृहादिषु दीपान् दद्यात् । तत्र मन्त्रः ।
"अग्निज्योती
रविज्योतिश्चन्द्रज्योतिस्तथैव च ।
उत्तमः सर्व्वज्योतीनां दीपोऽयं
प्रतिगृह्यताम् ॥"
ततो ब्राह्मणान् बन्धूंश्च भोजयित्वा स्वयं भुक्त्वा
सुखं सुप्त्वा प्रत्यूषे भविष्योक्तं कर्म्म कुर्य्यात् ।
तथा, --
"सुखरात्रेरुषःकाले प्रदीपोज्ज्वलितालये ।
बन्धूर्ब्बन्धूनबन्धूंश्च वाचा कुशलयार्च्चयेत् ॥
प्रदीपवन्दनं कार्य्यं लक्ष्मीमङ्गलहेतवे ।
गोरोचनाक्षतञ्चैव दद्यादङ्गेषु सर्व्वतः ॥"
लक्ष्मीपूजामन्त्रः ।
"विश्वरूपस्य भार्य्यासि पद्मे पद्मालये शुभे ।
महालक्ष्मि नमस्तुभ्यं सुखरात्रिं कुरुष्व मे ॥

स्थिरा लक्ष्मीर्भवेत् तस्य पुत्त्रदारादिभिः सह ॥”
इति तन्त्रसारः ॥
विष्णुपुराणोक्तलक्ष्मीस्तोत्रं तत्रैव १ अंशे ९ अध्याये द्रष्टव्यम् ॥ * ॥ अथ लक्ष्मीपूजा-निरूपणम् । यथा, स्कन्दपुराणे ।
“पौषे चैत्रे तथा भाद्रे पूजयेयुः स्त्रियः श्रियम् ।
सिंहे धनुषि मीने च स्थिते सप्ततुरङ्गमे ॥
प्रत्यब्दं पूजयेल्लक्ष्मीं शुक्लपक्षे गुरोर्दिने ।
नापराह्णे न रात्रौ च नासिते न त्र्यहस्पृशि ॥
द्वादश्याञ्चैव नन्दायां रिक्तायाञ्च निरंशके ।
त्रयोदश्यां तथाष्टम्यां कमलां नैव पूजयेत् ॥
न पूजयेत् शनौ भौमे न बुधे नैव भार्गवे ।
पूजयेत्तु गुरोवरि चाप्राप्ते रविसोमयोः ॥
गुरुवारे हि पूर्णा च यत्नेन यदि लभ्यते ।
तत्र पूज्या तु कमला धनपुत्त्रविवर्द्धिनी ॥
न कुर्य्यात् प्रथमे मासि नैव कुर्य्याद्विसर्जनम् ।
न घण्टां वादयेत्तत्र नैव झिण्टीं प्रदापयेत् ॥
लक्ष्मीः पद्मालया पद्मा कमला श्रीर्धृतिः क्षमा ।
तुष्टिः पुष्टिस्तथा कान्तिर्मेधा विद्या रमा श्रुतिः ॥
हरिप्रिया तथा विष्णोः प्रिया नारायणस्य च ।
एताभिः सप्तदशभिर्लक्ष्मीबीजादिनार्च्चयेत् ॥
लक्ष्मीनारायणाभ्याञ्च नमोऽन्तेन प्रपूजयेत् ।
धिषणञ्च कुबेरञ्च पूजयेत्तदनन्तरम् ॥”
लक्षीचरित्रे ।
“न कृष्णपक्षे रिक्तायां दशमीद्वादशीषु च ।
श्रवणादिचतुरृक्षे लक्ष्मीपूजां न कारयेत् ॥”
इति कालचन्द्रिका ॥
दीपान्वितामावस्यायां लक्ष्मीपूजाविधिर्य्यथा, --
“तुलारासिगते भानौ अमावास्यां नराधिपः ।
स्नात्वा देवान् पितॄन् भक्त्या संपूज्याथ प्रणम्य च ॥
कृत्वा तु पार्व्वणश्राद्धं दधिक्षीरगुडादिभिः ।
ततोऽपराह्णसमये घोषयेन्नगरे नृपः ।
लक्ष्मीः संपूज्यतां लोका उल्काभिश्चाभिवेष्ट्य-ताम् ॥
अमावास्या यदा रात्रौ दिवाभागे चतुर्द्दशी ।
पूजनीया तदा लक्ष्मीर्विज्ञेया सुखरात्रिका ॥
अमावास्यां यदा देवाः कार्त्तिके मासि केश-वात् ।
अभयं प्राप्य सुप्ताश्च क्षीरोदार्णवसानुषु ॥
लक्ष्मीर्दैत्यभयान्मुक्ता सुखं सुप्ताम्बुजोदरे ।
वर्षाकाले महाघोरे यन्मया दुष्कृतं कृतम् ।
सुखरात्रिप्रभातेऽद्य तन्मे लक्ष्मीर्व्यपोहतु ॥
या रात्रिः सर्व्वभूतानां या च देवेष्ववस्थिता ।
संवत्सरप्रिया या च सा ममास्तु सुमङ्गला ॥
माता त्वं सर्व्वभूतानां देवानां सृष्टिसम्भवा ।
आख्याता भूतले देवि ! सुखरात्रि नमोऽस्तु ते ॥”
लक्ष्म्यै नम इति त्रिः पूजयेत् । इति तिथ्यादि-तत्त्वम् ॥ * ॥ तस्या उपाख्यानं यथा, --
नारद उवाच ।
“श्रीकृष्णस्यात्मनश्चैव निर्गुणस्य निराकृतेः ।
सावित्रीयमसंवादे श्रुतं सुनिर्म्मलं यशः ॥
तद्गुणोत्कीर्त्तनं सत्यं मङ्गलानाञ्च मङ्गलम् ।
अधुना श्रोतुमिच्छामि लक्ष्म्युपाख्यानमेव च ॥
केनादौ पूजिता सापि किम्भूता केन वा पुरा ।
तद्गुणोत्कीर्त्तनं सत्यं वद वेदविदांवर ॥
श्रीनारायण उवाच ।
सृष्टेरादौ पुरा ब्रह्मन् कृष्णस्य परमात्मनः ।
देवी वामांशसम्भूता बभूव रासमण्डले ॥
अतीवसुन्दरी रामा न्यग्रोधपरिमण्डला ।
यथा द्वादशवर्षीया शश्वत् सुस्थिरयौवना ॥
श्वेतचम्पकवर्णाभा सुखदृश्या मनोहरा ।
शरत्पार्व्वणकोटीन्दुप्रभाप्रच्छादितानना ॥
शरन्मध्याह्नपद्मानां शोभामोचनलोचना ।

| | | |
|---|---|---|
| | चतुर्युगसहस्रान्ते ब्रह्मा स्वपिति पङ्कजे ॥<br>अतोऽत्र विधिवत् कार्य्या मनुष्यैः सुखसुप्तिका ।<br>दिवा तत्र न भोक्तव्यमृते बालातुराज्जनात् ॥<br>प्रदोषसमये लक्ष्मीं पूजयित्वा यथाक्रमम् ।<br>दीपवृक्षास्तथा कार्य्या भक्त्या देवगृहेष्वपि ॥<br>चतुष्पथश्मशानेषु नदीपर्व्वतसानुषु ।<br>वृक्षमूलेषु गोष्ठेषु चत्वरेषु गृहेषु च ॥<br>वस्त्रैः पुष्पैः शोभितव्याः क्रयविक्र भूमयः । | |

सा च देवी द्विधा भूता सहसैवेश्वरेच्छया
॥
समा रूपेण वर्णेन तेजसा वयसा त्विषा ।
यशसा वाससा सूक्त्या भूषणेन गुणेन च
॥
स्मितेन वीक्षितेनैव वचसा गमनेन च ।
मधुरेण स्वरेणैव नयेनानुनयेन च ॥
तद्वामांशो महालक्ष्मीर्द्दक्षिणांशश्च राधिका
।
राधादौ वरयामास द्विभुजञ्च परात्परम् ॥
महालक्ष्मीश्च तत्पश्चाच्चकमे
कमनीयकम् ।
कृष्णस्तद्गौरवेणैव द्विधारूपो बभूव ह ॥
दक्षिणांशश्च द्विभुजो वामांशश्च चतुर्भुजः
।
चतुर्भुजाय द्विभुजो महालक्ष्मीं ददौ पुरा ॥
लक्ष्यते दृश्यते विश्वं स्निग्धदृष्ट्या
ययानिशम् ।
देवीषु या च महती महालक्ष्मीश्च सा
स्मृता ॥
द्विभुजो राधिकाकान्तो
लक्ष्मीकान्तश्चतुर्भुजः ।
शुद्धसत्त्वस्वरूपैश्च गोपैर्गोपीभिरावृतः ॥
चतुर्भुजश्च वैकुण्ठं प्रययौ पद्मया सह ।
सर्व्वांशेन समौ द्वौ तौ कृष्णनारायणौ परौ
॥
महालक्ष्मीश्च योगेन नानारूपा बभूव सा
।
वैकुण्ठे च महालक्ष्मीः परिपूर्णतमा रमा ॥
शुद्धसत्त्वस्वरूपा च सर्व्वसौभाग्यसंयुता ।
प्रेम्णा सा च प्रधाना च सर्व्वासु रमणीषु च
॥
स्वर्गे च स्वर्गलक्ष्मीश्च
शक्रसम्पत्स्वरूपिणी ।
पातालेषु च मर्त्येषु राजलक्ष्मीश्च राजसु
॥
गृहलक्ष्मीर्गृहेष्वेव गृहिणी च कलांशया ।
सम्पत्स्वरूपा गृहिणां सर्व्वमङ्गलमङ्गला
॥

प्रियव्रतेन चन्द्रेण कुबेरेणैव वायुना ।
यमेन वह्निना चैव वरुणेनैव पूजिता ॥
एवं सर्व्वत्र सर्व्वैश्च वन्दिता पूजिता सदा
।
सर्व्वैश्वर्य्याधिदेवी सा
सर्व्वसम्पत्स्वरूपिणी ॥”
अपि च ।
नारद उवाच ।
“बारायणप्रिया सा च वरा वैकुण्ठवासिनी
।
वैकुण्ठाधिष्ठातृदेवी महालक्ष्मीः सनातनी
॥
कथं बभूव सा देवी पृथिव्यां
सिन्धुकन्यका ।
किं तद्ध्यानञ्च स्तवनं सर्व्वः
पूजाविधिक्रमः ।
पुरा केन स्तुतादौ सा तन्मां
व्याख्यातुमर्हसि ॥
श्रीनारायण उवाच ।
पुरा दुर्व्वाससः शापात् भ्रष्टश्रीश्च पुरन्दरः
।
बभूव देवसंघश्च मर्त्यलोकश्च नारद ! ॥
लक्ष्मीः स्वर्गादिकं त्यक्त्वा रुष्टा
परमदुःखिता ।
गत्वा लीना च वैकुण्ठे महालक्ष्म्याञ्च
नारद ॥
तदा शोकाद्ययुर्देवा दुःखिता ब्रह्मणः
सभाम् ।
ब्रह्माणञ्च पुरस्कृत्य ययुर्वैकुण्ठमेव च ॥
वैकुण्ठे शरणापन्ना देवा नारायणे परे ।
अतीवदैन्ययुक्ताश्च
शुष्ककण्ठौष्ठतालुकाः ॥
तदा लक्ष्मीश्च कलया पुरा नारायणाज्ञया
।
बभूव सिन्धुकन्या सा
शक्रसम्पत्स्वरूपिणी ॥
तथा मथित्वा क्षीरोदं देवा दैत्यगणैः सह ।
संप्रापुश्च वरं लक्ष्म्या ददृशुस्ताञ्च तत्र हि
॥

स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं सुरस्य च ।
यो हरेद्दानहीनश्च न यामि तस्य मन्दिरम् ॥
यत् कर्म्म दक्षिणाहीनं मूढधीः कुरुते शठः ।
स पापी पुण्यहीनश्च न यामि तस्य मन्दिरम्
॥
मातरं पितरं भार्य्यां गुरुपत्नीं गुरुञ्च तम् ।
अनाथां भगिनीं कन्यामनन्याश्रयबान्धवान्
॥
कार्पण्याद्यो न पुष्णाति सञ्चयं कुरुते सदा ।
तद्गृहान्नरकाकारान्न यामि तान्मुनीश्वराः ॥
मूत्रं पुरीषमुत्सृज्य यस्तत् पश्यति मन्दधीः
।
यः शेते स्निग्धपादेन न यामि तस्य मन्दिरम्
॥
अधौतपादशायी यो नग्नः शेतेऽतिनिद्रितः ।
सन्ध्याशायी दिवाशायी न यामि तस्य
मन्दि-
रम् ॥
मूर्द्ध्नि तैलं पुरो दत्त्वा योऽन्यदङ्गमुपस्पृशेत् ।
ददाति पश्चाद्गात्रे वा न यामि तस्य
मन्दिरम् ॥
दत्त्वा तैलं मूर्द्ध्नि गात्रे विण्मूत्रं यः
समुत्सृजेत् ।
प्रणमेदाहरेत् पुष्पं न यामि तस्य मन्दिरम् ॥
तृणं छिनत्ति नखरैर्नखरैर्व्विलिखेन्महीम् ।
गात्रे पादे मलं यस्य न यामि तस्य मन्दिरम्
॥
दशनं वसनं यस्य समलं रूक्षमस्तकम् ।
विकृतौ ग्रासहासौ च न यामि तस्य मन्दिरम्
॥
मन्त्रविद्योपजीवी च ग्रामयाजी चिकित्सकः
।
सूपकृद्देवलश्चैव न यामि तस्य मन्दिरम् ॥
विवाहं धर्म्मकार्य्यं वा यो निहन्ति च कोपतः
।
दिवामैथुनकारी यो न यामि तस्य मन्दिरम्
॥”
इत्यादि ब्रह्मवैवर्त्ते गणेशखण्डे लक्ष्मीचरित-
न्नाम २३ अध्यायः ॥ * ॥ अपि च ।

गवां प्रसूः सा सुरभी दक्षिणा यज्ञकामिनी
।
क्षीरोदसिन्धुकन्या सा श्रीरूपा पद्मिनीषु
च ॥
शोभास्वरूपा चन्द्रे च
सूर्य्यमण्डलमण्डिता ।
विभूषणेषु रत्नेषु फलेषु च जलेषु च ॥
नृपेषु नृपपत्नीषु दिव्यस्त्रीषु गृहेषु च ।
सर्व्वशस्येषु वस्त्रेषु स्थानेषु संस्कृतेषु च
॥
प्रतिमासु च देवानां मङ्गलेषु घटेषु च ।
माणिक्येषु च मुक्तासु माल्येषु च मनोहरा
॥
मणीन्द्रेषु च हीरेषु क्षीरेषु चन्दनेषु च ।
वृक्षशाखासु रम्यासु नवमेधेषु वस्तुषु ॥
वैकुण्ठे पूजिता सादौ देवी नारायणेन च ।
द्वितीये ब्रह्मणा भक्त्या तृतीये शङ्करेण च
॥
विष्णुना पूजिता सा च क्षीरोदे भारते
मुने !
स्वायम्भुवेन मनुना मानवेन्द्रैश्च सर्व्वतः
॥
ऋषीन्द्रैश्च मुनीन्द्रैश्च सद्भिश्च गृहिभिर्भवे
।
गन्धर्व्वाद्यैश्च नागाद्यैः पातालेषु च
पूजिता ॥
शुक्लाष्टम्यां भाद्रपदे कृता पूजा च ब्रह्मणा
।
भक्त्या च पक्षपर्य्यन्तं त्रिषु लोकेषु
नारद ! ॥
चैत्रे पौषे च भाद्रे च पुण्ये मङ्गलवासरे ।
विष्णुना निर्म्मिता पूजा त्रिषु लोकेषु
भक्तितः ॥
वर्षान्ते पौषसंक्रान्त्यां मेध्यामावाह्य
प्राङ्गणे ।
मनुस्तां पूजयामास सा भूता भुवनत्रये ॥
राजेन्द्रेण पूजिता सा मङ्गलेनैव मङ्गला ।
केदारेणैव नीलेन नलेन सुवलेन च ॥
ध्रुवेणोत्तानपादेन शक्रेण बलिना तथा ।
कश्यपेन च दक्षेण कर्द्दमेन विवस्वता ॥
सुरादिभ्यो वरं दत्त्वा वरमालाञ्च विष्णवे ।
ददौ प्रसन्नवदना तुष्टा क्षीरोदशायिने ॥
देवाश्चाप्यसुरग्रस्तं राज्यं प्रापुश्च
तद्वरात् ।
तां सम्पूज्य च सम्भूय सर्व्वत्र च निरापदः
॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ३५ । ३६
अध्यायौ ।
लक्ष्म्या अगम्यगृहाणि यथा, --
“यं यं रुष्टो गुरुर्द्देवो माता तातश्च
बान्धवः ।
अतिथिः पितृलोकाश्च न यामि तस्य
मन्दि-
रम् ॥
मिथ्यावादी च यः शश्वन्नास्तीति वाचकः
सदा ।
सत्त्वहीनश्च दुःशीलो न गेहं तस्य
याम्यहम् ॥
सत्यहीनः स्थाप्यहारी
मिथ्यासाक्ष्यप्रदायकः ।
विश्वासघ्नः कृतघ्नो यो न यामि तस्य
मन्दिरम् ॥
चिन्ताग्रस्तो भयग्रस्तः
शत्रुग्रस्तोऽतिपातकी ।
ऋणग्रस्तोऽतिकृपणो न गेहं यामि
पापिनाम् ॥
दीक्षाहीनश्च शोकार्त्तो मन्दधीः स्त्रीजितः
सदा ।
पुंश्चलीपतिपुत्रौ यौ तद्गेहं नैव याम्यहम्
॥
पुंश्चल्यन्नञ्चावीरान्नं यो भुङ्क्ते कामतः
सदा ।
शूद्रान्नभोजी तद्याजी तद्गेहं नैव याम्यहम्
॥
यो दुर्व्वाक् कलहाविष्टः कलिः
शश्वदघालये ।
स्त्री प्रधाना गृहे यस्य न यामि तस्य
मन्दि-
रम् ॥
यत्र नास्ति हरेः पूजा तदीयगुणकीर्त्तनम् ।
“कुचेलिनं दन्तमलोपधारिणं
बह्वाशिनं निष्ठुरवाक्यभाषिणम् ।
सूर्य्योदये चास्तमये च शायिनं
विमुञ्चति श्रीरपि चक्रपाणिनम् ॥
नित्यं छेदस्तृणानां धरणिविलिखनं पादयो-
रल्पमार्ष्टि-
र्द्दन्तानामल्पशौचं वसनमलिनता रूक्षता
मूर्द्धजानाम् ।
द्वे सन्ध्ये चापि निद्रा विवसनशयनं
ग्रासहातिरेकं
स्वाङ्गे पीठे च वाद्यं निधनमुपनयेत् केशव-
स्यापि लक्ष्मीम् ॥
शिरः सुधौतं चरणौ सुमार्ज्जितौ
वराङ्गनासेवनमल्पभोजनम् ।
अनग्नशायित्वमपर्व्वमैथुनं
चिरप्रनष्टां श्रियमानयन्ति षट् ॥
यस्य कस्य तु पुष्पस्य पाण्डरस्य विशेषतः
।
शिरसा धार्य्यमाणस्य अलक्ष्मीः प्रतिहन्यते
॥
दीपस्य पश्चिमा च्छाया छाया शय्यासनस्य
च ।
रजकस्य तु यत्तीर्थमलक्ष्मीस्तत्र तिष्ठति ॥”
इत्यादि गारुडे ११४ अध्यायः ॥ * ॥
अङ्गविशेषे तस्याः स्थितिफलं यथा, --
देवा ऊचुः ।
“कथयस्व जगन्नाथ ! केषु
स्थानेष्ववस्थिता ।
पुरुषाणां फलं किं वा प्रयच्छत्यथ नश्यति ॥

| | | |
|---|---|---|
| | नोत्सुकश्च प्रशंसायां न यामि तस्य मन्दिरम् ॥<br>कन्यान्नवेदविक्रेता नरघाती च हिंसकः ।<br>नरकागारसदृशं न यामि तस्य मन्दिरम् ॥ | |

दत्तात्रेय उवाच ।
नृणां पादस्थिता लक्ष्मीर्निलयं संप्रयच्छति ।
सक्थिनि संस्थिता वस्त्रं रत्नं नानाविधं वसु
॥
कलत्रदा गुह्यसंस्था क्रोडस्थापत्यदायिनी ।
मनोरथान् पूरयति पुरुषाणां हृदि स्थिता ॥
लक्ष्मीर्लक्ष्मीवतां श्रेष्ठं कण्ठस्था
कण्ठभूषणम् ।
अभीष्टबन्धुदारैश्च तथाश्लेषं प्रवासिभिः ॥
मिष्टान्नं वाक्यलावण्यमाज्ञामवितथान्तथा ।
मुखसंस्था कवित्वञ्च यच्छत्युदधिसम्भवा ॥
शिरोगता संत्यजति ततोऽन्यं याति संश्रयम्
।
सेयं शिरोगता दैत्यान् परित्यजति साम्प्रतम्
॥”
इति मार्कण्डेयपुराणे दत्तात्रेयचरिताध्यायः
॥ * ॥
अथ लक्ष्मीचरित्रम् ।
श्रीसूत उवाच ।
“मेरुपृष्ठे सुखासीनां लक्ष्मीं पृच्छति केशवः
।
केनोपायेन देवि त्वं नृणां भवसि निश्चला ॥
श्रीरुवाच ।
शुक्लाः पारावता यत्र गृहिणी यत्र चोज्ज्वला ।
अकलहा वसतिर्यत्र तत्र कृष्ण वसाम्यहम् ॥
धान्यं सुवर्णसदृशं तण्डुला रजतोपमाः ।
अन्नञ्चैवातुषं यत्र तत्र कृष्ण वसाम्यहम् ॥
यः संविभागी प्रियवाक्यभाषी
वृद्धोपसेवी प्रियदर्शनश्च ।
अल्पप्रलापी न च दीर्घसूत्री
तस्मिन् सदाहं पुरुषे वसामि ॥
यो धर्म्मशीलो विजितेन्द्रियश्च
विद्याविनीतो न परोपतापी ।
अगर्व्वितो यश्च जनानुरागी
तस्मिन् सदाहं पुरुषे वसामि ॥
चिरं स्नाति द्रुतं भुङ्क्ते पुष्पं प्राप्य न
जिघ्रति ।
यो न पश्येत् स्त्रियं नग्नां नियतं स च मे प्रियः
॥

गभीरनाभिः समदन्तपङ्क्ति-
स्तस्याः शरीरे नियतं वसामि ॥
या पापरक्ता पिशुनस्वभावा
स्वाधीनकान्तः परिभूयते च ।
अमर्षकामा कुचरित्रशीला
तामङ्गनां प्रेतमुखीं त्यजामि ॥
पुष्पं पर्य्युषितं पूतिं शयनं बहुभिः सह ।
भग्नासनं कुनारीञ्च दूरतः परिवजयेत् ॥
चिताङ्गारकमस्थीनि वह्निं भस्म द्विजञ्च
गाम् ।
न पादेन स्पशेत् पादं कार्पासास्थि तुषं
गुरुम् ॥
नखकेशोदकञ्चैव मैथुनं पर्व्वसन्ध्ययोः ।
वर्जयेन्नग्नशायित्वमेकाकी मिष्टभोजनम् ॥
शिरः सपुष्पं चरणौ सुपूजितौ
निजाङ्गनासेवनमल्पभोजनम्
अनग्नशायित्वमपर्व्वमैथुनं
चिरप्रनष्टां श्रियमानयन्ति षट् ॥
सम्मार्जनीरजोवात निर्गुण्डीं लकुचन्तथा
।
रात्रौ विल्वपलाशञ्च कपित्थं वर्जयेद्दधि ॥
स्वगात्रासनयोर्वाद्यं अपूजा मूर्द्धपादयोः ।
उच्छिष्टस्पर्शनं मूद्र्ध्नि स्नानाभ्यङ्गञ्च
वर्जयेत् ॥
शयनञ्चान्धकारे च रात्रिवासो दिने तथा ।
म्लानाम्बरं कुबेशञ्च वर्जयेत्
शुष्कभोजनम् ॥
परेणोद्वर्त्तितं वक्षः स्वयं माल्यापकर्षणम् ।
आलस्यमवसादञ्च न कुर्य्याल्लोष्टमर्द्दनम् ॥
शुक्रवारे च यत्तैलं शिलापिष्टञ्च दर्शके ।
स्वयं वामेन मूर्द्धानं पाणिना नैव संस्पृशेत्
॥
तारकाः पुष्यवन्तो च न पश्येदशुचिः
पुमान् ।
नेक्षेद्गुह्यं परस्त्रीणां नास्तं यान्तं
दिवाकरम् ॥
कुर्य्यान्नान्यधनाकाङ्क्षां परस्त्रीणां तथैव च
।
परेषां प्रतिकूलञ्च उदितार्के प्रबोधनम् ।

गृहीतं प्रथमं वस्त्रं वर्जयेन्न कदाचन ॥
अजरजः खररजस्तथा सम्मार्जनीरजः ।
स्त्रीणां पादरजो राजन् शक्रादपि हरेत्
श्रियम् ॥
कुचेलिनं दन्तमलप्रधारिणं
महाशठं निष्ठुरवाक्यभाषिणम् ।
सूर्य्योदये चास्तमिते तु शायिनं
विमुञ्चति श्रीरपि चक्रपाणिनम् ॥”
महाशठमित्यत्र बह्वाशिनमिति वा पाठः ।
“नित्यं छेदस्तृणानां क्षितिनखलिखनं
पाठः ।
रल्पशौचं
एकाङ्गे तैलहीनं वसनमलिनताबन्धनं
मूर्द्ध-
जानाम् ।
द्वे सन्ध्ये चापि निद्रा विवसनशयणं
ग्रासहासा-
तिरेकः
स्वाङ्गे पीठे च वाद्यं हरति धनपतेः
केशव-
स्यापि लक्ष्मीम् ॥”
अबन्धनमित्यत्र रुक्षता इति वा पाठः ।
“एवं यः कुरुते नित्यं मयोक्तानि च
केशव ! ।
तुष्टा भवामि तस्याहं त्वय्येषा निश्चला
यथा ॥
श्रीभाषितमिदं स्तोत्रं प्रातरुत्थाय यः
पठेत् ।
तद्गृहं विपुलं रम्यं नित्यं भवति नान्यथा
॥
व्याधितो मुच्यते रोगी बद्धो मुच्येत
बन्धनात् ।
आपदस्तस्य नश्यन्ति तमः सूर्य्योदये
यथा ॥”
इति स्कन्दपुराणे लक्ष्मीकेशवसंवादे
लक्ष्मी-
चरित्रं समाप्तम् ॥ * ॥ दुर्गा । यथा, --
“स्तुतिः सिद्धिरिति ख्याता श्रिया
संश्रयणाच्च वा ।

त्यागः सत्यञ्च शौचञ्च यत्र एते महागुणाः ।
यः प्राप्नोति गुणानेतान् श्रद्धावान् स च मे प्रियः ॥
सर्व्वलक्षणमध्ये तु त्याग एव विशिष्यते ।
काले देशे च पात्रे च स च त्यागः प्रशस्यते ॥
नित्यमामलके लक्ष्मीर्नित्यं वसति गोमये ।
नित्यं शङ्खे च पद्मे च नित्यं श्रीः शुक्लवाससि ॥
वसामि पद्मोत्पलशङ्खमध्ये
वसामि चन्द्रे च महेश्वरे च ।
नारायणे चैव वसुन्धरायां
वसामि नित्योत्सवमन्दिरेषु ॥"
वसुन्धरायामित्यत्र वसौ धरायामिति वा पाठः ॥
"यथोपदिष्टा गुरुभक्तियुक्ता
पत्युर्व्वचो नाक्रमते च नित्यम् ।
नित्यञ्च भुङ्क्ते पतिभुक्तशेषं
तस्याः शरीरे नियतं वसामि ॥
तुष्टा च धीरा प्रियवादिनी च
सौभाग्ययुक्ता च सुशोभना च ।
लावण्ययुक्ता प्रियदर्शना या
पतिव्रता या च वसामि तासु ॥
श्यामा मृगाक्षी कृशमध्यभागा
सुभ्रूः सुकेशी सुगतिः सुशीला ।

नखकण्टकरत्नैश्च मृत्तिकाङ्गारवारिभिः ।
वृथा विलेखनं भूमौ न कुर्य्यान्मम काङ्क्षया ॥
स्वयं दोहं स्वयं माल्यं स्वयं घृष्टञ्च चन्दनम् ।
नापितस्य गृहे क्षौरं शक्रादपि हरेत् श्रियम् ॥"
स्वयं दोहमित्यत्र ग्रथितञ्चेति वा पाठः ।
"न निन्दां गणके विप्रे पादयोर्नर्त्तनन्तथा ।
प्रतिकूलञ्चरेत् स्त्रीणां भुक्त्वा च दन्तधावनम् ॥
अघृतं मांससूपञ्च नग्नाञ्चैव स्त्रियन्तथा ।
भक्षणाद्दशनाच्चैव शक्रादपि हरेत् श्रियम् ॥
मन्त्रैरयुक्तः परदारसेवी
आचारहीनः परसेवकश्च ।
सङ्कीर्णचारी परिवादशील-
स्तं निष्ठुरं दम्भमयं त्यजामि ॥
शयनञ्चार्द्रपादेन रात्रिवासो दिने तथा ।
नोत्तरीयमधः कुर्य्यात् शुष्कपादेन भोजनम् ॥
अशुचिं म्लानवस्त्राञ्च दुर्गन्धामसुखावहाम् ।
अभूषणामपुष्पाञ्च न कुर्य्यादात्मनस्तनुम् ॥
कर्णे च वदने घ्राणे तथा करतलेऽपि च ।
पादे पृष्ठे तथा नेत्रे न कुर्य्यादनुलेपनम् ॥
चक्षुर्लग्ने हतं श्रेयो मुखलग्ने धनक्षयः ।
दरिद्रः कर्णलग्ने च पादपृष्ठे तथायुषः ॥
गन्धं पुष्पं यथा तोयं रत्नञ्चैव महोदधिम् ।

लक्ष्मीर्व्वा ललना वापि क्रमात् सा कान्ति-
रुच्यते ॥
इति देवीपुराणे ५५ अध्यायः ॥
सम्पत्तिः । शोभा । ऋद्ध्यौषधम् । वृद्धिनामौ-
षधम् । फलिनीवृक्षः । इति मेदिनी । मे, २८ ॥
सीता । वीरयोषित् । इति शब्दरत्नावली ॥
स्थलपद्मिनी । हरिद्रा । शमी । द्रव्यम् । मुक्ता ।
इति राजनिर्घण्टः ॥ मोक्षप्राप्तिः । इति
चण्डीटीकायां नागभट्टः ॥ (शोभा । यथा,
कुमारे । ३ । ४९ ।
"कपालनेत्रान्तरलब्धमार्गै-
र्ज्योतिःप्ररोहैरुदितैः शिरस्तः ।
मृणालसूत्राधिकसौकुमार्य्यां
बालस्य लक्ष्मीं ग्लपयन्तमिन्दोः ॥")

**लक्ष्मीकान्तः**, पुं, (लक्ष्म्याः कान्तः ।) नारायणः ।
यथा, --
"नमः कमलनेत्राय हरये परमात्मने ।
जगतः पालयित्रे च लक्ष्मीकान्त नमोऽस्तु ते ॥"
इति जन्माष्टमीव्रतकथा ॥

**लक्ष्मीगृहं**, क्ली, (लक्ष्म्याः गृहमावासस्थानम् ।)
रक्तोत्पलम् । इति त्रिकाण्डशेषः ॥ लक्ष्मी-
वेश्म च ॥

**लक्ष्मीजनार्द्दनः**, पुं, (लक्ष्म्याः सहितो जनार्द्दनः ।)
शालग्रामविशेषः । तस्य लक्षणं यथा, --
"एकद्वारे चतुश्चक्रं नवीननीरदोपमम् ।

लक्ष्मीजनार्द्दनो ज्ञेयो रहितो वनमालया
॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥
(तथा, देवीभागवते । ९ । २४ । ५९ ॥)

**लक्ष्मीतालः**, पुं, (लक्ष्मीयुक्तस्तालः ।) श्रीताल-
वृक्षः । इति राजनिर्घण्टः ॥
तौर्य्यत्रिकस्य
परिच्छेदविशेषः । तस्य
द्रुतलघ्वणुविरामक्रमो
यथा, --
“दौ लो णू द्वौ विरामान्तौ दलौ णू
दविरा-
मकः ।
विरामान्तौ द्रुतौ लश्च द्रुतौ
लघुविरामकः ॥”
इति सङ्गीतरत्नाकरे लक्ष्मीतालः ॥

**लक्ष्मीनारायणः**, पुं, (लक्ष्म्यान्वितो नारायणः ।)
शालग्रामविशेषः । तस्य लक्षणं यथा, --
“एकद्वारे चतुश्चक्रं वनमालाविभूषितम् ।
नवीननीरदाकारं लक्ष्मीनारायणाभिधम्
॥”
इति ब्रह्मवैवर्त्तपुराणम् ॥

**लक्ष्मीनृसिंहः**, पुं, (लक्ष्मीयुतो नृसिंहः ।) शाल-
ग्रामविशेषः । तस्य लक्षणं यथा, --
“द्विचक्रं विस्तृतास्यञ्च
वनमालासमन्वितम् ।
लक्ष्मीनृसिंहं विज्ञेयं गृहिणाञ्च सुखप्रदम्
॥”
इति ब्रह्मवैवर्त्तपुराणम् ॥

**लक्ष्मीपतिः**, पुं, (लक्ष्म्याः पतिः ।) वासुदेवः ।
नरपतिः । इति मेदिनी । ते, २१५ ॥
(यथा,
किराते । १ । ४४ ।
“अथ क्षमामेव निरस्तविक्रम-
श्चिराय पर्य्येसि सुखस्य साधनम् ।
विहाय लक्ष्मीपतिलक्ष्म कार्म्मुकं
जटाधरः सन् जुहुधीह पावकम् ॥”)

**लक्ष्मीसहजः**, पुं, (लक्ष्म्या सह जातः इति । जन्
+ डः । क्षीराब्धिजातत्वादस्य तथात्वम् ।)
चन्द्रः । इति शब्दरत्नावली ॥

**लक्ष्म्यारामः**, पुं, (लक्ष्म्या आरामः ।) वनभेदः ।
इति शब्दमाला ॥

**लक्ष्यं**, क्ली, (लक्ष्यते यदिति । लक्ष् + ण्यत् ।)
शरवेधस्थानम् । तत्पर्य्यायः । लक्षम् २
शर-
व्यम् ३ । इत्यमरः । २ । ८ । ८६ ॥
प्रतिकायः ४
वेध्यम् ५ । इति जटाधरः ॥ वेधम् ६ ।
इति
शब्दरत्नावली ॥ (यथा, कुमारे । ३ । ६४
।
“कामस्तु बाणावसरं प्रतीक्ष्य
पतङ्गवद्वह्निमुखं विविक्षुः ।
उमासमक्षं हरबद्धलक्ष्यः
शरासनज्यां मुहुराममर्श ॥”)

**लक्ष्यः**, त्रि, लक्षणया बोध्यः । इति साहित्य-
दर्पणम् ॥ (लक्ष्यते इति । लक्ष + ण्यत् ।)
दर्शनीयः । इति लक्षधात्वर्थदर्शनात् ॥
(व्याजः ।
इत्यमरः ॥ यथा, रघुः । ६ । ८१ ।
“रोमाञ्चलक्ष्येण स गात्रयष्टिं
भित्वा निराक्रामदरालकेश्याः ॥”
अनुमेयः । इति मल्लिनाथः ॥ यथा, कुमारे
।
५ । ७४ ।
“इति द्विजातौ प्रतिकूलवादिनि
प्रवेपमानाधरलक्ष्यकोपया ॥”
तथा च रघुः । ४ । ५ ।
“छायामण्डललक्ष्येण तमदृश्या किल
स्वयम् ।
पद्मा पद्मातपत्रेण भेजे साम्राज्यदीक्षितम्
॥”)

**लख**, सृपि । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
(अस्याकृतिपरिमाणादि यथा, शुक्रनीतौ ।
“लगुडः सूक्ष्मपादः स्यात् पृथ्वंशः
स्थूलशीर्षकः ।
लौहबद्धाग्रभागश्च ह्रस्वदेहः सुपीवरः ॥
दण्डाकारो दृढाङ्गश्च तथा हस्तद्वयोन्नतः ।
उत्थानं पातनञ्चैव पेषणं पोथनं तथा ॥
चतस्रो गतयस्तस्य पञ्चमी नेह विद्यते ।
दृढकायः पत्तिवर्गो तेन युध्येत शत्रुभिः ॥”)

**लग्नं**, क्ली, (लगति फले इति । लग सङ्गे + “क्षुब्ध-
स्वान्तध्वान्तलग्नेति ।” ७ । २ । १८ । इति
निपातनात् साधु ।) राशीनामुदयः ।
इत्यमरः ॥
राति फलं राशिस्तालव्यशकारः । अहोरात्र-
मध्ये द्वादशराशय उदयन्ति । उदयः पूर्ब्बा-
चलसंयोगः । तेषां क्रमेण उदयाचलसंयोगो
लग्नं ओ लसजी व्रीडे ओदित्वान्नः
निपातना-
ज्जस्य गः । इति तट्टीकायां भरतः ॥ तेषां
शून्यायनांशपरिमाणं यथा, --
“रामोऽगवेदै -३ । ४७ जलधिस्तु मैत्रै -४ ।
१७
र्व्वाणो रसैः ५ । ६ पञ्च खसागरैश्च ५ ।
४० ।
वाणः कुवेदै -५ । ४१ र्विषयोऽङ्कयुग्मैः ५ ।
२९
क्रमोत्क्रमान्मेषतुलादिमानम् ॥”
तथा हि ।
मेषस्य ३ । ४७ ॥ तुलायाः ५ । २९ ॥
वृषस्य ४ । १७ ॥ वृश्चिकस्य ५ । ४१ ॥
मिथुनस्य ५ । ६ ॥ धनुषः ५ । ४० ॥
कर्क्कटस्य ५ । ४० ॥ मकरस्य ५ । ६ ॥
सिंहस्य ५ । ४१ ॥ कुम्भस्य ४ । १७ ॥
कन्यायाः ५ । २९ ॥ मीनस्य ३ । ४७ ॥
इति दीपिका ॥ * ॥
दशव्यङ्गुलाधिकपञ्चाङ्गुल-
प्रभे कलिकाताख्यदेशे
वर्त्तमानोनविंशायनांशे
प्रामाणिककारिका यथा, --

लवङ्गवृक्षः । पूगः । इति विश्वः ॥

**लक्ष्मीपुत्त्रः**, पुं, (लक्ष्म्याः पुत्त्रः ।) कामदेवः ।

घोटकः । इति मेदिनी । रे, २९३ ॥
कुशः ।
लवः । इति शब्दरत्नावली ॥

**लक्ष्मीपुष्पः**, पुं, (लक्ष्मीयुक्तं सौन्दर्य्यविशिष्टं पुष्प-

मिवास्य ।) पद्मरागमणिः । इति
हेमचन्द्रः ॥

**लक्ष्मीफलः**, पुं, (लक्ष्म्यास्तनजं फलं यत्र ।) विल्व-

वृक्षः । इति राजनिर्घण्टः ॥

**लक्ष्मीवान्**, [त्] पुं, (लक्ष्मीः शोभास्त्यस्येति ।

मतुप् । मस्य वः ।) पनसवृक्षः । इति
शब्द-
माला ॥ श्वेतरोहितवृक्षः । इति
राजनिर्घण्टः ॥
(विष्णुः । यथा, महाभारते । १३ ।
१४९ । ५२ ।
"सर्व्वलक्षणलक्षण्यो लक्ष्मीवान्
समितिञ्जयः ॥")

**लक्ष्मीवान्**, [त्] त्रि, (लक्ष्मीरस्त्यत्रेति ।) श्रीयुक्तः ।

धनवान् । तत्पर्य्यायः । लक्ष्मणः २
श्रीलः ३
श्रीमान् ४ । इत्यमरः ॥ (यथाह कश्चित्
।
"शेषे धराभराक्रान्ते शेषे विश्वम्भरः
श्रिया ।
लक्ष्मीवन्तो न पश्यन्ति दुःसहां
परवेदनाम् ॥")

**लक्ष्मीवेष्टः**, पुं, (लक्ष्मीयुक्तो वेष्टः ।) श्रीवेष्टः ।

इति राजनिर्घण्टः ॥

**लक्ष्मीशः**, पुं, (लक्ष्म्या ईशः ।) विष्णुः । इति

मुग्धबोधव्याकरणम् ॥

**लक्ष्मीसमाह्वया**, स्त्री, (लक्ष्म्याः सम आह्वयो

यस्याः ।) सीता । इति शब्दरत्नावली ॥

सक०-सेट् ।) लखति । सृपि गतौ । इति
दुर्गादासः ॥

**लख**, इ सृपि । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

सक०-सेट् ।) इ, लङ्ख्यते । सृपि गतौ ।
इति
दुर्गादासः ॥

**लग**, इ खञ्जे । गतौ । इति कविकल्पद्रुमः ॥

(भ्वा०-पर०-खञ्जे अक०-गतौ सक०-सेट्
।)
इ, लङ्ग्यते । खञ्जो गतिवैकल्यम् । इति
दुर्गा-
दासः ॥

**लग**, क रके । इति कविकल्पद्रुमः ॥ (चुरा०-

पर०-सक०-सेट् ।) क, लागयति । रके
स्वादाप्त्योः । रके इति रक क स्वाद
आपने ।
इत्यस्य ञेरनित्यत्वे भावे अलि रूपम् ।
इति
दुर्गादासः ॥

**लग**, म ए सङ्गे । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-अक०-सेट् ।) म, लगयति । ए,
अल-
गीत् । गलति अधर ओष्ठे । इति दुर्गादासः
॥

**लगडं**, त्रि, चारु । इति त्रिकाण्डशेषः ॥

**लगितं**, त्रि, सङ्गयुक्तम् । लागा इति भाषा । इति

लगधातोः कर्म्मणि क्तप्रत्ययेन निष्पन्नम् ॥

**लगुडः**, पुं, दण्डः । लाठी इति भाषा । इत्यमरः ॥

लगुडो वंशादिमयो दण्डः ।
लोहमयोऽस्त्रभेदः ।
इति सुभूतिः । लगुडो लोहमयी
यष्टिरन्यत्रो-
पचारादित्यन्ये । इति तट्टीकायां भरतः ॥

"वेदोऽङ्गैः । ४ । ६ सोऽन्तवेदै ४ । ४८
रिषुरगन-
यनैः ५ । २७ सोऽन्तरीक्षाम्बुनाथैः ५ । ४०
।
पारावाराश्रयासै-५ । ३४ र्गगनगनयनैः ५ ।
२९
षट्त्रिभि-५ । ३६ श्चन्द्रवेदैः ५ । ४१ ।
अङ्कक्ष्माभिः ५ । १९ समुद्रोऽसुशुचिभि-४
। ३५
रनलोऽष्टेषुभिः ३ । ५८ सोऽगवेदै-३ । ४७
।
र्मेषादेकोनविंशे गणितपरिगतं मानमत्रा-
यनांशे ॥" * ॥
उदयलग्नास्तलग्नयोर्व्विं प्रति रविभोग्यं
यथा,
"लग्नदण्डपलं द्विघ्नं तत्संख्यं क्रमतः पलम्
।
विपलञ्च रवेर्भोग्यमेवं कल्पनमस्तभे ॥"
इति ज्योतिषम् ॥
एतयोर्विवरणं यथा, --
तत्र प्राचीनलग्नमानम् ।
लग्नाः दिनमुक्तम् । मासभुक्तम् ।
यथा पलम् । विपलम् । दण्डः । पलम् ।
१ मेषः । ७ । ३४ ॥ ३ । ४७ ॥
२ वृषः । ८ । ३४ ॥ ४ । १७ ॥
३ मिथुनम् । १० । १२ ॥ ५ । ६ ॥
४ कर्कटः । ११ । २० ॥ ५ । ४० ॥
५ सिंहः । ११ । २२ ॥ ५ । ४१ ॥
६ कन्या । १० । ५८ ॥ ५ । २९ ॥

लग्नाः दिनभुक्तम् । मासभुक्तम् ।
यथा पलम् । विपलम् । दण्डः । पलम् ।
७ तुला । १० । ५८ ॥ ५ । २९ ॥
८ वृश्चिकः । ११ । २२ ॥ ५ । ४१ ॥
९ धनुः । ११ । २० ॥ ५ । ४० ॥
१० मकरः । १० । १२ ॥ ५ । ६ ॥
११ कुम्भः । ८ । ३४ ॥ ४ । १७ ॥
१२ मीनः । ७ । ३४ ॥ ३ । ४७ ॥
तत्र स्वदेशाधुनिकलग्नमानम् ।
लग्नाः दिनभुक्तम् । मासभुक्तम् ।
यथा पलम् । विपलम् । दण्डः । पलम् ।
१ मेषः । ८ । १२ ॥ ४ । ६ ।
२ वृषः । ९ । ३६ ॥ ४ । ४८ ॥
३ मिथुनम् । १० । ५४ ॥ ५ । २७ ॥
४ कर्कटः । ११ । २० ॥ ५ । ४० ॥
५ सिंहः । ११ । ८ ॥ ५ । ३४ ॥
६ कन्या । १० । ५८ ॥ ५ । २९ ॥
७ तुला । ११ । १२ ॥ ५ । ३६ ॥
८ वृश्चिकः । ११ । २२ ॥ ५ । ४१ ॥
९ धनुः । १० । ३८ ॥ ५ । १९ ॥
१० मकरः । ९ । १० ॥ ४ । ३५ ॥
११ कुम्भः । ७ । ५६ ॥ ३ । ५८ ॥
१२ मीनः । ७ । ३४ ॥ ३ । ४७ ॥
अथ जन्मकालीनलग्नस्थग्रहसूचितफलम् ।
"लग्ने सूर्य्येऽक्षिरोगी शशिनि बलयुतो रूपवान् वित्तयुक्तो
भौमे व्यङ्गः सुवाग्मी शशधरतनये सर्व्व-शास्त्रार्थवेत्ता ।
जीवे दाता पवित्रः सुकविरथ गते भार्गवे मण्डलेशः
सौरौ कण्डूतिगात्रस्तमसि च नियतं वञ्चितो धर्म्महीनः ॥"
इति ज्योतिस्तत्त्वम् ॥ * ॥
अपि च ।
हरिरुवाच ।
"उदयन्तु समारभ्य राशौ भानुः स्थितो हर ।
स्वराश्यादौ व्रजेदह्नि षड्भिः षड्भिस्तथा निशाम् ॥
मीने मेषे च पञ्च स्युश्चतस्रो वृषकुम्भयोः ।
पञ्चाननो वृषः कुम्भो वृश्चिकः स्युः स्थिराणि हि ।
कन्या धनुश्च मीनश्च मिथुनं द्विस्वभावतः ॥
द्विस्वभावानि कर्म्माणि कुर्य्यादिषु विचक्षणः ।
यात्रा चरेण कर्त्तव्या प्रवेष्टव्यं स्थिरेण तु ।
देवस्थापनवैवाह्यं द्विस्वभावेन कारयेत् ॥"
इति गारुडे ६२ अध्यायः ॥

**लग्नः**, पुं, (लग् + क्तः । निपातनात् साधुः । यद्वा, लस्ज + क्तः । "ओ लस्जी । लग्नः लग्नवान् । लस्जेरोदनुबन्धबलादिडभावे नत्वं स्यात् ।" इति कृत्षष्ठे दुर्गसिंहः ।) स्तुतिपाठकः ॥ तत्पर्य्यायः । प्रातर्गेयः २ स्तुतिव्रतः ३ । इति त्रिकाण्डशेषः ॥ सूतः ४ । इति जटाधरः ॥

**लग्नः**, त्रि, (लस्ज + क्तप्रत्ययेन साधुः ।) सक्तः । लज्जितः । इति मेदिनी ॥

**लग्नकः**, पुं, (लग्न एव । स्वार्थे कन् ।) प्रतिभूः । इत्यमरः ॥ द्वे लागा इति जामिन इति च ख्याते । तत्कार्य्ये लग्नकः । ओ लस्जी व्रीडे क्तः । स्वार्थे कन् । प्रतिनिधिर्भवति प्रतिभूः क्विप् । इति तट्टीकायां भरतः ॥

**लग्निका**, स्त्री, नग्निका । इत्यमरटीका ॥

**लघ**, इ शोषे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) इ, लङ्घ्यते । शोष इह अल्पीकरणम् । (अबहुमतत्वम् । ह्रस्वत्वम् । यथा, आर्य्यासप्तशत्याम् । ६० ।
"अग्रे लघिमा पश्चात् महतापि विधीयते नहि महिम्ना ।
वामन इति त्रिविक्रममभिदधति दशावतारविदः ॥")

**लघिष्ठः**, त्रि, अयमनयोरेषां वा अतिशयेन लघुः इत्यर्थे इष्ठप्रत्ययेन निष्पन्नः । अतिशयलघुत्वयुक्तः । इति व्याकरणम् ॥ (यथा, विदग्धमुखमण्डने ।
"भवित्री रम्भोरु त्रिदशवदनम्लानिरधुना
स रामोऽपि स्थाता न युधि पुरतो लक्षणयुतः ।
गमिष्यत्येवोच्चैर्व्विपदमधुना वानरचमू-
र्लघिष्ठेदं षष्ठाक्षरपरविलोपात् पठ पुनः ॥"
सीतारावणयोरुक्तिप्रत्युक्तिरियम् । सप्तमाक्षरलोपे त्वेवं वाक्यम् । यथा ।
"दशवदनम्लानिः ।"
"स्थाता युधि ।" "उच्चैः पदम् ॥")

**लघीयान्** [स्] त्रि, अयमनयोरेषां वा अतिशयेन लघुः इत्यर्थे ईयसुप्रत्ययेन निष्पन्नः । अतिशयलघुत्वयुक्तः । इति व्याकरणम् ॥ (यथा, महाभारते । २ । ६३ । १४ ।
"न वै समृद्धिं पालयते लघीयान्
यत्त्वां समानेष्यति राजपुत्त्रि ! ॥")

**लघु**, क्ली, (लङ्घते अनेनेति । लङ्घ + "लङ्घिवंह्योर्नलोपश्च ।" उणा० १ । ३० । इति कुः । धातोर्नलोपश्च ।) शीघ्रम् । इत्यमरः ॥ (यथा, रामायणे । २ । ४६ । २१ ।
"यावदेव तु संसुप्तास्तावदेव वयं लघु ।

मकरे मिथुने तिस्रः पञ्च चापे च कर्कटे ॥
सिंहे च वृश्चिके षट् च सप्त कन्या तुले तथा ।
एता लग्नप्रमाणेन घटिकाः परिकीर्त्तिताः ॥
शरपूर्ब्बावशानेषुरसाब्धीष्वधिसागराः ।
लङ्कोदया हि है वस्तुं लग्ना मेषादयोऽथवा ॥
मेषलग्ने भवेद्वन्ध्या वृषे भवति कामिनी ।
मिथुने सुभगा कन्या वेश्या भवति कर्कटे ॥
सिंहे चैवाल्पपुत्रा च कन्यायां रूपसंयुता ।
तुलायां रूपमैश्वर्य्यं वृश्चिके कर्कशा भवेत् ॥
सौभाग्यं धनुषि स्याच्च मकरे नीचगामिनी ।
कुम्भे चैवाल्पपुत्रा स्यान्मीने वैराग्यसंयुता ॥
तुला कर्कटको मेषो मकरश्चैव राशयः ।
चरकार्य्याणि कुर्य्याच्च स्थिरकार्य्याणि चैव हि ॥

'यं व्याधिरतिदीप्ताङ्गं कदाचित्तु न लङ्घति ॥'
इति हलायुधः ॥
गतावप्यन्ये । अन्ये चालङ्घिषुः शैलान् । इति
दुर्गादासः ॥

**लघ**, इ क त्विषि । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-अक०-सेट् ।) इ क, लङ्घयति । त्विषि
दीप्तौ । इति दुर्गादासः ॥

**लघ**, इ ङ अभुग्गत्योः । इति कविकल्पद्रुमः ॥
(भ्वा०-आत्म०-अक०-सक० च-सेट् ।) इ,
लङ्घ्यते । ङ, लङ्घते । अभुक् भोजनाभावः ।
तथा च ।
'ये गुणा लङ्घने प्रोक्तास्ते गुणा लघुभोजने ॥'
इति वैद्यकम् ॥
लङ्घने उपवासे इत्यर्थः । इति दुर्गादासः ॥

**लघट्**, पुं, (लङ्घते मध्यस्थानमस्पृष्ट्वोत्तरस्थाने
पतति प्लुतं इतस्ततो गच्छतीति वा । लङ्घ +
"लङ्घेर्नलोपश्च ।" उणा० १ । १३४ । इति अटिः ।
नलोपश्च धातोः ।) वायुः ।
इत्युणादिकोषः ॥

**लघटिः**, पुं, (लघ गतौ + अटिः । इदभावः ।)
वायुः । इत्युणादिकोषः ॥

**लघिमा**, [न्] पुं, (लघोर्भावः । लघु + "पृथ्वादिभ्य
इमनिज्वा ।" ५ । १ । १२२ । इति इमनिच् ।)
लघुत्वम् । (यथा, रघुः । १३ । ३७ ।
"घ्रात्वा हविर्गन्धि रजोविमुक्तः
समश्नुते मे लघिमानमात्मा ॥")
रथमारुह्य गच्छामः पन्थानमकुतोभयम् ॥")
कृष्णागुरु । इति मेदिनी । घे, ५ ॥
लामज्जकम् ।
इति राजनिर्घण्टः ॥ (अस्य पर्य्यायो यथा, --
"लामज्जकं सुनालं स्यादमृणालं लयं लघुः ।
इष्टकापथकं सेव्यं नलदञ्चावदातकम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
हस्ताश्विनीपुष्यनक्षत्राणि । यथा, बृहत्-
संहितायाम् । ९८ । ९ ।
"लघु हस्ताश्विनपुष्याः
पण्यरतिज्ञानभूषणकलासु ।
शिल्पौषधयानादिषु
सिद्धिकराणि प्रदिष्टानि ॥"
कालपरिमाणविशेषः । यथा, भागवते । ३ ।
११ । ७ ।
"क्षणान् पञ्च विदुः काष्ठां लघुता दश पञ्च च ।
लघूनि वै समाम्नाता दश पञ्च च नाडिकाः ॥"
पुं, प्राणायामविशेषः । यथा, मार्कण्डेये । ३९ ।
१३ -- १४ ।
"लघुमध्योत्तरीयाख्यः
प्राणायामस्त्रिधोदितः ।
तस्य प्रमाणं वक्ष्यामि तदलर्क शृणुष्व मे ॥
लघुर्द्वादशमात्रस्तु द्विगुणः स तु मध्यमः ।
त्रिगुणाभिस्तु मात्राभिरुत्तमः परिकीर्त्तितः ॥")

**लघुः**, स्त्री, पृक्का नाम औषधिः । इति मेदिनी ।
घे, ५ ॥ (तथास्याः पर्य्यायः ।

|  | तत्तु शिवस्याष्टैश्वर्य्यान्तर्गत ऐश्वर्य्यविशेषः । यथा,<br>“लघिमा वशितेशित्वं प्राकाम्यं महिमाणिमा ।<br>यत्र कामावसायित्वं प्राप्तिरैश्वर्य्यमष्टधा ॥”<br>इति हेमचन्द्रः ॥ |  |
|---|---|---|

"स्पृक्कासृग्ब्राह्मणी देवी मरुन्माला लता लघुः ।
समुद्रान्ता वधूः
कोटिवर्षालङ्कोपिकेत्यपि ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**लघुः**, त्रि, (लङ्घ + कुः । नलोपश्च ।) अगुरुः ।
(यथा, --
"तृणादपि लघुस्तूलस्तूलादपि च भिक्षुकः ।
न नीतो वायुना
कस्मादर्थप्रार्थनशङ्कया ॥"
इत्युद्भटः ॥)
मनोज्ञः । (इष्टः । इत्यमरः ॥ यथा, रघुः ।
११ । १२ ।
"नाम्भसां कमलशोभिनां तथा
शाखिनाश्च न परिश्रमच्छिदाम् ।
दर्शनेन लघुना यथा तयोः
प्रीतिमापुरुभयोस्तपस्विनः ॥")
निःसारः । इति मेदिनी । घे, ५ ॥
(यथा,
रघुः । १२ । ६६ ।
"श्रुत्वा रामः प्रियोदन्तं मेने
तत्सङ्गमोत्सुकः ।
महार्णवपरिक्षेपं लङ्कायाः
परिखालघुम् ॥")
ह्रस्वः । इति हेमचन्द्रः ॥ * ॥
द्याकरणोक्त-
लघुसंज्ञा यथा । ह्रस्वो लघुः दीर्घो गुरुरित्यु-
च्चारणवशाद्गम्यते । तथा संयोगे सति ह्रस्वो-
ऽपि गुरुर्गुरुमतोऽनृच्छ इति
वर्ज्जनाच्च । इति
दुर्गसिंहकृतकलापवृत्तिः ॥ * ॥
छन्दःशास्त्रोक्तं
लघुलक्षणं यथा, --
"मस्त्रिगुरुस्त्रिलघुश्च नकारो

"लघ्वी दन्ती विशल्या च स्यादुडम्बरपर्ण्यपि ।
तथैरण्डफला शीघ्रा श्येनघण्टा घुणप्रिया ।
वराहाङ्गी च कथिता निकुम्भश्च मकूलकः ॥"
अस्या गुणाः ।
"दन्तीद्वयं सरं पाके रसे च कटु दीपनम् ।
गुदाङ्कुराश्मशूलास्रकण्डूकुष्ठविदाहनुत् ॥
तीक्ष्णोष्णं हन्ति पित्तास्रकफशोथोदरक्रिमीन् ॥"
इति भावप्रकाशः ॥
तत्फलगुणाः ।
"क्षुद्रदन्तीफलन्तु स्यान्मधुरं रसपाकयोः ।
शीतलं सृष्टविण्मूत्रं गलशोथकफापहम् ॥"
इति भावप्रकाशः ॥

**लघुदुन्दुभिः**, पुं, (लघुर्दुन्दुभिः ।) द्रगडवाद्यम् ।
इति शब्दरत्नावली ॥

**लघुद्राक्षा**, स्त्री, (लघुः क्षुद्रा द्राक्षा ।) काकली-
द्राक्षा । इति राजनिर्घण्टः ॥

**लघुनाम**, [न्] क्ली, (लघु लघुवर्णयुक्तं नाम
यस्य ।) अगुरु । इति शब्दचन्द्रिका ॥

**लघुपञ्चमूलं**, क्ली, (लघु क्षुद्रं पञ्चमूलम् ।) क्षुद्र-
पञ्चमूलपाचनम् । तत्तु शालपर्णीपृश्निपर्णी-
बृहतीकण्टकारीगोक्षुरसंयुक्तम् । यथा, --
"शालपर्णी पृश्निपर्णी वार्त्ताकी कण्टकारिका ।
गोक्षुरः पञ्चभिश्चैतैः कनिष्ठं पञ्चमूलकम् ॥"
अस्य गुणाः ।
"पञ्चमूलं लघु स्वादु बल्यं पित्तानिलापहम् ।
नात्युष्णं बृंहणं ग्राहि ज्वरश्वासाश्मरीप्रणुत् ॥"
इति भावप्रकाशः ॥

**लघुपत्रकः**, पुं, (लघूनि पत्राणि यस्य । कप् ।)
रोचनी । शुण्डारोचनी इति ख्यातः । इति
शब्दचन्द्रिका ॥

**लघुपत्री**, स्त्री, (लघूनि पत्राणि यस्याः । ङीष् ।)

**लघुबदरी**, स्त्री, (लघुः क्षुद्रा बदरी ।) भूब-
दरी । इति राजनिर्घण्टः ॥

**लघुब्राह्मी**, स्त्री, (लघुः क्षुद्रा ब्राह्मी ।) क्षुद्र-
ब्राह्मी । तत्पर्य्यायः । जलोद्भवा २ सूक्ष्मपत्रा ३ ।
इति राजनिर्घण्टः ॥

**लघुमन्थः**, पुं, (लघुः क्षुद्रो मन्थः) क्षुद्राग्नि-
मन्थः । इति राजनिर्घण्टः ॥

**लघुमांसः**, पुं, (लघु स्वल्पं मांसं यस्य ।) तित्तिरि-
पक्षी । इति त्रिकाण्डशेषः ॥

**लघुमांसी**, स्त्री, गन्धमांसी । इति राजनिर्घण्टः ॥

**लघुलयं**, क्ली, (लघु शीघ्रं लीयते इति । ली +
अच् ।) वीरणमूलम् । इत्यमरः ॥

**लघुसदाफला**, स्त्री, (सदा फलं यस्याः सा ।
लघुः सदाफला ।) लघूदुम्बरिका । इति
राजनिर्घण्टः ॥

**लघुहस्तः**, पुं, (लघुः क्षिप्रकारी हस्तो यस्य ।)
शीघ्रवेधी । इति हेमचन्द्रः । ३ । ४३१ ॥
(वाच्यलिङ्गोऽपि । यथा, कथासरित्मागरे ।
४२ । १३३ ।
"स राजपुत्रश्छित्त्वैव रक्षसस्तस्य तच्छिरः ।
भूयः खड्गप्रहारेण लघुहस्तो द्विधाकरोत् ॥"
यथा च ।
"तत्त्वाधिगतशास्त्रार्थो दृष्टकर्म्मा स्वयं कृती ।
लघुहस्तः शुचिः शूरः सज्जोपस्करभेषजः ॥
प्रत्युत्पन्नमतिर्धीमान् व्यवसायी विशारदः ।
सत्यधर्म्मपरो यश्च स भिषक् पाद उच्यते ॥"
इयि सुश्रुते सूत्रस्थाने ३४ अध्यायः ॥)

**लघुहेमदुग्धा**, स्त्री, (लघुर्हेमदुग्धा ।) लघूदुम्ब-

भादिगुरुः पुनरादिलघुर्यः ।
जो गुरुमध्यगतो रलमध्यः
सोऽन्तगुरुः कथितोऽन्तलघुस्तः ॥
गुरुरेको गकारस्तु लकारो लघुरेककः
॥”
इति छन्दोमञ्जरी ॥

**लघुकायः**, पुं, (लघुः कायो यस्य ।) छागः ।

इति त्रिकाण्डशेषः ॥ क्षुद्रशरीरश्च ॥

**लघुकाश्मर्य्यः**, पुं, (लघुः काश्मर्य्यः ।) कट्फल-

वृक्षः । इति राजनिर्घण्टः ॥

**लघुखट्विका**, स्त्री, (लघुः खट्विका ।) क्षुद्रखट्वा ।

तत्पर्य्यायः । आसन्दी २ । इति हारा-
वली । २०९ ॥

**लघुगणः**, पुं, (लघुर्गणः ।) अश्विनीपुष्यहस्तनक्ष-

त्राणि । यथा, --
“उग्रः पूर्व्वमघान्तका
घ्रुवगणस्त्रीण्युत्तराणि
स्वभू-
र्व्वातादित्यहरित्रयं चरगणः
पुष्याश्विहस्ता
लघुः ॥”
इति दीपिका ॥

**लघुगर्गः**, पुं, (लघुर्गर्ग इव ।) त्रिकण्टकमत्स्यः ।

इति हारावली । १९० ॥

**लघुचिर्भिटा**, स्त्री, (लघुश्चिर्भिटा ।) मृगेर्व्वारु ।

इति राजनिर्घण्टः ॥

**लघुजङ्गलः**, पुं, लावकपक्षी । इति त्रिकाण्ड-

शेषः ॥

**लघुदन्ती**, स्त्री, (लघुः क्षुद्रा दन्ती ।) क्षुद्रदन्ती-

वृक्षः । यथा, --

अश्वत्थीवृक्षः । इति राजनिर्घण्टः ॥

**लघुपिच्छिलः**, पुं, (लघुः पिच्छिलः ।) भूकर्व्वु-

दारकः । इति राजनिर्घण्टः ॥

**लघुपुष्पः**, पुं, (लघुनि क्षुद्राणि पुष्पाणि यस्य ।)

भूमिकदम्बः । इति राजनिर्घण्टः ॥ (भूमि-
कदम्बशब्देऽस्य विशेषो ज्ञेयः ॥)

**लघुबदरः**, पुं, (लघुः क्षुद्रो बदरः ।) क्षुद्रकोलिः ।

तत्पर्य्यायः । सूक्ष्मफलः २ बहुकरः ३ सूक्ष्म-
पत्रः ४ दुस्पर्शः ५ मधुरः ६ दरहारः ७
शिखिप्रियः ८ । इति राजनिर्घण्टः ॥ अस्य
फलगुणाः ।
“कर्क्कन्धुः क्षुद्रबदरं कथितं पूर्ब्बसूरिभिः ।
अम्लं स्यात् क्षुद्रबदरं कषायं कथितं मनाक्
॥
स्निग्धं गुरु च तिक्तञ्च वातपित्तापहं स्मृतम् ।
शुष्कं भेद्यग्निकृत् सर्व्वं लघु तृष्णाक्लमा-
स्रजित् ॥”
इति भावप्रकाशः ॥
अस्य पक्वफलगुणाः । मधुराम्लत्वम् । कफवात-
नाशित्वम् । रुच्यत्वम् । स्निग्धत्वम् । जन्तुकारक-
त्वम् । ईषत्पित्तार्त्तिदाहशाषघ्नत्वञ्च । इति
राजनिर्घण्टः ॥

रिका । इति राजनिर्घण्टः ॥

**लघूदुम्बरिका**, स्त्री, (लघुः क्षुद्रा उदुम्बरिका ।)

क्षुद्रोडूम्बरिका । छोट डुमुर इति भाषा ।
तत्पर्य्यस्यः । लघुपत्रफला २ लघुहेमदुग्धा
३
लघुसदाफला ४ लघ्वाद्युडुम्बराह्वा ५ । रस-
वीर्य्यविपाकेषु उडुम्बरात्
किञ्चिन्न्यूनगुणेयम् ।
इति राजनिर्घण्टः ॥

**लघ्वी**, स्त्री, (लघु + ङीष् ।) लाघवयुक्ता ।

(यथा, --
“गुर्व्वी पिण्डी खरात्यर्थं लघ्वी सैव
विपर्य्ययात् ।
शकूनामाशु जीर्य्येत मृदुत्वादवलेहिका ॥”
इति वैद्यकचक्रपाणिसंग्रहेऽतीसाराधिकारे
॥)
स्यन्दनप्रभेदः । इति मेदिनी । घे, ५ ॥
पृक्का ।
इति राजनिर्घण्टः ॥

**लङ्का**, स्त्री, (रमन्तेऽस्यामिति । रम् + बाहु-

लकात् कः । रस्य लत्वम् । इत्युज्ज्वलः । ३
।
४० ।) रक्षःपुरी । (यथा, नैषधे । ३ । ६७ ।
“चेतो न लङ्कामयते मदीयं
नान्यत्र कुत्रापि च साभिलाषम् ॥”)
ज्योतिःशास्त्रमते सा च पृथिव्या मध्यभागे
तिष्ठति । लङ्कोदयात् चरखण्डेभ्यः स्वदेशे
लग्न-
प्रमाणं भवति । यथा, --
“लङ्का कुमध्ये यमकोटिरस्याः
प्राक् पश्चिमे रोमकपत्तनञ्च ।

अधस्ततः सिद्धपुरं सुमेरुः
सौम्येऽथ याम्ये वडवानलश्च ।
कुवृत्तपादान्तरितानि तानि
स्थानानि षड्गोलविदो वदन्ति ॥”
अपि च ।
“यल्लङ्कोज्जयनीपुरोपरिकुरुक्षेत्रादिदेशान् स्पृशन्
सूत्रं मेरुगतं बुधैर्निगदिता सा मध्यरेखा भुवः ।
आदौ प्रागुदयोऽपरत्र विषये पश्चाद्धि रेखो-दयात्
स्यात्तस्मात् क्रियते तदन्तरभुवं खेटेष्वृणं स्वं फलम् ॥”
इति सिद्धान्तशिरोमणिः ॥ * ॥
अथ लङ्कापुरीवर्णनम् ।
त्वष्टोवाच ।
“त्रिंशद्योजनविस्तीर्णां स्वर्णप्राकारतोरणाम् ।
दक्षिणस्योदधेस्तीरे त्रिकूटो नाम पर्व्वतः ।
शिखरे तस्य शैलस्य मध्यमम्बुधिसन्निधौ ॥
पतत्रिभिश्च दुष्प्रापां टङ्कच्छिन्नां चतुर्द्दिशम् ।
शक्रार्थं मत्कृता पूर्ब्बं प्रयत्नात् बहुवत्सरैः ॥
वसन्तु तत्र दुर्द्धर्षाः सुखं राक्षसपुङ्गवाः ।
अमरावतीं समासाद्य सेन्द्रा इव दिवौकसः ॥
लङ्कादुर्गं समासाद्य शत्रूणां शक्रसूदनाः ।
दुराधर्षा भविष्यन्ति राक्षसैर्ब्बहुभिर्व्वृताः ॥”
इति वह्निपुराणे कपिलदर्शननामाध्यायः ॥ * ॥
शाखा । शाकिनी । कुलटा । इति मेदिनी । के, ३३ ॥ धान्यविशेषः । तत्पर्य्यायः । करालत्रि-पुटा २ काण्डिका ३ रूक्षणात्मिका ४ । अस्या गुणाः । रुच्यव्यम् । हिमत्वम् । गौल्यत्वम् । पित्तनाशित्वम् । वातकारित्वम् । गुरुत्वञ्च । इति राजनिर्घण्टः ॥

**लङ्कादाही**, [न्] पुं, (लङ्कां दहति तच्छीलः ।
दह + णिनिः ।) हनूमान् । इति शब्दरत्ना-वली ॥

**लङ्काधिपतिः**, पुं, (लङ्काया अधिपतिः ।)
रावणः । इति जटाधरभूरिप्रयोगौ ॥ (यथा, रघुः । ६ । ६२ ।
“पुरा जनस्थानविमर्द्दशङ्की

**लङ्कोपिका**, स्त्री, पृक्का । इति शब्दरत्नावली ॥

**लङ्कोयिका**, स्त्री, पृक्का । इति शब्दरत्नावली ॥

**लङ्गः**, पुं, (लङ्गतीति । लङ्ग गतौ + अच् ।)
सङ्गः । षिड्गः । इति मेदिनी । गे, २३ ॥ नां इति भाषा ॥

**लङ्गूलं**, क्ली, लाङ्गूलम् । इत्युणादिकोषः ॥

**लङ्घनं**, क्ली, (लङ्घ + ल्युट् ।) उपवासः । (यथा,
सुश्रुते । १ । ४६ ।
“तत्रामे लङ्घनं कार्य्यं विदग्धे वमनं हितम् ।
विष्टब्धे स्वेदनं पथ्यं रसशेषे शयीत च ॥”
यथा च ।
“लङ्घनं बृंहणं काले रूक्षणं स्नेहनन्तथा ।
स्वेदनं स्तम्भनञ्चैव जानीते यः स वै भिषक् ॥”
“तदग्निवेशस्य वचो निशम्य गुरुरब्रवीत् ।
यत्किञ्चिल्लाघवकरं देहे तल्लङ्घनं स्मृतम् ॥”
“लघूष्णतीक्ष्णविषदं रूक्षं सूक्ष्मं खरं सरम् ।
कठिनञ्चैव यद्द्रव्यं प्रायस्तल्लङ्घनं स्मृतम् ॥”
“--पिपासा मारुतातपौ ।
पाचनान्युपवासाश्च व्यायामश्चेति लङ्घनम् ॥”
“प्रभूतश्लेष्मपित्तास्रमलाः सन्दुष्टमारुताः ।
बृहच्छरीरा बलिनो लङ्घनीया विशुद्धिभिः ॥”
“त्वग्दोषिणां प्रमीढानां स्निग्धाभिष्यन्दिबृंहि-नाम् ।
शिशिरे लङ्घनं शस्तमपि वातविकारिणाम् ॥”
इति चरके सूत्रस्थाने द्वाविंशेऽध्याये ॥
“ज्वरे लङ्घनमेवादावुपदिष्टमृते ज्वरात् ।
क्षयानिलभयक्रोधकामशोकश्रमोद्भवात्॥
आमाशयस्थो हत्वाग्निं सामो मार्गान् पिधा-पयन् ।
विदधाति ज्वरं दोषस्तदा लङ्घनमाचरेत् ॥
अनवस्थितदोषाग्नेर्लङ्घनं दोषपाचनम् ।
ज्वरघ्नं दीपनं काङ्क्षारुचिलाघवकारकम्॥
प्राणाविरोधिना चैनं लङ्घनेनोपपादयेत् ।
बलाधिष्ठानमारोग्यं यदर्थोऽयं क्रियाक्रमः ॥
तत्तु मारुतक्षुत्तृष्णामुखशोषभ्रमान्विते।

“न चाग्निं लङ्घयेद्धीमान्नोपदध्यादधः क्वचित् ।
न चैनं पादतः कुर्य्यात् मुखेन न धमेद्बुधः ॥”
इति कौर्म्मे उपविभागे १५ अध्यायः ॥
(अतिक्रमः । यथा, महाभारते । १ । १५९ ।
३६ ।
“न चाप्यधर्म्मः कल्याण बहुपत्नीकता नृणाम् ।
स्त्रीणामधर्म्मः सुमहान् भर्त्तुः पूर्ब्बस्य लङ्घने ॥”)
अश्वतृतीयगतिः । यथा, --
“प्लुतन्तु लङ्घनं पक्षिमृगगत्यनुहारकम् ।”
इति हेमचन्द्रः ॥ * ॥
(स्त्री, अवमानना । यथा, मार्कण्डेये ।
१३५ । ३३ ।
“अन्यस्यापि स्ववंशस्य लङ्घना क्रियते हि या ।
तां नालं क्षत्त्रियः सोढुं किं पुनः पितृमार-णम् ॥”)

**लछ**, लक्ष्मणि । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।) लछति वृषं चक्रेण गोपः ।
इति दुर्गादासः ॥

**लज**, भर्त्से । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) लजति । इति दुर्गादासः ॥

**लज**, इ भर्त्से । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।) इ, लञ्ज्यते ।
इति दुर्गादासः ॥

सन्धाय लङ्काधिपतिः प्रतस्थे ॥”)

**लङ्कापतिः**, पुं, (लङ्कायाः पतिः ।) रावणः ।

इति भूरिप्रयोगः ॥

**लङ्कापिका** स्त्री, पृक्का । इति शब्दरत्ना-

वली ॥ पिडिंशाक इति भाषा ॥

**लङ्कायिका** स्त्री, पृक्का । इति शब्दरत्ना-

वली ॥ पिडिंशाक इति भाषा ॥

**लङ्कारिका** स्त्री, पृक्का । इति शब्दरत्ना-

वली ॥ पिडिंशाक इति भाषा ॥

**लङ्कास्थायी**, [न्] पुं, (लङ्कावत् तिष्ठतीति । स्था

+ णिनिः ।) वृक्षविशेषः । लङ्कासिज इति
भाषा । यथा, --
“लङ्कास्थायी राजवृक्षो भद्रचूडो विशायकः ।”
इति शब्दचन्द्रिका ॥
(लङ्कायां तिष्ठतीति ।) लङ्कावासिनि, त्रि ॥

**लङ्केशः**, पुं, (लङ्काया ईशः पतिः ।) रावणः ।

इति त्रिकाण्डशेषः ॥

कार्य्यं न बाले वृद्धे वा न गर्भिण्यां न दुर्ब्बले
॥
वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे ।
हृदयोद्गारकण्ठास्यशुद्धौ तन्द्रा क्लमे गते ॥
स्वेदे जाते रुचौ चापि क्षुत्पिपासासहोदये ॥
कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनि ॥
पर्व्वभेदोऽङ्गमर्द्दश्च कासः शोषो मुखस्य च ।
क्षुत्प्रणाशोऽरुचिस्तृष्णादौर्ब्बल्यं श्रोत्रनेत्रयोः
॥
मनसः सम्भ्रमोऽभीक्ष्णमूद्र्ध्वःवातस्तमो हृदि
।
देहाग्निबलहानिश्च लङ्घनेऽतिकृते भवेत् ॥”
इति वैद्यकचक्रपाणिसंग्रहे ज्वराधिकारे ॥)
क्रमणम् । (यथा, कुमारे । ५ । ६४ ।
“यथा श्रुतं वेदविदांवर त्वया
जनोऽयमुच्चैः पदलङ्घनोत्सुकः ।
तपः किलेदं तदवाप्तिसाधनं
मनोरथानामगतिर्न विद्यते ॥”)
प्लवनम् । इति मेदिनी । ने, १२० ॥ अग्नि-
लङ्घननिषेधो यथा, --

**लज**, इ क भाषट्टार्थे । इति कविकल्पद्रुमः ॥

(चुरा०-पर०-अक०-सक० च-सेट्
।) इ क,
लञ्जयति । भा दीप्तिः षट्टार्थो
निकेतनहिंसा-
बलदानानि । इति दुर्गादासः ॥

**लज**, क अन्तर्द्धौ । इति कविकल्पद्रुमः ॥ (चुरा०-

पर०-सक०-सेट् ।)
अन्तर्द्धिराच्छादनम् । क,
लाजयति चन्द्रं मेघः । इति
दुर्गादासः ॥

**लज**, ङ व्रीडे । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-अक०-सेट् ।) ङ, लजते ।
निष्ठायां
लग्न इत्यन्ये । इति दुर्गादासः ॥

**लज**, त् क भासने । इति कविकल्पद्रुमः ॥ (अदन्त

चुरा०-पर०-अक०-सेट् ।) क,
लजयति ।
भासनं दीप्तिः । इति दुर्गादासः ॥

**लजकारिका**, स्त्री, (लजं लज्जां करोतीव ।

कृ + ण्वुल् । टापि अत इत्वम् ।)
लज्जालुलता ।
इति शब्दमाला ॥

**लज्जा**, स्त्री, (लज्जनमिति । लस्ज व्रीडने +

“गुरोश्च हलः ।” ३ । ३ । १०३ ।
इति अः ।
टाप् ।) अन्तःकरणवृत्तिविशेषः ।
इति
नागोजीभट्टः ॥ अकर्त्तव्ये कर्म्मणि
परज्ञान-
भयम् । लाज् इति भाषा ।
तत्पर्य्यायः ।
मन्दाक्षम् २ ह्रीः २ त्रपा ४ व्रीडा ५
। सा
अन्यतश्चेत् अपत्रपा ६ । इत्यमरः
॥ मन्दा-

| | | |
|---|---|---|
| | | स्यम् ७ लज्या ८ व्रीडः ९ व्रीडनम् १० । इति शब्दरत्नावली ॥ (यथा, कुमारे । १ । ४८ । “लज्जा तिरश्चां यदि चेतसि स्या- दसंशयं पर्व्वतराजपुत्र्याः । तं केशपाशं प्रसमीक्ष्य कुर्य्यु- र्बालप्रियत्वं शिथिलं चमर्य्यः ॥”) लज्जालुः । इति राजनिर्घण्टः ॥ |

**लज्जालुः**, पुं, स्त्री, (लज्जेवास्या अस्तीत्यर्थे आलुः ।)

क्षुपविशेषः । तत्पर्य्यायः । रक्तपादी २ शमी-
पत्रा ३ स्पृक्का ४ खदिरपत्रिका ५ सङ्कोचिनी
६ समङ्गी ७ नमस्कारी ८ प्रसारिणी ९ सप्त-
पर्णी १० खदिरी ११ गण्डमालिका १२
लज्जा १३ लज्जिरी १४ स्पर्शलज्जा १५ अस्र-
रोधिनी १६ रक्तमूला १७ ताम्रमूला १८
स्वगुप्ता १९ अञ्जविकारिका २० । इति राज-
निर्घण्टः ॥ महाभीता २१ वशिनी २२ महौ-
षधिः २३ । इति शब्दचन्द्रिका ॥ अस्या
गुणाः । कटुत्वम् । शीतत्वम् । पित्तातिसार-
शोफदाहश्रमश्वासव्रणकुष्ठ-कफार्त्तिनाशित्वञ्च ॥
तद्भेदो यथा, --
“लज्जालुर्विपरीतान्या अल्पक्षुपबृहद्दला ।
वैपरीत्या च लज्जालुर्ह्याभिधाने प्रयोजयेत् ॥
लज्जालुर्वैपरीत्याह्वः कटुरुष्णः कफापनुत् ।
रसे नियामकश्चैव नानाविज्ञानकारकः ॥”
इति राजनिर्घण्टः ॥
अन्या हंसपादीशब्दे द्रष्टव्या ॥ * ॥ अपि च ।
“लज्जालुः स्यात् शमीपत्रा समङ्गाञ्जलि-कारिका ।
रक्तपादी नमस्कारी नाम्ना खदिरकेत्यपि ॥
लज्जालुः शीलता तिक्ता कषाया कफपित्त-
जित् ।

**लट**, बाल्योक्त्योः । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-अक०-सक० च-सेट् ।) बालोऽज्ञः तस्य
भावो बाल्यं व्यामोह इति यावत् । लटति लोकः
शिशुः स्यात् । किञ्चिद्वदति वेत्यर्थः । इति
दुर्गादासः ॥

**लटः**, पुं, (लटति यथेच्छया वदतीति । लट +

अच् ।) प्रमादवचनम् । दोषः । इति
विश्वः ॥

**लटकः**, पुं, (लटतीति । लट् + “क्वुन् शिल्पि-

संज्ञयोरपूर्ब्बस्यापि ।” उणा० २ । ३२ । इति
क्वुन् ।) दुर्जनः । इत्युणादिकोषः ॥

**लटपर्णं**, क्ली, (लटमुग्रं पर्णमस्य ।) त्वचम् ।

इति राजनिर्घण्टः ॥

**लट्टः**, पुं, दुर्जनः । इति शब्दरत्नावली ॥

**लट्वः**, पुं, (लटतीति । लट + “अशूप्रूषिलटीति ।”

उणा० १ । १५१ । इति क्वन् ।) जातिविशेषः ।
नेटुया इति भाषा ॥ रागभेदः । तुरङ्गमः ।
इत्युणादिकोषः ॥

**लट्वा**, स्त्री, (लट् + क्वन् । टाप् ।) करञ्जभेदः ।

नाटाकरञ्जा इति भाषा । वाद्यभेदः । पक्षि-
विशेषः । ग्रामचटक इति ख्यातः । इति
मेदिनी । वे, २२ ॥ कुसुम्भम् । इति
हेमचन्द्रः ॥
भ्रमरकः । भोङरी इति ख्यातः । इत्यमर-
भरतौ ॥ (शिली । इति हारावली । २५६ ॥
तूलिका । द्यूतम् । यथा, --
“लट्वा तु तूलिका ख्याता लट्वा द्यूतेऽपि
दृश्यते ॥”
इति व्याडिरभसौ ।” इति उणादिवृत्तौ
उज्ज्वलः । १ । १५१ ॥)

**लड**, विलासे । इति कविकल्पद्रुमः ॥ (भ्वा०-

**लड**, त् क क्षेपे । इति कविकल्पद्रुमः ॥ (अदन्त-

चुरा०-पर०-सक०-सेट् ।) लडयति । अल-
लाडत् । इति दुर्गादासः ॥

**लड**, म उन्मन्थनजिह्वयोः । इति कविकल्पद्रुमः ॥

(भ्वा०-पर०-अक०-क्वचित् पीडनादौ सक०-
सेट् ।) उन्मन्थनं पीडितीभावः उत्क्षिप्ती-
भावश्च । लडति लता वायुना पीडिता उत्-
क्षिप्ता वा स्यादित्यर्थः । जिह्वा तद्विषयक्रिया ।
लडति जिह्वा स्पन्दनवती स्यादित्यर्थः । म,
लडयति । लडयति त्वचमुल्ललयत्यमूनिति
श्रीहर्षः । पीडयतीत्यर्थः । कवाटघ्नीमिन्दुः
किरणलहरीमुल्ललयतीतिमुरारिः । उत्-
क्षिपतीत्यर्थः । उभयत्र डलयोरेकत्वाल्लत्वम् ।
केचित्तु जिह्वोन्मन्थने इति पठित्वा जिह्वाया
उन्मन्थनं उत्क्षेपणमिति व्याख्याय लडति
जिह्वां सर्प इत्येवोदाहरन्ति । इति दुर्गा-
दासः ॥

**लडहः**, त्रि, मनोज्ञः । इति त्रिकाण्डशेषः ॥

**लड्डः**, त्रि, दुर्ज्जनः । इति शब्दरत्नावली ॥

**लड्डुकः**, पुं, पिष्टकविशेषः । लाडु इति भाषा ॥

यथा । लड्डुको दुर्ज्जरो गुरुः । इति राज-
वल्लभः ॥ अपि च ।
“तैलेन हविषा पक्वं भवेत् चूर्णञ्च लड्डुकः ॥”
इति शब्दचन्द्रिका ॥

**लण्डं**, क्ली, (लण्ड्यते उत्क्षिप्यते इति । लण्ड +

रक्तपित्तमतीसारं योनिरोगान् विनाशयेत् ॥”
अत लज्जालुभेदः ।
“अलम्बुषा खरत्वक् च तथा मेदोगला स्मृता ।
अलम्बुषा लघुः स्वादुः कृमिपित्तकफापहा ॥”
इति भावप्रकाशः ॥
अन्या दुग्धिकाशब्दे द्रष्टव्या ॥

**लज्जाशीलः**, त्रि, (लज्जा शीलं स्वभावो यस्य ।) लज्जाविशिष्टः । तत्पर्य्यायः । अपत्रपिष्णुः २ । इत्यमरः ॥ लज्जितः ३ । इति शब्दरत्नावली ॥

**लज्जितः**, त्रि, (लज्जा सञ्जातास्य । लज्जा + तार-कादित्वात् इतच् ।) लज्जायुक्तः । तत्पर्य्यायः । ह्रीणः २ ह्रीतः ३ । इत्यमरः ॥ (यथा, रघुः । १२ । ७५ ।
“कामं जीवति मे नाथः इति सा विजहौ शुचम् ।
प्राक् मत्वा सत्यमस्यान्तं जीवितास्मीति लज्जिता ॥”)

**लज्जिरी**, स्त्री, लज्जालुः । इति राजनिर्घण्टः ॥

**लज्या**, स्त्री, लज्जा । इति शब्दरत्नावली ॥

**लञ्ज**, त् क भासने । इति कविकल्पद्रुमः ॥ (अदन्त-चुरा०-पर०-अक०-सेट् ।) क, लञ्ज-यति । भासनं दीप्तिः । इति दुर्गादासः ॥

**लञ्जः**, पुं, (लञ्जयति शोभते इति । लञ्ज + अच् ।) पदः । कच्छः । इति हेमचन्द्रः ॥ पुच्छः । इति जटाधरः ॥

**लञ्जिका**, स्त्री, (लञ्जयति शोभते इति । लञ्ज + ण्वुल् । टापि अत इत्वम् ।) वेश्या । इति हेमचन्द्रः ॥

पर०-अक०-सेट् ।) लडति बाला । इति दुर्गा-दासः ॥

**लड**, इ कि भाषणे । इति कविकल्पद्रुमः ॥ (चुरा०-पक्षे भ्वा०-पर०-सक०-सेट् ।) इ, लण्ड्यते । कि, लण्डयति लण्डति । भाषणं कथनम् । अयं कैश्चिन्न मन्यते । इति दुर्गादासः ॥

**लड**, ओ इ कि उत्क्षेपणे । इति कविकल्पद्रुमः ॥ (चुरा०-पक्षे भ्वा०-पर०-सक०-सेट् ।) ओ, लण्डिनः । अनुबन्धबलादिम्व्यवधानेऽपि निष्ठा-तस्य नत्वम् । अस्मात् निष्ठायामिम् न स्यादि-त्येके । लड्न इति । इ, लण्ड्यते । कि, लण्डयति लण्डति तण्डुलं लोकः । इति दुर्गादासः ॥

**लड**, क उपसेवे । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-सक०-सेट् ।) उपसेव इह अत्यन्तपाल-नम् । क, लालयेत् पञ्चवर्षाणि पुत्त्रमिति अत्र डलयोरेकत्वाल्लत्वम् । कल्पनायामस्य प्रयोगः । इति रमानाथः । लाडयति लतां वायुः । इति दुर्गादासः ॥

**लड**, क ङ वीप्से । इति कविकल्पद्रुमः ॥ (चुरा०-आत्म०-सक०-सेट् । क ङ, लाडयते । लाभ एव इत्यन्य । विशेषेण आप्तुमिच्छा व्रीप्सा । इति दुर्गादासः ॥

घञ् ।) पुरीषम् । ल्याड् इति भाषा । यथा, --
“समेधमानेन स कृष्णबाहुना
निरुद्धवायुश्चरणांश्च निक्षिपन् ।
प्रस्विन्नगात्रः परिवृत्तलोचनः
पपात लण्डं विसृजन् क्षितौ व्यसुः ॥”
इति श्रीभागवते १० स्कन्धे ३७ अध्याये ८ श्लोकः ॥ लण्डं पुरीषमुत्सृजन् । इति तट्टी-कायां श्रीधरस्वामी ॥

**लण्ड्रजः**, त्रि, (लण्ड्रे तदाख्यदेशे जायते इति । जन् + डः ।) लण्ड्रदेशजातः । यथा, --
“पूर्ब्बाम्नाये नवशत्तं षडशीतिः प्रकीर्त्तिताः ।
फिरङ्गभाषया तन्त्रास्तेषां संसाधनात् भुवि ॥
अधिपा मण्डलानाञ्च संग्रामेष्वपराजिताः ।
इंरेजा नव षट् पञ्च लण्ड्रजाश्चापि भाविनः ॥”
इति मेरुतन्त्रे २३ प्रकाशः ॥ * ॥
लण्डस्तु अधुना लण्डन् इति ख्यातः । इंरेजानां राजधानी च ॥

**लत**, घाते । सौत्रधातुरयम् । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) लता । इति दुर्गा-दासः ॥

**लता**, स्त्री, (लतति वेष्टयते यान्यमिति । लत + पचा-द्यच् । टाप् ।) शाखादिरहिता गुडूच्यादिः । तत्पर्य्यायः । वल्ली २ व्रततिः ३ । इत्यमरः ॥ वल्लिः ४ वेल्लिः ५ प्रततिः ६ । सा शाखापत्र-समायुक्ता चेत्प्रतानिनी । इति शब्दरत्नावली ॥ तत्पर्य्यायः । वीरुत् २ गुल्मिनी ३ उलपः ४ ।

यथा, --
“अप्सु तस्मिन्नहोरात्रे पूर्ब्बं विशति चन्द्रमाः
ततो वीरुत्सु वसति प्रयात्यर्कं ततः क्रमात् ॥
छिनत्ति वीरुधो यस्तु वीरुत्संस्थे निशाकरे ।
पत्रं वा पातयत्येकं ब्रह्महत्यां स विन्दति ॥”
इति श्रीविष्णुपुराणे २ अंशे १२ अध्यायः ॥ * ॥
आश्रमे रोपणीया शुभदा लतादिर्य्यथा, --
“अलावुश्चापि कुष्माण्डं मायाम्बुश्च सुकामुकः ।
खर्ज्जुरी कर्कटी चापि शिविरे मङ्गलप्रदा ॥
वास्तूकः कारवेल्लश्च वार्त्ताकुश्च शुभप्रदा ।
लताफलञ्च शुभदं सर्व्वं सर्व्वत्र निश्चितम् ॥”
इति व्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १०२ अध्यायः ॥
शाखा । प्रियङ्गुः । (अस्याः पर्य्यायो यथा, --
“प्रियङ्गुः फलिनी कान्ता लता च महिलाह्वया ।
गुन्द्रा गुन्द्रफला श्यामा विष्वक् सेनाङ्गना-
प्रिया ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
पृक्का । (यथास्याः पर्य्यायः ।
“तस्करोच्चारकश्चण्डोदेवी पृक्का लता लघुः ॥”
इति वैद्यकरत्नमालायाम् ॥)
अशनपर्णी । इत्यमरः ॥ ज्योतिष्मती । (अस्याः
पर्य्यायो यथा, --

दीपनत्वम् । पथ्यत्वम् ।
शूलगुल्मविषापहत्वञ्च ।
इति राजनिर्घण्टः ॥

**लताकस्तूरिका**, स्त्री, (लतारूपा कस्तूरी तद्वद्-
गन्धत्वात् । ततः स्वार्थे कन् ।) लताकस्तूरी ।
तत्पर्य्यायः । कटुः २ दक्षिणदेशजा ३ । अस्या
गुणाः । तिक्तत्वम् । स्वादुत्वम् । वृष्यत्वम् ।
हिमत्वम् । लघुत्वम् । चक्षुष्यत्वम् । छेदनीत्वम् ।
श्लेष्मतृष्णावस्त्यास्यरोगनाशित्वञ्च। इति पथ्या-
पथ्यविवेकः ॥ अपि च ।
“लताकस्तूरिका तिक्ता हृद्या शीतास्य-
रोगनुत् ॥”
इति राजवल्लभः ॥

**लताजिह्वः**, पुं, (लतेव जिह्वा यस्य ।) सर्पः ।
इति शब्दमाला ॥

**लतातरुः**, पुं, (लतेव दीर्घस्तरुः ।) नारङ्गवृक्षः ।
तालवृक्षः । इति शब्दमाला ॥ शालवृक्षः ।
इति त्रिकाण्डशेषः ॥

**लताद्रुमः**, (लतेव द्रुमः दीर्घत्वात् ।) लताशालः ।
तत्पर्य्यायः । तार्क्षः २ अश्वकर्णः ३ कुशिकः ४
वन्यः ५ दीर्घः ६ । इति रत्नमाला ॥

**लतापनसः**, पुं, (लतायां पनसमिव फलमस्य ।)
फललताविशेषः । तरमुज् इति ख्यातः ।
तत्पर्य्यायः । चेलालः २ चित्रफलः ३ सुखाशः ४
राजतेमिषः ५ नाटाम्रः ६ सेदुः ७ । इति
त्रिकाण्डशेषः ॥

**लतापृक्का**, स्त्री, (लताप्रधाना पृक्का ।) समु-
द्रान्ता । इति शब्दरत्नावली ॥ पिडिंशाक
इति भाषा ॥

**लतारसनः**, पुं, (लतेव रसना यस्य ।) सर्पः ।
इति हारावली । १५ ॥

**लतार्कः**, पुं, (लता अर्क इव तीव्रा यस्य ।)
हरित्पलाण्डुः । तत्पर्य्यायः । दुद्रुमः २ ।
इत्यमरः ॥

**लतालकः**, पुं, हस्ती । इति त्रिकाण्डशेषः ॥

**लतावेष्टः**, पुं, (लतयेव आवेष्टो वेष्टनं यत्र ।)
षोडशरतिबन्धान्तर्गततृतीयबन्धः । यथा, --
“बाहुभ्यां पादयुग्माभ्यां वेष्टयित्वा स्त्रियं रमेत् ।
लघुलिङ्गताडनं योनौ लतावेष्टोऽयमुच्यते ॥”
इति रतिमञ्जरी ॥ * ॥
पर्व्वतविशेषः । यथा, --
“अन्वेषणे निरुद्धस्य चरान् व्यादिष्टवान् तदा ।
अभ्यन्तरञ्च मार्गध्वं बाह्यतश्च समन्ततः ॥
वेणुमन्तं लतावेष्टं तथा रैवतकं गिरिम् ।
ऋक्षवन्तं गिरिञ्चैव मार्गध्वं त्वरिता हयैः ॥”
इति हरिवंशे वाणयुद्धम् ॥
(पर्व्वतोऽयं द्वारकाया दक्षिणस्यां दिशि
स्थितः । यथा, तत्रैव । १५५ । १६ ।
“दक्षिणस्यां लतावेष्टः पञ्चवर्णो विराजते ।
इन्द्रकेतुप्रतीकाशः पश्चिमस्यां तथा क्षुपः ॥”)

**लतावेष्टितकं**, क्ली, (लतयेव वेष्टितं वेष्टनं यत्र ।
कन् ।) आलिङ्गनभेदः । यथा, शब्दमालायाम् ।
“उद्घट्टकं पीडितकं लतावेष्टितकं तथा ॥”

**लताशङ्खः**, पुं, शालवृक्षः । इति शब्दरत्नावली ॥

**लतासाधनं**, क्ली, (लतया स्त्रिया साधनम् ।)
योषिदधिकरणकेष्टदेवताराधनम् । तद्यथा, --
“लतायाः साधनं वक्ष्ये शृणुष्व हरवल्लभे ।
शतं केशे शतं भाले शतं सिन्दूरमण्डले ॥
स्तनन्द्वन्द्वे शतद्वन्द्वं शतं नाभौ महेश्वरि ।
शतं योनौ महेशानि उत्थाय च शतत्रयम् ॥

"ज्योतिष्मती स्यात् कटभी
ज्योतिष्का कङ्गीनी-
ति च ।
पारावतपदी पण्या लता प्रोक्ता
ककुन्दनी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)
लताकस्तूरिका । माधवी । दूर्व्वा ।
इति मेदिनी ।
ते, ५१-५२ ॥ कैवर्त्तिका । सारिवा ।
इति राज-
निर्घण्टः ॥ (बृहती । तत्पर्य्यायो
यथा, --
"भण्डाकी बृहती सिंही वार्त्ताकी
राष्ट्रिका-
कुली ।
प्रसहा रक्तपाका च लता वृहतिका
परा ॥")
नारी । यथा, --
"नग्नां परलतां पश्यन् अयुतं यस्तु
साधकः ।
प्रजपेत् स भवेत् शीघ्रं विद्याया
वल्लभः स्वयम् ॥"
इति तन्त्रसारे श्यामासाधनम् ॥
(तथा च नैषधे । १ । ८५ ।
"नवा लता गन्धवहेन चुम्बिता
करम्बिताङ्गी मकरन्दशीकरैः ।
दृशा नृपेण स्मितशोभिकुड्मला
दरादराभ्यां दरकम्पिनी पपे ॥"
"नवा नवीना तला माधवीलता पक्षे
नवा
रम्या लता स्त्री ।" इति तट्टीका ॥ *
॥ अप्सरो-
विशेषः । यथा, महाभारते । १ ।
२१७ । २० ।
"अहञ्च सौरभेयी च समीची वुद्बुदा
लता ।
यौगपद्येन तं विप्रमभ्यगच्छाम
भारत ! ॥")

**लताकरञ्जः**, पुं, (लतारूपः करञ्जः ।) करञ्ज-

**लताप्रतानिनी**, स्त्री, (लताप्रतानोऽस्त्यस्येति ।

इनिः ।) शाखाप्रचयवती लता । तत्पर्य्यायः ।
वीरुत् २ गुल्मिनी ३ उलपः ४ । इत्यमर-
भरतौ ॥ वीरुधा ५ वरुत् ६ । इति
शब्दरत्ना-
वली ॥ प्रताना ७ कक्षः ८ । इति जटाधरः ॥

**लताफलं**, क्ली, (लतायां फलमस्य ।) पटोलः ।

यथा, --
"वास्तूकः कारवेल्लश्च वार्त्ताकुश्च शुभप्रदा ।
लताफलञ्च शुभदं सर्व्वं सर्व्वत्र निश्चितम् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १०२
अध्यायः ॥

**लताभद्रा**, स्त्री, (लतया भद्रा यस्याः ।) भद्राली-

वृक्षः । इति शब्दमाला ॥

**लतामणिः**, पुं, (लतासदृशो मणिः ।) प्रवालः ।

इति त्रिकाण्डशेषः राजनिर्घण्टश्च ॥ (प्रवाल-
शब्देऽस्य विवरणं ज्ञातव्यम् ॥)

**लतामरुत्**, स्त्री, (लतायां मरुत् यस्याः ।) पृक्का ।

इति शब्दरत्नावली ॥

**लतामाधवी**, स्त्री, (लताप्रधाना माधवी ।)

माधवीलता । इति शब्दरत्नावली ॥

**लतायष्टिः**, स्त्री, (लता यष्टिरिव ।) मञ्जिष्ठा ।

इति शब्दमाला ॥

**लतायावकं**, क्ली, (लतायां याव इव यस्य । कन् ।)

प्रवालम् । इति हारावली । ९१ ॥ (गुणादयो-
ऽस्य प्रवालशब्दे ज्ञेयाः ॥)

एवं दशशतं जप्त्वा सर्व्वसिद्धीश्वरो भवेत् ।
अथान्यत् संप्रवक्ष्यामि साधनं भुवि दुर्लभम्
॥
रजोऽवस्थां समानीय तद्योनौ स्वेष्टदेवताम् ।
पूजयित्वा महारात्रौ त्रिदिनं पूजयेन्मनुम् ॥
शतत्रयञ्च षट्त्रिंशदधिकं प्रत्यहं जपन् ।
अष्टोत्तरशतं पूर्ब्बं चक्रवक्त्रे जपेद्बुधः ॥
ततस्तां नवभिः पुष्पैर्यजेदष्टोत्तरं शतम् ।
ततः पूर्णाहुतिं दत्त्वा जपेदष्टोत्तरं शतम् ॥
धनवान् बलवान् वाग्मी सर्व्वयोषित्प्रियङ्करः
।
षोडशाहेन च भवेत् सत्यं सत्यं न संशयः
॥"
इति मायातन्त्रे १२ पटलः ॥
अन्यत् अन्नदाकल्पे १६ पटले
गुप्तसाधनतन्त्रे
४ पटले च द्रष्टव्यम् ॥

**लतिका**, स्त्री, लता । इति लताशब्दात् स्वार्थे

कन्प्रत्ययेन ष्णिकप्रत्ययेन वा निष्पन्नम् ॥
(यथा, --
"इयं सन्ध्या दूरादहमुपगतो हन्त मलयात्
तदेकां तद्गेहे विनयवति ! नेष्यामि रजनीम्
।
समीरेणोक्तैवं नवकुसुमिता चूतलतिका
धुनाना मूर्द्धानं नहि नहि नहीत्येव कुरुते ॥"
इत्युद्भटः ॥)

| | | |
|---|---|---|
| विशेषः । कण्टकरेज इति हिन्दी भाषा ।<br>तत्पर्य्यायः । दुष्पर्शः २ वीराख्यः ३ वज्र-<br>बीजकः ४ धनदाक्षी ५ कण्टफलः ६ कुबे-<br>राक्षी ७ । अस्य पत्रगुणाः । कटुत्वम् ।<br>उष्णत्वम् । कफवातनाशित्वञ्च ।<br>तद्बीजगुणाः । | | |

**लतिका**, स्त्री, (लत घाते + "कृतिभिदिलतिभ्यः
कित् ।" उणा० ३ । १४७ । इति तिकन् ।)
गोधा । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**लप**, ऋ भाषे । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।) ऋ, अलीलपत्
अललापत् ।
भाषः कथनम् । इति दुर्गादासः ॥

**लपनं**, क्ली, (लप्यतेऽनेनेति । लप् + करणे ल्युट् ।)
मुखम् । इत्यमरः ॥ (भावे ल्युट् ।) भाष-
णम् । इति लपधात्वर्थदर्शनात् ॥ (यथा,
आर्य्यासप्तशत्याम् । ३८१ ।
"प्रकटयति रागमधिकं लपनमिदं
वक्त्रिमाण-
मावहति ।
प्रीणयति च प्रतिपदं दूति शुकस्येव दयि-
तस्य ॥"
"शुकस्येव दयितस्य लपनं सम्भाषणम्
। पक्षे
वदनम् ।" इति तट्टीका ॥)

**लपितं**, क्ली, (लप् + क्तः भावे ।) वचनम् । कथिते,
त्रि । इत्यमरः ॥ (लपितमस्यास्तीति ।
अच् ।
वचनयुक्ते च त्रि । यथा, अथर्व्ववेदे । ४ ।
३६ । ९ ।
"ये मा क्रोधयन्ति लपिता हस्तिनं
मशका इव ।
तानहं मन्ये दुर्हितां जने अल्पशयूनिव
॥")

**लप्सिका**, स्त्री, खाद्यविशेषः । लप्सी । इति
ख्याता । यथा, --
"समितां सर्पिषा भृष्टां शर्करां पयसि
क्षिपेत् ।

**लभ**, डु औ ङ ष प्राप्तौ । इति कविकल्पद्रुमः ॥
(भ्वा०-आत्म०-सक०-अनिट् ।) डु,
लब्धिमम् ।
औ, लब्धा । ङ, लभते । ष, लभा ।
लभन्ति
पुनरुत्थानमिति गणकृतानित्यत्वादिति
रमा-
नाथः । वस्तुतस्तु लभते लभः
पचादित्वादन्
ततो लभ इवाचरतीति क्वौ साध्यम् ।
इति
दुर्गादासः ॥

**लभसः**, पुं, (लभ् + "अत्यविचमीति ।" उणा०
३ । ११७ । इति असच् ।)
वाजिबन्धनरज्जुः ।
इत्युणादिकोषः ॥ धनम् । याचकः । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**लभ्यं**, त्रि, (लभ्यते इति । लभ् + पोरदुपधात् ।"
३ । १ । ९८ । इति यत् ।) न्याय्यम् ।
इत्यमरः ॥
लब्धव्यम् । इति मेदिनी । ये, ४३ ॥
(यथा,
मुण्डकोपनिषदि । ३ । २ । ३ ।
"नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुधा श्रुतेन ।
यमेवैष वृणुते तेन लभ्य-
स्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥")

**लमकः**, पुं, (रमते इति । रम् + "रमेरश्च लो
वा ।" उणा० २ । ३३ । इति क्वुन् रस्य
लत्वञ्च ।) षिड्गः । इति
सिद्धान्तकौमुद्या-
मुणादिवृत्तिः ॥ (तीर्थशोधकः ।
इत्युज्ज्वलः ॥
विलासिनि, त्रि । इति केचित् ॥)

**लम्पटः**, पुं, षिड्गः । इति लम्पाकशब्दार्थे

क्षेत्रादौ लम्बमानरेखा सूत्रं वा । यथा, --
"त्रिभुजे भुजयोर्योगस्तदनन्तरगुणोभुवाहृतो
लब्ध्या ।
द्विस्था भूरूनयुता दलितावाधे तयोः
स्याताम् ॥
स्वावाधाभुजकृत्योरन्तरमूलं प्रजायते लम्बः
।
लम्बगुणं भूम्यर्द्धं स्पष्टं त्रिभुजे फलं भवति
॥"
उदाहरणम् ।
"क्षेत्रे मही मनुमिता त्रिभुजे भुजौ तु
यत्र त्रयोदशतिथिप्रमितौ हि यस्य ।
तत्रावलम्बकमथो कथयाववाधे
क्षिप्रं तथा च समकोष्ठमितिं फलाख्याम् ॥"
न्यासः । भूः १४ भुजौ १३ । १५ लब्धे
आवाधे ५ । ९ । लब्धो लम्बश्च १२ क्षेत्र-
फलञ्च ८४ । इति लीलावती ॥ (दैत्यविशेषः
।
यथा, हरिवंशे । ४३ । २२ ।
"लम्बस्तु लम्बमेघाभः प्रलम्बाम्बरभूषणः ।
दैत्यव्यूहगतो भाति सनीहार इवांशुमान् ॥")
त्रि, दीर्घः । लम्बा इति भाषा । यथा, --
"दूरतः शोभते मूर्खो लम्बशाटपटावृतः ।
तावच्च शोभते मूर्खो यावत् किञ्चिन्न भाषते
॥"
इति चाणक्यशतकम् ॥
(लम्बमानः । यथा, रघुः । ६ । ६० ।
"पाण्ड्योऽयमंसार्पितलम्बहारः
कॢप्ताङ्गरागो हरिचन्दनेन ।
आभाति बालातपरक्तसानुः
सनिर्झरोद्गार इवाद्रिराजः ॥")

**लम्बकर्णः**, पुं, (लम्बौ कर्णा यस्य ।) छागः ।
अङ्कोठवृक्षः । इति मेदिनी । णे, १०७ ॥
राक्षसः । हस्ती । इति शब्दरत्नावली ॥
श्येन-
पक्षी । इति राजनिर्घण्टः ॥ (शशः । तद्यथा,
अथ विलेशयेषु तत्र शशः स्यात् ।
"लम्बकर्णः शशः शूली लोमकर्णो विले-
शयः ॥"

तस्मिन् घनीकृते न्यस्येत्
लवङ्गमरिचादिकम् ।
सिद्धैषा लप्सिका ख्याता गुणानस्या वदा-
म्यहम् ॥
लप्सिका बृंहणी वृष्या बल्या पित्तानिलापहा ।
स्निग्धा श्लेष्मकरी गुर्व्वी रोचनी तर्पणी परम् ॥”
इति भावप्रकाशः ॥

**लब**, इ ङ स्रंसने । शब्दे । इति कविकल्पद्रुमः ॥

(भ्वा०-आत्म०-अवलम्बने सक०-शब्दे अक०-
सेट् ।) इ, लम्ब्यते । ङ, लम्बते । स्रंसनमिहा-
वलम्बनमिति गोविन्दभट्टः । ननाद चरणायुध-
स्तदपि मौनमालम्बसे । इति दुर्गादासः ॥

**लब्धः**, त्रि, (लभ् + क्तः ।) प्राप्तः । इत्यमरः ॥

(यथा, हितोपदेशे ।
“अलब्धञ्चैव लिप्सेत लब्धं रक्षेदपक्षयात् ।
रक्षितं वर्द्धयेत् सम्यक् वृद्धं तीर्थेषु निक्षिपेत् ॥”)

**लब्धवर्णः**, पुं, (लब्धावर्णा यशांसि येन ।) पण्डितः ।

इत्यमरः ॥ (यथा, रघुः । ११ । २ ।
“कृच्छ्रलब्धमपि लब्धवर्णभाक्
तं दिदेश मुनये सलक्षणम् ॥”)

**लब्धा**, स्त्री, (लभ् + क्तः । टाप ।) नायिका-

भेदः । यथा, --
“खण्डितोत्कण्ठिता लब्धा तथा प्रोषितभर्त्तृका ।
कलहान्तरिता वाससज्जा स्वाधीनभर्त्तृका ॥”
इति जटाधरः ॥

**लभ**, इ ङ शब्दे । इति कविकल्पद्रुमः ॥ (भ्वा०-

मेदिनी । के, १४९ ॥ (यथा, कथासरित्सागरे ।
४७ । १०१ ।
“अथेतराब्रवीन्मैवं यद्यपि स्त्रीषु लम्पटः ।
तथापि न स दुःखेऽस्मिन्नीदृशः स्यात्तथा-
विधः ॥”)
आसक्तः । यथा, --
“यथैहिकामुष्मिककामलम्पटः
सुतेषु दारेषु धनेषु चिन्तयन् ।
शङ्केत विद्वान् कुकलेवरात्ययाद्-
यस्तस्य यत्नः श्रम एव केवलम् ॥”
इति श्रीभागवते ५ स्कन्धे १९ अध्यायः ॥

**लम्पाकः**, पुं, लम्पटः । देशभेदः । इति मेदिनी ।

के, १४९ ॥ (यथा, मार्कण्डेये । ५७ । ४० ।
“लम्पाकाः शूलकाराश्च चुलिका जागुडैः सह ।
औपधाश्चानिभद्राश्च किराताानाञ्च जातयः ॥”)

**लम्पाटहः**, पुं, पटहवाद्यम् । इति हारावली ॥

**लम्फः**, पुं, प्लुतगतिः । लाफ इति भाषा । इति

प्रसिद्धः ॥ उल्लस्फनं प्रलम्फनञ्चात्र ॥

**लम्बः**, पुं, (लम्बते इति । लबि अवस्रंसने +

अच् ।) नर्त्तकः । अङ्गम् । कान्तः । इति
संक्षिप्तसारोणादिवृत्तिः ॥ उत्कोचः । यथा,
“प्राभृतं ढौकनं लम्बोत्कोचः कोशलिकामिषे ।
उपाच्चारः प्रदानन्दा हारो ग्राह्यायने अपि ॥”
इति हेमचन्द्रः ॥
अक्षभेदः । यथा, --
“चरलम्बगमा भेदाः पाटकोऽक्षादिचालने ॥”
इति शब्दमाला ॥

इति वैद्यकम् ॥
लम्बःकर्णः इति कर्म्मधारये ।) दीर्घश्रोत्रम् ॥
तद्युक्ते, त्रि । (यथा, महाभारते । ९ । ४६ ।
३४ ।
“लम्बोदर्य्यो लम्बकर्णास्तथा लम्बपयोधराः ॥”)

**लम्बकेशः**, पुं, (लम्बः केश इवाग्रभागो यस्य ।)

विष्टरः । स तु विवाहकाले वरोपवेशनार्थं
सार्द्धद्वितयवामावर्त्तवलिताधोमुखा असंख्यात-
दर्भाः । यथा, --
“ऊर्द्ध्वकेशो भवेत् ब्रह्मा लम्बकेशस्तु विष्टरः ।
दक्षिणावर्त्तको ब्रह्मा वामार्त्तस्तु विष्टरः ॥”
इति संस्कारतत्त्वम् ॥
केशोऽत्राग्रम् । इति प्रायश्चित्ततत्त्वे गङ्गा-
माहात्म्ये प्रतिनिहतदर्भवटुस्नानप्रकरणे लिखि-
तम् ॥ * ॥ दीर्घकेशयुक्ते, त्रि ॥

**लम्बदन्ता**, स्त्री, (लम्बा दन्ता इव फलानि

यस्याः ।) सैंहलीपिप्पली । इति राज-
निर्घण्टः । बृहद्दशनविशिष्टे, त्रि ॥

**लम्बनं**, क्ली, (लम्बते इति । लम्ब + ल्युः ।)
नाभिलम्बितकण्ठिकादिः । तत्पर्य्यायः । लल-
न्तिका २ । इत्यमरः ॥ लम्बते लम्बनं नन्द्यादि-
त्वादनः । इति तट्टीकायां भरतः ॥ (लम्ब + भावे ल्युट् ।) लम्बशब्दार्थश्चात्र ॥

**लम्बनः**, पुं, (लम्बते इति । लम्ब + ल्युः ।) कफः ।
इति शब्दचन्द्रिका ॥

**लम्बबीजा**, स्त्री, (लम्बानि बीजानि यस्याः ।)
सैंहलीपिप्पली । इति राजनिर्घण्टः ॥

**लम्बमानं**, त्रि, लम्बायमानवस्तु । लम्बधातोः
कर्त्तरि शानच्प्रत्ययेन निष्पन्नम् ॥

**लम्बा**, स्त्री, लक्ष्मीः । गौरी । तिक्ततुम्बी । इति
मेदिनी । वे, ६ ॥ दक्षकन्याविशेषः । यथा, --
"अरुन्धतीं वसुं यामीं लम्बां भानुं मरुत्वतीम् ।
सङ्कल्पाञ्च मुहूर्त्ताञ्च साध्यां विश्वाञ्च भारत ।
मनवे दक्षपुत्त्राय दक्ष एता ददौ प्रभुः ॥"
इति हरिवंशे अधिपतिस्थापनम् ॥
हिमालयकन्याविशेषः । यथा, --
"ततस्त्र्यक्षवचः श्रुत्वा देवीलम्बामथाब्रवीत् ।
गच्छस्व लम्बे शीघ्रं त्वं वाणसंरक्षणं कुरु ॥
ततो योगं समाधाय अदृश्या हिमवत्सुता ।
कृष्णस्यैकस्य तद्रूपं दर्शयत् पार्श्वमागता ॥
सान्तर्द्धानमुपागम्य त्यक्त्वा सा वाससी पुनः ।
परित्राणाय वाणस्य विजयाधिष्ठिता ततः ॥
प्रमुखे वासुदेवस्य दिग्वासाः कोट्टवी स्थिता ।"
इति महाभारते हरिवंशे बाणयुद्धम् ॥

**लम्बिका**, स्त्री, (लम्बते या । लम्ब + ण्वुल् । टापि
राजनिर्घण्टः ॥ लम्बमानौष्ठयुक्ते, त्रि । (क्षेत्र-
पालदेवताविशेषः । यथा, प्रयोगसारे क्षेत्र-
पालप्रकरणे ।
"युगान्तो वाह्यकश्चाथ लम्बोष्ठो वसवस्तथा ॥")

**लम्बौष्ठः**, पुं, (लम्ब ओष्ठो यस्य ।) उष्ट्रः । इति
त्रिकाण्डशेषः ॥ दीर्घोष्ठविशिष्टे, त्रि ॥

**लम्भनं**, क्ली, प्रतिलम्भः । इति हेमचन्द्रः ॥ ध्वनिः ।
लभि ङ शब्दे इत्यस्मात् भावेऽनट् (ल्युट्)
प्रत्ययेन निष्पन्नमिति ॥

**लम्भा**, स्त्री, (लभते इति । लभ इ ङ शब्दे +
अच् । टाप् ।) वाटशृङ्खला । इति हारावली ॥

**लय**, ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) ङ, लयते । इति दुर्गादासः ॥

**लयः**, पुं, (ली + अच् ।) विनाशः । संश्लेषः । तौर्य्य-
त्रिकस्य साम्यम् । इति मेदिनी । ये, ५२ ॥ प्रलयः ।
इति शब्दरत्नावली ॥ * ॥ अखण्डवस्त्वनवलम्ब-
नेन चित्तवृत्तेर्निद्रा । इति श्रीपरमहंससदानन्द-
योगीन्द्रकृतवेदान्तसारः ॥ तत्राद्यं विघ्नं लक्ष-
यति लयस्तावदिति । लयो द्विविधः । चिरकाल-
मुक्ताष्टाङ्गसहितनिर्व्विकल्पकसमाध्यभ्यासपाटवे
नातितप्तलोहतलक्षिप्तजलबिन्दुवत् तैलरहित-
दीपकलिकावच्च प्रत्यगभिन्ने परमानन्दे चित्त-
वृत्तेर्लयः प्रथमः । द्वितीयस्तु मूर्च्छावस्थावत् आल-
स्येन चित्तवृत्तेर्व्वाह्यशब्दादिविषयग्रहणानादेर
सतिप्रत्यगात्मस्वरूपानवभासनात्वृत्तेस्तब्धीभाव-
लक्षणनिद्रारूपः । इति श्रीनृसिंहसरस्वतीकृत-
सुबोधिन्याख्या तट्टीका ॥ गीतवाद्यपादन्यासानां
क्रियाकालयोः परस्परं समता लयः । लीयन्ते
श्लिष्यन्तेऽनेनेति लयन्ति व्रजन्ति साम्यं गीता-
दयोऽत्रेति वा लयः । ली ङ य ओ श्लिषि लय
गत्यां वा अल् । इत्यमरटीकायां भरतः ॥ * ॥
लयस्थानविवर्ज्जणं गायकस्य चतुर्द्दशदोषान्त-
र्गतदोषविशेषो यथा, --
(त्रि, आवरणात्सकम् । इति श्रीधरस्वामी
यथा, भागवते । ११ । २५ । १५ ।
"यदा जयेद्रजः सत्त्वं तमो मूढं लयं जडम् ।
युज्येत शोकमोहाभ्यां निद्रया हिंसया शया ॥"
क्ली, लामज्जकम् । यथा, --
"लामज्जकं सुनालं स्यादमृणालं लयं लघुः ।
इष्टकापथकं सेव्यं नलदञ्चावदातकम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**लयपुत्री**, स्त्री, (लयस्य पुत्रीव ।) नर्त्तकी । इति
शब्दरत्नावली ॥

**लयारम्भः**, पुं, (लयस्यारम्भो यस्मात् ।) नटः ।
इति त्रिकाण्डशेषः ॥

**लयालम्बः**, पुं, (लयमालम्बते इति । लम्ब + अण् ।)
नटः । इति शब्दरत्नावली ॥

**लर्व्व**, गतौ । (भ्वा०-पर०-सक०-सेट् ।) लर्व्वति ।
इति सिद्धान्तकौमुदी ॥

**लल**, ङ क ईप्सायाम् । इति कविकल्पद्रुमः ॥
(चुरा०-आत्म०-सक०-सेट् ।) क ङ, लालयते ।
ईप्सा आप्तुमिच्छा । इति दुर्गादासः ॥

**लल**, त् क ईप्से । इति कविकल्पद्रुमः ॥ (अदन्त
चुरा०-पर०-सक०-सेट् ।) ईप्सा इति आप-

अत इत्वम् ।) तालूद्र्ध्वसूक्ष्मजिह्वा । तत्पर्य्यायः । घण्टिका २ । इति राजनिर्घण्टः ॥ सुधास्रवा ३ गलशुण्डिका ४ । इति हेमचन्द्रः ॥ अलि-जिह्वा ५ अलिजिह्विका ६ । इति शब्दरत्नावली ॥

**लम्बितः**, त्रि, (लम्ब + क्तः ।) स्रंसितः । (यथा, गीतगोविन्दे । १२ । १८ ।
"त्वदधरचुम्बनलम्बितकज्जलमुज्ज्वलय प्रिय
लोचने ॥")
शब्दितः । इति लबधातोः कर्म्मणि क्तप्रत्ययेन निष्पन्नम् । लम्बमानमाल्यादिश्च ॥ (यथा, महाभारते । ३ । १५७ । ४२ ।
"वडिशोऽयंत्वया ग्रस्तः कालसूत्रेण लम्बितः ॥")

**लम्बोदरः**, पुं, (लम्बमुदरं यस्य ।) गणेशः । इत्यमरः ॥ (यथा, आर्य्यासप्तशत्याम् । १९८ ।
"गतिगञ्जितवरयुवतिः करी कपोलौ करोतु मदमलिनौ ।
मुखबन्धमात्रसिन्धुरलम्बोदर किं मदं वहसि ॥"
नृपविशेषः । इति भागवतम् । १२ । १ । २२ ॥)
औदरिके, त्रि । इति हेमचन्द्रः ॥ (यथा, कथासरित्सागरे । ७० । १०२ ।
"ततो लम्बोदरेणेत्य पुंसारोपितबाहुकः ।
सम्पादितः स यातस्तद्वनं केशरिणीकृते ॥")

**लम्बोष्ठः** पुं, (लम्ब ओष्ठो यस्य । ओत्त्वोष्ठयोः समासे वा । इति साधुः ।) उष्ट्रः । इति

"लज्जितं भीतमुक्तेषु अव्यक्तमनुनासिकम् ।
काकस्वरः शिरःकम्पो लयस्थानविवर्ज्जितम् ॥
विस्वरं विरमञ्चैव विश्लिष्टं विषमाहतम् ।
व्याकुलं तालहीनञ्च गातुर्दोषाश्चतुर्द्दश ॥" * ॥
अथ लयाः । हृदि स्थितिः कण्ठस्थितिः कपाल-स्थितिरिति लयत्रयम् । अपरे तु ।
"द्विपदी स्याद्वलतिका झल्लिका छिन्नखण्डिका ।
वामभ्रुवस्ततश्छिन्ना खण्डधावा फडक्ककः ॥
जम्भट्टिका कलतिकः खण्डकः खुरिकस्तथा ।
कथितश्चतुरस्रोऽर्द्धश्चतुरस्रोऽथनर्त्तकः ॥
त्र्यस्रः षष्ट्युन्दालनावकृष्टा नन्दघटीत्यपि ।
कादम्बश्चर्व्वरी घट्टा मिश्रोऽर्द्धवनिता ततः ॥
अतिचित्रः समयश्च वलितोऽर्द्धदलस्तथा ।
आविद्धस्तु टङ्कवकस्ततश्चित्रविचित्रकौ ॥
आन्त्री विकृतधावा च मुकुलोऽथ विलोलकः ।
रमणीयस्ततश्चैव करकण्टकसंज्ञकः ॥
चत्वारिंशदिमे प्रोक्ता लया लयविशारदैः ।
लयेन वश्यो भगवान् लये लीनो जनार्द्दनः ॥"
इति संगीतदामोदरः ॥

धातोः सनन्तस्य रूपम् । शंस्त्याद इत्यकारेण सरूपोऽपि अल् कथं न बाध्यते इति चेन्न स्त्रीविहितप्रत्ययैः क्वचित् सरूपोऽपि न वाध्यते इत्यस्य वाच्यत्वात् अन्यथा कारणाकारण-मित्यादयोऽपि न स्युः । एवं वक्ष्यमाणेषु व्रीड लज्जे इत्यादिष्वपि बोध्यम् । ललयति धनं लोकः । इति दुर्गादासः ॥

**ललज्जिह्वः**, पुं, (ललन्ती जिह्वा यस्य ।) उष्ट्रः । कुक्कुरः । हिंस्रे, त्रि । इति मेदिनी । वे, १६ ॥ (चलद्रसनायुक्ते च त्रि । यथा, कथासरित्-सागरे । १०६ । १२७ ।
"तावच्च प्रकटीभूय भगवान् भैरवाकृतिः ।
उद्धृतासिर्ललज्जिह्वः कृत्वा हुंकारमभ्यधात् ॥")

**ललत्**, त्रि, विलासयुक्तः । उन्मन्थनविशिष्टः । जिह्वाक्रियाविशिष्टः । क्षेपविशिष्टः । वीप्सा-विशिष्टः । उपसेवाविशिष्टः । भाषणविशिष्टः । ऊत्क्षेपविशिष्टः । इति लडधातोः कर्त्तरि शतृप्रत्ययेन डस्य लकारादेशेन च निष्पन्नम् ॥

**ललदम्बुः**, पुं, (ललत् चलदम्बु यत्र ।) लिम्पाकः । इति जटाधरः ॥ (विषयोऽस्य लिम्पाकशब्दे-ज्ञेयः ॥)

**ललनं**, क्ली, (लल + ल्युट् ।) केलिः । इति हेम-

| | | |
|---|---|---|
| | | चन्द्रः ॥ चालनम् । इति नागोजीभट्टः ॥ यथा, -- “काली करालवदना विनिष्क्रान्तासिपाशिनी । विचित्रखट्टाङ्गधरा नरमालाविभूषणा ॥ द्वीपिचर्म्मपरीधाना शुष्कमांसातिभैरवा । अतिविस्तारवदना जिह्वाललनमीषणा ॥” इति देवीमाहात्म्यम् ॥<br>**ललनः**, पुं, (लल्यते ईप्स्यते इति । लल + कर्म्मणि ल्युट् ।) बालः । सालः । प्रियालः । इति राजनिर्घण्टः ॥ |

**ललना**, स्त्री, (ललयति ईप्सति कामानिति ।
लल + ल्युः । टाप् ।) कामिनी । (यथा, कला-
विलासे । १ । ५ ।
“रतिलुलित ललित ललनाक्लमजल लववाहिन
मुहुर्यत्र ।
श्लथ केशकुसुम परिमल वासितदेहा वहन्त्य-
निलाः ॥”)
नारीभेदः । जिह्वा । इति मेदिनी । ने, १२१ ॥

**ललनाप्रियं**, क्ली, (ललंनानां प्रियम् ।) ह्रीवेरम् ।
इति राजनिर्घण्टः ॥

**ललनाप्रियः**, पुं, (ललनानां प्रियः ।) कदम्बः ।
इति राजनिर्घण्टः ॥ कामिनीवल्लभश्च ॥

**ललन्तिका**, स्त्री, (ललन्त्येव । स्वार्थे कन् ।)
नाभिलम्बकण्ठिकादिः । तत्पर्य्यायः । लम्बनम् २ ।
इत्यमरः ॥ गोधा । इति शब्दमाला ॥

**ललाकः**, पुं, मेहनम् । इति शब्दचन्द्रिका ।

**ललाटं**, क्ली, (ललं ईप्सामटति ज्ञापयतीति ।
अट् + अण् ।) अवयवविशेषः । कपाल इति
ख्यातम् । तत्पर्य्यायः । अलिकम् २ गोधिः ३ ।
इत्यमरः ॥ महाशङ्खः ४ शङ्खः ५ भालः ६
कपालकः ७ अलीकम् ८ । इति शब्दरत्नावली ॥
ललाटकम् ९ । इति धनञ्जयः ॥ तस्य शुभाशुभ-
लक्षणम् । यथा, --
“उन्नतैर्व्विपुलैः शङ्खैर्ल्ललाटैर्विषमैस्तथा ।
असौ तपस्यत्यपरस्तपस्वी
नाम्ना सुतीक्ष्णश्चरितेन दान्तः ॥”
यथा च, नैषधे । १ । १३८ ।
“कथं विधातर्म्मयि पाणिपङ्कजात्
तव प्रिया शैत्यमृदुत्वशिल्पिनः ।
वियोक्ष्यसे वल्लभयेति निर्गता
लिपिर्ल्ललाटन्तपनिष्ठुराक्षरा ॥”)

**ललाटिका**, स्त्री, (ललाटे भवोऽलङ्कारः । “कर्ण-
ललाटात् कनलङ्कारे ।” ४ । ३ । ६५ । इति
कन् ।) स्वर्णादिरचितललाटाभरणम् । टिका
इति ख्याता । तत्पर्य्यायः । पत्रपाश्या २ ।
इत्यमरः ॥ लालटस्थचन्दनम् । तत्पर्य्यायः ।
शङ्खचर्च्ची २ । इति शब्दरत्नावली ॥ (तिलकः ।
इति मल्लिनाथः ॥ यथा, कुमारे । ५ । ५५ ।
“तदा प्रभृत्युन्मदना पितुर्गृहे
ललाटिकाचन्दनधूसरालका ।
न जातु बाला लभते स्म निर्वृतिं
तुषारसङ्घातशिलातलेष्वपि ॥”)

**ललाम**, [न्] क्ली, ललामम् । यथाह रुद्रः ।
“प्रधानध्वजशृङ्गेषु पुण्ड्रबालधिलक्ष्मसु ।
भूषावाजिप्रभावेषु ललामं स्यात् ललाम च ॥”
(प्रधाने । यथा, रघुः । ५ । ६४ ।
“तत्र स्वयंवरसमाहृतराजलोकं
कन्याललाम कमनीयमजस्य लिप्सोः ॥”
पुरुषः । इति रघुटीकायां मल्लिनाथधृत-
यादवः । ५ । ६४ ॥)

**ललामं**, क्ली, (लड विलासे + क्विप् । तं अमति
प्राप्नोतीति । अम गतौ + अण् । डस्य लत्वम् ।)
चिह्नम् । ध्वजः । शृङ्गम् । प्रधानम् । भूषा ।
(यथा, भागवते । ३ । १४ । ४८ ।
नेत्रादिक्रियासचिवकरचरणाङ्गविन्यासो ललि-
तम् । तथा च ।
“सुकुमाराङ्गविन्यासे मसृणा ललितं भवेत् ॥”
तथा, --
“सभ्रूभङ्गं करकिशलयावर्त्तनैरापतन्ती
सा लिम्पन्ती ललितललिता लोचनस्याञ्जनेन ।
विन्यस्यन्ती चरणकमले लीलया स्वैरयाते
निःशङ्का च प्रथमवयसा नर्त्तिता पङ्कजाक्षी ॥
भ्रूनेत्रादिक्रियाशालिसुकुमारविधानतः ।
हस्तपादाङ्गविन्यासस्तरुण्याललितं विदुः ॥”
इत्यन्येऽपि ॥
“अनाचार्य्योपदिष्टं स्याल्ललितं रतिचेष्टितम् ।”
इत्यन्ये ।
ललत् केप्से भावे क्तः । लड विलासे इत्यस्य
मनीषादित्वात् डस्य लत्वं वा । इति भरतः ॥
अपि च ।
“विन्यासभङ्गिरङ्गानां भ्रूविलासमनोहरा ।
सुकुमारा भवेद्यत्र ललितं तदुदीरितम् ॥”
इत्युज्ज्वलनीलमणिः ॥

**ललितः**, पुं, (लल्यते ईप्स्यते इति । लल + कर्म्मणि
क्तः ।) रागविशेषः । तस्य स्वरूपं यथा, --
“प्रफुल्लसप्तच्छदमाल्यधारी
युवातिगौरोऽलसलोचनश्रीः ।
विनिःसरन् वासगृहात् प्रभाते
विलासिवेशो ललितः प्रदिष्टः ॥”
तस्य गानसमयो यथा, --
“प्रातर्गेयास्तु देशागो ललितः पठमञ्जरी ।
विभाषा भैरवी चैव कामोदो गोण्डकीर्य्यपि ॥”
इति सङ्गीतदामोदरः ॥

निर्द्धना धनवन्तश्च अर्द्धेन्दुसदृशैर्नराः ॥
आचार्य्याः शुक्तिविशालैः शिरालैः पापकारिणः ।
उन्नताभिः शिराभिस्तु स्वस्तिकाभिर्धनेश्वराः ॥
निम्नैर्ललाटैर्वधार्हाः क्रूरकर्म्मरतास्तथा ।
संवृतैश्च ललाटैश्च कृपणा उन्नतैर्नृपाः ॥
ललाटोपसृतास्तिस्रो रेखाः स्युः शतवर्षिणाम् ।
नृपत्वं स्याच्चतसृभिरायुः पञ्चनवत्यथ ॥
अरेखेणायुर्नवतिर्विच्छिन्नाभिश्च पुंश्चलाः ।
केशान्तोपगताभिश्च अशीत्यायुर्नरो भवेत् ॥
पञ्चभिः सप्तभिः षड्भिः पञ्चाशद्बहुभिस्तथा ।
चत्वारिंशच्च वक्राभिस्त्रिंशद्भ्रूलग्नगामिभिः ॥
विंशतिर्व्वामवक्राभिरायुः क्षुद्राभिरल्पकम् ।
न पृथु बालेन्दुनिभे भ्रुवौ चाथ ललाटकम् ॥
शुभमर्द्धेन्दुसंस्थानमतुङ्गं स्यादलोमशम् ॥”
इति गारुडे ६५ अध्यायः ॥
(“अतःपरं प्रत्यङ्गानि वक्ष्यन्ते ।
मस्तकोदरपृष्ठ-
नाभिललाटनासाचिवुकवस्तिग्रीवा इत्येता एकै-
काः ।” इति सुश्रुते शारीरस्थाने पञ्चमेऽध्याये ॥)

**ललाटकं**, क्ली, (ललाटमेव । कन् ।) प्रशस्त-

ललाटम् । इति शब्दरत्नावली ॥
ललाट-
मात्रम् । इति धनञ्जयः ॥

**ललाटन्तपः**, त्रि, (ललाटं तपतीति । ललाट +

“पौत्रस्तव श्रीललनाललामं
द्रष्टास्फुरत् कुन्तलमण्डिताननम् ॥”)
बालधिः । पुण्ड्रम् । तुरङ्गः । प्रभावः । इति मेदिनी । मे ५१ ॥ अश्वललाटे
अन्यवर्णचिह्नम् ।
गवादीनां ललाटचित्रम् । अश्वस्य भूषा ।
इत्यमरटीकायां भरतः ॥
(पुंनपुंसकलिङ्गमपि ।
यथा, --
“ललामोऽस्त्री ललामापि प्रभावे पुरुषे ध्वजे ।
श्रेष्ठभूषापुण्ड्रशृङ्गपुच्छचिह्नाश्वलिङ्गिषु ॥”
इति रघुटीकायां मल्लिनाथधृतयादवः ॥
रम्ये श्रेष्ठे च त्रि । यथा, महाभारते । ७ । २२ । १३ ।
“ललामैर्हरिभिर्युक्तः सर्व्वशब्दसहैर्युधि ।
राज्ञां मध्ये महेष्वासः शान्तभीरभ्यवर्त्तत ॥”)

**ललामकं**, क्ली, पुरोन्यस्तमाल्यम् । इत्यमरः ॥ तदेव

माल्यं पुरः संमुखभागे न्यस्तं ललाटपर्य्यन्त-
मागतं ललामकं ललामं तिलकमिव इति इवार्थे कः । इति भरतः ॥

**ललामी**, स्त्री कर्णभूषणविशेषः । तत्पर्य्यायः ।

उत्क्षिप्तिका २ । इति शब्दमाला ॥

**ललितं**, क्ली, (लल + क्तः ।) शृङ्गारभावजक्रिया-

विशेषः । इत्यमरः ॥ सुकुमारविधानेन भ्रू-

**ललितः**, त्रि, (लल + क्तः ।) सुन्दरः । (यथा,

रघुः । ८ । १ ।
“अथ तस्य विवाहकौतुकं
ललितं बिभ्रत एव पार्थिवः ॥”)
ईप्सितः । इति मेदिनी । ते, १४७ ॥
चलितः ।
इति बिश्वशब्दरत्नावल्यौ ॥

**ललितकान्ता**, स्त्री, (ललिता कान्ता च ।) मङ्गल-

चण्डिका । तस्या ध्यानं यथा, --
“यैषा ललितकान्ताख्या देवी मङ्गलचण्डिका ।
वरदाभयहस्ता च द्विभुजा गौरदेहिका ॥
रत्नकौषेयवस्त्रा च स्मितवक्त्रा शुभानना ।
नवयौवनसम्पन्ना चार्व्वङ्गी ललितप्रभा ॥”
इति तिथ्यादितत्त्वम् ॥

**ललिता**, स्त्री, (ललित + टाप् ।) कस्तूरी । दारी ।

इति राजनिर्घण्टः ॥ नदीविशेषः । यथा, --
“निमिनाम्नस्तु राजर्षेः शापाद्ब्रह्मसुतः पुरा ।
वशिष्ठो ह्यशरीरोऽभूत् शापाच्च निमिनस्तथा ॥
ततो ब्रह्मोपदेशेन निर्जने कामरूपके ।
सन्ध्याचले तपस्तेपे तस्य विष्णुरभूत्तदा ॥
प्रत्यक्षस्तस्य देवस्य वरदानान्महामुनिः ।
अमृतान्यवतार्य्याशु कुण्डं कृत्वा गिरेस्तटे ।
तत्र स्नात्वा च पीत्वा च शरीरं प्राप पूरितम् ॥
तस्मादमृतकुण्डात्तु सन्ध्या नाम नदी वरा ।

| | | |
|---|---|---|
| तप + “असूर्य्यललाटयोर्दृशितपोः ।” ३ । २ । ३६ । इति खश् । मुम् ।) ललाटतापकः । “ललाटन्तपः सूर्य्यः ।” इति सिद्धान्तकौमुदी ॥ (यथा, रघुः । १३ । ४१ । “हविर्भुजामेधवतां चतुर्णां मध्ये ललाटन्तपसप्तसप्तिः । | | |

निःसृता तत्र चाप्लुत्य चिरायुरगदो भवेत् ॥
तस्मात् पूर्व्वन्तु कुण्डात्तु ललिताख्या सरिद्वरा ।
सागराद्दक्षिणात् पूर्ब्बं महादेवावतारिता ॥
वैशाखशुक्लपक्षस्य तृतीयायां नरस्तु यः ।
कुर्य्याद्वै ललितास्नानं स शम्भुसदनं व्रजेत् ॥
ललितायाः पूर्व्वतीरे भगवान्नाम पर्व्वतः ।
स्वयं विष्णुर्लिङ्गरूपी तत्रास्ते भगवान् हरिः ॥
ललितायां नरः स्नात्वा द्वादश्यां शुक्लपक्षके ।
भगवन्तं समारुह्य यो यजेत् परमेश्वरम् ।
स याति विष्णुभवनं शरीरेण विराजता ॥”
इति कालिकापुराणे ८१ अध्यायः ॥ * ॥
गोपीविशेषः । यथा, --
“अखिलरसामृतमूर्त्तिः प्रसृमररुचिरुद्धतारकापालिः ।
कलितश्यामा ललितो राधाप्रेयान् विधुर्जयति ॥
इति भक्तिरसामृतसिन्धुः ॥
ललिता श्यामला शैव्या पद्मा भद्राश्च श्रूयन्ते ॥
इति तट्टीकायां जीवगोस्वामी ॥
तस्याः स्वरूपं
यथा, --
“या दुर्गा सैव ललिता ललिता सैव राधिका ।
एतासामन्तरं नास्ति सत्यं सत्यं हि नारद ! ॥”
इति पाद्मे पातालखण्डे रासलीलायां नारदं
पूजयेच्च तदा तस्यां दुष्प्रापं नैव विद्यते ॥”
इति कुक्कुटीव्रतत्वेन ख्यातम् । इति तिथ्यादि-तत्त्वम् ॥ * ॥
तद्विधिर्यथा । तत्रादौ स्वस्तिवाचनपूर्ब्बकं सङ्कल्पं कुर्य्यात् । ॐ अद्येत्यादि भाद्रे मासि शुक्ले पक्षे सप्तम्यान्तिथौ यावज्जीवनपर्य्यन्तं अमुकगोत्रा श्रीमदमुकी शिवदुर्गाप्रीतिकामा प्रतिवर्षीयभाद्रशुक्लसप्तम्यांगणेशादिदेवता-पूजापूर्ब्बकशिवपार्व्वतीपूजायावज्जीवनडोरक-धारणभविष्यपुराणोक्तव्रतकथाश्रवणरूपललितासप्तमीव्रतमहं करिष्ये । ततः सङ्कल्प-सूक्तं पठित्वा सामान्यार्घ्यं विधाय गणेशादीन् संपूज्य भूतशुद्ध्यादिकं विधाय मण्डलादिषु पूजामारभेत । ततो ध्यात्वा स्वशिरसि पुष्पं दत्त्वा मानसोपचारैः संपूज्य अर्घ्यं संस्थाप्य पुनर्ध्यात्वा आवाहयेत् । शिवपूजाविधिना शिवं दुर्गापूजाविधिना दुर्गाञ्च यथाशक्त्युप-चारैः संपूज्य आवरणदेवान् पूजयेत् । ततो ऽष्टग्रन्थियुक्तडोरकं दुग्धेन सिक्तं शिवदुर्गाभ्यां अर्पयित्वा तत् डोरकं वामकरे बद्ध्वा भोज्य-मुत्सृज्य कथां शृणुयात् । अष्टफलानि दद्यात् । ततो दक्षिणां दद्यात् ॥ * ॥ अथ कथा ।
श्रीकृष्ण उवाच ।
“लोमशो नांम देवर्षिर्मथुरामागतः पुरा ।
सोऽर्च्चितो वसुदेवेन देवक्या च युधिष्ठिर ! ॥
उपविष्टः कथाः पुण्याः कथयामास वै तदा ।
ततः कथयितुं भूयः कथामेतां प्रचक्रमे ॥
कंसेन निहताः पुत्त्रा जाता जाताः पुनः पुनः ।
मृतवत्सा देवकि ! त्वं पुत्त्रदुःखेन दुःखिता ॥
यथा चन्द्रमुखी दीना बभूव नहुषप्रिया ।
तथा त्वं देवकी भद्रे पुत्त्रदुःखेन दुःखिता ॥
पश्चाच्चीर्णव्रता सा तु बभूवाक्षयपुत्त्रिका ।
त्वमेव देवकी देवि ! भविष्यसि न संशयः ॥
देवक्युवाच ।
का सा चन्द्रमुखी दीना बभूव नहुषप्रिया ।
कथं चीर्णव्रतं सम्यक् तस्याः सन्ततिकारणम् ॥
लोमश उवाच ।
अयोध्यायां पुरा राजा नहुषो नाम विश्रुतः ।
तस्य राज्ञो महादेवी नाम्ना चन्द्रमुखी प्रिया ॥
धारणीयमिदं तावद्यावत् प्राणस्य धारणम् ।
तासान्तु तद्वचः श्रुत्वा ते कृत्वा मानसं तथा ॥
कृत्वा च सम्मतिं तत्र बद्ध्वा दोर्भ्यां सुडोरकम् ।
ततस्ताः स्वगृहं जग्मुः सखीभिः परिवारिताः ॥
कालेन महता तत्र विस्मृतं तद्व्रतं नृप ! ।
प्रमत्तया चन्द्रमुख्या विस्मृतञ्च सुडोरकम् ॥
मृता कैश्चिदहोरात्रैः सा बभूव प्लवङ्गमी ।
माला च कुक्कुटी जाता त्वसम्यग्व्रतपालनात् ॥
तथैव ते च मित्रिण्यौ जाते जातिस्मरे कुले ।
सम्भूय भूयस्तत्रैव प्राप्तश्च समयः पुनः ॥
तद्दिने तद्दिने प्राप्ते पुनः काले च ते मृते ।
अदैवमातृके देशे जाते गोकुलसङ्कुले ॥
राज्ञो जाया बभूवाथ पृथ्वीनाथस्य सा पुनः ।
ईश्वरी नाम विख्याता सा तु राज्ञोऽतिवल्लभा ॥
अग्निमीलद्विजस्यासीद्भार्य्याभूषणनामिका ।
पुरोहितस्य कालेन कुक्कुटी बहुपुत्त्रिणी ॥
जातिस्मरा चाष्टपुत्त्रा तथैव चामृतप्रजा ।
पुनर्निरन्तरा प्रीतिर्बभूवाथ तयोर्द्विज ॥
तत्रेश्वरी पुत्त्रमेकं प्रसूता तञ्च रोगिणम् ।
नववर्षे तु पञ्चत्वमगात्तत्र युधिष्ठिर ! ॥
तत्र तां भूषणा द्रष्टुमाजगामातिदुःखिता ।
सखीभावादतिस्नेहादष्टपुत्त्रसमन्विता ॥
अयुक्ताभरणा नित्यं स्वभावेनैव भूषिता ।
तां दृष्ट्वा पुत्त्रिणीं भव्यां प्रजज्वालेश्वरी रुषा ॥
ततो गृहं प्रेषयित्वा तां सखीं तीव्रमत्सरा ।
चिन्तयामास सा राज्ञी तस्याः पुत्त्रवधं प्रति ॥

प्रति श्रीकृष्णवाक्यम् ॥
रागिणीविशेषः । सा च
मेघरागस्य पत्नी । यथा,
सङ्गीतदामोदरे ।
“ललिता मालसी गौडी नाटी
देवकिरी तथा ।
मेघरागस्य रागिण्यो भवन्तीमाः
सुमध्यमाः ॥”
(सा तु हनूमन्मते हिन्दोलरागस्य
पत्नी । सोमे-
श्वरमते वसन्तस्य पत्नी । यथा,
संगीतदर्पणे ।
“वेलावली रामकिरी देशाख्या
पटमञ्जरी ।
ललिता सहिता एता हिन्दोलस्य
वराङ्गनाः ॥”
“देशी देवकिरी चैव वराटी
तोडिका तथा ।
ललिता चाथ हिन्दोली वसन्तस्य
वराङ्गनाः ॥”
अस्या ध्यानादिकमाह तत्रैव ।
अथ ललिता ।
रि-प-वर्ज्या च ललिता औडवा
सत्रया मता ।
मूर्च्छना शुद्धमध्या स्यात् सम्पूर्णा
केचिदूचिरे ।
धैवतत्रयसंयुक्ता द्वितीया ललिता
मता ॥”
ध्यानम् । यथा, --
“प्रफुल्लसप्तच्छदमाल्यकण्ठा
सुगौरकान्तिर्युवती सुदृष्टिः ।
विनिश्वसन्ती सहसा प्रभाते
विलासवेशा ललिता प्रदिष्टा ॥”
उदाहरणम् । स ग म ध नि स ।
अथवा, --
स रि ग म प ध नि स । इति प्रथमा
॥
ध नि स ग म ध । इति द्वितीया ॥
इति ललिता ॥)

**ललितासप्तमी**, स्त्री, (ललिताख्या सप्तमी ।)
पुरोहितस्य तस्यैव पत्नी माला च नामिका ।
तयोरासीद्दृढप्रीतिः स्पृहणीया परस्परम् ॥
अथ तेऽपि च मित्रिण्यौ स्नानार्थं सरयूजले ।
प्राप्ते प्राप्तास्तु तत्रैव बहुशो नगराङ्गनाः ॥
स्नातास्ता मण्डलं चक्रुस्तन्मध्ये व्यक्तरूपिणम् ।
लेखयित्वा शिवं शान्तमुमया सह शङ्करम् ॥
गन्धपुष्पाक्षतैर्भक्त्या पूजयित्वा यथाविधि ।
प्रणन्य शिरसा भक्त्या दृष्टास्ताभ्यां वरस्त्रियः ॥
किमिदं क्रियते साध्व्यः कथ्यतां यदि रोचते ।
कदा वा क्रियते किं वा फलं सम्यक् तदुच्यताम् ॥
स्त्रिय ऊचुः ।
पूजितोऽस्माभिरेतल्लिन् पार्व्वत्या सह शङ्करः ।
बद्ध्वा सूत्रमिदं शुभ्रं शिवस्यात्मा निवेदितः ॥
हता हताश्च ये पुत्त्राः
पुनर्ज्जीवन्त्यनामयाः ।
बहुपुत्त्रा जीववत्सा प्रयुक्ताभरणा कथम् ।
शोभसे ह्यधिकं भद्रे तडित् सौदामिनी
यथा ॥
भूषणोवाच ।
भाद्रे मासि सिते पक्षे सप्तम्यां ललितालये
।
स्नात्वा शिवं लेखयित्वा मण्डले च
सहाम्बि-
कम् ॥
संपूज्य विधिवत् प्राप्तं त्रैलोक्ये यच्च
विद्यते ।
तदेव हि व्रतं पूर्ब्बं त्वया सह मया कृतम् ॥
तन्मयाचरितं भक्त्या तेनाहं सुस्थिरा
सखि ।
त्वया नाचरितं सम्यक् दपैध्मातशरीरया ॥
तेन ते सन्ततिश्छिन्ना राज्येऽपि सति
दुःखिता ।
प्रभाव एष कथितो ब्रतस्यास्य मया
सखि ! ॥
अर्द्धं तुभ्यं प्रदास्यामि तस्य धर्म्मस्य
सुव्रते ।
सखीभावात् प्रतीच्छ त्वं नात्र कार्य्या
विचा-
रणा ॥
संपूज्य शङ्करं भक्त्या करे बद्ध्वा
सुडोरकम् ।
यावज्जीवं मया तावत् शिवस्यात्मा
निवेदितः ॥
इत्येवं समयं कृत्वा ततः प्रभृति डोरकम् ।
स्वर्णरूप्यमयं वापि करशाखासु धारणम्
॥
शङ्करञ्चोमया सार्द्धं सौवर्णं राजतन्तथा ।
ताम्रपात्रे प्रतिष्ठाप्य ब्राह्मणायोपपादयेत् ॥
पायसं पिष्टकञ्चैव भक्ष्यं भोज्यं प्रयत्नतः ।
सगोत्रान् भोजयित्वा तु स्वयं भुञ्जीत
तत्परम् ॥
मण्डलं सोमसदृशं शिवस्यात्मनिवेदितम् ।
इत्येवं प्रतिजग्राह व्रतदानफलं ततः ॥

| भाद्रशुक्लसप्तमी। तत्र कुक्कुटीव्रतं कार्य्यम् । यथा भविष्ये । "भाद्रे मासि सिते पक्षे सप्तम्यां नियमेन या । स्नात्वा शिवं लेस्वयित्वा मण्डले च सहाम्बिकम्। | | |
| --- | --- | --- |

बभूव सुप्रजा साध्वी ईश्वरी भुवनेश्वरी ।
व्रतस्यास्य प्रभावेन सुपुत्रा त्वञ्च देवकि ! ॥
भविष्यसि त्रिलोकेशं पुत्त्रञ्च जनयिष्यसि ।
इत्येवं श्रावयित्वा च विरराम मुनिस्तदा ॥
जगाम स्वपुरं पार्थ मयाप्येवं तवोदितम् ।
याः स्त्रियः स्वाचरिष्यन्ति व्रतमेतद्युधिष्ठिर ॥
कुक्वुटाख्यं प्लवङ्गाख्यं देवक्याचरितं शुभम् ।
तासां सन्ततिविच्छेदो न कदाचिद्भविष्यति ॥
स्त्रियश्चैवाचरिष्यन्ति व्रतमेतत् सुखप्रदम् ।
अस्मिन् लोके सुखं भुक्त्वा यास्यन्ति शिवमन्दि-
रम् ॥
या कुक्कुटीव्रतमिदं प्लवगीसमेतं देवं विभाव्य हृदये च गुरुं निधाय
।
भक्त्या करोति कलुषौधविघातदक्षं
साध्वी सदा भवति शोभनजीववत्सा ॥"
इति भविष्यपुराणे कुक्कुटीव्रतकथा समाप्ता ॥

**लवं**, क्ली, (लू + अप् ।) जातीफलम् । इति

शब्दचन्द्रिका ॥ लवङ्गम् ।
लामज्जकम् । ईषत् ।
इति राजनिर्घण्टः ॥

**लवः**, पुं, (लवणमिति । लू + अप् ।) लेशः ।

(यथा, रघुः । १६ । ६६ ।
"वक्रेतराग्रैरलकैस्तरुण्य-
शूलघ्नत्वम् । दीपनत्वम् । लघुत्वञ्च । इति राज-
वल्लभः ॥ अपि च ।
"लवङ्गं कटुकं तिक्तं लघु नेत्रहितं हिमम् ।
दीपनं पाचनं रुच्यं कफपित्तास्ननाशकृत् ॥
तृष्णां छर्द्दिं तथाध्मानं शूलमाशु विनाशयेत् ।
कासं श्वासञ्च हिक्काञ्च क्षयं क्षपयति ध्रुवम् ॥"
इति भावप्रकाशः ॥
(यथा, --
"विरहानलसन्तप्ता तापिनी कापि कामिनी ।
लवङ्गानि समुत्सृज्य ग्रहणे राहवे ददौ ॥"
इत्युद्भटः ॥)

**लवङ्गकं**, क्ली, (लवङ्ग + स्वार्थे कन् ।) लवङ्गम् ।

इति शब्दरत्नावली ॥ (लवङ्गशब्देऽस्य विव-
रणं विज्ञेयम् ॥)

**लवङ्गकलिका**, स्त्री, लवङ्गम् । इति राज-

निर्घण्टः ॥

**लवङ्गलता**, स्त्री, (लवङ्गस्य लता ।) पुष्पलता-

विशेषः । यथा, जयदेवः ।
"ललितलवङ्गलतापरिशीलनकोमलमलय
समीरे ।
मधुकरनिकरकरम्बितकोकिलकूजितकुञ्ज-
कुटीरे ॥
विहरति हरिरिह सरसवसन्ते ।
नृत्यति युवतिजनेन समं सखि विरहिजनस्य
दुरन्ते ॥"
(यथा च ।
"अयि ! प्लवङ्ग ! लवङ्गलतालये
पिब मधूनि विधूय मधुव्रतान् ।
इह वने हि वनेचरसङ्कुले
नहि सतामसताञ्च विवेचना ॥")
राधायाः सखीविशेषश्च ॥

**लवणं**, क्ली, (लुनाति जाड्यमिति । लू + नन्द्यादि-

त्वात् ल्युः । पृषोदरादित्वात् णत्वम् ।) क्षार-
रसयुक्तद्रव्यम् । तत्तु पञ्चविधं यथा । सौव-
र्च्चलम् १ सैन्धवम् २ विटम् ३ औद्भिदम् ४
रोमकं तीक्ष्णमत्युष्णं व्यवायि कटुपाकि च ।
वातघ्नं लघु विस्यन्दि सूक्ष्मं विड्भेदि मूत्रलम् ॥
लघु तीक्ष्णोष्णमुत्क्लेदि सूक्ष्मं वातानुलोमनम् ।
सतिक्तं कटु सक्षारं विद्याल्लवणमौद्भिदम् ॥
कफवातक्रिमिहरं लेखनं पित्तकोपनम् ।
दीपनं पाचनं भेदि लवणं गुटिकाह्वयम् ॥
ऊषसूतं बालुकेलं शैलमूलाकरोद्भवम् ।
लवणं कटुकं छेदि विहितं कटु चोच्यते ॥"
इति सुश्रुते सूत्रस्थाने ४६ अध्यायः ॥ * ॥
लू + भावे ल्युट् ।) छेदनम् । यथा । लवोऽभि-
लावो लवणे । इति चामरः (खड्गयुद्ध-
प्रकारविशेषः । यथा, हरिवंशे भविष्य-
पर्व्वणि । ५३ । १७ ।
"आहितं चित्रकं क्षिप्तं कुद्रवं लवणं धृतम् ॥")

**लवणः**, पुं, (लुनातीति । लू + ल्युः ।) सिन्धु-

भेदः । (यथा, महाभारते । ६ । ५ । १५ ।
"लवणेन समुद्रेण समन्तात् परिबारितः ॥")
राक्षसविशेषः । रसविशेषः । इति मेदिनी ।
णे, ७४ ॥ (यथा, भागवते । ३ । ३१ । ७ ।
"कटुतीक्ष्णोष्णलवणक्षाराम्लादिभिरुल्वणैः ।
मातृभुक्तैरुपस्पृष्टः सर्व्वाङ्गोत्थितवेदनः ॥")
पृथिव्यग्निगुणबाहुल्याल्लवणः । इति चक्रपाणि-
दत्तकृतद्रव्यगुणोपरि शिवदासीयटीका ॥ तत्-
पर्य्यायः । पटुः २ । तस्य गुणाः ।
"लवणो रुचिकृद्रसोऽग्निदायी
पचनः स्वादुकरश्च सारकश्च ।
रसितो नितरां जराञ्च पित्तं
शितिमानञ्च ददाति कुष्ठकारी ॥"
इति राजनिर्घण्टः ॥
अपि च ।
"लवणः क्लेदनस्तीक्ष्णः पाचनो दीपनः सरः ।
स्निग्धो रुचिकरः स्यन्दी दृष्टिशुक्रहरो लघुः ॥"
अन्यच्च ।
"लवणः शोधनो रुच्यः पाचनः कफपित्तदः ।
पुंस्त्ववातहरः कायशैथिल्यमृदुताकरः ।
सोऽतियुक्तोऽक्षिपाकास्रपित्तकुष्ठक्षयापकृत् ॥"

श्चूर्णारुणान् वारिलवान् वमन्ति ॥”)
विनाशः । छेदनम् । रामपुत्त्रः । इति मेदिनी ।
वे, २२ ॥ अत्र विनाशस्थाने विलासः । इति विश्वः
हेमचन्द्रश्च ॥ (रामपुत्त्रस्य जन्मविवरणादिकं
रामायणे उत्तरकाण्डतो द्रष्टव्यम् ॥) काल-
भेदः । यथा, --
“अष्टादशनिमेषास्तु काष्ठा काष्ठाद्वयं लवः ॥”
इति हेमचन्द्रः ॥
(यथा, भागवते । १ । १८ । १३ ।
“तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥”)
लावानामा पक्षी । इति राजनिर्घण्टः ॥
(किञ्जल्कः । पक्षः । गोपुच्छलोम । इति रघु-
टीकायां मल्लिनाथधृतवैजयन्ती ॥ यथा, रघुः ।
१५ । ३२ ।
“स तौ कुशलवोम्मृष्टगर्भक्लेदौ तदाख्यया ।
कविः कुशलवावेव चकार किल नामतः ॥”)

**लवङ्गं**, क्ली, (लुनाति श्लेष्मादिकमिति । लू +

“तरत्यादिभ्यश्च ।” उणा० १ । ११९ । इति
अङ्गच् ।)
स्वनामख्यातबणिग्द्रव्यभेद्रः । तत्-
पर्य्यायः । देवकुसुमम् २ श्रीसंज्ञम् ३ । इत्य-

सामुद्रम् ५ । तथा हि ।
“सामुद्रं यत्तु लवणमक्षीवं वसिरञ्च तत् ।
सैन्धवोऽस्त्री शीतशिवं माणिमन्थञ्च सिन्धुजे ॥
रौमकं वमुकं पाक्यं विडञ्च कृतके द्वयम् ॥”
सौवर्च्चलेऽक्षरुचके । इत्यमरः ॥ (अस्य विवरणं
यथा ।
“सैन्धवसामुद्रविडसौवर्च्चलरोमकोद्भिद-
प्रभृतीनि लवणानि यथोत्तरमुष्णानि वात-
हराणि कफपित्तकराणि यथापूर्ब्बं स्निग्धानि
स्वादूनि सृष्टमूत्रपुरीषाणि चेति ॥
“चक्षुष्यं सैन्धवं हृद्यं रुच्यं लघ्वग्निदीपनम् ।
स्निग्धं समधुरं वृष्यं शीतं दोषघ्नमुत्तमम् ॥
सामुद्रं मधुरं पाके नात्युष्णमविदाहि च ।
भेदनं स्निग्धमीषच्च शूलघ्नं नातिपित्तलम् ॥
सक्षारं दीपनं रूक्षं शूलहृद्रोगनाशनम् ।
रोचनं तीक्ष्णमुष्णञ्च विडं वातानुलोमनम् ॥
लघुसौवर्च्चलं पाके वीर्य्योष्णं विशदं कटु ।
गुल्मशूलविबन्धघ्नं हृद्यं सुरभि रोचनम् ॥

इति राजवल्लभः ॥ * ॥
(“लवणः स्यन्दयत्यास्यं कपोलगलदाहकृत् ।”
“लवणः स्तम्भसङ्घातबन्धविध्मापनोऽग्निकृत् ॥
स्नेहनः स्वेदनस्तीक्ष्णो रोचनश्छेदभेदकृत् ।
सोऽतियुक्तोऽस्रवपनं खलतिं पलितं वलिम् ॥
तृट्कुष्ठविषवीसर्पान् जनयेत् क्षपयेद्बलम् ॥”
इति वाग्भटे सूत्रस्थाने दशमेऽध्याये ॥
“लवणो रसः पाचनः क्लेदनः दीपनः च्यावनः
छेदनः भेदनस्तीक्ष्णः सरो विकास्यधःस्रं स्यव-
काशकरो वातहरः स्तम्भबन्धसङ्घातविधमनः
सर्व्वरसप्रत्यनीकभूत आस्यं विस्रावयति कफं
विस्यन्दयति मार्गान् शोधयति सर्व्वशरीरा-
वयवान् मृदूकरोति रोचयत्याहारमाहार-
योगी नात्यर्थगुरुः स्निग्ध उष्णश्च ।

स एवं गुणोऽप्येक एवात्यर्थमुपयुज्यमानः

पित्तं कोपयति रक्तं वर्द्धयति तर्पयति मूर्च्छ-

| | | |
|---|---|---|
| मरः ॥ श्रीप्रसूनम् ४ । इति भावप्रकाशः ॥ लवङ्गकम् ५ । इति शब्दरत्नावली ॥ लवङ्ग-कलिका ६ दिव्यम् ७ शेखरम् ८ लवम् ९ श्रीपुष्पम् १० रुचिरम् ११ वारिसम्भवम् १३ भृङ्गारम् १४ गीर्व्वाणकुसुमम् १५ चन्दन-पुष्पम् १६ । अस्य गुणाः । शीतलत्वम् । तिक्त-त्वम् । चक्षुष्यत्वम् । भुक्तरोचनत्वम् । वात-पित्तकफनाशित्वम् । ताक्ष्णत्वम् । मूर्द्धरुजा-पहत्वञ्च । इति राजनिर्घण्टः ॥ आध्मानानाह- | | |

यति तापयति दाहयति कुष्णाति मांसानि
प्रगालयति कुष्ठानि विषं वर्द्धयति शोफान्
स्फोटयति दन्तान् श्यावयति
पुंस्त्वमुपहन्ति
इन्द्रियाण्युपरुणद्धि
वलीपलित्यखालित्यमापा-
दयति च
लोहितपित्ताम्लपित्तवीसर्पवातरक्त-
विचर्च्चिकेन्द्रलुमप्रभृतीन्
विकारानुपजनयति।”
“प्रलीयन् क्लेशविष्यन्दलाघवं कुरुते मुखे
।
यः शीघ्रं लवणो ज्ञेयः सविदाहन्मुखस्य च
॥”
इति चरके सूत्रस्थाने २६ अध्यायः ॥
“लवणः संशोधनः पाचनो विश्लेषणः
क्लेदनः
शैथिल्यकृदुष्णः सर्व्वरसप्रत्यनीको
मार्गविशो-
धनः सर्व्वशरीरावयवमार्द्दवकरश्चेति स
एवं-
गुणोऽप्येकत्र वात्यर्थमासेव्यमानो
गात्रकण्डूकोठ-
शोफवैवर्ण्यपुंस्त्वोपघातेन्द्रियोपतापान्
तथा-
मुखाक्षिपाकं रक्तपित्तवातशोणिताम्लीका-
प्रभृतीनापादयति॥”
“यो भक्तरुचिमुत्पादयति कफप्रसेकं
जनयति
मार्द्दवञ्चापादयति स लवणः।” इति सुश्रुते
सूत्रस्थाने ४२ अध्यायः ॥ * ॥)
लवणासुरस्य विवरणं यथा, --
“पूर्व्वं कृतयुगे राजन्! दैतेयः सुमहामतिः।
लोलापुत्त्रोऽभवज्ज्येष्ठो मधुर्नाम महासुरः ॥
स मधुर्व्वीर्य्यसम्पन्नो धर्म्मे च सुसमाहितः।
बहुमानाच्च रुद्रेण दत्तस्तस्याद्भुतो वरः ॥
शूलं शूलाद्विनिष्कृष्य महावीर्य्यं महाप्रभम्।
ददौ महात्मा सुप्रीतो वाक्यं चैतदुवाच ह ॥

आहारः सर्व्वसत्त्वानि विशेषेण च तापसाः
।
आचारो रौद्रता नित्यं वासो मधुवने तथा
॥
हत्वा बहुसहस्राणि सिंहव्याघ्रमृगाण्डजान्
।
मानुषांश्चैव कुरुते नित्यमाहारमाह्निकम्
॥
तच्छ्रुत्वा राघवो वाक्यमुवाच स
महामुनीन्।
घातयिष्यामि तद्रक्षो व्यपगच्छतु वो भयम्
॥
प्रतिज्ञाय तदा तेषां मुनीनामुग्रतेजसाम्।
स भ्रातॄन् सहितान् सर्व्वानुवाच
रघुनन्दनः ॥
को हन्ता लवणं वीरः कस्यांशः स विधी-
यताम्।
भरतस्य महाबाहो शत्रुघ्नस्य च धीमतः
॥
राघवेणैवमुक्तस्तु भरतो वाक्यमब्रवीत्।
अहमेनं वधिष्यामि ममांशः स विधीयताम्
॥
भरतस्य वचः श्रुत्वा
धैर्य्यशौर्य्यसमन्वितम्।
लक्ष्मणावरजस्तस्थौ हित्वा
सौवर्णमासनम् ॥
शत्रुघ्नस्त्वब्रवीद्वाक्यं प्रणिपत्य नराधिपम्
।
कृतकर्म्मा महाबाहुर्मध्यमो रघुनन्दन! ॥
आर्य्येण हि पुरा शून्या त्वयोध्या
परिपालिता।
सन्तापं हृदये कृत्वा आर्य्यस्यागमनं प्रति
।
प्रेष्ये मयि स्थिते राजन्न भूयः
क्लेशमाप्नुयात् ॥
तथा ब्रुवति शत्रुघ्ने राघवः पुनरब्रवीत्।
एवं भवतु काकुत्स्थ क्रियतां मम शासनम्
॥

पश्यतां सर्व्वदेवानां रुद्रस्य वशमन्वगात्
॥
हते तु लवणे देवाः सेन्द्राः साग्निपुरोगमाः
।
ऊचुः सुमधुरां वाणीं शत्रुघ्नं शत्रुतापनम्
॥
वरदास्तु महाबाहो सर्व्व एव समागताः।
विजयाकाङ्क्षिणस्तुभ्यममोघंदर्शनं हि नः
॥
देवानां भाषितं श्रुत्वा शूरो मूर्द्धिन
कृताञ्जलिः ॥
प्रत्युवाच महाबाहुः शत्रुघ्नः प्रयतात्मवान्
॥
इयं मधुपुरी रम्या मधुरा देवनिर्म्मिता।
निवेशं प्राप्नुयाच्छीघ्रमेव मेऽस्तु वरः परः
॥
तं देवाः प्रीतमनसो वाढमित्येव राघवम्।
भविष्यति पुरी रम्या शूरसेना न संशयः ॥
ते तथोक्त्वा महात्मानो
दिवमारुरुहुस्तदा।
शत्रुघ्नोऽपि महातेजास्तां सेनां
समुपानयेत् ॥
सा सेना शीघ्रमागच्छत् श्रुत्वा
शत्रुघ्नशासनम्।
निवेशनञ्च शत्रुघ्नः श्रावणेन समारभत् ॥
तां पुरीं दिव्यसङ्काशां
नानापण्योपशोभिताम्।
निरीक्ष्य परमप्रीतः परं हर्षमुपागमत् ॥
तस्य बुद्धिः समुत्पन्ना निवेश्य मधुरां
पुरीम्।
रामपादौ निरीक्ष्येऽहं वर्षे द्वादश आगते
॥”
इति श्रीरामायणे उत्तरकाण्डे
एकषष्ट्यादिसप्त-
त्यन्ताध्यायेभ्यः सङ्कलितम् ॥ * ॥
लवणसमुद्र-
स्योत्पत्तिर्यथा, --
“विरजा सा रजोयुक्ता धृत्वा
वीर्य्यममोघकम्।

यावत् सुरैश्च विप्रैश्च न विरुध्येर्म्महासुर !
।
तावच्छूलं तवेदं स्यादन्यथा नाशमेष्यति ॥
यश्च त्वामभियुञ्जीत युद्धाग विगतज्वरः ।
तं शूलो भस्मसात् कृत्वा पुनरेष्यति ते
करम् ॥
एवं रुद्राद्वरं लब्ध्वा भूय एव महासुरः ।
प्रणिपत्य महादेवं वाक्यमेतदुवाच ह ॥
भगवन्मम वंशस्य शूलमेतदनुत्तमम् ।
भवेत्तु सततं देव सुराणामीश्वरो ह्यसि ॥
तं ब्रुवाणं मधुं देवः सर्व्वभूतपतिः शिवः ।
प्रत्युवाच महादेवो नैतदेवं भविष्यसि ॥
माभूत्ते विफला वाणी मत्प्रसादकृता शुभा ।
भवतः पुत्त्रमेकन्तु शूलमेतद्भविष्यति ॥
यावत् करस्थः शूलोऽयं भविष्यति सुतस्य
ते ।
अवध्यः सर्व्वभूतानां शूलहस्तो भविष्यति
॥
एवं मधुर्व्वरं लब्ध्वा देवात् सुमहदद्भुतम् ।
भवनं सोऽसुरश्रेष्ठः कारयामास सुप्रभम् ॥
तस्य पत्नी महाभागा प्रिया कुम्भीनसीति
या ।
विश्वावसोरपत्यं साप्यनलायां महाप्रभा ॥
तस्याः पुत्त्रो महावीर्य्यो लवणो नाम
दारुणः ।
वाल्यात् प्रभृति दुष्टात्मा पापान्येव
समाचरत् ॥
तं पुत्त्रं दुर्व्विनीतन्तु दृष्ट्वा क्रोधसमन्वितः ।
मधुः स शोकमापेदे न चैनं किञ्चिदब्रवीत् ॥
स विहाय इमं लोकं प्रविष्टो वरुणालयम् ।
शूलं निवेश्य लवणे वरं तस्मै न्यवेदयत् ॥
स प्रभावेण शूलस्य दौरात्म्येनात्मनस्तथा ।
सन्तापयति लोकांस्त्रीन् विशेषेण च
तापसान् ॥

स त्वं हत्वा मधुसुतं लवणं पापनिश्चयम्
।
राज्यं प्रशाधि धर्म्मेण वाक्यं मे यद्यवेक्षसे
॥
यदा तु युद्धमाकाङ्क्षन् यदि कश्चित्
समाह्वयेत् ।
तदा शूलं गृहीत्वा तु भस्म रक्षः करोति हि
॥
स त्वं पुरुषशार्द्दूल ! तमायुधविनाकृतम् ।
अप्रविष्टं पुरं पूर्ब्बं द्वारि तिष्ठ धृतायुधः ।
अन्यथा क्रियमाणे तु अवध्यः स
भविष्यति ॥
ततः प्रभाते विमले तस्मिन् काले स
राक्षसः ।
निर्गतस्तु पुराद्वीरो भक्ष्याहारप्रचोदितः ॥
एतस्मिन्नन्तरे वीर उत्तीर्य्य यमुनां नदीम् ।
तीर्त्वा मधुपुरद्वारि धनुष्पाणिरतिष्ठत ॥
ततोऽर्द्धदिवसे प्राप्ते क्रूरधर्म्मा स राक्षसः ।
आगच्छद्बहुसाहस्रं प्राणिनां भारमुद्वहन् ॥
ततो ददर्श शत्रुघ्नं स्थितं द्वारि धृतायुधम्
।
तमुवाच ततो रक्षः किमनेन करिष्यसि ॥
तस्यैवं भाषमाणस्य हसतश्च मुहुर्मुहुः ।
शत्रुघ्नो वीर्य्यसम्पन्नो
रोषादश्रूण्यवासृजत् ॥
उवाच च सुसंक्रुद्धः शत्रुघ्नः स निशाचरम्
।
योद्धुमिच्छामि दुर्ब्बुद्धे द्वन्द्वयुद्धं त्वया सह
॥
तच्छ्रुत्वा भाषितं तस्य शत्रुघ्नस्य
महात्मनः ।
क्रोधमाहारयत्तीव्रं तिष्ठ तिष्ठेति चाब्रवीत्
॥
आहूतस्तु पुनस्तेन शत्रुघ्नेन महात्मना ।
लवणः क्रोधसंयुक्तो युद्धाय समुपस्थितः
॥
आकर्णात् स विकृष्याथ तद्धनुर्धन्विनां
वरः ।
स मुमोच महावाणं लवणस्य महोरसि ॥
उरस्तस्य विदार्य्याशु प्रविवेश रसातलम्
।

सद्यो बभूव तत्रैव धन्या गर्भवती सती ।
तस्थौ तत्र सुखासीना सार्द्धं पुत्त्रैश्च
सप्तभिः ॥
एकदा हरिणा सार्द्धं वृन्दारण्ये सुनिर्जने ।
विजहार पुनः साध्वी शृङ्गारासक्तमानसा
॥
एतस्मिन्नन्तरे तत्र मातुः क्रोडं जगाम ह ।
कनिष्ठपुत्त्रस्तस्याश्च भ्रातृभिः पीडितो
भिया ॥
भीतं स्वतनयं दृष्ट्वा तत्याज तां
कृपानिधिः ।
क्रोडे चकार बालं सा कृष्णो राधागृहं ययौ
॥
प्रबोध्य बालं सा साध्वी न ददर्शान्तिके
प्रियम् ।
विललाप भृशं तत्र शृङ्गारातृप्तमानसा ॥
शशाप स्वसुतं कोपात् लवणोदो
भविष्यति ॥
कदापि ते जलं केचित् न खादिष्यन्ति
जीविनः ॥
शशाप सर्व्वान् बालांश्च यान्तु मूढा मही-
तलम् ।
गच्छध्वं च महीं मूढा जम्बुद्वीपं मनोहरम्
॥
स्थितिर्नैकत्र युष्माकं भविष्यति पृथक्
पृथक् ।
द्वीपे द्वीपे स्थितिं कृत्वा तिष्ठन्तु सुखिनः
सुताः ॥
द्वीपस्थाभिर्नदीभिश्च सह क्रीडन्तु निर्जने
।
कनिष्ठो मातृशापाच्च लवणोदो बभूव ह ॥
कनिष्ठः कथयामास मातृशापञ्च बालकान्
।
आजग्मुर्दुःखिताः सर्व्वे मातृस्थानञ्च
बालकाः ॥
श्रुत्वा विवरणं सर्व्वे प्रजग्मुर्धरणीतलम् ।
प्रणम्य मातुश्चरणं भक्तिनम्रात्मकन्धराः
॥
सप्तद्वीपे समुद्राश्च सप्त तस्थुर्विभागशः ।
कनिष्ठाद्बृद्धपर्य्यन्तं द्विगुणं द्विगुणं मुने ॥
लवणेक्षुसुरासर्पिर्दधिदुग्धजलार्णवाः ।

|  | पुनरेवागमत्तूर्णमिक्ष्वाकुकुलनन्दनम् ॥<br>शत्रुघ्नशरनिर्भिन्नो लवणः स निशाचरः ।<br>पपात सहसा भूमौ वज्राहत इवाचलः ॥<br>तच्च शूलं महद्दिव्यं हते लवणराक्षसे । | एतेषाञ्च जलं पृथ्व्यां शस्यार्थञ्च भविष्यति ।<br>व्याप्ताः समुद्राः सप्तैव सप्तद्वीपां वसुन्धराम् ॥”<br>इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ३ अध्यायः ॥ |
|---|---|---|

**लवणः**, त्रि, (लवणेन संसृष्टः । लवण + ठक् ।
“लवणात् लुक् ।” ४ । ४ । २४ । इति ठको
लुक् । यद्वा, लवणो रसोऽस्त्यस्मिन्निति । अर्श
आद्यच् ।) लवणरसयुक्तः । इति मेदिनी ।
णे, ७५ ॥ (यथा, सुश्रुते । १ । २१ ।
“मधुरस्त्वविदग्धः स्याद्विदग्धो लवणः
स्मृतः ॥”)
लावण्ययुक्तश्च ॥

**लवणकिंशुका**, स्त्री, महाज्योतिष्मती । इति
राजनिर्घण्टः ॥

**लवणक्षारः** पुं, (लवणस्य क्षारः ।) लोणारक्षारः ।
इति राजनिर्घण्टः ॥

**लवणखानिः**, स्त्री, (लवणस्य खानिः खनिः ।)
शाम्भरिलवणोत्पत्तिस्थानम् । तत्पर्य्यायः ।
रुमा २ । इति हेमचन्द्रः । ४ । ७ ॥ लवणा-
करमात्रञ्च ॥

**लवणतृणं**, क्ली, (लवणरसविशिष्टं तृणम् ।) तृण-
विशेषः । तत्पर्य्यायः । लोमतृणम् २ तृणाम्लम् ३
पटुतृणकम् ४ अम्लकाण्डम् ५ । अस्य गुणाः ।
सक्षीरत्वम् । अम्लत्वम् । कषायत्वम् । अस्तन्य-
त्वम् । अश्ववृद्धिकरत्वञ्च । इति
राजनिर्घण्टः ॥

**लवणत्रयं**, क्ली, (लवणानां त्रयम् ।) सैन्धवं विडं
रुचकञ्च । इति राजनिर्घण्टः ॥

**लवणधेनुः**, स्त्री, (लवणनिर्म्मिता धेनुः ।) दानार्थ-
लवणादिनिर्म्मितधेनुः । तद्विवरणं यथा, --
होतोवाच ।
“लवणधेनुं वक्ष्यामि तां निबोध महीपते ।
सहस्रेण शतेनाथ स्वशक्त्या कनकेन तु ।
दत्त्वेमां स्वर्गमाप्नोति यत्र देवो वृषध्वजः ॥
य इदं शृणुयाद्भक्त्या श्रावयेद्वापि मानवः ।
मुच्यते सर्व्वपापेभ्यो रुद्रलोकञ्च गच्छति ॥”
इत्यादि वाराहपुराणे श्वेतोपाख्याने लवणधेनु-
माहात्म्यम् ॥

**लवणमदः**, पुं, (लवणस्य मदः ।) लोणारक्षारः ।
इति राजनिर्घण्टः ॥

**लवणा**, स्त्री, (लुनाति या । लू + ल्युः । टाप् ।)
नदीभेदः । दीप्तिः । इति मेदिनीशब्दरत्ना-
वल्यौ ॥ महाज्योतिष्मती । इति
राजनिर्घण्टः ॥

**लवणाचलः**, पुं, (लवणनिर्म्मितः अचलः ।) दानार्थ-
लवणादिनिर्म्मितपर्व्वतः । यथा, --
“अथातः संप्रवक्ष्यामि लवणाचलमुत्तमम् ।
यत्प्रदाता नरो लोकं प्राप्नोति शिवसंयुतम् ॥
उत्तमः षोडशद्रोणः कर्त्तव्यो लवणाचलः ।
मध्यमः स्यात्तदर्द्धेन चतुर्भिरधमः स्मृतः ॥
वित्तहीनो यथाशक्त्या द्रोणादूर्द्धन्तु कारयेत् ।
चतुर्थांशेन विष्कम्भान् पर्व्वतान् कारयेत् पृथक् ॥
विधानं पूर्ब्बवत् कुर्य्यात् ब्रह्मादीनाञ्च सर्व्वदा ।
तद्वद्धेमतनून् सर्व्वान् लोकपालान्निवेशयेत् ॥
मूला २ शन्दुः ३ कोमलवल्कला ४ । इति
राजनिर्घण्टः ॥ तस्य फलगुणाः । हृद्यत्वम् ।
सुगन्धित्वम् । कफवातनाशित्वञ्च । इति राज-
वल्लभः ॥
“लवलीफलमस्रार्शोवातपित्तहरंलघु ॥”
इति केचित् ॥
(यथा, राजेन्द्रकर्णपूरे । ४७ ।
“कृत्वा वेलापुलिनलवलीपल्लवग्रासगोष्ठीं
दिङ्नातङ्गाः सममथ सरिन्नाथपाथः
पिबन्ति ॥”)

**लवाकः**, पुं, (लवार्थं छेदनार्थं अकतीति । अक +
अच् ।) छेदनद्रव्यम् । इत्युणादिकोषः ॥

**लवाणकः**, पुं, (लूयतेऽनेनेति । लू + “आणको
लूधूशिन्धिधाञ्भ्यः ।” उणा० ३ । ८३ । इति
आणकः ।) दात्रादिः । इत्युणादिकोषः ॥

**लविः**, त्रि, (लूयतेऽनेनेति । लू + “अच इः ।”
उणा० ४ । १३८ । इति इः ।) छिदुरः ।
इत्युणादिकोषः ॥

**लवित्रं**, क्ली, (लूयतेऽनेनेति । लू + “अर्त्तिलूधू-
सूखनसहचर इत्रः ।” ३ । २ । १८४ । इति
इत्रः ।) दात्रम् । इत्यमरः ॥

**लश**, क शिल्पयोगे । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-अक०-सेट् ।) क, लाशयति कुशलो
नृत्ये शिल्पं युनक्तीत्यर्थः । इति दुर्गादासः ॥

**लशुनं**, क्ली, (अश्यते भुज्यते इति । अश् +
“अशेर्लश च ।” उणा० ३ । ५७ इति उनन् ।
लशादेशश्च धातोः ।) रसुनः । तत्पर्य्यायः ।
महौषधम् २ गृञ्जनः ३ अरिष्टः ४ महा-
कन्दः ५ रसोनकः ६ । इत्यमरः ॥ रसोनः ७
म्लेच्छकन्दः ८ भूतघ्नः ९ उग्रगन्धः १० । अस्य
गुणाः । अम्लरसेन ऊनत्वम् । गुरुत्वम् ।

अनुलिप्ते महीपृष्ठे कृष्णाजिनकुशोत्तरे ॥
धेनुं लवणमयीं कृत्वा षोडशप्रस्थसंयुताम् ।
वत्सं चतुर्भी राजेन्द्र इक्षुपादांश्च कारयेत् ॥
सौवर्णमुखशृङ्गाणि खुरा रौप्यमयास्तथा ।
मुखं गुडमयं तस्या दन्ताः फलमया नृप ! ॥
जिह्वां शर्करया राजन् घ्राणं गन्धमयन्तथा ।
नेत्रे रत्नमये कुर्य्यात् कर्णौ पत्रमयौ तथा ॥
श्रीखण्डं शृङ्गकोटौ च नवनीतमयाः स्तनाः ।
सूत्रपुच्छां ताम्रपृष्ठां दर्भरोम्णीं पयस्विनीम् ॥
कांस्योपदोहां राजेन्द्र घण्टाभरणभूषिताम् ।
सुगन्धपुष्पधूपैश्च पूजयित्वा विधानतः ।
आच्छाद्य वस्त्रयुग्मेन ब्राह्मणाय निवेदयेत् ॥
ग्रहणे वाथ संक्रान्तौ व्यतीपाते तथायने ।
नक्षत्रग्रहपीडासु सर्व्वकालं प्रदापयेत् ॥
द्विजाय साधुवृत्ताय कुलीनाय च धीमते ।
वेदवेदाङ्गविदुषे श्रोत्रियायाहिताग्नये ॥
ईदृशाय प्रदातव्या तथामत्मरिणे नृप ! ।
जमव्यमेव मन्त्रन्तु पुच्छदेशोपरिस्थितः ॥
छत्रकोपानहौ देयौ मुद्रिकापर्णपत्रके ।
आच्छाद्य वस्त्रयुग्मेन दक्षिणां कनकं ददेत् ॥
पूर्ब्बोक्तेन विधार्नन स्वशक्त्या कनकेन तु ।
इमां गृहाण भो विप्र रुद्ररूपे नमोऽस्तु ते ॥
रसज्ञा सर्व्वभूतानां सर्व्वदेवनमस्कृता ।
कामं कामदुघे कामा क्षारधेनो नमोऽस्तु ते ॥
दत्त्वा धेनुं लवणेन एकाहश्चैव तिष्ठति ।
स्वयं त्रिरात्रं विप्रेण तथैव लवणाशिना ॥
सरांसि कामदेवादींस्तद्वच्चात्र निवेशयेत् ।
कुर्य्याज्जागरमत्रापि दानमत्र निबोधत ॥
सौभाग्यरससम्भूतो यतोऽयं लवणो रसः ।
तदात्मकत्वेन च मां पाहि पापान्नगोत्तम ॥
यस्मादन्नरसाः सर्व्वे नोत्कटा लवणं विना ।
प्रियञ्च शिवयोर्नित्यं तस्मात् शान्तिप्रदो भव ॥
विष्णुदेहसमुद्भूतं यस्मादारोग्यवर्द्धनम् ।
तस्मात् पर्व्वतरूपेण पाहि संसारसागरात् ॥
अनेन विधिना यस्तु दद्याल्लवणपर्व्वतम् ।
उमालोके वसेत् कल्पं ततो याति परां गतिम् ॥”
इति मात्स्ये ७७ अध्यायः ॥

**लवणाब्धिजं**, क्ली, (लवणाब्धौ लवणसमुद्रे जायते इति । जन् + डः ।) सामुद्रलवणम् । इति राजनिर्घण्टः ॥

**लवणारजं**, क्ली, लोणारक्षारः । इति राज-निर्घण्टः ॥

**लवणोत्तमं**, क्ली, (लवणेषु उत्तमम् ।) सैन्धवम् । इति रत्नमाला ॥

**लवणोत्थं**, क्ली, (लवणादुत्तिष्ठतीति । उत् + स्था + कः ।) लोणारक्षारः । इति राजनिर्घण्टः ॥

**लवणोदः**, पुं, (लवणं उदकं यस्य । उत्तरपदस्य चेत्युदकस्योदादेशः ।) लवणसमुद्रः । इत्य-मरः ॥

**लवनं**, क्ली, (लू + भावे ल्युट् ।) छेदनम् । इत्य-

उष्णत्वम् । कफवातनाशित्वम् । अशुचित्वम् ।
क्रिमिहृद्रोगशोफघ्नत्वम् । रसायनत्वञ्च । इति राजनिर्घण्टः ॥ * ॥ अपि च ।
“लशुनस्तु रसोनः स्यादुग्रगन्धो महौषधम् ।
अरिष्टो म्लेच्छकन्दश्च यवनेष्टो रसोनकः ॥
यदामृतं वैनतेयो जहार सुरसत्तमात् ।
तदा ततोऽपतद्बिन्दुः सुरसोनोऽपतद्भुवि ॥
पञ्चभिश्च रसैर्युक्तो रसेनाम्लेन वर्ज्जितः ।
तस्माद्रसोन इत्युक्तो द्रव्याणां गुणवेदिभिः ॥
कटुकश्चापि मूलेषु तिक्तः पत्रेषु संस्थितः ।
नाले कषाय उद्दिष्टो नालाग्रे लवणः स्मृतः ॥
बीजे तु मधुरः प्रोक्तो रसस्तद्गुणवेदिभिः ।
रसोनो बृंहणो वृष्यो स्निग्धोष्णः पाचनः सरः ॥
रसे पाके च कटुकस्तीक्ष्णो मधुरको मतः ।
भग्नसन्धानकृत् कण्ठ्यो गुरुः पित्तास्रवृद्धिदः ।
बलवर्णकरो मेधाहितो नेत्र्यो रसायनः ॥
हृद्रोगजीर्णज्वरकुक्षिशूलं
विबन्धगुल्मारुचिकासशोफान् ।
दुर्नामकुष्ठानलसादजन्तु-
समीरणश्वासकफांश्च हन्ति ॥

| | | |
|---|---|---|
| | मरः ॥<br>**लवनी**, स्त्री, फलवृक्षविशेषः । लोना इति भाषा ॥<br>तत्पर्य्यायः । ग्रीष्मजा २ अग्रिमा ३ ।<br>इति<br>शब्दचन्द्रिका ॥<br>**लवली**, स्त्री, (लवं लेशं लातीति । ला + कः ।<br>गौरादित्वात् ङीष् ।) फलवृक्षविशेषः ।<br>नोयाडि इति भाषा । तत्पर्य्यायः ।<br>सुगन्ध- | |

मद्यं मांसं तथाम्लञ्च हितं लशुनसेविनाम् ॥
व्यायाममातपं रोषमतिनीरं पयो गुडम् ।
रसोनमश्नन् पुरुषस्त्यजेदेतन्निरन्तरम् ॥”
इति भावप्रकाशः ॥ * ॥
अन्यच्च ।
“लशुनः क्षारमधुरः कण्ठ्यो वृष्यो गुरुः सरः ।
भग्नसन्धानकृद्बल्यो रक्तपित्तप्रदूषणः ॥”
इति राजवल्लभः ॥
(तथाचास्य गुणादिविषयो यथा, --
“कट्वम्लवीर्य्यो लशुनो हितश्च
स्निग्धो गुरुः स्वादुरसोऽथ बल्यः ।
वृद्धस्य मेधास्वरवर्णचक्षु-
र्भग्नास्थिसन्धानकरः सुतीक्षणः ॥
हृद्रोगजीर्णज्वरकुक्षिशूल-
प्रमेहहिक्कारुचिगुल्मशोफान्।
दुर्नामकुष्ठानलमान्द्यजन्तु-
समीरणं श्वासकफान्निहन्ति ॥”
इति हारीते कल्पस्थाने तृतीयाध्याये ॥
“शीतवातहिमदग्धतनूनां
स्तब्धभुग्नकुटिलव्यथितास्थ्नाम्।
भेषजस्य पवनोपहतानां
वक्ष्यते विधिरतो लशुनस्य ॥”
“शीलयेल्लशुनं शीते वसन्तेऽपि कफोल्वणः ।
घनोदयेऽपि वातार्त्तः सदा वा ग्रीष्मलीलया ॥”
इति वाग्भटे उत्तरस्थाने ३९ अध्यायः ॥
“क्रिमिकुष्ठकिलासघ्नो वातघ्नो गुल्मनाशनः ।
स्निग्धश्चोष्णश्च वृष्यश्च लशुनः कटुको गुरुः ॥”
इति चरके सूत्रस्थाने २७ अध्यायः ॥)

**लशूनः**, पुं, (रसेन ऊनः रस्य लत्वम् । पृषो-

**लसिका**, स्त्री, (लसतीति । लस् + अच् । ततः
कन् ततष्टापि अत इत्वम् ।) लाला । यथा, --
“लालायां पिच्छला ख्याता लसिका लासिका
तथा ॥”
इति शब्दचन्द्रिका ॥

**लसीका**, स्त्री, इक्षुरसः । त्वङ्मांसमध्यगरसः ।
इति केचित् ॥ (यथा । “लसीका उदक-
विशेषः । यथाह चरकः । यत्तु मांसत्वगन्तरे
उदकं तल्लसीकाशब्दं लभते ।” इति विजय-
रक्षितकृतप्रमेहरोगव्याख्याने ॥
“यत्तु त्वगन्तरे व्रणगतं लसीकाशब्दं लभते ।”
इति चरके शारीरस्थाने सप्तमेऽध्याये ॥)

**लस्ज**, ई ओ ङ व्रीडे । इति कविकल्पद्रुमः ॥
(भ्वा०-आत्म०-अक०-सेट् । निष्ठायामनिट् ।)
क्विपि संयोगादिलोपे लक् । ई ओ, लग्नः । ङ,
लज्जते । इति दुर्गादासः ॥

**लस्तः**, त्रि, श्लिष्टः । क्रीडितः । शिल्पयुक्तः । लस-
धातोः क्तप्रत्ययेन निष्पन्नः । इति लस्तकशब्द-
व्युत्पत्तौ भरतश्च ॥

**लस्तकः**, पुं, धनुषो मध्यभागः । इत्यमरः ॥

**लस्तकी**, [न्] पुं, (लस्तकोऽस्त्यस्येति । लस्तक +
इनिः ।) धनुः । इति शब्दमाला ॥

**लहरिः**, स्त्री, महातरङ्गः । तत्पर्य्यायः ।
उल्लोलः २ कल्लोलः ३ । इति हेम-

**लाक्षा**, स्त्री, (लक्ष्यतेऽनयेति । लक्ष् + “गुरोश्च
हलः ।” ३ । ३ । १०३ । इति अः । टाप् । यद्वा,
“बाहुलकात् राजतेरपि सः । कपिलिकादित्वात्
वा लत्वम् ।” इत्युज्ज्वलः । ३ । ६२ ।) रक्त-
वर्णवृक्षनिर्यासविशेषः । लाहा इति भाषा ॥
तत्पर्य्यायः । राक्षा २ जतु ३ यावः ४ अलक्तः ५
द्रुमामयः ६ । इत्यमरः ॥ खदिरिका ७ रक्ता ८
रङ्गमाता ९ पलङ्कषा १० क्रिमिहा ११ द्रुम-
व्याधिः १२ अलक्तकः १३ पलाशी १४ मुद्रिणी
१५ दीप्तिः १६ जन्तुका १७ गन्धमादिनी १८
नीला १९ द्रवरसा २० पित्तारिः २१ । अस्या
गुणाः । कटुत्वम् । तिक्तत्वम् । कषायत्वम् ।
श्लेष्मपित्तार्त्तिशोफविषरक्तविषमज्वरनाशित्वञ्च।
इति राजनिर्घण्टः ॥ भग्नविसर्पत्वग्दोषनाशि-
त्वम् । बल्यत्वञ्च । इति राजवल्लभः ॥ अपि च ।
“लाक्षा वर्ण्या हिमा बल्या स्निग्धा च तुवरा लघुः ।
अनुष्णा कफपित्तास्रहिक्काकासज्वरप्रणुत् ॥
व्रणोरःक्षतवीसर्पकृमिकुष्ठगदापहा ।
अलक्तको गुणैस्तद्वद्विशेषाद्व्यङ्ग्यनाशनः ॥”
इति भावप्रकाशः ॥
(शतपत्री । सेवती । गुलाव इति च । तत्-
पर्य्यायो यथा, --
“शतपत्री तरुण्युक्ता कर्णिका चारुकेशरा ।
महाकुमारी गन्धाढ्या लाक्षा कृष्णाति-
मञ्जुला ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**लाक्षातरुः**, पुं, (लाक्षोत्पादकस्तरुः ।) पलाश-
वृक्षः । इति शब्दमाला ॥ (पलाशशब्देऽस्य
विशेष ज्ञेयः ॥)

**लाक्षातैलं** क्ली, (लाक्षादिभिः पक्वं तैलम् ।)
पक्वतैलविशेषः । लाक्षादितैलमिति ख्यातम् ।
तद्द्विविधं स्वल्पं बृहच्च । यथाक्रमं तत्प्रकारं
तद्गुणञ्चाह ।
“लाक्षाहरिद्रामञ्जिष्ठाकल्कैस्तैलं विपाचितम् ।
सद्गुणेनारनालेन दाहशीतज्वरापहम् ॥”
इति स्वल्पलाक्षातैलम् ॥
बृहद्यथा, --

दरादित्वात् सस्य शः अकारलोपश्च ।) लशुनः ।
इति शब्दरत्नावली ॥

**लष**, क शिल्पयोगे । इति कविकल्पद्रुमः ॥

(चुरा०-पर०-अक०-सेट् ।) क, लाषयति
कुशलो नृत्ये शिल्पं युनक्तीत्यर्थः । इति दुर्गा-
दासः ॥

**लष**, ञ स्पृहि । इति कविकल्पद्रुमः ॥ (भ्वा०-

उभ०-सक०-सेट् ।) ञ, लषति लषते । इति
दुर्गादासः ॥

**लष**, य ञ स्पृहि । इति कविकल्पद्रुमः ॥ (दिवा०-

उभ०-सक०-सेट् ।) य ञ, लष्यति लष्यते ।
इति दुर्गादासः ॥

**लष्वः**, पुं, (लाषयति नृत्ये शिल्पं युनक्तीति ।

लष् + "सर्व्वनिघृष्वरिष्वेति ।" उणा० १ । १५३ ।
इति वन्प्रत्ययेन साधुः ।) नर्त्तकः । इत्यु-
णादिकोषः ॥

**लस**, श्लिषि । क्रीडे । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-अक०-सेट् ।) लसति । इति
दुर्गादासः ॥

**लस**, क शिल्पयोगे । इति कविकल्पद्रुमः ॥ (चुरा०-

पर०-अक०-सेट् ।) क, लासयति कुशलो
नृत्ये शिल्पं युनक्तीत्यर्थः । इति
दुर्गादासः ॥

**लसा**, स्त्री, (लसतीति । लस् + अच् ।)

हरिद्रा । इति हारावली । ९३ ॥

चन्द्रः शब्दरत्नावली च ॥ (यथा, आर्य्या-
सप्तशत्याम् । ६१४ ।

**लहरी**, स्त्री, महातरङ्गः । तत्पर्य्यायः ।

उल्लोलः २ कल्लोलः ३ । इति हेम-
चन्द्रः शब्दरत्नावली च ॥ (यथा, आर्य्या-
सप्तशत्याम् । ६१४ ।
"सरित इव यस्य गेहे शुष्यन्ति विशाल-
गोत्रजा नार्य्यः ।
क्षारास्वेव स तृप्यति जलनिधिलहरिषु जलद
इव ॥")

**ला**, ल ग्रहे । इति कविकल्पद्रुमः ॥ (अदा०-

पर०-सक०-अनिट् ।) ल, लाति । ग्रहो ग्रह-
णम् । इति दुर्गादासः ॥

**ला**, स्त्री, ग्रहणम् । दानम् । इति मेदिनी । ले, १ ॥

**लाक्षकी**, स्त्री, सीता । यथा, --

"राघव ते इयं सीता द्वारकेशस्य रुक्मिणी ।
विष्णोऽवतारमात्रस्य लक्ष्मीर्य्या कमलालया ॥
वाराणस्यां विशालाक्षी विमला पुरुषोत्तमे ।
वैकुण्ठे तु महालक्ष्मी राधा वृन्दावने वने ॥
लक्षशः कमला दास्यो यस्याः सा लाक्षकी
मता ।
एवं शतसहस्राणामीश्वरी राधिकाधिका ॥"
इति पाद्मोत्तरखण्डे ५५ अध्यायः ॥

**लाक्षणिकः**, पुं, लक्षणया प्रतिपादकः । इति

साहित्यदर्पणम् ॥
लक्षणात्मकवृत्तिमत्पदत्वं

"लाक्षारसाढके प्रस्थं तैलस्य विपचेद्भिषक् ।
मस्त्वाढकसमायुक्तं पिष्ट्वा चात्र समावपेत् ॥
शतपुष्पां हरिद्राञ्च मूर्व्वां कुष्ठं हरेणुकाम् ।
कटुकां मधुकां रास्नामश्वगन्धाञ्च दारु च ॥
मुस्तकं चन्दनञ्चैव पृथगक्षसमानकैः ।
द्रव्यैरेतैश्च तत् सिद्धं अभ्यङ्गान्मारुतापहम् ॥
विषमाख्यान् ज्वरान् सर्व्वानाश्वेव प्रशमं नयेत् ।
कासं श्वासं प्रतिश्यायं कण्डूं दौर्गन्ध्यगौरवम् ॥
त्रिकपृष्ठग्रहं शूलं गात्राणां स्फुटनन्तथा ।
पापालक्ष्मीप्रशमनं सर्व्वग्रहनिवारणम् ।
अश्विभ्यां निर्म्मितं सम्यक् तैलं लाक्षादिकं महत ॥"
इति बृहल्लाक्षातैलम् । इति सुखबोधः ॥

| | | |
|---|---|---|
| | लाक्षणिकत्वम् । इति सारमञ्जरी ॥ (यथा, विभक्तितत्त्वार्थवादे । "शक्तो लाक्षणिको रूढो योगरूढश्च यौगिकः । क्वचित् यौगिकरूढश्च शब्दः षोढा निगद्यते ॥" (लक्षणमधीते वेद वा । लक्षण + "कतूक्थादि-सूत्रान्तात् ठक् ।" ४ । २ । ६० । इति ठक् । लक्षणाभिज्ञे, त्रि ॥) | |

**लाक्षाप्रसादः**, पुं, (लाक्षायाः प्रसादो यस्मात् ।)
पट्टिकालोध्रः । इति राजनिर्घण्टः ॥

**लाक्षाप्रसादनः**, पुं, (लाक्षां प्रसादयतीति । प्र +
सद् + णिच् + ल्युः ।) रक्तलोध्रः ।
तत्पर्य्यायः ।
क्रमुकः २ पट्टिका ३ पट्टी ४ । इत्यमरः ॥
(तथास्य पर्य्यायः ।
"द्वितीयः पट्टिकालोध्रः क्रमुकः
स्थूलवल्कलः ।
जीर्णपत्रो बृहत्पत्रः पट्टी लाक्षाप्रसादनः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**लाक्षावृक्षः**, पुं, (लक्षोत्पादको वृक्षः ।)
कोशाम्रः । इति राजनिर्घण्टः ॥ पलाशवृक्षः
।
इति हारावली ॥

**लाख**, ऋ शोषालमर्थ्ययोः । इति कविकल्पद्रुमः ॥
(भ्वा०-पर०-अक०-सेट् ।) ऋ,
अललाखत् ।
इति दुर्गादासः ॥

**लाघ**, ऋ ङ शक्तौ । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-अक०-सेट् ।) ऋ, अललाघत् ।
ङ,
लाघते । शक्तिः सामर्थ्यम् । इति दुर्गादासः
॥

**लाघवं**, क्ली, (लघोर्भावः कर्म्म वा । लघु + "इग-
न्ताच्च लघुपूर्ब्बात् ।" ५ । १ । १३१ ।
इति
अण् ।) आरोग्यम् । इति राजनिर्घण्टः ॥
लघु-
त्वम् । लघोर्भाव इत्यर्थे ष्णप्रत्ययेन
निष्पन्नम् ॥
(शीघ्रत्वम् । यथा, महाभारते । ५ । १८३ ।
७ ।
"तासां रूपं भारत नोत शक्यं
तेजस्वित्वात् लाघवाच्चैव वक्तुम् ॥"
दण्डस्थे च गवां हानिर्यपस्थे स्वामिनो
भयम् ।
लक्ष्मीर्लाङ्गलयोक्त्रे स्यात्
क्षेत्रारम्भदिनर्क्षके ॥"
इति ज्योतिस्तत्त्वम् ॥

**लाङ्गलदण्डः**, पुं, (लाङ्गलस्य दण्डः ।) लाङ्गल-
मध्यस्थकाष्ठम् । लाङ्गलेर ईश इति
भाषा ।
तत्पर्य्यायः । ईशा २ । इत्यमरः ॥ ईषा
३ ।
इति शब्दरत्नावली ॥

**लाङ्गलपद्धतिः**, स्त्री, (लाङ्गलस्य पद्धतिः ।)
लाङ्गल-
रेखा । सिराल इति भाषा । तत्पर्य्यायः ।
शीता २ । इत्यमरः ॥ सीता ३ । इति
शब्द-
रत्नावली ॥

**लाङ्गलिकः**, पुं, (लाङ्गलवत् आकृतिरस्त्यस्येति ।
लाङ्गल + ठन् ।) स्थावरविषभेदः । इति
हेम-
चन्द्रः ॥

**लाङ्गलिका**, स्त्री, (लाङ्गलमिवाकारोऽस्त्यस्या
इति ।
लाङ्गल + ठन् । टाप् ।) लाङ्गलीवृक्षः ।
इति
शब्दरत्नावली ॥ (यथा, गारुडे १९२
अध्याये ।
"रुद्रलाङ्गलिकामूलं हिज्जलस्य तथैव
च ।
तेन व्रणमुखं लिप्तं शल्यो निःसरति
क्षणात् ॥")

**लाङ्गलिकी**, स्त्री, (लाङ्गल + ठन् । ङीष् ।) वृक्ष-
विशेषः । लाङ्गलिया इति विषलाङ्गलिया
इति
च भाषा । तत्पर्य्यायः । अग्निशिखा २ ।
इत्यमरः ॥ अग्निज्वाला ३ लाङ्गलिका ४
"तत्रासीत् पिङ्गलो गार्ग्यस्त्रिजटोनामवै
द्विजः ।
क्षतवृत्तिर्वने नित्यं फालकुद्दाललाङ्गली
॥"
तथा, महाभारते । १ । २२२ । ५३ ।
"रामः पाणिग्रहणिकं ददौ पार्थाय लाङ्गली
॥"
स्त्रियां ङीष् । नदीविशेषः । यथा,
मार्कण्डेये ।
५७ । २९ ।
"लाङ्गलिनी वंशकरा महेन्द्रप्रभवाः स्मृताः
॥")

**लाङ्गली**, स्त्री, (लाङ्गलाकारोऽस्त्यस्या इति ।
लाङ्गल + अच् । ङीष् ।)
लाङ्गलाकारपुष्प-
जलजशाकविशेषः । काँचडा इति भाषा ।
तत्पर्य्यायः । शारदी २ तोयपिप्पली ३
शकुला-
दनी ४ । इत्यमरः ॥ जलाक्षी ५
जलपिप्पलिः
६ । इति शब्दरत्नावली ॥ पित्तला ७
श्यामा-
दिनी ८ मत्स्यगन्धा ९ । इति जटाधरः ॥
कलि-
कारी १० । इति राजनिर्घण्टः ॥
(शालपर्णी ।
तत्पर्य्यायो यथा, --
"स्थिरा विदारिगन्धा च
शालपर्ण्यस्तमत्यपि ।
लाङ्गली कलसी चैवक्रोष्टुपुच्छा गुहा मता
॥"
इति गारुडे २०८ अध्यायः ॥)

**लाङ्गुलं**, क्ली, पुच्छम् । इत्यमरटीकासारसुन्दरी ॥

**लाङ्गूलं**, क्ली, (लङ्ग + "खर्जिपिञ्जादिभ्य ऊरो-
लचौ ।" उणा० ४ । ९० । इति ऊलच् ।
बाहुलकात् वृद्धिश्च ।)
पशुपश्चाद्वर्त्तिलम्बमान-
लोमाग्रावयवविशेषः । ल्याज इति भाषा ।

अल्पत्वम् । यथा, मार्कण्डेये । ४१ । १७ ।
“अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम् ।
नित्यस्वाध्याय इत्येते नियमाः पञ्च
कीर्त्तिताः ॥”
क्लैव्यम् । यथा, कुमारे । २ । २३ ।
“यमोऽपि विलिखन् भूमिं
दण्डेनास्तमितत्विषा ।
कुरुतेऽस्मिन्नमोघेऽपि निर्व्वाणालातलाघवम्
॥”)

**लाङ्गलं**, क्ली, (लङ्गतीति । लगि गतौ + बाहु-
लकात् कलच् । वृद्धिश्च धातोः । इति
उणादि-
वृत्तौ उज्ज्वलदत्तः । १ । १०८ ।)
स्वनामख्यात-
भूमिकर्षणयन्त्रम् । तत्पर्य्यायः । हलम् २
गोदा-
रणम् ३ सीरः ४ । इत्यमरः ॥ हलः ५
हालम् ६
हालः ७ शीरः ८ । इति भरतः ॥ (यथा,
वाजसनेयसंहितायाम् । १२ । ७१ ।
“लाङ्गलं पवीरवत्सुशेवं£सोमपित्सरु ॥”)
लिङ्गः । इति त्रिकाण्डशेषः ॥ पुष्पविशेषः ।
तालवृक्षः । गृहदारु । इति मेदिनी । ले,
१२८ ॥

**लाङ्गलग्रहः**, पुं, कृषकः । लाङ्गलं गृह्णाति य
इत्यर्थे अन्प्रत्ययेन निष्पन्नः ॥
(“शक्तिलाङ्गला-
ङ्कुशयष्टितोमरघटघटीधनुःषुग्रहेरुपसंख्या-
नम् ।” ३ । २ । ९ । इत्यस्य वार्त्तिकोक्त्या
अच् ॥)

**लाङ्गलचक्रं**, क्ली, (लाङ्गलाकारं चक्रम् ।) कृषि-
कर्म्मणि शुभाशुभगणन हलाकारचक्रविशेषः
।
यथा । अथ लाङ्गलचक्रं स्वरोदये ।
“लाङ्गलं दण्डिकायूपयोक्त्रद्वयसमन्वितम् ।
दण्डिकादि लिखेत् भानि
दिनेशाक्रान्तभादितः ॥
दण्डिकाहलयूपानां द्विद्विस्थाने त्रिकं त्रिकम्
।
लाङ्गली ५ । इति शब्दरत्नावली ॥ गैरी
६
दीप्ता ७ हलिनी ८ गर्भघातिनी ९ अग्नि-
जिह्वा १० इन्द्रपुष्पा ११ अग्निमुखी १२
वह्नि-
शिखा १३ । इति रत्नमाला ॥ अस्या
गुणः ।
कुष्ठदुष्टव्रणनाशित्वम् । इति राजवल्लभः
॥
राजनिर्घण्टोक्तगुणपर्य्यायः
कलिकारीशब्दे
द्रष्टव्याः ॥

**लाङ्गली**, [न्] पुं, (लाङ्गलमस्त्यस्येति । लाङ्गल +
इनिः ।) बलरामः । इति शब्दरत्नावली
॥
(यथा, हरिवंशे । ३८ । ३८ ।
“स्थापयित्वा विलद्वारि यदून् लाङ्गलिना
सह ।
शार्ङ्गधन्वा विलस्थन्तु जाम्बवन्तं ददर्श
ह ॥”)
नारिकेलः । इत्यमरः ॥ (यथा, --
“नारिकेलो दृढफलो लाङ्गली
कूर्च्चशीर्षकः ।
तुङ्गस्कन्धफलश्चैव तृणराजः सदाफलः
॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)
सर्पः । इति शब्दचन्द्रिका ॥
(लाङ्गलविशिष्टे,
त्रि । यथा, रामायणे । २ । ३२ । ३० ।
तत्पर्य्यायः । पुच्छम् २ लूम ३ वालहस्तः
४
बालधिः ५ । इत्यमरः ॥ लङ्गूलम् ६
लाङ्गुलम् ७
लुलामः ८ अवालः ९ । इति
शब्दरत्नावली ॥
लञ्जः १० पिच्छः ११ बालः १२ । इति
जटा-
धरः ॥ (यथा, कुमारे । १ । १३ ।
“लाङ्गूलविक्षेपविसर्पिशोभै-
रितस्ततश्चन्द्रमरीचिगौरैः ।
यस्यार्थयुक्तं गिरिराजशब्दं
कुर्ब्बन्ति बालव्यजनैश्चमर्य्यः ॥”)
गोलाङ्गूलजलमाहात्म्यं यथा, --
“लाङ्गूलेनोद्धृतं तोयं मूद्र्ध्ना गृह्णाति यो
नरः ।
सर्व्वतीर्थफलं प्राप्य सर्व्वपापैः प्रमुच्यते
॥”
इति वाराहपुराणम् ॥
शेफः । इति मेदिनी । ले, १२७ ॥ कुशूलः
। इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**लाङ्गूलिका**, स्त्री, (लाङ्गूलाकृतिरस्त्यस्या इति ।
लाङ्गूल् + ठन् ।) पृश्निपर्णी । इति राज-
निर्घण्टः ॥

**लाङ्गूली**, [न्] पुं, (प्रशस्तं लाङ्गूलमस्त्यस्येति ।
लाङ्गूल + इनिः ।) वानरः । इति
शब्दचन्द्रिका ॥
ऋषभनामौषधम् । इति राजनिर्घण्टः ॥

**लाछ**, इ लक्ष्मणि । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।) इ, लाञ्छ्यते ।
लाञ्छति ।
इति दुर्गादासः ॥

**लाज**, भर्त्सने । भर्गे । इति कविकल्पद्रुमः ॥

(भ्वा०-पर०-सक०-सेट् ।) लाजति ॥

**लाज**, इ भर्त्सने । भर्गे । इति कविकल्पद्रुमः ॥

(भ्वा०-पर०-सक०-सेट् ।) द्वौ द्वितीय-
स्वरिणौ । लाजति । इ, लाञ्ज्यते । भर्त्सन
एव कैश्चित् पठ्यते । भर्गो भर्ज्जनम् । इति
दुर्गादासः ॥

**लाजं**, क्ली, (लाज् + अच् ।) उशीरम् । इति

मेदिनी । जे, १५ ॥ (भृष्टधान्यम् । खै इति
भाषा ॥
"येषां स्युस्तण्डुलास्तानि धान्यानि सतु-
षाणि च ।
भृष्टानि स्फुटितान्याहुर्लाजानीति मनीषिणः ॥
लाजाः स्युर्म्मधुराः शीता लघवो दीपनाश्च ते
॥
स्वल्पमूत्रमला रूक्षा बल्याः पित्तकफच्छिदः ।
छर्द्द्यतीसारदाहास्रमेहमेदस्तृषापहाः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**लाजः**, पुं, (लाज् + अच् ।) आर्द्रतण्डुलः । इति

मेदिनी । जे, १५ ॥

**लाजा**, स्त्री, अक्षतम् । इति मेदिनी । जे, १५ ॥

(यथा, सुश्रुते । ४ । १६ ।
"पैत्तिकं शर्करालाजामधुकैः सारिवा-
युतैः ॥")

**लाजाः**, पुं, भूम्नि, (लाज्यन्ते ये ते । लाज् +

घञ् ।) भृष्टधान्यम् । लाओया इति खै इति
च भाषा । (यथा, रामायणे । २ । ४३ । १३ ।
"कदा प्राणिसहस्राणि राजमार्गे ममात्मजौ ।
लाजेरवकरिष्यन्ति प्रविशन्तावरिन्दमौ ॥")
तत्पर्य्यायः । अक्षतम् २ । इत्यमरः । २ । ९ ।
४७ ॥
लाजा ३ अक्षताः ४ । इति भरतः ॥ अस्य
गुणाः ।
तृष्णाच्छर्द्द्यतीसारप्रमेहमेदःकफनाशि-
त्वम् । कासपित्तोपशमनत्वम् । अग्निकारित्वम्
।
ज्वरापहैः फलरसैर्युक्तं समधुशर्करम् ॥"
इति भावप्रकाशः ॥

**लाञ्छनं** क्ली, (लाञ्छ + ल्युट् ।) नाम । चिह्नम् ।

इति मेदिनी । ने, १२१ ॥ (यथा, कुमारे ।
७ । ३५ ।
"दिवापि निष्ठ्यूतमरीचिभासा
बालादनाविष्कृतलाञ्छनेन ।
चन्द्रेण नित्यं प्रतिभिन्नमौलेः
चूडामणेः किं ग्रहणं हरस्य ॥")

**लाञ्छनः**, पुं, (लाञ्छतीति । लाञ्छ + ल्युः ।)

रागीधान्यम् । इति राजनिर्घण्टः ॥
क्वचित्
पुस्तके लाञ्छनीति च पाठः ॥

**लाटः**, पुं, देशान्तरम् । (यथा, कथासरित्सागरे ।

७८ । ११९ ।
"ददौ तस्मै सपुत्राय प्रीत्या वीरवराय च ।
लाटदेशे ततो राज्यं स कर्णाटयुते नृपः
॥")
वस्त्रम् । इति मेदिनी । टे, २७ ॥
जीर्णभूष-
णादि । इति शब्दरत्नावली ॥

**लाड**, त् क क्षेपे । इति कविकल्पद्रुमः ॥ (अदन्त-

चुरा० पर०-सक०-सेट् ।) लाडयति
अल-
लाडत् । इति दुर्गादासः ॥

**लापः**, पुं, कथनम् । लपधातोर्भावे घञ्प्रत्ययेन

निष्पन्नम् ॥

**लाप्यं**, त्रि, (लप्यते इति । लप् + ण्यत् ।) कथ-

नीयम् । लपधातोः कर्म्मणि घ्यण्प्रत्ययेन
निष्पन्नम् । इति मुग्धबोधव्याकरणम् ॥

**लाभः**, पुं, (लभ + घञ् करणे ।) मूलधनादधिकं

बाणिज्योपार्ज्जितं धनम् । तत्पर्य्यायः ।
फलम् २ ।
इत्यमरभरतौ ॥ लभ्यम् ३ वृद्धिः ४ । इति
शब्दरत्नावली ॥ (यथा, रामायणे । २ ।
पुत्रमिति अत्र डलयोरेकत्वाल्लत्वम् ।
इति
कविकल्पद्रुमटीकायां दुर्गादासः ॥
तथा हि ।
"लालने बहवो दोषास्ताडने बहवो
गुणाः ।
तस्मात् पुत्रञ्च शिष्यञ्च ताडयेन्न तु
लालयेत् ॥"
अपि च ।
"लालयेत् पञ्च वर्षाणि दशवर्षाणि
ताडयेत् ।
प्राप्ते तु षोडशे वर्षे पुत्रं मित्रवदाचरेत्
॥"
इति चाणक्यशतकम् ॥

**लालसा**, पुं स्त्री, (लस् + यङ् । ततः "अ
प्रत्य-

यात् ।" ३ । ३ । १०२ । इति अः ।
टाप् ।) महाभि-
लासः । इत्यमरः ॥ औत्सुक्यम् ।
याच्ञा
इति मेदिनी । से, ३४ ॥ दोहदम् ।
यथा, --
"दोहदं दौर्हृदं श्रद्धा लालसा
सूतिमासि तु ।"
इति हेमचन्द्रः ॥
लोलः । इति नानार्थे स एव ॥
(लोलुपे, त्रि ।
इति यादवः ॥ यथा, माघे । ४ । ६ ।
"छायां निजस्त्री चटुलालसानां
मदेन किञ्चित् चटुलालसानाम् ।
कुर्व्वाणमुत्पिञ्जरजातपत्रै-
र्विहङ्गमानां जलजातपत्रैः ॥"
तथा च कुमारे । ७ । ५६ ।
"तस्मिन् मुहूर्त्ते पुरसुन्दरीणा-
मीशानसन्दर्शनलालसानाम् ॥")

**लालसीकं**, क्ली, पिच्छलम् । इति
शब्दरत्नावली ॥

**लाला**, स्त्री, (लल् + णिच् + अच् । टाप् ।)

लघुत्वम् । शीतलत्वञ्च । अस्य मण्डगुणाः । अग्निकारित्वम् । दाहतृष्णाज्वरातीसारनाशित्वम् । अशेषदोषामपाचनत्वञ्च ॥ तस्य पेयागुणाः । क्षामकण्ठस्य श्रमघ्नत्वम् । क्षुधातृष्णाग्लानिदौर्ब्बल्यकुक्षिरोगनाशित्वञ्च । इति राजवल्लभः ॥ * ॥ अपि च ।
"एते च व्रीहयो भृष्टास्ते लाजा इति संज्ञिताः ।
यवादयश्च ये भृष्टास्ते धानाः परिकीर्त्तिताः ॥
लाजाश्च यवधानाश्च तर्पणाः पित्तनाशनाः ।
गोधूमयावनालोत्थाः किञ्चिदुष्णाश्च दीपनाः ॥
तृष्णातीसारशमनो धातुशाम्यकरः परः ।
मन्दाग्निविषमाग्नीनां बालस्थविरयोषिताम् ।
देयश्च सुकुमाराणां लाजमण्डः सुसंस्कृतः ॥"
इति राजनिर्घण्टः ॥ * ॥
तस्य चूर्णगुणाः ।
"द्राक्षादाडिमखर्ज्जूरमृदिताम्बुसशर्करम् ।
लाजचूर्णं समध्वाज्यं सन्तर्पणमुदाहृतम् ॥"
लाजचूर्णं द्राक्षादिजलशर्करामध्वाज्यसहितं तर्पणमुक्तमित्यर्थः । लाजशक्तुगुणाश्च गुणग्रन्थे ।
"लाजानां शक्तवः क्षौद्रसितायुक्ता विशेषतः ।
छर्द्यतीसारतृड्दाहविषमूर्च्छाज्वरापहाः॥"
चरकश्च ।
"तत्र तर्पणमेवादौ प्रदेयं लाजशक्तुभिः ।
२२ । २२ ।
"सुखदुःखे भयक्रोधौ लाभालाभौ भवाभवौ ।
यच्च किञ्चित्तथाभूतं ननु दैवस्य कर्म्म तत् ॥")
प्राप्तिः । इति लभधात्वर्थदर्शनात् ॥ (सप्तधर्म्म्यवित्तागमेषु अन्यतमः । यथा, मनुः । १० । ११५ ।
"सप्त वित्तागमा धर्म्म्या दायो लाभः क्रयो जयः ।
प्रयोगः कर्म्मयोगश्च सत्प्रतिग्रह एव च ॥")

**लाभ्यं**, क्ली, (लभ् + ण्यत् ।) लाभः । इति शब्दरत्नावली ॥

**लामज्जकं**, क्ली, वीरणमूलम् । इत्यमरः ॥ अस्य पर्य्यायगुणावुशीरशब्दे द्रष्टव्यौ । उशीरवत्पीतच्छवितृणविशेषः । तत्पर्य्यायः । सुनालम् २ अमृणालम् ३ लवम् ४ लघु ५ इष्टिका पथिकम् ६ शीघ्रम् ७ दीर्घमूलम् ८ जलाशयम् ९ । अस्य गुणाः । हिमत्वम् । तिक्तत्वम् । वातपित्ततृड्दाहश्रममूर्च्छार्त्तिरक्तज्वरापहत्वञ्च । इति राजनिर्घण्टः ॥

**लालनं**, क्ली, (लल् + णिच् + ल्युट् ।) अत्यन्तस्नेहकरणम् । प्रेमपूर्ब्बकवालकादरणम् । सोहाग इति भाषा । लड कोपसेवे उपसेव इह अत्यन्तपालनम् । क, लालयेत् पञ्च वर्षाणि
मुखभवजलम् । लाल इति भाषा । तत्पर्य्यायः । सृणिका २ स्यन्दिनी ३ । इत्यमरः ॥ द्राविका ४ सृणीका ५ । इति शब्दरत्नावली ॥ मुखस्रावः । इति राजनिर्घण्टः ॥ (यथा, सुश्रुते । ४ । २२ ।
"हीनच्छेदात् भवेच्छोफो लालानिद्राभ्रमस्तमः ॥")

**लालाटिकः**, त्रि, (ललाटं पश्यतीति । ललाट +
"संज्ञायां ललाटकुक्कुटौ पश्यति ।" ४ । ४ । ४६ ।
इति ठक् । दूरेस्थित्वा प्रभोर्ललाटं पश्यति न तु कार्य्येषूपतिष्ठते इत्यर्थः ।) प्रभोर्भालदर्शी ॥ कार्य्याक्षमः । इत्यमरः ॥ यः सेवकः क्रोधप्रसादचिह्नज्ञानाय प्रभोर्ललाटमेव पश्यति । यश्च प्रभोः कार्य्येऽक्षमोऽशक्तस्तौ लालाटिकौ पूर्ब्बवत् ष्णिकः । केचित्तु कार्य्याक्षम इति भालदर्शिन एव विशेषणमुक्त्वा एकमेव लालाटिकमाहुर्न तु द्वाविति । भावदर्शीति च पाठः
लालाटिकः सदालस्ये प्रभुभावनिदर्शिनि । इत्यजयः ॥ इति तट्टीकायां भरतः ॥ आश्लेषणविशेषे, पुं, । इति मेदिनी । के, २२१ ॥ ललाटसम्बन्धिनि, त्रि । यथा । प्राप्तिस्तु लालाटिकीत्यादि ॥

|  |  |  |
| --- | --- | --- |
|  |  | **लालामेहः**, पुं, (लालावत् मेहतीति । मिह + अच् ।) प्रमेहविशेषः । यथा, --<br>“लालातन्तुयुतं मूत्रं लालामेहेन पिच्छिलम् ।”<br>प्रमेहतीति शेषः । अस्यौषधम् ।<br>“गुडूच्याः स्वरसः पेयो मधुना सर्व्वमेहजित् । |

हरिद्राचूर्णयुक्तो वा रसो धात्र्याः समा-
क्षिकः ॥”
अपि च ।
“चन्द्रप्रभा वचा मुस्ता भूनिम्बं सुरदारु च
।
हरिद्रातिविषा दार्व्वी पिप्पलीमूलचित्रकम्
॥
तृवृद्दन्तीपत्रकञ्च त्वगेला वंशलोचना ।
प्रत्येकं कर्षमात्राणि कुर्य्यादेतानि
बुद्धिमान् ॥
धान्यकं त्रिफला चव्यं विडङ्गं गजपिप्पली
।
सुवर्णमाक्षिकं व्योषं द्वौ क्षारौ लवणत्रयम्
॥
एतानि टङ्कमात्राणि संगृह्णीयात् पृथक्
पृथक् ।
द्विकर्षहतलोहं स्याच्चतुः कर्षा सिता
भवेत् ॥
शिलाजत्वष्टकर्षं स्यादष्टौ कर्षाश्च
गुग्गुलोः ।
विधिना योजितैरेतैः कर्त्तव्या गुटिका
शुभा ॥
चन्द्रप्रभातिविख्याता सर्व्वरोगप्रणाशिनी
।
निहन्ति विंशतिं मेहान् कृच्छ्रमष्टविधं तथा
॥”
इत्यादि भावप्रकाशः ॥
(तथास्य लक्षणान्तरम् ।
“तन्तुबद्धमिवालालं पिच्छिलं यः प्रमेहति
।
आलालमेहिनं विद्यात्तं नरं श्लेष्मकोपतः
॥”
इति चरके निदानस्थाने चतुर्थेऽध्याये ॥)

**लालायितः**, त्रि, लालाविशिष्टः । कातर इति
यावत् । लालाशब्दात् नमस्तपोवरिवः
कण्ड्वा-
दिभ्यः क्यः कृतौ इति
मुग्धबोधव्याकरणसूत्रेण
पाटीं सद्गणितस्य वच्मि चतुरप्रीतिप्रदां
प्रस्फुटां
संक्षिप्ताक्षरकोमलामलपदैर्लालित्यलीला-
वतीम् ॥”
इति लीलावती ॥

**ला(ब)वः**, पुं स्त्री, पक्षिविशेषः । लाओया इति
भाषा । इत्यमरभरतौ ॥ (यथा, सुश्रुते । ४ ।
८ ।
“ग्राम्यानुपोदकैर्म्मांसै र्लाबाद्यैर्व्वापि
विष्किरैः ॥”)
अस्य मांसगुणाः । लघुत्वम् । कटुत्वम् ।
मल-
बद्धकारित्वम् । स्वादुत्वम् । शीतत्वम् ।
त्रिदोष-
नाशित्वञ्च । इति राजवल्लभः ॥ (तथा च ।
“संग्राही दीपनश्चैव कषायो मधुरो लघुः ।
लावः कटुविपाकश्च सन्निपाते च पूजितः
॥”
इति सुश्रुते सूत्रस्थाने ४६ अध्यायः ॥)
(यथास्य गुणपर्य्यायौ ।
“लावा विष्किरवर्गेषु ते चतुर्धा मता बुधैः ।
पांशुलो गौरकोऽन्यस्तु पौण्ड्रकोदर्भरस्तथा
॥
लावा वह्निकराः स्निग्धा गरघ्ना ग्राहिका
हिताः ॥
पांशुलः श्लेष्मलस्तेषु
वीर्य्योष्णोऽनिलनाशनः ।
गौरो लघुतरो रूक्षो वह्निकारी त्रिदोषजित् ॥
पौण्ड्रकः पित्तकृत् किञ्चिल्लघुवातकफापहः
।
दर्भरोरक्तपित्तघ्नो हृदामयहरो हिमः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे
॥)

**ला(ब)वकः**, पुं, (लाव एव । स्वार्थे कन् ।) लाव-
पक्षी । तत्पर्य्यायः । लघुजङ्गलः २ । इति
त्रिकाण्डशेषः ॥ (तथास्य मांसगुणाः ।
“पक्षिणाञ्च महाश्रेष्ठो लावको जाङ्गलात्मकः
।
“लीलयैव सुतनोस्तुलयित्वा
गौरवाढ्यमपि लावणिकेन ॥”)
लवणपात्रे, क्ली । इति केचित् ॥

**लावण्यं**, क्ली, (लवण + ष्यञ् ।) लवणत्वम् ।
लवणस्य भाव इत्यर्थे ष्ण्यप्रत्ययेन
निष्पन्नम् ।
(लवणा त्विट् विद्यते यस्येति लवणः ।
अर्श-
आदिभ्योऽच् । तस्य भावः । दृढादित्वात्
ष्यञ् । यद्वा, लवणा त्विट् सैव ।
चतुर्वर्णादि-
त्वात् स्वार्थे ष्यञ् ।) सौन्दर्य्यविशेषः ।
तस्य
लक्षणं यथा, --
“मुक्ताफलेषु
च्छायायास्तरलत्वमिवान्तरा ।
प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥”
इत्युज्ज्वलनीलमणिः ॥
तथा हि ।
“नीतिर्भूमिभुजां नतिर्गुणवतां ह्रीरङ्गनानां
धृति-
र्दम्पत्योः शिशवो गृहस्य कविता बुद्धेः
प्रसादो
गिराम् ।
लावण्यं वपुषः स्मृतिस्तु मनसा
शान्तिर्द्विजस्य
क्षमा
शक्तस्य द्रविणं गृहाश्रमवतां स्वास्थ्यं
सतां
मण्डनम् ॥”
इति नवरत्नान्तर्गतामरसिंहः ॥
(शीलनैपुण्यादि । अस्य प्रमाणं
लावण्यार्जित-
शब्दे द्रष्टव्यम् ॥)

**लावण्यार्जितं**, क्ली, (लावण्येन अर्जितम् ।)
विवाह-
कालीनं श्वशुराभ्यां दत्तं धनम् । यथा, --

क्यप्रत्यये कृते क्तप्रत्ययान्निष्पन्नः । यथा
। अत्र
लालायितः फणी । इति
अनन्तदेवोक्तगणेश-
लिखितपाणिनिव्याकरणीयमहाभाष्यम्॥
अपि च ।
“परिखावलयच्छलेन या
न परेषां ग्रहणस्य गोचरः ।
फणिभाषितभाष्यफक्किका
विषमा कुण्डलनामवापिता ॥”
इति पूर्ब्बनैषधे २ सर्गः ॥
परिखेति । शत्रूणां ग्रहणगोचरो नेयमिति
कृत्वा परिखावलयव्याजेन या पुरी
कुण्डलनां
प्रापिता विधात्रेति शेषः । फणिना भाषिता
या महाभाष्यफक्किका तद्वद्विषमा सापि
परेषां
ज्ञानगोचरो नेयमिति कृत्वा अत्र
लालायितः
फणीत्येवं कुण्डलनां प्रापिता पण्डितैरिति
शेषः । इति भवदत्तकृततट्टीका ॥

**लालाविषः**, पुं, (लालायां विषं यस्य ।) लूतादिः ।

इति हेमचन्द्रः । ४ । ३७९ ॥

**लालास्रावः**, पुं, (लालां स्रावयतीति । स्रु + णिच्

+ अण् ।) ऊर्णनाभः । इति हेमचन्द्रः ॥
(लालाक्षारके, त्रि । यथा, सुश्रुते । २ ।
१६ ।
“ललास्रावी स विज्ञेयः कण्डूमान् शौषिरो
गदः ॥”)

**लालिकः**, पुं, महिषः । इति हेमचन्द्रः । ४ । ३४९ ॥

**लालित्यं**, क्ली, (ललित + ष्यञ् ।) ललितस्य भावः ।

यथा, --
“प्रीतिं भक्तजनस्य यो जनयते विघ्नं
विनिघ्नन्
स्मृत-
स्तं वृन्दारकवृन्दवन्दितपदं नत्वा
मतङ्गाननम् ।
मंग्राही दीपनः प्रोक्तः कषायो मधुरो लघुः ।
तथा विपाके मधुरः सन्निपातेऽतिपूजितः
॥”
इति हारीते प्रथमे स्थाने एकादशेऽध्याये ॥
यथा, सुश्रुते । ४ । ३९ ।
“विरिक्तवान्तैर्हरिणैणलावकाः
शशश्च सेव्यः समयूरतित्तिरिः ॥”
लुनातीति । लू + ण्वुल् । छेदकः । यथा,
मार्क-
ण्डेये । ४६ । १६ ।
“यथा प्रागव्यापकः क्षेत्री पालको लावक-
स्तथा ॥”)

**लावणं**, त्रि, (लवण + अण् ।) लवणेन संस्कृतम् ।

यथा, --
“सार्पिष्कं दाधिकं सर्पिर्दधिभ्यां संस्कृतं
क्रमात् ।
लवणोदकाभ्यामुदकं लाषणिकमुदश्विति ।
औदश्वितमौदश्वित्कं लवणे स्यात्तु
लावणम् ॥”
इति हेमचन्द्रः ॥
लवणसम्बन्धि च । (यथा, हरिवंशे । ५३ ।
२० ।
“स मां परिभवन्नेव स्वां वेलां समुपाक्रमन् ।
क्लेदयामास चपलैर्लावणैरम्बुविस्रवैः ॥”)
नस्ये, क्ली । इति रत्नमाला ॥

**लावणिकं**, त्रि, (लवण + ठञ् ।) लवणेन संस्कृ-

तम् । इति हेमचन्द्रः ॥ लवणसम्बन्धि च ।
लबणविक्रेतरि, पुं । (यथा, माघे । १० ।
३८ ।
“प्रीत्या दत्तञ्च यत्किञ्चित् श्वश्वा वा
श्वशुरेण
वा ।
पादवन्दनिकं यत्तल्लावण्यार्जितमुच्यते
॥”
इति
विवादचिन्तामणिधृतकात्यायनवचनम्॥
लावण्यं शीलनैपुण्यादि । तथा च
पादप्रणतायै
शीलादिमत्यै वा स्त्रियै श्वशुरादिना दत्तं
तृतीयं स्त्रीधनमित्यर्थः । इति
तद्व्याख्यानम् ॥

**लावा**, स्त्री, (लाव + टाप् ।) पक्षिविशेषः । तत्-

पर्य्यायः । लावकः २ लावः ३ लवः ४ ।
अस्या
मांसगुणाः । पथ्यत्वम् । ग्राहित्वम् ।
लघुत्वञ्च ।
इति राजनिर्घण्टः ॥

**लावुः**, स्त्री, अलावुः । इति शब्दरत्नावली ॥

**लावूः**, स्त्री, अलावुः । इति शब्दरत्नावली ॥

**लासः**, पुं, (लस् + घञ् ।) नृत्यमात्रम् । स्त्रीणां

नृत्यम् । इति शब्दरत्नावली ॥ (यथा,
ऋतु-
संहारे । ६ । ३१ ।
“मदनजनितलासैर्दृष्टिपातैर्म्मुनीन्द्रान्
स्तनभरनतनार्य्यः कामयन्ति प्रशान्तान्
॥”)
यूषः । इति शब्दचन्द्रिका ॥

**लासकं**, क्ली, (लसतीति । लस + ण्वुल् ।) मट्टकम् ।

इति हारावली ॥ मट्का इति भाषा ॥
लासकः, पुं, (लसतीति । लस + ण्वुल् ।)
लास्य-
कारी । मयूरः । लसकः । इति मेदिनी ।
के, ॥
वेष्टः । इति धरणिः ॥ (दीप्तिकारकः ।
यथा,
ऋतुसंहारे । २ । २६ ।

"नवजलकणसेकाच्छीततामादधानः
कुसुमभरनतानां लासकः पादपानाम् ॥")

**लासकी**, स्त्री, नर्त्तकी । इत्यमरः ॥

**लासिका**, स्त्री, (लासोऽस्त्यस्या इति । लास +
ठन् ।) नर्त्तकी । इत्यमरः ॥

**लास्फोटनी**, स्त्री, आस्फोटनी । वेधनिका ।
इत्यमरटीकायां रायमुकुटः ॥

**लास्यं**, क्ली, (लस् + "ऋहलोर्ण्यत् ।" ३ । १ । १२४ ।
इति ण्यत् ।) नृत्यम् । इत्यमरः ॥ तौर्य्यत्रिकम् ।
इति मेदिनी ॥ भावाश्रयं नृत्यम् ।
माललयाश्रयं
नृत्यम् । इति भरतः ॥
"पुंनृत्यं ताण्डवं प्राहुः स्त्रीनृत्यं लास्यमुच्यते ।"
इति सङ्गीतनारायणे नारदसंहिता ॥
(यथा, महाभारते । १ । ९८ । १० ।
"सम्भोगस्नेहचातुर्य्यैर्हावलास्यमनोहरैः ।
राजानं रमयामास तथा रेमे तथैव सः ॥")

**लास्यः**, पुं, (लास्यमस्त्यस्येति । लास्य + अच् ।)
नर्त्तकः । इति शब्दरत्नावली ॥

**लास्यकं**, क्ली, (लास्यमेव । स्वार्थे कन् ।) नृत्यम् ।
इति शब्दरत्नावली ॥

**लास्या**, स्त्री, (लास्यमस्त्यस्या इति । लास्य +
अच् । टाप् ।) नर्त्तकी । इति शब्दरत्नावली ॥

**लिकुचं**, क्ली, (लक्यते आस्वोद्यते इति । लक् +
बाहुलकात् उचः । पृषोदरादित्वात् इत्वम् ।)
चुक्रम् । इति राजनिर्घण्टः ॥ (डहुः । अस्य
गुणा यथा, --
"पित्तश्लेष्मप्रकोपीणि कर्कन्धुलिकुचान्यपि ॥"
इति चरके सूत्रस्थाने २७ अध्याये ॥)

**लिकुचः**, पुं, लकुचः । इत्यमरः ॥

**लिक्का**, स्त्री, लिक्षा । इति शब्दरत्नावली ॥

**लिखः**, त्रि, (लिखतीति । लेख + "इगुपधज्ञेति ।"
३ । १ । १३५ । इति कः ।) लेखकः
। इति
लिखधातोः कप्रत्ययेन निष्पन्नम् ॥

**लिखनं**, क्ली, लेखनम् । लिपिः ।
इत्यमरटीकायां
सारसुन्दरी ॥ (यथा, मार्कण्डेये । ५१
। २२ ।
"प्रसिद्धमन्त्रलिखनात्
शस्तमाल्यादिधारणात्।
विशुद्धगेहावसथादनायासाच्चवै
द्विज ! ॥")
विधिलिपिरखण्डनीया यथा, --
"यस्य यल्लिखनं पूर्व्वं यत्र काले
निरूपितम् ।
तदेव खण्डितुं राधे क्षन्ये नाहञ्च को
विधिः ॥
विधातुश्च विधाताहं येषां यल्लिखनं
कृतम् ।
ब्रह्मादीनाञ्च क्षुद्राणां न तत् खण्ड्यं
कदाचन ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १५
अध्यायः ॥

**लिखितं**, क्ली, (लिख + भावे क्तः ।) लिपिः ।
इत्यमरः ॥ लेखनम् । इति भरतः ॥
(लिख +
कर्म्मणि क्तः ।) लिखितपत्रादौ, त्रि ।
यथा, --
"प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति
कीर्त्तितम् ॥"
इति मिताक्षरायां याज्ञवल्क्यः ॥
मुनिविशेषे, पुं । यथा, श्राद्धतत्त्वे
याज्ञवल्क्यः ॥
"पराशरव्यासशङ्खलिखितादक्षगोतमौ
।
शातातंपो वशिष्ठश्च
धर्म्मशास्त्रप्रयोजकाः ॥"

सावयबं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्
॥"
विशेषस्तु तत्र द्रष्टव्यः ।) शिवमूर्त्तिविशेषः
। इति
मेदिनी । गे, २३ ॥ व्याप्यम् । व्यक्तम् ।
पुंस्त्वादिः ।
इति त्रिकाण्डशेषः ॥ (यथा, मनुः । ५ ।
१३६ ।
"एका लिङ्गे गुदे तिस्रस्तथैकत्र करे दश ।
उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता
॥")
सामर्थ्यम् । यथा, --
"यावतामेव धातूनां लिङ्गं रूढिगतं भवेत् ।
अर्थश्चैवाभिधेयस्तु तावद्भिर्गुणविग्रहः ॥"
इति तिथ्यादितत्त्वे एतत्कारिकाव्याख्यायां
रघु-
नन्दनः ॥ * ॥ अथ शेफार्थस्य लिङ्गस्य
पर्य्यायः ।
शिश्नः २ स्वरस्तम्भः ३ उपस्थः ४
मदनाङ्कुशः ५
कन्दर्पमुषलः ६ शेफः ७ मेहनम् ८ शेफः
[स] ९
मेढ्रः १० लांगुः ११ ध्वजः ११ रागलता
१३
व्यङ्गः १४ । इति शब्दरत्नावली ॥
लाङ्गूलम् १५
साधनम् १६ सेफः १७ कामाङ्कुशः १८ ।
इति
जटाधरः ॥ * ॥ लिङ्गमूले
वादिलान्तवर्णयुक्त-
स्वाधिष्ठाननामकषड्दलपद्ममस्ति ।
यथा, --
"मूलाधारे त्रिकोणाख्ये
इच्छाज्ञानक्रियात्मके ।
मध्ये स्वयम्भूलिङ्गन्तु कोटिसूर्य्यसमप्रभम्
॥
तद्वाद्ये हेमवर्णाभं व स वर्णचतुर्दलम् ।
तदूर्द्ध्वेऽग्निसमप्रख्यं षड्दलं हीरकप्रभम्
॥

**लिक्षा**, क्ली, (लिशगतौ + बाहुलकात् सः । सच

कित् । इत्युणादिवृत्तौ उज्ज्वलः । ३ । ६६ ।) यूकाण्डम् । इत्यमरः ॥ लिकि इति भाषा । इत्यमरभरतौ ॥ तत्पर्य्यायः । लिक्का २ लीक्षा ३
लीक्का ४ लिक्षिका ५ । इति शब्दरत्नावली ॥
(यथा, --
"बहुपादाश्च सूक्ष्माश्च यूका लिक्षाश्च नामतः ॥"
इति वाभटे निदानस्थाने चतुर्द्दशेऽध्याये ॥)
परिमाणविशेषः । यथा, --
"जालान्तरगते भानौ यच्चाणुर्दृश्यते रजः ।
तैश्चतुर्भिर्भवेल्लिक्षा लिक्षाषड्भिश्च सर्षपः ॥"
इति शब्दचन्द्रिका ॥
सयकारकवर्गद्बितीयवतीत्यपि पाठः ॥

**लिख**, इ सृपि । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) इ, लिङ्ख्यते । सृपि गतौ ।
इति दुर्गादासः ॥

**लिख**, श लेखने । इति कविकल्पद्रुमः ॥ (तुदा०-

पर०-सक०-सेट् ।) श, लिखति पुस्तकं लेखकः ।
अयं विभाषया कुटादिरिति केचित् । तेन लिखितं विश्वसृजोऽपि शक्तिहानिरिति ।
लिखितव्यं लेखितव्यं लिखनं इत्यादि सिद्धम् ।
इति दुर्गादासः ॥

**लिख्या**, स्त्री, परिमाणविशेषः । यथा, --

"जालान्तरगते भानौ यच्चाणुर्दृश्यते रजः ।
तैश्चतुर्भिर्भवेल्लिख्या लिख्याषड्भिश्च सर्षपः ॥"
इति शब्दचन्द्रिका ॥

**लिग**, इ गतौ । इति कविकल्कद्रुमः ॥ (भ्वा०-पर०-

सक०-सेट् ।) इ, लिङ्ग्यते । इति दुर्गादासः ॥

**लिग**, इ क चित्रे । इति कविकल्पद्रुमः ॥ (चुरा०-

पर०-सक०-सेट् ।) इ क, लिङ्गयति शब्दं
स्त्रीनपुंसकैः शाब्दिकः चित्रं करोतीत्यर्थः ।
इति दुर्गादासः ॥

**लिगु**, क्ली, (लिङ्गति विषयात् विषयान्तरं गच्छ-

तीति । लिग +
"खरुशंकुपीयुनीलङ्गुलिगु ।"
उणा० १ । ३७ । इति कुप्रत्ययेन साधु ।) मनः ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

**लिगुः**, पुं, (लिग + कुः ।) मूर्खः । इति सिद्धान्त-

कौमुद्यामुणादिवृत्तिः ॥ भूप्रदेशः । मृगः ।
इति नानार्थरत्नमाला ॥

**लिङ्गं**, क्ली, (लिङ्ग्यते अनेन इति । लिङ्ग + घञ् ।

अभिधानात् क्लीवलिङ्गत्वम् ।) चिह्नम् । (यथा,
महाभारते । १ । २ । १२ ।
"येन लिङ्गेन यो देशो युक्तः समुपलक्ष्यते ।
तेनैव नाम्ना तं देशं वाच्यमाहुर्मनीषिणः ॥")
शेफः । इत्यमरः ॥ अनुमानम् । साङ्ख्योक्त-
वादिलान्तषड्वर्णेन युक्तञ्चाधिष्ठानसंज्ञकम् ।
स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदुः ॥"
इति तन्त्रम् ॥ * ॥
अस्याधिष्ठातृद्बेवतादिर्यथा ।
"प्रजनः सर्व्वभूतानामुपस्थोऽध्यात्ममुच्यते।
अधिभूतं तथा शुक्रं दैवतञ्च प्रजापतिः ॥"
इति महाभारते आश्वमेधिकपर्व्व ॥ * ॥
अस्य शुभाशुभलक्षणं यथा, --
"स्वल्पे लिङ्गे च धनवान् स्याच्च पुत्त्रादि-वर्ज्जितः ।
स्थूललिङ्गो दरिद्रः स्याद्दःख्येकवृषणी भवेत् ॥"
इति गारुडे ६३ अध्यायः ॥ * ॥
अपि च ।
"महद्भिरायुराख्यातं ह्यल्पलिङ्गो धनी नरः ।
अपत्यरहितश्चैव स्थूललिङ्गो धनोज्झितः ॥"
महद्भिर्जानुभिरिति शेषः ।
"मेढ्रे वामनते चैव सुतान्नरहितो भवेत् ।
वक्रेऽन्यथापुत्त्रवान् स्यात् दारिद्र्यं विनते त्वधः ॥
अल्पे तु तनयो लिङ्गे शिरालेऽथ सुखी नरः ।
स्थूलग्रन्थियुते लिङ्गे भवेत् पुत्त्रादिसंयुतः ॥"
इति गारुडे ६६ अध्यायः ॥
अन्यच्च ।
"दीर्घलिङ्गेन दारिद्र्यं स्थूललिङ्गेन निर्द्धनः ।
कृशलिङ्गेन सौभाग्यं ह्रस्वलिङ्गेन भूपतिः ॥
कर्कशैः कठिनैर्लिङ्गैः परदाररतः सदा ।
रमते च सदा दासीं निर्द्धनो भवति ध्रुवम् ॥
कृशलिङ्गेन सूक्ष्मेण रक्तलिङ्गेन भूपतिः ।
परस्त्रीं रमते नित्यं नारीणां वल्लभो भवेत् ॥
कृशलिङ्गेन रक्तेन लभते चोत्तमाङ्गनाम् ।

| | | |
|---|---|---|
| | प्रकृतिः । (यथा, सांख्यकारिकायाम्। ५५ ।<br>“तत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः<br>पुरुषः ।<br>लिङ्गस्याविनिवृत्तेस्तस्माद्दुःखं स्वभावेन ॥”<br>प्रकृतिकार्य्यं विकृतिश्च । यथा, तत्रैव । १० ।<br>“हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं<br>लिङ्गम् । | |

राज्यं सुखञ्च दिव्याङ्ग्याः
कन्यकायाः पति-
र्भवेत् ॥”
इति सामुद्रकम् ॥
शिवस्य लिङ्गरूपस्य
तन्निर्माल्याग्राह्यत्वस्य च
कारणं यथा, --
दिलीप उवाच ।
“वेद्मि स्माहं द्विजश्रेष्ठ !
रुद्रस्त्रिपुरहन्तकः ।
कस्माद्विगर्हितं रूपं प्राप्तवान् सह
भार्य्यया ॥
योनिलिङ्गस्वरूपञ्च कथं स्यात्
सुमहात्मनः ।
पञ्चवक्त्रश्चतुर्बाहुः
शूलपाणिस्त्रिलोचनः ॥
कथं विगर्हितं रूपं प्राप्तवान्
द्विजपुङ्गव ! ।
एवं सर्व्वं समाचक्ष्व मित्रावरुणनन्दन
॥
श्रीवशिष्ठ उवाच ।
शृणु राजन् प्रवक्ष्यामि यन्मां पृच्छसि
गौरवात् ।
स्वायम्भुवो मनुः पूर्व्वं मन्दरे
पर्व्वतोत्तमे ॥
इयाज मुनिभिः सार्द्धं
दीर्घसत्रमनुत्तमम् ।
तस्मिन् समागताः सर्व्वे मुनयः
शंसितव्रताः ॥
अन्वेष्टुं देवतातत्त्वं मिथः
प्रोचुस्तपोधनाः ।
विप्राणावेदविदुषां कः पूज्यो
देवतावरः ॥
इति तस्य वचः श्रुत्वा सर्व्व एव
महर्षयः ।
भृगुं तपोनिधिं विप्रं प्रोचुः
प्राञ्जलयस्तदा ॥
ऋषय ऊचुः ।

रुद्रभक्ताश्च ये लोके भस्मलिङ्गास्थिधारिणः ।
ते पाषण्डत्वमापन्ना वेदवाह्या भवन्ति वै ॥
एवं शप्त्वा मुनिस्तत्र रुद्रं त्रिपुरहन्तकम् ।
जगाम ब्रह्मलोकं वै सर्व्वलोकनमस्कृतम् ॥”
इति पाद्मोत्तरखण्डीयाष्टसप्ततितमाध्यायात्
सङ्कलितम् ॥ * ॥ शिवलिङ्गस्य पूजाधारत्वं
यथा,
“पूजास्थानानि वक्ष्यामि यस्मिन् सान्निध्यतां
व्रजेत् ।
लिङ्गस्थां पूजयेद्देवीं स्थण्डिलस्थां तथैव च ।
पुस्तकस्थां महादेवीं पादुके प्रतिमासु च ॥
तल्लिङ्गमाश्रयेन्मन्त्री शुक्राद्यैर्यत् प्रतिष्ठितम् ।
कचाद्यैर्यत् कृतं लिङ्गं वर्ज्जनीयन्तु साधकैः ॥
अल्पसौख्यप्रदं प्रोक्तं वेदमन्त्रैः प्रतिष्ठितम् ।
साविकारन्तु सल्लिङ्गं भुक्तभोगं तथेव च ।
ज्ञातव्यं साधकेन्द्रेण सिद्धिदञ्चाप्यसिद्धिदम् ॥
देव्युवाच ।
साविकारन्तु यल्लिङ्गं मन्त्रहीनं प्रतिष्ठितम् ।
निर्व्वर्त्तितविकारञ्च अस्वयम्भु स्वयम्भवम् ॥
कुर्व्वन्ति भक्तिवात्सल्यं लोकानां
वासनात्मकम् ।
दुर्व्विज्ञेयमिदं ज्ञानं योगिनामप्यगोचरम् ॥
मर्त्यैर्जडधियैर्नाथ कथं विज्ञायते विभो ॥
ईश्वर उवाच ।
साधु साधु महादेवि ! रहस्यमिदमुत्तमम् ।
यत्त्वया चोदितं भद्रे ! तत्तथैव न चान्यथा ॥
दुर्व्विज्ञेयं सुरैश्चापि किं पुनर्मनुजन्तुभिः ।
आधिष्ठ्य साधकः क्षेत्रं हृदयानन्दकारकम् ॥
इन्द्रियाणाञ्च औत्सुक्यं ददामि लिङ्गदर्शने ।
सेव्यमानं ततो लिङ्गं नित्यमानन्ददायकम् ॥
सुस्वप्नान् पश्यते नित्यं विमानस्थां वराङ्गनाम्
।
भैरवं पश्यते नित्यं क्रीडन्तं मातृमण्डले ॥
उमामहेश्वरञ्चापि स्वप्ने पश्यति साधकः ।
अनिवर्त्तिताधिकारं लिङ्गं त्रिभुवनेश्वरि ! ।
आक्रमन्ति महाविघ्नाः सदैत्या राक्षसादयः ॥
शून्यागारं यथा देवि ! आक्रमन्ति नराः प्रिये ।
अनर्च्चितन्तु भुञ्जन्ति तथा लिङ्गन्तु कल्पना ॥
प्रेतं यथा सुराध्यक्षे आक्रमन्ति पिशाचकाः ।

अथ याम्यलिङ्गलक्षणम् ।
“दण्डाकारं भवेद्याम्यमथवा रसनाकृति ।
यद्यदुक्तं सह तेर्न निर्न्निक्तं ज्ञायते तदा ।
निषिक्तं निधनं तेन क्रियते स्थापितेन तु
॥” * ॥
अथ नैरृतलिङ्गलक्षणम् ।
“राक्षसं खड्गसदृशं ज्ञानयोगफलप्रदम् ।
कर्करादिप्रलिप्तन्तु कुण्ठकुक्षियुतं तथा ।
राक्षसं निष्कृते लिङ्गं गार्हस्थे न सुखप्रदम्
॥”
अथ वारुणलिङ्गलक्षणम् ।
“वारुणं वर्त्तुलाकारं पाशाङ्कं
चालिवर्च्चसम् ।
वृद्धिर्मुखादेः ह्रस्वत्वं संभोगाप्तन्तु मध्यगे
॥”
अथ वायुलिङ्गलक्षणम् ।
“कृष्णं धूम्रं न वारुच्यं ध्वजाभं
ध्वजमूषलम् ।
मस्तके स्थापितं तस्य
न्यूनन्यूनमितस्ततः ॥” * ॥
अथ कुबेरलिङ्गलक्षणम् ।
“तूणपाशगदाकारं गुह्यकेशस्य मध्यगम् ।”
अथ रौद्रलिङ्गलक्षणम् ।
“दिनं वाप्यथवा रात्रिं सशोणं रविवर्च्चसम्
।
अस्थिशूलाङ्कितं रौद्रं हेमकुण्डलवर्च्चसम्
॥”
अथ वैष्णवलिङ्गलक्षणम् ।
“चतुर्व्वर्णमयं वापि वैष्णवं ज्ञायतेऽग्रतः ।
वैष्णवं शङ्खचक्राङ्कगदाब्जादिविभूषितम् ॥
श्रीवत्सं कौस्तुभाङ्कञ्च
सर्व्वसिंहासनाङ्कितम् ।
वैनतेयसमाङ्कं वा तथा विष्णुपदाङ्कितम् ॥
वैष्णवं नाम तत् प्रोक्तं सर्व्वैश्वर्य्यफलप्रदम्
।
शालग्रामादिसंस्थन्तु शशाङ्कं श्रीविवर्द्धनम्
॥
पद्माङ्कं स्वस्तिकाङ्कं वा श्रीवत्साङ्कं
विभूतये ॥”

अस्माकं संशयं छेत्तुं समर्थोऽसि शुभव्रत ।
ब्रह्मविष्णुमहेशानामन्तिकं व्रज सुव्रत ॥
गत्वा तेषां समीपन्तु तथा दृष्ट्वा च विग्रहान् ।
शुद्धसत्त्वगुणस्तेषां यस्मिन् संविद्यते मुने ! ॥
स एव पूज्यो विप्राणां नेतरस्तु कदाचन ।
तस्मात् त्वं हि मुनिश्रेष्ठ विबुधानां निरासनम् ॥
क्षिप्रं कुरु मुनिश्रेष्ठ सर्व्वलोकहितं प्रभो ॥
एवमुक्तस्ततस्तूर्णं कैलासं मुनिसत्तमः ।
जगाम बामदेवेन यत्रास्ते वृषभध्वजः ॥
गृहद्वारमुपागम्य शङ्करस्य महात्मनः ।
शूलहस्तं महारौद्रं नन्दिं दृष्ट्वाब्रवीद्द्विजः ॥
संप्राप्तो हि भृगुर्विप्रो हरं द्रष्टुं सुरोत्तमम् ।
निवेदयस्व मां शीघ्रं शङ्कराय महात्मने ॥
तस्य तद्वचनं श्रुत्वा नन्दी सर्व्वगणेश्वरः ।
उवाच परुषं वाक्यं महर्षिममितौजसम् ॥
असान्निध्यः प्रभोस्तस्य देव्या क्रीडति शङ्करः ।
निवर्त्तस्व निवर्त्तस्व यदि जीवितुमिच्छसि ॥
एवं निराकृतस्तेन तत्रातिष्ठन्महातपाः ।
बहूनि दिवसान्यस्मिन् गृहद्वारे मुनीश्वरः ॥
ततः क्रोधसमाविष्टो भृगुः प्रोवाच शङ्करम् ।
विनष्टस्तमसारूढो मां न जानाति शङ्करः ॥

शून्यञ्च व्यङ्गलिङ्गन्तु आश्रयन्ति तथा प्रिये ॥”
इत्याद्ये देवीपुराणे नन्दाकुण्डप्रवेशाध्यायः ॥ * ॥
अथ लिङ्गलक्षणम् ।
तत्र बाणलिङ्गस्य लक्षणं यथा, --
“बाणलिङ्गं तथा ज्ञेयं भुक्तिमुक्तिप्रदायकम् ।
उत्पत्तिं बाणलिङ्गस्य लक्षणं शेषतः शृणु ॥
नर्म्मदादेविकायाश्च गङ्गायमुनयोस्तथा ।
सन्ति पुण्यनदीनाञ्च बाणलिङ्गानि यन्मुखे ॥
इन्द्रादिपूजितान्यत्र तच्चिह्नैर्विहितानि च ।
सदा सन्निहितस्तत्र शिवः सर्व्वार्थदायकः ॥
इन्द्रलिङ्गानि तान्याहुः साम्राज्यार्थप्रदानि च ॥”
अथाग्नेयलिङ्गलक्षणम् ।
“आरुणं हित्यकीलालमुष्णस्पर्शं करोत्यलम् ।
आग्नेयं तत् शक्तिनिभमथवा शक्तिलाञ्छितम् ॥
इदं लिङ्गवरं स्थाप्य तेजसाधिपतिर्भवेत् ॥” * ॥

इति वीरमित्रोदयधृतकालोत्तरः ॥ * ॥
नारद उवाच ।
“अथ वक्ष्यामि ते विप्र चिह्नमेकादशं परम् ।
श्रवणाद्यस्य पापानि नाशमायान्ति तत्-क्षणात् ॥
मधुपिङ्गलवर्णाभं कृष्णकुण्डलिकायुतम् ।
स्वयम्भुलिङ्गमाख्यातं सर्व्वसिद्धैर्निषेवितम् ॥
नानावर्णसमाकीण जटाशूलसमन्वितम् ।
मृत्युञ्जयाह्वयं लिङ्गं सुरासुरनमस्कृतम् ॥
दीर्घाकारं शुभ्रवर्णं कृष्णबिन्दुसमन्वितम् ।
बीलकण्ठं समाख्यातं लिङ्गं पूज्यं सुरासुरैः ॥
शुक्लाभं शुक्लकेशञ्च नेत्रत्रयसमन्वितम् ।
त्रिलोचनं महादेवं सर्व्वपापप्रणोदनम् ॥
ज्वलल्लिङ्गं जटाजूटं कृष्णाभं स्थूलविग्रहम् ।
कालाग्निरुद्रमाख्यातं सर्व्वसत्त्वैर्निषेवितम् ॥
मधुपिङ्गलवर्णाभं श्वेतयज्ञोपवीतिनम् ।
श्वेतपद्मसमासीनं चन्द्ररेखाविभूषितम् ॥
प्रलयास्त्रसमायुक्तं त्रिपुरारिसमाह्वयम् ।
शुभ्राभं पिङ्गलजटं मुण्डमालाधरं परम् ॥
त्रिशैलधरमीशानं लिङ्गं सर्व्वार्थसाधनम् ।
त्रिशूलडमरुधरं शुभ्ररक्तार्द्धभागतः ॥
अर्द्धनारीश्वराह्वानं सर्व्वदेवैरभिष्टुतम् ।
ईषद्रक्तमयं कान्तं स्थूलं लिङ्गं समुज्ज्वलम् ॥
महाकालं समाख्यातं धर्म्मकामार्थमोक्षदम् ।
एतत्तु कथितं तुभ्यं लिङ्गचिह्नं महेशितुः ।

| | | |
|---|---|---|
| नारीसङ्गमत्तोऽसौ<br>यस्मान्मामवमन्यते।<br>योनिलिङ्गस्वरूपं वै रूपं<br>तस्माद्भविष्यति॥<br>ब्राह्मणं मां न जानाति तमसा<br>चाप्युपागतः।<br>अब्रह्मण्यत्वमापन्नो न पूज्योऽसौ<br>द्विजन्मनाम्॥<br>तस्मान्न जलमन्नन्तु तस्मै दत्तं<br>हविस्तथा।<br>शिवस्यान्नं जलञ्चैव पत्रं पुष्पं<br>फलादिकम्॥<br>निर्म्माल्यमस्य चाग्राह्यं भविष्यति न<br>संशयः॥<br>एवं शप्त्वा महातेजाः शङ्करं<br>लोकपूजितम्।<br>उवाच गणमत्युग्रं नन्दिं शूलधरं नृप!<br>॥ | | |

एकेनैव कृतार्थः स्यात् बहुभिः किमु सुव्रत
॥”
इति हेमाद्रिधृतलक्षणकाण्डम् ॥ * ॥
“उत्क्राङ्कं श्रेयसे योज्यं शीर्षमन्त्रं विवर्ज्जयेत्
।
यमवर्णन्तु यल्लिङ्गं यमाङ्कं वा कमण्डलुम् ॥
दण्डाङ्कं सूत्रचिह्नं वा ब्रह्मज्ञानान्वितं मतम् ।
शशिवर्णं महाकालं नन्दीशं पद्मरागवत् ॥
पद्मरागनिभं सर्व्वं महाभं सिद्धपूजितम् ।
मौक्तिकाभं नीलनिभं रुद्रादित्यैः प्रपूजितम्
॥
वसुदैः सेन्द्रयक्षेशं गुह्यकैर्यातुधानकैः ।
नानावर्णमयं नीलं शशाङ्कमण्डलप्रभम् ॥”
इति वीरमित्रोदयधृतकालोत्तरः ॥
इति बाणलिङ्गलक्षणम् ॥ * ॥
अथ तस्य परीक्षा ।
“इत्येतल्लक्षणं प्रोक्तं परीक्षा तत्त्वकोविदैः ।
त्रिः सप्त पञ्च वारं वा तुलासाम्यं न जायते ।
तदा बाणं समाख्यातं शेषं पाषाणसम्भवम्
॥”
इति वीरमित्रोदयधृतम् ॥
तुलाकरणन्तु तण्डुलेन । अपरतुलादिषु
तण्डुला
यद्यधिकाः स्युस्तदा तल्लिङ्गं गृहिणां
पूज्यमव-
धार्य्यं लिङ्गञ्चेदधिकं
तदोदासीनपूज्यन्तदिति
किं वदन्तीति हेमाद्रिधृतलक्षणकाण्डम् ॥
“सप्तकृत्वस्तुलारूढं वृद्धिमेति न हीयते ।
बाणलिङ्गमिति ख्यातं शेषं नार्म्मदमुच्यते ॥
त्रिपञ्चवारं यस्यैव तुलासाम्यं न जायते ।
तदा बाणं समाख्यातं शेषं पाषाणसम्भवम्
॥”
इति सूतसंहिता ॥
“नद्यां वा प्रक्षिपेद्भूयाद्यदा तदुपलभ्यते ।
बाणलिङ्गं तदा विद्धि न्यूनं सुखविवर्द्धनम्
॥”
इति वीरमित्रोदयः ॥ * ॥
बाणशब्दव्युत्पत्तिरपि तत्रैव ।

तथा, --
“ताम्री वा स्फाटिकी स्वार्णी पाषाणी
राजती तथा ।
वेदिका च प्रकर्त्तव्या तत्र संस्थाप्य पूजयेत्
॥” * ॥
प्रत्यहं योऽर्च्चयेल्लिङ्गं नार्म्मदं भक्तिभावतः
।
ऐहिकं किं फलं तस्य मुक्तिस्तस्य करे
स्थिता ॥”
इति प्रत्यहबाणलिङ्गपूजायाः फलम् । इति
याज्ञवल्क्यसंहिता ॥ * ॥
“संस्थाप्य श्रीबाणलिङ्गं रत्नकोटिगुणं
भवेत् ।
रसलिङ्गे ततो बाणात् फलं कोटिगुणं
स्मृतम् ॥
गुणांस्तु रसलिङ्गस्य वक्तुं शक्नोति शङ्करी
।
सिद्धयो रसलिङ्गे स्युरणिमाद्याः
सुसंस्थिताः ॥”
इति सूतसंहिता ॥ * ॥
“रत्नधातुमयान्येव लिङ्गानि कथितान्यपि
।
पवित्राण्येव पूज्यानि सर्व्वकामप्रदानि च ॥
एतेषामपि सर्व्वेषां काश्मीरं हि विशिष्यते ।
काश्मीरादपि लिङ्गाच्च बाणलिङ्गं
विशिष्यते ॥
वाणलिङ्गात् परं नान्यत् पवित्रमिह दृश्यते
।
ऐहिकामुष्मिकं सर्व्वं पूजाकर्त्तुः प्रयच्छति
॥”
इति बाणलिङ्गप्रशंसा । इति केदारखण्डम्
॥ * ॥
निन्द्यलिङ्गमाह तत्रैव ।
“कर्कशे बाणलिङ्गे तु पुत्त्रदारक्षयो भवेत् ।
चिपिटे पूजिते तस्मिन् गृहभङ्गो भवेद्ध्रुवम्
॥
एकपार्श्वस्थिते धेनुपुत्त्रदारधनक्षयः ।
शिरसि स्फुटिते बाणे व्याधिर्म्मरणमेव च
॥

कामबांणान्वितं देवं संसारदहनक्षमम् ॥
शृङ्गारादिरसोल्लासं वाणाख्यं परमेश्वरम्
।
एवं ध्यात्वा बाणलिङ्गं यजेत्तं परमं शिवम्
॥
मनसा गन्धपुष्पाद्यैः संपूज्यास्य मनुं
स्मरेत् ।
प्राणायामं ततः कृत्वा वाणलिङ्गन्तु
तोषयेत् ॥
तदिष्टदेवयोरैक्यं विभाव्य वाग्भवं जपेत्
।
ततो जपं समाप्याथ स्तवेनानेन तोषयेत्
॥” * ॥
अथ स्तवः ।
“वाणलिङ्ग महाभाग संसारात्त्राहि मां
प्रभो
नमस्ते चोग्ररूपाय नमस्तेऽव्यक्तयोनये
॥
संसारकारिणे तुभ्यं नमस्ते
सूक्ष्मरूपधृक् ।
प्रमत्ताय महेन्द्राय कालरूपाय वै नमः ॥
दहनाय नमस्तुभ्यं नमस्ते योगकारिणे ।
भोगिनां भोगकर्त्रे च मोक्षदात्रे नमो नमः
॥
नमः कामाङ्गनाशाय नमः कल्मषहारिणे
।
नमो विश्वप्रदात्रे च नमो विश्वस्वरूपिणे
॥
वाणस्य वरदात्रे च रावणस्य क्षयाय च ।
रामस्यानुग्रहार्थाय राज्याय भरतस्य च
॥
मुनीनां योगदात्रे च राक्षसानां क्षयाय च ।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमो
नमः ॥
ऐं दाहिकाशक्तियुक्ताय महामायाप्रियाय
च ।
भगप्रियाय सर्व्वाय वैरिणां निग्रहाय च ॥
परित्राणाय योगिनां कौलिकानां प्रियाय
च ।

“अथ बाणं समाख्यातं यथा वक्ष्य तथादितः
।
बाणः सदाशिवो देवो बाणो वाणान्तरोऽपि
च ॥
तेन यस्मै कृतं तस्मात् बाणलिङ्गमुदाहृतम् ।
सदा सन्निहितस्तत्र शिवः सर्व्वार्थदायकः ॥
कृतप्रतिष्ठं तल्लिङ्गं बाणाख्येन शिवेन च ।
पङ्कजस्य फलाकारं कुण्डलस्य समाकृति ॥
भुक्तिमुक्तिप्रदञ्चैव बाणलिङ्गमुदाहृतम् ॥”
पङ्कजफलं पद्मबीजम् ।
“पक्वजम्बुफलाकारं कुक्कुटाण्डसमाकृति
।”
इति हेमाद्रिधृतलक्षणकाण्डे पाठः ॥ * ॥
देवीं प्रति शिववाक्यम् ।
“प्रशस्तं नार्म्मदं लिङ्गं पक्वजम्बुफलाकृति
।
मधुवर्णं तथा शुक्लं नीलं मरकतप्रभम् ॥
हंसडिम्बाकृति पुनः स्थापनायां प्रशश्यते ।
स्वयं संस्रवते लिङ्गं गिरितो नर्म्मदाजले ॥
पुरा बाणासुरेणाहं प्रार्थितो नर्म्मदातटे ।
आविरासं गिरौ तत्र लिङ्गरूपी महेश्वरः ।
बाणलिङ्गमपि ख्यातमतोऽर्थाज्जगतीतले ॥
अन्येषां कोटिलिङ्गानां पूजने यत् फलं
लभेत् ।
तत् फलं लभते मर्त्यो बाणलिङ्गैकपूजनात्
॥”

छिद्रलिङ्गेऽर्च्चिते बाणे विदेशगमनं भवेत् ।
लिङ्गे च कर्णिकां दृष्ट्वा व्याधिमान् जायते
पुमान् ।
अत्युन्नतिं विलाग्रे तु गोधनानां क्षयो भवेत्
॥ *
तीक्ष्णाग्रं वक्रशीर्षञ्च त्र्यस्रलिङ्गं विवर्जयेत्
।
अतिस्थूलञ्चातिकृशं स्वल्पं वा
भूषणान्वितम् ।
गृही विवर्ज्जयेत्तादृक् तद्धि मोक्षार्थिनो
हितम् ॥”
इति दुष्टबाणलिङ्गलक्षणम् । इति हेमाद्रिः
॥ * ॥
शुभलिङ्गमाह ।
“अर्थदं कपिलं लिङ्गं घनाभं मोक्षकाङ्क्षिणः
।
लघु वा कपिलं स्थूलं गृही नैवार्च्चयेत्
क्वचित् ॥
पूजितव्यं गृहस्थेन वर्णेन भ्रमरोपमम् ।
तत् सपीठमपीठं वा मन्त्रसंस्कारवर्जितम्
।
सिद्धिमुक्तिप्रदं लिङ्गं सर्व्वप्रासादपीठगम्
॥”
इति शुभवाणलिङ्गलक्षणम् । इति
वीरमित्रो-
दयः ॥ * ॥ वाणलिङ्गेष्वावाहनादि न
कर्त्तव्यं
यथा, --
“वाणलिङ्गानि राजेन्द्र ! स्थितानि
भुवनत्रये ।
न प्रतिष्ठा न संस्कारस्तेषामावाहनं न च
॥”
इति भविष्यपुराणम् ॥
“ब्राह्म्ये मुहूर्त्ते चोत्थाय यः
स्मरेद्वाणलिङ्गकम् ।
सर्व्वत्र जयमाप्नोति सत्यं सत्यं महेश्वर !
॥”
इति योगसारे ५ परिच्छेदः ॥ * ॥
अथ बाणलिङ्गध्यानम् ।
“ॐ प्रमत्तं शक्तिसंयुक्तं बाणाख्यञ्च महा-
प्रभम् ।

कुलाङ्गनानां भक्ताय कुलाचाररताय च ॥
कुलभक्ताय योगाय नमो नारायणाय च ।
मधुपानप्रमत्ताय योगेशाय नमो नमः ॥
कुलनिन्दाप्रणाशाय कौलिकानां सुखाय
च ।
कुलयोगाय निष्ठाय शुद्धाय परमात्मने ॥
परमात्मस्वरूपाय लिङ्गमूलात्मकाय च ।
सर्व्वेश्वराय सर्व्वाय शिवाय निर्गुणाय च
॥ * ॥
इत्येतत् परमं गुह्यं वाणलिङ्गस्य शङ्कर ।
यः पठेत् साधकश्रेष्ठो गाणपत्यं लभेत
सः ॥
स्तवस्यास्य प्रसादेन योगी
योगित्वमाप्नुयात् ।
राज्यार्थिनां भवेद्राज्यं भोगिनां भोग एव
च ॥
साधूनां साधनं देव कौलिकानां कुलं
भवेत् ।
यं यं कामयते मन्त्री तं तमाप्नोति
लीलया ॥
वाणलिङ्गप्रसादेन सर्व्वमाप्नोति सत्वरम्
।
किमन्यत् कथयामीह सर्व्वं वेत्सि
कुलेश्वर ! ॥
महाभये समुत्पन्ने राजद्वारे कुलेश्वर ! ।
देशान्तरभये प्राप्ते दस्युचौरादिसङ्कुले ।
पथनात् स्तवराजस्य न भयं लभते
क्वचित् ॥
बाणलिङ्गस्य माहात्म्यं संक्षेपात् कथितं
मया ।
तस्य श्रवणमात्रेण नरो मोक्षमवाप्नुयात्
॥
बाणलिङ्गं सदाराध्यं योगिनां योगसाधने
।
कौलिकानां कुलाचारे पशूनां शत्रुनिग्रहे
॥
वेदज्ञानां वेदपाठे रोगिणां रोगनाशने ।
यो यो नाराधयेदेनं सर्व्वं तन्निष्फलं
भवेत् ॥”
इति श्रीयोगसारे सर्व्वागमोत्तमे
पार्व्वतीशिव-

| | | |
|---|---|---|
| | | संवादे बाणलिङ्गस्तोत्रं समाप्तम् ॥ * ॥<br>अथ रौद्रलिङ्गलक्षणम् ।<br>“नदीसमुद्भवं रौद्रमन्योन्यस्य विघर्षणात्<br>। |

नदीवेगात् समं स्निग्धं संजातं रौद्रमुच्यते ॥”
इति वीरमित्रोदयः ॥
“सरित्प्रवाहसंस्थानं वाणलिङ्गसमाकृति ।
तदन्यदपि बोद्धव्यं रौद्रलिङ्गं सुखावहम् ॥
नदीसारनर्म्मदाया वाणलिङ्गसमाकृति ।
तदन्यदपि बोद्धव्यं लिङ्गं रौद्रं भविष्यति ॥
रौद्रलिङ्गं तथाख्यातं वाणलिङ्गसमाकृति ।
श्वेतं रक्तं तथा पीतं कृष्णं विप्रादिपूजितम् ॥
स्वभावात् कृष्णवर्णं वा सर्व्वजातिषु सिद्धिदम् ।
नर्म्मदासम्भवं रौद्रं वाणालङ्गवदीरितम् ॥”
इति रौद्रलिङ्गलक्षणम् । इति लक्षणसमुच्चयोऽपि ॥
अथ शिवनाभिलिङ्गलक्षणम् ।
“उत्तमं मध्यमधमं त्रिविधं लिङ्गमीरितम् ।
चतुरङ्गुलमुत्सेधे रम्यवेदिकमुत्तमम् ॥
उत्तमं लिङ्गमाख्यातं मुनिभिः शास्त्रकोविदैः ।
तदर्द्धं मध्यमं प्रोक्तं तदर्द्धमधमं स्मृतम् ॥”
तस्य महिमा ।
“शिवनाभिमयं लिङ्ग प्रतिपूज्य महषिभिः ।
श्रेष्ठञ्च सर्व्वलिङ्गभ्यस्तस्मात् पूज्यं विशेषतः ॥”
इति शिवनाभिलिङ्गलक्षणम् । इति वीरमित्रो-
दयधृतशिवनारदसंवादः ॥ * ॥
अथ दैवलिङ्गलक्षणम् । सिद्धान्तशेखरे ।

शङ्खाभमस्तकं लिङ्गं वैष्णवं तदुदाहृतम् ।
पद्माभमस्तकं ब्राह्म्यं छत्राभं शाक्रमुच्यते ॥
शिरोयुग्मं तदाग्नेयं त्रिपदं याम्यमीरितम् ।
खड्गाभं नैरृतं लिङ्गं वारुणं कलसाकृति ॥
वायव्यं ध्वजवल्लिङ्गं कौबेरन्तु गदान्वितम् ।
ईशानस्य त्रिशूलाभं लोकपालादिनिःसृतम् ।
सयम्भु लिङ्गमाख्यातं सर्व्वशास्त्रविशारदैः ॥”
इति स्वयम्भुलिङ्गलक्षणम् ॥
इति सिद्धान्तशेखरः ॥ * ॥
“दृष्ट्वा लिङ्गं महेशस्य स्वयम्भू तस्य पार्व्वति ! ।
सर्व्वपापविनिर्मुक्तः परे ब्रह्मणि लीयते ॥”
एतेषां पूजाफलं तत्रैव ।
“विशेषाच्छैलजं मुक्त्यै भुक्तये चानुषङ्गतः ।
पार्थिवं भुक्तये शस्तं मुक्तये चानुषङ्गतः ॥
एवं वै दारुजं ज्ञेयं चिह्नलिङ्गं तथा पुनः ।
स्थिरलक्ष्मीप्रदं ज्ञेयं हैमं राज्यप्रदञ्च तत् ॥
पुत्त्रवृद्धिकरं ताम्रं राङ्गमायुःप्रवर्द्धनम् ॥”
इति मत्स्यसूक्तमहातन्त्रम् ॥ * ॥
“पारदञ्च महाभूत्यै सौभाग्याय च मौक्तिकम् ।
चन्द्रकाभ्तं मृत्युजित् स्याद्धाटकं सर्व्वकामदम् ॥”
इति पद्मपुराणम् ॥ * ॥
“सर्व्वफलप्रदा भूमिर्म्मणयस्तद्वदेव हि ।
अनन्ताद्याः स्मृता ह्यष्टौ मणयो विद्युदुज्ज्वलाः ॥
रात्रौ प्रकाशकाः सर्व्वविषाद्याघातकारिणः ।
नानावर्णास्तु विज्ञेया रसैर्गन्धैश्च रूपतः ॥

अथ यवगोधूमशालिजलिङ्गम् ।
“कार्य्यं यष्टिक्रमं लिङ्गं यवगोधूमशालिजम् ।
श्रीकामः पुष्टिकामश्च पुत्त्रकामस्तदर्च्चयेत् ॥”
अथ सिताखण्डमयलिङ्गम् ।
“सिताखण्डमयं लिङ्गं कार्य्यमारोग्यवर्द्धनम् ।
वश्ये लवणजं लिङ्गं तालत्रिकटुकान्वितम् ॥”
तालं हरितालम् । त्रिकटुकं शुण्ठीपिप्पली-मरीचं इति प्रसिद्धम् ।
“गव्यघृतमयं लिङ्गं संपूज्य बुद्धिवर्द्धनम् ।”
तथा ।
“लवणेन च सौभाग्यं पार्थिवं सर्व्वकामदम् ।
कामदं तिलपिष्टोत्थं तुषोत्थं मारणे स्मृतम् ॥
भस्मोत्थं सर्व्वफलदं गुडोत्थं प्रीतिवर्द्धनम् ।
गन्धोत्थं गुणदं भूरि शर्करोत्थं सुखप्रदम् ॥
वंशाङ्कुरोत्थं वंशकरं गोमयं सर्व्वरोगदम् ।
केशास्थिसम्भवं लिङ्गं सर्व्वशत्रुविनाशनम् ॥
क्षोभणे मारणे पिष्टसम्भवं लिङ्गमुत्तमम् ।
दारिद्र्यदं द्रुमोद्भूतं पिष्टं सारस्वतप्रदम् ॥
दधिदुग्धोद्भवं लिङ्गं कीर्त्तिलक्ष्मीसुखप्रदम् ।
धान्यदं धान्यजं लिङ्गं फलोत्थं फलदं भवेत् ॥
पुष्पोत्थं दिव्यभोगायुर्मुक्त्यै धात्रीफलोद्भवम् ।
नवनीतोद्भवं लिङ्गं कीर्त्तिसौभाग्यवर्द्धनम् ॥
दूर्व्वाकाण्डसमुद्भूतमपमृत्युनिवारणम् ।
कर्पूरसम्भवं लिङ्गं चलं वै भुक्तिमुक्तिदम् ॥
अयस्कान्तं चतुर्धा तु ज्ञेयं सामान्यसिद्धिषु ॥
सर्व्वं नवभवं श्रेष्ठं तत्र वज्रमरिच्छिदि ।
यमलिङ्गं महाभूत्यै सौभाग्याय च मौक्तिकम् ।
पुष्टिमूलं महानीलं ज्योतिश्चीरसमुद्भवम् ॥
स्पर्शकं कुलसन्नत्यै तैजसं सूर्य्यकान्तजम् ।
चन्द्रापीडं मृत्युजितं स्फाटिकं सर्व्वकामदम् ॥”
चन्द्रापीडं चन्द्रकान्तमित्यर्थः ।
“शूलाख्यमणिजं शत्रुक्षयार्थं मौक्तिकं तथा ।”
यत्सन्निधानात् शूलरोगनाशः स शूलमणिः ॥
“आपुत्त्रं हीरकं ज्ञेयं रोगहृन्मौक्तिकोद्भवम् ।
शुभकृत् पुष्कलं तीर्थे वैदूर्य्यं शत्रुदर्पहृत् ।
नीलं लक्ष्मीप्रदं ज्ञेयं स्फाटिकं सर्व्वकामदम् ॥”
इति सारसंग्रहे ॥
“महाभुक्तिप्रदं हैमं राजतं भूतिवर्द्धनम् ।
आरकूटं तथा कांस्यं शृणु सामान्यमुक्तिदम् ॥”

“करसंपुटसंस्पर्शं शूलटङ्केन्दुभूषितम् ।
रेखाकोटरसंयुक्तं निम्नोन्नतसमन्वितम्
॥
दीर्घाकारञ्च यल्लिङ्गं ब्रह्मभागादिवर्जितम्
।
लिङ्गं गोलमिति प्रोक्तं गोलकं
प्रोच्यतेऽधुना ॥
कुष्माण्डस्य फलाकारं
नागरङ्गफलोपमम् ।
काकडिम्बफलाकारं
गोललिङ्गमितीरितम् ॥”
इति गोललिङ्गलक्षणम् ॥
अथार्षलिङ्गलक्षणं तत्रैव ।
“नानाकौलफलाकारं ब्रह्मसूत्रविवर्त्तनम्
।
मूले स्थूलञ्च यल्लिङ्गं
कपित्थफलसन्निभम् ॥
नालस्य वा फलाकारं मध्ये स्थूलञ्च
यद्भवेत् ।
मध्ये स्थूलं वरं लिङ्गमृषिबाणमुदाहृतम्
॥”
इत्यार्षलिङ्गलक्षणम् ॥ * ॥
अथ लिङ्गलक्षणम् ।
“लिङ्गं हि द्विविधं प्रोक्तं
कृत्रिमाकृत्रिमञ्चतत् ।
तल्लिङ्गं द्विविधं ज्ञेयमचलञ्च चलन्तथा
।
प्रत्येकं त्रिविधं ज्ञेयं लिङ्गं
तदुभयात्मकम् ॥
प्रासादे स्थापितं लिङ्गमचलं
तच्छिलादिजम् ।
स्थापितं सचलं गेहे स्थिरं
लिङ्गमयोजिते ॥
पञ्चधा तत् स्थितं लिङ्गं स्वयम्भु
दैवपालकम् ।
आर्षञ्च मानसं लिङ्गं तेषां लक्षणमुच्यते
॥”
इति सिद्धान्तशेखरः ॥
“आचार्य्यमुनये स्वैरं स्वयम्भूतो
महेश्वरः ।
वज्राद्याः स्फाटिकाद्याश्च
गुडान्नादिविनि-
र्म्मितम् ।
सर्व्वकामप्रदं पुंसां लिङ्गं तात्कालिकं
मतम् ॥”
इति वीरमित्रोदयधृतकालोत्तरः ॥ * ॥
“गान्धं सौभाग्यदं लिङ्गं पौष्पं
मुक्तिप्रदायकम् ।
नानाशूनोद्भवं लिङ्गं नानाकामप्रदायकम्
॥
सैकतं गुणदं लिङ्गं सौभाग्याय च
लावणम् ।
उच्चाटने तु पाशाप्तं मौलं शत्रुक्षयावहम् ।
तात्कालिकं दरिद्रश्च कृत्वा भक्त्या
समर्च्चयेत् ॥”
इति लक्षणसमुच्चयः ॥
अथ गन्धलिङ्गम् । गरुडपुराणे ।
“कस्तूरिकाया द्वौ भागौ
चत्वारश्चन्दनस्य च ।
कुङ्कुमस्य त्रयश्चैव शशिना च चतुः
समम् ॥
एतद्वै गन्धलिङ्गन्तु कृत्वा संपूज्य
भक्तितः ।
शिवसायुज्यमाप्नोति बन्धुभिः सहितो
नरः ॥”
पुष्पमयलिङ्गं यथा, --
“कार्य्यं पुष्पमयं लिङ्गं
हयगन्धसमन्वितम् ।
नवखण्डां धरां भुक्त्वा
गणेशोऽधिपतिर्भवेत् ॥”
अथ रजोमयलिङ्गम् ।
“रजोभिर्निर्म्मितं लिङ्गं यः पूजयति
भक्तितः ।
विद्याधरपदं प्राप्य पश्चाच्छिवसमो
भवेत् ॥”
अथ गोशकृल्लिङ्गम् ।
“श्रीकामो गोशकृल्लिङ्गं कृत्वा भक्त्यां
प्रपू-
जयेत् ।
स्वच्छेन कापिलेनैव गोमयेन प्रकल्पयेत्
॥”
आरकूटं पित्तलम् ।
“त्रपु सीसायसं लिङ्गं शत्रूणां नाशने हितम् ।
कीर्त्तिदं कांस्यजं लिङ्गं राजतं पुष्टिवर्द्धनम् ।
पैत्तलं भुक्तिमुक्त्यर्थं मिश्रजं सर्व्वसिद्धिदम् ॥”
मिश्रजमष्टधातुनिर्म्मितम् ॥ इति कालोत्तरः ॥
“पितृणां मुक्तये लिङ्गं पूज्यं रजतसम्भवम् ।
हैमजं सत्यलोकस्य प्राप्तये पूजयेत् पुमान् ॥
पूजयेत्ताम्रजं लिङ्गं पुष्टिकामो हि मानवः ॥”
इति शिवनारदसंवादः ॥
ताम्रादिलिङ्गपुजनन्तु कलीतरपरम् ।
“ताम्रलिङ्गं कलौ नार्च्चेत् रैत्यस्य सीसकस्य च
।
रक्तचन्दनलिङ्गञ्च शङ्खकांस्यायसं तथा ॥
तुष्टिकामस्तु सततं लिङ्गं पित्तलसम्भवम् ।

| | | |
|---|---|---|
| यत्र चैव स्वयं व्यक्तं लिङ्गमस्तु स्वयम्भु तत् ॥<br>धमनी यस्य संस्पर्शात् दहति क्षिप्रमेव तु ॥"<br>इति षट्कर्म्मदीपिका ॥ * ॥<br>"नानाच्छिद्रसुसंयुक्तं नानावर्णसमन्वितम् ।<br>अदष्टमूलं यल्लिङ्गं कर्कशं भुवि दृश्यते ॥<br>तल्लिङ्गन्तु स्वयम्भूतमपरं लक्षणच्युतम् ।<br>स्वयम्भु लिङ्गमित्युक्तं तच्च नानाविधं मतम् ॥ | स्वच्छेन भूमिपतनरहितेन ।<br>शून्योद्धृतेनेति<br>यावत् ॥ * ॥ | |

कीर्त्तिकामो यजेन्नित्यं लिङ्गं कांस्यसमुद्भवम् ॥
शत्रुमारणकामस्तु लिङ्गं लौहमयं सदा ।
सदा सीसमयं लिङ्गमायुष्कामोऽर्च्चयेत् नरः ॥”
इति मत्स्यसूक्तमहातन्त्रम् ॥
“स्थिरलक्ष्मीप्रदं हैमं राजतं चैव राज्यदम् ।
प्रजावृद्धिकरं राङ्गं ताम्रमायुःप्रवर्द्धनम् ॥
विद्वेषकारणं कांस्यं रीतिजं शत्रुनाशनम् ।
रोगघ्नं सैसकं लिङ्गमायसं शत्रुनाशनम् ॥
अष्टलौहमयं लिङ्गं कुष्ठरोगक्षयावहम् ।
त्रिलौहसम्भवं लिङ्गं विज्ञानं प्रति सिद्धिदम् ॥”
इति लक्षणसमुच्चयः ॥
“श्रीप्रदं वज्रजं लिङ्गं शिलाजं सर्व्वसिद्धिदम् ।
धातुजं धनदं साक्षाद्दारुजं भोगसिद्धिदम् ॥”
इति लिङ्गपुराणम् ॥
“गन्धपुष्पमयं लिङ्गं तथान्नादिविनिर्म्मितम् ।
कस्तूरीसम्भवं लिङ्गं धनाकाङ्क्षी प्रपूजयेत् ॥
लिङ्गं गोरोचनोत्थञ्च रूपकामस्तु पूजयेत् ।
कान्तिकामस्तु सततं लिङ्गं कुङ्कुमसम्भवम् ॥
श्वेतागुरुसमुद्भूतं महाबुद्धिविवर्द्धनम् ।
धारणाशक्तिदं लिङ्गं कृष्णागुरुसमुद्भवम् ॥
यक्षकर्दमसम्भू तम् ।” इति कालोत्तरः ॥
“पार्थिवे शिवपूजायां सर्व्वसिद्धियुतो भवेत् ।
पाषाणे शिवपूजायां द्विगुणं फलमीरितम् ॥
स्वर्णलिङ्गे च पूजायां शत्रूणां नाशनं मतम् ।
षोडशेनोपचारेण वेद्यान्तु पार्व्वतीं यजेत् ।
तस्मादुत्तोल्य तल्लिङ्गं गङ्गातोये दिनत्रयम् ।
ततो वेदोक्तविधिना संस्कारमाचरेत् सुधीः ॥”
पूर्व्वोक्तवचनैः फलविशेषकामनया नानाविध-
लिङ्गपूजोक्ता सा च पूजा ।
“लिङ्गं सुलक्षणं कुर्य्यात्त्यजेल्लिङ्गमलक्षणम् ।
दैर्घ्यहीने भवेद्व्याधिरधिके शत्रुवर्द्धनम् ॥
मानहीने विनाशः स्यादधिके च शिशुक्षयः ।
विस्तारे चाधिके हीने राष्ट्रनाशो भवेद्ध्रुवम् ॥
पीठहीने तु दारिद्र्यं शिरोहीने कुलक्षयः ।
ब्रह्मसूत्रविहीने च राज्ञां राष्ट्रञ्च नश्यति ।
तस्मात् सर्व्वप्रयत्नेन लिङ्गं कुर्य्यात् सुलक्षणम् ॥”
इत्यादिना सुलक्षणलिङ्गस्यैव फलदातृत्वमुक्तम् ।
इति मातृकाभेदतन्त्रे ७ पटलः ॥
देव्युवाच ।
“इन्द्रियै रहितो देवः शून्यरूपः सदाशिवः ।
आकारो नास्ति देवस्य किं तस्य पूजने फलम् ॥
शिव उवाच ।
प्रेते पूजा महेशानि कदाचिन्नास्ति पार्व्वती ।
रुद्रस्य परमेशानि रौद्री शक्तिरितीरिता ॥
रौद्री तु परमेशानि आद्या कुण्डलिनी भवेत् ।
वर्त्तते परमेशानि ब्रह्मविष्णुशिवात्मिका ॥
सार्द्धत्रिवलयाकारैः शिवं वेष्ट्य सदा स्थिता ।
शक्तिं विना महेशानि प्रेतत्वं तस्य निश्चितम् ॥
शक्तिसंयोगमात्रेण कर्म्मकर्त्ता सदाशिवः ।
अतएव महेशानि पूजयेच्छिवलिङ्गकम् ॥”
इति सशक्तिकशिवलिङ्गपूजनफलम् ॥
इति लिङ्गार्च्चनतन्त्रे २ पटलः ॥ * ॥
देव्युवाच ।
“लिङ्गप्रमाणं देवेश कथयस्व मयि प्रभो ।
पार्थिवे च शिलादौ च विशेषो यत्र यो भवेत् ॥
श्रीशिव उवाच ।
तथा ।
“शुक्लं हि पार्थिवं लिङ्गं निर्म्माय यस्तु पूजयेत् ।
स एव परमेशानि त्रिवर्गफलभाग्भवेत् ॥
क्षत्त्रियस्तु वरारोहे रक्तं निर्म्माय पार्थिवम् ।
पूजयेत् सततं यस्तु त्रिवर्गफलमाप्नुयात् ॥
हरितं पार्थिवं देवि ! निर्म्माय यस्तु पूजयेत् ।
स च वैश्यो महेशानि ! त्रिवर्गफलभाग्भवेत् ॥
कृष्णं हि पार्थिवं लिङ्गं निर्म्माय यस्तु पूजयेत् ।
स शूद्रः परमेशानि ! त्रिवर्गफलभाग्भवेत् ॥”
इति लिङ्गार्च्चनतन्त्रे ३ पटलः ॥ * ॥
“शिलादौ च महेशानि ! स्थूलञ्च फलदायकम् ।
अङ्गुष्ठमानं देवेशि ! यद्वा हेमाद्रिमानकम् ॥
क्रमेण देवदेवेशि ! फलं बहुविधं लभेत् ।
स्थूलात् स्थूलतरं लिङ्गं रुद्राक्षं परमेश्वरि ! ॥
पूजनाद्धारणाद्देवि ! फलं बहुविधं स्मृतम् ॥”
स्थूलात् स्थूलमिति पार्थिवलिङ्गेतरपरम् ।
मृत्तिकातोलकमिति विशेषवचनात् । शिला-
स्फाटिकमरकतादीनां पञ्चसूत्रीकरणमुक्तं यथा, --
“शिवलिङ्गस्य यन्मानं तन्मानं दक्षसव्ययोः ।
योन्यग्रमपि यन्मानं तदधोऽपि तथा भवेत् ॥”
इति लिङ्गपुराणम् ॥
“लिङ्गस्य यादृग्विस्तारः परिणाहोऽपि तादृशः ।

सर्व्वसिद्धीश्वरो रौप्ये फलं
तस्माच्चतुर्गुणम् ॥
ताम्रे पुष्टिं विजानीयात् कांस्ये च
धनसंक्षयः ।
गङ्गायाञ्च लक्षगुणं लाक्षायां रोगवान्
भवेत् ॥
स्फाटिके सर्व्वसिद्धिः स्यात्तथा मरकते
प्रिये ।
लौहलिङ्गे रिपोर्नाशः कामदं
भस्मलिङ्गकम् ।
बालुकायां काम्यसिद्धिर्गोमये रिपुहिंसनम्
।
सर्व्वलिङ्गस्य माहात्म्यं
धर्म्मकामार्थमोक्षदम् ॥"
इति मातृकाभेदतन्त्रे १२ पटलः ॥
"ब्रह्मा संपूजयेन्नित्यं लिङ्गं शैलमयं शुभम्
।
तस्य संपूजनात्तेन प्राप्तं ब्रह्मत्वमुत्तमम् ॥
इन्द्रनीलमयं लिङ्गं विष्णुः समर्च्चयेत्
सदा ।
विष्णुत्वं प्राप्तवान् तेन
सोऽभूद्भूतैकपालकः ॥
स्फाटिकं निर्म्मलं लिङ्गं वरुणोऽभ्यर्च्चयेत्
सदा ।
तेन तद्वरुणैत्वं हि प्राप्तं तेजोबलान्वितम्
॥"
इति षट्कर्म्मदीपिकाधृतशिवधर्म्मः ॥
"पूजयेत् पार्थिवे लिङ्गे
पाषाणलिङ्गकेऽथवा ।
स्वर्णलिङ्गेऽथवा देवि रौप्ये ताम्रे च
कांस्यके ॥
पारदे वाथ गङ्गायां स्फाटिके मरकतेऽपि
वा ।
कार्य्यभेदे लौहलिङ्गे
भस्मनिर्म्मितलिङ्गके ॥
बालुकानिर्म्मिते लिङ्गे गोमये वाथ
पूजयेत् ।
संस्कारेण विना देवि पाषाणादौ न
पूजयेत् ॥"
इति मातृकाभेदतन्त्रे ७ पटलः ॥

मृत्तिकातोलकं ग्राह्यमथवा तोलकद्वयम् ।
एतदन्यन्न कुर्व्वीत कदाचिदपि पार्व्वति ॥"
इति मातृकाभेदतन्त्रे ७ पटलः ॥
अपि च ।
"मृत्तिकातोलकं ग्राह्यमथवा तोलकद्वयम् ।
त्रिसूत्रस्य प्रमाणेन घटनं कारयेद्बुधः ॥
स्वाङ्गुष्ठपर्व्वमानन्तु कृत्वा लिङ्गं प्रपूजयेत् ।
मृदादिलिङ्गघटने प्रमाणं परिकीर्त्तितम् ।
फलमुक्तमवाप्नोति अन्यथा चेत्तदन्यथा ॥"
इति षट्कर्म्मदीपिकाधृतविश्वसारतन्त्रम्॥
"लिङ्गे वेद्यां तथा पीठे समसूत्रनिपातनात् ।
समञ्चैव विजानीयात्त्रिसूत्रीकरणन्त्विदम्॥"
इति कालोत्तरः ॥
मृत्तिकाभेदेन ब्राह्मणादीनां पूजाफलस्य प्रशस्तत्वं यथा, --
"चतुर्धा पार्थिवं लिङ्गं मृत्स्नाभेदेन पार्व्वति ।
शुक्लं रक्तं तथा पीतं कृष्णञ्च परमेश्वरि ॥
शुक्लन्तु ब्राह्मणे शस्तं क्षत्रिये रक्तमिष्यते ।
पीतन्तु वैश्यजातौ स्यात् कृष्णं शूद्रे प्रकीर्त्तितम् ॥"

लिङ्गस्य द्विगुणा देवी
योनिस्तदर्द्धसम्मिता ॥
कुर्व्वीताङ्गुष्ठतो ह्रस्वं न कदाचिदपि
क्वचित् ।
रत्नादिशिवनिर्म्माणे मानमिच्छावशाद्भवे
॥"
इति तन्त्रान्तरम् ॥
लिङ्गव्युत्पत्तिर्यथा, --
"आकाशं लिङ्गमित्याहुः पृथिवी तस्य
पीठिका ।
आलयः सर्व्वदेवानां लयनाल्लिङ्गमुच्यते
॥"
इति स्कन्दपुराणम् ॥
लिङ्गमहिमा यथा, --
शिव उवाच ।
"न तुष्याम्यर्च्चितोऽर्च्चायां
पुष्पधूपनिवेदनैः ।
लिङ्गेऽर्च्चिते तथात्यर्थं परं तुष्यामि
पार्व्वति ! ॥
एष देवि ! पुरा कृत्ये जीनोऽहं सर्व्वदैवतैः
।
लिङ्गत्वाल्लिङ्गमित्युक्तं सदेवासुरकिन्नरैः ॥
प्रयच्छामि दिवं देवि ! यो मल्लिङ्गार्च्चने
रतः ।
त्यक्त्वा सर्व्वाणि पांपानि निर्गदो
न्दग्धकल्मषः ॥
मन्मना मन्नमस्कारो मामेव प्रतिपद्यते ॥"
इति वीरमित्रोदयधृतस्कन्दपुराणम्॥
द्रव्यविशेषेण पूजादिफलं यथा, --
"वस्त्रपूतजलैर्लिङ्गं स्नपित्वा मम मानवाः
।
लक्षाणाञ्चाश्वमेधानां फलमाप्नोति
सत्तमः ॥
सुगन्धिचन्दनरसैर्लिङ्गमालिप्य भक्तितः ।
आलिप्यते सुरस्त्रीभिः सुगन्धैर्यक्षकर्द्दमैः
॥"
इति तत्रैव ॥ * ॥
लिङ्गपूजाया अकरणे दोषः तत्पूजाफलञ्च
यथा,
"विना लिङ्गार्च्चनं यस्य कालो गच्छति
नित्यशः ।

| | | |
|---|---|---|
| इति शिवलिङ्गनिर्म्माणद्रव्याणि॥ * ॥<br>अथ<br>शिवलिङ्गसं स्कारः ।<br>“संस्कारञ्च प्रवक्ष्यामि विशेष इह यद्भवेत्<br>॥<br>रौप्यञ्च स्वर्णलिङ्गञ्च स्वर्णपात्रे निधाय च<br>।<br>तस्मादुत्तोल्य तल्लिङ्गं दुग्धमध्ये<br>दिनत्रयम् ।<br>त्र्यम्बकेन स्नापयित्वा कालरुद्रं<br>प्रपूजयेत् ॥ | | महाहानिर्भवेत्तस्य दुर्गतस्य दुरात्मनः ।<br>एकतः सर्व्वदानानि व्रतानि विविधानि च<br>।<br>तीर्थानि नियमा यज्ञा लिङ्गाराधनमेकतः<br>॥ |

न लिङ्गाराधनादन्यत् पुरा वेदे चतुर्ष्वपि ।
विद्यते सर्व्वशास्त्राणामेष एव सुनिश्चितः ॥
भुक्तिमुक्तिप्रदं लिङ्गं विविधापन्निवारणम् ।
पूजयित्वा नरो नित्यं शिवसायुज्यमाप्नुयात् ॥
सर्व्वमन्यत् परित्यज्य क्रियाजालमशेषतः ।
मक्त्या परमया विद्वान् लिङ्गमेकं प्रपूजयेत् ॥”
इति स्कन्दपुराणम् ॥ * ॥
“अश्वमेधसहस्राणि वाजपेयशतानि च ।
महेशार्च्चनपुण्यस्य कलां नार्हन्ति षोडशीम् ॥”
इति मत्स्यसूक्त १६ पटलः ॥
“बहुनात्र किमुक्तेन चराचरमिदं जगत् ।
शिवलिङ्गं समभ्यर्च्च्य स्थितमत्र न संशयः ॥”
इति लिङ्गपुराणम् ॥ * ॥
“शिवस्य पूजनाद्देवि चतुर्व्वर्गाधिपो भवेत् ।
अष्टैश्वर्य्ययुतो मर्त्यः शम्भुनाथस्य पूजनात् ।
स्वयं नारायणेनोक्तं यदि शम्भुं प्रपूजयेत् ॥
स्वर्गे मर्त्ये च पाताले ये देवाः संस्थिताः सदा ।
तेषां पूजा भवेद्देवि शम्भुनाथस्य पूजनात् ॥”
इति लिङ्गपुराणम् ॥ * ॥
“असारे खलु संसारे सारमेतच्चतुष्टयम् ।
काश्यां वासः सतां सङ्गो गङ्गाम्भः शम्भु-पूजनम् ॥”
इति षट्कर्म्मदीपिकाधृतकालोत्तरे नारद-वाक्यम् ॥ * ॥
“अग्निहोत्रास्त्रिवेदाश्च यज्ञाश्च बहुदक्षिणाः ।
शिवलिङ्गार्च्चनस्यैते कोट्यंशेनापि ते समाः ॥
छित्त्वा भित्त्वा च भूतानि हित्वा सर्व्वमिदं
आजन्ममध्ये यो देवि एकदा यदि पूजयेत् ।
स एव धन्यो देवेशि स ज्ञानी स च तत्त्ववित् ॥
स ब्रह्मवेत्ता स धनी स राजा भुवि पूज्यते ।
अणिमादिविभूतीनामीश्वरःसाधकोत्तमः ॥” * ॥
अथ पारदशिवलिङ्गनिर्म्माणविधिः ।
“पारदे शिवनिर्म्माणे नानाविघ्नं यतः प्रिये ।
अतएव महेशानि शान्तिस्वस्त्ययनं चरेत् ॥
पारदं शिवबीजं हि ताडनं हि न कारयेत् ।
ताडनाद्वित्तनाशः स्यात्ताडनाद्वित्तहीनता ।
ताडनाद्रोगयुक्तत्वं ताडनान्मरणं भवेत् ॥”
इति मातृकाभेदतन्त्रे ८ पटलः ॥ * ॥
अथ शिवलिङ्गोत्पत्तिः ।
ब्रह्मोवाच ।
“पुरा त्वां चञ्चलं ज्ञात्वा त्वदग्रे न प्रकाशितम् ।
इदानीं योगिनं ज्ञात्वा कथयामि न संशयः ॥
अतिगुह्यमतिगुह्यमतिगुह्यंन संशयः ।
गोपितव्यं गोपितव्यं गोपितव्यं त्वयापि च ॥
शम्भुना गोपितं तन्त्रे तन्त्रान्तरे प्रकाशितम् ।
शृणु तत् कथयाम्यद्य सावधानोऽवधारय ॥
सर्गादौ विविधाः सर्गा मया सृष्टा हि नारद ।
देवदानवदैत्याश्च गन्धर्व्वयक्षराक्षसाः ॥
सर्व्वे स्त्रीवशगाः श्रेष्ठा मैथुनाज्जायते प्रजा ।
केवलं हि शिवः शम्भुर्दारग्रहणकर्म्मणि ॥
कदापि न मनश्चक्रे दृष्ट्वा चिन्तापराः सुराः ।
प्राह मांवः किमर्थन्तु समुत्कण्ठाः सुरासुराः ॥
देव्युवाच ।
शीघ्रं रूपं यथाकामं भवतां प्रार्थने फलम् ।
अचिरात् तत्प्रदास्यामि सत्यं सत्यं न संशयः ॥
देवाद्या ऊचुः ।
भूत्वा तु दक्षकन्या त्वं शङ्करं परिमोहय ।
अस्माकं वाञ्छितञ्चैतत् कुरु सिद्धिं सदा शिवे ॥
एतत् श्रुत्वा वचस्तेषां निरीक्ष्य कमलासनम् ।
उवाच विस्मयाविष्टा कालिका जगदीश्वरी ॥
देव्युवाच ।
शम्भुरद्यतनो बालः किं मां सन्तोषयिष्यति ।
मम योग्यं पुमांसन्तु अन्यं वै परिकल्पय ॥
ब्रह्मोवाच ।
शम्भुः सर्व्वगुरुर्देवो ह्यस्माकं परमेश्वरः ।
महासत्त्वो महातेजाः स ते तोषं करिष्यति ॥
शम्भुतुल्यः पुमान्नास्ति कदाचिदपि कुत्रचित् ।
इत्युक्त्वा ब्रह्मणा देवी वाढमित्याह चेश्वरी ।
दक्षाय दर्शनं दत्त्वा उवाच उच्यतां वरः ॥
दक्षोऽपि दृष्ट्वा तां देवीं खड्गकर्त्तृधरां पराम् ।
खर्व्वां लम्बोदरीं व्याघ्रचर्म्मावृतकटिस्थलीम्॥
नीलोत्पलकपालाढ्यकरयुग्मां वरप्रदाम् ।
कृतकृत्यमिवात्मानं मेने दक्षः प्रजापतिः ॥
दक्ष उवाच ।
यदि मे वरदासि त्वं देवानामपि वाञ्छितम् ।
मदीयतनया भूत्वा शङ्करं किल मोहय ॥
तथेत्युक्त्रा जगद्धात्री अन्तर्द्धानं गता तदा ।

जगत् ।
यजेद्देवं विरूपाक्षं न स पापेन लिप्यते ॥
अनेकजन्मसाहस्रं भ्राम्यमाणश्च योनिषु ।
कः समाप्नोति वै मुक्तिं विना लिङ्गार्च्चनं नरः ॥”
इति स्कन्दपुराणम् ॥ * ॥
“ब्राह्मणः क्षत्त्रियो वैश्यः शूद्रो वाप्यनुलोमजः ।
पूजयेत् सततं लिङ्गं तत्तन्मन्त्रेण सादरम् ॥”
तत्तन्मन्त्रेणेति यथायोग्यं वैदिकतान्त्रिकनाम-मन्त्रेणेत्यर्थः । इति वीरमित्रोदयधृतस्कन्द-पुराणम् ॥ * ॥
“मूले ब्रह्मा तथा मध्ये विष्णुस्त्रिभुवनेश्वरः ।
रुद्रोपरि महादेवः प्रणवाख्यः सदाशिवः ॥
लिङ्गवेदी महादेवी लिङ्गं साक्षान्महेश्वरः ॥
तयोः प्रपूजनान्नित्यं देवी देवश्च पूजितौ ॥”
इति लिङ्गपुराणम् ॥ * ॥
अथ पारदशिवलिङ्गमाहात्म्यम्।
“ज्योतिर्म्मयं महालिङ्गं कैलासनगरे प्रिये ।
तस्यैव षोडशांशैकः काश्यां विश्वेश्वरः स्थितः ॥
पूर्णलिङ्गं महेशानि शिवबाज न चान्यथा ।
शिलामध्ये यथा चक्रं लक्ष्मीनारायणः परम् ।
पारदस्य शतांशैको लक्ष्मीनारायणो न हि ॥
पकारं विष्णुरूपञ्च आकारं कालिका स्वयम् ।
रेफं शिवं दकारञ्च ब्रह्मरूपं न चान्यथा ॥
पारदं परमेशानि ब्रह्मविष्णुशिवात्मकम् ।
यो यजेत् पारदं लिङ्गं स एव शम्भुरव्ययः ॥
मामेव शरणं जग्मुः सेन्द्रा देवासुरादयः ॥
प्रणिपत्य स्तुतिं कृत्वा उपतस्थुः समाहितः ।
प्रोचुः प्राञ्जलयः सर्व्वे भयाद्गद्गदमानसाः ॥
देवाद्या ऊचुः ।
उद्वाहिता वयं सर्व्वे भवानपि जनार्द्दनः ।
केवलं हि महादेवो देवदेवो जगत्पतिः ॥
विवाहे न मनश्चक्रे कया वा मोह्यते शिवः ।
उपायं चिन्तय विभो सदारः कथमीश्वरः ।
येन स्याज्जगतां नाथस्तत् कुरुष्व दयानिधे ॥
इति श्रुत्वा वचस्तेषां ततो ब्रह्मा प्रजापतिः ।
सह तैर्गरुडारूढं जगाम कमलासनः ।
उवाच तं जगन्नाथं विष्णुं कमललोचनम् ॥
ब्रह्मोवाच ।
सृष्टा मया सुरश्रेष्ठ मानुषा मैथुनोद्भवाः ।
सर्व्वे स्त्रैणा विना शम्भुं यत् कर्त्तव्यं वदस्व मे ॥
श्रीभगवानुवाच ।
एभिः सह महाबाहो गच्छामस्त्वमहं शिवम् ।
कर्त्तव्यं सूचितं तेन अनुज्ञातैर्यथाविधि ।
किन्तु तद्योग्यनारीन्तु विवाहार्थं प्रकल्पय ॥
ब्रह्मोवाच ।
दक्षं गच्छामहे सर्व्वे अनुज्ञापय तं हरे ।
आद्याशक्तिं महामायां प्रसादयतु वै लघु ॥
कन्या भूत्वा महाशम्भुं मोहयिष्यति शङ्करम् ।
एवमुक्त्वा तु तैः सार्द्धं जग्मतुर्विधिकेशवौ ।
यत्र दक्षो महातेजाः प्रोचतुः कार्य्यमात्मनः ॥
उवाच दक्षं तद्युक्तं तपस्तप्तुं प्रजापतिः ।
ब्रह्मा विष्णुश्च सर्व्वे ते तपसा तोषयेच्छिवाम् ॥
देबताश्च ततो नत्वा यत्र तेपे तपो हरः ॥
सस्त्रीकाः परमात्मानमुपतस्थुर्ज्जगत्पतिम् ।
प्रणेमुस्तुष्टुवुर्भक्त्या प्राहुर्गद्गदभाषिणः ॥
देवाद्या ऊचुः ।
भगवन् देवदेवेश लोकनाथ महाशय ।
वयं सर्व्वे तु सस्त्रीकाः सृष्ट्यर्थं परमेश्वर ।
अतस्त्वं कुरु चोद्वाहं सृष्टिरक्षा यथा भवेत् ॥
दक्षगेहे महाकाली मायेति परिकीर्त्तिता ।
जाता ते प्रीतये शम्भो सा ते योग्या न संशयः ॥
ईश्वर उबाच ।
भवतां प्रीतये सम्यक् करिष्ये नात्र संशयः ।
उद्योगः क्रियतां क्षिप्रं विवाहाय ममैव हि ॥
इत्युक्तास्तु सुराः सर्व्वे ईश्वरेण महात्मना ।
कृतकृत्या गताः सर्व्वे भवनं सर्व्वसुन्दरम् ॥
दक्षाय कथयामासुः शङ्करेणोदितं वचः ।
ततो विवाहं निर्व्वर्त्य कृतकृत्या यथा गताः ॥
गताः सर्व्वे महेशोऽपि सत्या सह तदा गृहम् ।
जगाम रेमे सत्या च चिरं निर्भरमानसः ॥
अथ काले कदाचित्तु सत्या सह महेश्वरः ।
रेमे न शेके तं सोढुं सती श्रान्ताभवत्तदा ॥
उवाच दीनया वाचा देवदेवं जगद्गुरुम् ।
भगवन्नहि शक्नोमि तव भारं सुदुःसहम् ।
क्षमस्व मां महादेव कृपां कुरु जगत्पते ॥
निशम्य वचनं तस्या भगवान् वृषभध्वजः ।
निर्भरं रमणं चक्रे गाढं निर्द्दयमानसः ॥

कृत्वा सम्पूर्णरमणं सती च त्यक्तमैथुना ।
उत्थानाय मनश्चक्रे उभयोस्तेज उत्तमम् ।
पपात धरणीपृष्ठे तैर्व्याप्तमखिलं जगत् ॥
पाताले भूतले स्वर्गे शिवलिङ्गास्तदाभवन् ।
तेन भूता भविष्याश्च शिवलिङ्गाः सयोनयः ॥
यत्र लिङ्गं तत्र योनिर्यत्र योनिस्ततः शिवः ।
उभयोश्चैव तेजोभिः शिवलिङ्गं व्यजायत ॥"
इति शिवलिङ्गोत्पत्तिकथनमितिनारदपञ्च-
रात्रान्तर्गततृतीयरात्रे प्रथमाध्याये नारद-
ब्रह्मसंवादः ॥ * ॥ शिवलिङ्गपूजायां सर्व्वेषा-
मधिकारो यथा, --
"शाक्तो वा वैष्णवो वापि सौरो वा गाणपोऽथवा ।
शिवार्च्चनविहीनस्व कुतः सिद्धिर्भवेत् प्रिये ॥
अनाराध्य च मां देवि योऽर्च्चयेद्देवतान्तरम् ।
न गृह्णाति महादेवि शापं दत्त्वा व्रजेत् पुरम् ॥
पर्व्वताग्रसमं देवि मिष्टान्नादि क्रमेण हि ।
फलानि बहुधान्येव पुष्पाण्येव यथाविधि ॥
सुमेरुसदृशं चान्नं नानाविधं महेश्वरी ।
सूपादिकं महेशानि यदि स्यात् सागरोपमम् ॥
यद्दत्तं पुष्पनैवेद्यं सर्व्वं विष्ठासमं भवेत् ।
शिवार्च्चनविहीनो यः पूजयेद्देवतान्तरम् ।
विशेषतः कलियुगे स नरः पापभाग्भवेत् ॥"
इति उत्पत्तितन्त्रे ६४ पटलः ॥ * ॥
"सर्व्वपूजासु देवेशि ! लिङ्गपूजापरं पदम् ।
लिङ्गपूजां विना देवि अन्यपूजां करोति यः ॥
विफला तस्य पूजा स्यादन्ते नरकमाप्नुयात् ।
तस्माल्लिङ्गं महेशानि प्रथमं परिपूजयेत् ॥
यद्राज्यं लिङ्गपूजायां रहितं सततं प्रिये ।
तद्राज्यं पतितं मन्ये विष्ठाभूमिसमं स्मृतत् ॥
ब्रह्म विट् क्षत्त्रियो देवि यदि लिङ्गं न पूजयेत् ।
तत्क्षणात् परमेशानि त्रयश्चण्डालतामियुः ।
शूद्रश्च परमेशानि सदा शूकरवद्भवेत् ॥
शिवार्च्चनन्तु देवेशि यस्मिन् गेहे विवर्ज्जितम् ।
विष्ठागर्त्तसमं देवि तत्गृहं विद्धि पार्व्वति ।
अन्नं विष्ठा पयो मूत्रं तस्मिन् वेश्मनि पार्व्वति ॥
शाक्तो वा वैष्णवो वापि शैवो वा परमेश्वरि ! ।
आदौ लिङ्गं प्रपूज्याथ विल्वपत्रैर्व्वरानने ! ॥
पश्चादन्यं महेशानि ! लिङ्गं प्रार्थ्य प्रपूजयेत् ।
अन्यथा मूत्रवत् सर्व्वं शिवपूजां विना प्रिये ! ॥"

तत्त्वमसीति नवकृत्वः प्रतिपादनम् ॥ २
॥ प्रक-
रणप्रतिपाद्यस्य वस्तुनः
प्रमाणान्तरेणाविषयी-
करणं अपूर्ब्बत्वम् । यथा । तत्रैवाद्वितीय-
वस्तुनो मानान्तराविषयीकरणम् ॥ ३ ॥
फलन्तु ।
प्रकरणप्रतिपाद्यस्यात्मज्ञानस्य
तदनुष्ठानस्य वा
तत्र तत्र श्रूयमाणं प्रयोजनम् । यथा ।
तत्रैव
आचार्य्यवान् पुरुषो वेद तस्य तावदेव
चिरं
यावन्न विमोक्षे अथ सम्पत्स्ये
इत्यद्वितीयवस्तु-
ज्ञानस्य तत्प्राप्तिप्रयोजनं श्रूयते ॥ ४ ॥
प्रकरण-
प्रतिपाद्यस्य तत्र तत्र प्रशंसनं अर्थवादः ।
यथा
तत्रैव उत तमादेशमप्राक्षो येनाश्रुतं श्रुतं
भवत्यमतं मतमविज्ञातं
विज्ञातमित्यद्वितीय-
वस्तुप्रशंसनम् ॥ ५ ॥
प्रकरणप्रतिपाद्यार्थसाधने
तत्र तत्र श्रूयमाणा युक्तिः उपपत्तिः । यथा
तत्र यथा सौम्यैकेन मृत्पिण्डेन सर्व्वं
मृण्मयं
विज्ञातं स्यात् वाचारम्भणं विकारो
नामधेयं
मृत्तिकेत्येव सत्यम् ।
इत्यादावद्वितीयवस्तुसाधने
विकारस्य वाचारम्भणमात्रत्वे युक्तिः
श्रूयते ॥ ६ ॥
इति
श्रीपरमहंससदानन्दयोगीन्द्रविरचित-
वेदान्तसारः ॥ (पुराणविशेषः । यथा,
देवी-
भागवते । १ । ३ । १० ।

**लिङ्गालिका**, स्त्री, क्षुद्रमूषिकः । तत्पर्य्यायः ।
दीना २ । इति हारावली । २१७ ॥

**लिङ्गिनी**, स्त्री, (लिङ्गमस्त्यस्या इति । लिङ्ग +
इनिः ।) लताविशेषः । पञ्चगुरिया
इति हिन्दी
भाषा । तत्पर्य्यायः । बहुपत्री २
ईश्वरी ३
शिववल्लिका ४ स्वयम्भः ५
लिङ्गसम्भूता ६
लैङ्गी ७ चित्रफला ८ चाण्डाली ९
लिङ्गजा १०
देवी ११ चण्डा १२ आपस्तम्भिनी
१३ शिवजा
१४ शिववल्ली १५ । अस्या गुणाः ।
कटुत्वम् ।
उष्णत्वम् । दुर्गन्धत्वम् ।
रसायनत्वम् । सर्व्व-
सिद्धिकरत्वम् । दिव्यत्वम् ।
वश्यत्वम् । रस-
नियामनत्वञ्च । इति राजनिर्घण्टः ॥
(सन्न्या-
सादिलिङ्गधारिणी । यथा, सुश्रुते ।
४ । २४ ।
"लिङ्गिनीं गुरुपत्नीञ्च सगोत्रामथ
पर्व्वसु ।
वृद्धाञ्च सन्ध्ययोश्चापि गच्छतो
जीवितक्षयः ॥")

**लिङ्गी** [न्], पुं, (लिङ्गमस्त्यस्येति । इनिः ।)
हस्ती । इति जटाधरः ॥ त्रि,
धर्म्मध्वजी ।
यथा, --
"अलिङ्गी लिङ्गवेशेन यो
लिङ्गमुपजीवति ।
स लिङ्गिनां हरेदेनस्तिर्य्यग्योनौ च
गच्छति ॥"
इति कौर्म्मे उपविभागे १५ अध्यायः
॥

इति लिङ्गार्च्चनतन्त्रे १ पटलः ॥
उपक्रमोपसंहारादि । यथा । लिङ्गानि तु
उपक्रमोपसंहारावभ्यासापूर्व्वताफलार्थवादोप-
पत्याख्यानि । तदुक्तम् ।
"उपक्रमोपसंहारावभ्यासोऽपूर्व्वताफलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्य्यनिर्णये ॥"
तत्र प्रकरणप्रतिपाद्यस्यार्थस्य तदाद्यन्तयोरुपा-
दानं उपक्रमोपसंहारौ । यथा छान्दोग्ये षष्ठे
प्रपाठके । प्रकरणप्रतिपाद्यस्याद्वितीयवस्तुन
एकमेवाद्वितीयमित्यादौ ऐतदात्म्यमिदं सर्व्व-
मित्यन्तेन च प्रतिपादनम् ॥ १ ॥ प्रकरणप्रति-
पाद्यस्य वस्तुनः तन्मध्ये पौनःपुन्येन प्रतिपादनं
अभ्यासः । यथा तत्रैवाद्वितीयवस्तुनो मध्ये

"एकादशसहस्राणि लिङ्गाख्यं
चातिविस्तृतम् ॥"
अस्यान्यद्विवरणं पुराणशब्दे द्रष्टव्यम् ॥
हेतुः ।
यथा, तर्ककौमुद्याम् । "लिङ्गज्ञानजन्यं
लिङ्गि-
ज्ञानमनुमितिः ॥ "ज्ञायमानं लिङ्गन्तु
करणं न
हि ।" इति भाषापरिच्छेदः ॥
सूक्ष्मशरीरम् ।
यथा, पञ्चदश्याम् । १ । २३ ।
"बुद्धिकर्म्मेन्द्रियप्राणपञ्चकैर्म्मनसा धिया
।
शरीरं सप्तदशभिः सूक्ष्मं तल्लिङ्गमुच्यते
॥")

**लिङ्गकः**, पुं, (लिङ्गेन कायतीति । कै + कः ।)

कपित्थवृक्षः । इति शब्दचन्द्रिका ॥
(गुणा-
दयोऽस्य कपित्थशब्दे विज्ञेयाः ॥)

**लिङ्गवर्द्धः**, पुं, (लिङ्गं वर्द्धयतीति । वृध् + णिच् +

अच् ।) कपित्थवृक्षः । इति शब्दचन्द्रिका
॥
शिश्नवृद्धिकरणम् । तस्यौषधं यथा, --
"कटुतैलं भल्लातकं बृहतीफलदाडिमम् ।
वल्कलैः साधितं लिप्तं लिङ्गं तेन विवर्द्धते
॥"
अपि च ।
"कुष्ठमाषमरीचानि तगरं मधुपिप्पली ।
अपामार्गाश्वगन्धा च वृहती सितसर्षपाः
॥
यवास्तिलं सैन्धवञ्च पाणिकोद्वर्त्तनं शुभम्
।
लिङ्गबाहुस्तनानाञ्च कर्णयोर्वृद्धिकृद्भवेत्
॥"
इति गारुडे १८० अध्यायः ॥

**लिङ्गवर्द्धिनी**, स्त्री, (लिङ्गं वर्द्धयति या । वृध् +

णिच् + इनि । ङीप् ।) अपामार्गः । इति
शब्दचन्द्रिका ॥

**लिङ्गवृत्तिः**, पुं, (लिङ्गमेव वृत्तिर्जीवनोपायो

(वासनाश्रयः । इति श्रीधरस्वामी ॥
यथा,
भागवते । ४ । २९ । ६५ ।
"तेनास्य तादृशं राजन् लिङ्गिनो
देहसम्भ-
वम् ।
श्रद्धत्स्वाननुभूतोऽर्थो न मनः
स्प्रष्टुमिच्छति ॥")

**लिप**, ञि औ श प ञ लेपे । इति
कविकल्पद्रुमः ॥

(तुदा०-उभ०-सक०-अनिट् ।) ञि,
लिप्तो-
ऽस्ति । औ, लेप्ता । श प ञ,
लिम्पति लिम्पते
चन्दनेन गात्रं सुखी । इति दुर्गादासः
॥

**लिपः**, पुं, (लिम्पतीति । लिप + कः ।) लेपन-

कर्त्ता । इति लिपधातोः कर्त्तरि
कप्रत्ययेन
निष्पन्नम् ॥

**लिपिः**, स्त्री, (लिप + "इगुपधात् कित् ।"
उणा०

४ । ११९ । इति इन् । सच कित् ।)
लिखित-
वर्णम् । तत्पर्य्यायः । लिखितम् २
अक्षरसंस्था-
नम् ३ लिबिः ४ । इत्यमरः ॥
लिखनम् ५ लेख-
नम् ६ अक्षरविन्यासः ७ लिपी ८
लिबी ९ ।
इति तट्टीका ॥ अक्षररचना १० ।
इति जटा-
धरः ॥ लिपिका ११ । इति
शब्दरत्नावली ॥
(यथा, नैषधे । १ । १५ ।
"अयं दरिद्रो भवितेति वैधसीं
लिपिं ललाटेऽर्थिजनस्य जाग्रतीम् ।
मृषा न चक्रेऽल्पितकल्पपादपः
प्रणीय दारिद्रदरिद्रतां नृपः ॥"

| | | |
|---|---|---|
| | यस्य ।) जीविकार्थजटादिचिह्नधारी । तत्-<br>पर्य्यायः । धर्म्मध्वजी २ । इत्यमरः । २ । ७ । ५४ ॥<br>"जीविकादिनिमित्तन्तुयो बिभर्त्ति जटादिकम् ।<br>धर्म्मध्वजी लिङ्गवृत्तिर्द्वयं तत्र निगद्यते ॥"<br>इति शब्दरत्नावली ॥ | अस्याः पञ्चविधत्वं यथा,<br>वाराहीतन्त्रे ।<br>"मुद्रालिपिः<br>शिल्पलिपिर्लिपिर्लेखनिसम्भवा ।<br>गुण्डिकाघुणसम्भूता लिपयः पञ्चधा स्मृताः ॥")<br>लिखितपुस्तकादि । इति केचिदिति भरतः ॥<br>**लिपिकरः**, पुं, (लिपिं करोतीति । लिपि + कृ +<br>"दिवाविभानिशेति ।" ३ । २ । २१ । इति<br>टः ।) लेखकः । इत्यमरटीका ॥ |

**लिपिका**, स्त्री, (लिपिरेव । लिपि + स्वार्थे कन् ।

टाप् ।) लिपिः । इति शब्दरत्नावली ॥

**लिपिकारः**, पुं, (लिपिं करोतीति । कृ + अण् ।)

लेखकः । इत्यमरः । २ । ८ । १ दे ॥

**लिपी**, स्त्री, (लिपिः । कृदिकारादिति ङीष् ।)

लिपिः । इति शब्दरत्नावली ॥

**लिप्तं**, त्रि, (लिप + क्तः ।) भक्षितम् । कृत-

लेपनम् । तत्पर्य्यायः । दिग्धम् २ ।
इत्यमरः ॥
विलिम्पितम् ३ । इति शब्दरत्नावली ॥
चर्च्चि-
तम् ४ । इति जटाधरः ॥ (यथा,
कथासरित्-
सागरे । ४ । ४८ ।
"तल्लिप्ताश्चेलखण्डाश्च चत्वारो
विहितास्तया ॥")
मिलितम् । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥
विषदिग्धम् । इति मेदिनी । ते, ५२ ॥

**लिप्तकः**, पुं, (लिप्त एव । स्वार्थे कन् ।) विषाक्त-

बाणः । इत्यमरः । २ । ८ । ८८ ॥

**लिप्तिका**, स्त्री, (लिप्तैव । स्वार्थे कन् ।) दण्डः ।

यथा । वैश्वस्य चतुर्थोऽंशः श्रवणादौ
लिप्तिका-
चतुष्कं अभिजित् । इति
सत्कृत्यमुक्तावली ॥

**लिप्सा**, स्त्री, (लब्धुमिच्छा । लभ + सन् + अः ।

टाप् ।) इच्छा । इत्यमरः ॥ (यथा, हरि-
वंशे । ३८ । २६ ।
"लिप्सां चक्रे प्रसेनात्तु मणिरत्ने
स्यमन्तके ।
गोविन्दो न च तंलेभे शक्तोऽपि न जहार
ह ॥")

**लिप्सुः**, त्रि, (लभ + सन् + उः ।) लब्धुमिच्छुः ।

"कर्षं शुद्धं मृतं ताम्रं लिम्पाकाङ्घ्रित्वचां
पलम् ॥"
इति रसेन्द्रसारसंग्रहे प्लीहि यकृदरिलौहे
॥)

**लिम्पाकः**, पुं, जम्बीरः । खरः । इति शब्दरत्ना-

वली ॥

**लिश**, ङ य औ तौच्छये । इति कविकल्पद्रुमः ॥

(दिवा०-आत्म०-अक०-अनिट् ।)
तौच्छय-
मल्पीभावः । ङ य, लिश्यते धर्म्मः कलौ
।
औ, लेष्टा । इति दुर्गादासः ॥

**लिश**, श औ गत्याम् । इति कविकल्पद्रुमः ॥

(तुदा०-पर०-सक०-अनिट् ।) लिशति ।
औ,
अलिक्षत् लेष्टा । इति दुर्गादासः ॥

**लिष्वः**, पुं, नर्त्तकः । लषधातोः कर्त्तरि वन्प्रत्य-

येन निपातनात् सिद्धः । उपधाया
इत्त्वमपि ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः । १ ।
१५३ ॥
(लष्व इति पाठः साधुः ॥)

**लिह**, ल ञ औ स्वादे । इति कविकल्पद्रुमः ॥

(अदा०-उभ०-सक०-अनिट् ।) ल ञ,
लेढि
पुष्पाणि षट्पदः । लीढे । औ, अलिक्षत् ।
इति दुर्गादासः ॥

**ली**, कि द्रावणे । इति कविकल्पद्रुमः ॥ (चुरा०-

पक्षे भ्वा०-पर०-सक०-अनिट् ।) द्रावणं
द्रवी-
करणम् । कि, लाययति लयति । मिम्यो-
र्यब्णाविति लापयति लोहमग्नौ कर्म्मकारः
।
स्नेहद्रवे तु लाल्योर्लन्ननाविति जनो
घृतमग्नौ

विलासः । शृङ्गारभावचेष्टा । इति मेदिनी ।
ले, ४७ ॥ खेला । इति विश्वः ॥ (यथा,
भाग-
वते । १ । १ । १८ ।
"अथाख्याहि हरेर्धीमन्नवतारकथाः शुभाः ।
लीलाविदधतः स्वैरमीश्वरस्यात्ममायया
॥")
अलब्धप्रियसमागमया स्वचित्तविनोदनार्थं
प्रियस्य या
वेशगतिदृष्टिहसितभणितैरनुकृतिः
क्रियते सा लीला । तथा च ।
"अप्राप्तवल्लभसमागमनायिकायाः
सख्याः पुरोऽत्र निजचित्तविनोदबुद्ध्या ।
आलापवेशगतिहास्यविलोकनाद्यैः
प्राणेश्वरानुकृतिमाकथयन्ति लीलाम् ॥"
इति ।
प्रियानुकरणं लोला । यथा तेनोदितं वदति
याति तथा तथासावित्यादीत्यन्योऽपि । ली
ङ
य ओ श्लिषि नाम्नीति लक् लीला ।
इत्यमर-
टीकायां भरतः ॥ * ॥ सा प्रकटाप्रकटभेदेन
द्विविधा यथा, --
"प्रकटाप्रकटा चेति लीला सेयं द्विधोच्यते ।"
इति पद्मपुराणम् ॥
तथा हि ।
"सदानन्तैः प्रकाशैः स्वैर्लीलाभिश्च स
दीव्यति ।
तत्रैकेन प्रकाशेन कदाचिज्जगदन्तरे ॥
सहैव स्वपरीवारैर्ज्जन्मादि कुरुते हरिः ।
कृष्णभावानुसारेण लीलाख्या शक्तिरेव सा ॥
तेषां परिकराणाञ्च तं तं भावं विभावयेत् ।
प्रपञ्चगोचरत्वेन सा लीला प्रकटा स्मृता ॥
अन्यास्त्वप्रकटा भान्ति तादृश्यस्तदगोचराः
।
तत्र प्रकटलीलायामेव स्यातां गमागमौ ॥
गोकुले मथुरायाञ्च द्वारकायाञ्च शार्ङ्गिणः ।
यास्तत्र तत्राप्रकटास्तत्र तत्रैव सन्ति ताः ॥"
इति श्रीभागवतामृतम् ॥

तत्पर्य्यायः । गृध्नुः ३ गर्द्धनः ३ तृष्णक् ४ लुब्धः ५
अभिलासुकः ६ लोलुपः ७ लोलुभः ८ । इति
हेमचन्द्रः ॥ (यथा, कथासरित्सागरे । २४ ।
११९ ।
“सोऽप्युपायनलोभात्तत् श्रद्दधे कल्पितायतिः ।
उपप्रदानं लिप्सूनामेकं ह्याकर्षणौषधम् ॥”)

**लि(वि)बिः**, स्त्री, (लिप् + इन् । बाहुलकात्
पस्य बत्वम् ।) लिपिः । इत्यमरः ॥

**लिबि(वि)करः**, पुं, (लिबिं करोतीति । कृ +
“दिवाविभानिशेति ।” ३ । २ । २१ । इति
टः ।) लिपिकरः । लिपिं करोति इत्यर्थे
सृकुष्ट इत्यनेन कर्त्तरि टप्रत्ययेन निष्पन्नः ॥

**लिबि(वि)ङ्करः**, पुं, (लिपिं करोतीति । कृ + टः ।
पृषोदरादित्वात् द्वितीयाया अलुक् ।) लिपि-
कारः । इत्यमरटीकायां भानुदीक्षितः ॥

**लिबी**, स्त्री, (लिबि + कृदिकारादिति ङीष् ।)
लिपिः । इति शब्दरत्नावली ॥

**लिम्पः**, पुं, (लिम्पतीति । लिम्प + “अनुपसर्गात्
लिम्पविन्देति ।” ३ । १ । १३८ । इति शः ।)
लेपनकर्त्ता । इति लिम्पधातोः कर्त्तरि शप्रत्यय-
निष्पन्नम् । इति मुग्धबोधव्याकरणम् ॥

**लिम्पटः**, पुं, षिड्गः । इति हारावली । १९२ ॥

**लिम्पाकं**, क्ली, निम्बूकविशेषः । पातिलेवु इति
भाषा । तस्य गुणाः । सुरभित्वम् । स्वादुत्वम् ।
नात्यम्लत्वम् । भक्तरोचनत्वम् । वातश्लेष्महर-
लीनयत्यपि । इति दुर्गादासः ॥

**ली**, गि श्लिषि । इति कविकल्पद्रुमः ॥ (क्र्या०-
पर०-अक०-अनिट् ।) गि, लिनाति बाला
लावण्यं प्राप्नोतीत्यर्थः । कर्म्माविवक्षायान्तु
लिनाति जलधौ नदी । लीनः लीनिः । अयं
अन्तःस्थतृतीयादिः । इति दुर्गादासः ॥

**ली**, ङ य ओ श्लिषि । इति कविकल्पद्रुमः ॥
(दिवा०-आत्म०-अक०-अनिट् ।) ङ य,
लीयते चन्द्रः सूर्य्ये । ओ, लीनः । इति दुर्गा
दासः ॥

**लीक्का**, स्त्री, लिक्षा । इति शब्दरत्नावली ॥

**लीक्षा**, स्त्री, लिक्षा । इति शब्दरत्नावली ॥

**लीढः**, त्रि, आस्वादितः । इति लिहधातोः
कर्म्मणि क्तप्रत्ययेन निष्पन्नः । (यथा, श्रीकण्ठ-
चरिते । १ । ५३ ।
“सा शुद्धयेऽस्तु शिवपादनखावनिर्यो
भक्ता यदीयरुचिलीढललाटपट्टाः ॥”)

**लीनः**, त्रि, (ली + क्तः । “ओदितश्च ।” ८ । २ ।
४५ । इति निष्ठातस्य नः ।) लयप्राप्तः । श्लिष्टः ।
इति व्याकरणम् ॥ अपि च ।
“दिवाकराद्रक्षति यो गुहासु
लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने
ममत्वमुच्चैःशिरसामतीव ॥”
इति कुमारसम्भवे । १ । १२ ॥

**लीला**, स्त्री, (लयनमिति । ली + सम्पदादित्वात्
क्विप् । लियं लातीति । ला + कः ।)
केलिः ।

**लीलावती**, स्त्री, (लीलास्त्यस्या इति । लीला +
मतुप् । मस्य वः ।) केलियुक्ता । विलासवती ।
शृङ्गारभावचेष्टान्विता । खेलाविशिष्टा । इति
लीलाशब्दार्थदर्शनात् ॥ * ॥ भास्कराचार्य्यस्य
पत्नी । तत्कृताङ्कग्रन्थः । यथा । गोदावरीतीर-
निवासिनो महाराष्ट्रदेशोद्भवस्य श्रीभास्करा-
चार्य्यस्य ग्रन्थकर्त्तुः सुप्रिया लीलावती विरह-
विक्षिण्णहृदयस्य तां पदैर्लीलावत्या लीला-
वतीमिव । इति लीलावतीग्रन्थस्य मङ्गला-
चरणश्लोकस्य टीकायां भवेशः ॥ * ॥ (अवि-
क्षितनृपतेः स्त्रीविशेषः । यथा, मार्कण्डेये ।
१२३ । १७ ।
“लीलावती वीरसुता वीरभद्रसुतानिभा ॥”)
वेश्याविशेषः ॥ यथा, --
“अभिरूपेण सम्पन्नान् घट्टयित्वा विना भृतिम् ।
धर्म्मकार्य्यमिति ज्ञात्वा न गृह्णाति कथञ्चन ॥
योऽसौ सुवर्णकारश्च दरिद्रोऽप्यथ सत्त्ववान् ।
न मूल्यमादाद्वेश्यातः सभार्य्य ऋद्धिसंयुतः ।
सप्तद्वीपपतिर्ज्जातः सूर्य्यायुतसमप्रभः ॥”
इति मत्स्यपुराणे लीलावतीवेश्याया लवणाचल-
दाने हेमतरुघटकस्य तथाविधफलदर्शनात् ।

| | | |
|---|---|---|
| त्वम् । हृद्यत्वम् । छर्दिघ्नत्वम् ।<br>नातिपित्तकृत्त्वञ्च ।<br>इति राजवल्लभः ॥ (तथा च । | | |

इति तिथ्यादितत्त्वम् ॥ * ॥
न्यायग्रन्थविशेषः ।
तस्य द्वितीयश्लोको यथा, --
“द्रव्यं नाकुलमुज्ज्वलो गुणगणः
कर्म्माधिकं
श्लाघ्यते
जातिर्व्विप्लुतिमागता न च पुनः
श्लाघ्या विशेष-
स्थितिः ।
सम्बन्धः सहजो गुणादिभिरयं यत्रास्तु
सत्-
प्रीतये
सान्वीक्षा नयवेश्मकर्म्मकुशला
श्रीन्यायलीला-
वती ॥”
इति मण्डनमिश्रः ॥

**लीलोद्यानं**, क्ली, (लीलार्थमुद्यानम् ।) देववनम् ।
इति त्रिकाण्डशेषः ॥ (यथा,
कथासरित्-
सागरे । १०९ । ४१ ।
“अथ मानसमुल्लङ्घ्य
देवर्षिव्रातसेवितम् ।
अतीत्य गण्डशैलञ्च लीलोद्यानं
द्युयोषिताम् ॥”)

**लुक्**, [च्] पुं, लोपः । यथा । स्यमोर्लुक् क्लीवात्
परयोः स्यमोर्लुक् स्यात् । इति
मुग्धबोध-
व्याकरणम् ॥

**लुक्कायितः**, त्रि, (लुक् कायस्य यस्य तादृश इवा-
चरतीति । लुक्काय + क्विप् । ततः क्तः
।)
अन्तर्हितः । यथा । अन्तर्धानं
लुक्कायनमिति
यावत् । यथा गुरोरन्तर्द्धत्ते शिशुः
निलीयते
यलायते लुक्कायते लुक्कायतीति
लुञ्चापनयने-

लृ, अलुटत् । ङ, लोटते । प्रतिहतिः शोका-
दिना पतनं पुनर्हवनं वा । इति दुर्गादासः ॥

**लुट**, क भासे । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-अक०-सेट् ।) क, लोटयति । भासो
दीप्तिः । इति दुर्गादासः ॥

**लुठ**, उपघाते । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।) लोठति । इति दुर्गादासः
॥

**लुठ**, इ गत्यालस्यस्तेयखोटे । इति कविकल्पद्रुमः ॥
(भ्वा०-पर०-सक०-अक० च-सेट् ।) इ,
लुण्ठ्यते ।
आलस्यं मन्दीभावः । स्तेयं चौर्य्यम् । खोटः
खोडनम् । इति दुर्गादासः ॥

**लुठ**, लृ ङ प्रतीघाते । इति कविकल्पद्रुमः ॥
(भ्वा०-आत्म०-सक०-सेट् ।) लृ, अलुठत् ।
ङ,
लोठते । इति दुर्गादासः ॥

**लुठ**, क चौर्य्ये । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-सक०-सेट् ।) क, लोठयति । इति
दुर्गा-
दासः ॥

**लुठ**, शि लोटे । इति कविकल्पद्रुमः ॥ (तुदा०-
पर०-अक०-सेट् ।) शि, लुठति अलुठीत्
लुलोठ । लोटः सम्बन्धीमावः । हारोऽयं
हरिणाक्षीणां लुठति स्तनमण्डले । इति दुर्गा-
दासः ॥

**लुठनं**, क्ली, (लुठ लोटे + ल्युट् ।) अश्वस्य
भूमौ पुनः पुनः श्रमोपहननम् । लोटा इति
गडागडि इति च भाषा । तत्पर्य्यायः । वेल्ल-
नम् २ । इति त्रिकाण्डशेषः ॥

**लुठितः** त्रि, (लुठ + क्तः ।) मुहुर्भुवि परावृत्तः ।
श्रमशान्त्यर्थं पुनःपुनर्भूमौ लुठितोऽश्वः ।
तत्-
पर्य्यायः । उपावृत्तः २ । इत्यमरभरतौ ॥

षाकन् ।) चौरः । लुटधातोः षाकप्रत्ययेन
निष्पन्नः ॥

**लुण्टाकी**, स्त्री, (लुण्टाक + षित्वात् ङीप् ।) चौरा
स्त्री । इति मुग्धबोधव्याकरणम् ॥

**लुण्ठकः**, त्रि, (लुण्ठतीति । लुण्ठ + ण्वुल् ।) स्तेय-
कारकः । लुटेरा इति भाषा । यथा, --
“ये चौरा वह्निना दुष्टा गरदा ग्रामलुण्ठकाः
।
सारमेयादने ते वै पात्यन्ते पातकान्विताः
॥”
इति पाद्मे पातालखण्डम् ॥

**लुण्ठनं**, क्ली, (लुण्ठ + ल्युट् ।) लुठनम् । इति
काचित् शब्दरत्नावली ॥ (यथा,
देवीभाग-
वते । ५ । १ । १८ ।
“हरणं लुण्ठनं तद्वत् तत्पत्नीनां नराधिप !
॥”)

**लुण्ठा**, स्त्री, (लुण्ठ + अङ् । स्त्रियां टाप् ।)
लुठनम् । इति काचित् शब्दरत्नावली ॥

**लुण्ठाकः**, पुं, (लुण्ठ + षाकन् ।) काकः । इति
त्रिकाण्डशेषः ॥ (चौरः । यथा,
कलाविलासे । १ । ३ ।
“विघ्नोऽभिसारिकाणां
भवनगणस्फाटिकप्रभा-
निकरः ।
यत्र विराजति रजनीतिमिरपटप्रकट-
लुण्ठाकः ॥”)

**लुण्ठी**, स्त्री, लुठनम् । इति काचित् शब्दरत्नावली
॥

**लुण्ड**, क चौर्य्ये । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-सक०-सेट् ।) क, लुण्डयति । इति
दुर्गादासः ॥

**लुण्डिका**, स्त्री, (लुण्डी । स्वार्थे कन् । ततष्टाप् ।)
न्यायसारिणौ । इति हारावली ॥ एकत्र
वेष्टित-

ऽपि लुक् । लुक् कायः शरीरं यस्य स लुक्कायः
ततः स इव आचरतीति क्वौ साध्यम् । इति
कारकटीकायां दुर्गादासः ॥ कर्म्मणि क्तप्रयेन
निष्पन्नोऽयम् ॥

**लुङ्कुषः**, पुं, छोलङ्गः । इति रत्नमाला ॥

**लुज**, इ क भाषट्टार्थे । इति कविकल्पद्रुमः ॥

(चुरा०-पर०-अक०-सक०-च-सेट् ।) इ क,
लुञ्जयति । भा दीप्तिः । षट्टार्थो निकेतनहिंसा-
बलदानानि । इति दुर्गादासः ॥

**लुञ्च**, अपनयने । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) सोऽलुञ्चीत् कर्णनासिकम् ।
इति दुर्गादासः ॥

**लुट**, विलोटविलोडनयोः । इति कविकल्पद्रुमः ॥

(भ्वा०-पर०-विलोटे अक०-विलोडने सक०-
सेट् ।) लोटति । इति दुर्गादासः ॥

**लुट**, इ ह्रुतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) इ, लुण्ट्यते । ह्वृतिश्चौर्य्यम् ।
इति दुर्गादासः ॥

**लुट**, ऌ ऋ य विलोटविलोडनयोः । इति कवि-

कल्पद्रुमः ॥ (दिवा०-पर०-विलोटे अक०-विलो-
डने सक०-सेट् ।) ऌ, अलुटत् । ऋ, अलूलु-
टत् अलुलोटत् । य, लुट्यति । विलोटः सम्बन्धी-
भावः । तत्र लुट्यन् सशोको भुवि रीरुदावान् ।
इति भट्टिः ॥ विलोडने लुट्यत्यट्टालकान् दुर्गान्
वेल्लितः ३ । इति शब्दरत्नावली ॥ अपावृत्तः ४
परावृत्तः ५ । इति हेमचन्द्रः ॥ (यथा, कथा-
सरित्सागरे । १०२ । ७७ ।
"शिलाकलापो लुठितः किमञ्जनगिरेरयम् ।
किमुताकालकल्पान्तमेघौघः पतितो भुवि ॥")

**लुड**, मन्थे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

सक०-सेट् ।) लोडति । मन्थो विलोडनम् ।
इति दुर्गादासः ॥

**लुड**, शि संवृतौ । श्लेषे । इति कविकल्पद्रुमः ॥

(तुदा०-पर०-सक०-सेट् ।) शि, लुडति
अलुडीत् लुलोड । इति दुर्गादासः ॥

**लुण्ट**, कि अवज्ञाचौर्य्ये । इति कविकल्पद्रुमः ॥

(चुरा०-पक्षे भ्वा०-पर०-सक०-सेट् ।) दन्त्य-
नकारप्रकृतिः टयोगान्मूर्द्धन्यः तेन भ्वादिपक्षे
यगादौ तल्लोपे लुट्यत इत्यादि । कि, लुण्टयति
लुण्टति । इति दुर्गादासः ॥

**लुण्टकः** पुं, (लुण्टतीति । लुण्ट + ण्वुल् ।) शाक-

विशेषः । नट्या इति भाषा । तत्पर्य्यायः ।
मासवः २ । इति शब्दचन्द्रिका ॥

**लुण्टा**, स्त्री, (लुण्ट + अङ् । टाप् ।) लुठनम् ।

इति काचित् शब्दरत्नावली ॥

**लुण्टाकः**, पुं, (लुण्टतीति । लुण्ट + "जल्पभिक्ष-

कुट्टलुण्टवृङः षाकन् ।" ३ । २ । १५५ । इति
मेषलोमादिः । लुडि इति नुटि इति च भाषा ॥
यथा, --
"सैन्धवञ्च घृताभ्यक्तं ताम्रभाजनमातपे ।
प्रतप्तमूर्णया घृष्टं तन्मलञ्च समाहरेत् ॥"
ताम्रभाजने धृतं सैन्धवं दत्त्वा रौद्रे तप्तं कृत्वा
मेषलोमलुण्डिकया घृष्ट्वा मलग्रहं कृत्वा तेन
म्रक्षयेत् । इति भैषज्यरत्नावली ॥

**लुण्डी**, स्त्री, न्यायसारिणी । इति त्रिकाण्डशेषः ॥

**लुथ**, इ कुन्थे । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) इ, लुन्थ्यते । कुन्थो वध-
क्लेशौ । इति दुर्गादासः ॥

**लुप** ऋ श प ऌ ञ औ छेदे । इति कविकल्प-

द्रुमः ॥ (तुदा०-उभ०-सक०-अनिट् ।) ऋ,
अलूलुपत् अलुलोपत् । श प ञ, लुम्पति
लुम्पते । ऌ, अलुपत् । औ, लोप्ता । इति
दुर्गादासः ॥

**लुप**, इर य युपि । इति कविकल्पद्रुमः ॥ (दिवा०-

पर०-अक०-सेट् ।) इर, अलुपत् अलोपीत ।
अस्मात् पुषादित्वान्नित्यं ङ इत्यन्ये । य, लुप्यति ।
युपि आकुलीभावे । पातुं लुप्यति लावण्यं
नेत्राञ्जलिपुटैर्नरः । इति हलायुधः । इति
दुर्गादासः ॥

**लुप्**, पुं, (लुप् च्छेदे + क्विप् ।) लोपः । यथा ।

अभोभगोऽघोभ्योऽवे लुप् । इति मुग्धबोध-
व्याकरणम् ॥

| | | |
|---|---|---|
| कवाटानि च लोटति । इति हलायुधः ।<br>इति<br>दुर्गादासः ॥<br><br>**लुट**, लृ ङ दीप्तिप्रतिहत्योः । इति कविकल्पद्रुमः ॥<br><br>(भ्वा०-आत्म०-अक०-पुनर्हनने<br>सक०-सेट् ।) | | |

**लुप्तं**, क्ली, (लुप् + क्तः ।) चौर्य्यधनम् । लोत

इति ख्यातम् । इति शब्दरत्नावली ॥ लोप-
वति, त्रि । यथा, --
"चक्षुष्मानिति लुप्ताक्षं चाण्डालं ब्राह्मणेति च ।
प्रशंसा निन्दनं द्वेषात् परुषान्न विशिष्यते ॥"
इति तिथ्यादितत्त्वम् ॥
(यथा च, आर्य्यासप्तशत्याम् । ३६३ ।
"परिवृत्तनाभि लुप्तत्रिबलि श्यामस्तनाग्र-
मलसाक्षि ।
बहुधवलजघनरेखं वपुर्न पुरुषायितं सहते ॥")

**लुब** कि इ अर्द्दने । इति कविकल्पद्रुमः ॥ (चुरा०-

पक्षे भ्वा०-पर०-सक०-सेट् ।) कि, लुम्बयति
लुम्बति । इ, लुम्ब्यते । अर्द्दनं वधः । इति
दुर्गादासः ॥

**लुब्धः**, पुं, (लुभ + गत्यर्थेति क्तः ।) व्याधः ।

(यथा, महाभारते । १६ । ४ । २१ ।
"स संनिरुद्धेन्द्रियवाङ्गनास्तु
शिष्ये महायोगमुपेत्य कृष्णः ।
जराथ तं देशमुपाजगाम
लुब्धस्तदानीं मृगसंलिप्सुरुग्रः ॥")
लम्पटः । इति शब्दरत्नावली ॥

**लुब्धः**, त्रि, (लुभ + क्तः ।) आकाङ्क्षी । इति

मेदिनी । धे, १४ ॥ तत्पर्य्यायः । गृध्नुः २ ।
गर्द्धनः ३ अभिलाषुकः ४ तृष्णक् ५ । इत्य-
(तथास्य पर्य्यायः ।
"महिषो घोटकारिः स्यात्कासरश्च रज-
स्वलः ।
पीनस्कन्धः कृष्णकायो लुलापो यमवाहनः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥)

**लुलापकन्दः**, पुं, (लुलापप्रियः कन्दः ।) महिष-

कन्दः । इति राजनिर्घण्टः ॥

**लुलापकान्ता**, स्त्री, (लुलापस्य कान्ता ।) महिषी ।

इति राजनिर्घण्टः ॥

**लुलितः**, त्रि, (लुल + क्तः ।) आन्दोलितः । यथा,

"प्रेङ्खोलितस्तरलितो लुलितान्दोलितावपि ॥"
इति भूरिप्रयोगः ॥
(यथा, कथासरित्सागरे । ३७ । ७० ।
"हत्वा रथाश्वांश्चिच्छेद शिरो लुलितकुण्ड-
लम् ॥"
विकीर्णः । इति श्रीधरः ॥ यथा, भागवते । १ ।
९ । ३४ ।
"युधि तुरगरजो विधूम्रविष्वक्
कचलुलितश्रमवार्य्यलङ्कृतास्ये ॥"
व्याप्तः । यथा, रामायणे । २ । ६५ । १९ ।
"न स्म विभ्राजते देवी शोकाश्रुलुलितानना ॥"
ग्लानः । यथा, आर्य्यासप्तशत्याम् ।
"प्रातर्न्निद्राति यथा यथात्मजा लुलितनिःसहै-
रङ्गैः ।
जामातरि मुदितमनास्तथा तथा सादरा
श्वश्रूः ॥"
उन्मूलितः । यथा, भागवते । ३ । १९ । २४ ।
"विशीर्णबाह्वङ्घ्रिशिरोरुहोऽपतत्
भाषा । तत्पर्य्यायः । तन्तुवायः २ ऊर्णनाभः ३
मर्कटकः ४ । इत्यमरः ॥ मर्कटः ५ लूतिका ६
ऊर्णनाभिः ७ शनकः ८ तन्त्रवायः ९ । इति
शब्दरत्नावली ॥ (यथा, आर्य्यासप्तशत्याम् ।
५०४ ।
"लूतातन्तुनिरुद्धद्वारः शून्यालयः पतत्पतगः ।
पथिके तस्मिन्नञ्चलपिहितमुखोरोदितीव
सखि ! ॥")
पिपीलिका । रोगविशेषः । इति मेदिनी । ते,
५२ ॥ शेषस्य पर्य्यायः । मर्म्मव्रणः २ वृक्का ३ ।
इति राजनिर्घण्टः ॥ तद्रोगस्य निदानादि
लूतानां जन्तुबिशेषाणामुत्पत्तिं संख्याञ्चाह ।
"यस्माल्लूनतृणं प्राप्ता मुनेः प्रस्वेदबिन्दवः ।
तेभ्यो जातास्ततो लूता इति ख्यातास्तु षोडश ॥"
अत्र सुश्रुतः ।
"विश्वामित्रो नृपवरः कदाचिदृषिसत्तमम् ।
वशिष्ठं कोपयमास गत्वाश्रमपदं किल ॥
कुपितस्य मुनेस्तस्य ललाटे स्वेदबिन्दवः ।
अपतन् दर्शनादेव ह्यधस्तात्तीव्रवर्च्चसः ॥
लूते तृणे महर्षेस्तु धेन्वर्थे संभृतेऽपि च ।
ततो जातास्त्विमा घोरा नानारूपा महा-
विषाः ।
तासामष्टौ कष्टसाध्या वर्ज्यास्तावत्य एव हि ॥"
तत्र तृणमण्डलाप्रभृतयोऽष्टकष्टसाध्याः ।
सौवर्णिकाप्रभृतयोऽष्टावसाध्याः । तासां सामा-
न्यतो दंशलक्षणमाह ।
"ताभिर्दष्टे दंशकोऽप्यप्रवृत्तिः क्षतजस्य च ।
ज्वरो दाहोऽतिसारश्च गदाः स्युश्च त्रिदो-
षजाः ॥
पिडिका विविधाकारा मण्डलानि महान्ति च ।
शोथा महान्तो मृदवो रक्ताः श्यावाश्चला-
स्तथा ।
सामान्यं सर्व्वलूतानामेतद्दंशस्य लक्षणम् ॥"
दंशकोऽप्यदंशमध्ये पूतिभावः ।
"दंशमध्ये तु यत् कृष्णं श्यावं वा जालकावृ-
तम् ।
दग्धाकृति भृशं पाकं क्लेदशोथज्वरान्वितम् ।

मरः ॥ (यथा, कथासरित्सागरे । ५५ । ३० ।
"लुब्धो यशसि नत्वर्थे भीतः पापान्न शत्रुतः ।
मूर्खः परापवादेषु नच शास्त्रेषु योऽभवत् ॥")

**लुब्धकः**, पुं, (लुब्ध एव । स्वार्थे कन् ।) व्याधः ।
इत्यमरः ॥ (यथा, कथासरित्सागरे । ८ । २४ ।
"आस्माकमीदृशं मांसं ददते लुब्धका इति ॥")
लम्पटः । इति लुब्धशब्दार्थदर्शनात् ॥ (पायुः ।
यथा, भागवते । ४ । २५ । ५३ ।
"निरृतिर्नाम पश्चाद्द्वास्तया याति पुरञ्जनः ।
वैशसं नाम विषयं लुब्धकेन समन्वितः ॥")

**लुभ**, य इर् गार्ध्ये । इति कविकल्पद्रुमः ॥ (दिवा०-
पर०-सक०-सेट् ।) गार्ध्यमाकाङ्क्षा । य,
लुभ्यति धनं लुब्धः । इर्, अलुभत् अलोभीत् ।
अस्मात् पुषादित्वात् नित्यं ङ इत्यन्ये । इति
दुर्गादासः ॥

**लुभ**, श विमोहने । इति कविकल्पद्रुमः ॥ (तुदा०-
पर०-अक०-सेट् ।) श,
लुभत्यात्मनि कामे च ।
इति हलायुधः ॥ लोभिता लोब्धा । इति
दुर्गादासः ॥

**लुभितः**, त्रि, विमोहितः । विमोहनार्थलुभधातोः क्तप्रत्ययेन निष्पन्नः ॥

**लुल**, विमर्द्दने । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।) सौत्रधातुरयम् । लुलापः ।
यथा नगेन्द्रो लुलितो नभस्वता ॥"
खण्डितः । यथा, तत्रैव । ४ । ९ । १० ।
"किम्बन्तकासिलुलितात्पततां विमानात् ॥"
विध्वस्तः । यथा, तत्रैव । ७ । ९ । २३ ।
"येऽस्मत्पितुः कुपितहासविजृम्भितभ्रू-
विस्फूर्ज्जितेन लुलिताः स तु ते निरस्तः ॥")

**लुष**, स्तेये । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) लोषति । इति दुर्गादासः ॥

**लुष**, हिंसने । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) सौत्रधातुरयम् । लुष्णः । इति
दुर्गादासः ॥

**लुषभः**, पुं, (रोषतीति । रुष हिंसायाम् +
"रुषेर्न्निल्लुष् च ।" उणा० ३ । १२४ । इति
अभच् । लुषादेशश्च धातोः ।) मत्तहस्ती ।
इत्युणादिकोषः ॥

**लुह**, औ गार्ध्ये । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-अनिट् ।) औ, अलुक्षत् । गार्ध्यं
लब्धुमिच्छा । लोहति धनं लोकः । इति दुर्गा-
दासः ॥

**लू**, ञ गि छिदि । इति कविकल्पद्रुमः ॥ (क्र्या०-
उभ०-सक०-अनिट् ।) ञ गि, लूनाति लूनीते ।
लूनः लूनिः । इति दुर्गादासः ॥

**लूता**, स्त्री, (लूनातीति । लू + बाहुलकात् तन् ।
गुणाभावश्च ।) कीटविशेषः । माकड्सा इति
दूषीविषाभिर्लूताभिस्तद्दष्टमिति निर्द्दिशेत् ॥"
सौवर्णिकादयोऽष्टावसाध्यप्राणहरास्तासां
लक्षणमाह ।
"शोथः श्वेतासिता रक्ता पीता च पिडिका ज्वरः ।
प्राणान्तिको भवेद्दाहः श्वासो हिक्का शिरो-
ग्रहः ॥ * ॥
तस्यौषधं यथा, --
"रजनीयुग्मपत्तङ्गमञ्जिष्ठानागकेशरैः ।
शीताम्बुपिष्टैरालेपः सद्यो लूतां विनाशयेत् ॥"
अपि च ।
"अभयां रोचनां कुष्ठमर्कपुष्पं तथोत्पलम् ।
नलवेतसमूलानि गरलं सुरसां तथा ॥
सकलिङ्गं समञ्जिष्ठामनन्ताञ्च शतावरीम् ।

| | | |
|---|---|---|
| इति दुर्गादासः ॥<br>**लुलापः**, पुं, (लुल्यते इति । लुल विमर्द्दने + भिदा-<br>दित्वात् अङ् । लुलां आप्नोतीति । आप् +<br>अण् ।) महिषः । इत्यमरः ॥ (यथा, दुर्गा-<br>भक्तितरङ्गिण्याम् ।<br>"लुलापं खड्गेन छिन्धि छिन्धि ॥") | | |

शृङ्गाटकं समङ्गाञ्च पद्मकेशरमित्यपि ॥
कल्कीकृत्य पचेत् सर्पिः पयो
दद्याच्चतुर्गुणम् ।
सम्यक् पक्वेऽवतीर्णे च शीते तस्मिन्
विनिः ।
क्षिपेत् ॥
सर्पिस्तुल्यं भिषक् क्षौद्रं कृतरक्षं निधापयेत्
।
विषाणि हन्ति दुर्गाणि गरदोषकृतानि च ॥
स्पर्शाद्धन्ति विषं सर्व्वं गरैरुपहतां त्वचाम्
।
योगजन्तमकं कण्डुं मांससादं विसंज्ञताम्
॥
नाशयत्यञ्जनाभ्यङ्गं पानवस्तिषु योजितम् ।
सर्पकीटाखुलूतादिदष्टानां विषहृत् परम् ॥”
मृत्युपाशच्छेदि घृतम् । इति भावप्रकाशः
॥
(तथा च ।
“कोटिभ्यो दारुणतरा लूताः षोडश ता
जगुः ।
अष्टाविंशतिरित्येके ततोऽप्यन्ये तु भूयसीः
॥
सहस्ररश्म्यनुचरा वदन्त्यन्ये सहस्रशः ।
बहूपद्रवरूपा तु लूतैकैव विषात्मिका ॥
रूपाणि नामतस्तस्या दुर्ज्ञेयान्यतिसङ्करात्
।
नास्ति स्थानव्यवस्था च दोषतोऽतः
प्रचक्षते ॥
कृच्छ्रसाध्या पृथग्दोषैरसाध्या निचयेन सा
।
तद्दंशः पैत्तिको दाहतृट्स्फोटज्वरदाहवान्
॥
भृशोष्मा रक्तपीताभः क्लेदी
द्राक्षाफलोपमः ।
श्लैष्मिकः कठिनः पाण्डुः
परूषकफलाकृतिः ॥
निद्रां शीतज्वरं कासं कण्डूञ्च कुरुते भृशम्
।
वातिकः परुषः श्यावः पर्व्वभेदज्वरप्रदः ॥

तृतीये सज्वरो रोमहर्षकृद्रक्तमण्डलः
॥
शरावरूपस्तोदाढ्यो रोमकूपेषु
सस्रवः ।
महांश्चतुर्थे
श्वयथुस्तापश्वासभ्रमप्रदः ॥
विकारान् कुरुते तांस्तान् पञ्चमे
विषकोपजान् ।
षष्ठे व्याप्नोति मर्म्माणि सप्तमे हन्ति
जीवितम् ॥
इति तीक्ष्णं विषं मध्यं हीनञ्च
विभजेदतः ।
एकविंशतिरात्रेण विषं शाम्यति
सर्व्वथा ॥
अथाशु लूतादष्टस्य शस्त्रेणादंशमुद्धरेत्
।
दहेच्च जाम्बवौष्ठाद्यैर्न तु पित्तोत्तरं
दहेत् ॥
कर्कशं भिन्नरोमाणं
मर्म्मसन्ध्यादिसंश्रितम् ।
प्रसृतं सर्व्वतो दंशं नच्छिन्दीत दहेन्न
च ॥
लेपयेद्गन्धमगदैर्म्मधुसैन्धवसंयुतैः ।
सुशीतः सेचयेच्चानुकषायैः
क्षीरिवृक्षजः ॥
सर्व्वतोऽपहरेद्रक्तं शृङ्गाद्यैः सिरयापिवा
।
सेका लेपास्ततः शीता
बोधिश्लेष्मान्तकाक्षरैः ॥
फलिनीद्विनिशाक्षौद्रसर्पिर्भिः
पद्मकाह्वयः ।
अशेषलूताकीटानामगदः
सर्व्वकार्म्मिकः ॥”
“रोध्रं सेव्यं पद्मकं पद्मरेणुः
कालीयाख्यं चन्दनं यच्च रक्तम् ।
कान्ता पुष्पं दुग्धिनीका मृणालं
लूताः सर्व्वा घ्नन्ति सर्व्वक्रियाभिः
॥”

“व्रजन्ति विद्याधरसुन्दरीणा-
मनङ्गलेखक्रिययोपयोगम् ॥”)

**लेखकः**, पुं, (लिखतीति । लिख् + ण्वुल् ।)
लेखनकर्त्ता । तत्पर्य्यायः । लिपिकरः २
अक्षर-
चनः ३ अक्षरचुञ्चुः ४ । इत्यमरः । २ । ८ ।
१५ ॥
वोलकः ५ करकः ६ मसीपण्यः ७ करप्रणीः
८ ।
इति शब्दरत्नावली ॥ वर्णी ९ । इति जटा-
धरः ॥ * ॥ तस्य लक्षणानि यथा, --
“सर्व्वदेशाक्षराभिज्ञः सर्व्वशास्त्रविशारदः ।
लेखकः कथितो राज्ञः सर्व्वाधिकरणेषु वै ॥
शीर्षोपेतान् सुसंपूर्णान् समश्रेणिगतान्
समान् ।
अक्षरान् वै लिखेद्यस्तु लेखकः स वरः स्मृतः
॥
उपायवाक्यकुशलः सर्व्वशास्त्रविशारदः ।
बह्वर्थवक्ता चाल्पेन लेखकः स्यान्नृपोत्तम ॥
वाक्याभिप्रायतत्त्वज्ञो देशकालविभागवित् ।
अनाहार्य्यो नृपे भक्तो लेखकः स्यान्नृपोत्तम ॥”
इति मात्स्ये १८९ अध्यायः ॥ * ॥
अपि च ।
“सकृदुक्तगृहीतार्थो लघुहस्तो जिताक्षरः ।
सर्व्वशास्त्रसमालोकी प्रकृष्टो नाम लेखकः ॥”
इति चाणक्यसंग्रहः ॥ * ॥
राजलेखकलक्षणं यथा, --
“ब्राह्मणो मन्त्रणाभिज्ञो राजनीतिविशारदः ।
नानालिपिज्ञो मेधावी नानाभाषासमन्वितः ॥
मन्त्रणाचतुरो धीमान् नीतिशास्त्रार्थकोविदः ।
सन्धिविग्रहभेदज्ञो राजकार्य्ये विचक्षणः ॥
सदा राजहितान्वेषी राजसन्निधिसंस्थितः ।
कार्य्याकार्य्यविचारज्ञः सत्यवादी जितेन्द्रियः
॥
स्वरूपवादी शुद्धात्मा धर्म्मज्ञो राजधर्म्मवित् ।
एवमादिगुणैर्युक्तः स एव राजलेखकः ॥
नृपानुवर्त्ती सततं नृपविश्वासरक्षकः ।
नृपतेर्हितकान्वेषी स एव राजलेखकः ॥”
इति पत्रकौमुदी ॥ * ॥

तद्विभागं यथास्वञ्च दोषलिङ्गैर्विभावयेत् ।
असाध्यायान्तु हृन्मोहश्वासहिक्काशिरो-
रुजाः ॥
श्वेताः पीताः सिता रक्ताः पिटिकाः
श्वयथू-
द्रवाः ॥
वेपथुर्व्वमथुर्दाहस्तृडान्ध्यं वक्रनासता ।
श्यावोऽष्ठवक्त्रदन्तत्वं पृष्ठग्रीवावभञ्जनम् ॥
पक्वजम्बूसवर्णञ्च दंशात् स्रवति शोणितम्
।
सर्व्वापि सर्व्वजा प्रायो व्यपदेशस्तु भूयसा
॥
तीक्ष्णमध्यावरत्वेन सा त्रिधा
हन्त्युपेक्षिताः ।
सप्ताहेन दशाहेन पक्षेण च परं क्रमात् ॥
लूतादंशश्च सर्व्वोऽपि दद्रुमण्डलसन्निभः ।
सितोऽसितोऽरुणः पीतः श्यावो वा मृदुरु-
न्नतः ॥
मध्ये कृष्णोऽथवा श्यावः पर्य्यन्ते जाल-
कावृतः ।
विसर्पवान् शोफयुतस्तप्यते बहुवेदनः ॥
ज्वराशुपाकविक्लेदकोदावदरणान्वितः ।
क्लेदेन यत् स्पृशत्यङ्गं तत्रापि कुरुते व्रणम्
॥
श्वासदंष्ट्राशकृन्मूत्रशुक्रलालानखार्त्तवैः ।
अष्टाभिरुद्वमत्येषा विषं वक्त्रैर्व्विशेषतः ॥
लूता नाभेर्द्दशत्यूद्र्ध्वमूद्र्ध्वं वाधश्च
कीटकाः ।
तद्दूषितञ्च वस्त्रादिदेहे पृक्तं विकारकृत् ॥
दिनार्द्धं लक्ष्यते नैव दंशो लूताविषोद्भवः ।
सूचीव्यधवदाभाति ततोऽसौ प्रथमेऽहनि ॥
अव्यक्तवर्णः प्रचलः किञ्चित्
कण्डूरुजान्वितः ।
द्वितीयेऽभ्युन्नतोऽन्तेषु पिटकैरिव वाचितः
॥
व्यक्तवर्णो नतो मध्ये कण्डूमान्
ग्रन्थिसन्निभः ।

इति वाग्भटे उत्तरस्थाने ३७
अध्यायः ॥)

**लूतारिः**, पुं, (लूताया अरिः ।) दुग्धफेनीक्षुपः ।
इति राजनिर्घण्टः ॥

**लूतिका**, स्त्री, (लूतैव । स्वार्थे कन् । टापि अत
इत्वम् ।) मर्कटकः । इति
शब्दरत्नावली ॥

**लूनः**, त्रि, (लूयते स्मेति । लू + क्तः । "ल्वादिभ्यः ।"
८ । २ । ४४ । इति निष्ठातस्य नः ।)
छिन्नः ।
इत्यमरः ॥ (यथा, कथासरित्सागरे ।
२७ । १४३ ।
"दैवेन वैरिणा संख्ये लूनबाहुवनः
कृतः ॥"
उपचितः । यथा, कुमारे । ३ । ६१ ।
"तस्याः सखीभ्यां प्रणिपातपूर्ब्बं
स्वहस्तलूनः शिशिरात्ययस्य ।
व्यकीर्य्यत त्र्यम्बकपादमूले
पुष्पोच्चयः पल्लवभङ्गभिन्नः ॥")

**लूनकः**, पुं, (लून एव । स्वार्थे कन् ।) भेदितः ।
पशुः । इति मेदिनी । के, १५९ ॥

**लूनिः**, स्त्री, (लू + क्तिन् । "ऋकारल्वादिभ्यः
क्तिन्निष्ठावद्भवतीति वक्तव्यम् ।" ८ ।
२ । ४४ ।
इत्यस्य वार्त्तिकोक्त्या तस्य नः ।)
छेदः । इति
मुग्धबोधव्याकरणम् ॥ (ब्रीहिः ।
इत्युज्ज्वल-
दत्तः । ४ । १०५ ॥)

**लूमं**, क्ली, (लूयते इति । लू + बाहुलकात् मक् ।)
लाङ्गूलम् । इत्यमरः ॥

**लूमविषः**, पुं, (लूमे लाङ्गूले विषमस्य ।) वृश्चि-
कादिः । इति हेमचन्द्रः ॥

**लूष**, क वधे । स्तेये । इति कविकल्पद्रुमः ॥

लेख्यकर्म्म कायस्थेन कर्त्तव्यम् । यथा, --
"लेखकानपि कायस्थान् लेख्यकृत्ये विचक्ष-
णान् ॥"
कुर्य्यादितिशेषः । इति पराशरसंहितायाम् १०
अध्यायः ॥ (गणेशस्तु महाभारतस्य लेखकः
।
यथा, महाभारते । १ । १ ७८ -- ७९ ।
"श्रुत्वैतत् प्राह विघ्नेशो यदि मे लेखनी क्षणम्
।
लिखतो नावतिष्ठेत तदा स्यां लेखको ह्यहम् ॥
व्यासोऽप्युवाच तं देवमबुद्ध्वा मा लिख
क्वचित् ।
ॐमित्युक्त्वा गणेशोऽपि बभूव किल लेखकः
॥")

**लेखनं**, क्ली, (लिख + ल्युट् ।) छर्द्दनम् । भुर्ज्जत्वक् ।
अक्षरविन्यासः । इति मेदिनी । मे, १२२ ॥ *
॥
भूमौ लेखननिषेधो यथा, --
"न भूमौ विलिखेद्वर्णं मन्त्रं न पुस्तकं लिखेत्
॥"
इति योगिनीतन्त्रे तृतीयभागे ७ पटलः ॥
लेखनाञ्जनम् । यथा, --
"दक्षाण्डत्वक्शिलाकाचशङ्खचन्दनसैन्धवैः ।
चूर्णितैरञ्जनं प्रोक्तं पुष्पार्म्मादिनिकृन्तनम् ॥"

| | | |
|---|---|---|
| | (चुरा०-पर०-सक०-सेट् ।) क, लूषयति । इति दुर्गादासः ॥<br>**लेखः**, पुं, (लिख्यते इति । लिख् + घञ् ।) देवः । इत्यमरः ॥ लेख्यः । इति मेदिनी । खे, ४ ॥ (यथा, कुमारे । १ । ७ । | |

दक्षः कुक्कुटः तस्याण्डस्य त्वक् ।
शिला मनः-
शिला । इति भावप्रकाशः ॥

**लेखनः**, पुं, (लिख + ल्युः ।) काशः । इति राज-

निर्घण्टः ॥

**लेखनिकः** पुं, (लेखनं शिल्पमस्य । लेखन + ठन् ।)

लेखहारकः । परहस्तेन लेखकः ।
स्वहस्तेन
लेखकः । इति मेदिनी । के, २११ ॥

**लेखनी**, स्त्री, लिख्यतेऽनया । (लिख + ल्युट् ।

ङीष् ।) लेखनसाधनवस्तु । तत्पर्य्यायः
। वर्ण-
तूलिका २ । इति हारावली ॥ वर्णतूली
३
कलमः ४ अक्षरतूलिका ५ । इति
जटाधरः ॥
कराश्रयः ६ चित्रकः ७ । इति
शब्दरत्ना-
वली ॥ * ॥ (यथा, महाभारते । १ । १
। ७८ ।
"श्रुत्वैतत् प्राह विघ्नेशो यदि मे लेखनी
क्षणम् ।
लिखतो नावतिष्ठेत तदास्यां लेखको
ह्यहम् ॥")
लेखनीकरणशुभाशुभं यथा, --
"वंशसूच्या लिखेद्वर्णं तस्य
हानिर्भवेद्ध्रुवम् ।
ताम्रसूच्या तु विभवो भवेन्न तत्क्षयो
भवेत् ॥
महालक्ष्मीर्भवेन्नित्यं सुवर्णस्य
शलाकया ।
बृहन्नलस्य सूच्या वै मतिवृद्धिः प्रजायते
॥
तथा अग्निमयैर्द्देवि पुत्त्रपौत्त्रधनागमः ।"
अग्निमयैश्चित्रकाष्ठमयैः ।
"रैत्येन विपुला लक्ष्मीः कांस्येन मरणं
भवेत् ॥

**लेखितं**, त्रि, लेख्यते यत् । कारितलिखितम् ।

इति ञ्यन्तलिखधातोः क्तप्रत्ययेन निष्पन्नम्
॥

**लेख्यं**, त्रि, (लिख + ण्यत ।) लेखितव्यम्

लेखनीयम् । इति लिखधातोः कर्म्मणि
यप्रत्य-
येन निष्पन्नम् ॥ * ॥
व्यवहाराङ्गकक्रियापादा-
ङ्गम् । यथा, --
"षाण्मासिकेऽपि समये भ्रान्तिः संजायते
यतः ।
धात्राक्षराणि सृष्टानि पत्रारूढान्यतः पुरा ॥
लेख्यन्तु द्विविधं प्रोक्तं स्वहस्तान्यकृतन्तथा
।
असाक्षिकं साक्षिमच्च
सिद्धिर्देशस्थितेस्तयोः ॥
मृतास्तु साक्षिणो यत्र धनिकर्णिकलेखकाः ।
तदप्यपार्थं करणमृते त्वाधेः स्थिराश्रयात् ॥
दर्शितं प्रतिकालञ्च पठितं श्रावितञ्च यत् ।
लेख्यं सिध्यति सर्व्वत्र मृतेष्वपि च साक्षिषु
॥"
इति व्यवहारतत्त्वे बृहस्पतिः ॥
अपि च । साम्प्रतं लेख्यं निरूप्यते । तत्र
लेख्यं
द्विविधम् । शासनं जानपदञ्चेति । शासनं
निरू-
पितम् । जानपदमभिधीयते । तच्च द्विविधम्
।
स्वहस्तकृतमन्यकृतञ्चेति । तत्र
स्वहस्तकृतम-
साक्षिकम् । अन्यकृतं ससाक्षिकम् ।
अनयोश्च
देशाचारानुसारेण प्रामाण्यम् । यदाह
नारदः ।
"लेख्यन्तु द्विविधं ज्ञेयं
स्वहस्तान्यकृतन्तथा ।
असाक्षिमत् साक्षिमच्च
सिद्धिदेशस्थितेस्तयोः ॥"

"समाप्तेऽर्थे ऋणी नाम स्वहस्तेन
निवेशयेत् ।
मतं मेऽमुकपुत्त्रस्य यदत्रोपरि लेखितम् ॥"
धनिकाधमर्णयोर्योऽर्थः स्वरुच्या
व्यवस्थित-
स्तस्मिन्नर्थे समाप्ते लिखिते ऋणी अधमर्णो
नामात्मीयं स्वहस्तेनास्मिल्लेख्ये यदुपरि
लेखितं
तन्ममामुकपुत्त्रस्य मतमभिप्रेतमिति
निवेशयेत्
पत्रे लिखेत् । तथा, --
"साक्षिणश्च स्वहस्तेन पितृनामकपूर्ब्बकम्
।
अत्राहममुकः साक्षी लिखेयुरिति ते समाः
॥"
तस्मिन् लेख्ये ये साक्षिणो
लिखितास्तेऽप्या-
त्मीयपितृनामलेखनपूर्ब्बकमस्मिन्नर्थे
अहममुको
देवदत्तः साक्षीति स्वहस्तेनैकैकशो
लिखेयुस्ते
च समाः संख्यातो गुणतश्च कर्त्तव्याः ।
यद्य-
धमर्णः साक्षी वा लिपिज्ञो न भवति तदाध-
मर्णोऽन्यन साक्षी च साक्ष्यन्तरेण
सर्व्वसाक्षि-
सन्निधौ स्वमतं लेखयेत् । यथाह नारदः ।
"अलिपिज्ञ ऋणी यः स्यात् स्वमतन्तु स
लेख-
येत् ।
साक्षी वा साक्षिणान्येन सर्व्वसाक्षी
समीपतः ॥"
इति ।
अपि च ।
"उभयाभ्यर्थ्यते नैतन्मया ह्यमुकसूनुना ।
लिखितं ह्यमुकेनेति लेखकोऽन्ते ततो
लिखेत् ॥
ततो लेखको धनिकाधमर्णिकाभ्यां
उभाभ्यां

अष्टाङ्गुलप्रमाणेन दशाङ्गुलेन वाथवा ।
चतुरङ्गुलसूच्या वा यो लिखेत् पुस्तकं शुभे ।
तत्तदक्षरसंख्ये तु स्वल्पायुर्य्याति वै दिने ॥”
यथा रैत्येनेत्यादिवचने एकत्रैव विधिनिषेधौ
तथात्राप्यष्टाङ्गुलदशाङ्गुलयोर्विधिः निषेधश्चतु-
रङ्गुले । इति योगिनीतन्त्रे तृतीयभागे ७ पटलः ॥ (खटिका । तत्पर्य्यायो यथा, --
“खटिका कठिनी चापि लेखनी च निगद्यते ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**लेखनीयः**, त्रि, लेख्यम् । लेखितव्यम् । इति लिख-
धातोः कर्म्मण्यनीयप्रत्ययेन निष्पन्नम् ॥ (यथा,
सुश्रुते । ६ । १८ ।
“स्नेहनो लेखनीयश्च रोपणीयश्च स त्रिधा ॥”)

**लेखर्षभः**, पुं, (लेखेषु देवेषु ऋषभः श्रेष्ठः । लेख
ऋषभ इवेति वा ।) इन्द्रः । इत्यमरः ॥

**लेखहारः**, पुं, लेखं हरति इत्यर्थे अणप्रत्ययेन
निष्पन्नः । पत्रवाहकः । इति सिद्धान्तकौमुदी ॥
(यथा, कथासरित्सागरे । ५ । ६५ ।
“निगूढं स नृपस्तत्र लेखहारं व्यसर्ज्जयत् ॥”)

**लेखहारकः**, पुं, (लेखहार एव । स्वार्थे कन् ।)
पत्रवाहकः । (यथा, कथासरित्सागरे । ३९ ।
१९० ।
“आह्वानाय स्वनगरे स्थितेनोच्छृङ्खलस्थितेः ।
भ्रातुर्धूमशिखस्येह प्रहितो लेखहारकः ॥”)

इति ॥
तत्रान्यकृतमाह ।
“यः कश्चिदर्थो निष्णातः स्वरुच्या तु परस्परम् ।
लेख्यन्तु साक्षिमत् कार्य्यन्तस्मिन् धनिकपूर्व्वकम् ॥”
धनिकाधमर्ण्ययोर्योऽर्थो हिरण्यादिः परस्परं
स्वरुच्या इयता कालेनैतावद्देयमितीयती च
प्रतिमासं वृद्धिरिति निष्णातो व्यवस्थित-
स्तस्मिन्नर्थ कालान्तरे विप्रतिपत्तौ वस्तुतत्त्व-
निर्णयार्थं लेख्यम् । साक्षिमदुक्तलक्षणं साक्षि-
युक्तम् । धनिकः पूर्व्वो यस्मिन् तद्धनिकपूर्व्वकम् ।
धनिकनामलेखनपूर्ब्बकमिति यावत् कार्य्यं
कर्त्तव्यम् । उक्तलक्षणाः साक्षिणो वा कर्त्तव्याः ।
“कर्त्रा तु यत् कृतं कार्य्यं सिद्ध्यर्थन्तस्य साक्षिणः ।
प्रवर्त्तन्ते विवादेषु स्वकृतं वाप्यलेख्यकम् ॥”
इति स्मरणात् ॥
आप च ।
“समामासतदर्द्धाहर्नामजातिस्वगोत्रैक ।
सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम्॥”
समा संवत्सरः । मासश्चैत्रादिस्तदर्द्धः पक्षः
शुक्लः कृष्णो वा । अहस्तिथिः प्रतिपदादिः ।
नाम धनिकाधमर्ण्योः । जातिर्ब्राह्मणादिः ।
स्वगोत्रं वाशिष्ठादिगोत्रमेतैः समादिभिश्चिह्नि-
तम् । तथा सब्रह्मचारिकं बह्वृचादिशाखा-
प्रयुक्तं गुणनामबह्वृचः कठ इति । आत्मीय-
पितृनाम धनिकर्णिकपितृनाम । आदि ग्रह-
णाद्द्रव्यजातिसंख्याचारादेर्ग्रहणम् । एतैश्चि-
ह्नितं लेख्यं कार्य्यमिति गतेन सम्बन्धः ।
किञ्च ।

प्रार्थितेन मयामुकेन देवदत्तेन विष्णुमित्रसूनुना
एतल्लेख्यं लिखितमित्यन्ते लिखेत् ॥ * ॥ साम्प्रतं
स्वकृतलेख्यमाह ।
“विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितन्तु यत् ।
तत् प्रमाणं स्मृतं लेख्यं बलोपधिकृतादृते ॥”
यल्लेख्यं स्वहस्तेन लिखितं अधमर्णेन तत् साक्षि-
भिर्विनापि प्रमाणं स्मृतं मन्वादिभिः । बलोप-
धिकृतादृते । बलेन बलात्कारेण । उपधिना
छललोभक्रोधभयमदादिलक्षणेन यत् कृतं तस्मा-
द्विना । नारदोऽप्याह ।
“मत्ताभियुक्तस्त्रीबालबलात्कारकृतञ्च यत् ।
तदप्रमाणं लिखितं भयोपधिकृतन्तथेति ॥”
तच्चैतत् स्वहस्तकृतं परहस्तकृतञ्च यल्लेख्यं देशा-
चारानुसारेण सवन्धकव्यवहारे वन्धकव्यवहार-
युक्तमर्थक्रमापरिलोपन लिप्यक्षरापरिलोपेन च
लेख्यमित्येतावन्न पुनः साधुशब्दैरेव प्रातिस्विक-
देशभाषयापि लेखनीयम् । यथाह नारदः ।
“देशाचाराविरुद्धं यद्व्यक्ताधिविधिलक्षणम् ।
तत् प्रमाणं स्मृतं लेख्यमविलुप्तक्रमाक्षरम् ॥”
इति ॥
विधानं विधिराधेर्विधिराधीकरणन्तस्य लक्ष-
णम् । गोप्याधिर्भोग्याधिकालकृतमित्यादि तद्-

| | | |
|---|---|---|
| **लेखा**, स्त्री, (लिख्यते इति । लिख + बाहुलकात् अप् । टाप् ।) लिपिः । पङ्क्तिः । इति मेदिनी । खे, ४ ॥<br>**लेखार्हः**, पुं, (लेखे अर्हः ।) श्रीतालवृक्षः । इति राजनिर्घण्टः ॥ लेखनयोग्ये, त्रि ॥ | | व्यक्तं विस्पष्टं यस्मिंस्तद्ब्यक्ताधिविधिलक्षणम्। अविलुप्तक्रमाक्षरं अर्थानाक्रमः क्रमश्चाक्षराणि च क्रमाक्षराणि अविलुप्तानि क्रमाक्षराणि यस्मिं- स्तदविलुप्तक्रमाक्षरम्। तदेवं भूतं लिखितं प्रमा- णम् । राजशासनवन्न साधुशब्दनियमोऽत्रेत्यभि- प्रायः । लेख्यप्रसङ्गेन लेख्यारूढमप्यूर्णं त्रिभिरेव |

देयमित्याह । ऋणं लेख्यकृतन्देयं
पुरुषैस्त्रिभिरेव
तु । यथा साक्ष्यादिकृतमृणन्त्रिभिरेव देयं तथा
लेख्यकृतमप्याहर्त्तृपुत्त्रतत्पुत्त्रैस्त्रिभिरेव देयम् ।
न चतुर्थादिभिरिति नियम्यते । ननु पुत्त्रपौत्त्रै-
रृणन्देयमित्यविशेषेणर्णमात्रन्त्रिभिरेव देयमिति
नियतमेव । वाढमस्यैवोत्सर्गस्य पत्त्रारूढर्ण-
विषये स्मृत्यन्तरप्रभवामपवादशङ्कामपनेतुमिदं
वचनमारब्धम् । तथा हि । पत्रलक्षणमभिधाय
कात्यायनेनाभिहितम् । एवं कालमतिक्रान्तं
पितृणान्दाप्यते ऋणमिति । इत्थं पत्त्रारूढ-
मतिक्रान्तकालमपि पितृणामपि पितृणां
सम्बन्धि
दाप्यते । अत्र पितृणामिति बहुवचननिर्द्देशात्
कालमतिक्रान्तमिति वचनाच्चतुर्थादिर्दाप्यत
इति
प्रतीयते । तथा हारीतेनापि । लेख्यं यस्य भवे-
द्धस्ते लाभन्तस्य विनिर्द्दिशेदिति । अत्रापि
यस्य
हस्ते पत्रमस्ति तस्यर्णलाभ इति सामान्येन
चतु-
र्थादिभ्योऽप्यृणलाभोऽस्तीति प्रतीयते ।
अतश्चै-
तदाशङ्कानिवृत्त्यर्थं एतद्वचनमिति युक्तम् ।
वचन-
द्वयन्तु योगीश्वरवचनानुसारेण योजनीयम् ॥ *
॥
अस्यापवादमाह । आधिस्तु भुज्यते तावद्-
यावत्तन्न प्रदीयते । सवन्धकेऽपि पत्त्रारूढे ऋणे
त्रिभिरेव देयमिति नियमादृणापकरणानधि-
कारेणाध्याहरणेऽप्यनधिकारप्राप्ताविदमुच्यते।
यावच्चतुर्थेन पञ्चमेन वा ऋणं न दीयते ताव-
देवाधिर्भुज्यत इति वदता सवन्धकर्णापाकरणे
चतुर्थादिरप्यधिकारो दर्शितः । नन्वेतदप्ययुक्त-
मेव फलभोग्यो न नश्यतीति सत्यम् । तदप्ये-
तस्मिन्न सत्यपवादवचने पुरुषत्रयविषयमेव
स्यादिति सर्व्वमनवद्यम् ॥ * ॥ प्रासङ्गिकं परि-
समाप्य प्रकृतमेवानुसरति ।
“देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा ।

अलेख्यसाक्षिके दैवीं व्यवहारे
विनिर्द्दिशेदिति
स्मरणात् । एतच्च जानपदं व्यवस्थापत्रम् ।
राजकीयमपि व्यवस्थापत्रमीदृशमेव भवति
।
इयांस्तु विशेषः ।
“राज्ञः स्वहस्तसंयुक्तं स्वमुद्राचिह्नितन्तथा
।
राजकीयं स्मृतं लेख्यं सर्व्वेष्वर्थेषु साक्षिमत्
॥”
इति ॥ * ॥
तथान्यदपि राजकीयं जयपत्रं
वृद्धवशिष्ठेनोक्तम् ।
यथोपन्यस्तसाध्यार्थसंयुक्तं सोत्तरक्रियम् ।
सावधारणकञ्चैव जयपत्रकमिष्यते ॥
प्राड्विवाकादिहस्ताङ्कंमुद्रितं राजमुद्रया ।
सिद्धेऽर्थे वादिने दद्याज्जयिने
जयपत्रकमिति ॥
तथा । सभासदोऽपि मतं मेऽमुकपुत्त्रस्येति
स्वहस्तं दद्युः ।
“सभासदश्च ये तत्र स्मृतिशास्त्रविदः
स्थिताः ।
यथा लेख्यविधौ तद्वत् स्वहस्तं दद्युरेव ते
॥”
इति मनुस्मरणात् ॥
सभासदाञ्च परस्परानुमतिव्यतिरेकेण
व्यवहारो
निःशल्यो भवति । यथाह नारदः ।
“यत्र सभ्यो जनः सर्व्वः साध्ये तदिति
मन्यते ।
स निःशल्यो विवादः स्यात्
सशल्यस्त्वन्यथा
भवेत् ॥” इति ।
एतच्चतुष्पाद्व्यवहारएव ।
“साधयेत् साध्यमर्थं यच्चतुष्पादान्वितञ्च
यत् ।
राजमुद्राङ्कितञ्चैव जयपत्रकमिष्यते ॥”
इति स्मरणात् ॥
यत्र तु हीनता यथा ।

साक्षिभिर्निर्णयः कार्य्यः । यथाह
कात्यायनः ।
“दूषिते पत्रके वादी तदारूढांस्तु
निर्द्दिशेत् ॥”
इति ।
साक्षिसम्भवविषयमिदं वचनम् ।
साक्ष्यसम्भव-
विषयन्तु हारीतवचनम् ।
“न मयैतत् कृतं पत्रं कूटमेतेन
कारितम् ।
अधरीकृत्य तत् पत्रमथ दिव्येन
निर्णयः ॥”
इति ॥ * ॥
एवं शोधिते पत्रे ऋणे च दातव्ये प्राप्ते
यदा
कृत्स्नमेवर्णन्दातुमसमर्थस्तदा किं
कर्त्तव्यमित्यत
आह ।
“लेख्यस्य पृष्ठेऽभिलिखेद्दत्त्वा
दत्त्वर्णिको धनम् ।
धनी चोपगतं दद्यात्
स्वहस्तपरिचिह्नितम् ॥”
यदाधमर्णिकः सकलमृणं
दातुमसमर्थस्तदा
शक्त्यनुसारेण दत्त्वा दत्त्वा
पूर्व्वकृतस्य लेख्यस्य
पृष्ठेऽभिलिखेदेतावन्मया दत्तमिति ।
उत्तमर्णो
वा उपगतं प्राप्तं धनन्तस्यैव
लेख्यस्य पृष्ठे दद्या-
दभिलिखेदेतावन्मया लब्धमिति ।
कथं स्वहस्त-
परिचिह्नितम् ।
स्वहस्तलिखिताक्षरचिह्नितम्।
यद्वोपगतं प्रवेशपत्रं
स्वहस्तलिखितचिह्नित-
मधमर्णायोत्तमर्णो दद्यात् ॥ * ॥
ऋणे तु कृत्स्ने

भिन्ने दग्धऽथवा च्छिन्ने लेख्यमन्यत्तु कारयेत्
॥”
व्यवहाराक्षमे पत्रे पत्रान्तरं कुर्य्यादिति विधी-
यते । व्यवहाराक्षमत्वञ्चात्यन्तव्यवहितेदेशान्त-
रस्थे पत्रे दुर्लेख्ये दुष्टानि सन्दिह्यमानानि
अवाचकानि वा लेख्यानि लिप्यक्षराणि पदानि
वा यस्मिंस्तद्दुर्लेख्यं तस्मिन्दुर्लेख्ये नष्टे
कालवशेन
उन्मृष्टे मसीदौर्ब्बल्यादिना मृदिते लिप्यक्षरे
हृते तस्करादिभिर्भिन्ने विदलिते दग्धे अग्निना
छिन्ने द्विधा भूते सति द्विर्भवति । एतच्चार्थि-
प्रत्यर्थिनोः परस्परानुमतौ सत्यां विमत्यान्तु
व्यवहाराप्राप्तौ देशान्तरस्थपत्रानयनाध्याना-
पेक्षया कालो दातव्यः दुर्द्देशावस्थिते नष्टे वा
पत्रे साक्षिभिरेव व्यवहारनिर्णयः कार्य्यः ।
यथाह नारदः ।
“लेख्ये देशान्तरन्यस्ते शीर्णे दुर्लिखिते हृते ।
सतस्तत्कालकरणमसतो दृष्टदर्शनम् ॥” इति
॥
सतो विद्यमानपत्रस्य देशान्तरस्थस्यानयनाय
कालकरणं कालावधिदातव्यः । असतः पुनर-
विद्यमानस्य पत्रस्य पूर्ब्बं ये द्रष्टारः साक्षिणस्तै-
र्दर्शनं व्यवहारपरिसमापनं कुय्यम् । यदा तु
साक्षिणो न सन्ति तदा दिव्येन निर्णयः कार्य्यः
“अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः
।
आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः
॥”
इति ॥
तत्र न जयपत्रमस्ति अपि तु हीनपत्रमेव
तच्च
कालान्तरे दण्डप्राप्त्यर्थं जयपत्रं तु
प्राङ्न्याय-
विधिसिद्ध्यर्थमिति विशेषः । लेख्यसन्देहे
निर्णयनिमित्तान्याह ।
“सन्दिग्धलेख्यशुद्धिः स्यात्
स्वहस्तलिखिता-
दिभिः ।
युक्तिप्राप्तिक्रियाचिह्नसम्बन्धागमहेतुभिः ॥”
शुद्धमशुद्धञ्चेति सन्दिग्धस्य लेख्यस्य शुद्धिः
स्वहस्तलिखितादिभिः स्यात् । स्वहस्तेन
लिखितं
यल्लेख्यान्तरन्तेन शुद्धिः । यदि
सदृशान्यक्ष-
राणि भवन्ति तदा शुद्धिः स्यादित्यर्थः ।
आदि-
शब्दात्
साक्षिलेखकस्वहस्तलिखितान्तरसम्बा-
दाच्छुद्धिरिति । युक्त्या प्राप्तिर्युक्तिप्राप्तिः ।
देश-
कालपुरुषाणां द्रव्येण सह सम्बब्धः प्राप्तिः ।
अस्मिन्देशे अस्मिन् काले अस्य पुरुषस्येदं
द्रव्यं
घटत इति युक्तिः । प्राप्तिः क्रिया
तत्साक्ष्युप-
न्यासः । चिह्नमसाधारणं श्रीकारादि ।
सम्बन्धः
अर्थिप्रत्यर्थिनोः पूर्ब्बमपि परस्परविश्वासेन
दान-
ग्रहणादिसम्बन्धः ।
आगमोऽस्यैतावतोऽर्थस्य
सम्भावितः प्राप्त्युपायः । एत एव हेतवः ।
एभिर्हेतुभिः सन्दिग्धलेख्यशुद्धिः
स्यादित्यन्वयः ।
यदा तु लेख्ये सन्देहनिर्णयो न जायते तदा
दत्ते लेख्यं किं कर्त्तव्यमित्यत आह
।
“दत्त्वर्णं पाटयेल्लेख्यं शुद्धौ चान्यत्तु
कारयेत् ॥”
क्रमेण सकृदेव वा कृत्स्नमृणन्दत्त्वा
पूर्व्वकृतं
लेख्यम्पाटयेत् । यदा तु
दुर्गदेशावस्थितं लेख्यं
नष्टं वा तदा शुद्ध्यै
अधमर्णत्वनिवृत्त्यर्थमन्यलेख्यं
कारयेदुत्तमर्णमधमर्णः
पूर्ब्बोक्तक्रमेणोत्तमर्णो
विशुद्धिपत्रं अधमर्णाय दद्यादित्यर्थः
॥ * ॥
ससाक्षिके ऋणे कृत्स्ने दातव्ये किं
कर्त्तव्य-
मित्यत आह ।
“साक्षिमच्च भवेत् यद्वा तद्दातव्यं
ससाक्षिकम् ।”
यत्तु ससाक्षिकमृणन्तत्
पूर्व्वसाक्षिसमक्षमेव
दद्यात् । इति लेख्यप्रकरणम् । इति
मिता-
क्षरायां व्यवहाराध्यायः ॥

**लेख्यचूर्णिका**, स्त्री, (लेख्यस्य चूर्णिका ।) तूलिका

इति शब्दरत्नावली ॥

**लेख्यपत्रः**, पुं, (लेख्यं लेखार्हं पत्रं अस्य ।)

तालवृक्षः । इति भावप्रकाशः ॥
लेखनीय-
पत्रे, क्ली ॥

**लेख्यस्थानं**, क्ली, (लेख्यस्य स्थानम् ।) लिख्यते

यत्र । आफिस इति दप्तरखाना इति
च
म्लेच्छभाषा । तत्पर्य्यायः ।
ग्रन्थकुटी २ । इति
शब्दरत्नावली ॥

**लेण्डं**, क्ली, गूथम् । ल्याड इति भाषा । यथा, --

| | | “उत्ससर्ज्ज बृहल्लेण्डं मूत्रञ्च भयमाप ह ॥” इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे धेनुकासुरवधे २२ अध्यायः ॥<br>**लेप**, ऋ ङ गमने । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट् ।) ऋ, अलिलेपत् । ङ, लेपते लिलेपे । इति दुर्गादासः ॥<br>**लेपः**, पुं, (लिप + घञ् ।) लेपनम् । (यथा, मार्कण्डेये । ३५ । १५ । |
|---|---|---|

"भूमिर्विशुध्यते कालात्
दाहमार्ज्जनगोक्रमैः ।
लपादुल्लेखनात्
सेकाद्वेश्मसंमार्ज्जनार्च्चनात् ॥")
भोजनम् । इति मेदिनी । पे, १० ॥
(लिप्यते-
ऽनेनेति ।) सुधा । इति विश्वः ॥ चुन इति
भाषा ॥

**लेपकः**, पुं, (लिम्पतीति । लिप् + ण्वु ल् ।) जाति-

विशेषः । राज इति थैकर इति च भाषा ।
तत्पर्य्यायः । पलगण्डः २ । इत्यमरः ॥
लेपी ३ ।
इति शब्दरत्नावली ॥ लेप्यकृत् ४ । इति
हेम-
चन्द्रः ॥ (लेपनकर्त्तरि, त्रि ॥)

**लेपनं**, क्ली, (लिप् + ल्युट् ।) लेपः । लेपा इति

भाषा । यथा, --
"वैशाखस्य सिते पक्षे तृतीयाक्षयसंज्ञिता
।
तत्र मां लेपयेद्गन्धलेपनैरतिशोभितम्
॥"
इति तिथ्यादितत्त्वम् ॥
विष्णुगृहलेपनफलं यथा, --
वराह उवाच ।
"शृणु तत्त्वेन मे देवि ! लिप्यमानस्य यत्
फलम् ।
सर्व्वं ते कथयिष्यामि यथा प्राप्नोति
मानवः ॥
गोमयं गृह्य वै भूमे मम वेश्मोपलेपयेत् ।
न्यस्तानि तत्र यावन्ति पदानि च
विलिम्पतः ॥
तावद्वर्षसहस्राणि दिव्यानि दिवि मोदते ।
यदि द्वादश वर्षाणि लिप्यते मम कर्म्मसु
॥
जायते विपुले शुद्धे धनधान्यसमाकुले ॥
दिव्यैर्नमस्कृतो देवि ! कुशद्वीपाय
गच्छति ।
कुशद्वीपमनुप्राप्य सहस्रं जीवते दश ।

"न रात्रौ लेपनं कुर्य्यात् शुष्कमाणं
न धार-
येत् ।
शुष्कमाणमुपेक्षेत प्रदेहे पीडनं प्रति
॥"
इति मध्यखण्डे त्रयोविंशेऽध्याये
शार्ङ्गधरे-
णोक्तम् ॥)

**लेपनः**, पुं, (लिम्पत्यनेनेति । लिप् + करणे ल्युट् ।)

तुरुष्कनामगन्धद्रव्यम् । इति
राजनिर्घण्टः ॥

**लेपी** [न्] पुं, (लिम्पतीति । लिप् + णिनिः ।)

लेपकः । थैकंर इति भाषा । इति
शब्दरत्ना-
वली ॥ लेपकर्त्तरि लेपविशिष्टे च त्रि
॥

**लेप्यं**, त्रि, (लिप् + ण्यत् ।) लेपनीयम् । लेप्त-

व्यम् । लिपधातोः कर्म्मणि
यप्रत्ययेन निष्पन्नम् ॥
(यथा, भागवते । ११ । २७ । १२
।
"शैली दारुमयी लौही लेप्या लेख्या
च
सैकती ।
मनोमयी मणिमयी प्रतिमाष्टविधा
स्मृता ॥")

**लेप्यकृत्**, पुं, (लेप्यं करोतीति । कृ + क्विप् ।)

लेपकः । इति हेमचन्द्रः । ३ ।
५८६ ॥

**लेप्यमयी**, स्त्री, (लेप्य + मयट् । ङीप् ।) काष्ठादि-

घटितपुत्तलिका । तत्पर्य्यायः ।
अञ्जलि-
कारिका २ । इति हेमचन्द्रः ॥

**लेष्टुघ्नः**, पुं, (लेष्टुं हन्तीति । हन् + टक् ।

लेष्टुभेदनः । इति शब्दरत्नावली ॥

**लेष्टुभेदनः**, पुं, (लेष्टुं भिनत्तीति । भिद् + ल्युट् ।)

लोष्टभङ्गसाधनमुद्गरः । मै इति ख्यातः ।
इति केचित् । इति भरतः ॥ तत्पर्य्यायः
कोटिशः २ । इत्यमरः ॥ कोटीशः ३ । इति
रत्नकोषः ॥ लेष्टुघ्नः ४ लेष्टुभेदी ५ चूर्णदण्डः ६
।
इति शब्दरत्नावली ॥

**लेसिकः**, पुं, हस्त्यारोहकः । तत्पर्य्यायः । कटि-

रोहकः २ । इति शब्दमाला ॥

**लेहः**, पुं, (लेहनमिति । लिह् + घञ् ।)

आहारः । भक्षणम् । इति हेमचन्द्रः ॥ तत्-
पर्य्यायः । स्वादनम् २ रसनम् ३ स्वदनम् ४
स्वदिः ५ । इति राजनिर्घण्टः ॥ (यथा, बृहत्-
संहितायाम् । ५ । ४३ ।
"सव्यापसव्यलेहग्रसननिरोधावमर्द्दनारोहाः।
आघ्रातं मध्यतमस्तमोऽन्य इति ते दश
ग्रासाः ॥"
कर्म्मणि घञ् । रसः । यथा, सुश्रुते । १ । ४४ ।
"पचेल्लेहं सिता क्षौद्रं पलार्द्धकुडवान्वितम् ॥"
लेढीति । लिह् + पचाद्यच् । लेहनकर्त्तरि, त्रि ।
यथा, भट्टिः । ६ । ८२ ।
"दह्योऽहं मधुनो लेहैद्ववैरुग्रैर्यथा गिरिः ॥"
अवलेहः । तत्पर्य्यायो यथा, --
"क्वाथस्य स्यात् पुनः पाकात् घनत्वं सारस-
क्रिया ।
सोऽवलेहश्च लेहः स्यात्तन्मात्रा स्यात् पलो-
न्मिता ॥
सिता चतुर्गुणा कार्य्या चूर्णाच्च द्विगुणो गुडः ।
द्रवं चतुर्गुणं दद्यादिति सर्व्वत्र निश्चयः ॥"
इति मध्यखण्डेऽष्टमेऽध्याये शार्ङ्गधरेणोक्तम् ॥")

**लेहनं**, क्ली (लिह् + ल्युट् ।) जिह्वया रस-

ग्रहणम् । चाटन इति भाषा । तत्पर्य्यायः ।
जिह्वास्वादः २ । इति हेमचन्द्रः ॥

**लेहिनः**, पुं, (लिह् + बाहुलकात् इनन् ।) टङ्क-

मद्भक्तश्चैव जायेत महिमागुणवान् शुचिः
॥
कुशद्वीपात् परिभ्रष्टो मम कर्म्मपरायणः ।
राजा वै जायते सुभ्रु सर्व्वधर्म्मेषु निष्ठितः
॥
लेपनस्य प्रभावेण मम कर्म्मपरायणः ।
भक्त्या व्यवस्थितश्चापि सर्व्वशास्त्राणि
गच्छते ॥
देवि ! कारयते सर्व्वं मम चायतनानि च ॥
कारयित्वा यथान्यायं मम लोकाय
गच्छति ॥
गोमयस्य तु वक्ष्यामि तच्छृणुष्व वसुन्धरे
।
गोमयन्तु समासाद्य यावल्लोकोऽनुगच्छति
॥
समीपे यदि वा दूरे गत्वानयति गोमयम् ।
यावन्ति तत्पदान्यस्य तावद्वर्षसहस्रकम्
।
गोमयानयिता चैव स्वर्गलोके महीयते ॥
एकादशसहस्राणि एकादशशतानि च ।
ततः स शाल्मले द्वीपे रमते च मुदा युतः
॥
शाल्मलात्तु परिभ्रष्टो राजा भवति
धार्म्मिकः ।
मद्भक्तश्चैव जायेत सर्व्वधर्म्मविदांवरः ॥
अथ द्वादशवर्षाणि मच्चित्तः सुदृढव्रतः ।
वहते गोमयं सुभ्रु मम लोकाय गच्छति ॥”
इति वराहपुराणम् ॥
देवीगृहलेपनफलं यथा, --
“देव्या गृहन्तु यः शुक्र गोमयेनानुलेपयेत्
।
स्त्रियो वा यदि वा पुंसः षण्मासन्तु
निरन्त-
रम् ।
स लभेदीप्सितान् कामान् देव्या लोकञ्च
गच्छति ॥”
देवीपुराण ४२ अध्यायः ॥
(रात्रौ लेपननिवधो यथा, --

**लेप्यस्त्री**, स्त्री, (लेप्या स्त्री ।) सुगन्धद्रव्यलिप्ता

स्त्री । इति शब्दरत्नावली ॥

**लेयः**, पुं, सिंहराशिः । इति ज्योतिस्तत्त्वम् ॥

**लेलिहानः**, पुं, (पुनःपुनरतिशयेन वा लेढीति ।

लिह् + यङ् + शानच् ।) शिवः ।
इति शब्द-
रत्नावली ॥ सर्पः । इति हेमचन्द्रः
॥ पुनःपुन-
र्लेहनकर्त्तरि, त्रि ॥ (यथा,
महाभारते । १ ।
२३३ । ५ ।
“सप्तजिह्वाननः क्रूरो लेलिहानो
विसर्पति ॥”)

**लेलिहाना**, स्त्री, (लेलिहान + स्त्रियां टाप् ।)

मुद्राविशेषः । यथा, --
“वक्त्रं विस्तारितं कृत्वाप्यधो
जिह्वाञ्च चाल-
येत् ।
पार्श्वस्थं मुष्टियुगलं लेलिहानेति
कीर्त्तिता ॥”
एषा ताराराधने । अन्या लेलिहाना
वक्तव्या ।
“योनिर्म्मायाधरः सेन्दुर्वधूः कूर्च्चं
क्रमाद्बिदुः ॥
बीजानि चोच्चरन् मन्त्री
मुद्राबन्धनमाचरेत् ।
तर्ज्जनीमध्यमानामाः समं
कुर्य्यादधोमुखम् ॥
अनामायां क्षिपेद्वृद्धां ऋज्वीं कृत्वा
कनि-
ष्ठिकाम् ।
लेलिहानाख्यमुद्रेयं जीवन्यासे
प्रकीर्त्तिता ॥”
इति तन्त्रसारः ॥

**लेशः**, पुं, (लिश् + घञ् ।) कणा । इत्यमरः ॥

(यथा, महाभारते । १२ । ५८ ।
२४ ।

णम् । इति हेमचन्द्रः ॥

**लेह्यं**, क्ली, (लिह् + ण्यत् ।) अमृतम् । इति

शब्दमाला ॥ लेहनीये, त्रि ॥ (यथा, कथा-
सरित्सागरे । ४५ । २३० ।
“तत्तन्नानाविधं भक्ष्यभोज्यलेह्यादि षड्रसम् ।
दिव्यमन्नं बुभुजिरे पपुः पानमथोत्तमम् ॥”
आहारविशेषो यथा, --
“आहारं षड्विधञ्चूष्यं पेयं लेह्यन्तथैव च ।
भोज्यं भक्ष्यन्तथा चर्व्व्यं गुरु विद्याद्यथोत्त-
रम् ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**लैङ्गं**, क्ली, (लिङ्गमधिकृत्य कृतो ग्रन्थ इति ।

लिङ्गस्येदमिति वा । लिङ्ग + अण् ।) लिङ्ग-
पुराणम् । यथा, --
“मात्स्यं कौर्म्म्यंतथालैङ्गं शैवं स्कान्दन्तथैव च
॥”
इत्यादि पाद्मोत्तरखण्डे ३४ अध्यायः ॥
(अस्य विवरणादिकं पुराणशब्दे द्रष्टव्यम् ॥)

|  | “एष ते राजधर्म्माणां लेशः<br>समनुवर्णितः ॥”)<br><br>**लेष्टुः**, पुं, (लिश्यते इति । लिश् + बाहुलकात्<br><br>तुन् ।) लोष्टम् । इत्यमरः ॥ (यथा,<br>महाभारते ।<br>१३ । ३४ । २६ ।<br>“अथ यो ब्राह्मणान् क्रुष्टः पराभवति<br>सोऽ-<br>चिरात् ।<br>यथा महार्णवे क्षिप्त<br>आमलेष्टुर्व्विनश्यति ”) |  |
|---|---|---|

**लैङ्गी**, स्त्री, लिङ्गिनी । इति राजनिर्घण्टः ॥ लिङ्ग

सम्बन्धिनि, त्रि ॥

**लोक**, ऋ क दीप्तौ । इति कविकल्पद्रुमः ॥ (चुरा०-

पर०-अक०-सेट् ।) ऋ, अलुलोकत् । क,
लोकयति । इति दुर्गादासः ॥

**लोक**, ऋ ङ ईक्षे । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-सक०-सेट् ।) ऋ, अलुलोकत् । ङ,
लोकते । विलोकयन्त्यो वपुरापुरक्ष्णां
प्रकाम-
विस्तारफलं हरिण्यः । इत्यादौ विलोकनं
विलोकः पश्चात् तं करोतीति ञौ साध्यम् ।
इति दुर्गादासः ॥

**लोकः**, पुं, (लोक्यते इति । लोक् + घञ् ।) भुव-

नम् । जनः । इत्यमरः ॥ सप्तलोकनामानि
यथा, --
“भूर्भुवः स्वर्म्महश्चैव जनश्च तप एव च ।
सत्यलोकश्च सप्तैते लोकास्तु परिकीर्त्तिताः
॥”
इत्यग्निपुराणम् ॥
अपि च ।
“भूर्लोको भुवः स्वर्लोकस्त्रैलोक्यमिदमुच्यते
।
महर्ज्जनस्तपः सत्यः सप्त लोकाः
प्रकीर्त्तिताः ॥
भूर्लोकः पार्थिवो लोकः अन्तरीक्षं भुवः
स्मृतः ।
भाव्यो लोको दिवि ह्येतच्छेषादूद्र्ध्वं
यथाक्रमम् ॥
भूतस्याधिपतिर्ह्यग्निस्ततो भूतपतिस्तु सः ।
वायुर्नभसोऽधिपतिस्तेन वायुर्नभस्पतिः ।
भाव्यस्य सूर्य्याधिपतिस्तेन सूर्य्यो
दिवस्पतिः ॥
गन्धर्व्वाप्सरसश्चैव गुह्यकाः सह राक्षसैः ।
भूर्लोकवासिनः सर्व्वे अन्तरीक्षचरान् शृणु ॥
मरुतः सप्तभिः स्कन्दै रुद्रास्तथैव चाश्विनौ
।
आदित्या वसवः सर्व्वे तथैव च गवाङ्गनाः ॥
आधिपत्येषु शुक्लेषु न्ययोजयत योगवित्
॥
त्रयाणामपि लोकानां देवतानां
द्विजोत्तमाः ।
चकार शक्रं राजानं दैत्यानां
दितिपूर्ब्बजम् ॥
पूर्ब्बस्यां कौशिको राजा दक्षिणस्यां यमो
दिशि ।
वरुणः पश्चिमायान्तु उत्तरस्यां सदा
धनी ॥” * ॥
पुण्यवतां लोका यथा, --
“एवं विभज्य राज्यानि पुरा प्रोक्तानि
यानि च ।
लोकांश्च विदधे दिव्यान् ददावथ पृथक्
पृथक् ॥
कस्यचित् सूर्य्यसङ्काशान्
कस्यचिद्वह्निनिर्म्म-
लान् ।
कस्यचिद्धिष्ण्यविद्योतान्
कस्यचिच्चन्द्रनिर्म्म-
लान् ॥
नानावर्णान् काममयाननेकशतयोजनान्
।
स तान् सुकृतिनां लोकान् पावनाय च
संस्थि-
तान् ॥
भानूद्र्ध्वे ये तपस्यन्ति
सौम्यास्तारागणाः सदा ।
एते सुकृतिनां लोका ये शान्ताः
पुण्यकर्म्मभिः ।
ये यजन्ति मखैः पुण्यैः समाप्तवरदक्षिणैः
।
स्वदारनिरता दान्ता ऋजवः
सत्यवादिनः ॥
दीनानुग्रहकर्त्तारो ब्रह्मण्या लोकपूजिताः
।
योगयुक्ता महात्मानो यान्ति तत्र
तपोज्ज्वलाः ॥
“लोककान्तं प्रियं पुत्त्रं कुशचीराम्बरं
वनम् ।
प्रस्थितं पश्यतो मेऽद्य हृदयं किं न
दीर्य्यते ॥”)

**लोकचक्षुः**, [स्] क्ली, (लोकानां चक्षुरिव ।)

सूर्य्यः । इति शब्दमाला ॥ जनस्य
लोचनञ्च ॥

**लोकजित्**, पुं, (लोकं जितवानिति । जि + क्विप्
।)

बुद्धः । इत्यमरः ॥ (लोकजेतरि, त्रि ।
यथा,
शतपथब्राह्मणे । १४ । ४ । १ । ३३ ।
“यं कामं कामयते तमागायति तद्वै
तल्लोक-
जिदेव ॥”)

**लोकतुषारः**, पुं, (लोके तुषार इव ।) कर्पूरः ।

इति राजनिर्घण्टः ॥ (कर्पूरशब्देऽस्य
गुणादिकं
ज्ञातव्यम् ॥)

**लोकनाथः**, पुं, (लोकानां नाथः ।) बुद्धः । इति

त्रिकाण्डशेषः ॥ (यथा, राजतरङ्गिण्याम् ।
१ ।
१३८ ।
“लोके भगवतो लोकनाथादारभ्य केचन
ये जन्तवो गतक्लेशान् बोधिसत्तानवेहि
तान् ॥”)
ब्रह्मा । इति शब्दरत्नावली ॥ विष्णुः ।
इति
तस्य सहस्रनामस्तोत्रम् ॥ शिवः । यथा,
--
“अकिञ्चनः सन् प्रभवः स सम्पदां
स लोकनाथः पितृसद्मगोचरः ।
स भीमरूपः शिव इत्युदीर्य्यते
न सन्ति याथार्थ्यविदः पिणाकिनः ॥”
इति कुमारसम्भवम् ॥
(तथा च महालिङ्गार्च्चनतन्त्रे
शिवशतनाम-

चतुर्थे तु महर्लोके तिष्ठन्ते कल्पवासिनः ।
प्रजानां पतिभिः सर्व्वैः सेव्यते पञ्चमो महान्
॥
मनुः सनत्कुमाराद्या वैराजश्च सुतास्त्रयः ।
षष्ठे तु संस्थिता ह्येते देवा देवविरोधकाः ॥
सत्यस्तु सप्तमो लोको ह्यपुनर्भववासिनाम् ।
ब्रह्मलोकः समाख्यातो ह्यप्रतीघातलक्षणः ॥
महीतलात् सहस्रांशस्तत ऊद्‌र्ध्वं दिवाकरः
।
दश तानि ध्रुवे यावद्‌द्विगुणे द्विगुणान्तरे ॥
दशयोजनकोट्यास्तु मेरुरूद्‌र्ध्वं ध्रुवः स्मृतः
।
त्रयोविंशतिलक्षाणि त्रैलोक्येशैक उच्यते ॥
द्विगुणेषु सहस्रेषु योजनानां शतेषु च ।
लोकान्तरमथैवैकं ध्रुवादूद्‌र्ध्वं विधीयते ॥
देवदानवगन्धर्व्वयक्षराक्षसपन्नगाः ।
भूतविद्याधराश्चैव अष्टौ ते देवयोनयः ॥
ते ब्रह्माण्डस्य मध्यस्थाः परतस्तमसावृतम्
।
ततोऽग्निवायुराकाशं ततो भूतादिरुच्यते ॥
ततो महान् प्रधानञ्च प्रकृतिः पुरुषस्ततः ।
पुरुषादीश्वरो ज्ञेयो यस्य शक्त्यावृतं जगत् ।
शिवोमाभानुदेवानां परापरतरा मताः ॥”
इति देवीपुराणे त्रैलोक्याभ्युदये ग्रहगति-
र्नामाध्यायः ॥ * ॥ दिक्पालानां लोका यथा,
“प्रजापतिस्तु भगवान् गुणतः प्रेक्ष्य देवताम्
।
सर्व्वं सहाः क्षमायुक्ता कोपिता ये
तमोजिताः ।
एवं नियोज्य तनयान् स्वयं
लोकपितामहः ।
पौष्करं ब्रह्मसदनमारुरोह प्रजापतिः ॥
सर्व्वे स्वयम्भुदत्तेषु पावनेषु दिवौकसः ।
रेमिरे स्वेषु लोकेषु महेन्द्रेणाभिपालिताः
॥”
इति वह्निपुराणे
वाराहप्रादुर्भावनामाध्यायः ॥
(जनार्थे विषयोऽस्य यथा, --
“यथा लोकस्य स्वार्गादिस्तथा पुरुषस्य
गर्भा-
धानं यथा कृतयुगमेवं बाल्यम् । यथा
त्रेता
तथा यौवनं यथा द्वापरस्तथा स्थाविर्य्यं
यथा
कलिरेवमातुर्य्यं यथा युगान्तस्तथा
मरणमित्येव-
मनुमानेनानुक्तानामपि
लोकपुरुषयोरवयव-
विशेषाणामग्निवेशसामान्यं विद्यात् ।”
“तत्र संयोगापेक्षी लोकशब्दः
षड्‌धातुसमुदायो
हि सामान्यतः सर्व्वलोकः । तस्य
हेतुरुत्-
पत्तिर्वृद्धिरुपप्लवो वियोगश्च तत्र
हेतुरुत्पत्ति-
कारणं उत्पत्तिर्जन्म वृद्धिराप्यायनं
उपप्लवो
दुःखागमः षड्‌धातु विभागो वियोगः स
जीवापगमः स प्राणनिरोधः स भङ्गः स
लोक-
स्वभावः ।” इति चरके शारीरस्थाने
पञ्चमे-
ऽध्याये ॥
“तस्मिन् क्रिया सोऽधिष्ठानं कस्मात्
लोकस्य
द्वैविध्यात् । लोकोहि द्विविधः स्थावरो
जङ्गमश्च । द्विविधात्मक एवाग्नेयः
सौम्यश्च
स्तोत्रे ।
“त्रैलोक्ये लोकनाथश्च रुद्रलोके
महेश्वरः ॥”
वटिकौषधविशेषः । तद्यथा, --
“पारदं गन्धकञ्चैव समभागं विचूर्णयेत् ।
मृताभ्रं रसतुल्यञ्च पुनस्तेनैव मर्द्दयेत् ॥
रसाद्‌द्विगुणलौहञ्च लौहतुल्यञ्च ताम्रकम्
।
भस्मवराटिकायाश्च ताम्रतस्त्रिगुणं क्षिपेत्
॥
नागवल्लीदलेनैव मर्द्दयेद्यत्नतो भिषक् ।
पचेद्‌गजपुटेनैव स्वाङ्गशीतं समुद्धरेत् ॥
यकृत्प्लीहोदरहरः गुल्मश्वयथुनाशनः ।
पिप्पलीमधुसंयुक्तां सगुडां वा हरीतकीम्
॥
गोमूत्रञ्च पिबेच्चानु गुडं वा जीरकान्वि-
तम् ॥”
इति लोकनाथो रसः ॥ इति
वैद्यकरसेन्द्रसार-
संग्रहे यकृत्प्लीहाधिकारे ॥ * ॥
लोकप्रभौ,
त्रि । यथा, गो ० रामायणे । २ । ३३ ।
१६ ।
“लोकनाथस्य रामस्य पीडया पीडितं
जगत् ।
अपर्व्वणीव सोमस्य राहुग्रहणपीडया ॥”)

**लोकपालः**, पुं, (लोकान् पालयतीति । पाल +
णिच् + अण् ।) राजा । इति हलायुधः ॥
(यथा, राजतरङ्गिण्याम् । १ । ३४९ ।
“उत्तमो लोकपालोऽयमिति लक्ष्म
प्रशस्तिषु ।
यः प्राप्तवान् विना यज्ञं चक्षमे न पशुक्षयम्
॥”)
दिक्पालः । यथा, --
“इन्द्रो वह्निः पितृपतिर्न्निरृतिर्वरुणोऽनिलः
।
धनदः शङ्करश्चैव लोकपालाः पुरातनाः
॥”
इति वह्निपुराणम् ॥

| | तद्भूयस्त्वात् । पञ्चात्मको वा ।” इति सुश्रुते सूत्रस्थाने प्रथमेऽध्याये ॥ * ॥)<br>**लोककान्ता**, स्त्री, (लोकानां कान्ता प्रिया ।) ऋद्धिनामौषधम् । इति राजनिर्घण्टः ॥ (लोकप्रिये, त्रि । यथा, गो० रामायणे । २ । ३८ । ६ । | |
|---|---|---|

(यथा च, मनुः । ५ । ९६ ।
"सोमाग्न्यर्कानिलेन्द्राणां वित्ताप्पत्योर्यमस्य च ।
अष्टानां लोकपालानां वपुर्धारयते नृपः ॥")

**लोकबान्धवः**, पुं, (लोकानां बान्धवः ।) सूर्य्यः ।
इति जटाधरः ॥

**लोकबाह्यः**, पुं, (लोकात् लोकसमाजात् बाह्यः ।)
सर्व्वाचारवर्ज्जितः । यथा, --
"लोकबाह्यस्तु यो वाजिगवाश्याचारवर्ज्जितः ॥"
इति जटाधरः ॥

**लोकमाता**, स्त्री, (लोकानां मातेव ।) लक्ष्मीः ।
इत्यमरः ॥ (लक्षणया लोकजननीसमापि च ।
यथा, भागवते । २ । ३ । ५ ।
"प्रतिष्ठाकामः पुरुषो रोदसी लोकमातरौ ॥")

**लोकलोचनं**, क्ली, (लोकानां लोचनमिव ।) सूर्य्यः ।
इति शब्दरत्नावली ॥ (जनस्य लोचनञ्च ।
कथा, कथासरित्सागरे । १८ । ९२ ।
"सोऽश्वस्तत्पार्ष्णिघातेन यन्त्रेणेवेरितः शरः ।
जगाम क्वाप्यतिजवादलक्ष्यो लोकलोचनैः ॥")

**लोकविनायकः**, पुं, (लोके विनायक इव ।) ग्रह-
विशेषः । यथा, --
"स्कन्दग्रहादयो ये च आर्य्यकत्रासकादयः ।
कौभारास्ते भूवि ज्ञेया ये च लोकविनायकाः ।
सहस्रशतसंख्याता मर्त्यलोकविचारिणः ॥"
इति वह्निपुराणम् ॥

**लोकविश्रुतिः**, स्त्री, (लोके विश्रुतिः ।) जनश्रुतिः ।
किंवदन्ती । इति केचित् ॥

**लोकायतं**, क्ली, (लोकेषु आयतं विस्तीर्णमिव ।)
तर्कभेदः । चार्वाकशास्त्रम् । इत्यमरभरतौ ॥

**लोकायतिकः**, पुं, (लोकायतं शास्त्रमस्त्यस्येति ।
लोकायत + ठन् ।) चार्व्वाकः । इति हेम-
यावदस्ति च देवर्षे ह्यन्तरं मानसोत्तरात् ।
सुमेरोस्तावती शुद्धा काञ्चनी भूमिरस्ति हि ॥
दर्पणोदरतुल्या सा सर्व्वप्राणिविवर्ज्जिता ।
यस्यां पदार्थः प्रहितो न किञ्चित् प्रत्युदीयते ॥
अतः सर्व्वप्राणिसङ्घरहिता सा च नारद ! ।
लोकालोक इति व्याख्या यदत्र परिकल्पिता ॥
लोकालोकान्तरे चास्य वर्त्तते सर्व्वदा स्थितिः ।
ईश्वरेण सलोकानां त्रयाणामन्तगः कृतः ॥
सूर्य्यादीनां ध्रुवान्तानां रश्मयो यद्वशादिह ।
अर्व्वाचीनाश्च त्रीँ ल्लोकानातन्वानाः कदापि
हि ॥
पराचीनत्वभाजो हि न भवन्ति च नारद ! ।
तावदुन्नहनायामः पर्व्वतेन्द्रो महोदयः ॥
एतावाँल्लोकविन्यासोऽयं संस्थामानलक्षणैः ।
कविभिः स तु पञ्चाशत्कोटिभिर्गणितस्य च ॥
भूगोलस्य चतुर्थांशो लोकालोकाचलो मुने ! ।
तस्योपरि चतुर्दिक्षु ब्रह्मणा चात्मयोनिना ॥
निवेशिता दिग्गजा ये तन्नामानि निबोधत ।
ऋषभः पुष्पचूडोऽथ वामनोऽथापराजितः ॥
एते समस्तलोकस्य स्थिहिहेतव ईरिताः ।
प्रभुश्च ॥ (यथा, महाभारते । ३ । ११४ ।
१९ ।
"अवसीदच्च कौन्तेय दत्तमात्रा मही तदा ।
उवाच चापि कुपिता लोकेश्वरमिदं प्रभुम् ॥")
लाकपालः । यथा, महाभारते । ८ । ३४ ।
२९ ।
"ग्रहनक्षत्रताराभिश्चर्म्म चित्रं नभस्तलम् ।
सुराम्बुप्रेतवित्तानां पतीन् लोकेश्वरान् हयान् ॥")

**लोकेश्वरात्मजा**, स्त्री, (लोकेश्वरस्य बुद्धस्य आत्म-
जेव ।) बुद्धशक्तिभेदः । तत्पर्य्यायः । तारा
२
महाश्रीः ३ ओङ्कारा ४ स्वाहा ५ श्रीः ६
मनोरमा ७ तारिणी ८ जया ९ अनन्ता
१०
शिवा ११ खदूरवासिनी १२ भद्रा १३
वैश्या १४
नीलसरस्वती १५ शङ्खिनी १६ महातारा
१७
वसुधारा १८ धनन्ददा १९ त्रिलोचना २०
लोचना २१ । इति हेमचन्द्रः ॥

**लोच**, ऋ क भासि । इति कविकल्पद्रुमः ॥
(चुरा०-पर०-अक०-सेट् ।) ऋ, अलुलोचत् ।
भासि दीप्तौ । किन्तु पुरुषोत्तमशरणद्वौ भाष
इति मूर्द्धन्यषकारं मत्वा वचनार्थमाहतुः ।
इति दुर्गादासः ॥

**लोच**, ऋ ङ ईक्षे । इति दुर्गादासः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) ईक्षः पर्य्यालोचनं प्रणि-
धानमिति यावत् । ऋ, अलुलोचत् । ङ, लोचते
कार्य्यं सुधीः । इति दुर्गादासः ॥

**लोचं**, क्ली, (लोचते पर्य्यालोचयति सुखदुःखा-
दिकमिति । लोच + अच् ।) अश्रु । इति

चन्द्रः ॥ (तार्किकः । यथा, हरिवंशे । २४९ ।
३० ।
"ऐक्यनामात्मसंयोगसमवायविशारदैः ।
तोकायतिकमुख्यैश्च शुश्रुवुः स्वनमीरितम्
॥")

**लोकालोकः**, पुं, (लोक्यतेऽसौ इति लोकः । न

लोक्यतेऽसौ इति अलोकः । ततः कर्म्म-
धारयः ।) स्वनामख्यातपर्व्वतः । तत्पर्य्यायः
।
चक्रवाडः २ । इत्यमरः ॥ द्वे साब्धिद्वीपां
महीमावेष्ट्य प्राकारवत् स्थिते गिरौ
लोकालोक
इति स्वनामख्याते । अन्तर्लोक्यते
सूर्य्यरश्मिभिः
स्पृश्यमानत्वात् इति लोकः । तथा बहिः
मूर्य्यकिरणास्पर्शात् न लोक्यते इति अलोकः
।
लोकृ ञीक्षे कर्म्मणि घञ् लोकश्चासौ
अलोक-
श्चेति लोकालोकः । चक्रं महीचक्रं वण्डते
वेष्टयति चक्रवाडः । वडि ङ वेष्टे च षण्-
ज्ञापकसिद्धस्यानित्यत्वात् न नुण् । इति
भरतः ॥
(यथा, रघुः । १ । ६८ ।
"मोऽहमिज्याविशुद्धात्माप्रजालोपनिमीलितः
।
प्रकाशश्चाप्रकाशश्च लोकालोक इवाचलः ॥"
अस्य विवरणं यथा देवीभागवते । ८ । १४ ।
१-१५ ।
श्रीनारायण उवाच ।
"ततः परस्तादचलो लोकालोकेति नामकः ।
अन्तराले च लोकालोकयोयः परिकल्पितः ॥
तेषाञ्च स्वविभूतीनां
बहुवीर्य्योपबृंहणम् ॥
विशुद्धसत्त्वञ्चैश्वर्य्यं वर्द्धयन् भगवान्
हरिः ।
आस्ते सिद्ध्यष्टकोपेतो
विष्वक्सेनादिसंवृतः ॥
निजायुधैः परिवृतो भुजदण्डैः समं
ततः ।
आस्ते सकललोकस्य स्वस्तये
परमेश्वरः ॥
आकल्पमेवं वेशं स गतो विष्णुः
सनातनः ।
स्वमायारचितस्यास्य
गोपीथायात्मसाधनः ॥
योऽन्तर्व्विस्तार एतेन
ह्यलोकपरिमाणकम् ।
व्याख्यातं यद्बहिर्लोकालोकाचल
इती-
रणात् ॥" * ॥
लोकश्च अलोकश्च तौ ।
सूर्य्याद्यालोकविशिष्ट-
तद्रहितदेशौ । अत्र द्विवनप्रयोगः
स्यात् ।
यथा, भागवते । ५ । २० । ३४ ।
"ततः परस्तात् लोकालोकनामाचलो
लोका-
लोकयोरन्तराले परित उपक्लृप्तः ॥")

**लोकेशः**, पुं, (लोकानामीशः ।) ब्रह्मा । इत्य-

मरः ॥ बुद्धभेदः । इति त्रिकाण्डशेषः
॥
पारदः । इति राजनिर्घण्टः ॥ (इन्द्रः ।
यथा,
रघुः । ३ । ६६ ।
"यथा च वृत्तान्तमिमं सदोगत-
स्तिलोचनैकांशतया दुरासदः ।
तवैव सन्देशहराद्विशांपतिः
शृणोति लोकेश ! तथा विधीयताम् ॥"
लोकपालः । यथा, मनुः । ५ । ९७ ।
"लोकेशाधिष्ठितो राजा नास्याशौचं
विधीयते ।
जटाधरः ॥

**लोचकः**, पुं, (लोचते इति । लोच + ण्वुल् ।)

मांसपिण्डम् । अक्षितारका । कज्जलम् ।
स्त्रीणां ललाटाभरणम् । कदली ।
नीलवस्त्रम् ।
निर्ब्बुद्धिः । कर्णपूरः । मूर्व्वी । भ्रूश्लथचर्म्म
।
इति मेदिनी । के, ५० ॥ निर्म्मोकः । इति
शब्दरत्नावली ॥

**लोचनं**, क्ली, (लोचतेऽनेनेति । लोच + ल्युट् ।)

चक्षुः । इत्यमरः ॥ तस्य शुभाशुभलक्षणं
यथा, --
"वक्रान्तैः पद्मपत्राभैर्लोचनैः सुखभागिनः ।
मार्जारलोचनैः पापो महात्मा मधुपिङ्गलैः ॥
क्रूराः केकरनेत्राश्च हरिणाक्षाः सकल्मषाः
।
जिह्मैश्च लोचनैः क्रूराः सेनान्यो
गजलोचनाः ॥
गम्भीराक्षा ईश्वराः स्युर्मन्त्रिणः
स्थूलचक्षुषः ।
नीलोत्पलाक्षा विद्वांसः सौभाग्यं श्यावचक्षु-
षाम् ॥
स्यात् कृष्णतारकाक्षाणामक्ष्णामुत्पाटनं
किल ।
मण्डलाक्षाश्च पापाः स्युर्निःस्वाः स्युर्दीर्घ-
लोचनाः ॥
दृक् स्निग्धा विपुला भोगे अल्पायुर्नाभि-
रुन्नता ।
विशालोन्नता सुखिनो दरिद्रा विषमभ्रुवः
॥"
इति गारुडे ६५ अध्यायः ॥

**लोचनहिता**, स्त्री, (लोचनाभ्यां हिता ।) तुत्थाञ्ज

नम् । इति राजनिर्घण्टः ॥

| | शौचाशौचं हि मर्त्तानां<br>लोकेशप्रभवाप्ययम् ॥”<br>लोकाधिपतौ, त्रि । यथा, भागवते । ३<br>।<br>६ । १९ ।<br>“पादावस्य विनिर्भिन्नौ लोकेशो<br>विष्णुरावि-<br>शत् ॥”)<br>**लोकेश्वरः**, पुं, (लोकानामीश्वरः ।) बुद्धभेदः ।<br>इति त्रिकाण्डशेषः ॥ भुवनानां जनानां | |
|---|---|---|

**लोचना**, स्त्री, (लोचते पर्य्यालोचयतीति । लोच + ल्युः । टाप् ।) बुद्धशक्तिभेदः । अस्याः प्रमाणं पर्य्यायाश्च लोकेश्वरात्मजाशब्दे द्रष्टव्याः ॥

**लोचनामयः**, पुं, (लोचनयोरामयः ।) चक्षूरोग-विशेषः । तत्पर्य्यायः । अभिमन्थः २ । इति त्रिकाण्डशेषः ॥

**लोचनी**, स्त्री, (लोच्यतेऽसौ । लोच् + ल्युट् । ङीप् ।) महाश्रावणिका । इति राज-निर्घण्टः ॥

**लोचमर्क्कटः**, पुं, लोचमस्तकः । इत्यमरटीकायां स्वामी ॥

**लोचमस्तकः**, पुं, (लोचं दृश्यं मस्तकं मयूरशिखेव यस्य ।) मयूरशिखौषधम् । रुद्रजटा इति ख्यातः । क्षेत्रयमानिकेति केचित् । तत्पर्य्यायः । खराश्वा २ कारवी ३ दीप्यः ४ भयूरः ५ । इत्यमरः ॥ लोचमर्कटः ६ । इति भरतः ॥

**लोचिका**, स्त्री, दधिघृतमर्द्दितोष्णोदकसहित-दलितमण्डलाकारनिर्म्मितघृतभृष्टसमिता । लुचि इति भाषा । इति पाकराजेश्वरः ॥

**लोट**, ऋ उन्मादे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट् ।) ऋ, अलुलोटत् । लोटति लोकः उन्माद्यतीत्यर्थः । इति दुर्गादासः ॥

**लोटुलः**, पुं, (लोटतीति । लोट् + बाहुलकात् उलच् ।) अभिलोटकः । इति संक्षिप्तसारो-णादिवृत्तिः ॥

**लोड**, ऋ उन्मादे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट् ।) ऋ, अलुलोडत् । इति दुर्गादासः ॥

कौमुद्यामुणादिवृत्तिः ॥ लवणम् । अश्रुपातः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**लोत्रं**, क्ली, (लूनातीति । लू + "सर्व्वधातुभ्यष्ट्रन् ।" उणा० ४ । १५८ । इति ष्ट्रन् । यद्वा, ला + "अशित्रादिभ्य इत्रोत्रौ ।" उणा० ४ । १७२ । इति उत्रः । इत्युज्ज्वलः ।) लोतम् । इति शब्दरत्नावली ॥ नेत्रजलम् । इति संक्षिप्त-सारोणादिवृत्तिः ॥

**लोधः**, पुं, (रुणद्धीति । रुध + अच् । रस्य लः ।) स्वनामख्यातवृक्षः । रक्तवर्णस्य तस्य पर्य्यायः । तिरीटः २ मार्ज्जनः ३ रक्तः ४ लोध्रः ५ तिन्दुकः ६ । श्वेतस्य तस्य पर्य्यायः । शुक्लः २ शवरलोध्रः ३ महालोध्रः ४ शावरः ५ । इति रत्नमाला ॥ अस्य गुणाः । अस्रकफवात-नाशित्वम् । चक्षुष्यत्वम् । शोथजित्त्वम् । सर-त्वञ्च । इति राजवल्लभः ॥

**लोध्रः**, पुं, (रुणद्धीति । रुध + बाहुलकात् रन् । रस्य लः ।) लोधवृक्षः । (यथा, शिशुपाल-वधे । ९ । ४६ ।
"अधरेष्वलक्तकरसः सुदृशां
विशदं कपोलभुवि लोध्ररजः ।
नवमञ्जनं नयनपङ्कजयो-

**लोध्रकवृक्षः**, पुं, (लोध्र एव लोध्रकः । स एव वृक्षः ।) लोध्रः । इति राजनिर्घण्टः ॥

**लोपः**, पुं, छेदः । आकुलीभावः । लुपधातोर्भवि घञ्प्रत्ययेन निष्पन्नोऽयम् । (अभावः । यथा, रघुः । १ । ६८ ।
"सोऽहमिज्याविशुद्धात्मा प्रजालोपनिमीलितः ।
प्रकाशश्चाप्रकाशश्च लोकालोक इवाचलः ॥")
व्याकरणमते वर्णनाशः । तथा हि । नाश-विधिर्यथा । लोपोऽस्योमाङोरित्यादि ॥ अपि च ।
"सकलेभ्यो विधिभ्यः स्याद्बली लोपविधिस्तथा ।
लोपस्वरादेशयोस्तु स्वरादेशो विधिर्ब्बली ॥"
इति दुर्गादासः ॥

**लोपा**, स्त्री, अगस्त्यमुनिपत्नी । इति जटाधरः ॥

**लोपाकः**, पुं, (लोपं शीघ्रमदर्शनं अकति प्राप्नो-तीति । अक् + अण् ।) शृगालः । इति त्रिकाण्डशेषः ॥ (यथा, सुश्रुते । १ । ४६ ।
"श्वाविच्छल्यकगोधाशशवृषदंशलोपाकलोमश-कर्णकदलीमृगप्रियकाजगरसर्पमूषिकनकुल-महावभ्रुप्रभृतयो विलेशयाः ॥")

**लोपापकः**, पुं, (लोपं द्रुतमदर्शनं आप्नोतीति । आप् + ण्वुल् ।) शृगालः । इति शब्दमाला ॥

**लोपापिका**, स्त्री, (लोपापक + स्त्रियां टाप् । अत इत्वम् ।) शृगाली । इति शब्दमाला ॥

**लोपामुद्रा**, स्त्री, अगस्त्यमुनिभार्य्या । इत्यमरः ॥ लोपयति योषितां रूपाभिधानमिति लोपा पचाद्यन् आमुद्रयति स्रष्टुः सृष्टिमिति आमुद्रा अन् ततः कर्म्मधारयः । किंवा न मुदं राति अमुद्रा पतिशुश्रूषाया लोपे अमुद्रा लोपा-मुद्रा । लोपा च ।
"लोपामुद्रा तु वैदर्भी लोपा स्त्री कुम्भजन्मनः ॥"
इति कण्ठभूषणम् । इति भरतः ॥ * ॥ अस्या अर्घ्यदानप्रसङ्गेन अगस्त्यार्घ्यदानं लिख्यते । अगस्त्यार्घ्यदानन्तु सौरेण सिंहराशौ विधानात् । यथा, ब्रह्मवैवर्त्ते ।
"अप्राप्ते भास्करे कन्यां शेषभूतैस्त्रिभिर्दिनैः ।

**लोणतृणं**, क्ली, (लोणं लवणरसयुक्तं तृणम् ।)

लवणतृणम् । इति राजनिर्घण्टः ॥

**लोणा**, स्त्री, (लवणमस्त्यस्या इति । अच् । टाप् ।

पृषोदरादित्वात् साधुः ।) क्षुद्राम्लिका । इति
राजनिर्घण्टः ॥ (तथास्याः पर्य्यायः ।
"लोणा लोणी च कथिता बृहल्लोणी तु घोटिका ।"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**लोणारं**, क्ली, (लवणं ऋच्छतीति । लवण + ऋ +

अण् । पृषोदरादित्वात् साधुः ।)
क्षारविशेषः ।
तत्पर्य्यायः । लवणोत्थम् २ लवणाकरजम् ३
लवणमदः ४ जलजम् ५ लवणक्षारः ६ लवणः ७ ।
अस्य गुणाः । अत्युष्णत्वम् । तीक्ष्णत्वम् । पित्त-
वृद्धिकारित्वम् । क्षारत्वम् । ईषल्लवणत्वम् । वात-
गुल्मादिशूलनाशित्वञ्च । इति राजनिर्घण्टः ॥

**लोणाम्ला**, स्त्री, क्षुद्राम्लिका । इति राजनिर्घण्टः ॥

**लोतं**, क्ली, (लुनातीति । लू + "हसिमृग्रिणिति ।"

उणा० ३ । ८६ । इति तन् ।) स्तेयधनम् ।
तत्पर्य्यायः । लोप्त्रम् २ । इति जटाधरः ॥
लोप्त्री ३ लोत्रम् ४ लुम्पम् ५ । इति शब्दरत्ना
वली ॥

**लोतः**, पुं, क्ली, (लुनातीति । लू + "हसिमृग्रि-

णिति ।" उणा० ३ । ८६ । इति तन् ।) नेत्राम्बु ।
इति त्रिकाण्डशेषः ॥ चिह्नम् । इति सिद्धान्त-
विंभिदे न शङ्खनिहितात् पयसः ॥")
तत्पर्य्यायः । गालवः २ शावरः ३ तिरीटः ४
तिल्वः ५ मार्जनः ६ । इत्यमरः ॥ षट् लोध्र-
मात्रे लोध इति ख्याते । षट् श्वेतलोध्र इति
सुभूतिः ॥ आद्यपादः श्वेतलोध्रे शेषो रक्तलोध्र
इति स्वामी ॥ तस्य पर्य्यायान्तरं यथा । लोध्रः ७
भिल्लतरुः ८ तिल्वकः ९
काण्डकीलकः १० 
लोध्रकवृक्षः ११ शम्बरः १२
हस्तिरोध्रकः १३
तिलकः १४ काण्डनीलकः १५
हेमपुष्पकः १६
भिल्ली १७ शावरकः १८ । अस्य गुणाः ।
कषायत्वम् । शीतत्वम् ।
वातकफास्रनाशित्वम् ।
चक्षुष्यत्वम् । विषहृत्त्वम् । तत्र विशिष्टो वल्क-
लोध्रकः । इति राजनिर्घण्टः ॥
अपि च ।
"लोध्रस्तिल्वस्तिरीटश्च शावरो गालवस्तथा ।
द्वितीयः पट्टिकालोध्रः क्रमुकः स्थूलवल्कलः ॥
जीर्णपत्रो बृहत्पत्रः पट्टीलाक्षाप्रसादनः ।
लोध्रो ग्राही लघुः शीतश्चक्षुष्यः कफपित्तनुत् ।
कषायो रक्तपित्तासृग्वातातीसारशोथहृत् ॥"
इति भावप्रकाशः ॥
(तथा च ।
"तिल्वकस्तु मतो लोध्रो बृहत्पत्रस्तिरीटकः ।
अर्घ्यं दद्युरगस्त्याय गौडदेशनिवासिनः ॥"
नारसिंहे ।
"शङ्खे तोयं विनिक्षिप्य सितपुष्पाक्षतैर्युतम् ।
मन्त्रेणानेन वै दद्याद्दक्षिणाशामुखस्थितः ॥
काशपुष्पप्रतीकाश अग्निमारुतसम्भव ।
मित्रावरुणयोः पुत्त्र कुम्भयोने नमोऽस्तु ते ॥"
प्रार्थनन्तु ।
"आतापिर्भक्षितो येन वातापिश्च महासुरः ।
समुद्रः शोषितो येन स मेऽगस्त्यः प्रसीदतु ॥"
गन्धादिकन्तु अगस्त्याय नम इत्यनेन देयं विशे
षानुद्देशो सामान्यतः प्राप्तत्वात् ।
दक्षिणाशामुखस्थित इति गन्धादावपि प्रयो-
गाङ्गकर्त्तृधर्म्मत्वादिति रत्नाकरः ॥ * ॥
तत्पत्न्यर्घ्यदानमन्त्रस्तु ।
"लोपामुद्रे महाभागे राजपुत्त्रि पतिव्रते ।
गृहाणार्घ्यं मया दत्तं मैत्रावरुणिवल्लभे ॥"
इति मलमासतत्त्वम् ॥

| | | |
|---|---|---|
| | तस्य मूलत्वचं शुष्कामन्तर्वल्कलवर्ज्जिताम् ॥<br>चूर्णयेत्तु त्रिधा कृत्वा द्वौ भागौ श्च्योतयेत्ततः ।<br>लोध्रस्यैव कषायेण तृतीयं तेन भावयेत् ॥<br>भागं तं दशमूलस्य पुनः क्वाथेन भावयेत् ।<br>शुष्कं चूर्णं पुनः कृत्वा तत ऊर्द्ध्वं प्रयोजयेत् ॥<br>दधितक्रसुरामण्डमूत्रैर्क्षरशीधुना ।<br>रसेनामलकानां वा ततः पाणितलं पिबेत् ॥"<br>"सुरां लोध्रकषायेण जातां पक्षस्थितां पिबेत् ॥"<br>इति चरके कल्पस्थाने नवमेऽध्याये ॥) | |

(अस्या जन्मादिविवरणन्तु महाभारते वन-
पर्व्वणि ९६ अध्यायमारभ्य द्रष्टव्यम् ॥)

**लोपामुद्रापतिः**, पुं, (लोपामुद्रायाः पतिः ।)
अगस्त्यमुनिः । इति पुराणम् ॥

**लोपाशकः**, पुं, (लोपं व्याकुलीभावं चकितमश्नाति ।
अश् + ण्वुल् ।) शृगालः । इति हारावली ॥

**लोपाशिका**, स्त्री, (लोपाशक + स्त्रियां टाप् ।
अत इत्वम् ।) शृगाली । इति हारा-
वली । १७२ ॥

**लोप्त्रं**, क्ली, (लुप् + ष्ट्रन् ।) स्तेयधनम् । लोतम् ।
इत्यमरः ॥ (यथा, महाभारते । १ । १०७ । ५ ।
"ते तस्यावसथे लोप्त्रं दस्यवः कुरुसत्तम ! ।
निधाय च भयाल्लीनास्तत्रैवानागते बले ॥")

**लोप्त्री**, स्त्री, (लोप्त्र + षित्वात् ङीष् ।) लोप्त्रम् ।
इति शब्दरत्नावली ॥

**लोभः**, पुं, (लुभ् + घञ् ।) आकाङ्क्षा । पर-
द्रव्याभिलाषः । तत्पर्य्यायः । तृष्णा २ लिप्सा ३
वशः ४ स्पृहा ५ काङ्क्षा ६ शंसा ७ गर्द्धः ८
वाञ्छा ९ इच्छा १० तृट् ११ मनोरथः १२
कामः १३ अभिलाषः १४ । इति हेमचन्द्रः ॥ * ॥
तस्य लक्षणं यथा, --
"परवित्तादिकं दृष्ट्वा नेतुं यो हृदि जायते ।
पश्य कोटिद्वयोपेतं लक्षाय प्रणतं धनुः ॥
नात्यर्थमर्थार्थितया लुब्धमुद्वेजयेज्जनम् ।
अब्धिर्दत्त्वाश्वरत्नं स्त्रीमर्थ्यमानोऽसृजद्विषम् ॥
लोभः सदा विचिन्त्यो लुब्धेभ्यः सर्व्वतो भयं दृष्टम् ।
कार्य्याकार्य्यविचारो लोभविमूढस्य नास्त्येव ॥
सत्यप्रशमतपोभिः शस्त्रधनैः शास्त्रवेदि-
भिर्विजितः ।
लोभो वत प्रविष्टः कुटिलं हृदयं किराती-
नाम् ॥
स्नेहोपपन्न इति पूर्णदशाविशेष-
शाली स्वमात्मनि वसुप्रकरं निधाय ।
लब्धोदये तमथ गृह्णति पद्मबन्धौ
दीपा भवन्ति कलुषा बलवान् हि लोभः ॥
यद्दुर्गामटवीमटन्ति विकटं क्रामन्ति देशान्तरं
गाहन्ते गहनं समुद्रमथनक्लेशं कृषिं कुर्व्वते ।
सेवन्ते कृपणं पतिं गजघटासङ्घट्टदुःसञ्चरं
सर्पन्ति प्रधनं धनान्धितधियस्तल्लोभविस्फू
र्ज्जितम् ॥" * ॥)

**लोभी**, [न्] त्रि, (लोभोऽस्यास्तीति । लोभ +
इनिः ।) लोभयुक्तः । तत्पर्य्यायः । गृध्नुः २
गर्द्धनः ३ लुब्धः ४ अभिलाषुकः ५ तृष्णकः ६
लोलुपः ७ लोलुभः ८ । इति जटाधरः ॥
लिप्सुः ९ । इति हेमचन्द्रः ॥

**लोभ्यः**, पुं, (लुभ्यते इति । लुभ + यत् ।) मुद्गः ।
इति हेमचन्द्रः ॥ लोभनीये, त्रि ॥

**लोम**, [न्] क्ली, (लूयते छिद्यते इति । लू +
"नामन्सीमन्व्योमन्रोमन्लोमन्पाप्मन्ध्यामन्।"
उणा० ४ । १५० । इति मनिन्प्रत्ययेन साधुः ।)
शरीरस्थकेशः । तत्पर्य्यायः । तनूरुहम् २ रोम
३ । इत्यमरः ॥ तनुरुहम् ४ तनुरुट् ५ । इति
शब्दरत्नावली ॥ (यथा, मुण्डकोपनिषदि ।
१ । १ । ७ ।
"यथोर्णनाभिः सृजते गृह्णते च
यथा पृथिव्यामोषधयः सम्भवन्ति ।
यथा सतः पुरुषात् केशलोमानि
तथाक्षरात् सम्भवतीह विश्वम् ॥")

**लोमं**, क्ली, लाङ्गूलम् । इति जटाधरः ॥ (रोम ।
यथा, तैत्तिरीयसंहितायाम् । ५ । १ । ६ । २ ।
"अथो शन्त्वायाजलोमैः संसृजत्येषा वा अग्नेः
प्रिया तणूर्यदजेति ॥")

**लोमकरणी**, स्त्री, मांसच्छदा । इति राजनिर्घण्टः ॥

**लोमकर्णः**, पुं, (लोमयुक्तौ कर्णौ यस्य ।) शशकः ।
इति हेमचन्द्रः ॥ (अस्य पर्य्यायो यथा, --
"लम्बकर्णः शशः शूली लोमकर्णो विलेशयः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥)
लोमयुक्तकर्णविशिष्टे, त्रि ॥

**लोमघ्नं**, क्ली, (लोमानि हन्तीति । हन + टक् ।)
इन्द्रलुप्तकम् । इति भूरिप्रयोगः ॥ टाक इति
भाषा ॥ लोमघातके, त्रि ॥

**लोमपादः**, पुं, (लोमानि पादयोर्यस्य ।) अङ्ग-
देशीयराजविशेषः । स तु ऋष्यशृङ्गमुनि-
श्वशुरः । इति रामायणम् ॥ (अयं हि सूर्य्य-
वंशावतंसस्य दशरथस्य सखा । विप्रावमान-
नात एवास्य राष्ट्रे बहुकालं अवग्रहः सम्बभूव
तत एवासौ काश्यपं ऋष्यशृङ्गं स्वराष्ट्रे
आनीय शान्तां नाम दशरथकन्यामस्मै दत्त-
वान् । एतद्वृत्तान्तन्तु महाभारते वनपर्व्वणि
११० अध्यायतो विशेषतो द्रष्टव्यम् ॥)

**लोमपादपूः**, स्त्री, (लोमपादस्य पूः ।) पुरी-
विशेषः । अधुना भागलपुर इति ख्याता ।

अभिलाषो द्विजश्रेष्ठ स लोभः
परिकीर्त्तितः ॥”
इति पाद्मे क्रियायोगसारे १६
अध्यायः ॥ * ॥
स च ब्रह्मणोऽधराज्जातः । यथा, --
“भ्रूमध्यादभवत् क्रोधो
लोभश्चाधरसम्भवः ।”
इति मात्स्ये सुखोत्पत्तिर्नाम ३
अध्यायः ॥ * ॥
स तु नाशकारणं यथा, --
“लोभप्रमादविश्वासैः पुरुषो नश्यते
त्रिभिः ।
तस्माल्लोभो न कर्त्तव्यः प्रमादो न न
विश्वसेत् ॥”
इति गारुडे नीतिसारे ११५ अध्यायः
॥
अपि च ।
“त्रिविधं नरकस्येदं द्वारं
नाशनमात्मनः ।
कामः क्रोधस्तथा
लोभस्तस्माद्वेतत्त्रयं त्यजेत् ॥”
इति श्रीभगवद्गीतायाम् १६ अध्यायः
॥
(लोभनिन्दाविषयकश्लोकानियथा, -
-
“लोभः प्रतिष्ठा पापस्य प्रसूतिर्लोभ
एव च ।
द्वेषक्रोधादिजनको लोभः पापस्य
कारणम् ॥
लोभात् क्रोधः प्रभवति लोभात्कामः
प्रजायते ।
लोभान्मोहश्च नाशश्च लोभः पापस्य
कार-
णम् ॥
लोभात् क्रोधः प्रभवति क्रोधाद्द्रोहः
प्रवत्तते ।
द्रोहेण नरकं याति शास्त्रज्ञोऽपि
विचक्षणः ॥
मातरं पितरं पुत्त्रं भ्रातरं वा सुहृत्तमम्
।
लोभाविष्टो नरो हन्ति स्वामिनं वा
सहो-

तत्तु गर्भस्थस्य षष्ठे मासि भवति । इति सुख-
बोधः ॥ अपि च ।
“षष्ठे मासि च नारीणां वैदिके नाधिकारिता ।
उदरस्थस्य बालस्य नखलोमप्रवर्त्तनात् ॥”
इति स्मृतिः ॥
(तथास्य विवृतिः ।
“अस्थो मलानि लोमानि असङ्ख्यानि भवन्ति
हि ।
सन्ति यावन्ति लोमानि तावन्तो लोम-
कूपकाः ॥
अङ्गप्रत्यङ्गनिर्वृत्तिः स्वभावादेव जायते ।
सन्निवेशश्च गात्राणां नात्रास्ते कारणान्तरम् ॥”
निर्वृत्तिः सिद्धिः स्वभावात् ईश्वरात् । सन्निबेशो
रचनाविशेषः । इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ॥)

तत्पर्य्यायः । चम्पा २ मालिनी ३
कर्णपूः ४ ।
इति हेमचन्द्रः ॥

**लोमफलं**, क्ली, (लोमयुक्तं फलम् ।) भव्यम् ।
इति राजनिर्घण्टः ॥

**लोमविषः**, पुं, (लोम्नि विषं यस्य ।) व्याघ्रादिः ।
इति हेमचन्द्रः ॥

**लोमशः**, पुं, (लोमानि सन्त्यस्येति । लोमन् +
“लोमादिभ्यः शः ।” इति शः ।)
मुनिविशेषः ।
(मुनिवरोऽयं तीर्थगमनाभिलाषिणः
सानुजस्य
युधिष्ठिरस्यानुगामी
सर्व्वतीर्थवृत्तान्तमस्मै विज्ञा-
पयामासेति महाभारते वनपर्व्वणि
द्रष्टव्यम् ॥ * ॥)
मेषः । अतिलोमान्विते, त्रि । इति मेदिनी
।
शे, २७ ॥ यथा, --
“कदाचिद्दन्तुरो मूर्खः कदाचिल्लोमशः
सुखी ॥”
इति सामुद्रकम् ॥
(धान्यापहरणरूपकर्म्मविपाकात् लोमशो
भवति । यथा, महाभारते । १३ । १११
। ११९ ।
“ध्यान्यं हृत्वा तु पुरुषो लोमशः
संप्रजायते ॥”)

**लोमशकाण्डा**, स्त्री, (लोमशः काण्डो यस्याः ।)
कर्कटी । इति राजनिर्घण्टः ॥
(कर्कटीशब्दे
ऽस्या गुणादयो ज्ञातव्याः ॥)

**लोमशपर्णिनी**, स्त्री, (लोमशं पर्णमस्त्यस्या इति ।
इनि । ङीप् ।) माषपर्णी । इति शब्द-
चन्द्रिका ॥

**लोमशपुष्पकः**, पुं, (लोमशानि पुष्पाणि यस्य ।
कप् ।) शिरीषवृक्षः । इति राजनिर्घण्टः
॥

| | | |
|---|---|---|
| दरम् ॥<br>लोभेन बुद्धिश्चलति लोभो जनयते<br>तृषाम् ।<br>तृषार्तो दुःखमाप्नोति परत्रेह च<br>मानवः ॥<br>लोभाविष्टो नरो वित्तं वीक्षते न स<br>चापदम् ।<br>दुग्धं पश्यति भार्ज्जारो यथा न<br>लगुडा-<br>हतिम् ॥<br>प्रायेण धनिनामेव धनलोभो निरन्तम्<br>। | | **लोमशमार्ज्जारः**, पुं, (लोमशो लोमबहुलो<br>मार्ज्जारः ।) मार्जारविशेषः ।<br>गन्धगकुला । |

इति भाषा । तत्पर्य्यायः । पूतिकः २ मार-
जातकः ३ सुगन्धी ४ मूत्रपातनः ५ गन्ध-
माज्जारकः ६ । इति राजनिर्घण्टः ॥ अस्य
मुष्कगुणाः ।
"गन्धमाज्जारवीर्य्यन्तु वीर्य्यकृत् कफवातहृत् ।
कण्डुकोष्ठहरं नेत्र्यं सुगन्धं स्वेदगन्धनुत् ॥"
इति भावप्रकाशः ॥

**लोमशा**, स्त्री, (लोमानि सन्त्यस्या इति ।
लोमन् + श । टाप् ।) काकजङ्घा । मांसी ।
(अस्याः पर्य्यायो यथा, --
"नलदं नन्दिनी पेषी मांसी कृष्णजटा जटी ।
किरातिनी च जटिला लोमशा तु तपस्विनी ॥"
इति वैद्यकरत्नमालायाम् ॥)
वचा । (अस्याः पर्य्यायो यथा, --
"वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्व्विका ।
क्षुद्रपत्री च मङ्गल्या जटिलोग्रा च लोमशा ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
शूकशिम्बिः । महामेदा । कासीसम् । शाकिनी-
भेदः । इति मेदिनी । शे, २७ ॥ अतिवला ।
इति विश्वः ॥ शणपुष्पी । एर्व्वारुः । गन्धमांसी ।
इति राजनिर्घण्टः ॥

**लोमशातनं**, क्ली, (लोम्नां शातनम् ।) लोम-
पातनम् । तस्यौषधानि यथा, --
"हरितालं शङ्खचूर्णं कदलीदलभस्मना ।

**लोमहृत्**, पुं, (लोमानि हरति नाशयतीति ।
हृ + क्विप् ।) हरितालम् । इति हेमचन्द्रः ॥

**लोमालिका**, स्त्री, (लोमाल्या लोमश्रेण्या काय-
तीति । कै + कः । टाप् ।) शृगालिका । यथा, --
"लोमालिका दीप्तजिह्वा किखिरुल्कामुखी च
सा ॥"
इति त्रिकाण्डशेषः ॥

**लोलः**, त्रि, (लोडतीति । लुड विलोडने + अच् ।)
चञ्चलः । (यथा, साहित्यदर्पणे ३ परिच्छेदे ।
१४१ ।
"पल्लवोपमितिसाम्यसपक्षं
दष्टवत्यधरविम्बमभीष्टे ।
पर्य्यकूजि सरुजेव तरुण्या-
स्तारलोलवलयेन करेण ॥")
साकाङ्क्षः । इत्यमरः ॥ (यथा, रघुः । ७ । २३ ।
"ह्रीयन्त्रणामानशिरे मनोज्ञा-
मन्योन्यलोलानि विलोचलानि ॥"
पुं, तामसमनुः । इति मार्कण्डेयपुराणम् ।
७४ । ४१ ॥)

**लोला**, स्त्री, (लोल + टाप् ।) जिह्वा । लक्ष्मीः ।
इति मेदिनी । ले, ४७ ॥ चञ्चला स्त्री च ।
(यथा, आर्य्यासप्तशत्याम् । ६०८ ।
"सर्व्वाङ्गमर्पयन्ती लोला सुप्तं श्रमेण शय्यायाम् ।
अलसमपि भाग्यवन्तं भजते पुरुषायितेव श्रीः ॥"
चतुर्द्दशाक्षरवृत्तिविशेषः । इति छन्दोमञ्जरी ॥
अस्य लक्षणादिकं छन्दःशब्दे द्रष्टव्यम् ॥)

**लोलार्कः**, पुं, (लोलनामा अर्कः ।) सूर्य्यः । यथा,
पुलस्त उवाच ।
रम्यं महेश्वरावासं मन्दरं रविकारणात् ॥
गत्वा दृष्ट्वा च देवेशं शङ्करं शूलपाणिनम् ।
प्रसाद्य भास्करार्थाय वाराणस्यामुपानयत् ॥
ततो दिवाकरं भूयः पाणिनादाय शङ्करः ।
कृत्वा नामास्य लोलेति रथमारोपयत् पुनः ॥
आरोपिते दिनकरे ब्रह्माभ्येत्य सुकेशिनम् ।
सबान्धवं सनगरं पुनरारोपयद्दिवि ॥"
इति श्रीवामनपुराणे सुकेशिचरिते लोलार्क-
जननं नाम १५ अध्यायः ॥

**लोलिका**, स्त्री, (लोलतीति । लुल + ण्वुल् ।
टापि अत इत्वम् ।) चाङ्गेरी । यथा, --
"क्षुद्रा दन्तशठाम्बष्ठा चाङ्गेरी लोलिका च सा ॥"
इति जटाधरः ॥

**लोलितः**, त्रि, श्लथः । झोला इति भाषा । लुल
विमर्द्दे अस्माद्भावे घञि लोलः सोऽस्य जातः
इत्यर्थे इतप्रत्ययेन निष्पन्नः ॥

**लोलुपः**, त्रि, (गर्हितं लुम्पतीति । लुप + यङ् +
अच् ।) अतिलुब्धः । इत्यमरः ॥ (यथा, माघे । १ । ४० ।
"तथापि वाचालतया युनक्ति मां
मिथस्त्वदाभाषणलोलुपंमनः ॥")

**लोलुभः**, त्रि, (भृशं लुभ्यतीति । लुभ + यङ् +
अच् ।) लोलुपः । इत्यमरः ॥ (यथा, कथा-
सरित्सागरे । ११७ । ४६ ।
"स्त्रियोऽपीच्छन्ति पुंभावं यं दृष्ट्वा रूपलोलुभाः ।
तस्यास्ते को भवेन्नार्थी तुल्यरूपः स किं पुनः ॥")

**लोष्ट**, ङ संहतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-

एतद्द्रव्येण चोद्वर्त्त्य लोमशातनमुत्तमम् ॥
लवणं हरितालञ्च तण्डुल्याश्च फलानि च
।
लाक्षारससमायुक्तं लोमशातनमुत्तमम् ॥
सुधा च हरितालञ्च शङ्खञ्चैव मनःशिला ।
सैन्धवेन सहैकत्र छागमूत्रेण पेषयेत् ।
तत्क्षणोद्वर्त्तनाद्वे लोमशातनमुत्तमम् ॥”
इति गारुडे १८५ अध्यायः ॥
(तथाच ।
“भल्लातकं बिडङ्गञ्च यवक्षारञ्च सैन्धवम् ।
मनःशिला शङ्खचूर्णं तैलपक्वं तथैव च ।
लोमानि शातयत्येव नात्र कार्य्या
विचारणा ॥”
इति वैद्यके भैषज्यधन्वन्तरौ
वशीकरणाद्यधि-
कारे ॥ * ॥)

**लोमहर्षणं**, क्ली, (लोम्नां हर्षणमिव ।) रोमाञ्चः ।

इत्यमरः ॥ (लोम्नां हर्षणमस्नादिति ।
रोमाञ्च-
कारके, त्रि । यथा, महाभारते । ६ । ६७
। १३ ।
“तस्मिन् महाभये घोरे तुमुले लोमहर्षणे ।
ववर्षुः शरजालानि क्षत्रिया युद्धदुर्म्मदाः
॥”)

**लोमहर्षणः**, पुं, (विचित्रपुराणकथाश्रवणात्

लोम्नां हर्षणं उद्गमो यस्मात् ।) सूतः ।
यथा,
“पुराणसंहितां चक्रे पुराणार्थविशारदः ।
प्रख्यातो व्यासशिष्योऽभूत् सूतो वै
लोभहर्षणः ॥
पुराणसंहितां तस्मै ददौ व्यासो महामुनिः
॥”
इति विष्णुपुराणे ३ अंशे ७ अध्यायः ॥ *
॥
स च बलरामेण हतः । यथा, --
“तथा क्षेत्रे सूतपुत्त्रो निहतो लोमहर्षणः ।
बलरामास्त्रयुक्तात्मा नैमिषेऽभूत्
स्ववाञ्छया ॥”
इति कल्किपुराणे २७ अध्यायः ॥

“ततः सुकेशिवचनात् सर्व्व एव निशाचराः
।
तेनोदितन्तु ते धर्म्मं चक्रुर्मुदितमानसाः ॥
ततः प्रवृद्धिं सुतरामगच्छन्त निशाचराः ।
पुत्त्रपौत्त्रार्थसंयुक्ताः सदाचारसमन्विताः ॥
तज्ज्योतिस्तेजसा तेषां राक्षसानां
महात्मनाम् ।
गन्तुं नाशक्नुवन् सूर्य्यो नक्षत्राणि च
चन्द्रमाः ॥
ततस्त्रिभुवनं ब्रह्मन् निशाचरपुरोऽभवत् ।
दिवा सूर्य्यस्य सदृशः क्षणदायाञ्च चन्द्रवत्
॥
ततः क्रोधाभिभूतेन भानुना विप्रभेदिभिः ।
भानुभी राक्षसपुरं तद्दृष्टञ्च यथेच्छया ॥
तद्भानुना तदा दृष्टं क्राधाध्मातेन चक्षुषा ।
निपपाताम्बराद्दृष्टः क्षीणपुण्य इव ग्रहः ॥
पतमानं समालोक्य पुरं शालङ्कटङ्कटः ।
नमो भवाय सर्व्वाय इदमुच्चैरधीयत ॥
तेषां क्रन्दितमाकर्ण्य चारणा गगनेचराः ।
हाहेत्युच्चुक्रुशुः सर्व्वे हरभक्तः पतत्यसौ ॥
तच्चारणवचः शर्व्वः श्रुतवान्
सर्व्वतोऽव्ययः ।
श्रुत्वा स चिन्तयामास केनासौ पात्यते
भुवि ॥
ज्ञातवान् देवपतिना सहस्रकिरणेन तत् ।
पातितं राक्षसपुरं ततः क्रुद्धस्त्रिलोचनः ॥
क्रुद्धस्तु भगवान् दृग्भिर्भानुमन्तमपश्यत ।
दृष्टमात्रस्त्रिनेत्रेण निपपात ततोऽम्बरात् ॥
ततो ब्रह्मा सुरपतिः सुरैः सार्द्धं समभ्ययात्
।

आत्म०-सक०-सेट् ।) ङ, लोष्टते धान्यं
लोकः ।
इति दुर्गादासः ॥

**लोष्टं**, क्ली, (लोष्टते इति । लोष्ट + अच् ।)

लौहमलम् । इति राजनिर्घण्टः ॥ लेष्टुः ।
इत्यमरः ॥

**लोष्टः**, पुं क्ली, (लोष्ट्यते इति । लोष्ट + घञ् ।

यद्वा, लूयते इति । लू + “लोष्टपलितौ ।”
उणा० ३ । ९२ । इति क्तप्रत्ययेन
निपातितः ।)
मृत्तिकाखण्डम् । डेला इति भाषा । तत्-
पर्य्यायः । लोष्टुः २ । इति शब्दरत्नावली
अम-
रश्च ॥ लोष्टुः ३ दलिः ४ । इति हेमचन्द्रः
॥
(यथा, वेतालपञ्चविंशत्याम् । १ ।
“अहौ वा हारे वा बलवति रिपौ वा
सुहृदि वा
मणौ वा लोष्टे वा कुसुमशयने वा दृषदि वा
।
तृणे वा स्त्रैणे वा मम समदृशो यान्तु
दिवसाः
क्वचित्पुण्येऽरण्ये शिव शिव शिवेति
प्रलपतः ॥”)

**लोष्टघ्नः**, पुं, (लोष्टं हन्तीति । हन + टक् ।)

लेष्टुभेदनः । इत्यमरटीकायां भरतः ॥

**लोष्टभेदनः**, पुं, (भिनत्तीति । भिद् + ल्युः । लोष्टस्य

भेदनः ।) लोष्टभङ्गसाधनमुद्गरः । मै इति
ख्याते इति केचित् । तत्पर्य्यायः ।
लेष्टुभेदनः २
लोष्टघ्नः ३ लेष्टुघ्नः ४ कोटिशः ५
कोटीशः ६ ।
इत्यमरटीका ॥

**लोष्टुः**, पुं, लोष्टः । इति हेमचन्द्रः ॥

**लोहं**, क्ली, अगुरु । इत्यमरः ॥ (अथास्य

पर्य्यायः ।

“अगुरुप्रवरं लोहं राजार्हं योगजन्तथा ।

वंशिकं क्रिमिजं वापि क्रिमिजग्धमनार्य्यकम्

॥”

इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे

॥)

**लोहः**, पुं, क्ली, (लूयतेऽनेनेति । लू + बाहुलकात्

हः ।) लौहम् । जोङ्गकम् । सर्व्वतैजसम् ।

इति

मेदिनी । हे, ८ ॥ रुधिरम् । इति

राजनिर्घण्टः ॥

अथ मुण्डलोहस्य पर्य्यायः । मुण्डम् २

मुण्डा-

यसम् ३ दृषत्सारम् ४ शिलात्मजम् ५

अश्म-

जम् ६ कृषिलोहम् ७ आरम् ८

कृष्णायसम् ९ ॥

अथ तीक्ष्णलोहस्य पर्य्यायः । तीक्ष्णम् २

शस्त्रायसम् ३ शस्त्रम् ४ पिण्डम् ५

पिण्डा-

यसम् ६ शठम् ७ आयसम् ८ निशितम् ९

तीव्रम् १० खड्गम् ११ मुण्डजम् १२

अयः १३

चित्रायसम् १४ चीनजम् १५ । अस्य

गुणाः ।

रूक्षत्वम् । उष्णत्वम् । तिक्तत्वम् ।

वातपित्त-

कफप्रमेहपाण्डुशूलनाशित्वम् ।

तीक्ष्णत्वम् ।

मुण्डाधिकगुणत्वञ्च । इति राजनिर्घण्टः ॥

* ॥

अथ लोहस्योत्पत्तिनामलक्षणगुणाः ।

“पुरा लोमिलदैत्यानां निहतानां सुरैर्युधि ।

उत्पन्नानि शरीरेभ्यो लोहानि विविधानि

च ॥

लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालाय-

सायसी ।

प्लीहानमम्लपित्तञ्च यकृच्चापि

शिरोरुजम् ।

सर्व्वान्रोगान् विजयते कान्तलोहं न

संशयः ।

बलं वीर्य्यं वपुःपुष्टिं कुरुतेऽग्निं

विवर्द्धयेत् ॥”

अथ किट्टी ।

“ध्मायमानस्य लोहस्य मलं

मण्डूरमुच्यते ।

लोहसिंहानिका किट्टी सिंहानञ्च

निगद्यते ॥

यल्लोहं यद्गुणं प्रोक्तं तत्किट्टमपि

तद्गुणम् ॥”

अथ लोहस्याशुद्धस्य दोषमाह ।

“षण्डत्वकुष्ठामयमृत्युकारि

हृद्रोगशूलौ कुरुतेऽश्मरीञ्च ।

नानारुजानाञ्च तथा प्रकोपं

कुर्य्याच्च हृल्लासमशुद्धलोहम् ॥”

अथ लोहस्य दोषशान्तये

शोधनमभिधीयते ।

“पत्तलीकृतपत्राणि लोहस्याग्नौ

प्रतापयेत् ।

निषिञ्चेत्तप्ततप्तानि तैले तक्रे च

काञ्जिके ॥

गोमूत्रे च कुलत्थानां कषाये च

त्रिधा त्रिधा ।

एवं लोहस्य पत्राणां विशुद्धिः

संप्रजायते ॥”

अथ लोहस्य मारणविधिः ।

“शुद्धलोहभवं चूर्णं

पातालगरुडीरसैः ।

मर्द्दयित्वा पुटेद्वह्नौ दद्यादेवं

पुटद्धयम् ॥

पुटत्रयं कुमार्य्याश्च

कुठारच्छिन्निकारसैः ।

पुटषट्कं ततो दद्यादेवं

तीक्ष्णमृतिर्भवेत् ॥”

अन्यच्च ।

स पापिष्ठोऽपि भुङ्क्तेऽन्नं रौरवे परिपच्यते ॥”

इति मत्स्यसूक्ततन्त्रम् ॥

अपि च ।

“अयःपात्रे पयःपानं गव्यं सिद्धान्नमेव च ।

भृष्टादिकं मधु गुडं नारिकेलोदकन्तथा ॥

फलं मूलञ्च यत्किञ्चिदभक्ष्यं मुनिरब्रवीत् ॥”

इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डम् ॥

(अश्मन एवास्य उत्पत्तिः श्रूयते । यथा, मनुः ।

९ । ३२१ ।

“अद्भ्योऽग्निर्ब्रह्मतः क्षत्त्रमश्मनो लोहमुत्थितम् ।

तेषां सर्व्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥”

पुं, छागः । स तु लक्षणान्वितः कृष्णवर्णो रक्त-

वर्णो वा । यथा, मनुः । ३ । २७२ ।

“कालशाकं महाशल्काः खड्गलोहामिषं मधु ।

आनन्त्यायैव कल्पन्ते मुन्यन्नानि च सर्व्वशः ॥”

पार्व्वत्यजातिविशेषः । यथा, महाभारते । २ ।

२७ । २५ ।

“लोहान् परमकाम्बोजानृषिकानुत्तरानपि।

सहितांस्तान् महाराज व्यजयत् पाक-

शासनिः ॥”

रक्तवर्णे, त्रि । यथा, महाभारते । १ । १३६ । २३

।

“भ्रमतश्च वराहस्य लोहस्य प्रमुखे समम् ।

पञ्चबाणान् सुसंयुक्तान् स मुमोचैकबाणवत् ॥”)

**लोहकण्टकः**, पुं, (लोहवत् कण्टकं यत्र ।)

मदनवृक्षः । इति शब्दचन्द्रिका ॥ लौहमय-

कण्टकश्च ॥ (यथा, आर्य्यासप्तशत्याम् । ४७४ ।

“सखि लोहकण्टकनिभस्तथा तथा मदन-

विशिखोऽपि ॥”)

**लोहकान्तं**, क्ली, (लोहः कान्तोऽस्येति ।) अय-

स्कान्तम् । इति राजनिर्घण्टः ॥

**लोहकारः**, पुं, (लोहं लोहमयं शस्त्रादि करो-

तीति । कृ + अण् ।) लौहकारकः । इति

हलायुधः ॥ (यथा, गो० रामायणे । २ । ९० ।

२३ ।

“प्रख्याताश्चर्म्मकाराश्च लोहकारास्तथैव च ॥”)

**लोहकारकः**, पुं, (लोहं तन्मयशस्त्रादि करो-

गुरुता दृढतोत्क्लेदकफदाहस्य कारिता ।
अश्मदोषः सुदुर्गन्धो दोषाः सप्तायसस्य तु
॥
लोहं तिक्तरसं शीतं मधुरं तुवरं गुरु ।
रूक्षं वयस्यं चक्षुष्यं लेखनं वातलं जयेत्
॥
कफं पित्तं गरं शूलं
शोथार्शःप्लीहपाण्डुताः ।
मेदोमेहकृमीन् कुष्ठं तत्किट्टं तद्वदेव हि ॥
षण्डत्वकुष्ठामयमृत्युदं भवेत्
हृद्रोगशूलौ कुरुतेऽश्मरीञ्च ।
नानारुजाञ्चापि तथा प्रकोपं
करोति हृल्लासमशुद्धलोहम् ॥
जीवहारि मदकारि चायसं
चेदशुद्धिमदसंस्कृतं ध्रुवम् ।
पाटवं न तनुते शरीरके
दारुणां हृदि रुजाञ्च यच्छति ॥” * ॥
तत्र सारलोहस्य लक्षणं गुणाश्च ।
“क्षमाभृच्छिखराकाराण्यङ्गान्यम्लेन
लेपिते ।
लोहे स्युर्यत्र सूक्ष्माणि तत्सारमभिधीयते
॥
लोहं साराह्वयं हन्याद्ग्रहणीमतिसारकम् ।
अर्द्धसर्व्वाङ्गजं वातं शूलञ्च परिणामजम् ।
छर्द्दिञ्च पीनसं पित्तं श्वासमाशु व्यपोहति
॥”
अथ कान्तलोहस्य लक्षणं गुणाश्च ।
पत्पात्रे न प्रसरति जले तैलबिन्दुः प्रतप्ते
हिङ्गुर्गन्धं त्यजति चनिजं तिक्ततां
निम्बकन्दः ।
तप्तं दुग्धं भवति शिखराकारकं नैति भूमिं
कृष्णाङ्गः स्यात् सजलचणकः कान्तलोहं
तदुक्तम् ॥
गुल्मोदरार्शःशूलाममामवातं भगन्दरम् ।
कामलाशोथकुष्ठानि क्षयं कान्तमयो जयेत्
॥

“क्षिपेद्द्वादशमांशेन दरदं
तीक्ष्णचूर्णतः ।
मर्द्दयेत् कन्यकाद्रावैर्यामियुग्मं ततः
पुटेत् ।
एवं सप्तपुटैर्मृत्युं
लोहचूर्णमवाप्नुयात् ॥
सत्योऽनुभूतो योगीन्द्रैः क्रमोऽन्यो
लोहमारणे ।
कथ्यते रामराजेन
कौतूहलधियाधुना ॥
सूतकाद्द्विगुणं गन्धं दत्त्वा
कुर्य्याच्च कज्जलीम् ।
द्वयोः समं लौहचूर्णं मर्द्दयेत्
कन्यकाद्रवैः ॥
यामयुग्मं ततः पिण्डं कृत्वा
ताम्रस्य पात्रके ।
घर्म्मे धृत्वा रूवुकस्य
पत्रैराच्छादयेद्बुधः ॥
यामद्वयाद्भवेदुष्णं धान्यराशौ
न्यसेत्ततः ।
दत्त्वोपरि शरावञ्च त्रिदिनान्ते
समुद्धरेत् ॥
पिष्ट्वा च गालयेद्वस्त्रादेवं वारितरं
भवेत् ।
दाडिमस्य दलं पिष्ट्वा
तच्चतुर्गुणवारिणा ॥
तद्रसेनायसश्चूर्णं सन्नीयात्
प्लावयेदपि ।
आतपे शोषयेत्तच्च पुटेदेव पुनः
पुनः ।
एकविंशतिवारैस्तत्म्रियते नात्र
संशयः ।
एवं सर्व्वाणि लोहानि
स्वर्णादीन्यपि मारयेत् ॥”
एवं मारितलोहस्य गुणाः ।
“लोहं तिक्तं सरं शीतं कषायं मधुरं
गुरु ।
रूक्षं वयस्यं चक्षुष्यं लेखनं वातलं
जयेत् ॥
कफं पित्तं गरं शूलं
शोफार्शःप्लीहपाण्डुताः ।

तीति । कृ + ण्वुल् ।) वर्णसङ्करजातिविशेषः ।
कामार इति भाषा । तत्पर्य्यायः । व्योकारः २
इत्यमरः ॥ लौहकारः ३ अयस्कारः ४ कर्म्म-
कारः ५ कर्म्मारिः ६ । इति भरतरभसौ ॥
तस्योत्पत्तिर्यथा ।
“गोपालात्तन्त्रवाय्यां वै कर्म्मकारोऽप्यभूत्
सुतः ॥”
इति पराशरपद्धतिः ॥

**लोहकिट्टं**, क्ली, (लोहस्य किट्टम् ।) लोहमलम् ।

तत्पर्य्यायः । किट्टम् २ लोहचूर्णम् ३ अयोमलम्
४ लोहजम् ५ कृष्णचूर्णम् ६ लोष्टम् ७ लोह-
मलम् ८ । (यथा, सुश्रुते । ६ । ४४ ।
“मूत्रस्यितं सैन्धवसंप्रयुक्तं
मांसं पिबेद्वापि हि लोहकिट्टम् ॥”)
अस्य गुणाः । मधुरत्वम् । कटुत्वम् । उष्णत्वम् ।
कृमिवातपक्तिशूलमहच्छूलमेहगुल्मशोफनाशि-
त्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।

| | | |
|---|---|---|
| | मेदोमेहकृमीन् कुष्ठं तत्किट्टं तद्वदेव हि ॥<br>गुञ्जामेकां समारभ्य यावत् स्युर्नवरक्तिकाः ।<br>तावल्लोहं समश्नीयाद्यथादोषानलं नरः ॥<br>कुष्माण्डं तिलतैलञ्च माषान्नं राजिकान्तथा ।<br>मद्यमम्लरसञ्चैव वर्जयेल्लोहसेवकः ॥"<br>इति भावप्रकाशः ॥<br>लोहपात्रे भक्षणनिषेधो यथा, --<br>"यदा तु आयसे पात्रे पक्वमश्नाति वै द्विजः । | |

"ध्मायमानस्य लोहस्य मलं मण्डूरमुच्यते ।
लोहसिंहानिका किट्टी सिंहाङ्गञ्च निगद्यते ॥
यल्लोहं यद्गुणं प्रोक्तं तत्किट्टमपि तद्गुणम् ॥"
इति भावप्रकाशः ॥
(तथास्योद्धरणादिविधिः ।
"शतोद्‌र्ध्वमुत्तमं किट्टं मध्यञ्चाशीतिवार्षिकम्
।
अधमं षष्टिवर्षीयं ततो हीनं विषोपमम् ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणाद्य-
धिकारे ॥
"कुरवं पथ्याचूर्णं द्विपलगन्धाश्मलोहकिट्टञ्च
।
शुद्धरसस्यार्द्धपलं भृङ्गस्य रसं केशराजस्य
॥"
इति वैद्यकचक्रपाणिसंग्रहे परिणामशूलाधि-
कारे ॥)

**लोहचूर्णं**, क्ली, (लोहस्य चूर्णम् ।) लोहकिट्टम् ।
इति राजनिर्घण्टः ॥ (यथा, बृहत्संहितायाम् ।
७६ । ३ ।
"माक्षीकधातुमधुपारदलोहचूर्ण-
पथ्याशिलाजतुविडङ्गकृतानि योऽद्यात् ।
सैकानि विंशतिरहानि जरान्वितोऽपि
सोऽशीतिकोऽपि रमयत्यबलां युवेव ॥")

**लोहजं**, क्ली, (लोहात् जायते इति । जन् + डः ।)
लोहकिट्टम् । इति राजनिर्घण्टः ॥ (पर्य्यायो-
ऽस्य यथा, "मण्डूरं लोहजं किट्टम् ।" इति
वैद्यकरत्नमालायाम् ॥) कांस्यम् । इति हेम-
चन्द्रः ॥

**लोहद्रावी** [न्] पुं, (लोहानि द्रावयतीति । द्रु +
णिच् + णिनिः ।) टङ्कणः । इति राजनिर्घण्टः
॥
(टङ्कणशब्देऽस्य विषयो विज्ञेयः ॥)

**लोहनालः**, पुं, (लोहस्य नालं दण्डो यत्र ।)
नाराचः । इति त्रिकाण्डशेषः ॥

**लोहपृष्ठः**, पुं, (लोहस्येव कठिनं श्यामलं वा
पृष्ठं यस्य ।) कङ्कपक्षी । इत्यमरः ॥ लौहमय-

**लोहश्लेषणः**, पुं, (लोहानि सर्व्वतैजसानि श्लेष-
यति योजयतीति । श्लेषि + ल्युः ।)
टङ्कणः ।
इति हेमचन्द्रः ॥

**लोहसङ्करं**, क्ली, (लोहानां सङ्करो यत्र ।) वर्त्त-
लोहम् । इति राजनिर्घण्टः ॥
मिश्रिततैज-
सञ्च ॥

**लोहाख्यं**, क्ली, (लोहमेव आख्या यस्य ।) अगुरु
।
इति रत्नमाला ॥

**लोहाभिसारः**, पुं, (लोहानां शस्त्रादीनां अभि-
सारो यत्र ।) लोहाभिहारः ।
इत्यमरटीकायां
भरतः ॥

**लोहाभिहारः**, पुं, (लोहानामभिहारो यत्र ।)
शस्त्रभृतां राज्ञां नीराजनाविधिः ।
इत्यमरः ॥
महानवमीदीक्षायां अश्वादीनां नीराजने
सति
पश्चात् शस्त्रधारिणां राज्ञां यः शास्त्रोक्तो
निर्म्मञ्छनप्रधानो विधिः प्रस्थानात् प्राक्
स
लोहाभिहारः । लोहस्य शस्त्रस्य
अभिहारः
सर्व्वतो हरणमत्रेति बहुव्रीहिः ।
लोहाभिहार
इत्युक्तो विधिर्नीराजनोत्तर इत्यमरमाला
॥
लोहोऽस्त्री शस्त्रके लौहे इति मेदिनी ॥
लोहा-
भिसार इति पठन्त्यन्ये तत्र लोहं शस्त्र
अभि-
सार्य्यते प्रस्थाप्यतेऽत्रेति घञ्
वाहनायुधादे-
र्निःशेषेण राजनं यत्र सा नीराजना
नीरस्य

माहात्म्यं पद्मपत्राक्षि गुह्यं पञ्चमहौजसम्
।
मङ्गल्यञ्च पवित्रञ्च मम भक्तसुखावहम्
॥"
इत्यादि वराहपुराणे
लोहार्गलमाहात्म्यवर्णनं
नामाध्यायः ॥ * ॥ लौहकीलके क्ली
स्त्री च ॥

**लोहि**, क्ली, श्वेतटङ्कणम् । इति कश्चिद्राज-
निर्घण्टः ॥

**लोहिका**, स्त्री, (लोहमस्त्यत्रेति । लोह + ठन् ।)
लौहपात्रम् । तत्पर्य्यायः । खरसोन्दः २
खर-
पात्रम् ३ । इति त्रिकाण्डशेषः ॥

**लोहितं**, क्ली, (रुह्यते इति । रुह + "रुहे-
रश्च लो वा ।" उणा० ३ । ९४ । इति
इतन् रस्य लत्वञ्च ।) रक्तगोशीर्षम् ।
कुङ्कु-
मम् । रक्तचन्दनम् । इति मेदिनी । ते,
१४७ ॥
पत्तङ्गम् । हरिचन्दनम् । तृणकुङ्कुमम् ।
रुधि-
रम् । इति राजनिर्घण्टः ॥ (यथा, मनुः ॥
४ । ५६ ।
"नाप्सु मूत्रं पुरीषं वा ष्ठीवनं वा
समुत्सृजेत् ।
अमेध्यलिप्तमन्यद्वा लोहितं वा विषाणि
षा ॥")
युद्धम् । इति हेमचन्द्रः ॥ (सरोवरविशेषः
।
इति मात्स्ये । १२० । १२ ॥ माणिक्यम्
। तत्-
पर्य्यायो यथा, --
"माणिक्यं पद्मरागः स्याच्छोणरत्नञ्च
लोहि-
तम् ॥"

पृष्ठयुक्ते, त्रि ॥

**लोहप्रतिमा**, स्त्री, (लोहस्य प्रतिमा ।) लौह-

मयी प्रातमा । तत्पर्य्यायः । सूर्म्मी २ स्थूणा ३ ।
इत्यमरः ॥ शूर्म्मी ४ शूर्म्मिः ५ शूर्म्मः ६ । इति
भरतः ॥ शूर्म्मिका ७ । इति शब्दरत्नावली ॥

**लोहमयं**, त्रि, लोहात्मकम् । लोहनिर्म्मितम् ।

लोहशब्दात् तद्रूपार्थे मयट्प्रत्ययेन निष्पन्नम् ॥
(यथा, छान्दोग्योपनिषदि । ६ । १ । ५ ।
“यथा सौम्यैकेन लोहमणिना सर्व्वं लोहमयं
विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं
लोहमित्येव सत्यम् ॥”)

**लोहमारकः**, पुं, (लोहं मारयति जारयतीति ।

मृ + णिच् + ण्वुल् ।) शालिञ्चशाकः । इति
त्रिकाण्डशेषराजनिर्घण्टौ ॥

**लोहलः**, पुं, (लोहं लातीति । ला + कः ।)

शृङ्खलाचार्य्यः । इति मेदिनी । ले, १२९ ॥

**लोहलः**, त्रि, (लोहमिव लातीति । ला + कः ।)

अव्यक्तवाक् । इत्यमरः ॥ लोहग्राहकश्च ॥

**लोहवरं**, क्ली, (लोहेषु सर्व्वतैजसेषु वरम् ।)

स्वर्णम् । इति त्रिकाण्डशेषः ॥

शान्त्युदकस्य अजनं क्षेपो यत्र सा
नीराजना
वा । इति भारतः ॥

**लोहार्गलं**, क्ली, (लोहस्य अर्गलमिव ।) तीर्थ-

विशेषः । यथा, --
वराह उवाच ।
“शृणु देवि च तत्त्वेन यन्मां त्वं
परिपृच्छसि ।
गुह्यमन्यच्च वक्ष्यामि महतः कर्म्मणो
गतिः ॥
ततः सिद्धवटे गत्वा त्रिंशद्योजनदूरतः ।
म्लेच्छमध्ये वरारोहे हिमवन्तं समाश्रितम् ॥
तत्र लोहार्गलं नाम निवासो मे विधीयते ।
गुह्याः पञ्चदशा यत्र समन्तात्
पञ्चयोजनम् ॥
सुलभं पुण्ययुक्तानां मम कर्म्मानुसारिणाम् ।
तत्र तिष्ठाम्यहं भद्रे ! उदीचीं
दिशमास्थितः ॥
तत्र ब्रह्मा च रुद्रश्च स्कन्दन्द्रश्च
मरुद्गणाः ।
आदित्या वसवो रुद्रा अश्विनौ च
महौजसः ॥
सोमो बृहस्पतिश्चैव ये चान्ये च
दिवौकसः ।
तेषाञ्चैवार्गलं दत्त्वा चक्रं गृह्य महौजसम् ॥
ततो मे दानवाः सर्व्वे क्रमन्तो
लोकमुत्तमम् ।
मया चैवान्तरं कृत्वा कृत्वा मायाञ्च
वैष्णवीम् ॥
शतकोटिसहस्राणि शीघ्रमेव निपातितम् ।
एवं लोहार्गलेत्यासीन्नाम मे तच्च
कारितम् ॥
एकधारा पतत्यत्र इन्द्रगोपकसन्निभा ।
यस्तत्र कुरुते स्नानं सप्तरात्रोषितो नरः ॥
ब्रह्मलोकं समासाद्य ब्रह्मणा सह मोदते ।
अथात्र मुञ्चते प्राणानहङ्कारविवर्ज्जितः ॥
ब्रह्मलोकं परित्यज्य मम लोकं प्रपद्यते ।
गुह्याख्याने महाभागे क्षेत्रे लोहार्गले मम ॥

इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**लोहितः**, पुं, (रुह + इतन् । रस्य लः ।) नद-

विशेषः । (सागरविशेषश्च । यथा,
रामायणे ।
४ । ४० । ३९ ।
“ततो रक्तजलं भीमं लोहितं नाम
सागरम् ।
गत्वा प्रेक्षत ताञ्चैव बृहतीं कूटशाल्म-
लीम् ॥”)
भौमः । (यथा, बृहत्संहितायाम् । ६ । ८ ।
“मध्येन यदि मघानां गतागतं लोहितः
करोति ततः ।
पाण्ड्यो नृपो विनश्यति
शस्त्रोद्योगाद्भयम-
वृष्टिः ॥”)
रक्तवर्णः । इति मेदिनी । ते, १४८ ॥
रोहित-
मत्स्यः । मृगविशेषः । इति
शब्दरत्नावली ॥
सर्पः । (यथा, महाभारते । २ । ९ । ८ ।
“वासुकिस्तक्षकश्चैव
नागश्चैरावणस्तथा ।
कृष्णश्च लोहितश्चैव पद्मश्चित्रश्च
वीर्य्यवान् ॥”)
सुरान्तरः । इति धरणिः ॥ मसूरः । इति
शब्दचन्द्रिका ॥ रक्तालुः । रक्तशालिः । इति
राजनिर्घण्टः ॥ (यथा, सुश्रुते । १ । ४६ ।
“षष्टिका यवगोधूमा लोहिता ये च
शालयः ।
मुद्गाढकी मसूराश्च धान्येषु प्रवराः
स्मृताः ॥”)
बलभेदः । इति हेमचन्द्रः ॥
(पर्व्वतविशेषः ।
इति मात्स्ये । १२० । ११ ॥
कुशद्वीपस्थवर्ष-
विशेषः । इति तत्रैव । १२१ । ६५ ॥)

**लोहितः**, त्रि, रक्तवर्णयुक्तः । इत्यमरः ॥ (यथा,

| | | |
|---|---|---|
| | सिद्धिकामेन मर्त्येन गन्तव्यं नात्र संशयः ॥<br>एतत्ते कथितं भद्रे लीहार्गलनिवासिनः। | मनुः। ५। ६।<br>“लोहितान् वृक्षनिर्यासान्<br>व्रश्चनप्रभवांस्तथा।<br>शेलुं गव्यञ्च पेयूषं प्रयत्नेन विवर्जयेत् ॥”) |

**लोहितकं**, क्ली, (लोहितमिव । इवार्थे कन् ।)
रीतिः । इति राजनिर्घण्टः ॥

**लोहितकः**, पुं, (लोहित एव । स्वार्थे कन् ।)
मङ्गलग्रहः । इति शब्दमाला ॥
पद्मरागमणिः ।
इति हेमचन्द्रः ॥ (यथा, माघे । १३ ।
५२ ।
“लयनेषु लोहितकनिर्म्मिता भुवः
शितिरत्नरश्मिहरितीकृतान्तराः ॥”
रक्तवर्णयुक्ते, त्रि । यथा, महाभारते ।
२ । ९ । ३ ।
“नीलपीतासितश्यामैः
सितैर्लोहितकैरपि ।
अवतानैस्तथा
गुल्मैर्मञ्जरीजालधारिभिः ॥”)

**लोहितचन्दनं**, क्ली, (लोहितं चन्दनमिव ।)
कुङ्कुमम् । इत्यमरः ॥ रक्तचन्दनम् ॥
(यथा,
किरातार्ज्जुनीये । १ । ३४ ।
“परिभ्रमन् लोहितचन्दनोचितः
पदातिरन्तर्गिरिरेणुरुंसितः ॥”)

**लोहितपुष्पकः**, पुं, (लोहितं पुष्पमस्य । कप् ।)
दाडिमवृक्षः । इति भावप्रकाशः ॥

**लोहितमृत्तिका**, स्त्री, (लोहिता मृत्तिका ।) गैरि-
कम् । इति रत्नमाला ॥
रक्तवर्णमृत्तिका च ॥

**लोहिता**, स्त्री, (लोहित + स्त्रियां टाप् ।) रागा-
दिना रक्तवर्णा । इति जटाधरः ॥
वराह-
क्रान्ता । इति शब्दचन्द्रिका ॥
रक्तपुनर्नवा ।
इति राजनिर्घण्टः ॥

**लोहिताक्षः**, पुं, (लोहिते अक्षिणी यस्य । सक्-
थ्यक्ष्णोः स्वाङ्गात् षच् ।) विष्णुः ।
इति शब्द-
४ । २ । ६० । इति ठक् ।) तार्क्कभेदः ।
(यथा,
गो० रामायणे । २ । १०९ । २९ ।
“कच्चिन्न लौकायतिकान्
ब्राह्मणानुपसेवसे ।
अनर्थकुशला ह्येते मूढाः पण्डितमानिनः
॥”)
चार्व्वाकशास्त्रवेत्ता । लोकायतं वेत्ति
इत्यर्थे
ष्णिकप्रत्ययेन निष्पन्नोऽथम् ॥

**लौकिकः**, त्रि, (लोके विदितः प्रसिद्धो हितो लोकं
वेत्ति वा । लोक + ठञ् ।)
लोकव्यवहारसिद्धः ।
यथा, --
“वैदिका लौकिकज्ञैश्च ये यथोक्तास्तथैव
ते ।
निर्णीतार्थास्तु विज्ञेया लोकात्तेषामसंग्रहः
॥”
इति कलापव्याकरणे सन्धिवृत्तौ
प्रथमप्रकरणम् ॥
लोकाय हित इत्यर्थे च
ष्णिकप्रत्ययनिष्पन्नः ।
इति मुग्धबोधव्याकरणम् ॥

**लौकिकता**, स्त्री, (लौकिकस्य भावः । लौकिक +
तल् ।) लोकव्यवहारसिद्धत्वम् ।
शिष्टाचारेऽस्य
भूरिप्रयोगः ॥

**लौकिकाग्निः**, पुं, (लौकिकोऽग्निः ।) असंस्कृ-
ताग्निः । यथा, श्राद्धतत्त्वे ।
“न पैत्र्ययज्ञियो होमो लौकिकाग्नौ विधी-
यते ॥”

**लौड**, ऋ उन्मादे । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-अक०-सेट् ।) चतुर्द्दशस्वरी । ऋ,
अलु-
लौडत् । इति दुर्गादासः ॥

**लौहः**, पुं, (लोह एव । प्रज्ञाद्यण् ।) लोहः ।
पुटेदेवं लौहचूर्णं सप्तधा मारणं व्रजेत् ॥”
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणाधि-
कारे ॥”) अन्यत् लोहशब्दे द्रष्टव्यम् ॥ (छाग-
विशेषः । यथा, महाभारते । १३ । ८८ । १३ ।
“अजेन वापि लौहेन मघास्वेव यतव्रतः ।
हस्तिच्छायासु विधिवत् कर्म्म व्यजनवीजितम्
॥”
लोहशब्दार्थोऽप्यत्र ॥)

**लौहचारकः**, पुं, (लौहेन लौहनिगडेन चारः
प्रचारो यत्र ।) नरकभेदः ॥ यत्र निगडैर्वध्यन्ते ।
इति पुराणम् ॥

**लौहजं**, क्ली, (लौहात् जायते इति । जन् + डः ।)
मण्डूरम् । इति रत्नमाला ॥

**लौहभाण्डः**, पुं, (लौहस्य भाण्डमिवाकृतिर्यत्र ।)
अश्मभालम् । इति शब्दचन्द्रिका ॥ हामन्-
दिस्ता इति भाषा । लौहनिर्म्मितभाण्डे, क्ली ॥

**लौहभूः**, स्त्री, (लौहस्य भूरिव ।) कठिनी । सा
तु लौहपात्रविशेषः । यथा, --
“लौहात्मा चायुगा लौहा लौहभूः कठिनी-
त्यपि ॥”
इति शब्दचन्द्रिका ॥

**लौहमलं**, क्ली, (लौहस्य मलम् ।) लोहमलम् ।
इति राजनिर्घण्टः ॥ (तथास्य विषयः ।
“सद्यो लौहमलाज्यमाक्षिकसिताभागाःसमा
मानतः
पात्रे ताम्रमये दिनान्तमथितं संस्थापये-
दातपे
पश्चात्तद्घनतां प्रणीय रजनीमेकां बहिः
स्थापयेत् ।
पात्रे ताम्रमये विधेयमथवा पात्रे बवि-
र्भाविते ॥
पश्चान्माषचतुष्टयं प्रतिदिनं जग्ध्वा जलं
शीतलम् ।
पेयं भोजनपूर्ब्बमध्यविरतोऽस्वच्छन्दभोज्यैर्नरैः
॥

माला ॥ कोकिलः । इति शब्दचन्द्रिका ॥ रक्त-वर्णचक्षुर्युक्ते, त्रि । (यथा, महाभारते । १ । ५६ । ६ ।
"यथा सूतो लोहिताक्षो महात्मा
पौराणिको वेदितवान् पुरस्तात् ॥")

**लोहिताङ्गः**, पुं, (लोहितमङ्गं यस्य ।) मङ्गल-

ग्रहः । इत्यमरः ॥ (यथा, हरिवंशे । २२८ । १२ ।
"वामे च दक्षिणे चैव स्थितौ शुक्रबृहस्पती ।
शनैश्चरो लोहिताङ्गो लोहितार्कसमद्युतिः ॥")
कम्पिल्लकः । इति राजनिर्घण्टः ॥

**लोहिताननः**, पुं, (लोहितमाननं मुखं यस्य ।)

नकुलः । इति राजनिर्घण्टः ॥
रक्तवर्णमुखे, त्रि ॥

**लोहितायः**, [स्] क्ली, (लोहितमयः ।) ताम्रम् ।

इति त्रिकाण्डशेषः ॥ (विशेषोऽस्य ताम्रशब्दे विज्ञेयः ॥)

**लोहितायसं**, क्ली, (लोहितमायसम् ।) रक्तवर्ण

लोहजातिः । इति मुग्धबोधव्याकरणम् ॥

**लोहिनी**, स्त्री, (लोहिता + "वर्णादनुदात्ता-

दिति ।" ४ । १ । ३९ । इति ङीप् । तकारस्य नकारादेशश्च ।) रक्तवर्णा स्त्री । यथा, --
"रोहिणी रोहिता रक्ता लोहिनी लोहिता च सा ॥"
इति जटाधरः ॥

**लोहोत्तमं**, क्ली, (लोहेषु सर्व्वतैजसेषु उत्तमम् ।)

स्वर्णम् । इति हेमचन्द्रः ॥

**लौकायतिकः**, पुं, (लोकायतमधीते वेद वा ।
इत्यमरटीकायां भरतः ॥ स च पञ्चविधः ।
यथा । काञ्चिः १ पाण्डिः २ कान्तः ३ कालिङ्गः ४ वज्रकः ५ । अस्य त्रयोदशविध-
संस्काराः । यथा । शालिघर्षणम् १ उद्वर्त्तनम् १
अम्लभावनम् ३ आतपशोषः ४ निषेकः ५
मारणम् ६ दलनम् ७ क्षालनम् ८ सूर्य्यपाकः ९
स्थालीपाकः १० चूर्णनम् ११ पुटपाकः १२
पाकनिष्पन्नः १३ । अस्य गुणाः । आयुर्ब्बल-
वीर्य्यकामदातृत्वम् । रोगनाशित्वम् । श्रेष्ठ-
तमरसायनत्वञ्च । कृष्णवर्णस्य तस्य गुणाः ।
शोथशूलार्शःकुष्ठपाण्डुप्रमेहमेदवायु-नाशित्वम् ।
वयःस्थैर्य्यचक्षुस्तेजःकारित्वम् । सारकत्वम् ।
गुरुत्वञ्च । शोधितस्यास्य गुणौ । सर्व्वरोग-
नाशित्वम् । मरणनाशित्वञ्च । अशुद्धस्य तस्य
गुणाः । जारणायोग्यत्वम् । आयुर्नाशकत्वञ्च ।
इति रत्नावल्यादयः ॥ * ॥ (अथास्य शोधनादि-
नियमः ।
"त्रिफलाष्टगुणे तोये त्रिफलाषोडशं पलम् ।
ततः क्वाथे पादशेषे लौहस्य पलपञ्चकम् ॥
कृत्वा तप्तानि पत्राणि सप्तवारं निषेचयेत् ।
ध्रुवं प्रलीयते दोषो गिरिजे लोहसम्भवः ॥"
इति लोहशोधनम् ॥ * ॥
जेतुं
शूलहुताशमान्द्यकसनश्वासाम्लपित्तज्वरो-
न्मादापस्मृतिमेहसर्व्वजठराजीर्णादि सर्व्वा रुजः ॥"
इति भैषज्यधन्वन्तरौ शूले चतुःसममण्डूरम् ॥)

**लौहशङ्कुः**, पुं, (लौहस्य शङ्कुर्यत्र ।) नरकविशषः ।

यत्र सूचीभिर्भिद्यते । इति पुराणम् ॥ लौह-निर्म्मितकीलकश्च ॥

**लौहा**, स्त्री, लौहभूः । इति शब्दचन्द्रिका ॥

**लौहात्मा**, स्त्री, (लौह आत्मा यस्याः ।) लौहभूः ।

इति शब्दचन्द्रिका ॥

**लौहितः**, पुं, लोहितः । इति लोहितशब्दात्

स्वार्थे ष्ण-(अण्) प्रत्ययेन निष्पन्नः ॥ लोहित-सम्बन्धिनि, त्रि ॥

**लौहितीकः**, त्रि, (लोहित इव । लोहित + "कर्क-

लोहितादीकक् ।" ५ । ३ । ११० । इति ईकक् ।)
लोहितवर्णतुल्यः । इति सिद्धान्तकौमुदी ॥

**लौहित्यं**, क्ली, (लोहितस्य भावः । लोहित +

ष्यञ् ।) लोहितत्वम् । इति मेदिनी । ये, १०२ ॥

| | | |
|---|---|---|
| लोकायत + “क्रतूक्थादि सूत्रान्तात् ठक् ।” | “भानुपाकात्तथा स्थालीपाकाच्च पुटपाकतः ।<br>निरुत्थो जायते लौहो यथोक्तफलदो भवेत् ॥”<br>इति संक्षिप्तलौहमारणम् ॥ * ॥<br>“द्वादशांशेन दरदं तीक्ष्णचूर्णस्य मेलयेत् ।<br>कन्यानीरेन संमर्द्द्य यामयुग्मञ्च संपुटे । | |

**लौहित्यः** पुं, (लोहित एव । स्वार्थे ष्यञ् ।)

नदभेदः । स च ब्रह्मपुत्त्रः । इति मेदिनी ।
ये, १०२ ॥ सागरः । इति शब्दमाला ॥
तस्य
नदविशेषस्य उत्पत्तिर्यथा, --
सगर उवाच ।
"अमोघायां कथं जज्ञे लौहित्यो ब्रह्मणः
सुतः ।
कथं शान्तनुभार्य्यायां रतः स कमलासनः
॥
पारस्त्रैणेयपुत्त्रो वा कथं जज्ञे पितामहात् ।
तत् सर्व्वं श्रोतुमिच्छामि कथयस्व
द्विजोत्तम ॥
और्व्व उवाच ।
शृणु त्वं नृपशार्द्दूल कथयामि महत्तरम् ।
आख्यानं ब्रह्मपुत्त्रस्य लौहितस्य महात्मनः
॥
हरिवर्षे महावर्षे शान्तनुर्नाम नामतः ।
मुनिरासीन्महाभागो ज्ञानवान् सुतपोधनः ॥
तस्य भार्य्या महाभागा अमोघाख्या महा-
सती ।
हिरण्यगर्भस्य मुनेस्तृणवृन्दाश्रमोद्भवा ॥
तया सार्द्धं स कैलासमर्य्यादापर्व्वतेऽवसत् ।
लोहित्याख्यस्य सरसस्तीरे वै गन्धमादने
॥
एकदा स तपोनिष्ठो निजपुष्पादिगोचरे ।
जगाम वनमध्यन्तु चिन्वन् बहुफलानि च ॥
तस्मिन्नवसरे ब्रह्मा सर्व्वलोकपितामहः ।
तत्राजगाम यत्रास्ति अमोघा शान्तनोः प्रिया
॥
तां दृष्ट्वा हेमगर्भाभां युवतीमतिसुन्दरीम् ।
मोहितो मदनेनाशु तथाभूद्धृषितेन्द्रियः ॥
उदीरितेन्द्रियो भूत्वा जिघृक्षुस्तां महासतीम्
।
अथाधावत्तदा ब्रह्मा संमुखो मदनार्द्दितः ॥
धावमानं विधातारं दृष्ट्वामोघा महासती ।
मैवं मैवमिति प्रोक्त्वा पर्णशालां व्यलीयत ॥
इदञ्चोवाच धातारममोघा कुपिता तदा ।
पर्णशालान्तरगता द्वारमावृत्य तत्क्षणात् ॥
स तस्या वचनं श्रुत्वा स्वयं ब्रह्मा समागतः
।
इति निश्चित्य मनसा तत्र ध्यानपरोऽभवत्
॥
दिव्यध्यानेन तज्ज्ञात्वा
देवकार्य्यमुपस्थितम् ।
तीर्थावतारणञ्चापि हिताय जगतां मुनिः ॥
ध्यात्वोदर्कं चिन्तयित्वा
स्वभार्य्यामिदमब्रवीत् ।
इदं तेजो ब्रह्मणस्त्वं पिबामोघे ममाज्ञया ॥
हिताय सर्व्वजगतां देवकार्य्यार्थसिद्धये ।
भवत्या निकटं ब्रह्मा स्वयमेव समागतः ॥
त्वामप्राप्य महाकृत्यमावयोः स समर्प्य च ।
गतो निजास्पदं तत्त्वं कर्त्तुमर्हसि तद्वचः ॥
तत् श्रुत्वा शान्तनोर्व्वाक्यममोघातीव
लज्जिता ।
सान्त्वयन्तीव तं प्राह पतिं नत्वा महासती
॥
नान्यस्य तेजो धास्यामि न चेत्ते
विमनस्कता ।
अवश्यं यदि कर्त्तव्यं पीत्वा त्वं मयि
चोत्सृज ॥
ततस्तस्या वचः श्रुत्वा युक्तं तथ्यञ्च
शान्तनुः ।
स्वयं पीत्वा च तत्तेजस्तस्या गर्भे
व्यसेचयत् ॥
संक्रामितैः शान्तनुना तेजोभिर्ब्रह्मणः सती
।
गर्भं दधानामोघाख्या हिताय जगतां ततः ॥
तस्यां काले तु संप्राप्ते संजातो जलसञ्चयः
।
तन्मध्ये तनयश्चापि नीलवासाः
किरीटधृक् ॥
रत्नमालासमायुक्तो रक्तगौरश्च ब्रह्मवत् ।
चतुर्भुजः पद्मविद्याधरशक्तिधरस्तथा॥
शिशुभारशिरःस्थश्च तुल्यकायो
जलोत्करैः ।
तं जातञ्च तथा भूतं शान्तनुर्लोकशान्तनुः ।
चतुर्णां पर्व्वतानाञ्च मध्यदेशे न्यवेशयत् ॥
लोहित्यात् सरसो जातो
लौहित्याख्यस्ततो
ऽभवत् ॥
स कामरूपमखिलं पीठमाप्लाव्य
वारिणा ।
गोपयन् सर्व्वतीर्थानि दक्षिणं याति
सागरम् ॥
प्रागेव दिव्ययमुनां संत्यक्त्वा ब्रह्मणः
सुतः ।
पुनः पतति लौहित्ये गत्वा
द्वादशयोजनम् ॥
चैत्रे मासि सिताष्टम्यां यो नरो
नियतेन्द्रियः ।
स्नाति लौहित्यतोयेषु स याति ब्रह्मणः
पदम् ॥
चैत्रन्तु सकलं मासं शुचिः प्रयतमानसः
।
लौहित्यतोये यः स्नाति स
कैवल्यमवाप्नुयात् ॥"
इति कालिकापुराणे ८५ अध्यायः ॥

**ल्पी**, गि श्लिषि । इति कविकल्पद्रुमः ॥ (क्र्या०-

पर०-सक०-अनिट् ।)
ओष्ठ्यवर्गाद्योपधः ।
ल्पिनाति ल्पीनः ल्पीनिः ।
अन्तःस्थाद्योपध
इति रामानाथः । ल्यिनाति । इति
दुर्गादासः ॥

**ल्वी**, गि ग गत्याम् । इति कविकल्पद्रुमः ॥ (क्र्या०-

पर०-सक०-अनिट् ।) वकारोपधः । ग,
ल्वीनाति ल्वीतः ल्वीतिः । गि,
ल्विनाति
ल्वीनाति ल्वीनः ल्वीनिः । गिनैव
क्र्यादित्व-
सिद्धौ गकरणं प्वादित्वविकल्पार्थम् ।
इति दुर्गादासः ॥

अकार्य्यं न मया कार्य्यं मुनिपत्न्या
विगर्हितम् ।
बलात् प्रमथ्ये चाहं तत्त्वया त्वाञ्च
शपाम्यहम् ॥
अमोघया चैवमुक्ते विधातुश्च तदा नृप ।
रेतश्चस्कन्द च तदैवाश्रमे शान्तनोर्मुनेः ॥
च्युते रेतसि धातापि हंसयानं समास्थितः ।
लज्जयातिपरीतात्मा द्रुतं वै स्वाश्रमं ययौ
॥
गते वेधसिं शान्तनुर्निजमाश्रममागतः ।
आगत्य दृष्ट्वा हसानां पदक्षोभं तथा भुवि ॥
तेजश्च पतितं भूमौ विधातुर्ज्वलनोपमम् ।
अमोघां परिपप्रच्छ पर्णशालान्तरस्थिताम्
॥
किमेतदत्र शुभगे प्रवृत्तं दृश्यते तु यत् ।
पक्षिणाञ्च पदक्षोभं तेजश्चेदञ्च कीदृशम् ॥
सा तस्य वचन श्रुत्वा शान्तनुं मुनिसत्तमम्
।
अमर्षितेव न्यगददाकुला विकलानना ॥
हंसयुक्तस्यन्दनेन कोऽप्यागत्य चतुर्मुखः ।
कमण्डलुकरो भीरू रतिं मां समयाचत ॥
ततो मया मर्त्सितश्च उटजान्तरलीनया ।
प्रच्याव्य तेजः संयातो मम शापभयार्द्दितः
॥
कुरु तत्र प्रतीकारं यदि शक्नोषि शान्तनो ।
न हि मां धर्षणां सोढुं कश्चित् शक्नोति
जीव-
भृत् ॥

कैलासश्चोत्तरे पार्श्वे दक्षिणे गन्धमादनः ।
जारुधिः पश्चिमे शैलः पूर्व्वे सम्बर्त्तकाह्वयः
॥
तेषां मध्ये स्वयं कुण्डं पर्व्वतानां विधेः
सुतः ।
कृत्वातिववृधे नित्यं शरदीव निशाकरः ॥
तं तोयमध्यगं पुत्त्रमासाद्य द्रुहिणः स्वयम् ।
क्रमतस्तस्य संस्कारानकरोद्देहशुद्धये ॥
अथ काले बहुतिथे व्यतीते ब्रह्मणः सुतः ।
तोयराशिस्वरूपेण ववृधे पञ्चयोजनान् ॥
तस्मिन् देवाः पपुः सस्नुर्द्वितीय इव सागरे ।
शीतामलजले हृद्ये देव्यश्चाप्सरसां गणैः ॥
तस्मिन्नवसरे रामो जामदग्न्यः प्रतापवान् ।
चक्रे मातृवधं घोरमत्युग्रं पितुराज्ञया ॥
तस्य पापस्य मोक्षाय स्वपितुश्चोपदेशतः ।
स जगाम महाकुण्डं ब्रह्माख्यं
स्नातुमिच्छया ॥
तत्र स्नात्वा च पीत्वा च मातृहत्यां
व्यपानयत् ।
वीथीं परशुना कृत्वा तञ्च क्ष्मामवतारयत्
॥”
इति कालिकापुराणे जामदग्न्योपाख्याने
८४
अध्यायः ॥ * ॥ अपि च ।
“जातसंप्रत्ययः सोऽथ तीर्थमासाद्य तं वरम्
।
वीथीं परशुना कृत्वा ब्रह्मपुत्त्रमवाहयत् ॥
ब्रह्मकुण्डात् सुतः सोऽथ कासारे
लोहिताह्वये ।
कैलासोपत्यकायान्तु न्यपतद्ब्रह्मणः सुतः
॥
तस्यापि सरसस्तीरं समुत्थाय महाबलः ।
कुठारेण दिशं पूर्व्वामनयद्ब्रह्मणः सुतम् ॥
ततोऽपरत्रापि गिरिं हेमशृङ्गं विभिद्य च ।
कामरूपान्तरं पीठमवाहयदमुं हरिः ॥
तस्य नाम विधिश्चक्रे स्वयं लोहितगङ्गकम्
।

**व**

**व**, वकारः । स च व्यञ्जनस्य ऊनत्रिंशवर्णः । यव-
र्गस्य चतुर्थवर्णश्च । अस्योच्चारणस्थानं दन्तः
ओष्ठश्च । इति व्याकरणम् ॥ (यथा, शिक्षा-
याम् । १८ ।
"जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठो वः स्मृतो
बुधैः ॥")
दन्त्यवकारः । स च अन्तःस्थवर्णः । यथा ।
अन्तःस्था य र ल वाः । इति कलापव्याक-
रणम् ॥ अपि च ।
"ततोऽक्षरसमाम्नायमसृजद्भगवानजः।
अन्तःस्थोष्मस्वरस्पर्शह्रस्वदीर्घादिलक्षणम्॥"
इति श्रीभागवते १२ स्कन्धे ६ अध्यायः ॥
"ततस्तेभ्योऽक्षराणां समाम्नायं समाहारं तमे-
वाह । अन्तःस्था य र ल वाः । उष्माणः श
ष स हाः । स्वरा अकाराद्याः । स्पर्शाः
कादयो मावसानाः । ह्रस्वा दीर्घाश्च । आदि-
शब्दात् जिह्वामूलीयादयः । त एव लक्षणं
स्वरूपं यस्य तम् ।" इति तट्टीकायां श्रीधर-
स्वामी ॥ * ॥ "यवरलीयवकारस्य प फ ब भ म
वा इत्येकपदोक्त्या उत्पत्तिस्थानमोष्ठमुक्त्वा
दन्त्य-
कार्य्यार्थं दन्त्यमध्येऽपि त थ द ध न ल सा व
इति भिन्नपदे पठितवान् । यथा संवुवूर्षति
इत्यादौ वकारस्य ओष्ठ्यत्वात् उर् दन्त्यत्वात्
अनुस्वारस्य मकारो न स्यात् । वैदिकास्तु
अस्योत्पत्तिस्थानं दन्त एवेत्याहुः । अतएव
तद्विष्णोः परमं पदं इत्यादौ तथैवोच्चारयन्ति ।"
इति मुग्धबोधतीकायां दुर्गादासः ॥ * ॥
तस्य पर्य्यायः ।
"वो बाणो वारुणी सूक्ष्मा वरुणो देव-
संज्ञकः ।
तोयं लान्तश्च वामांशः ॥" इति बीजवर्णाभि-
धानम् ॥ * ॥ अपि च ।
"वकारो वरुणो बाणः स्वेदः खड्गीश्वरो जवः
॥"
इति रुद्रयामले मन्त्रकोषः ॥ * ॥
अपि च ।
"वो बाणो वारुणी सूक्ष्मा वरुणो देवसंज्ञकः ।
पादवाक्यादौ तु अस्य प्रयोगो न भवति
। इति
वैयाकरणिकाः ॥)

**वंशः**, पुं, (वमति उद्गिरति पुरुषान् वन्यते इति
वा । टु वम उद्गिरणे इति धातोर्यद्वा वन
शब्दे
इति धातोर्बाहुलकात् शः । यद्वा, वष्टि
उश्यते इति वा । वशंकान्तौ + अच् घञ्
वा ।
ततो नुम् ।) पुत्त्रपौत्त्रादिः । तत्पर्य्यायः
।
सन्ततिः २ गोत्रम् ३ जननम् ४ कुलम्
५
अभिजनः ६ अन्वयः ७ अन्ववायः ८
सन्तानः
९ । इत्यमरः । २ । ७ । १ ॥ निघनम्
१०
जातिः ११ । इति जटाधरः ॥ कुलञ्च
विद्यया
जन्मना वा प्राणिनामेकलक्षणः सन्तानो
वंश
इति जयादित्यः । धनेन विद्यया वा
ख्यातस्या-
पत्यधारा वंश इति सुभूः । वमति
उद्गिरति
पूर्ब्बपुरुषान् वंशः नाम्नीति शः ।
इत्यमर-
टीकायां भरतः ॥ * ॥ (यथा, रघुः । १
। २ ।
"क्व भूर्य्यप्रभवो वंशः क्व चाल्पविषया
मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्
॥"
पुत्त्रः । यथा, भागवते । ९ । २ । १७ ।
"नृपस्य वंशः सुमतिर्भूतज्योतिस्ततो
वसुः ॥")
तृणजातिविशेषः । वाँश इति भाषा ।
तत्-
वर्गः । इति मेदिनी । शे, १३ ॥ (यथा,
रघुः ।
७ । ३९ ।
"उत्थापितः संयति रेणुरश्वैः
सान्द्रीकृतः स्यन्दनवंशचक्रैः ॥")
वाद्यभाण्डविशेषः । इति धरणिः ॥
वाँशी इति
भाषा ॥ (यथा, रघुः । २ । १२ ।
"स कीचकैर्मारुतपूर्णरन्ध्रैः
कूजद्भिरापादितवंशकृत्यम् ।
शुश्राव कुञ्जेषु यशः स्वमुच्चै-
रुद्गीयमानं वनदेवताभिः ॥"
विवृतिरस्य वंशीशब्दे द्रष्टव्या ॥) इक्षुः
।
सालवृक्षः । इति राजनिर्घण्टः ॥
(प्राधागर्भ-
सम्भूताप्सरोविशेषे, स्त्री । यथा,
महाभारते ।
१ । ६५ । ४६ ।
"अनवद्यां मनुं वंशामसुरां
मार्गणप्रियाम् ।
अनूपां सुभगां भासीमिति प्राधा
व्यजायत ॥")

**वंशकं**, क्ली, (वंश इव कायतीति । कै + कः ।
अगुरु । इति हारावली । १०४ ॥

**वंशकः**, क्ली, (वंश इव प्रतिकृतिः । "इवे प्रति-
कृतौ ।" ५ । ३ । ९६ । इति कन् ।)
मत्स्यविशेषः ।
इति शब्दमाला ॥ वाँशपातामाछ
इतिभाषा ॥
इक्षुविशेषः । इति रत्नमाला ॥ वाँशाइ
इति
सामशाडा इति च भाषा ॥ अस्य
गुणाः ।
"वंशकस्त्वनभिष्यन्दी
लघुर्द्दोषत्रयापहः ॥"
इति राजवल्लभः ॥
(यथा, सुश्रुते । १ । ४५ ।

खड्गीशो ज्वालिनी वक्षः कलमध्वनिवाचकः ॥
उत्कारीशस्तु नावीतो वज्रा स्फिक् सागरः
शुचिः ।
त्रिधातुः शङ्करः श्रेष्ठो विशेषो यमसादनम् ॥"
इति नानातन्त्रशास्त्रम् ॥
तस्य स्वरूपं यथा, --
"वकारं चञ्चलापाङ्गि कुण्डली मोक्षमव्ययम् ।
पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं सदा ॥
त्रिबिन्दुसहितं वर्णमात्मादितत्त्वसंयुतम् ।
पञ्चदेवमयं वर्णं पीतविद्युल्लतामयम् ॥
चतुर्व्वर्गप्रदं वर्णं सर्व्वसिद्धिप्रदायकम् ।
त्रिशक्तिसहितं देवि ! त्रिबिन्दुसहितं सदा ॥"
इति कामधेनुतन्त्रम् ॥ * ॥
वङ्गीयवर्णमालायामस्य लेखनप्रकारो यथा, --
"कोणत्रययुता रेखा ब्रह्मविष्णुशिवात्मिका ।
माया शक्तिः परा नित्या ध्यानमस्य प्रचक्ष्यते ॥"
इति वर्णोद्धारतन्त्रम् ॥ * ॥
अस्य ध्यानम् ।
"कुन्दपुष्पप्रभां देवीं द्विभुजां पङ्कजेक्षणाम् ।
शुक्लमाल्याम्बरधरां रत्नहारोज्ज्वलां पराम् ॥
साधकाभीष्टदां सिद्धां सिद्धिदां सिद्धसेविताम् ।
एवं ध्यात्वा वकारन्तु तन्मन्त्रं दशधा जपेत् ॥"
इति वर्णोद्धारतन्त्रम् ॥

**व**, व्य, इवार्थः । इति मेदिनी । वे, १ ॥ (यथा,
रघुः । ४ । ४२ ।
"ताम्बूलीनां दलैस्तत्र रचितापानभूमयः ।
नारिकेलासवं योधाः शात्रवं व यशः पपुः ॥")

**वं**, क्ली, (वा ल गमनहिंसयोः + कः ।) प्रचेताः ।
इति मेदिनी । वे, १ ॥ वरुणबीजम् । इति
तन्त्रम् ॥

**वः**, पुं, (वानमिति । वा + भावे घः ।) सान्त्व-
नम् । (वाति गच्छतीति । वाल गमने + कः ।)
वायुः । वरुणः । इति मेदिनी । वे, १ ॥
बाहुः । मन्त्रणम् । कल्याणम् । बलवान् ।
वसतिः । वरुणालयः । इति शब्दरत्नावली ॥
शार्द्दूलः । वस्त्रम् । शालूकः । वन्दनम् ।
इति नानैकाक्षरकोषः ॥

**वः**, [स्] त्रि, युष्मान् । युष्मभ्यम् । युष्माकम् ।
यष्मच्छब्दस्य द्वितीयाचतुर्थीषष्ठीबहुवचनान्त-
पर्य्यायः । त्वक्सारः २ कर्म्मारः ३
त्वचिसारः ४
तृणध्वजः ५ शतपर्व्वा ६ यवफलः ७
वेणुः ८
मस्करः ९ तेजनः १० । इत्यमरः । २ ।
४ ।
६० ॥ किष्कुपर्व्वा ११ । इति जटाधरः
॥
वम्भः १२ । इति शब्दरत्नावली ॥
तृणकेतुकः १३
कण्टालुः १४ कण्टकी १५ महाबलः
१६ दृढ-
ग्रन्थिः १७ दृढपत्रः १८ धनुर्द्रुमः १९
धानुष्यः २०
दृढकाण्डः २१ ॥ (यथा, ऋतुसंहारे ।
१ । २५ ।
"ध्वनति पवनविद्धः पर्व्वतानां दरीषु
स्फुटति पटुनिनादः शुष्कवंशस्थलीषु ।
प्रसरति तृणमध्ये लब्धवृद्धिः क्षणेन
क्षपयति मृगयूथं प्राप्तलग्नो दवाग्निः ॥")
अस्य गुणाः । अम्लत्वम् । कषायत्वम् ।
किञ्चित्तिक्तत्वम् । शीतलत्वम् ।
मूत्रकृच्छ्र-
प्रमेहार्शःपित्तदाहास्रनाशित्वञ्च । इति
राज-
निर्घण्टः ॥ * ॥ अपि च ।
"वंशः सरो हिमः स्वादुः कषायो वस्ति-
शोधनः ।
छेदनः कफपित्तघ्नः
कुष्ठास्रव्रणशोथजित् ॥ * ॥
तत्करीरः कटुः पाके रसे रूक्षो गुरुः
सरः ।
कषायः कफकृत् स्वादुर्व्विदाही
वातपित्तलः ॥
तद्यवास्तु सरा रूक्षाः कषायाः
कटुपाकिनः ।
वातपित्तकरा उष्णा बद्धमूत्राः
कफापहाः ॥"
इति भावप्रकाशः ॥ * ॥
(गृहोर्द्ध्वकाष्ठम् । यथा, --
"पौण्ड्रको भीरुकश्चैव वंशकः
शतपोरकः ॥"
"अविदाही गुरुर्वृष्यः पौण्ड्रको
भीरुकस्तया ।
आभ्यां तुल्यगुणः किञ्चित् सक्षारो
वंशको
मतः ॥")
(ह्रस्वो वंशः । "संज्ञायां कन् ।" ५ ।
३ ।
८७ । इति कन् । क्षुद्रवशः । इति
सिद्धान्त-
कौमुदी ॥)

**वंशकफं**, क्ली, आकाशोड्डीयमानसूत्रम् । यथा,
--
"वृद्धसूत्रकमित्याहुरिन्द्रतूलं मनीषिणः
।
ग्रीष्महासं वंशकफं वाततूलं
मरुद्ध्वजम् ॥"
इति हारावली । २३ ॥

**वंशकर्पूररोचना**, स्त्री, (कर्पूर इव रोचते
शोभते इति । रुच् + ल्युः । ततः
षष्ठीतत्-
पुरुषः ।) वंशरोचना । इति
राजनिर्घण्टः ॥

**वंशक्षीरी**, स्त्री, (वंशस्य क्षीरमिवास्या अस्तीति
।
अच् । गौरादित्वात् ङीष् ।) वंशरोचना
। इति
राजनिर्घण्टः ॥

**वंशजः**, पुं, (वंशाज्जायते इति । जन् + डः ।)
वेणुयवः । इति राजनिर्घण्टः ॥

**वंशजः**, त्रि, (वंशात् सद्वंशाज्जायते इति ।
जन् + डः ।) सद्वंशजातः ।
तत्पर्य्यायः । बीज्यः
२ वंश्यः ३ । इति हेमचन्द्रः । ३ ।
३७७ ॥ (वेणूत्-
पन्नोऽपि । यथा, आर्य्यासप्तशत्याम् ।
४७९ ।

| | | |
|---|---|---|
| रूपोऽयम् । इति व्याकरणम् ॥ (यथा, मुग्ध-<br>बोधे ।<br>“पुष्णा तु वो नोऽपि हरिर्धनं वो<br>ददातु नो हन्त्वशुभानि वो नः ॥” | “वंशः पृष्ठास्थ्नि गेहोद्‌र्ध्वकाष्ठे वेणौ गणे<br>कुले ॥”<br>इति रघुटीकायां मल्लिनाथधृतकेशवः ।<br>७ । ३९ ॥)<br>पृष्ठावयवः । पिठेर दोडा इति भाषा ॥<br>(यथा,<br>भागवते । ११ । ८ । ३३ ।<br>“यदस्थिभिर्निर्म्मितवंशवंश्य-<br>स्थूनं त्वचा रोमनखैः पिनद्धम् ॥”) | “यन्नियतनिर्गुणं यन्न वंशजं यच्च<br>नित्यनिर्व्वा-<br>णम् ।<br>किं कुर्म्मस्तन्निहितं धनुः पदे<br>देवराजेन ॥”) |

**वंशजा**, स्त्री, (वंशे जायते इति । जन् + डः + टाप् ।) वंशरोचना । इति शब्दरत्नावली ॥
(अस्या गुणाः यथा, --
"वंशजा बृंहणी वृष्या बल्या स्वाद्वी च शीतला ।
तृष्णाकाशज्वरश्वासक्षयपित्तास्रकामलाः ।
हरेत् कुष्ठं व्रणं पाण्डुं कषाया वातकृच्छ्रजित् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**वंशतण्डुलः**, पुं, (वंशजातस्तण्डुलः ।) वेणुयवः । इति राजनिर्घण्टः ॥

**वंशधान्यं**, क्ली, (वंशस्य धान्यम् ।) वेणुयवः । इति राजनिर्घण्टः ॥

**वंशनालिका**, स्त्री, (वंशनालोऽस्त्यस्या इति । वंशनाल + ठन् । टाप् ।) वंशी । इति शब्द-
रत्नावली ॥

**वंशनेत्रं**, क्ली, (वंशस्येव नेत्राण्यस्य ।) इक्षुमूलम् । इति राजनिर्घण्टः ॥

**वंशपत्रः**, पुं, (वंशस्य पत्राणीव पत्राण्यस्य ।) नलः । इति राजनिर्घण्टः ॥ (वंशस्य पत्रम् ।)
वंशस्य दले, क्ली ॥ (हरितालम् । यथा, --
"तालकं वंशपत्राख्यं कुष्माण्डसलिले क्षिपेत् ।
सप्तधा वा त्रिधा वापि दध्यम्लेन च वा पुनः ॥
शोधयित्वा पुनः शुष्कं चूर्णयेत्तण्डुलाकृति ।
ततः शरावके पात्रे स्थापयेत् कुशलो भिषक् ॥
वदरीपत्रकल्केन सन्धिलेपञ्च कारयेत् ।

**वंशपीतः**, पुं, (वंशः वंशपत्रमिव पीतः ।) कण-
गुग्गुलुः । इति राजनिर्घण्टः ॥

**वंशपुष्पा**, स्त्री, (वंशस्य पुष्पाणीव पुष्पाणि यस्याः ।) सहदेवीलता । इति राजनिर्घण्टः ॥

**वंशपूरकं**, क्ली, (वंशस्येव पूरकमस्य ।) इक्षु-
मूलम् । इति राजनिर्घण्टः ॥

**वंशरोचना**, स्त्री, (रोचते इति । रुच + नन्द्या-
दित्वात् ल्युः । टाप् । वंशस्य रोचना ।)
स्वनामख्यातवंशपर्व्वस्थितश्वेतवर्णौषधविशेषः ।
वंशलोचन इति भाषा । तत्पर्य्यायः । त्वक्-
क्षीरा २ । इत्यमरः । २ । ९ । १०९ ॥ वंश-
लोचना ३ । इति भरतः ॥ तुगाक्षीरी ४
शुभा ५ वांशी ६ वंशजा ७ । इति रत्नमाला ॥
क्षीरिका ८ । इति शब्दरत्नावली ॥ तुगा ९
त्वक्क्षीरी १० शुभ्रा ११ वंशक्षीरी १२ वैणवी
१३ त्वक्सारा १४ कर्म्मरी १५ श्वेता १६ वंश-
कर्पूररोचना १७ तुङ्गा १८ रोचनिका १९
पिङ्गा २० वंशशर्करा २१ । अस्या गुणाः ।
रूक्षत्वम् । कषायत्वम् । मधुरत्वम् । हिमत्वम् ।
रक्तशुद्धिकारित्वम् । तापपित्तोद्रेकहरत्वञ्च ।
इति राजनिर्घण्टः ॥ अपि च ।
"वंशजा वृंहणी वृष्या बल्या स्वाद्वी च शीतला ।
तृष्णाकासज्वरश्वासक्षयपित्तास्रकामलाः ।
हरेत् कुष्ठं व्रणं पाण्डुं कषाया वातकृच्छ्रजित् ॥"
इति भावप्रकाशः ॥

**वंशलोचना**, स्त्री, (वंशरोचना । रस्य लः ।)
वंशरोचना । इति हेमचन्द्रः ॥ अस्या गुणाः ।
"कषायमधुरा रूक्षा वातघ्नी वंशलोचना ।
तुगाक्षीरी क्षयश्वासकासघ्नी मधुरा हिमा ॥"
इति राजवल्लभः ॥

**वंशशर्करा**, स्त्री, (वंशस्य शर्करेव ।) वंशलोचना ।
इति राजनिर्घण्टः ॥

**वंशशलाका**, स्त्री, (वंशस्य शलाकेव दाढर्यात् ।)

(यथा, भागवते । ९ । १ । ४ ।
"तेषां वंशं पृथग्ब्रह्मन् ! वंशानुचरितानि च ।
कीर्त्तयस्व महाभाग ! नित्यं शुश्रूषतां हि नः ॥")

**वंशाङ्कुरः**, पुं, वंशस्याङ्कुरः । वाँशेर कोँडा इति
भाषा । तत्पर्य्यायः । करीरम् २ वंशाग्रम् ३
यवफलाङ्कुरः । अस्य गुणाः । कटुत्वम् । तिक्त-
त्वम् । अम्लत्वम् । कषायत्वम् । लघुत्वम् ।
शीतलत्वम् । पित्तास्रदाहकृच्छ्रघ्नत्वम् । रुचि-
कारित्वम् । तत्पर्व्वणो निर्गुणत्वञ्च । इति राज-
निर्घण्टः ॥

**वंशिकं**, क्ली, (वंशोऽस्त्यस्येति । ठन् ।) अगुरु ।
इत्यमरः । २ । ६ । १२६ ॥

**वंशिका**, स्त्री, (वंशिक + टाप् ।) अगुरु । इत्यमर-
टीकायां भरतः ॥ वंशी । इति शब्दरत्नावली ॥

**वंशी**, स्त्री, (वंशः कारणत्वेनास्त्यस्याः । अच् ।
गौरादित्वात् ङीष् ।) मुरली । इति शब्दरत्ना-
वली ॥ वाँशी इति भाषा ॥ (यथा, काव्यचन्द्रि-
कायाम् ।
"निर्म्मिता कापि गोपीनां कुलशीलविनाशिनी ।
विधिना पामरेणेयं न वंशी मुरवैरिणः ॥")
कर्षचतुष्टयम् । इति राजनिर्घण्टः ॥ वंशी-
वाद्यस्य विवरणम् । यथा, --

अरुणाभमधःपात्रं तावज्जाला प्रदीयते ॥
स्वाङ्गशीतं समुद्धृत्य माणिक्याभो
भवेद्रसः ॥”
इति वैद्यकरसेन्द्रसारसंग्रहे कुष्ठाधिकारे
॥)

**वंशपत्रकं**, क्ली, (वंशपत्रमेव । स्वार्थे कन् ।)
हरितालम् । इति हेमचन्द्रः । ४ । १२४
॥

**वंशपत्रकः**, पुं, (वंशस्य पत्रमिवाकृतिरस्यति ।
इवार्थे कन् ।) क्षुद्रमत्स्यविशेषः । इति
शब्द-
माला ॥ वाँशपाता माछ इति भाषा ॥
नलः ।
श्वेतेक्षुः । इति राजनिर्घण्टः ॥

**वंशपत्रपतितं**, क्ली, सप्तदशाक्षरपादच्छन्दो-
विशेषः । यथा, --
“दिङ्मुनिवंशपत्रपतितं भ र न भ न ल गैः
॥”
उदाहरणम् ।
“नूतनवंशपत्रपतितं रजनिजललवं
पश्य मुकुन्द !
मौक्तिकमिवोत्तममरकतगम्।
एष च तं चकोरनिकरः प्रपिबति मुदितो
वान्तमवेत्य चन्द्रकिरणैरमृतकणमिव ॥”
वंशपत्रचरितेति केचित् । वंशदलमिति
शम्भौ ।
इति छन्दोमञ्जरी ॥

**वंशपत्री**, स्त्री, (वंशपत्र + गौरादित्वात् ङीष् ।)
नाडीहिङ्गुः । तृणविशेषः । तत्पर्य्यायः ।
वंश-
दला २ जीरिका ३ जीर्णपत्रिका ४ ।
अस्या
गुणाः । सुमधुरत्वम् । शिशिरत्वम् ।
पित्तरक्त-
दोषनाशित्वम् । रुच्यत्वम् । पशूनां
दुग्धदायि-
त्वञ्च । इति राजनिर्घण्टः ॥
तत्पर्य्यायगुणाः ।
वीणामूलम् । इति हेमचन्द्रः । २ । २०० ॥
(वंशनिर्म्मिता शलाकेति मध्यलोपी समासः ।)
वंशनिर्म्मितशलाका च ॥

**वंशस्तनितं**, क्ली, द्वादशाक्षरपादच्छन्दो-
विशेषः । यथा, --

**वंशस्थविलं**, क्ली, द्वादशाक्षरपादच्छन्दो-
विशेषः । यथा, --
“वदन्ति वंशस्थविलं जतौ जरौ ॥”
उदाहरणम् ।
“विलासवंशस्थविलं मुखानिलैः
प्रपूर्य्य यः पञ्चमरागमुद्गिरन् ।
व्रजाङ्गनानामपि गानशालिनां
जहार मानं स हरिः पुनातु वः ॥”
वंशस्तनितमपि क्वापि । इति छन्दोमञ्जरी ॥

**वंशाग्रं**, क्ली, (वंशस्य अग्रम् । प्रथमजातत्वात् ।)
वंशाङ्कुरः । इति राजनिर्घण्टः ॥

**वंशानुचरितं**, क्ली, (वंशस्य अनुचरितम् ।) वंश-
चरित्रवर्णनम् । तत्तु पुराणस्य पञ्चलक्षणान्त-
र्गतलक्षणविशेषः । यथा, शब्दरत्नावल्याम् ।
“सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुरितञ्चेति पुराणं पञ्चलक्षणम् ॥”
“तालेन राजते गीतं तालो
वादित्रसम्भवः ।
गरीयस्तेन वादित्रं तच्चतुर्व्विधमुच्यते
॥
ततं शुषिरमानद्धं घनमित्थं चतुर्व्विधम्
।
ततं तन्त्रीगतं वाद्यं वंशाद्यं शुषिरं तथा
।
चर्म्मावनद्धमानद्धं घनं तालादिकं
मतम् ॥”
शुषिरं यथा, --
“वंशोऽथ
पारीमधुरीतित्तिरीशङ्खकाहलाः ।
तोडहीमुरलीवुक्काशृङ्गिकास्वरनाभयः
॥
शृङ्गं कापालिकं वंशश्चर्म्म वंशस्तथा
परः ।
एते शुषिरभेदास्तु कथिताः
पूर्ब्बसूरिभिः ॥
वर्त्तुलः सरलश्चैव
पर्व्वदोषविवर्ज्जितः ।
वैणवः खादिरो वापि
रक्तचन्दनजोऽथवा ॥
श्रीखण्डजोऽथ सौवर्णो
दन्तिदन्तमयोऽपि वा ।
राजतस्ताम्रजो वापि लौहजः
स्फाटिको-
ऽथवा ॥
कनिष्ठाङ्गुलितुल्येन गर्भरन्ध्रेण
शोभितः ।
शिल्पविद्याप्रवीणेन वंशः कार्य्यो
मनोहरः ॥
वंशेनैव मतोऽपीति मतङ्गमुनिनोदितम्
।
ततोऽन्येऽपि तदाकारा वंशा एव
प्रकीर्त्तिताः ॥
तत्र त्यक्त्वा शिरोदेशादधो
द्विमितमङ्गुलम् ।
फुत्काररन्ध्रं कुर्व्वीत
मितमङ्गुलिपर्व्वणा ॥

| “वंशपत्री वेणुपत्री पिण्डा हिङ्गु शिवाटिका ।<br>हिङ्गुपत्रीगुणा विज्ञैर्वंशपत्री च कीर्त्तिता ॥”<br>इति भावप्रकाशः ॥ | | पञ्चाङ्गुलानि संत्यज्यताररन्ध्राणि कारयेत् ।<br>कुर्य्यात्तथान्यरन्ध्राणि सप्तसंख्यानि कौशलात् ॥<br>वदरीबीजतुल्यानि संत्यज्यार्द्धार्द्धमङ्गुलम् ।<br>प्रान्तयोर्ब्बन्धनं कार्य्यं स्वराद्यैर्नादहेतवे ॥<br>सिक्थकेन कला देया तेन सुस्वरता भवेत् ।<br>पञ्चाङ्गुलोऽयं वंशः स्यादेकैकाङ्गुलिवृद्धितः ॥<br>षडङ्गुलानि नाम्ना स्यात् यावदष्टादशाङ्गुलम् ।<br>फुत्कारताररन्ध्रस्य यावदङ्गुलिमन्तरम् ।<br>तदेव नाम वंशस्य वांशिकैः परिकीर्त्त्यते ॥ |
|---|---|---|

एकाङ्गुलो द्व्यङ्गुलश्च
त्र्यङ्गुलश्चतुरङ्गुलः ।
अतितारतरत्वेन वांशिकैः समुपेक्षितः ॥
त्रयोदशाङ्गुलो वंशोऽपरः पञ्चदशाङ्गुलः ।
निन्दितो वंशतत्त्वज्ञैस्तथासप्तदशाङ्गुलः
॥
महानन्दस्तथा नन्दो विजयोऽथ
जयस्तथा ।
चत्वार उत्तमा वंशा मतङ्गमुनिसम्मताः
॥
दशाङ्गुलो महानन्दो नन्द एकादशाङ्गुलः
।
द्वादशाङ्गुलमानस्तु विजयः परिकीर्त्तितः
॥
चतुर्द्दशाङ्गुलमितो जय इत्यभिधीयते ।
ब्रह्मा रुद्रो रविर्विष्णुः क्रमादत्र
व्यवस्थिताः ॥
नैविड्यं प्रौढता चापि सुस्वरत्वञ्च
शीघ्रता ।
माधुर्य्यमिति पञ्चामी फुत्कृतेषु गुणाः
स्मृताः ॥
शीत्कारबहुलः स्तब्धो विस्वरः
स्फुटितो लघुः ।
अमधुरश्च विज्ञेयाः षड्दोषाः फुत्कृते
क्रमात् ॥
वृथाप्रयोगबाहुल्यमल्पता गीतवादने ।
एभिर्दोषैर्युतोऽतीव निन्दितो वांशिको
मतः ॥
स्थानकादिनयाभिज्ञो गमकाढ्यः
स्फुटाक्षरः ।
शीघ्रहस्तः कलाभिज्ञो वांशिको रक्त
उच्यते ॥
प्रमुक्तिर्ब्बद्धमुक्तिश्च
युक्तिश्चेत्यङ्गुलेर्गुणाः ॥
सुस्थानत्वं सुस्वरत्वं
अङ्गुलीसारणक्रिया ।
समस्तगमकज्ञानं रागरागाङ्गवेदिता ॥
क्रियाभाषाविभाषासु दक्षता गीतवादने ।
युधिष्ठिरस्याश्वमेधो भवद्भिरनुभूयताम्
॥"
वच् + भावे तव्य ।) वचने, क्ली ॥

**वक्ता**, [ऋ] त्रि, (वच् + तृच् ।) योवक्तुं जानाति
सः । इति भरतः ॥ औचित्यात् बहु
विशिष्टं
वदति । इति मुकुटः ॥ (यथा,
हितोपदेशे ।
"भद्रं कृतं कृतं मौनं
कोकिलैर्ज्जलदागमे ।
दर्दुरा यत्र वक्तारस्तत्र मौनं हि शोभनम्
॥")
तत्पर्य्यायः । वदः २ वदावदः ३ ।
इत्यमरः ।
३ । १ । २५ ॥ वदान्यः ४ वप्ता ५ ।
इति जटा-
धरः ॥ सुष्ठुवक्ता । इति भरतः ॥
बहुभाषी ।
इत्येके । तत्पर्य्यायः । वाचोयुक्तिपटुः २
वाग्मी ३
वावदूकः ४ । इत्यमरः ॥ वचक्नः ५
सुवचाः ६
प्रवाक् ७ । इति जटाधरः ॥ पण्डितः ।
इति
मेदिनी । ते, ५३ ॥

**वक्त्रं**, क्ली, (वक्ति अनेनेति । वच् + "गुधृवी-
पचिवचियमिसदिक्षदिभ्यस्त्रः ।" उणा०
४ ।
१६६ । इति त्रः ।) मुखम् । इत्यमरः ।
२ ।
६ । ८९ ॥ (यथा, मनौ । ८ । २७२ ।
"धर्म्मोपदेशं दर्पेण विप्राणामस्य
कुर्व्वतः ।
तप्तमासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः
॥")
तगरमूलम् । इति शब्दमाला ॥
वस्त्रभेदः ।

**वक्त्रशोधनं**, क्ली, (वक्त्रस्य शोधनमिव ।) भव्यम् ।
इति राजनिर्घण्टः ॥ (वक्त्रस्य शोधनम् ।)
मुखशुद्धिकरणञ्च ॥

**वक्त्रशोधी**, [न्] पुं, (वक्त्रं शोधयतीति । शुध् +
णिच् + णिनिः ।) जम्बीरः । इति जटाधरः ॥
मुखशोधके, त्रि ॥

**वक्त्रासवः**, पुं, (वक्त्रस्य आसवः ।) अधरमधु ।
इति त्रिकाण्डशेषः ॥

**वक्रं**, क्ली, (वङ्कते इति । षकि कौटिल्ये + रन् ।
पृषोदरादित्वात् न लोपः । यद्वा, वञ्चतीति ।
वञ्चु गतौ + "स्फायितञ्चिवञ्चीति ।" उणा०
२ । १३ । इति रक् । न्यङ्क्वादित्वात् कुत्वम्
।)
नदीवङ्कः । तत्पर्य्यायः । पुटभेदः २ । इत्य-
मरः ॥ वङ्कः ३ । इति भरतः ॥ (तगर-
पादिकम् । तत्पर्य्यायो यथा, --
"कालानुशारिवा वक्रं तगरं कुटिलं शठम् ।
महोरगं नतं जिह्मं दीनं तगरपादिकम् ॥"
इति वैद्यकरत्नमालायाम् ॥
तथास्य विषयः ।
"शताह्वै रण्डमूलोग्रा वक्रव्याघ्रीफलैः शृतम् ।
तैलं नस्य मरुत्श्लेष्मतिमिरोद्र्ध्वगदापहम् ॥"
इति शताह्वाद्यं तैलम् ।
इति चक्रपाणिसंग्रहे शिरोरोगाधिकारे ॥)

**वक्रः**, पुं, (वञ्चतीति । वञ्च गतौ + "स्फायितञ्चि-
वञ्चीति ।" उणा० २ । १३ । इति रक् ।
न्यङ्क्वादित्वात् कुत्वम् ।) शनैश्चरः । इति
मेदिनी । रे, ६५ ॥ मङ्गलग्रहः । इति हेम-
चन्द्रः । २ । ३० ॥ रुद्रः । त्रिपुरासुरः । इति
धरणिः ॥ पर्पटः । इति राजनिर्घण्टः ॥ वक्र-
गतिविशिष्टग्रहः । स तु यस्य ग्रहस्याश्रि-
तात् रव्यधिष्ठितराशीयत्रिंशांशान्तर्गत्तादंशात्
पञ्चमषष्ठांशे रविस्तिष्ठति । यथा, --
"वक्राः स्युः पञ्चषष्ठेऽर्के त्वतिवक्रा नगाष्टगे ।
नवमे दशमे भानौ जायते सहजा गतिः ॥
द्वादशैकादशे सूर्य्ये लभन्ते शीघ्रतां पुनः ।

स्वस्थाने चापि दुःस्थाने
नादनिर्म्माणकौशलम् ॥
गातॄणां स्थानदातृत्वं तद्दोषाच्छादनं
तथा ।
वांशिकस्य गुणा एते मया संक्षिप्य
दर्शिताः ॥”
इति संगीतदामोदरः ॥

**वंश्यः**, त्रि, (वंशे भवः । वंश + “दिगादिभ्यो यत् ।”
४ । ३ । ५४ । इति यत् ।) सद्वंशजातः । तत्प-
र्य्यायः । कुल्यः २ बीज्यः ३ । इति त्रिकाण्ड-
शेषः ॥ (यथा, मनुः । १ । ६१ ।
“स्वायम्भुवस्यास्य मनोः षड्वंश्या
मनवोऽपरे ॥”
वंशोत्पन्नमात्रे च । यथा, रघुः । १८ ।
४९ ।
“वंश्या गुणाः खल्वपि लोककान्ताः
प्रारम्भसूक्ष्माः प्रथिमानमापुः ॥”
गृहोद्‌र्ध्वकाष्ठविशेषः ।
पृष्ठावयवविशेषश्च । इति
वंशशब्ददर्शनात् ॥ यथा, भागवते । ११
। ८ । ३३ ।
“यदस्थिभिर्निर्म्मितवंशवंश्य-
स्थूणं त्वचा रोमनखैः पिनद्धम् ॥”)

**वक**, इ ङ कौटिल्ये । गतौ । इति कविकल्पद्रुमः ॥
(भ्वा०-आत्म०-अक०-सक० च-सेट् ।) कौटिल्य-
मिह कुटिलीभावः कुटिलीकरणञ्च । इ,
वङ्क्यते ।
ङ, वङ्कते काष्ठं कुटिलं स्यादित्यर्थः ।
वङ्कते
काष्ठं कुटिलं करोतीत्यर्थः । इति
दुर्गादासः ॥

**वक्क**, ङ गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) ङ, वक्कते ।
इति दुर्गा-
दासः ॥

इति मेदिनी । रे, ८४ ॥ छन्दोविशेषः ।
इति
हेमचन्द्रः ॥ तस्य लक्षणादि यथा, --
“भवत्यर्द्धसमं वक्त्रं विषमञ्च कदाचन ।
तयोर्द्वयोरुपान्तेऽत्र
च्छब्दस्तदधुनोच्यते ॥
वक्त्रं युग्भ्यां मगौ स्यातामब्धेर्योऽनुष्टुभिः
ख्यातम् ॥”
अत्र द्विरावर्त्त्य श्लोकः पूरयितव्यः ।
“वक्त्राम्भोजं सदा स्मेरं चक्षुर्नीलोत्पलं
फुल्लम् ।
बल्लवीनां मुरारातेश्चेतो भृङ्गं जहारोच्चैः
॥”
इति छन्दोमञ्जरी ॥

**वक्त्रखुरः**, पुं, (वक्त्रस्य क्षुर इव पृषोदरादित्वात्
खः ।) दन्तः । इति त्रिकाण्डशेषः ॥

**वक्त्रजः**, पुं, (ब्रह्मणो वक्त्राद् जायते इति ।
ब्राह्मणोऽस्य मुखमासीत् इति श्रुतेः ।
जन् +
डः ।) ब्राह्मणः । इति त्रिकाण्डशेषः ॥
मुख-
जाते, त्रि ॥

**वक्त्रतालं**, क्ली, (वक्त्रस्य तालम् ।) मुखवाद्यम् ।
इति केचित् ॥ विकाण्डशेषे मुखवाद्यं
वक्र-
नालमिति लिखितम् ॥

**वक्त्रपट्टः**, पुं, (वक्त्रस्य पट्ट इव ।) अश्वान्नभोजन-
पात्रम् । तोबडा इति भाषा । तत्पर्य्यायः
।
तलिका २ तलसारकम् ३ । इति
हेमचन्द्रः ।
४ । ३१७ ॥

**वक्त्रभेदी**, [न्] पुं, (वक्त्रं भिनत्तिति । भिद् +
णिनिः ।) तिक्तरसः । इति हेमचन्द्रः ।
६ ।
२५ ॥ मुखभेदके, त्रि ॥

**वक्त्रवासः**, पुं, (वक्त्रं वासयति सुरभीकरोतीति ।

रविस्थित्यंशकस्त्रिंशावधेः संख्यात्र कल्प्यते ॥
न तु राश्यन्तरस्पर्शात् द्वितीयादिनिरूपणम् ।
राहुकेतू सदा वक्रौ शीघ्रगौ चन्द्रभास्करौ ॥”
इति ज्योतिस्तत्त्वम् ॥
(करूषदेशीयनृपतिभेदः । यथा, महाभारते ।
२ । १४ । ११ ।
“तमेव च महाराज ! शिष्यवत् समुपस्थितः ।
वक्रः करूषाधिपतिर्म्मायायोधीमहाबलः ॥”)

**वक्रः** त्रि, (वङ्कते इति । वकि कौटिल्ये + रन् ।
पृषोदरादित्वात् न लोपः । यद्वा, वञ्चि + रक् ।)
अनृजुः । वाँका इति भाषा । तत्पर्य्यायः ।
अरालम् २ वृजिनम् ३ जिह्मम् ४ ऊर्म्मि-
मत् ५ कुञ्चितम् ६ नतम् ७ आविद्धम् ८ कुटि-
लम् ९ भुग्नम् १० वेल्लितम् ११ । इत्यमरः ।
३ । १ । ७१ ॥ वङ्कुरम् १२ वेङ्कु १३ विनतम्
१४ उन्दु-
रम् १५ । इति शब्दरत्नावली ॥ अवनतः १६
आनतः १७ भङ्गुरः १८ । इति जटाधरः ॥ *
॥

**वक्तव्यः**, त्रि, (ब्रू वच् वा + तव्यः ।) कुत्सितः ।

हीनः । (यथा, मनुः । ८ । ६६ ।
"नाध्यधीनो न वक्तव्यो न दस्युर्न
विकर्म्मकृत् ॥")
वचनार्हः । इति मेदिनी । ये, १०३ ॥
(यथा,
महाभारते । १४ । ७६ । २३ ।
"वक्तव्याश्चापि राजानः सर्व्वे सह
सुहृज्जनैः ।

वासि + "कर्म्मण्यण् ।" ३ । २ । १ ।
इत्यण् ।)
नारङ्गः । इति राजनिर्घण्टः ॥
(विवरणमस्य
नारङ्गशब्दे ज्ञातव्यम् ॥ वक्त्रस्य वासः
।) मुख-
गन्धश्च ॥

(यथा, महाभारते । ३ । १३२ । १२ ।
"स वै तथा वक्र एवाभ्यजाय-
दष्टावक्रः प्रथितो वै महर्षिः ॥")
वक्राणि यथा । अलकः १ भालः २ भ्रूः ३
नखचिह्नम् ४ अङ्कुशः ५ कुञ्चिका ६ भग्नकङ्क-
णम् ७ बालेन्दुः ८ दात्रम् ९ कुद्दालः १० चन्द्रकः ११ शुकास्यम् १२ पलाशपुष्पम् १३
विद्युत् १४ कटाक्षः १५ शक्रधनुः १६ फणा १७
प्रबोधः १८ करः १९ हस्तिदन्तः २० शूकर-
दन्तः २१ सिंहनखादिः २२ । इति कविकल्प-
लता ॥ क्रूरः । इति मेदिनी । रे, ६५ ॥

**वक्रकण्टः**, पुं, (वक्राः कण्ठाः कण्टका यस्य ।) वदरवृक्षः । इति राजनिर्घण्टः ॥ (वक्रः कण्टः ।) कुटिलकण्टकश्च ॥

**वक्रकण्टकः**, पुं, (वक्राः कण्टका अस्य ।) खदिर-वृक्षः । इति राजनिर्घण्टः ॥ (विषयोऽस्य खदिरशब्दे विज्ञेयः ॥)

**वक्रखड्गः**, पुं, (वक्रः खड्गः ।) करवालः । इति राजनिर्घण्टः ॥

**वक्रग्रीवः**, पुं, (वक्रा ग्रीवास्य ।) उष्ट्रः । इति त्रिकाण्डशेषः ॥

**वक्रचञ्चुः**, पुं, (वक्रा चञ्चुर्यस्य ।) शुकपक्षी । इति शब्दरत्नावली ॥

**वक्रतालं**, क्ली, (वक्रं तालं यत्र ।) वाद्यविशेषः । तत्पर्य्यायः । मुखवाद्यम् २ । वक्रनालमिति वा
पाठः । इति त्रिकाण्डशेषः ॥

**वक्रताली**, स्त्री, (वक्रताल + गौरादित्वात् ङीष् ।) मुखवाद्यम् । इति शब्दरत्नावली ॥

**वक्रमः**, पुं, (अवक्रमणमिति । अव + क्रम + भावे घञ् । अल्लोपः ।) पलायनम् । इति शब्दरत्ना-वली ॥

**वक्रलाङ्गूलः**, पुं, (वक्रं लाङ्गूलं यस्य ।) कुक्कुरः । इति राजनिर्घण्टः ॥ कुटिलपुच्छे, क्ली ॥

**वक्रवक्त्रः**, पुं, (वक्रं वक्त्रं मुखमस्य ।) शूकरः । इति शब्दरत्नावली ॥ कुटिलमुखविशिष्टे, त्रि ॥

**वक्रशल्या**, स्त्री, (वक्रं शल्यमिव पत्रादिकं यस्याः ।) कुटुम्बिनीक्षुपः । इति राज-निर्घण्टः ॥

**वक्राग्रं**, क्ली, (वक्रमग्रं यस्य ।) कवाटवक्रवृक्षः । इति रत्नमाला ॥ ॥ कुटिलाग्रभागश्च ॥

**वक्राङ्गः**, पुं, (वक्रमङ्गं यस्य ।) हंसः । इति हेमचन्द्रः ॥ कुटिलावयवे, क्ली ॥ (कुटिलाव-यवविशिष्टे, त्रि । यथा, हरिवंशे । १०२ । ३८ ।
"तरङ्गविषमापीडा चक्रवाकोन्मुखस्तनी ।
वेगगम्भीरवक्राङ्गी त्रस्तमीनविभूषणा ॥")

**वक्रिः**, त्रि, मिथ्यावादी । वकधातोः क्रिन्प्रत्ययेन निष्पन्नः ॥

**वक्री**, [न्] पुं, (वक्रो वक्रतास्यास्तीति । इनिः । वैदिकधर्म्मविरुद्धवादित्वादस्य तथात्वम् ।) बुद्धः ।
इति शब्दरत्नावली ॥ वक्रताविशिष्टे, त्रि । यथा,
"लग्नेशो यदि वक्री स्यात् पुंसः कार्य्येषु वक्रता ।
लग्नेशेऽस्तं गते मर्यो दुःखादिव्याधिर्स्युतः ॥"
इति ज्योतिस्तत्त्वम् ॥

**वक्रोक्तिः**, स्त्री, (वक्रा कुटिला उक्तिः ।) काकूक्तिः । यथा, कामधेनुकल्पतरुधृतब्रह्म-पुराणम् ।
"अथ वृत्ते वृषोत्सर्गे दाता वक्रोक्तिभिः पदैः ।
"के यूयं स्थल एव सम्प्रति वयं प्रश्नो विशेषाश्रयः
किं ब्रूते विहगः स वा फणिपतिर्यत्रास्ति सुप्तो हरिः ।
वामा यूयमहो विडम्बरसिकः कीदृक् स्मरो वर्त्तते
येनास्मासु विवेकशून्यमनसः पुंस्वेव योषिद् भ्रमः ॥"
अत्र विशेषपदस्य विः पक्षी शेषो नाग इति
अर्थद्वययोगात् सभङ्गः श्लेषः । अन्यत्र तु अभङ्गः ।
"काले कोकिलवाचाले सहकारमनोहरे ।
कृतागसः परित्यागात् तस्याश्चेतो न दूयते ॥"
अत्र कयाचित् सख्या निषेधार्थे नियुक्तो नञ्
अन्यया काक्वा दूयत एवेति विध्यर्थे घटितः ॥")

**वक्रोष्ठिका**, स्त्री, (वक्रोष्ठोऽस्त्यस्या इति । ठन् । ईशद्धसनेन हि ओष्ठस्य वक्रता जायते अतो-
ऽस्यास्तथात्वम् । यद्वा, वक्र ओष्ठो यस्याः ।
ततः स्वार्थे कन् । टापि अत इत्वम् ।) अदृष्ट-
रदहास्यम् । ईषद्धास्यम् । तत्पर्य्यायः । स्मितम्
२ । इति हेमचन्द्रः ॥

**वक्ष**, रोषसंहत्योः । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-रोषे अक०-संहतौ सक०-सेट् ।) वक्षति ।
इति दुर्गादासः ॥

**वक्रतुण्डः**, पुं, (वक्रन्तुण्डं यस्य ।) शुकपक्षी ।

इति शब्दरत्नावली ॥ (वक्रौष्ठे, त्रि ।
यथा,
भागवते । ६ । १ । २८ ।
"स पाशहस्तांस्त्रीन् दृष्ट्वा
पुरुषानतिदारुणान् ।
वक्रतुण्डानूद्‌र्ध्वरोम्न आत्मानं
नेतुमागतान् ॥")

**वक्रदंष्ट्रः**, पुं, (वक्रा दंष्ट्रा यस्य ।) शूकरः । इति

केचित् ॥

**वक्रनक्रः**, पुं, (वक्रः कुटिलः नक्र इव हिंस्रश्च ।)

पिशुनः । शुकपक्षी । इति मेदिनी । रे,
२८५ ॥

**वक्रनालं**, क्ली, मुखवाद्यम् । इति मुद्राङ्कित-

त्रिकाण्डशेषः ॥

**वक्त्रनासिकः**, पुं, (वक्रा नासिका यस्य ।) पेचकः
।

इति त्रिकाण्डशेषः ॥ कुटिलनासायुक्ते,
त्रि ॥

**वक्रपुच्छः**, पुं, स्त्री, (वक्रं पुच्छं यस्य ।) कुक्कुरः ।

इति त्रिकाण्डशेषः ॥
सलोमकुटिललाङ्गूलञ्च ॥

**वक्रपुष्पः**, पुं, (वक्राणि पुष्पाण्यस्य ।) वकवृक्षः ।

इति शब्दरत्नावली ॥ पलाशवृक्षः । इति
राजनिर्घण्टः ॥

**वक्रबालधिः**, पुं, (वक्रो बालधिः केशयुक्तलाङ्गूलं

यस्य ।) कुक्कुरः । इति हेमचन्द्रः । ४ ।
३४४ ॥
कुटिलपुच्छश्च ॥

**वक्रभणितं**, क्ली, (वक्रं कुटिलं भणितम् ।)

कुटिलवाक्यम् । तत्पर्य्यायः । छेकोक्तिः
२ ।
इति त्रिकाण्डशेषः ॥

ब्राह्मणानाह यत् किञ्चित् मयोत्सृष्टन्तु
निर्ज्जने ॥
तत् कश्चिदन्यो न नयेन्न विभाज्यं यथाक्रमम्
।
न बाह्यं न च तत् क्षीरं पातव्यं केनचित्
क्वचित् ॥"
कृत्यप्रदीपेऽप्येवम् । वक्रोक्तिभिः काकूक्तिभिः
।
इति शुद्धितत्त्वम् ॥ * ॥ कुटिलोक्तिः । यथा,
"वादी व्याकरणं विनैव विदुषां धृष्टः प्रविष्टः
सभां
जल्पन्नल्पमतिः स्मयात् पटुवटुर्भ्रूभङ्गवक्रो-
क्तिभिः ।
ह्रीतः सन्नुपहासमेति गणको
गोलानभिज्ञस्तथा
ज्योतिर्व्वित्सदसि प्रगल् भगणकः
प्रश्नप्रपञ्चो-
क्तिभिः ॥"
इति सिद्धान्तशिरोमणौ गोलाध्यायः ॥
(वक्रा अर्थान्तरग्रहणेन कुटिला उक्तिः ।
शब्दालङ्कारप्रभेदः । तल्लक्षणादिकं यथा,
साहित्यदर्पणे दशमपरिच्छेदे ।
"अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेद्
यदि ।
अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो
द्विधा ॥
द्विधेति श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च ।
क्रमे-
णोदाहरणं यथा, --

**वक्षः**, [स्] क्ली, (उच्यतेऽनेनेति । वच + "पचि-

वचिभ्यां सुट् च ।" उणा० ४ । २१९ ।
इति
असुन् सुट् । वक्षतेरसुन् इति रमानाथः
।
धातुप्रदीपश्च ।) अङ्गविशेषः । स तु
हृदयोपरि-
कण्ठादधोभागः । वुक् इति भाषा ।
तत्प-
र्य्यायः । क्रोडम् २ भुजान्तरम् ३ उरः
४
वत्सम् ५ । इत्यमरः ॥ अङ्कः ६
उत्सङ्गः ७ ।
इति जटाधरः ॥ वक्षणम् ८ गणपीठकम्
९ ।
इति शब्दचन्द्रिका ॥ अपि च ।
"अथ वक्षश्च वत्सं स्यादुरो वक्षस्थले
त्रयम् ।"
इति शब्दरत्नावली ॥
तस्य शुभाशुभलक्षणं यथा, --
"अन्नवान् समवक्षाः स्यात्
पीनैर्व्वक्षोभि-
रूर्ज्जितः ।
वक्षोभिर्व्विषमैर्निस्वः शस्त्रेण
निधनस्तथा ॥"
इति गारुडे ६६ अध्यायः ॥
(पुं, वहतीति । वह + "वहिहाधाञ्भ्य-
श्छन्दसि ।" उणा० ४ । २२० । इति
असुन् ।
सुट् च । अनड्वान् । इत्युज्ज्वलदत्तः
॥")

**वक्षणं**, क्ली, (वक्षत्यनेनेति । वक्षरोषसंहत्योः +

ल्युट् ।) वक्षः । इति शब्दचन्द्रिका ॥
(बाहके,
त्रि । यथा, ऋग्वेदे । ६ । २३ । ६ ।
"क्रियास्म वक्षणानि यज्ञैः ।"
"वक्षणानि वाहकानि स्तोत्राणि क्रियास्म
करवाम ।" इति तद्भाष्ये सायणः ॥)

**वक्षोजं**, क्ली, (वक्षसि जायते इति । जन् + डः ।)

|  |  |  |
| --- | --- | --- |
|  |  | स्तनः । इति शब्दरत्नावली ॥ (यथा, साहित्य-<br>दर्पणे ३ परिच्छेदे ।<br>“मध्यस्य प्रथिमानमेति जघनं वक्षोजयोर्म्मन्दतां<br>दूरं यात्युदरञ्च लोमलतिका नेत्रार्जवं धावति । |

कन्दर्पं परिवीक्ष्य
नूतनमनोराज्याभिषिक्तं
क्षणात्
अङ्गानीव परस्परं विदधते निर्लुण्ठनं
सुभ्रुवः ॥”)

**वक्षोरुहः** पुं, (वक्षसि रोहतीति । रुह + कः ।)

स्तनः । इति त्रिकाण्डशेषः ॥ (यथा,
आर्य्या-
सप्तशत्याम् । ४४६ ।
“मा शबरतरुणि पीवरवक्षोरुहयोर्भरेण
भज
गर्व्वम् ।
निर्म्मोकैरपि शोभा
ययोर्भुजङ्गीभिरुन्मुक्तैः ॥”)

**वक्ष्यमाणः**, त्रि, भविष्यत्कथनीयविषयः । वच-

धातोः स्यमानप्रत्ययेन निष्पन्नः ।
यथा । अत्र
वक्ष्यमाणवचनात् मध्यरात्रप्राप्ताव्वेव
जयन्ती-
त्वम् । इति तिथ्यादितत्त्वम् ॥ अपि
च ।
“तत्रैव द्वादशीमध्ये पारणं
श्रवणोऽधिके ।
वक्ष्यमाणञ्च घटतेऽन्यथा प्राग्वद्द्विधा
व्रतम् ॥”
इति श्रीहरिभक्तिविलासे १५
विलासः ॥

**वख**, सृपि । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-

सक०-सेट् ।) वखति । सृपि गतौ ।
इति
दुर्गादासः ॥

**वख**, इ सृपि । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् । इदित् ।) इ,
वङ्ख्यते । सृपि
गतौ । इति दुर्गादासः ॥

वगलामुख्यै देवतायै नमः । गुह्ये ह्लीँ बीजाय
नमः । पादयोः स्वाहाशक्तये नमः ।
“नारदोऽस्य ऋषिं मूद्धि्र्न तृष्टुप्
छन्दश्चतन्मुखे ।
श्रीवगलामुखीं देवीं हृदये विन्यसेत्ततः ।
ह्लीँ बीजं गुह्यदेशे तु स्वाहाशक्तिस्तु पादयोः ॥”
ततः कराङ्गन्यासौ । ॐ ह्लीँ अङ्गुष्ठाभ्यां नमः ।
वगलामुखि तर्जनीभ्यां स्वाहा । सर्व्वदुष्टानां
मध्यमाभ्यां वषट् । वाचं मुखं स्तम्भय अना-
मिकाभ्यां हूँ । जिह्वां कीलय कीलय कनि-
ष्ठाभ्यां वौषट् । बुद्धिं नाशय ह्लीँ ॐ स्वाहा
करतलपृष्ठाभ्यां फट् । एवं हृदयादिषु । तथा
च दिव्यतन्त्रे ।
“युग्मबाणेषुसप्ताहिशेषार्णैश्च मनूद्भवैः ।
करशाखासु तलयोः कराङ्गन्यासमाचरेत् ॥”
ततो मूलान्ते
आत्मतत्त्वव्यापिनीवगलामुखीश्री
पादुकां पूजयामि इति मूलाधारे । मूलान्ते
विद्यातत्त्वव्यापिनीवगलामुखीश्रीपादुकां पूज-
यामि शिरसि । मूलान्ते शिवतत्त्वव्यापिनी-
वगलामुखीश्रीपादुकां पूजयामि सर्व्वाङ्गे ।
ततश्च ।
“मूद्धि्र्न भाले दृशोः श्रोत्रे गण्डयोर्नासयोः
पुनः ।
ओष्ठयोर्म्मुखवृत्ते च दक्षिणांशे च कूर्परे ॥
मणिबन्धेऽङ्गुलेर्म्मूले गले च कुचयोर्हृदि ।
नाभौ कट्यां गुह्यदेशे वामांशे कूर्परे तथा ॥
मणिबन्धेऽङ्गुलेर्म्मूले ततश्च विन्यसेत् पुनः ।
दक्षवामे चोरुजान्वोर्गुल् फयोरङ्गुलिमूलयोः ।
क्रमेण मन्त्रवर्णास्तु न्यस्य ध्यायेत् यथाविधि
॥” * ॥
ततो ध्यानम् ।
“मध्ये सुराब्धिमणिमण्डपरत्नवेदी-
सिंहासनोपरिगतां परिपीतवर्णाम् ।
पीताम्बराभरणमाल्यविभूषिताङ्गीं
देवीं स्मरामि धृतमुद्गरवैरिजिह्वाम् ॥
जिह्वाग्रमादाय करेण देवीं
वामेन शत्रुं परिपीडयन्तीम् ।
गदाभिघातेन च दक्षिणेन

विद्याशिवैस्तत्त्वैर्बिन्दुत्रयं मुखे क्षिप्त्वा
तर्जन्य-
ङ्गुष्ठयोगेन साङ्गावरणां वगलामुखीं तर्पयेत्
।
ततो यथासम्भवमुपचारैः संपूज्य
आवरणपूजा-
मारभेत् । षट्कोणेषु पूर्व्वे ॐ सुभगायै नमः
।
एवमग्निकोणे भगसर्पिण्यै । ईशाने भगाव-
हायै । पश्चिमे भगसिद्धायै । नैरृते भग-
पातिन्यै । वायौ भगमालिन्यै । ततोऽष्टदल-
पत्रेषु ब्राह्म्याद्याः पूज्याः । पत्राग्रेषु ॐ
जयायै
नमः । एवं विजयायै । अजितायै । अपरा-
जितायै । स्तम्भिन्यै । जम्भिन्यै । मोहिन्यै
।
आकर्षिण्यै । ततो द्वारेषु ॐ भैरवाय नमः ।
तद्बाह्ये इन्द्रादीन् वज्रादीन् पूजयेत् । ततो
मूलेन धूपादिकं दत्त्वा यथाशक्ति जपं
विधाय
त्रिशूलमुद्रां प्रदर्श्य पुष्पाञ्जलित्रयं दत्त्वा
देव्यै-
योनिमुद्रां प्रदर्शयेत् । ततो भैरवाय वलिं
दद्यात् । ततो विसर्जनान्तं कर्म्म समापयेत्
॥
अस्य पुरश्चरणं लक्षजपः । तथा च ।
“पीताम्बरधरो भूत्वा
पूर्व्वाशाभिमुखस्थितः ।
लक्षमेकं जपेन्मन्त्रं हरिद्राग्रन्थिमालया ॥
ब्रह्मचर्य्यरतो नित्यं प्रयतो ध्यानतत्परः ।
प्रियङ्गुकुसुमेनापि पीतपुष्पैश्च होमयेत् ॥”
* ॥
द्वितीयमन्त्रस्य तु न्यासादिकं सर्व्वं
पूर्ब्बवत् ।
ध्यानन्तु ।
“गम्भीराञ्च मदोन्मत्तां
स्वर्णकान्तिसमप्रभाम् ।
चतुर्भुजां त्रिनयनां कामलालसमानसाम् ॥
मुद्गरं दक्षिणे पाशं वामे जिह्वाञ्च वज्रकम् ।

**वग**, इ खञ्जे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

अक०-सेट् ।) इ, वङ्ग्यते । इति दुर्गादासः ॥

**वगला** स्त्री, दशमहाविद्यान्तर्गतदेवी-

विशेषः । तदुक्तं तन्त्रान्तरे ।

**वगलामुखी** स्त्री, दशमहाविद्यान्तर्गतदेवी-

विशेषः । तदुक्तं तन्त्रान्तरे ।
"ब्रह्मास्त्रं संप्रवक्ष्यामि सद्यःप्रत्ययकारकम् ।
साधकानां हितार्थाय स्तम्भनाय च वैरि-
णाम् ॥
यस्याः स्मरणमात्रेण पवनोऽपि स्थिरायते ।
प्रणवं स्थिरमायाञ्च ततश्च वगलामुखि ॥
तदन्ते सर्व्वदुष्टानां ततो वाचं मुखं पदम् ॥
स्तम्भयेति ततो जिह्वां कीलयेति पदद्वयम् ॥
बुद्धिं नाशय पश्चात्तु स्थिरमायां समालिखेत् ।
लिखेच्च पुनरोङ्कारं स्वाहेति पदमन्ततः ॥
षटत्रिंशदक्षरी विद्या सर्व्वसम्पत्करी मता ॥"
स्थिरमायां ह्लीँ । तथा च ।
"वह्निहीनेन्द्रमायायुक् स्थिरमाया प्रकीर्त्तिता ॥
ॐ ह्लीँ वगलामुखी सर्व्वदुष्टानां वाचं मुखं
स्तम्भय जिह्वां कीलय कीलय बुद्धिं नाशय ह्लीँ
ॐ स्वाहा ॥ * ॥ तन्त्रान्तरे ।
"वह्निहीनेन्द्रमायायुक् वगलामुखि सर्व्वयुक् ।
दुष्टानां वाचमित्युक्त्वा मुखं स्तम्भय कीर्त्तयेत् ॥
पीताम्बराढ्यां द्विभुजां नमामि ॥"
एवं ध्यात्वा मानसैः सम्पूज्य बहिःपूजामार-
भेत् ॥ * ॥ तत्र प्रथमतोऽर्घ्यस्थापनम् । यथा ।
अष्टाङ्गुलं चतुरस्रं षिधाय ईशानादिकोणेषु
पूर्व्वादिदिक्षु च कुसुमाक्षतरक्तचन्दनैर्ग्लौँ गण-
पतये नमः इत्यनेन गजदानेन संपूज्य तेन
मधुना वा अर्घ्यपात्रमापूरयेत् । ततो वारत्रयं
विद्यया संपूज्य अङ्गानि विन्यसेत् । ततो धेनु-
योनिमुद्रे प्रदर्श्य तेनोदकेन आत्मानं पूजोप-
करणञ्चाभ्युक्षयेत् ॥ * ॥ अस्या यन्त्रम् । त्र्यस्रं
षडस्रं वृत्तमष्टदलं भूपुरान्वितम् । ततो मूल-
मुच्चार्य्यं ॐ आधारशक्तिकमलासनायनमः ।
एवं शक्तिपद्मासनाय नमः । पूर्ब्बवत् ध्यात्वा
पीठे आवाह्य षडङ्गानि न्यसेत् । ततो मुद्रां
प्रदर्श्य पुरतः षडङ्गेन मण्डलं यजेत् । ततो
मूलेन मन्त्रयित्वा धेनुयोनिमुद्रे प्रदर्श्य आत्म-
पीताम्बरधरां देवीं दृढपीनपयोधराम् ।
हेमकुण्डलभूषाञ्च स्वर्णसिंहासनस्थिताम् ॥" * ॥
अथ प्रयोगः ।
"कुरुते वाग्गतिस्तम्भं दुष्टानां बुद्धिनाशनम् ।
जपहोमप्रयोगे च मन्त्रं चाप्ययुतं जपेत् ॥
हरिद्राहरितालाभ्यां लवणं जुहुयान्निशि ।
स्तम्भयेत् परसैन्यानि नात्र कार्य्या विचारणा ॥
अथवा पीतपुष्पैश्च त्रिमध्वक्तैश्च होमयेत् ।
स्तम्भनेषु च सर्व्वेषु प्रयोगः प्रत्ययावहः ॥" * ॥
यन्त्रन्तु ।
"ॐकारयोः संमुखयोरूद्‌र्ध्वाधःशिरसोर्लिखेत् ।
मध्यगं नाम साध्यस्य तद्बाह्ये चाक्षरद्वयम् ॥
बीजं द्बितीयवर्गस्य तृतीयं बिन्दुभूषितम् ।
चतुर्द्दशस्वरोपेतं संलिखेत् पृथिवीगतम् ॥
ठकारेण समावेष्ट्य चतुष्कोणपुटं बहिः ।
तत्कोणरेखासंसक्तैः शूलैर्व्वज्राष्टकं लिखेत् ॥
त्रिशूलमध्यरेखायाः पृथ्वी बीजानि पार्श्वयोः ।
अष्टष्वपि च कोणेषु तद्बहिर्व्वगलां लिखेत् ॥
पृथिव्यन्तरितं बाह्ये मातृकापरिमण्डलम् ।
आवेष्ट्य चाष्टधा पश्चात्तद्बाह्ये स्थिरमायया ॥
निरुध्याङ्कुशबीजेन नादसंमिलिताङ्घ्रिणा ।
लिखेत् पूर्व्ववदावेष्ट्य पश्चाच्च वगलामुखीम् ॥
पट्टे पाषाणपट्टे वा हरिद्रोन्मत्ततालकैः ।
दिव्यस्तम्भे मुखस्तम्भे लिखित्वा गाढमाक्रमेत् ॥
विवादे यन्त्रमालिख्य भूर्ज्जे तैरेव वस्तुभिः ।
कुम्भकारस्य चक्रस्य भ्रमतो विपरीततः ॥

| | | |
|---|---|---|
| जिह्वां कीलय बुद्धिं तत् विनाशय पदं वदेत् ।<br>पुनर्ब्बीजं ततस्तारं<br>वह्निजायावधिर्भवेत् ।<br>तारादिका चतुस्त्रिंशदक्षरा वगलामुखी ॥”<br>ॐ ह्लीँ वगलामुखि सर्व्वदुष्टानां वाचं मुखं<br>स्तम्भय जिह्वां कीलय बुद्धिं विनाशय ह्लीँ ॐ<br>स्वाहा । इत्यपि मन्त्रान्तरम् ॥ * ॥ अनयोः<br>पूजा । प्रातःकृत्यादिप्राणायामान्तं विधाय<br>ऋष्यादिन्यासं कुर्य्यात् । यथा, शिरसि नारद-<br>ऋषये नमः । मुखे तृष्टुप्छन्दसे नमः । हृदि | | |

मृत्तिकां समुपादाय वृषभं कारयेत्ततः ।
यन्त्रं तस्योपरि न्यस्य तालकेन विलिप्य च ॥
तन्नासायां विनिः क्षिप्य पीतरज्जुं निजे गृहे ।
अर्च्चयेत्तं चतुष्कालं नित्यं पीतोपचारतः ।
दुष्टस्य स्तम्भयत्येव मुखं वाचस्पतेरपि ॥”
इति वगलापरिच्छेदः ॥ * ॥
विश्वसारे ।
“काली तारा महाविद्या षोडशी भुवनेश्वरी ।
भैरवी छिन्नमस्ता च विद्या धूमावती तथा ॥
वगला सिद्धविद्या च मातङ्गी कमलात्मिका ।
एता दश महाविद्याः सिद्धविद्याः प्रकी-
र्त्तिताः ॥”
अथ वगलामुखीस्तोत्रम् ।
“मध्ये सुधाब्धिमणिमण्डपरत्नवेद्री-
सिंहासनोपरिगतां परिपीतवर्णाम् ।
पीताम्बराभरणमाल्यविभूषिताङ्गीं
देवीं भजामि धृतमुद्गरवैरिजिह्वाम् ॥
जिह्वाग्रमादाय करेण देवीं
वामेन शत्रुं परिपीडयन्तीम् ।
गदाभिघातेन च दक्षिणेन
पीताम्बरां तां द्विभुजां भजामि ॥
चलत्कनककुण्डलोल्लसितचारुगण्डस्थलीं
लसत्कनकचम्पकद्युतिमदिन्दुविम्बाननाम् ।
गदाहतविपक्षकां कलितलोलजिह्वाञ्चलां
स्मरामि वगलामुखीं विमुखसन्मनःस्तम्भिनीम् ॥
पीयूषोदधिमध्यचारुविलसद्रक्तोत्पलेमण्डपे
यत्सिंहासनमौलिपातितरिपुप्रेतासनाध्यासि-
नीम् ।
स्वर्णाभां करपीडितारिरसनां भ्राम्यद्गदावि-
भ्रमा-
मित्थं ध्यायति यान्ति तस्य विलयं सद्योऽथ
सर्व्वापदः ॥
देवि त्वच्चरणाम्बुजार्च्चनकृते यः पीतपुष्पाञ्जलीन्
भक्त्या वामकरे निधाय च मनुं मन्त्री मनो-
ज्ञाक्षरम् ।
पीठध्यानपरोऽथ कुम्भकवशात् बीजं स्मरेत्
पार्थिवं
तस्यामित्रमुखस्य वाचि हृदये जाड्यं भवेत्
तत्क्षणात् ॥
त्वन्नामग्रहणेन संसदि मुखस्तम्भो
भवेद्-
वादिनाम् ॥
दुष्टस्तम्भनमुग्रविघ्नशमनं
दारिद्र्यविद्रावणं
भूभृद्भूशमनं वलन्मृगदृशां
चेतःसमाकर्षणम् ।
सौभाग्यैकनिकेतनं मम दृशोः
कारुण्यपूर्णामृतं
मृत्योर्म्मारणमाविरस्तु पूरतो
मातस्त्वदीयं वपुः ॥
मातर्भञ्जय मे विपक्षवदनं जिह्वाञ्चलां
कीलय
ब्राह्मीं मुद्रय नाशयाशु धिषणामुग्रां
गतिं
स्तम्भय ।
शत्रूं श्चूर्णय देवि तीक्ष्णगदया गौराङ्गि
पीताम्बरे
विघ्नौघं वगले हर प्रणमतां
कारुण्यपूर्णेक्षणे ॥
मातर्भैरवि भद्रकालि विजये वाराहि
विश्वा-
श्रये
श्रीविद्ये संमये महेशि वगले कामेशि
रामे रमे ।
मातङ्गि त्रिपुरे परात्परतरे
स्वर्गापवर्गप्रदे
दासोऽहं शरणागतः करुणया
विश्वेश्वरि
त्राहि माम् ॥
संरम्भे चौरसङ्घे प्रहरणसमये बन्धने
व्याधिमध्ये
विद्यावादे विवादे प्रकुपितनृपतौ
दिव्यकाले
निशायाम् ।
वश्ये वा स्तम्भने वा रिपुवधसमये
निर्जने वा
वने वा

**वगाहः**, पुं, (अव + गाह + भावे घञ् ।
अलोपः ।) अवगाहः । इति
मुग्धबोधव्याकरणं
भरतश्च ॥

**वग्नुः**, पुं, (वक्ति इति । वच् + “वचेर्गश्च ।” उणा०
३ । ३३ । इति नुः गश्चान्तादेशः ।)
वक्ता ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥
वावदूकः ।
इति संक्षिप्तसारोणादिवृत्तिः ॥ (शब्दः ।
यथा,
ऋग्वेदे । ७ । १०३ । २ ।
“गवामाहनमायुर्वत्सिनीनां
मण्डूकानां वग्नुरत्रासमेति ॥”
“मण्डूकानां वग्नुः शब्दः समेति
सङ्गच्छते ॥”
इति तद्भाष्ये सायणः ॥)

**वघ**, इ ङ गतिनिन्दारम्भजयेषु । इति कविकल्प-
द्रुमः ॥ (भ्वा०-आत्म०-सक०-जवे
अक० च-
सेट् ।) इ, वंघ्यते । ङ, वंघते । जवे एव
कैश्चित्
पठ्यते । इति दुर्गादासः ॥

**वङ्कः**, पुं, (वङ्कतीति । वङ्क + अच् ।) नदीवक्रम् ।
इत्यमरटीकायां भरतः ॥

**वङ्का**, स्त्री, (वङ्क + टाप् ।) वल्गाग्रभागः । तत्-
पर्य्यायः । पल्ययनम् २ । इति
त्रिकाण्डशेषः ॥

**वङ्किलः**, पुं, (वङ्कति इति । वङ्क + इलच् ।)
कण्टकः । इति त्रिकाण्डशेषः ॥

**वङ्क्यः**, त्रि, (वञ्च् + ण्यत् । “वञ्चेर्गतौ ।” ७ ।
३ । ६३ । इति अगत्यर्थे कुत्वञ्च ।)
वक्रम् ।

वादी मूकति रङ्कति क्षितिपतिर्वैश्वानरः
शीतति
क्रोधी शाम्यति दुर्जनः सुजनति क्षिप्रानुगः
खञ्जति ।
गर्व्वी खर्व्वति सर्व्वविच्च जडति त्वन्मन्त्रणा-
यन्त्रितः
श्रीनित्ये वगलामुखि प्रतिदिन कल्याणि तुभ्यं
नमः ॥
मन्त्रस्तावदलं विपक्षदलने स्तोत्रं पवित्रञ्च ते
यन्त्रं वादिनियन्त्रणं त्रिजगतां जैत्रञ्च चित्रं
न ते ।
मातः श्रीवगलेति नाम ललितं यस्यास्ति
जन्तोर्म्मुखे

गच्छंस्तिष्ठंस्त्रिकालं यदि पठति शिवं
प्राप्नुया-
दाशु धीरः ॥
नित्यं स्तोत्रमिदं पवित्रमिह यो देव्याः
पठत्यादरा-
द्धृत्वा यन्त्रमिदं तथैव समरे बाहौ करे
वा
गले ।
राजानो हरयो मदान्धकरिणः सर्पा
मृगेन्द्रा-
दिका-
स्ते वै यान्ति विमोहिता रिपुगणा
लक्ष्मीः
स्थिराः सिद्धयः ॥
त्वं विद्या परमा त्रिलोकजननी
विघ्नौघ-
संछेदिनी
योषाकर्षणकारिणी
जनमनःसम्मोहसन्दायिनी।
स्तम्भोत्सारणकारिणी
पशुमनःसम्मोहसन्दायिनी
जिह्वाकीलनभैरवी विजयते
ब्रह्मादिमन्त्रो यथा ॥
विद्या लक्ष्मीः सर्व्वसौभाग्यमायुः
पुत्त्रैः पौत्त्रैः सर्व्वसाम्राज्यसिद्धिः ।
मानं भोगो वश्यमारोग्यसौख्यं
प्राप्तं तत्तद्भूतलेऽस्मिन् नरेण ॥
यत् कृतं जपसन्नाहं गदितं परमेश्वरि
।
दुष्टानां निग्रहार्थाय तद्गृहाण
नमोऽस्तु ते ॥
ब्रह्मास्त्रमिति विख्यातं त्रिषु लोकेषु
विश्रुतम् ।
गुरुभक्ताय दातव्यं न देयं यस्य
कस्यचित् ॥
पीताम्बरां द्विभुजाञ्च त्रिनेत्रां
गात्रकोज्ज्वलाम् ।
शिलामुद्गरहस्ताञ्च स्मरेत्तां
वगलामुखीम् ॥
प्रातर्म्मध्याह्नकाले स्तवपठनमिदं
कार्य्यसिद्धिप्रदं

यथा, वङ्क्यं काष्ठम् । इति
मुग्धबोधव्याकर-
णम् ॥

**वङ्क्रि**, क्ली, (वङ्कते इति । वकि कौटिल्ये + “वङ्-
क्र्यादयश्च ।” उणा० ४ । ६६ । इति
क्रिन्-
प्रत्ययेन निपातितम् ।) पार्श्वास्थि ।
तत्पर्य्यायः ।
पर्शुकम् २ । इति हेमचन्द्रः । ३ ।
२९१ ॥

**वङ्क्रिः**, पुं, क्ली, (वङ्कते इति । वकि कौटिल्ये
+
“वङ्क्र्यादयश्च ।” उणा० ४ । ६६ ।
इति क्रिन्-
प्रत्ययेन निपात्यते ।) वाद्यभेदः ।
इत्युणादि-
कोषः । गृहदारु । पार्श्वास्थि । इति
सिद्धान्त-
कौमुद्यामुणादिवृत्तिः ॥

**वङ्क्षणः**, पुं, (वक्षति संहतो भवतीति । वक्ष +
ल्युः । पृषोदरादित्वात् नुम् ।)
ऊरुसन्धिः ।
इत्यमरः । २ । ६ । ७३ ॥ कुँच्की इति
भाषा ॥
(यथा, सुश्रुते शारीरस्थाने ५ अध्याये
।
“चतुर्द्दशास्थ्नां संघाताः । तेषां
त्रयोगुल्फ-
जानुवङ्क्षणेषु ॥”)

**वङ्क्षुः**, स्त्री, (वहतीति । वह + बाहुलकात् कुन् ।
नुम् च ।) गङ्गास्रोतोविशेषः । यथा, --
“तस्याः स्रोतसि सीता च बङ्क्षुर्भद्रा च
कीर्त्तिता ॥”
सा च केतुमालवर्षस्था गङ्गा । यथा ।
एवं
माल्यवच्छिखरान्निष्पतन्तीतत
उपरतवेगा

| | | |
|---|---|---|
| | स्यात् ॥”<br>इति रुद्रयामले वगलामुखीस्तोत्रं समाप्तम् ।<br>इति कृष्णानन्दकृततन्त्रसारः ॥ | केतुमालमभिवङ्क्षुः प्रतीच्यां दिशि सरित्पतिं<br>प्रविशति । इति श्रीभागवते ५ स्कन्धे १७<br>अध्यायः ॥ (यथा त्त महाभारते । १३ । १६५ । २२ ।<br>“गोदावरी च वेण्वा च कृष्णवेणा तथा द्विजा ।<br>दृषद्वती च कारेवी वङ्क्षुर्मन्दाकिनी तथा ॥”) |

**वङ्गं**, क्ली, (वङ्गतीति । वगि गतौ + अच् ।) धातु-

विशेषः । रां इति भाषा ॥ तत्पर्य्यायः । त्रपुः
२ स्वर्णजम् ३ नागजीवनम् ४ मृद्वङ्गम् ५ रङ्गम्
६ गुरुपत्रम् ७ पिच्चटम् ८ चक्रसंज्ञम् ९ तमरम्
१० नागजम् ११ कस्तीरम् १२ आलीनकम् १३
सिंहलम् १४ । इति हेमचन्द्रः । ४ । १०८ ॥
स्ववेतम् १५ नागम् १६ त्रपु १७ । इति शब्द-
रत्नावली ॥ अस्य गुणाः । तिक्तत्वम् । मधु-
रत्वम् । भेदित्वम् । पाण्डत्वम् । कृमिवात-
नाशित्वम् । लेखनत्वम् । किञ्चित्पित्तकारि-
न्वञ्च । इति राजवल्लभः ॥ (अथ वङ्गस्य नाम-
लक्षणगुणाः ।
"रक्तवङ्गं त्रपु प्रोक्तं तथा पिच्चटमित्यपि ।
खुरकं मिश्रकञ्चापि द्विविधं वङ्गमुच्यते ॥
उत्तमं खुरकं तत्र मिश्रकन्त्ववरं मतम् ।
रङ्गं लघु सरं रुक्षमुष्णं मेहकफक्रिमीन् ॥
निहन्ति पाण्डुं सश्वासं चक्षुष्य पित्तलं मनाक् ।
सिंहो यथा हस्तिगणं निहन्ति
तथैव वङ्गोऽखिलमेहवर्गम् ।
देहस्य सौख्यं प्रवलेन्द्रियत्वं
नरस्य पुष्टिं विदधाति नूनम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
अस्य शोधनमारणविधिर्य्यथा, --
"वङ्गं चूर्णोदके स्विन्नं यामार्द्धेन विशुध्यति ॥"
इति वङ्गशुद्धिः ॥

कलिङ्गौड्रान्ध्रकिष्किन्धाविदर्भशवरादयः ॥"
इति ज्योतिस्तत्त्वधृतकूर्म्मचक्रवचनम् ॥
तस्य सीमा यथा, --
"रत्नाकरं समारभ्य ब्रह्मपुत्रान्तगं शिवे ! ।
वङ्गदेशो मया प्रोक्तः सर्व्वसिद्धिप्रदर्शकः ॥"
इति शक्तिसङ्गमतन्त्रे ७ पटलः ॥

**वङ्गः**, पुं, चन्द्रवंशीयवलिराजपुत्त्रः । यथा, --

"वलिः मुतपसो जज्ञे अङ्गवङ्गकलिङ्गकाः ।
सुह्मपौण्ड्राश्च वालेया अनपानस्तथाङ्गतः ॥"
इति गारुडे १४४ अध्यायः ॥ * ॥
(स च वङ्गो दीर्घतमस औरसो वलेः क्षेत्र-
जश्च । यथा, महाभारते । १ । १०४ । ४७-५१ ।
"ततः प्रसादयामास पुनस्तमृषिसत्तमम् ।
वलिं सुदेष्णां भार्य्यां स्वां तस्मै तां प्राहिणोत्-
पुनः ॥
तां स दीर्घतमाङ्गेषु स्पृष्ट्वा देवीमथाब्रवीत् ।
भविष्यन्ति कुमारास्ते तेजसादित्यवर्च्चसः ॥
अङ्गो वङ्गः कलिङ्गश्च पुण्ड्रः सुह्मश्च ते सुताः ।
तेषां देशाः समाख्याताः स्वनामप्रथिता भुवि ॥
अङ्गस्याङ्गो भवेद्देशो वङ्गो वङ्गस्य च स्मृतः ।
कलिङ्गविषयश्चैव कलिङ्गस्य च स स्मृतः ॥
पुण्ड्रस्य पुण्ड्रा प्रख्याताः सुह्मा सुह्मस्य च स्मृताः ।
एवं वलेः पुरा वंशः प्रख्यातो वै महर्षिजः ॥")
वार्त्ताकुः । कार्पासः । इति मेदिनी । गे, २२ ॥

**वङ्गजं**, क्ली, (वङ्गात् धातुविशेषात् जायते इति ।

जन् + डः ।) सिन्दूरम् । इति रत्नमाला ॥
वङ्गदेशजाते, त्रि ॥

**वङ्गनः**, पुं, (वङ्गतीति । वगि + ल्युः ।) वार्त्ताकुः ।

इति शब्दरत्नावली ॥ वेगुन् इति भाषा ॥

देशाख्यो माधवः सिन्धुर्भैरवपुत्त्राः प्रकी-
र्त्तिताः ॥"
अस्य ध्यानम् ।
"कक्षानिवेशितकरण्डवरस्तपस्वी
भास्वत्त्रिशूलपरिमण्डितवामहस्तः।
भस्मोज्ज्वलो निविडबद्धजटाकलापो
वङ्गाल इत्यभिहितस्तरुणार्कवर्णः ॥
षाडवो देववङ्गालो गृहांशन्यासमध्यमः ।
प्रहर्षे विनियोक्तव्यः प्रोक्तोऽयं मुनिना स्वयम् ॥"
इति सङ्गीतरत्नाकरः ॥

**वङ्गाली**, स्त्री, भैरवरागस्य रागिणी । यथा, --

"भैरवी कौशिकी चैव भाषा वेलावली तथा ।
वङ्गाली चेति रागिण्यो भैरवस्यैव वल्लभाः ॥"
इति सङ्गीतदामोदरः ॥
अस्या मूर्त्तिः ।
"मनोज्ञमुक्तागुणभूषिताङ्गी
शुकं दधाना धरणीधरस्था ।
प्रांशुः कुमारी कमनीयमूर्त्ति-
र्व्वङ्गालिकेयं शुचिसाङ्गगीता ॥"
इति सङ्गीतरत्नाकरः ॥
"वङ्गाली औडवा ज्ञेया गृहांशन्यासषड्ज-
भाक् ।
ऋधहीना च विज्ञेया मूर्च्छना प्रथमा मता ।
पूर्णा वा मद्वयोपेता कल्लिनाथेन भाषिता ॥"
इति सङ्गीतदर्पणम् ॥

**वच**, औ वाचि । सन्देशे । इति कविकल्पद्रुमः ॥

(भ्वा०-पर०-सक०-अनिट् ।) औ, वक्ता ।
अयं सेम् (सेट्) इत्येके । न वचत्यप्रियं वचः ।
इति हलायुधः । इति दुर्गादासः ॥

"वङ्गं सतालमर्कस्य पिष्ट्वा दुग्धेन संपुटेत् ।
शुष्काश्वत्थभवैर्व्वल्कैः सप्तधा भस्मतां नयेत् ॥"
मतान्तरम् ।
"वङ्गं खर्परके कृत्वा चुल्ल्यां संस्थापयेत् सुधीः ।
द्रवीभूते पुनस्तस्मिन् चूर्ण्यान्येतानि दापयेत् ॥
प्रथमं रजनीचूर्णं द्बितीये च यमानिका ।
तृतीये जीरकञ्चैव ततश्चिञ्चात्वगुद्भवम् ॥
अश्वत्थवल्कलोत्थञ्च चूर्णं तत्र विनिः-क्षिपेत् ।
एवं विधानतो वङ्गं म्रियते नात्र संशयः ॥
वङ्गं तिक्ताम्लकं रुक्षं किञ्चिद्वातप्रकोपनम् ।
मेदःश्लेष्मामयघ्नञ्च क्रिमिघ्नं मेहनाशनम् ॥"
इति वङ्गमारणम् । इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणाधिकारे ॥) अन्यद्रङ्गशब्दे द्रष्ट-व्यम् ॥ * ॥ सीसकम् । देशविशेषे पुं भूम्नि ।
इति मेदिनी । गे, २२ ॥
(एकवचनान्तोऽपि ।
यथा, महाभारते । १ । १०४ । ५० ।
"अङ्गस्याङ्गो भवेद्देशो वङ्गो वङ्गस्य च स्मृतः ॥")
स तु प्राचीदेशान्तर्गतदेशविशेषः । यथा, --
"अङ्गवङ्गा मद्गुरका अन्तर्गिरिवहिर्गिराः ॥"
इत्युपक्रम्य ।
"शाल्वा मागधगोनर्द्दाः प्राच्यां जनपदाः स्मृताः ॥"
इत्यन्तं मत्स्यपुराणवचनम् ॥
मतान्तरं यथा, --
"आग्नेय्योमङ्गवङ्गोपवङ्गत्रिपुरकोषलाः ।
(गुणादयोऽस्य वार्त्ताकुशब्दे ज्ञातव्याः ॥)

**वङ्गला**, स्त्री, रागिणीविशेषः । इति हलायुधः ॥
वङ्गालीति च नामान्तरम् ॥

**वङ्गशुल्वजं**, क्ली, (वङ्गशुल्वाभ्यां रङ्गताम्राभ्यां जायते इति । जन + डः ।) कांस्यम् । इति हेमचन्द्रः । ४ । ११५ ॥

**वङ्गसेनः**, पुं, वकवृक्षः । यथा, --
"वङ्गसेनस्त्वगस्तिद्रुः शुकनाशो मुनिद्रुमः ।
अनलिः कुनली ॥" इति त्रिकाण्डशेषः ॥

**वङ्गसेनकः**, पुं, (वङ्गसेन + स्वार्थे कन् ।) वकवृक्षः ।
यथा, --
"रक्तपुष्पो मुनितरुरगस्तिर्व्वङ्गसेनकः ॥"
इति रत्नमाला ॥
अस्य पुष्पगुणाः ।
"वासकस्य च पुष्पाणि वङ्गसेनस्य चैव हि ।
कटुपाकानि तिक्तानि कासक्षयकराणि च ॥"
इति राजवल्लभः ॥

**वङ्गारिः**, पुं, (वङ्गस्य रङ्गधातोररिः । अस्य वङ्ग-धातुजारकत्वात् तथात्वम् ।) हरितालम् । इति हेमचन्द्रः ॥

**वङ्गालः**, पुं, भैरवरागस्य पुत्त्रः । यथा, --
"वङ्गालः पञ्चमः षष्ठो मधुरो हर्षकस्तथा ।

**वच**, क सन्देशे । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-सक०-सेट् ।) सन्देशो वचनविशेषः ।
क, वाचयत्यखिलां लिपिमिति हलायुधः ।
इति दुर्गादासः ॥

**वच**, ल औ वाचि । इति कविकल्पद्रुमः ॥ (अदा०-पर०-द्बिक०-सेट् ।) ल, वक्ति । औ, वक्ता ।
अस्मादन्तिविभक्तिर्न प्रयोज्या ।
इत्यालङ्का-रिकाः । इति दुर्गादासः ॥ (यथा, --
"वचेरन्त्यन्तुशन्तृङ्भिः प्रयोगो नाभिधीयते ।
जयतेर्नास्ति पञ्चम्या उत्तमः पुरुषः क्वचित् ॥"
इति बहुसम्मतम् ॥)

**वचः**, पुं, (वक्तीति । वच् + अच् ।) कीरपक्षी ।
इति मेदिनी । चे, ९ ॥

**वचः**, [स्] क्ली, (उच्यते इति । वच् + "सर्व्व-धातुभ्योऽसुन् ।" उणा० ४ । १८९ । इत्यसुन् ।)
वाक्यम् । इत्यमरः । १ । ६ । १ ॥
(यथा, रघौ । २ । ४१ ।
"इति प्रगल्भं पुरुषाधिराजो
मृगाधिराजस्य वचो निशम्य ।
प्रत्याहतास्त्रो गिरिशप्रभावा-
दात्मन्यवज्ञां शिथिलीचकार ॥")

**वचक्नुः**, पुं, (वक्तीति । वच् + "सृयुवचिभ्यो-ऽन्युजागूजक्नुचः ।" उणा० ३ । ८१ । इति अक्नुच् ।) ब्राह्मणः । इति मेदिनी । ने, १२७ ॥

**वचक्नुः** त्रि, (वक्तीति । वच् + "सृयुवचिभ्यः
इति ।" उणा० ३ । ८१ । इत्यक्नुच् ।)
वावदूकः ।
इति मेदिनी । ने, १२७ ।

**वचण्डी**, स्त्री, शारिका । वर्त्तिः । शस्त्रभेदः ।
इति शब्दरत्नावली ॥ मेदिन्यां वचण्डा इति
वरण्डा इति च पाठः ॥

**वचनं**, क्ली, (उच्यतेऽनेनेति । श्लेष्मनाशकत्वादस्य
तथात्वम् । वच् + ल्युट् ।) शुण्ठी । इति
शब्द-
चन्द्रिका ॥ वाक्यम् । तत्पर्य्यायः ।
"इरा सरस्वती ब्राह्मी भाषा वाणी च सारदा
।
गिरा गीश्च गिरां देवी गीर्देवी भारती-
श्वरी ॥
वाग्वाचा वचसामीशा वाग्देवी वर्णमातृका ।
वचनं भाषितं चोक्तिर्व्याहारो लपितं वचः ॥
वाग्देवीवचसोरेष पर्य्यायः परिकीर्त्तितः ।
यथास्थानं यथायोग्यं भेद ऊह्यो मनीषिभिः
॥"
इति शब्दरत्नावली ॥ * ॥
(यथा, हितोपदेशे ।
"असेवितेश्वरद्वारमदृष्टविरहव्यथम् ।
अनुक्तक्लीववचनं धन्यं कस्यापि जीवनम्
॥")
तत्तु त्रिविधम् । यथा, --
वशिष्ठ उवाच ।
"वचनं त्रिविधं शैल लौकिके वैदिके तथा ।
सर्व्वं जानाति शास्त्रज्ञो निर्म्मलज्ञानचक्षुषा
॥
असत्यमहितं पश्चात् सांप्रतं श्रुतिसुन्दरम् ।
सुबुद्धिशत्रुर्व्वदति नहि तेषां कदाचन ॥
आपदः प्रीतिजनकं परिणामसुखावहम् ।
दयालुर्धर्म्मशीलश्च बोधयत्येव बान्धवम् ॥
श्रुतिमात्रात् सुधातुल्यं सर्व्वकाले सुखावहम्
।
सत्यं सारं हितकरं वचसां श्रेष्ठमीप्सितम् ॥
एवं स त्रिविधं शैल नीतिसारनिरूपितम् ।

**वचनग्राही** [न्], त्रि, (वचनं गृह्णातीति ।
ग्रह + णिनिः ।) वचने स्थितः ।
इत्यमरटीकायां
रमानाथः ॥

**वचनीयः**, त्रि, (वच् + अनीयर् ।) कथनीयः ।
इति वचधातोः कर्म्मणि
अनीयप्रत्ययेन निष्पन्नः ॥
(निन्दायां, क्ली । यथा, कुमारे । ४
। २१ ।
"मदनेन विना कृता रतिः
क्षणमात्रं किल जीवितेति मे ।
वचनीयमिदं व्यवस्थितं
रमण ! त्वामनुयामि यद्यपि ॥"
"इति वचनीयं निन्दा मे मम
व्यवस्थितम् ॥"
इति तट्टीकायां मल्लिनाथः ॥)

**वचनीयता**, स्त्री, (वचनीयस्य भावः । वचनीय
+
तल् ।) लोकापवादः । यथा, --
"जनप्रवादः कौलीनं विगानं
वचनीयता ॥"
इति हेमचन्द्रः । २ । १८४ ॥
(तथा, मृच्छकटिकनाटके तृतीयाङ्के
।
"कामं नीचमिदं वदन्ति पुरुषः स्वप्ने
च
यद्वर्द्धते
विश्वस्तेषु च वञ्चनापरिभवश्चौर्य्यं न
शौर्य्यं
हि तत् ।
स्वाधीना वचनीयतापि हि वरं बद्धो
न
सेवाञ्जलि-
र्मार्गो ह्येष नरेन्द्रसौप्तिकवधे पूर्ब्बं
कृतो
द्रौणिना ॥")

**वचनेस्थितः**, त्रि, (वचने तिष्ठति स्मेति । स्था
+

तीक्ष्णा ६ जटिला ७ मङ्गल्या ८ विजया ९
उग्रा १० रक्षोघ्नी ११ । इति रत्नमाला ॥
वच्या १२ लोमशा १३ । इति जटाधरः ॥
भद्रा १४ । अस्या गुणाः । अतितीक्ष्णत्वम् ।
कटुत्वम् । उष्णत्वम् । कफामग्रन्थिशोफवात-
ज्वरातिसारसादभूतनाशित्वम् । वान्तिकारि-
त्वञ्च । इति राजनिर्घण्टः ॥ * ॥ अपि च ।
"वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्व्विका ।
क्षुद्रपत्री च मङ्गल्या जटिलोग्रा च लोमशा ॥
वचोग्रगन्धा कटुका तिक्तोष्णा वान्तिवह्निकृत्
।
विबन्धाध्मानशूलघ्नी शकृन्मूत्रविशोधिनी ॥
अपस्मारकफोन्मादभूतजन्त्वनिलान्हरेत् ॥"
अथ खुरासानी वचा ।
"पारसीकवचा शुक्ला प्रोक्ता हैमवतीति सा ।
हैमवत्युदिता तद्वत् शूलं हन्ति विशेषतः ॥"
अथ महाभरी वचा । यस्या लोके कुलीजन
इति नामान्तरम् ।
"सुगन्धाप्युग्रगन्धा च विशेषात् कफकासनुत्
।
सुस्वरत्वकरी रुच्या हृत्कण्ठमुखशोधिनी ॥"
अपरा सुगन्धा स्थूलग्रन्थिर्यस्या लोके
महाभरा
इति नाम ।
"स्थूलग्रन्थिः सुगन्धान्या ततो हीनगुणा
स्मृता ॥"
अथ चोपचीनीति लोके प्रसिद्धा । तस्या
गुणाः ।
"द्वीपान्तरवचा कट्वी तिक्तोष्णा वह्निदीप्तिकृत्
।
विवन्धाध्मानशूलघ्नी शकृन्मूत्रविशोधिनी ॥
वातव्याधीनपस्मारमुन्मादंतनुवेदनाम् ।
व्यपोहति विशेषेण फिरङ्गामयनाशिनी ॥"
इति भावप्रकाशः ॥ * ॥
अपरञ्च ।
"वचायुष्या वातकफतृष्णाघ्नी स्मृतिवर्द्धिनी
॥"
इति राजवल्लभः ॥ * ॥
अन्यच्च ।

कथ्यतां त्रिषुमध्ये किं वदामि वाक्यमीप्सि-
तम् ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ४१
अध्यायः ॥
विभक्तिः । सा तु स्यादिस्त्यादिश्च । यथा ।
“क्तेरेकैकं वचनं क्रमात् क्वद्वव्वसंज्ञं स्यात्
।” इति
मुग्धबोधव्याकरणम् ॥ तद्वैदिकपर्य्यायः ।
श्लोकः
१ धारा २ इळा ३ गौः ४ गौरी ५ गान्धर्व्वी
६ गभीरा ७ गम्भीरा ८ मन्द्रा ९ मन्द्राजनी
१० वाशी ११ वाणी १२ वाणीची १३
वाणः
१४ पविः १५ भारती १६ धमनिः १७
नाळीः
१८ मेना १९ मेळिः २० सूर्य्या २१
सरस्वती २२
निवित् २३ स्वाहा २४ वग्नुः २५ उपब्दिः
२६
मायुः २७ काकुत् २८ जिह्वा २९ घोषः ३०
स्वरः ३१ शब्दः ३२ स्वनः ३३ ऋक् ३४
होत्रा
३५ गीः ३६ गाथा ३७ गणः ३८ धेना ३९
ग्नाः
४० विपा ४१ नग्रा ४२ कशा ४३ धिषणा
४४
नौः ४५ अक्षरम् ४६ मही ४७ अदितिः ४८
शची ४९ वाक् ५० अनुष्टुप् ५१ धेनुः ५२
वल्गुः ५३ गल्दा ५४ सरः ५५ सुपर्णी ५६
वेकुरा ५७ । इति सप्तपञ्चाशत् वाङ्नामानि
।
इति वेदनिघण्टौ । १ । ११ ॥

“गत्यर्थेति ।” ३ । ४ । ७२ । इति
क्तः । “तत्पुरुषे
कृति बहुलम् ।” ६ । ३ । १४ । इति
सप्तम्या अलुक् ।)
वचने तिष्ठति यः । वचनस्थः ।
तत्पर्य्यायः ।
विधेयः २ विनयग्राही ३ आश्रवः ।
इत्यमरः ।
३ । १ । २४ ॥ वश्यः ५ प्रणेयः ६ ।
इति केचि-
दिति भरतः ॥

**वचनोपक्रमः**, पुं, (वचनस्य उपक्रमः ।) वाक्या-
रम्भः । इति भरतशब्दरत्नावल्यौ ॥
तत्पर्य्यायः ।
उपन्यासः २ वाङ्मुखम् ३ । इत्यमरः
॥

**वचरः**, पुं, (अवान्तरे चरतीति । अव + चर +
अच् । अल्लोपः ।) कुक्कुटः । शठः ।
इति मेदिनी ॥

**वचलुः**, पुं, शत्रुः । यथा, --
“पुंसि मन्तुः क्षुपण्युश्च
वचलुर्जगलुस्तथा ।
भरण्युश्च शरण्युः स्यादमित्रे
सृणिरित्यपि ॥”
इति शब्दमाला ॥

**वचसांपतिः**, पुं, (वचसां वाचां पतिः ।) बृह-
स्पतिः । यथा, --
“जीवोऽङ्गिराः
सुरगुरुर्व्वचसांपतीज्यौ ॥”
इति दीपिका ॥

**वचस्करः**, त्रि, (करोतीति । कृ + अच् । वचसः
करः ।) वचने स्थितः । इति केचित्
॥

**वचा**, स्त्री, (वाचयतीति । वच् + णिच् + अच्
।
निपातनात् ह्रस्वः । यद्वा,
अन्तर्भाविण्यर्थात्

“अद्भिर्व्वा पयसाज्येन मासमेकन्तु सेविता ।
वचा कुर्य्यान्नरं प्राज्ञं श्रुतिधारणसंयुतम् ॥
चन्द्रसूर्य्यग्रहे पीतं पलमेकं पयोऽन्वितम् ।
वचायास्तत्क्षणं कुर्य्यान्महाप्रज्ञान्वितं नरम्
॥”
इति गारुडे १९८ अध्यायः ॥

**वचोग्रहः**, पुं, (गृह्णातीति । ग्रह + अच् ।
वचसां ग्रहः ।) कर्णः । इति राजनिर्घण्टः ॥

**वज**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) वजति । इति दुर्गादासः ॥

**वज**, क संस्कृतौ । गतौ । इति कविकल्पद्रुमः ॥
(चुरा०-पर०-सक०-सेट् ।) अयं
मार्गणसंस्कारे
इति प्राञ्चः । मार्गणस्य शरस्य पक्षादिना
संस्कारो मार्गणसंस्कारः । क, वाजयति पक्षै-
र्बाणं काण्डकारः । इति रमानाथः ॥ मार्गण-
संस्कारयोरिति कश्चित् । इति दुर्गादासः ॥

**वज्रं**, पुं, क्ली, (वजतीति । वज गतौ + “ऋज्रे-
न्द्राग्रवज्रविप्रेति ।” उणा० २ । २८ । इति
रन्-
प्रत्ययेन निपातितः ।) इन्द्रस्यास्त्रविशेषः ।
वाज्
इति भाषा ॥ तत्पर्य्यायः । ह्रादिनी २
कुलिशम् ३

| | | |
|---|---|---|
| | वचः अच् ।) औषधविशेषः । वच् इति भाषा । तत्पर्य्यायः । उग्रगन्धा २ षड्ग्रन्था ३ गोलोमी ४ शतपर्व्विका ५ । इत्यमरः । २ । ४ । १०२ ॥ | |

भिदुरम् ४ पविः ५ शतकोटिः ६
स्वरुः ७
शम्वः ८ दम्भोलिः ९ अशनिः १० ।
इत्यमरः ।
१ । १ । ५० ॥ कुलीशम् ११ भिदिरम्
१२ भिदुः
१३ स्वरुस् १४ सम्बः १५ संवः १६
अशनी १७
वज्राशनिः १८ । इति तट्टीका ॥
जम्भारिः १९
त्रिदशायुधम् २० शतधारम् २१
शतारम् २२
आपोत्रम् २३ अक्षजम् २४ । इति
पुरुषो-
त्तमः ॥ गिरिकण्टकः २५ गौः २६
अभ्रोत्थम्
२७ मेघभूतिः २८ गिरिज्वरः २९ ।
इति
शब्दरत्नावली ॥ जाम्बविः ३० दम्भः
३१ । इति
जटाधरः ॥ भिद्रः ३२ अम्बुजम् ३३ ।
इति
त्रिकाण्डशेषः ॥ (यथा, ऋग्वेदे । १ ।
३२ । २ ।
"अहन्नहिं पर्व्वते शिश्रियाणं
त्वष्टास्मै वज्रं स्वर्य्यं ततक्ष ॥")
अस्योत्पत्तिर्यथा, --
"तथेत्युक्तः स रविणा भ्रमौ कृत्वा
दिवाकरम् ।
पृथक् चकार तत्तेजश्चक्रं
विष्णोरकल्पयत् ॥
त्रिशूलञ्चापि रुद्रस्य वज्रमिन्द्रस्य
चाधिकम् ।
दैत्यदानवसंहर्त्तुः सहस्रकिरणात्मकम्
॥
रूपञ्च प्रतिमञ्चक्रे त्वष्टा पादादृते महत्
।
न शशाकाथ तद्द्रष्टुं पादरूपं रवेः पुनः
॥

त्रिः पठेज्जैमिनीयोऽस्मि प्राङ्मुखो वाप्युदङ्-
मुखः ॥
तस्य माभूद्भयं घोरं विद्युतीयोऽवसीदति ॥"
इत्याह्निकतत्त्वधृतब्रह्मपुराणम्॥
"मुनेः कल्याणमित्रस्य जैमिनेश्चापि
कीर्त्तनात् ।
विद्युदग्निभयं नास्ति पठिते च गृहोदरे ॥"
लिखिते च गृहोदरे । इति वा पाठः ।
"जैमिनिश्च सुमन्तुश्च वैशम्पायन एव च ।
पुलस्त्यः पुलहश्चैव पञ्चैते वज्रवारकाः ॥"
इति पुराणम् ॥ * ॥ * ॥
रत्नविशेषः । हीरा इति भाषा । तत्पर्य्यायः ।
इन्द्रायुधम् २ हीरम् ३ भिदुरम् ४ कुलिशम् ५
पविः ६ अभेद्यम् ७ अशिरम् ८ रत्नम् ९
दृढम्
१० भार्गवकम् ११ षट्कोणम् १२ बहुधारम्
१३ शतकोटिः १४ । अस्य गुणाः । षड्रसो-
पेतत्वम् । सर्व्वरोगापहारकत्वम् ।
सर्व्वाघशम-
नत्वम् । सौख्यत्वम् । देहदाढर्य्यकरत्वम् ।
रसा-
यनत्वञ्च । तद्विशेषो यथा, --
"स्वच्छं विद्युत्प्रभं स्निग्धं सौन्दर्य्यं लघु
लेखनम् ।
षडारन्तीक्ष्णधारञ्च सुशाम्यारं श्रियं दिशेत् ॥"
तस्य कुलक्षणं यथा, --
"भस्माभं काकपादञ्च रेखाक्रान्तन्तु वर्त्तुलम् ।
आधारमलिनं बिन्दु संत्रासे स्फुटितन्तथा ।
नीलाभं चिपिटं रूक्षं तद्वज्रं दोषलं त्यजेत् ॥"
वज्रस्य चतुर्व्वर्णलक्षणं यथा, --
"श्वेतालोहितपीतमेचकतया छायाश्चतस्रः
क्रमाद्-
विप्रादित्वमिहास्य यत् सुमनसः शंसन्ति
सत्यं
ततः ।
स्फीतां कीर्त्तिमनुत्तमां श्रियमिदं दत्ते यथा
संधृतं
मर्त्यानामयथायथं तु कुलिशं पथ्यं हितं
जात्यतः ॥" * ॥

स तु श्वेतः स्मृतो विप्रो लोहितः क्षत्त्रियो
मतः ।
पीतो वैश्योऽसितः शूद्रश्चतुर्व्वर्णात्मकश्च
सः ॥
रसायने मतो विप्रः सर्व्वसिद्धिप्रदायकः ।
क्षत्त्रियो व्याधिविध्वंसी जरामृत्युहरः परः
॥
वैश्यो धनप्रदः प्रोक्तस्तथा देहस्य
दार्ढ्यकृत् ।
शूद्रो नाशयति व्याधीन् वयस्तम्भं करोति
च ।
पुंस्त्रीनपुंसकाश्चैते लक्षणीयानि लक्षणैः ॥
सुवृत्ताः फलसंपूर्णास्तेजोयुक्ता बृहत्तराः ।
पुरुषास्ते समाख्याता
रेखाबिन्दुविवर्जिताः ॥
रेखाबिन्दुसमायुक्ताः षडस्रास्ते स्त्रियः
स्मृताः ॥"
षडस्राः षट्कोणाः ।
"त्रिकोणाश्च सुदीर्घाश्च ते विज्ञेया
नपुंसकाः ॥
तेऽपि स्युः पुरुषाः श्रेष्ठा रसबन्धनकारिणः
।
स्त्रियः कुर्व्वन्ति कायस्य कान्तिं स्त्रीणां
सुख-
प्रदाः ॥
नपुंसकास्त्ववीर्य्याः स्युरकामाः
सत्त्ववर्ज्जिताः ।
स्त्रियः स्त्रीभ्यः प्रदातव्याः क्लीवं क्लीवे
प्रयो-
जयेत् ।
सर्व्वेभ्यः सर्व्वदा देयाः पुरुषा
वीर्य्यवर्द्धनाः ॥
अशुद्ध कुरुते वज्रं कुष्ठं पार्श्वव्यथां तथा ।
पाण्डुतां पङ्गुरत्वञ्च तस्मात् संशोध्य
मारयेत् ॥"
मारितस्य वज्रस्य गुणाः ।
"आयुः पुष्टिं बलं वीर्य्यं वर्णं सौख्यं करोति
च ।
सेवितं सर्व्वरोगघ्नं मृतं वज्रं न संशयः ॥"

अर्च्चास्वपि ततः पादौ न कश्चित्
कारयेत्
क्वचित् ।
यः करोति स पापिष्ठां गतिमाप्नोति
निन्दि-
ताम् ॥
कुष्ठरोगमवाप्नोति लोकेस्मिन्
दुःखसंयुतम् ।
तस्मान्न धर्म्मकामार्थी चित्रेष्वायतनेषु
च ।
न क्वचित् कारयेत् पादौ देवदेवस्य
धीमतः ॥”
इति मात्स्ये ११ अध्यायः ॥ * ॥
अपि च ।
“प्रविश्य जठरं शुद्धो दैत्यमातुः
पुरन्दरः ।
ददर्शोद्‌र्ध्वमुखं बालं कटिन्यस्तकरं
महत् ॥
तस्यैवान्तेऽथ ददृशे पेशीं मांसस्य
वासवः ।
शुद्धस्फटिकसंकाशां कराभ्यां जगृहेऽथ
ताम् ॥
ततः कोपसमाध्मातो मांसपेशीं
शतक्रतुः ।
कराभ्यामर्द्दयामास ततः सा
कठिनाभवत् ॥
ऊद्‌र्ध्वेनार्द्धञ्च ववृधे त्वधोऽर्द्धं ववृधे
तथा ।
शतपर्व्वा च कुलिशः संजातो
मांसपेशितः ॥”
इति वामने ६८ अध्यायः ॥ * ॥
वृत्रासुरवधार्थं दधीचिमुनेरस्थ्ना
इन्द्राज्ञया
विश्वकर्म्मणा निर्म्मितवज्रस्य प्रमाणं
यथा, --
“एवं कृतव्यवसितो
दध्यङ्ङाथर्व्वणस्तनुम् ।
परे भगवति ब्रह्मण्यात्मानं सन्नयन् जहौ
॥
यताक्षासु मनो बुद्धिस्तत्त्वदृक
ध्वस्तबन्धनः ।

तस्य परीक्षा यथा, --
“यत् पाषाणतले निकाशनिकरे नोद्घृष्यते
निष्ठुरे
यच्चान्योपललोहमुद्‌गरमुखैर्न्नेखान्न
यात्याहनम् ।
यच्चान्यं निजलीलयैव दलयेद्वज्रेण वा भिद्यते
तज्जातं कुलिशं वदन्ति कुशलाः श्लाध्यं
महा-
र्घञ्च तत् ॥” * ॥
तस्य वर्णगुणौ यथा, --
“विप्रः सोऽपि रसायनेषु
बलवानष्टाङ्गसिद्धिप्रदो
राजन्यस्तु नृणां बलीपलितजिन्मृत्युं जयेद-
ञ्जसा ।
द्रव्याकर्षणसिद्धिदस्तु सुतरां वैश्योऽथ शूद्रो
भवेत्
सर्व्वव्याधिहरस्तदेष कथितो वज्रस्य वर्णो
गुणः ॥”
इति राजनिर्घण्टः ॥ * ॥
अपि च ।
अथ वज्रस्य नामलक्षणगुणाः ।
“हीरकः पुंसि वज्रोऽस्त्री चन्द्रो मणिवरश्च सः
।

इति भावप्रकाशः ॥
(अथ वज्रमारणम् ।
“त्रिवर्षारूढकार्पासमूलमादायपेषयेत् ।
त्रिवर्षनागवल्ल्यास्तु निजद्रावैः प्रपेषयेत्
॥
तद्‌गोलके क्षिपेद्वज्रं रुद्‌ध्वा गजपुटे पचेत्
।
एवं सप्तपुटेनैव म्रियते कुलिशं ध्रुवम् ॥”
मतान्तरम् ।
“कांस्यपात्रे तु भेकस्य मूत्रे वज्रन्तु
निःक्षिपेत् ।
त्रिःसप्तकृत्वः सन्तप्तं वज्रमेवं मृतं भवेत्
॥”
अथान्यः ।
“त्रिःसप्तकृत्वः सन्तप्तं खरमूत्रेण सेचयेत् ।
मुद्‌गरैस्तालकं पिष्ट्वा तद्‌गोले कुलिशं
क्षिपेत् ॥
प्रध्मातं वाजिमूत्रेण सिक्तं पूर्ब्बक्रमेण तु ।
भस्मी भवति तद्वज्रं वज्रवत् कुरुते तनुम्
॥
आयुष्यं सौख्यजननं बलरूपप्रदन्तथा ।
रोगघ्नं मृत्युहरणं वज्रभस्म भवत्यलम् ॥”
इति वज्रमारणम् । इति
वेद्यकरसेन्द्रसारसंपहे
जारणमारणाधिकारे ॥ * ॥) अन्यच्च ।
अथ
वज्रगणना । विष्णुधर्म्मोत्तरे ।
“वज्रं मरकतञ्चैव पद्मरागञ्च मौक्तिकम् ।
इन्द्रनीलं महानीलं वैदूर्य्यं गन्धसंज्ञकम् ॥
चन्द्रकान्तं सूर्य्यकान्तं स्फाटिकं बलकं
तथा ।
कर्केतरं पुष्परागं तथा ज्योतीरसं द्विज ॥
स्फाटिकं राजवर्त्तञ्च तथा राजमतं शुभम्
।
सौगन्धिकं तथा गञ्जं शङ्खब्रह्ममयं तथा ॥
गोमेदं रुधिराख्यञ्च तथा भल्लातकं द्विज ।
धूलीमरकतञ्चैव तुत्थकं सीसमेव च ॥

| | | |
|---|---|---|
| आस्थितः परमं योगं न देहं बुबुधे गतम् ॥<br>अथेन्द्रो वज्रमुद्यम्य निर्म्मितं विश्वकर्म्मणा ।<br>मुनेः सकथिभिरुत्सिक्तो भगवत्तेजसान्वितः ॥<br>वृतो देवगणैः सर्व्वैर्गजेन्द्रो पर्य्यशोभत ।<br>स्तयमानो मुनिगणैस्त्रैलोक्यं हर्षयन्निव ॥"<br>इति श्रीभागवते ६ स्कन्धे १० अध्यायः ॥ * ॥<br>तन्निर्घोषवारकविधिर्य्यथा, --<br>"पचण्डपवनाघाते मेधेषु स्तनितेषु यः । | | |

पीलुं प्रवालकञ्चैव गिरिवज्रञ्च भार्गव ।
भुजङ्गमामणिश्चैव तथा वज्रमणिः शुभः ॥
तित्तितञ्च तथा पीत्तं भ्रामरञ्च तथीत्पलम् ।
वज्राण्येतानि सर्व्वाणि धार्य्याण्येव महीभृता ॥
सुवर्णप्रतिबद्धानि जयारोग्यसमृद्धये ॥”
इति युक्तिकल्पतरुः ॥
तस्योत्पत्तिपरीक्षामूल्यादियथा, --
“वच्मि परीक्षां रत्नानां बलो नामासुरोऽभ-
वत् ।
इन्द्राद्या निर्ज्जितास्तेन निर्ज्जेतुं तैर्न शक्यते ॥”
इत्यपक्रम्य ।
“महाप्रभावं विबुधैर्यस्माद्वज्रमुदाहृतम् ।
वज्रपूर्ब्बा परीक्षेयं ततोऽस्माभिः प्रकीर्त्त्यते ॥
तस्यास्थिलेशो निपपात येषु
भुवः प्रदेशेषु कथञ्चिदेव ।
वज्राणि वज्रायुधनिर्ज्जिगीषो-
र्भवन्ति नानाकृतिमन्ति तेषु ॥
हैममातङ्गसौराष्ट्राः पौण्ड्रकालिङ्गकोषलाः ।
वेण्वातटाः ससौवीरा वज्रस्याष्टाविहाकराः ॥
आताम्रा हिमशैलजाश्च शशिभा वेण्वा-
तटीयाः स्मृताः
सौवीरे तुषिताब्जमेघसदृशास्ताम्राश्च सौरा-
ष्ट्रजाः ।
कालिङ्गाः कनकावदातरुचिराः पीतप्रभाः
कोषले
श्यामाः पुण्ड्रभवा मतङ्गविषये नात्यन्तपीत-
प्रभाः ॥
अत्यर्थं लघु वर्णतश्च गुणवत् पार्श्वेषु सम्यक्
समं
रेखाबिन्दुकलङ्ककाकपदकत्रासादिभिर्व्वर्जितम् ।
लोकेऽस्मिन् परमाणुमात्रमपि यत् वज्रं क्वचिद्
दृश्यते
तस्मिन् देवसमाश्रयो ह्यवितथस्तीक्ष्णाग्रधारं
यदि ॥
वज्रेषु वर्णयुक्त्या देवानामपि परिग्रहः प्रोक्तः ।
वर्णेभ्यश्च विभागः कार्य्यो वर्णाश्रयादेव ॥
हरितसितपीतपिङ्गश्यामाताम्राःस्वभावतो
रुचिराः ।
हरिवरुणशक्रहुत्वहपितृपतिमरुतां स्वका
न च मार्गविभागमात्रवृत्त्या
विदुषा वज्रपरिग्रहो विधेयः ।
गुणवद्गुणसम्पदां विभूति-
र्व्विपरीतो व्यसनोदयस्य हेतुः ॥
एकमपि यस्य शृङ्गं
विदलितमवलोक्यते विशीर्णं वा ।
गुणवदपि तन्न धार्य्यं
वज्रं श्रेयोऽर्थिभिर्भवने ॥
स्फुटिताग्रिविशीर्णशृङ्गदेशं
मलवर्णैः पृषतैरुपेतमध्यम् ।
नहि वज्रभृतोऽति वज्रमाशु
श्रियमन्याश्रयलालसां न कुर्य्यात् ॥
यस्यैकदेशः क्षतजावभासो
यद्वा भवेल्लोहितवर्णचित्रम् ।
न तन्न कुर्य्याद्ध्रियमाणमाशु
स्वच्छन्दमृत्योरपि जीवितान्तम् ॥
कोट्यः पार्श्वानि धाराश्च षडष्टौ
द्वादशेति च ।
उत्तुङ्गसमतीक्ष्णाग्रा वज्रस्याकरजा गुणाः
॥
षट्कोटिशुद्धममलं स्फुटतीक्ष्णधारं
वर्णान्वितं लघु सुपार्श्वमपेतदोषम् ।
इन्द्रायुधांशुविसृतिच्छुरितान्तरीक्ष-
मेवंविधं भुवि भवेत् सुलभं न वज्रम् ॥
तीक्ष्णाग्रं विमलमपेतसर्व्वदोषं
धत्ते यः प्रयततनुः सदैव वज्रम् ।
वृद्धिस्तं प्रतिदिनमेति यावदायुः
श्रीसम्पत्सुतधनधान्यगोपशूनाम्॥
व्यालवह्निविषव्याघ्रतस्कराम्बुभयानिच
।
दूरात्तस्य निवर्त्तन्ते कर्म्माण्याथर्व्वणानि
च ॥
यदि वज्रमपेतसर्व्वदोषं
विभृयात्तण्डुलविंशतिं गुरुत्वे ।
मणिशास्त्रविदो वदन्ति तस्य
द्विगुणं रूपकलक्षणमग्र्यं मूल्यम् ॥
त्रिभागहीनार्द्धतदर्द्धशेषं
त्रयोदशं त्रिंशदतोऽर्द्धभागाः ।
अशीतिभागोऽथ शतांशभागः
अलमाभरणेन तस्य राज्ञो
गुणहीनोऽपि मणिर्न भूषणाय ॥
नार्य्या वज्रमधार्य्यं गुणवदपि
सुतप्रसूति-
मिच्छन्त्या ।
अन्यत्र
दीर्घचिपिटह्रस्वाद्गुणैर्विमुक्ताच्च ॥
अयसा पुष्परागेण तथा गोमेदकेन च
।
वैदूर्य्यस्फटिकाभ्याञ्च काचैश्चापि
पृथग्विधैः ॥
प्रतिरूपाणि कुर्व्वन्ति वज्रस्य कुशला
जनाः ।
परीक्षा तेषु कर्त्तव्या विद्वद्भिः
स्वपरीक्षकैः ॥
क्षारोल्लेखनशालाभिस्तेषां कार्य्यं
परीक्षणम् ।
पृथिव्यां यानि रत्नानि ये चान्ये
लोहधातवः ॥
सर्व्वाणि विलिखेद्वज्रं तच्च तैर्न
विलिख्यते ॥
गुरुता सर्व्वरत्नानां
गौरवाधारकारणम् ।
वज्र तान्वैपरीत्येन सूरयः परिचक्षते
॥
जातिरजातिं विलिखन्ति
वज्रकुरुविन्दाः ।
वज्रैर्वज्रं विलिखति नान्येन लिख्यते
वज्रम् ।
वज्राणि मुक्ता मणयो ये च केचन
जातयः ।
न तेषां प्रतिबद्धानां भा
भवत्यूद्र्ध्वगामिनी ॥
तिर्य्यक्षतत्वात् केषाञ्चित्
कथञ्चिद्यदि
दृश्यते ।
तिर्य्यगालिख्यमानानां सा पार्श्वेष्वपि
हन्यते ॥
यद्यपि विशीर्णकोटिः

वर्णाः ॥
विप्रस्य शङ्खकुमुदस्फटिकावदातः
स्यात् क्षत्त्रियस्य शशवभ्रुविलोचनाभः ।
वैश्यस्य कान्तकदलीदलसन्निकाशः
शूद्रस्य धौतकरवालसमानदीप्तिः ॥
द्वौ वज्रवर्णौ पृथिवीपतीनां
सद्भिः प्रतिष्ठौ न तु सार्व्वजन्यौ ।
यः स्याज्जवाविद्रुमभङ्गशोणो
यो वा हरिद्रारससन्निकाशः ॥
ईशत्वात् सर्व्ववर्णानां गुणवत् सार्व्ववर्णिकम् ।
कामतो धारयेद्राजा न त्वन्योऽन्यत् कथञ्चन ॥
अघरोत्तरवृत्त्या हि यादृक् स्याद्वर्णसङ्करः ।
ततः कष्टतरो वडी वर्णानां सङ्करो मतः ॥

सहस्रभागोऽल्पसमानयोगः ॥
यत्तण्डुलैर्द्वादशभिः कृतस्य
वज्रस्य मूल्यं प्रथमं प्रदिष्टम् ।
द्वाभ्यां क्रमाद्धानिमुपागतस्य
त्वेकावसानस्य विनिश्चयोऽयम् ॥
न चापि तण्डुलैरेव वज्राणां धारणक्रमः ।
अष्टाभिः सर्षपैर्गौरैस्तण्डुलं परिकल्पयेत्
॥
यत्तु सर्व्वगुणैर्युक्तं वज्रं तरति वारिणि ।
रत्नवर्गे समस्तेऽपि तस्य धारणमिष्यते
॥
अनेनापि हि दोषेण लक्ष्यालक्ष्येण
दूषितम् ।
स्वमूल्यात् दशमं भागं वज्रं लभति
मानवः ॥
प्रकटानेकदोषस्य स्वल्पस्य महतोऽपि
वा ।
स्वमूल्याच्छतशो भागो वज्रस्य न
विधीयते ॥
स्पृष्टदोषमलङ्कारे वज्रं यद्यपि दृश्यते ।
रत्नानां परिकर्म्मार्थं मूल्यं तस्य भवेल्लघु
॥
प्रथमं गुणसम्पदाभ्युपेतं
प्रतिबद्धं समुपैति यच्च दोषम् ।

सबिन्दुरेखान्वितो विवर्णो वा ।
तदपि धनधान्यपुत्त्रान्
करोति सेन्द्रायुधो वज्रः ।
सौदामिनीविस्फुरिताभिरामं
राजा यथोक्तं कुलिशं दधानः ।
पराक्रमाक्रान्तपरप्रतापः
समस्तसामन्तभुवं भुनक्ति ॥”
इति गारुडे ६८ अध्यायः ॥
वज्रार्थे वैदिकपर्य्यायो यथा । दिद्युत्
१ नेमिः २
हेतिः ३ नमः ४ पविः ५ सृकः ६
वृकः ७ वधः ८
वज्रः ९ अर्कः १० कुत्सः ११
कुलिशः १२ तुजः
१३ तिग्मम् १४ मेनिः १५ स्वधितिः
१६ सायकः
१७ परशुः १८ । इत्यष्टादश
वज्रनामानि । इति
वेदनिघण्टौ । २ । २० ॥

**वज्रं**, क्ली, (वज गतौ + ऋज्रेन्द्रेति रन् ।)
बालकः । धात्री । इति मेदिनी । रे, ६
॥
काञ्जिकम् । इति धरणिः ॥ वज्रपुष्पम्
। इति
शब्दरत्नावली ॥ लौहविशेषः । स च
बहुविधो
यथा । नीलपिण्डम् १ अरुणाभम् २
मोरकम् ३
नागकेशरम् ४ तिन्तिराङ्गम् ५
स्वर्णवज्रम् ६
शैवालवज्रम् ७ शोणवज्रम् ८ रोहिणी
९
काङ्कोलम् १० ग्रन्थिवज्रकम् ११
मदनाख्यम् १२
इत्यादि । तेषां नामानुरूपं चिह्नम् ।
इति
पुराणम् ॥ अभ्रविशेषः ।
तस्योत्पत्त्यादि
यथा, --
“पुरा वधाय वृत्रस्य वज्रिणा
वज्रमुद्धृतम् ।

| | | |
|---|---|---|
| | | विस्फूलिङ्गास्ततस्तस्य गगने<br>परिसर्पिताः ॥<br>ते निपेतुर्घनध्वानाच्छिखरेषु<br>महीभृताम् ।<br>त्रेभ्य एव समुत्पन्नं तत्तद्गिरिषु<br>चाभ्रकम् ॥<br>तद्वज्रं वज्रजातत्वादभ्रमभ्ररवोद्भवात्। |

गगनात् स्खलितं यस्मात् गगनञ्च ततो मतम् ॥
पिनाकं दर्दुरं नागं वज्रञ्चेति चतुर्विधम् ।
वज्रन्तु वज्रवत् तिष्ठेत् तन्नाग्नौ विकृतिं व्रजेत् ॥
सर्व्वाभ्रेषु वरं वज्रं व्याधिवार्द्धक्यमृत्युहृत् ॥”
इति भावप्रकाशः ॥

**वज्रः**, पुं, (वज् + रन् ।) कोकिलाक्षवृक्षः ।

श्वेतकुशः । इति राजनिर्घण्टः ॥ सेहुण्ड-
वृक्षः । इति भावप्रकाशः ॥ श्रीकृष्णप्रपौत्रः ।
यथा, --
“अनिरुद्धात् सुभद्रायां वज्रो नाम नृपोऽभवत् ।
प्रतिबाहुर्वज्रसुतश्चारुस्तस्य सुतोऽभवत् ॥”
इति गारुडे १४४ अध्यायः ॥
अपि च ।
“प्रद्युम्न आसीत् प्रथमः पितृवद्रुक्मिणीसुतः ।
स रुक्मिणो दुहितरमुपयेमे महारथः ॥
तस्यां ततोऽनिरुद्धोऽभून्नागायुतबलान्वितः ।
स चापि रुक्मिणः पौत्त्रीं दौहित्रो जगृहे ततः ॥
वज्रस्तस्यामभूद्यस्तु मौषलादवशेषितः ।
प्रतिबाहुरभूत्तस्मात् सुबाहुस्तस्य चात्मजः ॥”
इति श्रीभागवते १० स्कन्धे ९० अध्यायः ॥ * ॥
(विश्वामित्रपुत्त्रभेदः । यथा, महाभारते । १३ ।
४ । ५१; ५९ ।
“वल्गुजङ्घश्च भगवान् गालवश्च महानृषिः ।
रुचिर्वज्रस्तथाख्यातः सालङ्कायन एव च ॥”
“विश्वामित्रात्मजाः सर्व्वे मुनयो ब्रह्मवादिनः ॥”)
विष्कम्भादिसप्तविंशतियोगान्तर्गतपञ्चदशयोगः ।
तस्याद्यनवदण्डा वर्ज्जनीया यथा, --
“त्यजादौ पञ्च विष्कम्भे सप्त शूले च नाडिकाः ।
गण्ड व्याघातयोः षट् च नव हर्षणवज्रयोः ॥
वैधृतिव्यतिपातौ च सभस्तौ परिवर्ज्जयेत् ।
शेषा यथार्थनामानो योगाः कार्य्येषु शोभनाः ॥”
इति ज्योतिस्तत्त्वम् ॥
अत्र जातफलं यथा, --
“गुणी गुणज्ञो बलवान् महौजाः
सद्रत्नवस्त्रादिपरीक्षकः स्यात् ।
वज्राभिधाने यदि चेत् प्रसूतो
वज्रोपमः स्याद्रिपुकामिनीनाम् ॥”
इवि कोष्ठीप्रदीपः ॥

**वज्रकण्टकः**, पुं, (वज्रस्य कण्टकमिव तद्वार-

कत्वात् ।) स्नुहीवृक्षः । इति जटाधरः ॥
कोकि-
लाक्षवृक्षः । इति राजनिर्घण्टः ॥

**वज्रकन्दः**, पुं, (वज्राकारः कन्दोऽस्य ।) वज्रकर्णः ।

इति रत्नमाला ॥ सकरकन्द आलु इति
भाषा ॥

**वज्रकपाली**, [न्] पुं, (वज्रकपालोऽस्यास्तीति ।

इनिः ।) बुद्धविशेषः । तत्पर्य्यायः ।
हेरम्बः २
हेरुकः ३ चक्रसम्बरः ४ देवः ५
निशुम्भीशः ६
शशिशेखरः ७ वज्रटीकः ८ । इति
हेमचन्द्रः ॥

**वज्रकालिका**, स्त्री, (वज्रोपलक्षिता कालिका ।)

मायादेवी । इति हेमचन्द्रः ॥

**वज्रकेतुः**, पुं, (वज्रं केतुश्चिह्नमस्य ।) नरकराजः ।

यथा, --
“गते वशिष्ठे नरकः शीघ्रं विस्मयसंयुतः
॥”
इत्युपक्रम्य ॥
“इति यासीन्मतिस्तस्य वज्रकेतोस्तदा
चला ।
दूतञ्च प्राहिणोत् यस्तं वाणस्य नगरं प्रति
॥”
इति कालिकापुराणे ३८ अध्यायः ॥

**वज्रक्षारं**, क्ली, (वज्रसंज्ञकं क्षारमिति ।) क्षार-

विशेषः । तत्पर्य्यायः । वज्रकम् २ क्षार-
श्रेष्ठम् ३ विदारकम् ४ सारः ५ चन्दनारः
६
धूमोत्थम् ७ धूमजाङ्गकम् ८ । अस्य
गुणाः ।
अत्युष्णत्वम् । तीक्ष्णत्वम् । क्षारत्वम् ।
रेचन-
त्वम् ।
गुल्मोदरार्त्तिविष्टम्भश्रमप्रशमनत्वम् ।

**वज्रतुण्डः**, पुं, (वज्रं वज्रतुल्यं कठिनन्तुण्डं यस्य ।)

गरुडः । गणेशः । इति
त्रिकाण्डशेषः ॥ गृध्रः ।
मशकः । इति राजनिर्घण्टः ॥
(वज्रतुण्डधरे,
त्रि । यथा, भागवते । ५ । २६ ।
३५ ।
“यस्त्विह वा अतिथीनभ्यागतान्
वा गृहपति-
रसकृदुपगतमन्युर्दिधक्षुरिव पापेन
चक्षुषा
निरीक्षते तस्य चापि निरये
पापदृष्टेरक्षिणी
वज्रतुण्डा गृध्रकङ्क काकवटादयः
प्रसहोरुबला-
दुत्पाटयन्ति ॥”)

**वज्रदन्तः**, पुं, (वज्रमिव कठिना दन्ता यस्य ।)

शूकरः । मूषिकः । इति शब्दमाला
॥

**वज्रदशनः**, पुं, (वज्रमिव कठिनं दशनमस्य ।)

मूषिकः । इति हेमचन्द्रः । ४ ।
३६६ ॥

**वज्रद्रुः**, पुं, (वज्रवारको द्रुः ।) स्नुहीवृक्षः । इत्य-

मरः ॥

**वज्रद्रुमः**, पुं, (वज्रवारको द्रुमः ।) स्नुहीवृक्षः ।

इति शब्दरत्नावली ॥ (तथास्य
पर्य्यायः ।
“सेहुण्डः सिंहतुण्डः स्याद्वज्री
वज्रद्रुमोऽपि च ।
सुधासमन्तदुग्धा च स्नुक्स्त्रियां
स्यात् स्नुही-
गुडा ॥”

**वज्रकं**, क्ली, (वज्र + संज्ञायां कन् ।) वज्रक्षारम् ।

इति राजनिर्घण्टः ॥ (यथा, सुश्रुते चिकित्सित-
स्थाने ९ अध्याये । तैलं वज्रकमभ्यङ्गार्थे ॥)
सर्व्वतोभद्रचक्रान्तर्गतसूर्य्यभोग्यनक्षत्रात् त्रयो-
विंशनक्षत्रात्मक उपग्रहः । यथा, --
"सूर्य्यभात् पञ्चमं धिष्ट्यं ज्ञेयं विद्युन्मुखा-
भिधम् ।
शून्यञ्चाष्टमगं प्रोक्तं सन्निपातं चतुर्द्दशम् ॥
केतुमष्टादशं प्रोक्तमुल्का स्यादेकविंशतिः ।
द्वाविंशतितमं कम्पं त्रयोविंशञ्च वज्रकम् ।
निर्घातञ्च चतुर्व्विंशमुक्ता अष्टावुपग्रहाः ॥"
इति ज्योतिस्तत्त्वम् ॥

**वज्रकङ्कटः**, पुं, (वज्रः कङ्कटो देहावरणमस्य ।)

हनूमान् । इति हेमचन्द्रः । ३ । ३७० ॥

सरत्वञ्च । इति राजनिर्घण्टः ॥
(भक्षणीयौषध-
विशेषः । तद्यथा, --
"सामुद्रं सैन्धवं काचं यवक्षारं सुवर्च्चलम्
।
टङ्गणं सर्ज्जिका क्षारं तुल्यं सर्व्वं
विचूर्णयेत् ॥
अर्कक्षीरैः स्नुहीक्षीरैरातपे भावयेत् त्र्यहम्
।
तेन लिप्त्वार्कपत्रञ्च रुद्ध्वा चान्तः पुटे
पचेत् ॥
तत् क्षारं चूर्णयेत् पश्चात्
त्र्यूषणस्त्रिफलारजः ।
जीरकं रजनी वह्नि नवभागं समं समम् ॥
क्षारार्द्धमेवं सर्व्वञ्च एकीकृत्य प्रयोजयेत् ।
वज्रक्षारमिदं सिद्धं स्वयं प्रोक्तं पिनाकिना
॥
सर्व्वोदरेषु गुल्मेषु शूलदोषेषु योजयेत् ।
अग्निमान्द्येऽप्यजीर्णेऽपि भक्ष्यं निष्कद्वयं
द्वयम् ॥
वाताधिके जलं कोष्णं घृतं वा पैत्तिके
हितम् ।
कफे गोमूत्रसंयुक्तमारनालं त्रिदोषजे ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे प्लीहाधिकारे
॥ * ॥)

**वज्रचर्म्मा**, [न्] पुं, (वज्रवत् दुर्भेद्यं चर्म्म यस्य ।)

खड्गी । गण्डकम् । इति राजनिर्घण्टः ॥

**वज्रजित्**, पुं, (वज्रं जयति तस्याघातसहनेनेति ।

जि + क्विप् । "ह्रस्वस्य पिति कृति तुक्
।" ६ ।
१ । ७१ । इति तुगागमश्च ।) गरुडः ।
इति
हेमचन्द्रः । २ । १४५ ॥

**वज्रज्वाला**, स्त्री, (वज्रस्य ज्वाला ।) वज्राग्निः ।

इति हलायुधः ॥ (यथा, मात्स्ये । १२१
। १४ ।
"वज्रज्वालान्तरमयः
शाल्मलश्चान्तरालकृत् ॥")

**वज्रटीकः**, पुं, (वज्रेण वज्रकपालेन टीकते प्रका-

इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ॥)

**वज्रधरः** पुं, (धरतीति । धृ + अच् । वज्रस्य

धरः ।) इन्द्रः । इति हलायुधः ॥
(यथा, महा-
भारते । ३ । ११३ । २३ ।
"अरुन्धती वा सुभगा वशिष्ठं
लोपामुद्रा वापि यथा ह्यगस्त्यम् ।
नलस्य वा दमयन्ती यथाभूद्
यथा शची वज्रधरस्य चैव ॥")
जिनविशेषः । इति त्रिकाण्डशेषः ॥
(वल्ला-
पुराधिपतिराजविशेषः । यथा,
राजतरङ्गि-
ण्याम् । ८ । ५४० ।
"उपरागे नवे सज्जे
पार्व्वतीयास्त्रयो नृपाः ।
चाम्पेयो जासटो वज्रधरो
वल्लापुराधिपः ॥")

**वज्रनिर्घोषः**, पुं, (वज्रस्य निर्घोषः ।) वज्रजनित-

शब्दः । इति हलायुधः ॥

**वज्रनिष्पेषः**, पुं, (वज्राणां निष्पेषः संघर्षध्वनिः ।)

वज्रनिर्घोषः । तत्पर्य्यायः ।
स्फुर्जथुः २ । इत्य-
मरः । १ । ३ । १० ॥ "द्वे
वज्रजनितशब्दे ।
अन्योन्यसंघट्टनात् भग्नं
साग्निमेघखण्डं वज्रमिव
वज्रं तस्य साटोपध्वनौ द्वयमिति
केचित् ॥
द्वो स्फुज्र्जी वज्रनिष्पेषे । निष्पेषः
संघट्टध्वनिः ।
अशन्याघात इत्येके ।
निष्पेषश्चूर्णनं साटोप-
ध्वनिश्च इह तु ध्वनिरभिप्रेतः ।
श्रुत्वा विस्फु-
र्जथुप्रख्यं निनादं परिदेविनीति
भट्टिः । द्वितो-

| | | |
|---|---|---|
| | शते इति । टीक + कः ।) वज्रकपाली नामक-<br>बुद्धः । इति त्रिकाण्डशेषः ॥ | ऽथुरिति अथुः निपातनान् दीर्घः । स्फुर्जे-<br>रथुरिति दीर्घार्थं परसूत्रम् । केचित्तु दीर्घं<br>नेच्छन्ति । केचिद्विभाषया दीर्घमिच्छन्ति ।<br>वज्रस्य निष्पेषो वज्रनिष्पेषः धौ पिष ऌ चूर्णने<br>घञ् । निष्पेषो द्विमूर्द्धन्यः ।" इति भरतः ॥<br>**वज्रपाणिः**, पुं, (वज्रं पाणौ यस्य ।) इन्द्रः । इति<br>त्रिकाण्डशेषः ॥ (यथा, महाभारते । ६ । १९ । ७ ।<br>"एष व्यूहामि ते व्यूहं राजसत्तम दुर्ज्जयम् । |

अचलं नाम वज्राख्यं विहितं वज्रपाणिना ॥”
ब्राह्मणः । यथा, महाभारते । १ । १७१ । ५१ ।
“वज्रपाणिर्ब्राह्मणः स्यात् क्षत्त्रं वज्ररथं स्मृतम् ।
वैश्या वै दानवज्राश्च कर्म्मवज्रा यवीयसः ॥”)

**वज्रपुष्पं**, क्ली, (वज्रमिव पुष्पम् ।) तिलपुष्पम् । इत्यमरः । २ । ४ । ७६ ॥

**वज्रपुष्पा**, स्त्री, (वज्रमिव पुष्पं यस्याः ।) शतपुष्पा । इति राजनिर्घण्टः ॥

**वज्रबीजकः**, पुं, (वज्रमिव कठिनं बीजमस्य । कप् ।) लताकरञ्जः । इति राजनिर्घण्टः ॥

**वज्रमूली**, स्त्री, (वज्रमिव कठिनं मूलं यस्याः । ङीष् ।) माषपर्णी । इति राजनिर्घण्टः ॥ (विवरणमस्या मासपर्णीशब्दे ज्ञातव्यम् ॥)

**वज्ररथः**, पुं, (वज्रमिव रथो यस्य ।) क्षत्त्रियः । इति पुराणम् ॥ (यथा, महाभारते । १ । १७१ । ५१ ।
“वज्रपानिर्ब्राह्मणः स्यात् क्षत्त्रं वज्ररथं स्मृतम् ॥”)

**वज्ररदः**, पुं, (वज्रमिव रदोऽस्य ।) शूकरः । इति त्रिकाण्डशेषः ॥ वज्रतुल्यदन्तश्च ॥

**वज्रवल्ली**, स्त्री, (वज्रमिव कठिना वल्ली ।) अस्थि-संहारलता । इति हारावली ॥

**वज्रवाराही**, स्त्री, मायादेवी । तत्पर्य्यायः । मारीची २ त्रिमुखा ३ वज्रकालिका ४ विकटा ५
गौरी ६ पोत्रिरथा ७ । इति त्रिकाण्डशेषः ॥

**वज्राशनिः**, पुं, वज्रम् । इति त्रिकाण्डशेषः ॥

**वज्रास्थिशृङ्खला**, स्त्री, कोकिलाक्षवृक्षः । इति राजनिर्घण्टः ॥

**वज्री**, [न्] पुं, (वज्रोऽस्त्यस्येति । वज्र + “अत इनिठनौ ।” ५ । २ । ११५ । इति इनिः ।) इन्द्रः । इत्यमरः । १ । १ । ४५ ॥ (यथा, रघुः । ९ । २४ ।
“यमकुबेरजनेश्वरवज्रिणां
समधुरं मधुरञ्चितविक्रमम् ॥”)
बुद्धः । इति मेदिनी । ने, १२६ ॥ (वज्र-विशिष्टे, त्रि । यथा, महाभारते । १३ । १४ । ३८१ ।
“पिनाकिनं वज्रिणं तीक्ष्णदंष्ट्रं
शुभाङ्गदं व्यालयज्ञोपवीतम् ॥)

**वज्री**, स्त्री, (वज् + रक् । गौरादित्वात् ङीष् ।) स्नुहीभेदः । इति मेदिनी । रे, ८१ ॥ (तथास्याः पर्य्यायः ।
“सेहुण्डः सिंहतुण्डः स्याद्वज्री वज्रद्रुमोऽपि च ।
सुधासमन्तदुग्धा च स्नुक् स्त्रियां स्यात् स्नुही-गुडा ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**वञ्चकः**, पुं, (वञ्चयते प्रतारयतीति । वञ्च + णिच् + ण्वुल् ।) शृगालः । इत्यमरः ॥ गृह-वभ्रुः । इति मेदिनी । के, १५४ ॥

**वञ्चकः**, त्रि, (वञ्चयते इति । वञ्च + णिच् + ण्वुल् ।) खलः । धूर्त्तः । इति मेदिनी । के, १५४ ॥ (यथा, कलाविलासे । १ । ३९ ।
“शृणु पुत्त्र वञ्चकानां सकलकलाहृदयसार-मतिकुटिलम् ।
ज्ञाते भवन्ति यस्मिन् क्षणरुचिचपलाः श्रियो-

**वञ्चुकः**, त्रि, (वञ्चति प्रतारयतीति । वञ्च + उकञ् ।) प्रतारणशीलः । तत्पर्य्यायः । धूर्त्तः २
वञ्चूकः ३ । इति शब्दरत्नावली ॥

**वञ्च्यं**, त्रि, (वन्च् + ण्यत् । “वञ्चेर्गतौ ।” ७ । ३ । ६३ । इति कुत्वं न ।) गमनीयम् । इति गत्यर्थ-
वन्चधातोः कर्म्मणि घ्यण्प्रत्ययेन निष्पन्नम् ।
इति मुग्धबोधव्याकरणम् ॥

**वञ्जुलः**, पुं, (वजतीति । वज गतौ + बाहुलकात् । उलच् नुम्च ।) तिनिशवृक्षः । (तथास्य पर्य्यायः ।
“तिनिशः स्यन्दनो नेमी
रथद्रुर्व्वञ्जुलस्तथा ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
अशोकवृक्षः । इत्यमरः । २ । ४ । २७ ॥
स्थलपद्मवृक्षः । इति शब्दरत्नावली ॥ पक्षि-
विशेषः । इति हलायुधः ॥ वेतसवृक्षः । इति
मेदिनी । ले, १२९ ॥ (अस्य पर्य्यायो यथा, --
“वेतसो नम्रकः प्रोक्तो वानीरो वञ्जुलस्तथा ।
अभ्रपुष्पश्च विदुलो ह्यथ शीतश्च कीर्त्तितः ॥”
इति भावप्रकाशः ॥
यथा च रामायणे । ६ । ४ । ७९ ।
“चिरविल्वा मधूकाश्च वञ्जुला
वकुलास्तथा ॥”)

**वञ्जुलद्रुमः**, पुं, (वञ्जुलो द्रुमः ।) अशोकवृक्षः । इति राजनिर्घण्टः ॥ (वेतसवृक्षादिरपि तदर्थे
वञ्जुलशब्ददर्शनात् ॥)

**वञ्जुलप्रियः**, पुं, (वञ्जुलस्य प्रियः । वञ्जुलः प्रिय-

**वज्रवृक्षः**, पुं, (वज्रनिवारको वृक्षः ।) सेहुण्ड-

वृक्षः । इति राजनिर्घण्टः ॥
(तथास्यान्यः
पर्य्यायो यथा, वैद्यकरत्नमालायाम् ।
"स्नुही स्नु क् च महावृक्षो वज्रवृक्षः सुधा-
गुडा ॥")

**वज्रशल्यः**, पुं, (वज्रमिव कठिनं शल्यं गात्र-

लोमशलाका यस्य ।) शल्यकनामा जन्तुः ।
इति राजनिर्घण्टः ॥

**वज्रशृङ्खला**, स्त्री, (वज्रवत् शृङ्खलं यस्याः ।)

विद्यादेवी । इति हेमचन्द्रः । २ । १५३ ॥

**वज्रसूर्य्यः**, पुं, (अतिसारवत्त्वात् वज्रमिव तेजस्वि-

त्वात् सूर्य्य इव च ।) बुद्धविशेषः । इति
त्रिकाण्डशेषः ॥

**वज्रा** स्त्री, (वजति गच्छतीति । वज गतौ +

"ऋज्रेन्द्रेति ।" उणा० २ । २८ । इति रक् ।
टाप् ।) स्नुहीवृक्षः । गुडूची । इति मेदिनी ।
रे, ८१ ॥ दुर्गा । यथा, --
"वज्राङ्कुशकरी देवी वज्रा तेनोपगीयते ॥"
इति देवीपुराणे ४५ अध्यायः ॥

**वज्राङ्गः**, पुं, (वज्रमिव अङ्गं यस्य ।) सर्पः । इति

राजनिर्घण्टः ॥ वक्राङ्ग इति वा पाठः । वज्र-
तुल्याङ्गयुक्ते, त्रि ॥

**वज्राङ्गी**, स्त्री, (वज्रमिव अङ्गं यस्याः । ङीष् ।)

गवेधुका । इति शब्दचन्द्रिका ॥ अस्थि-
संहारी । इति भावप्रकाशः ॥

**वज्राभः**, पुं, (वज्रस्य हीरकस्य आभा इव आभा

यस्य ।) दुग्धपाषाणः । इति राजनिर्घण्टः ॥
हीरकतुल्यदीप्तिमति, त्रि ॥

ऽप्यचलाः ॥")

**वञ्चथः**, पुं, (वञ्चति प्रतारयतीति । वञ्च +

"शीङ्शपीति ।" उणा० ३ । ११३ । इति
अथः ।) धूर्त्तः । इत्युणादिकोषः ॥ वञ्चना ।
कोकिलः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**वञ्चनं** क्ली, (वञ्च + भावे ल्युट् ।) प्रतारणम् ।

इति हेमचन्द्रः । ३ । ४३ ॥ तस्य गोपनीय-
त्वम् । यथा, --
"वञ्चनञ्चापमानञ्च मतिमान्न प्रकाशयेत् ॥"
इति चाणक्यसंग्रहः ॥

**वञ्चना**, स्त्री, (वञ्च + णिच् + युच् + टाप् ।)

प्रतारणा । यथा, --
"ते कान्तं मुनयो दिव्याः प्रेक्ष्य हैमवतं पुरम् ।
स्वर्गाभिसन्धि सुकृतं वञ्चनामिव मेनिरे ॥"
इति कुमारसम्भवे । ६ । ४७ ॥

**वञ्चितः**, त्रि, (वञ्च्यते स्मेति । वञ्च + णिच् +

क्तः ।) वञ्चनाविशिष्टः । प्रतारितः । तत्-
पर्य्यायः । विप्रलब्धः २ । इति हेमचन्द्रः ।
३ । १०६ ॥ (यथा, कुमारे । ४ । १० ।
"विधिना जन एष वञ्चित-
स्त्वदधीनं खलु देहिनां सुखम् ॥")

श्चेति कर्म्मधारयो वा ।) वेतसवृक्षः ।
यथा,
"विदुलो वेतसः शीतो वानीरो वञ्जुलप्रियः ॥"
इति रत्नमाला ॥

**वञ्जुला**, स्त्री, (रञ्जुल + टाप् ।) बहुदुग्धा गौः ।

इति हेमचन्द्रः । ४ । ३३५ ॥
(नदीविशेषः ।
यथा, मात्स्ये । ११३ । २९ ।
"गोदावरो भीमरथी कृष्णवेणी च वञ्जुला ।
तुङ्गभद्रा सुप्रयोगा बाह्या कावेरी चैव तु ।
दक्षिणापथनद्यस्ताः सह्यपादाद्विनिःसृताः ॥")

**वट**, वेष्टे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

सक०-सेट् ।) वटति वृक्षं लता । इति दुर्गा-
दासः ॥

**वट**, इ स्तेये । सौत्रधातुरयम् । इति कविकल्प-

द्रुमः ॥ (भ्वा०-पर०-सक०-सेट् । इदित् ।) इ,
वण्टकः । इति दुर्गादासः ॥

**वट**, इ कि वण्टने । इति कविकस्त्पद्रुमः ॥ (चुरा०-

पक्षे भ्वा०-पर०-सक०-सेट् ।) वण्टनं
विभागः । इ, वण्ट्यते । कि, वण्टयति वण्टति ।
वण्टन्ति हाटकं यस्मात् प्राप्य विप्राः परस्परम् ।
इति हलायुधः । अयं चुरादौ कैश्चिन्न पठ्यते ।
इति दुर्गसिंहादयः । इति दुर्गादासः ॥

**वट**, त् क वेष्टे । भागे । इति कविकल्पद्रुमः ॥

(अदन्तचुरा०-पर०-सक०-सेट् ।) वटयति ।
इति दुर्गादासः ॥

**वट**, म उक्तौ । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) म, वटयति । इति दुर्गा-

**वटः**, पुं, (वटति वेष्टयति मूलेन वृक्षान्तरमिति ।)
वट् + पचाद्यच् ।) वृक्षविशेषः । वड्गाछ
इति भाषा । तत्पर्य्यायः । न्यग्रोधः २ बहु-
पात् ३ । इत्यमरः । २ । ४ । ३२ ॥ वृक्षनाथः
४
यमप्रियः ५ । इति शब्दरत्नावली ॥ रक्त-
फलः ६ शृङ्गी ७ कर्म्मजः ८ ध्रुवः ९ क्षीरी १०
वैश्रवणावासः ११ भाण्डीरः १२ । इति जटा-
धरः ॥ जटालः १३ रोहिणः १४ अवरोही १५
विटपी १६ स्कन्धरुहः १७ मण्डली १८ महा-
च्छायः १९ भृङ्गी २० यक्षावासः २१ यक्षतरुः
२२ पादरोहणः २३ नीलः २४ शिफारुहः २५
बहुपादः २६ वनस्पतिः २७ । अस्य गुणाः ।
कषायत्वम् । मधुरत्वम् । शिशिरत्वम् । कफ-
पित्तज्वरदाहतृषामोहव्रणशोफनाशित्वञ्च।
इति राजनिर्घण्टः ॥ अपि च ।
“वटः शीतो गुरुर्ग्राही कफपित्तव्रणापहः ।
वर्ण्यो विसर्पदाहघ्नः कषायो योनिदोषहृत् ॥”
इति भावप्रकाशः ॥ * ॥
स च रुद्रस्वरूपः । यथा, --
ऋषय ऊचुः ।
“कथं त्वयाश्वत्थवटौ गोब्राह्मणसमौ कृतौ ।
सर्व्वेभ्योऽपि तरुभ्यस्तौ कथं पूज्यतमौ कृतौ ॥
सूत उवाच ।
अश्वत्थरूपो भगवान् विष्णुरेव न संशयः ।
रुद्ररूपो वटस्तद्वत् पलाशो ब्रह्मरूपधृक् ॥
दर्शनस्पर्शसेवासु ते वै पापहराः स्मृताः ।
दुःखापद्व्याधिदुष्टानां विनाशकारिणौ ध्रुवम् ॥”
इति पाद्मोत्तरखण्डे १६० अध्यायः ॥
अन्यत् पलाशशब्दे द्रष्टव्यम् ॥ * ॥ कपर्द्दः ।
इति
मेदिनी । टे, २४ ॥ कडि इति भाषा ॥ गोलः ।
भक्ष्यम् । वडा इति भाषा । साम्यम् । इति
हेमचन्द्रः ॥ * ॥ क्ली,
व्रजमण्डलाभ्यन्तरीणवट-
संज्ञकषोडशवनानि यथा । अथैषां षट्-
साङ्गवनानामभ्यन्तरे सङ्केतवटाद्या यमुनाया-
श्चतुरशीतिक्रोशमर्य्यादान्तेरदक्षिणोत्तरतटयोः
षोडशवनानि । पाद्मे ।

**वटकः**, पुं, (वट एव । स्वार्थे कन् ।) पिष्टक-
विशेषः । इत्यमरभरतौ ॥ वडा इति भाषा ।
अस्य गुणौ । विदाहित्वम् । तृष्णाकारित्वञ्च
।
इति राजवल्लभः ॥ अपि च ।
“माषाणां पिष्टिकां युक्तां लवणार्द्रकहिङ्गुभिः ।
कृत्वा विदध्याद्वटकांस्तांस्तैलेषु पचेच्छनैः
॥
विशुष्का वटका बल्या बृंहणा वीर्य्यवर्द्धनाः ।
वातामयहरा रुच्या विशेषादर्दितापहाः ॥
विबन्धभेदिनः श्लेष्मकारिणोऽत्यग्निपूजिताः
।
संचूर्ण्य निक्षिपेत्तक्रे भृष्टं जीरकहिङ्गु च ॥
लवणं तत्र वटकान् सकलानपि मज्जयेत् ।
शुक्रलस्तत्र वटको बलकृद्रोचनो गुरुः ॥
विबन्धकृद्विदाही च श्लेष्मलः पवनापहः ।
राज्यक्तयातिरोचिन्या पाचन्या तांस्तु
भक्षयेत् ॥
तत्प्रकारा यथा ।
कदलसुमनमाषक्षोदसत्सीरिशस्यै-
र्म्मरिचसुघनदुग्धैः सच्चतुर्ज्जातचन्द्रैः ।
कृत इह घृतपक्वो यः पतेत् खण्डपाके
वटकममृतकेलिं सा व्यधात्तं प्रियेष्टम् ॥ १ ॥
सामिक्षैः
शालिचूर्णैर्दधिमरिचसितानारिकेला-
र्द्रशस्यै-
र्जात्येलासल्लवङ्गामृतकदलफलैः फेणितैः
पिष्टमुद्गैः ।
सृष्टः पक्वो घृते यः प्रपतति समधौ दुग्धपूरे
प्रगाढे
सेन्दौ कर्पूरकेलिं तमिह मुवटकं सा व्यधात्
स्वप्रियेष्टम् ॥ २ ॥
ग्रन्थिवद्वटिकालिस्तैर्द्रव्यैः सृष्टा तु या पतेत्
।
पञ्चामृते व्यधात्तां सा पीयूषग्रन्थिपालिकाम्
॥ ३
सक्षीरसारशशितण्डुलनारिकेल-
जातीलवङ्गमरिचैः ससितैः सुपिष्टैः ।
रम्भैलया च घृतभावनया भवेद्या
तया विरचिता वस्त्रे वटिकाः साधु
शोषिताः ॥
तालितास्तप्ततैले ता अथवा
सुप्रलेहिताः ।
वटकस्य गुणैर्युक्ता ज्ञातव्या
रुचिदा भृशम् ॥ *
अथ कुष्माण्डवटिः ।
कुष्माण्डकवटी ज्ञेया
पूर्व्वोक्तवटिकागुणा ।
विशेषात् पित्तरक्तघ्नी लघ्वी च
कथिता बुधैः ॥
अथ मुद्गवटिका ।
मुद्गानां वटिका तद्वद्द्रविता
साधिता तथा ।
पथ्या रुच्या ततो लघ्वी
मुद्गसूपगुणा स्मृता ॥”
इति भावप्रकाशः ॥ * ॥
(वटी । वडि इति भाषा ॥ यथा, --
“वटका अथ कथ्यन्ते तन्नाम
गुटिका वटी ।
मोदको वटिका पिण्डी
गुडोवर्त्तिस्तथोच्यते ॥
लेहवत् साध्यते वह्नौ गुडो वा
शर्कराथवा ।
गुग्गुलुर्वा क्षिपेत्तत्र चूर्णं तन्निर्म्मिता
वटी ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे
द्बितीये भागे ॥
यथा च ।
“मण्डूरं चूर्णयेच्छुद्धं गोमूत्रेऽष्टगुणे
क्षिपेत् ।
पक्त्वा च वटकं कृत्वा
दद्यात्तक्रानुपानतः ॥”
इति शार्ङ्गधरे मध्यखण्डे
सप्तमेऽध्याये मण्डूर
वटके ॥ * ॥)
अष्टमाषकपरिमाणम् । यथा, --
“दशगुञ्जास्तु माषः स्यात् शाणो
माषचतुष्टयम् ।

"सङ्केतवटमादौ तु भाण्डीराख्यं वटं द्वयम् ।
यावकाख्यं तृतीयञ्च वटं शृङ्गारसंज्ञकम् ॥
तूर्य्यं वंशिवटं श्रेष्ठं पञ्चमं श्रीवटञ्च षट् ।
सप्तमञ्च जटाजूटं कामाख्यवटमष्टकम् ॥
मनोऽर्थवटकं नाम नवमं परिकीर्त्तितम् ।
आशावटं महाश्रेष्ठं दशमं शुभदायकम् ॥
अशोकाख्यं वटं श्रेष्ठमेकादशमुदाहृतम् ।
नाम केलिवटं श्रेष्ठं द्वादशं परिकीर्त्तितम् ॥
नाम ब्रह्मवटञ्चैव त्रयोदशमसंज्ञकम् ।
नाम रुद्रवटं श्रेष्ठं चतुद्दशमुदाहृतम् ॥
श्रीधराख्यं वटं ख्यातं पञ्चदशसमीरितम् ।
मावित्राख्यं वटं श्रेष्ठं संख्याषोडशनिर्म्मितम् ॥"
इति व्रजमण्डलान्तरे षोडशवटानि । इति
नारायणभट्टकृतव्रजभक्तिविलासः ॥ * ॥

**वटः**, त्रि, (वटतीति । वट् + अच् ।) गुणः । इति

मेदिनी । टे, २४ ॥ वेटे इति भाषा ॥

सा तामनङ्गगुटिकां विदधे प्रियेष्टाम् ॥ ४ ॥
कदलमरिचदुग्धैः खण्डगोधूमपक्व-
प्रकटितवटकोऽयं भूरिजातीफलाढ्यः ।
नवविधुमधुमध्ये यो विलासं विधत्ते
रचित इह तयासौ सीधुपूर्व्वो विलासः ॥ ५
॥
लवङ्गैलेन्द्रमरिचैः संयुतैः शर्कराचयैः ।
चक्रे गङ्गाजलाख्यानि लड्डुकान्यपराणि च ॥
६
तैस्तैर्युतैः क्षीरसारैस्तथा लाङ्गलिशस्यकैः ।
अन्यान्यप्याज्यसंभृष्टैः सा रसैः सरपूपिका
॥" ७
इति रघुनाथभट्टकृते गोविन्दलीलामृते १९
सर्गः ॥ * ॥ अथाम्लिकावटकः ।
"अम्लिकां स्वेदयित्वा तु जलेन सह मर्द्दयेत्
।
तन्नीरे कृतसंस्कारे वटकान् मज्जयेज्जनः ॥
अम्लिकावटकास्ते तु रुच्या वह्निप्रदीपनाः ।
वटकस्य गुणैः पूर्व्वैरेतेऽपि च समन्विताः ॥
* ॥
अथ तक्रवटकः ।
मुद्गानां वटकास्तक्रे मज्जिता लघवो हिमाः
।
संस्कारजप्रभावेण त्रिदोषशमना हिताः ॥ *
॥
अथ माषवटकः ।
माषाणां पिष्टिका हिङ्गुलवणार्द्रकसंस्कृताः ।

द्वौ शाणौ वटकः कोणस्तोलको
द्रङ्क्षणश्च सः ॥"
इति शब्दमाला ॥
(तथा च ।
"माषैश्चतुर्भिः शाणः स्याद्धरणः
स निगद्यते ।
टङ्कः स एव कथितस्तद्द्वयं कोल
उच्यते ।
क्षुद्रको वटकश्चैव द्रङ्क्षणः स
निगद्यते ॥"
इति शार्ङ्गधरे पूर्व्वखण्डे
प्रथमेऽध्याये ॥)

**वटपत्रः**, पुं, (वटस्येव पत्रं यस्य ।) सितार्जकः ।

इति राजनिर्घण्टः ॥ (तथास्य
पर्य्यायः ।
"वर्व्वरी तुवरी तुङ्गी
खरपुष्पाजगन्धिका ।
पर्णाशस्तत्र कृष्णे तु
कठिल्लककुठेरकौ ॥
तत्र शुक्लेऽर्ज्जकः प्रोक्तो
वटपत्रस्तोऽपरः ॥"
इति भावप्रकाशम्य पूर्ब्बखण्डे
प्रथमे भागे ॥)

**वटपत्रा**, स्त्री, (वटम्येव पत्रमस्याः ।) त्रिपुर-

मालीपुष्पवृक्षः । इति रत्नमाला ॥

**वटपत्री**, स्त्री, (वटस्येव पत्रं यस्याः । गौरादि-

त्वात् ङीष् ।) पाषाणभेदीविशेषः ।
तत्पर्य्यायः ।
इनानी २ ऐरावती ३ गोधावती ४
इरावती ५
श्यामा ६ खट्टाङ्गनामिका ७ ।
अस्याः गुणाः ।
हिमत्वम् । गोल्यत्वम् ।
मेहकृच्छ्रविनाशित्वम् ।
बलदातृत्वम् । व्रणहन्तृत्वम् ।
किञ्चिद्दीपन-
कारित्वञ्च । इति राजनिर्घण्टः ॥
अपि च ।

| | | “वटपत्री तु कथिता मोहिन्यैरावती बुधैः ।<br>वटपत्री कषायोष्णा<br>योनिमूत्रगदापहा ॥”<br>इति भावप्रकाशः ॥<br><br>**वटरः**, पुं, कुक्कुटः । वेष्टः । शठः । चौरः ।<br>चञ्चलः । इति शब्दरत्नावली ॥<br><br>**वटवासी** [न्] पुं, स्त्री, (वटे वटवृक्षे वसतीति ।<br>वस् + णिनिः ।) यक्षः । इति<br>हेमचन्द्रः । २<br>१०८ ॥ वटवृक्षवासकर्त्तरि, त्रि ॥ |
|---|---|---|

**वटाकरः**, पुं, रज्जुः । इत्यमरटीकायां रामाश्रमः ॥

**वटारका**, स्त्री, रज्जुः । दडि इति वेटे इति च भाषा । इति पुराणम् ॥ (यथा, महाभारते । १२ । ३२९ । ३९ ।
"क्षत्रारित्रां सत्यमयीं धर्म्मस्थैर्य्यवटारकाम् ॥"
पुंलिङ्गोऽप्ययं शब्दः । यथा, महाभारते । ३ । १८७ । ४० ।
"वटारकमयं पाशमथ मत्स्यस्य मूर्द्धनि ।
मनुर्मनुजशार्दूल ! तस्मिन् शृङ्गे न्यवेशयत् ॥")

**वटावीकः**, पुं, चौरविशेषः । यथा, --
"नामचौरो वटावीकः सन्धिचौरस्तु हारकः ॥"
इति शब्दमाला ॥

**वटिः**, स्त्री, (वटतीति । वट + "सर्व्वधातुभ्य इन् ।" उणा० ४ । ११८ । इति इन् ।) उपजिह्विका । यथा, --
"उपजिह्विकोत्पादिका च वटिरुद्देहिका देवी ॥"
इति हारावली । ११० ॥

**वटिका**, स्त्री, (वटिरेव । स्वार्थे कन् । टाप् ।) वटी । वडी इति भाषा । तत्पर्य्यायः । निस्तली २ । इति शब्दचन्द्रिका ॥ अथ वटिकाविधिः ।
"वटका अथ कथ्यन्ते तन्नामा वटिका वटी ।
मोदको गुटिका पिण्डी गुडो वर्त्तिस्तथोच्यते ॥
शिशिरत्वम् । पित्तनाशित्वम् । दाहतृष्णाश्रमश्वासविषच्छर्द्दिशमनत्वञ्च । इति राजनिर्घण्टः ॥

**वटी**, त्रि, रज्जुः । इत्यमरः । २ । १० । २७ ॥

**व(ब)टुः**, पुं, (वटतीति । वट् + "कटिवटिभ्याञ्च ।" उणा० १ । ९ । इति उः ।) माणवकः । यथा, --
"वटुः पुनर्म्माणवको भिक्षास्य ग्रासमात्रकम् ॥"
इति हेमचन्द्रः ॥
ब्रह्मचारी । यथा । वटुर्व्वर्णी ब्रह्मचारी । इति शब्दरत्नावली ॥ (यथा, महाभारते । १ । १८९ । १५ ।
"तस्माद्ब्रुवन्तु सर्व्वेऽत्र वटुरेष धनुर्म्महान् ।
आरोपयतु शीघ्रं वै तथेत्यूचुर्द्विजर्षभाः ॥")
कुटन्नटवृक्षः । यथा, --
"मण्डूकपर्णः श्योणाकः शुकनासः कुटन्नटः ।
ऋक्षो वटुर्दीर्घवृन्तो दीर्घवृन्तक इत्यपि ॥"
इति च शब्दरत्नावली ॥
बालकः । यथा, --
"बालको माणवो बालः किशोरो वटुरित्यपि ॥"
इत्यपि शब्दरत्नावली ॥

**वटुकः**, पुं, (वटु + स्वार्थे संज्ञायां वा कन् ।) बालकः । इति शब्दरत्नावली ॥ (यथा, पाद्मे कृष्णचतुर्द्दशीकृत्ये ।
"कुमारीवटुकान् पूज्य तथा शैवतपोधनान् ।
राजसूयफलं तेन प्राप्यते नात्र संशयः ॥"
ब्रह्मचारी । यथा, भागवते । १० । ८८ । २७ ।
"तं तथा व्यसनं दृष्ट्वा भगवान् वृजिनार्द्दनः ।
दूरात् प्रत्युदियाद् भूत्वा वटुको योगमायया ॥")
"अङ्गुलीदेहवक्त्रेषु मूर्त्तीर्न्यसेद्यथा पुरा ।
सत्यादिपञ्चह्रस्वाढ्यशक्तिबीजपुरःसरम्।
वकारं पञ्चह्रस्वाढ्यमीशानादिषुयोजयेत् ॥"
ततः कराङ्गन्यासौ । तद्यथा ॐ ह्रां वां अङ्गुष्ठाभ्यां नम इत्यादि । ॐ ह्रां वां हृदयाय नम इत्यादि च । षड्दीर्घबीजद्वयेन कुर्य्यात् । तथा च निबन्धे ।
"षड्दीर्घयुक्तया शक्त्या वकारेणापि तद्वता ।
अङ्गानि जातियुक्तानि प्रणवाद्येन कल्पयेत् ॥"
ततो ध्यानम् ।
"तस्य ध्यानं त्रिधा प्रोक्तं सात्त्विकादिप्रभेदतः ॥"
सात्त्विकम् । यथा, --
"वन्दे बालं स्फटिकसदृशं कुण्डलोद्भासिवक्त्रं
दिव्याकल्पैर्नवमणिमयैः किङ्किणीनूपुराद्यैः ।
दीप्ताकारं विषदवदनं सुप्रसन्नं त्रिनेत्रं
हस्ताब्जाभ्यां वटुकमनिशं शूलदण्डौ दधानम् ॥" १ ॥
राजसं यथा, --
"उद्यद्भास्करसन्निभं त्रिनयनं रक्ताङ्गरागस्रजं
स्मेरास्यं वरदं कपालमभयं शूलं दधानं करैः ।
नीलग्रीवमुदारभूषणशतं शीतांशुचूडोज्ज्वलं
बन्धूकारुणवाससं भयहरंदेवं सदा भावये ॥" २ ॥
तामसं यथा, --
"ध्यायेन्नीलाद्रिकान्तं शशिशकलधरं मुण्डमालं महेशं
दिग्वस्त्रं पिङ्गकेशं डमरुमथ सृणिं खड्गशूलाभयानि ।
नागं घण्टां कपालं करसरसिरुहैर्व्विभ्रतं भीमदंष्ट्रं
सर्पाकल्पं त्रिनेत्रं मणिमयविलसत्किङ्किणीनूपुराढ्यम् ॥" ३ ॥
"सात्त्विकं ध्यानमाख्यातमपमृत्युविनाशनम् ।
आयुरारोग्यजननमपवर्गफलप्रदम् ॥ १ ॥
राजसं ध्यानमाख्यातं धर्म्मकामार्थसिद्धिदम् । २ ॥
तामसं शत्रुशमनं कृत्याभूतगदापहम् ॥" ३ ॥
एवं ध्यात्वा मानसैः संपूज्य शङ्खस्थापनं

लेहवत् साध्यते वह्नौ गुडो वा शर्कराथवा ।
गुग्गुलुर्वा क्षिपेत्तत्र चूर्णं तन्निर्म्मिता वटी ॥”
तत्र वह्निसिद्धे गुडादौ ।
“कुर्य्यादवह्निसिद्धेन क्वचिद्गुग्गुलुना वटीम् ।
द्रवेण मधुना वापि गुटिकां कारयेद्बुधः ॥
सिता चतुर्गुणा देया वटीषु द्विगुणो गुडः ।
चूर्णे चूर्णसमः कार्य्यो गुग्गुलुर्मधु तत्समम् ॥”
तत्समं चूर्णसमम् ।
“द्रवन्तु द्विगुणं देयं मोदकेषु भिषग्वरैः ॥”
द्रवं चतुर्गुणमिति वा पाठः । द्रवं द्रवरूपं द्रव्यम् ।
“कर्षप्रमाणा तन्मांत्रा बलं दृष्ट्वा प्रयुज्यते ।
बलमिति कालादेरप्युपलक्षणम् । इति भाव-
प्रकाशः ॥ * ॥ व्यञ्जनोपयोगिद्रव्यम् । अस्यापि
वडी इति भाषा । यथा, --
“माषाणां पिष्टिका हिङ्गुलवणार्द्रकसंस्कृता ।
तया विरचिता वस्त्रे वटिकाः साधु शोषिताः ॥
तालितास्तप्ततैले ता अथवा सुप्रलेहिताः ।
घटकस्य गुणैर्युक्ता ज्ञातव्या रुचिदा भृशम् ॥
कुष्माण्डकवटी ज्ञेया पूर्ब्बोक्तवटीकागुणा ।
विशेषात् पित्तरक्तघ्नी लघ्वी च कथिता बुधैः ॥
मुद्गानां वटिका तद्वद्रचिता साधिता तथा ।
पथ्या रुच्या ततो लघ्वी मुद्गसूपगुणा स्मृता ॥”

भैरवविशेषः । (यथा, महानिर्व्वाणतन्त्रे । २ । २४ ।
“भैरवाश्चैव वेताला वटुका नायिकागणाः ।
शाक्ताः शैवा वैष्णवाश्च सौरा गाणपतादयः ॥”)
अस्य मन्त्रादिर्यथा, --
“उद्धरेद्वटुकं ङेऽन्तमापदुद्धारणं तथा ।
कुरुद्वयं पुनर्ङेऽन्तं वटुकञ्च समुद्धरेत् ।
एकविंशत्यक्षरात्मा शक्तिरुद्धो महामनुः ॥”
अस्य पूजा । प्रातःकृत्यादिप्राणायामान्तं विधाय पीठन्यासं कुर्य्यात् । यथा । धर्म्मादि-
अनैश्वर्य्यान्तं देहे विन्यस्य ऋष्यादिन्यासं कुर्य्यात् । यथा शिरसि ॐ बृहदारण्यकऋषये
नमः । मुखे गायत्रीच्छन्दसे नमः । हृदि वटुकभैरवाय देवतायै नमः । ततो मूर्त्ति-
न्यासः । ह्रों वों ईशानाय नमोऽङ्गुष्ठयोः । ह्रें वें तत्पुरुषाय नमस्तर्ज्जन्योः । हुं वु अघो-
राय नमो मध्यमयोः । ह्रिं विं वामदेवाय नमोऽनामिकयोः । ह्रं वं सद्योजाताय नमः
कनिष्ठयोः । पुनस्तत्तदङ्गुलीभिः शिरोवदन-हृद्गुह्यपादेषु तत्तद्बीजादिकास्तत्तन्मूर्त्ती-
र्न्यसेत् । तथोद्ध्वर्प्राग्दक्षिणोदीच्यपश्चिमेषु मुखेषु
च तान् न्यसेत् । तथा च निबन्धे ।

कुर्य्यात् ॥ * ॥ अस्य पूजायन्त्रम् ।
“धर्म्माधर्म्मादिभिः क्लृप्तपीठे पङ्कजशोभिते ।
षट्कोणान्तस्त्रिकोणस्थव्योमपङ्कजसंयुते ॥”
ततो मूलेन मूर्त्तिं सङ्कल्प्य पूर्ब्बवत् ध्यात्वा-
वाहनादिकं कुर्य्यात् । तत्र क्रमः । मूलेन सद्यो-
जातमन्त्रेणावाहनम् । मूलादिवामदेवेन स्थाप-
नम् । मूलेन सान्निध्यम् । अघोरेण सन्निबोध-
नम् । तत्पुरुषेण योनिमुद्राप्रदर्शनम् । ईशा-
नेन वन्दनमिति विशेषः । ततः कर्णिकायां
दिक्षु कोणेषु ईशानादीन् यजेत् । ततो व्योम-
पङ्कजदलेषु असिताङ्गादिभैरवान् यजेत् ।
“असिताङ्गो रुरुश्चण्डः क्रोधोन्मत्तौ च भैरवौ ।
कपाली भीषणश्चैव संहारोऽष्टौ च भैरवाः ॥”
एतैरष्टभैरवैर्द्वितीयावरणम् । ततः षट्कोणेषु
ह्रां वां हृदयाय नम इत्यनेन पूजयेत् ।

| | | |
|---|---|---|
| इति भावप्रकाशः ॥<br>**वटी**, स्त्री, (वट् + अच् । गौरादित्वात् ङीष् ।)<br>वटिका । इति भावप्रकाशः ॥<br>वृक्षविशेषः ।<br>तत्पर्य्यायः । नदीवटः २ यज्ञवृक्षः ३ सिद्धार्थः ४<br>वटकः ५ अमरा ६ भृङ्गिणी ७<br>क्षीरकाष्ठा ८ ।<br>अस्या गुणाः । कषायत्वम् ।<br>मधुरत्वम् । | | |

ततः पूर्ब्बादिडाकिनीराकिणीलाकिनीकाकिनी साकिनीहाकिनीमालिनीपुत्रान्देवीपुत्रान् उमापुत्रान् रुद्रपुत्रान् मातृकापुत्रान् दक्षिणे यजेत् । ऊद्‌र्ध्वे ऊद्‌र्ध्वमुखीपुत्रान् अधोऽधोमुखी-
पुत्रान् । तद्बहिरष्टपत्रेषु लोकेशान् वटुक-रूपान् पूजयेत् । तद्बहिः पूर्ब्बे ॐ ब्रह्माणी-पुत्राय नमः । एवमीशाने माहेश्वरीपुत्राय । उत्तरे वैष्णवीपुत्राय । अनिले कौमारीपुत्राय । पश्चिमे इन्द्राणीपुत्राय । नैरृते महालक्ष्मी-पुत्राय । याम्ये वाराहीपुत्राय । अनले चामुण्डापुत्राय । तथा च निबन्धे ।

"ब्रह्माणीपुत्रकं पूर्ब्बे माहेशीपुत्रमैश्वरे ।
वैष्णवीपुत्रकं सौम्ये कौमारीपुत्रमानिले ॥
इन्द्राणीपुत्रकं भूयः पश्चिमे पूजयेत्ततः ।
महालक्ष्मीसुतं पश्चाद्रक्षोदिशि समर्च्चयेत् ।
वाराहीपुत्रकं याम्ये चामुण्डापुत्रमानले ॥"

तद्बहिर्द्दशदिक्षु च । हेतुकं त्रिपुरान्तकं वेतालं वह्निजिह्वं करालं कालान्तकं एकपादं भीम-रूपं अचलं चाटकेश्वरं पूजयेत् । ततो योगिनीसहितदिव्ययोगीशायनमः । एवं योगिनीसहितान्तरीक्षयोगीशायनमः । एवं योगिनीसहितभूमिष्ठयोगीशायनमः । ईशा-नाग्निनिरृतिषु पूजयेत् ॥ * ॥ अस्य पुर-श्चरणमेकविंशतिलक्षजपः ।

"वर्णलक्षं जपेन्मन्त्रं हविष्याशी जितेन्द्रियः ।
तद्दशांशं प्रजुहुयात्तिलैर्मधुरसंयुतैः ॥" * ॥

अथ वलिदानम् ।

"पूर्ब्बं विघ्नं दुर्गां समाराध्य वलिं दद्यात् ।
शाल्यन्नं पललं सर्पिर्लाजचूर्णानि शर्कराः ॥
गुडमिक्षुरसापूपैर्मध्वक्तैः परिमिश्रितैः ।
कृत्वा कवलमाराध्य देवं प्रागुक्तवर्त्मना ।
रक्तचन्दनपुष्पाद्यैर्निशि तस्मै वलिं हरेत् ॥"

यद्वा ।

"अन्यूनाङ्गमजं हत्वा राजसं प्रागुदीरितम् ।
वलिप्रदानसमये रिपूणां सर्व्वसैन्यकम् ।
निवेदयेद्वलित्वेन वटुकाय विशिष्टधीः ॥
विदर्भयेच्छत्रुनाम्ना वलिमन्त्रं तथा सुधीः ।
शत्रुपक्षस्य रुधिरं पिशितञ्च दिने दिने ॥
अङ्गन्यासकरन्यासबीजन्यासससमन्वितम् ।
वक्तुमर्हसि देवेश मम हर्षविवर्द्धनम् ॥

श्रीभगवानुवाच ।

शृणु देवि महामन्त्रमापदुद्धारहेतुकम् ।
सर्व्वदुःखप्रशमनं सर्व्वशत्रुनिवर्हणम् ॥
अपस्मारादिरोगाणां ज्वरादीनां विशेषतः ।
नाशनं स्मृतिमात्रेण मन्त्रराजमिमं प्रिये ॥
ग्रहराजभयानाञ्च नाशनं सुखवर्द्धनम् ।
स्नेहाद्वक्ष्यामि ते मन्त्रं सर्व्वसारमिमं प्रिये ॥
सर्व्वकामार्थदं मन्त्रं राज्यभोगप्रदं नृणाम् ।
प्रणवं पूर्ब्बमुच्चार्य्य देवी प्रणवमुद्धरेत् ॥
वटुकायेति वै पश्चादापदुद्धारणाय च ।
कुरुद्वयं ततः पश्चाद्वटुकाय पुनः क्षिपेत् ॥
देवी प्रणवमुद्धृत्य मन्त्रराजमिमं प्रिये ।
मन्त्रोद्धारमिमं देवि त्रैलोक्यस्यापि दुर्लभम् ।
अप्रकाश्यमिमं मन्त्रं सर्व्वशक्तिसमन्वितम् ॥
स्मरणादेव मन्त्रस्य भूतप्रेतपिशाचकाः ।
विद्रवन्ति भयार्त्ता वै कालरुद्रादिव प्रजाः ॥
पठेद्वा पाठयेद्वापि पूजयेद्वापि पुस्तकम् ।
नाग्निचौरभयं वापि ग्रहराजभयन्तथा ।
न च मारीभयं तस्य सर्व्वत्र सुखवान् भवेत् ॥
आयुरारोग्यमैश्वर्य्यं पुत्रपौत्रादिसम्पदः ।
भवन्ति सततं तस्य पुस्तकस्यापि पूजनात् ॥

श्रीपार्वत्युवाच ।

य एष भैरवो नाम आपदुद्धारको मतः ।
त्वया च कथितो देव भैरवः कल्प उत्तमः ॥
तस्य नामसहस्राणि अयुतान्यर्व्वुदानि च ।
सारमुद्धृत्य तेषां वै नामाष्टशतकं वद ॥ * ॥

श्रीभगवानुवाच ।

यस्तु संकीर्त्तयेदेतत् सर्व्वदुष्टनिवर्हणम् ।
सर्व्वान् कामानवाप्नोति साधकः सिद्धिमेव च ॥
शृणु देवि प्रवक्ष्यामि भैरवस्य महात्मनः ।
आपदुद्धारकस्येह नामाष्टशतमुत्तमम् ॥
सर्व्वपापहरं पुण्यं सर्व्वापद्विनिवारकम् ।
सर्व्वकामार्थदं देवि साधकानां सुखावहम् ॥
देहाङ्गन्यसनञ्चैव पूर्ब्बं कुर्य्यात् समाहितः ।
भैरवं मूद्‌र्ध्नि विन्यस्य ललाटे भीमदर्शनम् ॥
अक्ष्णोर्भूताश्रयं न्यस्य वदने तीक्ष्णदर्शनम् ।
त्रिनेत्रो बहुनेत्रश्च तथा पिङ्गललोचनः ॥
शूलपाणिः खड्गपाणिः कङ्काली धूम्रलोचनः ।
अभीरुर्भैरवो भीरुर्भूतपो योगिनीपतिः ॥
धनदो धनहारी च धनपः प्रतिभाववान् ।
नागहारो नागकेशो व्योमकेशः कपालभृत् ॥
कालः कपालमाली च कमनीयः कलानिधिः ।
त्रिलोचनो ज्वलन्नेत्रस्त्रिशिखी च त्रिलोकपात् ॥
त्रिवृत्तनयनो डिम्भः शान्तः शान्तजनप्रियः ।
वटुको वटुकेशश्च खट्वाङ्गवरधारकः ॥
भूताध्यक्षः पशुपतिर्भिक्षुकः परिचारकः ।
धूर्त्तो दिगम्बरः सौरिर्हरिणः पाण्डुलोचनः ॥
प्रशान्तः शान्तिदः शुद्धः शङ्करप्रियबान्धवः ।
अष्टमूर्त्तिर्निधीशश्च ज्ञानचक्षुस्तमोमयः ॥
अष्टाधारः कलाधारः सर्पयुक्तः शशीशिखः ।
भूधरो भूधराधीशो भूपतिर्भूधरात्मकः ॥
कङ्कालधारी मुण्डी च व्यालयज्ञोपवीतवान् ।
जृम्भणो मोहनः स्तम्भी मारणः क्षोभणस्तथा ॥
शुद्धनीलाञ्जनप्रख्यदेहो मुण्डविभूषितः ।
वलिभुक् वलिभूतात्मा कामी कामपराक्रमः ॥

भक्षयस्व गणैः सार्द्धं सारमेयसमन्वितः ।
वलिमन्त्रोऽयमाख्यातः सर्व्वेषां विजयप्रदः ॥
अनेन वलिना हृष्टो वटुकः परसैन्यकम् ।
सर्व्वं गणेभ्यो विभजेच्चामिष क्रुद्धमानसः ॥
एवं कृते परबलं क्षीयते नात्र संशयः ॥”
इति तन्त्रसारः ॥ * ॥
अथ वटुकभैरवस्तोत्रम् ।
“कैलासशिखरासीनं देवदेवं जगद्गुरुम् ।
शङ्करं परिपप्रच्छ पार्व्वती परमेश्वरम् ॥
श्रीपार्व्वत्युवाच ।
भगवन् सर्व्वधर्म्मज्ञ सर्व्वशास्त्रागमादिषु ।
आपदुद्धारणं मन्त्रं सर्व्वसिद्धिप्रदं नृणाम् ॥
सर्व्वेषाञ्चैव भूतानां हितार्थं वाञ्छितं मया ।
विशेषतस्तु राज्ञां वै शान्तिपुष्टिप्रसाधनम् ॥

क्षेत्रपं कर्णयोर्मध्ये क्षेत्रपालं हृदि न्यसेत् ॥
क्षेत्राख्यं नाभिदेशे च कट्यां सर्व्वाघनाशनम् ।
त्रिनेत्रमूर्व्वोर्विन्यस्य जङ्घयो रक्तपाणिकम् ॥
पादयोर्देवदेवेशं सर्व्वाङ्गे वटुकं न्यसेत् ।
एवं न्यासविधिं कृत्वा तदनन्तरमुत्तमम् ॥
नामाष्टशतकस्यापि छन्दोऽनुष्टुबुदाहृतम् ।
बृहदारण्यको नाम ऋषिश्च परिकीर्त्तितः ॥
देवता कथिता चेह सद्भिर्वटुकभैरवः ।
धर्म्मार्थकाममोक्षेषु विनियोगः प्रकीर्त्तितः ॥ * ॥
ॐभैरवो भूतनाथश्च भूतात्मा भूतभावनः ।
क्षेत्रदः क्षेत्रपालश्च क्षेत्रज्ञः क्षत्त्रियो विराट् ।
श्मशानवासी मांसाशी खर्परराशी मखान्तकृत् ।
रक्तपः प्राणपः सिद्धः सिद्धिदः सिद्धसेवितः ॥
करालः कालशमनः कलाकाष्ठातनुः कविः ।

सर्व्वापत्तारको दुर्गो
दुष्टभूतनिषेवितः ।
कामी कलानिधिः कान्तः
कामिनीवशकृद्वशी ।
सर्व्वसिद्धिप्रदो वैद्यः प्रभविष्णुः
प्रभाववान् ॥
अष्टोत्तरशतं नाम भैरवस्य
महात्मनः ।
मया ते कथितं देवि रहस्यं
सर्व्वकामिकम् ॥
य इदं पठति स्तोत्रं
नामाष्टशतमुत्तमम् ।
न तस्य दुरितं किञ्चन्न रोगेभ्यो
भयं तथा ।
न शत्रुभ्यो भयं किञ्चित् प्राप्नोति
मानवः क्वचित् ॥
पातकानां भयं नैव पठेत्
स्तोत्रमनन्यधीः ।
मारीभये राजभये तथा चौराग्निजे
भये ॥
औत्पातिके महाघोरे यथा
दुःस्वप्नदर्शने ।
बन्धने च तथा घोरे पठेत् स्तोत्रं
समाहितः ॥
सर्व्वे प्रशमनं यान्ति
भयाद्भैरवकीर्त्तनात् ।
एकादशसहस्रन्तु
पुरश्चरणमुच्यते ॥
त्रिसन्ध्यं यः पठेद्देवि
संवत्सरमतन्द्रितः ।
स सिद्धिं प्राप्नुयादिष्टां
दुर्लभामपि मानुषः ॥
षण्मासान् भूमिकामस्तु स
जप्त्वा लभते महीम् ।
राजा शत्रुविनाशाय
जपेन्मासाष्टकं पुनः ॥
रात्रौ वारत्रयञ्चैव नाशयत्येव
शात्रवान् ।
जपेन्मासत्रयं रात्रौ राजानं
वशमानयेत् ॥

| | | |
|---|---|---|
| | | धनार्थी च सुतार्थी च दारार्थी यस्तु मानवः ।<br>पठेद्वारत्रयं यद्वा वारमेकं तथा निशि ॥<br>धनं पुत्रांस्तथा दारान् प्राप्नुयान्नात्र संशयः ।<br>रोगी रोगात् प्रमुच्येत बद्धो मुच्येत बन्धनात् ॥<br>भीतो भयात् प्रमुच्येत देवि सत्यं न संशयः ।<br>यान् यान् समी हते कामांस्तांस्तानाप्नोति निश्चितम् ।<br>अप्रकाश्यमिदं गुह्यं न देयं यस्य कस्यचित् ॥<br>सत्कुलीनाय शान्ताय ऋजवे दम्भवर्ज्जिते ।<br>दद्यात् स्तोत्रमिदं पुण्यं सर्व्वकामफलप्रदम् ।<br>ध्यानं वक्ष्यामि देवस्य यथा ध्यात्वा पठेन्नरः ॥ *<br>ॐ शुद्धस्फटिकसङ्काशं सहस्रादित्यवर्च्चसम् ।<br>अष्टबाहुं त्रिनयनं चतुर्बाहुं द्विबाहुकम् ॥ |

भुजङ्गमेखलं देवमग्निवर्णशिरोरुहम् ।
दिगम्बरं कुमारीशं वटुकाख्यं महाबलम् ॥
खट्वाङ्गमसिपाशञ्च शूलञ्चैव तथा पुनः ।
डमरुञ्च कपालञ्च वरदं भुजगन्तथा ॥
नीलजीमूतसङ्काशं नीलाञ्जनचयप्रभम् ।
दंष्ट्राकरालवदनं नूपुराङ्गदभूषितम् ॥
आत्मवर्णसमोपेतसारमेयसमन्वितम् ।
ध्यात्वा जपेत् सुसंहृष्टः सर्व्वान्
कामानवाप्नुयात् ॥
एतच्छ्रुत्वा ततो देवी नामाष्टशतमुत्तमम् ।
भैरवाय प्रहृष्टाभूत् स्वयञ्चैव महेश्वरी ॥”
इति विश्वसारोद्धारतन्त्रे आपदुद्धारकल्पे भैरव-
स्तवराजः समाप्तः ॥ * ॥ अथ
वटुकभैरवकवचम् ।
श्रीभैरव उवाच ।
“देवेशि देहरक्षार्थं कारणं कथ्यतां ध्रुवम् ।
म्रियन्ते साधका येन विना श्मशानभूमिषु ॥
रणेषु चातिघोरेषु महावायुजलेषु च ।
शृङ्गिमकरवज्रेषु ज्वरादिव्याधिवह्निषु ॥
श्रीदेव्युवाच ।
कथयामि शृणु प्राज्ञ वटोस्तु कवचं शुभम् ।
गोपनीयं प्रयन्तेन मातृजारोपमं यथा ॥
तस्य ध्यानं त्रिधा प्रोक्तं सात्त्विकादिप्रभेदतः ।
सात्त्विकं राजसञ्चैव तामसं देव तत् शृणु ॥
वन्दे बालं स्फटिकसदृशं कुण्डलोद्भासिवक्त्रं
दिव्याकल्पैर्नवमणिमयैः किङ्किणीनूपुराद्यैः ।
दीप्ताकारं विषदवदनं सुप्रसन्नं त्रिनेत्रं
हस्ताब्जाभ्यां वटुकमनिशं शूलखड्गौ
दधानम् ॥ १ ॥
उद्यद्भास्करसन्निभं त्रिनयनं रक्ताङ्गरागस्रजं
स्मेरास्यं वरदं कपालमभयं शूलं दधानं करैः ।
नीलग्रीवमुदारभूषणशतं शीतांशुचूडोज्ज्वलं
वन्धूकारुणवाससं भयहरं देवं सदा भावये ॥ २
॥
ध्यायेन्नीलाद्रिकान्तं शशिशकलधरं मुण्डमालं
महेशं
दिग्वस्त्रं पिङ्गकेशं डमरुमथ सृणिं खड्ग-
शूलाभयानि ।
नागं घण्टां कपालं करसरसिरुहैर्व्विभ्रतं
क्षेत्रपालः पृष्ठदेशं क्षेत्राख्यो
नाभितस्तथा ॥
कटीं पापौघनाशश्च वटुको
लिङ्गदेशकम् ।
गुदं रक्षाकरः पातु ऊरू रक्षाकरः सदा
॥
जानू च घुर्घुरारावो जङ्घे रक्षतु रक्तपः ॥
गुल्फौ च पादुकासिद्धः पादपृष्ठं
सुरेश्वरः ॥
आपादमस्तकञ्चैव आपदुद्धारणस्तथा
।
सहस्रारे महापद्मे कर्पूरधवलो गुरुः ॥
पातु मां वटुको देवो भैरवः सर्व्वकर्म्मसु
।
पूर्ब्बस्यामसिताङ्गो मे दिशि रक्षतु
सर्व्वदा ॥
आग्नेय्याञ्च रुरुः पातु दक्षिणे
चण्डभैरवः ।
नैरृत्यां क्रोधनः पातु मामुन्मत्तस्तु
पश्चिमे ॥
वायव्यां मे कपाली च नित्यं पायात्
सुरेश्वरः ।
भीषणो भैरवः पातूत्तरस्यां दिशि
सर्व्वदा ॥
संहारभैरवः प तु दिश्यैशान्यां महेश्वरः
।
ऊर्द्ध्वे पातु विधाता वै पाताले नन्दिको
विभुः ॥
सद्योजातस्तु मां पायात् सर्व्वतो
देवसेवितः ।
वामदेवोऽवतु प्रीतो रणे घोरे तथावतु ॥
जले तत्पुरुषः पातु स्थले पातु गुरुः
सदा ।
डाकिनीपुत्त्रकः पातु दारांस्तु
लाकिनीसुतः ॥
पातु साकलको भ्रातॄन् श्रियं मे सततं
गिरः ।
लाकिनीपुत्त्रकः पातु
पशूनश्वानजांस्तथा ॥

**वठरः**, पुं, (वक्तीति । वच् + “वचिमनिभ्यां
चिच्च ।” उणा० ५ । ३९ । इति
अरप्रत्ययः ।
ठश्चान्तादेशः ।) मूर्खः ।
इत्युणादिकोषः ॥
अम्बष्ठः । इति हेमचन्द्रः ॥ शब्दकारः ।
वक्रः ।
इति संक्षिप्तसारोणादिवृत्तिः ॥

**वठरः**, त्रि, (वच् + अरः । ठश्चान्तादेशः ।)
शठः । मन्दः । इति त्रिकाण्डशेषः ॥

**वड**, आरोहणे । सौत्रधातुरयम् । इति कवि-
कल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट्
।) वडभी ।
बडिशम् । इति दुर्गादासः ॥

**वड**, इ क विभागे । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-सक०-सेट् । इदित् ।) इ क,
वण्डयति ।
अयं कैश्चिन्न पठ्यते । इति दुर्गादासः ॥

**वड**, इ ङ वेष्टे । विभागे । इति कविकल्पद्रुमः ॥
(भ्वा०-आत्म०-सक०-सेट् । इदित् ।)
इ, वण्ड्यते ।
ङ, वण्डते । इति दुर्गादासः ॥

**वडभी**, स्त्री, (वड्यते आरुह्यतेऽत्रेति । वड् + बाहु-
लकात् अभिच् । कृदिकारादिति ङीष् ।)
गृहचूडा । इत्यमरः ॥ मुदनि । इति भाषा
।
तत्पर्य्यायः । गोपानसी २ । इति
तट्टीकासार-
सुन्दरी ॥ चन्द्रशालिका ३ कूटागारम् ४
।
इति त्रिकाण्डशेषः ॥
“चन्द्रशाला च वडभी स्यातां
प्रासादमूर्द्धनि ॥”
इति श्रीधरः ॥
खेलायां वडभौ चूडा । इति रुद्रः ॥

भीमदंष्ट्रं
सर्पाकल्पं त्रिनेत्रं मणिमयविलसत्किङ्किणी
नूपुराढ्यम् ॥ ३ ॥ * ॥
अस्य वटुकभैरवकवचस्य महाकाल ऋषिरनु-
ष्टुप्छन्दः श्रीवटुकभैरवो देवता वं बीजं ह्रीं
शक्तिरापदुद्धारणायेति कीलकं मम सर्व्वाभीष्ट-
सिद्ध्यर्थे विनियोगः ।
“ॐ शिरो मे भैरवः पातु ललाटं भीषणस्तथा ।
नेत्रे च भूतहननः सारमेयानुगो भ्रुवौ ॥
भूतनाथश्च मे कर्णौ कपोलौ प्रेतवाहनः ।
नासापुटौ तथोष्ठौ च भस्माङ्गः सर्व्वभूषणः ॥
भीषणास्यो ममास्यञ्च शक्तिहस्तो गलं मम ।
स्कन्धौ दैत्यरिपुः पातु बाहू अतुलविक्रमः ॥
पाणी कपाली मे पातु मुण्डमालाधरो हृदम् ।
वक्षःस्थलं तथा शान्तः कामचारी स्तनं मम ॥
उदरञ्च स मे तुष्टः क्षेत्रेशः पार्श्वतस्तथा ।

महाकालोऽवतु च्छत्रं सैन्यं वै
कालभैरवः ।
राज्यं राज्यश्रियं पायात् भैरवो भीति-
हारकः ॥
रक्षाहीनन्तु यन् स्थानं वर्जितं कवचेन
च ।
तत् सर्व्वं रक्ष मे देव त्वं यतः
सर्व्वरक्षकः ॥
एतत् कवचमीशान तव स्नेहात्
प्रकाशितम् ।
नाख्येयं नरलोकेषु सारभूतञ्च सुश्रियम्
॥
यस्मै कस्मै न दातव्यं कवचेशं
सुदुर्लभम् ।
न देयं परशिष्येभ्यः कृपणेभ्यश्च शङ्कर
॥
यो ददाति निषिद्धेभ्यः स वै भ्रष्टो
भवेद्ध्रुवम् ॥
अनेन कवचेशेन रक्षां कृत्वा द्विजोत्तमः
।
विचरन् यत्र कुत्रापि विघ्नौघैः प्राप्यते
न सः ॥
मन्त्रेण म्रियते योगी कवचं यन्न रक्षितः
।
तस्मात् सर्व्वप्रयत्नेन दुर्लभं
पापचेतसाम् ॥
भूर्जे रम्भात्वचे वापि लिखित्वा
विधिवत् प्रभो ।
धारयेत् पाठयेद्वापि सम्पठेद्वापि
नित्यशः ।
सम्प्राप्नोति प्रभावं वै कवचस्यास्य
वर्णितम् ॥
नमो भैरवदेवाय सारभूताय वै नमः ।
नमस्त्रैलोक्यनाथाय नाथनाथाय वै
नमः ॥”
इति विश्वसारोद्धारतन्त्रे
आपदुद्धारकल्पे भैरव-
भैरवीसंवादे वटुकभैरवकवचं समाप्तम्
॥

**वटुकरणं**, क्ली, (वटोः करणम् ।) उपनयनम् ।

इति त्रिकाण्डशेषः ॥

“वडभी चन्द्रशालेति प्रासादादौ च
मण्डपे ॥”
इति कोषान्तरम् ॥
“शुद्धान्ते वडभी चन्द्रशाले
सौधोर्द्ध्ववेश्मनि ॥”
इति रभसः ॥
ह्रस्वान्तापि वडभिः । तां
कस्याञ्चिद्भवनवडभौ
सुप्तपारावतायामिति । मेघदूतम् । ४०
॥
वडभिः वडभी वलभिः वलभी चेति
चातूरूप्य-
मिति वृद्धाः । इति भरतः ॥ (यथा,
हरिवंशे ।
८४ । ११ ।
“सुवासिता वपुष्मन्त
उपनीतोत्तरच्छदाः ।
क्रियन्तां मञ्चवाटाश्च वडभ्यो
वीथयस्तथा ॥”)

**वडा**, स्त्री, (वड् + अच् + टाप् ।) वटकः ।

यथा, --
“कदलेनाथवा तालैर्युक्तं यत्ताण्डुलं
पिडम् ।
पिडं चूर्णं वटो वडा । इति शब्दचन्द्रिका
॥

**वड्रं**, त्रि (वडते इति । वड + बहुलमन्यत्रा-

पीति रक् ।) बृहत् । इत्यमरः । ३ । १ ।
६१ ॥ अस्य भाषा वड ॥

**वण**, ऋ शब्दे । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) ऋ, अवीवणत्
अववाणत् ।
इति दुर्गादासः ॥

**वण्ट**, त् क भागे । इति कविकल्पद्रुमः ॥ (चुरा०-

पर०-सक०-सेट् ।) वण्टयति
वण्टापयति ।
इति दुर्गादासः ॥

**वण्टः**, पुं, (वण्ट्यते इति । वण्ट् + घञ् ।) भागः ।

| | | |
|---|---|---|
| | **वठ**, स्थौल्ये । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-<br>अक०-सेट् ।) स्थौल्यमिह सामर्थ्यम् । वठति<br>दाता दातुं समर्थः स्यादित्यर्थः । इति दुर्गा-<br>दासः ॥<br><br>**वठ**, इ ङ एकचरे । इति कविकल्पद्रुमः ॥ (भ्वा०-<br>आत्म०-अक०-सेट् । इदित् ।) एककर्त्तृकचर-<br>णम् । इ, वण्ट्यते । ङ, वण्ठते चौरश्चोरयितुं<br>एकश्चरतीत्यर्थः । इति दुर्गादासः ॥ | दात्रमुष्टिः । इति हेमचन्द्रः । ६ । ७० ॥ (वण्ट<br>+ अच् ।) अकृतोद्वाहः । इति शब्दमाला<br>॥ |

**वण्टकः**, पुं, (वण्ट एव । स्वार्थे कन् ।) भागः ।

इत्यमरः । २ । ९ । ८९ ॥ (वण्ट् + ण्वुल् । विभाय-
कर्त्तरि, त्रि ॥)

**वण्ठः**, पुं, (वण्ठते इति । वठि ङ एकचरे + अच् ।)

अकृतोद्वाहः । खर्व्वः । कुन्तायुधः । इति मेदिनी । ठे, ८ ॥

**वण्ठरः**, पुं, स्थगिकारज्जुः । कुक्कुरस्य लाङ्गूलम् ।

करीरकोषः । तालस्य पल्लवम् । पयोधरः । इति
मेदिनी । रे, १८८ ॥ तत्र ओष्ठ्यवकारादौ गणितो-
ऽयम् । किन्तु वठि ङ एकचरे इत्यस्मात् अरच्-
प्रत्ययेन निष्पन्नत्वात् दन्त्यवकारादौ लिखितः ॥

**वण्ठालः**, पुं, शूरयुद्धम् । नौका । खनित्रम् । इति

मेदिनी हेमचन्द्रश्च ॥

**व(ब)ण्डः**, पुं, (वनते इति वनु सम्भक्तौ । वन् +

"ञमन्तात् डः ।" उणा० १ । ११३ । इति डः ।) अनावृतमेढ्रः । तत्पर्य्यायः । दुश्चर्म्मा २
द्विनग्नकः ३ शिपिविष्टः ४ । इति हेम-
चन्द्रः ॥

**वण्डः**, त्रि, (वनते इति । वन सम्भक्तौ । वन् +

"ञमन्तात् डः ।" उणा० १ । ११३ । इति डः ।)
हस्तादिवर्ज्जितः । इति मेदिनी । डे, २४ ॥ वँडे इति भाषा ॥

**वण्डा**, स्त्री, (वण्ड + टाप् ।) पांशुला । इति

मेदिनी । डे, २४ ॥

**वत्**, व्य, (वातीति । वा + डति ।) साम्यम् ।

तत्पर्य्यायः । वा २ यथा ३ तथा ४ एव ५ एवम् ६ । इत्यमरः ॥

**वत्सं**, क्ली, (वदतीति । वद् व्यक्तायां वाचि +

"वृतॄवदिहनिकमिकषिभ्यःसः ।" उणा०
३ । ६२ । इति सः ।) वक्षः । इत्यमरः ॥

**वत्सः**, पुं, (वदतीति । वद् + "वृतॄवदिहनिकमि-

कषिभ्यः सः ।" उणा० ३ । ६२ । इति सः ।)
वर्षः । गोशिशुः । वाछुर इति भाषा । तत्-
पर्य्यायः । शकृत्करिः २ तर्णकः ३ । इति वैश्य-
वर्गे नानार्थे चामरः ॥ दोग्धा ४ दोषकः ५
दोषः ६ । इति शब्दरत्नावली ॥ रौहिणेयः ७
बाहुलेयः ८ तन्तुभः ९ । सद्योजातस्य तस्य
पर्य्यायः । तर्णकः १ तर्णभः २ तन्तुभः ३
कचः ४ । इति जटाधरः ॥ पुत्त्रादिः । इति
मेदिनी । से, ११ ॥ वाछा इति भाषा । (यथा,
भागवते । ४ । ८ । ११ ।
"न वत्स ! नृपतेर्धिष्णं भवानारोढुमर्हति ।
न गृहीतो मया यत् त्वं कुक्षावपि नृपात्मज ! ॥"
दिवोदासपुत्त्रः । द्युमानित्यादीन्यस्य नामा-
न्तराणि । यथा, भागवते । ९ । १७ । ५ -- ६ ।
"तत्पुत्त्रः केतुमालस्य यज्ञे भीमरथस्ततः ।
दिवोदासो द्युमांस्तस्मात् प्रतर्द्दन इति स्मृतः ॥

दम्यः २ । इत्यमरः । २ । ९ । ६२ ॥
दुर्द्दान्तः ३
गडिः ४ । इति राजनिर्घण्टः ॥

**वत्सतरी**, स्त्री, (वत्सतर + ङीप् ।) वृषोत्मर्गे

वृषपत्नीत्वेन कल्पिता त्रिहायणी गौः । यथा,
कात्यायनसूत्रम् । पयस्विन्याः पुत्त्रो यूथे च
रूपवान् स्यात् तमलङ्कृत्य यूथमुख्याश्चतस्रो
वत्सतर्य्यस्ताश्चालङ्कृत्य एवं युवानं पतिं वो ददानि
तेन क्रीडन्तीश्चरथ प्रियेण मनः साप्तजनुषा
सुभगा रायस्पोषेण समिषा मदेम इत्येतयैव
ऋचोत्सृजेरन्निति । ऋगर्थस्तु हे वत्सतर्य्यो
वो युष्माकं एनं युवानं पतिं स्वामिनं ददानीत्युक्तं
प्रार्थयामि तेन वृषेण सह क्रीडन्तीः खेलन्त्य-
श्चरथ भ्रमथ हे वत्सतर्य्यो यूयमपि मानः
नास्मत्स्वत्वविषया भविष्यथ किन्तु मया
त्यक्तव्याः । वयं वृषस्य वत्सतरीणाञ्च त्यागेन
रायस्पोषेण धनसमृद्ध्या साप्तजनुषा सप्तजन्म-
व्यापकेन इषा अन्नेन च सम्मदेम हृष्टा भवामः
सुभगा लोकस्य प्रिया इति सम्मदेम इति
भविष्यत्सामीप्ये वर्त्तमान इति पाणिनिस्वर-
साद्भविष्यदर्थे वर्त्तमानः ॥ * ॥ वत्सतरीर्व्विशे-
षयति स्मृतिः ।
"अग्रतो लोहितापत्नी पार्श्वाभ्यां नीलपाण्डरे ।
पृष्ठतस्तु भवेत् कृष्णा वृषभस्य तु मोक्षणे ॥"
तासां वयःप्रमाणं यथा, --
"त्रिहायणीभिर्धन्याभिः सुरूपाभिः सुशो-
भितः ।
सर्व्वोपकरणोपेतः सर्व्वशस्यचरो महान् ।
उत्स्रष्टव्यो विधानेन श्रुतिस्मृतिनिदर्शनात् ॥"
इति शुद्धितत्त्वे वृषोत्सर्गविचारः ॥

**वत्सनाभः** पुं, (वत्सान् नभ्यति हिनस्तीति ।

**वत**, व्य, खेदः । अनुकम्पा । (यथा, शकु-
न्तलायाम् । प्रथमाङ्के ।
"क्व वत हरिणकानां जीवितञ्चातिलोलं
क्व च निशितनिपाता वज्रसाराः शरास्ते ॥")
सन्तोषः । विस्मयः । आमन्त्रणम् । इत्यमरः ।
३ । ३ । २४३ ॥

**वतंसः**, पुं, (अवतंसयति अवतंस्यतेऽनेन वेति ।
अव् + तसि + अच् । घञ् वा । अवस्याल्लोपः
।)
कर्णपूरः । कर्णभूषणम् । शेखरः । शिरो-
भूषणम् । इति मेदिनी । से, ३७ ॥ (यथा,
गीतगोविन्दे । २ । २ ।
"चलितदृगञ्चलचञ्चलमौलिकपोलविलोल
वतंसम् ।
रासे हरिमिह विहितविलासं
स्मरति मनो मम कृतपरिहासम् ॥")

**वतण्डः**, पुं, (वनतीति । वन् + "अण्डन् कृसृभृ-
वृञः ।" उणा० १ । १२८ । इत्यत्र
वनतेस्तका-
रान्तादेशः । वतण्ड इति काचिद्वृत्तिरित्यु-
ज्ज्वलदत्तोक्त्या अण्डन् प्रत्ययेन साधुः ।)
मुनि-
भेदः । इत्युणादिकोषः ॥

**वतूः**, पुं, देवनदी । सत्यवाक् । पन्थाः । अक्षि-
रोगः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**वतोका**, स्त्री, (अवगतं तोकं अपत्यं यस्याः अव-
स्याल्लोपः । अवतोका । इत्यमरटीकायां
भरतः ॥

स एव शक्रजित् वत्स ऋतध्वज
इतीरितः ।
तथा कुवलयाश्वेति
प्रोक्तोऽलर्कादयस्ततः ॥"
देशभेदः । यथा, कथासरित्सागरे ।
९ । ४ ।
"अस्ति वत्स इति ख्यातो देशो
दर्पोपशान्तये ।
स्वर्गस्य निर्म्मितो धात्रा प्रतिमल्ल
इव क्षितौ ॥")

**वत्सकं**, क्ली, (वत्स + संज्ञायां इवार्थे वा
कन् ।)
पुष्पकासीसम् । इति राजनिर्घण्टः
॥ (विव-
रणमस्य पुष्पकासीसशब्दे
ज्ञातव्यम् ॥)

**वत्सकः**, पुं, (वत्म + कन् ।) कुटजः ।
इत्यमरः ॥
(अस्य पर्य्यायो यथा, --
"वृक्षकः शक्रपर्य्यायो वत्सको
गिरिमल्लिका ।
कुटजस्तत्फलञ्चेन्द्रयवश्चापि
कलिङ्गकः ॥"
इति वैद्यकरत्नमालायाम् ॥
तथान्यः पर्य्यायः ।
"कुटजः कूटजः कौटो वत्सको
गिरिमल्लिका ।
कालिङ्गः शक्रशाखी च मल्लिकापुष्प
इत्यपि ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ॥)
इन्द्रयवः । इति राजनिर्घण्टः ॥

**वत्मकबीजं**, क्ली, (वत्सकस्य बीजम् ।)
इन्द्र-
यवः । इति राजनिर्घण्टः ॥ (यथा,
--
"व्योषं वत्सकबीजञ्च
निम्बभूनिम्बमार्कवम् ।
चित्रकं रोहिणीं पाठां
दार्व्वीमतिविषां
समाम् ॥"

नभ हिंसायाम् + "कर्म्मण्यण् ।" ३ । २ । १
।
इत्यण् ।) विषवृक्षविशेषः । इत्यमरः १ । ८ ।
११ ॥
स तु स्थावरविषभेदः । प्रायो वत्सान् नभ्यति
हिनस्ति वत्सनाभः णभ्य ग हिंसे ढात्
षन्निति
षन् । वत्सस्य नाभिरिव वत्सनाभः ष्णः
अनित-
श्चेति न वृद्धिः अयं सिन्धुवारपत्रसदृशपत्रः ।
इति भारतः ॥ * ॥ (यथा, हरिवंशे । २२३ ।
६५ ।
"वरुणा वत्सनाभाश्च पनसाश्चन्दनैः सह ॥)
तत्पर्य्यायः । अमृतम् २ विषम् ३ उग्रम् ४
महौषधम् ५ गरलम् ६ मारणम् ७ नागः ८
स्तौककम् ९ प्राणहारकम् १० स्थावरादि
११ ।
अस्य गुणाः । अतिमधुरत्वम् । उष्णत्वम् ।
वातकफकण्ठरुक्सन्निवातनाशित्वम्। पित्त-
सन्तापकारकत्वञ्च । इति राजनिर्घण्टः ॥ *
॥
अस्य स्वरूपनिरूपणं यथा ।
"सिन्धुवारसदृक्पत्रो वत्सनाभ्याकृतिस्तथा
।
यत्पार्श्वेन तरोर्वृद्धिर्व्वत्सनाभः स भाषितः
॥"
तस्य सामान्यगुणा यथा ।
"विषं प्राणहरं प्रोक्तं व्यवायि च विकासि च ।
आग्नेर्य वातकफहृद्योगवाहि मदावहम् ॥"
व्यवायि
सकलकायव्यापनपूर्ब्बकपाकगमनशीलम् ।

इति वैद्यकचक्रपाणिसंग्रहे

ज्वरातिसारे

व्योषाद्यचूर्णे ॥)

**वत्मकामा**, स्त्री, (वत्सं कामयते इति । कम् +

अच् । टाप् ।) वत्साभिलासिनी गौः

। तत्-

पर्य्यायः । वत्सला २ । इति

राजनिर्घण्टः ॥

पुत्त्रादिकामा स्त्री च ॥

**वत्सतरः**, पुं, (प्रथमवया वत्सः । "वत्सोक्षाश्वर्षभेभ्य-

श्चेति ।" ५ । ३ । ९१ । इति ष्टरच्

।) प्राप्तदमनकाल-

गवः । दोयाने वाछुर इति भाषा ।

तत्पर्य्यायः ।

बिकासि ओजःशोषणपूर्ब्बकं सन्धिबन्धशिथिली-
करणशीलम् । आग्नेयं अधिकाग्न्यंशम् । योग-
वाहि संसर्गगुणग्राहकम् । मदावहं तमो-
गुणाधिक्येन बुद्धिविध्वंसकम् ।
"तदेव युक्तियुक्तं तु प्राणदायि रसायनम् ॥
योगवाहि त्रिदोषघ्नं वृं हणं वीर्य्यवर्द्धनम् ॥
ये दुर्गुणा विषेऽशुद्धे ते स्युर्हीना विशोधनात् ।
तस्माद्विषं प्रयोगेषु शोधयित्वा प्रयोजयेत् ॥"
इति भावप्रकाशः ॥
(क्लीवेऽपि दृश्यते । यथा, --
"चत्वारि वत्सनाभानि मुस्तके द्वे प्रकीर्त्तिते ।"
"ग्रीवास्तम्भो वत्सनाभे पीतविण्मूत्रनेत्रता ॥"
इति सुश्रुते कल्पस्थाने द्वितीयेऽध्याये ॥)

**वत्सपत्तनं**, क्ली, (वत्सस्य वत्सराजस्य पत्तनम् ।)
भारतवर्षस्योत्तरे देशविशेषः ।
तत्पर्य्यायः ।
कौशाम्बी २ । इति हेमचन्द्रः । ४ । ४१ ॥

**वत्सपालः**, पुं, (वत्सान् पालयतीति । वत्स +
पालि + अण्) श्रीकृष्णः । बलदेवः ।
यथा, --
"वृन्दावनं गोवर्द्धनं यमुनापुलिनानि च ।
वीक्ष्यासीदुत्तमा प्रीती राममाधवयोर्नृप ॥
एवं व्रजौकसां प्रीतिं यच्छन्तौ बालचेष्टितैः ।

तोक्ता । इति मलमासतत्त्वम् ॥ * ॥ अथ षष्टिसंव-
त्सरगणना ।
"शकेन्द्रकालः पृथगाकृति-२२ घ्नः
शशाङ्कनन्दाश्वियुगैः ४०९१ समेतः ।
शराद्रिवस्विन्दु-१८७५ हृतः सलब्धः
षष्ट्यावशिष्टाः प्रभवादयोऽब्दाः ॥
वर्षवर्जन्तु यच्छेषं सूर्य्यैः संपूर्य्य खोर्म्मिभिः । ६० ।
हृतव्युत्क्रमतः खाग्निहृतेऽंशे मासकादयः ॥"
अस्यार्थः शकेन्द्रकालः शकराजाब्दकालः ।
पृथक् आकृतिघ्नः २२ द्वाविंशत्या पूरितः ।
शशाङ्कनन्दाश्वियुगैरेकनवत्यधिकशतद्वयाधिक-
चतुःसहस्रैः समेतोऽङ्कः । शराद्रिवस्विन्दुहृतः
पञ्चसप्तत्यधिकाष्टादशशतैर्य्यावत्संख्यं हर्त्तुं
शक्नोति तावता हृतः कर्त्तव्यः । सलब्धः पूर्ब्ब-
शकाब्दः शरेत्यादिना लब्धसंख्यया युतः
कार्य्यः । षष्ट्याप्तशेषे पश्चादेषोऽङ्कः पूर्ब्बवत्
षष्ट्याहृतलब्धस्यावशिष्टेप्रभवादयः । एकाव-
शेषे प्रभवः द्व्याद्यवशिष्टे विभवादिः । वर्ष-
वर्जन्तु यच्छेषं वर्षातिरिक्तं शराद्रिवस्विन्दुहृता-
वशिष्टं तत् सूर्य्यैर्द्वादशभिः संपूर्य्य खोर्म्मिभिः
षष्ट्या हृते व्युत्क्रमत इत्यनेन षष्टिहृताव-
शिष्टा अङ्का दण्डाः षष्टिहृतलब्धांशके खाग्नि-
हृते त्रिशता हृतेऽवशिष्टा अंशका लब्धा
मासाः स्युरिति । प्रभवादिवर्षाण्युपक्रम्य ।
"आद्या तु विंशतिर्ब्राह्मी द्वितीया वैष्णवी स्मृता ।
तृतीया रुद्रदैवत्या श्रेष्ठा मध्याधमा भवेत् ॥"
भविष्यपुराणे ।
भैरव उवाच ।
"षष्ट्यब्दं कथयाम्यत्र क्रूराः सौम्याश्च ये प्रिये ! ।
संवत्सरफलं मुख्यं प्रभवादौ वरानने ! ॥
बहुतोयास्तथा मेघा बहुशस्या च मेदिनी ।
बहुक्षीरास्तथा गावो व्याधिरोगविवर्ज्जिताः ॥
प्रशान्ताः पार्थिवाश्चैव प्रभवे परिकीर्त्तिताः । १ ।
सुभिक्षं क्षेममारोग्यं सर्व्वे व्याधिविवर्ज्जिताः ॥
प्रशान्ता मानवास्तत्र बहुशस्या बसुन्धरा ।
हृष्टास्तुष्टा जनाः सर्व्वे विभवे च वरानने ! ॥ २ ॥
रोगा बहुविधाश्चैव मनुष्या वाजिकुञ्जराः ।
सर्व्व एव प्रणश्यन्ति शुक्रे वर्षे वरानने ! ॥ ३ ॥

इक्षुक्षीरगुडादीनां प्रवलत्वं वरानने ॥ १० ॥
सुभिक्षं क्षेममारोग्यं कार्पासस्य महार्घता ।
लवणं मधु गव्यञ्च ईश्वरे दुर्लभं प्रिये ॥ ११ ॥
सुभिक्षं क्षेममारोग्यं प्रशान्ताः पार्थिवाः प्रिये ।
तस्करोपहतं वित्तं बहुधान्ये वरानने ॥ १२ ॥
राष्ट्रभङ्गश्च दुर्भिक्षं तस्करैश्चोपपीडनम् ।
जानीयाद्विग्रहं घोरं प्रमाथिनि वरानने ॥ १३ ॥
जायन्ते सर्व्वशस्यानि मेदिनी निरुपद्रवा ।
लवणं मधु गव्यञ्च महार्घं विक्रमे प्रिये ॥ १४ ॥
कोद्रवाः शालिमुद्गाश्च शक्तुमाषास्तथैव च ।
महार्घं जायते सर्व्वं वृषे च सुरवन्दिते ॥ १५ ॥
चणका मुद्गमाषाश्च अन्यच्च विदलं प्रिये ।
महार्घं जायते सर्व्वं चित्रभानौ वरानमे ॥ १६ ॥
सुभिक्षं क्षेममारोग्यं विश्वञ्च निरुपद्रवम् ।
व्यवहारो भवेत् हृष्टः स्वर्भानौ देवपूजिते ॥ १७ ॥
अतिवृष्टिश्च जायेत ध्यान्यस्याथ प्रपीडनम् ।
शस्यं भवति मामान्यं दारुणे सुरवन्दिते ॥ १८ ॥
बहुशस्यानि जायन्ते सर्व्वदेशे सुलोचने ।
सौराष्ट्रे नाटदेशे च पार्थिवे नात्र संशयः ॥ १९ ॥

कलवाक्यैः स्वकालेन वत्सपालौ
बभूवतुः ॥”
इति श्रीभागवते । १० । ११ । ३६ ॥
(वत्सपालके, त्रि । यथा, हरिवंशे ।
६७ । २४ ।
“स तत्र वयसा तुल्यैर्व्वत्सपालैः
सहानघः ।
रेमे वै दिवसं कृष्णः पुरा स्वर्गगतो यथा
॥”)

**वत्सरः**, पुं, (वसन्त्यस्मिन् अयनर्त्तुमासपक्षवारा-
दय इति । वस निवासे + “वसेश्च ।” उणा०
३ । ७१ । इति सरन् । “सः स्यार्द्धधातुके ।”
७ । ४ । ४९ । इति सस्य तः ।) द्वादशमासा-
त्मककालः । अयनद्वयात्मकश्च । तत्पर्य्यायः ।
संवत्सरः २ अब्दः ३ हायनः ४ शरत् ५ समा
६ । इत्यमरः । १ । ४ । २० ॥ शरदा ७ वर्षम्
८ वरिषम् ९ संवत् १० । इति शब्दरत्नावली ॥ * ॥
“व्रतबन्धविवाहे च वत्सरपरिकल्पनमाह्वुरा-
चार्य्याः ।
आधानपूर्ब्बमेके प्रसूतिपूर्ब्बं सदान्ये तु
॥”
सौरसावननाक्षत्रचान्द्रभेदेन चतुर्व्विधो
वत्सरः ।
यथा चूडोपनयनादिषु वर्षगणना सावनेन
शुभाशुभगणनन्तु सौरेणेति सिद्धम् । सावनसंवत्-
सरेण एकदिनाधिकवत्सरो नाक्षत्रो भवती-
त्यनयोर्भेदः । सौरस्तु पञ्चषष्ट्यधिकत्रिशत-
दिनैर्भवति । यथा, --

उन्मत्तञ्च जगत् सर्व्वं धनधान्यसमाकुलम् ।
नित्योत्सवः प्रजावृद्धिः प्रमोदे जायते प्रिये ॥ ४ ॥
नीरोगाश्च निराबाधा मानवा विगतद्विषः ।
बहुक्षीरास्तथा गावः प्राजापत्ये वरानने ॥ ५ ॥
निरातङ्कं जगत् सर्व्वं धनयौवनगर्व्वितम् ।
अङ्गिरसि प्रजाः सर्व्वा नित्योत्साहा वरानने ॥ ६ ॥
सुभिक्षं क्षेममारोग्यं वर्षाकालं सुशोभनम् ।
शस्यवृद्धिं विजानीयात् श्रीमुखे सुरवन्दिते ॥ ७ ॥
बहुक्षीरास्तथा गावो धान्यञ्च बलवत्तरम् ।
जायन्ते सर्व्वशस्यानि भावे वर्षे वरानने ॥ ८ ॥
महार्घं जायते सर्व्वं घृततैलरसादिकम् ।
प्रजानाञ्च भवेद्वृद्धिर्यूनि संवत्सरे शुभे ॥ ९ ॥
निष्पत्तिः सर्व्वशस्यानां मध्या धातरि कीर्त्तिता ।

दुर्भिक्षं जायते घोरं सर्व्वोपद्रवसंयुतम् ।
अनावृष्टिः समाख्याता व्यये संवत्सरे प्रिये ॥ २० ॥
उद्यतो वर्षणे मेघो जलं नैवोपजायते ।
महार्घं सर्व्वजिद्वर्षे सर्व्वमेव वरानने
॥ २१ ॥
कोद्रवाः शालिमुद्गाश्च कङ्गुमाषास्तथैव च ।
सुलभं जायते सुस्थं जगद्वै सर्व्वधारिणि ॥ २२ ॥
अनग्निप्रबला लोका धान्यौषधिप्रपीडनम्।
जायते मानुषे कष्टं विरोधिनि न संशयः ॥ २३ ॥
सर्व्वाः प्रजाः प्रपीड्यन्ते व्याधिः शोकश्च जायते ।
शिरोवक्षोऽक्षिरोगाश्च पापाद्धि विकृते
जनाः ॥ २४ ॥
उपद्रुतं जगत् सर्व्वं तस्करैर्मूषिकैः खगैः ।
पीडिताश्च प्रजाः सर्व्वा देशभङ्गाः खरे ।
प्रिये ॥ २५ ॥
सुभिक्षं क्षेममारोग्यं शस्यं भवति शोभनम् ।
बहुक्षीरास्तथा गावो नन्दनं नन्दने
प्रिये ॥ २६ ॥
अल्पतोयास्तथा मेघा वर्षन्ति खण्डमण्डले ।
नश्यन्ति सर्व्वशस्यानि विजये नात्र
संशयः ॥ २७ ॥
क्षत्त्रियाश्च तथा वैश्याः शूद्राश्च नटनर्त्तकाः ।
पीडितास्ते वरारोहे जये सर्व्वे न
संशयः ॥ २८ ॥
सरोगञ्च तथा देवि दाहज्वरसमन्वितम्।

| | | |
|---|---|---|
| “मेषादीनामहर्वृन्दं षण्णां सप्ताष्टचन्द्रकम् । १८७ । तुलादीनामष्टसप्तचन्द्रकन्तुलिखेत्ततः ॥” १७८ ॥ चान्द्रवत्सरोऽपि द्वादशमासैर्भवति । मलमास- पाते तु त्रयोदशमासैर्भवति । तथा च श्रुतिः । द्वादशमासाः संवत्सरः क्वचित्त्रयोदशमासाः मंवत्सर इति । त्रयोदशेत्यधिमासे । स्मृतिः । यस्मिन्नब्दे द्वादशैकश्च यव्य इति । यव्यो मास इति । यव्या मासाः स्वमेकः संवत्सर इति शतपथश्रुत्या यव्य-स्वमेक- शब्दयोर्मासवर्षपर्य्याय- | | अभिभूतं जगत् सर्व्वं मन्मथे सुरवन्दिते ॥ २९ ॥ तुषधान्यक्षयो देवि सर्व्वशस्यमहार्घता । व्यवहाराश्च नश्यन्ति दुर्मुखे दुर्मुखाः प्रजाः ॥ ३० ॥ पीड्यभ्ते सर्व्वशस्यानि देशे देशे शुचिस्मिते । हेमलखे प्रजाः सर्व्वाः क्षीयन्ते नात्र संशयः ॥ ३१ ॥ तस्करैः पार्थिवैश्चैव अभिभूतमिदं जगत् । अर्घो भवति सामान्यो विलम्बे तु भयं महत् ॥ ३२ ॥ विषमस्थं जगत् सर्व्वं विरोधे भयसंप्लवम् । विकारी सर्व्वतोऽपायो मम वाक्यन्तु नान्यथा ॥ ३३ ॥ क्वचिद्वर्षति पर्ज्जन्यो देशे संछिन्नमण्डलः । दुर्भिक्षं शर्व्वरीवर्षे व्यवहारो विपर्य्ययः ॥ ३४ ॥ |

दुर्भिक्षं जायते सर्व्वा मेदिनी
दुष्यति प्रिये ।
प्लवे प्लवन्ति तोयानि पीडिता
मानवाभुवि ॥ ३५ ॥
सुवर्णरूप्यधान्यानि जगत् सर्व्वं
सुशोभनम् ।
ब्राह्मणा बणिजस्तुष्टाः सुभिक्षे
शुभकृत्
प्रिये ॥ ३६ ॥
सुभिक्षं क्षेममारोग्यं तृप्ता
गोब्राह्मणाः प्रिये ।
सुस्थिताः शोभने वर्षे प्रजाः
सर्व्वाः सुलो-
चने ॥ ३७ ॥
विषमस्थं जगत् सर्व्वं व्याकुलं
समुदाहृतम् ।
जनानां जायते भद्रे क्रोधे क्रोधः
परस्परम् ॥ ३८ ॥
सर्व्वत्र जायते क्षेमं
सर्व्वशस्यमहार्घता ।
विश्वावसौ वरारोहे कार्पासस्य
महार्घता ॥ ३९ ॥
पार्थिवैर्नृपसैन्यैश्च समस्तैः
खण्डमण्डले ।
प्रपीड्यन्ते जनाः सर्व्वे भयभीताः
पराभवे ॥ ४० ॥
तृणधान्यानि पीड्यन्ते ग्रीष्मे
वर्षति वासवः ।
प्लवङ्गे पीडिताः सर्व्वाः प्रजाश्च
सुरवन्दिते ॥ ४१ ॥
जायन्ते सर्व्वशस्यानि सुभिक्षं
निरुपद्रवम् ।
सौम्यदृष्टिर्भवेद्राजा कालिके च
शुभं वदेत् ॥ ४२ ॥
सुभिक्षं क्षेममारोग्यं सुखञ्च
निरुपद्रवम् ।
सौम्यदृष्टिर्भवेद्राजा सौम्ये सौख्यं
प्रकी-
र्त्तितम् ॥ ४३ ॥

विरुद्धाः पार्थिवा देवि रौद्रे संवत्सरे प्रिये ! ॥
५४ ॥
दुर्भिक्षं मध्यमं प्रोक्तं व्यवहारो न वर्त्तते ।
भवेद्वै मध्यमा वृष्टिर्दुर्म्मतौ समुपस्थिते ॥ ५५ ॥
सुभिक्षं जायते लोकः सर्व्वोपद्रववर्ज्जितः ।
प्राणिनां जायते हर्षो दुन्दुभौ वरवर्णिनि ॥ ५६ ॥
महिषीगोहिरण्यादिताम्रकांस्याद्यशेषतः ।
तत् सर्व्वं देवि ! विक्रीय कर्त्तव्यो धान्यसञ्चयः
॥
रक्ते संवत्सरे देवि ! क्रूरबुद्धिर्नराधिपः ।
मानवाः क्रूरचेष्टाश्च संग्रामे न जयो भवेत् ॥ ५७
दुर्भिक्षं मरणं रोगो धान्यौषधिप्रपीडनम् ।
पापरोगो भवेद्देवि ! रक्ताक्षेऽमरवन्दिते ॥ ५८ ॥
रोगो मरणदुर्भिक्षं विरोधो बहुसंकुलः ।
क्रोधे तु विषमं सर्व्वं समाख्यातं हरप्रिये ! ॥
५९
मेदिनी चलते देवि ! सर्व्वभूतं चराचरम् ।
देशभङ्गश्च दुर्भिक्षं क्षये संक्षीयते प्रजा ॥
सौराष्ट्रे मालवे देशे दक्षिणे कोङ्कणे तथा ।
दुर्भिक्षं जायते घोरं क्षये संवत्सरे प्रिये ! ॥
कौमुदीचर्म्मनद्योश्च यमुनानर्म्मदातटे ।
विन्ध्यायां सैन्धवे चापि विनश्यति न संशयः ॥
सिंहलं मध्यदेशश्च कालञ्जरं तथैव च ।
क्षये क्षयन्ति सर्व्वाणि नान्यथा वरवर्णिनि ॥”
६० ॥ * ॥
कार्त्तिकादिद्वादशवर्षाणियथा । वराहसंहि-
तायाम् ।
“नक्षत्रेण सहोदयमस्तं वा येन याति सुर-
राजमन्त्री ॥”
तत्सञ्ज्ञं वक्तव्यं वर्षं मासक्रमेणैव ॥
वर्षाणि कार्त्तिकादीनि आग्नेयाद्भद्वयानु-
योगीनि ।
क्रमशस्त्रिभञ्च पञ्चममन्त्यमुपान्त्यञ्च विज्ञेयम्
॥”
नक्षत्रेण गुरुभुज्यमाननक्षत्रेण । आग्नेयं
कृत्तिका । पञ्चमं फाल्गुनं वर्षम् । अन्त्य-
माश्विनम् । उपान्त्यं भाद्रम् ।
“अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गुनश्च त्रिभो
मतः ।

वृद्धिस्तु रक्तपीतकुसुमानां कार्त्तिके वर्षे ॥ १
॥
सौम्येऽब्देऽनावृष्टिर्मृगाखुशलभाण्डजैश्च
शस्य-
नाशः ।
व्याधिभयं मित्रैरपि भूपानां जायते वैरम् ॥ २
॥
शुभकृज्जातः पौषो निवृत्तवैराः परस्परं
भूपाः ।
द्वित्रिगुणो धान्यार्घः पौष्टिककर्म्मप्रसिद्धिश्च
॥ ३ ॥
पितृपूजा परिवृद्धिर्म्माघे हार्द्दञ्च सर्व्वभूता-
नाम् ।
आरोग्यवृष्टिधान्यार्घसम्पदो वित्तलाभश्च ॥
४ ॥
फाल्गुने वर्षे विद्यात् क्वचित् क्वचित् क्षेम-
वृष्ट्यादिशस्यानि ।
दौर्भाग्यं प्रमदानां प्रबलाश्चौरा नृपाश्चोग्राः ॥
५
चैत्रे मन्दा वृष्टिः प्रियमन्नं क्षेममवनिपा
मृदवः ।
वृद्धिश्च कोषधान्यस्य भवति पीडा च रूप-
वताम् ॥ ६ ॥
वैशाखे धर्म्मपरा विगतभयाः प्रमुदिताः
प्रजाः
सनृपाः ।
यज्ञक्रियाप्रवृत्तिर्निष्पत्तिः सर्व्वशस्यानाम् ॥
७ ॥
ज्यैष्ठे ज्ञातिकुलधर्म्मश्रेणीश्रेष्ठा नृपाः सर्व्व-
धर्म्मज्ञाः ।
पीड्यन्ते धान्यानि च हित्वा कङ्गुशमीजानि
॥ ८
आषाढे जायन्ते शस्यानि क्वचिद्वृष्टिरन्यत्र ।
योगक्षेमं मध्यं शस्यव्यग्रा भवन्ति भूपाः ॥ ९
॥
श्रावणे वर्षे क्षेमं कामं शस्यानि पाकमुप-
यान्ति ।
क्षुद्रा ये पार्थिवास्ते पीड्यन्ते ये च तद्भक्ताः ॥
१० ॥

तोयपूर्णो भवेन्मेघो वर्षते च दिने
दिने ।
निरुपद्रवाश्च राजानः
सर्व्वसाधारणे प्रिये ॥ ४४ ॥
वासवो वर्षते देवि देशे
चाखण्डमण्डले ।
अहिच्छत्रे कान्यकुब्जे विरोधी
कृषिनाश-
कृत् ॥ ४५ ॥
अभिभूतं जगत् सर्व्वं
क्लेशैर्व्वहुविधैः प्रिये ।
मारुतैः फलदाहैश्च परिवारिणि
शोभने ॥ ४६ ॥
निष्पत्तिः सर्व्वशस्यानां सुभिक्षं
भवति प्रिये ।
प्रमाथिनि जलोद्गारी जलदो
मोदते प्रजा ॥ ४७ ॥
निष्पत्तिः सर्व्वशस्यानां
सर्व्वशस्यमहार्घता ।
घृतं तैलसमं याति आनन्दे नन्दति
प्रजा ॥ ४८ ॥
कोद्रवाः शालिमुद्गाश्च पीड्यन्ते
वरवर्णिनि ।
सर्व्वौषधानि धान्यानि राक्षसे
निष्ठुराः
प्रजाः ॥ ४९ ॥
दुर्भिक्षं जायते घोरं
धान्यौषधिप्रपीडनम् ।
अनले च समाख्यातं नात्र कार्य्या
विचा-
रणा ॥ ५० ॥
देशभङ्गः सुदुर्भिक्षं समासात्
कथयाम्यहम् ।
पिङ्गले चारुपद्माक्षि दुर्भिक्षं
नर्मदातटे ॥ ५१ ॥
गोमहिष्यो विनश्यन्ति ये चान्ये
नटनर्त्तकाः ।
वासवो वर्षते देवि शस्यञ्च नहि
जायते ॥
तिलसर्षपमाषादिकार्पासानां
महार्घता ।

शेषा मासा द्विभा ज्ञेयाः कृत्तिकादिव्यवस्थया ॥
द्वे द्वे चित्रादिताराणां पूर्णपर्व्वेन्दुसङ्गते ।
मासाश्चैत्रादयो ज्ञेयास्त्रिकैः षष्ठान्त्यसप्तमाः ॥”
इति सङ्कर्षणकाण्डाच्च ॥
पूर्णपर्व्वेन्दुसङ्गते पौर्णमासीयुते द्वे द्वे तारे
तदेकवाक्यतया पूर्व्ववचने पौर्णमासीलाभः ।
यथा मासानां पौर्णमास्यां कृत्तिकादिसम्बन्धात्
कार्त्तिकादित्वं तथा वर्षाणामपि गुरोः कृत्ति-
कादावस्तोदयसम्बन्धात्कार्त्तिकादित्वं तेन
कृत्तिकारोहिण्योरेकतरस्मिन् गुरोरस्तोदये-
ऽन्यतरलाभे कार्त्तिकं वर्षम् । एवं मार्ग-
शीर्षादि । अत्र वर्षद्वयघटकयोर्नक्षत्रयोरेक-
तरस्मिन् अस्तं गतो गुरुरन्यतरस्मिन्नुदेति तत्र
का गतिरिति चेत् कार्त्तिकोत्तरं मार्गशीर्षं
ततः पौषमित्यादिक्रमाद्गतिरिति । फलानि च
।
“शकटानलोपजीविकगोपीडाव्याधिशोकश्च ।

भाद्रपदे वल्लीजं निष्पत्तिं याति पूर्ब्बशस्यञ्च ।
न भवत्यपरं शस्यं क्वचित् सुभिक्षं क्वचिच्च
दुर्भिक्षम् ॥ ११ ॥
आश्वयुजेऽप्यजस्रं पतति जलं प्रमुदिताः
प्रजाः
क्षेमम् ।
प्राणचयः प्राणभृतां सर्व्वेषामर्थवाहुल्यम् ॥”
१२ ॥
इति ज्योतिस्तत्त्वम् ॥ * ॥
समाद्यादिपञ्चवत्सरा यथा, --
“शकाब्दात् पञ्चभिः शेषात् समाद्यादिषु वत्-
सराः ।
सम्परीदानुपूर्ब्बाश्च तथोदापूर्व्वका मताः ॥”
संवत्सरादिफलमुक्तं विष्णुधर्म्मोत्तरे ॥
“संवत्सरे तथा दानं तिलस्य तु महाफलम् ।
परिपूर्व्वे तथा दानं यवानाञ्च द्विजोत्तमाः ॥
इदापूर्व्वेऽन्नवस्त्राणां धान्यानाञ्चानुपूर्व्वके ।
उदासंवत्सरे दानं रजतस्य महाफलम् ॥
ज्जोतिर्व्विदस्त्विज्यमध्यात् प्रभवादेश्च
सम्भवम् ।
ऊचुस्तद्वत् समाद्यादिवर्षाणामपि सम्भवम्
॥”
इज्यमध्यात् । गुरुमध्यभोगगणनात् ।
प्रभवादेः ।
प्रभवादिवर्षषष्टेः । इति मलमासतत्त्वम् ॥ *
॥
(ध्रुवपुत्त्रः । यथा, भागवते । ४ । १० । १ ।
“प्रजापतेर्दुहितरं शिशुमारस्य वै ध्रुवः ।
उपयेमे भ्रमिं नाम तत्सुतौ कल्पवत्सरौ ॥”)

**वत्सरान्तकः**, पुं, (वत्सरस्यान्ते कायति शोभते
इति । कै + कः । यद्वा, वत्सरस्यान्तो नाशो
यस्मात् ।) फाल्गुनमासः । इति
राजनिर्घण्टः ॥

| गोमहिष्यः सुवर्णानि<br>कांस्यताम्राद्यशेषतः ॥<br>तत् सर्व्वं देवि विक्रीय कर्त्तव्यो<br>धान्यसञ्चयः ।<br>तेन धान्येन लोकोऽयं<br>निस्तरिष्यति दुर्द्दिनम् ।<br>पार्थिवा मोषका दीनाः कालयुक्ते<br>प्रपी-<br>डिताः ॥ ५२ ॥<br>तोयपूर्णाः स्मृता मेधा बहुशस्या च<br>मेदिनी ।<br>निष्ठुराः पार्थिवा देवि ! सिद्धार्थे च<br>वरा-<br>नने ! ॥ ५३ ॥<br>अल्पतोया घनाश्चैव कीटकाः<br>प्रबलाः स्मृताः । | | |
|---|---|---|

**वत्सलः**, त्रि, (वत्से पुत्त्रादिस्नेहपात्रे कामो-

ऽस्यास्तीति । वत्स + "वत्सांसाभ्यां
काम-
बले ।" ५ । २ । ९८ । इति लच् ।)
स्नेह-
युक्तः । तत्पर्य्यायः । स्निग्धः २ ।
इत्यमरः ।
३ । १ । १४ ॥ (यथा, भागवते । १ । ५
। ३० ।
"ज्ञानं गुह्यतमं यत्तत् साक्षात्
भागवतोदितम् ।
अन्ववोचन् गमिष्यन्तः कृपया
दीनवत्सलाः ॥"
वत्सं लाति गृह्णातीति । ला + कः ।
वत्स-
कामुके च ॥)

**वत्सलः**, पुं, (वत्स + लच् ।) शृङ्गारादिदश-

रसान्तर्गतरसविशेषः । तत्पर्य्यायः ।
वात्सल्यम्
२ । इति जटाधरः ॥ (अस्य
लक्षणोदाहरणे
तु रसशब्दे ज्ञातव्ये ॥ * ॥
स्कन्दानुचरविशेषः ।
यथा, महाभारते । ९ । ४५ । ६९ ।
"वत्सलो मधुवर्णश्च कलसोदर एव च
॥")

**वत्सला**, स्त्री, (वत्से कामोऽस्त्यस्या इति । लच् ।

यद्वा, वत्सं लातीति । ला + कः ।)
वत्सकामा
गौः । इति हेमचन्द्रः । ४ । ३२७ ॥
(यथा,
रामायणे । २ । ४३ । १८ ।
"साहं गौरिव सिंहेन विवत्सा वत्सला
कृता ।
कैकेय्या पुरुषव्याघ्र बालवत्सेव
गौर्बलात् ॥")

**वत्साक्षी**, स्त्री, (वत्सस्याक्षीव गात्रचिह्नं यस्याः ।

**वदनं**, क्ली, (वदन्त्यनेनेति । वद् + करणे ल्युट् ।)

मुखम् । इत्यमरः ॥ (यथा,
आर्य्यासप्तशत्याम् ।
२७६ ।
"दर्शनविनीतमाना गृहिणी
हर्षोल्लसत्कपोल-
तलम् ।
चुम्बननिषेधमिषतो वदनं पिदधाति पाणि-
भ्याम् ॥"
लक्षणया अग्रभागः । यथा, सुश्रुते । १ । ७
।
"त्रीण्यन्यानि (यन्त्राणि) जाम्बववदनानि
त्रीण्यङ्कुशवदनानि
षडवाग्निकर्म्मस्वभिप्रेतानि ॥"
वद + भावे ल्युट् । कथनम् ॥)

**वदनासवः**, पुं, (वदनस्य आसवः ।) अधरमधु ।

इति भूरिप्रयोगः ॥

**वदन्तिः**, स्त्री, (वद् + "वदेश्च ।" इत्युज्ज्वल-

दत्तोक्त्या झिच्प्रत्ययः । ३ । ५० ॥ कृदि-
कारादिति वा ङीष् ।) कथा । इति
सिद्धान्त-
कौमुदी ॥ विसर्गशून्यं वदन्तिपदं क्रियापदं
भवति ॥ (यथा, मनुः । १२ । ११५ ।
"यं वदन्ति तमोभूता मूर्खा धर्म्ममतद्विदः
॥")

**वदन्ती**, स्त्री, (वद् + "वदेश्च ।" इत्युज्ज्वल-

दत्तोक्त्या झिच्प्रत्ययः । ३ । ५० ॥ कृदि-
कारादिति वा ङीष् ।) कथा । इति
सिद्धान्त-
कौमुदी ॥ विसर्गशून्यं वदन्तिपदं क्रियापदं
भवति ॥ (यथा, मनुः । १२ । ११५ ।
"यं वदन्ति तमोभूता मूर्खा धर्म्ममतद्विदः
॥")

**वदन्यः**, त्रि, वदान्यः । इत्यमरटीकासारसुन्दरी ॥

**वदान्यः**, त्रि, (वदति सर्व्वेभ्य एव दास्यामीति मनो-

**वधः**, पुं, (हननमिति । हन् + अप् । वधादेशः ।)

प्राणवियोगफलकव्यापारः । तत्पर्य्यायः ।
प्रमा-
पणम् २ निवर्हणम् ३ निकारणम् ४ निशा-
रणम् ५ प्रवासनम् ६ परासनम् ७ निसू-
दनम् ८ निहिंसनम् ९ निर्व्वासनम् १०
संज्ञ-
पनम् ११ निर्ग्रन्थनम् १२ अपासनम् १३
निस्तर्हणम् १४ निहननम् १५ क्षणनम् १६
परिवर्ज्जनम् १७ निर्व्वापणम् १८
विशसनम् १९
मारणम् २० प्रतिघातनम् २१ उद्वासनम्
२२
प्रमथनम् २३ क्रथनम् २४ उज्जासनम्
२५
आलम्भः २६ पिञ्जः २७ विशरः २८
घातः २९
उन्मन्थः ३० । इत्यमरः ॥ हिंसा ३१
वातनम् ३२ विदारणम् ३३ पिञ्जकम् ३४
पातः ३५ परिघः ३६ परिघातनम् ३७
कद-
नम् ३८ निवारणम् ३९ समाघातः ४०
निर्ग-
न्धनम् ४१ मारिः ४२ मारी ४३ उत्पातः
४४
मारकः ४५ मरकः ४६ मारः ४७ संघातः
४८ ।
इति शब्दरत्नावली ॥ * ॥ पुण्यप्रदवधो
यथा, --
"एकस्य यत्र निधने प्रवृत्ते दुष्टकारिणः ।
बहूनां भवति क्षेमं तस्य पुण्यप्रदो वधः ॥
रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः ।
आत्मानं घातयेद्यस्तु तस्य पुण्यप्रदो वधः
॥"
इति कालिकापुराणे २० अध्यायः ॥
अपि च ।
"कथं नु स्त्रीवधं कुर्य्यां महापातकिनामपि ।
स्त्रीवधे तु महापापं यथा ब्रह्मवधे मुने ॥
इति रामवचः श्रुत्वा विश्वामित्रस्तमाह वै ॥

षच् समासे ।) गोडुम्बा । इति जटाधरः ॥

**वत्सादनः**, पुं, (अत्तीति । अद् + ल्युः । वत्सानां अदनो भक्षकः ।) वृकः । इति राजनिर्घण्टः ॥

**वत्सादनी**, स्त्री, (वत्सैरद्यते प्रियत्वादिति । अद् ल्युट् । ङीप् ।) गुडूची । इत्यमरः । २ । ४ । ८९ ॥

**व(ब)द**, इ ङ नुत्यभिवादयोः । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट् ।) अभिवादो नमस्कारः । इ, वन्द्यते । ङ, वन्दते गुरुं लोकः । नमस्करोति स्तौति वा इत्यर्थः । इति दुर्गादासः ॥

**व(ब)द**, ऐ वाचि । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) ऐ, उद्यात् । इति दुर्गादासः ॥ ("क्विपि संवत् दन्त्योष्ठत्वात् पक्षे सानुनासिको वकारः सँव्वत् यस्तु मन्यते नायं संप्रसारिणो वदेः प्रयोगः किन्तर्हि बद स्थैर्य्य इत्यस्य ओष्ठ्यबकारादेः तन्मते मकारवदपि सम्बदिति वर्णदेशना ।" इति मनोरमा ॥)

**वद**, क वाक्सन्देशयोः । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-सक०-आत्म०-इत्येके-सेट् ।) क, वादयति । सन्देशो वचनविशेषः । अयमात्मनेपदीत्येके । इति दुर्गादासः ॥

**वद**, ञ ङ वाक्सन्देशयोः । इति कविकल्पद्रुमः ॥ (भ्वा०-उभ०-आत्म०-इत्येके-सक०-सेट् ।) ञ, हरवाक्यमिति । वद् + "वदेरान्यः ।" उणा० ३ । १०४ । इति आन्यः ।) बहुप्रदः । (यथा, रघुः । ५ । २४ ।
"गतो वदान्यान्तरमित्ययं मे
माभूत् परीवादनवावतारः ॥")
वल्गुवाक् । इत्यमरः । ३ । १ । ६ ॥ (स्वनामख्यात ऋषिविशेषे, पुं । यथा, महाभारते । १३ । १९ । ११ ।
"निवेष्टुकामस्तु पुरा अष्टावक्रो महातपाः ।
ऋषेरथ वदान्यस्य वव्रे कन्यां महात्मनः ॥")

**वदामं**, क्ली, फलविशेषः । वादाम इति भाषा ॥ तत्पर्य्यायः । सुफलम् २ वातवैरिः ३ नेत्रोपमम् ४ । अस्य गुणाः । उष्णत्वम् । सुस्निग्धत्वम् । वातघ्नत्वम् । गुरुत्वम् । शुक्रकारित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
"वातादो वातवैरी स्यान्नेत्रोपमफलस्तथा ।
वाताद उष्णः सुस्निग्धो वातघ्नः शुक्रकृत् गुरुः ॥
वातादमज्जा मधुरो वृष्यः षित्तानिलापहः ।
स्निग्धोष्णकफहृत् श्रेष्ठो रक्तपित्तविकारिणाम् ॥"
इति भावप्रकाशः ॥

**वदालः**, पुं, (वद + घञर्थे कः । वदेन वदनेन अलति पर्य्याप्नोतीति । वद + अल् + अच् ।) मत्स्यविशेषः । वोयालि इति भाषा । तत्पर्य्यायः । पाठीनः २ । इति त्रिकाण्डशेषः ॥ हव्यकव्ययोस्तस्योपयोगित्वं यथा, मनुः ।
"पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः ॥"

**वदालकः**, पुं, (वदाल एव । स्वार्थे कन् ।) पाठी-

यस्यास्तु बहवो मासान् म्रियन्तेऽपि द्विजन्मनः ।
न पापं विद्यते तेन न दोषा नृपनन्दन ॥
यस्यास्तु निधनाद्राम जनाः स्युः सुखिनो भृशम् ।
भवन्ति सततं तस्मात्तस्याः पुण्यप्रदो वधः ॥"
इत्यग्निपुराणम् ॥ * ॥
अपि च ।
"नैकस्यार्थे बहून् हन्यादिति शास्त्रेषु निश्चयः ।
एकं हन्याद्बहूनां हि न पापी तेन जायते ॥"
इति वामनपुराणे ५५ अध्यायः ॥ * ॥
"नाततायिवधे दोषो हन्तुर्भवति कश्चन ।"
इति गीतायाः १ । २६ श्लोकटीकायां स्वामी ॥
पापजनकवधः प्रायश्चित्तशब्दे द्रष्टव्यः ॥ * ॥
वधबन्धौ पूर्ब्बकर्म्मवश्यौ यथा, --
"न कश्चित्तात केनापि बध्यते हन्यतेऽपि वा ।
वधबन्धौ पूर्व्वकर्म्मवश्यौ नृपतिनन्दन ॥"
इति वामनपुराणे ६२ अध्यायः ॥ * ॥
पारिभाषिकवधो यथा, --
"वपनं द्रविणादानं देशान्निर्यापनन्तथा ।
एष हि ब्रह्मबन्धूनां वधो नान्योऽस्ति दैहिकः ॥"
इति महाभारते सौप्तिकपर्व्व ॥
(वधप्रकारो वधित्वभेदादिकञ्च वधिन्निति शब्दे द्रष्टव्यम् ॥)

**वधकः**, पुं, (हन्तीति । हन् + क्वुन् । "हनो वध च ।" उणा० २ । ३६ इति वधादेशः ।) वधकर्त्ता ।

वदति वदते । ङ, वदते ।

अयमात्मनेपदीत्यन्ये ।

इति दुर्गादासः ॥

**वदः**, त्रि, (वदति वक्तीति । वद् + पचाद्यच् ।)

वक्ता । इत्यमरः । ३ । १ । ३५ ॥

नमत्स्यः । इति भूरिप्रयोगः ॥

**वदावदः**, त्रि, (अत्यन्तं वदतीति । वद् + अच् ।

“चरिचलीति ।” ३ । १ । २३४ । इत्यस्य वार्त्तिकोक्त्या

निपातितम् ।) वक्ता । इत्यमरः । ३ । १ । ३५ ॥

हिंसः । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥
व्याधिः । मृत्युः । इति
संक्षिप्तसारोणादिवृत्तिः ॥

**वधकर्म्म**, क्ली, (वधः एव कर्म्म ।) प्राणवियोग-
फलकव्यावारः । तद्वैदिकपर्य्यायः ।
दभ्नोति १
श्नथति २ ध्वरति ३ धूर्व्वति ४ वृणक्ति ५
वधति ६ कृण्वति ७ कृन्तति ८ श्वसिति
९
नमते १० अर्द्दयति ११ स्तृणाति १२
स्नेह-
यति १३ यातयति १४ स्फुरति १५
स्फुलति १६
निपयन्तु १७ अवतिरति १८ वियातः
१९
आतिरत् २० तळित् २१ आखण्डलः
२२
दूणाति २३ रम्नाति २४ शृणाति २५
शम्नाति २६ तृणेल्हि २७ ताल्हि २८
नितोशते २९ निवर्हयति ३० मिनाति
३१
मिनोति ३२ धमति ३३ । इति
त्रयस्त्रिंशद्वध-
कर्म्माणः । इति वेदनिघण्टौ । २ । १९ ॥

**वधत्रं**, क्ली, (वध्यतेऽनेन इति । वध + "अमिनक्षि-
यजिवधिपतिभ्याऽत्रन् ।" उणा० ३ ।
१०५ । इति
अत्रन् ।) अस्त्रम् । इत्युणादिकोषः ॥

**वधस्थली**, स्त्री, (वधाय वधस्य वा स्थली स्थानम् ।)
प्राणिवधस्थलम् । मशान इति भाषा ।
तत्-
पर्य्यायः । आघातः २ । इति
त्रिकाण्डशेषः ॥
प्रघातः ३ वधस्थानम् ४ । इति
शब्दरत्नावली ॥
आघातनम् ५ । इति हारावली ॥
अत्र प्रयोजकस्य कर्त्तृप्रयुक्तिद्वारेण वधकार-
णत्वम् । अनुमन्तुश्च हन्तुर्निर्भयत्वेन
दृढतर-
प्रहारोत्पत्तिद्वारेण । अनुग्राहकस्य
पलायना-
द्यसम्भवेन हननीयस्थैर्य्यं कुर्व्वतः
प्रहारस्वरू-
पोत्पत्तिद्वारेण वा कारणत्वम् । निमित्तिनो
हन्तुर्मन्यूत्पादनद्वारेणेति । प्रयोजकादीनां
चतुर्णां व्यवहितहननकारणानामवान्तरभेदा-
द्भेदः । अतः पञ्चविधं वधित्वम् । इति प्राय-
श्चित्तविवेकः ॥

**वधोद्यतः**, त्रि, (वधाय उद्यतः ।) परवधायोद्-
युक्तः । तत्पर्य्यायः । सन्नद्धः २ आततायी
३ ।
इत्यमरः ॥ आततायिवधापवादमाहबृह-
स्पतिः ।
"नाततातिवधे हन्ता प्राप्नुयात् किल्विषं
क्वचित् ।
विनाशार्थिनमायान्तं घातयन्नापराध्नुयात्
॥"
कात्यायनः ।
"आततायिनमायान्तमपि वेदान्तपारगम् ।
जिघांसन्तं जिघांसीयात् न तेन ब्रह्महा
भवेत् ॥"
जिघांसी सन् ईयात् गच्छेदित्यर्थः । देवलः
।
"उद्यम्य शस्त्रमायान्तं भ्रूणमप्याततायिनम् ।
निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत्
॥"
भ्रूणो ब्राह्मणविशेषः । दोषदर्शनं नियमार्थम् ।
मनुविष्णू ।
"गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् ।
आततायिनमायान्तं हन्यादेवाविचारयन् ॥"
एवकारो नियमार्थः । तथा ।
"नाततायिवधे दोषो हन्तुर्भवति कश्चन ।
प्रकाशं वाप्रकाशं वा मन्युस्तन्मन्युमृच्छति
॥"
जन्मपदेन जातिकुलञ्चोच्यते । तेन
हन्त्रपेक्षया
तपोविद्याजातिकुलैरुत्कृष्टो नाततायी
वध्यः
तदन्यो वध्य एव । भगवद्गीतायाम् । १
। ३६ ।
यथा, --
"पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः
॥"
इति ।
एतान्
भीष्मादीनत्यन्तोत्कृष्टगुणानित्यर्थः ।
एवम्भूताततायिनश्चाहननेफलमप्याह
बृह-
स्पतिः ।
"आततायिनमुत्कृष्टं
वृत्तस्वाध्यायसंयुतम् ।
यो न हन्याद्वधप्राप्तं सोऽश्वमेधफलं
लभेत् ॥"
यद्यपि गुरुं बहुश्रुतं हन्यादिति श्रूयते
तथापि
गुरोः सकाशात् कुलविद्यातपोभिः
शिष्यस्या-
प्युत्कर्षसम्भवादेवं बहुश्रुतादपि ।
एवमधमवर्णस्य
उत्तमवर्णो न वध्यः पूर्ब्बापराधकृतविषयं
वा
सुमन्तुवचनम् । गौराततायप्यपि न वध्यः
।
"नखिनां शृङ्गिणाञ्चैव
दंष्ट्रिणाञ्चाततायिनाम् ।
हस्त्यश्वानां तथान्येषां वधे हन्ता न
दोष-
भाग् ॥"
इति कात्यायनवचनं
गोव्यतिरिक्तशृङ्गिविष-
यम् ॥ विशेषमाह कात्यायनः ।
"उद्यतानान्तु पापानां हन्तुर्दोषो न विद्यते
।

**वधस्थानम्**, क्ली, (वधाय वधस्य वा स्थानं
भूमिः ।) वधस्थली । इति हारावली ।
१९६ ॥

**व(ब)धाङ्गकं**, क्ली, (वधः बन्धनं एवाङ्गं यस्य ।
ततः कन् ।) कारावेश्म । इति
त्रिकाण्डशेषः ॥

**वधार्हः**, त्रि, (वधं अर्हतीति । अर्ह + अण् ।)
वध्यः । हननयोग्यः । यथा, बृहस्पतिः ।
"वधार्हः सुवर्णशतं दमं दाप्यस्तु पूरुषः ।
अङ्गच्छेदार्हकस्त्वर्द्धं सन्दंशार्हस्तदर्द्धकम्
॥"
सन्दंशो वृद्धाङ्गुलितर्जन्योश्छेदः । इति
प्राय-
श्चित्तविवेकः ॥

**वधी**, [न्] त्रि, (प्राणवियोगफलकव्यापारो
वधः स
निष्पाद्यत्वनिरूपितनिष्पादकत्वेना-
स्त्यस्येति । बध + इनिः ।) वधकर्त्ता ।
प्राण-
वियोगफलकव्यापारो वधः
तन्निष्पादकत्वञ्च
साक्षात् परम्परोदासीनं
स्मृतिकारपरिगणितं
वधित्वम् । तच्च पञ्चविधं स्मृतिस्वरसात्
कर्त्ता
प्रयोजकोऽनुमन्तानुग्राहकोनिमित्ती चेति
।
नरान्तरव्यापारव्यवधानेन वधनिव्यादकः
कर्त्ता ।
१ । यः कर्त्तारं कारयति स प्रयोजकः ।
२ ।
स च द्विविधः । एकः स्वतोऽप्रवृत्तमेव
पदातिं
वेतनादिना प्रेरयति । अपरः स्वतः
प्रवृत्तमेव
मन्त्रोपायोपदेशादिना प्रोत्साहयति ।
अनु-
मतिदातानुमन्ता । ३ । अनु मतिश्च
द्विविधा
यस्माद्धन्तुर्मन्युर्हन्यमानमन्युं नाशयति न
पुनः
पुरुषो हन्ति हन्यते वेति हननविधेरपवादः ।
आततायिनमाह वशिष्ठः ।
"अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारापहारी च षडेते आततायिनः ॥"
विष्णुकात्यायनौ ।
"उद्यतासिविषाग्निञ्च शापोद्यतकरं तथा ।
आथर्व्वणेन हन्तारं पिशुनञ्चैव राजसु ॥
भार्य्यातिक्रामिणञ्चैव विद्यात् सप्ताततायिनः
।
यशोवृत्तिहरानन्यानाहुर्धर्म्मार्थहारकान् ॥"
विशेषमाह कात्यायनः ।
"अनाक्षारितपूर्व्वो यस्त्वपराधे प्रवर्त्तते ।
प्राणद्रव्यापहारे च प्रवृत्तस्याततायिता ॥"
अनाक्षारितोऽनपकृतः । तेन पूर्ब्बकृतापरा-
धस्य मारणोद्यतस्य नाततायिता । एतेन
प्रत्यपकारिवधे दोष एव । ननु आततायिनो-
ऽपि गोब्राह्मणयोर्हनने दोषमाह सुमन्तुः ।
"आततायिवधे न दोषोऽन्यत्र गोब्राह्मणात्
यदा
हन्यात् प्रायश्चित्तं कुर्य्यात् ।" तथा भविष्ये
।
"क्षुण्णानामपि गोविप्रं न हन्याद्वै कदाचन
॥"
अतः पूर्ब्बवचनविरोधः । अत्र व्यवस्थामाह
कात्यायनः ।
"आततायिनि चोत्कृष्टे
तपःस्वाध्यायजन्मतः ।
वधस्तत्र तु नैव स्यात् पापे हीने वधो भृगुः
॥"
निवृत्तास्तु यदारम्भाद्ग्रहणं न वधः
स्मृतः ॥"
इति प्रायश्चित्तविवेकः ॥

**वध्यः**, त्रि, (वधमर्हतीति । वध + यत् ।) वधार्हः ।
तत्पर्य्यायः । शीर्षच्छेद्यः २ । इत्यमरः ।
३ । १ । ४५ ॥
"किन्त्वया न श्रुतं लोके अवध्याः
शत्रुयोषितः ।
हीनवर्णोपभुक्ता या त्याज्या वध्यापि वा
भवेत् ॥"
इति प्रायश्चित्ततत्त्वम् ॥
अवध्या यथा, --
"गोब्राह्मणं वृद्धमथापि सुप्तं
बालं स्वबन्धुं ललनां सुदुष्टाम् ।
कृतापराधानपि नैव वध्या-
दाचार्य्यमुख्या गुरवस्तथैव ॥"
इति वामनपुराणे ५५ अध्यायः ॥

**वध्यपालः**, पुं, (वध्यं वन्धनस्थानं कारागारं पाल-
यतीति । वध्य + पाल + अण् ।)
कारागृह-
रक्षकः । यथा, --
"साध्वीविक्रयकृद्वध्यपालः
केशरिविक्रयी ।
तप्तलौहे तु पच्यन्ते यश्च भक्तं परित्यजेत्
॥"
इति विष्णुपुराणे । २ । ६ । ११ ॥

**वन**, सम्भक्तिशब्दयोः । इति कविकल्पद्रुमः ॥
(भ्वा०-पर०-सक०-सेट् ।) वनति ।
संभक्तिः
सेवनम् । इति दुर्गादासः ॥

**वन**, उ म व्यापृतौ । इति कविकल्पद्रुमः । (भ्वा०-
पर०-अक०-सेट् । उदित्त्वात् क्त्वावेट् ।)
उ,
वनित्वा वत्वा । म, प्रवनयति । मित्त्वेऽपि
अस्य ज्ञौ ज्वलह्वलेत्यादिना केवलस्य
ह्रस्ववि-
कल्पनात् सोपसर्गस्यैव नित्यं ह्रस्वः ।
वनयति

| | | |
| --- | --- | --- |
| एका यद्विरोधाद्धननं न भवति तस्य विरो-<br>धिनो मया निरोधः कर्त्तव्य इति<br>प्रयुक्तिरनु-<br>मतिः। अपरा एवं हन्मीति वचने<br>शक्तस्या-<br>प्रतिषेध एव। अनुग्राहकोऽपि द्विविधः।<br>एको<br>वध्यप्रतिरोधकः। अपरः स्वस्त्पप्रहर्त्ता।<br>४।<br>उद्देश्यत्वे सति हन्तुर्मन्यूत्पादको निमित्ती<br>।५। | | वानयति। व्यापृतिर्व्यापारः। अयन्तु<br>कगेवत्<br>क्रियामात्र इत्यन्ये। इति दुर्गादासः॥ |

**वन**, कि उपकृतिश्रद्धाघातशब्दोपतापेषु । इति कविकल्पद्रुमः ॥ (चुरा०-पक्षे भ्वा०-पर०-सक०-अक० च-सेट् ।) कि, वानयति वनति । अयं कैश्चिन्न मन्यते । इति दुर्गादासः ॥

**वन**, द ङ उ याचे । इति कविकल्पद्रुमः ॥ (तना०-आत्म०-द्विक०-सेट् । उदित्त्वात् क्त्वावेट् ।) द ङ, वनुते । उ, वनित्वा वत्वा । इति दुर्गादासः ॥

**वनं**, क्ली स्त्री, (वनतीति । वन् + पचाद्यच् । यद्वा, वन्यते सेव्यते इति । "पुंसि संज्ञायां घः प्रायेण ।" ३ । ३ । ११८ । इति घः ।) बहुवृक्षयुक्तस्थानम् । (यथा, मनुः । ८ । ३५६ ।
"परस्त्रियं योऽभिवदेत्तीर्थेऽरण्ये वनेऽपि वा ।
बदीनां वापि सम्भेदे ससंग्रहणमाप्नुयात् ॥"
स्त्रियान्तु यथा, साहित्यदर्पणे आर्थिव्यञ्जनायाम् ।
"कालो मधुः कुपित एष च पुष्पधन्वा
धीरा वहन्ति रतिखेदहराः समीराः ।
केलीवनीयमपि वञ्जुलकुञ्जमञ्जु
दूरेपतिः कथय किं करणीयमद्य ॥")
तत्पर्य्यायः । अटवी २ अरण्यम् ३ विपिनम् ४ गहनम् ५ काननम् ६ । इत्यमरभरतौ ॥ दावः ७ दवः ४ अटविः ९ भीरुकम् १० झाटम् ११ गुहिनम् १२ । इति शब्दरत्नावली ॥ शत्रम् १३ समजम् १४ प्रान्तरम् १५

तत्र गत्वा तु वसुधे मद्भक्तो मत्परायणः ।
तद्वनस्य प्रभावेण नागलोकं स गच्छति ॥
सप्तमन्तु वनं भूमे खादिरं लोकविश्रुतम् ।
तत्र गत्वा नरो भद्रे मम लोकं स गच्छति ॥
महावनं चाष्टमन्तु सदैव तु मम प्रियम् ।
तस्मिन् स्नात्वा तु मनुजो इन्द्रलोके महीयते ॥
लोहजं धवलं नाम लोहजङ्घेन रक्षितम् ।
नवमन्तु वनं देवि महापातकनाशनम् ॥
वनं विल्ववनं नाम दशमं देवपूजितम् ।
तत्र गत्वा तु मनुजो ब्रह्मलोके महीयते ॥
एकादशन्तु भाण्डीरं योगिनां प्रियमुत्तमम् ।
तस्य दर्शनमात्रेण नरो गर्भं न गच्छति ।
भाण्डीरं समनुप्राप्य वनानां वनमुत्तमम् ॥
वासुदेवं ततो दृष्ट्वा पुनर्जन्म न विद्यते ॥
वृन्दावनं द्वादशमं वृन्दया परिरक्षितम् ।
मम चैव प्रियं भूमे महापातकनाशनम् ॥
वृन्दावनन्तु गोविन्दं ये पश्यन्ति वसुन्धरे ।
न ते यमपुरं यान्ति वैकुण्ठं प्राप्नुयुर्नराः ॥"
इति वाराहे मथुरातीर्थवनद्वादशकवर्णनं नामाध्यायः ॥ * ॥ वनविशेषे मरणफलं यथा, --
"यदेवं कथितं पुण्यं मया ब्रह्ममुखाच्च्युतम् ।
तत् समग्रं भवेत्तस्य अरण्येषूषरेषु च ॥
अरण्यानि प्रवक्ष्यामि तथा चैवोषराणि च ।
सैन्धवं दण्डकारण्यं नैमिषं कुरुजाङ्गलम् ॥
उपलावृतमारण्यं जम्बूमार्गोऽथ पुष्करम् ।
हिमवासस्ततोऽरण्य उत्तमः परिकीर्त्तितः ॥
नवष्वेतेष्वरण्येषु यस्तु प्राणान् परित्यजेत् ।
ब्रह्मलोकातिथिर्भूत्वा स याति परमं पदम् ॥"
इति देवीपुराणे अरण्योषरप्रशंसा ॥ * ॥ अरण्ये वर्णनीयानि यथा, --
"अरण्येऽहिवराहेभयूथसिंहादयो द्रुमाः ।
शुककाककपोताद्या भिल्लभल्लदवादयः ॥"
उद्याने वर्णनीयानि यथा, --
"उद्याने सरणिः सर्व्वफलपुष्पलताद्रुमाः ।
प्रिकालिकेकिहंसाद्याः क्रीडावाप्यध्वगस्थितिः ॥"

"अध्वर्यवः कर्त्तना श्रुष्टिमस्मै वने निपूतं वन उन्नयध्वम् ॥"
"वने संभजनीये वने उदके निपूतमाप्यायनेन शोधितं सोममुन्नयध्वमूद्र्ध्वं नयत । यद्वा वने तद्विकारे चमसे निपूतं दशापवित्रेण शोधितं सोमं वने चमसे उन्नयध्वम् ।" इति तद्भाष्ये सायणः ॥) प्रस्रवणम् । इति हेमचन्द्रः ॥ (रश्मिः । इति निघण्टुः । १ । ५ । ८ ॥ "वन षण सम्भक्तौ भूवादिः परस्मै पदी । पुंसि संज्ञायां घः । वन्यते सेव्यते शीतादिनिवारणाय । अथवा वनतिर्हिंसार्थः । वन्यते हिंस्यतेऽनेन तमः । यद्वा, वनु याचने तनादि आत्मने भाषा । वन्यते याच्यते ष्टष्टिप्रदानाय । यद्वा, वनशब्दे भूवादिः परस्मैपदी वन्यते शब्दते स्तूयते स्तोतृभिः ।" इति तत्र देवराजयज्वा ॥ यथा, ऋग्वेदे । १ । २४ । ७ ।
"अबुध्ने राजा वरुणो वनस्य ॥")

**वनकदली**, स्त्री, (वनोद्भवा कदली ।) काष्ठकदली । इति राजनिर्घण्टः ॥ (विवृतिरस्याः काष्ठकदलीशब्दे ज्ञातव्या ॥)

**वनकन्दः**, पुं, (वनजातः कन्दः ।) वनशूरणः । धरणीकन्दः । इति राजनिर्घण्टः ॥

**वनकार्पासी**, स्त्री, (वनोद्भवा कार्पासी ।) वनो-

विक्तम् १६ ॥ इति जटाधरः ॥
कान्तारम् १७ ।
इति राजनिर्घण्टः ॥ * ॥
गृहसमीपकर्त्तव्यवनं
यथा, --
“शिविराभ्यन्तरे भद्रा स्थापिता तुलसी नृणाम् ।
धनपुत्त्रप्रदात्री च पुण्यदा हरिभाक्तिदा ।
प्रभाते तुलसीं दृष्ट्वा स्वर्णदानफलं लभेत् ॥
मालती यूथिका कुन्दं माधवी केतकी तथा ।
नागेश्वरं मल्लिका च काञ्चनं वकुलं शुभम् ॥
अपराजिता च शुभदा
तेषामुद्यानमीप्सितम् ।
पूर्व्वे च दक्षिणे चैव शुभदं नात्र संशयः ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १०२ अध्यायः ॥
मथुरायां द्वादश वनानि यथा, --
“रम्यं मधुवनं नाम विष्णुस्थानमनुत्तमम् ।
तद्दृष्ट्वा मनुजो देवि सर्व्वान् कामानवाप्नुयात् ॥
वनं तालवनञ्चैव द्वितीयं वनमुत्तमम् ।
तत्र स्नात्वा नरो देवि कृतकृत्यो हि जायते ॥
तृतीयं कुमुदं नाम वनं चैवोत्तमं तथा ।
तत्र गत्वा नरो देव्रि कृतकृत्यो हि जायते ॥
एकादशी कृष्णपक्षे मासि भाद्रपदे हि या ।
तत्र स्नातो नरो देवि रुद्रलोके महीयते ॥
चतुर्थं काम्यकवनं वनानां वनमुत्तमम् ।
तत्र गत्वा नरो देवि मम लोके महीयते ॥
विमलस्य च कुण्डे तु सर्व्वैः पापैः प्रमुच्यते ।
यस्तु प्रमुञ्चते प्राणान् मम लोकं स गच्छति ॥
इति कविकल्पलतायाम् १ स्तवके ३ कुसुमम् ॥
(शङ्कराचार्य्यशिष्यस्य हस्तामलकस्य शिष्या-
णामुपाधिविशेषे, पुं । यदुक्तं प्राणतोषिण्या-
मवधूतप्रकरणे ।
“सुरम्ये निर्झरे देशे वने वासं करोति यः ।
आशापाशविनिर्मुक्तो वननामा स उच्यते ॥”)

**वनं**, क्ली, (वन्यते सेव्यते इति । वन् + “पुंसि संज्ञायां घः प्रायेण ।” ३ । ३ । ११८ । घः । इति निघण्टौ देवराजयज्वा । १ । १२ । ९ ।) जलम् । (यथा, रघुः । ९ । २२ ।
“नमयति स्म स केवलमुन्नतं
वनमुचे नमुचेररये शिरः ॥”)
निवासः । आलयः । इति मेदिनी । ने, १९ ॥ (चमसः । यथा, ऋग्वेदे । २ । १४ । ९ ।
द्रवकार्पासः । तत्पर्य्यायः । त्रिपर्णा २ भार-
द्वाजी ३ वनोद्भवा ४ । इति रत्नमाला ॥

**वनकोलिः**, स्त्री, (वनोद्भवा कोलिः ।) वनजवदरी । तत्पर्य्यायः । कर्कशिका २ फल-
कर्कशा ३ । इति कोषान्तरम् ॥

**वनगोचरः**, पुं, (वनं गोचरो देशो यस्य ।) व्याधः । इति केचित् ॥ (वनं जलं गोचरो निवासस्थानं यस्य । नारायणः । इति भाग-
वतटीकायां श्रीधरस्वामी । ३ । १८ । ३ ॥ त्रि,
जलचरः । यथा, भागवते । ३ । १८ । २ ।
“मुष्णन्तमक्ष्णा स्वरुचोऽरुणश्रिया
जहास चाहो वनगोचरो मृगः ॥”
काननविहारी । यथा, मनुः । ८ । २५९ ।
“सामन्तानामभावे तु मौलानां सीम्नि साक्षि-
णाम् ।
इमानप्यनुयुञ्जीत पुरुषान् वनगोचरान् ॥”)

**वनगौः**, स्त्री, (वनस्य गौः ।) गवयः । इति राजनिर्घण्टः ॥

**वनचन्दनं**, क्ली, (वनजातं चन्दनम् ।) अगुरु । देवदारु । इति विश्वः ॥

**वनचन्द्रिका**, स्त्री, (वने चन्द्रिका ज्योत्स्नेव ।) मल्लिका । इति राजनिर्घण्टः ॥

**वनचम्पकः**, पुं, (वनजातश्चम्पकः । शाकपार्थिव-वत् समासः ।) वनजचम्पकपुष्पवृक्षः । तत्-
पर्य्यायः । वनदीपः २ हेमाह्वः ३ सुकुमारः ४ ।
अस्य गुणाः । कटुत्वम् । उष्णत्वम् । वातकफ-

| पञ्चमं बहुलवनं वनस्थानमनुत्तमम् ।<br>तत्र गत्वा नरो देवि अग्निस्थानं स<br>गच्छति ॥<br>यमुनायाः परे पारे देवानामपि दुर्लभम् ।<br>अस्ति भद्रवनं नाम षष्ठं वनमनुत्तमम् ॥ | | नाशित्वम् । वर्ण्यत्वम् । चक्षुष्यत्वम् ।<br>व्रण-<br>रोपणत्वम् । वयःस्तम्भकारित्वञ्च । इति<br>राज-<br>निर्घण्टः ॥ |
|---|---|---|

**वनच्छागः**, पुं, (वनस्य छागः ।) अरण्य-
च्छगलः । तत्पर्य्यायः । एडकः २ शिशु-
वाह्यकः ३ । इति त्रिकाण्डशेषः ॥ (वने छाग
इव ।) शूकरः । इति शब्दमाला ॥

**वनजं**, क्ली, (वने जले जायते इति । जन् + डः ।)
अम्बुजम् । इति मेदिनी । जे, २८ ॥ (यथा,
रघुः । ५ । ७३ ।
"दीर्घेष्वमी नियमिताः पटमण्डपेषु
निद्रां विहाय वनजाक्ष ! वनायुदेश्याः ।
वक्त्रोष्मणा मलिनयन्ति पुरोगतानि
लेह्यानि सैन्धवशिलाशकलानि वाहाः ॥"
जलजाते वनोद्भवे च त्रि । यथा, रामा-
यणे । २ । ४५ । ७ ।
"दारूणि परिभिन्नानि
वनजैरुपजीविभिः ॥")

**वनजः**, पुं, (वने जले अरण्ये वा जायते इति ।
जन् + डः ।) मुस्तकः । इति मेदिनी । जे, २८ ॥
गजः । इति विश्वः ॥ वनशूरणः । इति राज-
निर्घण्टः ॥ (तुम्बुरुफलम् । तत्पर्य्यायो यथा, --
"तुम्बुरुः सौरवः सौरो वनजः सानुजोऽन्धजः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**वनजा**, स्त्री, (वने जायते इति । जन् + डः ।
टाप् ।) मुद्गपर्णी । इति मेदिनी । जे, २८ ॥
पिप्पली ३ वनकणा ४ । अस्या गुणाः । कटु-
त्वम् । उष्णत्वम् । तीक्ष्णत्वम् । रुच्यत्वम् । दीप-
नत्वम् । सा आमा गुणाढ्या । शुष्का स्वल्प-
गुणा । इति राजनिर्घण्टः ॥

**वनपुष्पा**, स्त्री, (वनमिव निविडं पुष्पं यस्याः ।
टाप् ।) शतपुष्पा । इति राजनिर्घण्टः ॥
(शतपुष्पाशब्देऽस्या विवरणं ज्ञातव्यम् ॥)

**वनपूरकः**, पुं, (वनजातः पूरको बीजपूरकः ।)
वनबीजपूरकः । इति राजनिर्घण्टः ॥

**वनप्रियं**, क्ली, (वनेषु वनजातेषु मध्ये प्रियम् ।)
त्वचम् । इति राजनिर्घण्टः ॥

**वनप्रियः**, पुं, (वनं प्रियं यस्य ।) कोकिलः ।
इत्यमरः । २ । ५ । १९ ॥ (यथा, --
"अयि वनप्रिय विस्मृत एव किं
वलिभुजो विघसो भवताधुना ।
यदनयैव कुहूरिति विद्यया
न पततश्चरणौ धरणौ तव ॥"
इत्युद्भटः ॥)
अरण्यप्रियमात्रे, त्रि ॥

**वनबीजः**, पुं, (वनस्य वनोद्भवो वा बीजो बीज-
पूरकः ।) वनबीजपूरकः । इति राजनिर्घण्टः ॥

**वनबीजकः**, पुं, (वनबीज + स्वार्थे कन् ।) वनबीज-
पूरकः । इति राजनिर्घण्टः ॥

**वनबीजपूरकः**, पुं, (वनोद्भवो बीजपूरकः ।)
अरण्यजातबीजपूरः । तत्पर्य्यायः । वनजः २
वनबीजकः ३ वनबीजः ४ अत्यम्ला ५ गन्धाम्ला ६

**वनमाली**, [न्] पुं, (वनमाला अस्त्यस्येति ।
इनिः ।) श्रीकृष्णः । इत्यमरः । १ । ९ । २१ ॥
(नारायणः । यथा, प्रद्युम्नविजये । ३ अङ्के ।
"कमलयामलया वनमालिनं
गिरिजया गिरिशञ्च निशा विधुम् ।
सुविवृता परियोजयतो विधे-
श्चतुरता ह्यनुरूपसमागमे ॥")

**वनमुक्**, [च्] पुं, (वनं जलं मुञ्चतीति । मुच् +
क्विप् ।) मेघः । इति शब्दरत्नावली ॥ (जल-
वर्षिणि, त्रि । इति रघुः । ९ । २२ ॥)

**वनमुद्गः**, पुं, (वनोद्भवो मुद्गः ।) मुकुष्टकः । इत्य-
मरः । २ । ९ । १७ ॥ तत्पर्य्यायः । वरकः २
निगूढकः ३ कुलीनकः ४ खण्डी ५ । इति हेम-
चन्द्रः । ४ । २३९ ॥ अस्य अन्यपर्य्यायगुणौ मुकुष्ट-
मकुष्टकशब्दयोर्द्रष्टव्यौ ॥ (यथा, सुश्रुते । १ । ४६ ।
"वनमुद्गकलायमकुष्टमसूरमङ्गल्यचणकसतीन-
त्रिपुटकहरेण्वाढकीप्रभृतयो वैदलाः ॥)

**वनमुद्गा**, स्त्री, (वनमुद्ग + टाप् ।) मुद्गपर्णी ।
इति राजनिर्घण्टः ॥

**वनमूतः**, पुं, मेघः । वनं जलं मूतं बद्धं अनेन
वनं मुञ्चति इति वा मनीषादिः । इत्यमर-
टीकायां भरतकृतजीमूतशब्दव्युत्पत्तिदर्शनात् ॥

**वनमूर्द्धजा**, स्त्री, (वनस्य मूर्द्ध्नि जायते इति । जन्
डः ।) वनबीजपूरकः । इति राजनिर्घण्टः ॥

**वनमोचा**, स्त्री, (वनोद्भवा मोचा ।) काष्ठकदली ।
इति राजनिर्घण्टः ॥

**वनरः**, पुं, (वानरः । पृषोदरादित्वात् ह्रस्वे साधुः ।)
वानरः । इति भरतद्विरूपकोषः ॥

**वनराजः**, पुं, (वनस्य वने वा राजा । "राजाहः-
सखिभ्यष्टच् ।" ५ । ४ । ९१ । इति टच् ।)
सिंहः । इति शब्दमाला ॥ वनस्य राजा च ॥

**वनलक्ष्मीः**, स्त्री, (वनस्य लक्ष्मीः शोभा ।)
कदली । इति राजनिर्घण्टः ॥

अरण्यकार्पासी। वन्योपोदकी।
अश्वगन्धा।
गन्धपत्रा। मिश्रेया। ऐन्द्रम्। इति
राज-
निर्घण्टः॥

**वनजीरः**, पुं, (वनोद्भदो जीरः।) वनोद्भव-
जीरकः। तत्पर्य्यायः। बृहत्पाली
२ सूक्ष्म-
पत्रः ३ अरण्यजीरः ४ कणः ५।
अस्य
गुणाः। कटुत्वम्। शीतत्वम्।
व्रणनाशित्वञ्च।
इति राजनिर्घण्टः॥

**वनतिक्तः**, पुं, (वनेषु वनोद्भवेषु तिक्तः।) हरी-
तकी। इति शब्दमाला॥

**वनतिक्ता**, स्त्री, (वनेषु वनोद्भवेषु मध्ये तिक्ता।)
वनतिक्तिका। इति रत्नमाला॥

**वनतिक्तिका**, स्त्री, (वनतिक्ता + कन्। टापि अत
इत्वम्।) पाठा। इत्यमरः। २। ४।८४॥
(गुणादिकमस्याः पाठाशब्दे ज्ञेयम्॥)

**वनदः**, पुं, (वनं जलं ददातीति। दा + कः।)
मेघः। इति शब्दमाला॥
वनदातरि, त्रि॥

**वनदमनः**, पुं, (वनजातो दमनः।) अरण्यदमनः।
इति राजनिर्घण्टः॥

**वनदीपः**, पुं, (वनस्य दीप इव।) वनचम्पकः।
इति राजनिर्घण्टः॥

**वनधेनुः**, पुं, (वनस्य धेनुरिव।) गवयी। इति
राजनिर्घण्टः॥

**वनपल्लवः**, पुं, (वनमिव निविडः पल्लवो यस्य।)
वनोद्भवा ७ देवदूती ८ पीता ९
देवदासी १०
देवेष्टा ११ मातुलङ्गिका १२ पचनी
१३ महा-
फला १४। अस्य गुणाः। अम्लत्वम्।कटु-
त्वम्। उष्णत्वम्। रुचिप्रदत्वम्।
वातामदोष-
कृमिकफश्वासनाशित्वञ्च। इति
राजनिर्घण्टः॥

**वनभद्रिका**, स्त्री, (वने भद्रं यस्याः। ततः टापि
अत इत्वम्।) भद्रवला। इति केचित्॥

**वनभुक्**, [ज्] पुं, (वनं भुङ्क्ते इति। वन् +
भुज् + क्विप्।) ऋषभौषधम्। इति
शब्द-
चन्द्रिका॥

**वनमक्षिका**, स्त्री, (वनस्य मक्षिका।) दंशः।
इत्यमरः। २। ५। २७॥

**वनमल्ली**, स्त्री, (वनोद्भवा मल्ली।) वनोद्भव-
मल्लिका। इति शब्दरत्नावली॥

**वनमाला**, स्त्री, (वनोद्भवपुष्परचिता माला।
मध्यपदलोपिसमासः।) श्रीकृष्णस्य
माला।
तत्स्वरूपं यथा, --
"आजानुलम्बिनी माला
सर्व्वर्त्तुकुसुमोज्ज्वला।
मध्ये स्थूलकदम्बाढ्या वनमालेति
कीर्त्तिता॥"
इति शब्दमाला॥
(वनपुष्पस्रक्। यथा, रघुः। ९। ५१।
"ग्रथितमौलिरसौ वनमालया
तरुपलाशसवर्णतनुच्छदः॥")

**वनमालिनी**, स्त्री, (वनमाली अस्त्यस्यामिति।
इनिः। ङीप्।) द्वारकापुरी। इति
त्रिकाण्ड-

**वनवर्व्वरः**, पुं, (वनोद्भवो वर्व्वरः।) कृष्णार्जकः।
इति राजनिर्घण्टः॥

**वनवर्व्वरिका**, स्त्री, (वनजाता वर्व्वरिका।)
अरण्यजवर्व्वरी। वनवावुइ इति भाषा। तत्-
पर्य्यायः। सुगन्धिः २ सुप्रसन्नकः ३ दोषा-
क्लेशी ४ विषघ्नः ५ सुमुखः ६ सूक्ष्मपत्रकः ७
निद्रालुः ८ शोफहारी ९ सुवक्त्रः १०। अस्य
गुणाः। उष्णत्वम्। सुगन्धित्वम्। पिशाच-
वान्तिभूतघ्नत्वम्। घ्राणसन्तर्पणत्वञ्च। इति
राजनिर्घण्टः॥

**वनवल्लरी**, स्त्री, (वनोद्भवा वल्लरी।) निःश्रेणिका-
तृणम्। इति राजनिर्घण्टः॥

**वनवह्निः**, पुं, (वनस्य वनोद्भवो वा वह्निः।) दावा-
नलः। इति हेमचन्द्रः। ४। १६७॥ (यथा,
कथासरित्सागरे। ५६। ३४३।
"फणारत्नप्रभाजालजटिलंवनवह्निना।
गृहीतमिव तेनोग्रहेतिहस्तेन मूर्द्धनि॥")

**वनवासनः**, पुं, (वनं वासयति गन्धेनेति। वासि +
ल्युः।) खट्टासः। इति त्रिकाण्डशेषः॥

शोभाञ्जनवृक्षः । इति जटाधरः ॥

अरण्यज-

पत्रञ्च ॥

**वनपांशुलः**, पुं, (वने पांशुलः पापिष्ठः ।) व्याधः ।

इति शब्दरत्नावली ॥

**वनपिप्पली**, स्त्री, (वनोद्भवा पिप्पली ।) वनोद्भव-

पिप्पली । तत्पर्य्यायः ।

सूक्ष्मपिप्पली २ क्षुद्र-

शेषः ॥ वाराही । इति राजनिर्घण्टः ॥

**वनवासी**, [न्] पुं, (वनं वासयति सुरभीकरोतीति ।
वासि + णिनिः ।) ऋषभनामौषधम् । मुष्कक-
वृक्षः । वाराहीकन्दः । शाल्मलीकन्दः । नील-
महिषकन्दः । इति राजनिर्घण्टः ॥ (वने वस-
तीति । वस् + णिनिः ।) वनवासकर्त्तरि, त्रि ॥
(यथा, मनुः । ६ । २७ ।
"तापसेष्वेव विप्रेषु यात्रिकं भैक्षमाहरेत् ।
गृहमेधिषु चान्येषु द्विजेषु वनवासिषु ॥")

**वनवृन्ताकी**, स्त्री, (वनस्य वृन्ताकी वार्त्ताकी ।)
बृहती । इति राजनिर्घण्टः ॥

**वनव्रीहिः**, पुं, (वनस्य व्रीहिः ।) नीवारः । इति
हेमचन्द्रः । ४ । २४२ ॥

**वनशूकरी**, स्त्री, (वनस्य शूकरीव रोमशत्वात् मांस-
लत्वाच्च ।) कपिकच्छुः । इति राजनिर्घण्टः ॥
(वनस्य शूकरी ।) आरण्यवराही च ॥

**वनशूरणः**, पुं, (वनजातः शूरणः ।) वनोद्भवौल्लः ।
वन ओल इति भाषा । तत्पर्य्यायः । सितशूरणः २
वन्यः ३ वनकन्दः ४ अरण्यशूरणः ५ वनजः ६
श्वेतशूरणः ७ वनकण्डुलः ८ । अस्य गुणाः ।
रुच्यत्वम् । कटुत्वम् । उष्णत्वम् । कृमिगुल्म-
शूलादिदोषसर्व्वारोचकनाशित्वञ्च। इति राज-
निर्घण्टः ॥

**वनशृङ्गाटः**, पुं, (वनस्य शृङ्गाट इव कण्ठकावृत-
त्वात् ।) गोक्षुरकः । इत्यमरः । २ । ४ । ९९ ॥
(अस्य पर्य्यायो यथा, --
"गोक्षुरः क्षुरकोऽपि स्यात् त्रिकण्टः स्वादु-
वनवासिनि, त्रि ॥ (यथा, हरिवंशे । १५२ । २१ ।
"प्रवृत्तचक्रो नृपतिर्वनस्थान्
गजान् गजैः स्वैरिव वीर्य्यदीप्तान् ॥")

**वनस्था**, स्त्री, (वने तिष्ठति या । स्था + कः ।
टाप् ।) अश्वत्थीवृक्षः । इति राजनिर्घण्टः ॥

**वनस्पतिः**, पुं, (वनस्य पतिः । पारस्करादित्वात्
सुट् ।) विना पुष्पं फलिद्रुमः । (यथा, मनुः ।
१ । ४७ ।
"अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः ॥")
वृक्षमात्रम् । इति मेदिनी । ते, २१६ ॥ (यथा,
महाभारते । १ । १४१ । १६ ।
"कथं नु शाखास्तिष्ठेरंश्छिन्नमूले वनस्पतौ ॥")
स्थालीवृक्षः । इति राजनिर्घण्टः ॥ (अस्य
पर्य्यायो यथा, --
"नन्दीवृक्षोऽश्वत्थभेद्‌ः प्ररोहो गजपादपः ।
स्थालीवृक्षः क्षयतरुः क्षीरी च स्याद्वनस्पतिः ॥"
इति भावप्रकाशे । १ । १ ॥
घृतपृष्ठस्य पुत्त्रविशेषः । यथा, भागवते । ५ ।
२० । २१ ॥ "आत्मा मधुरुहो मेघपृष्ठः सुधामा
भ्राजिष्ठो लोहितवर्णो वनस्पतिरिति घृतपृष्ठ-
सुताः ॥" वटवृक्षः ॥ तत्पर्य्यायो यथा, --
"वटो रक्तफलः शृङ्गी न्यग्रोधः स्कन्धजो ध्रुवः ।
क्षीरी वैश्रवणावासो बहुपादो वनस्पतिः ॥"
(यथा, महाभारते । ८ । ७ । ११ ।
"आजानेयैः सैन्धवैः पार्व्वतीयै-
र्नदीजकाम्बोजवनायुवाह्लिकैः ॥"
दानवविशेषः । यथा, महाभारते । १ । ६५ । ३० ।
"गरिष्ठश्च वनायुश्च दीर्घजिह्वश्च दानवः ॥")

**वनायुजः**, पुं, (वनायौ देशे जायते इति । जन +
डः ।) वनायुदेशोद्भवघोटकः । अस्य रूया-
न्तरं वानायुजः । इति शब्दरत्नावली ॥

**वनारिष्टा**, स्त्री, (वनजाता अरिष्टेव ।) वन-
हरिद्रा । इति राजनिर्घण्टः ॥

**वनार्च्चकः**, पुं, (वनस्य अर्च्चक इव । नियतपुष्प-
चायित्वात् तथात्वम् ।) पुष्पजीवी । माला-
कारः । इति जटाधरः ॥

**वनार्द्रका**, स्त्री, (वनोद्भवा आर्द्रका ।) वनभवा-
र्द्रकम् । इति राजनिर्घण्टः ॥ अस्याः पर्य्याय-
गुणौ ऐन्द्रशब्दे द्रष्टव्यौ ॥

**वनालिका**, स्त्री, (वनं अलति भूषयतीति । अल +
ण्वुल् । टापि अत इत्वम् ।) हस्तिशुण्डी । यथा, --
"वज्रवल्ल्यस्थिसंहारो हस्तिशुण्डी वनालिका ।"
इति हारावली । ९५ ॥

**वनाश्रयः**, पुं, (वनमेव आश्रयो यस्याः ।) द्रोण-
काकः । इति जटाधरः ॥ (अरण्याश्रयिणि,
त्रि । यथा, मार्कण्डेये । १०९ । ४३ ।
"सीदिष्यत्यखिलो लोकस्त्वयि भूप ! वना-
श्रये ॥")

**वनाहिरः**, पुं, (वनस्य आहिरः ।) शूकरः ।
इति त्रिकाण्डशेषः ॥

कण्टकः ।
गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि ॥
पलङ्कषा स्वदंष्ट्रा च तथा स्यादिक्षुगन्धिका ।”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**वनशृङ्गाटकः**, पुं, (वनशृङ्गाट + स्वार्थे कन् ।)
गोक्षुरकः । इति राजनिर्घण्टः ॥

**वनशोभनं**, क्ली, (वनं जलं शोभयतीति । शुभ + णिच् + ल्युः ।) पद्मम् । इति शब्दचन्द्रिका ॥ वनस्य शोभाकर्त्तरि, त्रि ॥

**वनश्वा**, [न्] पुं, (वनस्य वने वा श्वा कुक्कुरः ।)
गन्धमार्जारः । वञ्चकः । व्याघ्रः । इति मेदिनी ।
ने, २०७ ॥

**वनसङ्कटः**, पुं, (वने सङ्कटो बाहुल्यं यस्य ।)
मसूरः । इति शब्दचन्द्रिका ॥

**वनसमूहः**, पुं, (वनानां समूहः ।) अरण्य-
संहतिः । तत्पर्य्यायः । वन्या २ । इत्यमरः । २ । ४ । ४ ॥ वान्या ३ । इति शब्दरत्नावली ॥
जलसमूहश्च ॥

**वनसरोजिनी**, स्त्री, (वनस्य सरोजिनी पद्मिनीव
शोभाकरत्वात् ।) वनकार्पासी । इति शब्द-
रत्नावली ॥

**वनस्थः**, पुं, (वने तिष्ठतीति । स्था + कः ।) मृगः ।
इति शब्दचन्द्रिका ॥ (वानप्रस्थः । यथा, मनुः ।
५ । १३७ ।
“एतच्छौचं गृहस्थानां द्बिगुणं ब्रह्मचारिणाम् ।
त्रिगुणं स्याद्वनस्थानां यतीनान्तु चतुर्गुणम् ॥”)

इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**वनहरिद्रा**, स्त्री, (वनोद्भवा हरिद्रा ।) अर-
ण्यजहरिद्रा । तत्पर्य्यायः । शोली २ शोलिका
३ वनारिष्टा ४ । अस्या गुणाः । कटुत्वम् ।
गौल्यत्वम् । रुच्यत्वम् । तिक्तत्वम् । दीपनत्वञ्च ।
इति राजनिर्घण्टः ॥ अपि च ।
“अरण्यहलदीकन्दः कुष्ठवातास्रनाशनः ॥”
इति भावप्रकाशः ॥

**वनहासः**, पुं, (वनस्य हास इव प्रकाशकत्वात् ।)
काशतृणम् । इति त्रिकाण्डशेषः ॥ कुन्दवृक्षः ।
इति राजनिर्घण्टः ॥

**वनहासकः**, पुं, (वनहास + स्वार्थे कन् ।) काश-
तृणम् । इति शब्दरत्नावली ॥

**वनाखुः**, पुं, (वनस्याखुः ।) शशकः । इति
त्रिकाण्डशेषः ॥

**वनाखुकः**, पुं, मुद्गः । इति त्रिकाण्डशेषः ॥

**वनाजः**, पुं, (वनस्य अजः ।) वनच्छागः । तत्प-
र्य्यायः । इडिक्कः २ शिशुवाहकः ३ पृष्ठ-
शृङ्गः ४ । इति हेमचन्द्रः । ४ । ३४४ ॥

**वनाटुः**, पुं, वर्व्वणा । नीलमक्षिका । इति शब्द-
चन्द्रिका ॥

**वनामलः**, पुं, (वनस्य आमल आमलक इव ।)
कृष्णपाकफलः । इति शब्दमाला ॥

**वनाम्रः**, पुं, (वनस्य आम्र इव ।) कोशाम्रः ।
इति राजनिर्घण्टः ॥ (गुणादिविशेषोऽस्य
कोशाम्रशब्दे ज्ञेयः ॥)

**वनायुः**, पुं, देशविशेषः । यथा, --

**वनिः**, पुं, अग्निः । खनि कषि अजि असि वसि
सनि ध्वनि ग्रन्थि वलिभ्यश्च । इत्यनेन वन-
धातोः पूर्व्वानुवृत्त-इप्रत्ययेन निष्पन्नः । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः । ४ । १३९ ॥

**वनितः**, त्रि, (वन + क्तः ।) याचितः । सेवितः ।
इति मेदिनी । ते, १४९ ॥

**वनिता**, स्त्री, (वन + क्त । टाप् ।) जातरागस्त्री ।
स्त्रीसामान्यम् । इति मेदिनी । ते, १४९ ॥
(यथा, रघुः । २ । १९ ।
“वशिष्ठधेनोरनुयायिनं त-
मावर्त्तमानं वनिता वनान्तात् ।
पपौ निमेषालसपक्ष्मपङ्क्ति-
रुपोषिताभ्यामिव लोचनाभ्याम् ॥”)

**वनी**, स्त्री, वनम् । इत्यमरटीकायां भरतः ॥
(यथा, साहित्यदर्पणे । २ ।
“केलीवनीयमपि वञ्जुलकुञ्जमञ्जुः ॥”)

**वनी**, [न्] पुं, (वनं आश्रयत्वेनास्त्यस्येति । वन +
इनिः ।) वानप्रस्थः । यथा, --
“गृहमेधी शरद्वसन्तयोः व्रीहियवाभ्यां यजेत
वनी वर्षासु श्यामाकैरापत्कल्पेऽन्यैः पुरा-
तनैर्व्वा ।” इति श्राद्धचिन्तामणौ हारीतः ॥

**वनीकः**, त्रि, याचकः । इत्यमरटीकासारसुन्दरी ॥

**वनीयकः**, त्रि, (वनिं याचनमिच्छतीति । क्यच् ।
ततो ण्वुल् ।) याचकः । इत्यमरः । ३ । १ । ४९ ॥

**वनेक्षुद्रा**, स्त्री, (वने क्षुद्रा । अलुक्समासः ।)

करञ्जः । इति रत्नमाला ॥

**वनेचरः**, त्रि, (वने चरतीति । चर + “चरेष्टः ।”

इति टः । तत्पुरुषे कृतीत्यलुक् ।) अरण्य-
चारी । यथा, --
“वनेचराणां वनितासखानां
दरीगृहोत्सङ्गनिषक्तभासः ।
भवन्ति यत्रौषधयो रजन्या-
मतैलपूराः सुरतप्रदीपाः ॥”
इति कुमारसम्भवे १ सर्गः ॥

**वनेज्यः**, पुं, (वने इज्यः पूज्यः ।) वद्धरसालः ।

इति राजनिर्घण्टः ॥

**वनेसर्ज्जः**, पुं, (वने सर्ज्ज इव ।) असनवृक्षः ।

इति रत्नमाला ॥

**वनोद्भवा**, स्त्री, (वने उद्भवो यस्याः ।) वनकार्पासी ।

इति रत्नमाला ॥

**वनौकाः**, [स्] पुं, (वनमेव ओको गृहं

यस्य ।) वानरः । इत्यमरः । २ । ५ । ३ ॥
(वनवासिनि, त्रि । यथा, भागवते । ४ । ९ ।
२१ ।
“धर्म्मोऽग्निः कश्यपः शक्रो मुनयो ये वनौ-
कसः ।
चरन्ति दक्षिणीकृत्य भ्रमन्तो यत् सतारकाः
॥”)

**वन्दका**, स्त्री, वन्दा । यथा, --

“वन्दाका शेखरी सेव्या वन्दा च वन्दकेष्यते
॥”
इति भरतधृतहड्डः ॥

**वन्दथः**, पुं, (वन्दते स्तौति वन्द्यते स्तूयते इति वा ।

वन्द + “शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्यो
ऽथः ।” इत्यत्र वञ्चीत्यस्य स्थाने वन्दीति
पाठोऽपि
बहुसम्मतः इत्यतोऽथः ।) स्तोता । स्तुत्यः ।

पठेत् प्रतिप्रणामञ्च प्रसीद
भगवन्निति ॥”
तदुक्तमेकादशे श्रीभगवता ।
“स्तवैरुच्चावचैः स्तोत्रैः पौराणैः
प्राकृतैरपि ।
स्तुत्वा प्रसीद भगवन्निति वन्देत
दण्डवत् ॥”
अथ प्रणामविधिः । कालिकापुराणे
।
“यः स्वयं गद्यपद्याभ्यां घटिताभ्यां
नमस्कृतिम् ।
शिरो मत्पादयोः कृत्वा बाहुभ्याञ्च
परस्परम् ।
प्रपन्नं पाहि मामीश भीतं
मृत्युमहार्णवात् ॥”
किञ्चागमे ।
“दोर्भ्यां पद्भ्याञ्च जानुभ्यामुरसा
शिरसा दृशा ।
मनसा वचसा चेति प्राणामोऽष्टाङ्ग
ईरितः ॥
जानुभ्याञ्चैव बाहुभ्यां शिरसा
वचसा धिया ।
पञ्चाङ्गकः प्रणामः स्यात् पूजासु
प्रवराविमौ ॥”
इति ॥
“गरुडं दक्षिणे कृत्वा
कुर्य्यात्तत्पृष्ठतो बुधः ।
अवश्यञ्च प्रणामांस्त्रीन्
शक्तश्चेदधिकाधिकान् ॥”
तथा च नारदपञ्चरात्रे ।
“सन्धिं वीक्ष्य हरिं चाद्यं गुरून्
स्वगुरुमेव च ।
द्विचतुर्विंशदथवा चतुर्विंशत्तदर्द्धकम्
।
नमेत्तदर्द्धमथवा तदर्द्धं सर्व्वथा
नमेत् ॥”
विष्णुधर्म्मोत्तरे ।
“देवार्च्चादर्शनादेव
प्रणमेन्मधुसूदनम् ।

ये जना जगतां नाथं नित्यं नारायणं द्विजाः ।
नमन्ति नहिते विष्णोः स्थानादन्यत्र गामिनः
॥”
नारदीये ।
“एकोऽपि कृष्णस्य सकृत्प्रणामो
दशाश्वमेधावभृतैर्न तुल्यः ।
दशाश्वमेधी पुनरेति जन्म
कृष्णप्रणामी न पुनर्भवाय ॥”
भक्तिसुधोदये ।
“विष्णोर्दण्डप्रणामार्थं भक्तेन पतता भुवि ।
पातितं पातकं कृत्स्नं नोत्तिष्ठति पुनः सह ॥
अपि पापं दुराचारं नरं त्वत्प्रणतं हरे ।
नेक्षन्ते किङ्करा याम्या उलूकास्तपनं यथा ॥”
श्रीविष्णुपुराणे । श्रीयमस्य निजभटानुशासने
।
“हरिममरगणार्च्चिताङ्घ्रिपद्मं
प्रणमति यः परमार्थतो हि मर्त्यः ।
तमपगतसमस्तपापबन्धं
व्रज परिहृत्य यथाग्निमाज्यसिक्तम् ॥”
ब्रह्मवैवर्त्ते ।
“शरणागतरक्षणोद्यतं
हरिमीशं प्रणमन्ति ये नराः ।
न पतन्ति भवाम्बुधौ स्फुटं
पतितानुद्धरति स्म तानसौ ॥”
अष्टमस्कन्धे च वलिवाक्ये ।
“अहो प्रणामाय कृतः समुद्यमः
प्रपन्नभक्तार्थविधौ समाहितः ।
यल्लोकपालैस्त्वदनुग्रहोऽमरै-
रलब्धपूर्व्वापसदेऽसुरेऽर्पितः ॥”
अतएव नारायणव्यूहस्तवे ।
“अहो भाग्यमहो भाग्यमहो भाग्यं नृणा-
मिदम् ।
येषां हरिपदाब्जाग्रे शिरो न्यस्तं यथा तथा ॥”
किञ्च नारसिंहे श्रीयमोक्तौ ।
“तस्य वै नारसिंहस्य विष्णोरमिततेजसः ।
प्रणामं ये प्रकुर्व्वन्ति तेषामपि नमो नमः ॥”
भविष्योत्तरे च जलधेनुप्रसङ्गे ।
“विष्णोर्देवजगद्धातुर्जनार्द्दनजगत्पतेः ।
प्रणामं ये प्रकुर्व्वन्ति तेषामपि नमो नमः ॥”

वन्दिधातोरथप्रत्ययेन निष्पन्नः । इति सिद्धान्त-
कौमुदी ॥

**वन्दनं**, क्ली, (वन्दतेऽनेनेति । वन्द + करणे ल्युट् ।) वदनम् । इति शब्दचन्द्रिका ॥ (वन्द + भावे ल्युट् ।) प्रणामः । स तु षोडशधाभक्त्यन्तर्गत-
भक्तिविशेषः । यथा । पाद्मोत्तरखण्डे शिव-
पार्व्वतीसंवादे ।
"आद्यं तु वैष्णवं प्रोक्तं शङ्खचक्राङ्कनं हरेः ।
धारणञ्चोर्द्ध्वपुण्ड्राणां तन्मन्त्राणां परिग्रहः ॥
अर्च्चनञ्च जपो ध्यानं तन्नामस्मरणं तथा ।
कोर्त्तनं श्रवणञ्चैव वन्दनं पादसेवनम् ॥
तत्पादोदकसेवा च तन्निवेदितभोजनम् ।
तदीयानाञ्च संसेवा द्वादशीव्रतनिष्ठता ॥
तुलसीरोपणं विष्णोर्द्देवदेवस्य शार्ङ्गिणः ।
भक्तिः षोडशधा प्रोक्ता भवबन्धविमुक्तये ॥"
इति हरिभक्तिविलासे ११ विलासः ॥
षोडशोपचारपूजान्तर्गतशेषोपचारः । यथा, --
"आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ।
मधुपर्काचमनस्नानवसनाभरणानिच ।
गन्धपुष्पे धूपदीपौ नैवेद्यं वन्दनं तथा ॥"
इत्याह्निकतत्त्वे आचारचिन्तामणिः ॥ * ॥
अथ वन्दनम् ।
"प्रणमेदथ साष्टाङ्गं तन्मुद्राञ्च प्रदर्शयेत् ।
स्थानापेक्षा न कर्त्तव्या इष्टार्च्चां द्विजसत्तमाः ।
देवार्च्चादृष्टपूतं हि शुचि सर्व्वं प्रकीर्त्तितम् ॥"
अथ नमस्कारमाहात्म्यम् ।
नारसिंहे ।
"नमस्कारः स्मृतो यज्ञः सर्व्वयज्ञेषु चोत्तमः ।
नमस्कारेण चैकेन नरः पूतो हरिं व्रजेत् ॥"
स्कान्दे ।
"दण्डप्रणामं कुरुते विष्णवे भक्तिभावितः ।
रेणुसंख्यं वसेत् स्वर्गे शतमन्वन्तरं नरः ॥"
तत्रैव श्रीकृष्णनारदसंवादे ।
"प्रणम्य दण्डवद्भूमौ नमस्कारेण योऽर्च्चयेत् ।
स यां गतिमवाप्नोति न तां क्रतुशतैरपि ॥
नमस्कारेण चैकेन नरः पूतो हरिं व्रजेत् ॥"
तत्रैव शिवोमासंवादे ।
"भूमिमापीड्य जानुभ्यां शिर आरोप्यवै भुवि ।
प्रणमेत् यो हि देवेशं सोऽश्वमेधफलं लभेत् ॥"
तत्रैवान्यत्र ।
"तीर्थकोटिसहस्राणि तीर्थकोटिशतानि च ।
नारायणप्रणामस्य कलां नार्हन्ति षोडशीम् ॥
शाठ्येनापि नमस्कारं कुर्व्वतः शार्ङ्गधन्विने ।
शतजन्मार्ज्जितं पापं तत्क्षणादेव नश्यति ॥
रेणुगुण्ठितगात्रस्य कणा देहे भवन्ति ये ।
तावद्बर्षसहस्राणि विष्णुलोके महीयते ॥"
विष्णुधर्म्मोत्तरे ।
इत्यादि ॥ * ॥
अथ प्रणामनित्यता । बृहन्नारदीये तु वृको-
पाख्यानारम्भे ।
"सकृद्वा न नमेद्यस्तु विष्णवे शर्म्मकारिणे ।
शवोपमं विजानीयात् कदाचिदपि नालपेत् ॥"
किञ्च पाद्मे । वैशाखमाहात्म्ये यमब्रा ह्मण-
संवादे ।
"पश्यन्तो भगवद्द्वारं नामशस्त्रपरिच्छदम् ।
अकृत्वा तत्प्रणामादि यान्ति ते नरकौकसः ॥"
अथ नमस्कारनिषिद्धानि । विष्णुस्मृतौ ।
"जन्मप्रभृति यत्किञ्चित् पुमान् वे धर्म्ममाचरेत् ।
सर्व्वं तन्निष्फलं याति एकहस्ताभिवादनात् ॥"
वाराहे ।
"वस्त्रप्रावृतदेहस्तु यो नरः प्रणमेत माम् ।
श्वित्री स जायते मूर्खः सप्तजन्मनि भामिनि ! ॥"

|  |  |  |
|---|---|---|
|  | “अभिवाद्य जगन्नार्थ कृतार्थश्च तथा भवेत् ।<br>नमस्कारक्रिया तस्य सर्व्वपापप्रणाशिनी ॥<br>जानुभ्यां चैव पाणिभ्यां शिरसा च विचक्षणः ।<br>कृत्वा प्रणामं देवस्य सर्व्वान् कामनवाप्नुयात् ॥”<br>ब्रह्मपुराणे ।<br>“अनादिनिधनं देवं दैत्यदानवदारणम् ।<br>ये नमन्ति नरा नित्यं नहि पश्यन्ति ते यमम् ॥ |  |

किञ्चान्यत्र ।
“अग्रे पृष्ठे धामभागे समीपे गर्भमन्दिरे ।
जपहोमनमस्कारान् न कुर्य्यात् केशवालये ॥”
अपि च ।
“सकृद्भूमौ निपतितो न शक्तः प्रणमेन्मुहुः ।
उत्थायोत्थाय कर्त्तव्यं दण्डवत् प्रणिपातनम् ॥
ततः प्रदक्षिणां कुर्य्यात् भक्त्या भगवतो हरेः ।
नामानि कीर्त्तयन् शक्तौ ताञ्च साष्टाङ्गवन्द-नाम् ॥”
इति हरिभक्तिविलासे ८ विलास ॥ * ॥
अन्यत् नमस्कारशब्दे प्रणामशब्दे च द्रष्टव्यम् ॥
(विषविशेषः । यथा, ऋग्वेदे । ७ । ५१ । २ ।
“यद्विजामन् परुषि वन्दनं भुवत् ॥”
असुरः । रक्षोविशेषः । इति ऋग्भाष्ये सायणः । ७ । २१ । ५ ॥)

**वन्दनमाला**, स्त्री, (वन्दनार्था माला यत्र सा ।)
तोरणम् । इति हलायुधः । २ । १४६ ॥
(वन्दनार्था माला इति कर्म्मधारये ।) रम्भा-स्तम्भचतुष्टयवेष्टिताम्रपत्ररचितमाला । यथा,
“कुर्य्याद्वन्दनमालां यो रम्भास्तम्भैः सुशोभनैः ।
चूतवृक्षोद्भवैः पत्रैर्जागरे चक्रपाणिनः ॥
युगानि पत्रसंख्यानां स्वर्गे तस्योत्सवो भवेत् ।
पूज्यते वासवाद्यैश्च क्रीडते चाप्सरोवृतः ॥”
इति हरिभक्तिविलासे १३ विलासः ॥

**वन्दनमालिका**, स्त्री, (वन्दनमाला + स्वार्थे कन् ।)
वहिर्द्वारोपरि शुभदा माला । यथा, --

**वन्दनीया**, स्त्री, (वदि + कर्म्मणि अनीयर् ।
टाप् ।) गोरोचना । इति त्रिकाण्डशेषः ॥
(विवृतिरस्या गोरोचनाशब्दे विज्ञेया ॥)

**वन्दा**, स्त्री, (वन्दते अपरवृक्षमिति । वदि +
अच् । टाप् ।) वृक्षोपरिवृक्षः । वाँदु इति परगाछा । इति च भाषा । तत्पर्य्यायः । वृक्षा-दनी २ वृक्षरुहा ३ जीवन्तिका ४ । इत्यमरः ॥
वन्दाका ५ शेखरी ६ सेव्या ७ वन्दका ८ ।
इति भरतधृतहड्डः ॥ वन्दकः ९ नीलवल्ली १०
इति रत्नमाला ॥ वन्दाकी ११ परवासिका १२
इति शब्दरत्नावली ॥ वशिनी १३ पुत्त्रिणी १४
वन्ध्या १५ परपुष्टा १६ पराश्रया १७ । इति शब्दचन्द्रिका ॥ लताविशेषः । भिक्षुकी । इति मेदिनी । दे, १० ॥ अस्याः पर्य्यायान्तरं गुणाश्च वन्दाकशब्दे द्रष्टव्याः ॥

**वन्दाकः**, पुं, वृक्षोपरिवृक्षः । वाँदा इति हिन्दी
भाषा । तत्पर्य्यायः । पादपरुहा २ शिखरी ३
तरुरोहिणी ४ वृक्षादनी ५ वृक्षरुहा ६ काम-वृक्षः ७ शैखरी ८ केशरूपा ९ तरुरुहा १०
तरुस्था ११ गन्धमादनी १२ कामिनी १३
तरुभुक् १४ श्यामा १५ उपदी १६ । अस्य

**व(ब)न्दिग्राहः**, पुं, (वन्दिमिव गृहस्थं गृह्णातीति ।
ग्रह + णः ।) अग्न्यायुधदेवतागारभेदकः ।
(डाकाइत इति भाषा ॥) यथा, --
“वन्दिग्राहांस्तथा वाजिकुञ्जराणाञ्च हारिणः ।
असह्यघातिनश्चैव शूलानारोपयेन्नरान् ॥
वन्दिग्राहादीन् बलावष्टम्भेन घातकांश्च नरान् शूलानारोपयेत् । अयञ्च वधप्रकारविशेषो-पदेशः ।
“अग्न्यागारायुधागारदेवतागारभेदकान् ।
हस्त्यश्वरथहर्त्तॄंश्च हन्यादेवाविचारयन् ॥”
इति मनुस्मरणात् । इति मिताक्षराव्यवहार-काण्डे दण्डप्रकरणम् ॥

**व(ब)न्दिचौरः**, पुं, (वन्दिमिव विधाय चौरः अप-
हारकः । गृहस्थं वन्दिमिव कृत्वा समस्तद्रव्या-णामपहारकत्वादस्य तथात्वम् ।) वन्दिग्राहः ।
तत्पर्य्यायः । माचलः २ । इति हारावली ।
१४५ ॥ वन्दीकारः ३ । इति त्रिकाण्डशेषः ॥

**व(ब)न्दिपाठः**, पुं, (वदि + भावे इन् । वन्दिः
स्तुतिस्तस्याः पाठो यत्र ।) स्तुतिग्रन्थः । तत्-पर्य्यायः । भोगावली २ । इति त्रिकाण्डशेषः ॥

**व(व)न्दी**, स्त्री, (वन्दि + “कृदिकारादक्तिनः ।”
इति ङीष् ।) वन्दिः । इत्यमरटीकायां भरतः ॥
(यथा, कुमारे । २ । ५२ ।
“गोप्तारं सुरसैन्यानां यं पुरस्कृत्य गोत्रभित् ।
प्रत्यानेष्यति शत्रुभ्यो वन्दीमिव जयश्रियम् ॥”)

**व(ब)न्दी** [न्], पुं, (वन्दते स्तौति नृपादीन्निति ।
वदि स्तुतौ + णिनिः ।) राजादेर्यात्रादौ वीर्य्यादिस्तुतिकारकः । तत्पर्य्यायः । स्तुति-पाठकः २ । इत्यमरः ॥ मागधः ३ मगधः ४ ।
इत्यन्ये । इति तट्टीकायां भरतः ॥ (यथा, रघुः । ४ । ६ ।
“परिकल्पितसान्निध्या काले काले च वन्दिषु ।
स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थेसरस्वती ॥”)
अस्योत्पत्तिर्यथा, --
“क्षत्त्रियाद्विप्रकन्यायां सूतो भवति जातितः ।
वैश्यान्मागधवैदेहौ राजविप्राङ्गनासुतौ ॥”

"तोरणोद्‌र्ध्वे तु मङ्गल्यं
दामवन्दनमालिका ॥"
इति हेमचन्द्रः । ४ । ७४ ॥

**वन्दना**, स्त्री, (वन्द + "घट्टिवन्दिविदिभ्यश्चेति
वाच्यम् ।" ३ । ३ । १०७ । इत्यस्य
वार्त्तिकोक्त्या
युच् । टाप् ।) स्तुतिः । तत्पर्य्यायः ।
समीची २ ।
इति त्रिकाण्डशेषः ॥ होमभस्मना
तिलकम् ।
यथा, --
"ऐशान्यामाहरेद्भस्म श्रुचा वाथ श्रुवेण वा ।
वन्दनां कारयेत्तेन शिरःकण्ठांशकेषु च ।
कश्यप्रस्येतिमन्त्रेण यथानुक्रमयोगतः ॥"
इति तिथ्यादितत्त्वे वशिष्ठवचनम् ॥

**वन्दनी**, स्त्री, (वन्द + ल्युट् । ङीप् ।) नतिः ।
जीवातुः । वटी । याचनकर्म्म । इति
मेदिनी ।
ने, ९७ ॥ क्वचित् पुस्तके वटीस्थाने
कटी याचन-
कर्म्मस्थाने माचलकर्म्म इति च पाठः ।
तत्र तु
पवर्गीयबकारादौ लिखितोऽयं शब्दः ।
किन्तु
वदि ङ नुत्यभिवादयोरित्यस्मात्
अनट्प्रत्यय-
निष्पन्नत्वात् अन्तःस्थवकारादौ लिखितः
॥

**वन्दनीयः**, त्रि, (वदि + अनीयर् ।) स्तवनीयः ।
वन्द्यः । वन्दितव्यः ।
वदधातोरनीयप्रत्ययेन
निष्पन्नः ॥ (यथा, महाभारते । ७ । ८० ।
३० ।
"ततः शुद्धाप्तमासाद्य जानुभ्यां भूतले
स्थितः ।
शिरसा वन्दनीयं तमभिवन्द्य जगत्पतिम्
॥")

**वन्दनीयः**, पुं, (वन्द्यते भेषजार्थं स्तूयते इति ।
गुणाः । तिक्तत्वम् । शिशिरत्वम् ।
कफपित्त-
श्रमापहत्वम् । वश्यादिसिद्धिदत्वम्
। वृष्यत्वम् ।
कषायत्वम् । रसायणत्वञ्च । इति
राजनिर्घण्टः ॥
अपि च ।
"वन्दाकः स्याद्धिमस्तिक्तः
कषायमधुरो रसे ।
मङ्गल्यः
कफवातास्रक्षोव्रणविषापहः ॥"
इति भावप्रकाशः ॥

**वन्दाका**, स्त्री, वन्दा । इति भरतधृतहड्डः ॥

**वन्दाकी**, स्त्री, वन्दा । इति शब्दरत्नावली ॥

**वन्दारुः**, त्रि, (वन्दते स्तौति अभिवादयतीति
।
वन्द + "शृवन्द्योरारुः ।" ३ । २ ।
१७३ । इति
आरुः ।) वन्दनशीलः । तत्पर्य्यायः
। अभि-
वादकः २ । इत्यमरः । ३ । १ ।
२८ ॥ अभि-
वादयिता ३ । इति शब्दरत्नावली
॥ (यथा,
ऋग्वेदे । १ । १४७ । २ ।
"पीयति त्वो अनुत्वो गृणति
वन्दारुस्त
तन्वं वन्दे अग्ने ॥"
स्तोत्रे, क्ली । इति ऋग्वेदभाष्ये
सायणः । ४ ।
४३ । १ ॥)

**व(ब)न्दिः**, स्त्री, (वन्दते स्तौति नृपादिकं
स्वमु-
क्त्यर्थमिति । वदि + "सर्व्वधातुभ्य
इन् ।" उणा०
४ । ११७ । इति इन् ।)
आकृष्टमनुष्यगवादिः ।
कयेदी इति भाषा । तत्पर्य्यायः ।
प्रग्रहः २
उपग्रहः ३ वन्दी ४ । इत्यमरभरतौ
॥ वन्दिका

इति मानवे १० अध्यायः ॥ * ॥
श्राद्धोत्तरमस्मै शक्तितो दानस्याकरणे निन्दा
यथा, --
"वन्दिभ्यश्चैवमर्थिभ्योऽन्नार्थिभ्यश्चनन्नमर्थितः ।
यदि तत्र न दद्यात्तु विफलं शाक्ततो भवेत् ॥"
वन्दिनो वीर्य्यस्तोतारः । अर्थितः सन् यदि
एभ्योऽन्नं न दद्यात् श्राद्धं विफलं भवेदित्यर्थः ।
"सूताः पौराणिकाः प्रोक्ता मागधा वंश-
शंसकाः ।
वन्दिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः ॥"
इत्युक्तेः । इत्थञ्च श्राद्धोत्तरदाननिषेधात् श्राद्धे
वन्दिप्रभृतिभ्यो दानाकरणे निन्दाश्रवणाच्च
श्राद्धात् पूर्ब्बं तदर्थं भोज्यादिकं उत्सृजेत् ।
इति श्राद्धतत्त्वम् ॥ (भृत्यः । यथा, भागवते ।
११ । ४ । १५ ।
"ओमित्यादेशमादाय नत्वा तं सुरवन्दिनः ।

| | | |
|---|---|---|
| वदि + अनीयर् ।) पीतभृङ्गराजः । इति राज-<br>निर्घण्टः । | ५ । इति शब्दरत्नावली ॥<br>सोपानकः । इत्यु-<br>णादिकोषः ॥ (म्लहः । यथा, भागवते । ६ ।<br>१ । २२ ।<br>"वन्यक्षैः कैतवैश्चौर्य्यैर्गर्हितां वृत्तिमास्थितः ॥"<br>पुं, स्तुतिपाठकः । यथा, हरिवंशे । ११२ ।<br>५० ।<br>"सूतमागधवन्दीनाम्कैकस्य सहस्रिकम् ॥") | |

उर्व्वशीमप्सरःश्रेष्ठां पुरस्कृत्य दिवं ययुः ॥”
“सुरवन्दिनो देवभृत्याः ।” इति तट्टीकायां श्रीधरस्वामी ॥)

**व(ब)न्दीकारः**, पुं, (वन्दीवत् गृहस्थं करोतीति । कृ + “कर्म्मण्यण् ।” ३ । २ । १ । इत्यण् ।) वन्दिग्राहः । डाकाइत इति भाषा । तत्पर्य्यायः । माचलः २ प्रसह्यचौरः ३ चिल्लाभः ४ । इति त्रिकाण्डशेषः ॥

**वन्द्या**, स्त्री, (वन्द्यते स्तूयते इति । वदि + ण्यत् ।) वन्दा । इति शब्दचन्द्रिका ॥ गोरोचना । इति भावप्रकाशः ॥ (वन्दनीये, त्रि । यथा, साहित्यदर्पणे १ परिच्छेदे ।
“आशीः परम्परां वन्द्यां कर्णे कृत्था कृपां कुरु ॥”
यथा च भागवते । ४ । १२ । २६ ।
“आतिष्ठ जगतां वन्द्यं तद्विष्णोः परमं पदम् ॥”)

**वन्द्रं**, क्ली, (वन्द्यते स्तूयते इति । वदि स्तुतौ + “स्फायितञ्चीति ।” उणा० २ । १३ । इति रक् ।) कल्याणम् । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**वन्द्रः**, त्रि, (वन्दते स्तौति देवादीन् पूजाकाले इति । वदि + रक् ।) पूजकः । इत्युणादिकोषः ॥

**वन्यं**, क्ली, (वने भवम् । वन + यत् ।) त्वचम् । इति राजनिर्घण्टः ॥ (कुटन्नटम् । तत्पर्य्यायो बल्या क्वचित् दृश्यते । इति वैद्यकरत्नमालायाम् ॥)

**वन्योपोदकी**, स्त्री, (वन्या वनोद्भूता उपोदकी ।) लताविशेषः । वनपुँइ इति भाषा । तत्पर्य्यायः । वनजा २ वनसाह्वया ३ । अस्या गुणाः । तिक्तत्वम् । कटुत्वम् । उष्णत्वम् । रोचनत्वञ्च । इति राजनिर्घण्टः ॥

**वन्नः**, पुं, (वनति भागमर्हतीति । वन सम्भक्तौ + “ऋज्रेन्द्राग्रवज्रेति ।” उणा० २ । २८ । इति रन्प्रत्ययः ।) अंशी । भागी । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

**वप**, औ ञ डु ऐ मुण्डतन्तुबीजोप्त्योः । इति कविकल्पद्रुमः ॥ (भ्वा०-उभ०-सक०-अनिट् ।) औ, वप्ता । ञ, वपति वपते । डु, उप्त्रिमम् । मुण्डो मुण्डितकरणम् । वपति मस्तकं नापितः । वपति तन्तुं तन्त्रवायः । यदि वपति कृषाणः क्षेत्रमासाद्य बीजम् । इति दुर्गादासः ॥

**वपः**, पुं, (वप् + घः ।) केशमुण्डनम् । बीजवपनम् । इति वपधातोर्भावेऽल्प्रत्ययेन निष्पन्नः ॥

**वपनं**, क्ली, (वप् + भावे ल्युट् ।) केशमुण्डनम् । (यथा, मनुः । ५ । १४० ।
“शूद्राणां मासिकं कार्य्यं वपनं न्यायवर्त्तिनाम् ॥”)
बीजाधानम् । इति मेदिनी । ने, १२२ ॥

**वपनी**, स्त्री, (उप्यते मस्तकादिकमस्यामिति । वप् + अधिकरणे ल्युट् । ङीप् ।) नापितशाला । इति हेमचन्द्रः । ४ । ६६ ॥ (तन्तुवायशाला । “अष्टानां लोकपालानां वपुर्धारयते नृपः ॥”
“वपुस्तेजोऽंशः ।” इति मेधातिथिः ॥ स्त्री, स्वनामख्याता दक्षकन्या । सा तु धर्म्मराजस्य पत्नी । यथा, मार्कण्डेये । ५० । २१ ।
“बुद्धिर्लज्जा वपुः शान्तिः सिद्धिः कीर्त्तिस्त्रयोदशी ।
पत्न्यर्थे प्रतिजग्राह धर्म्मो दाक्षायणीः प्रभुः ॥”)

**वपुःस्रवः**, पुं, (वपुषः शरीरात् स्रवः क्षरणं यस्य ।) शरीरस्थरसधातुः । इति राजनिर्धण्टः ॥

**वपुनः**, पुं, (वप + उनच् । वयुन + पृषोदरादित्वात् यस्य पः इति केचित् ।) देवता । इति शब्दरत्नावली ॥

**वपुषा**, स्त्री, हवुषा । इति भावप्रकाशः ॥ (रूपे, क्ली । यथा, ऋग्वेदे । ३ । २ । १५ ।
“रथं न चित्रं वपुषाय दर्शतं मनुर्हितं सदमिद्राय ईमहे ॥”
“वपुषाय रूपार्थं दर्शतं दर्शनीयम् ।” इति तद्भाष्ये सायणः ॥)

**वपुष्टमा**, स्त्री, पद्मचारिणी । इति जटाधरः ॥ (काशीराजस्य कन्या । जनमेजयस्य पत्नी । सा तु रम्भा नामाप्सरा । जनमेजयकृताश्वमेधकाले इन्द्रेणेयमश्वप्रविष्टेन धर्षितासीदतो जनमेजयेनेयं परित्यक्तापि पुनर्गन्धर्व्वराजविश्वावसुवाक्येन गृतीता । एतद्विवरणन्तु हरिवंशे १८८ अध्याये द्रष्टव्यम् ॥)

यथा, --
"कुटन्नटं परं वन्यं मुस्ताभञ्च परीलवम् ॥"
इति वैद्यकरत्नमालायाम् ॥)

**वन्यः**, त्रि, (वने भवः । वन् + यत् ।) वनोद्भूतः । इति मेदिनी । ये, ५४ ॥ (यथा, रघुः । १ । ४५ ।
"हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान् ।
नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखि-
बाम् ॥")

**वन्यः**, पुं, (वन + यत् ।) वनशूरणः । वाराही-कन्दः । देवनलः । इति राजनिर्घण्टः ॥ (क्षीर-विदारी । तत्पर्य्यायो यथा, --
"क्षीरी शवरपर्ण्याख्यः स्नुक्छदः कुष्ठनाशनः ।
वन्यो मूलकमूलाभः स्वस्कन्दः स च कञ्चुकी ॥"
इति बैद्यकरत्नमालायाम् ॥)

**वन्या**, स्त्री, (वनानामरण्यानां जलानां वा संहतिः । वन् + "पाशादिभ्यो यः ।" ४ । २ । ४९ । इति यः ।) वनसमूहः । इत्यमरः । २ । ४ । ४ ॥ जलसंहतिः । इति मेदिनी । ये, ५४ ॥ मुद्गपर्णी । (तत्पर्य्यायो यथा, रत्नमालायाम् ।
"मुद्गपर्णी क्षुद्रसहा कामुद्गा सिंहपर्णिका ।
वन्या मार्ज्जारगन्धेति सूर्पपर्ण्यावुभे च ते ॥")
गोपालकर्क्कटी । गुञ्जा । मिश्रेया । भद्रमुस्ता । गन्धपत्रा । इति राजनिर्घण्टः ॥ (अश्वगन्धा । तत्पर्य्यायो यथा, --
इति तत्धात्वर्थदर्शनात् ॥)

**वपा**, स्त्री, (उप्यतेऽत्रेति । वप् + भिदाद्यङ् । टाप् ।) छिद्रम् । (यथा, शतपथब्राह्मणे । ६ । ३ । ३ । ५ ।
"अथ वल्मीकवपा सुषिरा व्यध्वे निहिता भवति ॥") मेदः । इत्यमरः । २ । ६ । ६४ ॥
(यथा, रामायणे । १ । १४ । ३६ ।
"पतत्त्रिणस्तस्य वपामुद्धृत्य नियतन्द्रियः ।
ऋत्विक् परमसम्पन्नः स्नपयामास शास्त्रतः ॥"
सा च हृदयस्थधातुः । यथा । "त्वक् च लोहितञ्च मांसञ्च मेदश्च नाभिश्च हृदयञ्च क्लोम च यकृच्च प्लीहा च पुक्कौ च वस्तिश्च पुरीषा-धानञ्चामाशयश्च पक्वाशयश्चोत्तरगुदञ्चाधर गुदञ्च क्षुद्रान्त्रञ्च वपा च वपावहनञ्चेति मातृ-जानि ।" इति चरके शारीरस्थाने तृतीये-ऽध्याये ॥)

**वपिलः**, पुं, (वपति बीजमिति । वप् + इलच् ।) पिता । इत्युणादिकोषः ॥

**वपुः**, [स्] क्ली, (उप्यन्ते देहान्तरभोगसाधन-बीजीभूतानि कर्म्माण्यत्रेति । वप् + "अर्त्ति-पृवपियजीति ।" उणा० २ । ११८ । इति उसिः ।) शरीरम् । इत्यमरः । २ । ६ । ७० ॥
(यथा, रघुः । २ । ४७ ।
"एकातपत्रं जगतः प्रभुत्व नवं वयः कान्तमिदं वपुश्च ॥")
प्रशस्ताकृतिः । इति मेदिनी । से, ३६ ॥ (अंशः । यथा, मनुः । ५ । ९६ ।

**वप्ता**, [ऋ] पुं, (वपति बीजमिति । वप् + तृच् ।) जनकः । इति मेदिनी ॥ कविः । इति जटाधरः ॥ (नापितः । यथा, ऋग्वेदे । १८ । १४२ । ४ ।
"यदा ते वातो अनुवाति शौचि-र्वप्तेव श्मश्रु वपसि प्र भूम ॥"
"यथा वप्ता नापितो वपति मुण्डयति तथा भूम भूमिं प्रवपसि प्रकर्षेण मुण्डयसि ॥" इति तद्भाष्ये सायणः ॥)

**वप्ता**, [ऋ] त्रि, (वपतीति ॥ वप् बीलोप्तौ + तृच् ।) वापकः । इति मेदिनी ॥ (कर्षकः । यथा, मनुः । ३ । १४२ ।
"यथेरिणे बीजमुप्त्वा न वप्ता लभते फलम् ।
तथानृचे हविर्द्दत्त्वा न दाता लभते फलम् ॥")

**वप्रं**, क्ली, पुं, (उप्यतेऽत्रेति । वप + "वृषिवपिभ्यां रन् ।" उणा० २ । २७ । इति रन् ।) दुर्ग-नगरे परिखाया उद्धृतमृत्तिकास्तूपबद्धे यदु-परि प्राकारो निवेश्यते तत् । तथा चार्थ-शास्त्रम् । ख्यातादुद्धृतमृदा वप्रं कारयेत् तस्यो-परि प्राकारमिति । तत्पर्य्यायः । चयः २ । इत्यमरभरतौ ॥ मृत्तिकास्तूपः ३ । इति शब्द-रत्नावली ॥ (यथा, आर्य्यासप्तशत्याम् । ५०५ ।
"लग्नं जघने तस्याः सुविशाले कलितकरि-करक्रीडे ।
वप्रे सक्तं द्विपमिव शृङ्गारस्तां विभूषयति ॥")

| “हयगन्धाश्वगन्धाख्या<br>वाजिगन्धाश्वगन्धकः।<br>वन्या तुरगगन्धा च कम्बुकाश्वावरोहकः<br>॥” | | |
|---|---|---|

महावप्रो यथा, --
“महोद्यानां महावप्रां
तडागशतशोभिताम्।
प्राकारगृहसम्बाधामिन्द्रस्येम्रामरावतीम्
॥”
महान् वप्रो यस्याः ।
“प्राकाराधारभूता कृत्रिमोच्छ्रिता भूमि-
र्व्वप्रसंज्ञा ॥”
इति विष्णुपुराणे ५ अंशे २३ अध्याधे
॥ * ॥
वपति बीजमत्र । क्षेत इति भाषा । तत्-
पर्य्यायः । केदारः २ क्षेत्रम् ३ ।
इत्यमरभरतौ ॥
निष्कुटः ४ वनजम् ५ वाजिका ६
पाटीरः ७ ।
इति जटाधरः ॥ (यथा,
बृहत्संहितायाम् ।
१९ । १६ ।
“शालीक्षुमत्यपि धरा धरणीधराभ-
धाराधरोज्झितपयःपरिपूर्णवप्रा ॥”)
रेणुः । तटः । इति मेदिनीकरहेमचन्द्रौ
॥
(यथा, किराते । ७ । ११ ।
“तत् पूर्ब्बं प्रतिविदधे सुरापगाया
वप्रान्तस्खलितविवर्त्तनंपयोभिः ॥”
पर्व्वतसानुः । यथा, किराते । ५ । ३६
।
“नानारत्नज्योतिषां सन्निपातै-
श्छन्नेष्वन्तः सानुवप्रान्तरेषु ॥”)

**वप्रं**, क्ली, (वप् + “वृधिवपिभ्यां रन् ।” उणा०
२ । २७ । इति रन्) सीसकम् । इति
हेम-
चन्द्रः । ४ । ४६ ॥ (तथास्य
पर्य्यायान्तरम् ।
“सीसं वध्रञ्च वप्रञ्च योगेष्टं नागनामकम्
॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**वभ्र**, गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) वकारादिः । ओष्ठ्यवर्गचतुर्थो-
पधः । वभ्रति । इति दुर्गादासः ॥

**वम्**, व्य, (उ + अ + म् ।) शिवपूजान्ते कपोल-
वाद्यविशेषः । तत्तु उकाराकारमकारात्मकं
शिवप्रणवस्वरूपम् । यथा, --
“डिम् डिम् डिम् डिम् डिडिम् डिम् डिडिमरु
डमरुं वादयन् सूक्ष्मनादं
वम् वम् वम् वम् ववम् वम् भ्रमितदशशिरा-
स्तालमानेन नृत्यन् ।
कर्पूरासिक्तभस्मापटितपृठुजटालम्बिरुद्राक्षमालो
मायायोगी दशास्यो रघुरमणपुरः प्राङ्गणे
प्रादुरासीत् ॥”
इति रामलीलामृतकाव्यम् ॥ * ॥
वरुणबीजम् । यथा । नासापुटौ धृत्वा वमिति
वरुणबीजस्य चतुःषष्टिवारजपेन कुम्भकं कृत्वा
तस्मात् ललाटस्थचन्द्राद्गलितसुधयामातृका-
वर्णात्मिकया समस्तं देहं विरचय्य लमिति
पृथ्वीबीजस्य द्वात्रिंशद्वारजपेन दहं सुदृढं
विचिन्त्य दक्षिणेन वायुं रेचयेत् । इति भूत-
शुद्धिप्रकरणे तन्त्रसारः ॥

**वम**, ण जु टु उद्गिरि । इति कविकल्पद्रुमः ॥
(भ्वा०-पर०-सक०-सेट् ।) वकारादिः । ण,
वेमतुः ववमतुः । अन्ये तु तत्कार्य्यविधायक-
सूत्रे फणादौ चेमं न पठन्ति वेमुश्च केचिद्रुधिर-
मित्यादिसाधनाय तत्सूत्रे दन्त्यवकारादिवर्ज्जन-
स्यानित्यतां स्वीकुर्व्वन्ति । केचित् पुनर्व्वर्ग्य-
वकारादिधात्वन्तरमप्यस्तिइति प्रलपन्ति ।
ज, वामः वमः । उ, वमित्वा वान्त्वा । टु,
वमथुः । उद्गिरि वान्तौ । वमति अन्नमजीर्ण-
वान् । अमन्तत्वेऽपि ञौ ज्वलह्वल इत्यादिना
केवलस्य ह्रस्वविकल्पनात् सोपसर्गस्य नित्यं
ह्रस्वः । वमयति वामयति प्रवमयति । इति
दुर्गादासः ॥

**वमः**, पुं स्त्री, वमनम् । इति वमधातोरच्प्रत्ययेन
निष्पन्नम् । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**वमथुः**, पुं, (वमनमिति । वम् + “ट्वितोऽथुच् ।”

“स दत्त्वा वमनं कृच्छ्रात् मृतकल्पमजी-
वयत् ॥”)
अर्द्दनम् । इति मेदिनी । ने, १२३ ॥
आहुतिः ।
इति विश्वः ॥ (आहरणम् । यथा, रघुः
।
१५ । २९ ।
“या सौराज्यप्रकाशाभिर्ब्बभौ
पौरविभूतिभिः ।
स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशिता
॥” * ॥
अथ वमनकल्पीयविधिः ।
“वमने मदनं श्रेष्ठं त्रिवृन्मूलं विरेचने ।
नित्यमन्यस्य तु व्याधि विशेषेण
विशिष्टता ॥
फलानि तानि पाण्डूनि न
चातिहरितान्यपि ।
आदायाह्नि प्रशस्तर्क्षे मध्ये
ग्रीष्मवसन्तयोः ॥
प्रमृज्य कुशमुत्तोल्यां क्षिप्त्वा वद्ध्वा
प्रलेपयेत् ।
गोमयेनानुमुत्तोलीं धान्यमध्ये
निधापयेत् ॥
मृदुभूतानि मध्विष्टगन्धानि कुशवेष्टनात्
।
निष्कृष्य निर्गतेऽष्टाहे
शोषयेत्तान्यथातपे ॥
तेषां ततः सुशुष्काणामुद्धृत्य
फलपिप्पलीः ।
दधिमध्वाज्यपललैर्मृदित्वा शोषयेत्
पुनः ॥
ततः सुगुप्तं संस्थाप्य कार्य्यकाले
प्रयोजयेत् ।
अथादाय ततो मात्रां जर्ज्जरीकृत्य
वासयेत् ॥
शर्व्वरीं मधुयष्ट्या वा कोविदारस्य वा
जले ।
कर्व्वुदारस्य विम्ब्या वा नीपस्य
विदुलस्य वा ॥

**वप्रः**, पुं, (वपति बीजमिति । वप् + रन् ।)

तातः । इति मेदिनी । रे, ८२ ॥
प्राकारः ।
इति विश्वः ॥ प्रजापतिः । इति संक्षिप्तसारो-
णादिवृत्तिः ॥

**वप्रा**, स्त्री, (वप् + रन् । टाप् ।) मञ्जिष्ठा ।

इति राजनिर्घण्टः ॥ (विवरणमस्या मञ्जिष्ठा-
शब्दे ज्ञातव्यम् ॥)

**वप्रिः**, पुं, (वपति बीजमत्र । वप् + "वङ्क्र्या-

दयश्च ।" उणा० ४ । ६६ । इति क्रिन्प्रत्ययेन
साधुः ।) क्षेत्रम् । इति सिद्धान्तकौमुद्या-
मुणादिवृत्तिः ॥ दुर्गतिः । समुद्रः । इति संक्षिप्त-
सारोणादिवृत्तिः ॥

**वप्री**, स्त्री, (वम्री + पृषोदरादित्वात् साधुः ।)

वल्मीकः । इति हलायुधः ॥

**वबः**, पुं, एकादशकरणान्तर्गतप्रथमकरणम् ।

अस्याधिपतिरिन्द्रः । तत्र विहितानि यथा, --
"पौष्टिकस्थिरशुभानि वबाख्ये ।"
इति ज्योतिस्तत्त्वम् ॥
अत्र जातफलम् ।
"वबाभिधाने जननं हि यस्य
शूरोऽतिधीरो मनुजः कृती स्यात् ।
पद्मालया तन्निलये निवास्रं
करोति नित्यं सुविचक्षणः स्यात् ॥"
इति कोष्ठीप्रदीपः ॥
दाक्षिणात्यमते अस्य शब्दस्य प्रथमबकारः
पवर्गीयः शेषवकारोऽन्तःस्थः ॥

३ । ३ । ८९ । इति अथुच् ।) वमिः । (यथा,
सुश्रुते उत्तरतन्त्रे ४५ अध्यायः ।
"दौर्ब्बल्यश्वासकाशज्वरवमथुमदाःपाण्डुता-
दाहमूर्च्छाः ॥")
हस्तिशुण्डनिर्गतजलकणा । तत्पर्य्यायः । कर-
शीकरः २ । इत्यमरः । २ । ६ । ५५ ॥ (यथा,
नैषधे । १९ । ६ ।
"रजनिवमथुप्रालेयाम्भः कणक्रमसंभृतैः
कुशकिशलयस्याच्छैरग्रेशयैरुदबिन्दुभिः ॥")

**वमनं**, क्ली, (वम् + भावे ल्युट् ।) छर्द्दनम् ।

(यथा, सुश्रुते । १ । १२ ।
"मधुराम्लौ रसौ वापि वमनाय प्रदापयेत् ॥"
वमनद्रव्यमपि । यथा, कथासरित्सागरे
६४ । १७ ।

शणपुष्प्याः सदा पुष्प्याः
प्रत्यक्पुष्प्युदकेऽथवा ।
ततः पिबेत् कषायं तं
प्रातर्मुदितगालितम् ॥
सूत्रोदितेन विधिना साधु तेन तथा वमेत् ।
श्लेष्मज्वरप्रतिश्यायगुल्मान्तर्व्विद्रधीषु च ॥"
"पित्ते कफस्थानगते जीमूतादिजलेन तत् ।
हृद्दाहेऽधोऽस्रपित्ते च क्षीरं तत्पिप्पली शृतम् ॥
क्षैरेयीं वा कफच्छर्दिप्रसेकतमकेषु च ।
दध्युत्तरं वा दधि वा
तत्स्रुतक्षीरसम्भवम् ॥
फलादिक्वाथकल्काभ्यांसिद्धं तत् सिद्धदुग्ध-
जम् ।
सर्पिः कफाभिभूतेऽग्नौ शुष्यद्देहे च वा मतम् ॥"
"वत्सकादिप्रतीवापः कषायः फलमज्जजः ।
निम्बार्कान्यतरक्वाथसमायुक्तो नियच्छति ॥
बद्धमूलानपि व्याधीन् सर्व्वान् सन्तर्पणोद्भवान् ।
वाटपुष्पफलश्लक्ष्णचूर्णैर्माल्यं सुरूक्षितम् ॥
वमेन्मण्ड वसादीनां तृप्तो जिघ्रन् सुखं सुखी ॥"
"इक्ष्वाकुर्व्वमने शस्तः प्रताम्यति च मानवे ।
फलपुष्पविहीनस्य प्रवालैस्तस्य साधितम् ।
पित्तश्लेष्मज्वरे क्षीरं पित्तोद्रिक्ते प्रयोजयेत् ॥"
"सक्तुभिर्व्वा पिबेन्मन्थं तुम्बीस्वरसभावितैः ।
कफोद्भवे ज्वरे कासे गलरोगेष्वरोचके ॥
गुल्मे ज्वरे प्रसक्ते च कल्कं मांसरसैः
पिबेत् ।

|  |  | नरः साधु वमत्येवं न च दौर्बल्यमश्नुते ॥"<br>"जीवकर्षभकौवीरा कपिकच्छूः शतावरी ।<br>काकोलीश्रावणी मेदा महामेदा मधूलिका ॥<br>तद्रजोभिः पृथग्लेहा धामार्गवरजोऽन्विताः ।<br>कासे हृदयदाहे च शस्ता मधुसिताहृताः ॥"<br>"सर्षपाणां मधूकानां तोयेन लवणस्य वा ।<br>पाययेत् कौटजं बीजं युक्तं कृशरयाथवा ॥ |
|---|---|---|

सप्ताहं वार्कदुग्धाक्तं तच्चूर्णं पाययेत्
पृथक् ।
फलजीमूतकेक्ष्वाकु
जीवन्तीजीवकोदनैः ॥
वमनौषधमुख्यानामिति
कल्पदिगीरिता ।
बीजेनानेन मतिमानन्यान्यपि च
कल्पयेत् ॥”
इति वाभटे कल्पस्थाने
प्रथमेऽध्याये ॥)

**वमनः**, पुं, (वमतीव शुक्लवर्णमिति । वम् + ल्युः ।)
शणः । इति राजनिर्घण्टः ॥

**वमनी**, स्त्री, (वमन + ङीप् ।) जलौका । इति
राजनिर्घण्टः ॥ (विवृतिरस्या
जलौकाशब्दे
ज्ञातव्या ॥)

**वमनीया**, स्त्री, (वमयतीति । वम् + न्यर्थविवक्षा-
याम् । अभिधानात् कर्त्तरि अनीयर्
।) मक्षिका ।
इति राजनिर्घण्टः ॥ वमनयोग्ये, त्रि
॥

**वमिः**, स्त्री, (वमनमिति । वम् + सर्व्वधातुभ्य इन् ।
उणा० ४ । ११७ ।) प्रच्छर्द्दिका ।
इत्यमरः ।
२ । ६ । ५५ ॥ (अस्याः
ससम्प्राप्तिलक्षणचिकित्सितं
पथ्यापथ्यञ्च यथा, --
“आमजे शूलरोगार्त्तिः पर्व्वभेदो
भ्रमः क्लमः ।
शोषः शिरोव्यथा क्लेदो नेत्रे
गम्भीरमिच्छति ॥
खल्ली वा चेतनं वापि
अजीर्णाज्जायते वमिः ।
गम्भीरनेत्रो वमते विड्बन्धो
वातिसार्य्यते ॥
क्रिमिजं वमनं ज्ञात्वा क्रिमीणां शमनक्रिया ॥
न चोष्णं नातिचाम्लञ्च न तीक्ष्णं न तथा लघु ।
तण्डुलीयकशाकं वा न मद्यं काञ्जिकं न तु ॥
वमिदोषे च कथितं पथ्यञ्चात्र शृणुष्व भे ।
आनूपं शालिभक्तञ्च शतपुष्पा च वास्तुकम् ॥
आढकी मुद्गयूषञ्च दधि सर्पिर्गुडान्वितम् ।
अङ्गारमण्डका चाथ वमौ पथ्यं प्रशस्यते ॥
यथाबलं यथाकालं यथारोगं यथानलम् ।
तथा दृष्ट्वा प्रकुर्व्वन्ति पथ्यानां समुपक्रमम् ॥
दिवानिद्रां प्रयुञ्जीत वमौ श्वासेऽतिसारके ।
हिक्काशोषे तथा जीर्णे वमिक्लेदेऽथवा पुनः ॥
न चोष्णतोयपानञ्च नातिभोजनमेव च ।
नधावनञ्च कर्त्तव्यं वर्ज्जयेद्वमनार्द्दिते ॥”
इति वैद्यके ॥)
अथ छर्द्द्यधिकारः । तत्र छर्द्दिविप्रकृष्टसन्नि-
कृष्टनिदानं पूर्ब्बरूपं संप्राप्तिञ्चाह ।
“अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरपि ।
अकाले चातिमात्रैश्च तथा सात्म्यैश्च भोजनैः ॥
आमाद्भयात्तथोद्वेगादजीर्णात्कृमिदोषतः ।
नार्य्याश्चापन्नसत्त्वायास्तथातिद्रुतमश्नतः॥
दुष्टैर्दोषैः पृथक् सर्व्वैर्वीभत्सालोकनादिभिः ।
वीभत्सैर्हेतुभिश्चान्यैर्मुक्तमुत्क्लिश्यते बलात् ॥”
आमात् असम्यक् पक्वाद्रसात् । अजीर्णात् यथा-
स्थिताद्भ, क्तात् । आपन्नसत्त्वायाः प्राप्तगर्भायाः ।
अन्यैर्वीभत्सैर्विकृतैर्हेतुभिः घृणाकारिभिः
अनिष्टश्रवणस्पर्शनदर्शनभक्षणघ्राणैरुत्क्लिश्यते-
ऊर्द्ध्वं नीत्वा मुखाद्बहिष्क्रियते ॥ * ॥ पूर्व्वरूप-
माह ।
“हृल्लासोद्गाररोधौ च प्रसेको लवणास्थता ।
द्वेषोऽन्नपाने च भृशं वमीनां पूर्व्वलक्षणम् ॥”
छर्द्देः सामान्यलक्षणमाह ।
“छादयन्नाननं वेगैरर्द्दयन्नङ्गभञ्जनैः ।
निरुच्यते छर्द्दिरिति दोषो वक्त्रं प्रधावितः ॥
छादयन् पूरयन् अङ्गभञ्जनैः अङ्गभेदैः अर्द्दयन्
अद्गानि पीडयन् । वक्त्रं प्रधावितः वक्त्रं प्रति
धावितः दोषः छर्द्दिर्निरुच्यते ॥” * ॥ वातजाया
लक्षणमाह ।
“हृत्पार्श्वपीडामुखशोषशीर्ष-
नाभ्यर्त्तिकासस्वरभेदतोदैः ।
स्निग्धं घनं स्वादु कफाङ्गि शुक्लं
सलोमहर्षोऽल्परुजं वमेत्तु ॥”
सन्तोषस्तृप्तिः ॥ * ॥ त्रिदोषजामाह ।
“शूलाविपाकारुचिदाहतृष्णा-
श्वासप्रमोहप्रबलाप्रसक्तम् ।
छर्द्दिस्त्रिदोषाल्लवणाम्लनील-
सान्द्रोष्णरक्तं वमतां नृणां स्यात् ॥”
आगन्तुजामाह ।
“असात्म्यजां च क्रिमिजामजा च
वीभत्सजा दौर्हृदजा च या हि ।
सा पञ्चमी ताञ्च विभावयेच्च
दोषोच्छ्रयेणैव यथोक्तमादौ ॥”
एताः पञ्चागन्तुजत्वेन साम्यादेकैव
अतएव सा
आगन्तुजा पञ्चमी विभावयेत्
अनुवन्धयेत् ॥ * ॥
उपद्रवानाह ।
“कासः श्वासो ज्वरस्तृष्णा हिक्का
वैचित्यमेव च ।
हृद्रोगस्तमकश्चैव ज्ञेयाश्छर्द्देरुपद्रवाः
॥
वैचित्यं विकृतचित्तत्वम् । तमकोऽत्र
तमः ।
श्वासपदेनैव तमकाख्यस्यापि
श्वासस्योक्तत्वात् ॥
असाध्यां साध्याञ्चाह ।
“क्षीणस्य या च्छर्द्दिरतिप्रसक्ता
सोपद्रवा शोषितरूपयुक्ता ।
सचन्द्रिकां तां प्रवदेदसाध्यां
साध्यां चिकित्सेत् निरुपद्रवाञ्च ॥”
सचन्द्रिका
मयूरपिच्छचन्द्रिकाप्रभायुक्ता ॥ * ॥
अथ छर्द्देश्चिकित्सा ।
“आमाशयोत्क्लेशभवा हि सर्व्वा-
श्छर्द्यो मता लंवनमेव तस्मात् ।
विधीयते मारुतजां विना तु
संशोधनं वा कफपित्तहारि ॥”
अत्र द्वितीयपादे छर्द्दीशब्दः ॥

गात्रे खल्ली करं शूलं तथा
शोथोऽतिमूर्च्छना ।
विकलाङ्गो भ्रमार्त्तश्च भ्रमत्तदीक्षते
जगत् ॥
शिरोर्त्तिर्विपतेऽत्यर्थं करपादौ
हिमोपमौ ।
एतैर्लिङ्गैस्तु संयुक्तां छर्द्दिं दूरे
परित्यजेत् ॥”
चिकित्सा ।
“स पञ्चमूलीक्वथितः कषायः
ससैन्धवञ्चामलकञ्च कल्कः ।
क्वाथं पिबेन्मिश्रितपिप्पलीकं
स वातच्छर्दिर्व्विनिवारणञ्च ॥”
“आमलक्या रसेनाथ घृष्टं चन्दनकं
मधु ।
गुटिकामलमानेन लेहो हन्ति वमिं
ध्रुवम् ॥
चित्रककटुकरजनीद्वयञ्च फलत्रिकं
मधुना च
यावशूकञ्च ।
समकृतमिति चूर्णमेतन्मधुना युतं
वमिं निवा-
रयति ॥”
“काकोली काकमाची च क्वाथं
शर्करया युतम् ।
लाजाशर्करसंयुक्तं हन्ति पित्तवमिं
नृणाम् ॥
मातुलुङ्गरसश्चैव पथ्याशर्करया
युतः ।
हन्ति कासं पित्तभवं वमिं शीघ्रं
नियच्छति ॥
दृष्ट्वा पित्तवमिं घोरां
सदाहभ्रमदायिनीम् ।
तत्रारग्वधपत्राणि
मधुशर्करयान्वितम् ॥
क्षीरपानं प्रशस्तं वा
मुस्ताशर्करयान्वितम् ।”
“जम्ब्वाम्लयोः प्रवालानि
दाडिमामलकन्तथा ।
मस्तुनोपोषितं पानं हन्याच्छले
ष्मवमिं नृणाम् ॥

उद्गारशब्दप्रबलं सफेनं
विच्छिन्नकृष्णं तनुकं कषायम् ॥
कृच्छ्रेण चाल्पं महता च वेगे-
नार्त्तोऽनिलाच्छर्द्दयतीवदुःखम् ॥”
कषायं कषायरसम् । दुःखं दुःखमिव छर्द्द-
यति ॥ * ॥ पित्तजामाह ।
“मूर्च्छापिपासामुखशोषमूर्द्ध
ताल्वक्षिसन्तापतमोभ्रमार्त्तः ।
पीतं भृशोष्णं हरितञ्च तिक्तं
धूम्रञ्च पित्तेन वमेत् सदाहम् ॥” * ॥
कफजामाह ।
“तन्द्रास्यमाधुर्य्यकफप्रसेकं
सन्तोषनिद्रारुचिगौरवार्त्तः ।

“हन्यात् क्षीरोदकं पीतं छर्द्दिं
पवनसम्भ-
वाम् ।
मुद्गामलकयूषो वा ससर्पिष्कः
ससैन्धवः ॥”
क्षीरोदकं नाशितस्य क्षीरस्य उदकम् ॥
२ ॥
“गुडूचीत्रिफलानिम्बपटोलैः क्वथितं
जलम् ।
पिबेन्मधुयुतं तेन छर्द्दिर्नश्यति पित्तजा
॥ ३ ॥
हरीतकीनां चूर्णन्तु
लिह्यान्माक्षिकसंयुतम् ।
अधोमार्गीकृते दोषे छर्द्दिः शीघ्नं
निवर्त्तते ॥ ४ ॥
बिडङ्गत्रिफलाविश्वाचूर्णं मधुयुतं पिबेत्
।
विडङ्गप्लवशुण्ठीनां चूर्णं वा कफजां
वमिम् ॥”
प्लवं कैवर्त्तीमुस्तम् । गुडतजी इति
लोके ॥ ५ ॥
“पिष्ट्वा घात्रीफलं लाजान् शर्करां च
पलो-
न्मिताम् ।
दत्त्वा मधुपलञ्चापि कुडवं सलिलस्य च
।
वाससा गालितं पीतं हन्ति छर्द्दिं
त्रिदोष-
जाम् ॥ ६ ॥
गुडच्या रचितं हन्ति हिमं
मधुसमन्वितम् ।
दुर्निवारामपि च्छर्द्दिं त्रिदोषजनितां
बलात् ॥ ७
एलालवङ्गगजकेशरकोलमज्ज-
लाजप्रियङ्गु घनचन्दनपिप्पलीनाम् ।
चूर्णानि माक्षिकसितासहितानि लीढ्वा

| सर्ज्जार्ज्जुनं धवकदम्बककोलचूर्णं शुण्ठ्या च धान्यसहितं सगुडं प्रदद्यात् ।<br>श्लेष्मोद्भवं वमनमाशु निहन्ति पुंसां शुण्ठीकणा मधुविडङ्गयुतोऽपि लेहः ॥"<br>"ऊद्ध्र्वगागगते दोषे विरेको हि प्रशस्यते ।<br>तस्मिन् जातेऽप्यधोभागं वमनं शाम्यति ध्रुवम् ॥<br>अथ द्विभागमाप्तश्चेत्तदा देयाभया मधु । | | |
|---|---|---|

छर्द्दिं निहन्ति कफमारुतपित्तजाताम्
॥”
इति एलादिचूर्णम् ॥ ८ ॥
“अश्वत्थवल्कलं शुष्कं दग्धं
निर्व्वासितं जले ।
तज्जलं पानमात्रेण छर्द्दिं जयति
दुर्ज्जयाम् ॥ ९ ॥
पथ्यात्रिकटुधान्याकजीरकाणां रजो
लिहन् ।
मधुना नाशयेच्छर्द्दिमरुचिञ्च
त्रिदोषजाम् ॥ १० ॥
विल्वत्वचो गुडूच्या वा क्वाथः क्षौद्रेण
संयुतः ।
छर्दिं त्रिदोषजां हन्ति पर्प्पटः पित्तजां
तथा ॥ ११ ॥
आम्रास्थिविल्वनिर्य्यूहः पीतः
समधुशर्करः ।
निहन्यात् छर्द्यतीसारं वैश्वानर
इवाहुतिम् ॥”
इति निर्यूहक्वाथः ॥ १२ ॥
“जम्ब्वाम्रपल्लवशृतं लाजरजःसंयुतं
शीतम् ।
शमयति मधुना युक्तं वमिमतिसारं
तृषार्त्ति-
मुग्राम् ॥ १३ ॥
वीभत्सजां हृद्यतमैरिष्टैर्दौहृदजां फलैः
।
लङ्घनैरामजां छर्द्दिं जयेत्
सात्म्यैरसात्म्य-
जाम् ॥ १४ ॥
कृमिहृद्रोगवद्धन्यात् वमिं
कृमिसमुद्भवाम् ।
तत्र तत्र यथादोषं क्रियां कुर्य्यात्
चिकित्-
सकः ॥” १५ ॥
इति छर्द्यधिकारः । इति भावप्रकाशः
॥

**वमिः**, पुं, (वमति उद्गिरति धूमादिकमिति ।

“तुल्यशीलवयोयुक्तां तुल्याभिजनसंयुताम् ।
नैषधोऽर्हति वैदर्भीं तञ्चेयमसितेक्षणा ॥”
अन्नम् । इति निघण्टुः । २ । ७ ॥ यथा, ऋग्-
वेदे । २ । २० । १ ।
“वयं ते वय इन्द्र विद्धि षुणः प्रभरामहे वाजयु-
र्नरथम् ॥”)
यौवनम् । इति मेदिनी । से, ३५ ॥ * ॥ वयो-
विशेषे कर्त्तव्यानि यथा, --
“शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥”
इति रघुवंशे १ सर्गः ॥ * ॥
अपि च ।
“प्रथमेनार्ज्जिता विद्या द्वितीये नार्ज्जितं धनम् ।
तृतीये नार्जितं पुण्यं चतुर्थे किं करिष्यति ॥”
इति चाणक्यशतकम् ॥
वयोविशेषाणां नियमा यथा, --
“कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि ।
कैशोरमापञ्चदशात् यौवनञ्च ततः परम् ॥”
इति प्रायश्चित्ततत्त्वधृतवचनम् ॥ * ॥
अपि च ।
“आषोडशाद्भवेद्बालस्तरुणस्तत उच्यते ।
वृद्धः स्यात् सप्ततेरूर्द्ध्वं वर्षीयान् नवतेः परम् ॥”
इति भरतधृता स्मृतिः ॥ * ॥
अन्यच्च ।
“बाल्यं वृद्धिर्वयो रूपं चक्षुस्त्वक् श्रोत्ररेतसी ।
दशकेन निवर्त्तन्ते मनः सर्व्वन्द्रियाणि च ॥”
इति महाभारतम् ॥ * ॥
(“कालप्रमाणविशेषापेक्षिणी हि शरीरावस्था
वयोऽभिधीयते । तद्वयो यथा स्थूलभेदेन
त्रिविधम् । बालं मध्यं जीर्णमिति । तत्र वाल-
मपरिपक्वधातुगुणमजातव्यञ्जनंसुकुमाराक्लेश-
सहमसम्पूर्णबलं श्लेष्मधातुप्रायं आषोडशवर्षम् ।-
विवर्द्धमानधातुमुणं पुनः प्रायेणानवस्थितसत्त्व-
मात्रिंशद्वर्षमुपदिष्टम् । मध्यं पुनः समर्थागत-
बलवीर्य्यपौरुषपराक्रमग्रहणस्मरणवचनविज्ञान-
सर्व्वधातुगुणं पित्तधातुप्रायमाषष्टिवर्षमुद्दिष्टम् ।
अतःपरं परिहीयमानधात्विन्द्रियबलपौरुषपरा-
क्रमग्रहणधारणस्मरणवचनविज्ञानंभ्रश्यमान-
धातुगुणं वातधातुप्रायं क्रमेण प्रजीर्णमुच्यते आ-

जीर्णागारमिवाभिवृष्टमवसीदन्तं
वृद्धमाचक्षते ॥
तत्रोत्तरोत्तरासु वयोऽवस्थासूत्तरोत्तरा
भेषज-
मात्राविशेषा भवन्त्यृते च परिहाणे
स्तत्राद्या
पेक्षया प्रतिकुर्व्वीत । भवन्ति चात्र ।
वाले विवर्द्धते श्लेष्मा मध्यमे पित्तमेव
तु ।
भूयिष्ठं वर्द्धते वायुर्वृद्धे तद्वीक्ष्य
योजयेत् ॥
अग्निक्षारविरेकैस्तु बालवृद्धौ
विवर्ज्जयेत् ।
तत्साध्येषु विकारेषु मृद्वीं कुर्य्यात्
क्रियां
शनैः ॥”
इति सुश्रुते सूत्रस्थाने ३५ अध्यायः
॥

**वयःस्थः**, त्रि, (वयसि यौवने तिष्ठतीति । वयस्
+
स्था + कः ।) युवा । इति हेमचन्द्रः ।
३ । ३ ॥
(यथा, महाभारते । १ । ४२ । ४ ।
“पित्रा पुत्त्रो वयःस्थोऽपि सततं वाच्य
एव तु ॥”)

**वयस्थः**, त्रि, युवा । इत्यमरः । २ । ६ । ४२ ॥
वयसि यौवने तिष्ठति इति वयस्थः डः
निपा-
ताद्विसर्गस्य वा लुक् वयःस्थश्च ॥
वयःपक्षिणि
बाल्यादौ वयो यौवनमात्रके । इति
विश्वः ।
इति भरतः ॥

**वय(यः)स्था**, स्त्री, (वयो यौवनं तिष्ठत्यनयेति ।
वयस्
+ स्था + घञर्थे कः । निपातनात् वा
विसर्गस्य

टुवम उद्गिरणे + “इक् कृष्यादिभ्यः ।” इतीक् ।)
अग्निः । इति मेदिनी । मे, २९ ॥
धूर्त्तः । इति
शब्दरत्नावली ॥

**वमितः**, त्रि, (वम् + क्तः ।) वान्तः । (यथा, --
“वमितं लङ्घयेत् प्राज्ञो लङ्घितं नतु वामयेत् ।
वमने क्लेशबाहुल्यात्
हन्याल्लङ्घनकर्षितम् ॥”
इत्युद्भटः ॥”)
वमनकृतवस्तु । इति
मुग्धबोधव्याकरणम् ॥

**वम्भः**, पुं, वंशः । इति शब्दरत्नावली ॥

**वम्रीकूटः**, पुं, वल्मीकः । इति हेमचन्द्रः ॥

**वय**, ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) ङ, वयते ।
इति दुर्गा-
दासः ॥

**वयं**, त्रि, अस्मदादिः । आमरा इति भाषा ।
अस्मच्छब्दस्य वयादेशे जसि
रूपोऽयम् । इति
व्याकरणम् ॥ (यथा, --
“एको भवामि स्म भवेऽहमादौ
दारैरथोभौ स्म भवाव आवाम् ।
वयं भवामो बहवः स्म पुत्त्रै-
स्त्वन्माययाद्यापि विभो प्रसीद ॥”
इति मुग्धबोधव्याकरणम् ॥)

**वयः**, [स्] क्ली, (वयते वेति अजतीति वा । वय
ङ गतो वीगतौ अजगतौ वा + असुन् । अजते-
र्वीभावः ।) पक्षी । (यथा, विष्णुपुराणे । १ ।
५ । ४६ ।
“ततः स्वच्छन्दतोऽन्यानि वयांसि
वयसो-
ऽसृजत् ॥”)
वर्षशतम् ।” इति चरके विमानस्थानेऽष्टमेऽध्याये ॥
“वयस्तु त्रिविधं बालं मध्यं वृद्धमिति । तत्रोन-
षोडशवर्षा बालास्तेपि त्रिविधाः क्षीरपाः
क्षीरान्नादा अन्नादा इति । तेषु संवत्सरपराः
क्षीरपा द्विसंवत्सरपराः क्षीरान्नादाः परतो-
ऽन्नादा इति ॥ षोडशसप्तत्योरन्तरे मध्यं वय-
स्तस्य विकल्पो वृद्धिर्यौवनं सम्पूर्णता हानि-
रिति । तत्राविंशतेर्वृद्धिरात्रिंशतो यौवनमा-
चत्वारिंशतः सर्व्वधात्विन्द्रियबलवीर्य्यसम्पूर्णता ।
अत ऊर्द्ध्वमीषत्परिहाणिर्यावत् सप्ततिरिति ॥
सप्ततेरूर्द्ध्वं क्षीयमाणधात्विन्द्रियबलवीर्य्योत्साह
महन्यहनिवलीपलितखालित्यजुष्टंकासश्वास-
प्रभृतिभिरुपद्रवैरभिभूयमानं सर्व्वक्रियास्वसमर्थं
लोपः ।) आमलकी । हरीतकी ।
सोमवल्लरी ।
इत्यमरः । २ । ४ । १३७ ॥ गुडूची ।
सूक्ष्मैला ।
काकोली । आली । इति मेदिनी । थे,
३२ ॥
शाल्मलिः । इति हेमचन्द्रः ॥
क्षीरकाकोली ।
इति भावप्रकाशः ॥ अत्यम्लपर्णी ।
(यथा,
सुश्रुते उत्तरतन्त्रे । ३२ ।
“वचा वयस्था गोलोमी हरितालं
मनःशिला ।
कुष्ठं सर्ज्जरसश्चैव तैलार्थे वर्ग इष्यते ॥”)
मत्स्याक्षी । युवती । इति
राजनिर्घण्टः ॥

**वयस्यः**, पुं, (वयसा तुल्यः । वयस् + “नौवयो-
धर्म्मेति ।” ४ । ४ । ९१ । इति यत् ।) समान-
वयस्कः । तत्पर्य्यायः । स्निग्धः २
सवयाः ३ ।
इत्यमरः । २ । ८ । १२ ॥ (यथा,
आर्य्यासप्त-
शत्याम् । ४०३ ।
“बहुयोषिति लाक्षारुणशिरसि
वयस्येन दयित
उपहसिते ।
तत्कालकलितलज्जा पिशुनयति
सखीषु सौभा-
ग्यम् ॥”)

**वयस्या**, स्त्री, (वयस्य + टाप् ।) सखी । इत्यमरः ।
२ । ६ । १२ । (यथा,
कथासरित्सागरे । १० ।
१४५ ।
“अत्यर्थं सा च दृष्ट्वा त्वां जायते
मदनातुरा ।
तां भजस्व वयस्यां मे ततः
क्षेममवाप्स्यसि ॥”

| | | |
|---|---|---|
| वाल्यादिः । इत्यमरः । ३ । ३ । २२९ ॥ (यथा, महाभारते । ३ । ६८ । २३ । | | इष्टका । यथा, शतपथब्राह्मणे । १० । ४ । ३ । १५ । "एकया न विंशतिर्व्वयस्यास्ता एकचत्वारिंश- द्द्वितीया चितिः ।" तथाच, वाजसनेयसंहिता- भाष्ये । १४ । ९ । "वयस्यासंज्ञका इष्टका उपदधात्येकोविंशति- मन्त्रैरित्यर्थः ॥") **वयुनं**, क्ली, (वीयते गम्यते प्राप्यते विषया अनने- नेति । अज गतौ + "अजियमिशीङ्भ्यश्च ।" |

उणा० ३ । ६१ । इति उनण् । स च कित् ।
अजेर्व्वीभावः ।) ज्ञानम् । यथा, --
“हस्ताग्राह्ये रचयति विधिं
पीठकोदूखलाद्यै-
श्छिद्रं ह्यन्तर्निहितवयुनः शिक्यभाण्डेषु
तद्वित् ।”
इति श्रीभागवते १० स्कन्धे ८ अध्यायः ॥
शिक्यभाण्डेषु अन्तर्निहितदध्यादौ वयुनं
ज्ञानं
यस्य सः । इति तट्टीकायां श्रीधरस्वामी ॥

**वयुनः**, पुं, (वीयते गम्यते ऽत्रेति । अज गतौ +

उनण् ।) देवतागारम् । इत्युणादिकोषः ।
(एतदर्थे क्लीवलिङ्गः । इति उज्ज्वलदत्तः ।
३ । ६१ ॥ विषणागर्भजातः कृशाश्वस्य
पुत्त्रः ।
यथा, भागवते । ६ । ६ । २० ।
“कृशाश्वोऽर्च्चिषि भार्य्यायां
धूमकेतुमजीजनत् ।
विषणायां वेदशिरं देवलं वयुनं मनुम् ॥”)

**वयोधाः**, [स्] पुं, (वयो यौवनं दधातीति । वयम् +

धा + “वयसि धाञः ।” उणा० ४ । २२८ ।
इति असिः । स च डित् ।) युवा ।
इत्युणादि-
कोषः ॥ (अन्नम् । यथा,
वाजस्ननेयसंहिता-
याम् । १५ । ७ ।
“वयोधसाधीतेनाधीतं जिन्व ।”
“वयोधसा वयो दधाति पुष्णाति वयोधा
अन्नं
तेनाधीतेनाध्ययनायोपहिताधीतं जिन्व ॥”
इति तद्भाष्ये महीधरः ॥ आयुर्दातरि, त्रि ।
यथा, वाजसनेयसंहितायाम् । २८ । २४ ।
“अग्निमिन्द्रं वयोधसम् ॥”
“तपोभिरिष्यते यस्तु देवेभ्यः स वरो
मतः ॥”
इति च भरतः ॥
जामाता । (यथा, रघुः । ६ । ८६ ।
“प्रमुदितवरपक्षमेकतस्तत्
क्षितिपतिमण्डलमन्यतोवितानम् ॥”)
षिड्गः । इति मेदिनी । रे, ६२ ॥
गुल्गुलुः । इति
शब्दरत्नावली ॥ पतिः । इति
हेमचन्द्रः । ३ । १८० ॥
(निग्रहः । यथा, ऋग्वेदे । १ । १४३ ।
५ ।
“न यो वराय मरुतामिव स्वनः सेनेव
सृष्टा
दिव्या यथाशनिः ॥”
“योऽग्निर्वराय वरणाय निग्रहाय शक्तो
न
भवति ॥” इति तद्भाष्ये सायणः ॥)

**वरः**, त्रि, (वृ + अप् ।) श्रेष्ठः । इत्यमरः । ३ । ३ ।

१७२ ॥ (यथा, विष्णुपुराणे । १ ।
११ । १८ ।
“राजासनं राजच्छत्रं वराश्वा
वरवारणाः ।
यस्य पुण्यानि तस्यैते मत्वैतत् शाम्य
पुत्त्रक ॥”)

**वरकं**, क्ली, (व्रियते अनेन । वृ + अप् । ततः

संज्ञायां कन् ।) पोताच्छादनम् । इति
हारा-
वली । ६९ ॥
धौताधौतसाधारणवस्त्रम् । इति
शब्दरत्नावली ॥

**वरकः**, पुं, (व्रियते लोकैरिति । वृ + अप् । ततः

कन् ।) वनमुद्गः । इति हेमचन्द्रः । ४ । २३९ ॥
पर्प्पटः । इति राजनिर्घण्टः ॥
तृणधान्यभेदः ।
वरला । इत्यमरः । २ । ५ । २५ ॥ कुसुम्भ-
बीजम् । इति भावप्रकाशः ॥ (श्चस्या गुणा
यथा, --
“वरटा मधुरा स्निग्धा रक्तपित्तकफापहा ।
कषाया शीतला गुर्व्वी स्यादवृष्यानिलापहा ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**वरटी**, स्त्री, (वरट + जातौ ङीष् ।) हंसी ।

इति मेदिनी । टे, ५१ ॥ गन्धोली । इति
त्रिकाण्ड-
शेषः ॥ (यथा, सुश्रुते कल्पस्थाने ३ अध्याये ।
“सूक्ष्मतुण्डोच्चिटिङ्गवरटीशतपदीशूकवल-
भिकाशृङ्गीभ्रमराः शूकतुण्डविषाः ॥”)

**वरट्टिका**, स्त्री, कुसुम्भबीजम् । तत्पर्य्यायः ।

वरटा २ । अस्या गुणाः । मधुरत्वम् । स्निग्ध-
त्वम् । रक्तपित्तकफापहत्वम् । कषायत्वम् ।
शीतलत्वम् । गुरुत्वम् । अवृष्यत्वम् । अनिला-
पहत्वञ्च । इति भावप्रकाशः ॥

**वरणं**, क्ली, (वृ + भावे ल्युट् ।) कन्यादिवरणम् ।

(यथा, महाभारते । १ । १९० । ७ ।
“न च विप्रेष्वधीकारो विद्यते वरणं प्रति ।
स्वयंवरः क्षत्त्रियाणामितीयं प्रथिता श्रुतिः ॥”)
वेष्टनम् । इति मेदिनी । णे, ६५ ॥ पूजनादि ।
इति
शब्दरत्नावली ॥ * ॥ अथ वरणविधिः । तेषा-
माचार्य्यादीनां होमसाध्ये कर्म्मणि होमा-
रम्भात् पूर्ब्बमानत्यर्थं यजमानेन स्वयं वरणं
कार्य्यम् । दानवाचनान्वारम्भवरणव्रतप्रमाणेषु
यजमानं प्रतीयात् । इति हरिशर्म्मधृतकात्या-
यनसूत्रात् । तत्र ब्रह्मवरणं प्रथमतः । ज्योति-
ष्टोमे । ब्रह्मोद्गातृहोत्रध्वर्य्यिक्र्यादिक्रमदर्शने-
नान्यत्राकाङ्क्षया दृष्टपरिकल्पनाया न्याय्य-
त्वात् । सुगतिसोपानप्रभृतयोऽप्येवम् ।
वरणन्तु ।
गन्धादिदानद्वारा प्रीतिमुत्पाद्य कर्म्मकरणाय-
प्रेरणम् । तत्र च । सर्व्वत्र प्राङ्मुखो दात
ग्रहीता च उदङ्मुखः । इति वचनात् यज-
मानस्य प्राङ्मुखत्वं आचार्य्यादीनामुदङमुखत्वं

"दैव्यो होता अग्निं वयोधसमिन्द्रञ्च यजतु वय
आयुर्दधाति वयोधास्तमायुषो दातारं धारयि-
तारं वा ।" इति तद्भाष्ये महीधरः ॥)

**वयोवङ्गं**, क्ली, (वयसा वङ्गमिव ।) सीसकम् ।
इति राजनिर्घण्टः ॥

**वर**, त् क ईप्से । इति कविकल्पद्रुमः ॥ (अदन्त-
चुरा०-पर०-सक०-सेट् ।) रेफोपधः । वरयति ।
इति दुर्गादासः ॥

**वरं**, क्ली, (व्रियते इति । वृ + कर्म्मणि अप् ।)
कुङ्कुमम् । मनाक्प्रियम् । इत्यमरः । तथा च ।
"वरं प्राणास्त्याज्या न च शिशुविनाशेष्वभिरति-
र्वरं मौनं कार्य्यं न च वचनमुक्तं यदनृतम् ।
वरं क्लीवं भाव्यं न च परकलत्राभिगमनं
वरं भिक्षाशित्वं न च परधनानां हि हरणम् ॥"
इति वामनपुराणे ५६ अध्यायः ॥
त्वचम् । धालकम् । आर्द्रकम् । इति राज-
निर्घण्टः ॥

**वरं** [म्] व्य, मनाक्प्रियम् । यथा, --
"मनागिष्टे वरं क्लीवं केचिदाहुस्तदव्ययम् ॥"
इति मेदिनी । वे, ६३ ॥

**वरंवरा**, स्त्री, (वरं वृणोतीति । वृ + अच् ।
मुम् च ।) चक्रपर्णी । इति शब्दचन्द्रिका ॥
चाकुलिया इति भाषा ॥

**वरः**, पुं, (वृ + अप् ।) वरणम् । तत्पर्य्यायः ।
वृतिः २ । इत्यमरः । ३ । २ । ८ ॥ व्रे वेष्टने ।
प्राथेनाविशेषे इत्यन्ये । इति भरतः ॥ देवाद्-
वृवः । देवसकाशात् याचितः । उक्तञ्च ।
चीना इति भाषा । तत्पर्य्यायः । स्थूलकङ्गुः २
रूक्षः ३ स्थूलप्रियङ्गुः ४ । अस्य गुणाः । मधु-
रत्वम् । रूक्षत्वम् । कषायत्वम् । वातपित्त-
कारित्वञ्च । इति राजनिर्घण्टः ॥ (वर + स्वार्थे
कन् । प्रार्थनाविशेषः । यथा, महाभारते ।
३ । १०७ । ५३ ।
"स वव्रे तुरगं तत्र प्रथमं यज्ञकारणात् ।
द्वितीयं वरकं वव्रे पितृणां पावनेच्छया ॥")

**वरक्रतुः**, पुं, (वराः श्रेष्ठाः क्रतवो यस्य शता-
श्वमेधित्वात् तथात्वम् । यद्वा, वरः क्रतुर्यस्मात् ।
पुतक्रतुत्वात् तथात्वम् ।) इन्द्रः । इति हेम-
चन्द्रः । २ । ८७ ॥

**वरचन्दनं**, क्ली, (वरं श्रेष्ठं चन्दनम् ।) काली-
यम् । देवदारु । इति मेदिनी । ने, २४२ ॥

**वरटं**, क्ली, (व्रियते इति । वृ + "शकादिभ्यो-
ऽटन् ।" उणा० ४ । ८१ । इति अटन् ।)
कुन्दपुष्पम् । इति शब्दरत्नावली ॥

**वरटः**, पुं, (वरति सेवते सरोवरमिति । वृ ञ
सेवायाम् + "शकादिभ्योऽटन् ।" उणा० ४ ।
८१ । इति अटन् ।) हंसः । इति मेदिनी । टे,
५१ ॥ कीटविशेषः । वोल्ता इति भाषा ।
तत्पर्य्यायः । गन्धोली २ वरटा ३ । इत्यमरः ॥
गन्धोलिः ४ वरला ५ । इति शब्दरत्नावली ।
प्रतीयते । वरणविधिमाह कात्यायनः । आसन-
माहार्य्य आह साधु भवानास्तामर्च्चयिष्यामो
भवन्तमिति । आसनमाहार्य्यानीय संस्थाप्याह
साधु भवानास्तामिति । साध्वहसासे इति
प्रतिवचनम् । अर्च्चयिष्यामो मवन्तमिति पुन-
रुक्ते अर्च्चय इति प्रतिवचनं सामर्थ्यात् ।
इति हरिशर्म्मा । इति संस्कारतत्त्वम् ॥ * ॥
मेदिनीमते पवर्गीयबकारादिशब्दोऽयम् । किन्तु
अन्तः स्थवकरादिवृधातोरनट्प्रत्ययेन्न निष्पन्न-
त्वादत्र लिखितः ॥

**वरणः**, पुं, (व्रियते अनेन वृणोतीति वा । वृ +
"सुयुरुवृञो युच् ।" उणा० २ । ७४ ॥ इति
युच् ।) प्राकारः । वरुणवृक्षः । इत्यमरः । २ ।
२ । ३ । (यथा, किराते । ५ । २५ ।
"इह सिन्धवश्च वरणावरणाः
करिणां मुदे सनलदानलदाः ॥")
उष्ट्रः । इति हारावली । ८१ ॥ संक्रमः ।
इति हलायुधः ॥ साँको इति भाषा ॥

| | | |
|---|---|---|
| | वरली ६ । इति जटाधरः ॥ क्षुद्रा ७<br>क्रूरा ८<br>क्षुद्रवर्व्वणा ९ । इति राजनिर्घण्टः ॥<br>**वरटा**, स्त्री, (वरट + टाप् ।) हंसी । (यथा,<br>नैषधे । १ । १३५ ।<br>"मदेकपुत्त्रा जननी जरातुरा<br>नवप्रसूतिर्व्वरटा तपस्विनी ॥") | |

**वरणसी**, स्त्री, वाराणसी । इति शब्दरत्नावली ॥

**वरणा**, स्त्री, (वरण + टाप् ।) नदीविशेषः ।

इति शब्दरत्नावली ॥ सा तु वाराणस्युत्तर-
सीमा । तस्या उत्पत्तिर्यथा, --
हरिरुवाच ।
"महेश्वर शृणुष्वेमां मम वाचं कलस्वनाम् ।
ब्रह्महत्याक्षयकरीं शुभदां पुण्यवर्द्धिनीम् ॥
योऽसौ प्राङ्मण्डले पुण्ये मदंशप्रभवोऽव्ययः ।
प्रयागे वसते नित्यं योगशायी तु विश्रुतः ॥
चरणाद्दक्षिणात्तस्य विनिर्याता सरिद्वरा ।
विश्रुता वरणेत्येवं सर्व्वपापहरा शुभा ॥
सव्यादन्या द्वितीया च असिरित्येव विश्रुता ।
ते उभे च सरिच्छ्रेष्ठे लोकपूज्ये बभूवतुः ॥
ताभ्यां मध्ये तु यो देशस्तत् क्षेत्रं
योगशायिनः ।
त्रैलोक्यप्रभवं तीर्थं सर्व्वपापप्रमोचनम् ॥
न तादृशोऽस्ति गगने न भूम्यां न रसातले ।
तत्रास्ति नगरी पुण्या ख्याता वाराणसी शुभा
।
यस्यान्तु भोगिनो नाशं प्रयान्ति भवतो लयम्
॥"
इति वामने ३ अध्यायः ॥

**वरण्डः**, पुं, (वृणोतीति । वृ + "अण्डन्कृसृभृ-

वृञः ।" उणा० १ । १२८ । इति अण्डन् ।)
अन्तरावेदिः । समूहः । मुखरोगः । स तु व्रण
इति वयस् फोडा इति च भाषा । इति मेदिनी
।
डे, ३३ ॥ तन्मते पवर्गीयबकारादिरयं किन्तु
अन्तःस्थवकारादिवृञ्धातोरौणादिक
अण्डन्
प्रत्ययनिष्पन्नत्वादत्र लिखितः ॥

**वरण्डकः**, पुं, (वरण्ड + स्वार्थे संज्ञायां वा कन् ।)

मातङ्गवेदिः । हातीर हाओदा इति भाषा ।
यौवनकण्टकः । वयस् फोडा इति भाषा ।
वर्त्तुलः । गोल इति ख्यातः । इति मेदिनी ।
के, २०३ ॥ भित्तिः । इति हेमचन्द्रः ॥
मेदिनी-
कारेण अयं पवर्गीयबकारादौ लिखितः ।

**वरत्करी**, स्त्री, रेणुकानामगन्धद्रव्यम् । इति
शब्द-

चन्द्रिका ॥

**वरत्रा**, स्त्री, (व्रियतेऽनयेति वृ + "वृञश्चित्
।"

उणा० ३ । १०७ । इति अत्रन् ।
टाप् ।) हस्ति-
कक्षरज्जुः । काछदडी इति
ख्याता । तत्पर्य्यायः ।
चूषा २ कक्ष्या ३ कक्षा ४ ।
चर्म्मरज्जुः । तत्-
पर्य्यायः । नद्ध्री २ वद्ध्री ३
वर्द्ध्री ४ वाद्ध्री ५ ।
इत्यमरभरतौ ॥ (यथा, ऋग्वेदे ।
१० ।
६० । ८ ।
"यथायुगं वरत्रया नह्यति
धरुणायकम् ॥")

**वरत्वचः**, पुं, (वरा हितकरी त्वचा यस्य ।)

निम्बवृक्षः । इति रत्नमाला ॥

**वरदः**, त्रि, (वरं ददातीति । दा +
"आतोऽनुप-

सर्गेति ।" ३ । २ । ३ । इति कः ।)
अभीष्ट-
दाता । तत्पर्य्यायः । समर्द्धकः २ ।
इत्यमरः ।
३ । १ । ७ ॥ समर्द्धः ३
वाञ्छितार्थदः ४ । इति
शब्दरत्नावली ॥ (यथा, महाभारते
। १ ।
२ । २१७ ।
"वरदं तं वरं वव्रे साहाय्यं क्रियतां
मम ।
शल्यस्तस्मै प्रतिश्रुत्य
जगामोद्दिश्य पाण्डवान् ॥")
प्रसन्नः । इति मेदिनी । दे, ३७ ॥

**वरदा**, स्त्री, (वरद + टाप् ।) कन्या । इति

**वरमुखी**, स्त्री, (वरं मुखमस्याः । ङीष् ।) रेणु-

कानामगन्धद्रव्यम् । इति शब्दचन्द्रिका ॥

**वरयिता**, [ऋ] पुं, (वृ + णिण् । तृच् ।) भर्त्ता ।

इति हेमचन्द्रः ॥ वरणकारयिता च ॥

**वररुचिः**, पुं, (वरा रुचिरस्य ।) कविविशेषः ।

तत्पर्य्यायः । पुनर्व्वसुः २ । इति त्रिकाण्डशेषः
॥
स च विक्रमादित्यराजसभास्थनवरत्नान्तर्गत-
रत्नविशेषः यथा, --
"धन्वन्तरिः क्षपणकामरसिंहशङ्कु-
वेतालभट्टघटकर्परकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै ववरुचिर्नव विक्रमस्य ॥"
इति नवरत्नम् ॥

**वरलः**, पुं, स्त्री, (वृणातीति । वृ + अलच् ।)

वरटः । वोल्ता इति भाषा । यथा,
"विषसृक्की भृङ्गरोलो वरलस्तृणषट्पदः ॥"
इति शब्दमाला ॥

**वरलब्धः**, पुं, (वरः उत्कर्षो लब्धः पुष्पेषु येन ।)

चम्पकवृक्षः । इति त्रिकाण्डशेषः ॥ (वरेण
लब्धः ।) वरप्राप्ते, त्रि ॥

**वरला**, स्त्री, (वृ + अलच् + टाप् ।) हंसी ।

इति मेदिनी । ले, ११९ ॥ तत्र पवर्गीयवका-
रादौ पठितोऽयम् । वरटा च ॥

**वरली**, स्त्री, (वरल + ङीष् ।) वरटा । इति

जटाधरः ॥

**वरवत्सला**, स्त्री, (वरे जामातरि वत्सला ।)

श्वशुरभार्य्या । इति शब्दमाला ॥

**वरवर्णिनी**, स्त्री, (वरः श्रेष्ठो वर्णः प्रशस्तः पीता-

दिर्वास्त्यस्या इति । वरवर्ण + इनिः । ङीप् ।)
अत्युत्तमा स्त्री । तत्पर्य्यायः । वरारोहा २
मत्तकामिनी ३ उत्तमा ४ । इत्यमरः । २ ।
६ । ४ ॥ मत्तकाशिनी ५ । इति भरतः ॥
(यथा, विष्णुपुराणे । १ । १५ । ७ ।

किन्तु हेमचन्द्रेन वृञ्धातुनिष्पन्नत्वात्
अन्तःस्थ-
वकारादौ परिगणितः ॥

**वरण्डकः**, त्रि, (वरण्ड + कन् ।) विशालः । भय-

सम्पन्नः । कृपणः । इति शब्दरत्नाशली ॥

**वरण्डा**, स्त्री, (वरण्ड + टाप् ।) सारिका । वर्त्तिः ।

शस्त्रभेदः । इति मेदिनी । ते, ३६ ॥

**वरण्डालुः**, पुं, (वरण्ड इव आलुरत्र ।) एरण्ड-

वृक्षः । इति त्रिकाण्डशेषः ॥

**वरतिक्तः** पुं, (वरः श्रेष्ठस्तिक्तस्तिक्तरसो यस्य ।)

कुटजवृक्षः । इति राजनिर्घण्टः ॥ (पर्प्पटकः
।
तत्पर्य्यायो यथा, --
“पर्पटो वरतिक्तश्च स्मृतः पर्पटकश्च सः ।
कथितः पांशुपर्य्यायस्तथाकवचनामकः॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**वरतिक्तिका**, स्त्री, (वरतिक्त + स्वार्थे कन् । टाप् ।

अत इत्वम् ।) पाठा । इति राजनिर्घण्टः ॥
आकनादि इति भाषा ॥ (यथास्याः पर्य्यायः
।
“पाठावष्टावष्टकीच प्राचीना पापचेलिका ।
एकष्ठीला रसा प्रोक्ता पाठिका वरतिक्तिका
॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

मेदिनी । दे, ३७ ॥ आदित्यभक्ता ।
इति राज-
निर्घण्टः ॥ (पर्य्यायो यथा, --
“सुवर्च्चला सूर्य्यभक्ता वरदा
वदरापि च ।
सूर्य्यावर्त्ता रविप्रीता परा
ब्रह्मसुवर्च्चला ॥”
इति च भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ॥)
अश्वगन्धा । इति भावप्रकाशः ॥
वरदात्री च ।
(यथा, भागवते । ३ । १६ । २२ ।
“ध्नर्म्मस्य ते भगवतस्त्रियुगत्रिभिः
स्वैः
पद्भिश्चराचरमिदं द्विजदेवतार्थम् ।
नूनं भृतं तदभिघाति रजस्तमश्च
सत्त्वेन नो वरदया तनुवानिरस्य
॥”)

**वरदाचतुर्थी**, स्त्री, (वरदाख्या चतुर्थी ।)
माघ-

शुक्लचतुर्थी । तस्यां गौरी पूज्या ।
यथा । भवि-
ष्योत्तरे माघशुक्लपक्षमधिकृत्य ।
“चतुर्थी वरदा नाम तस्यां गौरी
सुपूजिता ।
सौभाग्यमतुलं कुर्य्यात् पञ्चम्यां
श्रीरपि श्रियम् ॥”
इति तिथ्यादितत्त्वम् ॥

**वरदातुः**, पुं, (ददातीति ॥ दा + तुन् । वरस्य

दातुः ।) वृक्षविशेषः । भूइसह इति
हिन्दी
भाषा । तत्पर्य्यायः । भूमीसहः २
द्वारदातुः ३
खरच्छदः ४ । अस्य गुणौ ।
शिशिरत्वम् ।
रक्तपित्तप्रसादनत्वञ्च । इति
भावप्रकाशः ॥

**वरपर्णाख्यः**, पुं, (वराणि पर्णान्यस्य ।
वरपर्णेति

“रत्नभूता च कन्येयं वार्क्षेयी वरवर्णिनी ।
भविष्यत् जानता पूर्ब्बं मया गोभिर्व्विवर्द्धिता
॥”)
लाक्षा । हरिद्रा । रोचना । फलिनी । साध्वी
स्त्री । इति मेदिनी । ने, २४३ । गौरी ॥
(यथा, महाभारते । ६ । २२ । २१ ।
“भद्रकालि ! नमस्तुभ्यं महाकालि नमोऽस्तु ते
।
चण्डि ! चण्डे ! नमस्तुभ्यं तारिणि ! वर-
वर्णिनि ! ॥”)
सरस्वती । लक्ष्मीः । इति शब्दरत्नावली ॥

**वरवाह्लीकं**, क्ली, कुङ्कुमम् । इत्यमरटीका ॥

**वरवृद्धः**, पुं, (वरः श्रेष्टो वृद्धः पुरातनः ।) शिवः ।

इति त्रिकाण्डशेषः ॥

**वरा**, स्त्री, (वृ + अप् + टाप् ।) फलत्रिकम् ।

इति मेदिनी । रे, ६३ ॥ रेणुकानामगन्धद्रव्यम् ।
इति शब्दचन्द्रिका ॥ गुडूची । मेदा । ब्राह्मी ।
विडङ्गम् । पाठा । हरिद्रा । इति राज-
निर्घण्टः ॥ श्रेष्ठा च ॥

**वराकः**, पुं, (वृणीते तच्छील इति । वृ + “जल्प-

भिक्षकुट्टलुण्टवृङः षाकन् ।” ३ । २ । १५५ ।

| | | |
|---|---|---|
| | आख्या यस्य ।) क्षीरकञ्चुकीवृक्षः । इति रत्नमाला ॥<br>**वरप्रदा**, स्त्री, (वरं प्रददातीति । प्र + दा + कः ।) लोपामुद्रा । इति हेमचन्द्रः । २ । ३७ ॥ वरदातरि, त्रि ॥<br>**वरफलः**, पुं, (वरं फलमस्य ।) नारिकेलवृक्षः । इति शब्दचन्द्रिका ॥ तत्फले श्रेष्ठफले च क्ली ॥ | |

इति षाकन् ।) शिवः । इति मेदिनी । के, १२९ ॥ युद्धम् । इति हेमचन्द्रः ॥

**वराकः**, त्रि, (वृ + "जल्पभिक्षेति ।" ३ । २ । १५५ । इति षाकन् ।) शोचनीयः । इति मेदिनी । के, १२९ ॥ अवरः । इति शब्द-माला ॥ (यथा, मुकुन्दमालायाम् । १७ ।
"नाथे श्रीपुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा
सेव्ये स्वस्य पदस्य दातरि परे नारायणे तिष्ठति ।
यं कञ्चित् पुरुषाधमं कतिपयग्रामेशमल्पार्थदं
मेवायै मृगयामहे नरमहो मूढा वराका वयम् ॥")

**वराङ्गं**, क्ली, (वरमङ्गानाम् ।) मस्तकम् । गुह्यम् । इत्यमरः । ३ । ३ । २६ ॥ गुडत्वक् । योनिः । इवि त्रिकाण्डशेषः ॥ श्रेष्ठावयवे, च ॥ (वरा-ण्यङ्गान्यस्य ।) तद्युक्ते, त्रि ॥ (चोचम् । यथा,
"त्वक्पत्रञ्च वराङ्गं स्याद्भृङ्गञ्चोचं तथोत्-कटम् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**वराङ्गः**, पुं, (वराणि स्थूलान्यङ्गानि यस्य ।) हस्ती । इति त्रिकाण्डशेषः ॥ विष्णुः । यथा, --
"सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ॥"
इति तस्य सहस्रनामस्तोत्रम् ॥

**वराङ्गकं**, क्ली, (वरमङ्गमस्य । कप् ।) गुडत्वक् । इत्यमरः । २ । ४ । १३४ ॥ श्रेष्ठावयवयुक्ते, त्रि ॥

**वराङ्गना**, स्त्री, (वरा श्रेष्ठा अङ्गना ।) अति-प्रशस्ताङ्गयुक्ता स्त्री । यथा, --
"शिरः सपुष्पं चरणौ सुपूजितौ
वराङ्गनासेवनमल्पभोजनम् ।

पश्चादुद्धृत्य प्रक्षाल्य गृह्णीयाच्च वराटकम् ॥"
इति वराटशुद्धिः ॥ * ॥
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणाधि-कारे ॥) रज्जुः । यथा । रज्जुः शुल्ला वराटो ना । इति स्त्रीकाण्डे रत्नकोषः । इत्यमर-टीकायां भरतः ॥

**वराटकः**, पुं स्त्री, (वराट् + स्वार्थे कन् ।) कप-र्द्दकः । इत्यमरः ॥ कडि इति भाषा । तस्य संख्याभेदेन सं ज्ञामेदा यथा, --
"वराटकानां दशकद्वयं यत्
सा काकिनी ताश्च पणश्चतस्रः ।
ते षोडश द्रम्य इवावगम्यो
द्रन्यैस्तथा षोडशभिश्च निष्कः ॥"
इति लीलावती ॥ * ॥
अपि च । ताम्रिकः कार्षिकः पणः । इति याज्ञवल्क्यवचनेन गुञ्जाः पञ्चाद्यमाषकस्ते षोडशाक्षः कर्षोऽस्त्री । इत्यमरसिंहोक्तेन च अशीतिरत्तिकापरिमितताम्रपणशब्दः सङ्के-तितः स च तावत्संख्यकवराटकैर्ल्लभ्यते इति वराटकेष्वपि तथा व्यवहारः । एतन्मूलकं भविष्यमत्स्यतन्त्रयोर्व्वचनं यथा, --
"अशीतिभिर्व्वराटकैः पण इत्यभिधीयते ।
तैः षोडशैः पुराणं स्याद्रजतं सप्तभिस्तु तैः ॥"
इति प्रायश्चित्ततत्त्वम् ॥ * ॥
ते च दक्षिणार्थं विधीयन्ते । यथा, --
"हतमश्रोत्रियं दानं हतो यज्ञस्त्वदक्षिणः ।
तस्मात् पणं काकिणीं वा फलं पुष्पमथापि वा ।
प्रदद्यात् दक्षिणां यज्ञे तया स सफलो भवेत् ॥"
इति शुद्धितत्त्वम् ॥

**वराटकः**, पुं, (वराट एव । स्वार्थे कन् ।) रज्जुः । पद्मबीजम् । इति मेदिनी । के, २०२ ॥

**वराटकरजाः**, [स्] पुं, (वराटक इव रजो यत्र ।) नागकेशरवृक्षः । इति शब्दमाला ॥

**वराभिधः**, पुं, अम्लवेतसः । इति राजनिर्घण्टः ॥ (वरा अभिधा यस्य ।) श्रेष्ठनामा च ॥

**वराम्रः**, पुं, (वरः श्रेष्टः अम्लोऽत्र । रस्य लत्वम् ।) करमर्द्दः । इति रत्नमाला ॥ कराम्ल इति वा पाठः ॥

**वरारकं**, क्ली, (वरं श्रेष्ठं धनिनं ऋच्छति गच्छति । ऋ + ण्वल् ।) हीरकम् । इति हेमचन्द्रः । ४ । १३१ ॥ (गुणादयोऽस्य हीरकशब्दे ज्ञातव्याः ॥)

**वरारोहः**, पुं, (हस्तिन उच्चत्वात् आयतपृष्ठ-त्वाच्च वर आरोहो यत्र ।) हस्त्यारोहः । अव-रोहः । इति विश्वः ॥

**वरारोहा**, स्त्री, (वर आरोहो नितम्बो यस्याः ।) उत्तमा स्त्री । इत्यमरः । २ । ६ । ४ ॥ (यथा, महानिर्व्वाणतन्त्रे । ४ । ४७ ।
"यदा तु वैदिकी दीक्षा दीक्षा पौराणिकी तथा ।
न स्थास्यति वरारोहे ! तदैव प्रबलः कलिः ॥")
कटिः । इति हेमचन्द्रः ॥

**वरालिका**, स्त्री, (वरा आलिका सखी जयादि-र्यस्याः ।) दुर्गा । इति त्रिकाण्डशेषः ॥

**वराशिः**, पुं, स्थूलवस्त्रम् । मोटा कापड इति भाषा । तत्पर्य्यायः । स्थूलशाटकः २ । इत्य-मरः ॥ वरासिः ३ स्थूलशाटकम् ४ स्थूल-शाटिका ५ । इति तट्टीकायां भरतः ॥ स्थूल-

अनग्नशायित्वमपर्व्वमैथुनं
चिरप्रनष्टां श्रियमानयन्ति षट् ॥”
इति लक्ष्मीचरित्रम् ॥

**वराङ्गरूपोपेतः**, त्रि, (अङ्गानां रूपाणि अङ्ग-
रूपाणि । वराणि अङ्गरूपाणि तैरुपेतः ।)
श्रेष्ठरूपयुक्तः । सुन्दर इत्यर्थः । तत्पर्य्यायः
।
सिंहसंहननः १ । इत्यमरः ॥

**वराङ्गी**, स्त्री, (वरमङ्गमन्तरवयवो यस्याः ।)
हरिद्रा । इति राजनिर्घण्टः ॥

**वराङ्गी**, [न्] पुं, (वराङ्गमस्त्यस्येति । इनिः ।)
अम्लवेतसः । वराङ्गश्चाम्लवेतसं इति वा
पाठः ।
इति रत्नमाला ॥ श्रेष्ठाङ्गयुक्ते, त्रि ॥

**वराटः**, पुं, (वरं मन्दमटतीति । अट् + कर्म्मणि
अण् ।) कपर्द्दकः । इति राजनिर्घण्टः ॥
(अस्य शोधनादिविषयो यथा, --
“भूगर्त्ते च समे शुद्धे पत्तलीं स्थापयेत् सुधीः
।
तुषेण पूरयेत्तस्याः किञ्चिन्मध्यं भिषम्बरः ॥
वराटैः पूरितां मूषां तन्मध्ये विनिवेशयेत् ।
कारोषाग्निं ततो दद्यात् पालिका यन्त्रमुत्त-
मम् ।
न्मनेन म्रियते नूनं वराटः सर्व्वरोगजित् ॥”
* ॥
अन्यच्च ।
“वराटं तत्र चाङ्गेरी जम्बीराणां रसेन वा ।
अन्येषोमपि चाम्लानां यावत् पीतं न
गच्छति ।

**वराटिका**, स्त्री, (वराट् + स्वार्थे कन् । टाप् ।
अत इत्वञ्च ।) कपर्द्दकः । इत्यमरटीकायां
भरतः राजनिर्घण्टश्च ॥ (यथा, नैषधे । २ ।
८८ ।
“बहुकम्बुमणिर्व्वराटिका
गणनाटत्करकर्क्कटोत्करः ॥”)
तुच्छवाचिका च । यथा, --
“प्रयागे मूत्र्यते येन तस्य गङ्गा वराटिका ॥”
इत्युद्भटः ॥

**वराणः**, पुं, (व्रियते इति । वृ + युच् । पृषो-
दरात् दीर्घः ।) इन्द्रः । इति त्रिकाण्डशेषः ॥
वरुणवृक्षः । इति शब्दरत्नावली ॥

**वराणसी**, स्त्री, (वाराणसी पृषोदरादित्वत् साधु ।)
काशी । यथा, --
“काशी वराणसी वाराणसी शिवपुरी च
सा ॥”
इति हेमचन्द्रः ॥

**वरादनं**, क्ली, (वरै राजभिरद्यते इति । अद् +
ल्युट् ।) राजादनम् । इति शब्दचन्द्रिका ॥

पट्टाकः ६ । इति शब्दरत्नावली ॥
वराशि ७ ।
क्लीवमिति जटाधरः ॥

**वरासनं**, क्ली, (वरायै दुर्गायै अस्यते क्षिप्यते
दीयते इति यावत् । अस् + ल्युट् ।)
ओड्र-
पुष्पम् । इति शब्दमाला ॥
(वरमासनमिति ।)
उत्तमासनञ्च ॥

**वरासनः**, पुं, (वरां स्वीयां नारीं अस्यति त्यज-
तीति । अस् + ल्युः ।) षिड्गः ।
(वरानपि
जनान् अस्यति दूरीकरोतीति ।)
द्वारपालः ।
इति विश्वः ॥

**वरासिः**, पुं, (वरैः श्रेष्ठैः अस्यते क्षिप्यते इति ।
अस् + इन् ।) स्थूलशाटकः ।
(वरोऽसिर्यस्य ।)
खड्गधरः । इति धरणिः ॥

**वरासी**, स्त्री, म्लानवासः । इति शब्दमाला ॥

**वराहः**, पुं, (वरान् आहन्ति इति दुर्गः ।
कृत्० ४ । ३ । ४९ । हन् + डः ।)
पशु-
विशेषः । वरा इति भाषा । तत्पर्य्यायः
।
शूकरः २ घृष्टिः ३ कोलः ४ पोत्री ५
किरिः ६
किटिः ७ द्रंष्ट्री ८ घोणी ९
स्तब्घरोघ्ना १०
क्रोडः ११ भूदारः १२ । इत्यमरः ॥
किरः १३
मुस्तादः १४ मुखलाङ्गूलः १५ । इति
जटा-
धरः ॥ स्थूलनासिकः १६ दन्तायुधः
१७ वक्र-
वक्त्रः १८ दीर्घतरः १९ आखनिकः
२०
भूक्षित् २१ बहुसूः २२ । इति
शब्दरत्ना-

|  |  | वली ॥ अस्य मांसस्य गुणाः । वृष्यत्वम् । वातघ्नत्वम् । बलवर्द्धनत्वञ्च । इति राजवल्लभः ॥ बद्धमूत्रत्वम् । विरूक्षणत्वञ्च । इति तत्रैव पाठान्तरम् । अन्यत् शूकरशब्दे द्रष्टव्यम् ॥ * ॥ |
| --- | --- | --- |

तन्मांसं विष्णवे न देयम् । यथा । “नाभक्ष्यं
नैवेद्यार्थे भक्ष्येष्वजामहिषीक्षीरं वर्ज्जयेत् ।
पञ्चनखमत्स्यवराहमांसानिचेति ।”
इत्याह्निक-
तत्त्वधृतविष्णुसूत्रम् ॥ * ॥ वराहमांसं भुक्त्वा
विष्णुपूजादिनिषेधो यथा, --
वराह उवाच ।
“भुक्त्वा वाराहमांसन्तु यो वै मामुपसर्पति ।
पतनं तस्य वक्ष्यामि यथा भवति सुन्दरि ! ॥
वराहो दश वर्षाणि भूत्वा तु चरते वने ।
व्याधो भूत्वा महाभागे समाः सप्त च सप्ततिः ॥
कृमिर्भूत्वा समाः सप्त तिष्ठते तस्य पुष्कले ।
अथोच्चैर्म्मूषिको भूत्वा वर्षाणाञ्च चतुर्द्दश ॥
एकोनविंशवर्षाणि यातुधानश्च जायते ।
शल्लकश्चाष्टवर्षाणि जायते भवने बहु ॥
व्याघ्रस्त्रिं शतिवर्षाणि जायते पिशिताशनः ।
एष संसारिताङ्गत्वा वाराहामिषभक्षकः ॥
जायते विपुले सिद्धे कुले भागवतस्तथा ।
हृषीकेशवचः श्रुत्वा सर्व्वसम्पूर्णलक्षणम् ॥
शिरसा चाञ्जलिं कृत्वा वाक्यञ्चेदमुवाच ह ।
एतन्मे परमं गुह्यं तव भक्तसुखावहम् ।
वाराहमांसभक्षास्तु येन मुच्यन्ति किल्वि-
षात् ॥
वाराह उवाच ।
तरन्ति मानवा येन तिर्य्यक्संसारसागरात् ।
गोमयेन दिनं पञ्च कणाहारेण सप्त वै ॥
पानीयन्तु ततो भुक्त्वा तिष्ठेत् सप्तदिनं ततः ।
अक्षारलषणं सप्त शक्तुभिश्च तथा त्रयः ॥
तिलभक्षो दिनान् सप्त सप्त पाषाणभक्षकः ।
पयो भुक्त्वा दिनं सप्त कारयेच्छुद्धिमात्मनः ॥
शान्तदान्तपराः कृत्वा अहङ्कारविवर्ज्जिताः ।
दिनान्येकोनपञ्चाशच्चरेत् कृतनिश्चयः ॥
प्रमुक्तः सर्व्वपापेभ्यः ससंज्ञो विगतज्वरः ।
कृत्वा तु मम कर्म्माणि मम लोकाय गच्छति
॥”
इति वाराहमांसभक्षणापराधप्रायश्चित्तम् ।
इति वाराहपुराणम् ॥ * ॥
वन्यवराहमांसं श्राद्धादौ विहितम् । यथा
अश्नन्तीत्यनुवृत्तौ हारीतः । महारण्यवासि-

सायम्भुव उवाच ।
“कुत्र प्रजाः स्थास्यन्ति पृथिवी तावत्
प्रलया-
र्णवे मग्ना तस्या उद्धरणे यत्नं कुरु । इति
श्रुत्वा
ब्रह्मा भगवन्तं ध्यातवान् । ध्यायतस्तस्य
नासा
विवरात् अङ्गुष्ठप्रमाणो वराहपोतो निरगात् ।
स च आकाशस्थः सन् क्षणमात्रेण
पर्व्वतोपमो
बभूव । तं विष्णुं मत्वा ब्रह्मा तुष्टाव । स च
तेन स्तुतः प्रलयार्णवजलमध्ये प्रविश्य
दन्ताग्रेण
पृथ्वीमुद्धृत्य निजधारणशक्त्या संस्थाप्य
अन्त-
र्हितो बभूव । ततः पृथिव्यां राजा सायम्भुव-
मनुरासीत् ।” इति श्रीभागवतमतम् ॥ * ॥
तद-
वतारकर्त्तृकहिरण्याक्षवधोयथा, --
“वराहपर्व्वतो नाम यः पुरा हरिनिर्म्मितः ।
स एव भूतो भगवानाजगामासुरान्तिकम् ॥
ततश्चन्द्रप्रतीकाशमगृह्णाच्छङ्खमुत्तमम् ।
सहस्रारं ततश्चक्रं सूर्य्यवह्निसमप्रभम् ॥
यो वैकुण्ठः सुरेन्द्राणामनन्तो भोगिनामपि ।
विष्णुर्यो योगविदुषां यो यज्ञो यज्ञकर्म्मणाम् ॥
विश्वे यस्य प्रसादेन सवनस्था दिवौकसः ।
आज्यं महर्षिभिर्द्दत्तमश्नुवन्ति सुधाहुतम् ॥
ततो दैत्यद्रवकरं पुराणं शङ्खमुत्तमम् ।
वक्त्रेण दध्मौ वेगेन विक्षिपन् दैत्यजीवितम् ॥
ततः संरक्तनयनो हिरण्याक्षो महासुरः ।
कोऽयन्त्विति वदन् रोषान्नारायणमुदैक्षत ॥
वाराहरूपिणं देवं स्थितं पुरुषविग्रहम् ।
शङ्खचक्रोद्यतकरं देवानामार्त्तिनाशनम् ॥
रराज शङ्खचक्राभ्यां ताभ्यामसुरसूदनः ।
सूर्य्याचन्द्रमसोर्म्मध्ये पौर्णमास्यामिवाम्बुदः ॥
ततो हिरण्याक्षमुखाश्च सर्व्वे
समाद्रवन् दैत्यगणाः सुरेशम् ।
निहन्तुकामाः सहसा वराहं
गृहीतशस्त्रा बलपूर्णदर्पाः ॥

दानवाश्चापि समरे मयतारपुरोगमाः
।
उद्यतायुधनिस्त्रिंशाः सर्व्वे तं
समुपाद्रवन् ॥
स ताड्यमानोऽतिवलैर्द्दैत्यैः
सन्नायुधोद्यतैः ।
न चचाल वराहस्तु मैनाक इव
पर्व्वतः ॥
क्रोधसंरक्तनयनः शङ्खचक्रधरो हरिः
।
व्यवर्द्धत स वेगेन व्याप्नुवन् सर्व्वतो
दिशम् ॥
तं जयायासुरेन्द्राणां वर्द्धमानं
नभस्तले ।
ऋषयः सह
गन्धर्व्वैस्तुष्टुवुर्मधुसूदनम् ॥
दीप्ताग्निसदृणं घोरं दर्शनीयसुदर्शनम्
।
सुवर्णरेणुपर्य्यन्तं वज्रनाभं भयावहम्
॥
मेदोऽस्थिमज्जारुधिरैः सिक्तं
दानवसम्भवैः ।
अद्बितीयं प्रहारैस्तु
क्षुरपर्य्यन्तमण्डलम् ॥
स्रग्दाममालाविततं कामगं
कामरूपिणम् ।
चक्रमुद्यम्य समरे वाराहः स्वेन
तेजसा ॥
चिच्छेद बाहूंश्चक्रेण हिरण्याक्षस्य
कं तथा ॥
स छिन्नबाहुर्विशिरा न प्राकम्पत
दानवः ।
कवन्धवत्स्थितः संख्ये विशाख इव
पादपः ॥
ततः स्थितस्यैव शिरस्तस्य
भूमावपातयत् ।
हिरण्मयं रुक्मचित्रं मेरोः
शृङ्गमिवोत्तमम् ॥

नश्च वराहांस्तथेति । एवञ्च विवदन्ते अग्रा-
म्यशूकरांश्चेति वशिष्ठोक्तं श्वेताश्वेतया व्यव-
स्थितम् । कल्पतरुस्तु । श्राद्धे नियुक्तानि
युक्त-
तयेति । विष्णूपासकस्य सर्व्वथा निषेधः ।
यथा
वाराहे भगवद्वाक्यम् ।
"भुक्त्वा वाराहमांसन्तु यस्तु मामुपसर्पति ।
वराहो दशवर्षाणि भूत्वा वै चरते वने ॥"
इत्येकादशीतत्त्वम् ॥ * ॥
याज्ञवल्क्यः ।
"हविष्यान्नेन वै मासं पायसेन च वत्सरम् ।
मास्त्यहारिणकौरभ्रशाकुनिच्छानपार्षतैः ॥
ऐणरौरववाराहशशैर्मांसैर्यथाक्रमम् ।
मासवृद्ध्याभितृप्यन्ति दत्तेनेह पितामहाः ॥"
इति श्राद्धतत्त्वम् ॥ * ॥
विष्णोरवतारविशेषः । यथा, --

तैर्व्वध्यमानोऽतिशयेन शस्त्रै-
र्दैत्यासुरैर्दानवपुङ्गवैश्च ।
नासौ चचालासुरवृन्द हा वै
मेघैः सुवृष्टा इव मन्दराद्रिः ॥
दैत्यस्ततोऽसौ नृवराहमाहवे
निपातयामास रुषा ज्वलन्तीम् ।
शक्तिं यथा विद्युतमाशु कुञ्जे
प्रवर्षमाणोऽपि गिरिं सुमेघः ॥
स हन्यमानो गदयाप्रमेयः
प्रोवाच दैत्यं नृवराहमूर्त्तिः ।
प्रजापतेः सेतुमिमं निहत्य
व्रजेच्च क्व स्वस्ति यथा सुरेन्द्रः ॥
बलं समासाद्य परैरजेयं
विनाशयिष्याम्यहमेवमाजौ ।
दैत्यांस्त्वया साकमतो हि देवान्
हृतस्वकीयान् सुनयोपपन्नान् ॥
संस्थापयिष्यामि न संशयोऽत्र
दैत्येन्द्रदर्पः क्व नु मत्समीपे ॥
एवं ब्रुवति वाक्यन्तु विष्णोर्वक्षस्यपातयत् ।
स बाहुशतमुद्यम्य सर्व्वप्रहरणं रणे ॥

हिरण्याक्षे हते दैत्या ये शेषाश्चैव
दानवाः ।
सर्व्वे तस्य भयात् त्रस्ता जग्मुरार्त्ता
दिशो
दश ॥"
इति वह्निपुराणम् ॥
अथ वराहावतारकारणम् ।
शरभरूपिमहा-
देवकर्त्तृकतच्छरीरनाशश्च ।
"त्रैलोक्यमखिलं दग्धं यदा
कालाग्निना तदा ।
अनन्तः पृथिवीं त्यक्त्वा
विष्णोरन्तिकमागतः ॥
तेन त्यक्ता तु पृथिवी
क्षणमात्रादधोगता ।
ततो वराहरूपेण निमग्नां पृथिवीं
जले ।
मग्नां समुद्धधाराशु न्यधात्
तत्सलिलोपरि ॥
वराहोऽपि स्वयं गत्वा
लोकालोकाह्वयं गिरिम् ।
वाराह्या सह रेमे स पृथिव्या
चारुरूपया ॥
स तया रममाणस्तु सुचिरं
पर्व्वतोत्तमे ।
नावाप तोयं लोकेशः पोत्री
परमकामुकः ॥
पृथिव्याः पोत्रिरूपाया
रमयन्त्यास्ततः सुताः ।
त्रयो जाता द्विजश्रेष्ठास्तेषां नामानि
वै शृणु ॥
दुर्वृत्तः कनको घोरः सर्व्व एव
महाबलाः ।
स तैः पुत्रैः परिवृतो वाराहो
भार्य्यया स्वया ॥
रममाणस्तदा कायत्यागं
नैवागणद्धिया ।
इतस्ततश्च शिशुभिः क्रीडद्भिः
पोत्रिभिस्तदा ॥
जगन्ति तत्र भग्नानि नदीः
कल्पतरूंस्तथा ।

|  |  |  |
| --- | --- | --- |
|  |  | त्तो देवगणाः सर्व्वे सहिता<br>देवयोनिभिः ॥<br>शक्रेण सहिता मन्त्रं चक्रुः सम्यक्<br>जगद्धितम् ॥<br>ततो निश्चित्य ते सर्व्वे शक्राद्या<br>मुनिभिः सह ।<br>शरण्यं शरणं जग्मुर्नारायणमजं<br>विभुम् ॥<br>तं समासाद्य गोविन्दं वासुदेवं<br>जगत्पतिम् ।<br>प्रणम्य सर्व्वे<br>त्रिदशास्तुष्टुवुर्गरुडध्वजम् ॥<br>देवा ऊचुः ।<br>नमस्ते देवदेवेश ! जगत्कारणकारण<br>।<br>कालस्वरूपिन् भगवन्<br>प्रधानपुरुषात्मक ॥<br>इति स्तुतो देवदेवो<br>भूतभावनभावनः ।<br>सेन्द्रैर्देवगणैरूचे तान् सर्व्वान्<br>मेघनिस्वनः ॥ |

श्रीभगवानुवाच ।
यदर्थमागता यूयं यद्वो भयमुपस्थितम् ।
यत्र यद्वा मया कार्य्यं तद्देवास्तूर्णमुच्यताम् ॥
देवा ऊचुः ।
शीर्य्यते वसुधा नित्यं क्रीडया यज्ञपोत्रिणः ।
लोकाश्च सर्व्वे संक्षुब्धा
नाप्नुवन्त्युपशान्तिताम् ॥
इति तेषां निगदतां श्रुत्वा वाक्यं जनार्द्दनः ।
उवाच शङ्करं देवं ब्रह्माणञ्च विशेषतः ॥
यत्कृते देवताः सर्व्वाः प्रजाश्च सकला इमाः ।
प्राप्नुवन्ति महद्दुःखं शीर्य्यते सकलं जगत् ॥
वाराहं तदहं कायं त्यक्तुमिच्छामि शङ्कर ।
निदेशशक्तं तत् त्यक्तुं स्वेच्छया नहि शक्यते ॥
त्वं त्याजयस्व तत् कायं यत्रात्मा शङ्कराधुना ।
त्वमाप्यायस्व तेजोभिर्ब्रह्मन् स्मरहरं मुहुः ॥
आप्यायन्तु तदा देवाः शङ्करो हन्तु पोत्रिणम् ।
रजस्वलायाः संसर्गात् विप्राणां मारणात् तथा
॥
कायः पापकरो भूतस्तं त्यक्तुं मुह्यतेऽधुना ।
प्रायश्चित्तैरुपेतैर्यः प्रायश्चित्तमहं ततः ।
चरिष्यामि तदर्थं मे तनुर्यत्नेन पात्यताम् ॥
प्रजा पाल्या मम सदा या हि सीदति नित्यशः ।
मत्कृते प्रत्यहं तस्मात् त्यक्ष्ये कायं प्रजाकृते ॥
श्रीमार्कण्डेय उवाच ।
इत्युक्तौ वासुदेवेन तदा च ब्रह्मशङ्करौ ।
त्वया यथोक्तं तत् कार्य्यमिति गोविन्दमूचतुः ॥
वासुदेवोऽपि तान् सर्व्वान् विसृज्य त्रिदशां-
स्तदा ।
वाराहं तेजसा हर्त्तुं स्वयं ध्यानपरोऽभवत् ॥
शनैः शनैर्यदा तेज आहरत्येष माधवः ।
तदा देहन्तु वाराहं सत्त्वहीनं व्यजायत ॥
ब्रह्माद्यास्त्रिदशाः सर्व्वे महादेवमुमापतिम् ।
अनुजग्मुस्तथा तेज आधातुं स्मरनाशने ॥
ततः सर्व्वैर्देवगणैः स्वं स्वं तेजो वृषध्वजे ।
आदधे तेन बलवान् सोऽतीव समजायत ॥
ततः शरभरूपी स तत्क्षणाद्गिरिशोऽभवत् ।
ऊर्द्धाधोभावतश्चाष्टपादयुक्तः सुभैरवः ॥
द्विलक्षयोजनोच्छ्रयः सार्द्धलक्षैकविस्तृतः ॥
ऊर्द्धं वराहकायस्तु लक्षयोजनविस्तृतः ॥

(पर्व्वतार्थे उदाहरणम् । यथा, महाभारते ।
२ । २१ । २ ।
"वैहारो विपुलः शैलो वराहो वृषभस्तथा ।
तथा ऋषिगिरिस्तात शुभाश्चैत्यकपञ्चमाः
॥")
शिशुमारः । वाराहीकन्दः । इति राज-
निर्घण्टः ॥
अष्टादशद्वीपान्तर्गतक्षुद्रद्वीपविशेषः ।
यथा, --
"गन्धर्व्वो वरुणः सौम्यो वराहः कङ्क एव च
।
कुमुदश्च कसेरुश्च नागो भद्रारकस्तथा ॥
चन्द्रेन्द्रमलयाः शङ्खयवाङ्गकगभस्तिमान् ।
ताम्राकुश्च कुमारी च तत्र द्वीपाः दशाष्टभिः
॥"
इति शब्दमाला ॥
(कृष्णपिण्डीरः । तत्पर्य्यायो यथा, --
"वराहः कृष्णपिण्डीरः कृष्णपिण्डीतकस्तु
सः ॥"
इति वैद्यकरत्नमालायाम् ॥)

**वराहकन्दः**, पुं, (वराहप्रियः कन्दो यस्य ।)
वाराही । इति राजनिर्घण्टः ॥

**वराहकान्ता**, स्त्री, (वराहस्य कान्ता प्रियेति ।)
वाराहीवृक्षः । इति शब्दरत्नावली ॥

**वराहकाली**, [न्] पुं, (वराहवत् कलते इति ।
कल् + णिनिः ।) सूर्य्यमणिपुष्पवृक्षः ।
तत्प-
र्य्यायः । सूर्य्यावर्त्तः २ । इति हारावली ।
९४ ॥

**वराहक्रान्ता**, स्त्री, (वराहेन क्रान्ता अतिप्रिय-
त्वात् ।) क्षुपविशेषः । इति शब्दमाला ॥
तत्पपर्य्यायः, । लज्जालुः २ समङ्गा ३
लज-
कारिका ४ वराहनामा ५ वदरा ६ शूकरी
७
तिक्तगन्धिका ८ नमस्कारी ९ गण्डकाली
१०

**वरिवस्यितः**, त्रि, (वरिवस्या संजाता अस्य
तारकादित्वादितच् । यद्वा, वरिवस्य
+ क्तः ।
"क्यस्य विभाषा ।" ६ । ४ । ५० ।
इति पक्षे यलोपा-
भावः ।) उपासितः । इत्यमरः । ३ ।
१ । १०२ ॥

**वरिशी**, स्त्री, वडिशी । इति शब्दरत्नावली ॥

**वरिषं**, क्ली, (वृ + सः । बाहुलकात् इट् ।)
वत्सरः । इति शब्दरत्नावली ॥
("वर्षः स्यात्
वरिषोऽपि च ।"
इत्युज्ज्वलदत्तधृतचन्द्रवच-
नम् । ३ । ६२ ॥)

**वरिषाः**, स्त्री भूम्नि, (वृ + सः । बहुवचनात्
इट् ।) वर्षाः । इति भरतद्विरूषकोषः
॥

**वरिषाप्रियः**, पुं, (वरिषा वर्षा प्रिया यस्य ।)
चातकपक्षी । इति शब्दरत्नावली ॥

**वरिष्ठं**, क्ली, (अतिशयेन वरम् । वर + इष्ठन् ।)
ताम्रम् । इत्यमरः । ३ । २ । १११ ॥
(यथा, --
"रक्तं वरिष्टं म्लेच्छाख्यं ताम्रं
शुल्वमुडुम्बरम् ॥"
इति वैद्यकरत्नमालायाम् ॥)
मरिचम् । इति मेदिनी । ठे, १५ ॥

**वरिष्ठः**, त्रि, (अयमेषामतिशयेन वर उरुर्वा
अतिशायन इष्ठन् । प्रियस्थिरेति
वरादेशः ।)
इति व्याकरणम् ॥ बरतमः । (यथा,
भागवते ।
१ । १० । १ ।
"हत्वा स्वरिक्थस्पृध आततायिनो
युधिष्ठिरो धर्म्मभृतां वरिष्ठः ॥")
उरुतमः । इति मेदिनी । ठे, १५ ॥
(यथा,

लक्षार्द्धविस्तृतः पार्श्वे वर्द्धमानस्तदाभवत्।
तमायान्तं ततो दृष्ट्वा क्रोधाद्धावन्तमञ्जसा॥
मुवृत्तः कनको घोर आसेदुः क्रोधमूर्च्छिताः।
उच्चिक्षिपुस्तं युगपत् पोत्रघातैर्महाबलाः॥
ततस्तुण्डप्रहारेण शरभः कण्ठमध्यतः।
भित्त्वा वपुर्वराहस्य पातयाभास तज्जले॥
तं पातयित्वा प्रथमं सुवृत्तं कनकं तथा।
घोरञ्च कण्ठदेशेषु भित्त्वा भित्त्वा जघान ह॥
त्यक्तप्राणास्तु ते सर्व्वे पेतुस्तोये महार्णवे।
जलशब्दं वितन्वानाः कालानलसमर्च्चिषः॥
पतितेषु वराहेषु ब्रह्मा विष्णुर्हरस्तथा।
सृष्ट्यर्थं चिन्तयामासुः पुनरेव समागताः॥"
इति कालिकापुराणीयाष्टाविंशत्यूनत्रिंशाध्या-
यात् सङ्कलितः॥ * ॥ विष्णुः। मानभेदः।
पर्व्वतभेदः। मुस्ता। इति मेदिनी। हे, २२॥

खदिरी ११। इति रत्नमाला॥
लज्जालुका १२
अञ्जलिकारिका १३ कृताञ्जलिः १४
गण्डकारी
१५ समीच्छदा १६। इति ग्रन्थान्तरम्॥
वाराही। चामारालु इति ख्याते। इति
सुभूतिः। इत्यमरटीकायां भरतः॥

**वराहनामा**, [न्] पुं, (वराहस्य नाम इव नाम
यस्य।) वाराहीकन्दः। इति शब्दमाला॥

**वराहिका**, स्त्री, कपिकच्छुः। इति राज-
निर्घण्टः॥

**वराही**, स्त्री, (वराहो भक्षकत्वेनास्त्यस्येति।
अच्। गौरादित्वात् ङीष्।) भद्रमुस्ता।
शूकरकन्दः। इति राजनिर्घण्टः॥

**वरिवसितः**, त्रि, (वस् + "नमोवरिवश्चित्रङः
क्यच्।" ३। १। १९। इति क्यच्। ततः
क्तः।
"क्यस्य विभाषा।" ६। ४। ५०। इति
पक्षे
यलोपः।) उपासितः। इत्यमरः। ३। १।
१०२॥

**वरिवस्या**, स्त्री, (वरिवसः पूजायाः करणम्।
वरिवस् + "नमोवरिवश्चित्रङः क्यच्।" ३
।
१। १९। इति क्यच्। "अ प्रत्ययात्। ३
। ३।
१०२। इत्यः। टाप्।) शुश्रूषा। इत्यमरः
।
२। ७। ३५॥ (यथा, ऋग्वेदे। १।
१८१। ९।
"हुवे यद्वां वरिवस्या गृणानो
विद्यामेषं वृजनं जीरदानुम्॥")

ऋग्वेदे। ४। ५६। १।
"यत्सीं वरिष्ठे बृहती विमिण्वन्नु
वद्धोक्षापप्रथानेभिरेवैः॥")
वत्सः। इत्यजयः॥

**वरिष्ठः**, पुं, (वर + इष्ठन्।) तित्तिरिपक्षी। इति
मेदिनी। ठे, १५॥ नारङ्गवृक्षः। इति
राज-
निर्घण्टः॥ (चाक्षुषमनुपुत्त्रः। यथा,
महा-
भारते। १३। १८। २०।
"वरिष्ठो नाम भगवांश्चाक्षुषस्य मनोः
सुतः॥"
धर्म्मसावर्णिमन्वन्तरस्य ऋषिविशेषः
। यथा,
मार्कण्डेये। ९४। १९।
"हविष्मांश्च वरिष्ठश्च
ऋष्टिरन्यस्तथारुणिः।
निश्चरश्चानघश्चैव रिष्ठिश्चान्यो
महामुनिः।
सप्तर्षयोऽन्तरे तस्मिन्नग्निदेवश्च
सप्तमः॥"
दैत्यविशेषः। तथा, हरिवशे। २३२
। १३।
"वरिष्ठश्च गविष्ठश्च भूतलोन्मथनो
विभुः।
सुप्रसादः किरीटी च सूचीवक्त्वो
महासुरः॥")

**वरिष्ठा**, स्त्री, (वरिष्ट + टाप्।) आदित्यभक्ता।
इति राजनिर्घण्टः॥

**वरी**, स्त्री, (वृणोतीति। वृ + पचाद्यच्। गौरा-
दित्वात् ङीष्।) शतावरी। इत्यमरः
। २।
४। १००॥ सूर्य्यपत्नी। इति
त्रिकाण्डशेषः॥

**वरीयान्**, [स्] त्रि, (अयमनयोरतिशयेन ऊरु-
र्वरो वा। ईयसुन्। प्रियस्थिरेति
वरादेशः।)
श्रेष्ठः। (यथा, भागवते। २। १। १
।

|  |  | “वरीयानेष ते प्रश्नः कृतो लोकहितो नृप ! ॥”)<br>वरिष्ठः । अतियुवा । इति मेदिनी । ठे, १५ ॥ |
|---|---|---|

**वरीयान्**, पुं, विष्कम्भादिसप्तविंशतियोगान्तर्गता-

ष्टादशयोगः । तत्र जातफलम् ।
"दाता दयालुः सुतरां सुवेषः
सत्कर्म्मकर्त्ता मधुरस्वभावः ।
नरो बलीयान् धनवान् जनाढ्यो
योगो वरीयान् यदि जन्मकाले ॥"
इति कोष्ठीप्रदीपः ॥
(पुलहस्य पुत्त्रः । इति भागवते । ४ ।
१ । ३४ ॥)

**वरीवर्द्दः**, पुं, वलीवर्द्दः । इत्यमरटीकायां रमा-

नाथः ॥

**वरीषुः**, पुं, कामः । इति त्रिकाण्डशेषः ॥

**वरुटः**, पुं, म्लेच्छजातिविशेषः । यथा, --

"पुलिन्दा नाहला निष्ट्याः शवरा
वरुटा भटाः ।
माला भिल्लाः किराताश्च सर्व्वेऽपि
म्लेच्छ-
जातयः ॥"
इति हेमचन्द्रः ॥

**वरुडः**, पुं, अन्त्यजजातिविशेषः । यथा, --

"रजकश्चर्म्मकारञ्च नटो वरुड एव च ।
कैवर्त्तमेदभिल्लाश्च सप्तैते चान्त्यजाः
स्मृताः ॥"
एषां स्त्रीगमनादौ दोषो यथा, --
"एतेषान्तु स्त्रियो गत्वा भुक्त्वा च
प्रतिगृह्य च ।
पतत्यज्ञानतो विप्रो ज्ञानात् साम्यन्तु
गच्छति ॥"
इति प्रायश्चित्ततत्त्वधृतयमवचनम्॥
अस्योत्पत्तिर्यथा, --
"कैवर्त्तस्य च कन्यायां शौण्डिकादेव
सौचिकः ।
सौचिकात् शौण्डिकाज्जातो नटो वरुड
एव च ॥"
इति पराशरपद्धतिः ॥

**वरुणः**, पुं, (वृणोति सर्व्वं व्रियते अन्यैरिति वा ।

"प्रसन्नवदनं सौम्यं हिमकुन्देन्दुसन्निभम् ।
सर्व्वाभरणसंयुक्तं सर्व्वलक्षणलक्षितम् ॥
किरणैः शीतलैः सौम्यैः
प्रीणयन्तमवस्थितम् ।
लावण्यामृतधाराभिस्तर्पयन्तमिव प्रजाः ॥
राजहंससमारूढं पाशव्यग्रकरं शुभम् ।
पुष्कराद्यैर्गणैः सर्व्वैः समन्तात् परिवारितम्
॥
गौर्य्या कान्त्या चानुगतं नदीभिः
परिवारितम् ।
नागैर्यादोगणैर्युक्तं ब्रह्माणमिव चापरम् ॥
सृष्टिसंहारकर्त्तारं नारायणमिवापरम् ॥"
इति ध्यात्वा पूजयेत् । वरुणमन्त्रोद्धारस्तु
तत्रैव ।
"अष्टाविंशान्तबीजेन चतुर्द्दशस्वरेण च ।
अर्द्धेन्दुविन्दुयुक्तेन प्रणवोद्दीपितेन च ॥"
तेन ॐ वौँ इति मन्त्रः ।
"प्रतिमायां स्थितिं कृत्वा प्रणवेन
निबोधयेत् ।
पूजयेद्गन्धपुष्पाद्यैः सान्निध्यं पाशमुद्रया
॥"
स्थितिं प्रतिष्ठाम् । निबोधयेत्
अन्तर्गताङ्गुष्ठ-
मुष्टिभ्यां निबोधमुद्रां दर्शयेत् ।
नमस्कारमन्त्रस्तु
"वरुणो धवलो जिष्णुः पुरुषो
निम्नगाधिपः ।
पाशहस्तो महाबाहुस्तस्मै नित्यं नमो नमः
॥"
इति जलाशयोत्सर्गतत्त्वम् ॥ * ॥
वृष्ट्यर्थं अस्य जपनीयमन्त्रा यथा, --
"पुष्करावर्त्तकैर्म्मेघैः प्लावयन्तं वसुन्धराम्
।
विद्युद्गर्ज्जितसन्नद्धं तोयात्मानं
नमाम्यहम् ॥
यस्य केशेषु जीमूतो नद्यः सर्व्वाङ्गसन्धिषु
।
कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः
॥"

ईशः सर्व्वस्य जगतो ब्राह्मणो वेदपारगः ॥"
इति मानवे ९ अध्यायः ॥ * ॥
स्वनामख्यातवृक्षः । तत्पर्य्यायः । वरुणः २
सेतुः ३ तिक्तशाकः ४ कुमारकः ५ ।
इत्यमरः ।
२ । ४ । २५ ॥ श्मरीअघ्नः ६ सेतुकः ७
वराणः ८
शिखिमण्डनः ९ । इति शब्दरत्नावली ॥
श्वेत-
वृक्षः १० श्वेतद्रुमः ११ साधुवृक्षः १२
तमालः
१३ मारुतापहः १४ । अस्य गुणाः । कटु-
त्वम् । उष्णत्वम् । रक्तदोषशीतवातहरत्वम् ।
स्निग्धत्वम् । दीपनत्वम् । विद्रधिरोगजित्त्वञ्च
।
इति राजनिर्घण्टः ॥ अपि च ।
"वरुणः पित्तलो भेदी
श्लेष्मकृच्छ्राश्ममारुतान् ।
निहन्ति गुल्मवातास्रक्रिमींश्चोष्णोऽग्निदीपनः
।
कषायो मधुरस्तिक्तः कटुको रूक्षको लघुः
॥"
इति भावप्रकाशः ॥
अन्यच्च ।
"वरुणोऽनिलशूलघ्नो भेदी चोष्णोऽश्मरीहरः
।
पुष्पं वरुणजं ग्राहि पित्तघ्नं आमवातजित्
॥"
इति राजवल्लभः ॥ * ॥
जलम् । इति मेदिनी । णे, ६५ ॥ सूर्य्यः ।
इति
विश्वः ॥ (यथा, महाभारते । १ । ६५ । १५
।
"धाता मित्रोऽर्य्यमा शक्रो वरुणस्त्वंश एव च
।
भगो विवस्वान् पूषा च सविता दशमस्तथा
॥"
मुनिगर्भजातकश्यपपुत्त्रविशेषः । इति
महाभार-

वृ + "कृवृदारिभ्य उनन् ।" उणा० ३ । ५३ ।
इति उनन् ।) देवताविशेषः । स च कश्य-
पस्य अदितिनाम्नि पत्न्यां जातः । तस्य चर्षण्यां
पत्न्यां भृगुवाल्मीकी पुत्त्रौ जातौ । इति
श्रीभागवतमतम् ॥ स च जलाधिपतिः पश्चिम-
दिक्पालश्च । तत्पर्य्यायः । प्रचेताः २ पाशी ३
यादसांपतिः ४ अप्पतिः ५ । इत्यमरः ॥ यादः-
पतिः ६ अपांपतिः ७ । इति तट्टीकायां
भरतः ॥ जम्वुकः ८ मेघनादः ९ जलेश्वरः १०
परञ्जयः ११ दैत्यदेवः १२ जीवनावासः १३
नन्दपालः १४ । इति शब्दरत्नावली ॥ वारि-
लोमः १५ कुण्डली १६ रामः १७ सुखाशः १८ ।
इति जटाधरः ॥ * ॥ जलाशयोत्सर्गादौ अस्य
पूजाविधिर्यथा । हयशीर्षपञ्चरात्रे ।
"अथ वाप्यामतः कुर्य्यात् सूक्ष्मरत्नादिनिर्म्मि-
तम् ।
द्विभुजं हंसपृष्टस्थं दक्षिणेनाभयप्रदम् ॥
वामेन नागपाशन्तु धारयन्तं सुभोगिनम् ।
सलिलं वाममाभोगं कारयेद्यादसांपतिम् ॥
वामे तु कारयेद्वृद्धिं दक्षिणे पुष्करं शुभम् ।
नागैर्नदीभिर्यादोभिः समुद्रैः परिवारितम् ॥
कृत्वैवं वरुणं देवं प्रतिष्ठाविधिनार्च्चयेत् ॥"
पुष्करं तत्पुत्त्रम् । ततो ध्यानम् ।
इति ध्यात्वा मानसैरुपचारैर्व्वरुणं आराध्य
मूलमन्त्रं जपेत् । प्रजापतिरृषिस्त्रिष्टुप् छन्दो
वरुणो देवता एतावद्राष्ट्रमभिव्याप्य सुवृष्ट्यर्थं
जपे विनियोगः । मन्त्रस्तु गुरुमुखात् ज्ञेयः ।
स यथा । ॐ वृष्टिरिहानाव्यन्तरयो मरुता-
स्पृशतीं गच्छ वशापग्निर्दूत्वा दिवं गच्छत तेनो
वृष्टिमावह । इति मन्त्रस्य सहस्रजपानन्तरं
सुवृष्टिमती वसुमती भवति । अत्र सन्देहो न
कार्य्यः ॥ * ॥ मन्त्रान्तरम् । कूर्च्चं लक्ष्मीं तथा
मायां तेन हुँ श्रीँ ह्रीं इति त्र्यक्षरमन्त्रं नाभि-
मात्रजलमध्ये प्रविश्य यदि जपति तदा अना-
वृष्टिं हरति महावृष्टिर्भवति । अष्टसहस्रजपः
संख्या चतुर्गुणा तेन द्वात्रिंशत्सहस्रजपः ।
दिनत्रयानन्तरं चतुर्थदिने जपसमाप्तिः ।
"नाभिमात्रजले स्थित्वा जपेन्मन्त्रं प्रसन्नधीः ।
वसुसहस्रं जपेन्मन्त्रं त्रिदिनं व्याप्य यत्नतः ॥"
अथवा ।
"षट्सहस्रं जपेन्नित्यं तदा वृष्टिर्भवेत् ध्रुवम् ।"
इति षट्कर्म्मदीपिका ॥ * ॥
पुस्तकान्तरे वं इति एकाक्षरमन्त्रोऽपि जप्य-
त्वेन लिखितः ॥ * ॥ महापातकिनो दण्डधनं
गृहीत्वा राजा वरुणाय प्रतिपादयेत् । यथा, --
"नाददीत नृपः साधुर्महापातकिनो धनम् ।
आददानस्तु तल्लोभात्तेन दोषेण लिप्यते ॥
अप्सु प्रवेश्य तं दण्डं वरुणायोपपादयेत् ।
श्रुतवृत्तोपपन्ने वा ब्राह्मणे प्रतिपादयेत् ॥
इशो दण्डस्य वरुणो राज्ञां दण्डधरो हि सः ।
तम् । १ । ६५ । ४२ ॥)

**वरुणात्मजा**, स्त्री, (वरुणस्य जलस्य आत्मजा
तदुद्भवत्वात् ।) मद्यम् । इत्यमरः । २ । २० । ३९ ॥
(विवरणमस्या मद्यशब्दे ज्ञेया ॥)

**वरुणानी**, स्त्री, (वरुणस्य पत्नी । वरुण + "इन्द्र-
वरुणभवेति ।" ४ । १ । ४९ । इति ङीष् आनु-
गागमश्च ।) वरुणपत्नी । इति जटाधरः ॥
(यथा, ऋग्वेदे । १ । २२ । १२ ।
"इहेन्द्राणीमुपह्वये वरुणाणीं स्वस्तये ।
अग्नायीं सोमपीतये ॥")

**वरुत्रं**, क्ली, (वृणोति आवृणोत्यनेनेति । वृ +
"आशित्रादिभ्य इत्रोत्रौ ।" उणा० ४ । १७२ ।
इति उत्रः ।) उत्तरीयवस्त्रम् । वृधातोरुत्र-
प्रत्ययेन निष्पन्नम् । इति सिद्धान्तकौमुद्या-
मुणादिवृत्तिः ॥

**वरुलः**, पुं, (वृ + उलः ।) संभक्तः । इति संक्षिप्त-
सारोणादिवृत्तिः ॥

**वरूथं**, क्ली, (व्रियते शरीरमनेनेति । वृ परणे +
"जॄवृञ्भ्यामूथन् ।" उणा० २ । ६ । इति
ऊथन् ।) तनुत्राणम् । इति हेमचन्द्रः ॥ चर्म्म ।
इति मेदिनी । थे, २१ ॥ तत्र पवर्गीयबकारादौ
गणितोऽयं शब्दः ॥ (गृहम् । इति निघण्टुः ।
३ । ४ ॥ यथा, ऋग्वेदे । १ । ५८ । ९ ।
"भवा वरूथं गृणते विभावो
भवा मघवन् मघवद्भ्यः शर्म्म ॥"
सैन्यम् । यथा, भागवते । ९ । १० । २० ।
"तेऽनीकपा रघुपतेरभिपत्य सर्व्वे-
द्वन्द्वं वरूथमिभपत्तिरथाश्वयोधैः ।
जघ्नुर्द्रुमैर्गिरिगदेषुभिरङ्गदाद्याः
सीताभिमर्षहतमङ्गलरावणेशान् ॥")

**वरूथः**, पुं, (व्रियते रथोऽनेनेति । वृञ् वरणे +
“जॄवृञ्भ्यामूथन् ।” उणा० २ । ६ ।
इति
ऊथन् ।) परप्रहरणाभिघातरक्षार्थं
रथस्य
सन्नाहवद्यदावरणकादिद्रव्यं तत् ।
तत्पर्य्यायः ।
रथगुप्तिः २ । इत्यमरभरतौ । २ । ८ ।
५७ ॥
रथसंवृतिः ३ । इति जटाधरः ॥ (यथा,
रामायणे । ६ । ५७ । २६ ।
“उरगध्वजदुर्द्धर्षं सुवरूथं स्वपस्करम्
॥”
ग्रामविशेषः । यथा, तत्रैव । २ । ७१ ।
११ ।
“तोरणं दक्षिणार्द्धेन जम्बूप्रस्थं
समागमत् ।
वरूथञ्च ययौ सम्यक् ग्रामं
दशरथात्मजः ॥”)

**वरूथिनी**, स्त्री, (वरूथं तनुत्राणादिकमस्त्यस्या
इति । वरूथ + इनिः । ङीप् ।) सेना ।
इत्य-
मरः । २ । ८ । ७८ ॥ (यथा, रघुः ।
११ । ५८ ।
“तस्य जातु मरुतः प्रतीपगाः
वर्त्मसु ध्वजतरुप्रमाथिनः ।
चिक्लिशुर्भृशतया वरूथिनी-
मत्तटा इव नदीरयाः स्तलीम् ॥”)

**वरेण्यं**, क्ली, (व्रियते लोकैरिति । वृ + “वृञ
एण्यः ।” उणा० ३ । ९८ । इति एण्यः
।)
कुङ्कुमम् । इति राजनिर्घण्टः ॥

**वरेण्यः**, त्रि, (वृ + एण्यः ।) प्रधानः । इत्य-
मरः । ३ । १ । ५७ ॥ (यथा, भट्टिः ।
१ । ४ ।
“पुण्यो महाब्रह्मसमूहजुष्टः
सन्तर्पणो नाकसदां वरेण्यः ॥”
१३१ ।) युवपशुः । इत्यमरः । २ । १० । २३
॥
मेषशावकः । इति तट्टीकायां भरतः ॥ परि-
हासः । (यथा, अमरुशतके । ७ ।
“कान्तः केलिरुचिर्य्युवा सहृदयस्तादृक् पतिः
कातरे
किन्नो वर्करकर्करैः प्रियशतैराक्रम्य विक्री-
यते ॥”)
छागः । इति मेदिनी । रे, २१० ॥

**वर्कराटः**, पुं, (वर्करं परिहासं अटति गच्छ-
तीति । अट् + अच् ।) कटाक्षः । तरुणादित्य-
रोचिः । नारीपयोधरोत्सङ्गकान्तदत्तनख-
क्षतः । इति मेदिनी । टे, ६५ ॥

**वर्गः**, पुं, (वृज्यते इति । वृजी वर्ज्जने + घञ् ।)
स्वजातीयसमूहः । (यथा, रघुः । २ । ४ ।
“व्रताय तेनानुचरेण धेनो-
र्न्यषेधि शेषोऽप्यनुयायिवर्गः ॥”)
समानधर्म्मिभिः प्राणिभिरप्राणिभिरुपलक्षितं
वृन्दम् । यथा कवर्गः । अत्र कत्वखत्वादिना
विजातीयत्वेऽपि स्थानसाम्यमस्ति । इत्यमर-
भरतौ ॥ ग्रन्थपरिच्छेदः । यथा, --
“सर्गो वर्गपरिच्छेदोद्घाताध्यायाङ्कसंग्रहाः ।
उच्छ्वासः परिवर्त्तश्च पटलः काण्डमस्त्रियाम् ।
स्थानं प्रकरणं पर्व्वाह्निकञ्च ग्रन्थसन्धयः ॥”
इति त्रिकाण्डशेषः ॥
समानाङ्कद्वयस्य पूरणम् । तत्पर्य्यायः । कृतिः
२ ।
वर्गे करणसूत्रं वृत्तद्वयम् ।
“समद्विघातः कृतिरुच्यतेऽथ
स्थाप्योऽन्त्यवर्गो द्विगुणान्त्यनिघ्नः ।
स्वस्वोपरिष्टाच्च तथापरेऽङ्का-
स्त्यक्त्वान्त्यमुत्सार्य्य पुनश्च राशिम् ॥
खण्डद्वयस्याभिहतिर्द्विनिघ्नी
तत्खण्डवर्गैक्ययुता कृतिर्व्वा ।
इष्टोनयुग्राशिवधःकृति स्या-
दिष्टस्य वर्गेण समन्वितो वा ॥” * ॥
अत्रोद्देशकः ।
“सखे नवानाञ्च चतुर्द्दशानां
लीलावत्यां वर्गः ॥ (स्त्री, अप्सरोविशेषः ।
यथा, महाभारते । १ । २१७ । १५ ।
“अप्सरास्मि महाबाहो देवारण्यविहारिणी ।
इष्टा धनपतेर्नित्यं वर्गा नाम महावल ॥”
मुनिशापात्ग्राहरूपिणीयंअर्ज्जुनात् शाप-
मुक्तासीत् । एतद्वृत्तान्तन्तु तत्रैव द्रष्टव्यम्
॥)

**वर्गमूलं**, क्ली, (वर्गस्य समानाङ्कद्वयस्य मूलम्
आद्याङ्कः ।) पूरितसमानाङ्कद्वयस्याद्याङ्कः ।
यथा । वर्गमूले करणसूत्रं वृत्तम् ।
“त्यक्त्वान्त्याद्विषमात्कृतिं द्विगुणयेन्मूलं
समे तद्धृते
त्यक्त्वालब्धकृतिं तदाद्यविषमाल्लब्धं
द्विनिघ्नं
न्यसेत् ।
पङ्क्त्यां पङ्क्तिहृते समेऽन्यविषमात्
त्यक्त्वाप्तवर्गं
फलं
पङ्क्त्यां तद्द्विगुणं न्यसेदिति मुहुः
पङ्क्तेर्दलं
स्यात् पदम् ॥” * ॥
अत्रोद्देशकः ।
“मूलं चतुर्णाञ्च तथा नवानां
पूर्ब्बं कृतावाञ्च सखे कृतीनाम् ।
पृथक् पृथग्वर्गपदानि विद्धि
बुद्धेर्व्विबुद्धिर्यदि तेऽत्र जाता ॥”
न्यासः ४ । ९ । ८१ । १९६ । ८८२०९
। १००
१०००२५ । लब्धानि क्रमेण मूलानि २ ।
३ ।
९ । १४ । २९७ । १००००५ । इति
लीला-
वत्यां वर्गमूलम् ॥
सजातीयाङ्कत्रयस्य घातः घनः । तस्य
तन्मू-
लस्य च समुदायसूत्रोदाहरणानि पूर्ब्बे न
लिखितानि प्रसङ्गादत्र पुनर्ल्लिख्यन्ते । घने
करणसूत्रं वृत्तत्रयम् ।
“समत्रिघातश्च घनः प्रदिष्टः

वरणीयः । इति मल्लिनाथः ॥ यथा,
कुमारे ।
७ । ९० ।
"संस्कारपूतेन वरं वरेण्यं
बधूं सुखग्राह्यनिबन्धनेन ॥"
पु, पितृगणानामन्यतमः । यथा,
मार्कण्डेये ।
९६ । ४५ ।
"वरो वरेण्यो वरदो पुष्टिदस्तुष्टिदस्तथा ॥"
भृगुपुत्त्रविशेषः । यथा, महाभारते । १३ ।
८५ । १२९ ।
"भृगोस्तु पुत्त्राः सप्तासन् सर्व्वे तुल्या भृगो-
र्गुणैः ।
च्यवनो वज्रशीर्षश्च शुचिरौर्व्वस्तथैव च ।
शुक्रो वरेण्यश्च विभुः सवनश्चेति सप्त ते ॥"
महादेवः । यथा, तत्रैव शिवसहस्रनाम-
कीर्त्तने । १३ । १७ । १३६ ।
"वरो वराहो वरदो वरेण्यः सुमहास्वनः ॥")

**वरेन्द्री**, स्त्री, गौडदेशः । इति त्रिकाण्डशेषः ॥

**वरेश्वरः**, पुं, (वरः श्रेष्ठ ईश्वरः ।) शिवः । इति शब्दरत्नावली ॥

**वरोटं**, क्ली, (वराणि श्रेष्ठानि उटानि दलानि अस्य ।) मरुवकपुष्पम् । इति शब्दमाला ॥

**वरोलः**, पुं स्त्री, (वृ + ओलच् ।) वरटः । इति त्रिकाण्डशेषः ॥

**वर्करः**, पुं, (वृक्यते गृह्यते इति । वृक आदाने + बहुलवचनात् अरः । इत्युज्ज्वलदत्तः । ३ ।

ब्रूहि त्रिहीनस्य शतत्रयस्य ।
पञ्चोत्तरस्याप्ययुतस्य वर्गं
जानासि चेद्वर्गविधानमार्गम् ॥"
न्यामः ९ । १४ । २९७ । १०००५ । एषां
यथोक्तकरणेन जाता वर्गाः ८१ । १९६ ।
८८२०९ । १००१०००२५ ॥ अथवा नवानां
खण्डे ४ । ५ । अनयोराहतिः २० । द्विनिघ्नी ४० ।
तत्खण्डवर्गैक्येन ४१ । युता जाता सैव
कृति ८१ ॥ अथवा चतुर्द्दशानां खण्डे ६ । ८ ।
अनयोराहतिः ४८ । द्विनिघ्नी ९६ । तत्खण्ड-
वर्गौ ३६ । ६४ । अनयोरैक्येन १०० । युता
जाता सैव कृतिः १९६ ॥ अथवा खण्डे ४ । १० ।
तथापि सैव कृतिः १९६ ॥ अथवा राशिः २९७ ॥
अयं त्रिभिरूनः पृथग्युतश्च २९४ । ३०० ।
अनयोर्घातः ८८२०० । त्रिवर्ग ९ युतो जातो
वर्गः स एव ८८२०९ ॥ एवं सर्व्वत्रापि इति

स्थाप्यो घनोऽन्त्यस्य ततोऽन्त्यवर्गः ।
आदित्रिनिघ्नस्तत आदिवर्ग-
स्त्र्यन्त्याहतोऽथादिघनश्चसर्व्वे ॥
स्थानान्तरत्वेन युता घनः स्यात्
प्रकल्प्य तत् खण्डयुगं ततोऽन्त्यम् ।
एवं मुहुर्व्वर्गघनप्रसिद्धा-
वाद्याङ्कतो वा विधिरेष कार्य्यः ॥
खण्डाभ्यां वा हतो राशिस्त्रिघ्नः खण्डघनैक्ययुक् ।
वर्गभूलघनस्वघ्नो वर्गराशेर्घनो भवेत् ॥" * ॥
अत्रोद्देशकः ।
"नवघनं त्रिघनस्य घनं तथा
कथय पञ्चघनस्य घनञ्च मे ।
घनपदञ्च ततोऽपि घनात् सखे
यदि घनेऽस्ति घना भवतो मतिः ॥"
न्यासः ९ । २७ । १२५ । जाताः क्रमेण घनाः
७२९ । १९६८३ । १९५३१२५ ॥ अथवा राशिः
९ । अस्य खण्डे ४ । ५ । आभ्यां राशिर्हतः
१८० त्रिनिघ्नश्च ५४० । खण्डघनैक्येन १८९ ।
युतो जातो घनः ७२९ ॥ अथवा राशिः २७ ।
अस्य खण्डे २० । ७ । आभ्यां हतस्त्रिघ्नश्च
११३४० । खण्डघनैक्येन ८३४३ । युतो जातो
घनः १९६८३ ॥ अथवा राशिः ४ । अस्य

मूलम् २ । धनः ८ । अयं स्वघ्नो जातश्चतुर्णां
घनः ६४ ॥ अथवा राशिः ९ । अस्य मूलम् ३ ।
घनः २७ । अस्य वर्गो नवानां घनः ७२९ ।
य एव वर्गराशिघनः स एव वर्गमूलघनवर्गः ॥
इतिघनः ॥ * ॥ अथ घनमूले करणसूत्रं वृत्तद्वयम् ।
"आद्यं घनस्थानमथाघने द्वे
पुनस्तथान्त्याद्घनतो विशोध्यम् ।
घनं पृथक्स्थं पदमस्य कृत्या
त्रिघ्न्या तदाद्यं विभजेत् फलन्तु ॥
पङ्क्त्यां न्यसेत्तत्कृतिमन्त्यनिघ्नीं
त्रिघ्नीं त्यजेत्तत्प्रथमात् फलस्य ।
घनं तदाद्याद्घनमूलम्वें
पङ्क्तिर्भवेदेवमतः पुनश्च ॥"
अत्रोद्देशकः । पूर्ब्बघनानां मूलार्थं न्यासः ७२९ ।
१९६८३ । १९५३१२५ । क्रमेण लब्धानि मूलानि
९ । २७ । १२५ । इति लीलावत्यां घनमूलम् ॥

**वर्गोत्तमः**, पुं, (वर्गेषु उत्तमः ।) चराणां अर्थात्

मेषकर्क्कटतुलामकरराशीनां प्रथमोऽंशः ।
स्थिराणां अर्थाद्वृषसिंहवृश्चिककुम्भराशीनां
पञ्चमोऽंशः । द्व्यात्मकानां अर्थात् मिथुनकन्या-
धनुर्मीनराशीनां नवमोऽंशश्च । यथा, --
"चराणां प्रथमे चांशे स्थिराणां पञ्चमे तथा ।
नवमे द्व्यात्मकानाञ्च वर्गोत्तम इति स्मृतः ॥"
अपि च । राशीनां स्वकीयनवांशः । यथा, --
"स्वनवांशस्तु राशीनां वर्गोत्तम इति स्मृतः ॥"
इति ज्योतिस्तत्त्वम् ॥

**वर्च्च**, ङ दीप्तौ । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-अक०-सेट् ।) ङ, वर्च्चते ॥ इति दुर्गा-
"अस्मायामेधेति ।" ५ । २ । १२१ । इति
विनिः ।) चन्द्रः । यथा, --
"रोहिण्यामभवद्वर्च्चा वर्च्चस्वी येन चन्द्रमाः ॥"
इति वह्निपुराणम् ॥

**वर्च्चाः**, [स्] पुं, (वर्च्चते इति । वर्च्च + असुन् ।)

चन्द्रपुत्त्रः । इति मेदिनी । से, ३६ ॥ अन्यच्च ।
"रोहिण्यामभवद्वर्च्चा वर्च्चस्वी येन चन्द्रमाः ॥"
इत्याद्ये वह्निपुराणे सर्गानुकीर्त्तने सतीदेह-
त्यागनामाध्यायः ॥

**वर्ज्जनं**, क्ली, (वृज् + ल्युट् ।) त्यागः । हिंसा ।

इति मेदिनी । ने, १२२ ॥ मारणम् । इति
हेमचन्द्रः ॥

**वर्ज्जितः**, त्रि, त्यक्तः । वृजधातोः क्तप्रत्ययेन

निष्पन्नः । यथा, --
"अवज्ञातञ्चावधूतं सरोषं विस्मयान्वितम् ।
गुरोरपि न भोक्तव्यमन्नं सत्कारवर्ज्जितम् ॥"
इति कौर्म्मे उपविभागे १६ अध्यायः ॥

**वर्ज्जनीयं**, त्रि, (वृज् + अनीयर् ।) वर्ज्जनयोग्यम् ।

त्यक्तव्यम् । वर्ज्जनीयान्नं यथा, --
"राजान्नं नर्त्तकान्नञ्च तक्ष्णोऽन्नञ्चक्रकारिणः ।
गणान्नं गणिकान्नञ्च षण्डान्नञ्चैव वर्ज्जयेत् ॥
चक्रोपजीविरजकतस्करध्वजिनान्तथा।
गान्धर्व्वलोहकारान्नं सूतकान्नं विवर्ज्जयेत् ॥
कुलालचित्रकर्म्मान्नं वार्द्धुषेः पतितस्य च ।
पौनर्भवच्छात्रिकयोरभिशस्तस्यचैव हि ॥
सुवर्णकारशैलूषव्याधितस्यातुरस्य च ।
चिकित्सकस्य चैवान्नं पुंश्चल्या दाण्डिकस्य च ॥
स्तेननास्तिकयोरन्नं देवतानिन्दकस्य च ।
सोमविक्रयिणश्चान्नं श्वपाकस्य विशेषतः ॥
भार्य्याजितस्य चैवान्नं यस्य चोपपतिर्गृहे ।
उत्सृष्टस्य कदर्य्यस्य तथैवोच्छिष्टभोजिनः ॥
अपाङ्क्तान्नञ्च संघान्नं शस्त्राजीवस्य चैव हि ।
क्लीवस्यान्त्यासिनश्चान्नंमत्तोन्मत्तस्य चैव हि ॥
भीतस्य रुदितस्यान्नमवक्रुष्टं परिक्षितम् ।
भक्ष्या ह्येते सदा वर्ज्ज्यौ ग्रामशूकरकुक्कुटौ ।
पितृदेवादिशेषञ्च श्राद्धे ब्राह्मणकाम्यया ।
प्रोक्षितञ्चौषधार्थञ्च खादन् मांसंन दोषभाक् ॥"
इति मार्कण्डेयपुराणे सदाचाराध्यायः ॥

**वर्ण**, क वर्णे । इति कविकल्पद्रुमः ॥ (चुरा०-

पर०-सक०-सेट् ।) क, वर्णयति ।
अयं कश्चिन्न मन्यते । वर्णः शुक्लादिक्रिया । इति
दुर्गादासः ॥

**वर्ण**, त् क स्तुतिविस्तारशुक्लाद्युद्युक्तिदीपने। इति

कविकल्पद्रुमः ॥ (अदन्त चुरा०-पर०-सक०-
दीपने अक०-सेट् ।) वर्णयति वर्णापयति कविः
स्तौतीत्यर्थः । वर्णयति तन्तुं विस्तारयतीत्यर्थः ।
वर्णयति प्रतिमां शुक्लादिवर्णां करोतीत्यर्थः ।
वर्णयति उद्युङ्क्ते दीप्यते वेत्यर्थः । शुक्लाद्य-
त्युक्तिदीपने इत्यपि पाठः । इति दुर्गादासः ॥

**वर्णं**, क्ली, (वर्णयतीति । वर्ण + अच् ।) कुङ्कुमम् ।

इति हेमचन्द्रः ॥

**वर्णः**, पुं, (व्रियते इति । वृ + "कॄवृजॄषिद्रुगुपन्य-

निस्वपिभ्यो नित् ।" उणा० ३ । १० । इति
नः । स च नित् ।) जातिः । सा च ब्राह्मणः
क्षत्त्रियो वैश्यः शूद्रश्च । एषामुत्पत्त्यादिर्यथा ।

दासः ॥

**वर्च्चः**, [स्] क्ली, (वर्च्चते इति । वर्च्च + "सर्व्व-

धातुभ्योऽसुन् ।" उणा० ४ । १८८ । इति
असुन् ।) रूपम् । विष्ठा । (यथा, सुश्रुते
उत्तरतन्त्रे ४० अध्याये ।
"शूलाविष्टः सक्तमूत्रोऽन्त्रकूजी
स्त्रस्तापानः सन्नकट्यूरुजङ्घः ।
वर्च्चो मुञ्चत्यल्पमल्पं सफेनं
रुक्षं श्यावं सानिलं मारुतेन ॥")
तेजः । इति मेदिनी । से, ३५ ॥ (यथा,
ऋग्-
वेदे । ९ । ६६ । २१ ।
"अग्ने पवस्व स्वपा अस्मे वर्च्चः सुवीर्य्यम्
॥"
"वर्च्चः तेजः ।" इति तद्भाष्ये सायणः ॥
अन्नम् ।
यथा तत्रैव । ३ । २४ । १ ।
"अग्ने सहस्व पृतना अभिमातीरपास्य ।
दुष्टरस्तरन्नरातीर्व्वर्च्चोधायज्ञ वाहसे ॥"
"वर्च्चोधाः अन्नं धेहि ।" इति तद्भाष्ये
रायणः ॥)

**वर्च्चस्कः**, पुं, क्ली, (वर्च्चस् + स्वार्थे कन् ।) विष्ठा ।

इत्यमरः । २ । ६ । ६८ ॥ (दीप्तिः । यथा,
महाभारते । १३ । २५ । १९ ॥
"देविकायामुपस्पृश्य तथा सुन्दरिकहृदे ।
अश्विन्यां रूपवर्च्चस्कं प्रेत्य वै लभते नरः
॥")

**वर्च्चस्वी**, [न्] पुं, (वर्च्चोऽस्थास्तीति । वर्च्चस् +

ब्रह्मद्विषः पापरुचेः श्राद्धान्नं मृतकस्य च ॥
वृथापाकस्य चैवान्नं शावान्नं श्वशुरस्य च ।
अप्रजानान्तु नारीणां कृतघ्नस्य तथैव हि ॥
कन्दुकान्नं विशेषेण शस्त्रविक्रयिणस्तथा ।
शौण्डान्नं घटकान्नञ्च भिषजामन्नमेव च ॥
विद्धप्रजननस्यान्नं परिवित्त्यन्नमेव च ।
पुनर्भुवो विशेषेण तथैव दिधिषूपतेः ॥
अवज्ञातञ्चावधृतं सरोषं विस्मयान्वितम् ।
गुरोरपि न भोक्तव्यं अन्नं सत्कारवर्ज्जितम् ॥
दुष्कृतं हि मनुष्यस्य सर्व्वमन्नेष्वनुष्ठितम् ।
यो यस्यान्नं समश्नाति स तस्याश्नाति किल्वि-
षम् ॥"
इति श्रीकूर्म्मपुराणे उपविभागे १६ अध्यायः ॥

**वर्ज्यः** त्रि, (वृज् + ण्यत् ।) वर्ज्जनीयः । यथा, --

"अतः प्ररं शृणुष्व त्वं वर्ज्यावर्ज्यप्रतिक्रियाम् ।
भोज्यमन्नं पर्य्युषितं स्नेहाक्तं चिरसंस्थितम् ॥
अस्नेहाश्चापि गोधूमयवगोरसविक्रियाः ।
शशकः कच्छपो गोधा सेधा मत्स्योऽथ शल्लकः
॥

यदा भगवान् पुरुषरूपेण सृष्टिं
कृतवान् तदास्य
शरीरात् चत्वारो वर्णा उत्पन्नाः ।
मुखतो
ब्राह्मणाः बाहुतः क्षत्त्रियाः ऊरुतो
वैश्याः
पादतः शूद्रा जाताः । एतेषां वर्णानां
धर्म्माः
शास्त्रेषु निरूपिताः सन्ति । तत्र
ब्राह्मणधर्म्मा
उच्यन्ते । अध्ययनं यजनं दानञ्चेति ।
जीविका-
स्त्रयः अध्यापनं याजनं प्रतिग्रहश्चेति
। १ ।
क्षत्त्रियस्य त्रयो धर्म्माः । अध्ययनं
यजनं
दानञ्च । प्रजानां रक्षणं जीविका । २ ।
वैश्यस्य
त्रयो धर्म्माः । अध्ययनं यजनं दानञ्च
। चतस्रो
जीविकाः । कृषिः गोरक्षणं बाणिज्यं
कुशीद-
ञ्चेति । ३ । शूद्रस्य तु ब्रह्मक्षत्त्रविशां
शुश्रूषा
धर्म्मो जीविका च । ४ । ब्राह्मणा
आश्रम-
चतुष्टयवन्तो भवन्ति । ब्रह्मचारी
गृहस्थः
वानप्रस्थः सन्न्यासी च । तत्र
उपनयनानन्तरं
नियमं कृत्वा यो गुरोः सन्निधौ
स्थित्वा साङ्ग-
वेदाध्ययनं करोति स
ब्रह्मचारीत्युच्यते । १ ।
साङ्गवेदाध्ययनं समाप्य यो
दारपरिग्रहं कृत्वा
स्वधर्म्माचरणं करोति स गृहस्थ
उच्यते । २ ।
पुत्त्रमुत्पाद्य यो वनवासं कृत्वा
अकृष्टपच्यफलादि
भक्षयित्वा ईश्वराराधनं करोति स
वानप्रस्थ

| | | |
|---|---|---|
| | | उच्यते । ३ । यः सर्व्वं गृहादिकं त्यक्त्वा मुण्डित-<br>मुण्डो गैरिककौपीनाच्छादनं दण्डं कमण्डलुञ्च<br>विभ्रत् भिक्षावृत्तिर्निर्जने तीर्थे वा स्थित्वा केवल-<br>मीश्वराराधनं करोति स सन्न्यासीत्युच्यते ॥ ४ ॥<br>क्षत्त्रियवैश्ययोस्तु प्रथमाश्रमत्रयं विहितम् ।<br>शूद्रस्यैक एव गृहाश्रमः । ईश्वराराधनन्तु<br>सर्व्वेषां वर्णानामाश्रमाणाञ्च साधारणो धर्म्मः ।<br>तन्मध्ये यस्तु विष्णूपासकः स वैष्णव उच्यते ।<br>शिवोपासकः शैवः ।<br>दुर्गादिशक्त्युपासकः शाक्तः ।<br>सूर्य्योपासकः सौरः । गणेशोपासको गाणपत्य<br>उच्यते । इति पुराणार्थप्रकाशः ॥ * ॥<br>अपि च । |

ब्रह्मोवाच ।
"सर्गादिकृद्धरिश्चैव पूज्यः
स्वायम्भुवादिभिः ।
विप्राद्यैः स्वेन धर्म्मेण तद्धर्म्मं व्यास वै
शृणु ॥
यजनं याजनं दानं ब्राह्मणस्य प्रतिग्रहः ।
अध्यापनं चाध्ययनं षट् कर्म्माणि
द्विजोत्तमे ॥
दानमध्ययनं यज्ञो धर्म्मः क्षत्त्रियवैश्ययोः
।
दण्डस्तथा क्षत्त्रियस्य कृषिर्व्वैश्यस्य
शस्यते ॥
शुश्रूषैव द्विजातीनां शूद्राणां धर्म्मसाधनम्
।
कारुकर्म्मस्तथाजीवः पाकयज्ञोऽपि
धर्म्मतः ॥
भिक्षाचर्य्याथ शुश्रूषा गुरोः स्वाध्याय एव
च ।
सन्ध्याकर्म्माग्निकार्य्यञ्च धर्म्मोऽयं
ब्रह्मचारिणः ॥
सर्व्वेषामाश्रमाणान्तु द्वैविध्यन्तु
चतुर्व्विधम् ।
ब्रह्मचार्य्युपकुर्व्वाणो नैष्ठिको ब्रह्मतत्परः ॥
योऽधीत्य विधिवद्वेदान्
गृहस्थाश्रममाव्रजेत् ।
उपकुर्व्वाणको ज्ञेयो नैष्ठिको मरणान्तिकः
॥
अग्नयोऽतिथिशुश्रूषा यज्ञो दानं सुरार्च्चनम्
।
गृहस्थस्य समासेन धर्म्मोऽयं द्विजसत्तमाः
॥
उदासीनः साधकश्च गृहस्थो द्विविधो
भवेत् ।
कुटुम्बभरणे युक्तः साधकोऽसौ गृही भवेत्
॥
ऋणानि त्रीण्युपाकृत्य त्यक्त्वा
भार्य्याधना-
दिकम् ।
एकाकी यस्तु विचरेत् उदासीनः स
मौक्षिकः ॥

वैश्यानां मारुतं स्थानं
स्वधर्म्ममनुवर्त्तताम् ।
गान्धर्व्वं शूद्रजातीनां परिचारे च वर्त्तताम्
॥"
इति गारुडे ४९ अध्यायः ॥ * ॥
अन्यच्च ।
"ब्राह्मणस्य तु वक्ष्यामि शृणु कर्म्म
वसुन्धरे ! ।
यानि कर्म्माणि कुर्व्वीत मम भक्तिपरायणः
॥
षट्कर्म्मनिरतो भूत्वा अहङ्कारविवर्ज्जितः
।
लाभालाभं परित्यज्य भिक्षाहारो
जितेन्द्रियः ॥
मम कर्म्मसमायुक्तः पैशुन्येन विवज्जितः
।
शास्त्रानुसारी मध्यस्थो न वृद्धः
शिशुचेतनः ॥
एतदवै ब्राह्मणः कर्म्म एकचित्तो
जितेन्द्रियः ।
इष्टापूर्त्तञ्च कुरुते स मामेति वसुन्धरे ! ॥
क्षत्त्रियाणां प्रवक्ष्यामि मम कर्म्मसु
निष्ठताम् ।
यानि कर्म्माणि कुर्व्वन्ति क्षत्त्रिया
मध्यसंस्थिताः ॥
दानशूरश्च कर्म्मज्ञो यज्ञेषु कुशलः शुचिः
।
मम कर्म्मसु मेधावी अहङ्कारविवर्ज्जितः ॥
अल्पभाषी गुणज्ञश्च नित्यं भागवतप्रियः ।
गुरुविद्यानसूयात्मा गुह्यकर्म्मष्वतन्द्रितः ॥
अभ्युत्थानादिकुशलः पैशुन्येन
विवर्ज्जितः ।
एतैर्गुणैः समायुक्तो यो मां व्रजति क्षत्त्रियः
॥
भजते मम यो नित्यं मम लोकाय गच्छति
।
वैश्यानान्तु प्रवक्ष्यामि मम कर्म्मसु
निष्ठताम् ॥
यानि कर्म्माणि कुरुते मम भक्तिपथे
स्थितः ।

अवाप्य सकलान् वेदान् शास्त्रं प्राप्य गुरो-
र्मुखात् ।
ततो वरान्मुदा दद्याद्गुरवे दक्षिणान्ततः ॥
गार्हस्थाश्रमकामस्तु गार्हस्थ्याश्रममाश्रयेत् ।
वानप्रस्थाश्रमञ्चापि चतुर्थं स्वेच्छया वसेत् ॥
तथैव च गुरोर्गेहे द्विजो निष्ठामवाप्नुयात् ।
गुरोरभावे तत्पुत्त्रं तद्वदेव निषेवयेत् ॥
एवं जयति मृत्युं स द्विजः शालङ्कटङ्कट ! ।
उपावृतस्ततस्तस्मात् गृहस्थाश्रमकाम्यया ।
असमानकुलां कन्यामुद्वहेत निशाचर ! ॥
स्वकर्म्मणा धनं लब्ध्वा पितृदेवातिथीनपि ।
सम्यक् संप्रीणयेद्भक्त्या सदाचाररतो द्विजः
॥
गार्हस्थ्यं ब्रह्मचर्य्यञ्च वानप्रस्थं त्रयाश्रमाः ।
क्षत्त्रियस्यापि गदिता य आचारा द्विजस्य हि
॥
वैखानसत्वं गार्हस्थ्यमाश्रमद्वितयं विशः ।
गार्हस्थ्यमुत्तमं त्वेकं शूद्रस्य क्षणदाचर ! ॥
स्वानि वर्णाश्रमोक्तानि कर्म्माणीह न हापयेत्
यो हापयति तस्यासौ परिकुप्यति भास्करिः
॥"
इति वामनपुराणे १४ अध्यायः ॥ * ॥
पुनश्च ।
श्रीउर्व्व उवाच ।
"ब्राह्मणक्षत्त्रियविशां शूद्राणाञ्च यथाक्रमम् ।
त्वमेकाग्रमना भूत्वा शृणु धर्म्मान् मयोदितान्
॥
दानं दद्याद्यजेद्देवान् यज्ञैः स्वाध्यायतत्परः ।
नित्योदकी भवेद्विप्रः कुर्य्याच्चाग्निपरिग्रहम् ॥
वृत्त्यर्थं याजयेच्चान्यानन्यानध्यापयेत्तथा ।
कुर्य्यात् प्रतिग्रहादानं शुक्तार्थान्न्यायतो द्विजः
॥"
शुक्लार्थात् शुक्लः शुद्धो न्यायोपार्ज्जितोऽर्थो
यस्य
तस्मात् । इति तट्टीका ।
"सर्व्वलोकहितं कुर्य्यान्नाहितं कस्यचिद्द्विजः
।
मैत्री समस्तसत्त्वेषु ब्राह्मणस्योत्तमं धनम् ॥
ग्राव्णि रत्ने च पारक्ये समबुद्धिर्भवेत् द्विजः ।

भूमौ मूलफलाशित्वं स्वाध्यायस्तप एव च ।
संविभागो यथान्यायं धर्म्मोऽयं वनवासिनः ॥
तपस्तप्स्यति योऽरण्ये यजेद्देवान् जुहोति च ।
स्वाध्याये चैव निरतो वनस्थस्तापसो मतः ॥
तपसाकर्षितोऽत्यर्थं यस्तु ध्यानपरो भवेत् ।
सन्न्यासीह स विज्ञेयो वानप्रस्थाश्रमे स्थितः ॥
योगाभ्यासरतो नित्यमारुरुक्षुर्जितेन्द्रियः ।
ज्ञानाय वर्त्तते भिक्षुः प्रोच्यते पारमेष्ठिकः ॥
यस्त्वात्मरतिरेव स्यान्नित्यतृप्तो महामुनिः ।
सम्यक् च दमसम्पन्नः स योगी भिक्षुरुच्यते ॥
भैक्षं श्रुतञ्च मौनित्वं तपोध्याने विशेषतः ।
सम्यक् च ज्ञानषैराग्यं धर्म्मोऽयं भिक्षुके मतः ॥
ज्ञानसन्न्यासिनः केचित् वेदसन्न्यासिनोऽपरे।
धर्म्मसन्न्यासिनः केचित्त्रिविधः पारमेष्ठिकः ॥
योगी च त्रिविध्ये ज्ञेयो भौतिको मोक्ष एव च ।
तृतीयोऽन्त्याश्रमी प्रोक्तो योगमूर्त्तिसमाश्रितः ॥
प्रयमा भावना पूर्ब्बे मोक्षे त्वक्षरभावना ।
तृतीये चान्तिमा प्रोक्ता भावना पारमेश्वरी ॥
धर्म्मात् संजायते मोक्षः अर्थात् कामोऽभि-जायते ।
प्रवृत्तञ्च निवृत्तञ्च द्विविधं कर्म्म वैदिकम् ॥
ज्ञानपूर्ब्बं निवृत्तं स्यात् प्रवृत्तञ्चाग्निदेवकृत् ।
क्षमा दमो दया दानमलोभोऽभ्यास एव च ॥
आर्जवञ्चानसूया च तीर्थानुसरणं तथा ।
एतैर्गुणैः स्वधर्म्मेण लाभालाभविवर्ज्जितः ॥
ऋतुकालाभिगामी च शान्तात्मा मोह-वर्जितः ।
शुचिर्दक्षो निराहारो मम कर्म्मरतः सदा ॥
गुरुसंपूजको नित्यं युक्तो भक्त्यानुवत्सलः ।
वैश्यस्त्वेवन्तु संयुक्तो यो नु कर्म्माणि कारयेत् ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥
अथ शूद्रस्य वक्ष्यामि कर्म्माणि शृणु माधवि ! ।
यानि कर्म्माणि कृत्वा तु शूद्रो मह्यं व्यवस्थितः ॥
दम्पती मम भक्तौ यौ मम कर्म्मपरायणौ ।
उभौ भागवतौ भक्तौ मत्परौ कर्म्मनिष्ठितौ ॥
देशकालौ च जानाति रजसा तमसोज्झितः
निरहङ्कारयुक्तात्मा आतिथेयो विनीतवान् ॥
श्रद्दधानोऽतिपूतात्मा लोभमोहविवर्ज्जितः ।
नमस्कारप्रियो नित्यं मम चिन्ताव्यवस्थितः ॥
शूद्रकर्म्माणि मे देवि ! य एवं स समाचरेत् ।
त्यक्त्वा ऋषिसहस्राणि शूद्रमेव भजाम्यहम् ॥”
इति वाराहे विधिकर्म्मोत्पत्तिनामाध्यायः ॥
अपरञ्च ।
सुकेशिरुवाच ।
“विप्राणां चातुराश्रम्यं विस्तरान्मे तपोधनाः
आचक्षध्वं न से तृप्तिः शृण्वतः प्रतिविद्यते ॥
ऋषय ऊचुः ।
कृतोपनयनः सम्यक् ब्रह्मचारी गुरौ वसन् ।
ऋतावभिगमः पत्न्यां शस्यते चास्य पार्थिव ! ॥ १
दानानि दद्यादिच्छातो द्विजेभ्यः क्षत्त्रियोऽपि हि ।
यजेच्च विविधैर्यज्ञैरधीयीत च पार्थिव ॥
शस्त्राजीवो महीरक्षाप्रवरा तस्य जीविका ।
तस्यापि प्रथमे कल्पे पृथिवीपरिपालनम् ॥
धरित्रीपालनेनैव कृतकृत्यो नराधिपः ।
भवन्ति नृपतेरंशा यतो यज्ञादिकर्म्मणाम् ॥
दुष्टानां शासबाद्राजा शिष्टानां परिपालनात् ।
प्राप्नोत्यभिमताल्लोकान् वर्णसंस्कारको नृपः ॥ २ ॥
पाशुपाल्यं बाणिज्यञ्च कृषिञ्च मनुजेश्वर ।
वैश्याय जीविकां ब्रह्मा ददौ लोकपितामहः ॥
तस्याप्यध्ययनं यज्ञो दानधर्म्मश्च शस्यते ।
नित्यनैमित्तिकादीनामनुष्ठानञ्च कर्म्मणाम् ॥ ३ ॥
द्विजातिसंश्रयं कर्म्म तादर्थ्यं तेन पोषणम् ।
क्रयविक्रयजैर्व्वापि धनैः कारूद्भवेन वा ॥
दानञ्च दद्यात् शूद्रोऽपि पाकयज्ञैर्यजेदपि ।
पित्रादिकञ्च सर्व्वं वै शूद्रः कुर्व्वीत तेन च ॥ ४ ॥
भृत्यादिभरणार्थाय सर्व्वेषाञ्च परिग्रहः ।
ऋतुकालाभिगमनं स्वदारेषु महीपते ॥

| | | |
|---|---|---|
| सत्यं सन्तोष आस्तिक्यं तथा<br>चेन्द्रियनिग्रहः ॥<br>देवताभ्यर्च्चनं पूजा ब्राह्मणानां विशेषतः ।<br>अहिंसा प्रियवादित्वमपैशुन्यमरूक्षता ॥<br>एत आश्रमिका धर्म्माश्चातुर्व्वर्ण्यं<br>ब्रवीम्यतः ।<br>प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं<br>क्रियावताम् ॥<br>स्थानमैन्द्रं क्षत्त्रियाणां<br>संग्रामेष्वपलायिनाम् । | तत्र धर्म्मोऽस्य यस्तञ्च कथ्यमानं<br>निशामय ॥<br>स्वाध्यायोऽर्थोऽग्निशुश्रूषास्नानं<br>भिक्षाटनन्तथा ।<br>गुरौ निवेद्य तच्चाद्यमनुज्ञातेन नित्यशः ॥<br>धर्म्मार्थकाममोक्षाणां सम्यक्<br>प्रत्युपपादनम् ।<br>तेनाहूतः पठेच्चैव तत्परीभूय नित्यशः ॥ | |

दया समस्तभूतेषु तितिक्षा नाभिमानिता ।
सत्यं शौचमनायासो मङ्गलं प्रियवादिता ॥
मैत्र्यस्पृहा तथा तद्वदकार्पण्यं नरेश्वर ।
अनसूया च सामान्या वर्णानां कथिता गुणाः
॥
आश्रमाणाञ्च सर्व्वेषामेते सामान्यलक्षणाः ।
गुणास्तथापद्धर्मांश्च विप्रादीनामिमान् शृणु ॥
क्षात्त्रं कर्म्म द्विजस्योक्तं वै श्यकर्म्म तथापदि ।
राजन्यस्य च वैश्योक्तं शौद्रं कर्म्म न चैतयोः
॥
सामर्थ्ये सति तत्त्याज्यमुभाभ्यामपि पार्थिव ।
तदेवापदि कर्त्तव्यं न कुर्य्यात् कर्म्म सङ्करम् ॥
इत्येते कथिता राजन् वर्णधर्म्मा मया तव ।
धर्म्ममाश्रमिणां सम्यग्ब्रुवतो मे निशामय ॥ *
॥
श्रीउर्व्व उवाच ।
बालः कृतोपनयनो वेदाहरणतत्परः ।
गुरुगेहे वसेद्भूप ब्रह्मचारी समाहितः ॥
शौचाचारवता तत्र कार्य्यं शुश्रूषणं गुरोः ।
व्रतानि चरता ग्राह्या वेदाश्च कृतबुद्धिना ॥
उभे सन्ध्ये रविं भूप तथैवाग्निं समाहितः ।
उपतिष्ठेत्तथा कुर्य्याद्गुरोरप्यभिवादनम् ॥
स्थिते तिष्ठेद्व्रजेद्याति नीचैरासीत चासति ।
शिष्यो गुरौ नृपश्रेष्ठ प्रतिकूलं न संभजेत् ॥
तेनैवोक्तः पठेद्वेदं नान्यचित्तः पुरस्थितः ।
अनुज्ञातश्च भिक्षान्नमश्नीयाद्गुरुणा ततः ॥
अवगाहेदपः पूर्ब्बमाचार्य्येणावगाहिताः ।
समिज्जलादिकं चास्य कल्यं कल्यमुपानयेत्
॥
गृहीतग्राह्यवेदश्च ततोऽनुज्ञामवाप्य वै ।
गार्हस्थ्यमावसेत् प्राज्ञो निष्पन्नगुरुनिष्कृतिः
॥ १ ॥
विधिना चाप्तदारस्तु धनं प्राप्य स्वकर्म्मणा ।
गृहस्थकार्य्यमखिलं कुर्य्याद्भूपाल ! शक्तितः
॥
निर्व्वापेण पितॄनर्च्चेद्यज्ञैर्देवांस्तथातिथीन् ।
अन्नैर्मुनींश्च स्वाध्यायैरपत्येन प्रजापतिम् ॥
बलिकर्म्मणा च भूतानि वात्सल्येनाखिलं
जगत् ।

तद्वत्त्रिषवणं स्नानं शस्तमस्य नरेश्वर ॥
देवताभ्यर्च्चनं होमः सर्व्वाभ्यागतपूजनम्
।
भिक्षा बलिप्रदानञ्च शस्तमस्य नरेश्वर ॥
वन्यस्नेहेन गात्राणामभ्यङ्गश्चास्य
शस्यते ।
तपस्यतश्च राजेन्द्र
शीतोष्णादिसहिष्णुता ॥
यस्त्वेतां नियतश्चर्य्यां
वानप्रस्थश्चरेन्मुनिः ।
स दहत्यग्निवद्दोषान् जयेल्लोकांश्च
शाश्वतान् ॥ ३ ॥
चतुर्थश्चाश्रमो भिक्षोः प्रोच्यते यो
मनीषिभिः ।
तस्य स्वरूपं गदतो मम श्रोतुं नृपार्हसि ॥
पुत्त्रद्रव्यकलत्रेषु त्यक्तस्नेहो नराधिप ।
चतुर्थमाश्रमस्थानं गच्छेन्निर्धूतमत्सरः ।
त्रैवर्णिकांस्त्यजेत् सर्व्वानारम्भानवनीपते
।
मित्रादिषु समो मैत्रः समस्तेष्वेव जन्तुषु
॥
जरायुजाण्डजादीनां वाङ्मनःकर्म्मभिः
क्वचित् ।
युक्तः कुर्व्वीत न द्रोहं सर्व्वसङ्गांश्च
वर्ज्जयेत् ॥
एकरात्रस्थितिग्रमि पञ्चरात्रस्थितिः पुरे ।
तथा तिष्ठेद्यथा प्रीतिर्द्वेषो वा नास्य
जायते ॥
प्राणयात्रानिमित्तञ्च व्यङ्गारे भुक्तवज्जने ।
काले प्रशस्तवर्णानां भिक्षार्थे
पर्य्यटेद्गृहान् ॥
कामः क्रोधस्तथा दर्पमोहलोभादयश्च ये
।
तांस्तु दोषान् परित्यज्य परिव्राट् निर्म्ममो
भवेत् ॥
अभयं सर्व्वसत्त्वेभ्यो दत्त्वा यश्चरते मुनिः
।
न तस्य सर्व्वभूतेभ्यो भयमुत्पद्यते
क्वचित् ॥
कृत्वाग्निहोत्रं स्वशरीरसंस्थं

कामः क्रोधो भयं लोभः शोकश्चिन्ता क्षुधा
श्रमः ।
सर्व्वेषां न प्रभवति कस्माद्वर्णो विभज्यते
॥
स्वेदमूत्रपुरीषाणि श्लेष्मापित्तं सशोणितम्
।
तनुः क्षरति सर्व्वेषां कस्माद्वर्णो विभज्यते
॥
जङ्गमानामसं ख्येयाः स्थावराणाञ्च
जातयः ।
तेषां विविधवर्णानां कुतो वर्णविनिश्चयः ॥
नारद उवाच ।
न विशेषोऽस्ति वर्णानां सर्व्वं ब्रह्ममयं जगत्
।
ब्रह्मणा पूर्ब्बसृष्टं हइ कर्म्मभिर्व्वर्णतां गतम्
॥
कामभोगप्रियास्तीक्ष्णाःक्रोधनाः प्रिय-
साहसाः ।
त्यक्तस्वधर्म्मा रक्ताङ्गास्ते द्विजाः क्षत्त्रतां
गताः ॥
गोभ्यो वृत्तिं समास्थाय पीताः
कृष्यनुजीविनः ।
स्वधर्म्मान्नानुतिष्ठन्ति ते द्विजा वैश्यतां
गताः ॥
हिंसानृतप्रिया लुब्धाः
सर्व्वकर्म्मोपजीविनः ।
कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां
गताः ॥
इत्येतैः कर्म्मभिर्व्यस्ता द्विजा वर्णान्तरं
गताः ।
इत्येते चतुरो वर्णा येषां ब्राह्मी सरस्वती ॥
विहिता ब्रह्मणा पूर्ब्बं लोभादज्ञानतां गताः
।
ब्राह्मणा धर्म्मतन्त्रस्थास्ततस्तेषां न
नश्यति ॥
ब्रह्म धारयतां नित्यं व्रतानि नियमांस्तथा ।
ब्रह्म चैव परं सृष्टं येन जानन्ति तद्विदः ॥
ऋषिभिः स्वेन तपसा सृज्यन्ते चापरे परैः
।
आदिदेवसमुद्भू ता ब्रह्ममूलाक्षताव्ययाः ।

प्राप्नोति लोकान् पुरुषो
निजकर्म्मसमर्ज्जितान् ॥
भिक्षाभुजश्च ये केचित् परिव्राट् ब्रह्मचारिणः ।
तेऽप्यत्रैव प्रतिष्ठन्ते गार्हस्थ्यं तेन वै परम् ॥
वेदाहरणकार्य्येण तीर्थस्नानाय च प्रभो ! ।
अटन्ति वसुधां विप्राः पृथिवीदर्शनाय च ॥
अनिकेता ह्यनाहारा यत्र सायं गृहास्तु ये ।
तेषां गृहस्थः सर्व्वेषां प्रतिष्ठा योनिरेव च ॥
तेषां स्वागतदानादि वक्तव्यं मधुरं वचः ।
गृहागतानां दद्याच्च शयनासनभोजनम् ॥
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्त्तते ।
स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति ॥
अवज्ञानमहङ्कारो दम्भश्चैव गृहे सतः ।
परितापोपघातौ च पारुष्यञ्च न शस्यते ॥
यस्तु सम्यक् करोत्येवं गृहस्थः परमं विधिम्
।
सर्व्वबन्धविनिर्मुक्तो लोकानाप्नोत्यनुत्तमान् ॥
वयःपरिणतौ राजन् कृतकृत्यो गृहाश्रमी ।
पुत्त्रेष भार्य्यां निक्षिप्य वनं गच्छेत् सहैव वा ॥
२ ॥
पर्णमूलफलाहारः केशश्मश्रुजटाधरः ।
भूमीशायी मवेत्तत्र मुनिः सर्व्वातिथिर्नृप ॥
चर्म्मकाशकुशैः कुर्य्यात् परिधानोत्तरीयके ।

शारीरमग्निञ्च मुखे जुहोति ।
विप्रस्तु भेक्षोपगतेर्हविर्भि-
श्चिताग्निनां स व्रजतिस्म लोकान् ॥
चिताग्नीनां अग्निचितामित्यर्थः ।
चिताग्निना
इति वा पाठः । इति तट्टीका ॥
“मोक्षाश्रमं यश्चरते यथोक्तं
शुचिः सुसङ्कल्पितबुद्धियुक्तः ।
अनिन्धनं ज्योतिरिव प्रशान्तं
स ब्रह्मलोकं श्रयति द्विजातिः ॥” ४ ॥
इति विष्णुपुराणे ३ अंशे ८ । ९ अध्यायौ
॥ * ॥
प्रकारान्तरेण तेषामादिसृष्टिर्य्यथा, --
“ततस्तेजोमयं दिव्यं पद्मं सृष्टं स्वयम्भुवा
।
तस्मात् पद्मात् समभवद्ब्रह्मा वेदमयो
विधिः ॥
प्रजाविसर्गं विविधं मानसो मनसासृजत् ।
असृजद्ब्राह्मणान्वे पूर्ब्बं ब्रह्मा प्रजापतिः
॥
आत्मतेजोभिनिर्वृत्तान्
भास्कराग्निसमप्रभान् ।
ततः सत्यञ्च धर्म्मञ्च तपो ब्रह्म च
शाश्वतम् ॥
आचा ञ्चैव शौचञ्च स्वर्गाय विदधे विभुः ।
देवदानवगन्धर्व्वा दैत्यासुरमहोरगाः ॥
यक्षराक्षसनागाश्च पिशाचा मनुजास्तथा
।
ब्राह्मणाः क्षत्त्रिया वैश्याः शूद्राश्च
नृपसत्तम ! ॥
ये चान्यभूतसंघानां वर्णास्तांश्च
विनिर्म्ममे ।
ब्राह्मणानां सितो वर्णः क्षत्त्रियाणाञ्च
लोहितः ॥
वैश्यस्य पीतको वर्णः
शूद्राणामसितस्तथा ॥
मान्धातोवाच ।
चातुर्व्वर्णस्य वर्णेन यदि वर्णो विभज्यते ।
सर्व्वेषां खलु वर्णानां दृश्यते वर्णसङ्करः ॥

सा सृष्टिर्म्मानसी नाम धर्म्मतन्त्रपरायणाः
॥
मान्धातोवाच ।
ब्राह्मणः केन भवति क्षत्त्रियो वा
द्विजोत्तम ! ।
वैश्यः शूद्रश्च देवर्षे तद्ब्रूहि वदतांवर ॥
नारद उवाच ।
जातकर्म्मादिभिर्य्यस्तु तंस्कारैः संस्कृतः
शुचिः ।
वेदाध्ययनसम्पन्नः षट्सु
कर्म्मस्ववस्थितः ॥
शौचाचारपरो नित्यं विघसाशी गुरुप्रियः ।
नित्यव्रती सत्यरतः स वै ब्राह्मण उच्यते ॥
सत्यं दानमथोऽद्रोह आनृशंस्यं कृपा घृणा
।
तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः ॥
क्षत्त्रजं सेवते कर्म्म वेदाध्ययनसंयुतः ।
दानादानवहिर्य्यस्तु स वै क्षत्त्रिय उच्यते ॥
विशत्याशु पशुभ्यश्च कृष्यादानरुचिः
शुचिः ।
वेदाध्ययनसम्पन्नः स वैश्य इति संज्ञितः
॥
सर्व्वभक्ष्मरतिर्नित्यं सर्व्वकर्म्मकरोऽशुचिः
।
त्यक्तवेदस्त्वनाचारः स वै शूद्र इति स्मृतः
॥
शूद्रे चैव भवेल्लक्षं द्विजे चैव न विद्यते ।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः
मान्धातोवाच ।
के धर्म्माः सर्व्ववर्णानां चातुर्व्वर्णस्य के
पृथक् ।
चातुर्व्वर्ण्याश्रमाणाञ्च राजधर्म्माश्च के
मताः ॥
नारद उवाच ।
अक्रोधः सत्यवचनं संविभागः क्षमा तथा ।

प्रजनः स्वेषु दारेषु शौचमद्रोह एव च ॥
आर्ज्जवं भृत्यभरणं न वै ते सार्व्ववर्णिकाः ।
ब्राह्मणस्य तु यो धर्म्मस्तं ते वक्ष्यामि केवलम् ॥
दममेव महाराज धर्म्ममाहुः पुरातनम् ।
स्वाध्यायाभ्यसनञ्चैव तत्र कर्म्म समाप्यते ॥
तं चेद्वित्तमुपागच्छेद्वत्तमानं स्वकर्म्मणि ।
अकुर्व्वाणं विकर्म्माणि श्रान्तं प्रज्ञानतर्पितम् ॥
कुर्व्वीतोपेत्य सन्तानमथ दद्याद्यजेत च ।
संविभज्यापि भोक्तव्यं धनं सद्भिरितीष्यते ॥
परिनिष्ठितकार्य्यस्तु स्वाध्यायेनैव ब्राह्मणः ।
कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रो ब्राह्मण उच्यते ॥ * ॥
क्षत्त्रियस्यापि यो धर्म्मस्तं ते वक्ष्यामि पार्थिव ।
दद्याद्राजा न याचेत यजेत न च याजयेत् ॥
नाध्यापयेदधीयीत प्रजाश्च परिपालयेत् ।
नित्योद्युक्तो दस्युवधे रणे कुर्य्यात् पराक्रमम् ॥
ये तु क्रतुभिरीजानाः श्रुतवन्तश्च पार्थिवाः ।
ये तु युद्धे विजेतारस्ते तु लोकजितो नृपाः ॥
अविक्षतशरीरो हि संगराद्यो निवर्त्तते ।
क्षत्त्रियस्य तु तत् कर्म्म नोभयत्र यशःप्रदम् ॥
क्षत्त्रियाणामयं धर्म्मो निर्णीतो मुनिभिः परः ।
नास्य कृत्यतमं किञ्चिद्राज्ञो दस्युविनिग्रहात् ॥
दानमध्ययनं यज्ञो राज्ञां क्षेमोऽभिधीयते ।
तस्माद्राज्ञा महाराज योद्धव्यं धर्म्मशीलिना ॥
यातयामानि देयानि शूद्राय परिचारिणे ॥
अधार्य्याणि विशीर्णानि वसनानि द्विजातिभिः ।
शूद्रायैव प्रदेयानि तस्य धर्म्मधनं हि तत् ॥
यश्च कश्चिद्द्विजातीनां शूद्रः शुश्रूषुराव्रजेत् ।
कल्पन्तेऽस्य तु तेनाहुर्वृत्तिं धर्म्मविदो जनाः ॥
देयः पिण्डोऽनपत्याय भर्त्तव्यो वृद्धदुर्ब्बलौ ।
शूद्रेण च न हातव्यो भर्त्ता कस्याञ्चिदापदि ॥
अतिरेकेन भर्त्तव्यो भर्त्ता द्रव्यपरिक्षये ।
न हि स्वमस्ति शूद्रस्य भर्त्तृहार्य्यधनो हि सः ॥
उक्तस्त्रयाणां वर्णानां यज्ञस्तस्य च पार्थिव ।
स्वाहाकारवषट्कारौ मन्त्रः शूद्रे न विद्यते ॥
तस्माच्छूद्रः पाकयज्ञैर्य्याजयेत नच स्वयम् ।
पूर्णपात्रमयीमाहुः पाकयज्ञस्य दक्षिणाम् ॥ * ॥
श्रीनारद उवाच ।
इदानीमाश्रमाणाञ्च धर्म्मं वक्ष्यामि भूमिप ।
ब्रह्मचर्य्याश्रमं तावत् शृणु सर्व्वाधिवासन ॥
गत्वा गुरुगृहं शिष्यो नमस्कृत्य गुरुं शुचिः ।
ब्रूयादध्येतुमायातः शिष्योऽहं तव मारिष ।
ततस्तस्याज्ञया नित्यमध्येतव्यं नराधिप ॥
सदा विचारः शास्त्रस्य गुरुपादाभिवादनम् ।
तदाज्ञापालनञ्चापि ध्यानं दैवतभावना ॥
विवेकी धनपूत्रादौ वितृष्णः करुणः सदा ।
संसारं स्वप्नवद्वीक्ष्य क्षान्तः सन्तुष्टमानसः ॥
पत्रमूलफलाहारी जलाशी वायुभोजनः ।
निराहारोऽथवा शुद्धोऽहर्निशं तप आचरेत् ।
एवं कुर्व्वन् महाभाग ब्राह्मणः सिद्धिमाप्नुयात् ॥
चतुर्थमाश्रमं वक्ष्ये मुक्तिसोपानमेव हि ।
गुरोः पुरोधमासास्य भिक्षुः सन्न्यासधर्म्मवित् ॥
विचरेत् सकलां पृथ्वीं लब्धाशी शान्त उत्सुकः ।
योगाभ्यासरतो नित्यं धर्म्मसञ्चयतत्परः ।
धर्म्माधर्म्मविहीनो वा भिक्षुकः सिद्धिमाप्नुयात् ॥”
इति पाद्मे स्वर्गखण्डे २५ । २६ । २७ अध्यायाः ॥ * ॥
अन्यत् नारसिंहपुराणे ५९ अध्याये मार्कण्डेयपुराणे मदालसोपाख्याने कूर्म्मपूराणे २ । ३ अध्याये च द्रष्टव्यम् ॥ * ॥ * ॥ गजचित्रकम्बलः ।
हातीर झुल् इति भाषा । तत्पर्य्यायः ।
प्रवेणी २ आस्तरणम् ३ परिस्तोमः ४ कुथः ५ कुथा ६ । इत्यमरः ॥ प्रवेणिः ७ परिष्टोमः ८ कुथम् ९ । इति भरतः ॥ शुक्लादिः । रङ् इति ख्यातः । स च बहुविधो यथा । श्वेतः १ पाण्डुः २ धूसरः ३ कृष्णः ४ पीतः ५ हरितः ६ रक्तः ७ शोणः ८ अरुणः ९ पाटलः १० श्यावः ११ धूम्रः १२ पिङ्गलः १३ कर्व्वुरः १४ । इति चामरः ॥ गर्भस्थबालकस्य षष्ठे मासि वर्णो भवति । इति सुखबोधः ॥ यशः । गुणः । स्तुतिः । इति मेदिनी । णे, २६ ॥ स्वर्णम् । व्रतम् । रूपम् । अक्षरम् । भेदः । गीतक्रमः । चित्रम् । तालविशेषः । अङ्गरागः । इति हेमचन्द्रः ॥

**वर्णः**, पुं, क्ली, (वर्ण्यते भिद्यते इति । वर्ण + घञ् ।) भेदः । (वर्ण्यते दीप्यतेऽनेनेति ।) वर्ण + घञ् ।) रूपम् । (वर्णयति । वर्ण + अच् ।) अक्षरम् । (वर्ण्यते रज्यते इति । वर्ण + घञ् ।) विलेपनम् । इति मेदिनी । णे, २६ ॥ * ॥
वर्णश्च द्विविधः । ध्वन्यात्मकः अक्षरात्मकश्च । अस्योत्पत्तिप्रकारो यथा, --

प्रजाः स्वेषु च धर्म्मेषु स्थापयेत महीपतिः
।
धर्म्म्यार्ण्येव हि कर्म्माणि कारयेत् सततं
प्रजाः ॥
परमां सिद्धिमाप्नोति नृपतिः
परिपालनात् ।
कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रो राजन्य
उच्यते ॥ * ॥
वैश्यस्य च प्रवक्ष्यामि यो धर्म्मो
वेदसम्मतः ॥
दानमध्ययनं शौचं यज्ञश्च धनसञ्चयः ।
पालयेच्च पशून् वैश्यः
पितृवद्धर्म्ममर्ज्जयन् ॥
विकर्म्म तद्भवेदन्यत् कर्म्म यत् स
समाचरेत् ।
रक्षया स हि तेषां वै महत्
सुखमवाप्नुयात् ॥
प्रजापतिर्हि वैश्याय सृष्ट्वा परिददे प्रजाः
।
ब्राह्मणेभ्यश्च राज्ञे च सर्व्वाः परिददे
प्रजाः ॥
तस्य वृत्तिं प्रवक्ष्यामि यच्च
तस्योपजीवनम् ।
षण्णामेकां पिबेद्धेनुं शताच्च मिथुन भवेत्
॥
लब्धाच्च सप्तमं भागं तथा शृङ्गैकलक्षुरे ।
शस्यानां सर्व्वबीजानि एषा सांवत्सरी
भृतिः ॥
न च वैश्यस्य कामः स्यान्न रक्षेयं
पशूनिति ।
वैश्ये रक्षति नान्येन रक्षितव्याः कथञ्चन
॥ * ॥
शूद्रस्यापि हि यो धर्म्मस्तं ते वक्ष्यामि
भूपते ।
प्रजापतिर्हि वर्णानां दासं शूद्रमकल्पयत्
॥
तस्माच्छूद्रस्य वर्णानां परिचर्य्या
विधीयते ।
तषां शुश्रूषणञ्चैव महत् सुखमवाप्नुयात् ॥
शूद्र एतान् परिचरेत् त्रीन् वर्णाननुपूर्व्वशः
।
लाभेन येन केनापि तुष्टिः सद्भिः
समागमः ।
समाप्तविद्यो गुरवे दक्षिणां प्रतिपाद्य च
॥ * ॥
गृहाश्रमं ततो गच्छेद्गुरोराज्ञामधिव्रजन्
।
उद्वहेत् कुलजां कन्यां सुशीलां
घर्म्मचारिणीम् ॥
अनहंवादिनीं सौम्यां सुचरित्रां
प्रियंवदाम् ।
गृहिणां प्रथमो धर्म्मोऽतिथिपूजैव
पार्थिव ॥
अप्राप्य पूजामतिथिर्यस्य गेहान्निवर्त्तते
।
स याति नरकं घोरं पुण्यं तस्मै प्रदाय
च ॥
प्रथमं स्वागतं पृच्छेदासनञ्चापि
संदिशेत् ।
पाद्यञ्च मधुपर्कञ्च दद्यात्
प्रणतिपूर्व्वकम् ॥
संवादञ्च प्रियालापं कुर्य्यात्तेन
सहान्ततः ।
भोजनञ्च यथाशक्ति कारयेदतिथिं नृप
॥
देवाश्च पितरश्चापि
प्रीयन्तेऽतिथिपूजने ।
आतिथ्यसदृशं कर्म्म गृहस्थानां न
विद्यते ॥
यस्य नित्यं स्थितिर्नास्ति
सोऽतिथिःपरिकीर्त्तितः ।
सर्व्वाश्रमाणामधिको गृहाश्रम उदाहृतः
॥
यस्मात्तस्मिन् समायान्ति
भिक्षार्थमाश्रमास्त्रयः ।
पितृदेवार्च्चनं कार्य्यं गृहिणा
सुखमिच्छता ॥ * ॥
वानप्रस्थाश्रमं वक्ष्ये तृतीयं जगतीपते ।
वानप्रस्थाश्रमं गच्छेत् कृतकृत्यो
गृहाश्रमात् ॥
तदारण्यकशास्त्राणि यमधीत्य स
धर्म्मवित् ।
“अव्नैषद्यान्मुखश्रोत्रमार्गस्याविषदाक्षरम् ।
अप्यव्यक्तं प्रलपति यदा सा कुण्डली तदा ।
मूलाधारे विष्वणति सुषुम्नां वेष्टते मुहुः ॥”
इति प्रपञ्चसारः ॥
अस्यार्थः । मुखश्रोत्रमार्गस्यावैषद्यात् अनैर्म्म-
ल्याद्धेतोर्यदा सा कुण्डली अविषदाक्षरं अवि-
ष्पष्टमक्षरं यत्राव्यक्ते ध्वनौ तं प्रलपति अर्थात्
कलभाषणादिकं करोति तदा मूलाधारे विष्व-
णति शब्दायते सुषुम्नाञ्च मुहुर्व्वेष्टते । इति
तट्टीका ॥ * ॥ अस्य कुण्डलीस्वरूपत्वं यथा, --
“कुण्डलीभूतसर्पाणामङ्गश्रियमुपेयुषी ।
त्रिधामजननी देवी शब्दब्रह्मस्वरूपिणी ॥
द्विचत्वारिंशद्वर्णात्मा पञ्चाशद्वर्णरूपिणी ।
गुणिता सर्व्वगात्रेण कुण्डली परदेवता ॥
विश्वात्मनापबुद्धा सा सूते मन्त्रमयं जगत् ।
एकधा गुणिता शक्तिः सर्व्वविश्वप्रवर्त्तिनी ॥

| | | |
|---|---|---|
| मञ्चयांश्च न कुर्व्वीत यातु शूद्रः कथञ्चन ॥<br>पापीयान् हि धनं लब्ध्वा वशे कुर्य्याद्गरीयसः ।<br>गाज्ञा वा ममनुज्ञातः कामं कुर्व्वीत धार्म्मिकः ॥<br>तस्य वत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम् ।<br>अवश्यं भरणीयो हि वर्णानां शूद्र उच्यते ॥<br>छत्रं वेष्टनमौशीरमुपानद्व्यजनानिच । | ऊद्ध्वरेताः प्रव्रजित्वा गच्छत्यक्षरसात्सताम् ॥<br>सुते भार्य्यां परिन्यस्य वनं गच्छेत् सहैव वा ।<br>शान्तः शुद्धान्तरात्मा च सर्व्वभूतहिते रतः ॥<br>चरितब्रह्मचर्य्यस्य ब्राह्मणस्य विशाम्पते ।<br>कर्त्तव्याणीह राजेन्द्र कथ्यन्ते मुनिपुङ्गवैः ॥<br>भैक्ष्यचर्य्यास्वधीकारः प्रशस्त इह मोक्षिणः ।<br>यत्रास्तमितशायी स्यान्निरग्निरनिकेतनः ॥<br>यथोपलब्धजीवी स्यान्मुनिर्दान्तो जितेन्द्रियः ।<br>निराशीः स्यात् न्नर्व्वसमो निर्योगो निर्व्विकार-<br>वान् ॥ | |

त्रिपुष्करं स्वरान् देवी ब्रह्मादीनां त्रयं त्रयम्
॥”
इति सारदातिलकः ॥
अस्यार्थः । त्रिधामेति चन्द्रसूर्य्याग्निरूपा । द्वि-
चत्वारिंशदिति भूतलिपिमन्त्रमयी । पञ्चाश-
दिति मातृकामयीत्यर्थः । सर्व्वगात्रेण
सर्व्ववर्णेन
गुणिता परस्परमिलिता सती मन्त्रमयं जगत्
सूते प्रकाशयति इत्यर्थः । मूलाधारे सर्पवत्
कुण्डलीभूता नाडी वर्त्तते
तन्मध्यस्थायित्वादियं
कुण्डली । सर्व्वविश्वेत्युभयोपादानात्
शब्दार्थ-
रूपोभयप्रतिपादिकेति सूचितम् । त्रिपुष्कर-
मिति ज्येष्ठमध्यमकनिष्ठत्वेन तीर्थत्रयम् ।
स्वरा-
निति उदात्तानुदात्तसमाहारान्। इति
तट्टीका ॥ * ॥ अपि च ।
“द्विचत्वारिंशता मूले गुणिता विश्वनायिका
।
सा प्रसूते कुण्डलिनी शब्दब्रह्ममयी तिभुः ॥
शक्तिं ततो
ध्वनिस्तस्मान्नादस्तस्मान्निवोधिका।
ततोऽर्द्धेन्दुस्ततो विन्दुस्तस्मादासीत् परा
ततः ॥”
इति सारदायामाचार्य्याः ॥
मूले मूलाधारे द्विचत्वारिंशता गुणिता विश्व-
नायिका कुण्डलिनी अनेन क्रमेण
अकारादि-
सकारान्तां द्विचत्वारिंशदात्मिकां भूतलिपि-
मन्त्रात्मिकां वर्णमालिकां सूते इत्यन्वयः ।
क्रम-
माह शक्तिमिति सा कुण्डलिनी शक्तिं सूते
ततः शक्तेर्ध्वनिरासीदिति योजना । ततो
ध्वनेरित्यादि ज्ञेयम् । अयञ्च क्रमः
सर्व्वाक्षरो-
त्पत्तौ ज्ञेयः । तत्र सत्त्वप्रविष्टा
चिच्छक्तिशब्द-

सूते तद्वर्णतो भिन्नाः कला रुद्रादिकान्
क्रमात् ॥”
इति तट्टीका ॥
“अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा
।
जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालुका
॥”
इति शिक्षासूत्रम् ॥ * ॥
किञ्च ।
“यथा भवन्ति देहान्तरमी पञ्चाशदक्षराः ।
भेदा येन प्रकारेण तथा वक्ष्यामि तत्त्वतः ॥
समीरिताः समीरेण सुषुम्नारन्ध्रनिर्गताः ।
व्यक्तिं प्रयान्ति वदने कण्ठादिस्थानघट्टिताः ॥
उच्चैरुन्मार्गणो वायुरुदात्तं कुरुते स्वरम् ।
नीचैर्गतोऽनुदात्तञ्च स्वरितं तिर्य्यगागतः ॥
अर्द्धैकद्वित्रिसंख्याभिर्मात्राभिर्लिपयः क्रमात् ।
सव्यञ्जनह्रस्वदीर्घप्लुतसंज्ञा भवन्ति ताः ॥
अकारेकारयोर्योगादेकारो वर्ण इष्यते ।
तस्यैवैकारयोगेन स्यादैकाराक्षरं तथा ॥
उकारयोगात्तस्यैव स्यादोकाराह्वयः स्वरः ।
तस्यैवैकारयोगेन स्यादौकाराह्वयः स्वरः ॥
सन्ध्यक्षराः स्युश्चत्वारो मन्त्राः
सर्व्वार्थसाधकाः ।
ऌवर्णर्वर्णयोर्व्यक्तिर्न वै सम्वक् प्रदर्श्यते ॥
बिन्दुसर्गात्मनोर्व्यक्तिमनसोरजपा वदेत् ।
कण्ठात्तु निःसरन् सर्गः प्रायोऽचात्मकतः-
परः ॥
नश्वरः सर्ग एव स्यात् सोच्छ्वासः प्राणकस्तु हः
।
स सर्गः श्लेषितः कण्टे वायुना कादिमीरयेत् ॥
वर्गस्पर्शनमात्रेण कं स्वरस्पर्शनात्तु खम् ।
स्तोकगम्भीरसंस्पर्शात् गघौ ङञ्च वहिर्गतम् ॥
विसर्गस्तालुगः सोष्मा शं चवर्गञ्च यं तथा ।
ऋटुरेफसकारञ्च मूर्द्धगो दन्तगस्तथा ॥
ऌतवर्गलसानोष्ठ्यानुपूपध्मानसंज्ञकान् ।
दन्तौष्ठाभ्यां वञ्च तत्तत्स्थानगोऽर्णान् समी-
रयेत् ॥”
इति प्रपञ्चसारे ३ पटलः ॥
सर्गो विसर्ग एव नश्वरो विकृतः सोच्छ्वासः
सकाररूपः उच्छ्वासोऽन्तःप्रवेशशाली वायुः

ऋ टु रषास्तु मूर्द्धन्याः ३ दन्त्या ऌ तु
ल सा
मताः ॥ ४ ॥
उपवश्चोष्ठसंभूताः ५ स्थानानि
कथितानि ते ।
विशेषं कथयाम्यद्य प्रोच्चार्य्यः
कण्ठतः स्वराः ॥
ऋद्वयं जिह्वया मूर्द्धर्ना ऌद्वयं
जिह्वदन्तजम् ।
मुखस्थानाद्धलो वाच्याः क्षकारः
कण्टघातजः ॥
व्यञ्जनद्वयसंयोगे भवेत् पूर्ब्बस्वरो गुरुः
।
पदान्तादिमवर्णस्य संयोगेषु श्रुतिर्द्वयोः
॥
अपदान्तादिसंयोगे य्वोरन्यत्र तथेष्यते
।
य्वोः श्रुतिस्तु तिरोभूय स्वरवत्
श्रुतितां व्रजेत् ॥
श्रिया बीजे शकारस्य छश्रुतिः
परमेश्वरि ! ।
छश्रुतिश्च रादिभृगौ तथादिस्थे तु
चश्रुतिः ॥
सहस्र इत्यादौ नमस्तस्यै आस्था
इत्यादौ च ।
रेफादिके तदन्ते वा हकारे
समवाच्यता ॥
वर्हः ह्रद इत्यादौ ।
किन्तु वैजात्यमाश्रित्य स्फुटं नात्रास्य
वाच्यता ॥
चु तूर्य्यध्वनिमाप्नोति यादिस्थे
परमेश्वरि ! ।
वाह्य इत्यादौ ।
पु चतुर्थव्वनिं याति वादिस्थे तु
विशेषतः ॥
आह्वानमित्यादौ ।
लादिस्थेऽप्यथ नादिस्थे वैजात्यं
स्वल्पवाच्यता ।
प्रह्लाद अह्नाय इत्यादौ ।

वाच्या । पुनराकाशस्था सैव सत्त्वप्रविष्टा रजो-
ऽनुविद्धा सती ध्वनिशब्दवाच्या । अक्षरावस्था
सैव तमोऽनुविद्धा नादशब्दवाच्या । अव्यक्तावस्था
सैव तमःप्राचुर्य्यान्निबोधिकाशब्दवाच्या। सैव
तदुभयप्राचुर्य्यादर्द्धेन्दुशब्दवाच्या । उक्तञ्च पदा-
र्थादर्शे ।
“इच्छाशक्तिबलोद्भूतो ज्ञानशक्तिप्रदीपकः ।
पुंरूपिणी च सा शक्तिः क्रियाख्या सृजति प्रभुः ॥”
असावेव बिन्दुः स्थानान्तरगतः पराद्याख्यो भवति ।
पश्यन्ती मध्यमा वाची वैखरी शब्दजन्मभूः ।
तत्र परा मूले पश्यन्ती स्वाधिष्ठाने मध्यमा
हृदये वैखरी मुखे । तदुक्तं पदार्थादर्शे ।
“सूक्ष्मा कुण्डलिनी मध्ये ज्योतिर्मात्रास्वरूपिणी।
अश्रोत्रविषया तस्मादुद्गच्छत्यूर्द्ध्वगामिनी ॥
स्वयं प्रकाशा पश्यन्ती सुषुम्नामाश्रिता भवेत् ।
सैव हृत्पङ्कजं प्राप्य मध्यमा नाद्ररूपिणी ॥
ततः संजल्पमात्रा स्यादविभक्तोर्द्धगामिनी।
सैवोरःकण्ठतालुस्था शिरोघ्राणरद्रस्थिता ॥
जिह्वामूलौष्ठनिर्धूतसर्व्ववर्णपरिग्रहा ।
शब्दप्रपञ्चजननी श्रोत्रग्राह्या तु वैखरी ॥
इच्छाज्ञानक्रियात्मासौ तेजोरूपा गुणात्मिका ।
क्रमेणानेन सृजति कुण्डली वर्णमालिकाम् ॥
अकारादिसकारान्तां द्विचत्वारिंशदात्मिकाम् ।
पञ्चाशद्वारगुणिता पञ्चाशद्वर्णमालिकाम् ॥

स्यादित्यन्वयः । एवं प्राणको वहिर्निर्गमन-
शाली वायुर्हः स्यात् स एव उच्छ्वासः सोच्छ्वासः ।
प्राणश्चासौ को वायुश्चेति प्राणकः । इति
तट्टीका ॥ * ॥ अवर्णकवर्गहविसर्ज्जनीयाः
कण्ठ्याः । १ । इवर्णचवर्गयशास्तालव्याः । २ ।
ऋवर्णटवर्गरषा मूर्द्धन्याः । ३ । लृवर्णतवर्ग-
लसा दन्त्याः । ४ । उवर्णपवर्गोपध्मानीया
ओष्ठ्याः । ५ । वो दन्त्यौष्ठ्यः । ६ । ए ऐ कण्ठ्य-
तालव्यौ । ७ । ओ औ कण्ठ्यौष्ठ्यौ । ८ । इति
शिक्षासूत्रम् ॥ * ॥ अपि च ।
“यद्गुह्यं सर्व्वतन्त्रेषु वर्णोच्चारविधिं शिवे ! ।
तव स्नेहान्महेशानि ! तदद्य कथयामि ते ॥
पञ्चाशन्मातृकावर्णोच्चारणंगुरुतोऽभ्यसेत् ।
अ कु चु टु तु पु यु शु अष्टौ वर्गाः प्रकीर्त्तिताः ॥
अ कु हाः कण्ठतो ज्ञेया १ स्तालुतश्चुयशाः
स्मृताः । २ ।

मादिस्थे भे च मस्यापि नासिकामूलवाच्यता ॥
उ ङ ण न मा बिन्दुर्नासिकामूलजाः स्मृताः ।
यकारश्चु तृतीयत्वं पदादौ सर्व्वदा व्रजेत् ॥
केयूरादावपि तथा अन्यत्र कण्ठमात्रगः ।
नादिस्थशसयोश्छत्वं स्वरयोगान्तवर्गके ॥
प्रश्नः स्नान इत्यादौ ।
वर्णोत्तरेषु डढयोर्व्वक्रजिह्वादिवाच्यता ।
वैजात्यमपि तत्रास्ति गुरोरेव समभ्यसेत् ।
आदिरेफस्तु संप्रोक्तो दृशेरन्यो व्रजेदृताम् ।
एवं ज्ञात्वा महेशानि ! पठेत् स्तोत्रं जपेन्मनुम् ॥
कवचञ्च महेशानि नान्यथा फलमाप्नुयात् ॥”
इति प्रपञ्चसारे ३ पटलः ॥ * ॥
अपि च ।
“ह्रस्वः स्वरेषु पूर्ब्बोक्तः परो दीर्घः क्रमादिमे ।
शिवशक्तिमयास्ते स्युर्बिन्दुसर्गावसानकाः ॥
बिन्दुः पुमान् रविः प्रोक्तः सर्गः शक्तिर्निशा-
करः ।
स्वराणां मध्यगं यत्तु तच्चतुष्कं नपुंसकम् ॥
विना स्वरैस्तु नान्येषां जायते व्यक्तिरञ्जसा ।
शिवशक्तिमयान् प्राहुस्तस्माद्वर्णान् मनीषिणः ॥
कारणात् पञ्चभूतानामुद्भूता मातृका यतः ।
ततो भूतात्मका वर्णाः पञ्च पञ्च विभागतः ॥
वाय्वग्निभूजलाकाशाः पञ्चाशल्लिपयः क्रमात् ।

| | | |
|---|---|---|
| | | पञ्च ह्रस्वाः पञ्च दीर्घाः विन्द्वन्ताः सन्धिसम्भवाः ।<br>पञ्चशः कादयः ष क्ष ल स हान्ताः समी-<br>रिताः ॥”<br>इति सारदा ॥ * ॥<br>अक्षरसृष्टिकारणं यथा, --<br>“साण्मासिकेऽपि समये भ्रान्तिः संजायते<br>यता । |

धात्राक्षराणि सृष्टानि पत्रारूढान्यतः पुरा ॥”
इति ज्योतिस्तत्त्वे बृहस्पतिः ॥
वर्णलेखनप्रकारस्तु तत्तद्वर्णे द्रष्टव्यः ॥ * ॥
वर्ण-
नामानि यथा, --
“तन्त्रसङ्केतबोधार्थमाहृत्य तन्त्रशास्त्रतः ।
वर्णनामानि कतिचित् वक्ष्यामि विदुषां मुदे ॥
ॐकारो वर्त्तुलस्तारो वामश्च हंसकारणम् ।
मन्त्राद्यः प्रणवः सत्यं बिन्दुशक्तिस्त्रिदैवतम् ॥
सर्व्वजीवोत्पादकश्च पञ्चदेवो ध्रुवस्त्रिकः ।
सावित्री त्रिशिखो ब्रह्म त्रिगुणो गुणजीवकः ॥
आदिबीजं वेदसारो वेदबीजमतः परम् ।
पञ्चरस्मिस्त्रिकूटे च त्रिभवे भवनाशनः ॥
गायत्रीबीजपञ्चांशौ मन्त्रविद्याप्रसूः प्रभुः ।
अक्षरं मातृकासूश्चानादिरद्वैतमोक्षदौ॥ ॐ ॥
अः श्रीकण्ठः सुरेशश्च ललाटश्चैकमात्रिकः ।
पूर्णोदरी सृष्टिमेधौ सारस्वतः प्रियंवदः ॥
महाब्राह्मी वासुदेवो धनेशः केशवोऽमृतम् ।
कीर्त्तिर्निवृत्तिर्वागीशो नरकारिर्हरो मरुत् ॥
ब्रह्मा वामाद्यजो ह्रस्वः करसूः प्रणवाद्यकः ।
ब्रह्माणी कामरूपश्च कामेशी वाशिनी वियत्
॥
विश्वेशः श्रीविष्णुकण्ठौ प्रतिपत्तिथिरंशिनी ।
अर्कमण्डलवर्णाद्यौ ब्राह्मणः कामकर्षिणी ॥
अः ॥
आकारो विजयानन्तो दीर्घच्छायो विनायकः
।
क्षीरोदधिः पयोदश्च पाशो दीर्घास्यवृत्तकौ ॥
प्रचण्ड एकजो रुद्रो नारायण इभेश्वरः ।
प्रतिष्ठा मानदा कान्तो विश्वान्तकगजान्तकः
॥
पितामहो द्विठान्तोऽभूः क्रिया कान्तिश्च
सम्भवः ।
द्वितीया मानदा काशीविघ्नराजः कुजो वियत्
।
स्वरान्तकश्च हृदयमङ्गुष्ठो भगमालिनी ॥ आः
॥
इः सूक्ष्मा शाल्मली विद्या चन्द्रः पूषा
सुगुह्यकः ।
सुमित्रं सुन्दरो वीरः कोटरः काटरः पयः ॥

डठसू इति कुत्रचित् पाठः । उः ॥
ऊः कण्टको रतिः शान्तिः क्रोधनो
मधुसूदनः ।
कामराजः कुजेशश्च महेशो वामकर्णकः
॥
कण्ठकस्थाने कण्टक इति वा पाठः ।
अर्घीशो भैरवः सूक्ष्मो दीर्घघोणा
सरस्वती ।
विलासिनी विघ्नकर्त्ता लक्ष्मणो
रूपकर्षिणी ।
महाविद्येश्वरी षष्ठा षण्डो भूः
कान्यकुब्जकः ॥
॥ ऊः ॥
ऋः पूर्दीर्घमुखी रुद्रो देवमाता त्रिविक्रमः
।
भावभूतिः क्रिया क्रूरा रेचिका नासिका
धृतः ॥
एकपादशिरो माला मण्डला शान्तिनी
जलम् ।
कर्णः कमलभा मेधो निवृत्तिर्गणनायकः ।
रोहिणी शिवदूती च पूर्णगिरिश्च सप्तमी ॥
मेधः स्थाने मेष इति च पाठः ॥ ऋः ॥
ॠः क्रोधोऽतिथिशो वाणी वामनोऽगोऽथ
श्रीर्धृतिः ।
ऊर्द्धमुखी निशानाथः पद्ममाला
विनष्टधीः ॥
शशिनी मोचिका श्रेष्ठा दैत्यमाता
प्रतिष्ठिता ।
एकदन्ताह्वयो माता हरिता मिथुनोदया ॥
माता स्थाने माया इति वा पाठः ।
कोमलः श्यामला मेधी प्रतिष्ठा पतिरष्टमी
।
ब्रह्मण्यमिव कीलाले पावको गन्धकर्षिणी
॥
मिवस्थाने मवेति वा पाठः । ॠः ॥
ऌः स्थाणुः श्रीधरः शुद्धो मेधा धूम्रो वको
वियत् ।
देवयोनिर्दक्षगण्डो वहेशः कौन्तरुद्रकौ ।
वहेशस्थाने वाहग इति वा पाठः ।

ज्ञानामृता कपर्द्दी श्रीः पीठेशाग्निः समातृकः
॥
त्रिपुरा लोहिता राज्ञी वाग्भवो भौतिकासनः
।
महेश्वरो द्वादशी च विमलश्च सरस्वती ।
कामकोटो वामजानुरंशुमान् विजया जटा
॥
॥ ऐः ॥
ओकारः सत्यपीयूषौ पश्चिमास्यः
श्रुतिःस्थिरा ।
सद्योजातो वासुदेवो गायत्री दीर्घजङ्घकः
॥
आप्यायनी चोद्र्ध्वदन्तो लक्ष्मीर्वाणी मुखी
द्विजः ।
उद्देश्यदर्शकस्तीव्रः कैलासो वसुधाक्षरः ॥
प्रणवांशो ब्रह्मसूत्रमजेशः सर्व्वमङ्गला ।
त्रयोदशी दीर्घनासा रतिनाथो दिगम्बरा ॥
त्रैलोक्यविजया प्रक्षा प्रीतिर्बीजादिकर्षिणी
॥
॥ ओः ॥
औकारः शक्तिको नाशस्तेजसो
वामजङ्घकः ।
मनुबद्धग्रहेशश्च शङ्कुकर्णः सदाशिवः ॥
अधोदन्तश्च कण्ठोष्ठौ सङ्कर्षणः सरस्वती
।
आज्ञा चोद्र्ध्वमुखी शान्तो व्यापिनी
प्रकृतः
पयः ॥
अनन्ता ज्वालिनी व्योमा चतुर्दशी
रतिप्रियः ।
नेत्रमात्माकर्षिणी च ज्वालामालिनिका
भृगुः ॥
व्योमास्थाने रोमा इति वा पाठः । औः ॥
अङ्कारश्चक्षुषो दन्तो वटिका समगुह्यकः ।
प्रद्युम्नः श्रीमुखी प्रीतिर्बीजयोनिर्वृषध्वजः
॥
दन्तस्थाने दम्भ इति वा पाठः ।
परं शशी प्रमाणीशः सोमबिन्दुः कलानिधिः
।
अक्रूरश्चेतना नागपूर्णा दुःखहरः शिवः ॥

भ्रूमध्यो माधवस्तुष्टिर्दक्षनेत्रञ्च नासिका ।
शान्तः कान्तः कामिनी च कामो विघ्नविना-
यकः ।
नेपालो भरणी रुद्रो नित्या क्लिन्ना च पावकः
॥
॥ इः ॥
ईस्त्रिभूर्त्तिर्महामाया लोलाक्षी वामलोचनम् ।
गोविन्दः शेखरः पुष्टिः सुभद्रा रत्नसंज्ञकः ॥
विष्णुर्लक्ष्मीः प्रहासश्व वाग्विशुद्धः परापरः ।
कलोत्तरीयो भेरुण्डा रतिश्च पौण्ड्रवर्द्धनः ॥
शिवोत्तमः शिवा तुष्टिश्चतुर्थी बिन्दुमालिनी ।
वैष्णवी वैन्दवी जिह्वा कामकला सनादका ॥
पावकः कोटरः कीर्त्तिर्मोहिनी कालकारिका ।
कुचद्वन्द्वं तर्ज्जनी व शान्तिस्त्रिपुरसुन्दरी ॥
ईः ॥
उः शङ्करो वर्त्तुलाक्षी भूतःकल्याणवाचकः ।
अमरेशो दक्षकर्णः षड्वक्त्रो मोहनः शिवः ॥
उग्रः प्रमुर्धृतिर्विष्णुर्विश्वकर्म्मा महेश्वरः ।
शत्रुघ्नश्चेटिका पुष्टिः पञ्चमी वह्निवासिनी ॥
चेटिकास्याने चेक्षिका इति वा पाठः ।
कामघ्नः कामना चेशो मोहिनी विघ्नहृन्मही ।
डटसूः कुटिला श्रोत्रं पारद्वीपो वृषो हरः ॥

विश्वेश्वरो दीर्घजिह्वा महेन्द्रो लाङ्गलिः
परा ।
चन्द्रिका पार्थिवो धूम्रा द्विदन्तः
कामवर्द्धनः ॥
शुचिस्मिता च नवमी
कान्तिराषातकेश्वरः ।
चित्ताकर्षिणी काशश्च तृतीयकुलसुन्दरी
॥
चित्ताकर्षिणीस्थाने चिन्ताकर्षिणी इति
वा
पाठः । लृः ॥
लृकारः कमला हर्षा हृषीकेशो मधुव्रतः ।
सूक्ष्मा कान्तिर्वामगण्डो रुद्रः कामोदरी
सुरा ॥
शान्तिकृत् स्वस्तिका शक्रो मायावी
लोलुपो
वियत् ।
कुशमी सुस्थिरो माता नीलपीतो
गजाननः ॥
कामिनी विश्वषा कालो नित्या शुद्धः
शुचिः
कृती ॥
विश्वषास्थाने विस्मया इति वा पाठः ।
सूर्य्यो धैर्य्याकर्षणी च एकाकी दनुजप्रसूः
॥ लॄः ॥
एकारो वास्तवः शक्तिर्झिण्टीशोष्ठौ भगं
मरुत् ।
सूक्ष्मा भूतोऽर्द्धकेशी च ज्योत्स्ना श्रद्धा
प्रमर्द्दनः ॥
भूतस्थाने शृत इति वा पाठः ।
भयं ज्ञानं कृषा धीरा जङ्घा सर्व्वममुद्भवः
।
वह्निविष्णुर्भगवती कुण्डली मोहिनी वसः
॥
योषिदाधारशक्तिश्च त्रिकोणा ईशसं
ज्ञकः ।
सन्धिरेकादशी भद्रा पद्मनाभः कुलाचलः
॥ एः ॥
ऐर्लज्जा भौतिकः कान्ता वायवी मोहिनी
विभुः ।
दक्षा दामोदरः प्रज्ञोऽधरो विकृतमुख्यपि
॥

शिरः शम्भुर्नरेशश्च सुखदुःखप्रवर्त्तकः ।
पूर्णिमा रेवती शुद्धः कन्या चरवियद्रविः ॥
अमृताकर्षिणी शून्यं विचित्रा व्योमरूपिणी
।
केदारो रात्रिनाशश्च कुब्जिका चैव बुद्बुदः
॥
॥ अं ॥
अः कण्ठको महासेनः कला पूर्णामृता हरिः
इच्छा भद्रा गणेशश्च रतिर्व्विद्यामुखी
सुखम्
द्विबिन्दुरसना सोमोऽनिरुद्धो दुःखसूचकः
।
द्विजिह्वः कुण्डलं वक्त्रः सर्गः
शक्तिर्निशाकरः ॥
सुन्दरी सुयशानन्ता गणनाथो महेश्वरः ॥
अः ॥
कः क्रोधीशो महाकाली कामदेवः
प्रकाशकः ।
कपाली तेजसः शान्तिर्वासुदेवो जयानलः
॥
चक्री प्रजापतिः सृष्टिर्दक्षस्कन्धो
विशाम्पतिः ।
अनन्तः पार्थिवो बिन्दुस्तापिनी
परमात्मकः ॥
दक्षस्कन्धस्थाने दक्षकक्षौ इति वा पाठः ।
वर्गाद्यश्च मुखी ब्रह्मा सखाद्योऽम्भः शिवो
जलम् ।
माहेश्वरी तुला पुष्पा मङ्गलश्चरणं करः ॥
नित्या कामेश्वरी मुख्यः कामरूपो
गजेन्द्रकः ।
श्रीपुरं रमणो रङ्गः कुसुमा परमात्मकः ॥
कः ॥
खः प्रचण्डः कामरूपी ऋद्धिर्व्वह्निः
सरस्वर्त
आकाशमिन्द्रियं दुर्गा चण्डीशस्तापिनी
गुरुः ॥
शिखण्डी दन्तजातीशः कफोणिर्गरुतो यदि
।
शून्यं कपाली कल्याणी सूर्पकर्णोऽजरामरः
॥
शुभ्राग्रेर्या चण्डलिङ्गो जनाव्याङ्गारखड्गकौ
॥

गो गौरी गौरवो गङ्गा गणेशो गोकुलेश्वरः
।
शार्ङ्गी पञ्चान्तको गाथा गन्धर्व्वः सर्व्वगः
स्मृतिः ॥
सर्व्वसिद्धिः प्रभा धूम्रा द्विजाख्यः
शिवदर्शनः ।
विश्वात्मा गौः पृथग्रूपा
बालबद्धस्त्रिलोचनः ॥
गीतं सरस्वती विद्या भोगिनी नन्दनो
धरा ।
भोगवती च हृदयं ज्ञानं जालन्धरो लवः
॥
लवस्थाने नर इति वा पाठः । गः ॥
घः खड्गी घुर्घुरो घण्टी घण्टीशस्त्रिपुरा-
न्तकः ।
वायुः शिवोत्तमः सत्या किङ्किणी
घोरनायकः ॥
मरीचिर्व्वरुणो मेधा कालरूपी च
दाम्भिकः ।
लम्बोदरा ज्वालमूलं नन्देशो हननं
ध्वनिः ।
त्रैलोक्यविद्या संहर्त्ता
कामाख्यमनघामयः ॥ धः ॥
ङः शङ्खी भैरवश्चण्डो विन्दूत्तंसः
शिशुप्रियः ।
एकरुद्रो दक्षनखः खर्परो विषयस्पृहा ॥
कान्तिः श्वेताह्वयो धीरो द्विजात्मा
ज्बालिनी
वियत् ।
मन्त्रशक्तिश्च मदनो विघ्नेशी
चात्मनायकः ॥
एकनेत्रो महानन्दो दुर्द्धरश्चन्द्रमा यतिः ।
शिवयोषा नीलकण्ठः कामेशी च
मयांशुकौ ॥
॥ ङः ॥
चः पुष्करो हली वाणी चात्मशक्तिः
सुदर्शनः ।
चर्म्मुण्डधरो भूत्वा महिषाचारसम्बिनी
॥
भूत्वास्थाने भौम इति च पाठः ।

ञकारो वोधनी विश्वा कण्डली मखदो
वियत् ।
कौमारी नागविज्ञानी सव्याङ्गुलनखरो वकः
॥
कण्डलीस्थाने कुण्डली मखदस्थाने सुखद
इति
वा पाठः ।
सर्व्वेशचूर्णिता बुद्धिः स्वर्गात्मा घर्घरध्वनिः
।
धर्म्मैकपादौ सुमुखौ विरजा चन्दनेश्वरी ॥
बुद्धिस्थाने सिद्धिः स्वर्गस्थाने सर्ग इति वा
पाठः ।
गायनः पुष्पधन्वा च रागात्मा च वरा-
क्षिणी ॥ ञः ॥
टष्टङ्कारः कपाली च सोमवाः खेचरी ध्वनिः
।
मुकुन्दो विनदा पृथ्वी वैष्णवी वारुणी नवः
॥
सोमवा स्थाने सोमेश इति क्वचित् पाठः ।
दक्षाङ्गकार्द्धचन्द्रश्च जरा भूतिः पुनर्भवः ।
बृहस्पतिर्धनुश्चित्रा प्रमोदा विमला कटिः ।
राजा गिरिर्म्महाधनुर्घ्नानात्मा सुमुखो
मरुत् ॥ टः ॥
ठः शून्यो मञ्जरी बीजः पाणिनी लाङ्गली
क्षया ।
वनजो नन्दनो जिह्वा सुनञ्चघूर्णकः सुधा ॥
वर्त्तुलः कुण्डलो वह्निरमृतं चन्द्रमण्डलः ।
दक्षजानूरुभावश्च देवभक्ष्यो बृहद्ध्वनिः ॥
एकपादो विभूतिश्च ललाटं सर्व्वमित्रकः ।
वृषघ्नो नलिनी विष्णुर्म्महेशो ग्रामणीः
शशी ॥ ठः ॥
डः स्मृतिर्द्दारुको नन्दिरूपिणी योगिनी
प्रियः ।
कामारी शङ्करस्त्राशस्त्रिवक्रो नदको ध्वनिः
॥
दुरूहो जटिली भीमा द्विजिह्वः पृथिवी सती
।
कोरगिरिः क्षमा कान्तिर्नाभिः स्वाती च
लोचनम् ॥

हरिस्थाने हविः इति वा पाठः ।
आषाढी तण्डतुस्नश्च कामिका पृष्ठपुच्छकः
।
रत्नकश्च श्याममुखी वाराही मकरोऽरुणा ॥
आषाढीतण्डतुस्नश्चस्थाने
आषान्तढान्तक्षुद्रश्च
इति रत्नकश्चस्थाने रत्नकण्ठ इति वा पाठः
।
सुगतोऽर्द्धमुखा बुद्धजानुश्च क्रोडपुच्छकः ।
गन्धो विश्वामरुच्छत्रश्चानुराधाच सौरकः
॥
बुद्धस्थाने वृद्ध इति सौरकस्थाने सैविक
इति वा
पाठः ।
जयन्ति पुलको भ्रान्तिरनङ्गमदनातुरा ॥ तः
॥
थः स्थिरामी महाग्रन्थिर्ग्रन्थिग्राहो भयानकः
।
शिली शिरसिजो दण्डी भद्रकाली
शिलोच्चयः ॥
कृष्णो बुद्धिर्व्विकर्म्मा च दक्षनाशाधिपोऽमरः
।
वरदा भोगदा केशो वामजानू रसोऽनलः ॥
कृष्णो बुद्धिर्विकर्म्मा स्थाने कृष्णो
वह्निर्व्विकर्णा
इति वा पाठः ।
लोलौजज्जयिनी गुह्यः शरच्चन्द्रो विदारकः
॥
लोलौ इत्यादिस्थाने
लोलोज्जयिनीपूर्गुह्यशर-
च्चन्द्रदिवाकरौ इति वा पाठः । थः ॥
दोऽद्रीशो धातकिर्धाता दाता दलं कलत्रकम्
।
दीनं ज्ञानञ्च दानञ्च भक्तिराहवनी धरा ॥
दाता दलं स्थाने दानादनु इति वा पाठः ।
सुषुम्ना योगिनी सद्यः कुण्डलो वामगुल्फकः
।
कात्यायनी शिवा दुर्गा लङ्घना नात्रि
कण्डकी ॥
लङ्घनास्थाने सङ्घना कण्डकीस्थाने कण्टकी

एकरूपो रुचिः कूर्म्मश्चामुण्डा
दीर्घवालुकः ।
वामबाहुर्म्मलमाया चतुर्मूर्त्तिस्वरूपिणी ॥
दयितश्च द्विनेत्रश्च लक्ष्मीस्त्रितयलोचनः
।
चन्दनं चन्द्रमा दवश्चे तनो वृश्चिको
बुधः ॥
देवी केटमुखेच्छात्मा कौमारपूर्व्वफल्गुनी
।
अनङ्गमेखला वायुर्मेदिनी च मूलावती ॥
चः ॥
छश्छन्दनं सुषुम्ना च प पुः पशुपतिर्मृतिः
।
निर्म्मलं तरलं वह्निर्भूतमात्रा विलासिनी
॥
एकनेत्रश्च वृषली द्विशिरा वामकुर्परः ।
गोकर्णा लाङ्गली वामकाममत्ता
सदाशिवः ॥
माता निशाचरः पायुर्व्विक्षतः
स्थितिशब्दकः ॥
॥ छः ॥
जः शवो वानरः शूली भोगदा विजया
स्थिरा ।
ललदेवो जयो जेता धातकी सुमुखी
विभुः ॥
लम्बोदरी स्मृतिः शाखा सुप्रभा कर्त्तृका
धरा ।
दीर्घबाहू रुचिर्हंसो नन्दी तेजाः सुराधिपः
॥
जवनो वेगितो वामो मानवाक्षः
सदात्मकः ।
ह्न्मारुतेश्वरो वेगी चामोदा मदविह्वलः ॥
जः ॥
झो झङ्कारी गुहो झष्झावायुः सत्यः
षड्डुन्नतः ।
अजेशो द्राविणी नादः पाशी जिह्वा जलं
स्थितिः ॥
विराजेन्द्रो धनुर्हस्तः कर्कशो नादजः
कुजः ।
दीर्घबाहुबलो रूपमाकन्दितः सुचञ्चलः
॥

जटिलीस्थाने जटिल इति कान्तिस्थाने
शान्ति-
रिति वा पाठः ॥ डः ॥
ढो ढक्का निर्णयः पूर्व्वो यज्ञेशादनदेश्वरः ।
अर्द्धनारीश्वरस्तोयमीश्वरीत्रिशिखी नवः ॥
यज्ञेशादनदेश्वर इत्यत्र यज्ञेशो धनदेश्वर
इत्यपि पाठः ।
दक्षपादाङ्गुलेर्मूलं सिद्धिदण्डो विनायकः ।
प्रहासा त्रिवेरा ऋद्धिर्निर्गुणो निधनो ध्वनिः
॥
प्रहासा स्थाने प्रहास इति वा पाठः ।
विघ्नेशः पालिनी त्वक्कधारिणी
क्रोडपुच्छकः ।
एलापुरं त्वगात्मा च विशाखा श्रीर्म्मनो रतिः
॥
तक्कस्थाने त्वक्च इति वा पाठः ॥ ढः ॥
णो निर्गुणं रतिर्ज्ञानं जम्भनः पक्षिवाहनः ।
जया शम्भो नरकजित् निष्कला
योगिनीप्रियः ॥
द्विमुखं कोटवी श्रोत्रं समृद्धिर्बोधनो मता ।
त्रिनेत्रो मानुषी व्योमदक्षपादाङ्गुलेर्मुखम् ॥
माधवः शङ्खिनी वीरो नारायणश्च निर्णयः ॥
मुखस्थाने नखं इति वा पाठः ॥ णः ॥
तः पूतना हरिः शुद्धिः शक्ती शक्तिर्जटी
ध्वजा ।
वामस्फिक्वामकट्यौ च कामिनी मध्य-
कर्णकः ॥

इति वा पाठः ।
स्वस्तिकः कुटिला रूपः
कृष्णश्चोमाजितेन्द्रियः ।
धर्म्महृद्वामदेवश्च भ्रमा बहुसुचञ्चला ॥
धर्म्महृत्स्थाने घर्म्मकृत् बहुस्थाने वह इति
वा
पाठः ।
हरिद्रा पुरमत्रौ च दक्षपाणिस्त्रिरेखकः ॥ दः
॥
धो धनार्थो रुचिः स्थाणुः शाश्वतो योगिनी-
प्रियः ।
मीनेशः शङ्खिनी तोयं नागेशो विश्वपावनी ॥
धनार्थस्थाने धनाख्य इति वा पाठः ।
धिषणा धरणा चिन्ता नेत्रयुग्मं प्रियो मतिः ।
पीतवासा त्रिवर्णा च धाता धर्म्मप्लवङ्गमः ॥
धरणाचिन्तास्थाने धरणी चित्रा इति वा
पाठः ।
सन्दर्शो मोहनो लज्जा वज्रतुण्डा धरं धरा ।
वामपादाङ्गुलेर्मूलं ज्येष्ठा सुरपुरं भवः ।
स्पर्शात्मा दीर्घजङ्घा च धनेशो धनसञ्चयः ॥
धः ॥
नो गर्ज्जिनी क्षमा सौरिर्व्वारुणी विश्वपावनी
।
मेषश्च सविता नेत्रं दन्तुरो नारदोऽञ्जनः ॥
वारुणीस्थाने वरुणा इति वा पाठः ।
ऊद्र्ध्वचामी द्विरण्डश्च वामपादाङ्गुलेर्मुखम्
।
वैनतेयस्तुतिर्वर्त्म तरणिर्बालिरागमः ॥
वामनो ज्वालिनी दीर्घो निरीहः
सुगतिर्व्वियत् ।
शब्दात्मा दीर्घघोणा च हस्तिनापुरमेचकौ ।
गिरिनायकनीलौ च शिवो नादिर्म्महा-
मतिः ॥ नः ॥

| | | |
|---|---|---|
| दुर्मुखो नष्ट आत्मा वान् विकटा<br>कुचमण्डलः ।<br>कलहंसप्रिया वामा अङ्गुलीमध्यपर्व्वकः<br>।<br>दक्षहासाट्टहासश्च पाथात्मा व्यञ्जनः<br>स्वरः ॥<br>॥ झः ॥ | | |

पः पूरप्रियता तीक्ष्णा लोहितः पञ्चमो रमा ।
गुह्यकर्त्ता निधिः शेषः कालरात्रिः सुवाहिता ॥
तपनः पालनः पाता पद्मरेणुर्न्निरञ्जनः ॥
सावित्री पातिनी पानं वीरतत्त्वो धनुर्द्धरः ॥
पालनस्थाने पावन इति तत्त्वस्थाने तन्त्र इति वा पाठः ।
दक्षपार्श्वश्च सेनानी मरीचिः पवनः शनिः ।
उड्डीशं जयनी कुम्भोऽलसं रेखा च मोहकः ॥
कुम्भस्याने कान्ता इति रेखास्थाने रेषा इति वा पाठः ।
मूला द्बितीयमिन्द्राणी लोकाक्षी मन आत्मनः ॥
आत्मनः स्थाने आत्मक इति वा पाठः । पः ॥
फः सखी दुर्गिणी धूम्रा वामपार्श्वो जनार्द्दनः ।
जया पादः शिखा रौद्री फेत्कारः शाखिनी प्रियः ॥
उमा विहङ्गमः कालकुब्जिनीप्रियपावकौ ।
प्रलयाग्निर्नीलपादोऽक्षरःपशुपतिः शशी ॥
फुत्कारो यामिनी व्यक्ता पावनो मोहवर्द्धनः ।
निष्फलवागहङ्कारः प्रयागो ग्रामणीः फलम् ॥
व्यक्तास्थाते झञ्झा इति प्रयागस्थाने प्रयाण इति वा पाठः । फः ॥
बो वनी भूधरो मार्गो घर्घरी लोचनप्रियः ।
प्रचेताः कलसः पक्षी स्थलगण्डः कपर्द्दिनी ॥
पृष्ठवंशो भया मातुः शिखिवाहो युगन्धरः ।
सुखबिन्दुर्ब्बली घण्टा योद्धा त्रिलोचनप्रियः ॥
सुखबिन्दुस्थाने मुखबिन्दुरिति वा पाठः ।
क्लेदिनी तापिता भूमिः सुपनिन्द्रवलिप्रियः ।
सुरभिर्मुखविष्णुश्च संहारो वसुधाधिपः ॥
सुपनिन्द्रस्थाने सुगन्धिश्चेति वा पाठः ।
षष्ठी पुरञ्च पेटा च मोदको गगनं प्रति ।
पूर्ब्बाषाढामध्यलिङ्गौ शनिः कुम्भतृतीयकौ ॥
बः ॥
भः क्लिन्ना भ्रमरो भीमो विश्वमूर्त्तिर्न्निशातवम् ।
द्बिरण्डो भूषणो मूलं यज्ञसूत्रस्य वाचकः ॥
निशातवस्थाने निशाभयं इति वा पाठः ।
नक्षत्रं भ्रमणा दीप्तिर्वयो भूमिः पयो नभः ।
नाभिभद्रं भहाबाहुर्विश्वमूर्त्तिर्वितापडकः ॥

भातङ्गमालिनो बिन्दुः श्रवणाभरथो वियत् ॥
रथस्थाने मख इति वा पाठः । मः ॥
यो वाणी वसुधा वायुर्विकृतिः पुरुषोत्तमः ।
युगान्तः श्वसनः शीघ्रो धूमार्च्चिः प्राणिसेवकः ॥
युगान्तस्थाने युगाभ इति वा पाठः ।
शङ्खा भ्रमो जटी लोला वायुवेगी यशस्करी ।
सङ्कर्षणः क्षपा वालो हृदयं कपिला प्रभा ॥
आग्नेयो व्यापकास्त्यागो होमो यानं प्रमा सुखम् ।
चण्डः सर्व्वेश्वरी घूमश्चामुण्डा सुमुखेश्वरी ॥
प्रमास्थाने प्रभा इति वा पाठः ।
त्वगात्मा मलयो माता हंसिनी भृङ्गिनायकः ।
तेनमः शोषको मीनो धनिष्ठानङ्गवेदिनी ॥
त्वगात्मास्थाने विगात्मा इति तेनमस्थाने येमन इति वा पाठः ।
मेष्ठः सोमः पक्तिनामा पापहा प्राणसंज्ञकः ॥
मेष्ठस्थाने सेष्ट इति वा पाठः । यः ।
रो रक्तः क्रोधिनी रेफः पावकस्त्वोजसो मतः ।
प्रकाशा दर्शनो दीपो रतकृष्णा परं बली ॥
स्त्वोजसस्थाने न्तेजन इति रतकृष्णास्थाने रक्त-कृष्ण इति वा पाठः ।
भुजङ्गेशो मतिः सूर्य्यो धातू रक्तः प्रकाशकः ।
व्यापको रेवती दासं कुक्ष्यंशो वह्निमण्डलम् ॥
दासस्थाने दानमिति कुक्ष्यंशस्थाने दक्षांश

वृषघ्नः शयनं शान्ता सुभगा विस्फुलिङ्गिनी ।
मृत्युर्देवो महालक्ष्मीर्म्हेन्द्रः कुलकौलिनी ॥
बाहुर्हंसो वियद्वक्त्रं हृदनङ्गाङ्कुशः खलः ।
वामोरुः पुण्डरीकात्मा कान्तिः कल्याणवाचकः ।
हंसश्चाने हिंसा इति वा पाठः । शः ॥
षः श्वेतो वासुदेवश्च पीता प्रज्ञा विनायकः ।
परमेष्ठी वामबाहुः श्रेष्ठो गर्भविमोचनः ॥
पीतास्थाने प्रीता इति प्रज्ञास्थाने श्रद्धा इति वा पाठः ।
लम्बोदरो यमौजेशः कामधुक् कामधूमकः ।
सुश्रीरुष्मा वृषो लज्जा मरुद्वक्ष्यः प्रियः शिवः ।
कामधूमकस्थाने कालधूमक इति वा पाठः ।
सूर्य्यात्मा जठरः कोषो मत्ता वक्षोविदारिणी ।
कलकण्ठो मध्यभिन्ना बुद्धात्मा मलपूः शिवः ॥ षः ॥
सो हंसः सुयशा विष्णुर्भृग्वीशश्चन्द्रसंज्ञकः ।
जगद्बीजं शक्तिनामा मोहं वेशवती भृगुः ॥
सुयशास्थाने सुजन इति मोहस्थाने सोऽहं इति वा पाठः ।
प्रकृतिरीश्वरः शुद्धो प्रभा श्वेता कुलोज्ज्वलः ।
दक्षपादो मृतं ब्राह्मी परमात्मा परोऽक्षरः ॥
सुरूपा च गुणेशो गौः कलकण्ठो वृकोदरी ।
प्राणाद्याश्च पुरादेवी लक्ष्मीः सोमो हिरण्यपुः ॥
दुर्गोत्तारिणी सन्मोहाज्जीवो मूर्त्तिर्मनोहरः ॥
दुर्गोत्तारिणिस्थाने दुर्गोत्तारिणी इति सन्मो-हात्स्थाने सन्मोहा इति मनोहरख्याने मनोयव इति वा पाठः । सः ।
हः शिवो गगनं हंसो नागलोकोऽम्बिका-पतिः ।

वयःस्थाने भय इति विताण्डकस्थाने
विमूर्त्तक
इति वा पाठः ।
प्राणात्मा तापिनी वज्रा विश्वरूपी च चन्द्रिका
।
भीमसेनः सुधामेनः सुखो मायापुरं हरः ॥
वज्रस्थाने रुद्रा इति सुखस्थाने मुख इति वा
पाठः । भः ॥
मः काली क्लेशितः कालो महाकालो महा-
न्तकः ।
वैकुण्ठो वसुधा चन्द्री रविः पुरुषराजकः ॥
वसुधास्याने वस्तुदा इति वा पाठः ।
कालभद्रो जया मेधा विश्वदा दीप्तसंज्ञकः ।
जठरञ्च भ्रमानानं लक्ष्मीमातोग्रबन्धनौ ॥
दीप्तस्थाने दीप्र इति वा पाठः ।
विर्षि शिवो महावीरः शशिप्रभां जनेश्वरः ।
प्रमत्तः प्रियसू रुद्रः सर्व्वाङ्गो वह्निमण्डलम् ॥

इति वा पाठः ।
उग्ररेखा स्थूलदण्डो वेदकण्ठपला पुरा ।
प्रकृतिः सुगलो ब्रह्मशन्दश्च गायको
धनम् ॥
वेदकण्ठपलास्थाने वेदकश्चपला इति
वा पाठः ।
श्रीकण्ठ उष्मा हृदयं मुण्डी त्रिपुरसुन्दरी
।
सविन्दुर्योनिजो ज्वाला श्रीशैलो
विश्वतोमुखी ॥
श्रीशैलस्थाने श्रीशोण इति वा पाठः ।
रः ।
लश्चन्द्रः पूतना पृथ्वी माधवः
शक्रवाचकः ।
वलानुजः पिणाकीशो व्यापको
मांससंज्ञकः ॥
माधवस्थाने माधवी इति वा पाठः ।
खड्गी नादोमृतं देवी लवणं वारुणी
पतिः ।
शिखा वाणी क्रिया माता भामिनी
कामिनी
प्रिया ॥
मृतस्थाने मृडमिति लवणस्थाने
मरणमिति वा
पाठः ।
ज्वालिनी वेगिनी नादः प्रद्युम्नः शोषणो
हरिः ।
विश्मात्ममन्त्रौ बली चेतो मेरुर्गिरिः
कला रसः ॥
मन्त्रस्थाने मन्द्र इति कलास्थाने कणा
इति वा
पाठः । लः ।
वो वालो वारुणी सूक्ष्मा वरुणो
मेदसंज्ञकः ।
खड्गीशो ज्वालिनी वङ्कः
कलसध्वनिवाचकः ॥
वङ्कस्थाने रङ्क इति कलसध्वनिस्थाने
कलसंरवि
इति वा पाठः ।
उत्कारीशस्तु ना वीतो वज्रा स्फिक्
सागरः
शुचिः ।

नकुलीशो जगत्प्राणः प्राणेशः कपिला मलः
॥
मलस्थाने मत इति वा पाठः ।
परमात्मात्मजो जीवो यवाकः
शान्तिदोऽङ्गनः ।
मृगो भयो रुणास्थाणुः क्रुटकूपविरावणः ॥
यवाकस्थाने वराक इति अङ्गनस्थाने
अङ्गुल
इति क्रुटकूपविरावणस्थाने कूटकोपरिवारण
इति वा पाठः ।
लक्ष्मीर्मविहरः शम्भुः प्राणशङ्किर्ललाटजः ।
स्वकोपवारणः शूली चैतन्यं पादपूरणः ॥
मविहरस्थाने हरिहर इति स्वकोपस्थाने
सकोप इति वा पाठः ।
महालक्ष्मीः परं नादो मेघनादो हरिर्म्मतः ।
विन्दुर्दुर्गा प्रिया देवी मेघश्यामेश्वरः पुमान् ॥
दक्षपादः सदाशम्भुः शाखोटः सोममण्डलम्
॥ हः
ळः पृथ्वी विमला मोघोऽनन्तो हव्यवहा
सिता ।
व्यापिनी शिवदा केतुजगत्सारतरं हठः ॥
ग्लौर्मृडानी च वेदार्थः सारो नारायणः
स्वयम् ।
जठरो नकुलिः पीता शिवेशोऽनङ्गमालिनी ॥
ळः ॥
क्षः कोपस्तुम्बुकः कालो रुक्षः संवर्त्तकः
परः ।
नृसिंहो विद्युता माया महातेजा युगान्तकः ॥
स्तुम्बुकस्थाने स्तुघुक इति रुक्षस्थाने
व्यक्ष्यमिति
परस्थाने पय इति वा पाठः ।
परात्मा क्रोधसं हारौ वलान्तो मेरुवाचकः ।
सर्व्वाङ्गः सागरः कामः
संयोगान्त्यस्त्रिपूरकः ॥

| | | |
|---|---|---|
| | त्रिधातुः शङ्करः श्रेष्ठो विशेषो यमसादनम् ॥ वः ॥<br>शः सव्यश्च कामरूपी कामरूपो महामतिः ।<br>सौख्यनामा कुमारोऽस्थि श्रीकण्ठो वृषकेतनः ॥ | |

वलान्तस्थाने नलान्त इति सर्व्वाङ्गस्थाने
सर्व्वाग
इति वा पाठः ।
क्षेत्रपालो महाक्षोभो मातृकान्तानलक्षयः ।
मुखं कव्यवहानन्ता कालजिह्वा गणेश्वरः ।
छायापुत्त्रश्च संघातो मलयः श्रीर्ललाटकः ॥”
क्षः ॥
इति नन्दनभट्टाचार्य्यविरचितं वर्णाभिधानं
समाप्तम् ॥

**वर्णकं**, क्ली, (वर्णयतीति । वर्ण + ण्वुल् ।) हरि-
तालम् । इति रत्नमाला ॥ गात्रानुलेपनयोग्यं
पिष्टं घृष्टं वा सुगन्धिद्रव्यम् । इत्यमरः ॥ चन्द-
नम् । इति शब्दरत्नावली ॥

**वर्णकः**, पुं, क्ली, (वर्ण + स्वार्थे संज्ञायां वा कन् ।)
विलेपनम् । चन्दनम् । इति मेदिनी । के,
१५२ ॥ (यथा, महाभारते । १३ । १११ ।
१०७ ।
“वर्णकादींस्तथा गन्धांश्चोरयित्वेह मानवः ।
छुछुन्दरित्वमाप्नोति राजन् ! लोभपरायणः ॥”)

**वर्णकः**, पुं, स्त्री, (वर्ण्यते रज्यतेऽनेनेति । वर्ण +
घञ् । स्वार्थे कन् ।) हिङ्गुलहरितालकाचनीली-
कादिः । इत्यमरभरतौ ॥ (यथा, आर्य्यासप्त-
शत्याम् । १८९ ।
“कस्तां निन्दति लुम्पति कः स्मरफलकस्य
वर्णकं
मुग्धः ।
क्रो भवति रत्नकण्टकममृते कस्यारुचिरुदेति
॥”)

**वर्णकः**, पुं, (वर्णयति नृत्यादीन् विस्तारयतीति ।
वर्ण + ण्वुल् ।) चारणः । इति मेदिनी । के,
५२ । मण्डलम् । इति शब्दरत्नावली ॥

**वर्णकविः**, पुं, कुबेरपुत्त्रः । इति त्रिकाण्ड-
शेषः ॥

**वर्णकूपिका**, स्त्री, (वर्णानां कूपिकेव ।) मस्या-
धारः । यथा, --
“मसीधानी मसिमणिर्मेलान्धुर्वर्णकूपिका ॥”

**वर्णतूलिका**, स्त्री, (वर्णानां तूलिकेव ।) लेखनी ।
इति हारावली । २१२ ॥

**वर्णतूली**, स्त्री, (वर्णानां तूलीव ।) लेखनी । इति
त्रिकाण्डशेषः ॥

**वर्णदं**, क्ली, (वर्णं ददातीति । दा + “आतो-
ऽनुसर्गे कः ।” ३ । २ । ३ । इति कः ।)
काली-
यकम् । इति जटाधरः ॥ वर्णदातरि, त्रि
॥

**वर्णदात्री**, स्त्री, (वर्णं ददातीति । दा + तृच् +
ङीप् ।) हरिद्रा । इति राजनिर्घण्टः ॥
वर्ण-
दातरि, त्रि ॥

**वर्णदूतः**, पुं, (वर्णा एव दूता यत्र ।) लिपिः ।
तत्पर्य्यायः । लेखः २ वाचिकहारकः ३
स्वस्ति-
मुखः ४ । इति त्रिकाण्डशेषः ॥

**वर्णधर्म्मः**, पुं, क्ली, (वर्णानां ब्राह्मणादीनां धर्म्मः
।)
ब्राह्मणक्षत्त्रियवैश्यशूद्राणां कर्त्तव्यं कर्म्म
। तद्-
यथा, --
“यजनं याजनं दानं ब्राह्मणस्य प्रतिग्रहः
।
अध्यापनं चाध्ययनं षट्कर्म्माणि
द्विजोत्तमाः ॥
दानमध्ययनं यज्ञो धर्म्मं
क्षत्त्रियवैश्ययोः ।
दण्डो युद्धं क्षत्त्रियस्य कृषिर्वैश्यस्य
शस्यते ॥
शुश्रूषैव द्विजातीनां शूद्राणां वर्णसाधनम्
।
कारुकर्म्म तथाजीवः पाकयज्ञोऽपि
धर्म्मतः ॥
क्षमा दमो दया दानमलोभस्त्याग एव च
।
विदितान्
प्रतिग्रहानिच्छेद्गृहधर्म्मप्रसिद्धये ॥
वेदमेवाभ्यसेन्नित्यं शुचौ देशे समाहितः ।
यजेद्यज्ञं यथाशक्त्या दद्याद्वित्तानुसारतः
॥
नित्यं नैमित्तिकं धर्म्मं कर्म्म कुर्य्यात्
प्रयत्नतः ।
गुरुशुश्रूषणञ्चैव यथान्यायमतन्द्रितः ॥
सार्य प्रातरुपासीत विधिनाग्निं द्विजोत्तमः
।
कृतस्नानः प्रकुर्व्वीत वैश्वदेवं दिने दिने
॥
अतिथिञ्चागतं भक्त्या पूजयेच्छक्तितो
गृही ।
अन्यानप्यागतान् विप्रान्
पूजयेदविरोधतः ॥
स्वदारनिरतो नित्यं परदारविवर्ज्जितः ।
सत्यवादी जितक्रोधः स्वधर्म्मनिरतो
भवेत् ॥
अकर्म्मणि च संप्राप्ते प्रमादे नैव रोचयेत् ।
प्रियां हितां वदेद्वाचं परलोकाविरोधिनीम्
॥
एष धर्म्मः समुद्दिष्टो ब्राह्मणस्य समासतः
।
धर्म्ममेवन्तु यः कुर्य्यात् स याति ब्रह्मणः
पदम् ॥
हारीत उवाच ।
क्षत्त्रादीनां प्रवक्ष्यामि यथावदनुपूर्ब्बशः ।
येन येन प्रवर्त्तन्ते विधिना क्षत्त्रियादयः ॥
राजा च क्षत्त्रियश्चैव प्रजा धर्म्मेण
पालयेत् ।
कुर्य्यादध्ययनं सम्यक् युगयुक्तो
यथाविधि ॥
दद्याद्दानं द्विजाग्रेभ्यो धर्म्मबुद्धिसमन्वितः
।
देवब्राह्मणभक्तश्च पितृकार्य्यपरस्तथा ॥
धर्म्मेण वै जयाकाङ्क्षी अधर्म्मस्य
विवर्जयेत् ।
उत्तमां गतिमाप्नोति क्षत्त्रियो ह्येवमाचरन्
॥ * ॥

इति त्रिकाण्डशेषः ॥

**वर्णचारकः**, त्रि, (वर्णान् नीलादीन् चारयति विस्तारयतीति । चर + णिच् + ण्वुल् ।) चित्र-कारः । इति शब्दमाला ॥

**वर्णज्येष्ठः**, पुं, (वर्णेषु चतुर्षु मध्ये ज्येष्ठः प्रथमोत्-पन्नात् गुणोत्कृष्टत्वाच्च ।) ब्राह्मणः । इति त्रिकाण्डशेषः ॥

**वर्णज्येष्ठः**, त्रि, (वर्णेन ज्योतिषोक्तपारिभाषिक-वर्णेन ज्येष्ठः श्रेष्ठः ।) स्ववर्णापेक्षोत्तमवर्णः । पारिभाषिकहीनवर्णकर्त्तृकपारिभाषिकवर्ण-ज्येष्ठकन्याविवाहनिषेधो यथा, --
"मीनकर्कटवृश्चिकविप्राः
सिंहतुलाधनुः क्षत्त्रिय उक्तः ।
कुम्भनरद्वयमेषविशः स्यु-
र्म्मकरवृषस्त्री कथितावरजातिः ॥
वर्णज्येष्ठा च या नारी वर्णहीनश्च यः पुमान् ।
तयोर्व्विवाहे मृत्युः स्यात् षण्मासान्नात्र
संशयः ॥"
इति ज्योतिस्तत्त्वे वर्णजोटनम् ॥

**वर्णतूलिः**, स्त्री, (वर्णानां तूलिरिव ।) लेखनी । इति शब्दरत्नावली ॥

आर्ज्जवं चानसूया च तीर्थानुसरणं
तथा ॥
सत्यं सन्तोष आस्तिक्यं श्रद्धा
चेन्द्रियनिग्रहः ।
देवताभ्यर्च्चनं पूजा ब्राह्मणानां विशेषतः
॥
अहिंसा प्रियवादित्वमपैशुन्यमकल्कता
।
समासिकमिमं धर्म्मं
चातुर्व्वर्णेऽब्रवीन्मुनिः ॥
प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं
क्रिया-
वताम् ।
स्थानमैन्द्रं क्षत्त्रियाणां
संग्रामेष्वपलायिनाम् ॥
वैश्यानां मारुतं स्थानं
स्वधर्म्ममनुवर्त्तताम् ।
गान्धर्व्वं शूद्रजातीनां परिचारे तु
वर्त्तताम् ॥"
इति कौर्म्मे २ अध्यायः ॥ * ॥
अपि च ।
मार्कण्डेय उवाच ।
"हारीतस्तानुवाचाथ तैरेवं चोदितो
मुनिः ।
शृण्वन्तु मुनयः सर्व्वे धर्म्मान् वक्ष्यामि
शाश्व-
तान् ॥
वर्णानामाश्रमाणाञ्च योगशास्त्रञ्च
सत्तमाः ।
यज्ज्ञात्वा मुनयो नित्यं मुच्यते
जन्मबन्धनात् ॥
ब्राह्मण्यां ब्राह्मणेनैव उत्पन्नो ब्राह्मणः
स्मृतः ।
तस्य धर्म्मं प्रवक्ष्यामि तं योग्यं देशमेव
च ॥
कृष्णसारो मृगो यत्र स्वभावात्तु प्रवर्त्तते
।
तस्मिन् देशे वसन् धर्म्मं कुरुते
ब्राह्मणोत्तमः ॥
अध्यापनं चाध्ययनं यजनं याजनं तथा
।

गोरक्षं कृषिबाणिज्यं कुर्य्याद्वैश्यो
यथाविधि ।
दानं धर्म्मं यथाशक्त्या द्विजशुश्रूषणं तथा
॥
लोभदम्भविनिर्म्मुक्तः सत्यवागनसूयकः ।
स्वदारनिरतो दान्तः परदारविवर्ज्जितः
॥
धनैर्विप्रान् समभ्यर्च्च्य यज्ञकाले
त्वयाचितः ।
अप्रमत्तः स्वधर्म्मेषु वर्त्तेत देहपातनात् ॥
यज्ञाध्ययनदानानि कुर्य्यान्नित्यमतन्द्रितः
।
पितृकार्य्यञ्च तत्काले नारसिंहार्च्चनं
तथा ॥
एतद्वैश्यस्य कर्म्मोक्तं स्वधर्म्ममनुतिष्ठतः
।
एतदासेव्यमानस्तु मुक्तः स्यान्नात्र संशयः
॥ * ॥
वर्णत्रयस्य शुश्रूषां कुर्य्यात् शूद्रः
प्रयत्नतः ।
दासवत् ब्राह्मणानान्तु विशेषेण समाचरेत्
॥
अयाचितः प्रदाता स्यात् कृषिं
वृत्त्यर्थमाश्रयेत् ।
पाकयज्ञविधानेन यजेद्देवानतन्द्रितः ॥
शूद्राणां मासिकं कार्य्यं वपनं
न्यायवर्त्तिनाम् ।
धारणं जीर्णवस्त्रस्य
विप्रस्योच्छिष्टभोजनम् ॥
स्वदारेषु रतिश्चैव परदारविवर्ज्जितः ।
पुराणश्रवणं विप्रान्नारसिंहस्य पूजनम् ॥
तथा विप्रनमस्कारस्तथा सत्रं दिने दिने ।
सत्यं सम्भाषणं चैव रागद्वेषविवर्ज्जनम् ॥
इत्थं कुर्व्वंस्तथा शूद्रो
मनोवाक्कायकर्म्मभिः ।
स्थानमन्द्रमवाप्नोति त्यक्तपापः
प्रपुण्यकृत् ॥"
इति नारसिंहे ५३ । ५४ अध्यायौ ॥ * ॥
अन्यच्च ।
मदालसोवाच ।
"दानमध्ययनं यज्ञो ब्राह्मणस्य त्रिधोदितः
।

| | | |
|---|---|---|
| | दानं पतिग्रहश्चैव कर्म्मषट्कमिहोच्यते ॥<br>अध्यापनञ्च त्रिविधं धर्म्मार्थं चात्मकारणम् ।<br>शुश्रूषाकारणञ्चेति त्रिविधं परिकीर्त्तितम् ॥<br>नैषामन्यतमो वापि दृश्यते यत्र मानवे ।<br>तत्र विद्या न दातव्या पुरुषेण हितैषिणा ॥<br>योग्यानध्यापयेच्छिष्यान् यज्ञानपि च योजयेत् । | धर्म्मो नान्यश्चतुर्थोऽस्ति धर्म्मस्तस्यापदं विना ॥<br>याजनाध्ययने यज्ञस्तथा पुत्र प्रतिग्रहः । |

एतत् सम्यक् समाख्यातं त्रितयं चास्य जीविका ॥
दानमध्ययनं यज्ञः क्षत्त्रियस्याप्ययं त्रिधा ।
धर्म्मः प्रोक्तः क्षिते रक्षा शस्त्राजीवश्च जीविका ॥
दानमध्ययनं यज्ञो वैश्यस्यापि त्रिधैव सः ।
बाणिज्यं पाशुपाल्यञ्च कृषिश्चैवास्य जीविका ॥
दानं यज्ञोऽथ शुश्रूषा द्विजातीनां त्रिधा मया ।
व्याख्यातः शूद्रधर्म्मोऽपि जीविका कारुकर्म्मजा ॥
तद्वद्द्विजातिशुश्रूषा पोषणं क्रयविक्रयैः ।
वर्णधर्म्मास्त्विमे प्रोक्ताः श्रूयतामाश्रमास्त्रयः ॥”
इति मार्कण्डेयपूराणे मदालसानुशासनाध्यायः॥
अपरञ्च ।
“ब्राह्मणा ब्रह्मयोनिस्था ये स्वकर्म्मण्यवस्थिताः ।
ते सम्यगुपजीव्येयुः षट्कर्म्माणि यथाक्रमम् ॥
अध्यापनमध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहश्चैव षट् कर्म्माण्यग्रजन्मनः
षण्णान्तु कर्म्मणामस्य त्रीणि कर्म्माणि जीविका ।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥
त्रयो धर्म्मा निवर्त्तन्ते ब्राह्मणात् क्षत्त्रियं प्रति ।
अध्यापनं याजनञ्च तृतीयश्च प्रतिग्रहः ॥
वैश्यं प्रति तथैवैते निवर्त्तेरन्निति स्थितिः ।
न तौ प्रति हि तान् धर्म्मान् मनुराह प्रजा-पतिः ॥
शस्त्रास्त्रभृत्त्वं क्षत्त्रस्य वणिक्पशुकृषिर्विशः ।
आजीवनार्थं धर्म्मस्तु दानमध्ययनं यजिः ॥
वेदाभ्यासो ब्राह्मणस्य क्षत्त्रियस्य च रक्षणम् ।
इतरेषान्तु पण्यानां विक्रयादिह कामतः ।
ब्राह्मणः सप्तरात्रेण वैश्यभावं नियच्छति ॥
रसा रसैर्निमातव्या न त्वेव लवणं रसैः ।
कृतान्नञ्चाकृतान्नेन तिला ध्यान्येन तत्समाः ॥
जीवेदेतेन राजन्यः सर्व्वेणाप्यनयङ्गतः ।
न त्वेव ज्यायसीं वृत्तिमभिमन्येत कर्हिचित् ॥
यो लोभादधमो जात्या जीवेदुत्कृष्टकर्म्मभिः ।
तं राजा निर्द्धनं कृत्वा क्षिप्रमेव प्रवासयेत् ॥
वरं स्वधर्म्मो विगुणो न पारक्यः स्वनुष्ठितः ।
परधर्म्मेण जीवन् हि सद्यः पतति जातितः ॥
वैश्योऽजीवन् स्वधर्म्मेण शूद्रवृत्त्यापि वर्त्तयेत् ।
अनाचरन्नकार्य्याणि निवर्त्तेत च शक्तिमान् ॥
अशक्नुवंश्च शुश्रूषां शूद्रः कर्त्तुं द्विजन्मनाम् ।
पुत्त्रदारात्ययं प्राप्तो जीवेत कारुकर्म्मभिः ॥
वैकर्म्मभिः प्रचरितैः श्रुश्रूष्यन्ते द्विजातयः ।
तानि कारुककर्म्माणि शिल्पानि विविधानिच ॥
वैश्यवृत्तिमनातिष्ठन् ब्राह्मणः स्वे पथि स्थितः ।
अवृत्तिकर्षितः सीदन्निमं धर्म्भं समाचरेत् ॥
सर्व्वतः प्रतिगृह्णीयाद्ब्राह्मणस्त्वनयङ्गतः।
पवित्रं दुष्यतीत्येतत् धर्म्मतो नोपपद्यते ॥
नाध्यापनाद्याजनाद्वा गर्हिताद्वा प्रतिग्रहात् ।
दोषो भवति विप्राणां ज्वलनाम्बुसमा हि ते ॥
जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः ।
आकाशमिव पङ्केन न स पापेन लिप्यते ॥
अजीगर्त्तः सुतं हन्तुमुपासर्पद्बुभुक्षितः ।
न चालिप्यत पापेन क्षुत्प्रतीकारमाचरन् ॥
श्वमांसमिच्छन्नार्त्तोऽत्तुंधर्म्माधर्म्मविचक्षणः ।
प्राणानां परिरक्षार्थं वामदेवो न लिप्तवान् ॥
भरद्वाजः क्षुधार्त्तस्तु सपुत्त्रो विजने वने ।
बह्वीर्गाः प्रतिजग्राह वृधोस्तक्ष्णो महातपाः ॥
क्षुधार्त्तश्चात्तुमभ्यागाद्विश्वामित्रःश्वजाघनीम् ।
चण्डालहस्तादादाय धम्माधर्म्मविचक्षणः ॥
प्रतिग्रहाद्याजनाद्वा तथैवाध्यापनादपि ।
प्रतिग्रहः प्रत्यवरः प्रेत्य विप्रस्य गर्हितः ॥
चतुर्थमाददानोऽपि क्षत्त्रियो भागमापदि ।
प्रजा रक्षन् परं शक्त्या किल्विषात् प्रतिमुच्यते ॥
स्वधर्म्मो विजयस्तस्य नाहवे स्यात् पराङ्मुखः ।
शस्त्रेण वैश्यान्रक्षित्वा धर्म्म्यमाहारयेद्बलिम् ॥
धान्येऽष्टमं विशां शुल्कं विंशं कार्षापणा-वरम् ।
कर्म्मोपकरणाः शूद्राः कारबः शिल्पिनस्तथा ॥
शूद्रस्तु वृत्तिमाकाङ्क्षन् क्षत्त्रमाराधयेद्यदि ।
धनिनं वाप्युपाराध्य वैश्यं शूद्रो जिजीविशेत् ॥
स्वर्गार्थमुभयार्थं वा विप्रानाराधयेत्तु सः ।
जातब्राह्मणशब्दस्य सा ह्यस्य कृतकृत्यता ॥
विप्रसेवैव शूद्रस्य विशिष्टं कर्म्म कीर्त्त्यते ।
यदतोऽन्यद्धिकुरुते तद्भवत्यस्य निष्फलम् ॥
प्रकल्प्या तस्य तैर्वृत्तिः स्वकुटुम्बाद्यथार्हतः ।
शक्तिञ्चावेक्ष्य दाक्ष्यञ्च भृत्यानाञ्च परिग्रहम् ॥
उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च ।
पुलाकाश्चैव धान्यानां जीर्णाश्चैव परिच्छदाः ॥
न शूद्रे पातकं किञ्चित् न च संस्कारमर्हति ।
नास्याधिकारो धर्म्मेऽस्ति न धर्म्मात् प्रतिसेध-नम् ॥
धर्म्मेप्सवस्तु धर्म्मज्ञाः सतां वृत्तिमनुष्ठिताः ।
मन्त्रवर्ज्जं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च ॥
यथा तथाहि सद्वृत्तमातिष्ठत्यनसूयकः ।

वार्त्ताकर्म्मैव वैश्यस्य विशिष्टानि
स्वकर्म्मसु ॥
अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्म्मणा
।
जीवेत् क्षत्त्रियधर्म्मेण स ह्यस्य
प्रत्यनन्तरः ॥
उभाभ्यामप्यजीवंस्तु कथं स्यादिति
चेद्भवेत् ।
कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य
जीविकाम् ॥
वैश्यवृत्यापि जीवंस्तु ब्राह्मणः क्षत्त्रियोऽपि
वा ।
हिंसाप्रायां पराधीनां कृषिं यत्नेन वर्जयेत्
॥
कृषिं साध्विति मन्यन्ते सा वृत्तिः
सद्विगर्हिता ।
भूमिं भूमिशयांश्चैव हन्ति काष्ठमयोमुखम्
॥
इदन्तु वृत्तिवैकल्यात् त्यजतो धर्म्मनैपुणम्
।
विट्पण्यमुद्धृतोद्धारं विक्रेयं वित्तवर्द्धनम् ॥
सर्व्वान्रसानपोह्येत कृतान्नञ्च तिलैः सह ।
अश्मनो लवणञ्चैव पशवो ये च मानुषाः ॥
सर्व्वञ्च तान्तवं रक्तं शाणक्षौमाविकानि च ।
अपि चेत् स्युररक्तानि फलमूले तथौषधीः
॥
अपः शस्त्रं विषं मांसं सोमं गन्धांश्च
सर्व्वशः ।
क्षीरं क्षौद्रं दधि घृतं तैलं मधु गुडं कुशान् ॥
आरण्यांश्च पशून् सर्व्वान् दंष्ट्रिणश्च
वयांसि च ।
मद्यं नीलीञ्च लाक्षाञ्च
सर्व्वांश्चैकशफांस्तथा ॥
काममुत्पाद्य कृष्यान्तु स्वयमेव कृषीवलः ।
विक्रीणीत तिलान् शुद्धान् धर्म्मार्थमचिर-
स्थितान् ॥
भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः
।
कृमिभूतः श्वविष्ठायां पितृभिः सह
मज्जति ॥
सद्यः पतति मांसेन लाक्षया लवणेन च ।
त्र्यहेण शूद्रीभवति ब्राह्मणः क्षीरविक्रयात् ॥

याजनाध्यापने नित्यं क्रियेते संस्कृतात्मनाम्
।
प्रतिग्रहस्तु क्रियते शूद्रादप्यन्त्यजन्मनः ॥
जपहोमैरपैत्येनो याजनाध्यापनैः कृतम् ।
प्रतिग्रहनिमित्तन्तु त्यागेन तपसैव च ॥
शिलोञ्छमप्याददीत विप्रो जीवन् यतस्ततः ।
प्रतिग्रहाच्छिलः श्रेयांस्ततोऽप्युञ्छः प्रशस्यते
॥
सीदद्भिः कुप्यमिच्छद्भिर्धनं वा पृथिवीपतिः ।
याच्यः स्यात्
स्नातकैर्व्विप्रैरदित्संस्त्यागमर्हति ॥
अकृतञ्च कृतात् क्षेत्राद्गौरजीविकमेव च ।
हिरण्यं धान्यमन्नञ्च पूर्ब्बं पूर्ब्बमदोषवत् ॥
सप्तवित्तागमा धर्म्म्या दायो लाभः क्रयो जयः
।
प्रयोगः कर्म्मयोगश्च सत्प्रतिग्रह एव च ॥
विद्या शिल्पं भृतिः सेवा गोरक्षं विपणिः
कृषिः ।
धृतिर्भैक्षं कुसीदञ्च दश जीवनहेतवः ॥
ब्राह्मणः क्षत्त्रियो वापि वृद्धिं नैव प्रयोजयेत् ।
कामन्तु खलु धर्म्मार्थं दद्यात् पापीयसेऽल्पि-
काम् ॥

तथा तथेमञ्चामुञ्च लोकं
प्राप्नोत्यनिन्दितः ॥
शक्तेनापि हि शूद्रेण न कार्य्यो धनसञ्चयः
।
शूद्रो हि धनमासाद्य ब्राह्मणानेव वाधते ॥
एते चतुर्णां वर्णानामापद्धर्म्माः प्रकीर्त्तिताः
।
यान् सम्यगनुतिष्ठन्तो व्रजन्ति परमां
गतिम् ॥
एष धर्म्मविधिः कृत्स्नश्चातुर्व्वर्णस्य
कीर्त्तितः ।
अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिं
शुभम् ॥”
इति मानवे धर्म्मशास्त्रे भृगुप्रोक्तायां संहि-
तायां दशमोऽध्यायः ॥ * ॥ अन्यत्
वर्णशब्दे
द्रष्टव्यम् ॥

**वर्णनं**, क्ली, (वर्ण स्तुतौ विस्तारे रञ्जनादौ +
ल्युट् ।) स्तवनम् । (यथा, भागवते । १०
।
७४ । ३० ।
“इत्थं निशम्य दमघोषसुतः स्वपीठा-
दुत्थाय कृष्णगुणवर्णनजातमन्युः ।
उत्क्षिप्य बाहुमिदमाह सदस्यमर्षी
संश्रावयन् भगवते परुषाण्यभीतः ॥”)
विस्तरणम् । शुक्लादिवर्णयोजनम् ।
दीपनम् ।
इति वर्णधातोर्भावेऽनट्प्रत्ययेन निष्पन्नम्
॥

**वर्णना**, स्त्री, (वर्ण + णिच् + युच् । टाप् ।)
गुणकथनम् । तत्पर्य्यायः । इडा २ स्तवः
३
स्तोत्रम् ४ स्तुतिः ५ नुतिः ६ श्लाघा ७
प्रशंसा ८ अर्थवादः ९ । इति हेमचन्द्रः ।
२ ।
१६३ ॥ (यथा, कथासरित्सागरे । ३२ ।
१६६ ।
“विदग्धा अपि वर्ण्यन्ते विटवर्णवया
स्त्रियः ॥”)

**वर्णनीयं**, त्रि, (वर्ण + कर्म्मणि अनीयर् ।)

"वर्णनीया यथायोगं साङ्गोपाङ्गा अमी
इह ॥")
वर्ण्याः पदार्था यथा, --
"अथ वर्ण्यानि कथ्यन्ते तानि यानि कवी-
श्वरैः ।
महाकाव्यप्रभृतिषु प्रबन्धेषु बवन्धिरे ॥
राजा राजबधूपुरोहितकुमारामात्यसेवाधिपाः
देशग्रामपुरीसरोऽब्धिसरिदुद्यानाद्रियरण्या-
श्रमाः ।
मन्त्रो दूतरणप्रयाणमृगयाश्वेभर्त्विनेन्दूदया
वीहारो विरहः स्वयंवरसुरा पुष्पाम्बुखेला
रतम् ॥"
इति कविकल्पलतायाम् १ स्तवके ३ कुसु-
मम् ॥ (स्तवार्हः । वर्णधात्वर्थदर्शनात् । यथा,
भागवते । ३ । २२ । ३७ ।
"एतत्ते आदिराजस्य मनोश्चरितमद्भुतम् ।
वर्णितं वर्णनीयस्य तदपत्योदयं शृणु ॥")

**वर्णपात्रं**, क्ली, (वर्णस्य पात्रम् ।) चित्रकारस्य
नील्यादिरागस्याधारः । यथा, --
"मल्लिका वणपात्रं स्यात् तूलिका लेख्य-
कूर्च्चिका ॥"
इति शब्दमाला ॥

**वर्णपुष्पकः**, पुं, (वर्णवन्ति नानावर्णानि पुष्पाणि
यस्य । कप् ।) राजतरुणीपुष्पवृक्षः । इति
राजनिर्घण्टः ॥

**वर्णपुष्पी**, स्त्री, (वर्णवन्ति पुष्पाणि यस्याः ।
ङीष् ।) उष्ट्रकाण्डीपुष्पवृक्षः । इति राज-
निर्घण्टः ॥

**वर्णप्रसादनं**, क्ली, (वर्णस्य प्रसादनं यस्मात् ।)
अगुरु । इति राजनिर्घण्टः ॥

**वर्णमाता**, स्त्री, (वर्णस्य मातेव ककाराद्यक्षर-
प्रसूत्वात् ।) लेखनी । इति हारावली ॥

**वर्णमातृका**, स्त्री, (वर्णानां वर्णमालानां मातृ-
केव ।) सरस्वती । इति शब्दरत्नावली ॥

**वर्णमाला**, स्त्री, जातिमाला । (वर्णानां माला
दीनाञ्च वर्णाणां अन्तिमवर्णं सानुस्वारं
कृत्वा पूर्ब्बमुच्चार्य्य मन्त्रजपः कार्य्यः ।
अनेन
प्रकारेणाष्टोत्तरशतसंख्यो जपो भवति ।
अन्त-
र्यजनमित्युपलक्षणम् ।
"सबिन्दुं वर्णमुच्चार्य्य पश्चान्मन्त्रं जपेत्
सुधीः ।
अकारादिक्षकारान्तं बिन्दुयुक्तं विभाव्य
च ॥
वर्णमाला समाख्याता
अनुलोमविलोमिका ।
क्षकारं मेरमेवात्र तत्र मन्त्रं जपेन्नहि ॥"
इति नारदीयवचनात् ॥
प्रकारान्तरं विशुद्धेश्वरे ।
"अनुलोमविलोमेन वर्गाष्टकविभेदतः ।
मन्त्रेणान्तरितान् वर्णान् वर्णेनान्तरितान्
मनून् ॥
कुर्य्याद्वर्णमयीं मालां
सर्व्वतन्त्रप्रकाशिनीम् ।
चरमार्णं मेरुरूपं लङ्घनं नैव कारयेत् ॥"
इति तन्त्रसारः ॥
अपि च ।
"अनुलोमविलोमेन क्लृप्तया वर्णमालया ।
आदिलान्तलादि आन्तक्रमेण
परमेश्वरि ! ।
क्षकारं मेरुरूपञ्च लङ्घयेन्न कदाचन ॥"
इति मुण्डमालातन्त्रम् ॥

**वर्णरेखा**, स्त्री, (वर्णा लिख्यन्तेऽनयेति । लिख +
करणे घञ् । रलयोरैक्यम् ।) कठिनी ।
इति त्रिकाण्डशेः ॥

**वर्णलेखा**, स्त्री, (वर्णा लिख्यन्तेऽनयेति । लिख +
करणे घञ् । रलयोरैक्यम् ।) कठिनी ।
इति त्रिकाण्डशेः ॥

**वर्णलेखिका**, स्त्री, (वर्णलेखा + स्वार्थे कन् ।
टापि
अत इत्वम् ।) कठिनी । इति रत्नमाला
॥

अजात्या इत्यत्र अयाज्या इत्यपि पाठः
।
"स्वर्णकारः स्वर्णचौर्य्यात् ब्राह्मणानां
द्विजो-
त्तम ।
बभूव सद्यः पतितो ब्रह्मशापेन कर्म्मणा
॥
सूत्रधारो द्विजातीनां शापेन पतितो
भुवि ।
शीघ्रञ्च यज्ञकाष्ठञ्च न ददौ तेन हेतुना ॥
व्यतिक्रमेण चित्राणां
सद्यश्चित्रकरस्तथा ।
पतितो ब्रह्मशापेन ब्राह्मणानाञ्च कोपतः
॥
कश्चिद्वणिग्विशेषश्च संसर्गात्
स्वर्णकारिणः ।
स्वर्णचौर्य्यादिदोषेण पतितो
ब्रह्मशापतः ॥
कुलटायाञ्च शूद्रायां चित्रकारस्य
वीर्य्यतः ।
बभूवाट्टालिकाकारः पतितो जारदोषतः
॥
अट्टालिकाकारवीर्य्यात् कुम्भकारस्य
योषिति ।
बभूव कोटिकः सद्यः पतितो
गृहकारकः ॥
कुम्भकारस्य वीर्य्येण सद्यः
कोटिकयोषिति ।
बभूव तैलकारश्च कुटिलः पतितो भुवि
।
सद्यः क्षत्त्रियवीर्य्येण राजपुत्त्रस्य
योषिति ।
बभूव तीवरश्चैव पतितो जारदोषतः ॥
तीवरस्य तु वीर्य्येण तैलकारस्य
योषिति ।
बभूव पतितो दस्युर्लेटश्च परिकीर्त्तितः
॥
लेटस्तीवरकन्यायां जनयामास
षण्णरान् ।

समूहः ।) अक्षरश्रेणी । तत्र संस्कृतवर्णाः ५० जपमालायाम् ५१ । इङ्गरेजीयवर्णाः २६ । फरासीयाः २३ । हिव्रू अर्थात् इहु-दीयाः २२ । आरवीयाः २८ । पारसीयाः ३१ । तुरस्कीयाः ३३ । रुशीयाः ४१ । ग्रिक् अर्थात् इयुनानीयाः २४ । लाटिन्देशीयाः २२ । डच् अर्थात् ओलन्दाजीयाः २६ । स्पान्देशीयाः २७ । इटालिदेशीयाः २० । तातारीयाः २०२ । ब्रह्मदेशीयाः १९ । चीनदेशीयवर्णाः शब्दा-त्मकाः तच्छब्दसंख्याः ८०००० ॥ * ॥ अका-रादिक्षकारान्तवर्णरूपैकपञ्चाशज्जपमाला । यथा, सनत्कुमारसंहितायाम् ।
"क्रमोत्क्रमगतैर्माला मातृकार्णैः क्षमेरुकैः ।
सबिन्दुकैः साष्टवर्गैरन्तर्यजनकर्म्मणि ॥"
आदि कु चु टु तु पु यु शवोऽष्टौ वर्गाः प्रकी-र्त्तिताः । अकारादिवर्णान् सबिन्दून् प्रत्येकं कृत्वा शतं संजप्य अकारादीनां कवर्गा-

**वर्णवती**, स्त्री, (वर्णोऽस्त्यस्यामिति । वर्ण + "रसा-
दिभ्यश्च ।" ५ । २ । ९५ । इति मतुप् । मस्य
वः ।) हरिद्रा । इति जटाधरः ॥
वर्णविशिष्टे,
त्रि ॥

**वर्णविलोडकः**, पुं, (वर्णान् विलोडयतीति । वि +
लोडि + ण्वुल् ।) श्लोकस्तेनः ।
सन्धिचौरः ।
इति मेदिनी । के, २३६ ॥

**वर्णसङ्करः**, पुं, (वर्णतो ब्राह्मणादिभ्यः वर्णानां
वा सङ्करो मिश्रणं यत्र ।) मिश्रितजातिः ।
तद्विवरणं यथा, --
"बभूवुर्ब्रह्मणो वक्त्रादन्या ब्राह्मणजातयः ।
ब्रह्मणो बाहुदेशाच्च जाताः
क्षत्त्रियजातयः ॥
ऊरुदेशाच्च वैश्याश्च पादतः
शूद्रजातयः ।
तासां सङ्करजातेन बभूवुर्व्वर्णसङ्कराः ॥
गोपनापितलीलाश्च तथा मोदकमूलवौ ।
ताम्बूलिपर्णकारौ च तथा बणिकजातयः ॥"
लीलास्थाने भाला इति मूलवस्थाने
कूवर इति
च पाठः ।
"इत्येवमाद्या विप्रेन्द्र ! सच्छूद्राः
परिकीर्त्तिताः ।
शूद्राविशोस्तु करणोऽम्बष्टो
वैश्याद्विजन्मनोः ॥
विश्वकर्म्मा च शूद्रायां वीर्य्याधानं चकार
सः ।
ततो बभूवुः पुत्त्राश्च नवैते
शिल्पकारिणः ॥
मालाकारः कर्म्मकारः शङ्ककारः
कुविन्दकः ।
कुम्भकारः कंसकारः षडेते शिल्पिनां
वराः ॥
सूत्रधारश्चित्रकरः स्वर्णकारस्तथैव च ।
माल्लं मल्लं मातरञ्च भडं कोलञ्च कन्दरम्
॥"
कन्दरस्थाने कलन्दर इति वा पाठः ।
"ब्राह्मण्यां शूद्रवीर्य्येण पतितो
जारदोषतः ।
सद्यो बभूव चाण्डालः
सर्व्वस्मादधमोऽशुचिः ॥
तीवरेणैव चाण्डाल्यां चर्म्मकारो बभूव
ह ।
चर्म्मकार्य्याञ्च चाण्डालात् मांसच्छेदी
बभूव ह ॥
मांसच्छेद्यां तीवरेण कोँचश्च
परिकीर्त्तितः ।
कोँचस्त्रियान्तु कैवर्त्तात् काण्डारः
परिकीर्त्तितः ॥
सद्यश्चाण्डालकन्यायां लेटवीर्य्येण
शौनक !
बभूवतुस्तौ द्वौ पुत्त्रौ हड्डिकशौण्डिकौ
तथा ॥"
हड्डिकशौण्डिकावित्यत्र दुष्टौ हड्डिडमौ
इत्यपि
पाठः ।
"क्रमेण हड्डिकन्यायां
सद्यश्चाण्डालवीर्य्यतः ।
बभूवुः पञ्चपुत्त्राश्च भ्रष्टा वनचराश्च ते
॥
लेटात्तीवरकन्यायां गङ्गातीरे च शौनक
।
बभूव सद्यो यो बालो गङ्गापुत्त्रः
प्रकीर्त्तितः ॥
गङ्गापुत्त्रस्य कन्यायां वीर्य्येण
वेशधारिणः ।
बभूव वेशधारी च पुत्त्रो युङ्गी
प्रकीर्त्तितः ॥
वैश्यात्तीवरकन्यायां सद्यः शुण्डी बभूव
ह ।
शुण्डीयोषिति वैश्यात्तु पौण्ड्रकश्च
प्रकीर्त्तितः ॥
क्षत्त्रात् करणकन्यायां राजपुत्त्रो बभूव
ह ।
राजपुत्त्र्यान्तु करणादागवीति
प्रकीर्त्तितः ॥

|  |  |  |
|---|---|---|
|  | पतितास्ते ब्रह्मशापादजात्या वर्णसङ्कराः ॥” | क्षत्त्रवीर्य्येण वैश्यायां कैवर्त्तः परिकीर्त्तितः ।<br>कलौ तीवरसंसर्गाद्धीवरश्च प्रकीर्त्तितः ॥”<br>प्रकीर्त्तित इत्यत्र पतितो भुवि इति वा पाठः ।<br>“तीवर्य्यां धीवरात् पुत्त्रो बभूव रजकः स्मृतः ।<br>रजक्यां तीवराच्चापि कोदाली च बभूव ह ॥<br>नापिताद्गोपकन्यायां सर्व्वस्वी तस्य योषिति ।<br>क्षत्त्राद्बभूव व्याधश्च वलवान् मृगहिंसकः ॥<br>तीवरात् शुण्डिकन्यायां बभूवुः सप्त पुत्त्रकाः ।<br>ते कलौ हड्डिसंसर्गाद्बभूवुर्दस्यवः सदा ॥ |

ब्राह्मण्यामृषिवीर्य्येण ऋतोः
प्रथमवासरे ।
कुत्सितश्चोदरे जातः कूदरस्तेन
कीर्त्तितः ॥
तदशौचं विप्रतुल्यं पतित ऋतुदोषतः
।
सद्यः कोटिकसंसर्गादधमो जगतीतले
॥
क्षत्रवीर्य्येण वैश्यायामृतोः
प्रथमवासरे ।
जातः पुत्त्रो महादस्युर्ब्बलवांश्च
धनुर्द्धरः ॥
चकार वागतीतञ्च क्षत्त्रियो
वारितस्तया ।
तेन जात्या स पुत्रश्च वागतीतः
प्रकीर्त्तितः ॥
क्षत्रवीर्य्येण शूद्रायामृतुदोषेण पापतः
।
बलवत्यो दुरन्ताश्च
बभूवुर्म्लेच्छजातयः ॥
अविद्धकर्णाः क्रूराश्च निर्भया
रणदुर्ज्जयाः ।
शौचाचारविहीनाश्च दुर्द्धर्षा
धर्म्मवर्ज्जिताः ॥
म्लेच्छात् कुविन्दकन्यायां
जोलाजातिर्ब्बभूव ह ।
जोलात् कुविन्दकन्यायां शराकः
परिकीर्त्तितः ॥
वर्णसङ्करदोषेण बह्व्यश्च शठजातयः
।
तासां नामानि संख्याञ्च को वा वक्तुं
द्विज
क्षमः ॥
वैद्योऽश्विनीकुमारेण जातश्च
विप्रयोषिति ।
वैद्यवीर्य्येण शूद्रायां बभूवुर्व्वहवो
जनाः ॥
ते च ग्राम्यगुणज्ञाश्च
मन्त्रौषधिपरायणाः ।

ताननन्तरनाम्नस्तु मातृदोषात् प्रचक्षते ॥
ब्राह्मणादुग्रकन्यायामावृतो नाम जायते ।
आभीरोऽम्बष्ठकन्यायामायोगव्यान्तुधिग्वणः
॥
आयोगवश्च क्षत्ता च चण्डालश्चाधमो
नृणाम् ।
प्रातिलोम्येन जायन्ते शूद्रादपसदास्त्रयः ॥
वैश्यान्मागधवैदेहौ क्षत्रियात् सूत एव तु ।
प्रतीपमेते जायन्ते परेऽप्यपसदास्त्रयः ॥
जातो निषादाच्छूद्रायां जात्या भवति
पुक्कसः ।
शूद्राज्जातो निषाद्यान्तु स वै कुक्कुटकः
स्मृतः ॥
क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्त्यते ।
वैदेहकेन त्वम्बष्ठ्यामुत्पन्नो वेण उच्यते ॥
द्विजातयः सवर्णासु जनयन्त्यव्रतांस्तु यान् ।
तान् सावित्रीपरिभ्रष्टान् व्रात्या इति विनि-
र्द्दिशेत् ॥
व्रात्यात्तु जायते विप्रात् पापात्मा
भूर्जकण्ठकः ।
आवन्त्यवाटधानौ च पुष्पधः शेख एव च ॥
झल्लो मल्लश्च राजन्यात् व्रात्यान्निच्छिविरेव
च ।
नटश्च करणश्चैव खशो द्रविड एव च ॥
वैश्यात्तु जायते व्रात्यात् सुधन्नाचार्य्य एव च
।
कारुषश्च विजन्मा च मैत्रः सात्वत एव च ॥
व्यभिचारेण वर्णानामवेद्यावेदनेन च ।
स्वकर्म्मणाञ्च त्यागेन जायन्ते वर्णसङ्कराः ॥
* ॥
सङ्कीर्णयोनयो ये तु प्रतिलोमानुलोमजाः ।
अन्योन्यव्यतिषक्ताश्च तान्
प्रवक्ष्याम्यशेषतः ॥
सूतो वैदेहकश्चैव चण्डालश्च नराधमः ।
मागधः क्षत्तृजातिश्च तथायोगव एव च ॥
एते षट् सदृशान् वर्णान् जनयन्ति स्वजोनिष
।
मातृजात्यां प्रसूयन्ते प्रवरासु च योनिषु ॥
यथा त्रयाणां वर्णानां द्वयोरात्मस्य जायते ।

श्मशानगोचरं सूते बाह्यानामपि गर्हितम् ॥
सङ्करे जातयस्त्वेताः पितृमातृप्रदर्शिताः ।
प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्म्मभिः
॥
स्वजातिजानन्तरजाः षट्सु ता द्विजधर्म्मिणः ।
शूद्राणान्तु सधर्म्माणः सर्व्वेऽपध्वंसजाः स्मृताः
॥
तपोबीजप्रभावैस्तु ते गच्छन्ति युगे युगे ।
उत्कर्षञ्चापकर्षञ्च मनुष्येष्विह जन्मतः ॥
शनकैस्तु क्रियालोपादिमाः क्षत्त्रियजातयः ।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ॥
पोण्ड्रकाश्चोड्रद्रविडाः काम्बोजा जवनाः शकाः
।
पारदाः पह्नवाश्चीनाः किराताः दरदाः खशाः ॥
मुखबाहूरुपज्जानां या लोके जातयो वहिः ।
म्लेच्छवाचश्चार्य्यवाचः सर्व्वे ते दस्यवः स्मृताः
॥
ये द्विजानामपसदा ये चाप्यध्वंसजाः स्मृताः ।
ते निन्दितैर्वर्त्तयेयुर्द्विजानामेव कर्म्मभिः ॥ * ॥
सूतानामश्वसारथ्यमम्बष्ठानांचिकित्सितम् ।
वैदेहकानां स्त्रीकार्य्यं मागधानां बणिक्पथः ॥
मत्स्यघातो निषादानां तष्टिस्त्वायोगवस्य च ।
मेदान्ध्रचुञ्चुमद्गूनामारण्यपशुह्सिनम् ॥
क्षत्त्रुग्रपुक्कसानान्तु विलौकोबधबन्धनम् ।
धिग्वणानां चर्म्मकार्य्यं वेणानां भाण्डवादनम् ॥
चैत्यद्रुमश्मशानेषु शैलेषूपवनेषु च ।
वसेयुरेते विज्ञाना वर्त्तयन्तः स्वकर्म्मभिः ॥ * ॥
चण्डालश्वपचानान्तु वहिर्ग्रामात् प्रतिश्रयः ।
अपपात्राश्च कर्त्तव्या धनमेषां श्वगर्दभम् ॥
वासांसि मृतचेलानि भिन्नभाण्डेषु भोजनम् ।
कार्ष्णायसमलङ्कारः परिव्रज्या च नित्यशः ॥
न तैः समयमन्विच्छेत् पुरुषो धर्म्ममाचरन् ।
व्यवहारो मिथस्तेषां विवाहः सदृशैः सह ॥
अन्नमेषां पराधीनं देयं स्याद्भिन्नभाजने ।
रात्रौ न विचरेयुस्ते ग्रामेषु नगरेषु च ॥
दिवा चरेयुः कार्य्यार्थं चिह्निता राजशासनैः ।
अबान्धवं शवञ्चैव निर्हरेयुरिति स्थितिः ॥
वध्यांश्च हन्युः सततं यथाशास्त्रं नृपाज्ञया ।
वध्यवासांसि गृह्णीयुः शय्याश्चाभरणानि च ॥
वर्णपितमविज्ञातं नरं कलुषयोनिजम् ।

तेभ्यश्च जाताः शूद्रायां ते
व्यालग्राहिणो
भुवि ॥”
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १०
अध्यायः ॥ * ॥
अपि च ।
“अयं द्बिजैर्हि विद्वद्भिः पशुधर्म्मो
विगर्हितः ।
मनुष्याणामपि प्रोक्तो वेणे राज्यं
प्रशासति ॥
म महीमखिलां भुञ्जन् राजर्षिप्रवरः
पुरा ।
वर्णानां सङ्करं चक्रे कामोपहतचेतसः
॥
ततः प्रभृति यो मोहात् प्रमीतपतिकां
स्त्रियम् ।
नियोजयत्यपत्यार्थं तं विगर्हन्ति
साधवः ॥ * ॥
ब्राह्मणः क्षत्त्रियो वैश्यस्त्रयो वर्णा
द्बिजातयः ।
चतुर्थ एकजातिस्तु शूद्रो नास्ति तु
पञ्चमः ॥
सर्व्ववर्णेषु तुल्यासु
पत्नीष्वक्षतयोनिषु ।
आनुलोम्येन सम्भूता जात्या ज्ञेयास्त
एव ते ॥
स्त्रीष्वनन्तरजातासु द्बिजैरुत्पादितान्
सुतान् ।
सदृशानेव तानाहुर्मातृदोषविगर्हितान्
॥
अनन्तरासु जातानां विधिरेष
सनातनः ।
द्व्येकान्तरासु जातानां धर्म्यं
विद्यादमु
विधिम् ॥
ब्राह्मणात् वैश्यकन्यायामम्बष्ठो नाम
जायते ।
निषादः शूद्रकन्यायां यः पारशव
उच्यते ॥
क्षत्त्रियाच्छूद्रकन्यायां
क्रूराचारविहारवान् ।
क्षत्त्रशूद्रवपुर्जन्तुरुग्रो नाम प्रजायते ॥
आनन्तर्य्यात्स्वयोन्यान्तुतथा बाह्येष्वपि
क्रमात् ॥
ते चापि वाह्यान् सुबहूं स्ततोऽप्यधिकदूषि-
तान् ।
परस्परस्य दारेषु जनयन्ति विगर्हितान् ॥ *
॥
यथैव शूद्रो ब्राह्मण्यां बाह्यं जन्तुं प्रसूयते ॥
तथा बाह्यतरं बाह्यश्चातुर्वर्णे प्रसूयते ।
प्रतिकूलं वर्त्तमाना बाह्याबाह्यतरान् पुनः ।
हीना हीनान् प्रसूयन्ते वर्णान् पञ्चदशैव तु ॥
प्रसाधनोपचारज्ञमदासंदासजीवनम् ।
सैरिन्ध्रं वागुरावृत्तिं सूते दस्युरयोगवे ॥
मैत्रेयकन्तु वैदेहो माधूकं संप्रसूयते ।
नॄन् प्रशंसत्यजस्रं यो घण्टाताडोऽरुणोदये ॥
निषादो मार्गवं सूते दासं नौकर्म्मजीविनम् ।
कैवर्त्तमिति यं प्राहुरार्य्यावर्त्तनिवासिनः ॥
मृतवस्त्रभृत्सु नारीषु गर्हितान्नाशनासु च ।
भवन्त्यायोगवीष्वेते जातिहीनाः पृथक्त्रयः
॥
कारावरो निषादात्तु चर्म्मकारः प्रसूयते ।
वैदेहकादन्ध्रमेदौ बहिर्ग्रामप्रतिश्रयौ ॥
चण्डालात्
पाण्डुसोपाकस्त्वक्सारव्यवहारवान् ।
आहिण्डिको निषादेन वैदेह्यामेव जायते ॥
चण्डालेन तु सोपाको मूलव्यसनवृत्तिमान् ।
पुक्कस्याम् जायते पापः सदा
सज्जनगर्हितः ॥
निषादस्त्री तु चण्डालात्
पुत्त्रमन्त्यावसायिनम् ।
आर्य्यरूपमिवानार्य्यं कर्म्मभिः स्वैर्विभावयेत् ॥
अनार्य्यतानिष्ठुरताक्रूरतानिष्क्रियात्मताः ।
पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम् ॥
पित्र्यं वा भजते शीलं मातुर्व्वोभयमेव वा ।
न कथञ्चनदुर्य्योनिः प्रकृतिं स्वां नियच्छति ॥
कुले मुख्येऽपि जातस्य यस्य स्याद्योनिसङ्करः ।
संश्रयत्येव तच्छीलं नरोऽल्पमपि वा बहु ॥
यत्र त्वेतेऽपिविध्वंसा जायन्ते वर्णदूवकाः ।
राष्ट्रिकैः सह तद्राष्ट्रं क्षिप्रमेव विनश्यति ॥
ब्राह्मणार्थे गवार्थे वा देहत्यागोऽनुपस्कृतः ।
स्त्रीबालाभ्युपपत्तौ च बाह्यानां सिद्धिकारणम् ॥
अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
एतं सामासिकं धर्म्मं चातुर्व्वर्ण्येऽब्रीन्मनुः ॥ * ॥
शूद्रायां ब्राह्मणाज्जातः श्रेयसा चेत् प्रजायते ।
अश्रेयान् श्रेयसीं जातिं गच्छत्यासप्तमाद्युगात् ॥
शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम् ।

| | | |
|---|---|---|
| विप्रस्य त्रियु वर्णेषु नृपतेर्व्वर्णयोर्द्वयोः ।<br>वैश्यस्य वर्णे चैकस्मिन्<br>षडेतेऽपसदाः स्मृताः ॥ *<br>क्षत्त्रियाद्विप्रकन्यायां सूतो भवति जातितः ।<br>वैश्यान्मागधवैदेहौ राजविप्राङ्गनासुतौ ॥<br>शूद्रादाथोगवः क्षत्ता चण्डालश्चाधमो नृणाम् ।<br>वैश्यराजन्यविप्रासु जायन्ते वर्णसङ्कराः ॥<br>एकान्तरे त्वानुलोम्यादम्बष्ठोग्रौ यथा स्मृतौ ।<br>क्षत्तृवैदेहकौ तद्वत् प्रातिलोम्येऽपि जन्मनि ॥ * ॥<br>पुत्त्रा येऽनन्तरञ्जीजाः क्रमेणोक्ता द्विजन्मनाम् । | | |

क्षत्त्रियाज्जातमेवन्तु विद्याद्वैश्यात्तथैव च ॥
अनार्य्यायां समुत्पन्नो ब्राह्मणात्तु यदृच्छया ।
ब्राह्मण्यामप्यनार्य्यात्तु श्रेयस्त्वं क्वेति चेद्भवेत् ॥
जातो नार्य्यामनार्य्यायामार्य्यादार्य्योभवेद्-
गुणैः ।
जातोऽप्यनार्य्यादार्य्यायामनार्य्यइति निश्चयः ॥
तावुभावप्यसंस्कार्य्याविति धर्म्मो व्यवस्थितः ।
वैगुण्याज्जन्मनः पूर्ब्ब उत्तरः प्रतिलोमतः ॥
सुबीजञ्चैव सुक्षेत्रे जातं सम्पद्यते यथा ।
तथार्य्याज्जात आर्य्यायां सर्व्वं संस्कारमर्हति ॥
बीजमेके प्रशंसन्ति क्षेत्रमन्ये मनीषिणः ।
बीजक्षेत्रे तथैवान्ये तत्रेयन्तु व्यवस्थितिः ॥
अक्षेत्रे बीजमुत्सृष्टमन्तरैव विनश्यति ।
अबीजकमपि क्षेत्रं केवलं स्थण्डिलं भवेत् ॥
यस्माद्बीजप्रभावेण तिर्य्यग्जा ऋषयोऽभवन् ।
पूजिताश्च प्रशस्ताश्च तस्माद्बीजं प्रशस्यते ॥
अनार्य्यमार्य्यकर्म्माणमार्य्यञ्चानार्य्यकर्म्मिणम् ।
सम्पधार्य्याब्रवीद्धाता न समौ नासमाविति ॥"
इति मानवे ९ । १० अध्यायौ ॥ * ॥
वर्णसङ्करस्य कारणं दोषाश्च यथा, --
"अधर्म्माभिभवात् कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः ॥
सङ्करो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥
दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः ।
उत्साद्यन्ते जातिधर्म्माः कुलधर्म्माश्च शाश्वताः ॥
उच्छन्नकुलधर्म्माणां मनुष्याणां जनार्द्दन ! ।
नरके नियतं वासो भवतीत्यनुशुश्रुमः ॥"
इति श्रीभगवद्गीतायाम् १ अध्यायः ॥

**वर्णसिः**, पुं, (वृणोति स्थलमिति । वृ ञ आवरणे +
"सानसिवर्णसिपर्णसीति ।" उणा० ४ । १०७ ।
इति असिः धातोर्नुक् च ।) जलम् । इत्युणादि-
कोषः ॥

**वर्णा**, स्त्री, (वृण्यते भक्ष्यते इति । वृणु भक्षणे +
कर्म्मणि घञ् । ततष्टाप् ।) आढकी । इति
हेमचन्द्रः ॥

**वर्णाङ्का**, स्त्री, (वर्णा अङ्क्यन्तेऽनयेति । अङ्क +
करणे घञ् । ततष्टाप् ।) लेखनी । इति

**वर्णार्हः**, पुं, (वर्णमर्हतीति । अर्ह + अण् ।) मुद्गः ।
इति राजनिर्घण्टः ॥

**वर्णि**, क्ली, (वर्ण्यते स्तूयते इति । वर्ण स्तुतौ +
इन् ।) स्वर्णम् । इति
सिद्धान्तकौमुदी ॥
("वर्णेर्वलिश्चाहिरण्ये ।" उणा० ४
। १२३ । इत्युक्तेः
अहिरण्ये तु वलिरित्येव ॥ क्वचित्
पुंलिङ्गोऽपि ॥)

**वर्णिकः**, पुं, (वर्णा लेख्यत्वेन सन्ति अस्येति ।
वर्ण + ठन् ।) लेखकः । यथा, --
"लेखकेऽक्षरपुर्व्वाः
स्युश्चणजवीकचञ्चवः ।
वर्णिको लिपिकरश्चाक्षरन्यासे
लिपिर्लिबिः ॥"
इति हेमचन्द्रः । ३ । १४८ ॥

**वर्णिका**, स्त्री, (वर्णा अक्षराणि लेख्यत्वेन सन्त्यस्या
इति । वर्ण + ठन् + टाप् ।) कठिनी
। यथा, --
"लेखन्यां कर्णिकापि स्यात्
कठिन्यामपि
वर्णिका ॥"
इति हारावली । २६९ ॥
मसिः । इति त्रिकाण्डशेषः ॥
काञ्चनस्य उत्-
कर्षः । यथा, --
"वर्णकाश्चारणेऽस्त्री तु चन्दने च
विलेपने ।
द्वयोर्नील्यादिषु स्त्री स्यादुत्कर्षे
काञ्चनस्य च ॥"
इति मेदिनी । वे, १५२ ॥

**वर्णितः**, त्रि, (वर्ण + क्त ।) स्तुतियुक्तः । तत्-
पर्य्यायः । ईलितः २ शस्तः ३
पणायितः ४

वृत्तित्रयमिदं प्राहुर्मुनयो ज्येष्ठवर्णिनः ॥"
ज्येष्ठवर्णिनो ब्राह्मणस्येत्यर्थः ॥)

**वर्णुः**, पुं, (वृङ संभक्तौ + "अजिवृरीभ्यो निच्च ।"
उणा० ३ । ३८ । इति णुः । स च नित् ।)
नदविशेषः । इत्युणादिकोषः ॥ आदित्यः
।
इति संक्षिप्तसारोणादिवृत्तिः ॥ (देशविशेषः
।
इत्युज्ज्वलदत्तः ॥)

**वर्त्तकं**, क्ली, (वर्त्तते इति । वृत् + ण्वुल् ।) वर्त्त-
लोहम् । इति हेमचन्द्रः ॥ विदरि इति
भाषा ॥
(पूजके, त्रि । यथा, गो ० रामायणे । २ ।
१०७ । १२ ।
"निवेश्य सेनां भरतः पद्भ्यां पादवतां वरः
।
अभिगन्तु स काकुत्स्थमियेष गुरुवर्त्तकः
॥")

**वर्त्तकः**, पुं, (वृत् + ण्वुल् ।) पक्षिविशेषः । भारै
इति भाषा ॥ (यथा, महाभारते । १३ ।
१११ । १०३ ।
"कौशिकन्तु ततो हृत्वा नरो जायति
वर्त्तकः ॥"
अस्य पर्य्यायो गुणाश्च यथा, --
"वर्त्तोको वर्त्तिकश्चित्रस्ततोऽन्या वर्त्तकाः
स्मृताः ।
वर्त्तकोऽग्निकरः शीतो ज्वरदोषत्रयापहः ।
सुरुच्यः शुक्रदो बल्यो
वर्त्तकाल्पगुणास्ततः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये
भागे ॥)
अश्वस्य क्षुरः । इत्यमरः । ३ । ३ । ११
॥

**वर्त्तका**, स्त्री, (वर्त्तक + टाप् । "वर्त्तका शकुनौ
प्राचाम् ।" इति वार्त्तिकोक्त्या न अत
इत्वम् ।)
वर्त्तकपक्षी । इत्यमरटीकायां रायमुकुटः ॥

शब्दरत्नावली ॥

**वर्णाटः**, पुं, (वर्णान् अटतीति । अट् + अच् ।)

गायनः । चित्रकरः । स्त्रीकृतजीवनः । इति मेदिनी । टे, ५५ ॥

**वर्णात्मा**, [न्] पुं, (वर्णः अक्षरं आत्मा स्वरूपं

यस्य ।) शब्दः । इति जटाधरः ॥

**वर्णाधिपः**, पुं, (वर्णानां ब्राह्मणादीनामधिपः ।)

ब्राह्मणक्षत्त्रियवैश्यशूद्राणामधिपतिग्रहः । यथा,
"ब्राह्मणे शुक्रवागीशौ क्षत्त्रिये भौमभास्करौ ।
चन्द्रो वैश्ये बुधः शूद्रे पतिर्म्मन्दोऽन्त्यजे जने ॥"
इति ॥
"स्वाध्याये वेद वर्णाधिप इह शुभदे क्षौरभे नादितौ च ।"
इति च ज्योतिस्तत्त्वम् ॥

पनायितः ५ प्रणुतः ६ पणितः ६ पनितः ८
गीर्णः ९ अभिष्टुतः १० ईडितः ११ स्तुतः १२ ।
इत्यमरः । ३ । २ । ११० ॥ नुतः १३ । इति
जटाधरः ॥ (विस्तारितः । यथा, महाभारते ।
१ । २ । २०९ ।
"चतुर्थमेतद्बिपुलं वैराटं पर्व्व वर्णितम् ॥"
कथितः । यथा, कथासरित्सागरे ।
१९ । ३६ ।
"स्वभर्त्तुस्तच्च न मया दरिद्रस्यापि वर्णितम् ॥")

**वर्णिनी**, स्त्री, (वर्णोऽस्त्यस्या इति । वर्ण + इनिः ।

ङीप् ।) हरिद्रा । इति राजनिर्घण्टः ॥ वनिता ।
इति हेमचन्द्रः । ३ । १६८ ॥

**वर्णी**, [न्] पुं, (वर्णा अक्षराणि लेख्यत्वेन सन्त्य-

स्येति । वर्ण + इनिः ।) लेखकः । (वर्णा नील
पीतादयः लेख्यत्वेन सन्त्यस्येति । इनिः ।) चित्र-
करः । (यथा, महाभारते । १२ । ६९ । ५७ ।
"अङ्गारकुशमुञ्जानां पलाशशरवर्णिनाम् ।
यवसेन्घनदिग्धानां कारयेत च सञ्चयान् ॥" * ॥
वर्ण + "वर्णाद्ब्रह्मचारिणि ।" ५ । २ । १३४ ॥"
इति इनिः ।) ब्रह्मचारी । यथा, --
"वर्णी स्यात् लेखके चित्रकरेऽपि ब्रह्म-
चारिणि ॥"
इति मेदिनी । ने, १२७ ॥
(यथा, कुमारे । ५ । ५२ ।
"सखी तदीया तमुवाच वर्णिनं

**वर्त्तजन्मा**, [न्] पुं, (वर्त्तनि आकाशपथे जन्म

यस्य ।) मेघः । इति शब्दमाला ॥

**वर्त्तनं**, क्ली, (वर्त्ततेऽनेनेति । वृत् + करणे ल्युट् ।)

वृत्तिः । इत्यमरः । २ । ९ । १ ॥ (यथा, भाग-
वते । ७ । ११ । २६ ।
"सम्मार्ज्जनोपलेपाभ्यां गृहमण्डनवर्त्तनैः ।
स्वयञ्च मण्डिता नित्यं परिमृष्टपरिच्छदा ॥")
साधारणवर्त्तुलम् । इति शब्दरत्नावली ॥

**वर्त्तनं**, क्ली, स्त्री, (वर्त्ततेऽनेनेति । वृत् + ल्युट् ।)

तूलनाला । तर्कुपीठः । जीवनम् । इति
मेदिनी । ने, १२६ ॥ (यथा, मार्कण्डेये ।
५० । ७१ ।
"देवतापितृमर्त्त्यानामतिथीनाञ्चवर्त्तनम् ।
यस्यावशिष्टेनान्नेन पुंसस्तस्य गृहं त्यज ॥")

**वर्त्तनः**, पुं, (वर्त्तते इति । वृत् + "अनुदात्तेतश्च

हलादेः ।" ३ । २ । १४९ । इति युच् ।)
वामनः । इति मेदिनी । ने, १२५ ॥ वर्त्तिष्णौ,
त्रि । इत्यमरः । ३ । १ । २९ ॥ (यथा, भाग-
वते । ३ । ११ । २६ ।
"एष दैनन्दिनः सर्गो ब्राह्मस्त्रैलोक्यवर्त्तनः ।
तिर्य्यङ्नृपितृदेवानां सम्भवो यत्र कर्म्मभिः ॥")

**वर्त्तनिः**, पुं, पूर्व्वदेशः । इति त्रिकाण्डशेषः ॥

(स्त्री, वर्त्ततेऽनयेति । वृत् + "वृतेश्च ।" उणा०
२ । १०७ । इति अनिः । पन्थाः । इत्युज्ज्वल-
दत्तः ॥)

**वर्त्तनी**, स्त्री, (वर्त्तनि + कृदिकारादिति पक्षे ङीष् ।)

पन्थाः । पेषणम् । इति शब्दरत्नावली ॥

| | निबोध साधो ! तव चेत् कुतूहलम् ॥”)<br>वर्णविशिष्टे, त्रि ॥ (वर्णोत्तरपदात् तु “धर्म्मशील-<br>वर्णान्ताच्च ।” ५ । २ । १३२ ।<br>इति इनिः स्यात् ।<br>यथा, कामन्दकीये नीतिसारे । २ । १९ ।<br>“याजनाध्यापने शुद्धे विशुद्धाच्च प्रतिग्रहः । | |
|---|---|---|

**वर्त्तमानः**, पुं, (वर्त्तते इति । वृत् + शानच् । मुक् ।)

प्रयोगाधिकरणीभूतकालः । इति
नैयायिकाः ॥
तत्कालवृत्ते, त्रि । तयोः पर्य्यायौ ।
अद्यतनः २
अधुनातनः ३ । इति राजनिर्घण्टः
॥ वैया-
करणमते तु ।
आरब्धापरिसमाप्तिर्व्वर्त्तमानः
कालः । यथा । महाभारतं पठति ।
स तु
चतुर्व्विधः । यथा, --
"प्रवृत्तोपरतश्चैव वृत्ताविरत एव च
।
नित्यप्रवृत्तः सामीप्यो
वर्त्तमानश्चतुर्व्विधः ॥"
क्रमेणोदाहरणानि । मांसं न खादति
आदौ
प्रवृत्तं मांसभोजनं निवर्त्तयति
इत्यर्थः । इह
कुमाराः क्रीडन्ति
तदानीन्तनक्रीडनाभावेऽपि
पूर्ब्बक्रीडानां बुद्धौ वर्त्तमानत्वात् ।
पर्व्वता-
स्तिष्ठन्ति नित्यप्रवृत्तत्वात् । किञ्च
पर्व्वतानां
स्थितत्वे वर्त्तमानत्वेऽपि
मूतभविष्यत्कालाभ्यां
सम्बन्धविवक्षया पर्व्वतास्तस्थुः
स्थास्यन्ति इत्यपि
स्यात् । सामीप्यो द्विविधः ।
भूतसामीप्यो भविष्यत्-
सामीप्यश्च । भूतसामीप्ये यथा ।
कदा आगतो-
ऽसि इति प्रश्ने
अध्वस्वेदादेर्व्वर्त्तमानत्वात् एषो-
ऽहमागच्छामि इति आगतोऽपि
वदति । भवि-

(वर्त्ततेऽनयेति । वृत् + "वृतेश्छन्दसि ।" उणा० ४ । १४० । इति इः । बाहुलकात् लोकेऽपि । योगकर्म्मद्रव्यम् । इत्युज्ज्वलदत्तः ॥)

**वर्त्तिकः**, पुं, पक्षिविशेषः । वटेर इति हिन्दी

भाषा । तत्पर्य्यायः । वार्त्तिकः २ वर्त्ती ३
गाञ्जिकायः ४ । अस्य मांसगुणाः ।
"तद्वच्च वार्त्तकं मांसं निर्द्दोषं वीर्य्यपुष्टिदम् ।"
तद्वत् तित्तिरवत् । इति राजनिर्घण्टः ॥

**वर्त्तिका**, स्त्री, वर्त्तकपक्षी । इत्यमरः ॥ वर्त्मनि

वर्त्तत इत्यच् वर्त्तः । स्वार्थे कः वर्त्तकः । भारै
इति ख्यातः । वृतिलतिभ्वां तिकः वर्त्तिका
स्त्रीलिङ्गा । वाट्भार इति ख्याता । नाम-
द्वयमिदमित्यमरदीपिका । वर्त्तिकेति स्त्रिया-
मीत्वप्रतिषेधार्थं द्वयोरुपादानमिति माधवी ।
रूपभेदप्रदर्शनार्थमिति रायमुकुटः । इति
तट्टीका सारसुन्दरी ॥ सा च वटेर पक्षी इति
नाम्ना ख्याता । अस्या मांसगुणाः ।
"वर्त्तिका मधुरा रूक्षा कफमारुतनाशिनी ॥"
इति राजवल्लभः ॥
अजशृङ्गी । इति राजनिर्घण्टः ॥ (वर्त्ति +
स्वार्थे कन् । टाप् ।) वर्त्तिः । वाति इति शलिता
इति पलिता इति च भाषा । इत्युणादि-
कोषः ॥ * ॥ सा पञ्चविधा । यथा, --
"पद्मसूत्रभवा दर्भगर्भसूत्रभवाथवा ।
शालजा वादरी वापि फलकोषोद्भवाथवा ।
वर्त्तिका दीपकृत्येषु सदा पञ्चविधा स्मृता ॥"
इति कालिकापुराणे ६८ अध्यायः ॥

**वर्त्तिष्णुः**, त्रि, (वर्त्तते इति । वृत + "अलङ्कृञ्

निराकृञ्प्रजनोत्पचोत्पतन्मदरुच्यपत्रपवृतुवृधु
सहचर इष्णुच् ।" ३ । २ । १३६ । इति
इष्णुच् ।) वर्त्तनशीलः । तत्पर्य्यायः । वर्त्तनः ।
इत्यमरः । ३ । १ । २९ ॥ वर्त्ती । इति हेम-
चन्द्रः । ३ । ५३ ॥ (यथा, भट्टौ । ५ । १ ।
"निराकरिष्णू वर्त्तिष्णू वर्द्धिष्णू परितो रणम् ।
उत्पतिष्णू सहिष्णू च चेरतुः खरदूषणौ ॥")

**वर्त्तिष्यमाणः**, त्रि, (वृत् + भविष्यति स्यमान-

प्रत्ययः ।) भविष्यत्कालादिः । वर्त्तमानप्राग-

मण्डलायितम् ४ । इति शब्दरत्नावली ॥ *
॥
(यथा, भागवते । ५ । १६ । ५ ।
"यो वा अयं द्वीपः
कुवलयकमलकोशाभ्यन्तर-
नियुतयोजनविशालः समवर्त्तुलो यथा
पुष्कर-
पत्रम् ॥") सम्पूर्णगर्भवृत्तानि यथा, --
"सम्पूर्णगर्भवृत्तानि मुखपद्मेन्दुदर्पणाः ।
चक्रावहट्टतिलकमृदङ्गपुटशायकाः॥
आवर्त्तः कमठो लूतागृहं छत्रमपूपकम् ।
आलबालमहीजालचर्म्मकं शाणकादयः ॥"
* ॥
वृत्तानि यथा, --
"वृत्तानि बाहुनारङ्गस्कन्धधम्मिल्लमोदकाः।
रथाङ्गलावककुक्कुम्भिकुम्भाण्डकादयः ॥
कर्णपाशभुजापाशाकृष्टचापघटाननम् ।
मुद्रिकापरिखायोगपट्टहारस्रगादयः॥"
इति कविकल्पलतायाम् २ श्लेषस्तवके ३
कुसु-
मम् ॥

**वर्त्तुलं**, क्ली, गृञ्जनम् । इति राजनिर्घण्टः ॥

**वर्त्तुलः**, पुं, कलायविशेषः । वाटुला । इति भाषा ।

यथा, --
"कलायस्य त्रयो भेदा स्त्रिपुटो वर्त्तुलोऽङ्कटी
।"
इति शब्दमाला ॥

**वर्त्तुला**, स्त्री, (वर्त्तुल + टाप् ।) तर्कुपाठी ।

इति हारावली । २१३ ॥ टेकोर वाँटुल इति
भाषा ॥

**वर्त्तुली**, स्त्री, (वर्त्तुल + गौरादित्वात् ङीष् ।)

गजपिप्पली । इति राजनिर्घण्टः ॥ (विवरण-
मस्या गजपिप्पलीशब्दे ज्ञातव्यम् ॥)

**वर्त्म**, [न्] क्ली, (वर्त्ततेऽनेनास्मिन् वेति । वृत् +

मनिन् ।) पन्थाः । इत्यमरः । २ । १ । १५
॥
(यथा, ऋग्वेदे । १ । ८५ । ३ ।

ष्यत् सामीप्ये यथा । कदा
गमिष्यसि इति प्रश्ने
एषोऽहं गच्छामि इति
गमनक्रियमाणोद्यमो-
ऽपि वदति । इति मुग्धबोधटीकायां
दुर्गादासः ॥

**वर्त्तरूकः**, पुं, (वर्त्तो वर्त्तनं राति गृह्णातीति ।

रा + वाहुलकात् ऊकः ।) नदीभेदः
। काक-
नीडः । जलावटः । इति मेदिनी ।
के, २१२ ॥
द्वारपालः । यथा, --
"मन्त्री ग्रन्थिहरोऽमात्यो द्वाःस्थितो
वेत्रधारकः ।
दौःसाधिको वर्त्तरूको गर्व्वाटो
दण्डवासिनि ॥"
इति त्रिकाण्डशेषः ॥

**वर्त्तलोहं**, क्ली, (वर्त्तते इति । वृत् + अच् ।

ततः कर्म्मधारयः ।) लौहविशेषः ।
विद्रि
इति भाषा । इति केचित् ॥
तत्पर्य्यायः । वर्त्त-
तीक्ष्णम् २ वर्त्तकम् ३ लोहसङ्करम्
४ नील-
कम् ५ नीललोहम् ६ नीलजम् ७
वर्त्तलोह-
कम् ८ । अस्य गुणाः । कटुत्वम् ।
तिक्तत्वम् ।
शिशिरत्वम् ।
कफदाहपित्तनाशित्वम् । मधु
रत्वम् । पित्तदाहशमनत्वञ्च । इति
राज-
निर्घण्टः ॥

**वर्त्तिः**, स्त्री, (वर्त्ततेऽनया इति । वृत् +
"हृपिषि-

रुहिवृतिविदिच्छिदिकीर्त्तिभ्यश्च।"
उणा० ४ ।
११८ । इति इन् ।) भेषजनिर्म्माणम्
। नयना-
भावाश्रयः । इति राजनिर्घण्टः ॥ (यथा,
साहित्यदर्पणे । ६ । ३०८ ।
"वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः ॥
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ॥")

**वर्त्ती**, स्त्री, (वर्त्ति + कृदिकारादिति ङीष् ।)

वर्त्तिः । इत्यमरटीका ॥ (यथा, महाभारते ।
४ । २१ । २३ ।
"आसीदभ्यधिका चास्य श्रीः श्रियं प्रमु-
मुक्षतः ।
निर्व्वाणकाले दीपस्य वर्त्तीमिव दिधक्षतः ॥")

**वर्त्ती**, [न्] (वर्त्तते इति । वृत् + णिनिः ।)

वर्त्तिष्णुः । इति हेमचन्द्रः । ३ । ५३ ॥

**वर्त्तुलं**, त्रि, (वर्त्तते इति । वृत् + बाहुलकात्

उलच् ।) गोलवस्तु । तत्पर्य्यायः । निस्त-
लम् २ वृत्तम् ३ । इत्यमरः । ३ । १ । ६९ ॥
"गोमातरो यच्छुभयन्ते अञ्जिभि-
स्तनूषु शुभ्रा दधिरे विरुक्मतः ।
वाधन्ते विश्वमभिमातिनमप-
वर्त्मान्येषामनुरीयते घृतम् ॥"
"वर्त्मानि मार्गाननुसृत्य ।" इति तद्भाष्ये
सायणः ॥ यथा च रघौ । २ । २० ।
"पुरस्कृता वर्त्मनि पार्थिवेन
प्रत्युद्गता पार्थिवधर्म्मपत्न्या ।
तदन्तरे सा विरराज धेनु-
र्दिनक्षपामध्यगतेव सन्ध्या ॥")
नेत्रच्छदः । इति मेदिनी । ने, १२८ ॥
(यथा,
अश्ववैद्यके । २ । १० ।
"सितासितञ्च तन्मध्ये नेत्रयोर्म्मण्डलं हि
तत् ।
प्रच्छादनं भवेद् वर्त्म चाक्षिकूटमतः परम्
॥")

**वर्त्मनिः**, स्त्री, (वर्त्तते इति । वृत् + "वृतेश्च"

उणा० २ । १०७ । इति अनिः । चकारात्
मुडागमोऽप्यत्रेति केचित् । वर्त्मनिरिति गोव-
र्द्धनः । इत्युज्ज्वलदत्तोक्त्या साधुः ।) पन्थाः
।
इत्युणाशिकोषः ॥

**वर्द्ध**, क पूर्त्तिच्छिदोः । इति कविकल्पद्रुमः ॥

(चुरा०-पर०-सक०-सेट् ।) क, वर्द्धयति ।
वृघ
क दीप्तावित्यत्रैव पूर्त्तिच्छिदोश्च
पाठादिष्टसिद्धा-

| | | |
|---|---|---|
| ञ्जनम् । लेखः । गात्रानुलेपनी ।<br>दीपदशा ।<br>(यथा, भागवते । ५ । ११ । ८ ।<br>"यथा प्रदीपो घृतवर्त्तिमश्नन्<br>शिखाः सधूमा भजति ह्यन्यदा स्वम्<br>॥")<br>दीपः । इति मेदिनी । ते, ५५ ॥ * ॥<br>वर्त्ति-<br>विशेषो यथा, --<br>"कतकस्य फलं शङ्खः सैन्धवं<br>त्र्यूषणं वचा ।<br>फेनो रसाञ्जनं क्षौद्रं षिडङ्गानि<br>मनःशिला ।<br>एषां वर्त्तिर्हन्ति कासं तिमिरं पटलं<br>तथा ॥"<br>इति गारुडे १९८ अध्यायः ॥ | | |

वस्य पाठश्चुरादिभ्यो ञेरनित्यतां
बोधयति ।
तेन कदाचित् ञेरप्राप्तौ यगादौ वृघ क
इत्यस्य
वृध्यते इत्यादि अस्य तु वर्द्धते
इत्यादिभेदः ।
इति दुर्गादासः ॥

**वर्द्धं**, क्ली, (वर्द्धयति पूरयतीति । वर्द्ध + अच् ।)

सीसकम् । इति हेमचन्द्रः । ४ । १०६
॥

**वर्द्धः**, पुं, (वर्द्धते इति । वृध् छेदने + अच् ।)

ब्राह्मणयष्टिका । इति जटाधरः ॥ पूर्त्तिः
।
छेदः । इति वर्द्धधात्वर्थदर्शनात् ॥

**वर्द्धकः**, पुं, (वर्द्धते इति । वृध् + ण्वुल् ।)

ब्राह्मणयष्टिका । इत्यमरः । २ । ४ ।
९० ॥
(वर्द्धयतीति । वर्द्ध पूरणे छेदने च +
ण्वुल् ।)
पूरके छेदके च, त्रि ॥

**वर्द्धकिः**, पुं, (वर्द्धते छिनत्तीति । वर्द्ध + अच् ।

वर्द्धं कषतीति । कष हिंसायां +
बाहुलकात्
डिः ।) त्वष्टा । इत्यमरः । २ । १० । ९
॥
(यथा, रामायणे । १ । १३ । ७ ।
"कर्म्मान्तिकान् शिल्पकरान् वर्द्धकीन्
खन-
कानपि ।
गणकान् शिल्पिनश्चैव तथैव
नटनर्त्तकान् ॥")

**वर्द्धकी**, [न्] पुं, (वर्द्धको वर्द्धोऽस्ति अस्येति ।

वर्द्धक + इनि ।) वर्णसङ्करजातिविशेषः
।
वढै इति हिन्दी भाषा । तत्पर्य्यायः ।
त्वष्टा २

कलसं वर्द्धनीञ्चैव ग्रहान् वास्तोष्पतिं तथा ।
आसने तानि सर्व्वाणि प्रणवाख्यं जपेद्गुरुः ॥
सूत्रग्रीवं रत्नगर्भं वस्त्रयुग्मन वेष्टितम् ।
सर्व्वौषधीगन्धलिप्तं पूजयेत् कलसं गुरुः ॥
देवन्तु कलसे पूज्य वर्द्धन्या वस्त्रमुत्तमम् ।
वर्द्धन्या तु समायुक्तं कलसं भ्रामयेदनु ॥
वर्द्धनीं धारया सिञ्चन्नग्रतो धारयेत्ततः ।
अभ्यर्च्च्य वर्द्धनीकुम्भं स्थण्डिले देवमर्च्चयेत् ॥"
इति गारुडे ४८ अध्यायः ॥

**वर्द्धमानः**, पुं, (वर्धते इति । वृध वृद्धौ + शानच् ।)

एरण्डवृक्षः । इत्यमरः । २ । ४ । ५१ ॥ (अस्य
पर्य्यायो यथा, --
"शुक्ल एरण्ड आमण्डुश्चित्रो गन्धर्व्वहस्तकः ।
पञ्चाङ्गुलो वर्द्धमानो दीर्घदण्डोऽप्यदण्डकः ।
वातारिस्तरुणश्चापि रुवूकश्च निगद्यते ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
पशुभेदः । शरावः । (यथा, महाभारते । ७ ।
८० । १९ ।
"तथा गाः कपिला दोग्ध्रीः सवत्साः पाण्डु-
नन्दनः ।
हेमशृङ्गी रूप्यखुरा दत्त्वा चक्रे प्रदक्षिणम् ।
स्वस्तिकान् वर्द्धमानांश्च नन्द्यावर्त्तांश्च काञ्च-
नान् ॥"
अस्मिन्नर्थे क्लीवलिङ्गेऽपि दृश्यते । यथा, तत्रैव ।
१३ । ६४ । १२ ।
"मघासु तिलपूर्णानि वर्द्धमानानि मानवः ।
प्रदाय पुत्त्रपशुमानिह प्रेत्य च मोदते ॥"
तथा च सुश्रुते सूत्रस्थाने २९ अध्याये ।
"स्त्री पुत्त्रिणी सवत्सा गौर्वर्द्धमानमलङ्कृता ।
कन्या मत्साः फलं चामं स्वस्तिकं मोदका दधि
॥")
विष्णुः । इति मेदिनी । ने, २०८ ॥ (यथा,
महाभारते । १३ । १४९ । ४१ ।
"वर्द्धनो वर्द्धमानश्च विविक्तः श्रुतिसागरः ॥")
जिनविशेषः । तत्पर्य्यायः । वीरः २ चरमतीर्थ-
कृत् ३ महावीरः देवार्य्यः ५ अज्ञातनन्दनः ६ ।
इति हेमचन्द्रः । १ । ३० ॥ धनिनां गृहविशेषः ।
यथा, --
"स्वस्तिको वर्द्धमानश्च नन्द्यावर्त्तादयोऽपि च ॥"

**वर्द्धमानकः**, त्रि, (वर्द्धमान + स्वार्थे संज्ञायां वा

कन् ।) वृद्धिविशिष्टः । पुं, शरावः ।
इत्यमरः ।
२ । ९ । ३२ ॥ (यथा, महाभारते । १४
। ६५ । १४ ।
"भृङ्गाराणि कटाहानि कलसान्
वर्द्धमान-
कान् ॥")
स्वार्थे कप्रत्यये एरण्डवृक्षश्च ॥
(आरात्रिकम् ।
इति महाभारतटीकायां नीलकण्ठः ॥
यथा,
महाभारते । ७ । ५५ । ४ ।
"नटनर्त्तकगन्धर्व्वैः पूर्णकैर्व्वर्द्धमानकैः ।
नित्योद्योगैश्च क्रीडद्भिस्तत्र स्म
परिहर्षिताः ॥")

**वर्द्धापनं**, क्ली, नाडीच्छेदनम् । यथा, --

"अर्द्धरात्रे वसोर्धारां पातयेद्गुडसर्पिषा ।
ततो वर्द्धापनं षष्ठीं नामादेः करणं मम ॥
कर्त्तव्यं तत्क्षणाद्रात्रौ प्रभाते नवमीदिने ।
यथा मम तथा कार्य्यो भगवत्या
महोत्सवः ॥"
वर्द्धापनं नाडीच्छेदनम् । इति
तिथ्यादितत्त्वम् ।

**वर्द्धितं**, त्रि, (वृध् + क्तः ।) प्रसृतम् । छिन्नम् ॥

पूरितम् । इति मेदिनी । ते, १४८ ॥
(परि-
पूर्णम् । यथा, मनुः । ३ । २२४ ।
"पाणिभ्यान्तूपसंगृह्य स्वयमन्नस्य
वर्द्धितम् ।
विप्रान्तिके पितॄन् ध्यायन्
शनकैरुपनिक्षिपेत ॥"
"अन्नस्येति तृतीयार्थे षष्ठी । वर्द्धितं पूर्णं
पिठ-
रादिपात्रम् ।" इति तट्टीकायां
कुल्लूकभट्टः ॥
वृध + णिच् + क्तः । वृद्धिं प्रापितम् ।
यथा,

वर्द्धकिः ३ तक्षा ४ सूत्रधारः ५
रथकारः ६
रथकरः ७ काष्ठतट् ८ काष्ठतक्षकः ९ ।
इति
शब्दरत्नावली ॥ (यथा,
बृहत्संहितायाम् ।
४३ । २२ ।
“अरभङ्गे बलभेदो
नेम्या नाशो बलस्य विज्ञेयः ।
अर्थक्षयोऽक्षभङ्गे
तथाणिभङ्गे च वर्द्धकिनः ॥”)

**वर्द्धनं**, क्ली, (वृध् च्छेदपूर्त्योः + ल्युट् ।) छेदनम् ।

(यथा, मनुः । २ । २९ ।
“प्राङ्नाभिवर्द्धनात् पुंसो जातकर्म्म
विधीयते ॥”)
वृद्धिः । इति मेदिनी । ने, १२३ ॥

**वर्द्धनः**, त्रि, (वर्द्धयतीति । वृध् + नन्द्यादित्वात्

ल्युः । यद्वा, वर्द्धते तच्छील इति । वृध् पूर्त्तौ +
“अनुदात्तेतश्चेति ।” ३ । २ । १४९ ।
इति
युच् ।) वर्द्धिष्णुः । इत्यमरः । ३ । १ ।
२८ ॥
(यथा, ऋग्वेदे । ३ । ३२ । १२ ।
“यज्ञो हि त इन्द्र वर्द्धनो भूदुत प्रियः
सुतसोमो
मियेधः ॥”)

**वर्द्धनी**, स्त्री, घटी । इति मेदिनी । ने, १२३ ॥

संमार्ज्जनी । इति हेमचन्द्रः । ४ । ८२
॥
सनालपात्रविशेषः । वद्ना इति भाषा ।
यथा,
“आलुः स्त्री कर्करी पारी वर्द्धनी च
लल-
न्तिका ॥”
इति जटाधरः ॥ * ॥
प्रतिष्ठादिकर्म्मणि तत्प्रयोजनं यथा, --
“प्रतिष्ठा यस्य देवस्य तदाख्यं कलसं
न्यसेत् ।
इति हलायुधः ॥
(यथा, बृहत्संहितायाम् । ५३ । ३३ ।
“द्वारालिन्दोऽन्तगतः प्रदक्षिणोऽन्यः शुभस्तत-
श्चान्यः ।
तद्वच्च वर्द्धमाने द्वारन्तु न दक्षिणं कार्य्यम् ॥”)
स्वनामख्यातदेशः । यथा, --
“प्राच्यां मागधशोणौ च वारेन्द्रीगौडराढकाः ।
वर्द्धमानतमोलिप्तप्राग्ज्योतिषोदयाद्रयः ॥”
इति ज्योतिस्तत्त्वे कूर्म्मचक्रम् ॥
(भद्राश्ववर्षस्य कुलपर्व्वतविशेषः । यथा, मार्क-
ण्डेये । ५९ । १२ ।
“विशालः कम्बलः कृष्णो जयन्तो हरिपर्व्वतः ।
विशोको वर्द्धमानश्च सप्तैते कुलपर्व्वताः ॥”
वृद्धिविशिष्टे, त्रि ॥)
भागवते । ४ । २३ । १ ।
“दृष्ट्वात्मानं प्रवयसमेकदा वैण्य
आत्मवान् ।
आत्मना वर्द्धिताशेषस्वानुसर्गः
प्रजापतिः ॥”)

**वर्द्धिष्णुः**, त्रि, (वर्द्धते इति । वृध + “अलङ्क-

ञिति ।” ३ । २ । १३६ । इति इष्णुच्
।)
वर्द्धनशीलः । तत्पर्य्यायः । वर्द्धनः २ ।
इत्य-
मरः । ३ । १ । २८ ॥ (यथा, भट्टिः । ५
। १ ।
“निराकरिष्णू वर्त्तिष्णू वर्द्धिष्णू परितो
रणम् ।
उत्पतिष्णू सहिष्णू च चेरतुः खरदूषणौ
॥”)

**वद्ध्रं**, क्ली, (वर्द्धते दीर्घीभवतीति । वृध् + “वृधि-

वपिभ्यां रन् ।” उणा० २ । २७ । इति
रन् ।)
चर्म्म । इत्युणादिकोषः ॥ (यथा,
अथर्व्ववेदे ।
१४ । १ । ६० ।
“त्वष्टा पिपेश मध्यतोऽनुवद्ध्रान्त्स्यानो
अस्तु
सुमङ्गली ॥”)

**वद्ध्री**, स्त्री, (वद्ध्र + गौरादित्वात् ङीष् ।) चर्म्म-

ज्जुः । वदी इति भाषा । तत्पर्य्यायः ।
नद्ध्रा २
वरत्रा ३ । इत्यमरः ॥ वद्ध्री ४ । इति
भरतः ॥

**वर्पः**, [स्] क्ली, (वृणीते संपृक्तं भवतीति । वृ +

“वृङ्शीङ्भ्यां स्वरूपाङ्गयोः पुट् च ।”
उणा०
४ । २०० । इति असुन् पुडागमश्च ।)
रूपम
इत्युणादिकोषः ॥ (यथा, ऋग्वेदे । १ ।
१४० । ५ ।
“आदस्य ते ध्वसयन्तो वृथेरते
कृष्णमभ्वं महि वर्पः करिक्रतः ॥”

| ऐशान्यां पूजयेद्याम्ये अस्त्रेणैव च वर्द्ध-<br>नीम् ॥ | | स्तोत्रम् । यथा, तत्रैव । १ । ३९ । १ ।<br>“कस्य क्रत्वा मरुतः कस्य वर्पसा कं<br>याथ<br>कंह धूतयः ॥”<br>“कस्य यजमानस्य क्रत्वा क्रतुना<br>सङ्गच्छध्व इति |
|---|---|---|

शेषः । तथा कस्य यजमानस्य
वर्पसः स्तोत्रेण
सङ्गच्छद्धे ॥” इति तद्भाष्ये सायणः
॥)

**वर्फ**, गत्याम् । वधे । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।) वर्फति । इति
दुर्गादासः ॥

**वर्म्म**, [न्] क्ली, (वृणोति आच्छादयति शरीर-
मिति । वृ + मनिन् ।) तनुत्रम् ।
इत्यमरः ।
२ । ८ । ६४ ॥ (यथा, रघुः । ४ ।
५६ ।
“अभ्षभूयत वाहानां चरतां
गात्रशिञ्जितैः ।
वर्म्मभिः
पवनोद्धूतराजतालीवनध्वनिः ॥”
गृहम् । इति निघण्टुः । ३ । ४ ॥
यथा, बृहत्-
संहितायाम् । ५१ । ३ ।
“छिन्नभिन्नकृमिखातकण्टकि-
प्लुष्टरूक्षकुटिलैर्न सत्कुजैः ।
क्रूरपक्षियुतनिन्द्यनामभिः
शुष्कशीर्णबहुपर्णवर्म्मभिः ॥”)

**वर्म्मकण्टकः**, पुं, पर्पटः । इति राजनिर्घण्टः ॥
विवृतिरस्य पर्पटशब्दे विज्ञेया ॥)

**वर्म्मकषा**, स्त्री (वर्म्म कषतीति । कष + अच् ।
टाप् ।) सप्तला । इति शब्दरत्नावली
॥ चामार
कषा इति भाषा ॥

**वर्म्मा**, [न्] पुं, (वृ + मनिन् ।) क्षयिस्य पद्धतिः
।
यथा, --
“शर्म्मान्तं ब्राह्मणस्य स्याद्वर्म्मान्तं
क्षत्त्रियस्य च ।
गुप्तदासान्तकं नाम प्रशस्तं
वैश्यशूद्रयोः ॥”
“माहेन्द्रं नगमभितः करेणुवर्य्याः
पर्य्यन्तस्थितजलदा दिवः पतन्तः ॥”)

**वर्य्यः**, पुं, (वर्य्यते प्रार्थ्यते इति । वर + यत् ।)
कामदेवः । इति मेदिनी । ये, ४० ॥

**वर्य्या**, स्त्री, (व्रियते इति । वृ + “अवद्यपण्य-
वर्य्येति ।” ३ । १ । १०१ । इति
अप्रतिबन्धे
यत् ।) पतिंवरा । इत्यमरः । २ । ६ । ७ ॥
कन्धा ।
इति मुग्धबोधव्याकरणम् ॥

**वर्व्वणा**, स्त्री, (वरित्यव्यक्तशब्देन वणति शब्दायते
इति । वण शब्दे + अच् । टाप् ।) नील-
मक्षिका । इत्यमरः । २ । ३ । २७ ॥ नीला-
कारवर्णा मक्षिका वर्व्वणा । भणभणिया इति
ख्याता । मल्लिकाख्यायां इत्येके । वरिति
वणति
वर्व्वणा । व्रण वण भण शब्दे पचादित्वादन्
आप् । किंवा वृणीते पूतिद्रव्यं भजते इति
वृडो विचि वर् । वणतेरणि वणा ततः कर्म्म-
धारये वर्व्वणा । इति तट्टीकायां भरतः ॥

**वर्व्वरं**, क्ली, (वृणुते वरयति नानागुणान् इति ।
वृ + “कॄगॄशॄवृवचिभ्यः ष्वरच् ।” उणा० २ ।
१२३ । इति ष्वरच् ।) हिङ्गुलम् । पीतचन्द-
नम् । वोलम् । इति राजनिर्घण्टः ॥

**वर्व्वरः**, पुं, (वृणोति दोषानिति । वृ + ष्वरच् ।)
पामरः । स च नीचजातिः । केशः । वावरी
इति भाषा । चक्रलः । देशविशेषः । (तद्देश-
वासिनि, पुंभूम्नि । यथा, मार्कण्डेये । ५७ ।
३८ ।
“काम्बोजा दरजाश्चैव वर्व्वरा हर्षवर्द्धनाः
॥”)
फञ्जिका । इति मेदिनी । रे, २०९ ॥ वृक्ष-
विशेषः । काल वावुइ इति भाषा । तत्प-
र्य्यायः । सुमुखः २ गरघ्नः ३
कृष्णवर्व्वरकः ४
सुकन्दजः ५ गन्धपत्रः ६ पूतगन्धः ७ सुवा-
कालमारः करालश्च मलूकः कृष्णमल्लिका ।
तत्र शुक्लेऽर्ज्जकः प्रोक्तो वटपत्रस्ततोऽपरः ॥
वर्व्वरीत्रितयं रूक्षं शीतं कटु विदाहि च ।
तीक्ष्णं रुचिकरं हृद्यं दीपनं लघुपाकि च ।
पित्तलं कफवातास्रदद्रुकृमिविषापहम् ॥”
इति भावप्रकाशः ॥

**वर्व्वरीकः**, पुं, (वृणुते इति । वृञ् वरणे + “शॄपॄ-
वृञां द्वे रुक् चाभ्यासस्य ।” उणा० ४ । १९ ।
इति ईकन् द्विर्वचनं अभ्यासस्य रुगागमश्च ।)
ब्राह्मणयष्टिकावृक्षः । कुटिलकुन्तलः । इत्यु-
णादिकोषः ॥ अजगन्धिका । वावुइ तुलसी
इति भाषा । इति शब्दचन्द्रिका ॥ महा-
कालः । इति हेमचन्द्रः ॥ तत्र पवर्गीयबका-
रादौ पठितोऽयं किन्तु मेदिन्यां चर्च्चरीकशब्द-
स्यायमर्थः ॥

**वर्व्वा**, स्त्री, वर्व्वरी । इति शब्दचन्द्रिका ॥

**वर्व्विः**, त्रि, (वृ + “वृद्भ्यां विन् ।” उणा० ४ । ५३ ।
इति विन् ।) घस्मरः । इत्युणादिकोषः ॥

**वर्व्वूरः**, पुं, (वृ + बाहुलकात् वूरच् ।) वृक्ष-
विशेषः । वावला इति भाषा । तत्पर्य्यायः ।
युगलाक्षः २ कण्टालुः ३ तीक्ष्णकण्टकः ४
गोशृङ्गः ५ पंक्तिबीजः ६ दीर्घकण्टः ७ । कफा-
न्तकः ८ दृढबीजः ९ अजभक्षः १० । अस्य
गुणाः । कषायत्वम् । उष्णत्वम् । कफकासाम-
रक्तातिसारपित्तदाहाशोनाशित्वञ्च। इति
राजनिर्घण्टः ॥

**वर्षं**, पुं, क्ली, (वृष्यते इति । वृषु सेचने +
अज्विधौ भयादीनामुपसंख्यानमित्यच् । यद्वा,
व्रियते प्रार्थ्यते इति । वृ + “वृवृवदिहनिकमिक-
षिभ्यः सः ।” उणा० ३ । ६२ । इति सः ।)
वृष्टिः । (यथा, मनुः । ४ । १०३ ।
“विद्युत्स्तनितवर्षेषु महोल्कानाञ्च संप्लवे ।
आकालिकमनध्यायमेतेषु मनुरब्रवीत् ॥”
जम्बुद्वीपांशः । वत्सरः । इत्यमरः ॥ (यथा,
मनुः । ५ । ५३ ।
“वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः ।

इति श्राद्धत त्त्वधृतशातातपवचनम् ॥

**वर्म्मिः**, पुं, मत्स्यविशेषः । वानि इति भाषा ।

अस्य मांसगुणाः । गुरुत्वम् ।
वृष्यत्वम् । कषाय-
त्वम् । रक्तपित्तनाशित्वञ्च । इति
राजवल्लभः ॥
(यथा, सुश्रुते । १ । १३ ।
“वर्म्मिमत्स्यवदायता छिन्नोन्नतकुक्षिः
कर्व्वुरा ॥”
तथास्य गुणा यथा, --
“वर्म्मिमत्स्यो हरेद्वातं पित्तं रुचिकरो
लघुः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे
द्वितीये भागे ॥)

**वर्म्मितः**, त्रि, (वर्म्म करोतीति । वर्म्म + णिच् । ततः

कर्म्मणि क्तः । वर्म्म सञ्जातमस्येति ।
इतच् वा ।)
वर्म्मयुक्तः । कृतसन्नाहः ।
तत्पर्य्यायः । सन्नद्धः २
सज्जः ३ दंशितः ४ व्यूढकङ्कटः ५ ।
इत्यमरः ।
२ । ८ । ६५ ॥ ऊढकङ्कटः ६ । इति
सुभूतिः ॥
(यथा, गो० रामायणे । २ । ९१ ।
१५ ।
“वाजिनां वर्म्मिताङ्गानां क्रुद्धस्य मम
सायकाः ।
अद्य भित्त्वा प्रवेक्ष्यन्ति शरीराणि
मयेरिताः ॥”)

**वर्म्मुषः**, पुं, मत्स्यविशेषः । वामिरूष इति भाषा ।

अस्य मांसगुणाः । वातनाशित्वम् ।
स्निग्धत्वम् ।
ग्रहदोषनाशित्वञ्च । इति राजवल्लभः
।

**वर्य्यं**, त्रि, (वर्य्यते प्रार्थ्यते इति । वरत् क ईप्सायाम्

+ “अचो यत् ।” ३ । १ । ९७ । इति
यत् ।)
हकः ८ । अस्य गुणाः । कटुत्वम् ।
उष्णत्वम् ।
सुगन्धित्वम् ।
वान्तिविसर्पविषत्वग्दोषनाशि-
त्वञ्च । इति राजनिर्घण्टः ॥

**वर्व्वरकं**, क्ली, (वर्व्वर + स्वार्थे कन् ।) चन्दन-

भेदः । तत्पर्य्यायः । वर्व्वरोत्थम् २
श्वेतवर्व्व-
रकन् ३ शीतम् ४ सुगन्धिः ५ पित्तारिः ६
सुरभिः ७ । अस्य गुणाः । शीतलत्वम् ।
तिक्त-
त्वम् ।
कफमारुतपित्तकुष्ठकण्डूव्रणनाशित्वम् ।
विशेषाद्रक्तदोषजित्त्वञ्च । इति राजनिर्घण्टः
॥

**वर्व्वरा**, स्त्री, (वर्व्वरपुष्पस्येव आकृतिरस्त्यस्या

इति । वर्व्वर + अच् । टाप् ।) पुष्पभेदः ।
शाकभेदः । इति मेदिनी । रे, २०९ ॥ (वर्व्व
इति
शब्दं रातीति । रा + कः ।) मक्षिकाभेदः ।
इति शब्दरत्नावली ॥

**वर्व्वरा**, स्त्री, (वर्व्वर + टाप् । पक्षे षित्वात्

ङीष् ।) क्षुद्रवृक्षविशेषः । वायुइ
इति भाषा । तत्पर्य्यायः । कवरी २ तुङ्गी ३
खरपुष्पा ४ अजगन्धिका ५ अजगन्धा ६
कवरा ७ खरपुष्पिका ८ ।
इत्यमरशब्दरत्ना-
वल्यौ ॥ तस्याः प्रकारा गुणाश्च ।

**वर्व्वरी**, स्त्री, (वर्व्वर + टाप् । पक्षे षित्वात्

ङीष् ।) क्षुद्रवृक्षविशेषः । वायुइ
इति भाषा । तत्पर्य्यायः । कवरी २ तुङ्गी ३
खरपुष्पा ४ अजगन्धिका ५ अजगन्धा ६
कवरा ७ खरपुष्पिका ८ ।
इत्यमरशब्दरत्ना-
वल्यौ ॥ तस्याः प्रकारा गुणाश्च ।
“वर्व्वरी कवरी तुङ्गी खरदुग्धाजगन्धिका ।
पर्णासस्तत्र कृष्णे तु कठिञ्जरकुठेरकौ ॥

मांसानि च न खादेद् यस्तयोः पुण्यफलं समम्
॥”)
जम्बुद्वीपः । इति मेदिनी । षे, २४ ॥ (वर्ष-
तीति । वृष् + पचाद्यच् ।) मेघः । इति हेम-
चन्द्रः । २ । ७९ ॥ * ॥ अथ सप्तद्वीपानां वर्ष-
वर्णनम् । तत्र जम्बुद्वीपस्य नववर्षविभागो यथा ।
यत एव कृताः सप्त भुवो द्वीपा जम्बुप्लक्ष-
शाल्मलिकुशक्रौञ्चशाकपुष्करसंज्ञाः । तेषां
परिमाणं पूर्ब्बस्मात् पूर्ब्बस्मादुत्तरोत्तरो यथा-
संख्यं द्विगुणमानेन बहिः समन्तत उप-
कॢप्ताः । क्षारादेक्षुरसोदसुरोदघृतोदक्षीरोद-
दधिमण्डोदशुद्धोदाः सप्त जलधयः । सप्तद्वीप-
परिखा इवाभ्यन्तरद्वीपसमाना एकैकश्येन
यथानुपूर्व्वं सप्तस्वपि बहिर्द्वीपेषु पृथक् परित
उपकल्पिताः । तेषु पुनर्ज्जम्ब्वाह्वादिषु
वर्हिष्मती-
पतिरनुवृत्तानात्मजानग्नीध्रेध्मजिह्वयज्ञबाहु
हिरण्यरेतोघृतपृष्ठमेधातिथिवीतिहोत्रसंज्ञान्

| प्रधानम् । इत्यमरः । ३ । १ । ५७ ।<br>(यथा,<br>भागवते । १ । ५ । ९ ।<br>“यथा धर्म्मादयश्चार्था<br>मुनिवर्य्यानुकीर्त्तिताः ।<br>न तथा वासुदेवस्य महिमा<br>ह्यनुवर्णितः ॥”)<br>श्रेष्ठम् । इति मुग्धबोधव्याकरणम् ॥<br>(यथा,<br>किराते । ७ । २० । | | |
|---|---|---|

यथासंख्येन
एकैकस्मिन्नेकमेवाधिपतिं विदधे ।
तस्य ह वा एते श्लोकाः ।
“प्रियव्रतकृतं कर्म्म
कोऽनुकुर्य्याद्विनेश्वरम् ।
यो नेमिनिम्नरकरोच्छायां घ्नन्
सप्तवारि-
धीन् ॥”
छायां घ्नन् तमो निरस्यन् ।
“भूसंस्थानं कृतं येन
सरिद्गिरिवनादिभिः ।
सीमा च भूतनिर्वृत्यै द्वीपे द्वीपे
विभागशः ॥”
एवं पितरि संप्रवृत्ते तदनुशासने
वर्त्तमान
आग्नीध्रो जम्बुद्वीपौकसः प्रजा
औरसवद्धर्म्मा-
वेक्षमाणः पर्य्यगोपायत् । तदुपलभ्य
भगवानादि-
पुरुषः सदसि गायन्तीं पूर्ब्बचित्तिं
नामाप्सरस-
मभियापयामास । तस्यामुह
वात्मजान् स
राजवर्य्य आग्नीध्रो
नाभिकिंपुरुषहरिवर्षेला-
वृतरम्यक-हिरण्मय-
कुरुभद्राश्वकेतुमालसंज्ञान्
नव पुत्रानजनयत् । आग्नीध्रसुतास्ते
मातु-
रनुग्रहादौत्पत्तिकेनैव
संहननबलोपेताः पित्रा
विभक्ता आत्मतुल्यनामानि
यथाविभागं जम्बु-
द्वीपवर्षाणि बुभुजुः । यास्मन्नव
वर्षाणि नव-
योजनसहस्रायामानि
अष्टभिर्मर्य्यादागिरिभिः
सुविभक्तानि भवन्ति । एषां मध्ये
इला-

कौशिकी मन्दाकिनी यमुना सरस्वती
दृशद्वती
गोमती सरयुरोघवती षष्ठवती सप्तवती
सुषोमा
शतद्रुश्चन्द्रभागा मरुद्वृधा वितस्ता असिक्नी
विश्वेति महानद्यः । अस्मिन्नेव वर्षे
पुरुषैर्लब्ध-
जन्मभिः शुक्ललोहितकृष्णवर्णेन स्वारब्धेन
कर्म्मणा दिव्यमानुषनारकगतयो बह्व्य
आत्मन
आनुपूर्व्वेण सर्व्वा ह्येव सर्व्वेषां विधीयन्ते ।
यथावर्णविधानमपवर्गश्च भवति ॥ १ ॥ * ॥
अतः परं प्लक्षादीनां प्रमाणलक्षणसंस्थानतो
वर्षविभाग उपवर्ण्यते । प्लक्षो जम्बुप्रमाणो
द्वीपाख्यातिकरो हिरण्मय उत्थितो यत्राग्नि-
रूपास्ते सप्तजिह्वः । तस्याधिपतिः
प्रियव्रतात्मज
इध्मजिह्वस्तं द्वीपं सप्तवर्षाणि विभज्य
सप्तवर्ष-
नामभ्य आत्मजेभ्य आकलय्य
स्वयमात्मयोगे-
नोपरराम । अशिवं वयसं सुभद्रं शान्तं
क्षेमममृतमभयमिति वर्षाणि । तेषु गिरयो
नद्यश्च सप्तैवाभिज्ञाताः । मणिकूटो वज्रकूट
इन्द्रसेनो ज्योतिष्मान् सुवर्णो हिरण्यष्ठीवो
मेघमाल इति सेतुशैलाः । अरुणा नृमणा
आङ्गीरसी सावित्री सुभाता ऋचम्भरा
सत्यम्भरेति महानद्यः ॥ २ ॥ * ॥ प्लक्षस्तु
समानेनेक्षुरसोदेनावृतो यथा तथा द्वीपोऽपि
शाल्मलो द्विगुणविशालः समानेन सुरोदेना-
वृतः परिवृङ्क्ते । यत्र ह वै शाल्मली प्लक्षा-
यामा । तद्द्वीपाधिपतिः प्रियव्रतात्मजो यज्ञ-
वाहः स्वसुतेभ्यः सप्तभ्यस्तन्नामानि
सप्तवर्षाणि
व्यभजत् । सुरोचनं सौमनस्यं रमणकं देववर्हं
पारिभद्रमाप्यायनमभिज्ञातमिति। तेषु वर्षा-
द्रयो नद्यश्च सप्तैवाभिज्ञाताः । सुरसः
शतशृङ्गो
वामदेवः कुन्दः कुमुदः पुष्पवर्षः सहस्रश्रुति-
रिति । अनुमती सिनीवाली सरस्वती कुहू

आत्मा मधुरुहो मेघपृष्ठः सुधामा भ्राजिष्ठो
लोहितानो वनस्पतिरिति घृतपृष्ठसुताः । तेषां
वर्षगिरयः सप्तैव नद्यश्चाभिख्याताः । शुक्लो
वर्द्धमानो भोजन उपवर्हणो नन्दो नन्दनः
सर्व्वतोभद्र इति । अभया अमृतौघा आर्य्यका
तीर्थवती रूपवती पवित्रवती शुक्लेति ॥ ५ ॥
* ॥
एवं परस्तात् क्षीरोदात् परित उपवेशितः
शाकद्वीपो द्वात्रिंशल्लक्षयोजनायामः समानेन
दधिमण्डोदेन परीतः । यस्मिन् हि शाको नाम
महीरुहः स्वक्षेत्रव्यपदेशकः । यस्य हि महा-
सुरभिगन्धस्तद्द्वीपमनुवासयति। तस्यापि
प्रैय-
व्रत एवाधिपतिर्नाम्ना मेधातिथिः । सोऽपि
विभज्य सप्तवर्षाणि पुत्रनामानि तेषु
स्वात्मजान्
पुरोजवमनोजववेपमानधूम्रानीकचित्ररेफबहु-
रूपविश्वाधारसंज्ञान् निधाप्याधिपतीन् स्वयं
भगवत्यनन्त आवेशितमतिस्तपोवनं प्रविवेश ।
एतेषां वर्षमर्य्यादागिरयो नद्यश्च सप्त सप्तैव ।
ईशान उरुशृङ्गो बलभद्रः शतकेशरः सहस्र-
स्रोता देवपालो महानस इति । अनघा
आयुर्दा उभयस्पृष्टिरपराजिता पञ्चपदी सहस्र-
श्रुतिर्निजधृतिरिति ॥ ६ ॥ * ॥ एवमेव
दधिमण्डो-
दात् परतः पुष्करद्वीपस्ततो द्विगुणायामः सम-
न्तत उपक्लृप्तः समानेन स्वादूदकेन समुद्रेण
बहिरावृतः । तद्द्वीपमध्ये मानसोत्तरनाम्नैक
एवार्व्वाचीनपराचीनवर्षयोर्मर्य्यादाचलः अयुत-
योजनोच्छ्रायायामः । यत्र तु चतसृषु दिक्षु
चत्वारि पुराणि लोकपालानाम् । यदुपरिष्टात्
सूर्य्यरथस्य मेरुं परिक्रामतः संवत्सरात्मकं
चक्रं
देवाहोरात्राभ्यां परिभ्रमति । तद्द्वीपस्याधि-
पतिः प्रैयव्रतो वीतिहोत्रो नाम तस्यात्मजौ
रमणकधातकनामानौ वर्षपती नियुज्य स्वयं
पूर्ब्बजवद्भगवत्कर्म्मशील आस्ते । तद्वर्षपुरुषा
भगवन्तं ब्रह्मरूपिणं सकर्म्मकेण कर्म्मणाराध-
यन्ति ॥ ७ ॥ इति श्रीभागवते ५ स्कन्धे १ । २
।

वृतं नामाभ्यन्तरवर्षं यस्य
नाभ्यामवस्थितः
सर्व्वतः सौवर्णः कुलगिरिराजो
मेरुर्द्वीपायाम-
समुन्नाहः कर्णिकाभूतः
कुवलयकमलस्य मूर्द्धनि
द्वात्रिंशत्सहस्रयोजनविततोमूले
षोडश-
साहस्रं तावतान्तर्भूम्यां प्रविष्टः ।
उत्तरोत्तरे-
णेलावृतं नीलः श्वेतः शृङ्गवान् इति
त्रयो
रम्यकहिरण्मयकुरूणां वर्षाणां
मर्य्यादागिरयः
प्रागायता उभयतः क्षारोदावधयो
द्विसहस्र-
योजनपृथव एकैकशः पूर्व्वस्मात्
पूर्व्वस्मादुत्तरो-
त्तरो दशांशाधिकांशेन दैर्घ्य
एवाह्रसन्ति ।
एवं दक्षिणेनेलावृतं निषधो हेमकूटो
हिमालय
इति प्रागायता यथा नीलादयः ।
अयुतयोज-
नोत्सेधा हरिवर्षकिंपुरुषभारतानां
यथा-
संख्यम् । तथैवेलावृतमपरेण पूर्ब्बेण
च माल्य-
वद्गन्धमादनावानीलनिषधायतौ
द्विसहसं पप्र-
थतुः केतुमालभद्राश्वयोः सीमानं
विदधाते ।
भारतेऽप्यस्मिन् वर्षे सरिच्छैलाः
सन्ति बहवः ।
मलयो मङ्गलप्रस्थो मैनाकस्त्रिकूट
ऋषभः
कूटकः कोण्वः सह्यो
देवगिरिरृष्यमूकः श्रीशैलो
वेङ्कटो महेन्द्रो वारिधारो विन्ध्यः
शुक्तिमानृक्ष-
गिरिः पारिपात्रो द्रोणश्चित्रकूटो
गोवर्द्धनो

रजनी नन्दा राकेति ॥ ३ ॥ * ॥ एवं सुरो-
दाद्बहिस्तद्द्विगुणः समानेनावृतो घृतोदेन
यथा
पूर्ब्बः कुशद्वीपो यस्मिन् कुशस्तम्बो देवकृत-
स्तद्द्वीपाख्यापनो ज्वलन इवापरः सुशष्प-
रोचिषा दिशो विराजयति । तद्द्वीपपतिः
प्रैय-
व्रतो राजन् हिरण्यरेता नाम स्वं द्वीपं सप्तभ्यः
स्वपुत्त्रेभ्यो यथाभागं विभज्य स्वयं तप
आति-
ष्ठत् ।
वसुवसूदानदृढरुचिनाभिगुप्तसत्यव्रतविप्र
नामदेवनामभ्यस्तेषां वर्षेषु सीमागिरयो नद्य-
श्चाभिज्ञाताः सप्तैव । वभ्रुश्चतुःशृङ्गः कपिल-
श्चित्रकूटो देवानीक ऊद्‌र्ध्वरोमा द्रविण इति
।
रसकुल्या मधुकुल्या मित्रविन्दा श्रुतविन्दा
देवगर्भा घृतच्युता मन्त्रमालेति ॥ ४ ॥ * ॥
तथा
बहिः क्रौञ्चद्वीपो द्विगुणः समानेन क्षीरोदेन
परित उपक्लृप्तः । वृतो यथा कुशद्वीपो वृतो-
देन । यस्मिन् क्रौञ्चनामा पर्व्वतराजो द्वीप-
नामनिर्व्वर्त्तक आस्ते । तस्मिन्नपि प्रैयव्रतो
घृत-
पृष्ठो नामाधिपतिः स्वे द्वीपे वर्षाणि सप्त
विभज्य
तेषु पुत्त्रनामसु सप्त ऋक्थादान् वर्षपान्
निवेश्य
स्वयं भगवान् भगवतः परमकल्याणयशस
आत्मभूतस्य हरेश्चरणारविन्दमुपजगाम।

१६ । १९ । २० अध्यायाः ॥ * ॥ अपि च ।
“कन्ये द्वे दश पुत्त्राश्च सम्राट् कुक्षिश्च ते उभे
।
ते सर्व्वे भ्रातरः शूराः प्रजापतिसमा दश ॥
अग्नीध्रश्चाग्निबाहुश्च मेधा मेधातिथिर्व्वपुः ।
ज्योतिष्मान् द्युतिमान् हव्यः सवनो मित्र एव वा
।
मेधाग्निबाहुमित्रास्तु त्रयो योगपरायणाः ।
जातिस्मरा महाभागा न राज्याय मनो दधुः ॥
प्रियव्रतोऽभ्यषिञ्चत्तान् सप्त सप्तसु पार्थिवान् ।
द्वीपेषु तेषु धर्म्मेण द्वीपांस्तांश्च निबोध मे ॥
जम्बुद्वीपे तथाग्नीध्रं राजानं कृतवान् पिता ।
प्लक्षद्वीपेश्वरश्चापि तेन मेधातिथिः स्मृतः ॥
शाल्मले तु वपुष्मन्तं ज्योतिष्मन्तं कुशाह्वये ।
क्रौञ्चद्वीपे द्युतिमन्तं हव्यं शाकाह्वये सुतम् ॥
पुष्कराधिपतिञ्चैव सवनं कृतवान् सुतम् ।
महावीतो धातुकिश्च पुष्कराधिपतेः सुतौ ॥
द्विधा कृत्वा ततो वर्षं पुष्करे स न्यवेशयत् ।
हव्यस्य पुत्त्राः सप्तासन्नामतस्तान्निबोधमे ॥
जलदश्च कुमारश्च सुकुमारो मणीवकः ।

| रैवतकः ककुभो नीलो गोकामुख इन्द्रकीलः कामगिरिरिति चान्ये शतसहस्रशः शैलास्तेषां नितम्बप्रभवा नदा नद्यश्च सन्त्यसंख्याताः । एतासामपो भारत्यः प्रजानामभिख्यैव पुनन्ती- नामात्मना चोपस्पृशन्ति । चन्द्रवशा ताम्रपर्णी अवटोदा कृतमाला वैहायसी कावेरी वेण्णा पयस्विनी शर्करावर्त्ता तुङ्गभद्रा कृष्णवेण्णा भीमरथी गोदावरी निर्व्विन्ध्या पयोष्णी तापी रेवा सुरसा नर्म्मदा चर्म्मण्वती अन्धः शोनश्च नदौ महानदी वेदस्मृतिरृषिकुल्या त्रिसामा | | |
|---|---|---|

कुशोत्तरोऽथ मोदाकी सप्तमस्तु महाद्रुमः ॥
तन्नाम ङ्कानि वर्षाणि शाकद्वीपे चकार सः ।
तथा द्युतिमतः सप्त पुत्त्रांश्चापि निबोध मे ॥
कुशलो मनोऽनुगश्चोष्णः प्रधानश्चान्धकारकः ।
मुनिश्च दुन्दुभिश्चैव सप्तमस्तु तथावरः ॥
तेषां स्वनामधेयानि क्रौञ्चद्वीपे तथाभवन् । * ।
ज्योतिष्मतः कुशद्वीपे पुत्त्रनामाङ्कितानि वै ॥
तत्रापि सप्त वर्षाणि तेषां नामानि मे शृणु ।
उद्गिजं धेनुमच्चैव द्वैरथं लम्बमेव च ॥
धृतिमत् प्रभाकरञ्चैव कपिलञ्चापि सप्तमम् ।
वपुष्मतः सुताः सप्त शाल्मलेशस्य वाभवन् ॥
श्वेतश्च हरितश्चैव जीमूतो रोहितस्तथा ।
वैद्युतो मानसश्चैव महीध्रः णुप्रभस्तथा ॥
तथैव शाल्मले तेषां स्वनामानि तु सप्त वै ।
सप्तमेधातिथेः पुत्त्राः प्लक्षद्वीपेश्वरस्य ये ॥
तेषां नामाङ्कितैर्द्वीपैस्तद्वर्षं सप्तभिर्वृतम् ।
पूर्ब्बं शान्तभयं वर्षं शिशिरन्तु सुखोदयम् ॥
आनन्दञ्च शिवञ्चैव क्षेमकञ्च तथा ध्रुवम् ।
प्लक्षद्वीपादियुक्तेषु शाकद्वीपान्तिकेषु च ॥
ज्ञेयः पञ्चसु धर्म्मोऽत्र वर्णाश्रमविभागजः । * ।

भद्राश्व पुरुषाः शुक्लाः स्त्रियश्चन्द्रांशुसन्निभाः ।
दशवर्षसहस्राणि जीवन्ति वायुभोजनाः ॥ * ॥
रम्यके पुरुषा नार्य्यो रमन्त्यारजतप्रभाः ।
दशवर्षसहस्राणि शतानि दशपञ्च च ॥
जीवन्ति तत्र सत्त्वस्था न्यग्रोधफलभोजनाः ।
हिरण्मये हिरण्याभाः सर्व्वे च लकुचाशनाः ॥
एकादशसहस्राणि शतानि दशपञ्च च ।
जीवन्ति कुरुवर्षे तु श्यामाङ्गाः क्षीरभोजनाः ॥
सर्व्वे मिथुनजाताश्च नित्यं सुखनिषेविणः ।
चन्द्रद्वीपे महादेवं यजन्ति सततं शिवम् ॥
तथा किंपुरुषे विप्रा मानवा हेमसन्निभाः ।
दशवर्षसहस्राणि जीवन्ति प्लक्षभोजनाः ॥
यजन्ति सततं देवं चतुर्मूर्त्तिं चतुर्मुखम् ।
ध्याने मनः समाधाय सदा वा भक्तिसंयुताः ॥ *
तथा च हरिवर्षेऽपि महारजतसन्निभाः ।
दशवर्षसहस्राणि जीवन्तीक्षुरसाशिनः ॥
तत्र नारायणं देवं विश्वयोनिं सनातनम् ।
उपासते सदा विष्णुं मानवा विष्णुभाविताः ॥
तत्र चन्द्रप्रभं शुभ्रं शुद्धस्फटिकनिर्म्मलम् ।
विमानं वासुदेवस्य पारिजातवनाश्रितम् ॥
चतुर्द्वारमनौपम्यं चतुस्तोरणसंयुतम् ।
प्राकारैर्दशभिर्युक्तं सुगन्धञ्च समुद्गमम् ॥
स्फाटिकैर्म्मण्डपैर्युक्तं देवराजगृहोपमम् ।
स्वर्णस्तम्भसहस्रैश्च सर्व्वतः समलङ्कृतम् ॥
हेमसोपानसंयुक्तं नानारत्नोपशोभितम् ।
दिव्यसिं हासनोपेतं सर्व्वशोभासमन्वितम् ॥
सरोभिः स्वादुपाणीयैर्नदीभिश्चोपशोभितम् ।
नारायणपरैः शुद्धैर्व्वेदाध्ययनतत्परैः ॥
योगिभिश्च समाकीर्णं ध्यायद्भिः पुरुषं हरिम् ।
स्तुवद्भिः सततं मन्त्रैर्नमस्यद्भिश्च माधवम् ॥
तत्र देवादिदेवस्य विष्णोरमिततेजसः ।
राजानः सर्व्वकालस्तु महिमानं प्रकुर्व्वते ॥
गायन्ति चैव नृत्यन्ति विलासिन्यो मनोरमाः ।
स्त्रियो यौवनशालिन्यः सदा मण्डनतत्पराः ॥
इलावृते पद्मवर्णा जम्बूफलरसाशिनः ॥
त्रयोदशसहस्राणि वर्षाणां व स्थिरायुषः ॥
भारते तु स्त्रियः पुंसो नानावर्णः प्रकीर्त्तिताः ।
नानादेवार्च्चने युक्ता नानाकर्म्माणि कुर्व्वते ॥

इरातती वितस्ता च विपाशा देविका कुहूः ।
गोमती धूतपापा च बाहुदा च दृशद्वती ॥
कौशिकी लोहिता चैव हिमवत्पादनिःसृताः ।
वेदस्मृतिर्व्वेदमती व्रतघ्नी त्रिविदा तथा ॥
पर्णासा वन्दना चैव सदानीरा मनोरमा ।
चर्म्मण्वती तथानूपा विदिशा वेदवत्यपि ॥
शिश्रुः शशिन्यपि तथा पारिपात्राश्रयास्तथा ।
नर्म्मदा सुरसा शाना दशार्णा च महानदी ॥
मन्दाकिनी चित्रकूटा तामसा च पिशाचिका ।
चित्रोत्पला विपाशा च माञ्जना बाहुवाहिनी ॥
हिमवत्पादजा नद्यः सर्व्वपापहरा नृणाम् ।
तापी पयोष्णी निर्विन्ध्या शीघ्रोदा च महानदी ॥
वेन्वा वैतरणी चैव बलाका च कुमुद्वती ।
तोया चैव महागौरी दुर्गा चान्तःशिला तथा ॥
विन्ध्यपादप्रसूतास्तु नद्यः पुण्यजलाः शुभाः ।
ऋषिकुल्या त्रिसामा च मन्दगा मन्दगामिनी ॥
रूपा पानाशिनी चैव ऋषिका वंशकारिणी ।
शुक्तिमत्पादसंजाताः सर्व्वपापहरा नृणाम् ॥
आसां नद्युपनद्यश्च शतशो द्विजपुङ्गवाः ।
सर्व्वाः पापहराः पुण्याः स्नानदानादिकर्म्मसु ॥
तास्विमे कुरुपञ्चाला मध्यदेशादयो जनाः ।
पूर्ब्बे देशादिकाश्चैव कामरूपनिवासिनः ॥
औड्राः कलिङ्गमगधा दाक्षिणात्याश्च सर्व्वशः ।
तथा परान्ताः सौराष्ट्राः शूद्राभीरास्तथा-र्व्वुदाः ॥
मानका मालवाश्चैव पारिपात्रनिवासिनः ।
सौवीराः सैन्धवा हूणाः शाल्वाः कन्यनिवा-सिनः ॥
मद्रा वासास्तथाम्बष्ठाः पारसीकास्तथैव च ।
आसां पिबन्ति सलिलं वसन्ति सरितां सदा ॥
चत्वारि भारते वर्षे युगानि कवयोऽब्रुवन् ।
कृतं त्रेता द्वापरश्च कलिश्चान्यत्र न क्वचित् ॥
यानि किंपुरुषाद्यानि वर्षाण्यष्टौ महर्षयः ।
न तेषु शोको नायासो नोद्वेगः क्षुद्भयन्न च ॥

यानि किंपुरुषाद्यानि वर्ज्जयित्वा
हिमाह्वयम् ॥
सुखमायुश्च रूपञ्च बलं धर्म्मश्च
नित्यशः ।
पञ्चस्वेतेषु वषषु सर्व्वं साधारणं
स्मृतम् ॥ * ॥
आग्नीध्राय पिता पूर्ब्बं जम्बुद्वीपं ददौ
द्विज ।
तस्य पुत्त्रा बभूवुर्हि प्रजापतिसमा नव
॥
ज्येष्ठो नाभिरिति ख्यातस्तस्य
किंपुरुषोऽनुजः ।
हरिवर्षस्तृतीयस्तु
चतुर्थोऽभूदिलावृतः ॥
रम्यश्च पञ्चमः पुत्त्रो हिरण्यः षष्ठ
उच्यते ।
कुरुस्तु सप्तमस्तेषां भद्राश्वश्चाष्टमः
स्मृतः ॥
नवमः केतुमालश्च तन्नाम्ना
वर्षसंस्थितिः । * ।
यानि किंपुरुषाद्यानि वर्ज्जयित्वा
हिमाह्वयम् ॥
तेषां स्वभावतः सिद्धिः सुखप्राया
ह्यपत्नतः ।
विपर्य्ययो न तेष्वस्ति जरामृत्युभयं न
च ॥
धर्म्माधर्म्मौ न तेष्वास्तां
नोत्तमाधममध्यमाः ।
न वै चतुर्युगावस्था नाश्रमाः क्रतवो न
च ॥ * ॥
आग्नीध्रसूनोर्नाभेश्च ऋषभोऽभूत् सुतो
द्विज ।
ऋषभाद्भरतो जज्ञे वीरः पुत्त्रशताद्वरः
।
सोऽभिषिच्यर्षभः पुत्त्रं
महाप्रव्रज्यमास्थितः ।
तपस्तेपे महाभागः पुलहाश्रमसंश्रयः
॥ * ॥
हिमाह्वं दक्षिणं वर्षं भरताय ददौ पिता
।
तस्माच्च भारतं वर्षं तस्य नाम्ना
महात्मनः ॥
परमायुर्मतं तेषां शतं वर्षाणि सुव्रताः ।
नवयोजनसाहस्रं वर्षमेतत् प्रकीर्त्तितम् ॥
कर्म्मभूमिरियं विप्रा नराणामाधिकारिणाम् ।
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्व्वतः ॥
विन्ध्यश्च पारिपात्रश्च सप्तात्र कुलपर्व्वताः ।
इन्द्रद्वीपः कशेरुमांस्ताम्रवर्णो गभस्तिमान् ॥
नागद्वीपस्तथा सौम्यो गन्धर्व्वस्त्वथ वारुणः ।
अयन्तु नवमस्तेषां द्वीपश्च सागरावृतः ॥
योजनानां सहस्रन्तु द्वीपोऽयं दक्षिणोत्तरः ।
पूर्व्वे किरातास्तस्यान्ते पश्चिमे यवनास्तथा
॥
ब्राह्मणाः क्षत्त्रिया वैश्या मध्ये शूद्रास्तथैव च ।
इज्यायुधबणिज्याभिर्व्वर्त्तयन्त्यत्र मानवाः ॥
स्रवन्ते पावना नद्यः पर्व्वतेभ्यो विनिःसृताः ।
शतद्रुश्चन्द्रभागा च सरयूर्यमुना तथा ॥
सुस्थाः प्रजा निरातङ्काः
सर्व्वदुःखविवर्ज्जिताः ।
रमन्ते विविधैर्भावैः सर्व्वाश्चे स्थिरयौवनाः
॥”
इति कूर्म्मपुराणे ४४ अध्यायः ॥
अपरं वामनपुराणे १३ अध्याये द्रष्टव्यम् ॥ *
॥
प्रभवादिषष्टिवर्षाणि वत्सरशब्दे द्रष्टव्यानि ।
तत्र
षष्ठिधा पूज्या देव्यो यथा, --
“संवत्सरप्रमाणेन देव्यः कृत्वा पुरो हि ताः ।
यष्टव्या विधिना तात सर्व्वकामप्रसिद्धिदाः ॥
महाभयविनाशाय महारिपुवधाय च ।
महाभ्युदयकामाय महासिद्धिफलाय च ।
पूजयेत् तद्यजेद्देवीं षष्टिधा परमेश्वरीम् ॥
ऋतुनागकृता पीडा यक्षरक्षोग्रहोद्भवा ।
संवत्सरमहादोषजन्मर्क्षमुपमर्द्दना ॥
केतूल्काशनिराहूतो भौमार्कसितभानुजाः ।
शमयेद्यजमानस्य देवीहोमरतस्य च ॥
मण्डलादिविधानेन महास्नानाभिषेचनैः ।
चन्द्रसंपूर्ण पुष्पार्कफलरत्नाभिपूजनैः ॥
मङ्गला मङ्गलं धत्ते विधिना पूजिता मुने ! ॥

| | | |
|---|---|---|
| भरतस्याप्यभूत् पुत्त्रः सुमतिर्नाम धार्म्मिकः ।<br>तस्मिन् राज्यं समावेश्य भरतोऽपि बनं ययौ ॥<br>एतेषां पुत्त्रपौत्त्रैश्च सप्तद्वीपा वसुन्धरा ।<br>प्रियव्रतस्य पुत्त्रैस्तु भुक्ता स्वायम्भुवेऽन्तरे ॥<br>एष स्वायम्भुवः सर्गः कथितस्ते द्विजोत्तम ।<br>पूर्ब्बमन्वन्तरेशस्य किमन्यत् कथयामि ते ॥”<br>इति मार्कण्डेयपुराणे स्वायम्भुवे मन्वन्तरे भुवन-<br>कोषः ॥ * ॥ अन्यच्च ।<br>सूत उवाच ।<br>“केतुमाले नरोः कालाः सर्व्वे पनसभोजनाः ।<br>स्त्रियश्चोत्पलपत्राश्च जीवन्ति च वर्षायुतम् ॥ | | |

उत्पातक्षोभनिर्घातविक्रान्तानां शमाय च ।
कथयामि महाप्राज्ञ शृणुष्वैकमनाधुना ॥ * ॥
मङ्गला विजया भद्रा शिवा शान्तिर्धृतिः क्षमा ।
ऋद्धिर्वृद्ध्युन्नतिः सिद्धिस्तुष्टिः पुष्टिः श्रिया उमा ॥
दीप्तिः कान्तिर्यशो लक्ष्मीरीश्वरीति प्रकीर्त्तिता ।
विंशताश्चोत्तमा देव्यः सत्त्वभावव्यवस्थिताः ॥
प्रथमं संस्थिता वत्स ! सर्व्वसिद्धिप्रदायिकाः । २०
ब्राह्मी जयावती शाक्री अजिता चापरा-जिता ॥
जरन्ती मानसी माया दितिः श्वेता विमो-हनी ।
शरण्या कौशिकी गौरी विमला ललितालसा ॥
अरुन्धती क्रिया दुर्गा राजसा इति वायुना ।
मध्यभागे स्थिता देव्यो युगानामशुभापहा ॥ २० ॥
काली रौद्री कपाली च घण्टाकर्णा मयूरिकी ।
बहुरूपा सुरूपा च त्रिनेत्रा रिपुहाम्बिका ॥
माहेश्वरी कुमारी च वैष्णवी सुरपूजिताः ।
वैवस्वती तथा घोरा कराली विकटादिभिः ॥
चर्च्चिका चेति धातुस्था देव्यस्त्रैलोक्यविश्रुताः ।
पूजितव्या मुनिश्रेष्ठ ! सर्व्वकामप्रसाधिकाः ॥ २० ॥
त्रिदशामुरगन्धर्व्वयक्षरक्षोगणैर्नुताः ।
भावकालाश्रयाः कार्य्यद्रव्यरूपफलप्रदाः ॥
प्रत्येकशः समस्ता वा कर्त्तव्या मुनिसत्तम ! ।
अथवा युगभेदेन पञ्च पञ्च प्रपूजिताः ॥”
इति देवीपुराणे संवत्सरदेवताविंशतिविधि-

**वर्षपर्व्वतः**, पुं, (वर्षाणां भारतादीनां विभाजकः पर्व्वत इति मध्यलोपी समासः ।) वर्षविभा-जकगिरिः । यथा, --
“हिमवान् हेमकूटश्च निषधो मेरुरेव च ।
चैत्रः कर्णी च शृङ्गी च सप्तैते वर्षपर्व्वताः ॥”
इति हारावली ॥

**वर्षपाकी**, [न्] पुं, (वर्षे वर्षाकाले पाकोऽस्त्यस्येति । वर्षपाक + इनिः ।) आम्रातकः । इति हेम-चन्द्रः । ४ । २१८ ॥ (तथास्य पर्य्यायः । “आम्रातको वर्षपाकी ।” इति वैद्यकरत्न-मालायाम् ॥)

**वर्षपुष्पा**, स्त्री, (वर्षे वर्षणकाले पुष्पं यस्याः ।) सहदेवीलता । इति राजनिर्घण्टः ॥ (सहदेवी-लताशब्देऽस्या विवृतिर्ज्ञेया ॥)

**वर्षप्रियः**, पुं, (वर्षो वर्षणं प्रियं यस्य ।) चातक-पक्षी । इति त्रिकाण्डशेषः ॥

**वर्षवरः**, पुं, (वरतीति । वर आवरणे + अच् । वर्षस्य रेतोवर्षणस्य वर आवरकः ।) षण्ढः । इत्यमरः । २ । ८ । ९ ॥ खोजा । इति भाषा ॥ (यथा, रत्नावल्याम् २ अङ्के ।
“नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपा-मन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः ॥”)

**वर्षवृद्धिः**, स्त्री, (वर्षस्य वृद्धिराधिक्यं यत्र ।) जन्मतिथिः । इति स्मार्त्तव्याख्यादर्शनात् ॥ अथ जन्मतिथिकृत्यम् । तन्मलमासे न कर्त्तव्यं चान्द्र-मासीयत्वेन सावकाशत्वात् । न च तस्य सौर-

माणब्रह्मपुराणोक्तप्रणवादिनमोऽन्तननाम्नैव पूजाविधानाच्च । तदज्ञाने स्वनक्षत्राय नम इत्युल्लेख्यम् ॥ * ॥ पूजायामर्घ्यानन्तरं पाद्य-माह मत्स्यपुराणम् । अर्घ्यं पाद्यादिकन्तत्र मधुपर्कं प्रयोजयेत् । पाद्यानन्तरं अर्घ्यमाह नरसिंहपुराणम् । पाद्यञ्चैव तृतीयया चतुर्थ्यार्घ्य प्रदापयेत् । तृतीयया पुरुषसूक्तीयतृतीयया ऋचा । उभयक्रमदर्शनादिच्छाविकल्पः । इति श्रीदत्तः ॥ * ॥ श्रीपतिव्यवहारनिर्णये ।
“नवाम्बरधरो भूत्वा पूजयेच्च चिरायुषम् ॥”
तथा ।
“द्विभुजं जटिलं सौम्यं सुवृद्धं चिरजीविनम् ।
मार्कण्डेयं नरो भक्त्या पूजतेत् प्रयतस्तथा ॥
ततो दीर्घायुषं व्यासं रामं द्रौणिं कृपं वलिम् ।
प्रह्लादञ्च हनूमन्तं विभीषणमथार्च्चयेत् ॥”
रामोऽत्र परशुरामः । चिरजीविसाहचर्य्यात् । द्रौणिरश्वत्थामा ॥ * ॥ तथा, --
“स्वनक्षत्रं जन्मतिथिं प्राप्य सम्पूजयेन्नरः ।
षष्ठीञ्च दधिभक्तेन वर्षे वर्षे पुनः पुनः ॥”
योगियाज्ञवल्क्यः ।
“ध्यायेन्नारायणं नित्यं स्नानादिषु च कर्म्मसु ।
तद्विष्णोरिति मन्त्रेण स्नायादप्सु पुनः पुनः ॥
गायत्री वैष्णवी ह्येषा विष्णोः संस्मरणाय वै ॥”
ध्यायेत् स्मरेत् । स च मन्त्रः ।
“तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥”
वामनपुराणम् ।
“सर्व्वमङ्गलमङ्गल्यं वरेण्यं वरदं शुभम् ।
नारायणं नमस्कृत्य सर्व्वकर्म्माणि कारयेत् ॥” * ॥
सङ्कल्पाकरणे निन्दामाह भविष्यपुराणम् ।
“सङ्कल्पेन विना राजन् ! यत्किञ्चित् कुरुते नरः ।

नामाध्यायः ॥ (वर्षके, त्रि । यथा, भागवते ।
३ । २१ । २० ।
"नमाम्यभीक्ष्णं नमनीयपादं
सरोजमल्पीयसि कामवर्षम् ॥")

**वर्षकरी**, स्त्री, (वर्षं तत्सूचनं रवेण करो-
तीति । वर्ष + कृ + टः । ङीप् ।) झिल्लिका ।
इति हेमचन्द्रः । ४ । २८२ ॥

**वर्षकेतुः**, पुं, (वर्षस्य वृष्टेः केतुरिव । सति वर्षे
भूरिश उत्पन्नत्वादस्य तथात्वम् ।)
रक्तपुनर्नवा ।
इति राजनिर्घण्टः ॥
(अलर्कवंशीयकेतुमतः
पुत्रः । यथा, हरिवंशे । ३२ । ४० ।
"क्षेम्यस्य केतुमान् पुत्रो
वर्षकेतुस्ततोऽभवत् ॥")

**वर्षकोषः**, पुं, (वर्षस्य वत्सरस्य कोष इव । सर्व्ववर्ष-
ज्ञानवत्त्वात् तथात्वमस्य ।) दैवज्ञः । इति
शब्दरत्नावली ॥ (वर्षस्य
अन्तःस्थितफलकोष
इव कोषः ।) मासः । इति शब्दमाला ॥

**वर्षजं**, त्रि, (वर्षात् जातमिति । जन् + डः ।) वृष्टि-
जातम् । वत्सरजातम् । जम्बुद्वीपजातम् ।
द्वीपांशजातम् । मेघजातम् । इति वर्षशब्द-
पूर्ब्बजनधातोर्ड्प्रत्ययेन निष्पन्नम् ॥

**वर्षणं**, क्ली, (वृष् + ल्युट् ।) वृष्टिः । इति शब्द-
रत्नावली ॥ (यथा, मार्कण्डेयपुराणे ।
१०४ । २१ ।
"तमेव मुञ्चतः सर्व्वं रसं वै वर्षणाय यत् ।
रूपमाप्यायकं भास्वंस्तस्मै मेघाय ते नमः ॥")

**वर्षणिः**, स्त्री, (वृष् + अनिः ।) वर्त्तनम् । कृतिः ।
इत्युणादिकोषः ॥ क्रतुः । वर्षणम् । इति
संक्षिप्तसारोणादिवृत्तिः ॥

मासीयत्वं तथात्वे तन्मासे तत्तिथेः
कदाचिद-
प्राप्तौ तद्वर्षे तत्कृत्यलोपापत्तेः । न
चेष्टापत्तिः
प्रतिसंवत्सरन्तद्विधानात् । यथा ब्रह्मपुराणं
गर्गश्च ।
"सर्व्वैश्च जन्मदिवसे स्नातैर्मङ्गलपाणिभिः ।
गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः ॥
स्वनक्षत्रञ्च पितरौ तथा देवप्रजापतिः ।
प्रति संवत्सरञ्चैव कर्त्तव्यश्च महोत्सवः ॥"
स्नातैस्तिलस्नातैः । प्रजापतिर्ब्रह्मा । तथा
च
तत्तिथिमधिकृत्य ।
"तिलोद्वर्त्ती तिलस्नायी तिलहोमी
तिलप्रदः ।
तिलभुक् तिलवापी च षट्तिली
नावसीदति ॥
मङ्गलपाणिभिः अभिप्रेतार्थसिद्धिर्म्मङ्गलं
तद्धेतु-
तया गोरोचनादिकमपि मङ्गलं तेन धृत-
गुग्गुल्वादिपाणिभिरित्यर्थः । तथा च
कृत्य-
चिन्तामणौ ।
"गुडदुग्धतिलानद्याज्जन्मग्रन्थेश्च
बन्धनम् ।
गुग्गुलुं निम्बसिद्धार्थं दूर्व्वागोरोचनायुतम् ।
संपूज्य भानुविघ्नेशौ महषि प्रार्थयेदिदम् ॥
चिरजीवी यथा त्वं भो भविष्यामि तथा
मुने ! ।
रूपवान् वित्तवांश्चैव श्रिया युक्तश्च
सर्व्वदा ॥
मार्कण्डेय महाभाग सप्तकल्पान्तजीवन ।
आयुरिल्यर्गसिद्ध्यर्थमस्माकं वरदो भव
॥"
स्वनक्षत्रञ्चेति स्वनक्षत्रं
अश्विन्याद्यन्तर्गतजन्म-
कालीननक्षत्रम् । नामकरणे तथा दर्शनात्
वक्ष्य-

फलञ्चाल्पाल्पकं तस्य धर्म्मस्यार्द्धक्षयो
भवेत् ॥"
ब्रह्मपुराणम् ।
"प्रणवादिसमायुक्तं नमस्कारान्तकीर्त्तितम् ।
स्वनामसर्व्वसत्त्वानां मन्त्र इत्यभिधीयते ॥
अनेनैव विधानेन गन्धपुष्पे निवेदयेत् ।
एकैकस्य प्रकुर्व्वीत यथोद्दिष्टं क्रमेण तु ॥"
गन्धपुष्पमात्रं पञ्चोपचाराद्यसम्भवे ।
"मन्त्राच्छतगुणं प्रोक्तं भक्त्या लक्षगुणोत्तरम् ।
भक्तिमन्त्रसमेतन्तु कोटि कोटि गुणोत्तरम् ॥
सर्व्वत्र कर्म्मोपदेशकं दक्षिणादिभिरर्च्चयेत् ।
तथोपदेष्टारमपि पूजयेच्च ततो गुरुम् ।
न पूज्यते गुरुर्यत्र नरैस्तत्राफला क्रिया ॥"
इति मत्स्यपुराणवचनात् ॥ * ॥
ततः कर्म्मानन्तरं तिलहोमस्तु पूजितदेवता-
नामभिः कार्य्यः ।
"एकैकां देवतां राम समुद्दिश्य यथाविधि ।
चतुर्थ्यन्तेन धर्म्मज्ञ नाम्ना च प्रणवादिना ॥
होमद्रव्यमथैकैकं शतसं ख्यन्तु होमयेत् ॥"
इति विष्णुधर्म्मोत्तरदर्शनात् ॥
एवं होमे स्वाहान्तता च मन्त्रस्य ।

"स्वाहावसाने जुहुयात् ध्यायन् वै मन्त्रदेव-
ताम् ॥"
इति स्मृतेः ॥
अशक्तौ तु देवीपुराणम् ।
"होमो ग्रहादिपूजायां शतमष्टोत्तरं भवेत् ।
अष्टाविंशतिरष्टौ वा यथाशक्ति विधीयते ॥" * ॥
स्कान्दे ।
"खण्डनं नखकेशानां मैथुनाध्वानमेव च ।
आमिषं कलहं हिंसां वर्षवृद्धौ विवर्ज्जयेत् ॥"
अध्वानं अध्वगमनम् । कलहमित्यत्र सङ्गर-
मिति क्वचित् पाठः । सङ्गरं युद्धम् । वर्षवृद्धौ
जन्मदिने ॥ * ॥ वृद्धमनुः ।
"मृते जन्मनि संक्रान्तौ श्राद्धे जन्मदिने तथा ।
अस्पृश्यस्पर्शने चैव न स्नायादुष्टवारिणा ॥"
जन्मनि पुत्त्रजन्मनि । ज्योतिषे ।
"स्नात्वा जन्मदिने स्त्रियं परिहरन् प्राप्नोत्य-
भीष्टां श्रियं
मत्स्यान्मोचयतो द्विजाय ददतोऽप्यायुश्चिरं
वर्द्धते ।
शक्तून् खादति यश्च तस्य रिपवो नाशं प्रयान्ति
ध्रुवं
भुङ्क्ते यस्तु निरामिषं स हि भवेज्जन्मान्तरे
पण्डितः ॥" * ॥
दीपिकायाम् ।
"जन्मर्क्षयुक्ता यदि जन्ममासे
यस्य ध्रुवं जन्मतिथिर्भवेच्च ।
भवन्ति तद्वत्सरमेव याव-
त्वस्त्री स्त्रियां शेषाः । इत्यनेन लिङ्गनिर्णयः ॥ * ॥
जन्मनक्षत्रादीनां गोपनमाह विष्णुधर्म्मोत्तरे ।
"गोपयेज्जन्मनक्षत्रं धनसारं गृहे मलम् ।
प्रभोरप्यपमानञ्च तस्य दुश्चरितञ्च यत् ॥"
धनसारं घनश्रेष्ठम् । मलं छिद्रम् ॥ पितरौ
प्रजापतिः सूर्य्यो गणपतिर्मार्कण्डेयश्च
पूजनीयः ।
तत्र पार्थनमन्त्रौ ।
"चिरजीवी यथा त्वं भो भविष्यामि तथा मुने ।
रूपवान् वित्तवांश्चैव श्रिया युक्तश्च सर्व्वदा ॥
मार्कण्डेय महाभाग सप्तकल्पान्तजीवन ।
आयुरिष्टार्थसिद्ध्यर्थमस्माकं वरदो भव ॥"
ततो व्यासपरशुरामाश्वत्थामकृपवलिप्रह्लाद-
हनूमद्विभीषणाः पूजनीयाः । षष्ठ्यपि पूज-
नीया ।
"त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ।
ब्रह्मविष्णुशिवैः सार्द्धं रक्षां कुर्व्वन्तु तानि मे ॥"
इति मत्स्यपुराणीयं रक्षार्थं पठेत् ॥ * ॥
पितृमातृपादग्रहणक्रमस्तु विष्णुपुराणादुन्नेयः ।
यथा, --
"कृष्णोऽपि वसुदेवस्य पादौ जग्राह सत्वरः ।
देवक्याश्च महाबाहुर्बलदेवसहायवान् ॥"
एवञ्च ।
"सहस्रन्तु पितुर्माता गौरवेणातिरिच्यते ॥"
इति मनुवचने पितुरपेक्षया यत् सहसं मातु-
र्गौरवमुक्तं यत् पोषणरक्षार्थम् । अतएव
मनुः ।
"मृते भर्त्तरि पुत्त्रस्तु वाच्यो मातुररक्षिता ॥"
वाच्यो गर्हणीयः ॥ * ॥ गुडदुग्धतिलपाने तु
मन्त्रः ।
"सतिलं गुडसंमिश्रमञ्जल्यर्द्धमितं पयः ।
मार्कण्डेयवरं लब्ध्वा पिबाम्यायुष्यहेतवे ॥"
अत्र वैदिकेतरमन्त्रपाठे शूद्रादेरप्यधिकारः ।
जन्मतिथेः प्रागुक्तब्रह्मपुराणीयत्वात्पौर्णमा-
स्यन्तमासादरः ॥ * ॥
जन्मतिथेरुभयदिनलाभे
तु देवीपुराणम् ।
"युगाद्या वर्षवृद्धिश्च सप्तमी पार्व्वतीप्रिया ।

**वर्षाः**, स्त्री भुम्नि, (वर्षो वर्षणमस्त्यासु इति ।
वर्ष + अर्शआदित्वात् अच् । टाप् । यद्वा, व्रियन्ते
इति । वृ + "वृतॄवदीति ।" उणा० ३ । ६२ ।
इति सः । ततष्टाप् ।) स्वनामख्यात ऋतुः ।
तत्पर्य्यायः । प्रावृट् २ । इत्यमरः । १ । ४ । १९ ॥
घनकालः ३ जलार्णवः ४ प्रवृट् ५ मेघागमः ६
घनाकरः ७ । इति शब्दरत्नावली ॥ प्रावृषा ८ ।
इति त्रिकाण्डशेषः ॥ स च ऋतुः सौरश्रावण-
भाद्रमासद्वयात्मकः ।
आषाढादिमासचतुष्टया-
त्मकश्च । आद्यस्य प्रमाणम् । यथा । तपस्त-
पस्यौ शैशिरावृतुः । मधुश्च माधवश्च वासन्ति-
कावृतुः । शुक्रश्च शुचिश्च ग्रैष्मावृतुः । अथैत-
दुदगयनं देवानां दिनम् । नभाश्च नभस्यश्च
वार्षिकावृतुः । इषश्च ऊर्ज्जश्च शारदावृतुः ।
सहाश्च सहस्यश्च हैमन्तिकावृतुः । अथैतद्-
दक्षिणायनं देवानां रात्रिः । इति मलमास-
तत्त्वधृता श्रुतिः ॥ शेषस्य प्रमाणं तत्र चातु-
र्मास्यव्रतनियमश्च यथा । वाराहे ।
"आषाढशुक्लद्वादश्यां पौर्णमास्यामथापि वा ।
चातुर्मास्यव्रतारम्भं कुर्य्यात् कर्कटसंक्रमे ॥
अभावे तु तुलार्केऽपि मन्त्रेण नियमं व्रती ।
कार्त्तिके शुक्लद्वादश्यां विधिवत्तत् समापयेत् ॥
चतुर्धापि हि तच्चीर्णं चातुर्मास्यं व्रतं नरः ।
कार्त्तिक्यां शुक्लपक्षे तु द्वादश्यां तत्समापयेत् ॥"
मात्स्ये ।

न्नैरुज्यसम्मानसुखानि तस्य ॥
कृतान्तकुजयोव्वरि यस्य
जन्मतिथिर्भवेत् ।
अनृक्षयोगसंप्राप्तौ विघ्नस्तस्य पदे पदे
॥”
कृतान्तकुजयोः शनिमङ्गलयोः ।
“तस्य सर्व्वौषधिस्नाणं
ग्रहविप्रसुरार्च्चनम् ।
ग्रहानुदिश्य होमो वा ग्रहाणां
प्रीतिमिच्छता ॥
सोरारयोर्दिने मुक्ता देयानृक्षे तु काञ्चनम्
॥
मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम्
।
शटी चम्पकमुस्तञ्च सर्व्वौषधिगणः
स्मृतः ॥”
रजनीद्वयं हरिद्रा दारुहरिद्रेति । एतेषां
पत्रादीनां ग्रहणम् । कषायावयवग्रहणे
मत्स्य-
पुराणविष्णुधर्म्मोत्तरयोस्तथा दर्शनात्
। तद्-
यथा, --
“एषां पत्राणि साराणि मूलानि कुसुमानि
च ।
एवमादीनि चान्यानि कषायाख्यो गणः
स्मृतः ॥”
आयुर्व्वेदोक्ता परिभाषा ।
“अङ्गेऽप्यनुक्ते विहितन्तु मूलं
भागेऽप्यनुक्ते समता विधेया ॥”
तत्र क्रमः । तिलोद्वर्त्तनम् ।
तिलयुक्तजलेन
स्नानम् । नववस्त्रपरीधानम् ।
गुग्गुलुनिम्ब-
सिद्धार्थदूर्व्वा-गोरोचनात्मकजन्मग्रन्थिं
दक्षिणे
पाणौ वध्नीयात् । गुरुदेवाग्निविप्राश्च
पूज-
नीयाः । स्वनक्षत्रं पूजनीयम् । अत्र च ।
हस्ता स्वाती श्रवणा अक्लीवे ।
मृगशिरो
नपुंसि स्यात् । पुंसि च पुनर्व्वसुपुष्यौ ।
मूलं
रवेरुदयमीक्ष्यन्ते न तत्र तिथियुग्मता ॥
घस्रद्वये जन्मतिथिर्यदि स्यात्
पूज्या तदा जन्मभसंयुतैव ।
असङ्गता भेन दिनद्वयेऽपि
पूज्या परा या भवतीह यत्नात् ॥”
भं नक्षत्रम् । परवचनं बृहद्राजमार्त्तण्डेऽपि ।
पूर्ब्बाह्णे तिथिनक्षत्रलाभ एवेदं लक्ष्यते ।
“नक्षत्रे खण्डिते येन प्राप्तः कालस्तु कर्म्मणः ।
नक्षत्रकर्म्माण्यत्रैव तिथिकर्म्म तथैव च ॥”
इति बृहस्पतिवचनात् ॥
खण्डिते खण्डद्वययुक्ते येन नक्षत्रखण्डेन
विहित-
कालः प्राप्तः । नक्षत्रद्वैधे तु बौधायनमार्कण्डेयौ
।
“तन्नक्षत्रमहोरात्रं यस्मिन्नस्तं गतो रविः ।
यस्मिन्नुदेति सविता तन्नक्षत्रं दिनं स्मृतम् ॥”
इति तिथ्यादितत्त्वम् ॥
“चतुरो वार्षिकान् मासान् देवस्योत्थापना-
वधि ।
मधुस्वरां भवेन्नित्यं नरो गुडविवर्ज्जनात् ॥
तैलस्य वर्ज्ज नादेव सुन्दराङ्गः प्रजायते ।
कटुतैलपरित्यागात् शत्रुनाशः प्रजायते ॥
लभते सन्ततिं दीर्घां स्थालीपाकमभक्षयन्
।
सदा मुनिः सदा योगी मधुमांसस्य
वर्ज्जनात् ॥
निराधिर्नीरुगोजस्वी विष्णुभक्तश्च जायते ।
एकान्तरोपवासेन विष्णुलोकमवाप्नुयात् ॥
धारणान्नखलोम्नाञ्च गङ्गास्नानं दिने दिने ।
ताम्बूलवर्ज्जनाद्भोगी रक्तकण्ठश्च जायते ॥
घृतत्यागात् सुलावण्यं सर्व्वं स्निग्धं
वपुर्भवेत् ।
फलत्यागात्तु मतिमान् बहुपुत्त्रश्च जायते ॥
नमो नारायणायेति जप्त्वानशनजं फलम् ।
पादाभिवन्दनाद्विष्णोर्लभेद्गोदानजं फलम्
॥
एवमादिव्रतैः पार्थ तुष्टिमायाति केशवः ॥”
सनत्कुमारः ।
“इदं व्रतं मया देव ! गृहीतं पुरतस्तव ।
निर्व्विघ्नां सिद्धिमाप्नोतु प्रसन्ने त्वयि
केशव ! ॥
गृहीतेऽस्मिन् व्रते देव यद्यपूर्णे त्वहं म्रिये ।
तन्मे भवतु सम्पूर्णं त्वत्प्रसादाज्जनार्द्दन !
॥”
समाप्तौ च ।
“इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो ।
नूनं सम्पूर्णतां यातु त्वत्प्रसादाज्जनार्द्दन
॥” * ॥
अत्रैव यतिमधिकृत्य काठकगृह्यम् ।
“एकरात्रं वसेद्ग्रामे नगरे पञ्चरात्रकम् ।
वर्षाभ्योऽन्यत्र वर्षासु मासांश्च चतुरो वसेत्
॥”

एतदशक्तविषयम् । ऊद्ध्वं वार्षिकाभ्यां
मासाभ्यां
नैकस्थानवासी इति शङ्खोक्तेः । इति
तिथ्यादि-
तत्त्वम् ॥ वर्षर्त्तौ वर्णनीयानि यथा, --
"वर्षासु घनशिखिस्मयहंसगमाः
पङ्ककन्दलो-
द्भेदौ ।
जातीकदम्बकेतकझञ्झानिलनिम्नगाहलि-
प्रीतिः ॥"
इति कविकल्पलतायाम् १ स्तवके ३
कुसुमम् ॥
(एतत्काललक्षणादिकं यथा, --
"सघनवारिदवारिसमाकुला
निखिलभूः प्रबलोदकपूरिता ।
समदवातकरा विदिशो दिशो
मुदितकीटकृमिप्रभवा मही ॥
नीलशस्यहरितोज्ज्वला मही
कुल्यकासलिलसंप्लुता सरित् ।
इन्द्रगोपकविराजिता धरा
पङ्कभूषणविभूषिता च सा ॥
पत्री कूजति कानने च सरसी म्लानाम्बुपूर्णा
तथा
हंसा मानसमाव्रजन्ति कमलान्यम्लानतां
यान्ति
च ॥
गर्ज्जन्मेघमहेन्द्रकन्दरदरीशस्यावृता
श्यामला
भात्येवं पवनस्य कोपनकरो वर्षाऋतुः
शोभितः ॥"
"किञ्चिद्धर्म्मो भवेदत्र शस्यानां दृढता भवेत्
।
बहुशस्या भवेद्धात्री वारिपूर्णा सरिन्मुहुः ॥
बहूदकधरा मेघा बहुवृष्टा घनस्वनाः ।
एवं गुणसमायुक्ता वर्षा ज्ञेया ऋतूत्तमाः ॥
तासु वातकफौ कुप्तौ जायेते हि नृणां भृशम्
।
इति ज्ञात्वा भिषक् श्रेष्ठः कुर्य्यादस्य प्रति-
क्रियाम् ॥
स्वेदनं मर्द्दनं पथ्यं निर्व्वाति शयनन्तथा ।

**वर्षाघोषः**, पुं, (वर्षासु घोषो महान् शब्दोऽस्य ।) महामण्डूकः । इति राजनिर्घण्टः ॥

**वर्षाङ्गः**, पुं, (वर्षस्य वत्सरस्य अङ्गमिव । अभिधानात् पुंस्त्वम् ।) मासः । इति हारावली । २८ ॥

**वर्षाङ्गी**, स्त्री, (वर्षासु अङ्गं यस्याः । तत्र जाता-ङ्कुरवर्द्धनादस्यास्तथात्वम् ।) पुनर्नवा । इति शब्दरत्नावली ॥ (विषयोऽस्याः पुनर्नवाशब्दे ज्ञातव्यः ॥)

**वर्षाभवः**, पुं, (वर्षासु भवतीति । भू + अच् । वर्षासु भव उत्पत्तिर्यस्य वा ।) रक्तपुनर्नवा । इति राजनिर्घण्टः ॥ वर्षाजाते, त्रि ॥

**वर्षाभूः**, पुं, (वर्षासु भवतीति । भू + क्विप् ।) भेकः । इत्यमरः । १ । १० । २४ ॥ (अस्य पर्य्यायो यथा, --
"मण्डूकः प्लवगो भेको वर्षाभूर्द्दर्दुरो हरिः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे
॥)
इन्द्रगोपः । इति राजनिर्घण्टः ॥ भूलता ।
इति
मेदिनी । भे, १८ ॥

**वर्षाभूः**, स्त्री, (वर्षासु भवतीति । भू + क्विप् ।) पुनर्नवा । इति मेदिनी । भे, १८ ॥ (यथा, सुश्रुते सूत्रस्थाने ४५ अध्याये ।
"तिलपर्णिकावर्षाभूचित्रमूलकपोतिकालशुन-
पलाण्डुकलायप्रभृतीनि ॥") भेकी । इति
भरत-
धृतरूपरत्नाकरः ॥ वर्षाभवे, त्रि ॥

**वर्षाभ्वी**, स्त्री, (वर्षाभू + ङीप् ।) भेकी । इत्यमरः । १ । १० । २४ ॥ पुनर्नवा । इत्यमरमाला भागुरिश्च ॥

**वर्षामदः**, पुं, (वर्षासु माद्यतीति । मद् + अच् ।) मयूरः । इति केचित् ॥

**वर्षाम्भःपारणव्रतः**, पुं, (वर्षाम्भो वृष्टिजलं तस्य पारणं उपवासान्ते पानं व्रतमिव यस्य ।)

**वर्षुकः**, त्रि, (वर्षति तच्छील इति । वृष + "लष-पतपदस्थाभूवृषहनकमगमशॄभ्यउकञ्
।" ३ ।
२ । १५४ । इति उकञ् ।) वर्षणकर्त्ता ।
वृष-
धातोर्र्ष्णुकप्रत्ययेन निष्पन्नः ॥ (यथा,
भट्टौ ।
२ । ३७ ।
"जग्मुः प्रसादं द्विजमानसानि
द्यौर्वर्षुका पुष्पचयं बभूव ।
निर्व्याजमिज्या ववृते वचश्च
भूयो बभाषे मुनिना कुमारः ॥")

**वर्षुकाब्दः**, पुं, (वर्षुकश्चासौ अब्दश्चेति कर्म्म-धारयः ।) वर्षणशीलमेघः । इति जटाधरः ॥

**वर्षेजः**, त्रि, (वर्षे जायते इति । जन + डः । सप्तम्या अलुक् ।) वर्षाकालजातः ।
वत्सर-
जातः ।
सप्तम्यन्तवर्षशब्दपूर्ब्बकजनधातोर्ड्प्रत्य-
येन निष्पन्नः ॥

**वर्षोपलः**, पुं, (वर्षाणामुपलः ।) मेघभवशिला । करका । इत्यमरः । १ । ३ । १२ ॥
(यथा,
बृहत्संहितायाम् । ८१ । २४ ।
"वर्षोपलवज्जातं वायुस्कन्धाच्च
सप्तमाद्भ्रष्टम् ।
ह्रियते किल खाद्दिव्यैस्तडित्प्रभं
मेघसम्भूतम् ॥")

**वर्ष्म**, [न्] क्ली, (वर्षति वृष्यते वेति । वृष् + मनिन् ।) शरीरम् । (यथा,
कथासरित्सागरे ।
२ । ५ ।
"ददर्श च समीपेऽस्य पिशाचानां
शतर्वृतम् ।
काणभूतिं पिशाचं तं वर्ष्मणा
शालसन्निभम् ॥")

गौररामारतं शस्तं व्यायामः क्रमविक्रमः ॥
कट्वम्लक्षारसुरसाः सेव्या वातकफापहाः ।
निरूहा वस्तिकर्म्माद्याः कफवातरुजापहाः ॥”
इति हारीते प्रथमे स्थाने चतुर्थेऽध्याये ॥
“आदानग्लानवपुषामग्निः सन्नोऽपि सीदति ।
वर्षासु दोषैर्दूष्यन्ति तेऽम्बुलम्बाम्बुदेऽम्बरे ॥
सतुषारेण मरुता सहसा शीतलेन च ।
भूवाष्पेणाम्लपाकेन मलिनेन च वारिणा ॥
वह्निनैव च मन्देन तेष्वित्यन्योन्यदूषिषु ।
भजेत् साधारणं सर्व्वमुष्मणस्तेजनञ्च यत् ॥
आस्थापनं शुद्धतनुर्जीर्णं धान्यं रसान् कृतान् ।
जाङ्गलं पिशितं यूषान् मध्वरिष्टं चिरन्त-नम् ॥
मस्तु सौवर्च्चलाढ्यं वा पञ्चकोलावचूर्णितम् ।
दिव्यं कौर्प शृतञ्चाम्भो भोजनन्त्वतिदुर्द्दिने ॥
व्यक्ताम्ललवणस्नेहं संशुष्कं क्षौद्रवल्लघु ।
अपादचारी सुरभिः सततं धूपिताम्बरः ॥
हर्म्यपृष्ठे वसेद्बाष्पशीतशीकरवज्जित ।
नदीजलोदमन्थाहःस्वप्नायासातपांस्त्यजेत् ॥”
इति वाभटे सूत्रस्थाने तृतीयेऽध्याये ॥)

**वर्षांशः**, पुं, (वर्षस्य वत्सरस्य अंशः ।) मासः । इति त्रिकाण्डशेषः ॥

चातकपक्षी । इति केचित् ॥

**वर्षारात्रः**, पुं, (वर्षाणां रात्रिः । ततः समासान्तो-ऽच् ।) वर्षाकालीनरात्रिः । इति पुंलिङ्गसंग्रह-टीकायां भरतः ॥

**वर्षार्च्चिः**, [स्] पुं, (वर्षासु अर्च्चिर्दीप्तिरस्य ।) मङ्गलग्रहः । इति शब्दरत्नावली ॥

**वर्षालङ्कायिका**, स्त्री, पृक्का । इत्यमरटीकायां भरतः ॥

**वर्षावसानः**, पुं, (वर्षाणामवसानमत्र ।) शरत्-कालः । इति राजनिर्घण्टः ॥

**वर्षिक**, त्रि, वर्षासम्बन्धि । वर्षसम्बन्धि । वर्षाशब्दात् वर्षशब्दाच्च परेण ष्णिकप्रत्ययेन निष्पन्नम् ॥

**वर्षिष्ठः**, त्रि, अतिशयवृद्धः । अयमनयोरतिशयेन वृद्धः इत्यर्थे वृद्धस्थाने वर्षादेशे इष्ठप्रत्ययेन निष्पन्नः ॥

**वर्षीयान्**, [स्] त्रि, (अयमनयोरतिशयेन वृद्धः । वृद्ध + इयसुन् । वर्षादेशः ।) अतिवृद्धः । तत्-पर्य्यायः । दशमी २ ज्यायान् ३ । इत्यमरः । ३ । २ । २३४ ॥ (यथा, --
“आषोडशाद् भवेद्बालस्तरुणस्तत उच्यते ।
वृद्धः स्यात् सप्ततेरूद्‌र्ध्वं वर्षीयान् नवतेः परम् ॥”
इति स्मृतिः ॥)

प्रमाणम् । इत्यमरः । ३ । ३ । २२३ ॥ प्रमाण-मत्रोन्नतिरिति स्वामी ॥ (यथा, महाभारते । १ । ३१ । ८ ।
“अथापश्यदृषीन् ह्रस्वान् अङ्गुष्ठोदरवर्ष्मणः ।
पलालवृन्तिकामेकां वहतः संहतान् पथि ॥”)
इयत्ता । इति भरतः ॥ अतिसुन्दराकृतिः । इति मेदिनी । ने, १२८ ॥ (उन्नते स्थिरे च त्रि । यथा, ऋग्वेदे । १० । २८ । २ ।
“सरोरुवद्वृषभस्तिग्मशृङ्गो
वर्ष्म न्तस्थौ वरिमन्ना पृथिव्याः ।”
“वर्ष्मन्शब्द उन्नतवचनः स्थिरवचनो वा ।”
इति तद्भाष्ये सायणः ॥ वर्षीयान् । यथा, भाग-वते । ५ । १८ । ३० ।
“ॐ नमो भगवतेऽकूपाराय सर्व्वसत्त्वगुणविशे-षणाय नमोऽनुपलक्षितस्थानायनमो वर्ष्मणे
नमो भूम्ने नमोऽवस्थानाय नमस्ते ॥”
“वर्ष्मणे वर्षीयसे ।” इति तट्टीकायां श्रीधरः ॥)

**वर्ष्मं**, क्ली, शरीरम् । इति द्विरूपकोषः ॥

**वर्ह**, क वधे । दीप्तौ । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-वधे सक०-दीप्तौ अक०-सेट् ।) रेफोपधः । क, वर्हयति । इति दुर्गादासः ॥

**वर्ह**, ङ श्रैष्ठ्ये । इति कविकल्पद्रुमः ॥ (स्वा०-आत्म०-अक०-सेट् ।) ङ, वर्हते धनी श्रेष्ठः स्यादित्यर्थः ॥

**व(व)र्हं**, क्ली, (वर्हयति दीप्यते इति । वर्ह +

"यथा वर्हाणि चित्राणि बिभर्त्ति
भुजगाशनः ।
तथा बहुविधं राजारूपं कुर्व्वीत
धर्म्मवित् ॥")
ग्रन्थिपर्णम् । इति भरतः ॥ (वर्हतीति ।
वृह
वृद्धौ + अच् ।) पत्रम् । इति
शब्दरत्नावली ॥
(यथा, रघुः । ६ । १७ ।
"विलासिनी विभ्रमदन्तपत्र-
मापाण्डुरं केतकवर्हमन्यः ।
प्रियानितम्बोत्तितसन्निवेशै-
र्विपाटयामास युवा नखाग्रैः ॥")
परीवारः । इति हेमचन्द्रः ॥

**वर्हणं**, क्ली, (वर्हतीति । वृह वृद्धौ + ल्युः ।
वर्हयति शोभते इति । वर्ह दीप्तौ +
ल्युर्वा ।)
पत्रम् । इति शब्दरत्नावली ॥

**व(ब)र्हिः** [स्], पुं, (वृंहति वर्द्धते इति । वृहि
वृद्धौ + "वृंहेर्नलोपश्च ।" उणा० २ ।
११० । इति
इसिः नलोपश्च ।) अग्निः । इति मेदिनी
। से, ३६ ॥
दीप्तिः । इत्युणादिकोषः ॥ यज्ञः । इति
हेम-
चन्द्रः ॥ (यथा, ऋग्वेदे । ७ । ७५ । ८
।
"नूनो गोमद्वीरवद्वेहि रत्न-
मुषो अश्वावत् पुरुभोजो अस्मे ।
मानो बर्हिः पुरुषता निदेक-
र्यूयं पातस्वस्तिभिः सदा नः ॥"
"नोऽस्माकं बर्हिर्यज्ञम् ।" इति तद्भाष्ये
सायणः ॥)
चित्रकम् । इत्यमरः ॥ (बृहद्राजस्य
पुत्रः ।
यथा, भागवते । ९ । १२ । १३ ।
"बृहद्राजस्तु तस्यापि वर्हिस्तस्मात्
कृत-
क्ली । तगरम् । तत्पर्य्यायो यथा, --
"कालानुसार्य्यं तगरं कुटिलं मधुरं मतम् ।
अपरं पिण्डतगरं दण्डहस्ती च बर्हिणम् ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**वर्हिणवाहनः**, पुं, (वर्हिणो मयूरो वाहनं यस्य ।)
कार्त्तिकेयः । इति हलायुधः ॥

**वर्हिर्ध्वजा**, स्त्री, (वर्ही ध्वजो वाहनं यस्याः ।)
चण्डी । इति त्रिकाण्डशेषः ॥

**वर्हिपुष्पं**, क्ली, (वर्हि वर्हशालि पुष्प यस्य ।)
ग्रन्थिपर्णम् । इत्यमरः । २ । ४ । १३२ ॥

**वर्हिर्ज्योतिः**, [स्] पुं, (वर्हिषि यज्ञे ज्योति-
रस्य ।) वह्निः । इति हेमचन्द्रः । ४ ।
१६४ ।

**वर्हिर्मुखः**, पुं, (वर्हिरग्निर्मुखं यस्य ।) देवता ।
इत्यमरः । १ । १ । ९ ॥

**वर्हिषदः**, [द्] पुं, (वर्हिषि अग्नौ कुशासने वा
सीदन्ति ये ते । वर्हिस् + सद् + क्विप् ।
पृषो-
दरादित्वात् साधुः ।) पितृगणविशेषः ।
यथा,
"अयज्वानश्च यज्वानः पितरो ब्रह्मणः
सुताः ।
अग्निस्वात्ता वर्हिषदो द्विधा तेषां
व्यवस्थितिः ॥"
इति कौर्म्मे १२ अध्यायः ॥
अपि च ।
"अपसव्यं ततः कृत्वा सव्यं जानु च भूतले
।
अग्निस्वात्तांस्तथा सौम्यान्
हविष्मन्तस्तथोष्म-
पान् ॥
सुकालिनो वर्हिषद आज्यपांस्तर्पयेत्ततः ।
तर्पयेच्च पितॄन् भक्त्या
सतिलोदकचन्दनैः ॥

**व(ब)र्ही**, [न्] पुं, (वर्हमस्यास्तीति । वर्ह +
इनिः ।) मयूरः । इत्यमरः ॥ (यथा, ऋतु-
संहारे । २ । ६ ।
"सदा मनोज्ञाम्बुदनादसोत्सुकं
विभाति विस्तीर्णकलापशोभितम् ।
ससम्भ्रमालिङ्गनचुम्बनाकुलं
प्रवृत्तनृत्यं कुलमद्य वर्हिणाम् ॥"
प्राधागर्भसम्भूतः कश्यपपुत्त्रविशेषः । यथा,
महाभारते । १ । ६५ । ४७ ।
"सिद्धः पूर्णश्च वर्ही च पूर्णायुश्च महा-
यशाः ॥")

**वल**, मि ङ संवरणे । इति कविकल्पद्रुमः ॥
(भ्वा०-आत्म०-सक०-सेट् ।) मि, वलयति
वाल-
यति । ङ, वलते धनं लोकः संवृणोतीत्यर्थः ।
इति दुर्गादासः ॥

**वलभिः**, स्त्री, (वलभि + कृदिकारादिति वा
ङीष् ।) वडभी । इति शब्दरत्ना-
वली अमरटीका च ॥ (यथा, कथासरित्-
सागरे । ८७ । १२ ।

**वलभी**, स्त्री, (वलभि + कृदिकारादिति वा
ङीष् ।) वडभी । इति शब्दरत्ना-
वली अमरटीका च ॥ (यथा, कथासरित्-
सागरे । ८७ । १२ ।
"हर्म्यप्रासादवलभीष्वन्विष्यन् सोऽभ्रमन्निशि
॥"
पुरीविशेषः । यथा, भट्टिः । २३ । ३५ ।
"काव्यमिदं विहितं मया वलभ्यां
श्रीधरसेननरेन्द्रपालितायाम् ।
कीर्त्तिरतो भवतान्नृपस्य तस्य
क्षेमकरः क्षितिपो यतः प्रजानाम् ॥")

**वलयः**, पुं, क्ली, (वलते आवृणोति हस्तादिक-
मिति । वल् + "वलिमलितनिभ्यः कयन् ।"
उणा० ४ । ९९ । इति कयन् ।) स्वर्णादि-
रचितप्रकोष्ठाभरणम् । बाला इति भाषा ।
तत्पर्य्यायः । आवापकः २ परिहार्य्यः ३

ञयः ॥")

**व(ब)र्हिः** [स्], पुं, क्ली, (वृंहति वर्द्धते इति । वृहि वृद्धौ + "वृंहेर्नलोपश्च ।" उणा० २ । ११० ।
इति इसिः नलोपश्च ।) कुशः । इति मेदिनी ।
से, ६३ ॥ (यथा, कुमारे । १ । ६१ ।
"अवचितवलिपुष्पा वेदिसन्मार्गदक्षा
नियमविधिजलानां वर्हिषाञ्चोपनेत्री ॥")

**वर्हिः** [स्] क्ली, (वृंहतीति । वृहि वृद्धौ + इसिः नलोपश्च ।) ग्रन्थिपर्णम् । इति शब्दरत्नावली ॥

**वर्हिःपुष्पं**, क्ली, (वर्हिर्दीप्तिस्तद्युक्तं पुष्पमस्य ।) ग्रन्थिपर्णम् । इत्यमरटीकायां भरतः ॥

**वर्हिःशुष्मा** [न्], पुं, (वर्हिषा कुशेन वर्हिषि यज्ञे वा शुष्म तेजो यस्य ।) अग्निः । इत्यमरः । १ । १ । ५७ ॥

**वर्हिःष्ठं**, क्ली, (बर्हिरिव तिष्ठतीति । स्था + कः ।) वर्हिष्ठम् । ह्रीवेरम् । इत्यमरभरतौ ॥

**वर्हिकुसुमं**, क्ली, (वर्हि वर्हयुक्तं कुसुमं यस्य ।) ग्रन्थिपर्णम् । इति शब्दचन्द्रिका ॥

**व(ब)र्हिणः**, पुं, (बर्हमस्त्यस्येति । वर्ह + "फल-बर्हाभ्यामिनच् ।" इति इनच् । यद्वा "बहुल-मन्यत्रापि ।" उणा० २ । ४९ । इत्यत्र वर्ह वल्ह प्राधान्ये । बर्हिणो मयूरः । इत्युज्ज्वलदत्तोक्त्या इनच् ।) मयूरः । इत्यमरः । २ । ५ । ३० ॥
(यथा, मनौ । १२ । ६५ ।
"छुछुन्दरिः शुभान् गन्धान् पत्रशाकन्तु बर्हिणः ।
श्वावित् कृतान्नं विविधमकृतान्नन्तु शल्यकः ॥"
दर्भपाणिस्तु विधिना हस्ताभ्यां तर्पयेत्ततः ॥"
अत्र केचित् पितृधर्म्मातिदेशात् दिव्यपितृणा-मपि अञ्जलित्रयदानम् । तदसत् ।
"कव्यबालं नलं सौम्यं यममर्य्यमणं तथा ।
अग्निस्वात्ताः सोमपाश्च वर्हिषदः सकृत् सकृत् ॥"
इति च्छन्दोगपरिशिष्टेन विशिष्टैकाञ्जलिविधा-नात् । इत्याह्निकतत्त्वम् ॥ (पृथुवंशजस्य हवि-र्द्धानेः पुत्त्रः । यथा, भागवते । ४ । २४ । ८ -- ९ ।
"हविर्द्धानाद्धाविर्द्धानिर्व्विदूरासूत षट्सुतान् ।
वर्हिषदं पयं शुक्लं कृष्णं सत्यं जितव्रतम् ॥
वर्हिषत्सु महाभागो हविर्द्धानिः प्रजापतिः ।
क्रियाकान्तेषु निष्णातो योगेषु च कुरूद्वह ॥"
वर्हिषि यज्ञे सीदतीति । यज्ञस्थे, त्रि । यथा, ऋग्वेदे । २ । ३ । ३ ।
"स आ वह मरुतां शर्धो अच्युत-
मिन्द्रं नरो वर्हिषदं यजध्वम् ॥")

**वर्हिष्कशः**, पुं, (वर्हिर्दीप्तिरेव केश इव यस्य ।) अग्निः । इति शोचिष्केशशब्ददर्शनात् ॥

**वर्हिष्ठं**, क्ली, (वर्हिषि तिष्ठतीति । स्था + कः । अम्बाम्बेति षत्वम् ।) ह्रीवेरम् । इत्यमरः ॥
(यथा, सुश्रुते उत्तरतन्त्रे ११ अध्यायः ।
"स्वेदं विदध्यादथवानुलेपं
वर्हिष्ठशुण्ठीसुरकाष्ठकुष्ठैः ॥"
त्रि, वृद्धतमः । इति सायणः । यथा, ऋग-वेदे । ३ । १३ । १ ।
"प्रवो देवायाग्नये वर्हिष्ठमर्च्चास्मै ॥")

कटकः ४ । इत्यमरः ॥ पारिहार्य्यः ५ शंखकः ६ ।
इति शब्दरत्नावली ॥ कम्बुः ७ कुण्डलम् ८ । इति जटाधरः ॥ (यथा, रामायणे । २ । ३२ । ५ ।
"सहेमसूत्रैर्म्मणिभिः केयूरैर्व्वलयैरपि ॥"
मण्डलम् । यथा, मार्कण्डेये । २० । ४९ ।
"अश्रान्तः सकलं भूमेर्वलयं तुरगोत्तमः ।
समर्थः क्रान्तुमर्केण तवायं प्रतिपादितः ॥"
अस्थिविशेषः । यथा, सुश्रुते शारीरस्थाने ५ अध्याये ॥
"कपालरुचकतरुणवलयनलकसंज्ञानि ।"
"पाणिपादपार्श्वपृष्ठोदरःसु वलयानि ॥"
वैद्यकोक्ताग्निकर्म्मविशेषः । यथा, सुश्रुते । १ । १२ ।
"तत्र रोगाधिष्ठानभेदादग्निकर्म्म चतुर्धाभिद्यते । तद्यथा वलयविन्दुलेखाप्रतिसारणानीति दहन-विशेषाः ॥" * ॥ वेष्टनम् । यथा, रघुः । १ । ३० ।
"सवेलावप्रवलयां परिखीकृतसागराम् ।
अनन्यशासनामुर्व्वीं शशासैकपुरीमिव ॥")

**वलयः**, पुं, (वलयवदाकृतिरस्त्यस्येति । अर्श

आदित्वात् अच् ।) अष्टादशगलरोगान्तर्गत-
गलरोगविशेषः । यथा, --
“वलास एवायतमुन्नतञ्च
शोथं करोत्पन्नगतिं निवार्य्य ।
तं सर्व्वथैवाप्रतिवार्य्य वीर्य्यं
विवर्ज्जनीयं वलयं वदन्ति ॥” * ॥
अथ गलरोगाणां चिकित्सा ।
“कण्ठरोगेष्वसृङ्मोक्षैस्तीक्ष्णैर्नस्यादिकर्म्मभिः ।
चिकित्सकश्चिकित्सान्तुकुशलोऽत्र समाचरेत् ॥
क्वाथं दद्याच्च दार्व्वीत्वङ्निम्बतार्क्ष्यकलिङ्गजम् ।
हरीतकीकषायो वा हितो माक्षिकसंयुतः ॥
कटुकातिविषादारुपाठामुस्ताकलिङ्गकाः।
गोमूत्रकथिताः पीताः कण्ठरोगविनाशनाः ॥
मृद्वीका कटुका व्योषा दार्व्वी त्वक् त्रिफला
घनम् ।
पाठा रसाञ्जनं दूर्व्वा तेजोह्वेति सुचूर्णितम् ॥
क्षौद्रयुक्तं विधातव्यं गलरोगे महौषधम् ।
योगास्त्वेते त्रयः प्रोक्ता वातपित्तकफापहाः ॥
जवाग्रजं तेजवतीं सपाठां
रसाञ्जनं दारु निशां सकृष्णाम् ।
क्षौद्रेण कुर्य्यात् गुटिकां मुखेन
तां धारयेत् सर्व्वगलामयेषु ॥”
इति भावप्रकाशः ॥ * ॥
वेला । कङ्कणम् । इति जटाधरः ॥ (दण्डव्यूह-
विशेषः । यथा, कामन्दकीये नीतिसारे ।
१९ । ४५ ।
“सुखाख्यो वलयश्चैव दण्डभेदाः सुदुर्ज्जयः ॥”)

**वलयितं**, त्रि, (वलयवत् कृतमिति । वलय +

तत्करोतीति णिच् ततः क्तः । यद्वा, वलयं
तदाकृतिर्जातमस्येति । वलय + इतच् ।) वेष्टि-
तम् । इत्यमरः ॥ (यथा, गीतगोविन्दे । ११ । २६
।
“नीलनलिनमिव पीतपरागपटलभरवलयित-
मूलम् ॥”
यथा च वैरागिमङ्गले ।
“इन्धनमालावलयितबाहुः
परधनहरणे साक्षाद्राहुः ।
रण्डायौवनभञ्जनवीरः

**व(ब)लूलः**, त्रि, बलवान् । वलशब्दात् गोतृणेत्या-

दिना ऊलप्रत्ययेन निष्पन्नः । इति
मुग्धबोधव्याक-
रणम् ॥ अस्य पवर्गीयवकारादित्वेऽपि
तत्रा-
लिखितत्वादत्र लिखनम् ॥

**वल्क**, क भाषणे । इति कविकल्पद्रुमः ॥ (चुरा०-

पर०-सक०-सेट् ।) क, वल्कयति ।
भाषणं
कथनम् । इति दुर्गादासः ॥

**व(ब)ल्कं**, क्ली, (वलते इति । वल संवरणे + “शूक-

वल्कोल्काः ।” उणा० ३ । ४२ ।
इति कप्रत्य-
यान्तो निपातितः ।) वल्कलः ।
(यथा, रघौ ।
८ । ११ ।
“गुणवत् सुतरोपितश्रियः
परिणामे हि दिलीपवंशजाः ।
पदवीं तरुवल्कवाससां
प्रयताः संयमिनां प्रपेदिरे ॥”)
शल्कः । इति मेदिनीशब्दरत्नावल्यौ
॥ खण्डम् ।
इति विश्वः ॥

**व(ब)ल्कः**, पुं, (वल संवरणे + कः निपातितश्च ।)

पट्टिकालोघ्रः । इति राजनिर्घण्टः ॥

**वल्कतरुः**, पुं, (वल्कप्रधानस्तरुरिति मध्यलोपी

समासः ।) पूगवृक्षः । इति
राजनिर्घण्टः ॥

**वल्कद्रुमः**, पुं, (वल्कप्रधानो द्रुमः ।) भूर्ज्जवृक्षः
।

इति राजनिर्घण्टः ॥ (विवरणमस्य
भूर्ज्जशब्दे
ज्ञातव्यम् ॥)

**वल्गा**, स्त्री, (वल्ग्यतेऽश्वोऽनयेति । वल्ग +

करणे घञ् । टाप् ।) दन्तालिका ।
लागाम्
इति भाषा । तत्पर्य्यायः । अवक्षेपणी २
रश्मिः ३ कुशा ४ । इति हेमचन्द्रः ॥
(यथा,
राजतरङ्गिण्याम् । ५ । ३४७ ।
“वल्गान्मध्येऽश्ववाराणां नृत्यते
वाग्रवाजिना ।
वल्गाङ्केनोद्वहल्लम्बं शिरस्त्रं वामपाणिना
॥”)

**वल्गितं**, क्ली, (वल्ग् + भावे क्तः ।) अश्वस्य

विशेषगमनम् । तत्तु वेगेन
विक्षिप्तोपरिचरणम् ।
इत्यमरभरतौ ॥ प्लुतगमनम् । (यथा,
शिशुपाल-
वधे । २ । २७ ।
“अनिर्लोडितकार्य्यस्य वाग्जालं
वाग्मिनो वृथा ।
निमित्तादपराद्धेषोर्धानुष्कस्येव वल्गितम्
॥”)
बहुभाषणञ्च ॥

**व(ब)ल्गुः**, पुं, (वलते इति । वल प्राणने + “वलेर्गु-

कच् ।” उणा० १ । २० । इति
उप्रत्ययः ।
गुगागमश्च धातोः ।) छागः । सुन्दरे, त्रि
।
इति मेदिनी । गे, २५ ॥ (यथा, रघौ । ५
। ६८ ।
“तद्वल्गुना युगपदुन्मिषितेन तावत्
सद्यः परस्परतुलामधिरोहतांद्वे ।
पस्पन्दमानपरुषेतरतारमन्तः
चक्षुस्तव प्रचलितभ्रमरञ्च पद्मम् ॥”)

**व(ब)ल्गुकं**, क्ली, (वल्गु + संज्ञायां स्वार्थे वा

कन् ।) चन्दनम् । विपिनम् । पणम् ।
रुचिरे,

कीर्त्तनपतने मल्लशरीरः ॥”)

**वलिरः**, त्रि, (वलते संवृणोति चक्षुस्तारामिति ।
वल + बाहुलकात् किरच् ।) केकरः । इत्य-
मरः ॥

**व(ब)लिशं**, क्ली, (वलिना गन्धवद्द्रव्याद्युपहारेण
श्यति हिनस्ति मत्सानिति । शो + कः ।) वडि-
शम् । इति शब्दरत्नावली ॥

**व(ब)लिशिः**, स्त्री, (वलिना आहारोपहारेण
मत्सादीन् श्यति विनाशवतीति । शो + बाहु
लकात् किः ।) वडिशम् । इति शब्दरत्ना
वली ॥

**व(ब)लिशी**, स्त्री, (वलिशि + कृदिकारादिति
ङीष् ।) वडिशम् । इति शब्दरत्नावली ॥

**व(ब)लूकं**, क्ली, (वलते इति । वल संवरणे + “वले-
रूकः ।” उणा० ४ । ४० । इति उकः ।) पद्म-
मूलम् । पक्षिविशेषे, पुं, । इति सिद्धान्तकौमुद्या-
मुणादिवृत्तिः उणादिकोषश्च ॥

**व(ब)ल्कलं**, क्ली, (वलते संवृणोतीति । वल +
बाहुलकात् कलन् ।) त्वचम् । इति
राज-
निर्घण्टः ॥ डालचिनि इति भाषा ॥

**व(व)ल्कलः**, पुं क्ली, (वलते संवृणोतीति ।
वल +
बाहुलकात् कलन् ।) वृक्षत्वक् ।
वाकल इति
भाषा । तत्पर्य्यायः । त्वक् २ बल्कम्
३ । इत्य-
मरः ॥ त्वचा ४ त्वचम् ५ चोचम् ६
चोलकम्
७ शल्कम् ८ छल्लकम् ९ छल्लिः १०
छल्ली ११
चोतकम् १२ । इति शब्दरत्नावली ॥
(यथा,
महाभारते । १ । १५६ । २ ।
“तौ तु पूर्ब्बेण कालेन तपोयुक्तौ
बभूवतुः ।
क्षुत्पिपासापरिश्रान्तौ
जटावल्कलधारिणौ ॥”)

**वल्कला**, स्त्री, (वल्कल + टाप् ।) शिलावल्का
।
इति राजनिर्घण्टः ॥

**वल्कलोध्रः**, पुं, (वल्कप्रधानो लोध्रः ।)
पट्टिका-
लोध्रः । इति राजनिर्घण्टः ॥

**वल्कवान्** [त्] पुं, (वल्कः शल्कोऽस्त्यस्वेति ।
वल्क + मतुप् । मस्य वः ।) मत्स्यः ।
इति
त्रिकाण्डशेषः ॥ वल्कयुक्ते, त्रि ॥

**वल्किलः**, पुं, (वल्कोऽस्यास्तीति । वल्क +
इलच् ।)
कण्टकः । इति शब्दरत्नावली ॥

**वल्कुतं**, क्ली, वल्कलः । इति शब्दचन्द्रिका ॥

**वल्ग**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-
अक०-सेट् ।) वल्गति । अयं
प्लुतगताविति
त्रि । इत्यजयः ॥ तत्र पवर्गीयवकारादौ
लिखि-
तोऽयं शब्दः । अस्माभिस्तु
तत्रालिखितत्वादत्र
लिखितः ॥

**वल्गुपत्रः**, पुं, (वल्गु मनोज्ञं पत्रं यस्य ।)
वनमुद्गः । इति शब्दचन्द्रिका ॥

**वल्गुला**, स्त्री, (वल्गु लातीति । ला + कः ।
टाप् ।) वाकुची । पक्षिविशेषः । शेषस्य
पर्य्यायः । चक्रविष्ठा २ दिवान्धा ३
निशा-
चरी ४ स्वैरिणी ५ दिवास्वापा ६
मांसेष्टा ७
मातृवाहिणी ८ । इति राजनिर्घण्टः ॥

**वल्गुलिका**, स्त्री, (वल्गुल + संज्ञायां कन् ।
टापि अत इत्वञ्च ।) तैलपायिका । यथा,
--
“वल्गुलिका मुखविष्ठा परोष्णी
तैलपायिका ॥”
इति हेमचन्द्रः ॥
(यथा, कथासरित्सागरे । ५५ । ७९ ।
“ततो वल्गुलिकातस्तं कृष्ट्वा
पटमदर्शयत् ।
स चित्रकृत्तां चित्रस्थां
राज्ञेमदनसुन्दरीम् ॥”)

**वल्भ**, ङ भक्षणे । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) वल्भते अन्नं
लोकः ।
इति दुर्गादासः ॥

**वल्भणं**, क्ली, (वल्भ भक्षणे + भावे ल्युट् ।) भक्ष-
णम् । इति हेमचन्द्रः ॥

**वल्मिकः**, पुं क्ली, वल्मीकः । इति शब्दरत्नवली
॥

**वल्मिकिः**, पुं क्ली, वल्मीकः । इत्यमरटीकायां
भरतः ॥

**व(ब)ल्मीकः**, पुं, क्ली, (वलते इति । वल संवरणे
+

| | | |
|---|---|---|
| | भट्टमल्लः । इति दुर्गादासः ॥<br>**वल्गनं**, क्ली, (वल्ग + ल्युट् ।) प्लुतगमनम् ।<br>बहुभाषणम् ।<br>वल्गधातोभक्तिनट्प्रत्ययेन<br>निष्पन्नम् ॥ | “अलीकादयश्च ।” उणा० ४ । २५ ।<br>इत्यत्र<br>वलतेर्म्मुगागमश्चेति उज्ज्वलदत्तोक्त्या<br>काकनन्तो |

निपातः ।) उयीकाकृतमृत्तिकास्तूपः । तत्-
पर्य्यायः । वामलूरः २ नाकुः ३ । इत्य-
मरः ॥ वल्मिकः ४ वाल्मीकः ५ वाल्मीकिः
६
वाल्मिकिः ७ । इति तट्टीकायां भरतः ॥ पुग-
लकः ८ शक्रमूर्द्धा ९ कृमिशैलकः १० । इति
शब्दरत्नावली ॥ * ॥ (यथा, मेघदूते । १५ ।
"वल्मीकाग्रात् प्रभवति धनुःखण्डमाखण्ड-
लस्य ॥")
तन्मृत्तिकया शौचनिषेधो यथा । विष्णुपुरा-
णम् ।
"वल्मीकमूषिकोत्खातां मृदमन्तर्जलां तथा ।
शौचावशिष्टां गेहाच्च नादद्याल्लेपसम्भवाम् ।
अन्तःप्राण्यवपन्नाञ्च हलोत्खातां न कर्द्द-
माम् ॥"
इत्याह्निकाचारतत्त्वम् ॥ * ॥
देवप्रतिष्ठायां स्नानात् पूर्व्वं
शिल्पिदोषशान्त्यर्थं
तन्मृत्तिकया क्षालनं यथा, --
"वल्मीकमृत्तिकाभिस्तु गोमयेन सुभस्मना ।
क्षालयेत् शिल्पिसंस्पर्शदोषाणामुपशान्तये ॥"
वल्मीकमृदादिस्नाने मन्त्रविशेषानुपादानात्
मन्त्रानादेशे गायत्त्रीति शूलपाणिलिखितात्
गायत्र्या तत्तन्मूलमन्त्रेण वा स्नानं कारयि-
तव्यम् । तया स्नानं यथा, --
"स्नापयेत् प्रथमं देवं तोयैः पञ्चविधैरपि ।
पञ्चामृतैः पञ्चगव्यैः पञ्चमृत्पिण्डकैरपि ॥
मृत्तिका करिदन्तस्य पर्व्वताश्वखुरस्य च ।
कुशवल्मीकसम्भूतं मृत्पञ्चकमुदीरितम् ॥"
इति देवप्रतिष्ठातत्त्वम् ॥

**वल्मीकः**, पुं, (वल्मीक उयीकाकृतमृत्तिकास्तूपः
उत्पत्तिकारणत्वेनास्त्यस्येति । अच् ।)
वाल्मीकि-
मुनिः । रोगविशेषः । इति विश्वः ॥ अथ
वल्मीकरोगस्य लक्षणम् ।
"ग्रीवां सकक्षाकरपाददेशे
सन्धौ गले वा त्रिभिरेव दोषैः ।
ग्रन्थिः स वल्मीकवदक्रियाणां
जातः क्रमेणैव गतप्रवृद्धिः ॥
श्यामामूलैः सपललैः शक्तुमिश्रैः प्रलेपयेत् ।
सुस्निग्धैश्च सुखोष्णैश्च भिषक् तमुपवाहयेत्
॥
पक्वं तद्वा विजानीयाद्गतीः सर्व्वा यथाक्रमम्
।
अभिज्ञाय गतीश्छित्त्वा प्रदिह्यान्मतिमान्
भिषक् ॥
संशोध्य दुष्टमांसानि क्षारेण प्रतिसारयेत् ।
व्रणं विशुद्धं विज्ञाय रोपयेन्मतिमान् भिषक् ॥
मनःशिलालभल्लातसूक्ष्मैलागुरुचन्दनैः ।
जातीपल्लवतक्रैश्च निम्बतैलं विपाचयेत् ॥
वल्मीकं नाशयेत्तद्धि बहुच्छिद्रं बहुव्रणम् ।
पाणिपादोपरिष्टात्तु छिद्रैर्बहुभिरावृतम् ॥
वल्मीकं यत् सशोफं स्याद्वर्ज्यं तद्धि विजा-
नता ॥"
मनःशिलाद्यं तैलम् । इति भावप्रकाशः ॥
(अस्य मृदो व्यवहारेण रोगनाशित्वं यथा, --
"क्षौद्रसर्षपवल्मीकमृत्तिकासंयुतं भिषक् ।
गाढमुत्सादनं कुर्य्यादूरुस्तम्भे प्रलेपनम् ॥"
इति वैद्यकचक्राणिसंग्रहे ऊरुस्तम्भाधिकारे
॥)

**वल्मीकिः**, पुं, वल्मीकः । इति शब्दमाला ॥

**वल्मीकशीर्षं**, क्ली, (वल्मीकस्य शीर्षमिव शीर्ष-
मस्य ।) स्रोतोऽञ्जनम् । इति राजनिर्घण्टः ॥

**वल्मीकूटं**, क्ली, (वल्मीकस्य वल्मीकसञ्चितं वा
कूटम् ।) वल्मीकः । इति हेमचन्द्रः ॥

**वल्युल** त् क लूनिपूत्योः । इति कविकल्पद्रुमः ॥
(अदन्तचुरा०-पर०-सक०-सेट् ।)
वल्यूलयति अववल्यूलत् । इति दुर्गादासः ॥

**वल्यूल** त् क लूनिपूत्योः । इति कविकल्पद्रुमः ॥
(अदन्तचुरा०-पर०-सक०-सेट् ।)
वल्यूलयति अववल्यूलत् । इति दुर्गादासः ॥

**वल्ल**, ङ संवरणे । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) ङ, वल्लते धनं लोकः
संवृणोतीत्यर्थः । इति दुर्गादासः ॥

**वल्लः**, पुं, (वल्लते संवृणोतीति । वल्ल + अच् ।)

**वल्लभः**, पुं, (वल्ल संवरणे + "रासिवल्लिभ्याञ्च
।"
उणा० ३ । १२५ । इति अभच् ।)
दयितः ।
अध्यक्षः । सल्लक्षणतुरङ्गमः । इति
मेदिनी । भे,
१८ ॥ (जह्नुवंशीयवलाकाश्वस्य
पुत्त्रः । स च कुशि-
कस्य पिता । यथा, महाभारते । १३
। ४ । ५ ।
"वल्लभस्तस्य तनयः साक्षाद्धर्म्म
इवापरः ।
कुशिकस्तस्य तनयः
सहस्राक्षसमद्युतिः ॥")

**वल्लभः**, त्रि, (वल्ल + अभच् ।) प्रियः । (यथा,
कामन्दकीयनीतिसारे । ५ । १९ ।
"पुत्त्रेभ्यश्च नमस्कुर्य्यात्
वल्लभेभ्यश्च भूपतेः ॥")
अध्यक्षः । इत्यमरः ॥ अध्यक्षोऽत्र
गवाध्यक्षः ।
इति स्वामी ॥

**वल्लभपालकः**, त्रि, (वल्लभानां अश्वविशेषाणां
पालकः ।) अश्वरक्षकः । इति
भूरिप्रयोगः ॥

**वल्लभा**, स्त्री, प्रिया । यथा, --
"प्रेयसी दयिता कान्ता प्राणेशा
वल्लभा प्रिया ।
हृदयेशा प्राणसमा प्रेष्ठा प्रणयिनी च
सा ॥"
इति हेमचन्द्रः ॥

**वल्लरं**, क्ली, (वल्लते इति । वल्ल + अरन् ।)
कृष्णा-
गुरुः । इति राजनिर्घण्टः ॥ मञ्जरिः ।
इति शब्द-
रत्नावली ॥ गहनम् । कुञ्जम् । इति
धरणिः ॥

**वल्लरिः** स्त्री, (वल्ल + क्विप् । वल्लं संवरणं

मुखैरनेकैस्त्वतितोदवद्भि-
र्विसर्पवत् सर्पति चोन्नताग्रैः ।
वल्मीकमाहुर्भिषजो विकारं
निष्प्रत्यनीकं चिरजं विशेषात् ॥”
ग्रीवा कृकाटिका । अंसः स्कन्धः । कक्षा
बाहुमूलम् । गलः कण्ठः । वल्मीकवदित्यनेन
प्रचुरशिखरत्वमुच्चत्वमवगाढमूलत्वञ्च
सूच्यते ।
निष्प्रत्यनीकं उपचारायोग्यम् ॥ * ॥ अथ
तस्य
चिकित्सा ।
“शस्त्रेणोत्कृत्य वल्मीकं क्षाराग्निभ्यां प्रसा-
धयेत् ।
विधानेनार्व्वुदोक्तेन शोधयित्वा च रोधयेत् ॥
बल्मीकन्तु भवेद्यस्य नातिवृद्धममर्म्मजम् ।
तत्र संशोधनं कृत्वा शोणितं मोक्षयेद् भिषक् ॥
कुलत्थिकानां मूलैश्च गुडूच्या लवणेन च ।
आरेवतस्य मूलैश्च दन्तीमूलैस्तथैव च ॥

गुञ्जात्रयपरिमाणम् । यथा, --
“वल्लस्त्रिगुञ्जो धरणञ्च तेऽष्टौ ।”
इति लीलावती ॥
द्विगुञ्जा । इति वैद्यकपरिभाषा । (यथा, --
“विषटङ्कवलिम्लेच्छदन्तीबीजं क्रमाद्बहु ।
दन्त्यम्बुमर्द्दितं यामं रसस्त्रिपुरभैरवः ॥
वल्लं व्योषेण चार्द्रस्य रसे च सितया सह ॥”
इति वैद्यकरसेन्द्रसारसंग्रहे ज्वराधिकारे ॥)
सार्द्धगुञ्जा । यथा, --
“गोधूमद्वितयोन्मिता तु कथिता गुञ्जा तया
सार्द्धया
वल्लो वल्लचतुष्टयेन भिषजां माषा मतस्तच्चतुः
।”
इत्यादि राजनिर्घण्टः ॥

**वल्लकी**, स्त्री, (वल्लते इति । वल्ल + क्वुण् । गौरा-
दित्व । ङीष् ।) वीणा । इत्यमरः ॥ (यथा,
हरिवंशे । ८४ । १११ ।
“वल्लकीं वाद्यमानो हि सप्तस्वरविमूर्च्छिताम्
॥”)
सल्लकीवृक्षः । इति राजनिर्घण्टः ॥ (अस्याः
पर्य्यायो यथा, --
“वल्लकी गजभक्ष्या च सुवहा सुरभीरसा ।
महेरुणा कुन्दुरुकी वल्लकी च बहुस्रवा ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

ऋच्छतीति । ऋ + अच इः । कृदि-
कारादिति वा ङीष् ।) मञ्जरी ।
इत्यमर-
भरतौ ॥ (लता । यथा, कुमारे । ४ ।
३१ ।

**वल्लरी** स्त्री, (वल्ल + क्विप् । वल्लं संवरणं
ऋच्छतीति । ऋ + अच इः । कृदि-
कारादिति वा ङीष् ।) मञ्जरी ।
इत्यमर-
भरतौ ॥ (लता । यथा, कुमारे । ४ ।
३१ ।
“अनपायिनि संश्रयद्रुमे
गजभग्ने पतनाय वल्लरी ॥”)
चित्रमूलम् । मेथिका । इति
राजनिर्घण्टः ॥
(अस्याः पर्य्यायो यथा, --
“मेथिका मिथिनिर्मेथिर्दीपनी
बहुपुत्त्रिका ।
बोधिनी बहुबीजा च जातिगन्धफला
तथा ॥
वल्लरी चैव कामन्था मिश्रपुष्पा च
कैरवी ।
कुञ्चिका बहुपर्णी च
पित्तजिद्वायुनुद्द्विधा ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
मागे ॥)

**वल्लवः**, पुं, (वल्ल प्रीतौ + क्विप् । वल्लं प्रीतिं
वातीति । वा + कः ।) गोपः ।
इत्यमरः ॥
(यथा, माघे । ११ । ८ ।
“द्रुततरकरदक्षाः क्षिप्तवैशाखशैले
दधति दधनि धीरानारवान् वारिणीव
।
शशिनमिव सुरौघाः सारमुद्धर्त्तुमेते
कलसिमुदधिगुर्व्वीं वल्लवा लोडयन्ति
॥”)
भीमसेनः । इति मेदिनी । वे, ४४ ॥
(विराटनगरे
छद्मवासकाले एवास्य एतन्नाम
आसीत् ।

| | | यथामहाभारते । ४ । २ । १ ।<br>“पौरोगवो ब्रुवाणोऽहं वल्लवो नाम<br>नामतः ।<br>उपस्थास्यामि राजानं विराटमिति मे<br>मतिः ॥”)<br>**वल्लवः**, त्रि, (वल्लमानन्दं वावीति । वा + कः ।)<br>सूपकारः । इत्यमरः ॥<br>**वल्लवी**, स्त्री, (वल्लव + ङीष् ।) वल्लवजातिस्त्री ।<br>वल्लवपत्नी । तत्पर्य्यायः । आभीरी<br>२ गोपिका ३<br>गोपी ४ महाशूद्री ५ गोपालिका ६ ।<br>इति<br>शब्दरत्नावली ॥ (यथा, किराते । ४<br>। १७ । |
|---|---|---|

"स मन्थरावल्गित-पीवरस्तनीः
परिश्रमक्लान्तविलोचनोत्पलाः।
निरीक्षितुं नोपरराम वल्लवी-
रभिप्रनृत्ता इव वारयोषितः ॥")

**वल्लिः**, स्त्री, (वल्लते संवृणोति वृक्षादीनिति ।
वल्ल + "सर्व्वधातुभ्य इन् ।" उणा० ४ । ११७ ।
इतीन् ।) लता । इत्यमरटीकायां भरतः ॥
(यथा, महाभारते । १२ । १८४ । १३ ।
"वल्लिर्वेष्ट्यते वृक्षं सर्व्वतश्चैव गच्छति ॥")
पृथिवी । इति शब्दमाला ॥

**वल्लिकण्टकारिका**, स्त्री, (वल्लिरूपा कण्टकारिका ।)
अग्निदमनीक्षुपः । इति राजनिर्घण्टः ॥

**वल्लिदूर्व्वा**, स्त्री, (वल्लिरूपा दूर्व्वा ।) माला-
दूर्व्वा । इति राजनिर्घण्टः ॥

**वल्लिशाकटपोतिका**, स्त्री, (वल्लिप्रधाना शाकट-
पोतिका ।) मूलपोती । इति राजनिर्घण्टः ॥

**वल्लिसूरणः**, पुं, (वल्लिप्रधानः सूरणः ।) अत्यम्ल-
पर्णी । इति राजनिर्घण्टः ॥

**वल्ली**, स्त्री, (वल्लि + ङीष् ।) लता । इत्यमरः ॥
सा च भूमिप्रसारा वर्षमात्रस्थायिनी कुष्मा-
ण्डाद्या । (यथा च ।
"विदारीसारिवारजनीगुडूच्योऽजशृङ्गीचेतिवल्ली-
संज्ञः ॥" इति सुश्रुते सूत्रस्थाने ३८ अध्यायः ॥
यथा च, रामायणे । २ । ८० । ६ ।
"लतावल्लीश्च गुल्मांश्च स्थानूनश्मन एव च ।
जनास्ते चक्रिरे मार्गं छिन्दन्तो विविधान्
द्रुमान् ॥")
अजमोदा । इति मेदिनी । ले, ३८ ॥ कैवर्त्तिका ।
चव्यम् । इति राजनिर्घण्टः ॥

**वल्लीगडः**, पुं, (वल्लीरूपो गडः ।) मत्स्यविशेषः ।
भोला इति वालिकडा इति च भाषा । अस्य
गुणाः । लघुत्वम् । रूक्षत्वम् । अनभिष्यन्दि-
त्वम् । मरुत्करत्वम् । सर्य्यत्वम् । कफनाशन-
त्वञ्च । इति राजवल्लभः ॥

**वल्लीजं**, क्ली, (वल्ल्यां लतायां जायते इति ।

इत्यमरः । २ । ६ । ६३ ॥
(तस्याभक्ष्यत्वं यथा,
मनुः । ५ । १३ ।
"निमज्जतश्च मत्स्यादान् सौनं
वल्लूरमेव च ॥"
"वल्लूरं शुष्कमांसम् ।" इति
तट्टीकायां कुल्लूक-
भट्टः ॥) शूकरमांसम् । इति मेदिनी
। रे,
२१० ॥ वनक्षेत्रम् । वाहनम् ।
ऊषरभूमिः ।
इति हेमचन्द्रः ॥

**वल्ल्या**, स्त्री, (वल्ल + भावे घञ् । वल्लाय
संवरणाय
साधुः । वल्ल + यत् ।) धात्रीवृक्षः ।
इति
हारावली ॥

**व(ब)ल्वजः**, पुं, (वल्वे पर्व्वते जायते इति ।
जन्
+ डः ।) उलपः । इति हेमचन्द्रः ॥
वाव इति
ख्याततृणम् । इत्यमरः ॥ वलते भुवं
वेष्टयति
विशादित्वात् वप्रत्यये वल्वः पर्व्वतः
तत्र जाता
वल्वजाः इत्यन्ये । स्वभावात् बहुत्वे
वल्वजाः ।
एको वल्वज इति
भाष्यकारवचनादेकत्वमपि
अतएव सुमनोऽप्सरोवल्वजाव्केति
पाक्षिक-
बहुत्वार्थं क्रमदीश्वरसूत्रम् । इति
तट्टीकायां
भरतः ॥ (यथा, मनुः । २ । ४३ ।
"मुञ्जालाभे तु कर्त्तव्याः
कुशाश्मान्तकवल्वजैः ।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव
वा ॥")

**वशः**, त्रि, (वष्टीति । वश + अच् ।) आयत्तः । इति
शब्दरत्नावली ॥ (यथा, कथासरित्सागरे
। ८ । १७ ।
"गुणाढ्योऽपि तदाकर्ण्य सद्यः खेदवशो-
ऽभवत् ॥")

**वशः**, पुं, (वश + भावे अप् ।) इच्छा । इति
संकीर्णवर्गे अमरः ॥ (उश्यते इष्यते इति
।
वश + कर्म्मणि अप् ।) वेश्यागृहम् ।
आय-
त्तता । प्रभुत्वम् । इति त्रिकाण्डशेषः ॥
जन्म ।
इति हेमचन्द्रः ।

**वशका**, स्त्री, (वशेन आयत्ततया कायति शोभते
इति । कै + कः ।) वश्या नारी । इति
शब्द-
रत्नावली ॥

**वशक्रिया**, स्त्री, (वशस्य क्रिया करणम् ।) वशी-
करणम् । तत्पर्य्यायः । संवदनम् २ ।
इत्यमरः ३
मणिमन्त्रौषधैर्व्वशीकरणं संवदनं संपूर्व्वो
वदि-
र्व्वशीकरणे भावेऽनट् । संवदना च इति
केचित् । करणेऽनटि वशक्रियासाधने
मणि-
मन्त्रादावपि । जयश्रियः संवदनं
यतस्तदिति
रघुः । संचलनं इति पाठान्तरम् । इति
तट्टीकायां भरतः ॥

**वशगा**, स्त्री, (वशं गच्छतीति । गम + डः ।)
वशीभूता । इति शब्दरत्नावली ॥ (यथा,
बृहत्संहितायाम् । ४३ । ३२ ॥
"गाङ्गादिवाकरसुताजलचारुहारां
धात्रीं समुद्ररसनां वशगां करोति ॥"
अस्मिन्नर्थे वाच्यलिङ्ग एवायं शब्दः ।
यथा,
महाभारते । ४ । ६ । १२ ।

जन + डः ।) मरीचम् । इति राजनिर्घण्ट-
शब्दचन्द्रिके ॥ (यथा, बृहत्संहितायाम् । ८ । १३ ।
"भाद्रपदे वल्लीजं निष्पत्तिं याति पूर्व्वशस्यञ्च ॥")

**वल्लीबदरी**, स्त्री, (वल्लीरूपा बदरी ।) भूबदरी ।
इति राजनिर्घण्टः ॥

**वल्लीमुद्गः**, पुं, (वल्लीषु जातो मुद्गः ।) मकुष्टकः ।
इति राजनिर्घण्टः ॥

**वल्लीवृक्षः**, पुं, (वल्लीवत् दीर्घो वृक्षः ।) सालवृक्षः ।
इति राजनिर्घण्टः ॥

**वल्लुरं**, क्ली, (वल्ल्यते आव्रियते लतादिनेति ।
वल्ल + बाहुलकात् उरच् ।) कुञ्जम् । मञ्जरी ।
क्षेत्रम् । निर्जलस्थानम् । शाद्वलः । इति हेम-
चन्द्रः ॥ गहनम् । इति मेदिनी । रे, २१० ॥
विश्वधररत्नावलीषु वल्लरमिति पाठः ॥

**वल्लूरं**, त्रि, (वल्ल्यते संव्रियते इति । वल्ल + "खर्ज्जि-
पिञ्जादिभ्य ऊरोलचौ ।" उणा० ४ । ९० ।
इति ऊरच् ।) आतपादिना शुष्कमांसम् ।

**व(ब)ल्वजा**, स्त्री, (वल्वे पर्व्वते जायते इति । जन
+ डः । टाप् ।) तृणविशेषः । सावे वागे इति
हिन्दी भाषा । तत्र्य्यायः । दृढपत्री २ तृणेक्षुः
३ तृणवल्वजा ४ मौञ्जीपत्रा ५ दृढतृणा ६
पानीयाश्रा ७ दृढक्षुरा ८ । अस्या गुणाः ।
मधुरत्वम् । शीतत्वम् । पित्तदाहतृषापहत्वम् ।
वातप्रकोपणत्वम् । रुच्यत्वम् । कण्ठशुद्धिकारि-
त्वञ्च । इति राजनिर्घण्टः ॥

**वल्ह**, क त्विषि । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-अक०-सेट् ।) क, वल्हयति । त्विषि
दीप्तौ । इति दुर्गादासः ॥

**वल्ह**, ङ श्रैष्ठे । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-अक०-सेट् ।) ङ, वल्हते धनी श्रेष्ठः
स्यादित्यर्थः ।

**वश**, लु स्पृहि । इति कविकल्पद्रुमः ॥ (अदा०-
पर०-सक०-सेट् ।) लु, वष्टि धनं लोकः । इति
दुर्गादासः ॥

**वशं**, क्ली, (वश + "वशिरण्योरुपसंख्यानम् ।"
३ । ३ । ५८ । इत्यस्य वार्त्तिकोक्त्या अप् ।)
इच्छा । प्रभुत्वम् । आयत्तता । इति शब्द-
रत्नावली ॥ (यथा, महाभारते । १२ ।
१३४ । ७ ।
"वशे बलवतां धर्म्मः सुखं भोगवतामिव ॥")

"ददानि ते हन्त वरं यमिच्छसि
प्रशाधि मत्स्यान् वशगोऽस्म्यहं तव ॥")

**वशा**, स्त्री, (वश स्पृहि + अच् । टाप् । "वशि-
रण्योरुपसंख्यानम् ।" इति अप् वा ।)
बन्ध्या ।
(अस्या धनं राज्ञा रक्षितव्यम् । यथा, मनुः ।
८ । २८ ।
"वशाऽपुत्त्रासु चैवम् स्याद्रक्षणं निष्कुलासु च ।
पतिव्रतासु च स्त्रीषु विधवास्वातुरासु च ॥")
सुता । योषा । स्त्रीगवी । करिणी । इति मेदिनी ।
शे, १३ ॥ (यथा, कथासरित्सागरे । ६ । ११० ।
"असिच्यत स ताभिश्च वशाभिरिव वारणः ॥")
बन्ध्या गवी । इत्यमरः ॥ (यथा, ऋग्वेदे
। २ । ७ । ५ ।
"त्वं नो असि भारताग्ने वशाभिरुक्षभिः ॥"
"वशाभिर्व्वन्ध्याभिर्गोभिः ।" इति तद्भाष्ये सायणः ॥
वशीभूता । यथा, गारुडे । १८३ अध्याये ।
"सप्तभिर्मन्त्रितं कृत्वा करवीरस्य पुष्पकम् ।
स्त्रीणामग्रे भ्रामयेच्च क्षणाद्वै सा वशा भवेत् ॥")

**वशाढ्यकः**, पुं, (वशया आढ्यकः । प्रचुरवशा-
वत्त्वात् तथात्वम् ।) शिशुमारः । इति शब्द-
रत्नावली ॥

**वशापायी** [न्], पुं, (वशां पिबतीति । पा +
णिनिः ।) कुक्कुरः । इति शब्दमाला ॥

**वशि**, क्ली, (वश + भावे इन् ।) वशित्वम् । इति
शब्दमाला ॥

**वशिकः**, त्रि, शून्यम् । इत्यमरः । ३ । १ । ५६ ॥

| | | |
|---|---|---|
| | **वशंवदः** त्रि, (वशं तवाहं वश इति वाक्यं वद-<br>तीति । वश + वद् + "प्रियवशे वदः खच् ।"<br>३ । २ । ३८ । इति खच् ।<br>"अरुर्द्विषदन्तस्य<br>मुम् ।" ६ । ३ । ६७ । इति मुम् ।)<br>वशं वदति<br>यः । आयत्तकरवाक्यवक्ता । इति<br>मुग्धबोध-<br>व्याकरणम् ॥ (वशीभूतः । यथा,<br>राजतरङ्गि-<br>ण्याम् । ४ । ३९५ ।<br>"स जहार दुराचारो भूभृत्<br>लोभवशंवदः ॥") | |

**वशिका**, स्त्री, (वशो वशीकरणं साध्यत्वेनास्त्यस्या

इति । वश् + ठन् ।) अगुरुः । इति शब्द-
चन्द्रिका ॥

**वशिता**, स्त्री, (वशिनो भावः । वशिन् + तल् ।)

वशित्वम् । इति हेमचन्द्रः ॥ (यथा, भाग-
वते । ११ । १५ । १६ ।
“नारायणे तुरीयाख्ये भगवच्छब्दशब्दिते ।
मनो मय्यादधद्योगी मद्धर्म्मा वशितामियात्
॥”)

**वशित्वं**, क्ली, (वशिनो भावः । वशिन् + त्व ।)

आयत्तत्वम् । (यथा, षड्रत्ने । १ ।
“शास्त्रं सुचिन्तितमपि प्रतिचिन्तनीय-
माराधितोऽपि नृपतिः परिशङ्कनीयः ।
अङ्के स्थितापि युवतिः परिरक्षणीया
शास्त्रे नृपे च युवतौ च कुतो वशित्वम् ॥”)
शिवस्याष्टैश्वर्य्यान्तर्गतैश्वर्य्यविशेषः । यथा, --
“अनिमा लघिमा प्राप्तिः प्राकाम्यं महिमा
तथा ।
ईशित्वञ्च वशित्वञ्च तथा कामावशायिता ॥”
वशित्वं स्वातन्त्र्यं येन स्वतन्त्रश्चरति
इत्यमर-
टीकायां भरतः ॥

**वशिनी**, स्त्री, (वशो वशीकरणं साध्यत्वेनास्त्यस्या

इति । वश् + इनिः । ङीप् ।) वन्दा । शमी-
वृक्षः । इति शब्दरत्नावली ॥

**वशिरं**, क्ली, (उश्यते इष्यते इति । वश + बाहु-

लकात् किरच् । यद्वा, वशिं वशत्वं रातीति ।
रा + कः ।) सामुद्रलवणम् । इत्यमरः ॥

**वशिरः**, पुं, (वश + किरच् ।) गजपिप्पली ।

इत्यमरः ॥ (अस्य पर्य्यायो यथा, --
“करिपिप्पली करुणा कपिवल्ली कपिल्लिका ।
श्रेयसी वशिरश्चापि गजाह्वा गजपिप्पली ॥”
भुलिटा इति ख्यातः । अस्य पर्य्यायो यथा, --
“पार्व्वतेयश्च करभो वशिरः कपिपिप्पली ।
सर्व्वे तपस्विनः प्रोक्ताः सर्व्वे यज्ञेषु
भागिनः ।
अयज्वानश्च यज्वानः पितरो ब्रह्मणः
सुताः ॥”
इति कौर्म्मे १२ अध्यायः ॥
मित्रावरुणयोः पुत्त्रः । यथा, --
“इति पृष्टा नरेन्द्रेण कथ्यतामिति भूपते ।
वशिष्ठं चोदयामासुः समस्तास्ते
तपोधनाः ॥
मुनिभिः प्रेरितः सोऽपि यथावद्यतमानसः
।
योगमास्थाय सुचिरं मैत्रावरुणिरात्मवान्
॥”
अन्यच्च ।
“मित्रावरुणयोश्चैव कुण्डिनो ये परिश्रुताः
।
एकार्षेयास्तथैवान्ये वशिष्ठा नाम विश्रुताः
॥
एते पक्षा वशिष्ठानां स्मृता ह्येकादशैव तु ।
अष्टावेते समाख्याता ब्रह्मणो
मानसाःसुताः ॥”
इति वह्निपुराणे
घृतधेनुविधिवाराहप्रादुर्भावा-
ध्यायौ ॥

**वशीकरणं**, क्ली, (वश + कृ + भावे ल्युट् । अभूत-

तद्भावे च्विः ।)
मणिमन्त्रौषधैरायत्तीकरणम् ।
इति भरतजटाधरौ ॥ अस्य पर्य्यायः
वशक्रिया-
शब्दे द्रष्टव्यः ॥ * ॥ तत्साधनौषधानि
यथा, --
“ब्रह्मदण्डी वचा कुष्ठं प्रियङ्गुनागकेशरम् ।
दद्यात्ताम्बूलसंयुक्तं स्त्रीणां मन्त्रेण तद्वशम्
॥”
ॐ नारायणाय स्वाहेति ।
“ताम्बूलं दीयते यस्य स वशी स्यान्न
संशयः ।”
ॐ हरि हरि स्वाहा ॥ १ ॥
निम्बकाष्ठस्य धूपेन धूपयित्वा भगं स्त्रियः
।
सुभगा स्यात् सा च रुद्र पतिर्दासो
भविष्यति ॥
१५ ॥
माहिषं नवनीतञ्च कुष्ठञ्च मधुयष्टिका ।
सौभाग्यं भगलेपात् स्यात् पतिर्दासो
भवेत्तदा ॥
१६ ॥
पञ्च रक्तानि पुष्पाणि पृथग्जात्या
समाहरेत् ।
कुङ्कुमेन समायुक्तमात्मरक्तसमन्वितम् ॥
पुष्पेण तु स पिष्ट्वा च रोचनायां समेकतः
।
स्त्रिया पुंसा कृतो रुद्र तिलकोऽयं
वशीकरः ॥
१७ ॥
ब्रह्मदण्डा तु पुष्पेण याने पाने वशीकरः ॥
१८ ॥
ॐ गं गणपतये स्वाहेति ।
अयं गणपतेर्मन्त्रो धनविद्याप्रदायकः ॥
इममष्टसहस्रञ्च जप्त्वा बद्ध्वा शिखां
ततः ।
व्यवहारे जयः स्याच्च शतजाप्यान्नृणां
प्रियः ॥
१९ ॥
तिलानान्तु घृताक्तानां कृष्णानां रुद्र
होमयेत् ।
अष्टोत्तरसहस्रन्तु राजा वश्यस्त्रिभिर्द्दिनैः
॥ २० ॥
ह्रींकारं सविसर्गञ्च प्रातःसूर्य्यसमद्युतिम् ।
स्त्रीणां ललाटे विन्यस्य वश्यतां नयति
ध्रुवम् ॥
२१ ॥
यस्तु जुहुयादयुतं शुचिः प्रयतमानसः ।
दृष्टिमात्रे सदा तस्य वशमायान्ति योषितः
॥ २२ ॥
मनःशिला पत्रकञ्च सगोरोचनकुङ्कुमम् ।

जामातासौ क्वचित्प्रोक्तः सूर्य्यावर्त्तः
सितोऽपरः ॥”
इति बैद्यकरत्नमाला ॥)
चव्यम् । इति राजनिर्घण्टः ॥ अपामार्गः ।
इति
मेदिनी । रे, २०८ ॥ वचा । इति
शब्दचन्द्रिका ॥

**वशिष्ठः**, पुं, (वशवतां वशिनां श्रेष्ठः । वशवत् +
इष्ठन् । “विन्मतोर्लक ।” ५ । ३ । ६५ । इति
लुक् ।)
यद्वा, वरिष्ठः । पृषोदरादित्वात् साधुः । अस्य
निरुक्तिर्यथा, महाभारते । १३ । ९३ । ८९ ।
“वशिष्ठोऽस्मि वरिष्ठोऽस्मि वशे वासगृहेष्वपि ।
वशिष्ठत्वाच्च वासाच्च वशिष्ठ इति विद्धि माम्
॥”)
स्वनामख्यातमुनिः । तपय्यायः । अरुन्धती-
जानिः २ । इति हेमचन्द्रः ॥ अरुन्धतीनाथः
३
वाशिष्ठः ४ । इति शब्दरत्नावली ॥ स तु
ब्रह्मणः
प्राणेभ्यो जातः । तस्य भार्य्या कर्द्दमकन्या
अरु-
न्धती । पुत्राः सप्तर्षयः । इति
श्रीभागवतमतम् ॥
अपि च ।
“वशिष्ठश्च तथो र्ज्जयां सप्त पुत्रानजीजनत् ।
कन्याञ्च पुण्डरीकाक्षां सर्व्वशोभासमन्विताम्
॥
रजो गात्रोर्द्ध्वबाहुश्च मवनश्चानवस्तथा ।
सुतपाः शुक्र इत्येते सप्त पुत्रा महौजसः ।

“गोदन्तं हरितालञ्च संयुक्तं काकजिह्वया
।
चूर्णं कृत्वा यस्य शिरे दीयते स वशी
भवेत् ॥ २ ॥
खञ्जरीटस्य मांसन्तु मधुना सह पेषयेत् ।
ऋतुकाले योनिलेपात् पुरुषो
दासतामियात् ॥ ३ ॥
अगुरुं गुग्गुलुञ्चैव नीलोत्पलसमन्वितम् ।
गुडेन धूपयित्वा तु राजद्वारे प्रियो भवेत् ॥
४ ॥
श्वेतापराजितामूलं पिष्टं रोचनया युतम् ।
यं पश्येत्तिलकेनैव वशीकुर्य्यान् नृपालये
॥ ५ ॥
काकजिह्वा वचा कुष्ठं निम्बपत्रं सकुङ्कुमम्
।
आत्मरक्तं सभावेयं वशी भवति मानवः ॥
६ ॥
ॐ नमः सर्व्वसत्त्वेभ्यो नमः । सिद्धिं कुरु
कुरु
स्वाहा ।
सप्तभिर्मन्त्रितं कृत्वा करवीरस्य पुष्पकम्
।
स्त्रीणामग्रे भ्रामयेच्च क्षणाद्वै सा वशा
भवेत् ॥ ७ ॥
ब्रह्मदण्डी वचा पत्रं मधुना सह पेषयेत् ।
अङ्गलेपाच्च वनिता नान्यं
भर्त्तारमिच्छति ॥ ८ ॥
मूलं जयन्त्या वक्त्वस्थं व्यवहारे
जयप्रदम् ॥ ९ ॥
भृङ्गरालस्य भूलन्तु पिष्टं शुक्रेण संयुतम् ।
अक्षिणी चाञ्जयित्वा तु वशीकुर्य्यान्नरं
किल ॥ १०
अपराजिताशिफां
दद्यान्नीलोत्पलसमन्विताम् ।
ताम्बूलेन प्रदानाच्च वशीकरणमुत्तमम् ॥
११ ॥
चतुःषष्टिकलाः प्रीक्ताः कामशास्त्रे
वशीकराः ।
आलिङ्गनाद्या नृस्त्रीणां
कुमार्य्यादिर्व्वशीकराः ॥
१२ ॥
रोचनां नागपुष्पाणि विल्वपुष्पं प्रियङ्गवः ।

एभिः कृते च तिलके सदा स्त्री
वशतामियात् ॥
२३ ॥
सहदेवो भृङ्गराजः सितापराजिता वचा ।
तेनैव तिलकं कृत्वा त्रैलोक्यं
वशतामियात् ॥ २४
गोरोचना मीनपित्तमाभ्याञ्च
कृतवार्त्तिकाम् ।
यः पुमांस्तिलकं कुर्य्याद्वामहस्तकनिष्ठया
।
स करोति वशं सर्व्वं त्रैलोक्यं नात्र संशयः
॥
२५ ॥
गोरोचना महादेव ऋतुशोणितभाविता ।
ततः कृताच्च तिलकान्मानवं यं निरीक्षते
।
तञ्च सर्व्वं वशं कुर्य्यान्नात्र कार्य्या
विचारणा ॥
२६ ॥
नागेश्वरञ्च शैलेयं त्वक् पत्रञ्च हरीतकी ।
चन्दनं काष्ठसूक्ष्मैला रक्तशालिसमन्विता
।
एतैर्धूपो वशकरः स्मरवाण इवेश्वर ॥
२७ ॥
रतिकाले महादेव पार्व्वतीप्रिय शङ्कर ।
निजशुक्रं गृहीत्वा तु वामहस्तेन यः पुमान्
।
कामिनीचरणं वामं लिम्पेत् स स्यात्
स्त्रियाः
प्रियः ॥ २८ ॥
सैन्धवञ्च महादेव पारावतमलं मधु ।
एभिर्लिप्तन्तु लिङ्गं वै कामिनीवशकृद्भवेत्
॥ २९ ॥
पुष्पाणि पञ्चरक्तानि गृहीत्वा यानि कानि
च ।
तण्डुलञ्च प्रियङ्गुञ्च पेषयेदेकयोगतः ।
अनेन लिप्तलिङ्गस्य कामिनी
वशतामियात् ॥”
३० ॥
इति मारुडे १८३ । १८६ । १८९
अध्यायाः ॥

| | कुङ्कुमं चन्दनञ्चैव तिलकेन जगद्वशे ॥ १३ ॥<br>दुरालभा वचा कुष्ठं कुङ्कुमञ्च शतावरी ।<br>तिलतैलेन संयुक्तं योनिलेपात् वशो नरः ॥ १४ ॥ | “अथान्यत् संप्रवक्ष्यामि वशीकरणमुत्तमम् । |
|---|---|---|

येन विज्ञानमात्रेण मन्त्राः सिद्ध्यन्ति तत्क्षणात् ॥
प्रतिमां कारयेद्देवि ! पलेन रजतस्य च ।
पलार्द्धेन महेशानि ! साध्यस्य प्रतिमां शिवे ॥
हरितालं पलार्द्धञ्च हरिद्राचूर्णकं तथा ।
गर्त्तं कृत्वा सार्द्धहस्तं यत्र निःक्षिप्य सुन्दरि ! ॥
रक्तासनं तत्र दत्त्वा विशेत्तद्गतमानसः ।
चतुर्द्दिक्षु महेशानि ! पताका विनिवेशयेत् ॥
रक्तासने चोपविश्य पूर्ब्बास्यो जपमारभेत् ।
पूजाया नियमं देवि ! जानीहि नगनन्दिनि ॥
तिलपूर्णघटं तत्र स्थापयेत्तत्र देशिकः ।
प्राणप्रतिष्ठामन्त्रेण प्राणान् संस्थापयेद्बुधः ॥
अधः कृत्वा पूजयित्वा प्रवालमालया जपेत् ।
दशसाहस्रजाप्येन प्रयोगार्हो भवेत्ततः ॥
प्रणवं पूर्ब्बमुच्चार्य्य मायाबीजं द्वितीयकम् ।
का त्वं त्वल्लाकिनीयुक्तं वामकर्णेन्दुभूषितम् ॥
ततो रक्तपदं ब्रूयाच्चामुण्डे तदनन्तरम् ।
साध्यनाम ततो न्यस्य वशमानय तत्परम् ॥
वह्निजायावधिर्म्मन्त्रो जपेद्दशसहस्रकम् ।
दशांशादिप्रमाणेन होमादींश्च समाचरेत् ॥
प्रातः स्नात्वा हविष्याशी शुचिर्भूत्वा जिते-न्द्रियः ।
प्रातःकालं समारभ्य जपेन्मध्यन्दिनावधि ॥
जपे समाप्ते देवेशि ! हुनेद्दिने दिने शुभे ।
जातीपुष्पस्य होमेन वशयेन्नात्र संशयः ॥
कर्पूरमिश्रितैस्तोयैस्तर्पयेत् परदेवताम् ।
पूर्ब्बं प्रणवमुद्धृत्य चामुण्डां प्रवदेत्ततः ॥
तर्पयाम्यग्निजायान्तं मन्त्रं जानीहि सुन्दरि ! ।

**वश्यं**, क्ली, (वशाय वशीकरणाय साधु । “तत्र साधुः ।” ४ । ४ । ९८ । इति यत् ।) लवङ्गम् । इति शब्दचन्द्रिका ॥

**वश्यः**, त्रि, (वशमधीनत्वं गत इति । वश् + “वशं गतः ।” ४ । ४ । ८६ । इति यत् ।) आयत्ततां गतः । तत्पर्य्यायः । प्रणेयः २ । इत्य-मरः ॥ वशः ३ । इति शब्दरत्नावली ॥ (यथा, मार्कण्डेयपुराणे । ३९ । १७ ।
“मृदुत्वं सेव्यमानास्तु सिंहशार्द्दूलकुञ्जराः ।
यथा यान्ति तथा प्राणो वश्यो भवति योगिनः ॥”
अग्नीध्रस्य पञ्चमः पुत्त्रः । यथा, मार्कण्डेये । ५३ । ३४ ।
“हरिर्विर्षस्तृतीयस्तु चतुर्थोऽभूदिलावृतः ।
वश्यश्च पञ्चमः पुत्रो हिरण्यः षष्ठ उच्यते ॥”)

**वश्यका**, स्त्री (वश्या + स्वार्थे कन् ।) वशगा स्त्री । इति शब्दरत्नावली ॥

**वश्या**, स्त्री, (वश्य + टाप् ।) वशीभूता नारी । तत्पर्य्यायः । वशगा २ वशास्या ३ वश्यका ४ । इति शब्दरत्नावली ॥ (यथा, उत्तररामचरिते १ अङ्के । १ ।
“यं ब्राह्मणमियं देवी वाग्वश्येवानुवर्त्तते ।
उत्तरं रामचरितं तत्प्रणीतं प्रयोक्ष्यते ॥”)

**वष**, वधे । इति कविकल्पद्रुमः । (भ्वा०-पर०-सक०-सेट् ।) वषति । इति दुर्गादासः ॥

**वषट्**, व्य, देवोद्देश्यकहविस्त्यागमन्त्रः । इत्य-मरः ॥ स्वाहा श्रौषट् वौषट् वषट् स्वधा एते

**वष्कयः**, पुं, (वष्कते इति । वष्क गतौ + बाहु-लकात् अयन् ।) एकहायनो वत्सः । इत्यमर-टीकायां रायमुकुटधृतशाकटायनः ॥

**वष्कयणी**, स्त्री, (वष्कय एकहायनो वत्सः । तेन नीयते इति । नी + क्विप् । गौरादित्वात् ङीष् । “पूर्ब्बपदात् संज्ञाया-मगः । ८ । ४ । ३ । इति णत्वम् । वष्कयि-णीति पाठे । वष्कयोऽस्त्यस्या इति । “अत इनि ठनौ ।” इति इनिः । अट् कुप्वाङिति णत्वम् ।) चिरप्रसूता गौः । इत्यमरः ॥ “वष्कते परिक्रामति वष्कयश्चिरकालीनवत्सःवक्ना इति ख्यातः । वष्क ङ गतौ नाम्नीति अयः वष्कयस्त्वेकहायनो वत्स इति कोषः तद्योगात् वष्कयिणी नैकाजादिति इन् । वष्कयणीति पाठे गोतृणेत्यादिनापामादित्वात्नः नदा-दित्वादीप् । दुष्यमुषती गवेषितवष्कयिणीति मूर्द्धन्यषमध्ये गदसिंहः ।” इति तट्टीकायां भरतः ॥

**वस**, ऐ औ निवासे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-अनिट् ।) ऐ, उस्यात् । औ, अवात्सीत् । इति दुर्गादासः ॥

**वस**, क स्नेहच्छिदोश्च । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-अक०-सक०-च सेट् ।) स्नेह इह प्रीतिः । क, वासयति बन्धुः । चकारात् वधे च । इति दुर्गादासः ॥

**वस**, त् क वासे । इति कविकल्पद्रुमः ॥ (अदन्त-चुरा०-पर०-अक०-सेट् ।) वसयति । इति दुर्गादासः ॥

**वस**, य उ इर् स्तम्भे । इति कविकल्पद्रुमः ॥ (दिवा०-पर०-अक०-सेट् । उदित्वात् क्त्वावेट् ।) य, वस्यति । उ, वसित्वा वस्त्वा । इर्, अवसत्

अनेनैव विधानेन संतर्प्य परदेवताम् ॥
सिद्धिः प्रयोगाद्देवेशि ! जायते नात्र संशयः
।
अभिषेकं ततः कुर्य्यात् शङ्करि प्राणवल्लभे
॥
प्रणवञ्च महेशानि ! चामुण्डां तदनन्तरम् ।
अभिषिञ्चामि तत्पश्चात्
हृदन्तेनाभिषिञ्चयेत् ॥
तद्दशांशेन देवेशि ! ब्राह्मणान् भोजयेत्तदा ।
एवं कृते महेशानि ! वशीकरणमुत्तमम् ॥
जायते नात्र सन्देहः सत्यं सत्यं न संशयः
।
कामतुल्यश्च नारीणां रिपूणां शमनोपमः ॥
यावज्जीवितपर्य्यन्तं स्मरबाण इवेश्वरि !
।
जायते नात्र सन्देहः सत्यं सुरगणार्च्चिते ॥
* ॥
श्लेतापराजितामूलं पेषयेद्रोचनायुतम् ।
शतेनामन्त्रितं कृत्वा तिलकं कारयेत्ततः ॥
वशयेन्नात्र सन्देहः सत्यं सत्यं महेश्वरि ! ।
चन्द्रसूर्य्यौ यदि वृथा तदा
निष्फलभाग्भवेत् ॥
रक्तवस्त्रेण चामुण्डां तोषयेद्बहुयत्नतः ।
सुवर्णं दक्षिणा देया वित्तानुसारतः प्रिये !
॥
आद्यन्ते महतीं पूजां कुर्य्यात्तस्या
वरानने ! ।
पञ्चदिनप्रयोगेण राजानं वशमानयेत् ॥
तव प्रीत्यै महादेवि ! कथितं भुवि दुर्लभम्
॥”
इति बृहन्नीलतन्त्रम् ॥

**वशीभूतः**, त्रि, वश्यतां प्राप्तः । अवशो वशो

भूत इत्यर्थे च्विप्रत्ययेन निष्पन्नः ॥

**वशीरः**, पुं, (वश् + ईरन् ।) गजपिप्पली । इति

जटाधरः ॥

पञ्चशब्दा देवहविर्द्दानि वह्निमुखहुतौ
वर्त्तन्ते ।
देवाय हविषो दानं देवहविर्द्दानं तत्र देवा
इन्द्रादयः । अत्र पितरो देवता इति
स्मृतेस्ते-
ऽपि देवाः हविर्द्दान इत्यनेन एते मन्त्रा
इति
सूचितम् । इति भरतः ॥ (यथा, ऋग्वेदे ।
१० । ११५ । ९ ।
“इति त्वाग्ने वृष्टिहोत्रस्य पुत्त्रा
उपस्तुतास ऋषयोऽवोचन् ।
तांश्च पाहि गृणतश्च सूरीन्
वषड् वषडित्यूर्ध्वासो अनक्षन्
नमो नम इत्यूर्द्धासो अनक्षन् ॥”)

**वषट्कारः**, पुं, (वषट् इत्यस्य कारः करणं यत्र ।)

देवोद्देश्यकयागः । तत्पर्य्यायः । देवयज्ञः
२
आहुतिः ३ होमः ४ होत्रम् ५ । इति हेम-
चन्द्रः ॥ (यथा कातन्त्रे कृत्षष्ठे
इत्युणादिकेषु
कारशब्देन वा समासः । यथा वषट्कारः
।
स्वाहाकारः ॥)

**वषट्कृतं**, त्रि, (वषडिति मन्त्रेण कृतम् ।) हुतम् ।

इत्यमरः ॥
“अग्नौ हुतन्तु यद्द्रव्यं तत् स्यात्त्रिषु
वषट्-
कृतम् ॥”
इति शब्दरत्नावली च ॥

**वष्क**, ङ गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-सक०-सेट् ।) क्विपि वट् । ङ,
वष्कते ।
इति दुर्तादासः ॥

अवासीत् अवसीत् । अस्मात्
पुषादित्वान्नित्यं
ङ, इत्यन्ये । स्तम्भ इह नम्रतारहितीभावः ।
यो वस्यत्यरिष्विति हलायुधः । इति दुर्गा-
दासः ॥

**वस**, ल ङ स्तृतौ । इति कविकल्पद्रुमः ॥ (अदा०-

आत्म०-सक०-सेट् ।) स्तृतिरिह
आच्छादन-
पूर्ब्बकधारणम् । ल ङ, वस्ते लोकः वस्त्रम् ।
इति दुर्गादासः ॥

**वसतिः**, स्त्री, (वस निवासे + “वहिवस्यर्त्तिभ्य-

श्चित् ।” उणा० ४ । ६० । इति भावाधि-
करणादौ अतिः) । वासः । (यथा, अमरु-
शतके । ११ ।
“धीरं वारिधरस्य वारि किरतः श्रुत्वा निशीथे
ध्वनिं
दीर्घोच्छ्वासमुदश्रुणा विरहिनीं बालां चिरं
ध्यायता ।
अध्वन्येन विमुक्तकण्ठकरुणं रात्रौ तथा
क्रन्दितं
ग्रामीणैर्व्र जतो जनस्य वसतिर्ग्रामे निषिद्धा
यथा, ॥”)
यामिनी । निकेतनम् । इति मेदिनी । ते,
१५० ॥
(यथा, कुमारे । ४ । ११ ।

"रजनीतिमिरावगुण्ठिते
पुरमार्गे घनशब्दविक्लवाः ।
वसतिं प्रिय ! कामिनां प्रियाः
त्वदृते प्रापयितुं क ईश्वरः ॥")

**वसती**, स्त्री, (वसति + कृदिकारादिति ङीष् ।)
वासः । यामिनी । निकेतनम् । इति मेदिनी
।
ते, १५० ॥

**वसनं**, क्ली, (वस्यते आच्छाद्यतेऽनेनेति । वस् +
ल्युट् ।) वस्त्रम् । इत्यमरः ॥ (यथा, गीत-
गोविन्दे । १ । १२ ।
"वहसि वपुषि विशदे वसनं जलदाभं
हलहतिभीतिमिलितयमुनाभम्।
केशवधृतहलधररूप !
जय जगदीश हरे ! ॥"
वसनमिति । वस् + भावे ल्युट् ।) छादनम् ।
इति मेदिनी । ने, १२३ ॥ (वस + आघारे
ल्युट् ।)
निवासः । (यथा, महाभारते । ५ । ४३ ।
६० ।
"मौनान्न स मुनिर्भवति नारण्यवसनान्मुनिः
।
स्वलक्षणन्तु यो वेद स मुनिः श्रेष्ठ उच्यते
॥")
स्त्रीकटीभूषणम् । इति शब्दरत्नावली ॥

**वसना**, स्त्री, (वस + युच् ।) स्त्रीकटीभूषणम् ।
यथा, --
"सारसनं सारशनं वसना वशना तथा ।
वसनं वल्लनञ्चेति स्त्रीकटीभूषणे भवेत् ॥"
इति शब्दरत्नावली ॥

**वसन्तः**, पुं, (वसन्त्यत्र मदनोत्सवा इति । वस
+
"तृभूवहिवसिभासिसाधिगडिमण्डिजिनन्दि
भ्यश्च ।" उणा० ३ । १२८ । इति झच् ।)
ऋतुविशेषः । स च
चैत्रवैशाखमासद्वयात्मकः ।
मकरकेतनवाणसमाकुलं
मुदितमेव समस्तमिदं जगत् ।
मलयमारुतक्लृप्तगुणान्वितः
कफकरो हि वसन्तऋतुर्भवेत् ।
कफजकोपविनाशनानलं
वमनमावनरूक्षनिषेवणम् ॥
विविधः सुरतानन्दः संश्रमः कफवारणः ।
कटुक्षाराम्लकाः सेव्याः शोधनं कफसम्भवे
॥
व्यायामश्रमसंरोधखिन्नो विश्रान्तमानसः ।
एवं क्रियासमापन्नो नरः शीघ्रं सुखी भवेत्
॥"
इति वसन्तोपचारः ॥
इहि हारीते प्रथमस्थाने चतुर्थेऽध्याये ॥ *
॥
"कफश्चितो हि शिशिरे
वसन्तेऽर्कांशुतापितः ।
हत्वाग्निं कुरुते रोगानतस्तं त्वरया जयेत् ॥
तीक्ष्णैर्वमननस्याद्यैर्लघुरूक्षैश्च भोजनैः ।
व्यायामोद्वर्त्तनाघातैर्जित्वा
श्लेष्माणमुल्वणम् ॥
स्नातोऽनुलिप्तः कर्पूरचन्दनागुरुकुङ्कुमैः ।
पुराणयवगोधूमक्षौरजाङ्गलशूल्यभुक्॥
सहकाररसोन्मिश्रानास्वाद्यप्रिययार्पितान् ।
प्रियास्यसङ्गसुरभीन् प्रियानेत्रोत्पलाङ्कितान्
॥
सौमनस्यकृतो हृद्यान् वयस्यैः सहितो
पिबेत् ।
निर्गदानासवारिष्टसीधुमार्द्वीकमाधवान्॥
शृङ्गवेराम्बु साराम्बु मध्वम्बु जलदाम्बु वा ।
दक्षिणानिलशीतेषु परितो जलवाहिषु ॥
अदृष्टनष्टसूर्य्येषु मणिकुट्टिमकान्तिषु ।
परपुष्टविघुष्टेषु कामकर्म्मान्तभूमिषु ॥
विचित्रपुष्पवृक्षेषु काननेषु सुगन्धिषु ।
गोष्ठीकथाभिश्चित्राभिर्म्मध्याह्नं गमयेत् सुखी
॥
गुरुशीतदिवास्वप्नस्निग्धाम्लमधुरांस्त्यजेत्
॥"
इति वाभटे सूत्रस्थाने तृतीयेऽध्याये ॥
किंशुकाम्भोजवकुलचूताशोकादिपुष्पितैः
॥
कोकिलाषट्पदगणैरुपगीता मनोहराः ।
दक्षिणानिलसंवीताः सुमूखाः
पल्वलोज्ज्वलाः ॥"
इति सुश्रुते सूत्रस्थाने षष्ठेऽध्याये ॥ *
॥)
अस्याधिष्ठातृदेवतोत्पत्तिर्यथा, --
मन्मथ उवाच ।
"करिष्येऽहं तव विभो वचनाद्धरमोहनम्
।
किन्तु योषिन्महास्त्रं मे ततः कान्तां
भवान्
सृज ॥
मया संमोहिते शम्भौ यया
तस्यानुमोहनम् ।
कार्य्यं मनोरमां कामां तां निदेशय
लोकभृत् ॥
तामहं नहि पश्यामि यया तस्यानुमोहनम्
।
कर्त्तव्यमधुना धातस्तत्रोपायं ततः कुरु
॥
मार्कण्डेय उवाच ।
एवंवादिनि कन्दर्पे धाता लोकपितामहः
।
कया संमोहनीयोऽयमिति चिन्तां जगाम
ह ॥
चिन्ताविष्टस्य तस्याथ निःश्वासो यो
विनिः-
सृतः ।
तस्माद्वसन्तः संजातः
पुष्पव्रातविभूषितः ॥
चूताङ्कुरांस्तत्कलिकां
विभ्रद्भ्रमरसंहतिम् ।
किंशुकान् सारसा रेजे प्रफुल्ल इव पादपः
॥
शोणराजीवसङ्काशः फुल्लतामरसेक्षणः ।
सन्ध्योदिताखण्डशशिप्रतिमास्यः
सुनासिकः ॥

यथा । मधुश्च माधवश्च वासन्तिकावृतुः ।
इति
मलमासतत्त्वधृता श्रुतिः ॥
(फाल्गुनचैत्रात्मक-
श्चेति केचित् । वसन्तः
कुम्भमीनयोरितिप्रयो-
दर्शनात् ॥ * ॥) तत्पर्य्यायः ॥ पुष्पसमयः
२ सुरभिः
३ । इत्यमरः ॥ मधुः ४ । इति
शब्दरत्नावली ॥
माधवः ५ फल्गुः ६ । इति जटाधरः ॥
ऋतु-
राजः ७ पुष्पमासः ८ पिकानन्दः ९ कान्तः
१०
कामसखः ११ ॥ तत्कालीनजलगुणाः ।
कषाय-
त्वम् । मधुरत्वम् । रूक्षत्वञ्च । इति राज-
निर्घण्टः ॥ (यथा, ऋतुसंहारे । ६ । २ ।
"द्रुमाः सपुष्पाः सलिलं सपद्मं
स्त्रियाः सकामाः पवनः सुगन्धिः ।
सुखाः प्रदोषा दिवसाश्च रम्या
सर्व्वं प्रिये ! चारुतरं वसन्ते ॥"
यथा च ।
"हेमन्ते चीयते श्लेष्मा वसन्ते च प्रकुप्यति
।
प्रायेण प्रशमं याति स्वयमेव समीरणः ।
शरत्काले वसन्ते च पित्तं प्रावृड्तौ कफः
॥"
इति पूर्ब्बखण्डे द्बितीयेऽध्याये
शार्ङ्गधरेणोक्तम् ॥
"मुदितकोकिलकूजितकाननं
मदनसूचककिंशुकशोभितम् ।
कुसुमसौरभरञ्जितभूधरं ॥
कलितमत्तमधुव्रतलालसम् ॥

"हेमन्ते निचितः श्लेष्मा दिनकृद्भाभिरीरितः
।
कायाग्निं वाधते रोगांस्ततः प्रकुरुते बहून् ॥
तस्माद्वसन्ते कर्म्माणि वमनादीनि कारयेत्
।
गुर्व्वम्लस्निग्धमधुरं दिवास्वप्नञ्च वर्ज्जयेत्
॥
व्यायामोद्वर्त्तनं धूमं कवडग्रहमज्जनम् ॥
सुखाम्बुना शौचविधिं शीलयेत् कुसुमागमे
चन्दनागुरुदिग्धाङ्गो यवगोधूमभोजनः ॥
शारभं शशमैणेयं मांसं लावकपिञ्जलम् ।
भक्षयेन्निगद सीधुं पिबेन्माध्वीकमेव वा ॥
वसन्तेऽनुभवेत् स्त्रीणां काननानाञ्च यौवनम्
॥"
इति चरके सूत्रस्थाने षष्ठेऽध्याये ॥
"मधुमाधवौ वसन्तः । फाल्गुनचैत्रौ वसन्तः
।
ता एवौषधयः कालपरिणामात्
परिणतवीर्य्या
बलवत्यो हेमन्ते भवन्त्वापश्च प्रसन्नाः
स्निग्धा
अत्यर्थं गुर्व्वास्ता उपयुज्यमाना
मन्दकिरण-
त्वाद्भानोः सतुषारपवनोपस्तम्भितदेहानां
देहि-
नामविदग्धाः स्नेहाच्छैत्यात्
गौरवादुपलेपाच्च
श्लेष्मणः सञ्चयमापादयन्ति स सञ्चयो
वसन्ते-
ऽर्करश्मिप्रविलापित ईषत्स्तब्धदेहानां
देहिनां
श्लैष्मिकान् व्याधीन् जनयति ।" "पूर्ब्बाह्णे
वसन्तस्य लिङ्गम् ।"
"दिशो वसन्ते विमलाः काननैरुपशोभिताः
।

शङ्खवच्छ्रवणावर्त्तः श्यामकुञ्चितमूर्द्धजः ।
सन्ध्यांशुमालिसदृशः
कुण्डलद्वयमण्डितः ॥
प्रमत्तवारणगतिर्व्विस्तीर्णहृदयस्थलः ।
पीनस्थूलायतभुजः कठोरकरयुग्मकः ॥
सुवृत्तोरुकटीजङ्घः कम्बुग्रीवोन्नतांसकः
।
गूढजत्रुः पीनवक्षः संपूर्णः सर्व्वलक्षणैः ॥
तादृशेऽथ समुत्पन्ने सम्पूर्णे कुसुमाकरे ।
ववौ वायुः ससुरभिः पादपा अपि
पुष्पिताः ॥
पिकाश्च नेदुः सततं पञ्चमं मधुरस्वराः ।
प्रफुल्लपद्मा अभवन् सरस्यः
स्वच्छपुष्कराः ॥"
इति कालिकापुराणे ४ अध्यायः ॥ * ॥
हरमोहनकाले अस्य कर्म्माणि यथा, --
"मधुश्च कुरुते कर्म्म यद्यत्तस्य विमोहने
।
तत् शृणुष्व महाभाग नित्यं तस्योचितं
पुनः ॥
चम्पकान् केशरानाम्रान् करुणान्
पाटलां-
स्तथा ।
नागकेशरपुन्नागान् किंशुकान् केतकान्
वकान् ॥
माधवीमल्लिकापर्णसारान् कुरुवकांस्तथा
।
उत्फुल्लयति तत्र स्म यत्र तिष्ठति वै हरः
॥
सरांस्युत्फुल्लपद्मानि वीजयन्
मलयानिलैः ।
सुगन्धि कृतवान् यत्नात् अतीव
शङ्कराश्रमम् ॥
लताः सर्व्वाः सुमनसो नूतनाङ्कुरसञ्चयाः
।
वृक्षान् रुचिरभावेन वेष्टयन्ति स्म तत्र च
॥
तान् वृक्षांश्चारुपुष्पौघांस्तैः
सुगन्धिसमीरणैः ।
दृष्ट्वा कामवशं यातो न तत्र मुनिरप्युत ॥
तद्गणा अपि लोकेश नानाभावैः
सुशोभनैः ।

| | | |
|---|---|---|
| | | रमन्ते स्म सुराः सिद्धा ये ये चापि तपोधनाः ॥<br>न तस्य पुनरस्माभिर्दृष्टं मोहस्य कारणम् । |

भावं न कुरुते कामं कायोत्थमपि शङ्करः
॥”
इति कालिकापुराणे ७ अध्यायः ॥ * ॥
वसन्ते वर्णनीयानि यथा, --
“सुरभौ दोला
कोकिलमारुतसूर्य्यगतितरु-
दलोद्भिदाः ।
जातीतरपुष्पचयाम्रमञ्जरीभ्रमरझङ्काराः
॥”
इति कविकल्पलतायां प्रथमस्तवकः ॥
* ॥
अतिसारः । इति शब्दरत्नावली ॥
षड्रागान्त-
र्गतद्वितीयरागः । यथा, --
“रागाः षडेव तु प्रोक्ता रागिण्यस्त्रिंशदेव
तु ।
भैरवोऽथ वसन्तश्च नटनारायणस्तथा
॥”
इत्यादि ॥ तस्य पञ्चरागिण्यो यथा, --
“आन्दोलिता च देशाख्या लोला
प्रथममञ्जरी ।
मन्दारी चेति रागिण्यो वसन्तस्य
सदानुगाः ॥”
अस्य ध्यानं यथा, --
“शिखण्डिवर्होच्चयबद्धचूडः
पुष्णन् पिकं चूतलताङ्कुरेण ।
भ्रमन् मुदा वाममनोज्ञमूर्त्ति-
र्मतङ्गमत्तः स वसन्तरागः ॥”
अस्य गानसमयो यथा, --
“श्रीपञ्चम्याः समारभ्य यावत्
स्याच्छयनं हरेः ।
तावद्वसन्तरागस्य गानमुक्तं मनीषिभिः
॥”
इति सङ्गीतदामोदरः ॥
कल्लिनाथमते अस्य षड्रागिण्यो यथा ।
आन्धुली १ गमकी २ पठमञ्जरी ३
गौडकरी
४ धामकली ५ देवशाखा ६ ॥
हनूमन्मते

शुभेऽहनि विभावयेत् भिषगिदं धिया
सप्तशः ॥
द्रवैर्वृषनिशेक्षुजैः कमलमालतीपुष्पजैः
पयःकदलिकन्दजैर्मलयजैणनाभ्युद्भवैः ।
वसन्तकुसुमाकरो रसपतिर्द्विवल्लोऽशितः
समस्तगदहृद्भवेत् किल निजानुपानैरयम्
॥”
इति वृद्धयोगतरङ्गिणी ॥
(अथापरश्च ।
“द्विभागं हाटकं चन्द्रं त्रयो
वङ्गाहिकान्तकाः ।
चतुर्भागं शुद्धमभ्रं प्रवालं मौक्तिकन्तथा ॥
भावयेद्गव्यदुग्धेन भावनेक्षुरसेन च ।
वासालाक्षारसोदीच्यरम्भाकन्दप्रसूनैक
॥
शतपत्ररसेनैव मालत्याः कुङ्कुमोदकैः ।
पश्चाद्मृगमदैर्भाव्यं सुगन्धिरससम्भवम् ॥
कुसुमाकरविख्यातो वसन्तपदपूर्ब्बकः ।
गुञ्जाद्वयेन संसेव्यः सितामध्वाज्यसंयुतः
॥
मेहघ्नः कान्तिदश्चैव कामदः पुष्टिदस्तथा
।
वलीपलितनाशश्च श्रुतिभ्रंशं विनाशयेत् ।
पुष्टिदो बल्य आयुष्यः पुत्त्रप्रसवकारणः ॥
प्रमेहान् विंशतिञ्चैव क्षयमेकादशन्तथा ।
तथा सोमरुजं हन्ति साध्यासाध्यमथापि
वा ॥”
इति वैद्यकरसेन्द्रसारसंग्रहे रसायनाद्यधि-
कारे ॥)

**वसन्तघोषी** [न्], पुं, (वसन्ते वसन्तकाले घोषति
विरौति वसन्तं घोषयति विज्ञापयतीति वा
।
घुष + णिनिः ।) कोकिलः । इति केचित्
॥

**वसन्तजा**, स्त्री, (वसन्ते जायते इति । जन + डः
।)
वासन्तीलता । इति राजनिर्घण्टः ॥
(वसन्त-
कालोद्भवे, त्रि ॥)

कासश्वाससपित्तवातकफजित्पाण्डुक्षयादीन्
हरेत्
शूलादिग्रहणीं विषादिहरणो मेहांस्तथा
विंशतिम् ॥
हृद्रोगादिहरो ज्वरादिशमनो वृष्यो वयोवर्द्धनः
श्रेष्ठः पुष्टिकरो वसन्ततिलको मृत्युञ्जयेनोदितः
॥”
इति वैद्यकरसेन्द्रसारसंग्रहे रसायनाद्यधिकारे
॥)

**वसन्तदूतः**, पुं, (वसन्तस्य दूत इव ।) आम्रवृक्षः ।
कोकिलः । पञ्चमरागः । इति विश्वमेदिन्यौ ॥

**वसन्तदूती**, स्त्री, (वसन्तस्य दूतीव ।) पाटली-
वृक्षः । माधवीलता । इति मेदिनी । ते, २३३
॥
गणिकारी । पिकी । इति राजनिर्घण्टः ॥

**वसन्तद्रुः**, पुं, (वसन्तस्य द्रुर्वृक्षः ।) आम्रवृक्षः ।
इति शब्दमाला ॥

**वसन्तपञ्चमी**, स्त्री, (वसन्तस्य पञ्चमी ।)
श्रीपञ्चमी । यथा, --
“मकरस्थे सहस्रांशौ शुक्लपक्षे यशस्विनि !
।”
इत्यारभ्य ।
“पञ्चम्याञ्च जगद्धात्रीं प्रातरेव नदीजलैः ।
स्नापयित्वा सलक्ष्मीकां कुम्भैर्मारकतैरपि ॥
वसन्तपञ्चमी नाम सर्व्वपापप्रमोचनी ।
वसन्तञ्च समभ्यर्च्च्य कन्दर्पं सरतिं प्रिये ! ॥
वसन्तरागश्रवणात् श्रियमाप्नोत्यभीप्सिताम्।
श्रीपञ्चमीन्तु केचित्तां मुनयः प्रवदन्ति वै ।
वर्त्तयेदेकभक्तेन श्रियो न विच्युतिर्भवेत् ॥”
इति मत्स्यसूक्ते ५५ पटलः ॥
अन्यच्च ।
“माघस्य शुक्लपञ्चम्यां महापूजां समाचरेत् ।
नवैः प्रवालैः कुसुमैरनुलेपैर्व्विशेषतः ॥
नीराजनोत्सवं कृत्वा भक्त्या संमान्य
वैष्णवान् ।
वसन्तरागं जनयन् गीतनृत्यादि कारयेत् ॥”
तदुक्तम् ।

हिन्दोलरागपुत्रनामानोऽस्याष्टौपुत्त्राः । किन्तु
तेषां मध्ये विभासस्थाने हिन्दोल इति लिखि-
तम् ॥ सोमेश्वरमते तस्य षड्रागिण्यो यथा ।
देशी १ देवगिरी २ वैराटी ३ टोडिका ४
ललिता ५ हिन्दोली ६ ॥ तन्मते अस्य रागस्य
रागिणीसहितस्य वसन्तर्त्तुर्गानसमयः । इति
सङ्गीतशास्त्रम् ॥ * ॥ तालविशेषः ।
यथा, --
"जयमङ्गलगन्धर्व्वमकरन्दत्रिभङ्गमाः ।
रतितालो वसन्तश्च जगज्झम्पोऽथ
गारुणिः ॥"
इत्यादि ॥
"वसन्तताले कर्त्तव्यो नगणो
मगणस्तथा ।
जगजझम्पे गुरुश्चैको विरामान्तञ्च
खद्वयम् ॥"
इति सङ्गीतदामोदरः ॥

**वसन्तकः**, पुं, (वसन्त + संज्ञायां कन् ।) श्योनाक-
प्रभेदः । इति राजनिर्घण्टः ॥ (रुमण्वतो नर्म्म-
सूहृदः पुत्त्रः । यथा, कथासरित्सागरे ।
९ । ४४ ।
"सुप्रतीकस्य पुत्त्रश्च
रुमण्वानित्यजायत ।
योऽस्य नर्म्मसुहृत्तस्य पुत्त्रोऽजनि
वसन्तकः ॥")

**वसन्तकुसुमः**, पुं, (वसन्ते कुसुमं यस्य ।) वृक्ष-
विशेषः । यथा, --
"वसन्तकुसुमः सेलुः शयितो
द्विजकुत्सितः ॥"
इति शब्दमाला ॥

**वसन्तकुसुमाकरः**, पुं, औषधविशेषः । यथा, --
"प्रवालरसमौक्तिकाम्बरमिदं
चतुर्भगभाक्

**वसन्ततिलकं**, क्ली, (वसन्तस्य तिलकमिव ।)
पुष्पविशेषः ।
चतुर्दशाक्षरपादच्छन्दोविशेषः ।
यथा, --
"ज्ञेयं वसन्ततिलकं त भ जा ज गौ गः ॥
फुल्लं वसन्ततिलकं तिलकं वनाल्या
लीलापरं पिककुलं कलमत्र रौति ।
वात्येष पुष्पसुरभिर्म्मलयाद्रिवातो
यातो हरिः स मथुरां विधिना हताः स्मः
॥"
इति छन्दोमञ्जरी ॥ * ॥
औषधविशेषः । यथा, --
"अक्षारलूदहनसैन्धवविश्वशक्र-
चूर्णं करञ्जसहितं मथितेन पीतम् ।
नैवं प्ररोहति पुनर्गुदजः स्वहेतो-
स्तस्मै वसन्ततिलकैरपि कल्पकल्पम् ॥"
इति वृत्तरत्नावल्यां गुदजरोगचिकित्सा ॥
(अन्यविधमौषधम् । यथा, --
"हेम्नो भस्मकमभ्रकं द्विगुणितं लौहास्त्रयः पारदा-
श्चत्वारो नियतन्तु वङ्गयुगलञ्चैकीकृत्तं
मर्द्दयेत् ।
मुक्ताविद्रुमयो रसेन समता गोक्षुरवासेक्षुणा
सर्व्वं वन्थकरीषकेण सुदृढं गुप्तं पचेत्
सप्तधा ॥
कस्तूरीघनसारमर्द्दितरसःपश्चात् सुसिद्धो
भवेत् ।

"श्रीपञ्चमीं समारभ्य यावत् स्याच्छयनं हरेः ।
वसन्तरागः कर्त्तव्यो नान्यदा तु कदाचनेति ॥
कृत्वा वसन्तपञ्चम्यां श्रीकृष्णस्यार्च्चनोत्सवम्
।
स्याद्वसन्त इव प्रेयान् वृन्दावनविहारिणः ॥"
इति हरिभक्तिविलासे १४ विलासः ॥

**वसन्तसखः**, पुं, (वसन्तस्य सखा । "राजाहः
सखिभ्यष्टच् ।" ५ । ४ । ९१ । इति टच् ।)
कामदेवः । इति हलायुधः ॥

**वसन्तोत्सवः**, पुं, (वसन्तस्य उत्सवः ।) फाल-
गुनोत्सवः । यथा, --
"फाल्गुन्यां पौर्णमास्यान्तु विदध्याद्वैष्णवैः सह
श्रीकृष्णप्रियभक्तस्य वसन्तस्यार्च्चनोत्सवम्
॥
भविष्योत्तरतो ज्ञेयस्तद्विधिश्चेदपेक्षते ।
यः श्रीयुधिष्ठिरस्योक्तो व्यक्तं भगवता स्वयम्
॥"
तन्माहात्म्यञ्च तत्रैव ।
"एवं यः कुरुते पार्थ शास्त्रोक्तं फाल्गुनोत्-
सवम् ।
मत्प्रसादाच्च सिद्ध्यन्ति तस्य सर्व्वे
मनोरथाः ॥
वृत्ते तुषारसमये सितपञ्चदश्यां
प्रातर्व्वसन्तसमये समुपस्थिते च ।

| | | |
|---|---|---|
| पृथक् पृथगथ स्मृते रजतहेमतो द्व्यंशके ।<br>अयोभुजगरङ्गकं त्रिलवकं विमर्द्याखिलं | | |

संप्राश्य चूतकुसुमं सह चन्दनेन
सत्यं हि पार्थ पुरुषोऽब्दशतं सुखी स्यात्
॥”
इति श्रीहरिभक्तिविलासे १४ विलासः ॥
(वसन्तकालोद्भवोत्सवमात्रम् । यथा,
कथा-
सरित्सागरे । ४ । ४९ ।
“अथ तस्मिन् महावेशो वसन्तोत्सववासरे
।
आययौ प्रथमे यामे कुमारसचिवो निशि
॥”)

**वसा**, स्त्री, (वसति वस्ते वा । वस निवासे वस
आच्छादने वा + अच् । स्त्रियामाप् ।)
मांस-
प्रभवधातुविशेषः । इत्यमरः ॥ (यथा,
सुश्रुते
शारीरस्थाने ४ अध्याये ।
“शद्धमांसस्य यः स्नेहः सा वसा परि-
कीर्त्तिता ॥”)
अस्या विवरणं मेदःशब्दे द्रष्टव्यम् ॥ मांस-
रोहिणी । इति राजनिर्घण्टः ॥

**वसाढ्यः**, पुं, (वसया आढ्यः । प्रचुरवसावत्त्वादस्य
तथात्वम् ।) शिशुमारः । इति
त्रिकाण्डशेषः ॥

**वसिः**, पुं, (वस्ते आच्छादयत्यनेन वस्यते आच्छा-
दनपूर्व्वकं ध्रियते इति वा । वस
आच्छादने +
“खनिकष्यञ्जीति ।” उणा० ४ । १३९ ।
इति
इः ।) वसनम् । इत्युणादिकोषः ॥

**वसिरं**, क्ली, (वस् + किरच् ।) सामुद्रलवणम् ।
गजपिप्पली । इति धरण्यमरटीके ॥
(अस्य
गुणा यथा, --
“वसिरं शीतपाक्यञ्च सारुष्करनिबन्धनम्
।

नामानि । भानुर्लम्बा ककुद्यामिर्विश्वा
साध्या
मरुत्वती वसुर्मुहूर्त्ता सङ्कल्पा । आसां मध्ये
वसोरष्टौ वसवः पुत्त्रा यथा । द्रोणः प्राणः
ध्रुवः
अर्कः अग्निः दोषः वास्तुः विभावसुरिति ।
द्रोणस्य अभिमत्यां पत्न्यां
हर्षशोकभयादयः
पुत्त्राः । १ । प्राणस्य उर्ज्जस्वत्यां द्वौ
पुत्त्रौ सह-
स्रायुः पुरोजवश्च । २ । ध्रुवस्य धारण्यां
पुरः
पुत्त्रः । ३ । अर्कस्य वासनायां तर्षादयः
पुत्त्राः । ४ ।
अग्नेर्वसोर्धारायां द्रविणकादयः पुत्त्राः । ५ ।
दोषस्य शर्व्वर्य्यां शिशुमारो हरेरंशः । ६ ।
वास्तोराङ्गिरस्यां विश्वकर्म्मा ।
विश्वकर्म्मणः
पुत्त्रश्चाक्षुषो मनुरभूत् । विश्वे साध्या
मनोः
सुताः । ७ । विभावसोरुषायां त्रयः पुत्त्राः
व्युष्टरोचिषातपनामानः । ८ । इति
श्रीभागवत-
मतम् ॥ * ॥ मतान्तरे अष्टौ वसवो यथा, --
धरः १ ध्रुवः २ सोमः ३ सावित्रः ४
अनिलः ५
अनलः ६ प्रत्यूषः ७ प्रभासः ८ । इति
महा-
भारते दानधर्म्मः ॥ अपि च ।
“आपो ध्रुवश्च सोमश्च
धरश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः
॥
आपस्य पुत्त्रो वैतण्ड्यः श्रमः श्रान्तो
ध्वनि-
स्तथा ।
ध्रुवस्य पुत्त्रो भगवान् कालो
लोकप्रकालनः ॥

तस्या हेतोर्महाभाग ! सवत्सां गां पय-
स्विनीम् ।
आनयस्वाश्रमश्रेष्ठं नन्दिनीं कामदां शुभाम्
॥
यावदस्याः पयः पीत्वा सखी मम सदैव हि
।
मानुषेषु भवेदेका जरारोगविवर्ज्जिता ॥
तच्छ्रुत्वा वचनं तस्या द्यौर्जहार च
नन्दिनीम् ।
अवमत्य मुनिं दान्तं पृथ्वाद्यैः सहितोऽनघः
॥
हृतायामथ नन्दिन्यां वशिष्ठस्तु महातपाः ।
आजगामाश्रमपदं फलान्यादाय सत्वरः ॥
नापश्यत् स यदा धेनुं सवत्सां स्वाश्रमे
मुनिः ।
मृगयामास तेजस्वी गह्वरेषु वनेष्वपि ॥
नासादिता यदा धेनुश्चुकोपातिशयं मुनिः ।
वारुणिश्चापि विज्ञाय ध्यानेन वसुभिर्हृताम्
॥
वसुभिर्मे हृता धेनुर्यस्मान्मामवमन्य वै ।
तस्मात् सर्व्वे जनिष्यन्ति मानुषेषु न
संशयः ॥
एवं शशाप धर्म्मात्मा वसूंस्तान् वारुणिः
स्वयम् ।
श्रुत्वा विमनसः सर्व्वे प्रययुर्दुःखिताश्च ते
॥
शप्ताः स्म इति जानन्त ऋषिं तमुपचक्रमुः
।
प्रसादयन्तस्तमृषिं वसवः शरणं गताः ॥
मुनिस्तानाह धर्म्मात्मा वसून्दीनान् पुरः-
स्थितान् ।
अनुसंवत्सरं सर्व्वे शापमोक्षमवाप्स्यथ ॥
येनेयं विहृता धेनुर्नन्दिनी मम वत्सला ।
तस्माद्द्यौर्मानुषे देहे दीर्घकालं वसिष्यति
॥
ते शप्ताः पथि गच्छन्तीं गङ्गां दृष्ट्वा सरिद्व-
राम् ।
ऊचुस्तां प्रणताः सर्व्वे शप्तां चिन्तातुरां
नदीम् ॥

विष्टम्भि दुर्ज्जरं रूक्षं शीतलं वातकोपनम्
॥”
इति सुश्रुते सूत्रस्थाने ४६ अध्याये ॥
पुं, रक्तापामार्गः । तत्पर्य्यायो यथा, --
“रक्तोऽन्यो वसिरो वृत्तफलो धामार्गवोऽपि
च ।
प्रत्यक्पर्णी केशपर्णी कथिता कपिपिप्पली
॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**वसिष्ठः**, पुं, (वशिष्ठः । पृषोदरादित्वात् शस्य सः ।)
वशिष्ठमुनिः । इति द्विरूपकोषः ॥

**वसु**, क्ली, (वसत्यनेनेति । वस + “शॄस्वृस्निहीति ।”
उणा० १ । ११ । इति उः ।) रत्नम् ।
धनम् ।
इत्यमरः ॥ (यथा, रघुः । ८ । ३१ ।
“बलमार्त्तभयोपशान्तये
विदुषां सत्कृतये बहुश्रुतम् ।
वसु तस्य विभोर्न केवलं
गुणवत्तापि परप्रयोजनम् ॥”)
वृद्धौषधम् । श्यामम् । इति मेदिनी । से, ६
॥
हाटकम् । इति विश्वः ॥ जलम् । इति
सिद्धान्त-
कौमुद्यामुणादिवृत्तिः ॥

**वसुः**, पुं, (वसतीति । वस + उः ।) वकवृक्षः ।
अनलः । रश्मिः । गणदेवताविशेषः ।
इत्यमरः ॥
स चाष्ट संख्यातः । यथा, --
“धरो ध्रुवश्च सोमश्च
विष्णुश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ क्रमात्
स्मृताः ॥”
इति भरतः ॥
दक्षो द्वितीयजन्मनि षष्ठमन्वन्तरे
असिक्न्यां
पत्न्यां षष्टिकन्या जनयामास । ताः प्रजा-
पतिभ्यो दत्तवान् । धर्म्माय दश । तासां

सोमस्य भगवान् वर्च्चा वर्च्चस्वी येन
जायते ।
धरस्य पुत्त्रो द्रविणो हुतो हव्यवहस्तथा ॥
मनोहरायाः शिरसः प्राणोऽथ रमणस्तथा ।
अनिलस्य शिवा भार्य्या तस्याः पुत्त्रः
पुरोजवाः ॥
अविज्ञातगतिश्चैव द्वौ पुत्त्रावलिनस्य तु ।
अग्निपुत्त्रः कुमारस्तु शरस्तम्बे व्यजायत ॥
तस्याः शाखो विशाखश्चानैगमेयश्च
पृष्टजाः ।
प्रत्यूषस्य विदुः पुत्त्रं ऋषिं नाम्ना च
देवलम् ॥
द्वौ पुत्त्रौ देवलस्यापि क्षमावन्तौ मनीषिणौ
।
बृहस्पतेश्च भगिनी वरस्त्री ब्रह्मचारिणी ॥
प्रभासस्य तु सा भार्य्या वसूनामष्टमस्य च
।
विश्वकर्म्मा महाभागस्तस्यां जज्ञे
प्रजापतिः ॥”
इति वह्निपुराणे
कश्यपीयप्रजासर्गनामाध्यायः
कौर्म्मे १४ अध्यायश्च ॥ * ॥ (एते
वशिष्ठस्य
धेनुं नन्दिनीमपहृत्य तच्छापग्रस्ता पृथिव्यां
शन्तनुपुत्त्रा आसन् । तेषु द्यौनामा वमुरेव
कुरुवृद्धो भीष्मः । एतद्विवरणं यथा,
देवीभाग-
वते । २ । ३ । २४ -- ४४ ।
“एतस्मिन् समये चाष्टौ वसवः स्त्रीसम-
न्विताः ।
वशिष्ठस्याश्रमं प्राप्ता रममाणा यदृच्छया ॥
पृथ्वादीनां वसूनाञ्च मध्ये कोऽपि वसूत्तमः
।
द्यौर्नामा तस्य भार्य्याथ नन्दिनीं गां ददर्श ह
॥
दृष्ट्वा पतिं सा पप्रच्छ कस्येयं धेनुरुत्तमा ।
द्यौस्तामाह वशिष्ठस्य गौरियं शृणु सुन्दरि !
॥
दुग्धमस्याः पिबेद्यस्तु नारी वा पुरुषोऽथवा
।
अयुतायुर्भवेन्नूनं सदैवागतयौवनः ।

भविष्यामो वयं देवि ! कथं देवाः
सुधाशनाः ।
मानुषाणाञ्च जठरे चिन्तेयं महती हि नः ॥
तस्मात्त्वं मानुषी भूत्वा जनयास्मान्
सरिद्वरे ! ।
शन्तनुर्नाम राजर्षिस्तस्य भार्य्या भवानघे !
॥
जातान् जातान् जले चास्मान् निक्षिपस्व
सुरापगे ! ।
एवं शापविनिर्मोक्षो भविता नात्र संशयः ॥
तथेत्युक्ताश्च ते सर्व्वे जग्मुर्लोकं स्वकं पुनः
।
गङ्गापि निर्गता देवी चिन्त्यमाना पुनः पुनः
॥”)
योक्त्रम् । राजा । इति मेदिनी । से, ६ ॥
धनाधिपः ।
इति विश्वः ॥ साधुः । इति शब्दरत्नावली
॥
पीतमुद्गः । वृक्षः । इति हेमचन्द्रः ॥
पुष्करिणी ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ शिवः
।
सूर्य्यः । इत्यनेकार्थकोषः ॥ (विष्णुः ।
यथा,
महाभारते । १३ । १४९ । ८७ ।
“वसुप्रदो वासुदेवो वसुर्वसुमना हरिः ॥”
“वसन्ति भूतान्यत्र एतेषु स्वयमपीति वसुः
।”
इति तत्र शाङ्करभाष्यम् ॥)
कुलीनकायस्थस्य
पद्धतिविशेषः । यथा शूद्राणां नामकरणे
वसु-
घोषादिपद्धतियुक्तनामत्वञ्च बोध्यम् ।
इत्युद्वाह-
तत्त्वम् ॥ अष्टसंख्या । यथा, --
“युग्माग्निकृतभूतानि षण्मुन्योर्वसुरन्ध्रयोः
॥”
इति तिथ्यादितत्त्वम् ॥
(वकुलः । बृहद्बोल सरीति च ख्यातः ।
अस्य
पर्य्यायो यथा, --

| | तच्छ्रुत्वा सुन्दरी प्राह मर्त्यलोकेऽस्ति मे सखी ।<br>उशीनरस्य राजर्षेः पुत्री परमशोभना ॥ | |
|---|---|---|

"शिवमल्ली पाशुपत एकाष्ठीलो वुको वसुः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**वसुः**, स्त्री, (वस् + उः ।) दीप्तिः । वृद्धौषधम् ।
इति शब्दरत्नावली ॥ (दक्षस्य कन्याविशेषः ।
सा तु धर्म्मस्य पत्नीनामन्यतमा । इति विष्णु-
पुराणम् । १ । १५ । १०५ ॥)

**वसुः**, त्रि, (वस् + उः ।) मधुरम् । शुष्कम् । इति
हेमचन्द्रः ॥

**वसुकं**, क्ली, (वसुवत् कायतीति । कै + कः ।)
साम्भरिलवणम् । इत्यमरः ॥ पांशवम् । वास्तू-
कम् । इति राजनिर्घण्टः ॥

**वसुकः**, पुं, (वसुः सूर्य्यस्तन्नाम्ना कायतीति । कै +
आतोऽनुपेति कः ।) अर्कवृक्षः । इत्यमरः ॥ शिव-
मल्ली । इति मेदिनी । के, १५२ ॥ पुष्पविशेषः । स
तु श्वेतरक्तभेदेन द्विविधः । तत्पर्य्यायः । वसुः २
शैवः ३ वकः ४ शिवमल्लिका ५ पाशुपतः ६
शिवमतः ७ सुरेष्टः ८ शिवशेखरः ९ । अस्य
गुणाः । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । पाके
शीतत्वम् । दीपनत्वम् । अजीर्णवातगुल्मनाशि-
त्वम् । श्वेतस्य रसायनत्वञ्च । इति राज-
निर्घण्टः ॥ (अस्य पर्य्यायान्तरं यथा, --
"वकपुष्पः काकशीर्षः स्थूलपुष्पः शिवप्रियः ।
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ७ अध्यायः
वह्निपुराणञ्च ॥ (स्वनामख्यातः कलियुगराज-
विशषस्य देवभूतेरमात्यः । स तु देवभूतिं
निहत्य स्वयं राज्यञ्चकार । यथा, भागवते ।
१२ । १ । १८ ।
"शुङ्गं हत्वा देवभूतिं कण्वोऽमात्यस्तु कामि-
नम् ।
स्वयं करिष्यते राज्यं वसुदेवो महामतिः ॥"
वसवो देवता यस्य । धनिष्ठानक्षत्रे, क्ली ।
यथा, वराहसंहितायाम् । ७ । ११ ।
"घोरा श्रवणस्त्वाष्ट्रं वसुदेवं वारुणञ्चैव ॥")

**वसुदेवता**, स्त्री, (वसवो देवता यस्याः ।)
धनिष्ठानक्षत्रम् । इति हेमचन्द्रः । २ । २८ ॥
(यथा, हरिवंशे । १२२ । ३५ ।
"देवपत्न्यस्तथैवान्या देवाश्च वसुदेवता ॥")

**वसुदेवभूः**, पुं, (वसुदेवात् भवतीति । भू + क्विप् ।)
श्रीकृष्णः । इति हेमचन्द्रः । ३ । ३६१ ॥

**वसुधा**, स्त्री, (वसूनि रत्नानि दधाति धारय-
तीति । धा + कः । सुवर्णादीनामाकरत्वात्
तथात्वम् ।) पृथिवी । इत्यमरः ॥ (यथा,
साहित्यदपणे १० परिच्छेदे ।
"राज्ये सारं वसुधा वसुधायां पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गना सर्व्वस्वम् ॥" * ॥
वसुधनं दधाति दत्ते इति । धा + क्विप् । धन-
दातरि, त्रि । यथा, वाजसनेयसंहितायाम् ।
२७ । १५ ।
"वसुश्चेतिष्ठो वसुधातमश्च ॥"
"वसुधातमः वसूनां धनानां दातृतमः । क्विब-
न्तात् तमप् ।" इति तद्भाष्ये महीधरः ॥)

**वसुधाखर्ज्जूरिका**, स्त्री, (वसुधाजाता खर्ज्जू-
रिका ।) भूखर्ज्जूरिका । इति राजनिर्घण्टः ॥

**वसुधारा**, स्त्री, (वसुवत् रत्नस्येव धारा यशो
यस्याः ।) जिनशक्तिविशेषः । तत्पर्य्यायः । तारा २
महाश्रीः ३ ओङ्कारा ४ स्वाहा ५ श्रीः ६ मनो-
कारयेत् पञ्चवारान् वा नातिनीचां न चोच्छ्रिताम् ॥
आयुष्मानिति शान्त्यर्थं जप्त्वा तत्र समाहितः ।
षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत् ॥"
वसोश्चेदिराजस्य वसोर्धारामिति वसोर्धाराधि-
पातेनेत्यादिदर्शनात् अलुक्समासेनैव प्रयोगः
कर्त्तव्यः । इति श्राद्धतत्त्वम् ॥ * ॥ सामगानां
तत्पातनमन्त्रो यथा, --
"यद्वर्च्चो हिरण्यस्य यद्वा वर्च्चो गवामुत ।
सत्यस्य ब्रह्मणो वर्च्चस्तेन मांसं सृजामसि ॥"
यजुषां यथा । "वसोः पवित्रमसि शतधारं
वसोः पवित्रमसि सहस्रधारं देवस्त्वा सविता
पुनातु वसोः पवित्रेण शतधारेण सुत्वा काम-
धुक्ष्व ।" इति श्राद्धप्रयोगतत्त्वम् ॥ * ॥ ऋग्-
वेदिनां यथा ।

"अपसश्चर आगच्छन्ती भूरिधारे पयस्वती
घृतप्रघाते सुकृते शुचिव्रते । राजम्भ यस्य यस्य
भुवनस्य रोदसी आस्म रैत सिञ्चितं यन्मनु-
कृतम् । १ ।

अन्या इव वनुत्तमे तवासुञ्जना अभिचाक-
सीमि । यत्र सोमः श्रूयते यत्र यज्ञो पठते
घृतस्य धारा मधुमप्लु वधन्ते ॥ २ ॥

घृतवती भुवनानामभिश्रियोर्व्वी पृथ्वी मधु-
दुघे सुपेशसा द्यावा पृथिवी वरुणस्य धर्म्मणा
विष्कभिते अजरे भूरि रेतसा ॥ ३ ॥

वसुकः काकनामा च वसुहट्टः
स्वपूरकः ॥”
इति वैद्यकरत्नमालायाम् ॥)

**वसुकीटः**, पुं, (वसुनि धने कीट इव प्रार्थक-
त्वात् ।) याचकः । इति हारावली ।
३८ ॥

**वसुच्छिद्रा**, स्त्री, महामेदावृक्षः । इति रत्नमाला
राजनिर्घण्टश्च ॥ (तथास्याः पर्य्यायो
यथा, --
“महामेदा वसुच्छिद्रा त्रिदन्ती
देवतामणिः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**वसुदः**, पुं, (वसूनि ददातीति । दा + कः ।)
कुबेरः । इति धनदशब्ददर्शनात् ॥
(यथा,
हरिवंशे । ८१ । १५ ।
“सनन्दगोपस्य गृहं वासाय वसुदोपमः
।
अवतीर्य्य ततो यानात् प्रविवेश
महाबलः ॥” * ॥
वसु धनं ददातीति । विष्णुः । यथा,
महा-
भारते । १३ । १४९ । ४२ ।
“सुभुजो दुर्द्धरो वाग्मी महेन्द्रो वसुदो
वसुः ॥”)
धनदातरि, त्रि ॥ (यथा, महाभारते ।
१२ ।
१२० । ३०
“अमोघक्रोधहर्षस्य
स्वयंकृत्यान्ववेक्षितुः ।
आत्मप्रययकोषस्य वसुदैव वसुन्धरा
॥”)

**वसुदेवः**, पुं, (वसुना धनेन दीव्यतीति । दिव् +
अच् ।) श्रीकृष्णजनकः । तत्पर्य्यायः
। थ्यानक-
दुन्दुभिः २ । इत्यमरः ॥ शूरः ३
कृष्णपिता ४ ।

रमा ७ तारिणी ८ जया ९ अनन्ता १०
शिवा ११ लोकेश्वरा १२ आत्मजा १३
खदूर-
वासिनी १४ भद्रा १५ वैश्वा १६ नीलसर-
स्वती १७ शङ्खिनी १८ महातारा १९ धनं-
ददा २० त्रिलोचना २१ अलोचना १२ । इति
हेमचन्द्रः ॥ (वसूनां रत्नानां धारा सन्तति-
र्यत्र ।) कुबेरपुरी । इति शब्दमाला ॥ (तीर्थ-
विशेषः । यथा, महाभारते । ३ । ८२ । ७२ ।
“ततो गच्छेत धर्म्मज्ञ ! वसुधारामभिष्टुताम् ।
गमनादेव तस्यां हि हयमेधमवाप्नुयात् ॥” *
॥
वसोश्चेदिराजस्य प्रिया धारा । यद्वा, --
“वसु द्रव्यं घृतमाज्यमसृतं हविकामिकम् ।
तस्य धारा सदा देया वसोर्धारा हि सा मता
॥”
इति देवीपुराणोक्तवचनात् वसुनो घृतस्य
धारा ।) वृद्धिश्राद्धपूर्ब्बकर्त्तव्यचेदिराजवसू-
द्देश्यककुड्यलग्नघृतधारा । यथा ।
छन्दोगपरि-
शिष्टे कात्यायनः ।
“कुड्यलग्नां वसोर्धारां सप्तवारान् घृतेन तु ।

शतधारमुत्समीक्षमाणं विपश्चितं
पितरं
रुक्थाना अभिमदन्त पित्रोरुपस्थेतं रोदसी
पिपृतं सत्यवाचम् ॥ ४ ॥
शतधारं वायुमर्कषर्च्चिषं
नृचक्षुषेस्तेऽभि-
चक्षते हविः । ये च प्रणन्ति प्रयच्छन्ति सङ्ग-
मेति दुदुहे सप्तधारम् ॥ ५ ॥
वसोः पवित्रमसि शतधारं वसोः
पवित्रमसि
सहस्रधारं देवस्त्वा सविता पुनातु । वसोः
पवित्रेण शतघारेण सुत्वा कामधुक्ष्व ॥ ६ ॥
मुर्द्धानन्दिवोरतिं पृथिव्या वैश्वानर
मृत
आजामग्निं कविं सम्राजमतिथिं जनाना-
मासन्नाः पात्रं जवयन्त देवाः स्वाहा ॥ ७ ॥
इत्येतैर्मन्त्रैः सप्तघृतधारा दद्यात् । इति
कालेसिः ॥ * ॥ विशेषवसुधारा यथा, --
“न्यूना या बहते धारा मानात् सर्पिर्न सा
शुभा ।
नाधिका शस्यते विप्र दुर्भिक्षकलिकारिका ॥
त्रुट्यते बहमाना या शमते च हुताशनम् ।
सवर्णा हेमवर्णा च धारा राज्यविवृद्धये ॥
सन्तता पतते या तु तनोतीव च पावकम् ।
तनोति नृपराष्ट्रञ्च वसोर्धारा न संशयः ॥
सुगन्धि स्वच्छविमलं कृमिकीटविवर्ज्जितम्
।
शस्यते च वसोर्धारा या सर्पिर्गव्यपूजिता ॥
अभावात् गवलाजं वा होतव्यन्तु सुशोभनम्
।
घृतरौद्रपयोधारा सर्व्वपीडानिवारिणी ॥
वसु द्रव्यं घृतमाज्यमसृतं हविकामिकम् ।
तस्य धारा सदा देया वसोर्धारा हि सा मता
॥

| | | |
|---|---|---|
| इति शब्दरत्नावली ॥ अस्य विवरणं यथा, --<br>नारायण उवाच ।<br>"कश्यपो वसुदेवश्च देवमाता च देवकी ।<br>पूर्ब्बपुण्यफलेनैव संप्राप श्रीहरिं सुतम् ॥<br>देवमीढान्मारिषायां वसुदेवो महानभूत् ।<br>आनकञ्च महाहृष्टाः श्रीहरेर्ज्जनकञ्च तम् ।<br>सन्तः पुरातनास्तेन वदन्त्यानकदुन्दुभिम् ॥" | | |

वसुना स्वर्गकामेन दक्षेण च महात्मना ।
मया च विष्णुना शक्र रुद्रेण च सहोमया ॥
आत्मानञ्च स्वरूपेण धारायान्तु प्रपादितम् ।
देवी सान्निध्यमायाता सर्व्वकामप्रदायिका ॥
तस्मात्त्वमपि राजेन्द्र ! वरोर्धारां प्रपातय ।
नातः परतरं पुण्यं विद्यते नृपसत्तम ! ॥
वसोर्धाराप्रदानस्य एकाहमपि यद्भवेत् ।
नृपेणायुषकामेण पुत्त्र राज्यजिगीषुणा ।
देया धारा सदा वत्स ! रिपुनाशाय बुद्धिमन् ॥
द्रव्याभावे घृताभावे नृप तस्करजे भये ।
यदि नो वहते धारा तदा छिद्रं न विद्यते ॥
महाआश्विनमासे तु अष्टमीनवमीषु च ।
कार्त्तिक्यां माघचैत्रेतु चित्रायां रोहिणीषु च ॥
वैशाख्यान्तु प्रदातव्या ज्यैष्ठ्यां ज्येष्ठस्य सत्तम ! ।
आषाढद्वादशीहोमं अष्टभी पूर्णिमा नभे ॥
नभस्ये रोहिणी वत्स ! चतुर्थ्यां द्वादशीदिने ।
संक्रान्तिषु च सर्व्वासु गुरुशौरिभवासु च ॥
चन्द्रसूर्य्योपरागेषु प्रतिष्ठायज्ञकर्म्मणि ।
शक्रोच्छ्र्ये प्रदातव्या जन्मपुष्पाभिषेचने ॥
मार्गे व्रतनिबन्धे तु शुभे वाक्ये तु दर्शने ।
ग्रहकृत्योपसर्गेषु धारा देव्याः शुभावहाः ॥
एवं यो वाहयेद्धाराः शास्त्रदृष्टेन कर्म्मणा ।
तस्य भूः सिद्ध्यते सर्व्वा सनागा सहसागरा ॥”
इति देवीपुराणे वसोर्धरानाम ३५ अध्यायः ॥

**वसुन्धरा**, स्त्री, (वसूनि धारयतीति । धृ + “संज्ञायां भृतॄवृजिधारिसहितपिदमः ।” ३ ।

**वसुलः**, पुं, (वसु दीप्तिं लाति गृह्णातीति । ला + कः ।) देवता । इति त्रिकाण्डशेषः ॥

**वसुश्रेष्ठं**, क्ली, (वसुना दीप्त्या श्रेष्ठम् ।) रूप्यम् । इति राजनिर्घण्टः ॥

**वसुसेनः**, पुं, कर्णराजः । इति त्रिकाण्डशेषः । (यथा, महाभारते । १ । ६७ । १४० ।
“राधायाः कल्पयामास पुत्त्रं सोऽधिरथस्तदा ।
चक्रतुर्नामधेयञ्च तस्य बालस्य ताबुभौ ।
दम्पती वसुसेनेति दिक्षु सर्व्वासु विश्रुतम् ॥”
क्वचित् वसुषेणेति पाठः ॥)

**वसुस्थली**, स्त्री, (वसूनां धनानां स्थली ।) कुबेर-पुरी । इति शब्दमाला ॥

**वसुहट्टः**, पुं, (वसूनां दीप्तीनां हट्ट इव ।) वक-वृक्षः । इति रत्नमाला ॥

**वसुहट्टकः**, पुं, (वसुहट्ट + स्वार्थे कन् ।) वकवृक्षः । इति शब्दमाला ॥

**वसूकं**, क्ली, साम्भरिलवणम् । इति हेमचन्द्रः ॥ वकपुष्पम् । इति द्विरूपकोषः ॥

**वस्क**, ङ गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट् ।) दन्त्यमध्य इति दुर्ग-सिंहः ॥ क्विपि वक् । मूर्द्धन्यमध्य इत्येके । क्विपि वट् । ङ, वस्कते । इति दुर्गादासः ॥

**वस्कः**, पुं, (वस्क् + भावे घञ् ।) अध्यवसायः । इति भूरिप्रयोगः ॥

**वस्कयः**, पुं, (वस्कते इति । वस्क गतौ + बाहुल-

**वस्तयः**, पुं स्त्री भूम्नि, (वस् + “वसेस्तिः ।” उणा० ४ । १७९ । इति तिः बहुवचनान्तोऽयम् ।) वस्त्रस्य दशाः । यथा, अमरः । २ । ६ । ११४ ।
“स्त्रियां बहुत्वे वस्त्रस्य दशाः स्युर्व्वस्तयो द्वयोः ॥”

**वस्तान्त्री**, स्त्री, (वस्तस्येव अन्त्रमस्याः । गौरादि-त्वात् ङीष् ।) छगलान्त्रीक्षुपः । तत्पर्य्यायः । वृषगन्धाख्या २ मेषान्त्री ३ वृषपत्रिका ४ अजान्त्री ५ वोकडी ६ । अस्या गुणाः । कटु-रसत्वम् । कासदोषविनाशित्वम् । बीजदातृत्वम् । गर्भजनकत्वञ्च । इति राजनिर्घण्टः ॥

**वस्तिः**, पुं, स्त्री, (वसति मूत्रादिकमत्र । वस् + “वसेस्तिः ।” उणा० ४ । १७९ । इति तिः ।) नाभेरधोभागः । इत्यमरः ॥ वस्ते आच्छादयति मूत्राशयपुटं वस्तिः । वस ल स्तृतौ नाम्नीति तिक् । मूत्राशयपुटो वस्तिरिति रत्नमाला । इति तट्टीकायां भरतः ॥ * ॥ अथ वस्ति-विधिः ।
“वस्तिर्द्विधानुवासाख्यो निरूहश्च ततः परः ।
यः स्नेहैर्दीयते स स्यादनुवासननामकः ॥
कषायक्षारतैलैर्यो निरूहः स निगद्यते ।
वस्तिभिर्दीयते यस्मात् तस्माद्वस्तिरिति स्मृतः ॥”
वस्तिभिः मृगादीनां मूत्राशयैः ।
“तत्रानुवासनाख्यो हि वस्तिर्यः सोऽत्र कथ्यते ।
अनुवासनभेदश्च मात्रावस्तिरुदीरितः ॥
पलद्वयं तस्य मात्रा तस्मादर्द्धापि वा भवेत् ।
अनुवास्यस्तु रूक्षः स्यात्तीक्ष्णाग्निः केवला-निली ॥
नानुवास्यस्तु कुष्ठी स्यान्मेही स्थूलस्तथोदरी ।
नास्थाप्या नानुवास्याः स्युरजीर्णोन्मादतृड्-युताः ॥
शोथमूर्च्छारुचिभयश्वासकासक्षयातुराः।
नेत्रं कार्य्यं सुवर्णादिधातुभिर्व्वृक्षवेणुभिः ।
नलैर्दन्तैर्विषाणाग्रैर्मणिभिर्वा विधीयते ॥”
नेत्रं नाडी । तथा च विश्वप्रकाशे ।
नेत्रं पथि गुणे वस्त्रे तरुमूले विलोचने ।

२ । ४६ । इति खच् । "खचि ह्रस्वः । ६ । ४ ।
९४ । इति ह्रस्वः । "अरुर्द्विषदजन्तस्य मुम् ।"
६ । ३ । ६७ । इति मुम् । ।) पृथिवी । इत्य-
मरः ॥ (यथा, विष्णुपुराणे । १ । ४ । ११ ।
"निरीक्ष्य तं तदा देवी पातालतलमागतम् ।
तुष्टाव प्रणता भूत्वा भक्तिनम्रा वसुन्धरा ॥"
शफल्कस्य कन्या । यथा, हरिवंशे । ३८ । ५३ ।
"विश्रुता शाम्बमहिषी कन्या चास्य वसुन्धरा ।
रूपयौवनसम्पन्ना सर्व्वसत्त्वमनोहरा ॥"
पुं, प्लक्षद्वीपस्य वर्षपुरुषभेदः । यथा, भागवते ।
५ । २० । ११ । "प्लक्षवर्षपुरुषाः श्रुतिधरवीर्य्य-
धरवसुन्धरेषुन्धरसंज्ञा भगवन्तं वेदमयं सोम-
मात्मानं वेदेन यजन्ते ॥")

**वसुप्राणः**, पुं, (वसु दीप्तिः प्राणा इवास्य ।)
अग्निः । इति शब्दरत्नावली ॥

**वसुमती**, स्त्री, (वसूनि धनरत्नानि सन्त्यस्या इति ।
वसु + मतुप् । ङीप् ।) पृथिवी । इत्यमरः ॥
(यथा, रघौ । ८ । ८३ ।
"तदलं तंदपायचिन्तया
विपदुत्पत्तिमतामुपस्थिता ।
वसुधेयमवेक्ष्य तां त्वया
वसुमत्या हि नृपाः कलत्रिणः ॥)

**वसुरोचिः**, [स्] क्ली, (वसवः रोचन्ते अस्मि-
न्निति । रुच दीप्तौ + "वसौ रुचेः संज्ञायाम् ।"
उणा० २ । ११२ । इति इसिन् ।) यज्ञः । इति
कात् अयन् ।) एकहायनो वत्सः । इत्यमर-
टीकायां रायमुकुटः ॥

**वस्कयनी**, स्त्री, (वस्कय एकहायनो बत्सः । तेन
नीयते इति । नी + क्विप् । ङीष् ।) चिरप्रसूता
गौः । इत्यमरटीकायां रायमुकुटः ॥ अस्या
दुग्धगुणाः ।
"वस्कयिन्यास्त्रिदोषघ्नं तर्पणं बलकृत् पयः ।"
इति भावप्रकाशः ॥

**वस्कराटिका**, स्त्री, वृश्चिकः । इति हारावली ॥

**वस्त**, क ङ वधे । इति कविकल्पद्रुमः ॥ (चुरा०-
आत्म०-सक०-सेट् ।) क ङ, वस्तयते । गति-
हिंसायाचनेष्विति रमानाथः । इति दुर्गा-
दासः ॥

**व(ब)स्तः**, पुं, (वस्त्यते यज्ञार्थं वध्यते इति । वस्त
+ कर्म्मणि घञ् ।) छागः । इत्यमरः । २ । ९ ।
७६ ॥ (यथा, मार्कण्डेये । ४३ । १२ ।
"यस्य वस्तसमो गन्धो गात्रे शवसमोऽपि वा ।
तस्यार्द्धमासिकं ज्ञेयं योगिनो नृप ! जीवितम् ॥")

**वस्तकं**, क्ली, कृत्रिमलवणम् । इति हेमचन्द्रः ॥

**वस्तकर्णः**, पुं, (वस्तस्य छागस्य कर्णाकृतिः
पत्रावच्छेदे अस्त्यस्येति । वस्तकर्ण + अर्श-
आदित्वादच् ।) शालवृक्षः । इति राज-
निर्घण्टः ॥

**वस्तगन्धा**, स्त्री, (वस्तस्य गन्ध इव गन्धो यस्याः ।)
इति राजनिर्घण्टः ॥

नेत्रबन्धे च नाड्याञ्च नेत्रो नेतरि भेदवदिति ॥
"एकवर्षात्तु षड्वर्षं यावन्मानं षडङ्गुलम् ।
ततो द्वादशकं यावन्मानं स्यादष्टसंमितम् ॥
ततः परं द्वादशभिरङ्गुलैर्नेत्रदीर्घता ।
मुद्गगच्छिद्रं कलायाभं छिद्रं कोलास्थिरन्ध्रकम् ॥
यथासंख्यं भवेन्नेत्रं श्लक्ष्णं गोपुच्छसन्निभम् ॥"
मूले स्थूलम् । ततः क्रमात् कृशम् । मुद्गच्छिद्रादि-
प्रमाणं नेत्रं क्रमेण षड्वर्षाय द्वादशवर्षाय
तदूर्द्ध्ववर्षाय ज्ञेयम् ।
"आतुराङ्गुष्ठमानेन मूले स्थूलं विधीयते ।
कनिष्ठिकापरीणाहमग्रे च गुटिकामुखम् ॥"
परिणाहोऽत्र स्थौल्यम् ।
"तन्मूले कर्णिके द्वे च कार्य्ये भागाच्चतुर्थकात् ।
कर्णिका गवादिकर्णवत् । कर्णिका छत्राकारा
गुदाधिकान्तःप्रवेशरोधिनी कर्णिकेति । कर्णि-
काकारत्वात् कर्णिकेति कथ्यते ।

| | | |
|---|---|---|
| सिद्धान्तकौमुद्यामुणादिवृत्तिः॥ | **वस्तमोदा**, स्त्री, (वस्तं छागं मोदयतीति । मुद् + णिच् + अण् ।) अजमोदा । इति राजनिर्घण्टः ॥ | |

"योजयेत्तत्र वस्तिञ्च
बन्धद्वयविधानतः ।
मृगाजशूकरगवां महिषस्यापि वा
भवेत् ॥"
वस्तिरिति शेषः ।
"मूत्रको यस्य वस्तिस्तु तदलाभे तु
चर्म्मजः ।
कषायरक्तः समृदुर्वस्तिःस्निग्धो दृढो
हितः ॥
व्रणवस्तेस्तु नेत्रं स्यात्
श्लक्ष्णमष्टाङ्गुलोन्मितम् ।
मुद्गगच्छिद्रं गृध्रपक्षनालिकापरिणाहि
च ॥
शरीरोपचयं वर्णं बलमारोग्यमायुषः ।
कुरुते परिवृद्धिञ्च वस्तिः
सम्यगुपासितः ॥
दिवा शीते वसन्ते च स्नेहवस्तिः
प्रदीयते ।
ग्रीष्मवर्षाशरत्काले रात्रौ
स्यादनुवासनम् ।
बवातिस्निग्धमशनं
भोजयित्वानुवासयेत् ।
मदं मूर्च्छाञ्च जनयेत् द्विधा
स्नेहप्रयोजितः ॥"
द्विधाभाजने वस्तौ च ।
"रूक्षं भुक्तवतोऽत्यन्तं बलं वर्णञ्च
हापयेत् ।
युक्तस्ने हमतो जन्तुं
भोजयित्वानुवासयेत् ॥"
युक्तस्नेहं यथोचितस्नेहं भोज्यं
भोजयित्वा
इत्यर्थः ।
"हीनमात्रावुभौ वस्ती नातिकार्य्यकरौ
स्मृतौ ।
अतिमात्रौ
तथानाहक्लमातिसारकारकौ॥"
उभौ वस्ती अनुवासननिरूहाख्यौ।
"उत्तमा स्यात् पलैः षड्भिर्मध्यमा
स्यात्

सानिलः सपुरीषश्च स्नेहः प्रत्येति यस्य तु ।
उपद्रवं विना शीघ्रं स सम्यगनुवासितः ॥"
उपद्रवस्थाने उषचोषाविति सुश्रुते पाठः ।
"जीर्णान्नमथ सायाह्ने स्नेहे प्रत्यागते पुनः ।
लघ्वन्नं भोजयेत् कामं दीप्ताग्निस्तु नरो यदि ॥
अनुवासिताय देयमितरेऽह्नि सुखोदकम् ।
धान्यशुण्ठीकषायं वा स्नेहव्यापत्तिनाशनम् ॥"
सुखोदकमुष्णोदकम् । व्यापत्तिर्व्याधिः ।
"अनेन विधिना षड्वा सप्त वाष्टौ नवापि वा ।
विधेया वस्तयस्तेषामन्ते चैव निरूहणम् ॥
दत्तस्तु प्रथमो वस्तिः स्नेहयेद्वस्तिवङ्क्षणौ ।
सम्यग्दत्तो द्वितीयस्तु मूर्द्धस्थमनिलं जयेत् ॥
बलं वर्णञ्च जनयेत् तृतीयस्तु प्रयोजितः ।
चतुर्थपञ्चमौ दत्तौ स्नेहयेतां वसासृजी ॥
षष्ठो मांसं स्नेहयति सप्तमो मेद एव च ।
अष्टमो नवमश्चापि मज्जानञ्च यथाक्रमम् ॥"
यथाक्रममिति वचनादष्टमोऽस्थि स्नेहयेत् ।
"एवं शुक्रगतान् दोषान् द्विगुणः साधु साध-
येत् ॥
द्विगुणः अष्टादशदिवसाधिको वस्तिः ।
"अष्टादशाष्टादशकान् वस्तीनां यो निषेवते ।
स कुञ्जरबलोऽश्वस्य रये तुल्योऽमरप्रभः ॥
रूक्षाय बहुवाताय स्नेहवस्तिं दिने दिने ।
दद्याद्वैद्यस्तथान्येषामग्न्यावाधभयात्त्र्यहात् ॥
स्नेहोऽल्पमात्रो रूक्षाणां दीर्घकालमनत्ययः ।"
अनत्ययोऽवाधकः ।
"तथा निरूहः स्निग्धानां मलमात्रः प्रशस्यते ॥
अथवा यस्य तत्कालं स्नेहो निर्याति केवलः ।
तस्यान्योऽल्पतरो देयो नहि स्निह्यति तिष्ठति
॥"
स्निह्यति स्नेग्धे तिष्ठति दत्तस्नेह इति शेषः ।
"अशुद्धस्य मलोन्मिश्रः स्नेहो नैति यदा पुनः ।
तदाङ्गवेदनाध्माने शूलं श्वासश्च जायते ॥
पक्वाशये गुरुत्वञ्च तत्र दद्यान्निरूहणम् ।
तीक्ष्णं तीक्ष्णौषधैर्युक्ता फलवर्त्तिर्हिताथवा ॥
यथानुलोमगोवायुर्मलं स्नेहश्च जायते ।
तथा विरेचनं दद्यात् तीक्ष्णं नस्यं च शस्यते ॥
यस्य नोपद्रवं कुर्य्यात् स्नेहवस्तिर्विनिःसृतः ।

"पानाहारविहाराश्च वस्तिकर्म्मणि
कृत्स्नशः ।
स्ने हपानसमाः कार्य्या नात्र कार्य्या विचा-
रणा ॥" * ॥
अथ निरूहवस्तिविधिः ।
"निरूहवस्तिर्बहुधा भिद्यते कारणान्तरैः ।
तैरेव तस्य नामानि कृतानि मुनिपुङ्गवैः ॥"
कारणान्तरैः समवायिकारणभेदैः ।
"निरूहस्यापरं नाम प्रोक्तमास्थापनं बुधैः ।
स्वस्थानस्थापनाद्दोषधातूनांस्थापनं मतम्
॥
निरूहस्य प्रमाणञ्च प्रस्थः पादोत्तरं परन् ।
मध्यमं प्रस्थमुद्दिष्टं हीनञ्च कुडवास्त्रयः ॥"
परं श्रेष्ठम् ।
"अतिस्निग्धोऽक्लिष्टदोषःक्षतोरस्कः
कृशस्तथा ।"
अक्लिष्टदोषः अनुत्क्लिष्टदोषः ।
अदत्तोत्क्लेशन
इति यावत् । क्षतोरस्कः उरःक्षतवान् ।
"आध्मानच्छर्दिहिक्वार्शः
शोथश्वासप्रपीडितः ।
गुदशोफातिसारार्त्तो विसूचीकुष्ठसंयुतः ॥
गर्भिणी मधुमेही च नास्थाप्याश्च जलोदरी
।
वातव्याधावुदावर्त्ते वातासृग्विषमज्वरे ॥
मूर्च्छातृष्णोदरानाहमूत्रकृच्छ्राश्मरीषु च ।
वृद्धसृग्दरमन्दाग्निप्रमेहेषु निरूहणम् ॥
शूलेऽम्लपित्ते हृद्रोगे योजयेद्विधिवद्बुधः ।
उत्सृष्टानिलविण्मूत्रस्निग्धं
स्विन्नमभोजितम् ॥
मध्याह्ने गृहमध्ये च यथायोग्यं निरूहयेत् ।"
स्निग्धं स्वभ्यक्तम् । स्विन्नं
उष्णाम्बुस्नपितम् ।
"स्नेहवस्तिविधानेन बुधः कुर्य्यान्निरूहणम्
॥
जाते निरूहे च ततो भवेदुत्कटकासनः ।
तिष्ठेन्मुहूर्त्तमात्रन्तु निरूहागमनेच्छया ॥"
अत्र मुहूर्त्तमात्रशब्दे नैतदपि बोधितम् ।
निरूहप्रत्यागमनकालो मुहूर्त्तमात्रः ।

पलैस्त्रिभिः ।
पलद्वयेन हीना स्यादुक्ता
मात्रानुवासने ॥" * ॥
अथ स्नेहवस्तिः ।
"शताह्वासैन्धवाभ्यां च देयं स्नेहे च
चूर्णकम् ।
तन्मात्रोत्तममध्यान्त्याः
षट्चतुर्द्वयमाषकैः ॥
विरेचनात् सप्तरात्रे गते जातबलाय च
।
भुक्तान्नायानुवास्याय
वस्तिर्देयोऽनुवासनः ॥
अथानुवास्यं
स्वभ्यक्तमुष्णाम्बुस्वेदितं शनैः ।
भोजयित्वा यथाशास्त्रं कृतं चंक्रमणं
ततः ॥
उत्सृष्टानिलविण्मूत्रं योजयेत्
स्नेहवस्तिना ॥"
उष्णाम्बस्वेदितं उष्णाम्बुना
स्नापितम् ।
"सुप्तस्य वामपार्श्वेन
वामजङ्घाप्रसारिणः ।
कुञ्चितापरजङ्घस्य नेत्रं स्निग्धे गुदे
न्यसेत् ॥
ऊद्ध्वं वस्तिमुखं मूत्रैर्व्वामहस्तेन
धारयेत् ।
पीडयेद्दक्षिणेनैव मध्यवेगेन धीरधीः ॥
जृम्भाकासक्षवादींश्च वस्तिकाले न
कारयेत् ।
त्रिंशन्मात्रामितः कालः प्रोक्तो
वस्तेस्तु पीडने ॥
ततः प्रणिहिते स्नेहे उत्तानो वाक्शतं
भवेत् ।
स्वजानुनः करावर्त्तं
कुर्य्याच्छोटिकया युतम् ॥
एषा मात्रा भवेदेका सर्व्वत्रैवैष
निश्चयः ।
निमेषोन्मेषणं पुंसामङ्गुल्या छोटिकाथ
वा ॥
गुर्व्वक्षरोच्चारणं वा वाङ्मात्रेयं स्मृता
बुधैः ।

सर्व्वोऽल्पो वा वृतो रौक्ष्यादुपेक्ष्यः स विजानता
॥
अनायातं त्वहोरात्रे स्नेहं संशोधनैर्हरेत् ।
स्नेहवस्तावनायाते नाल्पः स्नेहो विधीयते ॥
गुडूच्येरण्डपूतीकभार्गीवृष्याकरौहिषम्।
शतावरीसहचरं काकनासां पलोन्मिताम् ॥
यवमायातसीकोलकुलत्थात् प्रसृतोन्मितात् ।
चतुर्द्रोणेऽम्भसः पक्त्वा द्रोणशेषेण तेन च ॥
पचेत्तैलाढकं पेष्यैर्जीवनीयैः पलोन्मितैः ।
अनुवासनमेतद्धि सर्व्ववातविकारनुत् ॥"
पूतिकः करञ्जः । रौहिषं रोहिष इति सुगन्ध-
तृणविशेषः । काकनासा कौयाठोठी । प्रसृतं
पलद्वयम् ।
"षट्सप्ततिव्यापदस्तु जायन्ते वस्तिकर्म्मणः ।
दूषितात् समुदायेन ताश्चिकित्सास्तु सुश्रुतात्
॥"
समुदायेन अनुचितनेत्रादिसामग्र्या ।

"अनायातं मुहूर्त्तात्तु निरूहं शोधनैर्हरेत् ।
निरूहैरेव मतिमान् क्षारमूत्राम्लसैन्धवैः ॥
यस्य क्रमेण गच्छन्ति विट्पित्तकफवायवः
।
ला ञ्चोपजायेत सुनिरूढं तमादिशेत् ॥
विविक्तता मनस्तुष्टिः स्निग्धता
व्याधिनिग्रहः ।
आस्थापनस्नेहवस्त्योः सम्यग्दाने तु लक्ष-
णम् ॥"
विविक्तता दत्तौषधनिःसरणम् ।
"अनेन विधिना युञ्ज्यान्निरूहं
वस्तिदानवित् ।
द्वितीयं वा तृतीयं वा चतुर्थं वा यथोचितम्
॥
सस्नेह एकः पवने पित्ते द्वौ पयसा सह ।
कषायकटुका मूत्रा कफे तृष्णास्त्रयो हिताः
॥
पित्तश्लेष्मानिलाविष्टे क्षीरयूषरसैः क्रमात् ।
निरूहं भोजयित्वा च ततस्तमनुवासयेत् ॥
सुकुमारस्य वृद्धस्य बालस्य च मृदुर्हितः ।
वस्तिस्तीक्ष्णा प्रयुक्ता हि तेषां हन्याद्बला-
युषी ॥
दद्यादुत्क्लेशनं पूर्व्वं मध्ये दोषहरं ततः ।
पश्चात् संशमनीयञ्च दद्याद्वस्तिं विचक्षणः
॥
एरण्डबीजं मधुकं पिप्पली सैन्धवं वचा ।
हपुषा फलकल्कश्च वस्तिरुत्क्लेशनः
स्मृतः ॥"
इत्युत्क्लेशनवस्तिः ॥ * ॥

| | | |
|---|---|---|
| प्रसारितैः सर्व्वगात्रैर्यथावीर्यं प्रसर्पति ॥”<br>यथावीर्य्यं स्नेहादि ।<br>“ताडयेत्तलयोरेनं त्रींस्त्रीन् वारान् शनैः<br>शनैः ।<br>स्फिचोश्चैव तथा श्रोणीं<br>शय्याञ्चैवोत्क्षिपेत्ततः ॥<br>स्फिचोश्चैनं स्वपार्ष्णिभ्यां<br>पूर्व्ववत्ताडयेद्बुधः ।<br>शय्याञ्च पादतस्तस्य त्रीन्<br>वारानुत्क्षिपेत्ततः ।<br>जाते विधाने तु ततः कुर्य्यान्निद्रां<br>यथासुखम् ॥ | | |

"शताह्वा मधुकं विल्वं कौटजं फलमेव च ।
सकाञ्जिकः सगोमूत्रो वस्तिर्दोषहरः स्मृतः ॥"
इति दोषहरवस्तिः ॥ * ॥
"प्रियङ्गुर्म्मधुकं मुस्ता तथैव च रसाञ्जनम् ।
सक्षीरः शस्यते वस्तिर्दोषाणां शमनः स्मृतः ॥"
इति शमनवस्तिः ॥ * ॥
"त्रिफलाक्वाथगोमूत्रक्षौद्रक्षारसमायुताः ।
ऊषकादिप्रतीवापा वस्तयो लेखनाः स्मृताः ॥"
ऊषकादिप्रतीवापाः ऊषकादिगणविशेषचूर्ण-
प्रक्षेपाः । इति लेखनवस्तयः ॥ * ॥
"बृंहणद्रव्यनिःक्वाथैः कल्कैर्म्मधुरकैर्युताः ।
सर्पिर्मांसरसोपेता वस्तयो बृंहणाः स्मृताः ॥"
इति वृंहणवस्तयः ॥ * ॥
"वदर्य्यैरावतीशेलुशाल्मलीपुष्पजाङ्कुराः ।"
ऐरावती नाराङ्गी । शेलुः बहुवारः ।
क्षीरसिद्धाः क्षौद्रयुक्ता नाम्ना पिच्छिलसंज्ञिताः
॥
अजोरभ्रैणरुधिरैर्युक्ता देया विचक्षणैः ।"
अजश्छागः । उरभ्रो मेषः । एणः कृष्णमृगः ।
"मात्रा पच्छिलवस्तीनां पलैर्द्वादशभिर्मता ॥"
इति पिच्छिलावस्तयः ॥ * ॥
"दत्त्वादौ सैन्धवस्याक्षं मधुनः प्रसृतिद्वयम् ।
विनिर्मथ्य ततो दद्यात् स्नेहस्य प्रसृतित्रयम् ॥
एकीभूते ततः स्नेहे कल्कस्य प्रसृतिं क्षिपेत् ।
संमूर्च्छिते कषायन्तु चतुःप्रसृतिसम्मितम् ॥
गृह्णीयाच्च तदावापमन्ते द्विप्रसृतोन्मितम् ।
क्षिप्त्वा विमथ्य दद्याच्च निरूहं कुशलो भिषक्
॥
एवं प्रकल्पितो वस्तिर्द्वादशप्रसृतो भवेत् ।
वाते चतुःपलं क्षौद्रं दद्यात् स्नेहस्य षट्पलम् ॥
पित्ते चतुःपलं क्षौद्रं स्नेहं दद्यात् पलत्रयम् ।
कफे तु षट्पलं क्षौद्रं क्षिपेत् स्नेहं चतुः-
पलम् ॥"
इति निरूहमात्रा ॥
"एरण्डक्वाथतुल्यांशं मधु तैलं पलाष्टकम् ।
शतपुष्पापलार्द्धेन सैन्धवार्द्धेन संयुतम् ॥
मधुतैलिकसंज्ञोऽयं वस्तिर्दारुविलोडितः ।
मेदोगुल्मकृमिप्लीहमलोदावर्त्तनाशनः ॥
बलवर्णकरश्चैव वृष्यो दीपनबृंहणः ॥"

निरूहादुत्तरो यस्मात्तस्मादुत्तरसंज्ञकः
॥
द्वादशाङ्गुलकं नेत्रं मध्ये च कृतकर्णिकम्
।
मालतीपुष्पवृन्ताभं छिद्रं सर्षपनिर्गमम्
॥
पञ्चविंशतिवर्षाणामधोमात्रा द्विकार्षिका
।
तदूर्द्ध्वं प्रलमात्रा च स्नेहस्योक्ता
भिषग्वरैः ॥
अथ स्थापनशुद्धस्य तृप्तस्य
स्नानभोजनैः ।
स्थितस्य जानुमात्रेण पीठेऽन्विष्य
शलाकया ॥
स्निग्धया मेढ्रमार्गन्तु ततो नेत्रं
नियोजयेत् ।
शनैः शनैर्घृताभ्यक्ते मेढ्ररन्ध्रेऽङ्गुलानि
षट् ॥
ततोऽवपीडयेद्वस्तिं शनैर्नेत्रं विनिर्हरेत् ।
ततः प्रत्यागते स्नेहे स्नेहवस्तिक्रमो
हितः ॥
स्त्रीणां कनिष्ठिकास्थूलं नेत्रं
कुर्य्याद्दशाङ्गुलम् ।
मुहुः प्रवेशं योज्यञ्च
योन्यन्तश्चतुरङ्गुलम् ॥
द्व्यङ्गुलं मूत्रमार्गे च सूक्ष्मनेत्रं
वियोजयेत् ।
मूत्रकृच्छ्रविकारेषु बालानां त्वेकमङ्गुलम्
॥
शनैर्निष्क्रम्यमाधेयं सूक्ष्मं नेत्रं विचक्षणैः
।"
मालतीपुष्पवृन्ताभं नेत्रमित्युक्तत्वात्
पुनः सूक्ष्म-
शब्दाभिधाने बालानां ततोऽपि नेत्रस्य
सूक्ष्मता-
बोधनार्थम् ।
"योनिमार्गेषु नारीनां स्ने हमात्रा
द्विपालिका ॥

क्षणेनाप्यामाशयं मलस्थानं बोधयति ।
वस्त्यु-
दरवातान् दोषान् निवारयति ।
पण्डितास्तं
वस्तिनिरूहं तद्वस्तिकर्म्म च विदुः ।"
इति
हारीते सूत्रस्थाने तृतीयेऽध्याये ॥
"कृतक्षणं शैलवरस्य रम्ये
स्थितं धनेशायतनस्य पार्श्वे ।
महर्षिसंघैर्वृतमग्निवेशः
पुनर्व्वसुम्प्राञ्जलिरन्वपृच्छत् ॥
वस्तिर्नरेभ्यः किमपेक्ष्य दत्तः
स्यात् सिद्धिमान् किन्नयनस्य नेत्रम् ।
कीदृक् प्रमाणाकृति किङ्गुणञ्च
केषाञ्च किं योनिगुणश्च वस्तिः ॥
निरूहकर्म्म प्रणिधानमात्राः
स्नेहस्य वा काः शमने विधिः कः ।
के वस्तयः केषु मता इतीदं
श्रुत्वोत्तरं प्राह वचो महर्षिः ॥
समीक्ष्य दोषौषधदेशकाल-
सात्म्याग्निसत्त्वौकवयोबलानि ।
वस्तिः प्रयुक्तो नियतं गुणाय
स्युः सर्व्वकर्म्माणि च सिद्धिमन्ति ॥
सुवर्णरूप्यत्रपुताम्रवीर्तिं
कांस्यास्थिशस्त्रद्रुमवेणुदन्तैः ।
नलैर्व्विषाणैर्मणिभिश्च तैस्तैः
कार्य्याणि नेत्राणि सुकर्णिकानि ॥
षड्द्वादशाष्टाङ्गुलसम्मितानि
षड्विंशतिर्द्वादशवर्षजानाम् ।
स्युर्मुद्गकर्कन्धुसतीनवाहि-
छिद्राणि वर्त्त्या पिहितानि चापि ॥
यथावयोऽङ्गुष्ठकनिष्ठिकाभ्यां
मूलाग्रयोः स्युः परिणाहवन्ति ।
ऋजूनि गोपुच्छसमाकृतीनि
श्लक्ष्णानि च स्युर्गुलिकामुखानि ॥
स्यात् कर्णिकैकाग्रचतुर्थभागे
मूलाश्रिते वस्तिनिबन्धने द्वे ।
जरद्गवो माहिषहारिणो वा
स्यात् शौकरो वस्तिरजस्य वापि ॥

इति मधुतैलिकवस्तिः ॥
“क्षौद्राज्यक्षीरतैलानां प्रसृतं प्रसृतं भवेत् ।
हपुषा सैन्धवाक्षांशो वस्तिः स्याद्यापनः
परः ॥”
यापनः सारकः । इति यापनवस्तिः ॥ * ॥
“एरण्डमूलनिष्क्वाथो मधु तैलं ससैन्धवम् ।
एष युक्तरथो वस्तिः सवचापिप्पलीफलः ॥”
इति युक्तरथवस्तिः ॥
“पञ्चमूलस्य निष्क्वाथस्तैलं मागधिका मधु ।
ससैन्धवः सयष्ट्याह्वः सिद्धवस्तिरिति स्मृतः
॥”
इति सिद्धवस्तिः ॥
“स्नानमुष्णोदकैः कुर्य्याद्दिवास्वप्नमजीर्णताम्
।
वर्ज्जयेदपरं सर्व्वमाचरेत् स्नेहवस्तिवत् ॥”
अथोत्तरवस्तिविधिः ।
“अतः परं प्रवक्ष्यामि वस्तिमुत्तरसंज्ञितम् ।
मूत्रमार्गे पलोन्माना बालानाञ्च
द्विकार्षिकी ।
उत्तानायै स्त्रियै दद्यात् ऊर्द्ध्वजान्वै
विचक्षणः ॥
अप्रत्यागच्छति भिषक्
वस्तावुत्तरसंज्ञिते ।
भूयो वस्तिं विदध्याच्च संयुक्तं
शोधनैर्गुणैः ॥
फलवस्तिं विदध्याद्वा योनिमार्गे दृढं
भिषक् ।
सूत्रैर्विनिर्म्मितां स्निग्धां
शोधनद्रव्यसंयुताम् ॥
दह्यमाने तथा वस्तौ दद्याद्वस्तिं
विशारदः ।
क्षीरिवृक्षकषायेण पयसा शीतलेन वा
॥”
दह्यमाने वस्तौ यस्मिन् स्थाने
वस्तिर्दत्तस्तस्मिन्
दह्यमाने ।
“वस्तिः शुक्ररुजः पुंसां
स्त्रीणामार्त्तवजा रुजः ।
हन्यादुत्तरवस्तिस्तु नोचिता मेहिनां
क्वचित् ॥
सम्यग्दत्तस्य लिङ्गानि व्यापदक्रम एव
च ।
वस्तेरुत्तरसंज्ञस्य समानः
स्नेहवस्तिना ॥” * ॥
अथ फलवर्त्तिविधिः ।
“घृताभ्यक्ते गुदे क्षिप्त्वा श्लक्ष्णा
स्वाङ्गुष्ठसन्निभा ।
मलप्रवर्त्तिनी वर्त्तिः फलवर्त्तिश्च सा
स्मृता ॥”
इति भावप्रकाशः ॥ * ॥
(“चतुरङ्गुलां वेणुमयीं नाडीं प्रतिलक्षणं
कृत्वा
तया वस्तिप्रतिकर्म्म कुर्य्यात् ।
नातिचोष्णे च काले च न शीते न च
भोजिते ।
न निद्रालौ च मूत्रार्त्ते विष्टार्त्ते न च
वेदभाक् ॥
वस्तिकर्म्म निरूहञ्च कारयेत्तं निरस्य
च ।
दृढस्तनुर्नष्टशिरो विगन्धः
कषायरक्तः सुमृदुः सुशुद्धः ।
नृणां वयो वीक्ष्य यथानुरूपं
नेत्रेषु योज्यस्तु सुबद्धसूत्रः ॥
वस्तेरभावे प्लवानां गलो वा
स्यादङ्कपादः सुघनः पटो वा ।
आस्थापनार्हं पुरुषं विधिज्ञः
समीक्ष्य पुण्येऽहनि शुक्लपक्षे ॥
प्रशस्तनक्षत्रमुहूर्त्तयोगे
जीर्णान्नमेकाग्रमुपक्रमेत ।
बालां गुडूचीं त्रिफलां सरास्नां
द्वे पञ्च मूले च पलोन्मितानि ॥
अष्टौ पलान्यर्द्धतुलाञ्च मांसा-
च्छागात् पचेदप्सु चतुर्थशेषम् ।
पूतं यवानीफलविल्वकुष्ठ-
वचाशताह्वा घनपिप्पलीनाम् ॥

| | | |
|---|---|---|
| | आदौ मूत्रविष्ठोत्सर्गं कृत्वा गुदं प्रक्षाल्य नाति<br>शिथिलशय्यायां शाययित्वा वामाङ्गं वामपादं<br>दक्षिणाङ्गं दक्षिणपादञ्च सङ्कोच्य जङ्घोपरि-<br>संस्थाप्य गुदाभ्यन्तरे द्व्यङ्गुलमात्रां नाडीं सुधीः<br>सञ्चारयेत् । ततः शनैः शनैर्वस्तिं निष्पीड्य<br>द्विपलपरिमिततैलेन निरूहं कुर्य्यात् । निरुहा-<br>नन्तरं शनैः शनैरुत्तानं शाययित्वा ऊद्ध्वी<br>कृत्य च पश्चात् सङ्कोच्य पाणिभिः पञ्च वारान्<br>स्फिक्पिण्डान् त्रोटयेत् । ततः स्वस्थं कृत्वा | |

कल्कैर्गुडक्षौद्रयुतैः स तैलै-
र्युतं सुखोष्णं तु पिचुप्रमाणैः ।
गुडोत्पलं द्विप्रसृतान्तु मात्रां
स्नेहस्य युक्त्या मधुसैन्धवादि ॥
प्रक्षिप्य वस्तौ मथितं खजेन
सुबद्धमुच्छाम्य च निर्व्व्यलीकम् ।
अङ्गुष्ठमध्येन मुखं पिधाय
नेत्राग्रसंस्थामपनीयवर्त्तिम् ॥
तैलाक्तगात्रं कृतमत्र विट्कं
नाति क्षुधार्त्तं शयने मनुष्यम् ।
समेऽथ वेधन्नतशैरसेवा
नात्युच्छ्रिते स्वास्तरणोपपन्ने ॥
सव्येन पार्श्वेन सुखं शयानं
कृत्वर्ज्जुदेहं स्वभुजोपधानम् ।
निकुच्च्य सव्येतरमस्य सक्थि
वामं प्रसार्य्य प्रणयेत्ततस्तम् ॥
स्निग्धे गुदे नेत्रचतुर्थभागं
स्निग्धं शनैर्मृद्वृजुपृष्ठवंशम् ।
अकम्पनावेपनलाधवादीन्
पाण्योर्गुणांश्चापि विदर्शयन् हि ॥
प्रपीड्य चैकग्रहणेन दत्तं
नेत्रं शनैरेव ततोऽवकर्षेत् ।
तिर्य्यक्प्रणीते तु न याति धारा
गुदव्रणः स्याच्चरिते च नेत्रे ॥
दत्तः शनैर्नाशयमेति वस्तिः
कण्ठं प्रधावत्यतिपीडितश्च ।
शीतस्त्वतिस्तम्भकरो विदाहं
मूर्च्छाञ्च कुर्य्यादतिमात्रमुष्णः ।
स्निग्धोऽतिजाड्यं पवनन्तु रुक्ष-
स्तन्वल्पमात्रा लवणस्त्वयोगम् ।
करोति मात्राभ्यधिकोऽतियोगं
क्षामन्तु सान्द्रः सुचिरेण चेति ॥
दाहातिसारौ लवणोऽतिकुर्य्या-
त्तस्मात् प्रयुक्तं सममेव दद्यात् ।
पूर्व्वं हि योज्यं मधुसैन्धवन्तु
स्नेहं विनिर्मथ्य ततोऽनुकल्कम् ॥
विमथ्य संयुज्य पुनद्रवैस्तत्
वस्तौ निदध्यान्मथितं खजेन ।
आमाशयोऽग्निर्ग्रहणीगुदञ्च

"स्निग्धोष्ण एकः पवने निरूहो
द्वौ स्वादुशीतौ पयसा च पित्ते ।
त्रयः समूत्राः कटुकोष्णतीक्ष्णाः
कफे निरूहा न परं विधेयाः ॥
रसेन वाते प्रति भोजनं स्यात्
क्षीरेण पित्ते तु कफे च यूषैः ।
तथानुवास्येषु च विल्वतैलं
स्याज्जीवनीयं फलसाधितञ्च ॥"
इति चरके सिद्धिस्थाने तृतीयेऽध्याये ॥
"तत्र स्नेहादीनां कर्म्मणां वस्तिकर्म्मप्रधान-
तममाहुराचार्य्याः । कस्मादनेककर्म्मकरत्वा-
द्वस्तेरिह वस्तिर्नानाविधद्रव्यसंयोगाद्दोषाणां
संशोधनसंशमनसंग्रहणानि करोति । क्षीण-
शुक्रं वाजीकरोति कृशं बृंहयति स्थूलं कर्ष-
यति चक्षुः प्रीणयति वलीपलितमुपहन्ति वयः
स्थापति । शरीरोपचयं वर्णं बलमारोग्य-
मायुषः परिवृद्धिञ्च करोति वस्तिः सम्य-
गुपासितः ॥ तथा ज्वरातीसारतिमिरप्रति-
श्यायशिरोरोगाधिमन्थार्द्दिताक्षेपकपक्षाघातै-
काङ्गसर्व्वाङ्गरोगाध्मानोदरशर्कराशूलवृद्ध्युप-
दंशानाहमूत्रकृच्छ्रगुल्मवातशोणितवातमूत्र-
पुरीषोदावर्त्तशुक्रार्त्तवस्तन्यनाशहृद्धनुमण्याग्रह्म
र्शोऽश्मरी मूढगर्भप्रभृतिषु चात्यर्थमुपयुज्यते ॥"

"तत्र द्विविधो वस्तिः नैरूहिकः स्नैहिकश्च
।

आस्थापनं निरूह इत्यनर्थान्तरम् । तस्य
विकल्पो माधुतैलिकः । तस्य पर्य्यायशब्दो
यापनो युक्तरथः सिद्धवस्तिरिति । सदोष-
निर्हरणाच्छरीररोगहरणाद्वा निरूहः । वयः
स्थापनादायुःस्थापनाद्वास्थापनम् । माधुतैलि-
कविधानञ्च निरूहक्रमचिकित्सिते वक्ष्यामः ॥

तत्र यथा प्रमाणगुणविहितः स्नेहवस्ति-

विकल्पोऽनुवासनः पादावकृष्टः । अनुवसन्नपि
न दुष्यत्यनुदिवसं दीयत इत्यनुवासनः ॥

तस्यापि विकल्पोऽर्द्धार्द्धमात्रावकृष्टोऽपरि-

हार्य्योमात्रावस्तिरिति ॥" इति सुश्रुते चिकित्

तत्रापतर्पणस्यान्ते दीपनो विधिरिष्यते ॥
अशुद्धस्य मलोन्मिश्रः स्नेहो नैति यदा
पुनः ।
तदाङ्गसदनाध्माते श्वासः शूलञ्च जायते
॥
पक्वाशयगुरुत्वञ्च तत्र दद्यान्निरूहणम् ।
अतितीक्ष्णौषधैरेवं सिद्धञ्चाप्यनुवासनम्
॥
शुद्धस्य दूरानुसृते स्नेहे स्नेहस्य दर्शनम्
।
गात्रेषु सर्व्वेन्द्रियाणामुपलेपोऽवसादनम्
॥
स्नेहगन्धिमुखन्तत्र कासश्वासावरोचकः
।
अतिपीडितवत्तत्र विविधा स्थापनन्तथा
॥
अस्विन्नस्याविशुद्धस्य स्नेहोऽल्पः
सम्प्रयो-
जितः ।
शीतो मृदुश्च नाभ्येति ततो मन्दं
प्रवाहयेत् ॥
विबन्धगौरवाध्मानशूलाः पक्वाशयं प्रति
।
तत्रास्थापनमेवाशु प्रयोज्यं सानुवासनम्
॥
अल्पं युक्तवतोऽल्पो हि
स्नेहोमन्दगुणस्तथा ।
दत्तो नैति क्लमोत्क्लेशौ भृशं वा
रतिमाव-
हेत् ॥
तत्र वास्थापनं कार्य्यं शोधनीयेन
वस्तिना ।
अन्वासनञ्च स्नेहेन शोधनीयेन शस्यते
॥
अहोरात्रादपि स्नेहः प्रत्यागच्छेन्न
दूष्यति ।
कुर्य्याद्वस्तिगुणांश्चापि जीर्णस्त्वल्पगुणो
भवेत् ॥

तत्पार्श्वसंस्थस्य सुखोपलब्धिः ॥
लीयन्त एवं वलयश्च तस्मात्
सव्यं शयानोऽरतिवस्तिदानम्।
विड्वातवेगो यदि चार्द्धदत्ते
निष्कृष्य दत्ते प्रणयेदशेषम् ॥
उत्तानदेहस्य कृतोपधानः
स्याद्वीर्य्यमाप्नोति तथास्य देहम् ।
एकोऽपकर्षत्यनिलं स्वमार्गात्
पित्तं द्वितीयस्तु कफं तृतीयः ॥
प्रत्यागते कोष्णजलावसिक्तः
शाल्यन्नमद्यात्तनुना रसेन ।
जीर्णे तु सायं लघु चाल्पमात्रं
भुक्तेऽनुबास्यः परिवृंहणार्थम् ॥"

सितस्थाने ३५ अध्यायः ॥
"अत ऊर्द्ध्वं प्रवक्ष्यामि व्यापदः स्नेहवस्तिजाः ।
बलवन्तो यदा दोषाः कोष्ठे स्युरनिलादयः ॥
अल्पवीर्य्यं तदा स्नेहमभिभूय पृथग्विधान् ।
कुर्व्वन्त्युपद्रदान् स्नेहः स चापि न निवर्त्तते ॥
तत्र वाताभिभूते तु स्नेहे मुखकषायता ।
जृम्भावातरुजास्तास्तावेपथुर्विषमज्वरः ॥
पित्ताभिभूते स्नेहे तु मुखस्य कटुता भवेत् ।
दाहस्तृष्णा ज्वरः स्वेदो नेत्रमूत्राङ्गपीतता ॥
श्लेष्माभिभूते स्नेहे तु प्रसेको मधुरास्यता ।
गौरवं छर्द्दिरुच्छ्वासः कृच्छ्रः शीतज्वरोऽरुचिः ॥
तत्र दोषाभिभूते तु स्नेहे वस्तिं निधापयेत् ।
यथास्वं दोषशमनान्युपयोज्यानि यानि च ॥
अत्याशितेऽन्नाभिभवात् स्नेहो नैति यदा
तदा ।
गुरुरामाशयः शूलं वायुश्चाप्रतिसञ्चरः ॥
हृत्पीडामुखवैरस्यं श्वासो मूर्च्छा भ्रमोऽरुचिः ।

यस्य नोपद्रवं कुर्य्यात् स्न
हवस्तिरनिःसृतः ।
सर्व्वोऽल्पो वा वृतो रौक्ष्यादुपेक्ष्यः स
विजा-
नता ॥
अनायान्तन्त्वहोरात्रात् स्नेहं
संशोधनैर्जयेत् ॥
स्नेहवस्तावनायाते नान्यः स्नेहो
विधीयते ।
इत्युक्ता व्यापदः सर्व्वाः
सलक्षणचिकित्-
सिताः ॥"
इति च सुश्रुते चिकित्सितस्थाने ३७
अध्यायः ॥)

**वस्तिकर्म्माढ्यः**, पुं, (वस्तिकर्म्मणा तच्छोधनव्यापा-
रेण आढ्यः । वस्तिशोधने एवास्य
प्रचुरकार्य्य-
करत्वात् तथात्वम् ।) अरिष्टवृक्षः ।
भूरिठा
इति ख्यातः । यथा, --
"अरिष्टो वस्तिकर्म्माढ्यो वेणीरः
फेनिलः
क्षुणः ॥"
इति शब्दचन्द्रिका ॥

**वस्तिमलं**, क्ली, (वस्तेर्नाभ्यधोभागस्य मलम् ।)
मूत्रम् । इति हेमचन्द्रः । ३ । २९७ ॥

**वस्तु**, क्ली, (वसतीति । वस + "वसेस्तुन् ।" उणा०
१ । ७६ । इति तुन् ।) द्रव्यम् । यथा, --
"बुद्धद्रव्यं स्तौपिकं स्यात् सत्त्वं द्रव्यञ्च
वस्तु च ॥"
इति ॥
(तथा, भागवते । ९ । ४ । २७ ।
"गृहेषु दारेषु सुतेषु बन्धुषु
द्विपोत्तमस्यन्दनवाजिवस्तुषु।
अक्षय्यरत्नाभरणाम्बरादि-
अनन्तकोषेष्वकरोदसस्मतिम् ॥"
पात्रभूतम् । यथा, रघौ । ३ । २९ ।
"अथोपनीतं विधिवद् विपश्चितो

| | | विनिन्युरेनं गुरवो गुरुप्रियम् ।<br>अबन्ध्ययत्नाश्च बभूवुरत्र ते<br>क्रिया हि वस्तूपहिता प्रसीदति ॥”) |
|---|---|---|

पदार्थः । यथा, --
"भावः पदार्थो धर्म्मः स्यात् सत्त्वं तत्त्वञ्च
वस्तु च ॥"
इति त्रिकाण्डशेषः ॥
(यथा, शकुन्तलायाम् १ अङ्के ।
"सतां हि सन्देहपदेषु वस्तुषु
प्रमाणमन्तःकरणप्रवृत्तयः ॥")
जगति वस्तुद्वयं भावोऽभावश्च । इति न्याय-
शास्त्रम् ॥ सच्चिदानन्दाद्वयं ब्रह्म । इति वेदान्त-
सारः ॥ (यथा, कथासरित्सागरे । २१ । ४९ ।
"अहो वस्तुनि मात्सर्य्यमहो भक्तिरवस्तुनि ॥"
कार्य्यम् । यथा, कामन्दकीयनीतिसारे । १५ । २५ ।
"वस्तुष्वशक्येषु समुद्यमश्चेत्
शक्येषु मोहादसमुद्यमश्च ।
शक्येषु कालेन समुद्यमश्च
त्रिधैव कार्य्यव्यसनं वदन्ति ॥"
अर्थः । इति मल्लिनाथः ॥ यथा, कुमारे ।
६ । ६५ ।
"अथाङ्गिरसमग्रण्यमुदाहरणवस्तुषु ।
ऋषयो नोदयामासुः प्रत्युवाच स भूधरम् ॥"
इतिवृत्तम् । यथा, विक्रमोर्व्वश्याम् ।
"अहमस्यां कालिदासग्रथितवस्तुना नवेन त्रोट-
केनोपस्थास्ये ॥")

**वस्तुकं**, क्ली, (वस्तु + संज्ञायां कन् ।) वास्तूकम् ।

इति शब्दरत्नावली राजनिर्घण्टश्च ॥

**वस्तुकी**, स्त्री, (वस्तुक + गौरादित्वात् ङीष् ।)

श्वेतचिल्लीशाकः । इति राजनिर्घण्टः ॥

**वस्त्यं**, क्ली, (वस् + क्तिन् । वस्तिर्वासस्तस्यां न स्यात् कर्म्मणि कञ्चुकीति ।
उत्तरीयधारणं
चोपवीतवत् ।
"यथा यज्ञोपवीतञ्च धार्य्यते च द्विजोत्तमैः ।
तथा सन्धार्य्यते यत्नादुत्तराच्छादनं शुभम् ॥"
इति स्मृतेः ॥
अत्र यथा द्विजोत्तमैः
सव्यापसव्यत्वादिना उप-
वीतं धार्य्यते तथा उत्तराच्छादनमपि द्विजो-
त्तमैरिति प्रदर्शनमात्रम् ।
प्रागुक्तभृगुवचनेन
सर्व्वेषां द्विवस्त्रताप्रतीतेः । पारस्करः । एकञ्चे-
द्वासो भवति तस्य उत्तरार्द्धेन
प्रच्छादयतीति ।
इत्याह्निकतत्त्वम् ॥ * ॥ अस्य धारणगुणाः ।
यथा, --
"काम्यं यशस्यमायुष्यमलक्ष्मीघ्नं प्रहर्षणम् ।
श्रीमत्पारिषदं शस्तं
निर्म्मलाम्बरधारणम् ॥"
इति राजवल्लभः ॥ * ॥
अपि च ।
"स्नातस्यानन्तरं सम्यग्वस्त्रेण तनुमार्जनम् ।
कान्तिप्रदं शरीरस्य
कण्डूयादोषनाशनम् ॥
कौषेयं चित्रवस्त्रञ्च रक्तवस्त्रं तथैव च ।
वातश्लेष्महरं तत्तु शीतकाले विधारयेत् ॥"
कौषेयं पट्टाम्बरं तसरवस्त्रञ्च ।
"मेध्यं सुशीतं पित्तघ्नं कषायं वस्त्रमुच्यते ।
तद्धारयेदुष्णकाले तच्चापि लघु शस्यते ॥"
नानाभोगयुतः प्रमोदशयनं दिव्याङ्गना भार्गवे
शौरे स्युः खलु रोगशोककलहा वस्त्रे धृते
नूतने ॥"
इति कर्म्मलोचनम् ॥ * ॥
अस्य क्षारसंयोगनिषिद्धदिनानि यथा, --
"मन्दमङ्गलषष्ठीषु द्वादश्यां श्राद्धवासरे ।
वस्त्राणां क्षारसंयोगो दहत्यासप्तमं कुलम् ॥"
इत्याह्निकाचारतत्त्वम् ॥
तद्दानफलं यथा, --
"वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः ॥"
इति शुद्धितत्त्वम् ॥
अपि च ।
"द्विजानां ये तु सततं शुभवस्त्रप्रदा नराः ।
वस्त्रगन्धयुतः पन्थास्तेषां सुजलशीतलः ॥"
इत्याद्ये वह्निपुराणे यमशर्म्मिलोपाख्याननामा-
ध्यायः ॥ * ॥ तेन विष्णुपूजाविधिर्यथा, --
"दुकूलपट्टकौषेयवाल्ककार्पासकादिभिः ।
वासोभिः पूजयेद्विष्णुं सुशुभैरात्मनः प्रियैः ॥"
इति तत्रैव क्रियायोगनामाध्यायश्च ॥
तद्ग्रहणविधिर्यथा । विष्णुधर्म्मोत्तरम् ।
"वस्त्रं दशान्तमादद्यात् परिधाय तथा पुनः ।
आरुह्योपानहौ यानमारुह्यैव च पादुके ॥"
तस्याधिपतिर्यथा । तत्रैव ।
"बार्हस्पत्यं स्मृतं वासः सौम्यानि रजतानि च ।
पक्षिणश्च तथा सर्व्वे वायव्याः परिकीर्त्तिताः ॥"
तत्प्रतिग्रहप्रायश्चित्तं यथा । हारीतः । मणि-
वासोगवादीनां प्रतिग्रहे सावित्र्यष्टशतं जपेत् ।
अष्टसहस्रं अष्टोत्तरसहस्रम् । इति शुद्धि-
तत्त्वम् ॥ * ॥ अपि च ।
श्रीभगवानुबाच ।
"कार्पासं काम्बलं वाल्कं कौषजं वस्त्रमिष्यते ।
तत् पूर्ब्बं पूजयित्वैव मन्त्रैर्देवाय चोत्सृजेत् ॥
निर्दशं मलिनं जीर्णं छिन्नं गात्रावलिङ्गितम् ।
परकीयं वाखुदष्टं सूचीविद्धं तथोषितम् ।
उप्तकेशं विधौतञ्च श्लेष्ममूत्रादिदूषितम् ॥
प्रदाने देवताभ्यश्च दैवे पैत्र्ये च कर्म्मणि ।
वर्ज्जयेत् शापयोगेन यज्ञादावुपयोजने ॥"
शापयोगेन इत्यत्र स्वोपयोगेन इति क्वचित्

साधु । वस्ति + "तत्र साधुः ।" ४ । ४
। ९८ ।
इति यत् ।) गृहम् । इत्यमरः ॥

**वस्त्रं**, क्ली, (वस्यते आच्छाद्यतेऽनेनेति । वस
आच्छादने + "सर्व्वधातुभ्यः ष्ट्रन् ।"
उणा० ४ ।
१५८ । इति ष्ट्रन् ।)
परिधानाद्युपयुक्तकार्पासादि-
निर्म्मितवस्तु । कापड इति भाषा ।
तत्पर्य्यायः ।
आच्छादनम् २ वासः ३ चेलम् ४
वसनम् ५
अंशुकम् ६ । इत्यमरः ॥ सिचयः ७
प्रोतः ८
लक्तकः ९ कर्पटः १० शाठकः ११
कशिपुः १२ ।
इति जटाधरः ॥ वासनम् १३ द्विचयम्
१४
प्रोतम् १५ छादम् १६ वासम् १७ ।
इति
शब्दरत्नावली ॥ * ॥ अस्य
परिधानविधिर्य्यथा,
भृगुः ।
"विकक्षोऽनुत्तरीयश्च नग्नश्चावस्त्र एव
च ।
श्रौतं स्मार्त्तं तथा कर्म्म न
नग्नश्चिन्तयेदपि ॥"
विकक्षः परीधानासंवृतकच्छः । तथा च
।
"परीधानाद्बहिःकक्षा निबद्धा ह्यासुरी
भवेत् ॥"
स्मृतिः ।
"वामे पृष्ठे तथा नाभौ कक्षत्रयमुदाहृतम्
।
एभिः कक्षैः परीधत्ते यो विप्रः स शुचिः
स्मृतः ॥"
बौधायनः ।
"नाभौ धृतञ्च यद्वस्त्रमाच्छादयति
जानुनी ।
अन्तरीयं प्रशस्तं
तदच्छिन्नमुभयोस्तयोः ॥"
कषायं कोकची इति लोके ।
कषायरागरक्तं
वा ।
"शुक्लन्तु शुभदं वस्त्रं
शीतातपनिवारणम् ।
न चोष्णं न च वा शीतं तत्तु वर्षासु
धारयेत् ॥
यशस्यं काम्यमायुष्यं
श्रीमदानन्दवर्द्धनम् ।
त्वच्यं वशीकरं रुच्यं नवं
निर्म्मलमम्बरम् ॥"
काम्यं कामोद्दीपकम् ।
"कदापि न जनैः सद्भिर्धार्य्यं
मलिनमम्बरम् ।
तत्तु कण्डूकृमिकरं ग्लान्यलक्ष्मीकरं
परम् ॥"
अलक्ष्मीरशोभा दादिद्रं वा । इति भाव-
प्रकाशः ॥ * ॥ (अथ स्वप्ने
वस्त्रादिदर्शनात्
शुभफलं यथा, --
"कन्यां कुमारकान् गौरान् शुक्लवस्त्रान्
सुते-
क्षसः ।
यः पश्येल्लभते यो वा
छत्रादर्शविषामिषम् ॥
शुक्लाः सुमनसो वस्त्रममेध्यालेपनं
फलम् ॥
यस्य स्यादायुरारोग्यं वित्तं बहु च
सोऽश्नुते ॥"
इति वाभटे शारीरस्थाने षष्ठेऽध्याये ॥)
अथ नववस्त्रपरीधानदिनम् ।
"ब्रह्मानुराधवसुतिष्यविशाखहस्त-
चित्रोत्तराग्निपवनादितिरेवतीषु ।
जन्मर्क्षजीवबुधशुक्रदिनोत्सवादौ
धार्य्यं नवं वसनमीश्वरदेवतुष्टौ ॥"
इति ज्योतिस्तत्वम् ॥ * ॥
अपि च ।
"सूर्य्ये चाल्पधनं ब्रणः शशिदिने क्लेशः
सदा
भूमिजे
वस्त्राणां बहुता बुधे सुरगुरौ विद्यागमः
सम्पदः ।
पुस्तके पाठः ।
"उत्तरीयोत्तरासङ्गौ निचोलो मोदचेलकः ।
प्ररिधानञ्च पञ्चैतान्यस्यूतानि प्रयोजयेत् ॥
शाणवस्त्रं नीशारञ्च तथेवातपवारणम् ॥"
क्वचित् पुस्तके शाणवस्त्रमित्यत्र मणिवस्त्रमिति
पाठः ।
"चण्डातकं तथा दूष्यं पञ्च स्यूतान्यदुष्टये ।
पताकाध्वजदण्डादौ स्यूतं वस्त्रं प्रयोजयेत् ॥
अन्यत्रावरणादौ च तद्विना शस्ततोऽपि च ।
रक्तं कौषेयवस्त्रञ्च महादेव्यै प्रशस्यते ॥
गीतं तथैव कौषेयं वासुदेवाय चोत्सृजेत् ।
रक्तन्तु कम्बलं दद्यात् शिवाय परमात्मने ॥
विचित्रं सर्व्वदेवेभ्यो देवीभ्योऽशुं निवेदयेत् ।
कार्पासं सर्व्वतोभद्रं दद्यात् सर्व्वेभ्य एव तु ॥

नैकान्तरक्तं दद्यात्तु वासुदेवाय चेलकम् ।
तथा नैकान्तरक्तन्तु शिवाय विनिवेदयेत्
॥
नीलीरक्तन्तु यद्वस्त्रं तत् सर्व्वत्र
विवर्ज्जितम् ।
दैवे पैत्रे स्वोपयोगे वर्ज्जयेत्तद्विचक्षणः ॥
नीलीरक्तं प्रमादात्तु यो दद्याद्विष्णवे बुधः
।
निष्फला तस्य तत्पूजा तदा भवति भैरव
॥
विचित्रे वाससि पुनर्लग्नं नीलीविरञ्जितम् ।
वस्त्रं दद्यान्महादेव्यै नान्यस्मै तु कदाचन
॥
द्विपदां ब्राह्मणो यद्वत् देवानां वासवो यथा
।
तथा भूषणवर्गेषु वस्त्रमुत्तममुच्यते ॥
वस्त्रेण त्रायते लज्जां वस्त्रेण त्रायते
त्वघम् ।
वस्त्रात् स्यात् सर्व्वतः
सिद्धिश्चतुर्व्वर्गप्रदञ्च तत् ॥"
इति कालिकापुराणे ६८ अध्यायः ॥
राज्ञा सदा वस्त्राच्छादितशरीरं कर्त्तव्यम्
।
यथा, --
"सर्व्वदा मङ्गलं रत्नं धारयेत् सह दूर्व्वया
।
अवस्त्राच्छादितं गात्रं न विप्रेभ्यः
प्रदर्शयेत् ॥"
इति तत्रैव ८९ अध्यायः ॥
नीलवस्त्रं परिधाय विष्णुपूजननिषेधो
यथा, --
वराह उवाच ।
"भूषितो नीलवस्त्रेण यो हि मामुपसर्पति ।
वर्षाणाञ्च शतं पञ्च कृमिर्भूत्वा स तिष्ठति
॥
तस्य वक्ष्यामि सुश्रोणि
अपराधविशोधनम् ।
प्रायश्चित्तं विशालाक्षि येन मुच्येत
किल्विषात् ॥
जातो ममापराधेन सितः पारावतो भुवि ।
तिष्ठते मम पार्श्वेषु यत्रैवाहं प्रतिष्ठितः ॥
प्रायश्चित्तं प्रवक्ष्यामि तस्य संसारमोक्षणम्
।
येनासौ लभते सिद्धिं कृष्णवस्त्रापराधतः ॥
सप्ताहं यावकं भुक्त्वा त्रिरात्रं
शक्तुपिण्डिकाम् ।
त्रीणि पिण्डान् त्रिरात्रन्तु एवं मुच्येत
किल्वि-
षात् ॥
य एतेन विधानेन देवि कर्म्माणि कारयेत् ।
शुचिर्भागवतो भूत्वा मम मार्गानुसारकः ।
न स गच्छति संसारं मम लोकाय गच्छति
॥"
इति तत्रैव कृष्णवस्त्रपरीधानप्रायश्चित्तम् ॥
परिधृताधौतवस्त्रस्य
विष्णुकर्म्मकरणनिषेधो
यथा, --
वराह उवाच ।
"वाससा न च धौतेन यो मे कर्म्माणि
कारयेत् ।
शुचिर्भागवतो भूत्वा मम मार्गानुसारकः ॥
तस्य दोषं प्रवक्ष्यामि अपराधं वसुन्धरे ।
पतन्ति येन संसारं वाससोच्छिष्टकारिणः ॥
देवि भूत्वा गजोन्मत्तस्तिष्ठत्येकं नरो भुवि ।
उष्ट्रश्चैकं भवेज्जन्म जन्म चैकं खरस्तथा
॥
गोमायुरेकजन्मा वै जन्म चैकं हयस्तथा ।
सारङ्गश्चैकजन्मा वै मृगो भवति चैकतः ॥
सप्तजन्मान्तरं पश्चात्ततो भवति मानुषः ।
मद्भक्तश्च गुणज्ञश्च मम कर्म्मपरायणः ।
निरापराधो दक्षश्च अहङ्कारविवर्ज्जितः ॥
धरण्युवाच ।
शुतमेतत् प्रयत्नेन यत्त्वया समुदाहृतम् ।
संसारं वाससोच्छिष्टं येन गच्छन्ति मानवाः
॥
प्रायश्चित्तञ्च मे ब्रूहि सर्व्वकर्म्मसुखावहम् ।
किल्विषात् येन मुञ्चन्ति तव कर्म्मपरायणः
॥
अनन्यमानसो भूत्वा मम चिन्तापरायणः ॥
प्रभातायान्तु शर्व्वर्य्यां उदिते च दिवाकरे ।
पञ्चगव्यं ततः पीत्वा शीघ्रं मुच्येत
किल्विषात् ॥
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।
सर्व्वपापविनिर्मुक्तो मम लोकाय गच्छति ॥"
इति वाराहे परकीयवस्त्रपरीधानप्रायश्चित्त-
नामाध्यायः ॥ * ॥
काञ्चननिर्म्मितवस्त्रप्रमाणं
यथा, --
"यावत् काञ्चनवस्त्राणां वाहिका
गोपकन्यकाः ।
काश्चित्तत्राययुः शीघ्रं यत्र चन्द्रावली मुदा
॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे २८
अध्यायः ॥
"आसनं वसनं शय्या जायापत्यं कमण्डलुः
।
आत्मनः शुचिरेतानि न परेषां कदाचन ॥"
ईषद्धौतादिवस्त्रस्य पश्चिमाग्रादिप्रसारित-
वस्त्रस्य च अधौतत्वं यथा, --
"ईषद्धौतं स्त्रिया धौतं यद्धौतं रजकेन तु ।
अधौतं तद्विजानीयाद्दशा दक्षिणपश्चिमे ॥"
इति कर्म्मलोचनम् ॥ * ॥
सत्यतपाः ।
"प्रागग्रमुदगग्रं वा धौतं वस्त्रं प्रसारयेत् ।
पश्चिमाग्रं दक्षिणाग्रं पुनः प्रक्षालनात् शुचि
॥"
अत्राग्रं दशा वृक्षवत् ॥ * ॥ प्रचेताः ।
"स्वयं धौतेन कर्त्तव्या क्रिया धर्म्म्या
विपश्चिता ।
न च राजकधौतेन नाधौतेन भवेत् क्वचित्
॥
पुत्त्रमित्रकलत्रेण स्वजातिबान्धवेन च ।
दासवर्गेण यद्धौतं तत् पवित्रमिति स्थितिः
॥"
स्नानोत्तरं उष्णीषवस्त्रस्य धार्य्यत्वं यथा ।
उष्णीषधारणं शिरोजलापनयनाय । तेन
तद-

व्रतं चान्द्रायणं कृत्वा विधिदृष्टेन कर्म्मणा
।
मुच्यते किल्विषात् भूमे एवमेतन्न संशयः
॥”
इति वाराहे नीलवस्त्रपरीधानप्रायश्चित्त-
नामाध्यायः ॥ * ॥ विष्णुपूजने
रक्तवस्त्रपरी-
धाननिषेधो यथा, --
वराह उवाच ।
“रक्तवस्त्रेण संयुक्तो यो हि मामुपसर्पति ।
तस्यापि शृणु सुश्रोणि कर्म्म
संसारमोक्षणम् ॥
रजस्वलासु नारीषु रजो यत्तत् प्रवर्त्तते ।
तेनासौ रजसा स्पृष्टो कर्म्मदोषेण जानतः
॥
वर्षाणि दशपञ्चैव वसते तत्र निश्चयः ।
रजो भूत्वा महाभागे रक्तवस्त्रपरायणः ॥
प्रायश्चित्तं प्रवक्ष्यामि तस्य
कायविशोधनम् ।
येन शुध्यन्ति वै भूमे पुरुषाः
शास्त्रवर्ज्जिताः ॥
एकाहारं ततः कृत्वा दिनानि दश सप्त च
।
वायुभक्षो दिनत्रीणि दिनमेकं जलाशनः ॥
एवं स मुच्यते भूमे मम विप्रियकारकः ।
प्रायश्चित्तं ततः कृत्वा ममासौ रोचते सह
॥
एतत्ते कथितं भूमे रक्तवस्त्रविभूषितम् ।
प्रायश्चित्तं महाभागे सर्व्वं संसारमोक्षणम्
॥”
इति तत्रैव रक्तवस्त्रपरीधानप्रायश्चित्तम्
॥
परिधृतकृष्णवस्त्रस्य विष्णूपासननिषेधो
यथा, --
“यः पुनः कृष्णवस्त्रेण मम कर्म्मपरायणः
।
देवि कर्म्माणि कुर्व्वीत तस्य वै पतनं शृणु
॥
घुणा वै पञ्चवर्षाणि काष्ठभक्षश्च जायते ।
मशकस्त्रीणि वर्षाणि कच्छस्त्रीणि च पञ्च
च ॥
न स गच्छति संसारं मम कर्म्मपरायणः ।
वाराह उवाच ।
शृणु तत्त्वेन मे देवि कथ्यमानं मयानघे ।
प्रायश्चित्तं प्रवक्ष्यामि मम भक्तिपरायणः ॥
यावकेन दिनं त्रीणि पिण्याकेन पुनस्त्रयः ।
कणभक्षो दिनत्रीणि पायसेन दिनत्रयम् ॥
एवं कृत्वा महाभागे वाससोच्छिष्टकारिणः ।
अपराधं न विद्येत संसारञ्च न गच्छति ॥”
इति तत्रैव अधौतवासःपरिधानप्रायश्चित्त-
नामाध्यायः ॥ * ॥ अथ
परिहितपरकीयवस्त्रस्य
विष्णुपूजादिकरणे प्रायश्चित्तम् ।
वाराह उवाच ।
“यः पारक्येण वस्त्रेण नावधूतेन माधवि ।
प्रायश्चित्ती पुमान्मूर्खो मम कर्म्मपरायणः ॥
करोति मम कर्म्माणि स्पृष्ट्वा ते मां
तमःस्थितः ।
मृगो वै जायते देवि वर्षाणि त्रीणि सप्त च ॥
हीनपादेन जायेत चैकजन्म वसुन्धरे ।
मूर्खश्च क्रोधनश्चैव मद्भक्तश्चैव जायते ॥
तस्य वक्ष्यामि सुश्रोणि प्रायश्चित्तं
महौजसम् ।
येन गच्छति संसारं मम भक्तो व्यवस्थितः
॥
अष्टभक्तं ततः कृत्वा मम कर्म्मपरायणः ।
माघस्यैव तु मासस्य शुक्लपक्षस्य द्वादशी
॥
तिष्ठेज्जलाशये तत्र क्षान्तो दान्तो
जितेन्द्रियः ।
नन्तरं न धार्य्यम् । तथा महाभारतम् ।
“आप्लुतः साधिवासेन जलेन च सुगन्धिना
।
राजहंसनिभं प्राप्य उष्णीषं शिथिलार्पितम् ।
जलक्षयनिमित्तं वै वेष्टयामास मूर्द्धनि ॥”
शिथिलार्पितं अगाढबद्धम् ॥ * ॥ निषिद्ध-
वस्त्राणि यथा । भारते ।
“न स्यूतेन न दग्धेन पारक्येण विशेषतः ।
मूषिकोत्कीर्णजीर्णेन कर्म्म कुर्य्याद्विचक्षणः
॥”
नारसिंहे ।
“न रक्तमुल्वणं वासो न नीलञ्च प्रशस्यते ।
मलाक्तञ्च दशाहीनं वर्ज्जयेदम्बरं बुधः ॥”
उल्वणं उत्कटरक्तविशेषम् । आचाररत्ने
उशनाः ।
“दशाहीनेन वस्त्रेण कुर्य्यात्
कर्म्माण्यभावतः ।”
विष्णुधर्म्मोत्तरे ।
“वस्त्रं नान्यधृतं धार्य्यं न रक्तं मलिनं तथा ।
जीर्णं वापदशञ्चैव श्वेतं धार्य्यं प्रयत्नतः ॥
उपानहं नान्यधृतं ब्रह्मसूत्रञ्च धारयेत् ।
न जीर्णमलवद्वासो भवेच्च विभवे सति ॥”
योगियाज्ञवल्क्यः ।
“स्नात्वैवं वाससी धौते अक्लिन्ने परिधाय
च ।
प्रक्षाल्योरूमृदद्भिश्च हस्तौ प्रक्षालयेत्ततः ॥
अभावे धौतवस्त्राणां शाणक्षौमाविकानि च ।
कुतपो योगपट्टं वा द्विर्व्वासा येन वा भवेत् ॥

अधौतेन च वस्त्रेण नित्यनैमित्तिकीं
क्रियाम् ।
कुर्व्वन् फलं न चाप्नोति दत्तं भवति
निष्फलम् ॥”
कुतपो नेपालकम्बलः ॥ * ॥ तर्पणात्
पूर्ब्बं
स्नानवस्त्रनिष्पीडननिषेधो यथा, --
“निष्पीडयति यः पूर्ब्बं स्नानवस्त्रन्तु
तर्पणात् ।
निराशास्तस्य गच्छन्ति देवाः पितृगणैः
सह ॥”
यावालिः ।
“स्नानं कृत्वार्द्रवासास्तु विण्मूत्रं कुरुते
यदि ।
प्राणायामत्रयं कृत्वा पुनः स्नानेन
शुद्ध्यति ॥ * ॥
नार्द्रमेकञ्च वसनं परिदध्यात् कथञ्चन
॥”
हारीतः । आर्द्रञ्च सप्तवातहतमपि शुद्ध-
मिति ॥ * ॥ मदनपारिजाते पारस्करः ।
एकञ्चेद्वासो भवति तस्योत्तरार्द्धेन
प्रच्छादय-
तीति । इत्याह्निकतत्त्वम् ॥ * ॥
संक्रान्त्यादौ
वस्त्रनिष्पीडननिषेधो यथा ।
षट्त्रिंशन्मत-
निगमौ ।
“संक्रान्त्यां पञ्चदश्याञ्च द्वादश्यां
श्राद्धवासरे ।
वस्त्रं न पीडतेत्तत्र न च क्षारेण योजयेत्
॥”
इति तिथ्यादितत्त्वम् ॥

**वस्त्रकुट्टिमं**, क्ली, (वस्त्रनिर्म्मितं कुट्टिम-
मिव ।) छत्रम् । इति त्रिकाण्डशेषः ॥
(वस्त्रस्य
कुट्टिमं क्षुद्रगृहम् ।) वस्त्रगृहञ्च ॥

**वस्त्रगृहं**, क्ली, (वस्त्रनिर्म्मितं गृहम् ।) वस्त्र-

“भूयसा वस्नमचरत् कनीयोऽविक्रीतो अका-
निषं पुनर्यन् ॥”)
वसनम् । द्रव्यम् । इति विश्वः ॥ धनम् । भृतिः
।
इति हेमचन्द्रः ॥ (वस्ते आच्छादयति शरीर-
मिति । कर्त्तरि नः ।) त्वक् । इत्यमरटीकायां
रामाश्रयः ॥

**वस्नः**, पुं, (वस् + न ।) मूल्यम् । इत्यमरः ॥

**वस्ननं**, कटीभूषणम् । इति शब्दरत्नावली ॥

**वस्नसा**, स्त्री, (वस्नं चर्म्म सीव्यति । वस्न +
सिव + डः । स्त्रियां टाप् ।) स्नायुः । इत्यमरः
॥

**व(स्वो)स्वौकसारा**, स्त्री, (वस्वौकेषु रत्नाकरेषु
सारा ।) इन्द्रपुरी । (यथा, रघुः । १६ । १० ।
“वस्वौकसारामभिभूय साहं
सौराज्यबद्धोत्सवया विभूत्या ।
समग्रशक्तौ त्वयि सूर्य्यवंश्ये
सति प्रपन्ना करुणामवस्थाम् ॥”)
इन्द्रनदी । (यथा, महाभारते । ३ । १८८ ।
१०१ ।
“वस्वौकसारां नलिनीं नर्म्मदाञ्चैव भारत !
॥”)
कुबेरपुरी । (यथा, महाभारते । ७ । ६५ । १५
।
“नैतादृशं दृष्टपूर्ब्बं कुबेरसदनेष्वपि ।
धनञ्च पूर्य्यमाणं नः किं पुनर्मनुजेष्विति ।
व्यक्तं वस्वोकसारेयमित्यूचुस्तत्र विस्मिताः
॥”)
कुबेरनदी । इति हेमचन्द्रः ॥

**वह**, इ क त्विषि । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-अक०-सेट् ।) इ क, वंहयति । त्विषि
दीप्तौ । इति दुर्गादासः ॥

**वह**, ऐ ञ औ प्रापणे । इति कविकल्पद्रुमः ॥
(भ्वा०-उभ०-द्विक०-अनिट् ।) प्रापणमिह
ञ्यन्तस्य रूपम् । ऐ, उह्यात् । ञ, वहति
वहते भारं ग्रामं जनः प्रापयतीत्यर्थः । औ,
अवाक्षीत् । अर्थान्तरे अकर्म्मकोऽयम् । यथा ।

यथा, मनुः । १ । ७६ ।
“आकाशात्तु विकुर्व्वाणात् सर्व्वगन्धवहः
शुचिः ।
बलवान् जायते वायुः स वै स्पर्शगुणो मतः
॥”)

**वहतः**, पुं, (वहतीति । वह् + अतच् ।) वृषः ।
पान्थः । इत्युणादिकोषः ॥

**वहतिः**, पुं, (वहतीति । वह् + “वहिवस्यर्त्तिभ्य-
श्चित् ।” उणा० ४ । ६० । इति अतिः
।)
वायुः । इत्युणादिकोषः । गौः । सचिवः ।
इति
मेदिनी । ते, १४८ ॥

**वहती**, स्त्री, (वहतीति । वह् + अति । वा
ङीष् ।) नदी । इति केचित् ॥

**वहतुः**, पुं, (वह् + “एधिवह्योश्चतुः ।” उणा०
१ । ७९ । इति चतुः ।) पथिकः । वृषभः
।
इति मेदिनी । ते, १४९ ॥ (विवाहकाले
कन्यायै
देयवस्तु । यथा, ऋग्वेदे । १० । ८५ ।
१३ ।
“सूर्य्याया वहतुः प्रागात्
सवितायमवासृजत् ।”
“वहतुः कन्याप्रियार्थं दातव्यो
गवादिपदार्थः ।”
इति तद्भाष्ये सायणः ॥ विवाहः । यथा,
ऋग्-
वेदे । १० । ८५ । १४ ।
“यदश्विना पृच्छमाना वयातं
त्रिचक्रेण वहतुं सूर्य्यायाः ॥”
“सूर्य्याया वहतु विवाहमित्यर्थः ।” इति
तद्-
भाष्ये सायणः ॥ वहनकारणे, त्रि । यथा,
ऋग्वेदे । ७ । १ । १७ ।
“उभा कृण्वतो वहतू मियेधे ।”

निर्म्मितशाला । ताँवु इति भाषा ।
तत्पर्य्यायः ।
पटवापः २ पटमयम् ३ दूष्यम् ४
स्थलम् ५ ।
इति त्रिकाण्डशेषः ॥

**वस्त्रग्रन्थिः**, पुं, (वस्त्रस्य ग्रन्थिः ।) परिधान-
वस्त्रस्य ग्रन्थनम् । तत्पर्य्यायः ।
उच्चयः २
नीवी ३ । इति त्रिकाण्डशेषः ॥

**वस्त्रपञ्जलः**, पुं, कोलकन्दः । इति राजनिर्घण्टः ॥

**वस्त्रपुत्त्रिका**, स्त्री, (वस्त्रनिर्म्मिता पुत्त्रिका पुत्त-
लिका ।) वस्त्रनिर्म्मितपुत्तलिका । इति
शब्द-
माला ॥

**वस्त्रभूषणः**, पुं, (भूषयतीति । भूषि + ल्युः ।
वस्त्रस्य भूषणः रञ्जक इत्यर्थः ।)
साकरुण्ड-
वृक्षः । इति राजनिर्घण्टः ॥

**वस्त्रभूषणा**, स्त्री, (वस्त्रस्य भूषणं रागो यस्याः ।)
मञ्जिष्ठा । इति राजनिर्घण्टः ॥
(गुणादयो-
ऽस्या मञ्जिष्ठाशब्दे ज्ञातव्या ॥)

**वस्त्रयोनिः**, स्त्री, (वस्त्रस्य योनिरुत्पत्तिकार-
णम् ।) वसनोत्पत्तिकारणम् । यथा, --
"त्वक्फलकृमिरोमाणि वस्त्रयोनिर्द्दश
त्रिषु ॥"
इत्यमरः ॥

**वस्त्ररञ्जनः**, पुं, (रञ्जयतीति । रञ्ज + णिच् +
ल्युः ।) वस्त्राणां रञ्जनः । कुसुम्भः ।
इति
राजनिर्घण्टः ॥ (तथास्य पर्य्यायः ।
"स्यात् कुसुम्भं वह्निशिखं
वस्त्ररञ्जनमित्यपि ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**वस्नं**, क्ली, (वस निवासे आच्छादने वा +
"धापृ-

जम्बूः सरिद्वहति सीमनि कम्बुकण्ठीति
नैषधे । मन्दं मरुद्वहति गर्ज्जति वारिवाहः ।
इति महानाटके । ववाह रक्तं पुरुषास्ततो
जाताः सहस्रशः । इत्यादि सिद्ध्यर्थमोष्ठ्या-
दिञ्च वहधातुं मन्येते वर्णदेशशरणदेवौ ।
वस्तुतस्तु
बह्वाद्यसम्मतत्वाद्वोष्ठ्यादिरनेनोपे-
क्षितः । ववाह इति चण्डीप्रयोगस्य तु वाह
ङ यत्ने इत्यस्मात् गणकृतानित्यत्वात्
परस्मैपद-
सिद्धिः । अनेकार्थत्वात् सुस्राव इत्यर्थः ।
अथवा
वव इत्याह इत्येव व्याख्यानम् । इति दुर्गा-
दासः ॥

**वहः**, पुं, (वहति युगमनेनेति । वह + "गोचर-
सञ्चरेति ।" ३ । ३ । ११९ । इति घप्रत्ययेन
साधु ।) वृषस्कन्धप्रदेशः । इत्यमरः ॥ (यथा,
महाभारते । ४ । २ । २१ ।
"यस्य बाहू समौ दीर्घौ ज्याघातकठिनत्वचौ ।
दक्षिणे चैव सव्ये च गवामिव वहः कृतः ॥"
वहतीति । वह् + अच् ।) घोटकः । वायुः ।
इति मेदिनी । हे, ८ ॥ पन्थाः । इति त्रिकाण्ड-
शेषः ॥ नदः । इति हेमचन्द्रः ॥ (वाहके, त्रि ।

"उभौ वहतू वहनहेतू स्तोत्रं शस्त्रञ्च
कृण्वतः
कुर्व्वन्तो मियेधे ।" इति तद्भाष्ये सायणः
॥)

**वहनं**, क्ली, (उह्यतेऽनेनेति । वह + करणे
ल्युट् ।) होडः । हुडी इति भाषा । यथा, --
"तरणो भेलके वारिरथो नौस्तरिकः
प्लवः ।
होडस्तरान्धुर्व्वहनं वहित्रं वार्व्वटः पुमान्
॥"
इति त्रिकाण्डशेषः ॥
(यथा, कथासरित्सागरे । २५ । ४५ ।
"क्षणान्तरे च बणिजामाक्रन्दैस्तीव्रपूरितम्
।
भरादिव तदुत्पत्य वहनं समभज्यत ॥"
वह + भावे ल्युट् । प्रापणम् । धारणम् ।
यथा, महाभारते । २ । ३१ । ४१ ।
"पावनात् पावकश्चासि वहनात्
हव्यवाहनः ॥"
वहतीति । वह + ल्युः । वाहके, त्रि ।
यथा,
कथासरित्सागरे । ११९ । १९६ ।
"दैत्यानामधिपो विमानवहनः सान्तःपुरः
सानुगः ॥")

**वहन्तः**, पुं, (वहति वातीति । वह + "तॄभूवहि-
वसीति ।" उणा० ३ । १२८ । इति झच्
।)
वायुः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः
॥
(उह्यते इति । कर्म्मणि झच् ।) बाले, त्रि ।
इत्युणादिकोषः ॥

**व(ब)हलः**, पुं, (उह्यतेऽनेनेति । वह + बाहुलकात्
अलच् ।) पोतः । इति हारावली । १४२
॥
दृढे, त्रि । इति हेमचन्द्रः ॥ (बहुले च
यथा,
उत्तरचरिते । १ ।

| | | |
|---|---|---|
| वस्यज्यतिभ्यो नः ।” उणा० ३ । ६ । इति करणादौ यथायथं नः ।) वेतनम् । मूल्यम् । (यथा, ऋग्वेदे । ४ । २४ । ९ । | | |

"रसावस्याः स्पर्शो वपुषि
वहलश्चन्दनरसः ॥"
यथा वा प्रबोधचन्द्रोदये । १ ।
"येन त्रि सप्तकृत्वो
नृपवहलवसामांसमस्तिष्कपङ्क
प्राग्भारेऽकारि
भूरिच्युतरुधिरसरिद्वारिपूरे-
ऽभिषेकः ॥")

**वहलगन्धं**, क्ली, (वहलः प्रचुरो गन्धो यस्य ।)
शम्बरचन्दनम् । दति राजनिर्घण्टः ॥

**वहलचक्षुः** [स्] पुं, (वहलानि प्रचुराणि चक्षु-
षीव पुष्पाण्यस्य ।) मेषशृङ्गी । इति रत्न-
माला ॥ पुस्तकान्तरे ।
"नन्दीवृक्षो मेषशृङ्गी तथा मेषविशीलिका
।
चक्षुर्व्वहलं चक्षुश्च मेढ्रशृङ्गी गृहद्रुमाः ॥"
इत्यपि पाठः ॥

**वहलत्वचः**, पुं, (वहला दृढा त्वचा वल्कलं यस्य
।)
श्वेतलोध्रः । इति राजनिर्घण्टः ॥

**वहला**, स्त्री, (वहलानि प्रचुराणि पुष्पाणि
सन्त्यस्या इति । अर्शआदित्वादच् ।)
शत-
पुष्पा । इति राजनिर्घण्टः ॥ स्थूलैला ।
इति
भावप्रकाशः ॥ (अस्याः पर्य्यायो यथा, -
-
"एला तु वहला स्थूला मालेयं
ताडकाफलम् ॥"
इति वैद्यकरत्नमालायाम् ॥)

**वहा**, स्त्री, (वहतीति । वह + अच् । टाप् ।)
नदी । इति हेमचन्द्रः । ४ । १४६ ॥

**व(ब)हिः**, [स्] व्य, वाह्यम् । इत्यमरः ॥ (यथा,
मनुः । १० । ४५ ।
"मुखबाहूरुपज्जानां या लोके जातयो
बहिः ।

**व(ब)हिर्द्वारप्रकोष्ठकः**, पुं, (वहिर्द्वारस्य प्रको-
ष्ठकः ।) गृहस्य द्वाराद्वहिः प्रकोष्ठम् । तत्प-
र्य्यायः । प्रघाणः २ प्रघणः ३ अलिन्दः ४ ।
इत्यमरः । २ । २ । १२ ॥

**व(ब)हिर्भूतः**, त्रि, (वहिस् + भू + क्तः ।) वहि-
र्गतः । वहिःशब्दपूर्व्वकप्राप्त्यर्थभूधातोः कर्त्तरि
क्तप्रत्ययेन निष्पन्नः । यथा । "पक्षविषयिता-
वहिर्भूतसाध्यविषविताघटितधर्म्मावच्छिन्नप्रति
वध्यताशालिसंशयः पक्षता ॥" इति जगदीशः ॥

**व(ब)हिर्मुखः**, त्रि, (बहिर्बाह्यविषये मुखं प्रवणता
यस्य ।) विमुखः । यथा, नरसिंहाचार्य्यधृते-
शानसंहितायाम् ।
"शैवो वा वैष्णवो वापि यो वा स्यादन्यपूजकः ।
सर्व्वं पूजाफलं हन्ति शिवरात्रिवहिर्मुखः ॥"
इति तिथ्यादितत्त्वम् ॥

**व(ब)हिश्चरः**, पुं, (वहिश्चरतीति । चर + टः ।)
कर्कटः । इति हेमचन्द्रः ॥ (वहिश्चरणशीले,
त्रि । यथा, मार्कण्डेये । २३ । ८३ ।
"युवयोर्यन्मदीयं तन्मामकं युवयोः स्वकम् ।
एतत्सत्यं विजानीतं युवां प्राणा वहिश्चराः ॥")

**वहेडुकः**, पुं, विभीतकवृक्षः । इति राजनिर्घण्टः ॥

**वह्निः**, पुं, (वहति धरति हव्यं देवार्थमिति ।
वह + "वहिश्रिश्रुय्विति ।" उणा० ४ । ५१ ।
इति निः ।) चित्रकः । भल्लातकः । (यथा,
सुश्रुते चिकित्सितस्थाने ९ अध्याये ।
"मञ्जिष्ठाक्षौ वासको देवदारु
पथ्यावह्नी व्योषधात्री विडङ्गम् ॥")
निम्बूकः । इति राजनिर्घण्टः ॥ रेफः । इति
तन्त्रम् ॥ अग्निः । इत्यमरः ॥ * ॥ तस्य नामानि
यथा, --
"ते जातवेदसः सर्व्वे कल्माषः कुसुमस्तथा ।
दहनः शोषणश्चैव तर्पणश्च महाबलः ।
पिटरः पतगः स्वर्णस्त्वगाधो भ्राज एव च ॥"
अन्यत्र तु नामान्तराण्युक्तानि यथा, --
"जृम्भकोद्दीपकश्चैव विभ्रमभ्रमशोभनाः ।
अवसथ्याहवनीयौ दक्षिणाग्निस्तथैव च ।
अन्वाहार्य्यो गार्हपत्य इत्येते दश वह्नयः ॥"

स्वमग्निं नैव हस्तेन स्पृशेन्नापसु
चिरं वसेत् ॥
नापक्षिपेन्नोपधमेन्न सूर्पेण च
पाणिना ।
मुखेनाग्निं समिन्नीतं
मुखादग्निरजायत ॥"
इति कौर्म्मे उपविभागे १५
अध्यायः ॥
अस्योत्पत्तिर्यथा, --
शौनक उवाच ।
"सर्व्वं श्रुतं महाभाग परिपूर्णं मनो
मम ।
अधुना श्रीतुमिच्छामि
वह्नेरुत्पत्तिमीप्सिताम् ॥
सूत उवाच ।
एकदा सृष्टिकाले च
ब्रह्मानन्तमहेश्वराः ।
श्वेतद्वीपं ययुः सर्व्वे द्रष्टुं विष्णुं
जगत्पतिम् ॥
परस्परञ्च संभाषां कृत्वा
सिंहासनेषु च ।
ऊषुः सर्व्वे सभामध्ये सुरम्ये पुरतो
हरेः ॥
विष्णुगात्रोद्भवास्तत्र कामिन्यः
कमलाकलाः ।
तत्र नृत्यन्ति गायन्ति
विष्णुगाथाश्च सुस्वरम् ॥
तासाञ्च कठिनां श्रोणिं कठिनं
स्तनमण्डलम् ।
सस्मितं मुखपद्मञ्च दृष्ट्वा ब्रह्मा स
कामुकः ॥
मनो निवारणं कर्त्तुं न शशाक
पितामहः ।
वीर्य्यं पपात चच्छाद लज्जया
वाससा विभुः ॥
तद्वीर्य्यं वस्त्रसहितं प्रतप्तं
कामतापितः ।
क्षीरोदे प्रेरयामास सङ्गीते विरते
द्विज ॥

म्लेच्छवाचश्चार्य्यवाचः सर्व्वे ते दस्यवः स्मृताः ॥”
यथा च, रामायणे । २ । ५३ । २ ।
“अद्येयं प्रथमा रात्रिर्याता जनपदात् बहिः ।
या सुमन्त्रेण रहिता तां नोत्कण्ठितुमर्हसि ॥”)

**व(ब)हिःकुटीचरः**, पुं, (बहिःकुट्यां चरतीति ।
चर + टः ।) कुलीरः । इति त्रिकाण्डशेषः ॥

**वहितः**, त्रि, (अवधीयते स्मेति । अव + धा + क्तः ।
अवस्यातो लोपः ।) अवहितः । इति द्विरूप-
कोषः ॥

**वहित्रं**, क्ली, (वहति द्रव्याणीति । वह + “अशित्रा-
दिभ्य इत्रोत्रौ ।” उणा० ४ । १७२ । इति इत्रः ।)
पोतः । तत्पर्य्यायः । वार्व्वटः २ । इति त्रिकाण्डशेषः ॥ (यथा, गीतगोविन्दे । १ । ५ ।
“प्रलयपयोधिजले धृतवानसि वेदं
विहितवहित्रचरित्रमखेदम् ॥”)

**वहित्रकं**, क्ली, (वहित्र + स्वार्थे कन् ।) जलयानम् ।
यथा, हेमचन्द्रे ।
“सांयात्रिकः पोतबणिक् यानपात्रं वहित्रकम् ।
वोहित्यं वहनं पोतः पोतवाहो नियामकः ॥”

**व(ब)हिर्द्वारं**, क्ली, (वहिःस्थं द्वारम् ।) तोरणम् ।
इत्यमरः ॥ (यथा, --
“धिगस्त्वेता विद्या धिगपि कविता धिक्सुजनता
वयो रूपं धिक् धिगपि च यशो निर्द्धनमतः ।
असौ जीयादेकः सकलगुणहीनोऽपि धनवान्

अन्यैरन्यथोक्तानि यथा, --
“भ्राजको रञ्जकश्चैव क्लेदकः स्नेहकस्तथा ।
धारको बन्धकश्चैव द्रावकाख्यश्च सप्तधा ।
व्यापकः पावकश्चैव श्लेष्मको दशमः स्मृतः ॥”
शरीरस्थवह्नेः स्थानानि यथा, --
“वह्नयो दोषदूष्येषु संलीना दश देहिनः ॥”
दोषदूष्यौ यथा, --
“वातपित्तकफा दोषा दूष्याः स्युः सप्त धातवः ॥”
इति सारदातिलकः ॥
तत्र निषिद्धकर्म्माणि यथा, --
“नाशुद्धोऽग्निं परिचरेत् न देवान् कीर्त्तयेदृषीन् ।
न चाग्निं लङ्घयेद्धीमान् नोपदध्यादधः क्वचित् ॥
न चैनं पादतः कुर्य्यात् मुखेन न धमेद्बुधः ।
अग्नौ न निःक्षिपेदग्निं नाद्भिः प्रशमयेत्तथा ॥
न वह्निं मुखनिश्वासैर्ज्वालयेन्नाशुचिर्बुधः ।

जलादुत्थाय पुरुषः प्रज्वलन् ब्रह्मतेजसा ।
उवास ब्रह्मणः क्रोडे लज्जितस्य च संसदि ॥
एतस्मिन्नन्तरे रुष्टो जलादुत्थाय सत्वरः ।
प्रणम्य वरुणो देवान् बालं नेतुं समुद्यतः ॥
बालो दधार ब्रह्माणं बाहुभ्याञ्च भयाद्रुदन् ।
किञ्चिन्नोवाच जगतां विधाता लज्जया द्विज ॥
बालकस्य करे धृत्वा चकाराकर्षणं रुषा ।
वरुणश्च सभामध्ये तं चिक्षेप प्रजापतिः ॥
पपात दूरतो देवो वरुणो दुर्ब्बलस्तथा ।
मूर्च्छां संप्राप मृतवत् कोपदृष्ट्या विधेरहो ॥
चेतनं कारयामासामृतदृष्ट्याच शङ्करः ।
संप्राप्य चेतनां तत्र तमुवाच जलेश्वरः ॥
वरुण उवाच ।
बालो जले समुद्भूतो मम पुत्त्रोऽयमीप्सितः ।
अहं गृहीत्वा यास्यामि ब्रह्मा मां ताडयेत्
कथम् ॥
ब्रह्मोवाच ।
बालकः शरणापन्नो मयि विष्णो महेश्वर ।
कथं दास्यामि भीतञ्च रुदन्तं शरणागतम् ॥
शरणागतदीनार्त्तं यो नं रक्षेदपण्डितः ।
पच्यते निरये तावद् यावच्चन्द्रदिवाकरौ ॥
उभयोर्व्वचनं श्रुत्वा प्रहस्य मधुसूदनः ।

| | | |
|---|---|---|
| वहिद्वरि यस्मात्तृणलभसमाः सन्ति गुणिनः ॥”<br>इत्युद्भटः ॥) | | उवाच सर्व्वतत्त्वज्ञः सर्व्वेशश्च यथोचितम् ॥<br>भगवानुवाच ।<br>दृष्ट्वा सुकामिनीश्रोणिं वीर्य्यं धातुः पपात तत् ।<br>लज्जया प्रेरयामास क्षीरोदे निर्म्मले जले ॥<br>ततो वभूब बालश्च धर्म्मतो विधिपुत्त्रकः ।<br>क्षेत्रजश्च सुतः शास्त्रे वरुणस्यापि गौणतः ॥<br>महादेव उवाच ।<br>यो विद्यायोनिसम्बन्वो वेदेषु च निरूपितः ।<br>शिष्ये पुत्त्रे च समता चेति वेदविदो विदुः ॥ |

मन्त्रं ददातु वरुणो विद्याञ्च बालकाय च ।
पुत्त्रो विधातुर्व्वह्निश्च शिष्यश्च वरुणस्य च ॥
विष्णुर्द्ददातु बालाय दाहिकां शक्तिमुल्वणाम् ।
सर्व्वदग्धो हुताशश्च निर्व्वाणो वरुणेन च ॥
विष्णुश्च दाहिकां शक्तिं ददौ तस्मै शिवाज्ञया ।
मन्त्रं विद्याञ्च वरुणो रत्नमालां मनोहराम् ॥
क्रोडे कृत्वा च तं बालं चुचुम्ब मायया सुरः ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे वह्न्युत्पत्तिर्नाम
१३० अध्यायः ॥ * ॥
तद्दाहनिवारणौषधानि
यथा, --
“सामुद्रसैन्धवयवा विद्युद्दग्धा च मृत्तिका ।
तयानुलिप्तं यद्वेश्म नाग्निना दह्यते नृप ! ॥”
इति मात्स्ये राजधर्म्मे राजरक्षानाम
१९३ अः ॥
अग्निवैकृत्यं तच्छान्तिश्च यथा, --
“अनग्निर्दीप्यते यत्र राष्ट्रे यस्य निरिन्धनः ।
न दीप्यते चेन्धनवान् स राष्ट्रः पीड्यते नृपैः ॥
प्रज्वलेदप्सु मासं वा तथार्द्धञ्चापि किञ्चन ।
प्रासादतोरणद्वारं नृपवेश्म सुरालयम् ॥
एतानि यत्र दह्यन्ते तत्र राजभयं भवेत् ।
विद्युता वा प्रदह्यन्ते तत्रापि नृपतेर्भयम् ॥
धूमश्चानग्निजो यत्र तत्र विद्यान्महद्भयम् ।
विनाग्निं विस्फुलिङ्गाश्च दृश्यन्ते यत्र कुत्रचित् ॥
त्रिरात्रोपोषितश्चात्र पुरोधाः सुसमाहितः ।
गोरोचना भृङ्गराजं चूर्णं कृत्वा घृतं समम् ।
दिव्यस्तम्भश्च पीत्वा स्यान्मन्त्रेणानेन वै तथा ॥”
ॐ अग्निस्तम्भनं कुरु । इति गारुडे १८६
अध्यायः ॥ (दैत्यविशेषः । यथा, महाभारते ।
१२ । २२७ । ५० ।
“वाणः कार्त्तस्वरो वह्निर्विश्वदंष्ट्रोऽथ नैरृतिः ॥”
मित्रविन्दागर्भजातः कृष्णस्य पुत्त्रविशेषः ।
यथा,
भागवते । १० । ६१ । १६ ।
“महांशः पावनो वह्निर्मित्रविन्दात्मजाः क्षुधिः ॥”
तुर्व्वसुपुत्त्रः । यथा, हरिवंशे । ३२ । ११७ ।
“तुर्व्वसोस्तु सुतो वह्निर्गोभानुस्तस्य चात्मजः ॥”
कुकुरपुत्त्रः । यथा, भागवते । ९ । २४ । १९ ।
“कुकुरस्य सुतो वह्निर्विलोमा तनयस्ततः ॥”)

**वह्निकरी**, स्त्री, (वह्निं देहस्थवह्निं करोतीति ।
कृ + टः । ङीप् ।) धात्रीश्वरी । इति शब्द-
चन्द्रिका ॥ धाइ फुल इति भाषा ॥

**वह्निकाष्ठं**, क्ली, (वह्निवत् दाहकं काष्ठम् ।)
दाहागुरुः । इति राजनिर्घण्टः ॥

**वह्निगन्धः**, पुं, (वह्निना वह्निसंयोगेन दहनेन
गन्धो यस्य ।) यक्षधूपः । इति शब्दचन्द्रिका ॥

**वह्निगर्भः**, पुं, (वह्निर्गर्भे यस्य ।) वंशः । इति
शब्दचन्द्रिका ॥

**वह्निगर्भा**, स्त्री, (वह्निरग्निर्गर्भे यस्याः ।) शमी-
वृक्षः । इति शब्दचन्द्रिका ॥

**वह्निचक्रा**, स्त्री, (वह्नेरिव चक्रं आवर्त्तबत् चिह्नं
यत्र ।) कलिकारीवृक्षः । इति भावप्रकाशः ॥

**वह्निज्वाला**, स्त्री, (वह्नेर्ज्वालेव दाहकत्वात् ।)
धातकी वृक्षः । इति राजनिर्घण्टः ॥ (तथास्य
पर्य्यायो यथा, --
“धातकी धातुपुष्पी च ताम्रपुष्पी च कुञ्जरा ।
सुभिक्षा बहुपुष्पी च वह्निज्वाला च सा

**वह्निबधूः**, स्त्री, (वह्नेर्बधूः ।) स्वाहा । इति शब्द-
रत्नावली ॥

**वह्निबीजं**, क्ली, (वह्नेर्बीजम् ।) रंबीजम् । इति
तन्त्रम् ॥ (वह्निदायकं बीजमस्य ।) निम्बू-
कम् । इति राजनिर्घण्टः ॥ (वह्नेर्बीजं वीर्य्यम् ।)
स्वर्णम् । इति हेमचन्द्रः ॥
तस्योत्पत्तिर्यथा, --
“एकदा सर्व्वदेवाश्च समूषुः स्वर्गसंसदि ।
तत्र कृत्वा च नृत्यञ्च गायन्त्यप्सरसां गणाः ॥
विलोक्य रम्भां सुश्रोणीं सकामो वह्निरेव च ।
पपात वीर्य्यं चच्छाद लज्जया वाससा तथा ॥
उत्तस्थौ स्वर्णपुञ्जश्च वस्त्रं क्षिप्त्वा ज्वलत्प्रभः ।
क्षणेन वर्द्धयामास स सुमेरुर्बभूव ह ॥
हिरण्यरेतसं वह्निं प्रवदन्ति मनीषिणः ।
इति ते कथितं सर्व्वं किं भूयः श्रोतुमिच्छसि ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे हिरण्योत्पत्ति-
र्नाम १३० अध्यायः ॥

**वह्निभोग्यं**, क्ली, (वह्नेरग्नेर्भोग्यं भोगार्हं हव्य-
त्वात् ।) घृतम् । इति शब्दचन्द्रिका ॥

**वह्निमन्थः**, पुं, (वह्नये अग्न्युत्पादनार्थं मथ्यते
इति । मन्थ + घञ् ।) गणिकारिकावृक्षः । इति
जटाधरः ॥ (अस्य पर्य्यायो यथा, --
“तेजोमन्थो हविर्मन्थो ज्योतिष्को पावकोऽरणिः ।
वह्निमन्थोऽग्निमन्थश्च मथनो गणिकारिका ॥”
इति वैद्यकरत्नमालायाम् ॥)

समिद्भिः क्षीरवृक्षाणां सर्षपैस्तु घृतेन च ॥
दद्यात् सुवर्णञ्च तथा द्विजेभ्यो
गाश्चैव वस्त्राणि तथा भुवञ्च ।
एवं कृते पापमुपैति नाशं
यदग्निवैकृत्यभवं द्विजेन्द्र ! ॥”
इति तत्रैवाद्भुतशान्तिरग्निवैकृत्यं नाम
२०५
अध्यायः ॥ * ॥ मुख्याग्नयो यथा, --
“गाहपत्यो दक्षिणाग्निस्तथैवाहवनीयकः ।
एतेऽग्नयस्त्रयो मुख्याः शेषाश्चोपसदस्त्रयः
॥”
इति वह्निपुराणे गणभेदनामाध्यायः ॥ *
॥
वह्निविप्रमध्यगमननिषेधो यथा, --
“द्वौ विप्रौ वह्निविप्रौ च
दम्पत्योर्गुरुशिष्ययोः ।
हलाग्रे च न गन्तव्यं ब्रह्महत्या पदे पदे ॥”
इति कर्म्मलोचनः ॥ * ॥
अपि च ।
“नाग्निब्राह्मणयोरन्तरा व्यपेयात् नाग्न्योर्न
ब्राह्मणयोर्न गुरुशिष्ययोरनुज्ञया तु
व्यपेयात् ।
इति तिथ्यादितत्त्वधृतवचनम्॥ * ॥
अथ वह्नि-
स्तम्भनम् ।
“मानुषस्य वसां गृह्य जलौकां तत्र पेषयेत्
।
हस्तौ तु लेपयेत्तेन अग्निस्तम्भनमुत्तमम्
॥
शाल्मलीरसमादाय स्वरमूत्रे निधाय तम्
।
अग्न्यागारे क्षिपेत्तेन अग्निस्तम्भनमुत्तमम्
॥
वायसी उदरं गृह्य मण्डूकवसया सह ।
गुडिकां कारयेत्तेन ततोऽग्निं प्रक्षिपेद्वशी ॥
एवमेतत्प्रयोगेण अग्निस्तम्भनमुत्तमम् ।
मण्डोतकवचायुक्तं मरीचं नागरं तथा ॥
चर्व्वित्वा च इमं सद्यो जिह्वया ज्वलनं
लिहेत् ॥
स्मृता ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**वह्निदमनी**, स्त्री, (दमयति शमयतीति । दम +
णिच् + ल्युः । ङीप् । वह्नेर्दमनी । अग्निदाह-
क्लेशप्रशमनकारित्वादस्यास्तथात्वम्।) अग्नि-
दमनीक्षुपः । इति राजनिर्घण्टः ॥

**वह्निदीपकः**, पुं, (वह्निं दीपयतीति । दीप + णिच्
+ ण्वुल् । वह्नेर्दीपक इति वा ।) कुसुम्भम् ।
इति शब्दरत्नावली ॥ (गुणादिविशेषोऽस्य
कुसुम्भशब्दे ज्ञेयः ॥)

**वह्निदीपिका**, स्त्री, (वह्नेर्जठरानलस्य दीपिका
उत्तेजिका ।) अजमोदा । इति राजनिर्घण्टः ॥

**वह्निनामा** [न्], पुं, (वह्नेर्नाम नाम यस्य ।)
चित्रकः । भल्लातकः । इति रत्नमाला ॥

**वह्निनी**, स्त्री, (वह्निं तद्वत्कान्तिं नयतीति । नी +
डः । गौरादित्वात् ङीप् ।) जटामांसी । इति
रत्नमाला ॥

**वह्निपुष्पी**, स्त्री, (वह्निरिव दाहकं रक्तवर्णं वा
पुष्पमस्याः । ङीप् ।) धातकी । इति राज-
निर्घण्टः ॥
अग्निमन्थः । इति राजनिर्घण्टः ॥

**वह्निमारकं**, क्ली, (वह्निं मारयति विनाशयतीति ।
मृ + णिच् + ण्वुल् ।) जलम् । इति
शब्द-
चन्द्रिका ॥

**वह्निमित्रः**, पुं, (वह्निर्मित्रं यस्य ।) वायुः । इति
शब्दचन्द्रिका ॥

**वह्निरेताः** [स्], पुं, (वह्नौ रेतो यस्य । अग्नि-
निषिक्तवीर्य्यत्वादेवास्य तथात्वम् ।)
शिवः ।
इति हलायुधः ॥

**वह्निलोहकं**, क्ली, (वह्निदेवताकं लोहकम् ।)
कांस्यम् । इति राजनिर्घण्टः ॥

**वह्निवर्णं**, क्ली, (वह्नेरिव रक्तो वर्णो यस्य ।)
रक्तो-
त्पलम् । इति शब्दचन्द्रिका ॥

**वह्निवल्लभः**, पुं, (वह्नेर्वल्लभः प्रियः उद्दीपकत्वात्
।)
सर्ज्जरसः । इति त्रिकाण्डशेषः ॥

**वह्निशिखं**, क्ली, (वह्निरिव शिखा यस्य ।) कुसु-
म्भम् । इत्यमरः ॥ (अस्य पर्य्यायो
यथा, --
“स्यात् कुसुम्भं वह्निशिखं
वस्त्ररञ्जकमित्यपि ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**वह्निशिखरः**, पुं, (वह्निरिव शिखरं यस्य ।)
लोचमस्तकः । इति शब्दरत्नावली ॥

**वह्निशिखा**, स्त्री, (वह्निरिव शिखा यस्याः ।)
फलिनी । इति धरणिः ॥ कलिकारी ।
धातकी ।
इति राजनिर्घण्टः ॥ (लाङ्गलिकी ।
लाङ्गलिया
विष इति ख्याता । तत्पर्य्यायो तथा, --
“गौरी लाङ्गलिकी दीप्ता हलिनी
गर्भघातिनी ।

**वह्निसंज्ञकः**, पुं, (वह्नेः संज्ञा संज्ञा यस्य । ततः

कन् ।) चित्रकः । इत्यमरः ॥

**वह्निसखः**, पुं, (वह्नेर्जठराग्नेः सखा । टच् समासे ।)

जीरकः । इति राजनिर्घण्टः ॥

(वह्नेः सखा ।)

वायुः । इति वह्निमित्रशब्ददर्शनात्

॥

**वह्यं**, क्ली, (वहतीति । वह + "अघ्न्यादयश्च ।"

उणा० ४ । १११ । इति यक्

प्रत्ययेन साधुः ।)

वाहनम् । इति हेमचन्द्रः ॥

(वहन्त्यनेनेति ।

वह + "वह्यं करणम् ।" ३ । १ ।

१०२ । इति

यत् ।) शकटम् । इत्युणादिकोषः

॥ (यथा,

अथर्व्ववेदे । ४ । २० । ३ ।

"सा भूमिमा रुरोहिथ वह्यं श्रान्ता

बधू-

रिव ॥")

**वह्या**, स्त्री, मुनिपत्नी । इत्युणादिकोषः ॥

**वा**, क सुखाप्तिगतिसेवासु । इति कविकल्पद्रुमः ॥

(चुरा०-पर०-सुखाप्तौ अक०-

अन्यत्र सक०-

सेट् ।) क, वापयति । इति

दुर्गादासः ॥

**वा**, ल गमनहिंसयोः । इति कविकल्पद्रुमः ॥

(अदा०-पर०-सक०-सेट् ।)

ओष्ठ्यादिरप्ययम्

मित्येके । गमनमिह

वायुकर्त्तृकमेव । ल, वाति

वायुः । हिंसनं सूचनमिति

चतुर्भुजः । इति

दुर्गादासः ॥

"स्याद्वंशरोचना वांशी तुगाक्षीरी तुगा शुभा ।

त्वक्क्षीरी वंशजा शुभ्रा वंशक्षीरी च वैणवी ॥"

इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**वाः** [र्], क्ली, (वार्य्यते तृषानेनेति । वृ + णिच् +

क्विप् । यद्वा, "वृञ वरणे । स्वार्थिकोऽण्

छान्दसः । तदन्तात् क्विप् । अणि लोपः । हल्-

ङ्यादिलोपः । रेफस्य विसर्जनीयः ।" इति

निघण्टौ देवराजयज्वा । १ । १२ । ८ ।)

जलम् । इत्यमरः ॥ (यथा, भागवते । ३ । १३ । १६

।

"सृजतो मे क्षितिर्व्वार्भिः प्लाव्यमाना रसा-

ङ्गता ॥")

**वाःकिटिः**, पुं, वारो जलस्य किटिः शूकरः ।

शिशुमारः । इति केचित् ॥

**वाःसदनं**, क्ली, (वारो जलस्य सदनम् ।) जला-

धारः । इति त्रिकाण्डशेषः ॥

**वाक्** [च्], स्त्री, (उच्यतेऽसौ अनया वेति । वच्

+ "क्विप् वचिप्रच्छीति ।" उणा० २ । ५७ ।

इति क्विप् दीर्घोऽसम्प्रसारणञ्च ।) वाक्यम् ।

(यथा, मनुः । २ । १५९ ।

"अहिंसयैव भूतानां कार्य्यं श्रेयोऽनुशासनम् ।

वाक् चैव मधुरा श्लक्ष्णा प्रयोज्या धर्म्म-

मिच्छता ॥")

सरस्वती । इत्यमरः ॥ (यथा, कथासरित्-

सागरे । १ । ३ ।

"प्रणम्य वाचं निःशेषपदार्थोद्द्योतदीपिकाम् ।

बृहत्कथायाः सारस्य संग्रहं रचयाम्यहम् ॥")

**वाकं**, त्रि, (वकस्येदमिति । वक + "तस्येदम् ।"

४ । ३ । १२० । इत्यण् ।) वकसम्बन्धि । वक-

स्येदं इत्यर्थे ष्णप्रत्ययेन निष्पन्नम् ॥ (क्ली, वकस्य

समूहः । "तस्य समूहः ।" ४ । २ । ३७ ।

इत्यण् । वकसमूहः ॥ उच्यतेऽसौ अनेनेति

वा । वच् + घञ् । वाक्यम् । यथा, उत्तरराम-

चरिते । १ । १ ।

"इदं कविभ्यः पूर्ब्बेभ्यो नमो वाकं प्रशास्महे ॥"

वेदभागविशेषः । यथा, महाभारते । १२ ।

"अवल्गुजो वाकुची स्यात् सोमराजी सुप-

र्णिका ।

शशिलेखा कृष्णफला सोमा पूतिफलीति

च ॥

सोमवल्ली कालमेषी कुष्ठघ्नी च प्रकीर्त्तिता

।

वाकुची मधुरा तिक्ता कटुपाका रसायनी

॥

विष्टम्भहृद्धिमा रुच्या सरा

श्लेष्मास्रपित्तनुत् ।

रूक्षा हृद्या श्वासकुष्ठमेहज्वरकृमिप्रणुत् ॥

तत्फलं पित्तलं कुष्ठकफानिलहरं कटु ।

केश्यं त्वच्यं

कृमिश्वासकासशोथामपाण्डुहृत् ॥"

इति भावप्रकाशः ॥

**वाकुलं**, क्ली, (वकुलस्येदमिति । वकुल + "तस्ये-

दम् ।" ४ । ३ । १२० । इत्यण् ।)

वकुलफलम् ।

अस्य गुणाः ।

"वाकुलं मधुरं ग्राहि दन्तस्थैर्य्यकरं परम्

॥"

इति राजवल्लभः ॥

**वाक्कीरः**, पुं, (वाचि कौतुकवाक्ये कीरः शुक इव

प्रियत्वात् ।) श्यालकः । इति

शब्दरत्नावली ॥

**वाक्छलं**, क्ली, (वाचा छलम् ।) वाक्यव्याजः ।

यथा । वचनविघातोऽर्थविकल्पोपपत्त्या

छलम् ।

तत्त्रिविधम् । वाक्छलम् ।

सामान्यच्छलम् ।

उपचारच्छलञ्च । अविशेषाभिहितेऽर्थे

वक्त्वभि-

प्रायादर्थान्तरकल्पनावाक्छलम् ॥ १ ॥

सम्भ-

वतोऽर्थस्यातिसामान्ययोगात्

असम्भूतार्थ-

**वा**, व्य, (वा + क्विप् ।) विकल्पः । (यथा, मनुः ।

२ । ११२ ।

"धर्म्मार्थौयत्र न स्यातां शुश्रूषा वापि तद्विधा ।

तत्र विद्या न वप्तव्या शुभं बीजमिवोषरे ॥")

उपमा । (इवार्थे । यथा, रघुः । १९ । ५१ ।

"व्योम पश्चिमकलास्थितेन्दु वा पङ्कशेषमिव घर्म्मपल्वलम् ॥")

वितर्कः । (यथा, महाभारते । १ । १५४ । २३ ।

"किं ते हिडिम्ब एतैर्वा सुखसुप्तैः प्रबोधितैः ।

मामासादय दुर्ब्बुद्धे तरसा त्वं नराशन ! ॥")

पादपूरणम् । (यथा, रामायणे । १ । २५ । ३ ।

"देवासुरगणान् वापि सगन्धर्व्वोरगान् भुवि ।

यैरमित्रान् प्रसह्याजौ वशीकृत्य जयिष्यसि ॥")

समुच्चयः । इति मेदिनी । वे, ७४ ॥ एवार्थः ।

इति विश्वः ॥ (यथा, किराते । ३ । १३ ।

"सुता न यूयं किमु तस्य राज्ञः सुयोधनं वा न गुणैरतीताः ॥")

**वांशः**, त्रि, वंशसम्बन्धी । वंशस्यायमित्यर्थेष्ण(अण्)

प्रत्ययेन निष्पन्नः ॥

**वांशिकः**, पुं, (वंशीवादनं शिल्पमस्येति । वंश +

ठक् ।) वंशीवादकः । इति जटाधरः ॥ (भार-

भूतान् वंशान् हरति वहति आवहति वा ।

"तद्धरति वहत्यावहति भाराद्वंशादिभ्यः ।"

४७ । २५ ।

"यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ।

गृणन्ति सत्यकर्म्माणं सत्यं सत्येषु सामसु ॥"

पुं, वकस्यावयवो विकारो वा । प्राणित्वादञ् ।

वकावयवविशेषः ॥)

**वाकुची**, स्त्री, (वातीति वा वायुस्तं कुचति सङ्को-

चयति पूतिगन्धित्वात् । कुच् + कः । गौरादि-

त्वात् ङीष् ।) वृक्षविशेषः । हाकुच इति

भाषा ॥ तत्पर्य्यायः । सोमराजी २ सोमवल्ली ३

सुवल्लिका ४ सिता ५ सितावरी ६ चन्द्रलेखा ७

चन्द्री ८ सुप्रभा ९ कुष्ठहन्त्री १० काम्बोजी ११

पूतिगन्धा १२ वल्गुला १३ चन्द्रराजी १४

कालमेषी १५ त्वग्जदोषापहा १६ कान्तिदा

१७ अवल्गुजा १८ चन्द्रप्रभा १९ । अस्या

गुणाः । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् ।

कृमिकुष्ठकफत्वग्दोषविषकण्डूस्वज्जूनाशित्वञ्च ।

इति राजनिर्घण्टः ॥ तत्पर्य्यायगुणाः ।

कल्पना सामान्यच्छलम् ॥ २ ॥

धर्म्मविकल्प-

निद्दशे अर्थसद्भावनिषेध उपचारच्छलम् ॥

३ ॥

इति गोतमसूत्रम् ॥

शक्यैकार्थशाब्दबोधतात्प-

र्य्यकशब्दस्य शक्त्या

अर्थान्तरतात्पर्य्यकत्वकल्प-

नया दूषणाभिधानं वाक्छललक्षणम् ।

यथा ।

नेपालादागतोऽयं नवकम्बलवत्त्वात् ।

इत्युक्ते

कुतोऽस्य नवसंख्यकाः कम्बलाः ॥ १ ॥

सामान्य-

विशिष्टसम्भवदर्थाभिप्रायेण उक्तस्य

सामान्य-

योगादसम्भवदर्थकल्पनया दूषणाभिधानं

सामान्यच्छलम् । यथा । ब्राह्मणोऽयं

विद्या-

चरणसम्पन्न इत्युक्ते ब्राह्मणत्वेन

विद्याचरण-

सम्पदं साधयति इति कल्पयित्वा परो

वदति

कुतो ब्राह्मणत्वेन विद्याचरणसम्पत् व्रात्ये

व्यभि-

चारात् ॥ २ ॥ शक्तिलक्षणयोरेकतरवृत्त्या

यः

प्रतिषेधः स उपचारच्छलम् । यथा ।

मञ्चाः

क्रोशन्ति इत्यत्र मञ्चस्था एव क्रोशन्ति न

तु

मञ्चाः । एवं अहं नित्य इति शक्त्या प्रयुक्ते

अमुकादुत्पन्नस्त्वं कथं नित्य इति

प्रतिषेधोऽप्युप-

चारच्छलम् ॥ ३ ॥ इति तट्टीका ॥ अपि

च ।

"सर्व्वेष्वर्थविवादेषु वाक्छले नावसीदति ।

पशुस्त्रीभूम्यृणादाने शास्योऽप्यर्थान्न

हीयते ॥"

इति व्यवहारतत्त्वम् ॥

**वाक्पतिः**, पुं, (वाचां पतिः ।) बृहस्पतिः ॥ इति

५ । १ । ५० । इति ठक् ।

भारभूतवंशहारके

तद्वाहके च त्रि ॥)

**वांशी**, स्त्री, (वंशे भवा + वंश + अण् । ङीष् ।)

वंशरोचना । इति राजनिर्घण्टः ॥

(तत्पर्य्यायो

यथा, --

"तुगाक्षीरी शुभा वांशी वंशजा

वंशलोचना ॥"

इति वैद्यकरत्नमाला ॥

शब्दरत्नावली ॥ (यथा, बृहत्संहितायाम् ।

८ । १५ ।

"उदगारोग्यसुभिक्षक्षेमकरो वाक्पतिश्चरन्

भानाम् ॥")

**वाक्पतिः**, त्रि, (वाचां पतिरिव पटुत्वात् ।)

उद्दामवचनः । इति रायमुकुटः ॥

अनवद्यो-

द्यमादिपटुवचनः । इति भरतः ॥ स्वबुद्ध्या वाक्यरचकः । इति सारसुन्दरी ॥ पटुवचनः । इति पदार्थकौमुदी ॥ व्यक्तवाग्जनः । इति नीलकण्ठः ॥ तत्पर्य्यायः । वागीशः २ । इत्यमरः ॥ अनवद्योद्यमवचाः ३ । इति जटाधरः ॥
"वाग्मी वाग्मिर्व्वावदूको वाचो युक्तिपटुस्तथा ।
वागीशो वाक्पतिश्चेति षडेते सुष्ठुवक्तरि ॥"
इति शब्दरत्नावली ॥
(यथा, हरिवंशे । २१५ । ३४ ।
"सम्भवं सर्व्वलोकस्य विदधाति स वाक्पतिः ॥")

**वाक्पारुष्यं**, क्ली, (वाचा कृतं पारुष्यम् ।)

अप्रियवाक्योच्चारणम् । तत्तु सप्तधाव्यसनान्तर्गतव्यसनविशेषः । यथा, --
"मृगयाक्षाः स्त्रियः पानं वाक्पारुष्यार्थदूषणे ।
दण्डपारुष्यमित्येतज्ज्ञेयं व्यसनसप्तकम् ॥"
इति हेमचन्द्रः ॥ * ॥
तल्लक्षणं नारदेनोक्तम् ।
"देशजातिकुलादीनामाक्रोशन्यङ्गसंयुतम् ।
यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते ॥"
देशादीना आक्रोशन्यङ्गसंयुतम् । उच्चैर्भाषणमाक्रोशः न्यङ्गमवद्यं तदुभययुक्तं यत्प्रतिकूलार्थं उद्वेगजननार्थं वाक्यं तद्वाक्पारुष्यं कथ्यते ॥ तस्य च दण्डतारतम्यार्थं निष्ठुरादिभेदेन त्रैविध्यमभिधाय तल्लक्षणं तेनैवोक्तम् ।
"निष्ठुराश्लीलतीव्रत्वात्तदपि त्रिविधं स्मृतम् ।
गौरवानुक्तमात्रस्य दण्डोऽपि स्यात् क्रमाद्गुरुः ॥
साक्षेपं निष्ठुरं ज्ञेयमश्लीलं न्यङ्गसंयुतम् ।
पतनीयैरुपाक्रोशैस्तीव्रमाहुर्म्मनीषिणः ॥" इति ॥
तत्र निष्ठुराक्रोशे स्ववर्णविषये दण्डमाह ।
"सत्यासत्यान्यथास्तोत्रैर्न्यूनाङ्गेन्द्रियरोगिणाम् ।
क्षेपङ्करोति चेद्दण्ड्यः पणानर्द्धत्रयोदश ॥
काणञ्चाप्यथवा खञ्जमन्यं वापि तथाविधम् ।
तथ्येनापि ब्रुवन् दाप्यो दण्डं कार्षापणावरम् ॥"
इति यन्मनुवचनं तदतिदुर्वृत्तवर्णविषयम् । यदा वैश्ये स्यादर्द्धपञ्चाशच्छूद्रे द्वादशको दमः ॥
बाहुग्रीवानेत्रसक्थिविनाशे वाचिके दमः ।
शत्यस्तदर्द्धिकः पादो नासाकर्णकरादिषु ॥
अशक्तस्तु वदन्नेव दण्डनीयः पणान् दश ।
तथा शक्तः प्रतिभुवं दाप्यः क्षेमाय तस्य तु ॥
पतनीयकृते क्षेपे दण्डो मध्यमसाहसः ।
उपपातकयुक्ते तु दाप्यः प्रथमसाहसः ।
त्रैविद्यनृपदेवानां क्षेप उत्तमसाहसः ।
मध्यमो जातिपूगानां प्रथमो ग्रामदेशयोः ॥"
इति मिताक्षरा ॥ * ॥
वाक्पारुष्ये अभियोगमनिस्तीर्य्य प्रत्यभियोजने प्रतिप्रसवो यथा, --
"कुर्य्यात् प्रत्यभियोगञ्च कलहे साहसेषु च ।"
वाक्पारुष्ये शस्त्रादिप्रहारेषु च यथा पूर्व्वमहमप्यनेनाक्रुष्टः शस्त्रेण हतः इत्यपराधाभावाय प्रत्यभियोगं कुर्य्यात् । इति व्यवहारतत्त्वम् ॥

**वाक्यं**, क्ली, (उच्यते इति । वच् + ण्यत् । "चजोः कु घिण्यतोः ।" ७ । ३ । ५२ । इति कुत्वम् । शब्दसंज्ञात्वात् "वचोऽशब्दसंज्ञायाम् ।" ७ । ३ । ६७ । इति निषेधो न ।) पदसमुदायः । इति व्याकरणम् ॥ तिङन्तचयः । सुबन्तचयः । कारकान्विता क्रिया । इत्यमरः । इह श्रुतिलोकयोस्त्रिविधं निरुक्तं वाक्यमुक्तम् । तिङ्सुबन्तयोश्चयः समुदायः कारकान्विता क्रिया च वाक्यम् । तिङ्शब्देन तिबादीनि साशीतिशतसंख्यकानि वचनानि उच्यन्ते । एवं सुप्-

अप्रियवाक्यभाषणनिषेधो यथा, --
"न हिंस्यात् सर्व्वभूतानि नानृतञ्च वदेत् क्वचित् ।
नाहितं नाप्रियं वाक्यं न स्तेनः स्यात् कदाचन ॥ * ॥
पाषण्डादिभिर्भाषणनिषेधो यथा, --
"पाषण्डिनो विकर्म्मस्थान् वामाचारांस्तथैव च ।
पञ्चरात्रान् पाशुपतान् वाङ्मात्रेणापि नार्च्चयेत् ॥"
इति कौर्म्मे उपविभागे १६ अध्यायः ॥ * ॥
शुभाशुभवाक्यानि यथा, --
"नैव राज्येन महता न वै वार्थस्य राशिभिः ।
प्राप्यते ज्ञानकथनं परलोकसुभाषितम् ॥
स्वर्गापवर्गसिद्ध्यर्थभाषितं यत् सुशोभनम् ।
वाक्यं मुनिवरैः शान्तैस्तद्विज्ञेयं सुभाषितम् ॥
रागद्वेषानृतक्रोधकामतृष्णानुसारियत् ।
वाक्त्यं निरयहेतुत्वात् तदभाषितमुच्यते ॥
संस्कतेनापि किं तेन मृदुना ललितेन वा ।
अविद्या रागवाक्येन संसारक्लेशहेतुना ॥
यत् श्रुत्वा जायते पुण्यं रागादीनाञ्च संक्षयः ।
निरुद्धमपि तद्वाक्यं विज्ञेयमतिशोभनम् ॥"
इति वह्निपुराणे वैष्णवधर्म्मे शुद्धिव्रतनामाध्यायः ॥ (अत्र वाक्यदोषो यथा, --

पुनः पुत्रादयो मात्रादीन् शपन्ति तदा शतं दण्डनीया इति तेनैवोक्तम् ।
"मातरं पितरं जायां भ्रातरं सुहृदं गुरुम् ।
आक्षारयन् शतं दाप्यः पन्थानञ्चाददद्गुरोः ॥"
इति च ॥
एतच्च सापराधेषु मात्रादिषु गुरुषु निरप-राधायाञ्च जायायां द्रष्टव्यम् ॥ * ॥ अश्लीला-क्षेपे दण्डमाह ।
"अभिगन्तास्मि भगिनीं मातरं वा तवेति ह ।
शपन् तन्दापयेद्राजा पञ्चविंशतिकं दमम् ॥
दण्डप्रणयनं कार्य्यं वर्णजात्युत्तराधरैः ।
प्रातिलोम्यापवादेषु द्विगुणत्रिगुणा दमाः ॥
वणानामानुलोम्येन तस्मादर्द्धार्द्धहानितः ॥" * ॥
मनुः ।
"शतं ब्राह्मणमाक्रुश्य क्षत्त्रियो दण्डमर्हति ।
वैश्योऽध्यर्द्धशतं द्वे वा शूद्रस्तु वधमर्हति ॥
पञ्चशद्ब्राह्मणो दण्ड्यः क्षत्त्रियस्याभिशंसने ।

शब्देन स्यादीन्येकविंशतिरुच्यन्ते द्वन्द्वात् परं
यः श्रूयते लभतेऽसौ प्रत्येकं अभिसम्बन्धमित्यन्त-
शब्द उभयोरपि सम्बध्यते । अत्र तिङन्तसमूहो
यथा । पचति भवति पाको भवति इत्यर्थः ।
एतच्छान्दसमेव । सुबन्तसमूहो यथा । प्रकृति-
सिद्धमिदं हि महात्मनाम् । धात्वर्थः क्रिया
कारकैः कर्त्रादिभिरन्विता सम्बन्धार्थां कारका-
न्विता अन्वितत्वञ्च क्रियाकारकाणां आकाङ्क्षा-
योग्यतासन्निधिवशात् ज्ञेयम् । तिङ्सुबन्तचया-
त्मकेऽपि सम्बद्धार्थता बोध्या असम्बद्धार्थस्याप्रयो-
गात् अतएव परस्पराभिसम्बन्धः पदसमूहो
वाक्यमिति वृद्धाः । कारकान्विता क्रिया यथा ।
देवदत्तो ग्रामं गच्छति । इति तट्टीकायां
भरतः ॥ * ॥ वाक्यस्वरूपमाह ।
"वाक्यं स्यात् योग्यताकाङ्क्षासत्तियुक्तः पदो-
च्चयः ।
वाक्योच्चयो महावाक्यमित्थं वाक्यं द्विधा मतम् ॥"
उक्तञ्च ।
"स्वार्थबोधसमाप्तानामङ्गाङ्गित्वव्यपेक्षया ।
वाक्यानामेकवाक्यत्वं पुनः संभूय जायते ॥"
इति ॥
अत्र वाक्यं यथा । शून्यं वासगृहमित्यादि ।
महावाक्यं यथा । रामायणमहाभारतरघु-
वंशादिः । इति साहित्यदर्पणे २ परिच्छेदः ॥ * ॥

"वाक्यदोषो नाम यथा खल्वस्मिन्नर्थे न्यूनमधि-
कमनथकमपार्थकं विरुद्धञ्चेति । तत्र हेतूदा-
हरणोपनयनिगमनानामन्यतमेनापि न्यूनं न्यूनं
भवति यद्वा बह्वपदिष्टहेतुकमेकेन साध्यत हेतुना
तच्च न्यूनं एतानि ह्यन्तरेण
प्रकृतोऽप्यर्थः ॥ प्रण-
श्येत ।" इति चरके
विमानस्थानेऽष्टमेऽध्याये ॥)

**वाक्ष**, इ काङ्क्षे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) इ, वाङ्क्षति । नमध्यपाठे-
नैवेष्टसिद्धौ इदनुबन्धो
वेदेषूच्चारणभेदार्थः ।
इति तट्टीकायां दुर्गादासः ॥

**वागरः**, पुं, (वाचा इयर्त्ति गच्छतीति । ऋ + अच् ।) वारकः । शाणः । निर्णयः । वाडवः ।
वृकः । मुमुक्षुः । पण्डितः ।
परित्यक्तभयः ।
इति हेमचन्द्रः ॥

**वागारुः**, त्रि, (वाचि आशावाक्ये आरुः कर्कट इव मर्म्मच्छेदकत्वात् ।) आशाहन्ता । यथा,
"आशां बलवतीं दत्त्वा यो हन्ति
पिशुनो जनः ।
स जीवासोऽपि वागारुर्द्रुणो दानुस्तु
दातरि ॥"
इति शब्दमाला ॥

**वागाशनिः**, पुं, बुद्धः । इति शब्दरत्नावली ॥

**वागीशः**, पुं, (वाचां ईशः ।) बृहस्पतिः । इति शब्द-
रत्नावली ॥ (यथा, बृहत्संहितायाम् । १७ । २७ ।
"अयं विशेषोऽभिहितो हतानां
कुजज्ञवागीशसितासितानाम् ॥"
ब्रह्मा । यथा, कुमारे । २ । ३ ।
"वागीशं वाग्भिरर्थ्याभिः
प्रणिपत्योपतस्थिरे ॥")

**वागीशः**, त्रि, (वाचामीशः ।) वाक्पतिः ।
सुष्ठुवक्ता इति यावत् । इत्यमरः ॥ (यथा,
महाभारते । १० । ७ । ४१ ।
"नित्यानन्दप्रमुदिता वागीशा
वीतमत्सराः ॥")

**वागीशा**, स्त्री, (वाचामीशा ।) सरस्वती । यथा,
"वागीशा यस्य वदने लक्ष्मीर्यस्य च वक्षसि ।
यस्यास्ते हृदये संवित् तं नृसिंहमहं भजे ॥"
इति श्रीमद्भागवतटीकायां श्रीधरस्वामी ॥

**वागीश्वरः**, पुं, (वाचामीश्वर इव ।) मञ्जुघोषः ।
इति त्रिकाण्डशेषः ॥ (जैनविशेषः । इति च
त्रिकाण्डशेषः । १ । १ । २३ ॥
बृहस्पतिः ।
ब्रह्मा । इति व्युत्पत्तिलब्धोऽर्थः ॥) वाचा-
मीश्वरे, त्रि । यथा, गारुडे १९६ अध्याये ।
"रुद्रामलकचूर्णं वै
मधुतैलसमन्वितम् ।
जग्ध्वा मासं युवा स्याच्च नरो वागीश्वरो
भवेत् ॥"

**वाग्दुष्टः**, त्रि, (वाचा शुद्धेऽपि वस्तुनि अशुद्ध-
रूपत्वदुर्व्वाक्येन दुष्टः ।) वाचा दोषयुक्तः ।
यथा, --
"वाग्भावदुष्टाश्च तथा दुष्टैश्चोपहतास्तथा ।
वाससा चावधूतानि वर्ज्यानि श्राद्धकर्म्मणि ॥"
इति श्राद्धतत्त्वम् ॥ * ॥
तदन्नभक्षणप्रायश्चित्तम् । तत्र शङ्खः ।
"वाग्दुष्टं भावदुष्टञ्च भाजने भावदूषिते ।
भुक्त्वान्नं ब्राह्मणः पश्चात् त्रिरात्रन्तु व्रती भवेत् ॥"
एतदभ्यासे व्रती यावकेन तत्र द्वादशपणा
देयाः । इति प्रायश्चित्तविवेकः ॥

**वाग्देवता**, स्त्री, (वाचां देवता ।) सरस्वती ।
यथा, --
"पञ्चाशल्लिपिभिर्व्विभक्तमुखदोःपन्मध्यवक्षः-
स्थलां
भास्वन्मौलिनिबद्धचन्द्रशकलामापीनतुङ्ग
स्तनीम् ।
मुद्रामक्षगुणं सुधाठ्यकलसं विद्याञ्च हस्ता-
म्बुजै-
र्विभ्राणां विशदप्रभां त्रिनयनां वाग्देवता-
माश्रये ॥"
इति तन्त्रसारः ॥

**वाग्देवी**, स्त्री, (वाचां देवी ।) सरस्वती । इति
त्रिकाण्डशेषः ॥ (यथा, राजतरङ्गिण्याम् ।
५ । १६३ ।
"द्विजस्तयोर्नायकाख्योगौरीशसुरसद्मनोः ।
चातुर्व्विद्यः कृतस्तेन वाग्देवी कुलमन्दि-
रम् ॥")

**वाग्मी**, [न्] त्रि, (प्रशस्ता वागस्त्यस्येति ।
"वाचो ग्मिनिः ।" ५ । २ । १२४ । इति
ग्मिनिः ।) वक्ता । इत्यमरः ॥ (यथा, काम-
न्दकीयनीतिसारे । ४ । १५ ।
"वाग्मी प्रगल्भः स्मृतिमानुदग्रो बलवान्
वशी ॥")
पटुः । इति मेदिनी । ने, १३० ॥

**वाग्मी**, [न्] पुं, (प्रशस्ता वागस्त्यस्येति । वाच् +

**वाङ्गती**, स्त्री, (स्तुतिरूपा वागस्त्यस्या इति ।
वाच् + मतुप् । ङीप् ।) नदीविशेषः । यथा, --
"हिमाद्रेस्तुङ्गशिखरात्प्रोद्भूता वाङ्गती नदी ।
भागीरथ्याः शतगुणं पवित्रं तज्जलं स्मृतम् ॥
तत्र स्नात्वा हरेर्लोकानुपस्पृश्य दिवस्पतेः ।
त्यक्त्वा देहं नरा यान्ति मम लोकं न
संशयः ॥"
इति वाराहे गोकर्णमाहात्म्ये जलेश्वरमाहात्म्य-
वणननामाध्यायः ॥

**वाङ्मयं**, त्रि, (वाक्स्वरूपम् । वाच् + मयट् ।)
वाक्यात्मकम् । यथा, --
"न्यरस्तजभ्नगैर्लान्तैरेभिर्द्दशभिरक्षरैः ।
समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥"
अपि च ।
"पद्यं गद्यमिति प्राहुर्व्वाङ्मयं द्विविधं बुधाः ।
प्रागुक्तलक्षणं पद्यं गद्यं संप्रति गद्यते ॥"
पद्यं यथा, --
"पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ।
वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत् ॥
सममर्द्धसमं वृत्तं विषमञ्चेति तत्त्रिधा ।
समं समचतुष्पादं भवत्यर्द्धसमं पुनः ॥
आदिस्तृतीयवद्यस्य पादस्तूर्य्यो द्वितीयवत् ।
भिन्नचिह्नचतुष्पादं विषमं परिकीर्त्तितम् ॥"
गद्यं यथा ।
"अपादः पदसन्तानो गद्यं तत्तु त्रिधा मतम् ।
चूर्णकोत्कलिकाप्रायवृत्तगन्धिप्रभेदतः ॥
अकठोराक्षरं स्वल्पसमासं चूर्णकं विदुः ।
तद्धि वैदर्भरीतिस्थं गद्यं हृद्यतरं भवेत् ॥
भवत्युत्कलिकाप्रायं समासाढ्यं दृढाक्षरम् ।
वृत्तैकदेशसम्बन्धाद्वृत्तगन्धि पुनः स्मृतम् ॥"
इति छन्दोमञ्जरी ॥ * ॥
वाङ्मयपापानि यया, --

**वागीश्वरी**, स्त्री, (वाचामीश्वरी ।) सरस्वती ।

इति त्रिकाण्डशेषः ॥ (यथा,
तन्त्रसारे । "वागी-
श्वरीं ऋतुस्नाताम् ॥")

**वागुजी**, स्त्री, सोमराजी । इत्यमरः । २ । ४ । ९ ॥

(यथा, वैद्यकचक्रपाणिसंग्रहे
कुष्ठाधिकारे ।
"घर्म्मसेवी कदुष्णेन वारिणा
वागुजीं पिबेत् ।
क्षीरभोजी त्रिसप्ताहात्
कुष्ठरोगाद्विमुच्यत ॥")

**वागुणः**, पुं, कर्म्मरङ्गः । इति शब्दमाला ॥

**वागुरा**, स्त्री, (वातीति । वा गतिबन्धनयोः +

"मद्गुरादयश्च ।" उणा० १ । ४२
। इति उरच्-
प्रत्ययेन गुगागमेन च साधुः ।)
मृगबन्धनार्थ-
जालविशेषः । इत्यमरः । २ । १०
। २६ ॥ (यथा,
कथासरित्सागरे । २१ । १६ ।
"श्वानः श्वभ्रा वने तस्मिंस्तस्य
वर्त्मसु वागुराः ॥")

**वागुरिकः**, पुं, (वागुरया चरतीति । वागुरा +

"चरति ।" ४ । ४ । ८ । इति ठक्
।) व्याधः ।
वागुरया मृगादीन् बध्नातिः यः ।
इत्यमरः ।
२ । १५ । ४ ॥ (यथा, रघुः । ९ ।
५३ ।
"श्वगणिवागुरिकैः प्रथमास्थितं
व्यपगतानलदस्यु विवेश सः ॥")

**वाग्गुदः**, पुं, (वाचा गोदते क्रीडतीवेति । गुद्

क्रीडायाम् + कः ।) पक्षिविशेषः ।
इति
त्रिकाण्डशेषः ॥ एतद्योनिकारणं
यथा, --
"कौषेयं तित्तिरिर्हृत्वा क्षौमं हृत्वा तु
दर्दुरः ।

ग्मिनिः ।) सुराचार्य्यः । इति मेदिनी । ने, १३०
॥
(पुरुवंशीयमनस्योः पुत्त्रविशेषः । यथा, महा-
भारते । १ । ९४ । ७ ।
"शक्तः संहननो वाग्मी सौवीरीतनयास्त्रयः ।
मनस्योरभवन् पुत्त्राः शूराः सर्व्वे महारथाः ॥")

**वाग्यः**, त्रि, (वाचं परिमितवाक्यं याति गच्छ-

तीति । या + कः ।) वाग्दरिद्रः । इति शब्द-
माला ॥ निर्व्वेदः । कल्यः । इत्यजयः ॥

**वाग्यतः**, त्रि, (वाचि वाक्ये यतः संयतः ।)

वाक्यसंयतः । यथा, --
"प्रत्येकं नियतं कालमात्मनो व्रतमादिशेत् ।
प्रायश्चित्तमुपासीनो वाग्यतस्त्रिसवनं स्पृशेत् ॥"
इति प्रायश्चित्ततत्त्वधृतशङ्खलिखितवचनम्॥

**वाग्यामः**, त्रि, अशक्त्यादिना वाचं यच्छति यः ।

इति सिद्धान्तकौमुदी ॥

**वाङ्कः**, पुं, समुद्रः । इति त्रिकाण्डशेषः ॥

"पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्व्वशः ।
असम्बन्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम्
॥"
तथा परुषवचनमपवादः पैशुन्यमनृतं वृथा-
लापो निष्ठुरवचनं इति वाङ्मयानि षट् ।
परेषां
देशजातिकुलविद्याशिल्परूपवृत्ताचार-
परिच्छदशरीरकर्म्मजीविनां प्रत्यक्षदोषवचनं
परुषम् ।
"यच्चान्यत् क्रोधसन्तापत्राससंजननं वचः
।
परुषं तच्च विज्ञेयं यच्चान्यच्च तथाविधम्
॥
चक्षुष्मानिति लुप्ताक्षं चाण्डालं ब्राह्मणेति च
।
प्रशंसानिन्दनं द्वेषात् परुषान्न विशिष्यते ॥"
तेषामेव परुषवचनानां परोक्षमुदाहरणं
अपवादः । गुरुनृपतिबन्धुभ्रातृमित्रसकाशे
अर्थोपघातार्थं दोषोपाख्यानं पैशुन्यम् ।
अनृतं द्विविधं असत्यमसंवादश्चेति ।
"देशराष्ट्रप्रसङ्गाच्च परार्थपरिकल्पनात् ।
नर्म्महासप्रसङ्गाच्च भाषणं व्यर्थभाषणम् ॥
गुह्याङ्गामेध्यसंज्ञानां भाषणं निष्ठुरं विदुः ।
यदन्यद्वा वचो नीचस्त्रीपुंसोर्मिथुनाश्रयम् ॥
इत्येवं षड्विकल्पस्य दुष्टवाक्यस्य
भाषणात् ।
इह चामुत्र च क्रमनर्थं प्रतिपद्यते ।"

कार्पासतान्तवं क्रौञ्चो गोधा गां
वाग्गुदो
गुडम् ॥”
इति मानवे १२ अध्यायः ॥

**वाग्गुलिः**, पुं, (वाचा गुडति रक्षतीति । गुड +

“इगुपधात् कित् ।” उणा० ४ ।
११८ । इति
इन् । सच कित् ।) ताम्बूली । राज्ञां
ताम्बूल-
दाता । इति शब्दमाला ॥

**वाग्गुलिकः**, पुं, (वाग्गुलि + स्वार्थे कन् ।)

ताम्बूलटः । इति त्रिकाण्डशेषः ॥

**वाग्दरिद्रः**, त्रि, (वाचि दरिद्र इव ।) मित-

भाषी । तत्पर्य्यायः । वाग्यः २ ।
इति शब्द-
माला ॥

**वाग्दलं**, क्ली, (वाचां दलमिव ।) ओष्ठाधरौ ।

इति त्रिकाण्डशेषः ॥

**वाग्दुष्टः**, पुं, (वाचा वाक्यमात्रेण दुष्टः ।)

व्रात्यः । इति जटाधरः ॥

प्रशंसया निन्दनं प्रशंसानिन्दनम् । अत्र चतु-
र्व्विधषड्विधयोरविरोधः ।
समक्षत्वासमक्षत्व-
भेदानादरेण पारुष्पापवादयोरैक्यात् निष्ठुरस्य
परुषान्तर्भावाच्च ।
असम्बद्धप्रलापव्यर्थभाष-
णयोः पर्य्यायत्वान्नार्थान्तरम् । इति तिथ्यादि-
तत्त्वम् ॥

**वाङ्मयी**, स्त्री, (वाङ्मय + + ङीप् ।) सरस्वती ।

इति केचित् ॥

**वाङ्मुखं**, क्ली, (वाचां मुखमिव ।) उपन्यासः ।

इत्यमरः । १ । ६ । ९ ॥

**वाचंयमः**, पुं, (वाचो वाक्यात् यच्छति विर-

मतीति । यम उपरमे + "वाचि यमो व्रते ।"
३ । २ । ४० । इति खच् ।
"वाचंयमपुरन्दरौ
च ।" ६ । ३ । ६९ । इति अमन्तत्वं निपा-
त्यते ।) मुनिः । इत्यमरः । २ । ७ । ४२ ॥ मौन-
व्रती । इति केचिदिति भरतः ॥ (यथा, छान्द-
ग्योपनिषदि । ५ । २ । ८ ।
"वाचंयमोऽप्रसाहः स यदि स्त्रियं पश्येत् समृद्धं
कर्म्मेति विद्यात् ॥")

**वाचः**, पुं, (वाचयति गुणानिति । वच् + णिच् +

अच् ।) मत्स्यविशेषः । वाचा इति भाषा ॥
(यथा, --
"ईलिषो जितपीयूषो वाचो वाचामगोचरः ।
"वाचकः पूजितो शेन प्रसन्नास्तस्य देवताः ॥"
तथा ।
"ज्ञात्वा पर्व्वसमाप्तिञ्च पूजयेद्वाचकं बुधः ।
आत्मानमपि विक्रीय य इच्छेत् सफलं क्रतुम् ॥"
तथा ।
"विस्पष्टमद्रुतं शान्तं स्पष्टाक्षरपदं तथा ।
कलस्वरसमायुक्तं रसभावसमन्वितम् ॥
बुध्यमानः सदात्यर्थं ग्रन्थार्थं कृत्स्नशो नृप ।
ब्राह्मणादिषु सर्व्वेषु ग्रन्थार्थं चार्पयेन्नृप ! ।
य एवं वाचयेद्ब्रह्मन् स विप्रो व्यास उच्यते ॥"
तथा ।
"सप्तस्वरसमायुक्तं काले काले विशाम्पते ।
प्रदर्शयन् रसान् सर्व्वान् वाचयेद्वाचको नृप ! ॥"
इति तिथ्यादितत्त्वम् ॥

**वाचनं**, क्ली, (वच् + णिच् + ल्युट् ।) पठनम् ।

यथा, --
"शुद्धे नानन्यचित्तेन पठितव्यं प्रयत्नतः ।
न कार्य्यासक्तमनसा कार्य्यं स्तोत्रस्य वाचनम् ॥"
इति वाराहीतन्त्रम् ॥
तथा ।
"दानवाचनान्वारम्भवरणव्रतप्रमाणेषु यजमानं
प्रतीयात् ॥" इति कात्यायनसूत्रम् ॥ (प्रति-
पादनम् । यथा, साहित्यदर्पणे १० परिच्छेदे ।
"शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाच-
नम् ॥")

**वाचनकं**, क्ली, (वाचनेन कायतीति । कै + कः ।)

प्रहेलिका । इति हारावली । १५२ ॥

**वाचसाम्पतिः**, पुं, (वाचसां सर्व्वविद्यारूपवाक्यानां

पतिः । अभिधानात् षष्ठ्या अलुक ।) बृह-
स्पतिः । इति शब्दरत्नावली ॥

**वाचस्पतिः**, पुं, (वाचः पतिः । "षष्ठ्याः पति-

पुत्त्रेति ।" ८ । ३ । ५३ । इति षष्ठीविसर्गस्य सः ।)
बृहस्पतिः । इत्यमरः । १ । ३ । २४ ॥ (यथा,
"नोद्वहेत् कपिलां कन्यां नाधिकाङ्गीं न रोगि-
णिम् ।
नालोमिकां नातिलोमां न वाचाटां न पिङ्ग-
लाम् ॥")

**वाचालः**, त्रि, (बहु कुत्सितं भाषते इति । वाच्

+ "आलजाटचौ बहुभाषिणि ।" ५ । २ । १२५ ।
इति आलच् ।) बहुकुत्सितभाषी । तत्पर्य्यायः ।
जल्पाकः २ वाचाटः ३ । इत्यमरः ॥ सुबहु-
भाषिण्यपि जल्पाकादयस्त्रयो वर्त्तन्ते वाचाटो
वाचालो जल्पाकः सुबहुभाषी स्यादिति
श्लोकार्द्धपर्य्यायि वोपालितः । नित्यप्रगल्भ-
वाचालामुपतिष्ठे सरस्वतीम् । इति मुरारि-
रिति तट्टीकायां भरतः ॥ (यथा, कथा-
सरित्सागरे । ४० । ३४ ।
"वाचालैः कलहः
क्लीवैस्त्रपाकृद्बाहुशालि-
नाम् ॥")

**वाचिकं**, त्रि, (वाच् + ठक् ।) वाचा कृतम् ।

यथा, --
"शरीरजैः कर्म्मदोषैर्याति स्थावरतां नरः ।
वाचिकैः पक्षिमृगतां
मानसैरन्त्यजातिताम् ॥"
इति प्रायश्चित्ततत्त्वम् ॥
अपि च ।
"कायिकं वाचिकञ्चैव मानसं यच्च दुष्कृतम् ।
एकजप्येन तत् सर्व्वं प्रणश्यति ममाग्रतः ॥"
इति शाम्बपुराणे सूर्य्यस्तोत्रम् ॥

रोहितो नो हितः प्रोक्तो मद्गुरो मद्गुरोः
प्रियः ॥”
इत्युद्भटः ॥)
अस्य गुणाः । स्वादुत्वम् । गुरुत्वम् ।
स्निग्धत्वम् ।
श्ले ष्मलत्वम् । वातपित्तनाशित्वञ्च ।
इति राज-
वल्लभः ॥

**वाचकः**, पुं, (वक्ति अभिधावृत्त्या बोधयत्यर्थान्

इति । वच् + ण्वुल् ।) शब्दः । यथा ।
शास्त्रे
शब्दस्तु वाचकः । इत्यमरः ॥ द्वे वाचके
।
प्रकृतिप्रत्ययद्वारेणार्थस्य वाचको
गवादिरूपः
शास्त्रे व्याकरणे तर्कादौ च शब्द उच्यते
। लोके
तु संस्वृतोऽसंस्कृतः शब्द उच्यते ।
वक्तीति
वाचकः णकः । इति भरतः ॥
तत्पर्य्यायः ।
यथा । शब्दाभिलापौ त्वभिधाभिधानं
वाचको ध्वनिः । ह्रासः कुहरितञ्चेति
त्रिकाण्ड-
शेषः ॥ * ॥ (तल्लक्षणं यदुक्तं
मुग्धबोधटीकायां
दुर्गादासः ।
“साक्षात् सङ्केतितं योऽर्थमभिधत्त स
वाचकः ॥ * ॥
वाचयतीति । वच् + णिच् + ल्वुल् ।)
कथकः ।
पुराणादिपाठकः । यथा, --
“ब्राह्मणं वाचकं
विद्यान्नान्यवर्णजमादरात् ।
श्रुत्वान्यवर्णजाद्राजन् वाचकान्नरकं
व्रजेत् ॥”
तथा ।
“देवार्च्चामग्रतः कृत्वा ब्राह्मणानां
विशेषतः ।
ग्रन्थिञ्च शिथिलं कुर्य्याद्वाचकः
कुरुनन्दन ! ।
कुमारे । २ । ३० ।
“वाचस्पतिरुवाचेदं प्राञ्जलिर्जलजासनम् ॥”
शब्दप्रतिपालके, त्रि । यथा, ऋग्वेदे । १० ।
१६६ । ३ ।
“वाचस्पते निषेधे मान्यथा मदधरं वदान् ॥”
“हे वाचस्पते वाचः शब्दस्य पालयितर्द्देव ॥”
इति तद्भाष्ये सायणः ॥)

**वाचा**, स्त्री, (वाच् + भागुरिमते टाप् ।) वाक् ।

इति त्रिकाण्डशेषः ॥ (यथा, कातन्त्रे ।
“वष्टि भागुरिरल्लोपञ्चावाप्योरुपसर्ग्गयोः ।
टापञ्चापि हलन्तानां क्षुधा वाचा निशा
गिरा ॥”
यथा च, पञ्चतन्त्रे । ४ । ४८ । “तत् श्रुत्वा
ब्राह्मणेन शुचीभूय तिसृभिर्वाचाभिः स्वजी-
वितार्द्धं ददौ ॥”)

**वाचाटः**, त्रि, (कुत्सितं बहु भाषते इति । वाच्

+ “आलजाटचौ बहुभाषिणि ।” ५ । २ । १२५
।
इति आटच् ।) वाचालः । इत्यमरः । ३ । १ ।
३६ ॥
(यथा, मनुः । ३ । ८ ।
अन्यच्च । कायिकं मानसञ्च नमस्कारं
हित्वा
आचार्य्येण कथं वाचिको नमस्कारः
कृतः ।
इति मुग्धबोधटीकायां दुर्गादासः ॥
(वागेव ।
वाक् + “वाचो व्याहृतार्थायाम् ।” ५ ।
४ । ३५ ।
इति ठक् । सन्देशोक्तौ, क्ली । इति
हारावली ।
१६६ ॥ यथा, राजतरङ्गिण्याम् । ६ ।
३५ ।
“भृत्यमेकं बणिग्वेश्म
प्राहिणोद्दत्तवाचिकम् ॥”)

**वाचिकः**, पुं, (वाचा निष्पन्नः । वाच् + ठक् ।)

वाक्यारम्भः । यथा, --
“आलापश्च विलापश्च संलापश्च
प्रलापकः ।
अनुलापोऽपलापश्च
सन्देशश्चातिदेशिकः ॥
अपदेशोपदेशौ च निर्द्देशो व्यपदेशकः ।
कीर्त्तिता वचनारम्भाद्द्वादशामी मनी-
षिभिः ॥”
इत्युज्ज्वलनीलमणिः ॥

**वाचिकपत्रं**, क्ली, (वाचिकस्य सन्देशस्य पत्रम्
।)

लिपिः । संवादपत्रम् । इति केचित् ॥

**वाचिकहारकः**, पुं, (वाचिकस्य सन्देशस्य

हारकः ।) लेखनम् । इति त्रिकाण्डशेषः
॥
(दूतः । इति व्युत्पत्तिलब्धोऽर्थः ॥)

**वाचोयुक्तिः**, त्रि, (वाचि वाक्ये युक्तिर्यस्य ।)
वाग्मी ।

इत्यमरटीकायां रामाश्रमः ॥ (स्त्री,
वाचो
वचसो युक्तिः । “वाग्दिक्पश्यद्भ्यो
युक्तिदण्ड-
हरेषु ।” ६ । ३ । २१ । इत्यस्य
वार्त्तिकोक्त्या
षष्ठ्या अलुक् । वाग्दर्शितन्यायः ॥)

| | | |
|---|---|---|
| पुनर्ब्बध्नीत तत् सूत्रं न मुक्त्वा धारयेत् क्वचित् ॥<br>हिरण्यं रजतं गाश्च तथा कांस्योपदोहनाः ।<br>दत्त्वा तु वाचकायेह श्रुतस्याप्नोति तत्फलम् ॥”<br>कांस्योपदोहनाः कांस्यक्रोडाः । | | **वाचोयुक्तिपटुः**, त्रि, (वाचोयुक्तौ वाक्दर्शित-न्याये पटुः ।) वाग्मी । इत्यमरः । ३ । १ । ३ ॥ |

**वाच्यं**, त्रि, (उच्यते इति । वच् + ण्यत् । "वचो-

ऽशब्दसंज्ञायाम् ।" इति न कुत्वम् ।) कुत्-
सितम् । हीनम् । वचनार्हम् । इति मेदिनी ।
ये, ५५ ॥ (यदुक्तम् ।
"शत्रोरपि गुणा वाच्या दोषा वाच्या गुरो-
रपि ॥")
शक्यम् । यथा, --
"न चाल्पत्वबहुत्वाभ्यां प्रयोगाणां विशिष्यते
।
वाच्यवाचकभावोऽयमक्षपादादिशब्दवत्॥
विभीतकेऽप्यक्षशब्दो यद्यप्यल्पैः प्रयुज्यते ।
तथापि वाचकस्तस्य ज्ञायते शकटाङ्गवत् ॥"
इति मलमासतत्त्वधृतभट्टवार्त्तिकवचनम्॥
अपि च ।
"अर्थो वाच्यश्च लक्ष्यश्च व्यङ्ग्यश्चेति त्रिधा
मतः ।"
एषां स्वरूपमाह ।
"वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया
मतः ।
व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य
शक्तयः ॥"
इति साहित्यदर्पणे २ परिच्छेदः ॥

**वाच्यं**, क्ली, (वच् + ण्यत् ।) प्रतिपादनम् । दूष-

णम् । इति धरणिः ॥ (यथा, --
"परवाच्येषु निपुणः सर्व्वो भवति सर्व्वदा ॥")

**वाछ**, इ कामे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

सक०-सेट् ।) इ, वाञ्छयते । इति दुर्गादासः
॥

**वाजं**, क्ली, घृतम् । (यथा, वाजसनेयसंहिता-

याम् । ९ । १ ।
"वाचस्पतिर्वाजं नः स्वदतु ॥")
यज्ञः । अन्नम् । (यथा, ऋग्वेदे । ४ । २२ । ३
।
"यो देवो देवतमो जायमानो
महो वाजेभिर्महद्भिश्च शुष्मैः ॥"
"वाजेभिरन्नैः ।" इति तद्भाष्ये सायणः ॥)
वारि । इति मेदिनी । जे, १४ ॥ (संग्रामः ।

**वाजसनेयः**, पुं, जनमेजयकृतवेदार्थग्रन्थः । स तु

वैशम्पायनशापाद्युच्छन्नः । इति
मत्स्यपुराणम् ॥
(वाजसनेः सूर्य्यस्य छात्रः । वाजसनि +
ढक् ।
याज्ञवल्क्यः । यथा, बृहदारण्यके ।
"आदित्या-
नीमानि शुक्लानि यजूंषि वाजसनेयेन
याज्ञ-
वल्क्येनाख्यायन्ते ॥")

**वाजसनेयी**, [न्] पुं, (वाजसनेयेन प्रोक्तं वेदमस्त्य-

स्येति । इनिः ।) यजुर्व्वेदी । यथा, --
"आर्षक्रमेण सर्व्वत्र शूद्रा वाजसनेयिनः ॥"
इति महाजनपरिगृहीतवचनात्
यजुर्व्वेदविधि-
नैव कर्म्म कुर्य्युः । इति मलमासतत्त्वम् ॥
(यथा,
हरिवंशे । १४० । २ ।
"ब्राह्मणो याज्ञवल्क्यस्य शिष्यां
धर्म्मगुणान्वितः ।
ब्रह्मदत्तेति विख्यातो विप्रो वाजसनेयिनाम्
॥")

**वाजिगन्धा**, स्त्री, (वाजिनो घोटकस्य गन्धोऽस्त्यस्या-

मिति । अच् । टाप् ।) अश्वगन्धा । इति
रत्न-
माला ॥ (यथा, सुश्रुते चिकित्सितस्थाने
३७
अध्याये ।
"सरला गुरुविल्वाम्बु वाजिगन्धाग्नि-
वृद्धिभिः ॥")

**वाजिदन्तः**, पुं, (वाजिनां दन्त इव पुष्पं यस्य ।)

वासकः । इति रत्नमाला ॥

**वाजिदन्तकः**, पुं, (वाजिदन्त एव । स्वार्थे कन् ।)

वासकः । इत्यमरः । २ । ४ । १०३ ॥

**वाजिनं**, क्ली, आमिक्षामस्तु । इति हेमचन्द्र-

चक्षुष्यं कटुकञ्चोष्णमीषद्वातापहारकम्
॥"
तद्भूतगुणाः ।
"अश्वासर्पिस्तु कटुकं मधुरञ्च
कषायकम् ।
ईषद्दीपनदं मूर्च्छाहारि वाताल्पदं गुरु
॥"
इति राजनिर्घण्टः ॥ * ॥
अपि च ।
"रूक्षोष्णं वडवाक्षीरं बल्यं
श्वासानिलापहम् ।
अम्लं कटु लघु स्वादु सर्व्वमैकशफं
तथा ॥"
इति भावप्रकाशः ॥

**वाजिपृष्ठः**, पुं, (वाजिनः पृष्ठमिव आकृति-

रस्येति ।) अम्लानवृक्षः । इति
शब्दचन्द्रिका ॥

**वाजिभक्षः**, पुं, (वाजिभिर्भक्ष्यते इति । भक्ष +

कर्म्मणि घञ् ।) चणकः । इति
राजनिर्घण्टः ॥
(विवरणमस्य चणकशब्दे ज्ञातव्यम् ॥)

**वाजिभोजनः**, पुं, (वाजिभिर्भोज्यते इति । भुज् +

कर्म्मणि ल्युट् ।) मुद्गः । इति
राजनिर्घण्टः ॥

**वाजिमान्** [त्], पुं, पटोलः । इति रत्नमाला ॥

**वाजिशाला**, स्त्री, (वाजिनां शाला गृहम् ।)

घोटकगृहम् । आस्तवल् इति आरवी
भाषा ॥
तत्पर्य्यायः । मन्दुरा २ । इत्यमरः ॥
(यथा,
राजतरङ्गिण्याम् । ४ । १६६ ।
"काम्बोजानां वाजिशाला जायन्ते स्म
हयोज्-
झिताः ॥")

**वाजी** [न्] पुं, (वाजी वेगोऽस्त्यस्येति । वाज +

यथा, ऋग्वेदे । ५ । ३५ । १ ।
"अस्मभ्यं चर्षणीसहं सस्निं वाजेषु दुष्टरम् ॥"
बलम् । यथा, तत्रैव । ५ । ८५ । २ ।
"वनेषु व्यन्तरिक्षं ततान वाजमर्व्वत्सु पय उस्रियासु ॥")

**वाजः**, पुं, शरपक्षः । इत्यमरः । २ । ८ । ८७ ॥

(यथा, भागवते । १० । ५९ । १६ ।
विचित्रवाजैर्निशितैः शिलीमुखैः ॥")
निस्वनः । पक्षः । वेगः । इति मेदनी । जे, १६ ॥
मुनिः । इति विश्वः ॥

**वाजपेयं**, क्ली पुं, (वाजमन्नं घृतं वा पेयमत्रेति ।)

यागविशेषः । इत्यमरभरतौ ॥ स तु श्रौतसप्त-संख्यान्तर्गतपञ्चमयागः । यथा । अग्निष्टोमो-ऽत्यग्निष्टोमो उकथ्यः षोडशी वाजपेयश्च । इत्याश्वलायनसूत्रम् ॥ ऐनः पौण्डरीकश्चेति सप्तयागाः ॥

**वाजभोजी** [न्], पुं, (वाजं भुङ्क्त इति । भुज +

णिनिः ।) वाजपेययागः । इति शब्दरत्ना-वली ॥

त्रिकाण्डशेषौ ॥ छानार जल इति भाषा ॥
(यथा, वाजसनेयसंहितायाम् । १९ । २१ ।
"सोमस्य रूपं हविष आमिक्षा वाजिनं मधु ॥"
अस्य गुणाः प्रस्तुतिनियमश्च यथा, --
"दध्ना तक्रेण वा नष्टं दुग्धं बद्धं सुवाससा ।
नष्टदुग्धभवन्नीरं मोरटञ्जेज्जटोऽब्रवीत् ॥
मुखशोषतृषादाहरक्तपित्तज्वरप्रणुत् ।
लघुर्बलकरो रुच्यो मोरटः स्यात् सितायुतः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
हविः । यथा, वाजसनेयसंहितायाम् । २९ । १ ।
"वाजी वहन् वाजिनम् ।"
"वाजिनं हविः ।" इति तद्भाष्ये महीधरः ॥ * ॥
पुं, अर्थः । यथा, ऋग्वेदे । १० । ७१ । ५ ।
"नैनं हिन्वन्त्यपि वाजिनेषु ॥"
"वाक् इना ईश्वरा येषाम् ।" इति सायणः ॥)

**वाजिनी**, स्त्री, अश्वगन्धा । घोटकी । शेषस्य

पर्य्यायः । वडवा २ वामी ३ प्रसूका ४ आर्त्तवी ५ । अस्याः क्षीरगुणाः ।
"अश्वाक्षीरन्तु रूक्षाम्लं लवणं दीपणं लघु ।
देहस्थैर्य्यकरं बल्यं गौरवं कान्तिकृत् परम् ॥"
तद्दधिगुणाः ।
"आश्वं दधि स्यान्मधुरं कषायं
कफार्त्तिमूर्च्छामयहारिरूक्षम् ।
वाताल्पदं दीपनकारि नेत्र-
दोषापहं तत् कथितं पृथिव्याम् ॥" * ॥
तन्नवनीतगुणाः ।
"आश्वन्तु नवनीतं स्यात् कषायं कफकासजित् ।

इनिः ।) घोटकः । (यथा, रघुः । ३ । ४३ ।
"शतैस्तमक्ष्णामनिमेषवृत्तिभि-
र्हरिं विदित्वा हरिभिश्च वाजिभिः ॥"
वाजः पक्षोऽस्त्यस्येति ।) बाणः । पक्षी । इत्य-
मरः ॥ वासकः । इति शब्दरत्नावली ॥ (वजति
गच्छतीति । वज् + णिनिः । त्रि, चलनवान्
यथा, वाजसनेयसंहितायाम् । २९ । १ ।
"वाजी वहन्वाजिनं जातवेदो देवानां वक्षि-
प्रियमासधस्थम् ॥"
"वजति वाजी । वजगतौ चलनवान् ।" इति
तद्भाष्ये महीधरः ॥ * ॥
वाजमन्नमस्यास्तीति
अन्नवान् । यथा, ऋग्वेदे । ३ । २ । १४ ।
"तमीमहे नमसा वाजिनं बृहत् ॥"
"वाजिनं अन्नवन्तम् ।" इति तद्भाष्ये सायणः ॥
वाजः पक्षोऽस्त्यस्येति । पक्षविशिष्टः । यथा,
भागवते । ४ । ७ । १६ ।
"मुष्णंस्तेज उपानीतस्तार्क्ष्येण स्तोत्र-बाजिना ॥")

**वाजीकरणं**, क्ली, (अवाजी वाजीव क्रियतेऽनं-

नेति । कृ + ल्युट् । अभूततद्भावे च्विः ।) वीर्य्य-
वृद्धिकरम् । इति राजनिर्घण्टः ॥ वाजी-
करणद्रव्यस्य लक्षणमाह ।
"यद्‌द्रव्यं पुरुषं कुर्य्यात् वाजिवत् सुरतक्षमम्
तद्वाजीकरमाख्यातं मुनिभिर्भिषजां वरैः ॥"
अत्र प्रसङ्गात् क्लैवस्य लक्षणं संख्या निदान-

|  |  | श्चाह ।<br>“क्लीवः स्यात् सुरताशक्तस्तद्भावः क्लैव्यमुच्यते ।<br>तच्च सप्तविधं प्रोक्तं निदानं तस्य कथ्यते |
| --- | --- | --- |

तैस्तैभविरहृद्यैस्तु रिरंसोर्मनसि क्षते ।
ध्वजः पतत्यतो नृणां क्लैव्यं समुपजायते ॥
द्वेष्यस्त्रीसंप्रयोगाच्च क्लैव्यं तन्मानसं स्मृतम् ॥"
तैस्तैभविर्भयशोकक्रोधादिभिः । अहृद्यैः हृद-
याहितैः दुःखदत्वात् । क्षते पीडिते अस्वस्थी-
कृत इति यावत् । ध्वजः शिश्नः । पतति न
तून्न-
मति । संप्रयोगो मैथुनम् ॥ १ ॥
"कटुकाम्लोष्णलवणैरतिमात्रोपसेवितैः ।
पित्ताच्छुक्रक्षयो दृष्टः क्लैव्यं तस्मात् प्रजायते ॥"
कटुकादिनातिमात्रेण प्रवृद्धेन पित्तेन शुक्रस्य
दग्धत्वात् क्लैव्यं भवति । पित्तजमेतद्द्विती-
यम् ॥ २ ॥
"अतिव्यवायशीलो यो न च बाजीक्रियारतः ।
ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुकम् ॥"
शुक्रक्षयजं तृतीयम् ॥ ३ ॥
"महता मेढ्ररोगेण चतुर्थी क्लीवता भवेत् । ४ ।
वीर्य्यवाहिशिराछेदान्मेहनानुन्नतिर्भवेत् ॥ ५ ॥
बलिनः क्षुब्धमनसो निरोधाद्ब्रह्मचर्य्यतः ।
षष्ठं क्लैव्यं स्मृतं तत्तु शुक्रस्तम्भनिमित्तकम् ॥"
बलिनः पुष्टस्य पुरुषस्य क्षुब्धमनसः कामात्
सञ्चलितस्य । मनसः ब्रह्मचर्य्यतो निरोधात्
क्लैव्यं भवति ॥ ६ ॥
"जन्मप्रभृति यत् क्लैव्यं सहजं तद्धि सप्तमम् ॥" ७
असाध्यं क्लैव्यमाह ।
"असाध्यं सहजं क्लैव्यं मर्म्मच्छेदाच्च यद्भवेत् ।"
मर्म्मच्छेदात् वीर्य्यवाहिशिराच्छेदात् ॥" * ॥
अथ क्लैव्यस्य चिकित्सायां वाजीकरणविधि-
माह ।
"नरो वाजीकरान् योगान् सम्यक् शुद्धौ
निरामयः ।
सप्तत्यन्तं प्रकुर्व्वीत वर्षाद्दूर्द्ध्वन्तु षोडशात् ॥
न च वै षोडशादर्व्वाक् सप्तत्याः परतो न च ।
आयुष्कामो नरः स्त्रीभिः संयोगं कर्त्तुमर्हति ॥

एकाग्रविंशतिदिनानि गदार्द्दितोऽपि
सोऽशीतिकोऽपि रमयेत् प्रमदा युवेव ॥
गवां बिरूढवत्मानां सिद्धं पयसि पायसम् ।
गोधूमचूर्णञ्च तथा सितामधुघृतान्वितम् ।
भुक्त्वा हृष्यति जीर्णोऽपि दशदारान्
व्रजत्यपि ॥"
अथ रसाला ।
"दध्नार्द्धाढकमीषदम्लमधुरंखण्डस्य
चन्द्रद्युतेः
प्रस्थं क्षौद्रपलञ्च पञ्च हविषः
शुण्ठ्याश्चतुर्माष-
कान् ।
एलामासचतुष्टयं मरिचतः कर्षं लवङ्गं तथा
धृत्वा शुक्लपटे शनैः करतलेनोन्मथ्य
विस्रा-
वयेत् ॥
मृद्भाण्डे मृगनाभिचन्दनरसस्पृष्टेऽगुरूद्धूपिते
कर्पूरेण सुगन्धिकं तदखिलं संलोड्य
संस्था-
पयेत् ।
स्वस्यार्थे मथुरेश्वरेण रचिता ह्येषा रसाला
स्वयं
भोक्तुर्मन्मथदीपनी सुखकरी कान्तेव नित्यं
प्रिया ॥ * ॥
गोक्षुरेक्षुरबीजानि वाजिगन्धा शतावरी ।
मुषली वानरीबीजं यष्टी नागवला वला ॥
एषां चूर्णं दुग्धसिद्धं गव्येनाज्येन भर्जितम् ।
सितया मोदकं कृत्वा भक्ष्यं वाजीकरं परम् ॥
चूर्णादष्टगुणं क्षीरं घृतं चूर्णसमं स्मृतम् ।
सर्व्वतो द्विगुणं खण्डं खादेदग्निबलं यथा ॥
वाजीकराणि भूरीणि संगृह्य रचितो यतः ।
तस्माद्बहुषु योगेषु योगोऽयं प्रवरो मतः ॥"
रतिवर्द्धनो मोदकः ॥ * ॥
"पिप्पलीलवणोपेते वस्ताण्डे घृतसाधिते ।
कच्छपस्याथ वा खादेत्ते तु वाजीकरे भृशम् ॥
पूगं दक्षिणदेशजं दशपलोन्मानं भृशं
कर्त्तयेत्

श्वेतं चन्दनमत्र रक्तमपि च
श्रीसङ्गपुष्पैः समम् ॥
सर्व्वञ्चेति पृथक् पृथक् पलमितं
संचूर्ण्य तत्र
क्षिपेत्
सूतं वङ्गभुजङ्गलोहगगनं सम्मारितं
स्वेच्छया ।
कस्तूरी घनसारचूर्णमपि च प्राप्तं यथा
प्रक्षिपेत्
पश्चादस्य तु मोदकान्
विरचयेद्बिल्वप्रमाणानथ ॥
तान् भोक्तादि सदा यथानलबलं
भुञ्जीत नाम्लं
रसं
पूर्व्वस्मिन्नशिते गते परिणतिं
प्राग्भोजनात्
भक्षयेत् ।
नित्यं श्रीरतिवल्लभाख्यकमिमंयः
पूगपाकं भजेत्
स स्याद्वीर्य्यविवृद्धिवृद्धमदनो वाजीव
शक्तो
रतौ ॥
दीप्ताग्निर्ब्बलवान् बली विरहितो हृष्टः
स पुष्टः
सदा
वृद्धो योऽपि युवेव सोऽपि रुचिरः
पूर्णेन्दुवत्
सुन्दरः ॥"
वसुगुणे अष्टगुणे । अञ्जलिरर्द्धशरावम्
। तुलार्द्धं
पञ्चाशत्पलमिताम् । संहिताः
सुश्रुताद्याः ।
नागवला गुरसकरी गुरखण्डी इति च
लोके ।
वला वहंलियार तस्या मूलत्वक् ।
चपला
पिप्पली । जातीपत्रकं जाइपत्री ।
विश्वा

क्षयवृद्ध्युपदंशाद्या घोराश्चातीवदुर्ज्जयाः ।
अकालमरणञ्च स्याद्भजतस्त्रियमन्यथा ॥
विलासिनामर्थवतां रूपयौवनशालिनाम् ।
नराणां बहुभार्य्याणां विधिर्वाजीकरो हितः ॥
स्थविराणां रिरंसूनां स्त्रीणां वाल्लभ्यमिच्छ-
ताम् ।
योषित्प्रसङ्गात् क्षीणानां क्लीवानामल्परेतसाम्
॥
हिता वाजीकरा योगाः प्रीत्यपत्यबलप्रदाः ।
एतेऽपि पुष्टदेहानां सेव्याः कालाद्यपेक्षया ॥”
वाजीकराण्याह ।
“भोजनानि विचित्राणि पानानि विविधानि
च ।
वाचः श्रोत्राभिरामाश्च त्वचः स्पर्शसुखावहाः ।
यामिनी सेन्दुतिलका कामिनी नवयौवना ।
गीतं श्रोत्रमनोहारि ताम्बूलं मदिरा स्रजः ॥
गन्धा मनोज्ञा रूपाणि चित्राण्युपवनानि च ।
मनसश्चाप्रतीघातो वाजीकुर्व्वन्ति मानवम् ॥
माक्षीकधातुमधुपारदलोहचूर्णं
पथ्याशिलाजतुविडङ्गघृतानिलिह्येत् ।

तच्छिन्नं जलयोगतो मृदुतरं संकुट्य चूर्णी-
कृतम् ।
तच्चूर्णं पटशोधितं वसुगुणे गोशुद्धदुग्धे
पचेत्
गव्याज्याञ्जलिसंयुतेऽतिनिविडे
दद्यात्तुलार्द्धां
सिताम् ॥
पक्वं तजज्वलनात् क्षितिं प्रतिनयेत्
तस्मिन्
पुनः प्रक्षिपेत्
दद्यात्तत्तदुदाहरामि बहुला दृष्ट्वादरात्
संहिताः ।
एला नागवला वला सचपला जातीफला-
लिङ्गिका
जातीपत्रसुपत्रचित्रकयुक्तं तच्च त्वचा
संयुतम् ॥
विश्वावीरणवारिवारिदवरावांशी वरी
वानरी-
द्राक्षा सेक्षुरगोक्षुराथ महती खर्ज्जूरिका
क्षीरिका ।
धान्याकं सकसेरुकं समधुकं शृङ्गाटकं
जीरकं
पृथ्वीक्वाथयवानिकावरटिका मांसी
मिसि-
मैंथिका ॥
कन्देष्वत्र विदारिकाथ मुषली गन्धर्व्वगन्धा
तथा
कर्व्वूरं करिकेशरं समरिचञ्चारस्य बीजं
नवम् ।
बीजं शाल्मलिसम्भवं करिकणा बीजञ्च
राजी-
वजं

शुण्ठी । वीरणं एतस्य मूलं उशीरं
ग्राह्यम् ।
वारि सुगन्धवाला । वारिदः मुस्तकः
। वरा
त्रिफला वांशी वंशरोचना । वरी
शतावरी ।
वानरी कपिकच्छूस्तस्या बीजं ग्राह्यम्
। इक्षुरः
कोकिलाक्षः तस्य बीजम् ।
गोक्षुरस्यापि
बीजम् । महती खर्ज्जूरिका छोहारा ।
क्षीरिका क्षीरी । पृथ्वीका कारवी
मगरैला
इति लोके । वराटिका वररै इति लोके
। शालूक-
मेषां कन्दः स्याद्बीजकोषो वराटिका ।
मांसी
जटामांसी । मिसिः सौफः ।
गन्धर्व्वगन्धा अश्व-
गन्धा तस्या मूलम् । श्रीसंज्ञं लवङ्गम्
। घन-
सारः कर्पूरः । विल्वप्रमाणान्
पलप्रमाणान् ।
रतिवल्लभाख्यपूगपाकः ॥ * ॥
“एतस्मिन्रतिवल्लभे यदि पुनः सम्यक्
खुरा-
शाणिका
धुस्तूरस्य तु बीजमर्क्करभा
यासोऽब्धिशोष-
स्तथा ।
सन्माजूफलवं तथा स्वसफलत्वक्
वापि निःचि
प्यते
चूर्णार्द्धा विजया तदा स हि भवेत्
कारेश्वरः
संज्ञया ॥”
इति महाकामेश्वरः ॥ * ॥
“रक्तपित्ताधिकारोक्तः
खण्डकुष्माण्डको महान् ।
रक्तपित्तादिरोगघ्नो महावाजीकरः
स्मृतः ॥ * ॥

| | | |
|---|---|---|
| | | पक्वाम्रस्य रसे द्रोणे<br>सितामाढकसंमिताम् ।<br>घृतप्रस्थमिदं दद्यान्नागरस्य<br>पलाष्टकम् ॥<br>मरिचं कुडवोन्मानं<br>पिप्पलीद्विपलोन्मितम्।<br>सलिलस्याढकं दत्त्वा सर्व्वमेकत्र<br>कारयेत् ॥<br>पचेत्तन्मृण्मये पात्रे दारुदर्व्व्या<br>प्रचालयेत् । |

चूर्णान्येषां क्षिपेत्तत्र
घनीभूतेऽवतारिते ॥
धान्यकं जीरकं पत्रं चित्रकं मुस्तकं
त्वचम् ।
बृहज्जीरकमप्यत्र ग्रन्थिकं
नागकेशरम् ॥
एलाबीजं लवङ्गञ्च पृथक् जातीफलं
पलम् ।
सिद्धं शीते प्रदद्याच्च मधुनः
कुडवद्वयम् ॥
भक्षयेद्भोजनादर्व्वाक् पलमात्रमिदं
नरः ।
अथवा नियता नात्र मात्रा
खादेद्यथानलम् ॥
मानवः सेवनादस्य वाजीव सुरते
भवेत् ।
समर्थो बलवान् पुष्टो हृष्टो नित्यं
निरामयः ॥
ग्रहणीं नाशयेदेष क्षयं
श्वासमरोचकम् ।
अम्लपित्तञ्च पित्तञ्च रक्तपित्तञ्च
पाण्डुताम् ॥”
बृहज्जीरकं नानागरैला । इति
आम्रपाकः ॥
“शमयति गोक्षुरचूर्णं छागक्षीरेण
साधितं
समधु ।
भुक्तं क्षपयति जाड्यं यज्जनितं
कुप्रयोगेण ॥
द्रव्याणि चन्दनादिस्तु चन्दनं
रक्तचन्दनम् ।
पत्तङ्गमथ कालीयागुरुकृष्णागुरूणि
च ॥
देवद्रुमः ससरलः पद्मकं तुणिकोऽपि
च ।
कर्पूरो मृगनाभिश्च
लताकस्तूरिकापि च ॥
सिह्लकः कुङ्कुमं नव्यं
जातीफलकमत्र च ।

पञ्चटङ्कमितास्तास्तु सायं प्रातश्च भक्षयेत् ।
अनेन शीघ्रद्रावी यो यश्च स्यात् पतितध्वजः
॥
सोऽपि प्राप्नोति सुरते सामर्थ्यमिति
वाजिवत् ।
नानेन सदृशं किञ्चित् द्रव्यं वाजीकरं परम्
॥”
इति वानरीवटिका ॥ * ॥
“आकारकरभा शुण्ठी लवणं कुङ्कुमं कणा ।
जातीफलं जातिपुष्पं चन्दनं कार्षिकं पृथक्
॥
चूर्णयेदहिफेणन्तु तत्र दद्यात् पलोन्मितम् ।
सर्व्वमेकीकृतं माषमात्रं क्षौद्रेण भक्षयेत् ॥”
शुक्रस्तम्भकरं पुंसामिदमानन्दकारकम् ।
नारीनां प्रीतिजनकं सेवेत निशि कामुकः ॥
इति भावप्रकाशः ॥
(यथा च ।
“विदारीकन्दां शुमतीवृहत्यौ ।
काकोलिकाभीरुपुनर्न्नवे द्वे ।
शृङ्गाटकं मागधिका वला च
चूर्णं सिताढ्यं सितया प्रयोज्यम् ॥
जीर्णे पयः पायसमेव योज्यं
करोति पुंसां बलमेवमोजः ।
स्त्रीणां सहस्रं भजतेऽपि षण्डो
मासद्वयेनापि च सेवमानः ॥”
इति हारीते चिकित्सास्थाने ४६ अध्यायः ॥
“वाजीकरणमन्विच्छेत् सततं विषयी पुमान्
।
तुष्टिः पुष्टिरपत्यञ्च गुणवत्तत्र संश्रितम् ॥
अपत्यसन्तानकरं यत् सद्यः संप्रहर्षणम् ।
वाजीवातिबलो येन यात्यप्रतिहतोऽङ्गनाः ॥
भवत्यतिप्रियः स्त्रीणां येन येनोपचीयते ।
तद्वाजीकरणं तद्धि देहस्योर्ज्जस्करं परम् ॥
धर्म्म्यं यशस्यमायुष्यं लोकद्वयरसायनम् ।
अनुमोदामहे ब्रह्मचर्य्यमेकान्तनिर्म्मलम् ॥
अल्पसत्त्वस्य तु क्लेशैर्वाध्यमानस्य रागिणः
।
शरीरक्षयरक्षार्थं वाजीकरणमुच्यते ॥
कल्पस्योदग्रवयसो वाजीकरणसेविनः ।

माषाणामाढकञ्चैतद्द्विद्रोणेसाधयेदपाम् ॥
रसेनाढकशेषेण पचेत्तेन घृताढकम् ।
दत्त्वा विदारीधात्रीक्षुरसानामाढकाढकम्॥
घृताच्चतुर्गुणं क्षीरं पेष्याणीमानि चावपेत् ।
वीरां स्वगुप्तां काकोल्यौ यष्टीं फल्गूनि पिप्प-
लीम् ॥
द्राक्षां विदारी खर्ज्जूरं मधुकानि शतावरीम् ।
तत्सिद्धपूतं चूर्णस्य पृथक् प्रस्थेन योजयेत् ॥
शर्करायास्तुगायाश्च पिप्पल्याः कुडवेन च ।
मरिचस्य प्रकुञ्चेन पृथगर्द्धपलोन्मितैः ॥
त्वगेलाकेसरैः श्लक्ष्णैः क्षौद्रादि्द्वकुडवेन च ।
पलमात्रं ततः खादेत् प्रत्यहं रसदुग्धभुक् ॥
तेनारोहति वाजीव कुलिङ्ग इव हृष्यति ।
विदारीपिप्पलीशालिप्रियालेक्षुरकाद्रजः ॥
पृथक् स्वगुप्तामूलाच्च कुडवांशं तथा मधु ।
तुलार्द्धं शर्कराचूर्णात् प्रस्थार्द्धं नवसर्पिषः ॥
सोऽक्षमात्रमतः खादेद् यस्य रामाशतं गृहे ।
सात्मगुप्ताफलान् क्षीरे गोधूमान् साधितान्
हिमान् ॥
माषान् वा सघृतक्षौद्रान् खादन् गृष्टिपयो-
ऽनुपः ।
जागर्त्ति रात्रिं सकलामखिन्नः खेदयेत् स्त्रियः
॥
वस्ताण्डसिद्धे पयसि भावितानसकृत्तिलान् ।
यः खादेत् ससितान् गच्छेत् स
स्त्रीशतमपूर्व्ववत् ॥
चूर्णं विदार्य्या बहुशः स्वरसेनैव भावितम् ।
क्षौद्रसर्पिर्युतं लीढ्वा प्रमदाशतमृच्छति ॥”
“कृष्णाधात्रीफलरजः स्वरसेन सुभावितम् ।
शर्करामधुसर्पिर्भिर्लीढ्वा योऽनुपयः पिबेत् ॥
स नरोऽशीतिवर्षोऽपि युवेव परिहृष्यति ।
कर्षं मधुकचूर्णस्य घृतक्षौद्रसमन्वितम्॥
पयोऽनुपानं यो लिह्यान्नित्यवेगः स ना भवेत्
॥”
“उच्चटाचूर्णमप्येवं शातवर्य्याञ्च योजयेत् ॥
चन्द्रशुभ्रं दधिसरं ससितं षष्टिकौदनम् ।
पटे सुमार्ज्जितं भुक्त्रा वृद्धोऽपि तरुणायते ॥”
“आचरेच्च सकलां रतिचर्य्यां
कामशास्त्रविहितामनवद्याम्।

जातीपत्रं लवङ्गञ्च सूक्ष्मैला महती च सा ॥
कक्कोलफलकं त्वक् च पत्रकं नागकेशरम् ।
बालकञ्च तथोशीरं मांसी दारु सितापि वा ॥
मुरा कर्पूरकश्चापि शैलेयं भद्रमुस्तकम् ।
रेण्डका च प्रियङ्गुश्च श्रीवासो गुग्गुलुस्तथा ॥
लाक्षा नस्वश्च रालश्च धातकीकुसुमं तथा ।
ग्रन्थिपणञ्च मञ्जिष्ठा तगरं सिक्थकं तथा ॥
एतानि शाणमानानि कल्कीकृत्य शनैः पचेत् ।
तैलं प्रस्थमितं सम्यक् एतत्पात्रे शुभे क्षिपेत् ॥
अनेनाभ्यक्तगात्रस्तु वृद्धोऽशीतिशमोऽपि यः ।
शुभ्रो भवति शुक्राढ्यः स्त्रीणामत्यन्तवल्लभः ॥
बन्ध्यापि लभते गर्भं षण्डोऽपि तरुणायते ।
अपुत्रः पुत्रमाप्नोति जीवेच्च शरदां शतम् ॥
चन्दनादिमहातैलं रक्तपित्तं क्षयं ज्वरम् ।
दाहप्रस्वेददौर्गन्ध्यं कुष्ठं कण्डुं विनाशयेत् ॥"
पत्तङ्गं वकम् इति लोके । कालीयं कलम्बक
इति लोके । लताकस्तूरिका मुषुकदाना इति
लोके । कक्कोलफलस्याभावे जातीपुष्पं ग्राह्यम् ।
तदलाभेऽपि लवङ्गं ग्राह्यम् । दारुशिता दारु-
चिनी । शैलेयं छरा इति लोके । श्रीवासः

सर्व्वेष्वृतुष्वहरहर्व्यवायो न निवार्य्यते ॥
अथ स्निग्धविशुद्धानां निरुहान् सानुवासनान् ।
घृततैलरसक्षीरशर्कराक्षौद्रसंयुतान् ॥
योगविद्योजयेत् पूर्व्वं क्षीरमांसरसाशिनम् ।
ततो वाजीकरान् योगान् शुक्रापत्यविवर्द्धनान् ॥
अच्छायः पूतिकुसुमः फलेन रहितो द्रुमः ।
यथैकश्चैकशाखश्च निरपत्यस्तथानरः ॥
स्खलद्गमनमव्यक्तवचनं धूलिधसरम् ।
अपि लालाविलमुखं हृदयाह्लादकारकम् ॥
अपत्यं तुल्यता केन दर्शनस्पर्शनादिषु ।
किंपुनर्यद्यशोधर्म्ममानश्रीकुलवर्द्धनम् ॥
शुद्धकाये यथाशक्ति वृष्य योगान् प्रयोजयेत् ।
शरेक्षुकुशकाशानां विदार्य्या वीरणस्य च ॥
मूलानि कण्टकार्य्याश्च जीवकर्षभकौ वलाम् ।
मेदे द्वे द्वे च काकोल्यौ शूर्पपर्ण्यौ शतावरीम् ॥
अश्वगन्धामतिवलामात्मगुप्तांपुनर्नवाम् ।
वीरां पयस्यां जीबन्तीं ऋद्धिं रास्नां त्रिकण्ट-
कम् ॥
मधुकं शालिपर्णीञ्च भागांस्त्रिपलिकान् पृथक् ।

देशकालबलशक्त्यनुरोधाद्
वैद्यतन्त्रसमयोक्त्यविरुद्धाम् ॥
अभ्यञ्जनोद्वर्त्तनसेकगन्ध-
स्रक्पत्रवस्त्राभरणप्रकाराः ।
गान्धर्व्वकाव्यादिकथा प्रवीणाः
समस्वभावा वशगावयस्याः ।
दीर्घिका स्वभवनान्तनिविष्टा
पद्मरेणुमधुमत्तविहङ्गाः ।
नीलसानुगिरिकूटनितम्बे
काननानि पुरकण्ठगतानि ॥
दृष्टिसुखा विविधा तरुजातिः
श्रोत्रसुखः कलकोकिलनादः ।
अङ्गसुखर्त्तुवशेन विभूषा-
चित्तसुखः सकलः परिवारः ॥
ताम्बूलमच्छमदिरा कान्ता कान्ता निशा शशाङ्काङ्का ।

| | | |
|---|---|---|
| गुगुरी इति लोके । ग्रन्थिपर्णः<br>गठिवन् इति<br>लोक । अशीतिसमः<br>अशीतिवार्षिकः । इति<br>चन्दनादितैलम् ॥ * ॥<br>“बीजानि कीशकच्छ्वाः<br>कुडवमितानि स्वेदये-<br>च्छनकैः ।<br>प्रस्थे गोभवदुग्धे दुग्धं<br>यावद्भवेद्गाढम् ॥<br>त्वग्रहितानि च कृत्वा सूक्ष्मं<br>संपेषयेत्तानि ।<br>पिष्टिकया लघुवटिकाः कृत्वा गव्ये<br>पचेदाज्ये ॥<br>द्विगुणितशर्करया वा वटिकाः<br>संपक्वया<br>लेप्याः ।<br>वटिका माक्षिकमध्ये<br>मज्जनयोग्येऽखिलाः<br>स्थाप्याः ॥ | | |

यद्यच्च किञ्चिदिष्टं मनसो वाजीकरं तत्तत् ॥
मधुमुखमिव सोत्पलं प्रियायाः
कणरणनापरिवादिनी प्रियेव ।
कुसुमचयमनोरमा च शय्या
किसलयिनी लतिकेव पुष्पिताग्रा ॥
देशे शरीरे च न काचिदर्त्ति-
रर्थेषु नाल्पोऽपि मनोविघातः ।
वाजीकराः सन्निहिताश्च योगाः
कामस्य कामं परिपूरयन्ति ॥”
इति वाभटे उत्तरस्थाने ४० अध्यायः ॥
तथाच ।
“वाजीकरणमन्विच्छेत् पुरुषो
नित्यमात्मवान् ।
तदायत्तौ हि धर्म्मार्थौ प्रीतिश्च यश एव च ॥
पुत्त्रस्यायतनं ह्येतद्गुणाश्चैते सुताश्रयाः ।
वाजीकरणमग्र्यञ्च क्षेत्रं स्त्री वा प्रहर्षिणी ॥
इष्टा ह्येकैकशोऽप्यर्थाः परं प्रीतिकराः
स्मृताः ।
किं पुनः स्त्रीशरीरे ये संघातेन व्यवस्थिताः
॥
सङ्घातो हीन्द्रियार्थानां स्त्रीषु नान्यत्र विद्यते
।
स्त्र्याश्रयो हीन्द्रियार्थो यः सप्रीतिजननो-
ऽधिकः ॥”
“चित्रदीपः सरःशुष्कमधातुर्धातुसन्निभः।
निष्प जस्तृणपूलीति ज्ञातव्यः पुरुषाकृतिः
॥
अप्रतिष्ठश्च नग्नश्च शून्यश्चैकेन्द्रियश्च ना ।
मन्तव्यो निष्क्रियश्चैव यस्यापत्यं न विद्यते
॥
बहुमूर्त्तिर्बहुमुखो बहुव्यूहो बहुक्रियः ।
बहुचक्षुर्बहुज्ञानो बह्वात्मा च बहुप्रजः ॥
मङ्गल्योऽयं प्रशस्तोऽयं धन्योऽयं
वीर्य्यवानयम् ।
बहुशाखोऽयमिति च स्तूयते ना वहुप्रजः ॥
प्रीतिर्ब्बलं सुखं वृत्तिर्विस्तारो विभवः कुलम्
।
यशोलोकाः सुखोदर्कास्तुष्टिश्चापत्यसंश्रिता
॥
एषां प्रयोगाद्भक्ष्याणां स्तब्धेनापूर्णरेतसा ॥
शेफसा वाजिवद्याति यावदिच्छन् स्त्रियो
नरः ॥”
इति वृष्यपूपालिकयोगः ॥ * ॥
“मण्डलैर्जातरूपस्य तस्या एव पयःशृतम् ।
अपत्यजननं सिद्धं सघृतक्षौद्रशर्करम् ॥”
“आर्द्राणि मत्स्यमांसानि भृष्टाश्च शफरीश्च वा
।
तप्ते सर्पिषि यः खादेत् स गच्छेत् स्त्रीषु न
क्षयम् ॥
घृतभृष्टान् रसे छागे रोहितान् फलसाधिते ॥
अनुपीतरसान् सिद्धानपत्यार्थी प्रयोजयेत् ॥”
इति गर्भाधानकरो योगः ॥ * ॥
“नर्त्ते वै षोडषाद्वर्षात् सप्तत्याः परतो नच ।
आयुष्कामो नरः स्त्रीभिः संयोगं कर्त्तुमर्हति ॥
अतिबालो ह्यसम्पूर्णसर्व्वधातुः स्त्रियो व्रजन् ।
उपतप्येत सहसा तडागमिव काजलम् ॥
शुष्करुक्षं यथाकाष्ठं जन्तुदग्धं विजर्ज्जरम् ।
स्पृष्टमाशु विशीर्य्येत तथा वृद्धस्त्रियो व्रजन् ॥
जरया चिन्तया शुक्रं व्याधिभिः कर्म्मकर्षणात् ।
क्षयं गच्छत्यनशनात् स्त्रीणाञ्चातिनिषेवणात् ॥
क्षयाद्भयादतिस्रम्भाच्छोकात् स्त्रीदोषदर्शनात् ।
नारीणामरसज्ञत्वादभिचारादसेवनात् ॥
तृप्तस्यापि स्त्रियो गन्तुं न शक्तिरुपजायते ।
देहसत्त्वबलापेक्षी हर्षः शक्तिश्च हर्षजा ॥”
इति चरके चिकित्सितस्थाने द्वितीयेऽध्याये ॥)

**वाञ्छा**, स्त्री (वाञ्छनमिति । वाछि इच्छायाम् ।
गुरोश्चेत्यः । टाप् ।) आत्मवृत्तिगुणविशेषः ।
सा च द्विविधा यथा । उपायविषयिणी फल-
विषयिणी वा । फलं सुखं दुःखाभावश्च । तत्र
फलेच्छां प्रति फलज्ञानं कारणम् । उपायेच्छां
प्रति इष्टसाधनताज्ञानं कारणम् । इति
सिद्धान्तमुक्तावली ॥ तत्पर्य्यायः । इच्छा २
काङ्क्षा ३ स्पृहा ४ ईहा ५ तृट् ६ लिप्सा ७
मनोरथः ८ कामः ९ अभिलाषः १० तर्षः ११
।
इत्यमरः । १ । ७ । २७ ॥ आकाङ्क्षा १२
कान्तिः १३
अग्रचयः १४ दोहदः १५ आभिलाषः १६ ।

**वाटं**, क्ली, वरण्डः । गात्रभेदः ।
इत्यमरटीका ॥
यथा, --
“वाटः पथि वृतौ वाटं वरण्डे
गात्रभेदयोः ।”
इति हैमः ॥

**वाटः**, पुं, (वट्यते वेष्ट्यते इति । वट + घञ्
।)
मार्गः । वृतिस्थानम् । इति मेदिनी ।
टे, २८ ॥
अपि च ।
“मुखं निःसरणे वाटे प्राचीनावेष्टकौ
वृतिः ॥”
इति हेमचन्द्रः ॥
(वास्तु । मण्डपः । यथा, भागवते ।
८ । १८ । २३ ।
“छत्रं सदण्डं सजलं कमण्डलुं
विवेश विभ्रद्धयमेधवाटम् ॥”
वटस्येदमिति । वट + अण् ।
वटसम्बन्धिनि,
त्रि । यथा, मनुः । २ । ४५ ।
“ब्राह्मणो वैल्वपालाशौ क्षत्त्रियो
वाटखा-
दिरौ ।
पैलवौदुम्बरौ वैश्यो दण्डानर्हन्ति
धर्म्मतः ॥”)

**वाटशृङ्खला**, स्त्री, (वाटरोधिका शृङ्खला ।
शाकपार्थिवादिवत् मध्यपदलोपः ।)
पथरोधक-
शृङ्खला । तत्पर्य्यायः । लम्भा २ ।
इति हारा-
वली ॥

**वाटिका**, स्त्री, (वट्यते वेष्ट्यते
प्राचीरादिभि-
रिति । वट वेष्टने + संज्ञायामिति
ण्वुल् । टाप् ।
अत इत्वम् ।) वास्तु । (यथा,
कथासरित्-

तस्मादपत्यमन्विच्छन्
गुणांश्चापत्यसंश्रितान् ॥
वाजीकरणनित्यः स्यादिच्छेत् कामसुखानि च ।
माषाणामात्मगुप्ताया बीजानामाढकं नवम् ॥
जीवकर्षभकौवीरं मेदामृद्धिं शतावरीम् ।
मधुकञ्चाश्वगन्धाञ्च साधयेत् कुडवोन्मिताम् ॥
रसे तस्मिन् घृतप्रस्थं गव्यं दशगुणं पयः ।
विदारीणां रसप्रस्थं प्रस्थमिक्षुरसस्य च ॥
दत्त्वा मृद्वग्निनासाध्यं सिद्धं सर्पिर्निधापयेत् ।
शर्करायास्तुगाक्षीर्य्याः क्षौद्रस्य च पृथक् पृथक् ॥
भागांश्चतुष्पलांस्तत्र पिप्पल्याश्चावपेत् पलम् ।
पलं पूर्व्वमतो लीढ्वा ततोऽन्नमुपयोजयेत् ॥
य इच्छेदक्षयं शुक्रं शेफसश्चोत्तमं बलम् ।”
इति वाजीकरणं घृतम् ॥ * ॥
“चटकानां सहंसानां दक्षाणां शिखिना-
न्तथा ।
शिशुमारस्य नक्रस्य भिषक् शुक्राणि संहरेत् ॥
गव्यं सर्पिर्वराहस्य कुलिङ्गस्य वसामपि ।
षष्टिकानाञ्च चूर्णानि चूर्णं गौधूममेव च ॥
एभिः पूपलिकाः कार्य्याः शष्कुल्यो वर्त्तिका स्तथा ॥
पूपाधानाश्च विविधा भक्ष्याश्चान्ये
पृथग्विधाः ।

इति शब्दरत्नावली ॥ रुक् १७ रुचिः १८
मतिः १८ दोहलम् २० छन्दः २१ । इति
जटाधरः ॥ (यथा, कथासरित्सागरे । ११ ।
२७ ।
“सन्दिदेश च यद्यस्ति वाञ्छा मच्छिष्यतां प्रति ।
त्वत्पुत्र्यास्तदिहैवैषा भवता प्रेष्यतामिति ॥”)

**वाञ्छितं**, त्रि, (वाञ्छ + क्तः ।) अभिलषितम् ।

यथा, --
“अविच्छेदं पठेद्धीमान् ध्यात्वा देवीं सरस्वतीम् ।
शुक्लाम्बरधरां देवीं शुक्लाभरणभूषिताम् ॥
वाञ्छितं फलमाप्नोति स लोके नात्र संशयः ।
इति ब्रह्मा स्वयं प्राह सरस्वत्याः स्तवं शुभम् ॥”
इति तन्त्रसारः ॥

**वाञ्छिनी**, स्त्री, (वाञ्छतीति । वाञ्छ + णिनिः ।

ङीष् ।) वाञ्छनीया नारी । तत्पर्य्यायः ।
लञ्जिका २ कलतूलिका ३ । इति त्रिकाण्ड-
शेषः ॥ वाञ्छनीयमात्रे, त्रि ॥

सागरे । ७२ । २०६ ।
“सा स्नानाय गते तस्मिन् शाकार्थं शाकवाटि-
काम् ।
प्रविष्टा धावकखरं खादन्तं
शाकमैक्षत ॥”)
वाट्यालकः । इति शब्दरत्नावली
॥ हिङ्गुपत्री ।
इति शब्दचन्द्रिका ॥

**वाटी**, स्त्री, (वट्यते वेष्ट्यते इति । वट वेष्टने +

घञ् । गौरादित्वात् ङीष् ।)
वाट्यालकः ।
इति शब्दरत्नावली ॥ कुटी । वास्तु । इति
मेदिनी । टे, २८ ॥ शेषस्य पर्य्यायः ।
“वास्त्वस्त्री वेश्म भूर्व्वाटी वाटिका
गृहपोतकः ॥”
इति शब्दरत्नावली ॥
तस्या लक्षणादिर्यथा, --
विश्वकारुरुवाच ।
“के ते वृक्षाः प्रशस्ताश्च
निषिद्धाश्चापि केचन ।
भद्रा भद्रप्रदाश्चापि तान् वदस्व
जगद्गुरो ॥
केषामन्तनियुक्तञ्च शिविरञ्च
शुभाशुभम् ।
दिशि कुत्र जलं भद्रमशुभञ्च वद
प्रभो ॥
द्वाराणाञ्च गृहाणाञ्च प्राकाराणां
प्रमाणकम् ।
भद्रप्रदश्च को वृक्षो दिशि कुत्र
प्रवर्त्तते ॥
किं प्रमाणं गृहाणाञ्च प्राङ्गणानां
जगद्गुरो ।
मङ्गलं कुसुमोद्यानं दिशि कुत्र
तरोस्तथा ॥
प्राकारं किंप्रमाणञ्च परिखाणां
सुरेश्वर ।

|  |  | द्वाराणाञ्च गृहाणाञ्च प्राकाराणां प्रमाणकम् ॥<br>कस्य कस्य तरोः काष्ठं प्रशस्तं शिविरे प्रभो ।<br>अमङ्गलं वा केषां वा सर्व्वं मां वक्तुमर्हसि ॥ * ॥<br>श्रीभगवानुवाच ।<br>आश्रमे नारिकेलश्च गृहिणाञ्च धनप्रदः । |
|---|---|---|

शिविरस्य यदीशाने पूर्ब्बे पुत्त्रप्रदस्तरुः ॥
सर्व्वत्र मङ्गलार्हश्च तरुराजो मनोहरः ।
रसालवृक्षः पूर्ब्बस्मिन् नृणां सम्पत्प्रदस्तथा ॥
शुभप्रदश्च सर्व्वत्र सुरकारो ! निशामय ।
विल्वश्च पनसश्चैव जम्बीरो वदरी तथा ॥
प्रजाप्रदश्च पूर्ब्बस्मिन् दक्षिणे धनदस्तथा ।
सम्पत्प्रदश्च सर्व्वत्र यतो हि वर्द्धते गृही ॥
जम्बुवृक्षश्च दाडिम्बः कदल्याम्रातकस्तथा ।
बन्धुप्रदश्च पूर्ब्बस्मिन् दक्षिणे मित्रदस्तथा ॥
सर्व्वत्र शुभदश्चैव धनपुत्त्रशुभप्रदः ।
हर्षप्रदो गुवाकश्च दक्षिणे पश्चिमे तथा ॥
ईशाने सुखदश्चैव सर्व्वत्रैवं निशामय ।
सर्व्वत्र चम्पकः शुद्धो भुवि भद्रप्रदस्तथा ॥
अलावुश्चापि कुष्माण्डं मायाम्बुश्च सुकामुकः ।
खर्ज्जूरी कर्क्कटी चापि शिविरे मङ्गलप्रदाः ॥
वास्तूकः कारवेल्लश्च वार्त्ताकुश्च शुभप्रदाः ।
लताफलञ्च शुभदं सर्व्वं सर्व्वत्र निश्चितम् ॥
प्रशस्तं कथितं कारो निषिद्धञ्च निशामय ॥
वन्यवृक्षो निषिद्धश्च शिविरे नगरेऽपि च ।
वटो निषिद्धः शिविरे नित्यं चौरभयं ततः ।
अभद्रदं सूर्य्यवेधं प्राङ्गाङ्गनं तथैव च ॥ * ॥
शिविराभ्यन्तरे भद्रा स्थापिता तुलसी नृणाम् ।
धनपुत्त्रप्रदात्री च पुण्यदा हरिभक्तिदा ।
प्रभाते तुलसीं दृष्ट्वा स्वर्णदानफलं लभेत् ॥
मालती यूथिका कुन्दमाधवी केतकी तथा ।
नागेश्वरं मल्लिका च काञ्चनं वकुलं शुभम् ॥
अपराजिता च शुभदा तेषामुद्यानमीप्सितम् ।
पूर्ब्बे च दक्षिणे चैव शुभदं नात्र संशयः ॥
ऊद्ध्वं षोडशहस्तेभ्यो नैवं कुर्य्याद्गृहं गृही ।
ऊद्ध्वं विंशतिहस्तेभ्यः प्राकारं न शुभप्रदम् ॥ * ॥
सूत्रधारं तैलकारं स्वर्णकारञ्च हीरकम् ।
वाटीमूले ग्राममध्ये न कुर्य्यात् स्थापनं बुधः ॥
ब्राह्मणं क्षत्त्रियं वैश्यं सच्छूद्रं गणकं शुभम् ।
भट्टं वैद्यं पुष्पकारं स्थापयेत् शिविरान्तिके ॥ * ॥
प्रस्थे च परिखामानं शतहस्तं प्रशस्तकम् ।
परितः शिविराणाञ्च गम्भीरं दशहस्तकम् ॥
सङ्केतपूर्व्वकञ्चैव परिखाद्वारमीप्सितम् ।
शत्रोरगम्यं मित्रस्य गम्यमेव सुखेन च ॥ * ॥
शाल्मलीनां तिन्तिडीनां हिन्तालानां तथैव च ।
निम्बानां सिन्धुवाराणां उडुम्बराणामभद्रकम् ॥
धुस्तूराणां वटानाञ्चाप्येरण्डानामवाञ्छितम् ।

ङ, वाडते लोकः । आप्लावः स्नानम् । उन्म-ज्जनम् । इत्येके । इति दुर्गादासः ॥

**वाडः**, पुं, (धातूनामनेकार्थत्वात् वाड वेष्टने + भावे घञ् ।) वेष्टनम् । इति शब्दमाला ॥

**वा(बा)णिः**, स्त्री, (वण + णिच् + "सर्व्वधातुभ्य इन् ।" उणा० ४ । ११७ । इति इन् ।) वप-नम् । तत्पर्य्यायः । व्यूतिः २ । इत्यमरः । २ । १४ । २८ ॥ व्युतिः ३ । इति तट्टीकायां भरतः ॥
(करणे इन् ।) वापदण्डः । इति हेमचन्द्रः । ३ । ५७७ ॥

**वा(बा)णिनी**, स्त्री, (वण शब्दे + णिनिः । ङीप् ।) नर्त्तकी । छेकः । मत्तस्त्री । इति हेमचन्द्रः ॥ (यथा, रघुः । ६ । ७५ ।
"यस्मिन् महीं शासति वाणिनीनां
निद्रां विहारार्द्धपथे गतानाम् ।
वातोऽपि नास्रंसयदंशुकानि
को लम्बयेदाहरणाय हस्तम् ॥" * ॥
षोडशाक्षरच्छन्दोविशेषः । तल्लक्षणं यथा, --
"नजभजरैर्यदा भवति वाणिनी गयुक्तैः ॥")

**वा(बा)णी**, स्त्री, (वाणि + वा ङीष् ।) सरस्वती । इत्यमरः । १ । ६ । १ ॥ वचनम् । (यथा, मार्क-ण्डेये । ४१ । ४ ।
"चक्षुःपूतं न्यसेत् पादं वस्त्रपूतं पिबेज्जलम् ।
सत्यपूतां वदेद्वाणीं बुद्धिपूतञ्च चिन्तयेत् ॥")
वपनम् । इति शब्दरत्नावली ॥

**वात**, त् क गतिसेषयोः । सुखे । इति कविकल्प-द्रुमः ॥ (अदन्त चुरा०-पर०-सक०-सेट् ।) अववातत् । त्रयोऽर्थाः । रमानाथस्तु गति-सुखसेवयोरिति मत्वा गतौ सुखं गतिसुखम् । वातयति पान्थं वातः गच्छन्तं सुखयतीत्यर्थः ।
इत्याह । सुखसेवनयोरिति जौमराः । इति दुर्गादासः ॥

**वातः**, पुं, (वातीति । वा + क्तः ।) पञ्च-

नगरेषु प्रसिद्धश्च दर्शनात्
पुण्यदस्तथा ॥
हे कारो तिन्तिडीवृक्षो यत्नात्तं
परिवर्ज्जय ॥
शरेण धनहानिः स्यात् प्रजाहानिर्भवेत्
ध्रुवम् ।
शिविरेऽतिनिषिद्धश्च नगरे किञ्चिदेव च
॥
न निषिद्धः प्रसिद्धश्च नगरेषु तथा पुरे
।
वाट्यामतिनिषिद्धश्च प्राज्ञस्तं
परिवर्ज्जयेत् ॥
स्वर्ज्जूरश्च डहुश्चैव निषिद्धः शिविरे
तथा ।
न निषिद्धः प्रसिद्धश्च ग्रामेषु नगरेषु च
॥
वृक्षश्च चणकादीनां धान्यञ्च
मङ्गलप्रदम् ॥
ग्रामेषु नगरे चापि शिविरे च तथैव च ॥
इक्षुवृक्षश्च शुभदः सन्ततं शुभदस्तथा
।
अशोकश्च शिरीषश्च कदम्बश्च
शुभप्रदः ॥
कच्वी हरिद्रा शुभदा
शुभदश्चार्द्रकस्तथा ।
हरौतकी च शुभदा ग्रामेषु नगरेषु च ।
न वाट्यां भद्रदा नित्यं तथा चामलकी
ध्रुवम् ॥
गजानामस्थि शुभदमश्वानाञ्च तथैव च
।
कल्याणमुच्चैःश्रवसां वास्तौ
स्थापनकारिणाम् ॥
न शुभप्रदमन्येषामुच्छन्नकारणं परम् ।
वानराणां नराणाञ्च गर्द्दभानां गवामपि
॥
कुक्कुराणां शृगालानां
माज्जीराणामभद्रकम् ।
भेडकानां शूकराणां सर्व्वेषाञ्चशुभप्रदम्
॥
इशाने चापि पूर्ब्बस्मिन् पश्चिमे च
तथोत्तरे ।
एतेषामतिरिक्तानां शिविरे काष्ठमीप्सितम्
॥
वृक्षञ्च वज्रहतकं दूरतो वर्ज्जयेद्बुधः ।
पुत्त्रदारधनं हन्यात् इत्याह कमलोद्भवः ॥
कथितं लोकशिक्षार्थं कुरु काष्ठं विना
पुरीम् ।
शुभक्षणं चाप्यधुना गच्छ वत्स यथासुखम्
॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १०२
अः ॥

**वाटीदीर्घः**, पुं, (वाट्यां वास्तुभूमौ दीर्घः सर्व्वो-
च्चत्त्वात् ।) इत्कटवृक्षः । इति रत्नमाला
॥

**वाट्टकं**, क्ली, भृष्टयवः । इति शब्दचन्द्रिका ॥

**वाट्यपुष्पी**, स्त्री, (वाट्यं वाट्यां साधु वेष्टनीयं वा
पुष्पं यस्याः । गौरादित्वात् ङीष् ।)
वाट्या-
लकः । इति रत्नमाला ॥

**वाट्या**, स्त्री, (वट्यते वेष्ट्यते इति । वट वेष्टने +
ण्यत् । यद्वा, वाट्यां वास्तुप्रदेशे हिता ।
वाटी
+ यत् ।) वाट्यालकः । इति रत्नमाला ॥

**वाट्यालः**, पुं, (वाटीं अलति भूषयतीति । अल +
अण् ।) वाट्यालकः । इति शब्दरत्नावली
॥
(गुणादयोऽस्य वाट्यालकशब्दे ज्ञातव्याः
॥)

**वाट्यालकः**, पुं, (वाट्याल एव । स्वार्थे कन् । वाटीं
अलति भूषयतीति । अल + ण्वुल् वा ।)
क्षुप-
विशेषः । वाडियाला इति भाषा । तत्प-
र्य्यायः । शीतपाकी २ वाट्या ३ भद्रोदनी
४
वला ५ वाटी ६ विनया ७ वाट्याली ८
वाटिका
९ । इति शब्दरत्नावली ॥ अस्य
पर्य्यायान्तरं
गुणाश्च वलाशब्दे द्रष्टव्याः ॥

भूतान्तर्मतचतुर्थभूतः । वातास इति भाषा ।
तत्पर्य्यायः । गन्धवहः २ वायुः ३ पवमानः ४
महाबलः ५ पवनः ६ स्पर्शनः ७ गन्धवाहः ८
मरुत् ९ आशुगः १० श्वसनः ११ मातरिश्वा
१२
नभस्वान् १३ मारुतः १४ अनिलः १५ समी-
रणः १६ जगत्प्राणः १७ समीरः १८
सदागतिः
१९ जीवनः २० पृषदश्वः २१ तरस्वी २२
प्रभ-
ञ्जनः २३ प्रधावनः २४ अनवस्थानः २५
धूननः
२६ मोटनः २७ खगः २८ । अस्य गुणाः ॥
स्वैरत्वम् । लघुत्वम् । शीतत्वम् । रूक्षत्वम् ।
सूक्ष्मत्वम् । संज्ञानकत्वम् । स्तोककारित्वञ्च ।
तस्य कोपकारणं यथा । माधुर्य्यान्नभक्षणम् ॥
साभ्रकालः । अपराह्णकालः । प्रत्यूषकालः ॥
अन्नजीर्णसमयश्च । इति राजनिर्घण्टः ॥ * ॥
रोगविशेषः । यथा । अथ वातव्याध्यधिकारः
॥
तत्र वातव्याधीनां सामान्यतो विप्रकृष्टनिदाना-
न्याह ।
“कषायकटुतिक्तकप्रमितरूक्षलध्वन्नतः
पुरःपवनजागरप्रतरणाभिघातश्रमैः ।

| | | |
|---|---|---|
| शिविरस्य जलं भद्रमन्यत्राशुभमेव च ॥<br>दीर्घे प्रस्थे ममानञ्च न कुर्य्यान्मन्दिरं बुधः ।<br>चतुरस्रे गृहे कारो गृहिणां धननाशनम् ॥<br>दीर्घप्रस्थः परिमितो नेत्राङ्केनापि संहृतम् ।<br>शून्येन रहितं भद्रं शून्यं शून्यप्रदं नृणाम् ॥<br>प्रस्थे हस्तद्वयात् पूर्ब्बं दीर्घे हस्तत्रयं तथा ।<br>गृहिणां शुभदं द्वारं प्राकारस्य गृहस्य च ॥<br>न मध्यदेशे कर्त्तव्यं किञ्चिन्न्यूनाधिके शुभम् ।<br>चतुरस्रं चन्द्रवेधं शिविरं मङ्गलप्रदम् ।<br>अभद्रदं सूर्य्यवेधं शिविरं मङ्गलाप्रदम् । | **वाट्याली**, स्त्री, (वाटीमलति भूषयतीति । अल + अण् । गौरादित्वात् ङीष् ।)<br>वाट्यालकः ।<br>इति शब्दरत्नावली ॥<br><br>**वाड**, ऋ ङ आप्लावे । इति कविकल्पद्रुमः ॥<br><br>(भ्वा०-आत्म०-अक०-सेट् ।) ऋ, अववाडत् । | |

हिमादनशनात्तथा निधुवनाच्च
धातु क्षयात्
मलादिरपधारणात्
मदनशोकचिन्ताभयैः ॥
अतिक्षतजमोक्षणात्
गदकृतातिमांसक्षया-
दतीव
वमनान्नृणामतिविरेचनादामतः ।
पयोदसमये
दिनक्षणदयोस्तृतीयांशयो-
र्ज्जरामतिगतेऽशिते
शिशिरसंज्ञकालेऽपि च ॥
देहे स्रोतांसि रिक्तानि
पूरयित्वानिलो बली ।
करोति विविधान् रोगान्
सर्व्वाङ्गैकाङ्गसंश्र-
यान् ॥”
प्रमितञ्चात्र वैपरीत्ये
प्रोपसर्गस्तेन अपरिमित-
मित्यर्थः । प्रकर्षेण मितमत्यल्पं
वा लघ्वन्न-
मतिपुराणं शाल्यादि ।
कतिचिदन्नानि नवा-
न्यपि वातलानि । यत आह ।
गुणरत्नमाला-
याम् ।
नीवारस्त्रिपुटः
सतीनचणकश्यामाकमुद्गाढकी-
निष्पावाश्च मकुष्टकश्च वरटा
मङ्गल्यकः
कोद्रवः ॥
एते वातकरा इति शेषः । नीवारः
प्रसाधिका
तीनी इति लोके । त्रिपुटः यसारी
। सतीनः
कलायः । निष्पावो राजमाषः ।
वोडा इति
लोके । मकुष्टकः मोडः इति
लोके । वरटा

अङ्गशोषश्च भीरुत्वं मोहश्चञ्चलचित्तता ॥
निद्रानाशः स्वेदनाशो बलहानिस्तथैव च ।
शुक्रक्षयो रजोनाशो गर्भनाशः परिश्रमः ॥
एत एवाशीतिसंख्या रोगा योगेन रूढितः ।
वातव्याधीति नामानो मुनिभिः परि-
कीर्त्तिताः ॥”
एत एव शिरोग्रहादय एव । योगेन वातेन ।
वाताद्वा व्याधिर्व्वातव्याधिरिति निरुक्त्या
तदा
वातज्वरादिष्वपि प्रसङ्गः स्यादत आह
रूढितः प्रसिद्धितः ।
शिरोग्रहादयोऽशीतिरेव
वातव्याधिसंज्ञा प्रसिद्धा न तु
वातज्वरादयः ॥ * ॥
अथ वातव्याधिनां सामान्यचिकित्सामाह
।
“मधुरलवणसाम्लस्निग्धनस्योष्णनिद्रा
गुरुरविकरवस्तिस्वेदसन्तर्पणानि ।
दहनजलदसेकाभ्यङ्गसंमर्द्दनानि
प्रकुपितपवमानं शान्तमेतानि कुर्य्युः ॥”
इति भावप्रकाशः ॥ * ॥
अपि च ।
“बलपुष्टिकराण्येव वायुबीजं निशामय ।
भोजनानन्तरं सद्यो गमनं धावनं तथा ॥
छेदनं वह्नितापश्च शश्वद्भ्रमणमैथुनम् ।
वृद्धस्त्रीगमनञ्चैव मनःसन्ताप एव च ॥
अतिरूक्षमनाहारं युद्धं कलह एव च ।
कटुवाक्यं भयं शोकः केवलं वायुकारणम्
॥
आज्ञाख्यचक्रे तज्जन्म निशामय
तदौषधम् ॥
पक्वरम्भाफलञ्चैव सवीजं शर्करोदकम् ।
नारिकेलोदकञ्चैव सद्यस्तक्रं सुमिष्टकम् ॥
माहिषन्दधि मिष्टञ्च केवलं वा सशर्करम् ।
सद्यःपर्य्युषितान्नञ्च सौवीरं शीतलोदकम् ॥
पक्वतैलविशेषश्च तिलतैलञ्च केवलम् ।
लाङ्गलीतालखर्ज्जूरमस्तमामलकीद्रवम् ॥
शीतलोष्णोदकस्नानं सुस्निग्धचन्दनद्रवम्
।

अपस्मारं वातरक्तमायुष्मांश्च पुमान् भवेत् ।
गर्भमश्वतरी विन्द्यात् किं पुनर्मानुषी शिव ॥
अश्वानां वातभङ्गानां कुञ्जराणां नृणां तथा ।
तैलमेतत् प्रदातव्यं सर्व्ववातविकारिणाम् ॥”
पुनश्च ।
“पलद्वयं सैन्धवञ्च शुण्ठी चित्रकपञ्चकम् ।
पञ्चप्रस्थं त्वारनालं तैलप्रस्थं पचेत्ततः ।
ग्रहगृह्यप्लवप्लीहसर्व्वातविकारनुत् ॥”
इति गारुडे १९८ अध्यायः ॥
(तथास्य गुणादयः ।
“वातस्तु रुक्षलघुचलबहुशीघ्रशीतपरुषविषदा-
स्तस्य रौक्ष्याद्वातला रुक्षा पचिताल्पशरीराः
प्रततरुक्षक्षामभिन्नसक्तजर्ज्जरस्वराः जागरू-
काश्च लघुत्वाच्च लघुचपलगतिचेष्टाहारव्यव-
हाराः चलत्वादनवस्थितसन्ध्यस्थिभ्रूहन्वोष्ठजिह्वा
शिरः स्कन्धपाणिपादाः बहुत्वाद्बहुप्रलापकण्डरा
सिराप्रतानाः शीघ्रत्वात् शीघ्रसमारम्भक्षोभ-
विकाराः शीघ्रोत्त्रासरागविरागाः श्रुत-
ग्राहिणोऽल्पस्मृतयश्च शैत्यात् शीतासहिष्णवः
प्रततशीतकोद्वेपकस्तम्भाःपारुष्यात् परुष-
केशश्मश्रुरोमनखदशनवदनपाणिपादाङ्गावैष-
द्यात् स्फुटिताङ्गावयवाः सततसन्धिशब्दगामिनः
त एवं गुणयोगात् वातलाः प्रायेणाल्पबला-
श्चाल्पायुषश्चाल्पापत्याश्चाल्पसाधनाश्चाधन्याश्च
।”
इति चरके विमानस्थानेऽष्टमेऽध्याये ॥ अथास्य
वृद्धिक्षयलक्षणं यथा ।
“तत्र वातवृद्धौ त्वक् पारुष्यं कार्श्यं कार्ष्ण
गात्रस्फुरणमुष्णकामिता निद्रानाशोऽल्पबलत्वं
गाढवर्च्चस्त्वञ्च ।”
“तत्र वातक्षये मन्दचेष्टताल्पवाक्त्वमल्पहर्षो
मूढसंज्ञा च ।” इति सुश्रुते सूत्रस्थाने पञ्च-
दशेऽध्याये ॥ * ॥ स्थानविशेषेऽवस्थितस्यास्य
चिकित्सा यथा, --
“विशेषतस्तु कोष्ठस्थे वाते क्षारं पिबेन्नरः ।
आमाशयस्थे शुद्धस्य यथा दोषहरी क्रिया ॥
आमाशयगते वाते छर्द्दिताय यथाक्रमम् ।
देयः षड्धरणो योगः सप्तरात्रं सुखाम्बुना ॥”
“पक्वाशयगते वाते हितं स्ने हविरेचनम् ।

वरटिका वररै इति लोके ।
मङ्गल्यकः मसूरी
इति लोके । पुरःपवनः प्राग्वातः
। आमतः
आमेन मार्गावरणात् । यत उक्तम्
।
वायोर्द्धातुक्षयात् कोपो
मार्गस्यावरणेन चेति ।
पयोदसमये वर्षासु ।
जरामतिगतेऽशिते भुक्ते-
ऽतीव जीर्णताङ्गते । देहे
स्रोतांसीत्यादिना
संप्राप्तिरुक्ता ।
कषायादिभिर्हेतुभिर्व्वर्षादौ
समये हेतुभूते बली अनिलः
प्रवृद्धो वायुः
करोति विविधान् रोगान् । ते
रोगाः कथ्यन्ते ।
"शिरोग्रहोऽल्पकेशत्वं
जृम्भात्यर्थं हनुग्रहः ।
जिह्वास्तम्भो गद्गदत्वं
मिन्मिनत्वञ्च मूकता ॥
वाचालता प्रलापश्च
रसानामनभिज्ञता ।
वाधिर्य्यं कर्णनादश्च स्पर्शज्ञत्वं
तथार्द्दितम् ॥
मन्यास्तम्भोऽत्र गणितो
बाहुशोषोपबाहुकः ।
चर्व्विता चैव विश्वाची
ऊद्र्ध्ववात उदीरितः ॥
आध्मानञ्च प्रत्याध्मानं
वाताष्ठीला प्रत्यष्ठीला ।
तूणी च प्रतितूणी च
वह्निवैषम्यमेव च ॥
आटोपः पार्श्वशूलञ्च त्रिकशूलं
तथैव च ।
मुहुश्च मूत्रलं मूत्रनिग्रहो
मलगाढता ।
पुरीषस्याप्रवृत्तिश्च गृध्रसी च
ततः परः ॥

स्निग्धपद्मपत्रतल्पं सुस्निग्धव्यजनानिलम्
॥
एतत्ते कथितं वत्से सद्यो वातप्रणाशनम् ।
वायवस्त्रिविधाः पुंसां
क्लेशसन्तापकामजाः ॥"
इति श्रीब्रह्मवैवर्त्ते ब्रह्मखण्डे १६ अध्यायः
॥ * ॥
अन्यच्च ।
"विल्वाग्निमन्थश्योनाकपाटलापारिभद्रकम्
।
प्रसारण्युग्रगन्धा च बृहती कण्टकारिका ॥
वला चातिवला रास्ना श्वदंष्ट्रा च पुनर्नवा ।
एरण्डशारिवा पर्णीगुडत्तीकपिकच्छवः ॥
एषां दशपलिकान् भागान् क्वाथयेत्
सलिले-
ऽमले ।
तेन पादावशेषेण तिलं पात्रे विपाचयेत् ॥
आजं वा यदि वा गव्यं क्षीरं दत्त्वा चतुर्गुणम्
।
शतावरीरसञ्चैव तैलतुल्यं प्रदापयेत् । * ।
द्रव्याणि यानि पेष्याणि तानि वक्ष्यामि
तच्छृणु ॥
शतपुष्पा देवदारु शालपर्णी वचागुरुः ।
कुष्ठमांसी सैन्धवञ्च पलमेकं पुनर्नवा ॥
पाने नस्ये तथाभ्यङ्गे तैलमेतत् प्रदापयेत् ।
हृच्छूलं पार्श्वशूलञ्च गण्डमालाञ्च नाशयेत्
॥

वस्तयः शोधनीयाश्च प्राशाश्च लवणोत्तराः ॥"
स्ने हलवणम् ।
"स्नुहीलवणवार्त्ताकुस्नेहान् छन्ने घटे दहेत् ।
गोमयैः स्ने हलवणं तत्परं वातनाशनम् ॥
कार्य्यो वस्तिगते चापि विधिर्वस्तिविशोधाः ।
त्वङ्मांसासृक्शिरा प्राप्ते कुर्य्याच्चर्चासृग्
विमोक्षणम् ॥
स्नेहोपनाहाग्निकर्म्मबन्धनोन्मर्द्दनानि च ।
स्नायुसन्ध्यस्थि संप्राप्ते कुर्य्याद्वाते विचक्षणः ॥
स्वेदाभ्यङ्गावगाहांश्च हृद्यञ्चान्नन्त्वगाश्रिते ।
शीताः प्रदेहा रक्तस्थे विरेको रक्तमोक्षणम् ॥
विरेको मांसमेदःस्थे निरूहाः शमनानि च ।
बाह्याभ्यन्तरतः स्ने हैरस्थिमज्जगतं जयेत् ॥
हर्षोऽन्नपानं शुक्रस्थे बलशुक्रकरं हितम् ।

| | | |
|---|---|---|
| कलापखञ्जता चापि खञ्जता पङ्गुता तथा ।<br>क्रोष्टुशीषककल्यौ च वातकण्टक एव च ॥<br>पादहर्षः पाददाहः आक्षेपो दण्डकाभिधः ।<br>वातपित्तकृताक्षेपस्तथा दण्डापतानकः ॥<br>अभिघातकृताक्षेप आयामो द्विविधः स्मृतः ।<br>आन्तरश्च तथा बाह्यौ धनुर्वातश्च कुब्जकः ॥<br>अपतन्त्रोपतानश्च पक्षाघातोऽखिलाङ्गकः ।<br>कम्पः स्तम्भो व्यथा तोदो भेदश्च स्फुरणं तथा ॥<br>रौक्षं काश्यञ्च कार्ष्ण्यञ्च शैत्यं लोम्नाञ्च हर्ष-<br>णम् ।<br>अङ्गमर्द्दोऽङ्गविभ्रंशः शिरासङ्कोच एव च ॥ | | |

विवद्धमार्गं शुक्रन्तु दृष्ट्वा दद्याद्विरेचनम्
॥
गर्भे शुष्के तु वातेन बालानाञ्चापि
शुष्यताम् ।
सितामधुककाश्मर्य्यैर्हितमुत्थापने पयः
॥”
इति वैद्यकचक्रपाणिसंग्रहे
वातव्याध्यधिकारः ॥)

**वातकः**, पुं, (वात इव चञ्चलः । इवार्थे कन् ।

यद्वा, वातं करोतीति । कृ +
अन्येभ्योऽपीति
डः ।) अशनपर्णी । इत्यमरः । २ । ४ ।
१४९ ॥

**वातकर्म्म** [न्], (वातस्य कर्म्म ।) मरुत्क्रिया ।

पर्द्दनम् । यथा, --
वराह उवाच ।
“स्पृश्यमानेन मे भूमे ! वातकर्म्म
प्रमुञ्चति ।
एवं हि पुरुषो युक्तो वातपीडितमानसः ॥
मक्षिका पञ्च वर्षाणि त्रीणि वर्षाणि मूषकः
।
श्वा चैव त्रीणि वर्षाणि कूर्म्मो वै जायते
नव ॥
एषु वै तापनं देवि ! मेहनं मम शंसति ।
यो वै शास्त्रं विजानाति मम
कर्म्मपरायणः ॥
श्रुत्वा वाक्यं भगवतो प्रत्युवाच वसुन्धरा
॥
धरण्युवाच ।
अतुलं लभते पापं तव कर्म्मपरायणः ।
तस्य देव सुखार्थाय विशुद्धिं वक्तुमर्हसि
॥
वाराह उवाच ।
शृणु कात्स्न्र्येन मे देवि ! कथ्यमानं
मयानघे ।
अपराधमिमं कृत्वा सन्तरेद्येन कर्म्मणा ॥
यावकेन दिनत्रीणि नक्तेन च पुनस्त्रयः ।

क्वाथश्चोष्णो हितः पाने
धान्यनागरकोऽथवा ॥
वातगुल्मेषु सर्व्वेषु ज्वरेषु विषमेषु च ।
रास्नाद्यपञ्चकं वापि वातगुल्मस्य
पाचनम् ।
शठी सौवर्च्चलं शुण्ठी पाचनं
वातगुल्मिने ॥”
“नागरं क्रिमिजित् पथ्या त्रिवृता
त्रिगुणा-
युतम् ।
चूर्णं गुडान्वितं देयं वातगुल्मविरेचनम्
॥
दन्त्याश्च भाग एकस्तु द्वौ भागौ च
हरी-
तकी ।
त्रिवृतायास्त्रिभागः स्यात्
शुण्ठ्याश्चत्वार
एव च ।
प्रक्षिप्य सर्व्वमेकत्र सर्व्वतुल्यगुडेन तु
॥
वटकं भक्षयेत् प्रातस्तस्योपरि जलं
पिबेत् ।
क्वथितश्च विवेकश्च
वातगुल्मोपशान्तये ॥”
इति वातगुल्मचिकित्सा ॥ इति हारीते
चिकि-
त्सितस्थाने चतुर्थेऽध्याये ॥) तस्य
निदानादिर्गुल्म-
शब्दे द्रष्टव्यः ॥

**वातघ्नी**, स्त्री, (वातं हन्तीति । हन + टक् ।

ङीप् ।) शालपर्णी । अश्वगन्धा ।
शिमृडी-
क्षुपः । इति राजनिर्घण्टः ॥

**वाततूलं**, क्ली, (वातेन उड्डीयमानं तूलम् ।)

आकाशोड्डीयमानसूत्रम् । वुडिर सूता
इति
भाषा । तत्पर्य्यायः । वृद्धसूत्रकम् २
इन्द्रतूलम् ३

इति संक्षिप्तसारोणादिवृत्तिः ॥ (वायुवद्गग-
गामिनि, त्रि । यथा, ऋग्वेदे । ४ । ५८ । ७ ।
“सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पत-
यन्ति यह्वाः ॥”)

**वातफुल्लान्त्रं**, क्ली, (वातेन फुल्लं विकशितं यद-

न्त्रं तत् ।) पुप्फुसः । इति भूरिप्रयोगः ॥

**वातमजः**, पुं, (बातमभिमुखीकृत्य अजति गच्छ-

तीति । वात + अज + “वातशुनीतिलशर्द्धेष्वज-
धेट्तुदजहातीनां उपसंख्यानम् ।” ३ । २ ।
२८ । इत्यस्य वार्त्तिकोक्त्या खश् ।
“अरुर्द्विषद-
जन्तस्य मुम् ।” ६ । ३ । ६७ । इति मुम् ।)
वातमृगः । इति जटाधरः ॥ (वातगामिनि,
त्रि । यथा, भट्टिः । २ । १७ ।
“मेघात्ययोपात्तवनोपशोभं
कदम्बकं वातमजं मृगाणाम् ॥”)

**वातमण्डली**, स्त्री, (वातस्य मण्डली ।) वात्या ।

इति त्रिकाण्डशेषः ॥

**वातमृगः**, पुं, (वाताभिमुखगामी मृगः ।) वात-

प्रमीः । इत्यमरः । २ । ५ । ७ ॥

**वातरक्तं**, क्ली, (वातदूषितं रक्तं यत्र ।) रोग-

विशेषः । तस्य विप्रकृष्टं निदानमाह ।
“लवणाम्लकटुक्षारस्निग्धोष्णाजीर्णभोजनैः ।
क्लिन्नशुष्काम्बुजानूपमांसपिण्याकमूलकैः ॥
कुलत्थमासनिष्पावशाकादिपललेक्षुभिः ।
दध्यारनालसौवीरशुक्ततक्रसरासवैः ॥
विरुद्धाध्यशनक्रोधदिवास्वप्नातिजागरैः ।
प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम् ।
स्थूलानां सुखिनां चापि प्रकुप्येद्वातशोणितम् ॥
हस्त्यश्वोष्ट्रैर्गच्छतश्चाश्नतश्च
विदाह्यन्नं संविदाहाशनस्य ॥ * ॥
क्षारो यवक्षारादिः । अजीर्णभोजनैः अजी-
र्णाय भोजनैः । अतिमात्रभोजनैरित्यर्थः ।
क्लिन्नादीनि मांसस्य विशेषणानि । क्लिन्नं शटि-
तम् । शुष्कमातपे शोषितम् । अम्बुजं मत्स्यादि-
मांसम् । आनूपं गौडादिपूर्व्वदेशजं मांसम् ।

कर्म्म चैवं ततः कृत्वा स च मे
नापराध्यति ॥
सर्व्वशङ्कां परित्यज्य मम लोकाय
गच्छति ।
एतत्ते कथितं भद्रे मरुत्कर्म्मापराधिनः ॥
दोषञ्चैव गुणञ्चैव यत्त्वया परिपृच्छितम्
॥”
इति वराहपुराणे मरुत्कर्म्मप्रायश्चित्तम्
॥

**वातकी**, [न्] त्रि, (वातोऽतिशयितोऽस्त्यस्येति ।
वात + “वातातीसाराभ्यां कुक् च ।” ५
। २ । १२९ ।
इति इनिः । कुक् च ।) वातरोगयुक्तः ।
तत्प-
र्य्यायः । वातरोगी २ । इत्यमरः । २ । ६
। ५९ ॥

**वातकुम्भः**, पुं, (वातस्य कुम्भ इव ।) गजकुम्भाधो-
भागः । इति हेमचन्द्रः । ४ । २९३ ॥

**वातकेतुः**, पुं, (वातस्य केतुरिव ।) धूलिः । इति
त्रिकाण्डशेषः ॥

**वातकेलिः**, पुं, (वात त् क सुखे + भावे घञ् ।
वातेन सुखेन केलिर्यत्र ।) कलालापः ।
षिड्ग-
दन्तक्षतः । इति मेदिनी । ले, १६३ ॥

**वातगामी**, [न्] पुं, (वातेन वायुना सह गच्छ-
तीत । गम + णिनिः ।) पक्षी । इति
केचित् ॥

**वातगुल्मः**, पुं, वातुलः । यथा, --
“वातुलो वातगुल्मः
स्याच्चारवायुर्निदाघजः ।
झञ्झानिलः प्रावृषिजो वासन्तो
मलयानिलः ॥”
इति त्रिकाण्डशेषः ॥
(वातेन जातो गुल्मः ।) रोगविशेषः ।
(यथा,
मार्कण्डेये । ३९ । ५४ ।
“वातगुल्मप्रशान्त्यर्थमुदावर्त्ते तथोदरे ।
ग्रीष्महासम् ४ वंशकफम् ५ मरुद्ध्वजम्
६ । इति
हारावली । २३ ॥

**वातध्वजः**, पुं, (वातो वायुर्ध्वजो यस्य ।) मेघः
।
इति शब्दमाला ॥

**वातपित्तजशूलं**, क्ली, (वातपित्ताभ्यां जायते
इति । जन् + डः । तच्च तत्
शूलञ्चेति ।) शूल-
रोगविशेषः । तस्य औषधं यथा, --
“मातुलुङ्गस्य निर्यासं गुडाज्येन
समन्वितम् ।
वातपित्तजशूलानि हन्ति वै
पानयोगतः ॥”
इति गारुडे १८८ अध्यायः ॥
(तथास्यान्या चिकित्सा । यथा, --
“दुरालभा पर्पटकञ्च विश्वा
पटोलनिम्बाम्बुदतिन्तिडीकम् ।
सशर्करं कल्कमिदं प्रयोज्यं
सपित्तवातोद्भवशूलशान्त्यै ॥”
इति हारीते
चिकित्सितस्थानेऽष्टमेऽध्याये ॥)

**वातपुत्त्रः**, पुं, (वातस्य पुत्त्रः ।) भीमसेनः । हनू-
मान् । महाधूर्त्तः । इति मेदिनी । रे,
९६ ॥

**वातपोथः**, पुं, (वातं वातरोगं पुथ्यति हिन-
स्तीति । पुथ + अण् ।) पलाशवृक्षः ।
इत्य-
मरः । २ । ४ । २९ ॥ (अस्य
पर्य्यायो यथा, --
“वातपोथः पलाशः स्याद्वानप्रस्थश्च
किंशुकः ।
राजादनो ब्रह्मवृक्षो हस्तिकर्णो
दलोऽपरः ॥”
इति वैद्यकरत्नमालायाम् ॥)

**वातप्रमीः**, पुं, स्त्री, (वातं प्रमिमीते वाताभि-
मुखं गच्छतीति । वात + प्र + मा माने
+
पिण्याकं तिलखलिः । मूलकं प्रसिद्धमेव ।
निष्पावः वोडाशाकम् । शाकं पत्रशाकम् ।
आदिशब्देन वृन्ताकादीनि फलशाकानि गृह्यन्ते
।
पललं शटितत्वादिदोषरहितमपिमांसं वात-
शोणितं प्रकोपयेत् । शटितादि तु मांसं
विशेषतो वातशोणितं प्रकोपयेत् । आरनालं
सन्धानभेदः । शुक्तं सन्धानभेदः । सौवीरं
सन्धानभेदः । तक्रं चतुर्थांशजलयुक्तं बस्त्रपूतं
दधि । सुरा सन्धानभेदः । आसवः सन्धान-
भेदः । विरुद्धं क्षीरमत्स्यादि । अध्यशनम् ।
अजीर्णे भुज्यते यत्तु तदध्यशनमुच्यते ।
अतिजागरो निशि । प्रायशः बाहुल्येन । सुकु-
माराणां अल्पतरकायव्यापाराणाम् । अथवा
मिथ्याहारविहारिणाम् । अयथाहारविहा-
राभ्यां स्थूलानां सुखिनाञ्च रक्तवृद्ध्या । हस्त्य-
श्वोष्ट्रैर्गच्छतः यतो वायुर्व्विवर्द्धते रुधिरञ्चाधो
गच्छति । हस्त्यादय उपलक्षाणि । पद्भ्या-

| | | |
|---|---|---|
| यवागूं वापि पवनं वायुग्रन्थिं प्रतिक्षिपेत् ॥"<br>अस्य चिकित्सा यथा, --<br>"वचायवानीत्रिकटुदशमूलीजलं शतम् । | "वातप्रमीः ।" उणा० ४ । १ । इति ईप्रत्ययेन<br>साधुः ।) वातमृगः । इत्यमरः । २ । ५ । ७ ॥<br>वाओट् हरिण इति भाषा ॥ नकुलः । अश्वः । | |

मप्यति चलतः । अश्नतः विदाह्यन्नम् ।
विदाहि
निष्पावकुलत्थसर्षपशाकादि ।
संविदाहाशनस्य ।
संविदाहेऽशनं यस्य भुक्ते विदग्धे
तदुपरि
भुञ्जानस्येत्यर्थः ।
अध्यशनमुक्त्वाप्येतद्वचनं
विदग्धाजीर्णभोजनस्य विशेषतो
हेतुत्वार्थम् ।
पश्चात् वातशोणितं
प्रकुप्येदित्यनेनान्वयः ।
एतेषां कारणानां मध्ये केनचिद्वायुः
केन-
चिदुभयमपि प्रकुप्येत् ॥ * ॥
संप्राप्तिमाह ।
"कृत्स्नं रक्तं विदहत्याशु तच्च
दुष्टं स्रस्तं पादयोश्चीयते तु ।
तत् संपृक्तं वायुना दूषितेन
तत्प्राबल्यादुच्यते वातरक्तम् ॥"
पूर्व्वोक्तैर्हेतुभिः कृत्स्नं समस्तं रक्तं
विदहति
अत्र दहधातुरविवक्षितकर्म्मकः । तेन
विद-
हति विदग्धं भवतीत्यर्थः । तच्च दुष्टं
रक्तम् ।
स्रस्तं अधोगतम् । पादयोश्चीयते
सञ्चितं
भवति । तद्रुधिरं दूषितेन स्वहेतुवायुना
संपृक्तं मिलितं वातरक्तं उच्यते । ननु
चैत्रस्य
संप्राप्तिरुक्ता सुश्रुतेन ।
"शीघ्रं रक्तं दुष्टिमायाति तच्च
वायोर्मार्गं संरुणद्ध्याशु वातः ।
क्रुद्धोऽत्यर्थं मार्गरोधात् स वायु-
रत्युद्रिक्तं दूषयेदुक्तमाशु ॥"
अत्र प्रथमं रक्तस्य दुष्टिरतो
रक्तवातमिति

स्पर्शासहत्वं रुग्दाहः शोथपाकौ भृशोष्णता
॥
विदाहश्च पादावेव बोद्धव्यः । यत आह
सुश्रुतः ।
पित्तासृग्भ्यामुग्रदाहौ भवेता-
मत्यर्थोष्णौ रक्तशोथौ मृदू च ॥
पदाविति शेषः ॥ अधिककफं तदाह ।
कफैस्तैमित्यगुरुतासुप्तिस्निग्धत्वशीतताः
।
गुरुतादयः पादयोरेव । यत आह सुश्रुतः ।
कण्डूमन्तौ स्वेदशीतौ सशोथौ
पीनस्तब्धौ श्लेष्मदुष्टे तु रक्ते ॥ * ॥
अतिक्रियमाणवातरक्तस्यउपद्रवानाह ।
"अस्वप्नारोचकश्वासमांसकोथशिरोग्रहाः
।
मूर्च्छा च मन्दरुक् तृष्णा
ज्वरमोहप्रकोपकाः ॥
हिक्वायाङ्गुल्मवीसर्पपाकतोदभ्रमक्लमाः ।
अङ्गुलीवक्रतास्फोटदाहमर्म्मग्रहार्व्वुदाः ॥"
मांसकोथो मांसगलनम् ॥ * ॥
असाध्यत्वादिक-
माह ।
"एतैरुपद्रवैर्व्वर्ज्यं मोहेनैकेन वापि यत् ।
अकृत्स्नोपद्रवं याप्यं साध्यं
स्यान्निरुपद्रवम् ॥
एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम् ।
त्रिदोषजमसाध्यं स्याद्यस्य च स्युरुपद्रवाः
॥"
अथ वातरक्तस्य चिकित्सामाह ।
"वातशोणितिनो रक्तं स्निग्धस्य बहुशो
हरेत् ।
अल्पाल्पं रक्षयेद्वायुं यथादोषं यथाबलम् ॥
उग्राङ्गदाहतोदेषु जलौकोभिर्विनिर्हरेत् ।
शृङ्गतुम्बैश्चिमिचिमाकण्डूरुग्वेदनान्वितम्
॥
प्रच्छिन्नेन शिराभिर्व्वा देशाद्देशान्तरं व्रजेत्
।
अङ्गे म्लाने न तत् स्राव्यं रूक्षे वातोत्तरञ्च
यत् ।

पादशेषः कषायस्तु गोदुग्धं द्रोणकस्तथा ॥
तिलतैलाढकं ताभ्यां पचेन्मृद्वग्निना भिषक् ।
वक्ष्यमाणैस्ततो द्रव्यैः सम्यक्कल्कीकृतैः
पचेत् ॥
मञ्जिष्ठा मधुकं कुष्ठं जीवनीयगणस्तथा ।
एलागुरु च मृद्वीका मांसी व्याघ्रनखो नखी ॥
हरेणुः श्रावणी व्योषं स्थिरा त्वामलकी तथा
।
शृङ्गी श्यामा शताह्वा च विष्णुक्रान्ता च
पत्रकम् ॥
नागकेशरवालत्वक्पद्मकोत्पलचन्दनम् ।
एतानि कल्कवस्तूनि कथितानीह कोविदैः ॥
पानेऽभ्यङ्गेऽनुवासे च तैलमेतन्निषेविणम् ।
वातरक्तं तदुद्भूतोपद्रवानाशु नाशयेत् ॥
धन्यं पुंसवनं स्त्रीणां गर्भदं वातपित्तनुत् ।
स्वेदकण्डूरुजायामशिरःकम्पार्द्दितामयान् ।
हन्याद्व्रणकृतान् दोषान् गुडूचीतैलमुत्तमम्
॥"
इति गुडूचीतैलम् । इति भावप्रकाशः ॥
(यथा च ।
"हुताग्निहोत्रमासीनमृषिमध्येपुनर्व्वसुम् ।
पृष्टवान् गुरुमेकाग्र्यमग्निवेशोऽग्निवर्च्चसम् ॥
अग्निमारुततुल्यस्य संसर्गस्यानिलासृजोः ।
हेतुलक्षणभैषज्यान्यथास्मै गुरुरब्रवीत् ॥"
"अभिघातादशुद्ध्या च प्रदुष्टे शोणिते नृणाम्
।
कषायकटुतिक्ताल्परुक्षाहारादभोजनात् ॥
हयोष्ट्रयानयानाम्बुक्रीडाप्लवनलङ्घनात् ।
उष्णे चात्यध्वगमनाद्व्यवायाद्वेगनिग्रहात् ॥
वायुर्व्विवृद्धो वृद्धेन रक्तेनावारितः पथि ।
क्रुद्धस्तद्दूषयेद्रक्तं तज्ज्ञेयं वातशोणितम् ॥
खुडं वातबलासाख्यमाढ्यंवातञ्च नामभिः ।
तस्य स्थानं करौ पादावङ्गुल्यः पर्व्वसन्धयः
॥
कृत्वादौ हस्तपादे तु मूलं देहो विधावति ।
सौक्ष्म्यात् सर्व्वसवत्वाच्च देहं गच्छन्
शिरायवैः ।
पर्व्वस्वभिहतं क्षुब्धं वक्रत्वादभितिष्ठते ।

व्यपदेष्टुमुचितं भवत्यत आह ।
तत्प्राबल्या-
दिति । तस्य वातस्य दोषत्वेन
प्राधान्याद्वात-
रक्तमिति व्यपदिश्यते ॥ * ॥
पूर्व्वरूपमाह ।
“स्वेदोऽत्यर्थं न वा कार्श्यं स्पर्शाज्ञत्वं
क्षतेऽति-
रुक् ।
सन्धिशैथिल्यमालस्यं सदनं
पिडकोद्गमः ॥
जानुजङ्घोरुकट्यंशहस्तपादाङ्गसन्धिषु
।
निस्तोदः स्फुरणं भेदो गुरुत्वं सुप्तिरेव
च ॥
कण्डूः सन्धिषु रुक् दाहो भूत्वा नश्यति
चास-
कृत् ।
वैवर्ण्यं
मण्डलोत्पत्तिर्व्वातासृक्पूर्ब्बलक्षणम् ॥”
अथाधिकृतवातस्य वातरक्तस्य
लक्षणमाह ।
“वातेऽधिकेऽधिकं तत्र
शूलस्फुरणतोदनम् ।
शोथस्य रौक्षं कृष्णत्वं
श्यावतावृद्धिहानयः ॥
धमन्यङ्गुलिसन्धीनां
सङ्कोचोऽङ्गग्रहोऽतिरुक् ।
शीतद्वेषानुपशयौ स्तम्भवेपथुसुप्तयः ॥”
तत्र पादयोः शूलादिकमधिकम् । यत
आह
सुश्रुतः ।
“स्पर्शोद्विग्नौ तोदभेदप्रशोफौ
स्वापोपेतौ वातरक्तेन पादौ ॥” इति ।
अत्र सुप्तिः स्पर्शाज्ञता ॥ * ॥
अधिकरक्तं वात-
रक्तमाह ।
“रक्ते शोथोऽतिरुक्
तोदस्ताम्रश्चिमिचिमा-
यते ।
गम्भीरं श्वयथुं स्तम्भं कम्पं ग्लानिं शिरा-
मयात् ।
रोगानन्यांश्च वातोत्थान्
कुर्य्याद्वायुररक्षितः ॥
विविधान् वातरोगान् वा मृत्युं
वात्यवशेषितम् ।
रक्तं कुर्य्यात्ततः स्निग्धात्ततप्रमाणेन निर्हरेत्
॥
विरेचयेत्तु पित्तादौ स्नेहयुक्तैर्व्विरेचनैः ।
बाह्यमालेपनाभ्यङ्गपरिषेकोपनाहनैः ।
विरेकास्थापना स्ने हपानैर्गम्भीरमाचरेत् ॥
दिवास्वप्नञ्च कोपञ्च व्यायामं मैथुनं तथा ।
कटूष्णं गुर्व्वभिष्यन्दि लवणाम्लौ च
वर्ज्जयेत् ॥
पुराणा यवगोधूमशालयः षष्टिकास्तथा ।
भोजनार्थे रसार्थेतु विष्किराः प्रतुदा हिताः
॥
आढकाश्चणका मुद्गा मसूराः
सकुलत्थकाः ।
यूषार्थे बहुसपिष्काः प्रशस्ता वातशोणिते ॥
सुनिषण्णकवेत्राग्रं काकमाची शतावरी ।
वास्तूकोपोदिकाशाकं शाकं सौवर्च्चलं
तथा ॥
घृतमांसरसैर्भृष्टं शाकमतस्या च दापयेत् ।
हितो गोधूमचूर्णैश्च छागक्षीरघृतप्लुतैः ॥
लेपस्तद्वत्तिला भृष्टाः पिष्टाः पयसि
निर्व्वृताः ॥
क्षीरपिष्टातसीभिर्व्वा वर्द्धमानफलैरपि ।
दुग्धपिष्टैः प्रलेपैः स्याद्धितः पवनशोणिते ॥
गुडूचीक्वाथकल्काभ्यां सपयस्कं पलं
सृतम् ।
वातरक्तं निहन्त्याशु कुष्ठं हरति दुस्तरम् ॥”
गुडूचीघृतम् ॥ * ॥
“तुलां पचेद्गुडूच्यास्तु जलद्रोणचतुष्टये ।
स्थितं पित्तादिसंसृष्टं तास्ताः सृजति वेदनाः
॥
करोति दुःखं तेष्वेव तस्मात् प्रायेण सन्धिषु
॥”
“उत्तानमथ गम्भीरं द्विविधन्तत् प्रचक्षते ।
त्वङ्मांसाश्रयमुत्तानं गम्भीरन्त्वन्तराश्रयम् ॥
कण्डूदाहरुगायासतोदस्फुरणकुञ्चनैः ।
अन्विता श्यावरक्ता त्वग्वाह्ये ताम्रा तथेष्यते
॥
गम्भीरे श्वयथु स्तब्धः
कठिनोऽन्तर्भृशार्त्तिमान् ।
श्यावस्ताम्रोऽथवा दाहतोदस्फुरणपाकवान्
॥
रुग्विदाहा त्वतोऽभीक्ष्णं वायुः
सन्ध्यस्थिमज्जसु ।
छिन्दन्निव चरत्यन्तर्वक्रीकुर्व्वंश्च वेगवान् ॥
करोति खञ्जं पङ्गुं वा शरीरे सर्व्वतश्चरन् ।
सर्व्वैर्लिङ्गेश्च विज्ञेयं वातासृगुभयाश्रयम् ॥”
“रक्तमार्गं निहन्त्याशु शाखासन्धिषु मारुतः
।
निवेश्यान्योन्यमावार्य्य वेदनाभिर्हरेदसून् ॥
तत्र मुञ्चेदसृक्शृङ्गजलौकःसूच्यलावुभिः ।
पुच्छनैर्व्वा शिराभिर्वा यथादोषं यथाबलम् ॥
रुग्दाहशूलतोदार्त्तादसृक्स्राव्यंजलौकसा ।
शृङ्गैस्तम्भैर्हरेत् सूतिकण्डूचिमिचिमायनात्
॥
देशाद्देशं व्रजत् स्राव्यं शिराभिः पुच्छनेन वा
॥”
“सर्पिस्तैलवसामज्जापानाभ्यञ्जनवस्तिभिः
।

| | | |
|---|---|---|
| स्निग्धरूक्षैः समं नैति<br>कण्डूत्क्लेदसमन्वितः"<br>अधिकपित्तं तदाह।<br>"पित्ते विदाहः संमोहः स्वेदो मूर्च्छा<br>मद-<br>स्तृषा। | | |

मुखोष्णैरुपनाहैश्च वातोत्तरमुपाचरेत् ॥
विरेचनघृतक्षीरपानैः सेकैः सवस्तिभिः ।
शीतैर्निर्वापनैश्चापि रक्तपित्तोत्तरं जयेत्
॥
वमनं मृदुनात्यर्थं स्नेहसेकादिलङ्घनम् ।
कोष्णलेपाश्च शस्यन्ते वातरक्ते कफोत्तरे
॥
कफवातोत्तरे शीतैः प्रलिप्ते वातशोणिते ।
विदाहः शोथरुक्कण्डूविवृद्धिः
स्तम्भनाद्भवेत् ॥
पित्तरक्तोत्तरे दाहः क्लेदोऽवदरणं भवेत् ।
उष्णैस्तस्माद्भिषग्दोषबलं बुद्‌ध्वाचरेत्
क्रियाम् ॥”
“दत्त्वापरूषकद्राक्षाकाश्मर्य्येक्षुरसान्
समान् ।
पृथग्विदार्य्याश्च रसं तथा क्षीरञ्चतुर्गुणम्
॥
एतत् प्रायोगिकं सर्पिः पारूषकमिति
स्मृतम् ।
वातरक्ते क्षते क्षीणे वीसर्पे पैत्तिके ज्वरे
॥”
इति पारूषकं घृतम् ॥ * ॥
“मधुपर्ण्याः पलं पिष्ट्वा तैलप्रस्थं चतुर्गुणे
।
क्षीरे साध्यं शतकृत्वस्तदेवं मधुकात् शते
॥
सिद्धं देयं त्रिदोषे स्यात्
वातास्रश्वासकासनुत् ।
हृत्पाण्डुरोगवीसर्पकामलादाहनाशनम् ॥
वलाकषायकल्काभ्यां तैलं क्षीरसमन्तथा
।
सहसशतपाकं वा वातासृग्वातरोगनुत् ॥
रसायनं श्रेष्ठतमं इन्द्रियाणाम्प्रसादनम् ।
जीवनं वृं हणं स्वर्य्यं शुक्रासृग्दोषनाशनम्
॥”
“चन्द्रपादाम्बुसंसिक्ते क्षौमपद्मदलच्छदे ।
शयने पुलिनस्पर्शे शीतमारुतवीजिते ॥
चन्दनार्द्रकरार्द्राङ्ग्यः प्रिया नार्य्यः
प्रियंवदाः ।
अथात्र पथ्यापथ्यविधिः ।
“द्वयोरस्रस्रुतिः सूचीजलौकाशृङ्ग्यलावुभिः
।
शतधौतघृताभ्यङ्गो मेषीदुग्धावसेचनम् ॥
यवषष्टीकनीवारकलमारुणशालयः ।
गोधूमाश्चणका मुद्‌गास्तुवर्य्योऽपि
मुकुष्टकाः ॥
अजानां महिषीणाञ्च गवामपि पयांसि च ।
लावतित्तिरिसर्पद्विट्‌ताम्रचूडादिविष्किराः ॥
प्रतुदाः शुकदात्यूहकपोतकटकादयः ।
उपोदिकाकाकमाची वेत्राग्रं सुनिषण्णकम् ॥
वास्तुकं कारवेल्लञ्च तण्डुलीयः प्रसारणी ।
पत्तूरो वृद्धकुष्माण्डं सर्पिः शम्पाकपल्लवम् ॥
पटोलं रुवुतैलञ्च मृद्वीकाश्वेतशर्करा ।
नवनीतं सोमवल्ली कस्तूरी सितचन्दनम् ॥
शिंशपागुरुदेवाह्वसरलं स्नेहमर्द्दनम् ।
तिक्तञ्च पञ्चमुद्दिष्टं वातरक्तगदे नृणाम् ॥
दिवास्वप्नाग्निसन्तापव्यायामातपमैथुनम् ।
माषाः कुलत्था निष्पावाः कलायाः
क्षारसेवनम् ॥
अम्बुजानूपमांसानि विरुद्धानि दधीनि च ।
इक्षवो मूलकं मद्यं पिण्याकोऽम्लानि
काञ्जिकम् ॥
कटुञ्च गुर्व्वभिष्यन्दि लवणानि च शक्तवः ।
इत्यपथ्यं निगदितं वातरक्तगदे नृणाम् ॥”
इति वैद्यकपथ्यापथ्यविधिग्रन्थे
वातरक्ताधि-
कारः ॥)

**वातरक्तघ्नः**, पुं, (वातरक्तं रोगविशेषं हन्तीति ।
हन + टक् ।) कुक्कुरवृक्षः । इति शब्द-
चन्द्रिका ॥ कुकुरमुडा इति भाषा ॥

**वातरक्तारिः**, पुं, (वातरक्तस्य अरिर्नाशकः ।)
पित्तघ्नी लता । इति शब्दचन्द्रिका ॥ गुलञ्च
इति भाषा ॥

**वातरङ्गः**, पुं, (वातेन वायुना रङ्गो यस्य । निर-
न्तरचलदलत्वादस्य तथात्वम् ।) अश्वत्थः
।

**वातरोगी** [न्] त्रि, (वातरोगोऽस्त्यस्येति । वात-
रोग + इनिः ।) वातरोगयुक्तः । तत्र्य्यायः
।
वातकी २ । इत्यमरः ॥ (यथा,
बृहत्संहिता-
याम् । ८७ । ११ ।
“परतोऽपि दर्शनं वातरोगिणां चन्दनागुरु-
प्राप्तिः ॥”)

**वातर्द्धः**, पुं, काष्ठलौहोभयनिर्म्मितपात्रम् । तत्-
पर्य्यायः । काष्ठलौही २ । इति त्रिकाण्ड-
शेषः ॥

**वातलः**, पुं, (वातं लातीति । ला + कः ।)
चणकः । इति शब्दचन्द्रिका ॥ वायुकारके
त्रि ॥ (यथा, सुश्रुते सूत्रस्थाने ४६ अः ।
“वातलाः शीतमधुराः सकषाया
विरुक्षणाः ।
कफशोणितपित्तघ्नाश्चणकाः
पुंस्त्वनाशनाः ॥”)

**वातलमण्डली**, स्त्री, वात्या । इति भूरिप्रयोगः ॥

**वातवान्** [त्] त्रि, वायुयुक्तः । वातो विद्यते-
ऽस्य इत्यर्थे वतुप्रत्ययेन निष्पन्नः ॥

**वातवैरी** [न्], पुं, (वातस्य वैरी ।) वातादः ।
इति राजनिर्घण्टः ॥ वायुशत्रौ, त्रि ॥

**वातव्याधिः**, पुं, (वातजनितो व्याधिः ।) वात-
रोगः । इति राजनिर्घण्टः ॥ (यथा,
“शूनं सुप्तत्वचं भग्नं कम्पाध्माननिपीडितम्
।
रुजार्त्तिमन्तञ्च नरं वातव्याधिर्व्विनाशयेत्
॥”
इति माधवकरकृते रुग्विनिश्चये
वातरोगाधि-
कारे शेषांशे ॥)

**वातशीर्षं**, क्ली, (वातस्य शीर्षमिव ।) वस्तिः ।
इति राजनिर्घण्टः ॥

**वातशोणितं**, क्ली, (वातजं शोणितं दुष्टरक्तं

स्पर्शात् शीतसुखस्पर्शा घ्नन्ति दाहं रुजं क्लमम् ॥"
"गम्भीरे रक्तमाक्रान्तं स्याच्चेद्धातुं विवर्ज्जयेत् ।
रक्तपित्तातिवृद्ध्या तु पाकमाशु नियच्छति ॥
भिन्नं स्रवति वा रक्तं विदग्धं पूयमेव वा ।
तयोः क्रिया विधातव्याः व्यधः शोधनरोपणौ ॥
कुर्य्यादुपद्रवाणाञ्च क्रियां स्वात् स्वाच्चिकित्-
सितात् ॥"
इति चरके चिकित्सास्थाने २९ अध्यायः ॥
"गन्धकं पारदं लौहं घनं तालं मनःशिला ।
शिलाजतु पुरं शुद्धं समभागं विचूर्णयेत् ॥
विडङ्गं त्रिफला व्योषं वागुजी च पुनर्नवा ।
चित्रकं देवकाष्ठञ्च दार्व्वी श्वेतापराजिता ॥
चूर्णमेषां पृथ तुल्यं सर्व्वमेकत्र कारयेत् ।
त्रिफलाभृङ्गराजस्य रसेनैव पृथक् त्रिधा ॥
विभाव्य भक्षयेत् प्रातर्माषमात्रं दिने दिने ।
क्रमानुपानं निम्बस्य पत्रं पुष्पं वचं समम् ॥
शाणमात्रं घृतैर्दद्यात् सर्व्ववात विकारनुत् ।
वातरक्तं महाघोरं गम्भीरं सर्व्वजञ्जयेत् ॥
सर्व्वोपद्रवसंयुक्तं साध्यासाध्यं निहन्त्यलम् ॥"
इति वातरक्तान्तको रसः ॥ * ॥
"अथ शुद्धेन तालेन गन्धतुल्येन मेलयेत् ।
द्वयोस्तुल्यं जीर्णताम्रं वालुकायन्त्रके पचेत् ॥
अयन्तालेश्वरो नाम रसः परमदुर्ल्लभः ।
हन्यात् कुष्ठानि सर्व्वाणि वातरक्तमथापि वा ।
शूलमष्टविधं श्वित्रं रसस्तालेश्वरो महान् ॥"
इति शब्दरत्नावली ॥

**वातरथः**, पुं, (वातो वायू रथो यस्य ।) मेघः ।
इति त्रिकाण्डशेषः ॥ (वातो रथः प्रापको यस्येति वायुप्रापके, त्रि । यथा, भागवते । ३ । २९ । २० ।
"यथा वातरथो घ्राणमावृङ्क्ते गन्ध आशयात् ।
एवं योगरतं चेत आत्मानमविकारि यत् ॥")

**वातरायणः**, पुं, (वातेन वायुजनितरोगेण रायति शब्दायते इति । रै शब्दे + ल्युः ।) उन्मत्तः ।
निष्प्रयोजनपूरुषः । काण्डम् । करपात्रम् । कूटः । परसंक्रमः । इति मेदिनी । ने, ११६ ॥
सरलद्रुमः । इति शब्दरत्नावली ॥

**वातरूषः**, पुं, (वातेन रूष्यते भूष्यते इति । रूष + घञ् ।) वातूलः । उत्कोचः । शक्रधनुः । इति मेदिनी । षे, ५७ ॥

**वातरोगः**, पुं, (वातजनितो रोगः ।) वायुव्याधिः ।
तत्पर्य्यायः । वातव्याधिः २ चलातङ्कः ३ अनिलामयः ४ । इति राजनिर्घण्टः ॥ (यथा,
"बातरोगं निहन्त्याशु अर्द्दितं सापतन्त्रकम् ॥"
इति वैद्यकचक्रपाणिसंग्रहे वातव्याधौ स्वल्प-
रसोनपिण्डे ॥)
यत्र ।) वातरक्तरोगः । इति भावप्रकाशः ॥
(अस्य सनिदानसम्प्राप्तिकं पूर्व्वरूपं लक्षणञ्च
यथा, --
"विदाह्यन्नं विरुद्धञ्च तत्तच्चारुक्प्रदूषणम् ।
भजतां विधिहीनञ्च स्वप्नजागरमैथुनम् ॥
प्रायेण सुकुमाराणामचंक्रमणशीलिनाम् ।
अभिघातादशुद्धेश्च नृणामसृजि दूषिते ॥
वातलैः शीतलैर्वायुर्वृद्धः क्रुद्धो विमार्गगः ।
तादृशेनासृजा रुद्धः प्राक् तदेव प्रदूषयेत् ॥
आढ्यरोगं खुडं वातवलासं वातशोणितम् ।
तदाहुर्नामभिस्तच्च पूर्ब्बं पादौ प्रधावति ॥
विशेषाद्यानयानाद्यैः प्रलम्बौ तस्य लक्षणम् ।
भविष्यतः कुष्ठसमं तथा सादः श्लथाङ्गता ॥
जानुजङ्घोरुकट्यंशहस्तपादाङ्गसन्धिषु।
कण्डूस्फुरणनिस्तोदभेदगौरवसुप्तताः ॥
भूत्वा भूत्वा प्रणश्यन्ति मुहुराविर्भवन्ति च ।
पादयोर्मू लमास्थाय कदाचिद्धस्तयोरपि ॥
आखोरिव विषं क्रुद्धं कृत्स्नं देहं विधावति ।
त्वङ्मांसाश्रयमुत्तानं तत्पूर्व्वं जायते ततः ॥
कालान्तरेण गम्भीरं सर्व्वान् धातूनभिद्रवत् ।
कण्ड्वादिसंयुतोत्ताने त्वक्ताम्रश्यावलोहिता ॥
सायामा भृशदाहोष्मा गम्भीरेऽधिकपूर्व्वरुक् ।
श्वयथुर्ग्रथितः पाकी वायुः सन्ध्यस्थिमज्जसु ॥
छिन्दन्निव चरत्यन्तर्वक्रीकुर्व्वंश्च वेगवान् ।

| | | |
|---|---|---|
| इति महातालेश्वरो रसः ॥<br>इति वैद्यकरसेन्द्रसारसंग्रहे<br>वातरक्ताधिकारे ॥ | | |

करोति खञ्जं पङ्गुंवा शरीरे सर्व्वतश्चरन् ॥
वातेऽधिकेऽधिकन्तत्र शूलस्फुरणतोदनम् ।
शोफस्य रौक्ष्यकृष्णत्वश्यावतावृद्धिहानयः ॥
धमन्यङ्गुलिसन्धीनां सङ्कोचोऽङ्गग्रहोऽतिरुक् ।
शीतद्वेषानुपशयौ स्तम्भवेपथुसुप्तयः ॥
रक्ते शोफोऽतिरुक्तोदस्ताम्रश्चिमिचिमायते।
स्निग्धरुक्षैः शमं नैति कण्डूक्लेदसमन्वितः ॥
पित्ते विदाहः सम्मोहः स्वेदो मूर्च्छामदः स-
तृट् ।
स्पर्शाक्षमत्वं रुग्रागः शोफपाको भृशोष्मता ॥
कफेस्तैमित्यगुरुता सुप्तिस्निग्धत्वशीतताः।
कण्डूर्मन्दा च रुग्द्वन्द्वसर्व्वलिङ्गञ्च सङ्करे ॥
एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम् ।
त्रिदोषजं त्यजेत् स्रावि स्तब्धमर्व्वुदकारि च ॥
रक्तमार्गं निहन्त्याशु शाखासन्धिषु मारुतः ।
निविश्यान्योऽन्यमाचार्य्यवेदनाभिर्हरत्यसून्
॥”
इति वाभटे निदानस्थाने षोडशेऽध्याये ॥
“वातशोणितिनो रक्तं स्निग्धस्य बहुशो हरेत् ।
अल्पाल्पं पालयन् वायुं यथादोषं यथाबलम् ॥
चिकित्सितं हितं पथ्यं प्रायश्चित्तं भिषग्जितम्
।
भेषजं शमनं शस्तं पर्य्यायैः स्मृतमौषधम् ॥”
इति च वाभटे चिकित्सितस्थाने द्वाविंशतितमे-
ऽध्याये ॥ अन्यद्वातरक्तशब्दे ज्ञातव्यम् ॥ * ॥)

**वातसहः**, त्रि, (वातं वातजनितरोगं सहते ।

सह + अच् ।) अत्यन्तवायुयुक्तः । यथा, --
“वातासहो वातसहो वातूलो वातुलोऽपि च ।”
इति शब्दरत्नावली ॥
(वायुवेगसहनशीलः । यथा, महाभारते । १ ।
१४२ । ५ ॥
“ततो वातसहां नावं यन्त्रयुक्तां पताकिनीम् ।
ऊर्म्मिक्षमां दृढां कृत्वा कुन्तीमिदमुवाच च ॥”)

**वातसारथिः**, पुं, (वातः सारथिः सहायो यस्य ।)

अग्निः । इति केचित् ॥

**वातस्कन्धः**, पुं, (वातस्य स्कन्ध इव ।) आकाशस्य

भागविशेषः । यत्र वायुर्व्वहति । इति केचित् ॥

उष्णत्वम् । कफकारित्वम् ।
रक्तपित्तविकारिणां
श्रेष्ठत्वञ्च । इति भावप्रकाशः ॥

**वातापिः**, पुं, असुरविशेषः । स च ह्रादस्य धमनौ

पत्न्यां जातः । अगस्त्येन भक्षितः ।
इति
श्रीभागवतमतम् ॥ कल्पान्तरे तु
विप्रचित्तेः
सिंहिकायां जातः । यथा, --
“सिंहिकायामथोत्पन्ना
विप्रवित्तेश्चतुर्द्दश ।
शंवः शवलगात्रश्च व्यङ्गः
शाल्वस्तथैव च ॥
इल्वलो नमुचिश्चैव वातापी हसृपो
जिकः ।
हरकल्पः कालनाभो भौमश्च
नरकस्तथा ॥
राहुर्ज्येष्ठश्च तेषां वै
चन्द्रसूर्य्यप्रमर्द्दनः ।
इत्येते सिंहिकापुत्रा देवैरपि
दुरासदाः ॥”
इति वह्निपुराणे काश्यपीयवंशः ॥
अन्यच्च ।
“विप्रचित्तिः सैंहिकेयान्
सिंहिकायामजी-
जनत् ।
हिरण्यकशिपोर्ये वै भागिनेयास्त्रयोदश
॥
वत्सः शल्यश्च राजेन्द्रो तमो
वातापिरेव च ।
इल्वलो नमुचिश्चैव
खसूमश्चाञ्जनस्तथा ॥
नरकः कालनाभश्च सरमाणस्तथैव
च ।
कल्पवीर्य्यश्च विख्यातो
दनुवंशविवर्द्धनः ॥”
इति मात्स्ये ६ अध्यायः ॥

“शुक्लएरण्ड
आमण्डुश्चित्रोगन्धर्व्वहस्तकः ।
पञ्चाङ्गुलो वर्द्धमानो दीर्घदण्डोऽप्यदण्डकः
॥
वातारिस्तरुणश्चापि रुबूकश्च निगद्यते ।
१ ।
रक्तोऽपरो रुवूकः स्यादुरुवूको रुवूस्तथा ।
व्याघ्रपुच्छश्च वातारिश्चञ्चुरुत्तानपत्रकः ॥
२ ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)
शतमूली । इति शब्दचन्द्रिका ॥ पुत्त्रदात्री
।
शेफालिका । यवानी । भार्गी । स्नुही ।
विडङ्गः । शूरणः । भल्लातकः । जतुका ।
इति
राजनिर्घण्टः ॥

**वाताली**, स्त्री, (वातस्य आली यत्र ।) वात्या ।

इति त्रिकाण्डशेषः ॥

**वाताश्वः**, पुं, (वात इव शीघ्रगीऽश्वः ।) कुली-

नाश्वः । तत्पर्य्यायः । हयोत्तमः २ जात्यः
३
अजानेयः ४ । इति त्रिकाण्डशेषः ॥
(यथा,
कथासरित्सागरे । ६६ । १७४ ।
“तदिमं मां विजानीहि लक्ष्मीसेनं वरानने ।
आनीतमिह वाताश्वेनाकृष्याखेटनिर्गतम्
॥”)

**वातासहः**, त्रि, (वातं वातजनितरोगं आसहते

इति । आ + सह + अच् ।) वातुलः । इति
शब्दरत्नावली ॥

**वातिः**, पुं, (वाति गच्छतीति । वा + “वातेर्नित् ।)

उणा० ५ । ६ । इति अतिः ।) वायुः ।
यथा,
“वातिर्वायुर्मरुद्वातः श्वसनः पवनोऽनिलः
।”
इत्यमरटीकायां भरतधृतसाहसाङ्कः ॥

**वातहा**, [न्] त्रि, (वातं हन्तीति । हन् + क्विप् ।)

वातघ्नः । वायुनाशकौषधम् । इति वैद्यकम् ॥

**वाताटः**, पुं, (वात इव अटति गच्छतीति । अट्

+ अच् ।) सूर्य्याश्वः । इति त्रिकाण्डशेषः ॥
वातमृगः । इति शब्दरत्नावली ॥

**वाताण्डः**, पुं, (वातदूषितौ अण्डौ यस्मात् ।)

मुष्करोगविशेषः । तस्य लक्षणं यथा, --
"वृषणौ दूषयेद्वायुः श्लेष्मणा यस्य संवृतः ।
तस्य मुष्कश्चलत्येको रोगो वाताण्डसंज्ञकः
॥"
इति माधवकरः ॥

**वातादः**, पुं, (वाताय वातनिवृत्तये अद्यते इति ।

अद् + घञ् ।) फलवृक्षविशेषः । वादाम इति
ख्यातः । तत्पर्य्यायः । वातवैरी २ नेत्रोपम-
फलः ३ वाताम्रः ४ । अस्य गुणाः । उष्णत्वम्
।
सुस्निग्धत्वम् । वातघ्नत्वम् । शुक्रकारित्वम् ।
गुरुत्वञ्च । अस्य मज्जगुणाः । मधुरत्वम् ।
वृष्यत्वम् । पित्तानिलापहत्वम् । स्निग्धत्वम् ।

(मुनिवरोऽगस्त्यस्तु एनं ब्रह्मद्वेष्टारं
भक्षित-
वान् । एतद्वृत्तान्तस्तु महाभारते
वनपर्व्वणि
९६ अध्यायमारभ्य द्रष्टव्यः ॥)

**वातापिद्विट्**, [ष्] पुं, (वातापिं द्वेष्टीति ।

द्विष् + क्विप् ।) अगस्त्यमुनिः । इति
हेम-
चन्द्रः । २ । ३६ ॥

**वातापिसूदनः** पुं, (वातापिं सूदत इति । सूद् +

ल्युः ।) अगस्त्यः । इति
त्रिकाण्डशेषः ॥

**वातापिहा** [न्] पुं, (वातापिं हन्तीति । हन् +

क्विप् ।) अगस्त्यः । इति
त्रिकाण्डशेषः ॥

**वातामोदा**, स्त्रि, (वातेन प्रसृत आमोदो यस्याः
।)

कस्तूरी । इति शब्दमाला ॥

**वातायनं**, क्ली, (वातस्य अयनं गमनागमन-

मार्गः ।) गवाक्षः । इत्यमरः ॥ (यथा,
आर्य्या-
सप्तशत्याम् । ५१० ।
"लीलागारस्य बहिः सखीषु
चरणातिथौ
मयि प्रियया ।
प्रकटीकृतः प्रसादो दत्त्वा वातायने
व्यजनम् ॥")
तेन परवाधानिषेधो यथा, --
"परवाधां न कुर्व्वीत
जलवातायनादिभिः ।
कारयित्वा तु कर्म्माणि कारुं पश्चात्
न घञ्च-
येत् ॥"
इति कौर्म्मे उपविभागे १५ अध्यायः
॥

**वातायनः**, पुं, (वातस्येव अयनं गतिर्यस्य ।)

घोटकः । इति त्रिकाण्डशेषः ।

**वातायुः**, पुं, (वातमयते इति । अय + बाहु-

सूर्य्यः । चन्द्रः । यथा ।
वातिरादित्यसोमयोः ।
इति रभसः ॥

**वातिकः**, पुं, (वातादागतः । वात + ठञ् ।)

वायुजव्याधिः । यथा, --
"वातिको वातजो व्याधिः पैत्तिकः
पित्तसम्भवः ।
श्लैष्मिकः श्लेष्मसंभूतः समूहः
सान्निपातिकः ॥"
इति राजनिर्घण्टः ॥
(क्ली, वातस्य शमनं कोपनं वा ।
"वातपित्त-
श्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम् ।"
५ । १ ।
३८ । इत्यस्य वार्त्ति० ठञ् ॥
वातिकरोगाक्रान्ते
वाचाले, त्रि । यथा, महाभारते । ३ ।
२५६ । ३ ।
"अपरे त्वरुवंस्तत्र वातिकास्तं महीपतिम्
।
युधिष्ठिरस्य यज्ञेन न समो ह्येष ते क्रतुः
॥")

**वातिगः**, पुं, (वातिं वायुं गच्छतीति । गम् +

डः ।) भण्टाकी । धातुवादिनि, त्रि । इति
मेदिनी । गे, ९ ॥

**वातिगमः**, पुं, (वातिं वायुं गमयतीति प्रापयात ।

गमि + अच् ।) वार्त्ताकुः । इति शब्दरत्ना-
वली ॥

**वातिङ्गनः**, पुं, वार्त्ताकुः । इति त्रिकाण्डशेषः ॥

**वातीयं**, क्ली, (वाताय वातनिवृत्तये हितः । वात

+ छः ।) काञ्जिकम् । इति शब्दचन्द्रिका ॥

**वातुलः**, पुं, वात्या । इत्यमरटीकायां भरतः ॥

**वातुलः**, त्रि, वातविकारासहः । उन्मत्तः । इत्य-

मरटीकायां भरतः ॥

**वातुलिः**, स्त्री, तरुतूलिका । इति हारावली ॥

वादुड इति भाषा ॥

| | | |
|---|---|---|
| | लकात् उण् ।) हरिणः । इत्यमरः ॥<br>**वातारिः**, पुं, (वातस्य वातरोगस्य अरिः ।)<br>एरण्डवृक्षः । इति शब्दरत्नावली ॥<br>(अस्य<br>पर्य्यायो यथा, -- | |

**वातूलः**, पुं, (वातानां समूहः । "वातादूलः ।"
४ । २ । ४२ । इत्यस्य वार्त्तिकोक्त्या
ऊलः । यद्वा,
वाताः स्वन्त्यस्मिन्निति । वात +
"सिध्मादि-
भ्यश्च ।" ५ । २ । ९७ । इति लच् ।
"वातदन्त-
बलेति ।" ऊङ् । यद्वा, वातानां समूहः
वातं न
सहते इति वा । वात + "वातात् समूहे
च ।
वातं न सहते इति च ।" ५ । २ । १२२
। इत्यस्य
वार्त्ति० ऊलच् ।) वात्या । वातासहे, त्रि
। इत्य-
मरः ॥ "वात्या वातसमूहः । अत्र
जनखलादि-
गोरथवातादिति ऊलः । वातासहो
वात-
तृणेत्यासहः । वाइया इति ख्यातः ।
अत्र गो-
विकारादिना ऊलः वातूलः ।
वातेर्नाम्नीति तुले
ह्रस्वोकारवानपि वातुलः । वातूलो
वातुलोऽपि
स्यादिति द्विरूपकोषः ॥ उन्मत्तेऽपि
वातूलः ।"
इत्यमरटीकायां भरतः ॥

**वातोना**, स्त्री, (वातमूनयतीति । ऊन + अण् ।)
गोजिह्वाक्षुपः । इति राजनिर्घण्टः ॥
वायु-
हीने, त्रि ॥

**वात्या**, स्त्री, (वातानां समूहः । वात + "पाशा-
दिभ्यो यः ।" ४ । २ । ४९ । इति यः
।) वात-
समूहः । यथा, --
"आसङ्गिनी च वाताली स्यात् वात्या
वात-

**वात्सीपुत्त्रः**, पुं, नापितः । इति त्रिकाण्डशेषः ॥

**वात्स्यः**, पुं, (वत्सस्य गोत्रापत्यम् । वत्स + "गर्गा-
दिभ्यो यञ् ।" ४ । १ । १०५ । इति यञ् ।)
मुनिविशेषः । यथा । वात्स्यसावर्णिगोत्रयो-
रौर्व्वच्यवनभार्गवजामदग्न्याप्नुवत्प्रवराः । इत्यु-
द्वाहतत्त्वम् ॥

**वात्स्यायनः**, पुं, (वत्सस्य गोत्रापत्यं युवा । वत्स +
यञ् । ततो यूनि फक् ।) मुनिविशेषः । तत्प-
र्य्यायः । मन्दनागः २ पक्षिलः ३ स्वामी ४ ।
इति त्रिकाण्डशेषः ॥ (अयं हि कामसूत्रकर्त्ता ।
यथा, कुट्टनीमते । ७७ ।
"वात्सायनमयमवुधं
बाह्यान्दूरेण दत्तकाचार्य्यान् ।
गणयति मन्मथतन्त्रे
पशुतुल्यं राजपुत्त्रञ्च ॥")

**वादः**, पुं, (वद् + घञ् ।) यथार्थबोधेच्छो-
र्वाक्यम् । यथा, --
"विजिगीषोः कथा जल्पो वादस्तत्त्वविवे-
दिषोः ।"
इति जटाधरः ॥
अस्य लक्षणं यथा । प्रमाणतर्कसाधनोपालम्भः
सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्ष-
परिग्रहो वादः । इति गोतमसूत्रम् ॥ * ॥
अपि च ।
"सर्गाणामादिरन्तश्च मध्यञ्चैवाहमर्ज्जुन ! ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥"
इति भगवद्गीतायाम् १० अध्यायः ॥
"प्रवदतां वादिनां सम्बन्धिन्यो
वादजल्पवितण्डा-
ख्यास्तिस्रः कथाः प्रसिद्धास्तासां मध्ये वादो-
ऽहम् । यत्र द्वाभ्यामपि प्रमाणतर्कतश्च स्वपक्षः
स्थाप्यते परपक्षश्छलजातिनिग्रहस्थानैर्दूष्यते
स जल्पो नाम । यत्र त्वेकः स्वपक्षं स्थापयति
अन्यस्तु छलजातिनिग्रहस्थानैस्तत् पक्षं दूषयति
न तु स्वपक्षं स्थापयति सा वितण्डा नाम कथा ।
तत्र जल्पवितण्डे विजिगीषमाणयोर्वादिनोः
शक्तिपरीक्षामात्रफले । वादस्तु वीतरागयोः
शिष्याचार्य्ययोरन्ययोर्वा तत्त्वनिरूपणफलः ।
"वीणावादनतत्त्वज्ञः
श्रुतिजातिविशारदः ।
तालज्ञश्चाप्रयासेन मोक्षमार्गं
नियच्छति ॥")

**वा(बा)दरं**, त्रि, (वदरात् वदराकारकार्पास-
फलाद्भवम् । वदर + अण् ।)
कार्पासनिर्म्मित-
वस्त्रादि । इत्यमरः । २ । ६ । १११
॥ वादरायाः
कार्पास्या जातं इत्यर्थे ष्णप्रत्ययेन
निष्पन्नम् ॥

**वा(बा)दरः**, पुं, (वदर + स्वार्थे अण् ।) कार्पास-
वृक्षः । इति हेमचन्द्रः ॥ (वदरीवृक्षः ।
कुलगाछ
इति भाषा ॥)

**वादरङ्गः**, पुं, अश्वत्थवृक्षः । इति त्रिकाण्डशेषः
॥

**वा(बा)दरा**, स्त्री, (वदरवत् फलमस्त्यस्याः ।
वदर +
अच् । ततः टाप् ।) कार्पासवृक्षः ।
तत्पर्य्यायः ।
कार्पासी २ सूत्रपुष्पा ३ वदरी ४
समुद्रान्ता ५
तुण्डिकेरी ६ कार्पासिका ७ । इति
शब्द-
रत्नावली ॥ अस्याः पर्य्यायान्तरं
गुणाश्च
कार्पासीशब्दे द्रष्टव्याः ॥

**वादरायणः**, पुं, (वदरायणे वदरिकाश्रमे निवस-
तीति । वदरायण + अण् ।) व्यासदेवः
। इति
शब्दरत्नावली ॥

**वादरायणिः**, पुं, (वादरायण एव । स्वार्थे इञ् ।)
व्यासदेवः । इति शब्दरत्नावली ॥
(वादरा-
यणस्यापत्यमिति अपत्यार्थे इञ् ।
शुकदेवः ॥)

मण्डली ॥”
इति त्रिकाण्डशेषः ॥
(यथा, भागवते । ३ । १७ । ५ ।
“ववौ वायुः सुदुस्पर्शः फेत्कारानीरयन् मुहुः ।
उन्मूलयन्नगपतीन् वात्यानीको रजोध्वजः ॥”)

**वात्सकं**, क्ली, (वत्सानां समूहः । वत्स + “गोत्रोक्षो-
ष्ट्रेति ।” ४ । २ । ३९ । इति वुञ् ।) वत्स-
समूहः । इत्यमरः ॥ (वत्सकस्येदमिति । वत्सक
+ अण् । कुटजसम्बन्धिनि इन्द्रयवसम्बन्धिनि
च त्रि । यथा, सुश्रुते । ६ । ४० ।
“नागरातिविषामुस्तं पिप्पल्यो वात्सकं फलम् ॥”)

**वात्सल्यः**, पुं, (वत्सल एव । स्वार्थे ष्यञ् ।)
रसविशेषः । यथा, --
“वात्सल्यशान्तौ तु रसौ शृङ्गारः कौशिकः
स्मृतः ॥”
इति त्रिकाण्डशेषः ॥
एतद्रसाधिकारी यथा, --
“शान्ते ब्राह्मण एव स्यात् प्रीते दासः प्रकी-
र्त्तितः ।
प्रेयास स्युः सखायो हि यशोदा वत्सले स्मृताः ॥
मधुरे राधिका ज्ञेया हास्ये स्यान्मधुमङ्गलः ।
सखीयूथोऽद्भुते ज्ञेयो वीरे चारणगोवृषाः ॥
करुणे वत्सवृक्षादिर्जटिलाद्यास्तु रौद्रके ।
गोवर्द्धनेऽभिमन्युश्च भयानक उदाहृतौ ॥
तपस्विन्यादयो ह्यत्र वीभत्से परिकीर्त्तिताः ।
अतोऽसौ श्रेष्ठत्वान्मद्विभूतिरित्यर्थः ।” इति तट्टी-
कायां श्रीधरस्वामी ॥ (“तत्र वादः । वादो
नाम यः परस्परेण सह शास्त्रपूर्ब्बकं विगृह्य
कथयति । स वादो द्विविधः संग्रहेण जल्पो
वितण्डा च । तत्र पक्षाश्रितयोर्व्वचनं जल्पः ।
जल्पविपर्य्ययो वितण्डा ।” इति चरके विमान-
स्थानेऽष्टमेऽध्याये ॥)

**वादकः**, त्रि, (वादयतीति वद् + णिच् + ण्वुल् ।)
वाद्यकरः । (यथा, भागवते । १० । १८ । १३ ।
“क्वचित् नृत्यत्सु चान्येषु गायकौ वादकौ स्वयम् ।
शशंसतुर्महाराज साधु साध्विति वादिनौ ॥”)
वक्ता । वदधातोः कर्त्तरि णक(ण्वुल्)प्रत्ययेन
निष्पन्नः ॥

**वादनं**, क्ली, (वद् + णिच् + ल्युट् ।) वाद्यम् ।
(यथा, संगीतदर्पणे । ३३ ।

**वादरिकः**, त्रि, वदरस्चयनकर्त्ता । वदरं चिनोती-
त्यर्थे ष्णिकप्रत्ययेन निष्पन्नः ॥

**वादलं**, क्ली, मधुयष्टिका । इति शब्दचन्द्रिका ॥

**वादवादी** [न्], पुं, (वादं वदतीति । वद् +
णिनिः ।) जिनभेदः । तत्पर्य्यायः । आर्हतः २ ।
इति हेमचन्द्रः ॥

**वादामं**, क्ली, स्वनामख्यातफलम् । तस्य गुणाः ।
उष्णत्वम् । सुस्निग्धत्वम् । वातघ्नत्वम् । बल-
शुक्रकारित्वञ्च । इति राजवल्लभः ॥

**वादान्यः**, त्रि, (वदान्य एव । स्वार्थे अण् ।)
वदान्यः । बहुप्रदः । इति भरतद्विरूपकोषः ॥

**वादालः**, पुं, मत्स्यभेदः । वोयालि इति भाषा ।
तत्पर्य्यायः । सहस्रदंष्ट्रः २ । इति हेमचन्द्रः ॥

**वादिः**, त्रि, (वादयति व्यक्तमुच्चारयतीति । वद् +
णिच् + “वसिवपियजीति ।” उणा० ४ । १२४ ।
इति इञ् ।) विद्वान् । इत्युणादिकोषः ॥

**वादित्रं**, क्ली, (वाद्यते । वद् + णिच् + “भूवादि-
गृभ्यो णित्रम् ।” उणा० ४ । १७० । इति
णित्रम् ।) वाद्यम् । इत्यमरः ॥ (यथा, भाग-
वते । ३ । २४ । ७ ।
“अवादयंस्तदा व्योम्नि वादित्राणि धनाघनाः ॥”
वादिनोऽर्थिनस्त्रायते इति । त्रै + कः । अर्थि-
रक्षके, त्रि । यथा, वक्रोक्तिपञ्चाशिकायाम् । २९ ।

| | | |
|---|---|---|
| व्रजस्था नियता ज्ञेया<br>आलम्बनविभावकाः ॥"<br>इत्युज्ज्वलनीलमणिः ॥<br>(वत्सलस्य भावः । वत्सल + ष्यञ् ।)<br>वत्सलस्य<br>भावे, क्ली, ॥ (स्नेहः । यथा, भागवते ।<br>४ । ६ । ३४ ।<br>"चरन्तं विश्वसुहृदं<br>वात्सल्याल्लोकमङ्गलम् ॥") | | "कृत्वा त्वां पणवञ्चितं नहि मया<br>द्यूतेन न<br>प्रीयते<br>नैवाहं पणवः कृशोदरि चितः शक्यो<br>विधातुं<br>त्वया ।<br>किं वादित्रविवक्षयात्र दयिते को<br>वादिनस्त्रायते<br>सूक्त्या निर्जितशैलराजसुत<br>इत्यव्याज्जग-<br>द्धूर्जटिः ॥") |

**वादिरं**, क्ली, वदरीसदृशसूक्ष्मफलवृक्षः । इति
शब्दरत्नावली ॥

**वादिराट्**, [ज्] पुं, (वादिषु वक्तृषु राजते
इति । राज + क्विप् ।) मञ्जुघोषः । इति
त्रिकाण्डशेषः ॥

**वादिशः**, त्रि, साधुवादी । इति शब्दमाला ॥

**वादी**, [न्] त्रि, (वदतीति । वद् + णिनिः ।)
वक्ता । (यथा, मनुः । ७ । ९१ ।
"न च हन्यात् स्थलारूढं न क्लीवं न कृता-
ञ्जलिन् ।
न मुक्तकेशं नासीनं न तवाश्मीति वादिनम्
॥")
अर्थी । विवादकर्त्ता । फरियादी इति
पारस्य-
भाषा ॥ यथा, सभापतेः कर्त्तव्यमाह
कात्यायनः ।
"अथ चेत् प्रतिभूर्नास्ति वादयोग्यस्तु
वादिनः ।
स रक्षितो दिनस्यान्ते दद्याद्भृत्याय वेतनम्
॥"
वादिनो भाषावादिनः उत्तरवादिनश्च ॥ * ॥
स्वयं विवादाशक्तौ प्रतिनिधिमाह नारदः ।
"अर्थिना संनियुक्तो वा प्रत्यर्थिप्रहितोऽपि
वा ।
यो यस्यार्थे विवदते तयोर्जयपराजयौ ॥"
तयोर्व्वादिप्रतिवादिनोः । कात्यायनः ।
"मनुष्यमारणे स्तेये परदाराभिमर्षणे ।
अभक्ष्यभक्षणे चैव कन्याहरणदूषणे ॥
पारुष्ये कूटकरणे नृपद्रोहे तथैव च ।
प्रतिवादी न दातव्यः कर्त्ता तु विवदेत्
स्वयम् ॥"
भ्रात्रादीतरस्य पक्षस्थितस्य
दण्डनीयत्वमाह
नारदः ।
"यो न भ्राता पिता वापि न पुत्त्रो न
नियोजितः ।
परार्थवादी दण्ड्यः स्यात् व्यवहारेषु
विब्रुवन् ॥"
न दद्यादुत्तरं यावत् प्रत्यर्थी
सभ्यसन्निधौ ॥"
इति व्यवहारतत्त्वम् ॥

**वाद्यं**, क्ली, (वद् + णिच् + यत् ।) वादयन्ति
ध्वन-
यन्ति यत् । वाज्ना इति भाषा ।
तत्पर्य्यायः ।
वादित्रम् २ आतोद्यम् ३ । तच्चतुर्विधं
यथा,
"ततं वीणादिकं वाद्यमानद्धं
मुरजादिकम् ।
वंश्यादिकन्तु शुषिरं कांस्यतालादिकं
घनम् ॥"
इत्यमरः ॥
"इदं ततादि चतुर्विधं चतुःप्रकारं
वाद्यादिशब्द-
द्वयवाच्यम् ।
'इदं चतुर्विधं वाद्यं
वादित्रादिद्विनामकम् ।'
वाद्यमितिसमस्तं प्रथमान्तं विशेष्यपदं
इति
कलिङ्गादयः । फलतो न विशेष्यः ।"
इति तट्टी-
कायां भरतः ॥ * ॥
अथ वाद्यानि ।
"तालेन राजते गीतं तालो
वादित्रसम्भवः ।
गरीयस्तेन वादित्रं तच्चतुर्विधमुच्यते
॥
ततं शुषिरमानद्धं घनमित्थं चतुर्व्विधम्
।
ततं तन्त्रीगतं वाद्यं वंश्याद्यं शुषिरं
तथा ॥
चर्म्मावनद्धमानद्धं घनं तालादिकं
मतम् ॥" * ॥
तत्र ततं यथा, --
"अलावणी ब्रह्मवीणा किन्नरी
लघुकिन्नरी ।
अंशन्यासविभेदाच्च तथात्रापि विधीयते ।
इयमलावणी प्रोक्ता मनःश्रवणरञ्जनी ॥
प्रत्यक्षा सारदा देवी वीणारूपेण संस्थिता ॥"
इत्यलावणी ॥ अन्येषां लक्षणं विस्तरभया-
न्नोक्तम् ॥ * ॥ शुषिरं यथा, --
"वंशोऽथ पारीमधुरीतित्तिरीशङ्खकाहलाः।
तोडहीमुरलीवुक्काशृङ्गिकास्वरनाभयः॥
शृङ्गं कापालिकं वंशश्चर्म्मवंशस्तथापरः ।
एते शुषिरभेदास्तु कथिताः पूर्ब्बसूरिभिः ॥
वर्त्तुलः सरलश्चैकपर्व्वदोषविवर्ज्जितः ।
वैणवः स्वादिरो वापि रक्तचन्दनजोऽथवा ॥
श्रीखण्डजोऽथ सौवर्णो दन्तिदन्तमयोऽपि वा
।
राजतस्ताम्रजो वापि लौहजस्फाटिकोऽथवा
॥
कनिष्ठाङ्गुलितुल्येन गर्भरन्ध्रेण शोधितः ।
शिल्पविद्याप्रवीणेन वंशः कार्य्यो मनोहरः ॥
वंशेनैव मतोऽपीति मतङ्गमुनिनोदितम्।
ततोऽन्येऽपि तदाकारा वंशा एव प्रकीर्त्तिताः
॥
तत्र त्यक्त्वा शिरोदेशादधो द्विमितमङ्गुलम् ।
फुत्काररन्ध्रं कुर्व्वीत मितमङ्गुलिपर्व्वणा ॥
पञ्चाङ्गुलानि संत्यज्य तावद्रन्ध्राणि कारयेत् ।
कुर्य्यात्तथान्यरन्ध्राणि सप्तसंख्यानि
कौशलात् ॥
वदरीबीजतुल्यानि संत्यज्यार्द्धार्द्धमङ्गुलम् ।
प्रान्तयोर्ब्बन्धनं कार्य्यं स्वराद्यैर्नादहेतवे ॥
सिक्थकेन कला देया तेन सुस्वरता भवेत् ।
पञ्चाङ्गुलोऽयं वंशः स्यादेकैकाङ्गुलिवृद्धितः ॥
षडङ्गुलानि नाम्ना स्याद्यावदष्टादशाङ्गुलम् ।
फुत्कारताररन्ध्रस्य यावदङ्गुलिमन्तरम् ॥
तदेव नाम वंशस्य वांशिकैः परिकीर्त्त्यते ॥
एकाङ्गुलो द्व्यङ्गुलश्च त्र्यङ्गुलश्चतुरङ्गुलः ।
अतितारतरत्वेन वांशिकैः समुपेक्षितः ॥
त्रयोदशाङ्गुलो वीणापरः ।
निन्दितो वंशतत्त्वज्ञैस्तथा सप्तदशाङ्गुलः ॥
महानन्दस्तथा नन्दो विजयोऽथ जयस्तथा ।
चत्वार उत्तमा वंशा मतङ्गमुनिसम्मताः ॥
दशाङ्गुलो महानन्दो नन्द एकादशाङ्गुलः ।

नारदः ।
“पूर्ब्बवादं परित्यज्य योऽन्यमालम्बते पुनः
।
वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः ॥”
प्रत्यर्थी यदि कश्चित् कालं प्रार्थयते स
लभते ।
अर्थी तु कालं प्रार्थयन् अर्थित्वमेव
हन्यादिति
तेन कालो न प्रार्थनीयः । तदाह ।
“प्रत्यर्थी लभते कालं त्र्यहं सप्ताहमेव च ।
अर्थी तु प्रार्थयन् कालं तत्क्षणादेव हीयते
॥”
क्वचित् प्रत्यर्थी कालं न लभते ।
याज्ञवल्क्यः ।
“साहसस्तेयपारुष्यगोऽभिशापात्यये
स्त्रियाम् ।
विवादयेत् सद्य एव कालोऽन्यत्रेच्छया
स्मृतः ॥”
अथ भाषापादः । तत्र भाषास्वरूपमाहतुः
कात्यायनबृहस्पती ।
“प्रतिज्ञादोषनिर्मुक्तं साध्यं
सत्कारणान्वितम् ।
निश्चितं लोकसिद्धञ्च पक्षं पक्षविदो विदुः ॥
स्वल्पाक्षरः प्रभूतार्थो निःसन्दिग्धो
निराकुलः ।
विरोधिकारणैर्मुक्तो विरोधिप्रतिरोधकः ॥
यदा त्वेवंविधः पक्षः कल्पितः पूर्ब्बवादिना ।
दद्यात्तत्पक्षसम्बन्धं प्रतिवादी तदोत्तरम् ॥”
नारदेनापि ।
“सारस्तु व्यवहाराणां प्रतिज्ञा समुदाहृता ।
तद्धानौ हीयते वादी तरंस्तामुत्तरो भवेत् ॥”
तच्छोधनमाह वृ हस्मतिः ।
“न्यूनाधिकं पूर्व्वपक्षं तावद्वादी विशोधयेत् ।

विपञ्ची वल्लकी ज्येष्ठा चित्रा ज्योषवती
जया ॥
हस्तिका कुब्जिका कूर्म्मी शारङ्गी
परिवादिनी ।
त्रिशवी शतचन्द्री च नकुलौष्ठी च
ढंसवी ॥
औडम्बरी पिनाकी च निबन्धः
शुष्कलस्तथा ।
गदावारणहस्तश्च रुद्रोऽथ
शरमण्डलः ।
कपिलासो मधुस्यन्दी घोणेत्यादि ततं
भवेत् ॥”
अलावणी यथा, --
“कनिष्ठिका परिधर्द्धिमध्यच्छिद्रेण
संयुतः ।
दशयष्टिमितो दण्डः खादिरो
वैणवोऽथवा ॥
अधःकरभवानूर्द्ध्वे
छत्रावल्याभिशोभितः ।
नवाङ्गुलादधश्छिद्रोपरि
चन्द्रार्द्धसन्निभाम् ॥
निवेश्य चुम्बिकां भद्रालावुखण्डं
निवेशयेत् ।
द्वादशाङ्गुलविस्तारं दृढपक्वं मनोहरम्
॥
तुम्बिकावेधमध्येन दण्डच्छिद्रे तु
निर्म्मिताम् ।
अलावुमध्यगां डौवीं कृत्वा स्वल्पान्तु
काष्ठि-
काम् ॥
तथा संवेष्ट्य तन्मध्ये काष्ठिकां
भ्रामयेत्ततः ।
यथा स्यान्निश्चलालाबुर्ब्बन्धश्च
करभोपरि ॥
पञ्चाङ्गुलिषु संत्यज्यालावुं स्वल्पाञ्च
बन्धयेत् ।
केशान्तनिर्म्मिता पट्टमयी
सूत्रकृताथवा ॥
समाः सूक्ष्मा दृढा तत्र तन्त्री देया
विचक्षणैः ।

द्वादशाङ्गुलमानस्तु विजयः परिकीर्त्तितः ॥
चतुर्द्दशाङ्गुलमितो जय इत्यभिधीयते ।
ब्रह्मा रुद्रो रविर्विष्णुः क्रमादत्र व्यवस्थिताः ॥
नैविड्यं प्रोढता चापि सुस्वरत्वञ्च शीघ्रता ।
माधुर्य्यमिति पञ्चामी फुत्कृतेषु गुणाः स्मृताः
शीत्कारबहुलः स्तब्धो विस्वरः स्फुटतो
लघुः ।
अमधुराश्च विज्ञेयाः षड्दोषाः फुत्कृते
क्रमात् ॥
वृथा प्रयोगबाहुल्यमल्पता गीतवादनं ।
एभिर्दोषैर्युतोऽतीव निन्दितो वंशिको मतः ॥
स्थानकादिलयाभिज्ञो गमकाढ्यः स्फुटाक्षरः
।
शीघ्रहस्तः कलाभिज्ञो वांशिको रक्त उच्यते
॥
प्रमुक्तिर्बद्धमुक्तिश्च युक्तिश्चेत्यङ्गुलेर्गुणाः ।
सुस्थानत्वं सुस्वरत्वं अङ्गुलीसावनक्रिया ॥
समस्तगमकज्ञानं रागरागाङ्गवेदिता ।
क्रियाभाषाविभाषासु दक्षता गीतवादने ॥
स्वस्थाने चापि दुःस्थाने
नादनिर्म्माणकौशलम् ।
गातॄणां स्थानदातृत्वं तद्दोषाच्छादनं तथा ॥

| | | |
|---|---|---|
| | एतल्लक्षणसंयोग्यान्यालावणी प्रकीर्त्तिता ॥<br>बिन्दुना न समुपेतं तुम्बं निःक्षिप्य वक्षसि ॥<br>मध्यमानामिकाभ्याञ्च वाद्या दक्षिणपाणिना ॥<br>तारे मद्रे च घोषे च त्रिस्थाने बिन्दुरिष्यते ।<br>तुम्बीमूलं समुत्पत्य वामाङ्गुष्ठेन धारयेत् ॥<br>ततस्ताभिस्तु सर्व्वाभिः स्वरव्यक्तिर्विधीयते ।<br>त्रिस्वरो दक्षिणः पाणिर्वामस्तत्र चतुःस्वरः ॥<br>अलावण्यां स्थिता ज्ञेयाः सप्तषड्जादयः स्वराः ।<br>रागव्यक्तिर्यथा रागे भवेत् षड्जादिभेदतः ॥ | |

वांशिकस्य गुणा एते मया संक्षिप्य
दर्शिताः ॥"
इति वंशः ॥
काहला स्त्री निषङ्गः । तोडही मुरली
वुक्का
इत्येते च स्त्रियां सप्तस्वराणां नाभिरिव
स्वर-
नाभिः स्त्रियां वर्त्तते । इतरेषां
विस्तरभया-
न्नोक्तम् ॥ * ॥ आनद्धं यथा, --
"आनद्धे मर्द्दलः श्रेयान् इत्युक्तं
भरतादिभिः ॥"
अपि च ।
"मुरजपटहढक्का विम्बको दर्पवाद्यं
पणवघनसरुञ्जा लावजाह्वत्रिवल्यः ।
करठकमठभेरी स्यात् कुडुक्का
हुडक्का
झनसमुरलि झल्ली ढुक्कली
दौण्डिशाना ॥
डमरुटमुकिमड्डुः कुण्डलीस्तङ्कुनामा
रणमभिघटवाद्यं दुन्दुभी च रजश्च ।
क्वचिदपि ढुढुकी स्यात् दर्दुरं
चाप्युपाङ्गं
प्रकटितमनबन्धं वाद्यमित्थं जगत्याम्
॥
त्रिपुरमथनकर्त्तुस्ताण्डवेतत्प्रयाणे
ततमखशुषिरञ्चानद्धमित्थंघनञ्च । * ।
मर्द्दलः खादिरः श्रेष्ठो हीनः
स्यादन्यदारुजः ।
रक्तचन्दनजो वाद्यो
गभीरध्वनिरुच्चकैः ॥
सार्द्धहस्तप्रमाणन्तु दैर्घ्यमस्य
विधीयते ।
त्रयोदशाङ्गुलं वाममथवा द्वादशाङ्गुलम्
॥
दक्षिणञ्च भवेद्धीनमेकेनार्द्धाङ्गुलेन वा ।
करणानद्धवदनो मध्ये चैव पृथुर्भवेत् ॥
षाण्मासीयो भवेत् वस्तस्तच्चर्म्म
करणं मतम् ।

दिश्यां दिश्यां टट्टुनकि टट्टुनकि
तदटकु तदटकु
खवटकु खवटकु तगिनगि तगिनगि दां
दां दं
दं दीं दीं दं ता तथा । इत्योडवाद्यम् ॥
* ॥
अवच्छेदवाद्यं यथा । दं थातः दं थातः
धिक्कि
धिक्कि दिग्गं दं थातः ।
इत्यवच्छेदवाद्यम् ॥ * ॥
गजरवाद्यं यथा । थोकटे ञ नेञ ढें डें
गथो
गथोङ्क टेङ्क थोगतकि धित्तकि धिक
टेङ्गन
धि धि कटतक थोक तधि कटतक्क
कतथो
गतङ्गीम् । इत्येकताल्यां गजरः ॥ * ॥
रूपक-
वाद्यं यथा । तक धिक तक धिक्क
थवितकि
थवितक्कि धिक्क दं थातः । इति
रूपकवाद्यम् ॥
ध्रुवकवाद्यं यथा । तक्क तक्कट
धिक्क धिक्कट ।
इति निसारुताले ध्रुवकः ॥ * ॥ गलपो
यथा ।
तधिद्धि धिकतक तधिगल गं था था दें
तथा
टेञन । इत्येकताल्यां गलपः ॥ * ॥
सारिगोणी
यथा । थोङ्ग टेञ तक्क धिक्क
तकाधक तकथो
हटङ्गन हटङ्गन थोगककथोः । इति
प्रथम-
खण्डः ॥ * ॥ टेञखोः धिखोहः टेञ
टेञ दक्क
तगदक्क धिक्क तदिदक्क दं गदं
गखो गखोक

"अनुरक्तं विरक्तञ्च द्विविधं घनवाद्यकम् ।
गीतानुगमनुरक्तं विरक्तं तालसंश्रयम् ॥
करतालः कांस्यबलो जयघण्टोऽथ शुक्तिका ।
कम्बिका पटवाद्यञ्च पट्टातोघञ्च घर्घरम् ॥
झञ्झातालश्च मञ्जीरकर्त्तर्य्युङ्कुर इत्यपि ।
द्वादशैते मुनीन्द्रेण कथिता घनसंज्ञकाः ॥
त्रयोदशाङ्गुलव्यामौ शुद्धकांस्यविनिर्म्मितौ ।
मध्यमुखौ स्तनाकारौ तन्मध्ये रज्जुगुम्फितौ ॥
पद्मिनीपत्रसदृशौ कराभ्यां रज्जुयन्त्रितौ ।
करतालावुभौ वाद्यौ पाढे झनटकैरिति ॥
यद्वा त्रयोदशयवव्यामं वक्रयवोन्मितम् ।
यवपञ्चकगम्भीरं मध्ये च यवसप्तकम् ॥
विमृतं वर्त्तुलं निम्नं यवत्रयमितं ततः ।
पृष्ठतो मध्यदेशे च शिवलिङ्गसमाकृतिम् ॥
अत्यम्लपैष्टीनिर्दग्धशुद्धकांस्यविनिर्म्मितम् ।
संरक्ताङ्गुलिसुस्निग्धसुदीर्घमधुरध्वनिम् ॥
घना निसा विसंरक्तं दृढं शुष्कं मनोहरम् ।
काश्मीरादिसमुद्भूतं तालमाहुर्मनीषिणः ॥
सुनादं दक्षिणं तालं ततो हीनञ्च वामकम् ।
कुर्व्वीत तद्द्वयं कार्य्यं तर्ज्जन्यङ्गुष्ठयोर्गतः ॥
वामहस्तस्थतालस्य मध्यमं सन्निनादितम् ।
तिर्य्यग्दक्षिणतालस्य परिव्यंशेन तालयेत् ॥
तालादौ वादयेच्चैव प्लुतदीर्घलघुद्रुतैः ॥"
इति करतालविशेषः । कर्त्तरीघनविशेषः । उङ्कु-
रश्च घनविशेषोऽदन्तरेफान्तपुंलिङ्गः । अन्येषां
लक्षणं विस्तरभयान्नोक्तम् ॥ * ॥
"रुक्मिण्याः सत्यभामायाः कालिन्दीमित्र-
विन्दयोः ।
जाम्बवत्या नाग्नजित्या लक्ष्मणाभद्रयोरपि ॥
कृष्णस्याष्टमहिषीणां पुरोद्वाहमहोत्सवे ।
ततं शुषिरमानद्धं घनञ्च युगपज्जनाः ॥
अवादयन्नसंख्यातमिति पौराणिकी श्रुतिः ।
ततं वाद्यन्तु देवानां गन्धर्व्वाणाञ्च शौषिरम् ॥
आनद्धं राक्षसानान्तु किन्नराणां घनं विदुः ।
निजावतारे गोविन्दः सर्व्वमेवानयत् क्षितौ ॥
यावन्ति वाद्यभाण्डानि रामरावणयोर्युधि ।
तावत्यो नाभवन् सेनाः कुरुपाण्डवसङ्गरे ॥"
किञ्च ।
"लिलिम्प हृत्कम्पनतोमरेण

मृत्तिकानिर्म्मितश्चैव मृदङ्गः
परिकीर्त्तितः ॥
पातयेत् खरलिं वाद्यं मादनार्थञ्च मर्द्दले
।
विभूतिर्गैरिकं भक्तं केन्दुकेन च
सम्मतम् ॥
यद्वा चिपीटकं देयं
जीवनीसत्त्वमिश्रितम्।
सर्व्वमेकत्र पिष्टन्तल्लेपः खरलिरुच्यते
॥
वामास्ये पूरिकां कृत्वा लेपं दद्याच्च
दक्षिणे ।
एवं मर्द्दलकः प्रोक्तः सर्व्ववाद्योत्तमो
मतः ॥
अस्य संयोगमासाद्य सर्व्वं वाद्यञ्च
शोभते ।
एतदङ्गे बीजकाष्ठे दलमर्द्धाङ्गुलं विदुः ॥
* ॥
तधिधोतेमिति ज्ञेयाः पाढवर्णा
मृदङ्गजाः ।
थों दं ढें धिक्कटस्तद्धी ताकं दं दं थोगं
धिधि ॥
खर्झ झिं नं गटं दं था कूटपाढा मता
अमी ।
तथिं थों ढें तक्क धी दों दं दं धिग् णां
ततं
तधि ॥
तक्क तं धं धिदों तधि पाढखण्डे त्वयं
क्रमः । * ।
तथा च यतिमाने पाढखण्डः ।
द्रगतथेजां
गतथेजां धो धो धिक ताधिका थोजां
थोजां
तक तता धिका थोता द्रगत ताधि धि
धिधि-
कतता कडना थोधिक थोजां धोता
द्रगतता
द्रगतता द्रगतता धि । इति
यतिमानपाढ-
खण्डः ॥ * ॥

तक तक धिकत धिकत धोढेञ धोटेञ
धटेगल
खोग गल खोग खोहट गें टगें खोहटञ
इत्यस्य छन्दनम् । इति सारिगोणी ॥
* ॥
नादो यथा, --
“दांकारत्रितयं पूर्ब्बं दां धिगिति
ततस्त्रयम् ।
दां दां धिकत्रयं यत्र इति नादः
शचीप्रियः ॥”
इति नादः ॥
“द्रुतं मानसमारब्धं शुद्धं
कूटविनिर्म्मितम् ।
सप्तषण्डमयं वाद्यं करिभं तदिहोच्यते
॥”
द्रुतमानद्धात् प्रतिताले यथा । तत्तत
तत्तत
तक्कि तक्कि दिदं धिगनखो
धिगनखो धिक्क
धिक धिक्क धिक्क धिक नगि नगमि
थो थो धि
धि धिः दां दां धिक्क थो थो थो
हत्थोह
नञिथो नञिथो थोह थोह डेढि डेढि
थोह
थोह तटी तटि तट्टुक गीं गीं धगि धगि
तत
तधे तधे तत तगि डीञडी थोग थोग
थों थोग
गथो गथो तत्ताता ।
“इति सप्तपदान्याहुः कथितं
वाद्यपण्डिताः ।
प्रतितालेन तालेन पादवर्णसमासतः ॥
गन्धर्व्वपतिना पूर्ब्बमुर्व्वशीलास्यनर्त्तने
।
सुधर्म्मारञ्जनार्थञ्च करीभं प्रकटीकृतम्
॥”
प्रहरणं यथा । थोगक्का तद्धिकाथा
गकटग
गों दं थोग दिद्धिक धिक्क धिकटेञ ।
इत्येक-

रणे सुरारेर्मथनात् सुरेण ।
अभूत्तताद्यैरपि सिंहनादैः
सा पञ्चशब्दीति कणादवादः ॥”
युद्धे सैन्यानां योऽहङ्काररवः स सिंहनादः ।
ततादिभिरेभिश्चतुर्भिर्वाद्यैश्चमूनां सिंहनादैश्च
पञ्चशब्दीवाद्यमभूत् । सिहनादेन सह वाद्यं
पञ्चविधं भवतीत्यर्थः । इति सङ्गीतदामोदरः ॥
विष्णुगृहे वाद्यकरणफलं यथा, --
“अन्योपहारैर्विविधैर्घृतक्षीराभिषेचनैः ।
गीतवादित्रनृत्याद्यैस्तोषयस्वाच्युतं नृप ॥
पुण्यरात्रिषु गोविन्दं गीतनृत्यरवोज्वलैः ।
भूपजागरणैर्भक्त्या तोषयाच्युतमव्ययम् ॥
येषां न वित्तं तैर्भक्त्या मार्ज्जनाद्युपलेपनैः ।

| | | |
|---|---|---|
| “यतिरोढाप्यवच्छेदो गजरो रूपकं ध्रुवम् ।<br>गलपः सारिगोणी च नादश्च कथितं तथा ॥<br>प्रहरणं वृन्दनञ्च प्रबन्धा द्वादश स्मृताः ॥”<br>यथा दं थात इत्येकताल्यां यतिः ॥ * ॥<br>ओडवाद्यं यथा । दां तथो तधिक तधिक दं<br>था दं था थोधि थोधि तत्त तत्त थवि थवि | ताल्यां प्रहरणम् ॥<br>“वाद्यं विमुच्यते येन छन्दनं तन्निगद्यते ।”<br>यथा । तद्धिथो दिञ टेञ तन्नः । इति छन्दनम् ॥<br>“कलासो विकलासश्च टाकली चार्द्धटाकली ।<br>जोलाटा कलिका चैव गोमुद्री मुरजस्तथा ॥”<br>अलावुजवाद्यं म्लेच्छवाद्यम् । मर्द्दलः त्रयोदशा-<br>ङ्गुलवाममुखो द्वादशाङ्गुलदक्षिणमुखः । मुरज-<br>स्त्वष्टादशाङ्गुलवाममुखः सप्तदशाङ्गुलदक्षिण-<br>मुखः । मर्द्दलमुरजयोरयं भेदः ॥ * ॥ घनं<br>यथा, -- | |

तोषितो भगवान् विष्णुर्ददात्यभिमतं फलम् ॥
देवकर्म्मणि सक्तानां तेषां संस्मृतिसंस्तवैः ।
तोषितोऽभिमतान् कामान् प्रयच्छति जना-
र्द्दनः ॥”
इति वह्निपुराणे क्रियायोगनामाध्यायः ॥
देवप्रतिष्ठायां वाद्यविधिर्यथा, --
“ततः प्रासादे स्थाप्योऽहं गीतवादित्रमङ्गलैः ।
सर्व्वगन्धांस्ततो गृह्य इमं मन्त्रमुदाहरेत् ॥”
इति वाराहे शैलार्च्चास्थापनाध्यायः ॥
देवताविशेषगृहे वाद्यविशेषनिषेधो यथा ।
योगिनीतन्त्रे ।
“शिवागारे झल्लकञ्च सूर्य्यागारे च शङ्खकम् ।
दुर्गगारे वंशीवाद्यं माधुरीञ्च न वादयेत् ॥”
झल्लकं कांस्यनिर्म्मितकरतालम् । मत्स्यपुराणे ॥
“गीतवादित्रनिर्घोषं देवस्याग्रे च कारयेत् ।
विरिञ्चेश्च गृहे ढक्कां घण्टां लक्ष्मीगृहे त्यजेत् ॥
घण्टा भवेदशक्तस्य सर्व्ववाद्यमयी यतः ॥”
इति तिथ्यादितत्त्वम् ॥

**वाद्यभाण्डं**, क्ली, (वाद्यं वादनीयं भाण्डमिति ।)
वादनीयपात्रम् । मुरजादि । यथा, --
“पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले ।”
इत्यमरश्लोकटीकायां भरतः ॥
अपि च ।
“वाद्यभाण्डमिदं देवि ! नानास्वरसमन्वितम् ।
भेरीपटहसंयुक्तं मया भक्त्या निवेदितम् ॥”
इति बृहन्नन्दिकेश्वरपुराणोक्तदुर्गोत्सवपद्धतिः ॥

**वाध**, ऋ ङ विहतौ । इति कविकल्पद्रुमः । ऋ,
अववाधत् । ङ, वाधते । इति दुर्गादासः ॥

**वाधुक्यं**, क्ली, विवाहः । इति त्रिकाण्डशेषः ॥

**वाधूः**, पुं, वहित्रम् । इति शब्दरत्नावली ॥

**वाध्रीनसः**, पुं, वाद्ध्रींणसः । खड्गी । इति हला-
युधः ॥

**वानं**, त्रि, ओ वै शोषणे + क्तः । ओदितश्चेति
नत्वम् ।) शुष्कफलम् । इत्यमरः ॥ शुष्कम् ।
इति

स च द्विविधः । अश्मकुट्टः
दन्तोदूखलिकश्च ।
इति श्रीभागवतमतम् ॥ तस्य धर्म्मो
यथा, --
“भूमौ मूलफलाशित्वं स्वाध्यायस्तप
एव च ।
संविभागो यथान्यायं धर्म्मोऽयं
वनवासिनः ॥
तपस्तप्यति योऽरण्ये यजेद्देवान्
जुहोति च ।
स्वाध्याये चैव निरतो वनस्थस्तापसो
मतः ॥
तपसा कर्षितोऽत्यर्थं यस्तु ध्यानपरो
भवेत् ।
सन्न्यासीह स विज्ञेयो वानप्रस्थाश्रमे
स्थितः ॥”
इति गारुडे ४९ अध्यायः ॥
अपि च ।
याज्ञवल्क्य उवाच ।
“वानप्रस्थाश्रमं वक्ष्ये तत् शृण्वन्तु
महर्षयः ।
पुत्त्रेषु भार्य्यां निःक्षिप्य वनं गच्छेत्
सहैव वा ॥
वानप्रस्थो ब्रह्मचारी साग्निः सोपासनः
क्षमी ।
अफालकृष्टेनाग्नींश्च
पितृदेवातिथींस्तथा ॥
भृत्यांस्तु तर्पयेत्
श्मश्रुजटालोमभृदात्मवान् ।
दान्तस्त्रिषवणस्नायी निवृत्तश्च
प्रतिग्रहात् ॥
स्वाध्यायवान् ध्यानशीलः
सर्व्वभूतहिते रतः ।
अह्नो मासस्य षण्णां वा
कुर्य्याद्वान्नपरिग्रहम् ॥
कृत्यं त्यजेदाश्वयुजे नयेत् कालं
व्रतादिना ।
पचे मासे तु वाश्नीयाद्दन्तोलूखलिको
भवेत् ॥

जटाश्च विभृयान्नित्यं नखरोमाणि नो
त्यजेत् ।
स्वाध्यायं सर्व्वदा कुर्य्यात्
नियच्छेद्वाचमन्यतः ॥
अग्निहोत्रन्तु जुहुयात् पञ्चयज्ञं समाचरेत् ।
मुन्यन्नैर्विविधैर्म्मेध्यैः शाकमूलफलेन तु ॥
चीरवासा भवेन्नित्यं स्नायात् त्रिषवणं
शुचिः ।
सर्व्वभूतानुकम्पी स्यात् प्रतिग्रहविवर्जितः
॥
दर्शेन पौर्णमासेन यजेत नियतं द्विजाः ।
पक्षेष्ट्या श्रावणे चैव चातुर्मास्यानि
चाहरेत् ॥
उत्तरायणञ्च क्रमशो दक्षस्यायनमेव च ।
वासन्तशारदैर्म्मेध्यैर्मुन्यन्नैः स्वयमाहरेत् ॥
पुरोडाशं गुरूंश्चैव विधिवन्निर्व्वपेत् पृथक्
।
देवताभ्यश्च तद्धुत्वा वन्यं मेध्यतरं हविः
॥
शेषं समुपभुञ्जीत लवणञ्च स्वयं कृतम् ।
वर्ज्जयेन्मधुमांसादि भौमानि करणानि च
॥
भूस्तृणं शिग्रुकञ्चैव श्लेष्मातकफलानि च
।
न फालकृष्टमश्नीयात् उत्सृष्टमपि
केनचित् ॥
न ग्रामजातान्यार्त्तो वा पुष्पाणि च फलानि
च ।
श्रावणे चैव विधिना वह्निं परिचयेत् सदा ॥
न द्रुह्येत् सर्व्वभूतानि निर्द्वन्द्वो निर्भयो
भवेत् ।
न नक्तं किञ्चिदश्नीयात् रात्रौ ध्यानपरो
भवेत् ॥
जितेन्द्रियो
जितक्रोधस्तत्त्वज्ञानविचिन्तकः ।
ब्रह्मचारी भवेन्नित्यं न पत्नीमपि संश्रयेत्
॥
यस्तु पत्न्या वनं गत्वा मैथुनं
कामतश्चरेत् ।

मेदिनी । ने, २० ॥ (वनस्येदमिति । वन + अण् ।) वनसम्बन्धी ॥

**वानं**, क्ली, (वा + ल्युट् ।) स्यूतिकर्म्म । कटः ।

गतिः । इति मेदिनी । ने, २० ॥ जलसंप्लुत-वातोर्म्मिः । सुरुङ्गा । सौरभः । इति हेमचन्द्रः ॥

गोक्षीरजं तवक्षीरम् । इति राजनिर्घण्टः ॥

**वानप्रस्थः**, पुं, (वनप्रस्थे जातः । अण् ।) मधूक-

वृक्षः । (अस्य पर्य्यायो यथा, --
"मधूको गुडपुष्पः स्यान्मधुपुष्पो मधुस्रवः ।
वानप्रस्थो मधुष्ठीलो जलजेत्रमधूलकः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
पलाशवृक्षः । (अस्य पर्य्यायो यथा, --
"वातपोथः पलाशः स्याद्वानप्रस्थश्च किंशुकः ।
राजादनो ब्रह्मवृक्षो हस्तिकर्णो दलोऽपरः ॥"
इति वैद्यकरत्नमालायाम् ॥)
तृतीयाश्रमः । इति विश्वमेदिन्यौ ॥ * ॥ पुत्र-मुत्पाद्य वनवासं कृत्वा अकृष्टपच्यफलादि भक्ष-यित्वा ईश्वराराधनं करोति यः स वानप्रस्थः ।

चान्द्रायणी स्वपेद्भूमौ कर्म्म कुर्य्यात् फलादिना ।
ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः ।
आर्द्रवासास्तु हेमन्ते योगाभ्यासाद्दिनं नयेत् ॥"
इति गारुडे १०२ अध्यायः ॥
पुनरपि ।
"जटित्वमग्निहोत्रित्वं भूशय्याजिनधारणम् ।
वने वासः पयो मूलं नीवारफलवृत्तिता ॥
प्रतिषिद्धान्निवृत्तिश्च त्रिस्नानं व्रतधारिता ।
देवतातिथिपूजा च धर्म्मोऽयं वनवासिनः ॥"
इति गारुडे २१५ अध्यायः ॥
अन्यच्च ।
"वानप्रस्थाश्रमं धर्म्मं ते वक्ष्यामोऽवधार्य्यताम् ।
अपत्यसन्ततिं दृष्ट्वा प्राज्ञो देहस्य चायतिम् ॥
वानप्रस्थाश्रमं गच्छेदात्मनः शुद्धिकारणम् ।
तत्रारण्योपभोगेन तपोभिश्चात्मदर्शनम् ।
भूमौ शय्या ब्रह्मचर्य्यं पितृदेवातिथिक्रिया ॥
होमस्त्रिषवणस्नानं जटावल्कलधारणम् ।
वन्यस्नेहनिषेवित्वं वानप्रस्थविधिस्त्वयम् ॥"
इति वामने १४ अध्यायः ॥
अपरञ्च ।
व्यास उवाच ।
"एवं गृहाश्रमे स्थित्वा द्वितीयं भागमायुषः ।
वानप्रस्थाश्रमं गच्छेत् सदारः साग्निरेव च ॥
निःक्षिप्य भार्य्यां पुत्त्रेषु गच्छेद्वनमथापि वा ।

तद्व्रतं तस्य लुप्येत प्रायश्चित्ती भवेत् द्विजः ॥
तत्र यो जायते गर्भो न संस्पृश्यो द्विजातिभिः ।
न हि वेदाधिकारोऽस्य तत्त्वमप्येवमेव हि ॥
अधः शयीत सततं सावित्रीजपतत्परः ।
शरण्यः सर्व्वभूतानां संविभागपरः सदा ॥
परिवादं मृषावादं निद्रालस्येऽपि वर्ज्जयेत् ।
एकाग्निरनिकेतः स्यात् प्रोक्षितां भूमिमाश्रयेत् ॥
मृगैः सह चरेद्वासं तैः सहैव च संवसेत् ।
शिलायां शर्करायां वा शयीत सुसमाहितः ॥
सद्यः प्रक्षालको वा स्यात् माससञ्चयिकोऽपि वा ।
षण्मासनिचयो वा स्यात् समानिचय एव वा ॥
नक्तञ्चान्नं समश्नीयात् दिवा वाहृत्य शक्तितः ।
चतुःकालिकिको वा स्यात् स्याद्वा अष्टम-कालिकः ॥
चान्द्रायणविधानैर्वा शुक्ले कृष्णे च वर्ज्जयेत् ।
पक्षे पक्षे समश्नीयात् यवागुं क्वथितां तथा ॥
पुष्पमूलफलैर्वापि केवलैर्व्वर्त्तयेत् सदा ।
स्वाभाविकैः स्वयं शीर्णैर्व्वैखानसमते स्थितः ॥
भूमौ वा परिवर्त्तेत तिष्ठेद्वा प्रपदैर्दिनम् ।
स्थानासनाभ्यां विहरेत् न क्वचिद्धैर्य्यमुत्सृजेत् ॥
ग्रीष्मे पञ्चतपाश्च स्याद्वर्षास्वभ्रावकाशिकः ।
आर्द्रवासास्तु हेमन्ते क्रमशो वर्त्तयंस्तपः ॥
उपस्पृश्य त्रिषवणं पितृदेवांश्च तर्पयेत् ।
एकपादेन तिष्ठेत मरीचीर्वा पिबेत् सदा ॥

| | | |
|---|---|---|
| | दृष्ट्वापत्यस्य चापत्यं<br>जर्ज्जरीकृतविग्रहः ॥<br>शुक्लपक्षस्य पूर्ब्बाह्णे प्रशस्ते<br>चोत्तरायणे ।<br>गत्वाप्यरण्यनियमांस्तपःकुर्य्यात्<br>समाहितः ॥<br>फलमूलानि पत्राणि<br>नित्यमाहारमाहरेत् ।<br>यदाहारो भवेत्तेन पूजयेत् पितृदेवताः<br>॥<br>पूजयेदतिथिं नित्यं स्नात्वा<br>चाभ्यर्च्चयेत् सुरान् ।<br>ग्रामादानीय वाश्नीयादष्टौ ग्रासान्<br>समाहितः ॥ | पञ्चाग्निधूमपो वा स्यादुष्मपः सोमपोऽथवा<br>।<br>पयः पिबेत् शुक्लपक्षे कृष्णपक्षे तु गोमयम्<br>॥<br>शीर्णपर्णाशनो वा स्यात् कृच्छ्रैर्वा<br>वर्त्तयेत्सदा ।<br>योगाभ्यासरतो वा स्याद्रुद्राध्यायी भवेत्<br>सदा ॥ |

अथर्व्वशिरसोपेतो वेदान्ताभ्यासतत्परः ।
यमान् सेवेत सततं नियमांश्चाप्यतन्द्रितः ॥
कृष्णाजिनी सोत्तरीयः
शुक्लयज्ञोपवीतवान् ।
अथवाग्नीन् समारोप्य स्वात्मनि
ध्यानतत्परः ॥
अनग्निरनिकेतः स्यान्मुनिर्मोक्षपरो भवेत् ।
तापसेष्वव विप्रेषु यात्रिकं भैक्षमाहरेत् ॥
गृहमेधिषु चान्येषु द्विजेषु वनवासिषु ।
ग्रामादाहृत्य वाश्नीयादष्टौ ग्रासान् वने
वसन् ॥
प्रतिगृह्य पुटेनैव पाणिना सकलेन वा ।
विविधाश्चोपनिषध आत्मसंसिद्धये जपेत् ॥
विद्याविशेषान् सावित्रीं रुद्राध्यायं तथैव
च ।
महाप्रस्थानिकञ्चासौ कुर्य्यादनशनन्तथा ॥
अग्निप्रवेशमन्यद्वा ब्रह्मार्पणविधौ स्थितः ॥
ये तु सम्यगिममाश्रमं शिव-
माश्रयन्त्यशिवपुञ्जनाशनम् ।
ते विशन्ति पदमैश्वरं परं
यान्ति चैव जगतोऽस्य संस्थितिम् ॥"
इति कूर्म्मपुराणे उपविभागे २६ अध्यायः ॥
अन्यत् विष्णुपुराणे ३ अंशे ९ अध्याये
द्रष्टव्यम् ॥

**वानरः**, पुं, स्त्री, (वा विकल्पितो नरः । यद्वा, वानं वने भवं फलादिकं रातीति । रा + कः ।) स्वनामख्यातपशुः । वाँदर इति भाषा । तत्पर्य्यायः । कपिः २ प्लवङ्गः ३ प्लवगः ४ शाखामृगः ५ वलीमुखः ६ मर्कटः ७ कीशः ८ वनौकाः ९ । इत्यमरः ॥ मर्कः १० प्लवः ११

**वानरेन्द्रः**, पुं, (वानराणामिन्द्रः ।) सुग्रीवः । इति शब्दरत्नावली ॥

**वानलः**, पुं, वावयः । इति शब्दचन्द्रिका ॥ कृष्णवावुइ इति ख्यातः ॥

**वानस्पत्यः**, पुं, (वनस्पतौ भवः । वनस्पति + "दित्यदित्यादित्येति ।" ४ । १ । ८५ । ण्यः ।) पुष्पजातफलवृक्षः । स तु आम्रजम्ब्वादिः । इत्यमरः ॥ (वनस्पतीनां समूहः । "दित्यदित्येति ।" ण्यः । वनस्पतिसमूहे, क्ली । इति काशिका ॥ वनस्पतिजाते, त्रि । यथा, वाजसनेयसंहितायाम् । १ । १४ ।
"अद्रिरसि वानस्पत्यः ।"
"हे उदूखल त्वं यद्यपि वानस्पत्यः दारुमयस्तथापि दृढत्वात् अद्रिरसि ।" इति तद्भाष्ये महीधरः ॥ यथाच, महाभारते । ३ । १२१ । ४ ।
"तस्य सप्तसु यज्ञेषु सर्व्वमासीद्धिरन्मयम् ।
वानस्पत्यञ्च भौमञ्च यद्द्रव्यं नियतं मखे ।
चषालयूपचमसाः स्थाल्यः पात्र्यः स्रुचः स्रुवाः ॥")

**वाना**, स्त्री, वर्त्तिकापक्षी । इति जटाधरः ॥

**वानायुः**, पुं, देशविशेषः । स तु भारतवर्षस्य उत्तरपश्चिमे वर्त्तते । इति शब्दरत्नावली ॥

**वानायुजः**, पुं, (वनायौ देशविशेषे जायते इति । जन् + डः ।) वनायुदेशोत्पन्नघोटकः । इत्य-

**वान्या**, स्त्री, (वनानां समूह इति । वन + यत् । टाप् ।) वनसमूहः । इति शब्दरत्नावली ॥

**वापः**, पुं, वपनम् । वपधातोर्घञ्प्रत्ययेन निष्पन्नः ॥ (यथा, महाभारते । ३ । ३४ । १९ ।
"कालं प्रतीक्षष्व सुखोदयस्य
पङ्क्तिं फलानामिव बीजवापः ॥"
मुण्डनम् । यथा, मनौ । ११ । १०९ ।
"उपपातकसंयुक्तो गोघ्नो मासं यवान् पिबेत् ।
कृतवापो वसेद्गोष्ठे चर्म्मणा तेन संवृतः ॥"
उप्यते अस्मिन्निति । वप् + अधिकरणे घञ् । क्षेत्रं इति । ५ । १ । ४५ । पाणिनीयसूत्रे भट्टोजिदीक्षितः ॥ तन्त्वादेर्वयनं वापदण्डादिदर्शनात् ॥)

**वापकः**, त्रि, वपनकारयिता । ञ्यन्तवपधातोः कर्त्तरि णकप्रत्ययेन निष्पन्नः ॥

**वापदण्डः**, पुं, (वापाय वपनाय दण्डः ।) वपनार्थदण्डः । वैँयु इति भाषा । तत्पर्य्यायः । वेमा २ । इत्यमरः ॥ वेम ३ वेमः ४ वायदण्डः ५ । इति भरतः ॥

**वापिः**, स्त्री, (उप्यते पद्मादिकमस्यामिति । वप् + "वसिवपियजिराजिव्रजीति ।" उणा० ४ । १२४ । इति इञ् ।) वापी । इति भरतद्विरूपकोषः ॥

**वापितं**, त्रि, (वप् + णिच् + क्तः ।) बीजाकृतम् । मुण्डितम् । इति मेदिनी । ते, १५० ॥ धान्यविशेषे, क्ली । वाओया धान इति भाषा । तस्य गुणः ।

प्रवङ्गः १२ प्रवगः १३ प्लवङ्गमः १४
प्रवङ्गमः
१५ गोलाङ्गूलः १६ कपित्थास्यः १७
दधिशोणः
१८ हरिः १९ तरुमृगः २० नगाटनः २१
झम्पी २२ झम्पारुः २३ कलिप्रियः २४
। इति
शब्दरत्नावली ॥ किखिः २५ शालावृकः
२६
इति जटाधरः ॥ (एतद्धनने प्रायश्चित्तं
यथा,
मनुः । ११ । १३६ ।
“हत्वा हंसं वलाकाञ्च वकं बर्हिणमेव ।
वानरं श्येनभासौ च स्पर्शयेत् ब्राह्मणाय
गाम् ॥”)

**वानरप्रियः**, पुं, (वानराणां प्रियः ।) क्षीरिवृक्षः ।
इति रत्नमाला ॥

**वानराक्षः**, पुं, (वानराणामक्षिणीव अक्षिणी
यस्य ।) वनच्छागः । इति हारावली ॥

**वानराघातः**, पुं, (वानराणामाघातो यत्र ।)
लोध्रवृक्षः । इति शब्दचन्द्रिका ॥

**वानरी**, स्त्री, (वानरस्य स्त्री । ङीष् ।) मर्कटी ।
(यथा, कथासरित्सागरे । १२३ । ६२ ।
“अथावतीर्य्य वृक्षात् तौ वानरो वानरीच
सा ।
अवतीर्णस्य मे पादावगृह्णीतावुभावपि ॥”)
शूकशिम्बी । इति शब्दरत्नावली ॥
(वानर-
स्येयमिति । वानर + अण् + ङीष् ।
वानर-
सम्बन्धिनी । यथा, महानाटके ।
“सुग्रीवे करुणा न सा हि करुणा लभ्या
धरा
वानरी ।
मय्येषा करुणा तवैव भविता नो वा भवेत्
कुत्रचित् ॥”)

मरः ॥

**वानीरः**, पुं, वेतसवृक्षः । इत्यमरः ॥ वाञ्जलु इति
ख्यातवृक्षश्च । तत्पर्य्यायः । वृत्तपुष्पः २
शाखालः
३ जलवेतसः ४ व्याधिघातः ५
परिव्याधः ६
नादेयः ७ जलसम्भवः ८ । अस्य गुणाः ।
तिक्तत्वम् । शिशिरत्वम् । रक्षोघ्नत्वम् ।
व्रण-
शोधनत्वम् । पित्तास्रकफदोषनाशित्वम् ।
संग्राहित्वम् । कषायत्वञ्च । इति
राजनिर्घण्टः ॥

**वानीरकः**, पुं, (वानीर इव प्रतिकृतिः । इवार्थे
कन् ।) मुञ्जतृणम् । इति राजनिर्घण्टः ॥

**वानीरजं**, क्ली, कुष्ठम् । इति राजनिर्घण्टः ॥

**वानेयं**, क्ली, (वने जले भवम् । वन + ढञ् ।)
कैवर्त्तिमुस्तकम् । इत्यमरः ॥

**वान्तः**, त्रि, वमितवस्तु । वमधातोः कर्म्मणि
क्तप्रत्ययेन निष्पन्नः ॥ (यथा,
साहित्यदर्पणे ।
“कृतप्रवृत्तिरन्यार्थे कविर्वान्तं समश्नुते
॥”)

**वान्तादः**, पुं, (वान्तं अत्तीति । अद् + अण् ।)
कुक्कुरः । इति त्रिकाण्डशेषः ॥

**वान्तिः**, स्त्री, (वम् + क्तिन् ।) वमनम् । वाँति
इति भाषा । यथा, --
“वान्तिरुल्लेखनं छर्द्दिर्वमनं वमथुर्व्वमिः
॥”
इति रत्नमाला ॥

**वान्तिहृत्**, पुं, (वान्तिं हरतीति । हृ + क्विप् ।)
लौहकण्टकवृक्षः । इति शब्दचन्द्रिका ॥
मयना
इति भाषा ॥

**वान्तिदा**, स्त्री, (वान्तिं वमनं ददातीति । दा +
कः । टाप् ।) कटुकीवृक्षः । इति शब्द-
चन्द्रिका ॥

“वापितं गुरु तद्धान्यं किञ्चिद्धीनमवापितम्
॥”
इति राजवल्लभः ॥

**वापी**, स्त्री, (वापि + कृदिकारादिति ङीष् ।)
दीघिका । इत्यमरः । १ । १० । २८ ॥
उप्यते
पद्मादिकं अस्याम् । वाप्यां वापिरपि स्मृता
।
इति द्विरूपकोषः ॥ इति तट्टीकायां भरतः ॥
* ॥
तस्या लक्षणं यथा । नव्यवर्द्धमानधृतो
वशिष्ठः ।
शतेन धनुर्भिः पुष्करिणी । त्रिभिः शतै-
र्दीर्घिका । चतुर्भिर्द्रोणः । पञ्चभिस्तडागः ।
द्रोणाद्दशगुणा वापी । तेन चतुर्द्दिक्षु पञ्चत्रिंश-
द्धस्तान्यूनतायां
द्वादशशतहस्तान्तरान्यूनत्वेन
दीर्घिका । चतुर्द्दिक्षु
चत्वारिंशद्धस्तान्यूनतायां
षोडशशतहस्तान्तरान्यूनत्वेन द्रोणः । चतु-
र्द्दिक्षु त्रिंशदधिकशतहस्तान्यूनतायां षोडश-
सहस्रहस्तान्तरान्यूनत्वेन वापी । इति
जला-
शयोत्सर्गतत्त्वम् ॥ * ॥ तत्खननफलं यथा,
--
“यो वापीमथवा कूपं देशे वारिविवर्ज्जिते ।
खानयेत् स दिवं याति बिन्दौ बिन्दौ शतं
समाः ॥”
इति कल्पतरौ वायुपुराणम् ॥
तज्जलगुणाः ।
“याप्यं गुरु कटु क्षारं पित्तलं कफवातजित्
।”
इति राजवल्लभः ॥
तत्खनने दिङ्निषेधो यथा, --
“वापीकूपतडागं वा प्रासादं वा निकेतनम् ।
न कुर्य्याद्वृद्धिकामस्तु अनलानिलनैरृते ॥

आग्नेय्यां मनसस्तापो नैरृते
क्रूरकर्म्मकृत् ।
वायव्यां बलवित्तञ्च पीयमाने जले
प्रिये ॥
स्थानस्य पावके भागे
वापीकूपतडागकम् ।
अग्निदाहं सदा कुर्य्यात्
समानुषचतुष्पदाम् ॥
नैरृते पीयमानन्तु आत्मना दुःखितो
भवेत् ।
कन्यापि तज्जलं पीत्वा पतिं
गृह्लाति कामतः ॥
इति देवीपुराणे
नन्दाकुण्डप्रवेशाध्यायः ॥
तत्करणफलं यथा, --
शर्म्मिल उवाच ।
"तडागोदकवापीनां कृतानामिह
यत् फलम् ।
विशेषेण पितृश्रेष्ठ वक्तुमर्हस्यशेषतः
॥
यम उवाच ।
धर्म्मस्यार्थस्य कामस्य यशसश्च
द्बिजोत्तम ।
तडागं सुप्रभूताम्बु परमायतनं
स्मृतम् ॥
देवताः पितरो नागा गन्धर्व्वा
यक्षराक्षसाः ।
पशुपक्षिमनुष्याश्च संश्रयन्ति
जलाशयम् ॥
कृत्स्नं तारयते वंशं पश्य खाते
जलाशये ।
गावः पिबन्ति पानीयं मनुष्याः
पशवस्तथा ॥
शरदृतौ तडागेषु सलिलं यस्य
तिष्ठति ।
अग्निष्टोमफलं तस्य प्रवदन्ति
मनीषिणः ॥
येषां शिशिरकाले तु पानीयं
प्रतितिष्ठति ।

वातश्लैष्महरं वाप्यं सक्षारं कटुपित्तलम्
॥"
वप् + ण्यत् ।) वपनीये च, त्रि ॥

**वामं**, क्ली, (वा + "अर्त्तिस्तुसुहुसृधृक्षीति ।"
उणा० १ । १३९ । इति मन् ।) धनम् ।
इति
मेदिनी । मे, २९ ॥ वास्तूकम् । इति
जटाधरः ॥

**वामः**, त्रि, (वमति वम्यते वेति । वम उद्गिरणे +
"ज्वलितिकसन्तेभ्यो णः ।" ३ । १ ।
१४० । इति
णः । यद्वा, वातीति । वा गतिगन्धनयोः +
"अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदीति ।
उणा०
१ । १३९ । इति मन् ।) वल्गुः । (यथा,
रघौ । ७ । ५७ ।
"स दक्षिणं तूणमुखेन वामं
व्यापारयन् हस्तमलक्ष्यताजौ ।
आकर्णकृष्टा सकृदस्य योद्धुः
मौर्व्वीव बाणान् सुषुवे रिपुघ्नान् ॥")
प्रतीपः । (यथा, वैराग्यशतके । ५३ ।
"दुःखेनोपार्ज्यन्ते पाल्यन्ते प्रत्यहञ्च
लाल्यन्ते ।
वामाः स्त्रियो विमूढैरुपभुञ्जानाः सुखं विगु-
णम् ॥"
यथाच, साहित्यदर्पणे । १० ।
"वामा यूयमहो विडम्बरसिकः कीदृक्
स्मरो
वर्त्तते ॥")
सव्यः । इत्यमरमेदिनीकारौ ॥ (यथा,
राज-
तरङ्गिण्याम् । १ । २ ।
"भालं वह्निशिखाङ्कितं दधदधिश्रोत्रं वहन्
सम्भृत-
क्रीडत् कुण्डलिजृम्भितं
जलधिजच्छायाच्छ-
कण्ठच्छविः ।

"प्रजापतेस्ते श्वशुरस्य साम्प्रतं
निर्य्यापितो यज्ञमहोत्सवः किल ।
वयञ्च तत्राभिसराम वाम ! ते
यद्यर्थितामी विबुधा व्रजन्ति ॥")
कामदेवः । पयोधरः । इति मेदिनी । मे, २९ ॥
(श्रीकृष्णस्य भद्रागर्भोत्पन्नः पुत्त्रविशेषः । यथा,
भागवते । १० । ६१ । १७ ।
"संग्रामजित् बृहत्सेनः शूरप्रहरणोऽरिजित् ।
जयः सुभद्रो भद्राया वाम आयुश्च सत्यकः ॥")

**वामदृक्** [श्], स्त्री, (वामा मनोहरा दृक् दृष्टि-
र्यस्याः ।) नारी । इति राजनिर्घण्टः ॥

**वामदेवः**, पुं, (वाम एव देवः ।) शिवः । इत्य-
मरः । १ । १ । ३४ ॥ (यथा, महाभारते ।
१३ । १७ । ७० ।
"वामदेवश्च वामश्च प्राग्दक्षिणश्च वामनः ॥"
ऋषिप्रभेदः । यथा, पञ्चदश्याम् । ९ । ४५ ।
"आगामिप्रतिबन्धश्च वामदेवे समीरितः ।
एकेन जन्मना क्षीणो भरतस्य त्रिजन्मभिः ॥")

**वामनः**, पुं, (वामयति वमति वा मदमिति ।
वम + णिच् + ल्युः ।) दक्षिणदिग्गजः । (यथा,
भागवते । ५ । २० । ३९ ।
"तदुपरिष्टाच्चतसृष्वाशास्वात्मयोनिनाखिल
जगद्गुरुणा विनिवेशिता ये द्बिरदपतयः
ऋषभः पुष्करचूडो वामनोऽपराजित इति
सकललोकस्थितिहेतवः ॥") ह्रस्वः । इत्य-
मरः । २ । ६ । ४६ ॥ (यथा, रघौ । १९ । ५१ ।
"व्योमपश्चिमकलास्थितेन्दु वा
पङ्कशेषमिव धर्म्मपल्वलम् ।
राज्ञि ! तत्कुलमभूत् क्षयातुरे
वामनार्च्चिरिव दीपभाजनम् ॥"
यथाच तत्रैव । १ । ३ ।
"प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥"
अङ्कोठवृक्षः । हरिः । इति मेदिनी । ने, १२९ ॥
(यथा, महाभारते । १३ । १४९ । ३० ।
"उपेन्द्रो वामनः प्रांशुरमोघः शुचिरुर्जितः ॥"
शिवः । यथा, महाभारते । १३ । १७ । ७० ।
"वामदेवश्च वामश्च प्राग्दक्षिणश्च वामनः ॥"

वाजपेयातिसत्राभ्यां फलं बिन्दन्ति मानवाः ॥
वसन्ते चैव ग्रीष्मे तु सलिलं यस्य तिष्ठति ।
राजसूयाश्वमेधाभ्यां स फलं समुपाश्नुते ॥
तडागं सर्व्वसत्त्वानां जीवनन्तु दिवानिशम् ।
तस्मात् सर्व्वात्मना वत्स तडागमिह कार-
येत् ॥
कृत्स्नं हि तारयेद्वंशं पुरुषस्य न संशयः ।
सावतारः कृतः कूपः सम्प्रभूतजलस्तथा ॥
यस्य स्वादुजलं कूपे पिबन्ति सततं जनाः ।
स नरो विरजो लोके देववद्दिवि मोदते ॥
पीत्वैवेक्षुरसं क्षीरं दधि मधु सुरासवम् ।
तावत् पिपासा नापैति यावत्तोयं न पीयते ॥
जीवन्ति चान्नरहिता दिवसानि बहून्यपि ।
तृषितस्तोयरहितो दिनमेकं न जीवति ॥
तस्माद्ददाति यो नित्यं पानीयं प्राणिनामिह ।
स ददाति नरः प्राणान् माभूत्ते ह्यत्र संशयः ॥
प्राणदानात् परं नाम नान्यद्दानं हि विद्यते ।
तस्माद्वापीश्च कूपांश्च तडागानि च कार-
येत् ॥
सवृक्षाणि ह विप्रर्षे यदीच्छेत् श्रियमात्मनः ।
शुष्कं परनिपानन्तु यः कारयति शक्तितः ।
वक्षो बिभ्रदहीनकञ्चुकचितं बद्धाङ्गनार्द्धस्य वो
भागः पुङ्गवलक्षणोऽस्तु यशसे वामोऽथवा दक्षिणः ॥”)
अधमः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥
वामहस्तेन जलपानभोजननिषेधो यथा ।
हारीतः ।
“न पिबेन्न च भुञ्जीत द्विजः सव्येन पाणिना ।
नैकहस्तेन च जलं शूद्रेणावर्ज्जितं पिबेत् ॥”
इति आह्निकतत्त्वम् ॥
अपि च ।
“न वामहस्तेनोद्धत्य पिबेद्वक्त्रेण वा जलम् ।
नोत्तरेदनुपस्पृश्य नाप्सु रेतः समुत्सृजेत् ॥”
इति कौर्म्मे १५ अध्यायः ॥
“वामः कायो ब्राह्मणोऽपि मांसमद्यादिभुक्तये ।
कृतो मया मोहनाय चार्व्वाकादिप्रवर्त्तकः ॥”
इति कालिकापुराणे ७७ अध्यायः ॥
(वननीयः । यथा, ऋग्वेदे । ६ । ५३ । २ ।
“अभिनो नर्य्यं वसु वीरं प्रयतदक्षिणम् ।
वामं गृहपतिं नय ।”
“वामं वननीयम् ।” इति तद्भाष्ये सायणः ॥
वननीयं याचनीयं वनु याचने इत्यस्य प्रयोगो ज्ञातव्यः ॥)

**वामः**, पुं, (वातीति । वा गतिगन्धनयोः + मन् ।)
हरः । (यथा, भागवते । ४ । ३ । ८ ।
अश्वभेदः । यथा, अश्ववैद्यके । ३ । १५३ ।
“एकेनाङ्गेन हीनेन भिन्नेन च विशेषतः ।
यमजं वाजिनं विन्द्याद्वामनं वामनाकृतिम् ॥”
दनोः पुत्त्रभेदः । यथा, हरिवंशे । ३ । ८२ ।
“अयोमुखः शम्बरश्च कपिलो वामनस्तथा ॥”
भुजङ्गभेदः । यथा, महाभारते । १ । ३५ । ६ ।
“कालियो मणिनागश्च नागश्चापूरणस्तथा ।
नागस्तथा पिञ्जरक एलापत्रोऽथ वामनः ॥”
गरुडवंशीयः पक्षिविशेषः । यथा, महाभारते । ५ । १०१ । १० ।
“पङ्कजिद्वज्रनिष्कुम्भो वैनतेयोऽथ वामनः ।
वातवेगो दिशाचक्षुर्निमिषोऽनिमिषस्तथा ॥”
हिरण्यगर्भस्य सुतभेदः । यथा, हरिवंशे २५३ । ६ ।
“गार्गः पृथुस्तथैवाग्र्यो जान्यो वामन एव च ॥”

सन्तारयति भूयोऽपि द्विगुणं तस्य वै फलम् ॥”

इति वह्निपुराणे

तडागवृक्षप्रशंसानामाध्यायः ॥

**वापीहः**, पुं, (वापीं जहातीति । हा त्यागे + कः ।

पाने वापीजलवर्ज्जनादस्य

तथात्वम् ।) चातक-

पक्षी । इति त्रिकाण्डशेषः ॥

**वाप्यं**, क्ली, (वाप्यां भवमिति । वापी + “दिगा-

दिभ्यो यत् ।” ४ । ३ । ५४ । इति

यत् ।) कुष्ठौ-

षधम् । इत्यमरः । १ । ४ । १२६

॥ वापीभवे,

त्रि ॥ (यथा, सुश्रुते सूत्रस्थाने ४५

अध्याये ।

“ताडागं वातलं स्वादु कषायं

कटुपाकि च ।

क्रौञ्चद्वीपस्थपर्व्वतविशेषः । यथा,
महाभारते ।
६ । १२ । १७ -- १८ ।
“कौञ्चद्वीपे महाराज ! क्रौञ्चो नाम महा-
गिरिः ।
क्रौञ्चात्परो वामनको वामनादन्धकारकः ॥
अन्धकारात्परो राजन् ! मैनाकः
पर्व्वतोत्तमः ।
मैनाकात्परतो राजन् ! गोविन्दो गिरि-
रुत्तमः ॥”
तीर्थभेदः । यथा, महाभारते । ३ । ८४ ।
१२२ ।
“ततस्तु वामनं गत्वा सर्व्वपापप्रमोचनम् ॥”
महापुराणान्यतमः । यथा, देवीभागवते । १
।
३ । ७ ।
“अयुतं वामनाख्यञ्च वायव्यं षट् शतानिच
।
चतुर्व्विंशतिसंख्यातः सहस्राणि तु शौनक !
॥”)
विष्णोः पञ्चमावतारः । तस्य प्रादुर्भावो
यथा ।
श्रीसदाशिव उवाच ।
“प्रह्लादस्य सुतो यज्ञे विरोचन इतीरितः ।
तस्य पुत्त्रो महाबाहुर्बलिर्वैश्वानरप्रभः ॥
स तु धर्म्मविदां श्रेष्ठः सत्यशंसी जितेन्द्रियः
।
हरेः प्रियतमो भक्तो नित्यं धर्म्मरतः शुचिः
॥
स जित्वा सकलान् देवान् सेन्द्रांश्च
समरुद्ग-
णान् ।
त्रिलोकान् स्ववशे स्थाप्य राज्यं चक्रे
महाबलः ॥
इन्द्रादिस्त्रिदशास्तस्य किङ्कराः
समुपस्थिताः ।
भ्रष्टराज्यं सुरपतिं दृष्ट्वा तस्य पितार्द्दितः ॥
कश्यपो भार्य्यया सार्द्धं तपस्तेपे हरिं प्रति ।
अदितिर्जनयामास वामनं विष्णुमच्युतम् ॥
श्रीवत्सकौस्तुभोरस्कं पूर्णेन्दुसदृशद्युतिम् ।
सुन्दरं पुण्डरीकाक्षं अतिखर्व्वतरं हरिम् ॥
वटुवेशधरं देवं सर्व्ववेदान्तगोचरम् ।
मेखलाजिनदण्डादिचिह्नेनाङ्कितमीश्वरम् ॥
तं दृष्ट्वा देवताः सर्व्वे शतक्रतुपुरोगमाः ।
स्तुत्व महर्षिभिः सार्द्धं नमश्चक्रुर्म्महौजसः ॥
ततः प्रसन्नो भगवान् प्रोवाच सुरसत्तमान् ।
किं कर्त्तव्यं मया वाद्य तद्ब्रवीत सुरोत्तमाः ॥
ततः प्रहृष्टास्त्रिदशास्तमूचुः परमेश्वरम् ।
अस्मिन् काले बलेर्यज्ञं वर्त्तते मधुसूदन ॥
प्रथमं दानकालोऽयं तस्य दैत्यपतेः प्रभो ।
याचित्वा त्रिदिवं लोकं ततस्तं दातुमर्हसि ॥
इत्युक्तस्त्रिदशैः सर्व्वैराजगाम बलिं हरिः ।
यागदेशे समासीनमृषिभिः सार्द्धमक्षयैः ॥
अभ्यागतं वटुं दृष्ट्वा सहसोत्थाय दैत्यराट् ।
अभ्यागतं स्वयं विष्णुं महाहर्षसमन्वितः ॥
पूजयामास विधिना निवेश्य कुसुमासने ।
प्रणिपत्य नमस्कृत्य प्राह गद्गदया गिरा ॥
धन्योऽस्मि कृतकृत्योऽस्मि सफलं जीवितं मम
।
त्वामर्च्चयित्वा विप्रेन्द्र ! किं करोमि तव प्रियम्
॥
आगतोऽस्मि यदर्थं त्वं मामुद्दिश्य द्विजोत्तम ।
तत् प्रयच्छामि ते शीघ्रं ब्रूहि वेदविदां वर ॥
ततः प्रहृष्टमनसा तमुवाच महीपतिम् ।
शृणु राजेन्द्र ! वक्ष्यामि ममागमनकारणम् ॥
अग्निकुण्डस्य पृथिवीं देहि दैत्यपते मम ।
मम त्रिविक्रमं पादं महीं संदातुमर्हसि ॥
सर्व्वेषामेव दानानां भूमिदानमनुत्तमम् ।
यो ददाति महीं राजन् विप्रायाकिञ्चनाय वै ॥
अङ्गुष्ठमात्रमथवा स भवेत् पृथिवीपतिः ।
न भूमिदानसदृशं पवित्रमिह विद्यते ॥
तस्माद्भूमिं महीपाल प्रयच्छ त्रैपदं मम ।
एतदल्पमहीं दातुं मा विशङ्क महीपते ॥
जगत्त्रयप्रदानन्तत् मम भूप भविष्यति ।
ततः प्रहृष्टवदनस्तथेत्याह महीपतिः ॥
तस्मै महीप्रदानन्तु कर्त्तुं मेने विधानतः ।
तं दृष्ट्वा दैत्यराजानं तदा तस्य पुरोहितः ॥
यथेष्टं तव विप्रेन्द्र तद्गृहाण
महीमिमाम् ॥
पञ्चाशत्कोटिविस्तीर्णां
सकाननमहीधराम् ।
ससागराञ्च सद्वीपां सदेवासुरमानुषाम्
॥
पादेनैकेन पुरुषो विक्रम्य मधुसूदनः
।
उवाच तं दैत्यराजं किं करोमीति
शाश्वतम् ॥
तत्र त्रैविक्रमं रूपमीश्वरस्य महौजसः
।
सम्मातुमपि देवानामृषीणाञ्च
महात्मनाम् ॥
न वक्तुमपि शक्यं स्यात् ब्रह्मणः
शङ्करस्य च ।
तत्पदं पृथिवीं सर्व्वामाक्रम्य गिरिजे
शुभे ॥
अतिरिक्तं समभवत्
शतयोजनमायतम् ।
दिव्यं चक्षुर्द्ददौ तस्मै दैत्यराज्ञे
सनातनः ॥
तस्मै सन्दर्शयामास स्वकं रूपं
जनार्द्दनः ।
तद्विश्वरूपं देवस्य दृष्ट्वा दैत्येश्वरो
बलिः ॥
प्रहर्षमतुलं लेभे सानन्दाश्रुपरिप्लुतः
।
दृष्ट्वा देवं नमस्कृत्य स्तुत्वा
स्तुतिभिरेव च ॥
प्राह गद्गदया वाचा
प्रहर्षेणान्तरात्मना ।
धन्योऽस्मि कृतकृत्योऽस्मि त्वां
दृष्ट्वा परमेश्वरम् ॥
लोकत्रयं ममैवैतत् गृहाण मघुसूदन ।
अथ सर्व्वेश्वरो विष्णुर्द्वितीयं
पदमव्ययम् ॥
ऊदर्ध्वे प्रसारयामास
ब्रह्मलोकान्तमच्युतः ।

अदित्या सह धर्म्मात्मा पयोव्रतसमन्वितः
॥
अर्च्चयामास देवेशं पद्मनाभं जनार्द्दनम् ।
ततो वर्षसहस्राणि तेन संपूजितो हरिः ॥
तथैवाविरभूत्तस्य देव्या सह सनातनः ।
तं दृष्ट्वा जगतामीशं हर्षनिर्भरचेतसा ॥
पत्न्या सह नमस्कृत्य तुष्टाव च द्बिजोत्तमः
॥
कश्यप उवाच ।
नमो नमस्ते लक्ष्मीश ! सर्व्वज्ञ जगदीश्वर ।
सर्व्वात्मन् सर्व्वदेवेश ! सृष्टिसंहारकारक ॥
इत्यादिस्तुतिभिः सम्यक् स्तूयमानो
महर्षिणा ।
प्राह गम्भीरया वाचा परितुष्टो जनार्द्दनः ॥
सन्तुष्टोऽस्मि द्बिजश्रेष्ठ ! त्वया भक्त्या
समर्च्चितः ।
वरं वृणीष्व भद्रं ते करोमि तव वाञ्छितम् ॥
ततः प्राह हृषीकेशं भार्य्यया सह कश्यपः ।
पुत्त्रत्वं मम देवेश संप्राप्य त्रिदशां हितम् ॥
कुरुष्व बलिना देव त्रैलोक्यं निर्ज्जितं
बलात् ।
इन्द्रस्यावरजो भूत्वा उपेन्द्र इति नामतः ॥
येन केनात्ममार्गेण बलिं निर्ज्जित्य मायया ।
त्रैलोक्यं मम पुत्त्राय देहि शक्राय शाश्वतम्
॥
इत्युक्तस्तेन विप्रेण तथेत्याह जनार्द्दनः ।
संस्तूयमानस्त्रिदशैस्तत्रैवान्तरधीयत ॥
एतस्मिन्नन्तरे काले कश्यपस्य महात्मनः ।
अदित्या गर्भमापेदे भगवान् भूतभावनः ॥”
इति पाद्मोत्तरखण्डे ४८ अध्यायः ॥
श्रीशिव उवाच ।
“अथ वर्षसहस्रान्ते सर्व्वलोकमहेश्वरम् ।

उशना अब्रवीद्वाक्यं मा राजन् दीयतां मही ।
एष विष्णुः परेशो यो देवैः संप्रार्थितो नृप ! ॥
वञ्चयित्वा महीं सर्व्वां ततः प्राप्तुमिहागतः ।
तस्मान्मही न दातव्या तस्मै राजन् महात्मने ॥
अन्यमर्थं प्रयच्छस्व वचनान्मम भूपते ! ।
ततः प्रहस्य राजासौ तं गुरुं प्राह धैर्य्यतः ॥
प्रीतये वासुदेवस्य पुण्यं सर्व्वं कृतं मया ।
अद्य धन्योऽस्म्यहं विष्णुः स्वयमेवागतो यदि
॥
तस्यार्पयामि राज्यं हि जीवितञ्च महन्मम ।
तस्मादस्मै प्रयच्छामि त्रीन् लोकानपि माचिरम्
॥
इत्युक्त्वा भूपतिस्तस्य पादौ प्रक्षाल्य भक्तितः
।
वाञ्छितां प्रददौ भूमिं वारिपूर्ब्बं विधानतः ॥
परिणीय नमस्कृत्य दत्त्वा वै दक्षिणां वसु ।
उवाच तं वटुं विप्रं प्रहर्षेणान्तरात्मना ॥
धन्योऽस्म्यनुगृहीतोऽस्मि तव दत्त्वा महीं द्बिज
।

सनक्षत्रग्रहोपेतं सर्व्वदेवसमावृतम् ॥
पादेनापरिपूर्णोऽभूदच्युतः स
शुभानने ।
ततः पितामहो दृष्ट्वा
चक्रपद्मादिचिह्नितम् ॥
श्रीपादं देवदेवस्य हर्षसंभ्रमचेतसा ।
धन्योऽस्मीति वदन् ब्रह्मा गृहीत्वा स्वं
कम-
ण्डलुम् ॥
भक्त्या प्रक्षालयामास तत्र
संस्थितवारिणा ।
अक्षय्यमभवत्तोयं तस्य विष्णोः
प्रभावतः ॥
तत्तीर्थं मेरुशिखरे प्रापतद्विमलं
जलम् ।
जगतः पावनार्थाय चतुर्द्दिक्षु
प्रवाहितम् ॥
सीता चालकनन्दा च वङ्क्षुर्भद्रा
यथाक्रमात् ॥
प्रसङ्गादिदमाख्यातं गङ्गाजन्म
ह्यनुत्तमम् ॥
ततो नारायणः श्रीमान् बलेर्द्दैत्यपतेः
प्रभुः ।
रसातलं शुभं लोकं प्रददौ
भक्तवत्सलः ॥
सर्व्वेषां दानवानाञ्च नागानां
यादसाम्पतेः ।
राजानञ्च बलिञ्चक्रे
यावदाहूतसंप्लवम् ॥
प्रतिगृह्य बलेर्लोकान् वटुवेशेन
दैत्यहा ।
महेन्द्राय ददौ प्रीत्या
काश्यपिर्व्विष्णुरव्ययः ॥
ततो देवाः सगन्धर्व्वा ऋषयश्च
महौजसः ।
तुष्टुवुः स्तुतिभिर्द्दिव्यैः
पूजयामासुरच्युतम् ॥
संक्षिप्य तन्महद्रूपं तेषां सन्दर्शनाय वै
।
संपूज्यमानस्त्रिदशैरन्तर्धानं ययौ
हरिः ॥”

| | | |
|---|---|---|
| | | इति पाद्मोत्तरखण्डे ४९ अध्यायः ॥<br>* ॥<br>तदवतारप्रकारान्तरं यथा, --<br>नारद उवाच ।<br>“सांप्रतं भगवान्<br>विष्णुस्त्रैलोक्याक्रमणं वपुः ।<br>करिष्यति जगत्स्वामी<br>बलेर्बन्धनमीश्वरः ॥<br>तत् कथं पूर्ब्बकालेऽपि विभुरासीत्<br>त्रिविक्रमः ।<br>कस्य वा बन्धनं विष्णुः कृतवांस्तच्च<br>मे वद ॥<br>पुलस्त्य उवाच ।<br>श्रूयतां कथयिष्यामि योऽयं<br>प्रोक्तस्त्रिविक्रमः ।<br>यस्मिन् काले सम्बभूव यञ्च<br>वञ्चितवानसौ ॥ |

आसीत् धुन्धुरिति ख्यातः
कश्यपस्यौरसः सुतः ।
दनुगर्भसमुद्भूतो महाबलपराक्रमः ॥
स समाराध्य वरदं ब्रह्माणं तपसासुरः ।
अवध्यत्वं सुरैः सर्व्वैः प्रार्थयत् स तु
नारद ॥
तद्वरं तस्य च प्रादात् तपसा
पङ्कजोद्भवः ।
परितुष्टः स च बली निर्ज्जगाम
त्रिपिष्टपम् ॥
चतुर्थस्य कलेरादौ जित्वा देवान्
सवासवान् ।
धुन्धुः शक्रत्वमकरोत् हिरण्यकशिपौ
सति ॥
तस्मिन् काले स बलवान्
हिरण्यकशिपुस्ततः ।
चचार मन्दरगिरौ दैत्यं धुन्धुं समाश्रितः
॥
ततोऽसुरा यथाकामं विहरन्ति त्रिपिष्टपे
।
ब्रह्मलोके च त्रिदशाः संस्थिता
दुःखसंयुताः ॥
ततोऽमरान् ब्रह्मसदोनिवासिनः
श्रुत्वा च धुन्धुर्दितिजानुवाच ह ।
गच्छाम दैत्या वयमग्रजस्य
सदो विजेतुं त्रिदशान् सशक्रान् ॥
ते धुन्धुवाक्यन्तु निशम्य दैत्याः
प्रोचुर्न नो विद्यति लोकपाल ।
गतिर्यया याम पितामहाजिरं
सुदुर्गमोऽयं परतो हि मार्गः ॥
इतः सहस्रैर्ब्बहुयोजनाख्यै-
र्ल्लोको महर्नाम महर्षिजुष्टः ।
येषां हि नासापवनोदितेन
दह्यन्ति दैत्याः सहसेक्षितेन ॥
तेषां वचनमाकर्ण्य धुन्धुः प्रोवाच
दानवान् ।
गन्तुकामः स सदनं ब्रह्मणो
जेतुमीश्वरान् ॥

तं गन्धमाघ्राय सुरा विषण्णा
जानन्त धुन्धुं हयमेधदीक्षितम् ।
ततः शरण्यं शरणं जनार्द्दनं
जग्मुः सशक्रा जगतः परायणम् ॥
प्रणम्य वरदं देवं पद्मनाभं जनार्द्दनम् ।
प्रोचुः सर्व्वे सुरगणा भयगद्गदया गिरा ॥
भगवन् देवदेवेश ! चराचरपरायण !
विज्ञप्तिः श्रूयतां विष्णो सुराणामार्त्तिनाशन ! ॥
धुन्धुर्नाम्ना सुरपतिर्बलवान् बलवृंहितः ।
शुक्रस्य मतमास्थाय सोऽश्वमेधाय दीक्षितः ॥
शतं क्रतूनामिष्ट्वासौ ब्रह्मलोकं महासुरः ।
आरोढुमिच्छति बली विजेतुं त्रिदशानपि ॥
तस्मादकालहीनन्तु चिन्तयस्व जगद्गुरो ।
उपायं मखविध्वंसे भवामो येन निर्वृताः ॥
श्रुत्वा सुराणां वचनं भगवान्मधुसूदनः ।
दत्त्वाभयं महाबाहुः प्रेषयामास सोऽथ तान् ॥
विसृज्य देवताः सर्व्वा ज्ञात्वा जेतुं महासुरम् ।
वञ्चनाय मतिञ्चक्रे स धुन्धोरध्वरस्य वै ॥
ततः स कृत्वा भगवान् वामनं रूपमीश्वरः ।
देहं कृत्वा निरालम्बं काष्ठवद्देविकाजले ॥
क्षणान्मज्जंस्तथोन्मज्जन्मुक्तकेशो यदृच्छया ।
दृष्टोऽथ दैत्यपतिना दैत्यैश्चान्यैः सुरर्षिभिः ॥
ततः कर्म्म परित्यज्य यज्ञियं ब्राह्मणोत्तमाः ।
समुत्तारयितुं विप्रमद्रवन्त समाकुलाः ॥
सदस्या यजमानाश्च ऋत्विजश्च महौजसः ।
निमज्जमानमुद्धर्त्तुं सर्व्वे तं वामनं द्विजम् ॥
समुत्तार्य्य हसन्तस्ते पप्रच्छुः सर्व्व एव हि ।
किमर्थं पतितोऽसीह केन क्षिप्तोऽसि वा वद ॥
तेषामाकर्ण्य वचनं कम्पमानो मुहुर्मुहुः ।
प्राह धुन्धुपुरोगांस्तान् श्रूयतामत्र कारणम् ॥
ब्राह्मणो गुणवानासीत् प्रभास इति विश्रुतः ।
तस्य पुत्रद्वयं जातं मन्दप्रज्ञं सुदुःखितम् ॥
तस्य ज्येष्ठो मम भ्राता कनीयानवरस्त्वहम् ।
नेत्रभाल इति ख्यातो ज्येष्ठो भ्राता ततो-
ऽसुराः ॥
मम नाम पिता चक्रे इति भासोऽतिकौतुकात् ।
ततः कालेन महता आवयोः स पिता मृतः ॥
तस्यौर्द्ध्वदेहिकं कृत्वा गृहमावां समागतौ ।
ततो मयोक्तः स भ्राता विभजामो गृहं वयम् ।

प्राह द्विज ददामीति यावदिच्छसि वै
धनम् ॥
तद्वाक्यं दानवपतेः श्रुत्वा देवोऽथ वामनः
।
प्राहासुरपतिं धुन्धुं स्वार्थसिद्धिकरं वचः
॥
सोदरेणापि हि भ्रात्रा ह्रियते यस्य सम्पदः
।
तस्याक्षमस्य यद्दत्तं किमन्यो न हरिष्यति
॥
मम प्रमाणमालोक्य मामकञ्च क्रमत्रयम् ।
संप्रयच्छस्व दैत्येन्द्र नाधिकं रक्षितुं क्षमः
॥
इत्येवमुक्ते वचने महात्मा
विहस्य दैत्याधिपतिः सऋत्विक् ।
प्रादाद्द्विजेन्द्राय पदत्रयं तदा
यदा स नान्यत् जगृहे च किञ्चन ॥
क्रमत्रये तोयमवेक्ष्य दत्तं
महासुरेन्द्रेण विभुर्यशस्वी ।
चक्रे ततो लङ्घयितुं त्रिलोकीं
त्रिविक्रमं रूपमनन्तशक्तिः ॥
कृत्वा तु रूपं दितिजांश्च हत्वा
प्रणम्य चर्षीन् प्रथमक्रमेण ।
महीं महीध्रैः सहितां सहार्णवां
जहार रत्नाकरपत्तनैर्युताम् ॥
भुवं सनाकं त्रिदशाधिवासं
सोमार्कऋक्षैरभिमण्डितं नभः ।
देवो द्वितीयेन जगाम वेगात्
क्रमेण देवप्रियलोकमीश्वरः ॥
क्रमं तृतीयं न यदास्य पूरितं
तदातिकोपाद्दनुपुङ्गवस्य ।
पपात पृष्ठे भगवांस्त्रिविक्रमो
मेरुप्रमाणेन तु विग्रहेण ॥
पतता वासुदेवेन दानवोपरि नारद ! ।
त्रिंशद्योजनसाहस्री भूमिर्भूता घटीकृता ॥
ततो दैत्यं समुत्पात्य तस्यां प्रक्षिप्य
वेगतः ।
वर्षसिक्ताभिवृष्ट्या तां गर्भभूमिमपूरयत्
॥

कथन्तु कर्म्मणा केन गम्यते दानवर्षभाः ।
कथं तत्र सहस्राक्षः संप्राप्तः सह दैवतैः ॥
ते धुन्धुना दानवेन्द्राः पृष्टाः प्रोचुर्वचोऽधिपम् ।
कर्म्म तन्न वयं विद्मः शुक्रस्तद्वेत्त्यसंशयम् ॥
दैत्यानां वचनं श्रुत्वा धुन्धुर्दैत्यपुरोहितम् ।
पप्रच्छ शुक्र किं कर्म्म कृत्वा ब्रह्मसदोगतिः ॥
ततोऽस्मै कथयामास दैत्याचार्य्यः कलिप्रियः ।
शक्रस्य चरितं श्रीमान् पुरा वृत्तरिपोः किल ॥
शक्रः शतन्तु पुण्यानां क्रतूनामजयत् पुरा ।
दैत्येन्द्र ! वाजिमेधानां तेन ब्रह्मसदो गतः ॥
तद्वाक्यं दानवपतिः श्रुत्वा शुक्रस्य वीर्य्यवान् ।
यष्टुं तुरगमेधानां चकार मतिमुत्तमाम् ॥
आमन्त्र्याहासुरगुरुं दानवांश्चाप्यनुत्तमान् ।
प्रोवाच यक्ष्येऽहं यज्ञैरश्वमेधैः सदक्षिणैः ॥
आहूयन्ताञ्च निधयश्चाज्ञाप्यन्ताञ्च गुह्यकाः ।
प्रयामो देविका यत्र गङ्गा प्राचीनवाहिनी ॥
सा हि पुण्या सरिच्छ्रेष्ठा सर्व्वसिद्धिकरी शिवा ।
जलं प्राचीनमासाद्य वाजिमेधान् यजामहे ॥
इत्थं सुरारिवचनं निशम्यासुरयाजकः ।
वाढमित्यब्रवीद्धृष्टो निधयः सन्दिदेश सः ॥
ततो धुन्धुर्देविकायाः प्राचीने पापनाशने ।
तेनोक्तो नैव भवतो विद्यते भाग इत्यहम् ॥
कुब्जवामनखञ्जानां क्लीवानां श्वित्रिणामपि ।
उन्मत्तानां तथान्धानां धनभागो न विद्यते ॥
एवमुक्तो मया सोऽथ किमर्थं पैतृकाद्गृहम् ।
धनार्द्धभागमर्हामि नाहं न्यायेन केन वै ॥
इत्युक्तवति वाक्येऽसौ भ्राता मे कोपसंयुतः ।
समुत्क्षिप्याक्षिपन्नद्यामस्यांमामिति कारणात् ॥
ममास्यां निम्नगायान्तु मध्ये च पुरतो गतः ।
कालः संवत्सराख्यस्तु युष्माभिरिह चोद्धृतः ।
के भवन्तश्च संप्राप्ताः सस्नेहा बान्धवा इव ॥
ते वामनवचः श्रुत्वा भार्गवा द्विजसत्तमाः ।
प्रोचुर्दैत्यपतिं सर्व्वे वामनार्थकरं वचः ॥
इति द्विजानां वचनं श्रुत्वा दैत्यपतिर्व्वचः ।
ततः स्वर्गं सहस्राक्षो वासुदेवप्रसादतः ।
सुराश्च सर्व्वे त्रैलोक्यमवापुर्न्निरुपद्रवाः ॥
भगवानपि दैत्येन्द्रं प्रक्षिप्य सिकतार्णवे ।
कालिन्द्यां रूपमाधाय तत्रैवान्तरधीयत ॥”
इति वामने ७५ अध्यायः ॥

**वामनः**, त्रि, (वामयतीति । वम + णिच् + ल्युः ।)
अतिक्षुद्रः । तत्पर्य्यायः । न्यङ् २ नीचः ३ खर्व्वः ४ ह्रस्वः ५ । इत्यमरः ॥ अनुच्चः ६ अनायतः ७ । इति जटाधरः ॥ (यथा, नैषधे । २२ । ५७ ।
“विधिस्तुषारर्त्तुदिनानि कर्त्तं कर्त्तं विनिर्म्मांति तदन्तभिन्नैः ।
ज्योत्स्नीर्न चेत् तत्प्रतिमा इमा वा कथं कथं तानि च वामनानि ॥”)

**वामनव्रतं**, क्ली, (वामनदेवताकं व्रतम् ।) श्रवण-
द्वादशीकर्त्तव्यो वामनदेवस्य व्रतविशेषः । अथ श्रीवामनव्रतविधिः ।
“नत्वा गुरुमनुज्ञाप्य पश्चान्नियममाचरेत् ।
न हि सिद्ध्येद्गुरोर्भक्तिं नियमञ्च विना फलम् ॥”
नियममन्त्रः ।
“एकादश्यां निराहारः स्थित्वा चैवापरेऽहनि ।

| | | |
|---|---|---|
| भार्गवेन्द्रेण शुक्रेण वाजिमेधाय दीक्षितः ॥<br>ततोऽग्निधूमेन मही सशैला<br>व्याप्ता दिशः खं विदिशश्च पूर्णाः ।<br>तेनोग्रगन्धेन दिवस्पृशेन<br>मरुद्ववौ ब्रह्मलोके महर्षे ॥ | | |

भोक्ष्ये श्रीवामनानन्त
शरणागतवत्सल ॥” इति ॥
“एकादश्यां रजन्यांवा द्वादश्यां
वार्च्चयेत्
प्रभुम् ।
स्वर्णरूप्यमये पात्रे ताम्रवंशमयेऽपि
वा ॥
कुण्डिकां स्थापयेत् शार्श्वे
छत्रिकापादुकास्तथा ।
शुभाञ्च वैणवीं यष्टिमक्षसूत्रं पवित्रकम्
॥
पुष्पैर्गन्धैः फलैर्धूपैः
प्रदीपैश्चार्च्चयेद्धरिम् ।
नानाविधैश्च
नैवेद्यैर्भक्ष्यभोज्यैर्गुडोदनैः ॥
जागरं निशि कुर्व्वीत
गीतवादित्रनर्त्तनैः ।
एवमाराध्य देवेशं प्रभाते विमले सति
॥
आदावर्घ्यं प्रदातव्यं पश्चाद्देवं
प्रपूजयेत् ।
नारिकेलेन शुभ्रेण दद्यादर्घ्यञ्च
पूर्व्ववत् ॥”
तत्र मन्त्रः ।
“वामनाय नमस्तुभ्यं
क्रान्तत्रिभुवनाय च ।
गृहाणार्घ्यं मया दत्तं वामनाय
नमोऽस्तु ते ॥”
वामनाय अर्घ्यं नमः ।
“मत्स्यं कूर्म्मं वराहञ्च नरसिंहञ्च
वामनम् ।
रामं रामञ्च कृष्णञ्च क्रमात् द्वौ
बुद्धकल्किनौ ॥
पादयोर्ज्जानुनोर्गुह्ये नाभ्यामुरसि
कक्षयोः ।
भुजयोर्म्मूर्द्ध्नि
सर्व्वाङ्गेष्वर्च्चयेदायुधानि च ॥
महापूजां ततः कृत्वा गोमहीं
काञ्चनादिकम् ।
पूजयित्वा जगन्नाथं वामनः प्रीयतामिति ॥
यथाशक्त्या च दानानि द्विजाग्र्येभ्यः प्रदापयेत्
।
कुर्य्याज्जागरणं रात्रौ गीतशास्त्रसमन्वितम् ॥
श्रद्धया परया युक्तो निशामनिमिषेक्षणः ।
प्रभाते भोजयेद्विप्रान् द्वादश्यां पारणं ततः ।
कुर्य्यात् स्वयं श्रद्धया तत् सर्व्वं सफलतां
व्रजेत् ॥”
तन्माहात्म्यञ्च तत्रैव ।
“एवं कृते तु कालेय व्रतेऽस्मिन् विजयादिने ।
न दुर्लभतरं किञ्चिदिह लोकेऽथवा परे ॥
फलमस्य व्रतस्योक्तं दत्त्वा पित्रोर्नरोत्तमः ।
वंशोद्धारकरो मुक्तिं याति पैत्र्यादृणादपि ॥
न पावनतरं किञ्चिदतः परमिहोच्यते ।
विजयाव्रततुल्यञ्च न परं परिपठ्यते ॥”
भविष्योत्तरे च ।
“समाप्ते तु व्रते तस्मिन् यत् पुण्यं तन्निबोध मे ।
चतुर्युगानि राजेन्द्र ! सप्तसप्ततिसङ्ख्यया ॥
प्राप्य विष्णुपुरं राजन् क्रीडते कालमक्षयम् ।
इहागत्य भवेद्राजा प्रतिपक्षभयङ्करः ॥
हस्त्यश्वरथयानानां दाता भोक्ता विमत्सरः ।
रूपसौभाग्यसम्पन्नो दीर्घायुर्निरुजो भवेत् ।
पुत्त्रपौत्त्रैः परिवृतो जीवेच्च शरदां शतम् ॥”
इति श्रीहरिभक्तिविलासे १५ विलासः ॥

**वामनेत्रं**, क्ली, (वर्णन्यासे वामं नेत्रं स्पृश्यं येन ।)
दीर्घेकारः । यथा, --
“ईस्त्रिमूर्त्तिर्म्महामाया लोलाक्षी वामलोच-
नम् ।”
इत्यादि वर्णाभिधानम् ॥
अपि च ।
“ईशो वैश्वानरस्थः शशधरविलसद्वामनेत्रेण
युक्तो
बीजन्ते द्वन्द्वमन्यद्विगलितचिकुरे कालिके ये
जपन्ति ।”
इति तन्त्रसारे महाकालविरचितं श्यामा-
स्तोत्रम् ॥ (वामचक्षुश्च ॥)

**वामलूरः**, पुं, (वामं यथा तथा लुनातीति । लू +
बाहुलकात् रक् ।) वल्मीकः । इत्यमरः । २ ।
पेक्षया यथासंख्यं
अष्टमपञ्चमद्वितीयगृहगोऽपि
चन्द्रः प्रचुरफलदाता भवति । यथा, --
“सितशनिकुजजीवार्कास्त इन्दुर्नराणां
व्ययसुखनवमस्थोऽपीष्टदातातथैषाम् ।
खसुतनिधनगश्चेन्मृत्युपुत्त्रार्थगोऽपि
प्रचुरशुभफलं स्याद्वामवेधेन शुद्धिः ॥”
वामवेधत्वञ्च द्यूनजन्मेति एवमत्रेति
वक्ष्यमाण-
वचनाभ्यामेकार्थत्वाद्बोध्यम् ॥ * ॥
अथ दक्षिणवेधवामवेधकथनम् ।
“लाभविक्रमखशत्रुषु स्थितः
शोभनो निगदितो दिवाकरः ।
खेचरैः सुततपोजलान्त्यगै-
र्व्यार्किभिर्यदि न विध्यते तदा ॥
द्यूनजन्मरिपुलाभखत्रिग-
श्चन्द्रमाः शुभफलप्रदस्तदा ।
स्वात्मजान्त्यमृतिबन्धुधर्म्मगै-
र्विध्यते न विबुधैर्यदि ग्रहः ॥
विक्रमाय रिपुगः शुभः कुजः
स्यात्तदान्त्यसुतधर्म्मगैः खगैः ।
चेन्न विद्ध इनसूनुरप्यसौ
किन्तु घर्म्मघृणिना न विध्यते ॥
स्वाम्बुशत्रुमृतिस्वायगः शुभो
ज्ञस्तदा न खलु विध्यते यदा ।
आत्मजत्रिनवकाद्यनैधन-
प्रान्त्यगैर्व्विविधुभिर्नभश्चरैः ॥
स्वायधर्म्मतनयद्युनस्थितो
नाकनायकपुरोहितः शुभः ।
रिप्फरन्ध्रखजलत्रिगैर्यदा
विध्यते गगनचारिभिर्नहि ॥
आसुताष्टमतपोव्ययायगो
विद्ध आस्फु जिदशोभनः स्मृतः ।
नैधनास्ततनुकर्म्मधर्म्मधी-
लाभवैरिसहजस्थखेचरैः ॥”
इति ज्योतिस्तत्त्वम् ॥

**वामा**, स्त्री, (वमति सौन्दर्य्यं इति । वम + ज्वला-
दित्वात् अण् । टाप् । यद्वा, वमति प्रतिकूल-

शक्त्याचार्य्याय दातव्यं
ब्राह्मणेभ्यश्च मन्त्रतः ॥
ब्राह्मणश्चापि मन्त्रेण प्रतिगृह्णाति
मन्त्रवित् ।
ददाति मन्त्रतो ह्येव दाता
भक्तिसमन्वितः ॥”
तत्र दानमन्त्रः ।
“वामनो बुद्धिदो दाता द्रव्यस्थो
वामनः स्वयम् ।
वामनश्च प्रतिग्राही तेन मे वामने
रतिः ॥
वामनः प्रतिगृह्णाति वामनोऽपि
ददाति च ।
वामनस्तारको द्वाभ्यां तेनेदं वामने
नमः ॥”
इति ॥
“एवं कृत्वा विधानेन भोजनं
पृषदाज्यकम् ।
पूर्व्वं दद्याद्ब्राह्मणेभ्यः पश्चाद्भुञ्जीत
बन्धुभिः ॥
यद्वामनपुराणे च यद्भविष्योत्तरे व्रतम्
।
वामनस्योदितं तस्यानुसाराल्लिखितं
त्विदम् ॥”
ब्रह्मवैवर्त्ते ।
“गृहीत्वा नियमं प्रातर्गत्वा नद्योश्च
सङ्गमे ।
सौवर्णं वामनं कृत्वा सौवर्णमाषकेण
वा ॥
यथाशक्त्याथ वित्तस्य कुम्भोपरि
जगत्पतिम् ।
स्वर्णपात्रे स्थापयित्वा मन्त्रैरेतैश्च
पूजयेत् ॥
ॐ वामनाय नमः पादौ कटिं
दामोदराय च ।
उरू श्रीपतये गुह्यं कामदेवाय
पूजयेत् ॥
पूजयेज्जगतां पत्युरुदरं विश्वधारिणे
।
हृदयं योगनाथाय कण्ठं श्रीपतये
नमः ॥

१ । १४ ॥ (यथा, काशीखण्डे । २२ । १९ ।
“जटाटवीकोटरान्तःकृतनीडाण्डजाश्च ये ।
प्ररूढवामलूराङ्गाः स्नायुनद्धास्थिसञ्चयाः ॥”)

**वामलोचना**, स्त्री, वामे चारुणी लोचने यस्याः ।

स्त्रीभेदः । इत्यमरः । २ । ६ । ३ ॥ (यथा,
हितोपदेशे । २ । १५९ ।
“नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्व्वभूतानां न पुंसां वामलोचना ॥”)

**वामवेधशुद्धिः**, स्त्री, (वामे प्रतिकूले यो वेध-

स्तद्विषये शुद्धिर्विशोधनम् । यद्वा, वामेन विप-
रीतेन वेधेन शुद्धिः ।) स्वराश्यपेक्षया द्वादश-
चतुर्थनवमगृहस्थो विरुद्धोऽपि चन्द्रः यदि
शुक्र-
शनिकुजजीवार्क्युक्तगृहात् सप्तमगृहे तिष्ठति
तदा नराणां अभिलषितफलदाता भवति ।
यदि तु सितशनिकुजजीवार्क्युक्तगृहात् दशम-
पञ्चमाष्टमगृहे तिष्ठति तदा नराणां स्वराश्य-

मेवार्थं कथयति । यद्वा, वामः
कामोऽस्त्यस्या
इति अर्श आदिभ्योऽच् इत्यच् ।) सामान्या
स्त्री । इत्यमरः । २ । ६ । २ ॥ (यथा, गीत-
गोविन्दे । १ । ४६ ।
“श्लिष्यति कामपि चुम्बति कामपि कामपि
रमयति वामाम् ।
पश्यति सस्मितचारुपरामपरामनुगछति
रामाम् ॥”)
दुर्गा । यथा, --
“वामं विरुद्धरूपन्तु विपरीतन्तु गीतये ।
वामेन सुखदा देवी वामा तेन मता बुधैः ॥”
इति देवीपुराणे ४५ अध्यायः ॥
अपि च ।
“बालान्तु बाल्यदाक्षिण्यभावाभ्यामपि
पूजयेत् ।
श्मशानभेरवीं देवीमुग्रतारां तथैव च ॥
उच्छिष्टभैरवीं चण्डीं तारां त्रिपुरभैरवीम् ।

| | | |
|---|---|---|
| मुखञ्च पङ्कजाक्षाय शिरः सर्व्वात्मने नमः ।<br>इत्थं संपूज्य वासोभिराच्छाद्य च जगद्गुरुम् ।<br>दद्यात् सुश्रद्धया चार्य्यं नारिकेलादिभिः फलैः ॥<br>ॐ नमो नमस्ते गोविन्द बुध श्रवणसंज्ञक ।<br>अघौघसङ्क्षयं कृत्वा प्रेतमोक्षप्रदो भव ॥”<br>इत्यर्घ्यमन्त्रः ॥<br>“छत्रोपानहगोदानं दद्यादत्र कमण्डलुम् ।<br>विशेषेण द्विजाग्र्याय वामनः प्रीयतामिति ॥<br>दध्योदनसमायुक्तां वारिधानीं प्रदापयेत् । | | |

एतास्तु वामभावेन
यजेत्त्रिपुरभैरवीम् ॥
सर्व्वत्र पितृदेवादौ यस्माद्भवति
दक्षिणः ।
देवी च दक्षिणा यस्मात्तस्मात्
दाक्षिण्यमुच्यते ॥
या पुनः पूज्यमाना तु
देवादीनान्तु पुर्ब्बतः ।
यज्ञभागं स्वयं धत्ते सा वामा तु
प्रकीर्त्तिता ॥”
इति कालिकापुराणे ७७
अध्यायः ॥

**वामाक्षि**, क्ली, (वाममक्षि ।) वामचक्षुः । (वर्ण-
न्यासे न्यस्यं वाममक्षि येन ।)
दीर्घ ईकारः ।
यथा, --
“कर्पूरं मध्यमान्त्यस्वरपरिरहितं
सेन्दु
वामाक्षियुक्तं
बीजन्ते मातरेतत्त्रिपुरहरबधु
त्रिःकृतं ये
जपन्ति ॥”
इत्यादिकर्पूराख्यस्तोत्रम् ॥

**वामाक्षी**, स्त्री, (वामे मनोहरे अक्षिणी अस्याः ।
षच् । ङीष् ।) वामलोचना । इति
हेमचन्द्रः ॥

**वामाचारः**, पुं, (वामो विपरीतो वेदविरुद्धो
वा आचारः ।) आचारविशेषः ।
यथा, --
“पञ्चतत्त्वं खपुष्पञ्च पूजयेत्
कुलयोषितम् ।
वामाचारो भवेत्तत्र वामा भूत्वा
यजेत्
पराम् ॥”
इत्याचारभेदतन्त्रम् ॥
तदाचारवतां नरकगमनं यथा, --

वैश्यश्च माक्षिकं द्रव्यं शूद्रः पैष्ट्यादिकं पुनः
॥”
तेन शूद्रस्य नानुकल्पः ॥ * ॥ कुलार्णवे ।
“जलं क्षीरं घृतं भद्रे मधु मैरेयमैक्षवम् ।
पौष्पं तरुभवं धान्यसम्भवं तक्रनिर्म्मितम् ॥
सहकारभवं देवि त्रिविधं बहुभेदकम् ।
मादकं धर्म्मसंभेदात् वर्ज्यमासीत् सुलोचने ॥
ज्ञानेन संस्कृतन्तत्तु महापातकनाशनम् ।
तद्दाने पातकाभावो दिव्यभावविषयं वा ॥ *
॥
माकन्दफलजं रम्यं द्रव्यं सेव्यं द्विजातिभिः ।
अमादकत्वाद्देवेशि ऐक्षवं सेव्यते बुधैः ॥”
एतेन क्षत्त्रियादिभिरमादकंद्रव्यं सेव्यं
मादकस्य
पापहेतुकत्वमुक्तम् । भैरवतन्त्रे ।
“मद्यं मांसं विना वत्स यत्किञ्चित् कुलसा-
धनम् ।
शक्त्यै दत्त्वा ततः शेषं गुरवे तन्निवेदयेत् ।
तदनुज्ञां मूद्‌र्ध्नि कृत्वा शेषमात्मनि योजयेत्
॥”
तेन क्षत्त्रियादीनां सुख्यदाने अधिकारः ।
न पाने । यत्तु ।
“पीत्वा पीत्वा पुनः पीत्वा पतित्वा च
महीतले ।
उत्थाय च पुनः पीत्वा पुनर्ज्जन्म न विद्यते
॥”
वत्तु चयुर्थाश्रमिपरम् ॥ * ॥ तद्द्रव्यकरणे
जातिचिन्तां न कुर्य्यात् ।
“मदिरायां मैथुने च जातिचिन्तां न कार-
येत् ॥”
एतेषां शोधनस्यावश्यकत्वम् । तथा च ।
“संशोधनमनाचर्य्य स्त्रीषु मद्येषु साधकः ।
आचार्य्य सिद्धिहानिः स्यात् क्रुद्धा भवति
सुन्दरी ॥”
मद्येषु मुख्यानुकल्पेषु ॥ * ॥ तथा
कुलपूजाया-
मस्यावश्यकत्वम् । तथा च ।
“मधु मांसं विना देवि कुलपूजां समाचरेत् ।

तेषां संज्ञा कृता मुद्रा महामोदप्रदायिनी ॥”
तेषां शोधनन्तु स्वतन्त्रतन्त्रे । ॐ प्रतद्विष्णु-
रित्यादि मांसम् । त्र्यम्बकमित्यादि मीनम् ।
तद्विष्णोरित्यादि मुद्राम् ॥ * ॥ अथ शक्ति-
शोधनम् । तत्र भावचूडामणौ ।
“अदीक्षितकुलासङ्गात् सिद्धिहानिः प्रजायते ।
तत्कथाश्रवणं चेत् स्यात् तत्तल्पगमनं यदि ।
स कुलीनः कथं देवि पूजयेत् परमेश्वरीम् ॥”
श्रीक्रमे । संशोधनमनाचर्य्येति । कौलिकतन्त्रे ।
“अभिषेकाद्भवेच्छुद्धिर्म्मन्त्रस्योच्चारबिन्दुभिः ।
बलाद्वा यत्नतो वापि अभिषेकं समाचरेत् ॥”
अभिषेकमन्त्रस्तु ।
“आदौ वाणीं समुच्चार्य्य त्रिपुरायै समुद्धरेत् ।
नमःशब्दं समुच्चार्य्य इमां शक्तिं ततो वदेत् ॥
पवित्रीकुरु शब्दान्ते मम सिद्धिं कुरु प्रिये ।
वह्निजायां समुच्चार्य्य शुद्धिमन्त्रः सुरेश्वरि ।
तस्याः कर्णेऽभेदबुद्‌ध्या मायाबीजं समुद्धरेत् ॥”
इति शक्तिशोधनम् ॥ * ॥
ततः शोधितद्रव्यमर्घ्ये क्षिपेत् । श्रीक्रमे अर्घ्य-
विधौ ।
“पूर्ब्बशोधितद्रव्यन्तु गुप्तेनैव च संक्षिपेत् ॥”
स्वतन्त्रतन्त्रे ।
“आद्यद्रव्यमर्घ्यपात्रे निःक्षिप्य प्रयतः सुधीः ।
कुण्डगोलोद्भवं द्रव्यं स्वयम्भुकुसुमं तथा ।
अर्घ्यं दत्त्वा महेशानि सर्व्वसिद्धीश्वरो भवेत् ॥
सुरया चार्घ्यदानेन योगिनीनां भवेत् प्रियः ।
महायोगी भवेद्देवि पीठप्रक्षालितैर्ज्जलैः ॥”
भैरवतन्त्रे ।
“पञ्चमात् तु परं नास्ति शाक्तानां सुखमोक्षयोः ।
केवलैः पञ्चमैर्व्वापि सिद्धो भवति साधकः ॥”
तेन पञ्चमकारेण पूजा कर्त्तव्या । इति तन्त्र-
सारः ॥

**वामापीडनः**, पुं, पीलुवृक्षः । इति शब्दचन्द्रिका ॥

**वामिका**, स्त्री, (वामा + स्वार्थे कन् । टापि अत
इत्वम् ।) चण्डिका । यथा, --
“बह्व्यस्तु चण्डिका देव्या वामिका मूर्त्तयः
स्मृताः ।
लक्ष्म्यास्तु वामिका मूर्त्तिरुक्ता दहनभैरवी ॥

"स्वधर्म्मरहिता विप्रा
वेदान्यसेविनः सदा ।
भ्रष्टाचाराश्च वामाञ्च ते यान्ति
नरकं ध्रुवम् ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २४
अध्यायः ॥
तत्पशंसा यथा, --
"चत्वारो देवि वेदाद्याः पशुभावे
प्रतिष्ठिताः ।
वामाद्यास्त्रय आचारा दिव्ये वीरे
प्रतिष्ठिताः ॥"
इति नित्यातन्त्रम् ॥
"सर्व्वेभ्यश्चोत्तमा वेदा वेदेभ्यो
वैष्णवं महत् ।
वैष्णवादुत्तमं शैवं
शैवाद्दक्षिणमुत्तमम् ॥
दक्षिणादुत्तमं वामं वामात्
सिद्धान्तमुत्तमम् ।
सिद्धान्तादुत्तमं कौलं कौलात्
परतरं नहि ॥"
इति कुलार्णवतन्त्रे २ खण्डम् ॥
* ॥
तदाचारयुक्तस्य निषिद्धकर्म्माणि
यथा, --
"न दद्यात् ब्राह्मणो मद्यं महादेव्यै
कथञ्चन ।
वामकामो ब्राह्मणो हि मद्यं मांसं
न भक्ष-
येत् ॥"
तदनुकल्पो यथा । कुलचूडामणौ
।
"यत्रासवमवश्यन्तु ब्राह्मणन्तु
विशेषतः ।
तत्र गुडार्द्रकं दद्यात् ताम्रे वा
विसृजेन्मधु ॥
देव्यास्तु दक्षिणे भागे चक्रपार्श्वे
निवेदयेत् ।
एतद्द्रव्यन्तु शूद्रस्य नान्येषान्तु
कदाचन ॥
वैश्यस्य माक्षिकं शुद्धं क्षत्त्रियस्य
तु साज्यकम् ।
जन्मान्तरसहस्रस्य सुकृतं तस्य नश्यति ॥"
* ॥
अथ मांसादिशोधनम् ।
"मांसन्तु त्रिविधं ज्ञेयं जलखेचरभूचरम् ।
मांसन्तु त्रिविधं प्रोक्तं देवताप्रीतिकारकम् ॥
मत्स्यञ्च त्रिविधं देवि उत्तमाधममध्यमम् ।
उत्तमं त्रिविधं मत्स्यं शालपाठीनरोहितम् ॥
प्रवीणं कण्टकैर्हीनं तैलाक्तं वल्कलैर्य्युतम् ।
देव्याः प्रीतिकरञ्चैव मध्यमं तच्चतुर्व्विधम् ।
क्षुद्राणि तानि सर्व्वाणि अधमानि विदुर्बुधाः
॥"
भूचरमांसञ्च ।
"गोमेषाश्वलुलापोत्थगोधाजोष्ट्रमृगोद्भवम् ।
महामांसाष्टकं प्रोक्तं देवताप्रीतिकारकम् ॥"
मांसाभावे अनुकल्पः । समयाचारे ।
"लवणार्द्रकपिण्याकतिलगोधूममाषकम्।
लशुनञ्च महादेवि मांसप्रतिनिधिः स्मृतः ॥"
* ॥
मुद्रा तु द्विविधा । कुलार्णवे ।
"कृषरं मण्डलाकारं चन्द्रपद्मनिभं शुभम् ।
चारु पङ्कमनोहारि शर्करात्यैश्च पूरितम् ।
पूजाकाले देवताया मुद्रैषा परिकीर्त्तिता ॥"
यामले ।
"भृष्टधान्यादिकं यावत् चर्व्वणीयं प्रकल्पयेत्
।
नाग्निदाहं पुरग्राममन्दिरेषु करोत्यलम् ।
अपूजिता महालक्ष्मीर्देहल्यां तास्तु पूजयेत् ॥
वाग्भैरवी सरस्वत्या वामिका मूर्त्तिरीरिता ।
तस्या मन्त्रं पुरा प्रोक्तं शुक्लवर्णा तु सा स्मृता ॥"
इति कालिकापुराणे ७७ अध्यायः ॥

**वामिलः**, त्रि, (वाम + इलच् ।) दाम्भिकः ।

वामः । इति मेदिनी । ले, १३१ ॥

**वामी**, स्त्री, शृगाली । बडवा ।

(यथा, रघौ ।५ । ३२ ।
"अथोष्ट्रवामीशतवाहितार्थं
प्रजेश्वरं प्रीतमना महर्षिः ॥")
रासभी । करभी । इति मेदिनी । मे, ३० ॥

**वामोरूः**, स्त्री, वामौ सुन्दरौ ऊरू यस्याः ।

("संहितशफलक्षणवामादेश्च ।" ४ । १ । ७० ।
इति ऊङ् ।) नारीविशेषः । इति मुग्धबोध-
व्याकरणम् ॥ (यथा, माघे । ८ । २४ ।
"त्रस्यन्ती चलशफरीविघट्टितोरू-
र्वामोरूरतिशयमाप विभ्रमस्य ।
क्षुभ्यन्ति प्रसभमहो विनापि हेतो-
र्लीलाभिः किमु सति कारणे तरुण्यः ॥")

| ब्राह्मणस्य गवां क्षीरं ताम्रे वा विसृजेन्मधु ।<br>नारिकेलोदकं कांस्ये सर्व्वेषां द्रव्यशोधनम् ॥”<br>क्षत्त्रियवैश्ययोस्तु गौडी माध्वी च दातव्या तत्र तयोरधिकारात् तदभावे अनुकल्पविधानम् ।<br>तथा च ।<br>“गोक्षीरं ब्राह्मणो दद्यात् द्रव्यमाज्यञ्च बाहुजः । | | |
|---|---|---|

**वायकः**, पुं, (वयतीति । वे + ण्वुल् ।) समूहः ।
इति शब्दचन्द्रिका ॥ (तन्त्रवायः । यथा, भाग-
वते । ५ । २६ । ३६ ।
"यत्र ह वित्तग्रहं पापपुरुषं धर्म्मराजपुरुषा
वायका इव सर्व्वतोऽङ्गेषु सूत्रैः परिवयन्ति ॥")

**वायदण्डः**, पुं, (वायस्य दण्डः । यद्वा, वायतेऽनेनेति
वायः । वाय एव दण्ड इति कर्म्मधारयः ।)
वापदण्डः । इति भरतद्विरूपकोषः ॥

**वायनं**, क्ली, पिष्टकविशेषः । तत्पर्य्यायः । व्रतो-
पायनम् २ । प्रहेणकम् ३ । इति त्रिकाण्ड-
शेषः ॥

**वायवी**, स्त्री, (वायोरियमिति । वायु + अण् ।
ङीप् ।) उत्तरपश्चिमदिक् । इति जटाधरः ॥
(कार्त्तिकेयस्यानुचरमातृगणभेदः । यथा, महा-
भारते । ९ । ४६ । ३७ ।
"वायव्यश्चाथ कौमार्य्यो ब्राह्म्यश्च भरतर्षभ ! ।
वैष्णव्यश्च तथा सौर्य्यो वाराह्यश्च महाबलाः
॥")

**वायव्यं**, त्रि, (वायुर्देवतास्येति । वायु + "वाय्वृतु-
पित्रुषसो यत् ।" ४ । २ । ३१ । इति यत् ।)
वायुसम्बन्धिदिगादि । यथा । विल्वयुग्ममुपक्रम्य
गवाक्षतन्त्रे ।
"वायव्यस्थं नैरृतस्थं न गृह्णीयात् कदाचन ॥"
इति तिथ्यादितत्त्वम् ॥
(वायुदेवताकपशुहविरादि । यथा, ऋग्वेदे ।
१० । ९० । ८ ।
"तस्माद्यज्ञात् सर्व्वहुतः सम्भृतं पृषदाज्यम् ।
पशूंस्ताँश्चक्रे वायव्यानारण्यान् ग्रामाश्च ये ॥"
"वायव्यान् वायुदेवताकान् ।" इति तद्भाष्ये
सायणः ॥ * ॥ क्ली, षट्शताधिकचतुर्विंशति-
सहस्रश्लोकात्मकवायुनामकमहापुराणम् । यथा,
देवीभागवते । १ । ३ । ७ ।
"अयुतं वामनाख्यञ्च वायव्यं षट्शतानि च ।
चतुर्विंशतिः संख्यातः सहस्राणि तु शौनक ! ॥"
अस्त्रविशेषः । यथा, महाभारते । १ । १३६ ।
१९ ।
"आग्नेयेनासृजद्वह्निं वारुणेनासृजत् पयः ।
सम्पातिर्जनयन् गृध्रान् काकाः पुत्त्रा
जटायुषः ॥"
इति वह्निपुराणे वाराहप्रादुर्भावः ॥ *
॥
अस्य एकाक्षिनाशकारणं यथा, --
मार्कण्डेय उवाच ।
"गते तु भरते तस्मिन् रामः
कमललोचनः ।
लक्ष्मणेन सह भ्रात्रा भार्य्यया
सीतया सह ।
शाकमूलफलाहारो विचचार महावने
॥
एकदा लक्ष्मणमृते रामदेवः
प्रतापवान् ।
चित्रकूटे वने देशे वैदेह्या
सङ्गमाश्रितः ॥
सुष्वाप सुमुहूर्त्तञ्च ततः काको
दुरात्मवान् ।
सीताभिमुखमभ्येत्य विददार
स्तनान्तरम् ।
विदार्य्य वृक्षमारुह्य स्थितोऽसौ
वायसाधमः ॥
ततः प्रबुद्धो रामोऽसौ दृष्ट्वा रक्तं
स्तनान्तरम् ।
शोकाविष्टान्तु सीतां तामुवाच
कमलेक्षणः ॥
किमिदं स्तनान्तरे भद्रे तव रक्तस्य
कारणम् ।
इत्युक्ता सा च तं प्राह भर्त्तारं
विनयान्विता ॥
पश्य राजेन्द्र वृक्षाग्रे वायसं
दुष्टचेष्टितम् ।
येनैतच्च कृतं कर्म्म सुप्ते त्वयि
महामते ॥
रामोऽपि दृष्ट्वा तं काकं तस्मिन्
क्रोधमथा-
करोत् ।
ऐषिकास्त्रं समादाय
ब्रह्मास्त्रेणाभिमन्त्रितम् ॥

**वायसी**, स्त्री, (वायसानामियमिति तत्प्रियत्वात् ।
वायस + अण् । ङीष् ।) काकोडुम्बरिका ।
काकमाची । इति मेदिनी । से, ३८ ॥ महा-
ज्योतिष्मती ॥ काकनामा । काकतुण्डी ।
इति
राजनिर्घण्टः ॥

**वायसेक्षुः**, पुं, (वायसानामिक्षुरिव प्रियत्वात् । ।)
काशः । इति राजनिर्घण्टः ॥

**वायसोलिका**, स्त्री, (वायसोली + स्वार्थे कन् ।)
काकोली । इति शब्दरत्नावली ॥

**वायसोली**, स्त्री, (वायसान् ओलण्डयतीति ॥
ओलडि उत्क्षेपे + "अनेष्वपि दृश्यते ।" इति
डः । शकन्ध्वादित्वात् अस्य लोपः ।)
काकोली ।
इत्यमरः । २ । ४ । १४४ ॥

**वायुः**, पुं, (वातीति । वागतिगन्धनयोः + "कृवा-
पाजिमिस्वदिसाध्यशूभ्य उण् ।" उणा० १ ।
१ ।
इति उण् । "आतो युक्चिण्कृतोः ।" ७ । ३ ।
३३ । इति युक् ।) उत्तरपश्चिमकोणाधिपतिः
।
वाति यः । वातास इति भाषा । स च
पञ्चभूतान्तर्गतभूतविशेषः । तद्विशेषविवरणं
यथा । वायवः प्राणापानव्यानोदानसमानाः ॥
प्राणो नाम प्राग्गमनवान् नासाग्रस्थानवर्त्ती ।
अपानो नाम अवाग्गमनवान् पाय्वादिस्थान-
वर्त्ती । व्यानो नाम
विश्वग्गमनवानखिलशरीर-
वर्त्ती । उदानः कण्ठस्थानीय
ऊद्‌र्ध्वगमनवानुत्-
क्रमणवायुः । समानः शरीरमध्यगताशित-
पीतान्नादिसमीकरणकरः । समीकरणन्तु
परि-
पाककरणं रसरुधिरशुक्रपुरीषादिकरणम् ॥
केचित्तु नागकूर्म्मकृकरदेवदत्तधनञ्जयाख्याः
पञ्चान्ये वायवः सन्तीत्याहुः । नत्र नागः
उद्गिरणकरः । कूर्म्मः निमीलनादिकरः ।

वायव्येनासृजद्वायुं पार्जन्येनासृजद्धनान् ॥”)

**वायसः**, पुं, (वयते इति । वय गतौ । “वयश्च ।”

उणा० ३ । १२० । इति असच् । सच णित् ।) अगुरुवृक्षः । श्रीवासः । काकः । इति मेदिनी । से, ३८ ॥ (यथा, महाभारते । ३ । २७० । ३१ ।

“श्वगृध्रकङ्ककाकोलभासगोमायुवायसाः ।
अतृप्यंस्तत्र वीराणां हतानां मांसशोणितैः ॥”)
अस्योत्पत्तिर्यथा, --
“अरुणस्य भार्य्या श्येनी वीर्य्यवन्तौ महा-
बलौ ।
सम्पातिश्च जटायुश्च प्रभूतौ पक्षिसत्तमौ ।

काकमुद्दिश्य चिक्षेप
सोऽवधावद्भयान्वितः ॥
स त्विन्द्रस्य सुतो राजन् इन्द्रलोकं
विवेश ह ।
रामास्त्रं प्रज्वलं दीप्तं
तस्यानुप्रविवेश वै ॥
विदितार्थश्च देवेन्द्रो देवैः सर्व्वैः
समन्वितः ।
निष्क्रामयच्च तं दुष्टं
राघवस्यापकारिणम् ॥
ततोऽसौ सर्व्वदेवैस्तु
देवलोकाद्बहिष्कृतः ।
पुनः सोऽभ्येत्य रामञ्च राजानं शरणं
गतः ॥
त्राहि राम महाबाहो
अज्ञानादपकारि-
णम् ।
इति ब्रुवन्तं स प्राह रामः
कमललोचनः ॥
अमोघाय ममास्त्राय अक्षि एकं
प्रयच्छ मे ।
ततो जीवसि दुष्टात्मन् मेऽपराधो
महान् कृतः ॥
इत्युक्तोऽसौ स्वकं नेत्रमेकमस्त्राय
दत्तवान् ।
अस्त्रञ्च नेत्रमेकन्तु भस्मीकृत्य शमं
ययौ ॥
ततः प्रभृति सर्व्वेषां
काकानामेकनेत्रता ।
चक्षुषैकेन पश्यन्ति हेतुनानेन
पार्थिव ! ॥”
इति नरसिंहपुराणे ४३ अध्यायः ॥
(वायससम्बन्धिनि, त्रि । यथा,
महाभारते ।
१२ । ८२ । ७ -- ८ ।
“स काकं पञ्जरे बद्ध्वा विषयं
क्षेमदर्शिनः ।
सर्व्वं पर्य्यचरद्युक्तः प्रवृत्त्यर्थी पुनः
पुनः ॥
अधीध्वं वायसीं विद्यां शंसन्ति मम
वायसाः ।

कृकरः क्षुधाकरः । देवदत्तः जृम्भणकरः ।
धनञ्जयः पोषणकरः । एतेषां प्राणादिष्वन्त-
र्भावात् प्राणादयः पञ्चैवेति केचित् ॥ इदं
प्राणादिपञ्चकं आकाशादिगतरजोऽंशेभ्यो
मिलितेभ्य उत्पद्यते । इदं प्राणादिपञ्चकं
कर्म्मेन्द्रियसहितं सत् प्राणमयकोशो भवति ।
अस्य क्रियात्मकत्वेन रजोऽशकार्य्यत्वम् ।
एतेषु
कोशेषु मध्ये विज्ञानमयो ज्ञानशक्तिमान् कर्त्तृ-
रूपः । मनोमय इच्छाशक्तिमान् करणरूपः ।
प्राणमयः क्रियाशक्तिमान् कार्य्यरूपः । इति
वेदान्तसारः ॥ तत्पर्य्यायः । श्वसनः ३
स्पर्शनः
३ मातरिश्वा ४ सदागतिः ५ पृषदश्वः ६
गन्ध-
वहः ७ गन्धवाहः ८ अनिलः ९ आशुगः १०
समीरः ११ मारुतः १२ मरुत् १३
जगत्प्राणः
१४ समीरणः १५ नभस्वान् १६ वातः १७
पवनः १८ पवमानः १९ प्रभञ्जनः २० ।
इत्य-
मरः ॥ अजगत्प्राणः २१ खश्वासः २२ वाहः
२३ धूलिध्वजः २४ फणिप्रियः २५ वातिः
२६
नभःप्राणः २७ भोगिकान्तः २८ स्वकम्पनः
२९
अक्षतिः ३० कम्पलक्ष्मा ३१ शसीनिः ३२
आवकः ३३ हरिः ३४ । इति शब्दरत्नावली
॥
वासः ३५ सुखाशः ३६ मृगवाहनः २७ सारः

| | | |
|---|---|---|
| | अनागतमतीतञ्च यच्च संप्रति वर्त्तते ॥”)<br><br>**वायसादनी**, स्त्री, (वायसेन अद्यते इति । अद + कर्म्मणि ल्युट् + ङीप् ।) महाज्योतिष्मती । काकतुण्डी । इति राजनिर्घण्टः ॥<br><br>**वायसारातिः**, पुं, (वायसस्य अरातिः ।) पेचकः । इत्यमरः । २ । ५ । १५ ॥<br><br>**वायसाह्वा**, स्त्री, (वायसस्य आह्वा नाम यस्याः ।) काकनामा । काकमाची । इति राजनिर्घण्टः ॥ | |

३८ चञ्चलः ३९ विहगः ४० प्रकम्पनः
४१ नभः-
स्वरः ४२ निश्वासकः ४३ स्तनूनः ४४
पृषतां-
पतिः । इति जटाधरः ॥ * ॥ स च सृष्टि-
काले आकाशाज्जातः । यथा । तस्माद्वा
एतस्मादात्मन आकाशः संभूत आकाशा-
द्वायुः । इत्यादि तैत्तिरीयश्रुतिः ॥ * ॥
ऊन-
पञ्चादशद्वायुरदितेः पुत्राः । ते सर्व्वे
अप्रजाः ।
इन्द्रेण देवत्वं प्रापिताः ।
शरीरान्तर्ब्बाह्यभेदेन
दशधा । यथा । प्राणः १ । तस्य कर्म्म
वहि-
र्गमनम् । अपानः २ । तस्य कर्म्म
अधोगम-
नम् । व्यानः ३ । तस्य कर्म्म
आकुञ्चनप्रसा-
रणादि । समानः ४ । तस्य कर्म्म
अशितपीता-
दीनां समं नयनम् । उदानः ५ । तस्य
कर्म्म
ऊद्‌र्ध्वनयनम् ।
"उद्‌गारे नाग ६ आख्यातः कूर्म्म ७
उन्मीलने
स्मृतः ।
कृकरः ८ क्षुत्करो ज्ञेयो देवदत्तो ९
विजृम्भणे ।
न जहाति मृतञ्चापि सर्व्वव्यापी धनञ्जयः
१० ॥"
इति भागवतटीकायां श्रीधरस्वामी ॥ * ॥
अन्यच्च ।
"द्वितीयं मारुतो भूतं त्वगध्यात्मञ्च विश्रुता
।
स्पर्ष्टव्यमधिभूतञ्च विद्युत्तत्राधिदैवतम् ॥"
इति महाभारते आश्वमेधिकपर्व्व ॥
तस्य गुणाः । यथा, --
"वायोरनियमस्पर्शो वादस्थानं स्वतन्त्रता
।
पिशाचादीनाम् । देहव्यापीति । शरीरव्यापकं
स्पर्शग्राहकमिन्द्रियं त्वक् । तच्च वायवीयं
रूपादिषु मध्ये स्पर्शस्यैव व्यञ्जकत्वात् । अङ्ग-
संसर्गिसलिलशैत्यव्यञ्जकव्यजनवातवत् । विषयं
दर्शयति प्राणादिरिति । यद्यप्यनित्यो वायु-
अतुर्व्विधः तस्य चातुर्व्विध्यं प्राणादिना इत्युक्त-
माकरे । तथापि संहेपात् अत्रं त्रैविध्यमुक्तं
प्राणस्त्वेक एव हृदादिनानास्थानवशात्मुख-
निर्गमादिनानाक्रियावशाच्च नानासंज्ञां लभते
इत्यर्थः ।" इति सिद्धान्तमुक्तावली ॥ * ॥
अस्योत्-
पत्तिर्यथा, --
पुलस्त्य उवाच ।
"प्रविश्य जठरं शुद्धो दैत्यमातुः पुरन्दरः ।
ददर्शोद्‌र्ध्वमुखं बालं कटिन्यस्तकरं महत् ॥
तेनैव गर्भं दितिजं वज्रेण शतपर्व्वणा ।
चिच्छेद सप्तधा ब्रह्मन् स रुरोद सुविस्वरम् ॥
शक्रोऽपि प्राह मा मूढ रुदस्वेति सघर्घरम् ।
इत्येवमुक्त्वा चैकैकं भूयश्चिच्छेद सप्तधा ॥
ते जाता मरुतो नाम देवा दित्याः शतक्रतोः ।
मातुरेवापचारेण बलवीर्य्यपुरस्कृताः ॥"
इति वामने ६८ अध्यायः ॥
"यदमी भवता प्रोक्ता मरुतो दितिसम्भवाः ।
तत् केन पूर्ब्बमासन् वै मरुन्मार्गेण कथ्यताम् ॥
पुलस्त्य उवाच ।
श्रूयतां पूर्ब्बमरुतामुत्पत्तिं कथयामि ते ।
स्वायम्भुवं समारभ्य यावन्मन्वन्तरं त्विदम् ॥
स्वायम्भुवस्य पुत्रोऽभून्मनोर्नाम प्रियव्रतः ।
तस्यासीत् सवनो नाम पुत्रस्त्रैलोक्यपूजितः ॥
स्वमुत्पपाताथ स कामचारी
समं महिष्या वसुमानपुत्र्या ।
रराम तन्व्या सह कामचारी
ततोऽम्बरात् प्राच्यवतास्य शुक्रम् ॥
पतिभिः समनुज्ञाताः पपुः पुष्करसंस्थितम् ।
तं शुक्रं पार्थिवेन्द्रस्य मन्यमानास्तदामृतम् ॥
पीतमात्रेण शुक्रेण पार्थिवेन्द्रोद्भवेन च ।
ब्रह्मतेजोविहीनास्ता जाताः पत्न्यस्तपस्विनाम् ॥
सुषुवुः सप्त तनयांस्ते रुदन्तोऽथ भैरवम् ।
तेषां रुदितशब्देन सर्व्वमापूरितं जगत् ॥
अथाजगाम भगवान् ब्रह्मलोकात् पितामहः ।
तथा कुरुष्व मा तेषां सिद्धिर्भवतु वै
यथा ॥
इत्येवमुक्त्वा शक्रेण पृतना
रूपशालिनी ।
तत्राजगाम त्वरिता यत्र तप्यन्ति ते
तपः ॥
आश्रमस्याविदूरे तु नदी
मन्दीदवाहिनी ।
तस्यां स्नातुं समायाताः सर्व्व एव
सहोदराः ॥
सा तु स्नातुं सुचार्व्वङ्गी त्ववतीर्णा
महा-
नदीम् ।
ददृशुस्ते नृपाः स्नातुं ततश्चुक्षुभिरे
मुने ॥
तेषाञ्च प्राच्यवत् शुक्रं तत् पपौ
जलचारिणी ।
शङ्खिनी ग्राहमुख्यस्य महाशङ्खस्य
वल्लभा ।
ते वै विनष्टतपसो जग्मू राज्यन्तु
पैतृकम् ॥
अहो बहुतिथे काले सा ग्राही
शङ्खरूपिणी ।
समुद्धृता महाजालैर्मत्स्यबन्धेन
मानिनी ॥
स तां दृष्ट्वा महाशङ्खीं स्थलस्थां
मत्स्यजीवनः ।
विवेदयामास तदा क्रतुध्वजसुतेषु वै
॥
तथाभ्येत्य महात्मानो योगिनो
योगधारिणः
नीत्वा स्वमन्दिरं सर्व्वे पुरवाप्यां
समुत्सृजन् ॥
ततः क्रमाच्छङ्खिनी सा सुषुवे सप्त वै
शिशून् ।
जातमात्रेषु पुत्रेषु मोक्षभावमगाश्च सा
॥
अमातृपितृका बाला
जलमध्यविचारिणः ।

बलं शैघ्रञ्च मोक्षश्च कर्म्म चेष्टात्मता भवः
॥”
इति महाभारते मोक्षधर्म्मः ॥ * ॥
अनियमस्पर्शः । अनुष्णाशीतस्पर्शः १ ।
वाद-
स्थानम् । वागिन्द्रियगोलकानि २ ।
स्वतन्त्रता ।
गमनादौ ३ । बलम् ४ । शैघ्रम् ५ । मोक्षः
सूत्रादेः ६ । कर्म्म । उत्क्षेपणादि ७ । चेष्टा
श्वासप्रश्वासादि ८ । आत्मता प्राणरूपेण
चिद्वाधित्वम् ९ । भवः । जन्ममरणे १० ।
इति
तट्टीका ॥ * ॥ न्यायमते अस्य
गुणादिर्यथा, --
“अपाकजानुष्णाशीतस्पर्शस्तु पवने मतः ।
तिर्य्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः ॥
पूर्ब्बवन्नित्यताद्युक्तं देहव्यापि त्वगिन्द्रियम्
।
प्राणांदिस्तु महावायुपर्य्यन्तविषयो मतः
॥”
इति भाषापरिच्छेदः ॥
“वायुं निरूपयति अपाकज इति ।
अनुष्णा-
शीतस्पर्शस्य पृथिव्यामपि सत्त्वात्
अपाकज
इति । अपाकजस्पर्शस्य जलादावपि
सत्त्वात्
उक्तमनुष्णाशीत इति । एतेन वायोर्व्विजा-
तीयस्पर्शो दर्शितः । तज्जनकतावच्छेदकं
वायु-
त्वमिति भावः । एष वायुः स्पर्शादिलिङ्गकः
।
वायुर्हि स्पर्शशब्दधृतिकम्पैरनुमीयते ।
विजा-
तीयस्पर्शेन विलक्षणशब्देन तृणादीनां
धृत्या
शाखादीनां कम्पनेन च वायोरनुमानात् ।
तथा च वायुर्न प्रत्यक्षस्तथाग्रे वक्ष्यते ।
वायु-
र्नित्योऽनित्यो वा परमाणुरूपो
नित्यस्तदन्यो-

समभ्येत्याब्रवीद्बालान् मा रुदध्वं महाबलाः ॥
मरुतो नाम यूयं वै भविष्यध्वं वियश्चराः ।
इत्येवमुक्ता देवेशो ब्रह्मा लोकपितामहः ॥
तानादाय वियच्चारी मारुतानादिदेश ह ।
ते चासन् मरुतश्चाद्या मनोः स्वायम्भुवान्तरे ॥ *
॥
स्वारोचिषे तु मरुतो वक्ष्यामि शृणु नारद ।
स्वारोचिषस्य पुत्त्रश्च श्रीमानासीत् क्रतुध्वजः ॥
तस्य पुत्त्रा भवन् सप्त सप्तार्च्चिःप्र तिमा मुने ! ।
तपोऽर्थं ते गताः शैलं महामेरुं नभश्चराः ॥
आराधयन्तो ब्रह्माणं पदमैन्द्रमथेप्सवः ।
ततो विपश्चिन्नामाथ सहसाक्षो भयातुरः ।
पृतनामप्सरोमुख्यां प्राह नारद वाक्यवित् ॥
यथा हि तपसो विघ्नं तेषां भवति सुन्दरि ! ।

स्तन्यार्थिनो वै रुरुदुरथाभ्यागात्
पितामहः ॥
मा रुदध्वमिति प्राह मारुतो नाम
पुत्त्रकाः ।
यूयं देवा भविष्यध्वं
वायवोऽम्बरचारिणः ॥
इत्येवमुक्त्वाथादाय सर्व्वांस्तान्
दैवतान् प्रति ।
नियोज्य च मरुन्मार्गे वैराजभवनं गतः
॥
एवमासंश्च मरुतो मनोः
स्वारोचिषान्तरे ॥ * ॥
औत्तमे मरुतो ये च तान् शृणुष्व
तपोधन ।
औत्तमस्यान्ववाये च
राजासीन्निषधाधिपः ।
वपुष्मानिति विख्यातो वपुषा
भास्करोपमः ॥
तस्य पुत्त्रो गणश्रेष्ठो ज्योतिष्मान्
धार्म्मिको-
ऽभवत् ।
स पुत्त्रार्थी तपस्तेपे नदीं
मन्दाकिनीमनु ॥
तस्य भार्य्या च सुश्रोणी
देवाचार्य्यसुता शुभा ।
तपश्चरणयुक्तस्य बभूव परिचारिका ॥
तेजोयुक्ता सुचार्व्वङ्गी दृष्टा
सप्तर्षिभिर्व्वने ।
तां तथा चारुसर्व्वाङ्गीं दृष्ट्वाथ तपसा
कृशाम् ॥
पप्रच्छस्तपसो हेतुन्तस्यास्तद्भर्त्तुश्च
च ।
साब्रवीत्तनयार्थाय आवाभ्यां वै
तपःक्रिया ॥
ते चास्यै वरदा ब्रह्मन् जाताः सप्त
महषयः ॥
व्रजध्वं तनयाः सप्त भविष्यन्ति न
संशयः ।
युवयोर्गुणसंयुक्ता महर्षीणां प्रसादतः ।
इत्येवमुक्त्वा जग्मुस्ते सर्व्व एव
महर्षयः ।

| | | |
|---|---|---|
| ऽनित्यः समवेतश्च । सोऽपि त्रिविधः शरीरे-<br>नियविषयभेदात् । अत्र शरीरमयोनिजं | | सोऽपि राजर्षिरगमत् सभार्य्यो नगरं निजम् ॥<br>ततो बहुतिथे काले सा राज्ञो महिषी प्रिया ।<br>अवाप गर्भं तन्वङ्गी तस्मान्नृपतिसत्तमात् ॥<br>गुर्व्विण्यामथ भार्य्यायां ममारासौ नराधिपः ।<br>सा चाप्यारोढुमिच्छन्ती भर्त्तारं वै पतिव्रता ॥<br>निवारिता तदामात्यैर्न तथापि व्यतिष्ठत ।<br>तस्यामालिङ्ग्य भर्त्तारं चितायामारुहच्च सा ॥<br>ततोऽग्निमध्यात् सलिले मांसपेश्यपतन्मुने ।<br>साम्भसा सुखशीतेन संसिक्ता सप्तधाभवत् ।<br>तेऽजायन्ताथ मरुत औत्तमस्यान्तरे मनोः ॥ * ॥ |

तामसस्यान्तरे ये च
मरुतोऽप्यभवन् पुरा ।
तानहं कीर्त्तयिष्यामि
गीतनृत्यकलिप्रिय ! ॥
तामसस्य मनोः पुत्त्र ऋतध्वज
इति श्रुतः ।
स पुत्त्रार्थी जुहावाग्नौ स्वमांसं
रुधिरं तथा ॥
अस्थीनि रोम केशांश्च स्नायु
मज्जा यकृद्व्रणम् ।
शुक्रं च वित्रसो राजा सुतार्थी
चेति नः
श्रुतम् ॥
सप्तार्च्चिर्मथ्याच्च ततः
शुक्रपातादनन्तरम् ।
मा मे क्षिपस्वेत्यसरत् शब्दः
सोऽपि नृपो मृतः ॥
ततस्तस्माद्धुतवहात् सप्त
तत्तेजसोपमाः ।
शिशवः समजायन्त ते
रुदन्तश्च तन्मुने ॥
तेषान्तु ध्वनिमाकर्ण्य भगवान्
पद्मसम्भवः ।
समागम्य निवार्य्याथ स चक्रे
मरुतः सुतान् ॥
ते त्वासन्मरुतो ब्रह्मंस्तामसे
देवतागणाः । * ।
येऽभवन्नैवते तांश्च शृणुष्व त्वं
तपोधन ॥
रेवतस्यान्ववाये तु
राजासीद्रिपुजिद्बली ।
रिपुजिन्नाम स ख्यातो न
तस्यासीत् सुतः
किल ॥
स समाराध्य तपसा भास्करं
तेजसां निधिम् ।
अवाप कन्यां सुरतिं तां प्रगृह्य
गृहं ययौ ॥
तस्यां पितृगृहे ब्रह्मन् वसत्याञ्च
पिता मृतः ।

विवहः प्रवहश्चैव परिवाहस्तथैव च ।
अन्तरीक्षे च बाह्ये ते पृथङ्मार्गविचारिणः ॥
महेन्द्रप्रविभक्ताङ्गा मरुतः सप्त कीर्त्तिताः । * ।
सूर्य्याग्निश्च शुचिर्नामा वैद्युतः पावकः स्मृतः ॥
निर्म्मथ्य पचमानोऽग्निस्त्रयः प्रोक्ता इमेऽग्नयः ।
अग्नीनां पुत्त्रपौत्त्राश्च चत्वारिंशिन्नवैव तु ।
मरुतामपि सर्व्वेषां विज्ञेयाः सप्त सप्तकाः ॥”
इति देवीपुराणे कालव्यवस्थानामाध्यायः ॥ * ॥
ऊनपञ्चाशद्वायुनामानि यथा, --
“एकज्योतिश्च द्विर्ज्योतिस्त्रिज्योतिज्योतिस्त्र च
।
एकशक्रो द्विशक्रश्च त्रिशक्रश्च महाबलः ॥
इन्द्रश्च गत्यदृश्यश्च ततः पतिसकृत्परः ।
मितश्च संमितश्चैव मुमितश्च महाबलः ॥
ऋतजित् सत्यजिच्चैव सुषेणः सेनजित्तथा ।
अन्तिमित्रोऽनमित्रश्च पुरुमित्रोऽपराजितः ॥
ऋतश्च ऋतवाहश्च धर्त्ता च धरुणो ध्रुवः ।
विधारणो नाम तथा देवदेवो महाबलः ॥
ईदृक्षश्चाप्यदृक्षश्च एते दश मिताशिनः ।
व्रतिनः प्रसदृक्षश्च सभरश्च महायशाः ॥
धाता दुर्गो धितिर्भीमस्त्वभियुक्तस्त्वपात् सहः ।
घुतिर्घपुरनाय्योऽथ वासः कामो जयो विराट् ।
इत्येकोनाश्च पञ्चाशन्मरुतः पूर्व्वसंभवाः ॥”
इति वह्निपुराणे गणभेदनामाध्यायः ॥ * ॥
वायोर्विकारहेतुर्यथा, --
“व्यायामादपतर्पणात् प्रपतनाद्भङ्गात् क्षया-
ज्जागरात्
वेगानाञ्च विधारणादतिशुचः शैत्यादति-
त्रासतः ।
रूक्षक्षारकषायतिक्तकटुकैरेभिः प्रकोपं व्रजेत्
वायुर्व्वारिधरागमे परिणते चान्नेऽपराह्णेऽपि
च ॥” * ॥
तस्य लक्षणम् ।
“आध्मानस्तम्भरौक्ष्यस्फुटनविमथनक्षोभकम्प-
प्रतोदाः
कण्ठध्वंसावसादो श्रमकविलपनं स्रंसशूल-
प्रभेदाः ।
पारुष्यं कर्णनादो विषयपरिणतिभ्रंशदृष्टि-
प्रमोहा
विस्पन्दोद्वट्टनादिग्लपनमनशनंताडनं पीड-

तस्य प्रशमताकारणम् । यथा, --
“रूक्षशीतो लघुः सूक्ष्मश्चलोऽथ विशदः खरः ।
विपरीतगुणैर्द्रव्यैर्मारुतः संप्रशाम्यति ॥
स्निग्धोष्णस्थिरवृष्यबल्यलवणस्वाद्वम्ललैलातप-
स्नानाभ्यञ्जनवस्तिमांसमदिरासंग्राहनोन्मर्द्दनैः ।
स्निग्धस्वेदनिरूहणोपशमनः स्नेहोपनाहादिकं
पानाहारविहारभेषजमिदं वातं प्रशान्तं
नयेत् ॥” * ॥
ऋतुभेदेन विहारादिना च तस्य चयप्रकोप-
प्रशमनानि यथा, --
“ग्रीष्मे सञ्चीयते वायुः प्रावृट्काले प्रकुप्यति ।
प्रायेणोपशमं याति स्वयमेव समीरणः ॥
शरत्काले वसन्ते च पित्तं प्रावृड्तौ कफः ।
चयकोपशमान्दोषा विहाराहारसेवनैः ।
समानैर्यान्त्यकालेऽपि विपरीतैर्विपर्य्ययः ॥” * ॥
स च प्राणादिभेदेन पञ्चविधः । यथा, --
“पित्तं पङ्गु कफः पङ्गुः पङ्गवो मलधातवः ।
वायुना यत्र नीयन्ते तत्र वर्षन्ति मेघवत् ॥
वायुरायुर्ब्बलं वायुर्वायुर्धाता शरीरिणाम् ।
वायुर्व्विश्वमिदं सर्व्वं प्रभुर्व्वायुः प्रकीर्त्तितः ॥
वाह्यमण्डलचक्रेषु यथा राजा प्रशस्यते ।
तथा शरीरमध्येऽपि वायुरेकः परो विभुः ॥
वायुः प्राणादिभेदेन सच पञ्चविधः स्मृतः ।
हृदि प्राणो गुदेऽपानः समानो नाभिमध्यगः ॥
उदानः कण्ठदेशे तु व्यानः सर्व्वशरीरगः ।
योऽनिलो रक्तसञ्चारी स प्राणो नाम देहधृक् ॥
सोऽन्नं प्रवेशयत्यन्तः प्राणांश्चैवावलम्बते ।
कुपितः कुरुते रोगान् हिक्काध्मानादिकानपि ॥
उदानो नाम यस्तूद्र्ध्वमुपैति पवनोत्तमः ।
तेन भाषितगीतादिविशेषोऽपि प्रवर्त्तते ॥
ऊद्र्ध्वजत्रूगतान् रोगान् करोति कुपितश्च सः ।
आमपक्वाशयचरः समानोऽग्निसहायवान् ॥
अन्नं पचति तज्जांश्च विकारान् विविनक्ति सः ।
गुल्माग्निसादातीसारान् कुपितश्च करोति सः ॥
पक्काशयस्थोऽपानस्तु काले कर्षति चाप्यधः ।
वातमूत्रपुरीषाणि शुक्रगर्भार्त्तवानि च ॥
क्रुद्धश्च कुरुते रोगान् घोरान् वस्तिगुदाश्रयान् ।
सर्व्वदेहचरो व्यानो रससंवाहनोद्यतः ॥
स्वेदासृक्स्रावणश्चापि पञ्चधा वेष्टयत्यपि ।
क्रुद्धश्च कुरुते रोगान् प्रायशः सर्व्वदेहगान् ॥

सापि दुःखपरीताङ्गी स्वां तनुं
त्यक्तुमुद्यता ॥
ततस्तां वारयामासुरृषयः सप्त
मानसाः ।
तस्वामासक्तचित्तास्तु सर्व्वं एव
तपोधनाः ॥
अपारयन्ती तद्दुःखं
प्रज्वाल्याग्निं विवेश ह ।
ते चापश्यन्त
ऋषयस्तच्चित्ताभावितास्तथा
॥
तां मृतां ऋषयो दृष्ट्वा कष्टं
कष्टेति वादिनः ।
प्रजग्मुर्ज्वलनाच्चापि
सप्ताजायन्त दारकाः ॥
ते च मात्रा विना भूता
रुरुदुस्तान् पितामहः ।
निवारयित्वा कृतवान्
लोकनाथो मरुद्गणान् ॥
रेवतस्यान्तरे जाता मरुतोऽमी
तपोधन । * ।
शृखुष्व कीर्त्तयिष्यामि
चाक्षुषस्यान्तरे मनोः ॥
आसीन्माङ्कीति विख्यातो
तपस्वी सत्यवाक्
शुचिः ।
सप्त सारस्वते तीर्थे सोऽतप्यत
महत्तपः ॥
विघ्नार्थं तस्य तपसो देवाः
संप्रेरयन् वधूम् ।
सा चाभ्येत्य नदीतीरं
क्षोभयामास भाविनी ॥
ततोऽस्य प्राच्यवच्छुक्रं सप्त
सारस्वते जले ।
तां चेवाप्यशपन्मूढां
मुनिर्म्माङ्किनिको बधूम् ॥
गच्छालज्जेति मुढे त्वं
पापस्यास्य फलं महत् ।
विध्वंसयिष्यति हयो भवतीं
यज्ञसंसदि ॥
एवं शप्त्वा ऋषिः श्रीमान्
जगामाथ स्वमाश्रयम् ।

नञ्च ॥
नामोन्नामौ विषादो भ्रमपरिषदनं जृम्भणं
रोमहर्षो
विक्षेपाक्षेपशोषग्रहणशुषिरता छेदनं वेष्टनञ्च ।
वर्णः श्यावोऽरुणो वा तृडपि च महती स्वाप-
विश्लेषसङ्गा
विद्यात् कर्म्माण्यमूनि प्रकुपितपवनः स्यात्
कषायो रसश्च ॥” * ॥
अन्यच्च ।
“वदनविरसता स्याद्वर्च्चसः कर्कशत्वं
भवति वपुषि कार्श्यं रात्रिनिद्रानिवृत्तिः ।
त्वचि च परुषता स्यात् स्याच्च वैषम्यमग्रे-
रिति पवनविकारे लक्षणं प्रोक्तमेतत् ॥” * ॥

शुक्रदोषाः प्रमेहाश्च व्यानापानप्रकोपजाः ।
युगपत् कुपिताश्चामी देहं हन्युरसंशयः ॥” * ॥
तत्प्रकृतिकस्य लक्षणं यथा, --
“अल्पकेशः कृशो रूक्षो वाचालश्चलमानसः ।
आकाशचारी स्वप्नेषु वातप्रकृतिको नरः ॥” * ॥
प्राणादिपञ्चवायूनां यथाक्रमं संज्ञान्तरमाह ।
“प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ।
नागः कूर्म्मश्च कृकरो देवदत्तो धनञ्जयः ॥ * ॥
प्राणस्तु प्रथमो वायुर्नराणामधिपः प्रभुः ।
नित्यमावापयेत् सर्व्वान् प्राणिनामुरसि स्थितः ॥
निःश्वासोच्छ्वासकश्चैव प्राणो जीवं समाश्रितः ।
प्रसाराकुञ्चनो वायुः प्रकाशो धारणस्तथा ॥

| | | |
|---|---|---|
| सरस्वतीभ्यः सप्तभ्यः सप्त वै मरुतोऽभवन् ॥<br>एते तवोक्ता मरुतः पुरा यथा जाता वियद्व्याप्तिकरा महर्षे ।<br>येषां श्रुते जन्मनि पापहानि-र्भवेच्च धर्म्माभ्युदयो महान् वै ॥”<br>इति वामने मरुतोत्पत्तिर्नाम ६९ अध्यायः ॥ * ॥<br>अन्यच्च ।<br>“अतः परं प्रवक्ष्यामि मरुतोऽग्नीन् पितॄन् ग्रहान् ।<br>प्रावाहो निवहश्चैव उद्वहः संवहस्तथा ॥ | | |

प्राणस्त्वेवंविधं कुर्य्यात् प्राणिनां प्राणधारकः ।
प्राणनं कुरुते यस्मात् तस्मात् प्राणः प्रकी-
र्त्तितः ॥
प्राणो हि भगवान् ईशः प्राणो विष्णः पिता-
महः ।
प्राणेन धार्य्यते लोकः सर्व्वं प्राणमयं जगम् ॥
इन्द्रियाणि प्रवर्त्तन्ते यावत् प्राणानिले हृदि ।
नष्टे न दृश्यते सर्व्वं तस्मात् प्राणन्तु रक्षयेत् ॥
रज्जुबद्धो यथा श्येनो गतोऽप्याकृष्यते पुनः ।
गुणवद्धस्तथा जीवः प्राणापानेन कृष्यते ॥
अपानयंस्तथाहारं मनुजानां यतोऽधमः ।
शुक्रमूत्रव्रजे वायुरपानस्तेन कीर्त्तितः ॥ * ॥
पीतं भक्षितमाघ्रातं रक्तं पित्तकफानिलान्।
समं नयति ग्रात्रेषु समानो नाम मारुतः ॥
समानोऽग्निसमीपस्थः कोष्ठे च वाति सर्व्वतः ।
अन्नं गृह्णाति पचति विरेचयति मुञ्चति ॥ * ॥
स्पन्दयत्यधरं वक्त्रं नेत्रगात्रप्रकोपणः ।
उद्वेजयति मर्म्माणि उदानो नाम मारुतः ॥ *
॥
व्यानो विनामयत्यङ्गं व्यानो व्याधिप्रकोपणः ।
प्रीतेर्व्विनाशकश्चायं वाद्ध्र्व्वकोत्पादकस्तथा
॥" * ॥
वायूनां स्थानानि ।
"शिरसो नासिकाप्रान्तमुदानस्थानमुच्यते।
नाभेः पादतलं यावदपानस्य प्रकीर्त्तितम् ॥
शरीरव्यापको व्यानः प्राणः सकलनायकः ।
उद्गारे नाग इत्युक्तः कूर्म्मश्चोन्मीलने स्थितः
॥
कृकरः क्षुधिते चैव देवदत्तो विजृम्भिते ।
धनञ्जयः स्थितो मेढ्रे मृतस्यापि न मुञ्चति ।
भूतावाप्तिस्ततस्तस्याजायतेन्द्रियगोचरात् ॥
* ॥
उत्साहोच्छ्वासनिःश्वासचेष्टाधातुगतिः समाः ।
समो मोक्षे गतिमतां वायोः कर्म्माविकारजम्
॥"
इति सुखबोधः ॥ * ॥
अथ दिग्भववायुगुणाः ।
"प्राग्वातो मधुरः क्षारो वह्निमान्द्यकरो मुरुः ।
वैरस्यगौरवौष्णानि करोत्यप्स्वोषधीषु च ॥
भग्नोत्पिष्टक्षताद्येषु रागश्वयथुदाहकृत् ।
व्यजनवायुगुणाः ।
"मूर्च्छदाहतृषास्वेदश्रमघ्नो व्यजनानिलः ।
तालवृन्तमयो वातस्त्रिदोषशमनो लघुः ॥
वंशव्यजनजो वातो रूक्षोष्णो वातपित्तदः ।
बालव्यजनमोजस्यं मक्षिकादीन् व्यपोहति ।
मायूरा वस्त्रजा वैत्रा वाता दोषत्रयापहाः ॥"
इति राजवल्लभः ॥ * ॥
अपि च । तत्र वायोः स्वरूपमाह ।
"दोषधातुमलादीनां नेता शीघ्रः समीरणः ।
रजोगुणमयः सूक्ष्मो रूक्षः शीतो लघुश्चलः ॥"
नेता स्थानान्तरे प्रापयिता । शीघ्रः आशु-
कारी । अन्यच्च ।
"उत्माहोच्छ्वासनिःश्वासचेष्टावेगप्रवर्त्तनैः ।
सम्यग्गत्या च धातूनामिन्द्रियाणाञ्च पाटवैः ॥
अनुगृह्णात्यविकृतो हृदयेन्द्रियचित्तधृक् ।
रजोगुणमयः सूक्ष्मो रूक्षः शीतो लघुश्चलः ॥
स्वरो मृदुर्योगवाही संयोगादुभयार्थकृत् ।
दाहहृत्तेजसा युक्तः शीतकृत् सोमसंश्रयात् ॥
विभागकरणाद्वायुः प्रधानं दोषसंग्रहैः ।
पक्वाशयकटीसक्थिश्रोत्रास्थिस्पर्शनेन्द्रियम् ।
स्थानं वातस्य तत्रापि पक्वाधानं विशेषतः ॥"
एको वायुः पित्तवशान्नामस्थानकर्म्मभेदैः पञ्च-
विधः ॥ * ॥ तेषां वायूनां नामान्याह ।
"उदानस्तदनु प्राणः समानोऽपान एव च ।
व्यानश्चैतानि नामानि वायोः स्थानप्रभेदतः ॥"
अथोदानादीनां स्थानान्याह ।
"कण्ठे हृदि तथाधस्तात् कोष्ठवह्नेर्मलाशये ।
सकलेऽपि शरीरेऽसौ क्रमेण पवनो वसेत् ॥"
अथ तेषां कर्म्माण्याह ।
"उदानो नाम यस्तूद्र्ध्वमुपैति पवनोत्तमः ।
तेन भाषितगीतादिप्रवृत्तिः कुपितस्तु सः ।
ऊद्ध्र्व्वजत्रगतान् रोगान् विदधाति विशेषतः ॥
यो वायुः प्राणनामासौ सुखं गच्छति देहधृक् ।
सोऽन्नं प्रवेशयत्यन्तः प्राणांश्चाप्यवलम्बते ॥
प्रायशः कुरुते दुष्टो हिक्काश्वासादिकान्
गदान् ।
आमपक्वाशयचरः समानो वह्निसङ्गतः ॥
सोऽन्नं पचति तज्जांश्च विशेषान् विविनक्ति
हि ॥"
तज्जानित्याह अन्नजान् । रसमलमूत्रादीन्
प्रस्यन्दनं चोद्वहनं पूरणञ्च
विरेचनम् ।
धारणञ्चेति पञ्चैताश्चेष्टाः प्रोक्ता
नभस्वतः ॥
क्रुद्धः स कुरुते रोगान् प्रायशः
सर्व्वदेहगान् ।
युगपत् कुपिता एते देहं
भिन्द्युरसंशयम् ॥"
देहं भिन्नं कुर्य्युर्मारयेयुरित्यर्थः ।
इति भाव-
प्रकाशः ॥ * ॥ (असुरविशेषः ।
यथा, हरि-
वंशे । २ । ८५ ।
"दीर्घजिह्वोऽर्कनयनो मृदुचापो
मृदुप्रियः ।
वायुर्गरिष्ठो नमुचिः शम्बरोविजयो
महान् ॥")

**वायुकेतुः**, स्त्री, (वायुः केतुर्ध्वजो वाहनं वा यस्याः ।) घूलिः । इति हारावली । १५८ ॥

**वायुगण्डः**, पुं, अजीर्णः । इति त्रिकाण्डशेषः ॥

**वायुगुल्मः**, पुं, (वायुना कृतो गुल्म इव ।) अम्भसां भ्रमः । इति त्रिकाण्डशेषः ॥

**वायुदारुः**, पुं, (वायुना दीर्य्यते इति । दॄ + उण् ।) मेघः । इति त्रिकाण्डशेषः ॥

**वायुपुत्त्रः**, पुं, (वायोः पुत्त्रः ।) भीमः । इति धनञ्जयः ॥ हनूमान् । यथा, --
"हनूमानञ्जनासूनुर्वायुपुत्त्रो
महाबलः ।"
इति तस्य द्वादशनामस्तोत्रम् ॥

**वायुफलं**, क्ली, (वायुना फलति प्रतिफलतीति ।
फल् + अच् ।) शक्रधनुः । (वायोः
फलमिव ।)

सन्निपातज्वरश्वासत्वग्दोषार्शोविषक्रिमीन्।
कोपयेदामवातञ्च घनसंघातकारणम् ॥
दाक्षिणो मारुतो बल्यश्चक्षुष्यः शस्यघातकः ।
मधुरश्चाम्लदाही च कषायानुरसो लघुः ॥
रक्तपित्तप्रशमनो न च मारुतकोपनः ।
गण्डूपदादिकीटानां जनकः प्राणकारकः ॥
पाश्चिमोऽग्निवपुर्व्वर्णबलारोग्यविवर्द्धनः ।
कषायः शोषणः स्वर्य्यो रोचनो विशदो लघुः ॥
अपां लघुत्ववैशद्यशैत्यवैमल्यकारकः ।
सर्व्वद्रव्येष्वभिव्यक्तप्रभावरसवीर्य्यकृत् ।
व्रणसंरोपणस्त्वच्यो दाहशोथतृषापहः ॥
औत्तरो मारुतः स्निग्धो मृदुर्म्मधुर एव च ।
कषायानुरसः शीतः सर्व्वदोषप्रकोपणः ॥
क्षीणक्षतविषार्त्तानां हितो दाहतृषापहः ।
शीताधिकः सनीहारः सविद्युत्स्तनयित्नुमान् ॥
विश्वग्वायुरनायुष्यः प्राणिनां नैकदोषकृत् ।
सर्व्वर्त्तुनिन्दको हन्ता कृत्योत्पातपुरःसरः ॥”
* ॥

पृथक्करोतीत्यर्थः ।
“स दुष्टो वह्निमान्द्यातिसारगुल्मान्करोति हि ।
पक्वाशयालयोऽपानः काले कर्षति चाप्ययम् ॥
समीरणः शकृन्मूत्रशुक्रगर्भार्त्तवान्यधः ।
क्रुद्धस्तु कुरुते रोगान् घोरान् वस्तिगुदाश्रयान् ॥
शुक्रदोषप्रमेहांश्च व्यानापानप्रकोपजान् ॥”
स च ।
“कृत्स्नदेहचरो व्यानो रससंदहनो यतः ।
स्वेदासृक्स्रावणश्चापि पञ्चधा चेष्टयत्यपि ॥
गत्यपक्षेपणोत्क्षेपनिमेषोन्मेषणादिकाः ।
पायः सर्व्वाः क्रियास्तस्मिन् प्रतिबन्धाः शरी-
रिणाम् ॥

करका । इति मेदिनी । ले, १६४ ॥

**वायुभक्ष्यः**, पुं, (वायुर्भक्ष्योऽस्येति ।) सर्पः ।
इति राजनिर्घण्टः ॥ वातभक्षके, त्रि ॥ (यथा,
गो० रामायणे । ३ । १५ । १२ ।
“स हि तेपे तपस्तीव्रं
मन्दकर्णिर्महामुनिः ।
दशवर्षसहस्राणि वायुभक्ष्यः
शिलासनः ॥”)

**वायुवर्त्म**, [न्] क्ली, (वायोर्वर्त्म ।) आकाशः ।
इति शब्दचन्द्रिका ॥

**वायुवाहः**, पुं, (वायुना उह्यते इति । वह् +
घञ् ।) धूमः । इति हेमचन्द्रः । ४ । १६९ ॥

**वायुवाहिनी**, स्त्री, (वायुं वहतीति । वह् +
णिनिः । ङीप् ।) वायुसञ्चारिणी
शिरा । इति
वैद्यकम् ॥

**वायुषः**, पुं, मत्स्यविशेषः । कालवायुषपोना इति
भाषा । तस्य गुणाः ।
“वायुषो बृंहणो वृष्यो मधुरो
धातुवर्द्धनः ॥”
इति राजवल्लभः ॥

**वायुसखः**, पुं, (वायोः सखा । “राजाहःसखिभ्य-
ष्टच् ।” ५ । ४ । ९१ । इति टच् ।)
अग्निः ।
इति भरतः ॥

**वायुसखा**, [खि] पुं, (वायुः सखा यस्येति विग्रहे
टजभावात् । “अनङ् सौ ।” ७ । १ । ९३ । इति
अनङादेशः ।) अग्निः । इत्यमरः ।
१ । १ । ५८ ॥

**वाय्वास्पदं**, क्ली, (वायूनामास्पदं सञ्चरणस्थानम् ।)

| | | आकाशः । इति धनञ्जयः ॥<br><br>**वार्,** क्ली, (वारयतीति । वृञ् + णिच् + क्विप् ।)<br><br>जलम् । इत्यमरः । १ । १० । ३ ॥ (यथा,<br>भागवते । १० । ३३ । २२ ।<br>“गन्धर्व्वपालिभिरनुद्रुत आविशद् वाः<br>श्रान्तो गजीभिरिभराडिव भिन्नसेतुः ॥”) |
|---|---|---|

**वारं**, क्ली, (वार्य्यतेऽनेनेति । वृ + णिच् + घञ् ।)

मदिरापात्रम् । इति हेमचन्द्रः ॥

**वारंवारं**, व्य, पुनःपुनः । यथा । वारंवारं मुहुः

शश्वदिति शब्दरत्नावली ॥

**वारः**, पुं, (वारयति व्रियते वेति । वृ + णिच् +

अच् । वृ + घञ् वा ।) समूहः । अवसरः ।
इत्यमरः ॥ (यथा, महाभारते । १ । १६१ । ७ ।
"एकैकश्चापि पुरुषस्तत्प्रयच्छति भोजनम् ।
स वारो बहुभिर्व्वर्षैर्भवत्यसुतरो नरैः ॥")
सूर्य्यादिवासरः । द्वारः । हरः । कुब्जवृक्षः ।
क्षणः । इति मेदिनी । रे, ६५ ॥ * ॥ अथ
वाराणां संज्ञा ।
"चरः सौम्यो गुरुः क्षिप्रो मृदुः शुक्रो रविर्ध्रुवः ।
शनिश्च दारुणो ज्ञेयो भौम उग्रः शशी समः ॥
चरक्षिप्रैः प्रयातव्यं प्रवेष्टव्यं मृदुध्रुवैः ।
दारुणोग्रैश्च योद्धव्यं क्षत्त्रियैर्जयकाङ्क्षिभिः ॥
नृपाभिषेकोऽग्निकार्य्यं सूर्य्यवारे प्रशस्यते ।
सोमे तु लेपयानञ्च कुर्य्याच्चैव गृहादिकम् ॥
सैनापत्यं शौर्य्ययुद्धं शस्त्राभ्यासः कुजे तथा ।
सिद्धिकार्य्यञ्च मन्त्रश्च यात्रा चैव बुधे स्मृता ॥
पठनं देवपूजा च वस्त्राद्याभरणं गुरौ ।
कन्यादानं गजारोहः शुक्रे स्यात् समयः स्त्रियाः ।
स्थाप्यं गृहप्रवेशश्च गजबन्धः शनौ शुभः ॥"
इति गारुडे ६२ अध्यायः ॥
सावनदिनवद्वारप्रवृत्तिः सूर्य्योदयावधिरेव ।
सूर्य्यसिद्धान्ते ।
"सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा ।
मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तिताः ॥"
अत्र दिनाधिपस्य रव्यादेर्भोग्यं दिनं वाररूपं
सावनगणनोक्तं व्यवहारोऽपि तादृगेव । तिथि-
विवेकेऽपि । भवतु वारयोगे व्यस्ततिथेर्ग्रहणं
तस्य दिनद्वयेऽसम्भवादित्युक्तम् । सावनदिन-
माह सूर्य्यसिद्धान्तः ।
"उदयादोदयं भानोर्भौमसावनवासराः ॥"
भौमेति पित्रादिदिनव्यावृत्त्यर्थम् । यत्तु रेखा-
पूर्ब्बपरयोरित्यादिना ज्योतिषे वारप्रवृत्तिरुक्ता
तज्ज्योतिःशास्त्रोक्तकालहोरादिज्ञापनार्थमिति
ज्योतिस्तत्त्वे बहुधा विवृतम् ।
"नैवास्तमनमर्कस्य नोदयः सर्व्वदा सतः ।
प्रभवति हि वारवेला
न शुभाशुभकार्य्यकरणाय ॥"
अथ कालवेला ।
"कालस्य वेला रवितः शराक्षि-
कालानलागाम्बुधयो गजेन्दू ।
दिने निशायामृतुवेदनेत्र-
नगेषु रामा विधुदन्तिनौ च ॥"
इति ज्योतिस्तत्त्वम् ॥ * ॥
तयोर्व्वर्ज्यत्वं यथा, --
"रवौ वर्ज्यं चतुःपञ्च सोमे सप्तद्वयं
तथा ।
कुजे षष्ठद्वयञ्चैव बुधे बाणतृतीयकम्
॥
गुरौ सप्ताष्टकं चैव त्रिचत्वारि च
भार्गवे ।
शनावाद्यञ्च षष्ठञ्च शेषञ्च
परिवर्ज्जयेत् ॥ * ॥
रवौ षष्ठं विधौ वेदं कुजवारे
द्वितीयकम् ।
बुधे सप्त गुरौ पञ्च भृगुवारे तृतीयकम्
।
शनावाद्यं तथा चान्त्यं रात्रौ कालं
विवर्जयेत् ॥"
इति सारसंग्रहः ॥ * ॥
अथ स्त्रीणां प्रथमरजस्वलायां
वारफलम् ।
"आदित्ये विधवा नारी सोमे चैव
पतिव्रता ।
वेश्या मङ्गलवारे च बुधे सौभाग्यमेव
च ॥
बृहस्पतौ पतिः श्रीमान् शुक्रे
पुत्त्रवती भवेत् ।
शनौ बन्ध्या तु विज्ञेया प्रथमस्त्री
रजस्वला ॥"
इति मथुरेशकृतसारसंग्रहः ॥
(बालः । यथा, ऋग्वेदे । २ । ४ । ४
।
"वियोभरिभ्रदोषधीषु जिह्वा
मत्यो न रथ्यो दोधवीति वारान् ॥"

**वारङ्कः**, पुं, पक्षी । इति त्रिकाण्डशेषः ॥

**वारङ्गः**, पुं, (वारयतीति व्रियते इति वा । वृ +

"सृवृञोर्वृद्धिश्च ।" उणा० १ । १२१ ।
इति
अङ्गच् । धातोर्वृद्धिश्च ।) खड्गादिमुष्टिः ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ मुट्
इति
वाँट इति च भाषा ॥ (यथा, सुश्रुते । १ ।
७ ।
"तत्र स्वस्तिकयन्त्राणि ****
मूलेऽङ्कुशवदा-
वृत्तवारङ्गाणि
अस्थिविनष्टशल्योद्धरणार्थमुप-
दिश्यन्ते ॥")

**वारटं**, क्ली, (वार् जलमटति प्राप्नोतीति । अट्

+ अच् ।) क्षेत्रम् । इति त्रिकाण्डशेषः ।
क्षेत्रसमूहः । इति शब्दरत्नावली ॥

**वारटा**, स्त्री, (वारि जले अटतीति । अट् +

अच् + टाप् ।) हंसी । इति हेमचन्द्रः । ४ ।
३९३ ॥

**वारणं**, क्ली, (वृ + णिच् + ल्युट् ।) प्रतिषेधः । इति

मेदिनी । णे, ६६ ॥ (यथा, हरिवंशे ।
१८० । ४५ ॥
"अस्त्राणां वारणार्थाय वासुदेवोऽप्यमुञ्चत
॥")
हस्तवारणम् । इति जटाधरः ॥ * ॥
दानकाले
वारणनिषेधो यथा, --
"न देवगुरुविप्राणां दीयमानन्तु वारयेत् ।
न चात्मानं प्रशंसेद्वा परनिन्दाञ्च वर्ज्जयेत्
॥"
इति कौर्म्मे उपविभागे १६ अध्यायः ॥

**वारणः**, पुं, (वारयति परबलमिति । वृ + ल्युः ।)

हस्ती । इत्यमरः । २ । ८ । ३४ ॥ (यथा,
कुमारे । ५ । ७० ।
"इयञ्च तेऽन्या पुरतो षिडम्बना
यदूढया वारणराजहार्य्यया ।

उदयास्तमनाख्यं हि दर्शनादर्शनं रवेः ॥
यैर्यत्र दृश्यते भास्वान् स तेषामुदयः स्मृतः ॥”
इति विष्णुपुराणात् सूर्य्यदर्शनयोग्यकालादेव
वारघटककर्म्मसु स एव कालः । इति ज्योति-
स्तत्त्वम् ॥ * ॥ अथ शोभनवाराः ।
“रविः सोमो मङ्गलश्च बुधो जीवः सितः शनिः ।
एतेषां नामतो वारा विख्याताः सर्व्वकर्म्मसु ॥
सितेन्दुबुधजीवानां वाराः सर्व्वत्र शोभनाः ।
भानुभूसुतमन्दानां शुभकर्म्मसु केष्वपि ॥”
इति ज्योतिःसागरः ॥
अथ वारवेला ।
“कृतमुनियमशरमङ्गल-
रामर्त्तुषु भास्करादियामार्द्धे ।

“रथ्यो रथार्होऽत्योन वाजी यथा
वारान् दंश-
वारणसाधनान् बालान् दोधवीति
कम्पयति ।”
इति तद्भाष्ये सायणः ॥ वरणीये, त्रि,
। यथा,
ऋग्वेदे । १ । १२८ । ६ ।
“विश्वस्मा इत्सुकृते
वारमृण्वत्यग्निर्द्वारान् वृण्वति ॥”
“वारं सर्व्वैर्वरणीयम् ॥” इति तद्भाष्ये
सायणः ॥)

**वारकं**, क्ली, (वारयतीति । वृ + णिच् + ण्वुल् ।)

कष्टस्थानम् । इति हारावली । १२८
॥ ह्रीवे-
रम् । इति हेमचन्द्रः । ४ । २२४ ॥

**वारकः**, पुं, (वृ + णिच् + ण्वुल् ।) अश्वविशेषः ।

इति विश्वः ॥ अश्वगतिः । निषेधके,
त्रि । इति
मेदिनी । के, १३१ ॥ (यथा,
महाभारते । १२ ।
३२१ । ३६ ।
“पुरा समूलबान्धवं
प्रभुर्हरत्यदुःखवित् ।
तवेह जीवितं यमो न चास्ति तस्य
वारकः ॥”)

**वारकी**, [न्] पुं, (वारकोऽस्त्यस्येति । इनिः ।)

चित्राश्वः । शत्रुः । पर्णाजीवी ।
पयोधिः ।
इति मेदिनी । ने, १९५ ॥

**वारकीरः**, पुं, (वारो वरणीयः कीरः पक्षीव ।

यद्वा, वारे अवसरे किरति
कौतुकवाक्यमिति ।
कृ + कः । निरुक्तलक्षणो दीर्घः ।
यद्वा, वारे
अवसरे कीलति बध्नाति
कौतुकार्थंरज्ज्वा प्रेम्णा
वा । कील + कः । लस्य रत्वम् ।)
श्यालकः ।

विलोक्य वृद्धोक्षमधिष्ठितं त्वया
महाजनः स्मेरमुखो भविष्यति ॥”)
बाणवारः । इति शब्दरत्नावली ॥ (यथा,
महाभारते । ४ । ४० । २ ।
“वारणा यस्य सौवर्णाः पृष्ठे भासन्ति
दंशिताः ॥
सुपार्श्वं सुग्रहञ्चैव कस्यैतद्धनुरुत्तमम् ॥”
वारि जले रणति चरतीति । वार् + रण् +
अच् । जलजाते, त्रि । यथा, हरिवंशे । ३१
। ४८ ।
“ततो वैभाण्डकिस्तस्य वारणं
शक्रवारणम् ।
अवतारयामास महीं मन्त्रैर्वाहनमुत्तमम् ॥”
“वारि जले रणति चरतीति वारणः
समुद्रोद्भव
इत्यर्थः ।” इति तट्टीकायां नीलकण्ठः ॥)

**वारणबुषा**, स्त्री, (बुष्यते इति । बुष उत्सर्गे +

कः । वारणानां बुषा । यद्वा, वारणान्
पुष्णा-
तीति । पुष + कः । पृषोदरादित्वात् पस्य
बः ।)
कदली । इत्यमरः । २ । ४ । ११३ ॥

**वारणवल्लभा**, स्त्री, (वारणानां वल्लभा प्रिया ।)

कदलीवृक्षः । इति त्रिकाण्डशेषः ॥

**वारणसी**, स्त्री, (वरणा च असी च नदीद्वयं

तस्य अदूरे भवा । “अदूरभवश्च ।” ४ ।
२ । ७० ।
इत्यण् । ङीप् । पृषोदरादित्वात् साधुः ।)
वाराणसी । काशी । इति हेमचन्द्रः ॥

**वारणीयं**, त्रि, (वृ + णिच् + अनीयर् ।) वारण-

योग्यम् । वृञधातोः ञ्यन्तादनीयप्रत्ययेन
निष्पन्नम् ॥ (यथा, कथासरित्सागरे । ५७
। १ ।

| | | |
|---|---|---|
| | इति त्रिकाण्डशेषः ॥ वारग्राही ।<br>व्राडवः ।<br>यूका । वेणिवेधिनी । नीराजितहयः ।<br>इति<br>मेदिनी । रे, २८८ ॥ | |

"अवारणीयं रिपुभिर्वारणीयं करं नुमः ।
हेरम्बस्य ससिन्दूरमसिं दूरमघच्छिदम् ॥")

**वारत्रं**, क्ली, चर्म्मबन्धनी । इति केचित् ॥

**वारबधूः**, स्त्री, (वाराणां जनसमूहानां बधूः ।)

वारमुख्या । इति हेमचन्द्रः । ३ । १९७ ॥
(यथा, आर्य्यासप्तशत्याम् । ३२८ ॥
"निजगात्रनिर्व्विशेषस्थापितमपि
सारमखिल-
मादाय ।
निर्मोकञ्च भुजङ्गी मुञ्चति पुरुषञ्च वारबधूः
॥")

**वारवाणः**, पुं, क्ली, (वारं वारणीयं बाणं

यस्मात् ।) कञ्चुकः । इत्यमरः । २ । ८ ।
६३ ॥
(यथा, माघे । १५ । ८४ ।
"पीनकुचतटनिपीडदल-
द्वरवारबाणमुरसा लिलिङ्गिरे ॥")

**वारबुषा**, स्त्री, (वारान् बालकान् पुष्णातीति ।

पुष् + कः । पृषोदरादित्वात् पस्य बः ।)
कदली ।
इति शब्दरत्नावली ॥

**वारमुख्या**, स्त्री, (वारेषु वेश्यासमूहेषु मुख्या

श्रेष्ठा ।) जनैः सत्कृता वेश्या । इत्यमरः । २
।
६ । १९ ॥ (यथा, भागवते । १ । ११ । २०
।
"वारमुख्याश्च शतशो यानैस्तद्दर्शनोत्सुकाः
॥")

**वारयिता**, पुं, (वारयति दुर्नीतेरिति । वृ + णिच्

+ तृच् ।) पतिः । इति हलायुधः ॥

**वारला**, स्त्री, (वारं लातीति । ला + कः ।)

वरटा । हंसी । इति हेमचन्द्रः । ४ । ३९३ ॥

**वारलीकः**, पुं, वल्वजा । इति शब्दरत्नावली ॥

वायुइ इति ख्यातः ॥

**वारवाणिः**, पुं, (वारं शब्दसमूहं वणते इति ।

**वारस्त्री**, स्त्री, (वाराणां जनसमूहानां स्त्री ।)

वेश्या । इत्यमरः । २ । ६ । १९ ॥

**वारांनिधिः**, पुं, (वारां जलानां निधिः । अलुक्

समासः ।) समुद्रः । इति शब्दरत्नावली ॥

**वाराणसी**, स्त्री, (वरणा च असी च । तयोर्नद्यो-

रदूरे भवा । "अदूरभवश्च ।" ४ । २ । ७० ।
इत्यण् । ङीप् । पृषोदरादित्वात् साधुः ।
अस्या
निरुक्तिर्यथा, --
"वरणासी च नद्यौ द्वे पुण्ये पापहरे उभे ।
तयोरन्तर्गता या तु सैषा वाराणसी स्मृता ॥")
मोक्षदपुरीविशेषः । वनारस् इति हिन्दी
भाषा । तत्पर्य्यायः । वारणसी २ काशी ३
शिवपुरी ४ । इति हेमचन्द्रः ॥ जित्वरी ५
तपःस्थली ६ वरणसी ७ तीर्थराजी ८
काशिका
९ । इति शब्दरत्नावली ॥ तस्या माहात्म्यं
यथा, --
ईश्वर उवाच ।
"परं गुह्यतमं क्षेत्रं मम वाराणसी पुरी ।
सर्व्वेषामेव भूतानां संसारार्णवतारिणी ॥
तत्र भक्ता महादेवि ! मदीयं व्रतमाश्रिताः ।
निवसन्ति महात्मानः परं नियममास्थिताः ॥
उत्तमं सर्व्वतीर्थानां स्थानानामुत्तमञ्च यत् ।
ज्ञानानामुत्तमं ज्ञानं अविमुक्तपुरं मम ॥
स्थानान्तरं पवित्राणि तीर्थान्यायतनानि च ।
श्मशानसं स्थितान्येव दिव्यभूमिगतानि च ॥
भूर्लोके नैव संलग्नमन्तरीक्षे ममालयम् ।
अमुक्तास्तन्न पश्यन्ति मुक्ताः पश्यन्ति चेतसा
॥
श्मशानमेतद्विख्यातमविमुक्तमिति श्रुतम् ।
कालो भूत्वा जगदिदं संहराम्यत्र सुन्दरि ! ॥
देवीदं सर्व्वगुह्यानां स्थानं प्रियतरं मम ।
यद्भक्तास्तत्र गच्छन्ति मामेव प्रविशन्ति ते ॥
दत्तं जप्तं हुतं चेष्टं तपस्तप्तं कृतञ्च यत् ।
ध्यानमध्ययनं ज्ञानं सर्व्वं तत्राक्षयं भवेत् ॥
जन्मान्तरसहस्रेषु यत् पापं पूर्ब्बसञ्चितम् ।
अविमुक्तं प्रविष्टस्य तत्सर्व्वं व्रजति क्षयम् ॥
ब्राह्मणाः क्षत्त्रिया वैश्या शूद्रा ये वर्णसङ्कराः ।
हन्यमानोऽपि यो विद्वान्
वसेद्विघ्नशतैरपि ।
स याति परमं स्थानं यत्र गत्वा न
शोचति ॥
जन्ममृटत्युजरायुक्तं परं यान्ति
शिवालयम् ।
अपुनर्मरणानां हि सा
गतिर्मोक्षकाङ्क्षिणाम् ॥
यां प्राप्य कृतकृत्यः स्यादिति मन्यन्ति
पण्डिताः ।
न दानैर्न तपोभिश्च न यज्ञैर्नापि विद्यया
॥
प्राप्यते मतिरुत्कृष्टा या विमुक्ते तु
लभ्यते ।
नानावर्णा विवर्णाश्च चाण्डालाद्या
जुगुप्सिताः ॥
किल्विषैः पूर्णदेहा ये विशिष्टैः
पातकैस्तथा ।
भेषजं परमं तेषामविमुक्तं विदुर्ब्बुधाः ॥
अविमुक्तं परं ज्ञानमविमुक्तं परं पदम् ।
अविमुक्तं परं तत्त्वमविमुक्तं परं शिवम् ॥
कृत्वा वै नैष्ठिकीं दीक्षामविमुक्ते वसन्ति
ये ।
तेषां तत् परमं ज्ञानं ददाम्यन्ते परं पदम्
॥
प्रयागं नैमिषं पुण्यं श्रीशैलोऽथ
हिमालयः ।
केदारं भद्रकर्णञ्च गया पुष्करमेव च ॥
कुरुक्षेत्रं रुद्रकोटिर्नर्म्मदा स्नातकेश्वरम्
।
शालग्रामञ्च कुब्जाम्रं
कोकामुखमनुत्तमम् ॥
प्रभासं विषयेशानं गोकर्णं भद्रकर्णकम् ।
एतानि पुण्यस्थानानि त्रैलोक्ये
विश्रुतानि तु ॥
न यास्यन्ति परं मोक्षं वाराणस्यां तथा
मृताः ।
वाराणस्यां विशेषेण गङ्गा त्रिपथगामिनी
॥

वण + इण् ।) वंशीवादकः । इति त्रिकाण्ड-
शेषः ॥ उत्तमगायकः । इति शब्दरत्नावली
॥
धर्म्माध्यक्षः । संवत्सरः । इत्यजयपालः ॥
एत-
न्मते पवर्गीयादिः ॥

**वारवाणिः**, स्त्री, (वारे अर्थदानावसरे वाणिः

प्रियालापो यस्याः ।) वेश्या । इति त्रिकाण्ड-
शेषः ॥

**वारवाणी**, स्त्री, (वारवाणि + पक्षे ङीष् ।) वार-

मुख्या । इति शब्दरत्नावली ॥

**वारविलासिनी**, स्त्री, (वाराणां जनसमूहानां

विलासिनी स्त्री । यद्वा, वारान् विलासयतीति
।
वि + लस + णिच् + णिनिः । ङीप् ।) वेश्या
।
इति शब्दरत्नावली ॥ (यथा, कथासरित्-
सागरे । १२ । ७८ ।
“अस्तीह मथुरा नाम पुरीकंशारिजन्मभूः ।
तस्यां रूपनिकेत्यासीत् ख्याता वारविला-
सिनी ॥”)

**वारवृषा**, स्त्री, (वारान् हस्तिसमूहान् वर्षतीति ।

वृष + कः । टाप् ।
हस्तिभक्ष्यत्वेनास्यास्तथा-
त्वम् ।) कदली । इति शब्दरत्नावली ॥

**वारसुन्दरी**, स्त्री, (वाराणां नरसमूहानां

सुन्दरी ।) वेश्या । इति हारावली । १४४ ॥

**वारसेवा**, स्त्री, (वारे अवसरे सेवा ।) वेश्यानां

क्रमः । तासां गणः । इति जटाधरः ॥

स्त्रियो म्लेच्छाश्च ये चान्ये संकीर्णाः पाप-
योनयः ॥
कीटाः पिपीलिकाश्चैव ये चान्ये मृगपक्षिणः ।
कालेन निधनं प्राप्ताः स्वविमुक्ते वरानने ! ॥
चन्द्रार्द्धमौलयस्त्र्यक्षा महावृषभवाहनाः ।
शिवे मम पुरे देवि ! जायन्ते तत्र मानवाः ॥
नाविमुक्ते मृतः कश्चिन्नरकं याति किल्विषी ।
ईश्वरानुगृहीता हि सर्व्वे यान्ति परां गतिम् ॥
मोक्षं सुदुर्ल्लभं मत्वा संसारञ्चातिभीषणम् ।
अश्मना चरणौ हत्वा वाराणस्यां वसेन्नरः ॥
दुर्ल्लभा तपसा चापि पूतस्य परमेश्वरि ! ।
यत्र तत्र विपन्नस्य गतिः संसारमोक्षणी ॥
प्रसादाज्जायते ह्येतन्मम शैलेन्द्रनन्दिनि ! ।
अप्रबुद्धा न पश्यन्ति मम मायाविमोहिताः ॥
अविमुक्तं न पश्यन्ति मूढा ये तमसावृताः ।
विण्मूत्ररेतसां मध्ये तेषां वासः पुनः पुनः ॥

प्रविष्टा नाशयेत् पापं जन्मान्तरशतैः
कृतम् ।
अन्यत्र शुभगा गङ्गा श्राद्धं दानं तपो
जपः ॥
व्रतानि सर्व्वमेवैतत् वाराणस्यां
सुदुर्लभम् ।
यजेत जुहुयान्नित्यं
ददात्यर्च्चयतेऽमरान् ॥
वायुभक्ष्यश्च सततं वाराणस्यां स्थितो
नरः ।
यदि पापो यदि शठो यदि वा धार्म्मिको
नरः ।
वाराणसीं समासाद्य पुनाति सकलं नरः
॥
वाराणस्यां महादेवं येऽर्च्चयन्ति
स्तुवन्ति वै ।
सर्व्वपापविनिर्म्मुक्तास्ते विज्ञेया
गणेश्वराः ॥
अन्यत्र योगज्ञानाभ्यां सन्न्यासादथ
नान्यतः ।
प्राप्यते तत् परं स्थानं सहस्रेणैव
जन्मनः ॥
ये भक्त्या देवदेवेशं वाराणस्यां वसन्ति
वै ।
ते विन्दन्ति परं मोक्षमेकेनैव तु जन्मना
॥
यत्र योगस्तथा ज्ञानं मुक्तिरेकेन जन्मना
।
अविमुक्तं तदासाद्य नान्यद्‌ग
च्छेत्तपोवनम् ॥
ज्ञानाज्ञानाभिनिष्ठानां
परमानन्दमिच्छताम् ।
या गतिर्विहिता सुभ्रु साविमुक्ते मृतस्य
तु ॥
यानि चैवाविमुक्तस्य देहे भुक्तानि
कृत्स्नशः ।
पुरी वाराणसी तेभ्यः स्थानेभ्यो
ह्यधिका शुभा ॥
यत्र साक्षान्महादेवो देहान्ते
स्वयमीश्वरः ।
व्याचष्टे तारकं ब्रह्म तत्रैव ह्यविमुक्तके ॥
तत्तत् परतरं तत्त्वमविमुक्तमिति श्रुतम् ।

| | | |
|---|---|---|
| | | एकेन जन्मना देवि वाराणस्यां तदाप्नुयात् ॥<br>भ्रूमध्ये नाभिमध्ये च हृदये चैव मूर्द्धनि ।<br>यथाविमुक्तमादित्ये वाराणस्यां व्यवस्थितम् ।<br>वारणायास्तथा चास्या मध्यं वाराणसी पुरी ॥<br>तत्रैव संस्थितं भद्रं नित्यमेवाविमुक्तकम् ।<br>वाराणस्याः परं स्थानं न भूतं न भविष्यति ॥<br>यत्र नारायणो देवो महादेवाधिरीश्वरः ।<br>तत्र देवाः सगन्धर्वाः सयक्षोरगराक्षसाः । |

उपासते मां सततं देवदेवः पितामहः
॥
महापातकिनो ये च ये च वै
पापकृत्तमाः ।
वाराणसीं समासाद्य ते यान्ति परमां
गतिम् ।
तस्मान्मुमुक्षुर्व्विशो वसेद्वै
मरणान्तिकम् ॥
वाराणस्यां महादेवाज्ज्ञानं लब्ध्वा
विमुच्यते ।
किन्तु विघ्ना भविष्यन्ति
पापौघहतचेतसः ॥
यथा नारायणः श्रेष्ठो देवानां
पुरुषोत्तमः ।
यथेश्वराणां गिरिशः स्थानानां वै
तदुत्तमम् ॥
यैः समाराधितो रुद्रः पूर्ब्बस्मिन्नेव
जन्मनि ।
ते विन्दन्ति परं क्षेत्रमविमुक्तं
शिवालयम् ॥
ये स्मरन्ति सदा कालं वदन्ति च
पुरीमिमाम् ।
तेषां विनश्यति क्षिप्रमिहामुत्र च
पातकम् ॥
आचक्षध्वमिदं स्थानं सेवितं
मोक्षकाङ्क्षिणाम् ।
मृतानाञ्च पुनर्जन्म न भूयो भवसागरे
॥
तस्मात् सर्व्वप्रयत्नेन वाराणस्यां
वसेन्नरः ।
योगी वाप्यथवायोगी पापी वा
पुण्यकृत्तमः ॥”
इति कौर्म्मे २८ अध्यायः ॥ * ॥
अन्यच्च ।
“वाराणसी नाम पुरी गङ्गातीरे
मनोहरे ।
वरणायास्तथा वासेर्मध्ये चापाकृतिः
सदा ॥
स्वयं वृषध्वजस्तत्र नित्यं वसति
योगिनाम् ।

ततो वैश्वेश्वरी यात्रा कार्य्या सर्व्वार्थसिद्धये ।
द्विसप्तायतनानाञ्च कार्य्या यात्रा प्रयत्नतः ॥
कृष्णां प्रतिपदं प्राप्य भूतावधि यथाविधि ।
अथवा प्रतिभूतञ्च क्षेत्रसिद्धिमभीप्सुभिः ॥
तत्ततीर्थकृतस्नानस्तत्तल्लिङ्गकृतार्च्चनः ।
मौनेन यात्रां कुर्व्वाणः फलं प्राप्नोति यात्रिकः ॥
ॐकारं प्रथमं पश्येत् मत्स्योदर्य्यां कृतोदकः ।
त्रिपिष्टपमहादेवं ततो वै कृत्तिवाससम् ॥
रत्नेशञ्चाथ चन्द्रेशं केदारञ्च ततो व्रजेत् ।
धर्म्मेश्वरञ्च वीरेशं गच्छेत् कामेश्वरं ततः ॥
विश्वकर्म्मेश्वरञ्चाथ मणिकर्णीश्वरं ततः ।
अविमुक्तेश्वरं दृष्ट्वा ततो विश्वेशमर्च्चयेत् ।
एषा यात्रा प्रयत्नेन कर्त्तव्या क्षेत्रवासिभिः ॥
यस्तु क्षेत्रमुषित्वापि नैतां यात्रां समाचरेत् ।
विघ्नास्तस्योपजायन्ते क्षेत्रोच्चाटनसूचकाः ॥ *
॥
अष्टायतनयात्रान्या कर्त्तव्या विघ्नशान्तये ॥
दक्षेशः पार्व्वतीशश्च तथा पशुपतीश्वरः ।
गङ्गेशो नर्म्मदेशश्च गभस्तीशः सतीश्वरः ॥
अष्टमस्तारकेशश्च प्रत्यष्टमि विशेषतः ।
दृश्यान्येतानि लिङ्गानि महापापापशान्तये ॥ * ॥
अपरापि शुभा यात्रा योगक्षेमकरी सदा ।
सर्व्वविघ्नोपहन्त्री च कर्त्तव्या क्षेत्रवासिभिः ॥
शैलेशं प्रथमं वीक्ष्य वरणास्नानपूर्ब्बकम् ।
स्नानन्तु सङ्गमे कृत्वा द्रष्टव्यः सङ्गमेश्वरः ॥
स्वर्नीलतीर्थे सुस्नातः पश्येत् स्वर्नीलमीश्वरम् ।
स्नात्वा मन्दाकिनीतीर्थे द्रष्टव्यो मध्यमेश्वरः ॥
पश्येद्धिरण्यगर्भाख्यं तत्र तीर्थं कृतोदकः ।
पञ्चचूडह्रदे स्नात्वा ज्येष्ठस्थानं ततोऽर्च्चयेत् ॥
चतुःसमुद्रकूपे तु स्नात्वा देवं ततोऽर्च्चयेत् ।
देवस्याग्रे तु या वापी तत्रोपस्पर्शने कृते ।
शुक्रेश्वरं ततः पश्येत्तत्कूपविहितोदकः ।
दण्डखाते नरः स्नात्वा व्याघ्रेशं पूजयेत्ततः ॥
शौनकेश्वरकुण्डे तु स्नानं कृत्वा ततोऽर्च्चयेत् ।
जम्बुकेशं महालिङ्गं कृत्वा यात्रामिमां नरः ॥
क्वचिन्न जायते भूयः संसारे दुःखसागरे ।
समारभ्य प्रतिपदं यावत् कृष्णां चतुर्द्दशीम् ॥
एतत्क्रमेण कर्त्तव्यान्येतदायतनानि वै ।
इमां यात्रां नरः कृत्वा न भूयोऽप्यभिजायते ॥
अन्या यात्रा प्रकर्त्तव्यैकादशायतनोद्भवा ।

ततः शृङ्गारगौरीञ्च तत्रैव च कृतोदकः ।
स्नात्वा विशालगङ्गायां विशालाक्षीं ततो
व्रजेत् ॥
सुस्नातो ललितातीर्थे ललितामर्च्चयेत्ततः ।
स्नात्वा भवानीतीर्थे तु भवानीं परिपूजयेत् ॥
मङ्गला च ततोऽभ्यर्च्च्या बिन्दुतीर्थकृतोदकैः
।
ततो गच्छेन्महालक्ष्मीं स्थिरलक्ष्मीसमृद्धये ॥
इमां यात्रां नरः कृत्वा क्षेत्रेऽस्मिन्मुक्तिजन्मनि
।
न दुःखैरभिभूयेत इहामुत्रापि कुत्रचित् ॥ * ॥
कुर्य्यात् प्रतिचतुर्थीह पूजां विघ्नेशितुः सदा
।
ब्राह्मणेभ्यस्तदुद्देशाद्देया वै मोदका मुदे ॥
भौमे भैरवयात्रा च कार्य्या पातकहारिणी ।
रविवारे रवेर्यात्रां षष्ठ्यां वा रविसंयुजि ॥
तथैव रविसप्तम्यां सर्व्वविघ्नोपशान्तये ।
नवम्यामथवा षष्ठ्यां चण्डीयात्रा शुभावहा ॥
* ॥
अन्तर्गृहस्य यात्रा वै कर्त्तव्या प्रतिवत्सरम् ।
प्रातः स्नानं विधायादौ नत्वा पञ्च
विनायकान् ।
नमस्कृत्वा च विश्वेशं स्थित्वा
निर्व्वाणमण्डपे ।
अन्तर्गृहस्य यात्रां हि करिष्येऽघौघशान्तये ॥
गृहीत्वा नियमञ्चेति गत्वाथ मणिकर्णिकाम् ।
स्नात्वा मौनेन चागत्य मणिकर्णीशमर्च्चयेत्
॥
कम्बलाश्वतरौ नागौ वासुकीशं प्रणम्य च ।
पर्व्वतेशं ततो दृष्ट्वा गङ्गाकेशवमप्यथ ॥
ततस्तु ललितां दृष्ट्वा जरासन्धेश्वरं ततः ।
ततो वै सोमनाथञ्च वराहञ्च ततो व्रजेत् ॥
ब्रह्मेश्वरं ततो नत्वा नत्वागस्तीश्वरं ततः ।
कश्यपेशं नमस्कृत्य हरिकेशवनन्त्वथ ॥
वैद्यनाथं ततो गत्वा ध्रुवेशमथ वीक्ष्य च ।
गोकर्णेशं ततोऽभ्यर्च्च्य हाटकेशमथो व्रजेत्
॥
अस्थिक्षेपतडागेऽथ दृष्ट्वा वै कीकशेश्वरम् ।
भावभूतं ततो नत्वा चित्रगुप्तेश्वरं ततः ॥
चित्रघण्टां प्रणम्याथ ततः पशुपतीश्वरम् ।

सदा प्रीतिकरो योगी स्वयं चाप्यात्मचिन्तकः ॥
वियत्स्था सा पुरी नित्यं भर्गयोगबलाद्धृता ।
दिव्यं ज्ञानं ददात्येष तत्र यो म्रियते जनः ॥
तस्मै स्वयं महादेवः संसारग्रन्थिमुक्तये ।
स भूत्वा परमो योगी मृतस्तत्र भवान्तरे ॥
सुलभेनैव निर्व्वाणमाप्नोति स्मरहासमः ।
योगयुक्तो महादेवः पार्व्वत्या सहितः सदा ॥
देवगन्धर्व्वयक्षाणां मानुषाणाञ्च नित्यशः ।
ज्ञेयो हरः प्रकाशश्च क्षेत्रं तच्च प्रकाशितम् ॥
न तत्र कामदो देवो न चिराच्च प्रसीदति ।
आराधितश्चिरं भक्त्या निर्व्वाणाय प्रसीदति ॥
गौर्य्यादिवर्ज्जिता सा तु पुरी तत्र न गच्छति ।
योगस्थानं महाक्षेत्रं कदाचिदपि शाङ्करी ॥
आसन्नं युवयोः क्षेत्रमिदं वाराणसी तु यत् ।
कथितं नातिदूरे च वर्त्ततेऽमरसत्तमौ ॥”
इति कालिकापुराणे ५० अध्यायः ॥ * ॥
अथ काशीयात्राविधिः ।
सूत उवाच ।
“यात्रापरिक्रमं ब्रूहि जनानां हितकाम्यया ।
यथावत् सिद्धिकामानां सत्यवत्याः सुतो मम ॥
व्यास उवाच ।
निशामय महाप्राज्ञ लोमहर्षण वच्मि ते ।
अग्नीध्रकुण्डसुस्नातः पश्येदग्नीध्रमीश्वरम् ॥
उर्व्वशीशं ततो गच्छेत्ततस्तु नकुलीश्वरम् ।
आषाढीशं ततो दृष्ट्वा भावभूतेश्वरं ततः ॥
लाङ्गलीशमथालोक्य ततस्तु त्रिपुरान्तकम् ।
ततो मनःप्रकामेशं प्रीतिकेशमथो व्रजेत् ॥
मदालसेश्वरं तस्मात् तिलपर्णेश्वरं ततः ।
यात्रैकादशलिङ्गानामेषा काार्य्या प्रयत्नतः ॥
इमां यात्रां प्रकुर्व्वाणो रुद्रत्वं प्राप्नुयान्नरः । * ।
अतः परं प्रवक्ष्यामि गौरीयात्रामनुत्तमाम् ॥
शुक्लपक्षतृतीयायां या यात्रा विश्ववृद्धिका ।
गोप्रेक्ष्यतीर्थे सुस्नाय सुखनिर्म्मालिकां व्रजेत् ॥
ज्येष्ठवाप्यां नरः स्नात्वा ज्येष्ठां गौरिं समर्च्चयेत् ।
सौभाग्यगौरी संपूज्या ज्ञानवाप्यां कृतोदकैः ॥
पितामहेश्वरं गत्वा ततस्तु कलसेश्वरम् ॥
चन्देशन्त्वथ वीरेशो विघ्नेशोऽग्नीश एव च ॥
नागेश्वरो हरिश्चन्द्रश्चिन्तामणिविनायकः ।
सेनाविनायकश्चाथ द्रष्टव्यः सर्व्वविघ्नहृत् ॥
वशिष्ठवामदेवौ च मूर्त्तिरूपधरावुभौ ।
द्रष्टव्यौ यत्नतः काश्यां महाविघ्नविनाशनौ ।
सीमाविनायकं नाथं करुणेशं ततो व्रजेत् ॥
त्रिसन्ध्येशो विशालाक्षी धर्म्मेशो विश्वबाहुका ।
आशाविनायकश्चाथ वृद्धादित्यस्ततः पुनः ॥
चतुर्वक्रेश्वरं लिङ्गं ब्रह्मेशस्तु ततः परम् ।
ततो मनःप्रकाशेश ईशानेशस्ततः परम् ॥
चण्डीचण्डीश्वरौ दृश्यौ भवानीशङ्करौ ततः ।
ढुण्ढिं प्रणम्य च ततो राजराजं समर्च्चयेत् ॥
लाङ्गलीशस्ततोऽभ्यर्च्च्यस्ततस्तु नकुलीश्वरः ।
परार्णेशमथो नत्वा परद्रव्येश्वरं ततः ॥
प्रतिग्रहेश्वरञ्चापि निष्कलङ्केशमेव च ।
मार्कण्डेयेशमभ्यर्च्च्य ततः अप्सरसेश्वरम् ॥
गङ्गेशोऽर्च्च्यस्ततो ज्ञानवाप्यां स्नानं समाचरेत् ।
नन्दिकेशं तारकेशं महाकालेश्वरं ततः ॥
दण्डपाणिं महेशञ्च मोक्षेशं प्रणमेत्ततः ।
वीरभद्रेश्वरं नत्वा अविमुक्तेश्वरं ततः ॥

| | | |
|---|---|---|
| यथा प्रथमतो यात्रा कर्त्तव्या यात्रिकैर्म्मुद ॥<br>सचेलमादौ संस्नाय चक्रपुष्करिणीजले।<br>सन्तर्प्य देवान् सपितॄन् ब्राह्मणांश्च तपस्विनः ॥<br>आदित्यं द्रौपदीं विष्णुं दण्डपाणिं महेश्वरम् ।<br>नमस्कृत्य ततो गच्छेत् द्रष्टुं ढुण्ढिविनायकम् ॥<br>ज्ञानवापीमुपस्पृश्य नन्दिकेशं ततोऽर्च्चयेत् ।<br>तारकेशं समभ्यच्चर्य महाकालेश्वरं ततः ॥<br>ततः पुनर्द्दण्डपाणिमित्येषा पञ्चतीर्थिका ।<br>दैनन्दिनी विधातव्या महाफलमभीप्सुभिः ॥ * ॥ | | |

विनायकांस्ततः पञ्च विश्वनाथं ततो व्रजेत् ।
ततो मौनं विसृज्याथ मन्त्रमेनमुदीरयेत् ॥
अन्तर्गृहस्य यात्रेयं यथावद्यन्मया कृता ।
न्यूनातिरिक्तया शम्भुः प्रीयतामनया विभुः ॥
इति मन्त्रं समुच्चार्य्य क्षणं वै मुक्तिमण्डपे ।
विश्राम्य यायाद्भवनं निष्पापः पुण्यवान्नरः ॥ * ॥
संप्राप्य वासरं विष्णोर्विष्णुतीर्थेषु सर्व्वतः ।
कार्य्या यात्रा प्रयत्नेन महापुण्यसमृद्धये ॥
नवम्यां पञ्चदश्याञ्च कुलस्तम्भं समर्च्चयेत् ।
दुःखरुद्रपिशाचत्वे न भवेदस्य पूजनात् ॥
श्रुत्वा पूर्ब्बमिमा यात्राः कर्त्तव्यास्तीर्थवासिभिः ।
पर्व्वस्वपि विशेषेण कार्य्या यात्राश्च सर्व्वतः ॥
न बन्ध्यं दिवसं कुर्य्यात् विना यात्रां क्वचित् कृती ।
यात्राद्वयं प्रयत्नेन कर्त्तव्यं प्रतिवासरम् ।
आदौ स्वर्गतरङ्गिण्यास्ततो विश्वेशितुर्भुवम् ॥
यस्य बन्ध्यं दिनं जातं काश्यां निवसतः सतः ।
निराशाः पितरस्तस्य तस्मिन्नेत दिनेऽभवन् ॥
स दष्टः कालसर्पेण स दष्टो मृत्युना स्फुटम् ।
स मुष्टस्तत्र दिवसे विश्वेशो यत्र नेक्षितः ॥
सर्व्वतीर्थेषु सस्नौ स सर्व्वयात्रां व्यधात् स च ।

**वाराहपत्री**, स्त्री, (वाराहस्तत्कर्ण इव पत्र-मस्त्यस्याः । अच् । गौरादित्वात् ङीष् ।) अश्वगन्धा । इति राजनिर्घण्टः ॥

**वाराहाङ्गी**, स्त्री, (वाराहमिवाङ्गमस्याः । ङीष् ।) दन्तीवृक्षः । इति भावप्रकाशः ॥

**वाराही**, स्त्री, (वाराह + ङीष् ।) ब्रह्माण्या-द्यष्टमातृकान्तर्गतमातृकाविशेषः । यथा, --
"वराहरूपधारी च वराहोपम उच्यते ।
वाराहजननी चाथ वाराही वरवाहना ॥"
इति देवीपुराणे देवीनिरुक्ताध्यायः ४५ ॥
योगिनीविशेषः । यथा, --
"दुर्गा चण्डेश्वरी चण्डी वाराही कार्त्तिकी तथा ।
हरसिद्धा तथा काली इन्द्राणी वैष्णवी तथा ॥
भद्रकाली विशालाक्षी भैरवी कामरूपिणी ।
एताः सर्व्वाश्च योगिन्यो भृङ्गारैः स्नापयन्तु ते ॥"
तीर्थविशेषः । यथा, --
"वाराही यमुना गङ्गा करतोया सरस्वती ।
कावेरी चन्द्रभागा च सिन्धुभैरवसागराः ।
पशुस्नानविधानाय सान्निध्यमिह कल्पय ॥"
इति बृहन्नन्दिकेश्वरपुराणोक्तदुर्गापूजापद्धतिः ॥
वराहदेवस्य शक्तिः । यथा, --
"यज्ञवाराहमतुलं रूपं या बिभ्रतो हरेः ।
शक्तिः साप्याययौ तत्र वाराहीं बिभ्रती तनुम् ॥"
इति चण्डी ॥
अपि च ।
"वाराहरूपिणीं देवीं दंष्ट्रोद्धृतवसुन्धराम् ।
शुभदां सुप्रभां शुभ्रां वाराहीं तां नमाम्यहम् ॥"
इति बृहन्नन्दिकेश्वरपुराणोक्तदुर्गापूजापद्धतिः ॥
वराहक्रान्ता । चामालु इति ख्यातः । तत्-पर्य्यायः । विष्वक्सेनप्रिया २ घृष्टिः ३ वदरा ४ । इत्यमरः ॥ गृष्टिः ५ । इति भरतः ॥ शूकरी ६ क्रोडकन्या ७ विष्वक्सेनकान्ता ८ वराही ९ कौमारी १० त्रिनेत्रा ११ ब्रह्मपुत्री १२ क्रोडी १३ कन्या १४ गृष्टिका १५ माधवेष्टा १६ शूकरकन्दः १७ क्रोडः १८ वनवासी १९ कुष्ठ-नाशनः २० बल्यः २१ अमृतः २२ महावीर्य्यः २३ महौषधम् २४ शम्बरकन्दः २५ वराह-जलम् । इत्यमरः । १ । १० । ३ ॥
(यथा, मनौ । ४ । ६३ ।
"न कुर्व्वीत वृथा चेष्टां न वार्य्यञ्जलिना पिबेत् ।
नोत्सङ्गेभक्षयेत् भक्ष्यान्न जातु स्यात् कुतूहली ॥")
दिग्विशेषे तस्य निषेधविधी यथा, --
"ईशाने चापि पूर्ब्बस्मिन् पश्चिमे च तथो-त्तरे ।
शिविरस्य जल भद्रमन्यत्राशुभमेव च ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १०२ अध्यायः ॥
जलक्रीडायां वर्णनीयानि यथा, --
"जलकेलौ सरःक्षोभचक्रहंसापसर्पणम् ।
पद्मम्लानिपयोबिन्दुदृग्रागा भूषणच्युतिः ॥"
इति कविकल्पलतायाम् १ स्तवके ३ कुसुमम् ॥
ह्रीवेरम् । इति हेमचन्द्रः ॥

**वारिः**, स्त्री, (वारयतीति । वारि + इञ् ।) वाक् । सरस्वती । गजबन्धनी । हस्तिबन्धन-भूमिः । (यथा, रघौ । ५ । ४५ ।
"संहारविक्षेपलघुक्रियेण हस्तेन तीराभिमुखः सशब्दम् ।
बभौ स भिन्दन् बृहतस्तरङ्गान् वार्य्यर्गलाभङ्ग इव प्रवृत्तः ॥")
वन्दिः । कएदीति भाषा । इति मेदिनीकार-हेमचन्द्रौ ॥ (वरणीये, त्रि । यथा, वाजसनेय-संहितायाम् । २१ । ६१ ।
"बहुभ्य आ सङ्गतेभ्य एष मे देवेषु वसु वार्य्या-यक्ष्यते ।"
"एषोऽग्निर्मेमह्यं देवेषु वारि वरीतुं योग्यं

मणिकर्ण्यान्तु यः स्नातो यो विश्वेशं निरैक्षत ॥
सत्यं सत्यं पुनः सत्यं सत्यं सत्यं पुनः पुनः ।
दृश्यो विश्वेश्वरो नित्यं स्नातव्या मणिकर्णिका ॥
व्यास उवाच ।
सूत स्कान्दमिमं श्रुत्वा काशीमाहात्म्यमुत्तमम् ।
नरो न निरयं याति कृत्वाप्यघसहस्रकम् ॥”
इति काशीखण्डे १०० अध्यायः ॥

**वाराणसेयः**, त्रि, (वाराणसी + “नद्यादिभ्यो ढक् ।” ४ । २ । ९७ । इति ढक् ।) वाराणसीजातः । वाराणसी शब्दात् ष्णेयप्रत्ययेन निष्पन्नः ॥

**वारासनं**, क्ली, (वारां आसनम् ।) जलाधारः । तत्पर्य्यायः । वाःसदनम् २ । इति त्रिकाण्ड-शेषः ॥

**वाराहः**, पुं, महापिण्डीतकवृक्षः । इति राज-निर्घण्टः ॥ वराह एव (वराह + स्वार्थे अण् ।) वाराहः । (कल्पभेदः । यथा, भागवते । ३ । ११ । ३७ ।
“अयन्तु कथितः कल्पो द्वितीयस्यापि भारत ! ।
वाराह इति विख्यातो यत्रासीत् शूकरो हरिः ॥”
वराहस्येदमिति । वराह + तस्येदमित्यण् ।) तत्सम्बन्धिनि, त्रि ॥ (यथा, महाभारते । २ । ४ । २ ।
“साज्येन पायसेनैव मधुना मिश्रितेन च ।
भक्ष्यैर्मूलैः फलैश्चैव मांसैर्वाराहहारिणैः ॥”
कन्दः २६ वीरः २७ ब्राह्मीकन्दः २८ सुककन्दः २९ वृद्धिदः ३० व्याधिहन्ता ३१ । अस्य गुणाः । तिक्तत्वम् । कटुत्वम् । विषपित्तकफकुष्ठप्रमेह-क्रिमिनाशित्वम् । वृष्यत्वम् । बल्यत्वम् । रसा-यणत्वञ्च । इति राजनिर्घण्टः ॥ अन्यच्च ।
“वाराहीकन्द एवान्यैश्चर्म्मकारालुको मतः ।
अनूपे स भवेद्देशे वाराह इव लोमवान् ॥”
इति भावप्रकाशः ॥
श्यामापक्षी । इति राजनिर्घण्टः ॥ मेदिनीमते पवर्गीयबकारादिरयं शब्दः ॥

**वारि**, क्ली, (वारयति तृषामिति । वृ + णिच् + “वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवा-रिभ्य इञ् ।” उणा० ४ । १२४ । इति इञ् ।)
वारि वरणीयं वसु धनमायक्ष्यते ।” इति तद्भाष्ये महीधरः ॥)

**वारिकण्टकः**, पुं, (वारिणः कण्टक इव ।) शृङ्गा-टकः । इति जटाधरः त्रिकाण्डशेषश्च ॥

**वारिकर्णिका**, स्त्री, (वारिषु कर्णा इव पत्रा-ण्यस्याः । गौरादित्वात् ङीष् । स्वार्थे कन् । टाप् पूर्ब्बह्रस्वश्च ।) खमूली । इति शब्द-रत्नावली ॥ पाना इति भाषा ॥

**वारिकर्पूरः**, पुं, (वारिषु कर्पूर इव ।) इल्लिश-मत्स्यः । इति त्रिकाण्डशेषः ॥

**वारिकुब्जः**, पुं, (वारिषु कुब्ज इव वक्रत्वात् ।) शृङ्गाटकः । इति शब्दरत्नावली ॥

**वारिकुब्जकः**, पुं, (वारिकुब्ज + स्वार्थे कन् ।) शृङ्गाटकः । इति त्रिकाण्डशेषः ॥

**वारिक्रिमिः**, पुं, (वारिणः क्रिमिः ।) जलौकाः । इति त्रिकाण्डशेषः ॥

**वारिचत्वरः**, पुं, (वारिणि चत्वर इव ।) कुम्भिका । इति त्रिकाण्डशेषः ॥

**वारिचरः**, पुं, (वारिषु चरतीति । चर + टः ।) मत्स्यः । इति धनञ्जयः ॥ (यथा, भागवते । ६ । ९ । २३ ।
“यस्योरुशृङ्गे जगतीं स्वनावं मनुर्यथावध्य ततार दुर्गम् ।
स एव नस्त्वाष्ट्रभयाद्दुरन्तात् त्राताश्रितान् वारिचरोऽपि नूनम् ॥”)

क्ली, तीर्थभेदः । यथा, महाभारते । ३ । ८३ । १८ ।

"ततो गच्छेत धर्म्मज्ञ ! वाराहं तीर्थमुत्तमम् ।
विष्णुर्वराहरूपेण पूर्ब्बं यत्र स्थितोऽभवत् ॥"

पुराणविशेषः । यथा, देवीभागवते । १ । ३ । ८ ।

"चतुर्व्विंशतिसाहस्रं वाराहं परमाद्भुतम् ॥")

**वाराहकर्णी**, स्त्री, (वाराहकर्ण इव पत्रमस्त्यस्याः ।

वाराहकर्ण + अच् । गौरादित्वात् ङीष् ।)

अश्वगन्धा । इति राजनिर्घण्टः ॥

जलचरजन्तुमात्रे, त्रि ॥ (यथा, महाभारते । १२ । २४७ । १८ ।
"यथा वारिचरः पक्षी न लिप्यति जले चरन् ।
विमुक्तात्मा तथा योगी गुणदोषैर्न लिप्यते ॥")

**वारिचामरं**, क्ली, (वारिणश्चामरमिव तदाकारपुञ्जवत्त्वात् ।) शैवालः । इति त्रिकाण्डशेषः ॥

**वारिजं**, क्ली, (वारिणि जायते इति । जन + डः ।) द्रोणीलवणम् । गौरसुवर्णम् । पद्मम् । (यथा, अध्यात्मरामायणे । २ । ९ । २ ।
"स तत्र वज्राङ्कुशवारिजान्वित-
ध्वजादिचिह्नानि पदानि सर्व्वतः ॥")
लवङ्गम् । इति राजनिर्घण्टः ॥ (वारिजातमात्रे, त्रि । यथा, महाभारते । १ । ८१ । १४ ।
"केनास्यर्थेन नृपते ! इमं देशमुपागतः ।
जिघृक्षुर्व्वारिजं किञ्चिदथवा मृगलिसया ॥"
"वारिजं मीनंपद्मादि वेति ।" तट्टीकायां नीलकण्ठः ॥)

**वारिजः**, पुं, (वाराण जायते इति । जन + डः ।) शङ्खः । इति हेमचन्द्रः ॥ शम्बूकः । इति शब्दमाला ॥

**वारितस्करः**, पुं, (वारिणस्तस्करः । अलक्षितभावेन तदपहारकत्वात्तथात्वम् ।) मेघः । इति शब्दमाला ॥ वारिशोषणकर्त्तरि, त्रि । यथा,
"स्वरूपधारिणीं चेमामानिनाय निजाश्रमम् ।
संज्ञां भार्य्यां प्रीतिमतीं भास्करो वारितस्करः ॥"
इति मार्कण्डेयपुराणम् ॥

**वारित्रा**, स्त्री, (वारिणस्त्रायते इति । त्रै + डः । टाप् ।) छत्रम् । इति त्रिकाण्डशेषः ॥

**वारिदं**, क्ली, वाला । इति शब्दरत्नावली ॥

**वारिदः**, पुं, (वारि ददातीति । दा + "आतो-

**वारिनाथः**, पुं, (वारीणां नाथः ।) वरुणः । समुद्रः । मेघः । इति केचित् ॥

**वारिनिधिः**, पुं, (वारीणि निधीयन्ते अत्रेति । नि + धा + किः ।) समुद्रः । इति शब्दरत्नावली ॥ (यथा, राजतरङ्गिण्याम् । ३ । ७८ ।
"पाराद्वारनिधेः प्राप्ताः
काश्मीरेष्वधुनापि ये ।
राज्ञा यात्रासु निर्यान्ति ख्याता
वारिध्वजाः
पुरः ॥")

**वारिपथिकः**, त्रि, (वारिपथेन गच्छतीति । वारिपथ + "उत्तरपथेनाहृतञ्च ।" ५ । १ । ७७ ।
इत्यत्र "आहूतप्रकरणे
वारिजङ्गलकान्तार-
पूर्ब्बादुपसंख्यानम् ।" इति
वार्त्तिकसूत्रात् ठक् ।)
जलपथगामी । वारिपथं
गच्छतीत्यर्थे ष्णिकप्रत्ययेन निष्पन्नः ॥ (वारिपथेन आहूतम् ।
इति काशिका ॥)

**वारिपर्णी**, स्त्री, (वारिणि पर्णाण्यस्या इति ॥ वारिपर्ण + "पाककर्णपर्णपुष्पेति ।" ४ । १ । ६४ ।
इति ङीष् ।) कुम्भिका । इत्यमरः । १ । १० । ३८ ॥
अस्या गुणाः ।
"वारिपर्णी हिमा तिक्ता मृद्वी
स्वाद्वी सरा पटुः ।
दोषत्रयकरी रूक्षा
शोणितज्वरशोषकृत् ॥"
इति राजवल्लभः ॥

**वारिपालिका**, स्त्री, (वारीणि पालयति सूर्य्य-

"तस्य भक्षयतो हस्ताच्च्युतमेकमुदुम्बरम् ।
जघास शिशुमारोऽत्र वारिराशिजलाश्रयः ॥"
वारीणां राशिः । जलसमूहश्च । यथा, रघौ । ४ । ४६ ।
"शैलोपमः शैबलमञ्जरीणां
जालानि कर्षन्नुरसा स पश्चात् ।
पूर्व्वं तदुत्पीडितवारिराशिः
सरित्प्रवाहस्तटमुत्ससर्प ॥")

**वारिरुहं**, क्ली, (वारिणि रोहति जायते इति । रुह + "इगुपधज्ञाप्रीकिरः कः ।" ३ । १ । १३५ । इति कः ।) कमलम् । इति राजनिर्घण्टः ॥ (यथा, किरातार्ज्जुनीये । ५ । १३ ।
"विकचवारिरुहन्दधतं सरः
सकलहंसगणं शुचिमानसम् ।
शिवमगात्मजया च कृतेर्ष्यया
सकलहंसगणं शुचिमानसम् ॥")
जलजाते, त्रि ॥

**वारिलोमा**, [न्] पुं, (वारिणि लोमानि यस्य । यद्वा, वारि लोम्नि यस्य ।) वरुणः । इति जटाधरः ॥

**वारिवदनं**, क्ली, (वारियुक्तं वदनं यस्मात् । तत्सेवनेन मुखे जलनिस्रावात्तथात्तम् ।) प्राचीनामलकम् । इति भूरिप्रयोगः ॥

**वारिवरं**, क्ली, करमर्द्दकम् । इति जटाधरः ॥

**वारिवल्लभा**, स्त्री, (वारि वल्लभमस्याः । स्वजनकत्वात् ।) विदारी । इति राजनिर्घण्टः ॥

**वारिवासः**, पुं, (वारिसमीपे वासोऽस्य । यद्वा, वारि पर्य्युषितान्नादिजलं वासयति सुगन्धीकरोतीति । वास + अण् ।) शौण्डिकः । इति हेमचन्द्रः । ३ । ५६५ ॥

**वारिवाहः**, पुं, (वारि वहतीति । वह + "कर्म्मण्यण् ।" ३ । २ । १ । इति अण् ।) मेघः । मुस्ता । इत्यमरः ॥

**वारिवाहनः**, पुं, (वाह्यतीति । वाहि + ल्युः । वारीणां वाहनः ।) मेघः । इति शब्दरत्ना-

ऽनुपसर्गे कः ।” ३ । २ । ३ । इति कः ।)
मेघः । (यथा, मृच्छटिकनाटके । ५ अङ्के ।
“विद्युद्वारिदगर्ज्जितैः सचकिता तद्दर्शना-
काङ्क्षिणी ।
पादौ नूपुरलग्नकर्द्दमधरौ प्रक्षालयन्ती
स्थिता ॥”)
मुस्तकः । इत्यमरः ॥ (यथा, सुश्रुते चिकित्-
सितस्थाने । ३८ अध्याये ।
“रास्नारग्वधवर्षाभूकुकुक्रोशीरवारिदैः ।
त्रायमाणामृतारक्तापञ्चमूलविभीतकै ॥”
वारिदातरि, त्रि । यथा, मनौ । ४ । २२९ ।
“वारिदस्तृप्तिमाप्नोति दीर्घमायुर्हिरण्यदः ।
गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्त-
मम् ॥”)

**वारिधिः**, पुं, (वारीणि धीयन्ते अस्मिन्निति ।
धा + “कर्म्मण्यधिकरणे च ।” ३ । ३ । ९३ ।
इति किः ।) समुद्रः । इति शब्दरत्नावली ॥
(यथा, कथासरित्सागरे । १८ । ३०१ ।
“तद्बद्धोऽवततारैव वारिधौ स विदूषकः ।
न जात्ववसरे प्राप्ते सत्त्ववानवसीदति ॥”)

रश्म्यादिभ्यो रक्षतीति । पालि +
ण्वुल् । टाप् ।
अत इत्वम् ।) खमूलिका । इति
शब्दमाला ॥

**वारिप्रवाहः**, पुं, (वारिणः प्रवाहः ।) निर्झरः ।
इति शब्दमाला ॥

**वारिप्रश्नी**, स्त्री, (वारिजाता प्रश्नी ।) वारि-
पर्णी । इति शब्दमाला ॥

**वारिबदरा**, स्त्री, (वारिपरिपूर्णा बदरेव ।)
प्राचीनामलकम् । इति
त्रिकाण्डशेषः ॥

**वारिबालकं**, क्ली, (वारिणो बालकम् ।) ह्रीवे-
रम् । इति हारावली । १७८ ॥

**वारिभवं**, क्ली, (वारिणे नेत्रजलाय भवति प्रभव-
तीति । भू + अच् ।) श्रोतोऽञ्जनम् । इति
राजनिर्घण्टः ॥ (जलभवमात्रे, त्रि ॥)

**वारिमसिः**, पुं, (वारि मसिरिव श्यामताजनक
यस्य । सजलमेघस्यैव
कृष्णवर्णत्वात् तथात्वम् ।)
मेघः । इति त्रिकाण्डशेषः ॥

**वारिमुक्**, [च्] पुं, (वारि मुञ्चतीति । मुच् +
क्विप् ।) मेघः । इति
शब्दरत्नावली ॥ (यथा,
रघौ । ४ । ८६ ।
“स विश्वजितमाजह्रे यज्ञं
सर्व्वस्वदक्षिणम् ।
आदानं हि विसर्गाय सतां
वारिमुचामिव ॥”)

**वारिमूली**, स्त्री, (वारिणि मूलं यस्याः । “पाक-
वर्णपर्णेति ।” ४ । १ । ६४ । इति
ङीष् ।)
वारिपर्णी । इति शब्दरत्नावली ॥

वली ॥

**वारिशः**, पुं, (वारिणि सागरजले शेते इति ।
शी + डः ।) विष्णुः । इति त्रिकाण्डशेषः ॥

**वारिसम्भवं**, क्ली, (वारिप्रधानदेशेषु सम्भव उत्-
पत्तिर्यस्य ।) लवङ्गम् । सौवीराञ्जनम् । उशी-
रम् । इति राजनिर्घण्टः ॥

**वारिसम्भवः**, पुं, (वारिप्रधानस्थानेषु सम्भव उत्-
पत्तिर्यस्य ।) यावनालशरः । इति राज-
निर्घण्टः ॥ (वारिषु सम्भवोऽस्य । वारिजात-
मात्रे, त्रि । यथा, रामायणे । ५ । ६६ । ९ ।
“इतस्तु किं दुःखतरं यमिमं वारिसम्भवम् ।
मणिं पश्यामि सौमित्रे ! वैदेहीमागतं
विना ॥”)

**वारी**, स्त्री, (वार्य्यतेऽनयेति । वृ + णिच् + “वसि-
वपियजिराजिव्रजिसदिहनिराशिवादिवारिभ्य
इञ् ।” उणा० ४ । १२४ । इति इञ् । वा
ङीष् ।) गजबन्धिनी । (यथा, रघुवंशे । ५ । ४५ ।

| | | |
|---|---|---|
| | **वारिरथः**, पुं, (वारिषु रथ इव गमनसाधनत्वात् ।)<br>भेलकः । इति त्रिकाण्डशेषः ॥<br>**वारिराशिः**, पुं, (वारीणां राशयो यत्र ।)<br>समुद्रः । इति त्रिकाण्डशेषः ॥<br>(यथा, कथा-<br>सरित्सागरे । ६३ । ९८ । | |

"बभौ स भिन्दन् बृहतस्तरङ्गान्
वार्य्यर्गलाभङ्ग इव प्रवृत्तः ॥")
कलसी । इति धरणिः ॥

**वारीटः**, पुं, (वार्य्यां गजबन्धनभूम्यामेटतीति ।
इट् + कः ।) हस्ती । इति शब्दमाला ॥

**वारीशः**, पुं, (वारीणामीशः ।) समुद्रः । इति
हेमचन्द्रः ४ । १३९ ॥

**वारुः**, पुं, (वारयति रिपूनिति । वृ + णिच् +
बाहुलकात् उण् ।) विजयकुञ्जरः । इति
हारावली । १६० ॥

**वारुठः**, पुं, खट्टिः । अन्तशय्या । इति त्रिकाण्ड-
शेषः ॥

**वारुणं**, क्ली, (वरुणो देवतास्येति । वरुण +
अण् ।) जलम् । इति राजनिर्घण्टः ॥ (शत-
भिषानक्षत्रम् । यथा, तिथितत्त्वे ।
"वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी ।
गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समा ॥"
उपपुराणविशेषः । यथा, देवीभागवते । १ ।
३ । १५ ।
"वारुणं कालिकाख्यञ्च शाम्बं नन्दिकृतं
शुभम् ।
सौरं पाराशरप्रोक्तमादित्यं चातिबिस्तरम् ॥"
पुं, भारतस्य खण्डविशेषः । यथा, विष्णुपुराणे ।
२ । ३ । ६ ।
"इन्द्रद्वीपस्तथा सौम्यो गन्धर्व्वस्त्वथ बारुणः ॥")
वरुणसम्बन्धिनि, त्रि । यथा, --
"समुद्रं स समासाद्य
वारुणिर्भगवानृषिः ।
उवाच सहितान् देवानृषींश्चैव समागतान् ॥
अहं लोकहितार्थं वै पिबामि वरुणालयम् ॥"
वशिष्ठः । यथा, महाभारते । १ । ९९ । ७ ।
"स वारुणिस्तपस्तेपे तस्मिन् भरतसत्तम! ।
वने पुण्यकृतां श्रेष्ठः
स्वादुमूलफलोदके ॥"
विनतापुत्त्रभेदः । यथा, महाभारते ।
१ । ६५ । ४० ।
"तार्क्ष्यश्चारिष्टनेमिश्च तथैव गरुडारुणौ ।
आरुणिर्वारुणिश्चैव वैनतेयाः प्रकीर्त्तिताः ॥"
भृगुः । यथा, शतपथब्राह्मणे । ११ ।
६ । १ ।
"भृगुर्ह वै वारुणिः । वरुणं पितरं विद्ययाति-
मेने । तद्ध वरुणो विदाञ्चकार ॥")

**वारुणी**, स्त्री, (वरुणस्येयम् । "तस्येदम् ।" ४ ।
३ । १२० । इत्यण् । ङीप् ।) सुरा । (यथा,
मनौ । ११ । १४७ ।
"अज्ञानाद्वारुणीं पीत्वा संस्कारेणैव शुध्यति ।
मतिपूर्ब्बमनिर्द्देश्यं प्राणान्तिकमिति स्थितिः ॥"
मदिराधिष्ठात्री देवी । यथा, विष्णुपुराणे । १ ।
९ । ९३ ।
"किमेतदिति सिद्धानां दिवि चिन्तयतां ततः ।
बभूव वारुणी देवी मदाघूर्णितलोचना ॥"
शुभयोगसमायुक्ता शनौ शतभिषा यदि ।
महामहेति विख्याता त्रिकोटिकुलमुद्धरेत् ॥
अत्र संज्ञाविधेः सार्थकत्वाय निमित्तत्वेन मास-
पक्षतिथ्युल्लेखानन्तरं महावारुणीमहामहा-
वारुण्यावुल्लेखनीये । तेन चैत्रे मासि कृष्ण-
पक्षे त्रयोदश्यां तिथौ महावारुण्यां महा-
महावारुण्यां यथायथं प्रयोज्यम् । न चात्र ।
"स्नानं कुर्व्वन्ति या नार्य्यश्चन्द्रे शतभिषां गते ।
सप्तजन्म भवेयुस्ता दुर्भगा विधवा ध्रुवम् ॥"
इति ॥
"त्रयोदश्यां तृतीयायां दशम्याञ्च विशेषतः ।
शूद्रविट्क्षत्त्रियाः स्नानं नाचरेयुः कथञ्चन ॥"
इति प्रचेतोजावालिवचनाभ्यां स्त्रीणां शूद्रादी-
नाञ्च स्नाननिषेध इति वाच्यम् ।
"भोगाय क्रियते यत्तु स्नानं यादृच्छिकं नरैः ।
तन्निषिद्धं दशम्यादौ नित्यनैमित्तिके न तु ॥"
इति हेमाद्रिधृतवचनेन रागप्राप्तस्नान एव
निषेधात् नक्षत्रेऽपि तथा कल्पनात् । अत्र
त्रयोदश्यां पूर्णायां पूर्ब्बाह्णेतरकाले नक्षत्रादि-
सत्त्वे परदिने पूर्ब्बाह्णे तिथिनक्षत्रलाभेऽपि पूर्ब्ब-
दिन एव स्नानम् । रात्रावपि वारुण्यादिषु
गङ्गायां स्नानम् ।
"दिवा रात्रौ च सन्ध्यायां गङ्गायाञ्च प्रसङ्गतः ।
स्नात्वाश्वमेधजं पुण्यं गृहेऽप्युद्धृततज्जलैः ॥"
इति ब्रह्माण्डपुराणे सामान्यतः प्रतिप्रसवात् ।
इति तिथ्यादितत्त्वम् ॥ * ॥ वरुणप्रेरितवृन्दा-
वनस्थकदम्बतरुकोटरनिःसृतबलदेवपीतवारुणी ।
यथा, --
पराशर उवाच ।
"वने विचरतस्तस्य सह गोपैर्महात्मनः ।
मानुषच्छद्मरूपस्य शेषस्य धरणीधृतः ॥
निष्पादितोरुकार्य्यस्य कार्य्येणोर्व्वीविचारिणः ।
उपभोगार्थमत्यर्थं वरुणः प्राह वारुणीम् ॥
अभीष्टा सर्व्वदा यस्य मदिरे त्वं महौजसः ।
अनन्तस्योपभोगाय तस्य गच्छ मुदे शुभे ॥
इत्युक्ता वारुणी तेन सन्निधानमथाकरोत् ।
वृन्दावनवनोत्पन्नकदम्बतरुकोटरे ॥
विचरन् बलदेवोऽपि मदिरागन्धमुत्तमम् ।
आघ्राय मदिरातर्षमवापाथ पुरातनम् ॥
ततः कदम्बात् सहसा मद्यधारां स लाङ्गली ।

"पश्चिमे पुष्पदन्तञ्च वारुणञ्च प्रशस्यते ।
उत्तरेण तु भल्लाटं सौम्यञ्च शुभदं भवेत् ॥
उडुम्बरस्तथा याम्ये वारुणे पिप्पलः शुभः ।
प्लक्षश्चोत्तरतो धन्यो विपरीतास्त्वसिद्ध्वये ॥"
इति मात्स्ये २२९ अध्यायः ॥
(यथा च महाभारते । ३ । १०२ । १ ।
"समुद्रं ते समाश्रित्य वारुणं निधिमम्भसाम् ।
कालेयाः संप्रवर्त्तन्ते त्रैलोक्यस्य विनाशने ॥")

**वारुणकर्म्म**, क्ली, (वारुणं जलसम्बन्धि कर्म्म ।)

जलाशयखननादि । तस्य शुभाशुभकालादि यथा, --
यम उवाच ।
"सुदिने शुभनक्षत्रे चन्द्रताराबलैर्युते ।
सदृतुस्तु भवेद्यत्र काले तस्मिन् विधिः स्मृतः ॥
सदृतौ तु कृते कर्त्तुः संपूर्णस्तन्मनोरथः ।
कर्कटे पुत्त्रलाभस्तु सौख्यं तु मकरे भवेत् ॥
मीने यशोऽर्थलाभस्तु कुम्भे च सुबहूदकम् ।
वृषे च मिथुने वृद्धिर्वृश्चिके निर्ज्जलं भवेत् ॥
पितृतृप्तिस्तु कन्यायां तुलायां सत्यसङ्गतिः ।
सिंहे मेषे धनं नाशं जलस्य कुरुते द्विज ।
तथा चैतेषु लग्नेषु वारुणं कर्म्म नो दिशेत् ॥"
इति वह्निपुराणे वारुणारामप्रतिष्ठानामाध्यायः ॥

**वारुणिः**, पुं, (वरुणस्यापत्यं पुमान् । वरुण +

"वारुणी मदिराधिष्ठात्री देवी ।" इति तट्टीकायां श्रीधरस्वामी ॥ वरुणपत्नी । वारुणीवल्लभशब्ददर्शनात् ॥ यथा, महाभारते । २ । ९ । ६ ।
"यस्यामास्ते स वरुणो वारुण्या च समन्वितः ।
दिव्यरत्नाम्बरधरो दिव्याभरणभूषितः ॥"
नदीविशेषः । यथा, गो० रामायणे । २ । ७० । १२ ।
"पूर्ब्बेण वारुणीं तीर्त्वा कुरुक्षेत्रे सरस्वतीम् ।
सरांसि च प्रफुल्लानि नदीश्च विमलोदकाः ॥")
पश्चिमदिक् । इत्यमरः । १ । ३ । ५१ ॥ (यथा, नैषधचरिते । ४ । ६० ।
"वद विधुन्तुदमालि मदीरितैस्त्यजसि किं द्विजराजधिया विधुम् ।
किमु दिवं पुनरेति यदीदृशः पतित एष निषेव्य हि वारुणीम् ॥"
विद्याविशेषः । यथा, तैत्तिरीयोपनिषदि । ३ तृतीयवल्ल्याम् ६ षष्ठानुवाके ।
"आनन्देन जातानि जीवन्ति । आनन्दं प्रयत्यभिसंविशन्तीति । सैषा भार्गवी वारुणी विद्या ॥"
अश्वानां छायाविशेषः । यथा, अश्ववैद्यके । ३ । १७३ ।
"शुद्धस्फटिकसङ्काशा सुस्निग्धा चैव वारुणी ॥")
शतभिषानक्षत्रम् । इति हेमचन्द्रः ॥ गण्डदूर्व्वा । इति मेदिनी । णे, ६८ ॥
इन्द्रवारुणी ।

पतन्तीं वीक्ष्य मैत्रेय प्रययौ परमां मुदम् ॥
पपौ च गोपगोपीभिः समवेतो मुदान्वितः ।
उपगीयमानो ललितं गीतवाद्यविशारदैः ॥"
इति विष्णुपुराणे ५ अंशे २५ अध्यायः ॥

**वारुणीवल्लभः**, पुं, (वारुण्या वल्लभः । वारुणीवल्लभा यस्येति वा ।) वरुणः । इति शब्दमाला ॥

**वारुण्डः**, पुं, फणिनां राजा । इति मेदिनी । डे, ३३ ॥

तन्मते पवर्गीयादिः । किन्तु वृधातोः उण्डप्रत्ययनिष्पन्नत्वात् अन्तःस्थादौ लिखितः ॥

**वारुण्डः**, पुं क्ली, (वृ + उण्डः ।) नौसेकपात्रम् ।

नेत्रमलम् । कर्णमलम् । इति मेदिनी । ते, ३३ ॥

| | | |
|---|---|---|
| इञ् ।) अगस्त्यमुनिः । इति त्रिकाण्डशेषः ॥ (यथा, महाभारते । ३ । १०५ । १ । | दूर्व्वा । इति राजनिर्घण्टः ॥ शतभिषानक्षत्र-युक्तचैत्रकृष्णत्रयोदशी । यथा, स्कन्दपुराणे ।<br>“वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी ।<br>गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समा ॥”<br>वारुणं शतभिषा ।<br>“शनिवारसमायुक्ता सा महावारुणी स्मृता ।<br>गङ्गायां यदि लभ्येत कोटिसूर्य्यग्रहैः समा ॥ | |

**वारुण्डी**, स्त्री, (वारुण्ड + गौरादित्त्वात् ङीष् ।)

द्वारपिण्डी । इति मेदिनी । ते, ३३ ॥

**वारेन्द्री**, स्त्री, देशविशेषः । इति शब्दरत्नावली ॥

यथा, --
"प्राच्यां मागधशोणौ च वारेन्द्रीगौडराडकाः ।
वर्द्धमानतमोलिप्तप्राग्ज्योतिषोदयाद्रयः ॥"
इति ज्योतिस्तत्त्वम् ॥
अधुना राजशाहीनामकद्देशैकदेशः ॥

**वार्क्ष्यं**, क्ली, (वृक्षाणां समूह इति । वृक्ष + "तस्य

समूहः ।" ४ । २ । ३७ । इति अण् ।) वनम् ।
इति हेमचन्द्रः ॥ (वृक्षस्येदमित्यण् ।) वृक्ष-
सम्बन्धिनि, त्रि । यथा, --
"वार्क्ष्यं वित्तप्रदं लिङ्गं स्फाटिकं सर्व्वकामदम्
॥"
इति तिथ्यादितत्त्वम् ॥

**वार्क्षी**, स्त्री, (वृक्षस्यापत्यं स्त्री । वृक्ष + अण् ।

ङीप् ।) स्त्रीविशेषः । (यथा, महाभारते ।
१ । १९७ । १५ ।
"तथैव मुनिजा वार्क्षी तपोभिर्भावितात्मनः ।
सङ्गताभूद्दश भ्रातृन्नेकनाम्नः प्रचेतसः ॥"
इयं हि मारिषापरनाम्नी कण्डुमुनेरौरसात्
प्रम्लोचागर्भगता सती पश्चात् वृक्षेभ्य उत्पन्ना ।
तत्कथा यथा, विष्णुपुराणे । १ । १५ । १ --
५३ ।
पराशर उवाच ।
"तपश्चरत्सु पृथिवीं प्रचेतःसु महीरुहाः ।
अरक्ष्यमाणामावब्रुर्ब्बभूवाथ प्रजाक्षयः ॥
नाशकन्मारुतो वातुं वृतं खमभवद् द्रुमैः ।
दशवर्षसहस्राणि न शेकुश्चेष्टितुं प्रजाः ॥
तद् दृष्ट्वा जलनिष्क्रान्ताः सर्व्वे क्रुद्धाः प्रचेतसः
।
मुखेभ्यो वायुमग्निञ्च तेऽसृजन् जातमन्यवः ॥
उन्मूलानथ तान् वृक्षान् कृत्वा वायुरशोषयत् ॥
तानग्निरदहद् घोरस्तत्राभूद् द्रुमसंक्षयः ॥
द्रुमक्षयमथो दृष्ट्वा किञ्चिच्छिष्टेषु शाखिषु ।
उपगम्याब्रवीदेतान् राजा सोमः प्रजापतीन् ॥
कोपं यच्छत राजानः शृणुध्वञ्च वचो मम ।
सन्धानं वः करिष्यामि सह क्षितिरुहैरहम् ॥

दिनानि कतिचिद् भद्रे
स्थीयतामित्यभाषत ॥
एवमुक्ता ततस्तेन सार्द्धं वर्षशतं पुनः ।
बुभुजे विषयांस्तन्वी तेन सार्द्धं
महात्मना ॥
अनुज्ञां देहि भगवन् व्रजामि
त्रिदिवालयम् ।
उक्तस्तयेति स मुनिः
स्थीयतामित्यभाषत ॥
पुनर्गते वर्षशते साधिके सा शुभानना ।
यामीत्याह दिवं ब्रह्मन्
प्रणयस्मितशोभनम् ॥
उक्तस्तयैवं स मुनिरुपगुह्यायतेक्षणाम्
।
प्राहास्यतां क्षणं सुभ्रु चिरं कालं गमि-
ष्यसि ॥
तच्छापभीता सुश्रोणी सह तेनर्षिणा
पुनः ।
शतद्वयं किञ्चिदूनं वर्षाणामन्वतिष्टत ॥
गमनाय महाभागो देवराजनिवेशनम् ।
प्रोक्तः प्रोक्तस्तया तन्व्या
स्थीयतामित्यभाषत ॥
तं सा शापभयाद् भीता दाक्षिण्येन च
दक्षिणा ।
प्रोक्ता प्रणयभङ्गार्त्तिव्दिनी न जहौ
मुनिम् ॥
तया च रमतस्तस्य महर्षेस्तदहर्निशम्
।
नवं नवमभूत् प्रेम मन्मथाविष्टचेतसः ॥
एकदा तु त्वरायुक्तो
निश्चक्रामोटजान्मुनिः ।
निष्क्रामन्तञ्च कुत्रेति गम्यते प्राह सा
शुभा ॥
इत्युक्तः स तया प्राह परिवृत्तमहः शुभे
।
सन्ध्योपास्तिं करिष्यामि
क्रियालोपोऽन्यथा
भवेत् ॥
ततः प्रहस्य मुदिता तं सा प्राह
महामुनिम् ।

मुनिरुवाच ।
तपांसि मम नष्टानि हतं ब्रह्मविदां धनम् ।
हतो विवेकः केनापि योषिन्मोहाय निर्म्मिता
॥
ऊर्म्मिषत्कातिगं ब्रह्म ज्ञेयमात्मजयेन मे ।
मतिरेषा हृता येन धिक् तं काममहाग्रहम् ॥
व्रतानि वेदविद्याप्तिकारणान्यखिलानिच ।
नरकग्राममार्गेण सङ्गेनापहृतानि मे ॥
विनिन्द्ये त्थं स धर्म्मज्ञः
स्वयमात्मानमात्मना ।
तामप्सरसमासीनामिदंवचनमब्रवीत् ॥
गच्छ पापे यथाकामं यत् कार्य्यं तत्कृतं
त्वया ।
देवराजस्य मत्क्षोभं कुर्व्वन्त्या भावचेष्टितैः
॥
न त्वां करोम्यहं भस्म क्रोधतीव्रेण वह्निना ।
सतां साप्तपदं मैत्रमुषितोऽहं त्वया सह ॥
अथवा तव को दोषः किं वा कुप्याम्यहं तव
ममैव दोषो नितरां येनाहमजितेन्द्रियः ॥
यया शक्रप्रियार्थिन्या कृतो मे तपसो व्ययः
।
त्वया धिक् तां महामोहमञ्जूषां
सुजुगुप्सिताम् ॥
सोम उवाच ।
यावदित्थं स विप्रर्षिस्तां ब्रवीति सुमध्यमाम्
।
तावद् गलत्स्वेदजला सा बभूवातिवेपथुः ॥
प्रवेपमाणां सततं स्विन्नगात्रलतां सतीम् ।
गच्छ गच्छेतिंसक्रोधं उवाच मुनिसत्तमः ॥
सा तु निर्भत्सिता तेन विनिष्क्रम्य
तदाश्रमात् ।
आकाशगामिनी स्वेदं ममार्ज्ज तरुपल्लवैः ॥
वृक्षाद् वृक्षं ययौ बाला तदग्रारुणपल्लवैः ।
निर्म्मार्ज्जमाना गात्राणि गलत्स्वदजलानि
वै ॥
ऋषिणा यस्तदा गर्भस्तस्या देहे समाहितः
।
निर्ज्जगाम स रोमाच्च स्वेदरूपी तदङ्गतः
॥
तं वृक्षा जगृहुर्गर्भं एकं चक्रे तु मारुतः ।

रत्नभूता च कन्येयं वार्क्षेयी वरवर्णिनी ।
भविष्यं जानता पूर्ब्बं मया गोभिर्व्विवर्द्धिता ॥
मारिषा नाम नाम्नैषा वृक्षाणामिति निर्म्मिता ।
भार्य्या वोऽस्तु महाभागा ध्रुवं वंशविवर्द्धिनी ॥
युष्माकं तेजसोऽर्द्धेन मम चार्द्धेन तेजसः ।
अस्यामुत्पत्स्यते विद्वान् दक्षो नाम प्रजापतिः ॥
मम चांशेन संयुक्तो युष्मत्तेजोमयेन वै ।
अग्निनाग्निसमो भूयः प्रजाः संवर्द्धयिष्यति ॥
कण्डुर्नाम मुनिः पूर्व्वमासीद् वेदविदां वरः ।
सुरम्ये गोमतीतीरे स तेपे परमं तपः ॥
तत्क्षोभाय सुरेन्द्रेण प्रम्लोचाख्या वराप्सराः ।
प्रयुक्ता क्षोभयामास तमृषिं सा शुचिस्मिता ॥
क्षोभितः स तया सार्द्धं वर्षाणामधिकं शतम् ।
अतिष्ठन्मन्दरद्रोण्यां विषयासक्तमानसः ॥
सा तं प्राह महात्मानं गन्तुमिच्छाम्यहं दिवम् ।
प्रसादसुमुखो ब्रह्मन् अनुज्ञां दातुमर्हसि ॥
तयैवमुक्तः स मुनिस्तस्यामासक्तमानसः ।

किमद्य सर्व्वधर्म्मज्ञ परिवृत्तमहस्तव ॥
बहूनां विप्र वर्षाणां परिणाममहस्तव ।
गतमेतन्न कुरुते विस्मयं कस्य
कथ्यताम् ॥
मुनिरुवाच ।
प्रातस्त्वमागता भद्रे नदीतीरमिदं
शुभम् ।
मया दृष्टासि तन्वङ्गि प्रविष्टा च
ममाश्रमम् ॥
इयञ्च वर्त्तते सन्ध्या परिणाममहर्गतम्
।
उपहासः किमर्थोऽयं सद्भावः कथ्यतां
मम ॥
प्रम्लोचोवाच ।
प्रत्यूषस्यागता ब्रह्मन् सत्यमेतन्न ते
मृषा ।
किन्त्वद्य तस्य कालस्य
गतान्यब्दशतानि ते ॥
सोम उवाच ।
ततः ससाध्वसो विप्रस्तां
पप्रच्छायतेक्षणाम् ।
कथ्यतां भीरु कः कालस्त्वया मे
रमतः सह ॥
प्रम्लोचोवाच ।
सप्तोत्तराण्यतीतानि नववर्षशतानि ते ।
मासाश्च षट् तथैवान्यत् समतीतं
दिनत्रयम् ॥
ऋषिरुवाच ।
सत्यं भीरु वदस्येतत् परिहासोऽथ वा
शुभे ।
दिनमेकमहं मन्ये त्वया
सार्द्धमिहासितम् ॥
प्रम्लोचोवाच ।
वदिष्याम्यनृतं ब्रह्मन् कथमत्र
तवान्तिके ।
विशेषेणाद्य भवता पृष्टा मार्गानुवर्त्तिना
॥
सोम उवाच ।
निशम्य तद् वचः सत्यं स मुनिर्नृ
पनन्दनाः ।
धिङ्मां धिङ्मामतीवेत्थं
निनिन्दात्मानमा-

मया चाप्यायितो गोभिः स तदा ववृधे शनैः
॥
वृक्षाग्रगर्भसंभूता मारिषाख्या वरानना ।
तां प्रदास्यन्ति वो वृक्षाः कोप एष प्रशान्ध-
ताम् ॥
कण्डोरपत्यमेवं सा वृक्षेभ्यश्च समुद्गता ।
ममापत्यं तथा वायोः प्रम्लोचा तनया च सा
॥
स चापि भगवान् कण्डुः क्षीणे तपसि
सत्तमः ।
पुरुषोत्तमाख्यं मैत्रेय विष्णोरायतनं ययौ ॥
तत्रैकाग्रमतिर्भूत्वा चकाराराधनं हरेः ।
ब्रह्मपारमयं कुर्व्वन् जपमेकाग्रमानसः ।
ऊर्द्ध्वबाहुर्महायोगी स्थित्वासौ
भूपनन्दनाः ॥”)

**वार्च्चः**, पुं, हंसः । वारि चरतीत्यर्थे डप्रत्ययेन
निष्पन्नः । इति मुग्धबोधव्याकरणम् ॥

**वार्णिकः**, त्रि, (वर्णलेखनं शिल्पमस्य । वर्ण +
ठञ् ।) लेखकः । इति शब्दमाला ॥

**वार्त्तं**, क्ली, असारम् । आरोग्यम् । इत्यमरः ।
३ । ३ । ७५ ॥

**वार्त्तः**, त्रि, (वृत्तिरस्त्यस्येति । “प्रज्ञाश्रद्धार्च्चा-
वृत्तिभ्यो णः ।” ५ । २ । १०१ । इति णः
।)
निरामयः । इत्यमरः । २ । ६ । ५७ ॥
वृत्ति-
शाली । इत्यजयपालः ॥

**वार्त्तकः**, पुं, पक्षिविशेषः । वटेर इति भाषा ।
यथा, --

"वार्त्ताको वार्त्तकश्चित्रस्ततोऽन्यावर्त्तका स्मृता ।
वर्त्तकोऽग्निकरः शीतो ज्वरदोषत्रयापहः ।
सुरुच्यः शुक्रदो बल्यो वर्त्तकाल्पगुणा ततः ॥"
इति भावप्रकाशः ॥

**वार्त्ता**, स्त्री, (वृत्तिरस्यां अस्तीति । "प्रज्ञाश्रद्धा-
र्च्चावृत्तिभ्यो णः ।" ५ । २ । १०१ । इति णः ।
ततष्टाप् ।) दुर्गा । यथा, --
"पश्वादिपालनाद्देवी कृषिकर्म्मान्तिकारणात् ।
वर्त्तनाद्धारणाद्वापि वार्त्ता सा एव गीयते ॥"
इति देवीपुराणे ४५ अध्यायः ॥
वृत्तिः । जनश्रुतिः । इत्यमरः । १ । ६ । ६ ॥
उदन्तः । (यथा, मोहमुद्गरे । ८ ।
"यावद्वित्तोपार्ज्जनशक्तः
तावन्निजपरिवारो रक्तः ।
तदनुच जरया जर्जरदेहे
वार्त्तां कोऽपि न पृच्छति गेहे ॥")
वातिङ्गणः । कृष्यादि । इति मेदिनी । ते, ५६ ॥
(यथा, मनौ । ९ । ३२६ ।
"वैश्यस्तु कृतसंस्कारः कृत्वा दारपरिग्रहम् ।
वार्त्तायां नित्ययुक्तः स्यात् पशूनाञ्चैव रक्षणे ॥"
वार्त्तेयं चतुर्विधा । यथा, भागवते । १० । २४ । २१ ।
"कृषिबाणिज्यगोरक्षाकुसीदं तुर्य्यमुच्यते ।
वार्त्ता चतुर्विधा तत्र वयं गोवृत्तयोऽनिशम् ॥")

**वार्त्ताकः**, पुं, (वर्त्ततेऽनेनेति । वृत् + "वृतेर्वृद्धिश्च ।"
उणा० ३ । ७९ । इति काकुः । "बाहु-
लकात् उकारस्यात्त्वे वार्त्ताकवार्त्ताक्यौ ।"
"अग्निप्रदा मारुतनाशिनी च
शुक्रप्रदा शोणितवर्द्धिनी च ।
हृल्लासकासारुचिनाशिनीच
वार्त्ताकुरेषा गुणसप्तयुक्ता ॥
सा बाला कफवातघ्नी पृक्वा सक्षारपित्तला ।
सदाफला त्रिदोषघ्नी रक्तपित्तप्रसादनी ॥
अङ्गारपक्वा वार्त्ताकुः किञ्चित्पित्तकरी मता ।
कफमेदोऽनिलहरा सरा लघुतरा परा ॥"
इति राजवल्लभः ॥
अन्यच्च ।
"वृन्ताकं स्वादु तीक्ष्णोष्णं कटुपाकमपित्तलम् ।
ज्वरवातवलासघ्नं दीपनं शुक्रलं लघु ॥
तद्बालं कफपित्तघ्नं वृद्धं पित्तकरं गुरु ।
वृन्ताकं पित्तलं किञ्चिदङ्गारोपरिपाचितम् ॥
कफमेदोऽनिलामघ्नमत्यन्तं लघु दीपनम् ।
तदेव हि गुरु स्निग्धं सतैलं लवणान्वितम् ॥
अपरं श्वेतवृन्ताकं कुक्कुटाण्डसमं भवेत् ।
तदर्शःसु विशेषेण हितं हीनञ्च पूर्ब्बतः ॥"
इति भावप्रकाशः ॥

**वार्त्ताकुः**, पुं, (वृत् + काकुः ।) वार्त्ताकी । इति
त्रिकाण्डशेषः ॥

**वार्त्तायनः**, पुं, (वार्त्तानामयनमनेनेति ।) प्रवृत्तिज्ञः ।
तत्पर्य्यायः । हेरिकः २ गूढपूरुषः ३ प्रणिधिः ४
यथार्हवर्णः ५ अवसर्पः ६ मन्त्रवित् ७ चरः ८
स्पशः ९ चारः १० । इति हेमचन्द्रः । ३ । ३९८ ॥

**वार्त्तावहः**, पुं, धान्यतण्डुलादे वार्त्तां वहति यः ।
पसारी इति भाषा । तत्पर्य्यायः । वैवधिकः २ ।
इत्यमरभरतौ ॥ वार्त्तोवहः ३ । इति शब्द-
रत्नावली ॥ संवादवाहके, त्रि ॥

**वार्त्तिकः**, पुं, (वृत्तिं वेदेति । वृत्ति + उक्थादित्वात्
जयन्तः । वृत्रघ्नसम्बन्धिनि, त्रि ॥ (यथा, भाग-
वते । ६ । १२ । ३४ ।
"तदा च खे दुन्दुभयो विनेदु-
र्गन्धर्वसिद्धाः समहर्षिसङ्घाः ।
वार्त्रघ्नलिङ्गैस्तमभिष्टुवाना
मन्त्रैर्मुदा कुसुमैरभ्यवर्षन् ॥")

**वार्द्दरं**, क्ली, कृष्णलावीजम् । दक्षिणावर्त्तशङ्खः ।
काकचिञ्चा । भारती । इति मेदिनी । रे, २११ ॥
कृमिजम् । जलम् । आम्रबीजम् । इति विश्वः ॥

**वार्द्दलं**, क्ली, (वार्भिः सलिलैर्दलतीति । दल +
अच् । सदा मेघाच्छन्नवृष्टिपातात्तथात्वम् ।)
दुर्द्दिनम् । इति मेदिनी । ले, ११९ ॥ तन्मते
पवर्गीयादिः ॥ (वादल इति भाषा ॥)

**वार्द्दलः**, पुं, (वार्दल्यतेऽत्रेति । दल + "पुंसि
संज्ञायां घः प्रायेण ।" ३ । ३ । ११८ । इति
घः ।) मेलानन्दा । सा तु मस्याधारः । इति
मेदिनी । ले, ११९ ॥

**वार्द्धकं**, क्ली, (वृद्धाणां समूहः । "गोत्रोक्षोष्ट्रोर-
भ्रेति ।" ४ । २ । ३९ । इत्यत्र "वृद्धाच्चेति ।"
काशिकोक्तेः वुञ् ।) वृद्धसंघातः । (वृद्धस्य
भावः कर्म्म वेति । मनोज्ञादित्वात् वुञ् ।)
वृद्धस्य भावः । वृद्धस्य कर्म्म । इति मेदिनी ।
के, ५६ ॥ (यथा, मार्कण्डेयपुराणे । १०९ । २४ ।
"बाल्ये बालक्रिया पूर्व्वं तद्वत् कौमारके च या ।
यौवने चापि या योग्या वार्द्धके वनसंश्रया ॥"

इत्युज्ज्वलदत्तोक्त्या सिद्धम् ।) वार्त्ताकुः । इति
त्रिकाण्डशेषः ॥ वार्त्तकपक्षी । इति भाव-
प्रकाशः ॥

**वार्त्ताकी**, [न्] पुं, वार्त्ताकुः । इत्यमरटीकायां
भरतः ॥

**वार्त्ताकी**, स्त्री, बृहती । इति भावप्रकाशः ॥
वार्त्ताकुः । इत्यमरः । २ । ४ । ११४ ॥

**वार्त्ताकुः**, स्त्री, (वर्त्तते इति । वृत् + “वृते-
र्वृद्धिश्च ।” उणा० ३ । ७९ । इति काकुः ।)
स्वनामख्यातफलवृक्षः । वेगुन इति भाषा ॥
तत्पर्य्यायः । हिङ्गुली २ सिंही ३ भण्टाकी ४
दुष्प्रधर्षिणी ५ वार्त्ताकी ६ वार्त्ता ७ वाति-
ङ्गणः ८ वार्त्ताकः ९ शाकविल्वः १० राज-
कुष्माण्डः ११ । इति जटाधरः ॥ वार्त्तिकः १२
वातिगमः १३ वृन्ताकः १४ वङ्गणः १५
अङ्गणः १६ । इति शब्दरत्नावली ॥ कण्ट-
वृन्ताकी १७ कण्टालुः १८ कण्टपत्रिका १९
निद्रालुः २० मांसकफला २१ वृन्ताकी २२
महोटिका २३ चित्रफला २४ कण्टकिनी २५
महती २६ कट्फला २७ मिश्रवर्णफला २८
नीलफला २९ रक्तफला ३० शाकश्रेष्ठा ३१
वृत्तफला ३२ नृपप्रियफला ३३ । अस्या गुणाः
कटुत्वम् । रुच्यत्वम् । मधुरत्वम् । पित्तना-
शित्वम् । बलपुष्टिकारित्वम् । हृद्यत्वम् । गुरु-
ठक् ।) प्रवृत्तिज्ञः । चरः । इति त्रिकाण्ड-
शेषः ॥ (यथा, कथासरित्सागरे । ३४ । ७६ ।
“दुर्गतो वार्त्तिकजनो लोभात् किं नाम ना
चरेत् ॥”
(वार्त्ता कृष्यादिस्तत्र साधुः । ठक् ।) वैश्यः ।
(वार्त्ते आरोग्ये साधुरिति । ठक् ।) वर्त्तिक-
पक्षी । इति राजनिर्घण्टः ॥ वार्त्ताकी । इति
शब्दरत्नावली ॥ (वृत्तौ साधुरिति । वृत्ति +
“कथादिभ्यष्ठक् ।” ४ । ४ । १०२ । इति ठक् ।
सूत्रवृत्तिनिपुणे, त्रि ॥)

**वार्त्तिकं**, क्ली, (वृत्तिर्ग्रन्थसूत्रविवृतिः । तत्र
साधुः । वृत्ति + “कथादिभ्यष्ठक् ।” ४ । ४ । १०२ ।
इति ठक् ।) उक्तानुक्तदुरुक्तार्थव्यक्तीकारक-
ग्रन्थः । यथा, --
“उक्तानुक्तदुरुक्तार्थचिन्ताकारि तु वार्त्तिकम् ॥”
इति हेमचन्द्रः ॥

**वार्त्तिका**, स्त्री, (वार्त्तिक + टाप् ।) पक्षिविशेषः ।
वटेर इति भाषा । तत्पर्य्यायः । विष्णुलिङ्गी २ ।
इति हारावली ॥

**वार्त्रघ्नः**, पुं, (वृत्रघ्न इन्द्रस्यापत्यं पुमान् । वृत्रहन्
+ अण् ।) अर्ज्जुनः । इति त्रिकाण्डशेषः ॥
त्रि, वृद्धः । यथा, नैषधे । १ । ७७ ।
“फलानि पुष्पाणि च पल्लवे करे
वयोऽतिपातोद्गतवातवेपिते ।
स्थितैः समादाय महर्षिवार्द्धकाद्
वने तदातिथ्यमशिक्षि शाखिभिः ॥”
“महर्षीणां मुनिश्रेष्ठानां मध्ये यो वार्द्धको वृद्ध-
स्तस्मात् । त्रिषु स्याद्वार्द्धको वृद्धे क्लीवं तद्भाव-
संघयोरिति वलः ।” इति तट्टीका ॥)

**वार्द्धक्यं**, क्ली, (वार्द्धकमेव । वार्द्धक + चतुर्वर्णादि-
त्वात् स्वार्थे ष्यञ् ।) बृद्धावस्था । तत्पर्य्यायः ।
वार्द्धकम् २ वृद्धत्वम् ३ स्थाविरम् ४ । इति
जटाधरः ॥ (यथा, महाभारते । ९ । ५२ । ८ ।
“आत्मानं मन्यमानापि कृतकृत्यं श्रमान्विता ।
वार्द्धक्येन च राजेन्द्र ! तपसा चैव कर्षिता ॥”)

**वार्द्धिः**, पुं, (वारि जलानि धीयन्तेऽत्रेति । धा +
किः ।) समुद्रः । इति त्रिकाण्डशेषः ॥ (यथा,
देवीभागवते । ८ । २० । ३१ ।
“सोऽनन्तो भगवान् देवोऽनन्तसत्त्वो महाशयः ।
अनन्तगुणवार्द्धिश्च आदिदेवो महाद्युतिः ॥”)

**वार्द्धिभवं**, क्ली, (वार्द्धौ समुद्रे भवतीति । भू +
अच् ।) द्रोणीलवणम् । इति राजनिर्घण्टः ॥

**वार्द्धुषिः**, पुं, (वार्द्धुषिकः । पृषोदरादित्वात्
कलोपः ।) वृद्ध्याजीवः । इत्यमरः । २ । ९ । ५ ॥
(यथा, मनौ । ३ । १५३ ।
“प्रेष्यो ग्रामस्य राज्ञश्च कुनखी श्यावदन्तकः ।
प्रतिरोद्धा गुरोश्चैव त्यक्ताग्निर्वार्द्धुषिस्तथा ॥”)

| | | |
|---|---|---|
| त्वम् । वातेषु निन्दितत्वञ्च । इति राजनिर्घण्टः ॥<br>अपि च । | | |

**वार्द्धुषिकः**, पुं, (वृद्ध्यर्थं द्रव्यं वृद्धिः तां प्रयच्छतीति ।
"प्रयच्छति गर्ह्यम् ।" ४ । ४ । ३० ।
इति ठक् ।
"वृद्धेर्वृधुषिभावो वक्तव्यः ।" इति
वार्त्तिकोक्तेः
वृधुषिभावः ।) वृद्धिजीवी । लभ्यभुक् ।
वाडि-
खोर इति सुदखोर इति च भाषा ।
तत्प-
र्य्यायः । कुसीदकः २ वृद्ध्याजीवः ३
वार्द्धुषिः ४ ।
इत्यमरः ॥ कुसीदः ५ कुसीदिकः ६ ।
इति
शब्दरत्नावली ॥ तस्य लक्षणं यथा, --
"समर्घं धान्यमादाय महार्घं यः
प्रयच्छति ।
स वै वार्द्धुषिको नाम
हव्यकव्यबहिष्कृतः ॥"
इति स्मृतिः ॥
तस्य वृद्धिग्रहणनियमो यथा, मनुः ।
"अशीतिभागं गृह्णीयात्
मासाद्वार्द्धुषिकः
शतात् ।
द्विकं शतं वा गृह्णीयात् सतां
धर्म्ममनुस्मरन् ॥
द्विकं शतञ्च गृह्णानो न
भवत्यर्थकिल्विषी ।
शतकार्षापणेऽशीतिभागं विंशतिकाः
पणाः ॥"
द्विकं पुराणद्वयम् । एवंविधं
नियममतिक्रम्य
अनापदि स्वयमन्यद्वारा वा
स्वाच्छन्द्येन यो
व्यवहरति तस्यैव प्रायश्चित्तम् ।
आपदि तु
स्वयं करणे नियमातिक्रमे च न दोषः ।
इति
प्रायश्चित्तविवेकः । इत्याह्निकतत्त्वम्
॥

दौहित्रामिषमन्यच्च यद्दत्तं तत् कुलोद्भवैः ॥
अनन्तां तां प्रयच्छन्ति तृप्तिं गौरीसुतस्तथा ।
पितॄणां नात्र सन्देहो गयाश्राद्धं च पुत्रक ॥"
इति मार्कण्डेयपुराणे श्राद्धकल्पाध्यायः ॥
"त्रिविधं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् ।
वाद्‌र्ध्रीणसन्तु तं प्राहुर्याज्ञिकाः श्राद्धकर्म्मणि ॥
रक्तपादो रक्तशिरा रक्तचञ्चुर्विहङ्गमः ।
कृष्णवर्णेन च तथा पक्षी वार्ध्रीणसो मतः ॥"
लौहं रक्तच्छागः ।
"दौहित्रं खड्गमित्याहुरपत्यं दुहितुस्तिलाः ।
कपिलाया घृतञ्चैव दौहित्रमिति चोच्यते ॥"
गौरीसुतः दशवर्षोढाजः । इति तट्टीका ॥

**वाद्‌र्ध्री(ण)नसः**, पुं, वाद्‌र्ध्रीव नासिका यस्य । नासाया
नसादेशः ।) गण्डकः । गण्डार इति भाषा ।
यथा, --
"वाद्‌र्ध्रीनसस्त्वेकचरो गणोत्साहश्च गण्डकः ॥"
इति त्रिकाण्डशेषः ॥

**वार्भटः**, पुं, (वारि जले भट इव ।) कुम्भीरः ।
इति त्रिकाण्डशेषः ॥

**वार्म्मणं**, क्ली, (वर्म्मणां समूहः । वर्म्मन् + "भिक्षा-
दिभ्योऽण् ।" ४ । २ । ३८ । इति अण् ।)
वर्म्मसमूहः ।
इत्यमरटीकायां सारसुन्दरी ॥

**वार्म्मिणं**, क्ली, (वर्म्मिणां समूहः । वर्म्मिन् + अण् ।)
वर्म्मिसमूहः । इत्यमरटीकायां स्वामी ॥

**वार्म्मुक्**, [च्] पुं, (वाः वारि मुञ्चतीति । मुच् +
क्विप् ।) मेघः । इति शब्दरत्नावली ॥ (यथा,
भागवते । १० । २४ । ९ ।
"तं तात ! वयमन्ये च वार्म्मुचां पतिमीश्वरम् ।
द्रव्यैस्तद्रेतसा सिद्धैर्यजन्ते क्रतुभिर्नराः ॥")

**वार्य्युद्भवं**, क्ली, (वारिणि उद्भव उत्पत्तिर्यस्य ।)
पद्मम् । इति धनञ्जयः ॥ जलजे, त्रि ॥

**वार्य्यं**, त्रि, (वारि + ष्यञ् ।) वारिसम्बन्धि । वारि-
शब्दात् ष्यप्रत्ययेन निष्पन्नम् ॥ (वृङ् सम्भक्तौ
+ "ऋहलोर्ण्यत् ।" ३ । १ । १२४ । इति ण्यत् ।

**वार्षभाणवी**, स्त्री, (वृषभाणोरपत्यं स्त्री । वृष-
भाणु + अण् ।) वृषभाणुकन्या । श्रीराधा
।
यथा, --
"यथा परात्परः कृष्णस्तथेयं वार्षभाणवी
॥"
इति पाद्मोत्तरखण्डे ६७ अध्यायः ॥

**वार्षिकं**, क्ली, (वर्षासु जातमिति । वर्षा + "वर्षाभ्य-
ष्ठक् ।" ४ । ३ । १८ । इति ठक् ।)
त्राय-
माणा । इति मेदिनी । के, १५६ ॥

**वार्षिकः**, त्रि, (वर्षे भवः । वर्ष + "कालात् ठञ् ।"
४ । ३ । ११ । इति ठञ् ।) वर्षभवः ।
वात्स-
रिकः । इति मेदिनी । के, १५६ ॥
(यथा,
भागवते । ११ । ११ । ३७ ।
"यात्रावलिविधानञ्च सर्व्ववार्षिकपर्व्वसु
॥")
यथाच ।
"शरत्काले महापूजा क्रियते या च
वार्षिकी ।
तस्यां ममैतन्माहात्म्यं पठितव्यं
समाहितैः ॥"
इति मार्कण्डेयपुराणम् ॥
वर्षाकालोद्भवश्च ॥ (यथा,
अध्यात्मरामायणे ।
४ । ४ । १ ।
"तत्र वार्षिकदिनानि राघवो
लीलया मनिगुहासु सञ्चरन् ।
पक्वमूलफलभोगतोषितो
लक्ष्मणेन सहितोऽवसत् सुखम् ॥")

**वार्षिकी**, स्त्री, (वर्षासु भवा । वर्ष + "वर्षाभ्य-
ष्टक् ।" ४ । ३ । १८ । इति ठक् । ङीष्
।) त्राय-
माणा । इति राजनिर्घण्टः ॥

**वार्षिला**, स्त्री, (वार्जाता शिला । "शाकपार्थि-

**वार्द्धुष्यं**, क्ली, (वार्द्धुषेर्भावः । वार्द्धुषि + ष्यञ् ।)

धान्यवर्द्धनम् । इति त्रिकाण्डशेषः ॥
(यथा,
मनौ । ११ । ६२ ।
"कन्याया दूषणञ्चैव वार्द्धुष्यं
व्रतलोपनम् ।
तडागारामदाराणामपत्यस्यच विक्रयः
॥")

**वार्द्धेयं** क्ली, (वार्द्धेः समुद्रस्येदमिति । वार्द्धि +

ढञ् ।) द्रोणीलवणम् । इति
राजनिर्घण्टः ॥

**वाद्ध्रीं**, क्ली, स्त्री, (वद्ध्र्यै इदमिति । वद्ध्री + "चर्म्मणो

ऽञ् ।" ५ । १ । १५ । इति अञ् ।)
चर्म्मरज्जुः ।
इत्यमरटीकायां रायमुकुटः ॥

**वाद्ध्रीणसः**, पुं, (वाद्ध्रीव नासिकास्येति । "अञ्

नासिकायाः संज्ञायां नसं चास्थूलात्
।" ५ ।
४ । ११८ । इति अच् नसादेशश्च ।
"पूर्ब्ब-
पदात् संज्ञायामगः ।" ८ । ४ । ३ ।
इति
णत्वम् ।) पशुविशेषः । यथा, --
"त्रिप्लवं त्विन्द्रियक्षीणं श्वेतं
वृद्धमजापतिम् ।
वाद्ध्रीणसः प्रोच्यतेऽसौ हव्ये कव्ये च
संत्कृतः ॥"
पक्षिविशेषः । यथा, --
"नीलग्रीवो रक्तशीर्षः कृष्णपादः
सितच्छदः ।
वाद्ध्रीणसः स्यात् पक्षीशो मम
विष्णोरति-
प्रियः ॥"
तेषां वलिदानफलम् । यथा, --
"रोहितस्य तु मत्स्यस्य
मांसैर्व्वाद्ध्रीणसस्य च ।
तृप्तिमाप्नोति वर्षाणां शतानि त्रीणि
मत्प्रिया ॥

वरणीये, त्रि । यथा, ऋग्वेदे । ३ । २१ । २ ।
"स्वधर्म्मन् देववीतये श्रेष्ठं नो धेहि वार्य्यम् ॥"
निवारणीयः । यथा, महाभारते । ५ । १८९ । ६ ।
"स्त्रीभारे परिनिर्ब्बिण्णा पुंस्त्वार्थे वृतनिश्चया ।
भीष्मे प्रतिचिकीर्षामि नास्मि वार्य्येति वै पुनः ॥")

**वाराशिः**, पुं, (वारां राशिर्यत्र ।) समुद्रः । इति

पुराणम् ॥ (वारासनशब्दात् प्रागयं स्यात् ॥)

**वार्व्वटः**, पुं, (वार्भिर्वट्यते वेष्ट्यते इति । वट +

घञर्थे कः ।) वहित्रम् । इति त्रिकाण्डशेषः ॥

**वार्व्वणा**, स्त्री, नीलीमक्षिका । इति शब्दरत्ना-

वली ॥

**वार्षकं**, क्ली, (वर्षस्येदम् । वर्ष + अण् । स्वार्थे कन् ।)

सुद्युम्नकृतपृथिवीदशभागान्तर्गतभागविशेषः ।
यथा, --
"दशधा विभजन् क्षेत्रमकरोत् पृथिवीमिमाम् ।
इक्ष्वाकुर्ज्येष्ठदायादो मध्यदेशमवाप्तवान् ।
कोष्टवे वार्षकं क्षेत्रं रणवृष्टिर्बभूव ह ॥"
इति वह्निपुराणे सागरोपाख्यानाध्यायः ॥

वादिनामुपसंख्यानं उत्तरपदलोपश्च ।"
२ । १ ।
६० । इत्यस्य वार्त्तिकोक्त्या
शाकपार्थिवादिवत्
समासः । पृषोदरादित्वात् शस्य षः ।)
करका ।
इति शब्दचन्द्रिका ॥

**वार्षुकः**, त्रि, वर्षणशीलः । वृषधातोर्उकप्रत्ययेन

निष्पन्नो वर्षुकः । ततः स्वार्थे ष्णप्रत्ययः
॥

**वा(बा)र्हतं**, क्ली, (वृहत्याः फलमिति । "प्लक्षादि-

भ्योऽण् ।" ४ । ३ । १६४ । इति अण् ।
विधान-
सामर्थ्यात्तस्य फले न लुक् ।)
बृहतीफलम् । इत्य-
मरः ॥

**वा(बा)र्हद्रथः**, पुं, (वृहद्रथस्यापत्यं पुमान् । वृहद्रथ

+ अण् ।) जरासन्धः । इति
शब्दरत्नावली ॥
(यथा, देवीभागवते । ४ । १९ । १६ ।
"कंस्रः कुजोऽथ यवनेन्द्रसुतश्च केशी-
वार्हद्रथो वकवकीखरशाल्वमुख्याः ॥"
वृहद्रथस्येदमिति अण् ॥)
वृहद्रथराजसम्ब-
न्धिनि, त्रि ॥

**वा(बा)र्हद्रथिः**, पुं, (वृहद्रथस्यापत्यं पुमान् । वृह-

द्रथ + इञ् ।) जरासन्धः । इति
त्रिकाण्डशेषः ॥

**वा(बा)लकः**, पुं, क्ली, पारिहार्य्यः । अङ्गुरीयके,

त्रि । इति मेदिनी । के, १५३ ॥
अस्यार्थान्त-
राणि पवर्गीयवकारादौ द्रष्टव्यानि ॥
(गन्धयुक्त-
द्रव्यविशेषे, पुं । यथा, बृहत्संहितायाम् ।
७७ । ५ ।
"त्वक्कुष्ठरेणुनलिका
स्पृक्कारसतगरवालकैस्तुल्यैः ।
केशरपत्रविमिश्रैर्नरपतियोग्यं
शिरःस्नानम् ॥")

| | | |
|---|---|---|
| महिषाणाञ्च खड्गानां रुधिरैः शतवार्षि-<br>कीम् ।<br>तृप्तिमाप्नोति परमां शार्द्दूलरुधिरैस्तथा ॥”<br>इति कालिकापुराणे ६६ अध्यायः ॥ * ॥<br>तन्सांसेन पितृतृप्तिर्य्यथा, --<br>“वार्ध्रीणसामिषं लौहं कालशाकं तथा मधु । | | |

**वालवः**, पुं, ववाद्येकादशकरणान्तर्गत्तद्वितीय-

करणः । तत्र जातफलम् ।
"कार्य्यस्य कर्त्ता स्वजनस्य भर्त्ता
सेनाप्रणेता कुलशीलयुक्तः ।
उदारबुद्धिर्ब्बलवान् मनुष्य-
श्चेद्वालवाख्ये जननं हि यस्य ॥"
इति कोष्ठीप्रदीपः ॥

**वाल्कं**, त्रि, (वल्कस्य वल्कलस्य विकारः । वल्क

+ "तस्य विकारः ।" ४ । ३ । १३४ ।
इति अण् ।)
वल्कसम्बन्धिवस्त्रम् । क्षौमादि ।
इत्यमरः ॥
(यथा, मार्कण्डेयपुराणे । १५ । २८ ।
"तथैवाजाविकं हृत्वा वस्त्रं क्षौमञ्च
जायते ।
कार्पासिके हृते क्रौञ्चो वाल्कहर्त्ता
बकस्तथा ॥")

**वाल्कलं**, त्रि, हल्कलनिर्म्मितम् । वल्कलस्येदं

इत्यर्थे ष्णप्रत्ययेन निष्पन्नम् ॥

**वाल्कली**, स्त्री, मदिरा । इति त्रिकाण्डशेषः ॥

**वाल्मिकिः**, पुं, (वल्मिके भवः । वल्मिक + इञ् ।)

वाल्मीकमुनिः । इति द्विरूपकोषः ॥

**वाल्मीकः**, पुं, (वल्मीके भवः । वल्मीक + अण् ।)

रामायणकर्त्ता मुनिः । तत्पर्य्यायः ।
प्राचेतसः
२ वाल्मीकिः ३ कविज्येष्ठः ४
कुशीवशः ५
वल्मीकः ६ । इति त्रिकाण्डशेषः ॥
कविः ७
आद्यकविः ८ । इति जटाधरः ॥

**वाल्मीकिः**, पुं, (वल्मीके भवः । वल्मीक + इञ् ।)

भृगुवंशीयमुनिविशेषः । इति
त्रिकाण्डशेषः ॥
यथा, --

**वावृत्तः**, त्रि, कृतवरणः । इत्यमरः । ३ । १ । ९२ ॥

**वाश**, य ङ ऋ शब्दे । इति कविकल्पद्रुमः ॥

(दिवा०-आत्म०-अक०-आह्वाने सक०-सेट् ।)
शब्द इह तिरश्चामेव । तिरश्चां वाशितं रुत-
मित्यमरात् । य ङ, वाश्यते पक्षी । ऋ, अव-
वाशत् । उद्वाश्यमानः पितरं स राममिति
भट्टौ । अनेकार्थत्वादाह्वानार्थः । वासितं
सुरभीकृते । ज्ञानमात्रे खगारावे वासितं वस्त्र-
वेष्टिते । इति विश्वप्रकाशाद्दन्त्यान्तोऽयमपीति।
इति दुर्गादासः ॥

**वाशा**, स्त्री, (वाश्यते इति । वाश शब्दे + "गुरोश्च

हलः ।" ३ । ३ । १०३ । इति अः । स्त्रियां
टाप् ।) वासकः । इति शब्दरत्नावली ॥

**वाशिः**, पुं, (वाश्यते इति । वश + णिच् + "वसि-

वपियजिराजिव्रजिसदिहनिवाशिवादीति।"
उणा० ४ । १२४ । इति इञ् ।) अग्निः । इत्यु-
णादिकोषः ॥

**वाशिका**, स्त्री, (वाशा + स्वार्थे कन् । टाप् । अत

इत्वम् ।) वासकः । इति शब्दरत्नावली ॥

**वाशितं**, क्ली, (वाशृ शब्दे + भावे क्तः ।) पशु-

पक्ष्यादीनां शब्दः । इत्यमरः ॥ (यथा, महा-
भारते । ९ । ३१ । ५३ ।
"आर्त्तप्रलापान् मा तात ! सलिलस्थः प्रभा-
षिथाः ।
नैतन् मनसि मे राजन् ! वाशितं शकुने-
रिव ॥")

**वाशितः**, त्रि, (धातूनामनेकार्थत्वात् वाश सुरभी-

करणे + क्तः ।) सुरभीकृतः । इत्यमरटीकायां
स्वामी ॥

**वाशिता**, स्त्री, (वाश + क्त । टाप् ।) स्त्रीमात्रम् ।

करिणी । इत्यमरः ॥

**वाशिष्ठः**, त्रि, वशिष्ठसम्बन्धी । वशिष्ठस्येदं इत्यर्थे

ष्णप्रत्ययेन निष्पन्नः ॥ (यथा, महाभारते ।
३ । ११५ । २ ।
"लोमशस्तस्य तान् सर्व्वानाचख्यौ तत्र ताप-

रक् ।) मन्दिरम् । चतुष्पथः । इति
मेदिनी ।
रे, ८३ ॥

**वाश्रः**, पुं, (वाश्यतेऽस्मिन्निति । वाशृ + "स्कायि-

तञ्चीति ।" उणा० २ । १३ । इति रक्
।)
दिवसः । इति मेदिनी । रे, ८३ ॥

**वाष्पः**, पुं, (वाधते इति । वाधृ लोडने + "खष्पशिल्प-

शष्पवाष्परूपपर्पतल्पाः ।" उणा० । ३
। २८ ।
इति पप्रत्यये धस्य षत्वं निपातनात् ।)
उष्मा ।
(यथा, रघौ । ७ । ६८ ।
"तस्याः प्रतिद्वन्द्वभवाद्विषादात्
सद्यो विमुक्तं मुखमावभासे ।
निश्वासवाष्पापगमात् प्रपन्नः
प्रसाद मात्मीयमिवात्मदर्शः ॥")
लोहः । इति मेदिनी । पे, ११ ॥ अश्रुः ।
इत्य-
मरः ॥ (यथा, आर्य्यासप्तशत्याम् ।
३९४ ।
"प्राङ्गण एव कदा मां श्लिष्यन्ती
मन्युकम्पि-
कुचकलसा ।
अंशनिषण्णमुखी सा स्नपयति वाष्पेण
मम
पृष्ठम् ॥")

**वाप्पकः**, पुं, (वाष्प + संज्ञायां कन् ।) मारिषः ।

नटिया शाक इति भाषा । यथा, --
"मारिषो वाष्पको मार्षः श्वेतो रक्तश्च स
स्मृतः ।
मारिषो मधुरः शीतो विष्टम्भी
पित्तनुद्गुरुः ॥
वातश्लेष्मकरो रक्तपित्तनुद्विषमाग्निजित्
।
रक्तमार्षो गुरुर्नाति सक्षारो मधुरः सरः ।

"रावणान्तकरो राजा रघूणां वंशवर्द्धनः
।
वाल्मीकिर्यस्य चरितं चक्रे भार्गवसत्तमः
॥"
इति मात्स्ये १२ अध्यायः ॥
(यथा वा काव्यादर्शभूमिकायाम् ।
"जाते जगति वाल्मीकौ
कविरित्यभिधाभवत् ।
कवी इति ततो व्यासे कवयस्त्वयि
दण्डिनि ॥")

**वावदूकः**, त्रि, (पुनः पुनरतिशयेन वा वदतीति ।

वद + यङ् लुक् + "उलूकादयश्च ।"
उणा० ४ ।
४१ । इति ऊकः । "सर्व्वस्वे तु
'यजजप-
दशामिति ।' ३ । २ । १६६ । इति
बहुलवच-
नादन्यतोऽपि भवत्यूकप्रत्ययः इति
कृत्वा वाव-
दूक इति साधितम् ।" इत्युणादिवृत्तौ
उज्वल-
दत्तः ।) अतिशयवचनशीलः ।
तत्पर्य्यायः ।
वाचोयुक्तिपटुः २ वाग्मी ३ वक्ता ४ ।
इत्यमरः ॥
वचक्नः ५ सुवचाः ६ प्रवाक् ७ । इति
जटा-
धरः ॥ (यथा, महाभारते । १२ । १९ ।
२४ ।
"अमृतस्यावमन्तारो वक्तारो जनसंसदि
।
चरन्ति वसुधां कृत्स्नां वावदूका
बहुश्रुताः ॥")

**वावयः**, पुं, तुलसीविशेषः । इति शब्दचन्द्रिका ॥

कृष्णवावुइ इति भाषा ॥

**वावुटः**, पुं, वहित्रम् । इति शब्दरत्नावली ॥

**वावृत**, य ङ उ संभक्तौ । वरणे । इति कविकल्प-

द्रुमः ॥ (दिवा०-आत्म०-सक०-सेट् ।
क्त्वावेट् ।)
सान् ।
भृगूनङ्गिरसश्चैव वाशिष्ठानथ काश्यपान् ॥"
क्ली, उपपुराणविशेषः । यथा, देवीभागवते ।
१ । ३ । १६ ।
"माहेश्वरं भागवतं वाशिष्ठञ्च सविस्तरम् ।
एतान्युपपुराणानि कथितानि महात्मभिः ॥"
तीर्थभेदः । यथा, महाभारते । ३ । ८४ । ४५ ।
"ऋषिकुल्यां समासाद्य वाशिष्ठञ्चैव भारत ! ।
वाशिष्ठं समतिक्रम्य सर्व्वे वर्णा द्विजातयः ॥")

**वाशिष्ठी**, स्त्री, (वशिष्ठस्येयमिति । वशिष्ठ + अण् ।

ङीप् ।) गोमतीनदी । इति हेमचन्द्रः ॥

**वाशुरा**, स्त्री, (वाश्यते अस्यामिति । वाशृ शब्दे

+ "मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् ।"
उणा० १ । ३९ । इति उरच् । टाप् ।)
रात्रिः । इत्युणादिकोषः ॥

**वाश्रं**, क्ली, (वाश्यतेऽस्मिन्निति । वाशृ + "स्कायि-

तञ्चिवञ्चिशकीति ।" उणा० २ । १३ । इति
श्लेष्मलः कटुकः पाके स्वल्पदोष
उदीरितः ॥"
इति भावप्रकाशः ॥

**वाष्पका**, स्त्री, (वाष्प + संज्ञायां कन् । टाप् ।

अभिधानादिदभावः ।) हिङ्गुपत्री । इति
शब्द-
रत्नावली ॥

**वाष्पिका**, स्त्री, (वाष्प + संज्ञायां कन् टाप्

अत इत्वम् ।) हिङ्गुपत्री । तत्पर्य्यायः ।
कारवी २ पृथ्वी ३ कवरी ४ पृथुः ५ ।
इत्य-
मरः ॥ त्वक्पत्री ६ वाष्पीका ७ कर्व्वरी ।
इति तट्टीका ॥

**वाष्पी**, स्त्री, (वाष्प + गौरादित्वात् ङीष् ।)

वाष्पिका । इति शब्दरत्नावली ॥

**वाष्पीका**, स्त्री, हिङ्गुपत्री । इति राजनिर्घण्टः ॥

राँधुनी इति ख्यातश्च । अस्य गुणाः ।
कटु-
त्वम् । तीक्ष्णत्वम् । उष्णत्वम् ।
कृमिश्लेष्मनाशि-
त्वञ्च । इति राजवल्लभः ॥

**वास**, त् क उपसेवायाम् । इति कविकल्पद्रुमः ।

(अदन्त चुरा०-पर०-सक०-सेट् ।)
उपसेवा
तु गुणान्तराधानाम् । अववासद्वस्त्रं
चन्द्रनः ।
इति दुर्गादासः ॥

**वासः**, पुं, (वसन्त्यत्रेति । वस निवासे + "हलश्च
।"

३ । ३ । १२१ । इति घञ् ।) गृहम् ।
इत्य-
मरः ॥ (यथा, हरिवंशे । १७४ । ३४ ।
"उत्तिष्ठोत्तिष्ठ भद्रन्ते विषादं माकृथाः
शुभे ।
नैवं विधेषु वासेषु भयमस्ति वरानने !
॥"
वास्यते इति । वास + घञ् ।) वस्त्रम् ।
इति

| | | |
|---|---|---|
| य ङ, वावृत्यते । उ, वावर्त्तित्वा वावृत्त्वा । संभक्तिःसेवनम् । इति दुर्गादासः ॥ ("ततो वावृत्यमानासाविति भट्टिः ॥) | | तट्टीका ॥ (वस + भावे घञ् ।) अवस्थानम् । |

इति हेमचन्द्रः ॥ (यथा, महाभारते । १ । १२८ । ५० ।
“विहारावसथेष्वेव वीरा वासमरोचयन् ॥”)
वासकः । इति शब्दरत्नावली ॥ सुगन्धिः । इति वासधात्वर्थदर्शनात् ॥ * ॥ स्थानविशेषे वासस्य
कर्त्तव्याकर्त्तव्यत्वं यथा, --
देवयान्युवाच ।
“वेदाहं तात बालापि कार्य्याणान्तु गतागतिम् ।
क्रोधे चैवाभिवादे वा वेद चापि बलाबलम् ॥
शिष्यस्याशिष्यवृत्तेर्हि न क्षन्तव्यं बुभूषता ।
तस्मात् सङ्कीर्णवृत्तेषु वासो मम न रोचते ॥
पुंसो येनाभिनन्दन्ति वृत्तेनाभिजनेन च ।
न तेषु च वसेत् प्राज्ञः श्रेयोऽर्थी पापबुद्धिषु ॥
ये त्वेवमभिजानन्ति वृत्तेनापि जनेन च ।
तेषु साधुषु वस्तव्यं स वासः श्रेय उच्यते ॥”
इति मात्स्ये २८ अध्यायः ॥ * ॥
अपि च ।
“धार्म्मिकैरावृते ग्रामे न व्याधिबहुले भृशम् ।
न शूद्रराज्ये निवसेत् न पाषण्डजनैर्वृते ॥
हिमवद्विन्ध्ययोर्म्मध्यं पूर्ब्बपश्चिमयोः शुभम् ।
मुक्त्वा समुद्रयोर्देशं नान्यत्र निवसेत् द्विजः ॥
अर्द्धक्रोशान्नदीकूलं वर्जयित्वा द्विजोत्तमः ॥
नान्यत्र निवसेत् पुण्यं नान्त्यजग्रामसन्निधौ ॥
न संवसेच्च पतितैर्न चण्डालैर्न पुक्कशैः ।
न मूर्खैर्नावलिप्तैश्च नान्त्यैर्नान्त्यावसायिभिः ॥”
इति कौर्म्मे उपविभागे २५ अध्यायः ॥

**वासः**, [स्] क्ली, (वस्यतेऽनेति । वस आच्छादने + “वसेर्णित् ।” उणा० ४ । २१७ । इत्यसुन् । स च णित् ।) वस्त्रम् । इत्यमरः ॥ (यथा, मनौ । ४ । ६६ ।
“उपानहौ च वासश्च वृतमन्यैर्न धारयेत् ॥”)
पत्रकम् । इति राजनिर्घण्टः ॥

**वासकः**, पुं, (वासयतीति । वासि + ण्वुल् ।) वृक्षविशेषः । वाकस इति भाषा । तत्पर्य्यायः । वैद्यमाता २ सिंही ३ वासिका ४ वृषः ५ अटरुषः ६ सिंहास्यः ७ वाजिदन्तकः ८ । इत्यमरः ॥ वाशा ९ वाशिका १० वृशः ११ अटरूषः १२ वाशकः १३ । इति तट्टीका ॥
आटरूषो वृषो नाम्ना सिंहपर्णश्च स स्मृतः ।
वासको वासकृत् सर्य्यः कफपित्तास्रनाशनः ॥
तिक्तस्तुवरको हृद्यो लघुः शीतस्तृडर्त्तिहृत् ।
श्वासकासज्वरच्छर्द्दिमोहकुष्ठक्षयापहः ॥”
इति भावप्रकाशः ॥ * ॥
गानाङ्गविशषः । यथा, --
“मनोहरोऽथ कन्दर्पश्चारुनन्दन एव च ।
चत्वारो वासकाः प्रोक्ताः शङ्करेण स्वयं पुरा ॥”
केषाञ्चिन्मते नामान्यपि पृथक् ।
“विनोदो वरदश्चैव नन्दः कुमुद एव च ।
चत्वारो वासकाः प्रोक्ता गीतवाद्यविशारदैः ॥”
इति सङ्गीतदामोदरः ॥
(वासरः । इति वासकसज्जाशब्दार्थे आलङ्कारिकाः ॥)

**वासकर्णी**, स्त्री, यज्ञशाला । इति शब्दरत्नावली ॥

**वासकसज्जा**, स्त्री, (वासके प्रियसमागमवासरे सज्जतीति । सज्ज् + अच् । टाप् । यद्वा, वासकं वासवेश्म सज्जयतीति । सज्जि + अण् । टाप् ।)
स्वीयादिनायिकाभेदः । (यथा, गीतगोविन्दे । ६ । ८ ।
“भवति विलम्बिनि विगलितलज्जा
विलपति रोदिति वासकसज्जा ॥”)
तस्या लक्षणं यथा । अद्य मे प्रियवासर इत्थं निश्चित्य या सुरतसामग्रीं सज्जीकरोति सा वासकसज्जा । वासको वासरः । अस्याश्चेष्टा मनोरथसखीपरिहासक्लीप्रश्नसामग्रीविधानमार्गविलोकनादयः । मुग्धावासकसज्जा यथा,
“हारं गुम्फति तारकातिरुचिरं ग्रथ्नाति काञ्चीलतां
दीपं न्यस्यति किन्तु तत्र बहुलं स्नेहं न दत्ते पुनः ।
“श्वश्रूं स्वापयितुं छलेन च तिरोधत्ते प्रदीपाङ्कुरान्
धत्ते सौधकपोतपोतनिनदैः साङ्केतिकं चेष्टितम् ।
शश्वत्पार्श्वविवर्त्तिताङ्गलतिकं लोलत्कपोलद्युति
क्वापि क्वापि कराम्बुजं प्रियधिया तल्पान्तिकं न्यस्यति ॥”
इति रसमञ्जरी ॥
(तथाच साहित्यदर्पणे । ३ । ८९ ।
“कुरुते मण्डनं यस्याः सज्जिते वासवेश्मनि ।
सा तु वासकसज्जा स्याद्विदितप्रियङ्गमा ॥”)

**वासका**, स्त्री, (वासक + टाप् ।) वासकवृक्षः । इति जटाधरः ॥

**वासगृहं**, क्ली, (वासाय गृहम् ।) गर्भागारम् । इत्यमरः ॥ “द्वे गृहमध्यभागे शयनगृहे च गृहान्तर्गृहे इत्येके निर्व्वातत्वात् गर्भ इवागारं गर्भागारम् । वासाय गृहं वासगृहम् । वासवेश्मादि चात्र ।” इति भरतः ॥ (यथा, बृहत्संहितायाम् । ५३ । ७० ।
“वासगृहाणि च विन्द्याद्
विप्रादीनामुदग्दिगाद्यानि ।
विशताञ्च यथा भवनम्
भवन्ति तान्येव दक्षिणतः ॥”)

**वासतः**, पुं, (वास्यते इति । वासृ शब्दे + बाहुलकात् अतच् ।) गर्द्दभः । इति शब्दरत्नावली ॥

वासा १४ वासः १५ वाजी १६ वैद्यसिंही १७
मातृसिंही १८ । इति शब्दरत्नावली ॥
वासका १९ सिंहपर्णी २० । इति जटाधरः ॥
सिंहिका २१ भिषङ्माता २२ वसादनी २३
सिंहमुखी २४ कण्ठीरवी २५ शितकर्णी २६
वाजिदन्ती २७ नासा २८ पञ्चमुखी २९
सिंहपत्री ३० मृगेन्द्राणी ३१ । अस्य गुणाः ।
तिक्तत्वम् । कटुत्वम् । शीतत्वम् । काशरक्त-
पित्तकामलाकफवैकल्यज्वरश्वासक्षयनाशित्वञ्च
।
तत्पुष्पगुणाः । कटुपाकित्वम् । तिक्तत्वम् ।
कास-
क्षयहरत्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
"वासको वासिका वासा भिषङ्माता च
सिंहिका ।
सिंहास्यो वाजिदन्तः स्यादाटरुषोऽटरूषकः ॥

आलीनामिति वासकस्य रजनौ कामानुरूपाः
क्रियाः
साचिस्मेरमुखी नवोढसुमुखी दूरात् समुद्वी-
क्षते ॥"
मध्या वासकसज्जा यथा, --
"शिल्पं दर्शयितुं करोति कुतुकात् कह्लार-
हारस्रजं
चित्रप्रेक्षणकैतवेन किमपि द्वारं ममुद्वीक्षते ।
गृह्णात्याभरणं नवं सहचरी भूषाजिगीषामिषा-
दित्थं पद्मदृशः प्रतीत्य चरितं स्मेराननोऽभूत्
स्मरः ॥"
प्रौढा वासकसज्जा यथा, --
"कृतं वपुषि भूषणं चिकुरधोरणी धूपिता
कृता शयनसन्निधौ क्रमुकवीटिकासम्भृतिः ।
अकारि हरिणीदृशा भवनमेत्य देहत्विषा
स्फुरत्कनककेतकीकुसुमकान्तिभिर्दुर्दिनम्
॥"
मनोरथश्च यथा, --
"आवयोरङ्गयोर्द्वैधे भूयो विरहपल्लवः ।
अद्वैते च स्मितस्फीतं न स्यादन्योन्यवीक्ष-
णम् ॥"
परकीया वासकसज्जा यथा, --

**वासतेयी**, स्त्री, (वसतौ साधुरिति । वसति +
"पथ्यतिथिवसतिस्वपतेर्ढञ् ।" ४ ।
४ । १०४ ।
इति ढञ् ।) रात्रिः । इति
त्रिकाण्डशेषः ॥
(वसतिसाधुमात्रे, त्रि । यथा, भट्टौ ।
४ । ८ ।
"वनेषु वासतेयेषु निषसन्
पर्णसंस्तरः ।
शय्योत्थायं मृगान् विध्यन्नातिथेयो
विचक्रमे ॥")

**वासनं**, क्ली, (वास्यते इति । वासि + ल्युट् ।)
धूपनम् । वारिधानी । वस्त्रम् । इति
मेदिनी ।
ने, १२९ ॥ वासः । इति
शब्दरत्नावली ॥
ज्ञानम् । इति धरणिः ॥ निक्षेपाधारः
। यथा,
याज्ञवल्क्यः ।
"आधिसीमोपनिक्षेपजडवालधनैर्विना
।
तथोपनिधिराजस्त्रीश्रोत्रियाणां
धनैरिह ॥"
उपनिक्षेपस्तु ।
"वासनस्थमनाख्याय समुद्रं
यद्विधीयते ॥"
इति नारदोक्तेः ॥
वासनं निक्षेपाधारभूतं सम्पुटादिकं
समुद्रं
ग्रन्थ्यादियुतम् । इति व्यवहारतत्त्वम्
॥ वसन-
सम्बन्धिनि, त्रि ॥ (वसनेन क्रीतमिति
। वसन +
"शतमानविंशतिकसहस्रवसनादण्
।" ५ । १ । २७ ।
इति अण् । वसनेन क्रीते च, त्रि ॥)

**वासना**, स्त्री, (वासयति कर्म्मणा योजयति
जीव-
मनांसीति । वस + णिच् + युच् ।
टाप् ।)

| | | |
|---|---|---|
| | | प्रात्याशा। (यथा, भागवते। २। २। २। "शाब्दस्य हि ब्रह्मण एष पन्था यन्नामभिर्ध्यायनि धीरपार्थैः। |

परिभ्रमंस्तत्र न विन्दतेऽर्थान्
मायामये वासनया शयानः ॥”)
ज्ञानम् । इति मेदिनी । ने, १३० ॥
स्मृतिहेतुः ।
तत्पर्य्यायः । संस्कारः २ भावना ३ ।
इति जटा-
धरः ॥ देहात्मबुद्धिजन्यमिथ्यासंस्कारः
। इति
न्यायशास्त्रम् ॥ दुर्गा । यथा, --
“वसत्यदृष्टा सर्व्वेषु भूतेष्वन्तर्हितांय च
।
धातुर्व्वस निवासेति वासना तेन सा
स्मृता ॥”
इति देवीपुराणे ४५ अध्यायः ॥
(अर्कस्य भार्य्या । यथा, भागवते । ६ ।
६ । १३ ।
“अर्कस्य वासना भार्य्या
पुत्त्रास्तर्षादयः
स्मृताः ॥”)

**वासन्तः**, पुं, (वसन्ते भवः । वसन्त + “सन्धि-
वेलाद्यतुनक्षत्रेभ्योऽण् ।” ४ । ३ । १६ ।
इति अण् ।
उष्ट्रः । इति मेदिनी । ते, १५२ ॥
कोकिलः ।
इति राजनिर्घण्टः ॥ मलयवायुः ।
मुद्गः । इति
त्रिकाण्डशेषः ॥ कृष्णमुद्गः । इति
हेमचन्द्रः ॥
मदनवृक्षः । इति शब्दमाला ॥
आवहिते, त्रि ।
इति मेदिनी । ते, १५२ ॥ (वसन्तोप्ते च
त्रि ।
इति सिद्धान्तकौमुदी । ४ । ३ । ४६
॥)

**वासन्तकं**, त्रि, वसन्तसम्बन्धि । वसन्तस्येदमित्यर्थे
कण्प्रत्ययेन निष्पन्नम् ॥ (वसन्ते उप्तम्
। वसन्त

वासन्ती शीतला लध्वी तिक्ता दोषत्रयास्र-
जित् ॥”
इति भावप्रकाशः ॥ * ॥
अथ वासन्तीदुर्गापूजाप्रमाणम् । तत्र भविष्य-
पुराणम् ।
“मीनराशिस्थिते सूर्य्ये शुक्लपक्षे नराधिप ।
सप्तमीं दशमीं यावत् पूजयेदम्बिकां सदा ॥”
भविष्योत्तरे ।
“चैत्रे मासि सिते पक्षे सप्तम्यादिदिनत्रये ।
पूजयेद्विधिवद्दुर्गां दशम्याञ्च विसर्ज्जयेत् ॥”
कालकौमुद्यां जावालिः ।
“चैत्रे मासि सिते पक्षे सप्तम्यादिदिनत्रये ।
पूजयेद्विविधैर्द्रव्यैर्लवङ्गकुसुमैस्तथा ॥
नानाविधैश्च वलिभिर्म्मेघाभैर्दोषवर्ज्जितैः ।
विचित्राभरणैः पार्थ पट्टवस्त्रादिभिस्तथा ॥
एवं यः कुरुते पूजां वर्षे वर्षे विधानतः ।
ईप्सितान् लभते कामान् पुत्त्रपौत्त्रादिकान्नृप
॥”
अत्र भविष्योत्तरे निरुपपदमासशब्दसङ्केतात्
भषिष्यपुराणवचने मीनराशिस्थित इति
मीनस्थरव्यारब्धचान्द्रमासीयतिथिपरम्।
सौर-
रव्यारब्धत्वे कदाचित्
सप्तम्यादितिथित्रयाला-
भात् तद्वर्षे तत्कृत्यलोपः स्यात् । न
चेष्टापत्तिः
भषिष्यपुराणे सदापदोपादानात् जावालिवचने
वर्षे वर्षे इत्युपादानाच्च नित्यत्वम् । एतद्विवृतं
कालविवेके । एवं जावाली शेषवचनपरार्द्धे
पुत्त्रादिरूपफलश्रवणात् काम्यत्वञ्च । ततश्च
काम्यतया पूजने कृते प्रसङ्गात्
नित्यत्वसिद्धिः ।
“सिताष्टम्यान्तु चैत्रस्य पुष्पैस्तत्कालसम्भवैः
॥
अशोकैरपि यः कुर्य्यात् मन्त्रेणानेन पूजनम् ।
न तस्य जायते शोको रोगो वाप्यथ दुर्गतिः
॥”
इति कालिकापुराणवचनात् केवलाष्टमीकल्प
उक्तः । चैत्रमासमधिकृत्य ।
“नमम्यां पूजयेद्देवीं महिषासुरमर्द्दिनीम् ।

“चैत्रे मासि सिते पक्षे नवम्यादिदिनत्रये ।
प्रातः प्रातर्महादेवीं दुर्गां भक्त्या प्रपूजयेत् ॥”
इति ॥
तत्राष्टम्यां अन्नपूर्णापूजा यथा, --
“तत्राष्टम्यामन्नपूर्णां पूर्ब्बाह्णे साधकोत्तमः ।
रक्तवासैरक्तपुष्पैर्बलिभिः पूजयेच्छिवाम् ॥”
इति च मायातन्त्रे ७ पटलः ॥
अपि च ।
“विशेषाच्चैत्रमासस्य या तिथिः स्यात्
सिता-
ष्टमी ।
तस्यां यः पूजयेद्भक्त्या प्रसादयति मां ध्रुवम्
॥”
इति शाम्भवीतन्त्रे १४ पटलः ॥

**वासयोगः**, पुं, (वासाय सुगन्धार्थं युज्यते इति ।
युज + घञ् ।) चूर्णम् । इत्यमरः ॥ “द्वे
आविर
इति ख्याते । पटरसा क्षोदे इत्यन्ये ।
चूर्ण्यन्ते
प्रेर्य्यन्ते चूर्णानि चूर्ण प्रेरणे अल् । वासे
सुरभी-
करणे युज्यन्ते उपयुज्यन्ते इति घञि वास-
योगः ।” इति तट्टीकायां भरतः ॥ तत्पर्य्यायः
।
गन्धचूर्णम् २ पटवासम् ३ चूर्णकम् ४ । इति
शब्दरत्नावली ॥

**वासरः**, पुं क्ली, (वासयतीति । वस् + णिच् +
“अर्त्तिकमिभ्रमिचमिदेविवासिभ्यश्चित् ।”
उणा०
३ । १३२ । इति अरः ।) दिवसः । इत्यमरः
॥
(यथा, कथासरित्सागरे । ४ । २३ ।
“प्रवृत्ते चावयोवदि प्रयाताः सप्त वासराः ॥”)
नागप्रभेदे, पुं । इति मेदिनी । रे, २१३ ॥

**वासवः**, पुं, (वसुरेव । प्रज्ञाद्यण् ।) इन्द्रः । इत्य-
मरः ॥ (यथा, महाभारते । ३ । ४३ । २२ ।
“सहस्राक्षनियोगात् स पार्थः शक्रासनं गतः
।

+ "ग्रीष्मवसन्तादन्यतरस्याम्।" ४ । ३ । ४६ ।
इति वुञ् । (वसन्तोप्ते, त्रि ॥ इति सिद्धान्त-
कौमुदी ॥)

**वासन्तिकः**, त्रि, (वसन्तमधीते वेद वेति । वसन्त

+ "वसन्तादिभ्यष्ठक्।" ४ । २ । ६३ ।
इति ठक् ।)
विदूषकः यथा । वासन्तिकः केलिकिलो वैहा-
सिको विदूषकः । इति हेमचन्द्रः ॥ (वसन्त-
स्येदमिदि । "वसन्तात् च ।" ४ । ३ । २० ।
इति ठञ् । वसन्तसम्बन्धिनि, त्रि । यथा,
भागवते । ५ । ९ । ५ ।
"सप्रणवशिरस्त्रिपदां सावित्रीं ग्रैष्मवासन्ति-
कान् मासानधीयानमप्यसमवेतरूपं ग्राहया-
मास ॥")

**वासन्ती**, स्त्री, (वसुन्तस्येयमिति । वसन्त + अण् ।

ङीष् ।) माधवी । यूथी । इति मेदिनी । ते, १५२ ॥
(यथा, रामायणे । ४ । १ । ७७ ।
"मालतीमल्लिकापद्मकरवीराश्च पुष्पिताः ।
केतक्यः सिन्धुवाराश्च वासन्त्यश्च सुपुष्पिताः ॥")
पाटला । इति विश्वः ॥ कामोत्सवः । तत्पर्य्यायः ।
चैत्रावली २ मधूत्सवः ३ सुवसन्तः ४ काम-
महः ५ कर्द्दनी ६ । इति त्रिकाण्डशेषः ॥
गणिकारी । पुष्पलताविशेषः । तत्पर्य्यायः ।
प्रहसन्ती २ वसन्तजा ३ माधवी ४ महा-

कुङ्कुमागुरुकस्तूरीधूपान्नध्वजतर्पणैः ।
दमनैर्मुरपत्रैश्च विजयाख्यपदं लभेत् ॥"
इत्यनेन केवलनवमीकल्प उक्तः । व्यवस्था तु
शारदीयपूजाप्रकरणोक्ताग्राह्या । विशेषस्त्वत्र
बोधनप्रक्रिया नास्ति बोधिताया बोधनासम्भ-
वात् । इति प्राक् विवृतम् । होमादिकञ्च पूर्ब्ब-
वज्ज्ञेयमिति दिक् । इति दुर्गोत्सवविवेकः ॥ * ॥
अपि च ।
श्रीनारायण उवाच ।
"पुरा स्तुता सा गोलोके कृष्णेन परमात्मना ।
संपूज्य मधुमासे च प्रीतेन रासमण्डले ॥
मधुकैटभयोर्युद्धे द्वितीये विष्णुना पुरा ।
तत्रैव काले सा दुर्गा ब्रह्मणा प्राणसङ्कटे ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ६३ अध्यायः ॥
(चतुर्द्दशाक्षरवृत्तिविशेषः । इति छन्दो-
मञ्जरी । अस्या लक्षणादिकं छन्दःशब्दे द्रष्ट-
व्यम् ॥)

**वासन्तीपूजा**, स्त्री, (वासन्ती तदाख्या पूजा ।)

चैत्रमासीयदुर्गापूजा । यथा, --

अध्यक्रामदमेयात्मा द्वितीय इव वासवः ॥")

**वासवी**, स्त्री, (वसोरपत्यं स्त्री । वसु + अण् ।

ङीप् ।) व्यासमाता । यथा, --
"व्यासस्याम्बा सत्यवती वासवी गन्धकालिका ।
योजनगन्धा दासेयी शीलं कायनजीवसूः ॥"
इति हेमचन्द्रः ॥
(यथा, महाभारते । १ । ६३ । ७० ।
"दिव्यां तां वासवीं कन्यां रम्भोरूं मुनिपुङ्गवः ।
सङ्गमं मम कल्याणि ! कुरुष्वेत्यभ्यभाषत ॥")

**वाससज्जा**, स्त्री, (वासं गृहं सज्जयतीति । सज्ज +

णिच् + अण् । टाप् ।) नायिकाभेदः । यथा,
"खण्डितोत्कण्ठिता लब्धा तथा प्रोषितभर्त्तृका ।
कलहान्तरिता वाससज्जा स्वाधीनभर्त्तृका ॥
अभिसारिकाप्यष्टौ ता बन्धक्यां पांशुलासती ॥"
इति जटाधरः ॥
अस्या विवरणं वासकसज्जाशब्दे द्रष्टव्यम् ॥

**वासा**, स्त्री, (वासयतीति । वस् + णिच् + अच् ।

टाप् ।) वासकः । इति शब्दरत्नावली ॥ (यथा,
वैद्यके ।
"वासायां विद्यमानायामाशायां जीवितस्य च ।
रक्तपित्ती क्षयी कासी किमर्थमवसीदति ॥")

**वासागारं**, क्ली, (वासाय वासस्य वा आगारम् ।)

वासगृहम् । तत्पर्य्यायः । भोगगृहम् २ कन्याठः ३
३ पत्न्याटः ४ निष्कुटः ५ । इति त्रिकाण्ड
शेषः ॥

| | | |
|---|---|---|
| जातिः ५ शीतसहा ६ मधुबहुला ७ वसन्त-<br>दूती ८ । अस्या गुणाः । शिशिरत्वम् । हृद्यत्वम् ।<br>सुरभित्वम् । श्रमहारित्वम् ।<br>धम्मिल्लामोदित्वम् ।<br>मन्दमदोन्मादनदायित्वञ्च । इति राजनिर्घण्टः ॥<br>नवमल्लिका । नेवारि इति हिन्दी भाषा ॥<br>यथा, --<br>"नेपाली कथिता तज्ज्ञैः सप्तला नवमालिका । | | |

**वासिः**, पुं, (वसनिवासे + “वसिवपियजिरा-
जीति ।” उणा० ४ । १२४ । इति इञ् । कुठार-
भेदः । वाइस इति भाषा । इत्युणादिकोषः ॥

**वासिका**, स्त्री, (वासैव । स्वार्थे कन् । टाप् । अत
इत्वञ्च ।) वासकः । इति शब्दरत्नावली ॥

**वासितं**, क्ली, (वास्यते स्मेति । वास + क्तः ।)
रुतम् । इति मेदिनी । ते, १५२ ॥ ज्ञान-
मात्रम् । इति हेमचन्द्रः ॥ खगवरः । इति विश्वः ॥

**वासितः**, त्रि, (वास्यते स्मेति । वासि सुरभीकरणे
+ क्तः ।) सुरभीकृतः । तत्पर्य्यायः । भावितः
२ । इत्यमरः ॥ द्वे
सुगन्धिपुष्पादिवासितद्रव्ये।
भाव्यते प्राप्यते भावितं भू क ङ प्राप्तौ कर्म्मणि
क्तः । वासं सौरभं करोति इति ञ्यन्तात् ।
कर्म्मणि क्ते वासितम् । इति तट्टीकायां भरतः ॥
जलादौ वासितः । इति शब्दरत्नावली ॥
ख्यातः । वस्त्रवेष्टितः । इति धरणिः ॥

**वासिता**, स्त्री, (वासयतीति वस निवासे + णिच् +
क्तः । टाप् ।) स्त्रीमात्रम् । करिणी । इत्यमरः ॥

**वासिनी**, स्त्री, (वासोऽस्या अस्तीति । वास +
इनिः ।) शुक्लझिण्ठी । इति शब्दचन्द्रिका ॥

**वासिष्टं**, क्ली, रुधिरम् । इति हेमचन्द्रः ॥

**वासिष्ठं**, त्रि, वसिष्ठकृतयोगशास्त्रादि । वसिष्ठेन
कृतमित्यादर्थे (अण्) प्रत्ययेन निष्पन्नम् ॥
वसिष्ठसम्बन्धि च ॥

**वासी**, स्त्री, (वासयतीति वासि अच् । गौरादि-

**वासुदेवः**, पुं, (वसुदेवस्यापत्यमिति । वसुदेव +
“ऋष्यन्धकवृष्णिकुरुभ्यश्च ।” ४ । १ । ११४ ।
इति अण् । यद्वा, सर्व्वत्रासौ वसत्यात्मरूपेण
विश्वम्भरत्वादिति । वस् + बाहुलकात् उण्
वासुः । वासुश्चासौ देवश्चेति कर्म्मधारयः ।
अस्य नामनिरुक्तिस्तु परतो ज्ञेया ।)
श्रीकृष्णः ।
इत्यमरः ॥ तत्पर्य्यायः । वसुदेवभूः २ । इति
हेमचन्द्रः ॥ सव्यः २ सुभद्रः ४ वासुभद्रः ५
षडङ्गजित् ६ षड्बिन्दुः ७ प्रश्निशृङ्गः ८ प्रश्नि-
भद्रः ९ गदाग्रजः १० मार्जः ११ वभ्रुः १२
लोहिताक्षः १३ परमाण्वङ्ककः १४ । इति
शब्दमाला ॥ अन्यत् कृष्णशब्दे द्रष्टव्यम् ॥
श्रीकृष्णशरीरस्य नित्यत्वं यथा, --
श्रीसनत्कुमार उवाच ।
“भद्रं वो मुनयः शश्वत्तपसां फलमीप्सितम् ।
कृष्णस्य कुशलप्रश्नं शिवबीजस्य निष्फलम् ॥
साम्प्रतं कुशलं वश्च दर्शनं परमात्मनः ।
भक्तानुरोधाद्देहस्य परस्य प्रकृतेरपि ॥
निर्गुणस्य निरोहस्य सर्व्वबीजस्य तेजसः ।
भारावतारणायैव चाविर्भूतस्य साम्प्रतम् ॥
श्रीकृष्ण उवाच ।
शरीरधारिणश्चापि कुशलप्रश्नमीप्सितम् ।
तत्कथं कुशलप्रश्नं मयि विप्र न विद्यते ॥
सनत्कुमार उवाच ।
शरीरे प्राकृते नाथ सन्त्रतञ्च शुभाशुभम् ।
नित्यदेहे क्षेमबीजे शिवप्रश्नमनर्थकम् ॥
श्रीभगवानुवाच ।
यो यो विग्रहधारी च स च प्राकृतिकः स्मृतः ।
ततः स वासुदेवेति विद्वद्भिः परिगीयते ॥”
इति विष्णुपुराणे १ अंशे २ अध्यायः ॥
अपि च ।
“सर्व्वाणि तत्र भूतानि वसन्ति परमात्मनि ।
भूतेष्वपि च सर्व्वात्मा वासुदेवस्ततः स्मृतः ॥
खाण्डिक्यजनकायाहष्टष्टः केशिध्वजः पुरा ।
नामव्याख्यामनन्तस्य वासुदेवस्य तत्त्वतः ॥
भूतेषु वसते सोऽन्तर्व्वसन्त्यत्र च तानि यत् ।
धाता विधाता जगतां वादेवस्ततः प्रभुः ॥”
इति तत्रैव । ६ । ५ । ८० -- ८२ ॥ * ॥
(तथा च महाभारते । ५ । ७० । ३ ।
“वसनात् सर्व्वभूतानां वसुत्वात् देवयोनितः ।
वासुदेवस्ततो वेद्यो बृहत्वात् विष्णुरुच्यते ॥”)
अस्य अङ्गप्रत्यङ्गमन्त्रा यथा, --
“बीजस्तु वासुदेवस्य पुरैव प्रतिपादितम् ।
तदङ्गमन्त्रं राजेन्द्र द्वादशाक्षरमुच्यते ॥
ॐ नमो भगवते वामुदेवाय वै पदम् ।
अङ्गमन्त्रं तथैतस्य वासुदेवस्य कीर्त्तितम् ॥
अस्य प्रत्यङ्गरूपन्तु दधिवामनसंज्ञकम् ।
तस्य मन्त्रं नरश्रेष्ठ शम्भुना भाषितं शृणु ॥
ॐ नमो विष्णवे पूर्व्वं पदं तस्य प्रकोर्त्तितम् ।
पदन्तु सुरपतये चतुर्थ्यन्तं महाबलम् ॥
स्वाहान्तं हृदयासन्नं प्रत्यङ्गं वैष्णवं मतस् ।
मन्त्रद्वयन्तु यो वेद बीजं प्रत्यङ्गमन्त्रकम् ॥
स पूषा देवकायस्तु न स भूयोऽभिजायते ।

त्वात् ङीष् ।) तक्षणी । वाइस इति ख्याता-
स्त्रम् । इति त्रिकाण्डशेषः ॥

**वासुः**, पुं, (सर्व्वोऽत्र वसति सर्व्वत्रासौ वसतीति वा । वस + बाहुलकात् उण् । इति १ । १ संख्यक उणादिसूत्रवृत्तो उज्ज्वलदत्तः ।) नारायणः । इति त्रिकाण्डशेषः ॥ श्रीनिवासोऽप्यजो वासुः । इति जटाधरश्च ॥ विश्वरूपः । पुनर्व्वसुः । इत्यु-
णादिकोषः ॥

**वासुकिः**, पुं, वसुकस्यापत्यमिति । वसुक + इञ् ।) अहिपतिः । तत्पर्य्यायः । सर्पराजः २ । इत्य-
मरः ॥ वासुकेयः ३ । इति शब्दरत्नावली । तस्योत्पत्तिर्यथा, --
"सुरसा जज्ञिरे सर्पास्तेषां राजा तु तक्षकः ।
वासुकिश्चैव नागानां गणाः क्रोधतमोऽधिकः ॥"
इति वह्निपुराणे काश्यपीयवंशः ॥ (जरत्कारुमुनिपत्नी मनसादेवी तु अस्यैव भगिनी ।
"आस्तीकस्य मुनेर्माता भगिनी वासुके स्तथा ।
जरत्कारुमुनेः पत्नी नागमातर्नमोऽस्तु ते ॥"
इति मनसाप्रणाममन्त्रः ॥)

**वासुकेयः**, पुं, (वसुकस्यापत्यमिति । वसुक + ढञ् ।) वासुकिः । इति शब्दरत्नावली ॥

**वासुकेयस्वसा**, [ऋ] स्त्री, (वासुकेयस्य वासुकेः स्वसा भगिनी ।) मनसादेवी । इत्यमरः ॥

देहो न विद्यते विप्र तां नित्यां प्रकृतिं विना ॥
सनत्कुमार उवाच ।
रक्तबिन्दूद्भवा देहास्ते च प्राकृतिकाः स्मृताः ।
कथं प्रकृतिनाथस्य बीजस्य प्राकृतं वपुः ॥
सर्व्वबीजस्य सर्व्वादिर्भवांश्च भगवान् स्वयम् ।
सर्व्वेषामवताराणां प्रधानं बीजमव्ययम् ॥
कृत्वा वदन्ति वेदाश्च नित्यं नित्यं सनातनम् ।
ज्योतिःस्वरूपं परमं परमात्मानमीश्वरम् ॥
मायया सगुणञ्चैव मायेशं निर्गुणं परम् ।
प्रवदन्ति च वेदाङ्गास्तथा वेदविदः प्रभो ॥
श्रीकृष्ण उवाच ।
साम्प्रतं वासुदेवोऽहं भक्तवीर्य्याश्रितं वपुः ।
कथं न प्राकृतो विप्र शिवप्रश्नमभीप्सितम् ॥
सनत्कुमार उवाच ।
वासः सर्व्वनिवासश्च विश्वानि यस्य लोमसु ।
तस्य देवः परं ब्रह्म वासुदेव इतीरितः ॥
वासुदेवेति तन्नाम वेदेषु च चतुर्षु च ।
पुराणेष्वितिहासेषु यात्रादिषु च दृश्यते ॥
रक्तवीर्य्याश्रितो देहः कृते वेदे निरूपितः ।
साक्षिणो मुनयश्चात्र धर्म्मः सर्व्वत्र एव हि ॥
साक्षिणो मम वेदाश्च रविचन्द्रौ च साम्प्रतम् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ८७ अध्यायः ॥
तस्य नामव्युत्पत्तिः ।
"सर्व्वत्रासौ समस्तञ्च वसत्यत्रेति वै यतः ।

सर्व्वस्तूत्तरतन्त्रोक्तः क्रमो ग्राह्यः प्रपूजने ॥
त्रिषु मन्त्रेषु च बुधो विशेषं शृणु भूपते ।
रूपन्तु बीजमन्त्रस्य प्रथमं शृणु भूपते ॥
पूर्णचन्द्रोपमः शुक्लः पक्षिराजोपरिस्थितः ।
चतुर्भुजः पीतवस्त्रैस्त्रिभिः संवीतदेहभृत ॥
दक्षिणोद्‌र्ध्वे गदां धत्ते तदधो विकचाम्बुजम् ।
वामोद्‌र्ध्वे चक्रमत्युग्रं धत्तेऽधः शङ्खमेव च ॥
श्रीवत्सवक्षाः सततं कौस्तुभं हृदि चाद्भुतम् ।
धत्ते कक्षे ह्यधो वामे तूणीरं वाणपूरितम् ॥
दक्षिणे कोषगं खड्गं नन्दकं सशराशनम् ।
शीर्षे किरीटं सद्योतं कर्णयोः कुण्डलद्वयम् ॥
आजानुलम्बिनीं चित्रां स्वर्णमालां गलस्थि-
ताम् ।
दधानं दक्षिणे देवीं श्रियं पार्श्वे तु विभ्रतम् ॥
सरस्वतीं वामपार्श्वे चिन्तयेद्वरदं हरिम् ।
मन्त्रस्य बीजरूपन्तु कथितं तव पार्थिव ॥
द्वादशाक्षरमन्त्रस्य रूपमन्यत् शृणुष्व मे ।
नीलोत्पलदलश्यामं तथैव च चतुर्भुजम् ॥
दक्षिणोद्‌र्ध्वे स्थितं पद्मं गदाञ्चाधः प्रचोदयेत् ॥
वामेऽधश्चक्रमतुलमूद्‌र्ध्वे शङ्खञ्च विभ्रतम् ।
चिन्तयेद्वरदं देवं सर्व्वमन्यच्च पूर्व्ववत् ॥
अष्टादशाक्षरस्यास्य प्रत्यङ्गस्य च विस्तरम् ।
शृणु राजन्नवहितो दारिद्र्यभयभञ्जनम् ॥
पूर्णेन्दुसदृशं कामं शुक्लवस्त्रं विचिन्तयेत् ।
करे विचिन्तयेद्वामे पीयूषापूरितं घटम् ॥
दध्यन्नखण्डसंयुक्तं दक्षिणे स्वर्णभाजनम् ।

शुक्लवस्त्रधरं देवं प्रमाणाद्वामनं सदा ।
ईषद्धाससमायुक्तं त्रिलोकेशं त्रिविक्रमम्
।
चिन्तयेद्वरदं देवं सर्व्वकामफलप्रदम्
॥"
इति कालिकापुराणे ८२ अध्यायः ॥ *
॥
तस्योत्पत्तिर्यथा, --
"ततस्तु दशमे मासि विधौ
ब्रह्मर्क्षसङ्गते ।
अष्टम्यामर्द्धरात्रौ च तस्यां जातो
जनार्द्दनः ॥
इन्दीवरदलश्यामः पद्मपत्रायतेक्षणः ।
चतुर्भुजः सुन्दराङ्गो दिव्याभरणभूषितः
॥
श्रीवत्सकौस्तुभोरस्को
वनमालाविभूषितः ।
वमुदेवस्य जातोऽसौ वासुदेवः
सनातनः ॥
इति पाद्मोत्तरखण्डे ६० अध्यायः ॥ *
॥
तस्य चतुर्धा मूर्त्तिर्यथा, --
"एकांशेन जगत् कृत्स्नं व्याप्य
नारायणः स्थितः ।
चतुर्द्धावस्थितो व्यापी सगुणो
निर्गुणोऽपि वा ॥
एका भगवतो मूर्त्तिर्ज्ञानरूपा शिवामला
।
वासुदेवाभिधाना सा गुणातीता
सुनिष्कला ॥
द्बितीया कालसंज्ञान्या तामसी
शेषसंज्ञिता ।
निहन्ति सकलांश्चान्ते वैष्णवी परमा
तनुः ॥
सत्त्वोद्रिक्ता तृतीयान्या प्रद्युम्नेति च
संज्ञिता ।
जगत् स्थापयते सर्व्वं सा
विष्णुप्रकृतिर्ध्रुवा ॥

"गर्भागारेऽपवरको वासौकः शयनास्पदम्
।"
इति हेमचन्द्रः ॥

**वास्तवं**, क्ली, (वस्त्वेष । वस्तु + अण् ।) यथार्थ-
भूतम् । यथा, --
"धर्म्मः प्रोज्झितकैतवोऽत्र परमो
निर्म्मत्सराणां
सतां
वेद्यं वास्तवमत्र वस्तु शिवदं
तापत्रयोन्मूलनम् ।"
इत्यादि श्रीभागवते प्रथमस्कन्धे १
अध्यायः ॥
"वास्तवं परमार्थभूतं वस्तु । यद्वा, वास्तव-
शब्देन वस्तुबोऽंशो जीवः वस्तुनः कार्य्यं
जगच्च
तत् सर्व्वं वस्त्वेव न ततः पृथक् ।" इति
तट्टी-
कायां श्रीधरस्वामी ॥

**वास्तविकं**, त्रि, (वस्त्वव वस्तु + ठक् ।) परमार्थ-
भूतं वस्तु । वास्तवमेव इत्यर्थे
वास्तवशब्दात्
ष्णिकप्रत्ययेनापि निष्पन्नम् ॥

**वास्तवोषा**, स्त्री, रात्रिः । इति त्रिकाण्डशेषः ॥
किन्तु वास्तवा ऊषा इति नामद्वयमिति
साधु-
पाठः ॥

**वास्तव्यः**, त्रि, वसतीति वस + "वसेस्तव्यत् कर्त्तरि
णिच्च ।" ३ । १ । ९६ । इत्यस्य
वार्त्तिकोक्त्या
वासकर्त्ता । कर्त्तरितव्यत् । इति सिद्धान्त-
कौमुदी ॥ (यथा, कथासरित्सागरे । ३८ ।
१०७ ।
"इहैवास्मि महाराज वास्तव्यो नगरे द्विजः
॥")
वासयोग्यश्च । वसतौ, पुं ॥

**वास्तु**, क्ली, वास्तूकशाकम् । इति राजनिर्घण्टः ॥

अर्य्यमा सविता चैव विवस्वान् विबुधाधिपः ।
मित्रोऽथ राजयक्ष्मा च तथा पृथ्वीधरः क्रमात्
॥
अष्टमश्चापवत्सश्च परितो ब्रह्मणः स्मृताः ।
ईशानकोणादारभ्य दुर्ज्ञेयो वंश उच्यते ॥
आग्नेयकोणादारभ्य वंशो भवति दुर्द्धरः ।
अदितिं हिमवन्तञ्च जयन्तञ्च इदं त्रयम् ॥
नादिका कारिका नाम शक्राद्गन्धर्व्वगा पुनः
।
वास्तुदेवान् पूजयित्वा गृहप्रासादकृद्भवेत् ॥
सुरेभ्यः पुरतः कार्य्यं दिश्याग्नेय्यां महानसम्
।
रूपनिर्गमणे येन पूर्ब्बतः सत्रमण्डपम् ॥
गन्धपुष्पगृहं कार्य्यमैशान्यां पट्टसंयुतम् ।
भाण्डागारञ्च कौवेर्य्यां गोष्ठागारञ्च वायवे ॥
उदगाश्रयञ्च वारुण्यां वातायनसमन्वितम् ।
समित्कुशेन्धनस्थानमायुधानाञ्च नैरृते ॥
अभ्यागतालयं रम्यं शय्यासनसपादुकाम् ।
तोयाग्निदीपसद्भृत्यैर्युक्तं दक्षिणतो भवेत् ॥
गृहान्तराणि सर्व्वाणि सजलैः कदलीगृहैः ।
पञ्चवर्णैश्च कुसुमैः शोभितानि प्रकल्पयेत् ॥
प्राकारं तद्बहिर्दद्यात् पञ्चहस्तं प्रमाणतः ।
एवं विष्ण्वाश्रमं कुर्य्याद्वनैश्चोपवनैर्युतम् ॥
चतुःषष्टिपदो वास्तुः प्रासादादौ सुपूजितः ।
मध्ये चतुष्पदो ब्रह्मा द्विपदास्त्वर्य्यमादयः ॥
कर्णे चैवाथ पक्ष्याद्यास्तथा देवाः प्रकोर्त्तिताः
।
तेभ्योऽप्युभयतः सार्द्ध अन्येऽपि द्विपदाः
सुराः ॥
चतुःषष्टिपदे देवा इत्येवं परिकीर्त्तिताः ।
चरकी च विदारी च पूतना पापराक्षसो ॥
ईशानाद्यास्तथा बाह्ये देवाद्या हेतुकादयः ।
हेतुकस्त्रिपुरान्तश्च अग्निर्वेतालको यमः ॥
अग्निजिह्वः कालकस्तु करालो ह्येकपादकः ।
ईशान्यां भीमरूपस्तु पाताले प्रेतनायकः ॥
आकाशे गन्धमाली स्यात् क्षेत्रपालांस्तथा
यजेत् ।
विस्ताराभिहतं दीर्घं राशिद्वारन्तु कारयेत् ॥
वसुभिर्भागशुद्धिञ्च शेषाङ्कादायमादिशेत् ।

चतुर्थी वासुदेवस्य मूर्त्तिर्ब्राह्मी सुसंज्ञिता ।
राजसी चानिरुद्धाख्या प्राद्युम्नी सृष्टिकारिका ॥
यः स्वपित्यखिलं हत्वा प्रद्युम्नेन सह प्रभुः ।
नारायणाख्यो ब्रह्मासौ प्रजासर्मकरो हि सः ॥
या सा नारायणतनुः प्रद्युम्नाख्या मुनीश्बराः ।
तया संमोहयेद्विश्वं सदेवासुरमानुषम् ॥
सैव सर्व्वजगत्सूतिः प्रकृतिः परिकीर्त्तिता ।
वासुदेवो ह्यनन्तात्मा केवलो निर्गुणो हरिः ॥
प्रधानं पुरुषः कालस्तद्वत् त्रयमनुत्तमम् ।
वासुदेवात्मकं नित्यमेतत् विज्ञानमुच्यते ॥
एकवेदं चतुष्पादं चतुर्द्धा पुनरच्युतः ।
विभेद वासुदेवोऽसौ प्रद्युम्नो हरिरव्ययः ॥”
इति कूर्म्मपुराणे ४८ अध्यायः ॥

**वासुदेवप्रियङ्करी**, स्त्री, (वासुदेवस्य प्रियङ्करी ।) शतावरी । इति राजनिर्घण्टः ॥ श्रीकृष्णप्रियकारिणी च ॥

**वासुपूज्यः**, पुं, (वासुर्नारायण इव पूज्यः ।) जिनविशेषः । इति हेमचन्द्रः । १ । २७ ॥

**वासुभद्रः**, पुं, श्रीकृष्णः । इति शब्दमाला ॥ (यथा, विष्णुपादादि-केशान्तवर्णनस्तोत्रे । ३१ ।
“या वायावानुकूल्यात् सरति मणिरुचा भासमानासमाना
साकं साकम्पमंसे वसति विदधती वासुभद्रं सुभद्रम् ॥”)

**वास्तु**, क्ली पुं, (वसन्ति प्राणिनो यत्र । वस निवासे + “वसेरगारे णिच्च ।” उणा० १ । ७० । इति तुण् । स च णित् ।) गृहकरणयोग्यभूमिः । तत्पर्य्यायः । वेश्मभूः २ । इत्यमरः ॥ पोतः ३ वाटी ४ । इति जटाधरः ॥ वाटिका ५ गृहपोतकः ६ । इति शब्दरत्नावली ॥ वास्तुकरणप्रमाणादिर्यथा, --
श्रीहरिरुवाच ।
“वास्तु संक्षेपतो वक्ष्ये गृहादौ विघ्ननाशनम् ।
ईशानकोणादारभ्य ह्येकाशीतिपदे यजेत् ॥
ईशाने च शिरःपादौ नैरृतेऽग्न्यनिले करौ ।
आवासवासवेश्मादौ पुरे ग्रामे बणिक्पथे ॥
प्रासादारामदुर्गेषु देवालयमठेषु च ।
द्वात्रिंशत्तु सुरान् वाह्ये तदन्तश्च त्रयोदश ॥
ईशश्चैवाथ पर्ज्जन्यो जयन्तः कुलिशायुधः ।
सूर्य्यः सत्यो भृशश्चैव आकाशो वायुरेव च ॥
पूषा च वितथश्चैव गृहक्षेत्रयमावुभौ ।
गन्धर्व्वो भृङ्गराजश्च मृगः पितृगणस्तथा ॥
दौवारिकोऽथ सुग्रीवः पुष्पदन्तो गणाधिपः ।
असुरः शेषपापौ च रोगोऽहिर्मुख्य एव च ॥
भल्लाटः सोमसर्पौ च अदितिश्च दितिस्तथा ।
बहिर्द्वात्रिंशदेते तु तदन्तश्चतुरः शृणु ॥
ईशानादिचतुष्कोणसंस्थितान् पूजयेद्बुधः ।
आपश्चैवाथ सावित्रो जयो रुद्रस्तथैव च ॥
मध्ये नवपदो ब्रह्मा तस्याष्टौ च समीपगान् ।
देवानेकोत्तरानेतान् पूर्ब्बादौ नामतः शृणु ॥
पुनर्गुणितमष्टाभिरृक्षभागन्तु भाजयेत् ॥
यच्छेषं तद्भवेदृक्षं भागैर्हृत्य व्ययं भवेत् ।
ऋक्ष चतुर्गुणं कृत्वा नवभिर्भागहारितम् ॥
शेषमंशं विजानीयात् देवलस्य मतं यथा ।
अष्टाभिर्गुणितं पिण्डं षष्टिभिर्भागहारितम् ॥
यच्छेषन्तु भवेज्जीवं मरणं भूतहारितम् ।
वास्तुक्रोडे गृहं कुर्य्यात् न पृष्ठे मानवः सदा ॥
वामपार्श्वेन स्वपिति नात्र कार्य्या विचारणा ।
सिंहकन्यातुलायाञ्च द्वारं शुद्धेदथोत्तरम् ॥
एवञ्च वृश्चिकादौ स्यात् पूर्ब्बदक्षिणपश्चैमम् ।
द्वारं दीर्घार्द्धविस्तारं द्वाराण्यष्टौ स्मृतानि च ॥
सुताल्पप्रैष्यनीचत्वं सुयानं सूत्रभूषणम् ।
पुत्रहीनन्तु रौद्रेण वीर्य्यघ्नं दक्षिणे तथा ॥
बद्धोऽवन्धश्चायुर्वृद्धिः पुत्रलाभसुतृप्तिदे ।
धनदं नृपपीडादमर्थघ्नं रोगदं जले ॥
नृपभीतिर्मृतापत्या अनपत्यञ्च वैरिदम् ।
अर्थदं वार्थहान्येव दोषदं पुत्रमृत्युदम् ॥
द्वाराण्युत्तरसंज्ञानि पूर्ब्बद्वाराणि वच्म्यहम् ।

**वासुरा**, स्त्री, स्त्रीमात्रम् । करिणी । रात्रिः ।
भूमिः । इति हेमचन्द्रः ॥

**वासूः**, स्त्री, (वास्यते स्वगृहे इति । वास + बाहु-
लकात् ऊः ।) नाट्योक्तौ बाला ।
इत्यमरः ॥

**वासौकः**, [स्] क्ली, (वासाय ओकः स्थानम् ।)
वासगृहम् । यथा, --

अग्निभीतिर्ब्बहुकन्या धनसम्मानकोपदम् ॥
राजघ्नं कोपदं पूर्ब्बे फलतो द्वारमीरितम् ।
ईशानादौ भवेत् पूर्ब्बे आग्नेयादौ तु दक्षिणे ॥
नैरृत्यादौ पश्चिमे स्यात् वायव्यादौ तु
चोत्तरे ।
अष्टभागे कृते भागे द्वाराणाञ्च फलाफलम् ॥
अश्वत्थप्लक्षन्यग्रोधाः पूर्ब्बादौ
स्यादुडुम्बरः ।
गृहस्य शोभनः प्रोक्त ईशाने चैव शाल्मलिः
॥
पूजितो विघ्नहारी स्यात् प्रासादस्य गृहस्य
च ॥"
इत्यादि गारुडे वास्तुमानलक्षणं ४ ६
अध्यायः ॥
प्रासादलक्षणन्तु प्रासादशब्दे द्रष्टव्यम् ॥ *
॥
अपि च ।
ऋषय ऊचुः ।
"प्रासादभवनादीनां निवेशं विस्तरान्नृप ।
कुर्य्यात् केन विधानेन कश्च वास्तुरुदाहृतः
॥
सूत उवाच ।
भृगुरत्रिर्व्वशिष्ठश्च विश्वकर्म्मा यमस्तथा ।
नारदो नग्नजिच्चैव विशालाक्षः पुरन्दरः ॥
ब्रह्मा कुमारो नन्दीशः शौनको गर्ग एव च ।
वासुदेवोऽनिरुद्धश्च तथा शुक्रबृहस्पती ॥
अष्टादशैते विख्याता वास्तुशास्त्रोपदेशकाः
।
संक्षेपेणोपदिष्टं यन्मनवे मत्स्यरूपिणा ॥
तदिदानीं प्रवक्ष्यामि वास्तुशास्त्रमनुत्तमम् ।
पुरान्धकवधे घोरे घोररूपस्य शूलिनः ॥
ललाटस्वेदसलिलमपतद्भुवि भीषणम् ।
करालवदनं तस्मात् समुद्भूतं समुल्वणम् ॥
ग्रसमानमिवाकाशं सप्तद्वीपां वसुन्धराम् ।
ततोऽन्धकानां रुधिरमपिबत् पतितं क्षितौ
॥
तेन तत्समरे सर्व्वं पतितं यन्महीतले ।
तथापि तृप्तिमगमत्तद्भूतं न तदा यदा ॥
तदा शिवस्य पुरतस्तपश्चक्रे सुदारुणम् ।

सूत उवाच ।
"अथातः संप्रवक्ष्यामि गृहकालविनिर्णयम्
।
यथाकालं शुभं ज्ञात्वा सदा भवनमारभेत्
॥
चैत्रे व्याधिमवाप्नोति यो गृहं कारयेन्नरः ।
वैशाखे धनरत्नानि ज्यैष्ठे मृत्युं तथैव च ॥
आषाढे भृत्यरत्नानि पशुवर्ज्जमवाप्नुयात्
।
श्रावण भृत्यलाभञ्च हानिं भाद्रपदे तथा ॥
पत्नीनाशोऽश्वयुजे विन्द्यात् कार्त्तिके
धन-
धान्यकम् ।
मार्गशीर्षे तथा भक्तं पौषे तस्करतो भयम्
॥
लाभञ्च बहुशो विन्द्यादग्निं माघे विनिर्द्दिशेत्
।
फाल्गुने काञ्चनं पुत्त्रानिति कालबलं
स्मृतम् ॥
अश्विनी रोहिणी मूलमुत्तरात्रयमैन्दवम् ।
स्वाती हस्तानुराधा च गृहारम्भे प्रशस्यते
॥
आदित्यभौमवर्ज्जन्तु सर्व्वे वाराः
शुभावहाः ।
वज्रव्याघातशूलेषु व्यतीपातातिगण्डयोः
॥
विष्कम्भगण्डपरिघवर्ज्जंयोगेषु कारयेत् ।
श्वेते मैत्रेय माहेन्द्रे गान्धर्व्वेऽभिजिद्रोहिणे
।
तथा वैराजसावित्रे मुहूर्त्ते गृहमारभेत् ॥
चन्द्रादित्यबलं लब्ध्वा लग्नं
शुभनिरीक्षितम् ।
स्तम्भोच्छ्रयादि कर्हव्यमन्यत्र
परिवर्ज्जयेत् ॥
प्रासादेष्वेवमेव स्यात् कूपवापीषु चैव हि ।
पूर्ब्बं भूमिं परीक्षेत पश्चाद्वास्तुं प्रकल्पयेत्
॥
श्वेता रक्ता तथा पीता कृष्णा
चैवानुपूर्ब्बशः ।

दौवारिकोऽथ सुग्रीवः पुष्पदन्तो
जलाधिपः ॥
असुरः शेषपापौ च रोगोऽहिर्मुख्य एव च ।
भल्लाटः सोमसर्पौ च अदितिश्च
दितिस्तथा ।
बहिर्द्वात्रिंशदेते तु तदन्तश्चतुरः शृणु ॥
ईशानादिचतुष्कोणे संस्थितान्
पूजयेद्यथा ।
आपश्चैवाथ सावित्रो जयो भद्रस्तथैव च
॥
मध्ये नवपदो ब्रह्मा तस्याष्टौ च समीपगान्
।
साध्या नैकान्तरान् विद्यात् पूर्ब्बाद्यान्
नामतः
शृणु ॥
अर्य्यमा सविता चैव विवस्वान्
विबुधाधपः ।
मिथोऽथ राजयक्ष्मा च तथा पृथ्वीधरः
स्मृतः ॥
अष्टमस्त्वापवत्सस्तु परितो ब्रह्मणः
स्मृताः ।
आपश्चैवापवत्सश्च
पर्जन्योऽग्निर्दितिस्तथा ॥
पदिकानाञ्च वर्गोऽयमेवं कोणेष्वशेषतः ।
तन्मध्ये तु वहिर्विंशत् द्विपदास्ते तु
सर्व्वतः ॥
अर्य्यमा च विवस्वांश्च मित्रः
पृथ्वीधरस्तथा ।
ब्रह्मणः परिधौ दिक्षु त्रिपदास्ते तु सर्व्वतः
॥ * ॥
वंशानिदानीं वक्ष्यामि ऋजूनपि पृथक्
पृथक् ।
वायुं यावत्तथा रोगात् पितृभ्यः शिखिनं
पुनः ॥
मुख्याद्भृशमथो शेषात् वितथं यावदेव तु ।
सुग्रीवाददितिं यावत् भृगोः पर्जन्यमेव च
॥
एते वंशाः समाख्याताः क्वचिद्दुर्ज्जय एव
च ।

क्षुधाविष्टन्तु तद्भूतमाहर्त्तुं जगतां त्रयम् ॥
ततः कालेन सन्तुष्टो भैरवस्तस्य चादरात् ।
वरं वृणीष्व भद्रं ते यदभीष्टं तवानघ ॥
तमुवाच ततो भूतं त्रैलोक्यग्रसनक्षमम् ।
भवामि देवदेवेश तथेत्युक्तञ्च शूलिना ॥
ततस्तत् त्रिदिव सर्व्वं भूमण्डलमशेषतः ।
स्वदेहेनान्तरीयञ्च बन्धानं प्रापतद्भुवि ॥
भीतभीतैस्ततो देवैर्ब्रह्मणा वाथ शूलिना ।
दानवासुररक्षोभिरवष्टब्धंसमन्ततः ॥
येन यत्रैव चाक्रान्तं स तत्रैवाभवत् पुनः ।
निवासात् सर्व्वदेवानां वास्तुरित्यभिधीयते ॥
अवष्टब्धेन तेनापि विज्ञप्ताः सर्व्वदेवताः ।
प्रसीदध्वं सुराः सर्व्वे युष्माभिर्निश्चलीकृतः ॥
स्थास्यामि किं यदाहारमवष्टब्धमधीमुखम् ।
ततो ब्रह्मादिभिः प्रोक्तं वास्तुमध्ये तु यो वलिः ॥
आहारो वैश्वदेवान्ते न्यूनमस्मिन् भविष्यति ।
वास्तूपशमनो यज्ञस्तवाहारो भविष्यति ॥
एवमुक्तस्ततो हृष्टः स वास्तुरभवत्तदां ।
वास्तुयज्ञः स्मृतस्तस्मात् ततः प्रभृति शान्तये ॥”
इति मात्स्ये वास्तुभूतोद्भवो नाम २२६ अध्यायः ॥ * ॥

विप्रादेः शस्यते भूमिरतः कार्य्यं परीक्षणम् ॥
विप्राणां मधुरास्वादा कषाया क्षत्त्रियस्य च ।
कषायकटुका तद्वद्वै श्यशूद्रेषु शस्यते ॥
रत्निमात्रे तु वै गर्त्तेष्वनुलिप्ते तु सर्व्वतः ।
घृतमामशरावस्थं कृत्वा वर्त्तिचतुष्टयम् ।
ज्वालयेत् भूपरीक्षार्थं पूर्ब्बं तत् सर्व्वदिङ्मुखम् ॥
दीप्तां पूर्ब्बादि गृह्णीयाद्वर्णानामनुपूर्व्वशः ।
वास्तुः सामूहिको नाम दीप्यते सर्व्वतस्तु यः ॥
शुभदः सर्व्ववर्णानां प्रासादेषु गृहेषु च ।
रत्निमात्रमधो गर्त्तं परीक्ष्यं खातपूरणे ॥
अधिके श्रेयमाप्नोति न्यूने हानिः समे समम् ।
हलकृष्टेऽथवा देशे शर्व्वबीजानि वापयेत् ॥
त्रिपञ्चसप्तमात्रेण यत्र रोहन्मि तान्यपि ।
ज्येष्ठोत्तमा कनिष्ठा भूर्वर्ज्जनीयतरा मता ॥
पञ्चगव्योषधिजलैः परीक्षित्वा च सेचयेत् ॥
एकाशीतिपदं कृत्वा रेखाभिः कनकेन तु ।
पश्चात् पिष्टेन चालिप्येत् सूत्रेणालोड्य सर्व्वतः ॥
दश पूर्ब्बायता रेखा दश चैवोत्तरायताः ।
सर्व्वा वास्तुविभागेषु विज्ञेया नवका नव ॥
एकाशीतिपदं कृत्वा वास्तुवित् सर्व्ववास्तुषु ।
पदस्थान् पूजयेद्देवांस्त्रिंशत् पञ्चदशैव तु ॥
द्वात्रिंशद्बाह्यतः पूज्याः पूज्याश्चान्तस्त्रयोदश ।
नामतस्तान् प्रवक्ष्यामि स्थानानि च निबोधत ॥
ईशानकोणादिषु तान् पूजयेद्धविषा नरः ।
शिखी चैवाथ पर्जन्यो जयन्तः कुलिशायुधः ॥
सूर्य्यसत्यौ भृशश्चैव आकाशो वायुरेव च ।
पूषा च वितथश्चैव गृहक्षतयमावुभौ ॥
गन्धर्व्वो भृङ्गराजश्च मृगः पितृगणस्तथा ।

एतेषां यस्तु सम्पातः पदं मध्यं समन्ततः ॥
मर्म्म चैतत् समाख्यातं त्रिशूलं कोणगञ्च यत् ।
स्तम्भन्यासे तु वर्ज्यानि तुलाविधिषु सर्व्वदा ॥
कीलोच्छिष्टोपघातानि वर्ज्जयेद्यत्नतो नरः ।
सर्व्वत्र वास्तुर्निर्द्दिष्टः पितृवैश्वानरायतः ॥
मुर्द्धन्यग्निः समाविष्टो मुखे चापः समाहितः ।
पृथ्वीधरोऽर्य्यमा चैव तयोस्तावदधिष्ठितौ ॥
वक्षःस्थले चापवत्सः पूजनीयः सदा बुधैः ।
नेत्रयोर्दितिपर्ज्जन्यौ श्रोत्रेऽदितिजयन्तकौ ॥
सर्पेन्द्रा वंशसंस्थौ च पूजनीयौ प्रयत्नतः ।
सत्यरोगादयस्तद्वद्बाह्वोः पञ्च च पञ्च च ॥
रुद्रश्च राजयक्ष्मा च वामहस्ते समास्थितौ ।
सावित्रः सविता तद्वद्धस्तं दक्षिणमाश्रितौ ॥
विवस्वानथ मित्रश्च जठरे संव्यवस्थितौ ।
पूषा च पापयक्ष्मा च हस्तयोर्मणिबन्धने ॥
तथैवासुरसोमौ च वामपार्श्वे समास्थितौ ।
पार्श्वे तु दक्षिणे तद्वद्वितथः सगृहक्षतः ॥
उर्व्वोऽर्य्यमाम्बुपौ ज्ञेयौ जान्वोर्गन्धर्व्वपुष्पकौ ।
जङ्घयोर्भृगुसुग्रीवौ स्फिक्स्थौ दौवारिको मृगः ॥
जयशक्रौ तथा मेढ्रेपान्दयोः पितरस्तथा ।
मध्ये नवपदो ब्रह्मा हृदये स तु पूज्यते ॥
चतुःषष्टिपदो वास्तुः प्रासादे ब्रह्मणा स्मृतः ।
ब्रह्मा चतुष्पदस्तत्र कोणेष्वर्द्धपदास्ततः ॥

|  |  |  |
| --- | --- | --- |
|  |  | बहिष्कोणे तु चाष्टौ तु<br>सार्द्धाश्चोभयसंस्थिताः ।<br>विंशतिर्द्विपदाश्चैषां चतुःषष्टिपदे स्मृताः<br>॥ * ॥<br>गृहारम्भे तु कण्डूतिः स्वाम्यङ्गे यत्र<br>जायते ।<br>शल्यस्त्वपनयेत्तत्र प्रासादे भवमेऽपि वा<br>॥<br>सशल्यं भयदं तस्मादशल्यं शुभदायकम्<br>।<br>हीनाधिकाङ्गभावांस्तु सर्व्वथा तु<br>विवर्ज्जयेत् ॥<br>नगरग्रामदेशेषु सर्व्वत्रैवं प्रकल्पयेत् । |

चतुःशालं त्रिशालन्तु
द्विशालञ्चैकशालकम्॥
नामतस्तानि वक्ष्यामि स्वरूपेण
द्विजोत्तमाः ॥"
इति मात्स्ये एकाशीतिपदवास्तुनिर्ण्यो
नाम
२२७ अध्यायः ॥ * ॥
सूत उवाच ।
"चतुःशालं प्रवक्ष्यामि
स्वरूपान्नामतस्तथा।
चतुःशालं द्वयद्वारैरलिन्दैः सर्व्वतोमुखम्
॥
नाम्ना तत् सर्व्वतोभद्रं शुभं देवनृपालये
।
पश्चिमद्वारहीनन्तु नन्द्यावर्त्तं प्रचक्ष्यते
॥
दक्षिणद्वारहीनं तदूद्धर्व्वमानमुदाहृतम्।
पूर्ब्बद्वारविहीनन्तत् स्वस्तिकं नाम
विश्रुतम् ॥
रुचकं चोत्तरद्वारविहीनं तत्प्रचक्ष्यते।
सौम्यशालाविहीनन्तु त्रिशालं धन्यकञ्च
तत् ॥
क्षेमवृद्धिकरं नृणां बहुपुत्त्रफलप्रदम्।
शालया पूर्ब्बया हीनं सुक्षेत्रमिति
विश्रुतम् ॥
धन्यं यशस्यमायुष्यं
शोकमोहविनाशनम्।
चुल्ली तु याम्यया हीनं विशालं शालया
तु यत् ॥
कुलक्षयकरं नृणां सर्व्वव्याधिभयावहम्।
हीनं पश्चिमया यत्तु पक्षघ्नं नाम तत्
पुनः ॥
मित्रबन्धुसुतान् हन्ति तथा
सर्पभवावहम्।
याम्यापराभ्यां शालाभ्यां
धनधान्यफलप्रदम्॥
क्षेमवृद्धिकरं नृणां तथा पुत्त्रफलप्रदम्।
यमं सूर्य्यञ्च विज्ञेयं पश्चिमोत्तरशालकम्
॥

अष्टाविंशत् कराणान्तु द्विहीनं विस्तरेण
तत्।
द्विगुणं दैर्घ्यमेवोक्तं मध्यमेष्वेवमेव तु ॥
* ॥
दूतकर्म्मान्तिकादीनां वक्ष्ये
भवनपञ्चकम्।
चतुर्थांशाधिकं दैर्घ्यं विस्तारो द्वादशैव
तु ॥
अध्यद्‌र्ध्वकरहानिः स्यात् विस्तारात्
पञ्चसु
क्रमात्। * ।
दैवज्ञगुरुवैद्यानां सभास्तारपुरोधसाम्
॥
तेषामपि प्रवक्ष्यामि सदा भवनपञ्चकम्
।
चत्वारिंशच्च विस्ताराच्चतुर्भिर्हीयते
क्रमात् ॥
पञ्चस्वेतेषु दैर्घ्यञ्च षड्भागेनाधिकं
भवेत्। * ।
चतुर्व्वर्णस्व वक्ष्यामि सामान्यं
गृहपञ्चकम् ॥
द्वात्रिंशकं कराणान्तु चतुर्भिर्हीयते
क्रमात्।
आषोडशादिति परं
नूनमन्त्यावसायिनाम्॥
दशांशेनाष्टभागेन त्रिभागेणाथ पादिकम्
।
अधिकं दैर्घ्यमित्याहुर्ब्राह्मणादेः
प्रशस्यते ॥
सेनापतेर्नृपस्यापि गृहस्यैवोत्तरेण तु ।
नृपवासगृहं कार्य्यं भाण्डागारन्तथैव च
॥
सेनापतेर्गृहस्यापि चातुर्व्वर्ण्यस्य
चान्तरम्।
वासकोषगृहं कार्य्यं राजपूज्येषु सर्व्वदा
॥
अन्तरप्रभवाणाञ्च स्वपितुर्दूरमिष्यते।
तथा हस्तशतादर्व्वाक् गदितं
वनवासिनाम् ॥

द्विवज्रः षोडशास्रस्तु द्वादशास्रः प्रलीनकः ।
मध्यप्रदेशे यः स्तम्भो वृत्तो वृत्त इति स्मृतः ॥
एतेपञ्च महास्तम्भाः प्रशस्ताः सर्व्ववास्तुषु ।
पद्मवल्लीलता कार्य्या पत्रदर्शनरूपिता ॥
स्तम्भस्य नवमांशेन पद्मकुम्भोत्तराणि च ।
स्तम्भतुल्या तुला प्रोक्ता हीनाश्चोपतुला ततः ॥
त्रिभागेणेह सर्व्वत्र चतुभर्गेण वा पुनः ।
हीनं हीनञ्चतुर्थांशात्तथा सर्व्वासु भूमिषु ॥
वासगेहानि सर्व्वेषां प्रवेशे दक्षिणेन तु । * ।
द्वाराणि तु प्रवक्ष्यामि प्रशस्तानीह तानि तु ॥
पूर्ब्बेणेन्द्रं जयन्तञ्च द्वारं सर्व्वत्र शस्यते ।
याम्यञ्च वितथञ्चैध दक्षिणेन विदुर्बुधाः ॥
पश्चिमे पुष्पदन्तञ्च वारुणञ्च प्रशस्यते ।
उत्तरेण तु भल्लाटं सौम्यञ्च शुभदं भवेत् ॥
तथा वास्तुसु सर्व्वत्र वेधं द्वारस्य वर्ज्जयेत् ।
द्वारे तु रथ्यया विद्धे भवेत् सर्व्वकुलक्षयः ॥
तरुणा दोषबाहुल्यं शोकः पङ्केन जायते ।
अपस्मारो भवेन्नूनं कूपवेधेन सर्व्वदा ॥
व्यथा प्रस्रवणेन स्यात् कीलेनाग्निभयम्भवेत् ।
विनाशो देवताविद्धे स्तम्भेन स्त्रीहृतो भवेत् ॥
गृहभर्त्तुर्विनाशः स्यात् गृहेण च गृहे कृते ।
अमेध्यावस्करैर्व्विद्धे गृहिणीबन्धनम्भवेत् ॥
तथा शस्त्रभयं विद्यादन्त्यजस्य गृहेण तु ।
उच्छ्रायद्विगुणां भूमिं त्यक्त्वा वेधो न विद्यते ॥
स्वयमुद्घाटिते द्वारे उन्मादो गृहमेधिनाम् ।
स्वयञ्च पिहिते विन्द्यात् कुलनाशं विचक्षणः ॥
मानाधिके राजभयं नीचे तस्करतो भयम् ।
द्वारोपरि च यद्द्वारं तदन्तकमुखं स्मृतम् ॥
आध्वानं मध्यदेशे तु अधिको यस्य विस्तरः ।
वज्रन्तु शकटं मध्ये सद्यो भर्त्तृविनाशनम् ॥
तथान्यपीडितद्वारं बहुदोषकरम्भवेत् ।
मूलद्वारं तथान्यन्तु नाधिकं शोभनम्भवेत् ॥
कुम्भश्रीपर्णिवल्लीभिर्मूलद्वारन्तु शोभयेत् ।
पूजयेच्चापि तन्नित्यं वलिना चाक्षतोदकैः ॥ * ॥
भवनस्य वटः पूर्ब्बे दिग्भागे सर्व्वकालिकः ।
उडुम्बरस्तथा याम्ये वारुणे पिप्पलः शुभः ॥
प्लक्षश्चोत्तरतो धन्यो विपरीतस्त्वसिद्धये ।
कण्टकी क्षीरवृक्षश्च आसन्नः सफलो द्रुमः ॥
भयं हानिं प्रजाहानिं कुर्व्वन्ति क्रमशः सदा ।

राजाग्निभयदं नृणां कुलक्षयकरञ्च तत् ।
उदक्पूर्व्वे तु शाले द्वे दण्डाख्ये यत्र तद्भवेत् ॥
अकालमृत्युभयदं परचक्रभयावहम् ।
धनाख्यं यामपूर्ब्बाभ्यां शालाभ्यां यद्द्विशालकम् ॥
तच्छस्त्रभयदं नृणां पराभवभयावहम् ।
चुल्ली पूर्ब्बापराभ्यान्तु सा भवेत् मृत्युसूचनी ॥
वधबन्धाय शस्त्राणामनेकभयकारकम् ।
काचमुत्तरयामाभ्यां शालाभ्यां भयदं नृणाम् ॥
सिद्धार्थवर्ज्यं वर्ज्यानि द्विशालानि सदा बुधैः ॥ * ॥
अथातः संप्रवक्ष्यामि भवनं पृथिवीपतेः ।
पञ्चप्रकारं तत् प्रोक्तमुत्तमादिविभेदतः ॥
अष्टोत्तरं हस्तशतं विस्तारश्चोत्तमो मतः ।
चतुर्ष्वन्येषु विस्तारो हीयते चाष्टभिः करैः ॥
चतुर्थांशाधिकं दैर्घ्यं पञ्चस्वपि निगद्यते ।
युवराजस्य वक्ष्यामि तथा भवनपञ्चकम् ॥
षड्भिः षड्भिस्तथाशीतिर्हीयतेतत्र विस्त-
रात् ।
त्र्यंशेन चाधिकं दैर्घ्यं पञ्चस्वपि निगद्यते ॥ * ॥
सेनापतेः प्रवक्ष्यामि सदा भवनपञ्चकम् ।
चतुःषष्टिन्तु विस्तारात् षड्भिः षड्भिस्तु
हीयते ॥
पञ्चस्वतेषु दैर्घ्यञ्च षड्भागेनाधिकं भवेत् ॥ * ॥
मन्त्रिणामथ वक्ष्यामि तथा भवनपञ्चकम् ॥
चतुश्चतुर्भिर्हीना स्यात् करषष्टिः प्रविस्तरे ।
सेनांपतेर्नृपस्यापि सप्तत्या सहितेऽन्विते ।
चतुर्द्दशहृते व्यासे शालान्यासः प्रकीर्त्तितः ॥
पञ्चत्रिंशद्धृते तस्मिन् अलिन्दः समुदाहृतः ।
तथा षट्त्रिंशद्धस्ताच्चु सप्ताङ्गुलसमन्वितः ॥
विप्रस्य महती शाला न दैर्घ्यं परतो भवेत् ।
दशाङ्गुलाधिका तद्वत् क्षत्त्रियस्य विधीयते ॥
पञ्चत्रिंशत् करा वैश्ये अङ्गुलानि त्रयोदश ।
तावत्करैस्तु शूद्रस्य युता पञ्चदशाङ्गुलैः ॥
शालायास्तु त्रिभागेण यस्याग्रे वीथिका भवेत् ।
सोष्णीशं नाम तद्वास्तु पश्चाच्छायोच्छ्र्यम्भवेत् ॥
पार्श्वयोर्वीथिका यत्र सावष्टम्भन्तदुच्यते ।
समन्ताद्वीथिका यत्र सुस्थितं तदिहोच्यते ॥
शुभदं सर्व्वमेतत् स्यात् चातुर्वर्ण्यञ्चतुर्व्विधम् ।
विस्तरात् षोडशो भागस्तथा हस्तचतुष्टयम् ॥
प्रथमो भूमिक्रोच्छ्राय उपरिष्टात् प्रहीयते ।
द्वादशांशेन सर्व्वासु भूमिकासु तथोच्छ्र्यः ॥
पक्वेष्टके भवेद्भित्तिः षोडशांशेन विस्तरात् ।
दानवेन विकल्पः स्यात् तथा मृण्मयभित्तिके ॥
गर्भमानेन मानन्तु सर्व्ववास्तुषु शस्यते ।
गृहवासस्य पञ्चाशदष्टादशभिरङ्गुलैः ॥
संयुतो द्वारनिष्कम्भो द्विगुणश्चोच्छ्र्यो भवेत् ।
न च्छिन्द्याद्यदि तानन्यानन्तरे स्थापयेत् शुभान् ।
पुन्नागाशोकवकुलशमीतिलकचम्पकान् ।
दाडिमी पिप्पली द्राक्षा तथा कुसुममण्डपम् ॥
जम्बीरपूगपनसद्रुमकेतकीभि-
र्जातीसरोजशतपत्रिकमल्लिकाभिः ।
यन्नारिकेलकदलीदलपाटलाभि-
र्युक्तं तदत्र भवनं श्रियमातनोति ॥”
इति मात्स्ये वास्तुविद्यासु वेधपरिवर्ज्जनो नाम २२९ अध्यायः ॥ * ॥
सूत उवाच ।
“उदगादिप्लवं वास्तु समानशिरसन्तथा ।
परीक्ष्य पूर्ब्बवत् कुर्य्यात् स्तम्भोच्छ्रायं विचक्षणः ॥

| | | |
|---|---|---|
| अष्टांशेनाधिकं दैर्घ्यं पञ्चस्वपि निगद्यते ॥ * ॥<br>सामन्तामात्यलोकानां वक्ष्ये भवनपञ्चकम् ।<br>चत्वारिंशत्तथाष्टौ च चतुर्भिर्हीयते क्रमात् ॥<br>चतर्थांशाधिकं दैर्घ्यं पञ्चस्वेतेषु शस्यते । * ।<br>शिल्पिनां कञ्चुकीनाञ्च वैश्यानां गृहपञ्चकम् ॥ | द्वारशाखासु बाहुल्यमुच्छ्रायं करसम्मितैः ॥<br>अङ्गुलैः सर्व्ववास्तूनां पृथुत्वं शस्यते बुधैः ।<br>उदुम्बरोत्तराङ्गे च तदर्द्धार्द्धं प्रविस्तरैः ॥”<br>इति मात्स्ये वास्तुविद्यासु गृहमाननिर्णयो<br>नाम २२८ अध्यायः ॥ * ॥<br>सूत उवाच ।<br>“अथातः संप्रवक्ष्यामि स्तम्भमानविनिर्णयम् ।<br>कृत्वा स्वभवनोच्छ्रायं सदा सप्तगुणं बुधः ॥<br>अशीत्यन्तं पृथुत्वं स्यादग्रे नवगुणैः सह ।<br>रुचकश्चतुरस्रः स्यादष्टांशो वज्र उच्यते ॥ | |

न देवधूर्त्तसचिवचत्वराणां समीपतः ।
कारयेद्भवनं प्राज्ञो दुःखशोकभयं यतः ॥
तस्य प्रवेशाश्चत्वारस्तस्योत्सङ्गोऽग्रतः शुभः ।
पृष्ठतः पृष्ठभङ्गस्तु सव्यावर्त्तः प्रशस्यते ॥
अपसव्यो विनाशाय दक्षिणे शीर्णकस्तथा ।
सर्व्वकामफलो नृणां संपूर्णो नाम वामतः ॥
एवं प्रवेशमालोक्य यत्नेन गृहमारभेत् । * ।
अथ संवत्सरे पूर्णे मुहूर्त्ते शुभलक्षणे ॥
रत्नोपरि शिलां कृत्वा सर्व्वबीजसमन्विताम् ।
चतुभिर्ब्राह्मणैस्तम्भं वस्त्रालङ्कारपूजितम् ॥
शुक्लाम्बरधरः शिल्पी सहितो वेदपारगैः ।
स्थापितं विन्यसेत् तद्वत् सर्व्वौषधिसमन्वितम् ॥
नानाक्षतफलोपेतं वस्त्रताम्बूलसंयुतम् ।
ब्रह्मघोषेण वाद्येन गीतमङ्गलनिस्वनैः ॥
पायसं भोजयेद्विप्रान् होमस्तु मधुसर्पिषा ।
वास्तोस्पते प्रतिजानीहि मन्त्रेणानेन सर्व्वदा ॥
सूत्रपाते तथा कार्य्यमेवं स्तम्भोदये पुनः ।
द्वारबन्धोच्छ्रये तद्वत् प्रवेशसमये तथा ॥
वास्तूपशमने तद्वत् वास्तुयज्ञस्तु पञ्चधा ।
ईशाने सूत्रपातः स्यादाग्नेये स्तम्भरोपणम् ॥
प्रदक्षिणञ्च कुर्व्वीत वास्तोः पदविलेखनम् ।
तर्ज्जनी मध्यमा चैव तथाङ्गुष्ठस्तु दक्षिणे ।
प्रबालरत्नकनकं फलपिष्टकृतोदकम् ।
सर्व्ववास्तुविभागेषु शस्तम्पद्विलेखने ॥
न भस्माङ्गारकाष्ठेन न शस्त्रनखचर्म्मभिः ।
न च सास्थिकपालेन क्वचिद्वास्तु प्रलेखयेत् ॥
एभिर्विलेखितं कुर्य्यात् दुःखशोकामयादिकम् ।
यदा गृहप्रवेशः स्याच्छिल्पी तत्रोपलेखयेत् ॥
स्तम्भसूत्रादिके तद्वत् शुभाशुभफलोदयम् । * ।
आदित्याभिमुखं रौति शकुनः परुषं यदि ॥
तुल्यकालं स्पृशेदङ्गं गृहभर्त्तुः समात्मनः ।
प्रागुद्रक्प्लवनं कार्य्यं द्विमुखन्तु न कारयेत् ।
स्तम्भंवा भवनं वापि द्वारंवा स्वगृहन्तथा ॥
दिङ्मूढे कुलनाशः स्यात् न च सम्बर्द्धयेद्गृहम् ।
यदि सम्बर्द्धयेद्गेहं सर्व्वदिक्षु विवर्द्धयेत् ॥
पूर्व्वेण वर्द्धितं बास्तु कुर्य्याद्वैराणि वै सदा ।
दक्षिणे वर्द्धितं वास्तु मृत्यवे स्यान्न संसयः ॥
पश्चाद्वृद्धन्तु यद्वास्तु तदर्थक्षयकारकम् ।
वर्द्धायितं तथा सौम्ये बहुसन्तापकारकम् ॥
आग्नेये यत्र वृद्धिः स्यात् तदग्निभयदम्भवेत् ।
वर्द्धितं राक्षसे कोणे शिशुक्षयकरं भवेत् ॥
वर्द्धायितन्तु वायव्ये वातव्याधिप्रकोपकृत् ।
ईशाने तु प्रजाहानिर्वास्तौ सम्बर्द्धिते सदा ॥ * ॥
ईशाने देवतागारं तथा शान्तिगृहं भवेत् ।
महानसं तथाग्नेये तत्पार्श्वे चोत्तरं जलम् ॥
गृहस्योपस्करं सर्व्वं नैरृते स्थापयेद्बुधः ।
बन्धस्थानं बहिःकुर्य्यात् स्नानमण्डपमेव च ॥
धनधान्यञ्च वायव्ये कर्म्मशाला ततो बहिः ।
एवं वास्तुनिवेशः स्यात् गृहभर्त्तुः शुभावहः ॥"
इति मात्स्ये वास्तुविद्यागृहनिर्णयो नाम २३० अध्यायः ॥ * ॥
ध्वजो धूमश्च सिंहश्च श्वा वृषः खर एव च ॥
हस्ती ध्वाङ्क्षश्च पूर्ब्बाद्याः करिशेषा भवन्त्यमी ।
ध्वजः सर्व्वमुखो धन्यः प्रत्यग्वारो विशेषतः ॥
उदङ्मुखो भवेत् सिंहः प्राङ्मुखो वृषभो भवेत् ।
दक्षिणाभिमुखो हस्ती सप्तभिः स उदाहृतः ॥
एकेन ध्वज उद्दिष्टस्त्रिभिः सिंह उदाहृतः ।
पञ्चभिर्वृषभः प्रोक्तो विकोणस्थांस्तु वर्ज्जयेत् ॥
तमेवाष्टगुणं कृत्वा विद्याद्राशिं विचक्षणः ।
सप्तविंशद्धृते भागे ऋक्षं विद्याद्विचक्षणः ॥
अष्टभिर्भाजिते ऋक्षे यच्छेषं स व्ययो मतः ।
व्ययाधिकं न कुर्व्वीत यतो दोषकरम्भवेत् ।
आयाधिके भवेच्छान्तिरित्याह भगवान् हरिः ॥
कृत्वाग्रतो द्विजवरानथ पूर्णकुम्भं दध्यक्षताम्रदलपुष्पफलोपशोभम् ।
दत्त्वा हिरण्यवसनानि तथा द्विजेभ्यो माङ्गल्यशान्तिनिलयायगृहं विशेच्च ॥
गृह्योक्तहोमविधिना वलिकर्म्म कुर्य्यात् प्रासादवास्तुशमने च विधिर्य उक्तः ।
सन्तर्पयेत् द्विजवरानथ भक्ष्यभोज्यैः शुक्लाम्बरश्च भवनं प्रविशेत् सधूमम् ॥"
इति मात्स्ये वास्तुविद्यानुकीर्त्तनं समाप्तम् २३१ अध्यायः ॥ * ॥ अन्यच्च । अथ वास्तुयुक्तिः ।
तत्र स्थाननिर्णयः ।
"नदीश्मशानशैलानां वनस्य निकटे तथा ।
न वास्तुकर्म्म कुर्व्वीत न द्वन्द्व-नगरान्तयोः ॥" * ॥
तत्र दिङ्निर्णयः ।
"राक्षसानिलवह्नीनां यमस्य दिशि वेश्मनः ।
नारम्भं कारयेद्राजा भीरुग्दाहक्षयप्रदम् ॥"
तथा हि ।

वास्त्वङ्गे तद्विजानीयान्नरशल्यं भयप्रदम् ॥
शकुनानन्तरं तत्र हस्त्यश्वश्वापदम्भवेत् ।
तदङ्गसम्भवं विद्यात्तत्र शल्यं विचक्षणः ॥
प्रसार्य्यमाणे सूत्रे तु श्वगोमायुविलङ्घिते ।
तत्र शल्यं विजानीयात् खरशब्दे च भैरवे ॥
यदीशान्तेऽथ दिग्भागे मधुरं रौति वायसः ।
धनन्तत्र विजानीयादङ्गे वा स्वाम्यधिष्ठिते ॥
सूत्रच्छेदे भवेन्मृत्युर्व्याधिः कीले त्वधोमुखे
।
अङ्गारेषु तथोन्मादं कपालेषु च सम्भ्रमम् ।
कम्बुशल्ये च जानीयात् पुंश्चल्यं स्त्रीषु
वास्तुवित् ।
गृहभर्त्तुर्गृ हस्यापि विनाशः शिल्पिसम्भ्रमे ॥
स्तम्भस्थाने च्युते कुम्भे शिरोरोगं
विनिर्द्दिशेत् ।
कुम्भापहारे सर्व्वस्य कुलस्यापि क्षयो भवेत्
॥
मृत्युं स्थानच्युते कुम्भे भग्ने बन्धं विदुर्बुधाः
।
करसंख्याविनाशे तु नाशं गृहपतेर्विदुः ॥
बीजौषधिविहीने तु भूतेभ्यो भयमादिशेत् ।
प्राग्दक्षिणेन विन्यस्य स्तम्भे च्छत्रं
विवेशयेत् ॥
ततः प्रदक्षिणेनान्यन्न्यसेत् स्तम्भं विचक्षणः
।
यस्माद्भयकरं नृणां योजितान्यप्रदक्षिणम् ॥
रक्षां कुर्व्वीत यत्नेन स्तम्भोपद्रवनाशिनीम् ।
तथा फलवतीं शाखां स्तम्भोपरि निवेशयेत्
॥

सूत उवाच ।
"अथातः संप्रक्ष्यामि
दार्व्वाहरणमुत्तमम् ।
धनिष्ठापञ्चकं त्यक्त्वा
विष्ट्यादिकमतः परम् ॥
ततः साम्बत्सरोद्दिष्टे दिने यायाद्वनं
बुधः ।
प्रथमं वलिपूजान्तु कुर्य्यात् वृक्षाय
सर्व्वदा ॥
पूर्व्वोत्तरेण पतितं गृहे दारु प्रशस्यते ।
अन्यथा न शुभं
विद्याद्याम्यापरनिपातने ॥
क्षीरवृक्षोद्भवं दारु न गृहे विनिवेशयेत् ।
कृताधिवासं विहगैरनिलानलपीडितम्
॥
गजावभग्नञ्च तथा विद्युन्निर्घातपीडितम्
।
अर्द्धशुष्कं तथा दारु भग्नशुष्कं तथैव च
॥
चैत्यदेवालयोत्पन्नं नदीसङ्गमजन्तथा ।
श्मशानकूपनिलयं तडागादिसमुद्भवम् ॥
वर्ज्जयेत् सर्व्वथा दारु यदीच्छेद्विपुलां
श्रियम् ।
तथा कण्टकिनो
वृक्षान्नीपनिम्बविभीतकान् ॥
श्लेष्मातकान् एलतरून् वर्ज्जयेत्
गृहकर्म्मणि ।
अशनं शाकमधुकसर्ज्जशालाः
शुभावहाः ॥
चन्दनं पनसं धन्यं सुरदारु हरिद्रका ।
द्वाभ्यामेकेन वा कुर्य्यात् त्रिभिर्व्वा भवनं
शुभम् ॥
बहुभिः कारितं यस्मादनेकभयदं भवेत्
।
एकैकं शिंशपा धन्या श्रीपर्णी तिन्दुकी
तथा ॥
एता नान्यसमायुक्ता
कदाचिच्छुभकारिकाः ।
स्यन्दनः पनसस्तद्वत्
सरलार्ज्जुनपद्मकाः ॥

"भोगः कीर्त्तिर्धनं रोगः स्थिरता च भयः
क्षयः ।
दाह इत्येव कथितो दिशि वास्तुफलोद्भवः
॥"
भोजे च ।
"यल्लग्ने जायते राजा तस्य लग्नस्य यः पतिः
।
या दिक् तस्य नृपस्तस्यां वास्त्वारम्भं
समा-
चरेत् ॥"
एवञ्च ।
"कुजाधिपतिके मेषलग्ने जातस्य भूपतेः ॥"
कुजाधिपतिकायां दक्षिणस्यामपि वास्तुर्न
दुष्यतीति । पराशरस्तु ।
"यद्वशाजनितो राजा वास्तुस्तम्भस्तु
तद्दिशि ॥"
एतेन सूर्य्यादिजनितस्य नृपतेः पूर्ब्बादिदिक्षु
वास्तुकरणम् । तेन शुक्रदशायां जातस्याग्ने-
य्यामपि न दुष्यति ॥ * ॥ अथ लक्षणम् ।
"वास्तु कुर्य्यान्महीपालः समं
सुस्निग्धमृत्तिकम् ।
प्रागुदक्प्लवनं रम्यं रम्यवृक्षोपशोभितम् ॥
लक्ष्मीर्द्दाहः क्षयो भीतिर्धननाशोऽभ्यशून्यता
।
सम्पद्वृद्धिरिति प्रोक्तं पूर्ब्बादिककुभां फलम्
॥"
तथा हि प्लवनमन्यत् ।
"जन्मलग्नेन दिक् पश्चात् राज्ञां
वास्तुप्लवोमतः ॥"
एतेन सूर्य्याधिपतितुलालग्ने जातस्य नृपतेः
सूर्य्याधिपतेः पूर्ब्बस्याः पश्चात्
पश्चिमप्लवोऽपि
न दुष्यति । अन्ये तु ।

| | | |
|---|---|---|
| | एते नान्यसमायुक्ता बास्तुकार्य्ये शुभप्रदाः ।<br>तरुच्छेदे महापीते गोधां विद्याद्विचक्षणः ॥<br>माञ्जिष्ठवर्णे भेकः स्यात् नीले सर्पं विनिर्द्दिशेत् ।<br>अरुणे सरटं विद्यात् मुक्ताभे शुकमादिशेत् ॥<br>कपिले मूषिकां विद्यात् खड्गाभे जलमादिशेत् ।<br>एवंविधं सगर्भन्तु वर्ज्जयेद्वास्तुकर्म्मणि ॥<br>पूर्व्वं छिन्नन्तु शृह्णीयात् निमित्तं शकुनैः शुभैः । * ।<br>व्यासेन गुणि दैर्घे अष्टभिर्वै हते तथा ॥<br>यच्छेषमायतं विद्यादष्टभेदं वदामि वः । | |

"यद्वशाजनितो राजा तद्दिशोग्रप्लवो
मतः ॥"
एतेन गुरुदशाजातस्य
नृपतेर्द्दक्षिणप्लवोऽपि न
दुष्यति । अन्यत्र तु ।
"ब्रह्मक्षत्त्रियविट्शूद्राः पूर्ब्बादिदिग्युगे
क्रमात् ।
वास्तुप्लवनमिच्छन्ति
निजसम्पत्तिहेतवे ॥"
नीतिशास्त्रे च ।
"वास्तुकर्म्म नृपः कुर्य्याद्बलवद्वैरिणो
दिशि ।
दीर्घा वा चतुरस्रा वा
वास्तुभूमिर्म्महीक्षिताम् ।
एतयोर्लक्षणं तद्वत् फलञ्च नगरे यथा
॥" * ॥
अथ मानम् ।
"राजकाण्डेन नृपतिर्वास्त्वारम्भं
समाचरेत् ।
जयो भङ्गः सुखं दुःखं प्रीतिर्भीतिश्च
यः स्थिरः ।
इत्यष्टौ वास्तुनामानि
राजकाण्डैरनुक्रमात् ॥"
अन्यत्र तु ।
"जन्मलग्ने महीभर्त्तुर्द्दण्डयोरन्त एव हि
।
राजकाण्डैस्तु तावद्भिर्वास्तु
कुर्य्यान्महीपतिः ॥
सुदर्शाच्छन्दसंख्येन राजपट्टेन भूपतेः
।
वास्तुकर्म्मसमारम्भो
धनधान्यजयप्रदः ॥"
एतयोरपि पूर्ब्बवद्व्याख्यानम् ।
"राजच्छत्रेण कुत्रापि
वास्तुपत्तनमिष्यते ।
तस्यापि पूर्व्ववन्मानमिति
भागुरिभाषितम् ॥"
अथ दोषगुणौ ।

वंशकृत् कुरुते वंशं पापकारी कुलापह ॥
विकारी कुरुते दुःखं शोभनः शुभमावहेत् ।
शिवः सर्व्वार्थसिद्ध्यै स्यात् कुणपः सर्व्वनाशनः
॥
कामदोऽभीष्टलाभः स्यात् धूम्रो दहति सर्व्वशः ।
धौम्ये धर्म्ममतिः सौख्यं दुःखं धनहरे भवेत् ॥
धनदे धनलाभः स्यात् सुखकृत् सुखकारकः ।
इति प्रोक्तोऽतिसंक्षेपाद्वास्तुलक्षणसंग्रहः ॥"
भोजस्तु । दण्डमानं तथैव किन्तु युक्तिरन्या ।
स्वदशाब्दतो द्विगुणैस्तैः शुभावह-
श्चतुरस्र एव नववास्तु शिष्यते ।
किमु लग्नदण्डमितदण्डसम्मितः
प्रकरोति वास्तुरतिसौख्यसम्पदम् ॥
ऊषरा वालुका क्लिन्ना त्रयमेतद्विनिन्दितम् ।
त्रिकोणो वर्त्तुलो दीर्घो यवमध्योबृहन्मुखः ॥
तथा डमरुरूपश्च सर्पाकारस्तथैव च ।
छिन्नो भिन्नो मध्यनिन्दो व्यजनाभश्चतुष्पथः ॥
त्रिपथो जनदोषी च वृक्षदोषी तथा परः ।
गजशुण्डाकृतिश्चैवोपद्रवाः परिकीर्त्तिताः ॥
वास्तुखण्डे महादोषा हेयास्तस्माद्विचक्षणैः ।
चतुरस्रः शुभो दीर्घस्तुल्यः प्रान्तः समाश्रितः ।
दोषैर्विहीनो विज्ञेयो वास्तुखण्डः सुखावहः ॥"
इति युक्तिकल्पतरौ वास्तुयुक्तिः ॥ * ॥
तत्र कालनिर्णयः ।
"वैशाखश्रावणाषाढमार्गफाल्गुनकार्त्तिकाः ।
सुप्रशस्ता गृहारम्भे पत्नीपुत्त्रसमृद्धिदाः ॥
शुक्लपक्षे भवेत् सौख्यं कृष्णे च भवते भयम् ।
आदित्यभौमवर्ज्जन्तु सर्व्वे वाराः शुभावहाः ॥"
तथान्यत्र ।
"पूर्णिमाद्यष्टमीं यावत् पूर्ब्बास्यं वर्ज्जयेद्गृहम् ।
उत्तरास्यं न कुर्व्वीत नवम्यादिचतुर्द्दशीम् ॥
अमावास्याष्टमीं यावत् पश्चिमास्यं विवर्ज्जयेत् ॥
नवम्यादि तथा याम्यं यावत् शुक्लचतुर्द्दशीम् ।
वज्रव्याघातशूले च व्यतीपातातिगण्डयोः ॥
विष्कम्भगण्डयोश्चैव गृहारम्भं न कारयेत् ॥
आदित्यद्वयरोहिणी मृगशिरो ज्येष्ठा धनिष्ठो-
त्तरा
रेवत्याथ मघानुराधहरिभिः शुद्धैः स्वभा-
वादिभिः ।

नाशं दिशन्ति मकरालिकुलीरलग्ने
मेषे घटे धनुषि कर्म्मसु दीर्घसूत्रम् ।
कन्याझषे मिथुनके ध्रुवमर्थलाभो
ज्योतिर्व्विदः कलससिंहवृषेषु वृद्धिम् ॥
लग्नेऽर्के वज्रसम्पातः कोषहानिश्च
शीतगौ ।
मृत्युर्वसुन्धरापुत्त्रे चन्द्रजे सुखसम्पदः
॥
जीवे धर्म्मार्थकामाश्च सुतोत्पत्तिश्च
भार्गवे ।
शनैश्चरे तु दारिद्र्यं राहावस्त्रं प्रवर्त्तते
॥" * ॥
अथ प्रवेशकालः ।
"शुद्धैर्द्वादशकेन्द्रगैर्न्निधनगैः
पापैस्त्रिषष्ठायगै-
र्ल्लग्ने केन्द्रगतेऽथवा सुरगुरौ
दैतेयपूज्येऽपि वा ।
सर्व्वारम्भफलप्रसिद्धिरुदयेराशौ च
भर्त्तुः शुभे
स्वग्राम्यस्थिरतोदये च भवनं कार्य्यं
प्रवेशोऽपि
वा ॥
पौष्णे धनिष्ठा अथ वारुणेषु
स्वायम्भु वर्क्षे त्रिषु चोत्तरेषु ।
अक्षीणचन्द्रे शुभवासरे च
तथा विरिक्ते च गृहप्रवेशः ॥
तिथिर्व्वारश्च लग्नादि समारम्भे
यथोदितम् ।
प्रवेशेऽपि गृहस्याहुस्तथा ज्योतिर्व्विदो
जनाः ॥"
अथ द्वारम् ।
"नैकद्वारं वास्तुखण्डं न
चतुर्द्वारमारभेत् ।
एकद्वारं दुःशरणं चतुर्द्वारं दुरावरम् ॥
त्रिद्वारमेव नृपतेर्व्वास्तुकर्म्म प्रशस्यते ।
द्वे मुख्ये तत्र चान्यत् स्यादमुख्यमिति
निर्णयः ॥
राजद्वारस्तु तत्रैको यमद्वारस्तथा परः ।

"परनिर्म्मितवास्तुस्थो न तिष्ठति चिरं नृपः ।
न सुखाय न धर्म्माय तत्तस्य भुवि जायते ॥"
अन्यत्रापि ।
"राजान्यवीर्य्यप्रत्याशी परवास्तुकृतस्थितिः ।
न सुखाय भवेन्नृणां यथा परगृहे ग्रहः ॥
यः स्वनिर्म्मितवास्तुस्थो निजलग्नादिसंयुतः ।
विचारितपुरो राजा स चिरं सुखमश्नुते ॥"
अन्यत्रापि ।
"राजा स्वबाहुवीर्य्याढ्यो निजनिर्म्मितवास्तु-
भाक् ।
स चिर तनुते सौख्यं स्वगृहस्थो ग्रहो यथा ॥"
अथ कालः ।
"वर्षान्तेऽभ्युदिते शुक्रे केन्द्रे सुरगुरौ शुभे ।
वास्तुकर्म्मसमारम्भं शुक्रचन्द्रार्कभूमिजे ॥
ग्रहवुक्तो यः समयः कर्त्तव्यस्तत्र वै शुभे ।
वास्त्वारम्भः कार्य्यः शुभसम्पत्तिकामिना राज्ञा ॥"
इति वास्तुयुक्तौ वास्तूद्देशः ॥ * ॥
अन्येषां यथा । यदाह बास्तुकुण्डल्याम् ।
"स्वामिहस्तैश्चतुभिः स्याद्दण्डस्तेनैव मापयेत् ।
क्षेमो भयङ्करो भव्यः शोककृद्विजयः शुचिः ॥
वंशकृत् पापकारी च विकारी शोभनः शिवः ।
कुणपः कामदो धूम्रो धौम्यो धनहरस्तथा ॥
सौम्यानां दिवसेऽथ पापरहिते योगे विरिक्ते तिथौ
विष्टित्यक्तदिने वदन्ति मुनयो वेश्मादिकार्य्यं शुमम् ॥"
मत्स्यपुराणेऽपि ।
"चन्द्रादित्यबलं लब्ध्वा लग्नं शुभनिरीक्षितम् ।
स्तम्भोच्छ्रयादि कर्त्तव्यमन्यत्र तु विवर्ज्जयेत् ॥
अश्विनी रोहिणी मूलमुत्तरात्रयमैन्दवम् ।
स्वातिर्हस्तानुराधा च वास्तुकर्म्मणि शस्यते ॥"
तथा च ।
"त्रिभिस्त्रिभिर्वेश्मनि कृत्तिकाद्यै-
रशेषपुत्त्राप्तिधनानि शोकाः ।
शत्रोर्भयं राजभयञ्च मृत्युः
सुखं प्रवासश्च नव प्रभेदाः ॥
अपद्वारं तथान्यत् स्यादिति द्वारस्य निर्णयः ॥
ब्रह्मक्षत्त्रियवैश्यानां प्रागुदक्पश्चिमैः क्रमात् ।
मुख्यद्वारं दक्षिणस्य परं तस्यापि दक्षिणे ॥
बलवद्वै वैरिमुख्यं द्वारमित्यन्यसम्मतम् ।
राजद्वारेऽन्यभूपानां शिष्टानांवा प्रवेशयेत् ॥
यात्राप्रसादपर्व्वाणि राजद्वारेषु कारयेत् ।
यमद्वारे छिदाकर्म्म द्विषताञ्च प्रवेशनम् ॥
निःसारणं मृतानाञ्च दुष्टानाञ्च निबन्धनम् ।
अपद्वारेऽपरोधस्य गमनागमनक्रिया ॥
राज्ञे विलासयात्रा च मर्म्मज्ञस्य प्रवेशनम् ॥"
अथ प्राचीरनिर्णयः ।
"मन्त्रैरभेद्या मनुजेरलङ्घ्याः प्राचीरखण्डा नृपतेर्भवन्ति ॥
राजदण्डोन्नताः सर्व्वे प्राचीराः पृथिवीभुजः ।
विंशतिस्ते तु पञ्चाग्रे पार्श्वयोः पञ्च पञ्च च ॥
पश्चात् पञ्च च विज्ञेयाः प्राचीरा पृथिवीभुजः ।
सर्व्वप्रान्ते त्वावरणो नाम प्राचीर उच्यते ॥
प्रतिप्राकारसंस्थानं द्वारं नाभिमुखस्थितम् ।
तत्र जयाख्यस्य दीर्घस्य वास्तुखण्डस्य निर्णयः ॥
तद्यथा ।
"राजच्छत्रान्तरे पञ्च राजद्वारे महीपतेः ।
राजदण्डत्रये सार्द्धजयद्वारे प्रतिष्ठिताः ॥
अद्वारे राजदण्डार्थे प्राचीराः पृथिबीपतेः ।
एवं व्यवस्थिते स्थाने मध्यमेतद्धि तिष्ठति ॥

| धनदः सुखकृच्चेति वाट्योऽष्टादश कीर्त्तिताः ॥”<br>तद्यथा ।<br>“आयामपरिणाहाभ्यां योऽङ्कपिण्डोऽभिजायते।<br>ऊनविंशतिहृते मागे शेषेणैता यथाक्रमम् ॥<br>क्षेमे सर्व्वार्थसंसिद्धिर्भयकारी भयङ्करः ।<br>भव्यो भोगं प्रकुरुते शोककृद्वन्धुनाशनः ॥<br>विजयः कुरुते वृद्धिं शुचिः सर्व्वसुखं वहेत् । | | राजच्छत्रद्वयं सार्द्धमायामे जयवास्तुनि ।<br>परिणाहे पञ्च राजदण्डास्तिष्ठन्ति मध्यतः ॥ |
|---|---|---|

राजपट्टाभिधानेन स्थानमेतन्निगद्यते ।
अस्मिन् गृहं नृपः कृत्वा सुचिरं सुखमश्नुते ॥
अज्ञानाद् दम्भतो राजा योऽन्यत्र गृहमारभेत् ।
सोऽचिरात् मृत्युमाप्नोति रोगं शोकं भयं तथा ॥
यमदण्डोदयदण्डौ केनाहतिरुपप्लवः ।
ये चान्ये वास्तुदोषाः स्युः स्थाने दोषाश्च ये
पुनः ।
न स्पृश्यते राजपट्टस्तैः सर्पैर्गरुडो यथा ॥
द्विगुणादिरतोऽपि स्यात् क्रमाद्वङ्गादिवास्तुषु ।
राजछत्रमितेऽप्येवं प्राचीरे गुणदोषकौ ॥"
* ॥
अथ जयाख्यस्य चतुरस्रस्य वास्तुखण्डनिर्णयः ।
"राजद्वारे हि प्राकारा राजच्छत्रान्तरे मताः ।
यमद्वारे सार्द्ध राजच्छत्रान्तरे च ये नृपाः ॥
अपद्वारे राजदण्डं जिता आरम्भिताः पुनः
।
अद्वारे भूपतेस्तस्य राजदण्डत्रयान्तरे ॥
एवं व्यवस्थिते स्थाने मध्यमे तत् प्रदृश्यते ।
आयामे राजच्छत्राणि चत्वारि परिणाहतः
॥
राजच्छत्रैकमानेन राजदण्ड उदाहृतः ।
अयञ्च सप्तमो भागो वास्तोर्भवति शोभनः
॥
अस्मिन् गृहं नृपः कृत्वा सुचिरं पाति मेदिनीम् ।
अस्मिन् विजयवृद्धिञ्च सौख्यञ्च समवाप्नुयात् ॥
यो राजा दम्भतोऽन्यत्र वेश्मारम्भं समा-
चरेत् ।
य उक्तो राजदण्डोऽयं तस्येदं स्थानपञ्चकम् ॥

अत्र स्थित्वा महीपालः सर्व्वान् शत्रून् निकृ-
न्तति ॥"
दीर्घम् २१ । प्रस्थम् २० । इति सर्व्वतोभद्रः ॥ * ॥
"अष्टकोणो भवेद्भव्यः कोणो हस्तचतुष्टयः
।
राजहस्तोन्नतः कार्य्यो बुधश्चास्याधिदेवता ॥
रक्षका वसवश्चास्य पूज्यास्तेऽत्र प्रयत्नतः ।
अष्टौ द्वाराणि चास्य स्युः पीतचित्रावृतानि
च ॥
पीतपट्टावृतो ह्येष सर्व्वानिष्टविनाशनः ।
अत्र स्थाता क्षितिपतिर्न रिष्टैरवमृद्यते ॥
राजदण्डो भवेद्दीर्घः प्रसरे राजहस्तकः ।
राजहस्ते राजहस्ते प्रकोष्ठां स्तत्र कारयेत्
॥
अयं नान्दीमुखो नाम चन्द्रश्चास्याधिदेवता ।
नक्षत्रलोकः पूज्योऽत्र स यस्मादस्य रक्षकः ॥
द्वाविंशतिस्तु द्वाराणि दोर्घे दश तथान्तरे ।
अन्यत्र दीर्घे एकं स्यात् प्रसरे एकमेव च
॥"
दीर्घद्वितये दश द्वाराणि प्रसरद्वितये एकं कृत्वा
द्वितयं एवं २२ द्वाराणि ।
"शुक्लचित्रेण सहितः शुक्लपट्टेन शोभितः
।
सर्व्वार्थसाधको राज्ञां लक्ष्मीविजयवर्द्धनः
॥"
दीर्घम् ११ । प्रस्थम् १० । इति नान्दीमुखः ॥ * ॥
"दीर्घे त्रयो राजहस्ताः प्रसरे द्वौ प्रतिष्ठितौ
।
विनोद एष द्वाराणि त्रिंशत्कोष्ठद्वयं भवेत् ॥
रक्तचित्रेण चित्राङ्गो रक्तवस्त्रोपगूहितः ।

"आयामपरिणाहाभ्यां राज्ञः षोडशहस्तकः
।
द्वाराणि षोडशैवास्य गुरुरस्याधिदेवता ॥
रक्षिका देवता चास्य शुक्लवस्त्रैर्विभूषणम् ।
अत्र स्थित्वा नरपतिः सर्व्वार्थान् भुवि साधयेत् ॥"
दीर्घम् १७ । प्रस्थम् १६ । इति रङ्गः ॥ *
॥
"आयामे राजदण्डः स्यात् प्रसरे च तदर्द्धकम् ।
दश प्रकोष्ठा द्वाराणि शनिरस्याधिदेवता ॥
पिशाचा रक्षकाश्चास्य नीलवस्त्रादिभूषणम्
।
नाम्नायं केलिराख्यातो भयरोगविनाशनः ।
अत्र स्थित्वा नरपतिः सुखं विजयते रिपून्
॥"
दीर्घम् १०० । प्रस्थम् ५० ॥ * ॥
"राजहस्तेन कोणः स्यादेवं केलिश्चतुर्द्दश
।
चतुर्द्दशैव द्वाराणि राहुरस्याधिदेवता ॥
नक्तञ्चरा रक्षकास्तु नानावर्णाम्बरादिकम् ।
अयं जयः प्रकटितः सर्व्वत्रैव जयप्रदः ॥
आयामे राजहस्तः स्यात् परिणाहेऽष्टहस्तकः ।
नानारूपः कुटीरूपो वीरो नाम यजप्रदः ॥
बृहस्पतिर्देवतास्य रक्षकाश्चास्य खेचराः ।
विचित्रवसनोपेतः सर्व्वकामार्थदायकः ॥"
द्रीर्घम् ११ । प्रस्थम् ८ । इति वीरः ॥ * ॥
"यो यस्य गदितो वर्णस्तथा स्याच्चामरोऽपि च ।
राजहस्तान्तरे पञ्च चामराः स्युर्म्महीभुजाम्
॥
चन्द्रोऽपि दर्पणे हस्त उपरि क्रमतो न्यसेत्
।
पताकाध्वजयुक्ताश्च गृहरक्षक-रक्षसाम् ।
छत्रयुक्तं गृहं राज्ञां विज्ञेयं चक्रवर्त्तिनाम् ॥"
एषां नियमः परवत् ।
"इति द्वादशचिह्नानि गृहाणां कथितानि वै ।
विमृष्यैतानि नृपतिर्गृहारम्भं समाचरेत् ॥

गजो व्याघ्रश्च सिंहश्च मृगो भृङ्गो यथाक्रमम् ।
सिंहे सिंहासनं स्थानं व्याघ्रे स्यात् द्वारमन्दि-
रम् ॥
गजे यात्रालयं कुर्य्यात् मृगे केलिनिकेतनम् ।
भ्रमरेऽन्तःपुरं कुर्य्यात् क्रमेण पृथिवीपतेः ॥
तेन मध्यमेव सिंहासनं दीर्घस्य चतुरस्रकैः ॥"
तत्र भविष्योत्तरे ।
"मेषादिचन्द्रे जातस्य नृपतेः स्युरनुक्रमात् ।
द्वादशैव गृहान् वक्ष्ये तेषां लक्षणमग्रतः ॥
सुनन्दः सर्व्वतोभद्रो भव्यो नान्दीमुखस्तथा ।
विनोदश्च विलासश्च विजयो विमलस्तथा ।
रङ्गः केलिर्जयो वीरो द्वादशैते प्रकीर्त्तिताः ॥"
अथैषां लक्षणानि ।
"यद्यत्रैवोच्यते मानं तस्य तेनैव कल्पना ।
राज्ञः स्वहस्तमेकन्तु दीर्घे सर्व्वत्र निक्षिपेत् ॥
आयामेन सुन्दरः स्यात् राजहस्तैश्च पञ्चमिः ।
परिणाहे चतुर्भिश्च राजहस्तैः प्रतिष्ठितः ॥
अस्याधिदेवता भौमो रक्षतीदं वसुन्धरा ।
द्वाराणि विंशतिश्चास्य रक्तचित्रावृतानि च ॥
रक्तपट्टावृतो गेहः सकलार्थप्रसाधकः ।
अत्र स्थित्वा महीपालः सुचिरं पाति मेदि-
नीम् ॥"
दीर्घम् ५१ । प्रस्थम् ४० । इति सुन्दरः ॥ * ॥
"द्वौ राजहस्तावायामे परिणाहे तथैव च ।
इत्ययं सर्व्वतोभद्रः शुक्रश्चास्याधिदेवता ॥
अत्र स्थाता नरपतिर्भवेत् कीर्त्तिप्रतापवान् ॥
सूर्य्याधिदेवता चास्य रक्षकाः सकलग्रहाः ॥"
दीर्घम् ३१ । प्रस्थम् २० । इति विनोदः ॥ * ॥
"दीर्घेण राजदण्डार्द्धं प्रसरे राजहस्तकौ ।
विलास एष द्वाराणि चत्वारिंशद्बुधा विदुः ॥
गन्धर्व्वा रक्षकाश्चास्य प्रकोष्ठत्रितयं मवेत् ।
चित्रपद्मेन शङ्खेन चित्रवस्त्रेण शोभितः ॥
दुर्भिक्षशमनो ह्येष शस्यसम्पत्तिकारकः ।
तत्र स्थित्वा नरपतिः प्रचुरं सुखमश्नुते ॥"
दीर्घम् ५१ । प्रस्थम् २० । इति विलास-
गृहम् ॥ * ॥
"द्वादशहस्ताः प्रसरे दीर्घे द्वौ राजहस्तकौ कथितौ ।
विजये द्वादश भवनद्वाराणि स्युर्जयप्रदान्यत्र ॥
सूर्य्योऽधिदेवता चास्य रक्षतीमं विहङ्गराट् ।
अरुणाम्भोजचित्राङ्गो अरुणाम्बरभूषितः ।
तत्र स्थित्वा नरपतिः कृत्स्नां शास्ति वसुन्ध-
राम् ॥"
दीर्घम् २१ । प्रस्थम् १२ ॥ * ॥
"आयामे राजदण्डौ द्वौ प्रसरे राजदण्डकः ।
शतद्वारोपसहितः प्रकोष्ठैर्द्दशभिर्युतः ॥
दिक्पाला रक्षकाश्चास्य कुजश्चास्याधिदेवता ।
नानावर्णेन चित्रेण वसनेन विभूषितः ॥
अत्र स्थित्वा नरपतिः सुचिरं सुखमश्नुते ।
यस्मिन्राज्ये प्रतिष्ठेत विमलो गृहसत्तमः ॥
दुर्भिक्षं नात्र जायेत नेतयोर्न च विप्लवः ।
न रोगो नापि शोकश्च नैवोत्पातभवन्तथा ।
इत्यादि गुणबाहुल्यमन्यत्र कथितं बुधैः ॥"
दीर्घम् २०० । प्रस्थम् १०० ॥ * ॥
इति सिंहासनस्थानमिति राष्ट्रस्य मस्तकम् ।
इतोऽन्ये चित्तहर्षार्थाः प्रासादाः पृथिवीभुजः ॥
जलयन्त्रादयो येऽन्ये तेषां नास्ति विनिश्चयः ।
स्वजन्मगेहसंस्थो यो नृपतिः शुभचेतनः ॥
स चिरं पृथिवीं शास्ति सर्व्वार्थान् साधयत्यपि ।
यो वा तत्परगेहस्थो दुर्म्मोहात् धरणीपतिः ॥
न चिरं पाति वसुधां घोरं रोगञ्च विन्दति ।
स्वलग्नपतिमित्रस्य गृहवारो न दुष्यति ॥" * ॥
परञ्च ।
"हीरकस्य विशुद्धस्य ब्रह्मजातेर्म्महाद्युतेः ।
सूर्य्याङ्गस्पर्शमात्रेण वमतो दीप्तिमिच्छिखाः ।
गृहाग्रे धारयेद्राजा तद्वज्रं वज्रवारणम् ॥"
वात्स्यस्तु ।
"गृहेषु मणिविन्यासो विज्ञेयो न च दण्डवत् ।
विशुद्धहीरकन्यासो विधेयः सदनोपरि ।
तेन सर्व्वाणि नश्यन्ति अरिष्टानि मही-
भुजाम् ॥"
भोजोऽपि ।
"वास्तुखण्डोऽब्जरूपः स्यात्यथार्थैर्नामभिः स्वकैः ।
यमद्वारात् समारभ्य यावदद्वारमिष्यते ॥"
तद्यथा, --
"मृत्युर्भयः स्थिरश्चण्डो धनं विभव एव च ।
वीरस्तापश्च इत्यष्टौ वास्तुभागा यथाक्रमम् ॥

| दानवा रक्षकाश्चैव पूज्यास्ते चात्र यत्नतः<br>।<br>चतुर्द्दशास्य द्वाराणि कृष्णचित्रावृतानि च<br>॥<br>पीतपटावृतो ह्येष सर्व्वानिष्टविनाशनः। | | |
|---|---|---|

यमनैरृततोयेशवायुयक्षेशशङ्कराः ।
इन्द्रो वह्निरिति प्रोक्ता विभागानामधीश्वराः ॥
मृत्यौ कारालयं कुर्य्यात् भयस्थाने च पत्तयः ।
स्थिरे सहचरान् रक्षेत् चण्डे वाजिगजादयः ॥
धने धान्यादिकं रक्षेव् विभवे कोषरक्षणम् ।
राजपट्टे भवेद्वीरो तापे कश्चिन्नरालयम् ।
प्राचीरप्रतिभागान्ते इति भोजस्य सम्मतम् ॥”
इति युक्तिकल्पतरौ राजगृहयुक्तिः ॥ * ॥
“वास्तुमानेन नियमो गृहमाणेन निर्णयः ॥”
तत्र वास्तुप्लवलक्षणम् ।
“पूर्ब्बप्लवो वृद्धिकरो धनदश्चोत्तरप्लवः ।
दक्षिण्यो मृत्युदो वास्तुर्द्धनहा पश्चिमप्लवः ॥
कोणे रेखाद्वयं कृत्वा मध्ये रेखाद्वयं तथा ।
ऐशानकोणतो रेखा दक्षिणाद्यैर्ध्वजास्तथा ॥
नाचामरो नामणिश्च नापताकापि नाध्वजः ।
नाकुम्भादिर्नावितानो ना चित्रो नातिचित्रधृक् ॥
नात्युच्चो नातिनीचो वा नाप्रकीर्णप्रकीर्णकः ।
ना धातुर्नागवाक्षश्च न चैकानेकद्वारभाक ॥
नियमोऽस्तु महीन्द्राणां सर्व्वसम्पत्तिहेतवे ॥”
इति राजगृहयुक्तिः ॥ * ॥
अन्येषान्तु यथा वास्तुमानेन नियमः ।
“ध्वजो धूमस्तथा सिंहः श्वा वृषो गर्द्दभो गजः ।
काक इत्येष गदितो वास्तुस्थानस्य निर्णयः ।
अयुग्मे सुखसम्पत्तिर्युग्मञ्च विपदास्पदम् ॥”
एवमन्यत्रापि ।
“ध्वजे विभूतिर्विपदश्च धूमे
सिंहे विभोगः शुनि सर्व्वनरशः ।
वृषे सुखं गर्द्दभतो विनाशो
गजे धनं काकपदे च मृत्युः ॥
कोणरेखा कोणशुचिः सुखसम्पत्तिनाशिनी ।
पूर्ब्बपश्चिमतो दण्ड उदयाख्यः सुखावहः ॥
दक्षिणोत्तरतो दण्डो वंशहा यमदण्डकः ।
गृहाणि पातयेद्धीमानेषां दण्डव्यधान्तरे ॥ * ॥
एका चेद्दक्षिणे शाला द्वे च दक्षिणपश्चिमे ।
तिस्रश्चेत् पूर्ब्बतो हीनाश्चतुःशालं सुखावहम् ॥
पश्चिमास्यं ध्वजे वेश्म सिंहे तूदङ्मुखं शुभम् ।
पूर्ब्बालयं धृषस्थाने दक्षिणाभिमुखं गजे ॥
पदाघातः परिखाघातः पथाघातस्तथैव च ।
जलदोषो वृक्षदोषो दोषा इत्येवमादयः ॥
वर्ज्जयेत् पूर्ब्बतोऽश्वत्थं प्लक्षं
दक्षिणतस्तया ॥
ऐशान्यां रक्तपुष्पञ्च आग्नेय्यां
क्षीरिणस्तथा ।
यत्र तत्र स्थिता वृक्षा
विल्वदाडिमकेशराः ।
पनसा नारिकेलाश्च शुभं कुर्व्वन्ति
निश्चयम् ।
निशा नीली पलाशश्च चिञ्चा
श्वेतापराजिता ।
कोविदारश्च सर्व्वत्र सर्व्वं निघ्नन्ति
मङ्गलम् ॥ * ॥
गृहपातनमिच्छन्ति नागस्य स्वपने
क्रगात् ।
पूर्ब्बादिषु शिरः कृत्वा नागः शेते
त्रिभि-
स्त्रिभिः ।
भाद्राद्यैर्व्वामपार्श्वेन तस्य क्रोडे गृहं
शुभम् ॥”
तत्र प्रमाणम् ।
“स्वामिहस्तप्रमाणेन ज्येष्ठपत्नीकरेण
वा ।
गृहाभ्यन्तरसंस्थानं मापयेदभितो
नरः ॥” * ॥
तत्र सामान्यलक्षणम् ।
“गृहभूमिसमाहतपिण्डपदं
वसुलोचनरन्ध्रगजैर्गुणितम् ।
रबिभूधरत्रिंशद्योगहृतं
भवनाय व्ययस्थितिऋक्षपदम् ॥
एकाशीतिगुणे हस्ते द्विबाणैकहते च ते
।
षडिन्दुयुग्मसम्भक्ते पिण्डः स्यात्
सर्व्वबेश्मनः ॥”
तद्यथा ।
“ध्वजादिगेहसंस्थाने गृहमानं
शुभावहम् ।
दीर्घे भानुः परीणाहे सप्त
चैवाङ्गुलिद्वयम् ॥
गृहरोधो यथा न स्यात् तथा
प्राचीरकल्पना ॥”
इति युक्तिकल्पतरौ गृहयुक्तिः ॥ * ॥
अथ वास्तुयागप्रमाणम् । लैङ्गे ।
चतुःषष्टिपदं वास्तु सर्व्वदेवगृहं प्रति ।
एकाशीतिपदं वास्तु मानुषं प्रति सिद्धिदम्
॥
अग्रतः शोधयेद्वास्तुभूमिं यस्य पुरोदिताम्
।
चतुर्हस्तं द्विहस्तं वा जलान्तं वापि शोध्य
च ॥
सुसमञ्च तदा कृत्वा सदार्च्चनं ततो भवेत्
॥”
पुरोदितां ब्राह्मणादिभेदेन
प्रशस्तत्वेनोपपादि-
ताम् ॥ * ॥ तथा च मत्स्यपुराणम् ।
“अरत्निमात्रे गर्त्ते वै अनुलिप्ते च सर्व्वशः
।
घृतमामशरावस्थं कृत्वा वर्त्तिचतुष्टयम् ॥
ज्वालयेत्तु परीक्षार्थं पूर्ब्बं तत्
सर्व्वदिङ्मुखम् ।
दीप्त्या पूर्ब्बादि गृह्णीयात्
वास्तूनामनुपूर्ब्बशः ॥
वास्तुः समृद्धिको नाम दीप्यते सर्व्वतो हि
यः ।
शुभदः सर्व्ववर्णानां प्रासादेषु गृहेषु च ॥”
वास्तुकर्त्तुररत्निमात्रे गर्त्ते तत्रैव स्थापिते
आम-
शरावे पूर्ब्बादिक्रमेण वर्त्तिचतुष्टयं कृत्वा
गव्य-
घृतेनापूर्य्य वर्त्तिचतुष्टयं प्रज्वालयेत् ।
तत्र
प्राच्यां दीपशिखाया उज्ज्वलत्वे तद्वास्तु
ब्राह्म-
णस्य प्रशस्तम् । एवं दक्षिणादिदिशि
शिखाया-
स्तथात्वे क्षत्त्रियादेः । सर्व्वशिखासमत्वे
सर्व्व-

गच्छतां पदतालस्य श्रवणं यदि वेश्मनि ।
पदाघातो नाम दोषः पुत्त्रपौत्त्रधनाषहः ॥
परिखादण्डयोर्घातो वास्तुनोः प्रतिवेशिनोः ।
परिखाघातो नाम दोषः कुलवीर्य्यधनापहः ॥
पथाघातो नाम दोष आघातो वास्तुनः पथः ।
स हन्ति भोगं वंशञ्च तस्य भेदमतः शृणु ॥
एकमार्गं सुखं कुर्य्यात् द्विपथं कुलवर्द्धनम् ।
त्रिपथं कुलनाशाय सर्व्वनाशश्चतुष्पथे ॥
स्ववाट्यां परवाट्याञ्च यस्तिष्ठति जलाशयः ।
तद्दोषो जलदोषः स्यात् स हन्ति कुलसम्पदः ॥
ऋद्धिमानसुखैश्वर्य्यमृत्युक्लेशभयामयाः ।
एते जलाशये दोषाः पूर्ब्बादिदिक्षु च क्रमात् ॥
स्ववास्तुवृक्षतो दोषः कुलसम्पत्तिनाशवः ।

इदं पुत्त्रफलं गेहं
वृषस्थानेऽप्युदीरितम् ।
दीर्घे षट्प्रसरे पञ्च चतस्रोऽङ्गुलयोऽपि
च ॥
इदं पुत्त्रफलं गेहं गजस्थाने
प्रकीर्त्तितम् ।
दीर्घे त्रयोदश भुजाङ्गुलयश्चैकविंशतिः
॥
प्रसरेऽष्टौ सुखफलं गजस्थाने गृहं
विदुः ।
इति द्वादशकं प्रोक्तं गृहाणां
सर्व्वसंमतम् ।
एवं गृहं समाचर्य्य गृहस्थः
शुभमिच्छति ॥" * ॥
भोजस्तु ।
"आयामपरिणाहाभ्यां योऽङ्कपिण्डो
विजायते ।
येन केनापि चाङ्केन शोधनीयः स
इष्यते ॥
एकद्विपञ्चसप्तानि शुभान्यन्यानि
चान्यथा ।
आयामपरिणाहाभ्यां
सार्द्धद्वादशहस्तकम् ॥
एतत्तु मङ्गलं नाम गृहं सुखविवर्द्ध नम्
।
आयामपरिणाहाभ्यां
सार्द्धहस्तचतुर्द्दश ॥
इदं कमलकं नाम गृहं
सम्पत्तिकारकम् ।
आयामपरिणाहाभ्यां सार्द्धहस्तास्तु
षोडश ।
इदं हि सर्व्वतोभद्रं स्वामिनः
सुखकारकम् ॥
आयामपरिणाहाभ्यां
सार्द्धाष्टादशहस्तकम् ।
कल्याणनाम वेश्मेदं
धनधान्यसुखप्रदम् ॥
आयामपरिणाहाभ्यां
सार्द्धविंशतिहस्तकम् ।
इदं हि सुखदं नाम भर्त्तुः
सुखविवर्द्धनम् ॥

वर्णानां स वास्तुदेशः प्रशस्तः ।
जलान्तमिति
तु मत्स्यपुराणपरिभाषितंप्रासादपरम् ॥
* ॥
तथा च मात्स्ये ।
"पुरुषाधःस्थितं शल्यं न गृहे दोषदं भवेत्
।
प्रासादे दोषदं शल्यं
भवेद्यावज्जलान्तिकम् ॥
प्रासादभवनादीनां निवेशं विस्तराद्वद ।
कुर्य्यात् केन विधानेन कश्च
वास्तुरुदाहृतः ॥"
इत्युपक्रम्य
वाप्यादीनामभिधानादादिपदात्
कूपादयो गृह्यन्ते । प्रासादेऽप्येवमेव
स्यात् कूप-
वापीषु चैव हि । इत्यभिधानाच्च
कूपादावपि ॥
वास्तुपुरुषश्च ।
"कश्यपस्य गृहिणी तु सिंहिका
राहुवास्तुतनयावजीजनत् ।
पूर्ब्बजो हरिनिकृत्तकन्धरो
दैवतैरवरजो निपानितः ॥"
तथा ।
"चैत्रे व्याधिमवाप्नोति यो गृहं कारयेन्नरः
।
वैशाखे धनरत्नानि ज्यैष्ठे मृत्युमवाप्नुवात्
॥
आषाढे भृत्यरत्नानि पशुवर्ज्जमवाप्नुयात्
।
श्रावणे मित्रलाभस्तु हानिर्भाद्रपदे तथा ॥
आश्विने पत्नीनाशः स्यात् कार्त्तिके
धनधान्य-
कम् ।
मार्गशीर्षे तथा भक्तं पौषे तस्करतो मवम्
॥
माघे चाग्निभयं विद्यात् काञ्चनं फाल्गुने
सुतान् ।
शुक्लपक्षे भवेत् सौख्यं कृष्णे तस्करतो
भयम् ॥
अश्विनी रोहिणी मूलमुत्तरात्रयमैन्दवम् ।

|  |  |  |
| --- | --- | --- |
|  | मया यदिदमुद्दिष्टं गृहपञ्चकमद्भुतम् ।<br>न तेषु स्थाननियमः सर्व्वेष्वेतानि कारयेत् ॥<br>स्थानं मानञ्च दोषाश्च ये प्रोक्तास्तु मया क्रमात् ।<br>तद्विचार्य्य गृहं कृत्वा गृहस्थः सुखमश्नुते ॥<br>अज्ञानादथ मोहाद्वा योऽन्यथा गृहमाचरेत् ।<br>स विषीदति नश्येत तस्य कीर्त्तिः कुलं बलम् ॥<br>प्राचीराणां न नियमो गृहस्थानाञ्च विद्यते ।<br>यथावास्तु यथाशक्ति प्राचीरानचयेद्गृही ॥ | स्वाती हस्तानुराधा च गृहारम्भे प्रशस्यते ॥<br>आदित्यभौमवर्ज्जन्तु सर्व्वे वाराः शुभावहाः ।<br>वज्रव्याघातशूले च व्यतीपातातिगण्डयोः ॥ |

विष्कम्भगण्डपरिघवर्ज्जंयोगेषु कारयेत् ।
श्वेतमैत्रेयगान्धर्व्वेष्वभिजिद्रौहिणेऽपि च ॥
तथा विजयसावित्रे मुहूर्त्ते गृहमारभेत् ।
चन्द्रादित्यबलं लग्नं तथा शुभनिरीक्षितम् ।
प्रासादेऽप्येवमेव स्यात् कूपवापीषु चैव हि
॥”
ऐन्दवं मृगशिरः ॥ * ॥ मुहूर्त्ते संवर्त्तः ।
“रौद्रः श्वेतश्च मैत्रेयस्तथा शानकटः
स्मृतः ।
सावित्रश्च जयन्तश्च गान्धर्व्वः
कुतपस्तथा ॥
रौहिणश्च विरिञ्चिश्च विजयो नैरृतस्तथा
।
माहेन्द्रो वारुणश्चैव वटः पञ्चदश स्मृताः
॥”
तेन
द्वितीयतृतीयसप्तमाष्टमनवमैकादशपञ्चमा-
न्यतममुहूर्त्ते श्वेतादौ वास्तुकर्म्म कुर्य्यात्
।
चैत्रादिफलन्तु नरगृहे देवगृहे तु
प्रतिष्ठाकाल-
वशात् तत्कालपरिग्रहः ॥ * ॥ तथा च
कल्प-
तरौ देवीपुराणम् ।
“यस्य देवस्य यः कालः
प्रतिष्ठाध्वजरोपणे ।
गर्त्तापूरशिलान्यासे शुभदस्तस्य पूजितः
॥”
यस्य देवस्य प्रतिष्ठाध्वजरोपणे यः कालः
शुभ-
दस्तस्य गर्त्तापूरशिलान्यासे गृहारम्भे स
कालः
पूजित इति ॥ * ॥ प्रतिष्ठाकालश्च
मात्स्ये ।
“चैत्रे वा फाल्गुने वापि ज्यैष्ठे वा माधवे
तथा ।
माघे वा सर्व्वदेवानां प्रतिष्ठा शुभदा भवेत्
॥
प्राप्य पक्षं शुभं शुक्लमतीते चोत्तरायणे ।

मत्स्यपुराणे ।
“नवग्रहमखं कृत्वा ततः कर्म्म समाचरेत् ।
अन्यथा फलदं पुंसां न काम्यं जायते
क्वचित् ॥”
नव्यवर्द्धमानधृतवचनम् ।
“पितृभ्यो वृद्धये वृद्धिश्राद्धं दत्त्वा
सदक्षिणम् ।
क्रूरभूतबलिञ्चैव संपूज्य वास्तुदेवताः ॥”
एकादिने वास्तुयागगृहोत्सर्गयोः करणे
सकृदेव
वृद्धिश्राद्धं करणीयम् ।
“गणशः क्रियमाणे तु मातृभ्यः पूजनं
सकृत् ।
सकृदेव भवेत् श्राद्धमादौ न पृथगादिषु ॥”
इति छन्दोगपरिशिष्टात् ॥
मात्स्ये ।
“ऊहापोहार्थतत्त्वज्ञो वास्तुशास्त्रस्य
पारगः ।
आचार्य्यश्च भवेन्नित्यं सर्व्वदा दोषवर्जितः
॥”
देवीपुराणम् ।
“प्रासादे च चतुःषष्टिरेकाशीतिपदं गृहे ।
चतुरस्रीकृते क्षेत्रे चाष्टधा नवधा कृते ॥
कोणे रेखास्ततो दत्त्वा नव भागान्
प्रकल्पयेत् ।
ईशः कोणार्द्धतो ज्ञेयः पर्जन्यः
पदसंस्थितः ॥
द्विपदस्थो जयन्तश्च शक्रः
स्यादेककोष्ठगः ।
भास्करश्च पदो ज्ञेयो द्विपदः सत्य उच्यते
॥
भृशः पदस्थो ज्ञातव्यो व्योम चैव पदार्द्ध
कम् ।
हुताशनः पदार्द्धे तु पूषा च पदसंस्थितः ॥
वितथा द्विपदो ज्ञेयः पदैकस्थो गृहक्षतः ।
वैवस्वतः पदकस्थो गन्धर्व्वो
द्विपदस्थितः ॥
भृङ्गश्चैकपदो ज्ञेयो मृगश्चार्द्ध पदस्थितः ।

कुसुम्भचूर्णमरुणं कृष्णं दग्धपुलाकजम् ।
विल्वादिपत्रजं श्याममित्युक्तं वर्णपञ्चकम्
॥”
स्यात् पुलाकस्तुच्छधान्ये इत्यमरोक्तेः
तुच्छं
अपकृष्टम् ।
“पूज्या मण्डलबाह्ये तु
पूर्व्वाग्न्यादिकक्रमात् ।
स्कन्दश्चैव विदारी च अर्य्यमा पूतना तथा
।
जम्भका पापराक्षस्यौ पिलिपिञ्जश्चरक्यपि
॥”
मण्डलकरणासामर्थ्ये शालग्रामसमीपे सर्व्वे
पूज्याः ।
“शालग्रामशिलारूपी यत्र तिष्ठति केशवः ।
तत्र देवासुरा यक्षा भुवनानि चतुर्द्दश ॥”
इति पद्मपुराणवचनात् ॥
तत्रावाहनविसर्ज्जने न स्तः ।
“शालग्रामे स्थावरे च नावाहनविसर्ज्जने
॥”
इति वचनात् ॥
तदसम्भवे घटादिजले ।
प्रतिमास्थानेष्वप्सु
आवाहनविसर्ज्जनवर्ज्जम् । इति बौधायन-
वचनात् ॥ * ॥ एषां
विशेषबलिर्मत्स्यपुराणदेवी-
पुराणाभ्यामुक्तोऽपीदानीन्तनैर्न्न व्यवह्रियते
।
इति न लिखितः । किन्तु
मत्स्यपुराणोक्तपायस-
बलिर्दीयते । तथा च ।
“पायसं वापि दातव्यं स्वनाम्ना सर्व्वतः
क्रमात् ।
नमस्कारेण मन्त्रेण प्रणवाद्येन सर्व्वतः ॥”
अतएव प्रागुक्तशारदावाक्ये पायसमात्रमुक्तं
तेन एष पायसबलिः ॐ ईशानाय नमः ।
इत्यादिना प्रयोगः । न च
वाचस्पतिमिश्रोक्त-
ममुकदेवतायै एष पायसबलिर्न्नम इत्यादि

पञ्चमी च द्वितीया च तृतीया सप्तमी तथा
॥
दशमी पौर्णमासी च तथा श्रेष्ठा त्रयोदशी ।
आसु प्रतिष्ठा विधिवत् कृता बहुफला
भवेत् ॥”
प्रतिष्ठासमुच्चये ।
“माघे वा फाल्गुने वापि चैत्रवैशाखयोरपि
।
ज्यैष्ठाषाढकयोर्व्वापि प्रतिष्ठा शुभदा भवेत्
॥”
कल्पतरौ देरीपुराणम् ।
“महिषासुरहन्त्र्याश्च प्रतिष्ठा दक्षिणायने
॥”
ज्योतिषे ।
“गुरोभृगोरस्तबाल्य वार्द्धके सिंहगे गुरौ ।
गुर्व्वादित्ये दशाहे तु वक्रिजीवाष्टविंशके ॥
पूर्ब्बराशावनायातातिचारिगुरुवत्सरे।
प्राग्राशिगन्तृजीवस्य चातिचारे त्रिपक्षके ॥
कम्पाद्यद्भतसप्ताहे नीचस्थेज्ये मलिम्लुचे
।
पौषादिकचतुर्म्मासि चरणाङ्कितवर्षणे ॥
एकेनाह्ना चैकदिने द्वितीयेन दिनत्रये ।
तृतीयेन तु सप्ताहे माङ्गल्यानि विवर्जयेत्
॥
व्रतारम्भप्रतिष्ठे च गृहारम्भप्रवेशने ।
प्रतिष्ठारम्भणे देवकूपादेः परिवर्जयेत् ॥”
* ॥
स्मृतिसागरे ।
“उल्कापाते च भूकम्पे अकालवषगर्जिते ।
वज्रकेतूद्गमोत्पाते ग्रहणे चन्द्रसूर्य्ययोः ॥
प्रयाणन्तु त्यजेत् शूद्रः सप्तरात्रमतः परम्
।
ब्राह्मणः क्षत्त्रियो वैश्यस्त्यजेत् कर्म्म
त्रिरा-
त्रकम् ॥
शूद्रस्त्यक्त्वा चैकरात्रं ततः कर्म्म
समाचरेत् ॥”
पराशरः ।
“प्रयाणे सप्तरात्रन्तु त्रिरात्रं व्रतबन्धने ।
एकरात्रं परित्यज्य कुर्य्यात् पाणिग्रहं ग्रहे
॥”
पितरोऽर्द्ध पदे ज्ञेयाः पदे दौवारिकस्तथा
॥
सुग्रीवो हि पदे ज्ञेयः पदस्थः पुष्पदन्तकः
।
पयसां पतिरेकस्थोऽसुरो द्विपदसंस्थितः
॥
शोषश्चैकपदो ज्ञेयः पापोऽर्द्धपद उच्यते ।
रोगश्चार्द्धपदो ज्ञेयो नागश्चापि पदे
स्थितः ॥
द्विपदे विश्वकर्म्मा तु भल्लाटः
पदसंस्थितः ।
यज्ञेश्वरः पदो ज्ञेयो नागराड्द्विपदस्थितः
॥
पादस्था श्रीर्महादेवी
दितिश्चार्द्धपदस्थिता ।
आपान्तपादसंस्थः स्यादापवत्सः
पदस्थितः ॥
चतुष्पदस्थो विज्ञेयश्चार्य्यमा मध्यपूर्ब्बगः
।
सावित्रस्तु पदो ज्ञेयः सावित्री
पदसंस्थिता ॥
ततो विवस्वान्
विज्ञेयश्चतुष्कैर्मध्यसंस्थितः ॥
इन्द्रश्चेन्द्रात्मजश्चोभावेकैकपदसंस्थितौ
॥
मित्रश्चतुष्पदश्चैव पश्चिमे च व्यवस्थितः
।
रुद्रश्चैकपदो ज्ञेयो राजयक्ष्मा पदस्थितः
॥
धराधरश्च विज्ञेय उत्तरे च चतुष्पदे ।
चतुष्पदश्चतुर्हस्तो मध्ये ज्ञेयः प्रजापतिः
॥
देवतानुचरा बाह्ये सर्व्वे चान्तस्तथासुराः
।
एवं प्रगृह्य कोष्ठानि रजसापूर्य्य देशिकः ।
एतेषामेव देवानां बलिं दद्यात्तु कामिकम्
॥”
रजसेति पञ्चवर्णरजोभिः । तथा च
शारदा-
याम् ।
प्रणवादिनमस्कारान्तस्वनामरूपमन्त्रमध्ये
देय-
प्रवेशस्यायुक्तत्वात् । तथा च ब्रह्मपुराणम् ।
“ॐकारादिसमायुक्तं
नमस्कारान्तकीर्त्तितम् ।
स्वनाम सर्व्वसत्त्वानां मन्त्र इत्यभिधीयते
॥”
इति देवीपुराणम् ॥
“एवं भूतगणानान्तु वलिर्देयस्तु कामिकः ।
एतान् प्रपूजयेद्देवान् कुशपुष्पाक्षतैर्ब्बुधः ॥
एवं प्रपूजिता देवाः शान्तिपुष्टिप्रदा नृणाम् ।
अपूजिता विनिघ्नन्ति कारकं स्थापकं
तथा ।
एतान् प्रपूजयेद्देवान् कुशपुष्पाक्षतैस्तथा
॥”
अत्र पूजाया नित्यत्वात्
वक्ष्यमाणमत्स्यपुराण-
वचने होमानन्तरं वलिदानाच्च वलेः
काम्यत्वात्
पूजा होमानन्तरं वलिदानाचारः । तथा च ।
“ब्रह्मस्थाने तथा कुर्य्याद्वासुदेवस्य पूजनम्
।
श्रियाश्च पूजनं कुर्य्याद्वासुदेवगणस्य च ॥
गन्धार्घ्यपुष्पनैवेद्यधूपाद्यैः सुरसत्तम ।
ततः संपूजयेत् तस्मिन् सर्व्वलोकधरां
महीम् ॥
सुरूपां प्रमदारूपां दिव्याभरणभूषिताम् ।
ध्यात्वा तामर्च्चयेद्देवीं परितुष्टां
स्मिताननाम् ॥
ततः स्वनाममन्त्रेण सर्व्वदेवमयं हरिम् ।
ध्यात्वा समर्च्चयेत्तत्र यजेद्वास्तुनरं परम् ॥
ब्रह्मस्थाने ततो विद्वान् कुर्य्यादाधारमक्षतैः
।
तस्मिन् संस्थापयेत् कुम्भं वर्द्धन्या सह
पूरितम् ॥
हैमं वा राजतं पात्रं मृण्मयं वा दृढं शुभम् ।
सर्व्वबीजौषधीयुक्तं सुवर्णरजतान्वितम् ॥

| | “उक्तानामपि देवानां पदान्यापूर्य्य पञ्चभिः ।<br>रजोभिस्तैर्यथोक्तेभ्यः पायसान्नैर्बलिं हरेत् ॥”<br>तथा ।<br>“पीतं हरिद्राचूर्णं स्यात् सितं तण्डुलसम्भवम् । | |
|---|---|---|

ब्रह्मस्थाने ततो मन्त्री कलसं स्थाप्य पूजयेत् ।
तस्मिंश्चतुर्म्मुखं देवं प्राजेशं मन्त्रविग्रहम् ॥
गन्धैः पुष्पैश्च धूपैश्च नैवेद्यैः सुमनोहरैः ।
ततो मण्डलबाह्ये तु प्रतीच्यां प्राङ्मुखः स्थितः ॥
आचार्य्यो गृह्य सम्भारं ब्रह्मादींस्तर्पयेत् सुरान् ।
प्राजेशं तर्पयेद्विद्वान् आहुतीनां शतेन च ॥
इतरान् दशभिर्देवानाहुतिभिः प्रतर्पयेत् ।
ततः प्रणम्य विज्ञाप्य कृत्वा वै स्वस्तिवाचनम् ॥
प्रगृह्य कर्करीं सम्यङ्मण्डलान्तःप्रदक्षिणम् ।
सूत्रमार्गेण देवेन तोयधारेण कारयेत् ॥
पूर्ब्बवत् तेन मार्गेण सप्तबीजानि वापयेत् ।
आरम्भं तेन मार्गेण तस्य खातस्य कारयेत् ॥
ततो गर्त्तं खनेन्मध्ये हस्तमानप्रमाणतः ।
चतुरङ्गुलमात्रं तदधः खन्यात् सुसम्मितम् ॥
गोमयेन प्रलिप्याथ चन्दनेन विलेपितम् ।
मध्ये दत्त्वा तु पुष्पाणि शुक्लान्यक्षतमेव च ॥
आचार्य्यः प्राङ्मुखोभूत्वा ध्यायेद्देवं चतुर्म्मुखम् ।
तूर्य्यमङ्गलघोषेण ब्रह्मघोषरवेण च ॥
अर्घ्यं दद्यात् सुरश्रेष्ठ कुम्भतोयेन मन्त्रवित् ।
प्रगृह्य कर्करीं तान्तु तत् खातं पूजयेज्जलैः ॥
सर्व्वरत्नसमायुक्तैर्विमलैश्च सुगन्धिभिः ।
तस्मिन् पुष्पाणि शुक्लानि प्रक्षिपेदोमिति स्मरन् ॥
तदावर्त्तं परीक्षेत दधिभक्तान्वितं क्षिपेत् ।
शुभं स्याद्दक्षिणावर्त्तेऽशुभं वामे भवेत्ततः ॥
बीजैः शालियवादीनां गर्त्तं तं पूरयेत्ततः ।
क्षेत्रजाभिः पवित्राभिर्मृद्भिर्गर्त्तं प्रपूरयेत् ॥
एवं निष्पाद्य विधिना वास्तुयागं सुरोत्तम ।
कार्य्यस्तु पञ्चभिर्व्विल्वैर्व्विल्वबीजैरथापि वा ।
होमान्ते भक्ष्यभोज्यैश्च वास्तुयागे बलिं हरेत् ॥”
इति मत्स्यपुराणे होमान्ते बलिविधानात् अत्रापि होमं कृत्वा बल्यादिप्रागुदितसर्व्वकर्म्म-करणाचारः ॥ * ॥ अत्र प्रजापतिनामाग्निः ।
“प्रतिष्ठायां लोहितश्च वास्तुयागे प्रजापतिः ।
जलाशयप्रतिष्ठायां वरुणः समुदाहृतः ॥”
इति मत्स्यसूक्तवचनात् ।
एकाशीतिपदवास्तु-यागे मत्स्यपुराणम् । भूम्यधिकारे ।
“पञ्चगव्यौषधिजलैः परीक्षित्वा तु सेचयेत् ।
एकाशीतिपदं कृत्वा रेखाभिः कनकेन तु ॥
पश्चाल्लेप्येन चालिप्य सूत्रेणालोड्य सर्व्वतः ।
दश पूर्व्वायता रेखा दश चैवोत्तरायताः ।
सर्व्ववास्तुविभागे तु विज्ञेया नवधा नव ॥”
पञ्चगव्यमन्त्रमाह शङ्खः ।
“गायत्र्यादाय गोमूत्रं गन्धद्वारेति गोमयम् ।
आप्यायस्वेति च क्षीरं दधिक्राव्नेति वै दधि ।
तेजोऽसीति घृतञ्चैव देवस्यत्वा कुशोदकम् ॥”
ओषधीराह कात्यायनः ।
“व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः ।
यवाश्चौषधयः सप्त विपदो घ्नन्ति धारिताः ॥”
व्रीहिः शरत्पक्वधान्यं षष्टिकाख्यम् । शालयो हैमन्तिकाः । दशेति वास्तुमण्डलवायव्ये उप-विश्य पूर्व्वाभिमुखो गुरुः उत्तरत आरभ्य दश-रेखाः प्राङ्मुखीर्यथादक्षिणं कुर्य्यात् । एवं नैरृत्यामुपविश्य पश्चिमतः पूर्व्वापरगा दशो-सर्व्वानिकान्तरान् विद्यात् पूर्ब्बाद्यान्नामतः शृणु ।
अर्य्यमा सविता चैव विवस्वान् विबुधाधिपः ॥
मित्रोऽथ राजयक्ष्मा च तथा पृथ्वीधरः क्रमात् ।
अष्टमश्चापवत्सश्च परितो ब्रह्मणः स्मृताः ॥
आपश्चैवापवत्सश्च पर्जन्योऽग्निर्दितिस्तथा ।
पादिकानाञ्च वर्गोऽयमेवं कोणेषु शेषतः ॥
तन्मध्ये तु बहिर्विंशद्द्विपदास्ते तु सर्व्वतः ।
अर्य्यमा च विवस्वांश्च मित्रः पृथ्वीधरस्तथा ।
ब्रह्मणः परितो दिक्षु त्रिपदास्ते तु सर्व्वतः ॥”
एवमिति यथा ईशानकोणे कोष्ठचतुष्टये अन्त-स्थितैककोष्ठसहिते देवतापञ्चकमेवमाग्नेयादि-कोणेष्वपीत्यर्थः । दिक्षु पूर्ब्बादिदिक्षु ॥ * ॥
“वंशानिदानीं वक्ष्यामि बहूनपि पृथक् पृथक् ।
वायुं यावत् तथा रोगात् पितृभ्यः शिखिनं पुनः ॥
मुख्याद्भृशमथो शोषाद्वितथं यावदेव तु ।
सुग्रीवाददितिं यावद्भृङ्गाज्जयन्तमेव च ॥
एते वंशाः समाख्याताः क्वचिज्जठर एव च ।
एतेषां चैव सम्पातः पदमध्ये समस्तथा ॥
मर्म्म चैतत् समाख्यातं त्रिशूलं कोणगं च यत् ।
स्तम्भन्यासेषु वर्ज्यानि तुलाविधिषु सर्व्वदा ॥

सुवर्णं गाञ्च वस्त्रञ्च आचार्य्याय निवेदयेत्
॥”
इतरानीशादीन् होमस्तु प्रणवादिस्वाहान्त-
तत्तन्नामभिः। तथा च विष्णुधर्म्मोत्तरे।
“एकैकां देवतां राम समुद्दिश्य यथाबिधि।
चतुर्थ्यन्तेन धर्म्मज्ञो नाम्ना च प्रणवादिना
।
होमद्रव्यमथैकैकं शतसङ्ख्यन्तु होमयेत्
॥”
शतसङ्ख्यमिति पूर्ब्बोक्तवचनानुसारेण
वास्तु-
यागेतरपरम्। स्मृतिः।
“स्वाहावसाने जुहुयात् ध्यायन् वै मन्त्रदेव-
ताम्॥”
होमदक्षिणासम्प्रदानमाह छन्दोगपरिशिष्टम्
।
“ब्रह्मणे दक्षिणा देया यत्र या परिकीर्त्तिता।
कर्म्मान्तेऽनुच्यमानायां पूर्णपात्रादिका
भवेत्॥
विदध्याद्धौत्रमन्यश्चेद्दक्षिणार्द्ध हरो भवेत्।
स्वयञ्चेदुभयं कुर्य्यादन्यस्मै प्रतिपादयेत्
॥”
अन्यो यजमानभिन्नः। उभयं ब्रह्मकर्म्म
होतृ-
कर्म्म च। उपसंहारे वास्तुयागमिति श्रुतेः
सङ्कल्पवाक्ये तेनैवोल्लेखमाचरन्ति। अत्र
मिलितामिलितदक्षिणादानात्फलतार-
तम्यम्॥ * ॥ मात्स्ये।
“ततः सर्व्वौषधिस्नानं यजमानस्य
कारयेत्॥”
देवीपुराणम्।
“कालज्ञस्थपती पूज्यौ वैष्णवान्
शक्तितोऽर्च्चयेत्।
ब्राह्मणान् भोजयित्वा तु नृत्यगीतादि
कारयेत्॥
प्रासादं कारयेद्विद्वान् गृहं वापि मनोहरम्।
त्तरायता रेखाः कुर्य्यात् कनकशलाकादिना
।
रुद्रयामले तासां नामानि।
“शान्ता यशोवती कान्ता विशाला प्राण-
वाहिनी।
शची सुमनसा नन्दा सुभद्रा सुरथा तथा॥”
इत्याद्या दश रेखाः॥
“हिरण्या सुव्रता लक्ष्मीर्विभूतिर्विमला प्रिया
।
जया कला विशोका च इडा संज्ञा दशो-
त्तराः॥”
इत्यन्तदश रेखाः॥
“एकाशीतिपदं कृत्वा वास्तुकृत्
सर्व्ववास्तुषु।
पदस्थान् पूजयेद्देवान् त्रिंशत् पञ्चदशैव तु॥
द्वात्रिंशद्बाह्यतः पूज्याः
पूज्याश्चान्तस्त्रयोदश।
नामतस्तानि वक्ष्यामि स्थानानि च निबोध
मे॥
ईशानकोणादिषु तान् पूजयेच्च विधानतः।
शिखी चैवाथ पर्जन्यो जयन्तः कुलिशायुधः
॥
सूर्य्यः सत्यो भृशश्चैव आकाशो वायुरेव च
।
पूषा च वितथश्चैव गृहक्षतयमावुभौ॥
गन्धर्व्वो भृङ्गराजश्च मृगः पितृगणस्तथा।
दौवारिकोऽथ सुग्रीवः पुष्पदन्तो जलाधिपः
॥
असुरः शोषपापौ च रोगोऽहिर्मुख्य एव च।
भल्लाटः सोमसर्पौ च अदितिश्च दितिस्तथा
॥
बहिर्द्वात्रिंशदेते च तदन्तश्चतुरः शृणु।
ईशानादिचतुष्कोणसंस्थितान् पूजयेद्बुधः॥
आपश्चैवाथ सावित्र्यो जयो रुद्रस्तथैव च।
मध्ये नवपदे ब्रह्मा तस्याष्टौ च स्नमीपगाः॥
कीलोच्छिष्टोपघातानि वर्ज्जयेत् यत्नतो
नरः।
सर्व्वत्र वास्तुनिर्द्दिष्टः पितृवैश्वानरायतः
॥
मूर्द्धन्यग्निः समाविष्टो मुखे चापः
समाश्रितः।
पृथ्वीधरोऽर्य्यमा चैव
स्तनयोस्तावधिष्ठितौ॥
वक्षःस्थले चापवत्सः पूजनीयस्तथा
बुधैः।
नेत्रयोर्दितिपर्ज्जन्यौ श्रोत्रे
दितिजयन्तकौ॥
सर्पेन्द्रा वंशसंस्थौ च पूजनीयौ प्रयत्नतः
।
सोमसूर्य्यादयस्तद्वद्बाह्वोः पञ्च च पञ्च च
॥
रुद्रश्च राजयक्ष्मा च वामहस्तसमाश्रितौ
।
सावित्रः सविता तद्वद्धस्तं
दक्षिणमाश्रितौ॥
विवस्वानथ मित्रश्च जठरे संव्यवस्थितौ
।
पूषा च पापयक्ष्मा च
हस्तयोर्म्मणिबन्धके॥
तथैवासुरशेषौ च वामपार्श्वे समाश्रितौ।
पार्श्वे तु दक्षिणे तद्वद्वितथः सगृहक्षतः॥
उर्व्वोर्यमाम्बुपौ ज्ञेयौ
जान्वोर्गन्धर्व्वपुष्पकौ।
जङ्घयोर्भृङ्गसुग्रीवौ कट्यां दौवारिको
मृगः॥
जयः शक्रस्तथा मेढ्रे पादयोः
पितरस्तथा।
मध्ये नवपदो ब्रह्मा हृदये स तु पूज्यते॥
चरकीञ्च विदारीञ्च पूतनां पापराक्षसीम्।
ईशाग्न्यादिकोणेषु मण्डलाद्बाह्यतो यजेत्
॥”
पितृभ्य इति पितृगणादारभ्य वह्निं यावत्
यो
वंशः प्रसारितस्तद्वदायतो वास्तुपूरुषः।
अम्बुपो
वरुणः। पुष्पकः पुष्पदन्तः। तथा।

| | | |
|---|---|---|
| | | "प्रदक्षिणन्तु कुर्व्वीत वास्तोः पदविलेखनम् ।" कोष्ठानां लिखनं प्रदक्षिणं कार्य्यम् । तथा । "तर्जनी मध्यमा चैव तथाङ्गुष्ठश्च दक्षिणः । प्रबालरत्नकनकं फलपुष्पाक्षतोदकम् । सर्व्वञ्च वामभागेषु शस्तं पदविलेखने ॥" * ॥ तथा । "वास्तौ परीक्षिते सम्यग्वास्तुदेहे विचक्षणः । वास्तू पशमनं कुर्य्यात् समिद्भिर्बलिकर्म्मणा ॥ |

जीर्णोद्धारे तथोद्याने तथा गृहनिवेशने ।
द्वाराभिवर्द्धने तद्वत् प्रासादेषु गृहेषु च ॥
वास्तूपशमनं कुर्य्यात् पूर्ब्बमेव विचक्षणः ।
एकाशीतिपदं लेख्यं लेखकैर्वास्तुपिष्टकैः ।
होमस्त्रिमेखले कार्य्यः कुण्डे हस्तप्रमाणके ॥”
विश्वकर्म्मा ।
“खाताधिके भवेद्रोगी हीने धेनुधनक्षयः ।
वक्रकुण्डे तु सन्तापो मरणं छिन्नमेखले ॥
मेखलारहिते शोको ह्यधिके वित्तसंक्षयः ।
भार्य्याविनाशकं कुण्डं प्रोक्तं योन्या विना
कृतम् ।
अपत्यध्वंसनं प्रोक्तं कुण्डं यत् कण्ठवर्ज्जितम्
॥”
वशिष्ठसंहितायाम् ।
“तस्मात् सम्यक् परीक्ष्यैवं कर्त्तव्यं
शुभवेदिकम् ।”
एवंविधकुण्डासम्भवे क्रियासारः ।
“कुण्डमेवंविधं न स्यात् स्थण्डिलं वा समा-
श्रयेत् ॥”
मत्स्यपुराणम् ।
“यवैः कृष्णतिलैस्तद्वत् समिद्भिः क्षीरसम्भवैः
।
पालाशैः खादिरैरापामार्गोडुम्बरसम्भवैः ॥
कुशदूर्व्वामयैर्व्वापि मधुसर्पिःसमन्वितैः ।
कार्य्यस्तु पञ्चभिर्विल्वैर्विल्वबीजैरथापि वा ।
होमान्ते भक्ष्यभोज्यैश्च वास्तुदेशे वलिं हरेत्
॥”
अत्र होमे मन्त्रानाह विष्णुधर्म्मोत्तरम् ।
“वास्तोष्पतेन मन्त्रेण यजेच्च गृहदेवताम् ।”
वास्तोष्पतेन वास्तोष्पतिर्दैवतेन पञ्चमन्त्रेण ।
वलिद्रव्यञ्च पायसं प्रागेव लिखितम् ॥ * ॥
ब्रह्मस्थाने ततः कुर्य्याद्वासुदेवस्य पूजन-
मित्यादि । सुवर्णं गां वस्त्रयुगमाचार्य्याय निवे-
दयेत् । इत्यन्तमत्रापि बोध्यम् कल्पतरौ
मत्स्य-
पुराणम् ।
“ततः सर्व्वौषधिस्नानं यजमानस्य कारयेत् ।
द्विजांश्च पूजयेद्भक्त्या ये चान्ये गृहमागताः ॥
एतद्वास्तूपशमनं कृत्वा कर्म्म समाचरेत् ।

वसुकम् ४ वस्तूकम् ५ हिलमोचिका ६
शाक-
राजः ७ राजशाकः ८ चक्रवर्त्ती ९ ।
अस्य
गुणाः । मधुरत्वम् । सुशीतलत्वम् ।
क्षारत्वम् ।
मादनत्वम् । त्रिदोषजित्त्वम् । रोचनत्वम्
।
ज्वरहरत्वम् । महार्शसां नाशनत्वम् ।
मल-
मूत्रशुद्धिकारित्वञ्च । इति राजनिर्घण्टः
॥
अपि च ।
“वास्तू कं वास्तुकञ्च स्यात् क्षारपत्रञ्च
शाक-
राट् ।
तदेव तु बृहत्पत्रं रक्तं
स्याद्गौडवास्तुकम् ॥
प्रायशो यवमध्ये स्यात् यावत् शाकमतः
स्मृतम् ।
वास्तू कद्वितयं स्वादु क्षारं पाके
कटूदितम् ॥
दीपनं पाचनं रुच्यं लघु शुक्रबलप्रदम् ।
सरं प्लीहास्रपित्तास्रकृमिदोषत्रयापहम्
॥”
इति भावप्रकाशः ॥

**वास्तेयं**, त्रि, वस्तिसम्बन्धि । वस्तसन्धम्बि । वस्तु-
सम्बन्धि । वास्तुसम्बन्धि ।
वस्तिवस्तवस्तुवास्तु-
शब्देभ्यः ष्णेयप्रत्ययेन निष्पन्नम् ॥
(वस्तौ
भवम् । वस्ति +
“दृतिकुक्षिकलशिवस्त्यस्त्यहेर्-
ढञ् ।” ४ । ३ । ५६ । इति ढञ् ।
वस्ति-
भवम् ॥ यथा, छान्दोग्योपनिषदि । ३ ।
१९ ।
२ ।

**वास्पः**, पुं, उष्मा । लोहम् । इति केचित् ॥ मूर्द्धन्य-
मध्य इति साधुपाठः ॥

**वास्पेयः**, पुं, नागकेशरः । इति रत्नमाला ॥

**वाह**, ऋ ङ यत्ने । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-अक०-सेट् ।) ऋ, अववाहत् ।
ङ,
वाहते । ववाह रक्तं पुरुषास्ततो जाताः
सह-
स्रशः इत्यादि सिद्ध्यर्थमोष्ठ्यादिश्च
वहधातुं
मन्येते वर्णदेशशरणदेवौ । वस्तुतस्तु
बहुवाद्य-
सम्मतत्वादेवोष्ठ्यादिरनेनोपेक्षितः
ववाहेति
चण्डीप्रयोगस्य तु वाह ऋ ङ यत्ने
इत्यस्मात्
गणकृतानित्यत्वात् परस्मैपदसिद्धिः
अनेकार्थ-
त्वात् सुस्रावेत्यर्थः । अथवा वव इत्याह
इत्येव
व्याख्यानम् । इति दुर्गादासः ॥

**वाहः**, पुं, (उह्यतेऽनेनेति । वह + करणे घञ् ।)
घोटकः । (यथा, अध्यात्मरामायणे । २
। ५ । ५६ ।
“इत्याज्ञप्तः सुमन्त्रोऽपि रथं
वाहैरयोजयत् ॥”)
परिमाणविशेषः । इत्यमरः ॥ यथाहुः ।
“पलं प्रकुञ्चकं मुष्टिः कुडवस्तच्चतुष्टयम्
।
चत्वारः कुडवाः
प्रस्थश्चतुःप्रस्थमथाढकम् ॥
अष्टाढको भवेत् द्रोणो द्विद्रोणः सूर्प
उच्यते ।
सार्द्धसूर्पो भवेत् खारीद्वे खार्य्यौ
गोण्युदाहृता ।
तामेव भारं जानीयात् वाहो भारचतुष्टयम्
॥”

प्रासादभवनोद्यानप्रारम्भेपरिवर्त्तने ॥
पुरवेश्मप्रवेशेषु सर्व्वदोषापनुत्तये ।
इति वास्तूपशमनं कृत्वा सूत्रेण वेष्टयेत् ॥”
इति मत्स्यपूराणे उपक्रमोपसंहारयोर्वास्तूप-
शमनत्वेनाभिधानात् वास्तूपशमनं कर्म्मणो
नामधेयं इति तेनैवोल्लेखः सर्व्वदोषापनुत्तये
इति श्रुतेश्च वास्तुसर्व्वदोषापनोदनं फलं
संकल्पे
तु तदुल्लेखः कार्य्यः । एतत्तु प्रारम्भप्रवेशान्य-
तरस्मिन्नवश्यं कर्त्तव्यम् । आवश्यकत्वे प्रमाणं
प्रागेवोक्तम् । इति श्रीरघुनन्दनभट्टाचार्य्यविर-
चितं वास्तुयागतत्त्वं समाप्तम् ॥

**वास्तुकं**, क्ली, (वास्तु एव । वास्तु + स्वार्थे कन् ।)

वास्तूकशाकम् । इत्यमरटीकायां भरतः ॥
(यथा, सुश्रुते । १ । १९ ।
“तण्डुलीयकजीवन्तीसुनिषण्णकवास्तुकै
॥”)

**वास्तुकी**, स्त्री, चिल्लीशाकम् । इति राजनिर्घण्टः ॥

**वास्तूकं**, क्ली, (वसन्ति गुणा अत्रेति । वस +

ऊलूकादयश्चेति साधुः ।) शाकविशेषः ।
वेतुया
इति भाषा । तत्पर्य्यायः । वास्तू २ वास्तुकम्
३

“तत् यत् रजतं सेयं पृथिवी यत् सुवर्णं
सा
द्यौर्यज्जरायु ते पर्व्वता यदुल्वं स मेघो
नीहारो
याधमनयस्ता नद्यो यद्वास्तेयमुदकं स
समुद्रः ॥”
वस्तिरिव । वस्ति + “वस्तेर्ढञ् ।” ५ ।
३ ।
१०१ । इति ढञ् । वस्तिसदृशम् । इति
सिद्धान्त-
कौमुदी ॥)

**वास्तोष्पतिः**, पुं, (वास्तोर्गृहक्षेत्रस्य पतिरधि-

ष्ठाता । “वास्तोष्पतिगृहमेधाच्छ च ।”
इति
निपातनात् अलुक् षत्वञ्च । यद्वा,
“वास्त्वन्त-
रिक्षं तस्य पतिः पाता विभुत्वेन ।” इति
निघण्टुटीकायां देवराजयज्वा । ५ । ४
। ९ ।)
इन्द्रः । इत्यमरः ॥ (देवतामात्रम् ।
यथा,
भागवते । १० । ५० । ५३ ।
“वास्तोष्पतीनाञ्च गृहैर्वलभीभिश्च
निर्म्मितम् ।
चातुर्व्वर्ण्यजनाकीर्णं यदुदेवगृहोल्लसत्
॥”
“किञ्च नगरगृहादौ वास्तोष्पतीनां
देवानाञ्च
गृहैर्वलभीभिश्चन्द्रमालिकाभिश्च
निर्म्मितम् ॥”
इति तट्टीकायां स्वामी ॥ गृहपालयितरि,
त्रि ।
यथा, ऋग्वेदे । ७ । ५४ । १ ।
“वास्तोष्पते प्रतिजानीह्यस्मान्
स्वावेशो अनमीवो भवानः ॥”
“हे वास्तोष्पते गृहस्य पालयितर्देव त्वं
अस्मान्
त्वदीयान् स्तोतृनिति प्रतिजानीहि ।”
इति
तद्भाष्ये सायणः ॥)

**वास्त्रः**, पुं, (वस्त्रेण परिवृतो रथः । वस्त्र + “परि-

इति भरतः ॥
चतुर्द्दशभेदात् संख्यान्यथात्वम् । तथा
च ।
“चतुराढको द्रोणः षोडशद्रोणा खारी ।
विंशतिद्रोणः कुम्भः दशकुम्भो वाहः ।
इति
स्वामी ॥ * ॥ भुजः । वृषः । वायुः । इति
शब्दरत्नावली ॥ (प्रवाहः । यथा,
कथासरित्-
सागरे । ९३ । ८१ ।
“यत्रार्च्चिराज्यधूमादिमार्गाविव समागतौ
।
गङ्गायमुनयोर्वाहौ भातः सुगतये नृणाम्
॥”
वाहनम् । यथा, तत्रैव । ६२ । १५७ ।
“तच्छ्रुत्वा तत्र भेकानां राजा
वाहसमुत्सुकः ।
जलादुत्तीर्य्य तत्पृष्ठमारोहत् गतभीर्मुदा
॥”)

**वाहकः**, त्रि, (वहतीति । वह + ण्वुल् ।) वहन-

कर्त्ता । वहति यः । इत्यर्थे णकप्रत्ययेन
निष्पन्नः ॥
(यथा, भागवते । १० । १८ । २१ ।
“आचेरुर्विविधाः क्रीडा
वाह्यवाहकलक्षणाः ।
यत्रारीहन्ति जेतारो वहन्ति च पराजिताः
॥”)

**वाहद्विषन्**, [त्] पुं, (वाहानां घोटकानां द्विषन्

शत्रुः ।) महिषः । इत्यमरः ॥

**वाहनं**, क्ली, (वहत्यनेनेति । वह + करणे ल्युट् ।

“वाहनमाहितात् ।” ८ । ४ । ८ । इत्यत्र
“वहतेर्ल्युटि वृद्धिरिहैव सूत्रे निपातनात्
।”
इति भट्टोजिदीक्षितोक्त्या निपातनात्
वृद्धिः ।)
हस्त्यश्वरथदोलादिः । तत्पर्य्यायः ।
यानम् २
युग्यम् ३ पत्रम् ४ धोरणम् ५ । इत्यमरः
।

| | | |
|---|---|---|
| | वृतो रथः ।” ४ । २ । १० । इति अण् ।)<br>वस्त्रावृतरथः । इत्यमरः । २ । ८ । ५४ ॥ त्रि,<br>वस्त्रसम्बन्धी ॥<br>**वास्थः**, त्रि, वारि तिष्ठति यः । वार्शब्दपूर्ब्ब-स्थाधातोर्डप्रत्ययेन निष्पन्नः ॥ | २ । ८ । ५८ ॥ * ॥ (यथा, रघुः । ११ । १० ।<br>“पूर्व्ववृत्तकथितैः पुराविदः<br>सानुजः पितृसखस्य राघवः ।<br>उह्यमान इव वाहनोचितः<br>पादचारमपि न व्यभावयत् ॥”) |

देव्या वाहनानि यथा, --
“विष्णब्रह्मशिवैर्द्देवैर्ध्रियते सा जगन्मयी ॥
सितप्रेतो महादेवो ब्रह्मा लोहितपङ्कजः ।
हरिर्हरिस्तु विज्ञेयो वाहनानि महौजसः ॥
स्वमूर्त्त्या वाहनत्वन्तु तेषां यस्मान्न युज्यते
।
तस्मान्मूर्त्यन्तरं कृत्वा वाहनत्वं गतास्त्रयः
॥
यस्मिन् यस्मिन्महामाया प्रीणाति सततं
शिवा ।
तेन तेनैव रूपेण आसनान्यभवन् त्रयः ॥”
इति कालिकापुराणे ५७ अध्यायः ॥ * ॥
देवदानवानां वाहनानि यथा, --
पुलस्त्य उवाच ।
“शृणुष्व कथयिष्यामि सर्व्वेषामपि नारद ।
वाहनानि समासेन एकैकस्यानुपूर्व्वशः ॥
रुद्रहस्ततलोत्पन्नं महाकायं महागजम् ।
श्वेतवर्णं महावीर्य्यं देवराजस्य वाहनम् ॥
रौद्रौजःसम्भवं भीमं कृष्णवर्णं मनोजवम् ।
पौण्ड्रकं नाम महिषं धर्म्मराजस्य नारद ॥
रुद्रमानस-सम्भूतं श्यामं जलधिसंज्ञकम् ।
शिशुमारं दिव्यगतिं वाहनं वरुणस्य च ॥
रौद्रं शकटचक्राक्षं शैलाकारनरोत्तमम् ।
अम्बिकापादसम्भूतं वाहनं धनदस्य तु ॥
एकादशानां रुद्राणां वाहनानि महामुने ।
गन्धर्व्वाश्च महावीर्य्या भुजगेन्द्राः
सुदारुणाः ॥
श्वेतानि सौरभेयाणि वृषाण्युग्रजवानि च ।
रथं चन्द्रमसश्चार्द्धं सहस्रहंसवाहनम् ॥
हयोढरथवाहाश्च आदित्या मुनिसत्तम ।
कुञ्जरस्थाश्च वसवो यक्षाश्च नरवाहनाः ॥
किन्नरा भुजगारूढा हयारूढौ तथाश्विनौ ।
शारङ्गाधिष्ठिता ब्रह्मन् मरुतो घोरदर्शनाः ॥
शुकारूढाश्च कवयो गन्धर्व्वाश्च पदातिनः
।
आरुह्य वाहनान्येवं स्वानि
स्वान्यमरोत्तमाः ॥
सन्नह्य निर्य्ययुर्हृष्टा युद्धाय सुमहौजसः ॥ *
॥
“स वाहनानां नागानां शीकराम्बुमहाभरैः
।
शूकरप्रेयसीपृष्ठे स्वयं चक्रे कृषिं नृपः ॥”
“नागानां वाहना मेघाः शूकरप्रेयसी
क्षितिः ।
विष्णोः शूकररूपस्य सा हि
प्रियतमोच्यते ॥
तस्यां मेघाम्बुभिर्धान्यमुत्पन्नं चेत्
किमद्भुतम् ॥”)

**वाहश्रेष्ठः**, पुं, (वाहेषु वाहनेषु श्रेष्ठः ।) अश्वः ।
इति राजनिर्घण्टः ॥

**वाहसः**, पुं, (उह्यते इति । वह + “वहियुभ्यां
णित् ।” उणा० ३ । ११९ । इति असच्
। सच
णित् ।) अजगरः । इत्यमरः ॥ (यथा,
तैत्ति-
रीयसंहितायाम् । ५ । ५ । १४ । १ ।
“त्वाष्ट्राः प्रतिश्रुत्कायै वाहसः ॥”)
वारिनिर्य्याणम् । सुनिषण्णकम् । इति
मेदिनी ।
से, ३७ ॥

**वाहा**, स्त्री, (वाह + अजादित्वात् टाप् ।)
वाहुः । इत्यजयपालद्विरूपकोषौ ॥

**वा(बा)हावा(बा)हवि**, व्य, (वाहुभिर्वाहुभिः प्रहृत्य
इदं युद्धं प्रवृत्तं तत् ।) वाहुयुद्धम् । हाता-
हाति इति भाषा । इति
मुग्धबोधव्याकरणम् ॥

**वाहिकः**, पुं, (वाहेन परिमाणविशेषेण क्रीतः ।
वाह + “असमासे निष्कादिभ्यः ।” ५ ।
१ । २० ।
इति ठक् ।) ढक्का । गोवाहः । शकटादि
।
इति धरणिः ॥ त्रि, भारवाहकश्च ॥

**वाहित्थं**, क्ली, गजकुम्भस्याधोभागः । इत्यमरः ॥

**वाहिनी**, स्त्री, (वाहा वाहनानि घोटकादीनि
“प्रवादेनेह मत्स्यानां राजा नाम्नायमुच्यते
।
अहमेव हि मत्स्यानां राजा वै वाहिनीपतिः
॥”
वाहिन्या नद्याः पतिः ।) समुद्रः । इति
शब्द-
रत्नावली ॥

**वाहीकः**, पुं, देशभेदः । तत्पर्य्यायः । अष्टक्वः २ ।
इति हेमचन्द्रः ॥ जर्त्तिकजातिः । जाट् इति
भाषा ॥ यथा, --
“तत्र वृद्धः पुरावृत्ताः कथाः
कश्चिद्द्विजोत्तमः ।
वाहीकदेशं मद्रांश्च कुत्सयन् वाक्यमब्रवीत्
॥
पञ्चानां सिन्धुषष्ठानां नदीनां
येऽन्तराश्रिताः ।
तान् धर्म्मवाह्यानशुचीन् वाहीकान् परि-
वर्ज्जयेत् ॥
शाकलं नाम नगरमापगानामनिम्नगा ।
जर्त्तिका नाम वाहीकास्तेषां वृत्तं सुनिन्दि-
तम् ॥”
इति महाभारते कर्णपर्व्वणि २०० अध्यायः
॥

**वा(बा)हुः**, पुं, (बाधते शत्रूनिति । बाधृ लोडने
+ “अर्त्तिदृशिकमीति ।” उणा० । १ । २८
।
इति कुः हकारादेशश्च ।)
कक्षावध्यङ्गुल्यग्र-
पर्य्यन्तावयवः । यथा । भुजवाहुः प्रवेष्टो
द्योरि-
त्यमरः ॥ वहत्यनेन वाहुः नाम्नीति उण् ।
घञि
वाहोऽदन्तः । वाहोऽश्वभुजयोः पुमान् ।
इति
दामोदरः । स्त्रियां वाहा च । वाहो वाहा
भुजा वाहुर्दोषो दोषा च दोः पुमान् । इति
कोषान्तरम् ॥ इति तट्टीकायां भरतः ॥
कूर्प-

नारद उवाच ।
गदितानि सुरादीनां वाहनानि महामुने ।
दैत्यानां वाहनान्येवं यथावद्वक्तुमर्हसि ॥
पुलस्त्य उवाच ।
शृणुष्व दानवादीनां वाहनानि द्विजोत्तम ।
कथयिष्यामि तत्त्वेन यथावत् श्रोतुमर्हसि ॥
अन्धकस्य रथो युक्तः श्रेष्ठः परमवाजिभिः
।
कृष्णवर्णः सहस्रारस्त्रिनल्वपरिमाणवान्॥
प्रह्लादस्य रथो दिव्यः श्वेतवर्णैर्हयोत्तमैः ।
उह्यमानस्तथाष्टाभिः श्वेतरुक्ममयः शुभः
॥
विरोचनस्य तु गजः कुम्भस्य तु तुरङ्गमः ।
जम्भस्य तु रथो दिव्यो हयैः
काञ्चनसन्निभैः ॥
शङ्कुकर्णस्य तरगो हयग्रीवस्य कुञ्जरः ।
रथो मयस्य विख्यातो दुन्दुभेश्च महोरगः ।
शम्बरस्य विमानोऽभूदायः शङ्कोर्मृगाधिपः
॥”
इति श्रीवामनपुराणे ९ अध्यायः ॥
(वाहयतीति । वह + स्वार्थे णिच् + ल्युः ।
वाहके, त्रि । यथा, कथासरित्सागरे ।
१२४ ।
२२० -- २२२ ।

सन्त्यस्यामिति । वाह + इनिः । ङीप् ।)
सेना ।
(यथा, रघुः । ११ । ६ ।
“लक्ष्मणानुचरमेव राघवं
नेतुमैच्छदृषिरित्यसौ नृपः ।
आशिषं प्रयुयुजे न वाहिनीं
सा हि रक्षणविधौ तयोः क्षमा ॥” * ॥
वाहः प्रवाहोऽस्त्यस्या इति ।) नदी ।
(यथा,
रामायणे । २ । ८९ । ९ ।
“उत्तिष्ठत प्रबुध्यध्वं भद्रमस्तु हि वः सदा
।
नावः समुपकर्षध्वं तारयिष्याम वाहिनीम्
॥”)
सेनाभेदः । तद्यथा । गजाः एकाशीतिः ।
रथाः एकाशीतिः ।
अश्वास्त्रिचत्वारिंशदधिक-
शतद्वयम् । पदातिकाः
पञ्चाधिकचतुःशतम् ।
समुदायेन दशाधिकाष्टशतं वाहाः
सन्त्यस्याम् ।
इत्यमरभरतौ ॥ (यथा, महाभारते । १ ।
२ ।
१९ -- २१ ।
“एको रथो गजश्चैको नराः पञ्च पदातयः
।
त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते
॥
पत्तिस्तु त्रिगुणामेतामाहुः सेनामुखं बुधाः
।
त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते
॥
त्रयो गुल्मा गणो नाम वाहिनी तु
गणास्त्रयः ।
स्मृतास्तिस्रस्तु वाहिन्यः पृतनेति
विचक्षणैः ॥”
प्रवाहशीला । यथा, मार्कण्डेये । ७८ ।
२९ ।
“यमुना च नदी जज्ञे कलिन्दान्तरवाहिनी
॥”)

**वाहिनीपतिः**, पुं, (वाहिन्याः सेनायाः पतिः ।)

रस्योद्‌र्ध्वभागो वाहुस्तस्याधोभागः प्रवाहुः
।
यथा, --
“मुखं वाहू प्रवाहू च मनः सर्व्वेन्द्रियाणि च
।
रक्षत्वव्याहतैश्वर्य्यस्तव नारायणोऽव्ययः
॥”
इति विष्णुपुराणे ५ अंशे ५ अध्यायः ॥
वाहुप्रवाहू च कूर्परस्योद्‌र्ध्वाधोभागौ । इति
तट्टीका ॥ अन्यत्
पवर्गीयवकारादिबाहुशब्दे
द्रष्टव्यम् ॥ * ॥ अस्य शुभाशुभलक्षणं यथा,
--
“निर्मांसौ चैब भग्नाल्पौ श्लिष्टौ च विपुलौ
भुजौ ।
आजानुलम्बिनौ वाहू वृत्तौ पीनौ नृपेश्वरे ॥
निःस्वानां रोमशौ ह्रस्वौ श्रेष्ठौ करिकरप्रभौ
।
हस्ताङ्गुलय एव स्युरायुर्दा ललिताः शुभाः
॥
मेधाविनाञ्च सूक्ष्माः स्युर्भृत्यानां चिपिटाः
स्मृताः ।
स्थूलाङ्गुलीभिर्निःस्वाः
स्युर्नताःस्युर्वहिरन्तदाः ॥
कपितुल्यकरा निःस्वा व्याघ्रतुल्यकरैर्धनम्
।
मणिबन्धैर्निगूढैश्च सुश्लिष्टशुभसन्धिभिः ॥
नृपा हीनैः करच्छेदः सशब्दैर्धनवर्ज्जिताः
।
पितृवित्तविहीनाश्च निम्नात् करतलान्नराः
॥
संवृत्तैश्चैव निम्नैश्च धनिनः परिकीर्त्तिताः
।
प्रोक्ता नरकदातारो विषमैर्विषमा नराः ॥
करैः करतलैश्चैव लाक्षाभैरीश्वरास्तलैः ।
परदाररताः पीतै रूक्षैर्निःस्वा नरा मताः ॥
तुषतुल्यनखाः क्लीवाः कुटिलैः
स्फुटितैर्नराः ।
निःस्वाश्चक्रनखैस्तद्वद्विवर्णैः परतर्क्ककाः
॥
ताम्रैर्भूपा धनाढ्याश्च अङ्गुष्ठैः सयवैस्तथा
।

दीर्घायुः सुभगश्चैव निर्धनो विरलाङ्गुलिः ।
घनाङ्गुलिश्च सधनस्तिस्रो रेखाश्च यस्य वै
॥
नृपतेः करतलगा मणिबन्धे समुत्थिताः ।
युगमीनाङ्कितकरो भवेत् सत्रप्रदो नरः ॥
वज्राकाराश्च धनिनां मत्स्यपुच्छनिभा बुधे ।
शङ्खातपत्रशिविकागजपद्मोपमानृपे ॥
कुम्भाङ्कुशपताकाभा मृणालाभा निरीश्वरे ।
दामाभाश्च गवाढ्यानां स्वस्तिकाभा नृपेश्वरे
॥
चक्रासितोमरधनुःकुन्ताभा नृपतेः करे ।
उदूखलाभा यज्ञाढ्ये वेदीभाश्चाग्निहोत्रिणि ॥
वापीदेशकुलाभाश्च त्रिकोणाभाश्च धार्म्मिके
।
अङ्गुष्ठमूलगा रेखाः पुत्राः सूक्ष्माश्च दारिकाः
॥
प्रदेशिनीगता रेखा कनिष्ठामूलगामिनी ।
शतायुषञ्च कुरुते छिन्नया तरुतो भयम् ।
निस्वाश्च बहुरेखाः स्युर्निर्द्रव्याश्चिवुकैः
कृशैः ॥”
इति गारुडे ६६ अध्यायः ॥

**वा(बा)हुमूलं**, क्ली, (वाह्वोर्मूलम् ।) भुजद्वयस्य

आद्यभागः । काँक् इति वगल् इति च भाषा ।
तत्पर्य्यायः । कक्षः २ । इत्यमरः ॥
भुजकोटरः
३ दोर्मूलम् ४ खण्डिकः ५ कक्षा ६ । इति
हेमचन्द्रः ॥ (यथा, साहित्यदर्पणे । ३ ।
१२४
“कापि कुन्तलसं व्यानसंयमव्यपदेशतः ।
बाहुमूलं स्तनौ नाभिपङ्कजं दर्शयेत् स्फुटम्
॥”)

**वा(बा)हुलः**, पुं, कार्त्तिकमासः । इत्यमरः ॥ अथ

कार्त्तिकमाहात्म्यम् ।
नारद उवाच ।
“कार्त्तिकस्य तु माहात्म्यं मासस्य वक्तुमर्हसि
।
पूर्ब्बं कार्त्तिकमाहात्म्यं यथावत् वक्तुमर्हसि ॥
ब्रह्मोवाच ।
ब्राह्मणानाञ्च ये कन्यां दास्यन्ति
विधिवन्नराः ॥
दानानां फलमेतेषां प्राप्नुयुस्ते विधानतः
।
तानि दानानि गृह्णन्ति दत्तानि विधिवत्
सुराः ॥
यत्किञ्चित् कार्त्तिके दत्तं तपश्चैव तथा
कृतम् ।
तदक्षयफलं प्रोक्तं विष्णुना लोककर्त्तृणा
॥
वृषाणां मोक्षणं चैव कार्त्तिके मासि यैः
कृतम् ।
अश्वमेधादिकं पुण्यं तैश्च प्राप्तं न
संशयः ॥
तस्माद्यत्नेन विप्रेन्द्र कार्त्तिके मासि
दीयते ।
यत्किञ्चित् कार्त्तिके दत्तं विष्णुमुद्दिश्य
मानवैः ॥
हुतं दत्तञ्च विप्रेन्द्र तपश्चैव तथा कृतम्
।
तदक्षयं लभन्ते ते शस्यदानं विशेषतः ॥
यथा नदीनां विप्रेन्द्र शैलानाञ्चैव नारद ।
उदधीनाञ्च विप्रर्षे क्षयो नैवोपपद्यते ॥
तद्वत् कार्त्तिकमासे तु यत्किञ्चिद्दीयते
मुने ।
न तस्यास्ति क्षयो विप्र पापं याति
सहस्रधा ॥
तस्मात् सर्व्वप्रयत्नेन कर्म्मणा मनसा
गिरा ।
पापं समाचरेन्नैव कार्त्तिके विष्णुतत्परः
॥
ज्ञानाद्वा यदि वाज्ञानाद्दुष्कृतं येन
यत्कृतम् ।
तत्तस्य नश्यति क्षिप्रं वायुना पांशवो
यथा ॥
संप्राप्तं कार्त्तिकं दृष्ट्वा परान्नं यस्तु
वर्ज्जयेत् ।
दिने दिने च कृच्छ्रस्य फलं
प्राप्नोत्यसंशयम् ॥
न्यायेनोपार्ज्जितं वित्तं दुर्ल्लभं कुलवर्द्धनम्
।
दुर्ल्लभं वत्स द्रव्याणां पात्रे यत्
प्रतिपादितम् ॥
पात्राणामपि तत्पात्रं सदाचारक्रियान्वितम्
।
संप्राप्य कार्त्तिकं मासं विमुखा ये जनार्द्दने
।
तेषां यमपुरे वासः पितृभिः सह नारद !
॥”
इति पाद्मोत्तरखण्डे कार्त्तिकमाहात्म्ये
११४ अः ॥
ब्रह्मोवाच ।
“कार्त्तिकस्य तु माहात्म्यं पुनरेव शृणुष्व
मे ।
यत् श्रुत्वा मुनिशार्द्दूल ! सर्व्वान्
कामानवा-
प्स्यसि ॥
व्रतानामिह सर्व्वेषामेकजन्मानुगं फलम् ।
कर्त्तुर्विष्णुव्रतस्योक्तं शतजन्मानुगं फलम्
॥
आश्विनस्य सिते पक्षे एकादश्यां
द्विजोत्तम ! ।
वैष्णवैर्वैष्णवं धर्म्मं प्रारम्भोऽस्य विधीयते
॥
यावत् कार्त्तिकशुक्लस्य पौर्णमासी
तिथिर्भवेत् ।
तावदस्य व्रतस्योक्तं सम्यगाचरणं बुधैः ॥
अन्यथा तु कृतं विप्र व्रतमेतत् सुदुर्ल्लभम्
।
कार्य्यं सद्भिः प्रयत्नेन कार्त्तिके तु
विशेषतः ॥
त्रिंशद्दिनानि पुण्यानि विप्रप्रीतिकराणि वै
।
कार्त्तिकस्य व्रतं विप्र !
श्रीविष्णुप्रीतिकारणम् ॥
तदर्द्धं भीष्मस्य व्रतं मुने तुष्टिकरं परम् ।
पुण्यं पञ्चदिनं प्रोक्तं दत्तं तस्मै च विष्णुना
॥

साधु पृष्टं त्वया पुत्र लोकोद्धारणहेतवे ।
कथयामि न सन्देहस्त्वत्समो नास्ति वैष्णवः ॥
एकतः सर्व्वतीर्यानि सर्व्वे यज्ञाः सदक्षिणाः ।
कार्त्तिकस्य च मासस्य कोट्यंशं नापि बिभ्रति ॥
एकतः पुष्करे वासः कुरुक्षेत्रे हिमाचले ।
एकतः कार्त्तिको वत्स ! सर्व्वपुण्याधिको मतः ॥
स्वर्णानि मेरुतुल्यानि सर्व्वदानानि चैकतः ।
एकतः कार्त्तिको वत्स ! सर्व्वदा केशवप्रियः ॥
कृत्वा कोटिसहस्राणि पापानि सुबहून्यपि ।
निमेषार्द्धेन सर्व्वाणि विलयं यान्ति कार्त्तिके ॥
यत्किञ्चित् कुरुते पुण्यं विष्णुमुद्दिश्य कार्त्तिके ।
तदक्षयं भवेत् सर्व्वं सत्योक्तं तव नारद ! ॥
तस्य क्षयं न पश्यामि सत्यमुक्तं तवानघ ।
सोपानभूतं स्वर्गस्य मानुष्यं प्राप्य दुर्लभम् ॥
तथात्मानं समादध्यात् यथा न स्यादितः पुनः ।
दुष्प्राप्यं प्राप्य मानुष्यं कार्त्तिकोक्तं चरेन्न यः ॥
धर्म्मं धर्म्मभृतां श्रेष्ठ स मातृपितृघातकः ।
कार्त्तिकं खलु वै मासं सर्व्वमासेषु चोत्तमम् ॥
पुण्यानां परमं पुण्यं पावनानाञ्च पावनम् ।
अस्मिन् मासे त्रयस्त्रिंशद्देवाः सन्निहिता ऋषे ॥
अत्र स्नानानि दानानि भोजनानि व्रतानि च ।
तिलधेनुहिरण्यानां रजतं भूमिवाससाम् ॥
गोप्रदानानि कुर्व्वन्ति सर्व्वभावेन नारद ! ।
प्रवृत्तानान्तु भक्षाणां कार्त्तिके नियमे कृते ।
अवश्यं विष्णुरूपत्वं प्राप्यते मुक्तिदं शुभम् ॥
न कार्त्तिकसमो मासो न कृतेन समं युगम् ।
न वेदसदृशं शास्त्रं न तीर्थं गङ्गया समम् ॥
न चान्नेन समं दानं न सुखं भार्य्यया समम् ।
न कृषेस्तु समं वित्तं न लाभः सुरभीसमः ॥
न तपोऽनशनैस्तुल्यं न दमात् परमो जयः ।
न च धर्म्मो दयातुल्यो न ज्योतिश्चक्षुषा समम् ॥
न तृप्ती रसनातुल्या न प्रीतिस्तु सुतं विना ।
न कार्त्तिकसमो मासो वैष्णवानां प्रियः सदा ॥
अव्रतेन क्षपेद्यस्तु मासं दामोदरप्रियम् ।
तिर्य्यग्योनिमवाप्नोति सर्व्वधर्म्मबहिष्कृतः ॥
दुर्ल्लभं वैष्णवं ज्ञानं दुर्ल्लभा वैष्णवी कथा ।
दुर्ल्लभा वैष्णवी दीक्षा दुर्ल्लभो जागरस्तथा ॥
दुर्ल्लभं कपिलादानं दुर्ल्लभं जाह्नवीजलम् ।
दुर्ल्लभो वैष्णवो विप्रो दुर्ल्लभं नीलमोक्षणम् ॥
दुर्ल्लभं पुष्करे दानं दुर्ल्लभाः कार्त्तिके तिलाः ।
दुर्ल्लभो जागरो विष्णोः पक्षयोरुभयोरपि ॥
दुर्ल्लभा कार्त्तिके विप्र द्वादशी हरिबोधिनी ।
दुर्ल्लभा मालतीपूजा दुर्ल्लभा तुलसी मुने ॥
दुर्ल्लभं कार्त्तिके स्नानं दुर्ल्लभं साधुवन्दनम् ।
नरो वा यदि वा नारी कुरुते वैष्णवं व्रतम् ।
दिने दिनेऽसङ्ख्यफलं भवेत्तस्यैव कार्त्तिके ॥
अतस्त्वं विधिवत् पुत्र ! वैष्णवं व्रतमुत्तमम् ।
श्रीदामोदरतुष्ट्यर्थं प्रकुरुष्व समाहितः ॥
ऊर्ज्जे मासि मुनिश्रेष्ठ प्रातःकाले तथामले ।
गोष्पदेऽपि जले स्नानं स्वर्गदं पापिनामपि ॥”
इति पाद्मे उत्तरखण्डे ११५ अध्यायः ॥
* ॥
ब्रह्मोवाच ।
“पुराणश्रवणं यत्र कुर्व्वन्ति द्विजसत्तम ।
तेषां करस्थिता मुक्तिर्विद्यते नात्र संशयः ॥
कार्त्तिके मासि यो भक्त्या कुर्य्याद्‌ब्राह्मणभोजनम् ।
प्रत्यहं विष्णुतृप्त्यर्थं स याति भवनं हरेः ॥
कार्त्तिके मासि यः कुर्य्यात् तिलतैलेन दीपकम् ।
अहोरात्रान् मुनिश्रेष्ठ स याति परमं पदम् ॥
कार्त्तिके मासि यो दद्यात् पादत्राणं द्विजन्मने ।
दद्याद्वस्त्रान्वितं वत्स यमं नैव स पश्यति ॥
यज्ञोपवीतं यो दद्यात् भूमिं वै ब्राह्मणाय तु ।
स याति ब्रह्मसदनं पुनरावृत्तिवर्जितम् ॥
ताम्बूलञ्चैव यो दद्यात् सपूगं विधिवद्द्विज ।
गन्धर्व्वलोकमाप्नोति भुक्त्वा भोगान् मनोरमान् ॥
श्रीचन्दनञ्च यो दद्यात् देवपूजार्थमादरात् ।
विप्राय वेदविदुषे पुरन्दरपुरं व्रजेत् ॥
नारिकेलफलं वत्स सवस्त्रञ्च सदक्षिणम् ।

| | | |
|---|---|---|
| | शालग्रामशिलापूजा दुर्ल्लभा मुनिपुङ्गव ॥<br>समुद्रगा नदी यत्र दुर्ल्लभा स्नानशालिनाम् ।<br>कुलशीलवती कन्या दुर्ल्लभा दम्पती नृणाम् ॥<br>दुर्ल्लभा जननी लोके पिता चैव विशेषतः ।<br>दुर्ल्लभं साधुसम्मानं दुर्ल्लभो धार्म्मिकः सुतः ॥<br>दुर्ल्लभैकादशी लोके दशमीसङ्गवर्ज्जिता ।<br>पक्षद्वयं व्रतं वत्म अयने दक्षिणोत्तरे ॥<br>दुर्ल्लभं वैष्णवे दानं माघस्नानं नदीजले ।<br>ज्यैष्ठाषाढे तु पानीयमिन्धनं पौषमाघयोः ॥<br>ब्राह्मणं दुर्ल्लभं विप्र दुर्ल्लभं तीर्थसेवनम् ॥ | यो दद्याद्वेदविदुषे स शश्वत् पुत्त्रवान् भवेत् ॥”<br>इति पाद्मे उत्तरखण्डे ११६ अध्यायः ॥<br>**वा(बा)हुल्यं**, क्ली, बहुत्वम् । वहुलस्य भाव इत्यर्थे ष्ण्यप्रत्ययेन निष्पन्नम् ॥<br>**वाहुवारः**, पुं, श्लेष्मान्तकवृक्षः । इति राजनिर्घण्टः ॥<br>अन्यत् पवर्गीयवकारादितच्छब्देद्रष्टव्यम् ॥ |

**वाह्यं**, क्ली, (वाह्यते चाल्यते इति वाहि + ण्यत् ।)

यानम् । यथा, हेमचन्द्रे ।
"यानं युग्यं पत्रं वाह्यं वह्यं
वाहनधोरणे ॥"

**वाह्यः**, त्रि, (वह + ण्यत् ।) वहनीयः । (यथा,

रघुः । ६ । १० ।
"मनुष्यवाह्यं चतुरस्रयान-
मध्यास्य कन्या परिवारशोभि ।
विवेश मञ्चान्तरराजमार्गं
पतिंवरा कॢप्तविवाहवेशा ॥"
वहिस् + ष्यञ् ।) वहिः । वाहिर इति
भाषा ।
यथा, स्मृतिः ।
"अपवित्रः पवित्रो वा सर्व्वावस्थां
गतोऽपि वा ।
यः स्मरेत् पुण्डरीकाक्षं स
वाह्याभ्यन्तरः शुचिः ॥"

**वा(बा)ह्येन्द्रियं**, क्ली, (वाह्यमिन्द्रियम् ।) वहि-

रिन्द्रियम् । तद्यथा । चक्षुः । जिह्वा ।
नासिका ।
त्वक् । श्रोत्रम् । एतदेकैकगुणाः ।
यथा, --
"एते तु द्वीन्द्रियग्राह्या अथ
स्पर्शान्तशब्दकाः ।
वाह्यैकैकेन्द्रियग्राह्या
गुरुत्वादृष्टभावना ॥"
इति भाषापरिच्छेदः ॥

**वाह्लिकः**, पुं, वाह्लीकदेशः । इत्यमरटीकायां

भरतः ॥ (तद्देशजाते, त्रि । यथा,
महाभारते ।
१ । २२२ । ४९ ।
"पृष्ठ्यानामपि चाश्वानां वाह्लिकानां
जनार्द्दनः ।
ददौ शतसहस्राणि
कन्याधनमनुत्तमम् ॥")

**वाह्लिकं**, क्ली, कुङ्कुमम् । हिङ्गु । इत्यमर-

**विंशकः**, त्रि, (विंशत्या क्रीतः । विंशति + "विशति-

त्रिंशद्भ्यां ड्वुनसंज्ञायाम् ।" ५ । १ । २४ ।
इति ड्युन् । "ति विंशतेर्डिति ।" ६ । ४ ।
१४२ । इति तिलोपः ।) विंशतिक्रीतः । इति
सिद्धान्तकौमुदी ॥

**विंशतिः**, स्त्री, (द्वौ दश परिमाणस्य पक्तिविंश-

तीति निपातनात् सिद्धम् ।) संख्याविशेषः ।
विष इति कुडि इति च भाषा । यथा, --
"विंशत्याद्याः सदैकत्वे सर्व्वा
संख्येयसंख्ययोः ।
संख्यार्थे द्विबहुत्वे स्तस्तासु चानवतेः स्त्रियः
॥"
इत्यमरः ॥
तद्वाचकानि । रावणबाहुः १ । अङ्गुलिः २ ।
इति कविकल्पलता ॥ नखम् ३ । इति
सत्कृत्य-
मुक्तावली ॥

**विंशतिकः**, त्रि, विंशतियोग्यः । यथा । संख्यायाः

कक् स्यादार्हीयेऽर्थे । विंशतित्रिंशद्भ्यां कन्
संज्ञायाम् । अभ्यां कन् स्यात् असंज्ञायान्तु
ड्वुन् स्यात् । विंशकः । संज्ञायान्तु
विंशतिकः ।
इति सिद्धान्तकौमुदी ॥

**विंशतितमः**, त्रि, (विंशतेः पूरणः । विंशति +

डट् । "विंशत्यादिभ्यस्तमडन्यतरस्याम् ।"
५ ।
२ । ५६ । इति तमडागमः ।) विंशः । इति
सिद्धान्तकौमुदी ॥

**विंशी**, पुं, विंशतिः । इति सिद्धान्तकौमुदी ॥

**विकं**, क्ली, सद्यःप्रसूताया गोः क्षीरम् । यथा, --

"क्षीरं सद्यःप्रसूतायाः पेयूषं पालनं विकम् ।"
इति शब्दचन्द्रिका ॥

**विकङ्कटः**, पुं, गोक्षुरः । इति शब्दमाला ॥

**विकङ्कतः**, पुं, वदरीसदृशसूक्ष्मफलवृक्षः । वँइच

इति भाषा । तत्पर्य्यायः । स्वादुकण्टकः २

षष्टिः पञ्चभिरधिका
स्निग्धा याम्याश्रिताः पापाः ॥")

**विकचः**, त्रि, (विकचति विकशतीति । वि + कच्

+ अच् ।) विकसितः । इत्यमरः ॥ (यथा,
माघे । ११ । १९ ।
"विकचकमलगन्धैरन्धयन् भृङ्गमालाः
सुरभितमकरन्दं मन्दमावाति वातः ।
प्रमदमदनमाद्यद्यौवनोद्यामरामा-
रमणरभसखेदस्वेदविच्छेददक्षः ॥" * ॥
विगतः कचो यस्य ।) केशशून्यः । इति
मेदिनी ।
चे, ॥ (यथा, महाभारते । ३ । २५९ । १२ ।
"विभ्रच्चानियतं वेशमुन्मत्त इव पाण्डव ।
विकचः परुषा वाचो व्याहरन् विविधा
मुनिः ॥")

**विकचा**, स्त्री, महाश्रावणिका । इति राज-

निर्घण्टः ॥

**विकच्छः**, त्रि, (विगतः कच्छो यस्य ।) कच्छ-

रहितः । मुक्तकच्छः । इति स्मृतिः ॥

**विकटः**, पुं, (विकटति पूयरक्तादिकं वर्षतीति ।

वि + कट + पदाद्यच् ।) विस्फोटकः । इति
शब्दरत्नावली ॥ साकुरुण्डवृक्षः । इति
राज-
निर्घण्टः ॥ (धृतराष्ट्रस्य पुत्त्रविशेषः । यथा,
महाभारते । १ । ६७ । ९६ ।
"दुर्म्मदो दुष्प्रहर्षश्च विवित्सुर्विकटः समः
॥")

**विकटः**, त्रि, (वि + "संप्रोदश्च कटच् ।" ५ । २ । २९
।

इति कटच् ।) विशालः । (यथा, माघे । १०
। ४२ ।
"उत्तरीयविनयात्त्रपमाणा
रुन्धती किल तदीक्षणमार्गम् ।
आवरिष्ट विकटेन विवोढु-
र्वक्षसैव कुचमण्डलमन्या ॥")

मेदिनीकरौ ॥

**वाह्लीकं**, क्ली, कुङ्कुमम् । हिङ्गु । इत्यमर-

मेदिनीकरौ ॥

**वाह्लीकः**, पुं, देशभेदः । वलख् इति आरवी

भाषा । तद्देशजातघोटकः । इत्यमरमेदिनी-
करौ ॥ गन्धर्व्वविशेषः । इति शब्दरत्नावली ॥
(प्रतीपपुत्त्रविशेषः । यथा, महाभारते । १ । ९५ । ४४ ।
"प्रतीपः खलु शैव्यामुपयेमे सुतन्दां नाम तस्यां
पुत्त्रानुत्पादयामास देवापिं शान्तनुं वाह्लीक-
ञ्चेति ॥")

**वि**, व्य, निग्रहः । नियोगः । पदपूरणम् । निश्चयः ।

असहनम् । हेतुः । अव्याप्तिः । विनियोगः । ईष-
दर्थः । परिभवः । शुद्धम् । अवलम्बनम् । विज्ञा-
नम् । इति मेदिनी । वे, ७६ ॥ विशेषः । गतिः ।
आलम्भः । पालनम् । इति शब्दरत्नावली ॥ उप-
सर्गविशेषः । अस्यार्थाः । वि विशेषवैरूप्यनञर्थ-
गतिदानेषु । इति मुग्धबोधटीकायां दुर्गदासः ॥

**विः**, पुं, स्त्री, (वाति गच्छतीति । वा + "वाते-

र्डिच्च ।" उणा० ४ । १३३ । इति इण् । स च
डित् ।) पक्षी । इत्यमरः ॥ (यथा, साहित्य-
दर्पणे १० परिच्छेदे ।
"के यूयं स्थल एव सम्प्रति वयं प्रश्नो विशेषा-
श्रयः ।

स्रुवावृक्षः ३ ग्रन्थिलः ४ व्याघ्रपात् ५ । इत्य-
मरः ॥ श्रुग्वारुः ६ मधुपर्णी ७ । इति रत्न-
माला ॥ कण्टपादः ८ बहुफलः ९ गोपघण्टा
१० स्रुवाद्रुमः ११ मृदुफलः १२ दन्तकाष्ठः १३
यज्ञीयब्रह्मपादपः १४ पिण्डारः १५ हिमकः
१६ पूतः १७ किङ्किणी १८ वैकङ्कतः १९ वुति-
ङ्करः २० कण्टिकारी २१ । इति शब्दरत्ना-
वली ॥ किङ्किरी २२ स्रुग्दारु २३ । इति
जटाधरः ॥ अस्य गुणाः । अम्लमधुरत्वम् ।
पाकेऽतिमधुरत्वम् । लघुत्वम् । दीपनत्वम् ।
कामलास्रप्लीहनाशित्वम् । पाचनत्वञ्च । इति
राजनिर्घण्टः ॥ अपि च ।
"स एव यज्ञवृक्षश्च कण्टकी व्याघ्रपादपि ।
विकङ्कतफलं पक्वं मधुरं सर्व्वदोषजित् ॥"
इति भावप्रकाशः ॥

**विकङ्कता**, स्त्री, अतिवला । इति राजनिर्घण्टः ॥

**विकचः**, पुं, (विगतः कचो यस्य केशशून्यत्वात् ।

यद्वा, विशिष्टः कचो यस्य प्रभूतकेशत्वात् ।)
क्षपणः । केतुः । इति मेदिनी । चे, ॥ (यथा,
बृहत्संहितायाम् । ११ । १९ ।
"विकचा नाम गुरुसुताः सितैकताराः शिखिपरित्यक्ताः ।

विकरालः । इति मेदिनी । टे, ॥ सुन्दरः । इति
विश्वः ॥ दन्तुरः । इति धरणिः ॥ (यथा, मार्क-
ण्डेये । ४३ । २० ।
"करालैर्विकटैः कृष्णैः पुरुषैरुद्यतायुधैः ।
पाषाणैस्ताडितः स्वप्ने सद्यो मृत्युं लभेन्नरः ॥")
विकृतः । इति त्रिकाण्डशेषः ॥

**विकटा**, स्त्री, (विकट + टाप् ।) मायादेवी । सा

च बौद्धदेवीभेदः । तत्पर्य्यायः । मारीची २
त्रिमुखा ३ वज्रकालिका ४ वज्रवाराही ५
गौरी ६ पोत्रिरथा ७ । इति त्रिकाण्डशेषः ॥

**विकण्टकः**, पुं, (विशिष्टः कण्टको यस्य ।) यवासः ।

इति जटाधरः ॥ वृक्षविशेषः । तत्पर्य्यायः ।
मृदुफलः २ ग्रन्थिलः ३ स्वादुकण्टकः ४
गोकण्टकः ५ काकनासः ६ व्याघ्रपादः ७ घन-
द्रुमः ८ गर्जाफलः ९ घनफलः १० मेघस्तनितो-
द्भवः ११ मुदिरफलः १२ प्रावृष्यः १३ हास्य-
फलः १४ स्तनितफलः १५ । अस्य गुणाः ।
कषायत्वम् । कटुत्वम् । उष्णत्वम् । रुचिप्रद-
त्वम् । दीपनत्वम् । कफहारित्वम् । वस्त्ररङ्ग-
विधायकत्वञ्च । इति राजनिर्घण्टः ॥

**विकत्थनं**, क्ली, (विकत्थ्यते इति । वि + कत्थ श्लाघा-

याम् + भावे ल्युट् ।) मिथ्याश्लाघा । यथा, --

| | | |
|---|---|---|
| किं ब्रूते विहगः स वा फणिपतिर्यत्रास्ति सुप्तो हरिः ॥”)<br>**विंशः**, त्रि, (विंशति + पूरणे डट् । तेर्लोपः ।)<br>विंशतेः पूरणः । इति सिद्धान्तकौमुदी ॥ (यथा, मनुः । ८ । ३९८ । “कुर्य्युरर्घं यथापण्यं ततो विंशं नृपो हरेत् ॥”) | | |

"श्लाघा प्रशंसार्थवादः सा तु
मिथ्याविकत्थनम् ॥"
इति हेमचन्द्रः ॥
(यथा, भागवते । १ । १५ । १९ ।
"शय्यासनाटनविकत्थनभोजनादि
ष्वैकाद्वयस्य ऋतवानिति विप्रलब्धः ॥"
विकत्थते आत्मानमिति । वि + कत्थ +
ल्युः ।
आत्मश्लाघाकारिणि, त्रि । यथा,
महाभारते ।
२ । ७३ । ३२ ।
"असूयितारं द्वेष्टारं प्रवक्तारं विकत्थनम् ।
भीमसेननियोगात्ते हन्ताहं कर्णमाहवे ॥" *
॥
स्त्री, वि + कत्थ + णिच् + युच् । टाप् ।
आत्म-
श्लाघा । यथा, विख्यातविजयनाटके । २
।
"सम्भवोक्तापि शक्तानां न प्रशस्ता
विकत्थना ।
शरदीयघनध्वानैर्व्वाचोभिः किं भवादृशाम्
॥")

**विकम्पितः**, त्रि, विशेषेण कम्पविशिष्टः । विपूर्ब्बक-

कम्पधातोः क्तप्रत्ययेन निष्पन्नः ॥

**विकरः**, पुं, (विकीर्य्यते हस्तपदादिकमनेनेति ।

वि + कृ + "ऋदोरप् ।" इत्यप् ।) रोगः ।
इति शब्दचन्द्रिका ॥

**विकरालः**, त्रि, (विशेषेण करालः ।) भयानकः ।

इति विकटशब्दार्थे मेदिनी ॥ (यथा, मार्क-
ण्डेये । ११८ । ४८ ।
"विकरालं महावक्त्रमतिभीषणदर्शनम् ।
समुद्यतमहाशूलं प्रभूतमतिदारुणम् ॥")

**विकर्णः**, पुं, दुर्य्योधनपक्षीयशूरः । यथा, --

"अश्वत्थामा विकर्णञ्च सोमदत्तिर्जयद्रथः ।
अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः
॥"
इति भगवद्गीतायाम् १ अध्यायः ॥

बाणः । इति त्रिकाण्डशेषः ॥ (वि +
कृष +
भावे घञ् । विकर्षणम् ॥)

**विकर्षणं**, क्ली, (वि + कृष + ल्युट् ।)
आकर्षणम् ।

विपूर्ब्बकृषधातोरनट्प्रत्ययेन निष्पन्नम्
॥ (यथा,
किराते । ३ । ५७ ।
"अविलङ्घ्यविकर्षणं परैः
प्रथितज्यारवकर्म्मकार्म्मुकम् ॥"
विभागः । यथा, भागवते । ३ । ७ ।
३० ।
"वर्णाश्रमविभागांश्च
रूपशीलस्वभावतः ।
ऋषीणां जन्मकर्म्माणि वेदस्य च
विकर्षणम् ॥")

**विकलः**, त्रि, (विगतः कलो व्यक्तध्वनिर्य्यस्य ।)

विह्वलः । इति जटाधरः ॥
स्वभावहीनः । इति
भरतः ॥ (यथा, महाभारते । १ । ४९
। ११ ।
"विधवानाथविकलान् कृपनांश्च
बभार सः ।
सुदर्शः सर्व्वभूतानामासीत् सोम
इवापरः ॥")

**विकलपाणिकः**, पुं, (विकलः पाणिर्यस्य । कन्
।)

स्वभावहीनपाणियुक्तः । यथा ।
कुणिर्विकल-
पाणिकः । इति हलायुधः ॥

**विकला**, स्त्री, (विगतः कलो मधुरालापो यस्याः
।

ऋतौ तु स्त्रिया मौनित्वविहितत्वात् ।)
ऋतु-
हीना । इति शब्दरत्नावली ॥

**विकलाङ्गः**, त्रि, (विकलानि अङ्गानि यस्य ।)

"प्रमाणत्वाप्रमाणत्वपरित्यागप्रकल्पना।
प्रत्युज्जीवनहानिभ्यां प्रत्येकमष्टदोषता ॥"
व्रीहिभिर्यजेत यवैर्यजेत इति श्रूयते । तत्र
व्रीहिप्रयोगे प्रतीतयवप्रामाण्यपरित्यागः।
अप्रतीतयवाप्रामाण्यपरिकल्पनम्। इदन्तु
पूर्ब्ब-
स्मात् पृथक् वाक्यं अन्यथा समुच्चयेऽपि
याग-
सिद्धिः स्यात् । अतएव विकल्पे न उभयः
शास्त्रार्थ इत्युक्तम् । प्रयोगान्तरे यवे उपा-
दीयमाने परित्यक्तयवप्रामाण्योज्जीवनं
स्वीकृत-
यवाप्रामाण्यहानिरिति चत्वारो दोषाः । एवं
व्रीहावपि चत्वारः । इत्यष्टौ दोषा इच्छा-
विकल्पे । तथा चोक्तम् ।
"एवमेवाष्टदोषोऽपि यद्व्रीहियववाक्ययोः ।
विकल्प आश्रितस्तत्र गतिरन्या न विद्यते ॥"
इति ॥
एकार्थतया विविधं कल्प्यते इति विकल्पः ।
तस्मादष्टदोषभिया उपोष्य द्वे तिथी इत्यत्र
न इच्छाविकल्पः किन्तु व्यवस्थितविकल्पः
।
इत्येकादशीतत्त्वम् ॥ (अवान्तरः कल्पः ।
यथा,
भागवते । २ । ८ । ११ ।
"यावान् कल्पो विकल्पो वा यथा कालोऽनु-
मीयते ॥"
देवता । यथा, भागवते । १० । ८५ । ११ ।
"वैकारिको विकल्पानां प्रधानमनुशायि-
नाम् ॥"
"विविधं आधिदैवाध्यात्माधिभूतभेदेन
कल्प्यन्ते
इति विकल्पा देवास्तेषां कारणं वैकारिकः
सात्त्विकोऽहङ्कारश्च त्वम् ॥" इति तट्टीकायां
स्वामी ॥)

**विकश्वरः**, त्रि, (वि + कश + वरच् ।) विकासी ।

इत्यमरटीकायां भरतः ॥ (यथा, नैषधे । २ ।
५ ।
"अयमेत्य तडागनीडजै-

(विगतौ कर्णौ यस्येति विग्रहे कर्णरहिते, त्रि ॥)

**विकर्णिकः**, पुं, सारस्वतदेशः । इति हेमचन्द्रः ॥

**विकर्त्तनः**, पुं, (विशेषेण कर्त्तनं यस्य । विश्वकर्म्म-यन्त्रखोदितत्वादस्य तथात्वम् ।) सूर्य्यः । अर्क-वृक्षः । इत्यमरः ॥

**विकर्म्मकृत्**, त्रि, (विकर्म्म विरुद्धं कर्म्म करोतीति । कृ + क्विप् ।) निषिद्धकर्म्मकारी । यथा,
"न साक्षी नृपतिः कार्य्यो न कारुककुशीलवौ ।
न श्रोत्रियो न लिङ्गस्थो न सङ्गेभ्यो विनिर्गतः ॥
नाध्यधीनो न वक्तव्यो न दस्युर्न विकर्म्मकृत् ।
न वृद्धो न शिशुर्नैको नान्त्यो न विकलेन्द्रियः ॥"
इति मानवे । ८ । ६६ ॥
"विकर्म्मकृत् निषिद्धकर्म्मकारी ।" इति कुल्लूक-भट्टः ॥

**विकर्म्मस्थः**, त्रि, (विकर्म्मणि विरुद्धाचारे तिष्ठतीति । स्था + कः ।) निषिद्धकृत् । यथा, --
"पाषण्डिनो विकर्म्मस्थान् वैडालव्रतिकान् शठान् ।
हेतुकान् वकवृत्तींश्च वाङ्मात्रेणापि नार्च्चयेत् ॥"
इति विष्णुपुराणे ३ अंशे १८ अध्यायः ॥ (तथा मनौ । ४ । ३० ॥)

**विकर्षः** पुं, (विकृष्यतेऽसौ इति । यद्वा, विकृष्यन्ते परप्राणा अनेनेति । वि + कृष् + घञ् ।) स्वभावतो न्यूनाङ्गः । तत्पर्य्यायः । अपोगण्डः २ । इत्यमरः ॥ पोगण्डः ३ अङ्गहीनकः ४ । इति शब्दरत्नावली ॥ (यथा, महाभारते । १ । ३१ । ३४ ।
"जनयामास पुत्त्रौ द्वावरुणं गरुडं तथा ।
विकलाङ्गोऽरुणस्तत्र भास्करस्य पुरःसरः ॥")

**विकली**, स्त्री, (विगता कला यस्याः । गौरादित्वात् ङीष् ।) ऋतुहीना । इति शब्दरत्नावली ॥

**विकल्पः**, पुं, (विरुद्धं कल्पनमिति । वि + कृप + घञ् ।) भ्रान्तिः । (यथा, देवीभागवते । १ । १९ । ३२ ।
"विकल्पोपहतस्त्वं वै दूरदेशमुपागतः ।
न मे विकल्पसन्देहो निर्व्विकल्पोऽस्मि सर्व्वथा ॥")
कल्पनम् । इति मेदिनी । पे, ॥ (यथा, भागवते । ५ । १६ । २ ।
"तत्रापि प्रितव्रतरथचरणपरिखातैः सप्तभिः सप्त सिन्धवः उपक्लृप्ताः । यत एतस्याः सप्तद्वीपविशेषविकल्पस्त्वया भगवन् खलु सूचितः ॥"
संशयः । यथा, रघुः । १७ । ४९ ।
"रात्रिन्दिवविभागेषु यथादिष्टं महीक्षिताम् ।
तत्सिषेवे नियोगेन स विकल्पपराङ्मुखः ॥"
नानाविधः । यथा, मनुः । ९ । २२८ ।
र्लघुपर्य्यव्रियताथ शङ्कितैः ।
उदडीयत वैकृतात् करग्रहजादस्य विकश्वरस्वरैः ॥")

**विकषा**, स्त्री, (विकषतीति । वि + कष गतौ + अच् । टाप् ।) मञ्जिष्ठा । इत्यमरटीकायां रायमुकुटः ॥ मांसरोहिणी । इति राज-निर्घण्टः ॥

**वकस्वरः**, त्रि, (वि + कष + वरच् ।) विकस्वरः । इत्यमरटीकायां भरतः ॥

**विकसः**, पुं, (विकसतीति । वि + कस + अच् ।) चन्द्रः । इति त्रिकाण्डशेषः ॥

**विकसा**, स्त्री, (विकसतीति । वि + कस + अच् । टाप् ।) मञ्जिष्ठा । इत्यमरः ॥

**विकसितं**, त्रि, (वि + कस + क्तः ।) दलानामन्योन्यविश्लेषः । तत्पर्य्यायः । उज्जृम्भितम् २ उज्जृम्भम् ३ स्मितम् ४ उन्मिषितम् ५ विनिद्रम् ६ उन्निद्रम् ७ उन्मीलितम् ८ विजृम्भितम् ९ उद्बुद्धम् १० उन्निदुरम् ११ भिन्नम् १२ उद्भिन्नम् १३ हसितम् १४ विकस्वरम् १५ विकचम् १६ व्याकोषम् १७ फुल्लम् १८ संफुल्लम् १९

| | | |
|---|---|---|
| | "प्रच्छन्नं वा प्रकाशं वा तन्निषेवेत यो नरः ।<br>तस्य दण्डविकल्पः स्याद्तथेष्टं नृपतेस्तथा ॥")<br>विविधकल्पः । स च द्विविधः ।<br>व्यवस्थितः ।<br>एच्छिकश्च । सोऽप्याकाङ्क्षाविरहे युक्तः । तथा<br>च भविष्ये ।<br>"स्मृतिशास्त्रे विकल्पस्तु<br>आकाङ्क्षापूरणे सति ॥"<br>इच्छाविकल्पेऽष्टदोषाः । यथा, -- | |

स्फुटम् २० उदितम् २१ दलितम् २२ दीर्णम्
२३ स्फुटितम् २४ उत्फुल्लम् २५ प्रफुल्लम् २६ ।
इति राजनिर्घण्टः ॥ (यथा, आर्य्यासप्तश-
त्याम् । ४७६ ।
“यदवधिविवृद्धमात्रा विकसितकुसुमोत्करा
शणश्रेणी ।
पीतांशुकप्रियेयं तदवधि पल्लीपतेः पुत्त्री ॥”)

**विकस्वरः**, त्रि, (विकसतीति । वि + कस गतौ +
“स्थेशभासपिसकसो वरच् ।” ३ । २ । १७५ ।
इति वरच् ।) विकासशीलः । तत्पर्य्यायः ।
विकासी २ । इत्यमरः ॥ “विकसति कस ज गतौ
दन्त्यान्तः यायाय भासकसेति वरे विकस्वरः ।
विकासः स्फुटने व्यक्ताविति दन्त्यान्ते धरणिः ।
‘कुशेशयैरत्र जलाशयोषिता
मुदा रमन्ते कलभा विकस्वरैः ।
प्रगीयते सिद्धगणैश्च योषिता
मुदा रमन्ते कलभा विकस्वरैः ॥’
इति माघयमकेऽपि दन्त्यवत्त्वम् । (४ । ३३) कष
वधे मूर्द्धन्यान्त इत्यस्य रूपमिति केचित् । कश
शब्दे इत्यस्य तालव्यान्तस्य रूपमिति केचित् ।”
इति तट्टीकायां भरतः ॥ (यथा, कथासरित्-
सागरे । ४ । १५ ।
“एकस्याः सोत्सुका दृष्टिर्नृपालोकविकस्वरा ।

**विकालः**, पुं, (विरुद्धः कार्य्यानर्हः कालः ।)
दैवपैत्रादिकर्म्मणि विरुद्धकालः । वैकाल इति
भाषा । तत्पर्य्यायः । सायः २ दिनान्तः ३
सायाह्नः ४ सायम् ५ । इति शब्दरत्नावली ॥
उत्सवः ६ विकालकः ७ । इति त्रिकाण्डशेषः ॥
(यथा, मार्कण्डेये । ३५ । ३० ।
“न लङ्घयेत् तथैवासृक् ष्ठीवनोद्वर्त्तनानि च ।
नोद्यानादौ विकालेषु प्राज्ञस्तिष्ठेत्कदाचन ॥”)

**विकालकः**, पुं, (विकाल एव । स्वार्थे कन् ।)
विकालः । इति त्रिकाण्डशेषः ॥

**विकालिका**, स्त्री, (विज्ञातः कालो यया । कन् ।
टापि अत इत्वम् ।) मानरन्ध्रा । ताम्री ।
इति त्रिकाण्डशेषः ॥ ताँवी इति भाषा ॥

**विकाशः**, पुं, (वि + काशृ दीप्तौ + घञ् ।) रहः ।
प्रकाशः । इत्यमरटीकायां भरतः ॥ विकाशो
विजने स्फुटे । इत्यजयः ॥ (यथा, राजतर-
ङ्गिण्याम् । ४ । १५५८ ।
“विकाशः केषाञ्चित् नयनविषमैर्व्विद्युदुदयैः
परेषामुद्भूतिः श्रवणकटुभिर्दीर्घरसितैः ।
नचेष्टा काप्यन्योपकृतिपरिहीना जलमुचो
जडा वर्षादन्यं गणयति गुणं नास्य तु जनः ॥”)

**विकाशनं**, क्ली, (वि + काश + ल्युट् ।) विकाशः ।
विपूर्ब्ब-काशृ ङ दीप्तौ इत्यस्मात् अनट्प्रत्ययेन
निष्पन्नम् ॥

**विकाशी**, [न्] त्रि, (विकाशोऽस्यास्तीति ।
विकाश + इनिः ।) विकाशशीलः । इत्यमर-
टीकायां रायमुकुटः ॥ (यथा, मार्कण्डेये ।

अग्निदग्धादीनां पिण्डम् । यथा, मनुः । ३ । २४५ ।
“असंस्कृतप्रमीतानां योगिनां कुलयोषिताम् ।
उच्छिष्टं भागधेयं स्याद्दर्भेषु विकिरश्च यः ॥”
अपि च ।
“पिण्डनिर्व्वापरहितं यत्तु श्राद्धं विधीयते ।
स्वधावाचनलोपोऽत्र विकिरस्तु न लुप्यते ॥”
इति श्राद्धतत्त्वम् ॥
(यथा च मार्कण्डेये । ३१ । १२ ।
“ये वा दग्धाः कुले बालाः क्रियायोग्या ह्यसंस्कृताः ।
विपन्नास्तेऽन्नविकिरसम्मार्ज्जनजलाशिनः ॥” * ॥
जलविशेषे, क्ली । तथा च चिन्तामणिधृतवच-
नम् ।
“नद्यादिनिकटे भूमिर्या भवेद्वालुकामयी ।
उद्घाव्यते ततो यत्तु तज्जलं विकिरं विदुः ॥
विकिरं शीतलं स्वच्छं निर्द्दोषं लघु च स्मृतम् ।
तुवरं स्वादु पित्तघ्नं मनाक् कफकरं स्मृतम् ॥”)

**विकिरणं**, क्ली, (वि + कॄ + ल्युट् । इत्वं रपर-
त्वम् ।) विक्षेपणम् । विहिंसनम् । विज्ञानम् ।
इति कॄधात्वर्थदर्शनात् ॥ (अर्कवृक्षे, पुं ।
इत्यमरः । २ । ४ । ८० ॥)

**विकीरणः**, पुं, अर्कवृक्षः । इत्यमरः । २ । ४ । ८० ॥
(तथास्य पर्य्यायः ।
“अलर्को गुणरूपः स्यान्मन्दारो वसुकोऽपि च ।
श्वेतपुष्पः सदापुष्पः सवालार्कः प्रतीयसः ॥
रक्तोपरोऽर्कनामा स्यादर्कपर्णो विकीरणः ।
रक्तपुष्पः शुक्लफलस्तथास्फोटः प्रकीर्त्तितः ॥”

श्रुतेः
पार्श्वमपश्यन्त्यास्तदाख्यातुमिवाययौ
॥")

**विकस्वरा**, स्त्री, (विकस्वर + टाप् ।) रक्तपुन-

र्नवा । इति राजनिर्घण्टः ॥
(विवरणमस्या
रक्तपुनर्नवाशब्दे ज्ञातव्यम् ॥)

**विकारः**, पुं, (वि + कृ + घञ् ।)
प्रकृतेरन्यथाभावः ।

तत्पर्य्यायः । परिणामः २ विकृतिः ३
विक्रिया
४ । इत्यमरः ॥ विकृत्या ५ । इति
भरतः ॥
केचित्तु पूर्ब्बद्वयं
प्रकृतिध्वंसजन्यविकारे यथा
काष्ठस्य विकारो भस्म । मृत्पिण्डस्य
घट इति ।
परद्वयं विकारमात्रे यथा मुखस्य
विकृतिः
क्रोधरक्तता । काष्ठस्य भस्म च । इति
भरतः ॥
(यथा, कुमारे । ७ । ९५ ।
"अपि शयनसखिभ्यो दत्तवाचं
कथञ्चित्
प्रमथमुखविकारैर्हासयामास गूढम् ॥"
प्रकृतिविकृतिः । यथा, हरिवंशे । २४९
। ३५ ।
"शब्दः स्पर्शश्च रूपञ्च रसो
गन्धस्तथैव च ।
प्रकृतिश्च विकारश्च यच्चान्यत् कारणं
महत् ॥"
अस्य विशेषविबरणं विकृतिशब्दे
द्रष्टव्यम् ॥)
रोगः । इति मेदिनी । रे, २१८ ॥ (यथा,
--
"विकारो धातुवैषम्यं साम्यं
प्रकृतिरुच्यते ।
सुखसंज्ञकमारोग्यं विकारो दुःखमेव च
॥"
इति चरके सूत्रस्थाने नवमेऽध्याये ॥
मत्स्यः । तत्पर्य्यायो यथा, --

"कात्यायनीं तुष्टवुरिष्टलम्भात्
विकाशिवक्त्रास्तु विकाशिताशाः ॥")

**विकाषी**, [न्] त्रि, (विकाष + इनिः ।) विकाश-

शीलः । इत्यमरटीकायां भरतः ॥

**विकासी**, [न्] त्रि, (विकास + इनिः । विकासते

इति । वि + कास + णिनिर्वा ।) विकस्वरः
।
इत्यमरः ॥

**विकिरः**, पुं, (विकिरति मृत्तिकादीन् भोजनार्थ-

मिति । वि + कॄश विक्षेपे + इगुपधेति कः
।)
पक्षी । इत्यमरः ॥ (अस्य पर्य्यायो यथा, --
"पक्षी खगो विहङ्गश्च विहगश्च विहङ्गमः ।
शकुनिर्विः पतत्री च विष्किरो विकिरो-
ऽण्डजः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे
॥)
कूपः । इति त्रिकाण्डशेषः ॥ (विकीर्य्यते
इति ।
वि + कॄ + घञर्थे कः ।)
पूजाकालीनविघ्नोत्-
सारणार्थक्षेपणीयतण्डुलादिः । यथा ।
फडिति
सप्त जप्तान् विकिरानादाय ।
"अपसर्पन्तु ते भूता ये भूता भुवि
संस्थिताः ।
ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया
॥"
इति विकिरेत् ॥
यथा, --
"लाजचन्दनसिद्धार्थभस्मदूर्व्वाकुशाक्षताः ।
विकिरा इति सन्दिष्टाः
सर्व्वविघ्नौघनाशकाः ॥"
इति तन्त्रसारः ॥

इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमभागे ॥)

**विकीर्णः**, त्रि, (विकीर्य्यते स्मेति । वि + कॄ + क्तः ।)

विक्षिप्तः । छडान इति भाषा ॥ यथा, --
"अथ सा पुनरेव विह्वला
वसुधालिङ्गनधूसरस्तनी ।
विललाप विकीर्णमूर्द्धजा
समदुःखामिव कुर्व्वती स्थलीम् ॥"
इति कुमारसम्भवे ४ सर्गः ॥

**विकीर्णरोम**, [न्] क्ली, (विकीर्णानि रोमाण्यस्मि-

न्निति ।) स्थौणेयम् । इति राजनिर्घण्टः ॥

**विकीर्णसंज्ञं**, क्ली, (विकीर्णमिति संज्ञा यस्य ।)

स्थौणेयम् । इति राजनिर्घण्टः ॥

**विकुक्षिः**, पुं, इक्ष्वाकुराजपुत्त्रः । यथा, --

"वैवस्वतमनोरासीदिक्ष्वाकुः पृथिवीपतिः ।
तस्य पुत्त्रशतञ्चासीद्विकुक्षिर्ज्येष्ठ उच्यते ।
सोऽयोध्याधिपतिर्वीरस्तस्यपञ्चदश स्मृताः
॥"
इति बह्निपुराणे सागरोपाख्याननामाध्यायः
॥

**विकुर्व्वाणः**, त्रि, (विकुरुते इति । वि + कृ +

शानच् ।) हर्षमाणः । इत्यमरः ॥ (विकृति
प्राप्ते च ॥ यथा, सांख्यदर्शने । १ । ६२ ।
"आकाशस्तु विकुर्व्वाणः स्पर्शमात्रं ससर्ज्ज
ह ।
बलवानभवद्वायुस्तस्य स्पर्शो गुणो मतः
॥")

**विकुस्रः**, पुं, (विकसतीति । वि + कस + "वौ

कसेः ।" उणा० २ । १५ । इति रक् ।
उत्वञ्चो
पधायाः ।) चन्द्रः । इत्युणादिकोषः ॥

| “मत्स्यो मीनो विकारश्च झषो वैशारिणो-<br>ऽण्डजः ।<br>शकुलो पृथुरोमा च स सुदर्शन इत्यपि ॥<br>रोहिताद्यास्तु ये जीवास्ते मत्स्याः परि-<br>कीर्त्तिताः ॥”<br>इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥) | | |
|---|---|---|

**विकूणिका**, स्त्री नासिका । इति हेमचन्द्रः ॥

**विकृतं**, त्रि, (वि + कृ + क्तः ।) वीभत्सम् । रोगि-

तम् । असंस्कृतम् । इति मेदिनी । ते, १५८ ॥
(अङ्गविहीनम् । यथा, मनुः । ९ । २४७ ।
“बालाश्च न प्रमीयन्ते विकृतं न च जायते ॥”
अप्रकृतिस्थः । यथा, महाभारते । ३ । १११ ।
१८ ।
“अथर्य्यशृङ्गं विकृतं समीक्ष्य
पुनः पुनः पीड्य च कायमस्य ।
अवेक्ष्यमाणा शनकैर्जगाम
कृत्वाग्निहोत्रस्य तदापदेशम् ॥” * ॥
मायावी । यथा, रघुः । १२ । ३९ ।
“लक्ष्मणः प्रथमं श्रुत्वा कोकिलामञ्जुवादिनीम् ।
शिवाघोरस्वनां पश्चात् बुबुधे विकृतेति ताम्
॥”)

**विकृतं**, क्ली, विकारः । तस्य लक्षणम् । यथा, --

“ह्रीमानेर्षादिभिर्यत्र नोच्यते स्वं विवक्षितम् ।
व्यज्यते चेष्टयैवेदं विकृतं तद्विदुर्बुधाः ॥”
इत्युज्ज्वलनीलमणिः ॥
प्रभवादिषष्टिसंवत्सरान्तर्गतचतुर्विंशवर्षम् ।
यथा, भविष्यपुराणे ।
भैरव उवाच ।
“सर्व्वाः प्रजाः प्रपीड्यन्ते व्याधिः शोकश्च
जायते ।
शिरोवक्षोऽक्षिरोगाश्च पापाद्धि विकृते जनाः ॥”
इति ज्योतिस्तत्त्वम् ॥
(नायिकालङ्कारविशेषः । यथा, साहित्य-
दर्पणे । ३ । १४६ ।
“वक्तव्यकालेऽप्यवचो व्रीडया विकृतं मतम् ॥”)

**विकृतिः**, स्त्री, (वि + कृ + क्तिन् ।) विकारः ।

इत्यमरः ॥ (यथा, कुमारे । ७ । ३४ ।
“यथाप्रदेशं भुजगेश्वराणां
करिष्यतामाभरणान्तरत्वम् ।
शरीरमात्रं विकृतिं प्रपेदे
तथैव तस्थुः फणरत्नशोभाः ॥”)
रोगः । डिम्बः । मद्यादिः । इति हेमचन्द्रः ॥
(सांख्योक्तविकृतिः । यथा, सांख्यकारिका-
याम् । ३ ।
ङ्कारस्य प्रकृतिर्विकृतिश्च मूलप्रकृतेः । एव-
महङ्कारतत्त्वं तन्मात्राणामिन्द्रियाणाञ्च प्रकृति-
र्व्विकृतिश्च महतः । एवं पञ्चतन्मात्राणि
भूतानामाकाशादीनां प्रकृतयो विकृतयश्चाह-
ङ्कारस्य । अथ का विकृतिरेव कियती च इत्यत
उक्तं षोडशकस्तु विकार इति षोडशसंख्या-
परिमितो गणः षोडशकः । तु शब्दोऽवधारणे
भिन्नक्रमश्च । पञ्चमहाभूतान्येकादशेन्द्रियाणि
चेति षोडशको गणो विकार एव न प्रकृति-
रिति । यद्यपि पृथिव्यादीनामपि गोघटवृक्षादयो
विकाराः एवं तद्विकारभेदानां दध्यङ्कुरादय-
स्तथापि गवादयो बीजादयो वा न पृथिव्यादिभ्य
स्तत्त्वान्तरम् । तत्त्वान्तरोपादानत्वञ्च प्रकृतित्व-
मिहाभिप्रेतमिति न दोषः सर्व्वेषां गोघटा-
दीनां स्थूलता इन्द्रियग्राह्यता च समेति न
तत्त्वान्तरम् । अनुभयरूपमुक्तं तदाह न प्रकृति-
र्न विकृतिः पुरुष इति तत्त्वकौमुदी ॥ ३
॥)

**विकृष्टः**, त्रि, विशेषेण कृष्टः । आकृष्टः । विपूर्ब्ब-

कृषधातोः क्तप्रत्ययेन निष्पन्नः ॥

**विकृष्टकालः**, पुं, (विकृष्टः कालः ।) चिरकालः ।

यथा, --
आच्छादनरहितः । यथा, मनोः । ११ ।
४९ ।
श्लोकटीकायां कुल्लूकः ।
“गुरुभार्य्यागामी विकोषमेहनत्वमिति
॥”)

**विक्कः**, पुं, (विक् इति कायति शब्दायते इति ।

कै + कः ।) करिशावकः । इति
त्रिकाण्डशेषः ॥

**विक्रमः**, पुं, (विशेषेण क्रामतीति । वि + क्रम +

अच् ।) विष्णुः । यथा,
विष्णुसहस्रनामस्तोत्रे ।
“ईश्वरो विक्रमी धन्वी मेधावी विक्रमः
क्रमः ॥”
(वि + क्रम + घञ् ।) शौर्य्यातिशयः ।
तत्-
पर्य्यायः । अतिशक्तिता २ ।
इत्यमरभरतौ ॥
(यथा, रघुः । १२ । ८७ ।
“अन्योन्यदर्शनप्राप्तविक्रमावसरं चिरात्
।
रामरावणयोर्युद्धं चरितार्थमिवाभवत्
॥”)
क्रान्तिमात्रम् । इति मेदिनी । मे, ५४ ॥
(पाद-
विक्षेपः । यथा, रामायणे । १ । १ । १०
।
“आजानुबाहुः सुशिराः सुललाटः सुवि-
क्रमः ॥”)
विक्रमादित्यराजा । यथा, --
“धन्वन्तरिक्षपणकामरसिंहशङ्कु-
वेतालभट्टघटकर्प्परकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य ॥”
इति नवरत्नश्लोकः ॥
चरणः । शक्तिः । इति राजनिर्घण्टः ॥
(स्थितिः । यथा, भागवते । २ । ८ ।
२० ।

"मूलप्रकृतिरविकृति-
र्म्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो
न प्रकृतिर्न विकृतिः पुरुषः ॥"
संक्षेपतः शास्त्रस्य चतस्रो विधाः । कश्चिदर्थः
प्रकृतिरेव कश्चिदर्थो विकृतिरेव कश्चित्
प्रकृति-
विकृतिरेव कश्चिदनुभयरूपः । तत्र का प्रकृति-
रेवेत्यत उक्तं मूलप्रकृतिरविकृतिरिति । प्रक-
रोतीति प्रकृतिः प्रधानं सत्वरजस्तमसां
साम्या-
वस्था सा प्रकृतिः प्रकृतिरेव इत्यर्थः ।
कस्मादि-
त्यत उक्तम् मूलेति मूलञ्चासौ प्रकृतिश्चेति
मूलप्रकृतिः विश्वस्य कार्य्यसंघातस्य सा मूलं
न त्वस्या मूलान्तरमस्तीति भावः । कतमाः
पुनः
प्रकृतिविकृतयः कियत्यश्च इत्यत उक्तं मह-
दाद्याः प्रकृतिविकृतयः सप्तेति । प्रकृतयश्च ता
विकृतयश्च ता इति । तथाहि महत्त्वत्त्वमह-

"विकृष्टकालैर्या वेगैर्म्मन्दैः समभिवर्त्तते
।
क्षुद्रिका नाम सा हिक्का जत्रुमूलात्
प्रधावति ॥"
विकृष्टकालैः चिरेण । जत्रु कक्षोरसोः
सन्धिः ।
इति भावप्रकाशः ॥

**विकेशी**, स्त्री, (विगतः केशो यस्याः । ङीष् ।)
केशवर्ज्जिता । पटवर्त्तिः । इति धरणिः
॥
महीरूपशिवस्य पत्नी । यथा, --
"सूर्य्यो जलं मही वह्निर्वायुराकाशमेव
च ।
दीक्षितो ब्राह्मणः सोम इत्येतास्तनवः
क्रमात् ॥
सुवर्च्चला तथैवोषा विकेशी चापरा
शिवा ।
स्वाहा दिशस्तथा दीक्षा रोहिणी च
यथा-
क्रमम् ।
सूर्य्यादीनामिमाः पत्न्यो रुद्राद्यैर्नामभिः
सह ॥"
इति मार्कण्डेयपुराणे रुद्रसर्गः ॥

**विकोकः**, पुं, वृकासुरपुत्त्रः । स च कल्किदेवेन
हतः । यथा, --
"कल्किः कोकविकोकाभ्यां
गदापाणिर्युधां
पतिः ।
युयुधे विशने विष्णुर्लोकानां जनयन्
भयम् ॥
वृकासुरस्य पुत्त्रौ तौ नप्तारौ शकुनेर्हरिः
।
तयोः कल्किः संयुयुधे
मधुकैटभयोर्यथा ॥
तयोर्गदाप्रहारेण चूर्णिताङ्गस्य भूपतेः ।
कराच्च्युतोऽपतद्भूमौ दृष्ट्वोचुरित्यहो
जनाः ॥
ततः पुनः क्रुधा
विष्णुर्ज्जगज्जिष्णुर्म्महाभुजः ।

"संप्लवः सर्व्वभूतानां विक्रमः
प्रतिसंक्रमः ।
इष्टापूर्त्तस्य काम्यानां त्रिवर्गस्य च यो
विधिः ॥"
"विक्रमः स्थितिः प्रतिसंक्रमो
महाप्रलयः ।"
इति तट्टीकायां श्रीधरस्वामी ॥ * ॥)
प्रभवादि-
षष्टिसंवत्सरान्तर्गतचतुर्द्दशंवर्षम् । यथा
"जायन्ते सर्व्वशस्यानि मेदिनी
निरुपद्रवा ।
लवणं मधु गव्यञ्च महार्घ्यं विक्रमे प्रिये
॥"
इति ज्योतिस्तत्त्वम् ॥
(स्वनामख्यातकविविशेषः । स च
नेमिदूताख्य-
खण्डकाव्यं विरचितवान् । तथा च
नेमिदूते
उक्तम् ।
"तद्वःखाथ प्रचरकवितुः कालिदांसस्य
काव्या-
दन्त्यं पादं सुपदरचितान्
मेघदूताद्गृहीत्वा ।
श्रीमन्नमेश्चरितविशदं
साङ्गणस्याङ्गजन्मा
चक्रे काव्यं बुधजनमनःप्रीतये
विक्रमाख्यः ॥"
वत्सप्रीपुत्त्रः । यथा, मार्कण्डेये । ११७
। १ ।
"तस्य तस्यां सुनन्दायां पुत्त्रा द्वादश
जज्ञिरे ।
प्रांशुः प्रवीरः शूरश्च सुचक्रो विक्रमः
क्रमः ॥")

**विक्रमादित्यः**, पुं, (विक्रमेणादित्य इव ।) स्वनाम-
ख्यातो राजा । स च
उज्जयनीदेशाधिपतिः
संवत्कर्त्ता च । तत्पर्य्यायः । साहसाङ्कः
२
शकारिः ३ । इति जटाधरः ॥ अस्य
विवरणं

| | | |
|---|---|---|
| | नन्दकेन शिरस्तस्य<br>विकोकस्याच्छिनत् प्रभुः ॥”<br>इति कल्किपुराणे २१ अध्यायः ॥<br>**विकोषः**, त्रि, (विगतः कोषो यस्य ।) कोष-<br>रहितः । निष्कोषः । इति पुराणम् ॥<br>(यथा,<br>महाभारते । ३ । ६२ । १८ ।<br>“परिधावन्नथ नल इतश्चेतश्च भारत ।<br>आससाद सभोद्देशे विकोषं<br>खड्गमुत्तमम् ॥” | द्वात्रिंशत्पुत्तलिकाकथायांतथा<br>विक्रमार्कशब्दे<br>च द्रष्टव्यम् ॥ (मोदकविशेषः । यदुक्तं<br>चिन्ता-<br>मणौ । यथा, --<br>“घृते गुन्दपलं विंशत् पचेत्<br>सम्यग्भिषग्वरः ।<br>उत्तार्य्य च क्षिपेदेषां खण्डश्च<br>पलविंशतिः ॥ |

तालमूली तुरङ्गी च शुण्ठी चेति
पलार्द्धकम् ।
जातीफलञ्च कक्कोलं लवङ्गञ्चेति
कार्षिकम् ॥
मालतीञ्च कुलिञ्जञ्च कबावं करभं
त्वचम् ।
एतेषां कोलमात्राञ्च आयसस्य
पलद्वयम् ॥
पलैकं मोदकं कृत्वा एकैकं भक्षयेद्
दिने ।
धातुक्षीणोऽग्निक्षीणश्च बलानलकरं
परम् ॥
नेत्ररोगेषु सर्व्वेषु कासश्वासे च
कामले ।
प्रमेहान् विंशतिं
हन्याद्विक्रमादित्यमोदकः ॥”)

**विक्रमार्कः**, पुं, (विक्रमेण अर्क इव ।) विक्रमा-
दित्यः । इति केचित् ॥ (अथ
विक्रमार्कवर्णनं
सन्दधाति ज्योतिर्व्विदाभरणसमाप्तौ
श्रीकालि-
दासः ।
“वर्षे श्रुतिस्मृतिविचारविवेकरम्ये
श्रीभारते खधृतिसम्मित-१८०
देशपीठे ।
मत्तोऽधुनाकृतिरियं सति मालवेन्द्रे
श्रीविक्रमार्कनृपराजवरे समासीत्
॥”
प्रथमं नृपसभायां पण्डितवर्गं
वर्णयति ।
“शङ्कुः सुवाग् वररुचिर्म्मणिरंशुदत्तो
जिष्णुस्त्रिलोचनहरी घटकर्पराख्यः
।
अन्येऽपि सन्ति
कवयोऽमरसिंहपूर्ब्बा
यस्यैव विक्रमनृपस्य सभासदोऽमी
॥
सत्यो वराहमिहिरः श्रुतसेननामा
श्रीमद्विक्रमभूभुजा प्रतिदिन मुक्तामणिस्वर्णगो
सप्तीभाद्यपवर्ज्जनेन विहितो धर्म्मः सुवर्णा-
ननः ॥”
अथास्य दिग्विजयमाह ।
“उद्दामद्रविडद्रुमैकपरशुर्लाटाटवीपावको
वल्गद्वङ्गभुजङ्गराजगरुडोगौडाब्धिकुम्भोद्भवः ।
गर्ज्जद्गुर्ज्जरराजसिन्धुरहरिर्धारान्धकारार्य्यमा
काम्बोजाम्बुजचन्द्रमा विजयते श्रीविक्रमार्को
नृपः ॥”
अथास्य प्रभुत्वादिगुणान् वर्णयति ।
“येनाप्युग्रमहीधराग्रविषये दुर्गाण्यसह्यान्यहो
नीत्त्वा यानि नतीकृतास्तदधिपा दत्तानि तेषां
पुनः ।
इन्द्राम्भोध्यमरद्रुमस्मरसुरक्ष्माभृद्गुणेनाञ्जसा
श्रीमद्विक्रमभूभृताखिलजनाम्भोजेन्दुना
मण्डले ॥”
अस्य पुरीं वर्णयति ।
“यद्राजधान्युज्जयिनी महापुरी
सदा महाकालमहेशयोगिनी ।
समाश्रितप्राण्यपवर्गदायिनी
श्रीविक्रमार्कोऽवनिपो जयत्यपि ॥
यो रूमदेशाधिपतिं शकेश्वरं
जित्वा गृहीत्वोज्जयिनीं महाहवे ।
आनीय सम्भ्राम्य सुमोच तन्त्वहो
श्रीविक्रमार्कः समसह्यविक्रमः ॥
तस्मिन् सदा विक्रममेदिनीशे
विराजमाने समवन्तिकायाम् ।
सर्व्वप्रजामण्डलसौख्यसम्प-
द्बभूव सर्व्वत्र च वेदकर्म्म ॥
शङ्क्वादिपण्डितवराः कवयस्त्वनेके
ज्योतिर्व्विदः समभवंश्च वराहपूर्ब्बाः ।
श्रीविक्रमार्कनृपसंसदि मान्यबुद्धि-
स्तैरप्यहं नृपसखा किल कालिदासः ॥”
इति ज्योतिर्व्विदाभरणम् ॥)

**विक्रमी**, [न्] पुं, (विक्रमोऽस्त्यस्येति । विक्रम +
इनिः ।) सिंहः । इति राजनिर्घण्टः ॥ विष्णुः ।
यथा, --
“ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ।”
इति महाभारते अनुशासनपर्व्वणि तस्य सहस्र-
“यमाहिशक्राग्निहुताशपूर्ब्बा
नेष्टाः क्रये विक्रयणे प्रशस्ताः ।
पौष्णाग्निचित्राशतबिन्दुयाताः
क्रये हिता विक्रयणे निषिद्धाः ॥”
इति ज्योतिःसारसंग्रहः ॥ * ॥
क्रयविक्रयनिर्णयो यथा । मूल्यं
दास्यामीति
कृत्वा ग्रहणादपि क्रयसिद्धिः । तथा च
विवाद-
चिन्तामणौ कात्यायनः ।
“पण्यं गृहीत्वा यो मूल्यमदत्त्वैव दिशं
व्रजेत् ।
ऋतुत्रयस्योपरिष्टात् तद्धनं वृद्धिमाप्नुयात्
॥”
अतएव बृहस्पतिः ।
“गृहक्षेत्रादिकं क्रीत्वा
तुल्यमूल्याक्षरान्वितम् ।
पत्रं कारयते यत्तु क्रयलेख्यं तदुच्यते ॥”
क्रयविक्रये समयविशेषाभ्यन्तरे
पश्चात्तापाद्-
सिद्धिः । यथा मनुः ।
“क्रीत्वा विक्रीय वा किञ्चित्
यस्येहानुशयो
भवेत् ।
सोऽन्तर्द्दशाहे तद्द्रव्यं दद्याच्चैवाददीत वा
॥”
एतद्याज्ञवल्क्योक्तेतरपरम् । यथा याज्ञ-
वल्क्यः ।
“दशैकपञ्चसप्ताहमासत्र्यहार्द्धमासिकम् ।
बीजायोबाह्यरत्नस्त्रीदोह्यपुंसां परीक्षणम्
॥”
अत्र बृहस्पतिः ।
“अतोऽर्व्वाक् पण्यदोषस्तु यदि संजायते
क्वचित् ।
विक्रेतुः प्रतिदेयन्तत् क्रेता
मूल्यमवाप्नुयात् ॥”
अतस्तद्द्रव्यपरीक्षणकालात् ।
कात्यायनः ।

श्रीवादरायणमणित्थकुमारसिंहाः ।
श्रीविक्रमार्कनृपसंसदि सन्ति चैते
श्रीकालतन्त्रकवयस्त्वपरेमदाद्याः
॥
धन्वन्तरिक्षपणकामरसिंहशङ्कु-
वेतालभट्टघटखर्प्फरकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य ॥”
अथ परिजनान् वर्णयति ।
“अष्टौ यस्य शतानि
मण्डलधराधीशाः सभायां
सदा
स्युः संसत्परिणाहकोटिसुभटाः
सत्पण्डिताः
षोडश ।
दैवज्ञा दश षण्मिताश्च भिषजो
भट्टास्तथा
ढङ्गिनो
वेदज्ञा रसचन्द्रमा १६ विजयते
श्रीविक्रमः
सोऽधिभूः ॥”
अथास्य सैन्यं वर्णयति ।
“यस्याष्टादशयोजनानि कटके
पादातिकोटि-
त्रयम् ३००००००००
वाहानामयुतायुतञ्च
१००००००००० नवतेस्त्रिघ्ना-
कृति-२४३०० र्हस्तिनाम् ।
नौकालक्षचतुष्टयं ४००००००
विजयिनो यस्य
प्रयाणे भवेत्
सोऽयं विक्रमभूपतिर्व्विजयते नान्यो
धरित्री-
तले ॥”
अथास्य शाकप्रवृत्तिं दर्शयति ।
“येनास्मिन् वसुधातले शकगणान्
सर्व्वा
दिशः सङ्गरे
हत्वा पञ्चनवप्रमान्
५५५५५५५५५५ कलियुगे
शाकपवृत्तिः कृता ।
नामस्तोत्रे १४९ अध्याये २२ श्लोकः ॥ अति-
शक्तिविशिष्टे, त्रि ॥ (यथा, महाभारते ।
१ । १२८ । २८ ।
“प्राणवान् विक्रमी चैव शौर्य्येण महता-
न्वितः ।
स्पर्द्धते चापि सहितानस्मानेको वृकोदरः ॥”)

**विक्रयः**, पुं, (विक्रयणमिति । वि + क्री + “एरच् ।”
३ । ३ । ५६ । इति अच् ।) विक्रयणक्रिया । वेचा
इति भाषा ॥ तत्पर्य्यायः । विपणः २ । इत्य-
मरः ॥ विपणनम् ३ पणनम् ४ । इति शब्द-
रत्नावली ॥ व्यवहारः ५ पणाया ६ । इति
जटाधरः ॥ अस्य विहिताविहितनक्षत्राणि
यथा, --
“अविज्ञातन्तु यत् क्रीतं दुष्टं
पश्चाद्विभावितम् ।
क्रीतं तत् स्वामिने देयं पण्यं कालेऽन्यथा
न
तु ॥”
काले प्रागुक्तपरीक्षाकालाभ्यन्तरे ।
परीक्षिते
तु बृहस्पतिः ।
“परीक्षेत स्वयं पण्यं अन्येषाञ्च प्रदर्शयेत्
।
परीक्षितं बहुमतं गृहीत्वा न पुनस्त्यजेत्
॥”
अत्र विशेषयति नारदः ।
“क्रीत्वा मूल्येन यो द्रव्यं दुष्क्रीतं मन्यते
क्रयी ।
विक्रेतुः प्रतिदेयं तत्
तस्मिन्नेवाह्न्यविक्षतम् ॥
द्वितीयेऽह्नि ददत् क्रेता
मूल्यात्त्रिंशांशमाहरेत् ।
द्विगुणन्तु तृतीयेऽह्नि परतः क्रेतुरेव तत्
॥”
आहरेत् दद्यात् विक्रेत्रे इति शेषः । द्विगुणं
त्रिंशांशस्य । याज्ञवल्क्यः ।
“राजदैवोपघातेन पण्ये दोष उपागते ।
हानिर्व्विक्रेतुरेवासौ याचितस्याप्रयच्छतः
॥”
नारदः ।
“उपहन्येत वा पण्यं दह्येतापह्रियेत वा ।
विक्रेतुरेव सोऽनर्थो विक्रीयासंप्रयच्छतः
॥
दीयमानं न गृह्णाति क्रीतं पण्यन्तु यः
क्रयी ।
स एवास्य भवेद्दोषो विक्रेतुर्योऽप्रयच्छतः
॥”
इति प्रायश्चित्ततत्त्वम् ॥ * ॥
अपि च ।
“न्यासं कृत्वा परत्राधिं कृत्वा वाधिं
करोति च ।
विक्रयं वा क्रिया तत्र पश्चिमा बलवत्तरा
॥”

न्यासं कृत्वा आधिं करोति आधिं कृत्वा वा विक्रयं करोति । विक्रयपदं स्वत्वध्वंसकत्वात्
दानं लक्षयति परा क्रिया सिद्धेत्यर्थः । एवञ्च
विक्रेतृदात्रोर्म्मरणादिना आध्यनुद्धारे विक्रय-
दाने तत्कर्त्तृतुल्यस्वत्वजननात्तत्र तत्क्रेतृ-
प्रतिग्रहीतृभ्यामाध्युद्धारः कार्य्यः । इति । तत्र च ।
"न च स्थावरस्य समस्तस्य गोत्रसाधारणस्य च ।
नैकः कुर्य्यात् क्रयं दानं परस्परमतं विना ॥
विभक्ता अविभक्ता वा सपिण्डाः स्थावरे समाः ।
एको ह्यनीशः सर्व्वत्र दानाधमनविक्रये ॥"
इति व्यासवचनाभ्यामेकस्य दानबन्धकविक्रया-
धिकारः इति वाच्यं यथेष्टविनियोगार्हत्वरूपस्य
स्वत्वस्य द्रव्यान्तर इवात्राप्यविशेषात् वच-
नञ्च स्वामित्वेन दुर्व्वृत्तपुरुषगोचरविक्रयादिना
कुटुम्बविरोधादधर्म्मज्ञापनार्थनिषेधरूपं न तु
विक्रयाद्यनिष्पत्यर्थमिति दायभागः ॥ * ॥ एवञ्च ।
"स्थावरे विक्रयो नास्ति कुर्य्यादाधिमनुज्ञया ॥"
इति स्थावरस्य केवलविक्रयप्रतिषेधात् एवं
भूमिं यः प्रतिगृह्णातीत्यादिवचने दानप्रशंसा-
दर्शनाच्च विक्रयेऽपि कर्त्तव्ये सहिरण्यमुदकं

"गोवधोऽयाज्यसंयाज्यपारदार्य्यात्मविक्रयाः ।
तडागारामदाराणामपत्यस्यच विक्रयः ।
भृताच्चाध्ययनादानमपण्यानाञ्चविक्रयः ॥"
इत्यादि मानवे ११ अध्याये उपपातकमध्ये गणितम् ॥

**विक्रयणं**, क्ली, (वि + क्री + ल्युट् ।) विक्रयः । यथा,

"यमाहिशक्राग्निहुताशपूर्ब्बा
नेष्टाः क्रये विक्रयणे प्रशस्ताः ।
पौष्णाग्निचित्राशतविन्दुवाताः
क्रये हिता विक्रयणे निषिद्धाः ॥"
इति ज्योतिःसारसंग्रहः ॥

**विक्रयिकः**, पुं, (विक्रयेण जीवतीति । विक्रय +
"वस्नक्रयविक्रयात्ठन् ।" ४ । ४ । १३ । इति
ठन् । यद्वा, विक्रीणातीति । वि + क्री + "क्रिय
इकन् ।" उणा० २ । ४४ । इति इकन् ।)
विक्रेता । इत्यमरः ॥ (यथा, महाभारते ।
१२ । ३६ । ३० ।
"दीक्षितस्य कदर्य्यस्य क्रतुविक्रयिकस्य च ।
तक्ष्णश्चर्म्मावकर्त्तुश्च पुंश्चल्या रजकस्य च ।
चिकित्सकस्य यच्चान्नमभोज्यं रक्षिणस्तथा ॥")

**विक्रयी**, [न्] त्रि, (विक्रीणातीति । वि + क्री +
णिनिः ।) विक्रयकर्त्ता । इति शब्दरत्नावली ॥
(यथा, याज्ञवल्क्ये । २ । १७३ ।
"क्रेता मूल्यमवाप्नोति तस्मात् यस्तस्य विक्रयी ॥")

**विक्रान्तं**, क्ली, (वि + क्रम + क्तः ।) वैक्रान्त-
मणिः । इति राजनिर्घण्टः ॥ (त्रिविक्रमाव-
तारस्य विष्णोर्द्वितीयपादक्षेपेण अन्तरिक्षं
विक्रान्तमिति ख्यातम् । तथा च वाजसनेय-
संहितायाम् । १० । १९ ।
"विष्णोर्व्विक्रमणमसि । विष्णोर्व्विक्रान्तमसि ।
विष्णोः क्रान्तमसि ।"
"हे द्वितीयप्रक्रम त्वं विष्णोर्विक्रान्तं द्वितीय-
पादप्रक्षेपेण जितमन्तरिक्षमसि ।" "इमे वै
लोका विष्णोर्व्विक्रमणं विष्णोर्व्विक्रान्तं विष्णोः

त्रिकाण्डशेषः ॥ विक्रमश्च ॥ (यथा, राजतर-
ङ्गिण्याम् । ४ । १२९ ।
"पार्थिवः पृथुविक्रान्तिर्युधि क्रोधं मुमोच यः ॥"
पादन्यासः । यथा, शतपथब्राह्मणे ।
१ । १ । २ । १३ ।
"विष्णुस्त्वाक्रमतामिति यज्ञो वै विष्णुः स देवेभ्य
इमां विक्रान्तिं विचक्रमे यैषामियं विक्रान्ति-
रिदमेव प्रथमेन पदेन पस्पाराथेदमन्तरिक्षं
द्वितीयेन दिवमुत्तमेनैतां वेवैष एतस्मै विष्णु-
र्यज्ञो विक्रान्तिं विक्रमते ॥")

**विक्रायकः**, पुं, (विक्रीणातीति । वि + क्री +
ण्वुल् ।) विक्रेता । इति हेमचन्द्रः । ३ । ५३२ ॥
(यथा, महाभारते । ५ । ३८ । ४ ।
"चिकित्सकः शल्यकर्त्तावकीर्णी
स्तेनः क्रूरो मद्यपो भ्रूणहा च ।
सेनाजीवी श्रुतिविक्रायकश्च
भृशं प्रियोऽप्यतिथिर्नोदकार्हः ॥")

**विक्रिया**, स्त्री, (विकरणमिति । वि + कृ + "कृञः
शच ।" ३ । ३ । १०० । इति शः । टाप् ।)
विकारः । इत्यमरः ॥ (यथा, रघुः । १३ । ७१ ।
"श्मश्रुप्रवृद्धिजनिताननविक्रियांश्च
प्लक्षान् प्ररोहजटिलानिव मन्त्रिवृद्धान् ॥"
प्रकृतेरन्यथाभावः । यथा, मार्कण्डेये । ३५ । २ ।
"अस्नेहाश्चापि गोधूमयवगोरसविक्रियाः ॥"

दत्त्वा दानरूपेण स्थावरविक्रय इति
विज्ञाने-
श्वरः ॥ वस्तुतस्तु स्थावरविक्रयनिषेधो
अवि-
भक्तस्थावरविषयः । तत्रापि यदि विक्रयं
विना
अवस्थितिर्न भवति तदा विक्रयः कर्त्तव्यः
।
पूर्ब्बपुरुषार्ज्जितनष्टोद्धारे विशेषयति
मिता-
क्षरायाम् ।
"स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्ज्जितम्
।
असम्भूय सुतान् सर्व्वान् न दानं न च
विक्रयः ॥"
इत्यादि ॥
अस्यापवादमाह ।
"एकोऽपि स्थावरे
कुर्य्याद्दानाधमनविक्रयम् ।
आपत्काले कुटुम्बार्थे धर्म्मार्थे च विशेषतः
॥"
इति दायतत्त्वम् ॥
द्रव्यविशेषविक्रयनिषेधो यथा । स्मृतिः ।
"विक्रीणन् मद्यमांसानि ह्यभक्षस्य च
भक्षणम् ।
कुर्व्वन्नगम्यागमनं शूद्रः पतति तत्क्षणात् ॥
कपिलाक्षीरपानेन ब्राह्मणीगमनेन च ।
वेदाक्षरविचारेण शूद्रश्चाण्डालतां व्रजेत्
॥"
कालिकापुराणम् ।
"विक्रयं सर्व्ववस्तूनां कुर्व्वन् शूद्रो न
दोषभाक् ।
मधु चर्म्म सुरां लाक्षां त्यक्त्वा मांसञ्च
पञ्चमम् ॥"
मनुः ।
"सद्यः पतति लौहेन लाक्षया लवणेन च ।
त्र्यहेण शूद्रीभवति ब्राह्मणः क्षीरविक्रयात्
॥
अशक्तौ भेषजस्यार्थे यज्ञहेतोस्तथैव च ।
यद्यवश्यन्तु विक्रेयास्तिला धान्येन
तत्समाः ॥"

क्रान्तमिति श्रुतेः ।" इति तद्भाष्ये महीधरः ॥)

**विक्रान्तः**, पुं, (वि + क्रम + क्तः ।) शूरः । इत्य-
मरः ॥ (वाच्यलिङ्गेऽपि दृश्यते । यथा, मुद्रा-
राक्षसे । १ ।
"विक्रान्तैर्नयशालिभिः सुसचिवैः श्रीर्व्वक्र-
नासादिभिः ॥")
सिंहः । इति राजनिर्घण्टः ॥ (मदालसागर्भ-
जात-ऋतध्वजपुत्त्रः । यथा, मार्कण्डेये । २५
। ८ ।
"मदालसायाः सञ्जज्ञे पुत्त्रः प्रथमजस्ततः ।
तस्य चक्रे पिता नाम विक्रान्त इति धीमतः ॥"
हिरण्याक्षपुत्त्रविशेषः । यथा, हरिवंशे । ३ ।
७८ -- ७९ ।
"हिरण्याक्षसुताः पञ्च विद्वांसः सुमहाबलाः ।
झर्झरः शकुनिश्चैव भूतसन्तापनस्तथा ।
महानाभश्च विक्रान्तः कालनाभस्तथैव च ॥")

**विक्रान्तिः**, स्त्री, (वि + क्रम् + क्तिन् ।) अश्व-
गतिः । तत्पर्य्यायः । पुलायितम् २ । इति

विरुद्धा क्रिया । विरुद्धकार्य्यम् ।
यथा, रघुः ।
१५ । ४८ ।
"इत्याप्तवचनाद्रामो विनेष्यन्
वर्णविक्रियाम् ।
दिशः पपात पत्रेण वेगनिष्कम्पकेतुना
॥")

**विक्रीतः**, त्रि, (वि + क्री + क्तः ।) कृतविक्रयः ।
यथा, बृहस्पतिः ।
"नाष्टिकश्चैव कुरुते तद्धनं ज्ञातिभिः
स्वकम् ।
अदत्तत्यक्तविक्रीतं कृत्वा स्वं लभते
धनी ॥"
इति प्रायश्चित्ततत्त्वम् ॥

**विक्रुष्टं**, त्रि, (वि + क्रुष + क्तः ।) निष्ठुरम् । इति
हेमचन्द्रः ॥

**विक्रेता**, [ऋ] त्रि, (विक्रीणातीति । वि + क्री +
तृच् ।) विक्रयकर्त्ता । तत्पर्य्यायः ।
विक्रयिकः
२ । इत्यमरः ॥ विक्रयी ३ । इति
शब्दरत्ना-
वली ॥ विक्रायकः ४ । इति हेमचन्द्रः
॥
(यथा, याज्ञवल्क्यः । २ । १७३ ।
"विक्रेतुर्द्दर्शनात् शुद्धिः स्वामी द्रव्यं
नृपो दमम् ।
क्रेता मूल्यमवाप्नोति तस्माद्यस्तस्य
विक्रयी ॥")

**विक्रेयं**, त्रि, (विक्रीयते इति । वि + क्री +
"अचो
यत् ।" ३ । १ । ९७ । इति यत् ।)
विक्रययोग्यद्रव्यम् ।
तत्पपर्य्यायः । पणितव्यम् २ पण्यम्
३ । इत्य-
मरः ॥ विक्रययोग्यायोग्यानियथा, --
"इदन्तु वृत्तिवैकल्यात्त्यजतो
धर्म्मनैपुणम् ।
विट्पण्यमुद्धृतोद्धारं विक्रेयं
वित्तवर्द्धनम् ॥

| | | |
|---|---|---|
| इत्याह्निकतत्त्वम् ॥<br>“गवां विक्रयकारी च गवि लोमानि यानि च ।<br>तावद्वर्षसहस्राणि गवां गोष्ठे क्रिमिर्भवेत् ॥”<br>इति यमवचनम् ॥ | | सर्व्वान्रसानपोह्येत कृतान्नञ्च तिलैः सह ।<br>अश्मनो लवणञ्चैव पशवो ये च मानुषाः ॥<br>सर्व्वञ्च तान्तवं रक्तं शाणक्षौमाविकानि च ।<br>अपि चेत् स्युररक्तानि फलमूले तथौषधीः ॥<br>अपः शस्त्रं विषं मांसं सोमं गन्धांश्च सर्व्वशः । |

क्षीरं क्षौद्रं दधि घृतं तैलं मधु गुडं कुशान् ॥
अरण्यांश्च पशून् सर्व्वान् दंष्ट्रिणश्च वयांसि च ।
मद्यं नीलीञ्च लाक्षांश्च सर्व्वांश्चैकशफांस्तथा ॥
काममुत्पाद्य कृष्यास्तु स्वयमेव कृषीवलः ।
विक्रीणीत तिलान् शुद्धान् धर्म्मार्थमचिर-स्थितान् ॥"
इति मानवे १० अध्यायः ॥

**विक्लवः**, त्रि, (विक्लवते इति । वि + क्लु + पचा-
द्यच् ।) विह्वलः । इत्यमरः ॥ (यथा, माघे । १२ । ६३ ।
"नूनं सहायेन वियोगविक्लवा
पुरः पुरस्त्रीरपि निर्ययौ तदा ॥" * ॥
क्ली, दुःखम् । यथा, रामायणे । २ । ४४ । २५ ।
"किमिदानीमिदं देवि ! करोति हृदि विक्लवम् ॥")

**विक्लिन्नः**, त्रि, (वि + क्लिद् + क्तः ।) जरसा जीर्णः ।
शीर्णः । आर्द्रः । इति मेदिनी । ने, १३३ ॥

**विक्षतः**, त्रि, (वि + क्षण + क्तः ।) विशेषेण क्षतः ।
(यथा, महाभारते । २ । ४९ । ३३ ।
"अद्वारेण विनिर्गच्छन् द्वारसंस्थानरूपिणा ।
अभिहत्य शिलां भूयो ललाटेनास्मि विक्षतः ॥")

**विक्षावः**, पुं, (विक्षवणमिति । वि + क्षु + "वौ
क्षुश्रुवः ।" ३ । ३ । २५ । इति घञ् ।) शब्दः ।
इत्यमरः ॥ (यथा, भट्टिः । ७ । ३६ ।
तात्मनि तथा विक्षेपशक्त्या आकाशादिप्रपञ्च-
मुद्भावयति तादृशं सामर्थ्यम् । इति वेदान्त-
सारसुबोधिनीटीका ॥

**विखः**, त्रि, (विख्यः । निपातनात् यलोपः ।)
गतनासिकः । इति भरतद्विरूपकोषः ॥

**विखनाः**, [स्] पुं, ब्रह्मा । यथा, --
"न खलु गोपिकानन्दनो भवा-
नखिलदेहिनामन्तरात्मदृक् ।
विखनसार्थितो विश्वगुप्तये
सख उदेयिवान् सात्त्वतां कुले ॥"
इति श्रीभागवते । १० । ३१ । ४ ॥

**विखुः**, त्रि, (विगता नासिका यस्य । बहुलवच-
नात् नासिकायाः खुः ।) गतनासिकः । इति
भरतद्विरूपकोषः ॥

**विखुरः**, पुं, राक्षसः । इति त्रिकाण्डशेषः ॥
चौरः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**विख्यः**, त्रि, (विगता नासिकास्येति । "ख्यश्च ।"
८ । ४ । २८ । इत्यस्य वार्त्तिकोक्त्या नासिकायाः
ख्यः ।) गतनासिकः । इति केचित् ॥

**विख्यातः**, त्रि, ख्यात्यापन्नः । विपूर्ब्बख्याधातोः
क्तप्रत्ययेन निष्पन्नः ॥ (यथा, महाभारते । १ । ६७ । ३२ ।
"चन्द्रवर्म्मेति विख्यातः काम्बोजानां नरा-
धिपः ॥")

**विख्यातिः**, स्त्री, प्रसिद्धिः । सुख्यातिः । विपूर्व्व-
ख्याधातोः क्तिप्रत्ययेन निष्पन्नः ॥

**विख्यापनं**, क्ली, (वि + ख्या + णिच् + ल्युट् ।)
व्याख्यानम् । विपूर्ब्बण्यन्तख्याधातोरनट्प्रत्य-
येन निष्पन्नम् ॥

**विख्रः**, त्रि, (विगता नासिका यस्य । "ख्रु-
ख्रौ च वक्तव्यौ ।" इति नासिकाया
ख्रः ख्रु श्च ।) अनासिकः । इति हेमचन्द्रः ॥
निष्फला ५ विकली ६ विकला ७ । इति शब्द-
रत्नावली ॥

**विगमः**, पुं, (वि + गम + "ग्रहवृदृनिश्चिगमश्च ।"
३ । ३ । ५८ । इति अप् ।) नाशः । यथा ।
एकदण्डिनो वेदान्तिनस्तु यदुपाध्यनवच्छिन्नस्य
ब्रह्मणो विशुद्धरूपता तादृशोपाधिविगम एव
कैवल्यम् । त्रिदण्डिनस्तु आनन्दमयपरमात्मनि
जीवात्मनो लयो मोक्षः । जीवात्मपरमात्मनो-
रभेदेऽपि उपाधिविशेषविशिष्टस्यात्मनो जीव-
रूपतया तस्यौपाधिकः परमात्मभेदः । इति
भेदकोपाधिविगम एव जीवस्य परमात्मनि
लयः । यथा घटाकाशस्य घटविगम एव शुद्ध
आकाशे तस्य लयः । लिङ्गशरीरावच्छिन्नस्यै-
वात्मनो जीवभाव इति लिङ्गशरीरनाश एव
पर्य्यवसितो मोक्षः । इति मुक्तिवादः ॥
(विच्छदः । यथा, भागवते । १ । १३ । ४३ ।
"यथा क्रीडोपस्कराणां संयोगविगमाविह ।
इच्छया क्रीडितुः स्यातां तथैवेशेच्छया
नृणाम् ॥")

**विगन्धकः**, पुं, (विरुद्धो गन्धो यस्मिन् । बहुव्रीहि-

"यात यूयं यमश्रायं दिशं नायेन दक्षिणाम्
।
विक्षावैस्तोयविश्रावं तर्ज्जयन्तो
महोदधेः ॥")
कासः । इति स्वामिकलिङ्गौ । इति
भरतः ॥

**विक्षिप्तः**, त्रि, (वि + क्षिप् + क्तः ।) त्यक्तः ।

(यथा, महाभारते । १ । २७ । ७ ।
"वायुविक्षिप्तकुसुमैस्तथान्यैरपि पादपैः
॥"
कम्पितः । यथा, भागवते । ८ । ८ । ४६
।
"स
व्रीडस्मितविक्षिप्तभ्रूविलासावलोकनैः ।
दैत्ययथुपचेतःसु काममुद्दीपयन् मुहुः ॥"
क्ली चित्तवृत्तिविशेषः । यथा,
पातञ्जलभाष्ये । १ ।
"क्षिप्तं मूडं विक्षिप्तमेकाग्रनिरुद्धमितिचित्त
भूमयः ॥" "क्षिप्ताद्विशिष्टं
विक्षिप्तमितिमणि-
प्रभा ॥")

**विक्षीरः**, पुं, (विशिष्टं क्षीरं यत्र ।) अर्कवृक्षः ।

इति राजनिर्घण्टः ॥

**विक्षेपः**, पुं, (वि + क्षिप् + घञ् ।) प्रेरणम् ।

त्यागः । विक्षेपणम् । यथा, --
"नैरृत्यामिषुविक्षेपमतीत्य ह्यधिकं भुवम्
॥"
इत्याद्याह्निकाचारतत्त्वम् ॥
(कम्पनम् । यथा, कुमारे । १ । १३ ।
"लाङ्गूलविक्षेपविसर्पिशोभै-
रितस्ततश्चन्द्रमरीचिगौरैः ।
यस्यार्थेयुक्तं गिरिराजशब्दं
कुर्व्वन्ति वालव्यजनैश्चमर्य्यः ॥")
अद्वितीयवस्त्ववलम्बनेन चित्तस्य
अन्यावलम्ब-
नम् । इति वेदान्तसारः ।

**विक्षेपशक्तिः**, स्त्री, (विक्षेपाय शक्तिः ।) माया-

शक्तिः । यथा । रज्ज्वज्ञानं स्वावृतरज्जौ
स्वशक्त्या

छिन्ननासिकः । इति शब्दरत्नावली ॥

**विख्रुः**, त्रि, (विगता नासिका यस्य । "ख्रु-

ख्रौ च वक्तव्यौ ।" इति नासिकाया
ख्रः ख्रु श्च ।) अनासिकः । इति हेमचन्द्रः ॥
छिन्ननासिकः । इति शब्दरत्नावली ॥

**विगणनं**, क्ली, (वि + गण + ल्युट् ।) ऋणमुक्तिः ।

इति त्रिकाण्डशेषः ॥ (यथा, पाणिनिः । १ ।
३ । ३६ ।
"संमाननोत्सञ्जनाचार्य्यकरणज्ञानभृतिविगणन-
व्ययेषु नियः ॥" "विगणनं ऋणादेर्निर्यातनम् ।"
इति काशिका ॥)

**विगतः**, त्रि, (वि + गम + क्तः ।) प्रभारहितः ।

तत्पर्य्यातः । निष्प्रभः २ अरोकः ३ । इत्य-
मरः ॥ वीतः ४ । इति रुद्रः ॥ विशेषेण गतः ।
इति हेमचन्द्रः ॥ (यथा, माघे । ११ । २६ ।
"विगततिमिरपङ्कं पश्यति व्योम यावत्
धुवति बिरहखिन्नः पक्षती यावदेव ।
रथचरणसमाह्वस्तावदौत्सुक्यनुन्ना
सरिदपरतटान्तादागताचक्रवाकी ॥")

**विगतश्रीकः**, त्रि, श्रीरहितः । विगता श्रीर्यस्य इति

बहुव्रीहौ कप्रत्ययेन निष्पन्नः ॥

**विगतार्त्तवा**, स्त्री, (विगतं आर्त्तवं रजो यस्याः ।)

पञ्चपञ्चाशदब्देभ्य ऊर्द्ध्वं निवृत्तरजस्का । तत्-
पर्य्यायः । निष्कली २ निष्कला ३ निष्फली ४

लक्षणः कः ।) इङ्गुदीवृक्षः । इति
राजनिर्घण्टः ॥

**विगन्धिका**, स्त्री, हपुषा । इति राजनिर्घण्टः ॥

**विगर्हणं**, क्ली, (वि + गर्ह + ल्युट् ।) निन्दनम्
।

भर्त्सनम् । (यथा, हरिवंशे । ७९ ।
२३ ।
"कृष्णे च भवतो द्वेष्ये
वसुदेवविगर्हणात् ॥")

**विगर्हणा**, स्त्री, (वि + गर्ह + णिच् + युच् ।

टाप् ।) निन्दनम् । भर्त्सनम् । (यथा,
महा-
भारते । १२ । ११४ । २१ ।
"विगर्हणां परमदुरात्मना कृतां
सहेत यः संसदि दुर्ज्जनान्नरः ॥")

**विगर्हितः**, त्रि, (विशेषेण गर्हितः ।) निन्दितः ।

(यथा, नैषधे । १ । १३१ ।
"न केवलं प्राणिवधो वधो मम
त्वदीक्षणाद्विश्वसितान्तरात्मनः।
विगर्हितं धर्म्मधनैर्निवर्हणं
विशिष्य विश्वासजुषां द्विषामपि ॥")
निषिद्धः । इति विपूर्ब्बगर्हधातोः
क्तप्रत्ययेन
निष्पन्नः ॥

**विगलितः**, त्रि, (विशेषेण गलितः ।) स्खलितः
।

यथा, गीतगोविन्दे ५ सर्गः ।
"विगलितवसनं परिहृतरसनं
घटय जघनमपिधानम् ।
किशलयशयने पङ्कजनयने
निधिमिव हर्षनिधानम् ॥"

**विगाढः**, त्रि, (विगाह्यते स्मेति । वि + गाह +

क्तः ।) स्नातः । अवगाहितः ।
विपूर्ब्बगाह-
धातोः क्तप्रत्ययेन निष्पन्नः ॥
(प्रगाढः । यथा,
महाभारते । ३ । ४६ । ५ ।
"निर्गम्य चन्द्रोदयने विगाढे
रजनीमुखे ।

**विगानं**, क्ली, (विरुद्धं गानं परस्य ।) निन्दा ।

इति हेमचन्द्रः ॥

**विगाहमानः**, त्रि, (वि + गाह + शानच् ।)

विलोडनकर्त्ता । अवगाहनकर्त्ता ।
विपूर्ब्ब-
गाहधातोः शानप्रत्ययेन निष्पन्नः ॥
(यथा,
रघुः । १३ । १ ।
"अथात्मनः शब्दगुणं गुणज्ञः
पदं विमानेन निगाहमानः ।
रत्नाकरं वीक्ष्य मिथः स जायां
रामाभिधानो हरिरित्युवाच ॥")

**विगुणः**, त्रि, (विपरीतो गुणो यस्य ।) गुण-

वैपरीत्यविशिष्टः । यथा, --
"यथा मनो ममाचष्ट नेयं माता तथा मम
।
विगुणेष्वपि पुत्त्रेषु न माता विगुणा भवेत्
॥"
इति मार्कण्डेयपुराणे
वैवस्वतमन्वन्तराध्यायः ॥
(सूक्ष्मः । यथा, भागवते । ७ । ९ । ४८
।
"सर्व्वं त्वमेव सगुणो विगुणश्च भूमन्
नान्यत् त्वदस्त्यपि मनो वचसा निरुक्तम्
॥"
गुणहीनः । यथा, शिशुपालवधे । ९ ।
१२ ।
"अवसन्नतापमतमिस्रमभा-
दपदोषतैव विगुणस्य गुणः ॥")

**विगूढः**, त्रि, (विशेषेण गूढः ।) गर्हितः ।

गुप्तः । इति मेदिनी । ढे, ९ -- १० ॥

**विग्रः**, त्रि, (विगता नासिकास्य । "वेग्रो

वक्तव्यः ।" ८ । ४ । २८ । इत्यस्य
वार्त्तिकोक्त्या
नासिकायाः ग्रः ।) गतनासिकः ।
इत्यमरः ॥ * ॥
ग्रहणमिति वाक्ये विहङ्गग्रहणम् । यथा,
वक्रोक्तिपञ्चाशिकायाम् । ४ ।
"नो सन्ध्या हितमत्सरा तव तनौ
वत्स्याम्यहं
सन्धिना
न प्रीतासि वरोरु चेत्कथय तत् प्रस्तौमि
किं
विग्रहम् ।
कार्य्यं तेन न किञ्चिदस्ति शठ मे वीनां
ग्रहे-
णेति वो
दिश्याद्वः प्रतिबद्धकेलिशिवयोः श्रेयांसि
वक्रोक्तयः ॥")
देवविग्रहकरणादिप्रमाणं श्रीमूर्त्तिशब्दे
द्रष्टव्यम् ॥

**विग्रहः**, पुं, क्ली, (विगृह्यन्ते शत्रवो यस्मिन् ।

वि + ग्रह + अप् ।) युद्धम् । इत्यमरः ॥
(यथा,
मनुः । ७ । १७० ।
"यदा प्रहृष्टा मन्येत सर्व्वास्ताः
प्रकृतीर्भृशम् ।
अत्युच्छ्रितं तथात्मानं तदा कुर्व्वीत
विग्रहम् ॥")

**विग्रहावरं**, क्ली, (विग्रहमावृणोतीति । आ +

वृ + अच् ।) पृष्ठम् । इति शब्दचन्द्रिका ॥

**विघटिका**, स्त्री, (विभक्ता घटिका यया ।)

पलम् । इति राजनिर्घण्टः ॥

**विघट्टितं**, त्रि, विशेषेण चालितम् । विपूर्ब्बघट्ट-

घातोः क्तप्रत्ययेन निष्पन्नम् ॥ (यथा,
बृहत्-
संहितायाम् । ३५ । १ ।
"सूर्य्यस्य विविधवर्णाः पवनेन विघट्टिताः
कराः
साभ्रे ।
वियति धनुःसंस्थाना ये दृश्यन्ते
तदिन्द्रधनुः ॥"
विद्धम् । यथा, माघे । ८ । २४ ।

**विघाती**, [न्] त्रि, निवारकः । घातकः । विघात-

शब्दादिन्प्रत्ययेन विपूर्ब्बहनधातोर्ग्रहादित्वा-
ण्णिन्प्रत्ययेन वा निष्पन्नः ॥ (यथा, हरि-
वंशे । ८७ । ४५ ।
"एवमूर्ज्जितवीर्य्यस्य ममामरविघातिनः ॥")

**विघ्नः**, पुं, (विहन्यते अनेनेति । वि + हन +

"घञर्थे कविधानम् ।" ३ । ३ । ५८ ।
इत्यस्य
वार्त्तिकोक्त्या कः ।) व्याघातः । तत्पर्य्यायः
।
अन्तरायः २ प्रत्यूहः ३ । इत्यमरः ॥ (यथा,
मुद्राराक्षसे । २ ।
"प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्ननिहता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमाना
प्रारब्धमुत्तमगुणास्त्वमिवोद्वहन्ति॥"
कृष्णपाकफला । इति शब्दचन्द्रिका ॥
शेषार्थे
अमरे अविघ्न इति पाठः ॥

**विघ्नकारी**, [न्] त्रि, (विघ्नं कर्त्तुं शीलमस्येति ।

कृ + णिनिः ।) घोरदर्शनः । विघाती । इति
मेदिनी । ने, २५५ ॥

**विघ्ननायकः**, पुं, (विघ्नानां नायकः विघ्नाधीश्वर-

त्वात् ।) गणेशः । इति शब्दरत्नावली ॥

**विघ्ननाशकः**, पुं, (विघ्नानां नाशकः ।) गणेशः ।

इति शब्दरत्नावली ॥

**विघ्ननाशनः**, पुं, (नाशयतीति नाशनः विघ्नानां

नाशनः ।) गणेशः । इति शब्दरत्नावली ॥

**विघ्नराजः**, पुं, (विघ्नानां राजा । "राजाहः

सखिभ्यष्टच् ।" ५ । ४ । ९१ । इति टच् ।)
गणेशः ।
इत्यमरः ॥ (यथा, कथासरित्सागरे । २० ।
१०१ ।
"आर्य्यपुत्त्र पुरा गत्वा विघ्नराजमपूजयत्
॥")

(त्रि, "विविधं गृह्णात्यर्थानिति विपूर्व्वात् गृह्णातेः
'अन्येष्वपि दृश्यते ।' इति डः ।" इति देव-
राजयज्वा । मेधावी । इति निघण्टुः । ३ । १५ ॥
यथा, ऋग्वेदे । १ । ४ । ४ ।
"परेहि विग्रमस्तृतमिन्द्रं
पृच्छाविपश्चितम् ॥")

**विग्रहः**, पुं, (विविधं सुखदुःखादिकं गृह्णातीति ।
वि + ग्रह + अच् । यद्वा,
विविधैर्दुःखादिभि-
र्गृह्यते इति । वि + ग्रह + "ग्रहवृदृनिश्चि-
गमश्च ।" ३ । ३ । ५८ । इति अप् ।)
शरीरम् ।
(यथा, रघुः । ११ । १३ ।
"विग्रहेण मदनस्य चारुणा
सोऽभवत् प्रतिनिधिर्न कर्म्मणा ॥")
युद्धम् । इत्यमरः ॥ (यथा, मनुः । ७ । १६० ।
"सन्धिञ्च विग्रहञ्चैव यानमासनमेव च ।
द्वैधीभावं संश्रयञ्च षड्गुणांश्चिन्तयेत् सदा ॥"
विरोधमात्रम् । यथा, रघुः । ९ । ४७ ।
"त्यजत मानमलं वत विग्रहै-
र्न पुनरेति गतं चतुरं वयः ।
परभृताभिरितीव निवेदिते
स्मरमते रमते स्म बधूजनः ॥")
विभागः । इति मेदिनी । हे, २३ ॥ (यथा,
भागवते । ३ । ३१ । ३ ।
"मासेन तु शिरो द्वाभ्यां बाह्वङ्घ्र्याद्यङ्ग-
विग्रहः ।
नखलोमास्थिमर्म्माणि लिङ्गच्छिद्रोद्भव-
स्त्रिभिः ॥")
वाक्यभेदः । स तु समासवाक्यम् । तत्पर्य्यायः ।
विस्तरः २ । इत्यमरः ॥ (वीनां पक्षिणां ग्रहो
"त्रस्यन्ती चलशफरीविघट्टितोरू-
र्वामोरूरतिशयमाप विभ्रमस्य ॥")

**विघसं**, क्ली, (विशेषेण अद्यते इति । वि + अद् +
"उपसर्गेऽदः ।" ३ । ३ । ५९ । इति अप् ।
"घञपोश्च ।" २ । ४ । ३८ । इति घसॢ-
आदेशः ।) सिक्थकम् । इति
राजनिर्घण्टः ॥

**विघसः**, पुं, (वि + अद् + अप् ।) भोजनशेषः ।
इत्यमरः ॥ देवपित्रतिथिगुर्व्वादिभुक्तस्य शेषः ।
इति भरतः ॥ (यथा, मनुः । ३ । २८५ ।
"विघसाशी भवेन्नित्यं नित्यं
वामृतभोजनः ।
विघसो भुक्तशेषन्तु यज्ञशेषं तथामृतम् ॥")
आहारः । इति शब्दरत्नावली ॥ (यथा, --
"अयि वनप्रिय ! विस्मृत एव किं
वलिभुजो विघसो भवताधुना ।
यदनयैव कुहूरिति विद्यया
न पततश्चरणौ धरणौ तव ॥"
इत्युद्भटः ॥)

**विघातः**, पुं, (विशेषेण हननमिति । वि + हन +
घञ् ।) व्याघातः । यथा, अमरे ।
"वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ ॥"
आघातः । (यथा, महाभारते ।
"चक्रे शरविघातञ्च क्रीडन्निव पितामहः ॥"
विनाशः । यथा महाभारते । १ । २९ । १३ ।
"क्षुत्पिपासाविघातार्थं भक्ष्यमाख्यातु मे
भवान् ॥")

**विघ्नषिनायकः**, पुं, (विघ्नानां विनायकः ।) गणेशः ।
इति काशीखण्डः ॥

**विघ्नहारी**, [न्] पुं, (विघ्नं हर्त्तुं शीलमस्य इति ।
हृ + णिनिः ।) गणेशः । इति त्रिकाण्डशेषः ॥
विघ्ननाशके, त्रि ॥

**विघ्नितः**, त्रि, जातविघ्नः । विघ्नोऽस्य जात इत्यर्थे
विघ्नशब्दादितच्प्रत्ययेन निष्पन्नः ॥

**विघ्नेशः**, पुं, (विघ्नानां ईशः ।) गणेशः । इति शब्द-
रत्नावली ॥ (यथा कथासरित्सागरे । २० । ८३ ।
"विघ्नोऽत्र तव जातोऽयं विना विघ्नेशपूज-
नम् ॥")

**विघ्नेशवाहनः**, पुं, (विघ्नेशस्य वाहनः ।) महा-
मूषकः । इति राजनिर्घण्टः ॥

**विघ्नेशानकान्ता**, स्त्री, (विघ्नेशानस्य गणेशस्य
कान्ता प्रिया । तत् पूजायां एतस्याः प्राश-
स्त्यात् । श्वेतदूर्व्वा । इति राजनिर्घण्टः ॥

**विङ्कः** पुं, अश्वखुरः । इति त्रिकाण्डशेषः ॥

**विच**, इर् लि ध औ ञ पृथक्त्वे । इति कवि-
कल्पद्रुमः ॥ (अदा०-ह्वा०-रुधा०-च-उभ०-
अक०-सकञ्च-अनिट् ।) इर्, अविचत् ।
अवैक्षीत् । लि, ञ, वेवेक्ति वेविक्ते मूर्खात्
पण्डितः पृथक् स्यादित्यर्थः । विज इति
जान्तो
यः स एव चान्तोऽपि पठ्यते
कस्यचिदनुरोधात्

तेन निजां खेरेणुरित्यस्य वृत्तौ विजग्रहणे-
नैवास्य ग्रहणात् खेर्गुणः । ध ञ, विनक्ति
विङ्क्ते । विविनच्मि दिवः सुरान् इति
पृथक् करोमीत्यर्थः । औ, वेक्ता । इति
दुर्गा-
दासः ॥

**विचकिलः**, पुं, मल्लीप्रभेदः । मदनकवृक्षः । इति
मेदिनी । ले, १६४ ॥ (यथा,
राजेन्द्रकर्णपूरे । ७० ।
"कुन्दः कन्दलितव्यथं विचकिलः
कम्पाकुलं केतकः
सातङ्कं मदनः सदैन्यमलसं
मुक्तोऽतिमुक्तद्रुमः ॥")

**विचक्षणः**, पुं, (विशेषेण चष्टे धर्म्मादिमुपदि-
शतीति । वि + चक्ष + "अनुदात्तेतश्च
हलादेः ।"
३ । २ । १४९ । इति कर्त्तरि युच् ।)
पण्डितः ।
इत्यमरः ॥ (यथा रघुवंशे । ५ । १९ ।
"ततो यथावद् विहिताध्वराय
तस्मै स्मयावेशविवर्ज्जिताय ।
वर्णाश्रमाणां गुरवे सवर्णी
विचक्षणः प्रस्तुतमाचचक्षे ॥")
निपुणे, त्रि । इति राजनिर्घण्टः ॥ (यथा
भाग-
वते । १ । ५ । १६ ।
"विचक्षणोऽस्यार्हति वेदितुं विभो
अनन्तषारस्य निवृत्तितः सुखम् ॥"
नानार्थदर्शी । यथा ऋग्वेदे । ४ । ५३ ।
२
"विचक्षलः प्रथयन्नापृणन्नुर्व्वजीजनत्
सविता
सुम्नमुक्थ्यम् ।"
"विचक्षणः विविधं द्रष्टा ।" इति तद्भाष्ये
सायणः ॥)

**विचक्षणा**, स्त्री, नागदन्ती । इति राजनिर्घण्टः ॥

**विचक्षुः**, [स्] त्रि, (विगतं प्रत्यक्षितेऽपि वस्तुनि

अन्यच्च ।
"मरीचं त्रिवृतं कुष्ठं हरितालं मनःशिला
।
देवदारु हरिद्रे द्वे कुष्ठं मांसी च चन्दनम्
॥
विशाला करवीरञ्च अर्कक्षीरं सकृत्
पलम् ।
एषाञ्च कार्षिको भागो विषस्यार्द्धपलं
भवेत् ॥
प्रस्थं कटुकतैलस्य गोमूत्रेऽष्टगुणे पचेत्
।
मृत्पात्रे लौहपात्रे वा शनैर्मृद्वग्निना पचेत्
॥
पामा विचर्चिका चैव दद्रुविष्फोटकानि
च ।
अभ्यङ्गेन प्रणश्यन्ति कोमलत्वञ्च
जायते ॥
प्रसूतान्यपि श्वित्राणि तैलेनानेन म्रक्षयेत्
।
चिरोत्थितमपि श्वित्रं विवर्णं
तत्क्षणाद्भवेत् ॥"
इति गारुडे १९८ अध्यायः ॥ * ॥
स्वल्पकुष्ठविशेषः । यथा ।
"एकं कुष्ठं स्मृतं पूर्व्वं गजचर्म्म ततः
स्मृतम् ।
ततश्चर्म्मदलं प्रोक्तं ततश्चापि
विचर्च्चिका ॥
विपादिकाभिधा सैव पामा कच्छूस्ततः
परा ।
ततो दद्रुश्च विष्फोटः किटिमञ्च ततः
परम् ॥
ततश्चालमकं प्रोक्तं शतारुश्च ततः
परम् ।
क्षुद्रकुष्ठानि चैतानि कथितानि भिषग्वरैः
॥
सकण्डुः पिडका श्यावा बहुस्रावा विच-
र्च्चिका ॥"
पिडका क्षुद्रपिडका ।

णेन तत्त्वपरीक्षा । इति गोयीचन्द्रः । प्रमाणै-
रथपरीक्षणं विमर्शमात्रमिति केचित् । इति
भरतः ॥ तत्पर्य्यायः । तर्कः २ निर्णयः ३
गुञ्जा ४ चर्च्चा ५ । इति त्रिकाण्डशेषः ॥
संख्या ६ विचारणा ७ । इत्यमरः ॥ चर्च्चनम्
८
संख्यानम् ९ । इति तट्टीका ॥ विचारणम् १०
वितर्कः ११ व्युहः १२ व्यूहः १३ ऊहः १४
वितर्कणम् १५ । इति शब्दरत्नावली ॥ प्रणि-
धानम् १६ समाधानम् १७ । इति जटाधरः
॥
(यथा, कथासरित्सागरे। ३६ । ८८ ।
"न चैवं क्षमते नारी विचारं मारमोहिता ।
यदियं क्रमते राज्ञी तव काम्यं विपद्गतम् ॥"
नाट्योक्तलक्षणविशेषः । तल्लक्षणं यथा,
साहित्य-
दर्पणे । ६ । ४४७ ।
"विचारो युक्तवाक्यैर्य्यदप्रत्यक्षार्थसाधनम्
॥")

**विचारणं**, क्ली, (वि + चर + णिच् + ल्युट् ।)
विचारः । इति शब्दरत्नावली ॥ (यथा,
भागवते । १२ । १३ । १८ ।
"तत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्ममा
विष्कृतम् ।
तच्छृण्वन् सुपठन् विचारणपरो भक्त्या
विमुच्ये-
न्नरः ॥"
"एकस्मिन् धर्म्मिणि विरुद्धनानार्थविमर्षो
विचारणम् । स च संशयस्त्रिधा स्यात् एको
विशेषादर्शने समानधर्म्मदर्शनात् । अहिर्न्नु-
रज्जुर्न्नु । द्बितीयो विशेषादर्शनमात्रे । अत्र
शब्दो नित्योऽनित्यो वा । तृतीयोऽसाधारण-
धर्म्मजः यथा भूर्नित्या अनित्या वा । अत्र
गन्धो-
ऽसाधारणधर्म्मः विशेषमपश्यन् संशेते
गन्धाधि-
करणं नित्यं अनित्यं वेति दिक् ।" इति ।
"विचारणे पूर्व्वस्य ।" इति श्रीपतिदत्तकृतका-
तन्त्रपरिशिष्टे गोपीनाथतर्काचार्य्यः ॥)

व्यपगतं चक्षुर्यस्य ।) विमनाः । इति त्रिकाण्ड-
शेषः ॥ (विगते नष्टे चक्षुषी यस्य ।) विगतचक्षुषि,
त्रि ॥ (यथा, महाभारते । १२ । ६५ । ३४ ।
"अन्तरा विलयं यान्ति यथा पथि विच-
क्षुषः ॥ *" ॥
विशिष्टे चक्षुषी यस्य सः । वृष्णिवंशीयः कश्चिद्
थोद्धा । यथा, हरिवंशे । १४१ । ९ ।
"कृतवर्म्मा सुदंष्ट्रश्च विचक्षुररिमर्द्दनः ॥")

**विचयनं**, क्ली, (विशेषेण चयनम् ।) मार्गणम् ।
इत्यमरः ॥

**विचर्च्चिका**, स्त्री, (विशेषेण चर्च्च्यते पाणिपादस्य
त्वक् विदार्य्यते अनया इति । चर्च्च तर्जने +
"रोगाख्यायां ण्वुल् बहुलम् ।" ३ । ३ । १०८ । इति
ण्वुल् । टापि अत इत्वम् ।) रोगविशेषः ।
विकच इति भाषा । तत्पर्य्यायः । कच्छूः २ पाम
३ पामा ४ । इत्यमरः ॥ अपि च ।
"कच्छुः कच्छूः पाम पामा पादरोगे विच-
र्च्चिका ।"
इति शब्दरत्नावली ॥ * ॥
तदौषधम् यथा, --
"करवीरं भृङ्गराजं लवणं कुष्ठकर्कटम् ।
चतुर्गुणेन मूत्रेण पचेत्तैलं हरेत्ततः ।
पामां विचर्च्चिकां कुष्ठमभ्यङ्गाद्धि व्रणानि
वै ॥"
इति गारुडे २८७ अध्यायः ॥ * ॥
"दाल्यते त्वक् खरा रूक्षा जान्वोर्ज्ञेया विच-
र्च्चिका ।
पादे विपादिका ज्ञेया
स्थानभेदाद्विचर्च्चिका ॥"
दाल्यते विदार्य्यते । केचिद्विचर्च्चिकातो विपा-
दिकां विभिन्नमाहुः । इति भावप्रकाशः ॥
(सा च महापातकशेषभोगचिह्नं वैदिककर्म्म-
प्रतिबन्धिका च । यथा, शुद्धितत्त्वधृतभविष्य-
पुराणीयमध्यतन्त्रे षष्ठाध्याये ।
"शृणु कुष्ठगणं विप्र उत्तरोत्तरतो गुरुम् ।
विचर्च्चिका तु दुश्चर्म्मा चर्च्चरीयस्तृतीयकः ॥
विकर्च्चूर्व्रणताम्रौ च कृष्णश्वेते तथाष्टकम् ।
एषां मध्ये तु यः कुष्ठी गर्हितः सर्व्वकर्म्मसु ॥
व्रणवत् सर्व्वगात्रेषु गण्डे भाले तथानसि ।
मृते च प्रोपयेत् तीर्थे अथवा तरुमूलके ॥"
कदाचित् अग्निजन्यभूमिकम्पेऽपि विचर्च्चिका
उतपद्यते । यथा बृहत्संहितायाम् । ३२ । १४ ।
"आग्नेयेऽम्बुदनाशः
सलिलाशयसङ्क्षयो नृपतिवैरम् ।
दद्रुविचर्च्चिकाज्वर-
विसर्पिकाः पाण्डुरोगश्च ॥")

**विचलः**, त्रि, अस्थिरः । विपूर्ब्बचलधातोरल्-
प्रत्ययेन निष्पन्नः ॥

**विचलितः**, त्रि, पतितः । स्खलितः । विपूर्व्वचल-
धातोः क्तप्रत्ययेन निष्पन्नः ॥ (यथा, मनुः ।
७ । २८ ।

**विचारणा**, स्त्री, (वि + चर + णिच् + युच् ।
टाप् ।) विचारः । इत्यमरः ॥ (यथा, देवी-
भागवते । १ । १८ । ४२ ।
"जीवो ब्रह्म सदैवाहं नात्र कार्य्या विचा-
रणा ।
भेदबुद्धिस्तु संसारे वर्त्तमाना प्रवर्त्तते ॥")
मीमांसाशास्त्रम् । इति हेमचन्द्रः ॥

**विचारणीयं**, त्रि, विचार्य्यम् । विपूर्ब्बञ्यन्त(णिजन्त)
चरधातोरनीयप्रत्ययेन निष्पन्नम् । क्ली, शास्त्रम् ।
इति हेमचन्द्रः ॥

**विचारितः**, त्रि, (विचारः संजातोऽस्य इति
विचार + "तदस्य संजातं तारकादिभ्य इतच् ।"
५ । २ । ३६ । इति इतच् ।) कृतविचारः ।
तत्पर्य्यायः । विन्नः २ वित्तः ३ । इत्यमरः ॥
(यथा, मनौ । ११ । २८ ।
"आपत्कल्पेन यो धर्म्मं कुरुतेऽनापदि द्विजः ।
स नाप्नोति फलं तस्य परत्रेति विचारितम् ॥")

**विचार्य्यं**, त्रि, विचारितव्यम् । विचारणीयम् ।
विपूर्ब्बचरधातोर्ण्यान्तात् यप्रत्ययेन निष्पन्नम् ॥
(यथा, मार्कण्डेये । ६९ । १८ ।

| | | |
|---|---|---|
| | “दण्डो हि सुमहत् तेजो<br>दुर्द्धरश्चाकृतात्मभिः ।<br>धर्म्माद्विचलितं हन्ति नृपमेव सबान्धवम् ॥”)<br>**विचारः**, पुं, (विशेषेण चरणं पदार्थादिनिर्णये<br>ज्ञानमिति । वि + चर + घञ् ।)<br>तत्त्वनिर्णयः ।<br>इति व्यवहारतत्त्वम् ॥ सन्दिग्धे वस्तुनि प्रमा- | |

"द्वाःस्थैनां दुष्टहृदयामादाय विजने वने ।
परित्यजाशु नैतत्ते विचार्य्यं वचनं मम ॥")

**विचालं**, त्रि, अभ्यन्तरम् । अन्तरालम् । इति

हेमचन्द्रः ॥ (पुं, संख्यान्तरापादनम् । यथा,
पाणिनौ । ५ । ३ । ४३ । "अधिकरणे
विचाले
च ॥")

**विचिः**, पुं स्त्री, (वेवेक्ति जलानि पृथगिव करोति ।

विच + "इगुपधात् कित् ।" उणा० ४ ।
११९ ।
इन् । स च कित् ।) वीची । तरङ्गः । इत्यमर-
टीकायां भरतः ॥

**विचिकित्सा**, स्त्री, (विचिकित्सनमिति । वि +

कित + सन् + अः । टाप् ।) सन्देहः । इत्य-
मरः ॥ (यथा, भागवते । ३ । ९ । ३६ ।
"तुभ्यं मद्विचिकित्सायामात्मा मे
दर्शितोऽवहिः ।
नालेन सलिले मूलं पुष्करस्य विचिन्वतः
॥")

**विचित्रं**, क्ली, (विशेषेण चित्रम् ।) कर्व्वुरवर्णः ।

इति शब्दरत्नावली ॥ तद्वति, त्रि । (यथा,
महाभारते । ३ । ५४ । १० ।
"विचित्रमाल्याभरणैर्ब्बलैर्दृश्यैः स्वलङ्कृतैः
॥")
आश्चर्य्यम् । यथा, --
"विचित्रमिदमाख्यातं भगवन् भवता मम ।
देव्याश्चरितमाहात्म्यं रक्तबीजवधाश्रितम्
॥"
इति देवीमाहात्म्यम् ॥
(यथा च, उपदेशशतके । ३३ ।
"दुहिता विदेहभर्त्तुर्द्दाशरथेर्भामिनी सीता ।
वधमाप राक्षसीनां विधेर्व्विचित्रा गति-
र्ब्बोध्या ॥"
पुं, रौच्यमनुपुत्त्रः । यथा, मार्कण्डेये । ९४ ।
३१ ।
"चित्रसेनो विचित्रश्च नयतिर्निर्भयो दृढः ।
सुनेत्रः क्षत्रबुद्धिश्च सुव्रतश्चैव तत्सुताः ॥"

**विचित्राङ्गः**, त्रि, (विचित्राणि अङ्गानि यस्य ।)

मयूरः । इति शब्दरत्नावली ॥ व्याघ्रः ।
इति
शब्दचन्द्रिका ॥ आश्चर्य्यशरीरे, त्रि ॥

**विचित्रितः**, त्रि, (विचित्रमस्य जातमिति ।

विचित्र + इतच् ।) नानावर्णयुक्तः ।
यथा, --
"आसनं सर्व्वशोभाढ्यं
सद्रत्नमणिनिर्म्मितम् ।
विचित्रितञ्च चित्रेण गृह्यतां शोभनं हरे
॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ८
अध्यायः ॥

**विची**, स्त्री, (विचि + कृदिकारादिति ङीष् ।)

तरङ्गः । इति द्विरूपकोषः ॥

**विचेताः**, [स्] त्रि, (विगतं विरुद्धं वा चेतो

यस्य ।) विगतचित्तः । (यथा, भागवते
। ६ ।
११ । ६ ।
"एवं सुरगणान् क्रुद्धो भीषयन् वपुषा
रिपून् ।
व्यनदत् सुमहाप्राणो येन लोका
विचेतसः ॥")
विरुद्धचित्तः । दुष्टचित्तः ॥ तत्पर्य्यायः
।
दुर्म्मनाः २ अन्तर्म्मनाः ३ विमनाः ४ ।
इति
हेमचन्द्रः ॥ (यथा, महाभारते । ३ ।
४९ । १७ ।
"ये चास्य सचिवा मन्दाः
कर्णसौवलका-
दयः ।
ते तस्य भूयसो दोषान् वर्द्धयन्ति
वितेचतः ॥" * ॥
विशिष्टं चेतो यस्मादिति ।
विशिष्टज्ञानहेतु-
भूतः । यथा, ऋग्वेदे । १ । ८३ । १ ।

"उपर्य्युपरि यद्गेहं तद्विच्छन्दकसंज्ञकम्
॥"
इति भरतः ॥

**विच्छर्द्दकः**, पुं, विच्छन्दकः । इत्यमरटीकायां

रायमुकुटः ॥

**विच्छायं**, क्ली, पक्षिणां छाया । इत्यमरः ॥

समासे षष्ठ्यन्तात् परा च्छाया क्लीवे
स्यात् ।
सा चेत् बहूनां सम्बन्धिनी स्यात् ।
स्वयमुदा-
हरति । वीनां पक्षिणां चाया विच्छायम् ।
इत्यमरटीकायां भरतः ॥ (यत्तु भागवते ।
१० । १२ । ८ ।
"विच्छायाभिः प्रधावन्तो गच्छन्तः साधु
हंसकैः ॥"
इति दृश्यते तत्तु वेः पक्षिणश्चाया विच्छाया
तत एकशेषद्वन्द्वे कृते
विच्छायास्ताभिर्व्विच्छाया-
भिरिति सिद्धं स्यादिति सुधीभिर्व्विभाव्यम् ॥
* ॥
विगता च्छाया यस्य ।) छायारहिते, त्रि ॥
(विगता च्छाया कान्तिर्य्यस्य ।
कान्तिरहिते च
त्रि । यथा, भागवते । १ । १४ । २४ ।
"विलोक्योद्विग्नहृदयो विच्छायमनुजं नृपः ।
पृच्छति स्म सुहृन्मध्ये संस्मरन्नारदेरितम्
॥")

**विच्छायः**, पुं, (विशिष्टा छाया कान्तिर्यस्य ।) मणिः ।

इति यान्तवर्गे छायाशब्दटीकायां भरतः ॥

**विच्छित्तिः**, स्त्री, (वि + छिद् + क्तिन् ।) अङ्ग-

रागः । विच्छेदः ॥ (यथा,
कामन्दकीयनीति-
सारे । १४ । ४४ ।
"लोभो धर्म्मक्रियालोपः कर्म्मणामप्रवर्त्तनम्
।
सत्समागमविच्छित्तिरसद्भिःसह वर्त्तनम्
॥")

अर्थालङ्कारविशेषः । यथा, साहित्यदर्पणे । १० । ७२२ ।
"विचित्रं तद्विरुद्धस्य कृतिरिष्टफलाय चेत् । यथा, --
प्रणमत्युन्नतिहेतोर्जीवनहेतोर्व्विमुञ्चति प्राणान् ।
दुःखीयति सुखहेतोः को मूडः सेवकादन्यः ॥")

**विचित्रकः**, पुं, (विविधानि चित्राणि यस्मिन् । बहुव्रीहौ कन् ।) भूर्ज्जवृक्षः । इति राज-निर्घण्टः ॥

**विचित्रदेहः**, पुं, (विचित्रा देहा यस्य सः ।) मेघः । इति शब्दचन्द्रिका ॥ आश्चर्य्यशरीरे नानावर्णदेहे च, त्रि ॥

**विचित्रवीर्य्यः**, पुं, (विचित्राणि वीर्य्याणि यस्य सः ।) चन्द्रवंशीयराजविशेषः । स च शान्तनो-
दासकन्यायां जातः । तस्य क्षेत्रे सत्यवत्या-ज्ञया व्यासो धृतराष्ट्रं पाण्डुञ्च जनयामास । इति श्रीभागवतमतम् ॥

**विचित्रवीर्य्यसूः**, स्त्री, (विचित्रवीर्य्यस्य सूः प्रसू-र्जननी ।) सत्यवती । इति शब्दरत्नावली ॥

**विचित्रा**, स्त्री, (विचित्रं नानाविधवर्णमस्त्यस्या इति । अर्श आदित्वादच् । स्त्रियां टाप् ।) मृगेर्व्वारुः । इति राजनिर्घण्टः ॥

"तमित् पृणक्षि वसुना भवीयसा
सिन्धुमापो यथाभितो विचेतसः ॥"
"विचेतसः विशिष्टज्ञानहेतुभूता आपो यथा
अभितः सर्व्वासु दिक्षु सिन्धुं समुद्रं पूरयन्ति
तद्वत् ।" इति तद्भाष्ये सायणः ॥ * ॥ विशिष्टं
चेतो यस्येति । विशिष्टज्ञानः । यथा, ऋग्-
वेदे । १ । ४५ । २ ।
"श्रुष्टीवानो हि दाशुषे देवा अग्ने
विचेतसः ॥"
"हे अग्ने विचेतसो विशिष्टप्रज्ञाना देवाः ।"
इति तद्भाष्ये सायणः ॥)

**विचेष्टितः**, त्रि, (विशेषेण चेष्टितं गतिर्यस्य ।) विगतः । (विशेषेण चेष्टितः ।) ईहितः । इति
मेदिन्यां चेष्टितशब्दार्थदर्शनात् ॥ (विगतं
चेष्टितमस्येति वाक्ये चेष्टाशून्यश्च ॥ * ॥ क्ली, वि
+ चेष्ट + भावे क्तः । विशेषेण चेष्टा । यथा,
भागवते । १ । ५ । १३ ।
"उरुक्रमस्याखिलबन्धमुक्तये
समाधिनानुस्मर तद्विचेष्टितम् ॥")

**विच्छ**, क त्विषि । इति कविकल्पद्रुमः (चुरा०-पर०-अक०-सेट् ।) क, विच्छयति । त्विषि
दीप्तौ । इति दुर्गादासः ॥

**विच्छ**, श गतौ । इति कविकल्पद्रुमः ॥ (तुदा०-पर०-सक०-सेट् ।) विच्छायति विच्छायते
आयन्तत्वादुभयमिति वोपदेवः । पक्षे विच्छति ।
श, विच्छती विच्छन्ती । इति दुर्गादासः ॥

हारभेदः । इति मेदिनी । ते, १८५ ॥ छेदः ।
विनाशः । इति त्रिकाण्डशेषः ॥ (यथा, बृहत्-
संहितायाम् । १२ । ६ ।
"दिनकररथमार्गविच्छित्तयेऽभ्युद्यतं यच्चल-
शृङ्गम् ॥")
अङ्गहारः । गेहावधि । इति हेमचन्द्रः ॥
(वैचित्र्यम् । यथा, साहित्यदर्पणे । १० । ७११ ।
"अनुमानन्तु विच्छित्या ज्ञानं साध्यस्य साध-
नात् ॥"
स्त्रीणां स्वाभाविकालङ्कारविशेषः ।) यथा, --
"आकल्पकल्पनाल्पापि विच्छित्तिः कान्तिपोष-
कृत् ॥"
इत्युज्ज्वलनीलमणिः ॥
(यथा च साहित्यदर्पणे । ३ । १३८ ।
"स्तोकाप्याकल्परचणा विच्छित्तिः कान्ति-
पोषकृत् ॥")

**विच्छिन्नः**, त्रि, (वि + छिद् + क्तः ।) समालब्धः । विभक्तः । इति मेदिनी । ने, १३४ ॥ (यथा, शाकुन्तले १ अङ्के ।
"यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां
यदन्तर्व्विच्छिन्नं भवति कृतसन्धानमिव तत् ।
प्रकृत्या यद्वक्रं तदपि समरेखं नयनयो-
र्न मे पार्श्वे किञ्चित् क्षणमपि न दूरे रथ-
जवात् ॥")
कुटिलः । इति हेमचन्द्रः ॥

| | | |
|---|---|---|
| | **विच्छन्दकः**, पुं, ईश्वरसद्मप्रभेदः । इत्यमरः ॥<br>विशिष्टश्छन्दोऽभिप्रायोऽत्रविच्छन्दकः । किंवा विशिष्टेच्छानिर्म्मितो विच्छन्दकः ढघे कादिति कः । एवं लक्षणमुपन्यस्तं साञ्झेन । यथा, -- | |

**विच्छेदः**, पुं, (वि + छिद् + घञ् ।) वियोगः ।

विरहः । भेदः । यथा, ब्रह्मवैवर्त्ते गणपतिखण्डे ।

"कान्तायाः कान्तविच्छेदो मरणादति-
रिच्यते ॥"

(लोपः । यथा, रघुवंशे । १ । ६६ ।

"नूनं मत्तः परं वंश्याः पिण्डविच्छेददर्शिनः ।
न प्रकामभुजः श्राद्धे स्वधासंग्रहतत्पराः ॥")

**विच्युतः**, त्रि, विगतः । विपूर्व्वच्युधातोः क्तप्रत्ययेन

निष्पन्नः । विक्षरितः ।

विपूर्ब्बच्युतधातोः क्प्र-
त्ययेन निष्पन्नः ॥ (यथा, भागवते । ८ । १२ । २१ ।

**विच्युतिः**, स्त्री, (वि + च्यु + क्तिन् ।) वियोगः ।

यथा, --

"सोऽपि वैश्यस्ततो ज्ञानं वव्रे निर्व्विन्नमानसः ।
ममेत्यहमिति प्राज्ञः सङ्गविच्युतिकारकम् ॥"

इति मार्कण्डेयपुराणे देवीमाहात्म्यम् ॥

**विज**, इर् लि ञ औ वेके । इति कविकल्पद्रुमः ॥

(अदा०-ह्वा०-उभ०-अक०-अनिट् ।) वेक

इति विचिर्लि धौ ञ पृथक्त्वे इत्यस्य घञि

रूपम् । इर्, अविजत् अवैक्षीत् । लि ञ,

वेवेक्ति वेविक्ते मूर्खात् पण्डितः कृथक् स्यादि-
त्यर्थः । औ, वेक्ता । इति दुर्गादासः ॥

"अभिप्रयामि संग्रामे यदहं युद्धदुर्म्मदान् ।
नाजित्वा विनिवर्त्तामि तेन मां विजयं विदुः ॥"

यथा च विख्यातविजयनाटके । २ ।

"इतो भीमः क्रूरो नृपतिसहजन्मानमवधीत्
इतः क्रुद्धो वत्सं व्यथयति शरौघेण विजयः ।
न मे चेतःस्थैर्य्यं द्रढयति सखे कुत्र गमनं
विधेयं तद्ब्रूहि त्वमसि सदसद्वाक्यविषयः ॥")

वृत्तार्हत्पिता । जिनबलदेवः । विमानः । इति हेमचन्द्रः ॥ यमः । इति शब्दचन्द्रिका ॥

कल्किपुत्त्रः । यथा, --

"ततः कल्किश्च पद्मायां जयो विजय एव च ।
द्वौ पुत्त्रौ जनयामास लोकख्यातौ महाबलौ ॥"

इति श्रीकल्किपुराणे १३ अध्यायः ॥

भैरववंशीयकल्पराजपुत्त्रः । स काशीराजः खाण्डववनकर्त्ता च । यथा, --

"सुमतेरभवत् कल्पः सुतः सत्यस्य डिण्डिमः ।
विरूपस्याभवद्गाधिगधिर्म्मित्रोऽभवत् सुतः ॥
तेषां कल्पोऽभवद्राजा कल्पात्तु विजयोऽभवत् ॥
यो विजित्य क्षितिं सर्व्वां पार्थिवान् भूरितेजसा ।
शक्रस्यानुमते चक्रे खाण्डवं शतयोजनम् ॥
यत् सव्यसाची ह्यदहत् पाण्डुपुत्त्रः प्रताप-
वान् ।
आवहन् परमां प्रीतिं ज्वलनस्य महात्मनः ॥"

इति कालिकापुराणे भैरववंशानुकीर्त्तनम् ९० अध्यायः ॥ विष्ण्वनुचरविशेषः । यथा । विष्ण्वनु-
चराश्चण्डप्रचण्डजयविजयादयः। इति पुंलिङ्ग-
संग्रहे भरतः ॥

**विजयकुञ्जरः**, पुं, (विजयाय यः कुञ्जरः ।) राज-

वाह्यहस्ती । इति त्रिकाण्डशेषः ॥

**विजयच्छन्दः**, पुं, (विजयस्य छन्दो यस्मात् ।)

पञ्चशतमौक्तिकहारः । इति हेमचन्द्रः ॥ (यथा, बृहत्संहितायाम् । ८१ । ३१ ।

"सुरभूषणं लतानां सहस्रमष्टोत्तरं चतुर्हस्तम् ।

अध्यापिपत् गाधिसुतो यथाव-
न्निघातयिष्यन् युधि यातुधानान् ॥"

इति भट्टिः । २ । २१ ॥ * ॥

दुर्गा । इति हेमचन्द्रः ॥ तथा च ।

"विजित्य पद्मनामानं दैत्यराजं महाबलम् ।
विजया तेन सा देवी लोके चैवापराजिता ॥"

इति देवीपुराणे ४५ अध्यायः ॥ * ॥

यमभार्य्या । हरीतकी । इति जटाधरः ॥ वचा । इति रत्नमाला ॥ जयन्ती । शेफा-
लिका । मञ्जिष्ठा । शमीभेदः । अग्निमन्थः । इति राजनिर्घण्टः ॥ मादकद्रव्यविशेषः । भाङ्
इति सिद्धि इति च भाषा । तत्पर्य्यायः । त्रैलोक्यविजया २ भङ्गा ३ इन्द्रासनम् ४ जया
५ । इति शब्दचन्द्रिका ॥ वीरपत्रा ६ गञ्जा ७ चपला ८ अजया ९ आनन्दा १० हर्षिणी ११ ।

अस्या गुणाः । कटुत्वम् । कषायत्वम् । उष्ण-
त्वम् । तिक्तत्वम् । वातकफापहत्वम् । संग्रा-
हित्वम् । वाक्प्रदत्वम् । बल्यत्वम् । मेधा-
कारित्वम् । श्रेष्ठदीपनत्वञ्च । इति राज-
निर्घण्टः ॥ अपि च ।

"भङ्गा गञ्जा मातुलानी मादिनी विजया जया ।
भङ्गा कफहरी तिक्ता ग्राहिणी पाचनी लघुः ।
तीक्ष्णोष्णा पित्तला मोहमदवाग्वह्निवर्द्धिनी ॥"

इति भावप्रकाशः ॥

अन्यच्च ।

"शक्राशनं तु तीक्ष्णोष्णं मोहकृत् कुष्ठनाश-
नम् ।
बलमेधाग्निकृत् श्लेष्मदोषहारि रसायनम् ॥
जाता मन्दरमन्थनाज्जलनिधौपीयूषरूपा पुरा
त्रैलोक्ये विजयप्रदेति विजया श्रीदेवराजप्रिया ।
लोकानां हितकाम्यया क्षितितले प्राप्ता नरैः

**विज**, ई ओ ध भीकम्पे । इति कविकल्पद्रुमः ॥

(रुधा०-पर०-अक०-सेट् ।
अनिड्निष्ठः ।)
ई ओ, विग्नः । ध, विनक्ति । इति
दुर्गादासः ॥

**विज**, ङ श ई ओ भीकम्पे । इति कविकल्पद्रुमः ॥

(तुदा०-आत्म०-अक०-सेट् ।
निष्ठायामनिट् ।)
ङ श, विजते । ई ओ, विग्नः ।
द्वावर्थौ । इति
दुर्गादासः ॥

**विजनः**, त्रि, (विगतो जनो यस्मात् ।) निर्ज्जनः ।

तत्पर्य्यायः । विविक्तः २ छन्नः ३
निःशलाकः ४
रहः ५ उपांशु ६ । इत्यमरः ॥
(यथा, महा-
भारते । १ । १५२ । १५ ।
"ततो भीमो वनं घोरं प्रविश्य
विजनं महत् ।
न्यग्रोधं विपुलच्छायं रमणीयं ददर्श
ह ॥")

**विजननं**, क्ली, (वि + जन + ल्युट् ।) प्रसवः ।

इति हेमचन्द्रः ॥

**विजपिलं**, क्ली, पङ्कः । यथा, --

"पिच्छलं स्यात् विजपिलं पङ्कः
शादो निष-
द्वरः ॥"
इति हलायुधः ॥

**विजन्मा**, [न्] त्रि, (विरुद्धं जन्म यस्य ।) जारजः ।

विरुद्धजन्मविशिष्टः । इति
लोकप्रसिद्धः ॥
(पुं, वर्णसङ्करजातिविशेषः । यथा,
मनुः ।
१० । २३ ।
इन्द्रच्छन्दो नाम्ना विजयच्छन्दस्तदर्द्धेन ॥")

**विजयनन्दनः**, पुं, इक्ष्वाकुवंशजराजविशेषः । तत्-

पर्य्यायः । जयः २ । इति हेमचन्द्रः ॥

**विजयमर्द्दलः**, पुं, (विजयाय मर्द्दलः ।) ढक्का ।

इति त्रिकाण्डशेषः ॥ जयढाक इति भाषा ॥

**विजया**, स्त्री, तिथिविशेषः । सा विजयादशमीति

ख्याता । तत्कृत्यं दुर्गाशब्दे द्रष्टव्यम् । उमा-
सखी । इति मेदिनी । ये, ४० ॥ सा तु गोतम-
कन्या । नथा, --
"तमागतां सती दृष्ट्वा जयामेकामुवाच ह ।
किमर्थं विजया नागाज्जयन्ती चापराजिता ॥
सा देव्या वचनं श्रुत्वा उवाच परमेश्वरीम् ॥
गता निमन्त्रिताः सर्व्वा मखे मातामहस्य ताः ।
समं पित्रा गौतमेन मात्रा चाप्यनुराधया ॥"
इति वामनपुराणे ४ अध्यायः ॥
कालिकापुराणे १७ अध्यायेऽप्येवम् ॥ * ॥
विश्वा-
मित्रोपासितविद्याविशेषः । यथा, --
"विद्यामथैनं विजयां जयाञ्च
रक्षोगणं क्षिप्नुमविक्षतात्मा ।
कामदा
सर्व्वातङ्कविनाशहर्षजननी यैः सेविता
सर्व्वदा ॥"
इति राजवल्लभः ॥ * ॥
अष्टमहाद्वादश्यन्तर्गतद्वादशीविशेषः । यथा,
अथ विजयाव्रतम् । ब्रह्मपुराणे ।
"यदा तु शुक्लद्वादश्यां नक्षत्रं श्रवणं भवेत् ।
तदा सा तु महापुण्या द्वादशी विजया स्मृता
॥
तस्यां स्नातः सर्व्वतीर्थे स्नातो भवति
मानवः ।
संपूज्य वर्षपूजायाः सकलं फलमश्नुते ॥
एकजप्यात् सहस्रस्य जप्तस्याप्नोति सत्
फलम् ।
दानं सहस्रगुणितं तथा वै विप्रभोजनम् ॥
होमस्तत्रोपवासश्च सहस्रगुणितो भवेत् ॥" *
॥
अथ व्रतविधिः ।
"आदौ गुरुं नमस्कृत्य ततः सङ्कल्पमाचरेत् ।
शरशार्ङ्गधरं देवं सौवर्णं रचयेत्त्वराम् ॥"
सङ्कल्पमन्त्रः ।
"द्वादश्याहं निराहारः स्थित्वाहमपरेऽहनि ।
भोक्ष्ये त्रिविक्रमानन्त शरणं मे भवाच्युत ॥
सोपवीतन्तु कलसं पूर्ब्बवत् स्थापयेद्व्रती ।

| | | |
|---|---|---|
| “वैश्यात् तु जायते व्रात्यात् मुधन्वाचार्य्य एव च । कारूपश्च विजन्मा च मैत्रः सात्वत एव च ॥”)<br>**विजयः**, पुं, (वि + जि + भावे अच् ।) जयः । इत्यमरः ॥ (यथा, मनौ । १० । ११९ । “स्वधर्म्मो विजयस्तस्य नाहवे स्यात् पराङ्मुखः । शस्त्रेण वैश्यान् रक्षित्वा धर्म्मसंहारयेद्बलिम् ॥”) अर्ज्जुनः । इति मेदिनी । ये, १०४ ॥ (यथा, महाभारते । ४ । ४२ । १४ । | | |

पात्रं तदुपरि न्यस्येत्ताम्रं वैणवमेव वा ॥
तत्रोपवेश्य स स्नाप्य देवं विशदचन्दनैः ।
आलिप्य शुभ्रं वसनं दद्याच्छत्रञ्च पादुके ॥
वासुदेवायेति शिरः श्रीधरायेति वै मुखम् ।
कृष्णायेति च कण्ठं वै वक्षः श्रीपतये इति ॥
शस्त्रास्त्रधारिणे बाहू कक्षे च व्यापकाय वै ।
कवीशायोदरं मेढ्रं त्रैलोक्यजननाय च ॥
जघनं चार्च्चयेद्विद्वान् सर्व्वाधिपतये इति ।
सर्व्वात्मने इति पदावेवमङ्गानि पूजयेत् ॥
शङ्खचक्रगदापद्मशार्ङ्गशरविभूषितम् ।
गृहाणार्घ्यं मया दत्तं शार्ङ्गपाणे ! नमोऽस्तु ते ॥
इत्यर्घ्यं पूर्ब्बवत् कृत्वा धूपदीपौ समर्प्य च ।
घृतपक्वप्रधानानि नैवेद्यानि निवेदयेत् ॥
ताम्बूलादीनि दत्त्वाथ कृत्वा जागरणं निशि ।
प्रातःस्नात्वार्च्चयित्वेशं पुष्पाञ्जलिमथार्च्चयेत् ॥
नमस्ते अस्तु गोविन्द बुध श्रवणसंज्ञक ।
अघोरं चाक्षयं कृत्वा सर्व्वसौख्यप्रदो भव ॥
इति प्रार्थ्य ततः सर्व्वं दत्त्वा चार्घ्यं प्रतोष्य हि ।
शक्त्या विप्रान् भोजयित्वा सुखं पारणमाचरेत् ॥
भाद्रे मासि बुधस्याह्नि यदि स्याद्विजयाव्रतम् ।
तदा सर्व्वव्रतेभ्योऽस्य माहात्म्यमतिरिच्यते ॥”
इति श्रीहरिभक्तिविलासे १३ विलासः ॥
(सहदेवपत्नी । यथा, महाभारते । १ । ९५ । ८० ।
“सहदेवोऽपि माद्रीमेव स्वयंवरे विजयां नामो-
पयेमे मद्रराजस्य द्युतिमतो दुहितरं तस्यां
निर्जता राक्षसा दैत्या वैरिणो जगतीतले ।
रामराज्यं रामराज्यं रामराज्यमिति ब्रुवन् ॥
आनीय स्थापयेद्देवं निजसिंहासने सुखम् ।
ततो नीराज्य देवेशं प्रणमेद्दण्डवद्भुवि ॥
महाप्रसादवस्त्रादि धारयेद्वैष्णवैः सह ।
इति श्रीविष्णुधर्म्मोक्तानुसारेण व्यलेख्ययम् ॥
विधिः श्रीरामविजयोत्सवस्योत्सवकृत् सताम् ।
सीता दृष्टेति हनुमद्वाक्यं श्रुत्वाकरोत्प्रभुः ॥
विजयं वानरैः सार्द्धं वासरेऽस्मिन् शमी-
तलात् ॥”
इति श्रीहरिभक्तिविलासे १५ विलासः ॥

**विजयिनं**, त्रि, विजिलम् । इत्यमरटीकायां राय-
मुकुटः ॥

**विजयी**, [न्] त्रि, (विशेषेण जेतुं शीलमस्य ।
वि + जि + “जिदृक्षिविश्रीति ।” ३ । २ । १५७ ।
इति इनिः ।) जययुक्तः । यथा, --
“वज्रपञ्जरनामेदं यो रामकवचं पठेत् ।
स चिरायुः सुखी पुत्री विनयी विजयी भवेत् ॥”
इति तन्त्रसारः ॥
(पुं, अर्ज्जुनः । यथा, --
“अर्ज्जुनः फाल्गुनी जिष्णुः किरीटी श्वेतवा-
हनः ।
वीभत्सुर्व्विजयी कृष्णः सव्यसाची धनञ्जयः ॥
एतान्यर्ज्जुननामानि प्रातरुत्थाय यः पठेत् ।
उद्यतेष्वपि शस्त्रेषु हन्ता तस्य न विद्यते ॥”
इति सर्व्वजनप्रसिद्धम् ॥)

**विजयोत्सवः**, पुं, (विजयायामुत्सवः ।) आश्विन-
शुक्लदशमीविहितभगवदुत्सवविशेषः । यथा,
“आश्विनस्य सिते पक्षे दशम्यां विजयोत्सवः ।
महाप्रसादवस्त्रादि धारयेत् वैष्णवैः सह ॥
* ॥
इति श्रीविष्णुधर्म्मोक्तानुसारेण व्यलेख्ययम् ॥
विधिः श्रीरामविजयोत्सवस्योत्सवकृत् सताम् ॥
सीता दृष्टेति हनुमद्वाक्यं श्रुत्वाकरोत् प्रभुः ।
विजयं वानरैः सार्द्धं वासरेऽस्मिन् शमीतलात् ॥”
इति श्रीहरिभक्तिविलासे १५ विलासः ॥

**विजरः**, त्रि, जरारहितः । विगता जरा यस्येति
बहुव्रीहिसमासनिष्पन्नः ॥ (यथा, कथासरित्-
सागरे । ४१ । ११ ।
“यः सर्व्वौषधियुक्तिज्ञश्चक्रे सिद्धरसायनः ।
आत्मानं तञ्च राजानं विजरं चिरजीवितम् ॥”)

**विजलं**, त्रि, विजिलम् । इति हेमचन्द्रः ॥ (विगतं
जलं यस्मात् ।) निर्जलञ्च ॥ (यथा, बृहत्-
संहितायाम् । १९ । २० ।
“नष्टर्कचन्द्रकिरणातिरजोऽवनद्धा
तोयाशयाश्च विजलाः सरितोऽपि तन्व्यः ॥”)

**विजल्पः**, पुं, (विशेषेण जल्पनमिति । वि + जल्प +
घञ् ।) वाक्यविशेषः । यथा, --
“व्यक्तयासूयया गूढमानमुद्रान्तरालया ।
अघद्विषि कटाक्षोक्तिर्विजल्पो विदुषां मतः ॥”
इत्युज्ज्वलनीलमणिः ॥

**विजातः**, त्रि, (विरुद्धं जातंजन्म यस्य ।) विजन्मा ।
इति लोकप्रसिद्धः ॥

**विजाता**, स्त्री, (विशेषेण जातः पुत्त्रो यस्याः ।)

पुत्त्रमजनयत् सुहोत्रं नाम ॥” * ॥
पुरुवंशीयभूमन्योः पत्नी । यथा, तत्रैव ।
१ ।
९५ । ३३ ।
“भूमन्युः खलु दाशार्हीमुपयेमे विजयां
नाम
तस्यामस्य जज्ञे सुहोत्रः ॥”)

**विजयासप्तमी**, (विजयाख्या सप्तमी ।) रविवारे

शुक्लपक्षीया सप्तमी । यथा, --
“शुक्लपक्षस्य सप्तम्यां सूर्य्यवारो यदा
भवेत् ।
सप्तमी विजया नाम तत्र दत्तं महाफलम्
॥”
इति तिथ्यादितत्त्वम् ॥ * ॥
अथ विजयोत्सवविधिः ।
“रथमारोप्य देवेशं सर्व्वालङ्कारशोभितम् ।
सासितूणधनुर्ब्बाणपाणिं नक्तञ्चरान्तकम्
॥
स्वलीलया जगत्त्रातुमाविर्भूतं रघूद्वहम् ।
राजोपचारैः श्रीरामं शमीवृक्षतलं नयेत् ॥
सीताकान्तं शमीयुक्तं भक्तानामभयङ्करम् ।
अर्च्चयित्वा शमीवृक्षमर्च्चयेद्विजयाप्तये ॥”
तत्र मन्त्रः ।
“शमी शमयते पापं शमी लोहितकण्टका
।
धरित्र्यर्ज्जुनबाणानां रामस्य प्रियवादिनी
॥
करिष्यमाणा या यात्रा यथाकालं सुखं
मया ।
तत्र निर्व्विघ्नकर्त्री त्वं भव श्रीरामपूजिता
॥
गृहीत्वा साक्षतामार्द्रां शमीमूलगतां मृदम् ।
गीतवादित्रनिर्घोषैस्ततो देवं गृहं नयेत् ॥
कैश्चिद्दृक्षैस्तत्र भाव्यं कैश्चिद्भाव्यञ्च
वानरैः ।
कैश्चिद्रक्तमुखैर्भाव्यं कोशलेन्द्रस्य तुष्टये
॥
कर्त्तव्यो वैष्णवैः सार्द्धं सर्व्वत्र विजयार्थिना
॥”
अथ विजयोत्सवविधिः ।
“रथमारोप्य देवेशं सर्व्वालङ्कारशोभितम् ।
सासितूणधनुर्व्वाणपाणिं नक्तञ्चरान्तकम् ॥
स्वलीलया जगत्त्रातुमाविर्भूतं रघूद्वहम् ।
राजोपचारैः श्रीरामं शमीवृक्षतलं नयेत् ॥
सीताकान्तं शमीयुक्तं भक्तानामभयङ्करम् ।
अर्च्चयित्वा शमीवृक्षमर्च्चयेद्विजयाप्तये ॥”
तत्र मन्त्रः ।
“शमी शमयते पापं शमी लोहितकण्टका ।
धरित्र्यर्ज्जुनबाणानां रामस्य प्रियवादिनी ॥
करिष्यमाणा या यात्रा यथाकालं सुखं मया
।
तत्र निर्व्विघ्नकर्त्री त्वं भव श्रीरामपूजिता ॥”
इति ॥
“गृहीत्वा साक्षतामार्द्रां शमीमूलगतां मृदम् ।
गीतवादित्रनिर्घोषैस्ततो देवं गृहं नयेत् ॥
कैश्चिदृक्षैस्तत्र भाव्यं कैश्चित् भाव्यञ्च
वानरैः ।
कैश्चिद्रक्तमुखैर्भाव्यं कोशलेन्द्रस्य तुष्टये ॥
निर्ज्जिता राक्षसा दैत्या वैरिणो जगतीतले ।
रामराज्यं रामराज्यं रामराज्यमिति ब्रुवन् ॥
आनीय स्थापयेद्देवं निजसिंहासने सुखम् ।
ततो नीराज्य देवेशं प्रणमेद्दण्डवत् भुवि ।
जातापत्या । यथा, --
“विजाता च प्रजाता च जातापत्या प्रसू-
तिका ॥”
इति हेमचन्द्रः ॥

**विजातीयः**, त्रि, (विभिन्नां जातिमर्हतीति ।

विजाति + छः ।) विभिन्नधर्म्माक्रान्तः ।
यथा,
“प्रायश्चित्ताद्विजातीयात्
तादृक्पापविना-
शनम् ॥”
इति प्रायश्चित्ततत्त्वम् ॥
(यथा च साहित्यदर्पणे ७ परिच्छेदे ।
“एवं पददोषसजातीया वाक्ये दोषा
उक्ताः
सम्प्रति तद्विजातीया उच्यन्ते ॥”)
विशेष-
जातिविशिष्टः । यथा, --
“प्रवाहो नादिमानेव न
विजात्येकशक्तिमान् ।
तत्त्वे यत्नवता भाव्यमन्वयव्यतिरेकयोः
॥”
एष कार्य्यकारणप्रवाहो नादिमान्
अनादिः ।
विजातीयेषु तृणादिषु एकशक्तिमान् न
प्रवाहः ।
अन्वयव्यतिरेकयोस्तत्त्वे नियतत्वे
नियतात्व-
निर्व्वाह्ये यत्नवता भाव्यं यत्नः करणीयः
वैजात्य-
मिति भावः । वह्निसामान्यं प्रति विजाती-
योष्णस्पर्शवत्तेज एव कारणम् । इति
हरि-
दासीककुसुमाञ्जलिटीका ॥

**विजिगीषः**, त्रि, (विजिगीषा अस्त्यस्येति । अश-

आदित्वादच् ।) जयेच्छुः । इति
सिद्धान्त-
कौमुदी ॥

**विजिगीषा**, स्त्री, (विजेतुमिच्छा । वि + जि +

रमानाथः ॥ व्यवहारः । कश्चित् प्रकर्षः ।
इति तत्रैव भरतः ॥ विजयेच्छा च ॥ (यथा,
कथासरित्सागरे । ३६ । ७१ ।
“द्वारे विधिमिवान्यं तत्तद्रक्षा विजिगीषया ।
आगतं पुरुषं कञ्चिद्ददर्शाश्चर्य्यदायकम् ॥”)

**विजिगीषाविवर्ज्जितः**, त्रि, (विजिगीषया विव-
र्ज्जितः ।) केवलमुदराधीनः । तत्पर्य्यायः ।
आद्यूनः २ औदरिकः ३ । इत्यमरः ॥ विजि-
गीषा व्यवहारः कश्चित् प्रकर्षो वा तेन विव-
र्ज्जितो विहीनो यः केवलमुदराधीनः तत्र
द्वाविमौ तर्त्तते इत्यर्थः । जिगीषा जेतुमि-
च्छायां व्यवहारप्रकर्षयोः । इति मेदिनी ॥
तत्र स्वोदरपूरणाशक्तिनिमित्तकनिन्दात्योम्च्छा
विजिगीषा तया रहिते द्वयमिति रमानाथः ।
इति तट्टीकायां भरतः ॥

**विजिगीषुः**, त्रि, (विजेतुमिच्छुः । वि + जि +
सन् + “सनाशंसभिक्ष उः ।” ३ । २ । १६८ ।
इति उः ।) जयेच्छाशीलः । यथा, --
“जेतुमेषणशीलश्च विजिगीषुरिति स्मृतः ॥”
इति शब्दमाला ॥
(यथा, कामन्दकीयनीतिसारे । ८ । ३ ।
“रोचते सर्व्वभूतेभ्यः शरीराखण्डमण्डलः ।
सम्पूर्णमण्डलस्तस्माद्विजिगीषुः सदा भवेत्
॥”)

**विजितः**, त्रि, (विशेषेण जितः ।) पराजितः ।
यथा, --
“पथ्याशिनां शीलवतां नराणां
सद्वृत्तिभाजां विजितेन्द्रियाणाम् ।
एवं विधानामिदमायुरत्र
चिन्त्यं सदा वृद्धमुनिप्रवादः ॥”
इति मलमासतत्त्वम् ॥

**विजिता**, [ऋ] त्रि, (विज + तृच् ।) पृथक् ।
भीतः । कम्पितः । रति विजधात्वर्थदर्शनात् ॥

**विजितिः**, स्त्री, (वि + जि + क्तिन् ।) विजयः ।
यथा, --
“क्षितिविजितिस्थितिविहितिव्रतरतयःपर-
“शिल्पकार्य्य उभयेन वेजिता-
स्तं विजिह्मनयना व्यलोभयन् ॥”)

**विजुलः**, पुं, शाल्मलीकन्दः । इति राजनिर्घण्टः
॥

**विजृम्भणं**, क्ली, (वि + जृम्भ + ल्युट् ।)
जृम्भणम् ।
(यथा, सुश्रुते । ५ । २ ।
“निद्रागुरुत्वञ्च विजृम्भणञ्च
विश्लेषहर्षावथवाङ्गमर्द्दः ॥”)
विकसनम् । इति केचित् ॥ (यथा,
रघुः ।
१६ । ४७ ।
“वनेषु सायन्तनमल्लिकानां
विजृम्भणोद्गन्धिषु कुट्मलेषु ॥”
कम्पनम् । सङ्कोचः । यथा, भागवते ।
७ । ५ । ४९ ।
“जितं त्वयैकेन जगत्त्रयं भ्रुवो-
र्विजृम्भणत्रस्तसमस्तधिष्ण्यपम् ॥”)

**विजृम्भितं**, क्ली, (वि + जृम्भ + क्तः ।) चेष्टा ।
इति मेदिनी । ते, २१७ ॥ (यथा,
कथासरित्-
सागरे । ४ । १३ ।
“अथागत्य समाख्यातं तत्सख्या
मन्त्रिबन्धनम् ।
उद्गाढमुपकेशाया
नवानङ्गविजृम्भितम् ॥”)

**विजृम्भितः**, त्रि, (वि + जृम्भ + क्तः ।) विक-
स्वरः । इति मेदिनी । ते, २१७ ॥
यथा,
भागवते । ४ । २१ । ८ ।
“तदादिराजस्य यशो विजृम्भितं
गुणैरशेषैर्गुणवत्सभाजितम् ॥”
व्याप्तः । यथा, रघुः । ७ । ४२ ।
“आवृण्वतो लोचनमार्गमाजौ
रजोऽन्धकारस्य विजृम्भितस्य ॥” *
॥
विजृम्भा सञ्जाता अस्येति ।
तारकादित्वादि-
अस्य पर्य्यायो निपुणशब्दे द्रष्टव्यः ॥
पण्डितः ।
इति राजनिर्घण्टः ॥ (यथा, नैषधे । ३ ।
९६ ।
“विज्ञेन विज्ञाप्यमिदं नरेन्द्रे
तस्मात्त्वयास्मिन् समयं प्रतीक्ष्य ।
आत्यन्तिकासिद्धिविलम्बसिद्ध्योः
कार्य्यस्य कार्य्यस्य शुभा विभाति ॥”)

**विज्ञबुद्धिः**, स्त्री, जटामांसी । इति शब्दचन्द्रिका ॥

**विज्ञातः**, त्रि, (वि + ज्ञा + क्तः ।) ख्यातः । इत्य-
मरः ॥ (विदितः । यथा, हरिवंशे । १६५
।
१७ ।
“विज्ञातोऽसि मया चिह्नैर्विना चक्रं जना-
र्द्दनः ॥”)

**विज्ञानं**, क्ली, (वि + ज्ञा + ल्युट् ।) ज्ञानम् ।
कर्म्म । इति मेदिनी । ने, ११३ ॥
कार्म्मणम् ।
इति हेमचन्द्रः ॥
“मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्प-
शास्त्रयोः ॥”
इत्यमरः ॥
“विशेषेण सामान्येन चावबोधो मोक्षो
मुक्तिः
शिल्पं चित्रादिशास्त्रं व्याकरणादि । मोक्षे
शिल्पे शास्त्रे च या धीः सा ज्ञानं
विज्ञानञ्चो-
च्यते एषा विशेषप्रवृत्तिः । अन्यत्र
घटपटादौ
या धीः सापि ज्ञानं विज्ञानञ्चोच्यते । एषा
सामान्यप्रवृत्तिः । मोक्षे धीर्ज्ञानं विज्ञानञ्च
यथा । ज्ञानान्मुक्तिरिति । सा याचिता च
विज्ञानं तुष्टा ऋद्धिं प्रयच्छति इति ।
अन्यत्र
यथा । ज्ञानमस्ति समस्तस्य
जन्तोर्विषयगोचरे
इति । घटत्वप्रकारकज्ञानमिति । ये
केचित्

गतयः ।
उरुरुरुधुर्गुरु दुधुवुर्युधि कुरवः स्वमरिकुलम्
॥”
इति दण्डी ॥

**विजिनं**, त्रि, विजिलम् । इत्यमरटीकायां राय-

मुकुटः ॥

**विजिलं**, त्रि, ईषत् सरसव्यञ्जनादि । तत्पर्य्यायः ।

पिच्छिलम् २ । इत्यमरः ॥ विजयिनम् ३
विजिनम् ४ विज्जलम् ५ उज्जलम् ६ लाल-
मीकम् ७ । इति वाचस्पतिः ॥ विजिविलम् ८
विजलम् ९ । इति हेमचन्द्रः ॥
“पाकरूपरसासक्ते व्यञ्जने तु भवेत् त्रयम् ।
तैलपाकसुसंस्कारे प्रायस्तमुपसंस्कृतम् ।
पिच्छिलं लालसीकञ्च विजिनं विज्जिलञ्च तत्
॥”
इति शब्दरत्नावली ॥

**विजिविलं**, त्रि, विजिलम् । इति हेमचन्द्रः ॥

**विजिह्मः**, त्रि, (विशेषेण जिह्मः ।) वक्रः ।

कुटिलः । इति केचित् । (यथा, रघुः । १९ ।
३५ ।

तच् ।) जृम्भायुक्तश्च ॥ (यथा, हरिवंशे
।
१८१ । ६ ।
“सशरं सधनुष्कञ्च दृष्ट्वात्मानं
विजृम्भितम् ।
ततो ननाद भूतात्मा
स्निग्धगम्भीरनिःस्वनः ॥”)

**विज्जनं**, त्रि, विजिलम् । इत्यमरटीकायां राय-

मुकुटः ॥

**विज्जलं**, क्ली, बाणम् । यथा, --

“पत्रवाहो विकर्षोऽथ तीरं
विज्जलशायके ।
लोहनालस्तु नाराचः प्रसरः
काण्डगोचरः ॥”
इति त्रिकाण्डशेषः ॥
त्रि, विजिलम् । इति हेमचन्द्रः ॥
(यथा,
बृहत्संहितायाम् । ५५ । २९ ।
“श्लेष्मातकस्य बीजानि
निष्कुलीकृत्य भावयेत् प्राज्ञः ।
अङ्कोल्लविज्जलाद्भि-
श्छायायां सप्तकृत्वेवम् ॥”)

**विज्जिलं**, त्रि, विजिलम् । इति शब्दरत्नावली ॥

**विज्जुलं**, क्ली, त्वचम् । इति राजनिर्घण्टः ॥

**विज्जुलिका**, स्त्री, जतुका । इति राजनिर्घण्टः
॥

**विज्ञः**, त्रि, (विशेषेण जानातीति । वि + ज्ञा +

“आतश्चोपसर्गे ।” इति कः ।) प्रवीणः
।
इत्यमरः ॥ (यथा, भागवते । ६ । १६
। ६१ ।
“एवं विपर्य्ययं बुद्ध्वा नृणां
विज्ञाभिमानिनाम् ।
आत्मनश्च गतिं सूक्ष्मां
स्थानत्रयविलक्षणाम् ॥”)

प्राणिनो लोके सर्व्वे विज्ञानिनो मता इति
।
ब्रह्मणो नित्यविज्ञानानन्दरूपत्वात्इति ।
एवं
चित्रज्ञानं व्याकरणज्ञानं
घटपटविज्ञानमित्या-
दिकं प्रयुज्यत एव । तद्विगमे
गरुत्मदादिशब्द-
वत् गरुत्मच्छब्दो हि गरुडे पक्षिमात्रे च
वर्त्तते । मोक्ष इति निमित्तसप्तमी
मोक्षनिमित्तं
शिल्पशास्त्रयोर्धीर्ज्ञानमुच्यते।
तन्निमित्ततो-
ऽन्यनिमित्तं या तयोर्धीः सा विज्ञानमिति
केचित् । मोक्षविषया मोक्षफला धीर्ज्ञानं
अन्यधीर्व्विज्ञानम् । क्वान्यत्र इत्याह
शिल्प-
शास्त्रयोरिति केचित् । अवबोध
इत्यध्याहृत्य
मोक्षविषयेऽवबोधो धीर्ज्ञानं अन्यत्र
घटपटादि-
विज्ञानं शिल्पशास्त्रविषये विज्ञानमिति
केचित् । जानातेरनट् ज्ञानं विविधं विरूपं
वा
ज्ञानं विज्ञानम् ।” इत्यमरटीकायां भरतः
॥ * ॥
तत्तु ब्राह्मणस्य लक्षणविशेषः । यथा, --
“क्षमा दया च विज्ञानं सत्यञ्चैव दमः शमः
।
अध्यात्मनित्यता
ज्ञानमेतद्ब्राह्मणलक्षणम् ॥”
ज्ञानविज्ञानयोर्लक्षणं यथा, --
“चतुर्द्दशानां विद्यानां धारणं हि यथार्थतः
।
विज्ञानमितरं विद्याद्येन धर्म्मो विवर्द्धते ॥
अधीत्य विधिवद्विद्यामर्थञ्चैवोपलभ्य तु ।
धर्म्मकार्य्यान्निवृत्तश्चेन्न तद्विज्ञानमिष्यते
॥
यया स देवो भगवान् विद्यते यत्र विद्यते ।

साक्षादेव महादेवस्तज्ज्ञानमिति
कीर्त्तितम् ॥”
इति कौर्म्मे उपविभागे १४
अध्यायः ॥

**विज्ञानपादः**, पुं, (विज्ञानमेव पादं लक्ष्यं यस्य ।)
वेदव्यासः । इति केचित् ॥

**विज्ञानमयकोषः**, पुं, (विज्ञानमयस्तदात्मकः कोष
इवाच्छादकत्वात् ।) ज्ञानेन्द्रियैः
सहिता बुद्धिः ।
इति वेदान्तसारः ॥

**विज्ञानमातृकः**, पुं, (विज्ञानं मातेव यस्य । बहु-
व्रीहौ कन् ।) बुद्धः । इति हेमचन्द्रः
॥

**विज्ञानिकः**, त्रि, (विज्ञानमस्त्यस्येति । विज्ञान +
ठन् ।) ज्ञानविशिष्टः । विज्ञः । इति
वैज्ञानिक-
शब्दटीकायां भरतः ॥

**विज्ञापनं**, क्ली, (वि + ज्ञा + णिच् + ल्युट् ।) बोध-
नम् । जानान इति भाषा ।
विपूर्ब्बण्यन्त-
ज्ञाधातोरनट्प्रत्ययेन निष्पन्नम् ॥
(यथा,
कथासरित्सागरे । ३१ । ५८ ।
“तया विज्ञापनायाहं प्रेषितः
स्वीकुरुष्व ताम् ।
युवयोरस्तु योगोऽयं
कौमुदीचन्द्रयोरिव ॥” * ॥
स्त्री, वि + ज्ञा + णिच् + युच् । टाप्
। विज्ञा-
पना । यथा, रघुः । १७ । ४० ।
“ततः
परमभिव्यक्तसौमनस्यनिवेदितैः ।
सौधादिषु प्रान्ते काष्ठादिरचिते गृहपक्षि-
स्थाने । कपोतान् पालयतीति
कपोतपाली
ढात् षण् इति षण् स्वार्थे कः कपोत
इत्युपल-
क्षणं पक्षिमात्रपालिकेति बोध्यम् । वीन्
पक्षिणष्टङ्कयति बध्नाति विटङ्कं टकि क
बन्धे
षण् विशेषेण टङ्कयत्यत्रेति वा अल् घञ्
वा ।
इति भरतः ॥ (यथा, माघे । ३ । ५५ ।
“रतान्तरे यत्र गृहान्तरेषु
वितर्द्दिनिर्य्यूहविटङ्कनीडः ।
रुतानि शृण्वन् वयसां गणोऽन्ते-
वासित्वमाप स्फुटमङ्गनानाम् ॥” * ॥
सुन्दरे, त्रि । यथा, भागवते । ३ । १५ ।
२७ ।
“देवावचक्षत गृहीतगदौ परार्द्ध्य-
केयूरकुण्डलकिरीटविटङ्कवेशौ ॥”)

**विटङ्ककः**, पुं क्ली, (विटङ्क एव । स्वार्थे कन् ।)
विटङ्कः । इति शब्दरत्नावली ॥

**विटपः**, पुं क्ली, (वेटति शब्दायते इति । विट +
“विटपपिष्टपविशिपोलपाः ।” उणा० ३ ।
१४५ ।
इति कप्रत्ययेन निपातनात् साधुः ।)
शाखा-
पल्लवसमुदायः । तत्पर्य्यायः । विस्तारः
२ ।
इत्यमरः ॥ स्तम्बः ३ । इति मेदिनी । पे,
२२ ॥
शाखा । (यथा, रघुः । १० । ११ ।
“बाहुभिर्विटपाकारैर्दिव्याभरणभूषितैः ।
आविर्भूतमपां मध्ये पारिजातमिवापरम्
॥”)
पल्लवः । इति शब्दरत्नावली ॥ (यथा,
ऋतु-
संहारे । १ । २४ ।
“तरुविटपलताग्रालिङ्गनव्याकुलेन

**विटलवणं**, क्ली, (विटसंज्ञकं लवणम् ।) विड-
लवणम् । इति केचित् ॥

**विटिः**, स्त्री, (विटतीति । विट् + इन् । स च
कित् ।) पीतचन्दनम् । इति शब्दमाला ॥

**विट्**, [श्] पुं, (विश् + क्विप् ।) वैश्यः । (यथा,
मनुः । २ । ३६ ।
“गर्भाष्टमेऽब्दे कुर्व्वीत ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राज्ञो गर्भाच्च द्वादशे विशः ॥”)
मनुजः । इत्यमरः ॥ (यथा, रघुः । १ । ९३ ।
“अथ प्रदोषे दोषज्ञः संवेशाय विशांपतिम् ।
सूनुः सूनृतवाक् स्रष्टुः विससर्जोदितश्रियम् ॥”)
प्रवेशः । इति विश्वः ॥

**विट्**, [ष्] स्त्री, (विष व्याप्तौ + क्विप् ।) विष्ठा ।
इत्यमरः ॥ कन्या । इति विट्पतिशब्ददर्श-
नात् ॥ (व्याप्ते, त्रि । यथा, ऋग्वेदे । ८ ।
१९ । ११ ।
“हव्या वा वेविषद्विषः ।”
“विषः व्याप्तान् देवान् वेविषत् प्रापयेत् ।” इति
तद्भाष्ये सायणः ॥)

**विट्कारिका**, स्त्री, पक्षिविशेषः । तत्पर्य्यायः ।
कुणपी २ गोराटी ३ गोकिराटिका ४ । इति
भूरिप्रयोगः ॥ विट्मारिका ५ । इति हारा-
वली ॥

**विट्खदिरः**, पुं, (विड्वत् दुर्गन्धः खदिरः ।)
विष्ठावद्दुर्गन्धखदिरः । गुयेवावला इति भाषा ॥
तत्पर्य्यायः । अरिमेदः २ । इत्यमरः ॥ हरि-
मेदः ३ असिमेदः ४ । इति शब्दरत्नावली ॥
दरिमेदः ५ कालस्कन्धः ६ अरिमेदकः ७ ।
अस्य गुणाः । कषायत्वम् । उष्णत्वम् । मुख-
दन्तगदास्रकण्डूविषश्लेष्मकृमिकुष्ठव्रणग्रहनाशि-
त्वञ्च । इति भावप्रकाशः ॥ राजनिर्घण्टोक्त-
गुणपर्य्यायौ अरिमेदशब्दे द्रष्टव्यौ ॥

**विट्चरः**, पुं, (विषि विष्ठायां चरतीति । चर +
टः ।) ग्राम्यशूकरः । इत्यमरः ॥

**विट्पतिः**, पुं, (विषः कन्यायाः पतिः ।) जामाता ।

युयोज पाकाभिमुखैर्भृत्यान्
विज्ञापनाफलैः ॥”)

**विज्ञाप्तिः**, स्त्री, (वि + ज्ञा + णिच् + क्तिन् ।)

विज्ञापनम् । विपूर्ब्बज्यन्तज्ञाधातोः
क्तिप्रत्ययेन
निष्पन्ना ॥ (विकल्पेन ह्रस्वे
विज्ञप्तिरपि ॥)

**विज्ञेयं**, त्रि, (विज्ञातुं योग्यम् । वि + ज्ञा +

“अचो यत् ।” ३ । १ । ९७ । इति
यत् ।
“ईद्यति ।” ६ । ४ । ६५ । इति
आत ईत् ।)
विज्ञातव्यम् । विज्ञानीयम् ।
विपूर्ब्बज्ञाधातो-
र्यप्रत्ययेन निष्पन्नम् ॥ (यथा, मनुः
। २ । १० ।
“श्रुतिस्तु वेदो विज्ञेयो
धर्म्मशास्त्रन्तु वै
स्मृतिः ॥”)

**विञ्जामरं**, क्ली, चक्षुःशुक्लक्षेत्रम् । इति
केचित् ॥

**विञ्जोली**, स्त्री, पङ्क्तिः । इति त्रिकाण्डशेषः
॥

**विट**, आक्रोशे । स्वने । इति कविकल्पद्रुमः
॥

(भ्वा०-पर०-सक०-स्वने अक०-
सेट् ।) वेटति ।
आक्रोशः । कैश्चिन्न पठ्यते ।
स्वनः शब्दः ।
इति दुर्गादासः ॥

**विटः**, पुं, (वेटतीति । विट + कः ।) षिड्गः ।

इत्यमरः ॥ (यथा, भागवते । १० ।
१३ । २ ।
“सतामयं सारभृतां निसर्गो
यदर्थवाणीश्रुतिचेतसामपि ।
प्रतिक्षणं नव्यवदच्युतस्य यत्
स्त्रिया विटानामिव साधु वार्त्ता ॥”)
कामुकानुचरः । धूर्त्तः । इति भरतः
॥ काम-
दिशि दिशि परिदग्धा भूमयः पावकेन
॥”)
क्ली, मुष्कवङ्क्षणान्तरम् । यथा, --
“विटपन्तु महाबीज्यमन्तरामुष्कवङ्क्षणम्
॥”
इति हेमचन्द्रः ॥
(यथा, सुश्रुते । ३ । ६ ।
“वङ्क्षणवृषणयोरन्तरे विटपं नाम तत्र
षाण्ट्य-
मल्पशुक्रता वा भवति ॥”)

**विटपः**, पुं, (विटान् पातीति । पा + कः ।) विटा-

धिपः । पारदारिकश्रेष्ठः । इति मेदिनी ।
पे,
२२ ॥ आदित्यपत्रः । इति राजनिर्घण्टः
॥

**विटपी**, [न्] पुं, (विटपः शाखादिरस्त्यस्येति ।

विटप + इनिः ।) वृक्षः । इत्यमरः ॥
(यथा,
आर्य्यासप्तशत्याम् । ४८६ ।
“यूथपते तव कश्चिन्नहि मानस्यानुरूप
इह
विटपी ।
प्रेरय दिनं निदाघद्राघीयः क्व खलु ते
च्छाया ॥”)
वटः । इति राजनिर्घण्ठः ॥ (विटपयुक्ते,
त्रि ।
यथा, महाभारते । १ । ४३ । १० ।
“अङ्कुरं कृतवांस्तत्र ततः पर्णद्वयान्वितम्
।
पलाशिनं शाखिनञ्च तथा विटपिनं पुनः
॥”)

**विटप्रियः**, पुं, (विटानां प्रियः ।) मुद्गरवृक्षः ।

इति राजनिर्घण्टः ॥

**विटमाक्षिकः**, पुं, (विटप्रियो माक्षिकः ।) धातु-

विशेषः । तत्पर्य्यायः । ताप्यः २ नदीजः
३
कामारिः ४ ताररिः ५ । इति हेमचन्द्रः
॥
इति जटाधरः ॥ (यथा, मनुः । ३ । १४८ ।
“मातामहं मातुलञ्च स्वस्रीयं श्वशुरं गुरुम् ।
दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोज-
येत् ॥” * ॥
वैश्यानां पतिः । यथा, भागवते । ४ । २३ । ३२ ।
“वैश्यः पठन् विट्पतिः स्यात् शूद्रः सत्तमता-
मियात् ॥”
“विशां पश्वादीनां वैश्यादीनां वा पतिः स्यात् ।”
इति तट्टीका ॥)

**विट्सारिका**, स्त्री, (विट्प्रिया सारिका ।) पक्षि-

विशेषः । इति जटाधरः ॥ गुये सालिक् इति
भाषा ॥

**विठरः**, पुं, वाग्मी । इति संक्षिप्तसारोणादि-

वृत्तिः ॥

**विड**, आक्रोशे । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) वेडति शत्रुं बली । इति
दुर्गादासः ॥

| | | |
|---|---|---|
| तन्द्रकलाकोविदः । इति रसमञ्जरी ॥ पर्व्वत-<br>विशेषः । लवणभेदः । खदिरविशेषः । मूषिकः ।<br>इति मेदिनी । टे, २८ ॥ नारङ्गवृक्षः । इति<br>शब्दमाला ॥ | | |
| **विटङ्कः**, पुं क्ली, (विशेषेणटङ्क्यते सौधादिषु इति ।<br>वि + टङ्क बन्धने + घञ् ।)<br>कपोतपालिका ।<br>पायवार खोप इति भाषा । इत्यमरः ॥ द्वे | | |

**विडं**, क्ली, (विड आक्रोशे + इगुपधेति कः ।)

लवणविशेषः । विट्लुण इति भाषा ॥ यथा, --
“पाक्यं विडञ्च कृतके द्वयम् ।” इत्यमरः ॥
द्वे समुद्रतीरासन्नभवां लवणमृत्तिकां पाचयित्वा
निष्पादिते लवणे । विट्लवणे । इति केचित् ।
कृतके कृत्रिमे । पाक्यविड्लवणयोर्भेदेऽपि
कृत-
कत्वात् ऐक्यमिति स्वामी ॥ पच्यते इति
पाक्यम् ।
डु पच ञषौ पाके हसृय्वासोरितिघ्यण् चजोर्घि-
तीति कः पाकेन निष्पादितमिति ष्ण्यो वा ।
वेडति भिनत्ति विडं विडाक्रुशि इजुङत्वात्
कः । इति भरतः ॥ तत्पर्य्यायः । विड्गन्धम् २
काललवणम् ३ विड्लवणम् ४ । इति रत्न-
माला ॥ द्राविडकम् ५ खण्डम् ६ कृतकम् ७
क्षारम् ८ आसुरम् ९ सुपाक्यम् १० खण्ड-
लवणम् ११ धूर्त्तम् १२ कृत्रिमकम् १३ ।
अस्य
गुणाः । उष्णत्वम् । दीपनत्वम् । रुच्यत्वम् ।
वाताजीर्णशूलगुल्ममेहनाशित्वश्च । इति राज-
निर्घण्टः ॥ अपि च ।
“विडं सक्षारमूद्‌र्ध्वाधः कफं वातानुलोमनम् ॥
ऊद्‌र्ध्वं कफमधो वातं सञ्चारयेदित्यर्थः ।
दीपनं लघु तीक्ष्णोष्णं रूक्षं रुच्यं व्यवायि च ।
विबन्धानाहविष्टम्भकृद्गौरवशूलनुत् ॥”
इति भावप्रकाशः ॥
अन्यच्च ।
“विडं लवणमुत्क्लेदि वह्नेर्बलविवर्द्धनम् ।
मलवातामविष्टम्भशूलाटोपविबन्धनुत्॥”
इति राजवल्लभः ॥

**विडङ्गं**, क्ली पुं, (विड आक्रोशे + “विडादिभ्यः

कित् ।” उणा० १ । १२० । इति अङ्गच् ।
सच कित् ।) स्वनामख्यातौषधम् । (यथा,
बृहत्संहितायाम् । ५५ । ७ ।
“घृतोशीरतिलक्षौद्रविडङ्गक्षीरगोमयैः ।
आमूलस्कन्धलिप्तानां सङ्क्रामणविरोपणम्
॥”)

**विडङ्गः**, त्रि, (विड + अङ्गच् ।) अभिज्ञः । इति

मेदिनी । गे, ४९ ॥

**विडम्बनं**, क्ली, (वि + डम्ब + ल्युट् ।)
अनुकरणम् ।

यथा, --
“न वेद कश्चिद्भगवंश्चिकीर्षितं
तवेहमानस्य नृणां विडम्बनम् ।
न यस्य कश्चिद्दयितोऽस्ति कर्हिचि-
द्द्वेष्यश्च यस्मिन् विषमा मतिर्नृणाम्
॥”
इति श्रीभागवते । १ । ८ । २९ ॥
प्रतारणम् । यथा, तत्रैव ।
“जन्म कर्म्म च
विश्वात्मन्नजस्याकर्त्तुरात्मनः ।
तिर्य्यङ्नृषिषु यादःसु
तदत्यन्तविडम्बनम् ॥” ३० ॥

**विडम्बना**, स्त्री, (वि + डम्ब + णिच् + युच् ।

टाप् ।) अनुकरणम् । (यथा, कुमारे ।
४ । १२ ।
“असति त्वयि वारुणीमदः
प्रमदानामधुना विडम्बना ॥”)
प्रतारणम् । (यथा, पञ्चतन्त्रे । ४ । ४६
।
“नो चेदेतेषां सकाशात् विडम्बनां
प्राप्य मरि-
ष्यसि ॥” * ॥ परिहासः । यथा,
कुमारे । ५ । ७० ।
“इयञ्च तेऽन्या पुरतो विडम्बना
यदूढया वारणराजहार्य्यया ।
विलोक्य वृद्धोक्षमधिष्ठितं त्वया
महाजनः स्मेरमुखो भविष्यति ॥”)

**विडम्बितः**, त्रि, (वि + डम्ब + क्तः ।) कृतविड-

म्बनः । तत्पर्य्यायः । व्यस्तः २
आकुलः ३ दुर्गतः
४ । इति शब्दमाला ॥ (अनुकृतः ।
यथा,
रघुः । ३ । ५२ ।

मुखालेपो यथा, --
“अङ्गुलस्य चतुर्थांशो मुखालेपः
कनिष्ठिकः ।
मध्यमस्तु त्रिभागः स्यादुत्तमोऽर्द्धाङ्गुलो
भवेत् ॥
स्थितिकालोऽपि तस्योक्तो यावत् कल्को
न
शुष्यति ।
तेनापि गुणहीनः स्यात्तथा दूषयति त्वचम्
॥”
स यथा ।
“यष्टिगैरिकसिन्धूत्थदार्व्वीतार्क्ष्यैः
समांशकैः ।”
जलपिष्टैर्बहिर्लेपः सर्व्वनेत्रामयापहः ॥”
तार्क्ष्यं रसाञ्जनम् ।
“रसाञ्जनेन वालेयः पथ्याविल्वदलैरपि ।
वचाहरिद्राविश्वैर्व्वा तथा नागरगैरिकैः ॥”
इति भावप्रकाशः ॥

**वि(बि)डालपदः**, पुं, तोलकद्वयपरिमाणम् । यथा,

“तोलौ द्वौ पिचुरक्षश्च सुवर्णकडवग्रहः ।
विडालपदकर्षौ च पाणीतलमुडुम्बरम् ॥”
इति शब्दमाला ॥
मार्ज्जारचरणे, क्ली ॥

**वि(बि)डालपदकं**, क्ली, कर्षपरिमाणम् । इति

वैद्यकपरिभाषा ॥

**वि(बि)डाली**, स्त्री, विदारी । इति राजनिर्घण्टः ॥

(मार्ज्जारी ॥)

**विडीनं**, क्ली, (वि + डी + क्तः ।) खगगति-

विशेषः । यथा, --
“डीनं प्रडीनमुड्डीनं संडीनं परिडीनकम् ।
विडीनमवडीनञ्च निडीनं डीनडीनकम् ॥
गतागतप्रगतितसम्पताद्याश्चपक्षिणाम् ।
गतिभेदाः पक्षिगृहं कुलायो नीडमस्त्रियाम्
॥”
इति जटाधरः ॥

**विडुलः**, पुं, वेतसवृक्षः । इति हेमचन्द्रः ॥

तत्पर्य्यायः । वेल्लम् ३ अमोघा ३ चित्रतण्डुला ४
तण्डुलः ५ क्रिमिघ्नः ६ । इत्यमरः ॥ रसायनः ७
पावकः ८ भस्मकम् ९ । इति जटाधरः ।
वैलुः १० मोघा ११ तण्डुलुः १२ । इति शब्द-
रत्नावली ॥ जन्तुघ्नम् १३ चित्रतण्डुलम् १४
क्रिमिघ्नम् १५ क्रिमिशत्रुः १६ गर्द्दभम् १७
कैवलम् १८ । इति रत्नमाला ॥ विडङ्गा १९
कृमिहा २० चित्रा २१ तण्डुला २२ तण्डुली-
यका २३ वातारितण्डुला २४ जन्तुघ्नी २५
मृगगामिनी २६ कैराली २७ गह्वरा २८
कापाली २९ वरासुः ३० चित्रबीजा ३१ जन्तु-
हन्त्री ३२ । अस्य गुणाः । कटुत्वम् । उष्णत्वम् ।
लघुत्वम् । वातकफार्त्यग्निमान्द्यारुचिभ्रान्ति-
कृमिदोषविनाशित्वञ्च । इति राजनिर्घण्टः ॥
ईषत्तिक्तत्वम् । क्रिमिविषनाशित्वञ्च । इति
राजवल्लभः ॥
"विडङ्गं कटु तीक्ष्णोष्टं रूक्षं वह्निकरं लघु ।
शूलाध्मानोदरश्लेष्मक्रिमिवातविबन्धनुत् ॥"
इति भावप्रकाशः ॥

"अतिष्ठदालीढविशेषशोभिना
वपुःप्रकर्षेण विडम्बितेश्वरः ॥")

**विडारकः**, पुं, (विडाल एव । स्वार्थे कन् । लस्य
रः ।) विडालः । इति शब्दरत्नावली ॥

**वि(बि)डालः**, पुं, (विड आक्रोशे + "तमिविशि-
विडीति ।" उणा० १ । ११७ । इति कालन् ।)
नेत्रपिण्डः । इति मेदिनी । ले, १३३ ॥ नेत्रौषध-
विशेषः । इति भावप्रकाशः ॥ स्वनामख्यात-
पशुः । बिल्ली इति हिन्दीभाषा । तत्पर्य्यायः ।
ओतुः २ मार्ज्जारः ३ वृषदंशकः ४ आखुभुक्
५ । इत्यमरः ॥ विरालः ६ विलालः ७ । इति
तट्टीका ॥ दीप्ताक्षः ८ नक्तञ्चरी ९ जाहकः १०
विडारकः ११ । इति शब्दरत्नावली ॥ त्रिशङ्कुः
१२ जिह्वापः १३ मेनादः १४ सूचकः १५ ।
इति जटाधरः ॥ भूषिकारातिः १६ शालावृकः
१७ मायावी १८ दीप्तलोचनः १९ । इति राज-
निर्घण्टः ॥ (यथा, मनुः । ११ । १६० ।
"विडालकाकाखूच्छिष्टं जग्ध्वा श्वनकुलस्य च ।
केशकीटावपन्नञ्च पिबेद्ब्रह्मसुवर्च्चलाम् ॥")

**वि(बि)डालकं**, क्ली, हरितालम् । इति हेमचन्द्रः ॥

**वि(बि)डालकः**, पुं, (विडाल एव । स्वार्थे कन् ।)
विडालः । नेत्ररोगस्य औषधविशेषः । यथा ।
अथ विडालकविधिः ।

**विडोजाः**, [स्] पुं, (विष् व्याप्तौ + क्विप् । विट्
व्यापकं ओजो यस्य ।) इन्द्रः । इत्यमरः ॥

**विडौजाः**, [स्] पुं, (विडं आक्रोशि शत्रुद्वेषम-
सहिष्णु ओजो यस्य ।) इन्द्रः । इति भरतीय-
द्विरूपकोषः ॥ (यथा, रघौ । ३ । ५९ ।
"रघुः शशाङ्कार्द्धमुखेन पत्रिणा
शरासनज्यामलुनाद्विडौजसः ॥")

**विड्**, [श्] पुं, (विशतीति । विश + क्विप् ।)
वैश्यः । यथा विट् विड् विशौ विशः । इति
मुग्धबोधव्याकरणम् ॥ (मनुजः । विशांपति-
शब्ददर्शनात् ॥)

**विड्**, [ष्] स्त्री, विष्ठा । इति विड्गन्धादिशब्द-
दर्शनात् ॥

**विड्गन्धं**, क्ली, (विड्वत् गन्धो यस्य ।) विड्लव-
णम् । इति रत्नमाला ॥

**विड्जः**, त्रि, विष्ठाजातः । विष्शब्दपूर्ब्बकजन-
धातोर्ड्प्रत्ययेन निष्पन्नः ॥

**विड्लवणं**, क्ली, (विड्वत् दुर्गन्धं लवणम् ।)
विडम् । इति रत्नमाला ॥ विट्लुण् इति भाषा ॥

**विड्वराहः**, पुं, (विट्प्रियो वराहः ।) ग्राम्य-
शूकरः । इति जटाधरः ॥ (यथा, मनुः ।
५ । १९ ।

|  | “विडालको बहिर्लेपो नेत्रे<br>पक्ष्मविवर्ज्जिते ।<br>तस्य मात्रा परिज्ञेयो<br>मुखालेपविधानवत् ॥” |  |
|---|---|---|

"छत्राकं विड्वराहञ्च लशुनं ग्रामकुक्कुटम् ।
पलाण्डुं गृञ्जनञ्चैव मत्या जग्ध्वा पतेद्द्विजः ॥")

**वितंसः**, पुं, (वि + तंस + घञ् ।) वीतंसः । मृग-
पक्षिणां बन्धनोपकरणम् । इत्यमरटीकायां
भरतः ॥

**वितण्डा**, स्त्री, (वितण्ड्यते विहन्यते परपक्षो-
ऽनयेति । वि + तण्ड + गुरोश्चेत्यः । टाप् ।)
स्वपक्षास्थापना परपक्षव्युदासः । इत्यमर-
भरतौ ॥ (यथा, महाभारते । २ । ३६ । ३ ।
"एवमेतन्न चाप्येवमेवं चैतन्न चान्यथा ।
प्रत्यूचुर्बहवस्तत्र वितण्डां वै परस्परम् ॥")
कच्वीशाकः । शिलाह्वयः । करवीरी । इति
मेदिनी । डे, ३६ ॥ दर्व्वी । इति हारावली ॥

**विततं**, त्रि, (वि + तन् + क्तः ।) विस्तृतम् ।
(यथा, प्रबोधचन्द्रोदये । ३ । ५ ।
"उद्गायन्ति यशांसि यस्य वितत्तैर्नादैः प्रचण्डानिल-
प्रक्षुभ्यत्करिकुम्भकूटकुहरव्यक्तै रणक्षौणयः ॥")
वीणादिवाद्यम् । इत्यमरे ततशब्दार्थदर्शनात् ॥

**विततिः**, स्त्री, विस्तारः । विपूर्ब्बतनधातोः क्तिप्रत्य-
येन निष्पन्ना ॥ (यथा, भागवते । ९ । १० । १५ ।
"वध्नीहि सेतुमिह ते यशसो वितत्यै
गायन्ति दिग्विजयिनो यमुपेत्य भूपाः ॥")

"यौ तौ कुमाराविव कार्त्तिकेयौ
द्वावश्विनेयाविति मे वितर्कः ॥")
ज्ञानसूचकः । इति शब्दरत्नावली ॥ * ॥
आहो उताहो किमुत किं किमु उत एते
षट् विकल्पवितर्कार्थे । यथा स्थाणुराहो
पुरुषः । इति अहो ह्रस्वादि च । विकल्पे
विस्मयेऽप्यहो इति रुद्रः । किमु ह्रस्वान्तं उत
ह्रस्वादि । चकारात् उताहोस्वित् आहोस्वि-
दिति च यथा भारते ।
"उताहोस्विद्बव्रेद्राजा नलः परपुरञ्जयः ।" इति
आहोस्विन्मुखमिति भारवौ । इति भरतः ॥

**वितर्कणं**, क्ली, (वि + तर्क + ल्युट् ।) वितर्कः ।
इति शब्दरत्नावली ॥

**वित(र्द्धि)र्द्दिः**, स्त्री, (वि + तर्द्द हिंसायाम् + "सर्व्व-
धातुभ्य इन् ।" उणा० ४ । ११७ । इति इन् ।)
वेदिका । इत्यमरः ॥ (यथा, माघे । ३ । ५५ ।
"रतान्तरे यत्र गृहान्तरेषु
वितर्द्दिनिर्य्यूहविटङ्कनीडः ॥")

**वित(र्द्धि)र्द्दिका**, स्त्री, (वितर्द्दिरिव । स्वार्थे कन् ।)
वेदिका । इति शब्दरत्नावली ॥ (यथा, राज-
तरङ्गिण्याम् । ८ । २६८५ ।
"क्षेमराजाभिधानेन डामरेशेन सोऽन्वितः ।

**वितानः**, पुं, क्ली, (वि + तन् + घञ् ।) क्रतुः ।
(यथा, माघे । १४ । १० ।
"सोमपायिनि भविष्यते मया
वाञ्छितोत्तमवितानयाजिना ॥")
विस्तारः । (यथा, भागवते । ३ । ७ । ३१ ।
"यज्ञस्य च वितानानि योगस्य च पर्थ प्रभो ।
नैष्कर्म्मस्य च साङ्ख्यस्य तन्त्रं वा भगवत्-
स्मृतम् ॥")
उल्लाचः । इत्यमरः ॥ चाँदोया इति भाषा ।
अस्य पर्य्यायश्चन्द्रातपशब्दे द्रष्टव्यः ॥ (यथा,
रघुः । १७ । २८ ।
"वितानसहितं तत्र भेजे पैतृकमासनम् ।
चूडामणिभिरुद्धृष्टपादपीठं महीक्षिताम् ॥"
समूहः । यथा, माघे । ११ । ४३ ।
"नवकनकपिशङ्गं वासराणां विधातुः
ककुभि कुलिशपाणेर्भाति भासां वितानम् ॥"
व्रणबन्धनविशेषः । यथा, सुश्रुते । १ । १८ ।
"तत्र कोशदामस्वस्तिकानुवेल्लितप्रतोलीमण्डल-
स्थगिकायमकखट्वाचीनविवन्धवितानगोफणाः
पञ्चाङ्गी चेति चतुर्द्दशबन्धविशेषाः ॥")

**वितानः**, त्रि, (वि + तन + घञ् ।) तुच्छः ।
(यथा, रघुः । ९ । ५० ।
"गगनमश्वखुरोद्धतरेणुभि-
र्नृ सविता च वितानमिवाकरोत् ॥")
मन्दः । इत्यमरः ॥ शून्यः । इति धरणिः ॥
(यथा, माघे । ३ । ५० ।
"बृहत्तुलैरप्यतुलैर्वितान-
मालापिनद्धैरपि चावितानैः ॥")

**वितानकः**, पुं, क्ली, (वितान एव । स्वार्थे कन् ।)
चन्द्रातपः । इति शब्दमाला ॥ (यथा, कथा-
सरित्सागरे । ४८ । ९९ ।
"तदा तैर्मुक्तमन्योन्यं बाणजालं बभौ दिवि ।
रणलक्ष्म्या तपत्यर्के वितानकमिवाततम् ॥"
समूहः । यथा, माघे । ६ । २७ ।
"अनुययौ विविधोपलकुण्डल-
द्युतिवितानकसंवलितांशुकम् ॥")

**वितानकः**, पुं, (वितान इव प्रतिकृतिः । वितान

**वितथं**, त्रि, मिथ्या । इत्यमरः ॥ (यथा, मनुः ।

८ । ९४ ।

"अवाक्शिरास्तमस्यन्धे किल्विषी नरकं
व्रजेत् ।
यः प्रश्नं वितथं ब्रूयात् पृष्टः सन् धर्म्मनिश्चये ॥"
निष्फलः । व्यर्थः । यथा, भागवते । ९ । २० । ३५ ।
"तस्यैवं वितथे वंशे तदर्थं यजतः सुतम् ।
मरुत्सोमेन मरुतो भरद्वाजमुपाददुः ॥"
पुं, भरद्वाजपुत्त्रः । स च दौष्मन्तेर्भरतस्य पौत्त्रः ।
यथा, हरिवंशे । ३२ । १८ -- १९ ।
"ततोऽथ वितथो नाम भरद्वाजात् सुतोऽभवत् ।
पौत्त्रेऽथ वितथे जाते भरतस्तु दिवं ययौ ॥
वितथञ्चाभिषिच्याथ भरद्वाजो वनं ययौ ॥")

**वितथ्यं**, त्रि, असत्यम् । वितथशब्दात् स्वार्थे

ष्यप्रत्ययेन निष्पन्नम् ॥

**वितद्रुः**, स्त्री, (वितनोतीति । वि + तन + "जत्त्वा-

दयश्च ।" उणा० ४ । १०२ । इति रुप्रत्ययेन
साधुः ।) नदीविशेषः । सा च पञ्जावाख्यदेशे
वर्त्तते । इत्युणादिकोषः ॥

**वितरणं**, क्ली, (वि + तॄ + भावे ल्युट् ।) दानम् ।

इत्यमरः ॥ (यथाह कश्चित् ।
"वित्तेन किं वितरणं यदि नास्ति तस्य ॥")

**वितर्कः**, पुं, (वि + तर्क + घञ् ।) ऊहः । (यथा,

भागवते । १० । ८९ । १ ।
"सरस्वत्यास्तटे राजन् ऋषयः सत्रमासत ।
वितर्कः समभूत्तेषां त्रिष्वधीशेषु को महान् ॥")

शिलां वितर्द्दिकातुल्यामध्यास्त स्वप्रमध्यगाम् ॥")

**वितर्द्दी**, स्त्री, (वितर्द्दि + कृदिकारादिति ङीष् ।)

वेदिका । इति शब्दरत्नावली ॥

**वितर्द्धी**, स्त्री, वेदिका । इत्यमरटीकायां भरतः ।

**वितलं**, क्ली, (विशेषेण तलम् ।) पातालभेदः ॥

यथा, --
"अतलं नितलञ्चैव वितलञ्च गभस्तिमत् ।
तलं सुतलपाताले पाताला हि तु सप्त वै ॥"
इति शब्दरत्नावली ॥
(अस्य विवरणं यथा, देवीभागवते । ८ । १९ ।
८ -- १२ ।
"द्वितीयविवरस्यात्र वितलस्य निबोधत ।
भूतलाधस्तले चैव वितले भगवान् भवः ॥
हाटकेश्वरनामायं स्वपार्षदगणैर्वृतः ।
प्रजापतिकृतस्यापि सर्गस्य वृंहणाय च ॥
भवान्या मिथुनीभूय आस्ते देवाधिपूजितः ।
भवयोर्वीर्य्यसंभूता हाटकी सरिदुत्तमा ॥
समिद्धो मरुता वह्निरोजसा पिबतीव हि ।
तन्निष्ठ्यूतं हाटकाख्यं सुवर्णं दैत्यवल्लभम् ॥
दैत्याङ्गनाभूषणार्हं सदा सन्धारयन्ति हि ॥")

**वितस्तिः**, पुं, स्त्री, (वि + तसु उपक्षेपे + "वौ

तसेः ।" उणा० ४ । १८१ । इति तिः ।)

+ कन् ।) माडवृक्षः । इति राजनिर्घण्टः ॥

**वितानमूलकं**, क्ली, (वितानतुल्यं मूलं यस्य । बहु-

व्रीहौ कन् ।) उशीरम् । इति राजनिर्घण्टः ॥

**वितुन्नं**, क्ली, (वि + तुद् + क्तः ।) सुनिषण्णकम् ।

इत्यमरः ॥ शैवालकम् । इति मेदिनी । ने, १३१ ॥

**वितुन्नकं**, क्ली, (वितुन्नमिव । इवार्थे कन् ।)

धान्यकम् । तुत्थम् । इत्यमरः ॥

**वितुन्नकः**, पुं, आमलकी । इत्यमरः ॥

**वितुन्ना**, स्त्री, भूम्यामलकी । इति राजनिर्घण्टः ॥

**वितुन्निका**, स्त्री, (वितुन्ना + स्वार्थे कन् । टापि

अत इत्वम् ।) भूम्यामलकी । इति राज-
निर्घण्टः ॥

**वित्त**, त् क त्यागे । इति कविकल्पद्रुमः ॥ (अदन्त-

चुरा०-पर०-सक०-सेट् ।) वित्तयति । वित्ता-
पयति । इति दुर्गादासः ॥

संशयः । इति मेदिनी । के, १५७ ॥

(यथा,

महाभारते । १ । १९० । २३ ।

विस्तृतसकनिष्ठाङ्गुष्ठः । विगत् इति

भाषा ॥

तत्पर्य्यायः । द्वादशाङ्गुलः २ ।

इत्यमरः ॥ (यथा,

मार्कण्डेये । ४९ । ३९ ।

"द्वे वितस्ती तथा हस्तो

ब्राह्मतीर्थादिवेष्ट-

नम् ॥")

**वितानं**, क्ली, (वितन्यते यत् । वि + तन + घञ् ।)

वृत्तिविशेषः । इति मेदिनी । ने,

१३१ ॥ अव-

सरः । इति विश्वः ॥

**वित्तं**, क्ली, (विद + क्तः । "वित्तो भोगप्रत्यययोः ।"
८ । २ । ५८ । इति साधुः ।) धनम् । इत्य-
मरः ॥ (यथा, मनुः । ८ । ३६ ।
"अनृतन्तु वदन् दण्ड्यः स्ववित्तस्यांशमष्टमम्।
तस्यैव वा निधानस्य संख्यायाल्पीयसीं कलाम् ॥")

**वित्तः**, त्रि, (विद् + क्तः । "नुदविदेति ।" ८ ।
२ । ५६ । इति पक्षे नत्वाभावः ।) विचारितः ।
विज्ञातः । इत्यमरः ॥ लब्धः । इति तट्टीकायां
रामाश्रमः ॥ (विख्यातः । अत्र वित्तो भोग-
प्रत्यययोः इति साधुः । यथा च पाणिनिः ।
"तेन वित्तश्चुञ्चुप्चणपौ ।" ५ । २ । २६ ॥)

**वित्तदः**, त्रि, धनदाता । वित्तं ददाति य इत्यर्थे
डप्रत्ययेन निष्पन्नः ॥

**वित्तिः**, स्त्री, (विद् + क्तिन् ।) विचारः । लाभः ।
(यथा, वाजसनेयसं हितायाम् । १८ । १४ ।
"मे वित्तञ्च मे वित्तिश्च मे भूतञ्च मे भूतिश्च मे
यज्ञेन कल्पन्ताम् ॥") सम्भावना । इति
मेदिनी । ते, ५९ ॥ ज्ञानम् । इति हेमचन्द्रः ॥

**वित्तेशः**, पुं, (वित्तानामीशः ।) कुबेरः । यथा, --
"त्वं ब्रह्मा हरिहरसंज्ञितस्त्वमिन्द्रो
वित्तेशः पितृपतिरम्बुपः समीरः ।
सोमोऽग्निर्गगनमहीधरोऽब्धिरूपः
किंस्तव्यं सकलतरस्वरूपधाम्नः ॥"
इति मार्कण्डेयपुराणे । १०४ । ३७ ॥

**वित्रस्तः**, त्रि, त्रासयुक्तः । विपूर्ब्बत्रसधातोः क्त-
प्रत्ययेन निष्पन्नः ॥

**वित्रासः**, पुं, भयम् । विपूर्ब्बत्रसधातोभवि घञ्-
जानातीत्यर्थः । वेदयते स्वार्थं लोकः आख्या-
तीत्यर्थः । वेदयते तीर्थे साधुर्वसतीत्यर्थः ।
वेदयते वृक्षः स्थिरः स्यादित्यर्थः । ञ, वेदयति
वेदयते । केचित्तु वादं न पठन्ति । चेतनास्थाने
वेदनेति पठित्वा वेदयते वृद्धः व्यथते इत्यर्थः ।
इत्युदाहरन्ति । अस्माच्च परस्मैपदममन्यमाना
जितां सपत्नेन निवेदयिष्यत इति निवेदनं करो-
तीत्यर्थे ञौ समादधते । इति दुर्गादासः ॥

**विद**, ङ धौ मीमांसे । इति कविकल्पद्रुमः ॥
(रुधा०-आत्म०-सक०-अनिट् ।) मीमांसो
विचारणम् । ङ ध, विन्ते शास्त्रं धीरः । औ,
वेत्ता । इति दुर्गादासः ॥

**विद**, य ङ औ भावे । इति कविकल्पद्रुमः ॥
(दिवा०-आत्म०-अक०-अनिट् ।) भावः सत्ता
स चेह विद्यमानतैव । य ङ, विद्यते विष्णुः ।
औ, वेत्ता । इति दुर्गादासः ॥

**विद**, ल मतौ । इति कविकल्पद्रुमः ॥ (अदा०-
पर०-सक०-सेट् ।) ल, वेत्ति । इति दुर्गा-
दासः ॥

**विदंशः**, पुं, (वि + दंश + घञ् ।) अवदंशः । इति
राजनिर्घण्टः ॥

**विदः**, पुं, पण्डितः । विदधातोः कर्त्तरि कप्रत्ययेन
निष्पन्नः ॥

**विदग्धः**, त्रि, (वि + दह + क्तः ।) नागरः । इति

**विदथः**, पुं, (वेत्तीति । विद + "रुविदिभ्यां ङित् ।"
उणा० ३ । ११६ । इति अथः । सच ङित् ।)
योगी । कृती । इति मेदिनी । थे, २४ ॥ (यज्ञः ।
इति निघण्टुः । ३ । १७ । "विद ज्ञाने विद
विचारणे विद्लृलाभे विद सत्तायाम् । 'रुदि-
विदिभ्यां ङित् ।' इति अथप्रत्ययः । ज्ञायते हि
यज्ञः । लभते हि दक्षिणादिरत्र । विचार्य्यते
हि विद्वद्भिः । भावयत्यनेन फलम् ॥" इति तत्र
देवराजयज्वा ॥ * ॥ वेदितव्ये, त्रि । यथा,
ऋग्वेदे । ३ । २७ । ७ ।
"होता देवो अमर्त्यः पुरस्तादेति मायया ।
विदथानि प्रचोदयन् ॥")

**विदन्**, [त्] त्रि, पण्डितः । विदघातोः शतृप्रत्ययेन
निष्पन्नः ॥

**विदरं**, क्ली, (विदीर्य्यतीति । वि + दॄ + अच् ।)
विश्वसारकम् । इति शब्दचन्द्रिका ॥ फणीमनसा
इति भाषा ॥ (विदीर्णे, त्रि । यथा, कामन्दकीये
नीतिसारे । १९ । १० ।
'अल्पवृक्षोपला च्छिद्रा लतिका विदरा स्थिरा ।
निःशर्करा च निःपङ्का सापसारा च वारिभूः ॥')

**विदरः**, पुं, (वि + दॄ + "ऋदोरप् ।" ३ । ३ । ५७ ।
इति अप् ।) विदरणम् । फाटन इति चेरण
इति च भाषा । तत्पर्य्यायः । स्फुटनम् २ भिदा ३ ।
इत्यमरः ॥ दारणम् ४ विदारणम् ५ । इति
शब्दरत्नावली ॥

**विदर्भः**, पुं, स्त्री, (विशिष्टा दर्भाः कुशा यत्र ।)

प्रत्ययेन निष्पन्नः ॥ (यथा, भागवते । १०
।
५० । १६ ।
“ततोऽभूत् परसैन्यानां हृदि वित्रासवेपथुः
॥”)

**वित्सनः** पुं, वृषभः । इति शब्दचन्द्रिका ॥

**विथ**, ऋ ङ याचे । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-द्विक०-सेट् ।) वेथते । इति
दुर्गादासः ॥

**विथुरः**, पुं, (व्यथते इति । व्यथ भयचलनयोः ।

“व्यथेः संप्रसारणं किच्च ।” उणा० १ ।
४० ।
इति उरच् । सच कित् सम्प्रसारणञ्च
धातोः ।)
चौरः । राक्षसः । इत्युणादिकोषः ॥ (स्त्री,
भर्त्तृवियुक्ता नारी । यथा, ऋग्वेदे । १ ।
८७ । ३ ।
“प्रैषामज्मेषु विथुरेव रेजते भूमिः ॥
“विथुरेव यथा भर्त्रा वियुक्ता जाया
राजोपद्र-
वादिषु सत्सु निरालम्बा सती कम्पते तद्वत्
।”
इति तद्भाष्ये सायणः ॥)

**विथ्या**, स्त्री, गोजिह्वा । इति शब्दचन्द्रिका ॥

**विद**, ऌ प श ञौ लाभे । इति कविकल्पद्रुमः ॥

(तुदा०-उभ०-सक०-अनिट् ।) ऌ,
अविदत् ।
प श ञ, विन्दति विन्दते । औ, वेत्ता ।
इति
दुर्गादासः ॥

**विद**, क ङ ञ चेतनाख्यानवासवादे । इति कवि-

कल्पद्रुमः ॥ (चुरा०-आत्म०-उभ०-च-
सक०-
वासे स्थैर्य्ये च अक०-सेट् ।) चेतना
ज्ञानम् ।
वादः स्थैर्य्यम् । क ङ, वेदयते शास्त्रं धीरः

त्रिकाण्डशेषः ॥ (यथा देवीभागवते । ९ ।
“विदग्धाया विदग्धेन सङ्गमो गुणवान् भवेत्
॥”)
निपुणः । इति त्रिकाण्डशेषः ॥ (यथा
आर्य्या-
सप्तशत्याम् । ५०६ ।
“लिप्तं न मुखं नाङ्गं न पक्षती चरणाः परा-
गेण ।
अस्पृशतेव नलिन्या विदग्धमधुपेन मधु
पीतम् ॥”)
पण्डितः । इति शब्दरत्नावली ॥ (विशेषेण
दग्धः । यथा, सुश्रुते । ४ । १ ।
“शोफयोरुपनाहन्तु कुर्य्यादामविदग्धयोः ।
अविदग्धः शमं याति विदग्धः पाकमेति च
॥”)

**विदग्धता**, स्त्री, विदग्धत्वम् । विदग्धस्य भाव

इत्यर्थे ताप्रत्ययेन निष्पन्ना ॥

**विदग्धा**, स्त्री, (विदग्ध + टाप् ।) परकीयान्तर्गत-

नायिकाभेदः । यथा । गुप्ताविदग्धालक्षिता-
कुलटानुशयानामुदिताप्रभृतीनां
परकीयाया-
मेवान्तर्भावः । अस्या लक्षणम् ।
वाक्कौशल-
युक्तत्वम् । सा च द्विविधा । वाग्विदग्धा
क्रिया-
विदग्धा च । प्रथमा यथा, --
“निविडतमतमालमल्लिवल्ली-
विचकिलराजिविराजितोपकण्ठे।
पथिकसमुचितस्तवाद्य तीव्रे
सवितरि तत्र सरित्तटे निवासः ॥”
द्वितीया यथा, --
“दासाय भवननाथे वदरीमपनेतुमादिशति
।
हेमन्ते हरिणाक्षी पयसि कुठारं विनिक्षि-
पति ॥”
इति रसमञ्जरी ॥

कुण्डिननगरम् । इति हेमचन्द्रः ॥ स तु
वङ्ग-
देशस्य दक्षिणपश्चिमे वर्त्तते अधुना
वडनाग-
पुर इति ख्यातः ॥ * ॥ यथा, पूर्ब्बनैवधे
२
सर्गः ।
“स जयत्यरिसार्थसार्थकीकृतनामा किल
भीम-
भूपतिः ।
यमवाप्य विदर्भभूः प्रभुं हसति द्यामपि
शक्र-
भर्त्तृकाम् ॥”
(यथा च रघुः । ५ । ६० ।
“एको ययौ चैत्ररथप्रदेशान्
सौराज्यरम्यानपरो विदर्भान् ॥” * ॥
पुं, नृपविशेषः । स च ज्यामघात् शैव्यायां
जातः । अस्य कुशक्रथलोमपादाः पुत्त्राः
।
यथा, भागवते । ९ । २४ । १ ।
“तस्यां विदर्भोऽजनयत् पुत्त्रौ नाम्ना
कुशक्रथौ ।
तृतीयं रोमपादञ्च विदर्भकुलनन्दनम् ॥”
अस्य नाम्नैव विदर्भनगरी समुत्पन्ना ॥
मुनि-
विशेषः । यथा, हरिवंशे । १६६ । ८४ ।
“द्वैपायनो विदर्भश्च जैमिनिर्माठरः कठः
॥”)

**विदर्भजा**, स्त्री, (विदर्भे जायते इति । जन + डः ।)

अगस्त्यपत्नी । तत्पर्य्यायः । कौशीतकी
२ लोपा-
मुद्रा ३ । इति त्रिकाण्डशेषः ॥ दमयन्ती ।
यथा, पूर्ब्बनैषधे २ सर्गः ।
“धृतलाञ्छनगोमयाञ्चलं
विधुमालेपनपाण्डरं विधिः ।

म्रमयत्युचितं विदर्भजा-
ननीराजनवर्द्धमानकम्॥”
रुक्मिणी च ॥

**विदर्भराजः**, पुं, (विदर्भानां राजा । “राजाहः-
सखिभ्यष्टच् ।” इति टच् ।)
विदर्भदेशाधि-
पतिः । तस्य नामान्तरं भीमराजः ।
यथा, --
“स्मरोपतप्तोऽपि भृशं न स प्रभु-
र्विदर्भराजं तनयामयाचत ।
त्यजन्त्यसून् शर्म्म च मानिनो वरं
त्यजन्ति न त्वेकमयाचितव्रतम् ॥
इति पूर्ब्बनैषधे । १ । ५० ॥

**विदर्भसुभ्रूः**, स्त्री, (विदभस्य सुभ्रू रमणी ।) दम-
यन्ती । यथा, --
“विदर्भसुभ्रूस्तनतुङ्गताप्तये
घटानिवापश्यदलं तपस्यतः ।
फलानि धूमस्य घयानधोमुखान्
स दाडिमे दोहदधूपिनि द्रुमे ॥”
इति पूर्ब्बनैषधे १ सर्गः ॥

**विदर्भाधिपतिः**, पुं, (विदर्भाणामधिपतिः ।)
कुण्डिनपतिः । स च भीष्मकराजः
रुक्मिणी-
पिता च । यथा, --
“तं ये विदर्भाधिपतिः
समभ्येत्याभिवाद्य च ।
निवेशयामास मुदा कलितान्यनिवेशने
॥”
इति श्रीभागवतीयदशमस्कन्धे ५३
अध्यायः ॥

**विदलं**, क्ली, (विघट्टितं दलं यस्य ।)
द्विधाकृत-
कलायादि । दालि इति भाषा ।
स्वर्णादिरव-
यवः । दाडिमकल्कः ।
वंशादिकृतपात्रविशेषः ।
इति क्लीवलिङ्गसंग्रहे अमरभरतौ ॥

**विदारकः**, पुं, (विदृणाति जलयानादीनिति । वि
+ दॄ + ण्वुल् ।) जलमध्यस्थिततरुशिलादिः
।
तत्पर्य्यायः । कूपकः २ । इत्यमरः ॥
जलबन्धकः ।
इति शब्दरत्नावली ॥ शुष्कनद्यादौ जलाव-
स्थानार्थं गर्त्तः । इति सर्व्वधरः ॥ अतएव
कूपा
इव कूपकाः । कुत्सिताश्च कूपा इति वा ।
विदारयन्तीति विदारकाः ।
जलान्तर्गतास्तरु-
शिलादयोऽज्ञानाल्लोकादिविदारकाःकूपकाः
।
इति साञ्झः । बहुत्वमतन्त्रम् । इति भरतः
॥

**विदारणं**, क्ली, (वि + दॄ + णिच् + भावे ल्युट् ।)
विडम्बः । भेदः । इति मेदिनी । णे, १०७ ॥
(यथा, हरिवंशे । ९५ । ७९ ।
“आयुधावाप्तिरत्रैव वपुषो वैष्णवस्य च ।
लक्ष्म्याश्च तेजसश्चैव व्यूहानाञ्च विदारणम्
॥”)
मारणम् । इति शब्दरत्नावली ॥

**विदारणः**, पुं, स्त्री, (विदार्य्यन्ते शत्रवोऽस्मिन्निति ।
वि + दॄ + णिच् + ल्युट् ।) युद्धम् । इति
मेदिनी । णे, १०७ ॥ (विदारयतीति । वि +
दॄ
+ णिच् + ल्युः । विदारके, त्रि । यथा, मार्क-
ण्डेये । २० । २ ।
“तस्यात्मजो महावीर्य्यो बभूवारिविदारणः
॥”)

**विदारणः**, पुं, (विदार्य्यतेऽसौ इति । वि + दॄ +
णिच् + कर्म्मणि ल्युट् ।) कर्णिकारवृक्षः ।
इति
शब्दचन्द्रिका ॥

**विदारिका**, स्त्री, (वि + दॄ + णिच् + ण्वुल् । टापि

“सदाहतोदं श्वयथुं सुताम्र-
मन्तर्गले पूतिविशीर्णमांसम् ।
पित्तेन विद्याद्वदने विदारीं
पार्श्वं विशेषात् स तु येन शेते ॥”
स पुरुषो येन पार्श्वेन विशेषाद्बाहुल्येन शेते
तस्मिन् पार्श्वे सा विदारी भवति इत्यर्थः ।
इति
भावप्रकाशः ॥ अस्याश्चिकित्सादि रोहिणी-
शब्दे द्रष्टव्यम् ॥

**विदारी**, [न्] त्रि, विदारणकर्त्ता । विपूर्ब्बदॄधातोः
कर्त्तरि णिन्प्रत्ययेन निष्पन्नः ॥

**विदारीगन्धा**, स्त्री, (विदार्य्या भूमिकुष्माण्डस्येन
गन्धो यस्याः ।) शालपर्णी । इत्यमरः ॥

**विदारुः**, पुं, क्रकचपादः । कृकलासः । इति
हारावली । २१८ ॥

**विदाहि**, [न्] क्ली, (विदहतीति । वि + दह +
णिनिः ।) दाहजनकद्रव्यम् । अस्य गुणौ ।
पित्तमृत्युकारित्वे । इति राजवल्लभः ॥
(दाह-
जनकमात्रे, त्रि । यथा, गीतायाम् । १७ । ९
।
“कट्वम्ललवणात्युष्णतीक्ष्ण रूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः
॥”)

**विदिक्**, [श्] स्त्री, (दिग्भ्यां विगता ।) दिशो-
र्मध्यम् ।
अग्निनिरृतिवाय्वीशानकोणचतुष्टयम्।
तत्पर्य्यायः । अपदिशम् २ । इत्यमरः ॥
प्रदिक् ३ । इति जटाधरः ॥ विदिशम् ४ ।
इति शब्दरत्नावली ॥ कोणः ५ । इति राज-
निर्घण्टः ॥ (यथा, भागवते । ४ । १७ । १६
।
“सा दिशो विदिशो देवी रोदसी चान्तरं तयोः
।
धावन्ती तत्र तत्रैनं ददर्शानुद्यतायुधम् ॥”)

**विदिक्चङ्गः**, पुं, हरिद्राङ्गपक्षी । इति शब्द-

**विदलः**, पुं, (विघट्टितानि दलानि यस्य ।) रक्त-

काञ्चनः । इति शब्दरत्नावली ॥
पिष्टकः । इति
शब्दचन्द्रिका ॥

**विदला**, स्त्री, (विघट्टितानि दलानि यस्याः ।)

त्रिवृत् । इति राजनिर्घण्टः ॥ पत्रशून्या
। यथा,
"विशीर्णा विदला ह्रस्वा वक्रा स्थूला
द्विधा-
कृता ।
कृमिदष्टा च दीर्घा च समिधो नैव
कारयेत् ॥"
इति तन्त्रम् ॥

**विदा**, स्त्री, (विद् ज्ञाने + "षिद्भिदादिभ्योऽङ् ।"

३ । ३ । १०४ । इत्यङ् । टाप् ।)
ज्ञानम् ।
बुद्धिः । इति मेदिनी । दे, १४ ॥

**विदायः**, पुं, (विगतो दायः साक्षात्करणादिरूप-

ऋणं येन ।) गमनानुमतिः । यथा, --
"क्षणं वा चम्पकवनं गच्छ वा तिष्ठ
सुन्दरि ! ।
क्षणं गृहञ्च यास्यामि विशिष्टं
कार्य्यमस्ति मे ।
विदायं देहि संप्रीत्या क्षणं मे
प्राणवल्लभे ॥"
इति ब्रह्मवैवर्त्ते जन्मखण्डे श्रीराधां
प्रति श्रीकृष्ण-
वाक्यम् ॥

**विदारः**, पुं, (वि + दॄ + घञ् ।) जलोच्छ्वासः ।

विदारणम् । इति मेदिनी । रे, ११६ ॥
युद्धम् ।
इति हेमचन्द्रः ॥

**विदारकं**, क्ली, (विदृणातीति । वि + दॄ + ण्वुल् ।)

वज्रक्षारम् । इति राजनिर्घण्टः ॥
अत इत्वम् ।) शालपर्णी । इति
शब्दरत्नावली ॥
(यथा, बृहत्संहितायाम् । ७६ । ५ ।
"विदारिकाया स्वरसेन चूर्णं
मुहुर्मुहुर्भावितशोषितञ्च ।
शृतेन दुग्धेन सशर्करेण
पिबेत् स यस्य प्रमदाः प्रभूताः ॥")

**विदारिणी**, स्त्री, (विदृणातीति । वि + दॄ + णिनिः ।

ङीप् ।) काश्मरी । इति राजनिर्घण्टः ॥
(विदारणकर्त्री । यथा, कथासरित्सागरे ।
५३ । १७१ ।
"एकानंशे शिवे दुर्गे नारायणि सरस्वति ।
भद्रकाली महालक्ष्मि सिद्धे रुरुविदारिणि
॥")

**विदारी**, स्त्री, (विदारयतीति । वि + दॄ + णिच् +

अच् । गौरादित्वात् ङीष् ।) शालपर्णी । इति
मेदिनी ॥ भूमिकुष्माण्डः । तत्पर्य्यायः ।
क्षीर-
शुक्ला २ इक्षुगन्धा ३ क्रोष्ट्री ४ । इत्यमरः ॥
विदारिका ५ स्वादुकन्दा ६ सिता ७ शुक्ला
८
शृगालिका ९ वृष्यकन्दा १० विडाली ११
वृष्यवल्लिका १२ भूकुष्माण्डी १३
स्वादुलता १४
गजेष्टा १५ वारिवल्लभा १६ गन्धफला १७ ।
अस्या गुणाः । मधुरत्वम् । शीतत्वम् । गुरु-
त्वम् । स्निग्धत्वम् । अस्रपित्तनाशित्वम् ।
कफ-
कारित्वम् । पुष्टिबलवीर्य्यविवर्द्धनत्वञ्च ।
इति
राजनिर्घण्टः ॥ विदारी वातपित्तघ्नी वृष्या
बल्या रसायनी इति राजवल्लभः ॥ * ॥
अष्टादश-प्रकारकण्ठरोगान्तर्गत-रोगविशेषः
।
यथा, अथ विदारीमाह ।
चन्द्रिका ॥

**विदितं**, त्रि, (विद् + क्तः ।) अवगतम् । इत्य-

मरः ॥ (यथा, महाभारते । ७ । २८ । २२ ।
"सबाणः सधनुश्चाहं ससुरासुरमानुषान् ।
शक्तो लोकानिमान् जेतुं तच्चापि विदितं
तव ॥")
अर्थितम् । इति मेदिनी । ते, १०९ ॥
उपगमः ।
इति शब्दरत्नावली ॥

**विदितः**, पुं, (विदितं ज्ञानमस्यास्तीति । अर्श-

आदित्वात् अच् ।) कविः । इति जटाधरः ॥
(ज्ञानाश्रये, त्रि । यथा, किराते । १ । १ ।
"श्रियः कुरूणामधिपस्य पालनीं
प्रजासु वृत्तिं यमयुङ्क्त वेदितुम् ।
सवर्णिलिङ्गी विदितः समाययौ
यधिष्ठिरं द्वैतवने वनेचरः ॥"

**विदिथः**, पुं, पण्डितः । योगी । इति शब्दरत्ना-

वली हस्ताक्षरमेदिनी च ॥ मुद्राङ्कितमेदिन्यां
हेमचन्द्रे च विदथ इति पाठः ॥

**विदीर्णः**, त्रि, (वि + दॄ + क्तः ।) कृतविदारणः ।

चेरा इति भाषा । यथा, --
पितर ऊचुः ।
"श्राद्धानि नोऽधिबुभुजे प्रसभं तनूजै-
र्दत्तानि तीर्थसमयेऽप्यपिवत्तिलाम्बु ।

तस्योदरान्नखविदीर्णवपाद्य आच्छे-
त्तस्मै नमो नृहरयेऽखिलधर्म्मगोप्त्रे ॥”
इति श्रीमद्भागवते ७ स्कन्धे ८ अध्यायः ॥
अपि च ।
“अद्वीपे क्षिपती समस्तजगती सस्तोकशोका-
म्बुधौ
राधा सम्भृतकाकुराकुलमसौ चक्रे तथा
क्रन्दनम् ।
येन स्यन्दननेमिनिर्म्मितमहासीमन्तदम्भादिदं
हा सर्व्वं सहयापि निर्भरमभूद्दूराद्विदीर्णं
भुवा ॥”
इत्युज्ज्वलनीलमणिः ॥

**विदुः**, पुं, (वेत्ति संज्ञामनेनेति । विद् + बाहु-
लकात् कुः ।) गजकुम्भद्वयमध्यभागः । इत्य-
मरः ॥ (अश्वकर्णाधोभागः । यथा, अश्व-
वैद्यके । २ । १४ ।
“विदुर्मर्मविदुश्चैव कर्णस्याधः षडङ्गुले ॥”)
जानन्ति । इति क्रियापदम् ॥ (यथा, महा-
भारते । १ । १२० । २८ ।
“अपत्यं नाम लोकेषु प्रतिष्ठा धर्म्मसंहिता ।
इति कुन्ति ! विदुर्धीराः शाश्वतं धर्म्म-
वादिनः ॥”)

**विदुरः**, पुं, (वेत्ति तच्छीलः । विद् + “विदिभिदि-
च्छिदेः कुरच् ।” ३ । २ । १६२ । इति कुरच्
।)
नागरः । धीरः । कौरवाणां मन्त्री । इति
मेदिनी । रे, ११५ ॥ विदुरोत्पत्तिर्यथा, --
“क्षेत्रेऽप्रजस्य वै भ्रातुर्मात्रोक्तो वादरायणः ।
धृतराष्ट्रञ्च पाण्डुञ्च विदुरञ्चाप्यजीजनत् ॥”
इति श्रीभागवते । ९ । २२ ॥
ज्ञातरि, त्रि । इत्यमरः ॥ * ॥

**विदुलः**, पुं, (विशेषेण दोलयतीति । वि + दुल +
कः ।) वेतसः । अम्बुवेतसः । इत्यमरः ॥
गन्ध-
रसः । इति रत्नमाला ॥

**विदुषी**, स्त्री, (वेत्तीति । विदेः शतर्वसुः । उगित-
श्चेति ङीप् ।) पण्डिता स्त्री । इति मुग्धबोध-

आस्तां तावन्नवजलकणाभाजनत्वं
विदूरे
वर्षारम्भप्रथमसमये दारुणो वज्रपातः
॥”
इति चातकाष्टकम् ॥
(पर्व्वतविशेषे, पुं । यथा, कुमारे । १
। २४ ।
“तया दुहित्रा सुतरां सवित्री-
स्फुरत्प्रभामण्डलया चकाशे ।
विदूरभूमिर्नवमेघशब्दा-
दुद्भिन्नया रत्नशलाकयेव ॥”)

**विदूरगः**, त्रि, अतिदूरगन्ता । विदूरे गच्छती-
त्यर्थे डप्रत्ययेन निष्पन्नः ॥

**विदूरजं**, क्ली, (विदूरे पर्व्वते जायते इति । जन +
डः ।) विदूरपर्व्वतजरत्नम् ।
वैदूर्य्यमणिः ।
अतिदूरजाते, त्रि । इति केचित् ॥

**विदूरथः**, पुं, राजविशेषः । यथा, --
“मनोस्तु दक्षपुत्त्रस्य
द्वादशस्यात्मजान् शृणु ।
देववानुपदेवश्च देवश्रेष्ठो विदूरथः ॥
मित्रवान् मित्रदेवश्च मित्रविन्दश्च
वीर्य्यवान् ।
मित्रवाहः सवर्च्चाश्च दक्षपुत्त्रमनोः
सुताः ॥”
इति गारुडे ८७ अध्यायः ॥
(कुरुपुत्त्रः । यथा, महाभारते । १ ।
९५ ।
३९ -- ४० ।
“कुरुः खलु दाशार्हीमुपयेमे सुभाङ्गीं
नाम
तस्यामस्य जज्ञे विदूरथः ।
विदूरथस्तु माधवी-
मुपयेमे संप्रियां नाम तस्यामस्य जज्ञे
अनश्वा
नाम ॥” * ॥
वृष्णिवंशीयानामन्यतमः । यथा,

यथा । अङ्गादिवैकृत्यैर्हास्यकारी विदूषकः
।
अस्योदाहरणं यथा, --
“आनीय नीरजमुखीं शयनोपकण्ठ-
मुत्कण्ठतोऽस्मि कुचकञ्चुकमोचनाय ।
अत्रान्तरे मुहुरकारि विदूषकेण
प्रातस्तनस्तरुणकुक्कुटकण्ठनादः ॥”
इति रसमञ्जरी ॥
(अयन्तु शृङ्गारसहायः । यथा,
साहित्यदर्पणे ।
३ । ७७ ।
“शृङ्गारस्य सहाया विटचेटविदूषकाद्याः
स्युः ।
भक्ता नर्म्मसु निपुणाः
कुपितबधूमानभञ्जनाः
शुद्धाः ॥”
दूषणकारके, त्रि । यथा, भागवते । ५ । ६
। १० ।
“येनह वाव कलौ मनुजापसदा देवमाया-
विमोहिताः **** ब्रह्मब्राह्मणयज्ञपुरुष-
लोकविदूषकाः प्रायेण भविष्यन्ति ॥”)

**विदूषणं**, क्ली, विशेषेण दूषणम् । विपूर्ब्बञ्यन्त्र-
दुषधातोरनट्(ल्युट्)प्रत्ययेन निष्यन्नम् ॥

**विदेशः**, पुं, (विप्रकृष्टो देशः ।) परदेशः । देशा-
न्तरम् । यथा । अशौचकालाभ्यरे
विदेशस्था-
शौचश्रवणे शेषाहैः शुद्धिः । इति
शुद्धितत्त्वम् ॥
अन्यच्च ।
“कोऽतिभारः समर्थानां किं दूरं व्यवसायि-
नाम् ।
को विदेशः सविद्यानां कः परः
प्रियवादिनाम् ॥”
इति चाणक्ये ॥
अन्यत् देशान्तरशब्दे द्रष्टव्यम् ॥

**विदेहः**, पुं, जनकान्वयभूमिपः । (यथा, देवी-
भागवते । १ । १६ । ५२ ।

व्याकरणम् ॥ (यथा, नैषधे । २ ।
"चिकुरप्रकरा जयन्ति ते
विदुषी मूर्द्धनि सा विभर्त्ति यान् ॥")

**विदुष्मती**, त्रि, (विद्वानस्ति अस्यामिति । विद्वस्
मतुप् । स्त्रियां ङीप् ।) पण्डितवती । यथा, --
"द्यौर्व्वाचस्पतिनेव पन्नगपुरी शेषाहिनेवा-
भवद्-
येनैकेन विदुष्मती वसुमती मुख्येन संख्याव-
ताम् ॥"
इति वोपदेवप्रशंसा ॥

**विदूः**, पुं, विदुः । गजकुम्भयोर्मध्यम् । इत्यमर-
टीका ॥

**विदूरः**, त्रि, (विशिष्टं दूरं यस्य ।) अतिदूरस्थ-
देशादि । यथा, --
"मासानष्टौ तव जलधरोत्कण्ठया शुष्ककण्ठः
सारङ्गोऽसौ युगशतमिव व्यानिनायातिकृ-
च्छ्रात् ।
भागवते । ९ । २४ । १८ ।
"पृथुर्विदूरथाद्याश्च बहवो
वृष्णिनन्दनाः ॥"
अस्य पूत्रः शूरः । यथा, तत्रैव । ९ ।
२४ । २६ ।
"शूरो विदूरथादासीत् भजमानस्तु
तत्सुतः ।
शिनिस्तस्मात् स्वयं भोजो
हृदिकस्तत्सुतो
मतः ॥")

**विदूरभूमिः**, स्त्री, (विदूरस्य भूमिः ।) विदूर-
देशः । यत्र वैदूर्य्यमणिरुत्पद्यते ।
यथा, --
"तया दुहित्रा सुतरां सवित्री
स्फुरत्प्रभामण्डलया चकाशे ।
विदूरभूमिर्नवमेघशब्दा-
दुभिन्नया रत्नशलाकयेव ॥"
इति कुमारसम्भवम् ॥

**विदूराद्रिः**, पुं, (विदूरनामकोऽद्रिः ।) विदूर-
पर्व्वतः । इति जटाधरः ॥

**विदूषकः**, त्रि, (विदूषयति आत्मानमिति । वि
+
दूष + णिच् + ण्वुल् ।) कामुकः ।
तत्पर्य्यायः ।
षिड्गः २ व्यलीकः ३ षट्प्रज्ञः ४
काभकेलिः
५ पीठकेलिः ६ पीठमर्द्दः ७ भविलः
८ छिदुरः
९ विटः १० । इति त्रिकाण्डशेषः ॥
चाटुवटुः
११ वासन्तिकः १२ केलिकिलः
१३ वैहासिकः
१४ प्रहासी १५ प्रीतिदः १६ । इति
हेम-
चन्द्रः ॥ परनिन्दाकरः । इति मेदिनी
। के, २१४ ॥
तत्पर्य्यायः । खलः २ रञ्जकः ३
अभीकः ४ क्रूरः
५ सूचकः ६ कण्टकः ७ नागः ८
मलिनास्यः
"द्रष्टुमिच्छाम्यहं भूपं विदेहं नृपसत्तमम् ।
कथं तिष्ठदि संसारे पद्मपत्रमिवाम्भसि ॥"
विगतो देहो यस्या ।) कायशून्ये, त्रि । इति
मेदिनी । ले, १४ ॥ (यथा, महाभारते ।
३ । १०७ । २६ ॥
"छिन्नशीर्षा विदेहाश्च
भिन्नत्वगस्थिसन्धयः ।
प्राणिनः समदृश्यन्त शतशोऽथ सहस्रशः
॥")
निमिराजस्य विदेहत्वकारणम् । यथा, --
"असमाप्ते ततो यज्ञे वशिष्ठश्चागमद्दिवः ।
तं दृष्ट्वा कुपितः प्राह प्रत्याख्यातोऽस्मि
पार्थिव ।
यस्मात्तस्मात् शपेयं त्वां विदेहस्त्वं
भविष्यसि ॥"
इति वह्निपुराणे सूर्य्यवंशसमाप्ताध्यायः ॥

**विदेहा**, स्त्री, मिथिला । इति हेमचन्द्रः ॥ (यथा,
रघुः । १२ । २६ ।
"वभौ तमनुगच्छन्ती विदेहाधिपतेः सुता ।
प्रतिषिद्धापि कैकेय्या लक्ष्मीरिव गुणोन्मखी
॥")

**विद्धः**, त्रि, (विध्यते स्मति । व्यध + क्तः ।)
छिद्रितः । इत्यमरः ॥ क्षिप्तः । सदृशः ।
वाधितः । इति मेदिनी । धे, १६ ॥ (यथा,
मार्कण्डेये । ५० । ७० ।
"तरुगुल्मादिभिर्द्वारं न विद्धं यस्य वेश्मनः
।
मर्म्मभेदोऽथवा पुंसस्तत् श्रेयो भवनं न ते
॥")

ताडितः । इत्यजयपालः ॥ (यथा, विष्णुसंहि-
तायाम् । २० । ४४ ।
"नाकाले म्रियते कश्चित् विद्धः शरशतरपि ।
कुशाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥")

**विद्धकर्णः**, पुं, (विद्धः कर्ण इव पत्रमस्य ।) विद्ध-
कर्णी । इति भरतद्विरूपकोषः ॥ (विद्धौ कर्णौ
यस्येति । कृतकर्णवेधे, त्रि ॥)

**विद्धकर्णा**, स्त्री, विद्धकर्णी । इति भरतद्विरूप-
कोषः ॥

**विद्धकर्णिका**, स्त्री, (विद्धकर्णा । स्वार्थे कन् ।)
विद्धकर्णी । इति शब्दरत्नावली ॥

**विद्धकर्णी**, स्त्री, (विद्धः कर्ण इव पत्रमस्याः ।)
वृक्षविशेषः । अकनादि इति भाषा ॥ तत्-
पर्य्यायः । पाठा २ अम्बष्ठा ३ स्थापनी ४
श्रेयसी ५ रसा ६ एकाष्ठीला ७ पापचेली ८
प्राचीना ९ वनतिक्तिका १० । इत्यमरः ॥
अविद्धकर्णी ११ अविद्धकर्णा १२ । इति
तट्टीका ॥ आविद्धकर्णिका १३ विद्ध-
कर्णिका १४ । इति शब्दरत्नावली ॥ अन्यत्
पाठाशब्देद्रष्टव्यम् ॥

**विद्यमानः**, त्रि, (विद + शानच् ।) वर्त्तमानः ।
इति सच्छब्दटीकायां भरतः ॥ (यथा, वैद्यके ।
"वासायां विद्यमानायामाशायां जीवितस्य
च ॥")

संक्रान्त्यां पञ्चदश्याञ्च पक्षयोरुभयोरपि ॥
कृत्वा तु पूजयिष्यन्ति महाविद्यां सभैरवाम् ।
विद्याञ्च विविधां देवि तथान्यप्रतिमां शुभाम् ॥
एवं हि तामसीं पूजामनित्याञ्च भवेत् कलौ ।"
इति मायातन्त्रे १७ पटलः ॥
शास्त्रम् । तत्तु अष्टादशविधम् । यथा । शिक्षा
१ कल्पः २ व्याकरणम् ३ निरुक्तम् ४ ज्योति-
षम् ५ छन्दः ६ ऋग्वेदः ७ यजुर्व्वेदः ८ साम-
वेदः ९ अथर्व्ववेदः १० मीमांसा ११ न्यायः १२
धर्म्मशास्त्रम् १३ पुराणम् १४ आयुर्व्वेदः १५
धनुर्व्वेदः १६ गान्धर्व्ववेदः १७ अर्थशास्त्रम् १८ ॥
यथा, विष्णुपुराणम् ।
"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः
धर्म्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्द्दश ॥
आयुर्व्वेदो धनुर्व्वेदो गान्धर्व्वश्चेति ते त्रयः ।
अर्थशास्त्रं चतुर्थञ्च विद्या ह्यष्टादशैव ताः ॥"
इति प्रायश्चित्ततत्त्वम् ॥ * ॥
नीचादप्युत्तमा विद्या ग्राह्या यथा, --
"श्रद्दधानः शुभां विद्यामाददीतावरादपि ।
अन्त्यादपि परं धर्म्मं स्त्रीरत्नं दुष्कुलादपि ॥"
इति मानवे २ अध्यायः ॥ * ॥
विद्याप्रशंसा यथा, --
"ये बालभावान्न पठन्ति विद्यां
ये यौवनस्था अधना अदाराः ।
ते शोचनीया इह जीवलोके

शास्त्राणि पठनाद्दानात् मातरः फलदा नृणाम् ॥
ज्योतिषं वैद्यशास्त्राणि कला काव्यं स्वभाग्यतः ।
दानादारोग्यमाप्नोति गन्धर्व्वं लभते पदम् ॥
विद्याभ्यो वर्त्तते लोको धर्म्माधर्म्मञ्च वृद्धये ।
तस्माद्विद्या सदा देया दृष्टादृष्टफलार्थिभिः ॥
महीदानञ्च गोदानं हैमवस्त्रतिला जलम् ।
धान्यदीपान्नदानञ्च महादानानि दानसु ॥
इहात्र क्षीयते दानं दीपदानं नराधिप ।
विद्या वृद्धिमवाप्नोति दीयमानापि नित्यशः ॥
एकोच्चारेण भूदानं दत्तं भवति भूमिप ।
नहि तद्विद्यते भूप देहपातादनन्तरम् ॥
विद्यादानं न तद्वत्स एकधा दशधा भवेत् ।
शतधा कोटिधा गच्छेदिहामूत्र च पारगः ॥
राज्ञा तस्करदायाद्यैर्ज्जलवह्निसरीसृपैः ।
सर्व्वदानानि हीयन्ते विद्या केनापि हीयते ॥
विद्यादानात् परं दानं न भूतं न भविष्यति ।
विद्यादानेन दानानि नहि तुल्यानि बुद्धिमन् ॥
विद्या एव परं मन्ये यत्तत् पदमनामयम् ।
शृण्वन्नुत्पद्यते भक्तिर्भक्त्या गुरुमुपासते ॥
स च विद्यागमान् वक्ति विद्या पुस्ताश्रिता नृप ।
विद्याविवेकबोधेन शुभाशुभविचारिणाम् ॥
विद्यते सर्व्वकामाप्तिस्तस्माद्विद्या परा मता ॥
विद्यादानात् परं दानं न भूतं न भविष्यति ।
येन दत्तेन चाप्नोति शिवं परमकारणम् ॥
विद्याविचारतत्त्वज्ञा राज्ञः सन्मार्गगामिनः ।
भुञ्जतेऽपि हि भोगानि गच्छन्ति परमां गतिम् ॥
अन्त्यजा अपि यां प्राप्य क्रीडन्ते ग्रहराक्षसैः ।
सा विद्या केन मीयेत यस्याः कोऽन्यः समो-
ऽपि न ॥
ज्वरेण कुञ्जरं हन्ति सर्षपेण तुरङ्गमम् ।
मक्षिकापदमात्रस्य विषस्य विषमा गतिः ॥
एवंविधं विधिं वत्स विद्यामन्त्रप्रभावतः ।
जीर्य्यते भक्षितं पुंभिस्तस्माद्विद्या परात्परा ॥
नहि विद्या कुलं जातिरूपं पौरुषपात्रताम् ।
वशते सर्व्वलोकानां पठिता उपकारिका ॥

**विद्या**, स्त्री, (विद्यतेऽसौ इति । विद् + "संज्ञायां
समजनिषदनिपतेति ।" ३ । ३ । ९९ ।
इति
क्यप् ।) दुर्गा । इति शब्दरत्नावली ॥
गणि-
कारिका । इति शब्दचन्द्रिका ॥ ज्ञानम्
। तत्तु
मोक्षे धीः । इति जटाधरः ॥
परमोत्तमपुरु-
षार्थसाधनीभूता विद्या ब्रह्मज्ञानरूपा ।
इति
नागोजीभट्टः ॥ मन्त्रः । यथा ।
शारदायाम् ।
"भान्तं वियत्सनयनं श्वेतो मर्द्दिनि
ठद्वयम् ।
अष्टाक्षरी समाख्याता विद्या
महिषमर्द्दिनी ॥"
विश्वसारे ।
"प्रणवाद्यां जपेद्विद्यां मायाद्यां वा जपेत्
सुधीः ।"
महिषमर्द्दिनीमन्त्रः ॥
"दशाक्षरी समाख्याता विद्या
त्रिभुवनेश्वरी ।
प्रणवञ्च तथा माया भवेद्विद्या पुनर्द्दश ।
कामं प्रणवमित्युक्तं भवेद्विद्या पुनर्द्दश
॥"
दुर्गामन्त्रः ।
"वागबीजाद्या यदा विद्या
वागीशत्वप्रदायिनी ।
कामाद्या च यदा विद्या
सर्व्वकामप्रदायिनी ॥
तारमायादिका विद्या
भोगमोक्षैकदायिनी ।
यद्बीजाद्या भवेद्विद्या तद्बीजेनाङ्कल्पना
॥"
अन्नपूर्णामन्त्रः । इति तन्त्रसारः ॥ * ॥
महा-
विद्या । कलौ तस्या
नानामूर्त्यास्तामसी पूजा
सर्व्वत्र भविता । अधुना सा
वारोएयारीपूजा
मनुष्यरूपेण मृगाश्चरन्ति ॥
भोजने भोजनं चित्तं न
कुर्य्याच्छास्त्रसेवकः ।
सुदूरमपि विद्यार्थे व्रजेत् गरुडवेगवान् ॥
ये बालभावान्न पठन्ति विद्यां
कामातुरा यौवननष्टचित्ताः ।
ते वृद्धकाले परिभूयमानाः
सन्दह्यमानाः शिशिरे यथाब्जम् ॥
माता शत्रुः पिता वैरी वालो येन न
पाठितः ।
न शोभते सभामध्ये हंसमध्ये वको यथा
॥
विद्या नाम कुरूपरूपमधिकं
प्रच्छन्नमन्तर्द्धनं
विद्या साधुजनप्रिया शुचिकरी विद्या
गुरूणां
गुरुः ।
विद्या बन्धुजनार्त्तिनाशनकरी विद्या परं
देवता
विद्या भोग्ययशःकुलोन्नतिकरी
विद्याविहीनः
पशुः ॥
गृहे चाभ्यन्तरे द्रव्यं लग्नं चैव तु दृश्यते ।
अशेषं हरणीयञ्च विद्या न ह्रियते परैः ॥"
इति गारुडे ११० । ११५ अध्यायौ ॥
अथ विद्यादानफलम् ।
"यस्तु देव्या गृहे नित्यं विद्यादानं
प्रवर्त्तयेत् ।
स भवेत् सर्व्वलोकानां पूज्यः पूजापदं
व्रजेत् ॥
विद्यादानं प्रवक्ष्यामि येन तुष्यन्ति मातरः
।
लिप्यते दीयते येन विधिना तं शृणुष्व नः
॥
सिद्धान्तमोक्षशास्त्राणि वेदान्
स्वर्गादिसाध-
कान् ।
तदङ्गानीतिहासानि देया धर्म्मविवृद्धये ॥
गारुडं बालतन्त्रञ्च भूततन्त्राणि भैरवम् ।
भूतैर्गृहीता विध्वस्ता दष्टा वा महपन्नगैः ।
विद्या उत्थापयेत् वत्स अन्त्यजस्यापि हृत्-
स्थिता ।
सर्व्वेषामेव वृद्धानां विद्यावृद्धे हि मान्यता ॥
वयोवृद्धो हि शूद्राणां बिशानां धनवान् यतः ।
क्षत्त्रियाणान्तु वीर्य्येण विप्राणां शास्त्रपारगः ॥
वित्तं बन्धुर्वयश्चैव तपो विद्या यथोत्तरम् ।
पूजनीयानि सर्व्वेषां विद्या तेषां गरीयसी ॥
गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ।
विद्यया लभ्यते विद्या चतुर्थी नोपलभ्यते ॥
यः कृत्स्नान्तु महीं दद्यात् मेरुतुल्यञ्च काञ्च-
नम् ।
स यदन्यायतः पृच्छेन्न तस्योपदिशेत् क्वचित्
॥
एवंविधं महाभाग विद्यारूपं हि वर्णितम् ।

| | | |
|---|---|---|
| इति ख्याता । यथा, --<br>“अस्मिन् काले सुरेशानि प्रकाशो जायते भुवि ।<br>तमोधर्म्मेण सर्व्वत्र देवताप्रतिमां सदा ॥<br>अष्टम्याञ्च चतुर्द्दश्यां नवम्यां शनिभौमयोः । | | |

संक्षेपान्न च विस्तारात्तस्या दानफलं शृणु ॥
श्रीताडीपत्रजे सञ्चे समे पत्रसुसञ्चिते ।
विचित्रकं विपार्श्वे च चर्म्मणां सवटीकृते ॥
रक्तेन अथ कृष्णेन मूर्द्धनावर्द्धितेन च ।
दृढसूत्रसुबन्धेन एवंविधकृतेन च ॥
यस्तु द्वादशसाहस्रीं संहितामुपलेखयेत् ।
ददाति चाभियुक्ताय स याति परमां गतिम् ॥
पूर्ब्बोत्तरप्लवे देशे सर्व्वबाधाविवर्ज्जिते ।
गोमयेन शुभेनैव कुर्य्यान्मण्डलकं बुधः ॥
चतुर्हस्तप्रमाणेन शुभञ्च चतुरस्रकम् ।
तस्य मध्ये लिखेत् पद्मं सितरक्तरजादिभिः ॥
सर्व्वर्त्तुकमयैः पुष्पैर्भूषयेत् सर्व्वतो दिशम् ।
वितानं दापयेन्मूर्द्ध्नि शुभचित्रविचित्रितम् ।
पार्श्वतः सितवस्त्रैस्तु सम्यक् शोभां प्रकल्पयेत् ।
कन्दुकैरर्द्धचन्द्रैश्च दर्पणैश्चामरैस्तथा ॥
घण्टाकिङ्किणिशब्दैश्च सर्व्वत्र उपकल्पयेत् ।
तस्य मध्ये न्यसेद्यन्त्रं नागदन्तमयं शुभम् ॥
अधः कश्चिन्निबद्धन्तु पार्श्वतो हरिदन्तिभिः ।
शोभितं दृढबन्धेन बद्धं सूत्रेण बुद्धिमान् ॥
तस्योद्‌र्ध्वे विन्यसेद्देव्याः पुस्तकं लिखितं शुभम् ।
आलेख्यमपि तत्रैव पूजयेद्विधिना ततः ॥
निरुदकैस्तथा पुष्पैः कृमिकीटविवर्जितैः ।
चन्दनेन सदा तत्र भस्मना चारु धूनयेत् ॥
धूपञ्च गुग्गुलुं देयं तुरुष्कागुरुमिश्रितम् ।
दीपमालां तथा चाग्रे नैवेद्यं विविधं पुनः ॥
खाद्यं पेयान्वितं लेह्यं चोष्यञ्चापि निवेदयेत् ।
पूजयेद्दिशिपालांस्तु लोकपालान् यथाक्रमम् ॥
कन्याः स्त्रियस्तु संपूज्या मातरः कल्पयेच्च ताः ।
पुस्तकं देवदेवीश्च विप्राणां दक्षिणां तथा ॥
स्वशक्त्या चैव दातव्या नृपं पौरांश्च पूजयेत् ।
तथा संपूजयेद्वत्स लेखकं धर्म्मभागकम् ॥
छन्दोलक्षणतत्त्वज्ञं सत्कविं मधुरस्वरम् ।
प्रणष्टं स्मरते ग्रन्थं श्रेष्ठं पुस्तकलेखकम् ॥
नातिसन्ततविच्छिन्नैर्नश्लक्ष्णैर्न च कर्कशैः ।
नन्दिनागरकैर्व्वर्णैर्लेखयेच्छिवपुस्तकम् ॥
प्रारम्भे पञ्चश्लोकानि पुनः शान्तिन्तु कारयेत् ।

तथा तपस्विनः पूज्याः
सर्व्वशास्त्रार्थपारगाः ॥
शिवव्रतधरा मुख्या
विष्णुधर्म्मपरायणाः ।
महता जनसंघेन रथस्थं वाद्यवाहनैः ॥
प्रधानैर्व्वापि तन्नेयं यस्य देवस्य अंशजम् ।
सामान्यं शिवतीर्थेषु मातरो भवनेषु च ॥
तस्मिन् पूजां तथा कृत्वा देवदेवेन शूलिना ।
समर्पयेत् प्रणम्येशं मातरः प्रीयतां मम ॥
सदाध्ययनयुक्ताय विद्यादानरताय च ।
विद्यासंग्रहयुक्ताय सर्व्वशास्त्रकृताश्रमे ॥
तेनैव वर्त्तते यस्तु तस्य तं
विनिवेदयेत् ।
जगद्धिताय वै शान्तिं सन्ध्यायां
वाचयेत्तथा ॥
तेन तोयेन दातारं मूर्द्ध्नि
समभिसिञ्चयेत् ।
वरन्नेतु ततः शब्दमुच्चार्य्यं
जगतस्तथा ॥
एवं कृते महाकान्तिर्देशस्य नगरस्य च ॥
अनेन विधिना यस्तु सर्व्वबाधाः
शमन्ति च ॥
अनेन विधिना यस्तु विद्यादानं
प्रयच्छति ।
स भवेत् सर्व्वलोकानां
दर्शनादघनाशनः ।
मृतोऽपि गच्छते स्थानं
ब्रह्मविष्णुनमस्कृतम् ॥
सप्त पूर्ब्बापरान् वंशानात्मनः सर्व्व एव च ।

विप्राय वेदविदुषे महीं दत्त्वा शशिग्रहे ।
यत्फलं लभते विप्रो विद्यादानेन तत् फलम् ॥
कपिलानां सहस्रेण सम्यग्दत्तेन यत् फलम् ।
तत् फलं समवाप्नोति पुस्तकस्य प्रदानतः ॥
यावच्च पातकं तेन कृतं जन्मशतैरपि ।
तत् सर्व्वं नाशयत्याशु विद्यादानेनं भो द्विज ॥
धर्म्मोपदेशं यः कुर्य्यात् शास्त्रं ज्ञात्वा तु वैष्णवे ।
कृत्स्नां धरित्रीं यो दद्यात् उभयोस्तत्समं फलम् ॥
विद्यादानात् परं दानं न भूतं न भविष्यति ।
येन दत्तेन चाप्नोति शिवं परमकारणम् ॥
विद्या च श्रूयते लोके सर्व्वधर्म्मप्रदायिका ।
तस्माद्विद्या सदा देया
पण्डितैर्धार्म्मिकैर्द्विजैः ॥
आत्मविद्याप्रदातारो ये भवन्ति सदा मुने ।
न पुनस्तेऽपि निरयं प्रविशन्ति सुनिश्चयम् ॥
विप्राय पुस्तकं दत्त्वा धर्म्मशास्त्रस्य च द्विज ।
पुराणस्य च यो दद्यात् स
देवत्वमवाप्नुयात् ॥
शास्त्रदृष्ट्या जगत् सर्व्वं सुश्रुतञ्च
शुभाशुभम् ।
तस्मात् शास्त्रं प्रयत्नेन दद्याद्विप्राय
कार्त्तिके ॥
वेदविद्याञ्च यो दद्यात् स्वर्गे कल्पत्रयं
वसेत् ।
आत्मविद्याञ्च यो दद्यात् तस्य संख्या न विद्यते ॥
त्रीणि तुल्यप्रदानानि त्रीणि तुल्यफलानि च ।

रात्रौ जागरणं कुर्य्यात् सर्व्वपिक्षं प्रकल्पयेत् ॥
नटचारणनग्नैश्च देव्याः कथनसम्भवैः ।
प्रत्यूषे पूजयेल्लोकांस्ततः सर्व्वं विसर्ज्जयेत् ॥
एकान्ते सुमनस्केन विश्रब्धेन दिने दिने ।
निष्पाद्यं विधिनानेन स्वर्क्षे च शुभवासरे ॥
ततः पूर्ब्बोक्तविधिना पुनः पूजां प्रकल्पयेत् ।
तथा विद्याविमानन्तु सप्तपञ्चत्रिभूमिकम् ॥
विचित्रवस्त्रशोभाढ्यं शुभलक्षणलक्षितम् ।
कारयेत् सर्व्वतोभद्रं किङ्किणीवरकान्वितम् ॥
दपेणैरर्द्धचन्द्रैश्च घण्टाचामरमण्डितम् ।
तस्मिन्धूपं समुत्क्षिप्य सुगन्धं चन्दनागुरुम् ॥
तरुस्कं गुग्गुलुं वत्स शर्करामधुमिश्रितम् ।
पूर्ब्बवत् पूजयेत् सर्व्वान् कन्यास्त्रीद्विजपौरवान् ॥
तथा तं पुस्तकं वस्त्रे विन्यसेद्विधिपूजितम् ।
एवं कत्वा तथा चिन्त्या मातरः प्रीयतां मम ॥
यस्यैव शुल्कं तच्छास्त्रं पुस्ते पुरि विकल्पयेत् ।
उद्धृत्य पापकलिलाद्विष्णुलोके महीयते ॥
यावत् तत्पत्रसंख्यानमक्षराणि विधीयते ।
तावत् स विष्णुलोकेषु क्रीडते विविधैः सुखैः ॥
तदा क्षितिं समायातो देव्या भक्तिरता भवेत् ।
समस्तभोगसम्पन्ने विद्वान् संजायते कुले ॥
विद्यादानप्रभावेन योगशास्त्रं ददेद्यदि ।
आत्मवित्तानुरूपेण यः प्रयच्छति मानवः ।
अशाठ्यात् फलमाप्नोति सत्यं सत्यं न संशयः ॥
स्त्रिया वानेन विधिना विद्यादानफलं लभेत्
भर्त्तुर्व्वानुज्ञया दत्तं विधवा वा तमुद्दिशन् ॥ * ॥
विद्यार्थिने सदा देयं वस्त्रमभ्यङ्गभोजनम् ।
छत्रिका उदकं दीपं यस्मात्तेन विना नहि ॥
लेखनीघटनं तीक्ष्णमसिपत्रन्तु लेखनीम् ।
दत्त्वा तु लभते वत्स विद्यादानमनुत्तमम् ॥
पुस्तकास्तरणं दत्त्वा तत्प्रमाणं सुशोभनम् ।
विद्यादानमवाप्नोति सूत्रबन्धन्तु बुद्धिमान् ॥
पत्रकामासनञ्चैव दण्डासनमथापि वा ।
विद्याधारणशीलाय दत्तं भवति राज्यदम् ॥
अञ्जनं नेत्रपादानां दत्तं विद्यापरायणे ।
भूमिं गृहन्तु क्षेत्रन्तु स्वर्गराज्यफलप्रदाम् ॥
यस्य भूम्यां स्थितो नित्यं विद्यादानं प्रवर्त्तते ।
शास्त्रं कामदुधा धेनुः पृथिवी चैव शाश्वती ॥
यत्किञ्चित् कार्त्तिके दत्तं विष्णुमुद्दिश्य मानवैः ।
तदक्षयञ्च लभते त्वन्नदानाद्विशेषतः ॥
इह लोके बहून् भोगान् भुक्त्वा याति शिवा-
लयम् ॥”
इति पाद्मोत्तरखण्डे ११७ अध्यायः ॥
अथ विद्यारम्भदिनानि ।
विष्णुधर्म्मोत्तरे ।
“संप्राप्ते पञ्चमे वर्षे अप्रसुप्ते जनार्द्दने ।
षष्ठीं प्रतिपदञ्चैव वर्ज्जयित्वा तथाष्टमीम् ॥
रिक्तां पञ्चदशीञ्चैव सौरिभौमदिनं तथा ।
एवं सुनिश्चिते काले विद्यारम्भन्तु कारयेत् ॥
पूजयित्वा हरिं लक्ष्मीं देवीञ्चापि सरस्वतीम् ।
स्वविद्यासूत्रकारांश्च स्वाञ्च विद्यां विशेषतः ॥
नमस्ते बहुरूपाय विष्णवे परमात्मने ।
स्वाहेत्यनेन हरिं त्रिः पूजयेत् ।
भद्रकाल्यै नमो नित्यं सरस्वत्यै नमो नमः ।
वेदवेदान्तवेदाङ्गविद्यास्थानेभ्य एव च ॥
स्वाहेति ब्रह्मपुराणीयेन च त्रिः पूजयेत् ॥” * ॥
लिखनविधिमाह नन्दिपुराणम् ।
“शुभे नक्षत्रदिवसे शुभे वारे दिनग्रहे ।
लेखयेत् पूज्य देवेशान् रुद्रब्रह्मजनार्द्दनान् ॥
पूर्ब्बदिग्वदनो भूत्वा लिपिज्ञो लेखकोत्तमः ।
निरोधो हस्तबाह्वोश्च मसीपत्रावधारणे ॥”
मत्स्यपुराणञ्च ।
“शीर्षोपेतान् सुसंपूर्णान् समश्रेणीगतान् समान् ।
अक्षरान् विलिखेद्यस्तु लेखकः स परः स्मृतः ॥”

| | तस्यापि भवते स्वर्गं<br>तत्प्रभावान्नराधिप ॥<br>तस्मात् सर्व्वप्रयत्नेन विद्या देया सदा<br>नरैः ।<br>इह कीर्त्तिमवाप्नोति मृतो याति परां<br>गतिम् ॥”<br>इति देवीपुराणे<br>विद्यादानमहाभाग्यफला-<br>ध्यायः ॥ * ॥ अपि च ।<br>“दशवापीसम कन्या भूमिदानञ्च<br>तत्समम् ।<br>भूमिदानाद्दशगुणं विद्यादानं विशिष्यते<br>॥<br>यथा सुराणां सर्व्वेषां रामश्च<br>परमेश्वरः ।<br>तथैव सर्व्वदानानां विद्यादानन्तु<br>देहिनाम् ॥<br>राजसूयसहस्रस्य सम्यगिष्टस्य यत्<br>फलम् ।<br>तत् फलं लभते विप्रो विद्यादानेन<br>पुण्यवान् ॥<br>सर्व्वशस्यसमापूर्णां<br>सर्व्वरत्नोपशोभिताम् । | |
|---|---|---|

नाधीयीतेत्यनुवृत्तौ मनुः ।
“रुधिरे च स्रुते गात्रात् शस्त्रेण च परीक्षते ।”
रुधिरस्रवं विना शस्त्रेण क्षतमात्रेऽपि । दीपि-
कायाम् ।
“लघुचरशिवमूलाधोमुखत्वष्ट्रपौष्ण-
शशिषु च हरिबोधे शुक्रजीवार्कवारे ।
उदितवति च जीवे केन्द्रकोणेषु सौम्यै-
रपठनदिनवर्ज्जं पाठयेत् पञ्चमेऽब्दे ॥”
मदनपारिजाते ।
“विद्यारम्भे गुरुः श्रेष्टो मध्यमौ भृगुभास्करौ ।
मरणं शनिभौमाभ्यामविद्या बुधसोमयोः ॥
विद्यारम्भः सुरगुरुसितज्ञेष्वभीष्टार्थदायी
कर्त्तुश्चायुश्चिरमपि करोत्यंशुमान् मध्यमोऽत्र
।
नीहारांशौ भवति जडता पञ्चता भूमिपुत्त्रे
छायासूनावपि च मुनयः कीर्त्तयन्त्येवमाद्याः ॥
रवेर्गुरोर्भृगोर्लग्ने तत्स्थेऽर्केऽपीन्दुवृद्धितः ।
गुर्व्वर्केन्दूडुशुद्धौ च विद्यारम्भः प्रशस्यते ॥” *
॥
बृहस्पतिः ।
“प्राङ्मुखो गुरुरासीनो वरुणाभिमुखं शिशुम् ।
अध्यापयेच्च प्रथमं द्विजाशीर्भिः प्रपूजितम् ॥”
कूर्म्मपुराणम् ।
“स्वाध्यायस्य त्रयो भेदा वाचिकोपांशु-
मानसाः ॥”
शिवधर्म्मे ।
“संस्कृतैः प्राकृतैर्वाक्यैर्यः शिष्यमनुरूपतः ।
देशभाषाद्युपायैश्च बोधयेत् स गुरुः स्मृतः ॥”
आदिः ग्रन्थकरणादिः । * । नन्दिपुराणम् ।
“प्रशस्तशब्दसंयोगे कुर्य्यात् यतिविरामणम् ।”
विरामणं तद्दिनपाठसमाप्तिम् ॥ * ॥
“समाप्ते वाचकाभीष्टं कुर्य्यादिव विचक्षणः ।
सुश्रुतं सुव्रतं भूयादस्तु व्याख्या तु नित्यदा ॥
लोकः प्रवर्त्ततां घर्म्मे राजा चास्तु सदा जयी ।
धर्म्मवान् धनसम्पन्नो गुरुश्चास्तु निरामयः ॥
* ॥
इति प्रोच्य यथायातं गन्तव्यञ्च विभावितैः ।
शिष्यैः परस्परं शास्त्रं चिन्तनीयं विचक्षणैः ॥
कथावस्तुप्रसङ्गेन नानाव्याख्यानसम्भवैः ।

अधीतस्यार्थिने दानमावश्यकं तथा च
श्रुतिः ।
योऽधीत्यार्थिभ्यो विद्यां न प्रयच्छेत् स
कार्य्यहा
स्यात् श्रेयसो द्वारमावृणुयात् इति । *
।
तद्दानञ्च अध्यापनेन व्याख्यया
विलिख्यार्पणेन
च सम्भवतीत्यतो धीमद्भिर्निबन्धः
क्रियते ॥ * ॥
तथा च विष्णुपुराणम् ।
“प्राणिनामुपकाराय यदेवेह परत्र च ।
कर्म्मणा मनसा वाचा तदेव मतिमान्
भजेत् ॥”
बृहस्पतिरपि ।
“अज्ञानतिमिरोपेतान्
सन्देहपटलान्वितान् ।
निरामयान् यः कुरुते
शास्त्राञ्जनशलाकया ॥
इह कीर्त्तिं राजपूजां लभते सद्गतिञ्च
सः ।
षाण्माषिके तु समये भ्रान्तिः सञ्जायते
यतः ॥
धात्राक्षराणि सृष्टानि पत्रारूढान्यतः
पुरा ।
उपदेशानुमन्ता च लोके तुल्यफलौ
स्मृतौ ॥”
एवञ्च । एकलव्येनानुपदेष्टापि
द्रोणाचार्य्यो गुरुः
कृतः अतो ग्रन्थकर्त्तः सुतरां गुरुत्वम्
। यथा,
महाभारते ।
“अरण्यमनुसंप्राप्य कृत्वा द्रोणं
महीमयम् ।
तस्मिन्नाचार्य्यवृत्तिञ्च
परमामास्थितस्तदा ।
इष्वस्त्रे योगमातस्थे परं निश्चयमागतः
॥” * ॥
शङ्खलिखितौ ।

**विद्याचणः**, (विद्यया वित्तः । विद्या + “तेन-
वित्तश्चुञ्चुप्चणपौ ।” ५ । २ । २६ ।
इति चणप् चञ्चुप् च ।) बिद्यया ख्यातः ।
इति
व्याकरणम् ॥

**विद्याचुञ्चुः**, (विद्यया वित्तः । विद्या + “तेन-
वित्तश्चुञ्चुप्चणपौ ।” ५ । २ । २६ ।
इति चणप् चञ्चुप् च ।) बिद्यया ख्यातः ।
इति
व्याकरणम् ॥

**विद्यादलः**, पुं, भूर्ज्जवृक्षः । इति शब्दमाला ॥

**विद्यादाता**, [ऋ] त्रि, (विद्यां ददातीति । दा +
तृच् ।) विद्यादानकर्त्ता । यथा, --
“अन्नदाता भयत्राता पत्नीतातस्तथैव च ।
विद्यादाता जन्मदाता पञ्चैते पितरो नृणाम्
॥”
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १० अध्यायः ॥
अपि च ।
“न च विद्यासमो बन्धुर्नास्ति कश्चित्
गुरोः
परः ।
विद्यादातुः पुत्त्रदारौ तत्समौ नात्र संशयः
॥”
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ४४
अध्यायः ॥

**विद्यादानं**, क्ली, (विव्याया दानम् ।) अध्यापनम् ।
पुस्तकदानम् । यथा, --
वशिष्ठ उवाच ।
“विद्यादानं प्रवक्ष्यामि
याथातथ्यात्तवाधुना ।
तथा देयं फलं यच्च तच्छृणुष्व नृपोत्तम !
॥
पुण्येऽह्नि शुभनक्षत्रे मण्डपं शुभवेदिकम् ।
चतुरस्रं वितानं वा कृत्वा तत्रोपलेपयेत् ॥
गोमयेनोपलिप्ते तु पुष्पप्राकरशोभिते ।
तत्र न्यस्यासनं दिव्यं
दिव्यगन्धादिवासितम् ॥

युक्तिभिश्च स्मरेद्व्याख्यां चिह्नैश्चापि स्वयंकृतैः ।
एवं दिने दिने व्याख्यां शृणुयान्नियतो नरः ॥”
विष्णुपुराणम् ।
“पुत्त्रैरध्यापिता ये च ते पतन्ति श्वभोजने ॥”
सूत उवाच ।
“प्रागल्भ्यहीनस्य नरस्य विद्या
शस्त्रं यथा कापुरुषस्य हस्ते ।
न तृप्तिमुत्पादयते शरीरे
अन्धस्य दारा इव दर्शनीयाः ॥” * ॥
लिङ्गपुराणम् ।
“यो गुरुं पूजयेन्नित्यं तस्य विद्या प्रसीदति ।
तत्प्रसादेन यस्मात् स प्राप्नुते सर्व्वसम्पदः ॥”
दुर्व्वासाः ।
“सन्ध्यायां गर्ज्जिते मेघे शास्त्रचिन्तां करोति यः ।
चत्वारितस्य नश्यन्ति चायुर्विद्या यशो बलम् ॥”

“न वेदमनधीतानां विद्यामधीयीतान्यत्र वेदाङ्ग-
स्मृतिभ्यः ॥” * ॥ अङ्गानि च ।
“शिक्षा कल्पो व्याकरणं छन्दो ज्योतिषमेव च ।
निरुक्तञ्चेति चाङ्गानि वेदानां गदितानि षट् ॥”
स्मृतिस्तु धर्म्मसंहितेत्यमरः ॥ * ॥ शिष्यस्य
गुरुषु ऋणित्वमाह लघुहारीतः ।
“एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् ।
पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा सोऽनृणी भवेत् ॥”
नन्दिपुराणम् ।
“यश्च श्रुत्वान्यतः शास्त्रं संस्कारं प्राप्य वै दृढम् ।
अन्यस्य जनयेत् कीर्त्तिं गुरोः स ब्रह्महा भवेत् ॥
विस्मरेच्च तथा मौढ्याद्योऽपि शास्त्रमनुत्तमम् ।
स याति नरकं घोरमक्षयं भीमदर्शनम् ॥” * ॥
अतएव गृहस्थादीनामपि पुनरध्ययनमाह
आपस्तम्बः । यया विद्यया न विरोधेत पुनरा-
चार्य्यमुपेत्य साधयेदिति ॥ * ॥ विष्णुः । यश्च
विद्यामासाद्य तव्या जीवेत् न च सा तस्य पर-
लोकफलप्रदा भवति यश्च विद्यया परेषां यशो
हन्तीति । * । देवलः ।
“इष्टं दत्तमधीतं यद्विनश्यत्यनुकीर्त्तनात् ।
श्लाघानुशोचनाभ्याञ्च भग्नतेजो विभिद्यते ॥
तस्मादात्मकृतं पुण्यं वृथा न परिकीर्त्तयेत् ॥”

संस्थाप्य पुस्तकं तत्र धर्म्मशास्त्रस्य धीमता ।
ब्राह्मणान् वेदसंपूर्णान् छन्दोलक्षणपारगान् ॥
लेखयित्वा तु यत्नेन तत्समक्षं शुभाक्षरैः ।
चन्द्रसूर्य्योपरागे वा संक्रान्त्ययनवासरे ॥
पुण्येऽह्नि तत् सुसंपूज्य वस्त्रालङ्कारभूषणैः ।
घृतधेन्वा युतं रत्नैर्दद्यात् गुणवते ततः ॥
शास्त्रसद्भावविदुषे वाचकेऽतिप्रियंवदे ।
तच्छास्त्रं शृणुतां नित्यं जनानां नाशयन्त्यथ ।
दातुस्तस्माद्भवत्येवं फलं तच्छृणु भूपते ॥
यत् पुण्यं सर्व्वतीर्थानां विधिवद्यजतां तथा ।
तत् पुण्यं समवाप्नोति विधिवच्छास्त्रदः पुमान् ॥
कपिलानां सहस्रेण सम्यग्दत्तेन यत् फलम् ।
तद्राजन् सकलं लेभे धर्म्मशास्त्रप्रदायकः ॥
पुराणं भारतं वापि रामायणमथापि वा ।
दत्त्वा यत् फलमाप्नोति न तत् सर्व्वैर्महामखैः ॥
देवानामालये नित्यं धर्म्मशास्त्राणि यः पुमान् ।
अध्यापयति धर्म्मात्मा तस्य दानफलं शृणु ॥
धनभूमिहिराण्यानां दानेन यदवाप्यते ।
फलं तत् सकलं राजन् नित्यं कारापकस्य च ॥
योऽधीते धर्म्मशास्त्राणि देवानां पुरतोऽनिशम् ।
द्विजो वीप्सुरथार्थानाम्येमेवार्हति ध्रुवम् ॥
प्रातरुत्थाय यो वेदं वेदाङ्गं शास्त्रमेव वा ।
पृथिवीदानतुल्यं स्यात् फलं तस्य नृपोत्तम ॥
दानैर्योऽपि विभर्त्त्येताननीप्सुर्धर्म्मतत्परः ।
द्विगुणं पृथिवीदानात् फलं तस्य भवेन्नृप ! ॥
यो भृतं पठमानानां करोत्यनुदिनं नृप ! ।

| | | |
|---|---|---|
| | अनुकीर्त्तनं कथनम् । श्लाघा प्रशंसा । अनु-<br>शोचनं धनव्ययेन पश्चात्तापः । भग्नतेजः फल-<br>जनकशक्तिहीनम् । वृथा रक्षादिप्रयोजनं<br>विना ॥ * ॥ वैष्णवामृते भविष्यपुराणम् ।<br>"उपाध्यायस्य यो वृत्तिं दत्त्वाध्यापयति<br>द्विजान् ।<br>किन्न दत्तं भवेत्तेन धर्म्मकामार्थमिच्छता ॥"<br>इति ज्योतिस्तत्त्वम् ॥ | स यज्ञफलमादत्ते दानाच्छादनभोजनैः ॥<br>विवेको जीवितं दीर्घं धर्म्मकामार्थसम्पदः<br>। |

सर्व्वं तेन भवेद्दत्तं शास्त्राणां पोषणे कृते ॥
वाजपेयसहस्रस्य सम्यगिष्टस्य यत् फलम्
।
तत् फलं समवाप्नोति विद्यादानान्न संशयः
॥
तस्माद्देवालये नित्यं धर्म्मशास्त्रस्य वा
श्रुतेः ।
पठनं कारयेद्राजन् यदीच्छेद्धर्म्ममात्मनः ॥
गोभूहिरण्यवासांसि शयनान्यासनानि च ।
प्रत्यहं तेन दत्तानि भवन्ति नृपसत्तम ! ॥
धर्म्माधर्म्मं न जानाति लोकोऽयं विद्यया
विना ।
तस्मात् सदैव धर्म्मात्मन् विद्यादानरतो
भव ॥"
इति वह्निपुराणे विद्यादाननामाध्यायः ॥

**विद्यादेवी**, स्त्री, (विद्याया देवी ।) जिनषोडश-
देव्यन्तर्गतदेवीविशेषः । इति हेमचन्द्रः ॥
सर-
स्वती च ॥

**विद्याधनं**, क्ली, विद्यया अर्ज्जितधनम् । यथा ।
विद्याधनमाह कात्यायनः ।
"उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्ब्बकम्
।
विद्याधनन्तु तद्विद्यात् विभागे न
नियोजयेत् ॥
शिष्यादार्त्विज्यतः प्रश्नात्
सन्दिग्धप्रश्ननिर्णयात् ।
स्वज्ञानशंसनाद्वादाल्लब्धं प्राध्ययनात्तु यत्
॥
विद्याधनन्तु तत् प्राहुर्विभागे न प्रयोजयेत्
।
शिल्पेष्वपि हि धर्म्मोऽयं मूल्याद्यच्चाधिकं
भवेत् ॥
परं निरस्य यल्लब्धं विद्यया द्यूतपूर्ब्बकम् ।
विद्याधनन्तु तद्विद्यात् न विभाज्यं
बृहस्पतिः ॥"
यदि भवान् भद्रमुपन्यस्यति तदा भवत एव
तद्विद्यार्ज्जितधने तस्याधिकारः । अश्रुतो
मूर्खः ।
कल्पतरुमिताक्षरादीपकलिकासु
कात्यायनः ।
"परभक्तोपयोगेन विद्या प्राप्तान्यतस्तु या ।
तया लब्धं धनं यत्तु विद्यालब्धं तदुच्यते
॥"
अन्यतः पितृमातृकुलव्यतिरिक्तात् । अत्र
विशेषयति स एव ।
"नाविद्यानान्तु वैद्येन देयं विद्याधनं
क्वचित् ।
समविद्याधिकानान्तु देयं वैद्येन तद्धनम् ॥"
तत्रोच्चरितविद्यापदमुभाभ्यांसम्बध्यते ।
तेन
समविद्याधिकविद्यानांभागो न तु
न्यूनविद्या-
विद्ययोः । वैद्येन विदुषा । पुनर्विशेषयति ।
"कुले विनीतविद्यानां भ्रातृणां पितृतोऽपि
वा ।
शौर्य्यप्राप्तन्तु यद्वित्तं विभाज्यं तद्बृहस्पतिः
॥"
कुले स्वकुले पितामहपितृव्यादिभ्यः पितृत
एव
वा शिक्षितविद्यानां भ्रातृणां
यद्विद्याशौर्य्यप्राप्तं
धनं तद्विभजनीयमिति कल्पतरुरत्नाकरौ
।
इति दायतत्त्वम् ॥

**विद्याधरः**, पुं, देवयोनिविशेषः । इत्यमरः ॥ विद्यां
मन्त्रादिकं धरति पचादित्वादः ।
पुष्पदन्तादिः
कामरूपी खेचरः । इति भरतः ॥ (यथा,
रघुः । २ । ६० ।
"तस्मिन् क्षणे पालयितुः प्रजाना-
मुत्पश्यतः सिंहनिपातमुग्रम् ।
अवाङ्मुखस्योपरि पुष्पवृष्टिः
पपात विद्याधरहस्तमुक्ता ॥")
तस्योत्पत्त्यादिर्यथा, --
"नैकैर्यक्षगणैर्व्याप्तं त्रैलोक्यमप्सरोगणैः ।
प्रोच्चैः पौरुषभूषणान्यपि
कुलान्युद्धर्त्तुमीशः
क्षणात् ॥")

**विद्युज्जिह्वः**, पुं, (विद्युदिव चञ्चला जिह्वा यस्य ।)
राक्षसविशेषः । यथा, --
"अग्निकेतुश्च दुर्द्धर्षो रश्मिकेतुश्च
वीर्य्यवान् ।
विद्युज्जिह्वो द्विजिह्वश्च सूर्य्यशत्रुश्च
राक्षसः ॥"
इति रामायणे उत्तरकाण्डे ९० सर्गः ॥
(स्त्री, कुमारानुचरमातृगणविशेषः । यथा,
महाभारते । ९ । ४६ । ८ ।
"मेघस्वना भोगवती सुभ्रूश्च कनकावती
।
अलाताक्षी वीर्य्यवती विद्युज्जिह्वा च
भारत ! ॥")

**विद्युज्ज्वाला**,, स्त्री, (विद्युत इव ज्वाला यस्याः ।)
कलिकारीवृक्षः । इति राजनिर्घण्टः ॥
(विद्युतो
ज्वाला ।) तडित्प्रभा च ॥

**विद्युत्**, स्त्री, (विशेषेण द्योतते इति तच्छीला
वा । वि + द्युत + "भ्राजभासेति ।" ३ ।
२ । १७७ ।
इति क्विप् ।) सन्ध्या । इति मेदिनी । ते,
१५५ ॥
विद्योतते या । तत्पर्य्यायः । शम्पा २
शतह्रदा ३
ह्रादिनी ४ ऐरावती ५ क्षणप्रभा ६ तडित्
७
सौदामिनी ८ चञ्चला ९ चपला १० ।
इत्य-
मरः ॥ वीपा ११ सौदाम्नी १२ चिल-
मीलिका १३ सर्ज्जूः १४ अचिरप्रभा
१५
सौदामनी १६ अस्थिरा १७ मेघप्रभा
१८

मयैतद्देयमिति पणितं यत्रोपन्यासं
निस्तीर्य्य
लभते तन्न विभाज्यम् ।
शिष्यादध्यापितात्
आर्त्विज्यतः यजमानाद्दक्षिणया लब्धं धनं
न
प्रतिग्रहलब्धं वेतनरूपत्वात्तस्य । तथा
यत्कि-
ञ्चिद्विद्याप्रश्ने निस्तीर्णेऽपणितं यदि
कश्चित्
परितोषाद्ददाति । तथा यो ह्यस्मिन्
शास्त्रार्थे
अस्माकं संशयमपनयति तस्मै धनमिदं
ददा-
मीत्युपस्थितस्य संशयमपनीय यल्लब्धम् ।
तथा
वादिनोर्व्वादसन्देहे
न्यायकरणार्थमागतयोः
सम्यङ्निरूपणे यल्लब्धं षष्ठांशादिकम् ।
तथा
शास्त्रादिप्रकृष्टज्ञानं सम्भाव्य यत्
प्रतिग्रहा-
दिना लब्धम् । तथा शास्त्रज्ञानविवादे
अन्य-
त्रापि यत्र कुत्रचिदन्योऽन्यज्ञानविवादे
निर्ज्जित्य
यल्लब्धम् । तथैकस्मिन् देये बहूनामुपप्लवे
येन
प्रहृष्टात् यल्लब्धम् । तथा शिल्पादिविद्यया
चित्रकरसुवर्णकारादिभिर्यल्लब्धम् । तथा
द्यूते-
नापि परं निर्ज्जित्य यल्लब्धं तत्
सर्व्वमविभाज्य-
मितरैः । तस्माद्यया कयाचित् विद्यया
लब्ध-
मर्ज्जकस्यैव तन्न इतरेषामिति ।
प्रदर्शनार्थन्तु
कात्यायनेन विस्तारितमिति दायभागः ॥
नारदः ।
"कुटुम्बं विभृयाद्भ्रातुर्यो
विद्यामधिगच्छतः ।

तेषामुत्पादितान्योन्यं महागन्धर्व्वनायकाः
॥
उत्पादिताः पुनस्तैर्यै विक्रान्ता
युद्धदुर्म्मदाः ।
विद्याधरेश्वरास्ते तु खेचराः कामचारिणः
॥
हिरण्यरोमा कपिलः सुलोमा माधवस्तथा
।
इन्द्रकेतुश्च पिङ्गाङ्गो नादश्चैव महाबलः ॥
गण इत्येवमादिस्तु द्वे चान्ये वै सुलोचने ।
शिवा च मुमनाश्चैव ताभ्यामपि च विश्रवाः
॥
पुनश्चोत्पादयामास विद्या सौमनसं गणम् ।
एतैर्व्याप्तो ह्ययं लोको विद्याधरगणैस्त्रिभिः
॥
एभ्योऽनेकानि जातानि
ह्यवरान्तरचारिणाम् ।
लोकेऽस्मिन् गणशस्तानि
मन्त्रविद्याविचारि-
णाम् ।
विद्याधरास्तथान्येऽपि विद्याबलसमन्विताः
॥"
इति वह्निपुराणे काश्यपीयवंशः ॥ * ॥
षोडशरतिबन्धान्तर्गतचरमबन्धः । तस्य
लक्षणं
यथा, रतिमञ्जर्य्याम् ।
"नार्य्या ऊरुयुगं धृत्वा कराभ्यां ताडयेत्
पुनः ।
कामयेन्निर्भरं कामी बन्धो विद्याधरो मतः
॥"

**विद्यावान्,** [त्] त्रि, (विद्यास्त्यस्येति । विद्या +
मतुप् । मस्य वः ।) विद्याविशिष्टः । विद्या-
शब्दात् वतुप्रत्ययेन विष्पन्नः ॥ (यथा,
प्रबोध-
चन्द्रोदये । २ । ३१ ।
"विद्यावन्त्यपि कीर्त्तिमन्त्यपि
सदाचारावदा-
तान्यपि ।

अशनिः १९ । इति शब्दरत्नावली ॥
चट्टला २०
अचिररोचिः २१ राधा २२ नीलाञ्जना
२३ ।
इति जटाधरः ॥ सा चतुर्व्विधा । यथा, --
"अरिष्टनेमिपत्नीनामपत्यानीह षोडश ।
बहुपुत्त्रस्य विदुषश्चतस्रो विद्युतः स्मृताः
॥"
इति विष्णुपुराणे १ अंशे १५ अध्यायः ॥
चतस्रो विद्युतस्तु ।
"वाताय कपिला विद्युदातपाय हि
लोहिता ।
पीता वर्षाय विज्ञेया दुर्भिक्षायासिता भवेत्
॥"
इति ज्योतिःशास्त्रे प्रसिद्धाः । इति
तट्टीका ॥

**विद्युत्,** त्रि, (विगता द्युत् कान्तिर्य्यस्य ।)
निष्प्रभः । इति मेदिनी । ते, १५५ ॥
(विशिष्टा
द्युत् दीप्तिर्यस्येति विग्रहे । विशेषेण दीप्ति-
शाली । यथा, ऋग्वेदे । १ । २३ । १२ ।
"हस्काराद्विद्युतस्पर्य्यतो जाता अवन्तुनः
॥"
"हस्कारात् दीप्तिकारात् विद्युतो विशेषेण
दीप्यमानात् ।" इति तद्भाष्ये सायणः ॥)

**विद्युत्केशः**, पुं, (विद्युत इव दीप्तिशालिनः केशा
यस्य ।) राक्षसविशेषः । यथा, --
"स कालभगिनीं कान्यां भयां नाम महा-
भयाम् ।
उदावहदमेयात्मा स्वयमेव महामतिः ॥
स तस्यां जनयामास हेती राक्षसपुङ्गवः ।
पुत्त्रं पुत्त्रवतां श्रेष्ठो विद्युत्केशमिति श्रुतम्
॥"
इति रामायणे उत्तरकाण्डे ४ सर्गः ॥

**विद्युत्प्रियं**, क्ली, (विद्युतः प्रियम् । तदाकर्षक-
त्वात् ।) कांस्यम् । इति हेमचन्द्रः ॥

**विद्युत्वान्,** [त्] त्रि, (विद्युतः सन्त्यस्मिन्निति ।
विद्युत् + मतुप् ।) विद्युद्विशिष्टः । विद्यु-

| भागं विद्याधनात्तस्मात् स लभेताश्रुतोऽपि सन् ॥"<br>चिभृयादित्येकवचननिर्द्देशान्न बहवः । यदि विद्यामभ्यस्यतो भ्रातुः कुटुम्बमपरो भ्राता स्वधनव्ययशरीरायासाभ्यांसंवर्द्धयति तदा | | |
| --- | --- | --- |

च्छब्दात् वतुप्रत्ययेन निष्पन्नः ॥
(यथा, मेघ-
दूते । ६६ ।
"विद्युत्त्वन्तं ललितवनिताः
सेन्द्रचापं सचित्राः
सङ्गीताय प्रहतमुरजाः
स्निग्धगम्भीरघोषम् ॥"
पुं, पर्व्वतविशेषः । यथा, हरिवंशे ।
२२८ । ६१ ।
"विद्युत्त्वान् पर्व्वतः श्रीमानायतः
शतयोज-
नम् ।
विद्युतां यत्र सम्पाता निपात्यन्ते
नगोत्तमे ॥")

**विद्युन्माला**, स्त्री, अष्टाक्षरपादच्छन्दोविशेषः
।

यथा । "मो मो गो गो विद्युन्माला
।"
"वासो वल्ली विद्युन्माला वर्हश्रेणी
शाक्रश्चापः ।
यस्मिन्नास्तां तापोच्छित्त्यै
गोमध्यस्थः कृष्णा-
म्भोदः ॥"
इति छन्दोमञ्जरी ॥
अपि च ।
"सर्व्वे वर्णा दीर्घा यस्या विश्रामः
स्याद्वेदैर्वेदैः ।
विद्वद्वृन्दैर्वीणावाणि ! व्याख्याता
सा विद्यु-
न्माला ॥"
इति श्रुतबोधः ॥

**विद्युन्माली**, [न्] पुं, राक्षसविशेषः । यथा ।

विद्युन्माली नाम कश्चिद्राक्षसो
माहेश्वरः तस्मै
रुद्रेण सौवर्णं विमानं दत्तं
ततोऽर्कस्य पृष्ठतो
भ्रमन् विमानदीप्त्या रात्रिं
विलोपितवान्

त्थानप्रपाकः । चित्रौ नानाविधौ उद्गमप्रपाकौ
यस्य सः ॥ * ॥ पैत्तिकमाह ।
"पक्कोडुम्बरसङ्काशः श्यावो वा ज्वरदाहवान् ।
क्षिप्रोत्थानप्रपाकश्च विद्रधिः पित्तसम्भवः ॥"
श्लैष्मिकमाह ।
"शरावसदृशः पाण्डुः शीतस्निग्धोऽल्पवेदनः ।
चिरोत्थानप्रपाकश्च विद्रधिः श्लेष्मसम्भवः ।
तनुपीतसिताश्चैषामास्रावाः क्रमशो मताः ॥"
सान्निपातिकमाह ।
"नानावर्णरुजः स्रावो घाटालो विषमो महान् ।
विषमं पच्यते वापि विद्रधिः सान्निपातिकः ॥"
नाना अनेकविधाः । वर्णाः कृष्णरक्तपाण्डुरूपाः
।
रुजः तोददाहकण्ड्वादिरूपाः । स्रावाः तनु-
पीतसिता यस्य । घाटालः घाटा कृकाटिका-
स्यास्ति इति घाटालः । अत्युच्छ्रिताग्र इत्यर्थः
।
विषमः निम्नोन्नतः । विषमं पच्यते चापि
चिराचिरगभीरोत्तानोद्र्ध्वार्द्धभेदेन विषमं यथा
स्यात्तथा पच्यते ॥ * ॥ अभिघातजस्यागन्तोः
संप्राप्तिपूर्व्वकं लक्षणमाह ।
"तैस्तैर्भावैरभिहिते क्षते वापथ्यकारिणः ।
क्षतोष्मा वायुविसृतः सरक्तं पित्तमीरयेत् ॥
ज्वरस्तृष्णा च दाहश्च जायते तस्य देहिनः ।
आगन्तुविद्रधिर्ह्येष पित्तविद्रधिलक्षणः ॥"
तैस्तैर्भावैः काष्ठलोष्टपाषाणादिभिर्ह्ते यथा
रक्तस्रावो न भवति तथाभिहते क्षते कृते वा ।
अथवा खड्गशूलादिभिः क्षते यथा रक्तस्रावो
भवति तथा क्षते कृते क्षतोष्मा अत्र क्षतशब्देन
हतमात्रमुच्यते । तेनाभिहतक्षतयोरप्युष्मवायु-
विसृतः । अभिहतः अभिघातात् क्षते रक्त-
क्षयात् कुपितेन वायुना प्रसृतः ईरयेत् कोप-
येत् ॥ * ॥ रक्तजमाह ।
"कृष्णस्फोटावृतः श्यावस्तीव्रदाहरुजाज्वरः ।
पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते ॥" * ॥
अधिष्ठानविशेषेण लिङ्गविशेषं बोधयितुमाभ्य-
न्तरान् विद्रधीनाह ।
"आभ्यन्तरानतस्तूद्र्ध्वं विद्रधीन् परिचक्ष्यते ।
गुर्व्वसात्मविरुद्धान्नशुष्कशाकान्नभोजनात्॥

स्रावमार्गमाह ।
"नाभेरुपरिजाः पक्वा यान्त्यूद्र्ध्वमितरे
त्वधः ।
अधः स्रुतेषु जीवेच्च स्रुतेषूद्र्ध्वं न जीवति
॥"
नाभेरुपरिजा वुक्कादिजाताः । यान्ति
स्रवन्ति
ऊद्र्ध्वमुखात् । इतरे वस्त्यादिजाः । अधः
गुदात् । नाभिजस्तूभाभ्यां मार्गाभ्याम् ।
तथा
च हारीतः ।
"ऊद्र्ध्वप्रभिन्नेषु मुखान्नराणां
प्रवर्त्ततेऽसृक्सहितो हि पूयः ।
अधःप्रभिन्नेषु तु पायुमार्गाद्-
द्वाभ्यां प्रवृत्तिस्त्विह नाभिजेषु ॥" * ॥
साध्यत्वादिकमाह ।
"अधःस्रुतेषु जीवेत्तु स्रुतेषूद्र्ध्वं न जीवति ।
हृन्नाभिवस्तिपर्य्यायि तेषु भिन्नेषु बाह्यतः ।
जीवेत् कदाचित् पुरुषो नेतरेषु कदाचन ॥"
हृन्नाभिवस्तिपर्य्यायि प्लीहक्लोमादिजातेषु
।
बाह्यतः शस्त्रवैद्यव्यापारेण भिन्नेषु पुरुषः
कदाचित् जीवेत् । इतरेषु हृन्नाभिवस्तिजेषु
तथा भिन्नेषु न जीवेत् । हृदादीनां मर्म्मत्वात्
।
अतएव भोजः ।
"असाध्यो मर्म्मजो ज्ञेयः पक्वोऽपक्वश्च
विद्रधिः ।
सन्निपातोत्थितोऽप्येवं पक्व एव हि
वस्तिजः ॥
हृज्जा नाभेरधोजश्च साध्या मर्म्मसमीपतः
।
अपक्वश्चैव पक्वश्च साध्यो नोपरि
नाभितः ॥
आध्मानं बद्धनिष्पन्दं
छर्दिहिक्कातृषान्वितम् ।
रुजाश्वाससमायुक्तं विद्रधिर्नाशयेन्नरम् ॥"
* ॥
बाह्यविद्रधीनां साध्यासाध्यत्वमाह ।

ततोऽर्केण निजतेजसा द्रावयित्वा तद्विमानं
पातितं तच्छ्रुत्वा कुपिते रुद्रे भयादर्कः पराद्र-
वत् ततो रुद्रस्य क्रूरया दृष्ट्या दन्दह्यमानः
पतन् वाराणस्यां पतितो लोलार्कनाम्ना
विख्यातः । इति श्रीभागवते १ स्कन्धे ७ अध्याय-
टीकायां श्रीधरस्वामी ॥ अपि च ।
"धर्म्मस्य पुत्त्रो बलवान् सुषेण इति विश्रुतः ।
स विद्युन्मालिना सार्द्धं अयुध्यत महाकपिः ॥"
इति रामायणे युद्धकाण्डे ४३ सर्गः ॥

**विद्रं**, क्ली, छिद्रम् । इति शब्दचन्द्रिका ॥

**विद्रधिः**, पुं, रोगविशेषः । तत्पर्य्यायः । विदरणम् २

हृद्ग्रन्थिः ३ हृद्व्रणः ४ । इति राजनिर्घण्टः ॥
तत्र विद्रधेः संप्राप्तिपूर्ब्बकं सामान्यं लक्षण-
माह ।
"त्वग्रक्तमांसमेदांसि प्रदुष्यास्थिसमाश्रिताः ।
दोषाः शोथं शनैर्घोरं जनयन्त्युश्रिता भृशम् ॥
महामूलं रुजावन्तं वृत्तं वाप्यथवायतम् ।
स विद्रधिरिति ख्यातो विज्ञेयः षड्विधश्च सः ॥"
अस्थिसमाश्रिता दोषा इति वक्ष्यमाणाद्व्रण-
शोथाद्विद्रधेर्भेदार्थम् । यतो व्रणशोथे दोषा-
णामस्थिसमाश्रयनियमो नास्ति । घोरं व्रण-
शोथाद्दारुणम् । आयतं दीर्घम् ॥ * ॥ षड्-
अतिसञ्चीयव्यायामवेगाघातविदाहिभिः ।
पृथक् सम्भूय वा दोषाः कुपिता गुल्मरूपि-
णम् ॥
वल्मीकवत् समुन्नद्धमन्तः कुर्व्वन्ति विद्रधिम् ।
गुदे वस्तिमुखे नाभ्यां कुक्षौ वंक्षणयोस्तथा ॥
वुक्कयोः प्लीह्नि यकृति हृदि वा क्लोम्नि वाप्यथ ।
येषां चिह्नानि जानीयात् बाह्यविद्रधिलक्षणैः ।
सम्भूय वा मिलित्वा वा समुन्नर्द्धं तदुन्नतम् ॥" * ॥
स्थानविशेषेण रूपविशेषमाह ।
"गुदे वातनिरोधस्तु वस्तौ कृच्छ्राल्पमूत्रता ।
नाभ्यां हिक्का तथाटोपः कुक्षौ मारुतकोपनम् ॥
कटीपृष्ठग्रहस्तीव्रो वक्षणोत्थे च विद्रधौ ।
वुक्कयोः पार्श्वसंकोचः प्लीह्नः श्वासनिरोधनम् ॥
सर्व्वाङ्गप्रग्रहस्तीव्रो हृदि कासश्च जायते ।
श्वासो यकृति हिक्का च क्लोम्नि पेपीयते पयः ॥"
"साध्या विद्रधयः पञ्च विवर्ज्ज्यः सान्निपातिकः ।
आमं पक्वं विदग्धत्वं तेषां शोथवदादिशेत् ॥"
शोथवत् वक्ष्यमाणव्रणशोथवत् ॥ * ॥
अथ विद्रधेश्चिकित्सा ।
"जलौकापातनं शस्तं सर्व्वस्मिन्नपि विद्रधा ।
मृदुर्व्विरेको लघ्वन्नं स्वेदः पित्तोत्तरं विना ॥
अपक्वविद्रधौ युञ्ज्याद्व्रणशोथवदौषधम् ।
वातघ्नमूलकल्कैर्व्वा वसातैलघृतान्वितैः ॥
सुखोष्णो वह्लो लेपः प्रयोज्यो वातविद्रधौ ।
यवगोधूममुद्गैश्च पिष्टैराज्येन लेपयेत् ॥
विलीयते क्षणेनैव ह्यविपक्वस्तु विद्रधिः ।
पैत्तिकं विद्रधिं वैद्यः प्रदिह्यात् सर्पिषा युतैः ।
पयस्योशीरमधुकचन्दनैर्दुग्धपेषितैः ॥
पयस्यानेकार्थत्वात् अत्र क्षीरकाकोली गुणा-
धिक्यात् । तस्या अलाभे अश्वगन्धा ग्राह्या ।
"पञ्चवल्कलकल्केन घृतमिश्रेण लेपयेत् ।
पिबेद्वा त्रिफलाक्वाथं त्रिवृत्कल्काक्षसंयुतम् ॥
इष्टिकासिकतालोहकीट्टैर्गोशकृता सह ।
मूत्रैः सुखोष्णैर्लेपन स्वेदयेत् श्लेष्मविद्रधिम् ॥
दशमूलीकषायेण सस्नेहेन घृतेन च ।
शोथं व्रणं वा कोष्णेन सशूलं परिषेचयेत् ॥
पित्तविद्रधिवत् सर्व्वाः क्रिया निरवशेषतः ।
विद्रधौ कुशलः कुर्य्यात् रक्ताङ्गन्तु निमित्तयोः ॥
रक्तचन्दनमञ्जिष्ठाविशामधुकगैरिकैः ।
क्षीरेण विद्रधौ लेपो रक्ताङ्गन्तु निमित्तके ॥

| | | |
|---|---|---|
| विधत्वं विवृणोति ।<br>“पृथग्दोषैः समस्तैश्च<br>क्षतेनाप्यसृजा तथा ।<br>षण्णामपि हि तेषान्तु लक्षणं<br>संप्रचक्ष्यते ॥” * ॥<br>तत्र वातिकस्य लक्षणमाह ।<br>“कृष्णोऽरुणो वा विषमो<br>भृशमत्यर्थवेदनः ।<br>चित्रोत्थानप्रपाकश्च<br>विद्रधिर्व्वातसम्भवः ॥”<br>विषमो भृशं क्षणमल्पः क्षणं महान् ।<br>चित्रो- | | |

कृष्णाजाजी विशाला च धामार्गवफलं तथा ।
पीतं ह्येते निहन्त्याशु विद्रधीन् कोष्ठसम्भवान् ॥”
धामार्गवफलं कोषातकीफलम् ।
“श्वेतवर्षाभुवो मूलं मूलं वरुणकस्य च ।
जलेन क्वथितं पीतमन्तर्व्विद्रधिहृत् परम् ॥
गायत्रीत्रिफलानिम्बकुक्का मधुकं समम् ।
त्रिवृत्पटोलमूलाभ्यां चत्वारोऽंशाः पृथक् पृथक् ॥
मसूरान्निस्तुषान् दद्यात् एष क्वाथो घृताज्जयेत् ।
विद्रधिगुल्मवीसर्प्दाहमोहज्वरापहः ।
तृण्मूर्च्छाच्छर्द्दिहृद्रोगपित्तासृक्कुष्ठकामलाः ॥”
वाग्भटात् ।
“शिग्रुमूलं जले धौतं पिष्टं वस्त्रेण गालयेत् ।
तद्रसं मधुना पीत्वा हन्त्यन्तर्व्विद्रधिं नरः ॥
शोभाञ्जनकनिर्यूहो हिङ्गुसैन्धवसंयुतः ।
हन्त्यन्तर्व्विद्रधिं जन्तोः प्रातः प्रातर्निषेवितः ॥”
निर्यूहः क्वाथः । इति विद्रध्याधिकारः । इति भावप्रकाशः ॥

**विद्रधिनाशनः**, पुं, (विद्रधिं रोगविशेषं नाशयतीति । नश + णिच् + ल्युः ।) शोभाञ्जनवृक्षः । इति त्रिकाण्डशेषः ॥

**विद्रवः**, पुं, (विद्रवणमिति । वि + द्रु + “ऋदोरप् ।” ३ । ३ । ५७ । इत्यप् ।) पलायनम् । इत्यमरः ॥ (यथा, महाभारते । ७ । १०६ । ३८ ।
“तैः शरैस्तव सैन्यस्य विद्रवः सुमहानभूत् ॥”)
बुद्धिः । इति मेदिनी । वे, ५१ ॥ निन्दा । इति शब्दरत्नावली ॥ क्षरणम् । इति केचित् ॥
(विबाशः । यथा, बृहत्संहितायाम् । ३४ । १३ ।
“भौमे कुमारबलपतिसैन्यानां विद्रवोऽग्निशस्त्रभयम् ॥”)

**विद्रावः**, पुं, विद्रवः । विपूर्ब्बद्रुधातोर्घञ्प्रत्ययेन निष्पन्नः ॥

**विद्रावितं**, त्रि, (वि + द्रु + णिच् + क्तः ।) पलायितम् । यथा, --
“विद्राविते भूतगणे ज्वरस्तु त्रिशिराभ्ययात् ॥”
रत्नवृक्षः । इति मेदिनी । मे, ५३ ॥ (यथा, रघुः । १३ । १३ ।
“तवाधरस्पर्द्धिषु विद्रुमेषु
पर्य्यस्तमेतत् सहसोर्म्मिवेगात् ।
ऊर्द्ध्वाङ्कुरप्रोतमुखं कथञ्चित्
क्लेशादपक्रामति शङ्ख्यूथम् ॥”)

**विद्रुमलता**, स्त्री, (विद्रुम इव लता ।) नलीनामगन्धद्रव्यम् । इत्यमरः ॥

**विद्रुमलतिका**, स्त्री, (विद्रुमलता । स्वार्थे कन् । टापि अत इत्वम् ।) नलिका । इति राजनिर्घण्टः ॥

**विद्वत्कल्पः**, त्रि, (विद्वस् + कल्पः ।) ईषदूनो विद्वान् । इति मुग्धबोधव्याकरणम् ॥

**विद्वत्तमः**, त्रि, (विद्वस् + तमः ।) अयमेषामतिशयेन विद्वान् । इति व्याकरणम् ॥

**विद्वत्तरः**, त्रि, (विद्वस् + तर ।) अयमनयोरतिशयेन विद्वान् । इति व्याकरणम् ॥

**विद्वद्देशीयः**, त्रि, (ईषदूनो विद्वान् । विद्वस् + देशीयर् ।) विद्वत्कल्पः । इति व्याकरणम् ॥

**विद्वद्देश्यः**, त्रि, (ईषदूनो विद्वान् । विद्वस् + देश्यः ।) विद्वत्कल्पः । इति मुग्धबोधव्याकरणम् ॥

**विद्वान्**, [स्] त्रि, (वेत्तीति । विद् + शतृ । “विदेः शतुर्व्वसुः ।” ७ । १ । ३६ । इति शतुर्व्वसुरादेशः ।) आत्मवित् । प्राज्ञः । पण्डितः । इति मेदिनी ॥
(यथा, मनुः । १ । ९७ ।
अभिचारकर्म्मविशेषः । तस्य विहितदिनादि यथा, --
“सूर्य्योदयं समारभ्य घटिकादशकं क्रमात् ।
ऋतवः स्युर्व्वसन्ताद्या अहोरात्रं दिने दिने ॥
वसन्तग्रीष्मवर्षाश्च शरद्धेमन्तशैशिराः ।
हेमन्तः शान्तिके प्रोक्तो वसन्तो वश्यकर्म्मणि ॥
शिशिरः स्तम्भने ज्ञेयो विद्वेषे ग्रीष्म ईरितः ।
पौर्णमासी मन्दभानुयुक्ता विद्वेषकर्म्मणि ॥
वश्यं पूर्ब्बेऽह्नि मध्याह्ने विद्वेषोच्चाटनं तथा ।
शान्तिपुष्टी दिनस्यान्ते सन्ध्याकाले च मारणम् ॥
कुर्य्याच्च स्तम्भनं कार्य्यं हर्य्यक्षवृश्चिकोदये ।
द्वेषोच्चाटादिकं कर्म्म कुलीरे वा तुलोदये ॥”
भूतोदयनियममाह ।
“जलं शान्तिविधौ शस्तं वश्ये वह्निरुदीरितः ।
स्तम्भने पृथिवी शस्ता विद्वेषे व्योम कीर्त्तितम् ॥”
दिङ्नियममाह ।
“याम्ये रक्षसि विद्वेषं शान्तिं वारुणवायवे ॥”
नक्षत्रनियममाह ।
“विद्वेषोच्चाटनं वह्निवायुयोगे च कारयेत् ॥ * ॥
अथ विद्वेषणं वक्ष्ये मिथो विद्वेषणं रिपोः ।
करणीयं महेशानि ! यदुक्तं मालिनीमते ॥
अन्योन्ययुद्धसंरम्भरुषितौ समरे युतौ ।

इति श्रीभागवते बाणयुद्धम् ॥

**विद्रुतः**, त्रि, (वि + द्रु + क्तः ।) प्राप्तद्रवीभाव-

घृतादिः । तत्पर्य्यायः । विलीनः २ द्रुतः ३ ।
इत्यमरः ॥ पलायितश्च ॥ (यथा, रघुः । ११ ।
४४ ।
“विद्रुतक्रतुमृगानुसारिणं
येन बाणमसृजत वृषध्वजः ॥”
पीडितः । यथा, मनुः । ७ । ३ ।
“अराजके हि लोकेऽस्मिन्सर्व्वतो विद्रुते भयात् ।
रक्षार्थमस्य सर्व्वस्य राजानमसृजत् प्रभुः ॥”)

**वद्रुमः**, पुं, (विशिष्टो द्रुमः । यद्वा, विशिष्टो

द्रुर्वृक्षोऽस्त्यस्येति । “द्युद्रुभ्यां मः ।” ५ । २ ।
१०८ । इति मः ।) प्रबालः । (यथा, ऋतु-
संहारे । ६ । १७ ।
“आमूलतो विद्रुमरागताम्राः
सपल्लवं पुष्पचयं दधानाः ।
कुर्व्वन्त्यशोका हृदयं सशोकं
निरीक्ष्यमाणा नवयौवनानाम् ॥”)

“ब्राह्मणेषु तु विद्वांसो विद्वतसु
कृतबुद्धयः ।
कृतबुद्धिषु कर्त्तारः कर्त्तृषु ब्रह्मवेदिनः
॥”)

**विद्विषः**, पुं, (विशेषेण द्वेष्टीति । वि + द्विष् +

इगुपधेति कः ।) शत्रुः । विद्वेषके, त्रि ।
विपूर्ब्बकद्विषधातोः कप्रत्ययेन
निष्पन्नः ॥

**विद्वेषः**, पुं, (वि + द्विष् + घञ् ।) शत्रुता । तत्-

पर्य्यायः । वैरम् २ विरोधः ३ ।
इत्यमरः ॥
अनुशयः ४ द्वेषः ५ समुच्छ्रयः ६
वैरत्वम् ७ ।
इति जटाधरः ॥ द्वेषणम् ८ । इति
शब्दरत्ना-
वली ॥ (यथा, आर्य्यासप्तशत्याम् ।
६०२ ।
“सुभग स्वभवनभित्तौ भवता संमर्द्य
पीडिता
सुतनुः ।
सा पीडयैव जीवति दधती वैद्येषु
विद्वेषम् ॥”)

**विद्वेषकः**, त्रि, विद्वेष्टा । द्वेषकर्त्ता । विरोधकः ।

वैरी । विद्वेष्टीति
विपूर्ब्बद्विषधातोर्णक(ण्वुल्)
प्रत्यथेन निष्पन्नः ॥ (यथा, महाभारते
। १३ ।
७३ । १४ ।
“न मित्रध्रुङ्नैकृतिकः कृतघ्नः
शठोऽनृजुर्धर्म्मविद्वेषकश्च ॥”)

**विद्वेषणं**, क्ली, विद्वेषः । विपूर्ब्बद्विंषधातोरनट्

(ल्युट्)प्रत्ययेन निष्पन्नम् ॥ (यथा,
महाभारते ।
३ । १९५ । ३ ।
“विद्वेषणं परमं जीवलोके
कुर्य्यान्नः पार्थिव याच्यमानः ।
तत्त्वां पृच्छामि कथयन्तु राजन्
दद्याद्भवान् दयितञ्च मेऽद्य ॥”)

तदीयनखरोड्डीनधूलिमादायसाधकः ॥
धूलिना तेन विद्वेषस्ताडनादभिजायते ॥
* ॥
परस्परं रिपोर्व्वैरं मित्रेण सह निश्चितम् ।
महिषाश्वपुरीषाभ्यां गोमूत्रेण समालिखेत्
॥
यस्य नाम तयोः शीघ्र विद्वेषश्च
परस्परम् ।
रक्तेन महिषाश्वेन श्मशानवस्त्रके लिखेत्
॥
यस्य नाम भवेत्तस्य काकपक्षेण
लेखितम् ।
वेष्टयेत् द्विजचाण्डालकेशैरेकतरैस्ततः
॥
गर्त्ते आमशरावन्तु पितृकाननमध्यतः ।
षट्कोणचक्रमध्ये तु रिपोर्नामसमन्वितम्
॥
मन्त्रराजं प्रवक्ष्यामि महाभैरवसंज्ञकम् ।
ॐ नमो महाभैरवाय रुद्ररूपाय श्मशान-
वासिने अमुकामुकयोर्व्विद्वेषं कुरु कुरु
सुरु
सुरु हुँ हुँ फट् ।
एतन्मन्त्रं लिखेत्तत्र विद्वेषो जायते ध्रुवम्
॥”
इति षट्कर्म्मदीपिका ॥
(विशेषेण द्वेष्टीति । वि + द्विष + ल्युः ।
विद्वे-
षके, त्रि । यथा, हरिवंशे । २८ । ३० ।
“नास्ति-वादार्थशास्त्रं हि धर्म्मविद्वेषणं
परम् ॥”
तथा च महाभारते । १३ । १२६ । २ ।
“ब्राह्मणानां परीवादो मम विद्वेषणं महत्
।
ब्राह्मणैः पूजितैर्नित्यं पूजितोऽहं न
संशयः ॥”)

**विद्वेष(षि)णी**, स्त्री, स्त्रीविशेषः । यथा, --

“विद्वेषणी तु या कन्या
भृकुटीकुटिलानना ।
तस्या द्वौ तनयावास्तामयकारप्रकाशकौ
॥”

| | | इति मार्कण्डेयपुराणे दुःसहवंशोत्पत्तिः ॥<br>**विद्वेषी**, [न्] त्रि, (विशेषेण द्वेष्टीति । वि + द्विष् + णिनिः ।) यद्वा, विद्वेषशब्दादस्त्यर्थे इन्प्रत्य-<br>येन निष्पन्नः । विद्वेषविशिष्टः । वैरी । (यथा,<br>महाभारते । १३ । १४५ । ५८ ।<br>“अपरे स्वल्पविज्ञाना धर्म्मविद्वेषिणो नराः ।<br>ब्राह्मणान् वेदविदुषो नेच्छन्ति परिसर्पितुम् ॥”) |
|---|---|---|

"https://sa.wikisource.org/w/index.php?title=शब्दकल्पद्रुमः/विगानं&oldid=44066" इत्यस्माद् पुनः प्राप्तिः

**विध**, श विधौ । इति कविकल्पद्रुमः ॥ (तुदा०-

परं०-सक०-सेट् ।) विधिर्विधानम् ।
श, विधति
वेधा जगत् । अनेकार्थत्वात्
छिद्रकरणेऽप्ययम् ।
विधितच्छिद्रितौ विद्धे । इत्यमरः ॥
कर्णवेधः ।
इति दुर्गादासः ॥

**विधः**, पुं, (विध्यते क्रियते इति । विध + धञर्थे

कः ।) विमानम् । हस्त्यन्नम् । प्रकारः
। वेध-
नम् । ऋद्धिः । इति
भरतधृतरभसाजयौ ॥

**विधवनं**, क्ली, कम्पनम् । विपूर्ब्बधूधातोभवि अनट्

(ल्युट्)प्रत्ययेन निष्पन्नम् ॥

**विधवा**, स्त्री, (विगतो धवो भर्त्ता यस्याः ।) मृत-

भर्त्तृका । तत्पर्य्यायः । विश्वस्ता २ ।
इत्यमरः ॥
जालिका ३ रण्डा ४ यतिनी ५ यतिः
६ । इति
शब्दरत्नावली ॥ (यथा, ऋग्वेदे । १०
। ४० । २ ।
"को वां शयुत्रा विधवेव देवरं
मर्य्यं न योषा कृणुते सधस्थ आ ॥")
तस्याः कर्त्तव्याकर्त्तव्यानि यथा ।
विष्णुः ।
"मृतेभर्त्तरि ब्रह्मचर्य्यं तदन्वारोहणं वा
इति ।"
ब्रह्मचर्य्यं मैथुनवर्ज्जनं
ताम्बूलादिवर्ज्जनञ्च ।
यथा, प्रचेताः ।
"ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च
भोजनम् ।
यतिश्च ब्रह्मचारी च विधवा च
विवर्ज्जयेत् ॥"

अलावुर्वर्त्तुलाकारा वर्ज्जनीया च तैरपि ॥
पर्य्यङ्कशायिनी नारी विधवा पातयेत् पतिम् ।
यान आरोहणं कृत्वा विधवा नरकं व्रजेत् ॥
न कुर्य्यात् केशसंस्कारं गात्रसंस्कारमेव च ।
केशवेणीजटारूपं तत्क्षौरं तीर्थकं विना ॥
तैलाभ्यङ्गं न कुर्व्वीत न हि पश्यति दर्पणम् ।
मुखञ्च परपुंसाञ्च यात्रा नृत्यं महोत्सवम् ॥
नर्त्तकं गायनञ्चैव सुवेशं पुरुषं शुभम् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ८३ अध्यायः
॥
(विधवायास्तु पत्यन्तर-ग्रहणं निषिद्धं न
तद्विवाहशब्दवाच्यञ्च । तत्तु विशेषतो विचा-
रेण ग्रन्थविस्तृतिर्भवेदतस्तद्भीतः केवलं कति-
पयानि वचनान्युद्धृत्य दर्शयामि तानि
सुधीभिर्व्विचारणीयानीति ॥ तत्र याज्ञवल्क्यः ।
"अविप्लुतब्रह्मचर्य्यो लक्षण्यां स्त्रियमुद्वहेत् ।
अनन्यपूर्व्विकां कान्तामसपिण्डां यवीयसीम् ॥"
अनन्यपूर्ब्बिकां दानेनोप भोगेनवा पुरुषान्तरा-
परिगृहीताम् ॥ व्यासः । २ । ३ ।
"सवर्णामसमानार्षाममातृपितृगोत्रजाम्।
अनन्यपूर्ब्बिकां लध्वीं शुभलक्षणसंयुताम् ॥"
गोतमः । ४ । १ ।
"गृहस्थः सदृशीं भार्य्यां विन्देतानन्यपूर्ब्बि-
काम् ॥"
वशिष्ठः । ८ । १ ।
"गृहस्थो विनीतक्रोधहर्षो गुरुणानुज्ञातः
स्नात्वा असमानार्षां अस्पृष्टमैथुनां भार्य्यां
विन्देत ॥" हारीतः । ४ । १ ।
"असमानार्षगोत्रां हि कन्यां सभ्रातृकां शुभाम् ।
सर्व्वावयवसम्पन्नां सुवृत्तामुद्वहेन्नरः ॥"
पारस्करगृह्यसूत्रम्।
"अग्निमुपधाय कुमार्य्याः पाणिं गृह्णीयात्
त्रिषु त्रिषूत्तरादिषु ॥"
कन्याशब्दार्थः कथ्यते । "कन्या कुमारी" इत्य-
मरः । "कन्यापदस्यादत्तस्त्रीमात्रवचनेन ।"
इत्यादि दायभागटीकायां आचार्य्यचूडा-
मणिः । "कन्यापदस्यापरिणीतामात्रवचनात्।"
इति रघुनन्दनः ॥ "अनूढात्वेन कन्यापदस्य

न द्वितीयश्च साध्वीनां
क्वचिद्भर्त्तोपदिश्यते ॥
पतिं हित्वापकृष्टं स्वमुत्कृष्टं या निषेवते
।
निन्द्यैव सा भवेल्लोके परपूर्व्वेति चोच्यते
॥"
लघुहारीतः ।
"स्वगोत्राद् भ्रस्यते नारी विवाहात्
सप्तमे पदे ।
पतिगोत्रेण कर्त्तव्या तस्याः
पिण्डोदकक्रिया ॥"
मनुः । ९ । ४७ ।
"सकृदंशो निपतति सकृत्कन्या
प्रदीयते ।
सकृदाहुर्द्ददानीति त्रीण्येतानि सतां
सकृत् ॥"
तत्रैव । ५९ -- ६५ ।
"देवराद्वा सपिण्डाद्वा स्त्रिया
सम्यङ्नियुक्तया ।
प्रजेप्सिताधिगन्तव्या सन्तानस्य
परिक्षये ॥
विधवायां नियुक्तस्तु घृताक्तो वाग्यतो
निशि ।
एकमुत्पादयेत् पुत्त्रं न द्वितीयं कथञ्चन
।
द्वितीयमेके प्रजनं मन्यन्ते स्त्रीषु तद्विदः
॥
अनिर्वृ तं नियोगार्थं पश्यतो
धर्म्मतस्तयोः ॥
विधवायां नियोगार्थे निर्व्वृते तु
यथाविधि ।
गुरुषच्च स्नुषावच्च वर्त्तेयातां परस्परम्
॥
नियुक्तौ यौ विधिं हित्वा वर्त्तेयातान्तु
कामतः ।
तावुभौ पतितौ स्यातां स्नुषाग-
गुरुतल्पगौ ॥
नान्यस्मिन् विधवा नारी नियोक्तव्या
द्विजा-

अभ्यञ्जनं आयुर्वेदोक्तं पारिभाषिकम् ।
स्मृतिः ।
"एकाहारः सदा कार्य्यो न द्वितीयः कदाचन ।
पर्य्यङ्कशायिनी नारी विधवा पातयेत् पतिम् ॥
गन्धद्रव्यस्य सम्भोगो नैव कार्य्यस्तया पुनः ।
तर्पणं प्रत्यहं कार्य्यं भर्त्तुः कुशतिलोदकैः ॥"
एतत्तु तर्पणं पुत्त्रपौत्त्राद्यभाव इति मदनपारि-
जातः ॥
"वैशाखे कार्त्तिके माघे विशेषनियमञ्चरेत् ।
स्नानं दानं तीर्थयात्रां विष्णोर्नामग्रहं मुहुः ॥"
इति शुद्धितत्त्वम् ॥ * ॥
अपि च ।
"ब्राह्मणी पतिहीना या भवेन्निष्कामिनी सदा ।
एकभक्ता दिनान्ते सा हविष्यान्नरता सदा ॥
न घत्ते दिव्यवस्त्रञ्च गन्धद्रव्यं सुतैलकम् ।
स्रजञ्च चन्दनञ्चैव शङ्खसिन्दूरभूषणम् ॥
त्यक्त्वा मलिनवस्त्रा स्यान्नित्यं नारायणं स्मरेत् ।
नारायणस्य सेवाञ्च कुरुते नित्यमेव च ॥
तन्नामोच्चारणं शश्वत् कुरुतेऽनन्यभक्तितः ।
पुत्त्रतुल्यञ्च पुरुषं सदा पश्यति धर्म्मतः ॥
मिष्टान्नं न च भुङ्क्ते सा न कुर्य्याद्विभवं व्रजम् ।
एकादश्यां न भोक्तव्यं कृष्णजन्माष्टमीदिने ॥
श्रीरामस्य नवम्याञ्च शिवरात्रौ पवित्रया ।

सपत्नीकन्या बोधकतया अमुख्यत्वप्रसक्तेः तद्रूपे-
णैव कन्यापदस्य शक्तेः ।" इति श्रीकृष्णतर्का-
लङ्कारः ॥ पूर्ब्बोक्तैर्व्वचनैः कुमारीणामेव परि-
णये विवाहशब्दवाच्यत्वं नतूढानाम् ॥
मनुः । ५ । १५१ -- १५२ ।
"यस्मै दद्यात् पिता त्वेनां भ्राता वानुमते पितुः ।
तं शुश्रूषेत जीवन्तं संस्थितञ्च न लङ्घयेत् ॥
मङ्गलार्थं स्वस्त्ययनं यज्ञस्तासां प्रजापतेः ।
प्रयुज्यते विवाहेषु प्रदानं स्वाम्यकारणम् ॥"
तत्रैव । १६० -- १६३ ।
"मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता ।
स्वर्गं गच्छत्यपुत्त्रापि यथा ते ब्रह्मचारिणः ।
अपत्यलोभात् या तु स्त्री भर्त्तारमतिवर्त्तते ।
सेहनिन्दामवाप्नोति पतिलोकाच्च हीयते ॥
नान्योत्पन्ना प्रजास्तीह न चाप्यस्य परिग्रहे ।

तिमिः ।
अन्यस्मिन् हि नियुञ्जाना धर्म्मं हन्युः सना-
तनम् ॥
नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्त्यते क्वचित् ।
न विवाहविधाधुक्तं विधवावेदनं क्वचित् ॥"
"न च विवाहविधायकशास्त्रे अन्येन पुरुषेण
सह पुनर्व्विवाह उक्तः ॥" इति कुल्लूकः ॥
तत्रैव । ६८ -- ७० ।
"ततः प्रभृति यो मोहात् प्रमीतपतिकां स्त्रियम् ।
नियोजयत्यपत्यार्थं तं विगर्हन्ति साधवः ॥
यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।
तामनेन विधानेन निजो विन्देत देवरः ॥
यथाविध्यभिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् ।
मिथोभजे दाप्रसवात् सकृत् सकृदृतावृतौ ॥"
"आगर्भग्रहणात् सकृद्गमनोपदेशाच्च यस्मै
वाग्दत्ता तस्यैवापत्यं भवति ।" इति कुल्लूक-
भट्टः ॥ तत्रैव । ७१ ।
"न दत्त्वा कस्यचित् कन्यां पुनर्द्दद्याद्विचक्षणः ।
दत्त्वा पुनः प्रयच्छन् हि प्राप्नोति पुरुषानृतम् ॥"
तत्रैव । ७९ ।
"उन्मत्तं पतितं क्लीवमबीजं पापरोगिणम् ।
न त्यागोऽस्ति द्विषन्त्याश्च नच दायापवर्त्तनम् ॥"
तत्रैव । ९७ ।

| | | |
|---|---|---|
| अघोरायाञ्च प्रेतायां<br>चन्द्रसूर्य्योपरागयोः ॥<br>भ्रष्टद्रव्यं परित्याज्यं भुज्यते परमेव च<br>।<br>ताम्बूलं विधवास्त्रीणां यतीनां<br>ब्रह्मचारिणाम् ।<br>सन्न्यासिनाञ्च गोमांसं सुरातुल्यं श्रुतौ<br>श्रुतम् ॥<br>रक्तशाकं मसूरञ्च जम्बीरं पर्णमेव च । | | “कन्यायां दत्तशुल्कायां म्रियते<br>यदिशुल्कदः ।<br>देवराय प्रदातव्या यदि कन्यानुमन्यते<br>॥”<br>आश्वलायनगृह्यसूत्रम् । ४ । २ । २१ ।<br>तामुत्थापयेत् देवरः पतिस्थानीयः<br>अन्तेवासी<br>जरद्दासः । उदीर्ष्वनार्य्यभि जीवलोकम्<br>॥<br>अथ पत्नीमुत्थापयेत् कः देवरः<br>पतिस्थानीयः<br>स पतिस्थानीय इत्युच्यते । अनेन<br>ज्ञायते<br>पतिकर्त्तृकं कर्म्म पुंसवनादि<br>पत्यसम्भवे देवरः |

कुर्य्यात् । अन्तेवासी शिष्यः स वा यो बहुकालं
दास्यं कृत्वा वृद्धोऽभूत् स वा ॥ * ॥
पराशरः ।
४ । २५ -- २६ ।
“ज्येष्ठभ्राता यदा तिष्ठेत् आधानं नैव कारयेत् ।
अनुज्ञातस्तु कुर्व्वीत शङ्खस्य वचनं यथा ॥
नष्टे मृते प्रव्रजिते क्लीवे च पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥”
पराशरः । १० । २५ -- ३७ ।
“वन्दिग्राहेण या भुक्ता हत्वा वद्धाबलाद्भयात् ।
कृत्वा सान्तपनं कृच्छ्रं शुध्येत् पराशरोऽब्रवीत् ॥
सकृद्भुक्ता तु या नारी नेच्छन्ती पापकर्म्मभिः ।
प्राजापत्येन शुद्ध्येत ऋतुप्रस्रवणेन तु ॥
पतत्यर्द्धं शरीरस्य यस्य भार्य्या सुरां पिबेत् ।
पतितार्द्धशरीरस्य निष्कृतिर्न विधीयते ॥
गायत्रीं जपमानस्तु कृच्छं सान्तपनञ्चरेत् ।
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥
एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतम् ।
जारेण जनयेद्गर्भं गते त्यक्ते मृते पतौ ॥
तां त्यजेदपरे राष्ट्रे पतितां पापकारिणीम् ।
ब्राह्मणी तु यदागच्छेत् परपुंसा समन्विता ॥
सा तु नष्टा विनिर्द्दिष्टा न तस्या गमनं पुनः ।
कामान्मोहाद् यदा गच्छेत् त्यक्त्वा बन्धुं सुतान्
पतिम् ॥
सा तु नष्टा परे लोके मानुषेषु विशेषतः ।
दशमे तु दिने प्राप्ते प्रायश्चित्तं न विद्यते ॥
दशाहं न त्यजेन्नारी त्यजेन्नष्टश्रुता तथा ।
संसर्गदोषः पापेषु मधुपर्के पशोर्व्वधः ॥
दत्तौरसेतरेषान्तु पुत्त्रत्वेन परिग्रहः । शूद्रेषु
दासगोपालकुलमित्रार्द्धशीरिणाम् ॥
भोज्यान्नता गृहस्थस्य तीर्थसेवातिदूरतः ।
ब्राह्मणादिषु शूद्रस्य पक्वतादिक्रियापि च ॥
भृग्वग्निमरणञ्चैव वृद्धादिमरणं तथा ।
एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः ॥
निवर्त्तितानि कर्म्माणि व्यवस्थापूर्ब्बकं बुधैः ।
समयश्चापि साधूनां प्रमाणं वेदवद्भवेत् ॥”
याज्ञवल्क्यः । १ । ६५ ।
“सकृत् प्रदीयते कन्या हरंस्तां चौरदण्डभाक् ।
दत्तामपि हरेत् कन्यां श्रेयांश्चेद्वर आव्रजेत् ॥”
गोतमः ।
“प्रतिश्रुत्याप्यधर्म्मसंयुक्ताय न दद्यात् ॥”
वशिष्ठः ।
“कुलशीलविहीनस्य षण्डादिपतितस्य च ।
अपस्मारिविधर्म्मस्य रोगिणां वेशधारिणाम् ।
दत्तामपि हरेत्कन्यां सगोत्रोढां तथैवच ॥”
वशिष्ठः उद्वाहतत्त्वे ।
“अद्भिर्व्वाचा प्रदत्तायां म्रियेतोर्द्धं वरो यदि ।
नच मन्त्रोपनीता स्यात् कुमारी पितुरेव सा ॥”
उद्वाहतत्त्वे । यमः ।
“नोदकेन न वा वाचा कन्यायाः पतिरिष्यते ।
वर उच्यते । विधवा विधातृका भवति विधवनाद्वा विधावनाद्वेति चर्म्मशिरा अपिवा धव इति मनुष्यनाम तद्वियोगाद्विधवा देवरो दीव्यतिकर्म्मा मर्य्यो मनुष्यो मरणधर्म्मा योषा यौतेराकुरुते सहस्थाने इति ॥” इति तद्भाष्ये सायणः ॥

एतेन पूर्व्वोल्लिखितप्रमाणपर्य्यालोचनेन एतत्

प्रतीयते यत् विधवाया विवाहो नास्ति किन्तु देवरादिना नियोगोऽस्ति । सोऽपि कलौ क्षेत्रजादिपुत्त्रवत् नास्त्येव । नष्टेमृते इत्यादि वचने अन्यवचनैरेकवाक्यतया पतिशब्दस्य पालकार्थत्वं वाग्दानपत्यर्थत्वं वा दत्तामपि हरेत्कन्यामित्यादिवचने दत्ताशब्दस्य वाग्दत्तापरार्थत्वञ्च एतच्च सर्व्वं सुधीभिर्भाव्यमिति ॥)

**विधा**, स्त्री, (विधानमिति । वि + धा + क्विप् ।)

विधिः । प्रकारः । इत्यमरः ॥ (यथा, तैत्तिरीयोपनिषदि । ३ । १० । १ ।
“तस्मात् यया कया च विधया बह्वन्नं प्राप्नुयात् ॥”)
ऋद्धिः । गजान्नम् । वेतनम् । इति मेदिनीशब्दरत्नावल्यौ ॥ कर्म्म । इति हेमचन्द्रः ॥ वेधनभ् । इति त्रिकाण्डशेषः ॥ (आपः । यथा, वाजसनेयसंहितायाम् । १४ । ७ ।
“सजूरृतुभिः सजूर्विधाभिः सजूर्वसुभिः ।”
“विधाभिर्या त्वं सजूरसि विदधति सृजन्ति जगदिति विधा आपस्ताभिः । आपो वै विधा अद्भिर्हीदं सर्व्वं विहितमितिश्रुतेः । अप एव ससर्जादौ इति स्मृतेश्च ।” इति तद्भाष्ये महीधरः ॥)

**विधाः**, [स्] पुं, ब्रह्मा । इत्युणादिकोषः ॥

**विधाता**, [ऋ] पुं, (विदधातीति । वि + धा + तृच् ।) ब्रह्मा । इत्यमरः ॥ (विष्णुः । यथा, महाभारते । १३ । १४९ । ६४ ।
“अविज्ञाता सहसांशुर्विधाता कृतलक्षणः ॥”

भर्त्ता चैव चरेत्कृच्छ्रं कृच्छ्रार्द्धं चैव बान्धवाः ॥
तेषां भुक्त्वा च पीत्वा च अहोरात्रेण शुध्यति ।
ब्राह्मणी तु यदागच्छेत् परपुंसा विवर्ज्जिता ॥
गत्वा पुंसां शतं याति त्यजेयुस्तान्तु गोत्रिणः ।
पुंसो यदि गृहं गच्छेत् तदशुद्धं गृहं भवेत् ॥
पितृमातृगृहं यस्य जारस्यैव तु तद्गृहम् ।
उल्लिख्य तद्गृहं पश्चात् पञ्चगव्येन शुद्ध्यति ॥”
बृहन्नारदीयम् । उद्वाहतत्त्वे ।
“समुद्रयात्रास्वीकारः कमण्डलुविधारणम् ।
द्विजानामसवर्णासु कन्यासूपयमस्तथा ॥
देवरेण सुतोत्पत्तिर्म्मधुपर्के पशोर्व्वधः ।
मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा ॥
दत्तायाश्चैव कन्यायाः पुनर्द्दानं वरस्य च ।
दीर्घकालं ब्रह्मचर्य्यं नरमेधाश्वमेधकौ ॥
महाप्रस्थानगमनं गोमेधञ्च तथा मखम् ।
इमान् धर्म्मान् कलियुगे वर्ज्ज्यानाहुर्म्मनीषिणः ॥”
हेमाद्रिपराशरभाष्ययोरादित्यपुराणम्।
“दीर्घकालं ब्रह्मचर्य्यं धारणञ्च कमण्डलोः ।
देवरेण सुतोत्पत्तिर्द्दत्ता कन्या प्रदीयते ॥
कन्यानामसवर्णानां विवाहश्च द्विजातिभिः ।
आततायिद्विजाग्र्याणां धर्म्मयुद्धे निर्हिंसनम् ॥
वानप्रस्थाश्रमस्यापि प्रवेशो विधिदेशितः ।
वृत्तस्वाध्यायसाक्षेपमघसङ्कोचनन्तथा ॥
प्रायश्चित्तविधानञ्च विप्राणां मरणान्तिकम् ।
पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे ॥”
उद्वाहतत्त्वे कात्यायनः ।
“अनेकेभ्योऽपि दत्तायामनूढायान्तु तत्र वै ।
वरागमश्च सर्व्वेषां दत्तं पूर्व्ववरो हरेत् ॥”
नान्योत्पन्ना प्रजास्तीह नचाप्यन्यपरिग्रहे ।
न द्वितीयश्च साध्वीनां क्वचिद्भर्त्तोपदिश्यते ॥
व्यभिचारात्तु भर्त्तुः स्त्री लोके प्राप्नोति निन्दितम् ।
शृगालयोनिं प्राप्नोति पापरोगैश्च पीड्यते ॥”
नारदसंहिता ।
“अज्ञातदोषेणोढाया निर्द्दोषा नान्यमाश्रिता ।
बन्धुभिः सा नियोक्तव्या निर्ब्बन्धुः स्वयमाश्रयेत् ॥
नष्टे मृते प्रव्रजिते क्लीवे च पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥
अष्टौ वर्षाण्यपेक्षेत ब्राह्मणी प्रोषितं पतिम् ।
अप्रसूता च या नारी परतोऽन्यं समाश्रयेत् ॥
क्षत्रिया षट् समास्तिष्ठेत् अप्रसूता समा
त्रयम् ।
वैश्या प्रसूता चत्वारि द्वे वर्षे इतरा वसेत् ॥
न शूद्रायाः सृतः कालः एष प्रोषितयोषि-
ताम् ।
जीवति श्रूयमाणे तु स्यादेव द्विगुणो विधिः ॥
अतोऽन्यगमने स्त्रीणां एषु दोषो न विद्यते ॥”
ऋग्वेदे । १० । ४० । २ ।
“विशेषेण शेषदिग्गजभू भूधरात् समस्तभूतानि च दधातीति विधाता ।” इति तत्र शाङ्कर-भाष्यम् ॥ * ॥ महेश्वरः । यथा, महाभारते । १३ । १७ । १०४ ।
“उषङ्गुश्च विधाता च मान्धाता भूतभावनः ॥”)
कामदेवः । इति मेदिनी । ते, १६ ॥ मदिरा । इति राजनिर्घण्टः ॥ भृगुमुनिपुत्त्रः । तस्य भार्य्या मेरुकन्या नियतिः । तस्य पुत्त्रः प्राणः ।
तस्य सुतः वेदशिराः कविश्च । इति श्रीभाग-वतमतम् ॥ * ॥ विधातुर्विचित्रा गतिर्यथा, --
कंस उवाच ।
“तृणेन पर्व्वतं हन्तुं शक्तो धाता च दवतः ।
कीटेन सिंहशार्दूलं मशकेन गजं तथा ॥
शिशुना च महावीरं महान्तं क्षुद्रजन्तुभिः ।
भूषिकेण च माज्जरिं मण्डूकेन भुजङ्गमम् ॥
एवं जन्येन जनकं भक्ष्येणैव च भक्षकम् ।
वह्निना च जलं नष्टं वह्निं शुष्कतृणेन च ॥
पीताः सप्त समुद्राश्च द्विजेनैकेन जह्नुना ।

|  | “को वां शयुत्रा विधवेव देवरम् ॥”<br>“तत्र दृष्टान्तं दर्शयति शयुत्रा शयने<br>विधवेव<br>यथा मृतभर्त्तृका नारी देवरं भर्त्तृभ्रातरं<br>अभि-<br>मुखीकरोति ।” “तथाच यास्कः<br>क्वचिद्रात्रौ<br>भवथः क्व दिवा क्वाभिप्राप्तिं कुरुथः<br>क्व वसथः<br>को वां शयने विधवेव देवरं देवरः<br>कस्माद्द्वितीयो |  |
| --- | --- | --- |

धातुर्गतिर्विचित्रा च दुर्ज्ञेया भुवनत्रये ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजम्मखण्डे ७ अध्यायः ॥
अपि च ।
भलन्दन उवाच ।
“सम्बन्धो हि विधिवशो न मे साध्यो व्रजाधिप ।
प्रजापतिर्योगकर्त्ता जन्मदाताहमेव च ॥
का कस्य पत्नी कन्या वा वरः को वा ससाधनः ॥
कर्म्मानुरूपफलदः सर्व्वेषां कारणं विधिः ।
भवितव्यं कृतं कर्म्म तदमोघं श्रुतौ श्रुतम् ॥
अन्यथा निष्फलं सर्व्वमनीशस्योद्यमो यथा ।
वृषभानुप्रिया धात्रा लिखिता चेत् सुता मम ॥
पुरा भूतैव को वाहं केनान्येन निवार्य्यते ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १७ अः ॥ * ॥
अन्यच्च ।
“त्यागे दोषः कामुकीनां शापभाक् पापभाक्
गृही ।
ब्रह्मा जगद्विधातापि न विरक्तः कलत्रवान् ।
त्यागे दोषस्तत् कदाचिन्नास्माकं त्यक्तयोषि-
ताम् ॥” * ॥
अपरञ्च ।
“स्वान्तर्दुःखेन दुःखार्त्तो यो यं शपति निश्चितम् ।
तं शापं खण्डितुं शक्तो न विधाता जगत्-
प्रभुः ॥”
संवत्सरो भवति । एवं वर्षशतं ब्रह्मण आयुः ।
तत्र पञ्चाशत् वर्षा व्यतीताः ।
एकपञ्चाशदा-
रम्भेऽधुना श्वेतवाराहकल्पः । अत्र मन्वन्त-
राणि व्यतीतानि षट् अधुना वैवस्वतमन्वन्तरं
वर्त्तते । इति श्रीभागवतमतम् ॥

**विधात्री**, स्त्री, (वि + धा + तृच् । ङीप् ।) पिप्पली ।
इति शब्दचन्द्रिका ॥ विधानकर्त्री ।
यथा, --
“गतासूनां बाहुप्रकरकृतकाञ्चीपरिलस-
न्नितम्बां दिग्वस्त्रां त्रिभुवनविधात्रीं त्रिनयनाम् ।
श्मशानस्थे तल्पे शवहृदि महाकालसुरत-
प्रयुक्तां त्वां ध्यायन् जननि जडचेता अपि
कविः ॥”
इति तन्त्रसारे कर्पू राख्यस्तोत्रम् ॥

**विधानं**, क्ली, (वि + धा + ल्युट् ।) विधिः । इति
जटाधरः ॥ (यथा, मनुः । ७ । १८१ ।
“यदातु यानमातिष्ठेत् परराष्ट्रं प्रति प्रभुः ।
तदानेन विधानेन यायादरिपुरं शनैः ॥”)
करणम् । इति नानार्थविधिशब्दटीकायां
भरतः ॥ (यथा, रघुः । ७ । १४ ।
“परस्परेण स्पृहणीयशोभं
न चेदिदं द्वन्द्वमयोजयिष्यत् ।
अस्मिन् द्वये रूपविधानयत्नः
पत्युः प्रजानां वितथोऽभविष्यत् ॥”)
करिकवलः । इति हारावली । १९१ ॥ (वेदादि-
शास्त्रम् । यथा, मनुः । १ । ३ ।
“त्वमेको ह्यस्य सर्व्वस्य विधानस्य स्वयम्भुवः ।

**विधाव्यं**, क्ली, कम्पनम् । विपूर्ब्बधूधातोर्घ्यण्प्रत्ययेन
निष्पन्नम् ॥

**विधिः**, पुं, (विधति विदधाति विश्वमिति । विध
विधाने + “इगुपधात् कित् ।” उणा० ४ । ११९ ।
इति इन् । स च कित् ।) ब्रह्मा । (यथा, नैषधे । २२ । ४७ ।
“विधिर्विधत्ते विधुना बधूनां
किमाननं काञ्चनसञ्चकेन ॥” * ॥
विधीयेते सुखदुःखे अनेनेति । वि + धा +
“उपसर्गे धोः किः ।” ३ । ३ । ९२ । इति किः ।)
भाग्यम् । (यथा, मार्कण्डेये । ८ । १८२ ।
“राज्यनाशं सुहृत्यागो भार्य्यातनयविक्रयः ।
हरिश्चन्द्रस्य राजर्षेः किं विधे ! न कृतं त्वया ॥”)
क्रमः । विधानम् । इत्यमरः ॥ कालः । इति
मेदिनी । धे, १७ ॥ विधिवाक्यम् । (यथा,
गीतायाम् । १६ । २३ ।
“यः शास्त्रविधिमुत्सृज्य वर्त्तते कामचारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥”)
प्रकारः । नियोगः । इति हेमचन्द्रः ॥ विष्णुः ।
इति हलायुधः । कर्म्म । इति त्रिकाण्डशेषः ॥
(यथा, देवीपुराणे ।
“तस्मात् सूर्य्यः शशाङ्कस्य क्षयवृद्धिविधेर्विभुः ॥”)
गजान्नम् । इति जटाधरः ॥ वैद्यः । इति
राजनिर्घण्टः ॥ यागोपदेशकग्रन्थः । इति
भरतधृतकोषः ॥ षड्विधसूत्रलक्षणान्तर्गत-
लक्षणविशेषः । यथा, --
“संज्ञा च परिभाषा च विधिर्नियम् एव च ।
अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम् ॥”
अप्राप्तप्रापको विधिः । स तु द्विविधः । वर्णोत्-
पादनरूपोऽभावरूपश्च । वर्णोत्पादनरूपो यथा
सहर्णे र्घ इत्यादि । अभावरूपो द्विविधः ।
नाशो निषेधरूपश्च । नाशविधिर्य्यथा । लोपो-
ऽस्योमाङोरित्यादि । निषेधविधिर्य्यथा । नाजो-
ऽन्त इत्यादि । सामान्यप्राप्तस्य विशेषावधारणं

इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे २० अः ॥ * ॥
असौ जगतां पतिर्यथा, --
"द्वौ धाता च विधाता च पौराणौ जगतां
पती ।
द्वौ शास्तारौ त्रिलोकेऽस्मिन् धर्म्माधर्म्मौ प्रकी-
र्त्तितौ ॥"
इति वह्निपुराणे गणभेदनामाध्यायः ॥
(त्रि, मेधावी । इति निघण्टुः । ३ । १५ ॥
विहितकर्म्मानुष्ठाता । यथा, मनुः । ११ । ३५ ।
"विधाता शासिता वक्ता मेत्री ब्राह्मण उच्यते ।
तस्मै नाकुशलं ब्रूयात् न शुष्कां गिरमीरयेत् ॥"
स्रष्टा । सर्व्वसमर्थः । यथा, रघुः । १ । ७० ।
"तया हीनं विधातर्मां कथं पश्यन्न दूयसे ।
सिक्तं स्वयमिव स्नेहाद्वन्ध्यमाश्रमपादपम् ॥"
जनयिता । दाता । यथा, कुमारे । १ । ५७ ।
"स्वयं विधाता तपसः फलानां केनापि कामेन तपश्चचार ॥")

**विधातृभूः**, पुं, (विधातुर्ब्रह्मणो भूरुत्पत्तिर्यस्य ।)
नारदमुनिः । इति त्रिकाण्डशेषः ॥

**विधात्रायुः**, [स्] पुं, (विधातुरायुर्ज्जीवित-
कालपरिमाणं यस्मात् । सूर्य्यक्रियां विना वत्स-
रादिज्ञानासम्भवाच्चास्य तथात्वम् ।) सूर्य्यः ।
यथा, --
"वेशदानो विधात्रायुर्द्दिव्यवस्त्रो दिवाकरः ॥"
इति शब्दचन्द्रिका ॥
क्ली, ब्रह्मणो वयः । तद्यथा । चतुर्द्दश-
अचिन्त्यस्याप्रमेयस्य कार्य्यतत्त्वार्थवित् प्रभो ! ॥"
नाटकाङ्गविशेषः । यथा, साहित्यदर्पणे । ६ ।
३४६ ।
"सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम् ॥"
यथा, बालचरिते ।
"उत्साहातिशयं वत्स तव बाल्यञ्च पश्यतः ।
मम हर्षविषादाभ्यामाक्रान्तं युगपन्मनः ॥")

**विधानकं**, क्ली, व्यथा । इति शब्दरत्नावली ॥
(विधिः । यथा, कथासरित्सागरे । ४९ । १८० ।
"ततस्तुष्टो भदन्तोऽसौ तस्मायादित्यशर्म्मणे ।
ददौ सुलोचनामन्त्रमर्थितं सविधानकम् ॥")
विधानवेत्तरि, त्रि ॥

**विधानगः**, पुं, (विधानं गायतीति । गै + टक् ।)
पण्डितः । इति शब्दरत्नावली ॥

**विधायकः**, त्रि, विपूर्ब्बधाञ्धातोर्ण्वक (ण्वुल्) प्रत्य-
येन निष्पन्नः ॥ विधानकर्त्ता । (यथा, राज-
तरङ्गिण्याम् । १ । १६९ ।
"स विहारस्य निर्म्माता जुष्को जुष्कपुरस्य यः ।
जयस्वामिपुरस्यापि शुद्धधीः स विधायकः ॥")
विधिज्ञापकः ॥

**विधायी**, [न्] त्रि, विधानकर्त्ता । विपूर्ब्बकधाञ्-
धातोर्णिन्प्रत्ययेन निष्पन्नः ॥ (यथा, कथा-
सरित्सागरे । ४१ । ११३ ।
"भार्य्याञ्च काव्यालङ्कारां तादृक्कार्य्यविधा-
यिनीम् ।
नियमविधिः । यथा । रङो विः सुपि इत्यादि ।
अन्यधर्म्मस्यान्यत्रारोपणमतिदेशविधिः यथा ।
इन्वदिक् इत्यादि । पूर्ब्बसूत्रस्थितपदस्य पर-
सूत्रेषूपस्थितिरधिकारविधिः । स तु त्रिविधः ।
"सिंहावलोकिताख्यश्च मण्डूकप्लुतिरेव च ।
गङ्गाश्रोत इति ख्यातश्चाधिकारास्त्रयो मताः ॥"
सिंलावलोकितो यथा । वावगोर्द्दान्ते इत्यस्मात्
दान्ते इति पदस्य ऋक्यगित्यन्तेषूपस्थितिः ।
मण्डूकप्लुतिर्यथा । टाभिस्ङेङसीत्यस्मात् अत
इति पदस्य आक्तिमभवि इत्यत्रोपस्थितिः ।
गङ्गाश्रोतो यथा । लेः सि औ जस् इत्यस्मात्
लेरिति पदस्य तद्धितपर्य्यन्तेषूपस्थितिरिति ।
एवञ्च ।
"कार्य्यी कार्य्यं निमित्तञ्च त्रिभिः सूत्रमुदा-
हृतम् ।
कदाचित् कार्य्यिकार्य्याभ्यां क्वचित् कार्य्यनिमि-
त्ततः ॥
यस्य निर्द्दिश्यते कार्य्यं स कार्यी गदितो बुधैः ।

| | | |
|---|---|---|
| मन्वन्तरैर्ब्रह्मणः एकं दिनं भपति ।<br>तन्मनुष्य-<br>मानेनैकः कल्पस्त्रिंशत्कल्पे ब्रह्मण<br>एको<br>मासो भवति ।<br>एतादृशैर्द्वादशमासैर्ब्रह्मणः | भूगृहे स निचिक्षेप पापां तां<br>पुत्त्रघातिनीम् ॥”) | |

क्रियते यत्तु तत्
कार्य्यमादेशप्रत्ययागमम् ॥
यस्मात् परं परे यस्मिन् तन्निमित्तं
द्विधा मतम् ।
आकाङ्क्षायान्तु सर्व्वेषामनुवृत्तिः परे
भवेत् ॥”
इति ॥
एवञ्च ।
“बहिरङ्गविधिभ्यः
स्यादन्तरङ्गविधिर्ब्बली ।
प्रत्ययाश्रितकार्य्यन्तु बहिरङ्गमुदाहृतम्
॥
प्रकृत्याश्रितकार्य्यं स्यादन्तरङ्गमिति
ध्रुवम् ।
प्रकृतेः पूर्ब्बपूर्ब्बं स्यादन्तरङ्गतरं तथा
॥
सावकाशविधिभ्यः स्याद्बली
निरवकाशकः ।
कस्यचिद्भिन्नकार्य्यस्य प्रथमे
परतस्तथा ।
सम्भवेद्विषयो यस्य स भवेत्
सावकाशकः ॥
आदौ हि विषयो यस्य परतो न हि
संभवेत् ।
स पण्डितगणैरुक्तो
विधिर्निरवकाशकः ॥
तथा सामान्यकार्य्येभ्यो
विशेषकविधिर्ब्बली ।
बहवो विषया यस्य स
सामान्यविधिर्भवेत् ॥
स्वल्पः स्याद्विषयो यस्य स
विशेषविधिर्म्मतः ।
आगमादेशयोर्म्मध्ये बलीयानागमो
विधिः ॥
प्रकृतिं प्रत्ययञ्चापि यो न हन्ति स
आगमः ।
आदेश उपघाती यः प्रकृतेः प्रत्ययस्य
वा ॥

गमनस्य रागतः प्राप्तावपि रागाभावात्
पक्षतोऽप्राप्तेः । तथा । प्रोक्षितं मांसं भुञ्जीत
इत्यादिः परिसङ्ख्याविधिः । विधेयस्य
प्रोक्षित-
मांसभक्षणस्य च रागतः प्राप्तेः । अङ्गस्य
विधिभेदो यथा । शारदीयपूजायामष्टम्या-
मुपवसेत् इत्यादिरपूर्ब्बविधिः । अत्र विधेयस्यो-
पवासस्य एतदन्यशास्त्रतो रागतो न्यायतो वा
क्वचिदप्राप्तेः । तथा श्राद्धे भुञ्जीत पितृसेवित-
मित्यादिनियमविधिः । विधेयस्य श्राद्धशेष-
भोजनस्य रागतः प्राप्तावपि रागाभावात्
पक्षतोऽप्राप्तेः । तथा । वृद्धिश्राद्धे प्रातरामन्त्रि-
तान् विप्रान् इत्यादिः परिसङ्ख्याविधिः । तत्र
विधेयस्य प्रातर्निमन्त्रणस्य तत्प्रतिपक्षस्य पूर्ब्ब-
दिनसायं निमन्त्रणस्य च पार्व्वणवन्न्यायतः
प्राप्तेरिति स्मृतेरुदाहरणम् । इति धर्म्म-
दीपिका ॥ * ॥ न्यायमते विधिर्यथा, --
“प्रवृत्तिः कृतिरेवात्र सा चेच्छातो यतश्च सा ।
तजज्ञानं विषयस्तस्य विधिस्तज्ज्ञापकोऽथवा
॥”
विधिजन्यज्ञानात् प्रवृत्तिर्दृ श्यते सा इच्छातः
चिकीर्षातः चिकीर्षा च
कृतिसाध्यत्वेष्टसाधनत्व-
ज्ञानात् तज्ज्ञानस्य विषयः कार्य्यत्वं इष्टसाधन-
त्वञ्च विधिरिति प्राचीनमतम् ॥ स्वमतमाह
तज्ज्ञापकोऽथवेति इष्टसाधनत्वानुमापक
आप्ताभिप्रायो विधिप्रत्ययार्थः । इति हरि-
दासीयकुसुमाञ्जलिः ॥ * ॥ अपि च आश्रयत्व-
सम्बन्धेन
प्रत्ययोपस्थापितेष्टसाधनत्वान्वितस्वार्थ-
परपदघटितवाक्यत्वं विधित्वम् । मीमांसकमते
इष्टसाधनत्वं कृतिसाध्यत्वञ्च पृथग्विध्यर्थः ।
इति गदाधरभट्टाचार्य्यकृतविधिस्वरूपः ॥

**विधिदर्शी**, [न्] पुं, (विधिं द्रष्टुं शीलमस्य ।
दृश् + णिनिः ।) सदस्यः । इत्यमरः ॥

**विधिदेशकः**, पुं, (विधिं दिशतीति । दिश +
ण्वुल् ।) सदस्यः । इति शब्दरत्नावली ॥

**विधिवत्**, व्य, यथाविधि । विध्यनुसारेण । यथा, --

“पिक ! विधुस्तव हन्ति समं तम-
स्त्वमपि चन्द्रविरोधिकुहूरवः ।
तदुभयोरनिशं हि विरोधिता
कथमहो समता मम तापने ॥” * ॥
विध्यति असुरानिति ।) विष्णुः । कर्पूरः
।
इति मेदिनी । धे, १६ ॥ ब्रह्मा । इति
शब्द-
रत्नावली ॥ राक्षसः । इति विश्वः ॥
आयुधः ।
वायुः । इति संक्षिप्तसारोणादिवृत्तिः ॥ *
॥
चन्द्रस्य द्वादशावस्थास्तत्फलादिश्च
यथा, --
“चन्द्रस्य द्वादशावस्था भवन्ति शृणु ता
अपि ।
त्रिषु त्रिषु च ऋक्षेषु अश्विन्यादि
वदाम्यहम् ॥
प्रवासस्थं पुनर्नष्टं मृतावस्थं जयावहम् ।
हास्यावस्थं क्रीडावस्थं प्रमोदावस्थमेव
च ।
विषादावस्थभोगस्थे ज्वरावस्थं
व्यवस्थितम् ॥
कम्पावस्थं सुस्थावस्थं द्वादशावस्थगं
भवेत् ॥
प्रवासो हानिर्मृत्युश्च जयो हासो रतिः
सुखम् ।
शोको भोगो ज्वरः कम्पः
सुस्थावस्थाक्रमात्-
फलम् ॥
जन्मस्थः कुरुते तृप्तिं द्वितीये नास्ति
निर्वृतिः ।
तृतीये राजसम्मानं चतुर्थे कलहागमः ॥
पञ्चमेन मृगाङ्केण स्त्रीलाभो वै तथा भवेत्
॥
धनधान्यागमः षष्ठे रतिः पूजा च सप्तमे ।
अष्टमे प्राणसन्देहो नवमे कोषसञ्चयः ॥
दशमे कार्य्यनिष्पत्तिर्ध्रुवमेकादशे जयः ।
द्वादशेन शशाङ्केन मृत्युरेव न संशया ॥”

सकलेभ्यो विधिभ्यः स्याद्बली
लोपविधिस्तथा ।
लोपस्वरादेशयोस्तु स्वरादेशो
विधिर्ब्बली ॥"
इति मुग्धबोधव्याकरणटीकायां
दुर्गादासः ॥ * ॥
अथ विधिभदाः । तत्र कश्चित्
प्रधानविधिः ।
स तु स्वतः फलहेतुक्रियाबोधकः ।
यथा । यजेत
स्वर्गकाम इत्यादि । कश्चिदङ्गविधिः ।
स तु
स्वतः फलहेतुक्रियायां
कथमित्याकाङ्क्षायां
विधायकः । यथा । इडो यजति
इत्यादि ।
कश्चित प्रयोगविधिः । स तु
यावदङ्गयुक्तक्रिया-
बोधकः । यथा । यावदङ्गयुक्तं यजेत
विलक्षण-
स्वर्गकाम इत्यादि ।
कश्चिद्गुणफलविधिः ।
स तु आकाङ्क्षानिवृत्तौ अधिकफलाय
प्राप्त-
कर्म्मणि गुणविधिः । यथा ।
गोदोहेनापः प्रणयेत्
पशुकाम इत्यादि । प्रधानविधिश्च
द्विविधः ।
उत्पत्तिर्नियोगश्चेति । तत्रोत्पत्तिस्तु
कर्म्मस्वरूप-
बोधकः । यथा आग्नेयाष्टाकपालः
अमा-
वास्यायां पौर्णमास्याञ्चाच्युतो भवति
इत्यादि ।
नियोगश्च स्वर्गकामाद्यधिकारिबोधकः
। यथा ।
स्वर्गकामो यजेत इत्यादि ।
अङ्गविधिस्तु काल-
देशकर्त्रादिबोधकतया अनियत एव ।
प्रधानाङ्ग-

"तोषयेत् सततं भार्य्यां विधिवत् पाणिपीडि-
ताम् ॥"
इति कालिकापुराणे १९ अध्यायः ॥ * ॥
अपि च ।
"सन्ध्यामुपास्य विधिवत् विल्वपत्राद्युपा-
र्ज्जयेत् ॥"
इति शिवरात्रिव्रतकथा ॥ * ॥
अन्यच्च ।
"पूजयेद्ब्रह्मविष्ण्वर्करुद्रवस्वात्मकं शिवम् ।
व्रतोपवासैर्विधिवत् श्रद्धवा च विमत्सरः ॥"
इति मत्स्यपुराणे योगमाहात्म्यम् ४९ अध्यायः
॥
अपरञ्च ।
"इति नक्षत्रपुरुषमुपोष्य विधिवत् स्वयम् ।
सर्व्वान् कामानवाप्नोति विष्णुलोके महीयते ॥"
इति तत्रैव ५१ अध्यायः ॥

**विधुः**, पुं, (विध्यति विरहिणं विध्यते राहुणेति
वा । व्यध ताडे + "पृभिदिव्यधीति ।" उणा०
१ । २४ । इति कुः ।) चन्द्रः । (यथा, --

इति गारुडे । ६१ । ३ -- ९ ॥ * ॥
चन्द्रस्य क्षयवृद्धिकारणम् यथा, --
ब्रह्मोवाच ।
"राका चानुमती चैव द्विविधा पूर्णिमा
मता ।
सिनीवाली कुहुश्चैव अमावास्या द्विधैव
तु ॥
अमा नाम रवे रश्मिश्चन्द्रलोके
प्रतिष्ठिता ।
यस्मात् सोमो वसत्यस्याममावासी ततः
स्मृता ॥
पूर्ब्बोदितकलाभिन्नपौर्णमास्या निशाकरे
।
पूर्णिमानुमती ज्ञेया पश्चास्तमितभास्करे
॥
यस्मात्तामनुमन्यन्ते देवताः पितृभिः
सह ।
तस्मादनुमती नाम पूर्णिमा प्रथमा स्मृता
॥
यदा चास्तमिते सूर्य्ये पूर्णचन्द्रस्य
चोद्गमः ।
युगपत् सोत्तरा रागस्तदानुमतिपूर्णिमा ॥
राकान्तामनुमन्यन्ते देवताः पितृभिः
सह ।
रञ्जनाच्चैव चन्द्रस्य राकेति
कवयोऽब्रुवन् ॥
सिनीवालीप्रमाणन्तु क्षीणशेषो निशाकरः
।
अमावास्यां विशत्यर्कं सिनीवाली ततः
स्मृता ॥
कुहेति कोकिलेनोक्तो यः कालस्तु
समाप्यते ।
तत्कालसंज्ञा त्वेषा वै अमावास्या कुहूः
स्मृता ।
अनुमत्याशवाः कार्य्या सिनीव्याल्याः
कुहूं
विना ।
एतासां विरलः कालः कुमात्रति कुहूः
स्मृता ॥
कलाः षोडश सोमस्य शुक्ले वर्द्धयते
रविः ।

| | | |
|---|---|---|
| विध्योर्विधेयाप्राप्तिप्राप्तिभ्यां त्रैविध्यम्<br>। तत्र<br>अप्राप्तितो द्वैविध्यम् ।<br>तत्राप्यत्यन्ताप्राप्तौ<br>अपूर्ब्बविधिः । पक्षतोऽप्राप्तौ<br>नियमविधिः ।<br>विधेयतत्प्रतिपक्षयोः प्राप्तौ<br>परिसङ्ख्याविधिः ।<br>अतएवोक्तम् ।<br>"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके<br>सति ।<br>तत्र चान्यत्र च प्राप्तौ परिसङ्ख्या<br>विधीयते ॥"<br>तत्र प्रधानस्य विधिभेदो यथा ।<br>अहरहः<br>सन्ध्यामुपासीत इत्यादिरपूर्ब्बविधिः ।<br>अत्र<br>विथेयस्य सन्ध्यादेः शास्त्रतो रागतो<br>न्यायतो<br>वा कचिदप्यप्राप्तेः । तथा ऋतौ<br>भार्य्यामुपेयात्<br>इत्यादिर्नियमविधिः । विधेयस्य<br>भार्य्याभि- | | अमृतेनामृतं कृष्णे पीयते दैवतैः क्रमात्<br>॥<br>प्रथमां पिबते वह्निर्द्वितीयां पवनः कलाम्<br>।<br>विश्वेदेवास्तृतीयान्तु चतुर्थीन्तु<br>प्रजापतिः ॥<br>पञ्चमीं वरुणश्चापि षष्ठीं पिबति वासवः<br>। |

सप्तमीमृषयो दिव्या वसवोऽष्टौ तथाष्टमीम्
॥
नवमीं कृष्णपक्षस्य पिबतीन्द्रः कलामपि ।
दशमीं मरुतश्चापि रुद्रा एकादशीं कलाम्
।
द्वादशीन्तु कलां विष्णुर्धनदश्च त्रयोदशीम्
।
चतुर्द्दशीं पशुपतिः कलां पिबति नित्यशः ।
ततः पञ्चदशीञ्चैव पिबन्ति पितरः कलाम्
॥
कलावशिष्टो निष्पीतः प्रविष्टः
सूर्य्यमण्डलम् ।
अमायां विशते रश्मौ अमावासी ततः
स्मृता ॥
पूर्ब्बाह्णे विशते चार्कं मध्याह्ने तु वनस्पतिम्
।
अपराह्णे विशत्यप्सु स्वयोनिवारिसम्भवः
॥
आपः प्रविष्टः सोमस्य शेषया कलयैकया
।
तृणगुल्मलतावृक्षान्निष्पादयतिचौषधीः ॥
तमोषधिं स्थितं गावश्चरन्त्यापः पिबन्ति
च ।
तदङ्गानुगतं गोभ्यः क्षारत्वमुपगच्छति ॥
तत्क्षीरममृतं भूत्वा मन्त्रभूतं द्विजातयः ।
स्वाहाकारवषट्कारैर्जुह्वन्त्याहुतयः क्रमात्
॥
हुतमग्निषु देवाय पुनः सोमं विवर्द्धयेत् ।
एवं संक्षीयते सोमः क्षीणश्चाप्यायते पुनः ।
तस्मात् सूर्य्यः शशाङ्कस्य
क्षयवृद्धिविधेर्व्विभुः ॥”
इति देवीपुराणे चन्द्रक्षयवृद्धिः ॥ * ॥
ब्रह्मोवाच ।
“यदयं वदते लोको वालिशत्वान्महामते ।
तदहं संप्रवक्ष्यामि चन्द्रसूर्य्योपरागिकम् ॥
यदि सत्यमयं ग्रस्तस्तेजोराशिर्द्दिवाकरः ।
तत्कथं नोदरस्थेन राहुर्न भस्मसात् कृतः
॥
अथवा राहुणाक्रम्य शत्रुवक्त्रं प्रवेशितः ।

सोमो दैवतसंयोगात् छायायोगाच्च
पार्थिवात् ।
राहोश्च वरलब्धाद्वै प्रक्षरेदमृतं शशी
॥
स्वदोहकाले संप्राप्ते वत्सं दृष्ट्वा च
गौर्यथा ।
स्वाङ्गादेव क्षरेत् क्षीरं तथेन्दुः
क्षरतेऽमृतम् ।
पितेव सूर्य्यो देवानां सोमो मातेव
लक्ष्यते ॥
यथा मातुः स्तनं पीत्वा जीवन्ते
सर्व्वजन्तवः ।
पीत्वामृतं तथा सोमात् तृप्यन्ते
सर्व्वदेवताः ॥
सम्भृ तं सर्व्वयोगेषु तथायं क्षरते
शशी ।
तं क्षरन्तं यथाभागमुपजीवन्ति
देवताः ॥
तस्मिन् काले समभ्येति
राहुरप्यवकर्षति ।
सर्व्वमर्हन्ति भागञ्च पादं पादार्द्धमेव
च ॥
आक्रम्य पार्थिवी छाया यावती
चन्द्रमण्डलम् ।
स्मृतः स भागो राहोस्तु देवभागास्तु
शेषकाः ॥
तृप्तिं विधाय देवानां राहोः
पर्व्वगतस्य च ।
चन्द्रो न क्षयमायाति तेजसा नैव
मुच्यते ॥
तिथिभागाश्च यावन्तः पुनन्त्यर्कं
प्रमाणतः ।
सर्व्वच्छायास्थितः कालस्तावानेव
प्रकीर्त्तितः ॥
अतो राहुभुजः सोमः सोमाद्वृद्धिं
दिवाकरः ।
पर्व्वकाले स्थितिस्त्वेवं विपरीताः
पुनः पुनः ॥

“पादन्यासैर्भुजविधुतिभिः सस्मितैर्भ्रूविलासै-
र्भज्यन्मध्यैश्चलकुचपटैः कुण्डलैर्गण्डलीनैः ॥”
निराकृतिः । यथा, तत्रैव । ४ । २२ । ३८ ।
“यस्मिन्निदं सदसदात्मतया विभाति-
मायाविवेकविधुतिस्रजि वाहिबुद्धिः ॥”)

**विधुननं**, क्ली, (वि + घू + णिच् । ल्युट् । नुक्
च । पृषोदरादित्वात् ह्रस्वः ।) कम्पनम् । इति
जटाधरः ॥

**विधुन्तुदः**, पुं, (विधुं तुदति पीडयतीति । विधु +
तुद + “विध्वरुसोस्तुदः ।” ३ । २ । ३५ । इति
खश् । मुम् ।) राहुः । इत्यमरः ॥ (यथा,
माघे । २ । ६१ ।
“नीतिरापदि यद्गम्यः परस्तन्मानिनो ह्रिये ।
विधुर्विधुन्तुदस्येव पूर्णस्तस्योत्सवाय सः ॥”)

**विधुपञ्जरः**, पुं, (विधोः पञ्जरः वक्रास्थि इव तत्-
सादृश्यात् ।) खड्गः । इति शब्दमाला ॥

**विधुप्रिया**, स्त्री, (विधोश्चन्द्रस्य प्रिया ।) चन्द्र-
पत्नी । यथा । दाक्षायण्यो विधुप्रिया । इति
कोषान्तरम् ॥

**विधुरं**, क्ली, (विगता धूर्भारो यस्मात् । समासे
अः ।) प्रविश्लेषः । इत्यमरः ॥ कैवल्यम् । इति
त्रिकाण्डशेषः ॥ (प्रत्यवायः । कष्टम् । यथा,
किरातटीकायां मल्लिनाथधृतवैजयन्ती ।
“विधुरं प्रत्यवाये स्यात् कष्टविश्लेशयोरपि ॥”
तथा च किराते । २ । ७ ।
“विधुरं किमतः परं परै-
रवगीतां गमिते दशामिमाम् ।
अवसीदति यत् सुरैरपि
त्वयि सम्भावितवृत्ति पौरुषम् ॥”)

**विधुरः**, त्रि, (विगता धूः कार्य्यभारो यस्मात् ।
ऋक्पूरित्यः ।) विकलः । इति मेदिनी । रे,
२१६ ॥ (यथा, कुमारे । ४ । ३२ ।
“तदिदं क्रियतामनन्तरं
भवता बन्धुजनप्रयोजनम् ।
विधुरां ज्वलनातिसर्ज्जनात्

तत् कथं दशनैस्तीक्ष्णैः शतधा न
विखण्डितः ॥
विमुक्तश्च पुनर्दृष्टस्तथैवाखण्डमण्डलः ।
न चास्यापहृतं तेजो न स्थानादपसारितः
॥
यदि वा ह्येष निष्पीतः कथं दीप्ततरोऽभवत्
।
तस्मान्न तेजसां राशी राहोर्वक्त्रं गमिष्यति
॥
भक्ष्यार्थं सर्व्वदेवानां सोमः सृष्टः
स्वयम्भुवा ।
तत्रस्थममृतञ्चापि सम्भूतं सूर्य्यतेजसा ॥
पिबन्त्यम्बुमयं देवाः पितरश्च स्वधामृतम्
।
त्रयञ्च त्रिशतञ्चैव त्रयस्त्रिंशत्तथैव च ॥
त्रयश्च त्रिसहस्राश्च देवाः भोमं पिबन्ति ये
।
राहोरप्यमृतं भाग्यं पुरा सृष्टं स्वयम्भु वा ॥
तस्मात्तद्राहुरागत्य पातुमिच्छति पर्व्वसु ।
उद्धृत्य पार्थिवीं छायां मद्राकारान्तमोमयः
॥
पातुमिच्छन् ततश्चेन्दुमाच्छादयति
छायया ।
शुक्ले च चन्द्रमभ्येति कृष्णे पर्व्वणि
भास्करम् ॥
सूर्य्यमण्डलसंस्थन्तु चन्द्रमेव जिघांसति
।
तस्मात् पिबति तं
राहुस्तनुमस्याविनाशयन्॥
अविहिंसन् यथा पद्मं पिबति भ्रमरो मधु ।
चन्द्रस्थममृतं तद्वदभेदाद्राहुरश्नुते ॥
चन्द्रकान्तो मणिर्य्यद्वत्तुहिनं क्षरते क्षणात् ।
क्षरन्नपि न हीयेत तेजसा नैव मुच्यते ॥
यथा सूर्य्यमणिः सूर्य्यादुत्पाट्य पावकं
शुभम् ।
न भवत्यङ्गहीनोऽपि तेजसा नैव मुच्यते ॥
एवं चन्द्रश्च सूर्य्यश्च छादितावपि राहुणा
।
स्वतेजसा नं मुच्येत नाङ्गहीनौ बभूवतुः ॥
पर्व्वखथ च चन्द्रस्य
माणिक्यकलसाकृतिः ।
अतश्छादयते
राहुरभ्रवच्छशिभास्करौ ।
राहुरभ्रकसंस्थानः सोममाच्छाद्य
तिष्ठति ॥
उद्धृत्य पार्थिवीं छायां धूममेघ
इवोत्थितः ।
चन्द्रस्य यदवस्तब्धं राहुणा
भास्करस्य च ॥
नाम्नावखण्डितं तस्य कैवल्यं
व्यामलीकृतम् ।
कर्द्दमेन यथा वस्त्रं
शुक्लमप्युपहन्यते ॥
एकोद्देशेऽथ सर्व्वद्या राहुणा
चन्द्रमास्तथा ।
प्रक्षालितं तदेवेह पुनः शुक्लतरं
भवेत् ॥
राहुयुक्तं भवेत्तद्वन्निर्म्मलं
चन्द्रमण्डलम् ।
राहुणा छादितौ वापि दृष्ट्वा
चन्द्रदिवाकरौ ॥
विप्राः शान्तिपरा भूत्वा
पुनराप्याययन्ति तम् ।
एवं न गृह्यते सूर्य्यश्चन्द्रमास्तत्र
गृह्यते ॥
अबुधास्तं न पश्यन्ति मानुषा
मांसचक्षुषः ।
जगत्सम्मोहनं चैतत् ग्रहणं
चन्द्रसूर्य्ययोः ॥”
इत्याद्ये देवीपुराणे ग्रहणविकल्पः ॥
* ॥
विधोर्देवपित्राद्यन्नकारणत्वं
राजयक्ष्मादिकार-
णत्वञ्च कालिकापुराणे २० । २१
अध्याययोर्द्रष्ट-
व्यम् ॥ * ॥ (कर्त्तरि, त्रि । यथा,
ऋग्वेदे ।
१० । ५५ । ५ ।
“विधुं दद्राणं समने बहूनां
युवानं सन्तं पलितो जगार ॥”
“विधुं विधातारं सर्व्वस्य युद्धादेः
कर्त्तारं
ननु मां प्रापय पत्युरन्तिकम् ॥”)

**विधुरा**, स्त्री, रसाला । इति मेदिनी । रे, २१६ ॥

(जत्रूद्र्ध्वस्नायुमर्म्म । यथा, सुश्रुते । ३ । ६ ।
“जत्रूद्र्ध्वं मर्म्माणि चतस्रो धमन्योऽष्टौ मातृका द्वे
कृकाटिके द्वे विधुरे ॥”)

**विधुवनं**, क्ली, (वि + धु + ल्युट् । कुटादित्वात्

साधुः ।) कम्पनम् । इत्यमरः । ३ । २ । ४ ॥

**विधूतं**, त्रि, (वि + धू + क्तः ।) कम्पितम् । (यथा,

कलाविलासे । २ । २८ ।
“तं वदति सोऽन्यदृष्टिः सभ्रूभङ्गं विधूतहस्ताग्रः ।
वञ्चकवचनः पापो वृत्तिक्षीणः कुतोऽयमा-
यातः ॥”)
त्यक्तम् । इति हेमचन्द्रः ॥ (यथा, महागण-
पतिस्तोत्रे । १ ।
“योगं योगविदां विधूतविविधव्यासङ्गशुद्धाशय-
प्रादुर्भूतसुधारसप्रसृमरध्यानास्पदाध्यासि
नाम् ॥”)

विपूर्ब्बो दधातिः करोत्यर्थे ।” इति तद्भाष्ये सायणः ॥)

**विधुतः**, त्रि, (वि + धु + क्तः ।) त्यक्तः । इत्यमरः ॥ (यथा, भागवते । ९ । १९ । २५ ।

“स तत्र निर्म्मुक्तसमस्तसङ्ग
आत्मानुभूत्या विधुतत्रिलिङ्गः ।
परेऽमले ब्रह्मणि वासुदेवे
लेभे गतिं भागवतीं प्रतीतः ॥”)

कम्पितश्च ॥

**विधुतिः**, स्त्री, कम्पनम् । विपूर्ब्बधुधातोः क्तिप्रत्ययेन निष्पन्ना ॥ (यथा, भागवते । १० । ३३ । ८ ।

**विधूतिः**, स्त्री, कम्पनम् । विपूर्व्वधूधातोः क्तिप्रत्य-
येन निष्पन्नमिति ॥

**विधूननं**, क्ली, (वि + धू + णिच् + ल्युट् । नुक् च ।)
कम्पनम् । तत्पर्य्यायः । विधुवनम् २ । इत्य-
मरः । ३ । २ । ४ ॥ विधुननम् ३ । इति शब्द-
रत्नावली ॥ (यथा, साहित्यदर्पणे । ३ । १४२
।
"केशस्तनाधरादीनां ग्रहे हर्षेऽपि सम्भ्रमात् ।
प्राहुः कुट्टमितं नाम शिरःकरविधूननम् ॥")

**विधूनितं**, त्रि, कम्पितम् । विपूर्ब्बण्यन्तधूधातोः
क्तप्रयेत्यन निष्पन्नम् ॥

**विधृतं**, क्ली, विशेषेण धृतम् । यथा, --
"अथावकृष्य विण्मूत्रं लोष्टकाष्ठतृणादिना ।
उदस्तवासा उत्तिष्ठेद्दृढं विधृतमेहनः ॥"
इत्याह्निकतत्त्वम् ॥

**विधेयः**, त्रि, विधातुं शक्यः । (वि + धा + "अचो
यत् ।" ३ । १ । ९७ । इति यत् । "ईद्यति ।"
६ । ४ ।
६५ । इति आत ईत् ।) वाक्यस्थः ।
तत्पर्य्यायः ।
विनयग्राही २ वचनेस्थितः ३ आश्रवः ४ ।
इत्य-
मरः ॥ (यथा, महाभारते । ५ । २३ । १३ ।
"कर्णोऽमात्यः कुशली तात कच्चित्
सुयोधनो यस्य मन्दो विधेयः ॥")
विधिजन्यबोधविषयः । यथा, --
"अनुवाद्यमनुक्त्वा तु न विधेयमुदीरयेत् ।
न ह्यलब्धास्पदं किञ्चित् कुत्रचित् प्रतितिष्ठति
॥"
इत्येकादशीतत्त्वम् ॥
अपि च । प्रमाणान्तरासन्निहितं कर्म्म प्रथमं
बुद्धौ न विषयीभवति शब्दादेव तस्य कर्म्मण
उपस्थितिरित्युपादेये विधेये कर्म्मणि पूजादौ
शुचितत्कालजीविनः कर्म्माधिकारात् प्रमाणा-
न्तरलभ्यत्वेनाविधेयत्वात्तिथ्यादिर्गुणः । इति
तिथ्यादितत्त्वम् ॥ (कर्त्तव्यम् । यथा, बृहत्-
"हरिते रोगोऽनुतापः
शस्यानामीतिभिश्च
विध्वंसः ।
कपिले शीघ्रगसत्त्वम्लेच्छध्वंसोऽथ
दुर्भिक्षम् ॥"
(अपकारः । यथा, किराते । ३ । १६ ।
"विधाय विध्वं समनात्मनीनं
शमैकवृत्तेर्भवतश्छलेन ।
प्रकाशितत्वन्मतिशीलसाराः
कृतोपकारा इव विद्विषस्ते ॥")

**विनतः**, त्रि, (वि + नम + क्तः ।) प्रणतः । (यथा,
आर्य्यासप्तशत्याम् । ६१६ ।
"सखि दुरवगाहगहनो विदधानो विप्रियं
प्रियजनेऽपि ।
खल इव दुर्लक्ष्यस्तव विनतमुखस्योपरि
स्थितः
कोपः ॥")
भुग्नः । (यथा, बृहत्संहितायाम् । ६१ ।
३ ।
"दशसप्तचतुर्द्दन्त्यः प्रलम्बमुण्डानना
विनतपृष्ठाः ।
ह्रस्वस्थूलग्रीवा यवमध्या दारितखुराश्च
॥")
शिक्षितः । इति मेदिनी । ते, १५६ ॥
(सङ्कु-
चितः । यथा, रामायणे । १ । ४३ ।
२४ ।
"विनतं क्वचिदुद्भूतं क्वचिद्याति शनैः
शनैः ।
सलिलेनैव सलिलं क्वचिदभ्याहतं पुनः
॥"
पुं, स्वनामख्यातवानरविशेषः । यथा,
भट्टिः ।
७ । ५२ ।
"प्राचीं तावद्भिरव्यग्रः कपिभिर्विनतो
ययौ ।
अप्रग्राहैरिवादित्यो वाजिभिर्दूरपातिभिः
॥")
प्रणतिः । इति मेदिनी । ये, १०५ ॥ *
॥ (यथा,
"जितेन्द्रियत्वं विनयस्य कारणं
गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते
जनानुरागप्रभवा हि सम्पदः ॥"
इत्युद्भटः ॥)
अथ विनयप्रशंसा ।
"वृद्धांश्च नित्यं सेवेत विप्रान् वेदविदः
शुचीन् ।
तेभ्यो हि शिक्षेत् विनयं विनीतात्मा हि
नित्यशः ॥
समग्रां वशगां कुर्य्यात् पृथिवीन्नात्र
संशयः ।
बहवोऽविनयाद्भ्रष्टा राजानः
सपरिच्छदाः ।
वनस्थाश्चैव राज्यानि विनयात्
प्रतिपेदिरे ॥"
इति मत्स्यपुराणे १८९ अध्यायः ॥ *
॥
(विशिष्टो नयः ।) दण्डः । यथा । "यत्तु
।
'पूर्ब्बमाक्षारयेद्यस्तु नियतं स्यात् स
दोष-
भाक् ।
पश्चाद्यः सोऽप्यसत्कारी पूर्व्वे तु विनयो
गुरुः ॥'
इति नारदवचनम् ॥
तत्पूर्व्वपिक्षया
परस्याधिकवाक्पारुष्योत्पा-
दकस्यापि स्वल्पदण्डविधायकम् ।
युगपत्संप्रव-
र्त्तने अधिकदण्डाभावमाह स एव ।
'पारुष्ये साहसे चैव युगपत्संवर्त्तयोः ।
विशेषश्चेन्न लभ्येत विनयः स्यात्
समस्तयोः ॥'
विनयो दण्डः ।" इति व्यवहारतत्त्वम् ॥

**विनयग्राही**, [न्] त्रि, (विनयं गृह्णातीति । ग्रह
+ णिनिः ।) वचनेस्थितः । इत्यमरः ॥

संहितायाम् । ९५ । ४९ ।
“द्वात्रिंशत्प्रविभक्ते दिक्चक्रे यद्यथा समु-
द्दिष्टम् ॥
तत्तथा विधेयं गुणदोषफलं यियासूनाम् ॥” *
॥
अधीनः । यथा, रघुः । १९ । ४ ।
“सन्निवेश्य सचिवेष्वतः परं
स्त्रीविधेयनवयौवनोऽभवत् ॥”
तथा च तत्रैव । ७ । ६२ ।
“तस्थौ ध्वजस्तम्भनिषण्णदेहं
निद्राविधेयं नरदेवसैन्यम् ॥”)

**विधेयता**, स्त्री, (विधेयस्य भावः । विधेय + तल् ।)

विधेयत्वम् । विधिजन्यबोधविषयत्वम् । यथा ।
यथा ब्रह्मवधादिषु पापस्य निषिद्धतयोपयुक्त-
बाह्मणादिज्ञाने द्वैगुण्यं तथा गङ्गास्नानादिषु
पुण्यस्य विधेयतावच्छेदकगङ्गादिज्ञाने द्वैगुण्यम्
।
इति प्रायश्चित्ततत्त्वम् ॥ (अधीनता । यथा,
किराते । ११ । ३३ ।
“परवानर्थसंसिद्धौ नीचवृत्तिरपत्रपः ।
अविधेयेन्द्रियः पुंसां गौरिवैति विधेयताम् ॥”)

**विध्वंसः**, पुं, (वि + ध्वंस + घञ् ।) विनाशः ।

यथा, तिथ्यादितत्त्वे ।

**विनता**, स्त्री, गरुडमाता । (सा तु दक्षप्रजापतेः

कन्या । यथा, महाभारते । १ । ६५ ।
१२ ।
“क्रोधा प्राधा च विश्वा च विनता
कपिला
मुनिः ।
कद्रुश्च मनुजव्याघ्र दक्षकन्यैव भारत
॥”)
पिडकाभेदः । इति मेदिनी । ते, १५६
॥
(यथा, सुश्रुते । २ । ६ ।
“महती पिडका नीला पिडका विनता
स्मृता ॥”)

**विनतासूनुः**, पुं, (विनतायाः सूनुः पुत्त्रः ।)

अरुणः । इति हेमचन्द्रः ॥ गरुडश्च ॥

**विनदः**, पुं, (विशेषेण नदति शब्दायते पत्र-

फलादिनेति । नद् + अच् ।)
विन्याकवृक्षः ।
इति शब्दचन्द्रिका ॥ छातियान् इति
ख्यातः ॥

**विनम्रकं**, क्ली, तगरपुष्पम् । इति राज-

निर्घण्टः ॥

**विनयः**, त्रि, बणिक् । क्षिप्तः । निभृतः । विजिते-

न्द्रियः । इत्यजयपालः ॥ (विशेषेण
नयतीति ।
नी + अच् । विशेषेण प्रापकः ।
पृथक्कर्त्ता ।
यथा, ऋग्वेदे । २ । २४ । ९ ।
“स संनयः स विनयः पुरोहितः
समुष्टुतः सयुधि ब्रह्मणस्पतिः ॥”
“विनयः संगतानां विविधं नेता
पृथक्कर्त्ता स
एव ।” इति तद्भाष्ये सायणः ॥)

**विनयः**, पुं, (वि + नी + अच् ।) शिक्षा । (यथा,

रघुः । १ । २४ ।
“प्रजानां विनयाधानाद्रक्षणाद्भरणादपि ।
स पिता पितरस्तासां केवलं जन्महेतवः
॥”)

**विनयस्थः**, त्रि, (विनये तिष्ठतीति । स्था + कः ।)

आज्ञाकारी । तत्पर्य्यायः । विधेयः २
आश्रवः
३ वचनस्थितः ४ वश्यः ५ प्रणेयः ६ ।
इति
हेमचन्द्रः । ३ । ९६ ॥

**विनया**, स्त्री, वाठ्यालकः । इति मेदिनी ॥

**विनशनं**, क्ली, (विनश्यति अन्तर्दधाति सरस्वत्य-

त्रेति । वि + नश + अधिकरणे ल्युट् ।)
कुरु-
क्षेत्रम् । तच्च हस्तिनाया उत्तरपश्चिमे
वर्त्तते ।
इति त्रिकाण्डशेषः ॥ (यथा, महाभारते ।
३ ।
८२ । १०५ ।
“ततो विनशनं गच्छेन्नियतो नियताशनः
।
गच्छत्यन्तर्हिता यत्र मेरुपृष्ठे सरस्वती
॥”
वि + नश + भावे ल्युट् ।) विनाशश्च ॥

**विनष्टः**, त्रि, (वि + नश + क्तः ।) नाशाश्रयः ।

ध्वंसविशिष्टः । यथा । शिखी विनष्टः
पुरुषो न
नष्टः । इति विशेषव्याप्तिटीकायां
मथुरानाथः ॥
पतितः । यथा नारदः ।
“विनष्टे वाप्यशरणे पितर्य्युपरतस्पृहे ॥”
विनष्टे पतिते । इति दायभागः ॥

**विनष्टिः**, स्त्री, विनाशः । इति विपूर्ब्बनशधातोर्भवि

क्तिप्रत्ययेव निष्पन्नमिति । इति
सिद्धान्त-
कौमुदी ॥ (यथा, भागवते । ३ । १ ।
२० ।
“तत्राथ शुश्राव सुहृद्विनष्टिं
वनं यथा वेणुजवह्निसंश्रयम् ।

संस्पर्द्धया जग्धमथानुशोचन्
सरस्वतीं प्रत्यगियाय तूष्णीम् ॥”)

**विनसः**, त्रि, (विगता नासिका यस्य । नसादेशः ।)
गतनासिकः । तत्पर्य्यायः । विग्नः २
विख्रः ३
विनासकः ४ । इति जटाधरः ॥

**विना**, व्य, (वि + “विनञ्भ्यां नानाञौ न सह ।”
५ । २ । २७ । इति ना ।) वर्ज्जनम् ।
तत्पर्य्यायः ।
पृथक् २ अन्तरेण ३ ऋते ४ हिरुक् ५
नाना
६ । इत्यमरः ॥ (शब्देनानेन योगे “पृथग्-
विनेति ।” २ । ३ । ३२ । इत्यनेन तृतीया
पञ्चमी
च स्यात् । एवं “पृथग्विना नानाभिरिति
योगविभागो द्वितीयार्थः ॥” इति
काशिकोक्त्या
द्वितीयापि । यथा, तत्रैव ।
“विना वातं विना वर्षं विद्युत्प्रपतनं विना ।
विना हस्तिकृतान्दोषान् केनेमौ पातितौ
द्रुमौ ॥”
तृतीयाप्रयोगो यथा, रघुवंशे २ । १४ ।
“शशाम वृष्ट्यापि विना दवाग्निः ॥”
पञ्चमीप्रयोगो यथा, सांख्यकारिकायाम् ।
४१ ।
“चित्रं यथाश्रयमृते
स्थाण्वादिभ्यो विना यथा च्छाया ।
तद्वद्विना विशेषै-
र्न तिष्ठति निराश्रयं लिङ्गम् ॥”)

**विनाकृतं**, त्रि, (विना अन्तरेण कृतम् ।) त्यक्तम् ।
इति त्रिकाण्डशेषः ॥

**विनायकः**, पुं, (विशिष्टो नायकः ।) बुद्धः । गणेशः ।
इत्यमरः ॥ (यथा, कथासरित्सागरे । ३०
। ५५ ।
“अस्तीह प्रमदोद्याने तरुमण्डलमध्यगः ।
दृष्टप्रभावो वरदो देवदेवो विनायकः ॥”)

विघ्नार्थमविशिष्टानां उत्पादयितुमर्हसि ॥
एवमुक्तस्तदा देवैर्भवः परमया मुदा ।
उमां निरीक्षयामास चक्षुषानिमिषेण ह ॥
देवानां सन्निधौ तस्य पश्यतो मां महात्मनः
।
चिन्ताभूद्व्योम्नि मूर्त्तेभ्यो दृश्यते केन
हेतुना ॥
पृथिव्या विद्यते मूर्त्तिरपां मूर्त्तिस्तथैव च ।
तेजसः श्वसनस्यापि मूर्त्तिरेषा तु दृश्यते ॥
आकाशस्य कथं नेति मत्वा देवो जहास च
।
ज्ञानशक्तिः परान् दृष्ट्वा यद्दृष्टं व्योम्नि
शम्भुना ॥
यच्चोक्तं ब्रह्मणा पूर्व्वं शरीरन्तु शरीरिणाम् ।
यच्चापि हसितं तेन देवेन परमेष्ठिना ॥
एतत्कार्य्यचतुष्केण पृथिव्यादिचतुर्ष्वपि ।
मूर्त्तिमानतितेजस्वी हसतः परमेष्ठिनः ॥
प्रदीप्तास्यो महादीप्तः कुमारो भासयन्
दिशम् ।
परमेष्ठिगुणैर्युक्तः साक्षाद्रुद्र इवापरः ॥
उत्पन्नमात्रो देवानां योषितः संप्रमोहयन् ।
कान्त्या दीप्त्या तथा मूर्त्या रूपेण च
महात्मवान् ॥
तं दृष्ट्वा परमं रूपं कुमारस्य महात्मनः ।
उमा निमिषनेत्राभ्यां तमपश्यत भामिनी ॥
तं दृष्ट्वा कुपितो देवस्तीव्रकोपसमन्वितः ।
मत्वा कुमाररूपन्तु शोभनं मोहनं दृशाम् ।
ततः शशाप तं देवो गणेशं परमेश्वरः ॥
कुमार गजवक्त्रस्त्वं प्रलम्बजठरस्तथा ।
भविष्यति तथा सर्पैरुपवीतगतिर्ध्रुवम् ॥
एवं शशाप तं देवस्तीव्रकोपसमन्वितः ।
धुन्वन् शरीरमुत्थाय ततो देवो रुषान्वितः
॥
यथा यथासौ स शरीरमाद्यं
धुनोति देवस्त्रिशिखास्त्रपाणिः ।
तथा तथा चाङ्गरुहाच्चकास
जलं क्षितौ संन्यपतंस्तथान्ये ॥
विनायकानेकमुखा गजास्या-
स्तमालनीलाञ्जनसन्निकाशाः ।

त्वया च तुष्टस्तु शरीरचारी ॥
आकाशमेतद्बहुधा व्यवस्थितं
त्वया चैको वदतां ते प्रयाताः ।
प्रभुर्भवत्वप्रतिमास्त्रपाणिना
इमान् हि चास्त्रैः सुवरांश्च देहि ॥
इत्येवमुक्त्राभिगते पितामहे
त्रिलोचनश्चात्मभवं जगाद ।
विनायको विघ्नकरो गजास्यो
गणेशनामा तु भवस्य पुत्त्रः ॥
एते च सर्व्वे त्वपयान्तु भृत्या
विनायकाः क्रूरदृशः प्रचण्डाः ।
उच्छुष्मदानादिविवृद्धदेहाः
कार्य्येषु सिद्धिं प्रतिपादयन्तः ॥
भवांश्च वेदेषु तथा मखेषु
कार्य्येषु चान्येषु महानुभावात् ।
अग्रेषु पूजां लभतेऽन्यथा च
विनाशयिष्यस्यथ कार्य्यसिद्धिम् ॥
इत्येवमुक्तः परमेश्वरेण
सुरैः समं काञ्चनकुम्भसंस्थैः ।
जलैस्तथासावभिषिक्तगात्रो
रराज राजेन्द्रः विनायकानाम् ॥
दृष्ट्वाभिषिच्यमानं तु देवास्तं गणनायकम्
।
तुष्टुवुः प्रयताः सर्व्वे त्रिशूलास्त्रस्य
सन्निधौ ॥
देवा ऊचुः ।
नमस्ते गजवक्त्राय नमस्ते गणनायक ।
विनायक नमस्तेऽस्तु नमस्ते चण्डविक्रम
॥
नमोऽस्तु ते विघ्नकर्त्रे नमस्ते सर्पमेखल
।
नमस्ते रुद्रवक्त्रोत्थ प्रलम्बजठराश्रित ।
सर्व्वदेवनमस्कारादविघ्नं कुरु सर्व्वदा ॥
एवं स्तुतस्तदा देवैर्महात्मा गणनायकः ।
अभिषिक्तस्तु रुद्रेण सोमस्यापत्यतां गतः
॥
एतच्चतुर्थ्यां सम्पन्नं गणाध्यक्षस्य पार्थिव
।

गरुडः । विघ्नः । (यथा, हरिवंशे । १८१ । ६५ ।
“राक्षसाश्च पिसाचाश्च भूतानि च विनायकाः ॥”)
गुरुः । इति मेदिनी । के, ११२ ॥ * ॥
विनायकगणो यथा, --
“गाङ्गेयो विष्णवश्चैव द्वौ विज्ञेयौ विनायकौ ॥”
इति वह्निपुराणे गणभेदनामाध्यायः ॥ * ॥
विनायकस्योत्पत्तिर्यथा, --
प्रजापाल उवाच ।
“कथं गणपतेर्जन्म मूर्त्तिमत्त्वञ्च सत्तम ! ।
एतन्मे संशयं छिन्धि धृतिकष्टं व्यवस्थितम् ॥
महातपा उवाच ।
पूर्ब्बं देवगणाः सर्व्वे ऋषयश्च तपोधनाः ।
कार्य्यारम्भे यथा प्राप्ताः सिद्धिं ते च न संशयः ॥
सन्मार्गावस्थिषु यथा सिध्यन्ते विघ्नतः क्रियाः ।
असत्कारिषु सर्व्वेषु तद्वदेवमविघ्नतः ॥
ततो देवाः सपितरश्चिन्तयामासुराजसा।
असत्कार्य्येषु विघ्नार्थे सर्व्व एवाभ्यमन्त्रयन् ॥
ततस्तेषा तदा मन्त्रं कुर्व्वतां त्रिदिवौकसाम् ।
बभूव बुद्धिर्गमने रुद्रं प्रति महामते ॥
ते तत्र रुद्रमामन्त्र्य कैलासनिलयं गुरुम् ।
ऊचुः सविनयं सर्व्वे प्रणिपातपुरःसरम् ॥
देवा ऊचुः ।
देवदेव महादेव शूलपाणे त्रिलोचन ।
उत्तस्थुरुच्चैर्विविधास्त्रहस्ता-
स्ततस्तु देवा मनसाकुलेन ॥
किमेतदित्यद्भुतकर्म्मकारी
ह्येकः करोत्यप्रतिमं महच्च ।
कार्य्यं सुराणां कृतमेतदिष्टं
भवेत्तथैतं परितं कुतस्तत् ॥
दिवौकसां चिन्तयतां तथा तु
विनायकैः क्ष्मा क्षुभिता बभूव ।
चतुर्मखश्चाप्रतिमो विमान-
मारुह्य खे वाक्यमिदं जगाद ॥
धन्यास्तु देवा सुरनायकेन
त्रिलोचनेनाद्भुतरूपिणा च ।
अनुगृहीताः परमेश्वरेण
सुरद्विषां विघ्नकृतां नतौ च ।
इत्येवमुक्त्वा प्रपितामहस्ता-
नुवाच देवस्त्रिंशिखा स्त्रपाणिम् ॥
यस्ते विभो वक्त्रसमुद्भवः प्रभु-
र्विनायका नाम वसन्त्विमेऽनुगाः ।
भवन्त्वथास्यात्मवरेण चाम्बरे
यतस्ततोऽयं महती तिथीनां परमा तिथिः ॥
एतस्यां यस्तिलान् भक्त्या भुक्त्वा गणपतिं नृप ।
आराधयति तस्याशु तुष्यते नात्र संशयः ॥
यश्चैतत् पठते स्तोत्रं यश्चैतत् शृणुयात्तथा ।
तस्य विघ्ना न जायन्ते न पापं सर्व्वथा नृप ॥”
इत्यादि वाराहे विनायकोत्पत्तिनामाध्यायः ॥ * ॥
विनायकस्य नामाष्टकस्तोत्रं यथा, --
श्रीविष्णुरुवाच ।
“गणेशमेकदन्तञ्च हेरम्बं विघ्ननायकम् ।
लम्बोदरं सूर्पकर्णं गजवक्त्रं गुहाग्रजम् ॥
नामाष्टकार्थं पुत्त्रस्य शृणु मत्तो हरप्रिये ।
स्तोत्राणां सारभूतञ्च सर्व्वविघ्नहरं परम् ॥
ज्ञानार्थवाचको गश्च णश्च निर्व्वाणवाचकः ।
तयोरीशं परं ब्रह्म गणेशं प्रणमाम्यहम् ॥ १ ॥
एकशब्दः प्रधानार्थो दन्तश्च बलवाचकः ।
बलं प्रधानं सर्व्वस्मादेकदन्तं नमाम्यहम् ॥ २ ॥
दीनार्थवाचको हेश्च रम्बः पालनवाचकः ।
परिपालकं तं दीनानां हेरम्बं प्रणमाम्यहम् ॥ ३ ॥
विपत्तिवाचको विघ्नो नायकः खण्डनार्थकः ।
विपत्खण्डनकारन्तं नमामि विघ्ननायकम् ॥ ४ ॥

विष्णुदत्तैश्च नैवेद्यैर्यस्य लम्बोदरं पुरा ।
पित्रा दत्तैश्च विविधैर्वन्दे लम्बोदरञ्च तम् ॥ ५ ॥
शूर्पाकारौ च तत्कर्णौ विघ्नवारणकारणौ ।
सम्पदास्फालरूपौ च सूर्पकर्णं नमाम्यहम् ॥ ६ ॥
विष्णुप्रसादपुष्पञ्च यन्मूर्द्धिन मुनिदत्तकम् ।
तद्गजेन्द्रवक्त्रयुक्तं गजवक्त्रं नमाम्यहम् ॥ ७ ॥
गुहस्याग्रे च जातोऽयमाविर्भूतो हरगृहे ।
वन्दे गुहाग्रजं देवं सर्व्वदेवाग्रपूजितम् ॥ ८ ॥
एतन्नामाष्टकं दर्गे नामार्थसंयुतं परम् ।
पुत्त्रस्य पश्य वेदे च तदा कोपं वृथा कुरु ॥
एतन्नामाष्टकं स्तोत्रं नामार्थसंयुतं शुभम् ।
त्रिसन्ध्यं यः पठेन्नित्यं स सुखी सर्व्वतो जयी ॥
ततो विघ्नाः पलायन्ते वैनतेयाद्यथोरगाः ।
गणेश्वरप्रसादेन महाज्ञानी भवेद्ध्रुवम् ॥
पुत्त्रार्थी लभते पुत्त्रं भार्य्यार्थी विपुलां स्त्रियम् ।
महाजडः कवीन्द्रश्च विद्यावांश्च भवेद्ध्रुवम् ॥”
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ४४ अध्यायः ॥
अस्य कवचं यथा, --
नारद उवाच ।
“संसारमोचनस्यास्य कवचस्य प्रजापतिः ।
अश्वमेधसहस्राणि राजसूयशतानि च ।
ग्रहेन्द्रकवचस्यास्य कलां नार्हन्ति षोडशीम् ॥
इदं कवत्तमज्ञात्वा यो भजेच्छङ्करात्मजम् ।
शतलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ॥”
इति ब्रह्मवैवर्त्ते गणपतिखण्डे गणेशकवचं नाम
१३ अध्यायः ॥ * ॥ अथ विनायकशान्तिः ।
याज्ञवल्क्य उवाच ।
“विनायकोपसृष्टस्य लक्षणानि निबोधत ।
स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति ।
विमना विफलारम्भः स सीदत्यनिमित्ततः ॥
राजा राज्यं कुमारी च पतिं पुत्त्रञ्च गुर्व्विणी ।
नाप्नुयात् स्वपनन्तस्य पुण्येऽह्नि विधिपूर्ब्बकम् ॥
गौरसर्षपकल्केन सत्येनोत्सारितस्य च ।
सर्व्वौषधैः सर्व्वगन्धैर्व्विलिप्तशिरसस्तथा ॥
भद्रासनोपविष्टस्य स्वस्तिवाच्य द्विजान् शुभान् ।
मृत्तिकां रोचनां गन्धान् गुग्गुलुं चाप्सु निक्षिपेत् ॥
या आहृता ह्येकवर्णैश्चतुर्भिः कलसैर्ह्रदात् ।
चर्म्मण्यानुडुहे रक्ते स्थाप्यं भद्रासनं तथा ॥
सहस्राक्षं शतधारं ऋषिभिः पारणं कृतम् ।
तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते ॥
भगन्तु वरुणो राजा भगं सूर्य्यो बृहस्पतिः ।
उक्त्वा सर्व्वजनं मेऽन्ते वशमानय ठद्वयम् ।
अष्टाविंशत्यक्षरोऽयं ताराद्यो मनुरीरितः ॥”
भूबीजमाह ।
“स्मृतिस्थं मांसमौबिन्दुयुक्तं भूबीजमीरितम् ।”
स्मृतिर्गकारः । मांसं लकारः ॥ * ॥ अस्य ध्यानम् ।
“नवरत्नमयं द्वीपं स्मरेदिक्षुरसाम्बुधौ ।
तद्वीचिधौतपर्य्यन्तं मन्दमारुतसेवितम् ॥
मन्दारपारिजातादिकल्पवृक्षलताकुलम् ।
उद्भूतरत्नच्छायाभिररुणीकृतभूतलम् ।
उद्यद्दिनकरेन्दुभ्यामुद्भाषितदिगन्तरम् ॥
तस्य मध्ये पारिजातं नवं रत्नमयं स्मरेत्
ऋतुभिः सेवितं षड्भिरनिशं प्रीतिवर्द्धनम् ॥
तस्याधस्तात् महापीठे रचिते मातृकाम्बुजे ।
षट्कोणान्तस्त्रिकोणस्थंमहागणपतिं स्मरेत् ॥
हस्तीन्द्राननमिन्दुचूडमरुणच्छायं त्रिनेत्रं रसा-
दाश्लिष्टं प्रियया सपद्मकरया स्वाङ्कस्थया सन्ततम् ।
वीजापूरगदाधनुस्त्रिशिखयुक्चक्राब्जपाशोत्पलं
व्रीह्यग्रस्वविषाणगण्डकलसान्हस्तैर्व्वहन्तं भजे ॥
गण्डपाणिगलद्दानपूरलालसमानसान्।
द्विरेफान् कर्णतालाभ्यां वारयन्तं मुहुर्मुहुः ॥
कराग्रधृतमाणिक्यकुम्भवक्त्रविनिःसृतैः ।
रत्नवर्षैः प्रीणयन्तं साधकं मदविह्वलम् ॥
माणिक्यमुकुटोपेतं रत्नाभरणभूषितम् ॥”
अस्य पुरश्चरणं चतुर्लक्षजपः ॥ * ॥ अपि च ।
“शक्तिरुद्धनिजं बीजं महागणपतिं वदेत् ।
ङेऽन्तमग्निबधूप्रोक्तो मन्त्रोऽयं द्वादशाक्षरः ॥”
अस्य ध्यानम् ।
“मुक्तागौरं मदगजमुखं चन्द्रचूडं त्रिनेत्रं
हस्तैः स्वीयैर्दधतमरविन्दङ्कुशौ रत्नकुम्भम् ।
अङ्कस्थायाः सरसिजरुचेस्तद्ध्वजालम्बिपाणे-
र्देव्या योनौ विनिहितकरं रत्नमौलिं भजामि ॥”
अस्य पुरश्चरणं लक्षजपः ॥ * ॥ मन्त्रान्तरम् ।
“शक्तिरुद्धं निजं बीजं वशमानय ठद्वयम् ।
ताराद्यो मनुराख्यातो रुद्रसंख्याक्षरान्वितः ॥”
अस्य ध्यानम् ।

ऋषिश्छन्दश्च बृहती देवो
लम्बोदरः स्वयम् ॥
धर्म्मार्थकाममोक्षेषु विनियोगः
प्रकीर्त्तितः ।
सर्व्वेषां कवचानाञ्च सारभूतमिदं
मुने ॥
ॐ गौँ गैँ श्रीँ गणेशाय स्वाहा मे
पातु
मस्तकम् ।
द्वात्रिंशदक्षरो मन्त्रो ललाटं मे
सदावतु ॥
ॐ ह्रीँ क्लीँ श्री गमिति च सततं
पातु
लोचनम् ।
तारकां पातु विघ्नेशः सततं
धरणीतले ॥
ॐ ह्रीँ श्रीँ क्लीमिति सततं पातु
नासिकाम् ।
ॐ गौँ गं सूर्पकर्णाय स्वाहा
पात्वधरं मम ॥
दन्तांश्च तालुकां जिह्वां पातु मे
षोडशाक्षरः ।
ॐ श्रीं लम्बोदरायेति स्वाहा गण्डं
सदावतु ॥
ॐ गां गं गजाननायेति स्वाहा
स्कन्धं सदा-
वतु ॥
श्रीं क्लीं स्त्रीमिति कङ्कालं पातु
वक्षःस्थलञ्च गं ।
पाणौ पादौ सदा पातु सर्व्वाङ्गं
विघ्ननिघ्नकृत् ॥
प्राच्यां लम्बोदरः पातु आग्नेय्यां
विघ्ननायकः ।
दक्षिणे पातु विघ्नेशो नैरृत्यान्तु
गजाननः ॥
पश्चिमे पार्व्वतीपुत्त्रो वायव्यां
शङ्करात्मजः ।
कृष्णस्यांशश्चोत्तरे तु
परिपूर्णतमस्य च ॥
ऐशान्यामेकदन्तश्च हेरम्बः पातु
चोर्द्ध्वतः ।

भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः ॥
यत्ते कोषसुसौभाग्यं सीमन्ते यच्च
मूर्द्धनि ।
ललाटे कर्णयोरक्ष्णोरापस्तत् घ्नन्तु ते
सदा ॥
स्नातस्य सार्षपं तैलं श्रुवेणौडम्बरेण तु ।
जुहुयान्मूर्द्धनि कुशान् सव्येन परिगृह्य च
॥
मितश्च संमितश्चैव तथा शालकटंकटाः
।
कुष्माण्डा राजपुत्त्राश्चेत्यन्ते
स्वाहासमन्वितैः ॥
दद्याच्चतुष्पथे सूर्पे कुशानास्तीर्य्य
सर्व्वशः ।
कृताकृतांस्तण्डुलांश्च पललौदनमेव च
॥
पुष्पं चित्रं सुगन्धिञ्च सुराञ्च त्रिविधामपि
।
मूलकं पूरिका पूपास्तथैवैरण्डिकाः
स्रजः ॥
दधि पायसमन्नञ्च गुडपिष्टं समोदकम् ।
एतान् सर्व्वानुपाहृत्य भूमौ कृत्वा ततः
शिरः ॥
अम्बिकामुपतिष्ठेच्च दद्यादर्घ्यं
कृताञ्जलिः ।
दूर्व्वासिर्षपपुष्पैश्च पुत्त्रजन्मभिरन्ततः ॥
कृतस्वस्त्ययनं चैव प्रार्थयेदम्बिकां
सतीम् ।
रूपं देहि यशो देहि भगं भगवति देहि मे
॥
पुत्त्रान् देहि श्रियं देहि सर्व्वकामांश्च देहि
मे ।
ब्राह्मणान् भोजयेत् पश्चात्
शुक्लवस्त्रानु-
लेपनैः ॥
वस्त्रयुग्मं गुरोर्द्दद्यादासंपूज्य ग्रहांस्तथा ।
श्रेयःकर्म्मफलं विद्यात्
सूर्य्यार्च्चनरतस्तथा ॥”
इति गारुडे १०० अध्यायः ॥ * ॥
अथ गणेशमन्त्राः ।

“हस्तैर्विभ्रतमिक्षुदण्डवरदौ पाशाङ्कुशौ पुष्कर-
स्पृष्टस्वप्रमदावराङ्गमनयाश्लिष्टंध्वजाग्रस्पृशा ।
श्यामाङ्ग्या विधृताब्जया त्रिनयनं चन्द्रार्द्धचूडं
जवा-
रक्तं हस्तिमुखं स्मरामि सततं भोगातिलोलं
विभुम् ॥”
अस्य पुरश्चरणं लक्षत्रयजपः ॥ * ॥ अथ हेरम्ब-
मन्त्रः । स च ऊकारयुक्तो गकारः सबिन्दुः
प्रणवादिनमोऽन्तश्चतुरक्षरः। निबन्धे ।
“पञ्चान्तको बिन्दुयुक्तो वामकर्णविभूषितः ।
तारादिहृदयान्तोऽयं हेरम्बमनुरीरितः ।
चतुर्वर्णात्मको नृणां चतुर्व्वर्गफलप्रदः ॥”

| | | |
|---|---|---|
| गणाधिपोऽप्यधः पातु<br>सर्व्वपूज्यश्च सर्व्वतः ।<br>स्वप्ने जागरणे चैव पातु मे योगिनां<br>गुरुः ॥<br>इति ते कथितं वत्स !<br>सर्व्वमन्त्रौघविग्रहम् ।<br>संसारमोहनं नाम कवचं<br>परमाद्भुतम् ॥<br>श्रीकृष्णेन पुरा दत्तं गोलोके<br>रासमण्डले ।<br>वृन्दावने विनीताय मह्यं<br>दिनकरात्मज ॥<br>मया दत्तञ्च तुभ्यञ्च यस्मै कस्मै न<br>दास्यसि ।<br>परं वरं सर्व्वपूज्यं<br>सर्व्वसङ्कटतारणम् ॥<br>गुरुमभ्यर्च्च्य विधिवत् कवचं<br>धारयेत्तु यः ।<br>कण्ठे वा दक्षिणे बाहौ सोऽपि<br>विष्णुर्न संशयः ॥ | “पञ्चान्तकं शशिधरं बीजं गणपतेर्व्विदुः<br>।”<br>पञ्चान्तको गकारः । ध्यानन्तु गणेशशब्दे<br>द्रष्टव्यम् । अस्य पुरश्चरणं चतुर्लक्षजपः<br>॥ * ॥<br>अथ महागणपतिमन्त्रः । निबन्धे ।<br>“श्रीशक्तिस्मरभूविघ्नबीजानिप्रथमं<br>वदेत् ।<br>ङेऽन्तं गणपतिं पश्चात् वरान्ते वरदं<br>पदम् ॥ | |

अस्य ध्यानम् ।
“मुक्ताकाञ्चननीलकुन्दघुसृणच्छायैस्त्रिनेत्रा-
न्वितै-
र्नागास्यैर्हरिवाहनं शशिधरं हेरम्बमर्कप्रभम् ।
दृप्तं दानमभीतिमोदकरदान्टङ्कं शिरोऽक्षा-
त्मिकां
मालां मुद्गरमङ्कुशं त्रिशिखकं दोर्भिर्द्दधानं
भजे ॥”
अस्य पुरश्चरणं त्रिलक्षसंख्यकजपः ॥ * ॥
मन्त्रा-
न्तरम् । गं क्षिप्रप्रसादनाय हृत् । तथा च
निबन्धे ।
“संवर्त्तको नेत्रयुतः पार्श्वो वह्न्यासने स्थितः ।
प्रसादनाय हृन्मन्त्रः स्वबीजाद्यो दशाक्षरः ॥”
अस्य ध्यानम् ।
“पाशाङ्कुशौ कल्पलतां विषाणं
दधत् स्वशुण्डाहितबीजपूरः ।
रक्तस्त्रिनेत्रस्तरुणेन्दुमौलि-
र्हारोज्ज्वलो हस्तिमुखोऽवतान्नः ॥”
अस्य पुरश्चरणं लक्षजपः ॥ * ॥ अथ हरिद्रा-
गणेशमन्त्रः ।
“पञ्चान्तको धरासंस्थो बिन्दुभूषितमस्तकः ।
एकाक्षरो महामन्त्रः सर्व्वकामफलप्रदः ॥”
ध्यानन्तु ।
“हरिद्राभं चतुर्ब्बाहुं हारिद्रवसनं विभुम् ।
पाशाङ्कुशधरं देवं मोदकं दन्तमेव च ॥”
अस्य पुरश्चरणं चतुर्लक्षजपः । इति तन्त्र-
सारः ॥ * ॥ (पीठस्थानविशेषः । यथा,
देवीभागवते । ७ । ३० । ७१ ।
“करवीरे महालक्ष्मीरुमाव्वी विनायके ।
आरोग्या वैद्यनाथे तु महाकाले महेश्वरी ॥”
विगतो नायको यस्येति विग्रहे अनाथे, त्रि ॥)

**विनायिका**, स्त्री, (विनायकस्य स्त्री । भार्य्यार्थे
ङीप् ।) गरुडपत्नी । इति शब्दमाला ॥

**विनारुहा**, स्त्री, (विना आश्रयं रोहतीति ।
रुह + कः । स्त्रियां टाप् ।) त्रिपर्णिका । इति
राजनिर्घण्टः ॥

**विनाशः**, पुं, (विनशनमिति । वि + नश + घञ् ।)

**विनाशी**, [न्] त्रि, विनाशकरणशीलः ।
विपूर्ब्ब-
नशधातोर्णिन्प्रत्ययेन निष्पन्नः ॥
(यथा, महा-
भारते । १२ । १०७ । ११ ।
“लोभमेको हि वृणुते
ततोऽमर्षमनन्तरम् ।
तौ क्षयव्ययसंयुक्तावन्योन्यञ्च
विनाशिनौ ॥”
यथा च मनौ । १ । २७ ।
“अण्व्यो मात्राविनाशिन्यो
दशार्द्धानान्तु याः
स्मृताः ।
ताभिः सार्द्धमिदं सर्व्वं
सम्भवत्यनुपूर्ब्बशः ॥”)

**विनाशोन्मुखं**, त्रि, (विनाशाय पतनाय उन्मु-
खम् ।) पछम् । इत्यमरः ॥
नाशोद्यतञ्च ॥

**विनासकः**, त्रि, (विगता नासा यस्य । बहुव्रीहौ
कन् ह्रस्वश्च ।) गतनासिकः । इति
जटाधरः ॥

**विनाहः**, पुं, (विशेषेण नह्यते अनेन । वि +
नह
+ “हलश्च ।” ३ । ३ । १२१ । इति
घञ् ॥)
कूपाननपिधानकः । इति
शब्दरत्नावली ॥

**विनिक्षिप्तः**, त्रि, विनिक्षेपाश्रयः । परित्यक्तः ।
विनिपूर्ब्बकक्षिपधातोः क्तप्रत्ययेन
निष्पन्नः ॥
(यथा, देवीभागवते । २ । ८ । २७ ।
“पितुः कण्ठेऽद्य मे येन विनिक्षिप्तो
मृतो-
रगः ॥”)

**विनिगमना**, स्त्री, एकतरपक्षपातिनी युक्तिः ।
एकतरावधारणा । यथा । उच्यते ।
एकदेशो-

“मङ्गलाचारयुक्तानां नित्यञ्च
प्रयतात्मनाम् ।
जपतां जुह्वताञ्चैव विनिपातो न विद्यते
॥”)

**विनिमयः**, पुं, (वि + नि + मी + अप् ।) परि-
दानम् । प्रतिदानम् । इति शब्दरत्नावली
॥
(यथा, रघुः । १ । २६ ।
“दुदोह गां स यज्ञाय शस्याय मघवा
दिवम् ।
सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥”)
बन्धकः । इति शब्दमाला ॥ यथा, --
“विक्रयैर्गां विनिमयैर्दत्त्वा गोमांसखादके ।
व्रतं चान्द्रायणं कुर्य्याद्वधे साक्षाद्वधी भवेत्
॥”
इति प्रायश्चित्ततत्त्वधृतगोभिलवचनम्॥

**विनियोगः**, पुं, (वि + नि + युज् + घञ् ।) फले
अर्पणम् । इति हेमचन्द्रः ॥ विनियोजनम्
।
यथा, --
“अनेनेदन्तु कर्त्तव्यं विनियोगः
प्रकीर्त्तितः ॥”
इत्याह्निकतत्त्वम् ॥
(यथा, सन्ध्याविधौ ।
“ॐकारस्य ब्रह्मऋषिर्गायत्रीच्छन्दः
सविता
देवता प्राणायामे विनियोगः ॥”)

**विनियोजितः**, त्रि, विनियुक्तः । विनिपूर्ब्बण्यन्त-
युजधातोः क्तप्रत्ययेन निष्पन्नः ॥

**विनिर्धूतः**, त्रि, (वि + निर् + धू + क्तः ।) दुरव-
स्थया चलितः । यथा, --
“ततो देवा विनिर्धूता भ्रष्टराज्याः परा-
जिताः ।
हृताधिकारास्त्रिदशास्ताभ्यांसर्व्वे निरा-
कृताः ॥”
इति मार्कण्डेये देवीमाहात्म्यम् ॥

विनशनम् । (यथा, गीतायाम् । २ । १७ ।
"अविनाशि तु तद्विद्धि येन सर्व्वमिदं ततम् ।
विनाशमव्ययस्थास्य न कश्चित् कर्त्तुमर्हति ॥")
तत्पर्य्यायः । अदर्शनम् २ । इत्यमरः ॥ छञ्छट्
३ । यथा, श्रीभागवते ।
"एषा षोरतमा सन्ध्या लोकछञ्छट्करी
विभो ॥"
छञ्छडित्यव्ययं विनाशे वर्त्तते । इति श्रीधर-
स्वामी ॥

**विनाशकः**, त्रि, विनाशकर्त्ता । विपूर्ब्बकनशधातो-
र्णक(ण्वुल्)प्रत्ययेन निष्पन्नः ॥ (यथा, महा-
भारते । १२ । ९१ । ९ ।
"राजैव कर्त्ता भूतानां राजैव च विनाशकः ।
धर्म्मात्मा यः स कर्त्ता स्यादधर्म्मात्मा विना-
शकः ॥")

पात्तस्यैव भूहिरण्यादावुत्पन्नस्य
स्वत्वस्य विनि-
गमनाप्रमाणाभावेन
वैशेषिकव्यवहारानर्हतया
अव्यवस्थितस्य गुटिकापातादिना
व्यञ्जनं
विभागः । इति दायभागः ॥ उच्यत
इति
भूहिरण्यादावुत्पन्नस्य
एकदेशोपात्तस्य तत्तदं-
शावच्छिन्नस्य विनिगमना
इदममुकस्य नान्य-
स्येत्यवधारणरूपा तत्प्रमाणभावेन
वैशेषिक-
व्यवहारः परस्परनैरपेक्षेण
दानविक्रयादि-
लक्षणस्तदनर्हतया अव्यवस्थितस्य
सतोऽप्यसत्-
कल्पस्य गुटिकापातादिना व्यञ्जनं
इदं अमुक-
स्येत्यवधारणं विभाग इत्यर्थः । इति
तट्टीकायां
श्रीकृष्णतर्कालङ्कारः ॥

**विनिद्रः**, त्रि, (विगता निद्रा मुद्रना यस्य ।)
उन्मीलितः । इति शब्दमाला ॥
(यथा, नैषधे ।
१ । ३४ ।
"विनिद्ररोमाजनि शृण्वती नलम् ॥"
तथा च सा हत्यदर्पणे । १०
परिच्छेदे ।
"उत्पत्तिरिन्दोरपि निष्फलैव
दृष्टा विनिद्रा नलिनी न येन ॥")
निद्रारहितः । (यथा, महाभारते । ३
।
२८५ । २१ ।
"स्वस्थमासीनमव्यग्रं विनिद्रं
राक्षसाधिपः ।
ततोऽब्रवीद्दशग्रीवः कुम्भकर्णं
महाबलम् ॥")

**विनिद्रत्वं**, क्ली, (विनिद्रस्य भावः ।) प्रबोधः
।

**विनिर्भयः**, पुं, (विशेषेण निर्नास्ति भयं यस्य ।)
साध्यगणविशेषः । यथा, --
"मनो मन्ता तथा शानो नरो यानश्च
वीर्य्य-
वान् ।
विनिर्भयो नयश्चैव हंसो नारायणो वृषः ।
प्रभुश्चेति समाख्याताः साध्याः द्वादश
पौर्व्विकाः ॥"
इति वह्निपुराणे काश्यपीयवंशः ॥
भयरहितश्च ॥

**विनिर्म्मोकः**, पुं, व्यतिरेकः । यथा । दिवाकरवार-
विनिर्म्मोके तु गर्गः । इति चूडाप्रकरणे
ज्योति-
स्तत्त्वम् ॥ (विगतो निर्म्मोको यस्य इति
विग्रहे
मुक्तकञ्चुके, त्रि ॥)

**विनिर्वृत्तः**, त्रि, समाप्तः । निष्पन्नः । विनिर्
पूर्ब्बकवृत्धातोः क्तप्रत्ययेन निष्पन्नः ॥

**विनिवृत्तः**, त्रि, निवृत्तिविशिष्टः । क्षान्तः ।
निरस्तः । विनिपूर्ब्बकवृत्धातोः
क्तप्रत्ययेन
निष्पन्नः ॥ (यथा, गीतायाम् । १५ । ५ ।
"निर्म्मानमोहा जितसङ्गदोषा
अध्यात्मनित्या विनिवृत्तकामाः ॥")

**विनिहतः**, त्रि, विनष्टः । विनिपूर्ब्बकहनधातोः
क्तप्रत्ययेन निष्पन्नः ॥

**विनीतः**, त्रि, (वि + नी + क्तः ।) विनयान्वितः ।
विनयः शास्त्रतः संस्कारः इन्द्रिययमो वा
।

| | | |
|---|---|---|
| | इति हेमचन्द्रः ॥ निद्रारहितत्वञ्च ॥<br>**विनिपातः**, पुं, (विशेषेण निपतनम् । वि + नि +<br>पत + घञ् ।) निपातः ।<br>दैवादिव्यसनम् । इति<br>मेदिनी । ते, २१७ ॥ अवमानः ।<br>इति हेम-<br>चन्द्रः ॥ (यथा, मनौ । ४ । १४६ । | |

तत्पर्य्यायः । निभृतः २ प्रश्रितः ३ । इत्यमर-
भरतौ ॥ (यथा, रघुवंशे । १४ । ७५ ।
"तपस्विसंसर्गविनीतसत्त्वे
तपोवने वीतभया वसास्मिन् ॥")
जितेन्द्रियः । (यथा, तन्त्रसारे ।
"शान्तो दान्तः कुलीनश्च विनीतः शुद्धवेश-
वान् ॥")
अपनीतः । (यथा, महाभारते । ७ । ११० । ५५ ।
"विनीतशल्यांस्तुरगांश्चतुरोहेममालिनः ॥")
हृतः । इति मेदिनीकारहेमचन्द्रौ ॥ क्षिप्तः ।
इत्यजयपालः ॥ कृतदण्डः । इति स्मृतिः ॥
(अनुद्धतः । यथा, मनौ । ९ । ४१ ।
"तत्प्राज्ञेन विनीतेन ज्ञानविज्ञानवेदिना ॥")

**विनीतः**, पुं, (वि + नी + क्तः ।) सुवहाश्वः ।
तत्पर्य्यायः । साधुवाही २ । इत्यमरः । सुष्ठु-
वाहनशीलकः ३ । इति शब्दरत्नावली ॥ (यथा,
महाभारते । ७ । ११० । ५६ ।
"तांस्तदा रूप्यवर्णाभान् विनीतान् शीघ्र-
गामिनः ॥")
बणिक् । इति मेदिनी । ते, १५४ ॥
दमनकवृक्षः ।
(अस्य पर्य्यायो यथा, --
"उक्तो दमनको दान्तो मुनिपुत्त्रस्तपोधनः ।
गन्धोत्कटे ब्रह्मजटो विनीतः फलपत्रकः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
शिक्षितवृषभादिः । इति राजनिर्घण्टः ॥

तत्तत्र रक्षाहेतोश्च विनोदायतनस्य ताम् ॥")
क्रीडा । इति भूरिप्रयोगः ॥ (यथा, भाग-
वते । ३ । १६ । २४ ।
"नैतावता त्र्यधिपतेर्वत विश्वभर्त्तु-
स्तेजःक्षत तव न तस्य स ते विनोदः ॥"
अपनयनम् । यथा, शिशुपालवधे । १ । ४८ ॥
"विनोदमिच्छन्नथ दर्पजन्मनो
रणेन कण्ड्वास्त्रिदशैः समं पुनः ॥"
प्रमोदः । यथा, हितोपदेशे ।
"काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् ।
व्यसनेन च मूर्खाणां निद्रया कलहेन वा ॥")
आलिङ्गनविशेषः । तल्लक्षणं यथा । नायको
नायिकाया दक्षिणपादं वामपादं वा स्वमध्य-
देशे स्वदक्षिणपादं वामपादं वा नायिकामध्य-
देशे निधाय वक्षसि वक्षः ओष्ठे ओष्ठं दत्त्वा
यदाश्लिषति तत् । इति कामशास्त्रम् ॥ राज-
गृहविशेषः । यथा, --
"दीर्घे त्रयो राजहस्ताः प्रसरे द्वौ प्रतिष्ठितौ ।
विनोद एव द्वाराणि त्रिंशत् कोष्ठद्वयं भवेत् ॥"
इति युक्तिकल्पतरुः ॥
"द्वादशैते गृहान् वक्ष्ये तेषां लक्षणमग्रतः ।
सुनन्दः सर्व्वतोभद्रो भव्यो नान्दीमुखस्तथा ॥
विनोदश्च विलासश्च विजयो विमलस्तथा ।

अन्यच्च ।
"बिन्दुः शिवात्मकस्तत्र बीजं शक्त्यात्मक स्मृतम् ।
तयोर्योगे भवेन्नादस्ताभ्यो जातास्त्रिशक्तयः ॥"
इति क्रियासारः ॥

**वि(बि)न्दुः**, त्रि, (वेत्ति तच्छीलः । विदज्ञाने +
"बिन्दुरिच्छुः ।" ३ । २ । १६९ । इति उप्रत्ययो
लुमागमश्च निपात्यते ।) ज्ञाता । इत्यमरः ॥
दाता । इत्यजयपालः ॥ वेदितव्यः । इति
शब्दरत्नावली ॥

**वि(बि)न्दुचित्रकः**, पुं, (बिन्दुभिश्चिह्नविशेषैश्चित्रकः
इव ।) मृगभेदः । इति शब्दरत्नावली ॥

**वि(बि)न्दुजालं**, क्ली, (बिन्दूनां जालम् ।) हस्ति-
शुण्डोपरिविचित्रबिन्दुसमूहः । इति हेमचन्द्रः ॥

**वि(बि)न्दुजालकं**, क्ली, (बिन्दूनां जालकम् ।)
गजस्य मुखादिस्थो बिन्दुसमूहः । तत्पर्य्यायः ।
पद्मकम् २ । इत्यमरः । पद्मम् ३ । अतएव
पद्मी हस्तीति भरतः ॥

**वि(बि)न्दुतन्त्रः**, पुं, (बिन्दुश्चिह्नं तन्त्रं यस्य ।)
अक्षः । इति हारावली ॥ तुरङ्गकः । यथा, --
"बिन्दुतन्त्रः पुमान् शारिफलके च तुरङ्गके ॥"
इति पवर्गीयवादौ मेदिनी ॥

**वि(बि)न्दुपत्रः**, पुं, (बिन्दुः पत्रे यस्य ।) भूर्य्यवृक्षः ।
इति रत्नमाला ॥

**वि(बि)न्दुरेखकः**, पुं, (बिन्दुविशिष्टा रेखा यत्र ।
कन् ।) पक्षिभेदः । इति शब्दचन्द्रिका ॥

**वि(बि)न्दुवासरः**, पुं, (बिन्दुपातस्य वासरः ।) गर्भे
सन्तानोत्पत्तिकारकशुक्रपातदिनम् । इति
ज्योतिषम् ॥

**वि(बि)न्दुसरः**, [स्] क्ली, (बिन्दुनामक सरः ।)

**विनीतकं**, क्ली पुं, वैनीतकम् । परस्परावाहनम् ।

इत्यमरटीकायां रायमुकुटः ॥

**विनीयः**, पुं, (वि + नी + "विपूयविनीयजित्येति ।"

३ । १ । ११७ । क्यप्प्रत्ययेन निपातितः ।)
कल्कः । इति मुग्धबोधव्याकरणम् ॥
(यथा, --
"पृक्कातुरुष्कलघुलाभतयाविनीयः ।"
इति वैद्यकचक्रपाणिसंग्रहे वातव्याधौ एला-
तैले ॥) पापम् । इति सिद्धान्तकौमुदी ॥

**विनेता**, [ऋ] पुं, (वि + नी + तृच् ।) राजा ।

आदेशके, त्रि । इति मेदिनी । ते, १५६ ॥
(यथा, रघुवंशे । १४ । २३ ।
"तेनास लोकः पितृमान् विनेत्रा ॥"
गुरुः । शिक्षकः । यथा, महाभारते । ११ । २६ ।
"अर्ज्जुनस्य विनेतारमाचार्य्यं सात्यकेस्तथा ।
तं पश्य पतितं द्रोणं कुरूणां द्विजसत्तमम् ॥"
यथाच रघुवंशे । ८ । ९१ ।
"स तथेति विनेतुरुदारमतेः
प्रतिगृह्य वचो विससर्ज्ज मुनिम् ॥")

**विनेयः**, त्रि, (वि + नी + यत् ।) नेतव्यः । विपूर्ब्ब-

नीधातोयप्रत्ययेन निष्पन्नः ॥ दण्डनीयः ।
यथा,
"ज्योतिर्ज्ञानं तथोत्पातमविदित्वा तु ये नृणाम् ।
श्रावयन्त्यर्थलोभेन विनेयास्तेऽपि यत्नतः ॥"
विनेयाः दण्डनीयाः । इति ज्योतिस्तत्त्वम् ॥

**विनोदः**, पुं, (वि + नुद + घञ् ।) कौतूहलम् ।

इति हलायुधः ॥ (यथा, कथासरित्सागरे ।
१५ । १२५ ।
"वाधते तञ्च नैकव्यात् सर्व्वं स मगधेश्वरः ।
रङ्गः केलिर्जयो वीरो द्वादशैते
प्रकीर्त्तिताः ॥"
इति भविष्योत्तरपुराणम् ॥

**वि(बि)न्दुः**, पुं, (बिदि अवयवे + बाहुलकादुः ।)

जलकणा । तत्पर्य्यायः । पृषत् २
पृषतः ३
विप्रुट् ४ । इत्यमरः ॥ पृषन्ति ५
विप्लट् ६ । इति
तट्टीका ॥ (यथा, पञ्चतन्त्रे ।
"जलबिन्दुप्रपातेन क्रमशः पूर्य्यते घटः ।
स हेतुः सर्व्वशास्त्रस्य धर्म्मस्य च धनस्य च ॥")
दन्तक्षतविशेषः । भ्रुवोर्मध्यम् । रूपकार्थ-
प्रकृतिः । इति मेदिनी । दे, १०-११ ॥
अनुस्वारः ।
यथा । "बिन्दुद्विबिन्दुमात्रौ वर्णौ
क्रमान्नुवी संज्ञौ
स्तः ।" इति मुग्धबोधव्याकरणम् ॥
अपि च ।
"शिवो वह्निसमायुक्तो
वामाक्षिबिन्दुभूषितः ।
एकाक्षरो महामन्त्रः श्रीसूर्य्यस्य
प्रकीर्त्तितः ॥"
इति सूर्य्यकवचम् ॥
बन्दूपत्तिर्यथा, --
"सच्चिदानन्दविभवात् सकलात् परमेश्वरात् ।
आसीच्छक्तिस्ततो नादो
नादाद्बिन्दुसमुद्भवः ॥"
इति सारदातिलके १ पटलः ॥
अपि च ।
"आसीद्बिन्दुस्ततो नादो नादाच्छक्तिः समुद्भवा ।
नादरूपा महेशानी चिद्रूपा परमा कला ॥
नादाच्चैव समुत्पन्नः अर्द्धबिन्दुर्महेश्वरि ।
सार्द्धत्रितयबिन्दुभ्यो भुजङ्गी
कुलकुण्डली ॥"
सरोवरविशेषः । यथा, --
"अभ्युत्तरेण कैलासं शिवं सर्व्वौषधिं गिरिम् ।
गौरन्तु पर्व्वतश्रेष्ठं हरितालमयं प्रति ॥
हिरण्यशृङ्गः सुमहान् दिव्यौषधिमयो
गिरिः ।
तस्य पादे महद्दिव्यं सरः काञ्चनसन्निभम् ॥
रम्यं बिन्दुसरो नाम यत्र राजा भगीरथः ।
गङ्गार्थे स तु राजर्षिरुवास बहुलाः समाः ॥
दिव्यं यास्यन्ति मे पूर्ब्बे गङ्गातोयपरिप्लुताः ।
तत्र त्रिपथगा देवी प्रथमन्तु प्रतिष्ठिता ॥
सोमपादात् प्रसूता सा सप्तधा प्रतिभज्यते ।
यूपा मणिमयास्तत्र चितयश्च हिरण्मयाः ॥
तत्रेष्ट्वा क्रतुभिः सिद्धः शक्रः सुरगणैः सह ।
दिव्यश्छायापथस्तत्र नक्षत्राणान्तु मण्डलम् ॥
दृश्यते भास्वरा रात्रौ देवी त्रिपथगा तु सा ।
अन्तरीक्षं दिवञ्चैव भावयित्वा भुवं गताः ॥
भवस्य स्वाङ्के पतिता संरुद्धा योगमायया ।
तस्या ये बिन्दवः केचित् क्षुब्धायाः पतिता
भुवि ।
कृतस्तु तैर्बिन्दुसरस्ततो बिन्दुसरः स्मृतम् ॥"
इति मात्स्ये । १२० । २७ -- ३३ ॥

**विन्धपत्री**, स्त्री ज्वरापहा । इति शब्दचन्द्रिका ॥

वेलशुँटा इति भाषा ॥

| | | |
|---|---|---|
| | इति कुब्जिकातन्त्रे १ पटलः ॥<br>“बिन्दुर्नादो बीजमिति तस्य भेदाः समीरिताः ।<br>बिन्दुः शिवात्मको बीजं शक्तिर्नादस्तयोर्मिथः ॥<br>समवायः समाख्यातः सर्व्वागमविशारदैः ॥”<br>इति सारदातिलकः ॥ | |

**विन्धसः**, पुं, चन्द्रः । इति त्रिकाण्डशेषः ॥

**विन्ध्यः**, पुं, पर्व्वतविशेषः । इत्यमरः ॥ (यथा,

मनौ । २ । २१ ।

"हिमवविन्ध्ययोर्म्मध्यं यः प्राग्विनशना-

दपि ।

प्रत्यगेव प्रयगाच्च मध्यदेशः प्रकीर्त्तितः

॥")

व्याधः । इति मेदिनी ॥

विन्ध्यपर्व्वतस्य निम्न-

शृङ्गत्वकारणम् । यथा, --

नारद उवाच ।

"किमर्थमद्रिं भगवानगस्त्य-

स्तं निम्नशृङ्गं कृतवान् मह्र्षिः ।

कस्मै कृते केन च कारणेन

नस्तद्वदस्वाखिलसत्त्ववृत्ते ॥

पुलस्त्य उवाच ।

पुरा हि विन्ध्येन दिवाकरस्य

गतिर्न्निरुद्धा गगनेचरस्य ।

रविस्ततः कुम्भभवं समेत्य

होमावसाने वचनं बभाषे ॥

समागतोऽहञ्च द्विजर्षभ त्वां

कुरुष्व मय्युद्धरणं मुनीन्द्र ।

ददस्व दानं मम यन्मनीषितं

चरामि येन त्रिदिवे सुनिर्वृतः ॥

इत्थं दिवाकरवचो गुणसङ्गयोगि

श्रुत्वा तदा कलसजो वचनं बभाषे ।

दानं ददामि तव यन्मनसा त्वभीष्टं

नार्थी प्रयाति विमुखो मम कश्चिदेव ॥

श्रुत्वा वचोऽमृतमयं कलसोद्भवस्य

प्राह प्रभुः करपुटं प्रणिधाय मूर्द्धिन ।

एषोऽद्य मे गिरिवरः प्ररुणद्धि मार्गं

विन्ध्यस्य निम्नकरणे भगवान् यतस्व ॥

इति रविवचनादुवाच कुम्भजन्मा

कृतमिति तद्धि मया हि नीचशृङ्गम् ।

तव किरणजितो भविष्यतीति महीध्रो

मम हि शरणसमागतस्य का व्यथा ते ॥

इत्येवमुक्त्वा कलसोद्भवस्तु

सूर्य्यञ्च संस्तूय विनम्य भक्त्या ।

जगाम संत्यज्य हि दण्डकं हि

आक्रम्य तस्थौ स हि तां तदाशां

काले व्रजाम्यत्र यदा मुनीन्द्र ॥

तत्राश्रमं रम्यतरं हि कृत्वा

संशुद्धजाम्बूनदतोरणान्तम् ।

तत्राथ निःक्षिप्य विदर्भपुत्रीं

स्वमाश्रमं सौन्यमुपाजगाम ॥

ऋतावृतौ कार्य्यपरो ह्यगस्त्यो

नित्यं तदा स्वाश्रममावसत् सः ।

शेषञ्च कालं स हि दण्डकस्थ-

स्तपश्चचारामितकान्तिमान्मुनिः ॥

विन्ध्योऽपि दृष्ट्वा गगने महाश्रमं

वृद्धिं न यात्येव भयान्महर्षेः ।

नासौ निवृत्तेऽभिमतिं निधाय

स संस्थितो नीचतराग्रशृङ्गः ॥

एवं त्वगस्त्येन महाचलेन्द्रः

स नीचशृङ्गो हि कृतो महर्षे ।

तस्योद्र्ध्वशृङ्गे मुनिसंस्तुता सा

दुर्गा स्थिता दानवशासनार्थे ॥

देवाश्च सिद्धाश्च महोरगाश्च

विद्याधरा भूतगणाश्च सर्व्वे ।

सर्व्वाप्सरोभिः सहिता दिवानिशं

कात्यायनीं तस्थुरपेतशोकाः ॥"

इति वामनपुराणे देवीमाहात्म्ये १८

अध्यायः ॥

"आर्य्यावर्त्तः पुण्यभूमिर्म्मध्यं

विन्ध्यहिमागयोः ।"

इत्यमरः ॥

"विन्ध्यस्य पश्चिमे भागे मत्स्यभुक् पतितो

भवेत् ॥"

इति प्राचीनाः ॥

**विन्ध्यकूटः**, पुं, (विन्ध्ये कूटं माया कैतवं वा यस्य ।

व्याजेन तस्यावनतीकरणादस्य तथात्वम् ।)

अगस्त्यमुनिः । इति त्रिकाण्डशेषः ॥

**विन्ध्यवासी**, [न्] पुं, (विन्ध्ये वसतीति । वस +

णिनिः ।) व्याडमुनिः । इति हेमचन्द्रः ॥

**विन्ध्यवासिनी**, स्त्री, (विन्ध्ये वसतीति । वस् + णिनिः ।

ततस्त्रियां ङीप् ।) दुर्गा । यथा, --

**विन्ध्यावलीपुत्त्रः**, पुं, (विन्ध्यावल्याः पुत्त्रः ।) बाण-

राजः । इति त्रिकाण्डशेषः ॥

**विन्ध्यावलीसुतः**, पुं, (विन्ध्यावल्याः सुतः ।) बाण-

राजः । इति जटाधरः ॥

**विन्नः**, त्रि, (विद् + क्तः । "नुदविदेति ।" ८ । २ । ५६ ।

नत्वम् ।) विचारितः । प्राप्तः । इत्यमरः ॥

ज्ञातः । स्थितः । इति विश्वः ॥

**विन्यस्तः**, त्रि, (वि + नि + अस + क्तः ।) कृत-

विन्यासः । यथा, --

"सद्द्रव्या गुणगुम्फिता सुकृतिनां

सत्कर्म्मणां

ज्ञापिका

सत्सामान्यविशेषनित्यमिलिता

भावप्रकर्षोज्-

ज्वला ।

विष्णोर्व्वक्षसि विश्वनाथकृतिना

सिद्धान्तमुक्तावली

विन्यस्ता मनसो मुदं वितनुतां सद्युक्तिरेषा

चिरम् ॥"

इति सिद्धान्तमुक्तावली ॥

**विन्याकः**, पुं, (वि + नि + अक + घञ् ।) विद्ध-

वृक्षः । इति शब्दचन्द्रिका ॥ छातियान् इति

भाषा ॥

**विन्यासः**, पुं, (वि + नि + अस + घञ् ।) स्थाप-

नम् । रचनम् । यथा, ज्ञानार्णवे । वैष्णवे तु

।

"एकैकवर्णमुच्चार्य्य

मूलाधाराच्छिरोऽन्तकम् ।

नमोऽन्तमिति विन्यास आन्तरः

परिकीर्त्तितः ॥"

अपि च ।

"ओमाद्यन्तो नमोऽन्तो वा

सबिन्दुर्बिन्दुवर्ज्जितः ।

पञ्चाशद्वर्णविन्यासः क्रमादुक्तो मनीषिभिः

॥"

विन्ध्याचलं वृद्धवपुर्महर्षिः ॥
गत्वा वचः प्राह मुनिर्महीध्रं
यास्ये महातीर्थवरं सुपुण्यम् ।
वृद्धोऽप्यशक्तश्च तवाधिरोढुं
तस्माद्भवान् नीचतरोऽस्तु सद्यः ॥
इत्येवमुक्तो मुनिसत्तमेन
स नीचशृङ्गस्त्वभवन् महीध्रः ।
समाक्रमच्चापि महर्षिमुख्यः
प्रोल्लङ्घ विन्ध्यं द्विज आह शैलम् ॥
यावन्न भूयो निजमाव्रजामि
महाश्रमं धौतवपुः सुतीर्थात् ।
त्वया न तावत्त्विह वर्द्धितव्यं
न चेत् शपिष्येऽहमवज्ञया ते ॥
इत्येवमुक्त्वा भगवान् जगाम
दिशं स यामीं सहसान्तरीक्षम् ।
"सहस्राक्षोऽपि तां गृह्य विन्ध्यं वेगाज्जगाम
ह ।
तत्र गत्वा तथोवाच तिष्ठस्वात्र महावने ॥
पूज्यमाना सुरैर्नाम्ना ख्याता त्वं
विन्ध्यवासिनी ॥
तत्र स्थाप्य हरिर्देवीं दत्त्वा सिंहञ्च वाहनम् ।
भवामरारिहन्त्रीति ह्युक्त्वा स्वर्गमवाप्नुयात्
॥"
इति वामने ५१ अध्यायः ॥ * ॥
अन्यच्च देवीपुराणे ४५ अध्याये ।
"विन्ध्येऽवतीर्य्य देवार्थं हतो घोरो महाभटः
।
अद्यापि तत्र सावासा तेन सा विन्ध्यवासिनी
॥"

**विन्ध्यस्थः**, पुं, (विन्ध्ये विन्ध्यपर्व्वते तिष्ठतीति । स्था
+ कः ।) व्याडिमुनिः । इति जटाधरः ॥

**विन्ध्या**, स्त्री, लवलीवृक्षः । इति मेदिनी ॥ त्रुटिः ।
इति हेमचन्द्रः ॥ एलाचि इति भाषा ॥

**विन्ध्यावली**, स्त्री, बलिपत्नी । बाणराजमाता ।
इति पुराणम् ॥ (यथा, भागवते । ८ । २० ।
१७ ।
"विन्ध्यावली तदागत्य पत्नीजालकमालिनी
॥")
इति भट्टः । इति तन्त्रसारः ॥
अन्यच्च ।
"गृहेषु मणिविन्यासो विज्ञेयो न च दण्डवत्
।
विशुद्धहीरकन्यासो विधेयः सदनोपरि ।
तेन सर्व्वाणि नश्यन्ति अरिष्टानि मही-
भुजाम् ॥"
इति युक्तिकल्पतरुः ॥
किञ्च ।
"तया कवितया किवा तया वनितया च
किम् ।
पदविन्यासमात्रेण यया नापहृत मनः ॥"
इत्युद्भटः ॥

**विप**, क क्षेपे । इति कविकल्पद्रुमः ॥ (चुरा०-पर०
-सक०-सेट् ।) क, वेपयति । इति
दुर्गादासः ॥

**विपक्षः**, पुं, (विरुद्धः पक्षो यस्य ।) शत्रुः । इत्य-
मरः ॥ (यथा हरिवंशे । ५३ । ५४ ।
"तत्र वंशा विभज्यन्तां विपक्षः पक्ष एव च ।
पुत्त्राणां हि तयो राज्ञो भविता विग्रहो
महान् ॥"
यथा च रघुवंशे । १७ । ७५ ।
"इन्दोरगतयः पद्मे सूर्य्यस्य कुमुदेऽंशवः ।
गुणास्तस्य विपक्षेऽपि गुणिनो लेभिरेऽन्त-
रम् ॥"
न्यायमते साध्याभाववत्पक्षः । यथा, भाषा-
परिच्छेदे । ७३ ।

"यः सपक्षे विपक्षे च भवेत् साधारणस्तु सः ।"
"सपक्षविपक्षवृत्तिः साधारणः । सपक्षः साध्यवान् । विपक्षः साध्याभाववान् ।"
इति
मुक्तावली ॥ विकल्पः पक्षः ।
उक्ताकरणम् ।
यथा, आर्य्यासप्तशत्याम् । ३५४ ।
"प्रतिभूः शुको विपक्षे दण्डः
शृङ्गारसंकथा
गुरुषु ॥"
विगतः पक्षो यस्य । पक्षहीने, त्रि ॥)

**विपञ्चिका**, स्त्री, (वि + पचि विस्तारे + ण्वुल् ।
स्त्रियां टाप् अत इत्वञ्च ।) वीणा । इति शब्दरत्नावली ॥

**विपञ्ची**, स्त्री, (वि + पञ्च + अच् । स्त्रियां गौरा-
दित्वात् ङीष् ।) वीणा । इत्यमरः ॥
(यथा,
कथासरित्सागरे । ४९ । २० ।
"अहं ह्येतद्विजानामि तन्त्रीझङ्कारलक्षणैः
।
इत्युक्त्वा गुणशर्म्माङ्कात्तां विपञ्चीं मुमोच सः ॥")
केलिः । इति मेदिनी । चे, १७ ॥

**विपणः**, पुं, (वि + पण व्यवहारे + घञ् । संज्ञा-
पूर्ब्बकत्वात् न वृद्धिः ।) विक्रयः ।
इत्यमरः ॥
(यथा, मनौ । ३ । १५२ ।
"विपणेन च जीवन्तो
वर्ज्ज्याःस्युर्हव्यकव्ययोः ॥"
विशेषेण पण्यतेऽस्मिन्निति । विपणिः ।
यथा,
महाभारते । १२ । ६९ । ५३ ।
"विशालान् राजमार्गांश्च कारयेत
नराधिपः ।
प्रपाश्च विपणांश्चैव यथोद्देशं समादिशेत्
॥")

**विपणी**, स्त्री, (विपणि + वा ङीष् ।) हट्टः । इति
द्विरूपकोषः ॥ (यथा, कथासरित्सागरे
। २० । ६५ ।
"ययौ भोजनमूल्यार्थी
विपणीमात्तमूलकः ॥")

**विपत्तिः**, स्त्री, (वि + पद + क्तिन् ।) आपत् ।
विपत् । इत्यमरः ॥ यातना । इति
मेदिनी ।
ते, १५९ । यथा, --
भृगुरुवाच ।
"श्रुतं सर्व्वं सुरश्रेष्ठ मारोदीर्व्वचनं शृणु ।
न कातरो हि नीतिज्ञो विपत्तौ च
कदाचन ॥
सम्पत्तिर्व्वा विपत्तिर्व्वा नश्वरा
स्वप्नरूपिणी ।
पूर्ब्बस्वकर्म्मायत्ता च स्वयं कर्त्ता
तयोरपि ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ३४
अध्यायः ॥
विनाशः । यथा, --
"यस्मिन् राशिगते भानौ विपत्तिं यान्ति
मानवाः ।
तेषां तत्रैव कर्त्तव्या पिण्डदानोदकक्रिया
॥"
इति मलमासतत्त्वम् ॥

**विपथः**, पुं, (विरुद्धः पन्थाः । "ऋक्पूरब्धूःपथा-
मानक्षे ।" ५ । ४ । ७४ ।
इत्यकारप्रत्ययः ।)
निन्दितपथः । तत्पर्य्यायः । व्यध्वः २
दुरध्वः ३
कदध्वा ४ कापथः ५ । इत्यमरः ॥
कुपथः ६
असत्पथः ७ कुत्सितवर्त्म ८ । इति
शब्दरत्ना-
वली ॥ (यथा, महाभारते । १२ । ३५९
। ११ ।
"सत्पथं कथसत्सृज्य यास्यामि विपथं
वद ॥")

षोडशरतिबन्धान्तर्गतदशभबन्धः । यथा, --
"पादमेकमूरौ कृत्वा द्वितीयं कटिसंस्थितम् ।
नारीषु रमते कामी विपरीतस्तु बन्धकः ॥"
इति रतिपञ्जरी ॥
अपिच ।
"पादमेकमूरौ कृत्वा द्वितीयं स्कन्धसंस्थितम् ।
कामिन्याः कामयेत् कामी बन्धः स्याद्विपरी-
तकः ॥"
इति स्मरदीपिका ॥

**विपरीता**, स्त्री, कामुकी । इति धनञ्जयः ॥

**विपर्णकः**, पुं, (विशिष्टानि पर्णानि यस्य ।) पलाश-
वृक्षः । इति शब्दचन्द्रिका ॥ (पर्णरहिते, त्रि ॥)

**विपर्य्ययः**, पुं, (वि + परि + इ + "एरच् ।"
इत्यच् ।) व्यतिक्रमः । तत्पर्य्यायः । व्यत्यासः
२
विपर्य्यासः ३ व्यत्ययः ४ । इत्यमरः ॥
विपर्य्यायः
५ । इति भरतः ॥ (यथा, भागवते । १० ।
१ । ५० ।
"विपर्य्ययो वा किं न स्याद्गतिर्धातुर्दुरत्यया ।
उपस्थितो निवर्त्तेत निवृत्तः पुनरापतेत् ॥"
सांख्यनये विपर्य्ययाः पञ्च । ते च सांख्यकारि-
कायां द्रष्टव्याः ॥)

**विपर्य्यायः**, पुं, (विगतः पर्य्यायो यस्य । यद्वा,
वि + परि + इ + घञ् ।) विपरीतमयनम् ।
अन्यस्यान्यरूपग्रहणम् । इति भरतः ॥
"विपर्य्यायि कुलं नास्ति न कुलं रण्डपित्तयोः
।"
इति कुलाचार्य्यकारिका ॥

**विपर्य्यासः**, पुं, (वि + परि + अस + घञ् ।) विप-
र्य्ययः । इत्यमरः ॥ (यथा, उत्तरचरिते । २ ।
"पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्य्यासं यातो घनविरलभावः क्षितिरुहाम् ।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति ॥"
अप्रमात्मकबुद्धिभेदः । यथा, भाषापरिच्छेदे ।

**विपणिः**, पुं स्त्री, (विपण्यतेऽस्मिन्निति । वि + पण + "सर्व्वधातुभ्य इन् ।" उणा० ४ । ११७ ।
इति इन् ।) पण्यविक्रयशाला । इति हला-
युधः ॥ हट्टः । इत्यन्ये ।
विक्रयार्थप्रसारित-
नानाद्रव्यायां बणिग्वीथ्यां वाणियाविथी इति वाजार इति च ख्यातायामिति केचित् ।
हट्टमण्डपः । इति केचित् ।
हट्टमध्यस्थपण्य-
विक्रयवीथी । इति केचित् । इति भरतः ॥
तत्पर्य्यायः । पण्यवीथिका २ । इत्यमरः ॥
आपणः ३ पण्यवीथी ४ पण्यम् ५ । इति रभसः ॥ निषद्या ६ बणिक्पथम् ७ । इत्यमर-
दत्तः ॥ विपणम् ८ वीथी ९ । इति कोषः ॥
"निषद्या विपणिः पण्यवीथिका त्वापणिस्तथा ।
पण्यविक्रयशालायां भवेदेतच्चतुष्टयम् ॥"
इति शब्दरत्नावली ॥
"विपणिः पण्यवीथ्याञ्च
भवेदापणपण्ययोः ।"
इति मेदिनी । णे, ७८ ॥
(यथा, महाभारते । ९ । ३५ । ३० ।
"विपण्यापणपण्यानां नानाजनशतैर्व्वृतः ॥"
बाणिज्यम् । यथा, मनौ । १० । ११६ ।
"विद्या शिल्पं भृतिः सेवा गोरक्ष्यं विपणिः
कृषिः ।
धृतिर्भैक्ष्यं कुसीदञ्च दश जीवनहेतवः ॥")

**विपणी**, [न्] पुं, (विपणः विक्रयोऽस्यास्तीति । विपण + इनिः ।) बणिक् । इति जटाधरः ॥

**विपत्** स्त्री, (वि + पद् + सम्पदादित्वात् क्विप् ।) विपत्तिः । इत्यमरः ॥ (यथा, --

**विपद्** स्त्री, (वि + पद् + सम्पदादित्वात् क्विप् ।) विपत्तिः । इत्यमरः ॥ (यथा, --
"कैवर्त्तकर्क्कशकरात् सफरश्च्युतोऽपि
जाले पुनर्निपतितः सफरो विपाकः ।
दैवात्ततो विगलितो गिलितो वकेन
वामे विधौ वद कथं विपदां निवृत्तिः ॥"
इत्युद्भटः ॥
यथा च मागवते । १ । ९ । १५ ।
"यत्र धर्म्मसुतो राजा
गदापाणिर्व्वृकोदरः ।
कृष्णोऽस्त्री गाण्डिवं चापं सुहृत् कृष्णस्ततो
विपत् ॥")

**विपदा**, स्त्री, (विपद् + भागुरिमते हलन्तानां टाप् ।) विपत् । इत्यमरटीकायां रायमुकुटः ॥

**विपन्नः**, त्रि, (वि + पद + क्तः ।) विपदाक्रान्तः । इति मेदिनी । ने, १३४ ॥ नष्टः । इति शब्द-
रत्नावली ॥

**विपन्नः**, पुं, सर्पः । इति मेदिनी । ने, १३४ ॥

**विपरीतः**, त्रि, (वि + परि + इ + क्तः ।) विप-
र्य्ययः । उल्टा इति भाषा ॥ तत्पर्य्यायः ।
प्रतिसव्यः २ प्रतिकूलः २ अपसव्यः ४ अपष्ठुः
५ विलोमकः ६ । इति जटाधरः ॥ प्रसव्यम्
७ पराचीनम् ८ प्रतीपम् ९ । इति शब्दरत्ना-
वली ॥ (यथाच शङ्करदिग्विजये ।
"मत्तो जातः कलञ्जाशी विपरीतानि भाषसे ।
सत्यं ब्रवीषि पितृवत् त्वत्तो जातः कलञ्जभुक् ॥"
"तच्छून्ये तन्मतिर्यास्यादप्रमा सा निरूपिता ।
तत्प्रपञ्चो विपर्य्यासः संशयोऽपि प्रकीर्त्तितः ।
आद्यो देहे ह्यात्मबुद्धिः शङ्खादौ पीतता-
मतिः ॥"
"आद्यो विपर्य्यासः ।" इति मुक्तावली ॥)

**विपव्यं**, त्रि, (वि + पू + "अचो यत् ।" इति यत् ।) शोधनीयम् । विपूर्व्वपूधातोर्यप्रत्ययेन निष्पन्नम् ॥

**विपशी**, [न्] पुं, बुद्धभेदः । इति हेमचन्द्रः ॥

**विपश्चित्**, त्रि, (विशेषं पश्यति विप्रकृष्टं चेतति चिनोति चिन्तयति वा । पृषोदरादित्वात् साधुः ।) पण्डितः । इत्यमरः ॥ (यथा, मनौ । ७ । ५८ ।
"सर्व्वेषान्तु विशिष्टेन ब्राह्मणेन विपश्चिता ॥")

**विपाकः**, पुं, (वि + पच + भावे कर्म्मणि वा घञ् ।) पचनम् । (यथा, भागवते । ५ । १६ । २० ।
"तावदुभयोरपि रोधसोर्या मृत्तिका तद्रसेनानु-
विध्यमाना वाय्वर्कसंयोगविपाकेन सदामर-
लोकाभरणं जाम्बूनदं नाम सुवर्णं भवति ॥")

| | | |
|---|---|---|
| (यथा, शिशुपालवधे । ५ । २४ ।<br>“पूर्णापणा विपणिनो विपणीर्व्विभेजुः ॥”) | मुमूर्षुः । यथा, रामायणे । ६ । १७ । १५ ।<br>“स च न प्रतिजग्राह रावणः कालचोदितः ।<br>उच्यमानं हितं वाक्यं विपरीत इवौषधम् ॥”) | |

स्वेदः । कर्म्मणो विसदृक्फलम् । इति मेदिनी ॥
(फलमात्रम् । यथा, भागवते । १० । ७१ । १० ।
“जरासन्धबधः कृष्ण भूर्य्यर्थायोपकल्प्यते ।
प्रायःपाकविपाकेन तव चाभिमतः क्रतुः ॥”
चरमोत्कर्षः । यथा, तत्रैव । ४ । ९ । २ ।
“सवै धिया योगविपाकतीव्रया
हृत्पद्मकोषे स्फुरितं तडित्प्रभम् ॥”)
परिणामः । दुर्गतिः । स्वादुः । इति हेम-
चन्द्रः ॥ जातिः । आयुः । भोगः । इति
कुसुमाञ्जलिः ॥ * ॥ (कर्म्मफलरूपस्यैव विपा-
कस्य त्रैविध्यम् । यथाच पातञ्जले । २ । १३ ।
“सति मूले तद्विपाको जात्यायुर्भोगाः ॥”
“सतसु क्लेशेषु कर्म्माशयो विपाकारम्भी भवति
नोच्छिन्नक्लेशमूलोऽपि । यथैव तुषावनद्धाः
शालितण्डुला दग्धबीजभावाः प्ररोहसमर्था
भवन्ति नापनीततुषा दग्धबीजभावा वा । तथा
क्लेशावनद्धः कर्म्माशयो विपाकप्ररोही भवति
नापनीतक्लेशोनप्रसंख्यानदग्धबीजभावो वेति ।
स च विपाकस्त्रिविधो जातिरायुर्भोगश्चेति ॥”
इति तद्भाष्यम् ॥)
“जाठरेणाग्निना योगात् यदुदेति रसान्त-
रम् ।
रसानां परिणामान्ते स विपाक इति स्मृतः ॥”
इति सुश्रुतः ॥
अपि च ।
“मिष्टः कटुश्च मधुरमम्लोऽम्लं पच्यते रसः ।
कटुतिक्तकषायाणां पाकः स्यात् प्रायशः
कटुः ॥”
तथा च वाग्भटः ।
“त्रिधा रसानां पाकः स्यात् स्वाद्वम्लकटुका-
त्मकः ॥”
प्रायः पदेन व्रीहिः स्वादुरम्लविपाकः । शिवा
कषाया मधुपाका । शुण्ठी कटुकमधुरपाके-
त्यादिः ॥ * ॥ अथ विपाकानां गुणाः ।
“श्लेष्मकृन्मधुरः पाको वातपित्तहरो मतः ।
प्रकीर्णाः स्वभावमुत्तरकालेऽपि न परित्यजन्ति
तद्वदिति ।”
“किञ्चिद्रसविपाकाभ्यां दोषं हन्ति करोति वा ॥”
इति सुश्रुते सूत्रस्थाने ४० अः ॥)

**विपाट्**, [श्] स्त्री, विपाशानदी । इत्यमरः ॥
(यथा, ऋग्वेदे । ३ । ३३ । १ ।
“गावेव शुभ्रे मातरा रिहाणे
विपाट्छुतुद्री पयसा जवेते ॥”
“विपाट् कूलविपाटनात् विपाशनात् शतपुत्र-
मरणोद्भूततमोवृतेर्म्मुमूर्षोर्वशिष्ठस्य पाशा अस्यां
व्यपास्यन्त विमोचनाद्वा विपाट् । शुतुद्री शुक्षिप्रं
तुन्ना तुन्नेव द्रवति गच्छतीति शुतुद्री एत-
न्नागके नद्यौ ॥ प्रजवेते समुद्रं प्रति शीघ्रं
गच्छतः । *** विपाट् पटगतौ । पशवाधन-
स्पर्शनयोरितिवा ण्यन्तावेतौ विपूर्ब्बौ शकारस्य
व्रश्चादिना षत्वम् ॥” इति तद्भाष्ये सायणः ॥)

**विपा(ट)ठः**, पुं, बाणः । इति त्रिकाण्डशेषः ॥
(यथा, महाभारते । ३ । २७० । १७ ।
“एकैकेन विपाठेन जघ्ने माद्रवतीसुतः ॥”
स्त्री, दुर्गमराजभार्य्या । यथा, मार्कण्डेये । ७५ । ४६ ।
“विपाठां नन्दिनीञ्चैव वेद्मि भार्य्यां गृहे
द्विज ॥”)

**विपादिका**, स्त्री, पादस्फोटः । इत्यमरः ॥ (यथा,
राजतरङ्गिण्याम् । ८ । १३७ ।
“छिन्नोपानत कशाबन्धे शतं
चर्म्मकृतेऽर्पितम् ।
(अस्या नामनिरुक्त्यादि विशेषविवरणं महा-
भारते । १ । १७८ । अध्याये द्रष्टव्यम् ॥ अस्या-
स्तीरे पीठस्थाने अमोघाक्षीदेवी वर्त्तते । यथा,
देवीभागवते । ७ । ३० । ६५ ।
“विपाशायाममोघाक्षी पाटला
पुण्ड्रवर्द्धने ॥”
तथा अत्र
यशस्करनामकविष्णुमूर्त्तिरपि वर्त्तते ।
यथा, नरसिंहपुराणे ६२ अध्याये ।
“यशस्करं विपाशायां माहिष्मत्यां हुताश-
नम् ॥”
विगतः पाशो यस्य ।) पाशवर्ज्जिते, त्रि । इति
धरणिः ॥ (यथा, महाभारते । ३ । १३० । ९ ।
“अत्र वै पुत्त्रशोकेन वशिष्ठो
भगवानृषिः ।
बद्ध्वात्मानं निपतितो विपाशः
पुनरुत्थितः ॥”
पाशास्त्रहीने च त्रि ॥ यथा, हरिवंशे । ४७ ।
४८ ।
“निर्व्यापारः कृतस्तेन विपाशो वरुणो
मृधे ॥”)

**विपिनं**, क्ली, (वेपन्ते जना यत्रेति । “वेपितुह्यो-
र्ह्रस्वश्च ।” उणा० २ । ५२ । इनन् । ह्रस्व-
त्वञ्च ।) वनम् । इत्यमरः ॥ (यथा,
महानाटके ।
“यच्चिन्तितं तदिह दूरतरं प्रयाति
यच्चेतसा न गणितं तदिहाभ्युपैति ।
प्रातर्भवामि वसुधाधिपचक्रवर्त्ती
सोऽहं व्रजामि विपिने जटिलस्तपस्वी ॥”

अन्नअस्तु कुरुते पित्तं वातश्ले ष्मगदापहः ॥
कटुः करोति पचनं कफं पित्तञ्च नाशयेत् ।
विशेष एष रसतो विपाकानां निदर्शितः ॥”
इति भावप्रकाशः ॥
(तथास्य विवरणम् ।
“नेत्याहुरन्ये । विपाकः प्रधानमिति कस्मात्
सम्यङ्मिथ्याविपाकत्वादिहसर्व्वद्रव्याण्यभ्यव-
हृतानि सम्यङ्मिथ्याविपक्वानिगुणं दोषं वा
जनयन्ति । तत्राहुरन्ये प्रतिरसं पाक इति ।
केचित्त्रिविधमिच्छन्ति मधुरमम्लं कटुकञ्चेति
तत्तु न सम्यक् भूतगुणादागमाच्चाम्लो विपाको
नास्ति पित्तं हि विदग्धमम्लतामुपैत्यग्नेर्मन्द-
त्वात् । यद्येवं लवणोऽप्यन्यः पाको भविष्यति
श्ले ष्माहिविदग्धो लवणतामुपैति मधुरो मधुर-
स्याम्लोऽम्लस्यैवं सर्व्वेषामिति ।
केचिदाहुर्दृष्टान्तं
चोपदिशन्ति यथा तावत् क्षीरं स्थालीगत-
मभिमानं मधुरमेवस्यात्तथा शालियवमुद्गादयः

विपादिकाकृते दास्या नीतं पञ्चाशतो
घृतम् ॥”)
“वैपादिकं पाणिपादे स्फुटनं तीव्रवेदनम् ।
कण्डुमद्भिः सरागैश्च गण्डैरलसकं चितम्
॥”
विपादिका वातश्लेष्मोद्भवा । इति
माधवकरः ॥
अयं कुष्ठरोगः ॥ (अस्या लक्षणम् । यथा,
--
“कण्डूमती दाहरुजोपपन्ना
विपादिका पादगतेयमेव ॥”
इति सुश्रुते निदानस्थाने पञ्चमेऽध्याये ॥)
प्रहेलिका । इति शब्दमाला ॥ * ॥

**विपाशा**, स्त्री, (पाशं विमोचयतीति । पाश +
“सत्यापपाशेति ।” ३ । १ । २५ ।
विमोचने णिच् ।
ततः पचाद्यच् ।) नदीविशेषः । इत्यमरः
॥
पुत्त्रशोकादेव गले पाशं बद्ध्वा प्रविष्टं
वशिष्ठं
पाशच्छेदात् विपाशितवती विमुक्तपाशं
कृत-
वतीति विपाशा ञिः कल्यादेरिति पाशं
विमोचयति इत्यर्थे ञिः पचादित्वादन्
आप् ।
एवं क्विपि विपाट् । इति तट्टीकायां भरतः
॥ * ॥
(यथा, हरिवंशे । १६६ । २० ।
“इरावती विपाशाच सरयूर्यमुना तथा ॥”)
तस्या जलगुणाः ।
“शतद्रोर्विपाशायुजः सिन्धुनद्याः
सुशीतं लघु स्वादु सर्व्वामयघ्नम् ।
जलं निर्म्मलं दीपनं पाचनञ्च
प्रदत्ते बलं बुद्धिमेधायुषञ्च ॥”
इति राजनिर्घण्टः ॥

भीतिप्रदे, त्रि । यथा, भागवते । ९ ।
१५ । २३ ।
“स एकदा तुंमृगयां विचरन् विपिने वने
।
यदृच्छयाश्रमपदं जमदग्नेरुपाविशत्
॥”
विजने वने इत्यपि क्वचित् पाठः ॥)

**विपुलः**, त्रि, (विशेषेण पोलतीति । वि + पुल
महत्त्वे + कः ।) बृहत् । इत्यमरः ॥
(यथा,
साहित्यदर्पणे । १० ।
“विपुलेन सागरशयस्य कुक्षिणा ॥”)
अगाधम् । इति मेदिनी । ले, १३२ ॥

**विपुलः**, पुं, (वि + पुल + कः ।)
मेरुपश्चिमभूधरः ।
इति मेदिनी । ले, १३२ ॥ (अयं हि
सुमेरो-
र्व्विष्कम्भपर्व्वतानामन्यतमः । यथा,
विष्णुपुराणे ।
२ । ३ । १७ ।
“विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोक्षरे
स्मृतः ॥”
अस्मिंस्तु पीठस्थाने विपुलेति
पीठदेवी वर्त्तते ।
यथा, देवीभागवते । ७ । ३० । ६६ ।
“विपुले विपुला देवी कल्याणी
मलयाचले ॥”)
सुमेरुः । हिमाचलः । इति धरणिः ॥
(वसुदेव-
पुत्त्रः । यथा, भागवते । ९ । २४ ।
४६ ।
“बलं गदं सारणञ्च दुर्म्मदं विपुलं ध्रुवम्
।
वसुदेवस्तु रोहिण्यां कृतादीनुदपादयत्
॥”)

**विपुलरसः**, पुं, (विपुलो रसो यत्र ।) इक्षुः ।
इति केचित् ॥

**विपुला**, स्त्री, (वि + पुल महत्त्वे + कः ।
ततस्त्रियां

|  |  | टाप् ।) पृथिवी । आर्य्याच्छन्दोभेदः । इति<br>हेमचन्द्रः ॥ अस्या लक्षणादिर्यथा, --<br>“पथ्या विपुला चपला मुखचपला जघन-<br>चपला च ।<br>गीत्युपगीत्युद्गीतय आर्य्यागीतिश्च<br>नवधार्य्या ॥ |
| --- | --- | --- |

संलङ्व्य गणत्रयमादिमं
सकलयोर्द्वयोर्भवति
पादः ।
यस्यास्तां पिङ्गलनागो विपुलामिति
समा-
ख्याति ॥
पंसां कलिकालव्यालहतानां
नास्त्युपहतिर-
ल्पापि ।
वीर्य्यविपुला मुखे चेत् स्यात्
गोविन्दाख्यमन्त्र-
कला ॥"
इति छन्दोमञ्जरी ॥
(विपुलपर्व्वतस्थादेवी । इति
देवीभागवतम् ।
७ । ३० । ६६ ॥)

**विपुलास्रवा**, स्त्री, (विपुलं रसं आस्रवतीति । आ
+ स्रु + अच् । टाप् ।) गृहकन्या ।
इति राज-
निर्घण्टः ॥

**विपूयः**, पुं, (वि + पू + "विपूयविनीयेति ।" ३ । १ ।
११७ । इति कर्म्मणि
क्यबन्तनिपातः ।) मुञ्जः ।
इति मुग्धबोधव्याकरणम् ॥ यथा, --
"वासानां वल्कले शुद्धे विपूयैः
कृतमेखलाम् ।
क्षामामञ्जनपिण्डाभां
दण्डिनीमजिनास्तराम् ॥"
इति भट्टिः । ६ । ६० ॥

**विप्रः**, पुं, (वप + "ऋज्रेन्द्राग्रवज्रेति ।" उणा० २ । २८ ।
निपातनात् रप्रत्ययेन साधुः ।)
ब्राह्मणः । इत्य-
मरः । विशेषेण प्राति पूरयति षट्
कर्म्माणि
अश्वत्थः । इति राजनिर्घण्टः ॥ (त्रि, मेधावी ।
यथा, ऋग्वेदे । १० । ११२ । । ९ ।
"निषुसीद गणपते गणेषु त्वा माहुर्व्विप्रतमं
कवीनाम् ॥")
"विप्रतमं अतिशयेन मेधाविनम् ।" इति तद्भाष्ये
सायणः ॥ स्तवकर्त्ता । यथा, ऋग्वेदे । १० ।
४० । १४ ।
"विप्रस्य वा यजमानस्य वा गृहम् ॥"
"विप्रस्य मेधाविनः स्तोतुर्व्वा ।" इति तद्भाष्ये
सायणः ॥)

**विप्रकारः**, पुं, (वि + प्र + कृ + भावे घञ् ।)
अपकारः । तत्पर्य्यायः । निकारः २ । इत्य-
मरः ॥ (यथा, महाभारते । १ । ६२ । १४ ।
"तेषान्तु विप्रकारेषु तेषु तेषु महामतिः ।
मोक्षणे प्रतिकारे च विदुरोऽवहितोऽभवत् ॥")
खलीकारः । इति स्वामी । तिरस्कारः । इति
हेमचन्द्रः ॥ (विविधप्रकारः । यथा, महा-
भारते । ३ । २७५ । ३ ।
"स वाधते प्रजाः सर्व्वा विप्रकारैर्म्महाबलः ।
ततो नस्त्रातु भगवान्नान्यस्त्राता हि विद्यते ॥")

**विप्रकाष्ठं**, क्ली, तूलवृक्षः । इति राजनिर्घण्टः ॥

**विप्रकृतः**, त्रि, (वि + प्र + कृ + क्तः ।) तिरस्कृतः ।
तत्पर्य्यायः । निकृतः २ । इति हेमचन्द्रः ॥
(यथा, कुमारसम्भवे । २ । १ ।
"तस्मिन् विप्रकृताः काले तारकेण दिवौकसः ।
तुराषाहं पुरोधाय घाम स्वायम्भुवं ययुः ॥")

**विप्रकृतिः**, स्त्री, विप्रकारः । विप्रपूर्व्वककृधातोः
क्तिप्रत्ययेन निष्पन्नमिदम् ॥

**विप्रकृष्टः**, त्रि, (वि + प्र + कृष + क्तः ।) दूरः ।
इति हलायुधः ॥ (यथा, --
"सन्निकृष्टविप्रकृष्टव्यभिचारिप्राधानिकभेदाच्च-
तुर्धा इति । नच ते चयादिकमपेक्षन्ते । विप्र-
कृष्टो यथा । हेमन्ते नि चतः श्लेष्मा वसन्ते
कफरोगकृत् । किंवा सन्निकृष्टो ज्वरस्य रुक्षादि-
सेवा विप्रकृष्टो रुद्रकोपः ।" इति माधवकृत
रुग्विनिश्चयव्याख्याने विजयः ॥)

आक्षिप्तचतुरंशस्तु चतुष्पादभिधीयते
॥"
इति मिताक्षरायां व्यवहारमातृका ॥ *
॥
विकृतिः । यथा प्रथमाध्याये
कात्यायनसूत्रम् ।
शब्देऽविप्रतिपत्तिरिति ।
प्रतिनिहितद्रव्ये श्रुत-
शब्दः प्रयोज्यः । श्रुतद्रव्यबुद्ध्या
प्रतिनिध्युपादा-
नात् शब्दान्तरप्रयोगे
द्रव्यान्तरबुद्धिप्रसङ्गात् ।
इत्येकादशीतत्त्वम् ॥ (अन्यथाभावः ।
अरिष्ट-
विशेषः । यथा, सुश्रुते । १ । ३० ।
"अथातः पञ्चे-
न्द्रियार्थविप्रतिपत्तिमध्यायं
व्याख्यास्यामः ।"
एवं छायाविप्रतिपत्तिः ।
स्वभावविप्रति-
पत्तिः ॥)

**विप्रतिसारः**, पुं, (वि + प्रति + सृ + घञ् ।)
विप्रतीसारः । इत्यमरटीकायां
रायमुकुटः ॥
(यथा, शिशुपालधधे । १० । २० ।
"प्रापि चेतसि स विप्रतिसारे
सुभ्रुवामवसरः सरकेण ॥"
"विप्रतिसारे पश्चात्तापयुक्ते ।
पश्चात्तापोऽनुता-
पश्च विप्रतीसार इत्यपि । इत्यमरः ।"
इति
तट्टीकायां मल्लिनाथः ॥)

**विप्रतिषिद्धं**, त्रि, (वि + प्रति + षिध + क्तः ।)
निषिद्धम् । इति स्मृतिः ॥

**विप्रतीसारः**, पुं, अनुतापः । इत्यमरः ॥ कौकृत्यम् ।
अनुशयः । रोषः । इति मेदिनी । रे,
३०७ ॥

विप्रः । प्रा ल पूर्त्तौ इत्यस्मात्
डप्रत्ययः । किंवा ।
उप्यते धर्म्मबीजमत्र इति
वपेर्नाम्नीति रे
निपातनादत इत्वम् । इति भरतः ॥
तस्य
लक्षणं यथा, --
“जन्मना ब्राह्मणो ज्ञेयः
संस्कारैर्द्विज उच्यते ।
विद्यया याति विप्रत्वं त्रिभिः
श्रोत्रियलक्षणम् ॥”
इति प्रायश्चित्तविवेकः ॥
(यथाच मनौ । १ । ९४ ।
“उत्पत्तिरेव विप्रस्य मूर्त्तिर्धर्म्मस्य
शाश्वती ।
स हि धर्म्मार्थमुत्पन्नो ब्रह्मभूयाय
कल्पते ॥”
अस्य पादोदकमाहात्म्ये यथा,
ब्रह्मवैवर्त्ते । १ ।
११ । २६ -- ३३ ।
“पृथिव्यां यानि तीर्थानि तानि
तीर्थानि सागरे ।
सागरे यानि तीर्थानि विप्रपादेषु
तानि च ॥
विप्रपादोदकक्लिन्ना यावत्तिष्ठति
मेदिनी ।
तावत् पुष्करपात्रेषु पिबन्ति पितरो
जलम् ।
विप्रपादोदकं पुण्यं भक्तियुक्तश्च यः
पिबेत् ॥
स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु
दीक्षितः ।
महारोगी यदि पिबेत् विप्रपादोदकं
द्विज ।
मुच्यते सर्व्वरोगेभ्यो मासमेकन्तु
भक्तितः ॥
अविद्यो वा सविद्यो वा सन्ध्यापूतो
हि यो
द्विजः ।
स एव विष्णुसदृशो मा हरी विमुखो
यदि ॥

**विप्रकृष्टकं**, त्रि, (विप्रकृष्ट एव । स्वार्थे कन् ।)

दूरम् । इत्यमरः ॥

**विप्रचित्तिः**, पुं, दनुपुत्त्रः । यथा, --

सूत उवाच ।
“अभवद्दनुपुत्त्राश्च वंशे ख्याता महासुराः ।
विप्रचित्तिप्रधानास्ते शतं तीव्रपराक्रमाः ॥”
इति वह्निपुराणे काश्यपीयवंशः ॥
(तथाच महाभारते । १ । ६५ । २१ ।
“चत्वारिंशद्दनोः पुत्त्राः ख्याताः सर्व्वत्र
भारत ।
तेषां प्रथमजो राजा विप्रचित्तिर्म्महायशाः ॥”)

**विप्रतिपत्तिः**, स्त्री, (वि + प्रति + पद + क्तिन् ।)

विरोधः । यथा, --
“परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु ।
वाक्यान्न्यायाद्व्यवस्थानव्यवहार उदाहृतः ॥
भाषोत्तरक्रियासाध्यसिद्धिभिःक्रमवृद्धिभिः ।

**विप्रदहः**, पुं, (विशेषेण प्रकृष्टञ्च दह्यते इति ।

दह + घः ।) फलमूलादिशुष्कद्रव्यम् ।
इति
शब्दचन्द्रिका ॥

**विप्रप्रियः**, पुं, (विप्राणां पियः । यज्ञीयद्रुमत्वात् ।)

पलाशवृक्षः । इति केचित् ॥
ब्राह्मणवल्लभे, त्रि ।
यथा, --
“रामं लक्ष्मणपूर्ब्बजं रघुवरं सीतापतिं
सुन्दरं
काकुत्स्थं करुणामयं गुणनिधिं
विप्रप्रियं
धार्म्मिकम् ।”
इति रामायणम् ॥

**विप्रयाणं**, क्ली, (विशेषेण प्रयाणम् ।) पलायनम् ।

इति केचित् ॥

**विप्रयुक्तः**, त्रि, (प्र + युज् + भावे क्तः । विगतं

प्रयुक्तं प्रयोगो यस्मात् ।) विश्लिष्टः ।
विभिन्नः ।
इति केचित् ॥

**विप्रयोगः**, पुं, (विगतः प्रकृष्टो योगो यत्र ।)

विप्रलम्भः । इत्यमरः ॥ विरहो
विसंवादो वा ।
इति स्वामी ॥ रागिणोर्व्विच्छेदः । इति
सुभूतिः ॥
(यथा, मनौ । ९ । १ ।
“पुरुषस्य स्त्रियाश्चैव धर्म्म्ये वर्त्मनि
तिष्ठतोः ।
संयोगे विप्रयोगे च धर्म्मान् वक्ष्यामि
शाश्व-
तान् ॥”
संयोगाभावः । यथा, साहित्यदर्पणे । २
।
“संयोगो विप्रयोगश्च साहचर्य्यं
विरोधिता ॥”)

**विप्रलब्धः**, त्रि, (वि + प्र + लभ + क्तः ।) वञ्चितः ।

| | | |
|---|---|---|
| घ्नन्तं विप्र शपन्तं वा न हन्यान्नच तं शपेत् ।<br>गोभ्यः शतगुणं पूज्यो हरिभक्तश्च ब्राह्मणः ॥<br>पादोदकञ्च नैवेद्यं भुङ्क्ते विप्रस्य यो द्विज ।<br>नित्यं नैवेद्यभोजी यो राजसूयफलं लभेत् ॥<br>एकादश्यां न भुङ्क्ते यो नित्यं विष्णुं समर्च्चयेत् ।<br>नस्य पादोदकं प्राप्य स्थलं तीर्थं भवेद्ध्रुवम् ॥”) | | इति हेमचन्द्रः ॥ (यथा, महाभारते । ५ ।<br>१९१ । २१ ।<br>“दशार्णराजो<br>राजंस्त्वामिदवचनमब्रवीत् ।<br>अभिषङ्गात् प्रकुपितो<br>विप्रलब्धस्त्वयानघ ॥”) |

**विप्रलब्धा**, स्त्री, (विशेषेण प्रलब्धा प्रतारिता ।)

स्वीयादिनायिकाभेदः । तस्या लक्षणं
यथा, --
सङ्केतनिकेतने प्रियमनवलोक्य
समाकुलहृदया
विप्रलब्धा । अस्याश्चेष्टा
निर्वेदनिश्वाससखी-
जबोपालम्भभयमूर्च्छाचिन्ताश्रुपातादयः॥
* ॥
मुग्धा पिप्रलब्धा यथा, --
“आलीभिः शपथैरनेककपटैः कुञ्जोदरं
नीतया
शून्यं तच्च निरीक्ष्य विक्षुभितया न
प्रस्थितं न
स्थितम् ।
न्यस्ताः किन्तु नवोढनीरजदृशा
कुञ्जोपकण्ठे
रुषा
भ्राम्यद्भृङ्गकदम्बडम्बरचमत्कारस्पृशो
दृष्टयः ॥” * ॥
मध्या विप्रलब्धा यथा, --
“सङ्केतकेलिगृहमेत्य निरीक्ष्य शून्य-
मेणीदृशो निभृतनिश्वसिताधरायाः ।
अर्द्धाक्षरं वचनमर्द्धविकाशि नेत्रं
ताम्बूलमर्द्धकवलीकृतमेव तस्थौ ॥” * ॥
प्रगल्भा विप्रलब्धा यथा, --
“शून्यं कुञ्जगृहं निरीक्ष्य कुटिलं विज्ञात-
चेतोभवं
दूती नापि निवेदिता सहचरी पृष्टापि नो वा
तया ।
शम्भो शङ्कर चन्द्रशेखर हरश्रीकण्ठ शूलिन्
शिव
त्रायस्वेति परन्तु पङ्कजदृशा भर्गस्य चक्रे
स्तुतिः ॥” * ॥
परकीया विप्रलब्धा यथा, --
“दत्त्वा धैर्य्यभुजङ्गमूर्द्ध्नि चरणावुल्लङ्घ्य
लज्जानदी-
मङ्गीकृत्य घनान्धकारपटलं तन्व्या न दृष्टः
प्रियः ।
शृङ्गाराङ्गविशेषः । यथा, --
“यूनोरयुक्तयोर्भावो युक्तयोर्वाथ यो
मिथः ।
अभीष्टालिङ्गनादीनामनवाप्त्यै
प्रहृष्यते ।
स विप्रलम्भो विज्ञेयः
सम्भोगोन्नतिकारकः ॥”
इत्युज्ज्वलनीलमणिः ॥

**विप्रलापः**, पुं, (वि + प्र + लप + घञ् ।) विरो-

धोक्तिः । इत्यमरः ॥
परवचनविरोधिवचनं
विप्रलापः । अन्योन्यविवदनमिति
यावत् । यथा
एको ब्रूते आगता कल्याणीति अन्यो
ब्रूते
नहीति । तथाभ्युदाजहार
सर्व्वानन्दः ।
“एकः स्रवन्मधुसरोजमवैति वक्त्र-
मन्यः सुधाकिरणबिम्बमदो मृगाक्ष्याः
।
यूनोर्म्मुहुर्व्विवदतोर्व्वदने बभूवुः
सिद्धान्तवन्मधुशराजिगतागतानि॥”
विरुद्धः प्रलापो विप्रलापः घञ् ।
विरोधे
उक्तिर्वचनं विरोधोक्तिः । इति भरतः
॥ (यथा,
महाभारते । ६ । ८२ । २५ ।
“स धर्म्मराजस्य वचो निशम्य
रूक्षाक्षरं विप्रलापापविद्धम् ॥”)
अनर्थकवाक्यम् । इति हेमचन्द्रः ॥
(यथा,
महाभारते । ३ । ५ । २१ ।
“सत्यं श्रेयः पाण्डव विप्रलापं
तुल्यञ्चान्नं सह भोज्यं सहायैः ॥”)

**विप्रलोभी**, [न्] पुं, किंकिरातवृक्षः । इति राज-

निर्घण्टः ॥

**विप्रश्निका**, स्त्री, (विविधः प्रश्नोऽस्त्यस्या
इति ।

“नोच्छिष्टं कुर्व्वते मुख्या विप्रुषोऽङ्गं नयन्ति याः
।
दन्तवद्दन्तलग्नेषु जिह्वास्पर्शेऽशुचिर्भवेत् ॥”
इति कौर्म्मे उपविभागे १३ अध्यायः ॥

**विप्रोषितः**, त्रि, प्रवासितः । विप्रपूर्ब्बकवसधातोः

क्तप्रत्ययेन निष्पन्नः ॥

**विप्लवः**, पुं, (वि + प्लु + अप् ।) परचक्रादिभयम् ।

इति भरतः ॥ राष्ट्राद्युपद्रवः । इति सार-
सुन्दरी ॥ तत्पर्य्यायः । डिम्बः २ डमरः ३ ।
इत्यमरः ॥ (यथा, राजतरङ्गिण्याम् । ८ ।
१०४१ ।
“सर्व्वां मडवराज्योर्व्वीं वीरः शमितविप्ल-
वाम् ॥”)
अस्त्रकलहः । इति स्वामी ॥ (क्लेशः । उप-
द्रवः । यथा, भागवते । ४ । २६ । ९ ।
“विप्लवोऽभूद्दुःखितानांदुःसहः करुणात्मनाम्
॥
विनाशः । यथा, कथासरित्सागरे । १३ । ८२ ।
“संमन्त्र्य कौतुकात्
पापास्तद्भार्य्याशीलविप्लवम् ।
चिकीर्षवो ययुः शीघ्रं ताम्रलिप्तीमलक्षिताः ॥”
विप्लवते इति अच् । जलोपर्य्यवस्थितः । यथा,
महाभारते । ९ । ३ । ५ ।
“बणिजो नावि भग्नायामगाधे विप्लवा इव ॥”)

**विप्लावः**, पुं, अश्वस्य प्लुतगतिः । इति विपूर्ब्ब-

प्लुधातोर्घञ् प्रत्ययेन निष्पन्नम् ॥

**विप्लुट्**, [ष्] स्त्री, (विशेषेण प्लोषतीति । वि +

प्लुष् + क्विप् ।) विप्रुट् । बिन्दुः । इत्यमर-
टीकायां रामाश्रमः ॥

**विप्लुतः**, त्रि, (वि + प्लु + क्तः ।) व्यसनार्त्तः । तत्-

पर्य्यायः । पञ्चभद्रः २ व्यसनी ३ । इति हेम-
चन्द्रः ॥

**विफलं**, त्रि, (विगतं फलं यस्य ।) निरर्थकम् ।

तत्पर्य्यायः । मोघम् २ व्यर्थम् ३ । इनि जटा-
धरः ॥ (यथा, कुमारसम्भवे । ७ । ६६ ।

सन्तापाकुलया तया च परितः पाथोधरे गर्ज्जति
क्रोधाक्रान्तकृतान्तमत्तमहिषभ्रान्त्या दृशौ योजिते ॥"
सामान्या विप्रलब्धा यथा, --
"कपटवचनभाजा केनचिद्वारयोषा
सकलरसिकगोष्ठीवञ्चिकावञ्चितासौ ।
इति तरलितरिङ्गद्भृङ्गविक्षिप्तचक्षु-
र्हसति विकचकुन्दच्छद्मना केलिकुञ्जः ॥"
इति रसमञ्जरी ॥

**विप्रलम्भः**, पुं, (वि + प्र + लभ + घञ् । नुम् ।)
विसंवादः । (यथा, महाभारते । ३ । ३१ । २७ ।
"विप्रलम्भोऽयमत्यन्तं यदि स्युरफलाः क्रियाः ॥")
बञ्चनम् । (यथा, महाभारते । ५ । १९१ । १६ ।
"ततो दशार्णाधिपतेः प्रेष्याः सर्व्वा न्यवेदयन् ।
विप्रलम्भं यथा वृत्तं स च चुक्रोध पार्थिवः ॥")
विप्रयोगः । विच्छेदः । इत्यमरः ॥ शृङ्गाररस-
भेदः । यथा, शब्दरत्नावल्याम् ।
"नामान्येतानि शृङ्गारे कैशिकः शुचिरुज्ज्वलः ।
सम्भोगो विप्रलम्भश्च तस्य भेदद्वयं भवेत् ॥"

विप्रश्न + "अत इनिठनौ ।" ५ । २ । ११५ । इति
ठन् ।) दैवज्ञा । इत्यमरः ॥

**विप्रियः**, पुं, (विरुद्धं प्रीणातीति । प्री + कः ।)
अपराधः । तत्पर्य्यायः । मन्तुः २ व्यलीकम् ३
आगः ४ । इति हेमचन्द्रः ॥ (यथा, भाग-
वते । ६ । ५ । ४२ ।
"यन्नस्त्वं कर्म्मसन्धानां साधूनां गृहमेधिनाम् ।
कृतवानसि दुर्म्मर्षं विप्रियं तव मर्षितम् ॥")
अप्रिये, त्रि । (यथा, महाभारते । १ । १६० । ८ ।
"पिण्डं पितॄणां व्युच्छिद्येत्ततेषां विप्रियं
भवेत् ॥")

**विप्रुट्**, [ष्] स्त्री, (विशेषेण प्रोषति दहति
पापानि । वि + प्रुष् + क्विप् ।) बिन्दुः । इत्य-
मरः ॥ (यथा, महाभारते । १३ । १०७ ।
१३५ ।
"विप्रुषश्चैव यावन्त्यो निपतन्ति नभस्तलात् ॥")
वेदपाठे विप्रुषो मुखनिर्गतजलबिन्दवो ब्रह्म-
बिन्दव उच्यन्ते । ते शुद्धाः । यथा, --
"मक्षिका विप्रुषश्छाया गौरश्वः सूर्य्यरश्मयः ।
रजो भूर्वायुरग्निश्च स्पर्शे मेध्यानि निर्द्दिशेत् ॥"
इति शुद्धितत्त्वे मनुवचनम् ॥
(यथा च मनौ । ५ । १४१ ।
"नोच्छिष्टं कुर्व्वते मुख्या विप्रुषोऽङ्गे पतन्तियाः ।
न श्मश्रूणि गतान्यास्यं न दन्तान्तरधिष्ठितम् ॥")

"परस्परेण स्पृहणीयशोभं
न चेदिदं द्वन्द्वमयोजयिष्यत् ।
अस्मिन् द्वये रूपविधानयत्नः
पत्युः प्रजानां विफलोऽभविष्यत् ॥")

**विफला**, स्त्री, (विगतं फलं यस्याः ।) केतकी ।
इति राजनिर्घण्टः ॥

**विबन्धः**, पुं, आनाहरोगः । इत्यमरः ॥ तस्य
चिकित्सा ।
"तुल्यकारणकार्य्यत्वात् उदावर्त्तहरीं क्रियाम् ।
आनाहेऽपि च कुर्व्वीत विशेषश्चाभिधीयते ॥
त्रिवृत्कृष्णा हरीतक्यो द्विचतुःपञ्चभागिकाः ।
गुडेन तुल्या वटिका हरन्त्यानाहमुल्वणम् ॥
वर्त्तिस्त्रिकटुसैन्धवसर्षपगृहधूमकुष्ठमदनफलैः ।
मधुनि गुडेवा पक्वैर्निहिता स्वाङ्गुष्ठपरिमाणा ॥
वर्त्तिरियं दृष्टफला शनैः प्रणिहिता गुदे घृता-
भ्यक्ते ।
आनाहोदावर्त्तौ शमयति जठरं तथा गुल्मम् ॥"
त्रिकटुकाद्या वर्त्तिः । इति भावप्रकाशः ॥
(विशेषेण बन्धः । विशेषबन्धनम् । यथा, महा-
भारते । ८ । १४० । ४४ ।
"पादोदरविबन्धैश्च भूमावुद्भ्रमणैस्तथा ॥")

**विबाधा**, स्त्री, विहेठनम् । इति त्रिकाण्डशेषः ॥

**विबुधः**, पुं, (विशेषेण बुध्यते इति । बुध + कः ।)
देवः । इत्यमरः ॥ (यथा, मनौ । १२ । ४७ ।
"गन्धर्व्वा गुह्यका यक्षा विबुधानुचराश्च ये ॥")
पण्डितः । इति मेदिनी । धे, ३६ ॥ (यथा,
कथासरित्सागरे । ६३ । १०५ ।
"ब्रवीमि विबुधः खेदं जनानां निह्नुते कथम् ॥"
अस्मिन्नर्थे वाच्यलिङ्गेऽपि दृश्यते ॥ * ॥) चन्द्रः ।
इति हलायुधः ॥

**विबुधानः**, पुं, (वि + बुध + शानच् ।) आचार्य्यः ।
पण्डितः । देवः । इति संक्षिप्तसारोणादि-
वृत्तिः ॥

**विबोधः**, पुं, (विगतो बोधः ।) अनवधानता ।
इति केचित् ॥ (विशिष्टो बोधः ।) प्रबोधश्च ॥
(यथा, भागवते । ३ । ४ । २० ।
"स एवमाराधितपादतीर्था-
दधीत तत्त्वात्मविबोधमार्गः ॥"
द्रोणपक्षिपुत्त्रः । यथा, मार्कण्डेये । १ । २१ ।
"पिङ्गाक्षश्च विबोधश्च सुपुत्त्रः सुमुखस्तथा ।
द्रोणपुत्त्राः खगश्रेष्ठास्तत्त्वज्ञाः शास्त्र-
चिन्तकाः ॥")

**विबोधनं**, क्ली, (वि + बुध + ल्युट् ।) प्रबोधनम् ।
यथा, --
"तुष्टाव योगनिद्रान्तामेकाग्रहृदयस्थितः ।
विबोधनार्थाय हरेर्हरिनेत्रकृतालयाम् ॥"
इति देवीमाहात्म्यम् ॥

विभक्तानवगच्छेयुर्लेख्यमप्यन्तरेण तान् ॥"
इति नारदवचनानि ॥
तथा ।
"भ्रातॄणामथ दम्पत्योः पितुः पुत्त्रस्य चैव हि ।
प्रातिभाव्यमृणं साक्ष्यमविभक्तेन तत् स्मृतम् ॥"
इति याज्ञवल्क्यवचनम् ॥ * ॥
तथा ।
"विभक्तो यः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः ।
पितृव्येणाथवा प्रीत्या स तु संसृष्ट उच्यते ॥"
इति बृहस्पतिवचने येषामेव हि पितृभ्रातृ-
पितृव्यादीनां
पितृपितामहोपार्ज्जितद्रव्येणा-
विभक्तत्वमुत्पत्तितः सम्भवति त एव विभक्ताः
सन्तः परस्परप्रीत्या
पूर्ब्बकृतविभागध्वंसेन यत्तव
धनं तन्मम धनं यन्मम धनं तत्तवापि इत्येक-
स्मिन् कार्य्ये एकगृहिरूपतया स्थिताः संसृष्टाः ।
न त्वेवं रूपाणां धनसंसर्गमात्रेण । नापि विभ-
क्तानां प्रीतिपूर्ब्बकाभिसन्धानं विना ॥ * ॥ तथा ।
"बन्धूनामविभक्तानां भोगं नैव प्रदापयेत् ॥"
इति कात्यायनवचनम् ॥
तथा ।
"भ्रातॄणामविभक्तानामेको धर्म्मः प्रवर्त्तते ।
विभागे सति धर्म्मोऽपि भवेत्तेषां पृथक्पृथक् ॥"
तथा ।

(पुं, कार्त्तिकेयः । यथा, महाभारते । ३ । १३१ । ६ ।
"षष्ठीप्रियश्च धर्म्मात्मा पवित्रो मातृवत्सलः ।
कन्याभर्त्ता विभक्तश्च स्वाहेयो रेवतीसुतः ॥")

**विभक्तजः**, पुं, (विभक्ते सति जायते इति । जन
+ डः ।) विभागानन्तरं गर्भाधानेन जातः ।
यथा । बृहस्पतिः ।
"पित्रा सह विभक्ता ये सापत्न्या वा सहोदराः ।
जघन्यजाश्च ये तेषां पितृभागहरास्तु ते ॥
अनीशः पूर्ब्बजः पित्र्ये भ्रातृभागे विभक्तजः ।
यथा धने तथर्णेऽपि मुक्त्रा शौचोदकक्रियाः ॥"
इति दायतत्त्वम् ॥

**विभक्तिः**, स्त्री, (विभजनमिति । संख्याकर्म्मादयो
ह्यर्था विभज्यन्ते आभिरिति वा । वि + भज +
क्तिन् ।) विभागः । स्यादिः त्यादिश्च । यथा ।
"संख्यात्वव्याप्यसामान्यैः शक्तिमान् प्रत्ययस्तु
यः ।
सा विभक्तिर्द्विधा प्रोक्ता सुप्तिङ् चेति प्रभे-
दतः ॥"
संख्यात्वावान्तरजात्यवच्छिन्नशक्तिमान्यः
प्रत्ययः सा विभक्तिः । सुप् तिङ् इति भेदा-
द्द्विविधा । इति शब्दशक्तिप्रकाशिका ॥ (उभ-
यार्थोदाहरणम् । यथा, नैषधे । ३ । २३ ।
"क्रियेत चेत् साधु विभक्तिचिन्ता
व्यक्तिस्तदा सा प्रथमाभिधेया ।
या स्वौजसां साधयितुं विलासै-
स्तावत् क्षमा नाम पदं बहु स्यात् ॥")

**विभजनीयं**, त्रि, विभाज्यम् । विभागयोग्यम् ।
यथा । यद्यस्य प्रयोजनार्हं पुस्तकादि तन्-
मूर्खादिभिः सह पण्डितादिभिर्न विभजनीयम् ।
इति दायतत्त्वम् ॥ भजनार्हम् । विपूर्ब्बभज-

(जागरणम् । यथा, महाभारते । १ ।
१०० । ८ ।
"वीतशोकभयाबाधाः
सुखस्वप्नविबोधनाः ॥"
प्राप्तिबोधके, त्रि । यथा, ऋग्वेदे । ३८ ।
२२ ।
"अदाद्रायो विबोधनम् ।"
"रायो धनस्य विबोधनं विशेषेण बोधकं
बहु-
धनप्राप्तिहेतुमित्यर्थः ।" इति तद्भाष्ये
सायणः ॥

**विभक्तः**, त्रि, (वि + भज् + क्तः ।) प्राप्तविभागः ।

विभिन्नः । पृथक् । यथा । बृहस्पतिः ।
"पित्रा सहविभक्ता ये सापत्न्या वा
सहोदराः ॥
जघन्यजाश्च ये तेषां पितृभागहरास्तु ते
।
अनीशः पूर्ब्बजः पित्र्ये भ्रातृभागे
विभक्तजः ॥"
विभक्तजो विभागानन्तरं गर्भाधानेन
जातः ॥
अपि च । व्यासः ।
"भ्रातॄणां जीवतोः पित्रोः सहवासो
विधीयते ।
तदभावे विभक्तानां धर्म्मस्तेषां विवर्द्धते
॥"
विभक्तानां स्वमात्रधने
वैदिककर्म्मकरणात्तन्मा-
त्रधर्म्मत्वेन तद्वृद्धिरित्यर्थः ।
"विभक्ता अविभक्ता वा सपिण्डाः
स्थावरे
समाः ।
एको ह्यनीशः सर्व्वत्र दानाधमनविक्रये
॥"
अपि च ।
"दानग्रहणपश्वन्नगृहक्षेत्रपरिग्रहाः ।
विभक्तानां पृथक् ज्ञेयाः
पाकधर्म्मागमव्ययाः ॥
साक्षित्वं प्रातिभाव्यञ्च दानं ग्रहणमेव च
।
"भ्रातॄणामविभक्तानां यद्युत्थानं भवेत् सह
।
न तत्र भागं विषमं पिता दद्यात् कथञ्चन
॥"
इति मनुवचनम् ॥
तथा । कात्यायनः ।
"अविभक्ते मृते पुत्त्रे तत्सुतं
ऋक्थभागिनम् ।
कुर्व्वीत जीवनं येन लब्धं नैव पितामहात्
।
लभेतांशं स पित्र्यं च पितृव्यात् तस्य वा
सुतात् ॥"
तथा । विष्णुः । पितृविभक्ता
विभागानन्तरो-
त्पन्नस्य विभागं दद्युः ॥ * ॥ अपि च ।
"अविभक्तविभक्तानां कुल्यानां वसतां
सह ।
भूयो दायविभागः स्यादाचतुर्थादिति
स्थितिः ॥"
इति कात्यायनवचनम् ॥
अविभक्तानां सह वसतां संसृष्टानां वा
पुन-
र्विभागो भ्रातृतत्सुततत्सुतपर्य्यन्तमेव
तत्सुता-
च्चतुर्थान्निवर्त्तते । इति ॥ तथा ।
"अविभक्तं स्थावरं यत् सर्व्वेषामेव
तद्भवेत् ।
विभक्तं स्थावरं प्राप्तं नान्योदर्य्यैः कदाचन
॥"
इति यमवचनम् । एतानि वचनादीनि
दाय-
तत्त्वधृतानि ॥ * ॥ अपि च ।
"अविभक्ता विभक्ता वा कुर्य्युः
श्राद्धमदैविकम् ।
मघासु च तथान्यत्र नाधिकारः पृथक्
विना ॥"
इति श्राद्धतत्त्वम् ॥
अन्यच्च ।
"बहवः स्युर्यदा पुत्राः पितुरेकत्र वासिनः
।
धातोरनीयप्रत्ययेन निष्पन्नम् ॥

**विभवः**, पुं, धनम् । (यथा, मनौ । ४ । ३४ ।

"न जीर्णमलवद्वासा भवेच्च विभवे सति ॥")
मोक्षः । ऐश्वर्य्यम् । इति मेदिनी । वे, ५१ ॥
(यथा, भागवते । ७ । ८ । ५५ ।
"भवता हरे स वृजिनोऽवसादितो
नरसिंह नाथ विभवाय नो भव ॥")
प्रभवादिषष्टिसंवत्सरान्तर्गतद्वितीयवर्षम् ।
यथा,
भविष्यपुराणे ।
भैरव उवाच ।
"सुभिक्षं क्षेममारोग्यं सर्व्वे व्याधिविवर्ज्जिताः
।
प्रशान्ता मानवास्तत्र बहुशस्या वसुन्धरा ।
हृष्टास्तुष्टा जनाः सर्व्वे विभवे च वरानने ! ॥"
इति ज्योतिस्तत्त्वम् ॥

**विभा**, स्त्री, (वि + भा + क्विप् ।) किरणः । इति

हेमचन्द्रः ॥ प्रकाशः । शोभा । इति राज-
निर्घण्टः ॥ (यथा, साहित्यदर्पणे । १० ।
६६७ ।
"कमलेव मतिर्मतिरिव कमला
तनुरिव विभा विभेव तनुः ।
धरणीव धृतिर्धृतिरिव धरणी
सततं विभाति वत यस्य तव ॥"
प्रकाशके, त्रि । यथा, ऋग्वेदे । १० । ५५ । ४
।

| | | |
|---|---|---|
| विभक्ता भ्रातरः कुर्य्युर्नाविभक्ताः परस्परम् ॥<br>येषामेताः क्रिया लोके प्रवर्त्तन्ते स्वऋक्थतः । | सर्व्वेषान्तु मतं कृत्वा ज्येष्ठेनैव तु यत् कृतम् ।<br>द्रव्येण चाविभक्तेन सर्व्वैरेव कृतं भवेत् ॥"<br>इति शुद्धितत्त्वम् ॥ | |

"यदुष औच्छः प्रथमा विभानाम् ॥"
"विभानां विभासकानां
ग्रहनक्षत्रादीनाम् ।"
इति तद्भाष्ये सायणः ॥)

**विभाकरः**, पुं, (वि + भा + कृ + "दिवाविभा-
निशेति ।" ३ । २ । २१ । इति टः ।)
सूर्य्यः ।
(यथा, साहित्यदर्पणे । १० ।
अर्थश्लेशे ।
"सहसा भूयसाविष्टो विभाति च
विभाकरः ॥")
अर्कवृक्षः । चित्रकवृक्षः । इत्यमरः ।
अग्निः ।
इति मेदिनी । रे, २९७ ॥ (त्रि,
प्रकाशशीलः ॥)

**विभागः**, पुं, (वि + भज + घञ् ।) भागः । अस्य
पर्य्यायः अंशशब्दे द्रष्टव्यः ॥ अस्य
लक्षणं यथा ।
"एकदेशोपात्तस्यैव
भूहिरण्यादावुत्पन्नस्य
स्वत्वस्य विनिगमनाप्रमाणाभावेन
वैशेशिक-
व्यवहारानर्हतया अव्यवस्थितस्य
गुटिकापाता-
दिना व्यञ्जनं विभागः । विशेषेण
भजनं
स्वत्वज्ञापनं वा विभागः ।" इति
दायभागः ॥
अपि च ।
"विभागोऽर्थस्य पित्र्यस्य पुत्त्रैर्यत्र
प्रकल्प्यते ।
दायभाग इति प्रोक्तं तद्विवादपदं बुधैः
॥"
इति नारदवचनम् ॥
पूर्ब्बस्वामिस्वत्वोपरमे
सम्बन्धाविशेषात् सम्ब-
एककर्म्मोद्भवस्त्वाद्यो द्वयकर्म्मोद्भवः परः ॥
विभागजस्तृतीयः स्यात्तृतीयोऽपि द्विधा भवेत् ।
हेतुमात्रविभागोत्थहेत्वहेतुविभागजः ॥"
इति भाषापरिच्छेदः ॥ * ॥
विभक्तप्रत्ययकारणं विभागं निरूपयति विभाग
इति एककर्म्मेति । उदाहरणन्तु । श्येनशैल-
विभागादिकं पूर्व्ववत् बोध्यं तृतीयो विभागजः
कारणमात्रविभागजन्यः कारणाकारणविभाग-
जन्यश्चेति आद्यस्तावत् यत्र कपालकर्म्म ततः
कपालद्वयविभागस्ततो घटारम्भकसंयोगनाश-
स्ततो घटनाशः ततस्तेन एककपालविभागेन
सकर्म्मणः कपालस्य देशान्तरविभागो जन्यते
तत उत्तरदेशसंयोगः ततः कर्म्मनाश इति ।
न च तेन कर्म्मणैव कथं देशान्तरविभागो न
जन्यते इति वाच्यं एकस्य कर्म्मण आरम्भक-
संयोगप्रतिद्वन्द्विविभागजनकत्वस्यानारम्भकसं
योगप्रतिबन्धिविभागजनकत्वविरोधात्अन्यथा
विकसत्कमलकुट्मलभङ्गप्रसङ्गात् तस्माद्यदीदं
अनारम्भकसंयोगप्रतिद्वन्द्विविभागं जनयेत्तदा
आरम्भकसंयोगप्रतिबन्धिविभागं न जनयेत् ।
न च कारणविभागेनैव द्रव्यनाशात् पूर्व्वं कुतो
देशान्तरविभागो न जन्यते इति वाच्यं आर-
म्भकसंयोगप्रतिबन्धिविभागवतः अवयवस्य सति
द्रव्ये देशान्तरविभागासम्भवात् यत्र हस्त-
क्रियया हस्ततरुविभागः ततः शरीरेऽपि
विभक्तप्रत्ययो भवति तत्र च शरीरतरुविभागे
हस्तक्रिया न कारणं व्यधिकरणत्वात् शरीरे तु
क्रिया नास्ति अवयविकर्म्मणो यावदवयवकर्म्म-
नियतत्वात् । अतस्तत्र कारणाकारणविभागेन
कार्य्याकार्य्यविभागो जन्यते इति अतएव विभागो
गुणान्तरं अन्यथा शरीरे विभक्ताविभक्त-
प्रत्ययो न स्यात् अतः संयोगनाशेन विभागो
नान्यथासिद्धो भवति । इति सिद्धान्तमुक्ता-
वली ॥ ("सामान्यधर्म्मावच्छिन्नानामेव वस्तूनां
परस्परविरुद्धतद्व्याप्यधर्म्मप्रकारेण प्रतिपाद-
नम् ॥" यथा द्रव्यत्वधर्म्मावच्छिन्नानां क्षित्या-
दीनां परस्परविरुद्धेन क्षितित्वजलत्वादिना
अथ द्रव्यत्वव्याप्येन विशेषेण तथा प्रतिपादनं
नवधा द्रव्यविभागः ॥ यागः । यथा, ऋग्वेदे ।
तथा ।
"शौर्य्यभार्य्याधने चोभे यच्च
विद्याधनं भवेत् ।
त्रीण्येतान्यविभाज्यानि प्रसादो यच्च
पैतृकः ॥"
इति दायतत्त्वम् ॥

**विभाण्डकः**, पुं, मुनिविशेषः । स तु ऋष्यशृङ्ग-
पिता । इति रामायणम् ॥ (यथा,
महा-
भारते । ३ । १११ । २१ ।
"सोऽपश्यदासीनमुपेत्य पुत्त्रं
ध्यायन्तमेकं विपरीतचित्तम् ।
विनिश्वसन्तं मुहुरूर्द्धदृष्टिं
विभाण्डकः पुत्त्रमुवाच दीनम् ॥")

**विभाण्डी**, स्त्री, आवर्त्तकीलता । इति राज-
निर्घण्टः ॥

**विभातं**, क्ली, (वि + भा + क्तः ।) प्रत्यूषः । इति
शब्दरत्नावली ॥

**विभावः**, पुं, (विशेषेण भावयति रसं सामाजि-
कानिति । वि + भावि + अच् ।)
परिचयः ।
रसस्योद्दीपनादिः । इति मेदिनी ॥
तल्लक्ष-
णादिर्यथा, --
"विभावेनानुभावेन व्यक्तः सञ्चारिणा
तथा ।
रसतामेति रत्यादिः स्थायी भावः
सचेतसाम् ॥"
विभावादयो वक्ष्यन्ते । विभावादीनां
यथा-
संख्यं कारणकार्य्यसहकारित्वे कथं
त्रयाणामपि
रसोद्बोधे कारणत्वमित्युच्यते ।
"कारणकार्य्यसञ्चारिरूपा अपि हि
लोकतः ।

न्धिनां सर्व्वधनप्रसूतस्य स्वत्वस्य
गुटिकापाता-
दिना प्रादेशिकस्वत्वव्यवस्थापनं
विभागः ॥ * ॥
अपि च । कात्यायनः ।
“जीवद्विभागे तु पिता नैकं पुत्त्रं
विशेषयेत् ।
निर्भाजयेत् न चैवैकमकस्मात् कारणं
विना ॥”
उक्तकारणशून्ये तु नारदः ।
“व्याधितः कुपितश्चैव
विषयासक्तचेतनः ।
अयथाशास्त्रकारी च न विभागे पिता
प्रभुः ॥”
निवृत्तरजस्कायाम्बा मातरि
पितामहधन-
विभागमाह बृहस्पतिः ।
“पित्रोरभावे भ्रातॄणां विभागः
संप्रदर्शितः ।
मातुर्निवृत्ते रजसि जीवतोरपि शस्यते
॥”
अन्यच्च । याज्ञवल्क्यः ।
“विभागश्चेत् पिता कुर्य्यादिच्छया
विभजेत्
सुतान् ।
ज्येष्ठं वा श्रेष्ठभागेन सर्व्वेवा स्युः
समांशिनः ॥”
अपि च देवलः ।
“अविभक्तविभक्तानां कुल्यानां वसतां
सह ।
भूयो दायविभागः स्यादाचतुर्थादिति
स्थितिः ॥”
विष्णुः । पितृविभक्ता
विभागानन्तरोत्पन्नस्य
विभागं दद्युरिति ।
“गोत्रभागविभागार्थे सन्देहे
समुपस्थिते ।
गोत्रजैश्चापरिज्ञाते कुलं
साक्षित्वमर्हति ॥”
इति शङ्खवचनम् ॥ इति दायतत्त्वम् ॥

५ । ७७ । ४ ।
“यो भूयिष्ठं नासत्याभ्यां विवेष च निष्ठं पित्त-
ररते विभागे ।”
“यो यजमानो विभागे हविर्व्विभागवति यागे ।”
इति तद्भाष्ये सायणः ॥”)

**विभाज्यं**, त्रि, विभजनीयम् । विभागार्हम् । यथा,

“कुले विनीतविद्यानां भ्रातॄणां पितृतोऽपि
वा ।
शौर्य्यप्राप्तन्तु यद्वित्तं विभाज्यं तद्बृहस्पतिः ॥
शिल्पेष्वपि हि धर्म्मोऽयं मूल्याद्यच्चाधिकं
भवेत् ।
परं निरस्य यल्लब्धं विद्यया द्यूतपूर्ब्बकम् ।
विद्याधनन्तु तद्विद्यान्न विभाज्यं बृहस्पतिः ॥”

रसोद्बोधे विभावाद्याः कारणान्येव ते
मताः ॥
सद्भावाश्च विभावादेर्द्वयोरेकस्य वा
भवेत् ।
झटित्यन्यसमाक्षेपे तदा दोषो न
विद्यते ॥
विभावादिपरामर्शविषयत्वात्
सचेतसाम् ।
परानन्दमयत्वेन संवेद्यत्वादपि
स्फुटम् ॥” * ॥
“अथ के ते
विभावानुभावव्यभिचारिणइत्य-
पेक्षायां विभावमाह ।
रत्याद्युद्बोधका लोके विभावाः काव्य-
नाट्ययोः ।
ये हि लोके रामादिगतरतिहासादीनां
उद्-
बोधकारणानि सीतादयस्त एव काव्ये
नाट्ये च
निवेशिताः सन्तो विभाव्यन्ते
आस्वादाङ्कुरप्रादु-
र्भावयोग्याः क्रियन्ते
सामाजिकरत्यादिभावा
एभिरिति विभावा उच्यन्ते ।
आलम्बनोद्दीपनाख्यौ तस्य भेदावुभौ
स्मृतौ ॥”
इति साहित्यदर्पणे ३ परिच्छेदे ।
(विविधप्रकारेण प्रकाशवति, त्रि ।
यथा,
ऋग्वेदे । १ । १४८ । १ ।
“न चित्रं वपुषे विभावम् ।”
“विभावं विविधप्रकाशवन्तम् ।” इति
तद्भाष्ये
सायणः ॥)

**विभावनं**, क्ली, (विभावयति कारणं विना

कार्य्योत्पत्तिं चिन्तयति पण्डित-
मिति । वि + भावि + ल्युः । युच् वा
।) अल-
ङ्कारविशेषः । स च विनाकारणं
उपनिबद्ध-
मानोऽपि कार्य्योदयरूपः । यथा, --

| | | |
|---|---|---|
| सामान्यधर्म्मावच्छिन्नानाम्म बहूनां परस्पर-<br>विरुद्धतद्व्याप्यधर्म्मप्रकारेण प्रतिपादनं हि वि-<br>भागः । इति श्राद्धविवेकटीकायां श्रीकृष्ण-<br>तर्कालङ्कारः ॥ * ॥ न्यायमते चतुर्व्विंशतिगुणान्त-<br>र्गतगुणविशेषः । स त्रिविधः । यथा, --<br>"शब्दाहेतुर्द्वितीयः स्यात् विभागोऽपि त्रिधा<br>भवेत् । | | **विभावना**, स्त्री, (विभावयति कारणं विना<br>कार्य्योत्पत्तिं चिन्तयति पण्डित-<br>मिति । वि + भावि + ल्युः । युच् वा ।) अल-<br>ङ्कारविशेषः । स च विनाकारणं उपनिबद्ध-<br>मानोऽपि कार्य्योदयरूपः । यथा, --<br>"विभावना विना हेतुं<br>कार्य्योत्पत्तिर्य्यदुच्यते । |

उक्तानुक्तनिमित्तत्वात् द्विधा सा परि-
कीर्त्तिता ॥”
उक्तहेतौ यथा, --
“अनायासकृशं मध्यमशङ्कतरले दृशौ ।
अभूषणमनोहारि वपुर्वयसि सुभ्रुवः ॥”
अनुक्तहेतौ यथा, --
“स एव त्रीणि जयति जगन्ति
कुसुमायुधः ।
हरतापि तनुं तस्य शम्भुना न हृतं
बलम् ॥”
इति साहित्यदर्पणे १० परिच्छेदे ॥
(पालनम् । यथा, भागवते । ४ । ८ ।
२० ।
“यस्याङ्घिपद्मं परिचर्य्यविश्व-
विभावनायात्तगुणाभिपत्तेः ॥”)

**विभावरी**, स्त्री, रात्रिः । इत्यमरः ॥ (यथा,
राजतरङ्गिण्याम् । ३ । २०७ ।
“प्रभातायां विभावर्य्यां
यथास्थानस्थितो नृपः ।
आकार्य्यतां मातृगुप्त इति
क्षत्तारमादिशत् ॥”
मन्दारविद्याधरकन्या । यथा,
मार्कण्डेये । ६३ ।
१४ ।
“मन्दारविद्याधरजा सखी मम
विभावरी ॥”
सुमेरूत्तरस्था पुरी । यथा, भागवते ।
७५ । २१ । ७ ।
“उत्तरतः सौम्यां विभावरीं नाम ॥”)
हरिद्रा । कुट्टनी । वक्रयोषित् ।
विवादवस्त्र-
मुण्डी । इति मेदिनी । रे, २९६ ॥
मौखर्य्य-
निरतस्त्री । इति शब्दरत्नावली ॥
मेदावृक्षः ।
इति रत्नमाला ॥

**विभावसुः**, पुं, (विभा प्रभा एव वसु समृद्धिर्यस्य
।)
र्म्मध्ये विधिर्नित्यः । इति मुग्धबोधव्याकरणम् ॥
(“नवेति विभाषा ॥” इति पाणिनिः । १ । १ ।
४४ ॥)

**विभिन्नः**, त्रि, (वि + भिद् + क्तः ।) विभक्तः ।
विदीर्णः । यथा, --
“गदापरशुखड्गैश्च चक्रतोमरशायकैः ।
विभिन्ने वेदना या हि क्षुधया सापि निर्ज्जिताः
॥”
इति इतिहाससमुच्चयः ॥
(विघट्टितः । यथा, शिशुपालवधे । १ । ५५ ।
“विभिन्नशङ्कः कलुषीभवन्मुहु-
र्म्मदेन दन्तीव मनुष्यधर्म्मणः ॥”)

**विभीतकः**, त्रि, वृक्षविशेषः । वहेडा इति भाषा ।
तत्पर्य्यायः । अक्षः २ तुषः ३ कर्षफलः ४ भूत-
वासः ५ कलिद्रुमः ६ । इत्यमरः ॥ कल्पवृक्षः
७
संवर्त्तः ८ । इति रत्नमाला ॥ तैलफलः ९
भूतावासः १० संवर्त्तकः ११ वासन्तः १२
कलिवृक्षः १३ वहेडुकः १४ हार्य्यः १५
विषघ्नः
१६ अनिलघ्नः १७ कासघ्नः १८ । (यथा,
महा-
भारते । ३ । ६४ । ५ ।
“पियालतालखर्ज्जूरहरीतकविभीतकैः ॥”)
अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । कषा-
यत्वम् । उष्णत्वम् । कफापहत्वम् । चक्षुष्यत्वम्
।
पलितघ्नत्वम् । विपाके मधुरत्वञ्च ॥ तन्मज्ज-
गुणाः । तृष्णाच्छर्द्दीकफवातहरत्वम् । लघु-
त्वम् । मधुरत्वम् । मदकारित्वञ्च ॥ तत्तैल-
गुणाः । स्वादुत्वम् । हिमत्वम् । केश्यत्वम् ।
गुरुत्वम् । पित्तानिलार्त्तिनाशित्वञ्च । इति
राजनिर्घण्टः ॥ * ॥ अपि च । अथ विभीतक-
नामानि गुणाश्च ।
“विभीतकस्त्रिलिङ्गः स्यादक्षः कर्षफलस्तु यः ।
कलिद्रुमो भूतवासस्तथा कलियुगालयः ॥
विभीतकं स्वादुपाकं कषायं कफपित्तनुत् ।
उष्णवीर्य्यं हिमस्पर्शं भेदनं काशनाशनम् ।
इत्येवमुक्तो देवेन ब्रह्मणा कलिरव्ययः ।
दीनान् दृष्ट्वा च शक्रादीन् विभीतकवनं
गतः ॥”
इति वामने १७ अध्यायः ॥
(अन्यच्च । यथा, महाभारते ३ । ७२
अध्याये ।
“एवमुक्त्वा ददौ विद्यामृतुपर्णो नलाय वै
।
तस्याक्षहृदयाज्ञस्य शरीरान्निःसृतः
कलिः ॥”
“तं शप्तुमैच्छत् कुपितो
निषधाधिपतिर्न्नलः ।
तमुवाच कलिर्भीतो वेपनानः कृताञ्जलिः
॥
कोपं संयच्छ नृपते कीर्त्तिं दास्यामि ते
पराम् ॥”
“एवमुक्तो नलो राजा नियच्छत्
कोपमात्मनः ।
ततो भीतः कलिः क्षिप्रं प्रविवेश विभी-
तकम् ॥”
“विभीतकश्चाप्रशस्तः संवृत्तः
कलिसंश्रयात् ॥”)

**विभीषणः**, पुं, (विभीषयतीति । वि + भीषि +
“नन्दिग्रहिपचीति ।” ३ । १ । १३४ ।
इति
ल्युः ।) रावणभ्राता । इति रामायणम् ॥
(यथा, भागवते । ४ । १ । ३४ ।
“रावणः कुम्भकर्णश्च तथाप्यस्यां
विभीषणः ।
पुलहस्य गतिर्भार्य्या त्रीनसूत सती
सुतान् ॥”)
नलतृणम् । इति राजनिर्घण्टः ॥
भयानके त्रि ॥
(यथा, ऋग्वेदे । ५ । ३४ । ६ ।
“इन्द्रो विश्वस्य दमिता विभीषणः ॥”
“विभीषणः भयजनकः ।” इति तद्भाष्ये
सायणः ॥)

**विभीषिका**, स्त्री, (विभीषा + स्वार्थे कन् । स्त्रियां

सूर्य्यः । (यथा, महाभारते । १ । ८६ । ७ ।
"वर्द्धनः कुरुवंशस्य विभावसुसमद्युतिः ॥")
अर्कवृक्षः । अग्निः । (यथा, महाभारते । ३ । ६८ । ७ ।
"निबद्धां धूमजालेन प्रभामिव विभावसोः ॥")
चित्रकवृक्षः । इत्यमरः ॥ चन्द्रः ॥ हारभेदः ।
इति हेमचन्द्रः ॥ (वसुपुत्त्रविशेषः । यथा,
भागवते । ६ । ६ । १०, १६ ।
"वसवोऽष्टौ वसोः पुत्त्रास्तेषां नामानि मे शृणु ।
द्रोणः प्राणो ध्रुवोऽर्कोऽग्निर्द्दोषो वास्तुर्व्विभा-
वसुः ।
विभावसोरसूतोषा व्युष्टं रोचिषमातपम् ॥"
मुरासुरपुत्त्रः । यथा, तत्रैव । १० । ५९ । १२ ।
"ताम्रोऽन्तरिक्षः श्रवणो विभावसुः
वसुर्नभस्वानरुणश्च सप्तमः ॥"
दनुपुत्त्रोऽसुरविशेषः । यथा, तत्रैव । ६ । ६ । ३० ।
"त्रिमूर्द्धा शम्बरोऽरिष्टो हयग्रीवो विभावसुः ॥")

**विभावितः**, त्रि, विचिन्तितः । विशेषेण उत्पा-
दितः । विशेषेण प्रापितः । विमिश्रयितः । इति
ण्यन्तभूधातोः क्तप्रत्ययेन निष्पन्नः ॥ (यथा,
शिशुपालवधे । १ । २ ।
"चयस्त्विषामित्यवधारितंपुरा
ततः शरीरीति विभाविताकृतिः ॥")

**विभाषा**, स्त्री, (विकल्पत्वेन भाष्यते इति ।
भाष् + "गुरोश्च हलः ।" ३ । ३ । १०३ । इत्यः ।

रूक्षं नेत्रहितं केश्यं कृमिवैस्वर्य्यनाशनम् ॥
विभीतमज्जा तृट्छर्द्दिकफवातहरो लघुः ।
कषायो मदकृच्चाथ धात्रीमज्जापि तद्गुणाः ॥"
इति भावप्रकाशः ॥ * ॥
अन्यच्च ।
"विभीतंभेदि तीक्ष्णोष्णं वैस्वर्य्यं क्रिमिनाशनम् ।
चक्षुष्यं स्वादुपाकञ्च कषायं कफपित्तनुत् ॥"
इति राजवल्लभः ॥ * ॥
अस्य कलिद्रुमत्वकारणं यथा, --
पुलस्त्य उवाच ।
"ततो गतेषु देवेषु ब्रह्मलोकं प्रति द्विज ।
त्रैलोक्यं पालयामास बलिर्धर्म्मान्वितः सदा ॥
कलिस्तदा धर्म्मयुतं जगद्दृष्ट्वा कृते यथा ।
ब्रह्माणं शरणं भेजे स्वभावस्य निषेधनात् ॥
प्रणिपत्य तमाहाथ तिष्यो ब्रह्माणमीश्वरम् ।
मम स्वभावो बलिना नाशितो देवसत्तम ॥
तं प्राह भगवान् योगी स्वभावो जगतोऽपि हि ।
न केवलं हि भवतो हृतस्तेन बलीयसा ॥
पश्याद्य तिष्य देवेन्द्रं वरुणञ्च समागतम् ।
भास्वरोऽपि हि दीनत्वं प्रयातो हि बलाद्बलेः ॥

टाप् अत इत्वञ्च ।) भयप्रदर्शनम् । यथा, --
"कृत्वा शस्त्रविभीषिकां कतिपयग्रामेषु दीनाः
प्रजाः
मथ्नन्तो विटजल्पितैरुपहताः क्षौणीभुजस्ते
ऽखिलाः ।
विद्वांसोऽपि वयं परं त्रिजगतां सर्गस्थिति-
व्यापदा-
मीशस्तत्परिचर्य्यया न गणितो यैरेष नारा-
यणः ॥"
इति शान्तिशतकम् ॥

**विभुः**, पुं, (वि + भू + "विप्रसंभ्यो ड्वसंज्ञायाम् ।"
३ । २ । १८० । इति डुः ।) प्रभुः । (यथा,
शिशुपालवधे ।
"विभुर्व्विभक्तावयवं पुमानिति
क्रमादमुं नारद इत्यबोधि सः ॥")
सर्व्वगतः । शङ्करः । (यथा, महाभारते । १३ ।
१७ । १६ ।
"त्रिजटश्चिरवासाश्च रुद्रः सेनापतिर्व्विभुः ॥")
ब्रह्मा । इति मेदिनी । भे, ७ ॥ भृत्यः । इति
त्रिकाण्डशेषः ॥ विष्णुः । इति शब्दमाला ॥
(यथा, महाभारते । १३ । १४९ । १०७ ।
"विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग्विभुः ॥"
जीवात्मा । यथा, --
"न शक्यश्चक्षुषा द्रष्टुं देहे सूक्ष्मतमो विभुः ।
दृश्यते क्षानचक्षुर्भिस्तपश्चक्षुर्भिरेव च ॥"

**विभुः**, त्रि, सर्व्वमूर्त्तसंयोगी । परममहत्त्ववान् ।
स तु आत्मादिः । यथा, --
“आत्मेन्द्रियाद्यधिष्ठाता करणं हि
सकर्त्तृकम् ।
विभुर्बुद्ध्यादिगुणवान् बुद्धिस्तु द्विविधा
मता ॥”
इति भाषापरिच्छेदः ॥
विभुरिति विभुत्वं परममहत्त्ववत्त्वम् ।
इति
सिद्धान्तमुक्तावली ॥
“कालखात्मदिशां सर्व्वगतत्वं परमं
महत् ।”
इति भाषापरिच्छेदः ॥
दृढः । इत्यजयपालः ॥ व्यापकः । इति
हेम-
चन्द्रः ॥ (यथा, ऋग्वेदे । १० । ४० ।
१ ।
“प्रातर्यावाणं विभ्वं विशे विशे ॥”
“विभ्वं विभुं व्यापिनम् ।” इति तद्भाष्ये
सायणः ॥
व्याप्तः । यथा, ऋग्वेदे । १ । ३४ । १ ।
“त्रिश्चिन्नो अद्याभवतं न वेद सा
विभुर्व्वायाम उत राति रश्विना ॥”
“विभुः व्याप्तः ।” इति तद्भाष्ये सायणः
॥
सर्व्वत्र गमनशीलः । यथा, ऋग्वेदे । १
। १६५ । १० ।
“एकस्य चिन्मे विभ्वस्त्वोजो
या नु दधृष्वान्कृणवै मनीषा ॥”
“विभु सर्व्वत्र गमनशीलम् ।” इति
तद्भाष्ये
सायणः ॥ ईश्वरः । यथा, ऋग्वेदे । ४
। ७ । १ ।
“यमप्नवानो भृगवो विरुरुचुर्व्वनेषु चित्रं
विभ्वं
विशे विशे ॥”
“विभ्वं विभुं ईश्वरम् ।” इति तद्भाष्ये
सायणः ॥
महान् । यथा, ऋग्वेदे । ५ । ३८ । १ ।
ग्रहादित्वाण्णिन् तस्य भावः कामावशायिता
।
सर्व्वानन्दस्तु अनेकार्थत्वाद्धातूनां
स्मृतिरिह
तिष्ठत्यर्थः । अवशायी दन्तमध्य इत्याह ।
इति
भरतः ॥ * ॥ अपि च ।
श्रीभगवानुवाच ।
“परात्परतरं तत्त्वं परं ब्रह्मैकमव्ययम् ।
नित्यानन्दं स्वयं ज्योतिरद्वयं तमसः परम् ।
ऐश्वर्य्यं तस्य यन्नित्यं विभूतिरिति गीयते
॥”
इति कौर्म्मे १ अध्यायः ॥
(लक्ष्मीः । यथा, ऋग्वेदे । १ । ३० । ५ ।
“विभूतिरस्तु सूनृता ।”
“विभूतिर्लक्ष्मीः ।” इति तद्भाष्ये सायणः ॥
विभवहेतुः । यथा, तत्रैव । ६ । २१ । १ ।
“रयिर्व्विभूतिरीयते वचस्या ॥”
“विभूतिर्ज्जगतो विभवहेतुः ॥” इति
तद्भाष्ये
सायणः ॥ विविधसृष्टिः । यथा, भागवते ।
४ ।
२४ । ४३ ।
“शक्तित्रयसमेताय मीढुषेऽहंकृतात्मने ।
चेत आकूतिरूपाय नमो वाचोविभूतये ॥”
सम्पत् । यथा, रघुवंशे । ८ । ३६ ।
“अभिभूय विभूतिमार्त्तवीं
मधुगन्धातिशयेन वीरुधाम् ॥”)

**विभूतिद्वादशी**, स्त्री, (विभूतिवर्द्धिका द्वादशी ।)
व्रतविशेषः । यथा, --
नन्दिकेश्वर उवाच ।
“शृणु नारद ! वक्ष्यामि विष्णोर्व्रतमनुत्तमम् ।
विभूतिद्वादशीनाम सर्व्वपापनिसूदनम् ॥
कार्त्तिके चैव वैशाखे मार्गशीर्षेऽथ फाल्गुने ।
आषाढे वा दशम्यान्तु शुक्लायां
लघुभुङ्नरः ।
कृत्वा सायन्तनीं सन्ध्यां गृह्णीयान्नियमं
बुधः ॥
दशावताररूपाणि प्रतिमासं क्रमान्मुने ।
दत्तात्रेयं ततो व्यासमुत्पलेन समन्वितम् ।
दद्यादेवं समा यावत् पाषण्डानभिवर्ज्जयेत्
॥
समाप्यैवं यथाशक्त्या द्वादशद्वादशीं नरः ।
संवत्सरान्ते लवणपर्व्वतेन समन्विताम् ।
शय्यां दद्यान्मुनिश्रेष्ठ गुरवेऽमरसंयुताम् ॥
ग्रामञ्च शक्तिमान् दद्यात् क्षेत्रमाभरणान्वितम्
।
गुरुं संपूज्य विधिवत् वस्त्रालङ्कारभूषणैः ॥
अन्यानपि यथाशक्त्या भोजयित्वा
द्विजोत्तमान् ।
तर्पयेद्वस्त्रगोदानैरन्यत्र धनसञ्चयात् ॥
अल्पवित्तो यथाशक्त्या स्तोकं स्तोकं
समाचरेत् ।
यश्चातिनिस्वः पुरुषो भक्तिमान् माधवं प्रति
।
पुष्पार्च्चनविधानेन स कुर्य्याद्वत्सरद्वयम् ॥
अनेन विधिना यस्तु विभूतिद्वादशीव्रतम् ।
कुर्य्यात् स पापनिर्म्मुक्तः
पितॄणान्तारयेच्छतम् ॥
जन्मनां शतसाहसं न शोकफलभाग्भवेत् ।
न च व्याधिर्भवेत्तस्य न दारिद्र्यं न बन्धनम्
॥
वैष्णवो वाथ शैवो वा भवेज्जन्मनि जन्मनि
।
यावद्युगसहस्राणां शतमष्टोत्तरं भवेत् ।
तावत् स्वर्गे वसेद्ब्रह्मन् भूपतिश्च पुनर्भवेत्
॥”
इति मात्स्ये ८२ अध्यायः ॥

**विभूषणं**, क्ली, (विशेषेण भूषयत्यनेनेति । वि +
भूष + णिच् + ल्युट् ।) आभरणम् ।
इत्यमरः ॥
(यथा, कथासरित्सागरे । १७ । ६४ ।
“अस्ति पाटलिपुत्राख्यं पुरं पृथ्वीविभूषणम्
॥”)

**विभूषा**, स्त्री, (वि + भूष् भूषणे + “गुरोश्च हलः ।”

"उरोष्ट इन्द्र राधसो विभ्वी राति शतक्रतो ॥"
"विभ्वी महती ।" इति तद्भाष्ये सायणः ॥)

**विभूतिः**, स्त्री, (वि + भू + क्तिन् ।) अणिमादि-
कमष्टधा । तत्पर्य्यायः । भूतिः २ ऐश्वर्य्यम् ३ ।
इत्यमरः ॥ (यथा, ऋग्वेदे । १ । ८ । ९ ।
"एवाहिते विभूतय इन्द्रमावते ॥"
"विभूतयः ऐश्वर्य्यविशेषाः ।" इति तद्भाष्ये
सायणः ॥) शिवधृतभस्म । अस्य शिवस्य
अणिमाद्यष्टप्रकारं वैभवं
विभूत्यादिपदत्रयं वाच्यं
केचित्तु विभूतिर्भूतिरिति द्वयं शम्भुधृतभस्मनि
अणिमाद्यष्टके तु ऐश्वर्य्यमित्याहुः । विभवत्यनया
विभूतिः क्तिः भवतेः क्तिः भूतिः विग्रहणमन्यो-
पसर्गनिरासार्थं ईश्वरगुणैश्वर्य्यं भावे ष्यः
अणिमादि लघिमादि । तथा च ।
"अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा
तथा ।
ईशित्वञ्च वशित्वञ्च तथा कामावशायिता ॥"
इति ॥
अणुत्वमणिमा येन सूक्ष्मो भूत्वा विचरति ।
लघुत्वं लघिमा येन वायुरिव लघुतरो भवति ।
प्राप्तिरभीप्सितप्रापणं
प्राकाम्यमिच्छानभिघातः ।
महिमा महत्त्वं येन
चतुर्द्दशभुवनान्यस्योदरे
वर्त्तन्ते । ईशित्वं प्रभुता येन
स्थावरजङ्गमादि-

एकादश्यां निराहारः समभ्यर्च्च्य जनार्द्दनम् ।
द्वादश्यां विधिसंयुक्तः करिष्ये भोजनं विभो ।
तदविघ्नेन मे यातु साफल्यं मधुसूदन ॥
ततः प्रभाते चोत्थाय कृतस्नानजपः शुचिः ।
पूजयेत् पुण्डरीकाक्षं शुक्लमाल्यानुलेपनैः ॥
विभूतिदाय नमः पादावशोकाय च जानुनी ।
नमः शिवायेत्यूरू च विश्वमूर्त्तये नमः कटिम् ॥
कन्दर्पाय नमो मेढ्रमादित्याय नमः करौ ॥
दामोदरायेत्युदरं वासुदेवाय च स्तनौ ।
माधवायेति हृदयं कण्ठमुत्कण्ठिते नमः ॥
श्रीधराय मुखं केशान् केशवायेति नारद ।
पृष्ठं शार्ङ्गधरायेति श्रवणौ च स्वयम्भुवे ॥
स्वनाम्ना शङ्खचक्रासिगदापरशुपाणयः ।
सर्व्वात्मने शिरो ब्रह्मन् नम इत्यभिपूजयेत् ॥
मत्स्यमुत्पलसंयुक्तं हैमं कृत्वा तु शक्तितः ।
उदकुम्भसमायुक्तमग्रतः स्थापयेद्विभोः ॥
गुडपात्रं तिलैर्युक्तं सितवस्त्राभिवेष्टितम् ।
रात्रौ जागरणं कुर्य्यादितिहासकथादिना ॥
प्रभातायाञ्च शर्व्वर्य्यां ब्राह्मणाय कुटुम्बिने ।
सकाञ्चनोत्पलं देवं सोदकुम्भं निवेदयेत् ॥
यथा न मुच्यसे विष्णोः सदा सर्व्वविभूतिभिः ।
तथा मामुद्धराशेषदुःखसंसारसागरात् ॥

३ । ३ । १०३ । इत्यः । स्त्रियां टाप् ।)
शोभा ।
इति हेमचन्द्रः ॥ (यथा, कामन्दकीये । १५ । ४६ ।
"ततः प्रबुद्धः शुचिरिष्टदेवः
श्रीमद्विभूषोज्वलितः प्रहृष्टः ॥")
आभरणञ्च ॥ (यथा, आर्य्यासप्तशत्याम् । ४५९ ।
"मानग्रहगुरुकोपादनुदयितात्येम्न रोचते मह्यम् ।
काञ्चनमयी विभूषा दाहाञ्चितशुद्धभावेव ॥")

**विभूषितः**, त्रि, (वि + भूष + क्तः । यद्वा, विभूषा
संजातास्य इति । विभूषा + इतच् ।) अल-
ङ्कृतः । यथा, --
"विशुद्धरत्नांशुविभूषिताङ्गी
शिलातले हेममये सुरम्ये ।
सुखोपविष्टं मदनाङ्गनाशनं
जगाद वाक्यं गिरिराजपुत्त्री ॥"
इति स्कान्दे नीलकण्ठस्तोत्रम् ॥

**विभृतः**, त्रि, धृतः । पुष्टः । विपूर्व्वभृधातोः क्तप्र-
त्ययेन निष्पन्नः ॥

**वि(बि)भ्रत्**, त्रि, (भृ + शतृ ।) बिभर्त्ति यः ।
धारणपोषणकर्त्ता । यथा, --
"चतुर्द्दशं नारसिंहं बिभ्रद्दैत्येन्द्रमूर्ज्जितम् ।
ददार करजैरूरावेरकां कटकृद्यथा ॥"
इति श्रीभागवते १ स्कन्धे ३ अध्यायः ॥
अपि च ।
"तरुणशकलमिन्दोर्बिभ्रती शुभ्रकान्तिः ।"
इत्यादि तन्त्रसारे सरस्वतीध्यानम् ॥
(पवर्गीयबकारादिः साधुरेव ॥)

| भूतान्यादेशकारीणि भवन्ति । वशित्वं स्वातन्त्र्यं<br>येन स्वतन्त्रश्चरति । कामेन इच्छया अवशा-<br>यितुं स्थातुं शीलमस्य कामावशायी शीङो | | |
|---|---|---|

**विभ्रमः**, पुं, (वि + भ्रम + घञ् ।) हावभेदः । स

तु स्त्रीणां शृङ्गारभावजक्रियाविशेषः । इत्य-
मरः ॥ (यथा, मेघदूते । २९ ।
“स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु
॥”)
मदरागहर्षजनितविपर्य्यासो विभ्रमः । यथा
अन्यनिमित्तमानसाकुथायान्यत्र गमनं प्रिया-
रब्धकथामाक्षिप्य सख्या
सहालपनमुच्चैर्हसित-
क्रोधौ पुष्पादीनां याच्ञा सहसैव तत्परि-
त्यागः । वस्त्राभरणमाल्यानामकारणतः
खण्डनं
माननञ्च । यदुक्तम् ।
“क्रोधः स्मितञ्च कुसुमाभरणादियाच्ञा
तद्वर्ज्जनञ्च सहसैव विमण्डनञ्च ।
आक्षिप्य कान्तवचनं लपनं सखीभि-
र्निष्कारणोत्थितगतं वद विभ्रमं तत् ॥” इति
।
“चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमो भवेत् ॥”
इत्यन्यत्र च ॥ तथान्यत्र ।
“विभ्रमस्त्वरया काले भूषास्थानविपर्य्ययः ।”
यथा, --
“श्रुत्वायातं बहिः कान्तमसमापितभूषया।
भालेऽञ्जनं दृशोर्लाक्षा कपोले तिलकः कृतः
॥”
इति ।
योषितां यौवनजो विकारो विभ्रमः । इत्येके ।
विभ्रान्तिर्विभ्रमः घञ् । इति भरतः ॥ अपि च
।
“वल्लभप्राप्तिवेलायां मदनावेशसंभ्रमात् ।
विभ्रमो हारमाल्यादिभूषास्थानविपर्य्ययः ॥”
इत्युज्ज्वलनीलमणिः ॥ * ॥
भ्रान्तिः । इति मेदिनी । मे, ५२ ॥ (यथा,
भागवते । ४ । २१ । १२ ।
“तमत्रिर्भगवानैक्षत् त्वरमाणं विहायसा ।
आमुक्तमिव पाषण्डं योऽधर्म्मे धर्म्मविभ्रमः
॥”)
शोभा । (यथा, राजतरङ्गिण्याम् । ३ । ३६७
।
दृश्यते ।” ३ । २ । १७७ । इति क्विप् ।)
अलङ्का-
रादिना दीप्तिशीलः । तत्पर्य्यायः । भ्राजिष्णुः
२ रोचिष्णुः ३ । इत्यमरः ॥ (यथा, ऋग्वेदे ।
१० । १७० । १ ।
दृश्यते ।” ३ । २ । १७७ । इति क्विप् ।)
अलङ्का-
रादिना दीप्तिशीलः । तत्पर्य्यायः । भ्राजिष्णुः
२ रोचिष्णुः ३ । इत्यमरः ॥ (यथा, ऋग्वेदे ।
१० । १७० । १ ।
“विभ्राड् बृहत्पिबतु सोम्यं
मध्वायुर्द्दधद्यज्ञपतावविह्रुतम् ॥”
“विभ्राड् विभ्राजमानः विशेषेण दीप्यमानः ।”
इति तद्भाष्ये सायणः ॥)

**विभ्रान्तः**, त्रि, विभ्रमयुक्तः । विपूर्व्वभ्रमधातोः

क्तप्रत्ययेन निष्पन्नः ॥ (यथा, गीतायाम् ।
१६ । १६ ।
“अनेकचित्तविभ्रान्ता मोहजालसमावृताः ॥”)

**विभ्रान्तिः**, स्त्री, (वि + भ्रम + क्तिन् ।) विभ्रमः ।

इति विभ्रमशब्दटीकायां भरतः ॥ (यथा,
प्रबोधचन्द्रोदये ।
“स्फुरदद्वैतविभ्रान्तिसन्तान-
सन्तप्तवन्दारुसंसारनिद्रापहाकैकदक्षेति ॥”)

**विमतः**, त्रि, विरुद्धमतिविशिष्टः । विपूर्ब्बमन-

धातोः क्तप्रत्ययेन निष्पन्नः ॥

**विमनस्कः**, त्रि, विमनाः । विनिगृहीतं मनोऽस्येति

बहुव्रीह्यर्थे कप्रत्ययेन निष्पन्नः ॥ (यथा, भाग-
वते । ७ । १० । ६१ ।
“विलोक्य भग्नसङ्कल्पं विमनस्कं वृषध्वजम्
॥”)

**विमनाः**, [स्] त्रि, (विरुद्धं मनो यस्य ।) चिन्ता-

दिव्याकुलचित्तः । तत्पर्य्यायः । दुर्म्मनाः २
अन्त-
र्मनाः ३ । इत्यमरः ॥ दुःखितमानसः ४ ॥
इति शब्दरत्नावली ॥ (यथा, देवीभागवते ।
१ । १९ । १० ।
मरः ॥ विमर्द्दः ३ । इति
शब्दरत्नावली ॥
विशेषेण मर्द्दनञ्च ॥ (यथा,
महाभारते । ३ ।
३६ । ३ ।
“धर्म्मस्य जानमानोऽहं गतिमग्र्यां
सुदुर्व्विदाम् ।
कथं बलात्करिष्यामि मेरोरिव
विमर्द्दनम् ॥”
त्रि, विशेषेण मृद्नातीति । वि + मृद्
+ ल्युः ।
मर्द्दनकारी । पीडादायकः । यथा,
कथासरि-
त्सागरे । ११३ । १९ ।
“अभूच्च वारणस्तस्य
परसेनाविमर्द्दनः ।
महान् कुवलयापीड इति ख्यातो
महीतले ॥”
यथा च साहित्यदर्पणे । ४ । २६६
।
“अयं स रसनोत्कर्षी
पीनस्तनविमर्द्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः
करः ॥”)

**विमर्द्दोत्थः**, पुं, (विमर्द्दादुत्तिष्ठतीति । उत् +
स्था

+ कः ।) मर्द्दनाज्जातसुगन्धादिः ।
यथा, --
“अथ गन्धे परिमलो विमर्द्दोत्थे
मनोहरे ।
दूरगामी मनोहारी गन्ध आमोद
ईरितः ॥”
इति शब्दरत्नावली ॥

**विमर्शनं**, क्ली, (वि + मृश + ल्युट् ।)
परामर्शः ।

वितर्कः । यथा, --
“वितर्कः स्यादुन्नयनं परामर्शो
विमर्शनम् ।

"ललाटे शूलमुद्राङ्के जराशुक्लाः शिरोरुहाः ।
तस्य शम्भुभ्रमासङ्गिगङ्गाम्भोविभ्रमंदधुः ॥"
यथा च अमरुशतके । १ ।
"ज्याकृष्टिबद्धखटकामुखपाणिपृष्ठे
प्रेङ्खन्नखांशुचयसंवलितोऽम्बिकायाः ।
त्वां पातुमञ्जरितपल्लवकर्णपूर-
लोभभ्रमद्भ्रमरविभ्रमभृत्कटाक्षः॥")
संशयः । इति हेमचन्द्रः ॥ (यथा, कथा-
सरित्सागरे । १९ । ६५ ।
"पूरयन् बहुनादाभिर्व्वाहिनीभिर्भुवस्तलम् ।
कुर्व्वन्नकाण्डनिर्म्मेघवर्षासमयविभ्रमम् ॥")
भ्रमणम् । इति शब्दरत्नावली ॥ (विकार-
विशेषः । यथा, --
"तीव्रार्त्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम् ।
आमसन्नोऽनलो नालं पक्तुं दोषौषधाशनम् ॥
निहन्यादपि चैतेषां विभ्रमः सहसातुरम् ।
जीर्णाशने तु भैषज्यं युञ्ज्यात् स्तब्धगुरूदरे
॥"
इति वाभटे सूत्रस्थानेऽष्टमेऽध्याये ॥)

**विभ्रमा**, स्त्री, वार्द्धक्यम् । इति शब्दरत्नावली ॥

**विभ्राट्**, [ज्] त्रि, (विशेषेण भ्राजते इति ।
वि + भ्राज् + "अन्येभ्योऽपि

**विभ्राड्**, [ज्] त्रि, (विशेषेण भ्राजते इति ।
वि + भ्राज् + "अन्येभ्योऽपि

"मिष्टमत्सि सदा राजन् मुदितो विमनास्तथा
।
मालायाञ्च तथा सर्पे समदृक् क्व नृपोत्तम !
॥")

**विमयः**, पुं, (वि + मी + "एरच् ।" इत्यच् ।)
विनिमयः । इति हेमचन्द्रः ॥

**विमर्द्दः**, पुं, (विमृद्यतेऽसौ इति । वि + मृद् +
घञ् ।) कालङ्कतवृक्षः । इति रत्नमाला ॥
कालकासुन्दिया इति भाषा ॥ विमर्द्दनम् ।
इति
शब्दरत्नावली ॥ (यथा, रघुः । ५ । ६५ ।
"तं कर्णभूषणनिपीडितपीवरांसं
शय्योत्तरच्छदविमर्द्दकृशाङ्गरागम् ॥"
सम्पर्कः । यथा, रघुः । १३ । २० ।
"असौ महेन्द्रद्विपदानगन्धि-
स्त्रिमार्गगावीचिविमर्द्दशीतः ॥"
"त्रिमार्गगा गङ्गा तस्या वीचीनां विमर्द्देन
सम्पर्केण शीतः ।" इति तट्टीकायां मल्लि-
नाथः ॥ * ॥ युद्धम् । यथा, रामायणे । ३ ।
३२ । ७ ।
"देवासुरविमर्द्देषु वज्राशनिकृतव्रणम् ॥"
कलहः । यथा, तत्रैव । ७ । ६३ । २४ ।
"कार्य्यार्थिनां विमर्द्दो हि राज्ञां दोषाय
कल्पते ॥")

**विमर्द्दकः**, पुं, (विमर्द्द एव । स्वार्थे कन् ।) चक्र-
मर्द्दः । इति राजनिर्घण्टः ॥ (चक्रमर्द्दशब्दे-
ऽस्य गुणादयो विज्ञेयाः ॥)

**विमर्द्दनं**, क्ली, (वि + मृद् + ल्युट् ।) कुङ्कुमादि-
मर्द्दनम् । तत्पर्य्यायः । परिमलः २ । इत्य-

अध्याहारस्तर्क
ऊहोऽसूयान्यगुणक्षणम् ॥"
इति हेमचन्द्रः ॥
(विमृश्यतेऽनेनेति । करणे ल्युट् ।
ज्ञानम् ।
यथा, भागवते । ६ । १ । ११ ।
"कर्म्मणा कर्म्मनिर्हारो न
ह्यात्यन्तिक इष्यते ।
अविद्वदधिकारित्वात् प्रायश्चित्तं
विमर्शनम् ॥")

**विम(र्श)र्षः**, पुं, (वि + मृ(श)ष + घञ् ।) विचा-
रणा । इति जटाधरः ॥ (यथा,
कथासरित्-
सागरे । २० । १२४ ।
"प्रत्ययः स्त्रीषु मुष्णाति विम(र्शं)र्षं
विदुषा-
मपि ॥")

**विमलं**, क्ली, (विगतो मलो यस्मात् ।) तारहेम-
द्विधाकृतम् । तत्तूपरसविशेषः ।
तत्पर्य्यायः ।
निर्म्मलम् २ स्वच्छम् ३ अमलम् ४
स्वच्छधातु-
कम् ५ । अस्य गुणाः । कटुत्वम् ।
तिक्तत्वम् ।
त्वग्दोषव्रणनाशित्वम् । रसवीर्य्यादौ
तुल्य-
त्वम् । वेधे भिन्नवीर्य्यकत्वञ्च । इति
राज-
निर्घण्टः ॥ (तथास्य
शोधनमारणविधिः ।
"मूत्रारनालतैलेषु गोदुग्धे कदली
रसे ।
कौलत्थे कोद्रवक्वाथे माक्षिकं
विमलन्तथा ॥
मुहुः शूरणकन्दस्थं
स्वेदयेद्वरवर्णिनि ! ।
क्षाराम्ललवणैश्चैव
तैलसर्पिःसमन्वितम् ॥

| | | पुटत्रयं प्रदातव्यं ततस्तु शोधितं भवेत् ।<br>जम्बीरस्य रसे स्विन्नो मेषशृङ्गीरसैस्तथा ।<br>रम्भातोयेन वा पाच्यं घस्रं विमलशुद्धये ॥”<br>इति विमलशुद्धिः ॥ इति वैद्यकरसेन्द्रसार-संग्रहे जारणमारणाधिकारे ॥)<br><br>**विमलं**, त्रि, (विगतो मलो यस्मात् ।) निर्म्मलम् ।<br><br>तत्पर्य्यायः । वीध्रम् २ । इत्यमरः ॥ प्रयतम् ३ ।<br>इति शब्दरत्नावली ॥ (यथा, रामायणे । २ ।४८ । १४ ।<br>“प्रस्रविष्यन्ति तोयानि विमलानि महीधराः ।<br>विदर्शयन्तो विविधान् भूयश्चित्रांश्च निर्झरान् ॥”)<br>चारुः । इति च शब्दरत्नावली ॥<br><br>(यथा, माघे ।९ । १३ ।<br><br>“रुचिधाम्नि भत्तरि भृशं विमलाः परलोकमभ्युपगते विविशुः ॥”) |
|---|---|---|

**विमलः**, पुं, (विगतो मलः पापं यस्मात् ।) अर्हन् ।

इति हेमचन्द्रः ॥ (सुद्युम्नपुत्त्रः । यथा, भाग-
वते । ९ । १ । ४१ ।
“तस्योत्कलो गयो राजन् विमलश्च त्रयःसुताः
॥”)

**विमलदानं**, क्ली, (विमलं विशुद्धं दानम् ।) नित्य-

नैमित्तिककाम्यदानम् । ईश्वरप्रीणनार्थदानञ्च
।
यथा, --
“नित्यं नैमित्तिकं काम्यं विमलं दानमीरितम् ।
अहन्यहनि यत्किञ्चिद्दीयतेऽनुपकारिणे ।
अनुद्दिश्य फलं तत् स्यात् ब्राह्मणाय तु नित्य-
कम् ॥
यत्तु पापापशान्त्यै च दीयते विदुषां करे ।
नैमित्तिकं तदुद्दिष्टं दानं सद्भिरनुष्ठितम् ॥
अपत्यविजयैश्वर्य्यस्वर्गार्थं यत् प्रदीयते ।
दानं तत् काम्यमाख्यातमृषिभिर्द्धर्म्मचिन्तकः
॥
चेतसा सत्त्वयुक्तेन दानं तद्विमलं स्मृतम् ॥”
इति गारुडे ५१ अध्यायः ॥

**विमलमणिः**, पुं, (विमलः स्वच्छो मणिः ।)

स्फटिकः । इति राजनिर्घण्टः ॥

**विमला**, स्त्री, (विमल + टाप् ।) सप्तला ।

इत्यमरः ॥ चामरकषा इति भाषा ॥ (अस्याः
पर्य्यायो यथा, --
“शातला सप्तला सारा विमला विदुला च सा ।
तथा निगदिता भूरिफेना चर्म्मकषेत्यपि ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
भूमिभेदः । इति मेदिनी । ले, १३१ ॥ देवी-
भेदः । यथा, --
“यूथाख्यविमला कार्य्या शुद्धहारेन्दुवर्च्चसा ।
मुक्ताक्षसूत्रधारी च कमण्डलुकरा वरा ॥
नावासनसमारुढा श्वेतमाल्याम्बरप्रिया ।
दधिक्षीरोदनाहारा कर्पूरमदचर्च्चिता ।
सितपङ्कजहोमेन राष्ट्रायुर्नृपवर्द्धिनी ॥”
इति देवीपुराणे संवत्सरदेवताद्वितीयविंश-
तिकाविधिः ॥ * ॥ अन्यच्च ।

**विमलाद्रिः**, पुं, (विमलः अद्रिः ।) शत्रुञ्जय-

पर्व्वतः । इति हेमचन्द्रः ॥

**विमलार्थकः**, त्रि, निर्म्मलः । इत्यमरटीकायां

रायमुकुटः ॥

**विमांसं**, क्ली, (विरुद्धं मांसम् ।) अशुद्धमांसम्
।

तत्तु कुक्कुरादिमांसम् । इति केचित्
॥

**विमाता**, [ऋ] स्त्री, (विरुद्धा माता ।) मातृ-

सपत्नी । सत्मा इति भाषा । सा
कनीयस्यपि
नमस्या । यथा, स्मृतिः ।
“मातुः पितुः कनीयांसं न नमेद्
वयसाधिकः ।
नमस्कुर्य्यात् गुरोः पत्नीं भ्रातृजायां
विमा-
तरम ॥”
स्मृत्यर्थसारे ।
“स्त्रियो नमस्या वृद्धाश्च वयसा
पत्युरेव ताः ॥”
यतः पत्युर्व्वयसा तास्त्रियो वृद्धा अतः
कनिष्ठा
अपि नमस्याः । इति मलमासतत्त्वत्
॥ * ॥
विमातृरजोनिवृत्तावपि
पितामहधनविभाग-
कर्त्तव्यत्वम् । यथा बृहस्पतिः ।
“पित्रोरभावे भ्रातॄणां विभागः
संप्रदर्शितः ।
मातुर्निवृत्ते रजसि जीवतोरपि शस्यते
॥”
अत्र मातृपदं विमातृपरमपि
पुत्रान्तरोत्पत्ति-
सम्भावनातौल्यात् । इति दायतत्त्वम्
॥ * ॥
अस्या अनंशित्वं यथा ।
सोदरभ्रातृभिर्व्विभागे

यज्ञादिकर्म्मसाधनम् ।” इति तद्भाष्ये
सायणः ॥
विगतो मानो यस्येति विग्रहे । अवज्ञातः ।
यथा, भागवते । ५ । १३ । १० ।
“कर्हिस्मचित् क्षुद्ररसान् विचिन्वं-
स्तन्मक्षिकाभिर्व्यथितो विमानः ।
तत्राति कृच्छ्रं प्रति लब्धमानो
बलाद्विलुम्पन्त्यथ तांस्ततोऽन्ये ॥”)

**विमार्गः**, पुं, विपूर्ब्बमृजधातोर्घञ्प्रत्ययेन निष्पन्नः ॥

सम्मार्ज्जनी । (विरुद्धो मार्गः ।) कुपथः ।
(यथा, शाकुन्तले ५ अङ्के ।
“नियमयसि विमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय ॥”)

**विमुक्तः**, त्रि, (वि + मुच् + क्तः ।) विशेषेण मुक्तः ।

यथा, --
“येऽन्येऽरविन्दाक्ष विमुक्तमानिन-
स्त्वय्यस्तभावादविशुद्धबुद्धयः।
आरुह्य क्रच्छ्रेण परं पदं ततः
पतन्त्यधो नादृतयुष्मदङ्घ्रयः ॥”
इति श्रीभागवते १० स्कन्धे १४ अध्यायः
॥
त्यक्तः । (यथा, महाभारते । ७ । २८ ।
३५ ।
“विमुक्तं परमास्त्रेण जहि पार्थ महासुरम् ।
वैरिणं युधि दुर्द्धर्षं भगदत्तं सुरद्विषम् ॥”
पुं, माधवी । तत्पर्य्यायो यथा, --
“माधवी स्यात्तु वासन्ती पुण्ड्रको
मण्डकोऽपि च ।
अतिमुक्तो विमुक्तश्च कामुको भ्रमरोत्सवः
॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमभागे
॥)

**विमुक्तिः**, स्त्री, (वि + मुच् + क्तिन् ।) विमोचनम् ।

मोक्षः । यथा, प्रायश्चित्ततत्त्वे ।
“पितॄन्नमस्ये दिवि ये च मूर्त्ताः
स्वधाभुजः काम्यफलाभिसन्धौ।
प्रदानशक्ताः सकलेप्सितानां

"पूजयेत् कर्णिकामध्ये वासुदेवन्तु नायकम् ।
विमला नायिका तस्य वासुदेवस्य कीर्त्तिता
॥"
इति कालिकापुराणे ८२ अध्यायः ॥ * ॥
अपरञ्च ।
"उत्कले नाभिदेशञ्च विरजाक्षेत्र उच्यते ।
विमला सा महादेवी जगन्नाथस्तु भैरवः ॥"
इति तन्त्रचूडामणौ ५१ पीठनिर्णयः ॥
(यथा च देवीभागवते । ७ । ३० । ६४ ।
"गयायां मङ्गला प्रोक्ता विमला पुरुषोत्तमे ॥")

**विमलात्मकः**, त्रि, (विमलो निर्म्मल आत्मा यस्य ।)

निर्म्मलः । इत्यमरटीकायां रायमुकुटः ॥

क्रियमाणे मात्रे पुत्त्रसमांशो दातव्यः ।
समांश-
हारिणी माता इति वचनात्मातृपदस्य
जननी-
परत्वात् न सपत्नीमातृपरत्वमपि ।
सकृच्छ्रुतस्य
मुख्यगौणत्वानुपपत्तेः । इति
दायभागः ॥

**विमातृजः**, पुं, (विमातुर्जायते इति । विमातृ +

जन + डः ।) मातृसपत्नीपुत्त्रः ।
तत्पर्य्यायः ।
वैमात्रेयः २ । इत्यमरः ॥ वैमात्रः ३ ।
इति
जटाधरः ॥

**विमानः**, पुं क्ली, (विगतं मानमुपमा यस्य ।)

देवरथः । तत्पर्य्यायः । व्योमयानम् २
। इत्य-
मरः ॥ (यथा, कुमारसम्भवे । २ ।
४५ ।
"भुवनालोकनप्रीतिः
स्वर्गिभिर्नानुभूयते ।
खिलीभूते विमानानां तदापातभयात्
पथि ॥")
सार्व्वभौमगृहम् । (तत्तु सप्तभूमिगृहम्
। यथा,
रामायणे । १ । ५ । १६ ।
"सर्व्वरत्नसमाकीर्णां
विमानगृहशोभिताम् ॥"
"विमानोऽस्त्री देवयाने सप्तभूमौ च
सद्मनि ॥"
इति तट्टीकाधृतनिघण्टुः ॥)
घोटकः । यानमात्रम् । इति मेदिनी ।
ने,
१३२ ॥ (त्रि, परिच्छेदकम् । यथा,
ऋग्वेदे ।
२ । ४० । ३ ।
"सोमापूषणा रजसो विमानं
सप्तचक्रं रथमविश्वमिन्वम् ॥"
"विमानं परिच्छेदकं
सर्व्वमानमित्यर्थः ।" इति

विमुक्तिदा येऽनभिसंहितेषु ॥"

**विमुखः**, त्रि, (विरुद्धं अननुकूलं मुखं यस्य ।)

बहिर्मुखः । विरतः । यथा, --
"स्वागमैः कल्पितैस्त्वं हि जनान्
मद्विमुखान्
कुरु ।
माञ्च गोपय येन स्यात् सृष्टिरेषोत्तरोत्तरा
॥"
इति पाद्मोत्तरखण्डे शिवं प्रति
विष्णुवाक्यम् ॥

**विमुद्रः**, त्रि, (विगता मुद्रा मुद्रणभावो यस्य ।)

प्रफुल्लः । इति हेमचन्द्रः ॥ मुद्रारहितश्च ॥

**विमोक्षणं**, क्ली, (वि + मोक्ष + ल्युट् ।) विमो-

चनम् । परित्यजनम् । यथा, --
"यं धर्म्मकामार्थविमुक्तिकामा
भजन्त इष्टां गतिमाप्नुवन्ति ।
किञ्चाशिषो रात्यपि देहमव्ययं
करोतु मेऽदभ्रदयो विमोक्षणम् ॥"
इति श्रीभागवते १० । ८३ अध्यायः ॥

**विमोचनं**, क्ली, (वि + मुच् + ल्युट् ।) दूरीकरणम् ।

विमुक्तिः । विपूर्ब्बमुचधातोरनट्प्रत्ययेन
निष्प-
न्नम् ॥ (यथा, महाभारते । १ । १६० ।
१३ ।
"अथवाहं करिष्यामि कुलस्यास्य
विमोचनम् ।
फलसंस्था भविष्यामि कृत्वा कर्म्म
सुदुष्करम् ॥"

| | | | |
|---|---|---|---|
| | | तद्भाष्ये सायणः ॥ साधनम् । यथा, तत्रैव ।<br>३ । ३ । ४ ।<br>“पिता यज्ञानामसुरो विपश्चितां विमानमग्निर्वयुनञ्च वाघताम् ॥”)<br>“विमानं विमीयतेऽनेन फलमिति विमानं | |

तीर्थविशेषः । यथा, महाभारते । ३ । ८३ । १५० ।
"विमोचनमुपस्पृश्य जितमन्युर्जितेन्द्रियः ।
प्रतिग्रहकृतैर्द्दोषैः सर्व्वैः स परिमुच्यते ॥"
पुं, महादेवः । यथा, महाभारते । १३ । १७ । ५९ ।
"विमोचनः समुरणो हिरण्यकवचोद्भवः ॥")

**विमोहनं**, क्ली, वैचिंत्तीकरणम् । विपूर्व्वमुह-
धातोरनट्(ल्युट्)प्रत्ययेन निष्पन्नम् ॥ (विमो-
हयतीति । वि + मुह + णिच् + ल्युः । विमो-
हके, त्रि । यथा, भागवते । ११ । २४ । ६ ।
"ततो विकुर्व्वतो जातो योऽहङ्कारो विमो-
हनः ॥")

**विमोहितः**, त्रि, (वि + मुह + णिच् + क्तः ।)
मोहयुक्तः । मोहितः । यथा, --
"तावप्यतिबलोन्मत्तौ महामायाविमोहितौ ।
उक्तवन्तौ वरोऽस्मत्तो व्रियतामिति केशवम् ॥"
इति देवीमाहात्म्यम् ॥

**वि(बि)म्बं**, क्ली, (वी गत्यादिषु + "उल्वादयश्च ।"
उणा० ४ । ९५ । इति वन् प्रत्ययेन निपातनात्
साधुः ।) प्रतिविम्बम् । कमण्डलुः । इति
संक्षिप्तसारोणादिवृत्तिः ॥ (मूर्त्तिः । यथा,
भागवते । ३ । २ । ११ ।
"प्रदर्श्यातप्ततपसामवितृप्तदृशांनृणाम् ।
आदायान्तर्द्धात् यस्तु स्वविम्बं लोकलोचनम् ॥"
तथाच राजतरङ्गिण्याम् । ३ । ४६६ ।
"मेघवाहनभूभर्त्तृपत्न्या भिन्नाख्यया कृते ।
विहारेऽपि तया बुद्धविम्बं साधु निवेशितम् ॥")
विम्बिकाफलम् । तेलाकुचा इति भाषा । इति
मेदिनी । वे, ७ ॥ (यथा, कुमारे । ३ । ६७ ।
मण्डलमात्रेऽपि । यथा, ऋतुसंहारे । १ । ४ ।
"नितम्बविम्बैः सुदुकूलमेखलैः
स्तनैः सहाराभरणैः सचन्दनैः ।
शिरोरुहैः स्नानकषायवासितैः
स्त्रियो निदाघं शमयन्ति कामिनाम् ॥"
यथाच कुमारे । ७ । २२ ।
"आत्मानमालोक्य च शोभमान-
मादर्शविम्बे स्तिमितायताक्षी ।
हरोपयाने त्वरिता बभूव
स्त्रीणां प्रियालोकफलो हि वेशः ॥")

**वि(बि)म्बः**, पुं, (वी + वन्प्रत्ययेन साधुः ।) कृक-
लासः । इति मेदिनी । वे, ७ ॥

**वि(बि)म्बकं**, क्ली, (विम्ब + स्वार्थे कन् ।) चन्द्रसूर्य्य-
मण्डलम् । विम्बिकाफलम् । इति शब्दरत्ना-
वली ॥ (सञ्चकः । साँच इति भाषा ॥ यथा,
नैषधे । २२ । ४७ ।
"विधिर्व्विधत्ते विधिना बधूनां
किमाननं काञ्चनसञ्चकेन ॥"
अत्र । "काञ्चनस्य सञ्चकेन विम्बकेन ॥" इति
नारायणीटीका ॥)

**वि(बि)म्बजा**, स्त्री, (विम्बं फलं जायतेऽस्यामिति ।
जन् + डः ।) बिम्बिका । इति शब्दरत्नावली ॥

**वि(बि)म्बटः** पुं, सर्षपः । इति शब्दचन्द्रिका ॥

**वि(बि)म्बा**, स्त्री, (विम्वं फलमस्त्यस्यामिति ।
विम्ब + अच् । टाप् ।) विम्बिका । इति शब्द-
रत्नावली ॥

**वि(बि)म्बिका**, स्त्री, विम्बम् । इत्यमरः ॥ (यथा, --
द्यवापृथिव्यौ । अत्र द्विवचनस्य प्रयोगः स्यात् ।
यथा, तैत्तिरीयब्राह्मणे । १ । १ । ३ । २ ।
"द्यावापृथिवी सहास्ताम् । ते वियती अब्रूताम् ॥"
तथाच शतपथब्राह्मणे । ७ । १ । २ । २३ ।
"तयोर्वियत्योर्योऽन्तरेणाकाश आसीत् तदन्त-
रिक्षमभवत् ॥" * ॥ वि + या + शतृ । गमन-
शीले, त्रि । यथा, भागवते । ७ । ६ । १४ ।
"कुटुम्बपोषाय वियन्निजायु-
र्न बुध्यतेऽर्थं विहतं प्रमत्तः ॥"
तथा, तत्रैव । ९ । २१ । ३ ।
"वियद्वित्तस्य ददतो लब्धं लब्धं बुभूषतः ।
निष्किञ्चनस्य धीरस्य सकुटुम्बस्य सीदतः ।
व्यतीयुरष्टचत्वारिंशदहान्यपिबतः किल ॥"
"वियद्वित्तस्य वियतो गगनादिव उद्यमं विनैव
दैवादुपस्थितं वित्तं भोग्यं यस्य । यद्वा वियत्
व्ययं प्राप्नुवद्वित्तं भोग्यं यस्य ।" इति तट्टीकायां
श्रीधरस्वामी ॥)

**वियद्गङ्गा**, स्त्री, (वियतो गङ्गा ।) स्वर्गगङ्गा ।
इत्यमरः ॥

**वियद्भूतिः**, स्त्री, (वियतो भूतिर्भस्मेव ।) अन्ध-
कारः । इति त्रिकाण्डशेषः ॥

**वियन्मणिः**, पुं, (वियतो मणिः ।) सूर्य्यः । इति
हारावली ॥

**वियमः**, पुं, (वि + यम + "यमः समुपनिविषु
च ।" ३ । ३ । ६३ । इत्यप् ।) संयमः । इत्य-
मरः ॥ दुःखम् । इति स्वामी ॥

**वियातः**, त्रि, (विरुद्धं निन्दां यातः प्राप्तः ।)
निर्लज्जः । इत्यमरः ॥

**वियामः**, पुं, (वि + यम + घञ् ।) संयमः ।
इत्यमरः ॥

**वियुक्तः**, त्रि, वियोगविशिष्टः । विपूर्ब्बयुजधातोः

“उमामुखे विम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि ॥”)
अस्य पर्य्यायः । तुण्डिकेरी २ रक्तफला ३
बिम्बिका ४ पीलुपर्णी ५ । इत्यमरः ॥
ओष्ठी ६
बिम्बी ७ । इति रत्नमाला ॥ बिम्बा ८
बिम्ब-
कम् ९ बिम्बजा १० । इति शब्दरत्नावली
॥
अस्य गुणाः ।
पित्तकफच्छर्द्दिव्रणहृल्लासकुष्ठ-
नाशित्वम् । इति राजवल्लभः ॥ अपि च ।
“बिम्बी रक्तफला तुम्बी तुण्डिकेरी च
बिम्बिका ।
ओष्ठोपमफला प्रोक्ता पीलुपर्णी च कथ्यते ॥
बिम्बीफलं स्वादु शीतं गुरु पित्तास्रवातजित्
।
स्तम्भनं लेखनं रुच्यं विबन्धाध्मानकारकम्
॥”
इति भावप्रकाशः ॥

**वि(बि)म्बः**, पुं क्ली, (वी + “उल्वादयश्च ।” उणा०
४ । ९५ । इति वन्प्रत्ययेन साधुः ।) सूर्य्य-
चन्द्रमण्डलम् । इत्यमरः ॥ (यथा, प्रबोध-
चन्द्रोदये ६ अङ्के ।
“असौ त्वदन्यो न सनातनः पुमान्
भवान् न देवात् पुरुषोत्तमात् परः ।
स एव भिन्नस्त्वमनादिमायया
द्विधेव विम्बं सलिले विवस्वतः ॥”
यथाच मार्कण्डेये । ८४ । ११ ।
“ईषत्सहासममलं परिपूर्णचन्द्र-
विम्बानुकारि कनकोत्तमकान्तिकान्तम् ॥”
“तुम्बी रक्तफला विम्बी तुण्डीकेरी च
विम्बिका ॥”
इति वैद्यकरत्नमालायाम् ॥)
चन्द्रसूर्य्यमण्डलम् । इति
शब्दरत्नावली ॥

**वि(बि)म्बी**, स्त्री, (विम्ब + गौरादित्वात् ङीष् ।)
बिम्बिका । इति शब्दरत्नावली ॥
(यथा, --
“काकादनीं चित्रफलां विम्बीं गुञ्जाश्च
धारयेत् ॥”
इति सुश्रुते उत्तरतन्त्रे ३२ अध्यायः
॥)

**वि(बि)म्बुः**, स्त्री, गुवाकः । इति केचित् ॥

**वि(बि)म्बोष्ठः** त्रि, (विम्ब + ओष्ठः । “ओत्वो-
ष्ठयोः समासे वा ।” इति पाक्षि-
कोऽकारलोपः ।) विम्बे इव ओष्ठौ
यस्य ।
इति मुग्धबोधव्याकरणम् ॥

**वि(बि)म्बौष्ठः** त्रि, (विम्ब + ओष्ठः । “ओत्वो-
ष्ठयोः समासे वा ।” इति पाक्षि-
कोऽकारलोपः ।) विम्बे इव ओष्ठौ
यस्य ।
इति मुग्धबोधव्याकरणम् ॥

**वियच्चारी**, [न्] पुं, (वियति आकाशे चरतीति
।
चर + णिनिः ।) चिल्लः । इति
शब्दमाला ॥
आकाशगामिनि, त्रि ॥

**वियत्**, क्ली, (वियच्छति न विरमतीति । वि +
यम + “अन्येभ्योऽपि दृश्यते ।” ३ ।
२ । १७८ ।
इति क्विप् । क्वौ चगमादीनामिति
मलोपे तुक् ।)
आकाशम् । इत्यमरः ॥ (यथा,
भागवते ।
३ । ८ । ३३ ।
“तर्ह्येव तन्नाभिसरःसरोज-
मात्मानमम्भः श्वसनं वियच्च ।
क्तप्रत्ययेन निष्पन्नः ॥ (यथा, देवीभागवते ।
२ ।
९ । १३ ।
“किं करोमि क्वगच्छामि मृतामे प्राणवल्लभा ।
न वै जीवितुमिच्छामि वियुक्तः प्रिययानया
॥”)

**वियोगः**, पुं, (वि + युज + घञ् ।) विच्छेदः ।
तत्पर्य्यायः । विप्रलम्भः २ विप्रयोगः ३
विरहः ४ ।
इति हेमचन्द्रः ॥ (यथा, भागवते । ९ । १३ ।
९ ।
“यस्य योगं न वाञ्छन्ति वियोगभयकातराः ।
भजन्ति चरणाम्भोजं मुनयो हरिमेधसः ॥”)

**वियोगभाक्**, [ज्] त्रि, (वियोगं भजते इति ।
भज + विण् ।) विच्छेदयुक्तः । यथा, नैषधे ।
“वियोगभाजोऽपि नृपस्य पश्यता
तदेव साक्षादमृतांशुमाननम् ।
पिकेन रोषारुणचक्षुषा मुहुः
कुहूरुताहूयत चन्द्रवैरिणी ॥”

**वियोगी**, [न्] पुं, (वियोगोऽस्यास्तीति । वियोग +
इनिः ।) चक्रवाकः । इति शब्दचन्द्रिका ॥
वियोगयुक्ते, त्रि ॥ (यथा, मार्कण्डेये । २२ ।
२५ ।
“ताः शोच्या या वियोगिन्यो न शोच्या या
मृताः सह ।
भर्त्तुर्व्वियोगस्त्वनया नानुभूतः कृतज्ञया ॥”)

**वियोजितः**, त्रि, वियोगं प्रापितः । विपूर्ब्बण्यन्त-
युजधातोः क्तप्रत्ययेन निष्पन्नः ॥

**विरक्तः**, त्रि, (वि + रन्ज + क्तः ।) विरागयुक्तः ।
अननुरक्तः । यथा, --
"ज्ञाननिष्ठो विरक्तो वा मद्भक्तो
वानपेक्षकः ।
स्वलिङ्गानाश्रमांस्त्यक्त्वा
चरेदविधिगोचरः ॥"
इति श्रीभागवते ११ स्कन्धे १८
अध्यायः ॥
(यथा च ।
"त्वयि प्रसन्ने मम किं गुणेन
त्वय्यप्रसन्ने मम किं गुणेन ।
रक्ते विरक्ते च वरे बधूनां
निरर्थकः कुङ्कुमराग एषः ॥"
इत्युद्भटः ॥)

**विरक्ता**, स्त्री, दुर्भगा । इति त्रिकाण्डशेषः ॥
अननुकूला । यथा, नीतिशतके । १ ।
"यां चिन्तयामि सततं मयि सा विरक्ता
सा चान्यमिच्छति जनं स
जनोऽन्यरक्तः ।
अस्मत्कृतेऽपि परितुष्यति काचिदन्या
धिक् ताञ्च तञ्च मदनञ्च इमाञ्च माञ्च ॥"

**विरक्तिः**, स्त्री, (वि + रन्ज + क्तिन् ।) विरागः ।
यथा, --
"देहो गुरुर्मम विरक्तिविवेकहेतु-
र्ब्बिभ्रत् स्म सत्त्वनिधनं सततार्त्युदर्कम्
।
तत्त्वान्यनेन विमृशामि यथा तथापि
पारक्यमित्यवशितो विचराम्यसङ्गः ॥"
इति श्रीभागवते । ११ । ९ । २५ ॥

**विरङ्गं**, क्ली, कङ्कुष्टम् । इति राजनिर्घण्टः ॥

**विरचितः**, त्रि, (वि + रच + क्तः ।) विशेषेण
रचितः । निर्म्मितः । यथा, --
"एष श्रीलहनूमता विरचिते
श्रीमन्महानाटके
उत्पन्नाः पितृकन्यायां विरजायां महाबलाः
।
यतिर्ययातिः स्वर्यातिरायातिः पञ्चमो
लुकः ।
तेषां ययातिः पञ्चानां महाबलपराक्रमाः ॥
इति कौर्म्मे २० अध्यायः ॥
श्रीकृष्णसखी । सा राधाभयात्त्यक्तप्राणा
सती
सरिद्रूपाभवत् । तस्याः सप्त पुत्त्राः तप्त
समुद्रा
अभवन् । यथा, --
"एकदा राधिकासार्द्धं गोलोके श्रीहरिः
स्वयम् ।
विजहार महारण्ये निर्ज्जने रासमण्डले ॥
कृत्वा विहारं श्रीकृष्णस्तामदृष्ट्वा विहाय
च ।
गोपिकां विरजामन्यां शृङ्गारार्थं जगाम ह ॥
दृष्ट्वा च श्रीहरिस्तूर्णं विजहार तया सह ।
तयासक्तं श्रीहरिञ्च रत्नमण्डपसंस्थितम् ॥
दृष्ट्वा च राधिकान्याश्च चक्रुस्ताञ्च
निवेदनम् ।
जगाम सहसा देवी तं रत्नमण्डपं मुने ॥
द्वारे नियुक्तं ददर्श द्वारपालं मनोहरम् ।
तमुवाच रुषा देवी रक्तपङ्कजलोचना ॥
दूरं गच्छ गच्छ दूरं रतिलम्पटकिङ्कर ! ।
कीदृशीं मत्परां कान्तां द्रक्ष्यामि तत्प्रभो-
रहम् ॥
श्रुत्वा कोलाहलं शब्दं गोपिकानां हरिः
स्वयम् ।
ज्ञात्वा च कोपितां राधामन्तर्धानं चकार ह
॥
विरजा राधिकाशब्दात् अन्तर्धानं हरेरपि ।
दृष्ट्वा राधाभयार्त्ता सा जहौ प्राणांश्च
योगतः ॥
सद्यस्तत्र सरिद्रूपं तच्छरीरं बभूव ह ॥
व्याप्तञ्च वर्त्तुलाकारं तया गोलोकमेव च ।
कोटियोजनविस्तीर्णं प्रस्थेऽतिनिम्नमेव च
॥
दैर्घे दशगुणं चारु नानारत्नाकरं परम् ।
प्रबोध्य बालं सा साध्वी न ददर्शान्तिकं प्रियम्
।
विललाप भृशं तत्र शृङ्गारातृप्तमानसा ॥
शशाप स्वसुतं कोपात् लवणोदो भविष्यसि ।
शशाप सर्व्वान् बालांश्च यान्तु मूढा रसातलम्
॥
श्रुत्वा विवरणं सर्व्वे प्रजग्मुर्धरणीतलम् ।
सप्तद्वीपे समुद्राश्च सप्त तस्थुर्व्विभागशः ॥
कनिष्ठाद्बृद्धपर्य्यन्तं द्विगुणं द्विगुणं मुने ।
लवणेक्षुसुरासर्पिर्दधिदुग्धजलार्णवाः ।
एतेषाञ्च जलं पृथ्व्यां शस्यार्थञ्च भविष्यति ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे २ । ३
अध्यायौ ॥
जगन्नाथक्षेत्रम् । यथा, --
"उत्कले नाभिदेशञ्च विरजाक्षेत्रमुच्यते ।
विमला सा महादेवी जगन्नाथस्तु भैरवः ॥"
इति तन्त्रचूडामणौ ५१ पीठनिर्णयः ॥ * ॥
तत्र
मुण्डनोपवासौ न कर्त्तव्यौ । यथा । स्कान्दे ।
"मुण्डनञ्चोपवासश्च सर्व्वतीर्थेष्वयं विधिः ।
वर्जयित्वा गयां गङ्गां विशालां विरजां तथा ॥"
इति प्रायश्चित्ततत्त्वम् ॥

**विरञ्चः**, पुं, ब्रह्मा । इति हेमचन्द्रः ॥

**विरञ्चिः**, पुं, ब्रह्मा । इति हेमचन्द्रः ॥

**विरणं**, क्ली, वीरणतृणम् । इति शब्दरत्नावली ॥

**विरतः**, त्रि, (वि + रम + क्तः ।) निवृत्तः ।
यथा --
"आत्तविद्यो मुनेर्जातो भ्रातुस्त्रातो निजैर्भवात्
।
विरतोऽन्तर्हितो दुष्टाच्छोकाद्रामेण वारितः ॥"
इति मुग्धबोधव्याकरणम् ॥

**विरतिः**, स्त्री, (वि + रम + क्तिन् ।) निवृत्तिः ।
तत्पर्य्यायः । आरतिः २ अवरतिः ३ उप-
रामः ४ । इत्यमरः ॥ उपरमः ५ विरामः ६ ।
इति भरतः ॥ (यथा, कथासरित्सागरे ।
१०१ । ६ ।
"कृच्छ्राच्च दुःखदीर्घायां गतायां विरतिं

वीरश्रीयुतरामचन्द्रचरिते प्रत्युद्धृते
विक्रमैः ॥”
इत्यादि महानाटकम् ॥

**विरजस्तमाः** [स्] पुं, सत्त्वगुणविशिष्टः । तत्-

पर्य्यायः । द्वयातिगः २ । इत्यमरः । २
। ७ । ४५ ॥
“विगते रजस्तमसी येषां ते
रजस्तमोगुणशून्याः
सत्त्वैकनिष्ठाः साक्षात्कृतब्राह्मणो
जीवन्मुक्ता
व्यासादयो द्वयातिगा उच्यन्ते । द्वयं
द्वैतं अति-
क्रम्य गच्छति इति डः ।” इति भरतः
॥

**विरजाः**, [स्] स्त्री, (विनिवृत्तं रजः शोणितं

यस्याः ।) विगतार्त्तवा । इति जटाधरः
॥
(नास्ति रजो धूलिर्यत्र । धूलिरहिते, त्रि
।
यथा, महाभारते । १ । ९३ । १५ ।
“सर्व्वैरिदानीं गन्तव्यं सह स्वर्गजितो
वयम् ।
एष नो विरजाः पन्था दृश्यते
देवसद्मनः ॥”
निर्म्मलः । यथा, महाभारते । २ । ७ ।
५ ।
“विरजोऽम्बरश्चित्रमाल्यो
ह्रीकीर्त्तिर्द्युतिभिः
सह ॥”
पुं, नागविशेषः । यथा, महाभारते । १ ।
३५ । १४ ।
“विरजाश्च सुबाहुश्च शालिपिण्डश्च
वीर्य्य-
वान् ॥”)

**विरजा**, स्त्री, कपित्थानीवृक्षः । इति रत्नमाला ॥

दूर्व्वा । इति हारावली ॥ ययातिमाता ।
यथा,

राधा रतिगृहं गत्वा न ददर्श हरिं मुने ॥
विरजाञ्च सरिद्रूपां दृष्ट्वा गेहं जगाम सा ।
श्रीकृष्णो विरजां दृष्ट्वा सरिद्रूपां प्रियां
सतीम् ॥
उच्चै रुरोद विरजातीरे नीरमनोहरे ।
त्वया विनाहं सुभगे कथं जीवामि सुन्दरि !
॥
नद्यधिष्ठातृदेवी त्वं भव मूर्त्तिमती सति ।
पुरातनं शरीरं ते सरिद्रूपमभूत् सति ॥
जलादुत्थाय चागच्छ विधाय नूतनां तनूम्
।
आजगाम हरेरग्रं साक्षाद्राधेव सुन्दरी ॥
पश्यन्तं प्राणनाथञ्च पश्यन्ती वक्रचक्षुषा ।
ताञ्च रूपवतीं दृष्ट्वा प्रेम्णोद्रेकां जगत्पतिः
॥
चकारालिङ्गनं तूर्णं चुचुम्ब च मुहुर्मुहुः ।
नानाप्रकारशृङ्गारविपरीतादिकंप्रभुः ॥
रहसि प्रेयसीं प्राप्य चकार च पुनः पुनः ।
विरजा सा रजोयुक्ता धृत्वा
वीर्य्यममोघकम् ॥
सद्यो बभूव तत्रैव धन्या गर्भवती सती ।
तस्थौ तत्र सुखासीना सार्द्धं पुत्रैश्च
सप्तभिः ॥
एकदा हरिणा सार्द्धं वृन्दारण्ये सुनिर्ज्जने ।
विजहार पुनः साध्वी शृङ्गारासक्तमानसा
॥
एतस्मिन्नन्तरे तत्र मातुः क्रोडं जगाम ह ।
कनिष्ठपुत्रस्तस्याश्च भ्रातृभिः पीडितो
भिया ॥
भीतं स्वतनयं दृष्ट्वा तत्याज तां
कृपानिधिः ।
क्रोडे चकार बालं सा कृष्णो राधागृहं ययौ
॥

निशि ॥”)

**विरलं**, क्ली, दधि । इति राजनिर्घण्टः ॥

**विरलः**, त्रि, अवकाशः । फाक् इति भाषा ।

तत्पर्य्यायः । पेलवः २ तनुः ३ । इत्यमरः ॥
(यथा, बृहत्कथायाम् । ६७ । ३ ।
“शूर्पाकारविरूक्षपाण्डुरनखौ वक्रौ शिरास-
न्ततौ
संशुष्कौ विरलाङ्गुली च चरणौ दारिद्र्यदुःख-
प्रदौ ॥”)

**विरलद्रवा**, स्त्री, (विरलो निर्म्मलो द्रवो यस्याः ।)

श्लक्ष्णयवागूः । यथा, --
“यवागूरुष्णिका श्राणा सेव तु द्रुतसिक्थिका ।
विलेपी तरला च स्यात् सा श्लक्ष्णा
विरलद्रवा ॥”
इति जटाधरः ॥

**विरहः**, पुं, (वि + रह त्यागे + घः ।) विच्छेदः ।

तत्पर्य्यायः । विप्रलम्भः २ विप्रयोगः ३
वियोगः ४ । इति हेमचन्द्रः ॥ * ॥ (यथा,
साहित्यदर्पणे । १० ।
“सङ्गमविरहविकल्पे वरमिह विरहो न सङ्गम-
स्तस्याः ।

सङ्गे सैव तथैका त्रिभुवनमपि तन्मयं विरहे ॥”
भर्त्तृविरहस्तु स्त्रीणां दोषाय भवति । यथा,
मनौ । ९ । १३ ।
“पानं दुर्ज्जनसंसर्गः पत्या च विरहोऽटनम् ।
स्वप्नोऽन्यगेहे वासश्च नारीणां दूषणानि षट् ॥”)
विरहे वर्णनीयानि यथा । तापः । निश्वासः ।
चिन्ता । मौनम् । कृशाङ्गता । वत्सरतुल्य-
रात्रिदैर्घ्यम् । जागरणम् । शीतले उष्णता-
ज्ञानम् । इति कविकल्पलता ॥

**विरहिणी**, स्त्री, (विरहोऽस्या अस्तीति । विरह
+ इनि + स्त्रियां ङीप् ।) विच्छेदविशिष्टा नारी । यथा, --
“रतिः पुंसो विरहिणी शिवः स्त्रीविरही चिरम् ।
द्वयोर्द्वयोश्च संप्राप्तौ किं बभूव द्वयोः सुखम् ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ४६ अध्यायः ॥
भृतिः । इति शब्दमाला ॥

**विरहितः**, त्रि, (वि + रह + क्तः ।) त्यक्तः ।
विहीनः । यथा, --
“अभिभूतञ्चावमतं त्यक्तस्तु स्यात् सभुज्झितम् ।
हीनं विरहितं धूतमुत्सृष्टविधुते अपि ॥”
इति जटाधरः ॥
(यथा, साहित्यदर्पणे । १० ।
“इन्द्राग्नी वदनात्तुभ्यं पशवो मलसम्भवाः ।
ओषध्यो रोमसम्भूता विराजस्त्वं नमोऽस्तु ते ॥”
इति वामने ८३ अध्यायः ॥

**विराजमानः**, त्रि, (वि + राज + शानच् ।) दीप्ति-
विशिष्टः । यथा, --
“जटाकटाहसम्भ्रमद्भ्रमन्निलिम्पनिर्झरी
विलोलवीचिवल्लरीविराजमानमूर्द्धनि ।
धगद्धगद्धगज्ज्वलल्ललाटपट्टपावके
किशोरचन्द्रशेखरे रतिः प्रतिक्षणं मम ॥”
इति काशीखण्डे रावणकृतशिवताण्डवस्तोत्रम् ॥

**विराजितः**, त्रि, (वि + राज + क्तः ।) शोभितः ।
दीप्तः । यथा, --
“अतीव निर्म्मलं सारं सूर्य्यभासविनिन्दकम् ।
परिष्कृतञ्च मानिक्यैर्हीरकेण विराजितम् ॥”
इति ब्रह्मवैवर्त्ते गणपतिखण्डे १० अध्यायः ॥

**विराट्**, [ज्] पुं, (विशेषेण राजते इति । राज
दीप्तौ + क्विप् ।) क्षत्त्रियः । इत्यमरः ॥ स्थूल-
शरीरसमष्ट्युपहितचैतन्यम् । इति वेदान्त-
सारः ॥ * ॥ (ब्रह्मणो विराड्मूर्त्तिवर्णनं यथा,
शङ्करविजये ६ प्रकरणे । “व्यूहमूर्त्तिर्व्विराट् चतुर्द्दशलोकात्मकः । तस्य ब्रह्माण्डकर्परपर्य्यन्त-
माकाशः शिरः, चन्द्रसूर्य्यौ नेत्रे, प्रागादिदिशः
श्रोत्रे, अन्तरीक्षलोको घ्राणं, मेरुः पृष्ठवंशः,
शिखरत्रयं भुजकण्ठाः, प्रत्यन्तपर्वताः पृष्ठपार्श्व-
वक्षांसि, उपपर्वताः शाल्मल्यादीनि, समुद्रा रक्तं,
लता स्नायूनि, तृणवृक्षाः रोमाणि, भूमिः
कुक्षिः, द्वीपा वलयः, भूरेखा रोमराजिः,
भूमध्यप्रदेशो वस्तिः, शेषः शिश्नं, दिग्दन्ति-
पङ्क्तिर्नितम्बोरुभागः, अतलादिसप्तकं कटि-
पादान्तरालः, कूर्म्मः पादौ इति ॥” * ॥) महा-
नित्यं सत्यस्वरूपश्च यथा कृष्णस्तथाप्ययम् ॥
सप्तद्वीपमिता पृथ्वी सप्तसागरसंयुता ।
ऊनपञ्चाशदुपद्वीपासंख्यशैलसमन्विता ॥
ऊर्द्ध्वं स्वर्गाः सप्त लोका ब्रह्मलोकसमन्विताः ।
पातालानि च सप्ताधश्चैवं ब्रह्माण्डमेव च ॥
ऊर्द्ध्वं धराया भूर्लोको भुवर्लोकस्ततः परः ।
ततः परश्च स्वर्लोको जनो लोकस्ततः परः ॥
ततः परस्तपोलोकः सत्यलोकस्ततः परः ।
ततः परो ब्रह्मलोकस्तप्तकाञ्चननिर्म्मितः ॥
एवं सर्व्वं कृत्रिमञ्च धराभ्यन्तरमेव च ।
तद्विनाशे विनाशश्च सर्व्वेषामेव नारद ॥
जलबुद्बुदवत् सर्व्वं विश्वसंघमनित्यकम् ।
नित्यौ वैकुण्ठगोलोकौ सत्यौ शश्वदकृत्रिमौ ॥
प्रतिलोमकूपे ब्रह्माण्डं प्रत्येकमस्य निश्चितम् ।
एषां संख्या न जानाति कृष्णोऽन्यस्यापि का कथा ॥
प्रत्येकं प्रतिब्रह्माण्डे ब्रह्मविष्णुशिवादवः ।
तिस्रः कोट्यः सुराणाञ्च संख्याः सर्व्वत्र पुत्त्रक ॥
दिगीशाश्चैव दिक्पाला नक्षत्राणि ग्रहादयः ।
भुवि वर्णाश्च चत्वारोऽप्यधो नागाश्चराचराः ॥
अथ काले च स विराट् ऊर्द्ध्वं दृष्ट्वा पुनः पुनः ।
डिम्बान्तरञ्च शून्यञ्च न द्वितीयञ्च कञ्चन ॥
चिन्तामवाप क्षुद्युक्तो रुरोद च पुनः पुनः ।
ज्ञानं प्राप्य तदा दध्यौ कृष्णं परमपूरुषम् ॥
ततो ददर्श तत्रैव ब्रह्मज्योतिः सनातनम् ।
नवीनजलदश्यामं द्विभुजं पीतवाससम् ॥
सस्मितं मुरलीहस्तं भक्तानुग्रहकारकम् ।
जहास बालकस्तुष्टो दृष्ट्वा जनकमीश्वरम् ॥
वरं तस्मे ददौ तुष्टो वरेशः समयोचितम् ।
मत्समो ज्ञानयुक्तश्च क्षुत्पिपासादिवर्ज्जितः ॥
ब्रह्माण्डासंख्यनिलयो भव वत्स लयावधि ।

"इदं वक्त्रं साक्षाद्विरहितकलङ्कः शशधरः
सुधाधाराधारश्चिरपरिणतं बिम्बमधरः ॥
इमे नेत्रे रात्रिन्दिवमधिकशोभे कुवलये
तनुर्लावण्यानां जलधिरवगाहे सुखतरः ॥")

**विरही**, [न्] पुं, (विरहोऽस्यास्तीति । इनिः ।)

विरहविशिष्टः । वियोगी । यथा, --
"विहरति हरिरिह सरसवसन्ते ।
नृत्यति युवतिजनेन समं सखि विरहिजनस्य
दुरन्ते ॥"
इति जयदेवः ॥

**विरागः**, पुं, (वि + रञ्ज + घञ् ।) अननुरागः ।

रागशून्यः । यथा, --
"विषयेष्वतिसं रागो मानसो मल उच्यते ।
तेष्वेव हि विरागो हि नैर्मल्यं समुदाहृतम् ॥"
इति प्रायश्चित्ततत्त्वम् ॥
(त्रि, विविधवर्णविशिष्टः । यथा, महाभारते ।
२ । २१ । २५ ।
"बलाद्गृहीत्वा माल्यानि मालाकारान्महा-
बलाः ।
विरागवसनाः सर्व्वे स्रग्विणो मृष्टकुण्डलाः ॥"
विगतो रागो विषयवासना यस्येत्यर्थे । वीत-
रागः । यथा, भागवते । ३ । १५ ।
४७ ।
"यत्तेऽनुतापविदितै र्दृढभक्तियोगैः
हृद्ग्रन्थयो हृदि विदुर्म्मुनयो विरागाः ॥")

**विरागार्हः**, त्रि, (विरागं अर्हतीति । अर्ह +

विराजुत्पत्तिर्यथा, --
श्रीनारायण उवाच ।
"अथ डिम्बो जले तिष्ठन् यावद्वै ब्रह्मणो वयः ।
ततः स काले सहसा द्विधा भूतो बभूव ह ॥
तन्मध्ये शिशुरेकश्च शतकोटिरविप्रभः ।
क्षणं रोरूयमानश्च स्तनन्धः पीडितः क्षुधा ॥
पितृमातृपरित्यक्तो जलमध्ये निराश्रयः ।
ब्रह्माण्डसंघनाथो यो ददर्शोद्‌र्ध्वमनाथवत् ॥
स्थूलात् स्थूलतमः सोऽपि नाम्ना देवो महा-
विराट् ।
परमाणुर्यथा सूक्ष्मात् परः स्थूलात्तथाप्यसौ ॥
तेजसा षोडशांशो यः कृष्णस्य परमात्मनः ।
आधारोऽसंख्यविश्वानां महान् विष्णुश्च प्राकृतः ।
प्रत्येकं लोमकूपेषु विश्वानि निखिलानि च ।
तस्यापि तेषां संख्याञ्च कृष्णो वक्तुं न हि क्षमः
॥
संख्या चेद्रजसाभस्ति विश्वानां न कदाचन ।
ब्रह्मविष्णुशिवादीनां तथा संख्या न विद्यते ॥
प्रतिविश्वेषु सन्त्येवं ब्रह्मविष्णुशिवादयः ।
पातालाद्‌ब्रह्मलोकान्तं ब्रह्माण्डं परिकीर्त्तितम्
॥
अत ऊद्‌र्ध्वे च वैकुण्ठो ब्रह्माण्डाद्वहिस्त्वे च ।
स च सत्यस्वरूपश्च शश्वन्नारायणो यथा ॥
अत ऊद्‌र्ध्वञ्च गोलोकः पञ्चाशत्कोटियोजनात्।

निष्कामो निर्भयश्चैव सर्व्वेषां वरदो वरः ॥
जरामृत्युरोगशोकपीडादिवर्ज्जितो भव ।
इत्युक्त्वा च द्रक्षकर्णे महामन्त्रं षडक्षरम् ॥
त्रिःकृत्वश्च प्रजजाप वेदागमवरं परम् ।
प्रणवादिचतुर्थ्यन्तं कृष्ण इत्यक्षरद्वयम् ॥
वह्निजायान्तमिष्टञ्च सर्व्वविघ्नहरं परम् ।
मन्त्रं दत्त्वा तदाहारं कल्पयामास स प्रभुः ॥
श्रूयतां मद्वचः श्रुत्वा निबोध कथयामि ते ।
प्रतिविश्वेषु यन्नैवद्यं ददाति विष्णवे जनः ॥
तत्षोडशांशं विषयिणो विष्णोः पञ्चदशस्य वै
।
निर्गुणस्यात्मनश्चैव परिपूर्णतमस्य च ॥
नैवेद्येन च कृष्णस्य नहि किञ्चित् प्रयोजनम् ।
यद्यद्ददाति नैवेद्यं यस्मै देवाय यो जनः ॥
स च खादति तत् सर्व्वं लक्ष्मीदृष्ट्या पुनर्भवेत् ।
तञ्च मन्त्रं वरं दत्त्वा तमुवाच पुनर्व्विभुः ॥
वरमन्यं किमिष्टन्ते तन्मे ब्रूहि ददामि च ।
कृष्णस्य वचनं श्रुत्वा तमुवाच महाविराट् ॥
अदन्तो बालकस्तत्र वचनं समयोचितम् ॥
श्रीमहाविराडुवाच ।
वरं मे त्वत्पदाम्भोजे भक्तिर्भवतु निश्चला ।
सन्ततं यावदायुर्मे क्षणं वा सुचिरं हि वा ॥

| | | |
|---|---|---|
| अच् ।) विरागयोग्यः । तत्पर्य्यायः । वैर- ङ्गिकः २ । इति हेमचन्द्रः ॥<br>**विराजः**, पुं, (विशेषेण राजते इति । वि + राज + अच् ।) विराट् । यथा, -- | | |

त्वद्भक्तियुक्तो यी बालो जीवन्मुक्तश्च सन्ततम् ।
तद्भक्तिहीनो मूर्ख्श्च जीवन्नपि मृतो हि सः ॥
किन्तज्जपेन तपसा यज्ञेन पूजनेन च ।
कृष्णभक्तिविहीनस्य मूर्ख्स्य जीवनं वृथा ॥
येनात्मना जीवितश्च तमेव नहि मन्यते ।
यावदात्मा शरीरेऽस्ति तावत् स शक्तिसंयुतः ॥
पश्चाद्यान्ति गते तस्मिन् न स्वतन्त्राश्च शक्तयः ।
स च त्वाञ्च महाभाग सर्व्वात्मा प्रकृतेः परः ॥
स्वेच्छामयश्च सर्व्वेभ्यो ब्रह्मज्योतिः सनातनः ।
इत्युक्त्वा बालकस्तत्र विरराम च नारद ॥
उवाच कृष्णः प्रत्युक्तिं मधुरां श्रुतिसुन्दरीम् ॥
श्रीकृष्ण उवाच ।
सुचिरं सुस्थिरं तिष्ठ यथाहं त्वं तथा भव ।
ब्रह्मणोऽसंख्यपाते च पातस्ते न भविष्यति ॥
अंशेन प्रतिब्रह्माण्डे त्वञ्च क्षुद्रविराड्भव ।
तन्नाभिपद्मे ब्रह्मा च विश्वस्रष्टा भविष्यति ॥
ललाटे ब्रह्मणश्चैव रुद्राश्चैकादशैव तु ।
शिवांशेन भविष्यन्ति सृष्टिसञ्चारणाय वै ॥
कालाग्निरुद्रस्तेष्वेको विश्वसंहारकारकः ।
पाता विष्णुश्च विषयी क्षुद्रांशेन भविष्यति ॥
मद्भक्तियुक्तः सततं भविष्यसि वरेण मे ।
स्वर्गं मर्त्यञ्च पातालं त्रिलोकं सचराचरम् ।
एवं सर्व्वं लोमकूपे विश्वं प्रत्येकमेव च ॥
प्रतिविश्वे क्षुद्रविराट् ब्रह्मविष्णुशिवादयः ।
इत्येवं कथितं वत्स श्रीकृष्णकीर्त्तनं परम् ॥
सुखदं मोक्षदं सारं किं भूयः श्रोतुमिच्छसि ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ३ अध्यायः ॥
स्वायम्भुवमनुः । यथा, --
“गतेषु तेषु सृष्ट्यर्थं प्रणामावनतामिमाम् ।
उपयेमे स विश्वात्मा शतरूपामनिन्दिताम् ॥
सम्बभूव तया सार्द्धमतिकामातुरो विभुः ।
सलज्जां चकमे देवः कमलोदरमन्दिरे ॥
यावदन्दशतं दिव्यं यथान्यः प्राकृतो जनः ।
ततः कालेन महता ततः पुत्रोऽभवन्मनुः ॥
स्वायम्भुव इति ख्यातः स विराडिति नः श्रुतम् ।
तद्रूपगुणसामान्यादधिपूरुषउच्यते ॥
वैराजा यत्र ते जाता बहवः शंसितव्रताः ।
स्वायम्भुवा महाभागा सप्त सप्त तथापरे ॥
स्वारोचिषाद्या सर्व्वे ते ब्रह्मतुल्याः स्वरूपिणः ।
औत्तमिप्रमुखास्तद्वद्येषांत्वं सप्तमोऽधुना ॥”
इति मात्स्ये ३ अध्यायः ॥

**विराटः**, पुं, देशविशेषः । इति शब्दरत्नावली ॥
(अत्रैव पञ्चपाण्डवाः सह द्रौपद्या अज्ञात-मुषितवन्तः । यथा, महाभारते । ४ । १ । १ ।
“कथं विराटनगरे मम पूर्ब्बपितामहाः ।
अज्ञातवासमुषिता दुर्य्योधनभयार्द्दिताः ॥”)
तद्देशीयराजा । यथा, --
“अत्र शूरा महेष्वासा भीमार्ज्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥”
इति श्रीभगवद्गीतायाम् १ अध्यायः ॥

**विराटकः**, पुं, राजपट्टः । इति हेमचन्द्रः ॥

प्रसाद्यमानः स मया प्रावचन्मां पुनः पुनः ।
यदा दाशरथी रामो भविष्यति महाबलः ॥
शापस्यान्तोऽभविष्यत्तेतेन रामेण संयुगे ।
प्रसादात्तव मुक्तोऽहं गमिष्यामि स्वमालयम् ॥”
इति वह्निपुराणे सूर्पणस्वाकर्णनासिकोत्कर्त्तनं नामाध्यायः ॥

**विराधनं**, क्ली, (वि + राध + ल्युट् ।) पीडा ।
इति शब्दरत्नावली ॥

**विराधानं**, क्ली, पीडा । इति शब्दरत्नावली ।
विवाधानमिति च पाठः ॥

**विरामः**, पुं, (वि + रम + घञ् ।) शेषः । निवृत्तिः ।
विरतिः । तत्पर्य्यायः । अवसानः २ सातिः ३ । इति जटाधरः ॥ मध्यम् ४ । इति त्रिकाण्ड-शेषः ॥ (यथा, मनौ । २ । ७३ ।
“अध्येष्यमाणन्तु गुरुं नित्यकालमतन्द्रितः ।
अधीष्व भो इति ब्रूयात् विरामोऽस्त्विवितिचार-मेत् ॥”)
परवर्णाभावः । इति व्याकरणम् ॥ (यथा, पाणिनौ । १ । ४ । ११० ।
“विरामोऽवसानम् ॥”)

**विरालः**, पुं, विडालः । इत्यमरटीका ॥

**विरावः**, पुं, (वि + रु + घञ् ।) शब्दः । इत्य-मरः ॥ (यथा, महाभारते । ३ । १४६ । ६४ ॥
“सिंहनादभयत्रस्तैः कुञ्जरैरपि भारत ! ।
मुक्तो विरावः सुमहान् पर्व्वतो येन पूरितः ॥”
इल्वलप्रदत्ताश्वान्यतरः । यथा, महाभारते । ३ । ९९ । १७ ।
“विरावश्च सुरावश्च तस्मिन् युक्तौ रथे हयौ ॥”)

**विरावी**, [न्] त्रि, विरावविशिष्टः । विरावो
विद्यतेऽस्येति इन्प्रत्ययेन निष्पन्नः ॥ (यथा, बृहत्संहितायाम् । ५३ । ९ ।

ध्यानेन कमनीयं मां नित्यं द्रक्ष्यसि निश्चितम् ॥
मातरं कमनीयाञ्च मम वक्षःस्थलस्थिताम् ।
यामि लोकं तिष्ठ वत्सेत्युक्त्वा सोऽन्तरधीयत ॥
गत्वा स्वलोकं ब्रह्माणं शङ्करं स उवाच ह ।
स्रष्टारं स्रष्टुमीशश्च संहर्त्तारश्च तत्क्षणम् ॥
श्रीकृष्ण उवाच ।
सृष्टिं स्रष्टुं गच्छ वत्स नाभिपद्मोद्भवो भव ।
महाविराड्लोमकूपे क्षुद्रस्य च विधे शृणु ॥
गच्छ वत्स महादेव ब्रह्मभालोद्भवो भव ।
अंशेन च महाभाग स्वयञ्च सुचिरं तपः ॥
इत्युक्त्वा जगतां नाथो विरराम विधिस्ततः ।
जगाम ब्रह्मा तं नत्वा शिवश्च शिवदायकः ॥
महाविराड्लोमकूपे ब्रह्माण्डे गोलोके जले ।
बभूव च विराट् क्षुद्रो विराडंशेन सांप्रतम् ॥
श्यामो युवा पीतवासाः शयानो जलतल्पके ।
ईषद्धास्यः प्रसन्नास्यो विश्वव्यापी जनार्द्दनः ॥
तन्नाभिकमले ब्रह्मा बभूव कमलोद्भवः ।
संभूय पद्मदण्डञ्च बभ्राम युग-लक्षकम् ॥
नान्तं जगाम दण्डस्य पद्मनाभस्य पद्मजः ।
नाभिजस्य च पद्मस्य चिन्तामाप पिता तव ॥
स्वस्थाने पुनरागत्य दध्यौ हृष्टः पदाम्बुजम् ।
ततो ददर्श क्षुद्रन्तं कालेन दिव्यचक्षुषा ॥

**विराटजः**, पुं, (विराटे जायते इति । जन् + डः ।) विराटदेशीयहीरकः । तत्पर्य्यायः । राजपट्टः २ राजावर्त्तः ३ । इति हेमचन्द्रः ॥
विराटराजजाते, त्रि ॥ (यथा, महाभारते । १४ । ६२ । ८ ।
"सुबहूनि च राजेन्द्र दिवसानि विराटजा ।
नाभुङ्क्त पतिदुःखार्त्ता तदाभूत्करुणं महत् ॥")

**विराणी**, [न्] पुं, हस्ती । इति शब्दमाला ॥

**विराधः**, पुं, (विराधयति लोकान् पीडयतीति । वि + राध + अच् ।) राक्षसभेदः । यथा, --
"लक्ष्मणस्य तु तद्वाक्यं श्रुत्वा रामं ततोऽब्रवीत् ।
पिता मेऽभूत् सुपर्जन्यो माता मे च शतद्रुता ॥
विराध इति मामाह पृथिव्यां सर्व्वराक्षसाः ।
उत्सृज्य प्रमदामेनां पलायेतां पराङ्मुखौ ॥
तच्छ्रुत्वा राममाहेदं लक्ष्मणः किं प्रतीक्षसे ॥
इत्युक्तो लक्ष्मणो वीर आनम्य सुमहद्धनुः ।
उत्ससर्ज शरं घोरं कालदण्डोपमं ततः ॥
तच्छरीरं महाकायं भित्त्वा पातालमाविशत् ॥
पपाताशु गतप्राणः सफेनं रुधिरं वमन् ।
ततोऽसौ राममाहेदं प्राञ्जलिर्विनयान्वितः ॥
तुम्बुरुर्नाम गन्धर्व्वः प्रविष्टो राक्षसीं तनुम् ।
अभिशापादहं त्रोरं शप्तो वैश्रवणेन वै ॥
"दिशि शान्तायां शकुनो मधुरविरावी यदा तदा वाच्यः ।
अर्थस्तस्मिन् स्थाने गृहेश्वराधिष्ठितेऽङ्गेवा ॥")

**विरिक्तः**, त्रि, कृतविरेकः । यथा, --
"दुर्विरिक्तस्य नाभेस्तु स्तब्धता कुक्षिशूलरुक् ।
पुरीषवातसङ्गश्च कण्डुमण्डलगौरवम् ॥"
इति भावप्रकाशः ॥

**विरिञ्चः**, पुं, ब्रह्मा । (यथा, भागवते । ८ । ५ । ३९ ।
"बलान्महेन्द्रस्त्रिदशाः प्रसादा-
न्मन्योर्गिरीशो धिषणाद्विरिञ्चः ॥")
विष्णुः । शिवः । इति शब्दरत्नावली ॥

**विरिञ्चनः**, पुं, ब्रह्मा । इति हेमचन्द्रः ॥

**विरिञ्चिः**, पुं, शिवः । विष्णुः । विधाता । इति शब्दरत्नावली ॥ (यथा, महाभारते । १ । १९ । १७ ।
"एवमस्त्विति तं देवाः पितामहमथा ब्रुवन् ।
उक्त्वैवं वचनं देवान् विरिञ्चिस्त्रिदिवं ययौ ॥")

**विरिब्धः**, पुं, स्वरः । इति मुग्धबोधव्याकरणम् ॥

**विरुदः**, पुं, गुणोत्कर्षादिवर्णनम् । यदुक्तम् ।
"वाशिकः कम्पितश्चेति विरुदो द्विविधो मतः ।
संयुक्तनियमो ह्यत्र वर्णितः पूर्ब्बवद्बुधैः ॥

| | | |
|---|---|---|
| शयानं जलतल्पे च ब्रह्माण्डे गोलकावृते ॥<br>यल्लोमकूपे ब्रह्माण्डं तञ्च तत् परमेश्वरम् ।<br>श्रीकृष्णञ्चापि गोलोकं गोपगोपीसमन्वितम् ॥<br>तं संस्तूय वरं प्राप ततः सृष्टिञ्चकार सः ।<br>बभूवुर्ब्रह्मणः पुत्त्रा मानसाः सनकादयः ॥<br>ततो रुद्राः कपालाच्च शिवांशैकादश स्मृताः ।<br>बभूव पाता विष्णुश्च क्षुद्रस्य वामपार्श्वतः ॥<br>चतुर्भुजश्च भगवान् श्वेतद्वीपनिवासकृत् ।<br>क्षुद्रस्य नाभिपद्मे च ब्रह्मा विष्णुं ससर्ज्ज च ॥ | | |

द्विचतुःषड् दशश्चात्र कलास्तु विरुदे मताः ।
दशभ्यो नाधिकाः कार्य्याः कलास्तु विरुदे
बुधैः ॥
कलिकाभ्यस्तु विरुदे भिदासावेव कीर्त्तिता ।
विरुदं कवयः प्राहुर्गुणोत्कर्षादिवर्णनम् ।
विरुदः कलिका चान्ते धीरवीरादिशब्दभाक्
॥
इत्युपोद्घातः । इति
श्रीरूपगोस्वामिकृतश्रीगो-
विन्दविरुदावलीभाष्ये श्रीबलदेवविद्याभूषणः
॥

**विरुदावली**, स्त्री, (विरुदानामावली ।) विरुद-

श्रेणी । स्तवमाला । तल्लक्षणादि यथा, --
“अधीत्य विरुदावल्या लक्षणं ग्रन्थकृत्कृतम्
।
एताञ्चेत् पठति प्राज्ञस्तदा बोधोऽस्य पुष्कलः
॥
सामान्यविरुदावल्या गोविन्दविरुदावलौ ।
योऽभ्यधायि विशेषस्तैः स तावदिह लिख्यते
॥
कलिका लोकविरुदैर्युता विविधलक्षणैः ।
कीर्त्तिप्रतापशौटीर्य्यसौन्दर्य्योन्मेषशालिनी ॥
कलिकाद्यन्तसंसर्गिपद्या दोषविवर्ज्जिता ।
शब्दाडम्बरसंवद्धा कर्त्तव्या विरुदावली ॥”
इति श्रीरूपगोस्वामिकृते
श्रीगोविन्दविरुदावली-
भाष्ये श्रीबलदेवविद्याभूषणः ॥ * ॥
कलिका-
लक्षणं कलिकाशब्दे लिखितम् । विरुदलक्षणं
तच्छब्दे द्रष्टव्यम् ॥

**विरुद्धः**, त्रि, (वि + रुध + क्तः ।) विरोधविशिष्टः ।

यथा । विरुद्धधर्म्मसमवाये भूयसां स्यात्
सधर्म्मकत्वम् । इति जैमिनीसूत्रम् ॥
“विरुद्धं गुरुवाक्यस्य यदत्र भाषितं मया ।
तत् क्षन्तव्यं बुधैरेव स्मृतितत्त्वबुभुत्सया ॥
स्मृतितत्त्वे प्रमादाद्यद्विरुद्धं बहुभाषितम् ।
गुणलेशानुरागेण तच्छोध्यं धर्म्मदर्शिभिः ॥”
इति तिथ्यादितत्त्वम् ॥

लीलालूनपुनर्विरूढशिरसो वीरस्य
लिप्सु-
र्व्वरम् ।”
इत्यादि मुरारिः ॥

**विरूपं**, क्ली, पिप्पलीमूलम् । इति राजनिर्घण्टः
॥

**विरूपः**, त्रि, (विकृतं रूपं यस्य ।) कुत्सितः ।

कुरूपः । यथा, --
“विरूपोन्मत्तनिस्वानामकुत्सापूर्ब्बकं हि
यत् ।
पूरणं दानमालाभ्यामनुग्रह उदाहृतः ॥”
इति रामतर्कवागीशः ॥
(यथा, बृहत्संहितायाम् । ७० । २३ ।
“या तूत्तरोष्ठेन समुन्नतेन
रूक्षाग्रकेशी कलहप्रिया सा ।
प्रायो विरूपासु भवन्ति दोषा
यत्राकृतिस्तत्र गुणा वसन्ति ॥”
परित्यक्तरूपः । यथा, ऋग्वेदे । १० ।
९५ । १६ ।
“यद्विरूपाचरं मर्त्तेष्ववसंरात्रीः
शरदश्चतस्रः ।”
“यद्यदा विरूपा परं मनुष्यस्य सम्पर्कात्
विगतसहजभूतस्वरूपाः ।” इति तद्भाष्ये
सायणः ॥ नानारूपः । यथा, ऋग्वेदे ।
३ ।
५३ । ७ ।
“इमे भोजा अङ्गिरसो विरूपा
दिवस्पुत्त्रासो असुरस्य वीराः ॥”
“हे इन्द्र इमे यागं कुर्व्वाणा भोजाः
सौदासाः
क्षत्त्रियाः तेषां याजका विरूपाः
विविधरूपा
मेधातिथिप्रभृतयः ॥” इति तद्भाष्ये
सायणः ॥
विरुद्धः । यथा, साहित्यदर्पणे । १०
परिच्छेदे ।
“विरूपयोः संघटना या च तद्विषमं मतम्
॥”
उदाहरणं यथा, --

“नाग्नयः परिविन्दन्ति न यज्ञा न तपांसि
च ।
न च श्राद्धं कनिष्ठस्य या च कन्या विरू-
पिका ॥”
इत्युद्वाहतत्त्वम् ॥

**विरूपी**, [न्] पुं, (विरुद्धं रूपमस्यास्तीति ।

इनिः ।) जाहकजन्तुः । इति राजनिर्घण्टः
॥
कुरूपविशिष्टे, त्रि ॥

**विरेकः**, पुं, (वि + रिच् + घञ् ।) मलभेदः ।

तत्पर्य्यायः । रेचनम् २ रेकः ३ रेचना ४
विरे-
चनम् ५ । इति शब्दरत्नावली ॥
प्रस्कन्दनम् ६ ।
इति रत्नमाला ॥ (यथा, वैद्यके ।
“धूमात्युष्णशिरो
विरेकवमनस्वेदोपनाहादिकं
पानाहारविहारभेषजमिदं श्लेष्माणमुग्रं
जयेत् ॥”
अस्य योग्यायोग्या यथा, --
“बालवृद्धकृशक्षीणपीनसार्त्तभयार्द्दिताः ।
रूक्षशोषतृषायुक्ता गर्भिणी च नवज्वरी ॥
अधो गच्छति
यस्यासृक्सूतिकातङ्करोगिणी ।
नैते विरेकयोग्याः स्युरन्येषाञ्च बलाबलम्
॥
नवज्वरे च ये योगा भेदकाः परिकीर्त्तिताः
।
ते तथैव प्रयोक्तव्या वीक्ष्य देहमलादिकम्
॥”
इति वैद्यकरसेन्द्रसारसंग्रहे विरेकाधिकारे
॥)

**विरेचकः**, त्रि, रेचकः । विरेककारकः । सारकः ।

मलभेदकः । जोल्लाव इति आरवीभाषा ॥
विपूर्ब्बकरिच्धातोर्ण्वुल्प्रत्ययेन निष्पन्नः ।
(यथा,
वैद्यके ।

(दशममनोर्ब्रह्मसावर्णेः देवतान्यतमः । यथा, भागवते । ८ । १३ । २२ ।
"हविष्मान् सुकृतः सत्यो जयो मूर्त्तिस्तदा द्विजाः ।
सुवासना विरुद्धाद्या देवाः शम्भुः सुरेश्वरः ॥"
क्ली, विचाराङ्गीयदोषविशेषः । यथा ।
"विरुद्धं नाम यद्दृष्टान्तसिद्धान्तसमयैर्विरुद्धं तत्र दृष्टान्तसिद्धान्तावुक्तौ । समयः पुनर्यथायुर्वेदिक समयो याज्ञियसमयो मोक्षशास्त्रिकसमय इति ।
तत्रायुर्व्वेदिकसमयः चतुष्पादसिद्धिः । आलभ्या पशव इति याज्ञियसमयः ।
सर्व्वभूतेष्वहिंसेति मोक्षशास्त्रिकसमयस्तत्र स्वसमयविपरीतमुच्य-
मानं विरुद्धमिति ॥" इति चरके विमान-स्थानेऽष्टमेऽध्याये ॥)

**विरूढः**, त्रि, अङ्कुरितः । (यथा, "विरूढजान्नं अङ्कुरितधान्यकृतमन्नम् ।" इति माधवकृतरुग्वि-
निश्चये शूलव्याख्याने विजयरक्षितः ॥)
जातः ।
इति मेदिनी । ढे, ९ ॥ (यथा, रघुवंशे । २ । २६ ।
"गङ्गाप्रपातान्तविरूढशष्पं
गौरीगुरोर्गह्वरमाविवेश ॥")
आरोहणविशिष्टः । यथा ।
"सन्तुष्टे तिसृणां पुरामपि रिपौ कण्डूलदो-र्मण्डली
"क्व वनं तरुवल्कभूषणं
नृपलक्ष्मीः क्व महेन्द्रवन्दिता ॥")
स्वार्थे के विरूपकश्च ॥

**विरूपः**, पुं, सुमनोराजपुत्त्रः । यथा, --
"जाताः सुमनसः पुत्त्रास्त्रयः शूरा महाबलाः ।
सुमतिश्च विरूपश्च सत्यः शास्त्रार्थपारगाः ॥"
इति कालिकापुराणे ९० अध्यायः ॥

**विरूपा**, स्त्री, दुरालभा । अतिविषा । इति राजनिर्घण्टः ॥

**विरूपाक्षः**, पुं, (विरूपे अक्षिणी यस्य । "सक्-थ्यक्ष्णोः स्वाङ्गात् षच् ।" इति षच् ।)
शिवः ।
इत्यमरः ॥ (यथा, साहित्यदर्पणे । १० ।
"दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः
विरूपाक्षस्य जयिनीस्तास्तुमो वामलोचनाः ॥")
रुद्रभेदः । इति जटाधरः ॥ तस्य पुरी सुमेरो-
र्नैरृतकोणे वर्त्तते । यथा, --
"तथा चतुर्थे दिग्भागे नैरृताधिपतेः श्रुता ।
नाम्ना कृष्णावती नाम विरूपाक्षस्य धीमतः ॥"
इति वाराहे रुद्रगीता ॥
(विरूपे, त्रि । यथा, कुमारे । ५ । ७२ ।
"वपुर्व्विरूपाक्षमलक्ष्यजन्मता
दिगम्बरत्वेन निवेदितं वसु ॥")

**विरूपिका**, स्त्री, (विकृतं रूपं यस्याः । कन् । टापि अत इत्वम् ।) कुरूपा । यथा, --
"पटोलपत्रं पित्तघ्नं नाडी तस्य कफापहा ।
फलं तस्य त्रिदोषघ्नं मूलं तस्य विरेचकम् ॥")

**विरेचनं**, क्ली, (वि + रिच + ल्युट् ।) विरेकः ।
इति शब्दरत्नावली ॥ तत्कारकौषधं यथा, --
"हरीतकी समगुडा मधुना सह पेषिता ।
विरेचनकरी रुद्र भवतीति न संशयः ॥
त्रिफला चित्रकं चित्रं तथा कटुकरोहिणी ।
ऊरुस्तम्भहरो ह्येष उत्तमन्तु विरेचनम् ॥"
अपि च ।
"त्रिफला वदरं द्राक्षा पिप्पली च विरेचकृत् ।
हरीतकी सोष्णनीरा लवणञ्च विरेचकृत् ॥"
इति गारुडे १८७ । १९९ अध्यायौ ॥ * ॥
अन्यच्च । अथ विरेचनविधिः ।
"स्निग्धस्विन्नाय वान्ताय दद्यात् सम्यग्विरेचनम् ।
अवान्तस्य त्वधःस्रस्तो ग्रहणीं छादयेत् कफः ॥
मन्दाग्निगौरवं कुर्य्याज्जनयेद्वा प्रवाहिकाम् ।
अथवा पाचनैरामं वलासं परिपाचयेत् ।
अन्यदात्ययिके कार्य्ये शोधनं शीलयेद्बुधः ॥"
आत्ययिके प्राणसङ्कटे ।
"पित्ते विरेचनं युञ्ज्यादामोद्भूते गदे तथा ।
उदरे च तथाध्माने कोष्ठशुद्धौ विशेषतः ॥
दोषाः कदाचित् कुप्यन्ति जिता लङ्घनपाचनैः ।
शोधनैः शोधिता ये तु न तेषां पुनरुद्भवः ॥
बालो वृद्धो भृशं स्निग्धः क्षतक्षीणो भयान्वितः ।
श्रान्तस्तृषार्त्तः स्थूलश्च गर्भिणी च नवज्वरी ॥

अधोगरक्तपित्ती च न विरेच्या विजानता ।
नवप्रसूता नारी च मन्दाग्निश्च मदात्ययी ॥
शल्यार्द्दितश्च रूक्षश्च न विरेच्या विजानता ।
जीर्णज्वरी गरव्याप्तो वातरक्ती भगन्दरी ॥
अर्शःपाण्डूदरग्रन्थिहृद्रोगारुचिपीडिताः ।
योनिरोगप्रमेहार्त्तगुल्मप्लीहव्रणार्द्दिताः ॥
विद्रधिच्छर्द्दिविस्फोटविसूचीकुष्ठसंयुताः ।
कर्णनासाशिरोवक्त्रगुदमेढ्रामयान्विताः ॥
प्लीहशोथाक्षिरोगार्त्ताः कृमिक्षारानलार्द्दिताः ।
शूलिनो मूत्रघातार्त्ता विरेकार्हा नरा मताः ॥
बहुपित्तो मृदुः प्रोक्तो बहुश्लेष्मा च मध्यमः ।
बहुवातः क्रूरकोष्ठो दुर्व्विरेच्यः स कथ्यते ॥
मृद्वी मात्रा मृदौ कोष्ठे मध्यकोष्ठे च मध्यमा ।
क्रूरे तीक्ष्णा मता द्रव्यैर्मृदुमध्यामतीक्ष्णकैः ॥
मृदुर्द्राक्षापयश्चञ्चुतैलैरपि विरिच्यते ।
मध्यमस्त्रिवृतातिक्ताराजवृक्षैर्व्विरिच्यते ।
क्रूरः स्नुक्पयसा हेमक्षीरीदन्तीफलादिभिः ॥”
चञ्चुतैलमेरण्डतैलम् । राजवृक्षः धनवहेरा ।
हेमक्षीरी चोकम् । दन्तीफलं बृहद्दन्तीफलं
जयपाल इति प्रसिद्धम् ।
“मात्रोत्तमा विरेकस्य त्रिंशद्वेगैः कफात्मिका ।
वेगैर्व्विंशतिभिर्म्मध्या हीनोक्ता दशवेगिका ॥
द्विपलं श्रेष्ठमाख्यातं मध्यमञ्च पलं भवेत् ।
पलार्द्धञ्च कषायाणां कनीयस्तु विरेचनम् ॥
कल्कमोदकचूर्णानां कर्षमध्वाज्यलेहतः ।
कर्षद्वयं पलं वापि वयोरोगाद्यपेक्षया ॥
पित्तोत्तरे त्रिवृच्चूर्णं द्राक्षाक्वाथादिभिः पिबेत्
।
त्रिफलाक्वाथगोमूत्रैः पिबेत् व्योषं कफार्द्दितः
॥
त्रिवृत्सैन्धवशुण्ठीनां चूर्णमम्लैः पिबेन्नरः ।
वातार्द्दितो विरेकाय जाङ्गलानां रसेन वा ॥
एरण्डतैलं त्रिफलाक्वाथेन द्विगुणेन वा ।
युक्तं पीतं पयोभिर्व्वा न चिरेण विरिच्यते ॥”
शीघ्रमेव विरिच्यत इत्यर्थः ।
“त्रिवृता कोटजं बीजं पिप्पली विश्वभेषजम् ।
समृद्वीकारसं क्षौद्रं वर्षाकाले विरेचनम् ॥
त्रिवृद्दुरालभामुस्तशर्करोदीच्यचन्दनम् ।
द्राक्षाम्बुना सपुष्पाह्वं शीतलं च घनात्यये ॥”

दुर्नामकुष्ठयक्ष्मार्शोगलगण्डोदरभ्रमान्॥
विदाहप्लीहमेहांश्च यक्ष्माणं नयनामयान् ।
वातरोगांस्तथाध्मानं मूत्रकृच्छ्राणिचाश्मरीम्
॥
पृष्ठपार्श्वोरुजघनजङ्घोदररुजंजयेत् ।
सततं शीलनादेषां पलितानि प्रणाशयेत् ।
अभया मोदका ह्येते रसायनवराः स्मृताः ॥”
अभयामोदको रसायनः ॥ * ॥
“पीत्वा विरेचनं शीतजलैः संसिच्य चक्षुषी ।
सुगन्धि किञ्चिदाघ्राय ताम्बूलं शीलयेद्वरम् ॥
निर्व्वातस्थो न वेगांश्च धारयेन्न शयीत च ।
शीताम्बु न स्पृशेत् क्वापि कोष्णनीरं
पिबेन्मुहुः ॥
बलासौषधपित्तानि वायुर्वान्ते यथा व्रजेत् ।
रेकात्तथा मलं पित्तं भेषजं च कफो व्रजेत् ॥
दुर्विरिक्तस्य नाभेस्तु स्तब्धता कुक्षिशूलरुक्
।
पुरीषवातसङ्गश्च कण्डूमण्डलगौरवम् ॥
विदाहोऽरुचिराध्मानं भ्रमश्छर्दिश्च जायते ।
तं पुनः पाचनैः स्नेहैः पक्त्वा संस्निह्य
रेचयेत् ॥
तेनास्योपद्रवा यान्ति दीप्ताग्निर्लघुता भवेत् ।
विरेकस्यातियोगेन मूर्च्छा भ्रंशो गुदस्य च ॥
शूलं कफातियोगः स्यान्मांसधारणसन्निभम्।
मेदोनिभं जलाभासं रक्तञ्चापि विरिच्यते ॥
तस्य शीताम्बुभिः सिक्त्वा शरीरं
तण्डुलाम्बुभिः ।
मधुमिश्रैस्तथा शीतैः कारयेद्वमनं मृदु ॥
सहकारत्वचः कल्को दध्ना सौवीरकेण वा ।
पिष्टो नाभिप्रलेपेन हन्त्यतीसारमुल्वणम्॥
सौवीरन्तु यवैरामैः पक्वैर्व्वा निस्तुषीकृतम्
॥”
सौवीरं सन्धानम् ।
“आजं क्षीरं रसञ्चापि वैष्किरं हारिणं तथा ॥
शालिभिः षष्टिकैस्तुल्यं मसूरैर्व्वापि भोजयेत्
।
वर्त्तिकालावविकिरकपिञ्जलकतित्तिराः॥
चकोरक्रकराद्याश्च विष्किराः समुदाहृताः ।

**विरेफः**, पुं, नदमात्रम् । इति धनञ्जयः ॥ रेफ-
शून्यश्च ॥

**विरेभितः**, त्रि, शब्दितः । विपूर्ब्बकरेभधातोः
क्तप्रत्ययेन निष्पन्नः ॥

**विरोकं**, क्ली, (वि + रुच् + घञ् । कुत्वम् ।)
छिद्रम् । इति त्रिकाण्डशेषः ॥
(यथा, माघे ।
५ । ५४ ।
“नासाविरोकपवनोन्नमितं तनीयो
रोमाञ्चतामिव जगाम रजः पृथिव्याः
॥”)
सूर्य्यकिरणे, पुं । इति हलायुधः ॥
(प्रातः-
कालः । यथा, ऋग्वेदे । ३ । ५ । २
।
“पूर्ब्बीरृतस्य संदृशश्चकानः संदूतो
अद्यौ
दुषसो विरोके ॥”
“विरोके विरोचने प्रातःकाले ।”
इति तद्भाष्ये
सायणः ॥)

**विरोचनः**, पुं, (विशेषेण रोचते इति । वि +
रुच्
+ “अनुदात्तेतश्च हलादेः ।” ३ ।
२ । १४९ । इति
युच् ।) सूर्य्यः । (यथा, महाभारते ।
३ । ३ । ६३ ।
“दिवाकरः सप्तसप्तिर्धामकेशी
विरोचनः ॥”)
अर्कवृक्षः । इत्यमरः ॥ प्रह्लादतनयः
। (यथा,
महाभारते । १ । ६५ । १९ ।
“प्रह्लादस्य त्रयः पुत्त्राः ख्याताः
सर्व्वत्र भारत ।
विरोचनश्च कुम्भश्च निकुम्भश्चेति
भारत ॥”)

उदीच्यं बाला । घनात्यये शरदि ।
“पिप्पली नागरं सिन्धुश्यामात्रिवृतषा सह ।
लिह्यात् क्षौद्रेण शिशिरे वसन्ते च विरे-
चनम् ॥”
श्यामा कृष्णसाउ ।
“त्रिवृता शर्करातुल्या ग्रीष्मकाले विरेचनम् ।
अभया मरिचं शुण्ठीविडङ्गामलकानि च ॥
पिप्पली पिप्पलीमूलं त्वक्पत्रं मुस्तमेव च ।
एतानि समभागानि दन्ती तु द्विगुणा भवेत् ॥
त्रिवृताष्टगुणा ज्ञेया षड्गुणा वात्र शर्करा ।
मधुना मोदकान् कृत्वा कर्षमात्रान् प्रमाणतः ॥
एकैकं भक्षयेत् प्रातः शीतञ्चानुपिबेज्जलम् ॥
तावद्विरिच्यते जन्तुर्यावदुष्णं न सेवते ।
पानाहारविहारेषु भवेन्निर्यन्त्रणः सदा ॥
विषमज्वरमन्दाग्निपाण्डुकासभगन्दरान् ।
कपिञ्जल इति ख्यातो लोके कपिशतित्तिरः
॥”
क्रकरः कएर इति लोके । हरिणस्ताम्रवर्ण-
मृगः ।
“शीतैः संग्राहिभिर्द्रव्यैः कुर्य्यात् संग्रहणं
भिषक् ।
लाघवे मनसन्तुष्टावनुलोमं गतेऽनिले ॥
सुविरिक्तं नरं ज्ञात्वा पाचनं पाययेन्निशि ।
इन्द्रियाणां बलं बुद्धेः प्रसादो वह्निदीप्तता ॥
धातुस्थैर्य्यं वयःस्थैर्य्यं भवेद्रेचनसेवनात् ।
प्रवातसेवां शीताम्बु स्नेहाभ्यङ्गमजीर्णताम् ॥
व्यवायं मैथुनं चैव न सेवेत विरेचितः ।
शालिषष्टिकमुद्गाद्यैर्यवागूं भोजयेत् कृताम् ॥
जङ्गालविष्किराणां वा रसैः शाल्योदनं हितम्
।
हरिणैणकुरङ्गर्त्यवातायुमृगमातृकाः ।
राजीवः पृषतश्चैव जङ्गाला सरभादयः ॥”
इति भावप्रकाशः ॥

**विरेचनः**, पुं, (विशेषेण रेचयतीति । वि + रिच् +
णिच् + ल्युः ।) पीलुवृक्षः । इति राज-
निर्घण्टः ॥ (विरेचके, त्रि । यथा, सुश्रुते ।
चिकित्सितस्थाने २४ अध्याये ।
“तेजनं त्वग्गतस्याग्नेः सिरामुखविरेचनम् ॥”)
अग्निः । चन्द्रः । इति मेदिनी ॥
(यथा,
महाभारते । ९ । ३५ । ५३ ।
“तासां तद्वचनं श्रुत्वा दक्षः
सोममथाब्रवीत् ।
समं वर्त्तस्व भार्य्यासु मा त्वां शप्से
विरोचन ! ॥”
रोहितकवृक्षः । श्योनाकप्रभेदः ।
घृतकरञ्जः ।
इति राजनिर्घण्टः ॥ (दीप्तिशालिनि,
त्रि ।
यथा, महाभारते । १२ । ३४३ ।
३४ ।
“तेजसाभ्यधिकौ सूर्य्यात्
सर्व्वलोकविरो-
चनात् ॥”)

**विरोचनसुतः**, पुं, (विरोचनस्य सुतः ।) बलि-
राजः । इति त्रिकाण्डशेषः ॥

**विरोधः**, पुं, (वि + रुध + घञ् ।) शत्रुता । तत्-
पर्य्यायः । वैरम् २ विद्वेषः ३ ।
इत्यमरः ॥ द्वेषः
४ द्वेषणम् ५ । इति शब्दरत्नावली
॥ अनुशयः
६ समुच्छ्र्यः ७ । इति जटाधरः ॥
पर्य्यवस्था ८
विरोधनम् ९ । इति संकीर्णवर्गे
अमरः ॥
(यथा, रघुः । ६ । ४६ ।
“नीपान्वयः पार्थिव एष यज्वा
गुणैर्यमाश्रित्य परस्परेण ।
सिद्धाश्रमं शान्तमिवेत्य सत्त्वै-
र्नैसर्गिकोऽप्युत्ससृजे विरोधः ॥”)
विरोधकरणे दोषो यथा, --
“अथ पुत्त्रं रेणुका सा कृत्वा
स्नेहात् स्ववक्षसि ।
उवाच किञ्चिद्वचनं
परिणामसुखावहम् ॥
अविरोधो भवाब्धौ च
सर्व्वमङ्गलमङ्गलम् ।

| | | |
|---|---|---|
| | | विरोधो नाशबीजञ्च सर्व्वोपद्रवकारणम् ॥ अकर्त्तव्यो विरोधश्च दारुणैः क्षत्त्रियैः सह । प्रतिज्ञा चैषा कर्त्तव्या मदीयं वचनं शृणु ॥” इति ब्रह्मवैवर्त्ते गणपतिखण्डे २९ अध्यायः ॥ |

अपि च ।
"न कुर्य्याद्बहुभिः सार्द्धं विरोधं बन्धुभिस्तथा ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥"
इति कौर्म्मे उपविभागे १५ अध्यायः ॥
न्यायमते साध्यव्यापकाभावप्रतियोगित्वम् । इति चिन्तामणिः ॥
साध्यासामानाधिकरण्यम् । इति दीधितिः ॥ * ॥
प्रभवादिषष्टिसंवत्सरान्तर्गतत्रयस्त्रिंशवर्षम् । यथा, भविष्यपुराणे ।
भैरव उवाच ।
"विषमस्थं जगत् सर्व्वं विरोधे भयसंप्लवम् ।
विकारी सर्व्वतोऽपायो मम वाक्यन्तु नान्यथा ॥"
इति ज्योतिस्तत्त्वम् ॥
अनैक्यः । विपरीतार्थः । यथा, --
"श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी ।
अविरोधे सदा कार्य्यं स्मार्त्तं वैदिकवत् सता ॥"
इति स्मृतिः ॥
(नाशः । यथा, महाभारते । ३ । ३०० । ३ ।
"यस्त्वं प्राणविरोधेन कीर्त्तिमिच्छसि शाश्वतीम् ।
सा ते प्राणान् समादाय गमिष्यति न संशयः ॥"
नाटकोक्तप्रतिमुखाङ्गान्यतमः । यथा, साहित्यदर्पणे । ६ । ३५१ ।
"विरोधश्च प्रतिमुखे तथा स्यात् पर्य्युपासनम् ॥"
विरोधोऽस्त्यस्मिन्निति । विरोध + इनिः ।) प्रभवादिषष्टिसंवत्सरान्तर्गतत्रयोविंशिवर्षम् । यथा, भविष्यपुराणे । भैरव उवाच ।
"अनग्निप्रबला लोका धान्यौषधिप्रपीडनम् ।
जायते मानुषे कष्टं विरोधिनि न संशयः ॥"
इति ज्योतिस्तत्त्वम् ॥
विरोधविशिष्टे, त्रि । (यथा, कुमारे । ५ । १७ ।
"विरोधिसत्त्वोज्झितपूर्ब्बमत्सरं द्रुमैरभीष्टप्रसवार्च्चितातिथि ॥")

**विरोधोक्तिः**, स्त्री, (विरोधस्य उक्तिः ।) परवचनविरोधिवचनम् । तत्पर्य्यायः । विप्रलापः २ विरोधवाक् ३ क्रोधोक्तिः ४ प्रलापः ५ । इति शब्दरत्नावली ॥

**विल**, श स्तुतौ । इति कविकल्पद्रुमः ॥ (तुदा०-पर०-सक०-सेट् ।) स्तुतिरिह आच्छादनम् । श, विलति वस्त्रं लोकः परिदधाति इत्यर्थः । वेलिता । अयं कैश्चिन्न मन्यते । इति दुर्गादासः ॥

**वि(बि)लं**, क्ली, (विल + कः ।) छिद्रम् । इत्यमरः ॥ (यथा, महाभारते । १ । १४९ । १७ ।
"पाण्डवाश्चापि ते सर्व्वे सह मात्रा सुदुःखिताः ।
विलेन तेन निर्गत्य जग्मुर्द्रुतमलक्षिताः ॥")
गुहा । इति मेदिनी ॥ (यथा, कुमारे । ६ । ३९ ।
"जितसिंहभया नागा यत्राश्वा विलयोनयः ।
यक्षाः किंपुरुषाः पौरा योषितो वनदेवताः ॥")

**वि(बि)लः**, पुं, (उच्चैःश्रवा हयः । इति मेदिनी ॥ वेतसः । इति शब्दचन्द्रिका ॥

**वि(बि)लकारी**, [न्] पुं, (विलं करोतीति । कृ + णिनिः ।) मूषकः । इति राजनिर्घण्टः ॥ गर्त्तकारके, त्रि ॥

**विलक्षः**, त्रि, (विशेषेण लक्षयतीति । वि + लक्ष
"अशौचान्ताद्द्वितीयेऽह्नि शय्यां दद्याद्विलक्षणाम् ।
काञ्चनं पुरुषं तद्वत् फलपुष्पसमन्वितम् ॥
संपूज्य द्विजदाम्पत्यं नानाभरणभूषणैः ।
वृषोत्सर्गश्च कर्त्तव्यो देया च कपिला शुभा ॥"
द्विजदम्पतीं पूजयित्वा काञ्चनप्रेतप्रतिकृतिरूपं पुरुषं फलवस्त्रयुतं शय्यायामारोप्य भूषितद्विजदम्पतीभ्यां शय्यां दद्यात् । इति शुद्धितत्त्वम् ॥

**विलग्नं**, क्ली, (विशेषेण लग्नम् ।) मध्यः । यथा, --
"मध्योऽवलग्नं विलग्नं मध्यमोऽथ कटः कटिः ॥"
इति हेमचन्द्रः ॥
जन्मलग्नम् । यथा, --
"गोचरे वा विलग्ने वा ये ग्रहा रिष्टसूचकाः ।
पूजयेत्तान् प्रयत्नेन पूजिताः स्युः शुभावहाः ॥
गोचरे स्वराश्यपेक्षया यदा कदापि । विलग्ने जन्मलग्ने । इति संस्कारतत्त्वम् ॥
मेषादिलग्नमात्रम् । यथा, --
"शुभग्रहार्क्वारे च मृदुक्षिप्रध्रुवेषु च ।
शुभराशिविलग्ने च शुभं शान्तिकपौष्टिकम् ॥"
इति दीपिका ॥
संलग्ने, त्रि । यथा, --
"विलग्नं न स्त्रियां मन्ये त्रिषु स्याल्लग्नमात्रके ॥"
इति मेदिनी ॥

**विलज्जः**, त्रि, (विगता लज्जा यस्य ।) लज्जारहितः । निर्लज्जः । यथा, --
"तनयगतदिनेशे शैशवे सौख्यभागी
न भवति फलभागी यौवने व्याधियुक्तः ।
जनयति सुतमेकं निर्णयं नाशयित्वा
चपलमतिविलज्जः क्रूरकर्म्मा कुचेलः ॥"
इति ज्योतिषे पञ्चमस्थानस्थरविफलम् ॥

तल्लक्षणोदाहरणे यथा, तत्रैव । ३५९ ।
"विरोधो व्यसनप्राप्तिः । यथा, चण्डकौशिके
राजा । नूनमसमीक्ष्यकारिणा मयान्धेनेव
स्फुरच्छिखाकलापो ज्वलनः पद्भ्यां समा-
क्रान्तः ॥" * ॥ अलङ्कारविशेषः । यथा,
साहित्यदर्पणे । १० । ७१८ ।
"क्रियाक्रियाद्रव्याभ्यां यद्‌द्रव्यं द्रव्येण वा मिथः ।
विरुद्धमिव भाषेत विरोधोऽसौ दशाकृतिः ॥")

**विरोधनं**, क्ली, (वि + रुध + ल्युट् ।) विरोधः ।

इत्यमरः ॥ (यथा, कथासरित्सागरे । ५६ । १६९ ।
"ईदृक्पापफलं पुत्त्र मातापित्रोर्व्विरोधनम् ॥"
नाशः । यथा, रामायणे । २ । ३६ । २९ ।
"अदुष्टस्य हि संत्यागः सत्पथे निरतस्य च ।
निर्द्दहेदपि शक्रस्य द्युतिं धर्म्मविरोधनात् ॥"
नाटकोक्तविमर्षाङ्गान्यतमः । यथा, साहित्य-
दर्पणे । ६ । ३७८ ।
"शक्तिः प्रसङ्गः खेदश्च प्रतिषेधो विरोधनम् ॥"
तल्लक्षणादिकं यथा, तत्रैव । ३८७ ।
"कार्य्यात्ययोपगमनं विरोधनमिति स्मृतम् ॥")

**विरोधिनी**, स्त्री, (विरुणद्धि या । वि + रुध +

णिनि । ङीप् ।) विरोधकारिका । यथा, --
"विरोधं कुरुते चान्या दम्पत्योः प्रीयमाणयोः ।
+ पचाद्यच् ।) विस्मयान्वितः । इत्यमरः ॥
(यथा, कथासरित्सागरे । ३९ । १५ ।
"इत्युक्त्वा स विलक्षं तं वैद्यं सूदान्नृपोऽब्रवीत् ।
किं तस्य च्छगलस्यापि मांसशेषोऽपि कश्चन ॥")

**विलक्षणं**, क्ली, (विगतं लक्षणं आलोचनं यत्र ।)

हेतुशून्यास्था । निष्प्रयोजनस्थितिः । यथा, --
"विलक्षणं मतं स्थानं यद्भवेन्निष्प्रयोजनम् ॥"
इति भागुरिः । इत्यमरभरतौ ॥
(यथा, भागवते । १० । ७० । ३८ ।
"यद्विद्यमानात्मतयावभासते
तस्मै नमस्ते स्वविलक्षणात्मने ॥ * ॥)

**विलक्षणः**, त्रि, (विभिन्नं लक्षणं यस्य ।) भिन्नः ।

इति जटाधरः ॥ (यथा, भागवते । ५ । ६ । ६ ।
"अथैवमखिललोकपालसमो विलक्षणैर्जड-
वदभूतवेशभाषाचरितैरविलक्षितभगवत्प्रभाव
इति ॥" * ॥ यथा च भाषापरिच्छेदे । ११४ ।
"अस्मात् पृथगिदं नेति प्रतीतिर्हि विल-
क्षणा ॥"
विशिष्टं लक्षणं यस्याः ।) विशेषलक्षणयुक्तः ।
यथा, मत्स्यपुराणे ।

**विलपनं**, क्ली, (वि + लप + ल्युट् ।) विलापः ।

भाषणम् । विपूर्ब्बलपधातोः अनट्प्रत्ययेन निष्पन्नम् ॥

**विलम्बः**, पुं, (वि + लम्ब + घञ् ।) लम्बनम् ।

गौणः । यथा, देवीपुराणे ।
"अकालेऽप्यथवा काले तीर्थश्राद्धं तथा नरैः ।
प्राप्तैरेव सदा कार्य्यं कर्त्तव्यं पितृतर्पणम् ॥
पिण्डदानं तत्र शस्तं पितॄ णाञ्चातिदुर्ल्लभम् ।
विलम्बो नैव कर्त्तव्यो न च विघ्नं समाचरेत् ॥"
इति प्रायश्चित्ततत्त्वम् ॥
प्रभवादिषष्टिसंवत्सरान्तर्गतद्वात्रिंशबर्षम् । यथा,
भविष्ये ।
"तस्करैः पार्थिवैश्चैव अभिभूतमिदं जगत् ।
अर्घो भवति सामान्यो विलम्बे तु भयं महत् ॥"
इति ज्योतिस्तत्त्वम् ॥

**विलम्बनं**, क्ली, (वि + लम्ब + ल्युट् ।) अशीघ्रम् ।

इति विलम्बितशब्दटीकायांभरतः ॥ (यथा,
हरिवंशे भविष्यपर्व्वणि । ४१ । २२ ।
"आगच्छ त्वरितं कृष्ण न ते कार्य्यं विलम्बनम् ॥")

**विलम्बितं**, त्रि, (वि + लम्ब + क्तः ।) अशीघ्रम् ।

इत्यमरे शीघ्रपर्य्यायेऽविलम्बितशब्ददर्शनात् ॥

| | | |
|---|---|---|
| बधूनां सुहृदां पित्रोः पुत्त्रैः सारणिकैश्च या ।<br>विरोधिनी सा तद्रक्षां कुर्व्वीत बलिकर्म्मणा ॥"<br>इति मार्कण्डेयपुराणे दुःसहवंशोत्पत्तिः ॥<br>**विरोधी**, [न्] पुं, (विरुणद्धीति । वि + रुध + णिनि ।) शत्रुः । इति हलायुधः ॥<br>(यथा,<br>मनुः । ४ । १७ ।<br>"सर्व्वान् परित्यजेदर्थान् स्वाध्यायस्य विरो-<br>धिनः ॥" | | |

(यथा, रघुवंशे । १ । ३३ ।
"विलम्बितफलैः कालं स निनाय मनोरथैः ॥")
मन्दत्वे, क्ली । यथा, --
"विलम्बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात् ॥"
इत्यमरः ॥
मन्दत्वशीघ्रत्व उभयेतरत्वयुतेषु नृत्यविषयक-
गमनविशेषेषु क्रमात्तत्त्वादिनामत्रयं विलम्बिता-
दीनां त्रयाणां लयाणां तत्त्वादिकाः संज्ञाः । इति मधुः ॥ साञ्झे ।
"द्रतामध्ययने वृत्तिं प्रयोगार्थे तु मध्यमाम् ।
शिष्याणामुपरोधार्थे विलम्बितां समाचरेत् ॥"
इति वेदव्यवस्था ॥
नृत्यगीतादौ च प्रत्येकमवसरबोधार्थं कण्ठ-
स्वरादि विलम्बनात् । विलम्बन्ते करचरणादयः
प्रत्येकं गतिविशेषप्रदर्शनायात्रेति विलम्बितम् ।
लवि ङ स्रंसने ध्रौव्यगत्यदनार्थादिति आधारे
क्तः । भावे क्तः इति मुकुटः । इति भरतः ॥
विलम्बगमनशीलपशुः । तद्यथा । द्विरद-
खड्गोष्ट्रमहिषगोगवयचमरवराहाः । इति राजनिर्घण्टः ॥

**विलम्बी**, [न्] त्रि, विलम्बविशिष्टः । इति विलम्ब-
शब्दादिन्प्रत्ययेन निष्पन्नः ॥ (यथा, गीत-
गोविन्दे । ६ । ८ ।
"भवति विलम्बिनि विगलितलज्जा
विलपति रोदिति वासकसज्जा ॥"
विशेषेण लम्बते इति । वि + लम्ब + णिनिः ।
लम्बमानः । यथा, किराते । ५ । ६ ।

वासिनि, त्रि । यथा, महाभारते । १४ । ४३ । २ ।
"अविः पशूनां सर्व्वेषामहिश्च
विलवासिनाम् ॥)
श्रेष्ठ इति शेषः ॥)

**वि(बि)लशयः**, पुं, (विले शेते इति । शी + अच् ।)
सर्पः । इति शब्दरत्नावली ॥ (विलवासिनि,
त्रि । यथा, महाभारते । १४ । ९० । ६ ।
"सकृदुत्सृज्य तं नादं त्रासयानो मृगद्विजान् ।
मानुषं वचनं प्राह धृष्टो विलशयो महान् ॥")

**विलसन्**, [त्] त्रि, (वि + लस + शतृ ।) विलास-
युक्तः । यथा, --
"व्रजसुभ्रुवो विलसत्कलाः ।
अभवन् प्रिया मुरवैरिणः ॥"
इति छन्दोमञ्जरी ॥

**विलापः**, पुं, (वि + लप + घञ् ।) अनुशोच-
नोक्तिः । तत्पर्य्यायः । परिदेवनम् २ ।
इत्यमरः ॥
अपि च ।
"क्रन्दनादौ विलापः स्यात्
परिदेवनमित्यपि ।"
इति शब्दरत्नावली ॥
विलापो दुःखजं वचः ।
इत्युज्ज्वलनीलमणिः ॥
(यथा, गीतगोविन्दे । १ । २९ ।
"उन्मादमदनमनोरथपथिक-
बधूजनजनितविलापे ।
अलिकुलसङ्कुलकुसुमसमूह-
निराकुलवकुलकलापे ॥")

**विलालः**, पुं, यन्त्रम् । इति शब्दचन्द्रिका ॥
विडालः । इत्यमरटीका ॥

**विलासः**, पुं, (वि + लस + घञ् ।) हावभेदः ।

आकृत्यादिभिरन्यादृक् स तदेकात्मरूपकः ।
स विलासः स्वांश इति धत्ते भेदद्वयं पुनः ॥"
तत्र विलासः ।
"स्वरूपमन्याकारं तत्तस्य भाति विलासतः ।
प्रायेणात्मसमं शक्त्या स विलासो निगद्यते ॥
परमव्योमनाथस्तु गोविन्दस्य यथा स्मृतम् ।
परमव्योमनाथस्य वासुदेवश्च यादृशः ॥"
स्वांशः ।
"तादृशो न्यूनशक्तिं यो व्यनक्ति स्वांश ईरितः ।
सङ्कर्षणादिर्मत्स्यादिर्यथा तत्तत् स्वधामसु ॥"
इति भागवतामृतम् ॥

**विलासमन्दिरं**, क्ली, (विलासस्य मन्दिरम् ।)
क्रीडागृहम् । इति केचित् ॥

**विलासविपिनं**, क्ली, (विलासस्य विपिनम् ।)
क्रीडावनम् । यथा, --
"यदीयहलतो विलोक्य विपदं
कलिन्दतनया जलोद्धतगतिः ।
विलासविपिनं विवेशं सहसा
करोतु कुशलं हली स जगताम् ॥"
इति छन्दोमञ्जरी ॥

**विलासविभवानसः**, त्रि, लुब्धः । इति जटाधरः ॥

**विलासिनी**, स्त्री, (विलासोऽस्या अस्तीति ।
विलास + इनिः । ङीप् ।) नारी । इति राज-
निर्घण्टः ॥ (यथा, ऋतुसंहारे । ४ । ३ ।
"न बाहुयुग्मेषु विलासिनीनां
प्रयान्ति सङ्गं वलयाङ्गदानि ॥")
वेश्या । इति धनञ्जयः ॥ (यथा, महाभारते । ३ । ४६ । १४ ।
"सिद्धचारणगन्धर्व्वैः सा प्रयाता विलासिनी ।
बह्वाश्चर्य्येऽपि वै स्वर्गे दर्शनीयतमाकृतिः ॥"
विलासशालिनी । यथा, गीतगोविन्दे । १ । ४० ।
"विलासिनि ! विलसति केलिपरे ॥")

"उदितपक्षमिवारतनिःस्वनैः
पृथुनितम्बविलम्बिभिरम्बुदैः ॥"
पुं, क्ली । वत्सरविशेषः । यथा,
बृहत्संहिता-
याम् । ८ । ३९ ।
"हेमलम्ब इति सप्तमे युगे
स्याद्विलम्बि परतो विकारि च ।
शर्व्वरीति तदनु प्लवः स्मृतो
वत्सरो गुरुवशेन पञ्चमः ॥")

**विलम्भः**, पुं, (वि + लभ + घञ् । नुम् ।) अति-

दानम् । तत्पर्य्यायः । अतिसर्ज्जनम् २ ।
इत्य-
मरः ॥

**विलयः**, पुं, (विशेषेण लीयन्ते पदार्था अस्मि-

न्निति । वि + ली + "एरच् ।" इत्यच् ।)
प्रलयः । इति शब्दरत्नावली ॥ (यथा,
भाग-
वते । ७ । ९ । ३२ ।
"नस्येदमात्मनि जगद्विलयाम्बुमध्ये
शेषे त्मना निजसुखानुभवो निरीहः ॥"
विनाशः । यथा, माघे । ९ । १७ ।
"दिवसोऽनुमित्रमगमद्विलयं
किमिहास्यते वत मयाबलया ॥")

**विलला**, स्त्री, श्वेतबला । इति रत्नमाला ॥

**वि(बि)लवासः**, पुं, (विले वासो यस्य ।) जाहक-

जन्तुः । इति राजनिर्घण्टः ॥

**वि(बि)लवासी**, [न्] पुं, (विले वसतीति । वस +

णिनिः ।) सर्पः । इति शब्दरत्नावली ॥
(रन्ध्र-
इत्यमरः ॥ (यथा, कुमारे । ५ । १५ ।
"लतासु तन्वीषु विलासचेष्टितं
विलोलदृष्टं हरिणाङ्गनासु च ॥")
लीला । इति मेदिनी ॥ (यथा, भागवते
।
३ । २५ । ३५ ।
"तैर्दर्शनीयावयवैरुदार-
विलासहासेक्षितवामसूक्तैः ॥")
"स्त्रीणां विलासादयः शृङ्गारभावजाः
क्रिया
हावशब्देनोच्यन्ते । प्रियसमीपगमने यः
स्थाना-
सनगमनविलोकनेषु विकारोऽकस्माच्च
क्रोध-
स्मितचमत्कारमुखविकूननं स विलासः
। तथा
च ।
'यो वल्लभां चानुगतो विकारो
गत्यासनस्थानविलोकनेषु ।
तथा स्मृतं क्रोधचमत्कृती च
विकूननञ्चास्यगतं विलासः ॥'
तथान्यत्र ।
'तात्कालिको विशेषस्तु
विलासोऽङ्गक्रियादिषु ।'
तात्कालिको दयितालोकनादिभवः ।"
इति
भरतः ॥ * ॥ अपि च ।
"गतिस्थानासनादीनां
मुखनेत्रादिकर्म्मणाम् ।
तात्कालिकन्तु वैशिष्ट्यं विलासः
प्रियसङ्गजम् ॥"
इत्युज्ज्वलनीलमणिः ॥
अन्यच्च ।
"यद्रूपं तदभेदेन स्वरूपेण विराजते ।

**विलासी**, [न्] पुं, (विलासोऽस्यास्तीति । विलास

+ इनिः ।) भोगी । व्यालः । (उभयार्थे प्रमाणं
यथा, कुट्टनीमते । १८ ।
"तस्यां खगपतितनुरिव विलासिनां हृदय-
शोकसंजननी ॥"
"विले आसत इति विलासिनः सर्पाः पक्षे
विल-
सनशीला भोगिनः ।" इति तट्टीका ॥ * ॥)
कृष्णः । अग्निः । चन्द्रः । इति मेदिनी ॥
स्मरः । हरः । इति शब्दरत्नावली ॥
(विलास-
शीले, त्रि । यथा, रघुः । ९ । ४३ ।
"परभृताविरुतैश्च विलासिनः
स्मरवलैरवलैकरसाः कृताः ॥")

**विलीनः**, त्रि, (वि + ली + क्तः ।) प्राप्तद्रवीभाव-

घृतादिः । तत्पर्य्यायः । विद्रुतः २ द्रुतः ३ ।
इत्यमरः ॥ विश्लिष्टः । विशेषेण लीनः ।
यथा, --
"करादस्य भ्रष्टे ननु शिखरिणी दृश्यति
शिशो-
र्विलीनाः स्मः सत्यं नियतमवधेयं तदखिलैः
।
इति त्रस्यद्गोपानुचितनिभृतालापजनित
स्मितं बिभ्रद्देवो जगदवतु गोवर्द्धनधरः ॥"
इति छन्दोमञ्जरी ॥

**विलेखनं**, क्ली, लेखनम् । विपूर्ब्बकलिखधातोरनट्
(ल्युट्) प्रत्ययेन निष्पन्नम् ॥

**विलेपः**, पुं, लेपः । विपूर्ब्बकलिपधातोर्घञ्प्रत्ययेन
निष्पन्नः ॥ (यथा, भागवते । १० । ४२ । १ ।
"अथ व्रजन् राजपथेन माधवः
स्त्रियं गृहीताङ्गविलेपभाजनाम् ।
विलोक्य कुब्जां युवतीं वराननां
पप्रच्छ यान्तीं प्रहसन् रसप्रदः ॥")

**विलेपनं**, क्ली, (विलिप्यन्तेऽङ्गान्यनेनेति । वि + लिप
+ ल्युट् ।) गात्रानुलेपनयोग्यं पिष्टं घृष्टं वा
सुगन्धिद्रव्यम् । तत्पर्य्यायः । गात्रानुलेपनी २
वर्त्तिः ३ वर्णकम् ४ । इत्यमरः ॥ "द्वे गात्रानु-
लेपनयोग्ये वर्त्तितविलेपने ।
'वर्णकादिद्वयं घृष्टचन्दनादिविलेपने ॥'
इति केचित् । विलिप्यतेऽनेन करणेऽनटि
विलेपनम् ।" इति तट्टीकायां भरतः ॥ कुङ्कु-
मादिलेपनम् । तत्पर्य्यायः । समालम्भः २ ।
इति च संकीर्णवर्गे अमरः ॥

**विलेपनी**, स्त्री, (वि + लिप् + कर्म्मणि करणे
वा ल्युट् । ङीप् ।) यवागूः । सुवेशस्त्री । इति
मेदिनी ॥

**विलेपी**, स्त्री, (विलिप्यतेऽसाविति । वि + लिप +
कर्म्मणि घञ् । स्त्रियां ङीष् ।) यवागूः । इत्य-
मरः ॥
"अन्नं पञ्चगुणे साध्यं विलेपी च चतुर्गुणे ।
मण्डश्चतुर्द्दशगुणे यवागूः षड्गुणेऽम्भसि ॥"
"स ददर्श पितॄन् गर्त्ते
लम्बमानानधोमुखान् ।
एकतन्त्ववशिष्टं वै
वीरणस्तम्बमाश्रितान् ।
तं तन्तुञ्च शनैराखुमाददानं विलेशयम् ॥")

**विलोकनं**, क्ली, आलोकनम् । विपूर्ब्बलोकृधातो-
रनट्-(ल्युट्)-प्रत्ययेन निष्पन्नम् ॥ (यथा,
किराते । ३ । १६ ।
"अनुचरेण धनाधिपतेरथो
नगविलोकनविस्मितमानसः ॥")

**विलोकितं**, त्रि, आलोकितम् । विपूर्ब्बलोकधातोः
क्तप्रत्ययेन निष्पन्नम् ॥

**विलोचनं**, क्ली, (विलोच्यते दृश्यतेऽनेनेति । वि +
लोचि + ल्युट् ।) चक्षुः । इति जटाधरः ॥
(यथा, कुमारे । ३ । ६७ ।
"उमामुखे विम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि ॥")
दर्शनञ्च ॥ (विरुद्धे लोचने यस्येति । विकृतनयने,
त्रि । यथा, देवीभागवते । ५ । ३१ । ४३ ।
"यदि ते सङ्गरेच्छास्ति कुरूपा भव भामिनि ।
लम्बोष्ठी कुनखी क्रूरा ध्वाङ्क्षवर्णा विलोचना ॥")

**विलोटकः**, पुं, (विशेषेण लुटतीति । वि + लुट् +
ण्वुल् ।) नलमीनः । इति शब्दचन्द्रिका ॥ वेले
माछ इति भाषा ॥

**विलोडनं**, क्ली, (वि + लुड + ल्युट् ।) मन्थनम् ।

**विलोमजिह्वः**, पुं, (विलोमा जिह्वा यस्य ।) हस्ती ।
इति त्रिकाण्डशेषः ॥

**विलोमवर्णः**, पुं, (विलोमः प्रतिलोमो वर्णः ।)
वर्णसङ्करजातिः । इति स्मृतिः ॥

**विलोमी**, स्त्री, आमलकी । इति मेदिनी ॥

**विलोलः**, त्रि, (विशेषेण लोलः ।) चञ्चलः ।
यथा, --
"कापि विलासविलोलविलोचनखेलनजनित-
मनोजम् ।
ध्यायति मुग्धबधूरधिकं मधुसूदनवदनसरो-
जम् ॥"
इति श्रीगीतगोविन्दे । १ । ४२ ॥

**वि(बि)ल्लं**, क्ली, आलवालम् । यथा, --
"अवघट्टावटौ तुल्यौ तल्लं विल्लं तलञ्च तत् ।
द्विजप्रपालबालं स्यात् केदारः पांशुमर्द्दनः ॥"
इति त्रिकाण्डशेषः ॥
हिङ्गुः । इति शब्दचन्द्रिका ॥

**वि(बि)ल्लमूला**, स्त्री, वाराहीकन्दः । इति शब्द-
चन्द्रिका ॥

**वि(बि)ल्लसूः**, स्त्री, प्रसूतदशपुत्रा । यथा, --
"सप्तपुत्रप्रसूतायां सप्तसूः सुतवस्करा ।
विल्लसूर्द्दशपुत्रा स्यादेकाधिका तु रुद्रसूः ॥"
इति शब्दरत्नावली ॥

**वि(बि)ल्वं**, क्ली, विल्ववृक्षस्य फलम् । इति मेदिनी ॥
(यथा, --
"खलः सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥"
इत्युद्भटः ॥)
पलपरिमाणम् । इति शब्दमाला ॥ (यथा,
सुश्रुते । ६ । १८ ।
"अत ऊर्द्ध्वं प्रवक्ष्यामि पुटपाकप्रसाधनम् ।
द्वौ विल्वमात्रौ श्लक्ष्णस्य पिण्डौ मांसस्य
पेषितौ ।

इति वैद्यकोक्तो भेद इह नादृतः । इति तट्टी-
कायां भरतः ॥ अस्य गुणाः ।
"विलेपी तर्पणी लघ्वी ग्राहिणी क्षुत्तृषा-
पहा ॥"
इति राजवल्लभः ॥

**विलेपी**, [न्] त्रि, लेपनकर्त्ता । विलेपयति यः
इत्यर्थे णिन्प्रत्ययेन निष्पन्नः ॥ (यथा, कथा-
सरित्सागरे । ३७ । २५ ।
"ततः प्रागनुरागेण रञ्जितः स्वान्तरान् मम ।
पश्चात् पृष्ठविलेपिन्या अङ्गरागेण ते करः ॥")

**विलेप्यः**, पुं, (वि + लिप् + यत् ।) यवागूः । इति
शब्दरत्नावली ॥ विलेपनीये, त्रि ॥ (यथा,
भागवते । ११ । २७ । १४ ।
"स्नपनं त्वविलेप्यायामन्यत्र परिमार्जनम् ॥")

**वि(बि)लेवासी**, [न्] पुं, (विले गर्त्ते वसतीति ।
वस + णिनिः । "शयवासेति ।" ६ । ३ । १८ ।
सप्तम्या अलुक् ।) सर्पः । इति शब्दरत्नावली ॥

**वि(बि)लेशयः**, पुं, (विले शेते इति । विले + शी +
"अधिकरणे शेतेः ।" ३ । २ । १५ । इत्यच् । शय-
वासेत्यलुक् ।) सर्पः । इत्यमरः ॥ मूषिकः । इति
जटाधरः ॥ गोधा । शशः । शल्लकी । यथा, --
"गोधाशशभुजङ्गाखुशल्लक्याव्या विलेशयाः ।
विलेशया वातहरा मधुरा रसपाकयोः ।
बृंहणा वद्धविण्मूत्रा वीर्य्योष्णा अपि कीर्त्तिताः ॥"
इति भावप्रकाशः ॥
(गर्त्तशायिनि, त्रि । यथा, महाभारते । १ ।
४५ । ४ ।
आलोडनम् । यथा, --
"राधिका दधिविलोढनस्थिता
कृष्णवेणुनिनदैरथोद्धता ।
यामुनं तटनिकुञ्जमञ्जसा
सा जगाम सलिलाहृतिच्छलात् ॥"
इति छन्दोमञ्जरी ॥

**विलोडितं**, क्ली, (वि + लुड + क्तः ।) तक्रम् ।
इति राजनिर्घण्टः ॥ आलोडिते, त्रि ॥

**विलोपः**, पुं, विशेषेण लोपः । विपूर्ब्बलुपधातो-
र्घञ्प्रत्ययेन निष्पन्नः ॥ (यथा, कामन्दकीय-
नीतिसारे । ५ । ६५ ।
"काले स्थाने च पात्रे च न हि वृत्तिं विलो-
पयेत् ।
एतद्वृत्तिविलोपेन राजा भवति गर्हितः ॥")

**विलोभः**, पुं, विलोभनम् । विशेषलोभः । विपूर्ब्बक-
लुभधातोर्घञ् प्रत्ययेन निष्पन्नः ॥

**विलोमं**, क्ली, अरघट्टकः । इति मेदिनी ॥

**विलोमं**, त्रि, विपरीतम् । तत्पर्य्यायः । प्रति-
कूलम् २ अपसव्यम् ३ अपष्ठुरम् ४ वामम् ५
प्रसव्यम् ६ प्रतीपम् ७ प्रतिलोमम् ८ अपष्ठु ९ ।
इति हेमचन्द्रः ॥ सव्यम् १० विलोमकम् ११ ।
इति जटाधरः ॥ (यथा, बृहत्संहितायाम् ।
९४ । १२ ।
"द्रुतमुकुलितदृष्टिः स्वप्नशीलो विलोमो
भयकृतहितभक्षी नैकशोऽसृक्छकृच्च ॥")

**विलोमः**, पुं, सर्पः । वरुणः । कुक्कुरः । इति
मेदिनी ॥

**विलोमकः**, त्रि, (विलोम एव । स्वार्थे कन् ।)
द्रव्याणां विल्वमात्रन्तु द्रवाणां कुडवो मतः ॥")

**वि(बि)ल्वः**, पुं, (विल भेदने + उल्वादयश्चेति साधुः ।)
फलवृक्षविशेषः । वेल्गाछ इति भाषा ॥
तत्पर्य्यायः । शाण्डिल्यः २ शैलूषः ३ मालूरः ४
श्रीफलः ५ । इत्यमरः ॥ महाकपित्थः ६ गोह-
रीतकी ७ पूतिवातः ८ अतिमङ्गल्यः ९
महाफलः १० । इति रत्नमाला ॥ शल्यः ११
हृद्यगन्धः १२ शालाटुः १३ कर्क्कटाह्वः १४
शैलपत्रः १५ शिवेष्टः १६ पत्रश्रेष्ठः १७
त्रिपत्रः १८ गन्धपत्रः १९ लक्ष्मीफलः २० गन्ध-
फलः २१ दुरारुहः २२ त्रिशाखपत्रः २३
त्रिशिखः २४ शिवद्रुमः २५ सदाफलः २६
सत्यफलः २७ सुभूतिकः २८ समीरसारः २९ ।
अस्य फलगुणाः । मधुरत्वम् । हृद्यत्वम् ।
कषायत्वम् । गुरुत्वम् । पित्तकफज्वरातिसार-
नाशित्वम् । रुचिकारित्वम् । दीपनत्वञ्च ।
अस्य मूलगुणाः । त्रिदोषघ्नत्वम् । मधुरत्वम् ।
लघुत्वम् । वान्तिनाशित्वञ्च ॥ अस्य कोमलफल-
गुणाः । स्निग्धत्वम् । गुरुत्वम् । संग्राहित्वम् ।

दीपनत्वञ्च ॥ अस्य पक्वफलगुणाः ।
मधुरत्वम् ।
गुरुत्वम् । कटुत्वम् । तिक्तत्वम् ।
कषायत्वम् ।
उष्णत्वम् । संग्राहित्वम् । त्रिदोषनाशित्वञ्च
।
इति राजनिर्घण्टः ॥ * ॥ अपि च ।
“श्रीफलस्तुवरस्तिक्तोग्राही
रूक्षोऽग्निपित्तकृत् ।
बालः श्लेष्महरो बल्यो लघुरुष्णश्च पाचनः
॥”
इति भावप्रकाशः ॥ * ॥
किञ्च ।
“विल्वं बालं कषायोष्णं पाचनं वह्निदीपनम्
।
संग्राहि तिक्तकटुकं तीक्ष्णं वातकफापहम् ।
पक्वं सुगन्धि मधुरं दुर्ज्जरं ग्राहि दोषलम् ॥
फलेषु परिपक्वेषु यो गुणः समुदाहृतः ।
विल्वादन्यत्र स ज्ञेयो विल्वमामं गुणोत्तरम्
॥
कफवातामपित्तघ्नी ग्राहिणी विल्वपेषिका
॥”
इति राजवल्लभः ॥
अन्यच्च ।
“काञ्जिके संस्थितं विल्वमग्निसन्दीपनं परम्
॥”
इति वैद्यकम् ॥ * ॥
विल्वोत्पत्त्यादिर्य्यथा, --
“विल्वादिपालनं कुर्य्यात् शुभं भयदमन्यथा
।
श्रीवृक्षान् रोपयेत् पञ्च यदि स्वर्गान्न हीयते ॥
भृगो लक्ष्मीश्च या धेनुर्गोरूपा सा गता
महीम् ।
तद्गोमयभवो विल्वः श्रीश्च तस्मादजायत
॥
निराकृतिं पतिं दृष्ट्वा क्रोधेन महता ततः ।
शप्ता सा उमया देवी सर्व्वभोग्या भवाधमे ॥
ततः संप्रणता भाना मामैवं भवतु प्रिये ।
प्रियत्वं सर्व्वलोकेशि सुरासुरनमस्कृता ॥

यस्ते च्छिन्नस्तनो वामो जायतां पुनरेव
सः ।
ज्ञाता ते परमा भक्तिः पूर्णस्तेन मनोरथः
॥
यश्च च्छिन्नस्तनो दत्तो मल्लिङ्गोपरि ते
शुभे ।
सोऽस्तु वृक्षः क्षितौ पुण्यो नाम्ना श्रीफल
इत्युत ॥
मूर्त्तिमांस्तव वै भक्तिर्वृक्षः श्रीफलनामकः
।
त्वत्कीर्त्तये क्षितावास्तां
यावच्चन्द्रदिवाकरौ ॥
स तरुर्म्मम वै लक्ष्मि परमः सुप्रियो भवेत्
।
तत्पत्रेणैव मे पूजा भविष्यति न चान्यथा
॥
स्वर्णमुक्ताप्रबालादि पुष्पाण्यन्यानि च
ध्रुवम् ।
श्रीफल च्छदलेशस्य कलां नार्हन्ति
कोटिकाम् ॥
यथा मे श्रीफलतरुर्यथा गङ्गाजलं मम ।
तथा प्रियतमं लक्ष्मि त्रिपत्रः श्रीफलच्छदः
॥
इत्युक्तः स तथेत्युक्त्वा महेशोऽन्तर्द्दधे
सखि ।
कपालमोचनक्षेत्रे वृक्षः श्रीफलकोर्ज्जितः
॥”
इति बृहद्धर्म्मपुराणे १० अध्यायः ॥ * ॥
तस्य गोमयोद्भवत्वं यथा, --
“यज्ञानां चेह संभूत्यै यथा हरिहरस्य च ।
गोमयो रोचना क्षीरं मूत्रं दधि घृतं गवाम् ॥
षडङ्गानि पवित्राणि तथा सिद्धिकराणि च
।
उत्थितो विल्ववृक्षस्तु गोमयान्मुनिसत्तम
।
तत्रासौ वसते लक्ष्मीः श्रीवृक्षस्तेन
चोच्यते ॥”
इति वह्निपुराणे वैष्णवधर्म्मे
शुद्धिव्रतनामा-

प्रपश्येत् स शिवं पश्येत् प्रणमेत्तदनन्तरम्
॥
ॐ नमो विल्वतरवे सदा शङ्कररूपिणे ।
सफलानि ममाङ्गानि कुरुष्व शिवहर्षद ॥
मन्त्रेणानेन मालूरमष्टाङ्गैः प्रणमेत् कृती ।
स वैष्णवो मतो भक्तः स मे प्रियतरः परः
॥
शिवपूजक मालूर प्रियस्पर्श महातरो ।
स्पृशामि त्वां महापापसञ्चयान् मे
प्रणाशय ॥
देववृक्षवरश्रेष्ठ स्थानन्ते सुमनोहरम् ।
क्रीडन्त्यागत्य विबुधा मार्ज्जये तत्
प्रसीद मे ॥
मन्त्रेणानेन विल्वस्य दशहस्तस्थलं
मृजेत् ।
सगोमयजलैः प्रातःसमये स तु वैष्णवः ॥
ॐ द्रुमाय श्रीफलाय नमो दशभिरक्षरैः ।
मन्त्रेण पूजयेद्विल्वं जपेच्छक्तिक्रमात्तथा
॥
पुण्यवृक्ष महाभाग मालूर श्रीफल प्रभो ।
महेशपूजनार्थाय तत्पत्राणि चिनोम्यहम् ॥
मन्त्रेणानेन चिनुयाद्विल्वपत्राणि भक्तितः
।
पक्षान्तद्वादशीसायं मध्याह्नभिन्नकालतः
॥
शाखाभङ्गो न कर्त्तव्यो नैवारोहेत्तथा
तरुम् ।
वरमारुह्य चिनुयान्न शाखाभञ्जनं क्वचित्
॥
खण्डितैश्च शिवः पूज्यः पत्रैरन्यैश्च
खण्डितैः ।
षण्मासानन्तरं विल्वपत्रं पर्य्युषितं भवेत
॥
पूज्या एतेन वै देवाः सूर्य्यलम्बोदरौ विना
।
विल्ववृक्षवनं यत्र सा तु वाराणसी पुरी ॥
पञ्च विल्वद्रुमा यत्र तत्र तिष्ठेत् स्वयं हरिः
।
सप्त विल्वद्रुमा यत्र तत्र दुर्गायुतो हरः ॥

माता त्वं सर्व्वलोकानामबलानां विशेषतः ।
एवमात्मवशां कृत्वा शापमोक्षमयाचत ॥
वरं ददौ च सा कामं शापमोक्षप्रदं नृप ।
क्षीराब्धौ त्वं भृगाङ्केन सह गोभिर्धनेन च ॥
वसस्व मथने यावत् ततो विष्णुमवाप्स्यसि
।
पतिं त्वं सर्व्वलोकानां पूज्यं श्रेष्ठं महाबलम्
॥
तस्य वक्षःस्थिता भद्रे दुष्टा त्वं विचरिष्यसि
।
लोकभोग्या च भूतित्वादन्त्यजेषु नृपेषु च ॥
न जातिरूपशौर्य्यादि न वेश्म न शुभा मतिः
।
भविष्यति यदा चेह चञ्चला जलबिन्दुवत् ॥
विल्ववृक्षः प्रियः शम्भोस्तव योनिर्भविष्यति
।
सर्व्वपुष्पोत्तमश्रेष्ठो देवाहारो मनोरमः ॥ * ॥
अच्छेद्यः सर्व्वलोकानां छेदान्नाशः सदा
नृणाम् ।
ये च पापा दुराचाराः श्रीतरोश्छेदकारिणः ।
ते त्ववीच्यादिनरके पात्यन्ते ब्रह्मणो दिनम्
॥
सुदुःखिता भविष्यन्ति नरा दुष्कुलिनः सदा
।
तत्र देशे भयं नित्यं चिरं राजा न जीवति ।
न च द्रव्यपतिः कश्चिद्विल्ववृक्षस्य छेदकः
॥
क्रियते यत्र विच्छेदः सपुष्पफलिनस्तरोः ।
अनावृष्टिभयं घोरं तस्मिन् देशे प्रजायते ॥”
इति वह्निपुराणे वामनप्रादुर्भावनामाध्यायः ॥
*
मतान्तरे तस्योत्पत्तिर्यथा, --
शिव उवाच ।
“मातः समुद्रतनये मा मा च्छिन्धि स्तनं
परम् ।
ध्यायः ॥ * ॥
देव्युवाच ।
“वैशाखशुक्लपक्षस्य तृतीयायां सखि
त्वयम् ।
जातो वै श्रीफलतरुर्म्माहात्म्यं तस्य
कथ्यते ॥
जाते तु श्रीफलतरौ देवाः सर्व्वे सवासवाः
।
ब्रह्मा नारायणश्चापि देवपत्न्यः समागताः
॥
ददृशुः स्निग्धविटपं त्रिपत्रैर्मृदुलैर्युतम् ।
दीप्यमानं तेजसैव शिवरूपं शिवप्रदम् ॥
प्रणेमुः सिषिचुस्तत्र वासञ्चक्रुः
सुखान्विताः ।
तद्रक्षणाय भगवानुवाच विष्णुरव्ययः ॥
विष्णुरुवाच ।
अयं नाम्ना विल्व इति मालूरः
श्रीफलस्तथा ।
शाण्डिल्यश्चाथ शैलूषः शिवः पुण्यः
शिवप्रियः ॥
देवावासस्तीर्थपदः पापघ्नः कोमलच्छदः
।
जयो विजयनामा च विष्णुस्त्रिनयनो वरः
॥
धूम्राक्षः शुक्लवर्णश्च संयमी श्राद्धदेवकः
।
इत्येकविंशतिं नाम्नां दधात्वेष तरूत्तमः
॥ * ॥
धनुःशतञ्चास्य मूलात् खञ्चाग्रात्तीर्थमुच्यते
।
अधो भूमेस्तथा तीर्थमतस्तीर्थत्रयं सखि
॥
ऊद्र्ध्वपत्रं हरो ज्ञेयः पत्रं वामं विधिः
स्वयम् ।
अहं दक्षिणपत्रञ्च त्रिपत्रदलमित्युत ॥
अस्य च्छायाञ्च पत्रञ्च लङ्घयेन्न पदा
स्पृशेत् ।
हरते लङ्घनादायुः पदा स्पर्शात् श्रियं हरेत्
॥
पद्मपुष्पसहस्रस्य फलपत्रसमापि च ।
एको विल्वतरुर्यत्र तत्र शम्भुर्म्मया सह ।
विल्ववृक्षा यत्र दश तत्र शम्भुर्गणैः सह ॥
एतान्युक्तानि तीर्थानि देवाः सर्व्वे
मरुद्गणैः
यत्र वाट्यां गृहस्थस्य कोण ईशाननामके
।
जायते श्रीफलतरुर्न तत्र विपदः क्वचित्
॥
पूर्ब्बस्यां सुखदः स स्याद्दक्षिणे
यमभीतिहा ।
पश्चिमे च प्रजादायी वृक्षो विल्व उदाहृतः
।
श्मशाने च नदीतीरे प्रान्तरे वा वनान्तरे ।
विल्ववृक्षतलं प्रोक्तं सिद्धपीठस्थलं सुधीः
॥
न मध्यप्राङ्गणे वृक्षं स्थापयेत्
श्रीफलाख्यकम् ।
दैवाद्यदि प्रजायेत तदा शिववदर्च्चयेत् ॥
चैत्रादिचतुरो मासान् शम्भवे परमात्मने ।
दत्तं स्याद्विल्वपत्रैकं लक्षधेनुसमं सुराः ॥
मध्याह्नकाले ये मर्त्या विल्वं कुर्य्युः
प्रदक्षिणम् ।
तैः सुमेरुर्गिरिवरः कृत एव प्रदक्षिणम् ॥
न च्छिन्द्यात् श्रीफलतरु न दहेत्
काष्ठमेव च ।
विना ब्राह्मणयज्ञार्थं पतितो विल्वविक्रयी
॥
पक्वविल्वसमुद्भूष्टं यो धत्ते मूद्र्ध्नि
मानवः ।
यमाधिकारो नात्र स्यात् हृतः
पापोपपातकैः ॥
विल्वपत्रं फलं बीजं भूमौ पतितमीश्वरः ।
स्वयं गृह्णाति शिरसा वैयर्थ्यभयशङ्कितः
॥
चैत्रादिचतुरो मासान् सिञ्चेद्विल्वतरु कृती
।
यथा स्निग्धो भवेद्वृक्षस्तथा तत्पितरोऽपि
च ।
चैत्रादिचतुरो मासान् सदा भ्रमति शङ्करः
।
नवीनविल्वपत्रार्थी भुक्तिमुक्तिप्रदायकः ॥

| | | |
|---|---|---|
| | दर्शने प्रणतौ स्पर्शे स्थानसम्मार्ज्जने तथा ।<br>पूजने चयने दाने क्रमान्मन्त्रानुदीरयेत् ॥<br>विल्ववृक्ष महाभाग महेशस्य सदा प्रियः ।<br>शिवदर्शनकज्योतिः प्रसीदाब्धिसुतास्तन ॥<br>नर एतेन मत्रेण प्रफुल्लाक्षः प्रगे शुभम् । | हरिद्रानगरे यत्र वैद्यनाथो महेश्वरः ।<br>तत्राक्षयो विल्ववृक्षः स्वर्णवृक्ष उदाहृतः ॥ |

कामरूपे कामतरुः
काश्यामुक्तस्तथादिमः ।
काञ्चीपुरे पुरः प्रोक्तः
श्रीफलोऽक्षयपुण्यदः ।
तेऽपि तीर्थविशेषाः स्युस्तीर्थेष्वपि
सदातुलाः ॥
देव्युवाच ।
एतस्मिन्नेव काले तु शम्भुरागत्य वै
सखि ।
ब्रह्मणा विष्णुना पत्रैः पूजितः
श्रीफलैरभूत् ॥
ततः सर्व्वे यथास्थानं
जग्मुर्नारायणादयः ।
कथितोऽयं मया सख्यौ
विल्ववृक्षस्तरूत्तमः ॥
अयं वां संप्रोक्तः
शिवतरुकथापुण्यनिचयः
पवित्रः श्रोतव्यः श्रवणरमणीयः खलु
सताम् ।
शिवे विष्णौ भेदापहरण उदारः
सुमनसां
सुसेव्यः संपाव्यः प्रभवति शिवस्यापि
निकटः ॥”
इति च बृहद्धर्म्मपुराणे
विल्ववृक्षमाहात्म्यम्
११ अध्यायः ॥ * ॥ तन्त्रमते
तस्योत्पत्तिर्यथा, --
देव्युवाच ।
“कथं सा विष्णुवनिता विल्ववृक्षो बभूव
ह ।
ज्योतीरूपं मदंशं प्रार्थिता ब्रह्मादिभिः
सदा ॥
तत्र मेऽनुग्रहाद्वाणी सर्व्वेषां प्रियतां गता
।
विष्णोरतिप्रिया नित्यं साभूत् सरस्वती
सदा ॥
तादृक् प्रीतिर्न लक्ष्म्याञ्च जायते
केशवस्य च ।

समीपे स च चार्व्वङ्गि विल्ववृक्षो यदि प्रिये ।
काशीपुरसमं तत्तु तत्र प्राणान् त्यजेद्यदि ।
किन्तस्य कोटितीर्थेन काशीवासेन किं प्रिये
॥”
इति पुरश्चरणरसोल्लासे १० पटलः ॥ * ॥
तद्दानविधिर्यथा, --
“पत्रं वा यदि वा पुष्पं फलं नेष्टमधोमुखम् ।
यथोत्पन्नं तथा देयं विल्वपत्राण्यधोमुखम् ॥”
इति मातृकातन्त्रे ५५ पटलः ॥
श्रीशिव उवाच ।
“शृणु देवि प्रवक्ष्यामि रहस्यं त्रिजटात्मकम् ।
पत्रं ब्रह्ममयं देवि अद्भुतं वरवर्णिनि ॥
श्रीशैलशिखरे जातः श्रीफलः श्रीनिकेतनः ।
विष्णुप्रीतिकरश्चैव मम प्रीतिकरः सदा ॥
ब्रह्मविष्णुशिवाः पत्रे वृन्तञ्च शक्तिरूपिणी ।
वृन्तमूले तु वज्रं स्यात् पत्रे ब्रह्मपदं प्रिये ॥
त्रिजटापत्रकैकेन हरं वा हरिमर्च्चयेत् ।
कैवल्यं तस्य तेनैव शक्तिपूजा विशेषतः ॥
पत्रं पुष्पं फलं तोयं नैवेद्यं धूपदीपकम् ।
दत्त्वा यद्यत् फलं प्राप्तं तस्मात् कोटिगुणं
भवेत् ॥
सर्व्वैरर्च्चनतो देवि त्रिजटामेकमर्पणम् ।
कैवल्यदो हरिश्चैव दास्येऽहं त्वां स्वरूपताम्
॥
त्वयि कैवल्यदं ज्ञानं धर्म्मकामार्थदं प्रिये ।
वज्रहीनमिदं देवि प्राप्नुयाद्वाञ्छितं फलम् ॥
सवज्रे म्रियते नूनं वज्राघातेन पार्व्वति ।
तस्माच्च साधकेन्द्रेण वज्रहीनं प्रदापयेत् ॥” *
॥
विल्वपत्रघ्राणग्रहणानन्तरगमनफलम्। यथा,
“घ्राणं गृहीत्वा यो गच्छेत् सर्व्वसिद्धिमवा-
प्नुयात् ।
ऊर्द्ध्वं सुदर्शनं रक्षेदधः पाशुपतस्तथा ।
पुरो माहेश्वरी रक्षेत् पृष्ठे च शूलधारिणी ।
दक्षपार्श्वे च श्रीनाथो वामपार्श्वे प्रजापतिः ।
चन्द्रसूर्य्यौ धृतौ छत्रमहं पादौ करौ सदा ॥”
इति ज्ञानभैरवतन्त्रे शिवपार्व्वतीसंवादे ६
पटलः ॥ (अस्य गुणाः यथा, --
“बालं विल्वफलं ग्राहि दीपनम्पाचनङ्कटु ।

**विवक्षा**, स्त्री, वक्तुमिच्छा । सनन्तवचधातोरप्र-
त्ययेन निष्पन्नमिदम् । यथा ।
विवक्षावशात्
कारकाणि भवन्ति । इति व्याकरणटीका
॥
शक्तिः । यथा, --
“प्रकृत्यर्थोऽपि खल्वेतदुद्दिश्यस्य
विशेषणम् ।
संख्यया तुल्यनीतित्वादविवक्षां प्रपद्यते
॥”
एत्येकादशीतत्त्वम् ॥

**विवक्षितः**, त्रि, वक्तुमिष्टः । सनन्तवचधातोः क्तप्र-
त्ययेन निष्पन्नमिदम् । शक्यार्थः । यथा ।
उपा-
देयगतायाः संख्याया विवक्षितत्वं युक्तम्
। अनु-
पादेयगता संख्या न विवक्षिता । इति
माधवा-
चार्य्यः । इत्येकादशीतत्त्वम् ॥

**विवदमानः**, त्रि, विवादकर्त्ता । विपूर्व्ववदधातोः
शानप्रत्ययेन निष्पन्नः ॥

**विवधः**, पुं, (विविधो वधो हननं गमनं वा यत्र ।)
पर्य्याहारः । स तु धान्यतण्डुलादिः ।
मार्गः ।
पन्थाः । इत्यमरभरतौ ॥ व्रीहितृणादेः
पर्य्या-
हरणम् । इति स्वामी ॥ उपरितो
बद्धशिक्य-
स्कन्धबाह्यकाष्ठम् । वाँक् इति ख्यातम् ।
इति
भानुदीक्षितः ॥ भारः । इति
मुकुटधृतविश्वः ॥

**विवधिकः**, पुं, (विवधेन हरतीति । विवध +
“विभाषा विवधवीवधात् ।” ४ । ४ । १७
। इति

इतिचिन्तापरा लक्ष्मीर्ययौ श्रीशैलमन्दिरम् ॥
प्राप्य मल्लिङ्गमेकान्तं तपस्तेपेऽतिदारुणम् ।
तथापि यदि नैवाभूत् कृपा मे परमेश्वरि ॥
तदा सा वृक्षरूपेण स्थिता लिङ्गप्रिया सती ।
पत्रैः पुष्पैः फलैः स्वीयैः पूजयामास सन्ततम् ॥
कोटिवर्षं महादेवि ततो मेऽनुग्रहोऽभवत् ।
तेनैवानुग्रहेणैव विष्णोर्वक्षःस्थिताभवत् ॥
सदैव परमेशानि विप्रवश्या सदैव हि ।
अतस्तु कारणाद्देवि तद्रूपेण हरिप्रिया ॥
सदैव पूजयेन्मां सा मद्भक्ता सातुला शिवे ।
अतस्तं वृक्षमाश्रित्य तिष्ठामि च दिवानिशम् ॥
सर्व्वतीर्थमयो देवि सर्व्वदेवमयः सदा ।
श्रीवृक्षः परमेशानि अतएव न संशयः ॥ * ॥
तत्फलैस्तत्प्रसूनैर्व्वा तत्पत्रैर्यः प्रपूजयेत् ।
तत्काष्ठचन्दनैर्व्वापि स मे भक्तः स मे प्रियः ॥
तत्काष्ठचन्दनं भाले यो धारयति सम्भ्रमात् ।
तत्तनुं शिवबुद्ध्या सा नमेद्देवी मुदान्विता ॥
अतस्तच्चन्दनं देवि न धारयति कश्चन ।
तत्पत्रं तत्प्रसूनं वा कदापि धारयेन्नहि ॥
विल्वमूले महेशानि प्राणांस्त्यजति यो नरः ।
रुद्रदेहो भवेत् सत्यं पापकोटियुतोऽपि सन् ॥”
इति योगिनीतन्त्रे पूर्ब्बखण्डे ५ पटलः ॥ * ॥

कषायोष्णं लघु स्निग्धं तिक्तं वातकफापहम् ॥
पक्वं गुरु त्रिदोषं स्याद्दुर्ज्जरं पूतिमारुतम् ।
विदाहि विष्टम्भकरं मधुरं वह्निमान्द्यकृत् ॥
फलेषु परिपक्वं यद्गुणवत्तदुदाहृतम् ।
विल्वादन्यत्र विज्ञेयमामन्तद्धि गुणाधिकम् ।
द्राक्षाविल्वशिवादीनां फलं शुष्कं गुणाधिकम् ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**वि(बि)ल्वपेषिका**, स्त्री, (विल्वस्य पेषिका ।) शुष्कविल्वखण्डम् । वेलशुँठा इति भाषा । यथा, --
“कफवातामशूलघ्नी ग्राहिणी विल्वपेषिका ।”
इति राजनिर्घण्टः ॥

**वि(बि)ल्वा**, स्त्री, (विल्व + टाप् ।) हिङ्गुपत्री । इति राजनिर्घण्टः ॥ (गुणादयोऽस्या हिङ्गुपत्रीशब्दे ज्ञातव्याः ॥)

छन् ।) वैवधिकः । इत्यमरटीका सारसुन्दरी ॥

**विवरं**, क्ली, (विवृणोतीति । वि + वृ + पचाद्यच् ।) छिद्रम् । इत्यमरः ॥ (यथा, रघुः । ११ । १८ ।
“यच्चकार विवरं शिलाघने ताडकोरसि स रामसायकः ।
अप्रविष्टविषयस्य रक्षसां द्वारतामगमदन्तकस्य तत् ॥”)
दोषः । इति मेदिनी ॥ (यथा, महाभारते । १ । १४१ । १७ ।
“एकाग्रः स्यादविवृतो नित्यं विवरदर्शकः ।
राजन्राज्यं सपत्नेषु नित्योद्विग्नः समाचरेत् ॥”
अवकाशः । यथा, भागवते । ५ । १० । १२ ।
“विशेषबुद्धेर्विवरं मनाक् च पश्याम यन्न व्यवहारतोऽन्यत् ॥”)

**विवरणं**, क्ली, (वि + वृ + ल्युट् ।) व्याख्या । इति हलायुधः ॥

**विवरनालिका**, स्त्री, (विवरयुक्तं नालं यस्याः ।) वेणुः । इति त्रिकाण्डशेषः ॥

**विवर्णः**, पुं, (विरुद्धो वर्णः ।) नीचः । इत्यमरः । २ । १० । १६ ॥ (यथा, मार्कण्डेये । ४१ । १० ।
“भैक्षचर्य्यव विवर्णेषु जघन्या वृत्तिरिष्यते ॥”
त्रि, विकृतो वर्णो यस्य ।) मलिनः ॥ (यथा, रामायणे । २ । २६ । ८ ।
“विवर्णवदनं दृष्ट्वा तं प्रस्विन्नममर्षणम् ।
आह दुःखाभिसन्तप्ता किमिदानीमिदं प्रभो ॥”)

**विवर्त्तः**, पुं, (वि + वृत् + घञ् ।) समुदायः । अपवर्त्तनम् । नृत्यम् । इति विश्वः ॥ (प्रतिपक्षः ॥

| | | |
|---|---|---|
| अपि च ।<br>“विल्ववृक्षं तथा देवि भगवान् शङ्करः स्वयम् ।<br>विल्ववृक्षतले स्थित्वा यदि प्राणांस्तजेत् सुधीः ॥<br>तत्क्षणान्मोक्षमाप्नोति किन्तस्य तीर्थकोटिभिः ।<br>यत्र ब्रह्मादयो देवास्तिष्ठन्ति शक्तिहेतवे ॥<br>विल्ववृक्षतले स्थानं यदि विष्ठादिपूरितम् ।<br>तदेव शाङ्करं क्षेत्रं सर्व्वतीर्थमयं सदा ॥<br>सर्व्वपीठमयं तत्तु सर्व्वदेवमयं सदा ।<br>न त्यजेत् शाङ्करं क्षेत्रं न च गङ्गां त्यजेत् प्रिये ॥ | | यथा, नैषधे । ३ । ६४ ।<br>“ईशाणिमैश्वर्य्यविवर्त्तमध्ये<br>लोकेशलोकेशयलोकमध्ये ॥” |

समवायिकारणविसदृशकार्य्योत्पत्तिः। यथा, सांख्यतत्त्वकौमुद्याम्।
“एकस्य सतो विवर्त्तः कार्य्यजातं नतु वस्तु सत् ॥”)

**विवर्त्तनं**, क्ली, परिभ्रमणम्। विपूर्ब्बकवृतधातो-
रनट् (ल्युट्) प्रत्ययेन निष्पन्नम् ॥ (यथा, किराते। ५। ४०।
“कथयति शिवयोः शरीरयोगं
विषमपदा पदवी विवर्त्तनेषु ॥”)

**विवशः**, त्रि, (विरुद्धं वष्टीति। वि + वश + अच्।)
अवश्यात्मा। अरिष्टदुष्टधीः। इति मेदिनी ॥
द्वे आसन्नमरणसूचितलक्षणेन दूषितबुद्धौ।
विरुद्धं वष्टि विवशः अल्।
आसन्नमरणख्यापकं
लिङ्गमरिष्टम्। तेन दुष्टा धीर्यस्य स तथा।
इत्यमरटीकायां भरतः ॥

**विवस्वती**, स्त्री, सूर्य्यनगरी। इति मेदिनी ॥

**विवस्वान्**, [त्] पुं, (विशेषेण वस्ते आच्छादय-
तीति। वि + वस् + क्विप्। विवस्तेजोऽस्या-
स्तीति। विवस् + मतुप्। मस्य वः। “तसौ मत्वर्थे।” १। ४। १९। इति
भत्वादुत्वाभावः।)
सूर्य्यः। (यथा, किराते। ५। ४८।
“भवति दीप्तिरदीपितकन्दरा
तिमिरसंवलितेव विवस्वतः ॥”)
अर्कवृक्षः। इत्यमरः ॥ देवता। इति मेदिनी ॥
अरुणः। इति शब्दरत्नावली ॥ वैवस्वतमनुः।
इत्यजयः ॥ (मनुष्यः। इति निघण्टुः। २। ३। २४ ॥
“वस निवासे इत्यस्यात् ‘अन्येभ्योऽपि दृश्यन्ते’
इति विच्। दृशिग्रहणात् भावे भवति। विविधं
वसनं विवः। तद्वन्तो विवस्वन्तः।
सर्व्वस्यापि
मनुष्यस्य यत्किञ्चित् विवसनमस्ति।” इति
तट्टीका ॥ * ॥ परिचरणशीले, त्रि। यथा,

सम्भूय च समुत्थानं दत्तस्यानपकर्म्म च ॥
वेतनस्यैव चादानं संविदश्च व्यतिक्रमः।
क्रयविक्रयानुशयो विवादः स्वामिपालयोः ॥
सीमाविवादधर्म्मश्च पारुष्ये दण्डवाचिके।
स्तेयञ्च साहसञ्चैव स्त्रीसंग्रहणमेव च ॥
स्त्रीपुंधर्म्मो विभागश्च द्यूतमाह्वयमेव च।
पदान्यष्टादशैतानि व्यवहारस्थिता विदुः ॥”
इति मनुः ॥
अस्यार्थः। स्वधनस्यान्यस्मिन्नर्पणरूपो निक्षेपः।
अस्वामिना च कृतो विक्रयः। सम्भूय बणिगा-
दीनां क्रियानुष्ठानम्। दत्तस्य धनस्यापात्र-
बुद्ध्या क्रोधादिना वा ग्रहणम्। कर्म्मकारस्य
भृतेरदानम्। कृतव्यवस्थातिक्रमः। क्रये विक्रये
च कृते पश्चात् या विप्रतिपत्तिः। स्वामिपशु-
पालयोर्व्विवादः।
ग्रामादिसीमाविप्रतिपत्तिः।
वाक्पारुष्यं आक्रोशनादि। दण्डपारुष्यं ताड-
नादि। स्तेयं निह्नवेन धनग्रहणम्। साहसं
प्रसह्य धनहरणादि स्त्रियाश्च परपुरुषसम्पर्कः।
स्त्रीसहितस्य पुंसो धर्म्मव्यवस्था। पैतृकादि-
धनस्य विभागः। द्यूतं अक्षादिक्रीडा। आहूय
पण्यव्यवस्थापूर्व्वकं पक्षिमेषादिप्राणियोधनम्।

अपि च।
“गृहीतविद्यो गुवरे दत्त्वा च गुरुदक्षिणाम्।
गार्हस्थ्यमिच्छन् भूपाल कुर्य्याद्दारपरिग्रहम् ॥
वर्षैरेकगुणां भार्य्यामुद्वहेत्त्रिगुणः स्वयम्।
नातिकेशामकेशां वा नातिकृच्छ्रां न पिङ्गलाम् ॥
निसर्गतोऽधिकाङ्गीं वा न्यूनाङ्गीमपि नोद्वहेत्।
अविशुद्धां सरोगां वाकुलजां वातिरोगिणीम् ॥
न दुष्टां दुष्टवाचाटां वाङ्गिनीं पितृमातृतः।
न श्मश्रुव्यञ्जनवतीं न चैव पुरुषाकृतिम् ॥
न घर्घरस्वरां क्षामवाक्यां काकस्वरां न च।
नानिबद्धेक्षणां तद्वद्वृत्ताक्षीं नोद्व हेद्बुधः ॥
यस्याश्च रोमशे जङ्घे गुल्फौ चैव तथोन्नतौ।
कूपौ यस्या हसन्त्याश्च गण्डयोस्ताञ्च नोद्वहेत् ॥
नातिरूक्षच्छविं पाण्डुकरजामरुणेक्षणाम्।
आपीनहस्तपादाञ्च न कन्यामुद्वहेद्बुधः ॥
न वामनां नातिदीर्घां नोद्वहेत् संहतभ्रुवम्।
न चातिच्छिद्रदशनां न करालमुखीं नरः ॥
पञ्चमीं मातृपक्षाच्च पितृपक्षाच्च सप्तमीम्।
गृहस्थश्चोद्वहेत् कन्यां न्यायेन विधिना नृप ॥
ब्राह्म्यो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः।
गान्धर्व्वराक्षसौ वान्यौ पैशाचश्चाष्टमोऽधमः ॥

ऋग्वेदे । १० । ६५ । ६ ।
"देवेभ्यो दाशद्धविषा विवस्वते ॥"
"हविषा अन्नेन देवान् विवस्वते परिचरते ।"
इति तद्भाष्ये सायणः ॥)

**विवाकः**, त्रि, विवेचनकर्त्ता । यथा, --

"अर्थिप्रत्यर्थिनोर्व्वचनं विरुद्धाविरुद्धं सभ्यैः सह विविनक्ति विवेचयति वा विवाकः ।" इति मिताक्षरा ॥

**विवादः**, पुं, विरुद्धो वादो विवादः । स च धन-

विभागादिविषयन्यायादिः । इति भरतः ॥
तत्पर्य्यायः । व्यवहारः २ । इत्यमरः ॥
ऋणादि-
न्यायः ३ । इति जटाधरः ॥
"ऋणादिदायकलहे द्वयोर्ब्बहुतरस्य वा ।
विवादो व्यवहारश्च द्वयमेतन्निगद्यते ॥"
इति शब्दरत्नावली ॥ * ॥
मात्रादिना विवादनिषेधो यथा, --
"आचरेत् सर्व्वधर्म्मं तद्विरुद्धन्तु न चाचरेत् ।
मातापित्रतिथीत्युच्चैर्विवादं नाचरेत् गृही ॥"
इति गारुडे ९६ अध्यायः ॥ * ॥
अष्टादश विवादस्थानानि यथा, --
"तेषामाद्यमृणादानं निःक्षेपोऽस्वामिविक्रयः ।

इति कुल्लूकभट्टः ॥ (कलहः । यथा, रघुः
।
७ । ५३ ।
"परस्परेण क्षतयोः प्रहर्त्रो-
रुत्क्रान्तवाय्वोः समकालमेव ।
अमर्त्त्यभावेऽपि कयोश्चिदासी-
देकाप्सरःप्रार्थितयोर्बिवादः ॥")

**विवादानुगतः**, त्रि, (विवादं अनु गतः ।) विवाद-

कर्त्ता । यथा, मिताक्षरायाम् ।
"विवादानुगतं पृष्ट्वा ससभ्यस्तत्
प्रयत्नतः ।
विचारयति येनासौ प्राड्विवाकस्ततः
स्मृतः ॥"

**विवादी**, [न्] त्रि, (विवादोऽस्यास्तीति । विवाद

+ इनिः ।) विवादकर्त्ता । यथा, --
"अनुभावी च यः कश्चित् कुर्य्यात्
साक्ष्यं
विवादिनाम् ॥"
इति व्यवहारतत्त्वम् ॥

**विवाहः**, पुं, (विशिष्टं वहनम् । वि + वह +

घञ् ।) उद्वाहः । दारपरिग्रहः ।
तत्पर्य्यायः ।
उपयमः २ परिणयः ३ उद्वाहः ४
उपयामः ५
पाणिपीडनम् ६ । इत्यमरः ॥ दारकर्म्म
७
करग्रहः ८ । इति शब्दरत्नावली ॥
पाणि-
ग्रहणम् ९ निवेशः १० पाणिकरणम् ११
।
इति जटाधरः ॥ स चाष्टविधः । यथा, --
"ब्राह्म्यो विवाह आहूय दीयते
शक्त्यलङ्कृता ।
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम्
॥
यज्ञस्थायर्त्विजे दैवमादायार्षन्तु गोयुगम्
।
चतुर्द्दशप्रथमजः पुनात्युत्तरजश्च षट् ॥

एतेषां यस्य यो धर्म्मो वर्णस्योक्तो
मनीषिभिः ।
कुर्व्वीत दाराहरणं तेनान्यं परिवर्ज्जयेत्
॥
स धर्म्मचारिणीं प्राप्य गार्हस्थ्यं
सहितस्तया ।
समुद्वहेद्ददात्येतत् सम्यगूढं महाफलम्
॥"
इति विष्णुपुराणे ३ अंशे १० अध्यायः
॥ * ॥
अन्यच्च ।
याज्ञवल्क्य उवाच ।
"शृण्वन्तु मुनयो धर्म्मान् गृहस्थस्य
यतव्रताः ।
गुरवे च धनं दत्त्वा स्नात्वा च तदनुज्ञया
॥
अविप्लुतब्रह्मचर्य्यो लक्षण्यां
स्त्रियमुद्वहेत् ।
अनन्यपूर्व्विकां कान्तामसपिण्डां
यवीयसीम् ॥
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ।
पञ्चमात् सप्तमादूर्द्ध्वं मातृतः
पितृतस्तथा ॥
द्विपञ्चनवविख्यातात् श्रोत्रियाणां
महाकुलात् ।
सवर्णः श्रोत्रियो विद्वान् वरदोषान्वितो न
च ॥
यदुच्यते द्विजातीनां शूद्रादारोपसंग्रहः ।
न तन्मम मतं यस्मात्तत्रायं जायते
स्वयम् ॥
तिस्रो वर्णानुपूर्ब्बेण द्वे तथैका यथाक्रमम्
।
ब्राह्मणक्षत्त्रियविशां भार्य्या वा
शूद्रजन्मनः ॥
ब्राह्मो विवाह आहूय दीयते
शक्त्यलङ्कृता ।
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम्
॥
यज्ञस्थायर्त्विजे दैवमादायार्षस्तु गोयुगम्
।
चतुर्द्दश प्रथमजः पुनात्युत्तरतश्च षट् ॥

|  |  |  |
| --- | --- | --- |
|  | इत्युक्त्वा चरतां धर्म्मं सह या दीयतेऽर्थिने ।<br>सकायः पावयेत्तज्जः षड्वंश्यांश्च सहात्मना ॥<br>आसुरो द्रषिणादानात् गान्धर्व्वः समयान्मिथः ।<br>राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात् ॥”<br>इति याज्ञवल्क्यः ॥ * ॥ | इत्युक्त्वा चरतां धर्म्मं सह या दीयतेऽर्थिने ।<br>सकायः पावयेत्तज्जः षड्वंश्यानात्मना सह ॥<br>आसुरो द्रविणादानात् गान्धर्व्वः समयान्मिथः ।<br>राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात् ॥<br>चत्वारो ब्राह्मणस्याद्यास्तथा गान्धर्व्वराक्षसौ ।<br>राज्ञस्तथासुरो वैश्ये शूद्रे चान्त्यस्तु गर्हितः ॥<br>पाणिर्ग्राह्यः सवर्णासु गृह्णीत क्षत्रिया शरम् ।<br>वैश्या प्रतोदमादद्याद्वेदने चाग्रजन्मनः ॥ |

पिता पितामहो भ्राता सकुल्यो जननी तथा
।
कन्याप्रदः पूर्ब्बनाशे प्रकृतिस्थः परः परः
॥
अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ ।
एषामभावे दातॄणां कन्या कुर्य्यात्
स्वयंवरम् ॥
सकृत् प्रदीयते कन्या हरंस्तां
चौरदण्डभाक् ।
अदुष्टां हि त्यजन् दण्ड्यः सुदुष्टां हि परि-
त्यजेत् ।”
इति गारुडे ९५ अध्यायः ॥ * ॥
अपरञ्च ।
यम उवाच ।
“कन्यां ये तु प्रयच्छन्ति यथाशक्त्या
स्वल-
ङ्कृताम् ।
ब्रह्मदेयां द्विजश्रेष्ठ ब्रह्मलोकं व्रजन्ति ते ॥
कन्यादानन्तु सर्व्वेषां दानानामुत्तमं स्मृतम्
॥
महान्त्यपि समृद्धानि गोऽजाविकधनान्यतः
।
स्त्रीसम्बन्धे दशेमानि कुलानि परिवर्ज्जयेत्
॥
हीनज्ञातिषु पाषण्ड मुने उद्वेगकारिणाम् ।
छद्मामयसदावाच्यचित्रिकुष्टिकुलानि च ॥
यस्यास्तु न भवेद्भ्राता न च विज्ञायते
पिता ।
नोपयच्छेत तां प्राज्ञः पुत्त्रिकाधर्म्मशङ्कया
॥
चतुर्णामपि वर्णानां प्रेत्य चेह हिताय च ।
अष्टाविमान् समासेन स्त्रीविवाहान्निबोधत
॥
ब्राह्म्यो दैवस्तथा चार्षः
प्राजापत्यस्तथासुरः ।
गान्धर्व्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः
॥
प्रसाद्य चार्च्चयित्वा च श्रुतशीलवते स्वयम्
।

ब्रह्मलोकं व्रजेच्छीघ्रं ब्रह्माद्यैः पूजितः
सुरैः ॥
दिव्येन तु विवाहेन यस्तु कन्यां
प्रयच्छति ।
भित्त्वा द्वारन्तु सूर्य्यस्य स्वर्गलोकञ्च
गच्छति ॥
गान्धर्व्वेन विवाहेन यस्तु कन्यां
प्रयच्छति ।
गन्धर्व्वलोकमासाद्य क्रीडते
देववच्चिरम् ॥
शुल्कन दत्त्वा यो कन्यां तां पश्चात्
सम्यगर्च्चयेत् ।
स किन्नरैश्च गन्धर्व्वैः क्रीडते
कालमक्षयम् ॥
न मन्युं कारयेत् तासां पूज्याश्च सततं
गृहे ।
ब्रह्मदेया विशेषेण ब्राह्मभोज्या सदा
भवेत् ॥
कन्यायां ब्रह्मदेयायामभुञ्जन्
सुखमश्नुते ।
अथ भुञ्जति यो मोहात् भुक्त्वा स
नरकं व्रजेत् ॥ *
अप्रजायाञ्च कन्यायां न भुञ्जीयात्
कदाचन ।
दौहित्रस्य मुखं दृष्ट्वा
किमर्थमनुशोचसि ॥
महासत्त्वसमाकीर्णान्नास्तिते
नरकाद्भयम् ।
तीर्णस्त्वं सर्व्वदुःखेभ्यः परं
स्वर्गमवाप्स्यसि ॥”
इत्याद्ये वह्निपुराणे
तडागवृक्षप्रशंसानामा-
ध्यायः ॥ * ॥ विवाहकाले
मिथ्यावचने दोषा-
भावो यथा, --
शर्म्मिष्ठोवाच ।
“न नर्म्मयुक्तं वचनं हिनस्ति
न स्त्रीषु राजन् न विवाहकाले ।
प्राणात्यये सर्व्वधनापहारे

“दम्पत्योर्द्विनवाष्टराशिरहितेदारानुकूले रवौ
चन्द्रे चार्ककुजार्किशुक्रवियुते मध्येऽथवा
पापयोः ।
त्यक्त्वा च व्यतिपातवैधृतिदिनं विष्टिञ्च रिक्तां
तिथिं
क्रूराहायनचैत्रपौषरहिते लग्नांशके मानुषे ॥” *
योगविशेषे दोषविशेषानाह रत्नमालायाम् ।
“कुलोच्छेदो व्यतीपाते परिधे स्वामिघातिनी
।
वैधृतौ विधवा नारी विषदाहोऽतिगण्डके ॥
व्याघाते व्याधिसं घातः शोकार्त्ता हर्षणे तथा
।
शूले च व्रणशूलं स्यात् गण्डे रोगभयं तथा ॥
विष्कम्भेऽप्यहिदंशः स्यात् वज्रके मरणं भवेत्
।
एते वै दारुणाः सर्व्वे दश योगाः प्रकीर्त्तिताः
॥”
आश्वलायनः । उदगयने आपूर्य्यमाणे पक्षे
कल्याणे नक्षत्रे चौडकर्म्मोपनयनगोदान-
विवाहाः । विवाहः सार्व्वकालिक इत्येक इति
।
“आषाढे धनधान्यभोगरहिता नष्टप्रजा श्रावणे
वेश्या भाद्रपदे इषे च मरणं रोगान्विता
कार्त्तिके ।
पौषे प्रेतवती वियोगबहुला चैत्रे मदोन्मादिनी
अन्येष्वेव विवाहिता पतिरता नारी समृद्धा
भवेत् ॥
हरौ च सुप्ते न च दक्षिणायने
तिथौ च रिक्ते शशिनि क्षयं गते ॥
राजग्रस्ते तथा युद्धे पितॄणां प्राणसंशये ।
अतिप्रौढा च या कन्या नानुकूलं प्रतीक्षते ॥
अतिप्रौढा च या कन्या कुले धर्म्मविरोधिनी ।
अविशुद्धापि सा देया चन्द्रलग्नबलेन तु ॥
अयनस्योत्तरस्यादौ मकरं याति भास्करः ।
राशिं कर्कटकं प्राप्य कुरुते दक्षिणायनम् ॥”
इति विष्णुपुराणोक्तस्य चूडादावयनस्य
परिग्रहः
दिनमानादिबोधे तु सिद्धान्तादयनपरिग्रहः ॥
* ॥

दद्यात् कन्यां यथान्यायं ब्राह्म्यो धर्म्मः प्रकी-
र्त्तितः ॥ १ ॥
यज्ञे तु वितते सम्यगृत्विजे कर्म्म कुर्व्वते ।
अलङ्कृत्य तथा दानं दैवो धर्म्मः प्रशस्यते ॥ २ ॥
एकं गोमिथुनं द्वे वा वरादादाय धर्म्मतः ।
कन्यादानन्तु विधिवदार्षो धर्म्मः स उच्यते ॥ ३ ॥
सहोभौ चरतां धर्म्ममिति चैवानुभाष्य तु ।
कन्याप्रदानमभ्यर्च्च्य प्राजापत्यो विधिः स्मृतः ॥ ४ ॥
ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायै चैव शक्तितः ।
कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म्म उच्यते ॥ ५ ॥
इच्छयान्योन्यसंयोगात् कन्यायाश्च वरस्य च ।
गान्धर्व्वः स तु विज्ञेयो मिथुन्यः कामसञ्चरः ॥ ६ ॥
हत्वा जित्वा च भित्त्वा च प्रसह्य रुदतीं गृहात् ।
हरणं क्रियते यत्र राक्षसो विधिरुच्यते ॥ ७ ॥
सुप्ता मत्ता रहः कन्या छद्मना नीयते तु या ।
स पापिष्ठो विवाहानां पैशाचः प्रथितो-ऽष्टमः ॥ ८ ॥
पञ्चानाञ्च त्रयो धर्म्मा द्वावधर्म्मौ द्विजोत्तम ।
पैशाचश्चासुरश्चैव न कर्त्तव्यौ कदाचन ॥
चतुर्णामपि वर्णानामेष धर्म्मः सनातनः ।
पृथग्वा यदि वा मिश्रा कर्त्तव्या नात्र संशयः ॥
कन्यां ये तु प्रयच्छन्ति यथाशक्त्या स्वलङ्कृताम् ।
विवाहकाले संप्राप्ते यथोक्ते सदृशे वरे ।
क्रमात् क्रमं क्रतुशतमनुपूर्ब्बं लभन्ति ते ॥
श्रुत्वा कन्धाप्रदानन्तु पितरः प्रपितामहाः ।
विमुक्ताः सर्व्वपापेभ्यो ब्रह्मलोकं व्रजन्ति ते ॥
ब्राह्मेण तु विवाहेन यस्तु कन्यां प्रयच्छति ।
पञ्चानृतान्याहुरुपातकानि ॥”
इति मात्स्ये ३१ अध्यायः ॥ * ॥
विवाहे वर्णनीयानि यथा, --
“विवाहे स्नानशुभ्राङ्गभूषोलूलुत्रयोरवाः ।
देवी संगीततारेक्षा लाजमङ्गलवर्त्तनम् ॥”
इति कविकल्पलतायाम् १ स्तवके ३ कुसुमम् ॥ * ॥
अथ विवाहोक्तदिनानि ।
तत्राब्दादिशुद्धि-
र्यथा, --
“प्रसूत्याधानतः शुद्धिर्विषमेऽब्दे समे क्रमात् ।
विवाहे योषितां
चन्द्रार्केज्यशुद्धिर्नृयोषितोः ॥
सभर्त्तृकक्रियारम्भे भर्त्तुर्गोचरशुद्धितः ।
यात्रोद्वाहे गर्भकृत्ये स्वशुद्ध्याप्नोति तत् फलम् ॥
प्रारभ्य जन्मसमयात् युवतेर्विवाह-
मोजाब्दकेषु मुनयः शुभमादिशन्ति ।
आधानतः प्रभृतितः समवत्सरेषु
प्रोक्तस्तयोर्न शुभदस्तु विलोमवर्षे ॥ * ॥
अयुग्मे दुर्भगा नारी युग्मे च विधवा भवेत् ।
तस्माद्गर्भान्विते युग्मे विवाहे सा पतिब्रता ॥
मासत्रयादूद्र्ध्वमयुग्मवर्षे
युग्मे च मासत्रयमेव यावत् ।
विवाहशुद्धिं प्रवदन्ति सर्व्वे
वात्स्यादयो ज्योतिषि जन्ममासात् ॥
युग्माब्दकेषु युवतेरपि जन्ममासात्
मासत्रयं विवहने परमब्दशुद्धिम् ।
प्राहुः समस्तमुनयो विषमे तु वर्षे
मासत्रयादुपरितः खलु जन्ममासात् ॥” * ॥
राजमार्त्तण्डे ।
“माङ्गल्येषु विवाहेषु कन्यासंवरणेषु च ।
सार्व्वकालिक इत्यस्य विषयमाह
भुजवलभीमे ।
“ग्रहशुद्धिमब्दशुद्धिं शुद्धिं मासायनर्त्तुदिव-
सानाम् ।
अर्व्वाक् दशवर्षेभ्यो भुनयः कथयन्ति कन्य-
कानाम् ॥
एतत्परन्तु विज्ञेयमङ्गिरोवचनं यथा ।
कालात्यये च कन्यायाः कालदोषो न विद्यते ॥
मलमासादिकालानां विवाहाद्ये प्रयत्नतः ।
पुंसः प्रति सदा दोषात् सर्व्वदैव हि वर्ज्यता ॥”
कृत्यचिन्तामणौ ।
“वापीकूपतडागयागगमनक्षौरप्रतिष्ठाव्रतं
विद्यामन्दिरकर्णवेधनमहादानं वनं सेवनम् ।
तीर्थस्नानविवाहदेवभवनं मन्त्रादिदेवेक्षणं
दूरेणैव जिजीविषुः परिहरेदस्तं गते भार्गवे ॥”
बृहद्राजमार्त्तण्डे ।
“सर्व्वाणि शुभकर्म्माणि कुर्य्यादस्तं गते सिते ।
विवाहं मेखलाबन्धं यात्राञ्च परिवर्ज्जयेत् ॥”
यात्राञ्चेति चकारो वचनान्तरोक्तप्रातिष्विक-
निषिद्धकर्म्मान्तरं समुच्चिनोति ।
“बाले शुक्रे वृद्धे शुक्रे नष्टे शुक्रे जीवे नष्टे ।

| | | |
|---|---|---|
| | दश मासाः प्रशस्यन्ते<br>चैत्रपौषविवर्ज्जिताः ॥"<br>कन्यासंवरणे हस्तोदकविधौ । | |

बाले जीवे वृद्धे जीवे
सिंहादित्ये गुर्व्वादित्ये ॥
तथा मलिम्लुचे मासि
सुराचार्य्येऽतिचारगे ।
वापीकूपतडागादिक्रियाः
प्रागुदितास्त्यजेत् ॥
अतीचारं गते जीवे वक्रे चैव
बृहस्पतौ ।
कामिनी विधवा प्रोक्ता
तस्मात्तौ परिवर्ज्जयेत् ॥
अतीचारं गतो जीवः पूर्ब्बभं
नैव गच्छति ।
समचारेऽपि कर्म्माणि नैव
तत्रैव संस्थिते ॥" * ॥
देवलः ।
"बाले वृद्धे तथैवास्ते कुरुते
दैत्यमन्त्रिणि ।
उद्वाहितायां कन्यायां
दम्पत्योरेव नाशनम् ॥
प्रागुद्गतः शिशुरहस्त्रितयं
सितः स्यात्
पश्चाद्दशाहमिति पञ्चदिनानि
वृद्धः ।
प्राक् पक्षमेव कथितोऽत्र
वशिष्ठगर्गै-
र्जीवस्तु पक्षमपि
वृद्धशिशुर्व्विवर्ज्यः ॥"
अत्यन्ताशक्तौ राजमार्त्तण्डः ।
"बाले वृद्धे च सन्ध्यांशे
चतुःपञ्चत्रिवासरान् ।
जीवे च भार्गवे चैव विवाहादिषु
वर्ज्जयेत् ॥
वक्रे चैवातिचारे त्रिदशपतिगुरौ
देवपूज्ये च
सुप्ते
गुर्व्वादित्येऽधिमासे
दिवसकररिपौ वाक्पतौ
चैत्रपौषे ।
मकरस्थे च तत् कार्य्यं न दोषः काललोपजः
॥"
यत्तु ।
"कन्यावृश्चिकमेषेषु मन्मथे च झषे वृषे ।
अतिचारेऽपि कर्त्तव्यं विवाहादि बुधैः सदा ॥"
इत्येतदमूलं द्वैतनिर्णयेऽप्युक्तम् ॥ * ॥ दीपि-
कायाम् ।
"त्रिकोणजाया धनलाभराशौ
वक्रातिचारेण गुरुः प्रयातः ।
यदा तदा प्राह शुभे विलग्ने
हिताय पाणिग्रहणं वशिष्ठः ॥"
देवीपुराणम् ।
"मकरस्थो यदा जीवो वर्ज्जयेत् पञ्चमांशकम् ।
शेषेष्वपि च भागेषु विवाहः शोभनो मतः ॥"
भोजराजः ।
"यो जन्ममासे क्षुरकर्म्म यात्रां
कर्णस्य वेधं कुरुते च मोहात् ।
नूनं स रोगं धनपुत्त्रनाशं
प्राप्नोति मूढो वधबन्धनानि ॥
जातं दिनं दूषयते वशिष्ठ-
श्चाष्टौ च गर्गो जवनो दशाहम् ।
जन्माख्यमासं किल भागुरिश्च
चौडे विवाहे क्षुरकर्णवेधे ॥"
श्रीपतिसमुच्चये ।
"स्नानं दानं तपो होमः सर्व्वमङ्गल्यवर्द्धनम् ।
उद्वाहश्च कुमारीणां जन्ममासे प्रशस्यते ॥"
कृत्यचिन्तामणौ ।
"जन्ममासे च पुत्राढ्या धनाढ्या च धनोदये ।
जन्मभे जन्मराशौ च कन्या हि ध्रुवसन्ततिः ॥"
गर्गः ।
"ज्यैष्ठे मासि तथा मार्गे क्षौरं परिणयं व्रतम् ।
ज्येष्ठपुत्त्रदुहित्रोश्च यत्नतः परिवर्ज्जयेत् ॥"
अत्र ज्येष्ठत्वमादिगर्भजातत्वम् । तथा च ।
"जन्ममासि न च जन्मभे तथा
नैव जन्मदिवसेऽपि कारयेत् ।
आद्यगर्भभवपुत्त्रकन्ययो-
र्ज्यैष्ठमासि न च जातु मङ्गलम् ॥"
अत्र जन्ममासादौ पुत्त्रमात्रस्य निषेधः ज्यैष्ठ-
मासे तु ज्येष्ठपुत्त्रस्येति विशेषः ।
पराक्रमे ।
"पूर्व्वात्रये विशाखायां शिवाद्ये भचतुष्टये ।
ऊढा चाशु भवेत् कन्या विधवातो विवर्जयेत् ॥
विष्णुभाद्ये त्रिके चित्रे ज्येष्ठायां ज्वलने यमे ।
एभिर्व्विवाहिता कन्या भवत्येव सुदुःखिता ॥"
एवञ्च पारस्करोक्त यजुर्व्वेदिविषयमापद्विषयं
वा बोध्यम् ॥ * ॥
"आद्ये मघाचतुर्भागे नैरृतस्याद्य एव च ।
रेवत्यन्तचतुर्भागे विवाहः प्राणनाशकः ॥
कर्णवेधे विवाहे च व्रते पुंसवने तथा ।
प्राशने चाद्यचूडायां विद्धमृक्षं विवर्ज्जयेत् ॥"
विद्धर्क्षन्तु ।
"तिथ्य १५ ङ्ग ६ वेदै १४ क १ दशो १० नविंश
१९
भै २७ कादशा ११ ष्टादश १८ विंश २० संख्याः
।
इष्टोडुना सूर्य्ययुतोडुना च
योगादमूश्चेद्धशयोगभङ्गः ॥"
कर्म्मकालीननक्षत्रसूर्य्यभुज्यमाननक्षत्रयोर्म्मिलने
यदि पञ्चदशाद्यन्यतमसंख्या भवति तदा न
कर्म्मयोग्यमित्यर्थः । सप्तविंशाधिकत्वे सप्त-
विंशतिमपहाय शेषात् फलं अन्यथैकसंख्यानु-
पपत्तेः ॥ * ॥ अपवादस्तु ।
"आद्यपादे स्थिते सूर्य्ये तुरीयांशं प्रदुष्यति ।
द्वितीयस्थे तृतीयन्तु विपरीतमतोऽन्यथा ॥"
व्यक्तमाह स्वरोदये ।
"आद्यांशेन चतुर्थांशं चतुर्थांशेन चादिमम् ।
द्वितीयेन तृतीयन्तु तृतीयेन द्वितीयकम् ॥"
अत्रैव खर्ज्जूरवेधः । तथा च रत्नमाला ।
"एकामूदूर्ध्वगतां त्रयोदश तथा तिर्य्यग्गताः
स्थापयेत्
रेखाश्चक्रमिदं बुधैरभिहितं खार्ज्जूरिकं तत्र तु ।
व्याघातादि तु मूर्ध्नि भन्तु कथितं तत्रैकरेखा-
स्थयोः
सूर्य्याचन्द्रमसोर्म्मिथो निगदिता दृक्पात
एकार्गलः ॥"
व्याघातादीतिव्याघातयोगसंख्याङ्कस्त्रयोदशा-
ङ्कम् । तथा च हस्तादीनि नक्षत्राणि देया-
नीत्यर्थः ॥ * ॥ अथ सप्तशलाकावेधः । दीपि-

विष्ट्यां केतूद्गमे वा शरदि
सुरगुरौ सिंहसंस्थे
मनोज्ञे
वर्षादाप्नोति चोढा
सुनियतमरणं देवकन्यापि
भर्त्तुः ॥" * ॥
शुक्रमधिकृत्य राजमार्त्तण्डे ।
"बाले च दुर्भगा नारी वृद्धे
नष्टप्रजा भवेत् ।
नष्टे च मृत्युमाप्नोति
सर्व्वमेतद्गुरावपि ॥
सिंहे गुरौ परिणीता
पतिमात्मानमात्मजान्
हन्ति ।
क्रमशस्त्रिषु पित्रादिषु
वशिष्ठगर्गादयः प्राहुः ॥
गुरौ हरिस्थे न विवाहमाहु-
र्हारीतगर्गप्रमुखा मुनीन्द्राः ।
यदा न माघी मघसंयुता स्यात्
तदा तु कन्योद्वहनं वदन्ति ॥"
अत्रैव माण्डव्यः ।
"मधाऋक्षं परित्यज्य यदा
सिंहे गुरुर्भवेत् ।
तत्राब्दे कन्यका चोढा सुभगा
सुप्रिया भवेत् ॥"
हारीतः ।
"अतीचारं गते जीवे वृषे
वृश्चिककुम्भयोः ।
यज्ञोद्वाहादिकं कुर्य्यात् तत्र
कालो न लुप्यते ॥"
कृत्यचिन्तामणौ ।
"अतीचारं गते जीवे वृषे
वृश्चिककुम्भयोः ।
तत्र चोद्वाहिता कन्या
संपृणीयात् कुलद्वयम् ॥"
सङ्केतकौमुद्यां भीमपराक्रमे ।
"यदातिचारं सुरराजमन्त्री
करोति गोमन्मथमीनसंस्थः ।
न याति चेद्यद्यपि पूर्ब्बराशिं
शुभाय पाणिग्रहणं वशिष्ठः ॥

"कृत्तिकास्थं रविं त्यक्त्वा ज्यैष्ठे ज्येष्ठस्य
कार-
येत् ।
उत्सवेषु च सर्व्वेषु दिनानि दश वर्ज्जयेत् ॥ *
॥
रेवत्युत्तररोहिणीमृगशिरोमूलानुराधामघा
हस्तास्वातिषु तौलिषष्ठमिथुनेषूद्यत्सु पाणिग्रहः
।
सप्ताष्टान्त्यवहिःशुभैरुडुपतावेकादशद्वित्रिगे
क्रूरैस्त्र्यायषडष्टगैर्न तु भृगौ षष्ठे कुजे
चाष्टमे ॥"
ज्योतिर्व्विहितनक्षत्रात् अधिकं चित्राश्रवणा-
धनिष्ठाश्विनीनक्षत्रं पारस्करोक्तं यथा, --
"कुमार्य्याः पाणिं गृह्णीयात् त्रिषु त्रिषूत्तरा-
दिषु ॥"
उत्तरफल्गुन्यादित्रयोत्तराषाढादित्रयोत्तरभा
द्रपदादित्रयेषु नवसु नक्षत्रेष्वित्यर्थः ॥ * ॥
भीम-

कायाम् ।
"कृत्तिकादिचतुःसप्तरेखाराशौ परिभ्रमन् ।
ग्रहश्चेदेकरेखास्थो वेधः सप्तशलाकजः ॥
सप्त सप्त विलिखेत् प्ररेखिका-
स्तिर्य्यगूद्र्ध्वमथ कृत्तिकादिकम् ।
लेखयेदभिजिता समन्वितं
चैकरेखगखगेन विध्यते ॥
वैश्यस्य चतुर्थेऽंशे श्रवणादौ लिप्तिकाचतुष्के
च ।
अभिजित्तस्थे खेचरे विज्ञेया रोहिणीविद्धा ॥"
लिप्तिकादण्डः ॥ * ॥
"यस्याः शशी सप्तशलाकभिन्नः
पापैरपापैरथवा विवाहे ।
रक्तांशुकेनैव तु रोदमाना
श्मशानभूमिं प्रमदा प्रयाति ॥"

| | | |
|---|---|---|
| अतीचारं गते जीवे स्थिरराशौ च संस्थिते ।<br>तत्र न लुप्यते कालो वदत्येवं पराशरः ॥<br>वापीकूपतडागादि निषिद्धं सिंहगे गुरौ । | | |

अस्यापवादो यथा, राजमार्त्तण्डे ।
“विषप्रदिग्धेन हतस्य पत्रिणा
मृगस्य मांसं शुभदं क्षतादृते ।
यथा तथात्राप्युडुपाद एव
प्रदूषितोऽन्योडुपदं शुभावहम् ॥”
अथ पञ्चशलाकचक्रम् ।
“ऊर्द्ध्वं रेखास्थिताः पञ्च तिर्य्यक् पञ्च
तथैव च ।
द्वे द्वे च कोणयो रेखे साभिजित् कृत्तिका-
दिकम् ॥
शम्भुकोणे द्वितीये तु लेखयेत् सर्व्वकर्म्मणि
।
क्रूरैर्भिन्नमथो सौम्यैर्नैक्षत्रं परिवर्ज्जयेत् ॥
नत्वापाते च ये दोषा ये च सप्तशलाकके ।
ते सर्व्वे प्रभवन्त्यत्र नाम्ना पञ्चशलाकके ॥
अथ चक्रान्वये कश्चित् पादवेध इहेष्यते
॥”
तदुक्तं रत्नमालायाम् । कैश्चित्तत्रापीष्यते
पाद-
वेध इति । इति पञ्चशलाकाचक्रम् ॥ * ॥
रत्नमालायाम् ।
“ऋक्षं द्वादशमुष्णरश्मिरवनीसूनुस्तृतीयं
गुरुः
षष्ठं चाष्टममर्कजस्तु पुरतो हन्ति स्फुटं
नत्वया ।
पश्चात् सप्तममिन्दुजस्तु नवमं राहुः सितः
पञ्चमम् ।
द्वाविंशं परिपूर्णमूर्त्तिरुडुपः सन्ताडयेन्नेतरत्
॥”
नत्वापातोऽयम् ॥ * ॥
“पापात् सप्तमगः शशी यदि भवेत् पापेन
युक्तोऽथवा
यत्नात् तं परिवर्ज्जयेत् मुनिमतो दोषो ह्ययं
कथ्यते ।
यात्रायां विपदो गृहे सुतवधः क्षौरेषु
रोगोद्भवो-
ऽप्युद्वाहे विधवा व्रते च मरणं शूलञ्च पुंस्क-
र्म्मणि ॥” * ॥
“रविमन्दकुजाक्रान्तं मृगाङ्कात् सप्तमं
द्वितीयपुत्राङ्कगतः प्रभाकरः
त्रयोदशाहात् परतः शुभप्रदः ।
न जन्मसप्तव्ययरन्ध्रगस्तथा
करोति पुंसामपि तादृशं फलम् ॥”
तथा त्रयोदशाहात् परतः ॥ * ॥
“त्रयोदशदिनान्यर्को दश
षड्धरणीसुतः ।
सार्द्धं दिनञ्च शीतांशुर्मासमेकादशं
तमः ॥
सौरिः पादाधिकं वर्षं मासानष्टौ
बृहस्पतिः ।
भवनार्द्धं भृगुः सौम्यो यावद्राश्यशुभाः
फलम् ॥
कष्टं व्रतादिके दद्युर्न तथा शेषभागगाः
॥ * ॥
लग्ने तत्पञ्चमे तूर्य्ये नवमे दशमे तथा ।
गुरुर्भृगुर्व्वा दोषघ्नो विवाहे वर्द्धते
शुभम् ॥”
अयमेव सुतहिवुकयोगः ॥ * ॥
“गोधूलिं त्रिविधां वदन्ति मुनयो
नारीविवा-
हादिके
हेमन्ते शिशिरे प्रयाति मृदुतां
पिण्डीकृते
भास्करे ।
ग्रीष्मेऽर्द्धास्तमिते वसन्तसमये भानौ
गते
दृश्यतां
सूर्य्ये चास्तमुपागते च नियतं
प्रावृट्शरत्-
कालयोः ॥ * ॥
लग्नं यदा नास्ति विशुद्धमन्यद्-
गोधूलिकां तत्र शुभां वदन्ति ।
लग्ने विशुद्धे सति वीर्य्ययुक्ते
गोधूलिका नैव फलं विधत्ते ॥ * ॥
नास्मिन् ग्रहा न तिथयो न च
विष्टिवारा
ऋक्षाणि नैव जनयन्ति कदापि विघ्नम्
।
स्मृतिः ।
“धर्म्मार्थकाममोक्षाणां दाराः संप्राप्तिहेतवः ।
परीक्ष्यन्ते प्रयत्नेन पूर्व्वमेव करग्रहात् ॥” * ॥
मनुः ।
“अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम्
।
तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत् स्त्रियम् ॥”
*
शातातपः ।
“हंसस्वनां मेघवर्णां मधुपिङ्गललोचनाम् ।
तादृशीं वरयेत् कन्यां गृहस्थः सुखमेधते ॥”
* ॥
भविष्ये ।
“प्रतिष्ठिततलाः सम्यक् रक्ताम्भोजसमत्विषः
।
तादृशाश्चरणा धन्या योषितां भोगवर्द्धनाः ॥”
प्रतिष्ठितो भूमौ लग्नः समस्तलोऽधोभागो येषां
ते तथा ॥ * ॥ मनुः ।
“नोद्वहेत् कपिलां कन्यां नाधिकाङ्गीं न
रोगिणीम् ।
नालोभिकां नातिलोम्नीं न वाचाटां न पिङ्ग-
लाम् ॥
नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्व्वतनामिकाम् ।
न पक्ष्यहिप्रैष्यनाम्नीं न च भीषणनामिकाम्
॥”
प्रतिप्रसवमाह मत्स्यसूक्ते ।
“गङ्गा च यमुना चैव गोमती च सरस्वती ।
नदीष्वासां नाम वृक्षे मालती तुलसी अपि ।
रेवती चाश्विनी भेषु रोहिणी शुभदा भवेत् ॥”
कृत्यचिन्तामणौ ।
“नेत्रे यस्याः केकरे पिङ्गले वा
स्याद्दुःशीला श्यावलोलेक्षणा च ।
कूपो यस्या गण्डयोः सस्मिताया
निःसन्दिग्धां बन्धकीं तां वदन्ति ॥” * ॥
नन्दिकेश्वरपुराणे ।
“श्यामा सुकेशी तनुलोमराजी
सुभ्रूः सुशीला सुगतिः सुदन्ता ।
वेदीविमध्या यदि पङ्कजाक्षी
कुलेन हीनापि विवाहनीया ॥
धृष्टा कुदन्ता यदि पिङ्गलाक्षी

त्यजेत् ।
विवाहयात्राचूडासु गृहकर्म्मप्रवेशने ॥”
यामित्रवेधः ॥ * ॥
“मूलत्रिकोणनिजमन्दिरगोऽथपूर्णो
मित्रर्क्षसौम्यगृहगोऽथ तदीक्षितो वा ।
यामित्रवेधविहितानपहृत्य दोषान्
दोषाकरः शुभमनेकविधं विधत्ते ॥” * ॥
भोजराजः ।
“त्रिषड् दशैकादशगो दिनेशः
सुतार्थसौभाग्यशुभप्रदः स्यात् ।
वैधव्यदाताष्टमराशिसंस्थः
शेषेषु रुग्दुःखशुचः करोति ॥”
रविशुद्धिः ॥ * ॥
“कन्यानक्षत्रशुद्धौ स्याद्व वाहः शुभकृन्नृणाम्
।
पश्चाद्वर्त्तुर्व्विशुद्ध्या तु
यात्रापुष्पोत्सवादयः ॥”
विद्याधरीविलासे ।
“पुंसामर्कः स्मृतो योनिर्योषितामभृतद्युतिः
।
अतः पुंयोषितोः शस्तं वलमर्कशशाङ्कजम्
॥
गोचरथद्वाविन्दुं कन्याया यत्नतः शुभं
वीक्ष्य ।
तिग्मकिरणञ्च पुंसः शेषैरबलैरपि विवाहः ॥

अव्याहतः सततमेव विवाहकाले
यात्रासु चायमुदितो भृगुजेन योगः ॥ *
॥
मार्गे गोधूलियोगे प्रभवति विधवा
माघमासे
तथैव
पुत्त्रायुर्धनयौवनेन सहिता कुम्भे
स्थिते
भास्करे ।
वैशाखे सुखदा प्रजाधनवती ज्यैष्ठे
पतेर्म्मानदा
आषाढे धनधान्यपुत्त्रबहुला पाणिग्रहे
कन्यका ॥” * ॥
विवाहपटले ।
“व्यूढा धनुषि च कुलटा तत्पूर्व्वार्द्धे
सतीत्यपरे
जगुः ॥” * ॥
ज्योतिःसारसग्रहे ।
“विवाहे तु दिवाभागे कन्या स्यात्
पुत्त्र-
वर्ज्जिता ।
विरहानलदग्धा सा नियतं
स्वामिघातिनी ॥ * ॥
महाभारते ।
“रात्रौ दानं न शंसन्ति विना
चाभकदक्षि-
णाम् ।
विद्यां कन्यां द्विजश्रेष्ठा दीपमन्नं
प्रतिश्रयम् ॥” *
व्यासः ।
“रिक्तासु विधवा कन्या दर्शेऽपि
स्याद्विवा-
हिता ।
शनैश्चरदिने चैव यदा रिक्ता
तिथिर्भवेत् ।
तस्मिन् विवाहिता कन्या
पतिसन्तानवर्द्धिता ॥”

लोम्ना समाकीर्णसमाङ्गयष्टिः ।
मध्ये च पुष्टा यदि राजकन्या
कुलेऽपि योग्या न विवाहनीया ॥” * ॥
हारीतः ।
“तस्मात् कुलनक्षत्रविज्ञानोपपन्नां वरयेत् ।”
नक्षत्रोपपन्नां नाडीनक्षत्रहीनाम् ॥ * ॥
नाडीनक्षत्रमाह स्वरोदये ।
“अश्विन्यादि लिखेच्चक्रं सर्पाकारं
त्रिनाडिकम् ।
तत्र वेधवशाज्ज्ञेयं विवाहादि शुभाशुभम् ॥
त्रिनाडीवेधनक्षत्रमश्विन्यार्द्राय्युगोत्तरा ।
हस्तेन्द्रमूलवारुण्यः पूर्ब्बभाद्रपदास्तथा ॥
याम्यः सौम्यो गुरुर्योनिश्चित्रा मित्रजलाह्वयम्
।
धनिष्ठा चोत्तराभद्रा मध्यनाडीव्यवस्थिताः ॥
* ॥
कृत्तिका रोहिणी सर्पो मघा स्वातीविशा-
खके ।
उत्तरा श्रवणा पौष्णं पृष्ठनाडीव्यवस्थिताः ॥
* ॥
अश्व्यादिनाडीवेधर्क्षे षष्ठं द्वितीयकं क्रमात् ।

याम्यादितूर्य्यतूर्य्यञ्च
कृत्तिकादिद्विषट्ककम् ॥
एवं निरीक्षयेद्वेधं कन्यामन्त्रे
सुरे गुरौ ।
पण्यश्रीस्वामिमित्रेषु देशे ग्रामे
पुरे गृहे ॥
एकनाडीस्थधिष्ठानि यदि
स्युर्व्वरकन्ययोः ।
तदा वेधं विजानीयात्
गुर्व्वादिषु तथैव च ॥
प्रकटं यस्य जन्मर्क्षं तस्य
जन्मर्क्षतो व्यधः ।
प्रनष्टं जन्मभं यस्य तस्य
नामर्क्षतो वदेत् ॥
द्वयोर्जन्मभयोर्वेधो
द्वयोर्नामभयोस्तथा ।
नामजन्मर्क्षयोर्वेधो न कर्त्तव्यं
कदाचन ॥
एकनाडीस्थिता चेत् स्यात्
भर्त्तर्नाशाय
चाङ्गना ।
तस्मान्नाडीव्यधो वीक्ष्यो
विवाहे शुभमिच्छता ॥
प्राङ्नाड्या वेधतो भर्त्ता
मध्यनाड्योभयं
तथा ।
पृष्ठनाडीव्यधे कन्या म्रियते
नात्र संशयः ॥
एकनाडीस्थिता यत्र
गुरुर्म्मन्त्रश्च देवताः ।
तत्र द्वेषं रुजं मृत्युं क्रमेण
फलमादिशेत् ॥
प्रभुः पण्याङ्गनामित्रं देशो
ग्रामः पुरं गृहम् ।
एकनाडीगता भव्या अभव्या
वेधवर्ज्जिताः ॥”
प्रतिप्रसवमाह ज्योतिषे ।
“एकराश्यादियोगे तु
नाडीदोषो न विद्यते ॥”

“मकरः करिकुलरिपुणा
कन्या मेषेण सह झषस्तुलया ।
कर्किघटौ वृषधनुषी
वृश्चिकमिथुने चारिविधौ ॥ * ॥
यदि कन्याष्टमे भर्त्ता भर्त्तुः षष्ठे च कन्यका ।
षडष्टकं विजानीयाद्वर्ज्जितं त्रिदशैरपि ॥ * ॥
पुंसो गृहात् सुतगृहे सुतहा च कन्या
धर्म्मे स्थिता सुतवती पतिवल्लभा च ।
द्विद्वादशे धनगृहे धनहा च कन्या
ऋष्फे स्थिता धनवती पतिवल्लभा च ॥”
षडष्टकादौ तारानियममाह भीमपराक्रमः ।
“सौहृद्ये ह्युभयोर्द्वयोरपि तयोरैकाधिपत्येऽपि
वा
तारा षष्ठसुमित्रमित्रदहनक्षेमार्थसम्पद्यदि ।
षट्काष्टे नवपञ्चमे व्ययधने योगे च पुंयोषितोः
प्रीत्यायुःसुखवृद्धिपुष्टिजनकः कार्य्यो विवाह-
स्तदा ॥” * ॥
गर्गः ।
“मरणं ताराविरोधे ग्रहरिपुभावे चिरेण ।
रोगादि नरनार्य्योः षट्काष्टके वैरमवश्यं भवे-
दाशु ॥” * ॥
व्यासः ।
“मैत्रादियोगेऽपि षडष्टकादौ
तारा विपत्प्रत्यरिनैधनाख्याः ।
वर्ज्या विवाहे पुरुषोड्डुतो हि
प्रीतिः परा जन्मसु तारकासु ॥
नक्षत्रमेकं यदि भिन्नराशि-
र्न दम्पती तत्र सुखं लभेताम् ।
विभिन्नमृक्षं यदि चैकराशि-
स्तदा विवाहः सुतसौख्यदायी ॥”
एकर्क्षा च यदा कन्या राश्येका च यदा
भवेत् ।
धनपुत्त्रवती नारी साध्वी भर्त्तृप्रिया सदा ॥
षडष्टके गोमिथुनं प्रदेयं
कांस्यं सरूप्यं नवपञ्चके तु ।
द्विद्वादशाख्ये कनकान्नताम्रं
विप्रार्च्चनं हेम च नाडीदोषे ॥
मरणं नाडीदोषे कलहः षट्काष्टके विप-
त्तिर्वा ।

राजमार्त्तण्डे ।
“यदि स्याद्राक्षसो भर्त्ता कन्यका मानुषी भवेत् ।
विवाहे सुखमाप्नोति वैपरीत्यं विवर्ज्जयेत् ॥”
युद्धजयार्णवे ।
“देवा जयन्ति युद्धेन सर्व्वथा नात्र संशयः ।
रक्षसां मानुषाणाञ्च संग्रामे निश्चया मृतिः ॥
कर्किमीनालयो विप्राः क्षत्राः सिंहतुलाहयाः ।
वैश्या युग्माजकुम्भाख्याः शूद्रा वृषमृगाङ्गनाः ॥
सर्व्वाः परिणयेद्विप्रः क्षत्त्रियो नवभाग्भवेत् ।
षडाश्रयो भवेद्वैश्यस्तिस्रः शूद्रे प्रकीर्त्तिताः ॥
वर्णश्रेष्ठा च या नारी हीनवर्णश्च यः पुमान् ।
महत्यपि कुले जाता नासौ भर्त्तरि रज्यते ॥”
इति ज्योतिस्तत्त्वम् ॥ * ॥
अन्यत् उद्वाहशब्दे द्रष्टव्यम् ॥ * ॥ * ॥ तत्प्रयोग
यथा । अथ कृतवृद्धिश्राद्धः संप्रदाता लग्नसमये
संप्रदानशालायां गत्वा उत्तरतः स्त्रीगवीं बद्ध्वा
विष्टरादिकं सज्जीकृत्य पश्चिमाभिमुखोऽनुप-
विष्टस्तिष्ठेत् । ततोऽग्रत उपस्थिते वरे संप्रदाता
कृताञ्जलिर्वरणं कुर्य्यात् । ॐ साधु भवानास्ता-
मिति पृच्छेत् । जामाता ॐ साध्वहमासे
इति वदेत् संप्रदाता ॐ अर्च्चयिष्यामो भवन्तं
इति पृच्छेत् । जामाता ॐ अर्च्चय इति वदेत् ।
ततः संप्रदाता पाद्यार्घ्याचमनीयगन्धमाल्य-
यथाशक्त्यङ्गुरीयसपट्टकयज्ञोपवीतसपर्णपूगा-
दिकं प्रदाय जामातरमर्च्चयेत् । ततः संप्रदाता
दक्षिणं जानु धृत्वा ॐ अद्येत्यादि अमुक-
गोत्रस्यामुकप्रवरस्यामुकदेवशर्म्मणः प्रपौत्त्रं
अमुकगोत्रस्यामुकप्रवरस्यामुकदेवशर्म्मणःपौत्त्रं
अमुकगोत्रस्यामुकप्रवरस्यामुकदेवशर्म्मणः पुत्त्रं
अमुकगोत्रं अमुकप्रवरं अमुकदेवशर्म्माणं
अमुकगोत्रस्यामुकप्रवरस्यामुकदेवशर्म्मणः प्र-
पौत्त्रीं अमुकगोत्रस्यामुकप्रवरस्यामुकदेव-
शर्म्मणः पौत्त्रीं अमुकगोत्रस्यामुकप्रवरस्य
अमुकदेवशर्म्मणः पुत्त्रीं अमुकगोत्रां अमुक-
प्रवरां श्रीअमुकीदेवीं एनां कन्यां शुभविवाहेन
दातुं एभिः पाद्यादिभिः अभ्यर्च्च्य भवन्तमहं
वृणे । जामाता ॐ वृतोऽस्मि इति वदेत् ।
संप्रदाता यथाविहितं विवाहकर्म्म कुरु ।
जामाता ॐ यथाज्ञानतः करवाणीति वदेत् ।

स यथा ।
“एकराशौ च दम्पत्योः शुभं
स्यात् समसप्तके ।
चतुर्थे दशमे चैव तृतीयैकादशे
तथा ॥”
समग्रहणाद्विषमसप्तकेदोषः ।
तथा च ।
“योटके सप्तके मेषतुले
युग्महयौ तथा ।
सिंहघटौ सदा वर्ज्यौ मृतिं
तत्राब्रवीच्छिवः ॥”
श्रीपतिव्यवहारनिर्णये ।
“सुहृदेकाधिपयोगे ताराबले
वश्यराशौ वा ।
अपि नाड्यादिवेधे भवति
विवाहो हितार्थाय ॥”
राजमार्त्तण्डे ।
“न राजयोगे ग्रहवैरिता च
न तारशुद्धिर्न गणत्रयं स्यात् ।
न नाडिदोषो न च वर्णदुष्टि-
र्गर्गादयस्ते मुनयो वदन्ति ॥”
* ॥
राजयोगस्तु एकराश्यादियोग
एव तत्रैव
नाड्यादिप्रतिप्रसवात् ॥
श्रीपतिरत्नमालायाम् ।
“अश्वे भाजफणिद्वयञ्च
वृषभुङ्मेषोन्दुरुर्मूषिक-
श्चाखुर्गौः क्रमशस्ततोऽपि
महिषी व्याघ्रः पुनः
सौरभी ।
व्याघ्रेणौ मृगकुक्कुरौ
कपिरथोरभ्रद्वयं वानरः
सिंहोऽश्वो मृगराट् पशुश्च
करटी योनिश्च
भानामियम् ॥
गोव्याघ्रं गजसिंहमश्वमहिषं
श्वैणञ्च वभ्रूरगं
वैरं वानरमेषकञ्च
सुमहत्तद्वद्विडालोन्दुरुम् ।
अनपत्यता त्रिकोणे द्विद्वादशे च दारिद्र्यम् ॥” *
॥
कृत्यचिन्तामणौ ।
“हस्तास्वातिश्रुतिमृगशिरःपुष्यमैत्राश्विभानि
पौष्णादित्ये जमुरिह बुधा देवसंज्ञानि भानि ।
पूर्ब्बास्तिस्रः शिवभभरणीरोहिणी चोत्तराश्च
प्राहुर्मर्त्याह्वयमुडुगणं नूनमेतं मुनीन्द्राः ॥
चित्राश्लेषानिरृतिपितृभे वासवं वासवर्क्षं
शक्राग्न्योर्भे वरुणदहनर्क्षे च रक्षोगणोऽयम् ॥”
फलमाह श्रीपतिः ।
“स्वकुले चोत्तमा प्रीतिर्मध्यमा देवमानुषे ।
देवासुरे कनिष्ठा च मृत्युर्मानुषराक्षसे ॥
राक्षसी च यदा कन्या मानुषश्च वरो भवेत् ।
तदा मृत्युर्न दूरस्थो निर्धनत्वमथापि वा ॥”
ततः स्त्र्याचारादिकं कारयित्वा मुखचन्द्रिकां
कारयेत् । ततोऽग्रे उपस्थिते वरे संप्रदाता
अमुं मन्त्रं जपति । प्रजापतिरृषिरनुष्टुप्
छन्दोऽर्हणीया गौर्देवता गवोपस्थापने विनि-
योगः । ॐ अर्हणा पुत्त्रवाससा धेनुरभवद्य
मे सा नः पयस्वती दुहा मुत्तरा मुत्तरां
समाम् । ततो जामाता प्रजापतिरृषिर्गायत्त्री
च्छन्दो विराड्देवता उपविशदर्हणीयजपे
विनियोगः । ॐ इदमहमिमां पद्यां विराज-
मन्नाद्यायाधितिष्ठामि । इमं मन्त्रं जपन्नासने
प्राङ्मुख उपविशति । ततः संप्रदातापि पश्चि-
माभिमुख उपविशेत् । ततो दाता साग्रपञ्च-
विंशतिकुशपत्रैः द्विर्वामाधोमुखग्रन्थिं रचितं

| | | |
|---|---|---|
| लोकानां व्यवहारतोऽन्यदपि च ज्ञात्वा प्रय-त्नादिदं दम्पत्योर्नृपभृत्ययोरपि सदा वर्ज्यः शुभस्या-र्थिभिः ॥ मकरसमेतं मिथुनं कन्याकलसौ मृगेन्द्रमीनौ च । वृषभतुलेऽलिमेषौ कर्कटधनुषी च मित्रविधौ ॥" षडष्टकावितिशेषः ॥ * ॥ अरिषडष्टकमाह । | | |

विष्टरं उत्तराग्रं उत्तानहस्ताभ्यां
गृहीत्वा
ॐ विष्टरो विष्टरो विष्टरः
प्रतिगृह्यतामित्याद-
धानो विष्टरमर्पयति । जामाता च ॐ
विष्टरं
प्रतिगृह्णामि इति विष्टरं गृहीत्वा
प्रजापति-
रृषिरनुष्टुप्छन्द ओषध्यो देवता
विष्टरस्यासन-
दाने विनियोगः ।
"ॐ या ओषधीः सोमराज्ञीर्ब्बह्वीः
शतविच
क्षणाः ।
ता मह्यमस्मिन्नासने अच्छिद्राः शर्म्म
यच्छत ॥"
इत्यासने विष्टरमुत्तराग्रं दत्त्वा
उपविशति ।
ततः सम्प्रदाता पुनस्तादृशमेव विष्टरं
गृहीत्वा
ॐ विष्टरो विष्टरो विष्टरः
प्रतिगृह्यतामिति
तथैव पुनरर्पयति । जामाता च ॐ
विष्टरं
प्रतिगृह्णामीति तथैव गृहीत्वा
प्रजापतिरृषि-
रनुष्टुप् छन्द ओषध्यो देवता विष्टरस्य
पादयो-
रधस्ताद्दाने विनियोगः ।
"ॐ या ओषधीः सोमराज्ञीर्व्विष्ठिताः
पृथिवीमनु ।
ता मह्यमस्मिन् पादयोरच्छिद्राः शर्म्म
यच्छत ॥"
इति पादयोरधस्तादुत्तराग्रं विष्टरं
स्थापयेत् ॥
ततः सम्प्रदाता पानीयपात्रं गृहीत्वा
ॐ पाद्याः
पाद्याः पाद्याः प्रतिगृह्यन्तामिति
पानीयपात्र-
विनियोगः । ॐ यशोऽसि यशो मयि धेहि ।
अनेनोत्तराभिमुखीभूयाचामेत् । ततः सम्प्र-
दाता घृतदधिमधुयुक्तं कांस्यपात्रं कांस्यपात्रा-
न्तरेणापिधाय गृहीत्वा ॐ मधुपर्क्को
मधुपर्क्को
मधुपर्क्कः प्रति गृह्यतामिति मधुपर्क्कं
समर्पयति ।
जामाता च ॐ मधुपर्क्कं प्रतिगृह्णामीति
गृहीत्वा
प्रजापतिरृषिर्म्मधुपर्क्को देवता अर्हणीयमधु-
पर्क्कग्रहणे विनियोगः । ॐ यशसो यशोऽसि ।
अनेन मधुपर्क्कं गृहीत्वा भूमौ निधाय प्रजा-
पतिरृषिर्म्मधुपर्क्को देवता अर्हणीयमधुपर्क्क-
प्राशने विनियोगः । ॐ यशसो भक्ष्योऽसि
महसो भक्ष्योऽसि श्रीर्भक्ष्योऽसि श्रियं मयि
धेहि ।
अनेन मन्त्रेण वारत्रयं भक्षयित्वा सकृत् तूष्णीं
भक्षयेत् । ततो जामाता आचान्तो मङ्गलौ-
षधिलिप्तेन दक्षिणहस्तेन तादृशमेव कन्याया
दक्षिणहस्तं स्वहस्तोपरि निदध्यात् । ततः
सौभाग्यपतिपुत्त्रवती नारी मङ्गलपूर्ब्बकं कुशेन
हस्तद्वयं वध्नाति । ततः सम्प्रदाता तिलकुश-
सहितमुदकपात्रं गृहीत्वा वामहस्तेनार्च्चितां
कन्यां धृत्वा ओमद्यामुके मासि अमुकराशिस्थे
भास्करे अमुके पक्षे अमुकतिथौ अमुकगोत्रः
श्रीअमुकदेवशर्म्मा अमुककामः
अमुकगोत्रस्या-
मुकप्रवरस्य अमुकदेवशर्म्मणः प्रपौत्त्राय
अमुक-
गोत्रस्य अमुकप्रवरस्य अमुकदेवशर्म्मणः
पौत्त्राय अमुकगोत्रस्यामुकप्रवरस्यामुकदेव-
शर्म्मणः पुत्त्राय अमुकगोत्राय अमुकप्रवराय
श्रीअमुकदेवशर्म्मणे ब्राह्मणाय वराय अर्च्चि-
ताय
अमुकगोत्रस्यामुकप्रवरस्यामुकदेवशर्म्मणः
प्रपौत्त्रीं अमुकगोत्रस्यामुकप्रवरस्यामुकदेव-
शर्म्मणः पौत्त्रीं अमुकगोत्रस्य अमुकप्रवरस्य
अमुकदेवशर्म्मणः पुत्त्रीं अमुकगोत्रां अमुक-
प्रवरां श्रीअमुकीदेवीं इति त्रिरुच्चार्य्य एनां
नापितेन मुक्तायां गवि जामाता पठति ।
प्रजा-
पतिरृषिस्त्रिष्टुप् छन्दो गौर्देवता गवानुमन्त्रणे
विनियोगः । ॐ माता रुद्राणां दुहिता
वसूनां
स्वसादित्यानां अमृतस्य नाभिः प्रनुवोचं
चिकि-
तुषे जनाय मा गा मना गा मदितीं वधिष्ट ।
अनेन गां विसर्ज्जयेत् । ततो मङ्गलं
कुर्य्यात् ।
ततो भर्त्तुर्व्वामपार्श्वे बधूमुपवेशयेत् । इति
सम्प्रदानं समाप्तम् ॥ * ॥ इति भवदेवभट्टः
॥

**विवाहितः**, पुं क्ली, (वि + वह + णिच् + क्तः ।)

कृतविवाहः । यथा, --
"शनैश्चरदिने चैव यदि रिक्ता तिथिर्भवेत् ।
तस्मिन् विवाहिता कन्या
पतिसन्तानवर्द्धिता ॥"
अपि च ।
"विष्णुभाद्ये त्रिके चित्रे ज्येष्ठायां ज्वलने
यमे ।
एभिर्विवाहिता कन्या नित्यमेव सुदुःखिता
॥"
इति ज्योतिस्तत्त्वम् ॥

**विवाह्यः**, पुं, (वि + वह + णिच् + यत् ।) जामाता ।

इति केचित् ॥ विवाहयोग्ये, त्रि ॥ (यथा,
कथासरित्सागरे । ३३ । १९० ।
"पद्मावत्या ऋते राज्या न विवाह्यापरेति
यत् ।
प्रोक्तं देवि प्रतिज्ञातं मया निर्व्यूढमद्य तत्
॥")

**विविक्तं**, त्रि, (वि + विच + क्तः ।) पवित्रम् ।

विजनम् । इत्यमरः ॥ (यथा, गीतायाम् ।
१३ । १० ।
"विविक्तदेशसेवित्वमरतिर्ज्जनसंसदि ॥")
असम्पृक्तः । (यथा, माघे । ११ । १७ ।
"पुनरुषसि विविक्तैर्म्मातरिश्वावचूर्ण्य

मर्पयति । जामाता ॐ पाद्यं
प्रतिगृह्णामीति
गृहीत्वा प्रजापतिरृषिर्व्विराड्गायत्री
च्छन्द
आपो देवता
पादप्रक्षालनार्थोदकवीक्षणे
विनियोगः । ॐ यतो देवीः
प्रतिपस्याम्याप-
स्ततो मा ऋद्धिरागच्छतु । अनेनोदकं
वीक्षेत् ।
ततो जामाता तस्मात् पात्रादुदकं
गृहीत्वा
प्रजापतिरृषिर्व्विराड्गायत्री च्छन्दः
श्रीर्द्देवता
सव्यपादप्रक्षालने विनियोगः ॐ सव्यं
पादमवने-
निजे अस्मिन्राष्ट्रे श्रियं दधे । अनेन
वामपादे
उदकाञ्जलिं दद्यात् । ततोऽपरमञ्जलिं
गृहीत्व
प्रजापतिरृषिर्ब्बिराड्गायत्री च्छन्दः
श्रीर्द्देवता
दक्षिणपादप्रक्षालने विनियोगः । ॐ
दक्षिणं
पादमवनेनिजे अस्मिन्राष्ट्रे
श्रियमाबेशयामि ।
अनेन दक्षिणपादे उदकाञ्जलिं दद्यात् ।
ततः
पुनरुदकाञ्जलिं गृहीत्वा
प्रजापतिरृषिर्व्विराड्-
गायत्री च्छन्दः श्रीर्द्देवता
उभयपादप्रक्षालने
विनियोगः । ॐ
पूर्ब्बमन्यमपरमन्यमुभौ पादाव-
घनेनिजे राष्ट्रस्यद्ध्यर्ा
अभयस्यावरुद्ध्यै । अनेन
पादद्वये उदकाञ्जलिं दद्यात् । ततः
सम्प्रदाता
साक्षतदूर्व्वापल्लवान् शङ्खादिपात्रे
निधाय ।

कन्यां सवस्त्रालङ्कृतां प्रजापतिदेवताकां तुभ्य-
महं सम्पददे । इति हस्तद्वयोपरि सतिल-
जलकुशानर्पयति । जामाता ॐ स्वस्तीत्यभि-
धाय कन्येयं प्रजापतिदेवताका इति वदेत् ।
गायत्रीं कामस्तुतिञ्च पठेत् । ॐ क इदं कस्मा
अदात् कामः कामायादात् कामो दाता कामः
प्रतिग्रहीता कामः समुद्रमाविशत् कामेन त्वा
प्रतिगृह्णामि कामैतत्ते । * । ततः ॐ
अद्येत्यादि
कृतैतत्कन्यादानकर्म्मणः साङ्गतार्थं
दक्षिणामेतत्
सुवर्णं अमुकगोत्रायामुकव्वेशर्म्मणे ब्राह्मणाय
वराय तुभ्यमहं सम्प्रददे । ततो जामाता ॐ
स्वस्तीति वदेत् । ततः पतिपुत्त्रवती नारी
दाम्पत्योर्वस्त्रेण ग्रन्थिं वध्नाति । ततः
कुशग्रन्थिं
मुक्त्वा वस्त्रेणाच्छाद्यान्योन्यावलोकनं
कारयेत् ।
ततो भर्त्तुर्द्दक्षिणपार्श्वे बधूमुपवेशयेत् । ततो
नापितेन गौर्गौरित्युक्ते जामाता पठति । प्रजा-
पतिरृषिर्ब्बृहती च्छन्दो गौर्देवता पूर्ब्बबद्धगवी-
मोक्षणे विनियोगः । ॐ मुञ्च गां वरुणपाशा-
द्द्विषन्तं मेऽभिधेहि त्वं जह्यमुष्य
चोभयोरुत्सृज
गामत्तु तृणानि पिबतूदकम् । इति पठेत् । ततो

ज्वलयति मदनाग्निं मालतीनां रजोभिः
॥”)
विवेकी । इति मेदिनी ॥

**विविक्ता**, स्त्री, दुर्भगा । इति त्रिकाण्डशेषः ॥

मुद्राङ्कितपुस्तके विरिक्ता इति पाठः ॥

**विविधं**, त्रि, नानाप्रकारम् । इत्यमरः ॥ (यथा,

कौतुकसर्व्वस्वे । २ ।
“कृतं विविधदुष्कृतं सततमेव प्रत्यूहतः
॥”)

**विवीतः**, पुं, भूमिविशेषः । यथा, --

“सममेषां विवीतेऽपि खरोष्ट्रं महिषीसमम् ।
विवीतः प्रचुरतृणकाष्ठो रक्ष्यमाणः
परिगृहीतो
भूप्रदेशः तदुपघातेऽपीतरक्षेत्रसमं दण्डं
एषां
महिष्यादीनां विद्यात् । इति मिताक्षरायां
स्वामिपालविवादप्रकरणम्॥

**विवीतभर्त्ता**, [ऋ] पुं, विवीतभूस्वामी । इति

मिताक्षरा ॥

**विवृक्ता**, स्त्री, (वि + वृज + क्तः । स्त्रियां टाप् ।)

दुर्भगा । इति भूरिप्रयोगः ॥

**विवृतं**, त्रि, (वि + वृ + क्तः ।) विस्तृतम् । इति

मेदिनी । (यथा, शाकुन्तले १ अङ्के ।
“दर्भैरर्द्धावलीढः श्रमविवृतमुखभ्रंशिभिः
कीर्णवर्त्मा ॥”
वर्णोच्चारणे प्रयत्नविशेषः । यथा,
सिद्धान्तकौ-
मुद्याम् । १ । १ । ९ ।
“स्पृष्टेषत्स्पृष्टविवृतसंवृत-
भेदात् ।” “विवृतमुष्मणां स्वराणाञ्च ।
ह्रस्वस्या-
वर्णस्यप्रयोगे संवृतम् । प्रक्रियादशायान्तु
विवृत
मेव ॥”)

| | | |
|---|---|---|
| ॐ अर्घ्यमर्घ्यमर्घ्यं प्रतिगृह्यताम्। इत्यभि-<br>धायार्घ्यमर्पयति। जामाता च ॐ अर्घ्यं प्रति-<br>गृह्णामीति गृहीत्वा प्रजापतिरृषिरर्घ्यं देवता<br>अर्घ्यप्रतिग्रहणे विनियोगः। ॐ अन्नस्य राष्ट्रि-<br>रसि राष्ट्रिस्ते भूयासम्। अनेनार्घ्यं शिरसि<br>दद्यात्। ततः सम्प्रदाता उदकपात्रं गृहीत्वा।<br>ॐ आचमनीयमाचमनीयमाचमनीयं प्रति-<br>गृह्यतां इत्युदकपात्रमर्पयति। जामाता च<br>ॐ आचमनीयं प्रतिगृह्णामीति गृहीत्वा प्रजा-<br>पतिरृषिराचमनीयं देवता आचमनीयाचमने | | |

**विवृता**, स्त्री, क्षुद्ररुग्भेदः । इति मेदिनी ॥

तल्लक्षणं यथा, --
"विवृतास्यां महादाहां
पक्वोडुम्बरसन्निभाम् ।
विवृतामिति तां विद्यात् पित्तोत्थां
परिमण्ड-
लाम् ॥"
परितः शोथवतीम् ॥ * ॥
अस्याश्चिकित्सा ।
"विवृतामिन्द्रवृद्धाञ्च गर्द्दभीं
जालगर्द्दभम् ।
पैत्तिकस्य विसर्पस्य क्रियया
साधयेद्भिषक् ।
पाके तु रोपयेदाज्यैः
पक्वैर्म्मधुरभेषजैः ॥"
इति भावप्रकाशः ॥
(विवृत्तेति क्वचित् पाठः ॥)

**विवृताक्षः**, पुं, (विवृते अक्षिणी यस्य ।) कुक्कुटः ।

इति हेमचन्द्रः ॥

**विवृतिः**, स्त्री, व्याख्या । विपूर्ब्बवृधातोः क्तिप्रत्य-

येन निष्पन्नमिदम् । विवरणम् । यथा, --
"शक्तिग्रहं व्याकरणोपमान-
कोषाप्तकाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषात् विवृतेर्व्वदन्ति
सान्निध्यतः सिद्धपदस्य वृद्धाः ॥"
इति मलमासतत्त्वम् ॥

**विवृत्तं**, त्रि, (वि + वृत् + क्तः ।) चलितम् ।

यथा, --
"विवृत्तपार्श्वं रुचिराङ्गहावं
समुद्वहच्चारु नितम्बरम्यम् ।
आमन्द्रमन्थध्वनिदत्ततालं
गोपाङ्गनानृत्यमनन्दयत्तम् ॥"
इति भट्टिः ॥
विवृत्तं तिर्य्यक्चलितं पार्श्वं यत्र । इति
तट्टीका ॥

(यथा, याज्ञवल्क्ये । ३ । १५६ ।
"आचार्य्योपासनं वेदशास्त्रार्थेषु
विवेकिता ॥")

**विवेकी**, [न्] पुं, (विवेकोऽस्यास्तीति । विवेक +

इनिः ।) देवसेनराजपुत्त्रः । यथा, --
"देवसेनोऽपि केशिन्यां जनयामास
पुत्त्रकान् ।
सप्त शृणुत तान् यूयं नामतः
कीर्त्तितांस्तथा ॥
सुमना वसुदानश्च ऋतध्रग्यवनः कृती
।
नीलो विवेकीत्येते वै
सर्व्वशास्त्रविशारदाः ॥"
इति कालिकापुराणे भैरववंशानुकीर्त्तने
९०
अध्यायः ॥ विचारकर्त्ता । इति
मेदिन्यां विवेक-
शब्दार्थदर्शनात् ॥ विवेकविशिष्टे, त्रि ॥
(यथा,
मार्कण्डेये । ६६ । ३४ ।
"दृष्टादृष्टांस्तथा भोगान् वाञ्छमाना
विवे-
किनः ।
दानानि च प्रयच्छन्ति पूर्णधर्म्मांश्च
कुर्व्वते ॥")

**विवेचकः**, पुं, (वि + विच् + ण्वुल् ।) विवेचन-

कर्त्ता । विवेचयति य इत्यर्थे
णकप्रत्ययेन
निष्पन्नमिदम् ॥

**विवेचनं**, क्ली, (वि + विच् + ल्युट् ।) विवेकः ।

इति शब्दरत्नावली ॥ (यथा, हरिवंशे
भविष्य-
पर्व्वणि । ४३ । १८ ।
"विद्वद्भिर्गीयसे विष्णो त्वमेव
जगतीपते ।
इच्छया सर्व्वमाप्नोषि
दृष्टादृष्टविवेचनम् ॥" * ॥

**विश**, औ श प्रवेशे । इति कविकल्पद्रुमः ।

(तुदा०-पर०-सक०-अनिट् ।) श, विशति ।
औ, अविक्षत् । विवेश कश्चिज्जटिलस्तपोवनम् ।
विपराजिपरिव्यवक्रीनिविशेत्यादिनात्मनेपदवि-
धानेऽपि भर्त्तुरङ्के निविशती भयादिति रघौ ।
केवलात् शतृप्रत्ययं विधाय पश्चादुपसर्गयोगा-
दिति दुर्घटवृत्तिः । निशब्द इह उपसर्गप्रति-
रूपको वा । यस्माद्विश्वमिदं सर्व्वं तस्य शक्त्या
महात्मनः । तस्मादेवोच्यते विष्णुर्विशधातोः
प्रवेशनादिति पुराणे विष्णुशब्दव्युत्पादनात्
मूर्द्धन्यान्तोऽयमिति केचित् तच्चिन्त्यम् । ताल-
व्यान्तस्यैव सर्व्वसम्मतत्वात् । इति दुर्गादासः ॥

**विशं**, क्ली, (विश + कः ।) मृणालम् । इत्यमर-

टीकायां रायमुकुटः ॥ (तत्पर्य्यायो यथा, --
"पद्मनालं मृणालं स्यात्तथाविशमिति स्मृतम् ।"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**विशंवरा**, स्त्री, (विशं मनुष्यं वृणोतीति । वृ +

अच् । अभिधानात् द्वितीयाया अलुक् ।)
पल्ली । इति राजनिर्घण्टः ॥

**विशकण्ठी**, स्त्री, (विशमिव कण्ठो यस्याः ।

विशकण्ठ + ङीष् ।) बलाका । इति राज-
निर्घण्टः ॥

**विशङ्कः**, त्रि, विगता शङ्का यस्य बहुव्रीहिः ।

शङ्कारहितः । (यथा, रघुः । २ । ११ ।
"धनुर्भृतोऽप्यस्य दयार्द्रभाव-
माख्यातमन्तःकरणैर्विशङ्कैः ॥")

**विशङ्कटः**, त्रि, (वि + "वेः शालच्छङ्कटचौ ।"

५ । २ । २८ । इति शङ्कटच् ।) विशालः ।
इत्यमरः ॥ (यथा, भट्टिः । २ । ५० ।
"विशङ्कटो वक्षसि बाणपाणिः
सम्पन्नतालद्वयसः पुरस्तात् ॥"
भयानकः । यथा, कथासरित्सागरे । १०८ ।
१०७ ।
"मांसासृङ्नृत्तवेतालतालवाद्यविशङ्कटः ।
अभून्नृत्यत्कबन्धोऽसौ भूतप्रीत्यै रणोत्सवः ॥")

**विशदः**, पुं, (वि + शद् + अच् ।) श्वेतवर्णः ।

**विवृत्तिः**, स्त्री, चक्रवद्भ्रमणम् । घूर्णनम् । विपूर्ब्ब-

वृतधातोः क्तिप्रत्ययेन निष्पन्नमिदम् ॥ (विविध-
वृत्तिः । यथा, भागवतटीकायां श्रीधरः । ३ । ६ । १० ।
"विश्वसृजां विवृत्तये विविधवृत्तिलाभाय ॥")

**विवेकः**, पुं, परस्परव्यावृत्त्या वस्तुस्वरूपनिश्चयः ।

प्रकृतिपुरुषयोर्व्विभागेन ज्ञानं इत्यन्ये । इति
भरतः ॥ तत्पर्य्यायः । पृथगात्मता २ । इत्य-
मरः ॥ विवेचनम् ३ । इति शब्दरत्नावली ॥
पृथग्भावः ४ । इति धरणिः ॥
"विवेको वस्तुनो भेदः प्रकृतेः पुरुषस्य वा ॥"
इति जटाधरः ॥
यथा । नित्यानित्यवस्तुविवेकस्तावत् ब्रह्मैव नित्यं
वस्तु ततोऽन्यदखिलमनित्यमिति विवेचनम् ।
इति वेदान्तसारः ॥ (यथा, मनौ । १ । २६ ।
"कर्म्मणाञ्च विवेकार्थं धर्म्माधर्म्मौ व्यवेचयत् ॥")
जलद्रोणी । विचारः । इति मेदिनी ॥ (यथा,
मनौ । १ । ११२ ।
"तस्य कर्म्मविवेकार्थं शेषाणामनुपूर्ब्बशः ॥")

**विवेकिता**, स्त्री, (विवेकिन् + तल् ।) विवेकित्वम् ।

विवेकिनो भावः । यथा, --
"यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता ।
एकैकमप्यनर्थाय किमु तत्र चतुष्टयम् ॥"
इति हितोपदेशः ॥
निर्णयः । यथा, मनुः । ८ । २१ ।
"यस्य शूद्रस्तु कुरुते राज्ञो धर्म्मविवेचनम् ।
तस्य सीदति तद्राष्ट्रं पङ्कगौरिव पश्यतः ॥")

**विवेचनीयः**, त्रि, विवेच्यः । विवेचितव्यः । इति

विपूर्ब्बविचधातोरनीयप्रत्ययेन निष्पन्नमिदम् ॥

**विव्रु(ब्रु)वन्**, [त्] त्रि, (वि + ब्रू + शतृ ।) विरुद्ध-

वक्ता । यथा, --
"यो न भ्राता पिता वापि न पुत्त्रो न नियो-
जितः ।
परार्थवादी दण्ड्यः स्यात् व्यवहारेषु विब्रुवन् ॥"
विब्रुवन् विरुद्धं ब्रुवन् । इति व्यवहारतत्त्वम् ॥

**विवोढा**, [ऋ] पुं, (वि + वह + तृच् ।) वरः ।

पतिः । इति हेमचन्द्रः ॥

**विव्वोकः**, पुं, स्त्रीणां शृङ्गारभावजा क्रिया । इत्य-

मरः ॥ अभिमतवस्तुप्राप्तावपि गर्व्वादिनादरः
सापराधस्य च संयमनं ताडनञ्च विव्वोकः ।
यदुक्तम् ।
"गर्व्वाभिमानादिष्टेऽपि विव्वोकोऽनादरक्रिया ।"
तथा ।
"अभिमतवस्तूपहृतावपि गुरुगर्व्वादनादर-
स्तन्व्याः ।
स्खलति प्रियस्य हृदयं संयमताडनमयन्तु
विव्वोकः ॥"
इति भरतः ॥
"विव्वोकस्त्वतिगर्व्वेण वस्तुनीष्टेऽप्यनादरः ।
न त्वराहर्षवागादेर्दयितागमनादिषु ॥"
इत्यमरः ॥ (जयद्रथपुत्त्रः । यथा, भागवते ।
९ । २१ । २३ ।
"बृहत्कायस्ततस्तस्य पुत्त्र आसीज्जयद्रथः ।
तत्सुतो विशदस्तस्य स्येनजित् समजायत ॥")

**विशदः**, त्रि, (वि + शद् + अच् ।) विमलः ।

इति हेमचन्द्रः ॥ (यथा, रघुः । ४ । १८ ।
"प्रसादसुमुखे तस्मिन् चन्द्रे च विशदप्रभे ।
तदा चक्षुष्मतां प्रीतिरासीत् समरसा द्वयोः ॥")
व्यक्तः । इति मेदिनी ॥ (यथा, रघुः । ८ । ३ ।
"विशदोच्छ्वसितेन मेदिनी कथयामास कृतार्थतामिव ॥")
शुक्लगुणयुक्तः । इत्यमरः ॥ (उज्ज्वलः । यथा,
माघे । ८ । ७० ।
"स्वच्छाम्भः स्नपनविधौतमङ्गमोष्ठ-
स्ताम्बूलद्युतिविशदो विलासिनीनाम् ।
वासश्च प्रतनु विविक्तमस्त्विवतीया-
नाकल्पो यदि कुसुमेषुणा न शून्यः ॥")

| | | |
|---|---|---|
| | इति सारसुन्दरी ॥<br>"इष्टेऽपि गर्व्वमानाभ्यां विव्वोकः<br>स्यादनादरः ॥"<br>इत्युज्ज्वलनीलमणिः ॥ | |

**विशयः**, पुं, (वि + शी + अच् ।) संशयः । यथा,

"विषयो विशयश्चैव
पूर्व्वपक्षस्तथोत्तरम् ।
निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं
स्मृतम् ॥"
विषयो विचारार्हवाक्यम् ।
विशयोऽस्यायमर्थो
न वा इति संशयः । इति
तिथ्यादितत्त्वम् ॥
आश्रयः । इति केचित् ॥

**विशयी**, [न्] त्रि, (विशयोऽस्त्यस्येति । विशष +
इनिः ।) संशयी । इति
विशयशब्दार्थदर्श-
नात् ॥

**विशरः**, पुं, (वि + शॄ हिंसायाम् + अप् ।) वधः ।
इत्यमरः ॥

**विशरणं**, क्ली, (वि + शॄ + ल्युट् ।) मारणम् ।
इति हेमचन्द्रः ॥

**विशल्यः**, त्रि, (विगतं शल्यं यस्मात् ।) शल्य-
रहितः । यथा, --
"सशल्यः स समाघ्राय लक्ष्पणः
परवीरहा ।
विशल्यो विरुजः शीघ्रमुदतिष्ठन्
महीतलात् ॥"
इति श्रीरामायणे युद्धकाण्डे १०२
सर्गः ॥

**विशल्यकरणी**, स्त्री, (विशल्यं क्रियतेऽनयेति ।
विशल्य + कृ + ल्युट् । ङीप् ।)
औषधिविशेषः ।
यथा, --
"पूर्ब्बन्तु कथितो योऽसौ वीर
जाम्बवता तव ।
दक्षिणे शिखरे जातां महौषधिमिहानय
॥
मोदा । इति राजनिर्घण्टः ॥ (नदीविशेषः
।
यथा, महाभारते । २ । ९ । २० ।
"किम्पुना च विशल्या च तथा वैतरणी
नदी ॥")

**विशसनं**, क्ली, (वि + शस हिंसायाम् + ल्युट् ।)
मारणम् । इत्यमरः ॥ (यथा, हरिवंशे ।
९९ ।
४३ ।
"तस्मिन् विशसने घोरे
चक्रलाङ्गलसंप्लवे ।
दारुणानि प्रवृत्तानि रक्षांस्यौत्पातिकानि
च ॥"
नरकविशेषः । यथा, भागवते । ५ । २६
। ७ ।
"प्राणरोधो विशसनं लालाभक्षः
सारमेयादन-
मरीचिरयःपानमिति ॥" * ॥
विनाशकारिणि,
त्रि । यथा, महाभारते । ६ । ५९ । ६० ।
"यमदण्डोपमां
गुर्व्वीमिन्द्राशनिसमस्वनाम् ।
अपश्याम महाराज रौद्रीं विशसनीं गदाम्
॥")

**विशसनः**, पुं, (विशसति हिनस्तीति । वि + शस
हिंसायाम् + ल्युः ।) खड्गः । इति
त्रिकाण्ड-
शेषः ॥ (यथा, महाभारते । १२ । १६६
।
८३ -- ८४ ।
"असेरष्टौ हि नामानि रहस्यानि निबोध
मे ।
पाण्डवेय सदा यानि कीर्त्तयन् लभते
जयम् ॥
असिर्व्विशसनः खड्गस्तीक्ष्णधारो
दुरासदः ।
श्रीगर्भो विजयश्चैव धर्म्मपालस्तथैव च
॥")

**विशाखा**, स्त्री, कठिल्लकः । इति मेदिनी ॥ अश्वि-
न्यादिसप्तविंशतिनक्षत्रान्तर्गतषोडशनक्षत्रम् ।
तत्पर्य्यायः । राधा २ । इत्यमरः ॥ "विशाखे द्वे ।
'पत्न्योर्मध्यगतस्तत्र सुग्रीवः प्लवगेश्वरः ।
विशाखयोर्मध्यगतः संपूर्ण इव चन्द्रमाः ॥'
इति रामायणम् ॥
अतएव द्वित्वमुचितं किन्तु एकतारापेक्षया
एकवचनमिहोक्तम् ।" इति भरतः ॥ तस्या-
रूपं तोरणाकारचतुस्तारामयम् । इति मुहूर्त्त-
चिन्तामणिः ॥
"तोरणाकृतिनि पञ्चतारके
तारकेशवदने विशाखभे ।
तन्वि यान्ति विबुधाध्वमध्यगे
कुम्भतो रसभुजाः कलाः प्रिये ॥"
दं । ० । २६ । इति कालिदासकृतरात्रिलग्ननिरू-
पकग्रन्थः ॥ अस्या अधिदेवते शक्राग्नी । इयं
मिश्रगणान्तर्गता । इति ज्योतिस्तत्त्वम् ॥ * ॥
तत्र जातफलम् ।
"सदानुरक्तो विविधक्रियायां
सुवर्णकारैरपि सख्यमेति ।
यस्य प्रसूतौ च भवेत् विशाखा
सखा न कस्यापि भवेत् प्रसूतः ॥"
इति कोष्ठीप्रदीपः ॥

**विशातनः**, त्रि, (वि + शत + णिच् + ल्युः ।)
मोचनकर्त्ता । (यथा, महाभारते । ७ । ८१ । १८ ।
"नमस्ते देवदेवेश सनातन विशातन ।
विष्णो जिष्णो हरे कृष्ण वैकुण्ठ पुरुषोत्तम ॥")
यथा च ।
"साधु वीर त्वया पृष्टमवतारकथां हरेः ।
यत्त्वं पृच्छसि मर्त्यानां मृत्युपाशविशातनीम् ॥"
इति श्रीभागवते ३ स्कन्धे १४ अध्यायः ॥
"मृत्योः पाशं विशातयति मोचयतीति तथा ।"
इति तट्टीकायां श्रीधरस्वामी ॥ (वि + शत +
णिच् + ल्युट् । पातने, क्ली । यथा, महा-
भारते । ७ । १२ । १९ ।
"यतमानाः प्रयत्नेन द्रोणानीकविशातने ।
न शेकुः सृञ्जया युद्धे तद्धि द्रोणेन पालितम् ॥")

**विशायः**, पुं, (वि + शी + "व्युपयोः शेतेः पर्य्याये ।"

विशल्यकरणीं नाम्ना सावर्ण्यकरणीं तथा ।
संजीवकरणीं वीर सन्धानीञ्च महौषधीम् ॥”
इति रामायणे वाल्मीकीये युद्धकाण्डे १०३
सर्गः ॥

**विशल्यकृत्,** पुं, (विशल्यं तत्प्रहारजन्यवेदनादि-
नाशं करोतीति । कृ + क्विप् ।) विशालीवृक्षः ।
हापरमालीति ख्यातः । तत्पर्य्यायः । अक्षो-
डकः २ सुकल्कः ३ भूपलाशः ४ । इति रत्न-
माला ॥ आस्फोतः ५ आचरत्प्रियः ६ । इति
शब्दचन्द्रिका । विशल्यकारिणि त्रि ॥

**विशल्या,** स्त्री, (विगतं शल्यन्तत्प्रहारादिजनित-
वेदनादिनाशो यया ।) गुडूची । (अस्याः
पर्य्यायो यथा, --
“गुडूची मधुपर्णी स्यादमृतामृतवल्लरी ।
छिन्ना च्छिन्नरुहा च्छिन्नोद्भवा वत्सादनीति च ॥
जीवन्ती तन्त्रिका सोमा सोमवल्ली च कुण्डली ।
चक्रलक्षणिका धीरा विशल्या च रसायनी ॥
चन्द्रहासी वयःस्था च मण्डली देवनिर्म्मिता ॥”
इति भावप्रकाशस्य पुर्व्वखण्डे १ भागे ॥)
अग्निशिखावृक्षः । (अस्याः पर्य्यायो यथा, --
“कलिहारी तु हलिनी लाङ्गली शक्रपुष्प्यपि ।
विशल्याग्निशिखानन्ता वह्निवक्त्वा च गर्भनुत् ॥”

**विशसितः,** त्रि, मारितः । विपूर्व्वशसधातोः
क्तप्रत्ययेन निष्पन्नः । इति सिद्धान्तकौमुदी ॥

**विशस्तः,** त्रि, अविनीतः । धृषिशसी वैघात्ये ।
एतौ निष्ठायामविनये एवानिटौ स्तः । धृष्टो
विशस्तः । अन्यत्र धर्षितः । विशसितः । इति
सिद्धान्तकौमुदी ॥

**विशस्ता,** [ऋ] पुं, (वि + शस हिंसायाम् +
तृच् ।) चाण्डालः । इति संक्षिप्तसारोणादि-
वृत्तिः ॥ (हिंसाकारके, त्रि । यथा, महा-
भारते । १२ । ११५ । ४९ ।
“आहर्त्ता चानुमन्ता च विशस्ता क्रयविक्रयी ।
संस्कर्त्ता चोपभोक्ता च खादकः सर्व्व एव ते ॥”
पापिन इति शेषः ॥)

**विशाकरः,** पुं, भद्रचूडः । इति शब्दचन्द्रिका ॥
लङ्कासिज् इति भाषा ॥

**विशाखः,** पुं, कार्त्तिकेयः । इत्यमरः ॥ (यथा,
महाभारते । ३ । २३१ । ७ ।
“प्रभुर्नेता विशाखश्च नैगमेयः सुदुश्चरः ॥”)
घन्विनां वितस्त्यन्तरेण पादसंस्थानम् । इति
भरतः ॥ याचकः । इति मेदिनीकरहेमचन्द्रौ ॥
पुनर्नवा । इति राजनिर्घण्टः ॥ (विगता शाखा
यस्य । शाखाविहीने, त्रि । यथा, हरिवंशे ।
४८ । ५२ ।
“कबन्धोऽवस्थितः संख्ये विशाख इव पादपः ॥”)

**विशाखजः,** पुं, नारङ्गः । इति शब्दचन्द्रिका ॥
विशाखजाते, त्रि ॥

३ । ३ । ३९ । इति घञ् ।) प्रहरिकादीनां
क्रमेण शयनम् । यथा, अमरे ।
“उपशायो विशायश्च पर्य्यायशयनार्थकौ ॥”

**विशारणं,** क्ली, (वि + शॄ + णिच् + ल्युट् ।)
मारणम् । इति हेमचन्द्रः ॥

**विशारदः,** त्रि, विद्वान् । (यथा, मनुः । ७ । ६३ ।
“दूतञ्चैव प्रकुर्व्वीत सर्व्वशास्त्रविशारदम् ॥”)
प्रगल्भः । इत्यमरः ॥ प्रसिद्धः । इति हारा-
वली ॥ श्रेष्ठः । इत्यजयपालः ॥ वकुले, पुं । इति
राजनिर्घण्टः ॥

**विशारदा,** स्त्री, क्षुद्रदुरालभा । इति राज-
निर्घण्टः ॥

**विशालः,** त्रि, (वि + “वेः शालच्छङ्कटचौ ।” इति
शालच् । यद्वा, विश प्रवेशने + “तमिविशि-

| | | |
|---|---|---|
| इति भावप्रकाशस्य पूर्व्वखण्डे १ भागे ॥)<br>दन्ती इत्यमरः ॥ (अस्याः पर्य्यायो यथा, --<br>गुदन्ती विशल्या च<br>स्यादुदुम्बरपर्ण्यपि ।<br>तथैरण्डफला शीघ्रा<br>श्येनघण्टाघुणप्रिया ॥<br>वारहासी च कथिता निकुम्भश्च मकूलकः ॥”<br>इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)<br>त्रिपुटा । इति मेदिनी ॥ कलिकारी । अज- | **विशाखलं**, क्ली, युद्धकाले मध्ये विन्यस्तपादद्वयम् ।<br>यथा, --<br>“विशालान्तरविन्यस्ते पादयुग्मे विशाखलम् ॥”<br>इति शब्दमाला ॥ | |

विडीति ।” उणा० १ । ११७ । इति कालन् ।)
बृहत् । इत्यमरः ॥ (यथा, रघुः । ६ । ३२ ।
“अवन्तिनाथोऽयमुदग्रबाहु-
र्विशालवक्षास्तनुवृत्तमध्यः ॥”
विगतः शालः स्तम्भो यस्य । स्तम्भरहितः ।
यथा, शिशुपालवधे । ३ । ५० ।
“गृहैर्व्विशालैरपि भूरिशालैः ॥”)

**विशालः**, पुं, (विश + कालन् ।) मृगभेदः । पक्षि-
भेदः । इति मेदिनी ॥ नृपभेदः । वृक्षभेदः ।
इति शब्दरत्नावली ॥

**विशालता**, स्त्री, (विशालस्य भावः । विशाल +
तल् ।) पार्श्वविस्तारः । ओसार इति ख्यातः ॥
तत्पर्य्यायः । परिणाहः २ । इत्यमरः ॥ (यथा,
बृहत्संहितायाम् । ४ । ८ ।
“उन्नतमीषच्छृङ्गं नौसंस्थाने विशालता चोक्ता ॥”)
सामान्यविशालत्वम् । इति शब्दरत्नावली ॥

**विशालतैलगर्भः**, पुं, (विशालं प्रचुरं तैलं गर्भे
यस्य ।) अङ्कोठवृक्षः । इति राजनिर्घण्टः ॥

**विशालत्वक्**, [च्] पुं, (विशाला त्वक् यस्य ।)
सप्तपर्णवृक्षः । इत्यमरः ॥ (यथास्य पर्य्यायः ।
“सप्तपर्णो विशालत्वक् शारदो विषमच्छदः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**विशालपत्रः**, पुं, (विशालानि पत्राणि यस्य ।)
“अनिलश्चानलश्चैव विशालाक्षोऽथ कुण्डली ॥”)
सुनेत्रे, त्रि । इति मेदिनी ॥ (यथा, महा-
भारते । ३ । ३९ । ७० ।
“ददामि ते विशालाक्ष चक्षुः पूर्ब्बऋषि-
र्भवान् ॥”)
विष्णुः । इति केचित् ॥
(धृतराष्ट्रपुत्रः । यथा, महाभारते । १ । ११७ । ९ ।
“अपराजितः कुण्डशायी विशालाक्षो दुरा-
धरः ॥”)

**विशालाक्षी**, स्त्री, (विशाले अक्षिणी यस्याः ।)
वरस्त्री । इति विश्वः ॥ (यथा, महाभारते ।
१ । ७७ । १३ ।
“यत्रोषितं विशालाक्षि त्वया चन्द्रनिभानने ।
तत्राहमुषितो भद्रेकुक्षौ काव्यस्य भामिनि ॥”)
नागदन्ती । इति राजनिर्घण्टः ॥ पार्व्वती ।
यथा, आदियामले ।
ईश्वर उवाच ।
“ध्रुवमाद्यं समुद्धृत्य मायाबीजं समुद्धरेत् ।
विशालाक्षीपदं ङेऽन्तं हृदन्तं मन्त्रमुद्धरेत् ॥
अष्टाक्षरी महाविद्या अष्टसिद्धिप्रदा शिवे ।
प्रसङ्गात् कथिता विद्या त्रैलोक्यदुर्ल्लभा प्रिये ॥
ऋषिरस्या महेशानि सदाशिवो महाप्रभुः ।
पंक्तिश्च छन्दः कथितं विशालाक्षी च देवता ॥
चतुःषष्टियोगिन्यन्तर्गतयोगिनीविशेषः । इति
दुर्गार्च्चापद्धतिः ॥

**विशाली**, स्त्री, अजमोदा । इति राजनिर्घण्टः ॥

**विशिखः**, पुं, (विशिष्टा शिखा यस्य ।) शर-
वृक्षः । इति राजनिर्घण्टः ॥ बाणः । इत्यमरः ॥
(यथा, भागवते । ४ । १७ । १३ ।
“सन्दधे विशिखं भूमेः क्रुद्धस्त्रिपुरहा यथा ॥”)
तोमरः । इति मेदिनी ॥ (विगता शिखा
यस्य ।) शिखारहिते, त्रि ॥ यथा, --
“विशिखोऽनुपवीती च कृतं कर्म्म न तत् कृतम् ॥”
इति स्मृतिः ॥

**विशिखा**, स्त्री, खनित्री । रथ्या । (यथा, माघे ।
१५ । १७ ।
“विशिखान्तराण्यतिपपात
सपदि जवनैः स वाजिभिः ॥”)
नालिका । इति मेदिनी ॥

**विशिपं**, क्ली, (विशन्त्यत्रेति । विश + “विटप-
पिष्टपविशिपोलपाः ।” उणा० ३ । १४५ । इति
कप्रत्ययेन निपातनात् साधुः ।) मन्दिरम् ।
इत्युणादिकोषः ॥

**विशिष्टः**, त्रि, (वि + शिष् + क्तः । यद्वा, शास +
क्तः ।) युक्तः । यथा । हस्तानक्षत्रगङ्गा-
रूपगुणद्वयविशिष्टदशमीविर्धेयस्मिन् अहनि
तल्लाभस्तत्र स्नानम् । इति तिथ्यादितत्त्वे स्मार्त्त-
भट्टाचार्य्यलिखनम् ॥ विशेषेण शिष्टश्च ॥ (यथा,
हितोपदेशे ।
“समैश्च समतां याति विशिष्टैश्च विशिष्टताम् ॥”)

**विशिष्टः**, पुं, विष्णुः । यथा । विशिष्टः शिष्टकृत्
शुचिः । इति तस्य सहस्रनामस्तोत्रम् ॥

**विशिष्टाद्वैतवादी**, [न्] त्रि, (विशिष्टं युक्तं
अद्वैतं वदतीति । वद् + णिनिः ।) प्रकृति-
पुरुषयोर्भिन्नत्वेऽपि मिलितयोस्तयोर्ब्रह्मत्ववादी ।
तस्य मतं यथा । पुरुषस्तदतिरिक्ता प्रकृतिः
किन्तूभयमिलितं ब्रह्म चणकद्विदलवत् । इत्थं

कासालुः । श्रीतालः । इति राजनिर्घण्टः ॥

**विशालफलिका**, स्त्री, (विशालं फलं यस्याः ।

ततः स्वार्थे कन् । टापि अत इत्वम् ।)
निष्पावी ।
इति राजनिर्घण्टः ॥

**विशाला**, स्त्री, (विशाल + टाप् ।) इन्द्रवारुणी ।

इत्यमरः ॥ यथाच ।
"विशाला कफवातघ्नी हेमकुष्ठहरा सरा ॥"
इति राजवल्लभः ॥
उज्जयनी । इति मेदिनी ॥ उपोदकी । महेन्द्र-
वारुणी । इति राजनिर्घण्टः ॥ (यथा, --
"ऐन्द्रीन्द्रवारुणी चित्रा गवाक्षी च गवादनी ।
वारुणी च गवाप्युक्ता सा विशाला महाफला ।
श्वेतपुष्पा मृगाक्षी च मृगैर्वारुर्मृगादनी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
तीर्थविशेषः । यथा, --
"मुण्डनञ्चोपवासश्च सर्व्वतीर्थेष्वयं विधिः ।
वर्ज्जयित्वा गयां गङ्गां विशालां विरजां तथा ॥"
इति प्रायश्चित्ततत्त्वम् ॥
दक्षकन्या । यथा, --
"मनोरमां भानुमतीं विशालां बाहुदामथ ।
दक्षः प्रादान्महादेव चतस्रोऽरिष्टनेमिने ॥"
इति गारुडे ६ अध्यायः ॥

**विशालाक्षः**, पुं, (विशाले अक्षिणी यस्य । समासे

षच् ।) हरः । (यथा, महाभारते । १२ । ५९ । ८० ।
"ततस्तां भगवान्नीतिं पूर्ब्बं जग्राह शङ्करः ।
बहुरूपो विशालाक्षः शिवः स्थाणुरुमापतिः ॥")
गरुडः । (तद्वंशीयविशेषः । यथा, महा-

शक्तिः प्रणवमित्युक्तं लज्जाबीजञ्च बीजकम् ।
धर्म्मार्थकाममोक्षेषु विनियोगः प्रकीर्त्तितः ॥
अङ्गन्यासकरन्यासौ यथावदभिधीयते ।
षड्दीर्घभाजा बीजेन प्रणवाद्येन कल्पयेत् ॥
मूलेन व्यापकं न्यस्य ध्यायेद्देवीं परां शिवाम् ।
ध्यायेद्देवीं विशालाक्षीं तप्तजाम्बूनदप्रभाम् ॥
द्विभुजामम्बिकां चण्डीं खड्गखर्परधारिणीम् ।
नानालङ्कारसुभगां रक्ताम्बरधरां शुभाम् ॥
सदा षोडशवर्षीयां प्रसन्नास्यां त्रिलोचनाम् ।
मुण्डमालावतीं रम्यां पीनोन्नतपयोधराम् ॥
शिवोपरि महादेवीं जटामुकुटमण्डिताम् ।
शत्रुक्षयकरीं देवीं साधकाभीष्टदायिकाम् ॥
सर्व्वसौभाग्यजननीं महासम्पत्प्रदां स्मरेत् ।
एवं ध्यात्वा महादेवीमुपचारैः प्रपूजयेत् ॥
पुरश्चरणकाले तु वर्णलक्षं जपेत् सुधीः ।
यन्त्रमध्ये समावाह्य प्रतिष्ठां कारयेत्ततः ॥
त्रिकोणञ्चाष्टपत्रञ्च ततो वृत्तं समालिखेत् ।
चतुरस्रं चतुर्द्वारमेवं मण्डलमालिखेत् ॥
तत्रावाह्य यजेद्देवीं सर्व्वसौभाग्यसुन्दरीम् ।
विशालाक्षीं विशालास्यां यथाविधि प्रपूजयेत् ॥
त्रिकोणान्तर्महादेवीं संपूज्य मातरः क्रमात् ।

ब्रह्मण एकत्वं व्यवस्थितम् । चित् परमाणु-
स्वरूपो जीवः समस्तविश्वं ब्रह्मांशः । इति
माधवभाष्यादिः ॥ * ॥ अद्वैतवादिमतं यथा ।
ब्रह्मैव सत्यं प्रत्यक्षादिसिद्धं विश्वं ब्रह्मणि आरो
पितम् । यथा रज्जुः रज्जुस्वरूपाज्ञानात्
सर्पवत् प्रतिभाति । तथा ब्रह्मस्वरूपाज्ञानात्
विश्वं वस्तुवत् प्रतिभाति । प्रकृतिर्जीवश्चापि
पर्य्यवसाने ब्रह्मैव ब्रह्मान्यत् सद्वस्तु नास्ति ।
अत्र प्रमाणं शारीरिकसूत्रस्य शङ्कराचार्य्य-
कृतभाष्यतट्टीकाकल्पतरुभाष्यरत्नप्रभादि॥

**विशीर्णः**, त्रि, (वि + शॄ + क्तः ।) शुष्कः । यथा,

"विशीर्णा विदला ह्रस्वा वक्राः स्थूला द्विधा-
कृताः ।
क्रिमिदष्टाश्च दीर्घाश्च समिधो नैव कारयेत् ॥"
इति तन्त्रसारः ॥

**विशीर्णपर्णः**, पुं, (विशीर्णानि पर्णानि यस्य ।)

निम्बवृक्षः । इति राजनिर्घण्टः ॥

| | | |
|---|---|---|
| भारते । ५ । १०१ । ९ । | पङ्कजाक्षी विरूपाक्षी रक्ताक्षी चण्डलोचना ॥<br>एकनेत्रा द्विनेत्रा च कोटराक्षी त्रिलोचना ।<br>एताः पूज्या महेशानि पत्राग्रेष्वष्टयोगिनीः ॥<br>पश्चिमादिक्रमेणैव अष्टसिद्धिस्वरूपिणीः ।<br>चतुरस्रे महादेवि लोकपालान् समर्च्चयेत् ॥<br>तद्बहिश्चैव वज्राद्यान् पूजयेद्भाग्यहेतवे ।<br>ततो यथाशक्ति जप्त्वा पूर्ब्बवच्च समाचरेत् ॥”<br>इति तन्त्रसारः ॥ * ॥ | |

**विशुद्धं**, त्रि, विशेषेण शुद्धम् । तत्पर्य्यायः । उज्ज्व-
लम् २ विमलम् ३ विशदम् ४ वीध्रम् ५ अव-
दातम् ६ अनाविलम् ७ शुचिः ८ । इति हेम-
चन्द्रः ॥ निभृतम् । सत्यम् । इत्यजयपालः ॥
षट्चक्रान्तर्गतपञ्चमचक्रम् । तत्तु कण्ठस्थं अका-
रादिषोडशस्वरयुक्तधूम्रवर्णषोडशदलपद्मम् ।
तन्मध्ये शिव आकाशश्चास्ति । यथा, --
"तदूर्द्धन्तु विशुद्धाख्यं दलषोडशपङ्कजम् ।
स्वरैश्च षोडशैर्युक्तं धूम्रवर्णैर्महत्प्रभम् ।
विशुद्धपद्ममाख्यातमाकाशाख्यंमहाद्भुतम् ॥"
इति तन्त्रम् ॥
अगस्त्यसंहितायाम् ।
अकारादिषोडशस्वरान्
सबिन्दून् षोडशदलकपले कण्ठमूले न्यसेत् ।
विशुद्धे षोडशदले धूम्राभे स्वरभूषिते । इति
तन्त्रसारः ॥

**विशुद्धिः**, स्त्री, (वि + शुध + क्तिन् ।) समः ।
शोधनम् । इति विश्वः ॥
"सर्व्वकर्म्मण्युपादेया
विशुद्धिश्चन्द्रतारयोः ॥"
इति ज्योतिषम् ॥

**विशृङ्खलः**, त्रि, शृङ्खलारहितः । (यथा, कथा-
सरित्सागरे । ५ । ३ ।
"अचिन्तयं ततश्चाहं राजा तावद्विशृङ्खलः ।
तत्कार्य्यचिन्तयाक्रान्तः स्वधर्म्मो
मेऽवसीदति ॥")
अबद्धः । विगता शृङ्खला यस्येति बहुव्रीहि-
निष्पन्नमिदम् ॥

**विशेषः**, पुं, (वि + शिष + घञ् ।) प्रभेदः ।
तथाच तत्रैव । ३ । ११ । ४० ।
"विकारैः सहितो युक्तैर्विशेषादिभिरावृतः ॥"
अतिशयिते, त्रि । यथा, रघुः । २ । १४ ।
"शशाम वृष्ट्यापि विना दवाग्नि-
रासीद्विशेषा फलपुष्पवृद्धिः ॥")

**विशेषकः**, पुं क्ली, (विशेष एव । स्वार्थे कन् ।)
ललाटकृततिलकः । इत्यमरः ॥ (यथा, माघे ।
३ । ६३ ।
"विशेषको वा विशिशेष यस्याः
श्रियं त्रिलोकीतिलकः स एव ॥")
तिलकवृक्षे, पुं । इति राजनिर्घण्टः ॥ (क्ली,
पद्यविशेषः । स तु त्रिभिः श्लोकैरन्वितश्चेत्
तदा भवति । यथा, --
"द्वाभ्यान्तु युग्मकं प्रोक्तं त्रिभिः श्लोकैर्विशेष-
कम् ॥")
विशेषयितरि, त्रि । इति मेदिनी ॥

**विशेषकच्छेद्यं**, क्ली, (विशेषकैश्छेद्यम् ।) चतुः-
षष्टिकलान्तर्गतषष्ठकला । इति शैवतन्त्रम् ॥
सा तु तिलकेषु नानाविच्छेदरचना । इति
दशमस्कन्धीयपञ्चचत्वारिंशाध्यायटीकाव्याख्या ॥

**विशेषगुणः**, पुं, (विशेषो गुणः ।) बुद्ध्यादिषट्कम् ।
रूपादिचतुष्टयः । स्नेहः । स्वाभाविकद्रवत्वम् ।
अदृष्टः । भावना । शब्दः । इति भाषापरि-
च्छेदः ॥

**विशेषविधिः**, पुं, (विशेषो विधिः ।) अल्पवि-
षयकविधिः । यथा, --
"तथा सामान्यकार्य्येभ्यो विशेषकविधिर्ब्बली ।
बहवो विषया यस्य स सामान्यविधिर्भवेत् ।
अल्पः स्याद्विषयो यस्य स विशेषविधिर्म्मतः ॥"
इति दुर्गादासः ॥
सामान्यविशेषयोर्मध्ये विशेषविधिर्बलषान् । इति
स्मृतिः ॥

**विशेषणं**, क्ली, (विशिष्यतेऽनेनेति । वि + शिष +
ल्युट् ।) विशेष्यधर्म्मः । स तु गुणादिः । यथा ।

**विशेष्यः**, त्रि, (विशिष्यते गुणादिभिरिति । वि +
शिष + ण्यत् ।) धर्म्मिपदार्थः । स च द्रव्यादिः ।
विशिष्यते यः । घटपटादिः । भासमान-
वैशिष्ट्यानुयोगी । अस्य लक्षणं यथा । भास-
मानवैशिष्ट्यानुयोगित्वं अस्ति च घट इति
ज्ञाने घटादौ तत् तत्र हि भासमानवैशिष्ट्यं
घटघटत्वयोः सम्बन्धस्तदनुयोगित्वस्यघटादौ
सत्त्वात् । अनुयोगित्वमपि स्वरूपसम्बन्धविशेषः
प्रतियोगित्वमनुयोगित्वञ्चातिरिक्तपदार्थ इत्य-
प्येकदेशिनः । इति कणादः ॥

**विशोकः**, पुं, (विगतः शोको यस्मात् ।) अशोक-
वृक्षः । इति राजनिर्घण्टः ॥ (शोकाभावः ।
यथा, भागवते । १ । १० । ७ ।
"उषित्वा हास्तिनपुरे मासान् कतिपयान्
हरिः ।
सुहृदाञ्च विशोकाय स्वसुश्च प्रियकाम्यया ॥"
युधिष्ठिरस्यानुचरविशेषः । यथा, महाभारते ।
२ । ३३ । ३० ।
"इन्द्रसेनो विशोकश्च
पुरुश्चार्ज्जुनसारथिः ॥")
शोकरहिते, त्रि ॥ (यथा, भागवते । १ ।
१९ । २१ ।
"लोकं परं विरजस्कं विशोकं
यास्यत्ययं भागवतप्रधानः ॥"
स्त्री, संप्रज्ञानसमाधेः पूर्व्वकालीना चित्तवृत्तिः ।
यथा, पातञ्जले । १ । ३६ ।

(यथा, मनुः । ९ । २६ ।
"प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः ।
स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥")
प्रकारः । इति जटाधरः ॥ व्यक्तिः । इति हेम-
चन्द्रः ॥ तिलकः । इति हारावली ॥ सप्त-
पदार्थान्तर्गतपदार्थविशेषः । यथा, --
"द्रव्यं गुणास्तथा कर्म्म सामान्यं सविशेषकम् ।
समवायस्तथाभावः पदार्थाः सप्त कीर्त्तिताः ॥"
इति भाषापरिच्छेदः ॥
विशेषं निरूपयति । अन्त्यो नित्यद्रव्यवृत्ति-
र्विशेषः परिकीर्त्तितः । अन्तेऽवसाने वर्त्तते
इति अन्त्यः यदपेक्षया विशेषो नास्तीत्यर्थः ।
घटपटादीनां द्व्यणुकपर्य्यन्तानां तत्तदवयवभेदात्
परस्परभेदः । परमाणूनां भेदको विशेष एव स
तु स्वत एव व्यावृत्तः । तेन तत्र विशेषान्तरा-
पेक्षा नास्ति इत्यर्थः । इति सिद्धान्तमुक्ता-
वली ॥ * ॥ अलङ्कारप्रभेदः । यथा, --
"विशेषः ख्यातमाधारं विनाप्याधेयवर्णनम् ।
गते सूर्य्येऽपि द्वीपस्थास्तमश्छिन्दन्ति तत्कराः ॥ १
विशेषः सोऽपि यद्येकं वस्त्वनेकत्र वर्ण्यते ।
अन्तर्बहिः पुरः पश्चात् सर्व्वदिश्यपि सैव मे ॥ २ ॥
किञ्चिदारम्भतोऽशक्यवस्त्वन्तरकृतिश्च सः ।
त्वां पश्यता मया लब्धं कल्पवृक्षनिरीक्षणम् ॥" ३
इति चन्द्रालोकः ॥
(पृथिवी । यथा, भागवते । २ । ५ । २९ ।
नीलोत्पलमित्यादि । विशिष्यते सम्बुध्यते अनेन ।
छत्रेण छात्रमद्राक्षीदिति । भेदयति अन्यपदार्थं
पृथक् करोति इति भेदकम् । नाम्ना शिवः
गोत्रेण गार्ग्यः । विशेषणं दृष्टमेव भेदयति ।
भेदकन्तु अदृष्टमेव भेदयति । इति विशेषण-
भेदकयोर्भेदः । इति मुग्धबोधटीकायां दुर्गा-
दासः ॥

**विशेषव्याप्तिः**, स्त्री, (विशेषा असामान्या व्याप्तिः ।)
व्याप्तिभेदः । तल्लक्षणं यथा । प्रतियोगिव्यधि-
करणस्वसमानाधिकरणान्यन्ताभावाप्रतियोगि-
त्वम् । इति चिन्तामणिः ॥

**विशेषितं**, त्रि, (वि + शिष् + णिच् + क्तः ।)
भिन्नम् । व्यवच्छिन्नम् । इति जटाधरः ॥

**विशेषोक्तिः**, स्त्री, (विशेषेणोक्तिः ।) अलङ्कार-
भेदः । तल्लक्षणोदाहरणे यथा, --
"कार्य्याजनिर्व्विशेषोक्तिः सति पुष्कलकारणे ।
हृदि स्नेहक्षयो नाभूत् स्मरदीपे ज्वलत्यपि ॥"
इति चन्द्रालोकः ॥
"विशोका वा ज्योतिष्मती ॥")

**विशोधनी**, स्त्री, (विशोध्यतेऽनयेति । वि + शुध +
ल्युट् । ङीष् ।) दन्तीवृक्षः । इति राज-
निर्घण्टः ॥

**विशोधिनी**, स्त्री, नागदन्ती । इति राजनिर्घण्टः ॥

**विशोधिनीबीजं**, क्ली, जयपालः । इति केचित् ॥

**विश्नः**, पुं, (विच्छ दीप्तौ + "यजयाचयतविच्छेति ।"
३ । ३ । ९० । इति नङ् ।) दीप्तिः । इति
सिद्धान्तकौमुदी ॥ गतिः । इति मुग्धबोध-
टीकायां दुर्गादासः ॥

**विश्रणनं**, क्ली, (वि + श्रण + ल्युट् ।) दानम् ।
इति शब्दरत्नावली ॥

**विश्रब्धः**, त्रि, (वि + श्रन्भ + क्तः ।) अनुद्भटः ।
शान्तः । विश्वस्तः ॥ (यथा, राजतरङ्गिण्याम् ।
८ । २१२१ ।
"विश्रब्धभृत्यः शृङ्गारनामा चाप्यब्रवीत् प्रभोः ।
तं दृष्टवांस्तृतीयेऽह्नि शयनेऽवगणं स्थितम् ॥")
अत्यर्थः । इति हेमचन्द्रः ॥ गाढः । इति
मेदिनी ॥ (निर्व्विशङ्कः । यथा, रामायणे ।
२ । १९ । ५ ।
"नियुज्यमानां विश्रब्धः किं न कुर्य्यामहं
प्रियम् ॥")

**विश्रब्धनवोढा**, स्त्री, (विश्रब्धा विश्वस्ता नवोढा ।)
मुग्धानवोढाभेदः । यथा । स्वीया त्रिविधा
मुग्धा मध्या प्रगल्भा च । यथा अङ्कुरित-

| | | |
|---|---|---|
| “विशेषस्तु विकुर्व्वाणादम्भसो गन्धवानभूत् ॥” | | यौवना मुग्धा । सा च ज्ञातयौवना अज्ञात- यौवना च । सैव क्रमशो लज्जाभयपराधीन- रतिर्नवोढा । सैव क्रमशो जातप्रश्रया विश्रब्ध- |

नवोढा । अस्याश्चेष्टा क्रिया मनोहरा
कोपे
मार्दवं नवविभूषणे समीहा च ।
विश्रब्धनवोढा
यथा, --
“दरमुकुलितनेत्रपाणिनीवी-
नियमितबाहुकृतोरुयुग्मबन्धम् ।
करकलितकुचस्थलं नवोढा
स्वपिति समीपमुपेत्य कस्य यूनः ॥”
इति रसमञ्जरी ॥

**विश्रमः**, पुं, (वि + श्रम + घञ् । वृद्ध्यभावः ।)
विश्रामः । इति भरतद्विरूपकोषः ॥
(यथा,
कातन्त्रकृत्सु । १ । ३ ।
“अविश्रमं यावदिदं शरीरं-
पतत्यवश्यं परिणामदुर्व्वहम् ॥”)

**विश्रम्भः**, पुं, (वि + श्रन्भ + घञ् ।) विश्वासः ।
इत्यमरः ॥ (यथा, भागवते । ३ । २३ ।
२ ।
“नित्यं पर्य्यचरत् प्रीत्या भवानीव भवं
प्रभुम् ।
विश्रम्भेणात्मशौचेन गौरवेण दमेन च ॥”)
केलिकलहः । प्रणयः । इति मेदिनी । भे,
२० ॥
वधः । इति विश्वः ॥

**विश्राणनं**, क्ली, (वि + श्रण + णिच् + ल्युट् ।)
दानम् । इत्यमरः ॥ (यथा, रघुः । २ ।
५४ ।
“कथं नु शक्योऽनुनयो महर्षे-
र्विश्राणनाच्चान्यपयस्विनीनाम्॥”)

**विश्रान्तः**, त्रि, श्रान्तियुक्तः । विपूर्ब्बकश्रमधातोः
क्तप्रत्ययेन निष्पन्नमिदम् ॥

**विश्रान्तिः**, स्त्री, विश्रामः । विपूर्व्वश्रमधातोः
क्तिप्रत्ययेन निष्पन्नमिदम् । (यथा,
रामायणे ।
२ । २ । ८ ।
“विद्वान् सुभगो मानी
विश्रुतकर्म्मा कुलोन्नतः शूरः ।
वित्तेन भवति सर्व्वो
वित्तहीनस्तु सद्गुणोऽप्यगुणः ॥”)
ज्ञातः । संहृष्टः । इति विश्वः ॥

**विश्रुतिः**, स्त्री, विख्यातिः । विपूर्व्वश्रुधातोः क्ति-
प्रत्ययेन निष्पन्नमिदम् ॥ (यथा, भागवते ।
३ ।
२५ । २ ।
“विश्रुतौ श्रुतदेवस्य भूवि तृप्यन्ति मेऽसवः
॥”)

**विश्लेषः**, पुं, (वि + श्लिष् + घञ् ।) विधुरः ।
अयोगः । इति मेदिनी ॥ (यथा, रघुः । १३
। २३ ।
“सैषा स्थली यत्र विचिन्वता त्वां
भ्रष्टं मया नूपुरमेकमूर्व्याम् ।
अदृश्यत त्वच्चरणारविन्द-
विश्ले षदुःखादिव बद्धमौनम् ॥”)

**विश्वं**, क्ली, (विशति स्वकारणमिति । विश प्रवे-
शने + “अशूप्रषिलटिफणीति ।” उणा० १
। १५१ ।
इति क्वन् ।) जगत् । इति मेदिनी । वे, २३
॥
(यथा, भागवते । ३ । १० । १२ ।
“विश्वं वै ब्रह्म तन्मात्रं संस्थितं
विष्णुमायया ।
ईश्वरेण परिच्छिन्नं कालेनाव्यक्तमूर्त्तिना
॥”)
शुण्ठी । (अस्य पर्य्यायो यथा, --
“विश्वं महौषधं शुण्ठी नागरं विश्वभेषजम्
॥”
इति वैद्यकरत्नमालायाम् ॥
“शुण्ठी विश्वा च विश्वञ्च नागरं विश्वभेजम्
।
ऊषणं कटुभद्रञ्च शृङ्गबेरं महौषधम् ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे
॥)
बोलम् । इति राजनिर्घण्टः ॥

**विश्वकद्रुः**, त्रि, खलः । इति मेदिनी । रे, २९६ ॥

**विश्वकर्म्मजा**, स्त्री, (विश्वकर्म्मणः जायते इति ।
जन + डः ।) सूर्य्यभार्य्या । संज्ञा । इति
शब्द-
रत्नावली ॥

**विश्वकर्म्मसुता**, क्ली, (विश्वकर्म्मणः सुता ।) सूर्य्य-
भार्य्या । संज्ञा । इति शब्दरत्नावली ॥

**विश्वकर्म्मा**, [न्] पुं, (विश्वेषु कर्म्म यस्य ।) सूर्य्यः ।
देवशिल्पी । इत्यमरः । तत्पर्य्यायः । त्वष्टा
२
विश्वकृत् ३ देववर्द्धकिः ४ । इति हेमचन्द्रः
॥
(यथा, महाभारते । १ । २१२ । १० ।
“दृष्ट्वा च विश्वकर्म्माणं व्यादिदेश पितामहः
॥”)
मुनिभेदः । इति मेदिनी । ने, २४७ ॥ स
प्रभासस्य वसोः पुत्त्रः । यथा, --
“विश्वकर्म्मा प्रभासस्य पुत्त्रः
शिल्पप्रजापतिः ॥
प्रासादभवनोद्यानप्रतिमाभूषणादिषु।
तडागारामकूपेषु स्मृतः सोऽमरवर्द्धकिः ॥”
इति मात्स्ये ५ अध्यायः ॥ * ॥
अन्यच्च ।
“प्रत्यूषस्य विदुः पुत्त्रमृषिं नाम्ना तु देवलम्
।
विश्वकर्म्मा प्रभासस्य विख्यातो देववर्द्धकिः
॥”
इति गारुडे ६ अध्यायः ॥ * ॥
अपि च ।
“बृहस्पतेस्तु भगिनी वरस्त्री ब्रह्मचारिणी ।
योगसिद्धा जगत् कृत्स्नमसक्ता विचरत्युत ॥
प्रभासस्य तु भार्य्या सा वसूनामष्टमस्य तु ।
विश्वकर्म्मा महाभागस्तस्यां जज्ञे महामतिः
॥
कर्त्ता शिल्पसहस्राणां त्रिदशानाञ्च वर्द्धकिः ।
भूषणानाञ्च सर्व्वेषां कर्त्ता शिल्पवतां वरः ॥
यः सर्व्वेषां विमानानि देवतानां चकार ह ।

"जीर्णस्यास्य शरीरस्य
विश्रान्तिमभिरोचये ॥")
तीर्थविशेषः । यथा, --
राक्षस उवाच ।
"पुरी उज्जयनी नाम तस्यां वासो हि मे
सदा ।
कस्मिंश्चिदथ कालेन गतोऽहं
विष्णुमन्दिरम् ॥
तस्याग्रे तिष्ठते विप्रो वाचको वेदपारगः ।
विश्रान्तितीर्थमाहात्म्यं श्रावयेत् स दिने
दिने ॥
यस्य श्रवणमात्रेण मम भक्तिर्हृदि स्थिता ।
सा संज्ञा च श्रुता तत्र विश्रान्तेश्च
मयानघ ॥
वासुदेवो महाबाहुर्जगत्स्वामी जनार्द्दनः ।
विश्रामं कुरुते तत्र तेन विश्रान्तिसंज्ञिका
॥"
इति वाराहे विश्रान्तिमाहात्म्यनामाध्यायः
॥

**विश्रामः**, पुं, (वि + श्रम + घञ् ।) विरामः ।

इति भरतद्विरूपकोषः ॥ अस्य गुणाः ।
"विश्रामो बलकृत् स्वेदश्रमजित्
स्वास्थ्यदः शुभः ॥"
इति राजवल्लभः ॥

**विश्रावः**, पुं, (विश्रवणमिति । वि + श्रु + "वौ

क्षुश्रुवः ।" ३ । ३ । २५ । इति घञ् ।)
अति-
प्रसिद्धिः । इत्यमरः ॥ (ध्वनिः । यथा,
भट्टिः ।
७ । ३६ ।
"विक्षावैस्तोयविश्रावं तर्ज्जयन्तो
महोदधेः ॥")

**विश्रिः**, पुं, मृत्युः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**विश्रुतः**, त्रि, (वि + श्रु + क्तः ।) ख्यातः । इत्य-

मरः ॥ (यथा, कलाविलासे । २ । ५६ ।

**विश्वः**, पुं, गणदेवताविशेषः । इत्यमरः ॥

"वसुसत्यौ क्रतुदक्षौ कालकामौ धृत्रिः
कुरुः ।
पुरूरवा माद्रवाश्च विश्वेदेवाः प्रकीर्त्तिताः
॥"
इति भरतः ॥ * ॥
"इष्टिश्राद्धे क्रतुर्दक्षः सत्यो नान्दीमुखे वसुः
।
नैमित्तिके कालकामौ काम्ये च धूरिलोचनौ
।
पुरूरवा माद्रवाश्च पार्व्वणे समुदाहृतौ ॥"
इति स्मृतिः ॥
ते तु धर्म्मात् दक्षकन्यायां विश्वायां जाताः
।
इति मात्स्ये ५ अध्यायः ॥ * ॥ नागरः ।
इति
विश्वः ॥ स्थूलशरीरव्यष्ट्युपहितचैतन्यम्
। इति
वेदान्तसारः ॥ * ॥ परिमाणविशेषः ।
यथा, --
"गुञ्जाषण्णवतिस्तोलो दशघ्नं तद्भवेत्
पलम् ।
विश्वा विंशपलं प्रोक्तं दिव्यं कोटिगुणं हि
तत् ।
सैव कोटिगुणा ब्राह्मी विश्वाः शस्यादि-
सम्भवाः ॥"
इति ज्योतिष्मती ॥

**विश्वः**, त्रि, (विश + क्वन् ।) सकलम् । इत्यमरः ॥

(यथा, महाभारते । ३ । २१८ । १६ ।
"यस्तु विश्वस्य जगतो बुद्धिमाक्रम्य
तिष्ठति ।
तं प्राहुरध्यात्मविदो विश्वजिन्नाम पावकम्
॥"
बहु । इति निघण्टुः । ३ । १ ॥)

**विश्वकद्रुः**, पुं, मृगयाकुशलकुक्कुरः । इत्यमरः ॥

ध्वानः । इति मेदिनी । रे, २९६ ॥

मनुष्याश्चोपजीवन्ति यस्य शिल्पं महात्मनः
॥"
इति विष्णुपुराणे १ अंशे १५ अध्यायः ॥
अन्यच्च ।
"द्वौ प्रोक्तौ विश्वकर्म्माणो मयस्त्वष्टा च योग-
वित् ॥
द्वौ धाता च विधाता च पौराणौ जगतः-
पती ॥"
इति वह्निपुराणे गणभेदो नामाध्यायः ॥
(चेतनाधातुः । तद्विवृतिर्यथा । "तत्र पूर्व्वं
चेतनाधातुः सत्त्वकरणो गुणग्रहणाय प्रवर्त्तते
।
स हि हेतुः कारणं निमित्तमक्षरं कर्त्ता मन्ता
वेदिता बोद्धा द्रष्टा धाता ब्रह्मा विश्वकर्म्मा
विश्वरूपः पुरुषः प्रभवोऽव्ययो नित्यो गुणी
ग्रहणं
प्राधान्यमव्यक्तं जीवोज्ञः प्रतुलश्चेतनावान्
विभु-
र्भूतात्मा चेन्द्रियात्मा चान्तरात्माचेति ।"
इति
चरके शारीरस्थाने चतुर्थेऽध्याये ॥)

**विश्वका**, स्त्री, गङ्गाचिल्ली । यथा, --

"गङ्गाचिल्ली तु देवट्टी विश्वका जलकुक्कुटी
।"
इति हारावली ॥

**विश्वकृत्**, पुं, (विश्वं करोतीति । कृ + क्विप् ।)

विश्वकर्म्मा । इति हेमचन्द्रः ॥ (यथा, महा-
भारते । १ । २१२ । १३ ।
"त्रिषु लोकेषु यत्किञ्चित् भूतं स्थावरजङ्गमम्
।

समानयद्दर्शनीयं तत्तदत्र स विश्वकृत् ॥”
ब्रह्मा । यथा, भागवते । ९ । १४ । ८ ।
“निवेदितोऽथाङ्गिरसा सोमं निर्भर्त्स्य
विश्व-
कृत् ।
तारां स्वभर्त्रे प्रायच्छदन्तर्वत्नीमवैत्पतिः
॥”)

**विश्वकेतुः**, पुं, (विश्वमेव केतुर्यस्य । विश्वव्यापी वा केतुर्य्यस्य ।) अनिरुद्धः । इत्यमरः ॥

**विश्वक्**, व्य, सर्व्वतः । इत्यमरटीका ॥

**विश्वक्शेनः**, पुं, विष्णुः । इत्यमरटीकायां भरतः ॥

त्रयोदशमनुः । यथा, --
“मनुर्भूतेः सुतस्तद्वत् भौत्यो नाम
भविष्यति ।
ततस्तु मेरुसावर्णब्रह्मसूनुर्मनुः स्मृतः ॥
ऋतुश्च ऋतुधामा च विश्वक्शेनो मनुस्तया
॥
अतीतानागताश्चैते मनवः परिकीर्त्तिताः
॥”
इति मात्स्ये ९ अध्यायः ॥ * ॥
विष्णोर्निर्म्माल्यधारिदेवता । यथा, --
“निर्म्माल्यधारी विष्णोस्तु
विश्वक्शेनश्चतुर्भुजः ।
शङ्खचक्रगदापाणिर्दीर्घश्मश्रुर्जटाधरः ॥
रक्तपिङ्गलवर्णस्तु सितपद्मोपरिस्थितः ।
प-तृतीयस्वरान्तेन संयुतो बिन्दुनेन्दुना ॥
कीर्त्तितस्तस्य मन्त्रोऽयं तेन तं परिपूजयेत्
।
विसर्ज्जनं तथा विष्णोरैशान्यां
परिकल्पयेत् ॥”
इति कालिकापुराणे ८२ अध्यायः ॥
(क्वचित् विश्वक्सेन इति पाठोऽपि दृश्यते
॥)

**विश्वक्शेना**, स्त्री, प्रियङ्गुवृक्षः । इति केचित् ॥

(केचित् द्वितीयशकारस्थाने सकारं पठन्ति
॥
यथा, --

**विश्वङ्**, [च्] त्रि, सर्व्वत्रगामी । विश्वं अञ्चति इत्यर्थे क्विप्प्रत्ययेन निष्पन्नमिदम् ॥

**विश्वङ्करः**, पुं, (विश्वं सर्व्वं करोति प्रकाशयतीति ।

कृ + बाहुलकात् टः द्वितीयाया अलुक् च ।)
चक्षुः । इति केचित् ॥

**विश्वचक्रं**, क्ली, (विश्वतः सर्व्वत्र चक्रं यस्य ।)

महादानविशेषः । यथा, --
मत्स्य उवाच ।
“अथातः संप्रवक्ष्यामि महादानमनुत्तमम् ।
विश्वचक्रमिति ख्यातं सर्व्वपातकनाशनम् ॥
तपनीयस्य शुद्धस्य विश्वचक्रन्तु कारयेत् ।
श्रेष्ठं पलसहस्रेण तदर्द्धेन तु मध्यमम् ॥
तस्यार्द्धेन कनिष्ठं स्याद्विश्वचक्रमुदाहृतम् ।
अन्यद्विंशत्पलादूर्द्ध्वमशक्तोऽपि निवेदयेत् ॥
षोडशारं ततश्चक्रं भूमिनेम्यष्टकावृतम् ॥
नाभिपद्मे स्थितं विष्णुं योगारूढं चतुर्भुजम् ॥
शङ्खचक्रस्य पार्श्वे तु देव्यष्टकसमावृतम् ।
द्वितीयावरणे तद्वत् पूर्ब्बतो जलशायिनम् ॥
अत्रिर्भृगुर्बशिष्ठश्च ब्रह्मा काश्यप एव च ।
मत्स्यः कूर्म्मो वराहश्च नरसिंहोऽथ वामनः ।
रामो रामश्च रामश्च बुद्धः कल्की च ते दश ॥
तृतीयावरणे गौरी मातृभिर्बहुभिर्युता ।
चतुर्थे द्वादशादित्या वेदाश्चत्वार एव च ॥
पञ्चमे पञ्चभूतानि रुद्राश्चैकादशैव तु ।
लोकपालाष्टकं षष्ठे दिङ्गातङ्गास्तथैव च ॥
सप्तमेऽस्त्राणि सर्व्वाणि मङ्गल्यानि च कारयेत् ।
अन्तरान्तरतो देवान् विन्यसेदष्टमे पुनः ॥
तुलापुरुषवत् शेषं समन्तात् परिकल्पयेत् ।
ऋत्विङ्मण्डपसंभारभूषणाच्छादनादिकम् ॥
विश्वचक्रं ततः कुर्य्यात् कृष्णाजिनतिलोपरि ।
तथाष्टादश धान्यानि रसाश्च लवणादयः ॥
पूर्णकुम्भाष्टकञ्चैव वस्त्राणि विविधानि च ।
माल्येक्षुफलरत्नानि वितानं चापि कल्पयेत् ॥
ततो मङ्गलशब्देन स्नातः शुक्लाम्बरो गृही ।
होमाधिवासनान्ते तु गृहीतकुसुमाञ्जलिः ॥
इममुच्चारयेन्मन्त्रं त्रिः कृत्वा तु प्रदक्षिणम् ।
नमो विश्वमयायेति विश्वचक्रात्मने नमः ॥
परमानन्दरूपि त्वं पाहि नः पापकर्द्दमात् ।
हरिभवनमुपागतः स सिद्धै-
श्चिरमधिगम्य नमस्यते शिरोभिः ॥
असुदर्शनतां प्रयाति शत्रो-
र्मदनसुदर्शनताञ्च कामिनीनाम् ।
ससुदर्शनकेशवानुरूपं
कनकसुदर्शनदानदग्धपापः ॥
कृतगुरुदुरितारिषोडशारं
प्रवितरणप्रवराकृतिं मुरारेः ।
अभिभवति भवोद्भवानि भित्त्वा
भवमभितो भवने भवानि भूयः ॥”
इति मात्स्ये महादानानुकीर्त्तने
विश्वचक्रप्रादा-
निको नाम २५९ अध्यायः ॥

**विश्वचक्रात्मा**, [न्] पुं, (विश्वचक्रं ब्रह्माण्डमेव आत्मा स्वरूपं यस्य ।) विष्णुः ।

यथा, --
“नमो विश्वमयायेति विश्वचक्रात्मने
नमः ।
परमानन्दरूपी त्वं पाहि नः
पापकर्द्दमात् ॥”
इति मात्स्ये २५९ अध्यायः ॥

**विश्वजित्**, पुं, (विश्वं जयतीति । जि + क्विप् ।

तुक् च ।) यज्ञभेदः । इति जटाधरः ॥
(यथा,
रघुः । ५ । १ ।
“तमध्वरे विश्वजिति क्षितीशं
निःशेषविश्राणितकोषजातम् ।
उपात्तविद्यो गुरुदक्षिणार्थी
कौत्सः प्रपेदे वरतन्तुशिष्यः ॥”)
न्यायविशेषः । यथा । यत्तु
फलाश्रुतेर्नित्यत्व-
मभिहितं तत् फलाश्रुतौ
विश्वजिन्न्यायात् स्वर्गः
कल्प्यते । इत्यनेन विरुद्धमिति । स
च न्यायो
यथा । विश्वजिता यजेत इत्यादि
श्रूयते ।

"विश्वक्सेना प्रियाकान्ता प्रियङ्गुः फलिनी फली ॥"
इति वैद्यकरत्नमालायाम् ॥
"पियङ्गुः फलिनी कान्त्रा लताच महिलाह्वया ।
गुन्द्रागुन्द्रफला श्यामा विश्वक्सेनाङ्गनाप्रिया"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**विश्वगः**, पुं, (विश्वं गच्छतीति । गम + डः ।)

ब्रह्मा । इति हेमचन्द्रः ॥

**विश्वगन्धं**, क्ली, (विश्वे सर्व्वस्थाने गन्धो यस्य ।)

बोलम् । इति राजनिर्घण्टः ॥

**विश्वगन्धः**, पुं, (विश्वे सर्व्वदेहे गन्धो यस्य ।)

पलाण्डुः । इति राजनिर्घण्टः ॥

**विश्वगन्धा**, स्त्री, (विश्वेषु समस्तपदार्थेषु मध्ये गन्धा

गन्धविशिष्टा । क्षितावेव गन्ध इति न्यायादस्या-
स्तथात्वम् ।) पृथिवी । इति शब्दचन्द्रिका ॥

**विश्वगोप्ता**, [ऋ] पुं, (विश्वस्य गोप्ता ।) विष्णुः ।

इन्द्रः । इति केचित् ॥ (विश्वपालके, त्रि । यथा,
हरिवंशे । २५१ अध्याये ।
"त्वमेव विश्वगोप्तासि विश्वम्भर पवित्रमसि ॥")

**विश्वग्रन्थिः**, स्त्री, हंसपदी । इति राजनिर्घण्टः ॥

**विश्वग्वायुः**, पुं, (विश्वग्गतो वायुः ।) सर्व्वतोगामि-

पवनः । अस्य गुणाः ।
"विश्वग्वायुरनायुष्यं प्राणिनां नैकदोषकृत् ।
सर्व्वर्त्तुलिङ्गको हन्ता कृत्योत्पातपुरःसरः ॥"
इति राजवल्लभः ॥

तेजोमयमिदं यस्मात् सदा पश्यन्ति योगिनः ॥
हृदि तत् त्रिगुणातीतं विश्वचक्रं नमाम्यहम् ।
वासुदेवे स्थितञ्चक्रं चक्रमध्ये च माधवम् ॥
अन्योन्याधाररूपेण प्रणमामि स्थिताविह ।
विश्वचक्रमिदं यस्मात् सर्व्वपापहरं परम् ।
आयुधञ्चाधिवासञ्च भवादुद्धर मामितः ॥
इत्यामन्त्र्य च यो दद्यात् विश्वचक्रममत्सरः ।
विमुक्तः सर्व्वपापेभ्यो विष्णुलोके महीयते ॥
वैकुण्ठलोकमासाद्य चतुर्ब्बाहुः सनातनः ।
सेव्यतेऽप्सरसां संघैस्तिष्ठेत् कल्पशतत्रयम् ॥
प्रणमेद्वाथ यः कुर्य्यात् विश्वचक्रन्दिने दिने ।
तस्यायुर्व्वर्द्धते नित्यं लक्ष्मीश्च विपुला भवेत् ॥
इति सकलजगत्सुराधिवासं
वितरति यस्तपनीयषोडशारम् ।

इत्येकादशीतत्त्वम् ॥ वरुणपाशः ।
इति केचित् ॥
(अग्निविशेषः । यथा, महाभारते । ३ । २१८ । १६ ।
"यस्तु विश्वस्य जगतो बुद्धिमाक्रम्य तिष्ठति ।
तं प्राहुरध्यात्मविदो विश्वजिन्नामपावकम् ॥"
दानवविशेषः । यथा, तत्रैव । १२ । २२७ । ५१ ।
"विश्वजित् प्रतिरूपश्च वृषान्तो विष्करो
मधुः ॥"
दृढरथस्य पुत्त्रः । यथा, हरिवंशे । ३१ । ५१ ।
"आसीद्दृढरथस्यापि विश्वजिज्जनमेजय ॥"
सत्यजित्तनयः । यथा, तत्रैव । २० । १९ ।
"सत्यजित्तनयस्तस्य विश्वजित्तस्य चात्मजः ॥"
विश्वजयिनि, त्रि । यथा, भागवते । ७ । ४ । ७ ।
"सर्व्वसत्त्वपतीन् जित्वा वशमानीय विश्वजित् ।
जहार लोकपालानां स्थानानि सह तेजसा ॥")

**विश्वतः**, [स्] व्य, (विश्व + तसिल् ।) सर्व्वतः ।

इत्यमरटीका ॥ (यथा, भागवते । १० । ३१ । ३ ।
"वृषमयात्मजाद्विश्वतो भयात्
ऋषभ ते वयं रक्षिता मुहुः ॥")

**विश्वदेवः**, पुं, (विश्वे दीव्यतीति । दिव + अच् ।)

गणदेवताविशेषः । इत्यमरटीका ॥
"विश्वदेवौ क्रतुदक्षौ सर्व्वास्विष्टिषु विश्रुतौ ।
नित्यं नान्दीमुखश्राद्धे वसुसत्यौ च पैतृके ॥

| | | |
|---|---|---|
| | | नवान्नालम्भने देवौ कामकालौ सदैव हि ।<br>अपि कन्यागते सूर्य्ये श्राद्धे च ध्वनिरोचकौ । |

पुरूरवाश्चाद्रवाश्च विश्वदेवौ च पर्व्वणि ॥”
इति वह्निपुराणे गणभेदनामाध्यायः ॥
(विश्वस्य देवतास्वरूपे, त्रि । यथा, हरिवंशे । १८९ । १६ ।
“श्रुतं मे विश्वदेवानां यद्रहस्यं महर्षिणाम् ।
तदिदं सर्व्वदेवानां तत्त्वतस्तत्त्ववादिनाम् ॥”)

**विश्वदेवा**, स्त्री, ह्रस्वगवेधुका । गोरक्चाकुलिया
इति भाषा । इति जटाधरः ॥ नागबला ।
अरुणपुष्पदण्डोत्पलः । इति रत्नमाला ॥

**विश्वद्र्यङ्**, [च्] त्रि, सर्व्वत्रगमनकर्त्ता । विष्वक्
समन्तात् अञ्चति गच्छति विष्वद्र्यङ् सर्व्वतो-
गामी मूर्द्धन्यमध्यः तालव्यमध्योऽपीत्येके । इत्य-
मरभरतौ ॥

**विश्वधारिणी**, स्त्री, (विश्वं सर्व्वं धरतीति । धृ +
णिनिः । ङीप् ।) पृथिवी । इति केचित् ॥

**विश्वनाथः**, पुं, (विश्वस्य नाथः ।) शिवः । इति
शब्दरत्नावली ॥ (यथा, वैराग्यशतके । १०१ ।
“न गृहीतं श्रुतिहृदयं
न चन गृहीतं परिप्लवं हृदयम् ।
इच्छामि च धाम परं
गच्छामि तु विश्वनाथपुरीम् ॥”
साहित्यदर्पणप्रणेता पण्डितविशेषः । यथा,
साहित्यदर्पणे ।
“श्रीचन्द्रशेखरमहाकविचन्द्रसूनु-
श्रीविश्वनाथकविराजकृतं प्रबन्धम् ।
साहित्यदर्पणममुं सुधियो विलोक्य
साहित्यतत्त्वमखिलं सुखमेव वित्त ॥”
विद्यानिवासभट्टाचार्य्यपुत्रः पञ्चाननोपाधिकः
भाषापरिच्छेदसिद्धान्तमुक्तावलीप्रणेतापरपण्डि-
तविशेषः ॥)

**विश्वपर्णी**, स्त्री, भूम्यामलकी । इति राज-
निर्घण्टः ॥

**विश्वपाः**, पुं, (विश्वं पातीति । पा + विच् ।)
विश्वपालनकर्त्ता । स तु परमेश्वरः । इति
मुग्धबोधव्याकरणम् ॥ (यथा, हरिवंशे । २५१
अध्याये ।
विपाके मधुरं हृद्यं रोचनं विश्वभेषजम्
॥”
इति चरके सूत्रस्थाने २७ अध्यायः ॥)

**विश्वभोजाः**, [स्] पुं, सर्व्वभुक् । विश्वशब्दपूर्ब्बक-
भुजधातोः औणादिकासिप्रत्ययेन
निष्पन्नमिदम् ॥
(विश्वरक्षके, त्रि । यथा, ऋग्वेदे । ५ ।
४१ । ४ ।
“पूषाभागःप्रभृथे विश्वभोजाः ॥”
“विश्वभोजा विश्वरक्षकाः ।” इति
तद्भाष्ये
सायणः ॥)

**विश्वमदा**, स्त्री, अग्निजिह्वा । यथा, --
“काली कराली च मनोजवा च
सुलोहिता चैव च धूम्रवर्णा ।
स्फुलिङ्गिनी विश्वमदार्च्चिसोऽग्नेः
सप्तैव जिह्वाः कथिता मुनीन्द्रैः ॥”
इति शब्दमाला ॥

**विश्वम्भरः**, पुं, (विश्वं बिभर्त्तीति । भृ + “संज्ञायां
भृतॄवृजीति ।” ३ । २ । ४६ । इति खच्
। “अरु-
र्द्विषदिति ।” ६ । ३ । ६७ । इति मुम् ।)
विष्णुः ।
(यथाह कश्चित् ।
“विश्वम्भर ! भरास्माकं विश्वस्माद्वा
वहिःकुरु ।
अथ पक्षद्वयाभावे त्यज विश्वम्भरत्वकम्
॥”)
इन्द्रः । इति मेदिनी । रे, २९५ ॥

**विश्वम्भरा**, स्त्री, (विश्वं बिभर्त्तीति । भृ + खच् ।
मुम् । टाप् ।) पृथिवी । इत्यमरः ॥
अस्या
व्युत्पत्तिर्यथा, --
“विश्वम्भरा
तद्धरणाच्चानन्तानन्तरूपतः ।
“स्वस्ति न इन्द्रो वृद्धश्रवाः
स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्ताक्ष्र्योऽरिष्टनेमिः
स्वस्ति नो बृहस्पतिर्दधातु ॥”
इति यजुर्व्वेदिस्वस्तिवाचनमन्त्रः ॥
(यथाच भागवते । ८ । ३ । २६ ।
“सोऽहं विश्वसृजं विश्वमविश्वं
विश्ववेदसम् ।
विश्वात्मानमजं ब्रह्म प्रणतोऽस्मि परं
पदम् ॥”)

**विश्वसहा**, स्त्री, अग्निजिह्वाविशेषः । यथा, --
“हेतिः शिखा च सप्ताग्नेर्जिह्वास्ता एव
कीर्त्तिताः ।
काली कराली सुहिता धूम्रवर्णा
मनोजवा ।
स्फुलिङ्गिनी विश्वसहा
संज्ञास्तासामुदाहृताः ॥”
इति जटाधरः ॥

**विश्वसारं**, क्ली, (विश्वेषां सारम् ।) तन्त्रविशेषः ।
इति प्रसिद्धम् ॥

**विश्वसारकं**, क्ली, (विश्वसार + संज्ञायां कन्
।)
विदरवृक्षः । इति शब्दचन्द्रिका ॥
फणिमनसा ।
इति भाषा ॥

**विश्वसितः**, त्रि, (वि + श्वस + क्तः ।) विश्वस्तः ।
इति मुग्धबोधव्याकरणम् ॥ (यथा,
नैषधे । १ । १३१ ।
“ब केवलं प्राणिवधो वधो मम
त्वदीक्षणाद्विश्वसितान्तरात्मनः ॥”)

**विश्वसृक्**, [ज्] पुं, (विश्वं सृजतीति । सृज् +
क्विप् ।) ब्रह्मा । इत्यमरः ॥
(विश्वस्रष्टरि, त्रि ।
यथा, रघुः । १० । १६ ।

"विश्वस्य पते घृताव्यसि अनन्तकर्म्मन् द्रुघण-
वंशप्राग्वंश विश्वपास्त्वम् ॥")

**विश्वप्सा**, [न्] पुं, (विश्वं प्सातीति । प्सा + भक्षणे

+ "श्वनुक्षन्पूषनप्लीहन्निति ।" ऊणा० १ ।
१५८ । इति कनिन्प्रत्ययेन साधुः ।) अग्निः ।
चन्द्रः । इति हेमचन्द्रः ॥ देवः । विश्वकर्म्मा ।
इति संक्षिप्तसारोणादिवृत्तिः ॥ सूर्य्यः । इति
शब्दरत्नावली ॥

**विश्वबोधः**, पुं, (विश्वस्य बोधो यस्य ।) बुद्धः ।

इति त्रिकाण्डशेषः ॥

**विश्वभूः**, पुं, बुद्धभेदः । इति हेमचन्द्रः ॥

**विश्वभेषजं**, क्ली, (विश्वेषां भेषजम् ।) शुण्ठी ।

इत्यमरः ॥ (यथा, सुश्रुते । १ । ४४ ।
"विश्वभेषजमृद्वीकाचित्रकैर्मूत्रभावितैः ॥"
तथास्य गुणाः ।
"सस्नेहं दीपनं वृष्यमुष्णं वातकफापहम् ।
पृथिवी
पृथुकन्यात्वाद्विस्तृतत्वान्महामुने॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ७ अध्यायः
॥
(यथा, उत्तरचरिते । १ अङ्के ।
"विश्वम्भरा भगवती भवतीमसूत
राजा प्रजापतिसमो जनकः पिता ते
॥")

**विश्वयुः**, पुं, वायुः । इति केचित् ॥

**विश्वरूपः**, पुं, (विश्वमेव रूपं यस्य ।) विष्णुः ।

इति हेमचन्द्रः ॥ (महादेवः । यथा, महा-
भारते । ७ । २०० । १२४ ।
"विश्वे देवाश्च यत्तस्मिन्
विश्वरूपस्ततः
स्मृतः ॥"
त्वष्टृपुत्त्रः । यथा, विष्णुपुराणे । १ ।
१५ । १२२ ।
"त्वष्टुश्चाप्यात्मजः पुत्त्री विश्वरूपो
महा-
यशाः ॥"
सर्व्वरूपे, त्रि । यथा, भागवते । ६ । ४ ।
२८ ।
"स सर्व्वनाना स च विश्वरूपः
प्रसीदतामनिरुक्तात्मशक्तिः॥")

**विश्वरूपकं**, क्ली, कृष्णागुरु । इति राजनिर्घण्टः
॥

**विश्वरेताः**, [स्] पुं, (विश्वे रेतः शक्तिर्यस्य ।)

ब्रह्मा । इति हेमचन्द्रः ॥

**विश्वरोचनः**, पुं, (विश्वान् रोचयतीति । रुच् +

ल्युः ।) नाडीचशाकः । यथा, --
"केचुकं पेचुली पेचुर्नाडीचो विश्वरोचनः
॥"
इति त्रिकाण्डशेषः ॥

**विश्ववेदाः**, [स्] त्रि, सर्व्वज्ञः । विश्वं वेत्ति

इत्यर्थे
विश्वशब्दपूर्ब्बविदधातोरस्प्रत्ययेन
निष्पन्न
मिदम् । यथा, --
"नमो विश्वसृजे पूर्ब्बं विश्वं तदनु
विभ्रते ।
अथ विश्वस्य संहर्त्ते तुभ्यं त्रेधा
स्थितात्मने ॥")

**विश्वस्तः**, त्रि, (वि + श्वस + क्तः ।)
जातविश्वासः ।

इति मेदिनी । ते, १५५ ॥ यथा, --
"न विश्वसेदविश्वस्ते विश्वस्ते
नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलादपि
निकृन्तति ॥"
इति गारुडे ११४ अध्यायः ॥

**विश्वस्ता**, स्त्री, विधवा । इत्यमरः ॥ (यथा,
साहित्य-

दर्पणे । १० परिच्छेदे ।
"स्तनयुगमुक्ताभरणाः
कण्टककलिताङ्गयष्टयोदेव ।
त्वयि कुपितेऽपि विश्वस्ताः
पागेव रिपुस्त्रियो जाताः ॥")

**विश्वस्था**, स्त्री, (विश्वतः सर्व्वतः तिष्ठतीति ।

विश्व + स्था + कः ।) शतावरी ।
इति राज-
निर्घण्टः ॥

**विश्वा**, स्त्री, (विश + क्वन् । स्त्रियां टाप् ।)
अति-

विषा । इत्यमरः ॥ शतावरी । इति
राज
निर्घण्टः ॥ पिप्पली । इति
शब्दचन्द्रिका ॥
(दक्षकन्याविशेषः । यथा, महाभारते
। १ ।
६५ । १२ ।
"क्रोधा प्राधा च विश्वा च वनिता
कपिला-
मुनिः ॥")

**विश्वाची**, स्त्री, अप्सरोविशेषः । यथा, --

"उर्व्वशी मेनका रम्भा मिश्रकेशी
ह्यलम्बुषा ।
विश्वाची च घृताची च पञ्चचूडा
तिलोत्तमा ॥

भानुमत्यबला वर्च्चा द्वादशाप्सरसः शुभाः ॥”
इति वह्निपुराणे गणभेदनामाध्यायः ॥
(बाहुरोगविशेषः । तल्लक्षणादिकं यथा, --
“अथ विश्वाचीलक्षणमाह ।
‘तलं प्रत्यङ्गुलीनां या कण्डरा बाहुपृष्ठतः ।
बाह्वोः कर्म्मक्षयकरी विश्वाची नाम सा स्मृता ॥”
कण्डरा महास्नायुः तलं हस्तस्योपरिभागः ।
तलशब्दोऽत्र उपरिवाचकः यथा भूमितल-मिति । तेनायमर्थः । बाहुपृष्ठतः बाह्वोः पृष्ठं
बाहुपृष्ठमारभ्य तलं प्रतिहस्ततलं यावल्लक्षी-
कृत्य कण्डरास्ताः सन्दूष्य बाह्वोः प्रसारणा-
कुञ्चनादिकर्म्मक्षयकरा भवति सा इह वात-
व्याधिषु विश्वाचीत्युच्यते बाह्वोरिति द्वित्वं सम्भवपरम् । एकस्मिन्नपि बाहौ विश्वाची भवति ।” इति भावप्रकाशः ॥)

**विश्वात्मा**, [न्] पुं, (विश्वमेव आत्मा यस्य विश्वस्य
आत्मा इति वा ।) विष्णुः । यथा, --
“जन्म कर्म्म च विश्वात्मन्नजस्याकर्त्तुरात्मनः ।
तिर्य्यङ्नृषिषु यादःसु तदत्यन्तविडम्बनम् ॥”
इति श्रीभागवते १ स्कन्धे ८ अध्यायः ॥
(महादेवः । यथा, कुमारे । ६ । १ ।
“अथ विश्वात्मने गौरी सन्दिदेश मिथः सखीम् ।
दाता मे भूभृतां नाथः प्रमाणीक्रियतामिति ॥”)

**विश्वाधायाः** [स्] पुं, देवता । इति सिद्धान्त-
कौमुदी ॥

**विश्वामित्रः**, पुं, (विश्वमेव मित्रमस्य । “मित्रे

अथ स्नानदिनेऽश्वत्थमालिङ्ग्यारक्तकं चरुम् ।
अद्यात् सत्यवती तस्या माता फल्गुं सितं चरुम् ॥
परिवर्त्तन्तु तं ध्यात्वा दिव्यध्यानो भृगुर्म्मुनिः ।
अथागत्य स्नुषां तान्तु वचनञ्चेदमब्रवीत् ॥
विपर्य्ययस्त्वया भद्रे वृक्षालिङ्गनकर्म्मणि ।
तथा चरुप्राशने च तत्रेदन्ते भविष्यति ॥
ब्राह्मणः क्षत्त्रियाचारस्तव पुत्त्रो भविष्यति ।
क्षत्त्रियो प्राह्मणाचारो मातुस्ते भविता सुतः ॥
इत्युक्ता भृगुणा साध्वी तदा सत्यवती भृगुम् ।
पुनः प्रसादयामास पौत्त्रो मेऽस्त्विति तादृशः ।
एवमस्त्विति प्रोक्त्वा स तत्रैवान्तर्द्दधे भृगुः ॥
अथ काले सुतं दीप्तं यमदग्निञ्च गाधिजा ।
सुषुवे जननी तस्या विश्वामित्रं तपोनिधिम् ॥
यमदग्निस्ततो वेदान् चतुरः प्राप माचिरम् ।
प्रादुरासद्धनुर्व्वेदः स्वयं तस्मिन् महात्मनि ॥
विश्वामित्रोऽपि सकलान् वेदानपि तथाचिरात् ।
धनुर्व्वेदं तथा कृत्स्नं विप्रश्चाभूत्तपोधनः ॥
जाज्वल्यमानस्तेजस्वी यमदग्निर्म्महातपाः ।
वेदैस्तपोभिः स मुनीनत्यक्रामच्च सूर्य्यवत् ॥”
इति कालिकापुराणे ८४ अध्यायः ॥
(आयुर्व्वेदपारदर्शी सुश्रुतोऽस्य पुत्त्रः । यथा, --
“अथ ज्ञानदृशा विश्वामित्रप्रभृतयोऽविदन् ।
अयं धन्वन्तरिः काश्यां काशिराजोऽयमुच्यते ॥
विश्वामित्रो मुनिस्तेषु पुत्त्रं सुश्रुतमुक्तवान् ।
वत्स ! वारानसीं गच्छ त्वं विश्वेश्वरवल्लभाम् ॥
तत्र नाम्ना दिवोदासः काशिराजोऽस्ति बाहुजः ।
स हि धन्वन्तरिः साक्षादायुर्व्वेदविदांवरः ॥
आयुर्व्वेदं ततोऽधीत्य लोकोपकृतिहेतवे ।
सर्व्वप्राणिदयातीर्थमुपकारो महामखः ॥
पितुर्व्वचनमाकर्ण्य सुश्रुतः काशिकां गतः ।

हस्तः सुहस्तः स्वाञ्चैव मूर्द्धन्वांश्च महामनाः ।
विश्वावसुः कृशानुश्च गन्धर्व्वैकादशो गणः ॥”
इति वह्निपुराणे गणभेदनामाध्यायः ॥
(विष्णुः । यथा, महाभारते । ६ । ६२ । ४५ ।
“विश्वावसुर्विश्वमूर्त्तिर्विश्वेशो विश्वक्सेनो विश्वकर्म्मा वशो च ॥” * ॥
वत्सरविशेषः । यथा, बृहत्संहितायाम् । ८ । ४१ ।
“क्रोधी तृतीयः परतः क्रमेण विश्वावसुश्चेति पराभवश्च ॥”
तत्फलं यथा, चिन्तामणिधृतवचनम् ।
“सर्व्वत्र जायते क्षेमं सर्व्वशस्यमहार्घता ।
विश्वावसौ वरारोहे कार्पासस्य महार्घता ॥”)
निशि स्त्री । इति मेदिनी ॥

**विश्वासः**, पुं, (वि + श्वस + घञ् ।) प्रत्ययः । तत्-
पर्य्यायः । विश्रम्भः २ । इत्यमरः ॥
आश्वासः ३
आश्रमः ४ । इति शब्दरत्नावली ॥ * ॥
“लोभप्रमादविश्वासैः पुरुषो नश्यति त्रिभिः ।
तस्माल्लोभो न कर्त्तव्यः प्रमादो न न विश्वसेत् ॥
सा श्रीर्या न मदं कुर्य्यात् स सुखी तृष्णयोज्-
झितः ।
तन्मित्रं यस्य विश्वासः पुरुषः स जितेन्द्रियः ॥”
इति गारुडे नीतिसारे ११५ अध्यायः ॥
“यस्य यावांश्च विश्वासस्तस्य सिद्धिश्च तावती ।
एतावानिति कृष्णस्य प्रभावः परिमीयते ॥”
इति तत्रैव २३४ अध्यायः ॥
“न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।

चर्षौ ।” ६ । ३ । १३० । इति विश्वस्य दीर्घः ।)
ब्रह्मर्षिविशेषः । तत्पर्य्यायः । गाधिजः २ ।
इति त्रिकाण्डशेषः ॥ त्रिशङ्कुयाजी ३ गाधेयः ४
कौशिकः ५ । इति हेमचन्द्रः ॥ गाधिभूः ६ ।
इति शब्दरत्नावली ॥ तस्योत्पत्तिर्यथा, --
“कृतदारं सुतं श्रुत्वा द्रष्टुं पुत्त्रं स्वकं भृगुः ।
अथाजगाम मतिमान् स्नुषां दृष्ट्वा ननन्द च ॥
दम्पती तं समासीनं भृगुं देवगणार्च्चितम् ।
पूजयित्वा समासीनं तस्थतुस्तौ कृताञ्जली ॥
ततो भृगुः स्नुषां स्वीयां सुप्रीत इदमब्रवीत् ।
वरं वृणीष्व दास्यामि वाञ्छितं वरवर्णिनि ।
अदेयं दुष्करं वापि यत्र ते वर्त्तते स्पृहा ॥
ततः सत्यवती पुत्त्रं तपस्याम्नायपारगम् ।
मातुश्च वीरमतुलं पुत्त्रं वरमयाचत ॥
स चैवमस्त्वित्युक्त्वैव भूत्वा ध्यानपरस्तदा ।
विश्वमावर्त्त्य मनसा यत्नात् श्वासं ससर्ज्ज सः ॥
तस्य निश्वासवातात्तु निःसृतं वै चरुद्वयम् ।
तस्यै तत् द्वितयं दत्त्वा भृगुस्तामिदमब्रवीत्॥
चरुद्वयं गृहाण त्वं स्नुषे सत्यवति स्वयम् ।
स्नात्वा ऋतौ ऋतौ माता तदा त्वञ्च करिष्यथः ।
आलिङ्ग्याश्वत्थवृक्षं ते माता पुंसवनाय वै ।
चरुमारक्तकं चेमं सा भोक्ष्यति सुतस्ततः ॥
तेन सार्द्धं समध्येषु मुनिसूनुशतं ययौ ॥”
इति भावप्रकारशस्य पूर्ब्बखण्डे प्रथमे भागे ॥
“विश्वामित्रसुतः श्रीमान् सुश्रुतः परिपृच्छति ॥”
इत्युत्तरतन्त्रे षट्षष्टितमेऽध्याये सुश्रुतेनोक्तम् ॥
विश्वस्मिन्नास्तिमित्रं यस्मात् । परममित्रम् । यथा,
“जनकेनाभिरामाय ददौ राज्यमकण्टकम् ।
मिश्वामित्रं पुरस्कृत्य वनवासं ततो ययौ ॥”
इत्युद्भटः ॥)

**विश्वामित्रप्रियः**, पुं, (विश्वामित्रस्य प्रियः ।) नारि-
केलः । इति शब्दरत्नावली ॥ (कार्त्तिकः । यथा, महाभारते । ३ । २३१ । ८ ।
“विश्वामित्रप्रियश्चैव देवसेनाप्रियस्तथा ॥”)

**विश्वाराट्**, [ज्] पुं, विश्वेषु राजते यः । विश्वेषां
राट् राजा इति वा । इति मुग्धबोधव्याकर-
णम् ॥ (“विश्वस्य वसुराटोः ।” ६ । ३ । १२८ ।
इति दीर्घः ॥)

**विश्वावसुः**, पुं, (विश्वं वसु यस्य । “विश्वस्य वसु-
राटोः ।” ६ । ३ । १२८ । इति पूर्ब्बपदान्तस्य
दीर्घः ।) गन्धर्व्वभेदः । इति मेदिनी ॥ यथा, --
“अभ्राजोऽङ्गारिवग्भारी सूर्य्यवर्च्चास्तथा कृधुः ।
विश्वासाद्भयमुत्पन्नं मूलादपि निकृन्तति ॥”
इति च गारुडे ११४ अध्यायः ॥ * ॥
“नखिनाञ्च नदीनाञ्च शृङ्गिणा शस्त्रपाणिनाम् ।
विश्वासो नैव कर्त्तव्यः स्त्रीषु राजकुलेषु च ॥
न विश्वसेदविश्वस्तं मित्रञ्चापि न विश्वसेत् ।
कदाचित् कुपितं मित्रं गुप्तदोषं प्रकाशयेत् ॥”
इति चाणक्यम् ॥

**विश्वासघातकः**, त्रि, विश्वासं हन्ति यः । (विश्वास
+ हन् + ण्वुल् ।) विश्रम्भनाशकः । यथा, --
“न भाराः पर्व्वता भारा न भाराः सप्त सागराः ।
निन्दका हि महाभारा भारा विश्वास-
घातकाः ॥”
इति कर्म्मलोचनम् ॥

**विश्वेदेवाः**, पुं, अग्निः । श्राद्धदेवः । इति संक्षिप्त-
सारोणादिवृत्तिः ॥
“क्रतुर्दक्षो वसुः सत्यः कामः कालस्तथा ध्वनिः ।
रोचकश्चाद्रवाश्चैव तथा चान्ये पुरूरवाः ।
विश्वेदेवा भवन्त्येते दश सर्व्वत्र पूजिताः ॥”
इति वह्निपुराणे गणभेदनामाध्यायः ॥
अन्यद्विश्वशब्दे द्रष्टव्यम् ॥

**विश्वेशः**, पुं, (विश्वस्य ईशः ।) शिवः । इति शब्द-
रत्नावली ॥ (विष्णुः । यथा, भागवते । १ ।
८ । ४१ ।
“अथ विश्वेश विश्वात्मन् विश्वमूर्त्ते स्वकेषु मे ।
स्नेहपाशमिमं छिन्धि दृढं पाण्डुषु वृष्णिषु ॥”)

| त्वचौडुम्बरवृक्षन्तु समालिङ्ग्य सितं चरुम् ।<br>भोक्ष्यस्येतेन पुत्रस्ते भविष्यति सनातनः ॥<br>एवमुक्त्वा भृगुर्यातो यथेच्छं सापि संमुदम् ।<br>अवाप मात्रा सहिता भर्त्रा पित्रा च भाविनी । | | |
|---|---|---|

**विश्वेश्वरः**, पुं, (विश्वस्य ईश्वरः ।) काशीस्थ-

महादेवः । यथा, --
“सर्व्वतीर्थेषु सस्नौ स सर्व्वयात्रां व्यधात् स च ।
मनिकर्ण्यान्तु यः स्नातो यो विश्वशं निरैक्षत ॥
सत्यं सत्यं पुनः सत्यं सत्यं सत्यं पुनः पुनः ।
दृश्यो विश्वेश्वरो नित्यं स्नातव्या मणिकर्णिका ॥”
इति काशीखण्डम् ॥
(यथाच तन्त्रे ।
“मुखेन वाद्यं सलिलेन पाद्यं मूर्त्तिर्मृदा विल्वदलेन पूजा ।
फलं पुनस्तस्य भवेदनन्तं निःस्वस्य विश्वेश्वर एव देवः ॥”)

**विश्वौषधं**, क्ली, (विश्वेषामौषधम् ।) शुण्ठी । इति

राजनिर्घण्टः ॥

**विष**, इर् लि ञ औ ङ व्याप्तौ । इति कवि-

कल्पद्रुमः ॥ (ह्वा०-उभ०-आत्म०-इत्येके-सक०-अनिट् ।) इर्, अविषत् अविक्षत् । लि ञ,
वेवेष्टि वेविष्टे । औ, वेष्टा । ङ,
वेविष्टे । उभय-
पदीत्यन्ये । अफलवत् कर्त्तरि आत्मने पदार्थो
ङकारः । इति दुर्गादासः ॥

**विष**, उ सेचने । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् । क्त्वावेट् ।) उ, वेषित्वा
विष्ट्वा । इति दुर्गादासः ॥

**विष**, ग औ विप्रयोगे । इति कविकल्पद्रुमः ॥

सौराष्ट्रिकः शौल्किकेय्ः काकोलो दारदोऽपि च ।
अहिच्छत्रो मेषशृङ्गकुष्ठवालूकनन्दनाः ॥
कैराटको हैमवतो मर्कटः करवीरकः ।
सर्षपो मूलको गौरार्द्रकः सक्तुककर्द्दमौ ॥
अङ्कोल्लसारः कालिङ्गः शृङ्गिको मधुसिक्थकः ।
इन्द्रो लाङ्गलिको विस्फुलिङ्गपिङ्गलगौत्तमाः ।
मुस्तको दालवश्चेति स्थावरा विषजातयः ॥”
इति हेमचन्द्रः ॥
अथ विषस्य नामलक्षणगुणाः ।
“विषं तु गरलं क्ष्वेडस्तत्तद्भेदानुदाहरेत् ।
वत्सनाभः सहारिद्रः सक्तुकश्च प्रदीपनः ॥
सौराष्ट्रिकः शृङ्गकश्च कालकूटस्तथैव च ।
हालाहलो ब्रह्मपुत्रो विषभेदा अमी नव ॥”
तत्र वत्नाभस्य स्वरूपनिरूपणम् ।
“सिन्धुवारसदृकपत्रो वत्सनाभ्याकृतिस्तथा ।
यत्पार्श्वे न तरोवृद्धिर्व्वत्सनाभः स भाषितः ॥”
अथ हारिद्रस्य स्वरूपम् ।
“हरिद्रातुल्यमूलो यो हारिद्रः स उदाहृतः ॥”
अथ सक्तुकस्य स्वरूपम् ।
“यद्ग्रन्थिः सक्तुकेनैव पूर्णमध्यः स सक्तुकः ॥”
अथ प्रदीपनस्य स्वरूपम् ।
“प्रदीपलोहितो यः स्याद्दीप्तिमान् दलनप्रभः ।
महादाहकरः पूर्व्वैः कथितः स प्रदीपनः ॥”
अथ सौराष्ट्रिकस्य स्वरूपम् ।
‘सुराष्ट्रविषये यः स्यात् स सौराष्ट्रिक उच्यते ॥’
अथ शृङ्गकस्य स्वरूपम् ।
“यस्मिन् गोशृङ्गके बद्धे दुग्धं भवति लोहितम् ।
स शृङ्गक इति प्रोक्तो द्रव्यतत्त्वविशारदैः ॥”
अथ कालकूटस्य स्वरूपम् ।
“देवासुररणे देवैर्हतस्य पृथुमालिनः ।

शीलम् । विकासि ओजःशोषणपूर्ब्बकं सन्धि-
बन्धशिथिलीकरणशीलम् । आग्नेयं अधिका-
ग्न्यंशम् । योगवाहि संसर्गगुणवाहकम् ।
“मदावहं तमोगुणाधिक्येन बुद्धिविध्वंसकम् ।
तदेव युक्तियुक्तन्तु प्राणदायि रसायनम् ॥
योगवाहि परं वातश्लेष्मजित् सन्निपातहृत् ।
योगवाहि त्रिदोषघ्नं बृंहणं वीर्य्यवर्द्धनम् ॥
ये दुर्गुणा विषेऽशुद्धे ते स्युर्हीना विशोधनात् ।
तस्माद्विषं प्रयोगेषु शोधयित्वा प्रयोजयेत् ॥”
अथोपविषाणां निरूपणम् ।
“अर्कक्षीरं स्नुहीक्षीरं तथैव कलिहारिका ।
करवीरोऽथ धुस्तूरः पञ्च चोपविषाः स्मृताः ॥”
उपविषा गौणविषाः । एषां गुणास्तत्र तत्र द्रष्टव्याः । अपि च ।
“अर्कक्षीरं स्नुहीक्षीरं लाङ्गली करवीरकः ।
गुञ्जाहिफेनो धुस्तूरः सप्तोपविषजातयः ॥”
एतेषां शोधनं चिन्त्यम् । गुणास्तत्र द्रष्टव्याः ॥
अथ विषाणां शोधनविधिः ।
“गोमूत्रे त्रिदिनं स्थाप्यं विषं तेन विशुद्ध्यति ।
रक्तसर्षपतैलाक्तं तथा धार्य्यञ्च वाससि ॥
येगुणा गरले प्रोक्तास्ते स्युर्हीना विशोधनात् ।
तस्माद्विषं प्रयोगेषु शोधयित्वा प्रयोजयेत् ॥”
इति भावप्रकाशे पूर्व्वखण्डः ॥
अथ विषाधिकारः । तत्र विषस्य द्वैविध्य-
माह ।
“स्थावरं जङ्गमञ्चैव द्विविधं विषमुच्यते ।
दशाधिष्ठानमाद्यन्तु द्वितीयं षोडशाश्रयम् ॥”
स्थावरविषस्य दशाश्रयानाह ।
“मूलं पत्रं फलं पुष्पं त्वक् क्षीरं सारमेव च ।
निर्यासो धातवस्कन्दः स्थावरस्याश्रया दश ॥”
तद्यथा । मूलविषं करवीरादि १ । पत्रविषं
विषपत्रिकादि २ । फलविषं कर्कोटकादि ३ ।
पुष्पविषं वेत्रादि ४ । त्वकसारनिर्यासविषाणि
करम्भादीनि ५ । ६ । ७ । क्षीरविषं स्नुह्यादि
८ । धातुविषं हरितालादि ९ । कन्दविषं वत्स-
नाभसक्तुकादि १० ॥ * ॥ जङ्गमविषस्य षोड
शाश्रयानाह ।
“दृष्टिनिश्वासदंष्ट्राश्च नखमूत्रमलानि च ।
शुक्रं लाला मुखं स्पर्शः संदंश श्चावमर्द्दितम् ।
गुदास्थिपित्तशूकानि दश षट् जङ्गमाश्रयाः ॥”

(क्र्या०-पर०-अक०-अनिट् ।) ग, विष्णाति
ज्ञानी पुत्त्रादिभ्यो वियुक्तः स्यात् इत्यर्थः । औ,
अविक्षत् । दन्त्यान्तोऽयमिति । विष्णुव्युत्पत्तौ
सुभूतिः । इति दुर्गादासः ॥

**विषं**, क्ली, (विष सेचने + कः ।) जलम् । इत्य-
मरः । पद्मकेशरम् । इति तट्टीकायां मुकुटः ॥
वोलम् । वत्सनाभः । सामान्यविषम् । इति
राजनिर्घण्टः ॥

**विषः**, पुं, क्ली, (विष + कः ।) विषम् । तत्पर्य्यायः ।
क्ष्वेडः २ गरलम् ३ । इत्यमरः ॥ आहेयम् ४
अमृतम् ५ गरदम् ६ कालकूटम् ७ कलाकूलम्
८ हारिद्रम् ९ रक्तशृङ्गिकम् १० नीलम् ११
गरम् १२ घोरम् १३ हालाहलम् १४ हला-
हलम् १५ शृङ्गी १६ भूगरम् १७ । इति राज-
निर्घण्टः ॥ जाङ्गलम् १८ तीक्ष्णम् १९ रसः २०
रसायनम् २१ गरः २२ । इति जटाधरः ॥
जङ्गुलम् २३ जाङ्गुलम् २४ । इति शब्दरत्ना-
वली ॥ काकोलः २५ वत्सनाभः २६ प्रदीपनः
२७ शौल्किकेयः २८ ब्रह्मपुत्त्रः २९ । इति
रत्नमाला ॥ तद्भेदा यथा, --
“पुंसि क्लीवे च काकोलकालकूटहलाहलाः ।
सौराष्ट्रिकः शौल्किकेयो ब्रह्मपुत्त्रः प्रदीपनः ॥
दैत्यस्य रुधिराज्जातस्तरुरश्वत्थसन्निभः ॥
निर्यासः कालकूटोऽस्य मुनिभिः परिकीर्त्तितः ।
सोऽहिच्छत्रे शृङ्गवेरे कोकणे मलये भवेत् ॥”
अथ हालाहलस्य स्वरूपम् ।
“गोस्तनाभफलो गुच्छस्तालपत्रच्छदस्तथा ।
तेजसा यस्य दह्यन्ते समीपस्था द्रुमादयः ॥
असौ हालाहलो ज्ञेयः क्रिष्किन्धायां हिमा-
लये ।
दक्षिणाब्धितटे देशे कोकणेऽपि च जायते ॥”
अथ ब्रह्मपुत्त्रस्य स्वरूपम् ।
“वर्णतः कपिलो यः स्यात् तथा भवति साधकः ।
ब्रह्मपुत्त्रः स विज्ञेयो जायते मलयाचले ॥
ब्राह्मणः पाण्डरस्तेषु क्षत्त्रियो लोहितप्रभः ।
वैश्यः पीतोऽसितः शूद्रो विष उक्तश्चतुर्विधः ॥
रसायने विषं विप्रं क्षत्त्रियं देहपुष्टये ।
वैश्यं कुष्ठविनाशाय शूद्रं दध्याद्वधाय हि ॥”
अथ विषस्य गुणाः ।
“विषं प्राणहरं प्रोक्तं व्यवायि च विकासि च ।
आग्नेयं वातकफहृद्योगवाहिमदावहम् ॥”
व्यवायि सकलकायगुणव्यापनपूर्ब्बकपाकागमन-
तद्यथा । दृष्टिनिश्वासविषा दिव्याः सर्पाः १ । २ ।
दंष्ट्राविषाः भौमाः सर्पाः ३ । दंष्ट्रानखविषा
व्याघ्रादयः ४ । मूत्रपुरीषविषा गृहगोधिका-
दयः ५ । ६ । शुक्रविषा मूषिकादयः ७ । लालाविषा
उच्चिटङ्गादयः ८ । लालास्पर्शमूत्रपुरीषार्त्तव-
शुक्रमुखसंदंशदंष्ट्रास्पर्शावमर्द्दितगुदपुरीषविषा-
श्चित्रशीषादयः ९ । १० । ११ । १२ । १३ । अस्थिविषाः
र्पादयः १४ । पित्तविषा नकुलमत्स्यादयः १५ ।
शूकविषा भ्रमरादयः १६ ॥ * ॥ स्थावराविषाणां
सामान्यानां कार्य्याण्याह ।
“स्थावरन्तु ज्वरं हिक्कां दन्तहर्षं गलग्रहम् ।
फेनच्छर्द्यरुचिश्वासमूर्च्छाञ्चकुरुते विषम ॥”

| | | |
|---|---|---|
| दारदो वत्सनाभश्च विषभेदा अमी नव ॥”<br>इति पातालवर्गे अमरः ॥ * ॥<br>अपि च ।<br>“विषः क्ष्वेडो रसस्तीक्ष्णं गरलोऽथ हला-<br>हलः ।<br>वत्सनाभः कालकूटो ब्रह्मपुत्त्रः प्रदीपनः ॥ | | |

आश्रयभेदेन विशिष्टानां विषाणां कार्य्या-
ण्याह । तत्र मूलविषस्य कार्य्यमाह ।
“उद्वेष्टनं मूलविषैर्मोहः प्रलपनं भवेत् ॥”
पत्रविषस्य कार्य्यमाह ।
“जृम्भणं वेपनं श्वासो नृणां पत्रविषैर्भवेत् ॥”
फलविषस्य कार्य्यमाह ।
“शुष्कशोथः फलविषैर्दाहो द्वेषश्च भोजने ॥”
पुष्पविषस्य कार्य्यमाह ।
“भवेत् पुष्पविषैश्छर्द्दिराध्मानं मूर्च्छनं तथा
॥”
त्वक्सारनिर्यासविषाणांकार्य्याण्याह ।
“त्वक्सारनिर्यासविषैरुपयुक्तैर्भवन्ति हि ।
आस्यदौगन्ध्यपारुष्यशिरोरुक्कफसंस्रवाः
॥”
क्षीरविषकार्य्यमाह ।
“फेनागमः क्षीरविषैर्विड्भेदो गुरुजिह्वता ॥”
धातुविषकार्य्यमाह ।
“हृत्पीडनं धातुविषैर्मूर्च्छा दाहश्च तालुनि ।
प्रायेण कालघातीनि विषाण्येतानि निर्द्दिशेत्
॥
एतानि मूलादीनि विषाणि नव कालघातीनि
कालान्तरे मारकाणि ॥ * ॥ कन्दविषस्य
कार्य्यमाह ।
“कन्दजान्युग्रवीर्य्याणि यान्युक्तानि त्रयोदश ।
सर्व्वाण्येतानि कुशलैर्ज्ञेयानि दशभिर्गुणैः ॥
स्थावरं जङ्गमञ्चापि कृत्रिमञ्चापि यद्विषम् ।
सद्यो निहन्ति तत् सर्व्वं गुणैश्चेद्दशभिर्युतम्
॥”
तान् दशगुणानाह ।
“रूक्षमुष्णं तथा तीक्ष्णं सूक्ष्ममाशु व्यवायि च
।
विकाशि विशदं चैव लघ्वपाकि च ते दश ॥”
तेर्गुणैर्विषस्य कार्य्यमाह ।
“तद्रौक्षात् कोपयेद्वायुमौष्ण्यात् पित्तं सशो-
णितम् ।
तैक्ष्ण्यान्मतिं मोहयति मर्म्मवन्धांश्छिनत्ति हि
॥
शरीरावयवान् सौक्ष्मात् प्रविशेद्विकरोति च ।
आशुत्वादाशु तद्धन्ति व्यवायात् प्रकृतिं हरेत्
॥

जानीयाद्विषदातारमेभिर्लिङ्गैश्च बुद्धिमान् ॥
न ददात्युत्तरं पृष्टो विवक्षुर्मोहमेति च ।
अपार्थं बहु संकीर्णं भाषते चापि मूढवत् ॥
अङ्गुलीः स्फोटयेदुर्व्वीं विलिखेत् प्रहसेदपि ।
वेपथुश्चास्य भवति त्रस्तश्चैकैकमीक्षते ॥
विवर्णवक्त्रो ध्यामश्च नखैः किञ्चिच्छिनत्ति
च ।
आलभेत सकृद्दीनः करेण च शिरोरुहान् ॥
निर्यियासुरपद्वारैर्वीक्षते च पुनः पुनः ।
वर्त्तते विपरीतञ्च विषदाता विचेतनः ॥”
इङ्गितमभिप्रायसूचकआकारः । मुखवैकृतिं
मुखवैवर्ण्यादिः । एभिर्लिङ्गैः वक्ष्यमाणैः । न
ददात्युत्तरं पृष्टः स्वीयासत्कर्म्मजनितव्यामो-
हात् । संकीर्णं अस्फुटम् । भयजवायुजनित-
पर्व्वव्यथापनोदायाङ्गुलीः स्फोटयेत् ।
प्रहसेत्
अहेतावपि । ध्यामः दग्धसमानवर्णः । आल-
भेत् स्पृशेत् । विपरीतं यथा स्यादेवं वर्त्तेत ॥
जङ्गमविषाणां सामान्यानां कार्य्यमाह ।
“निद्रातन्द्राक्लमं दाहं सम्पाकं लोमहर्षणम्
।
शोथञ्चैवातिसारञ्च कुरुते जङ्गमं विषम् ॥”
जङ्गमेषु तीक्ष्णतरत्वेन सर्पानाह ।
“वातपित्तकफात्मानो भोगिमण्डलिराजिलाः
।
यथाक्रमं समाख्याता द्व्यन्तरा द्वन्द्वरूपिणः
॥”
भोगिनः फणिनः । ते च विंशतिः ।
“मण्डलैर्विविधैश्चित्राः पृथवो मन्दगामिनः ।
षट् ते मण्डलिनो ज्ञेया ज्वलनार्कसमा विषैः
॥
स्निग्धा विविधवर्णाभिस्तिर्य्यगूर्द्ध्वञ्च
राजिभिः ।
विचित्रा इव ये भान्ति राजिलास्ते हि तेऽपि
षट् ॥”
एते यथाक्रमं वातपित्तकफात्मानः ।
द्व्यन्तरा
द्वे अन्तरे भेदौ येषां ते द्व्यन्तराः । यथा
भोगिनो मण्डलिभ्यां जाताः इत्यादि ॥ * ॥
भोगिप्रभृतिकृशदंशलक्षणभेदमाह ।

क्षीणे क्षते मेहिनि कुष्ठजुष्टे
रूक्षे बले गर्भवतीषु चापि ॥
शस्त्रक्षते यस्य न रक्तमस्ति
राज्यो लताभिश्च न संभवन्ति
शीताभिरद्भिश्च न रोमहर्षो
विषाभिभूतं परिवर्ज्जयेत्तम् ॥
जिह्मं मुखं यस्य च केशशातो
नासावसादश्च सकण्ठभङ्गः ।
कृष्णश्च रक्तः श्वयथुश्च दंशो
हन्वोः स्थिरत्वञ्च स वर्ज्जनीयः ॥”
केशशातः आकर्षणात् । नासावसादः
नासाया
नतत्वम् । कण्ठभङ्गः ग्रीवाधारणाशक्तिः
। हन्वोः
स्थिरत्वं हनुद्वयस्तम्भः ॥ * ॥
अपरश्च ।
“वर्त्तिर्घनी यस्य निरेति वक्त्रा-
द्रक्तं स्रवेदूद्र्ध्वमधश्च यस्य ।
दंष्ट्रानिपातांश्चतुरश्च पश्येद्-
यस्यापि वैद्यैः परिवर्जनीयः ॥”
वर्त्तिः रुधिरस्थम् । रक्तं
स्रवेदूद्र्ध्वमधश्च यस्य
यस्य च नासामुखलिङ्गगुदादिभ्योरक्तं
स्रवेत् ।
“उन्मत्तमत्यर्थमुपद्रुतं वा
हीनस्वरं वाप्यथवा विवर्णम् ।
सारिष्टमत्यर्थमवेगिनञ्च
जह्यान्नरं तस्य न कर्म्म कुर्य्यात् ॥”
अत्यर्थमुपद्रुतं वा
ज्वरातिसारादिभिरतिशये-
नोपद्रुतम् । हीनस्वरं वक्तुमक्षमम् ।
विवर्णं
कृष्णवर्णम् । सारिष्टं नासाभङ्गादियुक्तम्
।
अवेगिनं वेगो विषवेगः लहरि इति लोके
तद्रहितम् । * । स्थावरं जङ्गमं विषमेव
जीर्णत्वादिभिः कारणैर्दूषीविषसंज्ञां
लभते ।
तदाह ।
“जीर्णं विषघ्नौषधिदूषितं वा

विकाशित्वात् क्षपयति दोषान् धातून् मला-
न्यपि ।
अतिरिच्यत वैशद्याद्दुश्चिकित्स्यञ्च लाघवात्
।
दुर्ज्जरं चाविपाकित्वात्तस्मात् क्लेशयते
चिरम् ॥”
विषलिप्तशस्त्रहतस्य लक्षणमाह ।
“सद्यः पाकं याति यस्य क्षतं तत्
स्रवेद्रक्तं पच्यते चाप्यभीक्ष्णम् ।
कृष्णीभूतं क्लिन्नमत्यर्थपूति-
क्षतान् मांसं शीर्य्यते यस्य चापि ॥
तृष्णातापौ दाहमूर्च्छे च यस्य
दिग्धाविद्धं तं मनुष्यं व्यवस्येत् ।
लिङ्गान्येतान्येव कुर्य्यादमित्रै-
र्दत्तः क्ष्वेडो वा व्रणे यस्य चापि ॥”
पच्यते चाप्यभीक्ष्णं पुनः पुनः पाकमेति ।
तापो
बहिस्तप्तता । दाहोऽभ्यन्तरे । कर्य्यादित्यत्र
क्षतं कर्त्तृपदं बोद्धव्यम् । प्रायेण राजादीना-
मन्नादौ शत्रवो विषं ददति ॥ * ॥ तेषां
ज्ञानार्थं
लक्षणमाह ।
“इङ्गितज्ञो मनुष्याणां वाक्चेष्टामुखवैकृतैः ।

“दंशो भोगिकृतः कृष्णः सर्व्ववातविकारनुत्
।
पीतो मण्डलिनः शोथो मृदुः पित्तविकारवान्
॥
राजिलोत्थो भवेद्दंशः स्थिरशोथश्च
पिच्छिलः ।
पाण्डुः
स्निग्धोऽतिसान्द्रासृक्सर्व्वश्लेष्मविकार-
वान् ॥”
देशविशेषे कालविशेषे च
दष्टस्यासाध्यत्वमाह ।
“अश्वत्थदेवायतनश्मशान-
वल्मीकसन्ध्यासु चतुष्पथेषु ।
याम्ये सपित्र्ये परिवर्ज्जनीया
ऋक्षे नरा मर्म्मसु ये च दष्टाः ॥”
याम्ये भरण्याम् । पित्र्ये मघायाम् ।
“दार्व्वीकराणां विषमाशु हन्ति
सर्व्वाणि चोष्णे द्विगुणीभवन्ति ॥”
उष्णे उष्मसंयोगे । दार्व्वीकरलक्षणमाह ।
“रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिणः ।
ज्ञेया दार्व्वीकराः सर्पाः फणिनः शीघ्र-
गामिनः ॥”
अपरेषु येषु विषमाशु मारकं भवति तानाह ।
“अजीर्णपित्तातपपीडितेषु
बालेषु वृद्धेषु बुभुक्षितेषु ।

दावाग्निवातातपशोषितं वा ।
स्वभावतो वा गुणविप्रहीनं
विषं हि दूषीविषतामुपैति ॥”
जीर्णं अतिपुराणम् । विषघ्नौषधिदूषितं
विषघ्ना-
भिरोषधीभिर्व्वीर्य्यहीनीकृतम् ।
स्वभावतो वा
गुणविप्रहीनं स्वभावादेव दशानां गुणानां
मध्ये द्वित्र्यादिगुणहीनम् ॥ * ॥
दूषीविषस्य
कार्य्यमाह ।
“वीर्य्याल्पभावान्न निपातयेत्तत्
कफान्वितं वर्षगुणानुबन्धि ।
तेनार्द्दितो भिन्नपुरीषवर्णो
विगन्धवैरस्ययुतः पिपासी ॥
मूर्च्छां भ्रमं गद्गदवाग्वमिञ्च
विचेष्टमानोऽरतिमाप्नुयाद्वा ॥”
न निपातयेत् न मारयति । कफान्वितं
कफेन
मन्दीकृतौष्णादिगुणम् । वर्षगुणानुबन्धि
कफे-
नाग्नेर्मान्द्यादीषत्पाकाच्चिरमास्थायि।
भिन्न-
पुरीषवर्णः भिन्नपुरीषो द्रुतमलः
भिन्नवर्णश्च ।
विचेष्टमानो विरुद्धां चेष्टां कुर्वन्
मूर्च्छादीन्
व्याधीन् लभते ॥ * ॥
स्थानविशेषस्थिते दूषी-
विषे लिङ्गविशेषमाह ।

“आमा शयस्थे कफवातरोगी
पक्वाशयस्थेऽनिलपित्तरोगी ।
भवेत् समुद्ध्वस्तशिरोऽङ्गरुट्को
विलूनपक्षश्च यथा विहङ्गः ॥”
समुद्ध्वस्तशिरोरुहः केशाः अङ्गरुहि च
रोमाणि
यस्य सः । एतदपि लिङ्गं पक्वाशयस्थे
दूषीविषे
बोद्धव्यम् । स्थिरं रसादिष्वथ तद्यथोक्तान्
करोति धातुप्रभवान् विकारान् । तत् दूषी-
विषम् । यथोक्तान् सुश्रुते व्याधिसमुद्देशी-
योक्तान् । * । दूषीविषस्य प्रकोपसमयमाह
।
“कोपन्तु शीतानिलदुर्द्दिनेषु
जात्याशु पूर्ब्बं शृणु तस्य रूपम् ॥” * ॥
कुपितस्य तस्य दूषीविषस्य पूर्ब्बरूपमाह ।
“निद्रागुरुत्वञ्च विजृम्भणञ्च
विश्लेषहर्षावथवाङ्गमर्दः ॥”
विश्लेषः गात्रशैथिल्यम् । हर्षः रोमाञ्चः । *
।
रूपमाह ।
“ततः करोत्यन्नमदाषिपाका-
वरोचकं मण्डलकोटजन्म ।
मांसक्षयं पाणिपदाक्षिशोथं
मूर्च्छां तथा च्छर्द्दिमथातिसारम् ॥”
दूषीविषं श्वासतृषौ ज्वरांश्च कुर्य्यात्
प्रवृद्धिं
जठरस्य चापि । अन्नमदः अन्ने भुक्ते
पूगफले-
नेव मदः अविपाकः । * । अन्नस्य
दूषीविष-
भेदेन विकारभेदमाह ।
“उन्मादमन्यज्जनयेत्तथान्य-
दानाहमन्यत् क्षपयेच्च शुक्रम् ।
गाद्गद्यमन्यज्जनयेच्च कुष्ठं
तांस्तान् विकारांश्च बहुप्रकारान् ॥”
अन्यत् दूषीविषम् । तांस्तान् विकारान्
विसर्प-
विस्फोटादीन् । * । दूषीविषस्य
निरुक्तिमाह ।

मर्म्मप्रधमनाध्मानं हस्तयोः शोथसम्भवः ॥
जठरं ग्रहणीरोगा यक्ष्मा गुल्मः क्षयो ज्वरः
।
एवंविधस्य चान्यस्य व्याधेर्लिङ्गञ्च जायते
॥”
तैर्गरैः स्वेतरजःप्रभृतिभिः ।
ज्वरश्चास्योप-
जायत इति अपाकात् । मर्म्मप्रधमनं मर्म्म-
व्यथाम् । क्षयो धातुक्षयः ॥ * ॥ लूतानां
जन्तु-
विशेषाणामुत्पत्तिं संख्याञ्चाह ।
“यस्माल्लूनं तृणं प्राप्ता मुनेः प्रस्वेदबिन्दवः
।
तेभ्यो जातास्ततो लूता इति ख्यातास्तु
षोडश ॥”
तत्र सुश्रुतः ।
“विश्वामित्रो नृपवरः: कदाचिदृषिसत्तमम्
।
वशिष्ठं कोपयामास गत्वाश्रमपदं किल ॥
कुपितस्य मुनेस्तस्य ललाटात्
स्वेदबिन्दवः ।
अपतन्दर्शनादेव ह्यधस्तात्तीव्रवर्च्चसः ।
लूने तृणे महर्षेस्तु धेन्वर्थे सम्भृतेऽपि च ॥
ततो जातास्त्विमे घोरा नानारूपा
महाविषाः ।
तासामष्टौ कष्टसाध्या वर्ज्यास्तावन्त्य एव
हि ॥
तत्र तृणमण्डलाप्रभृतयोऽष्टौ कष्टसाध्याः ।
सौव-
र्णिकाप्रभृतयोऽष्टावसाध्याः॥ * ॥ तासां
सामा-
न्यानां दंशलक्षणमाह ।
“ताभिर्दष्टे दंशकोप्यः प्रवृत्तिः क्षतजस्य च
।
ज्वरो दाहोऽतिसारश्च गदाः स्युश्च त्रिदो-
षजाः ॥
पिडका विविधाकारा मण्डलानि महान्ति
च ।
शोथो महान्तो मृदवो रक्ताः श्यावाश्चला-
स्तथा ॥

असाध्यवृश्चिकदष्टस्य लक्षणमाह ।
“दष्टोऽसाध्यैस्तु हृद्घ्राणरसनोपहतो नरः
।
मांसैः पतद्भिरत्यर्थं वेदनार्त्तो जहात्यसून्
॥”
असाध्यैर्वृश्चिकैस्तेषामेवानुवृत्तेः ।
हृदादिषूप-
हतः हृदादिकार्य्यरहितो भवति । अत्यर्थं
वेदनार्त्त इत्यन्वयः ॥ कणभदष्टस्य
लक्षणमाह ।
“विसर्पः श्वयथुः शूलं ज्वरश्छर्द्दिरथापि च
।
लक्षणं कणभैर्दष्टे दंशश्चैवावशीर्य्यते ॥”
कणभः कीटविशेषः ॥ उच्चिटिङ्गदष्टस्य
लक्षण-
माह ।
“कृष्णरोमोच्चिटङ्गेन स्तब्धलिङ्गो भृषार्त्ति-
मान् ।
दष्टः शीतोदकेनेव सिक्तान्यङ्गानि मन्यते
॥”
कृष्णरोमा अधिकतरकृष्णरोमा ।
उच्चिटङ्ग-
श्चीटाकीटविशेषः ॥ * ॥
सविषमण्डूकदष्टस्य
लक्षणमाह ।
“एकदंष्ट्रार्द्दितः शूनः सरुजः पीतकः सतृट्
।
सनिद्रश्छर्द्दिमान् दष्टो मण्डूकैः सविषैर्भवेत्
॥”
एकदंष्ट्रार्द्दितः स्वभावादेकयैव दंष्ट्रया दष्टो
भवति ॥ * ॥ मत्स्यविषस्य कार्य्यमाह ।
“मत्स्यास्तु सविषाः कुर्य्युर्दाहं शोथं रुजं
तथा ॥”
जलौकोविषकार्य्यमाह ।
“कण्डूशोथं ज्वरं मूर्च्छां सविषास्तु
जलौकंसः ।”
कुर्य्युरिति शेषः ॥ * ॥
गृहगोधिकाविषकार्य्य-
लक्षणमाह ।

“दूषितं देशकालान्नं दिवास्वप्नैरभीक्ष्णशः
।
यस्मात् संदूषयेद्धातुं तस्मात् दूषीविषं
स्मृतम् ॥”
देशः अनूपादिः । कालो दुर्द्दिनादिः । अन्नं
कुलत्थतिलमसुरादि ।
धातुदूषकत्वाद्दूषीवि-
षम् ॥ * ॥ दूषीविषस्य साध्यत्वादिकमाह
।
“साध्यमात्मवतः सद्यो याप्यं
संवत्सरोषितम् ।
दूषीविषमसाध्यं स्यात्
क्षीणस्याहितसेविनः ॥”
कृत्रिमं विषं द्विविधम् । एकं सविषं दूषीविष-
संज्ञम् । अपरमविषं तदेव गरसंज्ञम् । तथा
च
काश्यपसंहितायाम् ।
“संयोगजञ्च द्विविधं द्वितीयं विषमुच्यते ।
दूषीविषन्तु सविषमविषं गर उच्यते ॥”
संयोगजं कृत्रिमं विषम् । द्वितीयं स्वाभावि-
कात् । तच्च द्विविधम् । * । तत्र दूषीविष-
मभिधाय गरं दर्शयितुमाह ।
“सौभाग्यार्थं स्त्रियः स्वेदरजोनानाङ्गजान्
मलान् ।
शत्रुप्रयुक्तांश्च गरान् प्रयच्छन्त्यन्नमिश्रितान्
॥” *
गरकार्य्यमाह ।
“तैः स्यात्
पाण्डुकृशोऽल्पाग्निर्ज्वरश्चास्योप-
नायते ।

सामान्यं सर्व्वलूतानामेतद्दंशस्य लक्षणम्
।”
दंशकोप्यः दंशमध्ये पूतिभावः ।
“दंशमध्ये तु यत् कृष्णं श्यावं वा
जालमावृतम् ॥
दग्धाकृति भृशं पाकं
क्लेदशोऽथज्वरान्वितम् ।
दूषीविषाभिर्लूताभिस्तं दष्टमिति निर्द्दिशेत्
॥”
सौवर्णिकादयोऽष्टावसाध्याः
प्राणहरास्तासां
लक्षणमाह ।
“शोथः श्वेता सिता रक्ता पीता वा पिडका
ज्वरः ।
प्राणान्तिको भवेद्दाहः श्वासहिक्का शिरो-
ग्रहः ॥”
आखुदूषीविषलक्षणमाह ।
“आदंशाच्छोणितं पाण्डुमण्डलानि ज्वरो-
ऽरुचिः ।
लोमहर्षश्च दाहश्चाप्याखुदूषीविषार्द्दिते ॥”
प्राणहरमूषकविषकार्य्यमाह ।
“मूर्च्छाङ्गशोथवैवर्ण्यं
क्लेदशब्दाश्रुतिज्वराः ।
शिरोगुरुत्वं
लालासृक्छर्द्दिश्चासाध्यमूषकात् ॥”
अङ्गशोथोऽत्र मूषकाकारो बोद्धव्य इति
तन्त्रा-
न्तरे ॥ * ॥ कृकलासदष्टस्य लक्षणमाह ।
“शोथस्य कार्य्यमथवा नानावर्णत्वमेव च ।
मोहोऽथ वर्च्चसो भेदो दष्टस्य कृकलासकैः
॥”
वृश्चिकविषस्य लक्षणमाह ।
“दहत्यग्निरिवादौ च भिनत्तीवोर्द्ध्वमाशु च
।
वृश्चिकस्य विषं याति पश्चात्
दंशोऽवतिष्ठते ॥”

“विदाहं श्वयथुं तोदं प्रस्वेदं गृहगोधिकाः
।”
कुर्य्युः । इति शेषः ॥ * ॥
शतपदीविषकार्य्यमाह ।
“दंशे स्वेदं रुजं दाहं कुर्य्यात् शतपदीविषम्
।”
शतपदी गिजाइ इति लोके ॥ * ॥
मशकविष-
कार्य्यमाह ।
“कण्डूमान् मशकैरीषच्छोथः
स्यान्मन्दवेदनः ॥”
असाध्यमशकलक्षणमाह ।
“असाध्यकीटसदृशमसाध्यंमशकक्षतम्
।”
असाध्यकीटसदृशं असाध्यैः कीटैर्लूताभिः
कृतं
यत् क्षतं तत्सदृशवेदनम् ॥ * ॥
मक्षिकादंशस्य
लक्षणमाह ।
“सद्यःसंस्राविणी श्यावा दाहमूर्च्छाज्वरा-
न्विता ।
पिडका मक्षिकादंशे तासान्तु
स्थगिकाशुहृत् ॥”
तासामित्यादि । तासां सुश्रुतोक्तानां षण्णां
मक्षिकाणां मध्ये स्थगिकानाम्नी शीघ्रं प्राणं
हरतीत्यर्थः ॥ व्याघ्रादिविषाणां कार्य्यमाह
।
“चतुष्पाद्भिर्द्विपाद्भिर्व्वा नखैर्दन्तैश्च यत्
क्षतम् ।
सूयते पच्यते तत्तु स्रवते ज्वरयत्यपि ॥”
चतुष्पाद्भिर्व्याघ्रादिभिः ।
द्विपाद्भिर्वनमानुषा-
दिभिः । सूयते सूनं भवति ॥ * ॥
विषोज्झितस्य
लक्षणमाह ।
“प्रसन्नदोषं प्रकृतिस्थधातु-
मन्नाभिकामं सममूत्रविट्कम् ।
प्रसन्नवर्णेन्द्रियचित्तचेष्टं
वैद्योऽवगच्छेदविषं मनुष्यम् ॥”
प्रसन्नदोषं प्रकृतिस्थदोषं शेषं सुगयम् ॥ *
॥

अथ विषाणां चिकित्सा । तत्र
स्थावरविषास्य
चिकित्सा ।
“स्थावरेण विषेणार्त्तनरं यत्नेन वामयेत्
।
वमनेन समं नास्ति यतस्तस्य
चिकित्सितम् ॥
विषमत्यर्थमुष्णञ्च तीक्ष्णञ्च कथितं यतः
।
अतः सर्व्वविषे युक्तः परिषेकस्तु
शीतलः ॥
औष्ण्यात्तैक्ष्ण्याद्विशेषेण विषं पित्तं
प्रकोपयेत् ।
वामितं सेचयेत्तस्माच्छीतलेन जलेन च
॥
पाययेन्मधुसर्पिर्भ्यां विषघ्नं भेषजं द्रुतम्
।
भोक्तुमम्लं रसं दद्यात् चर्व्वयेन्मरिचानि
च ॥
यस्य यस्य च दोषस्य पश्येल्लिङ्गानि
भूरिशः ।
तस्य तस्यौषधैः कुर्य्याद्विपरीतगुणैः
क्रियाम् ॥
शालयः षष्टिकाश्चैव कोरदूषाः
प्रियङ्गवः ।
भोजनार्थे विषार्त्तानां हिताः पटुषु
सैन्धवम् ॥”
प्रियङ्गुः कङ्गुः ।
“मूलत्वक पत्रपुष्पाणि बीजञ्चेति
शिरीषतः ।
गवां मूत्रेण संपिष्टं लेपाद्विषहरं भवेत् ॥
दूषीविषार्त्तः सुस्निग्धमूर्द्ध्वं चाधश्च
शोधितम् ।
पाययेदगदं मुख्यमिदं दूषीविषापहम् ॥
पिप्पलीध्यामकं मांसी लोध्रमेला
सुवर्च्चिका ।
मरिचं बालकं चैला तथा कनकगैरिकम्
॥
क्षौद्रयुक्तः कषायोऽयं दूषीविषमपोहति
॥”

अपि च ।
“दुरधीता विषं विद्या अजीर्णे भोजनं विषम् ।
विषं गोष्ठी दरिद्रस्य वृद्धस्य तरुणी विषम् ॥
विषं चंक्रमणं रात्रौ विषं राज्ञोऽनुकूलता ।
विषं स्त्रियोऽप्यन्यहृदो विषं व्याधिरवीक्षितः
॥”
इति चाणक्यम् ॥

**विषकण्टकिनी**, स्त्री, (विषयुक्तः कण्टकोऽस्या
अस्तीति । इनिः । ङीष् ।) बन्ध्याकर्कोटकी
।
इति राजनिर्घण्टः ॥ (अस्याः पर्य्यायो यथा,
--
“वन्ध्याकर्कोटकी देवी कन्यायोगीश्वरीति
च ।
नागारिनक्रदमनी विषकण्टकिनी तथा ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**विषकन्दः**, पुं, (विषयुक्तः कन्दो यस्य ।) नीलकन्दः ।
इति राजनिर्घण्टः ॥

**विषघा**, स्त्री, गुडूची । इति शब्दचन्द्रिका ॥

**विषघाती**, [न्] पुं, (विषं हन्तीति । हन +
णिनिः ।) शिरीषवृक्षः । इति शब्दमाला ॥
विषनाशके, त्रि ॥

**विषघ्नः**, पुं, (विषं हन्तीति । हन + टक् ।) शिरीष-
वृक्षः । इति शब्दचन्द्रिका ॥ यवासः ।
विभी-
तकः । इति राजनिर्घण्टः ॥ चम्पकवृक्षः ।
इति
जटाधरः ॥ विषनाशके, त्रि ॥ (यथा, मनुः ।
७ । २१८ ।
“विषघ्नैरगदैश्चास्य सर्व्वद्रव्याणि योजयेत्
।
विषघ्नानि च रत्नानि नियतो धारयेत् सदा
॥”)
विषघ्नौषधानि यथा, --
मनुरुवाच ।
त्र्युषणं पञ्चलवणं मञ्जिष्ठा रजनीद्वयम् ।
सूक्ष्मैला त्रिवृतापत्रं विडङ्गमिन्द्रवारुणी ॥
मधुकं वेतसं क्षौद्रं गोविषाणे निधापयेत् ।
तस्मादुष्णाम्बुना मात्रा प्रागुक्तं योजयेत्तथा ।
विषं भुक्तं जारयति निर्व्विषेऽपि न दोषकृत् ॥
६ ॥
सक्तुं सर्ज्जरसोपेतं सर्षपा एलवालुकैः ।
सुवर्णा तस्करतरोः कुसुमैरर्ज्जुनस्य तु ॥
धूपो वासगृहे हन्ति विषं स्थावरजङ्गमम् ।
न तत्र कीटाः सविषा न दर्द्दरसरीसृपाः ।
न कृत्या कर्म्मणस्तत्र धूपोऽयं यत्र दह्यते ॥
७ ॥
कल्कितैश्च तृणक्षीरपलाशद्रुमवल्कलैः ।
दूर्व्वैलवालुसुरसानाकुलीतण्डुलीयकैः ।
क्वाथः सर्वौदकार्थेषु काकमाचीयुतैर्वृतः ॥
८ ॥
रोचनापत्रनेपालीकुङ्कुमैस्तिलकोऽन्वहम् ।
विषैर्न वाध्यते स्याच्च नरनारीनृपप्रियः ॥ ९
॥
चूर्णैर्हरिद्रामञ्जिष्ठाकिणिहीकणनिम्बजैः ।
दिग्धं निर्व्विषतामेति गात्रं सर्व्वविषार्द्दितम् ॥
१०
शिरीषस्य फलं पत्रं पुष्पं त्वङ्मूलमेव च ।
गोमूत्रघृष्टो ह्यगदः सर्व्वकर्म्मकरः स्मृतः ॥
११ *
एकवीरमहौषध्यः शृणु चातः परं द्विज ।
बन्ध्याकर्कोटकी राजन् विष्णुक्रान्ता
तथोत्कटा ।
शतमूली शतानन्दी वला मोचा पटोकिला ॥
सोमा पिण्डनिशा चैव तथा दग्धरुहा च या ।
स्थले कमलिनी या च विशाली शङ्खमूलिका
॥
चण्डाली हस्तिचण्डाली गोचण्डाली च
गन्धिका ।
रक्ता चैव महारक्ता तथा वर्हिशिखा च या ।
कोषातकी नक्तमाला पियाला शुभलक्षणा ।
वारणा च सुगन्धा च तथा वै गन्धनाकुली ॥
ईश्वरी च शिलीन्ध्री च सोमली वंशतालिका
।
जतुकाली महाश्वेता श्वेता च मधुयष्टिका ॥

ध्यामकं रोहिषम् । तदलाभे उशीरं देयम्
।
कनकगैरिकं सोणागेरू इति लोके ।
अत्यन्त-
मारक्तम् ॥ * ॥ अथ जङ्गमविषस्य
चिकित्सा ।
“अभयां रोचनां कुष्ठमर्कपुष्पं
तथोत्पलम् ।
नलवेतसमूलानि गरलं सुरसां तथा ॥
सकलिङ्गं समञ्जिष्ठामनन्ताञ्च शतावरीम्
।
शृङ्गाटकं समङ्गाञ्च पद्मकेशरमित्यपि ॥
कल्कीकृत्य पचेत् सर्पिः पयो
दद्याच्चतुर्गुणम् ।
सम्यक्पक्वेऽवतीर्णे च शीते तस्मिन्
विनिः-
क्षिपेत् ॥
सर्पिस्तुल्यं भिषक् क्षौद्रं कृतरक्षं
निधापयेत् ।
विषाणि हन्ति दुर्गाणि गरदोषकृतानि च
॥
स्पर्शाद्धन्ति विषं सर्व्वं गरैरुपहितां
त्वचाम् ।
योगजन्तमकं कण्डूं मांससादं
विसंज्ञताम् ॥
नाशयत्यञ्जनाभ्यङ्गपानवस्तिषु
योजितम् ।
सर्पकीटाखुलूतादिदष्टानां विषहृत् परम्
॥”
मृत्युपाशच्छेदि घृतम् ॥
“धुस्तूरस्य शिफा पेया क्षीरेण
परिपेषिता ।
अङ्कोठवंशजा चापि श्वविषघ्नी
प्रयत्नतः ॥
रजनीयुग्मपत्तङ्गमञ्जिष्ठानागकेशरैः ।
शीताम्बुपिष्टैरालेपः सद्यो लूतां
विनाशयेत् ॥
जीरकस्य कृतः कल्को
घृतसैन्धवसंयुतः ।
सुखोष्णो मधुना लेपो वृश्चिकस्य विषं
हरेत् ॥
गन्धमाघ्राय मुदितसूर्य्यावर्त्तदलस्य तु ।

“रक्षोघ्नानि विषघ्नानि यानि धार्य्याणि
भूभुजा ।
अगदादि समाचक्ष्व तानि धर्म्मभृतांवर ॥
मत्स्य उवाच ।
विल्वाढकायवक्षारं पाटला वाह्लिकोषणा ।
श्रीपर्णी शल्लकीयुक्ता निष्काथ्य प्रोक्षणं परम्
।
सविषं प्रोक्षितं तेन सद्यो भवति निर्व्विषम् ॥
१ ॥
यवसेन्धनपानीयवस्त्रशय्यासनोदनम् ।
कवचाभरणं छत्रं बालव्यजनवेश्मनी ॥
शेलुः पाटल्यतिविषा गोपी भार्गी पुनर्नवा ।
समङ्गावृक्षमूलत्वक्कपित्थवृषशोणितम् ।
सहदन्तशठन्तद्वत् प्रोक्षणं विषनाशनम् ॥ २
॥
लाक्षा प्रियङ्गु मञ्जिष्ठा सममेला हरेणुका ।
सयष्ट्या मधुना युक्ता वभ्रुपित्तेन कल्किता
॥
निखनेद्गोविषाणस्थं सप्तरात्रं महीतले ।
ततः कृत्वा मणिं हेम्ना बद्धं हस्तेन धारयेत्
।
संस्पृष्टं सविषन्तेन सद्यो भवति निर्व्विषम् ॥
३ ॥
मनो जलं शमीपुष्पं दुर्द्धर्षा चैव कर्षकाः ।
कपित्थकुष्ठमञ्जिष्ठाः पित्तेन
श्लक्ष्णकल्किताः ॥
शुनो गोः कपिलायाश्च
सौम्याख्येयापरोऽगदः ।
विषजित् परमं कार्य्यं मणिरत्नञ्च पूर्ब्बवत् ।
मूषिका जतुका वापि हस्ते बद्धा विषापहा ॥
४ ॥
हरेणु मांसी मञ्जिष्ठा रजनी मधुका मधु ।
अक्षत्वक् सुरसं लाक्षाम्बुपित्तं पूर्ब्बवद्भुवि ॥
वादित्राणि पताकाश्च पिष्टैरेतैः प्रलेपिताः ।
श्रुत्वा दृष्ट्वाथ चाघ्राय सद्यो भवति निर्व्विषः
॥ ५

वर्जटः पारिभद्रश्च तथा वै सिन्धुवारिका ।
जीवानन्दा वसुमती नर्त्तनागरकण्टकी ॥
तालता जालपाताला तथा च वटपत्रिका ।
कार्त्तक्षीरी महानीला कट्टरं हंसपादिका ॥
मण्डूकपर्णी वाराही द्वे तथा तण्डुलीयके ।
सर्पाक्षी लवणा ब्राह्मी विश्वरूपा सुखङ्करी ॥
रजापहा वृद्धिकरी तथा शल्यापहा च या ।
पत्रिका रोहिणी चैव रक्तमाला महौषधी ॥
तथामलकवन्दाकं या च चित्रा पटोलिका ।
काकोली क्षीरकाकोली पीलुपर्णी तथैव च ॥
केशिनी वृश्चिकाली च महानागा शतावरी ।
तथा गरुडवेगा च स्थले कुमुदिनी तथा ॥
स्थले चोत्पलिनी या च महाभूमिलता च या
।
उन्मादिनी सोमराजी सर्व्वरत्नानि पार्थिव ॥
विशेषान्मरकतान्यत्र कीटपक्षं विशेषतः ।
जीवजाताश्च मणयः सर्व्वे धार्य्या विशेषतः
॥ * ॥
रक्षोघ्नाश्च यशस्याश्च कृत्या वेतालनाशनाः
।
विशेषान्नरनागाश्च गोखरोष्ट्रसमुद्भवाः ॥
सर्पतित्तिरिगोमायुवभ्रुमण्डूकजाश्च ये ।
सिंहव्याघ्रर्क्षमार्ज्जारद्वीपिवानरसम्भवाः ॥
कपिञ्जलाजगोधाहिमहिषेषु भवाश्च ये ॥

| वृश्चिकेन नरो विद्धः क्षणाद्भवति निर्व्विषः ॥”<br>इति विषाधिकारः । इति भावप्रकाशः ॥ * ॥<br>पारिभाषिकविषा यथा, --<br>“न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ।<br>देवस्वञ्चापि यत्नेन सदा परिहरेत्ततः ॥”<br>इति कौर्म्मे उपविभागे १५ अध्यायः ॥ | | |
|---|---|---|

इत्येवमेतैः सकलैरुपेतै-
र्द्रव्यैश्च सर्व्वैः स्वपुरं सुरक्षितम् ।
राजा वसेत्तत्र गृहञ्च शुभ्रं
गुणान्वितं लक्षणसंप्रयुक्तम् ॥”
इति मात्स्ये १९२ अध्यायः ॥
(तण्डुलीयः । तत्पर्य्यायो यथा । अथ च वराइ ।
अल्पमरुसा इति च ।
“तण्डुलीयो मेघनादः
काण्डेरस्तण्डुलेरकः ।
भण्डीरस्तण्डुलीबोजो
विषघ्नश्चाल्पमारिषः ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**विषघ्नी**, स्त्री, (विषं हन्ति या । हन + टक् । स्त्रियां ङीप् ।) हिलमोचिका । इति त्रिकाण्ड-
शेषः ॥ (अस्याः पर्य्यायो यथा, --
“मारी विषघ्नी मत्स्याङ्की चक्राङ्गी हिल-
मोचिका ॥”
इति वैद्यकरत्नमालायाम् ॥)
इन्द्रवारुणी । वनवर्व्वरिका ।
स्वल्पफला ।
भूम्यामली । रक्तपुनर्नवा । हरिद्रा । वृश्चि-
काली । (अस्याः पर्य्यायो यथा, --
“वृश्चीपत्री वृश्चिकाली विषघ्नी नागदन्तिका ।
सर्पदंष्ट्रामराकाली चोष्ट्रधूषरपुच्छिका ॥”
इति वैद्यकरत्नमालायाम् ॥)
महाकरञ्जः । इति राजनिर्घण्टः ॥
(हवुषा ।
तत्पर्य्यायो यथा, --
“हवुषा पुष्पवन्ता च पराश्वत्थफला मता ।
मत्स्यगन्धा प्लीहहन्त्री विषघ्नी ध्वाङ्क्षनाशिनी ॥”

**विषदंष्ट्रा**, स्त्री, (विषं दंष्ट्रायां यस्याः ।) सर्प-
कङ्काली । इति रत्नमाला ॥

**विषदन्तकः**, पुं, (विषं दन्ते यस्य । कन् ।) सर्पः ।
इति शब्दचन्द्रिका ॥

**विषदर्शनमृत्युकः**, पुं, (विषदर्शने मृत्युर्यस्य । कन् ।)
चकोरपक्षी । इति हेमचन्द्रः ॥

**विषद्रुमः**, पुं, (विषयुक्तो द्रुमः ।) कारस्करवृक्षः ।
इति राजनिर्घण्टः ॥

**विषधरः**, पुं, (धरतीति । धृ + अच् । विषस्य
धरः ।) सर्पः । इत्यमरः ॥ (यथा, गीत-
गोविन्दे । १ । १९ ।
“कालियविषधरगञ्जनजनरञ्जन॥”
स्त्रियां विषधरी । यथाह कश्चित् ।
“धावद्घोरविभावरी विषधरीभोगस्य भीमो
मणिः ॥”)

**विषधर्म्मा**, स्त्री, कुलक्षया । इति शब्दचन्द्रिका ॥
आलकुशी इति भाषा ॥

**विषधात्री**, स्त्री, (विषाणां विषधरसर्पाणां धात्री
मातेव ।) जरत्कारुमुनिपत्नी । इति शब्द-
माला ॥

**विषनाशनः**, पुं, (विषं नाशयति । ल्युः ।) शिरीष-
वृक्षः । इति हारावली ॥ विषनाशके, त्रि ॥

**विषनाशिनी**, स्त्री, (विषं नाशयतीति । नाशि +
णिनिः ।) सर्पकङ्काली । इति शब्दचन्द्रिका ॥
(अथ रास्ना भेदनाइ इति लोके । तत्पर्य्यायो
यथा, --
“नाकुली सरसा नागसुगन्धा गन्धनाकुली ।
नकुलेष्टा भुजङ्गाक्षी सर्य्याङ्गी विषनाशिनी ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**विषनुत्**, पुं, (विषं नुदति दूरीकरोति । नुद् +
क्विप् ।) श्योणाकवृक्षः । इति शब्दचन्द्रिका ॥

**विषपुष्पं**, क्ली, नीलपद्मम् । इति शब्दमाला ॥

“पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ।
वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत् ॥
सममर्द्धसमं वृत्तं विषमञ्चेति तत्त्रिधा ।
समं समचतुष्पादं भवत्यर्द्धसमं पुनः ॥
आदिस्तृतीयवद्यस्य पादस्तूर्य्यो द्वितीयवत् ।
भिन्नचिह्नचतुष्पादं विषमं परिकीर्त्तितम् ॥”
इति छन्दोमञ्जर्य्यां प्रथमस्तवकः ॥
वर्गमूलोक्तोद्‌र्ध्वरेखा । यथा, --
“त्यक्त्वान्त्याद्विषमात् कृतिं द्विगुणयेन्मूलं समे
तद्धृते
त्यक्त्वा लब्धकृतिन्तदाद्यविषमाल्लब्धं द्विनिघ्नं
न्यसेत् ।
पङ्क्त्यां पङ्क्तिहृते समेऽन्यविषमात् त्यक्त्वाप्तवर्गं
फलं
पङ्क्त्यान्तद्द्विगुणं न्यसेदिति मुहुः पङ्क्तेर्दलं
स्यात् पदम् ॥”
इति लीलावती ॥
(अर्थालङ्कारविशेषः । यथा, साहित्यदर्पणे । १० ।
“यद्वारब्धस्य वैकल्यं अनर्थस्य च सम्भवः ।
विरूपयोः सङ्घटना या च तद्विषमं मतम् ॥”
उदाहरणम् ।
“क्व वनं तरुवल्कभूषणं
नृपलक्ष्मीः क्व महेन्द्रवन्दिता ॥”)

**विषमः**, पुं, अयुग्मराशिः । स तु मेषः मिथुनः
सिंहः तुला धनुः कुम्भश्च । यथा, --
“क्रूरोऽथ सौम्यः पुरुषोऽङ्गना च
ओजोऽथ युग्मं विषमः समश्च ।
चरस्थिरद्व्यात्मकनामधेया
मेषादयोऽमी क्रमशः प्रदिष्टाः ॥”
इति ज्योतिस्तत्त्वम् ॥
तालविशेषः । यथा, सङ्गीतदामोदरे ।
“चतुर्व्विधः परिज्ञेयस्तालः कङ्कणनामकः ।

देवदाली । तत्पर्य्यायो यथा, --

“देवदाली तु वेणी स्यात् कर्कटी च गरागरी ।
देवताण्डी वृत्तकोशस्तथा जीमूत इत्यपि ।
पीतापरा खरस्पर्शा विषघ्नी गरनाशिनी ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**विषजिह्वः**, पुं, देवताडवृक्षः । इति रत्नमाला ॥

**विषज्वरः**, पुं, (विषवत् प्राणनाशको ज्वरो यस्य ।)

महिषः । इति शब्दरत्नावली ॥
विषजज्वरश्च ॥

**विषण्डं**, क्ली, मृणालम् । इति शब्दरत्नावली ॥

**विषण्णः**, त्रि, (वि + षद + क्तः ।) विषादप्राप्तः ।

यथा, --
“इति विप्रियमाकर्ण्य गोप्यो गोविन्दभाषितम् ।
विषण्णा भग्नसङ्कल्पा चिन्तामापुर्दुरत्ययाम् ॥”
इति श्रीभागवते १० स्कन्धे २९ अध्यायः ॥

**विषण्णता**, स्त्री, (विषण्णस्य भावः । तल् ।) जडता ।

यथा, --
“जाड्यं मौर्ख्यं विषादोऽवसादः सादो विष-
ण्णता ॥”
इति हेमचन्द्रः ॥

**विषतिन्दुः**, पुं, कारस्करवृक्षः । इति राजनिर्घण्टः ॥

कुपीलुः । इति भावप्रकाशः ॥

**विषदं**, क्ली, (विषं ददातीति । दा + कः ।) पुष्प-

कासीसम् । इति राजनिर्घण्टः ॥
शुक्लवर्णे, पुं ।
इत्यमरटीका ॥ (निर्म्मले प्रसन्ने च त्रि । यथा,
रघुः । १० । १४ ।

विषयुक्तपुष्पञ्च ॥

**विषपुष्पः**, पुं, (विषयुक्तं पुष्पं यस्य ।) छर्द्दनवृक्षः ।

इति रत्नमाला ॥ मनफल इति भाषा ॥

**विषपुष्पकः**, पुं, (विषयुक्तं पुष्पं यस्य बहुव्रीहौ

कन् ।) मदनवृक्षः । इति भावप्रकाशः ॥ विष-
पुष्पभक्षणजन्यरोगः । इति केचित् ॥

**विषभिषक्**, [ज्] पुं, (विषस्य विषचिकित्सको

वा भिषक् ।) विषवैद्यः । इति हेमचन्द्रः ॥

**विषभुजङ्गः**, पुं, विषयुक्तसर्पः । इति केचित् ॥

**विषमं**, त्रि, असमानम् । यथा, मनुः ।

“भ्रातॄणामविभक्तानां यद्युत्थानं भवेत् सह ।
न तत्र भागं विषमं पिता दद्यात् कथञ्चन ॥”
इति दायतत्त्वम् ॥
(सङ्कटः । यथा, गीतायाम् । २ । २ ।
“कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ॥”
अनतिक्रमणीयः । यथा, साहित्यदर्पणे । १० ।
“का विषमा दैवगतिः किं दुर्ग्राह्यं जनः खलो लोके ॥”)

**विषमं**, क्ली, पद्यस्य त्रिविधवृत्तान्तर्गतवृत्तविशेषः ॥

यथा, --

पूर्णः खण्डः समश्चैव विषमश्चैव कथ्यते ॥
लचतुष्कं गणौ पूर्णे खण्डे बिन्दुद्वयं गुरुः ।
यगणस्तु समे ज्ञेयस्तगणो विषमे भवेत् ॥”
(जठराग्निविशेषः । यथा, --
“मन्दस्तीक्ष्णोऽथ विषमः समश्चेति चतुर्विधः ।
विषमो वातजान् रोगान् तीक्ष्णः पित्तनिमि-
त्तजान् ॥”
इति वैद्यकरुग्विनिश्चये मन्दाग्न्यधिकारे ॥)

**विषमच्छदः**, पुं, (विषमः अयुग्मः छदो यस्य ।)

सप्तच्छदवृक्षः । इत्यमरः ॥

**विषमज्वरः**, पुं, (विषमः ज्वरः ।) ज्वररोगबिशेषः ।

तस्य निदानकथनपूर्ब्बिकां संप्राप्तिमाह ।
“दोषोऽल्पोऽहितसम्भूतोज्वरोत्सृष्टस्य वा पुनः ।
धातुमन्यतमं प्राप्य करोति विषमज्वरम् ॥”
अयमर्थः । ज्वरोत्सृष्टस्य ज्वरेण त्यक्तस्य ।
सन्निकृष्टं लक्षणमाह । दोषः अल्पः ज्वरमुक्त्या
स्वल्पोऽपि । विप्रकृष्टं हेतुमाह । अहित-
माहारविहारादि तेन सम्भूतः संपूर्णो जातः
अन्यतमं धातुं रसरक्तादिकं प्राप्य दूषयित्वा

पुनः विषमज्वरं करोति । ज्वरोत्सृष्टस्य वेति
वाशब्देनेति बोध्यते । प्रथमतोऽपि विषमज्वरो
भवति । यत उक्तम् । आरम्भाद्विषमो यस्त्वि-
त्यादिकम् । धातुं दूषयित्वा कं विषमज्वरं
करोतीत्यपेक्षायामाह ।
“सन्ततं रसरक्तस्थः सततं रक्तधातुगः ।
दोषः क्रुद्धो ज्वरं पुंसां सोऽन्येद्युः पिशिताश्रितः ॥
मेदोगतस्तृतीयेऽह्नि अस्थिमज्जगतः पुनः ।
कुर्य्याच्चातुर्थकं घोरमन्तकं रोगसङ्करम् ॥”
अन्तकं अन्तकमिव मारकत्वात् ॥ * ॥ विषम-
ज्वरस्य सामान्यलक्षणमाह ।
“यः स्यादनियतात् कालाच्छीतोष्णाभ्यां तथैव च ।
वेगतश्चापि विषमो ज्वरः स विषमः स्मृतः ॥”
यस्त्वनियतात् कालात् स्यादित्यस्यायमर्थः ।
यथा, वातिको ज्वरः सप्तदिनानि पैत्तिको दश
दिनानि श्लैष्मिको द्वादश दिनानि दोषाणां
प्राबल्ये वातिकश्चतुर्द्दश दिनानि पैत्तिको
विंशतिदिनानि श्लैष्मिकश्चतुर्व्विंशतिदिनानि
स्यात् तथा विषामज्वरो नियतं कालं व्याप्य न
स्यादित्यर्थः । शीतोष्णाभ्यां गुणाभ्यां स्यात् ।
“तृतीयकस्तृतीयेऽह्नि चतुर्थेऽह्नि चतुर्थकः ॥”
तृतीयेऽह्नि इत्यागमनदिनं गृहीत्वा । यत उक्तम् ।
“दिनमेकमतिक्रम्य यो भवेत् स तृतीयकः ।
दिनद्वयं त्वतिक्रम्य यः स्यात् स हि चतुर्थकः ॥”
इति ॥
अत्राह वृद्धसुश्रुतः ।
“कफस्थानविभागेन यथासंख्यं करोति हि ।
सततान्येद्युष्कत्र्याख्यचतुर्थकप्रलेपकान् ॥
अहोरात्रादहोरात्रात् स्थानात् स्थानं प्रप-
द्यते ।
दोष आमाशयं प्राप्य करोति विषमज्वरम् ॥”
अयमर्थः । आमाशयोरः कण्ठशिरःसन्धयः पञ्च
कफस्थानानि एषु तिष्ठन् दोषो यथासंख्यं
सततादीन् करोति । तत्रामाशये स्थितो दोषः
सततं करोति द्वौ कालौ अहोरात्रे कालद्वये
दोषप्रकोपात् । हृदये स्थितो दोष आमाशय-
मागत्य अन्येद्युष्कं करोति । एककालं नैकद्या-
देकस्मिन्नेवाहोरात्रे दोष आमाशयमायाति ।
तत्र द्वौ दोषकोपकालौ एकस्मिन् काले हृदये
तिष्ठत्यपरस्मिन्नामाशयइति । कण्ठे स्थितो
दोषोऽहोरात्रात् हृदयमायाति । तृतीये दिने
आमाशयमागत्य स्वप्रकोपकाले तृतीयकं ज्वरं
करोति एककालं न तु द्वौ कालौ स्वभावात् ।
एवं शिरःस्थितो दोषोऽहोरात्रात् कण्ठ-
वातपित्ताच्छिरोग्राही त्रिविधः स्यात्तृती-
यकः ॥”
त्रिकग्राही वेदनया त्रिकं गृह्णाति इत्यर्थः ॥ * ॥
ननु कफपित्तात्त्रिकग्राही वेदनया त्रिकव्यापी
त्रिकस्य वातस्थानं तत्कथं तद्गृहीतौ पित्त-
कफौ अन्यस्थानगत्वेन दुर्ब्बलत्वेन दुर्ब्बलौ वेगं
कुरुते । उच्यते दोषाणां स्थाननियमः न तु
कुपितानाम् । तथा च सुश्रुतः ।
“कुपितानां हि दोषाणां शरीरे परिधावति ।
यत्र सङ्गः स वैगुण्याद्ब्याधिस्तत्रोपजायते ॥”
एवं अन्यस्थानगत्वेन चतुर्थकोऽपि वाच्यम् ।
वातकफात्मकः पृष्ठात् व्यथया पृष्ठं व्याप्य भवति
इत्यर्थः । यव्लोपकर्म्मण्यधिकरणे चेति सूत्रेण
पञ्चमी ॥ * ॥ कफोल्वणस्य वातोल्वणस्य च
चतुर्थकस्य लक्षणमाह ।
“चतुर्थको दर्शयति स्वभावं द्विविधं ज्वरः ।
जङ्घाभ्यां श्लैष्मिकः पूर्ब्बं शिरसोऽनिलसंभवः ॥”
श्लैष्मिकः श्लेष्मोल्वणः तथा अनिलसंभवः वातो-
ल्वणः । सन्ततादीनां त्रिदोषजत्वात् । उक्तञ्च
चरकेण ।
“प्रायशः सन्निपातेन पञ्च स्युर्व्विषमज्वराः ।”
इति ।
प्रायशो ग्रहणादेकदोषजाः द्विदोषजा अपि
न भवन्ति इति जैज्जटः ॥ पूर्ब्बं प्रथमं जङ्घाभ्यां
व्यथया जङ्घे व्याप्य पश्चात् सकलं शरीरं
व्याप्नोति । एवमुल्वणवातजातः शिरसः पूर्ब्बं
व्यथया शिरो व्याप्य सकलं शरीरं व्याप्नोती-
त्यर्थः ।
“विषमज्वर एवान्यश्चतुर्थकविपर्य्ययः ।
अस्थिमज्जगतो दोषश्चतुर्थकविपर्य्ययः ॥”
अन्यः सन्ततादिपञ्चकादपरश्चतुर्थकविपर्य्ययाख्यो
ज्वरः सोऽपि विषमज्वर एव । स किंधातुस्थ
इत्यपेक्षायामाह अस्थीत्यादि । तस्य चतुर्थक-
विपर्य्ययस्य लक्षणमाह ।

"वेगतश्चापि विषमः कदाचिदपि वेगवान् ॥"
कदाचिदपि शान्तवेगः ॥ विषमज्वरस्य भेदा-
नाह ।
"सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ ।"
तत्र सन्ततस्य लक्षणमाह ।
"सप्ताहं वा दशाहं वा द्वादशाहमथापि वा ।
सन्तत्या योऽविसर्गी स्यात् सन्ततः स निग-
द्यते ॥"
विकल्पो वातिकादिभेदात् । सन्तत्या नैरन्त-
र्व्येण अविसर्गी अपरित्यागी ॥ ननु मुक्तानु-
बन्धित्वं विषमत्वमिति विषमलक्षणं तदत्र न
घटत इति कथमयं विषमेषु पट्यते । घटत एव
इति न दोषः । यत उक्तं चरकेण ।
"विसर्गं द्वादशे कृत्वा दिवसेऽव्यक्तलक्षणम् ।
दुर्ल्लभोपशमः कालं दीर्घमप्यनुवर्त्तते ॥"
यत्तु खरनादः ।
"ज्वराः पञ्च च ये प्रोक्ताः पूर्ब्बं सततकादयः ।
चत्वारः सन्ततं हित्वा ज्ञेयास्ते विषमज्वराः ॥"
इति । तच्चिरेण त्यागाभिप्रायेण ॥ * ॥ सतत-
लक्षणमाह ।
"अहोरात्रे सततको द्वौ कालावनुवर्त्तते ।"
द्वौ कालौ अहन्येककालं रात्रावेककालम् ।
यतो दोषाणामहोरात्रे प्रत्येकं द्वौ द्वौ प्रकोप-
कालौ । यत उक्तं वाग्भटेन ।
"वयोऽहोरात्रिभुक्तानामन्तमध्यादिकाः क्रमात् ।" इति ॥

मायाति । ततः पुनरहोरात्रा द्धृदयमायाति
चतुर्थदिने आमाशयमागत्य स्वप्रकोपकाले
चतुर्थकं ज्वरं करोति । एककालं न तु द्वौ
कालौ स्वभावादेव ॥ * ॥ ननु दोषस्यागमन-
क्रमेण निजस्थानगमनक्रमात् कथं तृतीयचतुर्थ-
दिवसयोर्ज्वरागमनम् । उच्यते । दोषो हि
प्रकोपशमये वेगवत्तया लाघवात् स्वस्थानन्तु
वेगदिन एव याति । यत आह ।
"दोषः प्रकोपकाले हि वेगवत्त्वेन लाघवात् ।
वेगवासर एवायं स्वस्थानमभिगच्छति ॥"
सन्धिषु स्थितः प्रलेपं करोति । सन्धयश्चामा-
शयेऽपि सन्ति तेषु स्थितः प्रलेपकं सर्व्वदा
करोति ॥ * ॥
"निवृत्तः पुनरायाति विषमो नियते दिने ।
स्वभावं कारणं तत्र मन्यन्ते मुनिपुङ्गवाः ॥"
स्वभावस्य कारणत्वे कफस्थानविभागनिरपेक्षा-
श्चतुर्थकादिविपर्य्यया अपि ज्वराः स्वस्य काले
भवन्ति ।
"अधिशेते यथा भूमिं वीजं काले प्ररोहति ।
अधिशेते तथा धातून्दोषः काले प्रकुप्यति ॥"
सुश्रुतोऽप्याह ।
"स चापि विषमो देहं न कदाचित् प्रमुञ्चति ।
ग्लानिगौरवकार्श्येभ्यः स यस्मान्न प्रमुच्यते ॥
वेगे तु समतिक्रान्ते गतोऽयमिति लक्ष्यते ।
धात्वन्तरस्थो लीनत्वात् सौक्ष्मान्नैवोपलभ्यते ॥"
द्विदोषोस्त्वणस्य तृतीयकस्य लक्षणमाह ।
"कफपित्तात्त्रिकग्राही पृष्ठाद्वातकफात्मकः ।

"स मध्ये ज्वरयत्यह्नीआद्यन्ते च विमुञ्चति ॥"
चतुर्थकविपर्य्यय इत्युपलक्षणम् । सतताद्-
विपर्य्ययोऽपि बोद्धव्यः । यथा, अहोरात्रे द्वौ
कालौ मुञ्चति शेषं सर्व्वमहोरात्रं तिष्ठतीति
सततविपर्य्ययः । अहोरात्रे एकं कालं मुञ्चति
शेषं सर्व्वमहोरात्रं तिष्ठति इत्यन्येद्युष्कविप-
र्य्ययः । मध्ये एकं दिनं ज्वरयति आदावन्ते
च दिने मुञ्चति इति तृतीयकविपर्य्ययः । एते
विषमज्वरा उपलक्षकाः अन्ये रात्रिज्वरा-
दयोऽपि विषमज्वरा बोद्धव्याः ॥ यथा, --
"समौ वातकफौ यस्य क्षीणपित्तस्य देहिनः ।
रात्रौ प्रायो ज्वरस्तस्य दिवा हीनकफस्यतु ॥"
प्रायो बाहुल्येन ॥ * ॥ सन्ततादीनां शीत-
पूर्ब्बत्वे दाहपूर्ब्बत्वे च हेतुमाह ।
"त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो ज्वरम् ।
तयोः प्रशान्तयोः पित्तमन्तर्दाहं करोति च ॥"
शीतं शीतसहितं प्रशान्तयोः प्रशान्तवेगयोः ।

| अन्येद्युष्कलक्षणमाह । “अन्येद्युष्कस्त्वहोरात्रादेककालं प्रवर्त्तते ।” एककालं दोषापेक्षया एककालमपि द्वितीयं प्रथमकाले ह्येव दोषस्थितेः ॥ * ॥ तृतीयक-चतुर्थकयोर्लक्षणमाह । | | |
|---|---|---|

अन्तः अभ्यन्तरे ।
“करोत्यादौ तथा पित्तं त्वक्स्थं
दाहमतीव च ।
तस्मिन् प्रशान्ते त्वितरौ कुरुतः
शीतमन्ततः ॥”
अन्ततः हस्तपादादितः ॥ * ॥
शीतादिदाहा-
दिज्वरयोस्त्रिदोषजत्वमाह।
“द्वावेतौ दाहशीतादी ज्वरौ संसर्गजौ
स्मृतौ ।
दाहपूर्ब्बस्तयोः कष्टः
सुखसाध्यतमोऽपरः ॥”
संसर्गजौ सान्निपातिकौ । कष्टः
कष्टसाध्यः ॥ * ॥
विषमज्वरविशेषानाह ।
“विदग्धेऽन्नरसे देहे श्लेष्मपित्ते व्यवस्थिते
।
तेनार्द्धं शीतलं देहं चार्द्धमुष्णं प्रजायते ॥”
अन्नरसे विदग्धे आहारजे रसे दुष्टे
श्लेष्मपित्ते
च व्यवस्थिते दुष्टे स्थिते तेन हेतुना
शीतलं
कफेन उष्णं पित्तेन अर्द्धत्वं
चार्द्धनारीश्वरा-
कारेण नरसिंहाकारेण वा ।
“काये दुष्टं यदा पित्तं श्लेष्मा चान्ते
व्यवस्थितः ।
तेनोष्णत्वं शरीरस्य शीतत्वं हस्तपादयोः
॥”
अन्ते हस्तपादादौ ।
“काये श्लेष्मा यदा दुष्टः पित्तश्चान्ते
व्यवस्थितः ।
शीतत्वं तेन गात्रे स्यादुष्णत्वं
हस्तपादयोः ॥”
विषमज्वरविशेषस्य प्रलेपकस्य
लक्षणमाह ।
“प्रलिम्पन्निव गात्राणि घर्म्मेण गौरवेण च ।
मन्द्रज्वरविलेपी च सशीतः स्यात्
प्रलेपकः ॥”

भूनिम्बपर्पटपटोलपौष्करैः ।
तिक्ताकलिङ्गपिचुमर्द्दवासकै-
र्महौषधं भार्गिवितुन्नकैः समैः ॥
शृतं पिबेत् पूर्ब्बदिनं कषायं
निहन्ति वृद्धज्वरमुग्रशीतम् ।
सश्वासमूर्च्छारुचिदाहमुल्वणं
तृषां वमिं कासमतीव शूलकम् ।
आनाहहिक्कादिषु सन्निपाते
गलग्रहे तन्द्रिशिरोरुहायाम् ॥”
बृहत्क्षुद्रादिविषमज्वरे ॥ * ॥
“मुस्तामलकगुडूचीविश्वौषधकण्टकारिक्वाथः
।
पीतः सकणाचूर्णः समधुर्विषमज्वरं हन्ति ॥ *
॥
तिलतैललवणयुक्तकल्को लशुनसेवितः प्रातः
।
विषमज्वरमपहरते वातव्याधीनशेषांश्च ॥ * ॥
कालाजाजी नु सगुडा विषमज्वरनाशिनी ।
मधुनाढ्याभया लीढा हन्त्याशुविषमज्वरान्
॥”
कालाजाजी मगरैला इति लोके । सा च
किञ्चिद्भृष्टा गुडतुल्या कर्षमिता भक्षणीया । *
“पीतो मरीचचूर्णेन तुलसीपत्रजो रसः ।
द्रोणपुष्पीभवो वापि निहन्ति विषम-
ज्वरान् ॥ * ॥
अमृतायाः शतं चूर्णं वाससा परिशोधितम् ।
पृथक् षोडशभागाः स्युर्गुडमाक्षिकसर्पिषाम् ॥
यथाग्नि भक्षयेदेतन्नरो हितमिताशनः ।
नास्य कश्चिद्भवेद्व्याधिर्न जरा पलितं न च ॥
न ज्वरा विषमा नैव मेहनानिलरक्तकम् ।
न च नेत्रगता रोगाः परमेतद्रसायनम् ॥
मेघाकरं त्रिदोषघ्नं प्रयोगादस्य बुद्धिमान् ।
जीवद्वर्षशतं साग्रं यथैवादितिजस्तथा ॥”
गुडूचीकल्कः ॥ * ॥ अथान्नमाह ।
“तक्रमांसं पयोमांसं दधिमांसमथापि वा ।
माषमांसञ्च भुञ्जानो मुच्यते विषमज्वरात् ॥” *
अग्निवेशश्च ।
“सुरा समण्डा पानाय भोजने चरणायुधाः ।
तित्तिरा विष्किराः पथ्याः कुक्कुटा विषमज्वरे
॥

“कर्म्मसाधारणं त्यक्त्वा
तृतीयकचतुर्थकौ ।
भिषजा प्रतिकर्त्तव्यौ
विशेषोक्तचिकित्सितैः ॥
उशीरं चन्दनं मुस्तं गुडूचीधान्यनागरम् ।
अम्भसा क्वथितं पेयं शर्करामधुयोजितम्
॥ * ॥
ज्वरे तृतीयके पुंसां तृष्णादाहसमन्विते ।
अपामार्गजटां कट्यां लोहितैः स
प्ततन्तुभिः ।
बद्ध्वा वारे रवेस्तूर्णं ज्वरं हन्ति
तृतीयकम् ॥ * ॥
स्थिरातामलकीदारुशिवावृषमहौषधैः ।
सितामधुयुतः क्वाथश्चतुर्थकहरः परः
॥”
स्थिरा शालिपर्णी । तामलकी भूधात्री ।
शिवा
हरीतकी । वृषो वासा ॥ * ॥
“अगस्तिपत्रस्य रसेन नस्यं
निहन्ति चातुर्थकमुग्रवीर्य्यम् ।
शिरीषपुष्पस्य निशाद्वयस्य
कल्केन वा तद्घृतसंयुतेन ॥”
तत् नस्यम् ॥ * ॥
“ज्वरस्य वेगकालञ्च चिन्तयन् ज्वर्य्यते
तु यः ।
तस्येष्टैरद्भुतैर्व्वापि विषयैर्नाशयेत् स्मृतिम्
॥
सन्ततं विषमञ्चापि क्षीणस्य
सुचिरोत्थितम् ।
ज्वरं सभोजनैः पथ्यैर्ज्वरघ्नैः
समुपाचरेत् ॥” * ॥
सततादिविपर्य्ययाणां विषमज्जराणां
चिकित्सा
सततादीनामिव कर्त्तव्या ।
“शीताभिभूते पुरुषे कुर्य्याच्छीतहरीं
क्रियाम् ।
दाहाभिभूते तु विधिं विदध्याद्दाहनाशनम्
॥
आच्छादनैर्ब्बहुतरैर्गुरुभिः कम्बलादिभिः
।

गौरवेण उपलक्षितः । मन्दज्वरविलेपी मन्द-
वेगस्य ज्वरस्य सदा सम्बन्धोऽस्यास्तीति मन्द-
ज्वरविलेपी अयं विषमज्वरः । यथा च सुश्रुतः ।
प्रलेपकाख्यो विषमः प्रायः क्लेशाय शोषिणा-
मिति ॥ * ॥ अथ विषमज्वराणां सामान्य-
चिकित्सा ।
"ज्वराश्च विषमाः सर्व्वे सन्निपातसमुद्भवाः ।
अथोल्वणस्य दोषस्य तेषु कार्य्यं चिकित्सितम् ॥
विषमेष्वय कर्त्तव्यमूद्‌र्ध्वं वाधश्च शोधनम् ।
स्निग्धोष्णैरन्नपानैश्च शमयेद्विषमज्वरम् ॥ * ॥
कालिङ्गकः पटोलस्य पत्रं कटुकरोहिणी ।
पटोलं सारिवा मुस्तं पाठा कटुकरोहिणी ॥
निम्बः पटोलस्त्रिफला मृद्वीका मुस्तवत्सकौ ।
किराततिक्तममृता चन्दनं विश्वभेषजम् ॥
गुडूच्यामलकं मुस्तमर्द्धश्लोकसमापनाः ।
कषायाः शमयन्त्याशु पञ्च पञ्चविधज्वरम् ॥"
कालिङ्गकः इन्द्रयवः । वत्सकः कुटजः । चन्दन-
मत्र रक्तचन्दनम् । कवायाः पञ्च । पञ्चविधं
सन्ततसततान्येद्युष्कतृयीयचतुर्थकरूपम् ॥ * ॥
"महाबलामूलमहौषधाभ्यां
क्वाथो निहन्याद्विषमज्वरं हि ।
शीतं सकम्पं परिदाहयुक्तं
विनाशयेत् द्वित्रिदिनं प्रयोगात् ॥ * ॥
क्षुद्रामृतानागरपुष्कराद्यैः
कृतः कषायः कफमारुतोत्तरे ।
सश्वासकासारुचिपार्श्वरुग्ज्वरे
सदा त्रिदोषप्रभवेऽपि शस्यते ॥" * ॥
चरणायुधा गृहकुक्कुटाः । कुक्कुटा वनकुक्कुटाः ।
विष्किराः वर्त्तिकालावविगिरचकोराद्याः ॥ * ॥
अथ सन्ततादीनां विशिष्टा चिकित्सा ।
"त्रायन्तीकटुकानन्तासारिवाभिः शृतं जलम् ।
सन्तताख्ये ज्वरे देयं वातादीनां निवृत्तये ॥"
अनन्ता दुरालभा ॥ * ॥
"पटोलाब्दविषातिक्तासारिवाभिःशृतं जलम् ।
सन्तताख्ये ज्वरे देयं वातादीनां निवृत्तये ॥"
वृषा बृहद्दन्ती एरण्डवत्पत्रविटपा तदलाभे
दन्ती च ग्राह्या समानगुणत्वात् ॥ * ॥
"पटोलेन्द्रयवानन्तापथ्यारिष्टामृताजलम्।
क्वथितं तज्जलं पीतं ज्वरं सन्ततकं जयेत् ॥"
अनन्ता सारिवा । अरिष्टः निम्बः । जलं
बालकम् ॥ * ॥
"द्राक्षापठोलनिम्बाब्दशक्राह्वत्रिफलाशृतम्।
जलं जन्तुः पिबेच्छीघ्रमन्येद्युर्ज्वरशान्तये ॥"
शक्राह्वः इन्द्रयवः ॥ * ॥
तूलवत्या महाशीतं शीतादिज्वरिणो हरेत् ॥"
तूलवती तुलाई इति लोके ॥
"तं स्तनाभ्यां सुपीनाभ्यां पीवरोरुर्नितम्बिनी ।
युवतिर्गाढमालिङ्गेत्तेन शीतं प्रशाम्यति ॥
कान्ताङ्गसङ्गसंजातं तस्य शीते निवारिते ।
प्रह्लादं चास्य विज्ञाय पृथक् तां कारयेत् स्त्रियम् ॥
ततो दाहे तु संजाते पत्रैरेरण्डसम्भवैः ।
शीतलैर्धारितैर्द्देहे दाहं तस्यापनोदयेत् ॥
तालकं शुक्तिकाचूर्णं तुल्यं तत्रोभयोरपि ।
नवमांसञ्च तुत्थं स्यात् मर्द्दयेत् कन्यकाद्रवैः ॥
तत् तु संशुष्कमुपलैर्वन्यैर्गजपुटैः पचेत् ।
शीतं तच्चूर्णयेच्चूर्णं गुञ्जामात्रं सितायुतम् ॥
प्रभाते भक्षयेत्तेन याति शीतज्वरक्षयम् ।
वान्तिर्भवति कस्यापि कस्यापि न भवत्यपि ॥
एकेन दिवसेनैव शीतज्वरहरं परम् ।
मध्याह्नसमये पथ्यं शिखरिणी भक्तकं च ॥" * ॥
शीतज्वरे भूतभैरवचूर्णम् ।
"एला जातीफलं व्योषत्रिफलाजीरकं घनः ।
सविडङ्गं सितायुक्तं चूर्णं शीतज्वरापहम् ॥
कायस्थानाकुलीतिक्तावयस्थापुरचोरकैः ।
सहदेवावचाकुष्ठैः शीतघ्नैर्धपलेपनैः ॥
एतैरेवौषधैः पिष्टैर्लवणक्षारसंयुतैः ।
साम्लैर्व्विपाचितं तैलमभ्यङ्गाच्छीतनाशनम् ॥"
कायस्था हरितकी । नाकुली रास्ना । भेदसाई
इति लोके । वयस्था गुडूची । पुरो गुग्गुलुः ।
चोरकः । भटिउर । तदलाभे गटिवन । सह-

देवा बृहद्वला । क्षारो यवक्षारः । काय-
स्थादिधूपं लेपनं तैलञ्च ॥
"एरण्डस्य तु पत्राणि लिप्तभूमौ निधापयेत् ।
दाहादिज्वरिणो देहे तानि पत्राणि धारयेत् ॥
तेन नश्यति दाहोऽस्य ज्वरश्चैवोपशाम्यति ।
दाहे शान्ते यदा शैत्यं तच्च युक्त्या निवारयेत् ॥
जघनचक्रचलन्मणिमेखला
सरसचन्दनचन्द्रविलेपना ।
वनलतेव तरुं परिवेष्टयेत्
प्रबलदाहनिपीडितमङ्गना ॥"
चन्द्रः कर्पूरः ।
"तदङ्गसङ्गसंजातशैत्यैर्द्दाहे निवारिते ।
प्रह्लादश्चास्य विज्ञाय तां स्त्रीमपनयेत् पुनः ॥ * ॥
सुवर्च्चिकानागरकुष्ठमूर्व्वा-
लाक्षानिशालोहितयष्टिकाभिः ।
सिद्धं हरेत् षड्गुणतक्रपक्कं
तैलं ज्वरं दाहसमन्वितञ्च ॥"
षट्तक्रतैलम् ॥ * ॥
"रास्नानागरकुष्ठचन्दननिशायष्ट्याह्वकृष्णावला
लाक्षासैन्धवसारिवामधुरसाव्हद्रुरोहीतकैः ।
सोशीराम्बुधिफेनरौहिषजलैस्तैलं पचेत् षड्गुणे
तक्रेतच्छमयेज्ज्वरं दृढतरं दाहादिशीतादि-
कम् ॥"
चन्दनमत्र श्वेतम् । मधुरसा मूर्व्वा । रोही-
तकः रोहिणि इति लोके । रौहिषं रोहिस
इति तृणविशेषः । जलं बालकम् । महाषट्-
तक्रतैलम् ॥ * ॥
"पद्मकोत्पलकह्लारमृणालविषपौष्करै
कुमुदोशीरमञ्जिष्ठापद्मगैरिककट्फलैः ॥
सारिवाद्वयलोध्राब्दक्षीरीखर्ज्जुरमस्तकैः ।
धात्रीशतावरीयुक्तैः क्वाथे कल्के प्रयोजितैः ॥
लाक्षारसपयः शुक्लमस्तुभिः सह काञ्जिकैः ।
पक्वतैलमिदं त्वच्यं दाहज्वरहरं परम् ॥"
लाक्षारसादिः पृथक् तैलतुल्यः पद्मकादि-
तैलम् ॥ * ॥
"प्रलेपके प्रयुञ्जीत श्लेष्मज्वरहरीं क्रियाम् ।
रुद्रजटा गोशृङ्गं विडालविष्ठोरगस्य निर्म्मोकः ।
मदनफलभूतकेश्यौ वंशत्वग्रुद्रनिर्म्माल्यम् ॥
धृतयवमयूरचन्द्रच्छगलकरोमाणि सर्षपाः
सवचाः ।

"विष्णुं सहस्रमूर्द्धानं चराचरपतिं विभुम् ।
स्तुवन्नामसहस्रेण ज्वरान् सर्व्वान्
व्यपोहति ॥"
सहस्रमूर्द्धानमिति सहस्रशीर्षेत्यादि
वेदाभि-
हितम् । नामसहस्रेण भारतोक्तेनेत्यर्थः ॥
* ॥
ज्वरस्यापि देवतात्वात् पूजा कार्य्या । यत
आह विदेहः ।
"तीर्थायतनदेवाग्निगुरुवृद्धोपसर्प्पणैः ।
श्रद्धया पूजनैश्चापि सहसा शाम्यति
ज्वरः ॥"
तीर्थं ऋषिजुष्टं जलम् । आयतनं
देवाधिष्ठितं
पुरुषोत्तमक्षेत्रश्रीशैलादि ॥ * ॥
"निम्बपत्रं वरा व्योषं यवानी लवणत्रयम् ।
क्षारो दिग्वह्निरामेषुत्रिनेत्रक्रमशोऽंशकाः ॥
सर्व्वमेकीकृतं चूर्णं प्रत्यूषे भक्षयेन्नरः ।
एकाहिकं द्व्यहिकञ्च तथा त्रिदिवसज्वरम्
॥
चातुर्थिकं महाघोरं सन्ततं सततं हि वा ।
धातुस्थञ्च त्रिदोषोत्थं ज्वरं हन्ति च मान-
वम् ॥"
निम्बादि चूर्णम् । इति विषमज्वराधिकारः
॥
इति भावप्रकाशः ॥

**विषमनयनः**, पुं, (विषममयुग्मं नयनं यस्य ।
त्रिनेत्रत्वात्तथात्वम् ।) शिवः । इति
हारावली ॥

**विषमन्त्रः**, पुं, (विषनिवर्त्तको मन्त्रो यत्र ।) सर्प-
धारकः । वादिया इति ख्यातः ।
तत्पर्य्यायः ।
जाङ्गली २ । इति जटाधरः ॥

**विषममयं**, त्रि, (विषम + मयट् ।) विषमादा-
गतम् । इति सिद्धान्तकौमुदी ॥

**विषमरूप्यं**, त्रि, (विषम + रूप्यः ।) विषमादा-
गतम् । इति सिद्धान्तकौमुदी ॥

**विषमायुधः**, पुं, (विषमा अयुग्मा आयुधा
यस्य ।
तस्य पञ्चबाणत्वात्तथात्वम् । यद्वा,
विषमः अत्युग्र
असह्य इत्यर्थः आयुधो यस्य ।)
कामदेवः ।
इति हलायुधः ॥

**विषमीयं**, त्रि, (विषम + "गहादिभ्यश्च ।" ४
।
२ । १३८ । इति छः ।)
विषमादागतम् । इति
सिद्धान्त कौमुदी ॥

**विषमुष्टिः**, पुं, क्षुपविशेषः । विषदोडि इति
कड्सिङ्गे इति च हिन्दीभाषा ।
तत्पर्य्यायः ।
केशमुष्टिः २ सुमुष्टिः ३ रणमुष्टिकः
४ क्षुप-
डोडमुष्टिः ५ । अस्य गुणाः ।
कटुत्वम् । तिक्त-
त्वम् । दीपनत्वम् ।
कफवातकण्ठामयरक्तपित्ता-
दिदाहनाशित्वम् । रुच्यत्वञ्च । इति
राज-
निर्घण्टः ॥

**विषमृत्युः**, पुं, (विषेण तद्दर्शनमात्रेण
मृत्युर्यस्य ।)
जीवञ्जीवपक्षी । इति जटाधरः ॥
चकोर इति
ख्यातः ॥

**विषयः**, पुं, ("विषिण्वन्ति विषयिणं स्वेन
रूपेण
निरूपणीयं कुर्व्वन्ति ।" इति
सांख्यतत्त्वकौमुदी ।
वि + षि + अच् ।) चक्षुरादिग्राह्यः ।
स तु
शब्दस्पर्शरूपरसगन्धरूपः ।
तत्पर्य्यायः । गोचरः

हिङ्गवास्थिमरीचाः समभागाश्छागमूत्र-
संपिष्टाः ॥
धूपनविधिना शमयन्त्येते सर्व्वान् ज्वरान्नियतम् ।
ग्रहडाकिनीपिशाचप्रेतविकारानयंधूपः ॥”
रुद्रजटा जटाधारी । भूतकेशी जटामांसी ।
रुद्रनिर्म्माल्यं रुद्रनिर्म्माल्यपुष्पादि । मयूरचन्द्रः
मयूरपुच्छचन्द्रकम् । माहेश्वरो धूपः ॥ * ॥
“सोमं सानुचरं देवं समातृगणमीश्वरम् ।
पुजयन् प्रयतः शीघ्रं मुच्यते विषमज्वरात् ॥”
सोमं उमादिसहितम् । सानुचरं नन्द्यादिगण-
सहितम् । प्रयतः पवित्रः ॥ * ॥

**विषमर्द्दनिका**, स्त्री, (विषं मर्द्दयतीति । मर्द्द +
ल्युः ङीप् । स्वार्थे कन् च ।)
गन्धनाकुली । इति राजनिर्घण्टः ॥

**विषमर्द्दनी**, स्त्री, (विषं मर्द्दयतीति । मर्द्द +
ल्युः ङीप् । स्वार्थे कन् च ।)
गन्धनाकुली । इति राजनिर्घण्टः ॥

**विषमविभागः**, पुं, (विषमो विभागः ।) असमा-
नांशः । यथा, यत्र तु भ्रातर एव
विभागमर्थ-
यन्ते तत्र विषमविभागाभावमाह मनुः ।
“भ्रातृणामविभक्तानां यद्युत्थानं भवेत् सह
।
न तत्र भागं विषमं पिता दद्यात् कथञ्चन
॥”
इति दायतत्त्वम् ॥

**विषमस्थः**, त्रि, (विषमे तिष्ठतीति । स्था + कः ।)
असमानस्थितः । इति केचित् ॥
उपप्लव-
देशस्थः । यथा नारदः ।
“अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती
।
विषमस्थाश्च नासेध्या न चैतान्नाह्वयेन्नृपः
॥”
विषमस्थाः उपप्लवदेशस्थाः । इति
व्यवहार-
तत्त्वम् ॥

**विषमशिष्टः**, पुं, दोषविशेषः । स च अनुचित-
शासनरूपः । महद्वैषम्यम् । यथा, अत्र
कामत
एव चान्द्रायणतप्तकृच्छ्रयोर्विषमशिष्टत्वेन
इच्छा-
विकल्पासम्भवात् कामतश्चान्द्रायणं
अकामत-
स्तप्तकृच्छ्रम् । इति प्रायश्चित्ततत्त्वम् ॥

**विषमाक्षः**, पुं, (विषमं अयुग्मं अक्षि यस्य ।
त्रिनयनत्वादस्य तथात्वम् ।) शिवः । इति
त्रिकाण्डशेषः ॥

२ इन्द्रियार्थः ३ ॥ देशः । (यथा,
रघुः । ११ ।
१८ ।
“यच्चकार विवरं शिलाघने
ताडकोरसि स रामसायकः ।
अप्रविष्टविषयस्य रक्षसां
द्वारतामभवदन्तकस्य तत् ॥”)
आशयः । इत्यमरः ॥ न्यायमते
क्षित्यप्तेजो-
वायूनां विषया यथा, --
“तत्र क्षितिर्गन्धहेतुर्नानारूपवती
मता ।
षड्विधस्तु रसस्तत्र गन्धोऽपि
द्विविधो मतः ॥
स्पर्शस्तस्यापि विज्ञेयो
ह्यनुष्णाशीतपाकजः ।
नित्यानित्या च सा द्वेधा नित्या
स्यादणु-
लक्षणा ॥
अनित्या तु तदन्या स्यात्
सवावयवयोगिनी ।
सा च त्रिधा भवेद्देह इन्द्रियं
विषयस्तथा ।
योनिजादिर्भवेद्देह इन्द्रियं
घ्राणलक्षणम् ।
विषयो द्व्यणुकादिस्तु ब्रह्माण्डान्त
उदाहृतः ॥
वर्णः शुक्लो रसस्पर्शौ जले
मधुरशीतलौ ।
स्नेहस्तत्र द्रवत्वन्तु
सांसिद्धिकमुदाहृतम् ॥
नित्यतादि प्रथमवत् किन्तु
देहमयोबिजम् ।
इन्द्रियं रसनं सिन्धुर्हिमादिर्विषयो
मतः ॥ * ॥
स्पर्श उष्णस्तेजसस्तु स्याद्रूपं
शुक्लभास्वरम् ।
नैमित्तिकद्रवत्वन्तु नित्यतादि तु
पूर्ब्बवत् ॥
इन्द्रियं नयनं वह्निस्वर्णादिर्विषयो
मतः । * ।

| | | |
|---|---|---|
| | | अपाकजानुष्णाशीतस्पर्शस्तु पवने मतः ॥<br>तिर्य्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः ।<br>पूर्ब्बवन्नित्यताद्युक्तं देहव्यापि त्वगिन्द्रितम् ॥<br>प्राणादिस्तु महावायुपर्य्यन्तो विषयो मतः ॥”<br>इति भाषापरिच्छेदः ॥<br>विषय इति । भोगसाधनं विषयः । सर्व्वमेव हि<br>कार्य्यं अदृष्टाधीनं यच्च कार्य्यं यददृष्टाधीनं |

तत्तदुपभोगं साक्षात्परम्परया
जनयत्येव नहि
बीजप्रयोजनाभ्यां विना
कस्यचिदुत्पत्तिरस्ति
तेन द्व्यणुकादिब्रह्माण्डान्तं सर्व्वमेव
विषयो
भवतीत्यर्थः । इति
सिद्धान्तमुक्तावली ॥ * ॥
नित्यसेवितः । इति भरतधृताजयः
॥ अव्यक्तः ।
शुक्रः । इत्यप्यजयपालः ॥ जनपदः
। इति
मेदिनी ॥ कान्तादिः । इति
शब्दरत्नावली ॥
नियामकः । यथा, --
"विशब्दो हि विशेषार्थः सिनोतेर्ब्बन्ध
उच्यते ।
विशेषेण सिनोतीति विषयोऽतो
नियांमकः ॥"
इति भट्टकारिका ॥ * ॥
आरोपाश्रयः । यथा, --
"सारोपान्या तु यत्रोक्तौ विषयी
विषयस्तथा ।
विषय्यन्तःकृतेऽन्यस्मिन् सा स्यात्
साध्यवसा-
निका ॥"
यथा, गौर्व्वाहीकः । इति
काव्यप्रकाशे २
उल्लासः ॥ ("भोगसाधनं विषयः ।"
इति
तर्ककौमुदी ॥)

**विषयाज्ञानं**, क्ली, (विषयस्याज्ञानं यस्याम् ।)

तन्द्रा । इति राजनिर्घण्टः ॥

**विषयायी**, [न्] पुं, (विषयान् अयते प्राप्नोतीति ।

अय गतौ + णिनिः ।) राजा ।
वैषयिकजनः ।
इन्द्रियः । कामदेवः ।
विषयासक्तपुरुषः । इति

व्यालग्राही ८ जाङ्गुलिः ९ जाङ्गलिः १०
अहितुण्डिकः ११ व्यालग्राहः १२ गारु-
डिकः १३ । इति शब्दरत्नावली ॥

**विषवैरिणी**, स्त्री, (विषस्य वैरिणी ।) निर्व्विषा ।

इति राजनिर्घण्टः ॥

**विषशालूकः**, पुं, (विषस्य शालूकः ।) पद्मकन्दः ।

अस्य गुणाः । गुरुत्वम् । विष्टम्भित्वम् ।
शीतल-
त्वञ्च । इति राजवल्लभः ॥

**विषशूकः**, पुं, (विषं शूके यस्य ।) भृङ्गरोलः । इति

भूरिप्रयोगः ॥

**विषशृङ्गी**, [न्] पुं, (विषं विषयुक्तं शृङ्गं तदस्या-

स्तीति । विषशृङ्ग + इनिः ।) भृङ्गरोलः । इति
हारावली ॥

**विषसूचकः**, पुं, (विषं सूचयति विषयुक्तान्नादि-

दर्शने मृतः सन् ज्ञापयतीति । सूच् + णिच् +
ण्वुल् ।) चरोकपक्षी । इति हेमचन्द्रः ॥

**विषसृक्का**, [न्] पुं, (विषं सृक्कनि यस्य ।) भृङ्ग-

रोलः । इति त्रिकाण्डशेषः ॥

**विषहन्त्री**, स्त्री, (विष + हन + तृच् । स्त्रियां

ङीष् ।) अपराजिता । निर्व्विषा । इति राज-
निर्घण्टः ॥

**विषहरः**, त्रि, (हरतीति । हृ + अच् । विषस्य

हरः ।) गरलनाशकौषधादिः । यथा । ॐ हूँ
जः ।
"मन्त्रोऽयं हरते रुद्र सर्व्ववृश्चिकगं विषम् ।
पिप्पली नवनीतञ्च शृङ्गवेरञ्च सैन्धवम् ।
मरीचं दधि कुष्ठञ्च नस्ये पाने विषं हरेत् ॥
त्रिफला टङ्ककुष्ठञ्च चन्दनं घृतसंयुतम् ।
एतत्पानाच्च लेपाच्च विषनाशो भवेच्छिव ॥
पारावतस्य चाक्षीणि हरितालं मनःशिला ।
एष योगो विषं हन्ति वैनतेय इवोरगान् ॥
सैन्धवं व्युषणं चूर्णं दधिमध्वाज्यसंयुतम् ।
वृश्चिकस्य विषं हन्ति लेपोऽयं वृषभध्वज ॥"

**विषाङ्कुरः**, पुं, (विषस्याङ्कुरः ।) शल्यास्त्रम् ।

इति त्रिकाण्डशेषः ॥

**विषाणं**, क्ली, कुष्ठौषधम् । पशुशृङ्गम् । (यथा,

साहित्यदर्पणे । १० ।
"क्षिपसि शुकं वृषदंशकवदने
मृगमर्पयसि मृगादनरदने ।
वितरसि तुरगं महिषविषाणे
विदधच्चेतो भोगविताने ॥")
हस्तिदन्तः । इति मेदिनी । ने, ७७ ॥ (यथा,
शिशुपालवधे । १ । ६० ।
"न जातु वैनायकमेकमुद्धृतं
विषाणमद्यापि पुनः प्ररोहति ॥")
कोलदन्तः । इति हेमचन्द्रः ॥ (विशेषेण मद-
दातरि, त्रि । यथा, ऋग्वेदे । ५ । ४४ । ११ ।
"विषाणं परिपानमन्ति ते ।"
"विषाणं विशेषेण मदस्य दातारम् ।" इति
तद्भाष्ये सायणः ॥)

**विषाणिका**, स्त्री, मेषशृङ्गी । इति रत्नमाला ॥

(अस्याः पर्य्यायो यथा, --
"शृङ्गी कर्कटशृङ्गी स्यात् कुलीरञ्च विषाणिका
।
अजशृङ्गी च रक्ता च कर्कटाख्या च कीर्त्तिता
॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
सातला । कर्कटशृङ्गी । आवर्त्तकी । इति
राजनिर्घण्टः ॥

**विषाणी**, स्त्री, क्षीरकाकोली । अजशृङ्गी । इति

मेदिनी । णे, ७७ ॥ वृश्चिकाली । इति राज-
निर्घण्टः ॥ तिन्तिडी । इति शब्दचन्द्रिका ॥

**विषाणी**, [न्] पुं, (विषाणमस्यास्तीति । विषाण +

इनिः ।) हस्ती । शृङ्गी । इत्यजयः ॥ (यथा,
हरिवंशे । २०४ । २२ ।
"खड्गा विषाणिनश्चैव वृषभाश्च मृगास्तथा
॥")
ऋषभनामौषधम् । शृङ्गाटकः । इति राज-
निर्घण्टः ॥

**विषादः**, पुं, (वि + षद + घञ् ।) अवसादः ।

मेदिनी । ने, २४६ ॥

**विषयि**, [न्] क्ली, (विषयाः सन्त्यस्येति । विषय
+ इनिः ।) इन्द्रियम् । इति मेदिनी ।
ने, २११ ॥

**विषयी**, [न्] त्रि, (विषयोऽस्त्यस्येति । इनिः ।)
विषयासक्तः । इति मेदिनी । ने,
२११ ॥

**विषयी**, [न्] पुं, (विषयोऽस्यास्तीति । इनिः ।)
नृपतिः । कामदेवः । वैषयिकः ।
इति मेदिनी ।
ने, २११ ॥ ध्वनिः । इत्यजयपालः
॥ आरोप्य-
माणः । यथा, --
“विषय्यन्तःकृतेऽन्यस्मिन् सा
स्यात् साध्यवसा-
निका ॥”
विषयिणा आरोप्यमाणेन अन्तःकृते
निगीर्णे-
ऽन्यस्मिन् आरोपविषये सति सा
स्यात् साध्य-
वसानिका । इति काव्यप्रकाशः ॥

**विषरूपा**, स्त्री, अतिविषा । इति राजनिर्घण्टः ॥

**विषलं**, क्ली, विषम् । इति शब्दचन्द्रिका ॥

**विषलता**, स्त्री, (विषस्य लता ।) इन्द्रवारुणी ।
इति राजनिर्घण्टः ॥
(विषप्रधानलतामात्रे ।
यथा, गीतायां श्रीधरः । २ । ४२ ।
“विषलता-
वदापाततो रमणीयाम् ॥”)

**विषविद्या**, स्त्री, विषघ्नमन्त्रः । इति विषवैद्य-
शब्दटीकायां भरतः ॥

**विषवैद्यः**, पुं, (विषस्य वैद्यः ।) विषघ्नमन्त्रवेत्ता ।
ओझा इति ख्यातः । यथा ।
विषविद्यां वेत्ति
इति गारुडे १८६ अध्यायः ॥

**विषहरा**, स्त्री, मनसादेवी । इति शब्दरत्नावली ॥
(यथा, देवीभागवते । ९ । ४७ । ५२ ।
“जरत्कारुप्रियास्तीकमाताविषहरेति च ॥”)

**विषहरी**, स्त्री, मनसादेवी । इति शब्दरत्नावली ॥
(यथा, देवीभागवते । ९ । ४७ । ४७ ।
“विषं संहर्त्तुमीशा या तस्माद्विषहरी स्मृता ॥”)

**विषहा**, स्त्री, (विषह + टाप् ।) देवदालीलता ।
निर्व्विषा । इति राजनिर्घण्टः ॥

**विषा**, स्त्री, अतिविषा । इत्यमरः ॥ बुद्धिः । इत्यु-
णादिकोषः ॥ (अस्याः पर्य्यायो गुणाश्च यथा,
“काश्मीरातिविषा श्वेता श्यामा गुञ्जा विषा-
रुणा ॥”
इति वैद्यकरत्नमालायाम् ॥
“विषात्वतिविषा विश्वा शृङ्गी प्रतिविषारुणा ।
शुक्लकन्दा चोपविषा भङ्गुराघुणवल्लभा ॥
विषा सोष्णा कटुस्तिक्ता पाचनी दीपनी हरेत् ।
कफपित्तातिसारामविषकासवमिक्रिमीन्॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
यथा, --
“जाड्यं मौर्ख्यं विषादोऽवसादः सादो विष-
ण्णता ।”
इति हेमचन्द्रः ॥
(यथा, भागवते । १ । ११ । १ ।
“दध्मौ दरवरं तेषां विषादं शमयन्निव ॥”)

**विषादनी**, स्त्री, पलाशीलता । इति राजनिर्घण्टः ॥

**विषाननः**, पुं, (विषमानने यस्य ।) सर्पः । इति
शब्दमाला ॥

**विषान्तकः**, पुं, (विषस्य अन्तकः नाशकः । पीत-
विषत्वात् ।) शिवः । इति हेमचन्द्रः ॥ विष-
नाशके, त्रि ॥

**विषापहः**, पुं, (विषं अपहन्तीति । हन + डः ।)
मुष्ककवृक्षः । इति राजनिर्घण्टः ॥ (विष-
नाशके, त्रि । यथा, मनौ । ७ । २१७ ।
“सुपरीक्षितमन्नाद्यमद्यान्मन्त्रैर्ब्बिषापहैः ॥”)

**विषापहा**, स्त्री, इन्द्रवारुणी । निर्व्विषा । इति
राजनिर्घण्टः ॥ नागदमनी । इति भावप्रकाशः
॥
अर्कमूला । ईशुरमूल इति भाषा । इति शब्द-
चन्द्रिका ॥ (अस्याः पर्य्यायो यथा, --
“अर्कपत्रा सुनन्दा स्यादर्कमूला विषापहा ॥”
इति वैद्यकरत्नमालायाम् ॥)
सर्पकङ्कालिका । इति रत्नमाला ॥

**विषाभावा**, स्त्री, (विषस्याभावो यत्र सा ।)
निर्व्विषा । इति राजनिर्घण्टः ॥

| अधीते वा विषवैद्यः ष्णसुपाञ्चालादित्वादन्त्य-पदवृद्धिः । विषस्य वैद्यश्चिकित्सकः इति वा । इति भरतः ॥ तत्पर्य्यायः । जाङ्गुलिकः २ । इत्यमरः ॥ जाङ्गलिकः ३ नरेन्द्रः ४ कौशिकः ५ कथाप्रसङ्गः ६ चक्राटः ७ । इति जटाधरः ॥ | | |
|---|---|---|

**विषायुधः**, पुं, (विषमेवायुधं यस्य ।) सर्पः । इति शब्दरत्नावली ॥ विषयुक्तास्त्रे, क्ली ॥

**विषारः**, पुं, (विशेण अलतीति । अल + अच् । लस्य रत्वम् ।) सर्पः । इति शब्दचन्द्रिका ॥

**विषारातिः**, पुं, (विषस्यारातिः नाशकः ।) कृष्ण-धत्तूरकः । इति राजनिर्घण्टः ॥

**विषारिः**, पुं, (विषस्यारिः ।) महाचञ्चुशाकः । घृतकरञ्जः । इति राजनिर्घण्टः ॥ (विषनाशक-मात्रे, त्रि ॥)

**विषास्यः**, पुं, (विषमास्ये यस्य ।) सर्पः । इति शब्दरत्नावली ॥ विषयुक्तमुखे, त्रि ॥

**विषास्या**, स्त्री, भल्लातकः । इति शब्दचन्द्रिका ॥ (भल्लातकशब्देऽस्या विषयो विज्ञेयः ॥)

**विषु**, व्य, साम्यम् । इति विषुवच्छब्दटीकायां भरतः ॥ नानारूपम् । इति रामाश्रमः ॥

**विषुणः**, पुं, (विषु साम्यमस्मिन्नस्तीति । "लोमा-दीति ।" ५ । २ । १०० । इति नः । पश्चात् णत्वम् ।) विषुवम् । यथा । "विषु नानारूपं गमनं विष्वक् तदस्यास्तीति विग्रहे अगित्यु-त्तरपदलोपश्चाकृतसन्धेरिति पामादि सूत्रेण नः णत्वम् ।" इत्यमरटीकायां रामाश्रमः ॥ (नानारूपम् । यथा, ऋग्वेदे । ३ । ५४ । ८ ।
"चरत्पतत्त्रि विषुणं विजातम् ॥"
"विषुणं विश्वक् नानारूपम् ।" इति तद्भाष्ये सायणः ॥ सर्व्वगः । यथा, ऋग्वेदे । ८ । २९ । १ ।
"बभ्रुरेको विषुणः ।"
"विषुणः विश्वगञ्चनः ।" इति तद्भाष्ये सायणः ॥
विप्रकीर्णः । यथा, ऋग्वेदे । ५ । १२ । ५ ।
"सखायस्ते विषुणा अग्न एते ।"
"विषुणाः विप्रकीर्णाः सर्व्वव्याप्ताः ।" इति तद्-भाष्ये सायणः ॥ पराङ्मुखः । यथा, ऋग्वेदे । ५ । ३४ । ६ ।
"वित्वक्षणः समृतौ चक्रमासजो-
यथा, --
"विषुवाभ्यां वत्सरः स्यादिति शब्दविदां मतम् ।
महाविषुवमाख्यातं कृतिभिश्चैत्रचिह्नितम् ।
तथा स्याज्जलविषुवं क्रमादाश्विनिचिह्नितम् ॥"
इति शब्दरत्नावली ॥ * ॥
विषुवारम्भकालो यथा, --
"मृगसंक्रान्तितः पूर्व्वं पश्चात् तारा दिनान्तरे ।
एकवर्षे चतुःपञ्चपलमानक्रमेण तु ।
षट्षष्टिवत्सरान्नेकदिनं स्यादयनं रवेः ।
एवं चतुःपञ्चदिनमयनारम्भणंक्रमात् ॥
व्युत्क्रमेण च तद्वत् स्यादुदग्यानं रवेर्ध्रुवम् ।
कर्किसंक्रमणे तद्वदभितो दक्षिणायनम् ॥
अयनांशक्रमेणैव विषुवारम्भणं तथा ।
रविसंक्रान्तितो मेषतुलयोरभितः पुनः ॥
विषुवं मीनकन्यार्द्धे त्वेकाक्षीन्द्रशकाब्दके ।
दिनमानाय मीनार्द्धान्मेषार्द्धं पालिकं शतम् ॥
ततो वृषार्द्धपर्य्यन्तमशीतिः पलभाजिनी ।
मिथुनार्द्धं चतुस्त्रिंशत्पलानां वर्द्धते क्रमात् ॥
कर्कटार्द्धन्तु षट्त्रिंशत् सिंहार्द्धन्तु द्व्यशीतकम् ।
कन्यार्द्धन्तु द्विनवतिः क्रमात् त्रुट्यति वासरे ॥
कन्यार्द्धाद्रजनीमानं बोध्यं पूर्ब्बक्रमेण हि ।
दिने दिने भागहारान्मानं बोध्यं दिवानिशोः ॥
एकमानं दण्डषष्ट्या त्यक्त्रान्यमाननिर्णयः ।
षट्षष्टिवत्सरान्त्वं ततः स्यात् षोडशांशके ।
पुनस्तद्वत्सरांस्तद्वत् एवं सप्तदशादिके ॥"
इति ज्योतिस्तत्त्वम् ॥ * ॥
अन्यच्च
"मेषसंक्रमतः पूर्व्वं पश्चात्तारा दिनान्तरे ।
प्रातिलोम्यानुलोम्येन विषुवारम्भणं भवेत् ॥
त्रयोदशदिने सौरे चैत्रे नखतिथौ शके ।
विषुवारम्भणं तत्र समं मानं दिवानिशोः ॥
दौणादिकः कुप्रत्ययः । ततो मतुप् ह्रस्वनुड्-भ्यांमतुबिति मतुप उदात्तत्वम् । अन्येषामपि दृश्यत इति संहितायां दीर्घः व्यत्ययेन मतोर्व्व-त्वम् ।" इति तद्भाष्ये सायणः ॥)

**विषौषधी**, स्त्री, (विषस्यौषधी ।) नागदन्ती । इति रत्नमाला ॥

**विष्कम्भः**, पुं, सप्तविंशतियोगान्तर्गतप्रथमयोगः । शुभकर्म्मणि तस्य पञ्च दण्डास्त्याज्याः । यथा, --
"त्यजादौ पञ्च विष्कम्भे सप्त शूले च नाडिकाः ।
गण्डव्याघातयोः षट् च नव हर्षणवज्रयोः ।
वैधृतिव्यतिपातौ च समस्तौ परिवर्ज्जयेत् ॥"
इति सत्कृत्यमुक्तावली ॥ * ॥
तत्र जातफलम् ।
"विष्कम्भयोगो यदि जन्मकाले
कार्य्ये स्वतन्त्रो मनुजस्तदानीम् ।
सुहृत्कलत्रात्मजसौख्यमुग्रं
गृहस्य निर्म्माणविधौ समर्थः ॥"
इति कोष्ठीप्रदीपः ॥ * ॥
विस्तारः । (यथा, बृहत्संहितायाम् । ५३ । २४ ।
"उच्छ्रायोऽङ्गुलतुल्यो द्वारस्यार्द्धेण विष्कम्भः ॥")
प्रतिबन्धः । रूपकाङ्गप्रभेदः । योगिनां बन्ध-भेदः । इति मेदिनी । भे, १९ ॥ वृक्षः । इत्य-जयः ॥ अर्गला । इति भरतः ॥

**विष्कम्भी**, [न्] पुं, (विष्कभ्नाति रुणद्धीति । वि + ष्कम्भ + णिनिः ।) अर्गला । यथा । "तद्विष्कम्भो-ऽर्गलं न ना । इत्यमरोक्तौ कपाटधारणकाष्ठं अर्गलं हुड्कादण्ड इति ख्यातम् । तत् कपाटं विष्कभ्नाति रुणद्धि इति ग्रहादित्वाण्णिन् तद्वि-ष्कम्भी मूर्द्धन्यवत् स्वार्थकथनमेतत् विष्कम्भीति नाम च इत्येके । तद्विष्कम्भोऽर्गलमिति मूल-पाठः । विष्कम्भो बन्धननिमित्तदण्डः । इति भट्टः । इति मुकुटः ॥
'विष्कम्भो योगभेदे स्यात् विस्तारप्रतिबन्धयोः ।
कपाटाङ्गप्रभेदे च ।' इति मेदिनीदर्शनात् विष्कम्भ इति पाठः ।" इति तट्टीकायां भरतः ॥

**विष्कलः**, पुं, (विषं विष्ठां कलयति भक्षयतीति । कल + अच् ।) ग्राम्यशूकरः । इति राज-निर्घण्टः ॥

**विष्किरः**, पुं, (विकिरतीति । वि + कॄ श विक्षेपे +

ऽसुन्वतो विषुणः सुन्वतो वृधः ।"
"विषुणः पराङ्मुखः ।" इति तद्भाष्ये सायणः ॥)

**विषुपं**, क्ली, विषुवम् । इत्यमरटीकायां भरतः ॥

**विषुवं**, क्ली, समरात्रिन्दिवकालः । तत्पर्य्यायः ।

विषुवत् २ । इत्यमरः ॥ विषुपम् ३ विष्वक् ४
विश्वक् ५ । इति शब्दरत्नावली ॥ विषुणः ६ ।
इति रामाश्रमः ॥ विषुवः ७ । इति मुकुटः ॥
तत्तु मेषतुलयोः संक्रान्ती । यथा, --
"मृगकर्कटसंक्रान्ती द्वे तूदग्दक्षिणायने ।
विषुवती तुलामेषे गोलमध्ये तथापराः ॥"
इति तिथ्यादितत्त्वम् ॥ * ॥
ते तु महाविषुवजलविषुवनामभ्यांक्रमेण ख्याते ।
ततः प्रतिदिनं वेला सपादत्रिपलात्मिका ।
वर्द्धते मेषविश्वांशपर्य्यन्तं स्थूलमार्गतः ॥
तथा ज्येष्ठान्तपर्य्यन्तं पादोनत्रिपलात्मिका ।
तादृगाषाढपर्य्यन्तं पलैकप्रमिता मता ॥
ततः कर्कटविश्वांशपर्य्यन्तं प्रत्यहं क्रमात् ।
सपादपलमानेन वेला त्रुट्यति निश्चितम् ॥
तादृग्भाद्रान्तपर्य्यन्तं पादोनत्रिपलात्मिका ।
तादृगाश्विनशेषान्तं हरनेत्रपलात्मिका ॥
दिवामानं दण्डषष्टेस्त्यक्त्वा रात्रेः प्रमाणकम् ।
वैशाखादौ दिवामानं रात्रिमानं तुलादिषु ॥
षट्षष्टिवत्सरान्येवं ततः स्यात् द्वादशांशके ।
पुनस्तद्वत्सरांस्तद्वत् ततः एकादशादिके ॥"
इति सत्कृत्यमुक्तावली ॥

**विषुवत्**, क्ली, विषुवम् । इत्यमरः ॥ (यथा, महा-

भारते । ३ । १९९ । १२१ ।
"भवति सहस्रगुणं दिनस्य राहो-
र्व्विषुवति चाक्षयमश्नुते फलम् ॥"
व्यापकः । यथा, ऋग्वेदे । १ । ८४ । १० ।
"स्वादोरित्थाविषूवतो मध्वः पिबन्ति गौर्य्यः ॥"
"विषुवत इत्थमनेन प्रकारेण सर्व्वेषु यज्ञेषु व्याप्तियुक्तस्य *** विषॢ व्याप्तौ अस्मा-
इगुपधेति कः । "विष्किरः शकुनिर्विकिरो वा ।"
६ । १ । १५० । इति सुट् । परिनिविभ्य इति षत्वम् ।) पक्षी । इत्यमरः ॥ विष्किरास्त्रित्तिरि-
मयूरकुक्कुटादयः ।
"लावाद्या वैष्किरो वर्गः प्रतुदा जाङ्गला मृगाः ।
लघवः शीतमधुराः सकषाया हिता नृणाम् ॥"
इति राजवल्लभः ॥ * ॥
अथ विष्किराणां गणना गुणाश्च ।
"वर्त्तकालावविकिरकपिञ्जलकतित्तिराः।
कलिङ्गकुक्कुटाद्याश्च विष्किराः समुदाहृताः ॥
विकीर्य्य भक्षयन्त्येते यस्मात्तस्माद्धि विष्किराः ।
कपिञ्जल इति प्राज्ञैः कथितो गौरतित्तिराः ॥"
कुलिङ्ग गववैया इति लोके ।

"विष्किरा मधुराः शीताः कषायाः कटु-
पाकिनः ।
बल्या वृष्यास्त्रिदोषघ्नाः पथ्यास्ते लघवः
स्मृताः ॥"
इति भावप्रकाशः ॥
("लावतित्तिरिकपिञ्जलवर्त्तीरवर्त्तिकावर्त्तक
नप्तृकावातीकचकोरकलविङ्कमयरक्रकरोपचक्र
कुक्कुटसारङ्गशतपत्रककुतित्तिरिकुरबालुकयव-
लकप्रभृतयस्त्र्याहला विष्किरा लघवः शीत-
मधुराः कषाया दोषशमनाश्च ॥" इति सुश्रुते
सूत्रस्थाने ४६ अध्यायः ॥ * ॥
दर्व्वीकरान्तर्गत-
सर्पविशेषः । यथा, -- "पुण्डरीको भ्रुकुटी
मुखो विष्किरः पुष्पाभिकर्णो गिरिसर्प ऋजु-
सर्पः श्वेतोदरो महाशिरा अलगर्द्धो आशी-
विष इति ॥" इति च सुश्रुते कल्पस्थाने चतुर्थे-
ऽध्याये ॥)

**विष्टः** त्रि, प्रविष्टः । विशधातोः क्तप्रत्ययेन
निष्पन्नमिदम् ॥

**विष्टपं**, क्ली, ("विटपविष्टपविशिपोलपाः ।" इत्यु-
णादिसूत्रे पिष्टपस्थाने विष्टपपाठेन विशधातोः
कपन्प्रत्ययेन साधुः इति केचित् ।) भुवनम् ।
इत्यमरः ॥ पिष्टपं पिष्टपः । इति तट्टीकायां
रूपद्वयम् ॥ (यथा, रघुः । ११ । १९ ।
"बाणभिन्नहृदया निपेतुषी
सा स्वकाननभुवं न केवलाम् ।
विष्टपत्रयपराजयस्थिरां
रावणश्रियमपि व्यकम्पयत् ॥")

**विष्टम्भः**, पुं, (वि + स्तन्भ + क्तः ।) प्रतिबन्धः ।
(यथा, भागवते । ५ । २२ । १२ ।
"स वृष्टिविष्टम्भग्रहोपशमनः ॥" * ॥
आक्रमणम् । यथा, भारविः । १३ । १६ ।
"प्रविकर्षनिनादभिन्नरन्ध्रः
पदविष्टम्भनिपीडितस्तदानीम् ॥")
रोगविशेषः । इति मेदिनी । भे, २० ॥ स तु
आनाहरोगः । तस्य लक्षणमाह ।
"आमं सकृद्वा निचितं क्रमेण
भूयो विबद्धं विगुणानिलेन ।
प्रवर्त्तमानं नयथास्वमेनं
विकारमानाहमुदाहरन्ति ॥"
पक्वाशयजे शकृत्सञ्चयजे । अलसोक्तानि
आध्मानवातनिरोधादीनि ॥ * ॥ आनाहोदा-
वर्त्तयोश्चिकित्सायास्तुल्यत्वादुभयचिकित्सा
अत्र
लिख्यते । अथोदावर्त्तानां चिकित्सा ।
"अधोवातनिरोधोत्थे ह्युदावर्त्ते हितं मतम् ।
स्नेहपानं तथा स्वेदो वस्तिर्यच्चानुलोमनम्
॥
विड्विघातसमुत्थे तु विड्भेव्यन्नं तथौषधम् ।
वर्त्त्यभ्यङ्गावगाहश्च स्वेदो वस्तिर्हितो मतः
॥"
वर्त्तिः फलवर्त्तिः ।
"मूत्रावरोधजनिते क्षीरवारिवचां पिबेत् ।
दुष्पर्शास्वरसं चापि कषायं ककुभस्य च ॥
दुष्पर्शा कण्टकारी दुरालभा च तुल्यगुणत्वात्
।
एर्व्वारुबीजं तोयेन पिबेद् वा लवणीकृतम् ।
सितामिक्षुरसं क्षीरं द्राक्षारसमथापि वा ॥
सर्व्वथैव प्रकुर्व्वीत मूत्रकृच्छ्राश्मरीविधिम् ।
जृम्भाभिघातजे स्नेहं स्वेदं चापि प्रयोजयेत्
॥
अन्यानपि प्रयुञ्जीत समीरणहरान् विधीन् ।
नेत्रनीरावरोधोत्थे मुञ्चेदुच्चैर्दृ शोर्जलम् ॥
सुप्यात् सुखेन तस्याग्रे कथयेच्च कथाः
प्रियाः ।
छिक्काभिघातजे तीक्ष्णाघ्राणनस्यार्कदर्शनैः
॥
प्रवर्त्तयेत् क्षुतं सक्तं स्नेहस्वेदौ प्रशीलयेत् ॥"
तीक्ष्णं मरीचराजिकादि ।
"उद्गारस्यावरोधे तु स्नैहिकं धूममाचरेत् ॥
छर्द्दिनिग्रहसंजाते वमनं लङ्घनं हितम् ।
विरेचनं चात्र मतं तैलेनाभ्यञ्जनं तथा ॥
वस्तिशुद्धिकरैः सिद्धं चतुर्गुणजलं पयः ।
आवारिनाशात् क्वथितं पीतवन्तं प्रकामतः
॥
रमयेयुः प्रिया नार्य्यः शुक्रोदावर्त्तिनं नरम् ।
तस्याभ्यङ्गोऽवगाहश्च मदिरा चरणायुधः ॥
शालिः पयो निरूहश्च हितं मैथुनमेव च ।
क्षुद्विघातसमुद्भूते स्निग्धमुष्णं तथा लघु ॥
रूच्यमल्पं हितं भक्ष्यं पुष्पं सेव्यं सुगन्धि यत्
।
तृषाविघातसंभूते शीतः सर्व्वो विधिर्हितः ॥
"सव्योषं पिप्पलीमूलं त्रिवृद्दन्ती च चित्र-
कम् ।
तच्चूर्णं गुडसंमिश्रं भक्षयेत् प्रातरुत्थितः ॥
एतद्गुडाष्टकं नाम्ना बलवर्णाग्निवर्द्धनम् ।
उदावर्त्तप्लीहगुल्मशोथपाण्ड्वामयापहम् ॥"
इति गुडाष्टकम् ॥ * ॥
"मूलकं शुष्कमार्द्रञ्च वर्षाभूपञ्चमूलकम् ।
कृतमालफलं चाप्सु पक्त्रा तेन घृतं
पचेत् ।
तत् पीतं शमयेत् क्षिप्रमुदावर्त्तमशेषतः ॥"
पञ्चमूलकमत्र बृहत् । शुष्कमूलकाद्यघृतम् ॥
* ॥
अथ आनाहस्य चिकित्सा ।
"तुल्यकारणकार्य्यत्वादुदावर्त्तहरीं क्रियाम् ।
आनाहेऽपि च कुर्व्वीत विशेषश्चाभिधीयते ॥
त्रिवृत्कृष्णाहरीतक्यो द्विचतुःपञ्चभागिकाः ।
गुडेन तुल्या वटिका हरन्त्यानाहमुल्वणम् ॥
वर्त्तिस्त्रिकटुसैन्धवसर्षपगृहधूमकुष्ठमदनफलैः
।
मधुनि गुडे वा पक्वैर्निहिता स्वाङ्गुष्ठपरि-
माणाः ॥
वर्त्तिरियं दृष्टफला शनैः प्रणिहिता गुदे घृता-
भ्यक्ते ।
आनाहोदावर्त्तौ शममति जठरं तथा
गुल्मम् ॥"
त्रिकट्वाद्या वर्त्तिः ॥ इति भावप्रकाशः ॥
(त्रि, विशेषेण स्तम्भयिता । यथा, ऋग्वेदे ।
९ । ८६ । ३५ ।
"दिवो विष्टम्भ उपमो विचक्षणः ॥")

**विष्टम्भी**, [न्] त्रि, (विष्टभ्नातीति । वि + स्तन्भ
+ णिनिः ।) विष्टम्भरोगजनकः । यथा, --
"वैदला गुरवो भक्ष्या विष्टम्भिसृष्टमारुताः ॥"
इति राजवल्लभः ॥
(यथा च सुश्रुते । १ । ४५ ।
"प्रायः प्राभातिकं क्षीरं गुरु विष्टम्भि शीत-
लम् ॥"
विष्टम्भोऽस्यास्तीति । विष्टम्भ + इनिः ।)
विष्टम्भरोगविशिष्टश्च ॥

**विष्टरः**, पुं, (विस्तीर्य्यते इति । वि + स्तॄ + अप् ।
"वृक्षासनयोर्विष्टरः ।" ८ । ३ । ९३ । इति
निपातनात् षत्वम् ।) विटपी । दभमुष्टिः ।

आमं अपक्वमाहारसारं शकृत् पुरीषं वा क्रमेण निचितं सञ्चितम् । भूयो विगुणानिलेन दुष्टवायुना विबद्धं व्यामशोषितं वा यथास्वं पूर्ब्बवदप्रवर्त्तमानं एनं विकारं आनाह-माहुः ॥ * ॥ तत्रामजमानाहमाह ।
“तस्मिन् भवत्यामसमुद्भवे तु
तृष्णा प्रतिश्यायशिरोविदाहाः ।
आमाशये शूलमथो गुरुत्वं
हृत्स्तम्भ उद्गारविघातनञ्च ॥”
विघातनं अप्रवृत्तिः ॥ * ॥ शकृत्सञ्चयजमाह ।
“स्तम्भः कटीपृष्ठपुरीषमूत्रे
शूलोऽथ मूर्च्छा शकृतो वमिश्च ।
श्वासश्च पक्वाशयजे भवन्ति
तथालसोक्तानि च लक्षणानि ॥”

कर्पूरशिशिरं स्वल्पं पिबेत्तोयं शनैः शनैः ।
श्रमश्वासे धृते शस्तो विश्रामः सरसौदनः ॥
निद्रावेगविघातोत्थे पिबेत्क्षीरं सितायुतम् ।
सुवाहनं सुशय्यात्र हिताः श्रोत्रप्रियाः कथाः ॥”
वातादिवेगविघातजनितानामुदावर्त्तानां चिकि-
त्सामभिधाय रूक्षादिकुपितवातजनितस्य उदा-
वर्त्तस्य चिकित्सामाह ।
“हिङ्गुमाक्षिकसिन्धूत्थैः
पिष्टैर्वर्त्तिविनिर्म्मिताम् ।
घृताभ्यक्तां गुदे न्यस्येदुदावर्त्तविनाशिनीम् ॥”
फलवर्त्तिः ।
“मदनं पिप्पली कुष्ठं वचा गौराश्च सर्षपाः ।
गुडक्षीरसमायुक्ता फलवर्त्तिरिहोदिता ॥”
मदनफलादिवर्त्तिः ॥ * ॥
“खण्डपलं त्रिवृताक्षः कृष्णाकर्षं द्बयोश्चूर्णम् ।
प्राग्भोजनस्य मधुना विडालपदकं नरो लिह्यात् ॥
एतद्गाढपुरीषे देयं विज्ञैरुदावर्त्ते ।
मधुरं नरपतियोग्यं चूर्णं नाराचकं नाम्ना ॥”
इति नाराचचूर्णम् ॥ * ॥

पीठाद्यासनम् । इत्यमरः ॥ आदिना कुशा-सनादिग्रहः । इति भरतः ॥ * ॥ (यथा, भागवते । ३ । २८ । १६ ।
“काञ्चीगुणोल्लसत्श्रोणिं हृदयाम्भोजविष्टरम् ।
दर्शनीयतमं शान्तं मनोनयनवर्द्धनम् ॥”)
विष्टरलक्षणमाह । विष्टरस्तु सार्द्धद्बितयवामा-वर्त्तवलिताधोमुखाग्रा असंख्यातदर्भाः । तथा च गृह्यासंग्रहः ।
“ऊर्द्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः ।
दक्षिणावर्त्तको ब्रह्मा वामावर्त्तस्तु विष्टरः ॥”
इति ॥
छन्दोगपरिशिष्टम् ।
“दर्भसंख्या न विहिता विष्टरास्तरणेष्वपि ॥”

एवञ्च ।
"पञ्चाशद्भिर्भवेद्ब्रह्मा तदर्द्धेन तु विष्टरः ॥"
इति यदि समूलं तदा शाख्यन्तरीयम् ।
एतेन
विष्टरे पञ्चविंशतिसंख्या भवदेवभट्टोक्ता
निरस्ता । एवं विष्टरग्रहणं हस्ताभ्यामपि
यदुक्तं तदपि निरस्तम् ।
"यत्रोपदिश्यते कर्म्म कर्त्तुरङ्गं न चोच्यते ।
दक्षिणस्तत्र विज्ञेयः कर्म्मणां पारगः करः
॥"
इति छन्दोगपरिशिष्टात् । इति संस्कार-
तत्त्वम् ॥

**विष्टरश्रवाः**, [स्] पुं, ("विष्टराविव श्रवसी
यस्येति ।" शिशुपालवधस्य १४ । १२ ।
टीकायां
मल्लिनाथः । "विष्टरेऽश्वत्थवृक्षे श्रूयते
नित्यं तत्र
वसतीति ।" उणा० ४ । २२६ । इत्यत्र
उज्ज्वल-
दत्तः ।) विष्णुः । इत्यमरः ॥ (यथा,
हरिवंशे
भविष्यपर्व्वणि । ५१ । १७ ।
"उत्पाट्य वृक्षं दैत्येन्द्रः शतशाखं
महाशिखम् ।
तेन तं पोथयामास विष्टरस्रवसं प्रभुम् ॥")

**विष्टरा**, स्त्री, गुण्डासिनी । इति राजनिर्घण्टः ॥

**विष्टरुहा**, स्त्री, स्वर्णकेतकी । इति राजनिर्घण्टः ॥
विष्टारुहा इति च क्वचित् पाठः ॥

**विष्टारः**, पुं, छन्दोविशेषः । यथा, विष्टारः पङ्क्ति-
च्छन्दः । इति षत्वप्रकरणे दुर्गादासः ॥

**विष्टिः**, स्त्री, (विष + क्तिन् ।) वेतनं विना हठा-
द्वारोद्वहनादिक्लेशः । वेगार इति ख्यातः ।
तत्पर्य्यायः । आजूः २ । इत्यमरः ॥
हठाद-
भृतिकः क्लेशो विजातरूपो विष्टिरिति
भट्ट-
स्वामी ॥ द्वे वेतनमन्तरेण कर्म्मकरणे
कर्म्म-
विष्टिशेषे त्रिदण्डे हि पुच्छे कार्य्यं जयावहम्
॥"
कर्म्मप्रकाशे ।
"नाड्यस्त पञ्च वदनं गलकस्तथैका
वक्षो दशैकसहिता नियतं चतस्रः ।
नाभिः कटिः षडथ पुच्छलता च तिस्रो
विष्टेर्ध्र्वं निगदितोऽङ्गविभाग एषः ॥
मुखे कार्य्यध्वस्तिर्भवति मरणं चाथ गलके
धनग्लानिर्वक्षस्यथ कटितटे बुद्धिविलयः ।
कलिर्नाभीदेशे विजयमथ पुच्छे च जगदुः
शरीरे भद्रायाः पृथगिति फलं पूर्ब्बमुनयः ॥
मनुवसुमुनितिथियुगदश-
शिवगुणसंख्यासु तिथिषु पूर्ब्बाग्न्योः ।
१४ । ८ । ७ । १५ । ४ । १० । ११ । ३ ।
आयाति विष्टिरेषा पृष्ठे शुभदा पुरस्त्व-
शुभदा ॥"
पूर्ब्बाग्न्योः पूर्ब्बाग्न्यादिदिङ्मुखी भवति
इत्यर्थः ॥
"एकेन हीना द्विगुणा तिथिस्तु
सप्तावशिष्टं करणं ववादि ।
पूर्ब्बे परेऽप्येवमयं विशेषो
द्विसंगुणा चन्द्रविवर्ज्जिता च ॥
किन्तुघ्नसंज्ञं करणं प्रदिष्ट-
मादेस्तिथेरादिदले सदैव ।
उपान्त्यशेषे शकुनिस्तु दर्शे
पूर्ब्बे चतुष्पादपरे च नागः ॥
इन्द्रकमलजचित्रार्य्यमभूश्रियः सयमा
ववादेः ।
कलिवृषफणिमारुताःपतयः शकुन्यादेः ॥"
ववाद्यधिपकथनम् ॥
"पौष्टिकस्थिरशुभानि ववाख्ये
वालवे द्विजहिताद्यपि कर्म्म ।
कौलवे प्रमदमित्रविधानं
तैतिले शुभगताश्रयकर्म्म ॥
गरे च बीजाश्रयकर्षणानि
बणिज्यपि स्थैर्य्यबणिक्क्रिया च ।
न सिद्धिमाप्नोति कृतञ्च विष्ट्यां
विषाभिघातादिषु तत्र सिद्धिः ॥
मन्त्रौषधानि शकुनौ च सपौष्टिकानि
गोविप्रराज्यपितृकर्म्म चतुष्पदे तु ।
सौभाग्यदारुणकृतिध्रुवकर्म्म नागे
किन्तुघ्ननाम्नि शुभपौष्टिकमङ्गलानि ॥"
प्रकारेणोदरे तिष्ठति या । तत्पर्य्यायः । उच्चारः
२ अवस्करः ३ शमलम् ४ शकृत् ५ गूथम् ६
पुरीषम् ७ वर्च्चस्कम् ८ विट् ९ । इत्यमरः ॥
वर्च्चः १० । इति जटाधरः ॥ अमेध्यम् ११ दूर्य्यम्
१२ कल्लम् १३ मलम् १४ । इति शब्दरत्ना-
वली ॥ किट्टम् १५ पूतिकम् १६ । इति राज-
निर्घण्टः ॥ (यथा, --
"गुरोर्हितं प्रकर्त्तव्यं वाङ्मनःकायकर्म्मभिः ।
अहिताचरणाद्देव विष्ठायां जायते क्रिमिः ॥"
इति कृष्णानन्दीयतन्त्रसारे ॥)
तद्दर्शननिषेधो यथा, --
"न नग्नां स्त्रियमीक्षेत पुरुषं वा कदाचन ।
न च मूत्रं पुरीषं वा न च संसृष्टमैथुनम् ॥"
जले तदुत्सर्गनिषेधो यथा, --
"नाक्षैः क्रीडेन्न धावेत नाप्सु विण्मूत्रमाच-
रेत् ।
नोच्छिष्टः संविशेन्नित्यं न नग्नः स्नानमाचरेत् ॥"
इति कौर्म्मे उपविभागे १५ अध्यायः ॥
तदुत्सर्गविधानं पुरीषप्रातःकृत्यशब्दयोर्द्रष्ट-
व्यम् ॥

**विष्णुः**, पुं, अग्निः । इति शब्दमाला ॥ शुद्धः ।
वसुदेवता । इति धरणिः ॥ (द्वादशादित्या-
नामन्यतमः । यथा, महाभारते । १ । ६५ । १६ ।
"एकादशस्तथा त्वष्टा द्वादशो विष्णुरुच्यते ।
जघन्यजस्तु सर्व्वेषामादित्यानां गुणाधिकः ॥")
धर्म्मशास्त्रकर्त्तृमुनिविशेषः । यथा, --
"मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः ।
यमापस्तम्बसंवर्त्ताः कात्यायनबृहस्पती ॥
पराशरव्यासशङ्खलिखितादक्षगोतमौ ।
शातातपो वशिष्ठश्च धर्म्मशास्त्रप्रयोजकाः ॥"
इति याज्ञवल्क्यसंहिता ॥
ब्रह्मणो रूपविशेषः । तस्य व्युत्पत्तिर्यथा ।
वेवेष्टि व्याप्नोति विश्वं यः । वेषति सिञ्चति
आप्यायते विश्वमिति वा । विष्णाति वियुनक्ति
भक्तान् मायापसारणेन संसारादिति वा ।
विशति सर्व्वभूतानि विशन्ति सर्व्वभूतानि
अत्रेति वा ।
"यस्माद्विश्वमिदं सर्व्वं तस्य शक्त्या महात्मनः ।
तस्मादेवोच्यते विष्णुर्विशधातोः प्रवेशनात् ॥"
इति विष्णुपुराणम् । इत्यमरटीकायां भरतः ॥
("बृहत्वात् विष्णुरुच्यते ।" इति महाभारते ।

कारिणि चेत्यन्ये । त्रिषु कर्म्मकरे विष्टिः स्त्रिया-
मभृतिकर्म्मणीति रुद्रः । इति भरतः ॥ * ॥
(यथा, रामायणे । २ । ८२ । २० ।
"विष्टिकर्म्मान्तिकाः सर्व्वे मार्गशोधक-
रक्षकाः ॥")
वेतनम् । कर्म्म । इति मेदिनी । टे, २९ ॥ (यथा,
भागवते, । ७ । ८ । ५५ ।
"वयमीशकिन्नरगणास्तवानुगा
दितिजेन विष्टिममुनानुकारिताः ॥")
भद्रा । वर्षणम् । इति विश्वः ॥ प्रेषणम् । इति
हेमचन्द्रः ॥ सा च भद्रा
ववाद्येकादशकरणा-
न्तर्गतसप्तमकरणं पञ्जिकायां तस्या अङ्कं
शून्यम् । यथा, --
"ववबालवकौलवतैतिल
गरबणिजाः सविष्टयः सप्त ।
शकुनिचतुष्पन्नागाः
किन्तुघ्नश्च ध्रुवाणि करणानि ॥
शुक्लादितिथिशेषार्द्धात् पञ्चमे तत्तुरीयके ।
आद्यन्तार्द्धात् क्रमेण स्युरष्टावृत्त्या ववादयः ॥
एकादश्याश्चतुर्थ्याश्च शोषार्द्धे शुक्लपक्षके ।
अष्टमीपौर्णमास्योश्च पूर्ब्बार्द्धे विष्टिरीरिता ॥
कृष्णपक्षे तृतीयाया दशम्याश्च परार्द्धतः ।
सप्तम्याश्च चतुर्द्दश्याः पूर्ब्बार्द्धे
विष्टिसम्भवः ॥
विहाय विषरौद्राणि विष्टिं सर्व्वत्र वर्ज्जयेत् ।
इति ज्योतिस्तत्त्वम् ॥
(यथा, कलाविलासे । २ । ११ ।
"कश्चिद्वदति समेत्य द्रविणं निःक्षिप्य हन्त-
गन्तास्मि ।
भ्रातःपरं प्रभाते विष्टिदिनं किं करोम्यद्य ॥")

**विष्टिः**, त्रि, (विष् + क्तिच् ।) कर्म्मकरः । इति
मेदिनी । टे, २९ ॥

**विष्ठलं**, क्ली, (विदूरं स्थलम् ।) दूरस्थानम् ।
यथा । विकुशमिपरिभ्यः स्थलस्य । एभ्यः
स्थलस्य सस्य षः स्यात् । विष्ठलं कुष्ठलं शमिष्ठलं
परिष्ठलम् । इति सिद्धान्तकौमुदी ॥

**विष्ठा**, स्त्री, (विविधप्रकारेण तिष्ठति उदरे इति ।
वि + स्था + कः । उपसर्गादिति षः ।)
विविध-

५ । ७० । ३ ॥) तत्पर्य्यायः । नारायणः २ कृष्णः ३
वैकुण्ठः ४ विष्टरश्रवाः ५ दामोदरः ६ हृषीकेशः
७ केशवः ८ माधवः ९ स्वभूः १० दैत्यारिः ११
पुण्डरीकाक्षः १२ गोविन्दः १३ गरुडध्वजः १४
पीताम्बरः १५ अच्युतः १६ शार्ङ्गी १७ विष्वक्-
सेनः १८ जनार्द्दनः १९ उपेन्द्रः २० इन्द्रावरजः
२१ चक्रपाणिः २२ चतुर्भुजः २३ पद्मनाभः ३४
मधुरिपुः २५ वासुदेवः २६ त्रिविक्रमः २७
दैवकीनन्दनः २८ शौरिः २९ श्रीपतिः ३०
पुरुषोत्तमः ३१ वनमाली ३२ वलिध्वंसी ३३
कंसारातिः ३४ अधोक्षजः ३५ विश्वम्भरः ३६

कैटभजित् ३७ विधुः ३८ श्रीवत्सलाञ्छनः ३९ ।
इत्यमरः ॥ पुराणपुरुषः ४० वृष्णिः ४१ शत-धामा ४२ गदाग्रजः ४३ एकशृङ्गः ४४ जग-न्नाथः ४५ विश्वरूपः ४६ सनातनः ४७ मुकुन्दः
४८ राहुभेदी ४९ वामनः ५० शिवकीर्त्तनः ५१ श्रीनिवासः ५२ अजः ५३ वासुः ५४ । इति जटाधरः ॥ श्रीहरिः ५५ कंसारिः ५६ नृहरिः ५७ विभुः ५८ मधुजित् ५९ मधुसूदनः ६० कान्तः ६१ पुरुषः ६२ श्रीगर्भः ६३ श्रीकरः ६४
श्रीमान् ६५ श्रीधरः ६६ श्रीनिकेतनः ६७ श्रीकान्तः ६८ श्रीशः ६९ प्रभुः ७० मुरलीधरः ७१ जगदीशः ७२ गदाधरः ७३ नन्दात्मजः ७४ नरसिंहः ७५ इरेशः ७६ गोपालः ७७ नन्दनन्दनः ७८ नरकजित् ७९ सामगर्भः ८० अजितः ८१ जितामित्रः ८२ ऋतधामा ८३ शशबिन्दुः ८४ पुनर्व्वसुः ८५ आदिदेवः ८६ श्रीवराहः ८७ सहस्रवदनः ८८ त्रिपात् ८९ ऊर्द्ध्वदेवः ९० हरिः ९१ गृध्नुः ९२ यादवः ९३
अरिष्टसूदनः ९४ पूतनारिः ९५ सदायोगी ९६ ध्रुवः ९७ चाणूरसूदनः ९८ हेमशङ्कः ९९ शता-वर्त्ती १०० कालनेमिरिपुः १०१ धेनुकारिः १०२
सोमसिन्धुः १०३ विरिञ्चिः १०४ धरणीधरः १०५ बहुमूर्द्धा १०६ वर्द्धमानः १०७ शतानन्दः
१०८ वृषान्तकः १०९ मथुरेशः ११० द्वारकेशः
१११ रन्तिदेवः ११२ वृषाकपिः ११३ । इति शब्दरत्नावली ॥ जिष्णुः ११४ दाशार्हः ११५ अब्धिशयनः ११६ इन्द्रानुजः ११७ नरायणः ११८ जलशयः ११९ यज्ञपुरुषः १२० तार्क्ष-ध्वजः १२१ षड्बिन्दुः १२२ पद्मेशः १२३ मार्जः
१२४ जिनः १२५ कुमोदकः १२६ जह्नुः १२७
वसुः १२८ शतावर्त्तः १२९ मुञ्जकेशी १३० बभ्रुः १३१ वेधाः १३२ प्रस्निशृङ्गः १३३ आत्मभूः

वासुदेवो बलः कामो ह्यनिरुद्धो यथाक्रमम् ॥
प्रणवस्तत् सदित्येतत् हुँ क्षौँ भूरतिमन्त्रकाः ।
नारायणस्तथा ब्रह्मा विष्णुः सिंहो वराह-राट् ॥
सितारुणहरिद्राभा नीलश्यामललोहिताः ।
मेघाग्निमधुपिङ्गाभा वर्णतो नव नायकाः ॥” * ॥
अस्याङ्गानि तेषां मन्त्रवर्णाश्च यथा, --
“कं टं घं शं गरुत्मानं स्याज्जं खं वं सुदर्शनम् ।
खं चं कं घं गदादेवी ठं नं मं क्षञ्च शङ्खकम् ॥
घं टं भं हं भवेच्छ्रीश्च गं जं वं सञ्च पुष्टिकम् ।
धं वं सं वनमाला स्याच्छ्रीवत्सं सं दं नं भवेत् ॥
छं तं पं कौस्तुभः प्रोक्तश्चानन्तो ह्यहमेव च ।
इत्यङ्गानि यथायोगं देवदेवस्य वै दश ॥ * ॥
गरुडोऽम्बुजसङ्काशो गदा चैवासिताकृतिः ।
पुष्टिः शिरीषपुष्पाभा लक्ष्मीः काञ्चनसन्निभा ॥
पूर्णचन्द्रनिभः शङ्खः कौस्तुभस्त्वरुणद्युतिः ।
चक्रं सूर्य्यसहस्राभं श्रीवत्सः कुन्दसन्निभः ॥
पञ्चवर्णा मता माला ह्यनन्तो मेघसन्निभः ।
विद्युद्रूपाणि चास्त्राणि यानि नोक्तानि वर्णतः ॥
इति गारुडे ११ अध्यायः ॥ * ॥
तस्य जगत्पालनादिर्य्यथा, --
“रजोगुणमयं चान्यरूपं तस्यैव धीमतः ।
चतुर्म्मुखः स भगवान् जगत्सृष्टौ प्रवर्त्तते ॥
सृष्टञ्च पाति सकलं विश्वात्मा विश्वतोमुखः ।
सत्त्वं गुणमुपाश्रित्य विष्णुर्व्विश्वेश्वरः स्वयम् ॥
अन्तकाले स्वयं देवः सर्व्वात्मा परमेश्वरः ।
तमोगुणं समाश्रित्य रुद्रः संहरते जगत् ॥
एकोऽपि सन्महादेवस्त्रिधासौ समवस्थितः ।
सर्गरक्षालयगुणैर्निर्गुणोऽपि निरञ्जनः ॥
एकः सन् स द्विधा चैव त्रिधा च बहुधा पुनः ।
त्रिधा विभज्य चात्मानं त्रैलोक्ये संप्रवर्त्तते ॥
सृजते वीक्षते चैव ग्रसते च विशेषतः ।
यस्मात् सृष्ट्वानुगृह्णाति ग्रसते च पुनः प्रजाः ॥
गुणात्मकत्वात्त्रैलोक्ये तस्मादेकः स उच्यते ।
अग्रे हिरण्यगर्भः स प्रादुर्भूतः सनातनः ॥
आदित्वादादिदेवोऽसावजातत्वादजः स्मृतः ।
देवेषु च महादेवो महादेव इति स्मृतः ॥
पाति यस्मात् प्रजाः सर्व्वाः प्रजापतिरिति स्मृतः ।
बृहत्त्वाच्च स्मृतो ब्रह्मा परत्वात् परमेश्वरः ॥
वशित्वादप्यवश्यत्वादीश्वरः परिभाषितः ।
ऋषिः सर्व्वत्रगत्वेन हरिः सर्व्वहरो यतः ॥

अपि च ।
मत्स्य उवाच ।
“महाप्रलयकालात्तु एतदासोत्तमोमयम् ।
प्रसुप्तमिव चातर्क्यमप्रज्ञातमलक्षणम् ॥
अविज्ञेयमविज्ञातं जगत् स्थास्नु चरिष्णु च ।
ततः स्वयम्भुरव्यक्तः प्रभवः पुण्यकर्म्मणाम् ॥
व्यञ्जयन्नेतदखिलं प्रादुरासीत्तमोनुदः ।
योऽतीन्द्रियः परो व्यक्तादर्थज्यायान् सनातनः ॥
नारायण इति ख्यातः स एव स्वयमुद्बभौ ।
स्वशरीरादभिध्यायन् सिसृक्षुर्व्विविधं जगत् ॥
अप एव ससर्ज्जादौ तासु बीजमवासृजत् ।
तदेवाण्डं समभवद्धेमरूप्यमयं महत् ॥
संवत्सरसहस्रेण सूर्य्यायुतसमप्रभम् ।
प्रविश्यान्तर्म्महातेजाः स्वयमेवात्मसम्भवः ।
प्रभावादपि तद्व्याप्त्या विष्णुत्वमगमत् पुनः ॥”
इति मात्स्ये २ अध्यायः ॥ * ॥
अस्य तिस्रो मूर्त्तयो यथा ।
“सृष्टिस्थित्यन्तकरणात् ब्रह्मविष्णुशिवात्मिकाः ।
स संज्ञां याति भगवान् एक एव जनार्द्दनः ॥
ब्रह्मत्वे सृजते चैव विष्णुत्वे पाति नित्यशः ।
रुद्रत्वे चैव संहर्त्ता एको देवस्त्रिधा स्थितः ॥
स एव सृज्यः स च सर्गकर्त्ता
स एव पाता स च पाल्यते च ।
ब्रह्माद्यवस्थाभिरशेषमूर्त्ति-
र्व्विष्णुर्व्वरिष्ठो वरदो वरेण्यः ॥”
इति वह्निपुराणे सर्गानुशासननामाध्यायः ॥ * ॥
नारायणस्य मूर्त्तिविशेषो यथा ।
“योऽसौ नारायणो देवः परात्परतरो नृप ।
तस्य चिन्ता समुत्पन्ना सृष्टिं प्रति नरोत्तम ॥

१३४ पाण्डवायनः १३५ सुवर्णबिन्दुः १३६
श्रीवत्सः १३७ देवकीसूनुः १३८ गोपेन्द्रः
१३९
गोवर्द्धनधरः १४० यदुनाथः १४१ गदाभृत्
१४२
शार्ङ्गभृत् १४३ चक्रभृत् १४४ श्रीवत्सभृत्
१४५
शङ्खभृत् १४६ ॥ * ॥ अस्य वध्यादयो यथा, --
"मधुधेनुकचाणूरपूतनायमलार्ज्जुनाः ।
कालनेमिहयग्रीवशकटारिष्टकैटभाः ॥
कंसः केशिमुरौ साल्वमैन्दद्विविदराहवः ।
हिरण्यकशिपुर्ब्बाणः कालीयो नरको बलिः ॥
शिशुपालश्चास्य वध्या वैनतेयश्च वाहनम् ।
शङ्खोऽस्य पाञ्चजन्योऽङ्कः श्रीवत्सोऽसिस्तु
नन्दकः ॥
गदा कौमोदकी चापं शार्ङ्गं चक्रं सुदर्शनम् ।
मणिः स्यमन्तको हस्ते भुजमध्ये तु कौस्तुभः
॥"
इति हेमचन्द्रः ॥ * ॥
तस्य शतनामानि पाद्मोत्तरखण्डे १११ अध्याये
सहस्रनामानि च महाभारतीयशान्तिपर्व्वणि
१४९ अध्याये द्रष्टव्यानि ॥ * ॥ अस्य मन्त्रो
वर्णश्च
यथा, --
"स्वरमाद्यं द्वितीयञ्च उपान्त्यं चान्त्यमेव च ।

अनुत्पादात् चानुपूर्व्वात् स्वयम्भुरिति स स्मृतः
।
नराणामयनं यस्मात् तस्मान्नारायणः स्मृतः ॥
हरः संसारहरणाद्विभुत्वाद्विष्णुरुच्यते ।
भगवान् सर्व्वविज्ञानादवनादोमिति स्मृतः ॥
सर्व्वज्ञः सर्व्वविज्ञानाच्छन्दः सर्व्वमयो यतः ।
शिवः स्यान्निर्म्मलो यस्माद्विभुः सर्व्वगतो
यतः ॥
तारणात् सर्व्वदुःखानां तारकः परिगीयते ।
बहुनात्र किमुक्तेन सर्व्वं विष्णुमयं जगत् ॥"
इति कौर्म्मे ४ अध्यायः ॥ * ॥

सृष्ट्वा चेयं महासृष्टिः पालनीया मयैव ह ।
कर्म्मकाण्डन्त्वमूर्त्तेन कर्त्तुं नैवेह शक्यते
॥
तस्मात् मूर्त्तिं सृजाम्येकां यया पाल्यमिदं
जगत् ।
एवं चिन्तयतस्तस्य सत्त्वाभिध्यायितो नृप
॥
प्राक्सृष्टिजातं राजन् वै मूर्त्तिमत्तत्पुरो बभौ
।
पुरोभूते ततस्तस्मिन् देवो नारायणः
स्वयम् ॥
प्रविशन्तं ददर्शाथ त्रैलोक्यं तस्य देहतः ।
ततः सस्मार भगवान् वरदानं पुरातनम् ॥
वागादीनां ततस्तुष्टः प्रादात्तस्य पुनर्व्वरम्
।
सर्व्वज्ञः सर्व्वकर्त्ता त्वं
सर्व्वलोकनमस्कृतः ॥
त्रैलोक्यप्रतिपालाच्च भव विष्णुः
सनातनः ।
देवानां सर्व्वदा कार्य्यं कर्त्तव्यं ब्रह्मणस्तथा
॥
सर्व्वज्ञत्वञ्च भवतु तव देव न संशयः ।
एवमुक्त्वा ततो देवः प्रकृतिस्थो बभूव ह
॥
विष्णुरप्यधुना पूर्व्वां बुद्धिं सस्मार स प्रभुः
।
तदा संचिन्त्य भगवान् योगनिद्रां महातपाः
॥
तस्यां संस्थाप्य मगवान् इन्द्रियार्थोद्भवाः
प्रजाः ।
ध्यात्वा परेण रूपेण ततः सुष्वाप वै प्रभुः
॥
तस्य सुप्तस्य जठरान्महत् पद्मं
विनिःसृतम् ।
सप्तद्वीपवती पृथ्वी ससमुद्रा सकानना ॥
तस्य मूलस्य विस्तारं
पातालतलसंस्थितम् ।

कर्णिकायां तथा मेरुस्तन्मध्ये
ब्रह्मणो भवः ॥
एवं दृष्ट्वा परं तस्य शरीरस्य तु
सम्भवम् ।
मुमुचे तच्छरीरस्थो वायुर्वायुसमं
सृजत् ॥
अविद्यविजयञ्चेमं शङ्खरूपेण धारय
।
अज्ञानच्छेदनार्थाय खड्गं तेऽस्तु
तथा करे ॥
कालचक्रमयं घोरं चक्रं त्वं
धारयाच्युत ।
अधर्म्मराजघातार्थं गदां धारय
केशव ॥
मालेयं भूतमाता ते कण्ठे तिष्ठतु
सर्व्वदा ।
श्रीवत्सकौस्तुभौ चेमौ
चन्द्रादित्यच्छलेन ह ॥
मारुतस्ते गतिर्वीरः गरुत्मांस्तव
कीर्त्तितः ।
त्रैलोक्यगामिनी देवी लक्ष्मीस्तेऽस्तु
सदा प्रिया ॥
द्वादशी च तिथिस्तेऽस्तु कामरूपी
च जायते ।
घृताशनो भवेद्यस्तु द्वादश्यां
तत्परायणः ॥
स्वर्गवासी च भवतु पुमान् स्त्री वा
विशेषतः ।
एष विष्णुस्तवाख्यातो मूर्त्तयो
देवदानवाः ॥
हन्ति पाति शरीराणि
सृजन्त्यन्यानि चात्मनः ।
युगे युगे सर्व्वगोऽयं वेदान्ते पुरुषो
ह्ययम् ।
न हीनबुद्ध्या वक्तव्यो मनुष्योऽयं
कदाचन ॥"
इति वाराहे
परापरनिर्णयनामाध्यायः ॥ * ॥
ब्रह्मविष्णुशिवानामेकत्वं यथा, --
"ततो ब्रह्मा शरीरं तत् त्रिधा चक्रे
महेश्वरः ।
गरुडस्थो जगन्नाथो लोकाधारस्तपोधनः ॥
ग्राहग्रस्तं गजेन्द्रं तं तञ्च ग्राहं जलाशयात् ।
उज्जहाराप्रमेयात्मा तरसा मधुसूदनः ॥
स्थलस्थं दारयामास ग्राहं चक्रेण माधवः ।
मोक्षयामास नागेन्द्रं पापेभ्यः शरणागतम् ॥
स हि देवलशापेन हूहूर्गन्धर्व्वसत्तमः ।
ग्राहत्वमगमत् कृष्णाद्वरं प्राप्य दिवङ्गतः ।
गजोऽपि विष्णुना स्पृष्टो जातो दिव्यवपुः
पुमान् ॥"
इति वामनपुराणे ८१ अध्यायः ॥ * ॥
अस्य मन्त्रपूजादिर्यथा, --
"अथ वक्ष्ये महामन्त्रान् विष्णोः सर्व्वार्थसाध-
कान् ।
यस्य संस्मरणात् सन्तो भवाब्धेः पारमाश्रिताः ॥
तारं नमः पद ब्रूयात् नरौ दीर्घसमन्वितौ ।
पवनो णाय मन्त्रोऽयं प्रोक्तो वस्वक्षरः परः ॥"
अस्य पूजाप्रयोगः । प्रातःकृत्यादिस्नानान्तं
कर्म्म कृत्वा पूजामण्डपमागत्य वैष्णवाचमनं
कुर्य्यात् । तद्यथा गौतमीये ।
"केशवाद्यैस्त्रिभिः पीत्वा द्वाभ्यां प्रक्षालयेत्
करौ ।
द्वाभ्यामोष्ठौ च संमृज्य द्वाभ्यां मृज्यान्मुखं
ततः ॥
एकेन हस्तं प्रक्षाल्य पादावपि तथैकतः ।
संप्रोक्ष्यैकेन मूर्द्धानं ततः सङ्कर्षाणादिभिः ॥
आस्यनासाक्षिकर्णांश्चनाभ्युरस्कं भुजौ क्रमात् ।
स्पृशेदेवं भवेदाचमनञ्च वैष्णवान्वये ।
एवमाचमनं कृत्वा साक्षान्नारायणो भवेत् ॥"
केशवादयस्तु केशवनारायणमाधवगोविन्द-
विष्णुमधुसूदनत्रिविक्रमवामनश्रीधरहृषीकेश-
पद्मनाभदामोदरसङ्कर्षणवासुदेवप्रद्युम्नानिरुद्ध-
पुरुषोत्तमाधोक्षजनृसिंहाच्युतजनार्द्दनोपेन्द्र-
हरिविष्णवः ॥ वाक्यन्तु प्रणवादि केशवाय नम
इत्यादि । तथा च ।
"सचतुर्थीनमोऽन्तैश्च नामभिर्विन्यसेत् सुधीः ॥"
ततः सामान्यार्घ्यादिमातृकान्तंकर्म्म विधाय
केशवकीर्त्यादिन्यासं कुर्य्यात् । अस्य ऋष्यादि-
न्यासः । शिरसि प्रजापतये ऋषये नमः । मुखे
गायत्रीच्छन्दसे नमः । हृदि अर्द्धलक्ष्मीहरये
देवतायै नमः ॥ * ॥ ततः कराङ्गन्यासौ । श्रीं
अङ्गुष्ठाभ्यां नम इत्यादि । श्रीं हृदयाय नम
इत्यादि । तथा च गौतमीये ।
नारायणाय कान्त्यै नमो मुखे । इं माधवाय
तुष्ट्यै नमो दक्षनेत्रे । ईं गोविन्दाय पुष्ट्यै नमो
वामनेत्रे । उं विष्णवे धृत्यै दक्षकर्णे । ऊं
मधुसूदनाय शान्त्यै वामकर्णे । ऋं त्रिविक्रमाय
क्रियायै दक्षनासापुटे । ॠं वामनाय दयायै
वामनासापुटे । ऌं श्रीधराय मेधायै दक्षगण्डे ।
ॡं हृषीकेशाय हर्षायै वामगण्डे । एं पद्म-
नाभाय श्रद्धायै ओष्ठे । ऐं दामोदराय लज्जायै
अधरे । ओं वासुदेवाय लक्ष्म्यै ऊर्द्ध्वदन्तपंक्तौ ।
औं सङ्कर्षणाय सरस्वत्यै अधोदन्तपंक्तौ । अं
प्रद्युम्नाय प्रीत्यै मस्तके । अः अनिरुद्धाय रत्यै
मुखे । कं चक्रिणे जयायै । खं गदिने दुर्गायै ।
गं शार्ङ्गिणे प्रभायै । घं खड्गिने सत्यायै ।
ङं शङ्खिने चण्डायै दक्षकरमूलसन्ध्यग्रेक्षु । चं
हलिने वाण्यै । छं मुषलिने विलासिन्यै । जं
शूलिने विजयायै । झं पाशिने विरजायै । ञं
अङ्कुशिने विश्वायै वामकरमूलसन्ध्यग्रेक्षु । टं
मुकुन्दाय विनदायै । ठं नन्दजाय सुनन्दायै ।
डं नन्दिने स्मृत्यै । ढं नराय ऋद्ध्यै । णं नरक-
जिते समृद्ध्यै दक्षपादमूलसन्ध्यग्रेक्षु । तं हरये
शुद्ध्यै । थं कृष्णाय बुद्ध्यै । दं सत्याय भूत्यै ।
धं सात्वताय मत्यै । नं सौराय क्षमायै वाम-
पादमूलसन्ध्यग्रेक्षु । पं शूराय रमायै दक्ष-
पार्श्वे । फं जनार्द्दनाय उमायै वामपार्श्वे । वं
भूधराय क्लेदिन्यै पृष्ठे । भं विश्वमूर्त्तये क्लिन्नायै
नाभौ । मं वैकुण्ठाय सुदायै उदरे । यं त्वगा-
त्मने पुरुषोत्तमाय वसुधरायै हृदि । रं असृ-
गात्मने बलिने परायै दक्षांशे । लं मांसात्मने
बलानुजाय परायणायै ककुदि । वं मेदआत्मने
बलाय सूक्ष्मायै वामांशे । शं अस्थ्यात्मने वृष-
घ्नाय सन्ध्यायै हृदादिदक्षकरे । षं मज्जात्मने
वृषाय प्रज्ञायै हृदादिवामकरे । सं शुक्रात्मने
हंसाय प्रभायै हृदादिदक्षपादे । हं प्राणात्मने
वराहाय निशायै हृदादिवामपादे । ळं जीवा-
त्मने विमलाय अमोघायै हृदाद्युदरे । क्षं
क्रोधात्मने नृसिंहाय विद्युतायै हृदादिमुखे ।
इति न्यसेत् ॥ * ॥ तथा च । गौतमीये ।
"केशवादिरयं न्यासो न्यासमात्रेण देहिनाम् ।
अच्युतत्वं ददात्येव सत्यं सत्यं न संशयः ॥
मातृकार्णं समुच्चार्य्य केशवाय इति स्मरेत् ।
कीर्त्त्यै च मनसा युक्तमित्यादि न्यासमाचरेत् ।
केशवाय ततः कीर्त्त्यै कान्त्यै नारायणाय च ॥"

प्रधानेच्छाबलाच्छम्भोस्त्रिगुणं त्रिगुणीकृतम् ॥
तदूद्र्ध्वभागः
संजातश्चतुर्व्वक्त्रश्चतुर्भुजः ।
स्फटिकाभ्रसमः कायः शुक्लः स चन्द्रशेखरः ॥
ईशस्ततो ब्रह्मकाये सृष्टिशक्तिं न्ययोजयत् ।
स्वयमेवाभवत् स्रष्टा ब्रह्मरूपेण लोकभृत् ॥
स्थितिशक्तिं निजां मायां प्रकृत्याख्यां न्ययो-
जयत् ।
महेशे वैष्णवे काये ज्ञानशक्तिं निजां तथा ॥
स्थितिकर्त्ताभवद्विष्णुरहमेव महेश्वरः ।
सर्व्वशक्तिनियोगेन सदा तद्रूपता मम ॥
अन्तशक्तिं तथा काये शम्भवे स न्ययोजयत् ।
अन्तकर्त्ताभवच्छम्भुः स एव परमेश्वरः ॥
अतस्त्रिषु शरीरेषु स्वयमेव प्रकाशते ।
ज्ञानरूपं परं ज्योतिरनादिर्भगवान् प्रभुः ॥
सृष्टिस्थित्यन्तकरणाद्वेक एव महेश्वरः ।
ब्रह्मा विष्णुः शिवश्चेति संज्ञामाप पृथक् ।
पृथक् ॥
अतस्त्वञ्च विधाता च तथाहमपि नो पृथक् ।
एवं शरीरं रूपञ्च ज्ञानमस्माकमन्तरात् ॥”
इति कालिकापुराणे १२ अध्यायः ॥ * ॥
अन्यच्च ।
“गुणातीतः स भगवान् व्यापकः पुरुषः परः ।
अनन्तभोगशायी च यन्नाभिकमलादभूत् ॥

“ऋषिः प्रजापतिश्छन्दो गायत्री देवता पुनः ।
अर्द्धलक्ष्मीहरिः प्रोक्तः श्रीबीजेन षडङ्गकम् ॥”
ततो ध्यानम् ।
“उद्यत्प्रद्योतनशतरुचिं तप्तहेमावदातं
पार्श्वद्वन्द्वे जलधिसुतया विश्वधात्र्या च जुष्टम् ।
नानारत्नोल्लसितविविधाकल्पमापीतवस्त्रं
विष्णुं वन्दे दरकमलकौमोदकीचक्रपाणिम् ॥”
एवं ध्यात्वा न्यसेत् । यथा । अं केशवाय कीर्त्त्यै नमः ललाटे । वर्णानुक्त्वा सार्द्धचन्द्रान् पुरस्ता-दित्यादिदर्शनात् सर्व्वत्र सानुस्वारः । आं

इत्याद्यगस्त्यसंहितावचनाच्चायं क्रमः । न तु केशवकीर्त्तिभ्यां नम इति । तथा भुक्तिमुक्ति-मिच्छता अयं न्यासः कर्त्तव्यः श्रीबीजादिकः । यथा । श्रीं अं केशवाय कीर्त्त्यै नम इत्यादि । तथा च गौतमीये ।
“एवं प्रविन्यसेन्न्यासं लक्ष्मीबीजपुरःसरम् ।
स्मृतिं धृतिं महालक्ष्मीं प्राप्यान्ते हरितां व्रजेत् ॥”
ततस्तत्त्वन्यासपीठन्यासर्ष्यादिन्यासविष्णुपञ्जरा-दिन्यासान् कुर्य्यात् । तत्त्वन्यासादयस्तु ग्रन्थ-

| | | |
|---|---|---|
| विष्णुश्च स च गोविन्द ईश्वरश्च सनातनः ।<br>यस्तं वेद महात्मानं स जीवन्मुक्त उच्यते ॥”<br>इति वामनपुराणे ४२ अध्यायः ॥ * ॥<br>तेन गजेन्द्रमोक्षणं यथा, --<br>पुलस्त्य उवाच ।<br>“भक्तिं तस्याथ सं चिन्त्य नागस्यागोघदर्शनः ।<br>प्रीतिमानभवद्विष्णुः शङ्खचक्रगदाधरः ॥<br>सान्निध्यं कल्पयामास तस्मिन् सरसि केशवः । | | |

गौरवभिया नोक्ताः ॥ * ॥ ततो ध्यायेत् ।
"उद्यत्कोटिदिवाकराभमनिशंशङ्कं गदां
पङ्कजं
चक्रं बिभ्रतमिन्दिरावसुमतीसंशोभिपार्श्वद्वयम् ।
कोटीराङ्गदहारकुण्डलधरं पीताम्बरं कौस्तुभो-
द्दीप्तं विश्वधरं स्ववक्षसि लसच्छ्रीवत्सचिह्नं भजे
॥"
एवं ध्यात्वा मानसैः संपूज्य शङ्खस्थापनं
कुर्य्यात् । तत्र वैष्णवपात्रं गौतमीये ।
"ताम्रपात्रन्तु विप्रर्षे विष्णोरतिप्रियं मतम् ।
तथैव सर्व्वपात्राणां मुख्यं शङ्खं प्रकीर्त्तितम् ॥
मृत्पात्रञ्च तथा प्रोक्तं स्वर्णं वा राजतं तथा ।
पञ्चपात्रं हरेः शुद्धं नान्यत्तत्र नियोजयेत् ॥"
नेवेद्यदाने तु तत्रैव ।
"स्वर्णे वा ताम्रपात्रे वा रौप्ये वा पङ्कजे दले ॥"
आगमकल्पद्रुमे ।
"हैरण्यं राजतं कांस्यं ताम्रं मृण्मयमेव वा ।
पालाशं श्रीहरेः पात्रं नैवेद्ये कल्पयेद्बुधः ॥"
पुरश्चरणचन्द्रिकायाम् । सुवर्णे राजते रैत्ये
इत्यादि ॥ * ॥ ततः सामान्यपीठपूजा-
नन्तरं विमलादिशक्तिसहितपीठमन्वन्तंपूजां
कृत्वा पुनर्ध्यात्वा मूलेन कल्पितमूर्त्तावावाह-
नादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधाय आव-
रणपूजां कुर्य्यात् । अग्न्यादिचतुष्कोणेषु दिक्षु
च ॐ क्रुद्धोल्काय हृदयाय नमः इत्यादिना
पूजयेत् ॥ * ॥ ततः केशरेषु पूर्व्वादि ॐ नमः
नं नमः मों नमः नां नमः रां नमः यं नमः
णां नमः यं नमः । ततो दलेषु पूर्व्वादिदिक्षु
ॐ वासुदेवाय नमः । एवं सङ्कर्षणाय प्रद्युम्नाय
अनिरुद्धाय । अग्न्यादिकोणदलेषु ॐ शान्त्यै
नमः एवं श्रियै सरस्वत्यै रत्यै । ततः पत्राग्रेषु
पूर्व्वादि ॐ चक्राय नमः एवं शङ्खाय गदायै
पद्माय कौस्तुभाय मुषलाय खड्गाय वन-
मालायै । तद्बहिरग्रे ॐ गरुडाय नमः ।
दक्षिणे ॐ शङ्खनिधये नमः । वामे ॐ पद्म-
निधये नमः । पश्चिमे ॐ ध्वजाय नमः । अग्नि-
कोणे ॐ विघ्नाय नमः । नैरृते ॐ आर्य्यायै
नमः । वायुकोणे ॐ दुर्गायै नमः । ईशाने
ॐ सेनान्यै नमः । एवं सर्व्वत्र । तद्बहि-
रिन्द्रादीन् वज्रादींश्च पूजयित्वा धूपदीपौ दत्त्वा
नैवेद्यं दद्यात् ॥ * ॥ यथा । नैवेद्यमानीय
देवतायै मूलेन पाद्यार्घाचमनीयं दत्त्वा फडिति
ममृतोपस्तरणमसीति जलं दत्त्वा वामहस्ते
ग्रासमुद्रां प्रदर्श्य दक्षिणहस्तेन प्राणादिमुद्राः
प्रदर्शयेत् । * । यथा । ॐ प्राणाय स्वाहेति
कनिष्ठानामिके अङ्गुष्ठेन स्पर्शयेत् । ॐ अपा-
नाय स्वाहेति तर्ज्जनीमध्यमे अङ्गुष्ठेन
स्पर्शयेत् ।
ॐ व्यानाय स्वाहेति मध्यमानामे अङ्गुष्ठेन
स्पर्शयेत् ॐ उदानाय स्वाहेति
तर्ज्जनीमध्यमा-
नामा अङ्गुष्ठेन स्पर्शयेत् । ॐ समानाय
स्वाहेति सर्व्वाङ्गुलीरङ्गुष्ठेन स्पर्शयेत् । ततः
अङ्गुष्ठाभ्यामनामिकाग्रं स्पृशन् ब्रौं नमः पराय
अन्तरात्मने अनिरुद्धाय नैवेद्यं कल्पयामीति
नैवेद्यमुद्रां प्रदर्श्य मूलमुच्चार्य्य अमुकदेवतां
तर्पयामीति चतुर्द्धा संतर्प्य अमुकदेवतायै
एतज्जलममृतापिधानमसिइति जलं दत्त्वा
आचमनीयादिकं दद्यात् ॥ * ॥ वैष्णवे तु
नैवेद्यदाने सर्व्वत्रायमेव विधिः । ततः
सामान्य-
पूजापद्धत्युक्तक्रमेण विसर्ज्जनान्तं कर्म्म
समा-
पयेत् ॥ अस्य पुरश्चरणं षोडशलक्षजपः ।
तथा च ।
"विकारलक्षं प्रजपेन्मनुमेनं समाहितः ।
तद्दशांशं सरसिजैर्जुहुयान्मधुराप्लुतैः ॥"
इति तन्त्रसारः ॥
स्मृत्युक्तविष्णुपूजा आह्निकतत्त्वादौ द्रष्टव्या ॥
* ॥
शिवस्याष्टमूर्त्तिपूजानन्तरंतत्रैव
विष्णोरष्टमूर्त्ति-
पूजा यथा, --
"कृता पूजा मया देवि अष्टमूर्त्तेः शिवस्य च ।
यथा हि परमेशानि तच्छृणुष्व वरानने ॥"
इत्युपक्रम्य ।
"कृत्वा पूजां महेशानि कूण्डल्या बाह्यवेष्टने ।
अष्ट विष्णोर्म्महेशानि नामानि शृणु कामिनि ॥
उग्रं विष्णुं महाविष्णुं ज्वलन्तं संप्रतापनम् ।
नृसिंहं भीषणं भीमं मृत्युमृत्युं प्रकीर्त्तितम् ।
एतान् विष्णून् महेशानि यथा संपूज्य तच्छृणु
॥
समुखादिक्रमाद्देवि पूजयेद्विष्णुमव्ययम् ।
तन्मन्त्रं शृणु चार्व्वङ्गि ज्ञानसारं वरानने ॥"
संसारतृणवर्गाणामुद्वेजनकरोहि सः ॥
कृष्णे स्फुरज्जलधरोदरचारुकृष्णे
लोकाधिकारिपुरुषे परमेऽप्रमेये ।
एकोऽपि चारुगुणमात्रकृतप्रणामः
सद्यः श्वपाकमपि शोधयितुं समर्थः ॥
प्रणम्य दण्डवद्भूमौ नमस्कारेण योऽर्च्चयेत् ।
स यां गतिमवाप्नोति न तां क्रतुशतैरपि ॥
दुर्गसंसारकान्ताराकूपारमभिधावताम् ।
एकः कृष्णनमस्कारः अस्ति तीरस्य देशकः
॥
आसीनो वा शयानो वा तिष्ठन् वा यत्र तत्र वा
।
नमो नारायणायेति मन्त्रैकशरणो भवेत् ॥
नारायणेति शब्दोऽस्ति वागस्ति वशवर्त्तिनी ।
तथापि नरके घोरे पतन्तीति किमद्भुतम् ॥
चतुर्मुखायुर्यदि कोटिवक्त्रो
भवेन्नरः कोऽपि विशुद्धचेताः ।
सर्व्वे गुणानामयुतैकदेशं
वदेन्न वा देववरस्य विष्णोः ॥
व्यासाद्या मुनयः सर्व्वे स्तुवन्तो मधुसूदनम् ।
मतिक्षयान्निवर्त्तन्ते न गोविन्दगुणक्षयात् ॥
अवशेनापि यन्नाम्नि कीर्त्तिते सर्व्वपातकैः ।
पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥
सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् ।
बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥
स्वप्नेऽपि नामस्मृतिरादिपुंसः
क्षयं करोत्यक्षयपापराशिम् ।
प्रत्यक्षतः किं पुनरत्र पुंसां
संकीर्त्तिते नाम्नि जनार्द्दनस्य ॥
नमः कृष्णाच्युतानन्त वासुदेवेत्युदीरितम् ।
यैर्भावभावितैर्विप्र न ते यमपुरं ययुः ॥
शमायालं जलं वह्नेस्तमसो भास्करोदयः ।
क्षान्तिः कलेस्त्वघौघस्य नामसंकीर्त्तनं हरेः
॥
क्व नाकपृष्ठगमनं पुनरायाति लक्षणम् ।
क्व जपो वासुदेवेति मुक्तिबीजमनुत्तमम् ॥
गच्छतां दूरमध्वानं तृष्णामूर्च्छितचेतसाम् ।
पाथेयं पुण्डरीकाक्षनामसंकीर्त्तनामृतम् ॥
नम इत्येव यो ब्रूयात्तद्भक्तः श्रद्धयान्वितः ।
तस्याक्षयो भवेल्लोकः श्वपाकस्यापि शौनक ॥
संसारसर्पदष्टस्य निर्व्विचेष्टैकभेषजम् ।
कृष्णेति वैष्णवं मन्त्रं जप्त्वा मुक्तो भवेन्नरः ॥

मन्त्रेण नैवेद्यं संप्रोक्ष्य चक्रमुद्रयाभिरक्ष्य
यमिति मन्त्रण दोषसमूहं संशोष्य रमिति दोषं
संदह्य वामकरसौधधाराभिपूर्णं वमिति मन्त्रेण
अमृतीकृत्य मूलमन्त्रमष्टधा जपेत् । ततो
वमिति धेनुमुद्रयामृतीकृत्य गन्धपुष्पाभ्यां
संपूज्य
कृताञ्जलिः सन् हरिं प्रार्थयेत् । अस्य मुखतो
महः प्रसवेदिति विभाव्य स्वाहान्तं मूलमुच्चार्य्य
नैवेद्ये जलं दद्यात् । ततो मूलमुच्चार्य्य
एतन्नैवेद्यं
अमुकदेवतायै नमः । ततो नैवेद्यं हस्ताभ्या-
मुद्धृत्य ॐ निवेदयामि भवते जुषाणेदं हवि-
र्हर इति नैवेद्यं समर्प्य अमुकदेवतायै एतज्जल-

ॐ उग्राय विष्णवे नमः । ॐ महाविष्णवे
नमः । ॐ ज्वलन्ताय विष्णवे नमः । ॐ
संप्र-
तापनाय विष्णवे नमः । ॐ नृसिंहाय विष्णवे
नमः । ॐ भीषणाय विष्णवे नमः । ॐ
भीमाय
विष्णवे नमः । ॐ मृत्युञ्जयाय विष्णवे नमः ।
"इति पूजां महेशानि कृत्वा हि परमेश्वरि ।
विष्णुज्ञानं मया प्रोक्तं सर्व्वशक्तिसमन्वितम्
॥"
इति लिङ्गार्च्चनतन्त्रे ७ पटलः ॥
तस्य नमस्कारस्तत्फलादिश्चयथा, --
सूत उवाच ।
"मुक्तिहेतुमनाद्यन्तमजमक्षयमव्ययम्।
यो नमेत् सर्व्वलोकस्य नमस्यो जायते नरः
॥
विष्णुमानन्दमद्वैतं विज्ञानं सर्व्वगं प्रभुम् ।
प्रणमामि सदा भक्त्या चेतसा हृदयालयम् ॥
योऽन्तस्तिष्ठन्नशेषस्य पश्यतीशः शुभाशुभम्
।
तं सर्व्वसाक्षिणं विष्णुं नमस्ये परमेश्वरम् ॥
साध्येनापि नमस्कारप्रयुक्तश्चक्रपाणये ।

ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्च्चयन्
।
यदाप्नोति तदाप्नोति कलौ संकीर्त्त्य केशवम्
॥
नूनं तत्कण्ठतालूकमथवाप्युम्रजिह्विका ।
रोगाधारा न सा जिह्वा या न वक्ति हरे-
र्गुणान् ॥
कुरुक्षेत्रेण किं तस्य काश्या वा शान्तिकेन वा
।
जिह्वाग्रे वर्त्तते यस्य हरिरित्यक्षरद्वयम् ॥
विज्ञातदुष्कृतसहस्रसमावृतोऽपि
श्रेयः परन्तु परिशुद्धिमभीप्समानः ।
स्वप्नान्तरेऽपि किल योनिभयं न पश्ये-
न्नारायणस्तुतिकथापरमोमनुष्यः ॥"
इत्यादि गारुडे नारायणभक्तिनमस्कारोनाम
२३२ अध्यायः ॥ * ॥

सूत उवाच ।
“असारभूते संसारे सारमेकं विनिर्द्दिशेत् ।
असाराशेषलोकस्य सारमाराधनं हरेः ॥
दद्यात् पुरुषसूक्तेन यः पुष्पाण्यप एव वा ।
अर्च्चितं स्यात्तदा चैव तेन सर्व्वं चराचरम् ॥
भातृवत् परिरक्षन्तं सृष्टिसंहारकारकम् ।
यो न पूजयते विष्णुं तं विद्याद्ब्रह्मघातकम् ॥
यतः प्रवृत्तिर्भूतानां येन सर्व्वमिदं ततम् ।
स्वकर्म्मणा तमभ्यर्च्च्य सिद्धिं विन्दन्ति मानवाः ॥
नरके पच्यते यस्तु यमेन परिभाषितः ।
किं त्वया नार्च्चितो देवः केशवः केशिनाशनः ॥
उदकेनाप्यभावेन द्रव्याणामर्च्चितः प्रभुः ।
यो ददाति स्वकं लोकं स त्वया किं न चार्च्चितः ॥
न तत् करोति सा माता न पिता नापि
बान्धवाः ।
यत् करोति हृषीकेशः सन्तुष्टः श्रद्धयार्च्चितः ॥
वर्णाश्रमाचारवता पुरुषेण परः पुमान् ।
विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः ॥
न दानैर्व्विविधैर्दत्तैर्न पुष्पैर्नानुलेपनैः ।
तोषमेति महात्मासौ यथा भक्त्या जनार्द्दनः ॥
सम्पदैश्वर्य्यमाहात्म्यज्ञानसन्ततिकर्म्मणाम् ।
विमुक्तेश्चैकतालभ्यं मूलमाराधनं हरेः ॥
प्रणामैस्तुष्यते विष्णुरेतद्बै परमं धनम् ।
अन्यथा वा विशेषेण कस्तमर्च्चितुमर्हति ॥”
इति गारुडे पूजास्तुतिः २३३ अध्यायः ॥ * ॥
सूत उवाच ।
“आलोक्य बहुशास्त्राणि विचार्य्य च पुनः
पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥
किं तस्य दानैः किं तीर्थैः किं तपोभिः किम-
ध्वरैः ।
यो नित्यं ध्यायते देवं नारायणमनन्यधीः ॥
षष्टितीथसहस्राणि षष्टितीर्थशतानि च ।
नारायणप्रणामस्य कलां नार्हन्ति षोढशीम् ॥
प्रायश्चित्तान्यशेषाणि तपःकर्म्मादिकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥
कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते ।
प्रायश्चित्तन्तु तस्यैकं हरिसंस्मरणं परम् ॥
मुहूर्त्तमपि यो ध्यायेन्नारायणमतन्द्रितः ।
सोऽपि तद्गतिमाप्नोति किं पुनस्तत्परायणः ॥
जाग्रत्स्वप्नसुषुप्तेषु योगस्तस्य च योगिनः ।
या काचिन्मनसो वृत्तिः सा भवत्यच्युताश्रयात् ॥
तदप्यप्रार्थितं ध्यातो ददाति मधुसूदनः ॥
प्रमादात् कुर्व्वतां कर्म्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः
॥
ध्यानेन सदृशं नास्ति शोधनं पापकर्म्मणाम्
।
आगामिदेहहेतूनां दाहकोऽप्येष पावकः ॥
विनिष्पन्नसमाधिस्तु मुक्तिमत्रैव जन्मनि ।
प्राप्नोति योगी योगाग्निदग्धकर्म्मचयोऽचिरात्
॥
यथाग्निरुद्धतशिखः कक्षं दहति सानिलः ।
तथा चित्तस्थितो विष्णुर्योगिनां
सर्व्वकिल्विषम् ॥
यथाग्निदाहात् कनकमपदोषं प्रजायते ।
संश्लिष्टं वासुदेवेन मनुष्याणां तथा मनः ॥
गङ्गास्नानसहस्रेषु पुष्करस्नानकोटिषु ।
यत् पापं विलयं याति स्मृते नश्यति तद्धरौ ॥
प्राणायामसहस्रैस्तु यत् पापं नश्यति ध्रुवम् ।
क्षणमात्रेण तत् पापं हरेर्ध्यानात् प्रणश्यति ॥
एकस्मिन्नप्यतिक्रान्ते मुहूर्त्ते ध्यानवर्ज्जिते ।
दस्युभिर्म्मथितेनेव युक्तमाक्रन्दितं भृशम् ॥
कलिप्रभावो दुष्टोक्तिः पाषण्डानां तथोक्तयः
।
न क्रमेरन् मनस्तस्य यस्य चेतसि केशवः ॥
सा तिथिस्तदहोरात्रं स योगः स च चन्द्रमाः
।
लग्नं तदेव विख्यातं यत्र प्रस्मर्य्यते हरिः ॥
सा हानिस्तन्महच्छिद्रं सा चान्धजडमूकता
।
यन्मुहूर्त्तं क्षणं वापि वासुदेवो न चिन्त्यते ॥
कलिः कृतयुगन्तस्य कलिस्तस्य कृते युगे ।
हृदये यस्य गोविन्दो यस्य चेतसि नाच्युतः
॥
यस्याग्रतस्तथा पृष्ठे गच्छतस्तिष्ठतोऽपि वा ।
गोविन्दे नियतं चित्तं कृतकृत्यः सदैव सः ॥
वासुदेवे मनो यस्य जपहोमार्च्चनादिषु ।
तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम् ॥
असंत्यज्य च गार्हस्थमतप्त्वा च महत्तपः ।
छिनत्ति वैष्णवीं मायां केशवार्पितमानसः ॥
क्षमां कुर्व्वन्ति क्रुद्धेषु दयां मूर्खेषु मानवाः ।
मुदञ्च धर्म्मशीलेषु गोविन्दे हृदयस्थिते ॥
ध्यायेन्नारायणं देवं स्नानादिषु च कर्म्मसु ।
श्वपाकेष्वपि भुञ्जानः पापं नैवात्र लिप्यते
॥
यदा चित्तं समासक्तं जन्तोर्व्विषयगोचरे ।
यदि नारायणेऽप्येवं को न मुच्येत
बन्धनात् ॥
प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् ।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्
॥
तत्रानया धारणया योगिनो यान्ति मे
लयम् ।
संसारकर्म्मणोऽप्येते यान्ति निर्ब्बीजतां
द्विजाः ॥”
इति गारुडे ध्यानस्तुतिः २३४ अध्यायः
॥
तस्य माहात्म्यं यथा, --
सूत उवाच ।
“विष्णुचित्तो भवेद्भक्तस्तं यजेत नमेत्
सदा ।
तमेवैष्यति मुक्तैवमात्मानं हरितत्परः ॥
तद्धानं यत्र गोविन्दः सा कथा यत्र केशवः
।
तत् कर्म्म यत्तदर्थाय किमन्यैर्ब्बहुभाषितैः
॥
सा जिह्वा या हरिं स्तौति तच्चित्तं
यत्तदर्पितम् ।
तावेव केवलौ श्लाघ्यौ यौ तत्पूजाकरौ
करौ ॥
प्रणाममीशस्य शिरःफलं विदु-
स्तदर्च्चनं पाणिफलं दिवौकसः ।
मनःफलं तद्गुणकर्म्मचिन्तनं
वाचस्तु गोविन्दगुणस्तवः फलम् ॥
मेरुमन्दरमात्रोऽपि राशिः पापस्य कर्म्मणः
।
केशवं वैद्यमासाद्य दुर्व्याधिरिव नश्यति ॥
यत्किञ्चित् कुरुते कर्म्म पुरुषः साध्वसाधु
वा ।
सर्व्वं नारायणे न्यस्य कुर्व्वन्नपि न
लिप्यते ॥
तृणादिचतुरास्यान्तं भूतग्रामं चतुर्व्विधम्
।
चराचरं जगत् सर्व्वं प्रसुप्तं मायया तव ॥

उत्तिष्ठन्निपतत्विष्णुं व्रजन् वै विवसंस्तथा ।
भुञ्जन् स्वपंश्च जाग्रच्च गोविन्दं माधवं स्मरेत् ॥
स्वे स्वे कर्म्मण्यभिरतः कुर्य्याच्चित्तं जनार्द्दने ।
एषा शास्त्रानुसारोक्तिः किमन्यैर्बहुभाषितैः ॥
ध्यानमेव परो धर्म्मो ध्यानमेव परं तपः ।
ध्यानमेव परं शौचं तस्मात् ध्यानपरो भवेत् ॥
नास्ति विष्णोः परं ध्येयं तपो नानशनात्
परम् ।
तस्मात् प्रधानमन्त्रोक्तं वासुदेवस्य चिन्तनम् ॥
यद्दुर्लभं पदं प्राार्थ्यं मनसो यन्न गोचरम् ।

प्रायश्चित्तं हि सर्व्वस्य दुष्कृतस्येति विश्रुतम्
॥
लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
येषामिन्दीवरश्यामो हृदयस्थो जनार्द्दनः ॥
कीटपक्षिगणानाञ्च हरौ संन्यस्तचेतसाम् ।
ऊद्ध्र्वमेव गतिं मन्ये किं पुनर्ज्ञानिनां नृणाम्
॥
वासुदेवतरुच्छाया नातिशीता न घर्म्मदा ।
नरकद्वारशमनी सा किमर्थं न सेव्यते ॥
न च दुर्व्वाससः शापो वज्रञ्चापि शचीपतेः ।
हन्तुं समर्थो हि सखे हृद्गते मधुसूदने ।
वदतस्तिष्ठतोऽन्यद्वा स्वेच्छया कर्म्म कुर्व्वतः
।
नापयाति यदा चिन्ता सिद्धां मन्ये च
धारणाम् ॥
ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् कनककुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥
किमत्र बहुनोक्तेन युष्माकमधुना हरिम् ।
स्मरताहर्निशं विष्णुमशेषदुरितापहम् ॥
न हि ध्यानेन सदृशं पवित्रमिह विद्यते ।

यस्मिन्न्यस्तमतिर्न याति नरकं स्वर्गोऽपि
यच्चि-
न्तने
विघ्नो यत्र निवेशितात्ममनसो ब्राह्मोऽपि
लोकोऽल्पकः ।
मुक्तिं चेतसि संस्थितो जडधियां पुंसां
ददा-
त्यव्ययः
किञ्चित्रं दुरितं प्रयाति विलयं तत्राच्युते
कीर्त्तिते ॥
महता पुण्यपण्येन येन क्रोतोऽखिलं ध्रुवम्
।
तस्य विष्णोः प्रसादेन इह कश्चित्
प्रबुद्धति ॥
अग्निकार्य्यं जपं स्नानं विष्णोर्ध्यानञ्च
पूजनम् ।
गन्तुं दुःखोदधेः पारं कुर्य्युर्यत्र भवन्ति ते
॥
राष्ट्रस्य शरणं राजा पितरौ बालकस्य च ।
धर्म्मश्च सर्व्वमर्त्यानां सर्व्वस्य शरणं
हरिः ॥
ये नमन्ति जगद्योनिं वासुदेवं सनातनम् ।
न तेभ्यो विद्यते तीर्थमधिकं मुनिसत्तम ॥
अनर्घरत्नपूजान्तु कुर्य्यात् स्वाध्यायमेव
च ।
तं समुद्दिश्य गोविन्दं ध्यानं
नित्यमतन्द्रितः ॥
शूद्रं वा भगवद्भक्तं निषादं श्वपचं तथा ।
द्विजजातिसमं मन्ये न याति नरकं नरः ॥
आदरेण यथा स्तौति धनवन्तं धनेच्छया
।
तथा बुद्धिश्च कर्त्तारं को न मुच्येत
बन्धनात् ॥
यथा जातबलो वह्निर्दहत्यार्द्रमपीन्धनम् ।
तथाविधः स्मृतो विष्णुर्योगिनां
सर्व्वकिल्विषम् ॥
प्रदीप्तं पर्व्वतं यद्वत् नाश्रयन्ति मृगादयः ।

तद्वत् पापानि सर्व्वाणि योगाभ्यासरतं नरम् ॥
यस्य यावांश्च विश्वासस्तस्य सिद्धिश्च तावती ।
एतावानिति कृष्णस्य प्रभावः परिमीयते ॥
विद्वेषादपि गोविन्दं दमघोषात्मजः स्मरन् ।
शिशुपालो गतस्तत्त्वं किं पुनस्तत्परायणः ॥
अयं देवो मुनिर्वन्द्य एष ब्रह्मा बृहस्पतिः ।
इत्याख्या जायते तावद्यावन्नार्च्च्यते हरिम् ॥”
इति गारुडे विष्णुमाहात्म्यं २३५ अध्यायः ॥
तस्य पादोदकपानादिफलम्।
“हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः ।
पादोदकञ्च निर्म्माल्यं भस्तके यस्य सोऽच्युतः ॥
नैवेद्यमन्नं तुलसीविमिश्रं
विशेषतः पादजलं पिबेच्च ।
योऽश्नाति नित्यं पुरतो मुरारेः
प्राप्नोति सुप्रेमयुतां स भक्तिम् ॥
हत्यां हन्ति यदङ्घ्रिसङ्गतुलसी स्तेयञ्च पादोदकं
नैवेद्यं बहुमद्यपानदुरितं गुर्व्वङ्गनासङ्गमम् ॥”
इति पाद्मोत्तरखण्डे १० अध्यायः ॥ * ॥
तस्य नाम्नां व्युत्पत्तयो यथा, --
पृथिव्युवाच ।
“जातेषु शेषो भवसि तस्माच्छेषोऽसि कीर्त्तितः ॥
व्यसनोत्पत्तियुक्तेषु ब्रह्मेन्द्रवरुणादिषु ।
यस्मान्न च्यवसे स्थानात्तस्मात् कीर्त्त्यसेऽच्युतः ॥
ब्रह्माणमिन्द्रं रुद्रञ्च यमं वरुणमेव च ।
निगृह्य हरसे यस्मात्तस्माद्धरिरिहोच्यसे॥
सम्मानयसि भूतानि वपुषा यशसा श्रिया ।
चिरेण वपुषा देव तस्माच्चासि सनातनः ॥
यस्माद्ब्रह्मादयो देवा मुनयश्चोग्रतेजसः ।
न तेऽन्तं त्वधिगच्छन्ति तेनानन्तस्त्वमुच्यसे ॥
न क्षीयसे न क्षरसे कल्पकोटिशतैरपि ।
तस्मात्त्वमक्षरत्वाच्च विष्णुर्वेति प्रकीर्त्त्यसे ॥
विष्टब्धञ्च त्वया सर्व्वं जगत् स्थावरजङ्गमम् ।
जगद्विष्टम्भनाच्चैव विष्णुर्वेति प्रकीर्त्यसे ॥
विष्टभ्य तिष्ठसे नित्यं त्रैलोक्यं सचराचरम् ॥
सयक्षगन्धर्व्वनरं समहद्भूतपन्नगम् ।
व्याप्य त्वामेव विशते त्रैलोक्यं सचराचरम् ।
तस्माद्विष्णुरिति प्रोक्तः स्वयमेव स्वयम्भवा ॥
नारा इत्युच्यते आपः ऋषिभिस्तत्त्वदर्शिभिः ।
अयनं तस्य तत्पूर्ब्बं तेन नारायणः स्मृतः ॥
युगे युगे प्रनष्टां गां विष्णो विन्दसि तत्त्वतः ।
गोविन्देति ततो नाम्ना प्रोच्यसे ऋषिभिस्तथा ॥
विष्णुलोकगमनकारणं यथा, --
“कर्म्मभोगी सकामः स्यान्निष्कामो निरुपद्रवः ।
स याति देहं त्यक्त्वा च पदं विष्णोर्निरामयम् ।
पुनरागमनं नास्ति तेषां निष्कामिणां सति ॥
ये सेवन्ते च द्विभुजं कृष्णमात्मानमेव च ।
गोलोकं ते नरा यान्ति दिव्यरूपविधारिणः ॥
ये च नारायणं भक्त्या सेवन्ते च चतुर्भुजम् ।
वकुण्ठं यान्ति ते सर्व्वे दिव्यरूपविधारिणः ॥
सकामिनो वैष्णवाश्च गत्वा वैकुण्ठमेव च ।
भारतं पुनरायान्ति तेषां जन्म द्विजातिषु ॥
कालेन ते च निष्कामा भवन्त्येव क्रमेण च ।
भक्तिञ्च निर्म्मलां बुद्धिं तेभ्यो दास्यति निश्चितम् ॥
हरिभक्ताश्च निष्कामाः स्वधर्म्मरहिता द्विजाः ।
तेऽपि यान्ति हरेर्लोकं क्रमाद्भक्तिबलादहो ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २४ अध्यायः ॥

**विष्णुऋक्षं**, क्ली, (विष्णवधिदेवताकं ऋक्षम् ।)
श्रवणानक्षत्रम् । यथा, --
“उपोष्य द्वादशीं पुण्यां विष्णुऋक्षेण संयुताम् ।
एकादश्युद्भवं पुण्यं नरः प्राप्नोत्यसंशयः ॥”
इति तिथ्यादितत्त्वम् ॥

**विष्णुकन्दः**, पुं, (विष्णुप्रियः कन्दः ।) मूलविशेषः ।
तत्पर्य्यायः । विष्णुगुप्तः २ सुपुटः ३ बहुसंपुटः ४ जलवासः ५ बृहत्कन्दः ६ दीर्घपत्रः ७ हरि-
कुलानां शतमागामि समतोतं तथा शतम् ।
कारयेद्भगवद्धाम नयत्यच्युतलोकताम् ॥
सप्तजन्मकृतं पापं स्वल्पं वा यदि वा बहु ।
विष्णोरालयविन्यासप्रारम्भादेव नश्यति ॥
सप्तलोकमयो विष्णुर्यस्तस्य कुरुते गृहम् ।
प्रतिष्ठां समवाप्नोति स नरः साप्तलौकिकीम् ॥
प्रशस्तदेशे भूभागे प्रशस्तं भवनं हरेः ।
कारयत्यखिलान् लोकान् स नरः प्रतिपद्यते ॥
इष्टकानाञ्च विन्यासो यावद्वर्षाणि तिष्ठति ।
तावद्वर्षसहस्राणि तत्कर्त्ता दिवि संस्थितः ॥
चिकीर्षोरपि कृष्णस्य मन्दिरं पुण्यकारिणः ।
नरस्य क्षयमायाति पापं जन्मशतोद्भवम् ॥
ये ध्यायन्ति सदा वृत्त्या करिष्यामि हरेर्गृहम् ।
तेषां विलीयते पापं पूर्व्वजन्मशतोद्भवम् ॥
येऽनुमोदन्ति कृष्णस्य क्रियमाणं हरेर्गृहम् ।
तेऽपि पापविनिर्म्मुक्ता वैष्णवं लोकमाप्नुयुः ॥
कनिष्ठं मध्यमं श्रेष्ठं कारयित्वा हरेर्गृहम् ।
स्वर्गञ्च वैष्णवं लोकं मोक्षञ्च लभते क्रमात् ॥
समतीतं भविष्यञ्च कुलानामयुतं नरः ।
विष्णुलोकं नयत्याशु कारयित्वा हरेर्गृहम् ॥
दुष्प्राप्यं यत् फलं विप्रा वाजिमेधादिभिर्म्मखैः ।
प्राप्यते तत् सुखेनैव निवेश्य भवनं हरेः ॥
ये हताभिमुखाः शूरा गोविप्रार्थे रणाजिरे ।
स तत्फलमवाप्नोति कारयित्वा हरेर्गृहम् ॥
पक्वेष्टरचितं रम्यं पञ्चप्रासादसंयुतम् ।
कारयित्वा हरेर्धाम धूतपापो व्रजेद्दिवम् ॥
लक्षेणार्द्धसहस्रेण शतेनार्द्धेन वा हरेः ।
तुल्यं फलं समाख्यातं तदीश्वरदरिद्रयोः ॥
पतितं पतमानन्तु तथार्द्धपतितं तथा ।
समुद्धृत्य हरेर्धाम द्विगुणं फलमाप्नुयात् ॥”
इति वह्निपुराणे वैष्णवक्रियायोगे यमानुशासन-नामाध्यायः ॥

**विष्णुचक्रं**, क्ली, (विष्णोश्चक्रमिव ।) हस्तस्थरेखा-मयचक्रविशेषः । यथा, --
“विष्णुचक्रं करे चिह्नं सर्व्वेषां चक्रवर्त्तिनाम् ।
भवत्यव्याहतो यस्य प्रभावस्त्रिदशैरपि ॥”
इति विष्णुपुराणे १ अंशे १३ अध्यायः ॥
रेखान्तरानाकुलं रेखामयचक्रम् । इति तट्टीका ॥
सुदर्शनचक्रञ्च ॥

**विष्णुतैलं**, क्ली, (विष्णुनामकं तैलम् ।) अश्विनी-

हृषीकाणीन्द्रियाण्याहुस्तत्त्वज्ञानविशारदाः।
ईशित्वे वर्त्तसे ह्येषां हृषीकेशस्तथोच्यसे ॥
वसन्ति त्वयि भूतानि ब्रह्मादीनि युगक्षये।
त्वं वा वससि भूतेषु वासुदेवस्तदुच्यसे ॥
सङ्कर्षयसि भूतानि कल्पे कल्पे पुनः पुनः।
ततः सङ्कर्षणः प्रोक्तस्तत्त्वज्ञानविशारदैः ॥
प्रत्यूहेन न तिष्ठन्ति सदेवासुरराक्षसाः।
प्रतिद्युः सर्व्वधर्म्माणां प्रद्युम्नस्तेन चोच्यते ॥
निरोधो विद्यते यस्मान्न ते भूतेषु कश्चन।
अनिरुद्धस्ततः प्रोक्तः पूर्ब्बमेव महर्षिभिः ॥"
इति मात्स्ये २२२ अध्यायः ॥ * ॥

प्रियः ८। अस्य गुणाः। मधुरत्वम्। शिशिर-
त्वम्। पित्तदाहशोफहरत्वम्। रुच्यत्वम्।
सन्तर्पणकारित्वञ्च। इति राजनिर्घण्टः ॥

**विष्णुक्रान्ता**, स्त्री, अपराजिता। इत्यमरः ॥ अपरा-
जिताया अन्या क्षुपजातिः। तत्पर्य्यायः।
हरिक्रान्ता २ नीलपुष्पा ३ अपराजिता ४
नीलक्रान्ता ५ सुनीला ६ विक्रान्ता ७
छर्द्दिका ८। अस्या गुणाः। कटुत्वम्। तिक्त-
त्वम्। कफवातामयविषदोषनाशित्वम्। मेधा-
कारित्वम्। पावनित्वम्। शुभदत्वञ्च। इति
राजनिर्घण्टः ॥

**विष्णुगुप्तः**, पुं, (विष्णुना गुप्तः।) वात्स्यायनमुनिः।
यथा, --
"विष्णुगुप्तस्तु कौण्डिन्यश्चाणक्यो द्रोमिणोऽङ्गुलः।
वात्स्यायनो मन्दनागः पक्षिलस्वामिनावपि ॥"
इति त्रिकाण्डशेषः ॥
विष्णुकन्दः। इति राजनिर्घण्टः ॥

**विष्णुगुप्तकं**, क्ली, चाणक्यमूलकम्। इति राज-
निर्घण्टः ॥

**विष्णुगृहं**, क्ली, (विष्णवे प्रतिष्ठितं गृहम्।)
विष्णुमन्दिरम्। स्तम्बपुरम्। इति हेमचन्द्रः ॥
विष्णुगृहकरणफलं यथा, --
"अष्टेष्टकासमायुक्तं यः कुर्य्याद्वैष्णवं गृहम्।
न तस्य फलसम्पत्तिर्व्वक्तुं शक्येत केनचित् ॥"
इति हरिभक्तिविलासे। २०। १४ ॥
"यैस्तु देवालयं विष्णोः शुभं दारुमयं कृतम्।
कारयेन्मृण्मयं वापि शृणु तस्य फलं मुने ॥
अहन्यहनि योगेन यजतो यन्महाफलम्।

कुमारकृतपक्वतैलविशेषः। यथा, --
"स्नानीयं विष्णुतैलञ्च स्वर्व्वैद्येन विनिर्म्मितम् ॥"
इति ब्रह्मवैवर्त्ते गणपतिखण्डे १३ अध्यायः ॥ * ॥
अथ स्वल्पविष्णुतैलम्।
"शालपर्णीपृश्निपर्णीवलागोरक्षतण्डुलाः।
एरण्डस्य च मूलानि बृहत्योः पूतिकस्य च ॥
शतावरी सहचरं पचेदेतैः पलोन्मितैः।
तैलप्रस्थं पयो दत्त्वा गव्यं वाजं चतुर्गुणम् ॥
अस्य तैलस्य पक्वस्य शृणु वीर्य्यमतः परम्।
वातार्त्ता नरनागाश्च पीत्वा दृढतनुत्वचः ॥
हृत्पार्श्वशूले वातासे गलगण्डेऽर्द्दिते क्षये।
शर्कराश्मरिपाण्डुत्वकामलार्द्धावभेदके ॥

क्षीणेन्द्रियेऽन्त्रवृद्धौ च जराजर्ज्जरिते हितम् ।
स्त्रीणाम्श्वतरीणाञ्च गर्भस्थितिकरं परम् ॥
एतदङ्गवरं तैलं विष्णुना परिकीर्त्तितम् ॥”
तण्डुलः गोरक्षतण्डुलः । बृहत्योर्बृहतीकण्ट-
कार्य्योः । पूतिको नाटाकरञ्जः । सहचरो
झिण्टी । अत्र क्वाथान्तराभावात् क्षीरस्य
चतुर्गुणं जलं कश्चिद्ददाति ।
“स्वरसक्षीरमाङ्गल्यैः पाको यत्रेरितः क्वचित् ।
जलं चतुर्गुणं तत्र वीर्य्याधानार्थमारपेत् ॥”
इति परिभाषाबलात् ॥
क्वचिदिति पाठात् क्वाथान्तररहिते केवल-
क्षीरादिसहिततैलादिपाके ज्ञातव्यं न तु सर्व्वत्र ।
“एलाचन्दनकुङ्कुमागुरुमुराकक्कोलमांसीशटी-
श्रीवासश्छदग्रन्थिपर्णशशभृत्क्षौणीध्वजोशी-
रकम् ।
कस्तूरिनखपूतिशैलजलमुद्ग्रेथीलवङ्गादिकं
गन्धद्रव्यमिदं प्रदेयमखिलं श्रीविष्णुतैलादिषु ॥”
अथ बृहद्विष्णुतैलम् ।
“जलधरमश्वगन्धाजीवकर्षभकौ शटी ।
काकोली क्षीरकालोली जीवन्ती मधुयष्टिका ॥
मधूरिका देवदारु पद्मकाष्ठञ्च सैन्धवम् ।
मांसी चैला त्वचं कुष्ठं रक्तचन्दनशैलजम् ॥
मञ्जिष्ठा मृगनाभिश्च श्वेतचन्दनकुङ्कुमम् ।
पर्णी कुन्दुरु खोटिश्च ग्रन्थिकञ्च नखी तथा ॥
एतेषां पलिकैर्भगैस्तैलस्यापि तथाढकम् ।
शतावरीरससमं दुग्धञ्चापि समं भवेत् ॥
विष्णुतैलवरं श्रेष्ठं सर्व्ववातविकारनुत् ।
ऊर्द्ध्ववाते ह्यधोवाते अङ्गविग्रह एव च ॥
शिरोमध्यगता ये च मन्या स्तम्भे गलग्रहे ।
यस्य शुष्यति चैकाङ्गं गतिर्यस्य च विह्वला ॥
ये वातप्रभवा रोगा ये च पित्तसमुद्भवाः ।
सर्व्वांस्तान्नाशयत्याशु सूर्य्यस्तम इवोदितः ॥”
इति भैषज्यरत्नावली ॥

**विष्णुदैवतं**, त्रि, (विष्णुर्द्दैवतं दैवत्यं वा यस्य ।)
विष्णवधिष्ठातृद्देवताकम् । यथा, --
“व्रतोपकरणं सर्व्वं कथितं सर्व्वदैवतम् ।
गृहन्तु सर्व्वदैवत्यं यदनुक्तं द्विजोत्तमाः ।
तज्ज्ञेयं विष्णुदैवत्यं सर्व्वं वा विष्णुदैवतम् ॥”

**विष्णुदैवत्यं**, त्रि, (विष्णुर्द्दैवतं दैवत्यं वा यस्य ।)
विष्णवधिष्ठातृद्देवताकम् । यथा, --
“व्रतोपकरणं सर्व्वं कथितं सर्व्वदैवतम् ।
विष्णुधर्म्मादिशास्त्राणि शिवधर्म्माश्च भारत
॥
कार्ष्ण्यञ्च पञ्चमो वेदो यन्महाभारतं स्मृतम् ।
सौराश्च धर्म्मा राजेन्द्र मानवोक्ता महीपते ।
जयेति नाम एतेषां प्रवदन्ति मनीषिणः ॥’
जयत्यनेन संसारमिति जयस्तत्तद्ग्रन्थः ॥”
इति
तिथादितत्त्वम् ॥ * ॥ विद्याविशेषः । यथा, -
-
“अवाप जप्त्वा चेन्द्रत्वं
विष्णुधर्म्माख्यविद्यया ।
सर्व्वान् शत्रून् विनिर्जित्य ताञ्च वक्ष्ये
महेश्वर ॥
पादयोर्जानुनोरूर्व्वोरुदरे हृद्यथोरसि ।
मुखे शिरस्यानुपूर्ब्बादोङ्कारादि विनिर्द्दिशेत् ॥
ॐ नमो नारायणायेति विपर्य्ययमथापि वा ।
करन्यासं ततः कुर्य्यात् द्वादशाक्षरविद्यया ॥
प्रणवादियकारान्तमङ्गुल्यङ्गुष्ठपर्व्वसु ।
न्यस्येत् हृदय ॐकारं नकारं मम मूर्द्धनि ॥
मोकारन्तु भ्रुवोर्म्मध्ये शिखानेत्रादिमूर्द्धतः ।
ॐ विष्णवे नम इति इमं मन्त्रमुदाहरेत् ॥
आत्मानं परमं ध्यायेच्छेषषट्शक्तिभिर्युतम् ।
मम रक्षां ततः कुर्य्यान्मत्स्यमूर्त्तिर्जलेऽवतु ॥
त्रिविक्रमस्तथाकाशे स्थले रक्षतु वामनः ।
अटव्यां नरसिंहस्तु रामो रक्षतु पर्व्वते ॥
भूमौ रक्षतु वाराहो हंसो नारायणोऽवतु ।
कर्म्मबन्धाच्च काम्पिल्यदत्तो योगात्तु रक्षतु
॥
हयग्रीवो देवतायाः कुमारो मकरध्वजात् ।
नारदोऽन्यार्च्चनात् पायात् कूर्म्मो वै नैरृतेः
सदा ॥
धन्वन्तरिरपथ्याच्च नागः क्रोधवशात् किल
।
यज्ञलोकाद्बलः कालाद्व्यासो ज्ञानाच्च
रक्षतु ॥
बुद्धः पाषण्डसंघातात् कल्किरव्यात् कलेः
समम् ।
पायान्मध्यं दिने विष्णुः प्रातर्नारायणोऽवतु
॥
मधुहा चापराह्णे च सायं रक्षतु माधवः ।
हृषीकेशः प्रदोषेऽव्यात्
प्रत्यूषेऽव्याज्जनार्द्दनः ॥
हलमादाय सौनन्दं नमस्ते पुरुषोत्तम ।
प्रतीच्यां रक्ष मां विष्णो भवन्तं शरणागतम्
॥
पाञ्चजन्यं तथा शङ्खं शार्ङ्गञ्चाप्यथ पङ्कजम्
।
प्रगृह्य रक्ष मां विष्णो आग्नेय्यां यज्ञशूकर ॥
चर्म्म सूर्य्यशतं गृह्य खड्गं चन्द्रसमं तथा ।
नैरृत्यां माञ्च रक्षस्व दिव्यमूर्त्ते नृकेशरिन् ॥
वैजयन्तीं प्रगृह्य त्वं श्रीवत्स्यकण्ठभूषण ।
वायव्यां रक्ष मां देव अश्वशीर्ष नमोऽस्तु ते
॥
वैनतेयं समारुह्य अन्तरीक्षे जनार्द्दन ।
मां त्वं रक्षाजित सदा नमस्तेऽस्त्वपराजित
॥
विशालाक्षं समारुह्य रक्ष मां त्वं रसातले ।
अकूपार नमस्तुभ्यं महामीन नमोऽस्तु ते ॥
करशीर्षाङ्घ्रिसर्व्वेषु तथाष्टभुजपञ्जरम् ।
कृत्वा त्वं रक्ष मां देव नमस्ते पुरुषोत्तम ॥
एतदुक्तं भगवता वैष्णवं पञ्जरं महत् ।
पुरा रक्षार्थमीशेन कात्यायन्या द्विजोत्तम ॥
यदा सा नाशयामास दानवं महिषासुरम् ।
चामरं रक्तबीजञ्च तथान्यान् सुरकण्टकान्
॥”
इति वामने १७ अध्यायः ॥

**विष्णुपदं**, क्ली, (विष्णोः पदम् ।) आकाशम् ।
इत्यमरः ॥ (यथा, रघुवंशे । १६ । २८ ।
“वसुन्धराविष्णु पदं द्वितीय-
मध्यारुरोहेव रजश्छलेन ॥”)
क्षीरोदः । इति मेदिनी ॥ पद्मम् । इति हेम-
चन्द्रः ॥ (तीर्थविशेषः । यथा, महाभारते ।
७ । ८३ । ९५ ।
“तत्र विष्णुपदे स्नात्वा अर्च्चयित्वा च
वामनम् ।
सर्व्वपापविशुद्धात्मा विष्णुलोकं स गच्छति
॥”
कैलासपर्व्वतस्य स्थानविशेषः । यथा,
महा-
भारते । ५ । १११ । २२ ।
“अत्र विष्णुपदं नाम क्रमता विष्णुना कृतम्
॥”

गृहन्तु सर्व्वदैवत्यं यदनुक्तं द्बिजोत्तमाः ।
तज्ज्ञेयं विष्णुदैवत्यं सर्व्वं वा विष्णुदैवतम् ॥”
इति शुद्धितत्त्वे विधष्णुर्म्मोत्तरवचनम् ॥
क्ली, श्रवणानक्षत्रम् । इति ज्योतिषम् ॥

**विष्णुदैवत्या**, स्त्री, (विष्णुर्द्दैवत्यमस्याः ।) एका-

दशीतिथिः । द्बादशीतिथिः । यथा, --
“एकादशी द्बादशी च प्रोक्ता श्रीचक्रपाणिनः ।
एयोदशी त्वनङ्गस्य शिवस्योक्ता चतुर्द्दशी ॥”
इति स्मृतिः ॥
“एकादशीमुपोष्यैव द्बादशीं समुपोषयेत् ।
न चात्र विधिलोपः स्यादुभयोर्द्देवता हरिः ॥”
इति तिथ्यादितत्त्वम् ॥

**विष्णुधर्म्मः**, पुं, (विष्णुप्रधानो धर्म्मोऽस्मिन् ।) शास्त्र-

विशेषः । यथा । “ब्रह्मचारिकाण्डे भविष्य-
पुराणम् ।
‘अष्टादश पुराणानि रामस्य चरितं तथा ।
श्रीधरोऽव्यादर्द्धरात्रे पद्मनाभो निशान्तके ।
चक्रकौमोदकीबाणाः घ्नन्तु शत्रूंश्च
राक्षसान् ॥
शङ्खशब्दश्च शत्रुभ्यः शार्ङ्गो वै गरुडस्तथा ।
बुद्धीन्द्रियमनःप्राणान् पान्तु पार्षदभूषणाः ॥
शेषैः सर्व्वैर्म्मुदापन्नः सदा सर्व्वत्र पान्तु माम्
।
विदिक्षु दिक्षु च सदा नरसिंहश्च रक्षतु ॥
एतद्धारयमाणश्च यं यं पश्यति चक्षुषा ।
स वशी स्याद्बिपाप्मा च रोगान्मुक्तो दिवं
व्रजेत् ॥”
इति गारुडे २०१ अध्यायः ॥

**विष्णुधर्म्मोत्तरं**, क्ली, संहिताविशेषः । तत्र प्रश्व-

कर्त्ता जनमेजयसुतः । वक्तारः शौनकाद्या
ऋषयः । तत्र १०० वृत्तान्तास्तद्ग्रन्थे
द्रष्टव्याः ॥

**विष्णुपञ्जरं**, क्ली, (विष्णुरेव पञ्जरमिव यस्मिन् ।

तद्धारयितुर्निर्भयरक्षणकारित्वादस्य
तथात्वम् ।)
विष्णु कंवचविशेषः । यथा, --
“प्रवक्ष्याम्यधुना त्वेतद्वैष्णवं पञ्जरं शुभम् ।
नमो नमस्ते गोविन्द चक्रं गृह्य सुदर्शनम् ॥
प्राच्यां रक्षस्व मां विष्णो त्वामहं शरणं गतः
।
गदां कौमोदकीं गृह्य पद्मनाभामितद्युते ॥
याम्यां रक्षस्व मां विष्णो त्वामहं शरणं गतः
।
पर्व्वतविशेषः । यथा, हरिवंशे । ३१ । ४३
।
“तेन चित्ररथेनाथ तदा विष्णुपदे गिरौ ॥”)
विष्णोः स्थानम् । यथा,
“अपुण्यपुण्योपरमे क्षीणाशेषाप्तिहेतवः ।
यत्र गत्वा न शोचन्ति तद्बिष्णोः परमं पदम्
॥
धर्म्मध्रुवाद्यास्तिष्ठन्ति यत्र ते लोकसाक्षिणः
।
तत्साष्टर्य्योत्पन्नयोगेद्धास्तद्बिष्णोः परमं
पदम् ॥
यत्रैतदोतं प्रोतं च यद्भूतं सचराचरम् ।
भाव्यञ्च विश्वं मैत्रेय तद्बिष्णोः परमं पदम् ॥
दिवीव चक्षुराततं वितते तन्महात्मनाम् ।
विवेकज्ञानवृद्धञ्च तद्धि विष्णोः परं पदम्
॥”
इति विष्णुपुराणे २ अंशे ८ अध्यायः ॥
भ्रूमध्यम् । यथा, --
“अरुन्धतीं ध्रुवञ्चैव विष्णोस्त्रीणि पदानि च
।
आसन्नमृत्युर्नो पश्येच्चतुर्थं मातृमण्डलम्
॥
अरुन्धती भवेज्जिह्वा ध्रुवो नासाग्रमुच्यते ।
विष्णोः पदानि भ्रूमध्ये
नेत्रयोर्म्मातृमण्डलम् ॥”
इति काशीखण्डे ४२ अध्याये १३ । १४
श्लोकौ ॥

**विष्णुपदी**, स्त्री, (विष्णोः पदं स्थानं यस्याः ।

गौरादित्वात् ङीष् ।) गङ्गा । इत्यमरः ॥
(यथा,
भागवते । १ । १९ । ७ ।

"इति व्यवच्छिद्य स पाण्डवेयः
प्रायोपवेशं प्रति विष्णुपद्याम् ।
दध्यौ मुकुन्दाङ्घ्रिमनन्यभावो
मुनिव्रतो मुक्तसमस्तसङ्गः ॥")
अस्याः कारणं यथा, --
नारद उवाच ।
"कलेः पञ्चसहस्राब्दे समतीते
सुरेश्वरी ।
क्व गता सा महाभाग तन्मे
व्याख्यातुमर्हसि ॥
नारायण उवाच ।
गङ्गा सरस्वती लक्ष्मीश्चैतास्तिस्रो
हरेः प्रियाः ।
तुलसीसहिता ब्रह्मन् चतस्रः
कीर्त्तिताः श्रुतौ ॥
नारद उवाच ।
बभूव सा मुनिश्रेष्ठ गङ्गा नारायणप्रिया
।
अहो केन प्रकारेण तन्मे
व्याख्यातुमर्हसि ॥
नारायण उवाच ।
पुरा बभूव गोलोके गङ्गा सा
द्रवरूपिणी ।
राधाकृष्णाङ्गसंभूता तदंशा
तत्स्वरूपिणी ॥
द्रवाधिष्ठातृदेवी सा रूपेणाप्रतिमा
भुवि ।
सा सकामा कृष्णपार्श्वे समुवास
सलज्जिता ॥
प्रफुल्लवदना हर्षान्नवसङ्गमलालसा ।
मूर्च्छिता प्रभुरूपेण
पुलकाङ्कितविग्रहा ॥
एतस्मिन्नन्तरे तत्र विद्यमाना च
राधिका ।
गोपीत्रिंशत्कोटिवृता
कोटिचन्द्रसमप्रभा ॥
कोपेन रक्तपद्मास्या रक्तपङ्कजलोचना
।
सुचारुरागसंयुक्तमोष्ठं कम्पयती रुषा
॥
ताञ्च दृष्ट्वा समुत्तस्थौ कृष्णः
सादरपूर्ब्बकम् ।

ब्रह्मविष्णुशिवानन्तधर्म्मेन्द्रेन्दुदिवाकराः ।
मनवो मुनयः सर्व्वे देवाः सिद्धास्तपस्विनः ॥
गोलोकञ्च समाजग्मुः शुष्ककण्ठोष्ठतालुकाः ।
सर्व्वे प्रणेमुर्गोविन्दं सर्व्वेशं प्रकृतेः परम् ।
विज्ञाय तदभिप्रायं तानुवाच सुरेश्वरः ॥
श्रीभगवानुवाच ।
आगताः सुमहाभागा गङ्गानयनकारणात् ।
गङ्गा मच्चरणाम्भोजे भयेन शरणं गता ॥
राधेमां पातुमिच्छन्ती दृष्ट्वा मां सन्निधानतः ।
दास्यामीमां बहिष्कृत्य यूयं कुरुत निर्भयाम् ॥
श्रीकृष्णस्य वचः श्रुत्वा सस्मितः कमलोद्भवः ।
तुष्टाव सर्व्वाराध्यां तां राधां श्रीकृष्णपूजिताम् ॥
वक्त्रैश्चतुर्भिः संस्तूय भक्तिनम्रात्मकन्धरः ।
धाता चतुर्णां वेदानामुवाच चतुराननः ॥
गङ्गा त्वदङ्गसंभूता प्रभोश्च रासमण्डले ।
युवयोर्द्रवरूपा सा मुग्धयोः शङ्करस्वरात् ॥
कृष्णांशा च त्वदंशा च त्वत्कन्यासदृशी प्रिया ।
त्वन्मन्त्रग्रहणं कृत्वा करोतु पूजनं तव ॥
भविष्यति पतिस्तस्या वैकुण्ठेशश्चतुर्भुजः ।
ब्रह्मणो वचनं श्रुत्वा स्वीचकार च सस्मिता ॥
बहिर्बभूव सा कृष्णपादाङ्गुष्ठनखाग्रतः ।
तत्रैव संवृता शान्ता तस्थौ तेषाञ्च मध्यतः ॥
उवास तोयादुत्थाय तदधिष्ठातृदेवता ।
तत्तोयं ब्रह्मणा किञ्चित् स्थापितञ्च कमण्डलौ ॥
किञ्चिद्दधार शिरसि चन्द्रार्द्धे चन्द्रशेखरः ।
गङ्गायै राधिकामन्त्रं प्रददौ कमलोद्भवः ॥
गङ्गा तामेव संपूज्य वैकुण्ठं प्रययौ सती ।
गोलोके च स्थिता गङ्गा वैकुण्ठे शिवलोकके ॥
ब्रह्मलोके तथान्यत्र यत्र तत्र पुरा स्थिता ।
तत्रैव सा गता गङ्गा चाज्ञया परमात्मनः ॥
निर्गता विष्णुपादाब्जात् तेन विष्णुपदी स्मृता ॥"
इति श्रीब्रह्मवैवर्त्ते प्रकृतिखण्डे गङ्गोपाख्यानं ९
अध्यायः ॥ * ॥ वृषवृश्चिकसिंहकुम्भसंक्रान्तयः ।
यथा, भविष्यमात्स्वज्योतिषेषु ।
"धनुर्म्मिथुनकन्यासु मीने च षडशीतयः ।
वृषवृश्चिककुम्भेषु सिंहे विष्णुपदी स्मृता ॥"
अपि च ।
"एवञ्च षडशीत्यादिष्ववकाशमलभमानम् ।
अर्व्वाक् षोडश विज्ञेया नाड्यः पश्चाच्च षोडश ॥
कालः पुण्योऽर्कसंक्रान्तेर्व्विद्वद्भिः परिकीर्त्तितः ॥"
इति शातातपीयं दिवा विष्णुपदीविषयम् ॥
अतएव जावालीबृहद्वशिष्ठौ ।

चत्वारि दक्षिणे बाहौ त्रीणि त्रीणि पदद्वये ॥
चत्वारि वामबाहौ च हृदये पञ्च निर्द्दिशेत् ।
अक्ष्णोर्द्वयं द्वयं योज्यं मूर्ध्नि द्वौ चैककं गुदे ॥"
फलं यथा, --
"रोगो भोगस्तथा यानं बन्धनं लाभ एव च ।
ऐश्वर्य्यं राजपूजा च अपमृत्युरिति क्रमात् ॥"
इति ज्योतिस्तत्त्वम् ॥

**विष्णुभक्तिः**, स्त्री, (विष्णौ भक्तिः ।) भगवत्सेवा ।
यथा, --
सूत उवाच ।
"विष्णुभक्तिं प्रवक्ष्यामि यया सर्व्वमवाप्यते ।
यथा भक्त्या हरिस्तुष्येत्तथा नान्येन केनचित्
॥
महतः श्रेयसो मूलं प्रवसः पुण्यसन्ततेः ।
जीवितस्य फलं स्वादु ददाति स्मरणं हरेः ॥
भज इत्येष वै धातुः सेवायां परिकीर्त्तितः ।
तस्मात् सेवा बुधैः प्रोक्ता भक्तिसाधनभूयसी ॥
ते भक्ता लोकनाथस्य नामकर्म्मादिकीर्त्तने ।
मुञ्चन्त्यश्रूणि संहर्षात् ये च हृष्टतनूरुहाः ॥
जगद्धातुर्म्महेशस्य दिव्याज्ञा चरणाव्ययाः ।
इह नित्यक्रियाः कुर्य्युः स्निग्धा ये वैष्णवास्तु ते
॥
प्रणामपूर्ब्बकं क्षान्त्या यो वदेद्वैष्णवो हि सः ।
तद्भक्तजनवात्सल्यम्पूजायाञ्चानुमोदनम् ।
तत्कथाश्रवणे प्रीतिः स्वरनेत्राङ्गविक्रिया ॥
येन सर्व्वात्मना विष्णौ भक्त्या भावो निवेशितः
।
विप्रेष्वीश्वरदृष्टिश्च महाभागवतो हि सः ॥
विष्णोश्च कारणं नित्यं तदन्नं दम्भवर्जितम् ।
स्वयमभ्यर्च्चनञ्चैव यो विष्णुं चोपजीवति ॥
भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्त्तते ॥
स विप्रेन्द्रो मुनिः श्रीमान्सजातः स च पण्डितः
।
तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा हरिः ॥
स्मृतः संभाषितोऽप्यापि पूजितो वा द्विजोत्तमः ।
पुनाति भगवद्भक्तस्तपसोऽपि यदृच्छया ॥
प्रणताय प्रपन्नाय तवास्मीति च यो वदेत् ।
अभयं सर्व्वभूतेभ्यो दद्यादेतद्व्रतं हरेः ॥
मन्त्रयाजिसहस्रेभ्यः सर्व्ववेदान्तपारगाः ।
सर्व्ववेदान्तवित् कोट्या विष्णुभक्तो विशिष्यते
।

उत्थाय गङ्गा सहसा सम्भाषाञ्च चकार सा ॥
कुशलं परिपप्रच्छ भीतातिविनयेन च ।
ध्यानेन शरणापन्ना श्रीकृष्णचरणाम्बुजे ॥
तद्धृत्पद्मस्थितो विष्णुर्भीतायै चाभयं ददौ ।
बभूव स्थिरचित्ता सा सर्व्वेश्वरवरेण च ॥
ऊद्र्ध्वसिंहासनस्थाञ्च राधां गङ्गा ददर्श सा ।
एतस्मिन्नन्तरे राधा जगदीशमुवाच सा ॥
केयं प्राणेश कल्याणी सस्मिता तन्मुखाम्बुजम् ।
पश्यन्ती सस्मितं पार्श्वे सकामा बक्रलोचना ॥
त्वञ्चापीमां सन्निरीक्ष्य सकामः सस्मितः सदा ।
मयि जीवति गोलोके भूता दुर्वृत्तिरीदृशी ॥
त्वमेवैवञ्च दुर्वृत्तं वारंवारं करोषि च ।
क्षमां करोमि प्रेम्णा च स्त्रीजातिः स्निग्ध-
मानसा ॥
संगृह्येमां प्रियामिष्टां गोलोकाद्गच्छ लम्पट ।
अन्यथा न हि ते भद्रं भविष्यति व्रजेश्वर ॥
इत्येवमुक्त्वा सा राधा रक्तपङ्कजलोचना ।
गङ्गां वक्तुं समारेभे नम्रास्यां लज्जितां सतीम् ।
गङ्गा रहस्यं विज्ञाय योगेन सिद्धयोगिनी ।
तिरोभूय सभामध्यात् स्वजलं प्रविवेश सा ॥
राधा योगेन विज्ञाय सर्व्वत्रावस्थिताञ्च ताम् ।
पानं कर्त्तुं समारेभे गण्डूषात् सिद्धयोगिनी ॥
गङ्गा रहस्यं विज्ञाय योगेन सिद्धयोगिनी ।

"पुण्यायां विष्णुपद्याञ्च प्राक् पश्चादपि षोडश ।"
तत्र स्नानादिफलम् ।
"अयने कोटिगुणितं लक्षं विष्णुपदीषु च ।
षडशीतिसहस्रन्तु षडशीत्यामुदाहृतम् ॥"
इति तिथ्यादितत्त्वम् ॥

**विष्णुपदीचक्रं**, क्ली, (विष्णुपद्याश्चक्रम् ।) ज्यैष्ठा-
ग्रहायणभाद्रफाल्गुनमासीयरविसंक्रमकालीन-
नक्षत्रविन्यासाङ्कशुभाशुभफलज्ञापकनराकार
चक्रम् । यथा, --
"ऋक्षे संक्रमणं यत्र विष्णुपद्यां मुखे तु तत् ।

ऐकान्तिकाश्च पुरुषा गच्छन्ति परमं पदम् ॥
एकान्तेनासमो विष्णुर्यस्मादेषां परायणः ।
तस्मादेकान्तिनः प्रोक्तास्तद्भागवतचेतसः ॥
प्रियाणामपि सर्व्वेवां देवदेवस्य सुप्रियः ।
आपत्स्वपि सदा यस्य भक्तिरव्यभिचारिणी ॥
या प्रीतिरविवेकानां विषयेष्वनपायिनी ।
विष्णुं संस्मरतः सा मे हृदयान्नोपसर्पतु ॥
अन्तर्गतोऽपि वेदानां सर्व्वशास्त्रार्थवेद्यपि ।
यो न सर्व्वेश्वरे भक्तस्तं विद्यात् पुरुषाधमम् ॥
नाधीतवेदशास्त्रोऽपि न कृताध्वरसंस्तरः ।
यो भक्तिं वहते विष्णौ तेन सर्व्वं कृतं भवेत् ॥
यज्ञानां क्रतुमुख्यानां सर्व्वेषां पारगा अपि ।
न तां यान्ति गतिं भक्त्या यां यान्ति मुनिसत्तम ॥
यः कश्चिद्वैष्णवो लोके मिथ्याचारोऽप्यनाश्रमी ।
पुतानि सकलान् लोकान् सहस्रांशुरिबोदितः ॥
ये नृशंसा दुरात्मानः पापाचाररतास्तथा ।

| | | |
|---|---|---|
| श्रीकृष्णचरणाम्भोजं विवेश शरणं ययौ ॥<br>गोलोकञ्चैव वैकुण्ठं ब्रह्मलोकादिकं तथा ।<br>ददर्श राधा सर्व्वत्र नैव गङ्गां ददर्श सा ॥ | | |

तेऽपि यान्ति परं स्थानं नारायणपरायणाः ॥
दृढा जनार्द्दने भक्तिर्यदैवाव्यभिचारिणी ।
तदा कियत् स्वर्गसुखं सैव निर्व्वाणहैतुकी ॥
भ्राम्यतां तत्र संसारे नराणां कर्म्मदुर्गमे ।
हस्तावलम्बनो ह्येको भक्तितुष्टो जनार्द्दनः ॥
न शृणोति गुणान् दिव्यान् देवदेवस्य चक्रिणः ।
स नरो वधिरो ज्ञेयः सर्व्वधर्म्मबहिष्कृतः ॥
नाम्नि संकीर्त्तिते विष्णोर्यस्य पुंसो न जायते ।
शरीरं पुलकोद्भासि तद्भवेत् कुणपोपमम् ॥
यस्मिन् स्मृते द्विजश्रेष्ठ मुक्तिरप्यचिराद्भवेत् ।
विष्णौ निविष्टमनसां किं पुनर्वृजिनक्षयः ॥
स्वपुरुषमभिबीक्ष्य पाशहस्तं
वदति यमः किल तस्य कर्णमूले ।
परिहर मधुसूदनप्रपन्नान्
प्रभुरहमन्यनृणां न वैष्णवानाम् ॥
अपि चेत् सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥
क्षिप्रं भवति धर्म्मात्मा शश्वच्छान्तिं नियच्छति
।
विप्रेन्द्र प्रतिजानीहि विष्णुभक्तो न नश्यति ॥
धर्म्मार्थकामैः किन्तस्य मुक्तिस्तस्य करे
स्थिता ।
समस्तजगतां मूले यस्य भक्तिः स्थिरा हरौ ॥
दैवी ह्येषा गुणमयी हरेर्म्माया दुरत्यया ।
तमेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥
कियदाराधने पुंसामिष्यते हरिमेधसः ।
भक्त्यैवाराध्यते विष्णुर्नान्यत्तत्तोषकारणम् ॥
न दानैर्व्विविधैर्दत्तैर्न पुष्पैर्नानुलेपनैः ।
तोषमेति महात्मासौ यथा भक्त्या जनार्द्दनः ॥
संसारविषवृक्षस्य द्वे फले ह्यमृतोपमे ।
कदाचित् केशवे भक्तिस्तद्भक्तैर्व्वा समागमः ॥
पत्रेषु पुष्पेषु फलेषु तोये-
ष्वकष्टलभ्येषु सदैव सत्सु ।
भक्त्यैकलभ्ये पुरुषे पुराणे
मुक्त्यै कथं न क्रियते प्रयत्नः ॥
आस्फोटयन्ति पितरः प्रनृत्यन्ति पितामहाः ।
वैष्णवोऽस्मत्कुले जातः स नः सन्तारयिष्यति
॥
अज्ञानिनः सुरवरं समधिक्षिपन्ति
ये पापिनोऽपि शिशुपालसुयोधनाद्याः ।
मुक्तिं गताः स्मरणमात्रविधूतपापाः
कः संशयः परमभक्तिमतां जनानाम् ॥

**विष्णुमाया**, स्त्री, (विष्णोर्माया ।) दुर्गा । यथा, --

नारद उवाच ।
"दुर्गा नारायणीशाना विष्णुमाया शिवा
सती ।
नित्या सत्या भगवती सर्व्वाणी सर्व्वमङ्गला
॥
अम्बिका वैष्णवी गौरी पार्व्वती च
सनातनी ।
नामानि कौथुमोक्तानि शुभानि शुभदानि च
॥
अर्थं षोडशनाम्नाञ्च सर्व्वेषामीप्सितं वरम्
।
ब्रूहि वेदविदां श्रेष्ठ वेदोक्तं सर्व्वसम्मतम् ॥
नारायण उवाच ।
सृष्ट्वा मायां पुरा सृष्टौ विष्णुना परमात्मना
।
मोहितं मायया विश्वं विष्णुमाया च
कीर्त्तिता ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५४ अध्यायः
॥
अपि च ।
ब्रह्मोवाच ।
"विष्णुमायामृते दक्ष महामायां जगन्मयीम्
।
नान्या संमोहकर्त्री स्यात् सन्ध्या सावित्र्यु-
पासिका ॥
तस्मादहं विष्णुमायां योगनिद्रां जगत्प्रसूम्
।
स्तौमि सा चारुरूपेण शङ्करं मोहयिष्यति
॥
भवांश्च दक्ष तामेव यजतां विश्वरूपिणीम्
।
यथा तव सुता भूत्वा हरजाया भविष्यति
॥"
इति कालिकापुराणे ५ अध्यायः ॥

**विष्णुयशाः**, [स्] पुं, (विष्णु व्यापकं यशो यस्य ।

नारायणपितृत्वाद्वास्य तथात्वम् । यद्वा,
विष्णुना ग्रहीतव्यजन्मना यशो यस्य ।)
ब्रह्म-
यशःपुत्त्रः । स च कल्किपिता । यथा, --
नारद उवाच ।

**विष्णुवाहनं**, क्ली, (विष्णोर्व्वाहनम् ।) गरुडः ।

इति हेमचन्द्रः । २ । १४४ ॥

**विष्णुवाह्यः**, पुं, (विष्णुर्व्वाह्यो येन ।) गरुडः ।

इति शब्दरत्नावली ॥

**विष्णुशिला**, स्त्री, (विष्णु नाधिष्ठिता शिला ।)

शालग्रामशिला । कलौ तस्य स्थितिकालो
यथा, --
"अयुताब्दे कलेर्याते त्यजेद्विष्णु शिला महीम् ।
तदर्द्धाज्जाह्नवीतोयं तदर्द्धाद्दैवताशिला ॥"
इति मेरुतन्त्रे ५ प्रकाशः ॥

**विष्णु** शृङ्खलः, पुं, योगविशेषः । यथा, मात्स्ये ।

"द्वादशी श्रवणस्पृष्टा स्पृशेदेकादशीं यदा ।
स एष वैष्णवो योगो विष्णु शृङ्खलसंज्ञितः ॥
तस्मिन्नुपोष्य विधिवन्नरः सङ्क्षीणकल्मषः ।
प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभाम् ॥"
इति ॥
विष्णु धर्म्मोत्तरे द्वितीयविष्णु शृङ्खलयोगमाह ।
"एकादशी द्वादशी च वैष्णव्यमपि भं भवेत् ।
तद्विष्णुशृङ्खलं नाम विष्णुसायुज्यकृद्भवेत् ।
तस्मिन्नुपोषणाद्गच्छेच्छ्वेतद्वीपपुरं ध्रुवम् ॥"
इति श्रीहरिभक्तिविलासे १५ विलासः ॥

**विष्फारः**, पुं, (वि + ष्फुर स्फुरणे + घञ् । "स्फुरति-

स्फुलत्योर्घञि ।" ६ । १ । ४७ । इत्यात्वम् ।
"स्फुरति
स्फुलत्योर्निर्निविभ्यः ।" ८ । ३ । ७६ । इति
षत्वञ्च ।)
धनुर्गुणशब्दः । इत्यमरः ॥ धनुर्गुणस्य स्वान-
ष्टङ्कारो विष्फारः । स्फुर शि घ स्फुर्त्तौ चले
घञस्य दैधावोदेति निपातः । किंवा स्फुरधातो
रूपं विष्कभ्नेत्यादिना पाक्षिकषत्वात् विष्फारो
दन्त्यसो मूर्द्धन्यषश्च । इति भरतः ॥

**विष्यः**, त्रि, (विषेण वध्यः । विष + "नौवयो-

धर्म्मेति ।" ४ । ४ । ९१ । इति यत् ।) विषेण यो
वध्यः । इत्यमरः ॥ (विषेण क्रीतः । विषाय
हित इति वा । इत्यर्थे "उगवादिभ्यो यत् ।"
५ । १ । २ । इति यत् ॥)

**विष्वः**, त्रि, हिंस्रः । इत्युणादिकोषः ॥

**विष्वक्**, व्य, परितः । सर्व्वतः । इत्यमरः ॥ (यथा,

शरणं तं प्रपन्ना ये ध्यानयोगविवर्ज्जिताः ।
तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम् ॥
भवोद्भवक्लेशशताहतस्तथा
परिभ्रमन्निन्द्रियबन्धकैः पथैः ।
नियम्यतां माधव मे मनोहय-
स्त्वदङ्घ्रिशङ्कौ दृढभक्तिबन्धने ॥
विष्णुरेव परं ब्रह्म ह्यभेदमिह पठ्यते ।
वेदसिद्धान्तमार्गेषु तं न जानन्ति मोहिताः ॥
वसति हृदि सनातने च तस्मिन्
भवति पुमान् जगतोऽस्य सौम्यरूपः ।
क्षितिवसनमतिरम्यमात्मनोऽन्तः
कथयति चारुतयैव मानपतेः ॥"
इति गारुडे २३१ अध्यायः ॥

"अहो बलवती माया सर्व्वाश्चर्य्यमयी शुभा ।
पितरं मातरं विष्णोर्नैव मुञ्चति कर्हिचित् ॥
पूर्णो नारायणो यस्य सुतः कल्किर्जगत्पतिः ।
तं विहाय विष्णुयशा मत्तो मुक्तिमभीप्सति ॥
विविच्येत्थं ब्रह्मसुतः प्राह ब्रह्मयशःसुतम् ।
विविक्ते विष्णुयशसं ब्रह्मसम्पद्विवर्द्धनम् ॥"
इति कल्किपुराणे ३० अध्यायः ॥

**विष्णुरथः**, पुं, (विष्णो रथः ।) गरुडः । इत्यमरः ॥ विष्णोः स्यन्दनश्च ॥

**विष्णुरातः**, पुं, (विष्णुना रातो रक्षितः ।) परीक्षिद्राजः । यथा, --
"दैवेनाप्रतिघातेन शुक्ले संस्थामुपेयुषि ।
रातो वोऽनुग्रहार्थाय विष्णुना प्रभविष्णुना ॥
तस्मान्नाम्ना विष्णुरातो लोके ख्यातिं गमिष्यति ।
न सन्देहो महाभाग महाभागवतो महान् ॥"
इति श्रीभागवते १ स्कन्धे १२ अध्यायः ॥

**विष्णुलिङ्गी**, स्त्री, वर्त्तिकापक्षी । इति त्रिकाण्डशेषः ॥

**विष्णुवल्लभा**, स्त्री, (विष्णोर्व्वल्लभा ।) तुलसी । इति राजनिर्घण्टः ॥ लक्ष्मीः । यथा, --
"त्रैलोक्यपूजिते मातः कमले विष्णु वल्लभे ।
यथा त्वमचला कृष्णे तथा भव मयि स्थिरा ॥"
इति तन्त्रसारः ॥
अग्निशिखावृक्षः । इति शब्दचन्द्रिका ॥

भागवते । ६ । ९ । १३ ।
"कृतान्त इव लोकानां युगान्तसमये यथा ।
विष्वग्विवर्द्धमानं तमिषुमात्रं दिने दिने ॥")

**विष्वक्**, क्ली, विषुवम् । इति शब्दरत्नावली ॥ विष्वं अञ्चति इत्यर्थे त्रिलिङ्गम् ॥ (यथा, भागवते । १ । ९ । ३४ ।
"युधि तुरगरजोविधूम्रविष्वक्-
कचलुलितश्रमवार्य्यलङ्कृतास्ये ॥")

**विष्वक्सेनः**, पुं, विष्णुः । इत्यमरः ॥ (यथा, शिशुपालवधे । १० । ५५ ।
"साम्यमाप कमलासखविष्वक्-
सेनसेवितयुगान्तपयोधेः ॥")
विष्णोर्निर्म्माल्यधारी । यथा, --
"निर्म्माल्यधारी विष्णोस्तु विष्वक्सेनश्चतुर्भुजः ।
शङ्खचक्रगदापाणिर्दीर्घश्मश्रुर्जटाधरः ॥
रक्तपिङ्गलवर्णस्तु सितपद्मोपरिस्थितः ।

पतृतीयः स्वरान्तेन संयुतो
बिन्दुनेन्दुना ।
कीर्त्तितस्तस्य मन्त्रोऽयं तेन तं
परिपूजयेत् ॥"
इति कालिकापुराणे ८२ अध्यायः ॥
त्रयोदशमनुः । यथा, --
"ततश्च मेरुसावर्णः ब्रह्मसूनुर्म्मनुः
स्मृतः ।
ऋतुश्च ऋतुधामा च विष्वक्सेनो
मनुस्तथा ॥"
इति मात्स्ये ९ अध्यायः ॥

**विष्वक्सेनप्रिया**, स्त्री, (विष्वक्सेनस्य प्रिया ।)
वाराही । इत्यमरः ॥ चामार आलु इति
भाषा ॥ लक्ष्मीः । इति मेदिनी । ये,
१३४ ॥

**विष्वक्सेना**, स्त्री, प्रियङ्गुः । इत्यमरः ॥

**विष्वणनं**, क्ली, भोजनम् । इति जटाधरः ॥
शब्दकरणम् । यथा । विष्वणति बीणा
। इति
मुग्धबोधव्याकरणम् ॥

**विष्वद्र्यङ्**, [च्] त्रि, (विष्वगञ्चतीति । अञ्च +
क्विप् । "विष्वग्देवयोश्चेति ।" ६ । ३
। ९२ । इति
टेः स्थाने अद्रीत्यादेशः ।)
सर्व्वतोगामी ।
इत्यमरः ॥ (यथा, माघे । १८ । २५ ।
"विष्वद्रीचीर्विक्षिपन् सैन्यवीची-
राजावन्तः क्वापि दूरं प्रयातम् ॥"

**विष्वाणः**, पुं, भक्षणम् । इति हेमचन्द्रः ॥

**विसं**, क्ली, मृणालम् । इत्यमरः ॥ (यथा, कला-
विलासे । ६ ।
"नवविसकिसलयकवलन-
कषायकलहंसकलरवो यत्र ।
कमलवनेषु प्रसरति
लक्ष्म्या इव नूपुरारावः ॥")

**विसंवादः**, पुं, (वि + सं + वद + घञ् ।) विप्र-
लम्भः । इत्यमरः ॥ (यथा, महाभारते
। १२ ।
"नानाशस्त्रविसर्गैस्तैर्व्वध्यमानः समन्ततः ॥")
मलनिर्गमः । विसर्ज्जनीयः । (यथा, भाग-
वते । ६ । ८ । १० ।
"सविसर्गं फडन्तं तत् सर्व्वदिक्षु विनिर्द्दिशेत् ॥")
सूर्य्यस्यायनभेदः । इति मेदिनी । गे, ५० ॥
मोक्षः । इति हलायुधः ॥ विसृष्टः । इति
शब्दरत्नावली ॥ विशेषसृष्टिः । यथा, --
"पुरुषानुगृहीतानामेतेषां वासनामयः ।
विसर्गोऽयं समाहारो बीजाद्बीजं चराचरम् ॥"
इति श्रीभागवतम् ॥
विसर्ज्जनीयस्य पर्य्यायः ।
"अः सर्गो रसना वक्त्रं विसर्गश्च द्विबिन्दुकः ।
नादोऽर्द्धेन्दुरर्द्धमात्रा कला राशी सदाशिवः ।
अनुच्चार्य्या तुरीया च विश्वमातृकला परा ॥"
इति बीजाभिधानम् ॥
अपि च ।
"अः कण्ठको महासेनः कला पूर्णामृता हरिः ।
इच्छा भद्रा गणेशश्च रतिविद्यामुखी सुखम् ॥
द्विबिन्दुरसना सोमोऽनिरुद्धो दुःखसूचकः ।
द्विजिह्वः कुण्डलं वक्रं सर्गः शक्तिर्निशाकरः ।
सुन्दरी सुयशानन्ता गणनाथो महेश्वरः ॥"
इति बीजवर्णाभिधानान्तरम् ॥
अन्यच्च ।
"विसर्गः सर्गमाख्यातो वियद्विषयमासनः ।
अनिरुद्धो महेशानि कालज्ञोऽपि रमापि च ॥"
इति वर्णाभिधानम् ॥
(प्रयोगः । यथा, भागवते । १ । ५ । ११ ।
"तद्वाग्विसर्गो जनताघविप्लवः ॥")

**विसर्ज्जनं**, क्ली, (वि + सृज् + ल्युट् ।) दानम् ।
परित्यागः । इत्यमरः ॥ (यथा, रघुवंशे । ८ । २५ ।
"श्रुतदेहविसर्ज्जनं पितु-
श्चिरमश्रूणि विमुच्य राघवः ॥")
संप्रेषणम् । इति मेदिनी । ने, २०५ ॥ (पुं, यदुवं-
शीयानामन्यतमः । यथा, भागवते । ११ । ३० ।
१८ ।
"विसर्ज्जनाः कुकुराः कुन्तयश्च
मिथस्तु जघ्नुः सुविसृज्य सौहृदम् ॥"
विशेषेण सृज्यते इति । वि + सृज + कर्म्मणि
ल्युट् । उत्पादिते, त्रि । यथा, भागवते । १० ।
१६ । ५७ ।
"त्वया सृष्टमिदं विश्वं धातुर्गुणविसर्ज्जनम् ॥")

यस्तु कर्दमको घोरः स पित्तकफसम्भवः ॥" *
॥
विसर्पदोषदूष्याणि संगृह्याह ।
"रक्तं लसीका त्वङ्मांसं दूष्यं दोषास्त्रयो मलाः ।
विसर्पाणां समुत्पत्तौ हेतवः सप्त धातवः ॥"
त्रयो मलाः वातपित्तकफाः । दोषाः दूषका
इत्यर्थः । अन्यथा दोषा मला इत्यत्र पुनरुक्ति-
दोषोऽगलिष्यत् ॥ * ॥ वातिकस्य लक्षणमाह ।
"तत्र वातात् परीसर्पो वातज्वरसमव्यथः ।
शोफस्फुरणनिस्तोदभेदायामार्त्तिहर्षवान् ॥"
परीसर्पो विसर्पः । वातज्वरसमव्यथः शिरो-
हृद्गात्रोदरशूलादियुक्तः । भेदः विदारणेनेव
व्यथा । आयामः आकर्षणेनेव व्यथा ॥ * ॥
पैत्तिकमाह ।
"पित्ताद्द्रुतगतिः पित्तज्वरलिङ्गोऽतिलोहितः ॥"
द्रुतगतिः शीघ्रप्रसरणशीलः ॥ * ॥ श्लैष्मिक-
माह ।
"कफात् कण्डुयुतः स्निग्धः कफज्वरसमानरुक्
॥"
सान्निपातिकमाह ।
"सन्निपातसमुत्थश्च सर्व्वरूपसमन्वितः ॥" * ॥
वातपैत्तिकस्याग्निविसर्पाख्यस्यच लक्षणमाह ।
"वातपित्तज्वरच्छर्द्दिमूर्च्छातीसारतृड्भ्रमैः ।
अस्थिभेदाग्निसदनतमकारोचकैर्युतः ॥
करोति सर्व्वमङ्गञ्च दीप्ताङ्गारावकीर्णवत् ।
यं यं देशं विसर्पश्च संसर्पति भवेत् स सः ॥
शान्ताङ्गारासितो नीलो रक्तो वा सूपचीयते ।
अग्निदग्ध इव स्फोटैः शीघ्रगत्वात् द्रुतञ्च सः ॥
मर्म्मानुसारी वीसर्पः स्यादतोऽतिबलस्ततः ।
व्यथेताङ्गं हरेत् संज्ञां निद्राञ्च श्वासमीरयेत् ॥
हिध्माञ्च संगतोऽवस्थामीदृशीं लभते नरः ।
क्वचिच्छर्मारतिग्रस्तो भूमिशय्यासनादिषु ॥
चेष्टमानस्ततः क्लिष्टो मनोदेहसमुद्भवाम् ।
दुःप्रबोधोऽश्नुते निद्रां सोऽग्निवीसर्प उच्यते ॥"
स्फोटैः उपचीयत इत्यन्वयः । मर्म्मानुसारी
हृदयानुसारी । हरेत् वीसर्प इत्यन्वयः । हिध्मां
हिक्काम् । ईरयेत् उत्पत्तुं प्रेरयेत् । मनोदेह-
समुद्भवां निद्रां मरणरूपाम् । अश्नुते प्राप्नोति ॥
*
वातश्लैष्मिकग्रन्थिविसर्पमाह ।
"कफेन रुद्धः पवनो भित्त्वा तं बहुधा कफम् ।
रक्तं वा वृद्धरक्तस्य त्वक्शिरास्नायुमांसगम् ॥

२५८ । ११ ।
"अद्रोहमविसंवादं प्रवर्त्तन्ते तदाश्रयाः ॥")

**विसकण्ठिका**, स्त्री, (विससदृशः शुभ्रः कण्ठो
यस्या इति बहुव्रीहौ कन् टापि अत इत्वम् ।)
बलाका । इत्यमरः ॥

**विसकुसुमं**, क्ली, (विसस्य कुसुमम् ।) कमलम् ।
इति राजनिर्घण्टः ॥

**विसङ्कटः**, पुं, सिंहः । इति शब्दचन्द्रिका ॥
इङ्गुदीवृक्षः । इति राजनिर्घण्टः ॥

**विसजं**, क्ली, (विसाज्जायते इति । जन् + डः ।)
पद्मम् । विसं मृणालं तत्र जातत्वात् ॥

**विसनाभिः**, पुं, (विसं नाभिरुत्पत्तिस्थानं यस्य ।)
पद्मिनी । पद्मसमूहः । इति त्रिकाण्डशेषः ॥

**विसप्रसूनं**, क्ली, पद्मम् । इत्यमरः ॥ (यथा, शिशु-
पालवधे । ५ । २८ ।
"जक्षुर्व्विसं धृतविकासिविसप्रसूनाः ॥")

**विसरः**, पुं, (विसरतीति । वि + सृ + पदाद्यच् ।)
समूहः । इत्यमरः ॥ प्रसरः । इति मेदिनी ।
रे, २१७ ॥

**विसर्गः**, पुं, (वि + सृज + घञ् ।) दानम् । (यथा,
रघुवंशे । ४ । ८६ ।
"आदानं हि विसर्गाय सतां जलमुचामिव ॥")
व्यागः । (यथा, महाभारते । १ । ३२ । १३ ।

**विसर्पः**, पुं, (वि + सृप + घञ् ।) रोगविशेषः ।
तत्पर्य्यायः । विसर्पिः २ सचिवामयः ३ । इति
राजनिर्घण्टः ॥ तत्र विप्रकृष्टं निदानं संख्यां
निरुक्तिञ्चाह ।
"लवणाम्लकटूष्णादिसेवनाद्दोषकोपतः ।
विसर्पः सप्तधा ज्ञेयः सर्व्वतः परिसर्पणात् ॥"
आदिशब्दाच्चरकोक्तहरितशाकशिण्डाकप्रभृ
तीनां ग्रहणम् ॥ * ॥ सप्तधात्वं विषृणोति ।
"पृथक् त्रयस्त्रिभिश्चैको विसर्पा द्वन्द्वजास्त्रयः ।
वातिकः पैत्तिकश्चैव कफजः सान्निपातिकः
चत्वार एते वीसर्पा वक्ष्यन्ते द्वन्द्वजास्त्रयः ॥
आग्नेयो वातपित्ताभ्यां ग्रन्थाख्यः कफवातजः ।

दूषयित्वा तु दीर्घायुर्वृत्तस्थूलस्वरात्मनाम् ।
ग्रन्थीनां कुरुते मालां रक्तानां तीव्ररुग्जराम् ॥
श्वासकाशास्यवैरस्यशोषहिक्कावमिभ्रमैः ।
मोहवैवर्ण्यमूर्च्छाङ्गभङ्गाङ्गसदनैर्युतः ।
इत्ययं ग्रन्थिवीसर्पो वातश्लेष्मप्रकोपजः ॥"
कफेन स्वहेतुदुष्टेन पवनोऽपि स्वहेतुदुष्टः ।
तेनायं वातश्लेष्मिकः । तं कफं बहुधा भित्त्वा
रक्तं वा दूषयित्वा इत्यन्वयः । त्वगादिकमिति
रक्तविशेषणम् ॥ * ॥ पित्तश्लैष्मिकं कर्दमाख्यं
विसर्पमाह ।
"कफपित्तज्वरास्तम्भो निद्रातन्द्राशिरोरुजा ।
अङ्गावसादविक्षेपप्रलापारोचकभ्रमाः ॥
मूर्च्छाग्निहानिर्भेदोऽस्थ्नां पिपासेन्द्रियगौरवम् ।

आमोपवेशनं लेपस्रोतसाञ्च विसर्पति ॥
प्रायेणामाशये गृह्णन्नेकदेशं न चातिरुक् ।
पिडकैरवकीर्णोति पीतलोहितपाण्डुरैः ॥
स्निग्धोऽसितो मेचकाभो मलिनः शोफवान् गुरुः ।
गम्भीरपाकः प्राज्योष्मा क्लिन्नः क्लिष्टो विदीर्य्यते
।
पङ्कत्वक् शीर्णमांसस्य स्पष्टस्नायुशिरागणः ।
शवगन्धिश्च वीसर्पः कर्द्दमाख्यमुशन्ति तम् ॥"
स च सर्पति एकदेशमित्यन्वयः । पिडकैः
पिडकाभिः । अवकीर्णः व्याप्तः । असितः
कृष्णः । मेचकः रूक्षकृष्णः । प्राज्योष्मा प्रचु-
रोष्मा । स्पष्टः क्लिन्नोऽवदीर्य्यते स्पृष्टः सन्नार्द्रो
भवति विदीर्य्यते च । पङ्कत्वक् कर्दमवर्णा त्वग्-
यत्र सः । शीर्णमांसः गलितमांसः । अतएव
स्पष्टस्नायुशिरागणः ॥ * ॥ सान्निपातिक-
माह ।
"सन्निपातसमुत्थस्तु सर्व्वरूपसमन्वितः ॥" * ॥
क्षतजञ्च विसर्पमाह ।
"बाह्यहेतोः क्षतात् क्रुद्धः सरक्तं पित्तमीरयन् ।
वीसर्पमारुतः कुर्य्यात् कुलत्थसदृशैश्चितः ।
स्फोटैः शोथज्वररुजा दाहाद्यं श्यावशो-
णितम् ॥"
बाह्यहेतोः शस्त्रप्रहारव्यालदन्तनखाद्यागन्तु
हेतोः । श्यावशोणितं धूम्रवर्णरक्तम् ॥ * ॥
उपद्रवानाह ।
"ज्वरातीसारवमथुस्तृण्मांसदरणक्लमाः।
अरोचकविपाकौ च विसर्पाणामुपद्रवाः ॥" * ॥
साध्यत्वादिकमाह।
"सिध्यन्ति वातकफपित्तकृता विसर्पाः
सर्व्वात्मकक्षतकृतश्च न सिद्धिमेति ।
पित्तात्मकोऽञ्जनवपुश्च भवेदसाध्यः
कृच्छ्राश्च मर्मसु भवन्ति च सर्व्व एव ॥"
पित्तात्मकोऽञ्जनवपुः पित्तजः सन् कज्जलवर्णः ।
सर्व्व एवासाध्या अपि ॥ * ॥ अथ विसर्पस्य
चिकित्सा ।
"विरेकवमनालेपसेचनास्रविमोक्षणैः ।
उपाचरेद्यथादोषं विसर्पानविदाहिभिः ॥
रास्ना नीलोत्पलं दारु चन्दनं मधुकं बला ।
घृतं क्षीरयुतो लेपो वातवीसर्पनाशनः ॥"
चन्दनमत्र रक्तं ग्राह्यम् ।
"कसेरुशृङ्गाटकपद्मगुन्द्रैः
सशैवलैः सोत्पलकर्द्दमैश्च ।
लेपो दशाङ्गः सघृतः प्रयोज्यो
विसर्पकुष्ठज्वरशोथहारी ॥"
नतं तगरम् । चन्दनमत्र रक्तं ग्राह्यम् ।
दशाङ्गो लेपः ॥ * ॥
"परिषेकाः प्रलेपाश्च शस्यन्ते पञ्चवल्कलैः
।
पद्मकोशीरमधुकं चन्दनैला विसर्पणे ॥
भूनिम्ववासा कटुका पटोल-
फलत्रयं चन्दननिम्बसिद्धः ।
विसर्पदाहज्वरशोथकण्डूं
विस्फोटतृष्णावमिहृत् कषायः ॥
कुष्ठानि यानि सर्पिषि व्रणेषु विविधेषु च ।
विसर्पे तानि योज्यानि सेकालेपनभोजनैः ॥
* ॥
करञ्जसप्तच्छदलाङ्गलीक-
स्नुह्यर्कदुग्धानलभृङ्गराजैः ।
तैलं निशामूत्रविषैर्विपक्वं
विसर्पविस्फोटविचर्च्चिकाघ्नम् ॥
इति करञ्जादितैलम् ॥ * ॥
"कुष्ठामयस्फोटमसूरिकोक्त-
चिकित्सयाप्याशु हरेद्विसर्पान् ।
सर्व्वान् विकारान् परिशोध्य धीमान्
व्रणं क्रमेणोपचरेद्यथोक्तम् ॥"
इति विसर्पाधिकारः । * । इति भावप्रकाशः
॥
(वेगः । यथा, उत्तरचरिते ।
"प्रमोहो निद्रा वा किमु विषविसर्पः किमु
मदः ॥"
नाट्यालङ्कारविशेषः । तल्लक्षणादिकं यथा,
साहित्यदर्पणे । ६ । ४८५ ।
"विसर्पो यत्समारब्धं कर्म्मानिष्टफलप्रदम्
॥"
यथा वेण्याम् । एकस्य तावत् पाकोऽयमि-
त्यादि ॥)

**विसर्पणं**, क्ली, (वि + सृप + ल्युट् ।) प्रसरः ।
इत्यमरः ॥ तन्तुव्रणविटपादेर्विसर्पणम् । इति
भरतः ॥ (निक्षेपः । यथा, महाभारते । ७ ।
८ । १३ ।
"शोषणं सागरस्येव मेरोरिव विसर्पणम् ।
पतनं भास्करस्येव न मृष्ये द्रोणपातनम् ॥")

**विसर्पिः**, पुं, विसर्पः । इति राजनिर्घण्टः ॥

**विसारितः**, त्रि, प्रसारितः । विपूर्व्वण्यन्तसृधातोः
क्तप्रत्ययेन निष्पन्नमिदम् ॥

**विसारी**, [न्] त्रि, (वि + सृ + णिनिः ।) प्रसरण-
शीलः ॥ तत्पर्य्यायः । विसृत्वरः २
विसृमरः ३
प्रसारी ४ । इत्यमरः ॥ (यथा, रघुः । ३ ।
१५ ।
"अरिष्टशय्यां परितो विसारिणा
सुजन्मनस्तस्य निजेन तेजसा ॥")

**विसिनी**, स्त्री, (विसमस्त्यस्या इति । विस् +
"पुष्करादिभ्यश्च ।" इति इनिः । ङीप् ।)
पद्मिनी । इत्यमरः ॥ मृणालम् । इति राज-
निर्घण्टः ॥

**विसूचिका**, स्त्री, (विसूची + स्वार्थे कन् ।)
अजीर्णरोगविशेषः । इति भावप्रकाशः ॥
(अस्या विशेषविवृतिस्तु
अजीर्णविसूचीशब्द-
योर्द्रष्टव्या ॥)

**विसूची**, स्त्री, (विशेषेण सूचयति मृत्युमिति ।
वि + सूच् + अच् । स्त्रियां ङीष् । यद्वा,
विशिष्टा
सूचीव ।) अजीर्णरोगविशेषः । ओलाउटा
इति भाषा ॥ तस्य निरुक्तिर्यथा, --
"सूचीभिरिव गात्राणि तुदन् सन्तिष्ठतेऽनिलः
।
यस्याजीर्णेन सा वैद्यैर्व्विसूचीति निगद्यते
॥"
तस्या निदानमाह ।
"न तां परिमिताहारा लभन्ते विदितागमाः ।
मूढास्तामजितात्मानो लभन्तेऽशनलोलुपाः
॥"
विदितागमा ज्ञातायुर्व्वेदाः ॥ * ॥
तस्या लक्षणमाह ।
"मूर्च्छातिसारो वमथुः पिपासा
शूलं भ्रमोद्वेष्टनजृम्भदाहाः ।
वैवर्ण्यकम्पौ हृदये रुजश्च
भवन्ति तस्यां शिरसश्च भेदः ॥"
उद्वेष्टनं हस्तपादयोः । शिरसो भेदः शिरः-
शूलम् ॥ * ॥ तस्या उपद्रवानाह ।

वस्त्रान्तरैः पित्तकृते विसर्पे
लेपो विधेयः सघृतः सुशीतः ॥ * ॥
त्रिफलापद्मकोशीरसमङ्गाकरवीरकम्।
नलमूलमनन्ता च लेपः श्लेष्मविसर्पहा ॥
समङ्गा लज्जालुः ।
"वातपित्तप्रशमनमग्निवीसर्पणे हितम् ।
वातश्लेष्महरं कर्म्म ग्रन्थिवीसर्पणे हितम् ॥
पित्तश्लेष्मप्रशमनं हितं कर्द्दमसंज्ञके ।
त्रिदोषजक्रियां कुर्य्यात् विसर्पे त्रिमलापहाम् ॥ *
शिरीषयष्टीनतचन्दनैला
मांसौहरिद्राद्वयकुष्ठवालैः ।

**विसलं**, क्ली, (विसं लातीति । ला + कः ।) पल्लवः ।
इति त्रिकाण्डशेषः ॥

**विसारः**, पुं, (विशेषेण सरतीति । सृ गतौ +
"व्याधिमत्स्यबलेष्विति वक्तव्यम् ।" ३ । ३ । १७ ।
इत्यस्य वार्त्तिकोक्त्या घञ् ।) मत्स्यः ।
इत्यमरः ॥
(भावे घञ् । निर्गमः । यथा, ऋग्वेदे । १ । ७९ । १ ।
"हिरण्यकेशो रजसो विसारे
ऽहिर्धुनिर्वात इव ध्रजीमान् ॥"
"रजस उदकस्य विसारे विसरणे मेघान्निर्गमने ।" इति तद्भाष्ये सायणः ॥)

**विसारिणी**, स्त्री, (विशेषेण सरतीति । सृ +
णिनिः । ङीप् ।) माषपर्णी । इति राजनिर्घण्टः ॥) प्रसरणशीला । यथा, राजतरङ्गिण्याम् । ८ । ९८२ ।
"निर्धूमस्य विसारिण्यो ज्वाला हव्यभुजो दधुः ॥")

"निद्रानाशोऽरतिः कम्पो मूत्राघातो विसंज्ञता ।
अमी उपद्रवा घोरा विसूच्याः पञ्च दारुणाः ॥"
अमी उपद्रवा घोराः अमी निद्रानाशादव
उपद्रवाः सर्व्वेषामेव रोगाणां घोरा भयङ्कराः ।
विसूच्याः पञ्च दारुणाः विसूच्यास्तु पञ्चापि
यदि स्युस्तदा दारुणाः प्राणभयङ्कराः ॥ * ॥
तस्या अरिष्टमाह ।
"यः श्यावदन्तौष्ठनखोऽल्पसंज्ञ-
श्छर्द्द्यर्द्दितोऽभ्यन्तरयातनेत्रः ।
क्षामस्वरः सर्व्वविमुक्तसन्धि-
र्यायान्नरः सोऽपुनरागमाय ॥"
सर्व्वविमुक्तसन्धिः सर्व्वे विमुक्ताः
शिथिलीभूताः
सन्धयो यस्य सः ॥ इति भावप्रकाशः ॥ * ॥
अस्याश्चिकित्सा अजीर्णशब्दे द्रष्टव्या ॥

**विसूरितं**, क्ली, अनुतापः । इति जटाधरः ॥

**विसृतं**, त्रि, (वि + सृ + क्तः ।) विस्तृतम् । इत्यमरः ॥

**विसृत्वरः**, त्रि, (विसरति तच्छीलः । वि + सृ +
"इण्नश्जिसर्त्तिभ्यः क्वरप् ।" ३ । २ । १६३ ।

इति क्वरप् । ह्रस्वस्येति तुक् ।)
प्रसरणशीलः ।
इत्यमरः ॥ "विसरणम् । गतिविशेषः ।
विसृ-
त्वरो नदः । विसृत्वरी नदी । विसृत्वरं तैल-
मित्यादि । विसरति विसृत्वरः सृ गतौ
क्ष्वरप्-
सृजीणिति क्ष्वरप् स्वस्य तन् पिति तन् ।"
इति
भरतः ॥

**विसृमरः**, त्रि, (विशेषेण सरति तच्छीलः । वि +
सृ + "सृघस्यदः क्मरच् ।" ३ । २ । १६०
। इति
क्मरच् ।) प्रसरणशीलः । इत्यमरः ॥

**विसृष्टः**, त्रि, (वि + सृज् + क्तः ।) निक्षिप्तः ।
इति जटाधरः ॥ (यथा, मृच्छकटिके । १
अङ्के ।
"उद्विग्नचक्रलकटाक्षविसृष्टदृष्टि
र्व्याधानुसारचकिता हरिणीव यासि ॥")
विशेषेण सृष्टश्च ॥ (व्यक्तः । यथा, भागवते
।
१ । १६ । २४ ।
"अन्तर्हितस्य स्मरती विसृष्टा
कर्म्माणि निर्व्वाणविलम्बितानि ॥"
प्रेषितः । यथा, रघुः । ५ । ३९ ।
"आप्तः कुमारानयनोत्सुकेन
भोजेन दूतो रघवे विसृष्टः ॥"
पुं, विसर्गः । विन्दुद्वयरूपः । यथा, कातन्त्रे
। ८ । २ ।
"रसकारयोर्व्विसृष्टः ॥")

**विस्तः**, पुं, क्ली, (विस उत्सर्गे + क्तः ।) हेम्नो-
ऽक्षः । अशीतिरत्तिकापरिमितस्वर्णम् ।
इत्य-
मरः ॥

**विस्तरः**, पुं, (वि + स्तृ + "प्रथने वावशब्दे ।"
३ । ३ । ३३ । इति घञः प्रतिषेधे
"ऋदोरप् ।"
इत्यप् ।) शब्दस्य विस्तारः । इत्यमरः ॥
(यथा,
(यथा, --
"पर्णानि स्वर्णवर्णानि विस्तीर्णाकर्णलोचने
।
तूर्णमानीयतां चूर्णं पूर्णचन्द्रनिभानने ॥"
इत्युद्भटः ॥)

**विस्तीर्णपर्णं**, क्ली, (विस्तीर्णं पर्णं पत्रमस्य ।)
मानकम् । इति शब्दचन्द्रिका ॥

**विस्तृतः**, त्रि, (वि + स्तृ + क्तः ।) लब्धविस्तारः ।
तत्पर्य्यायः । विसृतम् २ ततम् ३ ।
इत्यमरः ॥
(यथा, भागवते । २ । २४ । ६० ।
"तत्त्वं ब्रह्मपरं ज्योतिराकाशमिव विस्तृतम्
॥")

**विस्पष्टः**, त्रि, (विशेषेण स्पष्टः ।) सुस्पष्टः । यथा,
"विस्पष्टमद्रुतं शान्तं स्पष्टाक्षरपदं तथा ।
कलस्वरसमायुक्तं रसभावसमन्वितम् ॥"
इति तिथ्यादितत्त्वम् ॥

**विस्फारः**, पुं, (वि + स्फुर + धञ् । "स्फुरति-
स्फुलत्योर्घञि ।" ८ । ३ । ७६ ।
इत्यात्वम् ।) धनु-
र्गुणशब्दः । इत्यमरः ॥ अस्य विवरणं
मूर्द्धन्य-
षकारमध्यविष्फारशब्देद्रष्टव्यम् ॥ (यथा,
महाभारते । ३ । २७९ । ३६ ।
"विस्फारस्तस्य धनुषो यन्त्रस्येव तदा बभौ
॥"
विस्तृतिः । यथा, साहित्यदर्पणे । ३ ।
२०७ ।
"विस्फारश्चेतसो यस्तु स विस्मय
उदाहृतः ॥")

**विस्फारितः**, त्रि, प्रकाशितः । चलितः । विपूर्ब्ब-
ण्यन्तस्फरधातोः क्तप्रत्ययेन निष्पन्नमिदम्
॥
(यथा, महाभारते । ३ । ११ । २० ।
"स नष्टमायोऽतिबलो क्रोधविस्फारितेक्षणः
।
काममूर्त्तिधरः क्रूरः कालकल्पो व्यदृश्यत
॥"
निर्घोषितः । यथा, किराते । १४ । ३० ।
त्वचमाश्रित्य ते रक्तमांसास्थीनि प्रदुष्य च ।
घोरान् कुर्व्वन्ति विस्फोटान् सर्व्वज्वरपुरः-
सरान् ॥"
ऋतुदोषेण ऋतुहेतुकशीतोष्णादीनामतियोगेन ।
ऋतूचिताहारविहारवैपरीत्येन त्वचमाश्रित्य
विस्फोटान् कुर्व्वन्तीत्यर्थः । ज्वरपुरःसरान्
ज्वरपूर्ब्बान् ॥ * ॥ रूपमाह ।
"अग्निदग्धनिभाः स्फोटाः सज्वरा रक्तपित्तजाः ।
क्वचित् सर्व्वत्र वा देहे विस्फोटा इति ते
स्मृताः ॥"
रक्तपित्तजाः एतेन सर्व्वेषु विस्फोटेषु रक्त-
पित्तयोः प्रधानकारणत्वम् । यथा शूलेषु वातस्य
तथा वातानुगतिरपि बोद्धव्या । तथा च भोजः ।
"यदा रक्तञ्च पित्तञ्च वातेनानुगतं त्वचि ।
अग्निदग्धनिभान् स्फोटान् कुरुतः सर्व्वदेह-
गान् ॥" * ॥
वातिकमाह ।
"शिरोरुक्शूलभूयिष्ठज्वरतृट्पर्व्वभेदनम् ।
सकृष्णवर्णतां चेति वातविस्फोटलक्षणम् ॥"
शूलमत्र तोदरूपम् ॥ * ॥ पैत्तिकमाह ।
ज्वरदाहरुजापाकः स्रावस्तृष्णासमन्वितम् ।
पीतलोहितवर्णञ्च पित्तविस्फोटलक्षणम् ॥"
रुजादित्रयं स्फोटेषु ॥ * ॥ वातपैत्तिकमाह ।
"वातपित्तकृतो यस्तु तत्र स्युस्तीव्रवेदनाः ।
स्तैमित्यं गौरवं कण्डुर्भवेद्वातवलासजे ॥" * ॥
पित्तश्लैष्मिकमाह ।
"कण्डूर्दाहो ज्वरश्छर्द्दिर्जायते कफपैत्तिके ॥"
सान्निपातिकमाह ।
"मध्य निम्नोन्नतस्तोदः कठिनः स्वल्पपाकवान् ।
रागदाहतृषामोहच्छर्द्दिमूर्च्छारुजाज्वराः।
प्रलापो वेपथुर्यत्र सोऽसाध्यश्च त्रिदोषजः ॥"
मोहो विपरीतज्ञानम् । मूर्च्छा सर्व्वथा ज्ञान-
शून्यता ॥ * रक्तजमाह ।
"वेदितव्याश्च रक्तेन पैत्तिकेन च हेतुना ।
गुञ्जाफलसमा रक्ता रक्तस्रावा विदाहिनः ।
न ते सिद्धिं समायान्ति शुद्धैर्योगशतैरपि ॥"
पैत्तिकेन च हेतुना पित्तस्यहेतुना कट्वादिना
रक्तस्य पित्तस्य तुल्यत्वात् न च ते साध्याः ।
"एते चाष्टविधा बाह्या आन्तरोऽपि भवेदयम् ।
तस्मिन्नन्तर्व्व्यथा तीव्रा ज्वरयुक्ताभिजायते ॥
तस्मिन् बहिर्गते स्वास्थ्यन्तु व्यानस्य वहिर्गतिः ।
तत्र वातिकविस्फोटक्रिया कार्य्या विजानता ॥"

शिशुपालवधे । २ । २४ ।
"सुविस्तरतरा वाचो भाष्यभूता भवन्तु मे ॥"
वेदाङ्गम् । यथा, भागवते । ३ । ३ । २ ।
"सान्दीपनेः सकृत्प्रोक्तंब्रह्माधीत्य सविस्तरम् ॥")
विस्तारः । (यथा, गीतायाम् । १० । १९ ।
"प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥")
प्रणयः । इति मेदिनी ॥ पीठः । समूहः । इति
शब्दरत्नावली ॥ (त्रि, बहुः । यथा, साहित्य-
दर्पणे । ६ । ३१४ ।
"अपेक्षितं परित्यज्य नीरसं वस्तु विस्तरम् ।
यदा सन्दर्शयेच्छेशमामुखानन्तरं तदा ॥")

**विस्तारः**, पुं, (वि + स्तॄ + "प्रथने वावशब्दे ।"
३ । ३ । ३३ । इति घञ् ।) विटपः । विस्ती-
र्णता । तत्पर्य्यायः । विग्रहः २ व्यासः ३ ।
इत्यमरः ॥ (यथा, आर्य्यासप्तशत्याम् । ५५८ ।
"वंशावलम्बनं यद्यो विस्तारो गुणस्य याव-
नतिः ।
तज्जालस्य खलस्य च निजाङ्कसुप्तप्रणाशाय ॥")
स्तम्बः । इति मेदिनी । रे, २१५ ॥

**विस्तीर्णः**, त्रि, (वि + स्तॄ + क्तः । "रदाभ्या-
मिति ।" ८ । २ । ४२ । इति नः ।) विपुलम् ।
विस्तृतम् । यथा, --
"विस्तीर्णं विकटं वड्रं विशालं विपुलं पृथु ।"
इति जटाधरः ॥

"उद्गूढवक्षःस्थगितैकदिङ्मुखो
विकृष्टविस्फारितचापमण्डलः ॥")

**विस्फुरितः**, त्रि, (वि + स्फुर + क्तः ।) स्फूर्त्ति-
विशिष्टः । चञ्चलः । यथा, --
"रक्तरक्तीकृताङ्गञ्च रक्तविस्फुरितेक्षणम् ।
वेष्टितं नागपाशेन भ्रुकुटीभीषणाननम् ॥"
इति दशभुजादुर्गाध्यानैकदेशः ॥

**विस्फुलिङ्गः**, पुं, विषभेदः । इति हेमचन्द्रः ॥
(विशिष्टः स्फुलिङ्गः ।) अग्निकणा च ॥

**विस्फोटः**, पुं, (विस्फोटतीति । वि + स्फुट् +
अच् ।) विरुद्धस्फोटकः । विस्फोडा इति
भाषा । तत्पर्य्यायः । पिठकः २ पिटका ३
पिटकम् ४ । इत्यमरः । विटकः ५ विटका ६
विटकम् ७ । इति तट्टीका ॥ स्फोटकः ८
स्फोटः ९ । इति राजनिर्घण्टः ॥ (यथा,
कथासरित्सागरे । ८५ । १८ ।
"किमेतदिति संभ्रान्तः प्रबुद्धोऽथ ददर्श सः ।
उत्थाय राजा विस्फोटानङ्गे तस्या विनि-
र्गतान् ॥")
तस्य विप्रकृष्टनिदानपूर्व्विकां संप्राप्तिमाह ।
"कट्वम्लतीक्ष्णोष्णविदाहिरूक्ष-
क्षारैरजीर्णाध्यशनातपैश्च ।
तथर्त्तुदोषेण विसर्पणेन
कुप्यन्ति दोषा पवनादयस्तु ॥

उपद्रवानाह ।
"तृट्श्वासमांससङ्कोथदाहहिक्कामदज्वराः ।
विसर्पमर्म्मसंरोधास्तेषामुक्ता उपद्रवाः ॥"
मांससङ्कोथः मांसस्य शठितत्वम् । मर्म्मसंरोधो
मर्म्मव्यथा । तेषां विस्फोटकानाम् ॥ * ॥
केचिदुपद्रवाणां लक्षणान्तरं पठन्ति ।
"हिक्का श्वासोऽरुचिस्तृष्णा स्वाङ्गमर्द्दो हृदि-
व्यथा ।
विसर्पज्वरहृल्लासा विस्फोटानामुपद्रवाः ॥"
साध्यत्वादिकमाह ।

"एकदोषोत्थितः साध्यः कृच्छ्रसाध्यो द्विदो-
षजः ।
सर्व्वरूपान्वितो घोरो ह्यसाध्यो भूर्य्युपद्रवः ॥"
अथ विस्फोटस्य चिकित्सा ।
"विस्फोटे लङ्घनं कार्य्यं वमनं पथ्यभोजनम् ।
यथादोषबलं वीक्ष्य प्रयुञ्ज्याच्च विरेचनम् ॥ * ॥
जीर्णः शालिर्यवा मुद्गा मसूराश्चाढकी तथा ।
एतान्यन्नानि विस्फोटे हितानि मुनयोऽब्रुवन् ॥
द्वे पञ्चमूल्यौ रास्ना च दार्व्युशीरं दुरालभा ।
गुडूची धान्यकं मुस्तमेषां क्वाथं पिबेन्नरः ।
विस्फोटान्नाशयत्याशु समीरणनिमित्तकान् ॥
द्राक्षाकाश्मर्य्यखर्ज्जूरपटोलारिष्टवासकैः ।
कटुकालाजदुस्पर्शैः पैत्तिके ससितं घृतम् ॥
भूनिम्बसवचावासात्रिफलेन्द्रसवत्सकैः ।
पिचुमर्द्दपटोलाभ्यां कफजे मधुयुक् शृतम् ॥ * ॥
किराततिक्तकारिष्टयष्ट्याह्वाम्बुदवासकैः ।
पटोलपर्पटोशीरत्रिफलाकोटजान्वितैः ॥
क्वथितैर्द्वादशाङ्गन्तु सर्व्वविस्फोटनाशनम् ॥ * ॥
विस्फोटव्याधिनाशाय तण्डुलाम्बुदपेषितैः ।
बीजैः कुटजवृक्षस्य लेपः कार्य्यो विजानता ॥ *
छिन्ना पटोलभूनिम्बवासकारिष्टपर्पटैः ।
खदिराब्दयुतैः क्वाथो हन्ति विस्फोटकं ज्वरम् ॥
चन्दनं नागपुष्पञ्च सारिवा तण्डुलीयकम् ।
शिरीषवल्कलं जाती लेपः स्याद्दाहनाशनः ॥"
"उत्पलं चन्दनं लोध्रमुशीरं शारिवाद्वयम् ।
जलेन पिष्टं लेपेन स्फोटदाहार्त्तिनाशनम् ॥ * ॥
पुत्त्रजीवस्य मज्जानं जले पिष्ट्वा प्रलेपयेत् ।
कालस्फोटं विषस्फोटं सद्यो हन्यात् सवेदनम् ॥
कक्षाग्रन्थिं गलग्रन्थिं कर्णग्रन्थिञ्च नाशयेत् ।
अन्यच्च स्फोटकं ताम्रं पुत्त्रजीवो विनाशयेत् ॥"
इति विस्फोटकाधिकारः । इति भावप्रकाशः ॥
अन्यच्च ।
"मरीचं त्रिवृतं कुष्ठं हरितालं मनःशिला ।
देवदारु हरिद्रे द्वे कुष्ठं मांसी च चन्दनम् ॥
विशाला करवीरञ्च अर्कक्षीरं सकृत्पलम् ।
एषाञ्च कार्षिको भागो विषस्यार्द्धपलं भवेत् ॥
प्रस्थं कटुकतैलस्य गोमूत्रेऽष्टगुणे पचेत् ।
मृत्पात्रे लौहपात्रे वा शनैर्मृद्वग्निना पचेत् ॥
पामा विचर्च्चिका चैव दद्रुविस्फोटकानि च ।
अभ्यङ्गेन प्रणश्यन्ति कोमलत्वञ्च जायते ॥
प्रसूतान्यपि श्वित्राणि तैलेनानेन म्रक्षयेत् ।
चिरोत्थितमपि श्वित्रं विवर्णं तत्क्षणात्

**विस्मयः**, पुं, (वि + स्मि + "एरच् ।" इत्यच् ।)

आश्चर्य्यम् । तत्पर्य्यायः । अहो २ ही ३ ।
इत्यमरः ॥ "अन्यदद्भुतशब्दे द्रष्टव्यम् ।
'अद्भुतो विस्मयस्थायिभावो गन्धर्व्वदैवतः
।
पीतवर्णो वस्तु लोकातिगमालम्बनं मतम्
॥'
इति भावरसयोः पर्य्यायत्वं अद्भुतस्य
विस्मय-
स्थायिभावात्मकत्वात् ।" इति भरतः ॥ *
॥
तस्य लक्षणम् । यथा, --
"विविधेषु पदार्थेषु लोकसीमातिवर्त्तिषु ।
विस्फारश्चेतसो यस्तु स विस्मय उदाहृतः
॥"
इति साहित्यदर्पणम् ॥
(अस्मात्तपःक्षयो भवति । यथा, मनुः । ४ ।
२३७ ।
"यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात्
॥")
दर्पः । इति मेदिनी ॥ सन्देहः । इति शब्द-
रत्नावली ॥ (विगतः स्मयो गर्व्वो यस्येति ।
नष्टगर्व्वे, त्रि । यथा, भागवते । ३ । १७ ।
३० ।
"तं वीरमारादभिपद्य विस्मयः
शयिस्यसे वीरशये श्वभिर्वृतः ॥")

**विस्मयान्वितः**, त्रि, (विस्मयेन अन्वितः युक्तः ।)

विस्मययुक्तः । आश्चर्य्यविशिष्टः ।
तत्पर्य्यायः ।
विलक्षः २ । इत्यमरः ॥

**विस्माप(य)नः**, पुं, (विस्माप(य)यतीति । वि +

स्मि + णिच् + ल्युः ।) कुहकः ।
गन्धर्व्वनगरम् ।
कामदेवः । इति मेदिनी ॥ क्ली,
विस्मायनम् ॥
(यथा, हरिवंशे । १२६ । २६ ।
"पारिजाततरोः पुष्पं तस्य दत्तं मयानघ ।
विस्पापनार्थं देवेश पत्नीनामुरुतेजसः ॥"
विस्मयकारके, त्रि । यथा, भागवते । १ ।
१५ । ५ ।
"वञ्चितोऽहं महाराज हरिणा बन्धुरूपिणा ।

"जामातरञ्च स तथा सूर्य्यप्रभमुपाचरत् ।
यथा तस्य निजा भोगाः सर्व्वे विस्मृति-
माययुः ॥")

**विस्रं**, क्ली, आमगन्धः । इत्यमरः ॥ इदं चिता-

धूमादिगन्धे अपक्वमांसगन्धे इत्यन्ये ।
इति
भरतः ॥ (यथा, कथासरित्सागरे । ७४ ।
१९६ ।
"समाश्लिषञ्च धावित्वा सिञ्चन् धराश्रुभिः
स तम् ।
मीनोदरदरीवासविस्रं प्रक्षालयन्निव ॥"
तद्विशिष्टे, त्रि । यथा, कथासरित्सागरे ।
८२ । ७ ।
"अहमेनं न शक्नोमि ग्रहीतुं विस्रपिच्छलम्
॥")

**विस्रगन्धा**, स्त्री, (विस्रं गन्धो यस्याः ।) हपुषा ।

इति राजनिर्घण्टः ॥

**विस्रगन्धिः**, पुं, (विस्रमिव गन्धो यस्य ।) हरि-

तालम् । इति हेमचन्द्रः ॥

**विस्रब्धः**, त्रि, (वि + स्रन्भ + क्तः ।) विश्रब्धः ।

इति केचित् ॥ (यथा, साहित्यदर्पणे । १ ।
७ ।
"विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य
गण्डस्थलीम् ॥")

**विस्रम्भः**, पुं, (वि + स्रन्भ + घञ् ।) विश्वासः ।

(यथा, उत्तरचरिते । १ ।
"विस्रम्भादुरसि निपत्य लब्धनिद्राम् ॥")
प्रणयः । इत्यमरः ॥ प्रणयः परिचयः
शृङ्गार-
प्रार्थना वा ।
परिचयप्रार्थनयोः प्रणयः परिकीर्त्तितः ॥
इत्यमरमाला ॥
प्रणयः क्रीडापारतन्त्र्यम् । इति रमानाथः
॥"
इति तट्टीकायां भरतः ॥ (यथा, रामायणे ।
२ । ६० । ७ ।
"विजनेऽपि वने सीता वासं प्राप्य गृहेष्विव
।

भवेत् ॥”

अपि च ।

“भूनिम्बनिम्बत्रिफलापर्प्पटैश्च शृतं जलम् ।
पटोलमुस्तकाभ्याञ्च वासकेन च नाशयेत् ।
विस्फोटकानि व्यक्तानि नात्र कार्य्या विचा-
रणा ॥”

इति गारुडं १९८ अध्यायः ॥ * ॥

विस्फोटकस्य स्वरूपं यथा, भावप्रकाशे ।

“स्फोटाः श्यावारुणाभासा विस्फोटाः स्युस्तनु-
त्वचः ॥”

येन मेऽपहृतं तेजो देवविस्मापनं महत् ॥”)

**विस्मितः**, त्रि, (वि + स्मि + क्तः ।) विस्मयान्वितः ।

यथा, --

“महापाशुपतान् दृष्ट्वा समुत्थाय महेश्वरः ।
संपरिष्वजत व्यक्तं ते प्रणेमुर्म्महेश्वरम् ॥
ततस्तदद्भुततमं दृष्ट्वा सर्व्वगणेश्वराः ।
सुविस्मितास्तदा सन्तः किमिदं
चिन्तयन्निति ॥
विस्मितांस्तान् गणान् दृष्ट्वा
शैलादिर्योगिनांवरः ।
प्राह प्रहस्य देवेशं शूलपाणिं गणाधिपः ॥
विस्मितामी गणा देव सर्व्व एव महेश्वर ।
महापाशुपतानां हि यत् त्वयालिङ्गनं कृतम्
॥”

इति वामने ६४ अध्यायः ॥

**विस्मितिः**, स्त्री, विस्मरणम् । विपूर्ब्बस्मिधातोभवि

क्तिन्प्रत्ययेन निष्पन्नमिदम् ॥

**विस्मृतः**, त्रि, (वि + स्मृ + क्तः ।) स्मरणाविषयः ।

तत्पर्य्यायः । अन्तर्गतम् २ । इत्यमरः ॥
(यथा,

“पठित्वा सर्व्वशास्त्राणि
विस्मृतान्यक्षराणिच ।
आस्ते किञ्चित् मम स्वान्ते टवर्गस्य तु
पञ्चमः ॥”

इत्युद्भटः ॥)

**विस्मृतिः**, स्त्री, विस्मरणम् । विपूर्ब्बकस्मृधातोः

क्तिन् प्रत्ययेन निष्पन्नमिदम् ॥ (यथा,
कथा-
सरित्सागरे । ४४ । ९६ ।

विस्रम्भं लभतेऽभीता रामे विन्यस्तमानसा
॥”)

केलिकलहः । वधः । इति हेमचन्द्रः ॥

**विस्रम्भी**, [न्] त्रि, (विस्रम्भते विश्वसितीति ।

वि + स्रम्भ + “वौ कषलसकत्थस्रम्भः ।”
३ । २ ।
१४३ । इति घिनुण् ।) विश्वासी । (यथा,
भागवते । ६ । ५ । २० ।

“कथं तदनुरूपाय गुणविस्रम्भ्युपक्रमेत्
॥”)

प्रणयी । विस्रम्भशब्दादस्त्यर्थे
णिन्प्रत्ययेन
निष्पन्नमिदम् ॥

**विस्रसा**, स्त्री, जरा । इत्यमरः ॥

**विस्रा**, स्त्री, (विस्रं गन्धोऽस्त्यस्या इति । अच्

ततष्टाप् ।) हपुषा । इति राजनिर्घण्टः ॥

**विस्रुतः**, त्रि, (वि + स्रु + क्तः ।) विस्तृतः । विपू-

र्व्वकस्रुधातोः क्तप्रत्ययेन निष्पन्नमिदम् ।

**विहगः**, पुं, (विहायसा गच्छतीति । गम् + “प्रिय-

वशेति ।” ३ । २ । ३८ । इत्यत्र “डेच
विहायसो
विहादेशो वक्तव्यः ।” इति काशिकोक्तेः
डप्रत्यये
विहायःशब्दस्य विहादेशः ।) पक्षी । इत्य-
मरः ॥ (यथा, भागवते । ४ । १८ । २४ ।

“सुपर्णवत्सा विहगाश्चरञ्चाचरम्मेव च ॥”)

बाणः । (यथा, महाभारते । ७ । १९३ ।
४० ।

"अयोमुखैश्च विहगैर्द्रावयिष्ये महारथान् ॥")
सूर्य्यः । चन्द्रः । इति शब्दरत्नावली ॥ ग्रहः ।
इति धरणिः ॥

**विहङ्गः**, पुं, (विहायसा गच्छतीति । ३ । २ । ३८ ।
इत्यत्र "गमेः सुपीति ।" खच् । "विहायसो
विह च ।" इति विहादेशः । "खच्च डिद्वा
वक्तव्यः ।" इति डिच्च ।) पक्षी । इत्यमरः ॥
(यथा, रघुवंशे । १ । ५१ ।
"सेकान्ते
मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम्।
विश्वासाय विहङ्गानामालवालाम्बुपायिनाम्
॥")
बाणः । (यथा, महाभारते । ८ । ६६ । ३५ ।
"त्वत्प्रेरितैर्लोहिताङ्गैर्व्विहङ्गैः ॥")
मेघः । चन्द्रः । सूर्य्यः । इति शब्दरत्नावली
॥
(नागविशेषः । १ । ५७ । ११ ।
"विहङ्गः शरभो मेदः प्रमोदः संहतोपनः ॥")

**विहङ्गमः**, पुं, (विहायसा गच्छतीति । ३ । २ । ३८ ।
इत्यत्र । "खच्प्रकरणे गमेः सुप्युपसंख्यानम्
।"
इति काशिकोक्त्या खच् । "विहायसो विह
च ।" इति विहादेशः ।) पक्षी । इत्यमरः ॥
(यथा, महाभारते । ३ । २७४ । ३९ ।
"आक्रम्य रत्नान्यहरत्कामरूपी विहङ्गमः ॥"
सूर्य्यः । यथा, मार्कण्डेये । १०९ । ६७ ।
"छन्दोभिरश्वरूपैश्च सकृद्युक्तैर्व्विहङ्ग-
मम् ॥")

**विहङ्गमा**, स्त्री, भारयष्टिः । इति शब्दरत्नावली ॥
वाँक इति भाषा ॥

**विहङ्गराजः**, पुं, (विहङ्गानां राजा । समासे
टच् ।) गरुडः । इति हलायुधः ॥ (यथा,
शिशुपालवधे । १ । ७ ।
"विहङ्गराजाङ्गरुहैरिवायतै-
र्हिरण्मयोर्व्वीरुहवल्लितन्तुभिः ॥")

**विहङ्गिका**, स्त्री, भारयष्टिः । इत्यमरः ॥ वाँक
इति भाषा ॥

**विहत्**, स्त्री, गर्भोपघातिनी गौः । इति संक्षिप्त-

**विहस्तः**, त्रि, व्याकुलः । इत्यमरः ॥ (यथा,
रघुः । ५ । ४९ ।
"रामापरित्राणविहस्तयोधं
सेनानिवेशं तुमुलं चकार ॥")
पण्डितः । इति मेदिनी ॥ (यथा, हरिवंशे ।
२३७ । २८ ।
"नानायुधविहस्तानां त्वरितानां प्रधावताम् ।
क्ष्वेडितोत्क्रुष्टनिनदैर्गजबृंहितनिस्वनैः ॥")
विकरः । (यथा, विख्यातविजये । २ अङ्के ।
"विगतरथविहस्तन्यस्तशस्त्रप्रमत्त
स्खलितगतिभयार्त्तान्नैव जातु प्रहर्त्ता ॥")
पण्डे, पुं । इति शब्दरत्नावली ॥

**विहा**, व्य, (ओहाक् त्यागे + "विषाविहा ।"
उणा० ४ । ३६ । इति निपातनात् आ ।)
स्वर्गः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**विहापितं**, क्ली, (वि + हा + णिच् + क्तः ।)
दानम् । इत्यमरः ॥

**विहायः**, [स्] क्ली पुं, आकाशः । इत्यमरः ॥
(यथा, साहित्यदर्पणे । १० ।
"कान्तायते स्पर्शसुखेन वारि
वारीयते स्वच्छतया विहायः ॥"
त्रि, महान् । यथा, निरुक्ते । ४ । १५ । "विहा-
यसस्तेभिरिन्द्रम् ।" "विहायसो महान्तः ॥"
इति यास्कः ॥ यथा च निघण्टुटीकायाम् । ३
।
३ । १२ । "विहायाः । वहिहाधाञ्भ्यश्छन्दसि
।
उणा० ४ । २१५ । इति जहातेर्जिहीतेर्व्वा
बाहुलकात् षुगभावेऽपि युगागमो निपात्यते ॥"
यथा, ऋग्वेदे । ४ । ११ । ४ ।
"तद्वाजी वाजंभरो विहायाः ।"
"विहायाः महान् ।" इति तद्भाष्ये सायणः ॥)

**विहायाः**, [स्] पुं, पक्षी । इत्यमरः ॥

**विहायसं**, क्ली पुं, आकाशः । इत्यमरटीकायां
मथुरेशः ॥ (यथा, महाभारते । १ । ९३ । १४
।
"आतिष्ठस्व रथं राजन् विक्रमस्व विहाय-
सम् ॥")

**विहायसः**, पुं, पक्षी । इत्यमरटीकायां भरतः ॥

विहारशब्दादस्त्यर्थे इन्प्रत्ययेन निष्पन्नमिदम्
॥
(यथा, नैषधे । ३ । १५ ।
"धार्य्यः कथङ्कारमहं भवत्या
वियद्विहारी वसुधैकगत्या ॥")

**विहितः**, त्रि, (वि + धा + क्तः ।) विधेयः । यथा,
"विहितस्याननुष्ठानात् निन्दितस्य च सेवनात्
।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥"
इति प्रायश्चित्ततत्त्वम् ॥

**विहितिः**, स्त्री, (वि + धा + क्तिन् ।) विधानम् ।
यथा, --
"क्षितिविजितिस्थितिविहितिव्रतरतयःपर-
गतयः ।
ऊरु रुरुधुर्गुरुदुधुवुर्युधि कुरवः स्वमरिकुलम्
॥"
इति दण्डी ॥

**विहीनः**, त्रि, (वि + हा + क्तः ।) विशेषेण हीनः ।
यथा, तन्त्रसारे ।
"षोढान्यासविहीनो यः प्रणमेद्देवि पार्व्वतीम् ।
सोऽचिरान्मृत्युमाप्नोति नरकञ्च प्रपद्यते ॥"
त्यक्तः । यथा, --
"विहीनश्च धनैर्दारैः पुत्त्रैरादाय मे धनम् ।
वनमभ्यागतो दुःखी निरस्तश्चाप्तबन्धुभिः ॥"
इति मार्कण्डेयपुराणे देवीमाहात्म्यम् ॥

**विहृतं**, क्ली, (वि + हृ + क्तः ।) स्त्रीणां स्वाभाविक-
दशविधालङ्कारान्तर्गतालङ्कारविशेषः । यथा,
"लीला विलासो विच्छित्तिर्व्विव्वोकः किल-
किञ्चितम्
मोट्टायितं कुट्टमितं ललितं विहृतं तथा ।
विभ्रमश्चेत्यलङ्काराः स्त्रीणां स्वाभाविका दश
॥"
इति हेमचन्द्रः ॥

**विहृतिः**, स्त्री, विशेषेण हरणम् । विशेषेण बला-
त्कारः । विपूर्ब्बहृधातोः क्तिप्रत्ययेन निष्पन्न-
मिदम् ॥

**विहेठः**, पुं, (वि + हेठ + अच् ।) विहेठनम् ।
विपूर्ब्बहेठधातोरल्प्रत्ययेन निष्पन्नमिदम् ॥

सारोणादिवृत्तिः ॥

**विहतः**, त्रि, विशेषेण हतः । विनष्टः । विपूर्व्वक-

हनधातोः क्तप्रत्ययेन निष्पन्नमिदम् ॥

**विहननं**, क्ली, (वि + हन + ल्युट् ।) विघ्नः ।

हिंसा । तूलपिञ्जलः । इति मेदिनी । ने,

२१० ॥

**विहरः**, पुं, (वि + हृ + अप् ।) वियोगः । इति

हलायुधः ॥

**विहरणं**, क्ली, विहारः । विपूर्व्वकहृधातोरनट्-

प्रत्ययेन निष्पन्नमिदम् ॥ (यथा, भागवते ।

१० ।

३१ । १० ।

"विहरणञ्च ते ध्यानमङ्गलम् ॥"

प्रसारणम् । यथा, पाणिनौ । १ । ३ । २० ।

"आङो दोऽनास्यविहरणे ॥"

आहरणम् । यथा, मार्कण्डेये । १६ । ३७ ।

"नाग्निविहरणञ्चैव क्रत्वभावश्च लक्ष्यते ।

नवाप्यायनमस्माकं विना होमेन जायते ॥")

**विहसितं**, क्ली, (वि + हस् + क्तः ।) मध्यम-

हास्यम् । इत्यमरः ॥

**विहायसा**, व्य, आकाशः । इत्यमरटीकायां मथु-

रेशः हेमचन्द्रश्च ॥ (पाणिनौ च "स्वरादि-

निपातमव्ययम् ।" १ । १ । ३७ । इत्यत्र

गणितम् ॥)

**विहारः**, पुं, (वि + हृ + घञ् ।) क्रीडार्थं पद्भ्यां

गमनम् । तत्पर्य्यायः । परिक्रमः २ । इत्यमरः

॥

(यथा, गीतायाम् । ११ । ४२ ।

"यच्चावहासार्थमसत्कृतोऽसि

विहारशय्यासनभोजनेषु ॥")

भ्रमणम् । स्कन्धः । लीला । (यथा, रघुवंशे ।

६ । ४८ ।

"प्रक्षालणाद्वारिविहारकाले ॥")

सुगतालयः । इति मेदिनी ॥ बिन्दुरेखकपक्षी ।

इति शब्दचन्द्रिका ॥ वैजयन्तः । इति शब्द-

माला ॥

**विहारी**, [न्] त्रि, (विहर्त्तुं शीलमस्येति । वि +

हृ + णिनिः ।) परिक्रमी । विहारकर्त्ता ।

**विहेठनं**, क्ली, (वि + हेठ + ल्युट् ।) हिंसा ।

मर्द्दनम् । विडम्बनम् । इति मेदिनी ॥ विवाधा ।

इति त्रिकाण्डशेषः ॥

**विह्वलः**, त्रि, (वि + ह्वल + अच् ।) भयादिना-

भिभूतः । स्वाङ्गधारणाशक्तः । तत्पर्य्यायः ।

विक्लवः २ । इत्यमरः ॥ (यथा, रघुः । ८ ।

३७ ।

"क्षणमात्रसखीं सुजातयोः

स्तनयोस्तामवलोक्य विह्वला ।

निमिमील नरोत्तमप्रिया

हृतचन्द्रा तमसेव कौमुदी ॥")

विलीनम् । इति हेमचन्द्रः ॥

**वी**, ल ईलवत् । कान्तिगतिव्याप्तिक्षेपप्रजनखादने ।

इति कविकल्पद्रुमः ॥ (अदा०-पर० कान्तौ

अक०-गतौ व्याप्तौ क्षेपे प्रजने खादने च

सक०-

अनिट् ।) ल, वेति । इति दुर्गादासः ॥

**वीः**, पुं, (वयनमिति । वी गतौ + न्यङ्क्वादित्वात् भावे

क्विप् । अभिधानात् पुंस्त्वम् ।) गमनम् ।

इत्ये-

काक्षरकोषः ॥

**वीकः**, पुं, (अजतीति । अज + "अजियुधूनीभ्यो दीर्घश्च ।" उणा० ३ । ४७ । कन् । अजे वींभावः ।) वायुः । पक्षी । इत्युणादिकोषः ॥ मनः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**वीकाशः**, पुं, (विकशनमिति । वि + कश + घञ् । "इकःकाशे ।" ६ । ३ । १२३ । इति वेरुपसर्गस्य दीर्घः ।) रहः । प्रकाशः । इत्यमरः ॥

**वीक्षः**, पुं स्त्री, दृष्टिः । विपूर्ब्बेक्षधातोरल्प्रत्ययेन निष्पन्नमिदम् ॥

**वीक्षणं**, क्ली, विशेषेण ईक्षणम् । दर्शनम् । विपूर्ब्बेक्षधातोरनट् (ल्युट्) प्रत्ययेन निष्पन्नम् ॥ (यथा, भागवते । ६ । १८ । २८ । "मनो जग्राह भावज्ञा सस्मितापाङ्गवीक्षणैः ॥")

**वीक्षापन्नः**, त्रि, (वीक्षामापन्नः ।) विस्मयापन्नः । इति हेमचन्द्रः । ३ । ९७ ॥ (वीक्ष्यापन्नः । इत्येवमेव ॥)

**वीक्षितः**, त्रि, (वि + ईक्ष + क्तः ।) विशेषेण ईक्षितः । दृष्टः । यथा, --
"पापर्क्षे प्रश्नलग्ने तु पापसंयुतवीक्षिते ।
तथैव चाष्टमस्थाने रोगिणां मरणं दिशेत् ॥"
इति दीपिका ॥

**वीक्ष्यं**, क्ली, (वीक्ष्येत इति । वि + ईक्ष + ण्यत् ।) विस्मयः । दृश्यम् । इति मेदिनी । ये, ५६ ॥

**वीक्ष्यः**, पुं, (वि + ईक्ष दर्शने + ण्यत् ।) लासकः । घोटकः । इति मेदिनी ॥ दर्शनीये, त्रि ॥

**वीङ्खा**, स्त्री, (वीङ्खनमिति । वि + इङ्ख + "गुरोश्च हलः ।" इति अः । टाप् ।) शूकशिम्बी । गतिभेदः । नर्त्तनम् । इति हेमचन्द्रः ॥ अश्व-गतिभेदः । सन्धिः । इति शब्दरत्नावली ॥

**वीचिः**, पुं, स्त्री, (वयति जलं तटे वर्द्धयतीति । वे + "वोञो डिच्च ।" उणा० ४ । ७२ । ईचिः । स च डित् ।) तरङ्गः । इत्यमरः ॥ (यथा, रघुवंशे । १ । ४३ ।

दिक्षु दश शब्दा उत्पद्यन्ते तैश्चान्ये दश शब्दा उत्पद्यन्ते इति भावः । अस्मिन् कल्पे गौरवा-द्युक्तं कस्यचिन्मते इति । इति सिद्धान्तमुक्ता-वली ॥

**वी(बी)जं**, क्ली, (विशेषेण कार्य्यरूपेण अपत्यतया च जायते इति । वि + जन + "उपसर्गे च संज्ञा-याम् ।" इति डः । "अन्येषामपीति ।" उप-सर्गस्य दीर्घः । यद्वा विशेषेण ईजते कुक्षिं गच्छति शरीरं वा । ईज गतिकुत्सनयोः + पचाद्यच् । यद्वा, वीजते गच्छति गर्माशय-मिति । वीज् + अच् । यद्वा, "वीजप्रजनन-कान्त्यसनखादनेषु । इत्यस्मादच्प्रत्ययः । तथा च भोजराजीये वियो जक् इति व्युत्पादितम् । बवयोरभेदः । वेति प्रजायते गच्छत्यनेनानृण्यं पितेति वा । अत्र क्षीरस्वामी वीज्यते वेति वा वीजं वाजिलौकिकः इति । वीजिः स्यात् प्रेरणक्रिया इति माधवः ॥ प्रेर्य्यते हि कार्य्य-करणाय वा वीजम् ।" इति निघण्टौ देव-राजयज्वा । २ । २ । १५ ।) कारणम् । (यथा, गीतायाम् । ७ । १० ।
"वीजं मां सर्व्वभूतानां विद्धि पार्थ सनातनम् ॥"
यथा च मनौ । १ । ५६ ।
"यदाणुमातृको भूत्वा वीजंस्थास्नु चरिष्णु च ॥")

"नकुलीशोऽग्निमारूढो वामनेत्रार्द्धचन्द्रवान् ।
बीजं तस्याः समाख्यातं सेवितं सिद्धि-काङ्क्षिभिः ॥"
नकुलीशो हकारः । अग्नी रेफः । वामनेत्र-मीकारः । अर्द्धचन्द्रोऽनुस्वारः । ह्रीं ॥ * ॥ अन्नपूर्णाया वीजम् । ह्रीं नमो भगवति माहे-श्वरि अन्नपूर्णे स्वाहा ॥ * ॥ अथ त्रिपुटा-वीजम् । श्रीँ ह्रीँ क्लीँ ॥ * ॥ त्वरितावीजम् । ॐ ह्रीँ हुँ खे च छे क्ष स्त्री हूं क्षे ह्रीँ फट् ॥ * ॥ अथ नित्यावीजम् । ऐँ क्लीँ तित्यक्लिन्ने मददवे स्वाहा ॥ * ॥ वज्रप्रस्तारिण्याः । ऐँ ह्रीँ नित्य-क्लिन्ने मदद्रवे स्वाहा ॥ * ॥ अथ दुर्गावीजम् । ॐ ह्रीँ दुँ दुर्गायै नमः ॥ * ॥ महिषमर्द्दिनी-वीजम् । ॐ महिषमर्द्दिनि स्वाहा ॥ * ॥ जयदुर्गा वीजम् । ॐ दुर्गे दुर्गे रक्षणि स्वाहा ॥ * ॥ शूलिनीवीजम् । ज्वल ज्वल शूलिनि दुष्टग्रह हुँ फट् स्वाहा ॥ * ॥ वागीश्वरीवीजम् । वद वद वाग्वादिनि स्वाहा ॥ * ॥ पारिजात-सरस्वतीवीजम् । ॐ ह्रीँ ह्सौँ ॐ ह्रीँ सरस्वत्यै नमः ॥ * ॥ गणेशवीजम् । गँ ॥ * ॥ हेरम्बवीजम् । ॐ गूँ नमः ॥ * ॥ हरिद्रा-गणेशवीजम् । ग्लँ ॥ * ॥ लक्ष्मीवीजम् । श्रीँ ॥ * ॥
महालक्ष्मीवीजम् । ॐ ऐं ह्री श्रीँ क्लीँ ह्सौँ जगत्प्रसूत्यै नमः ॥ * ॥ सूर्य्यवीजम् । ॐ घृणि सूर्य आदित्य ॥ * ॥ श्रीरामवीजम् । रां रामाय नमः । जानकीवल्लभाय हुँ स्वाहा ॥ * ॥ विष्णु-वीजम् । ॐ नमो नारायणाय ॥ * ॥ श्रीकृष्ण-वीजम् । गोपीजनवल्लभाय स्वाहा ॥ * ॥ वासु-देवस्य । ॐ नमो भगवते वासुदेवाय ॥ * ॥ बालगोपालस्य । ॐ क्लीं कृष्णाय ॥ * ॥ लक्ष्मी-वासुदेवस्य । ॐ ह्रीं ह्रीं श्रीं श्रीं लक्ष्मीवासु-देवाय नमः ॥ * ॥ दधिवामनस्य । ॐ नमो विष्णवे सुरपतये महाबलाय स्वाहा ॥ * ॥ हयग्रीवस्य ।
ॐ उद्गिरत्प्रणवोद्गीथसर्व्वागीश्वरेश्वर ।
सर्व्ववेदमयाचिन्त्य सर्व्वं बोधय बोधय ॥ * ॥ नृसिंहस्य ।
उग्रं वीरं महाविष्णुं ज्वलन्तं सर्व्वतोमुखम् ।
नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ॥ * ॥ नरहरिवीजम् । आँ ह्रीँ क्षौं हुं फट् ॥ * ॥ हरिहरस्य । ॐ ह्रीँ हौँ शङ्करनारायणाय

"सरसीष्वरविन्दानां वीचिविक्षोभशीतलम्।
आमोदमुपजिघ्रन्तौ स्वनिश्वासानुकारिणम्॥")
स्वल्पतरङ्गः । अवकाशः । सुखम् । इति
मेदिनी । चे, १० ॥ अल्पः । इति हेमचन्द्रः ॥
किरणः । इति जटाधरः ॥

**वीची**, स्त्री, (वीचि + कृदिकारादिति ङीष् ।)

वीचिः । इत्यमरटीकायां भरतः ॥ (यथा,
बृहत्संहितायाम् । ५६ । ४ ।
"सरःषु नलिनीच्छत्रनिरस्तरविरश्मिषु।
हंसांसाक्षिप्तकह्लारवीचीविमलवारिषु॥")

**वीचीतरङ्गः**, पुं, न्यायविशेषः । स तु श्रोत्रे शब्दस्य

उत्पत्तिकारणरूपः । यथा, --
"वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्त्तिता ।
कदम्बगोलकन्यायात्कूपत्तिः कस्यचिन्मते ॥"
इति भाषापरिच्छेदः ॥
ननु मृदङ्गाद्यवच्छेदेनोत्पन्ने शब्दे श्रोत्रे कथमुत्-
पत्तिरित्यत आह वीचीति आद्यशब्दस्य
बहिर्दशदिगवच्छिन्नोऽन्यः शब्दस्तैनैव शब्देन
जन्यते तेन चापरस्तद्व्यापक एवं क्रमेण
श्रोत्रोत्-
पन्नो गृह्यत इति । कदम्ब इति आद्यशब्दाद्दश-

शुक्रम् । इत्यमरः ॥ (यथा मनौ । १ । ८
।
"अप एव ससर्ज्जादौ तासु
वीजमवासृजत् ॥"
वीजं शुक्रम् । इति मेधातिथिः ॥ वीजं
शक्ति-
रूपम् । इति कुल्लूकः ॥ यथा च तत्रैव ।
१० । ७२ ।
"यस्माद्वीजप्रभावेण तिर्य्यग्जा
ऋषयोऽभवन् ।
पूजिताश्च प्रशस्ताश्च तस्माद्वीजं
प्रशस्यते ॥")
श्रीकृष्णस्य सर्व्वावतारवीजत्वं यथा, --
दानव उवाच ।
"अधुना कृष्णरूपस्त्वं परिपूर्णतमः
स्वयम् ।
सर्व्वेषामवताराणां बीजरूपः सनातनः
॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे २२
अध्यायः ॥
अङ्कुरः । (यथा, महाभारते । ५ । १२ ।
१९ ।
"न तस्य वीजं रोहति वीजकाले
न चास्य वर्षं वर्षति वर्षकाले ।
भीतं प्रपन्नं प्रददाति शत्रवे
न त्रातारं लभते त्राणमिच्छन् ॥")
तत्त्वाधानम् । इति मेदिनी ॥ मज्जा ।
इति
राजनिर्घण्टः ॥ गणितबिशेषः । यथा, --
"उत्पादकं यत्प्रवदन्ति बुद्धे-
रधिष्ठितं सत्पुरुषेण सांख्याः ।
व्यक्तस्य कृत्स्नस्य तदेकवीज-
मव्यक्तमीशं गणितं च वन्दे ॥
पूर्ब्बं प्रोक्तं व्यक्तमव्यक्तवीजं
प्रायः प्रश्ना नो विना व्यक्तयुक्त्या ।
ज्ञातुं शक्या मन्दधीभिर्नितान्तं
यस्मात्तस्माद्वच्मि बीजक्रियाञ्च ॥"
इति भास्कराचार्य्यविरत्तिते
सिद्धान्तशिरोमणौ
वीजगणिताध्यायस्य प्रथमद्वितीयश्लोकौ
॥ * ॥
मन्त्रः । यथा । अथ भुवनेश्वरीमन्त्रः ।

नमः हौँ ह्रीँ ॐ ॥ * ॥ वराहस्य । ॐ नमो
भगवते वराहरूपाय भूर्भुवस्वःपतये भूपतित्वं
मे देहि ददापय स्वाहा ॥ * ॥ शिवस्य ।
हौं ॥ * ॥ मृत्युञ्जयस्य । ॐ जुं सः ॥ * ॥
दक्षिणामूर्त्तिवीजम् । ॐ नमो भगवते दक्षिणा-
मूर्त्तये मह्यं मेधां प्रयच्छ स्वाहा ॥ * ॥ चिन्ता-
मणिवीजम् । र क्ष म र य औं ऊं ॥ * ॥
नीलकण्ठस्य । प्रों त्रीं ठः नमः शिवाय ॥ * ॥
चण्डस्य । रूध्व फट् ॥ * ॥ क्षेत्रपालस्य ॐ क्षौँ
क्षेत्रपालाय नमः ॥ * ॥ वटुकभैरवस्य । ॐ ह्री
वटुकाय आपदुद्धरणाय कुरु कुरु वटुकाय

ह्रीं ॥ * ॥ त्रिपुरावाः । हसरैं । हसकलरीं ।
हसरौँः ॥ * ॥ सम्पत्प्रदाभैरव्याः । हसरैं ।
हसकलरीं । हसरौँ ॥ * ॥ कौलेशभैरव्याः ।
सहरैं । सहकलरीं । सहरौँ ॥ * ॥ भय-
विध्वंसिनीभैरव्याः । हसैँ । हसकलरीं ।
हसौँ ॥ * ॥ सकलसिद्धिदाभैरव्याः । सहैँ ।
सह-
कलरीं । सहौँ ॥ * ॥ चैतन्यभैरव्याः । सहैँ
।
सकलह्रीँ । सहरौः ॥ * ॥ कामेश्वरीभैरव्याः
।
सहैँ । सकलह्रीँ । नित्यक्लिन्ने मदद्रवे
सहरौः ।
षट्कूटाभैरव्याः । डरलकसहैँ ।
डरलकसहीँ ।
डरलकसहौँ ॥ * ॥ नित्याभैरव्याः ।
हसकल-
रडैँ । हसकलरडीं । हसकलरडौँ ॥ * ॥
रुद्र-
भैरव्याः । हसखफरैँ । हसकलरीँ । हसौः ॥
* ॥
भुवनेश्वरीभैरव्याः । हसैँ । हसकलह्रीं ।
हसौः ॥ * ॥ सकलेश्वर्य्याः । सहैं ।
सहकलह्रीं ।
सहौः ॥ * ॥ त्रिपुराबालायाः । ऐं क्लीं सौः
॥ * ॥
नवकूटाबालायाः । ऐँ क्लीँ सौः । हसैँ ।
हसकलरीँ । हसौँः । हसरैँ हसकलरीं
हसरौँः ॥ * ॥ अन्नपूर्णभैरव्याः । ॐ ह्रीं श्रीं
क्लीं
नमो भगवति माहेश्वरि अन्नपूर्णे स्वाहा ॥ *
॥
श्रीविद्यायाः । कएईल ह्रीँ । हसकहलह्रीँ ।
सकलह्रीँ ॥ * ॥ छिन्नमस्तायाः । श्रीं क्लीं
हूं
ऐं वज्रवैरोचनीये हूँ हूँ फट् स्वाहा ॥ * ॥
श्यामायाः । क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं दक्षिणे
कालिके क्रीं क्रीं क्रीं हूँ हूँ ह्रीँ ह्रीँ स्वाहा ॥ *
॥
गुह्यकालिकायाः । क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं
गुह्ये कालिके क्रीं क्रीं क्रीं हूँ हूँ ह्रीँ ह्रीँ

वीजम् । ऐं ॥ * ॥ कात्यायन्याः । ऐं ह्रीं श्रीं
चौं चण्डिकाय नमः ॥ * ॥ दुर्गायाः । दूं ॥ *
॥
विशालाक्ष्याः । ॐ ह्रीं विशालाक्ष्यै नमः ॥ *
॥
गौर्य्याः । ह्रीं गौरि रुद्रदयिते योगेश्वरि हूं फट्
स्वाहा ॥ * ॥ ब्रह्मश्रीमन्त्रः । ह्रीँ नमो ब्रह्म-
श्रीराजिते राजपूजिते जये विजये गौरि
गान्धारि त्रिभुवनशङ्करि सर्व्वलोकवशङ्करि
सर्व्वस्त्रीपुरुषवशङ्करि सुयुद्धदुर्घोररावे ह्रीँ
स्वाहा ॥ * ॥ इन्द्रस्य । इं इन्द्राय नमः ॥ *
॥
गरुडस्य । क्षिप ॐ स्वाहा ॥ * ॥ विषहराग्नि-
वीजम् । खः खं ॥ * ॥ वृश्चिकविषहरवीजम्
।
ॐ सरह स्फुः । ॐ हिलि हिमि चिलि हस्फुः
।
ॐ हिलि हिलि चिलि चिलि स्फुः । ब्रह्मणे
फुः । सर्व्वेभ्यो देवेभ्यस्फुः ॥ * ॥
मूषिकविषहर-
वीजम् । ॐ गैं ॠं ठं । आगमचन्द्रिकायां ॐ
गं गां ठः ॥ * ॥ मूषिकनाशमन्त्रः । ॐ सरणे
फुः असरणे फुः विसरणे फुः । एतन्मन्त्रं
जपन्
श्वेतसर्षपप्रक्षेपात् मूषिकनाशो भवति ॥ * ॥
लूताविषहरमन्त्रः । ॐ ह्रीं ह्रीं हूं जकृत् ॐ
स्वाहा गरुड हूं फट् ॥ * ॥ सर्व्वकीटविषहर-
वीजम् । ॐ नमो भगवते विष्णवे सर सर हन
हन हुं फट् स्वाहा ॥ * ॥ सुखप्रसवमन्त्रः ।
ॐ मन्मथ मन्मथ वाहि वाहि लम्बोदर मुञ्च
मुञ्च स्वाहा । ॐ मुक्ताः पाशा विपाशाश्च
मुक्ताः सूर्य्येण रश्मयः । मुक्तः सर्व्वभयाद्गर्भ
एह्येहि मारीच मारीच स्वाहा । एतयो-
रन्यतरेणाष्टवारं जलमभिमन्त्र्य देयं पीत्वा
सुखप्रसवा भवति ॥ * ॥ हनूमतः । हं हनूमते
रुद्रात्मकाय हुं फट् ॥ * ॥ वीरसाधनस्य । हं
पवननन्दनाय स्वाहा ॥ * ॥ अथ आर्द्रपटी ।
ॐ नमो भगवति चामुण्डे रक्तवाससे अप्रति-
हतरूपपराक्रमे अमुकवधाय विचेतसे स्वाहा
।
आर्द्ररक्तपटेनावृतः समुद्रगामिनीनदीतटे
ऊषरभूमौ वा दक्षिणामुख ऊर्द्ध्वबाहुर्जपेत् ।

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ।
उर्व्वारुकमिव बन्धनान् मृत्योर्मुक्षीयमामृतात् ॥
ॐ भूर्भुवः स्वः । इत्यादि तन्त्रसारः ॥ आक-
र्षणादिवीजानि बाहुल्यभयान्नोक्तानि ॥ * ॥
(अथ वीजाभिधानम् । यथा, --
"वीजसङ्केतबोधार्थमाहृत्य तन्त्रशास्त्रतः ।
वीजनामानि कतिचित् वक्ष्यामि विदुषां मुदे ॥
माया लज्जा परा संवित् त्रिगुणा भुवनेश्वरी ।
हृल्लेखा शम्भुवनिता शक्तिर्देवीश्वरी शिवा ॥
महामाया पार्व्वती च संस्थानकृतरूपिणी ।
परमेश्वरी च भुवना धात्री जीवनमध्यगा ॥ स्त्रीं ॥
वह्निहीनेऽस्त्रयुङ्माया स्थिरमाया प्रकीर्त्तिता ॥
ह्रीं ॥
शाग्निशान्तिर्बिन्दुनादैर्लक्ष्मीप्रणव उच्यते ।
श्रीर्लक्ष्मीर्विष्णुवनिता रमा क्षीरसमुद्रजा ॥ श्रीं ॥
षोडशव्यञ्जनं बह्निवामाक्षिबिन्दुसंयुतम् ।
चन्द्रवीजसमारूढं बधूवीजमिदं स्मृतम् ।
बधूर्वमिक्षणा योषिदेकाक्षी स्त्रीचकामिनी ॥ स्त्रीं
नादबिन्दुसमायुक्तो द्वादशस्तुमुरो भगम् ।
योनिः सरस्वतीवीजमधरं वाग्भवञ्च वाक् ॥ ऐं
हकारो वामकर्णाढ्यो नादबिन्दुविभूषितः ।
कूर्च्चं क्रोध उग्रदर्पो दीर्घहूङ्कार उच्यते ।
शब्दश्च दीर्घकवचं तारा प्रसव इत्यपि ॥ हूं ॥
कामाक्षरं वह्निसंस्थं रतिबिन्दुविभूषितम् ।
कालीवीजमिदं प्रोक्तं रतिवीजं तदेव हि ॥ क्रीं ॥
कामाक्षरं धरासंस्थं रतिबिन्दुविभूषितम् ।
गुप्तकालीवीजमिदं गोपालवीजमित्यपि ॥
तत्कामवीजं कामेशी वीजं शक्तिस्त्वसौ परा ॥
क्लीं ॥
सत्यान्तयुक्व्योमसेन्दुशैवं प्रासादमुच्यते ॥ हौं ॥
कलाद्यं क्लेदिनीवीजं क्रोङ्कारस्त्वङ्कुशाभिघः ॥
क्रों ॥
आकारो विन्दुमान् पाशः शेषश्च समुदीरितः ।
सकला भुवनेशानी कामेशी वीजमुच्यते ॥
नमस्तु हृदयं स्वाहा द्विठष्ठयुगलं ठठः ॥
नमः ॥ स्वाहा ॥
चन्द्रयुग्मं शिवो वेदमाता ज्वलनसुन्दरी ।
स्वाहा परा देवभोज्यं ठद्वयं चन्द्रयुग्गकम् ।
श्रुवो हविर्व्वेदमाता देवास्यं वह्निसुन्दरी ॥ स्वाहा
॥
शिखा वषट् शिरोमध्य शक्रमाता हरप्रिया ॥
शिखा वषट् च । वषट् कवचं क्रोधो वर्म्महूमि-

स्वाहा ॥ * ॥ भद्रकाल्याः । क्लीं क्लीं
क्लीं हूं हूं
ह्रीं ह्रीं भद्रकाल्यै क्लीं क्लीं क्लीं हूं हूं ह्रीं ह्रीं
स्वाहा ॥ * ॥ श्मशानकालिकायाः । क्रीं क्रीं
क्रीं
हूं हूं ह्रीं ह्रीं श्मशानकालि क्रीं क्रीं क्रीं
हूं हूं ह्रीं ह्रीं स्वाहा ॥ * ॥ महाकाल्याः ।
क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं महाकालि क्रीं क्रीं
क्रीं हूं हू ह्रीं ह्रीं स्वाहा ॥ * ॥ तारायाः ।
ह्रीं स्त्रीं हूं फट् ॥ * ॥ चण्डोग्रशूलपाणेः ।
ॐ ह्रीं हूं शिवाय फट् ॥ * ॥ मातङ्गिन्याः ।
ॐ ह्रीँ क्लीं हूं मातङ्गिन्यै फट् स्वाहा ॥ * ॥
उच्छिष्टचाण्डालिन्याः ।
उच्छिष्टचाण्डालिनी
सुमुखीदेवी महापिशाचिनी ह्रीं ठँः ठँः ठँः ॥
* ॥
धूमावत्याः । धूं धूं स्वाहा ॥ * ॥
भद्रकाल्याः ।
हौं कालि महाकालि किलि किलि फट्
स्वाहा ॥ * ॥ उच्छिष्टगणेशस्य । ॐ
हस्ति-
पिशाचि लिखे स्वाहा ॥ * ॥ धनदायाः ।
धं ह्रीं श्रीं देवि रतिप्रिये स्वाहा ॥ * ॥
श्मशानकालिकायाः । ऐँ ह्रीँ श्रीँ क्लीँ
कालिके
ऐँ ह्रीँ श्रीँ क्लीँ ॥ * ॥ वगलायाः । ॐ ह्लीँ
वगलामुखि सर्व्वदुष्टानां वाचं मुखं स्तम्भय
जिह्वां कीलय कीलय बुद्धिं नाशय ह्लीं ॐ
स्वाहा ॥ * ॥ कर्णपिशाच्याः । ॐ
कर्णपिशाचि
वदातीतानागतशब्दं ह्रीं स्वाहा ॥ * ॥ मञ्जु-
घोषस्य । क्रों ह्रीं श्रीं ॥ * ॥ तारिण्याः ।
क्रीँ क्लीँ कृष्णदेवि ह्रीँ क्रीं ऐं ॥ * ॥
सारस्वत-

यावत् पटः शुष्यति तावत् प्राणाः शुष्यन्ति
शत्रोः ॥ * ॥ श्मशानभैरव्याः । श्मशानभैरवि
नररुधिरास्थिवसाभक्षणिसिद्धिं मे देहि मम
मनोरथान् पूरय हुं फट् स्वाहा ॥ * ॥
ज्वाला-
मालिन्याः । ॐ नमो भगवति ज्वालामालिनि
गृध्रगणपरिवृते हुं फट् स्वाहा ॥ * ॥ महा-
काल्याः । ॐ फ्रें फ्रें क्रों क्रों पशून् गृहाण
हुं फट् स्वाहा ॥ * ॥ अथ निगडबन्धन-
मोक्षणस्य । ॐ नम ऋते निरृते तिग्मतेजो
यन्मयं विव्रे ता बन्धमेतं यमेन दत्तं तस्या
संविदा
नोत्तमे नाके अघोवोऽवैरम् ॥ * ॥ अथ चिटि-
मन्त्रः । ॐ चिटि चिटि चाण्डालि महा-
चाण्डालि अमुकं मे वशमानय स्वाहा ॥ * ॥
त्र्यम्बकस्य ।
ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ।
उर्व्वारुकमिव बन्धनान् मृत्योर्मुक्षीयमामृतात्
॥
अथ मृतसंजीवनीमन्त्रः । हौँ ॐ जुँ सः ॐ
भूर्भुवः स्वः ।

त्यपि ।
क्रोधाख्योहं तनुत्वञ्च शस्त्रादौ रिपुसंज्ञकः ॥ हूं ॥
अस्त्रनेत्रयुगं वौषट् ॥ वौषट् ॥ फडस्त्रं शस्त्र-
मायुधम् ॥ फट् ॥
तार्त्तीयन्तु ह्सौः प्रेतवीजम् ॥ ह्सौः ॥ हंसो-
ऽजपामनुः ॥ हंसः ॥
गकारो विन्दुमान् विघ्नवीजं गणेशवीजकम् ॥ गं
॥
स्मृतिस्थं मांसमौबिन्दुयुतं भूवीजमीरितम् ॥ लं ॥
ठान्तं दहननेत्रेन्दुयुतन्तु विम्बवीजकम् ॥ ड्रीं ॥
अथ कामकलावामनयनं विन्दुसंयुतम् ।
अर्कमात्राकलावाणीनादोर्द्धेन्दुः सदाशिवः ।
अनुच्चार्य्यतुरीया च विश्वमातृकला परा ॥ ँ ॥
नादः ॥

भूतडामरसङ्केतबोधार्थं भूतडामरीयवीजनामा-
न्यपि लिख्यन्ते ।
प्रणवो विषवीजं स्यात् ध्रुवं हालाहलं स्मृतम् ।
कालश्रुतिपथं ज्ञेयं बहुरूपी निरञ्जनम् ॥ प्रणवम्
॥
क्षतजस्थं व्योमवक्त्रं धूम्रभैरव्यलङ्कृतम् ।
नादबिन्दुसमायुक्तं वीजं प्राणात्मकं स्मृतम् ॥ ह्रीं
क्रोधीशं क्षतमारूढं धूम्रभैरव्यलङ्कृतम् ।
विद्या जिह्वा विन्दुयुतं पितृभूवासिनी स्मृतम् ॥
क्रीं
क्रोधकालात्मकं कुर्य्याद्भौतिकं वाग्भवं स्मृतम् ।
नादविन्दुसमायुक्तं समाधायोग्रभैरवीम् ॥
वीजमेतत्तु कथितं शुद्धबुद्धिप्रवर्त्तकम् ॥ ऐं ॥
क्रोधीशं बलभृद्धूम्रभैरवीनादविन्दुभिः ।
त्रिमूर्त्तमन्मथं कामराजस्त्रैलोक्यमोहनम् ।
इन्द्रासनगतो ब्रह्म समूर्त्तिस्तु समन्मथः ॥ क्लीं
॥
संयुक्तं धूम्रभैरव्यारक्तस्थं बलिभोजनम् ।
नादविन्दुसमायुक्तं किङ्किनी वीजमुत्तमम् ॥ ह्रीं ॥
नादविन्दुसमायुक्तं रक्तस्थं बलिभोजनम् ।
कालरात्र्यासनोपेतं विशिखाख्यं महामनुम् ॥ ह्रां
॥
विदार्य्यालिङ्गितोग्रात्योवसिस्तक्षतजोक्षतः ।
नादविन्दुसमायुक्तो विज्ञेयः पिसिताशनम् ॥ हुं ॥
धूम्रध्वजाधः कालाग्निः सोर्द्धकेशीन्दुविन्दुभिः ।
युगान्तकारकं वीजं भैरवेन प्रकाशितम् ॥ स्फें ॥
कपर्द्दिनं समादाय क्षतजः क्षितिविग्रहम् ।
संयुक्तं धूम्रभैरव्यां क्षोहयं नादविन्दुमान् ॥ प्रीं ॥
कपालीद्वयमादाय महाकालेन मण्डितम् ।
समासनमिति प्रोक्तं चण्डिकाद्व्यंप्रयोजयेत् ॥
ठं ठं ठः ठः ॥
क्षतजस्थं व्योमवक्त्रं चन्द्रक्षतविभूषितम् ।
खद्योतमिति संप्रोक्तं ग्रासिनी कालरात्रियुक् ॥
हूँ हूँ ॥
क्षतजो क्षतमाकाशं नादविन्दुविभूषितम् ।
विदारी भूषितञ्चैव बीजं वैवस्वतोदृकम् ॥ हाँ ॥
कीर्त्त्याख्या कालवक्त्रा च महाकालेन साधितम्
॥
तदनादिपञ्चरश्मिः सृष्टिस्थित्यन्ततद्विधिः ॥ ॐ
॥
व्योमस्थं तालजङ्घास्थं विन्दुनादविभूषितम् ।
वराटकः २ । इत्यमरः ॥ कर्णिका ३ । इति
जटाधरः ॥ वारिकुब्जः ४ शृङ्गाटकः ५ । इति
शब्दरत्नावली ॥
वराटकः २ । इत्यमरः ॥ कर्णिका ३ । इति
जटाधरः ॥ वारिकुब्जः ४ शृङ्गाटकः ५ । इति
शब्दरत्नावली ॥

**वीजगर्भः**, पुं, (वीजानि गर्भेऽभ्यन्तरे यस्य ।)
पटोलः । इति राजनिर्घण्टः ॥

**वीजगुप्तिः** स्त्री, (वीजानां गुप्तिर्यत्र ।) शिम्बी ।
इति राजनिर्घण्टः ॥

**वीजधान्यं**, क्ली, (वीजप्रधानं धान्यम् ।) धान्य-
कम् । इति राजनिर्घण्टः ॥

**वीजनं**, क्ली, (वीज्यतेऽनेनेति । वि + ईज + करणे
ल्युट् ।) व्यजनम् । (यथा, आर्य्यासप्तशत्याम्
। ४५० ।
"मलयजमपसार्य्य घनं वीजनविघ्नं विधाय
बाहुभ्याम् ॥
स्मरसन्तापादगणितनिदाघमालिङ्गितेमिथु-
नम् ॥")
वस्तु । कोके जीवञ्जीवे च पुं । इति सारस्वतः
॥

**वीजपादपः**, पुं, (वीजप्रधानः पादपः ।) भल्ला-
तकः । इति राजनिर्घण्टः ॥ (वीजोत्पन्न-
वृक्षमात्रञ्च ॥)

**वीजपुष्पं**, क्ली, (वीजप्रधानं पुष्पं यस्य ।) मरु-
वकः । मदनवृक्षः । इति मेदिनी । पे, २९ ॥

**वीजपूरः**, पुं, (वीजानां पूरः समूहो यत्र ।) फल-
पूरः । इत्यमरः ॥ टावा लेवु इति वङ्गभाषा ॥
विजौरा इति हिन्दी भाषा ॥ तत्पर्य्यायः ।
वीजपूर्णः २ पूर्णवीजः ३ सुकेशरः ४ वीजकः
५
केशराम्लः ६ मातुलुङ्गः ७ सुपूरकः ८ रुचकः
९
वीजफलकः १० जन्तुघ्नः ११ दन्तुरच्छदः
१२
पूरकः १३ रोचनफलः १४ । अस्य
फलगुणाः ।

**वीजमातृका**, स्त्री, (वीजानां वीजमन्त्रानां मातेव
जपमालात्वादस्यास्तथात्वम् ।) पद्मवीजम्
।
यथा, --
"पद्माक्षं पद्मवीजञ्च कर्णिका वीजमातृका ॥"
इति हारावली ॥

**वीजरत्नः**, पुं, (वीजं रत्नमिव यस्य ।) माष-
कलायः । इति हेमचन्द्रः ॥

**वीजरुहः**, पुं, (वीजात् रोहतीति । रुह +
इगुपधात् कः ॥) शाल्यादिः । यथा, --
"कुरण्ट्याद्या अग्रवीजा मूलजास्तूपलादयः
।
पर्व्वयोनय इक्ष्वाद्याः स्कन्दजाः
शल्लकीमुखाः ॥
शाल्यादयो वीजरुहा संमूर्च्छजास्तृणादयः ।
स्युर्व्वनस्पतिका यस्य षडेते मूलजातयः ॥"
इति हेमचन्द्रः ॥
(क्वचित् वाच्यलिङ्गोऽपि दृश्यते ॥)

**वीजरेचनं**, क्ली, (वीजं रेचनं रेचकं यस्य ।)
जयपालः । इति राजनिर्घण्टः ॥

**वीजवपनं**, क्ली, (वीजानां वपनम् ।) क्षेत्रे वीजस्य
क्षेपणम् । तस्य दिनं दीपिकायाम् ।
"पूर्व्वाग्नियाम्यफणिपित्र्यशिवान्यभेषु
रिक्ताष्टमीविगतचन्द्रतिथिविहाय ।
द्व्यङ्गालिगोसमुदये विकुजार्किवारे
शस्तेन्दुयोगकरणेषु हलप्रवाहः ॥"
हलप्रवाहवद्वीजवपनस्यविधिः स्मृतः ।
चित्रायाञ्च शुभे केन्द्रे स्थिरस्वमनुजोदये ॥
हेमवारिविलिप्तस्य वीजस्योन्नयतः शुचिः ।
इन्द्रं चित्ते निधायाथ स्वयं मुष्टित्रयं वपेत् ॥
कृत्वा चान्योन्यप्रोत्साहं नर्त्तको हृष्टमानसः
।
प्राङ्मुखः कलसं गृह्य इमं मन्त्रमुदोरयेत् ॥
त्वं वै वसुन्धरे सीते बहुपुष्पफलप्रदे ।
नमस्ते मे शुभं नित्यं कृषिं मेधां शुभे कुरु ॥
रोहन्तु सर्व्वशस्यानि काले देवः प्रवर्षतु ।
कर्षकास्तु भवन्त्वग्र्या धान्येन च धनेन च
स्वाहा ॥
उप्त्वा वीजन्तु तत्रैव भोक्तव्यं बान्धवैः सह ।

कूर्च्चं कालो महाकालः क्रोधवीजं निरञ्जनम् ॥
हूँ ॥
इति प्राणतोषिणी ॥)

**वीजकः**, पुं, मातुलुङ्गकः इति जटाधरः ॥ वृक्ष-

विशेषः । विजयासार इति हिन्दो भाषा ।
तत्पर्य्यायः । पीतसारः २ पीतशालकः ३
बन्धूकपुष्पः ४ प्रियकः ५ सर्ज्जकः ६ आसनः ७ ।
अस्य गुणाः । कुष्ठवीसर्पचित्रमेहगुदक्रिमि-
श्लेष्मास्रपित्तनाशित्वम् । त्वच्यत्वम् ।
केश्यत्वम् ।
रसायनत्वञ्च । इति भावप्रकाशः ॥ (यथा,
हरिवंशे । १५५ । २० ।
"अक्षकैर्व्वीजकैश्चैव मन्दारैश्चोपशोभितम् ॥")
वीजे, क्ली ॥

**वीजकृत्**, क्ली, (वीजं वीर्य्यं करोति वर्द्धयतीति ।

कृ + क्विप् ।) वाजीकरणम् । इति राजनिर्घण्टः ॥

**वीजकोशः** पुं, (वीजानां कोष आधार इव ।)

पद्मवीजाधारचक्रिका । फाँफल
इति ख्यातः । इति भरतः ॥ तत्पर्य्यायः ।

**वीजकोषः** पुं, (वीजानां कोष आधार इव ।)

पद्मवीजाधारचक्रिका । फाँफल
इति ख्यातः । इति भरतः ॥ तत्पर्य्यायः ।

अम्लत्वम् । कटुत्वम् । उष्णत्वम् ।
श्वासकास-
पवनशमनत्वम् । कण्ठशोधनकरत्वम् । लघु-
त्वम् । हृद्यत्वम् । दीपनत्वम् । रुचिकारि-
त्वम् । पावनत्वम् ।
आध्मानगुल्महृद्रोगप्लीहो-
दावर्त्तनाशित्वम् । विबन्धे हिक्कायां शूले
छर्द्द्याञ्च शस्यत्वञ्च । इति राजनिर्घण्टः ॥ * ॥
अपि च ।
"वीजपूरफलं स्वादु रसेऽम्लं दीपनं लघु ।
रक्तपित्तहरं कण्ठजिह्वाहृदयशोधकम् ।
श्वासकासारुचिहरं हृद्यं तृष्णाहरं स्मृतम् ॥"
तद्भेदमधुकर्क्कटी । यथा, --
"वीजपूरोऽपरः प्रोक्तो मधुरो मधुकर्क्कटी ।
मधुकर्क्कटिका स्वाद्वी रोचनी शीतला गुरुः ।
रक्तपित्तक्षयश्वासकाशहिक्काभ्रमापहा॥"
इति भावप्रकाशः ॥
(यथा, महाभारते । ३ । १५८ । ४२ ।
"मुञ्जातकांस्तथा जीवान् दाडिमान् वीज-
पूरकान् ॥")

**वीजपूर्णः**, पुं, (वीजेन पूर्णः ।) छोलङ्गः । इति

रत्नमाला ॥ वीजपूरः । इति राजनिर्घण्टः ॥

**वीजपेशिका**, स्त्री, (वीजस्य शुक्रस्य पेशिकेव ।)

अण्डकोषः । इति राजनिर्घण्टः ॥

**वीजफलकः**, पुं, (वीजप्रधानं फलं यस्य । कन् ।)

वीजपूरः । इति राजनिर्घण्टः ॥

वीजवपनं प्राजापत्यतीर्थेन । यथा, हारीतः ।
कनिष्ठायाः पश्चात् प्राजापत्यमावपनम् ।
होम-
तर्पणे प्राजापत्येन कुर्य्यादिति । होमतर्पणे
लाजहोमशनकादितर्पणे । पराशरः ।
"वैशाखे वपनं श्रेष्ठं मध्यमं रोहिणीरवौ ।
अतः परस्मिन्नधमं न जातु श्रावणे शुभम् ॥"
ज्योतिषे ।
"पूर्व्वभाद्रपदा मूलं रोहिण्युत्तरफल्गुनी ।
विशाखा शतभिषा वाथ धान्यानां रोपणे वरा ॥
सदोप्त्वा रजनीं नीलीं पुत्रवित्तैर्व्वियुज्यते ।
स्वयंजाते पुनस्ते द्वे पालयन् नैव दुष्यति ॥
आरामे गृहमध्ये वा मोहात् सर्षपमावपन् ।
पराभवं रिपोर्याति ससाधनधनक्षयम् ॥
निशा नीली पलाशश्च चिञ्चा श्वेतापराजिता ।
कोविदारश्च सर्व्वत्र सर्व्वं निघ्नन्ति मङ्गलम् ॥"
निशा हरिद्रा । कोविदारको रक्तकाञ्चनः ।

"हेमाम्भसा वृक्षवीजं स्नातो मन्त्रेण रोपयेत् ।
वसुधेति सुशीतेति पुण्यदेति धरेति च ।
नमस्ते शुभगे नित्यं द्रुमोऽयं वर्द्धतामिति ॥"
इति ज्योतिस्तत्त्वम् ॥

**वीजवृक्षः**, पुं, (वीजादेव वृक्षो यस्य । वीजप्रधानो वृक्षो वा ।) असनः । इति राजनिर्घण्टः ॥

**वीजसञ्चयः**, पुं, (वीजानां सञ्चयः ।) वीजसंग्रहः ।
तच्छुभाशुभदिनादिर्यथा, --
"हस्ताचित्रादितिस्वातीरेवत्यां श्रवणद्वये ।
स्थिरे लग्ने गुरौ शुक्रे वीजं धार्य्यं ज्ञवासरे ॥
माघे वा फाल्गुने वापि सर्व्ववीजानि संग्रहेत् ।
शोषयेत्तापयेद्रौद्रे रात्रौ चोपनिधापयेत् ॥
ततश्च पुटिकां बद्ध्वा शोषयेच्च पुनः पुनः ।
स्थापयेच्च प्रयत्नेन यथा भूमिञ्च न स्पृशेत् ॥
दीपाग्निना च संस्पृष्टं वृष्ट्या चोपहतञ्च यत् ।
वर्ज्जनीयं तथा बीजं यत् स्यात् कीटसमन्वितम् ॥ * ॥
याम्याहिरुद्राग्निविशाखपूर्व्वा-
माहेन्द्रपित्र्येतरभैः शुभाहे ।
धान्यादिसंस्थापनमेषु शस्तं
मृगस्थिरद्व्यङ्गगृहोदयेषु ॥
सौम्यादितिमघाज्येष्ठात्र्युत्तरेषु च कारयेत् ।
मीने लग्ने शुभे चन्द्रे निधनक्रूरवर्ज्जिते ॥
क्षेप्तव्यं कोष्ठके धान्यं गर्गो वदति सर्व्वदा ।
धनदाय सर्व्वलोकहिताय देहि मे धान्यं स्वाहा ।
नम ईहायै ईहादेवी सर्व्वलोकविवर्द्धनी कामरूपिणि धान्यं देहि स्वाहा ।
लेखयित्वा इमं मन्त्रं धान्यागारे विनिक्षिपेत् ॥"
पुराणसर्व्वस्वे ।
"मन्त्रं लिखित्वा पत्रे च मध्ये धान्यस्य धारयेत् ।
पत्रञ्च धान्यराशेस्तु मूषिकादिनिवृत्तये ॥
दक्षिणदिङ्मुखगमनं स्यादभिनवासु नारीषु ।
व्ययमपि शस्यफलानां न बुधो बुधवासरे कुर्य्यात् ॥
त्रिषूत्तरेषु रेवत्यां धनिष्ठावारुणेषु च ।
एतेषु षट्सु विज्ञेयं धान्यनिष्क्रयणं बुधैः ॥
श्रवणात्रयं विशाखाध्रुवपौष्णपुनर्व्वसूनि पुष्यश्च ।
"अतएव द्वैतनिणयेऽपि सापिण्ड्यगणने वीजिनमारभ्येत्युक्तम् ॥" यथा च गोतमसंहितायाम् । ४ । १ ।
"असमानप्रवरैर्व्विवाह ऊर्द्ध्वं सप्तमात् पितृबन्धुभ्यो वीजिनश्च मातृबन्धुभ्यः पञ्चमात् ॥")
वीजविशिष्टे, त्रि ॥ (यथा, मनौ । ९ । ५१ ।
"तथैवाक्षेत्रिणो वीजं परक्षेत्रप्रवापिणः ।
कुर्व्वन्ति क्षेत्रिणामर्थं न वीजी लभते फलम् ॥")

**वीजोदकं**, क्ली, (वीजमिव कठिनमुदकम् । तस्य कठिनत्वात्तथात्वम् ।) करका । इति त्रिकाण्डशेषः ॥

**वीजोप्तिचक्रं**, क्ली, (वीजानामुप्तये शुभाशुभसूचकं चक्रम् ।) वीजवपनजन्यशुभाशुभज्ञानार्थसर्पाकारचक्रम् । यथा, --
"सूर्य्यभादुरगः स्थाप्यस्त्रिनाड्ये कान्तरक्रमात् ।
मुखे त्रीणि गले त्रीणि भानि द्बादश तूदरे ॥
पुच्छे चतुर्व्वहिः पञ्च दिनभाच्च फलं वदेत् ।
वदने चोचकं विद्यात् गलकेऽङ्गारकस्तथा ॥
उदरे धान्यवृद्धिः स्यात् पुच्छे धान्यक्षयो भवेत् ।
ईतिरोगभयं राज्ये चक्रे वीजोप्तिसम्भवे ॥"
सूर्य्यभात् सूर्य्यमुज्यमाननक्षत्रात् । त्रिनाड्येकान्तरक्रमादिति यद्यश्विन्यां रविस्तदा तामारभ्य गणयेत् । त्रिनाडीषु अश्विनीभरणीकृत्तिकासु दत्त्वा रोहिणी बहिः कार्य्या मृगशिरस आर्द्रापुनर्व्वसुनाडीषु दत्त्वा पुष्यो बहिः कार्य्यः । एवं क्रमेणान्या लेख्याः । चोचकं शस्यशून्यताम् । ईतयः ।
"अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः ।
प्रत्यासन्नाश्च राजानः षडेते ईतयः स्मृताः ॥"
इति ज्योतिस्तत्त्वम् ॥

**वीज्यः**, त्रि, (विशेषेण इज्यः पूज्यः । अथवा वीजाय हितः इति । "उगवादिभ्यो यत् ।" ५ । १ । २ । इति यत् ।) यस्य कस्यचित् कुलभवः । तत्पर्य्यायः । कुलसंभवः २ । इत्यमरः ॥ वंश्यः ३ कौलकेयः ४ कुलजः ५ । इति शब्दरत्नावली ॥ कुलीनः ६ कुल्यः ७ कुलभवः ८ । इति जटाधरः ॥

**वीटिः**, स्त्री, (विशेषेण एटति छायानिखात-

**वीणा**, स्त्री, (वेति दृष्टिमात्रमपगच्छतीति । वी गतौ + "रास्नासास्नास्थूणावीणाः ।" उणा० ३ । १५ । इति नः निपातनाद्गुणाभावो णत्वञ्च ।) विद्युत् । इति मेदिनी । णे, २८ ॥ (वेति श्रोतुश्चित्तं व्याप्नोतीति । वी व्याप्तौ + नः ।) स्वनामख्यातवाद्यम् । तत्पर्य्यायः । वल्लकी २ विपञ्ची ३ । सा तु सप्ततन्त्रीयुक्ता चेत्परिवादिनी ४ । इत्यमरः ॥ ध्वनिमाला ५ । इति जटाधरः । वङ्गमल्ली ६ विपञ्चिका ७ । इति शब्दरत्नावली ॥ घोषवती ८ कण्ठकूणिका ९ ।
(यथा, महाभारते । ९ । १३४ । १४ ।
"सप्तर्षयः सप्त चाप्यर्हणानि
सप्ततन्त्री प्रथिता चैव वीणा ॥")
तद्भेदा यथा । शिवस्य वीणा लम्बी १ सरस्वत्याः कच्छपी २ नारदस्य महती ३ गणानां प्रभावती ४ विश्वावसोः बृहती ५ तुम्बुरोः कलावती ६ चाण्डालानां कण्डोलवीणा चाण्डालिका च ७ । तस्याङ्गादीनां नामादि यथा । तस्याः कायः कोलम्बकः । तस्या निबन्धनं उपनाहः ।
तस्या दण्डः प्रबालः । तस्याः प्रान्तवक्रकाष्ठं ककुभः प्रसेवकश्च । तस्या मूले वंशशलाका कलिका कूणिकापि च । तस्या वादनं कोणः ।
इति हेमचन्द्रादयः ॥ अस्या विवरणं वाद्यशब्दे द्रष्टव्यम् ॥

**वीणादण्डः**, पुं, (वीणाया दण्डः ।) वीणास्थितालावूपरिकाष्ठम् । तत्पर्य्यायः । प्रबालः २ । इत्यमरः ॥

**वीणानुबन्धः**, पुं, (वीणाया अनुबन्धः ।) उपनाहः । इति हारावली ॥

अश्विन्यथ ज्येष्ठा धनधान्यविवर्द्धिनी
कथिता ॥”
इति ज्योतिस्तत्त्वम् ॥

**वीजसूः**, स्त्री, (वीजानि सूते इति । सू + क्विप् ।)

पृथ्वी । इति हेमचन्द्रः ॥

**वीजाकृतं**, त्रि, (वीजेन सह कृतं कृष्टमिति ।

“कृञो द्वितीयतृतीयशम्बवीजात्कृषौ ।” ५ ।
४ ।
५८ । इति डाच् ।) उप्तकृष्टम् । इत्यमरः ॥ द्वे
वीजेन सह कृष्टे क्षेत्रे । वीजेन सह कृतं कृष्टं
वीजाकृतम् । तीयशम्बवीजेति डाच् । आदा-
युप्तं पश्चात् कृष्टं उप्तकृष्टम् । इति भरतः ॥

**वीजाम्लं**, क्ली, (वीजे अम्नोऽम्लरसो यस्य ।)

वृक्षाम्लम् । इति राजनिर्घण्टः ॥

**वीजी**, [न्] पुं, (वीजमस्त्यस्येति । वीज + इनिः ।)

पिता । इति हेमचन्द्रः ॥ (यथा, उद्वाहतत्त्वे ।

यष्ट्यादिं वेष्टयित्वा प्रवर्द्धते । वि + इट + “इगु-
पधात् कित् ।” उणा० ४ । ११९ । इति इन् । स
च कित् ।) ताम्बूलवल्ली । इति केचित् ॥
सुसज्जीकृतताम्बूलम् । पानेर वीडा इति भाषा ।
इति केचित् ॥

**वीटिका**, स्त्री, (वीटिरेव । स्वार्थे कन् स्त्रियामाप् ।)

ताम्बूलवल्ली । इति केचित् ॥ सुसज्जीकृतताम्बू-
लम् । पानेर वीडि इति भाषा । इति केचित् ॥
(यथा, राजतरङ्गिण्याम् । ४ । ४३० ।
“भ्रूसंज्ञयासि कस्य त्वं पृष्टाया इति सुभ्रुवः ।
ददन्त्या वीटिकास्तस्या वृत्तान्तमुपलब्धवान्
॥”)

**वीटी**, स्त्री, (वीटि + वा ङीष् ।) ताम्बूलवल्ली ।

इति केचित् ॥ सुसज्जीकृतताम्बूलम् । पानेर
वीडि इति भाषा । इति केचित् ॥

**वीणावादः**, त्रि, (वीणां वादयतीति । वद् +

णिच् + अण् ।) वीणावादकः । तत्पर्य्यायः ।
वैणिकः २ । इत्यमरः ॥ (यथा, वाजसनेय-
संहितायाम् । ३० । १९ ।
“शब्दायाडम्बराघातं महसे वीणावादमिति
॥”)

**वीनावादकः**, पुं, (वीणाया वादकः ।) वीणावाद्य-

कर्त्ता । इति शब्दरत्नावली ॥

**वीणास्यः**, पुं, (वीणा आस्यमिव यस्य । तयैव स्फुट-

गानकरणात् ।) नारदः । इति जटाधरः ॥

**वीतं**, क्ली, (वेति स्म । वी + क्तः । अथवा अजति
स्म ।

अज् + गत्यर्थेति क्तः ।) असारहस्त्यश्वम् ।
युद्धाक्षममित्यर्थः । इत्यमरः ॥ अङ्कुशकर्म्म
। इति
मेदिनी । ते, ५८ ॥ (यथा, माघे । ५ । ४७
।
“निर्धूतवीतमपि बालकमुल्ललन्तं
यन्ता क्रमेण परिसान्त्वनतर्ज्जनाभिः ॥”
सांख्योक्तानुमानविशेषः । यथा,
सांख्यतत्त्व-
कौमुद्याम् । ५ ।
“प्रथमं तावद्द्विविधं वीतमवीतञ्च । अन्वय-
मुखेन प्रवर्त्तमानं विधायकं वीतम् ॥” अस्य
विशेषविवरणं तत्रैव द्रष्टव्यम् ॥ त्रि ।
कमनीयः ।
यथा, ऋग्वेदे । ४ । ७ । ६ ।
“तं शश्वतीषु मातृषु वन आ वीतमश्रितम्
॥”
“वीतं कान्तम् ।” इति तद्भाष्ये सायणः ॥)

**वीतंसः**, पुं, (विशेषेण बहिरेव तस्यते भूष्यते इति ।
वि + तन्स + घञ् । "उपसर्गस्य घञ्यमनुष्ये
बहुलम् ।" ६ । ३ । १२२ । इति दीर्घः ।)
मृगपक्षिणां बन्धनोपकरणम् । इत्यमरः ॥
मृगपक्षिणां विश्वासहेतोः प्रावरणम् । इति
मेदिनी । से, ४० ॥

**वीतः**, त्रि, (विशेषेण एति स्म । वि + इन् + क्तः ।)
शान्तः । इति हेमचन्द्रः ॥ गतः । विपूर्ब्बे
नधातोः क्तप्रत्ययेन निष्पन्नमिदम् ॥ (यथा,
रघौ । ५ । २ ।
"स मृण्मये वीतहिरण्मयत्वात्
पात्रे निधायार्घ्यमनर्घ्यशीलः ॥")

**वीतदम्भः**, त्रि, (वीतस्त्यक्तो दम्भो येन सः ।) त्यक्त-
दम्भः । तत्पर्य्यायः । अवल्कनः २ । इति
जटाधरः ॥

**वीतनः**, पुं, कृकपार्श्वद्वयम् । यथा, हेमचन्द्रे ।
"कृकस्तु कन्धरामध्यं कृकपार्श्वौ तु
वीतनौ ॥"

**वीतभयः**, पुं, (वीतं भयं यस्य यस्माद्वा ।)
विष्णुः । यथा, --
"अक्रूरः पेशलो दक्षो दक्षिणः क्रमिणांवरः ।
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्त्तनः ॥"
इति तस्य सहस्रनामस्तोत्रम् ॥

**वीतरागः**, पुं, (वीतो रागो विषयवासना यस्य ।)
बुद्धः । इति त्रिकाण्डशेषः ॥ विगतरागे, त्रि ।
यथा, --
र्थम् ।" इति तद्भाष्ये सायणः ॥ यज्ञः । यथा,
ऋग्वेदे । ९ । १ । ४ ।
"अभ्यर्षमहानां देवानां वीतिमन्धसा ॥"
"वीतिं यज्ञं अन्धसा धानाद्यन्नेन सह अभ्यर्ष
अभिगच्छ ।" इति तद्भाष्ये सायणः ॥)

**वीतिः**, पुं, घोटकः । इति हेमचन्द्रः ॥ (यथा,
राजतरङ्गिण्याम् । ७ । ३७७ ।
"अस्मिंस्तु वीतिमारूढे वीतिहोत्रसमे नृपे ।
कस्त्राता च त्वदीयानां तृणानामिव शस्त्रि-
णाम् ॥")

**वीतिहोत्रः**, पुं, (वी गतिकान्त्यसनखादनेषु +
कर्म्मणि क्तिन् । वीतिः पुरोडाशादिः हूयते
अस्मिन्निति । "हुयामाश्रुभसिभ्यस्त्रन् ।" उणा०
४ । १६७ । इति त्रन् । अथवा वीतये पानाय
होत्रं हव्यं यस्य ।) अग्निः । इत्यमरः ॥ सूर्य्यः ।
इति मेदिनी । ते, २९७ ॥ (यथा, राजतरङ्गि-
ण्याम् । ७ । ३७७ ।
"अस्मिंस्तु वीतिमारूढे वीतिहोत्रसमे नृपे ॥"
प्रियव्रतपुत्त्रान्यतमः । यथा, भागवते । ५ । १ ।
२५ ।
"अग्निध्रेध्मजिह्वयज्ञबाहुमहावीरहिरण्यरेतो
घृतपृष्ठसवनमेधातिथिवीतिहोत्रकवयइति
सर्व्व एवाग्निनामानः ॥" राजविशेषः । यथा,
महाभारते । ७ । ६८ । १० ।
"रक्षोवाहान् वीतिहोत्रान् त्रिगर्त्तान् मार्त्ति-
कावतान् ॥"
हैहयवंशीयराजविशेषः । यथा, हरिवंशे ।
३३ । ५० ।
"तेषां कुले महाराज हैहयानां महात्मनाम् ।
वीतिहोत्रः सुजाताश्च भोजास्त्ववन्तयः
स्मृताः ॥"
त्रि, प्राप्तयज्ञः । यथा, ऋग्वेदे । १ । ८४ । १८ ।
"कस्मै देवा आवहानाशु होम-
को मंसते वीतिहोत्रः सुदेवः ॥"
"वीतिहोत्रः प्राप्तयज्ञः । *** । वीतिहोत्रः
वीगत्यादिषु अस्मात् कर्म्मणि मन्त्रे वृषेत्यादिना
क्तिन् स चोदात्तः । होत्रं होमः हुयामाश्रु-
भसिभ्यस्त्रन् इति त्रन्प्रत्ययः । वोतिः प्राप्तो
होमो येन बहुव्रीहौ पूर्व्वपदप्रकृतिस्वरत्वम् ॥"
इति तद्भाष्ये सायणः ॥ कान्तयज्ञः । यथा,
ऋग्वेदे । २ । ३८ । १ ।
वर्त्मार्थे यथा, राजतरङ्गिण्याम् । ३ । ३०७ ।
"चिरं खलु खिलीभूताः कृतज्ञत्वस्य वीथयः ।
धीर त्वयैव न त्वासु सञ्चारो यदि दर्श्यते ॥")

**वीथिका**, स्त्री, (वीथिरेव । स्वार्थे कन् ततष्टाप् ।)
वीथिः । इति शब्दरत्नावली ॥ (यथा, कथा-
सरित्सागरे । ७३ । ३० ।
"अस्ति दक्षिणदिक्प्रान्ते प्रावृषो जन्मभूरिव ।
पिहितार्का घनश्यामा तमालवनवीथिका ॥")

**वीथी**, स्त्री, (वीथि + वा ङीष् ।) पङ्क्तिः । गृहा-
ङ्गम् । (यथा, हरिवंशे । ८३ । १८ ।
"तावप्युभौ सुवचनौ जग्मतुर्म्माल्यकारणात् ।
वीथीं माल्यापणानां वै गन्धाघ्रातौ द्विपाविव ॥")
नाट्यरूपकः । वर्त्म । इति मेदिनी । थे, ११ ॥
(यथा, महाभारते । ५ । ५१ । ३२ ।
"वीथीं कुर्व्वन् महाबाहुर्द्रावयन् मम वाहि-
नीम् ।
नृत्यन्निव गदापाणिर्युगान्तं दर्शयिष्यति ॥" * ॥)
अथ वीथी ।
"वीथ्यामेको भवेदङ्कः कश्चिदेकोऽत्र कल्प्यते ।
आकाशभाषितैरुक्तैश्चित्रां प्रत्युक्तिमाश्रितः ॥
सूचयेद्भूरि शृङ्गारं किञ्चिदन्यान् रसानपि ।
मुखनिर्व्वहणे सन्धी अर्थप्रकृतयोऽखिलाः ॥
कश्चिदित्युत्तमो मध्यमोऽधमो वा शृङ्गारबहुल-
त्वाच्चास्याः कैशिकीवृत्तिबहुलत्वम् ॥ * ॥
अस्यास्त्रयोदशाङ्गानि निर्द्दिशन्ति मनीषिणः ।
उद्घात्यकावलगिते प्रपञ्चस्त्रिगतं छलम् ॥
वाक्केल्यधिवले गण्डमवस्यन्दितनालिके ।
असत्प्रलापव्याहारमृदवानिच तानि तु ॥ * ॥
तत्रोद्घात्यकावलगिते प्रस्तावनाप्रस्तावे सोदा-
हरणं लक्षिते ॥ * ॥
मिथोवाक्यसमुद्भूतं प्रपञ्चो हास्यकृन्मतः ॥
यथा, विक्रमोर्व्वश्याम् ।
वडभीस्थविदूषकचेट्यो-
रन्योन्यवचनम् । * ।
त्रिगतं स्यादनेकार्थयोजनं श्रुतिसाम्यतः ॥
यथा । तत्रैव राजा ।
सर्व्वक्षितिभृतां नाथ दृष्टा सर्व्वाङ्गसुन्दरी ।
रामा रम्ये वनान्तेऽस्मिन् मया विरहिता त्वया ॥
नेपथ्ये तत्रैव प्रतिशब्दः राजा कथं दृष्टेत्याह ।
अत्र प्रश्नवाक्यमेवोत्तरवाक्यत्वेन योजितम् ।
नटादित्रितयविषयमेवेदमिति कश्चित् ॥ * ॥

"दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः
।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते
॥"
इति भगवद्गीता ॥
(यथा च महाभारते । १२ । ३४९ ।
४७ ।
"वीतरागश्च पुत्त्रस्ते परमात्मा
भविष्यति ।
महेश्वरप्रसादेन नैतद्वचनमन्यथा ॥")

**वीतशोकः** पुं, अशोकवृक्षः । इति शब्दमाला ॥

(वीतः शोको यस्मात् । अशोकाष्टम्यां
तत्पानेन
शोकनाशत्वात्तस्य तथात्वम् । तथा च
तिथितत्त्वे ।
"त्वामशोक हराभीष्ट मधुमाससमुद्भव ।
पिवामि शोकसन्तप्तो मामशोकं सदा
कुरु ॥"
विगतः शोको यस्य ।) विगतशोके, त्रि ।
(यथा, महाभारते । ३ । १७३ । १० ।
"सर्व्वकामगुणोपेतं वीतशोकमनामयम्
॥")

**वीतिः**, स्त्री (वयनमिति । वी + क्तिन् ।) गतिः ।

दीप्तिः । (यथा, गो० रामायणे । २ ।
१०० ।
४७ ।
"सुवर्णवीतिप्रतिमाः
पद्मकिञ्जल्कसप्रभाः ।
दिव्या विंशति साहस्राः कुवेरप्रहिताः
स्त्रियः ॥")
प्रजनम् । अशनम् । धावनम् । इति
मेदिनी ।
ते, ५९ ॥ (पानम् । यथा, ऋग्वेदे । ७ ।
६८ । २ ।
"प्रवामन्धांसि मद्यान्यस्थुररं गन्तं
हविषो
वीतये मे ॥"
"हविषो वीतये पानाय ।" इति तद्भाष्ये
सायणः ॥
प्राप्तिः । यथा, ऋग्वेदे । ३ । १३ । ४ ।
"स नः शर्म्माणि वीतयेऽग्निर्यच्छतु
शन्तमा ॥"
"नूनं देवेभ्यो विहिधाति रत्न-
मथाभजद्वीतिहोत्रं स्वस्तौ ॥"
"वीतिहोत्रं कान्तयज्ञं यजमानं स्वस्तौ अवि-
नाशे क्षेमे आ अभजद्भागिनं करोतु ।" इति
तद्भाष्ये सायणः ॥)

**वीथिः**, स्त्री, (विथ्यतेऽनया । विथ + इगुपधात्

किदितीन् । बाहुलकाद्दीर्घः ।) वीथी । यथा, --
"पङ्क्तिवर्त्मगृहाङ्गेषु वीथिर्व्वीथी च वीथिका ।"
इति रत्नकोषः ॥
(यथा, राजतरङ्गिण्याम् । ३ । ३६२ ।
"तद्विना नगरं कुत्र पवित्राः सुलभा भुवि ।
मुभगाः सिन्धुसम्भेदाः क्रीडावसथवीथिषु ॥"

प्रियाभैरप्रियैर्व्वाक्यैर्विलोभ्य च्छलनात् छलम् ।
यथा, वेण्यां भीमार्ज्जुनौ ।
कर्त्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः
सोऽभिमानी
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य
मित्रम् ।
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य
दासाः
क्वास्ते दुर्य्योधनोऽसौ कथयतु न रुषा द्रष्टुम-
भ्यागतौ स्वः ॥
अन्ये त्वाहुश्छलं किञ्चित् कार्य्यमुद्दिश्य कस्य-
चित् ।

उदीर्य्यते यद्वचनं वञ्चनाहास्यरोषकृत् ॥ * ॥
वाक्केलिर्हास्यसम्बन्धो द्वित्रिप्रत्युक्तितोभवेत् ॥
द्वित्रीत्युपलक्षणं यथा, --
भिक्षो मांसनिषेवणं प्रकुरुषे किन्तत्र मद्यं विना
मद्यञ्चापि तव प्रियं प्रियमहो वाराङ्गनाभिः सह ।
तासामर्थरुचिः कुतस्तव धनं द्यूतेन चौर्य्येण वा
चौर्य्यद्यूतपरिग्रहोऽपि भवतो नष्टस्य कान्या गतिः ॥
केचित् प्रक्रान्तवाक्यस्य साकाङ्क्षस्यैव निर्व्वृत्ति-
र्वाक्केलिरित्याहुः । अन्ये चानेकस्य प्रश्नस्यै-
कमुत्तरम् ॥ * ॥
अन्योन्यवाक्याधिक्योक्तिःस्पर्द्धयाधिबलं मतम् ॥
यथा, मम प्रभावत्यां वज्रनाभः ।
अस्य वक्षः क्षणेनैव निर्मथ्य गदयानया ।
लीलयोन्मूलयिष्यामि भुवनद्वयमद्य वः ॥
प्रद्युम्नः । अरे रे असुरापसद अलममुना बहु-
प्रलापेन मम खलु ।
अद्य प्रचण्डभुजदण्डसमर्पितोरु-
कोदण्डनिर्गलितकाण्डसमूहपातैः ।
आस्तां समस्तदितिजक्षतजोक्षितेयं
क्षौणी क्षणेन पिशिताशनलोभनीया ॥ * ॥
गण्डं प्रस्तुतसम्बन्धि भिन्नार्थं सत्वरं वचः ॥
यथा वेण्यां राजा ।
अध्यासितुं तव चिराज्जघनस्थलस्य
पर्य्याप्तमेव करभोरु ममोरुयुग्मम् ।
अनन्तरं प्रविश्य कञ्चुकी देव भग्नं भग्नमित्यादि ।
अत्र रथकेतनभङ्गार्थं वचनमूरुभङ्गार्थे सम्बन्धे सम्बद्धम् ॥ * ॥
व्याख्यानं स्वरसोक्तस्यान्यथावस्यन्दितंभवेत् ॥
यया छलितरामे सीता । जाद काल्लं कखु उ
अज्झा एण गन्तव्वं तहिं सो राआ विणएण
पणायिदव्वो । लवः । अथ किमावाभ्यां राजो-
पजीविभ्यां भवितव्यम् । सीता । जादसो
तुह्माणं पिदा । लवः । किमावयो रघुपतिः
पिता । सीता । साशङ्कं मा अण्णधा सङ्कधणं
क्खु तुह्माणं स आलाज्जे एव पुहवीएत्ति ॥ * ॥
एवमसम्बन्धोत्तरेऽपि । तृतीयं यथा । वेण्यां
दुर्य्योधनं प्रति गान्धारीवाक्यम् ।
व्याहारो यत् परस्यार्थे हास्यलोभकरं वचः ।
यथा मालविकाग्निमित्रे । लास्यप्रयोगावसाने
मालती निर्गन्तुमिच्छति विदूषकः मादवे उप-
देश मुध्वा गमिष्यसि । इत्युपक्रमेण दासः ।
विदूषकं प्रति आर्य्य उच्यतां यस्तया क्रमभेदो
लक्षितः । विदूषकः पौमं । वह्मण पूआभोदि
साइ माए लङ्घिदा मालती स्मयत इत्यादिना ।
नायकस्य विशुद्धनायिकादर्शनप्रयुक्तेन हास-
लोभकारिणा वचसा व्याहारः ॥ * ॥
दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत् ॥
क्रमेण यथा, --
प्रियजीवितता क्रौर्य्यं नस्नेहत्वं कृतघ्नता ।
भूयस्तद्दर्शनादेव ममैते गुणतां गताः ॥
तस्यास्तद्रूपसौन्दर्य्यं भूषितं यौवनश्रिया ।
सुखैकायतनं जातं दुःखायैव ममाधुना ॥
एतानि चाङ्गानि नाटकादिषु संभवन्त्यपि
वीथ्यामवश्यं विधेयानि निष्पष्टतया नाटकादिषु
विनिविष्टान्यपि इहोदाहृतानि । वीथी च
नानारसानाञ्चात्र मालारूपतया स्थितत्वाद्
वीथीयम् । यथा मालविका ।” इति साहित्य-
दर्पणम् ॥ * ॥ * ॥ सूर्य्यगमनपथः । यथा, --
“नागवीथ्युत्तरा वीथी अजवीथ्याश्च दक्षिणे ।
उभे आसाडमूलन्तु अजवीथ्युदयास्त्रयः ॥
अभिजित् पूर्व्वतः स्वाती नागवीथ्युत्तरास्त्रयः ।
अश्विनी कृत्तिका याम्या नागवीथ्युत्तराः स्मृताः ।
रोहिण्यार्द्रा मृगशिरो नागवीथिरिति स्मृता ॥
पुष्याश्लेषापुनर्व्वसोर्वीथिरैरावती स्मृता ।
तिस्रस्तु वीथयो ह्येता उत्तरो मार्ग उच्यते ॥
पूर्ब्बा उत्तरफल्गुण्योर्म्मघाश्चैरावती भवेत् ।
पूर्व्वोत्तरे प्रोष्ठपदे गोवीथी रेवती स्मृता ॥
श्रवणा च धनिष्ठा च वारुणञ्च जरद्गवम् ।
एताश्च वीथयस्तिस्रो मध्यमो मार्ग उच्यते ॥
हस्ता चित्रा तथा स्वाती नागवीथिरिति स्मृता ॥
विशाखमित्रपैत्रश्च नागवीथिरिहोच्यते ॥
मूलपूर्ब्बोत्तराषाढा वीथिर्वैश्वानरी तथा ।
स्मृतास्तिस्रस्तु वीथ्यस्ता मार्गे वै दक्षिणे बुधैः ॥”
इति मात्स्ये १०१ अध्यायः ॥ * ॥
जारद्गवी चेति वैषुवते मध्यमार्गे वीथित्रयम् ।
अजवीथी मृगवीथी वैश्वानरी चेति दक्षिण-
मार्गे वीथीत्रयम् । तदुक्तं तत्रैव ।
“अश्विनी कृत्तिका याम्या नागवीथीति शब्दिता ।
रोहिण्यार्द्रा मृगशिरो गजवीथ्यभिधीयते ॥
पुष्याश्लेषे तथादित्या वीथी चैरावती स्मृता ।
एतास्तु वीथयस्तिस्र उत्तरो मार्ग उच्यते ॥
तथा द्वे चापि फल्गुण्यौ मघा चैवार्षभी मता ।
हस्ता चित्रा तथा स्वाती गोवीथीति तु शब्दिता ॥
ज्येष्ठा विशाखानुराधा वीथी जारद्गवी मता ।
एतास्तु वीथयस्तिस्रो मध्यमो मार्ग उच्यते ॥
मूलाषाढोत्तराषाढा अजवीथीति शब्दिता ।
श्रवणञ्च धनिष्ठा च मार्गी शतभिषस्तथा ॥
वैश्वानरी भाद्रपदे रेवती चैव कीर्त्तिता ।
एतास्तु वीथयस्तिस्रो दक्षिणो मार्ग उच्यते ॥”
याम्या भरणी । आदित्या अदितिदेवताका
पुनर्व्वसुः । मार्गी मृगवीथी । एवं स्थिते
अगस्त्यादुत्तरमजवीथ्यास्तु दक्षिणम् ।
किन्तु
अगस्त्यनिरूढवर्त्तिनो
वैश्वानरपथाद्बहिर्वैश्वा-
नरवीथीं विहाय मृगवीथीमात्रं पितृयान-
मित्यर्थः । इति तट्टीकायां श्रीधरस्वामी ॥

**वीथ्यङ्गः**, त्रि, (वीथ्या अङ्गमिवाङ्गं यस्य ।)
नाटकभेदः । इति हेमचन्द्रः ॥ अस्य विवरणं
वीथीशब्दे द्रष्टव्यम् ॥

**वीध्रं**, क्ली, (विशेषेण इन्धते दीप्यते इति । वि +
इन्ध + “वाविन्धेः ।” उणा० २ । २६ । इति
क्रन् ।) नभः । (यथा, अथर्व्ववेदे । ४ । २० । ७ ।
“वीध्रे सूर्य्यमिव सर्पन्तं मा पिशाचं तिर-
स्करः ॥”)

प्रहेलिकैव हास्येन युक्ता भवति न लिका ॥
संवरणकार्य्युत्तरं प्रहेलिका । यथा रत्नावल्याम्
।
सुसङ्गता सहि जस्म कदे तु मं आअदा सो
इधज्जेव चिट्ठदि साअरिआ कस्म कदे अहं
आअदा सुसंणं चित्तफलअस्म । अत्र त्वं राज्ञः
कृते आगतेत्यर्थः संवृतः ॥ * ॥
असत्प्रलापो यद्वाक्य मसम्बद्धं तथोत्तरम् ।
अगृह्णतोऽपि मूर्ख्रस्य पुरो यच्च हितं
वचः ॥
तत्राद्यं यथा मम प्रभावत्याम् । प्रद्युम्नः सह-
कारवल्लीमवलोक्य सानन्दं अहो कथमिहैव ।
अलिकुलमञ्जुलकेशी
परिमलबहुला रसावहा तन्वी ।
किशलयपेशलपाणिः
कोकोलकलभाषिणी प्रियतमा मे ॥

अपि च ।
"उत्तरं यदगस्त्यस्य अजवीथ्याश्च दक्षिणम् ।
पितृयानं स वै पन्था वैश्वानरपथाद्वहिः ।
तत्रासते महात्मान ऋषयो येऽग्निहोत्रिणः ॥"
इति विष्णु पुराणे २ अंशे ८ अध्यायः ॥ * ॥
तत्र ज्योतिश्चक्रे वीथीक्रमो वायुनोक्तः ।
"सर्व्वग्रहाणां त्रीण्येव स्थानानि द्विजसत्तमाः ।
स्थानं जारद्गवं मध्यं तथैरावतमुत्तरम् ।
वैश्वानरं दक्षिणतो निर्द्दिष्टमिह तत्त्वतः ॥"
तदेव मध्यमोत्तरदक्षिणमार्गत्रयं प्रत्येकं वीथि-
त्रयेण त्रिधा भिद्यते । तथा हि त्रिभिस्त्रिभि-
रश्विन्यादिनक्षत्रैर्नागवीथीगजवीथी ऐरावती
चेत्युत्तरमार्गे वीथित्रयम् । आर्षभी गोवीथी

वायुः । अग्निः । इति संक्षिप्तसारोणादि-
वृत्तिः ॥

**वीध्रः**, त्रि, (वि + इन्ध + क्रन् ।) विमलः । इत्यमरः ॥

**वीनाहः**, पुं, (विशेषेण नह्यते इति । वि + नह +
घञ् । उपसर्गस्य दीर्घः ।) कूपस्य
मुखबन्ध-
नम् । इत्यमरः ॥ अस्य कूपस्य
यन्मुखबन्धनं
येन मुखं वध्यते तत्र वीनाहः नान्दीपट्ट इति
ख्यातः । विशेषेण नह्यते कूपमुखमनेन ।
वीनाहः । नह्य ञौ बन्धे घञ् मनीषादित्वान्
वेर्व्वा दीर्घः विनाहः वीनाहः कूपमुखबन्ध-
पट्ट इति साञ्झः । इति भरतः ॥

**वीपा**, स्त्री, विद्युत । इति शब्दरत्नावली ॥

**वीप्सा**, स्त्री, क्रियागुणद्रव्यैर्युगपद्‌ब्याप्तुमिच्छा ।
यथा, --
"मुक्तिर्नर्त्तेऽच्युतोपास्तिं भूतं भूतमभि प्रभुः
।
भक्तो विभुमभि प्राज्ञो गोविन्दमभितिष्ठति ॥"
अच्युतोपास्तिं ऋते मुक्तिर्न स्यादित्यर्थः ।
प्रभुरीश्वरः भूतं भूतं अभि सर्व्वप्राणिषु
अस्ति
इत्यर्थः । वीप्सायां प्रयुक्तस्य पदस्य
द्विर्भावः ।
इति मुग्धबोधटीकायां दुर्गादासः ॥

**वीर**, ङ त् क शौर्य्ये । इति कविकल्पद्रुमः ॥

(अदन्तचुरा०-आत्म०-अक०-सेट् ।) ङ, अवि-
वीरत । शौर्य्यमुद्यमः । इति दुर्गादासः ॥

**वीरं**, क्ली, (अज् + "स्फायितञ्चिवञ्चीति ।"

उणा० १ । १३ । इत्यादिना रक् । अजे-
र्वीभावः । वीर + अच् वा ।) शृङ्गी । नडः ।
इति मेदिनी । रे, ६७ ॥ मरिचम् । पुष्कर-
मूलम् । काञ्जिकम् । उशीरम् । आरूकम् ।
इति राजनिर्घण्टः ॥ वीरशब्दो मेदिन्यां पव-
र्गीयवकारादौ दृष्टोऽपि
वीरधातोरन्तःस्थवका-
रादौ दर्शनादत्र लिखितः ॥

**वीरः**, पुं, (वीरयतीति । वीर विक्रान्तौ + पचा-

द्यच् । यद्वा, विशेषेण ईरयति दूरीकरोति
शत्रून् । वि + ईर + इगुपधात् कः । यद्वा,
अजति क्षिपति शत्रून् । अज +
स्फायितञ्चीत्या
दिना रक् । अजेर्व्वीः ।) शौर्य्यविशिष्टः ।
तत्प-
र्य्यायः । शूरः २ विक्रान्तः ३ । इत्यमरः । २ । ८ ।
७७ ॥ गण्डीरः ४ तरस्वी ५ । इति
जटाधरः ॥
(यथा, महाभारते । १ । १४१ । ४५ ।
"मृगराजो वृकश्चैव बुद्धिमानपि मूषिकः ।
निर्ज्जिता यत्त्वया वीरास्तस्माद्वीरतरो
भवान् ॥"
यथा च ऋग्वेदे । १ । ११४ । ८ ।
"वीरान्मानो रुद्रभामितो वधी-
र्हविष्यन्तः सद्मि त्वा हवामहे ॥"
"वीरान् वीक्रान्तान् ।" इति सायणः ॥
पुत्त्रः ।
यथा, ऋग्वेदे । ५ । २० । ४ ।
"वीरैः स्याम सधमादः ॥"
"वीरैः पुत्त्रैश्च सधमादः सहमाद्यन्तः
स्याम
अपि च ।
"भावस्तु त्रिविधः प्रोक्तो
दिव्यवीरपशुक्रमात् ।
गुरवश्च त्रिधा चात्र तथैव मन्त्रदेवता ॥"
इति तत्रैव ६ पटलः ॥
अन्यच्च ।
"पशुभावं हि प्रथमे द्बितीये
वीरभावकम् ।
तृतीये दिव्यभावञ्च इति भावत्रयं
क्रमात् ॥
आदौ दशमदण्डेन पशुभावमथापि वा ।
मध्याह्ने दशदण्डेन वीरभावमुदाहृतम् ।
सायाह्ने दशदण्डे तु दिव्यभावं
शुभप्रदम् ॥"
इति च तत्रैव ११ पटलः ॥
अन्यच्च ।
"जन्ममात्रं पशुभावं वर्षषोडशकावधि ।
ततश्च वीरभावस्तु यावत् पञ्चाशतो
भवेत् ॥
द्बितीयांशे वीरभावस्तृतीये
दिव्यभावकः ।
एवं भावत्रयेणैव भावमैक्यं भवेत् प्रिये ॥"
इति वामकेश्वरतन्त्रे ५१ पटलः ॥
वीराचारविशिष्टः । यथा, --
"कुलाचाररतो वीरः कुलसङ्गी सदा
भवेत् ।
संविदासेवनं कुर्य्यात् सोमपानं
महेश्वरि ॥
सर्व्वथा कुरुते देवि
वीरश्चोद्धतमानसः ।
दिव्यस्तु देवता
प्रायश्चन्दनागुरुलेपनैः ।
रक्तचन्दनगन्धैश्च सुदिग्धो नात्र
संशयः ॥
"इदा हि वो विधते रत्नमस्तीदा
वीराय दाशुष उषासः ॥"
"वीराय प्रेरयित्रे ।" इति तद्भाष्ये सायणः ॥)

**वीरकः**, पुं, (वीर एव । स्वार्थे कन् ।) करवीरः ।

इति राजनिर्घण्टः ॥ (विक्रान्तः । समर्थः ।
यथा, ऋग्वेदे । ८ । ८० । २ ।
"असौ य एषि वीरको गृहं गृहं विचाकशत् ॥"
"वीरको वीरः समर्थस्त्वम् ।" इति तद्भाष्ये
सायणः ॥ अपकृष्टदेशविशेषवासी । यथा,
महाभारते । ८ । ४४ । ४२ ।
"कारस्करान् माहिषकान् कालिङ्गान् केरलां-
स्तथा ।
कर्कोटकान् वीरकांश्च दुर्द्धर्म्मांश्च विवर्ज्जयेत् ॥"
चाक्षुषमन्वन्तरीयमुन्यन्यतमः । यथा, भाग-
वते । ८ । ५ । ८ ।
"मुनयस्तत्र वै राजन् हर्य्यस्मद्वीरकादयः ॥")

**वीरजयन्तिका**, स्त्री, (वीराणां जयन्तिकेव ।)

रणे वीराणां नृत्यम् । इति हेमचन्द्रः ॥

**वीरणं**, क्ली, उशीरतृणम् । तत्पर्य्यायः । वीरणम्

२ कटायनम् ३ । इति शब्दरत्नावली ॥
वीरतरम् ४ । इत्यमरः ॥ वीरभद्रम् ५ । इति
रुद्रः ॥ (यथा, भागवते । १० । ११ । ५१ ।
"तमापतन्तं स निगृह्य तुण्डयोः
दोर्भ्यां वकं कंससखं सतां गतिः ।
पश्यत्सु बालेषु ददार लीलया
मुदावहो वीरणवद्दिवौकसाम् ॥")
अपि च ।
"स्याद्वीरणं वीरतरु वीरञ्च बहुमूलकम् ।
वीरणं पाचनं शीतं स्तम्भनं लघु तिक्तकम् ॥
मधुरं ज्वरनुद्वान्तिमेदजित् कफपित्तहृत् ।
तृष्णास्रविषवीसर्पकृच्छ्रदाहव्रणापहम् ॥
वीरणस्य तु मूलं स्यादुशीरमभयं तथा ।
अमृणालञ्च सेव्यञ्च समगन्धिकमित्यपि ॥
उशीरं पाचनं शीतं स्तम्भनं लघु तिक्तकम् ।
मधुरं ज्वरकृद्वान्तिमदनुत् कफपित्तनुत् ।
तृषास्रविषवीसर्पदाहकृच्छ्रव्रणापहम् ॥"

तथा कुरु ।” इति तद्भाष्ये सायणः ॥ * ॥
पतिः । पुत्त्रश्च । यथा, मार्कण्डेये । ३५ ।
३१ ।
“न चालपेज्जनद्विष्टां वीरहीनां तथा
स्त्रियम् ।
गृहादुच्छिष्टविण्मूत्रपादाम्भांसिक्षिपेद्बहिः
॥”
यथा च अवीरा निष्पतिसुता । इत्यमरदर्श-
नाच्च ॥ * ॥ दनायुदैत्यपुत्त्रः । यथा,
महाभारते ।
१ । ६५ । ३३ ।
“दनायुषः पुनः पुत्त्राश्चत्त्वारोऽसुरपुङ्गवाः
।
विक्षरो बलवीरौच वृत्रश्चैव महासुरः ॥”)
जिनः । नटः । इति हेमचन्द्रः ॥ विष्णुः ।
यथा,
वीरोऽनन्तो धनञ्जयः । इति विष्णु
सहस्रनाम ॥
शृङ्गाराद्यष्टरसान्तर्गतरसविशेषः ।
तत्पर्य्यायः ।
उत्साहवर्द्धनः २ । इत्यमरः ॥
“उत्तमप्रकृतिर्व्वीर उत्साहस्थायिभावकः।
महेन्द्रदैवतो हेमवर्णोऽयं समुदाहृतः ॥”
उत्साहं वर्द्धयति इति उत्साहवर्द्धनः
नन्द्यादि-
त्वादनः । दानधर्म्मयुद्धेषु
जीवानपेक्षोत्साह-
कारी रसो वीरः । वीरयन्ते अत्र वीरः । वीर
तङ्कत् शौर्य्ये घञ् स्फीततयैव स्वाद्यते इति
सर्व्व-
रसलक्षणं कटाक्षितम् । इति भरतः ॥ * ॥
तान्त्रिकभावविशेषः । यथा, --
“तत्रैव त्रिविधो भावो दिव्यवीरपशुक्रमः।
दिव्यवीरैकजः प्रोक्तः सर्व्वसिद्धिप्रदायकः
॥”
इति रुद्रयामले ११ पटलः ॥

भस्माङ्गधूसरो वीर
उन्मत्तवद्विचेष्टितः ।
सुरापाणरतो नित्यं वलिपूजापरायणः
॥
नरश्छागश्च महिषो मेषः शूकर एव च
।
शशकः शल्लकी गोधा खड्गी कूर्म्मी
दश
स्मृताः ॥
वानरश्च खरश्चैव
गजाश्वादिविहङ्गमाः ।
इत्यादिभिर्व्वलेदनैः पूजयेत्
स्वेष्टदेवताम् ॥
सिद्धमन्त्रो भवेत् वीरो न वीरो
मद्यपानतः ।
कलौ तु भारते वर्षे लोका
भारतवासिनः ।
गृहे गृहे सुरां पीत्वा वर्णभ्रष्टा भवन्ति
हि ॥”
इत्युत्पत्तितन्त्रम् ॥ * ॥
कलौ तदाचारनिषेधो यथा, --
“दिव्यवीरमयो भावः कलौ नास्ति
कदाचन ।
केवलं पशुभावेन
मन्त्रसिद्धिर्भवेन्नृणाम् ॥”
इति महानिर्व्वाणतन्त्रम् ॥ * ॥
तण्डुलीयः । वराहकन्दः ।
लताकरञ्जः ।
करवीरः । अर्ज्जुनः । इति
राजनिर्घण्टः ॥
यज्ञाग्निः । इति वीरहाशब्दटीकायां
भरतः ॥
उत्तरः । सुभटः । इति मेदिनी ॥

**वीरः**, त्रि, श्रेष्ठः । इति हेमचन्द्रः ॥ (कर्म्मठः ।

यथा, ऋग्वेदे । ८ । २३ । १९ ।
“इमं धा वीरो अमृतं वीरं
कृण्वीतमर्त्त्यः ॥”
“वीरः कर्म्मणि समर्थः ।” इति
तद्भाष्ये सायणः ॥
यथा च । तत्रैव । ६ । २३ । ३ ।
“कर्त्ता वीराय सुष्वय उलोकं

इति भावप्रकाशः ॥
(पुं, प्रजापतिविशेषः । यथा, महाभारते ।
१२ । ३४८ । ४१ ।
“सनत्कुमारादपि च वीरणो वै प्रजापतिः ।
कृतादौ कुरुशार्द्दूल धर्म्ममेतदधीतवान् ॥”
यथा च मात्स्ये । ४ । ४० ।
“वीरणस्यात्मजायान्तु चक्षुर्म्मनुमजीजनत् ॥”)

**वीरतरं**, क्ली, वीरणम् । इत्यमरः ॥

**वीरतरः**, पुं, शरः । इति भूरिप्रयोगः ॥ (त्रि,

सामर्थ्यवान् । यथा, ऋग्वेदे । ८ । २४ । १५ ।
“नह्यङ्ग पुराचन जज्ञे वीरतरस्त्वत् ॥”
“वीरतरः सामर्थ्यवान् ।” इति तद्भाष्ये
सायणः ॥ अयमनयोरतिशयेन वीरः । वीर-
श्रेष्ठः । यथा, महाभारते । ४ । ५२ । १४ ।
“नरर्षभास्ते तु नरर्षभेण
वीरा रणे वीरतरेण भग्नाः ॥”)

| | दाता वसु स्तुवते कीरये चित् ॥”<br>“वीराय यज्ञादि कर्म्मसु दक्षाय ।”<br>इति<br>तद्भाष्ये सायणः ॥ प्रेरयिता । यथा,<br>तत्रैव ।<br>६ । ६५ । ४ । | |
|---|---|---|

**वीरतरासनं**, क्ली, (वीरतराणां साधकश्रेष्ठानां
आसनम् ।) आसनविशेषः । यथा, --
“मृदु कोमलमास्तीर्णं संग्रामपतितं हि
यत् ।
जन्तुव्यापादितं वापि मृतं वा
नरमासनम् ॥
गर्भच्युतं त्वचं वापि नारीणां योनिजां
त्वचम् ।
सर्व्वसिद्धिप्रदं देवि
सर्व्वतोऽतिसमृद्धिदम् ।
त्वचं वा यौवनस्थानां
कुर्य्याद्वीरतरासनम् ॥”
इति मुण्डमालातन्त्रे ३ पटलः ॥

**वीरतरुः**, पुं, (वीरस्तनाम्ना ख्यातस्तरुः ।) अर्ज्जुन-
वृक्षः । इत्यमरः ॥ कोकिलाक्षवृक्षः ।
इति
रत्नमाला । विल्वान्तरवृक्षः ।
भल्लातकः ।
इति राजनिर्घण्टः ॥

**वीरपर्णं**, क्ली, सुरपर्णम् । इति राजनिर्घण्टः ॥

**वीरपत्नी**, स्त्री, (वीराणां पत्नी । यद्वा, वीरः
पतिर्य्यस्याः । “नित्यं सपत्न्यादिषु
।” ४ । १ । ३५ ।
इति पत्युर्नकारादेशः । “ऋन्नेभ्यो
ङीप् ।”
४ । १ । ५ । इति ङीप् ।) वीरभार्य्या
। इत्यमरः ॥
(यथा, मार्कण्डेये । १२५ । ७ ।
“तेषामेतद्वचः श्रुत्वा वीरा
वीरप्रजावती ।
वीरगोत्रसमुद्भूता वीरपत्नी प्रहर्षिता
॥”
नदीविशेषः । यथा, ऋग्वेदे । १ ।
१०४ । ४ ।
“अञ्जसी कुलिशी वीरपत्नी
पयो हिन्वाना उदभिर्भरन्ते ॥”
जोषं स्थिते मुनौ तत्र तन्महाकालसाध्वसात् ।
रुद्रश्चातीवरौद्रोऽभूत् बहुकोपाग्निदीपितः ॥
ततस्तत्क्रोधजाद्वह्नेराविरासीन्महाद्युतिः ।
प्रत्यक्षः प्रतिमाकारः कालमृत्युः प्रकम्पनः ॥
उवाच च प्रणम्येशं भूमुण्डीं महतीं दधत् ।
आज्ञां देहि पितः किन्ते करवै दास्यमुत्तमम् ।
ब्रह्माण्डमेककबलं करवाणि त्वदाज्ञया ॥
इति प्रतिज्ञां तस्येशः श्रुत्वा कृतममन्यत ।
कृतकृत्यमिवात्यन्तं तं मुदा प्रत्युवाच ह ॥
महावीरोऽसि रे भद्र मम सर्व्वगणेष्विह ।
वीरभद्राख्यया हि त्वं प्रथितिं परमां व्रज ।
कुरु मे सत्वरं कार्य्यं दक्षयज्ञं क्षयं नय ॥”
इति काशीखण्डे ८९ अध्यायः ॥
(यथा च महाभारते । १२ । २८३ । ५१ ।
“वीरभद्र इति ख्यातो रुद्रकोपाद्विनिःसृतः ।
भद्रकालीति विख्याता देव्याः कोपाद्विनिः-
सृता ॥”)

**वीरभद्रकं**, क्ली, (वीरभद्रमेव । स्वार्थे कन् ।)
वीरणम् । इति जटाधरः ॥

**वीरभार्य्या**, स्त्री, (वीराणां भार्य्या ।) वीरपत्नी ।
इत्यमरः ॥

**वीरमाता**, [ऋ] स्त्री, (वीराणां माता ।)
वीरजननी । तत्पर्य्यायः । वीरसूः २ । इत्य-
मरः ॥ (यथा, भागवते । ९ । १४ । ४० ।
“अन्तर्व्वत्नीमुपालक्ष्य देवीं स प्रययौ पुरीम् ।
पुनस्तत्र गतोऽब्दान्ते उर्व्वशीं वीरमातरम् ॥”)

**वीररजः**, [स्] क्ली, (वीराणां वीरभाविनां धार-
णार्थं रजः ।) सिन्दूरम् । इति राजनिर्घण्टः ॥
वीरस्य धूलिश्च ॥

**वीररेणुः**, पुं, (वीरा रेणव इव यस्य ।) भीमसेनः ।
इति त्रिकाण्डशेषः ॥

**वीरवती**, स्त्री, मांसरोहिणी । इति भाव-
प्रकाशः ॥ (विक्रमपुराधीश्वरविक्रमतुङ्गनृप
कर्म्मचारिवीरवरस्य कन्या । यथा, कथा-
सरित्सागरे । ५३ । ९० ।
सुभगा भोगसम्पन्ना यज्ञपत्नी पतिव्रता
॥”
पुत्त्रप्रसविनी । यथा, ऋग्वेदे । १० ।
८५ । ४४ ।
“वीरसूर्द्देवकामा स्योना शन्नो भवद्द्विपदे
शं
चतुष्पदे ॥”
“वीरसूः पुत्त्राणामेव सवित्री ।” इति
तद्भाष्ये
सायणः ॥)

**वीरसेनं**, क्ली, आरूकवृक्षः । इति राजनिर्घण्टः ॥

**वीरसेनः**, पुं, नलराजपिता । इति नैषधम् ॥
(यथा, महाभारते । ७ । ५२ । ५४ ।
“निषधेषु महीपालो वीरसेन इति श्रुतः ।
तस्य पुत्त्रोऽभवन्नाम्ना नलो
धर्म्मार्थकोविदः ॥”)

**वीरसेनजः**, पुं, (वीरसेनात् जायते इति । जन +
डः ।) नलराजः । इति नलोदयः ॥

**वीरहा**, [न्] पुं, (वीरान् हन्तीति । हन +
क्विप् ।) नष्टाग्निब्राह्मणः । इत्यमरः ॥
यस्या-
ग्निहोत्रिणः प्रमादादिना कारणान्तरेण वा
अग्निर्नष्टो निर्व्वाणः स्यात् स वीरहोच्यते
।
वीरयति शौर्य्यं कारयति इति वीर ङ त्
क तु
शौर्य्ये इत्यस्मात् चुरादि ञिः प्रेरणे
ञ्यन्तात्
पचाद्यनि वीरो यज्ञाग्निः तं हतवान् इति
क्विपि वीरहा । इति भरतः ॥ (यथा,
वाज-
सनेयसंहितायाम् । ३० । ५ । “नरकाय
वीर-
हणम् ।” “वीरहणं नष्टाग्निं शूरं वा ।” इति
तद्भाष्यम् ।) विष्णुः । यथा । वीरहा
माधवो

"वीरपत्नी वीरस्य पालयित्री एतत्संज्ञिता-
स्तिस्रो नद्यः ।" इति तद्भाष्ये सायणः ॥)

**वीरपत्रा**, स्त्री, (वीरप्रियाणि पत्राणि यस्याः ।)

विजया । इति राजनिर्घण्टः ॥

**वीरपानं**, क्ली, वीराणां श्रमनाशाय पानम् ।

यथा, --
"वीरपानन्तु यत् पानं वृत्ते भाविनि वा रणे ।"
इत्यमरः ॥
("वा भावकरणयोः ।" ८ । ४ । १० । इति
विकल्पेण णत्वमपि । यथा, गो० रामायणे ।
४ । ९ । ७२ ।
"मत्तोऽयमिति दुर्ब्बुद्धे मोहान्मामवमन्यसे ।
मदीये संप्रहारेऽस्मिन् वीरपाणं समर्थ्यताम् ॥")

**वीरपुष्पी**, स्त्री, सिन्दूरपुष्पी । इति राजनिर्घण्टः ॥

**वीरबाहुः**, पुं, (वीराः समर्थाः बाहवो यस्य ।)

विष्णुः । यथा, "वीरबाहुर्विदारणः ।" इति
तस्य सहस्रनामस्तोत्रम् ॥ (धृतराष्ट्रपुत्त्रान्य-
तमः । यथा, महाभारते । १ । ६७ । १०३ ।
"उग्रो भीमरथो वीरो वीरबाहुरलोलुपः ॥"
रावणपुत्त्रः । इति रामायणम् ॥ वानरविशेषः ।
यथा, गो० रामायणे । ६ । १७ । १५ ।
"वीरबाहुः सुबाहुश्च नलश्च वनगोचरः ॥")

**वीरभद्रः**, पुं, (वीराणां भद्रं येन ।) अश्वमेधाश्वः ।

"यस्य धर्म्मवती नाम भार्य्या वीरवती सुता ।
पुत्त्रः सत्यवरश्चेति त्रयं परिकरो गृहे ॥")

**वीरवत्सा**, स्त्री, (वीरो वत्सः पुत्त्रो यस्याः ।)

वीरजननी । इति जटाधरः ॥

**वीरविप्लावकः**, पुं, शूद्रद्रव्येण होमकर्त्ता । यथा, --

"वीरविप्लावको जुह्वन् धनैः शूद्रसमाहितैः ।"
इति हेमचन्द्रः ॥

**वीरवृक्षः**, पुं, (वीरनामको वृक्षः ।) भल्लातकः ।

इत्यमरः ॥ अर्ज्जुनवृक्षः ॥ इति हेमचन्द्रः ॥
विल्वान्तरः । इति राजनिर्घण्टः ॥ वृक्ष-
विशेषः । देधान इति भाषा । तत्पर्य्यायः ।
वीरतरः २ बृहद्वातः ३ अश्मरीहरः ४ । इति
रत्नमाला ॥

**वीरसूः**, स्त्री, (वीरान् पुत्त्रानेव सूते इति । वीर +

सू + क्विप् ।) वीरमाता । इत्यमरः ॥ (यथा,
महाभारते । १ । २०० । ७ ।
"जीवसूर्व्वीरसूर्भद्रे बहुसौख्यसमन्विता ।

मधः । इति विष्णुसहस्रनाम । वीरहन्तरि,
त्रि ॥

**वीरा**, स्त्री, मुरा । क्षीरकाकोली । तामलकी ।

एलवालुका । पतिपुत्त्रवती । रम्भा । विदारी ।
दुग्धिका । मलपूः । क्षीरविदारी । इति
मेदिनी । रे, ६८ ॥ पुस्तकान्तरे मुरास्थाने सुरा
विदारीस्थाने गम्भारी इति पाठः । काकोली
महाशतावरी । गृहकन्या । ब्राह्मी । अति-
विषा । मदिरा । इति राजनिर्घण्टः ॥ शिंशपा-
वृक्षः । इति रत्नमाला ॥ (करन्धमराजपत्नी ।
यथा, मार्कण्डेये । १२३ । १ ।
"वीर्य्यचन्द्रसुता सुभ्रूर्व्वीरा नाम शुभव्रता ।
स्वयंवरे सा जगृहे महाराजं करन्धमम् ॥"
नदीविशेषः । यथा, महाभारते । ६ । ९ । २२ ।
"पूर्व्वाभिरामां वीराञ्च भीमा मोघवतीं तथा ॥"
विक्रमशालिनी । यथा, मार्कण्डेये । १२५ । ७ ।
"तेषामेतद्वचः श्रुत्वा वीरा वीरप्रजावती ।
वीरगोत्रसमुद्भूता वीरपत्नी प्रहर्षिता ॥")

**वीराम्लः**, पुं, अम्लवेतसः । इति राजनिर्घण्टः ॥

**वीरारुकं**, क्ली, आरूकम् । इति राजनिर्घण्टः ॥

**वीराशंसनं**, क्ली, (वीरान् आशंसयति अद्य

स्थास्यामि वा नवेति चिन्तां जनयतीति ।
आ + शंस + णिच् + ल्युः ।) अतिभयप्रदा युद्ध-
भूमिः इत्यमरः ॥

**वीरासनं**, क्ली, (वीराणां साधकानामासनम् ।)

भित्त्याद्यनाश्रित्योपवेशनम् । यथा, --

| वीरश्रेष्ठः । वीरणम् । इति मेदिनी ॥<br>शिव-<br>गणविशेषः । तस्योत्पत्तिर्य्यथा, --<br>"इत्याकर्ण्य महाकालः सम्यक्<br>ज्ञात्वा सती-<br>व्ययम् ।<br>सत्यं मुने सती देवी तृणीचक्रे<br>स्वजीवितम् ॥ | | "दिवानुगच्छेत्ता गास्तु तिष्ठन्नूद्र्ध्वं रजः<br>पिबेत् । |
|---|---|---|

शुश्रूषित्वा नमस्कृत्वा रात्रौ वीरासनं वसेत्
॥”
इति प्रायश्चित्ततत्त्वे मनुः ॥
अन्यच्च ।
“एकपादमथैकस्मिन् विन्यसेदुरु
संस्थितम् ।
इतरस्मिन् तथा पश्चाद्वीरासनमिदं विदुः
॥”
इति घेरण्डसंहिता ॥
(यथा, रघुवंशे । १३ । ५२ ।
“वीरासनैर्ध्यानजुषामृषीणा-
ममी समध्यासितवेदिमध्याः ।
निर्व्वातनिष्कम्पतया विभान्ति
योगाधिरूढा इव शाखिनोऽपि ॥”)

**वीरिणी**, स्त्री, असिक्नी । यथा, --

“उपयेमे वीरणस्य तनयां दक्ष ईप्सिताम् ।
वीरिणी नाम तस्यास्तु असिक्नीत्यपि
सत्तमाः ॥”
इति कालिकापुराणे ८ अध्यायः ॥
(यथा च महाभारते । १ । ७५ । ५ ।
“वीरिण्या सह सङ्गम्य दक्षः प्राचेतसो
मुनिः ।
आत्मतुल्यानजनयत् सहस्रं शंसितव्रतान्
॥”
वीरः पुत्त्रोऽस्या अस्तीति । वीर + इनि ।
ङीप् ।
पुत्त्रवती । यथा, ऋग्वेदे । १० । ८६ । ९
।
“उताहमस्मि विरिणीन्द्रपत्नी ॥”
“विरिणी पुत्त्रवती ।” इति तद्भाष्ये सायणः
॥)

**वीरुत्**, [ध्] स्त्री, (विशेषेण रुणद्धि वृक्षानन्यान् ।

वि + रुध + क्विप् । “अन्येषामपीति ।”
दीर्घः ।
अथवा विरोहतीति वीरुत् । विपूर्ब्बस्य
रुहेः
क्विपि धकारो विधीयते इति काशिका ।
७ । ३ ।
वीरुध् शब्दात् भागुरिमते टाप् । यथा, --
“वष्टि भागुरिरल्लोपः अवाप्योरुपसर्गयोः ।
टापञ्चापि हलन्तानां क्षुधा वाचा निशा
गिरा ॥”)
वीरुत् । इति शब्दरत्नावली ॥

**वीरेशः**, पुं, (वीराणामीशः ।) शिवः । यथा, --

“अथ त्रयोदशे मासि स्नात्वा
त्रिपथगाम्भसि ।
प्रत्यूष एव वीरेशं यावदायाति स द्विजः ॥”
इति वीरेश्वरस्तोत्रम् ॥

**वीरेश्वरः**, पुं, (वीराणामीश्वरः ।) महादेवः ।

यथा, --
“तिलान्तरोऽपि नो काश्यां भूमिर्लिङ्गं विना
क्वचित् ।
परं वीरेशसदृशं न लिङ्गन्त्वाशु सिद्धिदम् ॥
धर्म्मदञ्चार्थदं सम्यक् कामदं मोक्षदं तथा ।
यथा वीरेश्वरं लिङ्गं काश्यां नान्यत्तथा
ध्रुवम् ॥”
इति काशीखण्डे १० अध्यायः ॥
(मैथिलानां दशकर्म्मपद्धतिकर्त्ता ।
तत्पद्धतिश्च ॥)

**वीरोज्झः**, पुं, होमाकर्त्ता । यथा, --

“अभ्युदिताभिनिर्म्मुक्तौ वीरोज्झो न
जुहोति
यः ॥”
इति हेमचन्द्रः ॥

**वीरोपजीविकः**, पुं, अग्निहोत्रमुपजीविका यस्य ।

यथा, --
“अग्निहोत्रच्छलाद्याञ्चापरोवीरोपजीविकः
॥”
इति हेमचन्द्रः ॥

**वीर्य्यं**, क्ली, (वीरे साधु । तत्र साधुः इति यत् । यद्वा,

वीर्य्यतेऽनेनेति वीर विक्रान्तौ + “अचो यत्
।”
इति मधुः । कर्म्मसु दृढयत्नकारको भाघ
उत्साहः । इति रमानाथः । कर्म्मसु
प्रत्यय
उत्साह इति नयनानन्दः । अशक्ये
बलोद्यम
उत्साह इति केचित् । स उत्साहः
अतिशय-
शक्तिभाक् वीर्य्यम् ।
अतिशयितोऽध्यवसायो
वीर्य्यं साधु वीर्य्यमित्यर्थः । वीर्य्या स्त्री च
वीर्य्यं
वीर्य्य इति कोषान्तरम् । इति भरतः ॥ *
॥
बलम् । प्रभावः । इति नानार्थे अमरः ॥
(यथा, ऋग्वेदे । ३ । २५ । २ ।
“अग्निः सनोति वीर्य्याणि विद्वान्
सनोति वाजममृताय भूषन् ॥”
“वीर्य्याणि पशुपुत्त्रादिसम्पद्रूपाणि
सामर्थ्यानि ।”
इति तद्भाष्ये सायणः ॥ यथा च भागवते ।
६ ।
१७ । ३१ ।
“ज्ञानवैराग्यवीर्य्याणां नहि
कश्चिद्व्यपाश्रयः ॥”
शरीरसामर्थ्यम् । यथा, ऋग्वेदे । ४ । ५०
। ७ ।
“स इद्राजा प्रतिजन्यानि विश्वाशुष्मेण
तस्था-
वभि वीर्य्येण ॥”
“वीर्य्येण शरीरसामर्थ्येन ।” इति तद्भाष्य
सायणः ॥ शक्तिः । यथा, मनौ । ११ ।
३१ ।
“न ब्रह्मणो वेदयते किञ्चिद्राजनि धर्म्मवित्
।
स्ववीर्य्येणैव तान्
शिष्यान्मानवानपकारिणः॥
स्ववीर्य्याद्राजवीर्य्याच्चस्ववीर्य्यं
बलवत्तरम् ।

५३ ।) विस्तृता लता । तत्पर्य्यायः । गुल्मिनी २ उलपः ३ । इत्यमरः ॥ वीरुधा ४ । इति शब्द-रत्नावली ॥ प्रताना ५ कक्षः ६ । इति जटा-धरः ॥ (यथा, रघुवंशे । ८ । ३६ ।
"अभिभूय विभूतिमार्त्तवीं
मधुगन्धातिशयेन वीरुधाम् ॥"
ओषधिः । यथा, ऋग्वेदे । १ । ६७ । ५ ।
"वियो वीरुत् सुरोधन्महित्वोत प्रजा उतप्रसू-ष्वन्तः ॥"
"वीरुत्सु ओषधीषु ।" इति तद्भाष्ये सायणः ॥
वृक्षमात्रे, पुं । यथा, महाभारते । १ । ४५ । २४ ।
"यानि पश्यसि वै ब्रह्मन् मूलानीहास्य वीरुधः ।
एते नस्तन्तवस्तात कालेन परिभक्षिताः ॥"
यथा च ऋग्वेदे । ९ । ११३ । २ ।
"सोमं नमस्य राजानं यो जज्ञे वीरुधां पतिः ॥"
"वीरुधां वनष्पतीनामिति ।" इति तद्भाष्ये सायणः ॥ लतानां वीरुधाञ्च कथञ्चिद्भेदमाह ।
यथा, भागवते । ३ । १० १९ ।
"वनस्पत्योषधिलतात्वक्सारा वीरुधो द्रुमाः ।"
"ये पुष्पं विना फलन्ति ते वनस्पतयः । ओषधयः फलपाकान्ताः । लता आरोहणापेक्षाः । त्वक्-सारा वेण्वादयः । लता एव काठिन्येनारोहणा-नपेक्षा वीरुधः । ये पुष्पैः फलन्ति ते द्रुमाः ।"
इति तट्टीकायां श्रीधरस्वामी ॥)

**वीरुधा**, स्त्री, (विशेषेण रुणद्धीति । वि + रुध + ३ । १ । ९७ । इति यत् । यद्वा वीरस्य भावः । यत् ।)
चरमधातुः । तत्पर्य्यायः । शुक्रन् ३ तेजः ३ रेतः ४ बीजम् ५ इन्द्रियम् ६ । इति मनुष्य-वर्गे अमरः ॥ वीर्य्यं शक्तिः सा च पृथिव्यादीनां यः सारभागः तदतिशयरूपा । सा द्विविधा चिन्त्याचिन्त्यक्रियाहेतुत्वेन । तत्र चिन्त्यक्रिया-हेतुर्या द्रव्यरसादीनां स्वस्वकर्म्मणि स्वभाव-सिद्धा शक्तिः । अचिन्त्यक्रियाहेतुश्च प्रभापर-पर्य्यायः । द्रव्याणां रसाद्यननुरूपकार्य्यकरण-शक्तिः । उक्तञ्च ।
"भूतप्रभावातिशयो द्रव्ये पाके रसे स्थितः ।
चिन्त्याचिन्त्यक्रियाहेतुर्वीर्य्यं धन्वन्तरेर्म्मतम् ॥"
इति चक्रदत्तोपरि शिवदासीयटीका ॥ * ॥
परवीर्य्योदरपातदोषो यथा, --
"परवीर्य्यं यदुदरं कामतोऽकामतोऽपि वा ।
अहल्ये याति दैवेन तदुपायं निशामय ॥
अकामतो न दुष्टा सा प्रायश्चित्तेन शुद्ध्यति ।
कामभोगेन त्याज्या सा कर्म्मभोगेन शुद्ध्यति ॥
पितृपाके दैवपाके पूजायां नाधिकारिणी ।
षष्टिं वर्षसहस्राणि क्षयं कृत्वा स्वकर्म्मणः ।
प्रयाति भोगदेहं सा तस्यान्ते पापकर्म्मणः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ४७ अध्यायः ॥
अतिशयशक्तिभागुत्साहः । इति स्वर्गवर्गे अमरः ॥ कर्म्मसु सुकरः प्रत्ययः उत्साहः ।
तस्मात् स्वेनैव वीर्य्येण निगृह्णीयादरीन् द्विजः ॥"
मनःशक्तिः । यथा, भागवते । ४ । १८ । १५ ।
"कृत्वा वत्सं सुरगणा इन्द्रं सोममदूदुहन् ।
हिरण्मयेन पात्रेण वीर्य्यमोजो बलं पयः ॥")
औषधानां वीर्य्यस्य स्थितिकाला यथा, --
"यामं कल्ककषायवीर्य्यमखिलं चूर्णञ्च पक्षत्रयं
षण्मासान् घृतमोदकौ सहगुडौ मासत्रयं गुग्गुलोः ।
सिद्धानां रसभस्मनां सुविपुलं वीर्य्यञ्च वर्षत्रयं
किञ्चिद्गन्धविवर्ज्जितं गुणपरं तैलं पुराणं महत् ॥"
इति नारायणदासकृतपरिभाषा ॥
तेजः । इति मेदिनी ॥ चेतः । दीप्तिः । इति शब्दरत्नावली ॥

**वीर्य्यजः**, पुं, (वीर्य्याज्जायते इति । जन + डः ।)
पुत्रः । इति केचित् ॥ (यथा, भागवते । ३ । ५ । १९ ।
"नैतच्चित्रं त्वयि क्षत्तर्व्वादरायणवीर्य्यज ॥")

**वीर्य्यवान्**, [त्] त्रि, (वीर्य्यमस्यास्तीति । मतुप् ।)
मांसलः । इति शब्दरत्नावली ॥ वीर्य्ययुक्तश्च ॥
(यथा, किराते । २ । ४ ।
"अतिवीर्य्यवतीव भेषजे
बहुरल्पीयसि दृश्यते गुणः ॥")

**वीर्य्यवृद्धिकरं**, क्ली, (वीर्य्याणां वृद्धिकरम् ।) शुक्र-वृद्धिकारकौषधादि । तत्पर्य्यायः । वृष्यम् २ वाजीकरणम् ३ वीजकृत् ४ । इति राज-निर्घण्टः ॥

**वीर्य्या**, स्त्री, (वीर्य्यतेऽनयेति । वृ + "अचो यत् ।"

**वीवधः**, पुं, पर्य्याहारः । परित आह्रियतेऽसौ
धान्यतण्डुलादिः । (यथा, माघे । २ । ६४
।
"निरुद्धवीवधासारप्रसारागा इव व्रजम् ।
उपरुन्धन्तु दाशार्हाः पुरीं माहिष्मतीं द्विषः
॥")
मार्गः । पन्थाः । इत्यमरभरतौ ॥ भारः ।
इति
शब्दरत्नावली ॥

**वीवधिकः**, त्रि, (वीवधेन हरतीति । वीवध +
"विभाषा विवधवीवधात् ।" ४ । ४ । १७
।
इति ठन् ।) भारवाहकः । इति सिद्धान्त-
कौमुदी ॥

**वीहारः**, पुं, (विहरन्त्यत्रेति । वि + हृ + घञ् ।
उपसर्गस्य दीर्घः ।) महालयः । स तु बुद्ध-
मन्दिरम् । इति शब्दमाला ॥ विहारः ।
इत्यमरटीका ॥

**वुग**, इ त्यागे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) इ, वुङ्ग्यते । इति दुर्गादासः
॥

**वुट**, इ क क्षित्याम् । इति कविकल्पद्रुमः ॥
(चुरा०-पर०-सक०-सेट् ।) पञ्चमस्वरी ।
इ,
वुण्ट्यते । क, वुण्टयति । क्षितिर्हिंसा ।
इति
दुर्गादासः ॥

**वु(बु)द्धिः**, स्त्री, (वुध + क्तिन् ।) आत्मनो गुण-
विशेषः । सा त्रिविधा यथा, --
"प्रवृत्तिञ्च निवृत्तिञ्च कार्य्याकार्य्ये भयाभये
।
बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थ
सात्त्विकी ॥
यया धर्म्ममधर्म्मञ्च कार्य्यञ्चाकार्य्यमेव च ।
अयथावत् प्रजानाति बुद्धिः सा पार्थ
राजसी ॥

**वृंहितं**, क्ली, (वृहि + क्तः ।) हस्तिगर्ज्जनम् ।
तत्पर्य्यायः । करिगर्ज्जितम् २ । इत्यमरः ॥
(यथा, महाभारते । ६ । १८ । २ ।
"शङ्खदुन्दुभिघोषैश्च वारणानाञ्च वृंहितैः ।
नेमिघोषै रथानाञ्च दीर्य्यतीव वसुन्धरा ॥")

**वृक**, ङ आदाने । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) ङ, वर्कते ।
वरीवृक्यते ।
इति दुर्गादासः ॥

**वृकः**, पुं, (वृणोतीति । वृ + "सृवृभृशुषिमुषिभ्यः
कक् ।" उणा० ३ । ४१ । इति कक् ।)
कुक्कुर-
प्रमाणहरिणघ्नजन्तुशिशेषः । घोँघ इति
ख्यातः ।
हुण्डार इति हिन्दी भाषा । तत्पर्य्यायः ।
कोकः २ ईहामृगः ३ । इत्यमरः ॥
वत्सादनः ४
विरुक् ५ गोवत्सादी ६ छागभोजी ७ छाग-
लान्त्री ८ जनाशनः ९ । इति राजनिर्घण्टः
॥
(यथा, भागवते । ३ । १० । २३ ।
"श्वा शृगालो वृको व्याघ्रो मार्ज्जारः शश-
शल्लकौ ॥")
काकः । इत्युणादिकोषः ॥ (पोतकः ।
इत्युणादि-
टीकाधृतविश्वः । ३ । ४१ ॥) वकवृक्षः ।
इति
शब्दरत्नावली ॥ शृगालः । इति हारावली ॥
(यथा, मनुः । ८ । २३५ ।
"अजाविके तु संरुद्धे वृकैः पाले त्वनायति ।
यां प्रसह्य वृको हन्यात् पाले तत् किल्विषं
भवेत् ॥"
"वृकैः शृगालप्रभृतिभिः ।" इति मेघातिथिः
॥)
क्षत्त्रियः । अनेकधूपः । सरलद्रवः । इति
भरतधृतरभसः ॥ (तस्करः । इति निघण्टुः
।
य्यायः । भीमः २ मरुत्पुत्त्रः ३
किर्म्मीरनिसू-
दनः ४ कीचकनिसूदनः ५ वकनिसूदनः
६
हिडम्बनिसूदनः ७ । इति हेमचन्द्रः ॥
वक-
वैरी ८ मारुतिः ९ । इति जटाधरः ॥
अस्य
व्युत्पत्तिर्यथा, --
"कथासु भीमसेनेन परिपृष्टः प्रतापवान् ।
त्वया पृष्टस्य धर्म्मस्य रहस्यस्यास्य
भेदकृत् ॥
भविता स तदा ब्रह्मन् कर्त्ता चैव वृकोदरः
।
प्रवर्त्तकोऽस्य धर्म्मस्य
पाण्डुसूनुर्महाबलः ॥
यस्य तीक्ष्णो वृको नाम जठरे
हव्यवाहनः ।
मया दत्तः स धर्म्मात्मा तेन चासौ
वृकोदरः ॥"
इति मात्स्ये ६५ अध्यायः ॥

**वृक्णं**, त्रि, (व्रश्च + क्तः ।) छिन्नम् । इत्यमरः ॥
(यथा, सांख्यतत्त्वकौमुद्याम् ।
"नहि पाणौ वृक्णे स्तने वा जाते कुमारी
मृता-
जाता वेति ॥")

**वृक्ष**, ङ वृतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) सप्तमस्वरी । ङ,
वृक्षते
वरं कन्या । इति दुर्गादासः ॥

**वृक्षः**, पुं, (व्रश्च छेदने + "स्नुव्रश्चिकृत्यृषिभ्यः
कित् ।" उणा० ३ । ६६ । इति सः । स
च कित् ।
"वृक्ष वरणे । अतोऽच्यावृणोतीति वृक्ष
इति
सिद्धे प्रपञ्चार्थं व्रश्चिग्रहणम् ।" इति
तट्टीकाया-

अधर्म्मं धर्म्ममिति या मन्यते तमसावृता ।
सर्व्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥”
इति श्रीभगद्गीतायाम् १८ अध्यायः ॥

**वृ**, क च वृतौ । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-सक०-सेट् ।) क, वारयति । इति दुर्गादासः ॥

**वृ**, ङ ग संभक्तौ । इति कविकल्पद्रुमः ॥ (क्र्या०-
आत्म०-सक०-सेट् ।) संभक्तिः सेवनम् ।
ङ ग, वृणीते । वृणते हि विमृष्यकारिणं गुण-
लुब्धाः स्वयमेव सम्पदः । इति दुर्गादासः ॥

**वृ**, ञ वृतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-उभ०-
सक०-सेट् ।) ञ, वररि वरते । इति दुर्गादासः ॥

**वृ**, न ग ञ वृतौ । इति कविकल्पद्रुमः ॥ (स्वा०-
क्र्या० च-उभ०-सक०-सेट् ।) न ञ, वृणोति
वृणुते । ग ञ, वृणाति वृणीते । वकारस्य दन्त्य-
त्वात् संवृणोति इत्यादौ नानुस्वारस्य मकारः ।
ओष्ठ्यत्वाच्च युवूर्षतीत्यादौ ऋदिरणावित्यूर् ।
न च दन्त्यस्य कथमोष्ठ्यकार्य्यमिति वाच्यं यतः
स्वभावादोष्ठ्यस्य वकारस्य ओष्ठ्यकार्य्यं स्वाभा-
विकमेव । क्वचिद्दन्त्यमध्ये पाठः नह्येकवर्णस्यो-
भयस्थानं सम्भवति । इति दुर्गादासः ॥

**वृंहणः**, त्रि, (वृहि + ल्युः ।) पुष्टिकारकः ।
यथा । संयावो वृंहणो गुरुः । इति शब्द-
चन्द्रिका ॥

३ । २४ ॥ * ॥ वर्कते शत्रुप्राणानादत्ते इति ।
वृक आदाने + कः । वज्रः । इति निघण्टुः ।
२ । २० ॥)

**वृकदंशः**, पुं, (वृकान् दशतीति । दन्श + अण् ।)
कुक्कुरः । इति हेमचन्द्रः ॥

**वृकधूपः**, पुं, (वृकोऽनेकधूपः एव धूपः । वृकः
सरलद्रवस्तत्प्रधानो धूपो वा ।) नानासुगन्धि-
द्रव्यकृतदशाङ्गादिधूपः । तत्पर्य्यायः । कृत्रिम-
धूपकः २ । इत्यमरः ॥ वकधूपः ३ । इति
तट्टीका ॥ सरलवृक्षरसः । टारपिन् इति
भाषा । तत्पपर्य्यायः । पायसः २ श्रीवासः ३
श्रीवेष्टः ४ सरलद्रवः ५ । इत्यमरः ॥

**वृकधूर्त्तः**, पुं, (धूर्त्तो वृकः राजदन्तादिवत् पूर्ब्ब-
निपातः ।) शृगालः । इति हारावली ॥

**वृका**, स्त्री, अम्बष्ठा । इति रत्नमाला ॥

**वृकाक्षी**, स्त्री, (वृकस्याक्षीव अक्षि चिह्नं यस्याः ।)
त्रिवृत् । इति रत्नमाला ॥

**वृकारातिः**, पुं, (वृकस्यारातिः ।) कुक्कुरः । इति
शब्दमाला ॥

**वृकारिः**, पुं, (वृकस्यारिः ।) कुक्कुरः । इति
राजनिर्घण्टः ॥

**वृकी**, स्त्री, पाठा । इति राजनिर्घण्टः ॥

**वृकोदरः**, पुं, (वृकस्येवोदरो यस्य । यद्वा, वृकः
वृकनामकोऽग्निरुदरे यस्य ।) भीमसेनः । तत्प-

मुज्ज्वलदत्तः ।) स्थावरयोनिविशेषः । गाछ इति
भाषा । तत्पर्य्यायः । महीरुहः २ शाखी ३
विटपी ४ पादपः ५ तरुः ६ अनोकहः ७ कुटः
८ सालः ९ पलाशी १० द्रुः ११ द्रुमः १२ आगमः
१३ । इत्यमरः ॥ अगच्छः १४ विष्टरः १५ मही-
रुट् १६ कुचिः १७ स्थिरः १८ कारस्करः १९
नगः २० अगः २१ कुटारः २२ । इति शब्द-
रत्नावली ॥ विटपः २३ कुजः २४ वनस्पतिः २५
अद्रिः २६ शिखरी २७ कुठः २८ । इति जटा-
धरः ॥ कुञ्जः २९ क्षितिरुहः ३० अङ्घ्रिपः ३१
भूरुहः ३२ भूजः ३३ महीजः ३४ धरणीरुह
३५ क्षितिजः ३६ शालः ३७ । इति राज-
निर्घण्टः ॥ तस्य षड्जातिर्यथा, --
“कुरण्ट्याद्या अग्रबीजा मूलजास्तूत्पलादयः
पर्व्वयोनय इक्ष्वाद्याः स्कन्धजाः सल्लकीमुखाः ।
शाल्यादयो बीजरुहाः संमूर्च्छजास्तृणादयः ।
स्युर्व्वनस्पतिकायस्य षडेते मूलजातयः ॥”
इति हेमचन्द्रः ॥
“संस्वेदजापि विज्ञेया वृक्षगोपशुजन्तवः ।”
इत्यग्निपुराणम् ॥
भद्रप्रदवृक्षा यथा, --
श्रीभगवानुवाच ।
“आश्रमे नारिकेलश्च गृहिणाञ्च धनप्रदः ।

| | | शिविरस्य यदीशाने पूर्व्वे पुत्त्रप्रदस्तरुः ॥<br>सर्व्वत्र मङ्गलार्हश्च तरुराजो मनोहरः ।<br>रसालवृक्षः पूर्ब्बस्मिन् नृणां सम्पत्प्रदस्तथा ॥<br>शुभप्रदश्च सर्व्वत्र सुरकारो निशामय ॥<br>विल्वश्च पनसश्चैव जम्बीरो वदरी तथा ।<br>प्रजाप्रदश्च पूर्ब्बस्मिन् दक्षिणे धनदस्तथा ॥ |
|---|---|---|

सम्पत्प्रदश्च सर्व्वत्र यतो हि वर्द्धते गृही ।
जम्बूवृक्षश्च दाडिम्बः कदल्याम्रातकस्तथा ॥
बन्धुप्रदश्च पूर्ब्बस्मिन् दक्षिणे मित्रदस्तथा ।
सर्व्वत्र शुभदश्चैव धनपुत्त्रशुभप्रदः ॥
हर्षप्रदो गुवाकश्च दक्षिणे पश्चिमे तथा ।
ईशाने सुखदश्चैव सर्व्वत्रैवं निशामय ॥
सर्व्वत्र चम्पकः शुद्धो भुवि भद्रप्रदस्तथा ।
अलावूश्चापि कुष्माण्डो मायाम्बुश्च सुकासुकः
॥
खर्ज्जूरी कर्कटी चापि शिविरे मङ्गलप्रदा ।
वास्तूकः कारविल्वश्च वार्त्ताकुश्च शुभप्रदा ।
लताफलञ्च शुभदं सर्व्वं सर्व्वत्र निश्चितम् ॥”
निषिद्धवृक्षा यथा, --
“प्रशस्तं कथितं कारो ! निषिद्धञ्च निशामय ।
वन्यवृक्षो निषिद्धश्च शिविरे नगरेऽपि च ॥
वटो निषिद्धः शिविरे नित्यं चौरभयं ततः ।
नगरेषु प्रसिद्धश्च दर्शनात् पुण्यदस्तथा ॥
हे कारो ! तिन्तिडीवृक्षो यत्नात्तं परिवर्ज्जयेत् ।
शरेण धनहानिः स्यात् प्रजाहानिर्भवेद्ध्रुवम् ॥
शिविरेऽतिनिषिद्धश्च नगरे किञ्चिदेव च ।
न निषिद्धः प्रसिद्धश्च नगरेषु तथा पुरे ॥
वाट्यामतिनिषिद्धश्च प्राज्ञस्तं परिवर्ज्जयेत् ।
खर्ज्जूरश्च डहुश्चैव निषिद्धः शिविरे तथा ॥
न निषिद्धः प्रसिद्धश्च ग्रामेषु नगरेषु च ।
वृक्षश्च चणकादीनां धान्यञ्च मङ्गलप्रदम् ॥
ग्रामेषु नगरे चापि शिविरे च तथैव च ।
इक्षुवृक्षश्च शुभदः सन्ततं शुभदस्तथा ॥
अशोकश्च शिरीषश्च कदम्बश्च शुभप्रदः ।
कच्वी हरिद्रा शुभदा शुभदश्चार्द्रकस्तथा ॥
हरीतको च शुभदा ग्रामेषु नगरेषु च ।
न वाट्यां भद्रदा नित्यं तथा चामलकी ध्रुवम् ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १०२ अः ॥
अपि च ।
“अपुत्त्रस्य च पुत्त्रत्वं पादपा इह कुर्व्वते ।
यत्नेनापि च राजेन्द्र ! अश्वत्थारोपणं कुरु ॥
स ते पुत्त्रसहस्राणां कार्य्यमेकः करिष्यति ।
धनी चाश्वत्थवृक्षेण अशोकः शोकनाशनः ॥
प्लक्षो यज्ञप्रदः प्रोक्तो निम्बश्चासुप्रदः स्मृतः ।
जम्बुकी नाकदा प्रोक्ता भार्य्यादा दाडिमी तथा ॥

यः पुमान् रोपयेद्वृक्षान्
छायापुष्पफलोपगान् ।
सर्व्वसत्त्वोपभोगाय स याति परमां गतिम् ॥
छायापुष्पोपगांस्त्रिंशत् फलपुष्पद्रुमांस्तथा
।
रोपयित्वा दशाम्रांस्तु नरो न नरकं व्रजेत् ॥
देवदानवगन्धर्व्वाः किन्नरोरगगुह्यकाः ।
पशुपक्षिमनुष्याश्च संश्रयन्ति मुदा द्रुमान् ॥
पुष्पैः सुरगणाः सर्व्वे फलैश्च पितरः सदा
।
छायया मे मनुष्यास्तु पशुपक्षिमृगास्तथा ॥
पुष्पोपगन्धांश्च फलोपगन्धान्
यः पादपान्रोपयते मनुष्यः ।
समृद्धदेशे वरवेश्मवेद्यां
लभेदधिष्ठानवरं स विप्रः ॥
तस्मात् सुबहवो वृक्षा रोप्याः श्रेयोऽभि-
वाञ्छता ।
पुत्त्रवत् परिपाल्याश्च ते पुत्त्रा धर्म्मतः
स्मृताः ॥
किं धर्म्मविमुखैर्म्मर्त्यैः केवलं स्वार्थहेतुभिः
।
तरुपुत्त्रा वरं ये तु परार्थैकानुवृत्तयः ॥
पत्रपुष्पफलच्छायामूलवल्कलदारुभिः।
परेषामुपकुर्व्वन्ति तारयन्ति पितामहान् ॥
छेत्तारमपि संप्राप्तं छायापुष्पफलादिभिः ।
पूजयन्त्येव तरवो मुनिवद्द्वेषवर्जिताः ॥
पितरं नोपहिंसन्ति द्रुमा द्रविणलोभतः ।
तारयन्ति च मे सम्यक्
सर्व्वस्यातिथ्यदायकाः ॥
तस्मात्ते पुत्त्रवत् स्थाप्या
विधिवद्द्विजपुङ्गव ।
द्विजैः पितृमनुष्याणामभोज्याःस्युर्यदा
सदा ॥
जलकृत् वृक्षरोपी यः प्रतिग्राहारुचिर्द्विजः ।
एते स्वर्गान्न हीयन्ते ये चान्ये सत्यवादिनः
॥”
इत्याद्ये वह्निपुराणे तडागवृक्षप्रशंसानामा-
ध्यायः ॥ * ॥ अपि च ।

न च्छेत्तव्यो विल्ववृक्ष उडुम्बरश्च
कदाचन ।
कर्म्मण्याश्चैव ये वृक्षा न च्छेत्तव्याः
कदाचन ॥”
इति च वाराहपुराणे ब्राह्मणदीक्षासूत्रं
नामा-
ध्यायः ॥ * ॥ वृक्षोत्पाता यथा, --
“पुरेषु येषु दृश्यन्ते पादपाश्चैव
रोदिताः ।
रुदन्तो वा हसन्तो वा स्रवन्तो वा
बहून्रसान् ॥
अरोगा वा विना वातं शाखा
मुञ्चन्त्यथ
द्रुमाः ।
फलं पुष्पं तथा काले दर्शयन्ति
द्विहायनाः ॥
पूर्व्वावस्थां दर्शयन्ति फलं पुष्पं
तथा भवेत् ।
क्षीरं स्नेहं मदं रक्तं मधु तोयं
स्रवन्ति च ॥
शुष्यन्त्यरोगाः सहसा शुष्का
रोहन्ति वा
पुनः ।
उत्तिष्ठन्तीह पतिताः पतन्ति च
तथोन्नताः ॥
एवं वक्ष्यामि ते ब्रह्मन्
विपाकफलमेव च ।
रोदने व्याधिमभ्येति हसने
देशविभ्रमम् ॥
शाखाप्रपतने कुर्य्यात् संग्रामे
योधपातनम् ।
बालानां मरणं कुर्य्याद्बालानां
फलपुष्पिता ॥
स्वराष्ट्रभेदं कुरुते
फलपुष्पमनन्तरम् ।
क्षयं सर्व्वत्र गोक्षीरे स्नेहे
दुर्भिक्षलक्षणम् ॥
वाहनापचयं मद्यं रक्तं
संग्रामामादिशेत् ।

डुम्बरो रोगनाशाय पलाशो ब्रह्मदस्तथा।
अर्कपुष्पारोपकाणां नित्यं तुष्येद्दिवाकरः ॥
श्रीवृक्षः शङ्करो देवः पाटलायान्तु पार्व्वती ।
शिंशपायामप्सरसः कुन्दे गन्धर्व्वसत्तमाः ॥
विभीतके दासवृद्धिर्व्वकुलो दास्यदस्तथा।
अपत्यनाशकस्तालो वकुलः कुलवर्द्धनः ॥
बहुभार्य्या नारिकेली द्राक्षः सर्व्वाङ्गसुन्दरः।
रतिप्रदा तथा केली केतकी सर्व्वनाशिनी ।
प्रतिष्ठां ते गमिष्यन्ति ये नराः प्लक्षरोपकाः ॥"
इति पाद्मे सृष्टिखण्डे वृक्षारोपणं नाम २६ अध्यायः ॥ * ॥ अस्य रोपणफलम्।
यम उवाच ।
"वृक्षगुल्मलतावल्ल्यस्त्वक्सारास्तृणजातयः।
षडेते वृक्षजातीयास्तासां रोपे फलं शृणु ॥
"भूमिदानेन ये लोका गोदानेन च कीर्त्तिताः ।
ते लोकाः प्राप्यते पुंभिः पादपानां प्ररोहणे ॥
अश्वत्थमेकं पिचुमर्द्दमेकं न्यग्रोधमेकं दश पुष्पजातीः ।
द्वे द्वे तथा दाडिममातुलुङ्गे पञ्चाम्ररोपी नरकं न याति ॥
यथा सुपुत्त्रः कुलमुद्धरेद्धि यथातिकृत्स्नान्नियमप्रयत्नात्।
तथात्र वृक्षाः फलपुष्पभूताः स्वं स्वामिनं नरकादुद्धरन्ति ॥
गोकर्ण उवाच ।
इन्धनार्थं यथा नीतमग्निहोत्रं तदुच्यते ॥
छायाविश्रामपथिकैः पक्षिणां निलयेन च ।
पत्रमूलत्वगादींश्च औषधार्थन्तु देहिनाम् ॥
उपकुर्व्वन्ति वृक्षस्य पञ्चयज्ञः स उच्यते ।
गृहकृत्यानि कष्टानि क्षुद्रजन्तुगृहास्तथा॥
सत्रनिर्व्वर्त्तनं प्रोक्तं भिक्षा पत्रैः समाकृता ।
फलन्ति वत्सरे मध्ये द्विवारं शाकुनादयः ॥
सांवत्सरं पितुर्मातुरुपकारं फलैः कृतम्।
एवं पुत्त्र समारोप्या एवं तत्त्वविदो विदुः ॥"
इत्यादि वाराहपुराणे गोकर्णमाहात्म्यनामाध्यायः ॥ * ॥ अच्छेद्यवृक्षा यथा, --
"अश्वत्थो वटवृक्षश्च न च्छेत्तव्यः कदाचन ।
मधुस्रावे भवेद्व्याधिर्जलस्रावे न वर्षति ॥
अरोगं शोषणं ज्ञेयं ब्रह्मन् दुर्भिक्षलक्षणम्।
शुष्केषु संप्ररोहस्तु वीर्य्यमन्त्रञ्च हीयते ॥
उत्थाने पतितानाञ्च भयभेदकरं भवेत्।
स्थानात् स्थानन्तु गमने देशभङ्गन्तथादिशेत् ॥
ज्वलत्स्वपि च वृक्षेषु रोदत्सु च धनक्षयम्।
एतत् पूजितवृक्षेषु सर्व्वं राज्ञो विपद्यते ॥
पुष्पे फले वा विकृते राज्ञो मृत्युं तथादिशेत्।
अन्येषु दैवयुक्तेषु वृक्षोत्पातेषु मन्त्रितः ॥
आच्छादयित्वा तं वृक्षं गन्धमाल्यैर्विभूषयेत्।
वृक्षोपरि तथा च्छत्रं कुर्य्यात् पापप्रशान्तये ॥
शिवमभ्यर्च्चयेद्देवं पशुञ्चास्मै निवेदयेत्।
शूलेभ्य इति यद्धोमा कृत्वा रुद्रं जपेत्तथा ॥
मध्वाज्ययुक्तेन तु पायसेन संपूज्य विप्रांश्चतुरश्च दद्यात्।
गीतेन नृत्येन तथार्च्चनेन देवं हरं पापविनाशहेतोः ॥"
इति मात्स्ये अद्भुतशान्तिवृक्षोत्पातप्रशमनंनाम २०६ अध्यायः ॥ * ॥ अथ वृक्षप्रतिष्ठा।
भीष्म उवाच ।
"पादपानां विधिं ब्रह्मन् यथावद्विस्तराद्वद।
विधिना येन कर्त्तव्यं पादपोद्यापनं बुधैः ।
ये च लोकाः स्मृतास्तेषां तानि चैव वदस्व मे ॥

| | | |
|---|---|---|
| | | पुलस्त्य उवाच । पादपानां विधिं वक्ष्ये तथैवोद्यानभूमिषु । तडागविधिवत् सर्व्वं समाप्तिं जगदीश्वर ॥ कृत्वा मण्डपसंभारं स्नात्वा प्रयतमानसः । पूजयेद्ब्राह्मणं तद्वद्धेमवस्त्रानुलेपनैः ॥ सर्व्वौषध्युदकैः सिक्तान्नानापुष्पविभूषितान्। वृक्षान्माल्यैरलंकृत्य वासोभिरभिवेष्टयेत् ॥ सूच्या चैव तथा कार्य्यं सर्व्वेषां कर्णवेधनम् । |

कुण्डलञ्चापि दातव्यं
तद्वद्धेमशलाकया ॥
फलानि सप्त चाष्टौ वा
कलधौतानि कारयेत् ।
प्रत्येकं सर्व्ववृक्षाणां वेद्यां
तानधिवासयेत् ॥
धूपन्तु गुग्गुलुं श्रेष्ठं
ताम्रपात्रैरधिष्ठितम् ।
सर्व्वान् धान्यभृतः कृत्वा
गन्धमाल्यानुलेपनैः ॥
कुम्भान् स सर्व्ववृक्षेषु
स्थापयित्वा व्रती स्वयम् ।
पूजयित्वा दिनान्ते च
कुर्य्याद्द्विजनिमन्त्रणम् ॥
यथा च लोकपालानामिन्द्रादीनां
विधानतः ।
वनस्पतेरधिवासमेवं कार्य्यं
द्विजातिभिः ॥
ततः शुक्लाम्बरधरः
सौवर्णकृतशेखराम् ।
स्वर्णशृङ्गां कांस्यदोहां गां
दद्याच्छुभशालि-
नीम् ॥
पयस्विनीं
वृक्षमध्यादुत्सृजेद्गामुदङ्मुखीम् ।
ततोऽभिषेकमन्त्रेण
वाद्यमङ्गलगीतकैः ॥
ऋग्यजुःसामाथर्व्वाणां
धारणैरभितस्तथा ।
तैश्च कुम्भैः संस्नपनं
कुर्य्याद्ब्राह्मणपुङ्गवः ॥
शुक्लाम्बरधरः शुद्धो यजमानः
स्वयं जपेत् ।
गोभिर्व्विभवतः सार्व्वानृत्विजस्तु
समाहितः ॥
हेमसूत्रैः सकटकैरङ्गुलीयैः
पवित्रकैः ।
वासोभिः शयनीयैश्च
सहोपस्करपादुकैः ॥

अथ वृक्षारोपणनक्षत्रादि । शतभिषा मूलं विशाखा मृगशिरः उत्तरफल्गुनी उत्तराषाढा उत्तरभाद्रपत् रोहिणी हस्ता पुष्यः रेवती च ॥ * ॥
राजमार्त्तण्डे ।
"प्राजेशश्रवणोत्तरादितिमघामार्त्तण्डतिष्याश्विनी-
पौष्णानुष्णमरीचयः शतभिषा स्वातिर्व्विशाखा तथा ।
जिवार्केन्दुसितेन्दुनन्दनदिने वारे स्थिरस्योदये
शस्यानां वपने भवन्ति लवने शस्ते तिथौ रोपणे ॥ * ॥
हेमाम्भसा वृक्षवीजं स्नातो मन्त्रेण रोपयेत् ।
वसुधेति सुशीतेति पुण्यदेति धरेति च ।
नमस्ते सुभगे नित्यं द्रुमोऽयं वर्द्धतामिति ॥"
* ॥
अथ वृक्षप्रतिष्ठानक्षत्राणि । पूष्यः अश्विनी ज्येष्ठा पूर्ब्बफल्गुनी धनिष्ठा मृगशिरः स्वाती आर्द्रा मघा रोहिणी मूलं हस्ता रेवती अनुराधा श्रवणा पुनर्व्वसुश्च । यथा हि ।
"पुष्याश्विशक्रभगवैत्वतवासवेषु
चन्द्रानिलेशमघरोहिणिमूलहस्ते ।
पौष्णानुराधहरिभेषु पुनर्व्वसौ च
कार्य्याभिषेकतरुभूतपतिप्रतिष्ठा ॥" * ॥
अथ विहिततिथ्यादिः । भविष्ये ।
"प्रतिपच्च द्वितीया च तृतीया पञ्चमी तथा ।
दशमी त्रयोदशी चैव पौर्णमासी च कीर्त्तिता ॥
सोमो बृहस्पतिश्चैव शुक्रश्चैव तथा बुधः ।
एते सौम्यग्रहाः प्रोक्ताः प्रतिष्ठायागकर्म्मणि ॥"
इति ज्योतिस्तत्त्वम् ॥

**वृक्षकः**, पुं, कुटजवृक्षः । इति रत्नमाला ॥ वृक्षमात्रञ्च ॥ (यथा, रघुवंशे । १ । ३० ।
"सिक्तं स्वयमिव स्नेहाद्वन्ध्यमाश्रमवृक्षकम् ॥")

**वृक्षचरः**, पुं, (वृक्षे चरतीति । चर + टः ।)

**वृक्षमर्कटिका**, स्त्री, (वृक्षस्य मर्कटिका ।) जन्तुविशेषः । काठ्विडाल इति भाषा ॥ इति केचित् ॥

**वृक्षमृद्भूः**, पुं, (वृक्षमृदि भवतीति । भू + क्विप् ।) जलवेतसः । इति शब्दचन्द्रिका ॥

**वृक्षरुहा**, स्त्री, (वृक्षे रोहतीति । रुह + कः । ततष्टाप् ।) वन्दा । इत्यमरः ॥ अमृतश्रवा । इति राजनिर्घण्टः ॥

**वृक्षवाटिका**, स्त्री, (वृक्षस्य वाटिका ।) अमात्यगणिकागेहोपवनम् । इत्यमरः ॥

**वृक्षादनः**, पुं, (वृक्षमत्ति नाशयतीति । अद् + ल्युः ।) वृक्षभेदी । इत्यमरः ॥ नेहानि इति भाषा । (यथा, महाभारते । ५ । १५४ । ८ ।
"सकीलक्रकचाः सर्व्वेवासी वृक्षादनान्विताः ॥")
अश्वत्थवृक्षः । मधुच्छत्रम् । कुठारः । इति मेदिनी ॥ पियालः । इति धरणिः ॥

**वृक्षादनी**, स्त्री, (वृक्षमत्तीति । अद + ल्युः । स्त्रियां ङीष् ।) वन्दा । विदारीकन्दः । इति मेदिनी । ने, २१३ ॥

**वृक्षादिरुहकं**, क्ली, आलिङ्गनम् । इति शब्दमाला ॥

**वृक्षादिरूढकं**, क्ली, आलिङ्गनम् । इति शब्दमाला ॥

**वृक्षाम्लं**, क्ली, (वृक्षस्याम्लम् ।) महाम्लम् । तेन्तुलीति ख्यातम् । इति रायमुकुटः ॥ महादा । इति भरतादयः ॥ अम्बलकुटा । इति सारसुन्दरी ॥ चुका । इति भानुदीक्षितादयः ॥ तत्पर्य्यायः । तिन्तिडीकम् २ चुक्रम् ३ । इत्यमरः ॥ अम्लशाकम् ४ चुक्राम्लम् ५ तित्तिडीफलम् ६ शाकाम्लम् ७ अम्लपूरम् ८ पूराम्लम् ९
रक्तपूरकम् १० चुडाम्लम् ११ वीजाम्लम् १२ फलाम्लकम् १३ अम्लवृक्षम् १४ अम्लफलम् १५

क्षीरामिषैर्व्वलिं
दद्याद्यावद्दिनचतुष्टयम् ।
होमश्च सर्पिषा कार्य्यो यवैः
कृष्णतिलैरपि ॥
पलाशसमिधः शस्ताश्चतुर्थेऽह्नि
तथोत्सवः ।
दक्षिणा च पुनस्तद्वत् श्रेष्ठा
तत्रापि शक्तितः ॥
यद्यदिष्टतमं
किञ्चित्तत्तद्दद्यादमत्सरः ।
आचार्य्ये द्विगुणं दत्त्वा प्रणिपत्य
समापयेत् ॥
अनेन विधिना यस्तु
कुर्य्यादवृक्षोत्सवं मुदा ।
सर्व्वान् कामानवाप्नोति तत्
तदानन्त्यमश्नुते ॥
यश्चैकमपि राजेन्द्र वृक्षं
संस्थापयेद्बुधः ।
सोऽपि स्वर्गे वसेद्राजन्
यावदिन्द्रशतत्रयम् ॥
भूतभव्यांश्च
मनुजांस्तारयेद्रोमसंमितान् ।
परमां सिद्धिमाप्नोति
पुनरावृत्तिदुर्लभाम् ॥
य इदं शृणुयान्नित्यं श्रावयेद्वापि
मानवः ।
सोऽपि संपूज्यते देवैर्ब्रह्मलोके
महीयते ॥”
इति पाद्मे सृष्टिखण्डे २६
अध्यायः ॥ * ॥
वृक्षच्छेदने दोषो यथा, --
“तस्मान्न च्छेदयेत् वृक्षान्
सुपुष्पफलितान् कदा ।
यदीच्छेत् कुलवृद्धिञ्च धनवृद्धिञ्च
शाश्वतीम् ॥
सन्निधौ देवतानाञ्च
शिलेष्टकचितानपि ।
छेदिताश्छेदयेल्लोकान्
मरकवृष्टिक्षुद्भयैः ॥
नृपहानिर्भवेच्छ्रीघ्रं चिञ्चावृक्षे
निपातिते ।

वानरः । इति धनञ्जयः ॥

**वृक्षच्छायं**, क्ली, बहूनां वृक्षाणां छाया । यथा ।

वृक्षस्य वृक्षयोर्वा छाया वृक्षच्छाया वृक्षच्छायम् । बहुत्वे तु वृक्षच्छायमिति । षष्ठ्याश्छाया बहूनाञ्चेदिति क्लीवत्वम् । इति स्त्रीनपुंसकलिङ्गसंग्रहे भरतः ॥

**वृक्षधूपः**, पुं, श्रीवेष्टः । इति राजनिर्घण्टः ॥

**वृक्षनाथः**, पुं, (वृक्षाणां नाथः ।) वटवृक्षः ।

इति शब्दरत्नावली ॥

**वृक्षपाकः**, पुं, वटवृक्षः । इति शब्दचन्द्रिका ॥

**वृक्षभवनं** क्ली, (वृक्षस्थितं भवनम् ।) वृक्षकोटरम् ।

इति शब्दचन्द्रिका ॥

**वृक्षभक्षा**, स्त्री, (वृक्षं भक्षयतीति । भक्ष + अच् ।

ततष्टाप् ।) वन्दाकः । इति भावप्रकाशः ॥

**वृक्षभित्**, स्त्री, (वृक्षं भिनत्तीति । भिद् + क्विप् ।)

वासी । इति हेमचन्द्रः ॥

**वृक्षभिद्**, स्त्री, (वृक्षं भिनत्तीति । भिद् + क्विप् ।)

वासी । इति हेमचन्द्रः ॥

**वृक्षभेदी**, [न्] पुं, (वृक्षं भिनत्तीति । भिद् +

णिनिः ।) वृक्षादनः । इत्यमरः ॥ नेहानि इति भाषा ॥ टङ्कः । इति हेमचन्द्रः ॥

रसाम्लम् १६ श्रेष्ठाम्लम् १७ अत्यम्लम् १८ अम्लवीजम् १९ चुक्रफलम् २० । अस्य गुणाः । कटुत्वम् । कषायत्वम् । उष्णत्वम् । कफार्शस्तृष्णासमीरोदरहृद्गदादिगुल्मातिसारव्रणदोष नाशित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
“वृक्षाम्लमाममम्लोष्णं वातघ्नं कफपित्तलम् ।
पक्वन्तु गुरु संग्राहि कटुकं तुवरं लघु ॥
अम्लोष्णं रोचनं रूक्षं दीपनं कफवातकृत् ।
तृष्णार्शोग्रहणीगुल्मशूलहृद्रोगजन्तुजित्॥”
इति भावप्रकाशः ॥

**वृक्षाम्लः**, पुं, (वृक्षे अम्लो यस्य ।) आम्रातकः ।

इति शब्दचन्द्रिका ॥

**वृक्षायुर्व्वेदः**, पुं, (वृक्षस्यायुर्व्वेदः ।) तरुचिकित्-

सादिशास्त्रम् । तद्यथा, --
धन्वन्तरिरुवाच ।
“वृक्षायुर्व्वेदमाख्यास्ये प्लक्षश्चोत्तरतः शुभः ।
प्राग्वटो याम्यतस्त्वाम्रं आप्येऽश्वत्थं क्रमेण तु ।
दक्षिणां दिशमुत्पन्नाः समीपे कण्टकद्रुमः ॥
उद्यानं गृहवासे स्यात् तिलान् वाप्यथ
पुष्पितान् ।
गृह्णीयाद्रोपयेद्वृक्षान् द्विजं चन्द्रं प्रपूजयेत् ॥
ध्रुवाणि पञ्च वायव्यं हस्तं प्राजेशवैष्णवम् ।

| | | |
|---|---|---|
| सन्नियोगी हयं याति सीमावृक्षे निपातिते ।<br>तस्मान्न च्छेदयेद्वृक्षं देवताधिष्ठितं क्वचित् ॥<br>वापीकूपतडागानां छेदने रोधने कृते ।<br>कुलान्यकुलतां यान्ति नराणां सुदुरात्मनाम् ॥<br>तद्वंश्च छेदयेद्यस्तु वृक्षान् छायासुशीतलान् ।<br>असिपत्रवने घोरे पीड्यते यमकिङ्करैः ॥<br>नगरोपवने वृक्षान् प्रमादाद्वि च्छिनत्ति यः ।<br>स गच्छेन्नरकं नाम जृम्भणं रौद्रदर्शनम् ॥<br>विल्वादिपालनं कुर्य्याच्छुभं भयदमन्यथा ।<br>श्रीवृक्षान्नोपयेत् पञ्च यदि स्वर्गान्न हीयते ॥”<br>इत्याद्ये वह्निपुराणे वारुणारामप्रतिष्ठाध्यायः॥ | | |

नक्षत्राणि तथा मूलं शस्यन्ते द्रुमरोपणे ॥
प्रवेशयेन्नदीवाहान् पुष्करिण्यान्तु कारयेत्
।
हस्ता मघा तथा मैत्रमाद्यं पुष्यं सवासवम्
॥
जलाशयसमारम्भे वारणञ्चोत्तरात्रयम् ।
संपूज्य वरुणं विष्णुं पर्ज्जन्यं तत्
समारभेत् ॥
अरिष्टाशोकपुन्नागशिरीषाश्चप्रियङ्गवः ।
अशोककदलीजम्बुस्तथावकुलदाडिमाः
॥
सायं प्रातस्तु घर्म्मर्त्तौ शीतकाले दिनान्तरे
।
वर्षारात्रे भुवः शोषे सेक्तव्या रोपिता द्रुमाः
॥
उत्तमं विंशतिर्हस्ता मध्यमं षोडशान्तरम्
।
स्थानात् स्थानान्तरं कार्य्यं वृक्षाणां
द्वादशा-
न्तरम् ॥
विफलाः स्युर्घना वृक्षाः शस्त्रेणादौ हि
शोध-
नम् ।
विडङ्गघृतपक्वाक्तान् सेचयेच्छीतवारिणा
॥
फलनाशे कुलत्थैश्च माषैर्म्मुद्गैर्यवैस्तिलैः
।
घृतशीतपयःसेकः फलपुष्पाय सर्व्वदा ॥
आविकाजशकृच्चूर्णं यवचूर्णं तिलानि च ।
गोमांसमुदकञ्चेति सप्तरात्रं निधापयेत् ॥
उत्सेकः सर्व्ववृक्षाणां फलपुष्पादिवृद्धिदः
।
मत्स्याम्भसा तु सेकेन वृद्धिर्भवति
शाखिनः ॥
विडङ्गतण्डुलोपेतं मत्स्यं मांसं हि दोहदम्
।
सर्व्वेषामविशेषेण वृक्षाणां रोहवर्द्धनम् ॥”
इत्याग्नेये महापुराणे वृक्षायुर्व्वेदः ॥

**वृजनं**, क्ली, (वृज + “कृपृवृजीति ।” उणा० २ । ८१ ।

इति क्युः ।) पापम् । इत्युणादिकोषः ॥
आका-
शम् । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥
निराकरणम् । इति संक्षिप्तसारोणादिवृत्तिः
॥
(संग्रामः । यथा, ऋग्वेदे । १ । ६३ । ३ ।
“त्वं शुष्णं वृजने पृक्षे ॥”
“वृजन इत्यादीनि त्रीणि संग्रामनामानि अत्र
पूर्व्वे विशेषणे वृजने वर्ज्जनयुक्ते संग्रामे हि
वीराः पुरुषा वर्ज्यन्ते हिंस्यन्ते ।” इति
तद्भाष्ये
सासणः ॥ बलम् । इति निघण्टुः । २ । ९
॥
यथा, ऋग्वेदे । १ । १६६ । १५ ।
“विद्यामेषं वृजनं जीरदानुम् ।”
“वृजनं बलम् ।” इति तद्भाष्ये सायणः ॥
प्राणिजातम् । यथा, ऋग्वेदे । १ । ४८ । ५
।
“जरयन्ती वृजनं पद्वदीयते ।”
“वृजनं गमनशीलं जङ्गमं प्राणिजातं जर-
यन्ती *** वृजनं वृजी वर्जने । वर्ज्यते
इति
वृजनं प्राणिजातम् । कॄ पॄ वृजिमन्दिनिधा-
ञ्भ्यः क्युरिति क्युप्रत्ययः ।
कित्त्वाल्लघपधगुणा-
भावः योरनादेशे प्रत्ययस्वरः ।” इति
तद्भाष्ये
सायणः ॥)

**वृजनः**, पुं, (वृज + क्युः ।) केशः । कुटिले, त्रि ।

इत्युणादिकोषः ॥ (वाधके च त्रि । यथा,
ऋग्वेदे । ६ । ३५ । ५ ।
“तमानूनं वृजनमन्यथा चिच्छूरो ।”
“वृजनं बाधकम् ।” इति तद्भाष्ये सायणः
॥)

**वृजिः**, स्त्री, व्रजभूमिः । इति केचित् ॥

**वृजिनं**, क्ली, (वृजी वर्ज्जने + “वृजेः किच्च ।”

**वृत**, य ङ उ सम्भक्तौ । वरणे । इति कविकल्प-

द्रुमः ॥ (दिवा०-आत्म०-सक०-सेट् ।
क्त्वावेट् ।)
य ङ, वृत्यते । उ, वर्त्तित्वा वृत्त्वा ।
सम्भक्तिः
सेवनम् । इति दुर्गादासः ॥

**वृतः**, त्रि, (वृ + क्तः ।) कृतवरणः । तत्पर्य्यायः ।

वृत्तः २ वावृत्तः ३ । इत्यमरः ॥ (यथा,
हरि-
वंशे । १२७ । १७ ।
“तथा वृत्रवधे प्राप्ते साहाय्यार्थं वृतो मया
॥”)
आवृतश्च ॥

**वृतपत्रा**, स्त्री, (वृतानि पत्राण्यस्याः ।) पुत्त्रदात्री ।

इति राजनिर्घण्टः ॥

**वृतिः**, स्त्री, (वृ + क्तिन् ।) वेष्टनम् । तत्पर्य्यायः ।

वरः २ । इत्यमरः ॥ (यथा, --
“न हि च्छायादानैः
पथिकजनसन्तापहरणं
फलैर्व्वा पुष्पैर्व्वा न सुरमनुजप्रीणनमपि ।
अरे रे मन्दारद्रुम सहजमेतत्त्वनुचितं
वृतीभूतो रक्षस्यपरमपरेषां फलमपि ॥”
इत्युद्भटः ॥)
प्रार्थनाविशेषः । इत्यत्ये । इति भरतः ।
वर-
णम् । इति मेदिनी ॥ गोपनम् । इति शब्द-
रत्नावली ॥

**वृतिङ्करः**, पुं, विकङ्कतवृक्षः । इति शब्दरत्ना-

वली ॥ वृतिकारके, त्रि ॥

**वृत्तं**, क्ली, (वृत + क्तः ।) चरित्रम् । (यथा,

कथासरित्सागरे । ३ । १४ ।
“तत्र तस्थुर्निजान् भर्त्तॄन् ध्यायन्त्यः
क्लिष्टवृत्तयः ।
आपद्यपि सतीवृत्तं किं मुञ्चन्ति कुलस्त्रियः
॥”)

(अस्यान्यद्विवरणं बृहत्संहितायां ५५ अध्याये
द्रष्टव्यम् ॥)

**वृक्षार्हा**, स्त्री, (वृक्षे अर्हतीति । अर्ह + अच् । टाप् ।) महामेदा । इति राजनिर्घण्टः ॥

**वृक्षालयः**, पुं, (वृक्ष आलयो यस्य ।) पक्षी । इति शब्दमाला ॥

**वृक्षावासः**, पुं, (वृक्षे आवासो यस्य ।) वृक्षकोटर-वासी । इति केचित् ॥

**वृक्षाश्रयी**, [न्] पुं, (वृक्षमाश्रयतीति । आ + श्रि + णिनिः ।) क्षुद्रोलूकः । इति राजनिर्घण्टः ॥

**वृक्षोत्पलः**, पुं, कर्णिकारः । इति रत्नमाला ॥

**वृच**, ई ध वृतौ । इति कविकल्पद्रुमः ॥ (रुधा०-पर०-सक०-सेट् । अनिड्निष्ठः ।) ई, वृक्तः ।
ध, वृणक्ति । वरीवृच्यते ।
वर्ज्जनार्थोऽयमित्येके ।
इति दुर्गादासः ॥

**वृज**, ई कि त्यागे । इति कविकल्पद्रुमः ॥ (चुरा०-भ्वा० च-पर०-सक०-सेट् । अनिड्निष्ठः ।) ई,
वृक्तः । कि, वर्ज्जयति वर्ज्जति । इति दुर्गादासः ॥

**वृज**, ई ध वृतौ । त्यागे । इति कविकल्पद्रुमः ॥ (रुधा० पर०-सक०-सेट् । अनिड्निष्ठः ।) ई,
वृक्तः । ध, वृणक्ति । वरीवृज्यते । इति दुर्गादासः ॥

**वृज**, ल ङ इ त्यागे । इति कविकल्पद्रुमः ॥ (अदा०-आत्म०-सक०-सेट् ।) सप्तमस्वरी । ल,
ङ, वृङ्क्ते । इ, वृञ्ज्यते । इति दुर्गादासः ॥

**वृज**, ल ङ ई त्यागे । इति कविकल्पद्रुमः ॥

उणा० २ । ४७ । इति इनच् । स च कित् ।)
पापम् । इत्यमरः ॥ (यथा, भागवते । १० ।
२९ । ३८ ।
"तन्नः प्रसीद वृजिनार्द्दन तेऽङ्घ्रिमूलम् ॥"
दुःखम् । यथा, तत्रैव । १ । ७ । ४६ ।
"वृजिनं नार्हति प्राप्तुं पूज्यं वन्द्यमभीक्ष्णशः ॥"
पापविशिष्टे, त्रि । यथा, महाभारते । २ ।
२२ । ४ ।
"वृजिनां गतिमाप्नोति श्रेयसोऽप्युपहन्ति च ॥")
रक्तचर्म्म । भुग्नम् । इति हेमचन्द्रः ॥

**वृजिनः**, पुं, केशः । कुटिले, त्रि । इति मेदिनी । ने, १३६ ॥ (यथा, ऋग्वेदे । ६ । ४६ ।
१३ ।
"असमने अध्वनि वृजिने पथि श्येनाँ इव श्रव-
स्यतः ॥"
"वृजिने कुटिले पथि ।" इति तद्भाष्ये सायणः ॥)

**वृण**, द ञ उ भक्षे । इति कविकल्पद्रुमः ॥ (तना०-उभ०-सक०-सेट् । क्त्रावेट् ।) द ञ, वृणोति
वर्णोति वृणुते वर्णुते । उ, वर्णित्वा वृत्वा ।
इति दुर्गादासः ॥

**वृत**, क दीप्तौ । इति कविकल्पद्रुमः ॥ (चुरा०-पर० -अक०-सेट् ।) क, वर्त्तयति । इति दुर्गादासः ॥

**वृत**, ङ उ व ऌ वर्त्तने । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-स्यसनोः उभ०-अक०-सेट् । क्त्वावेट् ।)
ङ, वर्त्तते । उ, वर्त्तित्वा वृत्त्वा । व, वर्त्स्यति
विवृत्सति । ऌ, अवृतत् । इति दुर्गादासः ॥

पद्यम् । इत्यमरः ॥ यथा, छन्दोमञ्जर्य्याम् ।
"पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ।
वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत् ।
सममर्द्धसमं वृत्तं विषमञ्चेति तत्त्रिधा ॥"
वृत्तिः । इति मेदिनी ॥
वेदबोधितस्याचारस्य परिपालनम् । इति
वृत्ताध्ययनर्द्धिशब्दटीकायां
भरतः ॥ (वार्त्ता । यथा, कथासरित्सागरे ।
५८ । ११६ ।
"न मार्गवृत्तमेतन्मे वाच्यं पितृगृहे त्वया ॥"
आचारः । यथा, मनौ । ४ । २६० ।
"अनेन विप्रो वृत्तेन वर्त्तयन् वेदशास्त्रवित् ।
अपेतकल्मषो नित्यं ब्रह्मलोके महीयते ॥")

**वृत्तः**, त्रि, (वृत् + क्तः ।) अतीतः । (यथा, रामायणे । २ । ९० । ७ ।
"जानन् दशरथं वृत्तं न राजानमुदाहवत् ॥"
"वृत्तमतीतम् ।" इति तट्टीका ॥) दृढः ।
वर्त्तुलः । (यथा, भागवते । ४ । २५ । २४ ।
"स्तनौ व्यञ्जितकैशोरौ समवृत्तौ निरन्तरौ ॥")
कृतावरणः । इत्यमरटीका ॥ अधीतः । मृतः ।
इति मेदिनी ॥ (निष्पन्नः । यथा, रघुः । ३ । २८ ।
"स वृत्तचूडश्चलकाकपक्षकै-
रमात्यपुत्त्रैः सवयोभिरन्वितः ॥"
जातः । यथा, रघुवंशे । २ । ५८ ।
"सम्बन्धमाभाषणपूर्व्वमाहु-
र्वृत्तः स नौ सङ्गतयोर्व्वनान्ते ॥")

| | | |
|---|---|---|
| (अदा०-आत्म०-सक०-सेट् । अनिड्निष्ठः ।) सप्तमस्वरी । ल, ङ, वृक्ते । ई, वृक्तः । इति दुर्गादासः ॥ | | |

अथ वृत्तवस्तूनि । यथा, --
"वृत्तानि बाहुनारङ्गस्कन्धधम्मिल्लमोदकाः ।
रथाङ्गलावककुक्कुकुम्भिकुम्भाण्डकादयः ॥
कर्णपाशभुजापाशाकृष्टचापघटाननम् ।
मुद्रिकापरिखायोगपट्टहारस्रगादयः ॥" * ॥
संपूर्णगर्भवृत्तानि यथा, --
"संपूर्णगर्भवित्तानि मुखपद्मेन्दुदर्पणाः ।
चक्रावहट्टतिलकमृदङ्गपुटशायकाः ॥
आवर्त्तः कमठो लूतागृहं छत्रमपूपकम् ।
आलवालमहीजालचर्म्मकं सानकादयः ॥"
इति कविकल्पलतायाम् २ श्लेषस्तवके प्रकीर्णं नामं ३ कुसुमम् ॥

**वृत्तः**, पुं, (स्वल्पो वृत्तः । स्वल्पार्थे कन् ।) कूर्म्मः ।
इति राजनिर्घण्टः ॥ (नागविशेषः । यथा, महाभारते । १ । ३५ । १० ।
"वृत्तसम्बर्त्तकौ नागौ द्वौ च पद्माविति श्रुतौ ॥")

**वृत्तकर्कटी**, स्त्री, (वृत्ता वर्त्तुला कर्क्कटी ।)
षड्भुजा । इति राजनिर्घण्टः ॥

**वृत्तगन्धि**, क्ली, (वृत्तस्य पद्यस्य गन्धो लोश इव
गन्धो यस्मिन् ।) गद्यविशेषः । तस्य लक्षणं यथा, --
"भवत्युत्कलिकाप्रायं समासाढ्यं दृढाक्षरम् ।
वृत्तैकदेशसम्बन्धात् वृत्तगन्धि पुनः स्मृतम् ॥"
तस्य उदाहरणं यथा । जय जय जनार्द्दन सुकृतिजनमनस्तडागविकस्वरचरणपद्मपद्मनयन पद्मापद्मिनीविनोदराजहंसभासुरयशःपटल-परिपूरितभुवनकुहर । हरकमलासनादिवृन्दा-रकवृन्दवन्दनीयपादारविन्दद्वन्द्वनिर्म्मुक्तयोगीन्द्र-हृदयमन्दिरावितस्नुनिरञ्जनज्योतिःस्वरूपनाथ नाथ जगन्नाथ मामनवधिभवदुःखव्याकुलं रक्ष रक्ष । इति छन्दोमञ्जर्य्याम् ६ स्तवकः ॥

**वृत्तगुण्डः**, पुं, तृणविशेषः । तत्पर्य्यायः । वृत्तः १
दीर्घनालः ३ जलाश्रयः ४ । द्विधायं एकः स्थूलः द्वितीयो लघुः । अस्य गुणाः । मधु-रत्वम् । शीतत्वम् । कफपित्तातिसारदाहरक्त-नाशित्वम् । तेषां मध्ये स्थूलतरस्याधिकगुण-त्वञ्च । इति राजनिर्घण्टः ॥

**वृत्तपुष्पः**, पुं, (वृत्तं वर्त्तुलं पुष्पं यस्य ।) शिरीषः ।
कदम्बः । वाणीरः । कुब्जजः ।
मुद्गरः । इति
राजनिर्घण्टः ॥

**वृत्तफलं**, क्ली, (वृत्तं वर्त्तुलं फलं यस्य ।) मरी-
चम् । इति राजनिर्घण्टः ॥
गोलफलमात्रञ्च ॥

**वृत्तफलः**, पुं, (वृत्तं फलं यस्य ।) दाडिमः । वदरः ।
इति राजनिर्घण्टः ॥

**वृत्तफला**, स्त्री, (वृत्तं वर्त्तुलं फलं यस्याः ।)
वार्त्ताकी । शशाण्डुली । आमलकी । इति
राजनिर्घण्टः ॥

**वृत्तबीजः**, पुं, (वत्तं बीजं यस्य ।) भिण्डा । इति
राजनिर्घण्टः ॥

**वृत्तबीजका**, स्त्री, (वृत्तं वर्त्तुलं बीजं यस्याः । कन्
ततष्टाप् ।) पाण्डुरफली । इति
राजनिर्घण्टः ॥

**वृत्तबीजा**, स्त्री, (वृत्तं बीजं यस्याः ।) आढकी ।
इति राजनिर्घण्टः ॥

**वृत्तमल्लिका**, स्त्री, (वृत्ता मल्लिकेव ।) श्वेतार्कः ।
मोदिनी । इति राजनिर्घण्टः ॥

**वृत्तस्थः**, त्रि, (वृत्त + स्था + कः ।) वृत्ते तिष्ठति
यः । यथा, मनुः ।
"तुरीयो ब्रह्महत्यायाः क्षत्त्रियस्य वधे स्मृतः ।
वैश्येऽष्टमांशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोडशः ॥"
वृत्तं यथा, --
"उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
वाष्पं कुरु स्थिरतया विरतानुबन्धम् ॥")
विधृतिः । इति धरणिः ॥ * ॥
कौशिक्यादि-
वृत्तयो यथा, --
"शृङ्गारे कौशिकी वीरे सात्वत्यारभटी पुनः ।
रसे रौद्रे च वीभत्से वृत्तिः सर्व्वत्र भारती ।
चतस्रो वृत्तयो ह्येताः सर्व्वनाट्यस्य मातृकाः ॥"
इति साहित्यदर्पणे ६ परिच्छेदः ॥
वृत्तिहरणे दोषा यथा, --
श्रीनारायण उवाच ।
"स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेत्तु यः ।
स कृतघ्न इति ज्ञेयः फलं तत् शृणु भूमिप ! ॥
यावन्तो रेणवः सिक्ता विप्राणां नेत्रबिन्दुभिः ।
तावद्वर्षसहस्रञ्च शृतपोते स तिष्ठति ॥
तप्ताङ्गारञ्च तद्भक्ष्यं पानञ्च तप्तमूत्रकम् ।
तप्ताङ्गारे च शयनं ताडितो यमकिङ्करैः ॥
तदन्ते च महापापी विष्ठायां जायते कृमिः ।
षष्टिवर्षसहस्राणि देवमानेन भारते ।
ततो भूमिविहीनश्च प्रजाहीनश्च मानवः ।
दरिद्रः कृपणो रोगी शूद्रो निन्द्यस्ततः शुचिः ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ४९ अध्यायः ॥
(व्यवहारः । यथा, मनौ । २ । २०५ ।
"गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेत् ॥"

**वृत्ततः**, [स्] व्य, (वृत्त + तसिल् ।) वृत्तेन । यथा,

"अतिग्रहाव्यथनक्षेपेष्वकर्त्तरि तृतीयायाः ।
अकर्त्तरि तृतीयान्तात् वा तसिः स्यात् । अव्य-
थनं अचलनम् । वृत्तेन न व्यथते वृत्ततो न
व्यथते । वृत्तेन न चलतीत्यर्थः । क्षेपे । वृत्तेन
क्षिप्तः वृत्ततः क्षिप्तः । वृत्तेन निन्दित इत्यर्थः ।
हीयमानपापयोगाञ्च । हीयमानपापयुक्ताद-
कर्त्तरि तृतीयान्ताद्वा तसिः । वृत्तेन हीयते
वृत्तेन पापः वृत्ततः । इति सिद्धान्तकौमुदी ॥

**वृत्ततण्डुलः**, पुं, (वृत्तस्तण्डुलः ।) यावनालः ।

इति राजनिर्घण्टः ॥

**वृत्तनिष्पाविका**, स्त्री, नखनिष्पावी । इति राज-

निर्घण्टः ॥

**वृत्तपर्णी**, स्त्री, (वृत्तं वर्त्तुलं पर्णं यस्याः । ङीष् ।)

महाशणपुष्पिका । पाठा । इति राजनिर्घण्टः ॥

"गुरुपूजा घृणा शौचं
सत्यमिन्द्रियनिग्रहः ।
प्रवर्त्तनं हितानाञ्च तत् सर्व्वं
वृत्तमुच्यते ॥"
इति गोपालपञ्चाननकृतस्मृतिसंग्रहः
॥

**वृत्ता**, स्त्री, झिञ्झिरिष्टावृक्षः । रेणुका । प्रियङ्गुः ।

मांसरोहिणी ॥ इति राजनिर्घण्टः ॥

**वृत्ताध्ययनर्द्धिः**, स्त्री, (वृत्ताध्ययनयोरृद्धिः ।)

ब्रह्मवर्च्चसम् । इत्यमरः ॥
वेदबोधितस्याचारस्य
परिपालनं वृत्तम् । व्रतग्रहणपूर्ब्बकं
गुरुमुखेन
वेदाभ्यासः अध्ययनम् ।
तयोरृद्धिस्तत्परि-
पालनकृततेजस उपचयो ब्रह्मवर्च्चसं
स्यात् ।
ब्रह्महस्तिराजेति अः । इति भरतः ॥

**वृत्तान्तः**, पुं, संवादः । तत्पर्य्यायः । वार्त्ता २

प्रवृत्तिः ३ उदन्तः ४ । इत्यमरः ॥
श्रुतिः ५ ।
इति जटाधरः ॥ उदन्तकः ६ । इति
शब्द-
रत्नावली ॥ (यथा, कथासरित्सागरे
। २ । २९ ।
"सर्व्वमाजन्म वृत्तान्तं
विस्तरादिदमब्रवीत् ॥")
प्रक्रिया । कात्स्न्र्यम् । वार्त्ताप्रभेदः ।
प्रस्तावः ।
इति मेदिनी ॥ (यथा, मनौ । ३ ।
१४ ।
"न ब्राह्मणक्षत्त्रिययोरापद्यपिहि
तिष्ठतोः ।
कस्तिंश्चिदपि वृत्तान्ते शूद्रा
भार्य्योपदिश्यते ॥"
"वृत्तान्ते इतिहासाख्याने ॥" इति
कुल्लूक-
मेधातिथी ॥) अवसरः । भावः ।
एकान्त-

वर्त्ततेऽस्मिन्निति व्युत्पत्त्या । आधेयः
। यथा,
व्याप्तिपञ्चके । १ ।
"साध्याभाववदवृत्तित्वम् ।"
यथा च भाषापरिच्छेदे ।
"सिषाधयिषया शून्या सिद्धिर्यत्र न
विद्यते ।
स पक्षस्तत्र
वृत्तित्वज्ञानदनुमितिर्भ्भवेत् ॥"
चित्तस्यावस्थाविशेषः । यथा,
पातञ्जले । २ ।
"योगश्चित्तवृत्तिनिरोधः ॥"
चित्तवृत्तिप्रकारास्तु
तत्रैव द्रष्टव्याः ॥ * ॥ व्यापारः । यथा,
सांख्य-
तत्त्वकौमुद्याम् । ५ ।
"अर्थसन्निकृष्टस्य इन्द्रियस्य वृत्तौ
सत्यां तमो-
ऽभिभवे यः सत्त्वसमुद्रेकः ॥" युक्तार्थः
। यथा,
कातन्त्रव्याकरणादौ ।
"कारकप्रतियोगिभ्यां यद्यदन्यदपेक्षते
।
अपेर्ब्बहुलवाचित्वाद्वृत्तिस्तत्र तु
नेष्यते ॥")

**वृत्तिस्थः**, पुं, (वृत्तये तिष्ठतीति । स्था + कः ।)

सरटः इति राजनिर्घण्टः ॥ वृत्तौ
तिष्ठति,
त्रि ॥

**वृत्तेर्व्वारुः**, पुं, (वृत्तो वर्त्तुल इर्व्वारुः ।) षड्-

मुजा । इति राजनिर्घण्टः ॥

**वृत्यं**, त्रि, वरणीयम् । वृतधातोः क्यपा वृञ-

धातोश्च क्यप्तुक्प्रत्ययाभ्याञ्च
निष्पन्नमिदम् ।
इति सिद्धान्तकौमुदी ॥

**वृ(त्र)त्रः**, पुं, (वृत् + "स्फायितञ्चिवञ्चीति ।"

उणा० २ । १३ । इति रक् ।)
अन्धकारः ।

| | | |
|---|---|---|
| | वाचकः। इति विश्वः॥<br>**वृत्तिः**, स्त्री, (वृत + क्तिन्।) जीविका। इत्यमरः॥<br>(यथा, मनौ। ४। २५९।<br>“एषोदिता गृहस्थस्य वृत्तिर्विप्रस्य शाश्वती॥”)<br>विवरणम्। (यथा, कातन्त्रे।<br>“सूत्रस्यार्थ-<br>विवरणं वृत्तिः॥”) कौशिक्यादिः।<br>प्रवर्त्तनम्।<br>इति मेदिनी॥ (यथा, शाकुन्तले। ४<br>। | शत्रुः। (यथा, ऋग्वेदे। ७। ४८। २<br>।<br>“इन्द्रेण युजा तरषेम वृत्रम्।”<br>“वृत्रं शत्रुम्।” इति तद्भाष्ये सायणः<br>॥)<br>दानवविशेषः। स तु त्वष्टृपुत्त्र इन्द्रेण हतः।<br>इत्यमरः॥ (यथा, हरिवंशे। १२७।<br>१७। |

"तथा वृत्रवधे प्राप्ते साहाय्यार्थं वृतो मया ॥"
अस्य विशेषविवरणन्तु देवीभागवते षष्ठस्कन्धे
१ अध्यायमारभ्य द्रष्टव्यम् ॥ * ॥)
मेघः । (यथा,
ऋग्वेदे । ३ । ३३ । ६ ।
"इन्द्रो अस्मा अरदद्वज्रबाहु-
रपाहन् वृत्रं परिधिं नदीनाम् ॥"
"वृत्रं वृणोति आकाशमिति वृत्रो मेघस्तं मेघ-
मपाहन् जघान ।" इति तद्भाष्ये सायणः ॥)
पर्व्वतविशेषः । इति मेदिनी ॥ इन्द्रः । इति
विश्वः ॥ शब्दः । इति सिद्धान्तकौमुद्यामुणादि-
वृत्तिः ॥

**वृत्रद्विट्**, [ष्] पुं, (वृत्रं द्वेष्टीति । द्विष् + क्विप् ।)
इन्द्रः । इति हेमचन्द्रः ॥

**वृत्रभोजनः**, पुं, गण्डीरः । समठ इति ख्यातः ।
इति शब्दचन्द्रिका ॥

**वृत्रहा**, [न्] पुं, (वृत्रं हतवान् । हन् + "ब्रह्म-
भ्रूणवृत्रेषु क्विप् ।" ३ । २ । ८७ । इति क्विप् ।)
इन्द्रः । इत्यमरः ॥ (यथा, भागवते । ९ । ७ । १९ ।
"अभ्येत्याभ्येत्य स्थविरो विप्रो भूत्वाह वृत्रहा ॥"
यथा च ऋग्वेदे । १ । १०६ । ६ ।
"इन्द्रं कुत्सः वृत्रहणं शचीपतिम् ॥"
"वृत्रहणं वृत्राणां शत्रूणां हन्तारम् ।" इति
तद्भाष्ये सायणः ॥)

**वृत्रारिः**, पुं, (वृत्रस्यारिः ।) इन्द्रः । इति हला-
युधः ॥

गुरवेऽनृतवक्ता यः स्तेनाय पतिताय च ॥
कृतघ्नाय च यद्दत्तं सर्व्वदा ब्रह्मविद्विषे ।
पाचकाय च सर्व्वस्य वृषल्याः पतये तथा ॥
परिचारकाय भृत्याय सर्व्वत्र पिशुनाय च ।
इत्येतानि तु राजेन्द्र वृथादानानि षोडश ॥"
इति वह्निपुराणे दानावस्थानिर्णयनामाध्यायः ॥
अन्यच्च । न्यायमार्गेण यद्दत्तं तत् सप्तविधमपि
पुनर्नापहर्त्तव्यम् । यत् पुनरन्यायेन दत्तं तददत्तं
षोडशमपि प्रत्याहर्त्तव्यमेव । इत्यर्थादुक्तं भवति ।
नारदेन च ।
"दत्तं सप्तविधं प्रोक्तमदत्तं षोडशात्मकम् ।"
इति प्रतिपाद्य दत्तादत्तयोः स्वरूपं विवृतम् ।
"पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात् प्रत्युपकारतः ।
स्त्रीशुल्कानुग्रहार्थञ्च दत्तं दानविदो विदुः ॥
अदत्तन्तु भयक्रोधशोकवेगरुजान्वितैः ।
तथोत्कोचपरीहासव्यत्यासच्छलयोगतः॥
बालमूढास्वतन्त्रार्त्तमत्तोन्मत्तापवर्ज्जितम् ।
कर्त्ता ममेदं कर्म्मेति प्रतिलाभेच्छया च यत् ॥
अपात्रे पात्रमित्युक्ते कार्य्ये वा धर्म्मसंहिते ।
यद्दत्तं स्यादविज्ञानाददत्तमिति तत् स्मृतम् ॥"
इति मिताक्षरा ॥

**वृथामांसं**, क्ली, (वृथा निरर्थकं मांसम् ।) देवपित्र-
नुद्दिष्टमांसम् । तद्भक्षणे प्रेतत्वं भवति । यथा,
"वृथारेता वृथामांसो वृथावादी वृथामतिः ।
निन्दको द्विजदेवानां स प्रेतो जायते नरः ॥"
इति वह्निपुराणे प्रेतोपाख्याननामाध्यायः॥

**वृद्धं**, क्ली, शैलजनामगन्धद्रव्यम् । इत्यमरः ॥

**वृद्धः**, पुं, वृद्धदारकः । इति राजनिर्घण्टः ॥

**वृद्धः**, त्रि, (वृधु वृद्धौ + क्तः । "यस्य विभाषा ।"
७ । २ । १५ । इति नेट् ।) गतयौवनः ।
प्रवृद्धः । (यथा, मनुः । २ । १५६ ।
"न तेन वृद्धो भवति येनास्य पलितं शिरः ।
यो वै युवाप्यधीयानस्तं देवाः स्थविरं विदुः ॥")
पण्डितः । इति मेदिनी ॥ आद्यस्य पर्य्यायः ।
प्रवयाः २ स्थविरः ३ जीनः ४ जीर्णः ५ जरन्
६ । इत्यमरः ॥ यातयामः ७ जर्ज्जरः ८ । इति
राजनिर्घण्टः ॥ पलितः । इति जटाधरः ॥

या निःसृता
पूर्ब्बभागात्तस्माद्गिरिवरान्नदी ।
स्वर्णग्रीवेति विख्याता सा गङ्गासदृशी फले ॥"
इति कालिकापुराणे कामरूपपीठनिर्णयनाम
८२ अध्यायः ॥

**वृद्धत्वं**, क्ली, (वृद्ध + त्व ।) वृद्धस्य भावः । तत्-
पर्य्यायः । स्थाविरम् २ । इत्यमरः ॥ वार्द्धक्यम् ३
वार्द्धकम् ४ । इति शब्दरत्नावली ॥ (यथा,
रघुः । १ । २३ ।
"अनाकृष्टस्य विषयैर्विद्यानां पारदृश्वनः ।
तस्य धर्म्मरतेरासीद्वृद्धत्वं जरसा विना ॥")
बाल्यादेरवधिमाह सुश्रुतः ।
"वयस्तु त्रिविधं बाल्यं मध्यमं वार्द्धकं तथा ।
ऊनषोडशवर्षस्तु नरो बालो निगद्यते ॥
त्रिविधः सोऽपि दुग्धाशी दुग्धान्नाशी तथान्न-
भुक् ।
दुग्धाशी वर्षपर्य्यन्तं दुग्धान्नाशी शरद्द्वयम् ॥
तदुत्तरं स्यादन्नाशी एवं वालस्त्रिधा मतः ॥
मध्ये षोडशसप्तत्योर्म्मध्यमः कथितो बुधैः ।
चतुर्धा मध्यमं प्राहुर्युवा द्वात्रिंशतो मतः ॥
चत्वारिंशत्समा यावत्तिष्ठेद्वीर्य्यादिपूरितः ।
ततः क्रमेण क्षीणः स्याद्यावद्भवति सप्ततिः ॥"
वीर्य्यादीत्यादिशब्देन रसादिसर्व्वधात्विन्द्रिय-
बलोत्साहा उच्यन्ते । क्षीणः सर्व्वधात्विन्द्रिय-

**वृथा**, व्य, निरर्थकः । तत्पर्य्यायः । मुधा २ व्यर्थ-

कम् ३ अविधिः ४ । इत्यमरः ॥

यथा, --

"अदण्डपाशिको ग्रामो अदासीकञ्च यद्गृहम् ।

अनाज्यभोजनं यच्च वृथा तदिति मे मतिः ॥"

इति वह्निपुराणे प्रेतोपाख्याननामाध्यायः ॥

अपि च ।

"वृथा वृष्टिः समुद्रस्य तृप्तस्य भोजनं वृथा ।

वृथा दानं समृद्धस्य नीचस्य सुकृतं वृथा ॥"

इति गारुडे ११५ अध्यायः ॥

**वृथाजन्म**, [न्] क्ली, (वृथा निरर्थकं जन्म ।)

निरर्थकजननम् । यथा, --

"वृथा जन्मानि चत्वारि वृथा दानानि षोडश ।

तान्यहं संप्रवक्ष्यामि यथावदनुपूर्ब्बशः ॥

अपुत्त्रस्य वृथा जन्म धर्म्मवाह्या नराः सदा ।

परपाकं सदाश्वन्ति परतापरताश्च ये ॥"

इत्याद्ये वह्निपुराणे दानावस्थानिर्ण्यनामा-

ध्यायः ॥ अपि च ।

"येर्न श्रुतं भागवतं पुराणं

नाराधितो यैः पुरुषः प्रधानम् ।

मुखे हुतं यैर्न धरामराणां

तेषां वृथा जन्म नराधमानाम् ॥"

इति पुराणम् ॥

**वृथादानं**, क्ली, (वृथा निरर्थकं दानम् ।) निष्फल-

दानम् । तत् षोडशविधम् । यथा, --

"देवपितृविहीनं यदीश्वरेभ्यः सदोषतः ।

दत्त्वानुकीर्त्तनाच्चैव वेदाग्निव्रतत्यागिने ॥

**वृद्धकाकः**, पुं, (वृद्धः काकः ।) काकविशेषः ।

दाँडकाक इति भाषा । तत्पर्य्यायः । द्रोणकाकः २ दग्धकाकः ३ कृष्णकाकः ४ पर्व्वतकाकः ५ वनाश्रयः ६ काकोलः ७ । इति हेमचन्द्रः ॥

**वृद्धगङ्गा**, स्त्री, (वृद्धा गङ्गा ।) नदीविशेषः ॥

वुडीगङ्गा इति ख्याता । यथा, --

"अस्ति नाटकशैले तु सरो मानससन्निभम् ।

यत्र सार्द्धं शैलपुत्त्र्या जलक्रीडां सदा हरः ॥

कुरुते नरशार्द्दूल स्वर्णपङ्कजशोभिते ।

तस्य पश्चान्मध्यपूर्ब्बभागेभ्यश्च सरित्त्रयम् ॥

अवतीर्णं प्रयात्येव दक्षिणं सागरं प्रति ।

तस्य पश्चिमभागे तु नदी दिक्करिकाह्वया ॥

दिग्गजाः क्षेत्रसंजाताः तेन दिक्करिका स्मृता ।

मध्यभागात् सृता या तु शङ्करेणावतारिता ॥

वृद्धगङ्गाह्वया सा तु गङ्गेव फलदायिनी ॥

बलोत्साहैर्हीनः ।

"ततस्तु सप्ततेरूर्द्ध्वं क्षीणधातुरसादिकः ।

क्षीयमाणेन्द्रियबलः क्षीणरेता दिने दिने ॥

वलीपलितखालित्ययुक्तः कर्म्मसु चाक्षमः ।

कासश्वासादिभिः क्लिष्टो वृद्धो भवति मानवः ॥

बाल्ये विवर्द्धते श्लेष्मा पित्तं स्यान्मध्यमे-

ऽधिकम् ।

वार्द्धक्ये वर्द्धते वायुर्विचार्य्यैतदुपक्रमेत् ॥"

उपक्रमेत् चिकित्सेत् । तन्त्रान्तरे तु ।

"बाल्यं वृद्धिश्छविर्मेधा त्वग्दृष्टिः शुक्रविक्रमौ ।

बुद्धिः कर्म्मेन्द्रियं चेतो जीवितं दशतो ह्रसेत् ॥"

इति भावप्रकाशः ॥

**वृद्धदारकः**, पुं, (वृद्धो दारको बालक इव यस्मात् ।)

वीरताडकवृक्षः । इति भरतः ॥ विद्धडक् इति

वीजताडका इति च वङ्गभाषा । विधारा इति

हिन्दीभाषा । तत्पर्य्यायः । ऋक्षगन्धा २ छग-

लान्त्री ७ आवेगी ४ जुङ्गः ५ । इत्यमरः ॥

ऋष्यगन्धा ६ छगलाङ्घ्री ७ छगला ८ अन्त्री ९

जुङ्गा १० । इति तट्टीका ॥ छगली ११ जुङ्गकः

१२ श्यामः १३ । इति जटाधरः ॥ वृष्यगन्धा

१४ छगलान्त्रिका १५ । इति शब्दरत्नावली ॥

दीघवालुका १६ छागलान्त्रिका १७ वृद्धः १८

कोठरपुष्पी १९ अजान्त्री २० वृद्धदारु २१ ।

| | | |
|---|---|---|
| अन्थाबोपार्ज्जितं दानं व्यर्थं ब्रह्महणे तथा । | | ग्रन्थान्तरे कोठरपुष्पीस्थाने वृद्धकोटरपुष्पीति पाठः । अस्य गुणाः । गौल्यत्वम् । पिच्छिल-त्वम् । कफवातकासामदोषनाशित्वम्। बल्य-त्वञ्च । इति राजनिर्घण्टः ॥ अन्यच्च । “रसायनो वृद्धदारः शोथवातामवातजित् ।” इति राजवल्लभः ॥ |

**वृद्धदारु**, क्ली, (वृद्धत्वनाशकं दारु यस्य ।) वृद्ध-
दारकवृक्षः । यथा, राजनिर्घण्टे ।
"वृद्धदारुद्वयं गौल्यं पिच्छिलं
कफवातनुत् ।
वल्यं कासामदोषघ्नं द्वितीयं
स्वल्पवीर्य्यदम् ॥"

**वृद्धनाभिः**, त्रि, (वृद्धः प्रवृद्धो नाभिर्यस्य ।) उन्नत-
नाभिः । गौँडनाभियुक्तव्यक्ति इति
भाषा ।
तत्पर्य्यायः । तुण्डिलः २ तुण्डिभः
३ । इत्यमरः ॥

**वृद्धप्रपितामहः**, पुं, (प्रपितामहाद्वृद्धः ।) प्रपिता-
महतातः । इति शब्दरत्नावली ॥
तत्र कन्यायाः
सपिण्डता नास्ति । यथा ।
तेनात्मपञ्चमे वृद्ध-
प्रपितामहे सापिण्ड्यं निवर्त्तते इति
प्रतिपादि-
तम् । अतएव प्रपितामहभ्रात्रा
तत्सन्ततिभिः
सह सापिण्ड्याभावात्
कन्याजननमरणयोस्तेषां
सपिण्डाशैचं नास्ति किन्तु
समानोदकनिमित्त-
मेवाशौचमिति । इति शुद्धितत्त्वम् ॥

**वृद्धबला**, स्त्री, (वृद्धा बला ।) महासमङ्गा । इति
राजनिर्घण्टः ॥

**वृद्धराजः**, पुं, अम्लवेतसः । यथा, --
"अत्यम्लो वृद्धराजश्च द्वावेतौ तत्र
कीर्त्तितौ ॥"
इति केचित् ॥

**वृद्धवाहनः**, पुं, आम्रवृक्षः । यथा । सुपक्वो वृद्ध-
वाहनः । इति केचित् ॥

तस्याः सम्भोगे दोषो यथा, --
"बाला तु प्राणदा प्रोक्ता युवती
प्राणहारिणी ।
प्रौढा करोति वृद्धत्वं वृद्धा मरणमादिशेत्
॥
निदाघशरदोर्ब्बाला प्रौढा वर्षावसन्तयोः ।
हेमन्ते शिशिरे योग्या न वृद्धा क्वापि
शस्यते ॥
नार्त्तवे षोडशाद्वर्षात् सप्तत्याः परतो न च
।
आयुष्कामो नरः स्त्रीभिः संयोगं
कर्त्तुमर्हति ॥
पञ्चपञ्चाशतो नारी सप्तसप्ततितः पुमान् ।
द्वावेतौ न प्रसूयेते प्रसूयेते विपर्य्ययात् ॥"
इति राजवल्लभः ॥ * ॥
"शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं
दधि ।
प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट्
॥"
इति चाणक्यम् ॥ * ॥
अङ्गुष्ठः । इति शब्दरत्नावली ॥ महाश्राव-
णिका । इति राजनिर्घण्टः ॥

**वृद्धाङ्गुलिः**, स्त्री, (वृद्धा अङ्गुलिः ।) हस्तपादयोः
स्थूलाङ्गुलिः । वुड आङ्गुल इति भाषा ।
तत्-
पर्य्यायः । अङ्गुष्ठः २ वृद्धा ३ । इति
शब्दरत्ना-
वली ॥

**वृद्धिः**, स्त्री, (वृध + क्तिन् ।) अष्टवर्गान्तर्गतौ-
षधविशेषः । तत्पर्य्यायः । योग्या २
ऋद्धिः ३
सिद्धिः ४ लक्ष्मीः ५ । इत्यमरः ॥ पुष्टदा
६ वृद्धि-
दात्री ७ मङ्गल्या ८ श्रीः ९ सम्पत् १०
आशीः
११ जनेष्टा १२ भूतिः १३ मुत् १४
सुखम् १५
जीवभद्रा १६ । अस्या गुणाः ।

इत्यमरः ॥ नीतिवेदिनां नीनिशास्त्रज्ञानां
क्षयादिभिस्त्रिवर्गः । अन्येषान्तु धर्म्मकामार्थः
पूर्ब्बमुक्तः । अष्टवर्गस्यापचयः क्षयः । तस्यैवोप-
चयो वृद्धिः । तस्य नोपचयो नाप्यपचयः
स्थानम् । अष्टवर्गो यथा, --
कृषिर्बणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम् ।
कन्याकरबलादानं सैन्यानाञ्च निवेशनम् ॥
अष्टवर्गः स्मृतो राज्ञामिति भरतः ॥ * ॥
वर्द्धनम् । तत्पर्य्यायः । स्फातिः २ । इत्यमरः ॥
(यथा, मनुः । १२ । १२४ ।
"एष सर्व्वाणि भूतानि पञ्चभिर्व्याप्य मूर्त्तिभिः ।
जन्मवृद्धिक्षयैर्नित्यं संसारयति चक्रवत् ॥")
विष्कम्भादिसप्तविंशतियोगान्तर्गतैकादशयोगः ।
तत्र जातफलं यथा, --
"प्रसूतिकाले यदि वृद्धियोगो
नरः सुभोगो विनयान्वितश्च ।
धनप्रयोगग्रहणेषु दक्षो
विचक्षणः स्यात् क्रयविक्रयाभ्याम् ॥"
इति कोष्ठीप्रदीपः ॥ * ॥
कलान्तरम् । सुद् इति भाषा । अभ्युदयः ।
समृद्धिः । इति मेदिनी ॥ (यथा, शिशुपाल-
वधे । १५ । १ ।
"अथ तत्र पाण्डुतनयेन
सदसि विहितं मधुद्विषः ।
मानमसहत न चेदिपतिः
परवृद्धिमत्सरि मनो हि मानिनाम् ॥")
वृद्धिग्रहणनियमो यथा, --
"अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके ।
वर्णक्रमाच्छतं द्वित्रिचतुष्पञ्चकमन्यथा ॥"
मासि मासि प्रतिमासं बन्धकं विश्वासार्थं यदा-
धीयते आधिरिति यावत् । बन्धकेन सह वर्त्तत
इति सबन्धकः प्रयोगस्तस्मिन् सबन्धके प्रयोगे
प्रयुक्तस्य द्रव्यस्याशीतितमो भागो वृद्धिर्धर्म्या
भवति । अन्यथा बन्धकरहिते प्रयोगे वर्णानां
ब्राह्मणादीनां क्रमेण द्वित्रिचतुःपञ्चकं शतं धर्म्म्यं
भवति । ब्राह्मणेऽधमर्णे द्विकं शतम् । क्षत्त्रिये
त्रिकम् । वैश्ये चतुष्कम् । शूद्रे पञ्चकम् । मासि
मासीत्येव । द्वौ वा त्रयो वा चत्वारो वा पञ्च वा
इति द्वित्रिचतुःपञ्चाः । द्वित्रिचतुःपञ्चा अस्मिन्

**वृद्धविभीतकः**, पुं, (वृद्धः प्रवृद्धो विभीतक इव ।)

आम्रातकः । इति शब्दमाला ॥

**वृद्धश्रवाः**, [स्] पुं, (वृद्धात् बृहस्पतेः शृणोतीति ।

श्रु + असुन् । "वृद्धेभ्यः शृणोतीति
वृद्धश्रवाः ।"
इत्युज्ज्वलदत्तः । ४ । २२६ । "वृद्धं
प्रभूतं श्रवः
श्रवणं स्तोत्रं हविर्लक्षणमन्नं वा
यस्य ।" इति
ऋग्भाष्ये सायणः । १ । ८९ । ६ ।
"वृद्धं श्रवो
धनं कीर्त्तिर्वा यस्य ।" इति वेददीपे
महीधरः ।
१० । ९ ।) इन्द्रः । इत्यमरः ॥

**वृद्धसंघः**, पुं, वृद्धानां समूहः । तत्पर्य्यायः । वार्द्ध-

कम् । इत्यमरः । २ । ६ । ४० ॥

**वृद्धसूत्रकं**, क्ली, (वृद्धस्य सूत्रम् । ततः स्वार्थे

कन् ।) इन्द्रतूलम् । वुडीर सूता
इति भाषा ।
यथा, हारावल्याम् ।
"वृद्धसूत्रकमित्याहुरिन्द्रतूलं
मनीषिणः ।
ग्रीष्महासं वंशकफं वाततूलं
मरुद्ध्वजम् ॥"

**वृद्धा**, स्त्री, (वृद्ध + टाप् ।) गतयौवना । वुडी

इति भाषा । तत्पर्य्यायः । पलिक्नी
२ । इत्य-
मरः ॥ पलिता ३ । इति भरतः ॥
स्थविरा ४
निष्कला ५ जरती ६ गतार्त्तवा ७ ।
इति
राजनिर्घण्टः ॥ तदवस्थाकालो
यथा, --
"आषोडशाद्भवेद्बाला तरुणी त्रिंशता
मता ।

"ऋद्धिर्वृद्धिश्च मधुरा सुस्निग्धा
तिक्तशीतला ।
रुचिमेधाकरी श्लेष्मकुष्ठक्रिमिहरा परा ॥
प्रयोगेष्वनयोरेकं यथालाभं प्रयोजयेत् ।
तत्र यद्वातुमिष्टिः स्याद्द्वयमप्यत्र योजयेत्
॥"
इति राजनिर्घण्टः ॥ * ॥
ऋद्धिवृद्ध्योरुत्पत्तिलक्षणनामगुणाः ।
"ऋद्धिर्व्वृद्धिश्च कन्दौ द्वौ भवतः
कोषयामले ।
श्वेतलोमान्वितः कन्दो लताजातः
सरन्ध्रकः ॥
स एव ऋद्धिर्वृद्धिश्च भेदमप्येतयोर्ब्रुवे ।
तूलग्रन्थिसमा ऋद्धिर्वामावर्त्तफला च सा
॥
वृद्धिस्तु दक्षिणावर्त्तफला प्रोक्ता महर्षिभिः
।
ऋद्धिर्योग्या सिद्धिलक्ष्म्यौ वृद्धेरप्याह्वया
इमे ॥
ऋद्धिर्बल्या त्रिदोषघ्नी शुक्रला मधुरा गुरुः
।
प्राणैश्वर्य्यकरी मूर्च्छारक्तपित्तविनाशिनी
॥
वृद्धिर्गर्भप्रदा शीता वृं हणी मधुरा स्मृता ।
वृष्या पित्तास्रशमनी क्षतकासक्षयापहा ॥
राज्ञामप्यष्टवर्गस्तु यतोऽयमतिदुर्ल्लभः ।
तस्मादस्य प्रतिनिधिं गृह्णीयात्तद्गुणं
भिषक् ॥"
मुख्यसदृशः प्रतिनिधिः ॥ * ॥ एतस्य
प्रतिनिधि-
माह ।
"मेदा जीवककाकोली ऋद्धिद्वन्द्वेऽपि
चासति ।
वरीविदार्य्यश्वगन्धावाराहीश्च क्रमात्
क्षिपेत् ॥"
मेदा महामेदास्थाने शतावरीमूलं
जीवकर्षभक-
स्थाने विदारीमूलं
काकलीक्षीरकाकोलीस्थाने-
ऽश्वगन्धामूलं ऋद्धिवृद्धिस्थाने
वाराहीकन्दं

शते वृद्धिर्दीयत इति द्वित्रिचतुःपञ्चकं शतम् ।
तदस्मिन् वृद्ध्या यल्लाभशुल्कोपदा दीयते इति
कन् । इयं वृद्धिर्मासि मासि गृह्यत इति
कालिका । इयमेव वृद्धिर्दिवसगणनया विभज्य
प्रतिदिवसं गृह्यमाना कायिका भवति । तथा च
नारदेन ।
"कायिका कालिका चैव कारिता च तथा परा ।
चक्रवृद्धिश्च शास्त्रेषु तस्य वृद्धिश्चतुर्व्विधा ॥"
इत्युक्त्रोक्तम् ॥
"कायाविरोधिनी शश्वत् पणपादादि कायिका ।
प्रतिमासं स्रवन्ती या वृद्धिः सा कालिका मता ॥
वृद्धिः सा कारिता नाम यर्णिकेण स्वयं कृता ।
वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृतेति ॥"

| | | |
|---|---|---|
| पञ्चपञ्चाशतः प्रौढा वृद्धा भवति तत्परम् ॥”<br>इति कालिदासः ॥ * ॥<br>अपि च ।<br>“बालेति गीयते नारी यावद्वर्षाणि षोडश ।<br>ततस्तु तरुणी ज्ञेया<br>द्वात्रिंशद्वत्सरावधि ॥<br>तदूर्द्ध्वमधिरूढा स्यात्<br>पञ्चाशद्वत्सरावधि ।<br>वृद्धा तत्परतो ज्ञेया<br>सुरतोत्सवर्ज्जिता ॥”<br>इति भावप्रकाशः ॥ * ॥ | गुणैस्तत्तुल्यं क्षिपेत् । इति भावप्रकाशः ॥ * ॥<br>नीतिवेदिनां<br>क्षयादित्रिवर्गान्तर्गतवर्गविशेषः । | |

ग्रहीतृविशेषणेन वृद्धेः प्रकारान्तरमाह ।
कान्तारगास्तु दशकं सामुद्रा विंशकं शतम्
।
कान्तारमरण्यं तत्र गच्छन्तीति
कान्तारगाः
ये वृद्ध्या धनं गृहीत्वा अधिकलाभार्थं
अति-
गहनं प्राणधनविनाशशङ्कास्थानं
प्रविशन्ति ते
दशकं शतं दद्युः । ये च समुद्रगास्ते
विंशकं
शतं मासि मासीत्येव । एतदुक्तं भवति
कान्तारगेभ्यो दशकं शतं सामुद्रेभ्यश्च
विंशकं
शतं उत्तमर्ण आदद्यात् ।
मूलविनाशस्यापि
शङ्कितत्वात् इति ॥ * ॥ इदानीं कारितां
वृद्धि-
माह ।
"दद्युर्व्वा स्वकृतां वृद्धिं सर्व्वे सर्व्वासु
जातिषु ॥"
सर्व्वे ब्राह्मणादयोऽधमर्णा अबन्धके
सबन्धके वा
स्वकृतां स्वाभ्युपगतां वृद्धिं सर्व्वासु
जातिषु
दद्युः । क्वचिदकृतापि वृद्धिर्भवति यथाह
नारदः ।
"न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता
क्वचित् ।
अनाकारितमप्यूद्र्ध्वं वत्सरार्द्धाद्विवर्द्धते
॥" इति ॥
यस्तु याचितकं गृहीत्वा देशान्तरं गतस्तं
प्रति
कात्यायनेनोक्तम् ।
"यो याचितकमादाय तमदत्त्वा दिशं व्रजेत्
।
ऊद्र्ध्वं संवत्सरात्तस्य तद्धनं
वृद्धिमाप्नुयात् ॥"
इति ॥

त्रिगुणा द्विगुणा च वृद्धिः परा । वशिष्ठेन तु
रसस्य त्रैगुण्यमुक्तम् । द्विगुणं हिरण्यं त्रिगुणं
धान्यं धान्येनैव रसा व्याख्याताः पुष्पमूल-
फलानि च । तुला घृतं त्रितयमष्टगुणमिति ।
मनुना तु धान्यस्य पुष्पमूलफलादीनाञ्च
पञ्च-
गुणत्वमुक्तम् । "धान्ये शदे लवे बाह्ये
नातिक्रा-
मति पञ्चतामिति ।" शदः क्षेत्रफलं
पुष्पमूल-
फलादि । लवो मेषोर्णाचमरीकेशादि ।
बाह्यो
वलीवर्दतुरगादि । धान्यशदलवबाह्यविषया
वृद्धिः
पञ्चगुणत्वं नातिक्रामतीति ।
तत्राधमर्णयोग्य-
तावशेन दुर्भिक्षादिकालवशेन च व्यवस्था
द्रष्टव्या । एतच्च सकृत्प्रयोगे सकृदाहरणे
च
वेदितव्यम् । पुरुषान्तरसंक्रमणेन
प्रयोमान्तर-
करणे तस्मिन्नेव वा पुरुषे अनैकशः
प्रयोगा-
न्तरकरणे सुवर्णादिकं द्वैगुण्याद्यतिक्रम्य
पूर्ब्ब-
वद्वर्द्धते । सकृत्प्रयोगेऽपि प्रतिदिनं प्रति-
मासं प्रतिवत्सरं वा
वृद्ध्याहरणेऽधमर्णदेयस्य
द्वैगुण्यसम्भवात् । पूर्ब्बाहृतवृद्ध्या सह
द्वैगुण्य-
मतिक्रम्य वर्द्धत एव । यथाह मनुः ।
कुषीद-
वृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता ।
सकृदाहि-
तेत्यपि पाठोऽस्ति । उपचयार्थं प्रयुक्तं द्रव्यं
कुषीदं तस्य वृद्धिः कुसीदवृद्धिर्द्वैगुण्यं
नात्येति
नातिक्रामति । यदि सकृदाहिता
सकृत्प्रयुक्ता

तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्त्तितम्
॥"
हलायुधधृतकूर्म्मपुराणम् ।
"तीर्थयात्रासमारम्भे तीर्थात् प्रत्यागमेऽपि
च ।
वृद्धिश्राद्धं प्रकुर्व्वीत बहुसर्पिःसमन्वितम्
॥"
इति श्राद्धतत्त्वम् ॥
आभ्युदयिकश्राद्धम् । नान्दीमुखश्राद्धम् ।
यथा, --
"वृद्धिश्राद्धं प्रवक्ष्यामि पूर्ब्बवत्तद्विशेषकम्
॥
जातपुत्त्रमुखदर्शनादौ वृद्धिश्राद्धम् ।
पूर्व्वाभि-
मुखेषु दक्षिणोपवीतिषु मधुयववदरकुशै-
र्देवतीर्थेन नमस्कारान्तेन दक्षिणोपचारेण
कर्त्तव्यम् । दक्षिणजानु गृहीत्वा ॐ अद्या-
स्मदीयामुकवृद्धौ
अमुकसगोत्राणामस्मत्पितृ-
पितामहप्रपितामह-मातामहप्रमातामहवृद्ध-
प्रमातामहानां अमुकशर्म्मणां सपत्नीकानां
नान्दीमुखानां श्राद्धे कर्त्तव्ये
वसुसत्यसंज्ञकानां
विश्वेषां देवानां श्राद्धं सिद्धान्नेन युष्मासु
मया
कर्त्तव्यमिति देवब्राह्मणामन्त्रणम् । ॐ
करिष्य-
सीति तेनोक्ते इत्थमेव
मातृपितामहीप्रपिता-
महीनां देवब्राह्मणामन्त्रणम् । तत ॐ अद्य
अमुकसगोत्राया मत्प्रपितामह्या
अमुकीदेव्या
नान्दीमुख्याः श्राद्धं सिद्धान्नेन युष्मासु
मया
कर्त्तव्यमिति प्रपितामहीब्राह्मणामन्त्रणम् ।
करिष्यसीति तेनोक्ते इत्थमेव
मातामह्यादि-
ब्राह्मणामन्त्रणम् ।
देवपितृसर्व्वदेवब्राह्मणश्राद्ध-

यश्च याचितकमादाय याचितोऽप्यदत्त्वा देशा-
न्तरं याति तं प्रति तेनैवोक्तम् ।
“कृतोद्धारमदत्त्वा यो याचितस्तु दिशं व्रजेत् ।
ऊर्द्ध्वं मासत्रयात्तस्य तद्धनं वृद्धिमाप्नुयाद् ॥”
इति ॥
यः पुनः स्वदेशे स्थित एव याचितो याचितकं
न ददाति तं याचनकालादारभ्य वृद्धिं दापये-
द्राजा । यथाह ।
“स्वदेशेऽपि स्थितो यस्तु न दद्याद्याचितः क्वचित् ।
तं ततो कारितां वृद्धिमनिच्छन्तञ्च दापयेत् ॥”
इति ॥
अनाकारितवृद्धेरपवादो नारदेनोक्तः ।
“पण्यमूलं भृतिर्न्यासो दण्डो यश्च प्रकल्पितः ।
वृथादानाक्षिकपणा वर्द्धन्ते नाविवक्षिताः ॥
अविवक्षिता अनाकारिता इति ॥ * ॥ अधुना
द्रव्यविशेषे वृद्धिविशेषमाह । सन्ततिस्तु पशु-
स्त्रीणाम् । पशूनां स्त्रीणां सन्ततिरेव वृद्धिः ।
पशूनां स्त्रीणां पोषणासमर्थस्य तत्पुष्टिसन्तति-
कामस्य प्रयोगः सम्भवति । ग्रहणञ्च क्षीर-
परिचर्य्यार्थिनः । अधुना प्रयुक्तस्य द्रव्यस्य
वृद्धिग्रहणमन्तरेण चिरकालावस्थितस्य कस्य
द्रव्यस्य कियती परा वृद्धिरित्यपेक्षित आह ।
रसस्याष्टगुणा परा ।
“वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा परा ॥”
पुरुषान्तरसंक्रमणादिना प्रयोगान्तरकरणे
द्वैगुण्यमत्येति सकृदाहृतेति पाठे शनैः शनैः
प्रतिदिनं प्रतिमासं प्रतिवत्सरं वाधमर्णादा-
हृता द्वैगुण्यं नात्येतीति व्याख्येयम् । तथा
गौतमेनाप्युक्तम् । चिरस्थाने द्वैगुण्यं प्रयोग-
स्येति प्रयोगस्येत्येकवचननिर्देशात् प्रगोगान्तर-
करणे द्वैगुण्यातिक्रमोऽभिप्रेतः । चिरस्थान
इति निर्द्देशात् शनैः शनैर्वृद्धिग्रहणे द्वैगुण्याति-
क्रमो दर्शितः । इति मिताक्षरा ॥ कुरण्ड-
रोगः । हर्षः । इति हेमचन्द्रः ॥ समूहः ।
इति शब्दचन्द्रिका ॥ शैलेयम् । धनम् । इति
राजनिर्घण्टः ॥ * ॥

**वृद्धिका**, स्त्री, (वृद्धिरेव । स्वार्थे कन् ।) ऋद्धिना-
मौषधम् । इति शब्दमाला ॥

**वृद्धिजीविका**, स्त्री, (वृद्ध्या जीविका ।) ऋणदान-
जीविका । तत्पर्य्यायः । अर्थप्रयोगः २ कुषी-
दम् ३ । इत्यमरः ॥ कलाम्बिका ४ । इति
शब्दरत्नावली ॥

**वृद्धिदः**, पुं, (वृद्धिं ददातीति । दा + कः ।) जीवकः ।
शूकरकन्दः । इति राजनिर्घण्टः ॥ वृद्धिदातरि,
त्रि ॥ (यथा, बृहत्संहितायाम् । ५३ । ३७ ।
“प्राक्शालया वियुक्तं सुक्षेत्रं वृद्धिदं वास्तु ॥”)

**वृद्धिश्राद्धं**, क्ली, (वृद्धये यत् श्राद्धम् ।) वृद्धिनिमि-
त्तकश्राद्धम् । तत्तु अभ्युदयनिमित्तं पित्राद्युद्देशेन
श्रद्धया अन्नादेर्द्दानम् । तत् कर्म्मविशेषात् पूर्ब्बं
कर्त्तव्यं यथा । निर्णयामृते मत्स्यपुराणम् ।
“अन्नप्राशे च सीमन्ते पुत्त्रोत्पत्तिनिमित्तके ।
पुंसवने निषेके च नववेश्मप्रवेशने ॥
करणानुज्ञापनम् । आसने ॐ विश्वेदेवास
आगत शृणुताम इमं हवं एवं वर्हिर्निषीदत ।
ॐ विश्वेदेवाः शृणुतेमं हवं ये मेऽन्तरीक्षे य
उपद्यविष्ट ये अग्निजिह्वा उत वा यजत्रा आ
सद्यास्मिन् वर्हिषि मादयद्ध्वम् । ॐ आगच्छन्तु
इति विश्वेदेवावाहनं गन्धादिदानं अच्छि-
द्रावधारणवाचनम् । ततः प्रपितामहीप्रभृती-
नामनुज्ञापनम् । आसनम् आवाहनं गन्धादि-
दानञ्च । अच्छिद्रावधारणवाचनम् । इत्थं
पितामह्या मातुः । ततः प्रपितामहादीनामनु-
ज्ञापनमासनमावाहनं गन्धादिदानम् । एवं
वृद्धप्रपितामहादीनां अनुज्ञापनादिकरणम् ।
ॐ वसुसत्यसंज्ञकेभ्यो विश्वेभ्यो देवेभ्य एतदन्नं
सघृतं सपानीयं सव्यञ्जनं सवदरं सदधि प्रति-
सिद्धवर्ज्जितं नमः । इति अन्नकल्पनम् ॥
ॐ अमुकगोत्रे मत्पितामहि अमुकि देवि
नान्दीमुखि एतदन्नं सवदरं सदधि नमः । एवं
मातामहप्रमातामहेभ्यः ।” इति गारुडे २२३
अध्यायः ॥ अन्यच्च ।
“तृतीयमाभ्युदयिकं वृद्धिश्राद्धं तदुच्यते ।
उत्सवानन्दसम्भारे यज्ञोद्वाहादिमङ्गले ॥
मातरः प्रथमं पूज्याः पितरस्तदनन्तरम् ।
ततो मतामहा राजन् विश्वेदेवास्तथैव च ॥
प्रदक्षिणोपचारेण दध्यक्षतफलोदकैः ।
प्राङ्मुखो निनयेत् पिण्डान् पूर्ब्बया चतुरो युतान् ॥
सम्पन्नमित्यभ्युदये दद्यादर्घ्यं द्वयोर्द्वयोः ।

| रसस्य तैलघृतादेर्वृद्धिग्रहणमन्तरेण चिर-<br>कालावस्थितस्य स्वकृतया वृद्ध्या<br>वर्द्धमान-<br>स्याष्टगुणा वृद्धिः परा नातःपरं वर्द्धते ।<br>तथा<br>वस्त्रधान्यहिरण्यानां यथासंख्यं चतुर्गुणाः | देववृक्षजलादीनां प्रतिष्ठायां विशेषतः । | |
|---|---|---|

युग्मा द्विजातयः पूज्याः
वस्त्रकार्त्तस्वरादिना ॥
तिलार्थन्तु यवैः कार्य्या
नान्दीशब्दानुपूर्ब्बकम् ।
मङ्गलानि च सर्व्वाणि वाचयेत्
द्विजपुङ्गवान् ॥
एवं शूद्रोऽपि सामान्यं वृद्धिश्राद्धञ्च
सर्व्वदा ।
नमस्कारेण मन्त्रेण कुर्य्यादामान्नवान्
बुधः ॥
दानप्रधानः शूद्रः स्यादित्याह भगवान्
प्रभुः ।
दानेन सर्व्वकामाप्तिरस्य संजायते यतः
॥"
इति मात्स्ये साधारणाभ्युदयकीर्त्तनो
नाम
१७ अध्यायः ॥ विस्तारस्तु श्राद्धतत्त्वे
श्राद्ध-
विवेके च द्रष्टव्यः ॥

**वृद्धोक्षः**, पुं, (वृद्धश्चासौ उक्षा चेति । "अचतु-
रेत्यादि ।" ५ । ५ । ७७ । इत्यादिना
अच्
प्रत्यबः ।) वृद्धवृषः । तत्पर्य्यायः ।
जरद्गवः २ ।
इत्यमरः ॥ (यथा, कुमारसम्भवे । ५ ।
७० ।
"विलोक्य वृद्धोक्षमधिष्ठितं त्वया
महाजनः स्मेरमुखो भविष्यति ॥")

**वृद्ध्याजीवः**, त्रि, (वृद्ध्या आजीवतीति । आ +
जीव + अच् ।) वृद्ध्युपजीवी ।
तत्पर्य्यायः ।
वार्द्धुषिः २ वार्द्धुषिकः ३ कुषीदः ४
कुषीदिकः
५ । इति शब्दरत्नावली ॥ साधुः ६ ।
इति
जटाधरः ॥

**वृध**, उ ङ व ऌ वृद्धौ । इति कविकल्पद्रुमः ॥
(भ्वा०-

**वृन्तिता**, स्त्री, कटुका । इति शब्दचन्द्रिका ॥

**वृन्दं**, क्ली, (वृञ् + "अब्दादयश्चेति ।" उणा० ४
९८ । इति दन् नुम् गुणाभावश्च
निपात्यते ।)
समूहः । इत्यमरः ॥ (यथा, भागवते ।
३ ।
२८ । ३० ।
"भृत्या स्वया कुटिलकुन्तलवृन्दजुष्टम्
॥")

**वृन्दः**, पुं, दशार्व्वुदः । शतकोटिरिति यावत् ।
इति
ज्योतिषम् ॥ अस्य नामान्तरं
महार्व्वुदः ॥

**वृन्दा**, स्त्री, तुलसी । इति शब्दरत्नावली ॥
जल-
न्धरपत्नी । अस्या विवरणं
तुलसीशब्देद्रष्टव्यम् ॥
केदारराजकन्या ।
राधाषोडशनामान्तर्गत-
नामविशेषः । एतद्विवरणं
वृन्दावनशब्दे द्रष्ट-
व्यम् ॥

**वृन्दारः**, त्रि, मनोज्ञम् । इति शब्दमाला ॥

**वृन्दारकः**, पुं, (वृन्दमस्यास्तीति । वृन्द +
"शृङ्ग-
वृन्दाभ्यामारकन् वक्तव्यः ।" ५ । २ ।
१२२ ।
इत्यस्य वार्त्तिकोक्त्या आरकन् ।)
देवता ।
इत्यमरः ॥ (यथा, भागवते । ६ । १०
। ३० ।
"अपि वृन्दारका यूयं न जानीथ
शरीरि-
णाम् ॥")
यूथपाता । यथा, --
"वृन्दारकः सुरे श्रेष्ठे मनोज्ञे यूथपातरि
॥"

प्रसन्नवदनः श्रीमान् वरं वृण्वित्युवाच सः ॥
दृष्ट्वा सा राधिकाकान्तं शान्तं सुन्दरविग्रहम् ।
मूर्च्छां संप्राप सा सद्यः कामबाणप्रपीडिता ॥
सा च शीघ्रं वरं वव्रे पतिस्त्वं मे भवेति च ।
ओमित्युक्त्वा च रहसि चिरं रेमे तया सह ॥
सा जगाम च गोलोकं कृष्णेन सह कौतुकात् ।
राधासमा सा सौभाग्यात् गोपीश्रेष्ठा बभूव सा ॥
वृन्दा यत्र तपस्तेपे तत्तु वृन्दावनं स्मृतम् ।
वृन्दा यत्र कृता क्रीडा तेन वा मुनिपुङ्गव ॥ * ॥
अथान्यच्चेतिहासञ्च शृणुष्व वत्स पुण्यदम् ।
येन वृन्दावनं नाम निबोध कथयामि ते ॥
कुशध्वजस्य कन्ये द्वे धर्म्मशास्त्र विशारदे ।
तुलसीवेदवत्यौ च विरक्ते भवकर्म्मणि ॥
तपस्तप्त्वा वेदवती प्राप नारायणं परम् ।
सीता जनककन्या सा सर्व्वत्र परिकीर्त्तिता ॥
तुलसी च तपस्तप्त्वा वाञ्छां कृत्वा हरिं पतिम्
।
दैवाद्दुर्व्वाससः शापात् प्राप्य शङ्खासुरं पतिम् ॥
पश्चात् संप्राप कमलाकान्तं कान्तं मनोहरम् ।
तस्याश्च तपसः स्थानं उदितञ्च तपोधन ।
तेन वृन्दावनं नाम प्रवदन्ति मनीषिणः ॥ * ॥
अथवा ते प्रवक्ष्यामि परं हेत्वन्तरं शृणु ।
येन वृन्दावनं नाम पुण्यक्षेत्रञ्च भारते ॥
राधाषोडशनाम्नाञ्च वृन्दा नाम श्रुतौ श्रुतम् ।
तस्याः क्रीडावनं रम्यं तेन वृन्दावनं स्मृतम् ॥
गोलोके प्रीतये तस्याः कृष्णेन निर्म्मितं पुरा ।
क्रीडार्थं भुवि तन्नाम्ना वनं वृन्दावनं स्मृतम् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे वृन्दावन-
प्रस्तावः १७ अध्यायः ॥ * ॥
अथ वृन्दावनवर्णनम् ।
ईश्वर उवाच ।
"गुह्याद्गुह्यतरं हृद्यं परमानन्दकारणम् ।
अत्यद्भुतं रहस्यानां रहस्यं परमं परम् ॥
दुर्ल्लभानाञ्च परमं दुर्ल्लभं मोहनं परम् ।
सर्व्वशक्तिमयं देवि सर्व्वस्थानेषु गोपितम् ॥
सात्वतां स्थानमूर्द्धन्यं विष्णोरत्यन्तवल्लभम् ।
नित्यं वृन्दावनं नाम ब्रह्माण्डोपरि संस्थितम् ॥
पूर्णब्रह्मसुखैश्वर्य्यनित्यमानन्दमव्ययम् ।
वैकुण्ठादि तदंशांशं स्वयं वृन्दावनं भुवि ॥

आत्म०-अक०-सेट् । क्त्वावेट् ।) उ, वर्द्धित्वा
वृद्ध्वा । ङ, वर्द्धते जनः । व, वर्त्स्यति विवृत्सति ।
ऌ, अवृधत् । इति दुर्गादासः ॥

**वृध**, क दीप्तौ । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-अक०-सेट् ।) क, वर्द्धयति । इति दुर्गा-
दासः ॥

**वृधसानः**, पुं, (वृध + "ऋन्जिवृधीति ।" उणा०
२ । ८७ । इत्यनेन असानच् । स च कित् ।)
मनुष्यः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥
(वर्द्धनशीले, त्रि । यथा, ऋग्वेदे । २ । २ । ५ ।
"हरिशिप्रो वृधसानासु जर्भुरत् ॥"
"वृधसानासु प्रवर्द्धमानासु ।" इति तद्भाष्ये
सायणः ॥ यथा च तत्रैव । ४ । ३ । ६ ।
"कद्धिष्ण्यासु वृधसानो
अग्ने कद्वाताय प्रतवसे शुभं यो ॥"
"वृधसानः घृताद्याहुतिभिर्वर्द्धमानस्त्वम् ।" इति
तद्भाष्ये सायणः ॥)

**वृधसानुः**, पुं, (वृध + बाहुलकात् असानुच् । स च
कित् ।) पुरुषः । पत्रम् । कृतिः । इत्युणादि-
कोषः ॥

**वृध्यं**, त्रि, (वृध + "ऋदुपधाच्चाक्लृपिचृतेः ।"
३ । १ । ११० । इति क्यप् ।) वर्द्धबीयम् ।
वृधधातोः क्यप्प्रत्ययेन निष्पन्नमिदम् ॥

**वृन्तं**, क्ली, फलपुष्पपत्रादिर्य्येन धार्य्यते तत् । वोटा
इति भाषा । तत्पर्य्यायः । प्रसवबन्धनम् २ ।
इत्यमरः ॥ (यथा, रघुवंशे । ५ । ६९ ।
इति भरतधृतव्याडिः ॥

**वृन्दारकः**, त्रि, (वृन्दार + स्वार्थे कन् ।) मनोज्ञः ।
(यथा, महाभारते । ११ । १९ । ५ ।
"युवा वृन्दारकः शूरोविकर्णः
पुरुषर्षभः ॥")
श्रेष्ठः । इति मेदिनी ॥ तन्मते
पवर्गीयादिः ।
वृन्दारकौ रूपिमुख्यौ । इत्यमरः ॥

**वृन्दावनं**, क्ली, स्वनामख्याततीर्थम् । तन्नामकारणं
यथा, --
श्रीनारायण उवाच ।
"पुरा केदारनृपतिः सप्तद्वीपपतिः स्वयम् ।
आसीत् सत्ययुगे ब्रह्मन् सत्यधर्म्मरतः सदा ॥
स रेमे सह नारीभिः पुत्त्रपौत्त्रगणैः सह ।
पुत्त्रानिव प्रजाः सर्व्वाः पालयामास धार्म्मिकः ॥
कृत्वा शतक्रतुं राजा लेभे त्विन्द्रत्वमीप्सितम् ।
कृत्वा नानाविधं पुण्यं फलकाङ्क्षी न च स्वयम् ॥
नित्यं नैमित्तिकं सर्व्वं श्रीकृष्णप्रीतिपूर्ब्बकम् ।
केदारतुल्यो राजेन्द्रो न भूतो भविता पुनः ॥
पुत्त्रेषु राज्यं संन्यस्य प्रिया त्रैलोक्यमोहिनी ।
जैगीषव्योपदेशेन जगाम तपसे वनम् ॥
हरेरैकान्तिको भक्तो ध्यायते सन्ततं हरिम् ।
शश्वत् सुदर्शनं चक्रमस्ति यत्सन्निधौ मुने ॥
चिरं तप्त्वा नृपश्रेष्ठो गोलोकञ्च जगाम सः ।
केदारनामतीर्थं तत्तन्नाम्ना च बभूव ह ॥
गोलोकैश्वर्य्यं यत्किञ्चित् गोकुले तत्प्रकीर्त्तितम् ।
वैकुण्ठादिवैभवं यत् द्वारकायां प्रकाशयेत् ॥
यद्ब्रह्मपरमैश्वर्य्यं नित्यं वृन्दावनाश्रयम् ।
तस्मात् त्रैलोक्यमध्ये तु पृथ्वी धन्येति विश्रुता ॥
यत् स्यान्माथुरकं धाम विष्णोरेकान्तवल्लभम् ।
स्वस्थानमधिकं नामधेयं माथुरमण्डलम् ॥
निगूढं परमं स्थानं पुर्य्यभ्यन्तरसंस्थितम् ।
सहस्रपत्रकमलाकारं माथुरमण्डलम् ॥
विष्णुचक्रपरिभ्रामद्धाम वैष्णवमद्भुतम् ।
कर्णिकापत्रविस्तारं रहस्यक्रममीरितम् ॥
प्रधानं द्वादशारण्यं माहात्म्यं कथितं क्रमात् ।
भद्रश्रीलौहभाण्डीरमहातालखदीरकाः॥
बहुलं कुमुदं काम्यं मधु वृन्दावनं तथा ।
द्वादशैता वने संख्याः कालिन्द्याः सप्त पश्चिमे ॥

| | | |
|---|---|---|
| “वृन्तश्लथं हरति पुष्पमनोकहानाम् ॥”) घटीधारा । कुचाग्रम् । इति मेदिनी ॥<br><br>**वृन्ताकः**, पुं, वार्त्ताकी । इति शब्दरत्नावली ॥<br><br>**वृन्ताकी**, स्त्री, वार्त्ताकी । इति राजनिर्घण्टः ॥ | तत्राद्यापि मृतः प्राणी सद्यो मुक्तो भवेत् ध्रुवम् ।<br>कमलांशा तस्य कन्या नाम्ना वृन्दा तपस्विनी ॥<br>न वव्रे सा वरं कञ्चित् योगशास्त्रविशारदा ।<br>दत्तं दुर्व्वाससा तस्यै हरेर्मन्त्रं सुदुर्ल्लभम् ॥<br>सा विरक्ता गृहं त्यक्त्वा जगाम तपसे वनम् ।<br>षष्टिं वर्षसहस्राणि तपस्तेपे सुनिर्ज्जने ॥<br>आविर्ब्बभूव श्रीकृष्णस्तत्पुरो भक्तवत्सलः । | |

पूर्ब्बे पञ्चवनं प्रोक्तं तत्रास्ति गुह्यमुत्तमम् ।
महावनं गोकुलाख्यं रम्यं मधुवनं तथा ॥
पूर्व्वे तु पञ्च भद्राद्यास्तालाद्याः सप्त पश्चिमे ।
अन्यच्चोपवनं प्रोक्तं कृष्णक्रीडारसस्थलम् ॥
कदम्बखण्डिकं नन्दवनं नन्दीश्वरं तथा ।
नन्दनानन्दखण्डञ्च पालाशाशोककेतकम् ॥
सुगन्धिमादनं कैलममृतं भोजनस्थलम् ।
सुखप्रसाधनं वत्सहरणं शेषशायनम् ॥
श्यामपूश्च दधिग्रामं चक्रभानुपुरं तथा ।
शङ्कितं विपदञ्चैव बालक्रीडञ्च धूसरम् ॥
केमुद्रुमं खरो वीरमुत्सुकञ्चापि नन्दनम् ।
इत्थमेव वने संख्यास्त्रिंशच्चोपवनं स्मृतम् ॥
पूर्ब्बोक्तं द्वादशारण्यं प्रधानं वनमुत्तमम् ।
तत्रोत्तरे चतुर्थञ्च वनञ्च समुदाहृतम् ॥
नानाविधरसक्रीडानानालीलामयस्थलम् ।
दलविस्पष्टविस्ताररहस्यक्रममीरितम्॥
सहस्रपत्रकमलं गोकुलाख्य महत् पदम् ।
कर्णिका तन्महद्धाम गोविन्दस्थानमुत्तमम् ॥
तत्रोपरि स्वर्णपीठे मणिमण्डपगण्डितम् ।
तच्च तत्र क्रमाद्दिक्षु विदिक्षु दलभीरितम् ॥
यद्दलं दक्षिणे प्रोक्तं परं गुह्योत्तमोत्तमम् ।
तस्मिन् दले महापीठं निगमागमदुर्गमम् ॥
योगीन्द्रैरपि दुष्प्रापं सर्व्वात्मा यच्च गोकुलम् ।
द्वितीयं दलमाग्नेयं तद्रहस्यं द्विधा तथा ॥
निकुञ्जककुटीवीरकुटीरौ तद्दले स्थितौ ।
पूर्ब्बदलं तृतीयं यत् प्रधानं स्थानमुच्यते ॥
गङ्गादिसर्व्वतीर्थानां स्पर्शाच्छतगुणं भवेत् ।
चतुर्थदलमैशान्यां सिद्धपीठेप्सितप्रदम् ॥
सर्व्वश्रेष्ठदलं प्रोक्तं माहात्म्यं कर्णिकासमम् ।
तत्र गोवर्द्धने रम्ये नित्यानन्दरसाश्रये ॥
कर्णिकायां महालीला तल्लीला रसगह्वरे ।
यत्र कृष्णो नित्यवृन्दाकाननस्य पतिर्भवेत् ॥
कृष्णो गोविन्दतां प्राप्तः किमन्यैर्ब्बहुभाषितैः ।
दलं तृतीयमाख्यातं सर्व्वश्रेष्ठोत्तमोत्तमम् ॥
चतुर्थदलमाख्यातं महाद्भुतरसस्थलम् ।
हरिर्यस्य पतिः साक्षान्नित्यं गोवर्द्धनः स्वयम् ॥
कदम्बखण्डी तत्रैव पूर्णानन्दरसाश्रयः ।
स्निग्धं हृद्यं प्रियं रम्यं दलञ्च समुदाहृतम् ॥
नन्दीश्वरदलं रम्यं तत्र नन्दालयः स्मृतः ।
कर्णिकादलमाहात्म्यं पञ्चमं दलमुच्यते ॥
अधिष्ठातात्र गोपालो धेनुपालस्ततः परम् ।
दलं षष्ठं यद ख्यातं नत्र नन्दवनं स्मृतम् ॥
सप्तमं वकुलारण्यं दलं रम्यं प्रकीर्त्तितम् ।
दलाष्टमं तालवनं तत्र धेनुवधः स्मृतः ॥
नवमं कुमुदारण्यं दलं रम्यं प्रकीर्त्तितम् ॥
काम्यारण्यं दलं हृद्यं दशमं सर्व्वकारणम् ।
ब्रह्मप्रसादनं तत्र विष्णुवृन्दं प्रदर्शितम् ॥
कृष्णक्रीडारसस्थानं प्रधानं दलमुच्यते ।
दलमेकादशं प्रोक्तं भक्तानुग्रहकारणम् ॥
निर्व्वाणं सेतुबन्धस्य नानारसमयस्थलम् ।
भाण्डीरं द्वादशदलं वनं रम्यं मनोहरम् ॥
कृष्णक्रीडारसस्तत्र श्रीदामादिभिरावृतः ।
त्रयोदशदलं श्रेष्ठं तत्र भद्रवनं स्मृतम् ॥
चतुर्द्दशदलं प्रोक्तं सर्व्वसिद्धिप्रदं स्थलम् ।
श्रीवनं तत्र रुचिरं सर्व्वैश्वर्य्यस्य कारणम् ॥
कृष्णलीलामयदलं श्रीकीर्त्तिकान्तिवर्द्धनम् ।
पञ्चदशदलं श्रेष्ठं तत्र लौहवनं स्मृतम् ॥
कथितं षोडशदलं माहात्म्यं कर्णिकासमम् ।
महावनं तत्र गीतं तत्रास्ति गुह्यमुत्तमम् ॥
बालक्रीडारसस्तत्र वत्सपालैः समावृतः ।
पूतनादिवधस्तत्र यमलार्ज्जुनभञ्जनम् ॥
अधिष्ठाता तत्र बालगोपालः पञ्चमाब्दिकः ।
तत्र कैशोरवयसं नित्यमानन्दविग्रहम् ॥
गतिर्नाट्यं कथागानं स्मितवक्त्रं निरन्तरम् ।
शुद्धसत्त्वैः प्रेमपूर्णैर्व्वैष्णवैस्तद्वनाश्रयम् ॥
पूर्णब्रह्मसुखे मग्नं स्फुरत्तन्मूर्त्तितन्मयम् ।
प्रमत्तकोटिभृङ्गाद्यैः कूजत्कलमनोहरम् ॥
कपोतशुकसंगीतमुन्मत्तालिसहस्रकम् ।
भुजङ्गशत्रुनृत्याद्यं सकान्ताभोदविभ्रमम् ॥
नानावर्णैश्च कुसुमैस्तद्रेणुपरिपूरितम् ।
सुस्निग्धसौरभाश्रान्तमुग्धीकृतजगत्त्रयम् ॥
मन्दमारुतसंसिक्तवसन्तऋतुसेवितम् ।
पूर्णेन्दुनित्याभ्युदयं सूर्य्यमन्दांशुसेवितम् ।
अदुःखसुखविच्छेदं जरामरणवर्ज्जितम् ।
अक्रोधगतमात्सर्य्यं अभिन्नमनहंकृतम् ॥
पूर्णानन्दामृतरसं पूर्णप्रेमसुखावहम् ।
गुणातीतं परं धाम पूर्णप्रेमस्वरूपकम् ॥
यत्र वृक्षादिपुलकैः प्रेमानन्दाश्रुवर्षितम् ।
किं पुनश्चेतनायुक्तैर्विष्णुभक्तैः किमुच्यते ॥
गोविन्दाङ्घ्रिरजस्पर्शान्नित्यवृन्दावनंभुवि ।
सहस्रदलपद्मस्य वृन्दारण्यं वराटकम् ॥
यस्य स्पर्शनमात्रेण पृथ्वी धन्या जगत्त्रये ।
गुह्याद्गुह्यतमं रम्यं मेध्यं वृन्दावनस्थितम् ॥
अक्षरं नित्यमानन्दं गोविन्दस्थानमव्ययम् ।
गोविन्ददेहतोऽभिन्नं पूर्णब्रह्म सुखाश्रयम् ॥
मुक्तिस्तत्र यतः स्पर्शात्तन्माहात्म्यं किमुच्यते ।
तस्मात् सर्व्वात्मना देवि ! हृदिस्थं कुरु तद्वनम् ॥
वृन्दावनविहारेषु कृष्णं कैशोरविग्रहम् ।
अन्यारण्येषु स्थानेषु बाल्यपौगण्डयौवनम् ॥
कालिन्दीमकरन्दोऽस्य कर्णिकायाः प्रदक्षिणम् ।

कामयन् नूतना गोपी तत्र कृष्णपतिं लभेत्
।
वस्त्रालङ्कारहरणं तद्दले समुदाहृतम् ॥
उत्तरे पञ्चमं प्रोक्तं दलं सर्व्वदलोत्तमम् ।
द्वादशादित्यमत्रैव दलञ्च कर्णिकासमम् ॥
वायव्यन्तु दलं षष्ठं तत्र कालीह्रदः स्मृतः
।
दलोत्तमोत्तमञ्चैव प्रधानस्थानमुच्यते ॥
सर्व्वोत्तमदलं श्रेष्ठं पश्चिमे सप्तमं दलम् ।
यज्ञपत्नीगणानाञ्च तदीप्सितवरप्रदम् ॥
अघासुरस्य निर्व्वाणं चक्रे त्रिदशदर्शितम्
।
ब्रह्ममोहनमत्रैव दलं ब्रह्मह्रदावहम् ॥
नैरृत्यान्तु दलं प्रोक्तमष्टमं व्योमघातनम् ।
शङ्खचूडवधस्तत्र नानाकेलिरसस्थलम् ॥
श्रुतमष्टदलं प्रोक्तं वृन्दारण्यान्तरस्थितम्
।
श्रीमद्वृन्दावनं धन्यं यमुनायाः प्रदक्षिणम्
॥
शिवलिङ्गमधिष्ठाता दृष्टो गोपी श्वराभिधः
।
तद्वाह्ये षोडशदलं श्रिया पूर्णं तदीरितम् ॥
सर्व्वासु दिक्षु यत् प्रोक्तं
प्रादक्षिण्याद्यथाक्रमम् ।
महत् पदं महद्धाम प्रधानं षोडशं दलम् ॥
प्रथमैकदलं श्रेष्ठं माहात्म्यं कर्णिकासमम्
।
तस्मिन् मधुवनं प्रोक्तं तत्र प्रादुरभूत्
स्वयम् ॥
चतुर्भुजो महाविष्णुः सर्व्वकारणकारणम् ।
तत्राधिष्ठिततद्देवं मुनिश्रेष्ठ सनातनम् ॥
दलं द्वितीयमाख्यातं
किञ्चिल्लीलारसस्थलम् ।
खदिरारण्यमत्रैव दलञ्च समुदाहृतम् ॥
नाम्ना दामोदरः प्रोक्तः प्रेमानन्दरसार्णवः ॥
दलं प्रसिद्धमाख्यातं सर्व्वश्रेष्ठदलोत्तमम् ।
कृष्णक्रीडा च किञ्जल्की विहारदलमुच्यते ।
सिद्धप्रधानं किञ्जल्कं दलञ्च समुदाहृतम् ॥
* ॥
पार्व्वत्युवाच ।
वृन्दावनस्य माहात्म्यं रहस्यं परमाद्भुतम् ।
तदहं श्रोतुमिच्छामि कथयस्व महाप्रभो ॥
ईश्वर उवाच ।
कथितं ते प्रियतमे गुह्याद्गुह्यतमोत्तमम् ॥
रहस्यानां रहस्यं यत्दुर्ल्लभानाञ्च दुर्ल्लभम् ।
त्रैलोक्यगोपितं देवि ! देवेश्वरसुपूजितम् ॥
ब्रह्मादिवाञ्छितं स्थानं सुरसिद्धादिसेवितम्
।
योगीन्द्रादिमुनीन्द्रादिसदातद्ध्यानतत्परम्
॥
अप्सरोभिश्च गन्धर्व्वैर्नृत्यगीतनिरन्तरम् ।
श्रीमद्वृन्दावनं रम्यं पूर्णानन्दरसाश्रयम् ॥
भूमिश्चिन्तामणिस्तोयममृतंरसपूरितम् ।
वृक्षाः सुरद्रुमास्तत्र सुरभिवृन्दसेविताः ॥
स्त्री लक्ष्मीः पुरुषो विष्णुस्तद्दशांशसमुद्भवः
।
नानानिर्म्माणगम्भीरं जलसौरभमोहनम् ।
आनन्दाहततन्मिश्रमकरन्दघनालयम् ।
पद्मोत्पलाद्यैः कुसुमैर्नानावर्णैः समुज्ज्वलम्
॥
चक्रवाकादिविहगैर्म्मञ्जुनानाकलस्वनैः ।
शोभमानं जलं रम्यं तरङ्गातिमनोहरम् ॥
तस्योभयतटी रम्या शुद्धकाञ्चननिर्म्मिता ।
गङ्गाकोटीगुणः प्रोक्तो यत्र स्पर्शवराटकः ॥
कर्णिकायां कोटिगुणो यत्र क्रीडारतो हरिः
।
कालिन्दीकर्णिकाकृष्टमभिन्नमेकविग्रहम्
॥”
इति पाद्मे पातालखण्डे १ अध्यायः ॥
(इदमेव भगवत्याः पीठस्थानानामन्यतमम्
।
यथा, देवीभागवते । ७ । ३० । ६९ ।
“रुक्मिणी द्वारवत्यान्तु राधा वृन्दावने वने
॥”)

**वृन्दावनेश्वरः**, पुं, (वृन्दावनस्य ईश्वरः ।) श्रीकृष्णः
।

यथा, --
“यन्नखेन्दुरुचिर्ब्रह्म ध्येयं ब्रह्मादिभिः सुरैः
।
गुणत्रयमतीतं तं वन्दे वृन्दावनेश्वरम् ॥”
अपि च ।
“पुरुषः प्रकृतिश्चाद्यौ राधावृन्दावनेश्वरौ
।
प्रकृतिर्व्विकृतिः सर्व्वं विना वृन्दावनेश्वरम्
॥”
इति पाद्मे पातालखण्डे ९ अध्यायः ॥ *
॥
अन्यच्च ।
“यदा नित्यः स्वयं कृष्णः
सच्चिदानन्दविग्रहः ॥
षण्णां गुणानां शीली तु भगवच्छब्दसंज्ञितः
॥

नित्यधामा गुणातीतः
साक्षाद्वृन्दावनेश्वरः ।
असौ प्रकटलीलायां वासुदेवोऽभवत्
प्रभुः ॥
गोपीनां कामपूर्णाय नित्यानां रमणाय च
।
गोपालानां विनोदाय स्वयं
नन्दसुतोऽभवत् ॥”
इति पाद्मोत्तरखण्डे ६७ अध्यायः ॥

**वृन्दावनेश्वरी**, स्त्री (वृन्दावनस्येश्वरी ।) राधा ।

यथा, --
“राघवत्वेऽभवत् सीता रुक्मिणी
कृष्णजन्मनि ।
साक्षाल्लक्ष्मीस्तु विज्ञेया प्राकट्येनैव
पार्व्वति ! ॥
वृषभानुसुता या तु नित्यानन्दस्वरूपिणी
।
गान्धर्व्विकान्तलीलायां श्रीः श्यामा
कृष्णवल्लभा ।
वृन्दावनेश्वरी राधा साक्षात् कृष्णात्मिका
परा ॥”
इति पाद्मोत्तरखण्डे ६७ अध्यायः ॥

**वृन्दिष्ठः**, त्रि, (अयमेषामतिशयेन वृन्दारकः

श्रेष्ठः । वृन्दारक + इष्ठन् । “प्रियस्थिरेति
।”
६ । ४ । १५७ । वृन्दादेशः ।)
अयमनयोरेषां वा
अतिशयेन वृन्दारको देवो मुख्यो वा ।
इति
मुग्धबोधटीकायां दुर्गादासः ॥

**वृन्दीयान्**, [स्] त्रि, (अयमनयोरतिशयेन वृन्दा-

रकः । वृन्दारक + इयसुन् ।
प्रियस्थिरेति वृन्दा-
देशः ।) वृन्दिष्ठः । अयमनयोरेषां वा
अति-
शयेन वृन्दारकः इत्यर्थे ईयसुप्रत्ययेन
निष्पन्न-

वृश्चिकेन नरो विद्धः क्षणाद्भवति
निर्व्विषः ॥”
इति भावप्रकाशः ॥ * ॥
अथ वृश्चिकविषहरमन्त्रः । ॐ सर
स्फुः ह ॐ
हिलि मिलि चिलि चिलि स्फुः ब्रह्मणे
स्फुः
सर्व्वेभ्यो देवेभ्यः स्फुः । इति
तन्त्रसारः ॥ * ॥
(यथा, ऋग्वेदे । १ । १९१ । १६ ।
“वृश्चिकस्यारसं विषमरसं वृश्चिक ते
विषम् ॥”
“वृश्चिकस्यैतद्विषं अरसमसारं बाधकं
न भवति ।”
इति तद्भाष्ये सायणः ॥ विषस्य
विशेषविवरणन्तु
अत्रैव १ -- १६ मन्त्रेषु द्रष्टव्यम् ॥ *
॥) मेषादि-
द्वादशराश्यन्तर्गताष्टमराशिः ।
अस्याधिष्ठात्री
देवता वृश्चिकः ।
विशाखाशेषपादानुराधा-
ज्येष्ठासमुदायेनैतद्राशिर्भवति । स च
शीर्षो-
दयः । श्वेतवर्णः । जलराशिः ।
उत्तरदिक्पतिः ।
कफप्रकृतिः । जलचरः । बहुपुत्त्रः ।
बहुस्त्री-
सङ्गः । चित्रतनुः । विप्रवर्णश्च । अस्य
विशेष-
संज्ञाः । सौम्यः । अङ्गना । युग्मम् ।
समः ।
स्थिरः । पुष्करः । सरीसृपजातिः ।
ग्राम्यः ।
तद्राशिजात एतादृशो भवति । मौनी ।
मन्द-
गतिः । कृपालुः । कुबुद्धिः ।
नीचसङ्गश्च । इति

**वृष**, उ सेचने । प्रजनैश्ये । इति कविकल्पद्रुमः ॥

(भ्वा०-पर०-सक०-अक० च-सेट् । क्त्वावेट्
।)
उ, वर्षित्वा वृष्ट्वा । इति दुर्गादासः ॥

**वृष**, क ङ प्रजनैश्ये । इति कविकल्पद्रुमः ॥

(चुरा०-आत्म०-अक०-सेट् ।) क ङ, वर्षयते
।
अस्य पञ्चमस्वरानुबन्धो लेखकश्रमकृतः
सुधीभिर्ह्येयः । ञ्यन्तेभ्यः सर्व्वत्र नित्येम्
साम्प्र-
दायिकत्वात् । न च प्राचामनुरोधात् पाठ्य
इति वाच्यम् । तर्हि अनृक् व्यक्तौ । क ङ वनृ
वञ्चने । वृत क ङ दीप्तौ । दिव क ङ परि-
कूजने । कदि वर्द्धे । वृष क ङ शक्तिबन्धे ।
जसक् वधेऽनादरे । इत्येषामष्टानामपि पञ्चम-
स्वरानुबन्धापत्तेः वस्तुतस्तु एषां पञ्चमस्वरानु-
बन्धः प्राचीनपठितोऽप्यनर्थः । अतएव रमा-
नाथोऽपि एषामुदनुबन्धः पूर्ब्बपठितधातवो-
ऽर्थान्तरेषु चुरादयः स्युर्नत्वेते पृथग्धातव
इति ज्ञापनार्थ इत्याह । प्रजनो गर्भग्रहणं
ऐश्यमैश्वर्य्यम् । इति दुर्गादासः ॥

**वृषं**, क्ली, (वृष ऐश्ये + कः ।) वर्हम् । इति शब्द-

माला ॥

**वृषः**, पुं, (वर्षति सिञ्चति रेत इति । वृष सेचने

+ कः ।) पुरुषगवः । एँडे इति भाषा । तत्-
र्य्यायः । उक्षा २ भद्रः ३ वलीवर्द्दः ४ ऋष भः
५
वृषभः ६ अनड्वान् ७ सौरभेयः ८ गौः ९ ।
इत्यमरः ॥ शृङ्गी १० ककुद्मान् ११ । इति
शब्दरत्नावली ॥ शिखी १२ गन्धमैथुनः १३
पुङ्गवः १४ । इति जटाधरः ॥ * ॥ अस्य
लक्षणादि यथा, --
“अश्वेभलक्षणे ह्युक्त्वा वक्ष्यन्तेऽन्ये चतुष्पदाः
।
गावः कृतयुगे सृष्टाः स्वयमेव स्वयम्भुवा ।
ब्रह्मक्षत्त्रियविट्शूद्रजातिभेदाश्चतुर्व्विधाः ॥
शुक्लाङ्गाः शुचयोऽक्रुद्धा मृदवः शुद्धचेतसः ।

मिदम् । इति मुग्धबोधव्याकरणम् ॥

**वृश**, इर् य वृत्याम् । इति कविकल्पद्रुमः ॥

(दिवा०-पर०-सक०-सेट् ।) इर्,
अवृशत् अव-
र्शीत् । अस्मात् पुषादित्वान्नित्यं ङ
इत्यन्ये । य,
वृश्यति वरं कन्या । इति दुर्गादासः ॥

**वृशः**, पुं, (वृ + "जनिदाच्युसृवृमदीति ।" उणा०

४ । १०४ । इति शक् ।) उन्दुरुः । इति
शब्दरत्नावली ॥ वासकः ।
इत्यमरटीकायां
भरतः ॥

**वृशा**, स्त्री, ओषधीविशेषः । इत्युणादिकोषः ॥

**वृश्चिकः**, पुं, (व्रश्चू छेदने + "वृश्चिकृष्योः किकन् ।"

उणा० २ । ४० । इति किकन् ।)
शूककीटः ।
इत्यमरः ॥ शुयापोका इति भाषा ॥
तत्पर्य्यायः ।
शूककीटकः २ । इति शब्दरत्नावली ॥
कीट-
विशेषः । विछा इति भाषा । तत्पर्य्यायः ।
अलिः २ द्रोणः ३ वृश्चनः ४ । इति
राज-
निर्घण्टः ॥ द्रुणः ५ । इति शब्दरत्नावली
॥
पृदाकुः ६ अरुणः ७ अली ८ । इति
जटा-
धरः ॥ * ॥ वृश्चिकविषस्य लक्षणमाह ।
"दहत्यग्निरिवादौ च भिनत्तीवोर्द्ध्वमाशु
च ।
वृश्चिकस्य विषं याति
पश्चाद्दंशोऽवतिष्ठते ॥"
असाध्यवृश्चिकदष्टस्य लक्षणमाह ।
"दष्टोऽसाध्यैस्तु हृद्घ्राणरसनोपहतो
नरः ।
मांसैः पतद्भिरत्यर्थं वेदनार्त्तो जहात्यसून्
॥"
असाध्यैर्व्वृश्चिकैस्तेषामेवानुवृत्तैः ।
हृदादिषू-

बृहज्जातकादयः ॥ * ॥
तल्लग्नजातफलम् ।
"वृश्चिकोदयसंजातः
शौर्य्यवानतिदुष्टधीः ।
भवेद्विज्ञानसम्पन्नो विग्रही सुभगः
सुधीः ॥"
इति कोष्ठीप्रदीपः ॥ * ॥
ओषधीभेदः । इति भेदिनी ॥ हालिकः
।
हालः । इति संक्षिप्तसारोणादिवृत्तिः ॥
मदन-
वृक्षः । कर्कटः । गोमयकीटः । इति
भरतः ॥
अग्रहायणमासः । इति सारसुन्दरी ॥

**वृश्चिकप्रिया**, स्त्री, (वृश्चिकस्य प्रिया ।) पूतिका ।

इति शब्दमाला ॥

**वृश्चिकर्णी**, स्त्री, आखुकर्णी । इति राजनिर्घण्टः ॥

**वृश्चिका**, स्त्री, क्षुद्रक्षुपविशेषः । तत्पर्य्यायः । नख-

पर्णी २ पिच्छिला ३ अलिपत्रिका ४ ।
अस्या
गुणाः । पिच्छिलत्वम् । अम्लत्वम् ।
अन्तर्वृद्ध्या-
दिदोषनाशित्वञ्च । इति राजनिर्घण्टः ॥

**वृश्चिकाली**, स्त्री, (वृश्चिकानामालिर्यत्र ।) क्षुप-

विशेषः । विछाटी इति भाषा ।
तत्पर्य्यायः ।
वृश्चिपत्री २ विषघ्नी ३ नागदन्तिका
४ सर्प-
दंष्ट्रा ५ अमरा ६ काली ७ उष्ट्रधूसर-
पुच्छिका ८ । इति रत्नमाला ॥
विषाणी ९
नेत्ररोगहा १० उष्ट्रिका ११ अलिपर्णी
१२
दक्षिणावर्त्तकी १३ कालिका १४
आगमा-
वर्त्ता १५ देवलाङ्गूलिका १६ करभी
१७ भूरि-

अल्पाशिनो बहुबला वृषभा ब्रह्मजातयः ॥
द्वयोर्लक्षणसम्बन्धात् द्विजातिर्व्वृषभो भवेत् ।
त्रिलक्षणसमावेशात् त्रिगुणः स वृषाधमः ॥
पीताङ्गा मृदवः शुद्धा अक्रोधा भारवाहिनः ।
यदृच्छाभोजिनः क्षीणा वृषभा वैश्यजातयः ॥
कृष्णाङ्गाः क्रूरहृदया अपवित्राः सदाशिनः ।
वृहद्वृषणरोषाश्च वृषभाः शूद्रजातयः ॥
द्वयोर्लक्षणसम्पर्कात् द्विजातिर्व्वृषभो भवेत् ॥"
* ॥
वात्स्यस्तु ।
"पृथ्वीतले समुत्पन्ना गजाश्वा ये चतुष्पदाः ।
गुणत्रयविभेदेन तेषां भेदत्रयं भवेत् ।
एतन्मतानुसारेण भोजः प्राह महीपतिः ॥
ये शुक्लाः शुचयः शुद्धा भृशं भारवहा अपि ।
बह्वाशिनः स्वल्परोषास्ते वृषाः सात्त्विका
मताः ॥
व्यक्ताव्यक्तरुषः शुद्धा दृढा भारवहाः शुभाः ।
बह्वाशिनो बहुबलास्ते वृषा राजसा मताः ॥
विवर्णा विकृताङ्गाश्च निर्ब्बला स्वल्पभोजिनः
।
अपवित्रा बृहद्रोषास्ते वृषास्तामसा मताः ॥
लक्षणद्वयसम्बन्धात् द्विगुणो वृषभो भवेत् ।

पहतः हृदादिकार्य्यरहितो भवति । अत्यर्थं
वेदनार्त्त इत्यन्वयः ॥ * ॥ अस्य चिकित्सा ।
“जीरकस्य कृतः कल्को घृतसैन्धवसंयुतः ।
सुखोष्णो मधुना लेपाद्वृश्चिकस्य विषं हरेत् ॥
गन्धमाघ्राय मृदितसूर्य्यावर्त्तदलस्य तु ।

दुग्धा १८ कर्कशा १९ स्वर्णदा २० युग्मफला २१
क्षीरविषाणिका २२ भासुरपुष्पा २३ । अस्या
गुणाः । कटुत्वम् । तिक्तत्वम् । हृद्वक्त्रशुद्धि-
कारित्वम् । रक्तपित्तविबन्धारोचकापहत्वम्।
बल्यत्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
“वृश्चिकाली विषघ्नी तु कासमारुतनाशिनी ॥”
इति राजवल्लभः ॥

**वृश्चिपत्री**, स्त्री, वृश्चिकाली । इति रत्नमाला ॥

**वृश्चीरः**, पुं, श्वेतपुनर्णवा । इति रत्नमाला ॥

त्रिलक्षणसमावेशात् त्रिगुणः स
वृषाधमः ॥” * ॥
अथ गुणाः ।
“नीलः शुभो ध्वजो वामः क्षेमो भद्रः
शिवः
स्थिरः ।
भोजदेवेन लिखिता इत्यष्टौ वृषभे
गुणाः ॥”
तद्यथा, --
“श्वेतादन्यतरो वर्णः श्वेतः
खुरविषाणयोः ।
ललाटपुच्छयोः श्वेतः स नीलः
शुभमावहेत् ॥ १ ॥
यो हृष्टपुष्टो रम्यात्मा सुविभक्ततनुः
शुभः ।
कुरुते धनवृद्धिं स दोषैर्मुक्तो यदा
त्वयम् ॥ २ ॥
वर्णस्तु सहजः पुच्छो रम्यश्च ध्वज
उच्यते ।
भर्त्तुः कुलं धनं धान्यं विवर्द्धयति
निश्चयम् ॥ ३ ॥
पूर्ब्बार्द्धे चोन्नतो यस्तु परार्द्धेचैव
नीचकः ।
निर्द्दोषो वाम इत्येष कुरुते रिपुसंक्षयम्
॥ ४ ॥
चन्द्रकं दृश्यते यस्य ललाटे
देवनिर्म्मितम् ।
क्षेमनामा वृषः कुर्य्याद्
धनधान्यविवर्द्धनम् ॥ ५ ॥
आवर्त्ताश्च शुभा यस्य शुक्तयश्चापि वा
शुभाः ।
भद्रनामा वृषः कुर्य्यात् भर्त्तुः
सर्व्वार्थसाधनम् ॥
६ ॥
आवर्त्तशुक्तिविज्ञानं हयेषु वृषभेष्वपि ।
पादाः सर्व्वेसिता यस्य पुच्छभालौ
सितौ तथा ॥
महोक्षा चायते नेत्रे कर्णौ चातिलघू
स्थिरौ ।

विस्तृते विषमे घोणे जिह्वा चैवासिता भवेत् ।
स खरो दूरतस्त्याज्यो भर्त्तुः सर्व्वार्थनाशनः ॥
७ ॥
स्वल्पता दीर्घरोमत्वं क्षीणता भारवाहिता ।
व्यङ्गत्वं मारकत्वञ्च वृषदोषा उदाहृताः ॥ * ॥
ब्रह्मादिजातिभेदेन चत्वारो ये वृषा मताः ।
चतुर्व्विधानां लोकानां त एव स्युः शुभावहाः ॥
यो मोहादन्यजातीयं कुरुते वृषभं नरः ।
तस्य नश्यन्ति वित्तानि धनमायुः कुलं बलम् ॥
वातपित्तकफोद्रेका व्याधयो ये वृषे मताः ।
तेषामुपशमः कार्य्यो यथास्वं विधिना बुधैः ॥”
इति वृषपरीक्षा । इति भोजराजकृतयुक्ति-
कल्पतरुः ॥ * ॥ अस्य लक्षणं उत्सर्गविधिश्च
यथा, --
मनुरुवाच ।
“भगवन् श्रोतुमिच्छामि वृषभस्य च लक्षणम् ।
वृषोत्सर्गविधिञ्चैव तथा पुण्यफलं महत् ॥
मत्स्य उवाच ।
धेनुमादौ परीक्षेत सुशीलां लक्षणान्विताम् ।
अव्यङ्गामपरिक्लिष्टां जीववत्सामरोगिणीम् ॥
स्निग्धवर्णां स्निग्धखुरां स्निग्धशृङ्गां तथैव च ।
मनोहराकृतिं सौम्यां सुप्रमाणामनुद्धताम् ॥
आवर्त्तैर्द्दक्षिणावर्त्तैर्म्मुक्ता दक्षिणतश्च सा ।
वामावर्त्तैर्वामतश्च विस्तीर्णजघना तथा ॥
मृदुसंहतताम्रोष्ठीं रक्तजिह्वां सुपूजिताम् ।
अश्यावदीर्घस्फुटिता रक्तजिह्वा तथा च या ॥
अस्रावाविलनेत्रा च सफैरविरलैर्दृढैः ।
वैदूर्य्यमधुवर्णैश्च जलवुद्बुदसन्निभैः ॥
रक्तस्निग्धैश्च नयनैस्तथा रक्तकनीनिकैः ।
सप्त चतुर्द्दश दन्तास्तथा चाश्यामतालुका ॥
षडुन्नता सुपार्श्वोरू पृथु पञ्च समायताः ।
अष्टायतशिरोग्रीवाधराजन्मसुलक्षणा ॥
मनुरुवाच ।
षडुन्नताः के भगवन् ! के च पञ्च समायताः ।
आयताश्च तथैवाष्टौ धेनूनां के शुभावहाः ॥
मत्स्य उवाच ।
उरः पृष्ठं शिरः कुक्षिः श्रोणी च वसुधाधिप ।
षडुन्नतानि धेनूनां पूजयन्ति विचक्षणाः ॥
कर्णनेत्रललाटश्च पञ्च भास्करनन्दन ! ।

रक्ताक्षः कपिलो यश्च रक्तशृङ्गतलो
भवेत् ॥
श्वेतोदरः कृष्णपृष्ठो ब्राह्मणस्य
प्रशस्यते ॥
स्निग्धरक्तेन वर्द्धेन क्षत्रियस्य प्रशस्यते
।
काञ्चनाभेन वैश्यस्य
कृष्णेनाप्यन्त्यजन्मनः ॥
यस्य प्रागायते शृङ्गे भ्रूमुखाभिमुखे सदा
।
सर्व्वेवामेव वर्णानां स च
सर्व्वार्थसाधकः ॥
माज्जर्जारपादः कपिलो धन्यः
कपिलपिङ्गलः ।
श्वेतोमाज्जर्जारपादस्तु धन्यो
मणिनिभेक्षणः ॥
करटः पिङ्गलश्चैव श्वेतपादस्तथैव च ।
सर्व्वपादशिरो यश्च द्विपादश्वेत एव च
॥
कपिञ्जलनिभो धन्यस्तथा
तित्तिरिसन्निभः ।
आकर्णमूलात् श्वेतस्तु मुखं यस्य
प्रकाशते ॥
नन्दीमुखः स विज्ञेयो रक्तवर्णो
विशेषतः ।
श्वेतञ्च जठरं यस्य भवेत् पृष्ठञ्च गोपतेः
॥
ऋषभः स समुद्राक्षः सततं कुलवर्द्धनः
।
मल्लिकापुष्पचित्रस्तु धन्यो भवति
पुङ्गवः ॥
कमलैर्मण्डलैश्चापि चित्रो भवति
भाग्यदः ।
अतसीपुष्पवर्णस्तु तथा धन्यतरः
स्मृतः ॥ * ॥
एते धन्यास्तथाधन्यान् कीर्त्तयिष्यामि
तेऽनघ ।
कष्णताल्वोष्ठदशना रुक्षशृङ्गशफाश्च ये
॥

मुष्कयोः कृष्णता चैव शृङ्गे चातिशुभे
दृढे ॥
तनुरोमा महावेगः
स्निग्धगम्भीरनिस्वनः ।
शिव इत्येव कथितः शिवं प्रकुरुते
ध्रुवम् ॥ ७ ॥
चरणाः पञ्जराः स्थूलाः शिरः शुभ्रं
भवेत्तनुः ।
आपुच्छादायता शुभ्रा रेखा
मस्तकगामिनी ॥
रक्तताल्वोष्ठजिह्वस्तु स्थिरः
स्थैर्य्यकरः श्रियाः ।
नाल्पपुण्येन लभ्योऽयं वृषभः
शुभलक्षणः ॥" ८ ॥
गर्गस्तु ।
"महत्त्वं तनुलोमत्वं पुष्टता भारवाहिता
।
कुमारकत्वमित्येते वृषभाणां गुणा मताः
॥" * ॥
अथ दोषाः ।
"व्यङ्गो विवर्णो विषमः श्वित्री
धूम्रश्चलः खरः ।
एते सप्त महादोषा वृषभाणामुदीरिताः
॥
विषाणौ विषमौ यस्य खुराश्च
विषमास्तथा ।
नेत्रकान्तेऽथवा गात्रे पञ्जरे वैकृतं भवेत्
।
व्यङ्ग इत्येष कथितो
धनधान्यविनाशनः ॥ १ ॥
पूर्ब्बार्द्ध मन्यवर्णन्तु
परार्द्धञ्चान्यवर्णकम् ।
पृष्ठं क्रोडो विवर्णो वा विवर्णः
कुलनाशनः ॥ २ ॥
परार्द्धमुन्नतं यस्य
पूर्ब्बार्द्धञ्चातिनीचकम् ।
गच्छतश्चरणौ लग्नौ शब्दायेते
खरस्वरः ।
विषमो नाम वृषभः सम्पत्तिक्षयकारकः
॥ ३ ॥

समायतानि शस्यन्ते पुच्छं सास्ना च सक्थिनी
॥
चत्वारश्च समा राजन्नेवमष्टौ मनीषिभिः ।
शिरोग्रीवायतास्त्वेते भूमिपाल स्मृता दश ॥
तस्याः सुतं परीक्षेत वृषभं लक्षणान्वितम् ।
उन्नतस्कन्धककुद्मृजुलाङ्गूलकम्बलम् ॥
महाकटितटस्कन्धं वैदूर्य्यमणिलोचनम् ।
प्रबालगर्भशृङ्गाग्रं सुदीर्घपृथुबालधिम् ॥
नवाष्टदशसंख्यैर्वा तीक्ष्णाग्रैर्द्दशनैः शुभैः ।
मल्लिकाक्षश्च मोक्तव्यो गृहेऽपि धनधान्यदः ॥
वर्णतस्ताम्रकपिलो ब्राह्मणस्य प्रशस्यते ।
श्वेतो रक्तश्च कृष्णश्च गौरः पाटल एव च ॥
भद्रिणस्ताम्रपृष्ठश्च सबलः पञ्चकालकः ।
पृथुकर्णो महास्कन्धः श्लक्ष्णरोमा च यो भवेत् ॥

अव्यक्तवर्णा ह्रस्वाश्च
व्याघ्रभस्मनिभाश्च ये ।
ध्माङ्क्षगृध्रसवर्णाश्च तथा
मूषिकसन्निभाः ॥
कुण्ठाः काणास्तथा खञ्जाः
केकराक्षास्तथैव
च ।
विषमश्वेतपादाश्च
उद्भ्रान्तनयनास्तथा ॥
नैते वृषाः प्रमोक्तव्या न च धार्य्यास्तथा
गृहे ।
मोक्तव्यानाञ्च धार्य्याणां भूयो वक्ष्यामि
लक्ष-
णम् ॥ * ॥
स्वस्तिकाकारशृङ्गाश्च
मेघौघसदृशस्वनाः ।
महाप्रमाणाश्च तथा मत्तमातङ्गगामिनः
॥
महोरस्का महोत्साहा महाबलपराक्रमाः
।
शिरः कर्णौ ललाटञ्च बालधिश्चरणानि
च ॥
नेत्रे पार्श्वे च कृष्णानि शस्यन्ते
चन्द्रभांसि च ।
श्वेतान्येतानि शस्यन्ते कृष्णस्य तु
विशेषतः ॥
भूमौ कर्षति लाङ्गूलं
प्रलम्बस्थूलबालधिः ।
पुरस्तादुद्यते नीलवृषभश्च प्रशस्यते ॥
शुक्तिध्वजपताकाभा येषां राजी
विराजते ।
अनड्वाहश्च ते धन्या
वित्तसिद्धिजयावहाः ॥
प्रदक्षिणं निवर्त्तन्ते स्वयं ये
विनिवर्त्तिताः ।
समुन्नतशिरोग्रीवा धन्यास्ते यूथवर्द्धनाः
॥
रक्तशृङ्गाग्रनयनः श्वेतवर्णो भवेद्यदि ।
सफैः प्रबालसदृशैर्नास्ति
धन्यतरस्ततः ॥

| | | |
|---|---|---|
| हिमकुन्देन्दुसङ्काशा गात्रेषु लोमबिन्दवः ।<br>श्वित्री नाम महादोषो दूरतस्तं परित्यजेत् ॥ ४ ॥<br>शृङ्गाग्रे दीपिकाकारं ज्वलते केकरे दृशौ ।<br>कपिलः पुच्छभागश्चेत् स धूम्रो मृत्युमावहेत् ॥ ५<br>दन्तशृङ्गखुरादीनां यद्येकोऽपि चलेत् स्वयम् ।<br>मुष्को वा चलते यस्य स चलः कुलनाशनः ॥ ६ ॥<br>आवर्त्ताः शुक्तयो रेखा विषमाश्च विसंस्थिताः ।<br>न्यूनाधिकाः पञ्जरास्तु खुरास्तु विषमास्तथा ॥<br>गुदान्मेढ्रान्तरे यावद्रेखा व्यक्तेव दृश्यते । | | एते धार्य्याः प्रयत्नेन मोक्तव्या यदि वा वृषाः ।<br>धारिता यदि वा मुक्ता धनधान्यविवर्द्धनाः ॥<br>चरणानि मुखं पुच्छं यस्य श्वेतानि गोपतेः ।<br>लाक्षारससवर्णाश्च तन्नीलमिति निर्द्दिशेत् ॥<br>वृष एव स मोक्तव्यो न स धार्य्यो गृहे भवेत् ।<br>तदर्थमेवाचरति लोके गाथा पुरातनी ॥<br>एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।<br>गौरीं वाप्युद्वहेद्भार्य्यां नीलं वा वृषमुत्सृजेत् ॥<br>एवं वृषं लक्षणसंप्रयुक्तं गृहोद्भवं क्रीतमथापि राजन् । |

मुक्त्वा न शोचेन्मरणं महात्मा
मोक्षे मतिञ्चाहमतोऽभिधास्ये ॥”
इति मात्स्ये वृषभलक्षणं नाम १८१
अध्यायः ॥
जलपानार्थमागतवृषस्य निवारणे
दोषो यथा,
“गवां तृष्णाभिभूतानां
पानार्थमभिधावताम् ।
अन्तरायो भवेद्यस्तु स
भवेद्ब्रह्मघातकः ॥”
इति कर्म्मलोचनम् ॥ * ॥
अस्य दानविधिर्यथा, --
वशिष्ठ उवाच ।
“यथेश्वरो दरिद्रो वा करोति विधिना
नृप ।
दानं सर्व्वगुणोपेतं तच्छृणुष्व
यथातथम् ॥
भारादित्रिपलान्तञ्च वृषं कृत्वा
विधानतः ।
युतं धेन्वाथवा दद्याच्छक्तितो
नृपसत्तम ॥
यन्मया धेनवः प्रोक्ता वृषास्तावन्त
एव हि ।
हरावेते नियोज्याः स्युर्हराय च तथा
वृषाः ॥
सर्व्वाभावात्ततो राजन् तिलपात्राणि
नित्यशः ।
सर्व्वपापविनाशाय दीयन्ते नृपसत्तम
॥
गोमयेन समालिप्य यववस्त्रसमावृते ।
वृषं हेममयं तत्र रौप्यं वा रत्नसंयुतम्
॥
तस्य नीलमयैः शृङ्गैर्मौक्तिकाक्षिण्यथो
रदाः ।
द्वात्रिंशच्छुभवज्राणि विद्रुमौष्ठौ
सुनासिका ॥
मारकती विनिर्द्दिष्टा कर्णौ चैवास्मकौ
मतौ ।

शिववृषकारणं यथा, --
श्रीकृष्ण उवाच ।
“अथ गर्व्वान्वितो रुद्रो हन्तुं त्रिपुरमुल्वणम् ।
मत्वा मनसि संहर्त्ता सर्व्वेषां जगतामिति ।
कोऽयं पतङ्गवद्दैत्य इति मत्वा ययौ रणम् ।
विहाय शूलं मद्दत्तं मदीयं कवचं परम् ॥
चिरं बभूव समरं वर्षमेकं दिवानिशम् ।
न कोऽपि जेतुं कं शक्तो द्वौ समौ समरे
सदा ॥
पृथिव्याञ्च रणं कृत्वा दैत्येन्द्रो मायया प्रिये ।
अत्यूद्‌र्ध्वञ्च समुत्तस्थौ
पञ्चाशत्कोटियोजनम् ॥
उत्तस्थौ शङ्करस्तूर्णं हन्तुं दैत्यं जगत्प्रभुः ।
जघान मुष्टिना रुद्रो दानवेन्द्रं प्रकोपतः ॥
वज्रमुष्टिप्रहारेण सद्यो मूर्च्छामवाप सः ।
क्षणेन चेतनां प्राप्य कोपाद्दानवपुङ्गवः ।
शिवं सयानमुत्तोल्य पातयामास भूतले ॥
तदाहं कलया शीघ्रं वृषरूपं विधाय च ।
सयानं शङ्करं धृत्वा विषाणाभ्यामुरुक्रमम् ।
ददौ तस्मै स्वकवचं स्वशूलमरिमर्द्दनम् ॥
मया दत्तेन शूलेन जघान त्रिपुरं हरः ।
मामेव दर्पहन्तारं तुष्टाव व्रीडितः पुनः ॥
तत्याज शङ्करो दर्पं विघ्नबीजं ततो विभुः ।
ज्ञानानन्दस्वरूपश्च निर्लिप्तः सर्व्वकर्म्मसु ॥
ततोऽहं वृषरूपेण वहामि तेन तं प्रियम् ।
मम प्रियतमो नास्ति त्रैलोक्येषु शिवात् परः
॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ३६
अध्यायः ॥
मेषादिद्वादशराश्यन्तर्गतद्वितीयराशिः । तत्प-
र्य्यायः । तावुरिः २ । अस्य विशेषसंज्ञा ।
सौम्यः । अङ्गना । युग्मम् । समः । स्थिरः ।
पुष्करः । अयं चतुष्पात् । निशासु ग्राम्यः ।
दिवा वन्यः । ह्रस्वाख्यः । दक्षिणदिक्पतिः ।
निशाख्यः । पृष्ठोदयाख्यः । अस्याधिष्ठात्री
देवता
वृषः । कृत्तिकापादत्रयरोहिणीसमुदायमृगशि
रोऽर्द्धेनैतद्राशिर्भवति । स च शीलस्वभावः ।

तस्य लक्षणं यथा, --
“बहुगुणबहुबन्धः शीघ्रकामो नताङ्गः
सकलरुचिरदेहः सत्यवादी वृषोऽयम् ॥”
इति च रतिमञ्जरी ॥ * ॥
एकादशमन्वन्तरीयेन्द्रः । यथा, --
“रुद्रपुत्रस्य ते पुत्रान् वक्ष्याम्येकादशस्य
तु ।
सर्व्वत्रगः सुशर्म्मा च देवानीकः पुरुर्गुरुः ॥
क्षत्त्रबद्धा दृढायुश्च आर्द्रकः पुत्त्रकस्तथा ।
विहङ्गमाः कामगमा निर्म्माणरुचयस्तथा ॥
एकैकस्त्रिंशकस्तेषां गणाश्चेन्द्रश्च वै वृषः ।
दशग्रीवो रिपुस्तस्य स्त्रीरूपी घातयिष्यति
॥”
इति गारुडे ८७ अध्यायः ॥
(कामान् वर्षतीति । वृष + कः ।) धर्म्मः ।
(यथा, मनुः । ८ । १६ ।
“वृषो हि भगवान् धर्म्मस्तस्य यः कुरुते
ह्यलम् ।
वृषलं तं विदुर्द्देवास्तस्याद्धर्म्मं न लोपयेत्
॥”)
शृङ्गी । उत्तरपदस्थश्चेत् श्रेष्ठः । (यथा, हरि-
वंशे । १४१ । ३८ ।
“शारदं वर्षणं यद्वत् सहेद्वीरो गवांपतिः ।
तद्वद्यदुवृषः सेहे वाणवर्षमरिन्दमः ॥”)
मूषिकः । शुक्रलः । वास्तुस्थानभेदः । इति
मेदिनी ॥ वासकः । इति विश्वः ॥ श्रीकृष्णः
।
इति त्रिकाण्डशेषः ॥ शत्रुः । इति जटाधरः
॥
कामः । बलवान् । इत्यनेकार्थकोषः ॥
ऋषभ-
नामौषधम् । इति राजनिर्घण्टः ॥ (पतिः ।
यथा, काशीखण्डे ।
“स्ववृषं या परित्यज्य परवृषे वृषायते ।
वृषली सा हि विज्ञेया न शूद्री वृषली भवेत्
॥”)

**वृषकर्णी**, स्त्री, सुदर्शना । इति रत्नमाला ॥
सुदर्शनगुलञ्च इति भाषा ॥

पद्मरागस्य वै पादाः खुरा रौप्यमयास्तथा ॥
राजतान्यस्य रोमाणि क्षौमवस्त्रेण कम्बलम् ।
पट्टेन पुच्छमुद्दिष्टं सर्व्वेषामप्ययं विधिः ॥
वृषणौ स्फटिकस्यापि लिङ्गे मणिः प्रकीर्त्तितः ।
यथा धेनुस्तथानड्वान् सुवर्णस्य तु कारयेत् ॥
सर्व्वासां फलमाप्नोति धेनूनां वृषभप्रदः ।
राज्ञः स विभवाद्दानं भक्त्या यः प्रतिपादयेत् ॥
वृषभस्याप्यशक्तौ हि तदनन्तफलं स्मृतम् ।
निःस्वो वाप्येवमेवं हि कृत्वा व्रतमतन्द्रितः ।
तत्फलं समवाप्नोति स्वल्पदानान्न संशयः ॥"
इति वह्निपुराणे वृषदानाध्यायः ॥ * ॥
तद्दानफलं यथा, --
"कन्यादानं वृषोत्सर्गं तीर्थसेवां श्रुतं तथा ।
ये कुर्व्वन्ति गृहस्थास्तु न ते तद्विषयोपगाः ॥"
इति तत्रैव कन्यादाननामाध्यायः ॥ * ॥
अपि च ।
ब्रह्मोवाच ।
"वृषगावौ समादाय युवानौ लक्षणान्वितौ ।
हेमशृङ्गौ शफे रौप्ये सवस्त्रौ पूजयेन्मुने ! ॥
शिवोमां पूजयित्वा तु तद्दिने यः प्रयच्छति ।
शिवभक्ताय विप्राय रोहिण्यां वा मृगेण वा ॥
न वियोगो भवेत्तस्य सुतपत्नीपतेः कृतः ।
वातरंहसवैमानैर्गच्छेच्छिवपुरं द्विज ॥
सुन्दरभूमिस्वामी । वातप्रकृतिः । श्वेतवर्णः ।
वैश्यजातिः । महाशब्दकरः ।
मध्यमस्त्रीसङ्गः ।
मध्यमसन्तानश्च । एतद्राशिजात एतादृग्-भवति । दाता । वाग्दुःस्वरः । निर्भयः । पर-दाराभिलाषी । इति बृहज्जातकादयः ॥ * ॥
एतद्राशिजातफलम् ।
"स्थिरमतिं सुमतिं कमनीयतां
कुशलतां हि नृणामुपभोगताम् ।
वृषगतो हिमगुर्भृशमादिशेत्
सुकृतिनः कृतिनश्च सुखान्यपि ॥" * ॥
तल्लग्नजातफलम् ।
"वृषलग्ने भवेज्जातो गुरुभक्तः प्रियंवदः ।
गुणी कृती धनी लुब्धः शूरः सर्व्वजनप्रियः ॥"
इति कोष्ठीप्रदीपः ॥ * ॥
चतुर्व्विधपुरुषमध्ये पुरुषविशेषः । (यथा, --
"पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा ।
शशो मृगो वृषोऽश्वश्च स्त्रीपुसोर्जातिलक्षणम् ॥"
इति रतिमञ्जरी ॥)

**वृषगन्धा**, स्त्री, (वृषस्य गन्धो यस्याः ।) बस्तान्त्री ।
इति राजनिर्घण्टः ॥

**वृषचक्रं**, क्ली, (वृषाकारं चक्रम् ।) कृषिकर्म्मोक्त-वृषाकारचक्रम् । यथा, --
"वृषचक्रं वृषाकारं सर्व्वावयवसंयुतम् ।
लिखित्वा विन्यसेद्भानि वृषनामर्क्षपूर्ब्बकम् ॥
मुखाक्षिकर्णशीर्षेषु शृङ्गे स्कन्धे द्विकं द्विकम् ।
त्रीणि पृष्ठे द्वयं पुच्छेऽष्टौ पादे तूदरे त्रिकम् ॥
हलप्रवाहबीजोप्तिप्रारम्भादिदिनर्क्षकम् ।
यदङ्गेषु स्थितं तस्माद्वक्ष्ये सर्व्वं शुभाशुभम् ॥
आस्ये हानिः सुखं नेत्रे कर्णे भिक्षाटनं तथा ।
शीर्षे धृतिस्तथा शृङ्गे सौख्यं स्कन्धे च मङ्गलम् ॥
पृष्ठे कष्टं शुभं पुच्छे भ्रमः पादे सुखं हृदि ।
चन्द्रयोगादिदं प्रोक्तं वृषचक्रं फलं बुधैः ॥"
इति ज्योतिस्तत्त्वम् ॥

**वृषणः**, पुं, अण्डकोषः । इत्यमरः ॥ तस्य लक्षणं यथा, --
"स्थूललिङ्गो दरिद्रः स्याद्दुःख्येकवृषणी भवेत् ।
विषमे स्त्रीचञ्चलो वै नृपः स्याद्वृषणे समे ।
प्रलम्बवृषणोऽल्पायुर्न्निर्द्रव्यो मणिभिर्भवेत् ॥"
अपि च ।
"जलान्त एकवृषणो वृषणाभ्यां चलः स्त्रियाम् ।

| | | |
|---|---|---|
| तत्र भोगांश्चिरं भुक्त्वा इह आगत्य जायते ।<br>समृद्धौ धनधान्याभ्यां पुत्त्रमित्त्रसमाकुलः ॥<br>यो वा रत्नसमायुक्तं गोयुगं पूजयेन्मुने ।<br>प्रयच्छति शिवोमा च प्रीयेतां भावितात्मनः ॥<br>स सर्व्वपापदुःखाभ्यां विमुक्तः क्रीडते सदा ।<br>इह लोके भवेद्धन्यो देहान्ते परमं पदम् ॥"<br>इति देवीपुराणे गोरत्नव्रतनामाध्यायः ॥ * ॥ | | |

समाभ्यां क्षितिपः प्रोक्तः प्रलम्बेन शताब्दवान् ॥”
इति गारुडे ६३ । ६५ अध्यायौ ॥

**वृषणकच्छूः**, स्त्री, (वृषणस्य कच्छूः ।) क्षुद्ररोग-
विशेषः । तल्लक्षणं यथा, --
“स्नानोत्सादनहीनस्य मलो वृषणसंश्रितः ।
प्रक्लिद्यते तदा स्वेदात् कण्डूं जनयते तदा ॥
ततः कण्डूयनात् क्षिप्रं स्फोटं स्रावश्च जायते ।
प्राहुर्व्वृषणकच्छूं तां श्लेष्मरक्तप्रकोपजाम् ॥
उत्सादनं उद्वर्त्तनम् । मलः मैल् इति लोके ।
प्रक्लिद्यते आर्द्रो भवति ॥ * ॥ तच्चिकित्सा
यथा, --
“सर्ज्जाब्दकुष्ठसैन्धवसितसिद्धार्थैः प्रकल्पितो
योगः ।
उद्वर्त्तनेन नियतं शमयति वृषणस्य कण्डूतिम् ॥
भिषग्वृषणकच्छून्तु चिकित्सेत् पामरोगवत् ।
अहिपूतननिर्द्दिष्टक्रिययापिच तां हरेत् ॥”
इति भावप्रकाशः ॥

**वृषणश्वः**, पुं, इन्द्रस्य घोटकः । इति त्रिकाण्डशेषः ॥
(एतन्नामकनृपविशेषः । यथा, ऋग्वेदे । १ ।
५१ । १३ ।
“मेनाभवो वृषणश्वस्य सुक्रतो ॥”
“वृषणश्वस्य एतदाख्यस्य राज्ञः मेनाभवो
मेनानाम कन्या भूः ।” इति तद्भाष्ये सायणः ॥ * ॥
सेचनसमर्थाश्वयुक्ते, त्रि । यथा, ऋग्वेदे । ८ ।
२० । १० ।
“वृषणश्वेन मरुतो वृषप्सुना रथेन वृषनाभिना ॥”
“वृषणश्वेन वृषभिः सेचनसमर्थैरश्वैरुपेतेन ।”
इति तद्भाष्ये सायणः ॥)

**वृषण्वसु**, क्ली, इन्द्रस्य धनम् । इति जटाधरः ॥
(त्रि, वर्षणकर्त्ता । यथा, ऋग्वेदे । २ । ४१ । ८ ।
“न यत्परो नान्तर आदधर्षद्वृषण्वसू ॥”
“वृषण्वसू हे धनस्य वर्षितारौ ।” इति तद्भाष्ये
सायणः ॥)

**वृषदंशकः**, पुं, (वृषं मूषिकं दशतीति । दंश +
ण्वुल् ।) विडालः । इत्यमरः ॥ (यथा, साहित्य-
दर्पणे १० परिच्छेदे ।
“क्षिपसि शुकं वृषदंशकवदने ॥”)
वृक्षविशेषः । पुराती इति भाषा ।
तत्पर्य्यायः ।
दध्याली २ चक्राङ्गी ३ सुदर्शना ४ ।
इति
राजनिर्घण्टः ॥

**वृषपर्व्वा**, [न्] पुं, शिवः । दैत्यभेदः । (यथा,
महाभारते । १ । ६७ । १६ ।
“वृषपर्व्वेति विख्यातः श्रीमान् यस्तु
महा-
सुरः ॥”
अस्य विवरणन्तु तत्रैव द्रष्टव्यम् ॥ * ॥) भृङ्गा-
रुवृक्षः । कशेरुः । इति विश्वः ॥
(विष्णुः ।
यथा, महाभारते । १३ । १४९ । ४१
।
“वृषाही वृषभो विष्णुर्वृषपर्व्वा वषोदरः
॥”
राजविशेषः । यथा, मार्कण्डेयपुराणे ।
१३४ । ५ ।
“जगृहे नरराजस्य सकाशाद्वृषपर्व्वणः
॥”)

**वृषभः**, पुं, (वृष सेचने । वृष + “ऋषिवृषिभ्यां
कित् ।” उणा० ३ । १२३ । इति
अभच् । स च
कित् ।) वृषः । (यथा, मनौ । ९ ।
५० ।
“यदन्यगोषु वृषभो वत्सानां
जनयेच्छतम् ॥”)
श्रेष्ठः । (यथा, महाभारते । ३ । ३३ ।
८७ ।
“सृञ्जयैः सह कैकेयैर्व्वृष्णीनां वृषभेण
च ॥”)
वैदर्भीरीतिभेदः । इति मेदिनी ॥
आदिजिनः ।
इति हेमचन्द्रः ॥ कर्णरन्ध्रम् ।
ऋषभनामौष-
दुःखं ददाति यो भूढो गोहत्यां लभते
ध्रुवम् ॥
प्राणिनं लङ्घयेद् यो हि देवार्च्चामनलं
जलम् ।
नैवेद्यं पुष्पमन्नञ्च स गोहत्यां
लभेद्ध्रुवम् ॥
शश्वन्नास्तीति यो वादी मिथ्यावादी
प्रतारकः ।
देवद्वेषी गुरुद्वेषी स गोहत्यां लभेद्ध्रुवम्
॥
देवताप्रतिमां दृष्ट्वा गुरुं वा ब्राह्मणं
सति ! ।
न सम्भ्रमान्नमेद्यो हि स गोहत्यां लभेत्
ध्रुवम् ॥
न ददात्याशिषं कोपात् प्रणताय च यो
द्विजः ।
विद्यार्थिने च विद्याञ्च स गोहत्यां
लभेत् ध्रुवम् ॥
गोहत्या ब्रह्महत्या च कथिता
चातिदेशिकी ।
यथा श्रुतं सूर्य्यवक्त्रात् किं भूयः
श्रोतुमिच्छसि ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २७
अध्यायः ॥

**वृषभगतिः**, पुं, (वृषभेण गतिर्यस्य ।) शिवः । इति
हारावली ॥

**वृषभध्वजः**, पुं, (वृषभः ध्वजो वाहनं यस्य ।)
शिवः । इति केचित् ॥ (यथा, रघुः ।
२ । ३६ ।
“अमुं पुरः पश्यसि देवदारुं
पुत्त्रीकृतोऽसौ वृषभध्वजेन ॥”)

**वृषभाक्षी**, स्त्री, इन्द्रवारुणी । इति राजनिर्घण्टः ॥
वृषचक्षुषि, क्ली ॥

**वृषभानुः**, पुं, सूरभानपुत्त्रः । स च राधिकापिता ।
यथा, --

**वृषध्वजः**, पुं, (वृषो ध्वजो वाहनं यस्य ।) शिवः ।
इत्यमरः ॥ (यथा, काव्यादर्शे २ स्वभावा-
ख्याने ।
"जटाभिःस्निग्धताम्राभिराविरासीद्वृषध्वजः ॥")
हेरम्बः । पुण्यकर्म्मा । इति विश्वः ॥

**वृषध्वाङ्क्षी**, स्त्री, नागरमुस्ता । इति राज-
निर्घण्टः ॥

**वृषनाशनः**, पुं, (वृषस्य नाशनं यस्मात् ।) विडङ्गः ।
इति शब्दमाला ॥

**वृषपतिः**, पुं, (वृषस्य पतिः ।) षण्डः । शिवः ।
इति केचित् ॥

**वृषपत्रिका**, स्त्री, वस्तान्त्री । इति राज-
निर्घण्टः ॥

**वृषपर्णी**, स्त्री, (वृषस्य मूषिकस्य कर्ण इव पर्णं
यस्याः । ङीष् ।) आखुपर्णो । इति रत्नमाला ॥

धम् । इत्युणादिकोषः ॥ * ॥
(चतुर्व्विधपुरु-
षान्तर्गतपुरुषविशेषः । यथा, --
"शशके पद्मिनी तुष्टा चित्रिणी रमते
मृगम् ।
वृषभे शङ्खिनी तुष्टा हस्तिनी रमते
हयम् ॥"
इति रतिमञ्जरी ॥)
गोशब्दे अलिखनात् प्रसङ्गादत्र
आतिदेशिक-
गोहत्या लिख्यते ।
"गामाहारं प्रकुर्व्वन्तं पिबन्तं यो
निवारयेत् ।
याति गोविप्रयोर्मध्ये गोहत्याञ्च लभेत्तु
सः ॥
दण्डैर्गास्ताडयन्मूढो यो विप्रो
वृषवाहनः ।
दिने दिने गवां हत्यां लभते नात्र
संशयः ॥
ददाति गोभ्य उच्छिष्टं
भोजयेद्वृषवाहकम् ।
भोजयेद्वृषवाहान्नं स गोहत्यां
लभेद्ध्रुवम् ॥
वृषलीपतिं याजयेद्यो भुङ्क्तेऽन्नं तस्य
यो नरः ।
गोहत्याशतकं सोऽपि लभते नात्र
संशयः ॥
पादं ददाति वह्नौ यो गाञ्च पादेन
ताडयेत् ।
गृहं विशेदधौताङ्घ्रिः स्नात्वा
गोवधमालभेत् ॥
यो भुङ्क्तेऽस्निग्धपादेन शेते
स्निग्धाङ्घ्रिरेव च ।
सूर्य्योदये च द्विर्भाजी स गोहत्यां
लभेत् ध्रुवम् ॥
अवीरान्नञ्च यो भुङ्क्ते योनिजीवी च
ब्राह्मणः ।
यस्त्रिसन्ध्याविहीनश्च स गोहत्यां
लभेद्ध्रुवम् ॥
पितृंश्च पर्व्वकाले च तिथिकाले च
देवताः ।

"सुचन्द्रो वृषभानुश्च ललाभ जन्म
गोकुले ।
पद्मावत्याश्च जठरे सूरभानस्य रेतसा
॥
जातिस्मरो हरेरंशः शुक्लपक्षे यथा
शशी ।
ववर्द्धानुदिनं तत्र व्रजगेहे व्रजाधिपः ॥
कलावती कान्यकुब्जे
बभूवायोनिसम्भवा ।
जातिस्मरा महासाध्वी सुन्दरी
कमला-
कला ॥
कान्यकुब्जे नृपश्रेष्ठो भनन्दन
उरुक्रमः ।
स तां संप्राप योगान्ते
यज्ञकुण्डसमुत्थिताम् ॥
कृत्वा वक्षसि राजेन्द्र स्वकान्तायै ददौ
मुदा ।
मालावती स्तनं दत्त्वा तां पुपोष
प्रहर्षिता ।
ददर्श नन्दः पथि तां गच्छतीञ्च
मुदान्वितः ॥
नन्द उवाच ।
शृणु राजेन्द्र वक्ष्यामि विशेषवचनं
शुभम् ।
सम्बन्धं कुरु कन्याया विशिष्टेन च
सांप्रतम् ॥
सूरभानसुतः श्रीमान् वृषभानुर्व्र
जाधिपः ।
नारायणांशो गुणवान् सुन्दरश्च
सुपण्डितः ॥
कन्या तेऽयोनिसंभूता
यज्ञकुण्डसमुद्भवा ।
त्रैलोक्यमोहिनी शान्ता कमलांशा
कलावती ।
स च योग्यस्तद्दुहितुस्तद्योग्या ते च
कन्यका ॥
भनन्दन उवाच ।
सम्बन्धो हि विधिवशो न मे साध्यो
व्रजाधिप ।

| | | |
|---|---|---|
| | न सेवतेऽतिथिं यो हि स गोहत्यां लभेद्ध्रुवम् ॥<br>स्वभर्त्तरि च कृष्णे वा भेदबुद्धिं करोति या ॥<br>कटूक्त्या ताडयेत् कान्तं सा गोहत्यां लभेत्<br>ध्रुवम् ।<br>गोमार्गं खननं कृत्वा ददाति शस्यमेव च ।<br>तडागे वा तदूद्र्ध्वे वा स गोहत्यां लभेद् ध्रुवम् ॥<br>प्रायश्चित्तं गोवधस्य यः करोति व्यतिक्रमम् ।<br>अर्थलोभादथाज्ञानात् स गोहत्यां लभेत् ध्रुवम् ॥<br>राजके दैवके यत्नाद्गोस्वामी गां न पालयेत् । | प्रजापतिर्योगकर्त्ता जन्मदाताहमेव च ॥<br>वृषभानुप्रिया धात्रा लिखिता चेत् सुता मम ।<br>पुरा भूतैव को वाहं केनान्येन निवार्य्यते ॥<br>नृपानुज्ञामुपादाय व्रजश्रेष्ठो व्रजं गतः ।<br>गत्वा स कथयामास सूरभानस्य संसदि ॥<br>सूरभानश्च यत्नेन नन्देन च समादरम् ।<br>सम्बन्धं योजयामास गर्गद्वारा च सत्वरम् ॥<br>वृषभानुर्मुदा युक्तः प्राप्य ताञ्च कलावतीम् । |

रेमे सुनिर्ज्जने रम्ये बुबुधे न
दिवानिशम् ॥
तयोः कन्या च कालेन राधिका
सा बभूव ह ।
दैवात् श्रीदामशापेन
श्रीकृष्णस्याज्ञया पुरा ।
अयोनिसम्भवा सा च
कृष्णप्राणाधिका सती ॥”
इति ब्रह्मवैवर्त्ते
श्रीकृष्णजन्मखण्डे १७
अध्यायः ॥

**वृषभाषा**, स्त्री, (वृषेण धर्म्मेण भासते इति । भास
+ अच् । स्त्रियां टाप् ।)
अमरावती । इति
त्रिकाण्डशेषः ॥

**वृषयः**, पुं, (वृ + “वृह्रोः षुग्दुकौ च ।” उणा० ४ ।
१०० । इति कयन् षुगागमश्च
।) आश्रयः ।
इत्युणादिकोषः ॥

**वृषलः**, पुं, गृञ्जनः । शूद्रः । (यथा, मनौ । ४ ।
१४० ।
“नाज्ञातेन समं गच्छेन्नैको न
वृषलैः सह ॥”
अस्य नामनिरुक्तिर्य्यथा, तत्रैव ।
८ । १६ ।
“वृषो हि भगवान् धर्म्मस्तस्य
यः कुरुते ह्यलम् ।
वृषलं तं विदुर्द्देवास्तस्माद्धर्म्मं न
लोपयेत् ॥”)
चन्द्रगुप्तराजः । वाजी । इति
मेदिनी ॥
अधार्म्मिकः । इति जटाधरः ॥

**वृषलात्मजः**, त्रि, (वृषलस्यात्मजः ।) अधार्म्मिक-
“उगितश्च ।” ४ । १ । ६ । इति ङीप् ।)
कामुकी ।
इत्यमरः ॥ वृषेण जब्धुमिच्छन्ती गौः ।
इति
व्याकरणम् ॥ तथा च ।
“लक्ष्मणं सा वृषस्यन्ती महोक्षं
गौरिवागमत् ।
मन्मथायुधसम्पातव्यथ्यमानमतिःपुनः
॥”
इति भट्टिः ॥

**वृषा**, स्त्री, मूषिकपर्णी । इत्यमरः ॥ कपिकच्छूः ।
इति हेमचन्द्रः ॥

**वृषा**, [न्] पुं, (वर्षतीति । वृष सेचने + “कनिन्
युवृषितक्षीति ।” उणा० १ । १५६ । इति
कनिन् ।) इन्द्रः । (यथा, रघुः । १० । ५२
।
“प्राजापत्योपनीतं तत् अन्नं प्रत्यग्रहीन्नृपः
।
वृषेव पयसां सारमाविष्कृतमुदन्वता ॥”)
कर्णः । वेदनाज्ञानम् । दुःखम् । इति
मेदिनी ॥
वृषः । (यथा, ऋग्वेदे । १० । ४३ । ८ ।
“वृषा न क्रुद्धः पतयत् रजःसु ॥”
“रजःसु लोकेषु वृषा न यथा वृषभः क्रुद्धः
सन्
प्रतिवृषभवधाय पतयत् गच्छति ।” इति
तद्-
भाष्ये सायणः ॥) षोटकः । इति हेमचन्द्रः
॥
(यथा, ऋग्वेदे । ७ । ६९ । १ ।
“आवां रथो रोदसी बद्बधानो
हिरण्ययो वृषभिर्यात्वश्वैः ॥”
“हे अश्विनौ वां रथो वृषभिः
युवभिरश्वैर्युक्तः
सन्नायातु ।” इति तद्भाष्ये सायणः ॥ पिता
।
यथा, ऋग्वेदे । ७ । २० । ५ ।
“वृषा जजान वृषणं रणाय ॥”
“एवं सञ्चोदितो विप्रैर्म्मरुत्वानहनद्रिपुम् ।
ब्रह्महत्या हते तस्मिन्नाससाद वृषाकपिम् ॥”
सूर्य्यः । यथा, महाभारते । ३ । ३ । ६१ ।
“त्वं हंसः सविता भानुरंशुमाली वृषाकपिः ॥”)

**वृषाकरः**, पुं, माषः । इति राजनिर्घण्टः ॥

**वृषाङ्कः**, पुं, (वृषोऽङ्कोऽस्य ।) शिवः । (यथा,
भागवते । ८ । ८ । १ ।
“पीते गरे वृषाङ्केण प्रीतास्तेऽमरदानवाः ॥”)
साधुः । भल्लातकः । षण्डः । इति मेदिनी ॥

**वृषाङ्कजः**, पुं, डमरुः । इति शब्दरत्नावली ॥

**वृषाञ्चनः**, पुं, (वृषेण अञ्चति गच्छतीति । अञ्चु-
गतौ + ल्युः ।) शिवः । इति त्रिकाण्डशेषः ॥

**वृषाणकः**, पुं, शिवः । इति त्रिकाण्डशेषः ॥

**वृषान्तकः**, पुं, (वृषस्यासुरस्यान्तकः ।) विष्णुः ।
इति शब्दरत्नावली ॥

**वृषायणः**, पुं, चटकः । इति हारावली ॥ (वृषेण
अयनं गमनं यस्य ।) शिवश्च ॥

**वृषाहारः**, पुं, (वृष उन्दूर आहारो यस्य ।)
विडालः । इति हारावली ॥

**वृषी**, [न्] पुं, मयूरः । इति शब्दमाला ॥

**वृषी**, स्त्री, व्रतिनां कुशादिमयासनम् । इत्यमरः ॥
(यथा, देवीभागवते । ५ । ३२ । ३० ।
“शिष्यो ददौ वृषीं तस्मै गुरुणा नोदित-
स्तदा ॥”)

**वृषोत्सर्गः**, पुं, (वृषस्योत्सर्गः ।) अशौचान्त-
द्वितीयदिनादिकर्त्तव्यत्रिशूलचक्राङ्कितवत्सतरी
चतुष्टययुक्तवृषत्यागः । वृषाभावे तत्प्रतिनिधि-
र्यथा, --
“एकादशेऽह्नि सम्प्राप्ते वृषाभावो भवेद्यदि ।
दर्भैः पिष्टैस्तु संपाद्य तं वृषं मोचयेद्बुधः ॥
वृषोत्सर्ज्जनवेलायां वृषाभावः कथञ्चन ।
मृत्तिकाभिस्तु दर्भैर्व्वा वृषं कृत्वा विमोचयेत् ॥”
इति गारुडे प्रेतकल्पे ६ अध्यायः ॥
तस्य विधिर्य्यथा । कालविवेकेऽप्यग्निपुराणम् ।

जातः । इति केचित् ॥
शूद्रोद्भवश्च ॥

**वृषली**, स्त्री, पितृगृहे अविवाहिता रजस्वला

कन्या । यथा । अत्रिकाश्यपौ ।
“पितुर्गेहे च या कन्या रजः
पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्याः सा
कन्या वृषली स्मृता ॥”
इत्युद्वाहतत्त्वम् ॥
स्वपतिं परित्यज्य या
परपतिगामिनी । यथा, --
“स्ववृषं या परित्यज्य परवृषे
वृषायते ।
वृषली सा हि विज्ञेया न शूद्री
वृषली भवेत् ॥”
इति काशीखण्डः ॥
(वृषलस्य भार्य्या । ङीप् ।) शूद्री
च ॥ (यथा,
महानिर्व्वाणतन्त्रे । १ । ४७ ।
“शूद्रान्नभोजिनः क्रूरा
वृषलीरतिकामुकाः ॥”)

**वृषलीपतिः**, पुं, (वृषल्याः पतिः ।) वृषलीविवाह-

कर्त्ता । यथा, --
“यस्तु तां वरयेत् कन्यां ब्राह्मणो
ज्ञानदुर्ब्बलः ।
अश्राद्धेयमपाङ्क्तेयं तं
विद्याद्वृषलीपतिम् ॥”
इत्युद्वाहतत्त्वम् ॥
“यदि शूद्रां व्रजेत् विप्रो
वृषलीपतिरेव सः ॥”
इति ब्रह्मवैवर्त्तपुराणम् ॥

**वृषलोचनः**, पुं, (वृषस्य लोचने इव लोचने यस्य ।)

मूषिकः । इति हमचन्द्रः ॥
वृषनयने, क्ली ॥

**वृषवाहनः**, पुं, (वृषो वाहनं यस्य ।) शिवः । इति

केचित् ॥

“वृषा सेक्ता पिता कश्यपो वृषणं कामानां
वर्षितारमिन्द्रम् ।” इति तद्भाष्ये सायणः ॥
त्रि, वर्षकः । यथा, ऋग्वेदे । १० । ६७ ।
७ ।
“ब्रह्मणस्पतिर्वृषभिर्वराहैः ॥”
“वृषभिर्वर्षितृभिर्वराहैर्वराहारैः ।” इति तद्-
भाष्ये सायणः ॥)

**वृषाकपायी**, स्त्री, (वृषाकपेः विष्णोः शिवस्य अग्ने-

रिन्द्रस्य वा भार्य्या । वृषाकपि +
“वृषाकप्यग्नीति ।”
४ । १ । ३७ । इति ङीप् । ऐकारादेशश्च
।) लक्ष्मीः ।
गौरी । इत्यमरः ॥ स्वाहा । इति भरतः ॥
शची । इति स्वामी ॥ (यथा, ऋग्वेदे । १०
। ८६ । १३ ।
“वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे
॥”
“हे वृषाकपायि कामानां
वर्षकत्वादभीष्टदेश-
गमनाच्चेन्द्रो वृषाकपिस्तस्य पत्नि ।” इति
तद्भाष्ये
सायणः ॥) जीवन्ती । शतावरी । इति
मेदिनी ॥

**वृषाकपिः**, पुं, (“वृषः कपिरस्येति । अन्येषा-

मपीति दीर्घः ।” इति उणा० ४ । १४३ ।
इत्यस्य वृत्तौ उज्ज्वलदत्तः ।) विष्णुः ।
(यथा
हरिवंशे । २१६ । ४७ ।
“ततो विभुः प्रवरवराहरूपधृक्
वृषाकपिः प्रसभमथैकदंष्ट्रया ॥”)
शिवः । (यथा, हरिवंशे । ३ । ५२ ।
“वृषाकपिश्च शम्भुश्च कपर्द्दी रैवतस्तथा
॥”)
अग्निः । इति मेदिनी ॥ इन्द्रः । इति
वृषाक-
पायीशब्दस्य शचीवाचकत्वदर्शनात् ॥
(यथा,
भागवते । ६ । १३ । १० ।

“एकादशाहे प्रेतस्य यस्य चोत्सृज्यते वृषः ।
प्रेतलोकं परित्यज्य स्वर्गलोकं स गच्छति ॥
आद्यश्राद्धे त्रिपक्षे वा षष्ठे मासि च वत्सरे ।
वृषोत्सर्गश्च कर्त्तव्यो यावन्न स्यात् सपिण्डता ।
सपिण्डीकरणादूर्द्ध्वं कालोऽन्यः शास्त्रचोदितः ॥”
यस्य प्रेतस्येति सामान्यतः श्रुतेः पितृभिन्न-
स्यापि वृषोत्सर्गः प्रतीयते ॥ * ॥ अथ वृषोत्-
सर्गं व्याख्यास्यामः । कार्त्तिक्यां पौर्णमास्यां
रेवत्यामाश्वयुज्यां दशाहे गते संवत्सरेऽतीते
वेति । अत्र मृततिथिमादाय संवत्सरगणना
दशाहवदित्यविरोधः । एकादशाह इति आद्य-
श्राद्ध इति चाशौचान्ताद्द्वितीयदिनपरम्।
“अशौचान्ताद्द्वितीयेऽह्नि शय्यां दद्याद्विलक्षणाम् ।
काञ्चनं पुरुषं तद्वत् फलवस्त्रसमन्वितम् ॥
संपूज्य द्विजदाम्पत्यं नानाभरणभूषणैः ।
वृषोत्सर्गश्च कर्त्तव्यो देया च कपिला शुभा ॥”
इति मत्स्यपुराणेनैकवाक्यत्वात् ॥
प्रेतवृषोत्सर्गे वृद्धिश्राद्धं न कर्त्तव्यम् ।

**वृषशत्रुः**, पुं, (वृषस्यासुरविशेषस्य शत्रुः ।)

विष्णुः । इति त्रिकाण्डशेषः ॥

**वृषसृक्की**, [न्] पुं, भृङ्गरोलः । इति शब्दमाला ॥

**वृषस्यन्ती**, स्त्री, (वृषं नरं शुक्रलं वा इच्छति

मैथुनाय । वृष + “सुप आत्मनः क्यच् ।” ३ । १ । ८ । इति क्यच् । “अश्वक्षीरेति ।” ७ । १ । ५१ । इति सुगागमः । ततः । “लटः शतृ-शानचाविति ।” ३ । २ । १२४ । इति शतृ ।

"नार्व्वाक् संवत्सराद्वृद्धिर्वृषोत्सर्गे विधीयते ।
सपिण्डीकरणाद्भूर्ध्वं वृद्धिश्राद्धं विधीयते ॥"
इत्युशनसो वचनात् ॥ * ॥
वृषलक्षणमाह कात्यायनः ।
"अव्यङ्गो जीववत्सायाः पयस्विन्याः सुतो बली
।
एकवर्णो द्विवर्णो वा यो वा स्यादष्टकासुतः ॥
यूथादुच्चतरो यस्तु समो वा नीच एव वा ।
सप्तावरान् सप्त परानुत्सृष्टस्तारयेद्वृषः ॥"
अष्टकासुतः अष्टकासु जातः । कामधेनुप्रभृ-
तिषु मत्स्यपुराणम् ।
"चरणानि मुखं पुच्छं यस्य श्वेतानि गोपते ।
लाक्षारससवर्णश्च तं नीलमिति निर्दिशेत् ॥
वृष एव स मोक्तव्यो न सन्धार्य्यो गृहे वसन् ।
तदर्थमेषा चरति लोके गाथा पुरातनी ॥
एष्टव्या बहवः पुत्त्रा यद्येकोऽपि गयां व्रजेत् ।
गौरीं वाप्युद्वहेद्भार्य्यां नीलंवा वृषमुत्सृजेत् ॥"
वत्सतरीर्विशेषयति ।
"अग्रतो लोहिता पत्नी पार्श्वाभ्यां नीलपाण्डरे ।
पृष्ठतश्च भवेत् कृष्णा वृषभस्य च मोक्षणे ॥" *
॥
वैधकर्म्मार्थमण्डपान्तर्व्वितानमुक्तं हयशीर्षपञ्च-
रात्रम् । "नवेन चित्रवस्त्रेण वितानं कल्पयेद्-
बुधः ।" अत्र च ।
"शुक्तवासाः शुचिर्भूत्वा ब्राह्मणान् स्वस्तिवाच्य
च ।
कीर्त्तयेद्भारतञ्चैव तथा स्यादक्षयं हविः ॥"
इति दानधर्म्मस्थवृषोत्सर्गप्रकरणीयवचनात्
अक्षयहविष्ट्वकामेन स्वस्तिवाचनानन्तरं भार-
तनामोच्चारणं कार्य्यम् ।
"यदह्ना कुरुते पापं ब्राह्मणस्त्विन्द्रियैश्चरन् ।
महाभारतमाख्याय पूर्व्वां सन्ध्यां विमुञ्चति ॥"
इत्यादि-पुराणोक्त-प्रातर्महाभारतोच्चारणवत्
राढदेशीयास्तु विराटपर्व्व पाठयन्ति । भविष्ये ।
"वृषोत्सर्गश्च द्विविधो जीवतो वा मृतस्य च ।"
इत्युपक्रम्य ।
"अनुज्ञां गृह्य च पुनर्गणेशं पूजयेद्बटे ।
ग्रहांश्चैव यजेत् पश्चात् विष्णुं संपूजयेत् ततः
॥"

वरणानन्तरं कुशण्डिकां समाप्य
यथाविधिना
चरुपाकञ्च कृत्वा चरुहोमं कुर्य्यात् । ततः
स्विष्टिकृद्धोममहाव्याहृतिहोमौ कार्य्यौ ॥
* ॥ ततः
"वृषस्य दक्षिणे पार्श्वे त्रिशूलाङ्कं
समुल्लिखेत् ।
वृषा ह्यसीति सव्येऽस्य चक्राङ्कमपि
दर्शयेत् ।
तप्तेन पश्चादयसा स्पष्टौ तावेव कारयेत्
॥
अथैनं कलसस्थाभिरद्भिस्त्को वृषेण वा ।
सर्व्वौषधिसुगन्धीभिः स्नापयेद्वत्सिका
अपि ॥
परिधाप्याहते शुक्ले वाससी हेमपट्टकम् ।
सत्यमिथ्यावेषासोमसामभ्यां शिरसि
न्यसेत् ॥"
ततो वृषवत्सतरीणामलङ्कारादिकंदत्त्वा
विल्व-
वकुलनिर्म्मितयूपे उपयूपे च बद्ध्वा एनं
युवानं इति
मन्त्रं पठित्वा वत्सतरीचतुष्टयसहितंवृषं
तत्तत्-
फलकामी अद्येत्यादिवाक्येनोत्सृजेत् ॥ *
॥ ततो
यूपाद्विमुच्य वत्सतरीचतुष्टयसहितं
वृषमैशान्यां
चालयित्वा प्रार्थयेत् । यथा, --
"न खादेत् परशस्यानि नाक्रामेद्गर्भिणीञ्च
गाम् ।
धर्म्मोऽसि त्वं चतुष्पादश्चतस्रस्ते
प्रियास्त्विमाः ।
चतुर्णां पोषणार्थाय मयोत्सृष्टास्त्वया सह
॥
देवानाञ्च पितॄणाञ्च मनुष्याणाञ्च योषितः ।
भूतानां तृप्तिजननास्त्वया सार्द्धं
व्रजन्त्विमाः ॥
नमो ब्रह्मण्यदेवेश पितृभूतर्षिपोषक ।

अलंकृत्य यथाशोभमुत्सर्गं कारयेन्मुने
॥
विवाहमेकवत्सीयनीलेन भवते सदा ।
वृषेण अश्वमेधस्य यागस्य
फलदायकम् ॥
जायेरन् बहवः पुत्त्रा यद्येकोऽपि गयां
व्रजेत् ।
यजेद्वा अश्वमेधेन नीलं वा
वृषमुत्सृजेत् ॥
रोहितो यस्तु वर्णेन शङ्खवर्णखुरो वृषः
।
लाङ्गूलशिरसश्चैव स वै नीलवृषः
स्मृतः ॥
अङ्कित्वोत्सृज्यते पूर्व्वं गाञ्चालंकृत्य
सर्व्वतः ।
तप्तेन वामतश्चक्रं याम्ये शूलं
समालिखेत् ॥
धातुना हेमतारेण आयसेनाथवाङ्कयेत्
।
एवं कृत्वा अवाप्नोति फलं
वाजिमखोदितम् ॥
यमुद्दिश्योत्सृजेद्वत्सं स लभेताविचार-
णात् ।
यथा शिवोमजा अर्च्चा पूजिता
सर्व्वकामदा ।
एवं देवत्रयं यष्ट्वा अनन्तं लभते फलम्
॥
मङ्गलाविहितं यच्च यच्च गोदानजं
फलम् ।
सहस्रक्रतवस्तेन
वृषोत्सर्गादवाप्नुयात् ॥"
इति देवीपुराणे पूजाविधि नामाध्यायः
॥

**वृष्टिः**, स्त्री, (वृष + क्तिन् ।) मेघाज्जलबिन्दुपत-
नम् । तत्पर्य्यायः । वर्षम् २ ।
इत्यमरः ॥
गोघृतम् ३ परामृतम् ४ वर्षणम् ५ ।
इति

छन्दोगपरिशिष्टम् ।
“गोशालायां प्रणीयाग्निं संस्कृत्य व्रीहितण्डु-
लान् ।
अग्निपूषेन्द्रेश्वरेभ्यो निर्व्वपेत् पायसं चरुम् ॥”
गोशालायामिति प्रधानकल्पः । वृषभ इत्युप-
क्रम्य ।
“उत्स्रष्टव्यो विधानेन श्रुतिस्मृतिनिदर्शनात् ।
प्रागुदक्प्लवने देशे मनोज्ञे निर्जने वने ॥”
सङ्कल्पानन्तरं यजमान एव प्रथमं ब्रह्मवरणा-
दिकं कुर्य्यात् तत्र ब्रह्मवरणं प्रथमतः । ज्योति-
ष्टोमे ब्रह्मोद्गातृहोत्रध्वर्य्यु इत्यादिदर्शनेन ।
गृह्यसंग्रहे ।
“द्यूते च व्यवहारे च प्रव्रते यज्ञकर्म्मणि ।
यानि पश्यन्त्युदासीनाः कर्त्ता तानि न पश्यति ।
एकः कर्म्मनियुक्तः स्यात् द्वितीयस्तन्त्रधारकः
॥
तृतीयः प्रब्रूयात् प्रश्नं ततः कर्म्म समाचरेत् ॥”

त्वयि मुक्तेऽक्षया लोका मम सन्तु
निरामयाः ॥
मा मे ऋणोऽस्तु दैवोऽथ पैत्रो भौतोऽथ
मानुषः ।
धर्म्मस्त्वं त्वत्प्रपन्नस्य या गतिः सास्तु मे
ध्रुवा ॥
यत्किञ्चित् दुष्कृतं कर्म्म लोभमोहात् कृतं
भवेत् ।
तस्मादुद्धृत्य देवेश पितुः स्वर्गं प्रयच्छ मे
॥
यावन्ति तव लोमानि शरीरे सम्भवन्ति च
।
तावद्वर्षसहस्राणि स्वर्गे वासोऽस्तु मे पितुः
॥”
इति मत्स्यपुराणोक्तं पठेत् । तत
आचाराद्-
वृषपुच्छगलितोदकेन ब्रह्मपुराणोक्ततर्पणं
कुर्य्यात्
ततः प्रकृतदक्षिणां कृत्वा
कर्म्मकारयितृभ्यो
दक्षिणां दद्यात् । इति वृषोत्सर्गतत्त्वम् ॥ *
॥
अपि च ।
“कार्त्तिक्यां कारयेत् पूजां यागं देवीप्रियं
सदा ।
गोत्सर्गन्तु प्रकर्त्तव्यं नीलं वा
वृषमुतसृजेत् ।
सर्व्वयज्ञफलं ब्रह्म प्राप्नुयादविचारवन् ॥
मनुरुवाच ।
अश्वमेधसमं पुण्यं वृषोत्सर्गादवाप्यते ॥
रेवत्याञ्चाश्विने मासि कार्त्तिक्यां
कार्त्तिकस्य
वा ॥
गोविवाहोऽथवा कार्य्यो माघ्यां वै
फाल्गुने-
ऽपि वा ॥
शिवोमामङ्गलञ्चैत्रे तृतीयायां महाफलम् ।
अश्वत्थोडुम्बरीयागं विवाहविधिना भवेत्
॥
सतोरणं भवेत्तीर्थे उत्सर्गो गोकुलेऽपि वा ।

शब्दरत्नावली ॥ तत्कारणं यथा, --
“अमृतादित्रये यत्र भवन्ति
सर्व्वखेचराः ।
तदा वृष्टिः क्रमाज्ज्ञेया
धृत्यर्कवसुवासरैः ॥”
इति स्वरोदयः ॥ * ॥
अपि च ।
“ब्रुवन्तु परमार्थञ्च किमिन्द्राद्वृष्टिरेव च
।
सूर्य्याद्धि जायते तोयं तोयात्
शस्यानि
शाखिनः ॥
तेभ्योऽन्नानि फलान्येव तेभ्यो
जीवन्ति जीविनः ।
सूर्य्यग्रस्तञ्च नीरञ्च काले तस्मात्
समुद्भवः ।
सूर्य्यो मेघादयः सर्व्वे विधात्रा ते
निरूपिताः ॥
यत्राब्दे यो जलधरो गजश्च सागरो
मरुत् ।
शस्याधिपो नृपो मन्त्री विधात्रा ते
निरू-
पिताः ॥
जलाढकानां शस्यानां तृणानाञ्च
निरूपितम् ।
अब्देऽब्देऽस्त्येव तत् सर्व्वं कल्पे
कल्पे युगे युगे ॥
हस्ती समुद्रादादाय करेण
जलमीप्सितम् ।
दद्याद्घनाय तद्दद्याद्वातेन प्रेरितो घनः
।
स्थाने स्थाने पृथिव्याञ्च काले काले
यथोचितम् ॥
ईश्वरेच्छयाविर्भूतं तूर्णं भूतं
प्रतिबन्धकम् ।
भूतं भव्यं भविष्यञ्च महत् क्षुद्रञ्च
मध्यमम् ।
धात्रा निरूपितं कर्म्म केन तात
निवार्य्यते ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे
२१ अः ॥

|  |  |  |
| --- | --- | --- |
|  | चतस्रो वत्सिका भद्रा द्वौ वा संभवतोऽपि वा ॥<br>वत्सं सर्व्वाङ्गसंपूर्णं कन्या सा वत्सिका भवेत् । | आसन्नवृष्टिसूचकानि यथा, --<br>"मयूराः स्तनयित्नूनां शब्देन हृषिता मुहुः ।<br>केकायन्ति प्रतिवने सततं वृष्टिसूचकाः ॥<br>मेघोत्सुकानां मधुरश्चातकानां मनोहरः ।<br>श्रूयतामतिमत्तानां वृष्टिसन्निधिसूचकः ॥<br>गगने शक्रचापेन कृतं साम्प्रतमास्पदम् ।<br>धारासारशरैस्तापं छेत्तुं प्रति यथोद्गतः ॥"<br>इति कालिकापुराणे १५ अध्यायः ॥<br>* ॥ |

वृष्टिफलं यथा, --
“पतिव्रताया वचनान्नोद्गच्छति दिवाकरः ।
सूर्य्योदयं विना नैव स्नानदानादिकाः क्रियाः ॥
नाग्नेर्व्विहरणञ्चैव क्रत्वभावश्च लक्ष्यते ।
नैवाप्यायनमस्माकं विना होमेन जायते ॥
वयमाप्यायिता मर्त्त्यैर्यज्ञभागैर्यथोदितैः ।
वृष्ट्यादिनानुगृह्णीमो मर्त्यान् शस्यादिसिद्धये ॥
निष्पादितास्वोषधीषु मर्त्या यज्ञैर्यजन्ति नः ।
एषां वयं प्रयच्छामः कामान् यज्ञादिपूजिताः ॥
अधो हि वर्षाम वयं मर्त्याश्चोद्र्ध्वप्रवर्षिणः ।
तोयवर्षेण हि वयं हविर्व्वर्षेण मानवाः ॥
येऽस्माकं न प्रयच्छन्ति नित्या नैमित्तिकीः
क्रियाः ।
क्रतुभागं दुरात्मानः स्वयं येऽश्नन्ति लोलुपाः ॥
विनाशाय वयं तेषां तोयसूर्य्याग्निमारुतैः ।
क्षितिञ्च संदूषयामः पापानामपकारिणाम् ॥
दुष्टतोयादिदोषेण तेषां दुष्कृ तकारिणाम् ।
उपसर्गाः प्रवर्त्तन्ते मरणाय सुदारुणाः ॥
ये चास्मान् प्रीणयित्वा तु भुञ्जते शेषमात्मना ।
तेषां पुण्याद्वयं लोकान् वितरामो महा-
त्मनाम् ॥”
इति मार्कण्डेयपुराणे पतिव्रतामाहात्म्यनामा-
ध्यायः ॥ * ॥ वृष्टिजलगुणाः ।
“गगनाम्बु त्रिदोषघ्नं गृहीतं यत् सुभाजने ।
बल्यं रसायणं मेध्यं पात्रापेक्षि च तत्परम् ॥
दिवार्ककिरणैर्जुष्टं स्पृष्टमिन्दुकरैर्निशि ।
अरूक्षमनभिष्यन्दि तत्तुल्यं गगनाम्बुना ॥
वर्षासु चरन्ति घनैः सहोरगा वियति कीट-
लूताश्च ।
तद्विषजुष्टमपेयं खजलमगस्त्योदयात् पूर्व्वम् ॥
कालेन पक्वं निर्द्दोषमगस्त्येनाविषीकृतम् ।
हंसोदकमितिख्यातं शारदं विमलं जलम् ॥”
इति राजवल्लभः ॥ * ॥
अथ तस्य भेदाः ।
“पानीयं मुनिभिः प्रोक्तं दिव्यं भौममिति
द्विधा ।
दिव्यं चतुर्व्विधं प्रोक्तं धाराजं करकाभवम् ॥
तौषारञ्च तथा हैमं तेषु धारं गुणाधिकम् ॥” *
तत्र धारस्य लक्षणं गुणाश्च ।
मेघैरन्तरिता वृष्टीः कुर्व्वन्तीति वचः
सताम् ॥
गाङ्गमाश्वयुजे मासि प्रायो वर्षति
वारिदः ।
सर्व्वथा तज्जलं देयं तथैव चरके वचः
॥
स्थापितं हैमने पात्रे राजते मृण्मयेऽपि
वा ।
शाल्यन्नं येन संसिक्तं
भवेदक्लेदिवर्णवत् ॥
तत् गाङ्गं सर्व्वदोषघ्नं ज्ञेयं
सामुद्रमन्यथा ।
तत्तु सक्षारलवणं शुक्रदृष्टिबलापहम् ॥
विस्रञ्च दोषलं तीक्ष्णं सर्व्वकर्म्मसु
गर्हितम् ।
सामुद्रं त्वाश्विने मासि
गुणैर्गाङ्गवदादिशेत् ॥
यतोऽगस्त्यस्य विप्रर्षेरुदयात् सकलं
जलम् ।
निर्म्मलं निर्व्विषं स्वादु शुक्रलं
स्याददोषलम् ॥” *
अतएवाह ।
“फुत्कारविषवातेन नागानां
व्योमचारिणाम् ।
वर्षासु सविषं तोयं दिव्यमप्याश्विनं
विना ॥”
इति भावप्रकाशः ॥

**वृष्टिघ्नी**, स्त्री, भृङ्गपर्णिका । इति शब्दचन्द्रिका ॥

गुजराटी एलाइच इति भाषा ।
वृष्टिनाशके,
त्रि ॥

**वृष्टिजीवनः**, पुं, (वृष्ट्या वृष्टिर्व्वा जीवनं यस्मिन् ।)

देवमातृकदेशः । इति हेमचन्द्रः ॥
वृष्टि-
जीवने, त्रि ॥

**वृष्टिभूः**, पुं, (वृष्टौ वर्षकाले भूरुत्पत्तिर्यस्य ।) भेकः ।

**वृह**, वृद्धौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

अक०-सेट् ।) वर्हति ।
वृहिर्ध्वनदर्ध्योरित्यने-
नैवेष्टसिद्धेऽस्य पाठो वृद्धौ
इरनुबन्धवर्ज्जनार्थः ।
किन्तु अनेनैवेष्टसिद्धे तत्र ऋद्धि ग्रहणं
परत्रा-
नुवृत्यर्थमेव । अयं धातुः कैश्चिन्य
मन्यते ।
इति दुर्गादासः ॥

**वृह**, इ ध्वने । ऋद्धौ । सप्तमस्वरी ॥ (भ्वा०-पर०-

अक०-सेट् ।) इ, वृंह्यते । ववृंहिरे
गजपतयः ।
इति माघः ॥ आत्मनेपदं प्रमादादिति
वल्लभः ॥
ध्वनश्चेति हस्तिकर्त्तृकः । वृंहितं
करिगर्जित-
मित्यमरसिंहात् । वृंहितं करिगर्जायां
शब्द-
मात्रेऽपि कथ्यते । इति शब्दमहार्णवात् ।
कदाचिदन्यकर्त्तृकोऽपि । तेन
श्रीहर्षचरिते
सिंहवृंहितमिति बाणभट्टप्रयोगः । इति
दुर्गा-
दासः ॥

**वृह**, इ कि त्विषि । इति कविकल्पद्रुमः ॥ (चुरा०-

पक्षे भ्वा०-पर०-अक०-सेट् ।)
सप्तमस्वरी ।
इ, वृंह्यते । कि, वृंहयति वृंहति । इति
दुर्गादासः ॥

**वृह**, इ ङ वृद्धौ । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-अक०-सेट् ।) इ, वृंह्यते । ङ,
वृंहते ।
इति दुर्गादासः ॥

**वृह**, इर् ध्वने । ऋद्धौ । इति कविकल्पद्रुमः ॥

"धाराभिः पतितं तोयं गृहीतं स्फीतवाससा।
शिलायां वसुधायां वा धौतायां पतितं च यत् ॥
सौवर्णे राजते ताम्रे स्फाटिके काचनिर्म्मिते।
भाजने मृण्मये चापि स्थापितं धारमुच्यते ॥
धारनीरं त्रिदोषघ्नमनिर्द्देश्यं रसं लघु।
सौम्यं रसायनं बल्यं तर्पणं ह्लादि जीवनम् ॥
पाचनं मतिकृन्मूर्च्छातन्द्रादाहश्रमक्लमान्।
तृष्णां हरति तत् पथ्यं विशेषात् प्रावृषि स्मृतम् ॥" * ॥
अथ धाराजलस्य भेदौ।
"धाराजलञ्च द्विविधं गाङ्गसामुद्रभेदतः।"
तत्र गाङ्गसामुद्रयोर्लक्षणं गुणाश्च।
"आकाशगङ्गासम्बन्धि जलमादाय दिग्गजाः।

इति हारावली ॥ वृष्टिभवे, त्रि ॥

**वृष्णिः**, पुं, (वृष + "सृवृषिभ्यां कित्।" उणा० ४ ४९। इति निः। स च कित्।) मेषः। इत्यमरः ॥ यादवः। इति शब्दरत्नावली ॥ (यथा, महा-भारते। ५। ७२। ४।
"यथा हि सर्व्वस्वापत्सु पासि वृष्णीनरिन्दम।
तथा ते पाण्डवा रक्ष्याः पाह्यस्मान्महतो भयात् ॥")
कृष्णः। इति त्रिकाण्डशेषः ॥

**वृष्णिः**, त्रि, पाषण्डः। चण्डः। इति शब्दरत्ना-वली ॥

**वृष्णिगर्भः**, पुं, श्रीकृष्णः। इति हारावली ॥

**वृष्यं**, क्ली, (वृष + "विभाषा कृवृषोः।" ३। १। १२०। इति क्यप्।) वाजीकरम्। इति राज-निर्घण्टः ॥

**वृष्यः**, पुं, (वृषाय हितः। वृष + यत्।) माषः। इति हेमचन्द्रः ॥

**वृष्यः**, त्रि, (वृषाय कामुकाय हितः। वृष + "खलयवमाषेति।" ५। १। ७। इति यत्।) शुक्र-वृद्धिकारकौषधादिः। इति भावप्रकाशः ॥

**वृष्यकन्दा**, स्त्री, (वृष्यं बलकारकं कन्दं यस्याः।) विदारी। इति राजनिर्घण्टः ॥

**वृष्यगन्धा**, स्त्री, (वृष्यो गन्धो यस्याः।) वृद्ध-दारकः। इति शब्दरत्नावली ॥

**वृष्यगन्धिका**, स्त्री, (वृष्यो गन्धो वस्याः। स्वार्थे कन्। टापि अत इत्वम्।) अतिबला। इति

(भ्वा०-पर०-अक०-सेट्।) इर्, अवृहत्। अवर्हीत्। ध्वनः शब्दः। ऋद्धिर्व्वृद्धिः। इति दुर्गादासः ॥

**वृह**, श ऊ उद्यमे। इति कविकल्पद्रुमः ॥ (तुदा०-पर०-अक०-वेट्।) श, वृहति। ऊ, अवर्हीत्। अवृक्षत्। इति दुर्गादासः ॥

**वृ(बृ)हच्चञ्चुः**, पुं, (वृहती चञ्चुः शाकविशेषः।) महाचञ्चुशाकः। इति राजनिर्घण्टः ॥ (वृहती चञ्चुर्यस्येति दीर्घचञ्चुयुक्ते, त्रि ॥)

**वृ(बृ)हच्चित्तः**, पुं, फलपूरः। इति शब्दचन्द्रिका ॥

**वृ(बृ)हच्छल्कः**, पुं, (वृहन् शल्को यस्य।) चिङ्गट-मत्स्यः। इति जटाधरः ॥

**वृ(बृ)हज्जीवन्ती**, स्त्री, वृहज्जीवन्तिकावृक्षः। तत्पर्य्यायः। पत्रभद्रा २ प्रियङ्करी ३ मधुरा ४ जीवपुष्टा ५ बृहज्जीवा ६ यशस्करी ७। अस्या गुणाः। बहुवीर्य्यदातृत्वम्। भूतविद्रावणत्वम्। वेगाद्रसनियामकत्वञ्च। इति राजनिर्घण्टः ॥

**वृ(बृ)हड्ढक्का**, स्त्री, (वृहती ढक्का।) ढक्का-विशेषः। यथा, --
"वृहड्ढक्का तु भेरी स्त्री पुमान् दुन्दुभिरा-नकः।
द्रगडः प्रतिपत्तूर्य्यमानकः पटहोऽस्त्रियाम् ॥"
इति जटाधरः ॥

**वृ(बृ)हतिका**, स्त्री, (वृहती + "बृहत्या आच्छा-दने।" ५। ४। ६। इति स्वार्थे कन्।) उत्तरीय-वस्त्रम्। इत्यमरः ॥ वृहती। इति रत्नमाला ॥

| | राजनिर्घण्टः ॥<br>**वृष्यवल्लिका**, स्त्री, विदारी । इति राजनिर्घण्टः ॥<br>**वृष्या**, स्त्री, ऋद्धिनामौषधम् । इति रत्नमाला ॥<br>शतावरी । आमलकी । इति राजनिर्घण्टः ॥ | |
|---|---|---|

**वृ(ब्)हती**, स्त्री, (वृहत् + गौरादित्वात् ङीष् ।)

क्षुद्रवार्त्ताकी । व्याकुड इति भाषा । तत्पर्य्यायः ।
महती २ क्रान्ता ३ वार्त्ताकी ४ सिंहिका ५
कुली ६ राष्ट्रिका ७ स्थूलकण्टा ८ भण्टाकी ९
महोटिका १० बहुपत्री ११ कण्टतनुः १२
कण्टालुः १३ कट्फला १४ डोरडी १५ वन-
वृन्ताकी १६ । इति राजनिर्घण्टः ॥ सिंही १७
प्रसहा १८ रक्तपाकी १९ लतावृहतिका २० ।
इति रत्नमाला ॥ अस्या गुणाः । कटुत्वम् ।
तिक्तत्वम् । उष्णत्वम् । वातज्वरारोचकाम-
काशश्वासहृद्रोगनाशित्वञ्च। इति राज-
निर्घण्टः ॥ अपि च ।
"वृहती पाचनी सोष्णा ग्राहिणी वात-
नाशिनी ॥"
इति राजवल्लभः ॥ * ॥
महती । इत्यमरः ॥ (इयन्तु नारदस्य वीणा ।
केचित्तु विश्वावसोर्गन्धर्व्वराजस्य वीणां बृहती-
माहुः । तथा च ।
"विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती ।
महती नारदस्य स्यात् सरस्वत्यास्तु कच्छपी ॥"
इति माघटीकायां मल्लिनाथधृतवैजयन्ती ।
१ । १० ॥ * ॥) उत्तरीयवस्त्रम् । वारिधानी ।
वाक् ॥ कण्टकारी । इति मेदिनी ॥ (मर्म्म-
स्थानविशेषः । यथा, सुश्रुते । ३ । ६ ।
"स्तनमूलादुभयतः पृष्ठवंशस्य बृहती नाम
तत्र शोणितातिप्रवृत्तिनिवृत्तिनिमित्तैरुपद्रवै
र्म्रियते ॥") छन्दोभेदः । स तु नवाक्षरपादः ।
यथा, --
"उक्थात्युक्था तथा मध्या प्रतिष्ठान्या सुपू-
र्व्विका ।
गायत्र्युष्णिगनुष्टुप् च वृहती पंक्तिरेव च ॥
इत्यादि । तद्भेदानाह । वृहती नवाक्षरा यथा,
भुजगशिशुसुता नौ मः ।
ह्रदतटनिकटक्षौणी भुजगशिशुसुता यासीत् ।
मुररिपुदलिते नागे व्रजजनसुखदा साभूत् ॥
युतेत्येवं शम्भुप्रभृतिषु पाठः । भृतेत्येवमाधु-
निकाः पठन्ति । स्यान्मणिमध्यं चेद्भमसाः ।

**वृ(ब्)हत्कन्दः**, पुं, (वृहत् कन्दं यस्य ।) गृञ्जनः । इति

रत्नमाला ॥ विष्णुकन्दः । इति
राजनिर्घण्टः ॥

**वृ(ब्)हत्कालशाकः**, पुं, (वृहन् महान् काल-

शाकः ।) शोथजिह्मः । इति
त्रिकाण्डशेषः ॥
वृहत्कालकासुन्दिया इति भाषा ॥

**वृ(ब्)हत्काशः**, पुं, (वृहन् काशः ।) खड्गटः ।

इति हारावली ॥ खाग्डा इति
भाषा ॥

**वृ(ब्)हत्कुक्षिः**, त्रि, (वृहन् कुक्षिर्यस्य ।) तुन्दिलः ।

इत्यमरः ॥

**वृ(ब्)हत्तालः**, पुं, (वृहन् तालः ।) हिन्तालः ।

इति राजनिर्घण्टः ॥

**वृ(ब्)हत्तिका**, स्त्री, (वृहन् तिक्तो यस्याः ।)

पाठा । इति राजनिर्घण्टः ॥

**वृ(ब्)हत्तृणः**, पुं, वंशः । इति शब्दचन्द्रिका ॥

(क्वचित् क्लीवेऽपि दृश्यते ॥)

**वृ(ब्)हत्त्वक्**, [च्] पुं, (वृहती त्वक् यस्य ।) ग्रहना-

शनवृक्षः । इति रत्नमाला ॥
छातियान् इति
भाषा ॥

**वृ(ब्)हत्पत्रः**, पुं, (वृहत्पत्रं यस्य ।) हस्तिकन्दः ।

इति राजनिर्घण्टः ॥

**वृ(ब्)हत्पत्रा**, स्त्री, (वृहत्पत्रं यस्याः ।) त्रिपर्ण्णिका ।

इति राजनिर्घण्टः ॥

**वृ(ब्)हत्पाटलिः**, पुं, धुस्तूरः । इति त्रिकाण्ड-

**वृ(ब्)हद्दलः**, पुं, (वृहद्दलं यस्य ।) पट्टिकालोध्रः ।

हिन्तालः । इति राजनिर्घण्टः ॥

**वृ(ब्)हद्धलं**, क्ली, (वृहत् हलं यस्य ।) महालाङ्गलम् ।

तत्पर्य्यायः । हलिः २ । इति त्रिकाण्डशेषः ॥

**वृ(ब्)हद्बीजः**, पुं, (वृहत् बीजं यस्य ।) आम्रातकः ।

इति शब्दचन्द्रिका ॥

**वृ(ब्)हद्भट्टारिका**, स्त्री, दुर्गा । इति शब्दमाला ॥

**वृ(ब्)हद्भानुः** पुं, (वृहन् भानू रश्मिर्यस्य ।) अग्निः ।

(यथा, महाभारते । ३ । २२० । ८ ।
"तपसश्च मनुं पुत्त्रं भानुञ्चाप्यङ्गिराः सृजत् ।
बृहद्भानुन्तु तं प्राहुर्ब्राह्मणा वेदपारगाः ॥")
चित्रकवृक्षः । इत्यमरः ॥ (सत्यभामापुत्त्रः ।
यथा, भागवते । १ । ६१ । १० ।
"चन्द्रभानुर्व्वृहद्भानुरतिभानुस्तथाष्टमः ॥"
सत्रायणपुत्त्रः । यथा, भागवते । ८ । १३ ।
३५ ।
"सत्रायणस्य तनयो वृहद्भानुस्तदा हरिः ॥"
पृथुलाक्षस्य पुत्त्रः । यथा, भागवते । ९ । २३
। ११ ।
"चतुरङ्गो रोमपादात् पृथुलाक्षस्य तत्सुतः ।
वृहद्रथो वृहत्कर्म्मा वृहद्भानुश्च तत्सुताः ॥"
वृहद्रश्मिविशिष्टे, त्रि । यथा, ऋग्वेदे । १ ।
३६ । १५ ।
"वृहद्भानो यविष्ठ्य ॥"
"हे अग्ने हे वृहद्भानो वृहन्तो भानवो यस्य
तादृश ।" इति तद्भाष्ये सायणः ॥)

**वृ(ब्)हद्रथः**, पुं, (वृहन् रथो यस्य ।) इन्द्रः । यज्ञ-

पात्रम् । मन्त्रविशेषः । सामवेदांशः । नदी-
विशेषे, स्त्री । इति केचित् ॥ (तिग्मपुत्त्रः
यथा, मात्स्ये । ५० । ८५ ।
"तिग्माद्बृहद्रथो भाव्यो वसुदामा वृहद्रथात् ॥"
शतधन्वपुत्त्रः । यथा, भागवते । १२ । १ ।
१३ ।
"शतधन्वा ततस्तस्य भविता तद्बृहद्रथः ॥"
देवरातपुत्त्रः । यथा, भागवते । ९ । १३ ।
१५ ।

कालियभोगा भोगगतस्तन्मणिमध्यस्फीतरुचा
।
चित्रपदा भो नन्दसुतश्चारु ननर्त्त स्मेरमुखः ॥
सजरैर्भुजङ्गसङ्गता ।
तरला तरङ्गरिङ्गितैर्यमुना भुजङ्गसङ्गता ।
कथमेतु वत्सचारकश्चपलः सदैव तां हरिः ॥”
इति छन्दोमञ्जरी ॥

**वृ(बृ)हतीपतिः**, पुं, (वृहतीनां वाचां पतिः ।)

बृहस्पतिः । इति हेमचन्द्रः ॥

**वृ(बृ)हत्**, त्रि, (वृह वृद्धौ + “वर्त्तमाने पृषद्बृहन्मह-

ज्जगच्छतृवच्च ।” उणा० २ । ८४ । इति अतिप्रत्ययेन
निपातनात् साधु ।) महत् । इत्यमरः ॥
(यथा, माघे । २ । १० ।
“वृहत्सहायः कार्य्यान्तं क्षोदीयानपि गच्छति ।
संभूयाम्भोधिमभ्येति महानद्या नगापगा ॥”)

**वृ(बृ)हत्कः**, त्रि, (वृहत्प्रकारः । वृहत् + “चञ्च-

द्बृहतोरुपसंख्यानम् ।” ५ । ४ । ३ । इत्यस्य वार्त्ति-
कोक्त्या कन् ।) वृहत् । वृहच्छब्दात् कन्प्रत्ययेन
निष्पन्नमिदम् ॥

शेषः ॥

**वृ(बृ)हत्पादः** पुं, (वृहन् पादो यस्य ।) वटवृक्षः ।

इति शब्दचन्द्रिका ॥

**वृ(बृ)हत्पारेवतं**, क्ली, (वृहत् महत् पारेवतम् ।)

महापारेवतम् । इति राजनिर्घण्टः ॥

**वृ(बृ)हत्पाली**, [न्] पुं, वनजीरः । इति राज-

निर्घण्टः ॥

**वृ(बृ)हत्पीलुः**, पुं, (वृहन् पीलुः ।) महापीलुः ।

इति राजनिर्घण्टः ॥

**वृ(बृ)हत्पुष्पी**, स्त्री, (वृहत् पुष्पं यस्याः । ङीष् ।)

घण्टारवा । इति जटाधरः ॥

**वृ(बृ)हत्फलः**, पुं, (वृहत् फलं यस्य ।) चचेण्डा ।

इति राजनिर्घण्टः ॥

**वृ(बृ)हत्फला**, स्त्री, (वृहत् फलं यस्याः ।) कटु-

तुम्बी । महेन्द्रवारुणी । कुष्माण्डी । महाजम्बूः ।
इति राजनिर्घण्टः ॥

**वृ(बृ)हदङ्गः**, पुं, (वृहदङ्गं यस्य ।) मतङ्गजः । इति

शब्दचन्द्रिका ॥

**वृ(बृ)हदम्लः**, पुं, (वृहन् अम्लो यस्य ।) रुजाकरः ।

इति शब्दचन्द्रिका ॥ काम्राङ्गा
इति भाषा ॥

**वृ(बृ)हदेला**, स्त्री, (वृहती एला ।) स्थूलैला । इति

राजनिर्घण्टः ॥

**वृ(बृ)हत्गृहः**, पुं, (वृहद्गृहं यस्मिन् ।) कारूष-

“तस्माद्बृहद्रथस्तस्य माहावीर्य्यः सुधृत्पिता ॥”
तिमिराजपुत्त्रः । यथा, तत्रैव । ९ । २२ । ४३ ।
“तिमेर्व्वृहद्रथस्तस्मात् शतानीकः सुदासजः ॥”
पृथुलाक्षस्य पुत्त्रः । यथा, तत्रैव । ९ । २३ । ११ ।
“वृहद्रथो वृहत्कर्म्मा वृहद्भानुश्च तत्सुताः ॥”
प्रभूतरथे, त्रि । यथा, ऋग्वेदे । ५ । ८० । २ ।
वृहद्रथा वृहती विश्वमिन्वा ।”
“वृहद्रथा प्रभूतरथा ।” इति तद्भाष्ये सायणः ॥)

**वृ(बृ)हद्रावी**, [न्] पुं, (वृहदतिशयं द्रवतीति । द्रु +

णिनिः ।) क्षुद्रोलूकः । इति राजनिर्घण्टः ॥

**वृ(बृ)हद्वल्कः**, पुं, (वृहद्वल्कः वल्कलं यस्य ।)

पट्टिकालोध्रः । इति राजवल्लभः ॥

**वृ(बृ)हद्वातः**, पुं, (वृहन् वातो यस्मात् । अश्मरी-

हरः । इति रत्नमाला ॥ देधान इति भाषा ॥

**वृ(बृ)हद्वारुणी**, स्त्री, महेन्द्रवारुणी । इति राज-

निर्घण्टः ॥

**वृ(बृ)हन्नलः**, पुं, (वृहन् नलः ।) महापोटगलः ।

इति मेदिनी ॥ अर्ज्जुनः । यथा, --
“पार्थः किरीटी गाण्डीवी गुडाकेशो वृहन्नलः ।
अर्ज्जुनः फाल्गुनो जिष्णुर्विजयश्च धनञ्जयः ॥

| | | |
|---|---|---|
| | देशः । स तु विन्ध्यपर्व्वतस्य पश्चात् मालव-देशस्य निकटे वर्त्तते । इति हेमचन्द्रः ॥ त्रिकाण्डशेषे वृहद्गुह इति पाठः ॥ **वृ(बृ)हद्गोलं**, क्ली, (वृहत् गोलं गोलाकारफलं यस्य ।) शीर्णवृन्तम् । इति शब्दचन्द्रिका ॥ तरमूज इति भाषा ॥ | |

सव्यसाची सुभद्रशः शब्दभेदी कपिध्वजः ।
वार्त्तघ्निश्चापि वीभत्सुः ॥” इति त्रिकाण्डशेषः ॥
अपि च ।
“अर्ज्जुनः फाल्गुनः पार्थः सव्यसाची धनञ्जयः ।
राधावेधी किरीट्यैन्द्री जिष्णुः श्वेतहयो नरः ॥
वृहन्नलो गुडाकेशः सुभद्रेशः कपिध्वजः ।
वीभत्सुः कर्णजित्तस्य गाण्डीवं गाण्डिवं धनुः ॥”
इति हेमचन्द्रः ॥

**वृहन्नला**, स्त्री, अर्ज्जुनः । इति मेदिनी ॥ द्वादशवर्ष-वनवासानन्तरमज्ञातवासे विराटभवने विराट-कन्याया नृत्यगीतादिशिक्षार्थं स्त्रीक्लीववेशे-नार्जुनो वृहन्नलेति नाम्ना ख्यातोऽभूत् । यथा,
अर्ज्जुन उवाच ।
“गायामि नृत्याम्यथ वादयामि
भद्रोऽस्मि नृत्ये कुशलोऽस्मि गीते ।
त्वमुत्तरायै प्रदिशस्व मां स्वयं
भवामि देव्या नरदेव ! नर्त्तकः ॥
इदन्तु रूपं मम येन किन्तव
प्रकीर्त्तयित्वा भृशशोकवर्द्धनम् ।
वृहन्नलां मां नरदेव विद्धि
सुतं सुतां वा पितृमातृवर्जिताम् ॥
विराट उवाच ।
ददामि ते हन्त वरं वृहन्नले
सुताञ्च मे नर्त्तय याश्च तादृशीः ॥”
इति भहाभारते विराटपर्व्व ॥

**वृ(बृ)हस्पतिः**, पुं, (वृहतां वाचां पतिः । “पार-स्करेति ।” ६ । १ । १५७ । इति सुट् निपात्यते ।)
अङ्गिरसः पुत्त्रः । स च देवानां गुरुः धर्म्मशास्त्र-प्रयोजकः नवग्रहमध्ये पञ्चमग्रहश्च । तत्-पर्य्यायः । सुराचार्य्यः २ गीष्पतिः ३ धिषणः ४ गुरुः ५ जीवः ६ आङ्गिरसः ७ वाचस्पतिः ८ चित्रशिखण्डिजः ९ । इत्यमरः ॥ उतथ्या-नुजः १० गोविन्दः ११ चारुः १२ द्वादश-रश्मिः १३ गिरीशः १४ दिदिवः १५ पूर्ब्ब-आचार्य्यपूज्यो मधुरस्वभावो
वारे भवेद्देवगुरोर्मनुष्यः ॥”
इति कोष्ठीप्रदीपः ॥ * ॥
स च शिवस्य गुरुपुत्त्रः यथा, --
महेन्द्र उवाच ।
“कथं वा देवकर्त्तुश्च
सिद्धानां योगिनां गुरोः ।
मृत्युञ्जयस्य शम्भोश्च
गुरुपुत्त्रो बृहस्पतिः ।
ततो ज्ञानी महादेवः कथं
शिष्यो गुरोः पितुः ॥
ब्रह्मोवाच ।
कथेयमतिगुप्ता च पुराणेषु
पुरन्दर ।
इमां पुरा प्रवृत्तिञ्च कथयामि
निशामय ॥
मृतवत्सा कर्म्मदोषाद्भार्य्या
अङ्गिरसः पुरा ।
व्रतं चकार मद्वाक्यात्
कृष्णस्य परमात्मनः ॥
व्रतं पुंसवनं नाम वर्षमेकं
चकार सा ।
सनत्कुमारो भगवान्
कारयामास तां व्रतम् ॥
स्वेच्छामयः परं ब्रह्म
भक्तानुग्रहविग्रहः ।
तदागत्य च गोलोकात्
परमात्मा कृपामयः ॥
स व्रतानशनक्षीणां तामुवाच
कृपानिधिः ।
प्रणतां साश्रुनेत्राञ्च विनीताञ्च
तया स्तुतः ॥
श्रीकृष्ण उवाच ।
गृहाणेदं यज्ञफलं मम
तेजःसमन्वितम् ।
भुङ्क्ष्व मद्वरपुत्त्रस्ते
भविष्यति मदंशतः ॥
पतिर्गुरुश्च देवानां वृहतां
ज्ञानिनां वरः ।
“वृहस्पतिं वृहतां महतां मन्त्राणां पालयितारं
देवं उक्तलक्षणं पुरोहितं वा ।” इति तद्भाष्ये
सायणः ॥)

**वृ(बृ)हस्पतिचक्रं**, क्ली, (वृहस्पतेः चक्रम् ।)
नृणां शुभाशुभज्ञानार्थं वृहस्पतिसञ्चारकालीन-अश्विन्यादिसप्तविंशतिनक्षत्रयुक्तनराकारचक्रम् । यथा, --
“शीर्षे चत्वारि राज्यं जलधिरपि करे दक्षिणे
चापि सौख्यं
चैकं कण्ठे विभूतिं मदनशरमितं वक्षसि
प्रीतिसंहम् ।
पादस्थाः षट् च पीडां पुनरपि जलधिर्वामहस्ते
च मृत्युं
नेत्रे त्रीणि प्रदद्युः सुखमथ निजभे वाक्पतेः
संक्रमर्क्षात् ॥”
इति ज्योतिस्तत्त्वम् ॥

**वॄ**, गि ञ वृत्याम् । इति कविकल्पद्रुमः ॥ (क्र्या०-उभ०-सक०-सेट् ।) गिं, ञ, वृणाति वृणीते । वूर्णः । वूर्णिः । इति दुर्गादासः ॥

**वे**, ऐ ञ स्यूतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-उभ०-सक०-अनिट् ।) स्यूतिस्तन्तुसन्तानम् । ऐ, ऊयात् । ञ, वयति वयते तन्त्रं तन्त्रवायः । इति दुर्गादासः ॥

**वेकटः**, पुं, वैकटिकः । मत्स्यभेदः । भेट्की इति भाषा । युवा । इति मेदिनी ॥ विदूषकः । इति शब्दरत्नावली ॥ तत्र पवर्गीयबकारादौ लिखितः ॥

**वेगः**, पुं, (विज + घञ् ।) प्रवाहः । तत्पर्य्यायः ।
ओघः २ वेणी ३ धारा ४ । इति हेमचन्द्रः ॥ जवः । तत्पर्य्यायः । रंहः २ तरः ३ रयः ४ स्यदः ५ । इत्यमरः ॥ (यथा, मनौ । ५ । १०८ ।
“मृत्तोयैः शुध्यते शोध्यं नदी वेगेन शुध्यति ॥”)
महाकालफलम् । इति मेदिनी ॥ रेतः । इति हेमचन्द्रः ॥ मूत्रविष्ठादिनिर्गमप्रवृत्तिः । इति भरतः ॥ संस्कारविशेषः । यथा, --

फल्गुनीभवः १६ । इति जटाधरः ॥ सुरगुरुः १७ वाक्पतिः १८ वचसांपतिः १९ इन्द्रेज्यः २०
देवेज्यः २१ वृहताम्पतिः २२ इज्यः २३ वागीशः २४ चक्षाः २५ दीदिविः २६ द्वादश-करः २७ प्राक्फाल्गुनः २८ गीरथः २९ । इति शब्दरत्नावली ॥ स च पीतवर्णः । ईशान-कोणपुरुषब्राह्मणजातिऋग्वेदसत्त्वगुण-मधुर-रसधनुर्मीनराशिपुष्यनक्षत्रवस्त्रपुष्परागमणि सिन्धुदेशानां अधिपतिः । षडङ्गुलशरीरः । पद्मस्थः । चतुर्भुजः । अक्षवरकमण्डलुदण्डधारी। अस्याधिदेवता ब्रह्मा । प्रत्यधिदेवता इन्द्रः । स तु सूर्य्यास्यः । अङ्गिरोमुनिपुत्त्रः । प्रातःकाले प्रबलः । शुभग्रहः । देवगृहस्वामी । वृद्धः । रक्तद्रव्यस्वामी । वातपित्तकफात्मकः । बणिक्-कर्म्मकर्त्ता । अङ्गिरोगोत्रः । इति ग्रहयाग-तत्त्वादयः ॥ * ॥ तद्बारजातफलम् ।
"नृपेन्द्रमन्त्री नृपलब्धकामो
विद्याविनोदो चतुरः प्रगल्भः ।

पुत्त्रस्ते भविता साध्वि !
मद्बरेण भविष्यति ॥
मद्बरेण भवेद्यो हि स च
मद्बरपुत्त्रकः ।
त्वद्‌गर्भे मम पुत्त्रोऽयं
चिरजीवी भविष्यति ॥
वरजो वीर्य्यजश्चैव क्षेत्रजः
पालकस्तथा ।
विद्यामन्त्रसुतानाञ्च गृहीतः
सप्तमः सुतः ॥
इत्युक्त्वा राधिकानाथः
स्वर्लोकञ्च ययौ पुरा ।
श्रीकृष्णवरपुत्त्रोऽयं ज्ञानी
सुरगुरुः स्वयम् ॥
मृत्युञ्जयं महाज्ञानं शिवाय
प्रददौ पुरा ।
दिव्यं वर्षत्रिलक्षञ्च तपःकर्त्रे
हिमालये ॥
सुयोगज्ञानममलं तेजः
स्वात्मा समं परम् ।
स्वशक्तिविष्णुमायाञ्च
स्वांशञ्च वाहनं वृषम् ॥
स्वशूलञ्च स्वकवचं स्वमन्त्रं
द्वादशाक्षरम् ।
कृपामयः स्तुतस्तेन
श्रीकृष्णश्च परात्परः ॥
शिवलोके शिवा सा च
विष्णुमाया शिव-
प्रिया ।
शक्तिर्नारायणस्येयं तेन
नारायणी स्मृता ॥
तेजःसु सर्व्वदेवानां
साविर्भूता सनातनी ।
जघान दैत्यनिकरं देवेभ्यः
प्रददौ पदम् ॥
कल्पान्ते दक्षकन्या च सा
मूलप्रकृतिः सती ।
पितृयज्ञे तनुं त्यक्त्वा योगेन
सिद्धयोगिनी ॥
बमूव शैलकन्या सा साध्वी
च भर्त्तृनिन्दया ।

"स्पर्शादयोऽष्टौ वेगाख्यसंस्कारो मरुतो
गुणाः ।
अष्टौ स्पर्शादयो रूपं द्रवो वेगश्च तेजसि ॥
स्पर्शादयोऽष्टौ वेगश्च द्रवत्वञ्च गुरुत्वकम् ।
रूपं रसस्तथा स्नेहो वारिण्येते चतुर्द्दश ॥"
इति भाषापरिच्छेदः ॥ * ॥
(यथा, भागवते । ७ । ८ । २५ ।
"ततोऽभिपद्याभ्यहनन्महासुरो
रुषा नृसिंहं गदयोरुवेगया ॥")
वेगधारणनिषेधो यथा, --
"वेगरोधो न कर्त्तव्यश्चान्यत्र क्रोधवेगतः ॥"
इति आह्निकतत्त्वधृतविष्णुधर्म्मोत्तरवचनम् ॥
अपि च ।
"स्वभावतः प्रवृत्तानां मलादीनां जिजीविषुः ।
न वेगान्वारयेद्धीरः कामादीनाञ्च धारयेत् ॥"
इति राजवल्लभः ॥

| | | |
|---|---|---|
| | कालेन कृष्णतपसा शङ्करं प्राप शङ्करी ॥<br>श्रीकृष्णो हि गुरुः शम्भोः परमात्मा परात्परः ।<br>कृष्णस्य वरपुत्त्रोऽयं स्वयमेव वृहस्पतिः ।<br>अतो हेतोः सुरगुरुर्गुरुपुत्त्रः शिवस्य च ॥”<br>इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५६ अध्यायः ॥<br>(पुरोहितः । मन्त्रपालके तु त्रि । यथा, ऋग्वेदे ।<br>४ । ५० । ७ ।<br>“वृहस्पतिं यः सुभृतं बिभर्त्ति ॥” | |

**वेगनाशनः**, पुं, (वेगस्य नाशनं येन ।) श्लेष्मा ।
इति शब्दरत्नावली ॥

**वेगसरः**, पुं, (वेगेन सरति गच्छतीति । सृ + अच् ।) वेगगामिहयः । तत्पर्य्यायः । वेसरः २
अश्वतरः ३ । इति हेमचन्द्रः ॥

**वेगितः**, त्रि, (वेगः सञ्जातोऽस्य । तारकादित्वा-
दितच् ।) वेगविशिष्टः । यथा, आयुर्व्वेदीये ।
"न वेगितोऽन्यसिद्धिः स्यात् नाजित्वा साध्य-
मामयम् ॥"
इत्याह्निकतत्त्वम् ॥

**वेगिहरिणः**, पुं, (वेगी वेगवान् हरिणः ।)
श्रीकारी मृगः । इति राजनिर्घण्टः ॥

**वेगी**, [न्] त्रि, (वेगोऽस्यास्तीति । वेग + इनिः ।)
वेगवान् । तत्पर्य्यायः । जङ्घाकारिकः २ जाङ्घिकः ३ तरस्वी ४ त्वरितः ५ प्रजवी ६
जवनः ७ जवः ८ । इत्यमरः ॥ (यथा, हरिवंशे
भविष्यपर्व्वणि । २० । १४ ।
"अश्वाश्च वेगिनः सन्ति रथा वायुजवा मम ॥")
श्येनपक्षी । इति राजनिर्घण्टः ॥

**वेचा**, स्त्री, (विच पृथक्भावे + अच् । टाप् ।)
मूल्यम् । विचिर्लिधौ ञ पृथक्त्वे इत्यस्मात्
अन् तत आप् । यथा । वेचा मूल्यञ्च वेतनम् ।
इति हलायुधः ॥

**वेजानी**, स्त्री, (विज + अच् । तमानयतीति । आ
+ नी + डः । गौरादित्वात् ङीष् ।)
सोमराजी ।
इति शब्दचन्द्रिका ॥

पुन्नाम्नो नरकात्त्रातः स तेन सुमहात्मना ॥"
तेन सुपुत्रेण मृतवेणदक्षिणहस्तमन्थनजातेन
पृथुना । इति शुद्धितत्त्वम् ॥

**वेणिः**, स्त्री, (वी + "वीज्याज्वरिभ्यो निः ।" उणा०
४ । ४८ । इति निः । पृषोदरादित्वात् णत्वम् ।)
प्रोषितभर्त्तृकादिधार्य्यकेशरचनाविशेषः । इति
भरतः ॥ विरहिणीबद्धकचः । इति जटाधरः ॥
(यथा, माघे । १४ । ३० ।
"तत्र नित्यविहितोपहूतिषु
प्रोषितेषु पतिषु द्युयोषिताम् ।
गुम्फिताः शिरसि वेणयोऽभव-
न्न प्रफुल्लसुरपादपस्रजः ॥")
तत्पर्य्यायः । प्रवेणिः २ । इत्यमरः ॥ वेणी ३
प्रवेणी ४ । इति भरतः ॥ वेणिका ५ । इति
शब्दमाला ॥ जलसमूहः । इति जटाधरः ॥
यथा । प्रयागे गङ्गायमुनासरस्वतीमेलनं
त्रिवेणी ॥

**वेणिका**, स्त्री, (वेणि + कन् । टाप् ।) केशबन्धन-
विशेषः । इति शब्दमाला ॥

**वेणिवेधनी**, स्त्री, जलौका । इति त्रिकाण्डशेषः ॥

**वेणिमाधवः**, पुं, प्रयागस्थपाषाणमयचतुर्भुज-
देवताविशेषः । इति लोकप्रसिद्धः ॥

**वेणी**, स्त्री, (वेणि + वा ङीष् ।) प्रवेणी । चुलेर
विउणी इति भाषा । इति भरतः ॥ तत्पर्य्यायो
वेणिशब्दे द्रष्टव्यः । (यथा, कुमारे । २ । ६१ ।
"तस्यात्मा शितिकण्ठस्य सैनापत्यमुपेत्य वः ।
मोक्ष्यते सुरवन्दीनां वेणीर्वीर्य्यविभूतिभिः ॥")
देवताडवृक्षः । इत्यमरः ॥ मेषी । प्रवाहः ।
इति हेमचन्द्रः ॥ नदीविशेषः । इति मेदिनी ॥
तस्या उत्पत्तिर्यथा, --
पृथुरुवाच ।
"कृष्णावेण्योस्तटाद्यस्माच्छिवविष्णुगणैः पुरा ।
बणिक्शरीरात् कलहा निरस्ता कथिता

विष्णुरुवाच ।
नायाति चेत् स्वरा शीघ्रं गायत्र्यत्र विधीयताम् ।
एषापि न भवेदस्य भार्य्या किं पुण्यकर्म्मणि ॥
नारद उवाच ।
एवमेव हि रुद्रोऽपि विष्णुवाक्यममन्यत ।
तच्छ्रुत्वा स भृगुर्व्वाक्यं गायत्रीं ब्रह्मणस्तदा ॥
निवेश्य दक्षिणे भागे दीक्षाविधिमथाकरोत् ।
यावद्दीक्षाविधिं तस्य विधेश्चक्रुर्मुनीश्वराः ॥
तावदभ्याययौ तत्र स्वरा यज्ञस्थले नृप ।
ततस्तां दीक्षितां दृष्ट्वा गायत्रीं ब्रह्मणा सह ।
सपत्नी सा परा क्रोधात् स्वरा वचनमब्रवीत् ॥
स्वरोवाच ।
अपूज्या यत्र पूज्यन्ते पूज्यानाञ्च व्यतिक्रमः ।
त्रीणि तत्र भविष्यन्ति दुर्भिक्षं मरणं भयम् ॥
मदासने कनिष्ठेयं भवद्भिः सन्निवेशिता ।
तस्मात् सर्व्वे जडीभूता नदीरूपा हि निश्चितम् ॥
इयञ्च दक्षिणे भागे ह्युपविष्टा मदासने ।
तस्माल्लोके सदादृश्या तनुरूपास्तु निम्नगा ॥
नारद उवाच ।
ततस्तच्छापमाकर्ण्य गायत्री कम्पिताधरा ।
समुत्थायाशपद्देवैर्व्वार्य्यमाणापि तां स्वराम् ॥
गायत्र्युवाच ।

**वेडं**, क्ली, (विड + अच् ।) सान्द्रविच्छिन्नचन्दनम् ।

इति राजनिर्घण्टः ॥

**वेडा**, स्त्री, (वेड + टाप् ।) नौका । इति हेम-

चन्द्रः ॥ वेडीति क्वचित् पाठः ॥

**वेढमिका**, स्त्री, रोटिकाविशेषः । यथा, --

"माषपिष्टिकया पूर्णगर्भा गोधूमचूर्णतः ।
रचिता रोटिका सैव प्रोक्ता वेढमिका बुधैः
॥
भवेद्वेढमिका बल्या वृष्या रुच्यानिलापहा
।
उष्णा संतर्पणी गुर्व्वी वृंहणी शुक्रला परम्
॥
भिन्नमूत्रमलास्तन्यमेदःपित्तकफप्रदा ।
गुदकीलार्द्दितश्वासयकृच्छूलानि नाशयेत्
॥"
इति भावप्रकाशः ॥

**वेण**, ऋ ञ निशामने । वादित्रादानगमनज्ञान-

चिन्तासु । इति कविकल्पद्रुमः ॥ (भ्वा०-
उभ०-
सक०-सेट् ।) ऋ, अविवेणत् । ञ, वेणति
वेणते । निशामनं चाक्षुषज्ञानम् । वादित्रं
मुरजादि तस्यादानं वादित्रादानम् । वादित्रं
वादित्रविषयक्रिया इत्येकोऽर्थः इत्येके ।
इति
दुर्गादासः ॥

**वेणः**, पुं, (वेण + अच् ।) वर्णसङ्करजातिविशेषः ।

स तु अम्बष्ठ्यां वैदेहकाज्जातः । यथा, -
-
"वैदेहकेन त्वम्बष्ठ्यामुत्पन्नो वेण उच्यते
॥"
इति मानवे । १० । १९ ॥
त्रेतायुगीयसूर्य्यवंशीयचतुर्थनृपः । स तु
पृथु-
राजपिता । यथा, विष्णुपुराणे ।
"सत्पुत्त्रेण तु जातेन वेणोऽपि त्रिदिवं ययौ
।

त्वया ॥
प्रभावस्तु तयोर्नद्योः किंवा क्षेत्रस्य तस्य वा ।
तन्मे कथय सर्व्वज्ञ ! विस्मयोऽत्र महान् मम ॥
नारद उवाच ।
कृष्णा कृष्णतनुः साक्षाद्वेणी साक्षान्महेश्वरः ।
तत्सङ्गमप्रभावन्तु नालं वक्तुं चतुर्म्मुखः ॥
तथापि तत्समुत्पत्तिं कीर्त्तयिष्यामि ते शृणु ।
चाक्षुषस्यान्तरे पूर्ब्बं मनोर्देवपितामहः ॥
स ह्यद्रिशिखरे रम्ये यजनायोद्यतोऽभवत् ।
स कृत्वा यज्ञसम्भारान् सर्व्वदेवगणैर्व्वृतः ॥
युक्ता हरिहराभ्यां हि तद्गिरेः शिखरं ययौ ।
भृग्वादयो मुनिगणा मुहूर्त्ते ब्रह्मदैवते ॥
तस्य दीक्षाविधानाय समाजं चक्रुरादृताः ।
अथ ज्येष्ठां स्वरां पत्नीमाहूयाञ्चक्रुरीश्वराः ॥
सा शनैराययौ तावत् भृगुर्विष्णुमुवाच ह ॥
भृगुरुवाच ।
विष्णो स्वरा त्वयाहूता साप्यायाति न हि
त्वरम् ।
मुहूर्त्तातिक्रमे चैव कार्य्यो दीक्षाविधिः कथम् ॥

तव भर्त्ता यथा ब्रह्मा ममाप्येष तथा
खलु ।
वृथा शपसि यस्मान्मां भव त्वमपि
निम्नगा ॥
नारद उवाच ।
ततो हाहाकृताः सर्व्वे
शिवविष्णुमुखेश्वराः ।
प्रणम्य दण्डवत् भूमौ स्वरां तत्र
विजिज्ञपुः ॥
देवा ऊचुः ।
देवि शप्ता वयं सर्व्वे ब्रह्माद्याश्च
त्वयाधुना ।
यदि सर्व्वे जडीभूता भविष्यामोऽत्र
निम्नगाः ॥
तदा लोकत्रयं चैतत् विनश्यति च
निश्चितम् ।
अविवेककृतस्तस्मात् शापोऽयं
विनिवर्त्तताम् ॥
स्वरोवाच ।
नार्च्चितो हि गणाध्यक्षो भवद्भिर्यत्
सुरोत्तमाः ।
तस्माद्विघ्नं समुत्पन्नमबोधजनितं
खलु ॥
नापि मद्वचनं ह्येतदसत्यं खलु जायते
।
तस्मात् स्वांशैर्जडीभूता यूयं भवत
निम्नगाः ॥
आवामपि सपत्न्यौ च स्वांशाभ्यामपि
निम्नगे ।
भविष्यावोऽत्र भो देवाः
पश्चिमाभिमुखावहे ॥
नारद उवाच ।
इति तद्वचनं श्रुत्वा ब्रह्मविष्णुमहेश्वराः
।
जडरूपाभवन्नद्यः स्वांशेनैव तदा नृप ।
तस्माद्विष्णुरभूत् कृष्णा वेणी देवो
महेश्वरः ॥
ब्रह्मा ककुद्मिनी चान्या पृथगेव बभूव तु
॥"
इति पाद्मोत्तरखण्डे १५६ अध्यायः ॥
अन्यच्च ।

|  |  |  |
|---|---|---|
|  |  | “सरस्वती रजोरूपा तमोरूपा कलिङ्गजा ।<br>सत्त्वरूपा च गङ्गात्र नयन्ति ब्रह्मनिर्गुणम् ॥<br>इयं वेणी हि निःश्रेणी ब्रह्मवर्त्म प्रयास्यतः ।<br>जन्तोर्व्विशुद्धदेहस्य श्रद्धा श्रद्धाप्लुतस्य च ॥<br>काशीति काचिदबला भुवनेषु रूढा लोलार्ककेशवविलोलविलोचना च । |

तद्वीर्युं गच्च वरणासिरियं तदीया
वेणीति यात्र गदिताक्षयशर्म्मभूमिः ॥”
इति काशीखण्डे ७ अध्यायः ॥

**वेणीरः**, पुं, अरिष्टवृक्षः । इति शब्दचन्द्रिका ॥

**वेणीसंहारः**, पुं, (वेण्याः द्रौपदीवेणिकायाः
संहारो भीमेन मारितदुर्य्योधनशोणितेन मोचनं
यत्र ।) भट्टनारायणकृतसप्ताङ्कयुक्तनाटक-विशेषः । तत्र
दुर्य्योधनकर्त्तृकद्रौपदीकेशाकर्षणा-
वधि तद्वधानन्तरं तस्या
वेणीबन्धनपर्य्यन्तविव-
रणमस्ति । तस्यायमाद्यश्लोकः ।
“निषिद्धैरप्येभिर्लुलितमकरन्दो मधुकरैः
करैरिन्दोरन्तश्छुरित इव सम्भिन्नमुकुलः ।
विधत्तां सिद्धिं नो नयनसुभगामस्य सदसः
प्रकीर्णः पुष्पाणां हरिचरणयोरञ्जलिरयम् ॥”

**वेणुः**, पुं, (अज + “अजिवृरीभ्यो निच्च ।” उणा० ३ ।
३८ । इति णुः । सच नित् । अजेर्वीभावो गुणश्च ।)
वंशः । इत्यमरः ॥ (यथा, रामायणे । ४ ।
४३ । १७ ।
“तं तु देशमतिक्रम्य शैलोदा नाम निम्नगा ।
उभयोस्तीरयोस्तस्याः कीचका नाम वेणवः ॥”)
वंशी । इति शब्दरत्नावली ॥ वेणोरुत्पत्ति-
र्यथा, --
“वेणुर्यः शृणु तं विप्र तथापि विदितं तथा ।
द्विज आसीच्छान्तमनाः
कृतसान्तपनादिभिः ॥
नाम्ना देवव्रतो दान्तः कर्म्मकाण्डविशारदः ।
अवैष्णवजनव्रातमध्यवर्त्ती क्रियापरः ॥
एकदापि न शुश्राव यज्ञेशोऽस्तीति भूपते ।
तस्य गेहमथाभ्यागाद्वेदान्तकृत्तनिश्चयः ॥
मद्भक्तः कोऽपि पूजां स तुलसीदलवारिणा ।
कृतवांस्तु गृहे किञ्चित् फलमूलं न्यवेदयत् ॥

**वेणुपत्री**, स्त्री, (वेणोरिव पत्रं यस्याः ।) वंश-
पत्रीवृक्षः । तत्पर्य्यायः । हिङ्गुपर्णी २ नाडी ३
हिङ्गुशिराटिका ४ । इति रत्नमाला ॥

**वेणुबीजं**, क्ली, (वेणोर्बीजम् ।) वेणुयवः । इति
राजनिर्घण्टः ॥

**वेणुयवः**, पुं, (वेणोर्यवः ।) वंशफलम् । वाँशेर
चाउल इति भाषा ॥ (यथा, विष्णुपुराणे । १६ । २५ ।
“तथा वेणुयवाः प्रोक्तास्तद्वन् मर्कटका मुने ॥”)
तत्पर्य्यायः । वेणुजः २ वेणुबीजम् ३ वंशजः ४
वंशतण्डुलः ५ वंशधान्यम् ६ वंशाह्वः ७ । अस्य
गुणाः । रूक्षत्वम् । कषायत्वम् । कटुपाकित्वम् ।
बद्धमूत्रत्वम् । कफघ्नत्वम् । वातपित्तकरत्वम् ।
सारकत्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
“तद्यवास्तु सरा रुक्षाः कषायाः कटुपाकिनः ।
वातपित्तकरा उष्णा बद्धमूत्राः कफापहाः ॥”
इति भावप्रकाशः ॥

**वेणुवादः**, पुं, (वेणुं वादयतीति । वद + णिच् +
अण् ।) वैणुकः । इति रत्नमाला ॥

**वेतः**, पुं, वेत्रः । इति राजनिर्घण्टः ॥

**वेतनं**, क्ली, (वी + “वीपतिभ्यां तनन् ।” उणा०
३ । १५० । इति तनन् ।) कर्म्मदक्षिणा ।
माहिना इति मजुरि इति च भाषा । तत्-
पर्य्यायः । कर्म्मण्या २ विधा ३ भृत्या ४ भृतिः
भर्म्म ६ भरण्यम् ७ भरणम् ८ मूल्यम् ९
निर्व्वेशः १० पणः ११ । इत्यमरः ॥ विष्टिः १२ ।
इति जटाधरः ॥ (यथा, मनौ । ७ । १२६ ।
“पणो देयोऽवकृष्टस्य षड्रुत्कृष्टस्य वेतनम् ॥”)
जीवनोपायः । तत्पर्य्यायः । आजीवः २ जीव-
नम् ३ वार्त्ता ४ जीविका ५ वृत्तिः ६ । इति

जलजो वेतसः शीतः संग्राही
वातकोपनः ॥”
इति भावप्रकाशः ॥
(जलजाताग्निः । यथा, ऋग्वेदे । ४ ।
५८ । ५ ।
“हिरण्ययो वेतसो मध्य आसाम् ॥”
“वेतसोऽप्सम्भवोऽग्निः ।” इति तद्भाष्ये
सायणः ॥”)

**वेतसाम्लः**, पुं, (वेतसप्रधानोऽम्लः ।) अम्लवेतसः ।
इति जटाधरः ॥

**वेतसी**, स्त्री, वेतसः । इति शब्दरत्नावली ॥
(यथा, साहित्यदर्पणे । १ ।
“रेवारोधसि वेतसीतरुतले चेतः
समुत्कण्ठते ॥”)

**वेतस्वान्**, [त्] त्रि, (वेतसाः सन्त्यत्र । “कुमुदनडवे-
तसेभ्यो ड्मतुप् ।” ४ । २ । ८७ ।
इति ड्मतुप् ।
“मादुपधायाः ।” ८ । २ । ९ । इति मस्य
वत्वम् ।) वेतसलताबहुलदेशः ।
इत्यमरभरतौ ॥

**वेतालः**, पुं, द्वारपालकः । इति शब्दरत्नावली ॥
भूताधिष्ठितशवः । इत्यमरः ॥
मल्लभेदः । इति
भरतः ॥ शिवगणाधिपविशेषः ।
यथा, --
सगर उवाच ।
“कोऽसौ भैरवनामाभूत् को वा
वेतालसंज्ञकः ।
कथं वा तौ शरीरेण मानुषेण
गणाधिपौ ।
अभूतां द्विजशार्द्दूल तन्मे वद
महामुने ॥
श्रीऔर्व्व उवाच ।

स्नानवारि फलं किञ्चित् तस्मै प्रीत्या ददौ सुधीः ।
अश्रद्धयान्वितं कृत्वा सोऽप्यगृह्णात् द्विजन्मनः ॥
तेन पापेन संजातं वेणुत्वमतिदारुणम् ।
तेन पुण्येन तस्यार्थो मदीयप्रियतां गतः ॥
अधुना सोऽपि राजेव केतुमाले विराजते ।
युगान्ते तु विष्णुपरो भूत्वा ब्रह्मत्वमाप्स्यति ॥"
इति पाद्मे पातालखण्डे ५ अध्यायः ॥
नृपविशेषः । इति मेदिनी ॥

**वेणुकं**, क्ली, तोत्रम् । इति हेमचन्द्रः ॥ (पुं, ह्रस्वो वेणुः । "संज्ञायां कन् ।" ५ । ३ । ८७ । इति कन् ।
क्षुद्रवेणुः । यथा, हरिवंशे भविष्यपर्व्वणि । ३९ । ५९ ।
"पश्येदं बहुधा देव भिन्नं भिन्नं सहस्रशः ।
शिक्यञ्च दारवं पात्रं द्विदलान् वेणुकान् बहून् ॥")

**वेणुकर्करः**, पुं, करीरवृक्षः । इति त्रिकाण्डशेषः ॥

**वेणुजः**, पुं, (वेणोर्ज्जायते इति । जन + डः ।) वेणुयवः । इति राजनिर्घण्टः ॥ (वेणुजातमात्रे, त्रि । यथा, भागवते । ३ । १ । २० ।
"वनं यथा वेणुजवह्निसंश्रयम् ॥")

**वेणुध्मः**, पुं, (वेणुं धमतीति । ध्मा + डः ।) वेणुवादकः । इत्यमरः ॥

**वेणुनं**, क्ली, मरिचम् । इति रत्नमाला ॥ वेणुजमिति च पाठः ॥

हेमचन्द्रः ॥ रूप्यम् । इति शब्दचन्द्रिका ॥

**वेतसः**, पुं, (वे + "वेञस्तुट् च ।" उणा० ३ । ४४८ । इति असच् । तुडागमश्च ।) लताविशेषः । वयसा इति भाषा । इति भरतः ॥ वेति जलप्लवतां गच्छति इति वेतसः । वील ईलवत् नाम्नीति तसः । इत्यमरटीकायां भरतः ॥ तत्पर्य्यायः । रथः २ अभ्रपुष्पः ३ विदुलः ४ शीतः ५ वानीरः ६ वञ्जुलः ७ । इत्यमरः ॥ प्रियः ८ । इति रत्नमाला ॥ गन्धपुष्पः ९ रथाभ्रः १० वेतसी ११ । इति शब्दरत्नावली ॥ निचुलः १२ दीर्घपत्रकः १३ कलमः १४ मञ्जरीनम्रः १५ सुषेणः १६ गन्धपुष्पकः १७ । (यथा, भागवते । ३ । २ । १७ ।
"कदम्बवेतसनलनीपवञ्जुलैर्व्वृतम् ॥")
अस्य गुणाः । स्वादे कटुत्वम् । शीतत्वम् । भूतरक्तपित्तोद्भवरोगकृच्छ्रदोषनाशित्वञ्च । इति राजनिर्घण्टः ॥ अस्य पर्य्यायगुणाः ।
"वेतसो नम्रकः प्रोक्तो वानीरो रञ्जनस्तथा ।
अभ्रपुष्पञ्च विदुलो रथः शीतश्च कीर्त्तितः ॥
वेतसः शीतलो दाहशोथार्शोयोनिरुग्व्रणान् ।
हन्ति वीसर्पकृच्छ्रास्रपित्ताश्मरिकफानिलान् ॥"
इति भावप्रकाशः ॥
जलवेतसस्य पर्य्यायगुणाः । अथ जलवेतसः ।
"निकुञ्चकः परिव्याघो नादेयो जलवेतसः ।

शृणु राजन् प्रवक्ष्यामि महाकालस्य भृङ्गिणः ।
भैरवस्यापि चरितं वेतालस्य महात्मनः ॥
सोऽसौ भृङ्गी हरसुतौ महाकालोऽपि भर्गजः ।
तावेव गौरीशापेन संभूय नरयोनिजौ ।
वेतालभैरवौ जातौ पृथिव्यां नृपवेश्मनि ॥"
इति कालिकापुराणे ४५ अध्यायः ॥
तस्योत्पत्त्यादि यथा, --
श्रीदेव्युवाच ।
"ममैव मानुषी मूर्त्तिरियं वृषभकेतन ! ।
विशामि तेऽत्र वचनादुत्पादय सुतद्वयम् ॥
प्रविवेश ततो देवी स्वयं तारावतीतनौ ।
महादेवोऽपि तस्यास्तु कामार्थं समुपस्थितः ॥
ततः सापर्णयाविष्टा देवी तारावती सती ।
कामयानं महादेवं स्वयमेवाभवन्मुदा ॥
तस्मिन् कालेऽभवद्गर्भः कापाली चास्थिमाल्यधृक् ।
कामावसाने तस्यास्तु सद्यो जातं सुतद्वयम् ॥
अभवन्नृपशार्दूल तथा शाखामृगाननम् ।
अथ तारावती देवी सुतौ दृष्ट्वा क्षितिस्थितौ ॥
भूमौ मलिनवेशेन मन्युना समुपाविशत् ।
भर्त्तुरागमनं शश्वत् काङ्क्षन्ती भर्गभाषितम् ॥
अथ क्षणान्महाभागः स राजा चन्द्रशेखरः ।

| | | |
|---|---|---|
| | | प्रासादपृष्ठे आगच्छद्द्रष्टुं तारावतीं तदा ॥<br>ददर्श पतितां भूमौ मुक्तकेशीं निरुत्सवाम् ।<br>सुतौ च पतितौ भूमौ चन्द्रसूर्य्यसमप्रभौ ॥<br>वानरास्यौ स ददृशे पदक्षोभं वृषस्य च ।<br>ततः स राजा न्यगदत् तं मुनिं प्रहसन्मुदा ॥<br>पालयिष्ये शम्भुसुतौ यथा लभ्यं सदैव हि ।<br>किन्त्वेतौ मुनिशार्दूल त्वं संस्कुरु यथाविधि ॥ |

और्व्व उवाच ।
ततस्तयोर्नाम चक्रे नारदो वचनान्नृप ।
ज्येष्ठो भैरवनामाभूत् वीरः पुत्त्रो भयङ्करः ॥
वेतालसदृशः कृष्णो वेतालोऽभूत्तथापरः ।
इति चक्रे तयोर्नाम देवर्षिर्ब्रह्मणः सुतः ॥”
इति कालिकापुराणे ४९ अध्यायः ॥

**वेतालभट्टः**, पुं, राजविक्रमादित्यस्य नवरत्नान्त-
र्गतरत्नविशेषः । यथा, --
“धन्वन्तरिः क्षपणकामरसिंहशङ्कु-
वेतालभट्टघटकर्पकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य ॥”
इति नवरत्नश्लोकः ॥

**वेत्ता**, [ऋ] त्रि, ज्ञाता । वेत्तीति विदधातोस्तृण्-
प्रत्ययेन निष्पन्नमिदम् ॥ (यथा, हितोपदेशे ।
“यथा खरश्चन्दनभारवाही
भारस्य वेत्ता नतु चन्दनस्य ॥”)

**वेत्रः**, पुं, (वी + “गुधृवीपचीति ।” उणा० ४ ।
१६६ । इति त्रः ।) स्वनामख्यातवृक्षः । तत्प-
र्य्यायः । वेतः २ योगिदण्डः ३ सुदण्डः ४ मृदु-
पर्व्वकः ५ ॥ (यथा, शाकुन्तले । ५ ।
“आचार इत्यधिकृतेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः ॥”)
स तु पञ्चविधः । तेषां गुणाः । शीतलत्वम् ।
कषायत्वम् । भूतपित्तहरत्वञ्च । इति राज-
निर्घण्टः ॥ तस्याग्रं वेताग् इति ख्यातम् ।
तद्गुणाः । दीपनत्वम् । रुच्यत्वम् । तिक्तत्वम् ।

**वेत्रासनं**, क्ली, (वेत्रस्यासनम् ।) वेत्रनिर्म्मिता-
सनम् । तत्पर्य्यायः । आसन्दी २ । इति हेम-
चन्द्रः ॥

**वेत्रासुरः**, पुं, (वेत्रनामकोऽसुरः ।) स्वनाम-
ख्यातासुरः । तस्योत्पत्तिर्यथा, --
महातपा उवाच ।
“आसीद्राजा पुरा राजन् सिन्धुद्वीपः प्रताप-
वान् ।
वारुणांशो महाराजोऽसौऽरण्ये तपसि स्थितः ॥
पुत्त्रो मे शत्रुनाशाय भवेदिति नराधिपः ।
एवं कृतमतिः सोऽथ महता तपसा स्वकम् ।
कलेवरं स्थिरो भूत्वा शोषयामास सुव्रतः ॥
प्रजापाल उवाच ।
कथं तस्य द्विजश्रेष्ठ शक्रेणापकृतं भवेत् ।
येनासौ तद्विनाशाय पुत्त्रमिच्छन् व्रते स्थितः ॥
महातपा उवाच ।
सोऽन्यजन्मनि पुत्त्रोऽभूत् त्वष्टुर्बलवतां वरः ।
अवध्यः सर्व्वशस्त्रौघैरपां फेनेन नाशितः ॥
जलफेनेन निहितस्तस्मिन्लयमवाप्नुयात् ।
पुणर्ब्रह्मान्वयो जातः सिन्धुद्वीपेतिसंज्ञितः ॥
स तेपे परमं तीव्रं शक्रवैरमनुस्मरन् ।
ततः कालेन महता नदी वेत्रवती शुभा ॥
मानुषं रूपमास्थाय सालङ्कारा मनोरमम् ।

इति न्यायशास्त्रम् ॥ धर्म्मब्रह्मप्रतिपादकमपौ-
रुषेयवाक्यम् । इति वेदान्तशास्त्रम् ॥ ब्रह्ममुख-
निर्गतधर्म्मज्ञापकशास्त्रम् । इति पुराणम् ॥
तत्पर्य्यायः । श्रुतिः २ आम्नायः ३ । इत्य-
मरः ॥ छन्दः ४ ब्रह्म ५ निगमः ६ । इति
शब्दरत्नावली ॥ प्रवचनम् ७ । इति जटा-
धरः ॥ * ॥ वेदस्य प्रादुर्भावो । यथा । कदाचित्
कथं सृक्ष्यामीति ध्यायतो ब्रह्मणो मुखचतु-
ष्टयेभ्यश्चत्वारो वेदाः प्रादुरासन् । यथा । एक-
विंशतिशाखात्मक-ऋक् १ शतशाखात्मक-
यजुः २ सहस्रशाखामयसाम ३ नवशाखा-
मयाथर्व्व ४ । इति पुराणम् ॥ अपि च ।
श्रीमार्कण्डेय उवाच ।
“तस्मादण्डाद्विनिर्भिन्नाद्ब्रह्मणोऽव्यक्तजन्मनः ।
ऋचो बभूवुः प्रथमं प्रथमाद्वदनान्मुने ॥
जवापुष्पनिभाः सद्यस्तेजोरूपा ह्यसंवृताः ।
पृथक् पृथग्विभिन्नाश्च रजोरूपा महात्मनः ॥
यजूंषि दक्षिणाद्वक्त्रादनिबद्धानि कानिचित् ।
यादृक्वर्णं तथा वर्णान्यसंहतिचराणि वै ॥
पश्चिमं यद्विभोर्व्वक्त्रं ब्रह्मणः परमेष्ठिनः ।
आविर्भूतानि सामानि ततः कुन्दसितान्यथा ॥
अथर्व्वाणमशेषेण भृङ्गाञ्जनचयप्रभम् ।
घोराघोरस्वरूपं तदाभिचा रिकशान्तिमत् ॥
उत्तरात् प्रकटीभूतं वदनात्तत्तु वेधसः ।
मुखं सत्त्वतमःप्रायं सौम्यासौम्यस्वरूपवत् ॥
ऋचो रजोगुणाः सत्त्वं यजुषाञ्च गुणो मुने ।
तमोगुणानि सामानि तमःसत्त्वमथर्व्वसु ॥
एतानि ज्वलमानानि तेजसाप्रतिमेन वै ।
पृथक् पृथगवस्थानं भाञ्जि पूर्व्वमिवाभवत् ॥
ततस्तदाद्यं यत्तेज ओमित्युक्त्वाभिशस्यते ।
तस्यानुभावादृक्तेजस्तमांस्यावृत्य संस्थितम् ॥
यथा यजुर्म्मयं तेजो यच्च साम्नां महामुने ।
एकत्वमुपयातानि परतेजसि संश्रयात् ॥
शान्तिकं पौष्टिकञ्चैव तथा चैवाभिचारिकम् ।
ऋगादिषु लयं ब्रह्मंस्त्रितयं त्रिष्वथागमत् ॥
ततो विश्वमिदं सद्यस्तमोनाशात् सुनिर्म्मलम् ।
बभावतीव विप्रर्षे तिरश्चोर्द्ध्वमधस्तथा ॥
ततस्तन्मण्डलीभूतं छान्दसं तेज उत्तमम् ।
परेण तेजसा ब्रह्मन् ! एकत्वमुपगम्य तत् ॥

पित्तकफनाशित्वञ्च । तत्फलगुणाः ।
वातपित्त-
नाशित्वम् । अम्लत्वञ्च । इति
राजवल्लभः ॥
असुरविशेषः । तस्य प्रमाणं
वेत्रासुरशब्दे
द्रष्टव्यम् ॥

**वेत्रकीयः**, त्रि, (वेत्र + "नडादीनां कुक् च ।" ४ ।
२ । ९१ । इति कुक् छश्च ।)
वेत्रसमूहयुक्तदेशादिः ।
इति सिद्धान्तकौमुदी ॥ (एकचक्रा
नगरी तु
वेत्रप्राचुर्य्यवत्त्वेन तदाख्ययापि प्रसिद्धा
। यथा,
महाभारते । १ । १६१ । ९ ।
"वेत्रकीयगृहे राजा नायं
नयमिहास्थितः ।
उपायं तं न कुरुते यत्नादपि स
मन्दधीः ॥")

**वेत्रधरः**, पुं, (वेत्रस्य धरः ।) द्वारपालः । इति
हलायुधः ॥ यष्टिधारके, त्रि ॥

**वेत्रधारकः**, पुं, (वेत्रस्य धारकः ।) द्वारपालः ।
इति जटाधरः ॥

**वेत्रवती**, स्त्री, नदीविशेषः । इत्यमरः ॥ सा तु
मालवदेशात् कालपीनामनगरे
यमुनायां
मिलिता । वेत्रासुरमाता । यथा,
वराहपुराणे ।
"वेत्रवत्युदरे जातो नाम्ना
वेत्रासुरोऽभवत् ॥"

**वेत्रहा**, [न्] पुं, (वेत्रं हतवान् । हन + क्विप् ।)
इन्द्रः । इत्यमरः ॥

**वेत्रावती**, स्त्री, वेत्रवती नदी । यथा, --
"तत्रान्या दधते जलं सुमधुरं
कान्तिप्रदं पुष्टिदं
वृष्यं दीपनपाचनं बलकरं वेत्रावती
तापिनी ॥"

आजगाम यतो राजा तेपे परमकं तपः
॥
तां दृष्ट्वा रूपसम्पन्नां स राजा
क्रुद्धमानसः ।
उवाच कासि सुश्रोणि सत्यं कथय
भामिनि ॥
नद्युवाच ।
अहं जलपतेः पत्नी वरुणस्य
महात्मनः ।
नाम्ना वेत्रवती पुण्या त्वामिच्छन्तीह
आगता ॥
साभिलाषां परस्त्रीं यो भजमानां
विसर्ज्जयेत् ।
स पापपुरुषो ज्ञेयो ब्रह्महत्याञ्च
विन्दति ॥
एवं ज्ञात्वा महाराज भजमानां भजस्व
माम् ।
एवमुक्तस्तया राजा
साभिलाषोपभुक्तवान् ॥
तस्य सद्योऽभवत् पुत्त्रो
द्वादशार्कसमप्रभः ।
वेत्रवत्युदरे जातो नाम्ना
वेत्रासुरोऽभवत् ॥
बलवानतितेजस्वी प्राग्ज्योतिषः
पतिर्भवेत् ।
स कालेन युवा जातो बलवान्
दृढविक्रमः ॥
महायोगेन संयुक्तो जिगाय च
वसुन्धराम् ।
सप्तद्वीपवतीं पश्चान्मेरुपर्व्वतमारुहन्
।
तत्रेन्द्रं प्रथमं जिग्ये पश्चादग्निं यमं
ततः ॥"
इति वराहपुराणे
देवोत्पत्तिनामाध्यायः ॥

**वेत्री**, [न्] पुं, (वेत्रोऽस्यास्तीति । वेत्र + इनिः ।)
द्वारपालकः । इति हेमचन्द्रः ॥
वेत्रयुक्ते, त्रि ॥

**वेथ**, ऋ ङ याचे । इति कविकल्पद्रुमः ॥ (भ्वा०-

आदित्यसंज्ञामगमदादावेव यतोऽभवत् ।
विश्वस्यास्य महाभाग कारणञ्चाव्ययात्मकम् ॥
प्रातर्मध्यन्दिने चैव तथा चैवापराह्णिके ।
त्रयी तपति सा काले ऋग्यजुःसामसंज्ञिता ॥
ऋचस्तपन्ति पूर्व्वाह्णे मध्याह्ने च यजूंषि वै ।
सामानि चापराह्णे तु तपन्ति मुनिसत्तम ॥
शान्तिकं ऋक्षु पूर्ब्बाह्णे यजुः स्वनृचपौष्टिकम् ।
अपराह्णे स्थितं नित्यं सामस्वेवाभिचारिकम् ॥
सृष्टौ च ऋङ्मयो ब्रह्मा स्थितौ विष्णुर्यजुर्म्मयः ।
रुद्रः साममयोऽन्ते च तस्मात्तस्या शुचिर्ध्वनिः ॥
तदेवं भगवान् भास्वान् वेदात्मा वेदसंस्थितः ।
वेदविद्यात्मकश्चैव परः पुरुष उच्यते ॥
स्वर्गस्थित्यन्तहेतुः स रजःसत्त्वादिवैर्गुणैः ॥

| | | |
|---|---|---|
| इति राजनिर्घण्टः ॥ | आत्म०-द्विक०-सेट् ।) ङ, वेथते । इति दुर्गा-<br>दासः ॥<br>**वेदः**, पुं, (विद + घञ् ।) विष्णुः । यथा, --<br>"वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित् कविः ॥"<br>इति विष्णुसहस्रनामस्तोत्रम् ॥<br>वृत्तम् । इति मेदिनी ॥ क्वचित् पुस्तके वित्त-<br>मित्यपि पाठः । यज्ञाङ्गम् । इति नानार्थरत्न-<br>माला ॥ मीनशरीरावच्छेदेन भगवद्वाक्यम् । | |

आश्रित्य ब्रह्मविष्ण्वादिसंज्ञामभ्येति शाश्वतः ॥
वेदैः स वेद्यः स तु वेदमूर्त्ति-
रमूर्त्ति-राद्योऽखिलविश्वमूर्त्तिः ।
विश्वाश्रयं ज्योतिरवेद्यवर्त्मा
धर्म्मावदातः परमः परेभ्यः ॥”
इति श्रीमार्कण्डेयपुराणे सूर्य्यमाहात्म्ये सूर्य्यो-
त्पत्तिनामाध्यायः ॥ * ॥ अन्यच्च ।
“अष्टाविंशे पुनः प्राप्ते ह्यस्मिन् वै द्वापरे द्विजाः ।
पराशरसुतो व्यासः कृष्णद्वैपायनोऽभवत् ॥
ए सव सर्व्ववेदानां पुराणानां प्रदर्शकः ।
पाराशर्य्यो महायोगी कृष्णद्वैपायनो हरिः ॥
आराध्य देवमीशानं दृष्ट्वा साम्बं त्रिलोचनम् ।
तत्प्रसादादसौ व्यासो वेदानामभवत् प्रभुः ॥
अथ शिष्यान् प्रजग्राह चतुरो वेदपारगान् ।
जैमिनिञ्च सुमन्तुञ्च वैशम्पायनमेव च ॥
पैलं तेषां चतुर्थञ्च पञ्चमं मां महामुनिः ।
ऋग्वेदश्रावकं पैलं प्रजग्राह महामुनिः ॥
यजुर्व्वेदप्रवक्तारं वैशम्पायनमेव च ।
जैमिनिं सामवेदस्य श्रावकं सोऽन्वपद्यत ॥
तथैवाथर्व्ववेदस्य सुमन्तुमृषिसत्तमम् ।
इतिहासपुराणानि प्रवक्तुं मामयोजयत् ॥
एक आसीद्यजुर्व्वेदस्तञ्चतुर्द्धा व्यकल्पयत् ।

नासीनो न च भुञ्जानो न तिष्ठन्न पराङ्मुखः ॥
नीचं शय्यासनं चास्य सर्व्वदा गुरुसन्निधौ ।
गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत् ॥
नोदाहरेदस्य नाम परोक्षमपि केवलम् ।
न चैवास्यानुकुर्व्वीत गतिभाषितचेष्टितम् ॥
गुरोर्यत्र परीवादो निन्दा वापि प्रवर्त्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥
दूरस्थो नार्च्चयेदेनं न क्रुद्धो नान्तिके स्त्रियाः ।
न चैवास्योत्तरं ब्रूयात् स्थिते नासीत सन्निधौ ॥
उदकुम्भं कुशान् पुष्पं समिधोऽस्याहरेत् सदा ।
मार्ज्जनं लेशनं नित्यमङ्गानां वै समाचरेत् ॥
नास्य निर्म्माल्यशयनं पादुकोपानहावपि ।
नाक्रामेदासनञ्चास्य छायादीन् वै कदाचन ॥
साधयेद्दण्डकाष्ठादीन् लब्धञ्चास्मै निवेदयेत् ।
अनापृच्छन्न गन्तव्यं भवेत् प्रियहिते रतः ॥
न पादौ धावयेदस्य सन्निधाने कदाचन ।
जृम्भितं हसितञ्चैव कण्ठप्रावरणं तथा ॥
वर्ज्जयेत् सन्निधौ नित्यमवस्फोटनमेव च ।
यथाकालमधीयीत यावन्न विमना गुरुः ॥
आसीताधो गुरोर्दर्भे फलके वा समाहितः ।
आसने शयने याने नैव तिष्ठेत् कथञ्चन ॥
धावन्तमनुधावेत्तं गच्छन्तमनुगच्छति ।
गोऽश्वोष्ट्रयानप्रासादप्रस्तरेषु कटेषु च ॥
आसीत गुरुणा सार्द्धं शिलाफलकनौषु च ।
जितेन्द्रियः स्यात् सततं वश्यात्माक्रोधनः शुचिः ॥
प्रयुञ्जीत सदा वाचं मधुरां हितकारिणीम् ।
गन्धं माल्यं रसं कन्यां शुक्तं प्राणिविहिंसनम् ॥
अभ्यङ्गञ्चाञ्जनोपानच्छत्रधारणमेव च ।
कामं लोभं भयं निद्रां गीतं वादित्रनृत्यकम् ॥

बालः समानजन्मा वा शिष्यो वा यज्ञकर्म्मणि ।
अध्यापयन् गुरुसुतो गुरुवन्मानमर्हति ॥
उत्सादनं वा गात्राणां स्नपनोच्छिष्टभोजने ।
न कुर्य्याद्गुरुपुत्त्रस्य पादयोः शौचमेव च ॥
गुरुवत् प्रतिपूज्यास्तु सवर्णा गुरवस्तथा ।
असवर्णास्तु संपूज्याः प्रत्युत्थानाभिवादनैः ॥
अभ्यञ्जनं स्नापनञ्च गात्रोत्सादनमेव च ।
गुरुपत्न्या न कार्य्याणि केशानाञ्च प्रसाधनम् ॥
गुरुपत्नीन्तु युवतीं नाभिवाद्येत पादयोः ।
कुर्व्वीत वन्दनं भूमावेषोऽहमिति च ब्रुवन् ॥
विप्रोष्य पादग्रहणमन्वहञ्चाभिवादनम् ।
गुरुदारेषु कुर्व्वीत सतां धर्म्ममनुस्मरन् ॥
मातृस्वसा मातुलानी श्वश्रूश्चाथ पितुः स्वसा ।
प्रपूज्या गुरुपत्नी च समास्ता गुरुभार्य्यया ॥
भ्रातृभार्य्योपसंग्राह्या सवर्णाहन्यहन्यपि ।
विप्रस्य तूपसंग्राह्या ज्ञातिसम्बन्धियोषितः ॥
पितुर्भगिन्यां मातुश्च ज्यायस्याञ्च स्वसर्य्यपि ।
मातृवद्वृत्तिमातिष्ठेन्माता ताभ्यो गरीयसी ॥
एवमाचारसम्पन्नमात्मवश्यमदाम्भिकम् ।
वेदमध्यापयेद्धर्म्मं पुराणाङ्गानि नित्यशः ॥
तथा चिरोषिते शिष्ये गुरुर्ज्ञानमनिर्द्दिशन् ।
हरते दुष्कृतं तस्य शिष्यस्यैवं ततो गुरुः ॥
आचार्य्यपुत्त्रः शुश्रूषुर्ज्ञानदो धार्म्मिकः शुचिः ।
आप्तः शक्तोऽर्थदः साधुरध्याप्या दश धर्म्मतः ॥
कृतज्ञश्च तथाद्रोही मेधावी शुभकृन्नरः ।
आप्तः प्रियोऽथ विधिवत् षडध्याप्या द्विजातयः ।
एतेषु ब्रह्मणो दानमन्यत्र तु यथोदितात् ॥” * ॥
वेदाध्ययनविधिर्यथा, --
“आचम्य संयतो नित्यमधीयीत उदङ्मुखः ।
उपसंगृह्य तत्पादौ वीक्षमाणो गुरोर्मुखम् ॥
अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चारमेत् ।
प्राक् भूतान् पर्य्युपासीनः पवित्रैश्चैव पावितः ॥
प्राणायामैस्त्रिभिः पूतस्तत ओङ्कारमर्हति ।

चातुर्होत्रमभूद्यस्मिंस्तेन यज्ञमथाकरोत् ॥
अध्वर्य्यवं यजुर्भिः स्यादृग्भिर्होत्रं द्विजोत्तमाः ।
औद्गात्रं सामभिश्चक्रे ब्रह्मत्वञ्चाप्यथर्व्वभिः ॥
ततः स ऋच उद्धृत्य ऋग्वेदं कृतवान् प्रभुः ।
यजूंषि च यजुर्व्वेदं सामवेदञ्च सामभिः ॥
एकविंशतिभेदेन ऋग्वेदं कृतवान् पुरा ।
शाखानान्तु शतेनाथ यजुर्व्वेदमथाकरोत् ॥
सामवेदं सहस्रेण शाखानाञ्च विभेदतः ।
अथर्व्वाणमथो वेदं बिभेद नवकेन तु ॥
भेदैरष्टादशैर्व्यासः पुराणं कृतवान् प्रभुः ।
योऽयमेकश्चतुष्पादो वेदः पूर्व्वं पुरातनात् ॥
ॐकारो ब्रह्मणो जातः स दोषविषशोधनः ।
वेदवेद्यो हि भगवान् वासुदेवः सनातनः ॥
स गीयते वरो देवो यो वेदैनं स वेदवित् ।
एतत् परतरं ब्रह्मज्योतिरानन्दमुत्तमम् ॥
वेदवाक्योदितं तत्त्वं वासुदेव परं पदम् ।
वेदवेद्यमिदं वेत्ति वेदं वेदपरो मुनिः ॥
अवेदं परमं वेत्ति वेदनिष्ठः सदेश्वरः ।
स एव वेदो वेद्यश्च तमेवाश्रित्य मुच्यते ॥
इत्येतदक्षरं वेद्यमोङ्कारं वेदमव्ययम् ।
अवेदञ्च विनाजाति पाराशर्य्यो महामुनिः ॥”
इति कौर्म्मे ४९ अध्यायः ॥ * ॥
वेदाध्ययनपात्रं यथा, --

आतर्ज्जनं परीवादं स्त्रीप्रेक्षालभनन्तथा ।
परोपघातपैशुन्यं प्रयत्नेन विवर्ज्जयेत् ॥
उदकुम्भं सुमनसो गोशकृन्मृत्तिकाकुशान् ।
आहरेद्यावदर्थानि भैक्षञ्चाहारमाचरेत् ॥
कृतञ्च लवणं सर्व्वं वर्ज्यं पर्य्युषितञ्च यत् ।
अनृत्यदर्शी सततं भवेद्गीतादिनिस्पृहः ॥
नादित्यं वै समीक्षेत नाचरेद्दन्तधावनम् ।
एकान्तमशुचिस्त्रीभिः शूद्रान्त्यैरभिभाषणम् ॥
गुरूच्छिष्टं भैषजार्हं प्रभुञ्जीत न कामतः ।
मलापकर्षणं स्नानं नाचरेद्धि कथञ्चन ॥
न कुर्य्यान्मानसं विप्र गुरोस्त्यागे कथञ्चन ।
मोहाद्वा यदि वा लोभात्त्यक्तेन पतितो भवेत् ॥
लौकिकं वैदिकञ्चापि तथाध्यात्मिकमेव वा ।
आददीत यतो ज्ञानं तन्न द्रुह्येत् कदाचन ॥
गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः ।
उत्पथप्रतिपन्नस्य मनुस्त्यागं समब्रवीत् ॥
गुरोर्गुरोः सन्निहिते गुरुवद्वृत्तिमाचरेत् ।
न चाविसृष्टगुरुणा स्वान् गुरूनभिवादयेत् ॥
विद्यागुरुष्वेतदेव नृत्यवृत्तिस्वयोनिषु ।
प्रतिषेधान्न चाधर्म्मा द्विजञ्चोपदिशत्स्वपि ॥
श्रेयः स्वगुरुवद्वृत्तिं नित्यमेव समाचरेत् ।
गुरुपुत्त्रेषु दारेषु गुरोश्चैव स्वबन्धुषु ॥

ब्राह्मणः प्रणवं कुर्य्यादन्ते च विधिवद्द्विजाः ॥
कुर्य्यादध्यापनं नित्यं स ब्रह्मादीनि पूर्व्वतः ।
सर्व्वेषामेव भूतानां देवश्चक्षुः सनातनः ॥
अधीतानध्ययन्नित्यं ब्राह्मण्याद्धीयतेऽन्यथा ।
अधीयीत ऋचो नित्यं क्षीरहुत्या सदेवताः ॥
प्रीणाति तर्पयन्त्येनं कामैस्तृप्ताः सदेवताः ।
यजूंष्यधीते नियतं दध्ना प्रीणाति देवताः ॥
सामान्यधीते प्रीणाति घृताहुतिभिरन्वहम् ।
अथर्व्वाङ्गिरसो नित्यं मध्वा प्रीणाति देवताः ॥
धर्म्मार्थञ्च पुराणानि मांसैस्तर्पयते सुरान् ।
अपां समीपे प्रयतो नैत्यिकं विधिमाश्रितः ॥
गायत्त्रीमप्यधीयीत गत्वारण्यं समाहितः ।
सहस्रपरमां देवीं शतमध्यां दशावराम् ॥
गायत्त्रीं वै जपेन्नित्यं जपयज्ञः प्रकीर्त्तितः ॥
गायत्त्रीञ्चैव वेदांश्च तुलयातोलयत् प्रभुः ।
एकतश्चतुरो वेदान् गायत्त्रीञ्च तथैकतः ॥
ॐकारमादितः कृत्वा व्याहृतीस्तदनन्तरम् ।
ततोऽधीयीत सावित्रीमेकाग्रः श्रद्धयान्वितः ॥
पुराकल्पे समुत्पन्ना भूर्भुवःस्वःसनातनाः ।

| | | |
|---|---|---|
| व्यास उवाच ।<br>“एवं दण्डादिभिर्युक्तं<br>शौचाचारसमन्वितः।<br>आहूतोऽध्ययनं कुर्य्याद्वीक्षमाणो<br>गुरोर्म्मुखम् ॥<br>नित्यमुद्यतपाणिः स्यात् साध्वाचारः<br>सुसंयतः ।<br>आस्यतामिति चोक्तः<br>सन्नासीताभिमुखं<br>गुरोः ॥<br>प्रतिश्रवणसम्भाषे शयानो न<br>समाचरेत् । | | |

महाव्याहृतयस्तिस्रः
सर्व्वाशुभनिवर्हणाः ॥
प्रधानं पुरुषः कालो
ब्रह्मविष्णुमहेश्वराः ।
सत्त्वं रजस्तमस्तिस्रः क्रमाद्व्याहृतयः
स्मृताः ॥
ओँकारस्तत्परं ब्रह्म सावित्री
स्यात्तदक्षरम् ।
एष मन्त्रो महाभागः सारात्सार
उदाहृतः ॥
योऽधीतेऽहन्यहन्येतां सावित्रीं
वेदमातरम् ।
विज्ञायार्थं ब्रह्मचारी स याति परमां
गतिम् ॥
गायत्री वेदजननी गायत्री लोकपावनी
।
न गायत्र्याः परं जप्यं एतद्विज्ञाय
मुच्यते ॥
श्रावणस्य च माघस्य पौर्णमास्यां
द्विजोत्तमाः ।
आषाढ्यां प्रौष्ठपद्यां वा वेदोपकरणे
स्मृतः ॥
उत्सृज्य ग्रामनगरं मासान्
विप्रोऽर्द्धपञ्चमान् ।
अधीयीत शुचौ देशे ब्रह्मचारी
समाहितः ॥
पुष्ये तु छन्दसां
कुर्य्याद्बहिरुत्सर्ज्जयेद्द्विजः ।
माघशुक्लस्य तु प्राप्ते पूर्ब्बाह्णे
प्रथमेऽहनि ॥
छन्दांस्यूर्द्ध्वमथो जप्यात् शुक्लपक्षे
तु वै द्विजः ।
वेदाङ्गानि पुराणानि कृष्णपक्षे तु मानवः
॥ * ॥
इमान्नित्यमनध्यायानधीयानो
विचक्षणः ।
अध्यापनञ्च कुर्व्वाणो अभ्यस्यन्नपि
यत्नतः ॥

एकामृचमथैकं वा यजुः सामाथवा पुनः ।
अष्टकाद्यास्वधीयीत मारुते चातिवायति ॥
अनध्यायस्तु नाङ्गेषु नेतिहासपुराणयोः ।
न धर्म्मशास्त्रेष्वन्येषु पर्व्वस्वेतानि वर्ज्जयेत्
॥ * ॥
एष धर्म्मः समासेन कीर्त्तितो ब्रह्मचारिणाम् ।
ब्रह्मणाभिहितः पूर्व्वमृषीणां भावितात्मनाम्
॥
योऽन्यत्र कुरुते यत्नमनधीत्य श्रुतिं द्विजाः ।
स संमूढो न संभाव्यो वेदवाह्यो द्विजातिभिः
॥
न वेदपाठमात्रेण सन्तुष्टो वै भवेत् द्विजः ।
पाठमात्रावसन्नस्तु पङ्के गौरिव सीदति ॥
अधीत्य विधिवद्वेदं वेदार्थं न विचारयेत् ।
स सान्वयः शूद्रकल्पः पात्रतां न प्रपद्यते ॥
पठित्वात्यन्तिकं वासं कर्त्तुमिच्छति वै गुरोः
।
युक्तः परिचरेदेनं न शरीरविमोक्षणम् ॥
गत्वा वनं यो विधिवज्जुहुयाज्जातवेदसम् ।
अधीयीत सदा नित्यं ब्रह्मनिष्ठः समाहितः ॥
सावित्रीं शतरुद्रीयं वेदान्तांश्च विशेषतः ।
अभ्यसेत् सततं मुक्तो भस्मस्नानपरायणः
॥
एतद्विधानं परमं पुराणं
वेदागमे सम्यगिहेरितं वः ।
पुरा महर्षिप्रवराभिपृष्टः
स्वायम्भुवो यन्मनुराह देवः ॥
एतमीश्वरसमीरितं नरो
योऽनुतिष्ठति विधिं विधानवित् ।
मोहजालमपहाय सोऽमृतो
याति ततपदमनामयं शिवम् ॥”
इति कौर्म्मे उपविभागे १३ अध्यायः ॥
अथ ऋग्वेदस्य संहिता ।
“बिभेद प्रथमं विप्र पैल ऋग्वेदपादपम् ।
इन्द्रप्रमितये प्रादात् वास्कलाय च संहिते ॥
चतुर्द्धा सा विभेदाथ वास्कलो निजसंहिताम्
।
बोध्यादिभ्यो ददौ तास्तु शिष्येभ्यः स
महामतिः ॥

इति विष्णुपुराणे ३ अंशे वेदविभक्तिर्नाम ४
अध्यायः ॥ * ॥ यजुर्व्वेदस्य संहिता यथा,
--
“यजुर्व्वेदतरोः शाखाः सप्तविंशन्महामतिः ।
वैशम्पायननामासौ व्यासशिष्यश्चकार वै ।
शिष्येभ्यः प्रददौ ताश्च
जगृहुस्तेऽप्यनुक्रमात् ॥
याज्ञवल्क्यस्तु तस्याभूद्ब्रह्मरातसुतो द्विज
।
शिष्यः परमधर्म्मज्ञो गुरुवृत्तिपरः सदा ॥
ऋषिर्य्योऽद्य महामेरोः समाजे नागमिस्यति
।
तस्य वै सप्तरात्रन्तु ब्रह्महत्या भविष्यति ।
पूर्ब्बमेव मुनिगणैः समयोऽयं कृतो द्विज ॥
वैशम्पायन एकस्तु तं व्यतिक्रान्तवांस्ततः ।
स्वस्रीयं बालकं सोऽथ पदा स्पृष्टमघातयत्
॥
स शिष्यानाह भोः शिष्याः ब्रह्महत्यापहं
व्रतम् ।
चरध्वं मत्कृते सर्व्वे न विचार्य्यमिदं तथा ॥
अथाह याज्ञवल्क्यस्तं किमेभिर्भगवन्द्विजैः ।
क्लेशितैरल्पतेजोभिश्चरिष्येऽहमिदं व्रतम् ॥
ततः क्रुद्धो गुरुः प्राह याज्ञवल्क्यं महामतिम्
।
मुच्यतां यत् त्वयाधीतं मत्तो विप्रावमन्यक !
॥
निस्तेजसो वदस्वेतान् यस्त्वं
ब्राह्मणपुङ्गवान् ।
तेन शिष्येण नार्थोऽस्ति ममाज्ञाभङ्गकारिणा
॥
याज्ञवल्क्यस्ततः प्राह भक्त्यैतत्ते
मयोदितम् ।
ममाप्यलं त्वयाधीतं यन्मया तदिदं द्विज ॥
श्रीपराशर उवाच ।
इत्युक्त्वा रुधिराक्तानि स्वरूपाणि यजूंषि
सः ।
छर्द्दयित्वा ददौ तस्मै ययौ च स्वेच्छया मुनिः
॥
यजूंष्यथ विसृष्टानि याज्ञवल्क्येन वै द्विज ।

कर्णश्रवेऽनिले रात्रौ दिवा पांशुससूहने
।
विद्युत्स्तनितसर्व्वेषु महोल्कानाञ्च
संप्लवे ॥
आकालिकमनध्यायमेतेष्वाह
प्रजापतिः ।
एतानभ्युदितान् विद्याद्यदा
प्रादुष्कृताग्निषु ॥
तदा विद्यादनध्यायमनृतौ चात्र दर्शने ।
सज्योतिः स्यादनध्यायः शेषे रात्रौ
यथा दिवा ॥
नित्यानध्याय एव स्याद्ग्रामेषु नगरेषु
च ।
धर्म्मनैपुण्यकामानां पूतिगन्धेषु
नित्यशः ॥
अन्तःशवगते ग्रामे वृषलस्यैव सन्निधौ
।
अनध्यायो रुद्यमाने समवाये जनस्य च
॥
उदके मध्यरात्रे च विण्मूत्रस्य
विसर्ज्जने ।
उच्छिष्टः श्राद्धं भुक्त्वैव मनसापि न
चिन्तयेत् ॥
प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य
केतनम् ।
त्र्यहं न कीर्त्तयेद्ब्रह्म राज्ञो राहोश्च
सूतके ॥
यावदेकान्तदुष्टस्य स्नेहो लेपश्च
तिष्ठति ।
विप्रस्य विदुषो देहे तावद्ब्रह्म न
कीर्त्तयेत् ॥
शयानः प्रौढपादश्च तथा
चैवावशक्थिकः ।
नाधीयीतामिषं जग्ध्वा सूतकान्नाद्यमेव
च ॥
निराहारे बाणशब्दे सन्ध्ययोरुभयोरपि
।
अमावास्याचतुर्द्दश्योः पौर्णमास्यष्टमीषु
च ॥
उपाकर्म्मणि चोत्सर्गे त्रिरात्रं क्षपणं
स्मृतम् ।

बोध्याग्निमातुरौ तद्वत् जातुकर्णपराशरौ ।
प्रतिशाखास्तु शाखायास्तस्यास्ते जगृहुर्मुने
॥
इन्द्रप्रमितिरेकान्तु संहितां स्वसुतं ततः ।
माण्डूकेयं महात्मानं मैत्रेयाध्यापयत्तदा ॥
तस्य शिष्यप्रशिष्येभ्यः पुत्त्रशिष्यक्रमाद्ययौ
।
वेदमित्रस्तु शाकल्यः संहितां तामधीतवान्
॥
चकार संहिताः पञ्च शिष्येभ्यः प्रददौ च ताः
।
तस्य शिष्याश्च ये पञ्च तेषां नामानि मे शृणु
॥
मुद्गलो गालवश्चैव वात्स्यः शालीय एव च
।
शैशिरः पञ्चमश्चासीन्मैत्रेय सुमहामतिः ॥
संहितात्रितयञ्चक्रे शाकपूर्णिरथेतरः ।
निरुक्तमकरोत्तद्वच्चतुर्थं मुनिसत्तम ॥
क्रौञ्चो वैतालिकस्तद्वद्वलाकश्च महामतिः ।
निरुक्तकृच्चतुर्थोऽभूद्वेदवेदाङ्गपारगः ॥
इत्येताः प्रतिशाखाभ्यो ह्यनुशाखा द्विजोत्तम
।
वास्कलिश्चापरास्तिस्रः संहिताः कृतवान्
द्विजः ॥
शिष्यः कालायनिर्गार्ग्यस्तृतीयश्च तथा
जवः ।
इत्येते बह्वृचाः प्रोक्ताः संहिता यैः प्रव-
र्त्तिताः ॥

जगृहुस्तित्तिरा भूत्वा तैत्तिरीयास्तु ते ततः
॥
ब्रह्महत्याव्रतं चीर्णं गुरुणा चोदितैस्तु यैः ।
चरकाध्वर्य्यवस्ते तु चरणान्मुनिसत्तम ॥
याज्ञवल्क्योऽपि मैत्रेय प्राणायामपरायणः ।
तुष्टाव प्रयतः सूर्य्यं यजूंष्यभिलषंस्ततः ॥
श्रीयाज्ञवल्क्य उवाच ।
नमः सवित्रे द्वाराय मुक्तेरमिततेजसे ।
ऋग्यजुःसामभूताय त्रयीधामवते नमः ॥
श्रीपराशर उवाच ।
इत्येवमादिभिस्तेन स्तूयमानः स्तवै रविः ।
वाजिरूपधरः प्राह व्रियतामभिवाञ्छितम् ॥
याज्ञवल्क्यस्ततः प्राह प्रणिपत्य दिवाकरम्
।
यजूषि तानि मे देहि यानि सन्ति न मे गुरौ ॥
श्रीपराशर उवाच ।
एवमुक्तो ददौ तस्मै यजुंषि भगवान् रविः ।
अयातयामसंज्ञानि यानि वेत्ति न तद्गुरुः ॥
यजूंषि यैरधीतानि तानि वेप्रैर्द्विजोत्तम ।
वाजिनस्ते समाखाताः सूर्य्योऽश्वः
सोऽभवद्-
यतः ॥
शाखाभेदास्तु तेषां वै दश पञ्च च वाजिनाम्
।
काण्वाद्याः सुमहाभाग याज्ञवल्क्यप्रवर्त्तिताः
॥”
इति श्रीविष्णुपुराणे ३ अंशे वाजिनामाख्यार्न
५ अध्यायः ॥ * ॥ सामवेदस्य संहिता
यथा, --
“सामवेदतरोः शाखा व्यासशिष्यः स
जैमिनिः ।
क्रमेण येन मैत्रेय विभेद शृणु तन्मम ॥

| | | |
|---|---|---|
| अष्टकासु त्वहोरात्रमृत्वन्तासु च रात्रिषु ॥<br>मार्गशीर्षे तथा पौषे माघमासे तथैव च ।<br>तिस्रोऽष्टकाः समाख्याताः कृष्णपक्षेषु सूरिभिः ॥<br>श्लेष्मातकस्य च्छायायां शाल्मलेर्मधुकस्य च ।<br>कदाचिदपि नाध्येयं कोविदारकपित्थयोः ॥<br>समानविद्ये तु मृते तथा सब्रह्मचारिणि ।<br>आचार्य्ये संस्थिते वापि त्रिरात्रं क्षपणं स्मृतम् ॥<br>छिद्राण्येतानि विप्राणां येऽनध्यायाः प्रकी-<br>र्त्तिताः ।<br>हिंसन्ति राक्षसास्तेषु तस्मादेतानि वर्ज्जयेत् ॥<br>नित्यके नास्त्यनध्यायः सन्ध्योपासन एव च ।<br>उपाकर्म्मणि कर्म्मान्ते होममन्त्रे तथैव च ॥ | | |

सुमन्तुस्तस्य पुत्त्रोऽभूत् सुकर्म्मास्याप्यभूत्
सुतः ।
अधीतवन्तावेकैकां संहितां तौ महामुनी ॥
साहस्रं संहिताभेदं सुकर्म्मा तत्सुतस्ततः ।
चकार तञ्च तच्छिष्यौ जगृह्णाते महाव्रतौ ॥
हिरण्यनाभिः कौशल्यः पौष्यञ्जिश्च
द्विजोत्तमः ।
उदीच्याः सामगाः शिष्यास्तस्य पञ्चशताः
स्मृताः ॥
हिरण्यनाभात्तावत्यः संहिता यैर्द्विजोत्तम ।
गृहीतास्तेऽपि चोच्यन्ते पण्डितैः प्राच्य
सामगाः ॥
लोकाक्षिः कुथमिश्चैव कुषीदिर्लाङ्गलिस्तथा ।
पौष्यञ्जिशिष्यास्तद्भेदैः संहिता बहुलीकृताः ॥
हिरण्यनाभशिष्यश्च चतुर्विंशतिसंहिताः ।
प्रोवाच कृतिनामासौ शिष्येभ्यः सुमहामतिः ॥
तैश्चापि सामवेदोऽसौ शखाभिर्बहुलीकृतः ॥”
*
अथर्व्ववेदस्य संहिता यथा, --
“अथर्व्वणामथो वक्ष्ये संहितानां समुच्चयम् ।
अथर्व्ववेदं स मुनिः सुमन्तुरमितद्युतिः ॥
शिष्यमध्यापयामास कबन्धं सोऽपि तद्द्विधा
।
कृत्वा तु वेददर्शाय तथा पथ्याय दत्तवान् ॥
वेददर्शस्य शिष्यास्तु मोदो ब्रह्मवलिस्तथा ।
शौल्कायनिः पिप्पलादस्तथान्यो मुनिसत्तमः
॥
पथ्यस्यापि त्रयः शिष्याः कृतायैर्द्विज संहिताः
।
जाजलिः कुमुदादिश्च तृतीयः शौनको द्विज ॥
शौनकस्तद्द्विधा कृत्वा ददावेकान्तु वभ्रवे ।
द्वितीयां संहितां प्रादात् सैन्धवायनसंज्ञिने ॥
सैन्धवा मुञ्जकेशाश्च भिन्नवेदा द्विधा पुनः ।
नक्षत्रकल्पो वेदानां संहितानान्तथैव च ॥
चतुर्थः स्यादङ्गिरसः शान्तिकल्पश्च पञ्चमः ।
श्रेष्ठाश्चाथर्व्वणामेते संहितानां विकल्पकाः
॥”
इति विष्णुपुराणे ३ अंशे ६ अध्यायः ॥
अन्यत् कूर्म्मपुराणवत् ॥ * ॥ अपरञ्च ।
“वेदो हरेर्व्वाक् सावित्री वेदमाता प्रतिष्ठिता ।
वेदोक्तानि च कर्म्माणि ययुस्तैः सार्द्धमेव च ।
हरिपूजा हरेर्नाम तत्कीर्त्तिगुणकीर्त्तनम् ॥
वेदाङ्गानि च शास्त्राणि ययुस्तैः सार्द्धमेव च ।
सत्वञ्च धर्म्मः सत्यश्च वेदाश्च ग्रामदेवताः
॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ६ अध्यायः ॥
* ॥
आयुर्व्वेदस्योत्पत्तिलक्षणे यथा, --
“यद्वक्त्रेभ्यः पञ्चसंख्यागतेभ्यो
वेदा जाता ऋग्यजुःसामभेदाः ।
आयुर्व्वेदोऽथर्व्ववेदश्चेति कणादः ॥
आस्ते वेदः पञ्चमो वैद्यकाख्यो
वेत्ता कश्चित्तस्य नास्ते महेशात् ।
तस्माद्धाताध्यैत तस्मात्तुराषाट्-
तस्माज्ज्ञात्वा वक्तुमर्हामि शास्त्रम् ॥”
इति गूढबोधः ॥
“हिताहितं सुखं दुःखमायुस्तस्य हिताहितम्
।
मानञ्च तच्च यत्रोक्तमायुर्व्वेदः स उच्यते ॥”
इति सुखबोधः ॥ * ॥ * ॥
चतुर्वेदानां विवरणं यथा । अथातश्चरणव्यूहं
व्याख्यास्यामः । तत्र यदुक्तं चातुर्व्वेद्यम् ।
चत्वारो
वेदा विज्ञाता भवन्ति । ऋग्वेदो यजुर्व्वेदः
सामवेदोऽथर्व्ववेदश्चेति । तत्र ऋग्वेदस्याष्टौ
स्थानानि भवन्ति । चर्च्चाश्रावकः १
चर्च्चकः २
श्रवणीयपारः ३ क्रमपारः ४ क्रमरथः ५
क्रमजटः ६ क्रमशटः ७ क्रमदण्डश्चेति ८ ।
चतुष्पारायणमेतेषाम् । शाखाः पञ्चविधा
भवन्ति । आश्वलायनी १ संख्यायनी २
शाकला ३ वास्कला ४ माण्डूकेयाश्चेति ५
।
तेषामध्ययनम् । अध्यायाश्चतुःषष्टिः ।
मण्ड-
लानि च दशैव तु ।
“एकर्च एकवर्गस्यादेकश्च नवकस्तथा ।
द्वौ वर्गौ द्वे ऋचौ ज्ञेये त्रीणि ऋचशतं
स्मृतम् ॥
सप्तकानां द्वे च सप्तोत्तरे शते ।
चतुरृचे त्रीणि
शतानि षट्कानां त्रीण्याः
षष्टिरष्टकानाम् ॥ * ॥
यजुर्व्वेदस्य षडशीतिर्भेदा भवन्ति ।
तत्र
चरकाणां द्वादशभेदा भवन्ति ।
चरकाः १
आह्वरकाः २ कठाः ३ प्राच्यकठाः ४
कपिष्ठल-
कठाः ५ औपमन्याः ६ आष्टलकठाः
७ चारा-
यणीयाः ८ वारायणीयाः ९
वार्त्तान्तवेयाः १०
श्वेताश्वतराः ११ श्वेताश्वेततरा
इति वा
पाठः । मैत्रायणीयाश्चेति १२ । तत्र
मैत्राय-
णीयानां सप्तभेदा भवन्ति । मानवाः
१
दुन्दुभाः २ चैकेयाः ३ वाराहाः ४
हारिद्र-
वेयाः ५ श्यामाः ६
श्यामायनीयाश्चेति ७ ।
तेषामध्ययनमष्टौ ।
यजुःसहस्राण्यधीत्य शाखा-
पारो भवति । तान्येव
द्विगुणान्यधीत्य पदपारो
भवति । तान्येव त्रिगुणान्यधीत्य
क्रमपारो
भवति । षडङ्गान्यधीत्य
षडङ्गविद्भवति । शिक्षा १
कल्पो २ व्याकरणम् ३ निरुक्तम् ४
छन्दो ५
ज्योतिषमित्यङ्गानि ६ । तत्र
प्राच्योदीच्यां
नैरृत्यां निरृत्यः । तत्र वाजसनेयानां
सप्त-

त्रिगुणञ्च त्रिवृत्सत्रं तेन विप्राः प्रतिष्ठिताः ॥
दशयज्ञैः संस्कृता ये ब्राह्मणा ब्रह्मवादिनः ।
तत्र वेदाश्च लोकानां त्रयाणामिह पोषकाः ॥
यज्ञाध्ययनदानादितपःस्वाध्यायसंयमैः ।
प्रीणयन्ति हरिं भक्त्या वेदतन्त्रविधानतः ॥”
इति कल्किपुराणे २ अध्यायः ॥ * ॥
वेदोक्तकर्म्म कर्त्तव्यं यथा, --
“श्रुतिस्मृतिसदाचारविहितंकर्म्म केवलम् ।
सेवितव्यं चतुर्व्वर्णैर्भजद्भिः केशवं सदा ॥
अन्यथा निरयं याति कुमार्गगणसेवनात् ।
अतो वेदविरुद्धार्थं शास्त्रोक्तं कर्म्म संत्यजेत्
॥”
इति पाद्मोत्तरखण्डे १७ अध्यायः ॥ * ॥
वेदाचाराल्लौकिकाचारो बलवान् यथा, --
पार्व्वत्युवाच ।
“केवलं वेदमाश्रित्य कः करोति विनिर्णयम् ।
बलनान् लौकिको वेदाल्लोकाचारञ्च कस्त्यजेत्
॥”
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ७ अध्यायः ॥ *
॥
अथ वेदस्य स्थितिकालः ।
“कलेर्दशसहस्रान्ते ययौ त्यक्त्वा हरेः पदम् ।
वैष्णवाश्च पुराणानि शङ्कानि श्राद्धतर्पणम् ॥

चतुऋचं समाख्यातं षट्सप्तत्युत्तरं शतम् ।
पञ्चर्च्चं द्वादश शतान्यष्टाविंशोत्तराणि च ॥
शतत्रयं षडर्च्चञ्च सप्तपञ्चाशदुत्तरम् ।
सप्तर्च्चमेकान्न त्रिंशदुत्तरं शतमेककम् ॥
अष्टर्चाः पञ्चपञ्चाशद्वर्गाः स्युर्नाधिकोत्तराः ।
वर्गाणां परिसंख्यातं द्वे सदस्रे षड्डुत्तरे ॥
सहस्रमेकं सूक्तानां निर्व्विशङ्कं विकल्पनाम् ।
दशसप्तसु पट्यन्ते संख्यातं वै पदक्रमम् ॥
एकशतं सहस्रं वा द्विपञ्चाशत् सहस्रार्द्धम् ।
एतानि च चतुर्द्दश वाशिष्ठानाम् । इतरेषां
पञ्चाशीतिक्रमकाले तु वेष्टव्यम् ।
चतुस्त्रिंशत्-
सहस्राणि द्विखण्डानां सहस्राणां द्वात्रिंशत्
षोडशोत्तराः । चत्वारिंशत्सहस्राणि द्वात्रिं-
शतञ्चाक्षरसहस्राणि ।
ऋचां दशसहस्राणि ऋचां पञ्चशतानि च ।
ऋचामशीतिपादश्चैतत्परायणमुच्यते ॥
एक ऋचैकवर्गश्च एकश्च नवकस्तथा ।
द्वौ वर्गौ द्वे ऋचौ ज्ञेये त्रीणि त्रीणि शत-
न्तथा ॥
सहस्रमेकं सूक्तानां पञ्चानां शतमानविंशतिः
।

दशभेदा भवन्ति । जावालाः १
औघेयाः २
काण्वाः ३ माध्यन्दिनाः ४ शापीयाः
५ तापा-
यनीयाः ६ कापालाः ७ पौण्ड्रवत्साः
८ आव-
टिकाः ९ पामावटिकाः १०
परमावटिकापि
पाठः । पाराशरीयाः ११ वैधेयाः १२
वैनेयाः
१३ ओघेयाः १४ गालवाः १५
वैजवाः १६
कत्यायनीयाश्चेति १७ ।
प्रतिपदमनुपदं छन्दो
भाषा धर्म्मो मीमांसा न्यायस्तर्क
इत्युपाङ्गानि ॥
उपज्योतिषम् । साङ्गलक्षणम् ।
प्रतिज्ञान-
वाक्यम् । परिसंख्या । चरणव्यूहम् ।
श्राद्ध-
कल्पः । प्रवराध्यायश्च । शास्त्रम् ।
क्रतुः ।
संख्यानः । आगमः । यज्ञम् ।
पार्श्वान् ।
होत्रकम् । पारष्यानुहोत्रकमपि पाठः
।
पशवः । उक्थानि ।
कूर्म्मलक्षणमित्यष्टादश
परिशिष्टानि ।
“द्वे सहस्रे शते न्यूने मन्त्रे
वाजसनेयके ।
इत्युक्तं परिसंख्यातमेतत् सकलं
सशुक्रियम् ॥
ग्रन्थांश्च परिसंख्यातं ब्राह्मणञ्च
चतुर्गुणम् ।
आदावारभ्य वेदान्तं
ब्रह्मव्याहृतिपूर्ब्बकम् ।
वेदमध्याय एतेषां होमान्ते तु
समारभेत् ॥”
तत्र तैत्तिरीयकाणाम् द्विभेदा भवन्ति
।

| | | |
|---|---|---|
| | | औक्ष्याः १ खमध्योऽपि पाठः । खाण्डिकेया-<br>श्चेति २ । तत्र खाण्डिकेयानाम् पञ्चभेदा<br>भवन्ति । आपस्तम्बी १ बौधायनी २ सत्या-<br>षाढी ३ हिरण्यकेशी ४ औघेयाश्चेति ५<br>औधेयी च पाठः । तत्र कठानान्तूपगान-<br>विशेषाः । चतुश्चत्वारिंशित्युपग्रन्थान् ।<br>“मन्त्रब्राह्मणयोर्व्वेदस्त्रिगुणं यत्र पठ्यते ।<br>यजुर्व्वेदः स विज्ञेयः शेषाः शाखान्तराः<br>स्मृताः ॥” * ॥<br>सामवेदस्याखिलसहस्रभेद आसीत् । अखिल-<br>स्थाने किल इति भाष्यसम्मतः । अनध्याये-<br>ष्वधीयानास्ते शतक्रतुवज्रेणाभिहताः<br>प्रनष्टाः । |

तेषां प्रवक्ष्याम्यासुरायणीया
वासुरायणीया
वार्त्तान्तवेया प्राञ्जला ऋग्वर्णभेदा
प्राचीन-
योग्या ज्ञानयोग्या राणायनीयाश्चेति ।
तत्र
राणायनीयानां नव भेदा भवन्ति ।
राणाय-
नीयाः । शाष्ठ्यायनीयाः ।
शावायनीयाः इति
शात्यमुग्र्याः इति च पाठः । सात्वलाः ।
सात्यमुद्गवा इति वा पाठः । मौद्गलाः ।
इति
तु भाष्ये नास्ति । खल्वलाः ।
महाखल्वलाः ।
लाङ्गलाः । कौथुमाः । गौतमाः ।
जैमिनीया-
श्चेति । तेषामध्ययनमष्टौ सामसहस्राणि
सामानि च चतुर्द्दश अष्टौ शतानि ।
दशेति
दशसप्तसु बालखिल्याः ससुपर्णप्रेक्ष्यः ।
क्वचित्
पुस्तके नवतिदशतिवालखिल्यः
ससुपर्णप्रेक्ष्यः
इति च पाठः । एतत् सामगणं स्मृतम् ॥
* ॥
अथर्व्ववेदस्य नव भेदा भवन्ति ।
पैप्पलाः ।
दान्ताः । प्रदान्ताः । स्नाताः । स्नौता
इति च
पाठः । सौत्नाः । ब्रह्मदावलाः । शौनकी
।
देविदर्शती । चरणविद्याश्चेति । दाता
प्रदाता
औता ब्रह्मदीपशी वेदशी इति भाष्ये
नामा-
न्तरम् । तेषामध्ययनं पञ्च कल्पानि
भवन्ति ।

वन्दे रोद्रं त्रैष्टुभं ताम्रवर्णं
भारद्वाजं रुक्मनेत्रं कृशाङ्गम् ।
यजुर्व्वेदं दीर्घमादित्यवर्णं
कापालिनं पञ्च चारत्निमात्रम् ॥” * ॥
य इदं दैवतं रूपं गोत्रप्रमाणं छन्दोवर्णं
वर्णयति स विद्यां लभते स विद्यां लभते ।
जन्म जन्म वेदपारो भवति अव्रतो व्रती
भवति
अप्रयतः प्रयतो भवति अब्रह्मचारी
ब्रह्मचारी
भवति जातिस्मरो जायते ॥ * ॥
“य इदं चरणव्यूहं पर्व्वसु श्रावयेद्द्विजः ।
धौतपाप्मा शुचिर्विप्रो ब्रह्मभूयाय कल्पते ॥
य इदं चरणव्यूहं श्राद्धकाले सदा पठेत् ।
अक्षयमभवत् श्राद्धं पितृणामुपतिष्ठते ॥
योऽधीते चरणव्यूहं स विप्रः पङ्क्तिपावनः
।
पावयत्यखिलान् पूर्ब्बान् पुरुषान् सप्त सप्त
च ॥
य इमा विपुला देवा अमृतत्वञ्च गच्छति ।
लोकातीतं महाशान्तं अमृतत्वञ्च गच्छति
॥”
गच्छत्यों नम इत्याह भगवान् व्यासः पारा-
शरीयो व्यासः पाराशरीयः । इति
व्यासरचितं
चरणव्यूहं समाप्तम् ॥ (धनम् । यथा, ऋग्-
वेदे । ८ । ७३ । १ ।
“अग्निं रथं न वेद्यम् ।”
“वेद्यं वेदो धनम् धनहितम् ।” इति तद्भाष्ये
सायणः ॥ चतुःसंख्यावाचकः । यथा,
साहित्य-
दर्पणे । ४ । २६४ ।
“तदेवमेकपञ्चाशद्भेदास्तस्य ध्वनेर्मताः ।
सङ्करेण त्रिरूपेण संसृष्टा चैकरूपया ।
वेदखाग्निशराः शुद्धैरिषुवाणाग्निसायकाः ॥”
दर्भमुष्टिः । यथा, मनुः । ४ । ३६ ।
“वैणवीं धारयेद्यष्टिं सोदकञ्च कमण्डलुम् ।
यज्ञोपवीतं वेदञ्च शुभे रौक्मे च कुण्डले
॥”)

वक्ष्यमाणो विधिर्ज्ञेयः । शर इति । क्षत्त्रियया
पाणिग्रहणस्थाने ब्राह्मणविवाहे ब्राह्मणहस्त-
परिगृहीतकाण्डैकदेशो ग्राह्यः । वैश्यया
ब्राह्मणक्षत्त्रियविवाहे ब्राह्मणक्षत्त्रियविधृत-
प्रतोदैकदेशो ग्राह्यः । शूद्रया पुनर्द्वि
जातित्रय-
विवाहे प्रावृतवसनदशा ग्राह्या । इति
कुल्लूक-
भट्टः ॥

**वेदनिन्दकः**, पुं, (वेदं निन्दतीति । निन्द + ण्वुल् ।)
नास्तिकः । इति जटाधरः ॥ (यथा, यमः ।
३० ।
“दुर्भगो हि तथा षण्डः पाषंण्डी वेदनिन्दकः
॥”)
बुद्धश्च ॥

**वेदपारगः**, त्रि, (वेदस्य पारं गच्छतीति । गम +
डः ।) वेदवेत्ता । ब्रह्मज्ञानी । यथा, --
“चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे ।
तेऽभिजाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ॥”
इति श्राद्धतत्त्वे पितृगाथा ॥

**वेदमाता**, [ऋ] स्त्री, (वेदानां माता ।) गायत्त्री ।
यथा, --
“योऽधीतेऽहन्यहन्येतां सावित्रीं वेदमातरम्
।
विज्ञायार्थं ब्रह्मचारी स याति परमां गतिम् ॥
गायत्त्रीं वेदजननीं गायत्त्रीं लोकपावनीम् ।
न गायत्र्याः परं जप्यं एतद्विज्ञाय मुच्यते ॥”
इति कौर्म्मे उपविभागे १३ अध्यायः ॥ * ॥
दुर्गा । यथा, --
“ब्रह्मिष्ठा वेदमातृत्वाद्गायत्री चरणाग्रजा ।
वेदेषु चरते यत्नात्तेन सा ब्रह्मचारिणी ॥”
इति देवीपुराणे ४५ अध्यायः ॥

**वेदवती**, स्त्री, (वेदं ज्ञानमस्त्यस्या इति । वेद
+ मतुप् । मस्य वः । स्त्रियां ङीष् ।) कुश-
ध्वजराजकन्या । सा जन्मान्तरे सीता ।
यथा,
वह्निरुवाच ।

नक्षत्रकल्पो विधानकल्पो
विधिविधानकल्पः
संहिता शान्तिकल्पश्चेति । सर्व्वेषामेव
वेदाना-
मुपवेदा भवन्ति । ऋग्वेदस्यायुर्व्वेदः ।
यजु-
र्व्वेदस्य धनुर्व्वेद उपवेदः । सामवेदस्य
गान्धर्व्व-
वेद उपवेदः । अथर्व्ववेदस्य
शस्त्रशास्त्राणि
भवन्ति ॥ * ॥ (अथर्व्ववेदस्य
तन्त्रशास्त्राणीत्येवं
सुष्ठु मन्यते । तथा च शुक्रनीतौ । ४ । ३
। २७ ।
"ऋग्यजुःसामचाथर्व्वा वेदा
आयुर्धनुःक्रमात् ।
गान्धर्व्वश्चैव तन्त्राणि उपवेदाः
प्रकीर्त्तिताः ॥")
ऋग्वेदस्यात्रेयगोत्रं ब्रह्मदैवत्यं गायत्त्रं
छन्दः ।
ऋग्वेदो रुक्मवर्णः पद्मपत्रायताक्षः
सुविभक्तग्रीवः
कुञ्चितकेशः श्मश्रुश्वेतवर्णः
द्विरत्निसंयुतः ॥ * ॥
यजुर्व्वेदस्य भारद्वाजगोत्रं रुद्रदैवतं त्रैष्टुभं
छन्दः । यजुर्व्वेदः कृशो दीर्घः कपाली
ताम्रवर्णः
काञ्चननयनः आदित्यवर्णो वर्णेन
पञ्चारत्नि-
मात्रः ॥ * ॥ सामवेदस्य काश्यपगोत्रं
विष्णुदैवत्यं
जागतं छन्दः । सामवेदो नित्यस्रग्वी
शुचिः शुचौ
वासी शुचिवासाः इति च पाठः । क्षौमी
इत्यपि
पाठः । दान्ती चर्म्मी दण्डी
काञ्चननयनः
आदित्यवर्णो वर्णेन षडरत्निमात्रः ॥ * ॥
अथर्व्व-
वेदस्य वैजानगोत्रं इन्द्रदैवत्यं आनुष्टुभं
छन्दः ।

**वेदगर्भः**, पुं, (वेदा गर्भे अन्तरे यस्य ।) ब्रह्मा ।
(यथा, भागवते । २ । ४ । २४ ।
"एतदेवात्मभू राजन् नारदाय विपृच्छते ।
वेदगर्भोऽभ्यधात् साक्षाद्यदाह हरिरात्मनः
॥")
ब्राह्मणः । इति हेमचन्द्रः ॥

**वेदगुप्तिः**, स्त्री, (वेदानां गुप्तिः ।) ब्राह्मणादि-
कर्त्तृकवेदरक्षा । इति केचित् ॥

**वेदनं**, क्ली, स्त्री, (विद् + ल्युट् । पक्षे । "घट्टि-
वन्दिविदिभ्य उपसंख्यानम् ।" ३ । ३ ।
१०७ । इत्यस्य वार्त्तिकोक्त्या युच् ।)
अनुभवः ।
तत्पर्य्यायः । संवेदः २ । इत्यमरः ॥
ज्ञानम् ।
दुःखम् । इति मेदिनी ॥ विवाहः । यथा, --

**वेदना**, क्ली, स्त्री, (विद् + ल्युट् । पक्षे । "घट्टि-
वन्दिविदिभ्य उपसंख्यानम् ।" ३ । ३ ।
१०७ । इत्यस्य वार्त्तिकोक्त्या युच् ।)
अनुभवः ।
तत्पर्य्यायः । संवेदः २ । इत्यमरः ॥
ज्ञानम् ।
दुःखम् । इति मेदिनी ॥ विवाहः । यथा, --
"पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते ।
असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्म्मणि ॥
शरः क्षत्त्रियया ग्राह्यः प्रतोदो वैश्यकन्यया
।
वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने ॥"
इति मानवे ३ अध्यायः ॥ * ॥
पाणीति । समानजातीयासु गृह्यमाणासु
हस्त-
ग्रहणलक्षणः संस्कारो गृह्यादिशास्त्रेण
विधी-
यते । विजातीयासु पुनरुह्यमानासु विवाह-
कर्म्मणि पाणिग्रहणस्थाने
अयमनन्तरश्लोके

"त्वं गच्छ तपसे देवि ! पुष्करञ्च सुपुण्यदम्
।
कृत्वा तपस्यां तत्रैव स्वर्गलक्ष्मीर्भविष्यति ॥
सा च तद्वचनं श्रुत्वा प्रतप्य पुष्करे तपः ।
दिव्यं त्रिलक्षवर्षञ्च स्वर्गलक्ष्मीर्बभूव ह ॥
सा च कालेन तपसा यज्ञकुण्डसमुद्भवा ।
कामिनी पाण्डवानाञ्च द्रौपदी द्रुपदात्मजा ॥
कृते युगे वेदवती कुशध्वजसुता शुभा ।
त्रेतायां रामपत्नी सा सीतेति जनकात्मजा ॥
तच्छाया द्रौपदी देवी द्वापरे द्रुपदात्मजा ।
त्रिहायणीति सा प्रोक्ता विद्यमानयुगत्रये ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे १२ अध्यायः ॥
(पारिपात्रपर्व्वतस्थनदीविशेषः । यथा,
मार्क-
ण्डेये । ५७ । १९ ।
"वेदस्मृतिर्वेदवती वृत्रघ्नी सिन्धुरेव च ॥")

**वेदवदनं**, क्ली, (वेदानां वदनमिव ।) व्याकरणम् ।
यथा, --
"यो वेद वेदवदनं सदनं हि सम्यग्-
ब्राह्म्याः स वेदमपि वेद किमन्यशास्त्रम् ।
यस्मादतः प्रथममेतदधीत्य धीमान्
शास्त्रान्तरस्य भवति श्रवणेऽधिकारी ॥"
इति सिद्धान्तशिरोमणौ गोलाध्यायः ॥

| | | |
|---|---|---|
| अथर्व्ववेदस्तीक्ष्णश्चण्डः कृष्णः<br>कामरूपी क्षुद्र-<br>कर्म्मा ह्येव साध्याः क्षुद्रकर्म्मिष्वेव<br>साध्या इति<br>वा पाठः । सविग्रहाः सकलहाः मूर्ध्नि<br>गालवः<br>सदानतृष्णः परस्त्रियान्यश्चेति<br>नवरत्निमात्रः ।<br>ग्रन्थान्तरे विश्वात्मा विश्वकर्म्मा<br>स्वशाखा-<br>ध्यायी । प्राज्ञो महानीलोत्पलवर्णो वर्णेन<br>दश-<br>रत्निमात्र इति च पाठः ॥ * ॥ अथ<br>ध्यानम् ।<br>“ध्यायामि त्वां पद्मपत्रायताक्षं<br>कुञ्चितकेशं ब्रह्मदैवत्यमाद्यम् ।<br>गायत्र्यं ऋग्वेदमात्रेयगोत्रं<br>रुक्मवर्णं श्मश्रुलोमप्रमाणम् ॥ | | |

(वेदा वदने यस्येति विग्रहे ब्रह्मणि, पुं । यथा,
देवीभागवते । ७ । ३० । ८१ ।
"गायत्त्री वेदवदने पार्व्वती शिवसन्निधौ ॥")

**वेदवासः**, पुं, (वेदानां वासो यस्मिन् ।) ब्राह्मणः ।

इति शब्दरत्नावली ॥

**वेदवित्**, [द्] पुं, (वेदान् वेत्तीति । विद् +

क्विप् ।) विष्णुः । यथा, --
"वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित् कविः ॥"
इति तस्य सहस्रनामस्तोत्रम् ॥
वेदज्ञे, त्रि । (यथा, मनुः । २ । ७८ ।
"एतदक्षरमेताञ्च जपन् व्याहृतिपूर्ब्बिकाम् ।
सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते ॥")

**वेदव्यासः**, पुं, (वेदं व्यस्यति पृथक् करोतीति ।

वि + अस + अण् । निरुक्तिस्तु परत्र द्रष्टव्या ।)
मुनिविशेषः । तत्पर्य्यायः । माठरः २ द्वैपायनः
३ पाराशर्य्यः ४ कानीनः ५ वादरायणः ६
व्यासः ७ । इति हेमचन्द्रः ॥
कृष्णद्वैपायनः ८
सत्यभारतः ९ पाराशरिः १०
सात्यवतः ११ ।
इति त्रिकाण्डशेषः ॥ वादरायणिः १२ सत्य-
वतीसुतः १३ सत्यरतः १४
पाराशरः १५ ।
इति शब्दरत्नावली ॥ (यथा, विष्णुपुराणे ।
"वेदमेकं चतुर्भेदं कृत्वा शाखाशतैर्व्विभुः ।
(वेदस्य पूर्ब्बे, पुं, । यथा, तैत्तिरीयारण्यके ।
"यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रति-
ष्ठितः ॥")

**वेदादिबीजं**, क्ली, (वेदस्यादौ प्रयुक्तं बीजम् ।)

प्रणवम् । यथा, --
"वेदादि भुवनेशीञ्च श्रीबीजं ङेयुतं भृगुम् ।
कारयित्वा वदेन्मन्त्रं शुक्रस्य च षडक्षरम् ॥
ॐ ह्रीँ श्रीशुक्राय । इति रुद्रयामलम् ॥
"वेदादिबीजं हूँ बीजं स्त्रीबीजं तन्निकेतनम् ।
शक्तिबीजं रमाबीजं मायाबीजं सुखाकरम् ॥"
इति राजराजेश्वरीतन्त्रम् ॥

**वेदाधिपः**, पुं, (वेदानामधिपः ।) चतुर्व्वेदाधि-

पतिग्रहः । यथा, --
"ऋग्वेदाधिपतिर्जीवो यजुर्व्वेदाधिपः सितः ।
सामवेदाधिपो भौमः शशिजोऽथर्व्ववेदराट् ॥"
इति ज्योतिस्तत्त्वम् ॥

**वेदान्तः**, पुं, (वेदानां अन्तः ।) उपनिषत् ।

इति हेमचन्द्रः । वेदव्यासप्रणीततदर्शनशास्त्र-
विशेषोऽपि । यथा । वेदान्तो नाम उपनिषत्-
प्रमाणं तदुपकारीणि शारीरकसूत्रादीनि च ।
इति परमहंसपरिव्राजकाचार्य्यश्रीसदानन्द-
योगीन्द्रविरचितवेदान्तसारः ॥ * ॥ "इदानीं
सर्व्वस्यापि वस्तुविचारोद्देशपूर्व्वकत्वात् प्रति-
ज्ञातं वेदान्तं नामतो निर्दिशति वेदान्त इति ।
उपनिषद एव प्रमाणं उपनिषत्-प्रमाणम् ।
उपनिषदो यत्र प्रमाणमिति वा । तदुपकारीणि
वेदान्तवाक्यसंग्राहकाणि शारीरकसूत्रादीनि
च । शरीरमेव शारीरं तत्र भवो जीवः शारी-
रकः स सूत्र्यते याथातथ्येन निरूप्यते यैः
तानि शारीरकसूत्राणि 'अथातो ब्रह्मजिज्ञासा'
इत्यादीनि । आदिशब्दो भाष्यादिसंग्रहार्थः ।
चशब्दो वेदान्तशब्दानुषङ्गार्थः । यद्वा शारी-
रकसूत्राणि तद्यथार्थवादिवेदान्तार्थसंग्रह-
वाक्यानि । 'अथातो ब्रह्मजिज्ञासा' इत्यादि-
सूत्रादीनि । आदिशब्देन भगवद्गीताद्यध्यात्म-
शास्त्राणि गृह्यन्ते । तेषामपि उपनिषच्छब्द-
न च तानि करोति रविर्न कारयति तद्वदा-
त्मापि ॥
मनसोऽहंकारविमूर्च्छितस्य चैतन्यबोधिस्येह ।
पुरुषाभिमानसुखदुःखभावना भवति मूढस्य ॥
कर्त्ता भोक्ता द्रष्टास्मि कर्म्मणामुत्तमादीनाम् ।
इति तत्स्वभावविमलोऽभिमन्यते सर्व्वगोप्यात्मा ॥
नानाविधवर्णानां वर्णान् धत्ते यथामलस्फटिकः ।
तद्वदुपाधेर्गुणभावितस्य भावं विभुर्धत्ते ॥
गच्छति गच्छति सलिले दिनकरविम्बं स्थिते स्थितिं याति ।
अन्तःकरणे गच्छति गच्छत्यात्मापि तद्वदिह ॥
राहुरदृश्योऽपि यथा शशिविम्बस्थः प्रकाशते जगति ।
सर्व्वगतोऽपि तथात्मा बुद्धिस्थो दृश्यतामेति ॥
आदर्शे मलरहिते यद्वद्रूपं विचिनुते लोकः ।
आलोकयति तथात्मा विशुद्धबुद्धौ स्वमात्मानम् ॥
सर्व्वगतं तत् निरुपममद्वैतं तच्च चेतसा गम्यम् ।
यद्बुद्धिगतं ब्रह्मोपलभ्यते शिष्यबोध्यं तत् ॥
बुद्धिमनोऽहंकारास्तन्मात्रेन्द्रियगणाः सभूत-
गणाः ।
संसारसर्गपरिरक्षणक्षमाः प्राकृता हेयाः ॥
धर्म्माधर्म्मौ सुखदःखकल्पना स्वर्गनरकवासश्च ।
उत्पत्तिनिधनवर्णाश्रमान सन्तीह परमार्थे ॥
मृगतृष्णायामुदकं शुक्तौ रजतं भुजङ्गमो रज्ज्वाम् ।
तैमिरिकचन्द्रयुगवत् भ्रान्तं निखिलं जगद्रूपम् ॥
यद्वद्दिनकर एको विभाति सलिलाशयेषु सर्व्वेषु ।

करोति बहुलं भूयो
वेदव्यासस्वरूपधृक् ।
द्वापरे तु युगे विष्णुर्व्यासरूपी
महामुने ।
वेदमेकं स बहुधा कुरुते जगतो हितः
॥
यया च कुरुते तन्वा वेदमेकं पृथक्
प्रभुः ।
वेदव्यासाभिधाना तु सा सा
मूर्त्तिर्मधुद्विषः ॥”)
अस्यान्यत् विवरणं व्यासशब्दे
द्रष्टव्यम् ॥

**वेदाग्रणीः**, स्त्री, (वेदानामग्रणीः ।) सरस्वती ।
इति राजनिर्घण्टः ॥

**वेदाङ्गं**, क्लो, (वेदस्य अङ्गम् ।) श्रुत्यवयवषट्-
प्रकारशास्त्रम् । तद्यथा । शिक्षा १
कल्पः २
व्याकरणम् ३ निरुक्तम् ४ ज्योतिषम्
५ छन्दः
६ । यदुक्तम् ।
“शिक्षा कल्पो व्याकरणं निरुक्तं
ज्योतिषां
गणः ।
छन्दोविचितिरित्येतैः षडङ्गो वेद
उच्यते ॥” इति ॥
तत्र अकारादिवर्णानां
स्थूलकरणप्रयत्नबोधिका
अकु ए ह विसर्ज्जनीयाः कण्ठ्या
इत्यादिका
शिक्षा । यागक्रियाणामुपदेशः कल्पः
। साधु-
शब्दान्वाख्यानं व्याकरणम् ।
वर्णागमो वर्ण-
विपर्य्ययश्च इत्यादिना निश्चयेनोक्तं
निरुक्तम् ।
ग्रहणादिगणनशास्त्रं ज्योतिः ।
श्रुतिच्छन्दसां
प्रत्यायकं शास्त्रं छन्दोविचितिः ।
इत्यमर-
भरतौ ॥ (यथा, मनुः । ४ । ९८ ।

वाच्यत्वादिति भावः ।” इति
श्रीनृसिंहसरस्वती-
कृता तट्टीका सुबोधनी ॥ अस्य नामान्तरं
उत्तरमीमांसा । तत्र चत्वारः अध्यायाः । तेषु
ब्रह्मनिरूपणम् । तद्विवरणं यथा, --
“अव्यक्तादण्डमभूदण्डाद्ब्रह्माततः प्रजासर्गः
।
मायामयी प्रवृत्तिः संह्रियते पुनः पुनः
क्रमशः ॥
मायामयोऽप्यचेता गुणकरणगणः करोति
कर्म्माणि ।
तदधिष्ठाता देही सचेतनोऽपि न करोति
किञ्चिदपि ॥
यद्वदचेतनमपि सन्निकटस्थे भ्रामके भ्रमति
लोहम् ।
तद्वत् करणसमूहश्चेष्टति चिदधिष्ठिते देहे ॥
यद्वत् सवितर्य्युदिते करोति कर्म्माणि जीव-
लोकोऽयम् ।

तद्वत् सकलोपाधिष्ववस्थितोभाति
परमात्मा ॥
खमिव घटादिष्वन्तर्ब्बहिःस्थितं ब्रह्म सर्व्व-
पिण्डेषु ।
देहोऽहमित्यनात्मनि बुद्धिः संसारबन्धाय ॥
सर्व्वविकल्पनहीनः शुद्धोऽवृद्धोऽजरोऽमरः
शान्तः ।
अमलः सकृद्विभातश्चेतन आत्मा
खवद्व्यापी ॥
रसफाणितशर्करिका गुडखण्डा विकृतयो
यथैवेक्षोः ।
तद्वदवस्थाभेदाः परमात्मन्येव बहुरूपाः ॥
विज्ञानान्तर्यामिप्राणविराट्देहजाति-
पिण्डान्ताः ।
व्यवहारस्थस्यात्मन एतेऽवस्थाविशेषाः स्युः
॥
रज्ज्वां नास्ति भुजङ्गः सर्पभयं भवति हेतुना
केन
तद्वद्द्वैतविकल्पभ्रान्तिरविद्यान सत्यमिदम्
॥
एतत्तदन्धकारं यदनात्मन्यात्मताभ्रान्त्या ।
न विदन्ति वासुदेवं सर्व्वात्मानं नरा मूढाः ॥
प्राणाद्यन्तभेदैरात्मानं संवितत्य जालमिव ।
संहरति वासुदेवः स्वविभूत्या क्रीडमान इव
॥
त्रिभिरेव विश्वतैजसप्राज्ञैस्तैरादिमध्यनिध-
नाख्यैः ।
जाग्रत्स्वप्नसुषुप्तैर्भ्रमभूतैश्छादितं तुर्य्यम् ॥
मोहयतीवात्मानं स्वमायया द्वैतरूपया देवः ।
उपलभते स्वयमेवं गुहागतं पुरुषमात्मानम् ॥

| | | |
|---|---|---|
| “वेदाङ्गानि च सर्व्वाणि कृष्णपक्षेषु सम्पठेत् ॥”)<br>**वेदादि**, क्ली, (वेदानामादि । “क्वचिदौपचारिकाः शब्दाः स्वलिङ्गमपि त्यजन्तीति” न्यायादस्य क्लीवत्वम् ।) प्रणवम् । यथा, -- “वेदादि भुवनेशीञ्च श्रीबीजं ङेयुतं भृगुम् ।<br>कारयित्वा वदेन्मन्त्रं शुक्रस्य च षडक्षरम् ॥”<br>इति रुद्रयामलम् ॥ | | |

ज्वलनाद्धूमोद्गतिभिर्विविधाकृतिरम्बरे यथा
भाति ।
तद्वद्विष्णोः सृष्टिः स्वमाययाद्वैतविस्तरो भाति ॥
शान्त इव मनसि शान्ते हृष्टे हृष्ट इव मूढ इव मूढे ।
व्यवहारस्थो न पुनः परमार्थत ईश्वरो भवति ॥
जलधरधूमोद्गतिभिर्मलिनीक्रियते यथा न
गगनतलम् ।
तद्वत् प्रकृतिविकारैरपरामृष्टः परः पुरुषः ॥
एकस्मिन्नपि च घटे धूमादिमलावृते घटाः
शेषाः ।
न भवन्ति मलोपेता यद्वज्जीवोऽपि तद्वदिह ॥
देहेन्द्रियेषु नियताः कर्म्मगुणाः कुर्व्वते स्वभोगार्थम् ।
नाहं कर्त्ता न ममेति ज्ञानतः कर्म्म नैव बध्नाति ॥
अन्यशरीरेण कृतं कर्म्म भवे येन देह उत्पन्नः ।
तदवश्यं भोक्तव्यं भोगादेव क्षयोऽस्य निर्द्दिष्टः ॥
प्राक् ज्ञानोत्पत्तिचितं यत् कर्म्म ज्ञानशिखि-
शिखालीढम् ।
बीजमिव दहनदग्धं जन्मसमर्थं न तद्भवति ॥
ज्ञानोत्पत्तेरूद्ध्वं क्रियमाणं कर्म्म यत्तदपि ।
न श्लिष्यति कर्त्तारं पुष्करपर्णं यथा वारि ॥
वाग्देहमानसैरिह कर्म्मचयः क्रियत इति बुधाः प्राहुः ।

आकाश इव घटादिषु सर्व्वात्मा सर्व्वतोपेतः ॥
कर्म्मशुभाशुभजनितैः सुखदुःखैर्बन्धो भवत्युपा-
धीनाम् ।
तत्संसर्गाद्बद्धस्तस्करसङ्गादतस्करवत्॥
देहगुणकरणगोचरसङ्गात्पुरुषस्य यावदिह भावाः ।
तावन्मायापाशैः संसारे रुद्ध इव भाति ॥
मातृपितृबान्धवधनभोगसंमूढः ।
जन्मजरामरणमये चक्र इव भ्राम्यते जन्तुः ॥
लोकव्यवहारकृत्तां य इहाविद्यामुपासते मूढाः ।
ते जननमरणधर्म्माणो ध्वान्तमत्रेत्य खिद्यन्ते ॥
हिमफेनयुद्बुदा इव जलस्य धूमो यथा वह्नेः ।
तद्वत स्वभावभूता मायैषा कीर्त्तिता विष्णोः ॥
एवं द्वैतविकल्पां भ्रमस्वरूपां विमोहिनीं मायाम् ।
उत्सृज्य सकलं निष्फलमद्वैतं भावयेद्ब्रह्म ॥
यद्वत् सलिले सलिलं क्षीरे क्षीरं समीरणे वायुः ।
तद्वद्ब्रह्मणि विमले भावनया तन्मयत्वमुप-
याति ॥
इत्थं द्वैतसमूहे भावनया ब्रह्मभूयमुपयाति ।
को मोहः कः शोकः सर्व्वं ब्रह्मावलोकयतः ॥
विगतोपाधिस्फटिकः स्वप्रभया भाति निर्म्मलो
यद्वत् ।
चिद्दीपः स्वप्रभया तथा विभातीह निरुपाधिः ॥
गुणकरणगणशरीरप्राणैस्तन्मात्रजातिसुख-
दुःखैः ।
अपरामृष्टो व्यापी चिद्रूपोऽयं सदा विमलः ॥

तद्वत्स्वभावभूताः स्वभावतां प्राप्य नश्यन्ति ॥
भिन्ने ज्ञानग्रन्थौ छिन्ने संशयगणे शुभाशुभे क्षीणे ।
दग्धे च जन्मबीजे परमानन्दं हरिं याति ॥
मोक्षस्य नैव किञ्चिद्धामास्ति न चापि गमन-
मन्यत्र ।
अज्ञानमयग्रन्थेर्भेदो यस्तं विदुर्मोक्षम् ॥
बुद्ध्वैवमसत्यमिदं विष्णोर्मायात्मकं जगद्रूपम् ।
विगतद्वन्द्वोपाधिकभोगासङ्गोभवेच्छान्तः ॥
बुद्धा विभक्तां प्रकृतिं पुरुषः संसारमध्यगो भवति ।
निर्मुक्तः सर्व्वकर्म्मभिरम्बुजपत्रं यथा सलिलैः ॥
अश्नन् यद्वा तद्वा संवीतो येन केनचिच्छान्तः ।
यत्र क्वचन च शायी विमुच्यते सर्व्वभूतात्मा ॥
हयमेधशतसहस्राण्यथ कुरुते ब्रह्मघात-
लक्षाणि ।
परमार्थविन्न पुण्यैर्न च पापः स्पृश्यते विमलः ॥
मदकोपहर्षमत्सरविषादभयपरुषवर्ज्ज्यात्-
बुद्धिः ।
निस्तोत्रवषट्कारो जडवद्विचरेद्गाधमतिः ॥
उत्पत्तिनाशवर्ज्जितमेवं परमार्थमुपलभ्य ।
कृतकृत्यः सफलजनुः सर्व्वगतस्तिष्ठति यथेष्टम् ॥
व्यापिनमभिन्नमित्थं सर्व्वात्मानं विधूतनानात्वम् ।
निरुपमपरमानन्दं यो वेद स तन्मयो भवति ॥
तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन् देहम् ।
ज्ञानसमकालं मुक्तः कैवल्यं याति हतशोकः ॥
पुण्याय तीर्थसेवा निरयाय श्वपचसदननिधन-

एकोऽपि नाहमेषां कर्त्ता
तत्कर्म्मणामस्मि ॥
कर्म्मफलबीजनाशाज्जन्मविनाशोन
चात्र
सन्देहः ।
बुद्ध्वैवमपगततमाः सवितेव विभाति
भारूपः ॥
यद्वद्दिषीकातूलं पवनोद्धूतं दश दिशो
याति ।
ब्रह्मणि तत्त्वज्ञानात्तथैव कर्म्माणि
तत्त्वविदः ।
क्षीरादुद्धृतमाज्यं क्षिप्तं यद्वन्न
पूर्ब्बवत्तस्मिन् ।
प्रकृतिगुणेभ्यस्तद्वत्
पृथक्कृतश्चेतनोऽप्यात्मा ॥
गुणामयमायागहनं निर्द्धूय यथा तमः
सहस्रांशुः ।
बाह्याभ्यन्तरचारी सैन्धवघनवत् भवेत्
पुरुषः ॥
यद्वद्देहोऽवयवा मृदेव तस्या
विकारजातानि ।
तद्वत् स्थावरजङ्गममद्वैतं द्वैतवद्भाति ॥
एकस्मात् क्षेत्रज्ञाद्बहवः क्षेत्रजातयो
जाताः ।
लौहगतादिव दहनाः समन्ततो
विस्फुलिङ्ग-
कणाः ॥
ते गुणसङ्गमदोषाद्बद्धा इव धान्यजातयः
स्वतुषैः ।
जन्म लम्भते तावद्यावन्न ज्ञानवह्निना
दग्धाः ॥
त्रिगुणा चैतन्यात्मनि
सर्व्वगतेऽवस्थिताखिला-
धारे ।
कुरुते सृष्टिमविद्या सर्व्वत्र स्पृश्यते तया
नात्मा ॥
रज्ज्वां भुजङ्गहेतौ प्रभवविनाशौ यथा न
स्तः ।
ज गदुत्पत्तिविनाशौ न च कारणमस्ति
तद्व-
दिह ॥

द्रष्टा श्रोता घ्राता स्पर्शयिता रसयिता
ग्रहीता
च ।
देही देहेन्द्रियधीविवर्जितः स्यान्न कर्त्तासौ
॥
एको नैकत्रावस्थितो महैश्वर्य्यं योगतो
व्याप्तः ।
आकाशवदखिलमिदं न कश्चिदप्यत्र
सन्देहः ॥
आत्मैवेदं सर्व्वं निष्कलसकलं यदैव
भावयति ।
मोहगहनाद्विमुक्तस्तद्वैव परमेश्वरीभूतः ॥
यद्यत् सिद्धान्तागमतर्केषु प्रभ्रमन्ति
रागान्धाः ।
अनुमोदामस्तत्तत्तेषां सर्व्वात्मवादिधियाम्
॥
सर्व्वाकारो भगवानुपास्यते येन येन भावेन
।
तं तं भावं भूत्वा चिन्तामणिवत् समभ्येति
॥
नारायणमात्मानं ज्ञात्वा
सर्गस्थितिप्रलयहेतुम् ।
सर्व्वज्ञः सर्व्वगतः सर्व्वः सर्व्वेश्वरो भवति
॥
आत्मज्ञस्तरति शुचं यस्माद्विद्वान्न बिभेति
कुतश्चित् ।
मृत्योरपि मरणभयं न भवत्यन्यद्भयं
कुतस्तस्य ॥
क्षयवृद्धिवध्यघातकबन्धनमोक्षैर्व्विवर्ज्जितं
नित्यम् ।
परमार्थतत्त्वमेतत् यदतोऽन्यत्तदनृतं सर्व्वम्
॥
एवं प्रकृतिपुरुषं विज्ञाय
निरस्तकल्पनाजालः ।
आत्मारामः प्रशमं समास्थितः
केवलीभवति ॥
नलकदलिवेणुवाणा नश्यन्ति यथा
स्वपुष्प-
मासाद्य ।

गतिः ।
पुण्यापुण्यकलङ्कस्पर्शाभावेतु किन्तेन ॥
वृक्षाग्राच्च्युतपादो यद्वदनिच्छन्नरः क्षितौ
पतति ।
तद्वद्गुणपुरुषज्ञोऽनिच्छन्नपिकेवलीभवति
॥
परमार्थमार्गसाधनमारभ्याप्राप्य योगमपि
नाम ।
सुरलोकभोगभोगी मुदितमना मोदते सुभृ-
शम् ॥
विषयेषु सार्व्वभौमः सर्व्वजनैः पूज्यते यथा
राजा ।
भुवनेषु सर्व्वदेवैर्योगभ्रष्टस्तथा पूज्यः ।
महता कालेन महान् मानुष्यं प्राप्य योग-
मभ्यस्य ।
प्राप्नोति दिव्यममृतं यत्तत् परमं पदं विष्णोः
॥
वेदान्तशास्त्रमखिलं विलोक्य शेषोऽखिला-
धारः ।
आर्य्यापञ्चाशीत्या बबन्ध परमार्थसारमिदम्
॥”
इति श्रीशेषनागविरचितं परमार्थसारं समा-
प्तम् ॥

**वेदान्ती**, [न्] पुं, (वेदान्तोऽस्यास्तीति । वेदान्त + इनिः ।) वेदान्तशास्त्रवेत्ता । तत्पर्य्यायः । ब्रह्म-
वादी २ । इति जटाधरः ॥

**वेदारः**, पुं, कृकलासः । इति त्रिकाण्डशेषः ॥

**वेदाभ्यासः**, पुं, (वेदस्य अभ्यासः ।) वेदानुशील-

नम् । स च पञ्चविधः । यथा, दक्षः ।
"द्वितीये च तथा भागे वेदाभ्यासो विधीयते ।
वेदाभ्यासो हि विप्राणां परमं तप उच्यते ॥
ब्रह्मयज्ञपरं ज्ञेयः षडङ्गसहितश्च यः ।
वेदस्वीकरणं पूर्व्वं विचारोऽभ्यसनं जपः ।
तद्दानञ्चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ॥
शङ्खलिखितौ । न वेदमनधीत्यान्यां
विद्यामधी-
यीतान्यत्र वेदाङ्गस्मृतिभ्यः ॥"
इत्याह्निकतत्त्वम् ॥

**वेदि**, क्ली, (विद् + इन् ।) अम्बष्ठा । इति शब्द-

चन्द्रिका ॥

**वेदिः**, स्त्री, (विद्यते पुण्यमस्यामिति । विद् +

"हृपिषिरुहिवृतिविदीति ।" उणा० ४ ।
११८ ।
इति इन् ।) परिष्कृता भूमिः । इत्यमरः ॥
परिष्कृता यज्ञार्थं पशुबन्धनाय
यज्ञपात्रासाद-
नाय चातिसंस्कारा भूमिर्वेदिरुच्यते । सा च
डमरुकाद्याकारा पिण्डिका । वेदयति निवा-
रयति द्रव्यजातं वेदिः । विद ङ क ञ चेतना-
ख्याने वासवादे नाम्नीति इः । वेदिः स्त्री
वेदी
च । इति भरतः ॥ (यथा, रघुः । ११ । २५
।
"वीक्ष्य वेदिमथ रक्तबिन्दुभिः-
र्बन्धुजीवपृथुभिः प्रदूषिताम् ॥")
अङ्गुलिमुद्रा । इति मेदिनी ॥ (गृहोपकरण-
विशेषः । यथा, भागवते । १० । ४१ । २१
।
"वैदूर्य्यवज्रामलनीलविद्रुमै-
र्मुक्ताहरिद्भिर्व्वलभीषु वेदिषु ॥")

**वेदिः**, पुं, (वेत्तीति । विद् + इन् ।) पण्डितः ।

इति मेदिनी ॥

**वेदिका**, स्त्री, (वेदिरेव । स्वार्थे + कन् ।) मङ्गल-

"आर्षं छन्दश्च दैवत्यं
विनियोगस्तथैव च ।
वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः
॥"
इति तिथ्यादितत्त्वम् ॥

**वेदिता**, [ऋ] त्रि, (विद + तृच् ।) ज्ञाता । तत्-

पर्य्यायः । विदुरः २ बिन्दुः ३ । इति
हेमचन्द्रः ॥
यथा, महाभारते । ५ । ४३ । ५२ ।
"न वेदानां वेदिता कश्चिदस्ति
वेद्येन वेदं न विदुर्न वेद्यम् ॥")

**वेदी**, [न्] पुं, (वेत्तीति । विद् + णिनिः ।)

पण्डितः । इति शब्दरत्नावली ॥ ब्रह्म
। इति
केचित् ॥ ज्ञातरि, त्रि ॥ (यथा, रघुः ।
८ । २७ ।
"स परार्द्ध्यगतेरशोच्यतां
पितुरुद्दिश्य सदर्थवेदिभिः ॥")

**वेदी**, स्त्री, (वेदि + कृदिकारादिति वा ङीष् ।)

वेदिः । इत्यमरटीकायां भरतः ॥
सरस्वती ।
इति शब्दमाला ॥

**वेदीशः**, पुं, (वेदीनां पण्डितानामीशः ।) ब्रह्मा ।

इति त्रिकाण्डशेषः ॥

**वेदोक्तः**, त्रि, (वेदे उक्तः ।) श्रुतिकथितः । यथा,

"वेदोक्तमेव कुर्व्वाणो
निःसङ्गोऽर्पितुमीश्वरे ।
नैष्कर्म्यां लभते सिद्धिं रोचनार्था
फलश्रुतिः ॥"
इति मलमासतत्त्वम् ॥

**वेदोदयः**, पुं, (वेदः विषयज्ञानमुदये यस्य ।) सूर्य्यः ।

इति त्रिकाण्डशेषः ॥

**वेदोदितः**, त्रि, (वेदे उदितः ।) वेदोक्तः । यथा, --

**वेधः**, पुं, (विध + घञ् ।) वेधनम् । वँधा इति

भाषा । तत्पर्य्यायः । व्यधः २ । इत्यमरः ॥
(यथा, महाभारते । १२ । १६८ । ३६ ।
"वाणवेधे परं यत्नमकरोच्चैव गौतमः ॥")
गभीरता । गहरा इति चाडा इति च भाषा ॥
यथा, --
"गणयित्वा विस्तारं बहुषु स्थानेषु तद्युति-
र्भाज्या ।
स्थानकमित्यासममितिस्तन्दैर्घ्ये च वेधे च ॥
क्षेत्रफलं वेधगुणं खाते घनहस्तसंख्या स्यात्
।"
इति लीलावत्यां खातव्यवहारः ॥ * ॥
अथ सप्तशलाकवेधः ।
"कृत्तिकादिचतुःसप्तरेखाराशौ परिभ्रमन् ।
ग्रहश्चेदेकरेखास्थो वेधः सप्तशलाकजः ॥"
इति दीपिका ॥ * ॥
अथ खर्ज्जूरवेधः ।
"एकामूर्द्ध्वगतां त्रयोदश तथा तिर्य्यग्गताः
स्थापयेत्
रेखाश्चक्रमिदं बुधैरभिहितं खार्ज्जूरिकं तत्र
तु ।
व्याघातादि तु मूर्ध्नि भन्तु कथितं
तत्रैक्यरेखा-
स्थयोः
सूर्य्याचन्द्रमसोर्मिथो निगदिता दृक्पात
एका-
र्गलः ॥"
इति रत्नमाला ॥ * ॥
अथ युतवेधः ॥
"पापात् सप्तमगः शशी यदि भवेत् पापेन वा
संयुतो
यत्नात्तं परिवर्ज्जयेत् मुनिमतो दोषो ह्ययं
कथ्यते ॥"
अथ यामित्रवेधः ।
"रविमन्दकुजाक्रान्तं मृगाङ्कात् सप्तमं त्यजेत्
।
विवाहयात्राचूडासु गृहकर्म्मप्रवेशने ॥"
इति रत्नमाला ॥
वामदक्षिणवेधौ वामवेधशब्दे द्रष्टव्यौ ॥

कर्म्मार्थं निर्म्मितवेदिः । तत्पर्य्यायः ।
वितर्द्दिः २ ।
इत्यमरः ॥ वितर्द्दी ३ वेदिः ४ वेदी ५ । इति
तट्टीका ॥ द्वे आरामाङ्गनादिमध्यस्थवेदि-
कायाम् । देवागारादौ काष्ठादिचतुष्किकाया-
मित्यन्ये । दारुपरिवृता त्ततुरस्रा विश्रामभू-
र्व्वितर्द्दिरित्यपरे । स्तम्भसंलग्नपीठिका
वितर्द्दि-
रिति केचित् ।
मङ्गल्याङ्गनमध्यस्थचतुष्किकेति
केचित् । मङ्गलस्थानार्थं निर्म्मितवेदिकेति
केचित् । अशुभं वितर्द्दयति वितर्द्दिः । तर्द्द
हिंसे
नाम्नीति इः । वेदिका साहचर्य्यात् स्त्री
इदन्त-
त्वात् पक्षे ईप् वितर्द्दी च । वितर्द्दिः काष्ठ-
लोही स्यादिति रत्ने । वितर्द्दिरपीति मधुः ।
विदन्ति विद्यते वा अस्यामिति वेदिः
पूर्ब्बवदिः
स्वार्थेकः । अतएव वेदिर्व्वेदी च । इति भरतः
॥
(यथा, कुमारे । ३ । ४४ ।
"स देवदारुद्रुमवेदिकायां
शार्द्दूलचर्म्मव्यवधानवत्याम् ॥")

**वेदिजा**, स्त्री, (वेद्या जायते इति । जन + डः ।)
द्रौपदी । इति हेमचन्द्रः ॥

**वेदितः**, त्रि, ज्ञापितः । ज्यन्तविदधातोः क्तप्रत्ययेन
निष्पन्नमिदम् ॥

**वेदितव्यं**, त्रि, (विद + तव्य ।) वेद्यम् । ज्ञातव्यम् ।
यथा, --
"वेदोदितानां नित्यानां कर्म्मणां
समतिक्रमे ।
स्नातकव्रतलोपे च
प्रायश्चित्तमभोजनम् ॥"
इति मलमासतत्त्वम् ॥

**वेद्यं**, त्रि, (विद् + ण्यत् ।) वेदितव्यम् । यथा, --
"धर्म्मः प्रोज्झितकैतवोऽत्र परमो
निर्मत्सराणां
सताम्
वेद्यं वास्तवमत्र वस्तु शिवदं
तापत्रयोन्मूलनम् ।
श्रीमद्भागवते महामुनिकृते किंवा
परैरीश्वरः
सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः
शुश्रूषुभिस्तत्-
क्षणात् ॥"
इति श्रीभागवते १ स्कन्धे १
अध्यायः ॥
(धनाय हितम् । यथा, ऋग्वेदे । २ ।
२ । ३ ।
"रथमिव वेद्यं शुक्रशोचिषमग्निम् ।"
"वेद्यं वेदो धनम् । तस्मै हितम् ।"
इति तद्भाष्ये
सायणः ॥ स्तुत्यम् । तथा, तत्रैव । ५
। १५ । १ ।
"प्रवेधसे कवये वेद्याय गिरम् ।"
"वेद्याय स्तुत्याय ।" इति तद्भाष्ये
सायणः ॥
लब्धव्यम् । यथा,
वाजसनेयसंहितायाम् । १८ ।
११ ।
"वित्तं च मे वेद्यञ्च मे ।"
"वेद्यं लब्धव्यम् ।" इति तद्भाष्ये
महीघरः ॥
वेदाय हितमिति । वेद + यत् ।
बेदहितम् । वेद-
प्रतिपाद्यम् । यथा, महाभारते । १३ ।
१५८ । ३६ ।
"वेद्यञ्च यत् वेदयते च वेद्यं
विधिश्च यश्चाश्रयते विधेयम् ।
धर्म्मे च वेदे च बले च सर्व्वं

**वेधकं**, क्ली, (विध + ण्वुल् ।) धान्यकम् । इति
राजनिर्घण्टः ॥

**वेधकः**, पुं, (विध + ण्वुल् ।) कर्पूरः । इति
त्रिकाण्डशेषः ॥ अम्लवेतसः । इति
राजनिर्घण्टः ॥
(मणिमुक्तादिवेधोपजीवी । यथा, राभायणे ।
२ । ८४ । १३ ।
"मायूरिकाः क्राकचिका वेधका रोचका-
स्तथा ॥")
वेधकर्त्तरि, त्रि ॥ (यथा, महाभारते । १३ ।
२३ । ८० ।
"अप्राप्तदमकाश्चैव नासानां वेधकाश्च ये ।
बन्धकाश्च पशूनां ये ते वै निरयगामिनः ॥")

**वेधनिका**, स्त्री, (विध्यतेऽनयेति । विध + करणे
ल्युट् । ततः स्वार्थे कन् ।)
मणिशङ्खादिवेधनो-
पकरणम् । भोमरी इति भाषा । तत्पर्य्यायः ।
आस्फोटनी । इत्यमरः ॥ लास्फोटनी ३
स्फोटनी ४ वृषदंशिका ५ । इति भरतधृत-
वाचस्पतिः ॥

**वेधनी**, स्त्री, (विध्यतेऽनयेति । विध + ल्युट् ।
स्त्रियां ङीष् ।) हस्तिकर्णवेधनास्त्रम् । इति
त्रिकाण्डशेषः ॥ मेथिका । इति
भावप्रकाशः ॥

**वेधमुख्यः**, पुं, (वेधे वेधने मुख्यः श्रेष्ठः ।) कर्च्चूरः ।
इति राजनिर्घण्टः ॥

**वेधमुख्यकः**, पुं, (वेधमुख्य + स्वार्थे कन् ।) हरिद्रा-
वृक्षः । काँचा हल्दि इति ख्यातः ।
तत्पर्य्यायः ।
कर्व्वूरकः २ द्राविडकः ३ काल्पकः ४ काल्यकः
५ । इत्यमरभरतौ ॥

**वेधमुख्या**, स्त्री, (वेधे मुख्या ।) कस्तूरी । इति
राजनिर्घण्टः ॥

**वेधसं**, क्ली, ब्राह्मतीर्थम् । अङ्गुष्ठमूलम् । इति
शब्दचन्द्रिका ॥

**वेधाः**, [स्] पुं, (विदधातीति । वि + धा + "विधाञो
वेध च ।" उणा० ४ । २२४ । इति असिः ।
वेधादेशश्च सोपसर्गधातोः ।) ब्रह्मा । (यथा,
रघुः । १ । २९ ।
"तं वेधा विदधे नूनं महाभूतसमाधिना ।
तथाहि सर्व्वे तस्यासन् परार्थैकफला
गुणाः ॥")
विष्णुः । इत्यमरः ॥ (शिवः । यथा, हरिवंशे
भविष्यपर्व्वणि । १५ । १२ ।
"नमस्ते शितिकण्ठाय नीलग्रीवाय वेधसे
॥")
सूर्य्यः । इति शब्दरत्नावली ॥ पण्डितः । इति
निमित्तवेधी स मुनिरीषीकाभिः समर्पयत्
॥")
वेधविशिष्टः । विधधातोर्णिन्प्रत्ययेन वेधशब्दा-
दस्त्यर्थे इन्प्रत्ययेन वा निष्पन्नः ॥ अम्लवेतसे,
पुं । इति राजनिर्घण्टः ॥

**वेध्यं**, क्ली, (विध + ण्यत् ।) लक्ष्यम् । इति जटा-
धरः ॥ (यथा, मार्कण्डेये । ४२ । ७ ।
"प्राणो धनुः शरो ह्यात्मा ब्रह्म
वेध्यमनुत्तमम् ।
अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत्
॥")
वेधनीये, त्रि । यथा, --
"षट्कर्णोत्पत्तिमाशङ्क्यभानोः शुद्ध्या समेऽपि
च ।
कर्णौ वेध्यौ न दाषः स्यादन्यथा मरणं
भवेत् ॥"
इति मलमासतत्त्वम् ॥

**वेनः**, पुं, (अजतीति । अज गतौ + "धापॄवस्य-
ज्यतिभ्यो नः ।" उणा० ३ । ६ । इति नः । अजते-
र्वीभावः ।) प्रजापतिः । इत्युणादिकोषः
॥
(पृथुराजपिता । यथा, मार्कण्डेये । २७ ।
१५ ।
"हतमैलं तथा लोभात् मदाद्वेनं
द्विजैर्हतम् ॥"
अस्यान्यद्विवरणं मूर्द्धण्यान्तवेणशब्दे द्रष्ट-
व्यम् ॥ * ॥ देवविशेषः । इति निघण्टुः ।
५ । ४ । २४ ॥
यथा, ऋग्वेदे । १० । १२३ । १ ।
"अयं वेनश्चोदयन् पृश्निगर्भा ॥"
"वेनः कान्तः एतत्संज्ञो मध्यमस्थानो
देवः ।"

**वेपथुः**, पुं, (वेपनमिति । वेप + "द्वितोऽथुच् ।"
३ । ३ । ८९ । इति अथुच् ।) कम्पः । इत्य-
मरः ॥ (यथा, गीतायाम् । १ । २९ ।
"वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥")

**वेपनं**, क्ली, (वेप + ल्युट् ।) कस्पनम् । इति
शब्दरत्नावली ॥ (यथा, सुश्रुते शारीरस्थाने
१० आध्यायः । "तत्र विद्धस्य क्रोशनविनमन-
मोहनभ्रमणवेपनानि मरणं वा भवति ॥")

**वेमः**, पुं, वापदण्डः । यथा, --
"वापदण्डः पुंसि वेमा वेमो ना वेम न द्वयोः
॥"
इति शब्दरत्नावली ॥

**वेमा**, [न्] पुं, (वयत्यनेनेति । वे + "वेञः सर्व्वत्र ।"
उणा० ४ । १४९ । इति इमनिन् ।) वापदण्डः ।
इत्यमरभरतौ ॥ (यथा, नैषधे । १ । १२ ।
"सितांशुवर्णैर्व्वयति स्म तद्गुणै-
र्म्महासिवेम्नः सहकृत्वरी बहुम् ॥"
अर्द्धर्चादित्वात् क्लीवलिङ्गोऽपि । यथा, वाज-
सनेयसंहितायाम् । १९ । ८९ ।
"नग्नहुर्धीरस्तसरं न वेम ॥")

**वेरं**, क्ली, शरीरम् । वार्त्ताकुः । कुङ्कुमम् । इति
मेदिनी ॥

**वेरकं**, क्ली, कर्पूरम् । इति हारावली ॥

**वेल**, ऋ चाले । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) ऋ, अविवेलत् । इति
दुर्गादासः ॥

**वेल**, त् क कालार्थे । इति कविकल्पद्रुमः ॥ (अदन्त-
चुरा०-पर०-अक०-सेट् ।) कालार्थः कालो-
पदेशः । अविवेलत् । कालमियत्तया गणकः
एतावती वेलेति कथितवानित्यर्थः । इति दुर्गा-
दासः ॥

विश्वः ॥ श्वेतार्कवृक्षः । इति
शब्दचन्द्रिका ॥
अनन्तपुत्त्रः । यथा, --
"इक्ष्वाकुर्ज्येष्ठदायादो मध्यदेशमवाप्तवान्
।
सुद्युम्नस्य प्रतिष्ठानं तस्य पुत्त्रः पुरूरवाः
॥
नरिष्यतः शुकाः पुत्त्राः शाकं
क्षत्त्रमुदाहृतम् ।
नाभागस्याम्बरीषोऽभूत्सक्षत्त्रं पार्थिवं
ततः ॥
कोष्टवे वार्षकं क्षेत्रं रणवृष्टिर्ब्बभूव ह ।
शर्यातिर्म्मिथुनन्त्वासीदनन्तो नाम विश्रुतः
॥
सुकन्या नाम कन्या च या पत्नी यादवस्य
च ।
अनन्तस्य च पुत्त्रोऽभूत् वेधो नाम
महाप्रभुः ।
आनर्त्तविषये तेन पुरी कुशस्थली कृता
॥"
इति वह्निपुराणे
सागरोपाख्याननामाध्यायः॥
(प्रजापतिर्दक्षादिः । यथा, कुमारे । २ ।
१४ ।
"परतोऽपि परश्चासि विधाता वेधसामपि
॥"
त्रि, मेधावी । इति निघण्टुः । ३ । १५ ॥
विविध-
कर्त्ता । यथा, ऋग्वेदे । ५ । ४३ । १२ ।
"आ वेधसं नीलपृष्ठं बृहन्तम् ।"
"कीदृशं देवं वेधसं विविधकर्त्तारम् ।"
इति
तद्भाष्ये सायणः ॥)

**वेधितः**, पुं, (विध + णिच् + क्तः ।) कारित-
विद्धः । छिद्रितः । इत्यमरः ॥

**वेधिनी**, स्त्री, (विधति त्वचमिति । विध छिद्रीकरणे
+ णिनिः । ङीप् ।) रक्तपा । इति
शब्दरत्ना-
वली ॥ जोँक इति भाषा ॥ मेथिका । इति
राजनिर्घण्टः ॥

इति तद्भाष्ये सायणः ॥ * ॥ अजति
गच्छत्यनेन
स्वर्गमिति । यज्ञः । इति निघण्टुः । ३ ।
१७२ ॥
त्रि, मेधावी । इति निघण्टुः । ३ । १५ ।
५ ॥ यथा,
वाजसनेयसंहितायाम् । १३ । ३ ।
"सीमतः सुरुचो वेन आवः ॥"
"वेनः कामनीयो मेधावी वा ।" इति
तद्भाष्यम् ॥
कामयमानः । यथा, ऋग्वेदे । ८ । ८९ ।
५ ।
"आयन्मा वेना अरुहन्नृतस्य ॥"
"वेनाः कामयमानाः ।" इति तद्भाष्ये
सायणः ॥)

**वेन्ना**, स्त्री, (वन शब्दे संभक्तौ वा + "वनेरिच्चो-
पधायाः ।" उणा० ३ । ८ । इति नः
उपधाया
इत्वञ्च ।) नदीविशेषः । इति
सिद्धान्तकौमुद्या-
मुणादिवृत्तिः । (यथा, महाभारते । ३ ।
८८ । ३ ।
"वेन्ना भीमरथी चोभे नद्यौ पापभयापहे
॥")

**वेप**, टु ऋ ङ चले । इति कविकल्पद्रुमः ॥
(भ्वा०-
आत्म०-अक०-सेट् ।) चलः कम्पनम् ।
टु,
वेपथुः । ऋ, अविवेपत् । ङ, वेपते
वायुना वृक्षः ।
इति दुर्गादासः ॥

**वेपः**, [स्] क्ली, (वेप कम्पने + "सर्व्वधातुभ्यो-
ऽसुन् ।" उणा० ४ । १८८ । इत्यसुन् ।)
अन-
वद्यम् । यथा, --
"स्याद्बलज्योतिषोः क्लीवं वचो वाच्यथ
धातुषु ।
मेदो वेपोऽनवद्येऽथ सभायाञ्च सदो न ना
॥"
इत्युणादिकोषः ॥

**वेलं**, क्ली, उपवनम् । यथा, हेमचन्द्रे ।
"अपोपाभ्यां वनं वेलमारामः कृत्रिमे वने ॥"

**वेला**, स्त्री, (वेल्यतेऽनयेति । वेल + गुरोश्च हलः
इत्यः । ततष्टाप् ।) कालः । तत्पर्य्यायः ।
समयः २ क्षणः ३ वारः ४ अवसरः ५
प्रस्तावः
६ प्रक्रमः ७ अन्तरम् ८ । इति हेमचन्द्रः ॥
तत्परिमाणानि यथा, --
"अक्षिपक्ष्मपरिक्षेपो निमेषः परिकीर्त्तितः ।
द्वौ निमेषौ त्रुटिर्नाम द्वे त्रुटी तु लवः स्मृतः ॥
द्विलवः क्षण इत्युक्तः काष्ठा प्रोक्ता दश क्षणाः
।
दश काष्ठाः किला नाम तत्संख्या स्याच्च
नाडिका ॥
घटिके द्वे मुहूर्त्तः स्यात्तैस्त्रिंशत्या दिवानिशम्
।
चतुर्व्विंशतिवेलाभिरहोरात्रं प्रचक्षते ॥
सूर्य्योदयादि विज्ञेयो मुहूर्त्तानां क्रमः सदा ।
पश्विमादर्द्धरात्रादि होराणां विद्यते क्रमः ॥
ज्ञेयं पित्र्यमहोरात्रं पक्षौ कृष्णसितासितौ ।
त्रिंशता च दिनैर्मासो द्विमास ऋतुरुच्यते ।
भवेद्दिव्यमहोरात्रं षड्२भिरुत्तरदक्षिणौ ।
वर्षं द्वादशभिर्मासैर्म्मलमासस्त्रयोदशः ॥"
इति वह्निपुराणे गणभेदनामाध्यायः ॥ * ॥
मर्य्यादा । इत्यमरः ॥ (यथा, महाभारते । २
।
६३ । ३९ ।

| | | |
|---|---|---|
| **वेधी** [न्] त्रि, (विधतीति । विध छिद्रीकरणे + णिनिः ।) वेधकर्त्ता । (यथा, महाभारते । ५ । ९६ । ३० ।<br>“तेषामक्षीणि कर्णांश्च नासिकाश्चैव मायया । | (विरेपः । इति साधुपाठः ॥ इत्युज्ज्वलः । ४ ।<br>१८९ ॥ * ॥ कर्म्म । इति निघण्टुः । २ । १ । ५ ॥<br>यथा, ऋग्वेदे । १० । ४६ । ८ ।<br>“प्रजिह्वया भरते वेपो अग्निः ॥”<br>“वेपः कर्म्मनामैतत् ।” इति तद्भाष्ये सायणः ॥) | |

"धिगस्तु नष्टः खलु भारतानां
धर्म्मस्तथा क्षत्रविदाञ्च वृत्तम् ।
यत्र ह्यतीतां कुरुधर्म्मवेलां
प्रेक्षन्ति सर्व्वे कुरवः सभायाम् ॥")
समुद्रकूलम् । (यथा, रघुः । १ । ३० ।
"स वेलावप्रवलयां परिखीकृतसागराम् ।
अनन्यशासनामुर्व्वीं शशासैकपुरीमिव ॥")
समुद्रजलविकारः । (यथा, रघुः । १२ । ३६ ।
"संरम्भं मैथिलीहासः क्षणसौम्यां निनाय
ताम् ।
निवातस्तिमितां वेलां चन्द्रोदय इवोदधेः ॥")
अक्लिष्टमरणम् । रागः । ईश्वरस्य भोजनम् ।
इति मेदिनी ॥ अत्र पवर्गीयबकारादौ
लिखितः । रागस्थाने रोगः । वाक् । बुधस्त्री ।
इति विश्वः ॥ दन्तमांसम् । इति हारावली ॥

**वेलाकूलं**, क्ली, (वेला एव कूलं यस्य ।) तामलिप्त-

देशः । यथा, --
"वेलाकूलं तामलिप्तं तामलिप्ती तमालिका ॥"
इति त्रिकाण्डशेषः ॥
(समुद्रकूलम् । यथा, भागवते । १० । ६७ । ५ ।
"क्वचित् समुद्रमध्यस्थो दोर्भ्यामुत्क्षिप्य तज्जलम्
।
देशान् नागायुतप्राणो वेलाकूले न्यमज्जयत् ॥")

**वेलिभुक्प्रियः**, पुं, सौरभयुक्ताम्रः । यथा, --

"--रसाले त्वतिसौरमे ।
महाकालश्च किम्पाक उर्व्वटो वेलिभुक्प्रियः ॥"
इति शब्दरत्नावली ॥
(वलिभुक्प्रिय इत्येव पाठः साधुः ॥)

**वेल्ल**, ऋ चाले । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) ऋ, अविवेल्लत् । चालः
सञ्चलनम् । उद्वेल्लद्भुजवल्लिकङ्कणझनत्कारः
क्षणं वार्य्यताम् । गतावित्येके । इति दुर्गादासः ॥

**वेल्लं**, क्ली, पुं, (वेल्लतीति । वेल्ल चलने + पचाद्यच् ।)

विडङ्गः । इत्यमरः ॥ (भावे घञ् ।) गमने, पुं, ।
इति वेल्लधात्वर्थदर्शनात् ॥

**वेल्लजं**, क्ली, (वेल्लवत् जायते इति । जन + डः ।)

अस्य गुणाः ।
"वेल्लन्तरो रसे पाके
तिक्तस्तृष्णाकफापहः ।
मूत्राघाताश्मजिद्ग्राही योनिमूत्रानिलार्त्ति-
जित् ॥"

**वेल्लहलः**, पुं, केलिनागरः । इति जटाधरः ॥

**वेल्लिः**, स्त्री, (वेल्लति सञ्चलतीति । वेल्ल + इन् ।)

लता । इति शब्दरत्नावली ॥

**वेल्लिकाख्या**, स्त्री, (वेल्लिका आख्या यस्याः ।)

वृक्षविशेषः । वेलसुठा इति भाषा । यथा,
--
"मरुन्माला वेल्लिकाख्या विल्लपत्री ज्वरा-
पहा ॥"
इति शब्दचन्द्रिका ॥

**वेल्लितं**, क्ली, (वेल्ल + क्तः ।) गमनम् । इति मेदिनी
॥

**वेल्लितः**, त्रि, (वेल्ल + क्तः ।) कुटिलः । कम्पितः ।

इत्यमरः ॥

**वेवी**, र क्ष लु ङ कान्तिगतिव्याप्तिक्षेपप्रजनखादने ।

इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-
कान्तौ
अक०-अन्यत्र सक०-सेट् ।) र, वैदिकः
।
क्ष, अवेवयुः । बहुलं ब्रह्मणीति परस्मैपदे
अनुस् सिद्धेरित्यन् उस् णुरुस्यठ्यामिति
गुणः ।
लु ङ, वेवीते । इति दुर्गादासः ॥

**वेशः**, पुं, (विशन्ति नयनमनांस्यत्रेति । विश् +

अधिकरणे घञ् । यद्वा, विशति अङ्गमिति
।
"पदरुजविशस्पृशो घञ् ।" ३ । ३ । १६
। इति घञ् ।)
अलङ्काररचनादिकृतशोभा । तत्पर्य्यायः
।
आकल्पः २ नेपथ्यम् ३ प्रतिकर्म्म ४
प्रसा-

**वेशन्तः**, पुं, (विशन्त्यत्र भेकादय इति । विश +

"जॄविशिभ्यां झच् ।" उणा० ३ ।
१२६ । इति
झच् ।) क्षुद्रसरोवरः । इत्यमरः ॥
अग्निः
इत्युणादिकोषः ॥

**वेशरः**, पुं, अश्वतरः । इति त्रिकाण्डशेषः ॥

**वेशवारः**, पुं, वेसवारः । इत्यमरटीकायां राय-

मुकुटः ॥

**वेशीजाता**, स्त्री, पुत्रदात्रीलता । इति राज-

निर्घण्टः ॥

**वेश्म**, [न्] क्ली, (विशन्त्यत्रेति । विश + मनिन् ।)

गृहम् । इत्यमरः ॥ (यथा, मनुः ।
४ । ७३ ।
"अद्वारेण च नातीयात् ग्रामं वा
वेश्म वावृ-
तम् ॥")

**वेश्मकलिङ्गः**, पुं, (वेश्मनः कलिङ्गः ।) चटकः ।

अस्य मांसगुणौ ।
सन्निपातनाशित्वम् । अति-
शुक्रकारित्वञ्च । इति राजवल्लभः
॥

**वेश्मकूलः**, पुं, (वेश्म गृहं कूलयतीति । कूल + कः ।)

चचेण्डा । इति राजनिर्घण्टः ॥

**वेश्मनकुलः**, पुं, (वेश्मनो गृहस्य नकुलः ।) गन्ध-

मूषिकः । यथा, --
"चिक्कः स्याद्वेश्मनकुलश्चिक्का
च बालमूषिका ।
गन्धसूयी गन्धमूषी गिरिका
स्याच्छुछुन्दरी ॥"
इति शब्दरत्नावली ॥

मरिचम् । इत्यमरः ॥

**वेल्लनं**, क्ली, (वेल्लं + ल्युट् ।) भूमौ अश्वस्य

लुण्ठनम् । तत्पर्य्यायः । लुण्ठनम् २ । इति
त्रिकाण्डशेषः ॥ (सञ्चलनम् । यथा, राज-
तरङ्गिण्याम् । ८ । १५९५ ।
"भ्रष्टा सरित् स्ववसतेर्जलधिप्रवेशे
वेलोर्म्मिवेल्लनवशेन विवर्त्तमाना ॥")
रोटिकादिनिर्म्माणार्थस्थूलवर्त्तुलकाष्ठविशेषः ।
इति भावप्रकाशः ॥ वेलन् इति भाषा ॥

**वेल्लनी**, स्त्री, (वेल्लति लुठति अश्वादिरत्रेति ।

वेल्ल + ल्युट् । ङीष् ।) मालादूर्व्वा । इति
राजनिर्घण्टः ॥

**वेल्लन्तरः**, पुं, वीरतरुः । यथा, भावप्रकाशे ।

"वेल्लन्तरो जगति वीरतरुः प्रसिद्धः
श्वेतासितारुणविलोहितनीलपुष्पः।
स्याज्जातितुल्यकुसुमः शमिसूक्ष्मपत्रः
स्यात् कण्टकी च जलदेशज एष वृक्षः ॥"

धनम् ५ । इत्यमरः ॥ वेषः ६ । इति
तट्टीकायां
भरतः ॥ (यथा, भागवते । १ । १७ । ५
।
"नरदेवोऽसि वेशेन नटवत् कर्म्मणा द्विजः
॥" * ॥
विशन्ति कामुका यत्रेति । अधिकरणे घञ्
।)
वेश्यागृहम् । गृहमात्रम् । इति मेदिनी ॥
(वस्त्रगृहम् । ताँवु इति भाषा ॥ यथा,
महाभारते । ५ । १५१ । ५३ ।
"शकटापणवेशाश्च यानयुग्यञ्च सर्व्वशः ।
तत् संगृह्य ययौ राजा ये चापि
परिचारकाः ॥")
प्रवेशः । इति विशधात्वर्थदर्शनात् ॥
(पण्य-
स्त्रिया भृतिः । यथा, मनुः । ४ । ८४ --
८५ ।
"न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः।
सूनाचक्रध्वजवतां वेशेनैव च जीवताम् ॥
दशसूनासमं चक्रं दशचक्रसमो ध्वजः ।
दशध्वजसमो वेशो दशवेशसमो नृपः ॥")

**वेशकः**, पुं, (वेश एव । स्वार्थे कन् ।) गृहम् । इति

शब्दरत्नावली ॥ वेशकारके, त्रि ॥

**वेशदानः**, पुं, सूर्य्यशोभा । इति शब्दचन्द्रिका ॥

**वेशधारी**, [न्] पुं, (वेशं तापसलिङ्गं धरतीति ।

धृ + णिनिः ।) छलतपस्वी । इति
शब्दरत्ना-
वली ॥ (सङ्करजातिविशेषः । यथा, ब्रह्म-
वैवर्त्ते ब्रह्मखण्डे । १० अध्यायः ।
"गङ्गापुत्त्रस्य कन्यायां वीर्य्येण
वेशधारिणः ।
बभूव वेशधारी च पुत्त्रो युङ्गी प्रकीर्त्तितः
॥")
वेशधारके, त्रि ॥

**वेश्मभूः**, स्त्री, (वेश्मनो भूः ।)
गृहकरणयोग्य-

भूमिः । तत्पर्य्यायः । वास्तुः २ ।
इत्यमरः ॥

**वेश्यं**, क्ली, (वेशे भवम् । वेश +
"दिगादित्वात्

यत् ।" ४ । ३ । ५४ । इति यत् ।
यद्वा, वेश्यायै
हितम् । वेश्या + यत् ।)
वेश्यालयः । इति
मेदिनी ॥ (प्रवेशार्हे, त्रि । यथा,
ऋग्वेदे ।
४ । २६ । ३ ।
"शततमं वेश्यं सर्व्वताता
दिवोदासमतिथिग्वं
यदावम् ॥"
"वेश्यं दिवोदासनाम्ने प्रवेशार्हम्
।" इति
तद्भाष्ये सायणः ॥)

**वेश्या**, स्त्री, टुण्डुकावृक्षः । आकनादि इति
भाषा ।

इति शब्दचन्द्रिका ॥ (वेशमर्हति
वेशेन
दीव्यत्याचरति वेशेन पण्ययोगेन
जीवति वा ।
वेश + यत् ।) स्वनामख्यातनारी ।
खान्की
इति भाषा । तत्पर्य्यायः । वारस्त्री
२
गणिका ३ रूपाजीवा ४ । इत्यमरः
॥ वेष्या ५ ।
इति तट्टीका ॥ क्षुद्रा ६
शालभञ्जिका ७ ।
इति जटाधरः ॥ झर्झरा ८ शूला ९
वार-
विलासिनी १० वारवाणिः ११
भण्डहासिनी
१२ । इति शब्दरत्नावली ॥
लञ्जिका १३
बन्धुरा १४ कुम्भा १५ कामरेखा
१६ वर्व्वटी

| | | |
|---|---|---|
| | | १७ । इति शब्दमाला ॥<br>साधारणस्त्री १८<br>पण्याङ्गना १९ पणाङ्गना २०<br>भुजिष्या २१<br>वारबधूः २२ । इति हेमचन्द्रः ॥<br>भोग्या २३<br>स्मरवीथिका २४ । इति<br>राजनिर्घण्टः ॥ तस्या<br>लक्षणगमनफलादि यथा, --<br>“पतिव्रता चैकपत्नी द्वितीये<br>कुलटा स्मृता ।<br>तृतीये वृषली ज्ञेया चतुर्थे पुंश्चली<br>स्मृता ॥ |

वेश्या च पञ्चमे षष्ठे युङ्गी च सप्तमेऽष्टमे ।
तत ऊर्द्ध्वे महावेश्या सास्पृश्या सर्व्वजातिषु ॥ * ॥
यो द्विजः कुलटाङ्गच्छेत् वृषलीं पुंश्चलीमपि ।
युङ्गीं वेश्यां महावेश्यां अवटोदं प्रयाति सः ॥
शताब्दं कुलटागामी धृष्टागामी चतुर्युगम् ।
षड्गुणं पुंश्चलीगामी वेश्यागामी गुणाष्टकम् ॥
युङ्गीगामी दशगुणं वसेत्तत्र न संशयः ।
महावेश्यागामुकश्च ततः शतगुणं भवेत् ॥
तदेव सर्व्वगामी चेत्येवमाह पितामहः ।
तत्रैव यातनां भुङ्क्ते यमदूतेन ताडितः ॥
तित्तिरिः कुलटागामी धृष्टागामी च वायसः ।
कोकिलः पुंश्चलीगामी वेश्यागामी वृकस्तथा ॥
युङ्गीगामी शूकरश्च सप्तजन्मसु भारते ।
महावेश्यागामुकश्च जायते शाल्मलिस्तरुः ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २८ अध्यायः ॥ * ॥
वेश्यागमनपापं प्रकीर्णकम् । तस्य प्रायश्चित्तम् ।
तत्र सम्बर्त्तः ।
"पशुवेश्याभिगमने प्राजापत्यं विधीयते ।"
तेन वेश्यागमने प्राजापत्यम् । तदशक्तौ धेनु-
रेका । एतत् सकृद्गमने । अभ्यासे तु । चान्द्रा-
यणेन चैकेन सर्व्वपापक्षयो भवेदिति आप-
स्तम्बवचनाच्चान्द्रायणम् । इति प्रायश्चित्त-
विवेकः ॥ * ॥ तदन्नादिकं निषिद्धम् ।
यथा, --
"पुंश्चल्यन्नञ्च यो भुङ्क्ते पुंश्चल्याजीवजीवनः ।
वेशः २ । इत्यमरः ॥ वेश्याश्रयः ३ पुरम् ४ ।
इति हेमचन्द्रः ॥ वेश्यम् ५ । इति जटा-
धरः ॥

**वेश्वरः**, पुं, अश्वतरः । यथा । वेश्वरोऽश्वतरः
खरः । इति भूरिप्रयोगः । त्रिकाण्डशेषे वेशर
इति पाठः ॥

**वेषः**, पुं, वेवेष्टि व्याप्नोति अङ्गं वेषः पचादित्वादन्
मूर्द्धन्यान्तः । विशन्ति नयनमनांस्यत्रेत्याधारे
घञि वेशस्तालव्यान्तश्च । इति भरतः ॥ नेप-
थ्यम् । (यथा, मनुः । ८ । २ ।
"विनीतवेषाभरणः पश्येत्कार्य्याणि कार्य्यि-
णाम् ॥")
वेश्याजनाश्रयः । "द्वे दारिकाणां निवासस्थाने ।
विशति यूनां मनः कामुको वा वेशः शौ विश
प्रवेशे घञ् ।
'नेपथ्ये गृहमात्रे च वेशो वेश्यागृहेऽपि च ।'
इति तालव्यान्ते रभसः ॥
'गृहमात्रे गणिकायाः सद्मनि वेशो भवेत्तु तालव्यः ।
तालव्यो मूर्द्धन्योऽलङ्करणे कथित आचार्य्यैः ॥'
इत्युष्मविवेकः ।
वेविषति व्याप्नुवन्ति जनमनांसीति धञि वेषो
मूर्द्धन्यान्तोऽपि इत्येके तत्तु न हृद्यं मूर्द्धन्यान्तेषु
सर्व्वत्र कोषादावनुपात्तत्वादितिमुकुटः ।" इति
च भरतः ॥ (संस्थानविशेषः । यथा, रामा-
यणे । १ । १७ । १९ ।
"ग्रीवायां वेष्टयित्वैनं स गजो हन्तुमैहत ।
करवेष्टं भीमसेनो भ्रमं दत्वा व्यमोचयत् ॥")
श्रीवेष्टः । इति राजनिर्घण्टः ॥ निर्यासः ।
आटा इति भाषा ॥ इति वैद्यकम् ॥ (मुख-
रोगविशेषः । यथा, सुश्रुते । २ । १६ ।
"दन्ताश्चलन्ति वेष्टेभ्यस्तालु चाप्यवदीर्य्यते ॥")

**वेष्टकं**, क्ली, (वेष्टते इति । वेष्ट + ण्वुल् ।) उष्णीषः ।
इति शब्दरत्नावली ॥ निर्यासः । इति शब्द-
माला ॥ श्रीवेष्टः । इति राजनिर्घण्टः ॥

**वेष्टकः**, पुं, (वेष्टते इति । वेष्ट + ण्वुल् ।) प्राचीरः ।
यथा प्राचीनावेष्टकौ वृतिः । इति हेमचन्द्रः ॥
कुष्माण्डः । यथा, --
"कुष्माण्डकः पुष्पफलो घनवासश्च वेष्टकः ॥"
इति हारावली ॥
श्रीवेष्टः । इति राजनिर्घण्टः ॥ वेष्टनकारके,
त्रि ॥ (यथा, महाभारते । ७ । १३६ । २१ ।
"बलयैरपरिद्धैश्च तथैवाङ्गुलिवेष्टकैः ॥")

**वेष्टनं**, क्ली, (वेष्टते इति । वेष्ट + ल्युः ।) कर्ण-
शस्कुली । उष्णीषः । (यथा, रघुः । ८ । १२ ।
"तमरण्यसमाश्रयोन्मुखं शिरसा वष्टनशोभिना सुतः ॥")
मुकुटः । वृतिः । इति मेदिनी ॥ गुग्गुलुः ।
इति शब्दचन्द्रिका ॥ (वेष्ट + ल्युट् । वलयनम् ।
यथा, रघुः । ४ । ४८ ।
"भोगिवेष्टनमार्गेषु चन्दनानां समर्पितम् ॥")

**वेष्टनकः**, पुं, (वेष्टनेन कायतीति । कै + कः ।)

स्वलोममानवर्षञ्च लालाकुण्डे वसेद्ध्रुवम् ॥
ताडितो यमदूतेन तद्भोजी तत्र तिष्ठति ।
ततस्त्रिजन्मनि भवेत् कृष्णवर्णः पशुः शुचिः ॥
त्रिजन्मनि भवेच्छागस्ततो भवेत् सुदुःखितः ।
ततश्चक्षुःशूलरोगी ततः शुद्धः क्रमेण च ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २७ अध्यायः ॥ * ॥
अपि च ।
“पुंश्चल्यन्नञ्च यो भुङ्क्ते वेश्यान्नञ्च पतिव्रते ।
तद्व्रजेत्तु द्विजो यो हि कालसूत्रं प्रयाति सः ॥
शतवर्षं कालसूत्रे स्थित्वा शूद्रो भवेद्ध्रुवम् ।
तत्र जन्मनि रोगी च ततः शुद्धो भवेद्द्विजः ॥”
इति तत्रैव २८ अध्यायः ॥ * ॥
यात्राकाले तस्या दर्शनं शुभम् । यथा, --
“धेनुर्व्वत्सप्रयुक्ता वृषतुरगरथा दक्षिणावर्त्तवह्नि-
र्दिव्यस्त्रीपूर्णकुम्भा द्विजनृपगणिकाः पुष्पमाला पताका ।
सद्योमांसं घृतं वा दधि मधु रजतं काञ्चनं शुक्लधान्यं
दृष्ट्वा श्रुत्वा पठित्वा फलमिह लभते मानवो गन्तुकामः ॥”
इति समयप्रदीपः ॥

**वेश्यागणः**, पुं, (वेश्यानां गणः ।) वेश्यासमूहः ।
तत्पर्य्यायः । वेश्यावारः २ । इति शब्द-
माला ॥

**वेश्याचार्य्यः**, पुं, (वेश्यानां आचार्य्यः ।) पीठ-
मर्द्दः । इति हेमचन्द्रः ॥

**वेश्याजनसमाश्रयः**, पुं, (वेश्याजनानां समाश्रयः
“यस्य देवस्य यद्रूपं वेषो यश्च पराक्रमः ॥”
“वेषः संस्थानविशेषः ।” इति तट्टिका ॥ * ॥
वेवेष्टि व्याप्नोति कर्त्तृनिति । पचाद्यच् । कर्म्म ।
इति निघण्टः । २ । १ ॥ * ॥ विष व्याप्तौ + घञ् । व्याप्तिः । यथा, वाजसनेयसंहितायाम् १ । ६ ।
“कर्म्मणे वां वेषाय वाम् ।”
“वेषायच । विषॢ व्याप्तौ । घञ् वेषो व्याप्तिः ।
सूचितकर्म्मसु व्याप्त्यर्थं च वां युवामह-
माददे ।” इति तद्भाष्ये महीधरः ॥)

**वेषणः**, पुं, (विष व्याप्तौ + ल्युः ।) कासमर्द्दः ।
इति हारावली ॥ (क्ली, विष + ल्युट् ।)
प्रवेषणञ्च ॥ (परिचर्य्या । यथा, ऋग्वेदे । ५ । ७ । ५ ।
“अवस्मयस्य वेषणे स्वेदं पथिषु जुह्वति ॥”
“यस्याग्नेर्वेषणे परिचर्य्यायाम् ।” इति तद्भाष्ये सायणः ॥)

**वेषणा**, स्त्री, (वेवेष्टि व्याप्नोतीति । विष + ल्युः ।
टाप् ।) वितुन्नकवृक्षः । इति रत्नमाला ॥
धन्या इति भाषा ॥

**वेषवारः**, पुं, वेसवारः । इत्यमरटीकायां राय-
मुकुटः ॥

**वेष्ट**, ङ वेष्टे । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-
सक०-सेट् ।) ङ, वेष्टते । इति दुर्गादासः ॥

**वेष्टः**, पुं, (वेष्ट + घञ् ।) वेष्टनम् । इति शब्द-
माला ॥ (यथा, महाभारते । ७ । २५ । २७ ।
रतिबन्धविशेषः । यथा, --
“ऊर्द्धगं पादमेकञ्च भुजान्तैर्वेष्टयेद्यदि ।
कान्तकक्षाश्रितां नारीं बन्धो वेष्टनकः स्मृतः ॥”
इति रतिमञ्जरी ॥

**वेष्टनवेष्टकः**, पुं, (वेष्टनेन वेष्टते इति । वेष्ट +
ण्वुल् ।) रतिबन्धविशेषः । यथा, --
“ऊद्र्ध्वं पादद्वयं नार्य्या भुजाभ्यां वेष्टयेद्यदि ।
कराभ्यां कण्ठमालिङ्ग्य बन्धो वेष्टनवेष्टकः ॥”
इति रतिमञ्जरी ॥

**वेष्टवंशः**, पुं, (वेष्टः वेष्टनकारी वंशः ।) कण्ट-
किनः । इति शब्दचन्द्रिका ॥ वेड्डुवाँश इति
भाषा ॥

**वेष्टसारः**, पुं, (वेष्टानां सारो यत्र ।) श्रीवेष्टः ।
इति राजनिर्घण्टः ॥

**वेष्टितं**, क्ली, (वेष्ट + क्तः ।) रुद्धम् । लासकः ।
करणान्तरम् । इति मेदिनी ॥

**वेष्टितः**, त्रि, (वेष्ट + क्तः ।) नदीप्राचीरादिना
कृतवेष्टनः । वेडा इति भाषा । तत्पर्य्यायः ।
वलयितम् २ संवीतम् ३ रुद्धम् ४ आवृतम् ५ ।
इत्यमरः ॥

**वेष्पः**, पुं, (वेवेष्टीति । विष व्याप्तौ + “पानी-
विषिभ्यः पः ।” उणा० ३ । २३ । इति पः ।)
पानीयम् । इत्युणादिकोषः ॥

**वेस**, ऋ इतौ । इति कविकस्त्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।) ऋ, अविवेसत् । विवेसतुः ।
इतौ गत्याम् । इति दुर्गादासः ॥

**वेसनं**, क्ली, (वेस + ल्युट् ।) द्विदलचूर्णम् । यथा, --

"दालयश्चणकानान्तु निस्तुषा यन्त्रपेषिताः ।
तच्चूर्णं वेसनं प्रोक्तं पाकशास्त्रविशारदैः ॥"
तद्वटिकागुणाः ।
"वटिका वेसनस्यापि क्वथितायां निमज्जति ।
रुच्या विष्टम्भजननी बल्या पुष्टिकरी स्मृता ॥"
इति भावप्रकाशः ॥

**वेसरः**, पुं, अश्वतरः । इति हेमचन्द्रः ॥ (यथा,

माघे । १२ । १९ ।
"तूर्णं प्रणेत्रा कृतनादमुच्चकैः
प्रणोदितं वेसरयुग्यमध्वनि ॥")

**वेसवारः**, पुं, धन्याकसर्षपादिपिष्टः । वेसार इति

वाटना इति च ख्यातः । तत्पर्य्यायः । उप-
स्करः २ । इत्यमरः । वेषवारः ३ । इति
भरतः ॥ वेशवारः ४ । इति मुकुटः ॥
(यथा,
सुश्रुते । १ । ४६ ।
"मुद्गादिवेसवाराणां पूर्णा विष्टम्भिनो मताः ।
वेसवारैः सपिशितैः सम्पूर्णा गुरुवृंहणाः ॥")
व्यञ्जनविशेषः । यथा, --
"निरस्थि पिशितं पिष्टं सिद्धं गुडघृतान्वितम् ।
कृष्णामरिचसंयुक्तं वेसवार इति स्मृतम् ॥"
अस्य गुणाः ।
"वेसवारो गुरुः स्निग्धो बलोपचयवर्द्धनः ॥"
इति राजवल्लभः ॥
हिङ्ग्वार्द्रकमरीचजीरकहरिद्राधन्याकाः क्रमेण
द्विगुणपरिमाणेनैकत्रीकृताः । इति पाकराजे-
श्वरे पाकपरिभाषा ॥

**वेह**, ऋ ङ यत्ने । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-अक०-सेट् ।) ऋ, अविवेहत् । ङ,

"सत्सङ्कल्पस्य ते ब्रह्मन् ! यद्वै ध्यायति ते
वयम् ॥")
सम्बोधनम् । अनुनयः । इति मेदिनी ॥
(निश्चयः । यथा, मनुः । १ । १०० ।
"सर्व्वं स्वं ब्राह्मणस्येदं यत्किञ्चित् जगतीगतम् ।
श्रैष्ठ्येनाभिजनेनेदं सर्व्वं वै ब्राह्मणो-
ऽर्हति ॥")

**वैंशतिकः**, त्रि, विंशत्या क्रीतः । विंशतिक-

शब्दादणप्रत्ययेन निष्पन्नमिदम् । इति सिद्धान्त-
कौमुदी ॥ (पां ५ । २ । २७ ॥)

**वैकक्षं**, क्ली, (विशिष्टः कक्षः विकक्ष उरस्तत्र

भवम् । विकक्ष + अण् ।) तिर्य्यग्वक्षोलम्बि-
माल्यम् । इति हेमचन्द्रः ॥

**वैकक्षकं**, क्ली, (वैकक्षमेव । स्वार्थे कन् ।) उरसि

तिर्य्यक् उपवीतवत् कण्ठात् क्षिप्तमाल्यम् । इत्य-
मरः ॥

**वैकङ्कतः**, पुं, (विकङ्कत एव । स्वार्थे अण् ।)

वृक्षविशेषः । वैँच् इति भाषा । तत्पर्य्यायः ।
वृतिङ्करः २ श्रुवावृक्षः ३ ग्रन्थिलः ४ स्वादु-
कण्टकः ५ व्याघ्रपात् ६ कण्टिकारी ७ विक-
ङ्कतः ८ । इति शब्दरत्नावली ॥ (विकङ्क-
तस्यावयवो विकारो वा । "पलाशादिभ्यो
वा ।" ४ । ३ । १४१ । इत्यञ् । विकङ्कत-

किंवा कुण्ठत्यनया कुण्ठा माया । कुठि खोटन-
वैकल्यालस्ये सेमक्तात् सरोरिति अः । विविधा
कुण्ठा माया विद्यतेऽस्य वैकुण्ठः विकारसंघेति
अस्त्यर्थे ष्णः । विष्णुसहस्रनामटीकायां शङ्करा-
चार्य्यस्त्वाह विविधा कुण्ठा गतेः प्रतिहति-
स्तस्याः कर्त्ता इति वैकुण्ठः । जगदारम्भे विशि-
ष्टानि भूतानि परस्परं संश्लेषयन् तेषां गतिं
प्रत्यबध्नादिति वा वैकुण्ठः ।
'मायासंश्लेषिता भूमिरद्भिर्व्योम्ना च वायुना ।
वायुश्च तेजसा सार्द्धं वैकुण्ठत्वं ततो मम ॥'
इति शान्तिपर्व्वणीति ।"
इत्यमरटीकायां भरतः ॥ * ॥ अपि च ।
"कुण्ठं जडञ्च विश्वौघं विशिष्टञ्च करोति या ।
विकुण्ठां प्रकृतिं वेदाश्चत्वारश्च वदन्ति ताम् ॥
गुणाश्रयेण भगवान् तस्यां जातः स्वसृष्टये ।
परिपूर्णतमं तेन वैकुण्ठञ्च विदुर्बुधाः ॥" * ॥
अस्य नाम्नो माहात्म्यम् । यथा, --
"राम नारायणानन्त मुकुन्द मधुसूदन ।
कृष्ण केशव कंसारे हरे वैकुण्ठ वामन ॥
इत्येकादश नामानि पठेद्वा पाठयेद्यदि ।
जन्मकोटिसहस्राणां पातकादवमुच्यते ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ११० अध्यायः ॥
"साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा ।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥"
इति श्रीभागवते अजामिलोपाख्यानाध्यायः ॥ *
विष्णुधामविशेषः । तद्वर्णनं यथा, --
"उपरिष्टात्क्षितेरष्टौ कोटयः सत्यमीरितम् ।
सत्यादुपरि वैकुण्ठो योजनानां प्रमाणतः ॥
भूर्लोकात् परिसंख्यातः कोटिरष्टादश प्रभो ।
यत्रास्ते श्रीपतिः साक्षात् सर्व्वेषामभयप्रदः ॥
वैकुण्ठादुत्तरे शैवो लोकः षोडशकोटयः ।
तिर्य्यगेव महाराज कैलासाख्यस्तु पर्व्वतः ।

वेहते । विवेहे । इति दुर्गादासः ॥

**वेहत्,** स्त्री, (विशेषेण हन्ति गर्भमिति । वि + हन +

"संश्चत्तृपद्वेहत् ।" उणा० २ । ८५ । इति अतिप्रत्य-
येन निपातनात् साधुः ।) गर्भोपघातिनी गौः ।
इत्यमरः ॥ अनृतौ वृषोपगमनादिवशात् यस्या
गर्भपातो भवति सा । विहन्ति गर्भं शश्वत्
वेहत् । हन लौ गतौ वधे क्विप् निपातः । इति
भरतः ॥ (यथा, वाजसनेयसंहितायाम् ।
१८ । २७ ।
"वशा च मे ऋषभश्च मे वेहच्चमेऽनड्वांश्च
मे ॥")

**वेहारः**, पुं, स्वनामख्यातदेशः । यथा, --

"वेहारे चैव श्रीहट्टे कोशले शवकर्णिके ।
अष्टादशभुजा कार्य्या माहेन्द्रे च हिमालये ॥"
इति मत्स्यसूक्ते ५० पटलः ॥

**वेह्ल**, ऋ चाले । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) ऋ, अविवेह्लत् । ऋदनु-
बन्धः वेदेषूच्चारणभेदार्थः । चालः सञ्चलनं
गतावित्येके । इति दुर्गादासः ॥

**वै**, ओ शोषे । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-अनिट् ।) वकारादिः । वायति ।
ओ, वानः । इति दुर्गादासः ॥

**वै**, व्य, पादपूरणम् । यथा । तु हि च स्म ह वै

पादपूरणे । इत्यमरः ॥ (यथा, भागवते । ४ ।
१ । २८ ।
निर्म्मितस्त्रुवादौ, त्रि । यथा,
शतपथब्राह्मणे ।
५ । २ । ३ । १५ ।
"स पालाशे वा स्रुवे वैकङ्कते वा ॥")

**वैकतिकः**, पुं, मणिकारः । इति हेमचन्द्रः ॥

**वैकर्णः**, पुं, (विकर्णस्यापत्यमिति । विकर्ण +

"विकर्णशुङ्गच्छगलात् वत्सभरद्वाजात्रिषु ।" ४ ।
१ । ११७ । इत्यण् ।) वात्स्यमुनिः । इति
सिद्धान्तकौमुदी ॥ (जनपदविशेषः । यथा,
ऋग्वेदे । ७ । १८ । ११ ।
"वैकर्णयोर्जनान्राजा न्यस्तः ।"
"वैकर्णयोर्जनपदयोर्विद्यमानान् ।"
इति तद्भाष्ये
सायणः ॥)

**वैकल्पिकः**, त्रि, विकल्पेन भवः । विकल्पशब्दात्

ष्णिकप्रत्ययेन निष्पन्नमिदम् ॥

**वैकल्यं**, क्ली, विकलत्वम् । विकलस्य भाव इत्यर्थे

ष्ण्यप्रत्ययेन निष्पन्नमिदम् ॥ (यथा, कथा-
सरित्सागरे । ७४ । ३१० ।
"मृगाङ्कदत्तसचिवं
चक्षुर्वैकल्यमागतम् ॥")

**वैकुण्ठः**, पुं, कृष्णः । (यथा, भागवते । १ ।

१५ । ४६ ।
"ते साधुकृतसर्व्वार्था
ज्ञात्वात्यन्तिकमात्मनः ।
मनसा
धारयमासुर्वैकुण्ठचरणाम्बुजम् ॥")
इन्द्रः । इति मेदिनी ॥ सितार्जकः । इति राज-
निर्घण्टः । अस्य व्युत्पत्तिर्यथा । "विकुण्ठाया
अपत्यं वैकुण्ठः बाह्वाद्यत इति
शिवादित्वात्
पार्व्वत्या सहितः शम्भुर्यत्रास्ते स्वगणैर्व्वृतः ॥"
इति पाद्मे स्वर्गखण्डे ६ अध्यायः ॥ * ॥
अपि च ।
"अमृतं शाश्वतं नित्यमनन्तं परमं पदम् ।
हिरण्मयं मोक्षप्रदं ब्रह्मानन्दसुखाह्वयम् ॥
एवमादिगुणोपेतं तद्विष्णोः परमं पदम् ।
यद्गत्वा न निवर्त्तन्ते तद्धाम परमं हरेः ॥
नहि वर्णयितुं शक्यं कल्पकोटिशतैरपि ।
अपि द्रष्टुमशक्यं तद्ब्रह्मरुद्रादिदैवतैः ॥
ज्ञानेन शास्त्रमार्गेण द्रक्ष्यते योगिपुङ्गवैः ।
तत् स्थानमुपभोक्तव्यमव्यक्तब्रह्मसेविनाम् ॥
श्रीशाङ्घ्रिभक्तिसेवैकरसाभोगविवर्ज्जिताः ।
महात्मानो महाभागा भगवत्पदसेवकाः ॥
तद्विष्णोः परमं धाम यान्ति ब्रह्मसुखप्रदम् ।
नानाजनपदाकीर्णं वैकुण्ठं तद्धरेः पदम् ॥
प्राकारैश्च विमानैश्च सौधै रत्नमयैर्युतम् ।
तन्मध्ये नगरी दिव्या सायोध्येति प्रकीर्त्तिता ॥
चतुर्द्वारसमायुक्ता हेमगोपुरसंयुता ।
चण्डादिद्वारपालैस्तु कुमुदाद्यैः सुरक्षिता ॥
चण्डप्रचण्डौ प्राग्द्वारे याम्ये भद्रसुभद्रकौ ।

|  |  |  |
| --- | --- | --- |
|  | ष्णः ।<br>‘चाक्षुषस्यान्तरे देवो वैकुण्ठः<br>पुरुषोत्तमः ।<br>विकुण्ठायामसौ जज्ञे वैकुण्ठे दैवतैः<br>सह ॥’<br>इति विष्णुपुराणम् ॥ |  |

वारुण्यां जयविजयौ सौम्ये धातृविधातरौ ॥
कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः ।
शङ्कुकर्णः सर्व्वनिद्रः सुमुखः सुप्रतिष्ठितः ॥
तस्मिन् बन्धविनिर्मुक्ताः प्राप्यन्ते सुसुखं पदम् ।
यं प्राप्य न निवर्त्तन्ते तस्मान्मोक्ष उदाहृतः ॥
मोक्षं परं पदं लिङ्गममृतं विष्णुमन्दिरम् ।
अक्षरं परमं धाम वैकुण्ठं शाश्वतं परम् ॥
नित्यञ्च परमव्योम सर्व्वोत्कृष्टं सनातनम् ।
पर्य्यायवाचकान्यस्य परं धाम्नोऽच्युतस्य हि ॥”
इति पाद्मे उत्तरखण्डे २९ अध्यायः ॥ * ॥
अन्यच्च ।
“अन्तःपुरनिवासिन्यः सर्व्वलक्षणभूषिताः ।
ताभिः परिवृतो देवः शुशुभे परमः पुमान् ॥
एवं वैकुण्ठनाथोऽसौ नाथते परमे पदे ।
तद्व्यूहभेदाल्लोकांश्च वक्ष्यामि गिरिजे शुभे ॥
प्राच्यां वैकुण्ठलोकस्य वासुदेवस्य मन्दिरम् ।
आग्नेय्यां लक्ष्मीलोकस्तु याम्यां सङ्कर्षणालयः ॥
सारस्वतन्तु नैरृत्यां प्राद्युम्नः पश्चिमे तथा ।
रतिलोकस्तु वायव्यामुदीच्यामनिरुद्धभूः ॥
ऐशान्यां शान्तिलोकः स्यात् प्रथमावरणं स्मृतम् । १ ।
केशवकीर्त्त्यादिलोका द्वितीयावरणं तथा ॥ २ ॥
मत्स्यकूर्म्मादिलोकस्तु तृतीयावरणं परम् । ३ ।
सत्ययुतानन्दद्दुर्गाविष्वक्सेनगजाननाः ॥
शङ्खपद्मनिधीलोकाश्चतुर्थावरणंस्मृतम् । ४ ।
ऋग्यजुः सामाथर्व्वाणो लोकादिषु महत्सु च ॥

**वैकृतं**, क्ली, (विकृतमेव । “सान्नायानुजेति ।” ५ । ४ । ३६ । इत्यस्य वार्त्तिकोक्त्या अण् ।
विकारः ।
यथा, रामायणे । ६ । ४८ । ३२ ।
“प्रायेण गतसत्त्वानां पुरुषाणां गतायुषाम् ।
दृश्यमानेषु वक्त्रेषु परं भवति वैकृतम् ॥”
दुर्निमित्तम् । यथा, रघुः । ११ । ६२ ।
“तत्प्रतीपपवनादिवैकृतं
प्रेक्ष्य शान्तिमधिकृत्य कृत्यवित् ॥”
तथाच महाभारते । ३ । १३७ । ३ ।
“वैकृतं त्वग्निहोत्रे स लक्षयित्वा महातपाः ।
तमन्धं शूद्रमासीनं गृहपालमथाब्रवीत् ॥”)
वीभत्सरसः । तदालम्बने मांसशोणितादौ, त्रि ।
इत्यमरटीकायां भरतः ॥ तथाच ।
“विकृतं वैकृतञ्च स्यात्तच्च वैकृत्यमुच्यते ॥”
इति भरतद्विरूपकोषः ॥
(विकारजाते । यथा, भागवते । २ । १० । ४५ ।
“अयन्तु ब्रह्मणः कल्पः सविकल्प उदाहृतः ।
विधिः साधारणो यत्र सर्गाः प्राकृतवैकृताः ॥”)

**वैकृत्यं**, क्ली, (विकृतमेव । स्वार्थे ष्यञ् ।) वीभत्सरसः । तदालम्बने, त्रि । यथा, --
“त्रिषु वीभत्सविकृतं वैकृत्यं विततन्तथा ॥”
इति शब्दरत्नावली ॥

**वैक्रान्तं**, क्ली, (विक्रान्त्या दीव्यति । विक्रान्ति + अण् ।) मणिविशेषः । तत्पर्य्यायगुणौ ।
“वैक्रान्तञ्चैव विक्रान्तं नीचवज्रं कुवज्रकम् ।
गोनासः क्षुद्रकुलिशं जीर्णवज्रञ्च गोनसः ॥
वज्राभावे च वैक्रान्तं रसवीर्य्यादिके समम् ।
क्षयकुष्ठविषघ्नञ्च पुष्टिदं सुरसायनम् ॥
वैक्रान्तं वज्रसादृश्यं वज्रवद्रसवीर्य्यकम् ।
तथाप्यभावे वज्रस्य ग्राह्यं वैक्रान्तमुत्तमम् ॥
वज्राकारतयैव प्रसह्य हरणाय सर्व्वरोगाणाम् ।
यद्विक्रान्तिं धत्ते तद्वैक्रान्तं बुधैरिदं कथितम् ॥”
इति राजनिर्घण्टः ॥

**वैखरी**, स्त्री, बुद्‌ध्युत्थितकण्ठगतनादरूपवर्णः ।
यथा, --
“मूलाधारात् प्रथममुदितो यस्तु तारः पराख्यः ।

**वैखानसः**, पुं, (विखनसं ब्रह्माणं वेत्ति तपसा ।
विखनस् + अण् ।) वानप्रस्थः ।
यथा । वानप्रस्थो
वैखानसोऽग्रहः । इति
त्रिकाण्डशेषः ॥ (यथा,
देवीभागवते । १ । १९ । १७ ।
“वैखानसा ये मुनयो मिताहारा
जितव्रताः ।
तेऽपि मुह्यन्ति संसारे जानन्तोऽपि ह्यसत्य-
ताम् ॥”
वैखानसस्येदमित्यर्थेऽणि
वैखानससम्बन्धिनि,
त्रि । यथा, शाकुन्तले । १ ।
“वैखानसं किमनया
व्रतमाप्रदानात्
व्यापाररोधि मदनस्य
निषेवितव्यम् ॥”)

**वैगुण्यं**, क्ली, (विगुणस्य भावः । विगुण + ष्यञ् ।)
विगुणत्वम् । विगुणस्य भावः ।
यथा, --
“यात्रापवर्त्तते युग्यं वैगुण्यात्
प्राजकस्य च ।
तत्र स्वामी भवेद्दण्ड्यो हिंसायां
द्विशतं दमः ॥”
मनुः ।

**वैचक्षण्यं**, क्ली, विचक्षणत्वम् । विचक्षणस्य भाव
इत्यर्थे ष्ण्यप्रत्ययेन निष्पन्नमिदम्
॥ (यथा,
साहित्यदर्पणे । १ ।
“धर्म्मार्थकाममोक्षेषु वैचक्षण्यं
कलासु च ॥”)

**वैचित्र्यं** क्ली, विचित्रता । विचित्रस्य भाव इत्यर्थे
ष्ण्यप्रत्ययेन निष्पन्नमिदम् ॥
(यथा, राजेन्द्र-

सावित्र्या विहगेशस्य धर्म्मस्य च सुखस्य च
।
पञ्चमावरणं प्रोक्तमक्षयं सर्व्ववाङ्मयम् ॥ ५ ॥
शङ्खचक्रगदापद्मखड्गशार्ङ्गहलं तथा ।
मौषलञ्च तथा लोकाः सर्व्वशस्त्रास्त्रसंयुताः
॥
षष्ठमावरणं प्रोक्तं शस्त्रास्त्रमयमक्षयम् । ६ ।
ऐन्द्रपावकयाम्यञ्च नैरृतं वरुणं तथा ॥
वायव्यं सौम्यमैशानं तप्तमं मुनिभिः स्मृतम्
।
साध्या मरुद्गणाश्चैव ये चान्ये च
दिवौकसः ॥
नित्याः सर्व्वे परे धाम्नि विश्वेदेवास्तथैव च
।
ते वै प्राकृतनाकेऽस्मिन्न
नित्यास्त्रिदिवेश्वराः ॥
तेनाहं वच्मि माये न सञ्चिन्त्य इति वै
स्मृतिः ।
एवं परं पदैर्नित्यैर्युक्तैर्भोगपरायणैः ॥
दिव्याभिर्महिषीभिश्च राजते विष्णुरीश्वरि ।
न तद्भासयते सूर्य्यो न शशाङ्को न पावकः ॥
यद्गत्वा न निवर्त्तन्ते योगिनः शंसितव्रताः
।
द्वयैकमन्त्रनिष्ठा ये ते वै यान्ति तदव्ययम् ॥
न वेदयज्ञाध्ययनैर्न्न वेदैर्न व्रतैः शुभैः ।
न तपोभिर्न्निराहारैर्न्न च साधनकर्म्मभिः ॥
एकेन द्वयमन्त्रेण तथा भक्त्या त्वनन्यया ।
तद्गम्यं शाश्वतं दिव्यं प्रपद्ये वै सनातनम्
॥"
इति पाद्मोत्तरखण्डे ३० अध्यायः ॥
(तत्रस्थदेवगणे, पुं भूम्नि । यथा, भागवते ।
८ । ५ । ४ ।
"पत्नी विकुण्ठा शुभ्रस्य वैकुण्ठैः
सुरसत्तमैः ।
तयोः स्वकलया जज्ञेवैकुण्ठो भगवान्
स्वयम् ॥")

पश्चात् पश्यन्त्यथ हृदयगो बुद्धियुङ्मध्यमाख्यः ।
वक्त्रे वैखर्य्यथ रुरुदिषोरस्य जन्तोः सुषुम्ना-
बद्धस्तस्माद्भवति पवनप्रेरितो वर्णसंवः ॥"
इत्यलङ्कारकौस्तुभः ॥
अस्यार्थः । यस्तु तारो नादः वर्णरूपः स
नाभिरूपमूलाधारात् प्रथममुदयप्राप्तश्चेत् पर
इति आस्या संज्ञा यस्य तथाभूतो भवति ।
अथानन्तरं स एव हृदयं चित्तं गतश्चेत् रोदन-
समये नासिकाद्वारा यथाकथञ्चित् भवति ।
रुरुदिषोर्जन्तोर्नासामध्यस्थितसुषुम्नानाड्या
बद्धः ।
तथा च नासाद्वारैव यथाकथञ्चित् नादस्वरूपः
प्रत्यक्षम्भवतीत्यर्थः । तस्मात् वैखरीदशापन्नात्
नादात् पवनप्रेरितो वर्णसमूहो बहिः सर्व्वेषां
प्रत्यक्षविषयो भवतीत्यर्थः । परा पश्यन्ती
दशापन्नस्य तु योगिनामेव प्रत्यक्षे न तु सर्व्वेषा-
मित्यपि बोध्यम् । इति तट्टीका ॥

कर्णपूरे । २८ ।
"वैचित्र्यं वितनोति वाचकविधौ
वाचस्पते-
रन्तिके
देव त्वद्गुणवर्णनाय कुरुते किं किं
न वाग्-
देवता ॥")

**वैजननः**, पुं, (विजायतेऽस्मिन्निति । जन् +
आधारे ल्युट् । ततः स्वार्थे अण्
।) प्रसव-
मासः । तत्पर्य्यायः । सूतिमासः
२ । इत्यमरः ॥
(यथा, राजतरङ्गिण्याम् । १ । ७४
।
"अथ वैजनने मासि सा देवी
दिव्यलक्षणम् ।
निर्दग्धस्यान्वयतरोरङ्कुरं सुषुवे
सुतम् ॥")

**वैजयन्तः**, पुं, (वैजयन्ती अस्त्यत्रेति ।
अर्शआद्यच् ।)
इन्द्रप्रासादः । इत्यमरः ॥
इन्द्रध्वजः । इति
मेदिनी ॥ (यथा, महाभारते । २ ।
२२ । १९ ।
"एष ह्यैन्द्रो वैजयन्तो गुणैर्नित्यं
समाहितः ।
येनासुरान् पराजित्य
जगत्पतिशतक्रतुः ॥")
गुहः । इति हेमचन्द्रः ।

**वैजयन्तिकः**, त्रि, (वैजयन्त्यस्त्यस्येति ।
व्रीह्यादि-
भ्यश्चेति ठन् । यद्वा, वैजयन्त्या
चरतीति । चर-
तीति ठक् ।) पताकाधारी ।
इत्यमरः ॥

**वैजयन्तिका**, स्त्री, (वैजयन्ती + स्वार्थे कन्
।)
जयन्तीवृक्षः । पताका । इत्यमरः
॥ (यथा,
"निर्धनं निधनमेतयोर्द्वयो-

| | | |
|---|---|---|
| | | स्तारतम्यविधिमुग्धचेतसा ।<br>बोधनाय विधिना विनिर्म्मिता<br>रेफ एव जयवैजयन्तिका ॥”<br>इत्युद्भटः ॥)<br>अग्निमन्थः । इति राजनिर्घण्टः ॥ |

"https://sa.wikisource.org/w/index.php?title=शब्दकल्पद्रुमः/वृहती&oldid=44072" इत्यस्माद् पुनः प्राप्तिः

---

**वैजयन्ती**, स्त्री, पताका । इत्यमरः ॥

(यथा, रघुः । ६ । ८ ।
"सञ्चारिते चागुरुसारयोनौ
धूपे समुत्सर्पति वैजयन्तीः ॥")
जयन्तीवृक्षः । इति मेदिनी ॥ अग्निमन्थवृक्षः ।
इति हेमचन्द्रः ॥ पञ्चवर्णमयी जानुपर्य्यन्त-
लम्बिता माला । यथा, --
"उपगीयमान उद्गायन् वनिताशतयूथपः ।
मालां बिभ्रद्वैजयन्तीं व्यचरन् मण्डयन् वनम्
॥"
इति श्रीभागवते १० स्कन्धे ३१ अध्यायः ॥

**वैजयिः**, पुं, मघवा । स तु जिनचक्रवर्त्तिविशेषः ।

इति हेमचन्द्रः ॥

**वैजयिकं**, त्रि, (विजयस्य निमित्तं विजयिना

संयोग इति वा । विजय + "तस्य निमित्तमिति
।"
५ । १ । ३८ । इति ठञ् ।) विजयसम्बन्धि ।
इति
सिद्धान्तकौमुदी ॥ (यथा, हरिवंशे । २४२ ।
३१ ।
"रणे प्रवेशसदृशं कर्म्म वैजयिकं कृतम् ॥")

**वै(बै)जिकं**, क्ली, (वीजादुत्पन्नम् । वीज + ठक् ।)

शिग्रुतैलम् । हेतुः । इति मेदिनी ॥ आत्मा ।
इति शब्दमाला ॥

**वै(बै)जिकः**, पुं, सद्योऽङ्कुरः । इति मेदिनी ॥ बीज,

सम्बन्धिनि, त्रि ॥ (वीर्य्यसम्बन्धिनि च त्रि ।
यथा, मनौ । २ । २७ ।
"गार्भैर्होमैर्जातकर्म्मचौडमौञ्जीनिबन्धनैः ।
वैजिकं गार्भिकञ्चैनो द्विजानामपमृज्यते ॥")

**वैज्ञानिकः**, त्रि, (विज्ञाने युक्तः । विज्ञान + "तत्र

नियुक्तः ।" ४ । ४ । ६९ । इति ठक् ।)
निपुणः ।
इत्यमरः ॥

**वै(बै)डालव्रतं**, क्ली, (वैडालं विडालसम्बन्धि

व्रतम् ।) दुष्टाचारविशेषः । यथा, --

पाषण्डिनो विकर्म्मस्थान्
वामाचारांस्तथैव च ।
पञ्चरात्रान् पाशुपतान् वाङ्मात्रेणापि
नार्च्चयेत् ॥"

**वैणः**, पुं, वेणुजीवी । वेणुशब्दादणप्रत्ययेन उका-

रस्य लोपेन च निष्पन्नमिदम् । इति
सिद्धान्त-
कौमुदी ॥ (यथा, याज्ञवल्क्ये । १ ।
१६१ ।
"वैणाभिशस्तवार्द्धूषिगणिका
गणदीक्षिणाम् ॥")

**वैणवं**, क्ली, (वेणोरिदम् । वेणु + अण्) वेणु-

फलम् । इत्यमरः ॥ वेणुसम्बन्धिनि,
त्रि ॥
(यथा, भागवते । ११ । ३० । २४ ।
"ब्रह्मशापोपसृष्टानां
कृष्णमायावृतात्मनाम् ।
स्पर्द्धाक्रोधः क्षयं निन्ये
वैणवोऽग्निर्यथा वनम् ॥")

**वैणवः**, पुं, (वेणोरवयवो विकारो वा । वेणु +

"विल्वादिभ्योऽण् ।" ४ । ३ । १३६
। इत्यण् ।)
उपनयने वेणुदण्डः । तत्पर्य्यायः ।
राम्भः २ ।
इत्यमरः ॥ (वेणुः । यथा, महाभारते
। ५ ।
९० । १६ ।
"भेरीमृदङ्गनिनदैः शङ्खवैणवनिस्वनैः
॥")

**वैणविकः**, त्रि, (वैणवो वेणुस्तद्वादनं शिल्पमस्य
।

वैणव + "शिल्पम् ।" ४ । ४ । ५५ ।
इति ठक् ।)
वेणुवादकः । तत्पर्य्यायः । वेणुध्माः
२ । इत्य-

"इमान् शकुनकान्राजन् हन्ति वैतंसिको
यथा ।
एतद्रूपमधर्म्मस्य भूतेषु हि विहिंसता ॥")

**वैतनिकः**, त्रि, (वेतनेन जीवतीति । वेतन +

"वेतनादिभ्यो जीवति ।" ४ । ४ । १२ ।
इति
ठक् ।) वेतनभुग्भृत्यः । तत्पर्य्यायः भृतकः
२
भृतिभुक् ३ कर्म्मकरः ४ । इत्यमरः ॥
(यथा,
उपदेशशतके । २० ।
"वीरो वैतनिकः सन्विराटनगरोषितः कुमा-
रीणाम् ।
नर्त्तयिताज्‍र्ज्जुन आसीत् भजेदवस्थोचितां
वृत्तिम् ॥")

**वैतरणिः**, स्त्री, नरकसिन्धुः । इत्यमरः ॥ "वित-

रणेन दानेन तीर्य्यते वैतरणी । ष्णः
षित्त्वादीप् ष्णौ वैतरणिश्च ।
अटविपटिघाटी-
वैतेरण्यर्च्चिशुण्ठीरिति ह्रस्वान्तेषु रुद्रः ।
ततो-
ऽपि पाच्छोणादीति वा ईप् । विरुद्धं तरणं
वितरणं तदस्यामस्तीति वैतरणीत्यन्ये ।
वित-
रणौ विसूर्य्ये पाताले भवा वैतरणीत्यन्ये ।
वितरणिर्विनौका तरणशून्येत्यर्थः स्वार्थे ष्णे
वैतरणीत्येके । सिन्धुर्नदी ।

**वैतरणी**, स्त्री, नरकसिन्धुः । इत्यमरः ॥ "वित-

रणेन दानेन तीर्य्यते वैतरणी । ष्णः
षित्त्वादीप् ष्णौ वैतरणिश्च ।
अटविपटिघाटी-
वैतेरण्यर्च्चिशुण्ठीरिति ह्रस्वान्तेषु रुद्रः ।
ततो-
ऽपि पाच्छोणादीति वा ईप् । विरुद्धं तरणं
वितरणं तदस्यामस्तीति वैतरणीत्यन्ये ।
वित-
रणौ विसूर्य्ये पाताले भवा वैतरणीत्यन्ये ।

"यस्य धर्म्मध्वजो नित्यं शक्रध्वज इवोच्छ्रितः ।
प्रच्छन्नानि च पापानि वैडालं नाम तद्व्रतम् ॥"
इति दानसागरे यमवचनम् ॥

**वै(बै)डालव्रतिः**, पुं, अङ्गनाद्यभावात् कृतब्रह्म-
चर्य्यः । इति जटाधरः ॥

**वै(बै)डालव्रतिकः**, पुं, (विडालव्रतेन चरतीति ।
विडालव्रत + ठक् ।) छद्मतपस्वी ।
तत्पर्य्यायः ।
छद्मतापसः ३ सर्व्वाभिसन्धी ३ । इति त्रिकाण्ड-
शेषः ॥ तस्यासंभाष्यत्वं यथा, --
"पाषण्डिनो विकर्म्मस्थान् वैडालव्रतिकान् शठान् ।
हैतुकान् वकवृत्तींश्च वाङ्मात्रेणापि नार्च्चयेत् ॥"
इति विष्णुपुराणे ३ अंशे १८ अध्यायः ॥
"यस्य धर्म्मध्वजो नित्यं सुरध्वज इवोच्छ्रितः ।
प्रच्छन्नानि च पापानि वैडालं नाम तद्व्रतम् ॥"
तद्वान् वैडालव्रतिकः । इति तट्टीका ॥

**वै(बै)डालव्रती**, [न्] पुं, (वैडालव्रतमस्त्यस्येति ।
इनिः ।) भण्डतापसः । विडालतपस्वी । इति
भाषा । यथा, कौर्म्मे उपविभागे ५ अध्याये ।
"छद्मना चरितं तच्च व्रतं रक्षसि गच्छति ।
अलिङ्गी लिङ्गवेशेन यो लिङ्गमुपजीवति ।
स लिङ्गिनां हरेदेनस्तिर्य्यग्योनौ च जायते ॥
वैडालव्रतिनः पापाः सर्व्वधर्म्मविनाशकाः ।
सद्यः पतन्ति पापेषु कर्म्मणस्तस्य तत्फलम् ॥

मरः ॥ वैणुकः ३ । इति
शब्दरत्नावली ॥

**वैणवी**, स्त्री, (वेणोर्विकृतिः । वेणु + "विल्वादिभ्यो-
ऽण् ।" ४ । ३ । १३६ । इत्यण् ।
ततो ङीष् ।)
वंशलोचना । इति राजनिर्घण्टः ॥ (वेणुसम्ब-
न्धिनी । यथा, मनुः । ४ । ३६ ।
वैणवीं धारयेद्यष्टिं सोदकञ्च कमण्डलुम् ॥")

**वैणिकः**, त्रि, (वीणावादनं शिल्पमस्य । वीणा +
"शिल्पम् ।" ४ । ४ । ५५ । इति ठक् ।) वीणा-
वादकः । इत्यमरः ॥ (यथा, कथासरित्सागरे ।
६३ । १६२ ।
"तच्छ्रुत्वा विहताशोऽपि हसित्वा वैणिको
ययौ ॥")

**वैणुकं**, क्ली, गजस्य तोदनदण्डम् । तत्तु हस्ति-
चालनार्थं लौहमुखवंशदण्डम् ।
तत्पर्य्यायः ।
तोत्रम् २ । इत्यमरः ॥ वैणुकम् ३ ।
इति भरतः ॥

**वैणुकः**, पुं, (वेणुना कायति शब्दायते इति ।
कै + कः । ततः स्वार्थे अण् ।)
वेणुवादकः । इति
शब्दरत्नावली ॥

**वैणुकीयः**, त्रि, (वेणुकस्यायमिति । "वेणुकादिभ्य-
श्छण् ।" ४ । २ । १३८ । इत्यस्य वार्त्तिकोक्त्या
छण् ।) वेणुसम्बन्धीयः । इति
सिद्धान्तकौमुदी ॥

**वैण्यः**, पुं, (वेणोरपत्यमिति । वेण + ष्यञ् ।)

वितरणिर्विनौका तरणशून्येत्यर्थः स्वार्थे ष्णे
वैतरणीत्येके । सिन्धुर्नदी ।
'नारका जन्तवः प्रेता नदी वैतरणी स्मृता ॥'
इति त्रिकाण्डम् ॥"
इति भरतः ॥ * ॥ सा नदी दुर्गन्धा तप्तजला
महावेगा अस्थिकेशरक्तपरिपूर्णा यमद्वारे
वर्त्तते । यथा, --
"नदी वैतरणी नाम दुर्गन्धा रुधिरावहा ।
उष्णतोया महावेगा अस्थिकेशतरङ्गिणी ॥"
इति प्रायश्चित्तविवेकधृतयमदग्निवचनम् ॥ * ॥
अस्य उत्पत्तिर्यथा, --
मार्कण्डेय उवाच ।
"ततो ब्रह्मादयो देवाः सर्व्वे ते शङ्करान्तिकम् ।
गत्वा हरं संमुमुहुः सांसार्य्या योगमायया ॥
शनैश्चरोऽपि भूतेशमासाद्यान्तर्हितस्तदा ।
वाष्पवृष्टिं दुराधर्षामवजग्राह मायया ॥
यदा स नाशकद्वाष्पान् सन्धारयितुमर्कजः ।
तदा महागिरौ क्षिप्ता वाष्पास्ते जलधारके ॥
लोकालोकस्य निकटे जलधाराह्वयो गिरिः ।
पुष्करद्वीपपृष्ठस्थस्तोयसागरपश्चिमे॥
स तु सर्व्वप्रमाणेन मेरुपर्व्वतसन्निभः ।
तस्मिन् विन्यस्तवान् षाष्पान् न धर्त्तुं क्षम ईशितुः ॥
विदीर्णस्तैस्तु वाष्पौघैर्भग्नमध्योऽभवद्द्रुतम् ।
ते वाष्पाः पर्व्वतं भित्त्वा विविशुस्तोयसागरम्॥
सागरोऽपि ग्रहीतु तान्न शशाक खरानति ।
ततस्तु सागरं मध्ये भित्त्वा वाष्पाः समागताः ॥
तोयधेः प्राग्भवां वेलां स्पर्शमात्राद्बिभेद ताम् ।
विभिद्य वेलां ते वास्पाः पुष्करद्वीपमध्यगाः ॥
नदी वैतरणी भूत्वा पूर्व्वसागरगाभवन् ।
जलधारस्य वेगेन संसर्गात् सागरस्य च ॥

| | | |
|---|---|---|
| | पृथुः । स तु सूर्य्यवंशीयपञ्चमराजः । यथा, -- “आदिराजः पृथुर्वैण्यो मान्धाता यौवनाश्वकः ॥” इति जटाधरः ॥<br>**वैतंसिकः**, त्रि, (वीतंसो मृगपक्ष्यादिबन्धनोपाय- स्तेन चरतीति । वितंस + “चरति ।” ४ । ४ । ८ । इति ठक् ।) मांसविक्रेता । तत्पर्य्यायः । कौटिकः २ मांसिकः ३ । इत्यमरः ॥ कौट- किकः ४ । इति शब्दरत्नावली ॥ मृगपक्ष्यादिबन्ध- नोपायो वीतंसः तेन चरतीति वैतंसिकः । इति भरतः ॥ (यथा, महाभारते । ३ । ३३ । ३३ । | अवाप्य सौम्यतां किञ्चिद्बाष्पास्ते नाभिदन् क्षितिम् । त्वद्बाष्पव्याकुला पृथ्वी विदीर्णा स्यान्न चेच्छनिः ॥ |

अवजग्राह ते वास्पं सोऽपि
कृष्णोऽभवद्धठात् ।
शनैश्चरेण ते वोढमसमर्थेन लोतकैः
॥
क्षिप्तैर्वि दारितः सोऽसौ जलधारो
महागिरिः ।
विभिद्य पर्व्वतं शम्भोर्व्वास्पास्ते
सागरं ययुः ॥
वैवस्वतपुरद्वारे योजनद्वयविस्तृता ।
अद्यापि तिष्ठत्यपगा हरलोतकसम्भवा
॥
भित्त्वा वेलां ततः पृथ्वीं विभिद्याशु
तरङ्गिणीम् ।
चक्रुर्वैतरणीनाम्ना पूर्व्वसागरगामिनीम्
॥
नानायानविमानैर्न द्रौण्या स्यन्दनेन
च ।
तर्त्तुं शक्या सा तु नदी तप्ततोया
विभीषणा ॥
दुःखेन तां तु पृथिवी बिभर्त्ति
महताधुना ।
सदा चोद्‌र्ध्वगतैर्वाष्पैर्विक्षिपन्ति
नभश्चरान् ॥
तस्या उपरि नो यान्ति देवा अपि
भयाद्धर ।
यमद्धारं समावृत्य योजनद्वयविस्तृता
।
निम्नं वहति संपूर्णा भीषयन्ती
जगत्त्रयम् ॥”
इति कालिकापुराणे १८ अध्यायः ॥
* ॥
आसन्नमृत्युकाले वैतरणीगवीदानं
यथा, --
“आसन्नमृत्युना देया गौः सवत्सा च
पूर्ब्बवत् ।
तदभावे च गौरेका नरकोद्धारणाय वै
॥
तदा यदि न शक्नोति दातुं वैतरणीञ्च
गाम् ।
“मरणादेव कर्त्तव्यं संयोगो यस्य नाग्निना
।
दाहादूर्द्ध्वमशौचं स्याद्यस्य वैतानिको
विधिः ॥”
इति शुद्धितत्त्वम् ॥
वितानसम्बन्धीये, त्रि । वितानशब्दात्
ष्णिक-
प्रत्ययेन निष्पन्नमेतत् ॥
(यज्ञादिकार्य्यकारी ।
यथा च भागवते । १० । ४० । ५ ।
“त्रय्या च विद्यया केचित् त्वां वै
वैतानका
द्विजाः ।
यजन्ते विततैर्यज्ञैर्नानारूपामराख्यया
॥”)

**वैतालिकः**, पुं, (विविघेन तालेन चरतीति ।
वितालं + ठक् ।) बोधकरः । इत्यमरः ॥
द्वे
निशान्ते बोधकारके । विविधो
मङ्गलगीति-
वाद्यादिकृतस्तालशब्दः तेन व्यवहरन्ति
वैता-
लिकाः ढघे कादिति ष्णिकः । निशान्तं
निवे-
दयन्तो ये नृपं बोधयन्ति जागरयन्ति ते
बोध-
कराः सृकुष्ट इति टः । इति भरतः ॥
(यथा,
शिशुपालवधे । ५ । ६७ ।
“वैतालिकाः स्फुटपदप्रकटार्थमुच्चै-
र्भोगावलीः कलगिरोऽवसरेषु पेठुः ॥”)
खेट्टितालः । यथा, --
“वैतालिकः पुमान् खेट्टिताले बोधकरे
त्रिषु ॥”
इति मेदिनी ॥
हेमचन्द्रे तु पाठान्तरं यथा, --
“वैतालिकः खड्‌जताले मङ्गलपाठकेऽपि
च ॥”
वेतालसम्बन्धिनि, त्रि ॥
दमयन्तीपिता भीमसेनः । रुक्मिणीपिता भीष्म-
कश्च । वाक्यवक्रिमा । इति धरणिः ॥

**वैदर्भी**, स्त्री, वाक्यरीतिभेदः । इति मेदिनी ॥
यथा, रीतिमाह ।
“पदसंघटना रीतिरङ्गसंस्था विशेषवत् ।
उपकर्त्री रसादीनां -- ॥”
रसादीनामर्थात् शब्दार्थशरीरस्य काव्यस्यात्म-
भूतानाम् ।
“--सा पुनः स्याच्चतुर्व्विधा ।
वैदर्भी चाथ गौडी च पाञ्चाली लाटिका
तथा ॥”
सा रीतिः । तत्र ।
“माधुर्य्यव्यञ्जकैर्वर्णै रचना ललितात्मिका ।
अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ॥”
यथा । अनङ्गमङ्गलभुव इत्यादि । रुद्रटस्त्वाह ।
“असमस्तैकसमस्ता युक्ता दशभिर्गुणैश्च वैदर्भी
।
वर्गद्वितीयबहुला स्वल्पप्राणाक्षरा च सुवि-
धेया ॥
अत्र दशगुणास्तन्मतोक्ताः श्लेषादयः ।
“ओजः प्रकाशकैर्व्वर्णैर्ब्बन्ध आडम्बरः पुनः ।
समासबहुला गौडी -- ॥”
यथा । चञ्चद्भुजेत्यादि । पुरुषोत्तमस्त्वाह ।
बहुतरसमासयुक्ता सुमहाप्राणाक्षरा च
गौडीया ।
रीतिरनुप्रासमहिमपरतन्त्रास्तोभवाक्या च ॥”
“--वर्णैः शेषैः पुनर्द्वयोः ।
समस्तपञ्चषपदो बन्धः पाञ्चालिका मता ॥”
द्वयोर्वैदर्भीगौड्योः । यथा, --
“मधुरया मधुबोधितमाधवी-
मधुसमृद्धिसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मद-
ध्वनिभृता निभृताक्षरमुज्जगे ॥” * ॥
भोजस्त्वाह ।
“समस्तपञ्चषपदामोजःकान्तिसमन्विताम् ।
मधुरां सुकुमाराञ्च पाञ्चालीं कवयो विदुः ॥”
“लाटी तु रीतिर्व्वैदर्भी पाञ्चाल्योरन्तरा
स्थिता ॥”
यथा, --

शक्तोऽन्योऽरुक् तदा दत्त्वा श्रेयो दद्यान्मृतस्य
च ॥”
पूर्ब्बवद्धेमशृङ्गादिना । अत्र मृतस्य चेति श्रवणा-
देकादशाहेऽपि वैतरणीदानाचारः । इति
शुद्धितत्त्वम् ॥ * ॥
वैतरणीगोदानानन्तरं प्रार्थनामन्त्रो यथा, --
“यमद्वारे महाघोरे तप्ता वैतरणी नदी ।
ताञ्च तर्त्तुं ददाम्येनां कृष्णां वैतरणीञ्च गाम् ॥”
इति तत्प्रयोगः ॥ अन्यत् मुमूर्षुशब्दे द्रष्टव्यम् ॥
पितृकन्या । यथा, --
“अयज्वानश्च यज्वानः षितरो ब्रह्मणः स्मृताः
अग्निस्वात्ता वर्हिषदो द्विधा तेषां व्यवस्थितिः ।
तेभ्यः स्वधा मुतां जज्ञे मेनां वैतरणीं तथा ॥”
इति कौर्म्मे १३ अध्यायः ॥ * ॥
(कलिङ्गदेशस्थ-नदीविशेषः । यथा, महा-
भारते । ३ । ११४ । ४ ।
“एते कलिङ्गाः कौन्तेय ! यत्र वैतरणी नदी ।
यत्रायजत धर्म्मोऽपि देवाञ्छरणमेत्य वै ॥”)

**वैतसः**, पुं, (वेतस एव । स्वार्थे अण् ।) अम्ल-
वेतसः । इति जटाधरः ॥
(पुंस्प्रजननम् ।
शिश्नदण्डम् । इति निघण्टुः । ३ । २९ ॥ यथा,
ऋग्वेदे । १० । ९५ । ४ ।
“दिवा नक्तं श्नथिता वैतसेन ।”
“वैतसेन शेपो वैनस इति पुंस्प्रजननस्येति
निरुक्तम् । ३ । २१ । पुंस्प्रजननेन श्नथिता

**वैत्रकः**, त्रि, वेत्रसम्बन्धी । वेत्रशब्दात् कण्प्रत्ययेन
निष्पन्नमिदम् ॥

**वैत्रकेयः**, त्रि, वेत्रसम्बन्धीयः । वेत्रशब्दात् ष्णेय-
प्रत्ययेन निष्पन्नमेतत् ॥

**वैदः**, त्रि, पण्डितसम्बन्धी । विच्छन्दात् ष्णप्रत्ययेन
निष्पन्नमेतत् ॥

**वैदग्धं**, क्ली, (विदग्धस्य भावः । अण् ।) विदग्ध-
त्वम् । यथा । वैदग्धमपि वैदग्धी । इति भरत-
द्विरूपकोषः ॥ (यथा, साहित्यदर्पणे । १ ।
“वाग्वैदग्धप्रधानेऽपि रस एवात्र जीवितम् ॥”)

**वैदग्धी**, स्त्री, (विदग्धस्येयमिति । विदग्ध + अण् ।
स्त्रियां ङीप् ।) भङ्गिः । यथा, --
“छलं मिषञ्च वैदग्धी भङ्गिश्चेभनिमीलिका ॥”
इति त्रिकाण्डशेषः ॥
(यथा, कथासरित्सागरे । २० । १०९ ।
“धात्रा वैरूप्यनिर्म्माणवैदग्धीं दर्शितामिब ॥”)

**वैदग्ध्यं**, क्ली, (विदग्ध + ष्यञ् ।) विदग्धस्य
भावः । विदग्धशब्दात् ष्ण्यप्रत्ययेन निष्पन्न-
मेतत् ॥ (यथा, कथासरित्सागरे । १ । १२ ।
“वैदग्ध्यख्यातिलोभाय मम नैवायमुद्यमः ॥”)

**वैदर्भं**, क्ली, वाक्यवक्रत्वम् । इति मेदिनी ॥ विदर्भ-
सम्बन्धिनि, त्रि ॥

**वैदर्भः**, पुं, (विदर्भो निवासोऽस्येति । विदर्भ +
अण् ।) विदर्भदेशीयराजः । (यथा, रघुः ।
५ । ६२ ।
“मेने यथा तत्र जनः समेतो

“अयमुदयति मुद्राभञ्जनः पद्मिनीना-
मुदयगिरिवनालीबालमन्दारपुष्पम् ।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्
कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥”
कश्चिदाह ।
“मृदुपदसमाससुभगा युक्तैर्बर्णैर्न चातिभूयिष्ठा ।
उचितविशेषणपूरितवस्तुन्यासा भवेल्लाटी ॥”
अन्ये त्वाहुः ।
“गौडी डम्बरबन्धा स्यात् वैदर्भी ललिता क्रमात् ।
पाञ्चाली मिश्रभावेन लाटी तु मृदुभिः पदैः ॥”
क्वचित्तु वक्त्राद्यौचित्यादन्यथा वचनादयः ।
वक्त्रादीत्यादिशब्दाद्वाच्यप्रबन्धौवचनादीत्यादि-
शब्दाद्वृत्तिवर्णौ । तत्र वक्त्रौचित्याद्यथा ।
मन्थायस्तार्णवाम्भ इत्यादि । अत्र वाच्यस्य

| | | |
|---|---|---|
| ताडिता भवति ।” इति तद्भाष्ये सायणः ॥ * ॥ वेतसस्यायमिति । तस्येदमिति अण् । वेतस- सम्बन्धिनि, त्रि । यथा, रघुः । ४ । ३५ । “आत्मा संरक्षितः सुह्मैर्वृ त्तिमाश्रित्य वैत- सीम् ॥”) **वैतानिकः**, पुं, (विताने भवः । वितान + ठक् ।) श्रौतहोमः । यथा, -- | वैदर्भमागन्तुमजं गृहेशम् ॥”) | |

क्रोधाद्यव्यञ्जकत्वेऽपि भोमसेनवक्तृत्वेनोद्धता वच-
नादयः । वाच्यौचित्याद्यथोदाहृते । मूर्द्ध-
व्याधूयमानेत्यादौ ॥ * ॥ प्रबन्धौचित्याद्यथा ।
नाटकादौ रौद्रेऽप्यभिनयप्रतिकूलत्वेन न दीर्घ-
समासादयः । एवमाख्यायिकायां शृङ्गारेऽपि
न मसृणवर्णादयः । कथायां रौद्रेऽपि नात्यन्त-
मुद्धताः । एवमन्यदपि ज्ञेयम् । इति साहित्य-
दर्पणे रीतिविवेको नाम ९ परिच्छेदः ॥ * ॥
अगस्त्यपत्नी । इति शब्दरत्नावली ॥
दमयन्ती ।
यथा, --
"वैदर्भी विपुलानुरागकलना सौभाग्यमत्राखिल-
क्षौणीचक्रशतक्रतौ निजगदे तद्वृत्तवृत्तक्रमैः ।
किञ्चास्माकनरेन्द्रभूसुभगता संभूतये लग्नकं
देवेन्द्रावरणप्रसादितशचीविश्राणिताशीर्व्वचः ॥
इति उत्तरनैषधे १५ सर्गः ॥
रुक्मिणी । यथा, --
"वैदर्भ्याः स तु सन्देशं निशम्य यदुनन्दनः ।
प्रगृह्य पाणिना पाणिं प्रहसन् द्विजमब्रवीत् ॥"
इति श्रीभागवते १० स्कन्धे ५३ अध्यायः ॥

**वैदलं**, क्ली, भिक्षुकस्य मृण्मयादिपात्रम् । यथा,

"पात्रन्तु दारवालायुमृण्मयान्यपि वैदलम् ॥"
इति जटाधरः ॥

**वैदलः**, पुं, (विदलो दालिस्तस्मात् जातः । विदल + अण् ।) पिष्टकः । यथा, --
"पूपोऽपूपः पिष्टकः स्याद्वैदलो विदलोऽपि च ।"
इति शब्दचन्द्रिका ॥
विदलो दालिस्तन्निर्म्मितपिष्टको वैदलः । तद्-

"मुक्ताविद्रुमवज्रेन्द्रवैदूर्य्यस्फटिकादिकम् ।
मणिरत्नं सरं शीतं कषायं स्वादु लेखनम् ।
चाक्षुष्यं धारणात्तच्च पापालक्ष्मीविनाशनम् ॥"
इति राजवल्लभः ॥ * ॥
तच्छायलक्षणं यथा, --
"एकं वेणुपलाशकोमलरुचा मायूरकण्ठत्विषा
माजरिक्षणपिङ्गलच्छविजुषा ज्ञेयं त्रिधा च्छायया ।
यद्गात्र गुरुतां दधाति नितरां स्निग्धन्तु दोषोषितं
वैदूर्य्यं विशदं वदन्ति सुधियः स्वच्छञ्च तच्छो-
भनम् ॥"
तस्य कुलक्षणं यथा, --
"विच्छायं मृच्छिलागर्भं लघु रूक्षञ्च सक्षतम् ।
सत्रासं परुषं कृष्णं वैदूर्य्यं दूरतां नयेत् ॥"
तत्परीक्षा यथा, --
"घृष्टं यदात्मना स्वच्छं स्वच्छायां निकषाश्मनि ।
स्फुटं प्रदर्शयेदेतद्वैदूर्य्यं जात्यमुच्यते ॥"
इति राजनिर्घण्टः ॥ * ॥
सूत उवाच ।
"वैदूर्य्यपुष्परागाणां कर्क्केतभीष्मके वदे ।
परीक्षां ब्रह्मणा प्रोक्तां व्यासेन कथितां द्विज ॥
कल्पान्तकालक्षुभिताम्बुराशि-
निर्ह्लादकल्पाद्दितिजस्यनादात् ।
वैदूर्य्यमुत्पन्नमनेकवर्णं
शोभाभिरामं द्युतिवर्णबीजम् ॥
अविदूरे वैदूर्य्यस्य गिररुत्तुङ्गरोधसः ।
कामभूतिकसीमानमनु तस्याकरोऽभवत् ॥

जातस्य सर्व्वेऽपि मणेस्तु यादृग्-
विजातयः सन्ति समानवर्णाः ।
तथापि नानाकरणानुमेय-
भेदप्रकारः परमः प्रदिष्टः ॥
सुखोपलक्ष्यश्च सदा विचार्य्यो
ह्ययं प्रभेदो विदुषा नरेण ।
स्नेहप्रभेदो लघुता मृदुत्वं
विजातिलिङ्गं खलु सार्व्वजन्यम् ॥
कुशलाकुशलैः प्रयुज्यमानाः
प्रतिबद्धाः प्रतिसत्क्रियाप्रयोगैः ।
गुणदोषसमुद्भवं लभन्ते
मणयोऽर्थान्तरमूल्यमेव भिन्नाः ॥
क्रमशः समतीतवर्त्तमानाः
प्रतिबद्धा मणिबन्धकेन यत्नात् ।
यदि नाम भवन्ति दोषहीना
मणयः षड्गुणमाप्नुवन्ति मूल्यम् ॥
आकरान् समतीतानामुदधेस्तीरसन्निधौ ।
मूल्यमेतन्मणीनान्तु न सर्व्वत्र महीतले ॥
सुवर्णो मनुना यस्तु प्रोक्तः षोडशमाषकः ।
तस्य सप्ततिमो भागः संज्ञारूपं करिष्यति ॥
शाणश्चतुर्माषमानो माषकः पञ्चकृष्णलः ।
पलस्य दशमो भागो धरणः परिकीर्त्तितः ॥
इति मानविधिः प्रोक्तो रत्नानां मूल्यनिश्चये ॥"
इति गारुडे वैदूर्य्यपरीक्षा ७३ अध्यायः ॥ * ॥
अन्यच्च ।
"सितञ्च धूम्रसङ्काशमीषत्कृष्णसितं भवेत् ।
वैदूर्य्यं नाम तद्रत्नं रत्नविद्भिरुदाहृतम् ॥
ब्रह्मक्षत्त्रियविट्शूद्रजातिभेदाच्चतुर्व्विधम् ।
सितनीलो भवेद्विप्रः सितारक्तस्तु बाहुजः ॥

गुणाः ।
"वैदला गुरवो भक्ष्या विष्टम्भिसृष्टमारुताः ॥"
इति राजवल्लभः ॥

**वैदिकः**, पुं, (वेदं जानातीति । वेद + ठञ् ।)
वेदज्ञब्राह्मणः । वेदोक्ते, त्रि । यथा, तन्त्रसारे ।
"वैदिकी तान्त्रिकी सन्ध्या यथानुक्रमयोगतः ॥"

**वैदिश्यं**, त्रि, विदिशाया अदूरभवं नगरम् । इति
सिद्धान्तकौमुदी ॥

**वदुष्यं**, क्ली, (विदुषः कर्म्म भावो वा । विद्वस् +
ष्यञ् ।) विदुषो भावः । विद्वस्शब्दात् ष्ण्य-
प्रत्ययेन निष्पन्नमिदम् ॥ (यथा, राजतरङ्गि-
ण्याम् । १ । १२ ।
"पाटवं दुष्टवैदुष्यतीव्रा सुव्रतभारती ॥")

**वैदूर्य्यं**, क्ली, (विदूरात् प्रभवतीति । विदूर +
"विदूरात् ञ्यः ।" ४ । ३ । ८४ । इति ञ्यः ।)
मणिविशेषः । स तु कृष्णपीतवर्णः । लहसुनीया
इति हिन्दी भाषा । अस्य देवता केतुः ।
तत्पर्य्यायः । बालवायजम् २ । इति हेमचन्द्रः ॥
केतुरत्नम् ३ कैतवम् ४ प्रावृष्यम् ५ अभ्र-
रोहम् ६ खराब्दाङ्कुरकम् ७ विदूररत्नम् ८
विदूरजम् ९ । अस्य गुणाः । अम्लत्वम् । उष्ण-
त्वम् । कफवायुनाशित्वम् । गुल्मशूलप्रशमन-
त्वम् । भूषितञ्चेत् शुभावहत्वञ्च । इति राज-
निर्घण्टः ॥ अपि च ।

तस्य नादसमुत्थत्वादाकरः सुमहागुणः ।
अभूदुत्तरितो लोके लोकत्रयविभूषणः ॥
तस्यैव दानवपतेर्निनदानुरूप-
प्रावृट्पयोदवरदर्शितचारुरूपाः ।
वैदूर्य्यरत्नमणयो विविधावभासा-
स्तस्मात् स्फुलिङ्गनिवहा इव सम्बभूवुः ॥
पद्मरागमुपादाय मणिवर्णा हि ये क्षितौ ।
सर्व्वांस्तान्
वर्णशोभाभिर्वैदूर्य्यमनुगच्छति ॥
तेषां प्रधानं शिखिकण्ठनीलं
यद्वा भवेद्वेणुदलप्रकाशम् ।
चाषाग्रपक्षप्रतिमश्रियो ये
न ते प्रशस्ता मणिशास्त्रविद्भिः ॥
गुणवान् वैदूर्य्यमणिर्योजयति स्वामिनं वरभाग्यैः ।
दोषैर्युक्तो दोषैस्तस्माद्यत्नात् परीक्षेत ॥
गिरिकाचशिशुपालौ काचस्फटिकाश्च भूमि-
निर्भिन्नाः ।
वैदूर्य्यमणेरेते विजातयः सन्निभाः सन्ति ॥
लिख्याभावात् काचं लघु
भावाच्छैशुपालकं
विद्यात् ।
गिरिकाचमदीप्तित्वात् स्फटिकं
वर्णोज्ज्वलत्वेन ॥
यदिन्द्रनीलस्य महागुणस्य
सुवर्णसंख्याकलितस्य मूल्यम् ।
तदेव वैदूर्य्यमणेः प्रदिष्टं
पलद्वयोन्मापितगौरवस्य ॥

पीतानीलस्तु वैश्यः स्यात् नील एव हि
शूद्रकः ॥"
अथ गुणाः ।
"माज्जारनयनप्रख्यं रसोनप्रतिमं हि वा ।
कलिलं निर्म्मलं व्यङ्गं वैदूर्य्यं देवभूषणम् ॥
सुतारं घनमत्यच्छं कलिलं व्यङ्गमेव च ।
वैदूर्य्याणां समाख्याता एते पञ्च महागुणाः ॥"
तद्यथा, --
"उद्गिरन्निव दीप्तिं योऽसौ सुतार इति
गद्यते
प्रमाणताल्पं गुरु यत् घनमित्यभिधीयते ॥
कलङ्कादिविहीनं तदत्यच्छमिति
कीर्त्तितम् ।
ब्रह्मशूद्रं कलाकारश्चञ्चलो यत्र दृश्यते ॥
कलिलं नाम तद्राज्ञः
सर्व्वसम्पत्तिकारकम् ।
विश्लिष्टाङ्गन्तु वैदूर्य्यं व्यङ्गमित्यभिधीयते ॥ * ॥
कर्करं कर्कशं त्रासः कलङ्को देह इत्यपि ।
एते पञ्च महादोषा वैदूर्य्याणामुदीरिताः ॥
शर्करायुक्तमिव यत् प्रतिभाति च कर्करम् ।
स्पर्शेऽपि च यत्तज्ज्ञेयं कर्कशं
बन्धुनाशनम् ।
भिन्नभ्रान्तिकरस्त्रासः स कुर्य्यात्
कुलसंक्षयम्
विरुद्धवर्णो यस्याङ्के कलङ्कः क्षयकारकः ।
मलदिग्ध इवाभाति देहो हेहविनाशनः ॥
जयति यदि सुवर्णं त्यागहीनो यदा वा
बहुविधमणिहारी भूपतिर्व्वा यतिर्व्वा ।

दधदपि धृतदोषं जातु वैदूर्य्यरत्नं
प्रतिशतफलरूपः पातमेध्यत्यवश्यम् ॥”
इति युक्तिकल्पतरौ वैदूर्य्यपरीक्षा ॥
अन्यत् गरुडपुराणवत् ॥

**वैदेहः**, पुं, बणिक् । इत्यमरटीकायां भरतः ॥

(विदेहस्यापत्यमिति । विदेह + अञ् ।)
निमि-
राजपुत्रः । अस्योत्पत्तिर्यथा । अपुत्रस्य
तस्य
भूभुजः शरीरमराजकभीरवस्ते मुनयः
अरण्यां
ममन्थुः । तत्र च कुमारो जज्ञे ।
जननाज्जनक-
संज्ञां चासाववाप । अभूद्विदेहोऽस्य पितेति
वैदेहः । मथनान्मिथिरभूत्तस्योदावसुः
पुत्रो-
ऽभवत् । इति विष्णुपुराणे ४ अंशे
निमिवंश-
कथनं नाम ५ अध्यायः ॥ तस्य
विदेहनाम-
कारणं निमिशब्दे द्रष्टव्यम् ॥
(वर्णसङ्करजाति-
विशेषः । स तु वैश्यात् ब्राह्मण्यां जातः ।
यथा,
मनुः । १० । ११ ।
वैश्यान्मागधवैदेहौ राजविप्राङ्गनासुतौ ॥”)

**वैदेहकः**, पुं, (वैदेह एव । स्वार्थे कन् ।) बणिक् ।

इत्यमरः ॥ शूद्रात् वैश्यासुतः । इति
मेदिनी ॥
(वैश्याद्ब्राह्मण्यां जातो वर्णसङ्करविशेषः ।
यथा, मनुः । १० । १९ ।
“वैदेहकेन त्वम्बष्ठ्यामुत्पन्नो वेण उच्यते
॥”
अस्यान्तःपुररक्षणं कार्य्यम् । यथा, तत्रैव ।
१० । ४७ ।
“वैदेहाकानां स्त्रीकार्य्यं मागधानां बणिक्-
पथः ॥”)

**वैदेहिकः**, पुं, बणिक् । इत्यमरटीकासारसुन्दरी ॥

वैद्येन विदुषा । इति दायतत्त्वम् ॥
वासकवृक्षः ।
इति शब्दचन्द्रिका ॥ आयुर्व्वेदवेत्ता । स
चाम्बष्ठ-
जातिश्चिकित्सावृत्तिश्च । तत्पर्य्यायः ।
रोग-
हारी २ अगदङ्कारः ३ भिषक् ४
चिकित्सकः
५ । इत्यमरमरतौ ॥ स्रष्टा ६ विधिः ७
विद्वान्
८ आयुर्व्वेदी ९ । इति राजनिर्घण्टः ॥
स चतु-
र्व्विधः । रोगहरः १ विषहरः २
शल्यहरः ३
कृत्याहरः ४ । इति महाभारते
राजधर्म्मः ॥
अस्योत्पत्तिर्यथा, --
“वैद्योऽश्विनीकुमारेण जातश्च
विप्रयोषिति ।
वैद्यवीर्य्येण शूद्रायां बभूवुर्ब्बहवो जनाः ॥
ते च ग्रामगुणज्ञाश्च मन्त्रौषधिपरायणाः ।
तेभ्यश्च जाताः शूद्रायां ते व्यालग्राहिणो
भुवि ॥
शौनक उवाच ।
कथं ब्राह्मणपत्न्यान्तु
सूर्य्यपुत्रोऽश्विनीसुतः ।
अहो केन विपाकेन वीर्य्याधानं चकार
सः ॥
सौतिरुचाच ।
गच्छन्तीं तीर्थयात्रायां ब्राह्मणीं
कुरुनन्दन ।
ददर्श कामुकीं कान्तः पुष्पोद्याने मनोहरे
॥
तया निवारितो यत्नात् बलेन बलवान्
सुरः ।
अतीव सुन्दरीं दृष्ट्वा वीर्य्याधानं चकार
सः ॥
द्रुतं तत्याज गर्भं सा पुष्पोद्याने मनोरमे ।

“परं पारं गतो यः स्यादष्टाङ्गे तु चिकित्सिते
।
अनाहार्य्यः स वैद्यः स्याद्धर्म्मात्मा च कुलो-
द्गतः ।
प्राणावार्य्यः स विज्ञेयो वचनं तस्य भूभुजः ।
राजन् राज्ञा सदा कार्य्यं यथा कार्य्यं पृथग्-
जनैः ॥”
इति मात्स्ये १८९ अध्यायः ॥ * ॥
सामान्यवैद्यलक्षणं यथा, --
“चिकित्सां कुरुते यस्तु स चिकित्सक
उच्यते ।
स च यादृक् समीचीनस्तादृशोऽपि निगद्यते
॥
तत्त्वाधिगतशास्त्रार्थो दृष्टकर्म्मा स्वयं कृती ।
लघुहस्तः शुचिः शूरः स्वच्छोपस्करभेषजः
॥
प्रत्युत्पन्नमतिर्धीमान् व्यवसायी प्रियंवदः ।
सत्यधर्म्मपरो यश्च वैद्य ईदृक् प्रशस्यते ॥”
दृष्टकर्म्मा दृष्टा परेण कृता चिकित्सा येन सः
।
स्वयंकृती स्वयंचिकित्साकुशलः ।
लघुहस्तः
सिद्धिमद्धस्तः ॥ * ॥ निषिद्धवैद्यो यथा, --
“कुचेलः कर्कशः स्तब्धो ग्रामीणः
स्वयमागतः ।
पञ्च वैद्या न पूज्यन्ते घन्वन्तरिसमा अपि
॥”
कर्कशः अप्रियवादी । स्तब्धः साभिमानः ।
ग्रामीणः व्यवहाराचतुरः ॥ * ॥
अथ वैद्यस्य कर्म्म आह ।
“व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः ।
एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः ॥”
अस्यायमर्थः । व्याधेः सम्यक् परिचयः ।
व्यथा-
शान्तिकरणं वैद्यस्य कर्म्म । न तु वैद्यः
आयुषः
प्रभुरित्यर्थः । अपरे त्वेवं व्याचक्षते । व्याधे-
स्तत्त्वपरिचयः । वेदनायाः शान्तिकरणञ्च ।
एतदेव वैद्यस्य वैद्यत्वं न किन्तु वैद्य आयुषः

(वर्णसङ्करविशेषः । यथा, मनुः । १० ।
३६ ।
“वैदेहिकादन्ध्रमेदौ वहिर्ग्रामप्रतिश्रयौ ॥”)

**वैदेही**, स्त्री, (विदेहेषु भवा विदेहस्यापत्यं स्त्री

वा । विदेह + अण् । ङीप् ।) रोचना ।
सीता । (यथा, रघुः । १२ । २० ।
“रामोऽपि सह वैदेह्या वने वन्येन वर्त्तयन् ।
चचार सानुजः शान्तो वृद्धेक्षाकुव्रतं युवा
॥”
यथा च ।
“वैदेहि ! याहि कलसोद्भवधर्म्मपत्नीं
तस्याः पुरः कथय पूर्व्वकथाः समस्ताः ।
पृष्टापि मा वद पयोनिधिबन्धनं मे
सेयं पुनश्चुलुकिताम्बुनिधेः कलत्रम् ॥”
इत्युद्भटः ॥)
बणिक्स्त्री । पिप्पली । इति मेदिनी ॥
(वैदेह-
पत्नी । यथा, मनुः । १० । ३७ ।
“आहिण्डिको निषादेन वैदेह्यामेव जायते
॥”
विदेहदेशोत्पन्नमात्रे च । यथा, महाभारते ।
१ । ९५ । २३ । “देवातिथिः खलु
वैदेहीमुप-
येमे मर्य्यादां नाम तस्यामस्य जज्ञे अरिहो
नाम ॥”)

**वैद्यः**, पुं, (विद्यां वेदेति । विद्या + “तदधीते

तद्वेद ।” ४ । २ । ५९ । इति अण् ।)
पण्डितः ।
यथा । कात्यायनः ।
“नाविद्यानान्तु वैद्येन देयं विद्याधनं
क्वचित् ।
समविद्याधिकानान्तु देयं वैद्येन तद्धनम् ॥”
सद्यो बभूव पुत्त्रश्च तप्तकाञ्चनसन्निभः
॥
सपुत्त्रा स्वामिनो गेहं जगाम व्रीडिता
तदा ।
स्वामिनं कथयामास
यस्माद्दैवादिसङ्कटम् ।
विप्रो रोषेण तत्याज तञ्च पुत्त्रं
स्वकामिनीम् ।
सरिद्बभूव योगेन सा च गोदावरी स्मृता
॥
पुत्त्रं चिकित्साशास्त्रञ्च पाठयामास
यत्नतः ।
नानाशिल्पञ्च शस्त्रञ्च स्वयं स
रविनन्दनः ॥
विप्रश्च ज्योतिर्गणनात् वेदनाच्च
निरन्तरम् ।
वेदधर्म्मपरित्यक्तो बभूव गणको भुवि ॥”
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १० अध्यायः
॥ * ॥
नरकभोगान्ते वैद्यजन्म यथा, --
“यः करोत्यपहारञ्च देवब्राह्मणयोर्धनम् ।
पातयित्वा स्वपुरुषान् दश पूर्व्वान्
दशापरान् ॥
स्वयं याति च धूमान्धं
धूमध्वान्तसमन्वितम् ।
धूमक्लिष्टो धूमभोगी वसेत्तत्र चतुर्युगम्
॥
ततो मूषिकजातिश्च शतजन्मनि भारते
।
ततो नानाविधाः पक्षिजातयः
कृमिजातयः ॥
ततो नानाविधा वृक्षजातयश्च ततो नरः
।
भार्य्याहीनो वंशहीनः शवरो
व्याधिसंयुतः ॥
ततो भवेत् स्वर्णकारः स सुवर्णबणिक्
ततः ।
ततो जवनसेवी च ब्राह्मणो गणकस्ततः
।
विप्रो दैवज्ञोपजीवी वैद्यजीवी
चिकित्सकः ॥” *
प्रभुरित्यर्थः ॥ * ॥
अथ वैद्यानयनदूतस्य लक्षणम् ।
“यश्चिकित्सकमानेतुं याति दूतः स कथ्यते
।
स च यादृक् समुचितस्तादृगत्र निगद्यते ॥
दूताः सुजातयोऽव्यङ्गाः पटवो
निर्म्मलाम्बराः ।
सुखिनोऽश्ववृषारूढाः शुभ्रपुष्पफलैर्युताः ॥
सजातयः सुचेष्टाश्च स्वजीवदिशि सङ्गताः
।
भिषजं समये प्राप्ता रोगिणः सुखहेतवः ॥”
सजातयः रोगिसमानजातयः ।
“यस्यां प्राणमरुद्वाति सा नाडी जीव-
संश्रिता ॥” * ॥
अथ दूतयात्रायां शकुनविचारः ।
“वैद्याह्वानाय दूतस्य गच्छतो रोगिणः कृते ।
न शुभं सौम्यशकुनप्रदीप्तन्तु सुखावहम् ॥”
प्रदीप्तमग्निः । दूतो रोगी च रिक्तहस्तो वैद्यं
न पश्येत् । तथा च ।
“रिक्तहस्तो न पश्येत्तु राजानं भिषजं गुरुम्
।”
अथ आयुर्व्विदां प्रादुर्भावः । तत्रादौ ब्रह्म-
प्रादुर्भावः ।
“विधाताथर्व्वसर्व्वस्वमायुर्व्वेदं प्रकाशयन् ।
स्वनाम्ना संहितां चक्रे लक्षश्लोकमयीमृजुम्
॥
ततः प्रजापतिं दक्षं दक्षं सकलकर्म्मसु ।
विधिर्धीनीरधिः साङ्गमायुर्व्वेदमुपादिशत् ॥”
* ॥

| | | |
|---|---|---|
| | अपि च । “लाक्षालोहादिव्यापारी रसादिविक्रयी च यः । स याति नागवेष्टञ्च नागैर्व्वेष्टित एव च । वसेत् स लोममानाब्दं तत्रैव नागदंशितः ॥ ततो भवेत् स गणको वैद्यश्च सप्तजन्मसु । गोपश्च कर्म्मकारश्च रङ्गकारस्ततः शुचिः ॥” इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २८ अध्यायः ॥ * ॥ राजवैद्यस्य लक्षणं यथा, -- | |

अथ दक्षप्रादुर्भावः ।
"अथ दक्षः क्रियादक्षः स्वर्व्वैद्यौ वेदमायुषः
।
वेदयामास विद्वांसौ सूर्य्यांशौ सुरसत्तमौ ॥"
* ॥
अथाश्विनीसुतप्रादुर्भावः ।
"दक्षादधीत्य दस्रौ वितेनतुः संहितां
स्वीयाम् ।
सकलचिकित्सकलोकप्रतिपत्तिविवृद्धये
धन्याम् ॥
स्वयम्भु वः शिरश्छिन्नं भैरवेण रुषाथ तत् ।
अश्विभ्यां संहितं तस्मात्तौ जातौ
यज्ञभागिनौ ॥
देवासुररणे देवा दैत्यैर्ये सक्षताः कृताः ।
अक्षतास्ते कृताः सद्यो दस्राभ्यामद्भुतं महत्
॥
वज्रिणोऽभूद्भुजस्तम्भः स दस्राभ्यां
चिकित्सितः ।
सोमान्निपतितश्चन्द्रस्ताभ्याम्म सुखीकृतः
॥
विशीर्णा दशनाः पुष्णो नेत्रे नष्टे भगस्य च ।
शशिनो राजयक्ष्माभूदश्विभ्यां ते
चिकित्सिताः ॥
भार्गवश्च्यवनः कामी वृद्धः सन् विकृतिं
गतः ।
वीर्य्यवर्णस्वरोपेतः कृतोऽश्विभ्यां पुनर्युवा
॥
एतैश्चान्यैश्च बहुभिः कर्म्मभिर्भिषजां वरौ ।
बभूवतुर्भृशं पूज्याविन्द्रादीनां दिवौकसाम्
॥" *
अथेन्द्रप्रादुर्भावः ।
"संदृश्य दस्रयोरिन्द्रः कर्म्माण्येतानि
यत्नवान् ।
आयुर्व्वेदं निरुद्वेगं तौ ययाचे शचीपतिः ॥
नासत्यौ सत्यसन्धेन शक्रेण किल याचितौ
।
आयुर्व्वेदं यथाधीतं ददतुः शतमन्यवे ॥
नासत्याभ्यामधीत्यैष आयुर्व्वेदं शतक्रतुः ।

ततोऽग्निवेशं भेडञ्च जातूकर्णं
पराशरम् ।
क्षीरपाणिञ्च
हारीतमायुर्व्वेदमपाठयत् ॥
तन्त्रस्य कर्त्ता प्रथममग्निवे
शोऽभवत् पुरा ।
ततो भेडादयश्चक्रुः स्वं स्वं तन्त्रं
कृतानि च ॥
श्रावयामासुरात्रेयं मुनिवृन्देन
वन्दितम् ।
श्रुत्वा च तानि तन्त्राणि
हृष्टोऽभूदत्रिनन्दनः ॥
यथावत् सूत्रितं तस्मात् प्रहृष्टा
मुनयोऽभवन् ।
दिवि देवर्षयो देवाः श्रुत्वा साध्विति
चाब्रुवन् ॥"
अथ भरद्वाजप्रादुर्भावः ।
"एकदा हिमवत्पार्श्वे दैवादागत्य
संगताः ।
मुनयो बहवस्तांश्च नामभिः
कथयाम्यहम् ॥
भरद्वाजो मुनिवरः प्रथमं समुपागतः
।
ततोऽङ्गिरास्ततो गर्गो
मरीचिर्भृगुभार्गवौ ॥
पुलस्त्योऽगस्तिरसितो वशिष्ठः
सपराशरः ।
हारीतो गोतमः सांख्यो
मैत्रेयश्च्यवनोऽपि च ॥
यमदग्निश्च गार्ग्यश्च काश्यपः
कश्यपोऽपि च ।
नारदो वामदेवश्च मार्कण्डेयः
कपिष्ठलः ॥
शाण्डिल्यः सहकौण्डिन्यः
शाकुनेयः सशौनकः ।
आश्वलायनसांकृत्यौ विश्वामित्रः
परीक्षितः ॥
देवलो गालवो धौम्यः
काप्यकात्यायनावुभौ ।

सोऽधिगम्य जयाशीर्भिरभिवन्द्य सुरेश्वरम् ।
ऋषीणां वचनं सम्यगश्रावयत सत्तमम् ॥
व्याधयो हि समुत्पन्नाः सर्व्वप्राणिभयङ्कराः ।
तेषां प्रशमनोपायं यथावद्वक्तुमर्हसि ॥
तमुवाच मुनिं साङ्गमायुर्व्वेदं शतक्रतुः ।
जीवेद्वर्षसहस्राणि देही नीरुङ्निशम्य यम् ॥
सोऽनन्तागारं त्रिस्कन्धमायुर्व्वेदं महामतिः ।
यथावदचिरात् सर्व्वं बुबुधे तन्मना मुनिः ॥
तेनायुः सुचिरं लेभे भरद्वाजो निरामयम् ।
अन्यानपि मुनींश्चक्रे नीरुजः सुचिरायुषः ॥
तत्तत्र जनितज्ञानचक्षुषा ऋषयोऽखिलाः ।
गुणान् द्रव्याणि कर्म्माणि दृष्ट्वा तद्विधि-
माश्रिताः ॥
आरोग्यं लेभिरे दीर्घमायुश्च सुखसंयुतम् ।
आयुर्व्वेदोक्तविधिनान्येऽपि स्युर्मुनयो यथा ॥"
अथ चरकप्रादुर्भावः ।
"यदा मत्स्यावतारेण हरिणा वेद उद्धृतः ।
तदा शेषश्च तत्रैव वेदं साङ्गमवाप्तवान् ॥
अथर्व्वान्तर्गतं सम्यगायुर्व्वेदञ्च लब्धवान् ।
एकदा स महद्वृत्तं द्रष्टुं चर इवागतः ॥
तत्र लोकान् गदैर्ग्रस्तान् व्यथया परिपीडितान् ।
स्थलेषु बहुषु व्यग्रान् म्रियमाणांश्च दृष्टवान् ॥
तान् दृष्ट्वातिदयायुक्तस्तेषां दुःखेन दुःखितः ।
अनन्तश्चिन्तयामास रोगोपशमकारणम् ॥
सञ्चिन्त्य स स्वयं तत्र मुनेः पुत्त्रो बभूव ह ।
यतश्चर इवायातो न ज्ञातः केनचिद्यतः ॥
तस्माच्चरकनामासौ विख्यातः क्षितिमण्डले ।
स भाति चरकाचार्य्यो देवाचार्य्यो यथा दिवि ॥
सहस्रवदनस्यांशो येन ध्वंसो रुजां कृतः ।
आत्रेयस्य मुनेः शिष्या अग्निवेशादयोऽभवन् ॥
मुनयो बहवस्तैश्च कृतं तन्त्रं स्वकं स्वकम् ।
तेषां तन्त्राणि संस्कृत्य समाहृत्य विपश्चिता ।
चरकेणात्मनो नाम्ना ग्रन्थोऽयं चरकः कृतः ॥"
अथ धन्वन्तरिप्रादुर्भावः ।
"एकदा देवराजस्य दृष्टिर्निपतिता भुवि ।
तत्र तेन नरा दृष्टा व्याधिभिर्भृशपीडिताः ॥
तान् दृष्ट्वा हृदयं तस्य दयया परिपीडितम् ।
यदार्द्रहृदयः शक्रो धन्वन्तरिमुवाच ह ॥
धन्वन्तरे सुरश्रेष्ठ भगवन् किञ्चिदुच्यते ।

अध्यापयामास बहूनात्रेयप्रमुखान् मुनीन्
॥” *
अथात्रेयप्रादुर्भावः ।
“एकदा जगदालोक्य गदाकुलमितस्ततः ।
चिन्तयामास भगवानात्रेयो मुनिपुङ्गवः ॥
किं करोमि क्वगच्छामि कथं लोका
निरामयाः ।
भवन्ति सामयानेतान्न शक्नोमि निरीक्षितुम्
॥
दयालुरहमत्यर्थं स्वभावो दुरतिक्रमः ।
एतेषां दुःखतो दुःखं ममापि हृदयेऽधिकम् ॥
आयुर्व्वेदं पठिष्यामि नैरुज्याय शरीरिणाम्
।
इति निश्चित्य गतवानात्रेयस्त्रिदशालयम् ॥
तत्र मन्दिरमिन्द्रस्य गत्वा शक्रं ददर्श सः ।
सिंहासनसमासीनं स्तूयमानं सुरर्षिभिः ॥
भासयन्तं दिशो भासा भास्करप्रतिमं त्विषा
।
आयुर्व्वेदमहाचार्य्यं शिरोधार्य्यं दिवौकसाम्
॥
शक्रस्तु तं निरीक्ष्यैव त्यक्तसिंहासनो ययौ ।
तदग्रे पूजयामास भृशं भूरितपःकृशम् ॥
कुशलं परिपप्रच्छ तथागमनकारणम् ।
स मुनिर्व्वक्तुमारेभे निजागमनकारणम् ॥
देवराज न राजासि दिव एव यतो भवान् ।
विधात्रा विहितो यत्नात्त्रिलोकी
लोकपालकः ॥
व्याधिभिर्व्यथिता लोकाः
शोकाकुलितचेतसः ।
भूतेले सन्ति सन्तापं तेषां हर्त्तुं कृपां कुरु ॥
आयुर्व्वेदोपदेशं मे कुरु कारुण्यतो नृणाम् ।
तथेत्युक्त्वा सहस्राक्षोऽध्यापयामासतं
मुनिम् ॥
मुनीन्द्र इन्द्रतः साङ्गमायुर्व्वेदमधीत्य सः ।
अभिनन्द्य तमाशीर्भिराजगाम पुनर्महीम् ॥
अथात्रेयो मुनिश्रेष्ठो भगवान् करुणापरः ।
स्वनाम्ना संहितां चके नरचक्रानुकम्पया ॥

काङ्कायनो वैजवापः कुशिको
वादरायणिः ॥
हिरण्याक्षश्च लोकाक्षिः शरलोमा च
गोभिलः ।
वैखानसा वालखिल्लास्तथैवान्ये
महर्षयः ॥
ब्रह्मज्ञानस्य निधयो यमस्य
नियमस्य च ।
तपसस्तेजसा दीप्ता हूयमाना
इवाग्नयः ॥
सुखोपविष्टास्ते तत्र सर्व्वे चक्रुः
कथामिमाम् ।
धर्म्मार्थकाममोक्षाणां
मूलमुक्तकलेवरम् ॥
तत्र सर्व्वार्थसंसिद्ध्यैभवेद्यदि
निरामयम् ।
तपःस्वाध्यायधर्म्माणां
ब्रह्मचर्य्यव्रतायुषाम् ॥
हर्त्तारः प्रसृता रोगा यत्र तत्र च
सर्व्वतः ।
रोगाः कार्श्यकरा बलक्षयकरा
देहस्य चेष्टाहरा-
दृश्यादीन्द्रियशक्तिसंक्षयकराः
सर्व्वाङ्गपीडा-
कराः ।
धर्म्मार्थाखिलकाममुक्तिषु
महाविघ्नस्वरूपा
बलात्
प्राणानाशु हरन्ति सन्ति यदि ते क्षेमं
कुतः
प्राणिनाम् ॥
तत्तेषां प्रशमाय कश्चन
विधिश्चिन्त्यो भवद्भि-
र्बुधै-
र्योगैरित्यभिधाय संसदि भरद्वाजं
मुनिं तेऽब्रु-
वन् ।
त्वं योग्यो भगवान् सहस्रनयनं
याचस्व लब्धुं
क्रमात्

यीग्यो भवति भूतानामुपकारपरो भव ॥
उपाकाराय लोकानां केन किं न कृतं पुरा ।
त्रैलोक्याधिपतिर्व्विष्णुरभून्मत्स्यादिरूपवान् ॥
तस्मात्त्वं पृथिवीं याहि काशीमध्ये नृपो भव ।
प्रतीकाराय रोगाणामायुर्व्वेदं प्रकाशय ॥
इत्युक्त्वा सुरशार्दूलः सर्व्वभूतहितेप्सया ।
समस्तमायुषो वेदं धन्वन्तरिमुपादिशत् ॥
अधीत्य चायुषो वेदमिन्द्राद्धन्वन्तरिः पुरा ।
आगत्य पृथिवीं काश्यां जातो बाहुजवेश्मनि
नाम्ना तु सोऽभवत् ख्यातो दिवोदास इति
क्षितौ ।
बाल एव विरक्तोऽभूच्चचार च महत्तपः ॥
यत्नेन महता ब्रह्मा तं काश्यामकरोन्नृपम् ।

| | | |
|---|---|---|
| | आयुर्व्वेदमधीत्य यं गदभयान्मुक्ता भवामो वयम् ॥ इत्थं स मुनिभिर्योग्यैः प्रार्थितो विनयान्वितैः । भरद्वाजो मुनिश्रेष्ठो जगाम त्रिदशालयम् ॥ तत्रेन्द्रभवनं गत्वा सुरर्षिगणमध्यगम् । दृष्टवान् वृत्रहन्तारं दीप्यमानमिवानलम् ॥ दृष्ट्वैव स मुनिं प्राह भगवान् मघवा मुदा । धर्म्मज्ञ स्वागतं तेऽथ मुनिं तं समपूजयत् ॥ | |

ततो धन्वन्तरिर्लौकैः
काशीराजोऽभिधीयते ॥
हिताय देहिनां स्वीयसंहिता विहितामुना
।
अयं विद्यार्थिनो लोकान् संहितां
तामपाठ-
यत् ॥”
अथ सुश्रुतप्रादुर्भावः ।
“अथ ज्ञानदृशा विश्वामित्रप्रभृतयोऽवदन्
।
अयं धन्वन्तरिः काश्यां
काशीराजोऽयमुच्यते ॥
विश्वामित्रो मुनिस्तेषु पुत्रं सुश्रुतमुक्तवान्
।
वत्स ! वाराणसों गच्छ तां
विश्वेश्वरवल्लभाम् ॥
तत्र नाम्ना दिवोदासः काशीराजोऽस्ति
बाहुजः ।
स हि धन्वन्तरिः साक्षादायुर्व्वेदविदां वरः
॥
आयुर्व्वेदं ततोऽधीत्य लोकोपकृतिहेतवे ।
सर्व्वप्राणिदया तीर्थमुपकारो महामखः ॥
पितुर्व्वचनमाकर्ण्य सुश्रुतः काशिकां गतः
।
तेन सार्द्धं समध्येतुं मुनिसूनुशतं ययौ ॥
अथ धन्वन्तरिं सर्व्वेवानप्रस्थाश्रमे
स्थितम् ।
भगवन्तं सुरश्रेष्ठं मुनिभिर्ब्बहुभिः स्तुतम्
॥
काशीराजं दिवोदासं तेऽपश्यन्
विनयान्विताः ।
स्वागतञ्च इति स्माह दिवोदासो
यशोधनः ॥
कुशलं परिपप्रच्छ तथागमनकारणम् ।
ततस्ते सुश्रुतद्वारा कथयामासुरुत्तरम् ॥
भगवन् मानवान् दृष्ट्वा व्याधिभिः
परिपीडितान् ।
क्रन्दतो म्रियमाणांश्च जातास्माकं हृदि
व्यथा ॥

अन्यपद्धतयोऽप्येवं सन्ति वैद्या न ते
श्रुताः ।
बहवश्चैकनामानो नानागोत्रसमुद्भवाः ॥
यथाष्टौ विश्रुताः सेना इत्येवमपरे मताः
।
यस्य यस्य मुनेर्यो यः सन्तानः स स
विश्रुतः ॥
तत्तद्गोत्रादिना वैद्यः श्रैष्ठ्याद्यन्तु
स्वकर्म्मणा ॥”
तथा हि ।
“तिस्रो वर्णानुपूर्ब्बेण द्वे तथैका
यथाक्रमम् ।
ब्राह्मणक्षत्त्रियविशां भार्य्याः स्वाः
शूद्रजन्मनः ॥
यदुच्यते द्विजातीनां शूद्रादारोपसंग्रहः ।
नैतन्मम मतं यस्मात्तत्रात्मा जायते
स्वयम् ॥
पाणिं भर्त्तुः सवर्णासु गृह्णीयात् क्षत्त्रिया
शरम् ।
वैश्या प्रतोदमादद्याद्वेदने त्वग्रजन्मनः ॥
सवर्णेभ्यः सवर्णासु जायन्ते च
सजातयः ।
अनिन्द्येषु विवाहेषु पुत्त्राः
सन्तानवर्द्धनाः ॥
विप्रान्मूर्द्धाभिषिक्तो हि क्षत्त्रियायां विशः
स्त्रियाम् ।
जातोऽम्बष्टस्तु शूद्रायां निषादः
पार्श्ववोऽपि वा ॥
वैश्याशूद्र्योश्च राजन्यान्महिष्यौ द्वौ
सुतौ
स्मृतौ ।
वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः
स्मृतः ॥”
एते षट् श्लोका याज्ञवल्क्यीयाः ॥
“शूद्रैव भार्य्या शूद्रस्य सा च स्वा च
विशःस्मृते ।
ते च स्वा चैव राज्ञस्तु ताश्च स्वा
चाग्रजन्मनः ॥
पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते ।

“युगे जघन्ये द्वे जाती ब्राह्मणः शूद्र एव च ।”
इति यमः ॥
“शनकैश्च क्रियालोपादिमाः क्षत्त्रियजातयः ।
वृषलत्वङ्गता लोके ब्राह्मणादर्शनेन च ॥”
इति मनुवचनं धृत्वा एवमम्बष्ठादीनामपि कलौ
शूद्रत्वमिति स्वस्वग्रन्थेषु
वाचस्पतिमिश्रादिभि-
स्तथा शुद्धितत्त्वे स्मार्त्तभट्टाचार्य्येणाप्युक्तम् ।
अतएव कुलपञ्जिकायामुक्तम् । अतिदिष्टं हि
वैद्यस्य शूद्रत्वं क्षत्त्रियादिवदिति । तस्मात्
क्षत्त्रविशोस्तुल्यो वैद्यः शूद्रस्य पूजित इति ॥
* ॥
“युगे युगे कर्म्मणैवोत्कर्षापकर्षावाह मनुः ।
तपोरीतिप्रभावैश्च ते गच्छन्ति युगे युगे ॥”
मनुष्येष्विह जन्मत इति ॥
“अम्बष्ठेष्वमृताचार्य्यः ख्यातोऽभूद्भुवनत्रये ।
सिद्धविद्याह्वयां कन्यां स्ववैद्यस्य तु मानसीम्
॥
उपयेमे महौजा यश्चिकितसतकया श्रुतः ।
अथैतस्य वरेणैव ख्याता वैद्या महौजसः ॥
सेनो दासश्च गुप्तश्च दत्तो देवः करो धरः ।
राजः सोमश्च नन्दिश्च कुण्डश्चन्द्रश्च
रक्षितः ॥
सन्ताना वहवश्चैषां बभूवुश्च चिकित्सकाः ।
कुलानुरूपतश्चैषां जाताः पद्धतयोऽप्यमूः ॥
तेषां प्रशंसा निन्दा च बभूव स्वेन कर्म्मणा ।
उत्तमौ सेनदासौ च गुप्तदत्तौ तथैव च ॥
देवः करश्च मध्यस्थौ राजसोमौ कुलाधमौ ।
नन्दिप्रभृतयो निन्द्या लुप्तपद्धतयोऽपि च ॥
केचिज्जात्या परिख्यातास्तथा वृत्त्यनुसारतः
।
सर्व्वासामेव जातीनां वृत्तिरेव गरीयसी ।
वृत्तिः स्वर्ग्या च पथ्या च वृत्त्या जातिः प्रव-
र्त्तते ॥”
इति प्राचीनकुलपञ्जिकाधृतव्यासवचनानि॥
इति वैद्योत्पत्तिकथनम् ॥ * ॥ अथ वैद्यानां
गोत्राणि ।
“अष्टाविंशदमी गोत्राः सर्व्वेषां भिषजामपि ।

आमयानां शमोपायं विज्ञातुं वयमागताः ।
आयुर्व्वेदं भवानस्मानध्यापयतु यत्नतः
॥
अङ्गीकृत्य वचस्तेषां
नृपतिस्तानुपादिशत् ।
व्याख्यातं तेन ते यत्नाज्जगृहुर्मुनयो मुदा
॥
काशीराजं जयाशीर्भिरभिनन्द्य
मुदान्विताः ।
सुश्रुताद्याः सुसिद्धार्था जग्मुर्गेहं स्वकं
स्वकम् ॥
प्रथमं सुश्रुतस्तेषु स्वं तन्त्रं कृतवान्
स्फुटम् ।
सुश्रुतस्य सखायोऽपि पृथक् तन्त्राणि
तेनिरे ।
सुश्रुतेन कृतं तन्त्रं सुश्रुतं बहुभिर्यतः ।
तस्मात्तं सुश्रुतं नाम्ना विख्यातं
क्षितिमण्डले ॥"
इति भावप्रकाशः ॥
अथ मतान्तरे वैद्योत्पत्तिकथनम् ।
"सत्यत्रेताद्वापरेषु युगेषु ब्राह्मणाः किल ।
ब्रह्मक्षत्त्रियविट्शूद्रकन्यकाउपयेमिरे ॥
तत्र वैश्यसुतायां ये जज्ञिरे तनया अमी ।
सर्व्वे ते मुनयः ख्याता वेदवेदाङ्गपारगाः
॥
तेषां मुख्योऽमृताचार्य्यस्तस्थावम्बा कुले
हि तत् ।
अम्बष्ठ इत्यसावुक्तस्ततो जातिप्रवर्त्तनात्
॥
परे सर्व्वेऽपि चाम्बष्ठा वैश्या
ब्राह्मणसम्भवाः ।
जननीतो जनुर्लब्धा यज्जाता
वेदसंस्कृतैः ॥
अम्बष्ठास्तेन ते सर्व्वे द्विजा वैद्याः
प्रकीर्त्तिताः ।
अथ रुक्प्रतिकारित्वाद्भिषजस्ते
प्रकीर्त्तिताः ॥
सत्ये वैद्याः पितुस्तुल्यास्त्रेतायाञ्च तथा
स्मृताः ।
द्वापरे क्षत्त्रवत्प्रोक्ताः कलौ वैश्योपमाः
स्मृताः ॥

असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्म्मणि
॥
शरः क्षत्त्रियया ग्राह्यः प्रतोदो
वैश्यकन्यया ।
वसनस्य दशा ग्राह्याः शूद्रयोत्कृष्टवेदने
॥"
इति पद्यत्रयम् ॥
"ब्राह्मणाद्वैश्यकन्यायामम्बष्ठोनाम
जायते ॥"
इति च पद्यार्द्धं मानवीयम् ॥
"वैश्यायां ब्राह्मणाज्जातोऽम्बष्ठो हि
नुनि-
सत्तम ।
ब्राह्मणानां चिकित्सार्थं निर्द्दिष्टो
मुनिपुङ्गवैः ॥"
इति पराशरः ॥
"वेदाज्जातो हि वैद्यः स्यादम्बष्ठो
ब्रह्मपुत्त्रकः ।"
इति शङ्खः ॥
ब्रह्मा मूर्द्धाभिषिक्तश्च वैद्यः
क्षत्त्रविशावपि ।
अमी पञ्च द्विजा एषां यथापूर्ब्बञ्च गौरवम्
॥"
इति हारीतः ॥
"मातुर्यदा प्रजायन्ते द्वितीयं
मौञ्जिबन्धनात् ।
ब्राह्मणक्षत्त्रियविशस्तस्मादेते द्विजाः
स्मृताः ॥"
इति याज्ञवल्क्यवचनम् ॥
मूर्द्धाभिषिक्ताम्बष्ठयोरपि पितृवत्त्वात्
द्विजत्वम् ॥
इति बृद्धाः ॥
"आयुर्व्वेदोपनयनाद्वैद्यो द्विज इति
स्मृतः ॥"
इति वैद्यकेऽग्निवेशः ॥
"तपोयोगात् पुरा वैद्यस्तेजसा पितृवत्
स्मृताः ।
विप्रात् क्षत्त्राद्यतो न्यूनाः क्रियया
वैश्यवत्
कृताः ॥

प्रत्येकन्ते विलिख्यन्ते सेनदासादितः क्रमात्
॥
धन्वन्तरिश्च शक्तिश्च तथा वैश्वानराद्यकौ ।
मौद्गल्यकौशिकौ कृष्णात्रेय आङ्गिरसोऽपि च
॥
अष्टौ गोत्राणि सेनानां दासानां तदनन्तरम् ।
मौद्गल्योऽथ भरद्वाजः शालङ्कायन एव च ॥
शाण्डिल्यश्च वशिष्ठश्च वात्स्यश्च षडमी
मताः ।
गुप्तानां त्रीणि गोत्राणि काश्यपो गौतमस्तथा ॥
सावर्णिरपि दत्तानां चत्वारः परिकीर्त्तिताः ।
कौशिकः काश्यपश्चैव शाण्डिल्यश्चापि
तत्परः ॥
मौद्गल्य इति विज्ञेयाश्चत्वारो देवसम्भवाः ।
आत्रेयकृष्णात्रेयौ च शाण्डिल्य आलमालकः
॥
धरस्य काश्यपः प्रोक्तो भरद्वाजश्च कुण्डजः ।
काश्यपो रक्षितस्यैको गोत्रा एते प्रकीर्त्तिताः ॥
दत्तानामाद्यगोत्राणां देशभेदेऽस्ति सन्ततिः ।
एवमात्रेयगोत्रोऽपि दत्तो देशान्तरे श्रुतः ॥
दत्ताः कृष्णात्रेयगोत्रा दृश्यन्ते बहवस्तथा ।
तस्माद्दत्तस्य गोत्राणि सप्त ज्ञेयानि पण्डितैः ॥
कराणां काश्यपो गोत्रो वात्स्यमौद्गल्यकावपि
।
देशभेदे हि विद्यन्ते तत्करः सप्तगोत्रकः ॥

| | | |
|---|---|---|
| अथाम्बष्ठेषु सर्व्वेषु विख्याता अभवन्नमी ।<br>सेनो दासश्च गुप्तश्च दत्तो देवः करो धरः ॥<br>राजः सोमश्च नन्दिश्च कुण्डश्चन्द्रश्च रक्षितः ।<br>एषां वंशाः समुत्पन्ना एतत्पद्धतयो मताः ॥ | शनैः शनैः क्रियालोपादथ ता वैद्यजातयः ।<br>कलौ शूद्रत्वमापन्ना यथा क्षत्त्रा यथा विशः ॥"<br>इति विष्णुः ॥ | |

राजः काश्यपगोत्रोऽप्यस्ति
तद्राजस्त्रिगोत्रकः ।
श्रूयन्ते च जामदग्न्यगोत्रा देशान्तरे धराः ॥
बहवोऽपि भरद्वाजगोत्रजाः सन्ति रक्षिताः ।
इन्द्रादित्यौ परौ यौ द्वौ वैद्यौ गोत्रास्तयोरिमे
॥
इन्द्रस्य काश्यपो गोत्र एक एव प्रकीर्त्तितः ।
आदित्यानामिमौ गोत्रावादित्यकौशिकौ
स्मृतौ ॥
पञ्चाशदेते विख्यातास्तस्माद्गोत्रा
भिषक्कुले ।
यत्तु देशान्तरे गोत्रमन्यत् किमपि च श्रुतम्
।
दत्तादीनां न तत् प्रोक्तमप्रसिद्धमतीव तत्
॥” *
अथ पञ्जिकान्तरोक्तराढीयवैद्यकुलाष्टकीय-
गोत्रसंख्याश्रेष्ठत्वादि लिख्यते ।
“काञ्चीशाद्वुषिसेनस्य गोत्राण्यष्टौ भवन्ति
च ।
शक्त्रिधन्वन्तरी श्रेष्ठौ मध्यौ वैश्वानराद्यकौ
।
मौद्गल्यकौशिकौ कृष्णात्रेय
आङ्गिरसोऽधमाः ॥”
अथ राढीयाष्टगृहवैद्यानां प्रवरानाह ।
“प्रवराः पञ्च सेनानां धन्वन्तरिकुलोद्भुवाम्
।
विनिर्द्दिष्टा यथा ते च धन्वन्तर्य्यपराशरौ ॥
नैयध्रुवश्चाङ्गिरसो बार्हस्पत्य इति क्रमात् ।
शक्त्रिगोत्रे त्रयः शक्त्रिपराशरवशिष्ठकाः ॥
प्रवराः पञ्च दासानामौर्व्वच्यषनभार्गवाः ।
जामदग्न्यश्चाप्नुवानः प्रोक्ता
मौद्गल्यगोत्रजाः ॥
गुप्तानां त्रय एवैते काश्यपोऽप्यपसारकः ।
नैयध्रुवोऽमी प्रवराः काश्यपान्वयसम्भुवाम्
॥
दत्ते त्रयं कौशिकानां
शाण्डिल्यासितदेवलाः ।
कृष्णात्रेयो वशिष्ठश्च आत्रेयश्चेति ते त्रयः
॥

तथान्यत्र ।
“नन्दिचन्द्रधरदत्तरक्षिता-
स्ते स्वनामनि वरेन्द्रविश्रुताः ।
बीजिपूरुष इहैव वक्ष्यते
तत्कुलं खलु वरेन्द्रजं पुनः ॥”
तथा हि
नारायणदासोऽन्तरङ्गखानश्च।
“दासो दत्तो धरश्चैव नन्दिकुण्डौ
करस्तथा ।
चन्द्रश्च रक्षितश्चेति
वरेन्द्रकुलमष्टकम् ॥” इति ॥
तथान्यत्र ।
“अष्टौ सेनादयो राढे वङ्गेष्वपि
वसन्त्यमी ।
नन्द्यादयो महाराष्ट्रे लुप्तपद्धतयोऽपि
च ।
केचिज्जात्या परिख्याता दृष्टा
देशान्तरेष्वपि ॥”
इति ॥
“सम्बन्धः स्तूयते
सर्व्वैरेकदेशनिवासिनोः ।
निन्द्यते किल सम्बन्धो
भिन्नदेशनिवासिनोः ॥”
इति वैद्येषु राढीयादिकथनम् ॥ * ॥
अथ सेनादीनां पूर्व्वस्थानमाह ।
“श्रीकाञ्चीशा गोनगरं करङ्ककोठ एव
च ।
मोरशासनकान्तारौ समानुस्थानमेव
च ॥
मेढ्यशासनमप्यन्यो यासग्रामस्तथैव
च ।
अष्टानां सेनमुख्यानां राढायां
स्थानमष्टकम् ॥”
तथाह दुर्ज्जयः ।
“काञ्ची गोरं करङ्कश्च
मोरकान्तासमानुकाः ।
मेढ्यो मालश्च राढायां वैद्यानां
कुलमष्टकम् ॥”

“सप्तमो वुषिसेनो यो वङ्गभूमौ प्रतिष्ठितः ।
हाण्डियाग्रामसम्भूतस्तन्नाम्नातस्य तत्कुलम्
॥”
इति हाण्डियावुषिसेनवंश्यनिर्णयः ॥
इति धन्वन्तरिगोत्रजातानां सप्तविधानां
सेनानां भेदेनाष्टादशप्रकारनिर्णयः ॥
“श्रीवत्ससेनप्रमुखाः षडमी शक्त्रिगोत्रजाः ।
भेदेन सप्तधा ज्ञेया यथाक्रममममी पुनः ॥
एकः श्रीवत्ससेनोऽभूत्तेहट्टग्रामविश्रुतः ।
तेहट्टज इति ख्यातो नापरं तस्य च स्थलम् ॥”
इति श्रीवत्ससेनवंश्यनिर्णयः ॥
“एकः शियालसेनोऽसौ भेदेन द्विविधोऽभवत् ।
पोडागाच्छाभवः श्रेष्ठः परः पोखरियाभवः ॥”
इति शियालसेनवंश्यनिर्णयः ॥
“एको यः पुरुसेनोऽभूद्भुठिनागडिमाश्रितः ।
भूठिनागडिजत्वेन ख्यातोऽसौ नापरं स्थलम्
॥”
इति पुरुसेनवंश्यनिर्णयः ॥
“चन्द्रसेनोऽपरस्त्वेकश्चन्द्रद्वीपनिवासकृत् ।
शक्त्रिगोत्रसमुद्भूत इदीलपुरमाश्रितः ॥”
इति चन्द्रसेनवंश्यनिर्णयः ॥
“एको मुण्डीरसेनोऽसौ स्वर्णपीठीनृपाश्रयात् ।
स एव स्वर्णपीठीति विख्यातो मल्लभूभवः ॥”
इति मुण्डीरसेनवंश्यनिर्णयः ॥
“रामसेनः परस्तस्यैवान्तर्भूतो बभूव यः ।
स मल्लभूमिवसतौ विदितानेकपौरुषः ॥”
इति शक्त्विगोत्रजातानां श्रीवत्ससेनप्रमुखानां
षण्णां सप्तप्रकारनिर्णयः ॥
“आद्यसेनस्तु षड्बीजी भेदेन विविधोऽभवत् ।
नपाडासम्भवस्त्वेकः शालग्रामभवोऽपरः ॥
मानकरीय एवान्यस्त्रय आद्याः प्रकीर्त्तिताः ।
आद्यर्षिगोत्रसम्भूताः स्वतन्त्राः सर्व्व एव हि ॥”
इति सकलसेनानां भेदनिर्णयः ॥ * ॥
अथ दासानां भेदमाह ।
“पञ्चदशविधा दासास्तेऽमी विंशतिधा पुनः ।
एकः पुनश्चायुदासो भेदेन द्विविधोऽभवत् ।
एकस्तेहट्टसम्भूतो मालिकाहारजः परः ॥”
इति चायुवंश्ये द्विविधनिर्णयः ॥
“पन्थदासः पुनस्त्वेको भेदेन पञ्चधाभवत् ।

दत्तानां प्रवरा एते दत्तात्रेयकुलोद्भवाम् ।
आत्रेयगोत्रजातानां देवानाञ्च तथा त्रयः ॥
आत्रेय आङ्गिरसको बार्हस्पत्य इति क्रमात्
।
करे भरद्वाजगोत्रे त्रयोऽमी प्रवराः स्मृताः ॥
भरद्वाजो भार्गवश्च च्यवनश्च क्रमादमी ।
राजवंशे वात्स्यगोत्रे कथिताः प्रवरास्त्रयः ॥
वात्स्येऽसितस्तथा मार्कण्डेय एवं
क्रमादिति ।
अथ कौशिकगोत्रस्य सोमस्य प्रवरास्त्रयः ॥
कौशिकः काश्यपश्चैव भार्गवश्चेत्यमी
क्रमात् ।
सेनादीनामनुक्ता ये आद्यगोत्रादिसम्भुवाम्
॥
प्रवरास्तेऽपि विज्ञेयास्तत्तत्कुलभुवां मुखात्
।
नन्द्यादीनां वरेन्द्रेषु चतुर्णां प्रवराश्च ये ।
विज्ञेयास्ते च निखिलास्तेषां कुलभुवां
मुखात् ॥"
इति वैद्यानां प्रवराः ॥ * ॥
अथ वैद्येषु राढीयादिकथनम्।
"सेनो दासश्च गुप्तश्च दत्तो देवः करस्तथा
।
राजसोमावपीत्यष्टौ राढीयाः परिकीर्त्तिताः
॥
नन्दिश्चन्द्रो धरः कुण्डो रक्षितश्चेति पञ्च
ये ।
ते वरेन्द्रेषु विख्याता दासदत्तकरा अपि ॥
राढीया भिषजो ये ये प्रायस्ते वङ्गगा अपि ।
नन्द्यादयो महाराष्ट्रे निवसन्ति च केचन ॥"
तथा च पञ्जिकान्तरे ।
"सेनो दासश्च गुप्तश्च पञ्च दत्तादयस्तथा ।
अष्टौ राढासु विख्याताः प्रायोऽमी वङ्गगा
अपि ॥"

इति वैद्यानां पूर्ब्बस्थानकथनम् ॥ *
॥
अथ स्थानभेदेन सेनादिभेदमाह ।
"ऊनविंशतिधा सेना अष्टाविंशतिधा
पुरम् ।
भवन्ति भेदेनैतेषां वक्ष्यते
कुललक्षणम् ॥
एको विनायकः सेनो भेदेन
नवधाभवत् ।
मालञ्चो धलहण्डीयः खानाजः
सेनहाटिकः ॥
नारहट्टो निरोलीयस्तथा
मङ्गलकोठजः ।
रायिग्रामी वैतजीयो नव वैनायका
अमी ॥
विशेषतो विनिर्दिष्टा
ज्ञेयाश्चान्यस्थलोद्भवाः।
सामान्यस्थानकथने सम्बन्धभाषणे
तथा ।
सर्व्वेषामेव वैद्यानामितरेषामयं क्रमः
॥"
इति विनायकसेनवंश्यनिर्णयः ॥
"एकः पुनर्गयीसेनो भेदेनैव चतुर्विधः
।
विषपाडाभवः
श्रेष्ठस्तिकायिपुरजस्तथा।
अन्यः कडयिसम्भूतो धाडाग्रामी
ततः परः ॥"
इति गयीसेनवंश्यनिर्णयः ॥
"एको राघवसेनोऽभूत् खण्डग्रामेण
विश्रुतः ।
स खण्डज इति ख्यातो नापरा तस्य
च स्थली ॥"
इति राघवसेनवंश्यनिर्णयः ॥
"राजा विमलसेनोऽभूत्
सेनभूमिकृताश्रयः ।
स सेनभूमौ विख्यातो नापरं तस्य च
स्थलम् ॥"
इति राज्ञो विमलसेनस्य वंश्यनिर्णयः
॥

वालिनाछीभवश्चैकः परो मण्डलजानिकः ।
मौडेश्वरभवः पालिग्रामजः पाजनौरजः ॥"
इति पन्थवंश्ये पञ्चविधनिणयः ॥
"एकोऽपरः कायुदासो वङ्गभूमौ प्रतिष्ठितः ।
कोग्रामीण इति ख्यातो दासो मौद्गल्यगोत्रजः
॥"
इति कायुदासवंश्यनिर्णयः ॥
भोयीदासोऽपि तत्पुत्त्रौ ख्यातौ दीघलकेक्करौ ।
अमी त्रयो वङ्गभूमौ प्रसिद्धाः सर्व्व एव हि ॥"
इति भोयीदासस्य तत्पुत्त्रयोश्च वंश्यनिर्णयः ॥
"एको वराहदासोऽसौ वौहारिग्रामवासकृत् ।
स वौहारिजदासोऽपि मतो मौद्गल्यगोत्रजः ॥"
इति वौहारीयवराहदासवंश्यनिर्णयः ॥
"नृसिंहनामदासौ द्वौ वङ्गदेशे प्रतिष्ठितौ ।
तौ वङ्गजाविति ख्यातौ कुलकार्य्यपरायणौ ॥"
इति नृसिंहदासयोर्वंश्यनिर्णयः ॥

|  | “पात्रदामोदरः सेनः पात्रः<br>शिखरभूपतेः ।<br>असौ शिखरभूजातो नापरं तस्य च<br>स्थलम् ॥”<br>इति पात्रदामोदरवंश्यनिर्णयः ॥<br>“विनसेनोऽपि यस्त्वेको<br>धलभूमिकृताश्रयः ।<br>स एव धलभूमिष्ठो नापरा तस्य च<br>स्थली ॥”<br>इति विनसेनवंश्यनिर्णयः ॥ |  |
|---|---|---|

"वीरदासोऽपि यस्त्वेकः स वङ्गज इति स्मृतः ।
तत्रैव वङ्गे सम्बन्धस्तस्याभूद्वरकन्ययोः ॥"
इति वीरदासवंश्यनिर्णयः ॥
"ख्यातः पाथरडाग्रामे रामदासोऽपि तादृशः ।
सूनवस्तस्य चत्वारो बीजिनस्तेपि विश्रुताः ॥
ख्याता डभेड-गाभेड-धाड-वीडालदासकाः ।
मौद्गल्यगोत्रसम्भूताः स्वतन्त्राः सर्व्व एव हि ॥"
इति रामदासस्य तत्पुत्त्राणाञ्च वंश्यनिर्णयः ॥
इति मौद्गल्यगोत्रजानां सकलदासानां पञ्च-
दशप्रकाराणां भेदेन विंशतिप्रकारनिर्णयः ॥ *
अथ गुप्तानां भेदमाह ।
"गुप्ताश्च षड्विधा भेदास्त्रयोदशविधाः पुनः ।
काश्यपान्वयसंभूताः स्वतन्त्राः सर्व्व एव हि ॥
एकः पुनः कायुगुप्तो भेदेनाष्टविधोऽभवत् ।
वराह नगरीयश्च श्रेष्ठोऽभूत् कुलकर्म्मणि ॥
पणिनालाभवश्चान्यस्तथैव कुलशीलवान् ।
वाराशतसमुद्भूतस्तृतीयस्तदनन्तरम् ॥
नीलगुप्तभवा ये ते निरोलत्रिपुराश्रिताः ।
भद्रखालीनिवासस्थाः कायुगुप्तोद्भवाश्च ये ॥
माटियारीभवाः केचिल्लोकगुप्तस्य वंशजाः ।
पश्चिमस्थानमाश्रित्य केचित्सन्ति निजेच्छया ॥"
इति कायुगुप्तवंश्येऽष्टविधनिर्णयः ॥
"परमेश्वरगुप्तो यः श्रेष्ठस्तद्वंशसम्भवः ।
तद्वंश्याः सांप्रतं सन्ति हिमोडायाजिगाँपुरे ॥"
इति करवंश्यनिर्णयः ॥
"मेढ्यशासनसंभूतौ राजवंशोद्भवावुभौ ।
शशिराजमसीराजौ वात्स्यगोत्रसमुद्भवौ ॥
एलाचिधामनगरे शशिराजः कृताश्रयः ।
मसीराजः खेपडीयो वङ्गभूमौ च संस्थितः ॥"
इति राजवंश्ये द्विविधनिर्णयः ॥
"मालग्रामसमुद्भूतो धर्म्मसोमो महामतिः ।
जातः कौशिकगोत्रे च तद्वंश्या बहुदेशगाः ॥"
इति सोमवंश्यनिर्णयः ॥ इति राढाप्रसिद्धाना-
मष्टानां सेनादीनां भेदेन वंश्यनिर्णयः ॥ * ॥
"अपरे ये नन्दिचन्द्रौ धरकुण्डौ च रक्षितः ।
वारेन्द्रा अपि पञ्चैते प्रसिद्धास्तत्र ते पुनः ॥"
इति त्रयोदशगृहाणां वैद्यानां यथाक्रमभेदेन कुलनिर्णयः ॥ * ॥ अथ सेनादीनां सामान्यतः
सम्बन्धलिखनानुरोधाद्वसतिस्थानमाह।
"श्रीखण्डनामनगरी राढे वङ्गे च विश्रुता ।
सर्व्वेषामेव वैद्यानामाश्रयो यत्र विद्यते ॥
यत्र गोष्ठी कृता वैद्यैर्यः खण्डोऽभूद्भिषक्प्रियः ।
विशेषतः कुलीनानां सर्व्वेषामेव वासभूः ॥"
इति सामान्यतः सकलवैद्यानां वासस्थान-
मुक्तम् ॥ * ॥ इति गौराङ्गमल्लिकात्मजभरत-
सेनकृतवैद्यकुलतत्त्वम् ॥

**वैद्यः**, त्रि, वेदसम्बन्धीयः । वेदशब्दात् ष्ण्यप्रत्ययेन निष्पन्नमेतत् ॥

**वैद्यकं**, क्ली, आयुर्व्वेदः । चिकित्साशास्त्रम् ।

यथा, --
"यस्य व्याकरणे वरेण्यघटनास्फीताः प्रबन्धा
दश
प्रख्याता नव वैद्यकेऽपि तिथिनिर्द्धारार्थमेको-ऽद्भुतः ।
साहित्ये त्रय एव भागवततत्त्वोक्तौ त्रयस्तस्य भु-
चिकित्साकौमुदीं दिव्यां काशीराजश्चकार सः ॥
चिकित्सासारतन्त्रञ्च भ्रमघ्नं चाश्विनीसुतौ ।
तन्त्रं वैद्यकसर्व्वस्वं नकुलश्च चकार सः ॥
चकार सहदेवश्च व्याधिसिन्धुविमर्द्दनम् ।
ज्ञानार्णवं महातन्त्रं यमराजश्चकार सः ॥
च्यवनो जीवदानञ्च चकार भगवानृषिः ।
चकार जनको योगी वैद्यसन्देहभञ्जनम् ॥
सर्व्वसारं चन्द्रसुतो जावालस्तन्त्रसारकम् ।
वेदाङ्गसारं तन्त्रञ्च चकार जाजलिर्मुनिः ॥
पैलो निदानं कवथस्तन्त्रं सर्व्वधरं परम् ।
द्वैधनिर्णयतन्त्रञ्च चकार कुम्भसम्भवः ॥
चिकित्साशास्त्रबीजानि तन्त्राण्येतानि षोडश ।
व्याधिप्रणाशबीजानि बलाधानकराणि च ॥
मथित्वा ज्ञानमन्थानैरायुर्व्वेदपयोनिधिम् ।
ततस्तन्त्राण्युज्जहरुर्नवनीतानि कोविदाः ॥
एतानि क्रमशो दृष्ट्वा दिव्यां भास्करसंहिताम् ।
आयुर्व्वेदं सर्व्वबीजं सर्व्वं जानामि सुन्दरि ! ॥"
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १६ अध्यायः ॥

**वैद्यनाथः**, पुं, देशविशेषः । यथा, --

"करवीरे महालक्ष्मीरुमादेवी विनायके ।
अरोगा वैद्यनाथे तु महाकाले महेश्वरी ॥"

योऽभूत्त्रिपुरगुप्तोऽसौ
धौडालाविहितस्थितिः ॥”
इति धौडालीयत्रिपुरगुप्तवंश्यनिर्णयः ॥
“परमेश्वरगुप्तस्य वंशजौ द्बौ प्रतिष्ठितौ ।
भीँपुरीखाडिग्रामस्थौ महत्स्वल्पाधि-
कारिणौ ॥”
इति महाधिकारिस्वल्पाधिकारिणोर्वं
श्यनिर्णयः ॥
“अडालगुप्तो यः प्रोक्तः स तु
शिङ्गानसम्भवः ।
काश्यपान्वयसंभूतः कुलकार्य्यपरायणः
॥”
इत्यडालगुप्तवंश्यनिर्णयः ॥
“वीरगुप्तस्तु यः प्रोक्तो भीँ पुरग्रामवासकृत्
।
भीँ पुरीय इति ख्यातः स च
काश्यपगोत्रजः ॥”
इति वीरगुप्तवंश्यनिर्णयः ॥ इति
काश्यपगोत्र-
जातानां सकलगुप्तानां षड्विधानां भेदेन
त्रयो-
दशप्रंकारनिर्णयः ॥
“दत्तौ च द्बिविधौ ज्ञेयौ रामदत्तश्च पाविता
।
पूर्व्वः शाण्डिल्यगोत्रीयो वटग्रामसमुद्भवः ॥
अपरः पाविता दत्तः खाँगडीयः स एव हि ।
जातः कौशिकगोत्रे च खतन्त्रौ द्बौ
गुणान्वितौ ॥”
इति दत्तवंश्यनिर्णयः ॥
“विकारणस्य देवस्य वंश्या आत्रेयगोत्रजाः
।
समानुस्थानसंभूताः केतुग्रामेऽधुना तु ते ॥
केतुग्रामीणदेवोऽसौ निकारुणकुलोद्भवः ।
निजैश्च पौरुषैरेव कुलकार्य्यपरायणः ॥
कृष्णात्रेयभवा ये च ये च
शाण्डिल्यगोत्रजाः ।
आलमालभवा ये च ते नानादेशवासिनः
॥”
इति देववंश्यनिर्णयः ॥
“एकः कान्तारवासी च करो भेदादमी त्रयः
।

व्यन्तर्व्वाणि शिरोमणेरिह गुणाः के के न
लोकोत्तराः ॥”
इति मुग्धबोधव्याकरणशेषे वोपदेवप्रशंसा-
श्लोकः ॥ * ॥ तच्छास्त्रकृन्नामानि यथा, --
“ऋग्यजुःसामाथर्व्वाख्यान् दृष्ट्वा वेदान्
प्रजा-
पतिः ।
विचिन्त्य तेषामर्थञ्चैवायुर्व्वेदं चकार सः ॥
कृत्वा तु पञ्चमं वेदं भास्कराय ददौ विभुः ।
स्वतन्त्रसंहितां तस्माद्भास्करश्च चकार सः
॥
भास्करश्च स्वशिष्येभ्य आयुर्व्वेदं
स्वसंहिताम् ।
प्रददौ पाठयामास ते चक्रुः संहितास्ततः ॥
तेषां नामानि विदुषां तन्त्राणि तत्कृतानि च ।
व्याधिप्रणाशबीजानि साध्वि मत्तो निशामय
॥
धन्वन्तरिर्द्दिवोदासः काशीराजस्तथाश्विनौ
।
नकुलः सहदेवोऽर्किश्च्यवनो जनको बुधः ॥
जावालो जाजलिः पैलः कवथोऽगस्त्य एव च
।
एते वेदाङ्गवेदज्ञाः षोडश व्याधिनाशकाः ॥ *
॥
चिकित्सातत्त्वविज्ञानं नाम तन्त्रं मनोरमम् ।
धन्वन्तरिश्च भगवांश्चकार प्रथमे सति ! ॥
चिकित्सादर्पणं नाम दिवोदासश्चकार सः ।

इति मात्स्ये गौरीनामाष्टशतं १३
अध्यायः ॥
(तथा देवीभागवते पीठस्थान माहात्म्ये
। ७ ।
३० । ७१ ॥) अपि च ।
“वैद्यनाथं समारभ्य भुवनेशान्तगं शिवे
।
तावदङ्गाभिधो देशो यात्रायां न हि
दुष्यति ॥”
इति शक्तिसङ्गमतन्त्रे ७ पटलः ॥
भैरवविशेषः । यथा, --
“हार्द्दपीठं वैद्यनाथे वैद्यनाथस्तु भैरवः
॥
देवता जयदुर्गाख्या नेपाले जानुनी मम
॥”
इति तन्त्रचूडामणौ पीठनिर्णयः ॥
अपि च ।
“हरिद्रानगरे यत्र वैद्यनाथो महेश्वरः ।
तत्राक्षयो विल्ववृक्षः स्वर्णवृक्ष उदाहृतः
॥”
इति बृहद्धर्म्मपुराणे ११ अध्यायः ॥
अन्यच्च ।
“झारखण्डे वैद्यनाथो वक्रेश्वरस्तथैव च
।
वीरभूमौ सिद्धिनाथो राढे च तारकेश्वरः
॥”
इति महालिङ्गेश्वरतन्त्रे पीठादिक्रमेण
शिव-
शतनामस्तोत्रम् ॥

**वैद्यबन्धुः**, पुं, (वैद्यानां बन्धुरिव ।) आरग्वधवृक्षः
।

इति शब्दचन्द्रिका ॥ वैद्यस्य बन्धुश्च ॥

**वैद्यमाता**, [ऋ] स्त्री, (वैद्यानां मातेव ।) वासकः ।

इत्यमरः ॥ भिषग्जननी च ॥

**वैद्यसिंही**, स्त्री, (वैद्ये वैद्यशास्त्रोक्तौषधादौ
सिंहीव प्रभूतवीर्य्यवत्त्वात् ।)
वासकवृक्षः ।
इति शब्दरत्नावली ॥

**वैद्या**, स्त्री, काकोली । इति शब्दचन्द्रिका ॥

| | | |
|---|---|---|
| वशिष्ठशक्त्विगोत्रे द्वौ वङ्गदेशे च विश्रुतौ ॥<br>यस्तु धर्म्मकरो बीजी भरद्वाजकुलोद्भवः । | | **वैधः**, त्रि, (विधिना बोधितः । विधि + अण् ।)<br>विधिबोधितः । यथा ।<br>अदृष्टार्थैकजातीय-<br>कर्म्मणः कालदेशकर्त्रादीनां<br>प्रयोगानुबन्धवैध-<br>हेतुभूतानामभेदे उद्दिश्यविशेषाग्रहः ।<br>इति |

प्रायश्चित्ततत्त्वम् ॥ * ॥ अथ वैधहिंसाविचारः । "मा हिंस्यात् सर्व्वा भूतानि इत्यत्र सर्व्वशब्दस्य व्यापकार्थपरतया एतद्विधिमनुल्लङ्घ्य वायव्यं श्वेतमालभेत । इत्यादिविधेर्विषयाप्राप्तेरगत्या वैधातिरिक्तविषयत्वम् । सर्व्वाः सर्व्वाणि छन्दसि वा इत्यनेन तत् पदं सिद्धम् । यदपि नाना-दर्शनटीकाकृद्धिर्व्वाचस्पतिमिश्रैस्तत्त्वकौमुद्याम-भिहितम् । 'न च मा हिंस्यात् सर्व्वा भूतानि इति सामान्यशास्त्रं विशेषशास्त्रेण अग्नीसोमीयं पशुमालभेत इत्यनेन वाध्येत इति वाच्यं विरोधाभावात् । विरोधे हि बलीयसा दुर्ब्बलं वाध्यते । न चास्ति विरोधः भिन्नविषयत्वात् । तथा हि । मा हिंस्यादिति निषेधेन हिंसाया अनर्थहेतुभावो ज्ञाप्यते न पुनरक्रत्वर्थत्वमपि । न चानर्थहेतुत्वक्रतूपकारकत्वयोःकश्चिदस्ति विरोधः । हिंसा हि पुरुषस्य दोषमावक्ष्यति क्रतोश्च उपकरिष्यति' इत्यन्तेन । तदपि सांख्य-नये । मीमांसकमते तु विरोध एव । तथा हि । गुरुनये न खलु सर्व्वभूतहिंसाभावविषयकं कार्य्यमिति निषेधविध्यर्थस्य वाधं विना अग्नी-सोमीयपश्वालम्भनविषयककार्य्यमिति भाव-विध्यर्थ उपपद्यते । भट्टनये तु अङ्गे यथा तथास्तु । न च मुख्यपशुयागे पुरुषार्थे पशु-हिंसनस्यार्थसाधनत्वमनर्थ-साधनत्वञ्चोपपद्यते विरोधात् । वस्तुतस्तु अङ्गेऽपि विरोधोऽस्त्येव कुतः विधेरेष स्वभावो यः स्वविषयस्य साक्षात् परम्परया वा पुरुषार्थसाधनत्वमवगमयति । अन्यथा अङ्गानां प्रधानोपकारकत्वमपि नाङ्गी-क्रियते । अर्थसाधनत्वं बलवदनिष्टाननुबन्धीष्ट-साधनत्वं अनर्थसाधनत्वं बलवदनिष्टसाधनत्वं न चानयोरेकत्र समावेश इति । अतएवोक्तं तस्माद्यज्ञे वधोऽवधः इति । नन्वेवं श्येनेनाभि-चरन् यजेत इत्यत्र श्येनस्य शत्रुवधरूपेष्ट-साधनत्वमवगतम् । अभिचारो मूलकर्म्म च इति मनुना उपपातकगणमध्ये पाठादनिष्ट-साधनत्वमवगतम् । तदेतत् कथमुपपद्यतामिति चेन्मैवम् । आततायिनमायान्तं हन्यादेवा-विचारयन् इत्येकवाक्यतया आततायिस्थले इष्टसाधनत्वं अनाततायिस्थले तूपपातकत्वेन

**वैधृतिः**, पुं, विष्कम्भादिसप्तविंशतियोगान्तर्गतशेष-योगः । तस्य त्याज्यत्वं यथा, --

"परिघस्य त्यजेदर्द्धं सप्त शूले च नाडिकाः ।
गण्डव्याघातयोः षट् च नव हर्षणवज्रयोः ।
वैधृतिव्यतिपातौ च समस्तौ परिवर्ज्जयेत् ॥"

इति ज्योतिस्तत्त्वम् ॥ * ॥ तत्र जातफलं यथा, कोष्ठीप्रदीपे ।

"मैत्रीविहीनः कुटिलः खलश्च मूर्खो दरिद्रः परवञ्चकश्च ।
कुकर्म्मकर्त्ता परदारभर्त्ता भवेन्नरो वैधृतिलब्धजन्मा ॥"

अमृतयोगे तस्य वर्ज्यत्वमवर्ज्यत्वञ्च यथा, --

"यदि वृष्टिव्यतीपातौ दिनं वाप्यशुभं भवेत् ।
हन्यतेऽमृतयोगेन भास्करेण तमो यथा ॥
हन्त्यमृताख्यो योगः सर्व्वाण्यशुभानि हेलया नियतम् ।
न भवति पुनरिह शक्तो वैधृतिवृष्टिव्यतीपाते ॥"

इति ज्योतिस्तत्त्वम् ॥ (देवताविशेषः । यथा, भागवते । ८ । १ । २९ ।

"देवा वैधृतयो नाम विधृतेस्तनया नृप ।
नष्टाः कालेन यैर्वेदा विधृताः स्वेन तेजसा ॥")

**वैधेयः**, त्रि, (विधिं पद्धतिमेवानुसृत्य व्यवहरति । विधि + ढक् । यद्वा, विधेये कर्त्तव्ये अनभिज्ञः । विधेय + अण् । यद्वा, विरुद्धं धेयमस्य । ततः स्वार्थे अण् । पद्धतिमाश्रित्य क्रियाकारित्वात्

**वैनाशिकं**, क्ली, (विनाशं सूचयतीति । विनाश + ठक् ।) नाडीनक्षत्रविशेषः । स तु जन्मर्क्षा-वधित्रयोविंशनक्षत्रम् । यथा ।

जन्माद्यं कर्म्म ततोऽपि दशमं सांघातिकं षोडशभम् । समु-दयमष्टादशभं विनाशसंज्ञं त्रयोविंशं आद्यात्तु पञ्चविंशं मानसमेवं नरः षड्क्षः स्यात् ॥

तत्फलं यथा, --

"ईहादेहार्थहानिः स्याज्जन्मर्क्ष उपतापिते ।
कर्म्मर्क्षे कर्म्मणां हानिः पीडा मनसि मानसे ॥
मूर्त्तिद्रविणबन्धूनां हानिः सांघातिके तथा ।
संतप्ते सामुदयिके मित्रभृत्यार्थसंक्षयः ॥
वैनाशिके विनाशः स्यात् देहद्रविणसम्पदाम् ॥"

इति ज्योतिस्तत्त्वम् ॥ निधनतारा । यथा, --

"वैनाशिकर्क्षे दृष्टं ग्रहणं सुधांशुभास्करयोः ।
जनयति रोगं बहुधा क्लेशं वित्तक्षयञ्चाशु ॥"

वैनाशिकर्क्षं त्रयोविंशनक्षत्रे । इति केचित् । वस्तुतस्तु वैनाशिकपदं निंधनतारापरम् । निधने-ऽपि चेत्येकवाक्यत्वात् । इति तिथ्यादितत्त्वम् ॥

**वैनाशिकः**, पुं, (विनाशो मतमस्य । विनाश + ठक् । सर्व्वं दृश्यं क्षणिकमिति क्षणिकविज्ञान-

बलवदनिष्टसाधनत्वमित्यविरोधइति । गुरु-
चरणा अप्येवम् ।” इति तिथ्यादितत्त्वम् ॥

**वैधात्रः**, पुं, (विधातुरपत्यं पुमान् । विधातृ +
अण् ।) सनत्कुमारः । स च विधातृपुत्त्रः ।
इत्यमरः ॥

**वैधात्री**, स्त्री, (विधातुरियमिति । विधातृ + अण् ।
ङीप् ।) ब्राह्मी । इति राजनिर्घण्टः ॥ (विधातृ-
सम्बन्धिनि, त्रि । यथा, राजतरङ्गिण्याम् ।
४ । ४१३ ।
“अभङ्गुरास्तेऽभिमानास्तस्यैवासन् मनस्विनः ।
अभ्यवर्त्तत यैरेष वैधात्रीरपि वामताः ॥”)

**वैधूमाग्नी**, स्त्री, शाल्वदेशीयनगरी । इति
सिद्धान्तकौमुदी ॥

युक्तायुक्तविवेकशून्यत्वाच्च
तथात्वमस्य ।) मूर्खः ।
इत्यमरः । ३ । १ । ४८ ॥ (यथा,
राजतर-
ङ्गिण्याम् । ६ । १५९ ।
“पुंश्चली
जाल्मवैधेयबालकाद्रोग्धृनिभरा ।
समभूदप्रवेशार्हा राजपर्षन्मनस्विनाम्
॥”)
विधिसम्बन्धी विधेयसम्बन्धी च ॥

**वैध्यतः**, पुं, यमप्रतीहारः । इति हेमचन्द्रः ॥

**वैनतेयः**, पुं, (विनताया अपत्यमिति । विनता +
“स्त्रीभ्यो ढक् ।” ४ । १ । १२० । इति
ढक् ।)
गरुडः । इत्यमरः ॥ (यथा, देवीभागवते
।
२ । १२ । २९ ।
“समानीयामृतं मात्रे वैनतेयः समर्पयत्
॥”)
अरुणः । इति मत्स्यपुराणम् ॥
(विनतापत्य-
मात्रे । यथा, महाभारते । १ । ६५ ।
४० ।
“तार्क्ष्यश्चारिष्टनेमिश्च तथैव
गरुडारुणौ ।
आरुणिर्वारुणिश्चैव वैनतेयाः
प्रकीर्त्तिताः ॥”)

**वैनयिकः**, पुं, शस्त्राभ्यासरथः । तत्पर्य्यायः ।
योग्यरथः २ । इति हेमचन्द्रः । ३ ।
४१६ ॥
(विनय एव । “विनयादिभ्यष्ठक् ।” ५ ।
४ । ३४ ।
इति स्वार्थे ठक् । विनयः ॥)
विनयसम्बन्धिनि,
त्रि ॥ (यथा, महाभारते । १२ । ६८ ।
४ ।
“सर्व्वं वैनयिकं कृत्वा विनयज्ञो
बृहस्पतिम् ।
दक्षिणानन्तरो भूत्वा प्रणम्य
विधिपूर्व्वकम् ।

वादित्वादस्य तथात्वम् ।) क्षणिकः
। परतन्त्रः ।
ऊर्णनाभः । इति मेदिनी ॥
विनाशसम्बन्धीये, त्रि ॥

**वैनीतकः**, पुं, क्ली, परम्परावाहनम् ।
इत्यमरः ॥
आरूढं वाह्यं यत् साक्षात् न वहति
परम्परयैव
वहति तद्वैनीतकम् । यथा दोलां
वहन् दोला-
वाहकः विनीयते स्मेति क्तात्
विकारसंघेति के
विनीतकः तेनैव स्वार्थे ष्णे वृद्धौ
वैनीतकम् ।
इति भरतः ॥ विनीतसम्बन्धिनि,
त्रि ॥

**वैन्यः**, पुं, (वेनस्यापत्यं पुमान् । वेन +
“कुर्व्वा-
दिभ्यो ण्यः ।” ४ । १ । १५१ ।
इति ण्यः ।)
वेनपुत्त्रः । स तु पृथुराजः । यथा, -
-
“वेनस्य मथिते पाणौ स बभूव
महापुमान् ।
वैन्यो नाम महीपालो यः पृथुः
परिकीर्त्तितः ।
येन दुग्धा मही पूर्व्वं प्रजानां
हितकारणात् ॥”
इति वह्निपुराणे
सर्गानुशासननामाध्यायः ॥
(यथाच ऋग्वेदे । ८ । ९ । १० ।
“पृथी यद्वां वैन्यः सादनेष्वेव ।”
“वैन्यो वेनस्य पुत्त्रः पृथी एतत्संज्ञो
राजर्षिः ।”
इति तद्भाष्ये सायणः ॥)

**वैपरीत्यं**, क्ली, (विपरीत + ष्यञ् ।)
विपरीतस्य
भावः । तत्पर्य्यायः । व्यत्यासः २
विपर्य्यासः ३
विपर्य्ययः ४ व्यत्ययः ५ । इति
हेमचन्द्रः ॥

विधिं पप्रच्छ राज्यस्य सर्व्वलोकहिते

रतः ॥”)

**वैनायिकः**, पुं, बौद्धः । इति त्रिकाण्डशेषः ॥ यथा,

“भिन्नकः क्षपणोऽह्रीको बौद्धो

वैनायिकः स्मृतः ॥”

इति त्रिकाण्डशेषः ॥

(यथा, मार्कण्डेये । ४३ । ३४ ।

“स्वभाववैपरीत्यन्तु प्रकृतेश्च

विपर्य्ययः ॥”)

**वैपरीत्यलज्जालुः**, स्त्री, पुं, (वैपरीत्या लज्जालुः ।)

स्वल्पक्षुपबृहत्फला लज्जालुः ।

यथा, --

“लज्जालुर्व्वैपरीत्यान्या

स्वल्पक्षुपबृहत्फला ।

वैपरीत्या च लज्जालुर्ह्याभिधाने

प्रयोजयेत् ॥

लज्जालुर्व्वैपरीत्याह्वः कटुरुष्णः

कफापनुत् ।

रसे नियामकश्चैव

नानाविज्ञानकारकः ॥”

इति राजनिर्घण्टः ॥

**वैभवं**, क्ली, विभवस्य भावः । विभवशब्दात्
ष्णप्रत्ययेन निष्पन्नमिदम् ॥ (यथा, कथासरित्-
सागरे । ६६ । १९१ ।
"सोऽप्यावेद्य यथार्थमम्बरचराधीशः क्षणात्
कल्पिता-
शेषस्वोचितदिव्यवैभवविधिः सिद्धिप्रभावात्ततः ॥"
अतिशयः । यथा, भागवते । ५ । १८ । ११ ।
"यत्सङ्गलब्धं निजवीर्य्यवैभवं
तीर्थं मुहुः संस्पृशतां हि मानसम् ॥"
विभोर्भाव इत्यर्थे अण्प्रत्यये ऐश्वर्य्यम् । यथा,
भागवते । १० । १४ । ३८ ।
"जानन्त एव जानन्तु किं बहूक्त्या न मे प्रभो ।
मनसो वपुषो वाचो वैभवं तव गोचरः ॥")

**वैभाजित्रं**, क्ली, (विभाजयितुर्धर्म्म्यम् । विभाजयितृ
+ "ऋतोऽञ् ।" ४ । ४ । ४९ । इति अञ् ।
विभाजयितुर्णिलोपश्चेति काशिकाव्याणि-
लोपः ।) विभाजयितुर्धर्म्म्यम् । इति सिद्धान्त-
कौमुदी ॥

**वैभ्राजं**, क्ली, देवोद्यानम् । इति त्रिकाण्डशेषः ॥
(यथा, मार्कण्डेये । ५५ । २ ।
"पूर्व्वं चैत्ररथं नाम दक्षिणे नन्दनं वनम् ।
वैभ्राजं पश्चिमे शैले सावित्रञ्चोत्तराचले ॥"
विभ्राजराजस्य तपःस्थानम् । यथा, हरि-
वंशे । २३ । १४ ।
"ततो विभ्राजितं तेन वैभ्राजं नाम तद्वनम् ॥"
पुं, पर्व्वतविशेषः । यथा, मार्कण्डेये । ५६ । १३ ।
च निष्पन्नमिदम् । व्याकरणसम्बन्धी च ॥ (यथा,
पाणिनौ । ६ । ३ । ७ ।
"वैयाकरणाख्यायां चतुर्थ्याः ॥"
यथा च महाभारते । ५ । ४३ । ६१ ।
"सर्व्वार्थानां व्याकरणाद्वैयाकरण उच्यते ।
तन्मूलतो व्याकरणं व्याकरोतीति तत्तथा ॥")

**वैयाकरणभार्य्यः**, पुं, वैयाकरणी भार्य्या यस्य ।
इति मुग्धबोधव्याकरणम् ॥

**वैयाघ्रः**, पुं, (व्याघ्रस्य विकारः । व्याघ्र + "प्राणि-
रजतादिभ्यः ।" ४ । ३ । १५४ । इति अञ् ।
ततः वैयाघ्रेण चर्म्मणा परिवृतो रथः । "द्वैप-
वैयाघ्रादञ् ।" ४ । २ । १२ । इति अञ् ।) व्याघ्र-
चर्म्माच्छादितरथः । तत्पर्य्यायः । द्वैपः २ । इत्य-
मरः । २ । ८ । ५२ ॥ (यथा, महाभारते । २ । ५८ । ४ ।
"अयं सहस्रसमितो वैयाघ्रः सुप्रतिष्ठितः ।
सुचक्रोपस्करः श्रीमान् किङ्किणीजाल-
मण्डितः ॥")
व्याघ्रसम्बन्धिनि, त्रि । यथा, --
"उत्तराभिमुखी भूत्वा निराहारा निरन्तरम् ।
वैयाघ्रचर्म्मवसना सोद्‌र्ध्वमूर्द्धानना सती ॥
ज्योतिर्मयं शिवं शान्तं परं शिवकरं परम् ॥"
इति कालिकापुराणे ४४ अध्यायः ॥

**वैरं**, क्ली, (वीरस्य कर्म्म भावो वा । वीर + अण् ।)
विरोधः । इत्यमरः ॥ (यथा, भागवते । ८ । ७ । ३९ ।
"बद्धवैरेषु भूतेषु मोहितेष्वात्ममायया ॥")
तस्य समुत्थानं पञ्च । स्त्रीकृतम् १ यथा कृष्ण-
शिशुपालयोः । वास्तुजम् २ यथा कौरव-
पाण्डवानाम् । वाग्जम् ३ यथा द्रोणद्रुपदयोः ।
सापत्नम् ४ यथा मूषिकमार्जारयोः । अप-
राधजम् ५ यथा पूजनीब्रह्मदत्तयोः । इति
महाभारतम् ॥

**वैरक्तं**, क्ली, (विरक्तस्य भावः । विरक्त + अण् ।)
विरक्तता । विरक्तशब्दाद्भावार्थे ष्णप्रत्ययेन
निष्पन्नमिदम् ॥

**वैरङ्गिकः**, त्रि, (विरङ्गं नित्यमर्हतीति । "छेदा-
दिभ्यो नित्यम् ।" ५ । १ । ६४ । इति ठञ् ।)
विरागार्हः । इति हेमचन्द्रः ॥

**वैरनिर्यातनं**, क्ली, (वैरस्य निर्यातनम् ।) कृताप-
कारस्य प्रत्यपकारः । तत्पर्य्यायः । वैरशुद्धिः २
प्रतीकारः ३ । इत्यमरः ॥

**वैरप्रतिक्रिया**, स्त्री, (वैरस्य प्रतिक्रिया ।) वैर-
निर्यातनम् । इति हेमचन्द्रः ॥

**वैरशुद्धिः**, स्त्री, (वैरस्य शुद्धिः ।) वैरनिर्यातनम् ।
इत्यमरः ॥

**वैरागिकः**, त्ति, (विरागं नित्यमर्हतीति । विराग +
ठञ् ।) विरागार्हः । इति सिद्धान्तकौमुदी ॥

**वैरागी**, [न्] त्रि, (विरागस्य भावो वैरागम् ।
तदस्यास्तीति इनिः ।) विषयेच्छारहितः ।
वैराग्ययुक्तः । यथा, --
"सनकश्च सनन्दश्च तृतीयश्च सनातनः ।
सनत्कुमारो वैरागी चतुर्थः पुत्त्र एव च ॥"
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे २४ अध्यायः ॥

**वैराग्यं**, क्ली, (विरागस्य भावः । विराग +
ष्यञ् ।) विषयतुच्छधीः । यथा, --
"ज्ञानवैराग्ययोर्भक्तिप्रवेशायोपयोगिता ।

"तरक्षुरिति विख्याता वैभ्राजं साचलं ययौ ।"

लोकविशेषः । यथा, हरिवंशे । १८ । ४६ ।

"वैभ्राजा नाम ते लोका दिवि भान्ति सुद-र्शनाः ॥")

**वैमात्रः**, पुं, (विमातुरपत्यमिति । विमातृ + अण् ।) वैमात्रेयः । इति जटाधरः ॥

**वैमात्रा**, स्त्री, (विमातुरपत्यं स्त्री ।) विमातृ-कन्या । वैमात्रशब्दादाप्प्रत्ययेन निष्पन्नम् ॥

**वैमात्रेयः**, पुं, (विमातुरपत्यम् । विमातृ + "शुभ्रा-दिभ्यश्च ।" ४ । १ । १२३ । इति ढक् ।) विमातृपुत्त्रः । तत्पर्य्यायः । विमातृजः २ वैमात्रः ३ । इति जटाधरः ॥ ("तयोरभावे तथाविधौ वैमा-त्रेयौ ।" इति शुद्धितत्त्वे प्रेतश्राद्धाधिकारि-प्रस्तावे ॥)

**वैमात्रेयी**, स्त्री, (विमातुरपत्यं स्त्री । विमातृ + ढक् । ततो ङीप् ।) विमातृकन्या । वैमात्रेय-शब्दादीप्प्रत्ययेन निष्पन्नमिदम् ॥

**वैमुक्तः**, त्रि, विमुक्तिविशिष्टः । तद्भावे, क्ली । विमुक्तशब्दात् ष्णप्रत्ययेन निष्पन्नमिदम् ॥

**वैमेयः**, पुं, विनिमयः । इति हेमचन्द्रः ॥

**वैयाकरणः**, त्रि, (व्याकरणं वेत्ति अधीते वा । व्याकरण + "अणृगयनादिभ्यः ।" ४ । ३ । ७३ । इति अण् । "नय्वाभ्यां पदान्ताभ्यामिति ।" ७ । ३ । ३ । इति यकारात् पूर्व्वं ऐच् ।) व्याकरण-वेत्ता । व्याकरणाध्येता । व्याकरणशब्दात् ष्णप्रत्ययेन य्वोर्युमेति इमा णित्वे व्रिरिति वृद्धौ (यथा च बृहत्संहितायाम् । ४४ । १३ ।

"पूर्व्वाभिमुखः श्रीमान् वैयाघ्रे चर्म्मणि स्थितो राजा ॥")

**वैयाघ्रपद्यः**, पुं, (व्याघ्रपदोऽपत्यमिति । व्याघ्रपद् + ष्यञ् । यद्वा, व्याघ्रस्येव पादावस्य इति बहु-ब्रीहौ "पादस्य लोपः इति ।" ५ । ४ । १३८ । इति अकारलोपे गर्ग्यादित्वात् यञ् । "पादः पत् ।" ६ । ४ । १३० । इति पदादेशः । "न य्वाभ्यामिति ।" ७ । ३ । ३ । यकारात् पूर्ब्बमैच् ।) गोत्रकारक-मुनिविशेषः । यथा, तिथ्यादितत्त्व ।

"वैयाघ्रपद्यगोत्राय सांकृतिप्रवराय च ।
अपुत्त्राय ददाम्येतत् सलिलं भीष्मवर्म्मणे ॥"

(यथा, महाभारते । ४ । ६ । ११ ।

"युधिष्ठिरस्यासमहं पुरा सखा वैयाघ्रपद्यः पुनरस्मि विप्रः ॥")

**वैयासकिः**, पुं, (व्यासस्यापत्यम् । "व्यासवरुडनिषा-देति ।" ४ । १ । ९७ । इत्यस्य काशिकोक्त्या इञ् अकङादेशश्च । न य्वाभ्यामिति ऐच् ।) व्यासस्यापत्यम् । इति मुग्धबोधव्याकरणम् ॥ (यथा, भागवते । १० । १ । १४ ।

"एवं निशम्य भृगुनन्दन साधुवादं वैयासकिः स भगवानथ विष्णुरातम् ।
प्रत्यर्च्च्य कृष्णचरितं कलिकल्मषघ्नं व्याहर्त्तुमारभत भागवतप्रधानः ॥")

**वैयासिकः**, त्रि, (व्यासेन कृतः । व्यास + ठञ् ।

ईषत् प्रथममेवेति नाङ्गत्वमुचितं तयोः ॥
यदुभे चित्तकाठिन्यहेतू प्रायः सतां मते ।
सुकुमारस्वभावेयं भक्तिस्तद्धेतुरीरिता ॥"

यथा एकादशस्कन्धे ।

"तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥"

इति ॥

किन्तु ज्ञानविरक्त्यादिसाध्यं भक्त्यैव सिद्ध्यति ।

यथा तत्रैव ।

"यत् कर्म्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ।
योगेन दानधर्म्मेण श्रेयोभिरितरैरपि ॥
सर्व्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।
स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छति ॥
रुचिमुद्वहतस्तत्र जनस्य भजने हरेः ।
विषयेषु गरिष्ठोऽपि रागः प्रायो विलीयते ॥
अनासक्तस्य विषयान् यथार्हमुपयुञ्जतः ।
निर्व्वन्धः कृष्णसम्बन्धे युक्तं वैराग्यमुच्यते ॥
प्रापञ्चिकतया बुद्ध्या हरिसम्बन्धिवस्तुनः ॥

| | | |
|---|---|---|
| | तत ऐच् ।) व्यासकृतसंहितादिः । इति श्रीभागवतम् ॥<br>**वैयुष्टः**, त्रि, (व्युष्टे दीयते कार्य्यम् । "व्युष्टादिभ्यो-ऽण् ।" ५ । १ । ९७ । इति अण् । नय्वभ्यामित्यैच् ।) प्रातर्भवः । इति सिद्धान्तकौमुदी ॥ | |

मुमुक्षुभिः परित्यागो वैराग्यं फल्गु
कथ्यते ॥”
इति भक्तिरसामृतसिन्धौ पूर्ब्बभागे
साधन-
लहरी ॥

**वैराटः**, पुं, इन्द्रगोपकीटः । इति हेमचन्द्रः ॥

विराटसम्बन्धिनि, त्रि ॥ (क्ली,
विपाटपर्व्व ।
यथा, महाभारते । १ । २ । ५७ ।
“आरण्येयन्ततः पर्व्व वैराटन्तदनन्तरम्
॥”
विराटकन्यायां स्त्री । यथा, तत्रैव । १ ।
२ । ५८ ।
“अभिमन्योश्च वैराठ्या पर्व्व वैवाहिकं
स्मृतम् ॥”
तथा च देवीभागवते । २ । ७ । ४ ।
“अभिमन्योर्व्वरा भार्य्या वैराटी चाति-
सुन्दरी ॥”
विस्तृते च त्रि । यथा, महाभारते । १३
। ७९ । २१ ।
“वैराटपृष्ठमुक्षाणं सर्व्वरत्नैरलङ्कृतम् ।
प्रदाय मरुतां लोकान् स राजन्
प्रतिपद्यते ॥”)

**वैराट्या**, स्त्री, जिनषोडशविद्यादेव्यन्तर्गतदेवी-

विशेषः । इति हेमचन्द्रः ॥

**वैरातङ्कः**, पुं, अर्ज्जुनवृक्षः । इति राजनिर्घण्टः ॥

**वैरी**, [न्] पुं, (वैरमस्यास्तीति । इनिः ।) शत्रुः ।

इत्यमरः ॥ (यथा, मनौ । ४ । १३३ ।
“वैरिणं नोपसेवेत सहायञ्चैव वैरिणः
॥”)
वीरसम्बन्धिनि, त्रि ॥

**वैरूप्यं**, क्ली, (विरूपस्य भावः ।) विरूपता ।

यथा, --
“वैरूप्यमङ्गेषु कशानिपातो
मौण्ड्यं तथा लक्ष्मणसन्निवेशः ।
एतान् वधानर्हति रूक्षवादी

**वैरोद्धारः**, पुं, (वैरस्योद्धारः ।) कृतापकारस्य

प्रत्यपकारः । यथा, --
“प्रतिकारः प्रतीकारो वैरनिर्यातनं तथा ।
निर्यातनं वैरशुद्धिर्वैरोद्धारो निगद्यते ॥”
इति शब्दरत्नावली ॥

**वैलक्षण्यं**, क्ली, (विलक्षणस्य भावः । विलक्षण +

ष्यञ् ।) विलक्षणत्वम् । विलक्षणस्य भाव
इत्यर्थे ष्ण्यप्रत्ययेन निष्पन्नमिदम् । (यथा,
भागवते । १० । ५५ । २९ ।
“अवधार्य्य शनैरीषद्वैलक्षण्येन योषितः ॥”
विभिन्नत्वम् । यथा, मनौ कुल्लूकः । १ ।
८५ ।
“त्रेतादिष्वपि युगापचाररूपेण धर्म्मवैल-
क्षण्यम् ॥”)

**वैल्वं**, क्ली, (विल्वस्येदम् । अण् ।) विल्वफलम् ।

इत्यमरटीका ॥ विल्वसम्बन्धिनि, त्रि ॥
(यथा,
मनौ । २ । ४५ ।
“ब्राह्मणो वैल्वपालाशौ क्षत्त्रियो वाट-
खादिरौ ॥”)

**वैवधिकः**, त्रि, (विवधेन धान्यतण्डुलादिना व्यव-

हरति । “विभाषा विवधवीवधात् ।” ४ ।
४ ।
१७ । इति ठक् ।) विवधेन
धान्यतण्डुलादिना
व्यवहरति यः । पसारि इति भाषा । (यथा,
राजतरङ्गिण्याम् । ६ । ३०८ ।
“वल्गाभिधा वैवधिकी वल्गामठमकारयत्
॥”)
तत्पर्य्यायः । वार्त्तावहः २ । इत्यमरभरतौ
॥
वार्त्तोवहः ३ । इति शब्दरत्नावली ॥

**वैवर्ण्यं**, क्ली,) विवर्णस्य भावः ।) विवर्णता ।

विवर्णस्य भाव इत्यर्थे ष्ण्यप्रत्ययेन
निष्पन्न-

विश्वामित्रः गोतमः जमदग्निः भरद्वाजः एते
सप्तर्षयः । इक्ष्वाकुः नृगः शर्यातिः दिष्टः धृष्टः
करूषकः नरिष्यन्तः पृषध्रः नाभागः कविः
एते मनुपुत्त्रा दश । इति श्रीभागवतमतम ॥
* ॥
अपि च ।
“सप्तमञ्च प्रवक्ष्यामि यद्वैवस्वतमुच्यते ।
अत्रिश्चैव वशिष्ठश्च कश्यपो गौतमस्तथा ॥
भरद्वाजस्तथा योगी विश्वामित्रः प्रतापवान् ।
यमदग्निश्च सप्तैते सांप्रतं ये महर्षयः ॥
साध्या विश्वाश्च रुद्राश्च मरुतो
वसवोऽश्विनौ ।
आदित्याश्च सुरास्तद्वत् सप्त देवगणाः
स्मृताः ॥
इक्ष्वाकुप्रमुखाश्चास्य दशपुत्त्राः स्मृता भुवि
।
मन्वन्तरेषु सर्व्वेषु सप्त सप्त महर्षयः ॥
कृत्वा धर्म्मव्यवस्थानं प्रयान्ति परमं पदम्
॥”
इति मात्स्ये मन्वन्तरानुकीर्त्तनो नाम ९ अः
॥
अन्यच्च ।
श्रीमार्कण्डेय उवाच ।
“आदित्या वसवो रुद्राः साध्या विश्वे मरुद्-
गणाः ।
भृगवोऽङ्गिरसश्चाष्टौ यत्र देवगणाः स्मृताः ॥
आदित्या वसवो रुद्रा विज्ञेयाः
कश्यपात्मजाः ।
साध्याश्च मरुतो विश्वे धर्म्मपुत्त्रा गणास्त्रयः
॥
भृगोस्तु भृगवः पुत्त्राः ह्यङ्गिरोऽङ्गिरसः सुताः
।
एष सर्गस्तु मारीचो विज्ञेयः सांप्रताधिपः ॥
तेजस्वी नाम चेन्द्रोऽपि महात्मा यज्ञभागभुक्
।
अतीतानागता ये च वर्त्तन्ते ये च सांप्रतम् ॥
सर्व्वे ते त्रिदशेन्द्रास्तु विज्ञेयास्तुल्यलक्षणाः
।
सहस्राक्षाः कुलिशिनः सर्व्व एव पुरन्दराः ॥

शास्त्रेषु दूतस्य वधो न दृष्टः ॥”
इति महानाटके ५ अङ्कः ॥
(असाधारणत्वम् । यथा, महाभारते । ५ । ४३ । ७ ।
“निर्द्दिश्य सम्यक् प्रवदन्ति वेदा-
स्तं विश्ववैरूप्यमुदाहरन्ति ॥”
विसदृशत्वम् । यथा, तत्रैव । १२ । २४० । २ ।
“एतच्चान्नोन्यवैरूप्ये वर्त्तते प्रतिकूलतः ॥”)

**वैरोचनः**, पुं, (विरोचनस्यापत्यम् । विरोचन + अण् ।) बुद्धः । बलिराजः । (यथा, महाभारते । ३ । २८ । १७ ।
“अथ वैरोचने दोषानिमान् विद्ध्यक्षमावताम् ॥”)
अग्निपुत्त्रः । सूर्य्यपुत्त्रः । सिद्धगणः । इति शब्दरत्नावली ॥

**वैरोचननिकेतनं**, क्ली, (वैरोचनस्य बलेर्निकेतनम् ।) पातालम् । इति हलायुधः ॥

**वैरोचनिः**, पुं, (विरोचनस्यापत्यम् । विरोचन + इञ् ।) बुद्धः । बलिराजः । (यथा, विष्णुपादादिकेशवर्णनस्तोत्रे । १ ।
“याभ्यां वैरोचनीन्द्रौ युगपदपि विपत्संपदोरेकधाम ॥”)
सूर्य्यपुत्त्रः । इति मेदिनी ॥

**वैरोचिः**, पुं, बाणदैत्यः । यथा । वैरोचिर्ब्बलिनन्दनः । इति शब्दरत्नावली ॥

मिदम् ॥ (यथा, कथासरित्सागरे । १६ । ६८ ।
“सा वार्त्ता कर्णमागत्य तस्या वैवर्ण्यदायिनी ॥”
तत्तु स्त्रीणां सात्त्विकभावानामन्यतमम् । यथा, साहित्यदर्पणे । ३ । १६६ ।
“स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥”)

**वैवस्वतः**, पुं, (विवस्वतोऽपत्यमिति । अण् ।) यमः । इत्यमरः ॥ (यथा, बृहत्संहितायाम् । ६९ । २३ ।
“एवं शशः सप्ततिहायनोऽयं
वैवस्वतस्यालयमभ्युपैति ॥”
यथा च ऋग्वेदे । १० । १४ । १ ।
“वैवस्वतं संगमनं जनानां
यमं राजानं हविषादुवस्य ॥”
“वैवस्वतं विवस्वतः सूर्य्यस्य पुत्त्रम् ।” इति तद्भाष्ये सायणः ॥ यथा च राजतरङ्गिण्याम् । ४ । १५१ ।
“वनराजिश्यामलेन दिशं वैवस्वताङ्किताम् ॥”)
रुद्रविशेषः । इति जटाधरः ॥ शनिः । सप्तमो मनुः । (यथा, रघुवंशे । १ । ११ ।
“वैवस्वतो मनुर्नाम माननीयो मनीषिणाम् ॥”)
वर्त्तमानोऽयम् । अस्मिन्मन्वन्तरे वामनोऽवतारः । पुरन्दरः इन्द्रः । आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः । अश्विनावृषभः । इत्याद्या देवा । कश्यपः अत्रिः वशिष्ठः

मघवन्तो वृषाः सर्व्वे शृङ्गिणो गजगामिनः ।
ते शतक्रतवः सर्व्वे भूताभिभवतेजसः ॥
धर्म्माद्यैः कारणैरेतैराधिपत्यगुणान्विताः ।
भूतभव्यभवन्नाथाः शृणु चैतत् त्रयं द्विज ॥
भूर्लोकोऽयं स्मृतो भूमिरन्तरीक्षं भुवः स्मृतम् ।
स्वराख्यश्च तथा स्वर्गस्त्रैलोक्यमिति गद्यते ॥
अत्रिश्चैव वशिष्ठश्च कश्यपश्च महानृषिः ।
गौतमश्च भरद्वाजो विश्वामित्रश्च कौशिकः ॥
तथैव पुत्त्रो भगवानृचीकस्य महात्मनः ।
जमदग्निश्च सप्तैते मुनयोऽत्र तथान्तरे ॥
इक्ष्वाकुर्न्नभगश्चैव धृष्टः शर्य्यातिरेव च ।
नरिष्यन्तश्च विख्यातो नाभागो दिष्ट एव च ॥
करूषश्च पृषध्रश्च भूमिपा लोकविश्रुताः ।
मनोर्व्वैवस्वतस्यैते नव पुत्त्राः प्रकीर्त्तिताः ॥
वैवस्वतमिदं देवि ! कथितं ते मयान्तरम् ।
अस्मिन् श्रुते नरः सद्यः पठिते चैव सत्तम ।
मुच्यते पातकैः सर्व्वैः पुण्यञ्च महदश्नुते ॥”
इति मार्कण्डेयपुराणे वैवस्वतमन्वन्तरं समाप्तम् ॥

**वैवस्वती**, स्त्री, (वैवस्वतस्य इयम् । अण् । ततो ङीप् ।) दक्षिणदिशा । इति राजनिर्घण्टः ॥

**वैवाहिकः**, पुं, (विवाहाद्भवः । विवाह + ठञ् ।) कन्यापुत्त्रयोः श्वशुरः । वेयाइ इति वङ्गभाषा ॥ सम्धी इति हिन्दीभाषा । (तत्पर्य्यायः । सम्बन्धी २ ॥ यथा, कौतुकसर्व्वस्वे । ३ ।

"अस्मन्नामसमानतासखसुतावैवाहिक-
श्यालक-
श्वश्रूकामुकरथ्यया गतवती न्याय्या
तदेषा मम ॥")
विवाहसम्बन्धिनि, त्रि । यथा, --
"पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया ।
ते च सान्तानिनः सर्व्वे पतिताः शूद्रतां
गताः ॥"
इत्युद्वाहतत्त्वम् ॥
अपि च ।
"कन्याभ्यश्च पितृद्रव्याद्देयं वैवाहिकं वसु
।
अपुत्रकस्य कन्या स्वा धर्म्मजा
पुत्त्रवद्धरेत् ॥"
इति दायतत्त्वे देवलः ॥
(यथा च मनुः । २ । ६७ ।
"वैवाहिको विधिः स्त्रीणां संस्कारो
वैदिकः
स्मृतः ॥")

**वैशम्पायनः**, पुं, (विशम्पस्य गोत्रापत्यम् । "अश्वा-
दिभ्यः फञ् ।" ४ । १ । ११० । इति
फञ् ।)
मुनिविशेषः । यथा, --
"अथ शिष्यान् प्रजग्राह चतुरो वेदपारगान्
।
जैमिनिञ्च सुमन्तुञ्च वैशम्पायनमेव च ॥
पैलं तेषां चतुर्थञ्च परमं मां महामुनिः ।
ऋग्वेदश्रावकं पैलं जग्राह स महामुनिः ।
यजुर्व्वेदप्रवक्तारं वैशम्पायनमेव च ॥"
इति कौर्म्मे ४९ अध्यायः ॥
स च वज्रवारकः । यथा, --
"जैमिनिश्च सुमन्तुश्च वैशम्पायन एव च
।
पुलस्त्यः पुलहश्चैव पञ्चैते वज्रवारकाः
॥"
इति पुराणम् ॥

**वैशस्त्रं**, क्ली, (विशसितुर्धर्म्म्यम् । विशसितृ +

द्वादशमासान्तर्गतप्रथममासः ।
तत्पर्य्यायः ।
माधवः २ राधः ३ । इत्यमरः ॥
चान्द्रस्य
तस्य लक्षणम् ।
"विशाखातारकायुक्ता वैशाखी पूर्णिमा
भवेत् ।
सा वैशाखी यत्र मासे स वैशाखः
प्रकीर्त्तितः ॥"
इति शब्दरत्नावली ॥
स तु मेषस्थरविकः सौरः । तत्र
जातफलम् ।
"पुमान् विनीतो द्विजदेवभक्तो
धर्म्मस्य कर्त्ता सुजनस्य भर्त्ता ।
गुणाभिरामोऽथ जगत्प्रियः स्यात्
वैशाखमासे खलु जन्म यस्य ॥"
इति कोष्ठीप्रदीपः ॥ * ॥
अथ वैशाखकृत्यम् । तत्र पद्मपुराणम् ।
"तुलामकरमेषेषु प्रातःस्नानं विधीयते
।
हविष्यं ब्रह्मचर्य्यञ्च महापातकनाशनम्
॥"
वैष्णवामृते ।
"गवामर्द्धप्रसूतानां लक्षं दत्त्वा तु यत्
फलम् ।
तत् फलं लभते राजन् मेषे स्नात्वा तु
जाह्न-
वीम् ॥"
पितामहः ।
"कार्त्तिकस्य तु यत् स्नानं माघे मासि
विशेषतः ।
कृच्छ्रांदिनियमानाञ्च
चान्द्रमानप्रमाणतः ॥"
आभ्यां कार्त्तिकादिस्नाने
सौरचान्द्रयोर्व्विकल्पे-
नानुष्ठानम् । तत्र चान्द्रमपि द्विविधम् ।
तथा
च विष्णुः ।

"सङ्कल्पेन विना राजन् यत्किञ्चित् कुरुते नरः
।
फलञ्चाल्पाल्पकं तस्य धर्म्मस्यार्द्धक्षयो भवेत्
॥" *
महार्णवे ।
"यो ददाति हि मेषादौ शक्तूनम्बुघटान्वितान् ।
पितॄनुद्दिश्य विप्रेभ्यः सर्व्वपापैः प्रमुच्यते ॥
विप्रेभ्यः पादुकां छत्रं पितृभ्यो विषुवे शुभम् ।"
पितृभ्यः पितॄनुद्दिश्य । अत्र विष्णुरहस्यम् ।
"अयने कोटिगुणितं लक्षं विष्णुपदीषु च ।
षढशीतिसहस्रन्तु षडशीत्यामुदाहृतम् ॥
शतमिन्दुक्षये पुण्यं सहस्रन्तु दिनक्षये ।
विषुवे शतसाहस्रमा-का-मा-वैष्वनन्तकम् ॥"
इति
मत्स्यपुराणोक्तशतसहस्रगुणिततत्कर्म्मफल-
जनकत्वेन विवक्षणीयत्वान्मेषादावित्यपि
विषुव-
संक्रान्तिपुण्यकालपरम् । अन्यथा कालद्वय-
कल्पनापत्तेः । व्यवहारोऽपि तथा ॥ * ॥
संक्र-
मणपुण्यकालस्तु दिनसंक्रमणे कृत्स्नं दिनम् ।
"षडशीतिमुखेऽतीते वृत्ते च विषुवद्वये ।
भविष्यत्ययने पुण्यमतीते चोत्तरायणे ॥"
इति तु पुण्यतरकालपरं दिनवृत्तोत्तरायणादि-
विहितविंशतिदण्डादीनां रात्रिप्रविष्टभाग-
स्यापि पुण्यत्वम् । रात्रिसंक्रमे तु दण्डन्यून-
प्रथमयामद्वयाभ्यन्तरे तद्दिवसीयशेषयामद्वयं
पुण्यम् । दण्डद्वयात्मकमध्यरात्रे तद्दिवसीय-
तिथेरभेदे तु तद्दिवसीयशेषयामद्वयं पुण्यम् ।
भेदे तु तद्दिवसीयशेषयामद्वयं पुण्यं परदिव-
सीयाद्ययामद्वयञ्च । तिथ्यभेदभेदयोर्दक्षिणायने
तद्दिवसीयशेषयामद्वयम् । उत्तरायणे पर-
दिवसीयशेषयामद्वयम् । दण्डाधिकशेषार्द्ध-
रात्रिसंक्रमणे परदिनाद्ययामद्वयम् । सन्ध्या-
संक्रमणे तु दिनदण्डे दिनस्य रात्रिदण्डे रात्रे-
र्व्यवस्थेति ॥ * ॥ संक्रान्त्यां स्नानमावश्यकम्
।
अनिष्टसंक्रमणे तु तद्दोषशान्त्यर्थं धुस्तूरबीज-

"ऋतोऽञ्।" ४।४।४९। इति अञ्। तत्र
"विशशितुरिङ्लोपश्च।" इति काशिकोक्त्या
इङ्लोपः।) अधिकारः। शस्त्राभावविशि-
ष्टत्वम्। विगतं शस्त्रं यत्र। विपूर्ब्बशस्त्रशब्दा-
दण्प्रत्ययेन निष्पन्नमिदम्। इति सिद्धान्त-
कौमुदी॥

**वैशाखं**, क्ली, (विशाख एव। स्वार्थे अण्।) धनु-
र्व्विदां सं स्थानभेदः। यथा, --
"स्थानान्यालीढवैशाखप्रत्यलीढानि मण्डलम्।
समपादञ्च -- ॥"
इति हेमचन्द्रः॥
(यथा, हरिवंशे। ११०।४४।
"वज्रपातनिभं वेगं पातयित्वा ममोपरि।
भूयः प्रहर्त्तुकामो मां वैशाखेनास्थितो महीम्॥"
पुरविशेषः। यथा, कथासरित्सागरे। ६७।५।
"वै शाखाख्ये पुरे राज्ञः पुत्रावावां द्विमातृकौ॥")

**वैशाखः**, पुं, (विशाखा प्रयोजनमस्य। विशाखा
+ "विशाखाषाढादिति।" ५।१।११०।
इति अण्।) मन्थानदण्डः। (यथा, शिशुपाल-
वधे। ११।८।
"द्रुततरकरदक्षाः क्षिप्तवैशाखशैले॥"
वैशाखी पौर्णमासी अस्मिन्। "सास्मिन् पौर्णमासीति।" ४।२।२१। इति अण्।)

"दर्शं वा पौर्णमासीं वा प्रारभ्य स्नानमाचरेत्।
पुण्यान्यहानि त्रिंशत्तु मकरस्थे दिवाकरे॥"
दर्शं दर्शान्तियागसम्बन्धिनीं प्रतिपदमारभ्य
त्रिंशत्तिथिम्। नारायणोपाध्यायस्तु दर्शपोर्ण-
मासीति पूर्व्वदिनसङ्कल्पपरमिति। तत्र सौर-
कृत्ये राश्युल्लेखः कार्य्यः।
"संक्रान्तिविहिते कार्य्ये संक्रान्तिः परि-
कीर्त्तिता।
मासोल्लेखश्चेतरस्मिन्
रविराशिस्थितिस्तथा॥"
इति गारुडात्॥ * ॥
ततश्चारुणोदयकाले मज्जनं कृत्वाचम्य उदङ्-
मुखः ॐ तत् सदित्युच्चार्य्य अद्य वैशाखे मासि
अमुकपक्षे अमुकतिथावारभ्य मेषस्थरविं यावत्
प्रत्यहं अमुकगोत्रः श्रीअमुकदेवशर्म्मा श्रीविष्णु-
प्रीतिकामः प्रातःस्नानमहं करिष्ये। इति।
गङ्गायान्तु
अर्द्धप्रसूतगवीलक्षदानजन्यफलसम-
फलप्राप्तिकामो विष्णुप्रीतिकामो वा इति
सङ्कल्प्य यथोक्तविधिना स्नायात्। प्रतिदिन-
सङ्कल्पे तु आरभ्य मेषस्थरविं यावत् प्रत्यह-
मिति न वक्तव्यं किन्तु मासीत्यनन्तरं मेष-
राशिस्थरवौ इत्यधिकं वक्तव्यम्। चान्द्रे तु
मास्यनन्तरं शुक्लपक्षे प्रतिपदि तिथावारभ्य

सलिलेन सर्व्वौषधिजलेन च स्नानं विष्णुपूजनं
तन्मन्त्रजपः। संक्रान्तिकाल एव स्त्रीतैलमांस-
वर्ज्यम्। इन्दुक्षयेऽमावास्यायाम्। दिनक्षये तिथि-
क्षये। आ-का-मा-वैषु आषाढकार्त्तिकमाघ-
वैशाखपौर्णमासीषु॥ * ॥ ततः कृतस्नानादिः
प्राङ्मुख उदङ्मुखं ब्राह्मणं गन्धपुष्पाभ्यां पूज-
यित्वा जलघटान्वितशक्तूंश्च जलघटान्वित-
शक्तुभ्यो नमः इति पूजयित्वा ब्राह्मणहस्ते जलं
दत्त्वा घटं संप्रोक्ष्य वामहस्ते स्पृष्ट्वा कुशत्रय-
तिलजलान्यादाय ॐ तत् सदित्युच्चार्य्य ओम्
अद्यामुके मास्यमुकपक्षेऽमुकतिथौ महाविषुव-
संक्रान्त्यां अमुकगोत्रस्य पितुरमुकदेवशर्म्मणः
सर्व्वपापविमुक्तिकामः एतान् जलघटान्वित-
शक्तून् विष्णुदेवताकान् अमुकगोत्राय अमुक-
देवशर्म्मणे ब्राह्मणाय तुभ्यमहं संप्रददानीति
ब्राह्मणहस्ते जलं दद्यात् ब्राह्मणस्तु दक्षिण-
हस्ततलमध्यभागाग्रेयतीर्थेन ओमित्यनेन गृ-
हीत्वा स्वस्तीत्युक्त्वा गायत्त्रीं कामस्तुतिञ्च पठेत्।
जलघटान्विताः शक्तवो विष्णुदेवताकाः। इति
वदेत्। ततो दक्षिणां दद्यात्। यथा ॐ अद्ये-

|  | दर्शपर्य्यन्तमित्यूहनीयम्। प्रतिदिनसङ्कल्पे त्वारभ्य प्रत्यहमित्यन्तं न वक्तव्यम्। एवं कृष्ण-प्रतिपदारम्भे ऊहनीयम्। एवं मासान्तरे चोहनीयम्। सङ्कल्पाकरणे फलहानिमाह भविष्यपुराणम्। |  |
| --- | --- | --- |

त्यादि कृतैतत्
जलघटान्वितशक्तुद्दानकर्म्मणः
प्रतिष्ठार्थं दक्षिणां किञ्चित् काञ्चनमूल्यं
ब्राह्म-
णायाहं ददानीति । ततः
अच्छिद्रावधारणम् ।
ब्राह्मणविशेषानुपदेशे
यथासम्भवगोत्रनाम्ने
ब्राह्मणायेति विशेषः । तत्र
ब्राह्मणासन्निधाने
तुभ्यमिति न देयम् । भूमौ
त्यागजलप्रक्षेपः ।
एवमन्यत्रापि सम्प्रददे इति वाक्ये
विशेषः ।
सत्पात्राभावे तत्सत्त्वेऽपि तत्तत्कामो
विष्णुप्रीति-
कामो वा विष्णवे दत्त्वा ब्राह्मणाय
पश्चात्
प्रतिपादयेत् ।
"देवे दत्त्वा तु दानानि देवे दत्त्वा तु
दक्षिणाम् ।
तत् सर्व्वं ब्राह्मणे दद्यादन्यथा निष्फलं
भवेत् ॥"
इति मत्स्यसूक्तात् ॥
दत्त्वेत्यत्र देयानीति वाराहीये पाठः ॥ *
॥
"वैशाखे यो घटं पूर्णं सभोज्यं वै
द्विजन्मने ।
ददात्यभुक्त्वा राजेन्द्र स याति परमां
गतिम् ॥"
अत्रापि यथायोग्यं संपूज्य पूर्व्ववद्वाक्येन
मनो-
रथफलार्थिना सभोज्यघटो देयः ॥ * ॥
स्मृतिः ।
"मेषादौ शक्तवो देया वारिपूर्णा च गर्गरी
॥"
तत्रापि यथायोग्यं संपूज्य पूर्ब्बवत् वाक्यं
कृत्वा
पठेत्

पानीयमप्यत्र तिलैश्च मिश्रं
दद्यात् पितृभ्यः प्रणतो मनुष्यः ।
श्राद्धं कृतं तेन समाः सहस्रं
रहस्यमेतत् पितरो वदन्ति ॥"
उपप्लवे ग्रहणे ॥ * ॥ देवीपुराणम् ।
"युगाद्या वर्षवृद्धिश्च सप्तमी पार्व्वतीप्रिया ।
रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता ॥" * ॥
अक्षयतृतीयामधिकृत्य ब्रह्मपुराणम् ।
"तस्यां कार्य्यो यवैर्होमो यवैर्विष्णुं समर्च्चयेत् ।
यवान् दद्यात् द्विजातिभ्यः प्रयतः प्राशयेद्-
यवान् ॥
पूजयेच्छङ्करं गङ्गां कैलासञ्च हिमालयम् ।
भगीरथञ्च नृपतिं सागराणां सुखावहम् ॥" * ॥
स्कान्दे ।
"वैशाखस्य सिते पक्षे तृतीयाक्षयसंज्ञिता ।
तत्र मां लेपयेद्गन्धैर्लेपनैरतिशोभनैः ॥"
मां जगन्नाथम् ॥ * ॥ अन्यत्रापि ।
तथा च जगन्नाथस्नानमधिकृत्य भविष्ये ।
"संवत्सरफलं राजन् नवम्यां कार्त्तिके तथा ।
मन्वादौ च युगादौ च मासत्रयफलं भवेत् ॥" *
मन्वादयस्तु भविष्यमात्स्ययोः ।
"अश्वयुक्शुक्लनवमी द्वादशी कार्त्तिकी तथा ।
तृतीया चैत्रमासस्य यथा भाद्रपदस्य च ॥
फाल्गुनस्याप्यमावास्यापौषस्यैकादशी तथा ।
आषाढस्यापि दशमी तथा माघस्य सप्तमी ॥
श्रावणस्याष्टमी कृष्णा तथाषाढस्य पूर्णिमा ।
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी
सिताः ॥
मन्वन्तरादयस्त्वेता दत्तस्याक्षयकारिकाः ॥"
अमावास्याष्टमीव्यतिरिक्ताःशुक्लाः उपक्रमोप-
संहारयोः शुक्लात्वकीर्त्तनात् ॥ * ॥ नारदीये ।
"वैशाखे शुक्लपक्षे तु द्वादशी वैष्णवी तिथिः ।
तस्यां शीतलतोयेन स्नापयेत् केशवं शुचिः ॥"
इयं पिपीतकद्वादशी । नात्र युग्मादरापेक्षा ।
तत्र विष्णुपूजने उपवासोत्तरविधानात् ॥ * ॥
अथ यवान्नश्राद्धम् । तत्र वैशाखशुक्लपक्षे कुज-
शनिशुक्रेतरवारे नन्दारिक्तात्रयोदशीतरतिथौ
जन्मचन्द्राष्टमचन्द्रजन्मतिथिजन्मनक्षत्रत्रयपञ्च
मतारात्रयेतरेषु पूर्ब्बफल्गुनीपूर्ब्बभाद्रपदपूर्ब्बा-

तत् सर्व्वं भूपतिश्रेष्ठ
सत्यमक्षयमुच्यते ॥
एकतः सर्व्वतीर्थानि सर्व्वे यज्ञाः
सदक्षिणाः ।
भूप वैशाखमासाद्य कोट्यंशेनापि
नो समाः ॥
मेरुतुल्यानि हेमानि सर्व्वदानानि
चैकतः ।
एकतः सर्व्वदा भूप माधवो
माधवप्रियः ॥
असंख्यानि च पापानि
वहुजन्मार्ज्जितानि च ।
निमेषार्द्धेन राजेन्द्र विलयं यान्ति
माधवे ॥
वैशाखमागतं दृष्ट्वा पितॄणामुत्सवो
भवेत् ।
पुत्त्रो नियममाचर्य्य
अस्मभ्यमुद्धरिष्यति ॥
आगतं माधवं दृष्ट्वा कम्पन्ते
पापसञ्चयाः ।
अस्माकं नाशकालोऽयं भूपते
ध्रुवमागतः ॥
वैशाखं परमं मासं माधवस्येति ह
प्रियम् ।
नियमेन समाचर्य्य न भूयो जायते
नरः ॥
मनसा संस्मरेद्यस्तु नियमं
माधवोद्भवम् ।
पूयते पातकैः सर्व्वैः शक्रेण सह
मोदते ॥
वचसा यो वदेद्भूप वैशाखं
माधवप्रियम् ।
अहं समाचरिष्यामि स
गच्छेद्ब्रह्मणः पुरम् ॥
यः समाचरते भूप नियमेन तु
माधवम् ।
स विष्णो रूपमासाद्य विष्णुना सह
मोदते ॥

“ॐ एष धर्म्मघटो दत्तो
ब्रह्मविष्णुशिवात्मकः ।
अस्य प्रदानात् सफला मम सन्तु
मनोरथाः ॥”
इति मन्त्रलिङ्गान्मनोरथफलत्वंज्ञेयम् ॥
* ॥
कृत्यचिन्तामणौ ।
“मसूरं निम्बपत्राभ्यां योऽत्ति मेषगते रवौ
।
अपि रोषान्वितस्तस्य तक्षकः किं
करिष्यति ॥”
उत्तरार्द्धे तु ।
“मेषस्थे च विधौ तत्र नास्त्यङ्गे विषजं
भयम् ॥”
इति संवत्सरप्रदीपे पाठः ॥
ततश्च मेषस्थरविस्थितिकाले मसूरं
निम्बपत्र-
द्वयञ्च भक्षयेत् ॥ * ॥ भविष्ये ।
“या शुक्ला नरशार्दूल वैशाखे मासि वै
तिथिः
तृतीया साक्षया ख्याता गीर्व्वाणैरपि
वन्दिता ॥
योऽस्यां ददाति करकान्
वारिवाजसमन्वितान् ।
स याति पुरुषो वीर लोकान् वै
हेममालिनः ॥”
वाजमन्नम् । हेममालिनः सूर्य्यस्य ।
ततो जलान्न-
समन्वितकरकदाने सूर्य्यलोकगमनं
फलम् ।
दानानुष्ठानं पूर्व्ववत् ॥ * ॥ ब्रह्मपुराणम्
।
“वैशाखे शुक्लपक्षे तु तृतीयायां कृतं
युगम् ।
कार्त्तिके शुक्लपक्षे च त्रेता च नवमेऽहनि
॥
अथ भाद्रपदे मासि त्रयोदश्यान्तु द्वापरम्
।
माघे तु पौर्णमास्यान्तु घोरं कलियुगं
स्मृतम् ॥

षाढामघाभरण्यश्लेषार्द्रेतरनक्षत्रेषु यवश्राद्धं
कर्त्तव्यम् । तच्छेषभोजनन्तु एतादृग्निषिद्धायां
विषुवसंक्रान्तौ अक्षयतृतीयायाञ्च विशेषतः
कर्त्तव्यम् । वैशाखाकरणे ज्यैष्ठशुक्लपक्षे
आषाढशुक्लपक्षे च हरिशयनेतरत्र कर्त्तव्यम् ।
इति कृत्यतत्त्वम् ॥ * ॥ * ॥ अथ वैशाख-
माहात्म्यम् ।
“ये कार्त्तिकव्रतपरा ये माघपरिनिष्ठिताः ।
ये वैशाखव्रतासक्तास्तेषां तुष्टः सदा हरिः ॥
सर्व्वेषामेव मासानां वैशाखः प्रवरः स्मृतः ।
पुरा हरिमुखे राजन् श्रुतमेतन्न संशयः ॥
तत्र स्नानं जपो होमः श्राद्धं दानादि यत्
कृतम् ।

नियनेन समाचर्य्य एकाहमपि
भूपते ।
पितरस्तारितास्तेन यास्यन्ति
परमां गतिम् ॥
तस्मिन् स्नात्वा विशुद्धात्मा
दम्भमात्सर्य्यवर्ज्जितः ।
ईप्सितान् लभते कामान्
श्रीविष्णोर्दयितो भवेत् ॥
ब्रह्मघ्नो वा कृतघ्नो वा
मित्रघ्नस्त्रीविघातकः ।
नियमेन नयेन्मासं स मुक्तः
सर्व्वपातकात् ॥
पातकानामेकमेव प्रायश्चित्तं
विदुर्ब्बुधाः ।
सर्व्वपापसमुद्भूतौ नात्र कार्य्या
विचारणा ॥
वैशाखस्नायिनो लोकाः
श्रीविष्णुसेवनोत्सुकाः ।
पापं न तेषां मतिमन्निह लोके परत्र
च ॥
सर्व्वस्वदानं विधिवत् सर्व्वदा
परिशोधनम् ।
चान्द्रायणञ्च विधिना कृच्छ्रं
चैवातिकृच्छ्रकम् ॥
पुण्यक्षेत्राभिगमनं
सर्व्वपापप्रणाशनम् ।
देवताभ्यर्च्चनं चैव
तथैवातिथिसेवनम् ॥
कदापि यैर्नाचरितं
वाङ्मनःकायकर्म्मभिः ।
संप्राप्य ते तु कुर्व्वन्तु माधवे
नियमं नराः ॥
समाचरन्ति ये मासं माधवं
कृतबुद्धयः ।
सदा प्रीतिमनास्तेषां श्रीकृष्णो
देवकीसुतः ॥
या नारी विधावा भूत्वा माधवे
नियमं चरेत् ।
कुलायुतसहस्रन्तु नयते परमं
पदम् ॥

युगारम्भास्तु तिथयो युगाद्यास्तेन विश्रुताः ॥”
तत्र वैशाखादयः पौर्णमास्यन्ता एव तथैव
तिथिकृत्याभिधानात्। मुख्यवाचित्वे कार्त्तिके
नवमेऽहनीति सिद्धौ शुक्लपक्ष इति व्यर्थं
स्यात्॥ * ॥ आसां प्रशंसामाह विष्णुपुराणम्।
“एता युगाद्याः कथिताः पुराणै-
रनन्तपुण्यास्तिथयश्चतस्रः।
उपप्लवे चन्द्रमसो रवेस्त्रि-
ष्वप्यष्टकास्वप्ययनद्वये च ॥

पुत्त्रेणापीह किं कार्य्यं येन नाचरितं नृप।
वैशाखं पुत्त्रशतकात् नारी घन्या हरिप्रिया ॥
यो माधवेऽर्च्चयेद्राजन् गोविन्दं गोपवल्लभम्।
न तस्य विद्यते संख्या पूजनस्य फलस्य च ॥
वैष्णवस्य तु धर्म्मस्य पारं गन्तुं यदीच्छसि।
नरेन्द्र माधवं मासं नियमेन समाचर ॥
किं करिष्यति सांख्येन योगेन नरनायक।
मुक्तिमिच्छसि चेद्राजन् माधवं माधवेऽर्च्चय ॥
अभक्षसम्भवं राजन् कुप्रतिग्रहसम्भवम्।
तत्पापं संक्षयं याति माधवे नियमे कृते ॥
रणे यदि रिपुं जेतुं त्वमिच्छसि नराधिप।
नियमेन तदा विष्णोः प्रियं माधवमाचर् ॥
यदि सांसारिकं दुःखं हन्तुमिच्छसि भूमिप।

तदा नियममास्थाय माधवे माधवं भज
॥
राज्यभोगांश्च विपुलान्
पुत्त्रमित्रादिसम्पदम् ।
यदिच्छसि तदा विष्णोः प्रियं
माधवमाचर ॥
त्यक्तुमिच्छसि राजेन्द्र
जन्ममृत्युजरादिकम् ।
भयं यदि तदा विष्णोः प्रियं माधवमाचर
॥
यैर्नाचरितो मासो माधवः पापबुद्धिभिः ।
नरकान्न निवर्त्तन्ते दग्धाः कोपाग्निना
हरेः ॥
न वैशाखसमो मासो विशेषः केशवप्रियः
।
अव्रतेन क्षिपेद्यस्तु तं विद्यान्निकषात्मज
॥
यतिश्च विधवा चैव विशेषेण वनाश्रमी ।
वैशाखे नरकं याति ह्यकृत्वा नियमं नरः
॥
तस्माद्राजन् प्रयत्नेन कुरु त्वं
माधवव्रतम् ।
यस्याचरणमात्रेण हरिस्तुष्टो भविष्यति
॥
तावद्गर्जन्ति पुण्यानि स्वर्गे मर्त्ये
रसातले ।
यावन्नायाति राजेन्द्र माधवो माधवप्रियः
॥
अणुमात्रन्तु यत्किञ्चिद्यो ददाति च
माधवे ।
काले वा यदि वाकाले कोटिकोटिगुणं
भवेत् ॥
ययोदधीनां राजर्षे ! क्षयो नैवोपपद्यते ।
तथैव माधवे मासि न क्षयं प्रापपुण्ययोः
॥
नाचारि धर्म्माचरणेन माधवं
नाराधितो यैः पुरुषप्रधानः ।
यैर्न श्रुता भूप कथा मुरारे-
स्तेषां वृथा जन्म नराधमानाम् ॥

“काञ्चीकलक्वणितकोमलनाभिकान्ति
पारावतध्वनिविचित्रितकण्ठपालिम् ।
उद्भ्रान्तलोचनचकोरमनङ्गरङ्ग
माशास्महे कमपि वारविलासवत्याः ॥” * ॥
वैशिकस्तूत्तममध्यमाधमभेदात् त्रिविधः ।
दयिता-
श्रमप्रकोपे अपि उपचारपरायणः उत्तमः ।
यथा, --
“चक्षुःप्रान्तमुदीक्ष्य पक्ष्मलदृशः
शोणारविन्द-
श्रियं
नोच्चैर्जल्पति न स्मितं वितनुते गृह्णाति
वीढीं
न वा ।
तल्पोपान्तमुपेत्य किन्तु
पुलकभ्राजत्कपोलद्युतिः
कान्तः केवलमानतेन शिरसा मुक्तास्रजं
गुम्फति ॥” * ॥
प्रियायाः प्रकोपे यः प्रकोपमनुरागं वा न
प्रकटयति चेष्टया मनोभावं गृह्णाति स
मध्यमः ।
यथा, --
“आस्यं यद्यपि हास्यवर्ज्जितमिदं लास्येन
हीनं
वचो
नेत्रं शोणसरोषकान्तिरुचिरं क्वापि क्षणं
स्थीयते ।
मालायाः करणोद्यमो न कविकारम्भः कुचा-
म्भोजयो-
र्घूपः कुन्तलधोरणीषु सुतनोः सायन्तनो
दृश्यते ॥” * ॥
भयकृपालज्जाशून्यः
कामक्रीडायामकृतकृत्या-
कृत्यविचारोऽधमः । यथा, --
“उदयति हृदि नैव यस्य लज्जा
न च करुणा न च कोऽपि भीतिलेशः ।
वकुलमुकुलकोषकोमलां मां
पुनरपि तस्य करेण सातयेथाः ॥” * ॥
मानी चतुरः शठ एवान्तर्भवति । मानी यथा,

ज्ञात्वा शर्व्वप्रासादात् व्यपगततिमिरे
चक्षुषी
चोपलभ्य ॥”)

**वैशिष्टं**, क्ली, (विशिष्टस्य भावः ।) विशिष्टत्वम् ।
तत्तु सम्बन्धपदार्थः । विशिष्टधीनियामक
इति
यावत् । यथा ।
“विशिष्टवैशिष्टेत्याद्यभ्युपगम-
वादः ।” इति शिरोमणिः ॥ दण्डसंयोगवान्
इति
शाब्दबोधो न विशिष्टवैशिष्टावगाही । खले
कपोतन्यायेनैव तत्स्वीकारात् । इति भावः
।
इति जागदीशी सामान्यलक्षणा ॥ * ॥
(असाधारणत्वम् । यथा, महाभारते । १३
।
१५९ । ४१ ।
“त्रिषु लोकेषु तावच्च वैशिष्टं प्रतिपत्स्यसे ।
सुप्रियः सर्व्वलोकस्य भविष्यसि जनार्द्दन
॥”)

**वैशेषिकः**, पुं, (विशेषं वेत्ति अधीते वा । विशेष +
ठक् ।) कणादमुनिकृतदर्शनशास्त्रवेत्ता ।
तत्-
पर्य्यायः । औलुक्यः २ । इति हेमचन्द्रः ॥
(विशेषमधिकृत्य कृतो ग्रन्थः । विशेषः +
“अधि-
कृत्यकृते ग्रन्थे ।” ४ । ३ । ८७ । इति
ठक् ।)
कणादमुनिकृतदर्शनशास्त्रविशेषः । स तु
विशेष-
पदार्थनिरूपकग्रन्थः । अस्य मतं
न्यायदर्शनमत-
तुल्यम् । अत्र जगतः कारणं
परमाणुपर्य्यन्तं
निरूपितम् ॥ * ॥ इह खलु
निखिलप्रेक्षावन्-
निसर्गप्रतिकूलवेदनीयतया
निखिलात्मसंवेदन-

न पीडयन्ति ग्रहराक्षसा गणा
यक्षाः पिशाचोरगभूतदानवाः ।
यो माधवे मासि नरेन्द्रवर्य्य
ध्रुवं मुरारेर्व्रतमाचरन्ति ह ॥”
इति पाद्मोत्तरखण्डे
वैशाखमाहात्म्यकथने १६८
अध्यायः ॥

**वैशाखी**, स्त्री, (विशाखया युक्ता पौर्णमासी ।
“नक्षत्रेण युक्तः कालः ।” ४ । २ । ३ ।
इत्यण् ।
ततो ङीप् ।) वैशाखमासस्य पूर्णिमा ।
यथा,
“विशाखातारकायुक्ता वैशाखी पूर्णिमा
भवेत् ।”
इति शब्दरत्नावली ॥
तत्र तर्पणफलम् । वैशाखीमुपक्रम्य यमः
।
“गौरान् वा यदि वा कृष्णान् तिलान्
क्षौद्रेण
संयुतान् ।
प्रीयतां धर्म्मराजेति पितॄन् देवांश्च
तर्पयेत् ॥
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति
।
अब्दायुतञ्च तिष्ठेत्तु स्वर्गलोके न संशयः
॥”
इति तिथ्यादितत्त्वम् ॥ * ॥
रक्तपुनर्नवा । इति राजनिर्घण्टः ॥
(वसुदेवस्य
स्त्रीणामन्यतमा । यथा, हरिवंशे । ३५ ।
२ ।
“वैशाखी च तथा भद्रा सुनामा चैव
पञ्चमा ॥”)

**वैशिकः**, पुं, (वेशेन जीवतीति । वेश + “वेतना-
दिभ्यो जीवति ।” ४ । ४ । १२ । इति
ठक् ।)
त्रिविधनायकान्तर्गतनायकविशेषः ।
यथा, --
शृङ्गारस्य उभयसाध्यत्वान्नायकोऽपि
निरूप्यते ।
“बाह्याकूतपरायणं तव वचो वज्रोपमेयं मनः
श्रुत्वा वाचमिमामपास्य विनयं व्याजाद्बहिः
प्रस्थिते ।
प्रातर्व्वक्रविलोकने परिहृतालापे विवृत्तानने
प्राणेशे नियतं पतन्ति कृपणा वामभ्रुवो
दृष्टयः ॥”
वाक्चेष्टाव्यङ्ग्यसमागमश्चतुरः ।
वचनव्यङ्ग्य-
समागमो यथा, --
“तमोजटाले हरिदन्तराले
काले निशायास्तव निर्गतायाः ।
तटे नदीनां निकटे वनानां
घटेत शातोदरि ! कः सहायः ॥”
चेष्टाव्यङ्गसमागमो यथा, --
“कान्ते कनकजम्बीरं करे कमपि कुर्व्वति ।
अगारलिखिते भानौ बिन्दुमिन्दुमुखी ददौ
॥”
इति रसमञ्जरी ॥
(वेशसम्बन्धिनि, त्रि । यथा, मृच्छकटिके ।
१ अङ्के ।
“ऋग्वेदं सामवेदं गणितमथ कलां वैशिकीं
हस्तिशिक्षां
सिद्धं दुःखं जिहासतस्तद्धानोपायं
जिज्ञासुः
परमेश्वरसाक्षात्कारमुपायमाकलयति।
“यदा चर्म्मवदाकाशं वेष्टयन्तीह मानवाः ।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति
॥”
इत्यादिवचननिचयप्रामाण्यात्।
परमेश्वरस्य
साक्षात्कारश्च
श्रवणमननभावनाभिर्भावनीयः।
यदाह ।
“आगमेनानुमानेन ध्यानाभ्यासबलेन च ।
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम्
॥”
इति ॥
तत्र मननमनुमानाधीनम्। अनुमानञ्च
व्याप्ति-
ज्ञानाधीनम् । व्याप्तिज्ञानञ्च
पदार्थविवेकसा-
पेक्षम् । अतः पदार्थषट्कम् “अथातो धर्म्मं
व्याख्यास्यामः ।” इत्यादिकायां
दशलक्षण्यां
कणभक्षेण भगवता व्यवस्थापि ।
तत्राह्निकद्वया-
त्मके प्रथमेऽध्याये
समवेताशेषपदार्थकथनम-
कारि । तत्रापि प्रथमाह्निके
जातिमन्निरूपणम् ।
द्वितीयाह्निके जातिविशेषयोर्न्निरूयणम् ।
आह्निकद्वयात्मके द्वितीये
भूतदिक्काललक्षणम्।
तत्रापि प्रथमाह्निके भूतविशेषलक्षणम् ।
द्वितीये
दिक्कालप्रतिपादनम्। आह्निकद्वयात्मके
तृतीये
आत्मान्तःकरणलक्षणम्।
तत्राप्यात्मलक्षणं
प्रथमे । द्वितीये अन्तःकरणलक्षणम्।
आह्निक-
द्वययुक्ते चतुर्थे शरीरतदुपयोगिविवेचनम् ।
तत्रापि प्रथमे तदुपयोगिविवेचनम् । द्वितीये

| | | |
|---|---|---|
| स च त्रिविधः । पतिरुपपतिर्व्वैशिकश्च । बहु-<br>वेश्याभोगोपरसिको वैशिकः । यथा, -- | | शरीरविवेचनम् । आह्निकद्वयवति पञ्चमे कर्म्म-<br>प्रतिपादनम् । तत्रापि प्रथमे शरीरसम्बन्धि-<br>कर्म्मचिन्तनम् । आह्निकद्वयशालिनि षष्ठे<br>श्रौतधर्म्मनिरूपणम् । तत्रापि प्रथमे दानप्रति- |

ग्रहधर्म्मविवेकः । द्वितीये चातुराश्रम्योचित-
धर्म्मनिरूपणम् । तथाविधे सप्तमे
गुणसमवाय-
प्रतिपादनम् । तत्रापि प्रथमे बुद्धिनिरपेक्षगुण-
प्रतिपादनम् । द्वितीये
तत्सापेक्षगुणप्रतिपादनं
समवायप्रतिपादनञ्च । अष्टमे निर्व्विकल्पक-
सविकल्पकप्रत्यक्षप्रमाणचिन्तनम्। नवमे
बुद्धि-
विशेषप्रतिपादनम् । दशमे अनुमानप्रतिपाद-
नम् । तत्र उद्देशो लक्षणं परीक्षा चेति
त्रिविधास्य शास्त्रस्य प्रवृत्तिः । इति
वैशेषिक-
ग्रन्थविवरणम् ॥ * ॥
(न्यायमते आत्मादिगतपारिभाषिकगुणः।
यथा,
भाषापरिच्छेदे ।
"बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः
सांसिद्धिको-
द्रवः ।
अदृष्टभावना शब्दा अमी वैशेषिका गुणाः ॥"
विशेष एव । "विनयादिभ्यष्ठक् ।" ५ । ४ ।
३४ । इति स्वार्थे ठक् ॥ असाधारणे, त्रि ।
यथा, महाभारते । ७ । ५ । १५ ।
"युगपन्नतु ते शक्या कर्त्तुं सर्व्वे पुरःसरा ।
एक एव तु कर्त्तव्यो यस्मिन् वैशेषिका गुणाः
॥")

**वैश्यः**, पुं, (विश् + ष्यञ् ।) ब्रह्मोरुदेशजाततृतीय-
वर्णः । (यथा, ऋग्वेदे । १० । ९ । १२ ।
"ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत
॥")
तत्पर्य्यायः । ऊरव्यः २ ऊरुजः ३ अर्य्यः
४
भूमिस्पृक् ५ विट् ६ । इत्यमरः ॥ द्विजः ७ ।
इति जटाधरः ॥ भूमिजीवी ८ । इति शब्द-
रत्नावली ॥ व्यवहर्त्ता ९ वार्त्तिकः १०
बणिकः
वैश्ये रक्षति नान्येन रक्षितव्याः कथञ्चन
॥"
इति पाद्मे स्वर्गखण्डे वर्णविभागः २६
अः ॥
अन्यच्च ।
"दानमध्ययनं यज्ञो धर्म्मः
क्षत्त्रियवैश्ययोः ।
दण्डस्तथा क्षत्त्रियस्य कृषिर्वैश्यस्य
शस्यते ॥
स्थानमैन्द्रं क्षत्त्रियाणां
संग्रामेष्वपलायिनाम् ।
वैश्यानां मारुतं स्थानं
स्वधर्म्ममनुवर्त्तताम् ॥"
इति गारुडे ४९ अध्यायः ॥
(वैश्यसम्बन्धिनि, त्रि । यथा,
महाभारते ।
१२ । ६२ । ४ ।
"क्षात्त्राणि वैश्यानि च सेवमानः
शौद्राणि कर्म्माणि च ब्राह्मणः सन् ।
अस्मिल्लोके निन्दितो मन्दचेताः
परे च लोके निरयं प्रयाति ॥")

**वैश्या**, स्त्री, (वैश्य + टाप् ।) वैश्यजातिस्त्री ।
तत्पर्य्यायः । अर्य्याणी २ अर्य्या ३ ।
इति जटा-
धरः ॥ (यथा, मनौ । ८ । ३८२ ।
"वैश्यश्चेत् क्षत्त्रियां गुप्तां वैश्यां वा
क्षत्त्रियो
व्रजेत् ॥")

**वैश्रवणः**, पुं, (विश्रवणस्यापत्यम्।
"शिवादिभ्यो-
ऽण् ।" ४ । १ । ११२ । इति अण् ।)
कुबेरः ।
इत्यमरः ॥ (यथा, महाभारते । २ ।
१० । २ ।
"तपसा निर्म्मिता राजन् स्वयं वैश्रवणेन
सा ॥"
शिवः । यथा, महाभारते । १३ । १७ ।
१०३ ।
इन्द्राय स्वाहा । विश्वेभ्यो देवेभ्यः स्वाहा
भूः स्वाहा । भुवः स्वाहा । स्वः स्वाहा ।
भूर्भुव
स्वः स्वाहा । देवकृतस्यैनसोऽवयजनमसि
स्वाहा । मनुष्यकृतस्यैनसोऽवयजनमसि
स्वाहा ।
पितृकृतस्यैनसोऽवयजनमसि स्वाहा ।
आत्म-
कृतस्यैनसोऽवयजनमसि स्वाहा । एनस
एनसो-
ऽवयजनमसि स्वाहा । यच्चाह मे
विद्वांश्चकार
यच्चाविद्वांस्तस्य
सर्व्वस्यैनसोऽवयजनमसि
स्वाहा । अग्नये स्विष्टिकृते स्वाहा । सूर्य्याय
स्वाहा । प्रजापतये स्वाहा । वनस्पतये
स्वाहा ।
अद्भ्यः स्वाहा । ओषधिवनष्पतिभ्यः
स्वाहा ।
गृहाय स्वाहा । देहदेवताभ्यः स्वाहा ।
वास्तु-
देवताभ्यः स्वाहा । इन्द्राय स्वाहा । इन्द्र-
पुरुषेभ्यः स्वाहा । यमाय स्वाहा ।
यमपुरुषेभ्यः
स्वाहा । वरुणाय स्वाहा । वरुणपुरुषेभ्यः
स्वाहा । सोमाय स्वाहा । सोमपुरुषेभ्यः
स्वाहा । ब्रह्मणे स्वाहा । ब्रह्मपुरुषेभ्यः
स्वाहा ।
विश्वेभ्यो देवेभ्यः स्वाहा । सर्व्वेभ्यो
भूतेभ्यः
स्वाहा । दिवारात्रिभ्यः स्वाहा । रक्षोभ्यः
स्वाहा । स्वधा पितृभ्यः स्वाहा । ये भूताः
प्रचरन्ति दिवा चरन्ति दिवाचरमिच्छन्तो
भुवनस्य मध्ये तेभ्यो बलिं पुष्टिकामो
ददामि ।
मयि पुष्टिं पुष्टिपतिर्द्ददातु ।
श्वचाण्डालपतित-
वायसेभ्यः ।" इति गारुडे वैश्वदेवविधिः
२१९

११ पणिकः १२ । इति राजनिर्घण्टः ॥
प्लक्ष-
द्वीपे अस्य संज्ञा ऊद्‌र्ध्वायनः । शाल्मलद्वीपे
वसुन्धरः । कुशद्वीपे अभियुक्तः । क्रौञ्चद्वीपे
द्रविणः । शाकद्वीपे दानव्रतः । पुष्करद्वीपे
सर्व्वे एकवर्णाः । इति भागवतमतम् ॥ अस्य
शास्त्रनिरूपितधर्म्मास्त्रयः । अध्ययनम् १
यज-
नम् २ दानम् ३ । चतस्रो जीविकाः । कृषिः
१
गोरक्षणम् २ बाणिज्यम् ३ कुशीदम् ४ ।
अस्याश्रमास्त्रयः । ब्रह्मचर्य्यम् १ गार्हस्थ्यम्
२
बानप्रस्थम् ३ ॥ तस्य लक्षणादिर्यथा, --
"विशत्याशु पशुभ्यश्च कृष्यादानरुचिः
शुचिः ।
वेदाध्ययनसम्पन्नः स वैश्य इति संज्ञितः ॥
वैश्यस्य च प्रवक्ष्यामि यो धर्म्मो वेदसम्मतः
।
दानमध्ययनं शौचं यज्ञश्च धनसञ्चयः ॥
पालयेच्च पशून् वैश्यः पितृवद्धर्म्ममर्ज्जयन्
।
विकर्म्म तद्भवेदन्यत् कर्म्म यत् स समाचरेत्
॥
रक्षया स हि तेषां वै महत् सुखमवाप्नुयात् ।
प्रजापतिर्हि वैश्याय सृष्ट्वा परिददे प्रजाः ॥
ब्राह्मणेभ्यश्च राज्ञे च सर्व्वाः परिददे प्रजाः ।
तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम्
॥
षण्णामेका पिबेद्धेनुं शताच्च मिथुनं भवेत् ।
लब्धाच्च सप्तमं भागं तथा शृङ्गैकलक्षुरे ॥
शस्यानां सर्व्वबीजानि एषा सांवत्सरी भृतिः
।
न च वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति ॥

"धन्वन्तरिर्धूमकेतुः स्कन्दो
वैश्रवणस्तथा ॥")

**वैश्रवणालयः**, पुं, (वैश्रवणस्यालयः ।) वटवृक्षः ।

इति हेमचन्द्रः ॥ (यथा, देवीभागवते ।
७ ।
३० । ८१ ।
"अश्वत्थे वन्दनीया तु
निधिर्वैश्रवणालये ॥")
कुबेरपुरी च ॥

**वैश्रवणावासः**, पुं, (वैश्रवणस्यावासः ।) वट-

वृक्षः । इति जटाधरः ॥ कुबेरगृहञ्च ॥

**वैश्रवणोदयः**, पुं, (वैश्रवणस्योदयो यस्मिन् ।)

वटवृक्षः । इति रत्नमाला ॥

**वैश्वदेवः**, पुं, (विश्वदेवस्यायम् । विश्वदेव + अण् ।)

विश्वदेवसम्बन्धिहोमादिः । यथा, --
ब्रह्मोवाच ।
"वैश्वदेवं प्रवक्ष्यामि होमलक्षणमुत्तमम्
।
पर्य्युक्षणमग्निं पर्य्युक्ष्य । क्रव्यादमग्निं
प्रहिणोमि
दूरं यमराज्यं गच्छतु रिप्रवाहः ।
इहैवाय-
मितरो जातवेदा देवेभ्यो हव्यं वहतु
प्रजानन् ।
ॐ पावक वैश्वानर इदमासनम् ।
अवनीगर्भ-
संस्कृतः तेजोरूपो
महाब्रह्मन्नमुहूर्तास्त्रिषु
वैश्वानरं प्रतिबोधयामि । वैश्वानरोऽत्र
उभयं
प्रायातु परावतः । अग्निर्नः
मुष्णतीरुपपृष्टे
दिवि पृष्टोऽग्निः पृथिव्यां पृष्टो विश्वा
ओषधी-
राविवेश । वैश्वानरः सहसा पृष्टोऽग्निः
स
वोऽग्निः खं दिवा सर्व्वस्मात्तु नक्तं ॐ
प्रजापतये

अध्यायः ॥ * ॥ तस्य प्रयोगो यथा ।
पूर्व्वाभि-
मुखः शुचिरुपवीती कुशहस्तः
कुशासनोपविष्टः
कर्त्ता घृताक्तं दुग्धाक्तं तैलाक्तं जलाक्तं अन्नं
आमान्नं वा फलं जलं वा जुहुयात् । यथा
जले
ॐ भूः स्वाहा । ॐ भुवः स्वाहा । ॐ स्वः
स्वाहा । ॐ भूर्भुवः स्वः स्वाहा । ॐ देव-
कृतस्यैनसोऽवयजनमसि स्वाहा । ॐ
पितृ-
कृतस्यैनसोऽवयजनमसि स्वाहा । ॐ
मनुष्य-
कृतस्यैनसोऽवयजनमसि स्वाहा । ॐ
आत्म-
कृतस्यैनसोऽवयजनमसि स्वाहा । ॐ
यद्दिवा
च नक्तञ्चैनश्चकृम तस्यावयजनमसि
स्वाहा ।
ॐ यत् स्वपन्तश्च जाग्रतश्चैनश्चकृम
तस्याव-
यजनमसि स्वाहा । ॐ
यद्विद्वांसश्चाविद्वांस-
श्चैनश्चकृम तस्यावयजनमसि स्वाहा । ॐ
एनसः
एनसोऽवयजनमसि स्वाहा । ॐ अग्नये
स्विष्टि-
कृते स्वाहा । इत्यनेन जुहुतात् । इति
वैश्व-
देवकर्म्म । इत्याह्निकप्रयोगतत्त्वम् ॥
(विश्वदेव एव । स्वार्थे अण् ।
गणदेवताविशेषः ।
बन्धुभिरकृतविवादस्यैव
वैश्वदेवलोकप्राप्तिः ।
यथा, मनौ । ४ । १८३ ।
"यामयोऽप्सरसां लोके वैश्वदेवस्य
बान्धवाः ।
सम्बन्धिनो ह्यपां लोके पृथिव्यां
मातृमातुलौ ॥"
विश्वदेवसम्बन्धिनि, त्रि । यथा, महाभारते
।

|  | स्वाहा । सोमाय स्वाहा । बृहस्पतये स्वाहा ।<br>अग्नीषोमाभ्यां स्वाहा । इन्द्राग्नीभ्यां स्वाहा ।<br>द्यावापृथिवीभ्यां स्वाहा । धन्वन्तरये स्वाहा । | १२ । ३०१ । ८ ।<br>“आसुरान् विषयान् ज्ञात्वा वैश्वदेवांस्तथैव च ॥”)<br>**वैश्वानरः**, पुं, (विश्वश्चासौ नरश्चेति । “नरे संज्ञायाम् ।” ६ । ३ । १२९ । इति दीर्घः । ततो |
|---|---|---|

विश्वानर एव । स्वार्थे अण् । यद्वा,
“विश्वान्
नरान् इतो लोकात् लोकान्तरं नयति ।
इद-
मर्थेन विश्वानराणां नेतृत्वेन सम्पद्यन्ते
वा
कर्म्मार्थप्रणेतृत्वेन सम्पादिनोऽस्य
वैश्वानरः ।
‘अन्येषामपि दृश्यते ।’ ६ । ३ । १३७ ।
इति
दीर्घः । अपि वा विश्वान् जन्तून् अरः ।
ऋ
गतौ इत्यस्य छान्दसत्वात् पदाद्यच्
उपपदविभ-
क्तेश्चालुक् । सर्व्वाणि भूतानि अरः
प्रत्यृतः
प्रतिगतः प्रविष्टति विश्वानरः प्राणः । तेन
जन्यमानत्वात् तस्यापत्यं वैश्वानरः ॥”
इति
निघण्टुटीकायां देवराजयज्वा । ५ । १
।) अग्निः ।
(यथा, गीतायाम् । १५ । १४ ।
“अहं वैश्वानरो भूत्वा प्राणिनां
देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्व्विधम्
॥”)
चित्रकवृक्षः । इत्यमरः ॥
अग्नेस्तन्नामकारणं
यथा, --
“तथापि दद्मि वो रूपे द्वे द्वे
प्रत्येकशोऽधुना ।
भूतकार्य्येष्वभूतेन देवलोके तु मूर्त्तिना ॥
तिष्ठध्वमपि कालान्ते लयं त्वाविशत्
द्रुतम् ।
शरीराणि पुनर्न्नैवं कर्त्तव्योऽहमिति
क्वचित् ॥
मूर्त्तानाञ्च तथा तुभ्यं दद्मि नामानि
वोऽधुना ।

विशेषः । यथा, देवीभागवते । ३ । १ । ८ ।
“त्रयोविंशतिसाहस्रं वैष्णवं परमाद्भुतम् ॥”)
विष्णुसम्बन्धिनि, त्रि ॥ (यथा, रघुः । ११
। ८५ ।
“गां गतस्य तव धाम वैष्णवं
कोपितो ह्यसि मया दिदृक्षुणा ॥”)

**वैष्णवः**, पुं, (विष्णुर्द्देवता अस्य । अण् ।) विष्णु-
मन्त्रोपासकः । विष्णुभक्तः । तत्पर्य्यायः ।
कार्ष्णः
२ हारः ३ । तस्य लक्षणं यथा, --
“गृहीतविष्णुदीक्षाको विष्णुसेवापरो नरः ।
वैष्णवश्चात्र संग्राह्यः
स्कान्दाद्युक्तानुसारतः ॥”
तथा च स्कान्दे ।
“परमापदमापन्नो हर्षे वा समुपस्थिते ।
नैकादशीं त्यजेद्यस्तु यस्य दीक्षास्ति
वैष्णवी ॥
समात्मा सर्व्वजीवेषु निजाचारादविप्लुतः ।
विष्ण्वर्पिताखिलाचारः स हि वैष्णव
उच्यते ॥”
इति श्रीहरिभक्तिविलासे १२ विलासः ॥ *
॥
अथ श्रीवैष्णवनिन्दादिदोषः । स्कान्दे
मार्कण्डेय-
भगीरथसंवादे ।
“यो हि भागवतं लोकमुपहासं नृपोत्तमः ।
करोति तस्य नश्यन्ति अर्थधर्म्मयशःसुताः
॥” *
अथ वैष्णवसमागमविधिः ।
तेजोद्रविणपञ्च-
रात्रे ।
“वैष्णवो वैष्णवं दृष्ट्वा दण्डवत् प्रणमेद्भुवि ।
उभयोरन्तरा विष्णुः शङ्खचक्रगदाधरः ॥”
* ॥
अथ वैष्णवसन्माननित्यता । स्कान्दे
श्रीमार्क-
ण्डेयभगीरथसंवादे ।
“दृष्ट्वा भागवतं दूरात् संमुखे यो न याति
हि ।

जीवन्मुक्तं वैष्णवन्तं वेदाः सर्व्वे वदन्ति च
॥
पुरुषाणां शतं पूर्व्वं पैतृकञ्च शतं परम् ।
मातामहस्य च शतं मातरं मातृमातरम् ॥
भगिनीं भ्रातरञ्चैव भागिनेयञ्च मातुलम् ।
श्वश्रूञ्च श्वशुरञ्चैव गुरुपत्नीं गुरोः सुतम् ॥
गुरुञ्च ज्ञानदातारं मित्रञ्च सहचारिणम् ।
भृत्यं शिष्यं तथा चेटीं प्रजाः
स्वाश्रमसन्निधौ ॥
उद्धरेदात्मना सार्द्धं मन्त्रग्रहणमात्रतः ।
मन्त्रग्रहणमात्रेण जीवन्मुक्तो भवेन्नरः ॥
तस्य संस्पर्शमात्रेण पूतं तीर्थञ्च भारतम् ।
तस्यैव पादरजसा सद्यः पूता वसुन्धरा ॥
पादोदकप्लुतं स्थानं तीर्थमेव भवेत् ध्रुवम्
॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ८ अध्यायः ॥
* ॥
अपि च ।
श्रीशिव उवाच ।
“शिवमस्तु च साधूनां वैष्णवानां सतामिह
।
अवैष्णवानामसतामशिवञ्च पदे पदे ॥
ददाति वैष्णवेभ्यश्च यो दुःखं मूर्च्छितो
जनः ।
श्रीकृष्णस्य च संहर्त्ता विघ्नस्तस्य पदे पदे
॥
अवैष्णवानां हृदयं न हि शुद्धं सदा मलम् ।
श्रीकृष्णमन्त्रस्मरणं मनोनैर्म्मल्यकारणम् ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः ।
विष्णुमन्त्रोपासनया क्षीयते कर्म्म वै नृणाम्
॥
ये ब्राह्मणा वैष्णवाश्च स्वतन्त्राः परमं पदम्
।
यान्त्यन्योपासकाश्चान्यैः सार्द्धञ्च
प्रकृतेर्लये ॥
वर्णानां ब्राह्मणाः श्रेष्ठाः साधवो वैष्णवा
यदि ।
विष्णुमन्त्रविहीनेभ्यो द्विजेभ्यः श्वपचो वरः
॥

अग्निर्व्वैश्वानरो नाम प्राणापानौ तथाश्विनौ ॥
भविष्यति तथा गौरी हिमशैलसुता तथा ।
पृथिव्यादिगणस्त्वेष गजवक्त्रो भविष्यति ॥
शरीरधातवस्त्वेते नानाभूतानि एव तु ।
अहङ्कारस्तथा स्कन्दः कार्त्तिकेयो भविष्यति ॥”
इति वाराहे आदित्रेतायां महातपोपाख्यान-
नामाध्यायः ॥

**वैश्वी**, स्त्री, उत्तराषाढानक्षत्रम् । इतिहेमचन्द्रः ॥

**वैषम्यं**, क्ली, (विषम + भावे ष्यञ् ।) विषमत्वम् ।
विषमशब्दात् भावे ष्ण्यप्रत्ययेन निष्पन्नम् ॥
(नतोन्नतत्वम् । यथा, महाभारते । १२ । ५९ । ११४ ।
“समतां वसुधायाश्च स सम्यगुदपादयत् ।
वैषम्यं हि परं भूमेरासीदिति च नः श्रुतम् ॥”
तारतम्यम् । यथा, महाभारते । ३ । २०८ । २१ ।
“महच्च फलवैषम्यं दृश्यते कर्म्मसन्धिषु ॥”
दुःखम् । यथा, तत्रैव । ३ । ६१ । २० ।
“वैषम्यं परमं प्राप्तो दुःखितो गतचेनतः ।
भर्त्ता तेऽहं निबाधेदं वचनं हितमात्मनः ॥”)

**वैषयिकः**, त्रि, विषयसम्बन्धी । विषयशब्दात् ष्णिक-
प्रत्ययेन निष्पन्नः ॥ (यथा, साहित्यदर्पणे । ३ । २४० ।
“यश्चाम्मिन् सुखाभावोऽप्युक्तस्तस्य वैषयिक-
सखपरत्वान्न विरोधः ॥”)

**वैष्टुतं**, क्ली, होमभस्म । इति हेमचन्द्रः ॥

**वैष्टूं**, क्ली, (विश + “भ्रम्जिगमिनमिहनिविश्यशां

न गृह्णाति हरिस्तस्य पूजां द्वादशवार्षिकीम् ॥”
अथ वैष्णवस्तुतिः । स्कान्दे ।
“धन्योऽहं कृतकृत्योऽहं यद्यूयं गृहमागताः ।
दुर्ल्लभं दर्शनं नूनं वैष्णवानां यथा हरेः ॥” * ॥
अथ वैष्णवाभिगमनमाहात्म्यम् । स्कान्दे श्रीमार्कण्डेयभगीरथसंवादे ।
“संमुखं व्रजमानस्य वैष्णवानां नराधिप ।
पदे पदे यज्ञफलं प्राहुः पौराणिका द्विजाः ॥”
अथ वैष्णवस्तुतिमाहात्म्यम् । तत्रैव ।
“प्रत्यक्षं वा परोक्षं वा यः प्रशंसति वैष्णवम् ।
ब्रह्महा मद्यपः स्तेयी गुरुगामी सदा नृणाम् ।
मुच्यते पातकात् सद्यो विष्णुराह नृपोत्तम ॥” *
अथ वैष्णवसम्माननमाहात्म्यम् । तत्रैवामृत-
सारोद्धारे ।
“श्रद्धया दत्तमन्नञ्च वैष्णवाग्निषु जीर्य्यति ।
तदन्नं मेरुणा तुल्यं भवते च दिने दिने ॥” * ॥
अथ वैष्णवशास्त्रमाहात्म्यम् । स्कान्दे श्रीब्रह्म-
नारदसंवादे ।
“वैष्णवानि च शास्त्राणि ये शृण्वन्ति पठन्ति च ।
धन्यास्ते मानवा लोके तेषां कृष्णः प्रसीदति ॥”
इति च श्रीहरिभक्तिविलासे १० विलासः ॥
तस्य लक्षणमाहात्म्यादि यथा, --
“फलसन्धानरहिता विष्णुभक्ताश्च वैष्णवाः ।
मत्प्रीतिभक्तिकामास्ते सर्व्वदा सर्व्वकर्म्मसु ॥
गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे प्रवेक्ष्यति ।
परिपक्वाश्चाविपक्वा वैष्णवाः साधवश्च ते ।
सन्ततं पतितांश्चैव विष्णुचक्रं सुदर्शनम् ॥
यथा वह्नौ शुष्कतृणं भस्मीभूतं भविष्यति ।
तथा पापं वैष्णवेषु तेजस्विषु हुताशनात् ॥
गुरुवक्त्वाद्विष्णुमन्त्रो यस्य कर्णे प्रवेक्ष्यति ।
तं वैष्णवं महापूतं प्रवदन्ति मनीषिणः ॥
प्रशंसितं पितॄणाञ्च शतं मातामहस्य च
स्वसोदरांश्च जननीमुद्धरन्त्येव वैष्णवाः ॥
गयायां पिण्डदानेन पिण्डदाः पिण्डभोजिनम् ।
समुद्धरन्ति पुंसाञ्च वैष्णवाश्च शतं शतम् ॥
मन्त्रग्रहणमात्रेण जीवन्मुक्तो भवेन्नरः ।
यमस्तस्मान्महाभीतो वैनतेयाद्यथोरगः ॥
निष्पुणन्त्येव तीर्थानि गङ्गादीनि च भारते ।
कृष्णमन्त्रोपासकाश्च स्पर्शमात्रेण वाक्पते ॥
पापानि पापिनां तीर्थे यावन्ति प्रभवन्ति च ।
नश्यन्ति तानि सर्व्वाणि वैष्णवस्पर्शमात्रतः ॥
कृष्णमन्त्रोपासकानां रजसा पादपद्मयोः ।
सद्यो मुक्ता पातकेभ्यो हृष्टा पूता वसुन्धरा ॥
वायुश्च वरुणो वह्निः सूर्य्यः सर्व्वं पुनाति च ।
एते पूता वैष्णवानां स्पर्शमात्रेण लीलया ॥
अहं ब्रह्मा च शेषश्च साक्षी धर्म्मश्च कर्म्मणाम् ।
एते हृष्टाश्च वाञ्छन्ति वैष्णवानां समागमम् ॥
फलं कर्म्मानुसारेण सर्व्वेषां भारते भवेत् ।
न भवेत्तद्वैष्णवे च सिद्धधान्ये यथाङ्कुरम् ॥
हन्ति तेषां कर्म्म पूर्व्वं भक्तानां भक्तवत्सलः ।

| | | |
|---|---|---|
| वृद्धिश्च ।” उणा० ४ । १५९ । इति ष्ट्रन् वृद्धिश्च ।) पिष्टपम् । इत्युणादिकोषः ॥ द्यौः । वायुः । विष्णुः । इति संक्षिप्तसारोणादिवृत्तिः ॥<br>**वैष्णवं**, क्ली, (विष्णोरिदम् । विष्णु + अण् ।) होमभस्म । इति शब्दरत्नावली ॥ (महापुराण- | | |

कृपया स्वपदं तेभ्यो ददात्येव कृपानिधिः ॥”
इति ब्रह्मवैबर्त्ते प्रकृतिखण्डे ५७ अध्यायः ॥ * ॥
अन्यच्च ।
श्रीभगवानुवाच ।
“अहं प्राणा वैष्णवानां मम प्राणाश्च वैष्णवाः ।
तानेव द्वेष्टि यो मूढो ममासूनां स हिंसकः ॥
पुत्त्रान् पौत्त्रान् कलत्रांश्च राजलक्ष्मीं विधाय च ।
ध्यायन्ते सन्ततं ये मां को मे तेभ्यः परः प्रियः ॥
परा भक्ता नु मे प्राणा न च लक्ष्मीर्न शङ्करः ।
न भारती न च ब्रह्मा न दुर्गा न गणेश्वरः ॥
न ब्राह्मणा न वेदाश्च न वेदजननी सुराः ।
न गोपी न च गोपाला न राधा प्राणतः प्रिया ॥
इत्येवं कथितं सर्व्वं सत्यं सारञ्च वास्तवम् ।
न प्रशंसापरं तेषां ते च प्राणाधिकाः प्रियाः ॥
मां द्विषन्ति च ये मूढा ज्ञानहीनाश्च वञ्चिताः ।
स्वात्मानञ्च न जानन्ति ते यान्ति निरयं चिरम् ॥
ये द्विषन्ति च मद्भक्तान् प्राणानामधिकप्रियान् ।
तेषां शास्ताहं तूर्णञ्च परत्र निरयं चिरम् ॥
प्रभवोऽहञ्च सर्व्वेषामीश्वरः परिपालकः ।
तथापि न स्वतन्त्रोऽहं भक्ताधीनो दिवानिशम् ॥
सत्पुत्त्रं परमं तीर्थं प्राप्य मुच्यन्ति पूर्ब्बजाः ।
पितापि ऋणमुक्तः स्यात् जाते पुत्त्रे महात्मनि ॥
वैष्णवो यदि पुत्त्रः स्यात् स तारयति पूर्ब्बजान् ।
पितॄनधस्तना वंशास्तारयन्त्यतिपावनाः ॥”
इति पाद्मे भूमिखण्डे १२० अध्यायः ॥ * ॥
अथ वैष्णवधर्म्मतत्कर्त्तव्यपञ्चविधपूजे । यथा, --
श्रीपार्व्वत्युवाच ।
“वैष्णवानाञ्च यद्धर्म्मं कर्म्मापि तस्य तद्वद ।
यत् कृत्वा मानवाः सर्व्वे भवाम्भोधौ तरन्ति वै ॥
ईश्वर उवाच ।
अथ द्वादश शुद्धिञ्च वैष्णवानामिहोच्यते ।
गृहोपसर्पणञ्चैव तथानुगमनं हरेः ॥
भक्त्या प्रदक्षिणञ्चैव पादयोः शोधनं पुनः ॥ १ ॥ २
पूजार्थं पत्रपुष्पाणां भक्त्यैवोत्तोलनं हरेः ।
करयोः सर्व्वशुद्धीनामियं शुद्धिर्विलिख्यते । ३ । ४ ॥
तन्नामकीर्त्तनञ्चैव गुणानाञ्चैव कीर्त्तनम् ।
भक्त्या श्रीकृष्णदेवस्य वचसः शुद्धिरिष्यते ॥ ५ ॥
तत्कथाश्रवणञ्चैव तस्योत्सवनिरीक्षणम् ।
श्रोत्रयोर्नेत्रयोश्चैव शुद्धिः सम्यगिहोच्यते । ६ ।
७ । ८ । ९ ॥
पादोदकञ्च निर्म्माल्यं मालानामपि धारणम् ।
उच्यते शिरसः शुद्धिः प्रणतस्य हरेः पुनः ॥ १० ॥
आघ्राणं गन्धपुष्पादेर्निर्माल्यस्य तपोधने ।
विशुद्धिः स्यादनन्तस्य घ्राणस्यापि विधीयते । ११ ।
दुग्धन्तु आश्विने मासि कार्त्तिके चामिषं त्यजेत् ॥
दुग्धमन्नञ्च जम्बीरं यद्विष्णोरनिवेदितम् ।
बीजपूरञ्च शाकञ्च प्रत्यक्षलवणन्तथा ॥
यदि दैवाच्च भुज्यन्ते तदा तन्नामकं स्मरेत् ॥
कलायं कङ्गुधान्यानि शाकञ्च हिलमोचिकाम् ।
षष्टिकाकालशाकञ्च मुस्तकं क्रमुकं तथा ॥
लवणे सैन्धवं प्रोक्तं वचा च दधिसर्पिषी ।
पयोऽनुद्धृतसारञ्च पनसाम्रे हरीतकी ॥
पिप्पलीजीरकञ्चैव नागरङ्गकतिन्तिडी ।
कदलीलवलीधात्रीफलान्यगुडमैक्षवम् ।
अतैलपक्वं भुञ्जीत हविष्येषु प्रचक्षते ॥”
इति पाद्मे पातालखण्डे ११ अध्यायः ॥ * ॥
अथ वैष्णवलक्षणविशेषादिः ।
“माहात्म्यमथ भक्तानां यत् कार्य्यं यच्च लक्ष-णम् ।
करणीयं हरेर्विप्र सावधानमनाः शृणु ॥
हरिरेव सदा सेव्यो नान्यो यस्य महात्मनः ।
लोकस्य जगदाराध्यो हरिभक्तः स उच्यते ॥
अनन्यनिर्म्माल्यभुजो भक्तास्तेऽनन्यमानसाः ।
गोविन्दोपासका ये तु नित्यं देवान्तरं विना ॥
अनन्यधिषणोऽनन्यहृदयोऽनन्यसेवकः ।
केवलं हरिसेव्यङ्ग स भक्तः परिकीर्त्तितः ॥
सत्त्वं सत्त्वाश्रयं सत्त्वगुणं सेवेत केशवम् ।
योऽनन्यत्वेन मनसा सात्त्वतः समुदाहृतः ॥
सर्व्वदेवान् परित्यज्य नित्यं भगवदाश्रयः ।
रतस्तदीयसेवायां स भागवत उच्यते ॥
विहाय काम्यकर्म्मादीन् भजेदेकाकिनं हरिम् ।
सत्यं सत्त्वगुणोपेतो भक्त्या तं सात्त्वतं विदुः ॥
मुकुन्दपादसेवायां तन्नामश्रवणेऽपि च ।
कीर्त्तने च रतो भक्तो नाम्नः स्यात् स्मरणे हरेः ॥
वन्दनार्च्चनयोर्भक्तिरनिशं दास्यसख्ययोः ।
रतिरात्मार्पणे यस्य दृढानन्तस्य सात्त्वतः ॥
स्मर्त्तव्यः कीर्त्तनीयश्च श्रोतव्यः पूज्य एव च ।
यस्यैको विष्णुराराध्यो वैष्णवः समुदाहृतः ॥

गोलोके वाथ वैकुण्ठे द्विभुजञ्च चतुर्भुजम् ।
रूपमात्रमिदं सर्व्वं प्राणा मे भक्तसन्निधौ ॥
यद्भक्तं भक्तदत्तञ्च भक्षणीयञ्च तन्मम ।
अभक्ष्यं द्रव्यमन्येन दत्तञ्चेदमृतोपमम् ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे २५ अध्यायः ॥
अपि च ।
“सर्व्वान् कामान् परित्यज्य इष्टभक्तिञ्च साधयेत्
स एव वैष्णवाचारः
कामसङ्कल्पवर्ज्जितः ॥”
इत्याचारभेदतन्त्रम् ॥ * ॥
अपरञ्च ।
“रजस्वलायाः संभोगे कर्म्मक्षेत्रे च भारते ।
त्वयोक्तञ्च भवेत् पापं नात्र स्वर्गे च सुन्दरि !
कर्म्मक्षेत्रे च तत् कर्म्म यद्वेदोक्तं शुभाशुभम् ॥
न भवेद्वैष्णवानाञ्च ज्वलतां ब्रह्मतेजसा ॥
यथा प्रदीपवह्नौ च शुष्काणि च तृणानि च ।
भवन्ति भस्मीभूतानि तथा पापानि वैष्णवे ॥
वह्निसूर्य्यब्राह्मणेभ्यस्तेजीयान् वैष्णवः सदा ।
रक्षितो विष्णुचक्रेण स्वतन्त्रो मत्तकुञ्जरः ॥
न विचारो न भोगश्च वैष्णवानां स्वकर्म्मणाम् ।
लिखितं साम्नि कौथुम्यां कुरु प्रश्नं बृहस्मतिम् ॥
अस्मांश्च सर्व्वे जानन्ति चन्द्रवंश्यांश्च वैष्णवान् ।
देवमन्यं न सेवन्ते चन्द्रवंश्या हरिं विना ॥”
१२ ॥
तत्र पुष्पादिकं यच्च कृष्णपादयुगार्पितम् ।
तदेव पावनं लोके तद्धि सर्व्वं विशोधयेत् ॥ * ॥
पूजा च पञ्चधा प्रोक्ता तासां भेदान् शृणुष्व मे ।
अभिगमनमुपादानं योगः स्वाध्याय एव च ॥
इष्टाः पञ्चप्रकाराच्चार्ः क्रमेण कथयामि ते ।
तत्राभिगमनं नाम देवतास्थानमार्ज्जनम् ॥
उपलेपननिर्म्माल्यदूरीकरणमेव च । १ ।
उपादानं नाम गन्धपुष्पादिचयनं यथा ॥ २ ॥
इष्टा नाम हि चेष्टादेः पूजनञ्च यथार्थतः । ३ ।
स्वाध्यायो मन्त्रराजस्य अर्थसन्धानतो जपः ॥
सूक्तस्तोत्रादिपाठश्च हरेः संकीर्त्तनं तथा ।
तन्नामशास्त्राभ्यासश्च स्वाध्यायः परिकीर्त्तितः ॥
४ ॥
योगो नाम सुदेबस्य चात्मने यैव भावना । ५ ।
इति पञ्चप्रकाराच्चार्ः कथितास्तव सुव्रते ॥”
इति पाद्मे पातालखण्डे १० अध्यायः ॥ * ॥
अथ वैष्णवानां खाद्याखाद्यम् ।
“सायं प्रातर्द्विजातीनां श्रुत्युक्तमशनं तथा ।
विष्णुभुक्तावशिष्टेन दिनपापात् प्रमुच्यते ॥
अन्नं ब्रह्मा रसो विष्णुः खादयन्नाम चोच्चरन् ।
एवं ज्ञात्वा तु यो भुङ्क्ते सोऽन्नदोषैर्न लिप्यते ॥
अलावुं वर्त्तुलाकारं मसूरञ्च सवल्कलम् ।
तालं शुक्लन्तु वार्त्ताकुं न स्वादेद्वैष्णवो जनः ॥
वटाश्वत्थार्कपत्रेषु कुम्भीतिभ्दुकपत्रयोः ।
यथालब्धोऽपि सन्तुष्टः समचित्तो जितेन्द्रियः ।
हरिपादाश्रयो लोके विप्राः साधुरनिन्दकः ॥
निर्व्वैरः सदयः शान्तो दम्भाहङ्कारवर्जितः ।
निरपेक्षो मुनिर्वीतरागः साधुरिहोच्यते ॥
लोभमोहमदक्रोधकामादिरहितःसुखी ।
कृष्णाङ्घ्रिशरणः साधुः सहिष्णुः समदर्शनः ॥
यद्विष्णूपासना नित्यं विष्णुर्यस्येश्वरो मुने ।
पूज्यो यस्यैकविष्णुः स्यादिष्टो लोके स वैष्णवः ।
हरेः सर्व्वावताराणां मत्स्यादीनामुपासकाः ।
तन्मन्त्रेष्टा अनन्याश्चेद्वैष्णवास्ते न संशयः ॥
यदिष्टो रघुनाथस्तु नृसिंहो वामनो हरिः ।
एतन्मन्त्रो वराहादिर्वासुदेवः स वैष्णवः ॥
विष्णोरुपासको दासस्तन्मन्त्रेष्टस्तदाशयः ।
तमाहुर्वैष्णवं लोके विष्णुसेवापरायणम् ॥
साध्वी यथा पतिं नारी नान्यं जानाति तं विना ।

| | | |
|---|---|---|
| इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ६ अध्यायः ॥<br>अपि च ।<br>सूत उवाच ।<br>“अथ वेण इयाजाथ सोऽश्वमेधेन भूपतिः ।<br>ब्राह्मणेभ्यो ददौ दानं नानारूपमनेकधा ॥<br>जगाम वैष्णवं लोकं सकायो जगतीपतिः ।<br>विष्णुना सह धर्म्मात्मा नित्यमेव प्रवर्त्तते ।<br>एतत्ते सर्व्वमाख्यातं चरितं तस्य भूपतेः ॥<br>यद्वेणो वैष्णवद्वेषी सर्व्वधर्म्मबहिष्कृतः ।<br>पृथुना पुत्त्रतीर्थेन पवित्रोऽगात् परं पदम् ॥ | कोविदारकदम्बे च न खादेद्वैष्णवो नरः ॥<br>श्रावणे वर्जयेच्छत्कुं दधि भाद्रपदे त्यजेत् । | |

जगदीशं तथानन्यो यदि विष्णुं स वैष्णवः ॥
समचित्तो मुनिः पूतो गोविन्दचरणाश्रयः ।
सर्व्वभूतदयः कार्ष्णो विवेकी साधुरुत्तमः ॥
कृष्णार्पितप्राणशरीरबुद्धिः
शान्तेन्द्रियस्त्रीसुतसम्पदादिः ।
आसक्तचित्तः श्रवणादिभक्ति-
ष्वस्येह साधुः सततं हरेर्यः ॥
कृष्णाश्रयः कृष्णकथानुरक्तः
कृष्णेष्टमन्त्रस्मृतिपूजनीयः ।
कृष्णानिशध्यानमनास्त्वनन्यो
यो वै स साधुर्मुनिवर्य्य कार्ष्णः ॥
यस्येष्टं श्रीभागवतं शास्त्रं श्रीभगवान् हरिः ।
भगवत्या समं लक्ष्म्या भक्त्या भागवतश्च सः ॥
ये कृष्णश्रवणाद्यर्हा ये तदुच्छिष्टभोजिनः ।
ये कृष्णोपासका लोका दासास्ते परि-
कीर्त्तिताः ॥”
इति पाद्मे उत्तरखण्डे ९९ अध्यायः ॥ * ॥
अपि च ।
ब्रह्मोवाच ।
“अहो ध्यानैरपि ध्यातुं देवैस्त्वं न हि शक्यसे ।
स त्वं वैष्णवदेहेषु तिष्ठसीत्यद्भुतं महत् ॥
क्षणमात्रमपि स्वामिंस्तुष्टे त्वयि न किं भवेत् ।
स त्वं वैष्णवसङ्गेन भ्रमसीत्यद्भुतं महत् ॥
के वैष्णवाः कैटभारे ! किं वा तेषाञ्च लक्षणम् ।
कथं ज्ञेयाश्च ते सर्व्वे तन्मे कथय केशव ॥
भगवानुवाच ।
वैष्णवानां लक्षणानि कल्पकोटिशतैरपि ।
सम्यग्वक्तुं न शक्नोमि संक्षेपात् शृणु सत्तम ॥
संसारो वैष्णवाधीनो देवा वैष्णवपालिताः ।
अहञ्च वैष्णवाधीनस्तस्मात् श्रेष्ठाश्च वैष्णवाः ॥
क्षणमात्रमपि ब्रह्मन् विहाय वैष्णवं जनम् ।
तिष्ठामि नाहमन्यत्र वैष्णवो मम बान्धवः ॥
तृणानि तुलसीमूलाद्ये
चिन्वन्ति नरोत्तमाः ।
सिञ्चन्ति बुलसीं ये च
विज्ञेयास्ते च वैष्णवाः ॥
तुलसीमूलमृद्भिश्च तिलकानि
नयन्ति ये ।
तुलसीकाष्ठपङ्कैश्च विज्ञेया
वैष्णवा जनाः ॥
गङ्गास्नानपरा ये च
गङ्गानामपरायणाः ।
गङ्गामाहात्म्यवक्तारो
विज्ञेयास्ते च वैष्णवाः ॥
धात्रीफजस्रजो येषां गलेषु
कमलासन ।
यजन्ति ये च
तत्पत्रैर्व्विज्ञेयास्ते च वैष्णवाः ॥
शालग्रामशिला येषां गृहे
वसति सर्व्वदा ।
शास्त्रं भागवतञ्चैव ज्ञेयास्ते
वैष्णवा जनाः ॥
सन्मार्जयन्ति ये नित्यं मम
स्थानानि सर्व्वदा ।
दीपं यच्छन्ति तत्रैव ज्ञेयास्ते
वैष्णवा जनाः ॥
शीर्ण्णं मन्मन्दिरं ये च कुर्व्वते
नूतनं पुनः ।
तत्रायनञ्च शोभाञ्च ज्ञेयास्ते
वैष्णवा जनाः ॥
अभयं ये च यच्छन्ति
भीरुभ्यश्चतुरानन ।
विद्यादानञ्च विप्रेभ्यो ज्ञेयास्ते
वैष्णवा जनाः ॥
क्षुत्तृट्प्रपीडितेभ्यश्च ये
यच्छन्त्यन्नमम्बु च ।
कुर्य्युर्ये रोगिशुश्रूषां ज्ञेयास्ते
वैष्णवा जनाः ॥
आरामकारिणो ये च
पिप्पलारोपिणोऽपि च ।
“कर्म्मक्षयाणि कर्म्माणि यतः साधुर्हरिः स्वयम् ।
मन्ये न भौतिको देहो वैष्णवस्य जगत्त्रये ॥”
इति कल्किपुराणे ३० अध्यायः ॥

**वैष्णवाचमनं**, क्ली, (वैष्णवस्याचमनम् ।) विष्णु-
पूजादिपूर्व्वकर्त्तव्यकर्त्तृसंस्कारकाङ्ग--ॐकारादि-
नमोऽन्तचतुर्थ्यन्ततत्तन्नामोच्चारणपूर्व्वकत्रिर्ज्जल-
पानादि । यथा, --
“त्रिःपाने केशवं नारायणं माधवमप्यथ ।
प्रक्षलने द्वयोः पाण्योर्गोविन्दं विष्णुमप्युभौ ॥
मधुसूदनमेकञ्च मार्ज्जनेऽन्यं त्रिविक्रमम् ।
उन्मार्ज्जनेऽप्यधरयोर्व्वामनश्रीधरावुभौ॥
प्रक्षालने पुनः पाण्योर्हृषीकेशञ्च पादयोः ।
पद्मनाभं प्रोक्षणे तु मूर्द्ध्नि दामोदरं ततः ॥
वासुदेवं मुखे सङ्कर्षणं प्रद्युम्नमित्युभौ ।
नासयोर्नेत्रयुगलेऽनिरुद्धं पुरुषोत्तमम् ॥
अधोक्षजं नृसिंहञ्च कर्णयोर्नाभितोऽच्युतम् ।
जनार्द्दनञ्च हृदये उपेन्द्रं मस्तके ततः ॥
दक्षिणे तु हरिं बाहौ वामे कृष्णं यथाविधि ।
नमोऽन्तञ्च चतुर्थ्यन्तमाचामेत् क्रमतो जपन् ॥
अशक्तः केवलं दक्षं स्पृशेत् कर्णं तथा च वाक् ॥
कुर्व्वीतालभनं वापि दक्षिणश्रवणस्य वै ॥”
तथा च वाक् इति यतस्तथैव वचनमस्ति ।
कुर्व्वीतालभनं वापीति मार्कण्डेयपुराणवचन-
मतो न पौनरुक्तम् । इति श्रीहरिभक्तिविलासे
३ विलासः ॥

**वैष्णवाचारः**, पुं, (वैष्णवानामाचारः ।) विष्णु-
भक्तानामाचरणम् । यथा, --
“अथाचारा बहुविधाः शिष्टाचारानुसारतः ।
श्रीवैष्णवानां कर्त्तव्या लिख्यन्तेऽत्र समासतः ॥”
अथाचाराः श्रीविष्णुपुराणे और्व्वसगरसंवादे
गृहस्थाचारकथनारम्भे ।
“देवगोब्राह्मणान् सिद्धान् वृद्धाचार्य्यांस्तथा-
र्च्चयेत् ।
द्विकलञ्च नमेत् सन्ध्यामग्नीनुपचरेत्तथा ॥
सदानुपहते वस्त्रे प्रशस्ताश्च तथौषधीः ।
गारुडानि च रत्नानि बिभृयात् प्रयतो नरः ॥
प्रसिद्धामलकेशश्च सुगन्धिश्चारुवेशधृक् ।

कामक्रोधविहीना ये हिंसादम्भविवर्ज्जिताः
।
लोभमोहविहीनाश्च ते ज्ञेया वैष्णवा जनाः
॥
अमत्सरा दयायुक्ताः सर्व्वभूतहितैषिणः ।
सत्योक्तिभाषिणश्चैव ज्ञेयास्ते वैष्णवा
जनाः ॥
पितृभक्ता मातृभक्ता जातिपोषणतत्पराः ।
धर्म्मोपदेशिनो ये च ज्ञेयास्ते वैष्णवा जनाः
॥
समानं ये च पश्यन्ति त्वाञ्च माञ्च महेश्वरम्
।
कुर्व्वन्ति पूजामतिथेर्ज्ञेयास्ते वैष्णवा जनाः
॥
वेदविद्यानुरक्ता ये द्विजभक्तिरताः सदा ।
नपुंसकाः परस्त्रीषु ज्ञेयास्ते वैष्णवा जनाः
॥
एकादशीव्रतं ये च भक्तिभावेन कुर्व्वते ।
गायन्ति मम नामानि ज्ञेयास्ते वैष्णवा जनाः
॥
देवायतनकर्त्तारस्तुलसीमाल्यधारिणः।
रुद्राक्षधारिणो ये च ज्ञेयास्ते वैष्णवा जनाः
॥
मत्पादसलिलैर्य्येषां सिक्तानि मस्तकानि वै ।
मम नैवेद्यमश्नन्ति ज्ञेयास्ते वैष्णवा जनाः ॥
शङ्खचक्रगदापद्मैरङ्कितानिममायुधैः ।
ब्रह्मन् येषां शरीराणि ज्ञेयास्ते वैष्णवा जनाः
॥
कर्णयोश्चैव शीर्षेषु तुलसीपत्रमुत्तमम्।
सततं दृश्यते येषां ज्ञेषास्ते वैष्णवा जनाः ॥

गोसेवां ये च कुर्व्वन्ति
ज्ञेयास्ते वैष्णवा जनाः ॥
अत्यन्तभक्ता ये ब्रह्मन्
पितृयज्ञं प्रकुर्व्वते ।
कुर्व्वन्ति दीनशुश्रूषां ज्ञेयास्ते
वैष्णवा जनाः ॥
तडागग्रामकर्त्तारः
कन्यादानप्रदाश्च ये ।
सेवन्ते स्वगुरौ ये च ज्ञेयास्ते
वैष्णवा जनाः ॥
सेवन्ते ज्येष्ठांभगिनीं ज्येष्ठं
भ्रातरमेव च ।
परनिन्दां न कुर्व्वन्ति ज्ञेयास्ते
वैष्णवा जनाः ॥
देवस्वं ब्राह्मणद्रव्यं परस्वञ्च
चतुर्म्मख ।
पश्यन्ति विषवद्ये च ज्ञेयास्ते
वैष्णवा जनाः ॥
पाषण्डसङ्गरहिताः
शिवभक्तिपरायणाः।
चतुर्द्दशीव्रतरता ज्ञेयास्ते
वैष्णवा जनाः ॥
बहुनात्र किमुक्तेन भाषितेन
पुनः पुनः ।
मदर्च्चां ये च कुर्व्वन्ति
ज्ञेयास्ते बष्णवा जनाः ॥
वैष्णवेषु मुणाः सर्व्वे दोषलेशो
न विद्यते ।
तस्माच्चतुर्मुख त्वञ्च वैष्णवो
भव साम्प्रतम् ॥
समाराधय मां नित्यं
क्रियायोगैः प्रजापते ।
सर्व्वमेव सुभद्रं ते भविष्यति
न संशयः ॥
भूयः पूर्व्वस्थितमिव सृज्यतां
सकलं जगत् ।
इत्युक्त्रान्तर्द्दधे देवस्तत्रैव
जगदीश्वरः ॥
ततस्तु पूर्व्ववद्ब्रह्म सृष्टवान्
सकलं जगत् ।

किञ्चित् परस्वं न हरेत् नाल्पमप्यप्रियं वदेत् ।
प्रियञ्च नानृतं ब्रूयान्नान्यदोषानुदीरयेत् ।
नान्याश्रयं तथा वैरं रोचयेत् पुरुषेश्वरः ॥
न दुष्टयानमारोहेत् कुलच्छायां न संश्रयेत् ।
विद्विष्टपतितोन्मत्तबह्वैरातिकीटकैः ॥
बन्धकीबन्धकीभर्त्तृक्षुद्रानृतकथैः सह ।
तथातिव्ययशीलैश्च परिवादरतैः शठैः ॥
बुधो मैत्रीं न कुर्व्वीत नैकः पन्थानमाश्रयेत् ।
नावगाहेज्जलौघस्य वेगमग्रे जनेश्वर ॥
प्रदीप्तं वेश्म न विशेन्नारोहेच्छिखरं तरोः ।
न कुर्य्याद्दन्तसङ्घर्षं न कृष्णीयाच्च नासिकाम् ।
नासंवृतमुखो जृम्भेत् श्वासकासौ विवर्ज्जयेत् ।
नोच्चैर्हसेत् सशब्दञ्च न मुञ्चेत् पवनं त्वधः ॥
नखान्न वादयेच्छिन्द्यान्न तृणं न महीं लिखेत् ।

| | | |
|---|---|---|
| | क्रियायोगैर्हरिं यष्ट्वा जगाम परमं पदम् ॥<br>ये पठन्ति ममाध्यायं भक्त्या नारायणाग्रतः ।<br>सर्व्वपापविनिर्म्मुक्ता अन्ते यान्ति हरेः पदम् ॥"<br>इति पाद्मे क्रियायोगसारे २ अध्यायः ॥ * ॥<br>कालिङ्ग उवाच ।<br>"जातिस्मरेण कथितो रहस्यः परमो मम ।<br>यमकिङ्करयोर्योऽभूत् संवादस्तं ब्रवीमि ते ॥<br>स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले ।<br>परिहर मधुसूदनप्रपन्नान् प्रभुरहमन्यनृणां न वैष्णवानाम् ॥"<br>इति श्रीविष्णुपुराणे तृतीयेऽंशे यमगीतं ७ अध्यायः ॥ * ॥ अपि च । | |

न श्मश्रु भक्षयेल्लोष्ट्रान्न गृह्णीयाद्विचक्षणः ॥
ज्योतींष्यमेध्याशस्तानि नाभिवीक्षेत च प्रभो ।
न हुङ्कुर्य्याच्छवं चैव शवगन्धो हि सोमजः ॥
चतुष्पथं चैत्यतरुं श्मशानोपवनानि च ।
दुष्टस्त्रीसन्निकर्षञ्च वर्ज्जयेन्निशि सर्व्वदा ॥
पूज्यदेवद्विजज्योतिश्छायां नातिक्रमेद्बुधः ।
नैकः शून्याटवीं गच्छेन्न च शून्यं गृहं व्रजेत् ॥
केशास्थिकण्ठकामेध्यबलिभस्मतुषांस्तथा।
स्नानार्द्रां धरणीं चैव दूरतः परिवर्ज्जयेत् ॥
नानार्य्यानाश्रयेत् कांश्चिन्न जिह्मं रोचयेद्बुधः ।
उपसर्पेन्न च व्यालांश्चिरं तिष्ठेन्न चोत्थितः ॥
यथेष्टभोजकांश्चैव तथा देवपराङ्मुखान् ।
वर्णाश्रमक्रियातीतान् दूरतः परिवर्ज्जयेत् ॥
अतीवजागरस्वप्नौ तद्वत् स्थानासने बुधः ।
न सेवेत तथा शय्यां व्यायामञ्च नरेश्वर ॥
दंष्ट्रिणः शृङ्गिणश्चैव प्राज्ञो दूरेण वर्ज्जयेत् ।
अवश्यायञ्च राजेन्द्र पुरोवातातपौ तथा ॥
न स्नायान्न स्वपेन्नग्नो न चैवोपस्पृशेद्बुधः ।
मुक्तकच्छश्च नाचामेद्देवाद्यर्च्चाञ्च वर्ज्जयेत् ॥
नैकवस्त्रः प्रवर्त्तेत द्विजवाचनके जपे ॥" * ॥
किञ्च ।
"न च निर्धूनयेत् केशान्नाचामेन्नैव चोत्थितः ।
पादेन नाक्रमेत् पादं न पूज्याभिमुखं नयेत् ॥
अपसव्यं नैव गच्छेद्देवागारचतुष्पथान्।
मङ्गल्यपूज्यांश्च तथा विपरीतान्न दक्षिणाम् ॥
सोमार्काग्न्यम्बुवायूनां पूज्यानाञ्च न संमुखम् ।
कुर्य्यात् ष्ठीवनविण्मूत्रसमुत्सर्गञ्च पण्डितः ॥
तिष्ठन्न मूत्रयेत्तद्वत् पन्थानं नावमूत्रयेत् ।
श्लेष्मविण्मूत्ररक्तानि सर्व्वदैव न लङ्घयेत् ॥
श्लेष्मष्ठीवनकोत्सर्गो नान्नकाले प्रशस्यते ।
वलिमङ्गलजप्यादौ न होमे न महाजने ॥
योषितो नावमन्येत न चासां विश्वसेद्बुधः ।
न चैवेर्षी भवेत्तासु नाधिकुर्य्यात् कदाचन ॥
मङ्गल्यपुष्परत्नाज्यपूज्याननभिवाद्यच ।
न निष्क्रामेत् गृहात् प्राज्ञः सदाचारपरो नरः ॥
आकालगर्ज्जितादौ तु पर्व्वस्वशौचकादिषु ।
अनध्यायं बुधः कुर्य्यादुपरागादिके तथा ॥
वर्षातपादिके च्छत्री दण्डी रात्र्यटवीषु च ।
शरीरत्राणकामो वै सोपानत्कः सदा व्रजेत् ॥

भुञ्जानञ्च शयानञ्च अभ्यक्तशिरसन्तथा ।
भिक्षान्नधारिणं चैव रमन्तं जलमध्यगम् ॥
कृताभिवादनो यो न कुर्य्यात् प्रत्यभिवादनम्।
नाभिवाद्यः स विज्ञेयो यथा शूद्रस्तथैव सः ॥"
*
मार्कण्डेयपुराणे मदालसालर्कसंवादे ।
"असत्प्रलापमनृतं वाक्पारुष्यञ्च वर्ज्जयेत् ।
असच्छास्त्रमसद्वादमसत्सेवाञ्च पुत्रक ॥
केशप्रसाधनादर्शदर्शनं दन्तधावनम् ।
पूर्व्वाह्ण एव कार्य्याणि देवतानाञ्च तर्पणम् ॥
उदक्यादर्शनं स्पर्शं वर्जेत् सभाषणं तथा ।
न चाभीक्ष्णं शिरःस्नानं कुर्य्यान्निष्कारणं नरः ॥
शिरःस्नातश्च तैलेन नाङ्गं किञ्चिदपि स्पृशेत् ।
पन्था देयो ब्राह्मणानां राज्ञो दुःखातुरस्य च ॥
विद्याधिकस्य गुर्व्विण्या भारार्त्तस्य महीयसः ।
मूकान्धवधिराणाञ्च मत्तस्योन्मत्तकस्य च ॥
पुश्चल्याः कृतवैरस्य बालस्य पतितस्य च ।
उपानद्वस्त्रमाल्यानि धृतान्यन्यैर्न धारयेत् ॥
उपवीतमलङ्कारं करकञ्चैव वर्जयेत् ।
न क्षिप्तबाहुजङ्घश्च प्राज्ञस्तिष्ठेत् कदाचन ॥
न चापि विक्षिपेत् पादौ वाससी न च धूनयेत् ।
मूर्खोन्मत्तव्यसनिनो विरूपान् मायिनस्तथा ॥
न्यूनाङ्गानधमांश्चैव नोपहासेन्न दूषयेत् ।
परस्य दण्डं नोद्यच्छेत् शिक्षार्थं पुत्त्रशिष्ययोः ॥
नानुलेपनमादद्यादस्नातः स्नातकी क्वचित् ।
न चापि रक्तवासाः स्याच्चित्रवासधरोऽपि वा ॥
क्षुरकर्म्माणि चान्ते च स्त्रीसम्भोगे च पुत्रक ।
स्नायीत तैलवान् प्राज्ञः कटभूमिमुपेत्य च ।
युगपज्जलमग्निञ्च विभृयान्न विचक्षणः ॥"
कटमूमिं श्मशानम् ।
"नाचक्षीत धयन्तीं गां जलं नाञ्जलिना पिबेत् ॥"
धयन्तीं पिबन्तीम् ।
"शौचकालेषु सर्व्वेषु गुरुष्वल्पेषु वा पुनः ।
न विलम्बेत शौचार्थं न मुखेनानलं धमेत् ॥
विप्रुषो मक्षिकाद्याश्च दुष्टसङ्गाददोषिणः ।
अजाश्वौ मुखतो मेध्यौ न गोर्व्वत्सस्य चाननम् ॥
मातुः प्रस्नवने मेध्यं शकुनिः फलपातने ।
उदक्याशौचिलग्नांश्च सूतिकान्त्यावसायिनः ।

"उपासते न ये पूर्ब्बां द्विजाः सन्ध्यां न पश्चिमाम् ।
सर्व्वांस्तान् धार्म्मिको राजा शूद्रकर्म्मणि योजयेत् ॥
दूरादावसथान्मूत्रं दूरात् पादावसेचनम् ।
उच्छिष्टोत्सर्ज्जनं भूप सदा कार्य्यं हितैषिणा ॥
उच्छिष्टो न स्पृशेच्छीर्षं सर्व्वे प्राणास्तदाश्रयाः ।
केशग्रहान् प्रहारांश्च शिरस्येतानि वर्ज्जयेत् ॥
न पाणिभ्यामुभाभ्यान्तु कण्डूयाज्जातु वै शिरः ॥"
किञ्च ।
"सुवासिनीं गुर्व्विणीञ्च वृद्धं बालातुरौ तथा ।
भोजयेत् संस्कृतान्नेन प्रथमं चरमं गृही ॥
अघं स केवलं भुङ्क्ते बद्धे गोवाहनादिके ।
यो भुङ्क्ते पाण्डवश्रेष्ठ प्रेक्षतामप्रदाय च ॥
वर्ज्जयेद्दधि शक्तुञ्च रात्रौ धानाश्च वासरे ॥"
किञ्च ।
"स्रजश्च नावकर्षेत न वहिर्धारयीत च ।
गृहे पारावता धन्याः शुकाश्च सहकारिकाः ॥"
कौर्म्मे व्यासगीतायाम् ।
"तृणं वा यदि वा शाकं मूलं वा जलमेव वा ।
परस्यापहरन् जन्तुर्नरकं प्रतिपद्यते ॥
न राज्ञः प्रतिगृह्णीयान्न शूद्रात् पतितादपि ।

नोर्द्ध्वं न तिर्य्यक् दूरं वा निरीक्षन् पर्य्यटेद्बुधः ।
युगमात्रं महीपृष्ठं नरो गच्छेद्विलोकयन् ॥" * ॥
किञ्च ।
"प्रियमुक्तं हितं नैतदिति मत्वा न तद्वदेत् ।
श्रेयस्तद्रहितं वाच्यं यद्यप्यत्यन्तमप्रियम् ॥
प्राणिनामुपकाराय यदेवेह परत्र च ।
कर्म्मणा मनसा वाचा तदेव मतिमान्
भजेत् ॥" * ॥
बृहन्नारदीये सदाचारप्रसङ्गे ।
"असावहमिति ब्रूयाद्द्विजो वै ह्यभिवादने ।
श्राद्धं व्रतं जपं दानं देवताभ्यर्च्चनं तथा ॥
यज्ञञ्च तर्पणञ्चैव कुर्व्वन्तं नाभिवादयेत् ।
तथा स्नानं प्रकुर्व्वन्तं धावन्तमशुचिन्तथा ॥

स्पृष्ट्वा स्नायीत शौचार्थं तथैव मृतहारिणः ॥
नारं स्पृष्ट्वास्थि सस्नेहं स्नातः शुध्यति मानवः
।
आचम्यैव तु निःस्नेहं गामालभ्यार्कमीक्ष्य वा ॥
न चालपेत् जनं द्विष्टं वीरहीनां तथा स्त्रियम् ॥
देवतातिथिसच्छास्त्रयज्ञसिद्धादिनिन्दकै ।
कृत्वा तु स्पर्शनालापं शुद्ध्येदर्कावलोकनात् ॥
अवलोक्य तथोदक्यामन्त्यजान् पतितं शठम् ।
विधर्म्मिसूतिकाषण्डविवस्त्रान्त्यावसायिनः ॥
मृतनिर्यातकाश्चैव परदाररताश्च ये ।
एतदेव हि कर्त्तव्यं प्राज्ञैः शोधनमात्मनः ॥" * ॥
किञ्च ।
"यच्चापि कुर्व्वतो नात्मा जुगुप्सामेति पुत्रक ।
तत् कर्त्तव्यमशङ्केन यन्न गोप्यं महाजने ॥" * ॥
भविष्योत्तरे श्रीकृष्णयुधिष्ठिरसंवादे ।

नान्यस्माद्याचकत्वञ्च
निन्दिताद्वर्ज्जयेद्बुधः ॥
नित्यं याचनको न स्यात्
पुनस्तत्रैव याचयेत् ।
प्राणानपहरत्येष याचकस्तस्य
दुर्म्मतिः ॥
न देवद्रव्यहारी स्याद्विशेषेण
द्विजोत्तमाः ।
ब्रह्मस्वञ्च नापहरेदापद्यपि
कदाचन ॥
न विषं विषमित्याहुर्ब्रह्मस्वं
विषमुच्यते ।
देवस्वं वापि यत्नेन सदा
परिहरेत्ततः ॥
न धर्म्मस्यापदेशेन पापं कृत्वा
व्रतं चरेत् ।
व्रतेन पापं प्रच्छाद्य कुर्व्वन्
स्त्रीशूद्रदम्भनम् ॥
प्रेत्येह चेदृशो विप्रो गर्ह्यत
ब्रह्मवादिभिः ।
देवद्रोहाद्गुरुद्रोहः
कोटिकोटिगुणाधिकः ॥
ज्ञानापवादो नास्तिक्यं तस्मात्
कोटिगुणा-
धिकम् ॥" * ॥
किञ्च ।
"हिमवद्विन्ध्ययोर्मध्ये
पूर्व्वपश्चिमयोः शुभम् ।
मुक्त्रा समुद्रयोर्द्देशं नान्यत्र
निवसेद्द्विजः ॥
कृष्णो वा यत्र चरति मृगो नित्यं
स्वभावतः ।
पुण्याश्च विश्रुता नद्यस्तत्र वा
निवसेद्द्विजः ॥
अर्द्धक्रोशान्नदीकूलं वर्ज्जयित्वा
द्विजोत्तमाः ॥"
किञ्च ।
"अग्निना भस्मना चैव सलिलेन
विशेषतः ।
द्वारेण स्तम्भमार्गेण षड्भिः
पङ्क्तिर्व्विभिद्यते ॥

|  |  |  |
|---|---|---|
|  |  | परक्षेत्रे चरन्तीं गां न चाचक्षीत कस्यचित् ।<br>न सूर्य्यपरिवेशं वा नेन्द्रचापं न चाग्निकम् ॥<br>परस्मै कथयेद्विद्वान् शशिनं वा कथञ्चन ।<br>तिथिं पक्षस्य न ब्रू यान्नक्षत्राणि विनिर्द्दिशेत् ॥<br>न देवगुरुविप्राणां दीयमानन्तु वारयेत् ।<br>निन्दयेद्यो गुरून् देवान् वेदं वा सोपबृंहणम् ॥<br>कल्पकोटिशतं साग्रं रौरवे पच्यते नरः ।<br>तूष्णीमासीत निन्दायां न ब्रूयात् किञ्चिदुत्तरम् ॥ |

कर्णौ पिधाय गन्तव्यं न चैनमवलोकयेत् ।
वर्ज्जयेद् वै रहस्यञ्च परेषां गूहयेद्बुधः ॥
विवादं स्वजनैः सार्द्धं न कुर्य्याद्वै कदाचन ।
न पापं पापिनां ब्रूयादपापं वा द्विजोत्तमाः ॥
नेक्षेतोद्यन्तमादित्यं शशिनं वानिमित्ततः ।
नास्तं यान्तं न वारिस्थं नोपसृष्टं न मध्यगम् ॥
तिरोहितं वाससा वा न दशान्तरगामिनम् ।
नग्नां स्त्रियं पुमांसं वा पुरीषं मूत्रमेव वा ॥
पतितव्यङ्गचाण्डालानुच्छिष्टान्नावलोकयेत् ।
न युक्तबन्धनाङ्गां वा नोन्मत्तं मत्तमेव वा ॥
स्पृशेन्न भोजने पत्नीं नैनामीक्षेत मेहतीम् ।
क्षुवन्तीं जम्भमाणां वा नासनस्थां यथासुखम्
॥
नोदके चात्मनो रूपं न कुलं श्वभ्रमेव वा ।
न शूद्राय मतिं दद्यात् कृषरं पायसं दधि ॥
नोच्छिष्टं वा घृतमधु न च कृष्णाजिनं हविः ।
न कुर्य्यात् कस्यचित् पीडां मुतं शिष्यञ्च ताड-
येत् ॥
नात्मानमवमन्येत दैन्यं यत्नेन वर्ज्जयेत् ।
न च शिष्यान्न सत् कुर्य्यान्नात्मानं शंसयेद्बुधः
॥
न नद्याञ्च नदीं ब्रूयात् पर्व्वतेषु न पर्व्वतम् ।
आवसेत्तेन नैवापि यस्त्यजेत् सहवासिनम् ॥
शिरोऽभ्यङ्गावशिष्टेन तैलेनाङ्गं न लेपयेत् ।
रोमाणि च रहस्यानि स्वानि खानि च न
स्पृशेत् ॥
न पानिपादवाङ्नेत्रचापलानि समाश्रयेत् ।
नाभिहन्याज्जलं पद्भ्यां पाणिना न कदाचन
॥
न घातयेदिष्टिकाभिः फलानि न फलेन च ।
न म्लेच्छभाषणं शिक्षेन्न कर्षेश्च पदासनम् ॥
नोत्सङ्गे भक्षयेद्भक्ष्यान् गाञ्च संवेशयेन्न हि ।
नाक्षैः क्रीडेन्न धावेत स्त्रीभिर्व्वादं न चाचरेत् ॥
न दन्तैर्नखलोमानि छिन्द्यात् सुप्तं न वोधयेत्
।
न वालातपमासेवेत् प्रेतधूमं विवर्ज्जयेत् ॥
नैकः सुप्यात् शून्यगृहे स्वयं नोपानहौ वहेत् ।
नाकारणाद्वा निष्ठीवेन्न बाहुभ्यां नदीं तरेत् ॥
न पादक्षालनं कुर्य्यात् पादेनैव कदाचन ।
कारयित्वा स्वकर्म्माणि कारून्
विद्वान् न
वञ्चयेत् ।
वहिर्गन्धञ्च कुद्वारप्रवेशञ्च
विवर्ज्जयेत् ॥
नैकश्चरेत् सभां विप्रः समवायञ्च
वर्ज्जयेत् ।
न बीजयेद्वा वस्त्रेण न देवायतने
स्वपेत् ।
नाग्निगोब्राह्मणादीनामन्तरेण व्रजेत्
क्वचित् ।
नाक्रामेत् कामतश्छायां ब्राह्मणानां
गवामपि ॥
स्वान्तु नाक्रामयेच्छायां
पतिताद्यैर्नरोगिभिः ।
वर्जयेन्मार्जनीरेणुं
वस्त्रस्नानघटोदकम् ॥
नाश्नीयात् पयसा तक्रं न
बीजान्युपवीजयेत् ॥
विवत्सायाश्च गोक्षीरमौष्ट्रं वा
निर्द्दशस्य च ।
आविकं सन्धिनीक्षीरमपेयं
मनुरब्रवीत् ॥
हन्तकारमथाग्र्यं वा भिक्षां वा
शक्तितो द्विजः ।
दद्यादतिथये नित्यं बुध्येत
परमेश्वरम् ॥
भिक्षामाहुर्ग्रासमात्रमग्र्यं
तस्माच्चतुर्गुणम् ।
पुष्कलं हन्तकारन्तु
तच्चतुर्गुणमिष्यते ॥”
मार्कण्डेये ।
“भोजनं हन्तकारं वा अग्र्यं
भिक्षामथापि वा ।
अदत्त्वा तु न भोक्तव्यं यथा
विभवमात्मनः ॥” *
काशीखण्डे ।
“नैवोत्कटासनेऽश्नीयान्नाग्नौ
वस्त्वशुचि क्षिपेत् ॥
यदत्र लिखितं किञ्चित्तत् क्षन्तव्यं महात्मभिः
॥
आचाराश्चेदृशाः सन्ति परेऽपि बहुलाः सताम्
।
ते लोकशास्त्रतो ज्ञेया अपेक्ष्या यदि वैष्णवैः ॥
नित्यत्वमेषां माहात्म्यमप्यत्र लिखितात् पुरा ।
सदाचारस्यनित्यत्वान्माहात्म्याच्च
सुसिद्ध्यति ॥”
इति श्रीहरिभक्तिविलासे तित्यकृत्यसमापनो
नाम ११ विलासः ॥

**वैष्णवी**, स्त्री, (विष्णोरियम् । विष्णु + अण् ।
स्त्रियां ङीप् ।) विष्णुशक्तिः । यथा, --
“एषा त्रिशक्तिरुद्दिष्टा नयसिद्धान्तगामिनी ।
एषा श्वेता परा सृष्टिः सात्त्विकी ब्रह्मसंहिता ॥
एषैव कृष्णा तमसि रौद्री देवी प्रकीर्त्तिता ॥
अष्टादश यथा कोट्यो वैष्णव्या भेद उच्यते ।
या विष्णो राजसी शक्तिः पालिनी चैव
वैष्णवी ॥”
इति वाराहे त्रिशक्तिमाहात्म्यनामाध्यायः ॥
अपि च ।
“शङ्खचक्रगदाधारी विष्णुमाता तथारिहा ।
विष्णुरूपाथवा देवी वैष्णवी तेन गीयते ॥”
इति देवीपुराणे ४५ अध्यायः ॥
अपरञ्च ।
“विष्णुभक्ता विष्णुरूपा विष्णोः
शक्तिस्वरूपिणी ।
सृष्टौ च विष्णुना सृष्टा वैष्णवी तेन कीर्त्तिता ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५४ अध्यायः ॥
दुर्गा । इति शब्दरत्नावली ॥ गङ्गा । यथा,
पद्मपुराणम् ।
“विष्णोः पादप्रसूतासि वैष्णवी विष्णुपूजिता ।
पाहि नस्त्वेनसस्तस्मादाजन्ममरणान्तिकात्
॥”
इत्यादि आह्निकाचारतत्त्वे स्नानार्थगङ्गावाहन-
मन्त्रः ॥ अन्यच्च ।
“विष्णुपादप्रसूतासि वैष्णवीनामधारिणी ।
सर्व्वत्र रक्ष मां नित्यं गङ्गा त्रिपथगामिनी ॥”
इति गङ्गाकवचम् ॥
अपराजिता । इति शब्दचन्द्रिका ॥ शतावरी ।

नाग्नौ प्रतापयेत् पादौ न कांस्ये धावयेद्बुधः ॥
नाभिप्रतारयेद्देवान् ब्राह्मणान् गामथापि वा ।
न स्पृशेत् पाणिनोच्छिष्टो विप्रगोब्राह्मणा-
नलान् ॥
न चैवान्नं पदा वापि न देवप्रतिमां स्पृशेत् ।
नोत्तरेदनुपस्पृश्य स्रवन्तीं नो व्यतिक्रमेत् ॥
चैत्यं वृक्षं नैव छिन्द्यान्नाप्सु ष्ठीवनमुत्सृजेत् ।
न चाग्निं लङ्गयेद्धीमान् नोपदध्यादधः क्वचित्
॥
न चैवं पादतः कुर्य्यात् तिलबद्धं निशि त्यजेत्
।
न कूपमवरोहेत नाचक्षीताशुचिः क्वचित् ॥
अग्नो न प्रक्षिपेदग्निं नाद्भिः प्रशमयेत्तथा ।
सुहृन्मरणमार्त्तिं वा न स्वयं श्रावयेत् परान् ॥
अपण्यमथ पण्यं वा विक्रयं न प्रयोजयेत् ।
पुण्यस्थानोदकस्थाने सीमान्तं वा कृषेन्न तु ॥
न भिन्द्यात् पूर्ब्बसमयं सत्योपेतं कदाचन ।
परस्परं पशून् व्यालान् पक्षिणो न च
योधयेत् ॥

श्राद्धं कृत्वा परश्राद्धे योऽश्नीयात्
ज्ञानवर्जितः ।
दातुः श्राद्धफलं नास्ति भोक्ता
किल्विषभुग्-
भवेत् ॥
नोत्पाटयेल्लोमनखं दशनेन
कदाचन ।
करजैः करजच्छेदं करेणैव
विवर्ज्जयेत् ॥
अपद्वारे न गन्तव्यं
स्ववेश्मपरवेश्मनोः ।
उत्कोचद्यूतदेवार्थद्रव्यं दूरात्
परित्यजेत् ॥
निष्ठीवनञ्च श्लेष्माणं गृहात् दूरे
विनिःक्षिपेत् ॥
उद्धृत्य पञ्चमृत्पिण्डान् स्नायात्
परजलाशये ।
अनुद्धृत्य च तत्कर्त्तुरेनसः
स्यात्तुरीयभाक् ॥”
ब्राह्मे ।
“यस्तु पाणितले भुङ्क्ते यस्तु
फत्कारसंयुतम् ।
प्रसृताङ्गुलिभिर्यस्तु तस्य
गोमांसवच्च तत् ॥”
अत्रिस्मृतौ ।
“न्यूनाधिकस्तनी या
गौर्याथवाभक्षचारिणी।
तयोर्दुग्धं न होतव्यं न पातव्यं
कदाचन ॥
अजा गावो महिष्यश्च यामेध्यमपि
भक्षयेत् ।
हव्ये कव्ये च तद्दुग्धं गोमयञ्च
विवर्ज्जयेत् ॥
अङ्गुल्या दन्तकाष्ठञ्च
प्रत्यक्षलवणन्तथा।
मृत्तिकाप्राशनञ्चैव तुल्यं
गोमांसभक्षणैः ॥”
अत्रापवादो मनुस्मृतौ ।
“सामुद्रं सैन्धवञ्चैव लवणे
परमाद्भुते ।

इति राजनिर्घण्टः ॥ तुलसी । इति शब्द-
माला ॥

**वैसारिणः**, पुं, (विशेषेण सरतीति विसारी मत्स्यः
स एव । “विसारिणो मत्स्ये ।” ५ । ४ । १६ ।
इति अण् ।) मत्स्यः । इत्यमरः ॥

**वैसूचनं**, क्ली, (विशेषेण सूचयतीति विसूचनम् ।
तदेव । स्वार्थे अण् ।) नाट्ये पुरुषस्य स्त्रीवेश-
धारणम् । इति केचित् ॥

**वैहार्य्यः**, त्रि, (विशेषेण ह्रीयते इति । वि + हृ +
ण्यत् । विहार्य्य एव । स्वार्थे अण् ।) परि-
हासेन लालनीयः । श्यालसम्बन्ध्यादि । इत्य-
र्ज्जुनमिश्रः ॥ यथा, --
“यथा बालेषु नारीषु वैहार्य्येषु तथैव च ।
सङ्गरेषु निपातेषु तथापद्व्यसनेषु च ।
अनृतं नोक्तपूर्व्वं मे तेन सत्येन खं व्रज ॥”
इति महाभारते उद्योगपर्व्व ॥

**वैहासिकः**, पुं, (विहास + ठक् ।) विहासं
करोति यः । भण्ड इति ख्यातः । तत्पर्य्यायः ।
वासन्तिकः २ केलिकिलः ३ विदूषकः ४
प्रहासी ५ प्रीतिदः ६ । इति हेमचन्द्रः ॥
(यथा, नैषधे । १९ । ६४ ।
“दूरारूढस्तिमिरजलधेर्ब्बाडवश्चित्रभानु-
र्भानुस्ताम्यद्वनरुहवनीकेलिवैहासिकोऽयम्
॥”)

| | प्रत्यक्षे अपि ते ग्राह्ये<br>निषेधस्त्वन्यगोचरः ॥”<br>अत्रिस्मृतौ ।<br>“दिवा कपित्थच्छाया च निशायां<br>दधिभो-<br>जनम् ।<br>कार्पासं दन्तकाष्ठञ्च शक्रादपि<br>हरेत् श्रियम् ॥”<br>विष्णुस्मृतौ च ।<br>“कपिलायाः पयः पीत्वा शूद्रस्तु<br>नरकं व्रजेत् ।<br>होमशेषं पिबेद्विप्रो विप्रः<br>स्यादन्यथा पशुः ॥<br>परिहर्त्तुं पुनर्लेखं<br>तत्तच्छास्त्रोक्तमन्यथा। | |
|---|---|---|

**वोटा**, स्त्री, दासी । यथा, --

"पोटा वोटा च चेटी च दासी च कुटहारिका ॥"
इति हेमचन्द्रः ॥

**वोडः**, पुं, गुवाकः । इति शब्दरत्नावली ॥

जटाधरे भूरिप्रयोगे च झोड इति पाठः ॥

**वोड्रः**, पुं, गोनससर्पः । वोडा इति भाषा । यथा, ।

गोनासो मण्डली वोड्रः । इति भरतधृत-विक्रमादित्यः ॥ मत्स्यविशेषः । इति मेदिनी ॥

**वोड्री**, स्त्री, पणचतुर्थांशः । इति मेदिनी ॥ बुडि

इति भाषा ॥

**वोढव्यः**, त्रि, वहधातोस्तव्यप्रत्ययेन निष्पन्नमेतत् ।

वहनीयः । वाह्यः । इति मुग्धबोधव्याकरणम् ॥
(यथा, हरिवंशे । ७५ । ८८ ।
"वोढव्या पुङ्गवेनेव धूःसदा रणमूर्द्धनि ॥"
परिणेतव्यः । यथा, महाभारते । १२ । ४४ । ४५ ।
"न चैतेभ्यः प्रदातव्या न वोढव्या तथाविधा ॥")

**वोढा**, [ऋ] पुं, (वहतीति । वह + तृच् ।

"सहिवहोरोदवर्णस्य ।" ६ । ३ । ११२ । इति
अकारस्यौकारः ।) भारिकः । (यथा, भाग-
वते । ५ । १० । २ ।
"विषमगतां स्वशिविकां रहूगण उपधार्य्य पुरुषानधिवहत आह हे वोढारः साध्वति-क्रामत ॥") मूढः । परिणेता । इति शब्द-रत्नावली ॥ (यथा, मनुः । ८ । २०४ ।
"अन्यां चेद्दर्शयित्वान्या वोढुः कन्या प्रदीयते ।
उभे ते एकशुल्केन वहेदित्यब्रवीन्मनुः ॥")
सूतः । इति मेदिनी ॥ अनड्वान् । ऋषभः ।

तत्पर्य्यायः । सहस्रदंष्ट्री २ पाठीनः ३ वदा-
लकः ४ । इति शब्दरत्नावली ॥

**वोरकः**, पुं, लेखकः । इति त्रिकाण्डशेषः ॥

**वोरटः**, पुं, कुन्दपुष्पम् । इति त्रिकाण्डशेषः ॥

**वोरपट्टी**, स्त्री, मन्दुरा । इति शब्दमाला ॥ मादुर

इति भाषा ॥

**वोरवः**, पुं, धान्यविशेषः । वोरो इति भाषा ।

अस्य गुणाः ।
"वोरवस्तु बुधैः प्रोक्तस्त्रिदोषस्य प्रकोपणः ।
मधुरश्चाम्लपाकश्च व्रीहिः पित्तकरो गुरुः ॥"
इति राजवल्लभः ॥

**वोरुखानः**, पुं, पाटलवर्णाश्वः । इति हेमचन्द्रः ॥

**वोलं**, क्ली, (वोलयति प्रायशो निमग्नं भवतीति ।

वुल + अत्त । यद्वा, वा गतौ पिञ्जादित्वात् ऊलच् ।)
स्वनामख्यातबणिग्द्रव्यम्। तत्पर्य्यायः । रक्ता-
पहम् २ मुण्डम् ३ सुरसम् ४ पिण्डकम् ५ विषम् ६
निर्ल्लोहम् ७ वर्व्वरम् ८ पिण्डम् ९ सौरभम् १०
रक्तगन्धकम् ११ रसगन्धम् १२ महागन्धम् १३
विश्वम् १४ शुभगन्धम् १५ विश्वगन्धम् १६
गन्धरसम् १७ व्रणारिः १८ । अस्य गुणाः ।
"वोलञ्च कटु तिक्तोष्णं कषायं रक्तदोषनुत् ।
कफपित्तामयान् हन्ति प्रदरादिरुजापहम् ॥"
इति राजनिर्घण्टः ॥
तत्पर्य्यायगुणाः ।

मरः ॥ एते पञ्च शब्दा देवहविर्द्दाने वह्नि-मुखाहुतौ वर्त्तन्ते । देवाय हविषो दानं देव-हविर्द्दानम् । तत्र देवा इन्द्रादयः अत्र पि तरो देवता इति स्मृतेस्तेऽपि देवा हविर्दान इत्यनेन
एते मन्त्रा इति सूचितम् । अमन्त्रत्वे स्वाहयेव
हविर्भुजमिति रघुः । स्वाहाव्ययं मन्त्रभेदे
स्त्रियां स्वाहाग्नियोषितीति कोषान्तरम् । स्वाहा
दन्त्यादि । श्रौषट् तालव्यादि मूर्द्धन्यमध्यम् ।
वौषट् वषट्द्वयं मूर्द्धन्यमध्यम् । स्वधा दन्त्यादि ।
इन्द्राय स्वाहा । इत्यादिप्रयोगः । इति भरतः ॥

**व्यंशकः**, पुं, (विगतोऽशो विभागो यस्य ।

छेदादिना प्रायो विभागानर्हत्वादस्य तथा-त्वम् ।) पर्व्वतः । इति त्रिकाण्डशेषः ॥

**व्यंसकः**, पुं, (वि + + अंस + ण्वुल् ।) धूर्त्तः । इति

हेमचन्द्रः ॥

**व्यंसितः**, त्रि, (वि + अंस + क्तः ।) प्रतारितः ।

इति त्रिकाण्डशेषः ॥

**व्यक्तः**, त्रि, (वि + अञ्जू व्याप्तौ + क्तः ।) प्राज्ञः ।

इत्यमरः ॥ स्फुटः । इति मेदिनी ॥ (यथा, साहित्यदर्पणे । ३ । १ ।
"विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा ।
रसतामेति रत्यादिः स्थायी भावः सचेतसाम् ॥")
पुं, विष्णुः । यथा, --
"व्यक्तो वायुरधोक्षजः ।"
इति तस्य सहस्रनामस्तोत्रम् ॥

**व्यक्तदृष्टार्थः**, पुं, (व्यक्तं स्फुटं यथा स्यात् तथा

दृष्टोऽर्थो येन ।) साक्षी । तत्पर्य्यायः । प्रत्यक्षी
२ । इति त्रिकाण्डशेषः ॥

इति राजनिर्घण्टः ॥ (यथा, महाभारते । ११ । २६ । ५ ।
"तपोऽर्थीयं ब्राह्मणी धत्त गर्भं
गौर्व्वोढारं धावितारं तुरङ्गी ॥"
वहनकर्त्तरि, त्रि । यथा, कुमारे । १ । १५ ।
"भागीरथीनिर्झरशीकराणां
वोढा मुहुः कम्पितदेवदारुः ॥")

**वोढुः**, पुं, मुनिविशेषः । यथा, --
"सनकश्च सनन्दश्च तृतीयश्च सनातनः ।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा ।
सर्व्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा ॥"
इत्याह्निकाचारतत्त्वम् ॥

**वोण्टः**, पुं, वृन्तम् । इति शब्दरत्नावली ॥ वोँटा इति भाषा ॥ किन्तु लिपिकरप्रमादपाठोऽयम् । यथा मूलग्रन्थे ।
"तथा वोँट इति ख्याते वृन्तं
प्रसवबन्धनम् ॥"

**वोदः**, त्रि, आर्द्रः । इति त्रिकाण्डशेषः ॥

**वोदालः**, पुं, (वोदः आर्द्रः सन् अलतीति । अल + अच् ।) मत्स्यविशेषः । वोयालि इति भाषा ॥

"वोलं गन्धरसः प्राणपिण्डगोपरसाः समाः ।
वोलं रक्तहरं शीतं मेध्यं दीपनपाचनम् ॥
मधुरं कटु तिक्तञ्च ग्रहं स्वेदत्रिदोषजित् ।
ज्वरापस्मारकुष्ठघ्नं गर्भाशयविशुद्धकृत् ॥"
इति भावप्रकाशः ॥

**वोलः**, पुं, (वातीति । वा + ऊलच् ।) रसगन्धः । इत्यमरः ॥

**वोलकः**, पुं, लेखकः । इति शब्दरत्नावली ॥

**वोल्लाहः**, पुं, अश्वविशेषः । यथा, --
"वोल्लाहस्त्वयमेव स्यात्
पाण्डुकेशरबालधिः ।"
इति हेमचन्द्रः ॥

**वोहित्थं**, क्ली, यानपात्रम् । इति हेमचन्द्रः ॥ जाहाज इति भाषा ॥

**वौ(बौ)द्धं**, क्ली, (बुद्धेन कृतम् । वुद्ध + अण् ।) वुद्धकृतनिरीश्वरशास्त्रम् । तत् सर्व्वैः शास्त्रकारैः खण्डितं अतएवाग्राह्यम् । जिनधर्म्मः । यथा,
"ततो बृहस्पतिः शक्रमकरोद्बलदर्प्पितम् ।
ग्रहशान्तिविधानेन पौष्टिकेन च कर्म्मणा ॥
गत्वाथ मोहयामास राजपुत्त्रान् बृहस्पतिः ।
जिनधर्म्मं समास्थाय वेदवाह्यं स वेदवित् ॥
वेदत्रयीपरिभ्रष्टांश्चकार धिषणाधिपः ।
वेदवाह्यान् परिज्ञाय हेतुवादसमन्वितान् ।
जघान शक्रो वज्रेण सर्व्वधर्म्मबहिष्कृतान् ॥"
इति मात्स्ये सोमवंशानुकीर्त्तनं नाम २४ अः ॥
बुद्धसम्बन्धिनि, त्रि ॥

**वौषट्**, व्य, (उह्यतेऽनेन हविरिति । वह + बाहुलकात् डौषट् ।) देवहविर्द्दानमन्त्रः । तत्पर्य्यायः ।

**व्यक्तरूपः**, पुं, (व्यक्तं रूपं यस्य ।) विष्णुः । यथा,
"अदृश्यो व्यक्तरूपश्च सहस्रजिदनन्तजित् ।"
इति तस्य सहस्रनामस्तोत्रम् ॥
स्पष्टरूपयुक्ते, त्रि ॥

**व्यक्तिः**, स्त्री, (व्यज्यतेऽनयेति । वि + अञ्ज + क्तिन् ।) पृथगात्मिका । इत्यमरः ॥ जनः । इति हेमचन्द्रः ॥ स्पष्टता च ॥ (यथा, रघुः । १ । १० ।
"तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः ।
हेम्नः संलक्ष्यतेऽह्यग्नौ विशुद्धिः श्यामिकापि वा ॥"
भूतमात्रम् । यथा, गीतायाम् । ८ । १८ ।
"अव्यक्ताद्व्यक्तयः सर्व्वाः
प्रभवन्त्यहरागमे ॥"
"व्यक्तयश्चराचराणि भूतानि ।" इति तट्टीकायां स्वामी ॥
न्यायशास्त्रोक्तस्तत्तत्पदार्थः । यथा, साहित्यदर्पणे । २ । २५ ।
"सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥")

**व्यग्रः**, त्रि, (विरुद्धं अगतीति । अग + ऋज्रेन्द्रेति साधुः ।) व्यासक्तः । (यथा, महानिर्व्वाणतन्त्रे । ३ । १२४ ।
"लुब्धा धनार्जने व्यग्राः सदा
चञ्चलमानसाः ॥")
आकुलः । इत्यमरः ॥ (यथा, कुमारे । ७ । २ ।
"वैवाहिकैः कौतुकसंविधानै-
र्गृहे गृहे व्यग्रपुरन्ध्रिवर्गम् ॥"

ससम्भ्रमः । इति श्रीधरस्वामी ॥
यथा, भाग-
वते । ३ । १९ । ५ ।
“तं व्यग्रचक्रं दितिजाधमेन
स्वपार्षदमुख्येन विसर्ज्जमानम्
॥”)
पुं, विष्णुः । यथा, --
“प्रग्रहो निग्रहो व्यग्रो नैकशृङ्गो
गदाग्रजः ।”
इति तस्य सहस्रनामस्तोत्रम् ॥

**व्यङ्गः**, पुं, (विकृतानि अङ्गानि यस्य ।) भेकः ।

इति मेदिनी ॥ (विकृतानि अङ्गानि
यस्मात् ।)
मुखरोगविशेषः । तस्य लक्षणं यथा,
--
“क्रोधायासप्रकुपितो वायुः पित्तेन
संयुतः ।
मुखमागम्य सहसा मण्डलं
विसृजत्यतः ।
नीरुजं तनुकं श्यावं मुखे व्यङ्गं
तमादिशेत् ॥”
इति माधवकरः ॥ * ॥
तस्य चिकित्सा ।
“वटाङ्कुरा मसूराश्च
प्रलेपाद्ब्यङ्गनाशनः ।
व्यङ्गे मञ्जिष्ठया लेपः प्रशस्तो
मधुयुक्तया ॥
अथवा लेपनं शस्तं शशस्य
रुधिरेण च ।
जातीफलस्य लेपस्तु हरेद्व्यङ्गञ्च
नीलिकाम् ॥
वटस्य पाण्डुपत्राणि मालती
रक्तचन्दनम् ।
कुष्ठं कालीयकं लोध्रं एभिर्ल्लेपं
प्रयोजयेत् ॥”
इति भावप्रकाशः ॥
(त्रि, विगतं अङ्गं यस्य ।) हीनाङ्गः ।
इति
बालव्यजनगुणः । तेजस्करत्वम् ।
मक्षिकादि-
निवारकत्वञ्च । इति राजवल्लभः ॥

**व्यञ्जकः**, पुं, (व्यनक्तीति । वि + अन्ज + ण्वुल् ।)

अभिनयः । इत्यमरः ॥ द्वे हृद्गतक्रोधादि-
भावाभिव्यञ्जके । व्यनक्तीति व्यञ्जकः ।
अन्ज
ध ञि गति म्रक्षणे णकः ।
आङ्गिकसात्त्विक-
वाचिकाहार्य्यभेदात् व्यञ्जकश्चतुर्व्विधः ।
अभि-
मुखं नीयते अर्थोऽनेन इति अभिनयः । नी
ञ
प्रापणे अन् । हस्तादिभिः
शस्त्रघातादिसूचन-
मभिनयः । घटाद्याकारसूचकं
करादिसंस्थान-
मभिनयः इत्यन्येऽपि । इति भरतः ॥
व्यञ्जनया
प्रतिपादकः । (यथा, साहित्यदर्पणे । २ ।
३१ ।
“अभिधादित्रयोपाधिवैशिष्ट्यात्त्रिविधो
मतः ।
शब्दोऽपि वाचकस्तद्वल्लक्षको व्यञ्जकस्तथा
॥”
प्रकाशके, त्रि । यथा, मनुः । २ । ६८ ।
“उत्पत्तिव्यञ्जकः पुण्यः कर्म्मयोगं निबोधत
॥”)

**व्यञ्जनं**, क्ली, (व्यज्यते म्रक्ष्यते अन्नादि संयोज्यते-

ऽनेनेति । वि + अञ्ज + ल्युट् ।)
अन्नोपकरणम् ।
तत्तु सूपशाकादि । इति राजनिर्घण्टः ॥
तत्प-
र्य्यायः । तेमनम् २ निष्ठानम् ३ । इत्यमरः
॥
तेमः ४ । इति शब्दरत्नावली ॥ (यथा,
ऋग्वेदे ।
८ । ६७ । २ ।
“अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते ।
एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साभिधाश्रया ॥”
आदिशब्दाद्विप्रयोगादयः । उक्तं हि ।
“संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥”
इति ॥
सशङ्खचक्रो हरिरित्यत्र शङ्खचक्रसंयोगेन हरि-
शब्दो विष्णुमेवाभिधत्ते । अशङ्खचक्रो हरिरिति
तद्वियोगेन तमेव । भीमार्ज्जुनाविति अर्ज्जुनः
पार्थः । कर्णार्ज्जुनाविति कर्णः सूतपुत्त्रः ।
स्थाणुं
वन्दे भवच्छिदे इति स्थाणुः शिवः । सर्व्वं
जानाति देव इति देवो भवान् । कुपितो मकर-
ध्वजः इति मकरध्वजः कामः । देवः पुरारि-
रिति पुरारिः शिवः । मधुना मत्तः पिक इति
मधुर्वसन्तः । पातु वो दयितामुखमिति मुखं
सांमुख्यम् । विभाति गगने चन्द्रः इति चन्द्रः
शशी । निशि चित्रभानुरिति चित्रभानुर्वह्निः ।
भाति रथाङ्गमिति नपुंसकव्यक्त्या रथाङ्गं चक्रम्
।
स्वरस्तु वेद एव विशेषप्रतीतिकृन्न काव्य इति
तस्य विषये नोदाहृतम् । इदञ्च केऽप्यसहमाना
आहुः स्वरोऽपि काक्कादिरूपः काव्ये विशेष-
प्रतीतिकृद्देव । उदात्तादिरूपोऽपि मुनेः
पाठोक्तदिशा शृङ्गारादिरसविशेषप्रतीतिकृद्दे-
वेति । एतद्विषये उदाहरणमुचितमेव इति
तन्न तथाहि स्वराः काक्कादय उदात्तादयो वा
व्यङ्ग्यरूपमेव विशेषं प्रत्याययन्ति न खलु प्रकृ-
तोक्तमनेकार्थशब्दस्यैकार्थनियन्त्रणरूपं विशे-
षम् । किञ्च यदि यत्र क्वचिदनेकार्थशब्दानां
प्रकरणादिनियमाभावादनियन्त्रितयोरप्यर्थयो-
रनुरूपस्वरवशेनैकत्र नियमनं वाच्यं तदा
तथाविधस्थले श्लेषानङ्गीकारप्रसङ्गः न च तथा
अतएवाहुः श्लेषनिरूपणप्रस्तावे काव्यमार्गे
स्वरो न गण्यते इति च नय इत्यलमुपजीव्यानां
मान्याना व्याख्यानेषु कटाक्षनिक्षेपेण । आदि-
शब्दादेतावन्मात्रस्तनीत्यादौ हस्तादिचेष्टा-

मेदिनी ॥ (यथा, महाभारते । १ । १६ । २० ।
"यद्येनमपि मातस्त्वं मामिवाण्डविभेदनात् ।
न करिष्यस्यनङ्गं वा व्यङ्गं वापि यशस्विनम् ॥")

**व्यङ्ग्यः**, त्रि, व्यञ्जनया बोध्योऽर्थः । यथा, --
"वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः ।
व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः ॥"
इति साहित्यदर्पणे २ परिच्छेदः ॥

**व्यच**, शि व्याजे । सम्बन्धे । इति कविकल्पद्रुमः ॥
(तुदा०-कुटा०-पर०-सक०-सेट् ।) व्याजश्छलः ।
श, विचति सतं खलः । छलयति इत्यर्थः ।
अविचीत् विव्याच । इति दुर्गादासः ॥

**व्यजः**, पुं, (व्यजत्यनेनेति । वि + अज + "गोचर-
सञ्चरेति ।" ३ । ३ । ११९ । इति घञ् । निपा-
तनादजेर्व्यघञपोरिति वीभावो न भवति ।)
व्यजनम् ।
विपूर्व्वाजधातोरल्प्रत्ययेन निष्पन्न-मिदम् ॥

**व्यजनं**, क्ली, (व्यजत्यनेनेति । वि + अज + ल्युट् ।
'वा यौ ।' २ । ४ । ५७ । इति पक्षे वीभावो नास्ति ।)
तालवृन्तकम् । इत्यमरः ॥ पाखा इति भाषा ॥
(यथा, ऋतुसंहारे । १ । ८ ।
"सचन्दनाम्बुव्यजनोद्भवानिलैः
सहारयष्टिस्तनमण्डलार्पणैः ।
सवल्लकीकाकलिगीतनिस्वनैः
"आनो भर व्यञ्जनं गामश्वमभ्यञ्जनम् ॥")
अस्य गुणाः ।
"व्यञ्जनं शाकमत्स्याख्यं हृद्यं वृष्यञ्च पुष्टिदम् ।
द्रव्येण येन येनेह व्यञ्जनं मत्स्यमांसयोः ।
तस्य तस्य तयोश्चैतद्गुणदोषैर्विभावयेत् ॥"
इति राजवल्लभः ॥
व्यञ्जनविशेषगुणाः तत्तच्छब्दे द्रष्टव्याः ॥ * चिह्नम् । (व्यञ्जना । यथा, साहित्यदर्पणे । ३ । ५९ ।
"अवाच्यत्वादिकं तस्य वक्ष्ये वञ्जनरूपणे ॥")
श्मश्रु । (यथा, महाभारते । १ । १५८ । ३४ ।
"कुत एव परित्यक्तुं सुतं शक्ष्याम्यहं स्वयम् ।
बालमप्राप्तवयसमजातव्यञ्जनाकृतिम् ॥")
अवयवः । दिनम् । इति मेदिनी ॥
स्त्रीपुंसयो-
रशुद्धदशः । स तु उपस्थः । अर्द्धमात्रकम् ।
स तु ककारादिक्षकारान्तवर्णः । इति धरणिः
(यथा, साहित्यदर्पणे । १० । ६४० ।
"सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः ।
क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते ॥")

**व्यञ्जना**, स्त्री, (वि + अञ्ज + णिच् + युच् । टाप् ।)
शब्दस्य वृत्तिविशेषः । तस्या लक्षणं यथा, --
"विरतास्वभिधाद्यासु ययार्थो बोध्यतेऽपरः ।
सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च ॥"
शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभाव इति नयेनाभिधा लक्षणा तात्पर्य्याख्यासु तिसृषु वृत्तिषु स्वं स्वमर्थं बोधयित्वा उपक्षीणासु ययान्योऽर्थो बोध्यते सा शब्दस्यार्थस्य प्रकृति-
प्रत्ययादेश्च वृत्तिर्व्यञ्जन-ध्वनन-गमन-प्रत्यायना-
दिभिः स्तनादीनां कमलकोरकाद्याकारत्वम् ।
एवमेकस्मिन्नर्थेऽभिधया नियन्त्रिते या शब्द-
स्यान्यार्थबुद्धिहेतुः शक्तिः सा अभिधामूला व्यञ्जना । यथा मम तातपादानां महापात्र-
चतुर्द्दशभाषावारविलासिनीभुजङ्गमहाकवी श्वरश्रीचन्द्रशेखरसान्धिविग्रहिकाणाम् ।
"दुर्गालङ्घितविग्रहो मनसिजं संमीलयंस्तेजसा
प्रोद्यद्राजकलो गृहीतगरिमा विश्वग्वृतो भोगिभिः ।
नक्षत्रेशकृतेक्षणो गिरिगुरौ गाढां रुचिं धारयन् ।
गामाक्रम्य विभूतिभूषिततनूराजत्युमावल्लभः ॥"
अत्र प्रकरणेनाभिधया उमावल्लभशब्दस्य
उमानाम्नी महादेवी तद्वल्लभभानुदेवनृपति-
रूपेऽर्थे नियन्त्रिते व्यञ्जनयैव गौरीवल्लभरूपो-

| | | |
|---|---|---|
| प्रबुध्यते सुप्त इवाद्य मन्मथः ॥”) अस्य सामान्यगुणः । मूर्च्छादाहतृष्णाघर्म्म-श्रमनाशित्वम् ॥ तालव्यजनगुणः । त्रिदोषशम-नत्वम् । लघुत्वञ्च । वंशव्यजनगुणः । रूक्ष-त्वम् । उष्णत्वम् । वायुपित्तकारित्वञ्च ॥ वेत्र-वस्त्रमयूरपुच्छव्यजनगुणः । त्रिदोषनाशित्वम् ॥ | दिव्यपदेशविषया व्यञ्जना नाम । तत्र । “अभिधालक्षणामूला शब्दस्य व्यञ्जना द्विधा ॥” अभिधामूलामाह । | |

ऽर्थो बोध्यते । एवमन्यत् ॥ * ॥ लक्षणामूला-
माह ।
“लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम् ।
यया प्रत्याय्यते सा स्याद्व्यञ्जना लक्षणाश्रया
॥”
गङ्गायां घोष इत्यादौ
जलमयाद्यर्थबोधनादभि-
धायां विरतायां तटाद्यर्थबोधनाच्च लक्षणायां
विरतायां यया शीतत्वपावनत्वाद्यतिशयादि-
र्बोध्यते सा लक्षणामूला व्यञ्जना ॥ * ॥ एवं
शाब्दीं व्यञ्जनामुक्त्वा आर्थीं व्यञ्जनामाह ।
“वक्तृबोद्धव्यवाक्यानामन्यसन्निधिवाच्ययोः।
प्रस्तावकालदेशानां काकोश्चेष्टादिकस्य च ।
वैशिष्ट्यादन्यमर्थं या बोधयेत् सार्थसम्भवा
॥”
व्यञ्जना इति संवध्यते । तत्र
वक्तृवाक्यप्रस्ताव-
देशकालवैशिष्ट्ये यथा मम ।
“कालो मधुः कुपित एष च पुष्पधन्वा
धीरा वहन्ति रतिखेदहराः समीराः ।
केलीवनीयमपि वञ्जुलकुञ्जमञ्जु-
र्दूरे पतिः कथय किं करणीयमद्य ॥”
अत्र एतं देशं प्रति शीघ्रं प्रच्छन्नकामुकस्त्वया
प्रेष्यतामिति सखीं प्रति कयाचित् द्योत्यते ॥
* ॥
बोद्धव्यवैशिष्ट्ये यथा, --
“निःशेषच्युतचन्दनं स्तनतटं
निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति
बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न
पुनस्तस्याधमस्या-
न्तिकम् ॥”
अत्र तदन्तिकमेव गतासीति विपरीतलक्षणया
लक्ष्यं तस्य च रन्तुमिति व्यङ्ग्यं प्रतिपाद्य
दूती-
वैशिष्ट्याद्बोध्यते ॥ * ॥
अन्यसन्निधिवैशिष्ट्ये
चेष्टया कयाच्तित् द्योत्यते । एवं
वक्त्रादीनां
व्यस्तसमस्तानां वैशिष्ट्ये बोद्धव्यम् ॥ *
॥
“त्रैधिध्यादियमर्थानां प्रत्येकं त्रिविधा मता
॥”
अर्थानां वाच्यलक्ष्यव्यङ्ग्यत्वेन
त्रिरूपतया सर्व्वा
अप्यनन्तरोक्ता व्यञ्जनास्त्रिविधाः । तत्र
वाच्या-
र्थस्य व्यञ्जना यथा । कालो मधुरित्यादि
॥
लक्ष्यार्थस्य यथा ।
निःशेषच्युतचन्दनमित्यादि ॥
व्यङ्ग्यार्थस्य यथा । उअ णिच्चल
इत्यादि ॥ * ॥
प्रकृतिप्रत्ययादिव्यञ्जनन्तु प्रपञ्चयिष्यते ।
“शब्दबोध्यो व्यनक्त्यर्थः
शब्दोऽप्यर्थान्तराश्रयः ।
एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता
॥”
यतः शब्दो व्यञ्जकत्वेऽर्थान्तरमपेक्ष्यते ।
अर्थो-
ऽपि शब्दं तदेकस्य व्यञ्जकत्वेऽन्यस्य
सहकारि-
त्वमवश्यमङ्गीकरणीयम् ।
“अभिधादित्रयोपाधिवैशिष्ट्यात्त्रिविधो
मतः ।
शब्दोऽपि वाचकस्तद्वल्लक्षको
व्यञ्जकस्तथा ॥”
अभिधोपाधिको वाचकः । लक्षणोपाधिको
लक्षकः । व्यञ्जनोपाधिको व्यञ्जकः ।
किञ्च ।
“तात्पर्य्याख्यां वृत्तिमाहुः
पदार्थान्वयबोधने ।
तात्पर्य्यार्थं तदर्थञ्च वाक्यं तद्बोधकं परे
॥”
अभिधाया एकैकपदार्थबोधनविरमात्
वाक्यार्थ-
“न पतिव्यतिरेकेण सुस्त्रीणामपरा गतिः
॥”)
अलङ्कारविशेषः । यथा, --
“व्यतिरेको विशेषश्चेदुपमानोपमेययोः ।
शैला इवोन्नताः सन्तु किन्तु
प्रकृतिकोमलाः ॥”
इति चन्द्रालोकः ॥

**व्यतिषङ्गः**, पुं, (वि + अति + षञ्ज + घञ् ।) पर-
स्परमेलनम् । (यथा, महाभारते । १२ ।
१०३ । ५ ।
“सेनयोर्व्यतिषङ्गेण जयः
साधारणोऽभवत् ॥”
विनिमयः । यथा, भागवते । ५ । १३ ।
१३ ।
“अन्योन्यवित्तव्यतिषङ्गवृद्ध-
वैरानुबन्धो विहरन् मिथश्च ॥”)

**व्यतिहारः**, पुं, (वि + अति + हृ + घञ् ।) विनि-
मयः । यथा, --
“परिदानं विनिमयो नैमेयः परिवर्त्तनम् ।
व्यतिहारः परावर्त्तो वैमेयो विमयोऽपि च
॥”
इति हेमचन्द्रः ॥
(यथा, रघुः । १२ । ९२ ।
“विक्रम-व्यतिहारेण
सामान्याभूद्द्वयोरपि ।
जयश्रीरन्तरावेदिर्मत्तवारणयोरिव ॥”)

**व्यतीतः**, त्रि, (वि + अति + इ + क्तः ।) अतीतः
।
गतः । यथा, --
“अर्द्धरात्रे व्यतीते तु संक्रान्तिर्यदहर्भवेत्
।
पूर्ब्बे व्रतादिकं कुर्य्युः परेद्युः
स्नानदानयोः ॥
इति तिथितत्त्वे भीमपराक्रमीयम् ॥

**व्यतीपातः**, पुं, (वि + अति + पत + घञ् । “उप-
सर्गस्य घञीति ।” ६ । ३ । १२२ ।
इति उप-

यथा, --
"उअ निच्चल णिप्फन्दाभिसिनी पत्तम्भि रेहै बलाआ ।
णिम्मल मरगअ भाअण परिट्ठिआ संख सुत्तिव्व ॥"
अत्र बलाकाया निष्पन्दत्वेन विश्वस्तत्वं तेनास्य
देशस्य विजनत्वमतः सङ्केतस्थानमेतदिति कयापि सन्निहितप्रच्छन्नकामुकंप्रत्युच्यते ।
अत्रैव स्थाननिर्जनत्वरूपव्यङ्ग्यार्थवैशिष्ट्यं प्रयो-
जनम् ।
"भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते ॥"
इत्युक्तप्रकारायाः काकोर्भेदा आकारादिभ्यो ज्ञातव्याः ॥ * ॥ एतद्वैशिष्ट्ये यथा, --
"गुरुपरतन्त्रतया वत
दूरतरं देशमुद्यतो गन्तुम् ।
अलिकुलकोकिलललिते
नेष्यति सखि ! सुरभिसमयेऽसौ ॥"
अत्र नेष्यतीत्यपि तर्हि एष्यत्येव इति काक्वा व्यज्यते ॥ * ॥ चेष्टावैशिष्ट्ये यथा, --
"सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥"
अत्र सन्ध्या सङ्केतकाल इति पद्मनिमीलनादि-
रूपस्य पदान्वयस्य बोधिका तात्पर्य्या नाम
वृत्तिस्तदर्थश्च तात्पर्य्यार्थस्तद्बोधकञ्च वाक्यमित्य-
भिहितान्वयवादिनां मतम् । इति साहित्यदर्पणे
वाक्यस्वरूपनिरूपणो नाम द्वितीयः परि-
च्छेदः ॥

**व्यडम्बकः**, पुं, एरण्डः । इत्यमरः ॥

**व्यतिकरः**, पुं, (वि + अति + कृ + अप् ।) व्यसनम् ।
(यथा, कथासरित्सागरे । ७४ । ८९ ।
"अस्मिन् व्यतिकरे वृत्ते शत्रुतामेव ते गतः ॥")
व्यतिषङ्गः । इति मेदिनी ॥ (विनाशः । यथा,
भागवते । १ । ७ । ३२ ।
"प्रजोपद्रवमालक्ष्य लोकव्यतिकरञ्च तम् ।
मतञ्च वासुदेवस्य संजहाराज्जुनो द्वयम् ॥"
मिश्रणम् । यथा, माघे । ४ । ५३ ।
"अन्योन्यव्यतिकरचारुभिर्विचित्रै-
रत्रस्यन्नवमणिजन्मभिर्म्मयूखैः ॥")

**व्यतिक्रमः**, पुं, (वि + अति + क्रम + घञ् ।) क्रम-
विपर्य्ययः । यथा, --
"सर्व्वत्र प्राङ्मुखो दाता ग्रहीता च उदङ्मुखः ।
एष एव विधिर्दाने विवाहे च व्यतिक्रमः ॥"
इत्युद्वाहतत्त्वम् ॥

**व्यतिरिक्तः**, त्रि, व्यतिरेकविशिष्टः । भिन्नः । वि-
अति-पूर्ब्बरिचधातोः क्तप्रत्ययेन निष्पन्नमेतत् ॥
(अधिकः । यथा, कातन्त्रचतुष्टयस्य प्रथमा-
विभक्तिर्लिङ्गार्थवचने इत्यस्य पञ्जी । "विशेषे-
णातिरिक्तोऽधिको व्यतिरिक्तः ॥")

**व्यतिरेकः**, पुं, (वि + अति + रिच + घञ् ।) विना ।
सर्गस्य दीर्घः ।) महोत्पातः । अपयानम् ।
इति मेदिनी ॥
विष्कम्भादिसप्तविंशतियोगान्त-
र्गतसप्तदशयोगः । तत्र सर्व्वकर्म्मवर्जनं यथा, --
"निरंशं दिवसं विष्टिं व्यतीपातञ्च वैधृतिम् ।
केन्द्रं वापि शुभैर्हीनं पापाहमपि वर्जयेत् ॥
परिघस्य त्यजेदर्द्धं शुभकर्म्म ततः परम् ।
गण्डव्याघातयोः षट् च नव हर्षणवज्रयोः ।
वैधृतिव्यतिपातौ च समस्तौ परिवर्जयेत् ॥" * ॥
अस्य प्रतिप्रसवमाह भीमपराक्रमे ।
"न विष्कम्भो नवा गण्डो न व्यतीपातवधृती ।
चन्द्रताराबले प्राप्ते दोषा गच्छन्त्यसंमुखाः ॥
नवम्यङ्गारको विष्टिः शनैश्चरदिनं तथा ।
व्यतीपातो न दूष्येच्च यस्यार्को दक्षिणे स्थितः ॥
यदि विष्टिव्यतीपातौ दिनं वाप्यशुभं भवेत् ।
हन्यतेऽमृतयोगेन भास्करेण तमो यथा ॥"
इति ज्योतिस्तत्त्वम् ॥ * ॥
तत्र जातफलम् ।
"कठोरवाक्यः पिशुनस्वभावो
गदातुरो मातृहितो मनुष्यः ।
परस्य कार्य्ये कृतपक्षपातो
यस्य प्रसूतौ व्यतिपातयोगः ॥"
इति कोष्ठीप्रदीपः ॥
पारिभाषिकयोगविशेषः । यथा, बृहन्मनुः ।
"श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके ।
यद्यमा रविवारेण व्यतीपातः स उच्यते ॥"

| | | |
|---|---|---|
| | अभावः । यथा । यद्व्यतिरेकज्ञानं यदुत्पत्ति-<br>प्रतिबन्धकं तत् तन्निश्चयसाध्यम् । इति परा-<br>मर्शग्रन्थः ॥ (यथा, कथासरित्सागरे । ३९ ।<br>१६६ । | तत्र गङ्गास्नानफलं यथा । ब्रह्माण्डे । |

"संक्रान्तिषु व्यतीपाते ग्रहणे
चन्द्रसूर्य्ययोः ।
पुष्ये स्नात्वा तु जाह्नव्यां कुलकोटीः
समुद्धरेत् ॥"
इति प्रायश्चित्ततत्त्वम् ॥
(यथा च भागवते । ४ । १२ । ४८ ।
"दिनक्षये व्यतीपाते संक्रमेऽर्कदिनेऽपि वा
।
श्रावयेत् श्रद्दधानानां तीर्थपादप्रियाश्रयः
॥")

**व्यतीहारः**, पुं, (वि + अति + हृ + घञ् । "उप-
सर्गस्य घञीति ।" ६ । ३ । १२२ । इति
दीर्घः ।) परीवर्त्तः । इति जटाधरः ॥
परस्पर-
मेकजातीयक्रियाकरणम् । यथा,
केशाकेशि ।
दण्डादण्डि । इत्यादि । इति व्याकरणम्
॥

**व्यत्ययः**, पुं, (व्यत्ययनमिति । वि + अति + इ +
"एरच् ।" ३ । ३ । ५६ । इत्यच् ।)
व्यतिक्रमः । तत्-
पर्य्यायः । व्यत्यासः २ विपर्य्यासः ३
विपर्य्ययः ४ ।
इत्यमरः ॥ (यथा, भागवते । ७ । १० ।
४४ ।
"परावरेषां स्थानानां कालेन व्यत्ययो
महान् ॥")

**व्यत्यासः**, पुं, (व्यत्यसनमिति । वि + अति +
अस् + घञ् ।) विपर्य्ययः । इत्यमरः ॥
(यथा,
हरिवंशे । २७ । २९ ।
"मात्रासि वञ्चिता भद्रे !
चरुव्यत्यासहेतुना ।
भविष्यति हि पुत्त्रस्ते
क्रूरकर्म्मातिदारुणः ॥")

**व्यथ**, ष म ङ दुःखे । चाले । भये । इति कवि-

**व्यध**, औ य ताडे । इति कविकल्पद्रुमः ॥ (दिवा०-
पर०-सक०-अनिट् ।) य, विध्यति शत्रुं शूरः
।
औ, अव्यात्सीत् । कश्चित्तु
द्विर्भूतस्यानिकारी-
भूतयकारस्य व्यधेर्वकारो वर्ग्यः अन्यत्र तु
दन्त्य
इति मन्वानः सनि विव्यत्सतीत्याह । इति
दुर्गादासः ॥

**व्यधः**, पुं, (व्यधनमिति । व्यध ताडे + "व्यधजपो-
रनुपसर्गे ।" ३ । ३ । ६१ । इत्यप् ।) वेधः ।
इत्यमरः ॥ (यथा, सुश्रुते । १ । ३ ।
"सिराव्यधो धमनीनां गर्भिण्या व्याकृति-
स्तथा ॥")

**व्यध्यः**, पुं, (व्यधाय हितः । व्यध + यत् ।) धनु-
र्गुणः । यथा, --
"व्यध्यस्तु प्रतिकायः स्याज्जीवाज्या भारवं
गुणः ॥")
इति त्रिकाण्डशेषः ॥

**व्यध्वः**, पुं, (विरुद्धो अध्वा । प्रादिसमासः ।
उपसर्गादध्वनः । इत्यच् ।) कुत्सितपथः ।
तत्-
पर्य्यायः । दुरध्वः २ विपथः ३ कदध्वा ४
कापथः ५ । इत्यमरः ॥ कुपथः ६
असत्पथः ७
कुत्सिसवर्त्म ८ । इति शब्दरत्नावली ॥
(यथा,
महाभारते । २ । ७० । २३ ।
"तूर्णं प्रत्यायनस्वैतान् कामं व्यध्वगतानपि
॥")

**व्यप**, क क्षये । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-अक०-सेट् ।) अन्तःस्थाद्ययुक्तः ॥
क,
व्यापयति । इति दुर्गादासः ॥

**व्यपदेशः**, पुं, (वि + अप + दिश + घञ् ।) कपटः ।
इति हेमचन्द्रः ॥ (यथा, साहित्यदर्पणे । ३ ।

**व्यभिचारिणी**, स्त्री, (व्यभिचरति या । वि +
अभि + चर + णिनिः । ङीप् ।) परपुरुष-
गामिनी । यथा, --
"हृताधिकारां मलिनां
पिण्डमात्रोपसेविनीम् ।
परिभूतामधःशय्यां
वासयेद्व्यभिचारिणीम् ॥
सोमः शौचं ददौ तासां गन्धर्व्वश्च शुभां
गिरम् ।
पावकः सर्व्वभक्षित्वं मेध्या वै योषितो
ह्यतः ॥"
इति याज्ञवल्के । १ । ७०-७१ ॥
इति तु स्त्रीसामान्यविषयम् ।
"व्यभिचारादृतौ शुद्धिर्गर्भे त्यागो विधीयते
।
गर्भभर्त्तृवधे तासां तथा महति पातके ॥"
इति गारुडे ९५ अध्यायः ॥ * ॥
तस्याः परित्यागादि यथा । हारीतः ।
गर्भिणी-
मधोवर्णगां शिष्यसुतगामिनीं
पापव्यसनासक्तां
धनधान्यक्षयकरीं वर्ज्जयेत् । यमः ।
"स्वच्छन्दगा हि या नारी तस्यास्त्यागो
विधीयते ।
न चैव स्त्रीवधः कार्य्यो न
चैवाङ्गवियोजनम् ॥"
बृहस्पतिः ।
"हीनवर्णोपभुक्ता या त्याज्या वध्यापि वा
भवेत् ॥"
विशेषयति मिताक्षरायां स्मृतिः ।
"ब्राह्मणक्षत्त्रियविशां भार्य्याः शूद्रेण
सङ्गताः ।
अप्रजास्ता विशुद्ध्यन्ति प्रायश्चित्तेन
नेतराः ॥"
एतत् बलात्कारविषयम् । इत्युद्वाहतत्त्वम्
॥ * ॥
तस्याः पुण्यकर्म्माणि निष्फलानि
धनानधि-
कारित्वञ्च यथा । हरिवंशीयपुण्यकव्रतो-

कल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-सेट् ।) दुःखं
दुःखानुभवः । चालः कम्पनम् । ष, व्यथा । म,
व्यथयति । ङ, व्यथते लोकः दुःखमनुभवति ।
कम्पते बिभेति वेत्यर्थः । केच्त्तिु दुःखभयचलन-
योरिति पठित्वा भये चलनं भयचलनमित्याहुः ।
दुःखभयचलने इति पठित्वा दुःखभययोश्चलन-
मुत्पादनमिति गोविन्दभट्टः । इति दुर्गादासः ॥

**व्यथकः**, त्रि, (व्यथयति पीडयतीति । व्यथ + णिच् + ण्वुल् ।) व्यथाकारी । यथा, --
"अव्युत्थानं व्यथकस्तु स्यान्मर्म्मस्पृगरुन्तुदः ॥"
इति हेमचन्द्रः ॥
(यथा, किराते । २ । ४ ।
"परिणामसुखे गरीयसि व्यथकेऽस्मिन् वचसि क्षतौजसाम् ।
अतिवीर्य्यवतीव भेषजे बहुरल्पीयसि दृश्यते गुणः ॥")

**व्यथा**, स्त्री, (व्यथ + अङ् । टाप् ।) दुःखम् । इत्यमरः ॥ (यथा, उत्तरचरिते । १ ।
"स्नेहं दयां तथा सौख्यं यदि वा जानकीमपि ।
आराधनाय लोकानां मुञ्चतो नास्ति मे व्यथा ॥")

**यथित्रः**, त्रि, (व्यथ + क्तः ।) पीडितः । (यथा, ऋतुसंहारे । ६ । १९ ।
"कान्ताननद्युतिमुषामचिरोद्गतानां शोभां परां कुरुवकद्रुममञ्जरीणाम् ।
दृष्ट्वा प्रिये हि पथिकस्य भवेन्न कस्य कन्दर्पवाणनिकरैर्व्यथितं हि चेतः ॥")
दुःखितः । यथा, --
"ततः प्रव्यथितो बाणो दुहितुः श्रुतदूषणः ।
१५५ ।
"कपि कुन्तलसंव्यानसंयमव्यपदेशतः ।
बाहुमूलं स्तनौ नाभिपङ्कजं दर्शयेत् स्फुटम् ॥")
नाम । इति त्रिकाण्डशेषः ॥ वाक्यविशेषः । यथा, --
"व्याजेनात्माभिलाषोक्तिर्व्यपदेश इतीर्य्यते ॥"
इत्युज्ज्वलनीलमणिः ॥

**व्यपाकृतिः**, स्त्री, अपह्नवः । अस्वीकारः । वि-अप-आङ् पूर्व्वकृधातोः क्तिप्रत्ययेन निष्पन्नम् ॥

**व्यभिचारः**, पुं, (वि + अभि + चर + घञ् ।) कदाचारः । भ्रष्टाचारः । यथा, --
"व्यभिचारात्तु भर्त्तुः स्त्री लोके प्राप्नोति निन्द्यताम् ।
शृगालयोनिं प्राप्नोति पापरोगैश्च पीड्यते ॥"
इति मानवे ५ अध्यायः ॥
दोषविशेषः । तस्य लक्षणम् ।
साध्यतावच्छेद कावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वं हि व्यभिचारः । इति व्यधिकरणधर्म्मावच्छिन्नाभावचिन्तामणिः ॥ स त्रिविधः । साधारणः १
असाधारणः २ अनुपसंहारी ३ । तत्र विपक्षवृत्तित्वं साधारणत्वम् ।
सर्व्वसपक्षव्यावृत्तत्वमसाधारणत्वम् । व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभावो यत्र सद्धेत्वभिमतोऽनुपसंहार्य्यः ।
इति सव्यभिचारचिन्तामणिः ॥
पाख्याने ।
"दानोपवासपुण्यानि सुकृतान्यप्यरुन्धति ! ।
निष्फलान्यसतीनां हि पुण्यकानि तथा शुभे ॥"
बृहन्मनुः ।
"अपुत्त्रा शयनं भर्त्तुः पालयन्ती व्रते स्थिता ।
पत्न्येव दद्यात्तत् पिण्डं कृत्स्नमंशं लभेत च ॥"
भर्त्तुः शयनं पालयन्ती नान्यगामिनी । इति
दायतत्त्वम् ॥

**व्यभिचारी**, [न्] पुं, (ब्यभिचरतीति । वि + अभि + चर + णिनिः ।)
चतुस्त्रिंशत्प्रकार-शृङ्गारभावविशेषः । तद्यथा । निर्व्वेदः २
ग्लानिः २ शङ्का ३ असूया ४ मदः ५ श्रमः ६
आलस्यम् ७ दैन्यम् ८ चिन्ता ९ मोहः १० स्मृतिः
११ धृतिः १२ व्रीडा १३ चपलता १४ हर्षः १५
आवेगः १६ जडता १७ गर्व्वः १८ विषादः १९
औत्सुक्यम् २० निद्रा २१ अपस्मरः २२
सुप्तः २३ विबोधः २४ अमर्षः २५ अवहित्थः २६
उग्रता २७ मतिः २८ उपलम्भः २९ व्याधिः ३०
उन्मदः ३१ मरणम् ३२ त्रासः ३३ वितर्कः ३४ ।
इति हेमचन्द्रः ॥ (अस्य लक्षणादिकं यथा,
साहित्यदर्पणे । ३ । १६८ ।
"विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः ।
स्थायिन्युन्मग्ननिर्म्मग्नास्त्रयस्त्रिंशच्च तद्भिदाः ॥"
के ते इत्याह ।

| | | |
|---|---|---|
| त्वरितः कन्यकागारं प्राप्तोऽद्राक्षीत् यदूद्वहम् ॥"<br>इति श्रीभागवते बाणयुद्धे ६२ अध्यायः ॥ | | |

"निर्व्वेदावेगदैन्यश्रममदजडता
औग्र्यमोहौ
विबोधः
स्वप्नापस्मारगर्व्वा
मरणमलसतामर्षनिद्रा-
वहित्थाः ॥
औत्सुक्योन्मादशङ्काः स्मृतिमतिसहिता
व्याधिसत्रासलज्जा
हर्षासूयाविषादाः
सधृतिचपलताम्लानिचिन्ता
वितर्काः ॥"
एतेषां लक्षणादिकं तत्रैव विशेषतो
द्रष्टव्यम् ॥)
त्रि, व्यभिचारविशिष्टः । (स्वमार्गच्युतः ।
यथा,
कथासरित्सागरे । १५ । ५५ ।
"लब्धापि मन्त्रिताख्यातिरस्माकं
यान्यथा
भवेत् ।
स्वामिसंभावनायाश्च भवेम
व्यभिचारिणः ॥"
अनित्यः । आगमापायी । यथा, भागवते
।
११ । ३ । ३८ ।
"नात्मा जजान न मरिष्यति नैधतेऽसौ
न क्षीयते सवनविद्व्यभिचारिणांहि ॥")

**व्यय**, क नुदि । इति कविकल्पद्रुमः । (चुरा०-
पर०-सक०-सेट् ।) अन्तःस्थादियुक्तः ।
क,
व्याययति । नुदि प्रेरणे । इति दुर्गादासः
॥

**व्यय**, ञ गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-
उभ०-सक०-सेट् ।) ञ, व्ययति व्ययते
। इति
दुर्गादासः ॥

**व्यय**, त् क गतौ । त्यागे । इति कविकल्पद्रुमः ॥

शब्दादितप्रत्ययेन व्ययधातोः क्तप्रत्ययेन
वा
निष्पन्नम् ॥

**व्ययी**, [न्] त्रि, (व्ययोऽस्यास्तीति । व्यय +
इनिः ।) व्यययुक्तः । यथा, --
"द्रविणं परिमितमधिकव्ययिनं
जनमाकुली-
कुरुते ।
क्षीणाञ्चलमिव पीनस्तनजघनायाः कुली-
नायाः ॥"
इत्युद्भटः ॥

**व्यर्थं**, त्रि, (विगतोऽर्थो यस्मात् ।) निरर्थकम् ।
तत्पर्य्यायः । मोघम् २ विफलम् ३ ।
इति
जटाधरः ॥ (यथा, कुमारे । ३ । ७५ ।
"शैलात्मजापि पितुरुच्छिरसोऽभिलाषं
व्यर्थं समर्थ्य ललितं वपुरात्मनश्च ॥")

**व्यलीकं**, क्ली, (विशेषेण अलतीति । वि + अल +
"अलीकादयश्च ।" उणा० ४ । २५ ।
इति
कीकन्प्रत्ययेन निपातनात् साधुः ।)
पीडार्थः ।
इत्यमरः ॥ गतिविपर्य्ययः ।
कामजापराधः ।
इति तट्टीकायां भरतः ॥ यथा, --
"कृत्यं नैव विजानाति परेणापकृतं
क्वचित् ।
कृत्यञ्च संस्मरेदेतदसत्यञ्च न जल्पति ॥
व्यलीकेषु निवृत्तो यः पर्य्येति
कृतनिश्चयः ।
नित्यञ्च धृतिमान् किञ्चित् परोक्षेऽपि न च
क्षिपेत् ॥
ऋतुकालेऽभिगच्छेत अपत्यार्थं स्वकां
स्त्रियम् ।
ईदृशास्तु नरा भद्रे मम कर्म्मपरायणाः
॥"
इति वाराहे योनिगर्भमोक्षणनामाध्यायः ॥

केलिः ६ पाठमर्द्दः ७ भङ्गिलः ८ छिद्रुरः ९
विटः १० । इति त्रिकाण्डशेषः ॥

**व्यवकलनं**, क्ली, (वि + अव + कल + ल्युट् ।)
वियोगः । हीनः । अङ्कस्यान्तरकरणम् ।
वाकिकाटा इति भाषा । यथा, --
"अये बाले लीलावति ! मतिमति ! ब्रूहि
सहितान्
द्विपञ्चद्वात्रिंशत्त्रिनवतिशताष्टादशदश।
शतोपेतानेतानयुतवियुतांश्चापि वद मे
यदि व्यक्तेर्युक्तिव्यवकलनमार्गेऽसि कुशला
॥"
इति लीलावती ॥

**व्यवकलितः**, त्रि, (वि + अव + कल + क्तः ।)
कृतव्यवकलनः । वियोगितः । हीनितः ।
व्यव-
कलने, क्ली । यथा । अथ
सङ्कलितव्यवकलि-
तयोः करणसूत्रं वृत्तार्द्धम् ।
"कार्य्यं क्रमाद्युत्क्रमतोऽथवाङ्क-
योगो यथास्थानकमन्तरंवा ॥"
इति लीलावती ॥

**व्यवच्छिन्नं**, त्रि, (वि + अव + छिद् + क्तः ।)
भिन्नम् । यथा । भिन्नन्तु व्यवच्छिन्नं
विशेषितम् ।
इति त्रिकाण्डशेषः ॥

**व्यवच्छेदः**, पुं, (वि + अव + छिद् + घञ् ।) बाण-
मुक्तिः । इति हेमचन्द्रः ॥ पृथक्त्वञ्च ॥
(विरामः ।
निवृत्तिः । यथा, भागवते । ४ । २९ । ३२ ।
"जीवस्य न व्यवच्छेदः
स्याच्चेत्तत्प्रतिक्रिया ॥")

**व्यवधा**, स्त्री, (वि + अव + धा + "आतश्चोपसर्गे ।
इत्यङ् । टाप् ।) व्यवधानम् । इत्यमरः ॥

**व्यवधानं**, क्ली, (वि + अव + धा + ल्युट् ।)
आच्छादनम् । तत्पर्य्यायः । तिरोधानम् २

(अदन्तचुरा०-पर०-सक०-सेट् ।)
व्यययति ।
इति दुर्गादासः ॥

**व्ययं**, क्ली, (व्यय गतौ + अच् ।) लग्नात् द्वादश-
स्यानम् । यथा, --
“लग्नं धनं भ्रातृबन्धुपुत्त्रशत्रुकलत्रकाः ।
मरणं धर्म्मकर्म्मायव्यया द्वादशराशयः ॥”
इति ज्योतिस्तत्त्वम् ॥
(व्ययति गच्छतीति । व्यय गतौ + अच् । नश्वरे,
त्रि । यथा, मनुः । १ । १९ ।
“सूक्ष्माभ्यो मूर्त्तिमात्राभ्यः संभवत्यव्ययाद्-
व्ययम् ॥”)

**व्ययः**, पुं, (वि + इ + अच् ।) अर्थस्यापगमः ।
वित्तसमुत्सर्गः । इति शब्दरत्नावली ॥ खरच्
इति पारस्यभाषा ॥ (यथा, मनुः । ९ । ११ ।
“अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत् ॥”
नाशः । यथा, भागवते । ४ । १ । ४९ ।
“ताविमौ वै भगवतो हरेवंशाविहागतौ ।
भारव्ययाय च भुवः कृष्णौ यदुकुरूद्वहौ ॥”
परित्यागः । दानम् । यथा, रघुः । १२ । २३ ।
“आत्मानं मुमुचे तस्मात् एकबेत्रव्ययेन सः ॥”
बृहस्पतिचारगतवर्षविशेषः । यथा, वृहत्-
संहितायाम् । ८ । ३६ ।
“पञ्चमं व्ययमुशन्ति शोभनं
मन्मथप्रवलमुत्सवाकुलम् ॥”
नामविशेषः । यथा, महाभारते । १ । ५७ । १६ ।
“अमाहठः कामठकः सुषेणो मानसो व्ययः ॥”)

**व्ययितः**, त्रि, (व्यय + क्तः ।) कृतव्ययः । व्यय-
अप्रियम् । (यथा, महाभारते । ३ । ६ । ९ ।
“न हि तेन मम भ्रात्रा सुसूक्ष्ममपि किञ्चन ।
व्यलीकं कृतपूर्व्वं वै प्राज्ञेनामितबुद्धिना ॥”)
अकार्य्यम् । वैलक्ष्यम् । इति मेदिनी ॥ (यथा,
किराते । ३ । १९ ।
“यस्मिन्ननैश्वर्य्यकृतव्यलीकः
पराभवं प्राप्त इवान्तकोऽपि ।
धुन्वन्धनुः कस्य रणे न कुर्य्यात्
मनो भयैकप्रवणं स भीष्मः ॥”)
अपराधः । इति हेमचन्द्रः ॥ (यथा, शिशु-
पालवधे । ९ । ८५ ।
“सुदृशः सरसव्यलीकतप्त-
स्तरसा श्लिष्टवतः सयौवनोष्मा ॥”)
प्रतारणा । इति हलायुधः ॥ (दुःखम् । इति
वैजयन्ती ॥ यथा, कुमारे । ३ । २५ ।
“दिग् दक्षिणा गन्धवहं मुखेन
व्यलीकनिश्वासमिवोत्ससर्ज्ज ॥”)
तद्वति, त्रि ॥ (यथा, भागवते । ८ । २२ । २ ।
“यद्युत्तमःश्लोक भवान् ममेरितं
वचो व्यलीकं सुरवर्य्य मन्यते ।
करोन्वृतं तन्न भवेत् प्रलम्भनं
पदं तृतीयं कुरु शीर्ष्णि मे निजम् ॥”)

**व्यलीकः**, पुं, (वि + अल पर्य्याप्तौ + कीकन् ।)
नागरः । इति मेदिनी ॥ तत्पर्य्यायः । षिड्गः २
वट्प्रज्ञः ३ कामकेलिः ४ विदूषकः ५ पीठ-
अन्तर्द्धिः ३ अपवारणम् ४ छदनम् ५ व्यवधा ६
अन्तर्द्धा ७ पिधानम् ८ स्थगनम् ९ । इति
हेमचन्द्रः ॥ व्यवधिः १० अपिधानम् ११ ।
इति शब्दरत्नावली ॥ (यथा, रघुः । १३ । ३४ ।
“दृष्टिं विमानव्यवधानमुक्तां
पुनः सहस्रार्च्चिषि सन्निधत्ते ॥”
भेदः । यथा, भागवते । ४ । २२ । २७ ।
“परात्मनोर्यद्व्यवधानकं पुरस्तात्
स्वप्ने यथा पुरुषस्तद्विनाशे ॥”
विच्छेदः । यथा, शिशुपालवधे । ९ । ५१ ।
“वपुरन्वलिप्त परिरम्भसुख-
व्यवधानभीरुकतया न बधूः ॥”
समाप्तिः । यथा, भागवते । ४ । २९ । ७७ ।
“यावदन्यं न विन्देत व्यवधानेन कर्म्मणाम् ॥”)

**व्यवधायकः**, त्रि, (व्यवदधातीति । वि + अव +
धा + ण्वुल् ।) व्यवधानकर्त्ता । यथा । स्वर्ग-
कामो यजेत सप्तदशावरा ऋद्धिकामाः सत्र-
मुपासीरन्निति वेदे कामिनां कर्त्तृत्वावगते-
स्तदनुपपत्त्या ऋत्विग्व्यापारान्तर्भावोन व्यव-
धायकः । इति प्रायश्चित्तविवेकः ॥

**व्यवधिः**, पुं, (वि + अव + धा + “उपसर्गे धोः
किः ।” ३ । ३ । ९२ । इति किः ।) व्यवधानम् । इति
शब्दरत्नावली ॥ (यथा, नैषधचरिते । २ । १९ ।

"व्यवधावपि वा विधोः कलां
मृडचूडानिलयां न वेद कः ॥")

**व्यवसायः**, पुं, (वि + अव + सो + घञ् ।) उप-
जोविका । पेशा इति पारस्यभाषा । यथा, --
"करोति नाम नीतिज्ञो व्यवसायमितस्ततः ।
फलं पुनस्तदेव स्याद्यद्विधेर्मनसि स्थितम्
॥"
इति हितोपदेशे २ परिच्छेदः ॥
अपि च ।
"आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां
चतुर्गुणा ।
षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः
॥"
इति चाणक्यशतकम् ॥
अनुष्ठानम् । इति व्यवसायिशब्दार्थदर्शनात्
॥
(यथा, रामायणे । २ । ३० । ४१ ।
"सर्व्वथा सदृशं सीते ! मम स्वस्य कुलस्य
च ।
व्यवसायमनुक्रान्ता कान्ते ! त्वमतिशोभनम्
॥")
निश्चयः । यथा, --
"ब्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम्
॥"
इति भगवद्गीतायाम् २ अध्यायः ॥
व्यवसायात्मिकेति । इह ईश्वराराधनलक्षणे
कर्म्मयोगे व्यवणायात्मिका
परमेश्वरभक्त्यैक ध्रुवं
तरिष्यामीति निश्चयात्मिका एकैव एकनिष्ठैव
बुद्धिर्भवति ।
अव्यबसायिनामीश्वराराधनबहि
र्मुखानां कामिनां
कामनानन्त्यादनन्तास्तत्रापि
कर्म्मफल-गुणफलत्वादि-
प्रकारभेदाद्बहुशाखाश्च
बुद्धयो भवन्ति । इति तट्टीकायां स्वामी ॥
विष्णुः । यथा, --
निश्चितः । इति
व्यवसायिव्यवसायशब्दार्थ-
दर्शनात् ॥ (यथा, रामायणे । २ । २४ ।
१ ।
"तं समीक्ष्य व्यवसितं पितुर्न्निर्द्देशपालने ।
कौशल्या वाष्पसंरुद्धा वचो
धर्म्मिष्ठमब्रवीत् ॥")

**व्यवस्था**, स्त्री, (वि + अव + स्था + "आतश्चोप-
सर्गे ।" इत्यङ् । ततष्टाप् ।)
शास्त्रनिरूपित-
विधिः । यथा, --
"दीर्घकालं ब्रह्मचर्य्यं धारणञ्च कमण्डलोः
।
देवरेण सुतोत्पत्तिर्दत्तकन्या प्रदीयते ॥"
इत्यादीन्यभिधाय ॥
"एतानि लोकगुप्त्यर्थं कलेरादौ
महात्मभिः ।
निवर्त्तितानि कर्म्माणि व्यवस्थापूर्ब्बकं
बुधैः ॥"
इत्युद्वाहतत्त्वे हेमाद्रिपराशरभाष्ययोरादि
पुराणम् ॥ (नियमः । यथा, कथासरित्-
सागरे । १०९ । ७१ ।
"एवं कृतगुहारक्षो महारत्नानि शङ्करः ।
उत्पाद्य भगवांस्तत्र व्यवस्थामादिदेश सः
॥")

**व्यवस्थानः**, पुं, विष्णुः । यथा, --
"व्यवसायो व्यवस्थानः संस्थानः
स्थानदो ध्रुवः ॥"
इति महाभारते तस्य सहस्रनामस्तोत्रे ।
१३ ।
१४९ । ५५ ॥ (वि + अव + स्था +
ल्युट् ।)
व्यवस्थितौ, क्ली । यथा, --
"चातुर्व्वर्ण्यव्यवस्थानं यस्मिन् देशे न
विद्यते ।
तं म्लेच्छदेशं जानीयादार्य्यावर्त्तस्ततः
परम् ॥"
इत्यार्य्यावर्त्तशब्दटीकायांभरतः ॥
आवेदयति चेद्राज्ञि व्यवहारपदं हि तत्
॥"
स्मृतिसदाचारवहिर्भूतेन वर्त्मना
परैरर्थतः
शरीरतो वा पीडितश्चेद्राजनि
निवेदयेत्तद्ब्यव-
हारदर्शनस्थानम् । चेदित्यत्र सदिति
मैथिलाः ।
आवेदयति चेदित्यनेन स्वयं
विवादोत्थापनं
राज्ञा न कर्त्तव्यमिति शूलपाणिमहामहो-
पाध्यायाः । राज्ञीति व्यवहारप्रदर्शकपरम्
।
तथा च बृहस्पतिः ।
"राजा कार्य्याणि संपश्येत्
प्राड्विवाकोऽथवा
द्विजः ॥" * ॥
प्राड्विवाकलक्षणमाह स एव ।
"विवादे पृच्छति प्रश्नं प्रतिपन्नं तथैव च ।
प्रियपूर्व्वं प्राग्वदति प्राड्विवाकस्ततः
स्मृतः ॥"
कात्यायनः ।
"व्यवहाराश्रितं प्रश्नं पृच्छति प्राडिति
स्थितिः ।
विवेचयति यस्तस्मिन् प्राड्विवाकस्ततः
स्मृतः ॥"
अर्थिनं प्रति भाषा ते कीदृशी प्रत्यर्थिनं
प्रति
च तवापि कीदृशमुत्तरं इति पृच्छतीति
प्राट्
श्रुत्वा च युक्तायुक्तत्वेन जयं पराजयं वा
विविनक्ति इति विवाकः प्राट् च स
विवाकश्चेति
प्राड्विवाकः ॥ * ॥ कात्यायनः ।
"सप्राड्विवाकः सामात्यः
सब्राह्मणपुरोहितः ।
स्वयं स राजा चिनुयात्तेषां जयपराजयौ
॥

"व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः ॥"
इति महाभारते तस्य सहस्रनामस्तोत्रे । १३ । १४९ । ५५ ॥ (महादेवः । यथा, तत्रैव । १३ । १७ । ५० ।
"सहस्रहस्तो विजयो व्यवसायो ह्यतन्द्रितः ॥")

**व्यवसायी**, [न्] त्रि, (व्यवसायोऽस्यास्तीति । इनिः ।) व्यवसायविशिष्टः । बाणिज्यकारकः । यथा, --
"कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः सविद्यानां कःपरः प्रियवादिनाम् ॥"
इति चाणक्यशतकम् ॥
अनुष्ठाता । यथा, --
"अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः ।
धारिभ्यो ज्ञानिनः श्रेष्ठा ज्ञानिभ्यो व्यव-सायिनः ॥"
इति मानवे १२ अध्यायः ॥
अज्ञेभ्य इति । उभयोः प्रशस्यत्वे सति अन्य-तरस्यातिशयवि क्षया श्रेष्ठतेतीष्टिनोबिधाना-दीषदध्ययना अज्ञाः तेभ्यः समग्रग्रन्थाध्येतारः श्रेष्ठाः । तेभ्योऽधीतग्रन्थधारणसमर्थाः श्रेष्ठाः । तेन ग्रन्थिनः पथितविस्मृतग्रन्था बोद्धव्याः । धारिभ्योऽधीतग्रन्थार्थज्ञाः प्रकृष्टाः । तेभ्यो-ऽनुष्ठातारः । इति तट्टीकायां कुल्लूकभट्टः ॥

**व्यवसितः**, त्रि, (वि + अव + सो + क्तः ।) प्रता-रितः । इति मूरिप्रयोगः ॥ अनुष्ठितः ।

**व्यवस्थितः**, त्रि, (वि + अव + स्था + क्तः ।) विधि-पूर्ब्बकस्थितः । व्यवस्थापितः । यथा, --
"अथ व्यवस्थितान् दृष्ट्वा धार्त्तराष्ट्रान् कपि-ध्वजः ।
प्रवृत्त शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः ॥"
इति श्रीभगवद्गीतायाम् १ अध्यायः ॥

**व्यवहर्त्ता**, [ऋ] पुं, (वि + अव + हृ + तृच् ।) व्यवहारकर्त्ता । प्राड्विवाक इति यावत् । यथा । उत्तराभिधानानन्तरं सभ्यानामर्थिप्रत्य-र्थिनोः कस्य क्रिया स्यादिति परामर्शलक्षणस्य प्रत्याकलितस्य वोगीश्वरेण व्यवहारपादत्वेना-नभिधानात् व्यवहर्त्तृसम्बन्धाभावाच्चन व्यव-हारपादत्वमिति स्थितम् । इति मिताक्षरायां व्यवहारमातृका ॥
कायस्थस्योपाधिविशेषश्च ॥

**व्यवहारः**, पुं, (वि + अव + हृ + घञ् ।) विवादः । इत्यमरः ॥ वृक्षभेदः । न्यायः । पणः । स्थितिः । इति मेदिनीशब्दरत्नावल्यौ ॥ * ॥ (कर्म्म । क्रिया । यथा, --
"न कश्चित् कस्यचिन्मित्रं न कश्चिकस्य चिद्रिपुः ।
व्यवहारेण जायन्ते मित्राणि रिपवस्तथा ॥"
यथा च रघुः । ३ । ६२ ।
"तथापि शस्त्रव्यवहारनिष्ठुरे विपक्षभावे चिरमस्य तिष्ठतः ।
तुतोष वीर्य्यातिशयेन वृत्रहा पदं हि सर्व्वत्र गुणैर्निधीयते ॥")
अथ व्यवहारदर्शनम् । तत्र याज्ञवल्क्यः ।
"स्मृत्याचारव्यपेतेन मार्गेणाघर्षितः परैः ।
यदा कार्य्यवशाद्राजा न पश्येत् कार्य्यनिर्णयम् ।
तदा नियुञ्ज्याद्विद्वांसं ब्राह्मणं वेदपारगम् ॥
यदि विप्रो न विद्वान् स्यात् क्षत्त्रियं तत्र योजयेत् ।
वैश्यं वा धर्म्मशास्त्रज्ञं शूद्रं यत्नेन वर्ज्जयेत् ॥"
स विनीतवेशः । मनुः ।
"जातिमात्रोपजीवी वा कामं स्याद्ब्राह्मणब्रुवः ।
धर्म्मप्रवक्ता नृपतेर्न तु शूद्रः कदाचन ॥
नाध्यापयति नाधीते स ब्राह्मणब्रुवः स्मृतः ॥"
व्यासः ।
"द्विजान् विहाय यः पश्येत् कार्य्याणि वृषलैः सह ।
तस्य प्रक्षुभ्यते राज्यं बलं कोषश्च नश्यति ॥
यः शूद्रो वैदिकं धर्म्मं स्मार्त्तं वा भाषते यदि ।
तस्य दण्डं द्वे सहस्रे सृक्नणी चैव भेदयेत् ॥
दुःशीलोऽपि द्विजः पूज्यो न शूद्रो विजितेन्द्रियः ।
दुष्टां गां कः परित्यज्यार्च्चयेत् शीलवतीं खरीम् ॥"
व्यवहारमाह कात्यायनः ।
"वि नानार्थेऽव सन्देहे हरणं हार उच्यते ।
नानासन्देहहरणाद्व्यवहार इति स्थितिः ॥"
नानाविवादविषयः संशयो ह्रियतेऽनेन इति व्यवहारः । भाषोत्तरक्रियानिर्णायकत्वं व्यव-हारत्वम् । तथा च बृहस्पतिः ।
"अज्ञानतिमिरोपेतान् सन्देहपटलार्द्दितान् ।

| | | |
|---|---|---|
| | | निरामयान् यः कुरुते शास्त्राञ्जनशलाकया ॥<br>इह कीर्त्तिं राजपूजां लभते सद्गतिञ्च सः ।<br>तस्मात् संशयमूढानां कर्त्तव्यश्च विनिर्णयः ॥”<br>अतएव नारदः । |

"अनियुक्तो नियुक्तो वा शास्त्रज्ञो वक्तुमर्हति ।
दैवीं वाचं स वदति यः शास्त्रमुपजीवति ॥"
दैवीं देवानुमताम् ॥ * ॥ धर्म्मशास्त्रयोस्तु
विरोधे लोकव्यवहार एवादरणीयः । इत्याह
स एव ।
"धर्म्मशास्त्रविरोधे तु युक्तियुक्तो विधि स्मृतः ।
व्यवहारोऽपि बलवान् धर्म्मस्तेनावहीयते ॥"
अवहीयते अवगम्यते हि गतावित्यस्माद्धातोः
।
अतएव बृहस्पतिः ।
"केवलं शास्स्त्रमाश्रित्य न कर्त्तव्यो विनिर्णयः
।
युक्तिहीनविचारे तु धर्म्महानिः प्रजायते ॥"
युक्तिर्न्यायः । स च लोकव्यवहार इति व्यव-
हारमातृका ॥ अतएव कात्यायनः ।
"कुलशीलवयोवृत्तवित्तवद्भिरधिष्ठितम्।
बणिग्भिः स्यात् कतिपयैः कुलवृद्धैरधि-
ष्ठितम् ॥"
सद इति शेषः । कात्यायनः ।
"सभ्येनावश्यवक्तव्यं धर्म्मार्थसहितं वचः ।
शृणोति यदि नो राजा स्यात्तु सभ्यस्तदानृणः
॥"
सभ्यः सभायां साधुः ॥ * ॥ तथाविधानाह
याज्ञवल्क्यः ।
"श्रुताध्ययनसम्पन्नाः कुलीनाः सत्यवादिनः ।
राज्ञा सभासदः कार्य्याः शत्रौ मित्रे च ये
समाः ॥"
श्रुताध्ययनसम्पन्नाः धर्म्मशास्त्रज्ञाः ।
कुलीनाः
सङ्कारादिदोषशून्यमातापितृवंशपरम्पराकाः ।
एवंभूताः सभासदः सभायां यथा सीदन्ति
उपविशन्ति तथा दानमानसत्कारैः राज्ञा
कर्त्तव्याः ॥ * ॥ तथाविधावस्थानेन भूमेः
सभात्व-
माह मनुः ।
"यस्मिन् देशे निषीदन्ति विप्रा वेदविदस्त्रयः ।
राज्ञः प्रतिकृतो विद्वान् ब्राह्मणस्तां सभां
विदुः ॥"

एनो गच्छति कर्त्तारं निन्दार्हो यत्र
निन्द्यते ॥"
कर्त्तारं वादिनम् । राजपादं विवेचकपरम्
॥
अनेनाः निष्पापः ॥
अर्थित्वमाहतुर्व्यासनारदौ ।
"यस्य चाभ्यधिका पीडा कार्य्यं
वाप्यधिकं
भवेत् ।
तस्यार्थिभावो दातव्यो न यः पूर्व्वं
निवेदयेत् ॥"
अत्रैव पूर्व्वपक्षो भवेत्तस्य इति
कात्यायनीये
तृतीयपादः । न यः पूर्व्वं निवेदयेदिति
तस्यो-
त्तरः पक्ष इति शेषः । स यः पूर्व्वमिति
पाठे
यः प्रथमं निवेदयति स पूर्व्ववादीत्यर्थः
। बृह-
स्पतिः ।
"अहं पूर्व्विकया यातावर्थिप्रतर्थिनौ यदा
।
वादो वर्णानुपूर्व्वेण ग्राह्यः पीडामवेक्ष्य
वा ॥"
यत्र द्वावेव वदतः प्रभो मद्वाक्यं शृणु इति
तत्र
ब्राह्मणादिक्रमेणाधिकपीडादर्शनेन वा
वादो
ग्राह्यः ॥ * ॥ स्वयं विवादाशक्तौ
प्रतिनिधिमाह
नारदः ।
"अर्थिना सन्नियुक्तो वा
प्रत्यर्थिप्रहितोऽपि वा ।
यो यस्यार्थे विवदते तयोर्जयपराजयौ
॥"
तयोर्व्वादिप्रतिवादिनोः । बृहस्पतिरपि ।
"ऋत्विक् वादे नियुक्तश्च समौ
सम्परिकीर्त्तितौ ।

येत् । युमपदनेकव्यवहारासम्भवात्।
नारदो-
ऽपि ।
"पूर्व्वदादं परित्यज्य योऽन्यमालम्बते
पुनः ।
वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः
॥"
हीनवादीत्यनेन दण्ड्यतोक्ता न तु
प्रकृतार्थाद्धी-
नता अन्यथा छलापत्तेः ॥ * ॥ पारुष्ये
प्रति-
प्रसवमाह स एव ।
"कुर्य्यात् प्रत्यभियोगञ्च कलहे साहसेषु
च ॥"
वाक्पारुष्ये शस्त्रादिप्रहारेषु च ।
यथापूर्ब्ब-
महमप्यनेनाक्रुष्टः शस्त्रेण हत इत्यपराधा-
भावाय प्रत्यभियोगं कुर्य्यात् । तथा च
बृह-
स्पतिः ।
"आक्रुष्टस्तु यदाक्रोशंस्ताडितः
प्रतिताडयन् ।
हत्वाततायिनञ्चैव नापराधी भवेन्नरः ॥"
एतेन वाक्पारुष्यदण्डपारुष्ययोः
प्रकृताभि-
योगे खण्डकाभियोगेऽपि न दोषः । यत्तु ।
"पूर्ब्बमाक्षारयेद्यस्तु नियतं स्यात् स
दोषभाक् ।
पश्चाद्यः सोऽप्यसत्कारी पूर्ब्बे तु विनयो
गुरुः ॥"
इति नारदवचनं तत् पूर्ब्बपिक्षया परस्या-
धिकवाक्पारुष्योत्पादकस्यापि
स्वल्पदण्डविधा-
यकम् ॥ * ॥ युगपत्संप्रवर्त्तने
अधिकदण्डाभाव-
माह स एव ।
"पारुष्ये साहसे चैव युगपत्संप्रवृत्तयोः ।
विशेषश्चेन्न लभ्येत विनयः स्यात्
समस्तयोः ॥"

विद्वत्सहतावपि सभापर्य्यायपरिषच्छब्दमाह स
एव ।
"त्रैविद्यो हैतुकस्तर्की निरुक्तो धर्म्मपाठकः ।
त्रयश्चाश्रमिणः पूर्व्वे परिषत् स्याद्दशावराः ॥"
त्रैविद्यः त्रिवेदपारगः । हैतुकः । सद्युक्ति-
व्यवहारी । अतएवामरासंहः । सभा सदसि
सभ्ये च । अत्र भा दीप्तिः प्रकाशो ज्ञानमिति
यावत् तया सह साक्षात् परम्परया वा वर्त्तते
इति सभा ॥ * ॥ कात्यायनः ।
"दिवसस्याष्टमं भागं मुक्त्वा भागत्रयं तु यत् ।
स कालो व्यवहाराणां शास्त्रदृष्टः परः स्मृतः
॥"
अष्टमयामाद्यार्द्धप्रहरम्। भागत्रयं प्रहरद्वय-
पर्य्यन्तम् । मनुः ।
"धर्म्मासनमधिष्ठाय संवीताङ्गः समाहितः ।
प्रणम्य लोकपालेभ्यः कार्य्यदर्शनमारभेत् ॥"
मनुनारदबौधायनहारीताः।
"पादोऽधर्म्मस्य कर्त्तारं पादः साक्षिणमृच्छति
।
पादः सभासदः सर्व्वान् पादो राजानमृच्छति
॥
राजा भवत्यनेनास्तु मुच्यन्ते च सभासदः ।
यज्ञे स्वाम्याप्नुयात् पुण्यं हानिं वादेऽथवा
जयम् ॥"
कात्यायनः ।
"मनुष्यमारणे स्तेये परदाराभिमर्षणे ।
अभक्ष्यभक्षणे चैव कन्याहरणदूषणे ॥
पारुष्ये कूटकरणे नृपद्रोहे तथैव च ।
प्रतिवादी न दातव्यः कर्त्ता तु विवदेत्
स्वयम् ॥"
कुलस्त्रीप्रभृतीनां प्रतिनिधिमाह व्यासः
।
"कुलस्त्रीबालकोन्मत्तजडार्त्तानाञ्च
बान्धवाः ।
पूर्ब्बपक्षोत्तरे ब्रूयुर्नियुक्तो भृतकस्तथा
॥"
भ्रात्रादीतरस्य पक्षस्थितस्य
दण्डनीयत्वमाह
नारदः ।
"यो न भ्राता पिता वापि न पुत्त्रो न
नियो-
जितः ।
पराथवादी दण्ड्यः स्यात् व्यवहारेषु
विब्रुवन् ॥"
विब्रुवन् विरुद्धं ब्रुवन् ॥ * ॥ नारदः ।
"निर्व्वेष्टकामो रोगार्त्तो यियक्षुर्व्यसने
स्थितः ।
अभियुक्तस्तथान्येन
राजकर्म्मोद्यतस्तथा ॥
गवां प्रचारे गोपालाः शस्यबन्धे
कृषीवलाः ।
शिल्पिनश्चापि तत्काले आयुधीयाश्च
विग्रहे ॥
अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती
।
विषमस्थाश्च नासेव्या न
चैतान्नाह्वयेन्नृपः ॥"
निर्व्वेष्टुकामो विवाहप्रवृत्तः । अन्येन
वादान्त-
रेण । अप्राप्तव्यवहारः
षोडशवर्षावरवयस्कः ।
विनयो दण्डः । एवञ्च दण्डोऽयमनपराधे
मयि
कृतः पीडितत्वादिति भाषायां
प्रत्यभियोगः
कार्य्य एव । प्रत्यवस्कन्दनोत्तरत्वेन
युगपदनेक-
व्यवहारापत्तिदोषस्याभावात्॥ * ॥
सभापतेः-
कर्त्तव्यमाह कात्यायनः ।
"अथ चेत् प्रतिभूर्नास्ति वादयोग्यस्तु
वादिनोः ।
स रक्षितो दिनस्यान्ते दद्यात् भृत्याय
वेतनम् ॥"
प्रतिभवति तत्कार्य्ये तद्वद्भवति इति प्रति-
भूर्लग्नकः । वादयोग्यः विवादफलस्य
साधित-
धनादिदानस्य दण्डदानस्य च क्षमः ।
वादिनोः
भाषावादिन उत्तरवादिनश्च । तथाच
याज्ञ-
वल्क्यः ।
"उभयोः प्रतिभूर्ग्राह्यः समर्थः
कार्य्यनिर्णये ।
प्रतिभुवस्त्वभावे च राज्ञा सं ज्ञपनं तयोः
॥"
राज्ञा संज्ञपनं दण्डतुल्याधिकरणं
निर्णयस्य
कार्य्ये धनादिदाने राजदन्तादित्वात्
कार्य्य-
शब्दस्य पूर्ब्बनिपातः । भृत्यः तद्रक्षको
राज-
नियुक्तः ॥ * ॥ प्रत्यर्थी यदि कञ्चित्
कालं
प्रार्थयते स लभते अर्थी तु कालं प्रार्थयन्
अर्थित्वमेव व्याहन्यादिति तेन कालो न
प्रार्थ-
नीयः । तदाह ।
"प्रत्यर्थी लभते कालं त्र्यहं सप्ताहमेव च ।
अर्थी तु प्रार्थयन् कालं तत्क्षणादेव हीयते
॥"

| | | |
|---|---|---|
| | तत्काले विवाहादिसमाप्तिपर्य्यन्तकाले । एते विषमस्थाश्च उपप्लवदेशस्थाश्च उत्तमर्णादिना नासेध्या नावधारणीयाः एतान् प्रागुक्तान् वादिना निवेदितानिति शेषः ॥ * ॥ याज्ञवल्क्यः । "अभियोगमनिस्तीर्य्य नैनं प्रत्यभियोजयेत् ॥" अभियुक्तः सन्नुत्तरमदत्त्वा भाषावादिनमेतं स्वाभियोगानुपमर्द्दकेन विवादान्तरेण न योज- | क्वचित् प्रत्यर्थी कालं न लभते । याज्ञवल्क्यः । "साहसस्तेयपारुष्यगोऽभिशापात्यये स्त्रियाम् । विवादयेत् सद्य एव कालोऽन्यत्रेच्छया स्मृतः ॥" साहसं मनुष्यमारणम् । गौरत्र दोह्या । |

अभिशापो महापातकादिना । अत्यये द्रव्य-
नाशे । स्त्रियां कुलस्त्रियां
चारित्रांववादविषय-
प्राप्तायां दास्यां स्वत्वविवादे वा । एषु सद्य
एव
उत्तरं दापयेदिति शूलपाणिः ॥ विशेषयति
कात्यायनः ।
"यस्मात् कार्य्यसमारम्भश्चिरात्तेन
विनिश्चितः ।
तस्मान्न लभते कालमभियुक्तस्तु
कालभाक् ॥"
अपवादमाह बृहस्पतिः ।
"अभियोक्ता प्रगल्भत्वात् वक्तुं नोत्सहते
यदि ।
तदा कालः प्रदातव्यः
कार्य्यशक्त्यनुरूपतः ॥"
अत्रापि विशेषयति व्यासः ।
"राजदवकृतो दोषस्तस्मिन् काले यदा
भवेत् ।
अवध्ययोगमात्रेण न भवेत् स पराजितः ॥"
स कृतसमयबन्धोऽभियुक्तः ।
"राजदैवकृतं दोषं साक्षिभिः प्रतिपादयेत् ।
जैह्मेन वर्त्तमानस्तु दण्ड्यो दाप्यस्तु
तद्धनम् ॥"
अवध्यतिक्रमहेतो राजदैविकदोषस्य
प्रमितौ
न तदतिक्रामकोऽपराध्यतिजैह्याच्च
तदति-
क्रमेण दण्ड्यो भङ्गी च भवतीत्यर्थः । छद्म-
काठिन्यादियुक्तो जिह्मः । तथा च हारीतः
।
छद्म माया व्याजयुक्ता निकृतिः । कौटिल्य-
काठिन्यशाठ्यवैरस्यसद्भावयुक्तं
जैह्म्यमिति युक्तं
योगः ॥ * ॥
अथ व्यवहारपादनिर्णयः । तत्र बृहस्पतिः ।
"पूर्ब्बपक्षः स्मृतः पादो द्विपादश्चोत्तरः
स्मृतः ।
धर्म्मिणोऽधमर्णादेरिव साध्यत्वात्
साध्यपक्षयोर
भेदाभिधानम् । उपसंहारे च एवंविधः पक्ष
इति । मिताक्षरायान्तु भाषा प्रतिज्ञापक्ष
इति
नार्थान्तरमित्युक्तम् । भाषार्थमुक्त्वा
भाषास्वरूप-
प्रपञ्चमाह स्वल्पाक्षर इति । निराकुलः
पौर्व्वापर्य्यविपर्य्यासादिशून्यः । तत्र ।
"द्यूते च व्यवहारे च प्रव्रते यज्ञकर्म्मणि ।
यानि पश्यन्त्युदासीनाः कर्त्ता तानि न
पश्यति ॥"
इति गृह्यसंग्रहवचनादुदासीनेभ्यो ज्ञात्वा
शोधयेत् । तच्छोधनमाह बृहस्पतिः ।
"न्यूनाधिकं पूर्ब्बपक्षं तावद्वादी विशोधयेत्
।
न दद्यादुत्तरं यावत् प्रत्यर्थी सभ्यसन्निधौ
॥" * ॥
तल्लिखनप्रकारमाह व्यासः ।
"पाण्डुलेखेन फलके भूमौ वा प्रथमं
लिखेत् ।
न्यूनाधिकन्तु संशोध्य पश्चात् पत्रे
निवेशयेत् ॥"
फलकं काष्ठादिपट्टकम् । कात्यायनः ।
"पूर्ब्बपक्षं स्वभावोक्तं प्राड्विवाकोऽथ
लेखयेत् ।
पाण्डुलेखेन फलके ततः पत्रेऽभिलेखयेत्
॥
शोधयेत् पूर्ब्बपक्षन्तु यावन्नोत्तरदर्शनम् ।
उत्तरेणावरुद्धस्य निवृत्तं शोधनं भवेत् ॥
अन्यदुक्तं
लिखेद्योऽन्यदर्थिप्रत्यर्थिनोर्व्वचः ।
चौरवच्छासयेत्तन्तु धार्म्मिकः
पृथिवीपतिः ॥"
स्वभावोक्तमकृत्रिमम् । एतच्च
स्वरविशेषादिना
सुज्ञेयम् ॥ * ॥ अतएव याज्ञवल्क्यः ।
"छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः ।
भूतमप्यनुपन्यस्तं हीयते व्यवहारतः ॥"
"गहनत्वाद्विवादानामसामर्थ्यात्स्मृतेरपि
।
ऋणादिषु हरेत् कालं कामं तत्त्वबुभुत्सया
॥"
बृहस्पतिः ।
"यदा त्वेवंविधः पक्षः कल्पितः
पूर्व्ववादिना ।
दद्यात् तत्पक्षसम्बन्धं प्रतिवादी तदोत्तरम्
॥"
सम्बन्धमुपयुक्तम् । अन्यथा
अन्यवादित्वेन भङ्ग-
प्रसङ्गात् ।
"अन्यवादी क्रियाद्वेषी नोपस्थायी
निरुत्तरः ।
आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः
॥
प्रपलायी त्रिपक्षेण मौनकृत् सप्तभिर्द्दिनैः ।
क्रियाद्वेषी तु मासेन साक्षिभिन्नस्तु तत्-
क्षणात् ॥"
इति नारदोक्तेः ॥
क्रिया लेख्यादिका । साक्षिभिन्नः
साक्षिभिः
पराजितः । वादिनोक्तस्य साध्यस्य प्रतीपं
वदतीति प्रतिवादी । उत्तीर्य्यते
निस्तीर्य्यते
प्रकृताभियोगोऽनेन इति उत्तरम् । याज्ञ-
वल्क्यः ।
"श्रुतार्थस्योत्तरं लेख्यं पूर्ब्बविदकसन्निधौ
॥"
लेख्यमिति वाक्यस्याप्युपलक्षकम् ॥ * ॥
उत्तर-
स्वरूपं तद्भेदांश्चाह नारदः ।
"पक्षस्य व्यापकं सारमसन्दिग्धमनाकुलम्
।
अव्याख्यागम्यमित्येवमुत्तरं तद्विदो विदुः
॥
मिथ्यासंप्रतिपत्तिर्वा प्रत्यवस्कन्दनन्तथा
।

क्रियापादस्तथा चान्यश्चतुर्थो निर्णयः
स्मृतः ॥
मिथ्योक्तौ च चतुष्पात् स्यात्
प्रत्यवस्कन्दने
तथा ।
प्राङ्न्याये च स विज्ञेयो द्विपात्संप्रतिपत्तिषु
॥"
यद्यपि संप्रतिपत्तावपि निर्णयोऽस्ति
तथाप्यु-
त्तरवादिनैव भाषार्थस्याङ्गीकृतत्वेन
क्रियासाध्यो
न भवति इति द्विपादतोक्ता ॥ * ॥
अथ भाषापादः ।
तत्र भाषास्वरूपमाहतुः कात्यायनबृहस्पती
।
"प्रतिज्ञादोषनिर्म्मुक्तं साध्यं
सत्कारणान्वितम् ।
निश्चितं लोकसिद्धञ्च पक्षं पक्षविदो विदुः ॥
स्वल्पाक्षरः प्रभूतार्थो निःसन्दिग्धो
निराकुलः ।
विरोधिकारणैर्मुक्तो विरोधिप्रतिरोधकः ॥
यदा त्वेवंविधः पक्षः कल्पितः पूर्ब्बवादिना
।
दद्यात् तत्पक्षसम्बन्धं प्रतिवादी तदुत्तरम्
॥"
प्रतिज्ञा साध्याभिधायिका वाक् । तस्या
दोषैः
परस्मरविरुद्धार्थपदादिभिस्त्यक्तं साध्यं
साधना-
र्हाभिमतं पक्षं विदुः । अन्यथा
प्रतिज्ञादोषेण
साध्यदोषः स्यात् । अतएवोक्तम् ।
"वचनस्य प्रतिज्ञात्वं तदर्थस्य च पक्षता ।
असङ्करेण वक्तव्ये व्यवहारेषु वादिभिः ॥"
वक्तव्ये पक्षप्रतिज्ञे पूर्ब्बोक्ते । नारदेनापि ।
"सारस्तु व्यवहाराणां प्रतिज्ञा समुदाहृता ।
तद्धानौ हीयते वादी तरंस्तामुत्तरो भवेत्
॥"
उत्तरो विजयी । यद्यप्यन्यत्र साध्यं ज्ञाप्यं
तद्-
विशिष्टधर्म्मो पक्ष इति भेदः तथाप्यत्र वाक्
भूतं तत्त्वार्थसम्बन्धम् । नारदः ।
"भूतं तत्त्वार्थसम्बन्धं प्रमादाभिहितं छलम्
।
किन्तु राज्ञा विशेषेण स्वधर्म्ममभिरक्षता ॥
मनुष्यचित्तवैचित्र्यात् परीक्षा साध्वसाधु
वा ।
सर्व्वेष्वर्थविवादेषु वाक्छले नावसीदति ॥
पशुस्त्रीभूम्यृणादाने शास्योऽप्यर्थान्न
हीयते ॥"
सर्व्वेष्वर्थविवादेषु प्रमादाभिधानेऽपि
नावसी-
दति अत्रोदाहरणं पशुस्त्रीत्यादि ।
अर्थविवाद-
ग्रहणात् मन्युकृतविवादेषु प्रमादाभिधाने
प्रकृतार्थादप्यर्थाद्धीयत इति गम्यते ।
यथाह-
मनेन शिरसि पादेन ताडित इत्यभिधाय
केवलं हस्तेन ताडित इति वदन् न केवलं
दण्ड्यः पराजीयते च । ततश्च त्वं
मह्यमृणं
धारयसि मत्त ऋणत्वेन गृहीततावद्धन-
कत्वादिति भाषाशरीरं एतच्च
संस्कृतदेश-
भाषान्यतरेण यथाबोधं वक्तव्यं लेख्यं वा ।
मूर्खाणामपि वादिप्रतिवादितादर्शनात्
अत-
एवाध्यापनेऽपि तथोक्तं विष्णुधर्म्मोत्तरे ।
"संस्कृतैः प्राकृतैर्व्वाक्यैर्यः
शिष्यमनुरूपतः ।
देशभाषाद्युपायैश्च बोधयेत् स गुरुः स्मृतः
॥" * ॥
अथोत्तरपादः । तत्र कालमाह कात्यायनः
।
"सद्यःकृतेषु कार्य्येषु सद्य एव विवादयेत् ।
कालातीतेषु वा कालं दद्यात् प्रत्यर्थिने
प्रभुः ॥"
वादिनोक्तस्य साध्यस्य प्रतीपमर्थयते इति
प्रत्यर्थी । नारदः ।
प्राङ्न्यायाश्चोत्तराः प्रोक्ताश्चत्वारः
शास्त्र-
वेदिभिः ।
अभियुक्तोऽभियोगस्य यदि कुर्य्यादपह्नवम्
।
मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः
॥"
पक्षस्य भाषार्थस्य व्यापकं आच्छादकं
अभि-
योगप्रतिकूलमिति यावत् । अतएव
पूर्ब्बपक्षार्थ-
सम्बन्धं प्रतिपक्षं निवेदयेदित्युक्तम् । न च
विप्रतिपत्त्या न्यायार्थमागतस्य
धारयसीत्यभि-
युक्तस्य धारयामीति संप्रतिपत्तेः
कथमुत्तरत्वं
अभियोगाप्रतिकूलत्वादिति वाच्यम् ।
भाषा-
वादिनो मूर्खत्वेनापटुतया वा
कदाचिद्भाषाभि-
वादादेवायं हीयते इति भाषाविमर्षपर्य्यन्तं
विप्रतिपन्नस्याप्युत्तरवादिनो भाषार्थं
सम्यगवगम्य
तन्निषेधार्थं सम्यगुत्तरासम्भवात्
विद्वत्सभायां
चासत्यवचनमत्यन्ताधर्म्मकारकं
परोक्तिपराजये
च दण्ड्यत्वं वादिना च वैरमित्यादि
प्रतिसन्द-
धतः संप्रतिपत्तेरुत्तरत्वं सम्भवत्येव । एवं
एतेभ्य
एवानिस्तारात् साध्यत्वेनोपदिष्टस्य
पक्षस्य
सिद्धत्वे नोपन्यासेन साध्यत्वनिवारणात्
सिद्ध-
साधनेनापि वादिनः
प्रत्यवस्थानाच्चोत्तरत्वं
संप्रतिषत्तेः सिद्धमिति । सारं
प्रकृतोपयोगि ।
अनाकुलं पूर्ब्बापरविरोधशून्यम् ।
अव्याख्या-

| प्रत्याय्यर्णादिधर्म्मविशेषविशिष्टस्य पक्षतया | | गम्यमध्याहारादिकं विनैव प्रतीतं<br>अभियोगस्य<br>अभियुज्यते इत्यभियोगः सहेतुकं साध्यं<br>तस्या-<br>पह्नवमित्यर्थः ॥ * ॥ उत्तराभाषमाह<br>कात्यायनः ।<br>“प्रकृतेन त्वसम्बन्धं अत्यल्पमतिभूरि च<br>।<br>पक्षैकदेशव्याप्यैवं तच्च नैवोत्तरं भवेत् ॥<br>अस्तव्यस्तप्रदव्यापि निगूढार्थं तथाकुलम्<br>। |
|---|---|---|

व्याख्यागम्यमसारञ्च नोत्तरं शस्यते बुधैः ॥”
अस्तव्यस्तपदव्यापि
अनन्वितार्थपदव्याप्तमिति
व्यवहारतिलके भवदेवभट्टाः ॥ * ॥
मिथ्योत्तर-
भेदमाहतुः पुनर्व्यासनारदौ ।
“मिथ्यैतन्नाभिजानामि मम तत्र न सन्निधिः ।
अजातश्चास्मि तत्काले इति मिथ्या
चतुर्व्वि-
धम् ॥”
मिथ्यैतदिति शब्दतो
नाभिजानामीत्यादिकमर्थ-
तोऽपह्नवः । तथा च कात्यायनः ।
“श्रुत्वा भाषार्थमन्यस्तु यदि तं प्रतिषेधति ।
अर्थतः शब्दतो वापि मिथ्या तज्ज्ञेयमुत्तरम्
॥”
त्वं मह्यं धारयसीति प्रतिज्ञायां न गृहीतमिति
शब्दतः । कालविशेषगर्भायां तस्यां सत्यां
तदा
नाहं जात इति अर्थतः । देशकालविशेष-
गर्भायां तदा तत्र नाहमासं इत्यप्यर्थतः ।
देशादिमत्यां तच्छून्यायां वा न
जानामीत्यर्थत
एव
योग्यास्मरणेनार्थतस्तदग्रहणप्रतिपादनात्
अत्र चरमत्रयं ग्रहणावस्कन्दनमुखेन ग्रहणा-
भावप्रतिपादकं सापदेशमिथ्योत्तरमात्रं आद्यं
मिथ्योत्तरमात्रम् ॥ * ॥ बृहस्पतिः ।
“श्रुत्वाभियोगं प्रत्यर्थी यदि तत् प्रतिपद्यते ।
सा तु संप्रतिपत्तिः स्याच्छास्त्रविद्भिरुदाहृता
॥
अर्थिनाभिहितो योऽर्थः प्रत्यर्थी यदि तं तथा
।
प्रपद्य कारणं ब्रूयात् प्रत्यवस्कन्दनं हि तत् ॥
आचारेणावसन्नोऽपि पुनर्लेख्यते यदि ।
सोऽभिधेयो जितः पूर्व्वं प्राङ्न्यायस्तु स
उच्यते ॥”
अभियुज्यते इत्यभियोगः । प्रतिपद्यतेऽङ्गी-
त्वादिति वाद्युक्ते ममेयं
भूर्द्दशवर्षभुज्यमानत्वा-
दिति प्रत्युत्तरं तत्तु
धनमात्रप्रयुक्तम् ।
“पश्यतोऽब्रुवतो हानिर्धनस्य
दशवार्षिकी ॥”
इति याज्ञवल्क्यीयं बीजम् ॥
किन्तु नैतद्युक्तम् ।
“परेण भुज्यमानाया
भूमेर्व्विंशतिवार्षिकी ॥”
इति भूमिमात्रविषयकं
तत्परार्द्धेनापोदित-
त्वादिति भवदेवभट्टाः ॥
“पश्यतोऽब्रुवतो
हानिर्भूमेर्व्विंशतिवार्षिकी ।
परेण भुज्यमानाया धनस्य
दशवार्षिकी ॥”
इति शूलपाणिधृतपाठोऽपि तत्रार्थे
प्रमाणम् ।
ततश्चात्र क्रमागतत्वे पूर्ब्बवादिनः
प्रमाणोप-
न्यासः । तथा चोक्तम् ।
“गुरावभिहिते हेतौ प्रतिवादिक्रिया
भवेत् ।
दुर्ब्बले वादिनः प्रोक्ता क्रिया
तुल्येऽपि वादिनः ॥”
आचारेण व्यवहारेण । अवसन्नो
भङ्गी । लेख-
यते भाषामिति शेषः स वादी
अस्मिन्नर्थे मया
पूर्ब्बं पराजितः वाच्यः प्राङ्न्यायो
हि धार्य्य-
माणत्वसामान्याभावज्ञापकः ॥ *
॥ एतेषां सङ्करे
विशेषमाहतुर्व्यासहारीतौ ।
“मिथ्योत्तरं कारणञ्च स्यातामेकत्र
चेदुभे ।
सत्यञ्चापि सहानेन तत्र ग्राह्यं
किमुत्तरम् ।
सङ्करे सदुत्तरत्वमेकावच्छेदेन । सङ्करे तु अस-
दुत्तरत्वमाह कात्यायनः ।
“पक्षैकदेशे यत् सत्यमेकदेशे च कारणम् ।
मिथ्या चैवैकदेशे स्यात् सङ्करात् तदनुत्तरम् ॥”
एकदेशे इत्यत्र एकस्मिन्नेव देशे न भिन्नदेशे
यथा शतं धारयाम्येव परिशोधितं न गृहीतं
वा इति ॥ * ॥
अथ क्रियापादः ।
उत्तराभिधानानन्तरं याज्ञवल्क्यः ।
“ततोऽर्थी लेखयेत् सद्यः प्रतिज्ञातार्थसाधकम्
।”
अर्थी वादी प्रतिवादी च स्वपक्षार्थित्वात् ।
तयोरधिकारे नियममाह व्यासः ।
“प्राङ्न्याये कारणोक्तौ च प्रत्यर्थी साधयेत्
क्रियाम् ।
मिथ्योत्तरे पूर्व्ववादी प्रतिपत्तौ न सा भवेत् ॥”
मिथ्योत्तरे न गृहीतं मयेत्यादिरूपे पूर्व्ववादी
भाषावादी साक्ष्यादिकं निर्द्दिशेन्नोत्तरवादी तत्र
तस्य मानुष्याः क्रियाया असम्भवादिति न्यायो
मूलं अत्रापि साक्ष्याद्यभावे उत्तरवादिन एव
दिव्यम् ।
“न कश्चिदभियोक्तारं दिव्येषु विनियोजयेत् ।
अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदैः ॥”
इति कात्यायनोक्तेः ॥
अत्र पूर्व्वार्द्धेनार्थिनो दिव्यनिषेधेऽर्थात् प्रत्य-
र्थिनस्तत्प्राप्तौ परार्द्धाभिधानं सिद्धे सत्यारम्भो
नियमाय इति न्यायान्नियमार्थं न च व्यासवचने
क्रियापदं कारणोत्तरमानुषीदैवीपरमित्येताव-
दथकं मिथ्योत्तरेऽप्यनुयुज्यते इति तत्रापि
अर्थिन एव दिव्यमिति वाच्यं श्रूयमाणपदस्य
हि पुनरन्वयार्थमेवानुषङ्गः । नन्वर्थवैषम्यसहि-
तस्य गौरवात् पूर्व्वोक्तम्न्यायमूलकविषयलब्धौ
कात्यायनोक्तदिव्यविषयनियमभङ्गानर्हत्वाच्च
यत्र
विवादविषये प्रत्यर्थी सन्दिहानस्तत्र तस्योत्तरा-
नर्हतया अर्थिन एव दृष्टक्रिया तदसम्भवे तस्यैव
दिव्यं न तु प्रत्यर्थिनः अधिकारनिश्चयाभावात्
अर्थिनस्तत्सत्तात् न च न कश्चिदभियोक्तार-
मित्यादिना विरोधस्तस्योत्तरार्द्धप्रतियोगिविषय-

करोति । तं साध्यार्थम् । तथा प्रपद्य
सत्यत्वे-
नाङ्गीकृत्य । कारणं तत्प्रतिकूलरूपं कारणं
ब्रूयात् तदा तदुत्तरं प्रत्यवस्कन्दनम् ।
वाद्युक्तस्य
प्रतिकूलत्वेन प्रत्यवस्कन्दनमित्यर्थः ।
प्रतिपक्षा-
वस्कन्दनात् प्रत्यवस्कन्दनमिति
जीमूतवाहनः ॥
तच्च कारणोत्तरं त्रिविधम् । बलवत् तुल्यबलं
दुर्ब्बलञ्च । तत्र बलवदुत्तरं यथा । त्वत्तः शतं
गृहीतमिति सत्यं किन्तु परिशोधितमिति ।
अत्र उत्तरवादिन एव क्रियानिर्द्देशः । तथा च
नारदः ।
“आधर्य्यं पूर्ब्बपक्षस्य यस्मिन्नर्थवशाद्भवेत् ।
विवादे साक्षिणस्तत्र प्रष्टव्या प्रतिवादिनः ॥”
आधर्य्यं दुर्ब्बलत्वं पूर्ब्बपक्षस्य । ततश्च
स्थापक-
साध्यस्य धार्य्यमाणत्वस्य ध्वंसकारणं
निर्यात-
नादि तद्रूपमुत्तरं कारणोत्तरम् । अतएव
मिथ्योत्तरादस्य भेदः । तद्धि
धार्य्यमाणत्वस्या-
त्यन्ताभावप्रयोजकमग्रहणरूपंन तु ध्वंस-
रूपम् ॥ * ॥ तुल्यबलकारणोत्तरंयथा ।
मदीयेयं भूमिः क्रमागतत्वादिति वाद्युक्ते मदी-
येयं भूमिः क्रमागतत्वादिति प्रतिवादिना
तथोत्तरमिति तत्र पूर्ब्बवादिनः
साक्ष्युपन्यासः ।
तदसामर्थ्ये प्रतिवादिनः । तथा च
याज्ञवल्क्यः ।
“साक्षिषूभयतः सत्सु साक्षिणः पूर्व्ववादिनः
।
पूर्ब्बपक्षेऽधरीभूते भवन्त्युत्तरवादिनः ॥”
दुर्ब्बलकारणोत्तरं यथा । ममेयं भूः क्रमागत-
मिथ्याकारणयोर्व्वापिग्राह्यं
कारणमुत्तरम् ॥
यत्प्रभूतार्थविषयं यत्र वा स्यात्
क्रियाफलम् ।
उत्तरं तत्तु विज्ञेयमसं
कीर्णमतोऽन्यथा ॥”
शताभियोगे शतग्रहणं मिथ्या
पञ्चाशदेव
गृहीतास्ताश्च परिशुद्धा इति
मिथ्याकारणां-
शयोस्तुल्यरूपत्वे कारणोत्तरं
ग्राह्यं आदौ
विचारणीयं
परिशोधनस्यार्व्वाचीनत्वेन
स्मरणार्हत्वात् पश्चान्मिथ्योत्तरं
तत्र ऋणस्य
चिरातीतस्य कष्टप्रतिपाद्यत्वात् ।
एवञ्च नव-
त्यभियोगे मिथ्यैतत् षष्टिपुराणा
एव मया
गृहीतास्तत्रापि त्रिंशत्
परिशुद्धास्त्रिंशद्धार-
यामि इति मिथ्याकारणसत्यैः
सङ्कीर्णोत्तरेऽपि
पूर्ब्बवत् कारणोत्तरमेव ग्राह्यं
मिथ्याकारणयो-
र्व्वापीति वापिशब्दाभ्यां तथा
दर्शितत्वात्
सत्योत्तरस्य स्वयंस्वीकृतत्वेन
निर्णयानर्हत्वा-
दिति भावः । प्राङ्न्यायेन सह
सर्व्वथैव सङ्क-
रानुपपत्तिरिति तन्नोक्तं यदि शतं
मिथ्यापञ्च-
विंशतिपुराणा गृहीतास्ते च
परिशुद्धास्तथा
मिथ्यांशस्य प्रचुरार्थविषयस्य
विचार उपक्रम-
णीयः ।
भूयोऽनुरोधस्याभ्यर्हितत्वात्
पश्चात्
त्वात् एतद्विषय एव धनस्वामिनो दिव्यमिति
लोकप्रवादः ॥ * ॥ लिखिताद्यभावेनापि दिव्य-
माह याज्ञवल्क्यः ।
“प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्त्ति-
तम् ।
एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥” * ॥
अथ दिव्यम् । दिव्यान्याह स एव ।
“तुलाग्न्यापो विषं कोषो दिव्यानीह विशुद्धये ।
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ॥
रुच्या वान्यतरः कुर्य्यादितरो वर्त्तयेच्छिरः ।
विनापि शीर्षकं कुर्य्यात् नृपद्रोहेऽथ पातके ॥”
महाभियोगेषु महापातकादिगुरुतराभियोगेषु ।
शीर्षकस्थः शीर्षकं प्रधानं व्यवहारस्य चतुर्थ-
पादो जयपराजयलक्षणः तेन दण्डो लक्ष्यते ।
तत्र तिष्ठति वर्त्तते तदङ्गीकरोतीत्यर्थः । अत्राभि-

| | | | |
|---|---|---|---|
| | | स्वल्पार्थस्य विचार इति । तुल्यार्थविषयत्वे तु यत्र क्रियायाः साक्ष्यादेः फलं निर्णयः शीघ्रं भवति तदंशस्यैव प्रमाणं ग्राह्यं तथा यदि शतग्रहणे पत्रमस्ति शतापह्नवे च पञ्चाशत्-परिशोधने साक्षिणस्तदा मिथ्योत्तर एवादौ तत्खण्डनाय ग्रहनपत्रं ग्राह्यं लिखितस्य साक्षिभ्यो बलवत्त्वेन सम्यङ्निर्णयकारित्वात् पश्चात्परिशोधनं साक्षिणः प्रष्टव्याः । सङ्करो-त्तरमप्यसङ्कीर्णमदुष्टं अतो भिन्नमन्यथा सङ्कीर्ण-दुष्टमित्यर्थः । अत्र चावच्छेदभेदेन मिथ्योत्तर- | |

योक्तुः शिरोवर्त्तित्वोक्तेरभियोज्यस्य
दिव्यकर्त्तृत्वं
प्रतीयते । प्रत्यर्थीच्छया अर्थिनो दिव्यमाह
रुच्येति । इतरोऽभियुक्तः । एतत्सर्व्वं
दिव्यतत्त्वे
विवृतम् । प्रतिज्ञातार्थसाधकमिति साधकं
साक्ष्यादिकम् । तदाह बृहस्पतिः ।
"द्विप्रकारा क्रिया प्रोक्ता मानुषी दैविकी तथा
।
साक्षिलेख्यानुमानञ्च मानुषी त्रिविधा स्मृता
।
धटाद्या धर्म्मजान्ता च दैविकी नवधा स्मृता
॥"
तत्रानुमानन्तु भुक्त्यादि ॥ * ॥ तत्र
साक्ष्यमाह
मनुः ।
"समक्षदर्शनात् साक्ष्यं श्रवणाच्चैव सिध्यति
।"
एतत् प्रमाणमात्रोपलक्षणम् ।
"अनुभावी च यः कश्चित् कुर्य्यात् साक्ष्यं
विवादिनाम् ।"
इति तद्वचनान्तरात् ॥
अतएवाकृतमपि साक्षिणमाह मनुः ।
"यत्रानिरुद्धो वीक्ष्येत शृणुयाद्वापि किञ्चन ।
पृष्टस्तत्रापि तद्ब्रूयात् यथादृष्टं यथाश्रुतम्
॥"
अनिरुद्धस्त्वमत्र साक्षित्वेनानियुक्तः ।
परम्पर-
यापि श्रवणमाह विष्णुः ।
"उद्दिष्टसाक्षिणि मृते देशान्तरगतेऽपि वा ।
तदभिहितश्रोतारः प्रमाणं नात्र संशयः ॥"
अस्योत्तरसंज्ञामाह नारदः ।
"साक्षिणामपि यत् साक्ष्यं स्वपक्षं
परिभाषताम् ।
श्रवणात् श्रावणाद्वापि स साक्ष्युत्तरसंज्ञकः
॥"
स्वपक्षसम्बन्धि साक्ष्यं परिभाषतां साक्षिणां
यः

"उभयानुमतः साक्षी भवेदेकोऽपि
धर्म्मवित् ।"
उभयानुमतत्वं धर्म्मवित्त्वञ्च नियतं
तन्त्रम् ।
तदाह विष्णुः ।
अभिमतगुणसम्पन्नस्तूभयानु-
मतस्त्वेकोऽपि इति । अतएव
श्रोत्रियमप्येकं
निषेधयति बृहस्पतिः ।
"नव सप्त पञ्च वा स्युश्चत्वारस्त्रय एव वा
।
उभौ तु श्रोत्रियौ ग्राह्यौ नैकं पृच्छेत्
कदा-
चन ॥"
एको मिलितगुणसम्पन्नः प्रधानकल्पः
तदभावे
उभयानुमतमात्रोऽपि ग्राह्यस्तदाह नारदः
।
"उभयानुमतो यः
स्याद्द्वयोर्व्विवदमानयोः ।
भवत्येकोऽपि साक्षित्वे प्रष्टव्यः स्यात् स
संसदि ॥"
उभयानुमत एकोऽलुब्धत्वादिना
सर्व्वजनप्रसिद्ध-
श्चेत्तदा साक्षित्वे संसदि बहुजनसन्निधौ
प्रष्टव्यः
तथात्वे स्नेहवैरादिसत्त्वेऽप्यकीर्त्तिभयात्
सत्या-
भिधानसम्भवादित्याशयः । विचारस्य
तत्त्व-
निर्णयार्थत्वात्तदाह मनुः ।
"एकोऽप्यलुब्धः साक्षी स्यात् बह्व्यः
शुच्योऽपि
न स्त्रियः ।
स्त्रीबुद्धेरस्थिरत्वात्तु दोषैश्चान्येऽपि ये
वृताः ॥"
एकोऽलुब्धस्तु साक्षी स्यादिति
कुल्लूकभट्टधृत-

न परीक्षा इति
स्तेयपरदारगमनादिकार्य्याणां
निह्नवेनैव क्रियमाणत्वात् दैवादेव परं
साक्षिणो
भवन्तीति न परीक्षा इत्युक्तम् । तेषां
वाक्यन्तु
मित्रारिभावादिनिरूपणेनैवोपपत्त्यनुपपत्ति-
भ्यामालोचनीयम् । न तु वाक्यमात्रादिति
व्यवहारमातृका ॥ अतएव कात्यायनः ।
"ऋणादिषु परीक्षेत साक्षिणः स्थिरकर्म्मसु
।
साहसात्ययिकेनैव परीक्षा कुत्रचित् स्मृता
॥"
इति ॥ * ॥
श्रोत्रियादीनामसाक्ष्यमांहनारदः ।
"श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजिता
नराः ।
वचनात्तेष्वसाक्षित्वं नात्र हेतुरुदाहृतः ॥"
दानरत्नाकरे श्रोत्रियमाह देवलः ।
"एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य
वा ।
षट्कर्म्मनिरतो विप्रः श्रोत्रियो नाम
धर्म्मवित् ॥"
सकल्पां कल्पमात्राङ्गसहिताम् । षड्
भिरिति
सहार्थे तृतीया । वचनादिति
श्रोत्रियत्वादि-
रूपाभिधानात् न च तत्रान्यो हेतुरित्यर्थः ।
तथा च स्वीयवैदिककर्म्मकरणव्यग्रतया
पर-
कीयकार्य्ये विस्मरणसम्भवात्
साक्षित्वरूपलघु-
कार्य्यनियोगे तच्छापभयेन
व्यवहारद्रष्टारोऽपि
तान् न पृच्छन्तीति
तत्साक्ष्यकरणानर्थक्याच्च न
ते साक्षिणः कर्त्तव्याः किन्त्वकृताः स्वयं
साक्षिणो भवन्त्येव । उभौ तु श्रोत्रियौ
स्याता-

स्वयं शृणोति अर्थिना श्राव्यते वा स
श्रवणात्
श्रावणादुत्तरसाक्षीत्यर्थः । एवं योऽर्थिना
गूढ-
तया प्रत्यर्थिवचनं श्रावितः स गूढसाक्षीत्याह
स एव ।
“अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं
स्फुटम् ।
यः श्राव्यते तदा गूढो गूढसाक्षी स उच्यते
॥”
तेनान्यतरवाद्यभिहितार्थविषयकदृष्टकारणजं
विज्ञापनं साक्ष्यमिति स्थितम् । तत्र नारदः
।
“तेषामपि न बालः स्यान्नैको न स्त्री न दुष्ट-
कृत् ।
न बान्धवो न चारातिर्ब्रूयुस्ते कार्य्यमन्यथा
॥”
कार्य्यं सदपि अन्यथा तद्विरुद्धत्वेन । एवञ्च
यदि परमधार्म्मिकत्वेन बान्धवादीनामपि
सत्य-
वादित्वं निश्चीयते तदा तेऽपि साक्षिणो
भवितु
मर्हन्तीति । तेषां साक्ष्यविधायकं वक्ष्यमाण-
मनुवचनमपि एतादृग्विषयम् । याज्ञवल्क्यः ।
“त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्त्तक्रिया-
रताः ।
यथाजाति यथावर्णं सर्व्वे सर्व्वेषु वा स्मृताः
॥”
त्रयोऽवरा निकृष्टा येषां ते त्र्यवराः त्रिभ्यो-
ऽन्यूना भवन्तीत्यर्थः । यथेति यो
यज्जातीयस्तस्य
तज्जातीयः साक्षी । स्त्रीणां
स्त्रियोऽन्त्यजानाम-
न्त्यजाः । यथावर्णं ब्राह्मणानां ब्राह्मणाः
क्षत्त्रियादीनां क्षत्त्रियादयः । अभावे तु तत्त-
द्भेदं विना सर्व्व एव । त्र्यवरा इत्यस्यापवाद-
माह स एव ।

पाठः ॥ एको लुब्धस्त्वसाक्षी स्यादिति
जीमूत-
वाहनधृतपाठस्तु न युक्तः ।
लुब्धाश्चेद्बहवो-
ऽप्यसाक्षिणो भवितुमर्हन्तीति
एकपदव्यर्थता-
पत्तेः । भवतु वा तत्पाठः तथाप्येक
इत्यनुरोधात्
तन्निषेधमुखेनालुब्धस्यैकस्यानुमतिसत्त्वे
धर्म्म-
वित्त्वमन्तरेण साक्षित्वं बोध्यं इत्यर्थतो
न
विरोधः । अतएव विश्वरूपप्रभृतीनां
उभयानु-
भत एक एव साक्षीति व्याख्याने
धर्म्मवदिति
नोक्तम् । दोषैस्तेयादिभिः । तथा च
नारदः ।
“स्तेनाः साहसिका धूर्त्ताः कितवा
योधकाश्च
ये ।
असाक्षिणस्तु ते दृष्टास्तेषु सत्यं न
विद्यते ॥”
कितवा द्यूतकराः ॥ * ॥ अपवादमाह
उशनाः ।
“दासोऽन्धो वधिरः कुष्ठी
स्त्रीबालस्थविरादयः ।
एतेऽप्यनभिसम्बन्धाः साहसे साक्षिणो
मताः ॥”
स्थविरो ग्लानेन्द्रियग्रामः । आदिशब्दात्
कित-
वादयः । उभयानुमताभावे
शुचिक्रियत्वादि-
गुणश्चैको ग्राह्यः । तथा च व्यासः ।
“शुचिक्रियश्च धर्म्मज्ञो
योऽन्यत्राप्यनुभूतवाक् ।
प्रमाणमेकोऽपि भवेत् साहसेषु विशेषतः
॥”
अनुभूतवाक् स्थानान्तरे सत्यत्वेनेति ।
भवदेव-
भट्टोऽप्येवम् ॥ साहसमाह नारदः ।

मिति स्मृतेः । वृद्धस्यासाक्षित्वं वृद्धत्वादेव
ग्लानेन्द्रियत्वादित्यर्थः । मनुः ।
“स्त्रीणां साक्ष्यं स्त्रियः कुर्य्युर्द्विजानां
सदृशा
द्विजाः ।
शूद्राश्च सन्तः
शूद्राणामन्त्यानामन्त्ययोनयः ॥
अन्तर्व्वेश्मन्यरण्ये वा शरीरस्यात्ययेऽपि
च ।
स्त्रियाप्यसम्भवे कार्य्यं बालेन स्थविरेण
वा ॥
शिष्येण बन्धुना वापि दासेन भृतकेन वा ।
देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं
द्विजान् ॥
उदङ्मुखान् प्राङ्मुखान् वा पूर्ब्बाह्णे वै शुचिः
शुचीन् ।
ब्रूहीति ब्राह्मणं पृच्छेत् सत्यं ब्रूहीति
पार्थिवम् ॥
गोबीजकाञ्चनैर्व्वैश्यं शूद्रं सर्व्वैस्तु पातकैः
॥”
गोबीजकाञ्चनापहारे यत् पापं
तत्तवानृताभि-
धाने स्यादिति वैश्यम् ।
एतत्साक्ष्यानृताभिधाने
भवान् सर्व्वैः पातकैः संवध्यत इत्युक्त्वा
शूद्रञ्च
पृच्छेत् ।
“ब्रह्मघ्नो ये स्मृता लोका ये च
स्त्रीबालघातिनः ।
मित्रद्रुहः कृतघ्नस्य ते ते स्युर्व्वदतो मृषा
॥”
इति मनूक्तं दूषणम् । सत्फलञ्च ।
“अश्वमेधसहस्रन्तु सत्यञ्च तुलया धृतम्
।
अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते ॥”
इति मनुनारदोक्तं श्रावयेत् ॥
याज्ञवल्क्यः ।
“न ददाति हि यः साक्ष्यं जानन्नपि
नराधमः ।
स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि
॥”

|  |  |  |
| --- | --- | --- |
|  | “मनुष्यमारणं स्तेयं परदाराभिमर्षणम् ।<br>पारुष्यमनृतञ्चैव साहसं पञ्चधा स्मृतम्<br>॥”<br>कात्यायनः ।<br>“अभ्यन्तरस्तु निःक्षेपे साक्ष्यमेकोऽपि<br>दापयेत् ।<br>अर्थिना प्रहितः साक्षी भवेदेकोऽपि<br>याचिते ॥<br>संस्कृतं येन यत् पण्यं तत्तेनैव<br>विभावयेत् ।<br>एक एव प्रमाणं स विवादे परिकीर्त्तितः<br>॥”<br>संस्कृतं गठितं पण्यं कुण्डलादि । विष्णुः<br>।<br>स्तेयसाहसवाग्दण्डपारुष्यसंग्रहणेषु<br>साक्षिणो |  |

कात्यायनः ।
“अवीचिनरके वर्षं वसेयुः कूटसाक्षिणः
॥” * ॥
याज्ञवल्क्यः ।
“सत्यां प्रतिज्ञां यस्योचुः साक्षिणः स
जयी
भवेत् ।
अन्यथावादिनो यस्य ध्रुवस्तस्य
पराजयः ॥
वर्णानां हि वधो यत्र तत्र साक्ष्यनृतं
वदेत् ।
तत्पावनाय निर्व्वाप्यश्चरुः सारस्वतो
द्विजैः ॥”
गौतमः । नानृतवचने दोषो
जीवनञ्चेत्तदवीनं
न तु पापीयसो जीवनमिति ।
“द्वैधे बहूनां वचनं समेषु गुणिनां तथा ।
गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तराः
॥”
तेषामिति शेषः । यत्तु ।
“साक्षिणां लिखितानाञ्च निर्द्दिष्टानाञ्च
वादि-
नाम् ।
तेषामेकोऽन्यथावादी भेदात्
सर्व्वेऽप्यसाक्षिणः ॥”
इति कात्यायनवचनम् ॥
तत्त्रयाणां तुल्यरूपाणां मध्ये
एकस्याप्यन्यथा-
वादे अपरस्य तत्तुल्यस्य
तत्प्रतिपक्षतया तृती-
यस्य किञ्चिद्वादित्वे तत्र भेदात्
परस्पर-
विरुद्धार्थाभिधाने भेदात् साक्षिभ्यो न
निर्णय
इति परम् । बृहस्पतिस्तु साक्षिद्वैधे
कर्म्म-
निष्ठानां ग्रहणमाह गुणिद्वैधे क्रियावता-
मित्यनेन । तथा ।
“साक्षिणोऽर्थिसमुद्दिष्टान् सत्सु दोषेषु

“साक्षिसभ्यविकल्पस्तु भवेद्यत्रोभयोरपि ।
दोलायमानौ यौ सन्धिं कुर्य्यातां तौ विच-
क्षणौ ॥”
कात्यायनः ।
“क्रिया न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु ।
लेख्ये च सति वादेषु न दिव्यं न च साक्षिणः
।
समत्वं साक्षिणां यत्र दिव्यैस्तत्र विशोधयेत्
॥”
एतत् संशयानुच्छेदे बोध्यम् । याज्ञवल्क्यः ।
“निह्नुते लिखितानेकमेकदेशे विभावितः ।
दाप्यः सर्व्वान् नृपेणार्थान्न
ग्राह्यस्त्वनिवेदितः ॥”
यो लिखितानेकं सुवर्णादिकं अपलपति स
एक-
द्रव्ये साक्ष्यादिभिर्व्विभावितः सन् सर्व्वान्
दद्यात् । यद्येकदेशविभावनेन
वादिनोऽवसाद-
मवगम्य इदमपरं मया लेखयितुं विस्मृतमिति
ब्रूते स तस्मै भाषाकाले अनुपन्यस्तं न
दद्यादे-
तच्च न केवलं वाचनिकं
किन्त्वेकदेशविभावना-
द्विजानत एवास्य तदपलापे
दुःशीलत्वावधार-
णादपरांशेऽपि तथात्वमेव सम्भाव्यते
सत्यविभा-
वकस्यापि प्रक्रान्तविषये यथा
वस्तुवादावधार-
णादविभावितांशेऽपि
सत्यवादित्वसम्भावनमि-
त्येवं रूपतर्कपरम्परा सम्भावना
प्रत्ययानुगृही-
तास्मादेव योगीश्वरवचनात् सर्व्वं
दापनीयमिति
निर्णयः । एवञ्च तर्कवाक्यानुसारेण निर्णये
क्रियमाणे वस्तुनोऽन्यथात्वेऽपि
व्यवहारदर्शिनां
न दोषः । तथा च गौतमेनापि न्यायाधिगमे

“साध्यार्थांशे निगदिते साक्षिभिः सकलं
भवेत्
स्त्रीसङ्गे साहसे चौर्य्ये यत्साध्यं
परिकल्पितम् ॥”
इति कात्यायनवचनम् ॥
तद्विषयप्रदर्शकं ऋणनिक्षेपाद्यपह्नवेऽपि
योज्य-
मिति । यत्तु ।
“अनेकार्थाभियोगे तु यावत् संशोधयेद्धनी ।
साक्षिभिस्तावदेवासौ लभते साधितं धनम्
॥”
तदृणाद्यनभिज्ञपुत्रादिविषयकम् । तथा हि
नानाविधपित्रर्णाद्यभियुक्तेनाजानता नाहं
जानामीति उत्तरवादिना
साक्ष्यादिभिर्यावद्धनं
प्रतिपादयति तावदेव पुत्रेण दातव्यम्
एवमेव
विश्वरूपजीमूतवाहनप्रभृतयः ॥
कात्यायनः ।
“अनुमानाद्वरः साक्षी साक्षिभ्यो लिखितं
गुरु ।
अनिरुद्धा त्रिपुरुषी भुक्तिस्तेभ्यो गरीयसी
॥”
अनुमानं प्रत्यासङ्कलितं तदाह मनुः ।
“वाह्यैर्व्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम् ।
स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च ॥”
स्वरो गद्गदादिः वर्णोऽस्वाभाविकः ।
इङ्गितं
स्वेदवेपथुरोमाञ्चादि । आकारो विकृतः ।
चक्षुषा कातरेण । चेष्टितेन स्थानत्यागादिना
।
एषाञ्चान्यथासिद्धेर्दुर्न्निरूप्यत्वादेभ्यः साक्षी
बलवान् इत्यर्थः ॥ * ॥ मुखनिरूप्यत्वे तु
याज्ञ-
वल्क्यः ।
“देशाद्देशान्तरं याति सृक्कणी परिलेढि च ।
ललाटं स्विद्यते चास्यं मुखं वैवर्ण्यमेति च ॥
परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते ।

दोषयेत् ।
अदुष्टं दूषयन् वादी तत्समं दण्डमर्हति ॥”
इति ॥
तत्समं विवादसमम् ।
सभासदादिविदितसाक्षि-
दूषणमेव ग्राह्यं न तु त्र्यवरादिसाक्षिभिः प्रति-
पाद्यम् ॥ * ॥ अनवस्थापातादित्याह नारदः ।
“सभासदां प्रसिद्धं यल्लोकसिद्धमथापि वा ।
साक्षिणां दूषणं ग्राह्यमसाध्यं
दोषवर्जनात् ॥
अन्यैश्च साक्षिभिः साध्ये दूषणे
पूर्व्वसाक्षिणाम् ।
अनवस्था
भवेद्दोषस्तेषामप्यन्यसम्भवात् ॥”
असाध्यं साधनानर्हं
सिद्धत्वाद्दोषवर्ज्जनात् । अन-
वस्थाविरहात्तस्मात् प्रसिद्धदूषणमेव
ग्राह्यम् ॥ *
दूषणमाह कात्यायनः ।
“बालोऽज्ञानादसत्यात् स्त्री
पापाभ्यासाच्च
कूटकृत् ।
विब्रूयात् बान्धवः स्नेहात्
वैरनिर्यातनादरिः ॥
यः साक्षी नैव निर्द्दिष्टो नाभूतो नैव दर्शितः ।
ब्रूयान्मिथ्येति तथ्यं वा दण्ड्यः सोऽपि नराधमः ॥”
यदुत्तरे येन क्रिया प्रदृश्यते तत्राह ।
“मिथ्याक्रिया पूर्व्ववादे कारणे
प्रतिवादिनः ।
प्राङ्न्याये विधिसिद्धौ तु जयपत्रं
विनिर्द्दिशेत् ॥”
मिथ्योत्तरे सति पूर्व्ववादे पूर्व्ववादिनि
क्रिया
प्रष्टव्या इति शेषः ॥ * ॥ तदानीं
सन्धिमाह
तर्कोऽभ्युपायः तेनापि संगृह्य यथास्थानं
गमये-
दित्युक्त्वा
तस्माद्राजाचार्य्याविनिन्द्यावित्युपसंह-
तम् । एवञ्चास्य न्यायस्य
वादिद्वयसाधारणत्वा-
दुभयविषयत्वं वचनानाम् । अतएव कात्या-
यनः ।
“यद्येकदेशप्राप्तापि क्रिया विद्येत मानुषी ।
सा ग्राह्या न तु पूर्णापि दैविकी वदतां नृणाम् ॥”
वदतां विवदतामित्यविशेषेण दर्शयति ।
पूर्णापि
दैविकी समग्रविषयिकापि न ग्राह्या तेनैक-
देशप्रतिपादिकया मानुष्या क्रियया समस्त-
साध्यसिद्धिरिति । न च यद्येषां मध्ये
एकमपि
मया गृहीतं विभावयसि तदा सर्व्वमेव
दातव्य-
मिति ।
प्रतिज्ञाविषयकत्वमेकदेशविभावितत्वं
वचनस्येति जोग्लोकमतानुसारिमैथिलमतं
युक्तमिति वाच्यं प्रतिज्ञाविषयत्वे ।
“अनेकार्थाभियुक्तेन सर्व्वार्थव्यपलापिना ।
विभावितैकदेशेन देयं यदभियुज्यते ॥”
इत्यनर्थकं प्रौढिवादेनाभियुज्य मानादधिक-
स्यापि प्रतिज्ञातस्य दानावकश्य कत्वात् न
ग्राह्यस्त्वनिवेदित इत्यपि व्यर्थं
अनिवेदितस्यापि
प्रागज्ञातत्वेनाप्रतिज्ञातस्य सर्व्वथैव
देयत्वात् ।
न च विभावितैकदेशवचनं व्याप्यभूतैकदेश-
विषयं तस्मिंस्तु प्रतिपादिते
व्यापकैकदेशप्रतीति-
रनुमानात् सम्भवतीति वाच्यं विभावितैक-
देशानुमितव्यापकस्यापिन्यायतोऽग्राह्यत्वे
सिद्धे
न ग्राह्यस्त्वनिवेदित इत्यभिधानानुपपत्तेः ।
एवञ्च ।
वाक् चक्षुः पूजयति नो तथौष्ठौ निर्भु
जत्यपि ॥
स्वभावात् विकृतिं
गच्छेन्मनोवाक्कायकर्म्मभिः ।
अभियोगे च साक्ष्ये च स दुष्टः परिकीर्त्तितः ॥”
न परोक्तां वाचं प्रतिवचनेन पूजयति तथौष्ठ-
चक्षुश्च परकीयवीक्षणेन निर्भुजति कुटिली-
करोति यदा मनोवाक्कायकर्म्मभिः
स्वभावात्
पूर्व्वोक्तां यथायोग्यां विकृतिं गच्छेत्तदा स
दुष्ट
इत्यर्थः । अतएव श्रीरामायणे ।
“आकारश्छाद्यमानोऽपि न शक्योऽसौ निगू-
हितुम् ।
बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम् ॥”
आकारो देहधर्म्मः मुखाप्रसादवैवर्ण्यरूपः ।
नारदः ।
“सुदीर्घेणापि कालेन लिखितं
सिद्धिमाप्नुयात् ।
संजानन्नात्मनो लेख्यमजानंस्तत्तु लेखयेत् ॥”
सुदीर्घेणेति संस्कारोद्बोधकलिखनसत्त्वादयं
चिरेणापि साक्ष्यं दातुं शक्नोतीत्यर्थः ॥ * ॥
लिपिज्ञं स्वहस्तेन लेखयेत् तदज्ञं
परहस्तेनेत्याह
व्यासः ।
“अलिपिज्ञो ऋणी यः स्यात् लेखयेत्
स्वमतन्तु
सः ।
साक्षी वा साक्षिणान्येन सर्व्वसाक्षिसमीपगः ॥”
बृहस्पतिः ।
“मुषितं घातितं यच्च सीमायाश्च समन्ततः ।
अकृतोऽपि भवेत् साक्षी ग्रामस्तत्र न संशयः ॥”

| | | |
|---|---|---|
| बृहस्पतिः ।<br>“पूर्व्वोत्तरेऽभिलिखिते प्रक्रान्ते कार्य्यनिर्णये ।<br>द्वयोरुत्तप्तयोः सन्धिः स्यादयःपिण्डयोरिव ॥”<br>उत्तापकारणमाह स एव । | | |

अकृता अपि साक्षिणो
भवन्तीत्याहतुर्म्मनु-
कात्यायनौ ।
“अन्ये पुनरनिर्द्दिष्टाः साक्षिणः
समुदाहृताः ।
ग्रामश्च प्राड्विवाकश्च राजा
च व्यवहारिणाम् ॥
कार्य्येष्वभ्यन्तरो यः
स्यादर्थिना प्रहितश्च यः ।
कुल्याः कुलविवादेषु
भवेयुस्तेऽपि साक्षिणः ॥”
स्मृतिः
“दत्तादत्तेऽथ भृत्यानां
स्वामिनां निर्गमे सति ।
विक्रयादानसम्बन्धे क्रीत्वा
धनमनिच्छति ॥
द्यूते समाह्वये चैव विवादे
समुपस्थिते ।
साक्षिणः साधनं प्रोक्तं न दिव्यं
नच लेख्यकम् ॥
प्रक्रान्ते साहसे वापि पारुष्ये
दण्डवाचिके ।
बलोद्भवेषु कार्य्येषु साक्षिणो
दिव्यमेव च ॥”
बृहस्पतिः ।
“लेख्यं वा साक्षिणो वापि
विवादे यस्य दूषिताः ।
तस्य कार्य्यं न सिध्येत
यावत्तन्न विशोधयेत् ॥”
तल्लख्यसाक्षिरूपप्रमाणम्॥ *
॥ लेख्यशोधनमाह
कात्यायनः ।
“स्वहस्तलेख्यसन्देहे जीवतो
वा मृतस्य च ।
तत्स्वहस्तकृतैरन्यैः
पत्रैस्तल्लेख्यनिर्णयः ॥”
तथा ।
“समवेतैश्च यद्दृष्टं वक्तव्यं
तत्तथैव च ।

अथ लिखितम् ।
तत्र बृहस्पतिः ।
“षाण्माषिकेऽपि समये भ्रान्तिः संजायते यतः ।
धात्राक्षराणि सृष्टानि पत्रारूढान्यतः पुरा ॥”
नारदः ।
“लेख्यं तु द्विविधं प्रोक्तं स्वहस्तान्यकृतं तथा ।
असाक्षिकं साक्षिकच्च सिद्धिर्देशस्थितेस्तयोः
॥
मृतास्तु साक्षिणो यत्र धनिकर्णिकलेखकाः ।
तदप्यपार्थकरणमृते त्वाधेः स्थिराश्रयात् ॥
दर्शितं प्रतिकालञ्च पाठितं स्मारितञ्च यत् ।
लेख्यं सिध्यति सर्व्वत्र मृतेष्वपि च साक्षिषु ॥
लेख्ये देशान्तरस्थे च दग्धे दुर्लिखिते हृते ।
सतस्तत्कालहरणमसतोद्रष्टृदर्शनम् ॥
छिन्नभिन्नकृतोन्मृष्टनष्टदुर्लिखितेषु च ।
कर्त्तव्यमन्यलिखितं ह्येष लेख्यविधिः स्मृतः ॥
लेख्यं यच्चान्यनामाङ्कं हेत्वन्तरकृतम्भवेत् ।
विप्रतिपत्तौ परीक्ष्यं तत् सम्बन्धागमहेतुभिः ॥”
स्वलेख्यमसाक्षिकमपि प्रमाणं अन्यद्वारा लेख्यं साक्षिमदिति यथासंख्येनान्वयः । देशस्थिते-र्यस्मिन् देशे यादृशलेख्यस्थितिः प्रवर्त्तते तत्र तादृश्याः । तयोः
स्वहस्तान्यहस्तकृतलेख्ययोः ।
मृता इति साक्ष्यादौ मृते पुत्रादिसंस्थं लेख्य-पत्रं न सिध्यति । यद्याधिभोगोऽस्ति तदा तदपि प्रमाणमित्यर्थः ॥ * ॥ व्यक्तमाह कात्यायनः ।
“यत्र पञ्चत्वमापन्नो लेखकः सह साक्षिभिः ।
ऋणिको धनिकश्चैव नैनं पत्रं प्रमापयेत् ॥”
दर्शितमिति तथाविधमपि पूर्व्वमृणिकादि-सन्निधौ स्वयमन्येन वा दर्शितं स्मारितं वा तदपि सिध्यतीत्यर्थः । सतो
देशान्तरस्थपत्रस्य
तत्कालहरणं पत्रानयनकालप्रतीक्षणम्। असतो दग्धादेः तदवलोककोपन्यासः। लेख्यमिति यत्
पत्रं केनापि हेतुना अन्यनामचिह्नितं तत्र विप्रतिपत्तौ यन्नाम्ना पत्रं तेन सहास्य विश्वास-हेतुभूतसम्बन्धावगमरूपकारणैर्निर्णेतव्यमिति ।
बृहस्पतिः ।

न तु लेख्यमुद्धरणीयम् । तदाह कात्यायनः ।
“आहर्त्ता भुक्तियुक्तोऽपि लेख्यदोषान् विशो-धयेत् ।
तत्सुतो भुक्तिदोषांस्तु लेख्यदोषांस्तु नाप्नुयात्
॥”
बृहस्पतिः ।
उद्धरेल्लेख्यमाहर्त्ता तत्सुतो भुक्तिमेव हि ।
अभियुक्तः प्रमीतश्चेत् तत्सुतोऽपि तदुद्धरेत् ॥”
अभियुक्त इति लेख्यस्य साधुत्वज्ञापनार्थं अभि-युक्ते लेख्यग्रहीतरि तदविज्ञाप्यैव मृते तत्पुत्रेण साधुत्वं साध्यमित्यर्थः तत्साधनञ्च
स्वहस्तलिख-
नादिनेति प्रागुक्तम् ॥ * ॥
अथ भुक्तिः ।
तत्र याज्ञवल्क्यः ।
“पश्यतोऽब्रुवतो हानिर्भूमेर्व्विंशतिवार्षिकी ।
परेण भुज्यमानाया धनस्य दशवार्षिकी ॥”
विवादमकुर्व्वतः समक्षं भूस्वामिनः परेणासपि-ण्डादिना भुज्यमानाया भूमेर्व्विंशतिवर्षनिर्वृत्ता स्वत्वहानिः । अत्र लोकव्यवहारकर्म्मत्वाद्वर्ष-गणना सावनेन । तथा च विष्णुधर्म्मोत्तरम् ।
“सत्राण्युपास्यान्यथ सावनेन
लौक्यञ्च यत् स्यात् व्यवहारकर्म्म ॥”
तत्रैव ।
“सावने च तथा मासि त्रिंशत् सूर्य्योदयाः
स्मृताः ॥”
विशेषयति व्यासः ।
“वर्षाणि विंशतिर्यस्य भूर्भुक्ता तु परैरिह ।
सति राज्ञि समर्थस्य तस्य सेह न सिध्यति ॥”
समर्थस्य बालत्वादिदोषरहितस्य। धनस्य दश-वर्षनिर्वृत्ता स्वत्वहानिः । तथा च मनुनारदौ ।
“यत्किञ्चिद्दशवर्षाणि सन्निधौ प्रेक्षते धनी ।
भुज्यमानं परैस्तूष्णीं न स तल्लब्धुमर्हति ॥”
यत्किञ्चित् धनजातं समक्षमेव प्रीत्यादिव्यति-रेकण परैर्दश वर्षाणि भुज्यमानं स्वामी तूष्णीं प्रेक्षते मा भुज्यतामिति न प्रतिसिध्यति नासौ तल्लब्धुं योग्यो भवति तत्र तस्य स्वाम्यं नश्यती-त्यर्थः । गोतमः । अजडापौगण्डधनं दशवर्ष-भुक्तं परैः सन्निधौ भोक्तुः इति । जडो विकले-

विभिन्नैनैव कार्य्ये तु तद्वक्तव्यं पृथक् पृथक् ॥
नापृष्टैरनियुक्तैर्व्वा समं सत्यं प्रयत्नतः ।
वक्तव्यं साक्षिभिः साक्ष्यं विवादस्थानमागतैः ॥
अनुद्विग्नेन चित्तेत दुष्टं सम्यग्विदा तु यत् ।
प्रत्यक्षं तत् स्मृतं कार्य्यं साक्ष्यं साक्षीतुतद्वदेत् ॥"
नारदः ।
"यः परार्थेऽपहरति स्वां वाचं पुरुषाधमः ।
आत्मार्थे किं न कुर्य्यात् स पापी नरकनिर्भयः ॥
अर्था वै वाचि नियता वाङ्मूला वाग्विनिः-
स्मृताः ।
यस्तु तांस्तेनयेद्वाचं स सर्व्वस्तेयकृन्नरः ॥"
बौधायनः ।
"पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥
हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ।
सर्व्वं भूम्यनृते हन्ति साक्ष्ये साक्षी मृषा वदन् ॥"
बृहस्पतिः ।
"यस्य शेषं प्रतिज्ञातं साक्षिभिः प्रतिपादितम् ।
स जयी स्यादन्यथा तु साध्यार्थं न समाप्नुयात् ॥"
याज्ञवल्क्यः ।
"उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तराः ।
द्विगुणा वान्यथा ब्रूयुः कूटाः स्युः पूर्व्वसाक्षिणः ॥"
अन्यथा पूर्व्वविपरीतार्थप्रकारेण ।

"सुमृष्टशिशुभीतार्त्तैः स्त्रीमत्तव्यसनातुरैः ।
निशापत्सु बलात्कारैः कृतं लेख्यं न सिध्यति ॥"
व्यासः ।
"दासास्वतन्त्रबालैश्च स्त्रीकृतञ्चैव यद्भवेत् ।
प्रमाणं नैव तल्लेख्यमिति शास्त्रविदो विदुः ॥"
मिताक्षरायां स्मृतिः ।
"पूगश्रेणीगणादीनां या स्थितिः परकीर्त्तिता ।
तस्यास्तु साधनं लेख्यं न दिव्यं न च साक्षिणः ॥"
पूगस्तु ।
"समूहो बणिगादीनां पूगः स परिकीर्त्तितः ।"
इति कात्यायनवचनोक्तः ।
आदिशब्दात् विजातीयलाभः । तेन ग्रामनग-रादिः । श्रेणी तु सजातीयसमूहः ताम्बूलिक-कुबिन्दकर्म्मकारकादिः । गण एकक्रियार्थो-द्यतः । लेख्यस्य चाप्रामाण्यशङ्कायां लेख्य-ग्राहिणां प्रागुक्तशोधनप्रकारेण तन्निरसनीयं तत्पुत्त्रेण तु लेख्याधीनो भोग एव उपन्यास्यो

न्द्रियः पौगण्डः पूतोऽनुत्पन्नश्मश्रुर्गण्डः कपोलो यस्य सः । तदाह नारदः ।
"बाल आषोडशाद्वर्षात् पौगण्डश्चापि शब्द्यते ॥"
अत्रापौगण्डः प्रकीर्त्तित इति कुल्लूकभट्टेन लिखितम् । तत्पाठेऽपि अपौगण्डस्तु पौगण्डः इति द्विरूपकोषादविरुद्धः । तस्माद्याज्ञ-वल्क्यादिवचनाद्विंशतिवर्षदशवर्षादिकालैर्भोग एव स्वत्वं जनयति । यथा । कालप्राप्तिबलेन बीजमङ्कुरं जनयति तरवश्च कुसुममिति स्वामिना चापरित्यक्तेऽपि शास्त्रोक्तकालीन-भोगात् स्वाम्यमन्यस्य भवति । यथा जयेन राज्ञः परराष्ट्रधने इति । एवमेव श्रीकरबाल-कजोग्लोकभवदेवभट्टशूलपाणिकुल्लूकभट्टचण्डे-श्वरमन्त्रिनव्यवर्द्धमानोपाध्यायप्रभृतयःव्यव-

| | | |
|---|---|---|
| कूटा अनादेयवचनाः । तथा । “यः साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तमसावृतः । स दाप्योऽष्टगुणं दण्डं ब्राह्मणञ्च विवासयेत् ॥” त्वमन्येभ्यः साक्ष्यं श्रावयेतिवादिना प्रयुक्तो यः श्रावितः कारितद्व्यात् पदसिद्धिः एवम्भूतोऽपि सभायां निगदकाले साक्ष्यं निह्नुते यस्तस्याष्टगुणो दण्डः ॥ * ॥ | | |

हारोऽपि तादृगेव । एतद्विरुद्धवचनान्यथा
व्याख्येयानि ॥ * ॥ तत्रोपेक्षया स्वत्वहानिं
भुक्त्या
च स्वत्वमाह नारदः ।
"भुज्यमानान् परैरर्थान् यस्तान्मोहादुपेक्षते
।
स्रमक्षं तिष्ठतोऽप्यस्य तान् भुक्तिः कुरुते
वशे ॥"
व्यक्तमाह बृहस्पतिः ।
"स्थावरं सिद्धिमाप्नोति भुक्त्या
हानिमुपेक्षया ।"
उपेक्षया क्षमया तत्कारणञ्च स्वामिनः
सुशी-
लत्वमहेच्छत्वदयालुत्वादि । एवञ्च
विंशतिवर्षात्
पूर्व्वं
स्वकृतिसाध्यकर्षणपालनाद्यैरुत्पन्नद्रव्य
एव
स्वत्वम् । एवं दशवर्षात् पूर्व्वं
स्वकृतिसाध्यदोहन-
पालनाद्यैरुत्पन्नदुग्धादावेव स्वत्वं
तत्तत्कालपर-
तस्तु भूमौ गवादिधनेऽपि स्वत्वमिति ।
पूर्व्वं
तत्तन्नाशकभोगे तु चौर्य्यदोषो भवत्येव ।
भोगे
तु स्वत्वहानिमाध्यादीनांव्यावर्त्तयति ॥ *
॥
पश्यतोऽब्रुवत इत्यभिधाय याज्ञवल्क्यः ।
"आधिसीमोपनिक्षेपजडबालधनैर्व्विना ।
तथोपनिधिराजस्त्रीश्रोत्रियाणांधनैरिह ॥"
आधिर्व्वन्धकद्रव्यम् । उपनिक्षेपस्तु
वासनस्थ-
मनाख्याय समुद्रं यन्निधीयते इति
नारदोक्तः ।
वासनं निक्षेपाधारभूतं सम्पुटादिकम् ।
समुद्रं
ग्रन्थ्यादियुतम् । जडो बुद्धिविकलः ।
बालः

यत्र वादिनौ स्वस्वागमबलप्रवृत्तौ
आगमयोश्च
पूर्व्वापरभावो नास्ति तत्र यस्य
भुक्तिस्तस्यागमो
बलीयान् न त्वन्यस्येत्यर्थः इति मिताक्षरा
॥
अर्थाद्यत्रागमपौर्व्वापर्य्यनिश्चयस्तत्र ।
"सर्व्वेष्वेव विवादेषु बलवत्युत्तरा क्रिया ।
आधौ प्रतिग्रहे क्रीते पूर्व्वा तु बलवत्तरा ॥"
इति याज्ञवल्क्यवचनान्निर्ण्यः ।
आगमस्त्विति आ सम्यक् गम्यते प्राप्यते
स्वीक्रि-
यते येन स आगमः क्रयादिरिति व्यवहार-
मातृका ॥ आगमः साक्षिपत्रादिकमिति
दीप-
कलिका ॥ आगमो धनोपार्ज्जनोपायः
क्रयादि-
रिति मैथिलाः ॥
तत्रान्येनाभियुक्तस्तत्कूटता-
मुद्धरेत् तत्पुत्रपौत्रौ नागममुद्धरेतां किन्तु
भुक्ति-
रेव । तत्र प्रमाणं विशेषयति बृहस्पतिः ।
"आहर्त्ता शोधयेत् भुक्तिमागमञ्चापि संसदि
।
तत्सुतो भुक्तिमेवैकां पौत्रादिषु न किञ्चन
॥"
इदं शूलपाणिधृतं तत्पुत्रादिर्न किञ्चनेति
मैथिलधृतम् । आहर्त्ता अर्जनकर्त्ता अत्र
पुत्रस्य
मुक्तिशोधनमात्रम् ॥ * ॥
भुक्तिशोधनमाहतु-
र्व्यासकात्यायनौ ।
"सागमो दीर्घकालश्च
निश्छिद्रोऽन्यरवोज्झितः ।
प्रत्यर्थिसन्निधानञ्च भोगः पञ्चाङ्ग इष्यते
॥"
इष्यते प्रमाणत्वेन । सागमः क्रयादियुक्तः ।
एष च
भूमिविषयकविंशतिवर्षधनविषयकदश-

इति तस्य वचनं दण्डविधायकं न
तन्मुख्यार्थपरं
धर्म्मशास्त्रविरोधात् । तदाह स एव ।
"यत्र विप्रतिपत्तिः स्यात् धर्म्मशास्त्रार्थ-
शास्त्रयोः ।
अर्थशास्त्रार्थमुत्सृज्य
धर्म्मशास्त्रार्थमाचरेत् ॥"
एवमेव शूलपाण्युपाध्यायाः । वस्तुतस्तु
अना-
गममिति दण्डविधायकवचनं
स्त्रीधननृपधन-
परम् ।
"स्त्रीधनञ्च नृपेन्द्राणां न कदाचन
जीर्य्यति ।
अनागमं भुज्यमानमपि वर्षशतैरपि ॥"
इति
स्वत्वनिषेधकवचनान्तरैकवाक्यत्वात् ।
तत्र
विप्रतिपत्तिः स्यादिति
वचनस्याप्येतदुदाहर-
णम् । यत्रैकस्य जयेऽवधार्य्यमाणे
मित्रलब्धि-
रपरस्य जयेऽवधार्य्यमाणे
धर्म्मलब्धिस्तत्र ।
"हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्व्वरा
यतः ।
अतो यतेत तत्प्राप्ताविति वेदविदां मतम्
॥"
इति याज्ञवल्क्योक्तार्थशास्त्रार्थमुत्सृज्य
क्रोध-
लोभविवर्ज्जित इति
धर्म्मशास्त्रार्थमवलम्ब्य
व्यवहारं पश्येत् । अतएव
सभ्येनावश्यवक्तव्यं
धर्म्मार्थसहितं वचः । इति
कात्यायनोक्तम् ।
भवदेवभट्टास्तु व्यासवचनं
प्रतिवादिनोऽसन्नि-

अप्राप्तषोडशवर्षः । उपनिधिः प्रीत्या भोगार्थ-
मर्पितः । ततश्च आध्यादिभिर्ज्जडादिधनैश्च
विनान्यानि धनानि उक्तभोगकाले स्वामिनो नश्यन्ति एतानि तु स्वामिनो न नश्यन्ति न वा
भोक्तुर्भवन्ति । मिताक्षरायां स्मृतिः ।
"द्वारमार्गक्रियाभोगजलवाहादिषु क्रिया ।
भुक्तिरेवं तु गुर्व्वी स्यान्न दिव्यं न च साक्षिणः ॥"
याज्ञवल्क्यः ।
"आगमो ह्यधिको भोगाद्विना पूर्व्वक्रमागतात् ।
नागमः कारणं तत्र भुक्तिः स्तोकापि यत्र न ॥
आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत् ।
न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी ॥
योऽभियुक्तः परेतः स्यात्तस्य रिक्थी तमुद्धरेत् ।
न तत्र कारणं भुक्तिरागमेन विना कृता ॥"
भूम्यादावागमः पूर्व्वपुरुषक्रमानागतभोगाद्बलवान् अतः क्रमागतभोग आगमाद्बलवान् ।
तथा च बृहस्पतिः ।
"अनुमानात् गुरुः साक्षी साक्षिभ्यो लिखितं गुरु ।
अव्याहता त्रिपुरुषी भुक्तिस्तेभ्यो गरीयसी ॥"
त्रिपुरुषमोगमाह व्यासः ।
"प्रपितामहेन यद्भुक्तं तत्पुत्त्रेण विना च तम् ।
तौ विना यस्य पित्रा च तस्य भोगस्त्रिपूरुषः ॥
पिता पितामहो यस्य जीवेच्च प्रपितामहः ।
त्रयाणां जीवतां भोगो विज्ञेयस्त्वेकपूरुषः ॥"
आगमोऽपि बलवान्न भवति यत्र स्तोकापि भुक्तिर्नास्ति । तथा च नारदः ।
वर्षान्न्यूनकालभोगपरः । योऽभियुक्त इत्यादि
यो भोगे क्रियमाणे परेणाभियुक्तः सन् परेतो
मृतः स्यान्नागममुद्धृतवान् तदा तत्पुत्त्रादिरागममुद्धरेत् । तथा च नारदः ।
"अथारूढविवादस्य प्रेतस्याव्यवहारिणः ।
पुत्त्रेण सोऽर्थः संशोध्यो न तु भोगो निवर्त्तयेत् ॥"
विवादे सति शेषः । भोगः केवलभोगः । तथा
च स एव । आदौ तु कारणं दानं मध्ये
भुक्तिस्तु सागमा इति एष सविवादभोगः
षष्ट्यब्देतरपरः । तथाविधभोगस्यागमं विनापि
प्रामाण्यात् । तथा व्यासः ।
"वर्षाणि विंशतिं भुक्त्वा स्वामिना व्याहता सती ।
भुक्तिः सा पौरुषी भूमेर्द्विगुणा तु द्विपौरुषी ।
त्रिपौरुषी तु त्रिगुणा न तत्रान्वेस्य आगमः ॥"
एतद्वचनमसमक्षभोगविषयकमितिसमक्ष-
विंशतिवर्षभोगविषयकवचनेनाविरोधः । एता-
दृक् स्मृत्युक्तकाल एव । कात्यायनः ।
"स्मार्त्तकाले क्रिया भूमेः सागमा भुक्तिरिष्यते ।
अस्मार्त्ते त्वागमाभावात् क्रमात्त्रिपुरुषागता ॥"
षष्ठिवर्षैकपुरुषभुक्तौ त्रिपुरुषभुक्तिव्यपदेशस्य
फलमाह न तत्रेत्यादि । अतएव नारदः ।
"अन्यायेन तु यद्भुक्तं पित्रा पूर्ब्बतनैस्त्रिभिः ।
न तत् शक्यमपाकर्त्तुं क्रमात्त्रिपुरुषागतम् ॥"
अन्यायेनेत्यत्रानागममिति शूलपाणिधृतपाठः ।
तुरप्यर्थः । पित्रा सह पितरमादाय त्रिभिरि-
धाने पुरुषैकद्वयभोगाभिप्रायम् । त्रैपुरुषभोगस्य
तत्रैव प्रमाणत्वादित्याहुः ॥
अथ भुक्तिस्वत्वापवादः ।
बृहस्पतिः ।
"भुक्तिस्त्रैपुरुषी सिध्येदपरेषां न संशयः ।
अनिवृत्ते सपिण्डत्वे सकुल्यानां न सिध्यति ॥
अस्वामिना च तद्भुक्तं गृहक्षेत्रापणादिकम् ।
सुहृद्बन्धुसकुल्यस्य न तद्भोगेन हीयते ॥
विवाह्यश्रोत्रियैर्भुक्तं राज्ञामात्यैस्तथैव च ।
सुदीर्घेणापि कालेन तेषां तत्तु न सिध्यति ॥"
आपणो विक्रयस्थानं विवाह्यो जामाता ॥ * ॥
अथ युक्तिः ।
नारदः ।
"उल्काहस्तोऽग्निदो ज्ञेयः शस्त्रपाणिश्च घातकः ।
केशकेशि गृहीतश्च युगपत् पारदारिकः ॥
कुद्दालपाणिर्विज्ञेयः सेतुभेत्ता समीपगः ।
तथा कुठारहस्तश्च वनच्छेत्ता प्रकीर्त्तितः ॥
प्रत्यक्षचिह्नैर्विज्ञेयो दण्डपारुष्यकृन्नरः ।
असाक्षिप्रत्यया ह्येते पारुष्ये तु परीक्षणम् ॥"
प्रत्यक्षचिह्नैः रुधिराक्तखड्गादिभिः । पारुष्ये
वाक्पारुष्ये । शङ्खः । लोप्तहस्तश्च चौर इति ।
नारदः ।
"अभीक्ष्णं देश्यमानोऽपि प्रतिहन्यान्न तद्वचः ।
त्रिचतुःपञ्चकृत्वो वा परतोऽर्थं तमावहेत् ॥"
यदा धनिकेनाधमर्णिकस्त्रिचतुःपञ्चकृत्वो वा त्वं
मे ऋणं धारयसीति पुनः पुनर्देश्यमानोऽपि न
तद्वाक्यं प्रतिहन्ति तदोत्तरकालमन्नेनाभ्युपगतो-

| | | |
|---|---|---|
| “विद्यमानेऽपि लिखिते जीवत्स्वपि च साक्षिषु ।<br>विशेषतः स्थावराणां यन्न भुक्तं न तत् स्थिरम् ॥”<br>इति दीपकलिका ॥ | त्यर्थः । यत्तु ।<br>“अनागमन्तु यो भुङ्क्ते बहून्यब्दशतानि च ।<br>चौरदण्डेन तं पापं दण्डयेत् पृथिवीपतिः ॥” | ऽयमर्थ इत्यवधर्य्य तमर्थमृणिकाय दापये-दित्यर्थः ॥ * ॥ |

अथ शपथः ।
नारदः ।
"युक्तिष्वप्यवसन्नासु शपथैरेनमर्द्दयेत् ।
अर्थकालवलापेक्षमग्न्यम्बुसुकृतादिभिः ॥"
एनं विचार्य्यमाणमर्थं अर्द्दयेत् पीडयेन्निर्णये-
दित्यर्थः । अर्थस्य विवादास्पदस्य बलं
बह्वल्प-
भावः कालस्य च बलं पुण्यापुण्यत्वं
तदपेक्षं
यथा स्यादित्यर्थः । भूदूर्व्वाकरत्वस्य
पुत्रादि-
शिरःस्पर्शस्य चाग्रे दर्शनीयत्वात् । अत्र
मयै-
तत् कृतं न वेति प्रतिज्ञामुच्चार्य्याग्नौ जले
वा
हस्तं प्रक्षिपेत् । एतन्मिथ्यात्वे मम सुकृतं
नश्येदिति वा ब्रूयात् । न त्वग्निपरीक्षां जल-
परीक्षां वा कुर्य्यात् इत्यभिप्रायवर्णनं युक्तं
तस्या
महाभियोगविषयकत्वेन
शपथसमभिव्याहारा-
नर्हत्वात् । सुकृतादिभिरित्यादिना
दूर्व्वासत्या-
द्युपग्रहः । तथा च विष्णुः ।
"सर्व्वष्ववार्थजातेषु मूल्यं स्वर्णं प्रकल्पयेत्
॥"
तत्र कृष्णलोने शूद्रं दूर्व्वाकरं शापयेत् ।
द्विकृष्णलोने तिलकरं त्रिकृष्णलोने
जलकरं
चतुःकृष्णलोने स्वर्णकरं पञ्चकृष्णलोने
सीतो-
द्धृतमहीकरं सुवर्णार्द्धोने कोशो देयः शूद्रस्य
यथासमये विहिता क्रिया तथा द्विगुणेऽर्थे
राजन्यस्य त्रिगुणेऽर्थे वैश्यस्य चतुर्गुणेऽर्थे
ब्राह्मणस्येति । कृष्णलः काञ्चनरत्तिका
तन्-
मूल्यादूने कृष्णलोने । एवमन्यत्र । मनुः ।
"सत्येन शापयेद्विप्रं क्षत्त्रियं वाहनायुधैः ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्व्वैस्तु पातकैः ।
व्यसनमापत् । घोरमतिपीडाकरम् । तथा च
कोषाधिकारे यस्य पश्येदित्यनुवृत्तौ विष्णुः ।
"रोगोऽग्निर्ज्ञातिमरणं राजातङ्कामथापि
वा ।
तमशुद्धं विजानीयात् तथा शुद्धं विपर्य्ययात्
॥"
कात्यायनः ।
"तस्यैकस्य न सर्व्वस्य जनस्य यदि
सम्भवेत् ।
रोगोऽग्निर्ज्ञातिमरणमृणं दद्यात् दमञ्च सः ॥
ज्वरातिसारविस्फोटगूढास्थिपरिपीडनम्।
नेत्ररुग्गलरोगश्च तथोन्मादः प्रजायते ।
शिरोरुग्गुदभङ्गश्च दैविका व्याधयो नृणाम्
॥"
तस्यैकस्येति न तु देशव्यापकमरणादिः ।
मनुः ।
"न वृथा शपथं कुर्य्यात् स्वल्पेऽप्यर्थे नरो
बुधः ।
वृथा हि शपथं कुर्व्वन् प्रेत्य चेह च नश्यति ॥
कामिनीषु विवाहेषु गवां भक्ष्ये तथेन्धने ।
ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकम्
॥"
कामिनीष्विति रहसि कामिनीसन्तोषार्थं
वृथा-
शपथे एवं विवाहसिद्ध्यर्थं गोग्रासार्थं
आवश्यक-
होमेन्धनार्थं ब्राह्मणरक्षार्थमङ्गीकृतधनादौ ।
यमः ।
"वृथा तु शपथं कृत्वा कीटस्य वधसंयुतम् ।
अनृतेन च युज्येत वधेन च तथा नरः ।
तस्मान्न शपथं कुर्य्यान्नरो मिथ्यावधेप्सितम्
॥"
कीटस्येति प्राणिमात्रोपलक्षणं तद्वधपापेन
वृथाशपथकर्त्ता युज्यत इत्यर्थः ॥
अथ निर्णयः ।
तत्र नारदः ।
"यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी
भवेत् ।
अन्यथावादिनो यस्य ध्रुवस्तस्य पराजयः ॥
कात्यायनः ।
"अर्थिप्रत्यर्थि वाक्यानि
प्रतिसाक्षिवचस्तथा ।
निर्णयश्च तथा तस्य यथा चावधृतं
स्वयम् ॥
एतद्यथाक्षरं लेख्यं यथापूर्व्वं निवेशयेत्
।
सभासदश्च ये तत्र
धर्म्मशास्त्रविदस्तथा ॥"
ततश्च भाषोत्तरे क्रिया च
पत्रसाक्ष्यादिकं
निर्णयो जयपराजयावधारणं
निर्णयकालाव-
स्थितमध्यस्थाश्चेत्यादिकं सर्व्वं
लेखनीयं निरू-
पणस्य सम्यक्त्वप्रदर्शनार्थम् । तथाहि
भाषो-
त्तरलिखनं हेत्वन्तरेण
पुनर्न्यायप्रत्यवस्थान-
निषेधार्थं नहि न गृहीतमिति
मिथ्योत्तरेण
पराजितस्य पुनः परिशोधितं मयेति
प्रत्यव-
स्थानं सम्भवति । प्रमाणलिखनन्तु
पुनः प्रमा-
णान्तरेण न्यायनिषेधार्थम् । तदाह
कात्या-
यनः ।
"क्रियां बलवतीं त्यक्त्वा दुर्ब्बलां
योऽवलम्बते ।
स जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात्
क्रियाम् ॥
बिर्णीते व्यवहारे तु प्रमाणमफलं भवेत् ।
लिखितं साक्षिणो वापि पूर्व्वमावेदितं न
चेत् ॥
यथा पक्वेषु धान्येषु निष्फलाः प्रावृषो
गुणाः ।
निर्णीतव्यवहाराणां प्रमाणमफलन्तथा
॥"

पुत्त्रदारस्य वाप्येवं शिरांसि स्पर्शयेत्
पृथक् ॥"
ब्राह्मणेन मयैतत् कृतं न कृतं वेति प्रतिज्ञा-
मुच्चार्य्य सत्यमिति वक्तव्यम् । तथैव
क्षत्त्रियेण
वाहनायुधं स्प्रष्टव्यम् । तथैव वैश्येन
गोबीज-
काञ्चनानामन्यतमं स्प्रष्टव्यम् । शूद्रेण तु
पूर्व्वोक्तं
सर्व्वमेव स्प्रष्टव्यं तेषां वृथाकृतस्पर्शानां
पातक-
हेतुत्वात् पातकशब्देन निर्द्देशः । हलायुधो-
ऽप्येवम् ॥ * ॥ दैवक्रियाविषयमाह नारदः
।
"अरण्ये निर्ज्जने रात्रावन्तर्व्वेश्मनि साहसे
।
न्यासापहरणे चैव दिव्या सम्भवति क्रिया
॥"
बृहस्पतिः ।
"देवब्राह्मणपादांश्च पुत्त्रदारशिरांसि च ।
एते तु शपथाः प्रोक्ता मनुना स्वल्पकारणे ।
साहसेष्वभिशापे च दिव्यानि तु विशोधनम्
॥"
अत्र शपथदिव्ययोः पृथक्त्वप्रतीतेः ।
शपथे न
दिव्यधर्म्माः किन्तु वैधे कर्म्मणि तत्र
शौचार्थं
स्नानाचमनादिमात्रं कार्य्यम् । दिव्यानि तु
दिव्यतत्त्वे कथितानि नात्र लिखितानि ।
अत्रा-
भियुक्तेन शपथः कर्त्तव्य इत्युत्सर्गः ॥ * ॥
उभ-
येच्छयाभियोक्तापीत्याह नारदः ।
"अभियोक्ता शिरोवर्त्ती सर्व्वत्रैव प्रकीर्त्तितः
।
इच्छयान्यतरः कुर्य्यादितरो वर्त्तयेच्छिरः
॥"
इतरः शपथकर्त्तृभिन्नः । तथा कात्यायनः
।
"आचतुर्दशकादह्नो यस्य नो राजदैविकम् ।
स्वयमभ्युपपन्नोऽपि स्वचर्य्यावसितोऽपि सन्
।
क्रियावसन्नोऽप्यर्हेत परं सभ्यावधारणम् ।
सभ्यैरवधृतः पश्चात् स शास्यः
शास्त्रमार्गतः ॥"
यस्य वादिनः प्रतिवादिनो वा साक्षिण
इत्युप-
लक्षणम् । साक्षिलिखितभुक्तिशपथानांमध्ये-
ऽन्यतमप्रमाणं यस्य प्रतिज्ञायाः
सत्यत्वप्रति-
पादकं स एव जयी अन्यथा पराजित इति
प्रत्येतव्यम् । स्वयमभ्युपपन्नः
आत्मनैवाङ्गीकृत-
स्वपराजयः स्वचर्य्यावसितः
कम्पस्वेदवैवर्ण्या-
दिना पराजितत्वेनावधृतः । क्रियावसन्नः
साक्ष्यादिना प्राप्तपराजयः । परमनन्तरं
सभ्या-
वधारणमर्हेत सभासदां मिलितानामयं परा-
जित इति निर्णयमर्हेत । आकाङ्क्षेत स शास्त्र-
विधिना शास्यः ॥ * ॥ निर्णयस्य फलमाह
बृहस्पतिः ।
"प्रतिज्ञाभावनाद्वादी प्राड्विवाकादिपूजनात्
।
जयपत्रस्य चादानात् जयी लोके निगद्यते ॥"
जयपत्रस्य लिखनप्रकारमाह स एव ।
"यद्वृत्तं व्यवहारेषु पूर्व्वपक्षोत्तरादिकम् ।
क्रियावधारणोपेतं जयपत्रेऽखिलं लिखेत् ॥
पूर्व्वेणोक्तक्रियायुक्तं निर्णयान्तं यदा नृपः ।
पदद्याज्जयिने पत्रं जयपत्रं तदुच्यते ॥"
निर्णयोत्तरकृत्यमाह मनुः ।
"अर्थेऽपव्ययमानन्तु कारणेन
विभावितम् ।
दापयेद्धनिकस्यार्थं दण्डलेशञ्च शक्तितः
॥"
अपव्ययमान अपलपन्तं कारणेन
साक्ष्यादि-
प्रमाणेन । याज्ञवल्क्यः ।
"ज्ञात्वापराधं देशञ्च कालं बलमथापि
वा ।
वयः कर्म्म च वित्तञ्च दण्डं दण्डेषु
दापयेत् ॥"
मनुः ।
"तीरितं चानुशिष्टञ्च यत्र क्वचन
सम्भवेत् ।
कृतं तद्धर्म्मतो विद्यात् न तत् भूयो
निव-
र्त्तयेत् ॥"
अनुशिष्टं साक्ष्यादिनिर्णीतं अतएव
तीरितं
प्राड्विवाकादिभिः समापितम् ।
तद्विवादपदं
पुनर्न निवर्त्तयेदित्यर्थः । यत्र
तीरितानुशिष्ट-
योरप्यधर्म्मकृतत्वं प्रत्यवतिष्ठते । तत्र
पुनर्न्याय-
दर्शनमाह नारदः ।
"तीरितं चानुशिष्टञ्च यो मन्येत
विधर्म्मतः ।
द्विगुणं दण्डमादाय तत् कार्य्यं
पुनरुद्धरेत् ॥"
असद्विचारे तु विचारान्तरमाह स एव ।
"असाक्षिकन्तु यद्दृष्टं विमार्गेण च
तीरितम् ।
असम्मतमतैर्दृष्टं पुनर्द्दर्शनमर्हति ॥"
असाक्षिकमित्यप्रमाणकोपलक्षणम्।
याज्ञ-
वल्क्यः ।
"दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु ।
सभ्याः सजयिनो दण्ड्या
विवादाद्द्विगुणं दमम् ॥

| | | |
|---|---|---|
| व्यसनं जायते घोरं स ज्ञेयः शपथे शुचिः ॥” | | साक्षिसभ्यावसन्नानां दूषणे दर्शनं पुनः ।<br>सुचर्य्यावसितानान्तु नास्ति पौनर्भवो विधिः ॥”<br>साक्षिवचनेन सभ्यावधारणेन च प्राप्ताव-<br>सादानां पुनर्न्यायदर्शनम् । स्वव्यापारेण विरुद्ध-<br>भाषदिना प्राप्तावसादानान्तु नास्ति पुनर्न्यायः ।<br>बृहस्पतिरपि । |

"पलायनानुत्तरत्वादन्यपक्षाश्रयेण च ।
हीनस्य गृह्यते वादो न स्ववाक्यजितस्य च ॥"
मनुः ।
"बलाद्दत्तं बलाद्भुक्तं बलाद्वा लिखितञ्च यत् ।
सर्व्वान् बलकृतानर्थानकृतान् मनुरब्रवीत् ॥"
याज्ञवल्क्यः ।
"बलोपाधिविनिर्वृत्तान् जवहारान्निवर्त्तयेत् ।
स्त्रीनक्तमन्तरागारबहिर्ग्रामिकृत्तांस्तथा ॥
मत्तोन्मत्तार्त्तव्यसनिबालभीतादियोजितः।
असम्बन्धकृतश्चैव व्यवहारो न सिध्यति ॥"
उपाधिश्छलमिति शूलपाणिः । उपाधिर्भयादि-
रिति विज्ञानेश्वरः । तन्मते भीतादियोजित
इत्युक्तवचनेन पौनरुक्तम् । वहिर्ग्रामः वहि-
र्देशः । मत्तो मद्यादिना । उन्मत्तो वाता-
दिना । व्यसनी द्यूताद्यासक्तः । असम्बन्धो
वादिनियुक्तव्यतिरिक्त उदासीनः । आदिपदाद-
स्वतन्त्रदासपुत्त्रादेर्ग्रहणम् । तथा च नारदः ।
"स्वतन्त्रोऽपि हि यत् कार्य्यं कुर्य्याच्चाप्रकृतिं गतः ।
तदप्यकृतमेवाहुरस्वातन्त्रस्य हेतुतः ॥
कामक्रोधाभिभूता वा भयव्यसनपीडिताः ।
रागद्वेषपरीताश्च ज्ञेयास्त्वप्रकृतिं गताः ॥
तथा दासकृतं कार्य्यमकृतं परिचक्षते
अन्यत्र स्वामिसन्देशान्न दासः प्रभुरात्मनः ॥
पुत्त्रेण च कृतं कार्य्यं यत् स्यादच्छन्दतः पितुः ।
तदप्यकृतमेवाहुर्द्दासपुत्त्रौ च तौ समौ ॥"
एतच्च कुटुम्बभरणातिरिक्तविषयम्।
"कुटुम्बार्थेऽभ्यधीनोऽपि व्यवहारं यमाचरेत् ।
स्वदेशे वा विदेशे वा तं ज्यायान्न विचालयेत् ॥"
इति मनुवचनात् कुटुम्बमवश्यभरणीयम्।
अभ्यधीनः परतन्त्रः पुत्त्रदासादिः । व्यवहार-
मृणादिकं ज्यायान् स्वतन्त्रः न विचालयेत् अनु-
मन्येत । तथा च नारदः ।
"स्वातन्त्र्यन्तु स्मृतं ज्येष्ठे ज्यैष्ठं गुणवयःकृतम् ।
अस्वतन्त्राः प्रजाः सर्व्वाः स्वतन्त्रः पृथिवीपतिः ॥
अस्वतन्त्रः स्मृतः शिष्य आचार्य्यस्य स्वतन्त्रता ।
अस्वतन्त्राः स्त्रियः सर्व्वाः पुत्त्रा दासाः परि-
उपप्लवनिमित्तञ्च विद्यादापत्कृतन्तु तत् ॥
कन्यावैवाहिकञ्चैव प्रेतकार्य्ये च यत् कृतम् ।
एतत् सर्व्वं प्रदातव्यं कुटुम्बेन कृतं प्रभोः ॥"
प्रभोरिति कर्त्तरि षष्ठी तेन प्रभुणा दातव्य-
मिति रत्नाकरः ॥ बृहस्पतिः ।
"यः स्वामिना नियुक्तोऽपि धनाय व्ययपालने ।
कुसीदकृषिबाणिज्ये निसृष्टार्थस्तु स स्मृतः ॥
प्रमाणं तत् कृतं सर्व्वं लाभालाभव्ययोदयम्।
स्वदेशे वा विदेशे वा स्वामी तन्न विसंवदेत् ॥"
इति श्रीरघुनन्दनभट्टाचार्य्यविरचितं व्यवहार-
तत्त्वं समाप्तम् ॥ * ॥

**व्यवहारज्ञः**, पुं, (व्यवहारं जानातीति । ज्ञा + कः ।) प्राप्तव्यवहारः । (साबालक इति भाषा ॥)
स तु षोडशवर्षानन्तरं भवति । यथा, --
"बाल आषोडशाद्वर्षात् पौगण्डोऽपि निगद्यते ।
परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते ॥"
इति व्यवहारतत्त्वधृतनारदवचनम्॥
व्यवहारज्ञातरि, त्रि ॥

**व्यवहारदर्शनं**, क्ली, (व्यवहारस्य दर्शनम् ।) न्याय-दर्शनम् । विचारकरणम् । इति मिताक्षरा ॥

**व्यवहारपदं**, क्ली, (व्यवहारस्य पदम् ।) वादिना राज्ञि निवेदनम् । (नालिस इति भाषा ॥)
यथा, याज्ञवल्क्यः ।
दुष्टां गां कः
परित्यज्यार्च्चयेच्छीलवतीं खरीम् ॥"
इति व्यवहारतत्त्वम् ॥

**व्यवहारपादः**, पुं, (व्यवहारस्य पादः ।) व्यव-हारांशः । यथा । अथ व्यवहारपादनिर्णयः ।
तत्र बृहस्पतिः ।
"पूर्ब्बपक्षः स्मृतः पादो द्विपादश्चोत्तरः स्मृतः ।
क्रियापादस्तथा चान्यश्चतुर्थो निर्णयः स्मृतः ॥"
इति व्यवहारतत्त्वम् ॥
अपि च ।
"परम्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु ।

ग्रहाः ॥
स्वतन्त्रस्तत्र तु गृही यस्य तत् स्यात् क्रमा-
गतम् ।
गर्भस्थैः सदृशो ज्ञेयः अष्टमाद्वत्सरात् शिशुः ॥
बाल आषोडशाद्वर्षात् पौगण्डोऽपि निगद्यते ।
परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते ॥
जीवतोर्न स्वतन्त्रः स्याज्जरयापि समन्वितः ।
तयोरपि पिता श्रेयान् बीजप्राधान्यदर्शनात् ।
अभावे बीजिनो माता तदभावे च पूर्व्वजः ॥"
परिग्रहा अनुजीविप्रभृतयः । तथा च बृह-
स्पतिः ।
"पितृव्यभ्रातृपुत्त्रस्त्रीदासशिष्यानुजीविभिः।
यद्गृहीतं कुटुम्बार्थे तद्गृही दातुमर्हति ॥"
कात्यायनः ।
"कुटुम्बार्थमशक्तेन गृहीतं व्याधितेन वा ।

"स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः
।
आवेदयति चेद्राज्ञि व्यवहारपदं हि तत्
॥"
स्मृतिसदाचारबहिर्भूतेन वर्त्मना
परैरर्थतः
शरीरतो वा पीडितश्चेद्राजनि निवेदयेत्
तद्-
व्यवहारदर्शनस्थानम् । चेदित्यत्र यदिति
मै-
थिलाः । आवेदयति चेदित्यनेन स्वयं
विवादो-
त्थानं राज्ञा न कर्त्तव्यमिति
शूलपाणिमहा-
महोपाध्यायाः ॥ राज्ञीति
व्यवहारप्रदर्शक-
परं तथा च बृहस्पतिः ।
"राजा कार्य्याणि संपश्येत्
प्राड्विवाकोऽथ वा
द्विजः ॥"
कात्यायनः ।
"सप्राड्विवाकः सामात्यः
सब्राह्मणपुरोहितः ।
स्वयं स राजा चिनुयात् तेषां
जयपराजयौ ॥
यदा कार्य्यवशाद्राजा न पश्येत्
कार्य्यनिर्णयम् ।
तदा नियुञ्ज्यात् विद्वांसं ब्राह्मणं
वेदपारगम् ॥
यदि विप्रो न विद्वान् स्यात् क्षत्त्रियं तत्र
योज-
येत् ।
वैश्यं वा धर्म्मशास्त्रज्ञं शूद्रं यत्नेन
वर्जयेत् ॥"
स विनीतवेशः । मनुः ।
"जातिमात्रोपजीवी वा कामं
स्याद्ब्राह्मण-
ब्रुवः ।
धर्म्मप्रवक्ता नृपतेर्न तु शूद्रः कदाचन ॥"
व्यासः ।

| | “द्विजान् विहाय यः पश्येत् कार्य्याणि वृषलैः<br>सह ।<br>तस्य प्रक्षुभ्यते राज्यं बलं कोषश्च नश्यति ॥<br>दुःशीलोऽपि द्विजः पूज्यो न शूद्रो विजिते- | |
|---|---|---|

**व्याडः**, पुं, सर्पः । मांसभक्षकपशुः । इत्यमरः ॥

(यथा, माक्रणेये ॥ १५ । १० ।
"श्वा शृगलो वृको गृध्रो व्याडः
कङ्कस्तथाक्रमात् ॥")
इन्द्रः । इति शब्दरत्नावली ॥ वञ्चकः ।
इति
रायमुकुटः ॥

**व्याडायुधं**, क्ली, (व्याडस्य व्याघ्रस्यायुधं नख-

मिव ।) व्याघ्रनखाख्यद्रव्यम् । इत्यमरः ॥

**व्याडिः**, पुं, कोषकारमुनिविशेषः । तत्पर्य्यायः ।

विन्ध्यवासी २ नन्दिनीतनयः ३ । इति
हेम-
चन्द्रः ॥ विन्ध्यस्थः ४ नन्दिनीसुतः ५ ।
इति
त्रिकाण्डशेषः ॥

**व्यात्तं**, त्रि, (वि + आ + दा + क्तः ।) प्रसारितम् ।

विस्तृतम् । यथा, --
"स्तब्धोद्ध्वकर्णं गिरिकन्दराद्भुत-
व्यात्तास्यनासं हनुभेदभीषणम् ।
दिवि स्पृशत्कायमदीर्घपीवर-
ग्रीवोरुवक्षःस्थलमल्पमध्यमम् ॥"
इति श्रीभागवते ७ स्कन्धे ८ अध्यायः ॥
गिरिकन्दरवत् अद्भुतं व्यात्तं प्रसृतमास्यं
नासे
च यस्मिन् । इति तट्टीकायां श्रीधरस्वामी
॥

**व्यात्युक्षी**, स्त्री, (व्यतिहारेण उक्षणम् ।

वि + आ + अति + उक्ष + "कर्म्मव्यतीहारे
णच्
स्त्रियाम् ।" ३ । ३ । ४३ । इति णच् ।
ततः "णचः
स्त्रियामञ् ।" ५ । ४ । १४ । इति अञ् ।
"टिड्ढाण-
ञिति ।" ४ । १ । १५ । इति ङीप् ।)
रसिकानाम-
न्योन्यं जलक्रीडनम् । इति
संक्षिप्तसारोणादि-

**व्याधभीतः**, पुं, (व्याधाद्भीतः ।) मृगः । इति

शब्दचन्द्रिका ॥ (व्याधभीते, त्रि ॥)

**व्याधामः**, पुं, वज्रम् । इति हेमचन्द्रः ॥

**व्याधिः**, पुं, (विविधा आधयोऽस्मात् । यद्वा, वि +

आ + धा + "उपसर्गे धोः किः ।" ३ । ३ ।
९२ ।
इति किः ।) कुष्ठम् । रोगः । इत्यमरः ॥
(यथा, महाभारते । १२ । १६ । ८ ।
"द्विविधो जायते व्याधिः शारीरो मानस-
स्तथा ।
परस्परं तयोर्ज्जन्म निर्द्वन्द्वं नीपलभ्यते ॥")
कामव्यथासन्तापजन्यकृशता । इति
रसमञ्जरी ॥
कुष्ठस्य निदानं यथा, --
"व्यालोकनमनस्थौल्यक्रीडाविषयचेष्टितैः ।
विरोधरूक्षभीहर्षविषादाद्यैश्च दूषितः ॥
पुंस्त्वोत्साहबलभ्रंशशोथचित्ताप्लवज्वरान् ।
सर्व्वाकाराङ्गनिस्तोदंरोमहर्षं सुषुप्तताम् ॥
कुष्ठं विमषमन्यच्च कुर्य्यात् सर्व्वाङ्गमार्द्दवम्
॥"
इति गारुडे १७२ अध्यायः ॥
अन्यत् कुष्ठशब्दे द्रष्टव्यम् ॥ * ॥ अथ कुष्ठस्य
चिकित्सा ।
"वातोत्तरेषु सपिर्व्वमनं कफोत्तरेषु कुष्ठेषु ।
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनं श्रेष्ठम् ॥
पथ्याकरञ्जसिद्धार्थनिशावल्गुजसैन्धवैः ।
विडङ्गसहितैः पिष्टैर्लेपो मूत्रेण कुष्ठनुत् ॥"
अवल्गुजः वाकुचीति लोके । पथ्यादिभि-
र्लेपः ॥ * ॥
"सोमराजीभवचूर्णं शृङ्गवेरसमन्वितम् ।
उद्वर्त्तनमिदं हन्ति कुष्ठरोगं कृतास्पदम् ॥"
सोमराजी वाकुचीति लोके । सोमराज्युद्-
वर्त्तनम् ॥ * ॥
"रसायनं प्रवक्ष्यामि ब्रह्मणा यदुदाहृतम् ।
मार्कण्डेयप्रभृतिभिर्यत् प्रयुक्तं महर्षिभिः ॥
पुष्पकाले तु पुष्पाणि फलकाले फलानि च ।
संगृह्य पिचुमर्दस्य त्वङ्मूलानि दलानि च ।
द्विरंशानि समाहृत्य भागिकानि प्रकल्पयेत् ।
त्रिफला त्र्युषणं ब्राह्मी स्वदंष्ट्रारुष्कराग्नयः ॥
विडङ्गसारवाराहीलोहचूर्णाःस्मृताः समाः ।

सर्व्वान् प्रमेहान् प्रदरांश्च सर्व्वान्
दंष्ट्राविषं मूलविषं निहन्ति ॥
स्थूलोदरः सिंहकृशीदरः स्यात्
सुश्लिष्टसन्धिर्मधुनोपयोगात् ।
सदोषरोगादपि ये दशन्ति
सर्पादयो यान्ति विनाशमाशु ॥
जीवेच्चिरं व्याधिजराविमुक्तः
शुभे रतिश्चन्द्रसमानकान्तिः ॥"
अयमर्थः । निम्बस्य फलपुष्पत्वक्पत्रमूलानि
सर्व्वाणि समुदितानि द्विगुणानि चूर्णितानि
भृङ्गराजस्य रसेन सप्तवारान् भावयेत् ।
त्रिफलादीनि पाठान्तानि समुदितान्येक-
भागानि चूर्णितानि खदिरासननिम्बानां
निविडक्वाथेन भावयेत् । ततः
सर्व्वमेकीकृत्य
मध्वादिनावलिह्यात् । पञ्चनिम्बकावलेहः ॥
* ॥
शशिलेखापञ्चपलं तावद्गिरिजस्य गुग्गुलो-
र्दश च ।
ताप्यस्य पलत्रितयं द्वे लोहाच्छ्रावणिकायाः
॥
त्रिफलाकरञ्जपल्लवखदिरगुड्चीत्रिवृद्दन्त्यः ।
मुस्ताविडङ्गरजनीकुटजत्वक्निम्बवह्नि
सम्पाकाः ॥
एतै रचितां वटिकां मधुघृतमिश्रां गिलेत्-
प्रातः ।
गोमूत्रेण च कुष्ठं नुदन्त्यसृग्वातमचिरेण ॥
श्वित्राणि पाण्डुरोगं विषमानुदरप्रमेह-
गुल्मांश्च ।
नाशयति वलीपलितं योगः स्वायम्भुवो
नाम्ना
शशिलेखा सोमराजी । गिरिजस्य शिला
जतुनः । ताप्यस्य स्वर्णमाक्षिकस्य ।
श्रावणिका
मुण्डीति लोके । स्वायम्भुवो गुग्गुलुः ॥ * ॥
"चित्रकं त्रिफला व्योषमजाजी कारवी वचा ।
सैन्धवातिविषे कुष्ठं चव्येलायावशूकजम् ॥
विडङ्गान्यजमोदा च मुस्ता चामरदारु च ।
याबन्त्येतानि सर्व्वाणि तावन्मात्रन्तु गुग्गुलुः
॥
संक्षुभ्य सर्पिषा सार्द्धं गुटिकां कारयेद्भिषक् ।

वृत्तिः ॥ तत्पर्य्यायः जलक्रीडाशब्दे द्रष्टव्यः ॥

**व्यादिशः**, पुं, (विशेषेणादिशति स्वस्वकर्म्मणि नियोजयति जगत् । वि + आ + दिश + कः ।
विष्णुः । यथा, --
"अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः ।
चतुरस्रो गभीरात्मा विदिशो व्यादिशो दिशः ॥"
इति महाभारते तस्य सहस्रनामस्तोत्रम् ॥

**व्याधः**, पुं, (विध्यति मृगादीन् । व्यध + "स्याद्ब्य-धेति ।" ३ । १ । १४१ । इति णः ।) मृग-हिंसकजातिः । शिकारी इति भाषा । स तु सर्व्वस्विपत्न्यां क्षत्त्रियाज्जातः । यथा, --
"नापिताद्गोपकन्यायां सर्व्वस्वी तस्य योषिति ।
क्षत्राद्बभूव व्याधश्च बलवान् मृगहिंसकः ॥"
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १० अध्यायः ॥
तत्पर्य्यायः । मृगवधाजीवः २ मृगयुः ३ लुब्धकः ४ । इत्यमरः ॥ मृगावित् ५ द्रोहाटः ६ ।
इति जटाधरः ॥ मृगजीवनः ७ बलपांशुनः ८ ।
इति शब्दरत्नावली ॥ (यथा, --
"विद्धा मृगी व्याधशिलीमुखेन
मृगोऽपि तत्कातरवीक्षणेन ।
असून् परित्यज्य गतव्यथा सा
मृगस्य जीवावधिराधिरासीत् ॥"
इत्युद्भटः ॥)
दुष्टः । इति मेदिनी ॥ (यथा, भागवते । ३ । १४ । ३४ ।
"व्याधस्याप्यनुकम्प्यानां स्त्रीणां देवः सती-
पतिः ॥")

निशाद्वयावल्गुजकव्याधिघाताःसशर्कराः ॥
कुष्ठमिन्द्रयवाः पाठाः चूर्णमेषान्तु संयुतम् ।
खदिरासननिम्बानां घनं क्वाथेन भावयेत् ॥
सप्तधा पञ्चनिम्बन्तु मार्कवस्वरसेन च ।
स्निग्धः शुद्धतनुर्धीमान् योजयेत्तच्छुभे दिने ॥
मधुना तिक्तहविषा खदिरासनवारिणा ।
लेह्यमुष्णाम्भसा वापि कोलवृद्ध्या पलं भवेत् ।
जीर्णे तस्मिन् समश्नीयात् स्निग्धं लघु हितं च
यत् ॥
विचर्च्चिकोदुम्बरपण्डरीक-
कपालदद्रुकिटिभालसादि ।
शतारुविस्फोटविसर्पमालाः
कफप्रकोपं त्रिविधं किलासम् ॥
भगन्दरश्लीपदवातरक्त-
जडान्धनाडीव्रणशीर्षरोगान् ।

प्रातर्भोजनकाले च खादेदग्निबलं यथा ॥
हन्त्यष्टादश कुष्ठानि कृमीन् दुष्टव्रणानि च ।
ग्रहण्यर्शोविकारांश्च मुखामयगलग्रहान् ॥
गृध्रसीमस्थिभग्नञ्च गुल्मञ्चापि नियच्छति ।
व्याधिं कोष्ठगताञ्चापि जयेद्विष्णुरिवासुरान् ॥"
एकविंशतिको गुग्गुलुः ॥ * ॥
"वातरक्ताधिकारोक्तः पुरः कैशोरकाभिधः ।
कुष्ठानां वातरक्तानां नाशयेत् परमौषधम् ॥"
इति कैशोरको गुग्गुलुः ॥ * ॥
"भल्लातकं प्रस्थयुगं छित्त्वा द्रोणजले क्षिपेत् ।
प्रस्थद्वयं गुडूच्याश्च क्षुण्णं तत्राम्भसि क्षिपेत् ॥
चतुर्थांशावशेषन्तु कषायमवतारयेत् ।
वस्त्रपूते कषाये च वक्ष्यमाणानि निक्षिपेत् ॥
सरावमात्रं गोसर्पिर्गोदुग्धस्याढकं तथा ।
सितां प्रस्थमितां दद्यात् प्रस्थार्द्धमाक्षिकं क्षिपेत्
सर्व्वाण्येकत्र भाण्डे तु पचेत् मृद्वग्निना शनैः ।
सर्व्वद्रव्ये घनीभूते पावकादवतारयेत् ॥

तत्र क्षेप्याणि चूर्णानि ब्रूमो विल्वमितामृता।
काकुची चाथ दद्रुघ्नः पिचुमर्द्दो हरीतकी॥
धात्री रात्रिश्च मञ्जिष्ठा मरिचं नागरं कणा।
यवानी सैन्धवं मुस्तं त्वगेला नागकेशरम्॥
पर्पटः पत्रकं बालमुशीरं चन्दनं तथा।
गोक्षुरस्य च बीजानि कर्च्चरो रक्तचन्दनम्॥
पृथक् पलार्द्धमानानां चूर्णमेषामिह क्षिपेत्।
पलमात्रमिदं प्रातः समश्नीयाज्जलेन हि॥
नाशयेदवलेहोऽयं कुष्ठानि निखिलान्यपि।
वातरक्तानि सर्व्वाणि सर्व्वाण्यर्शांसि सेवितः॥
व्यायाममातपं वह्निमम्लं मांसं दधि स्त्रियम्।
तैलाभ्यङ्गं तथाध्मानं नरो भल्लातके त्यजेत्॥"
इति अमृतभल्लातकावलेहः॥ * ॥
"निम्बं गोपारुणा कट्वी त्रायन्ती त्रिफला घनम्
।
पर्पटावल्गुजानन्ता वचा खदिरचन्दनम्॥
पाठा शुण्ठी शटी भार्गी वासा भूनिम्बवत्सकम्
।
श्यामेन्द्रवारुणी मूर्व्वा विडङ्गेन्द्रयवानलम्॥
हस्तिपर्णोऽमृता द्रेका पटोलरजनीद्वयम्।
कणारग्वधसप्ताह्वकृष्णवेत्रोच्चटाफलम्॥
मञ्जिष्ठा लाङ्गली रास्ना नक्तमालं पुनर्नवा।
दन्ती विजयसारश्च भृङ्गराजकुरण्टकम्॥
अङ्कोठकञ्च शाखोटं द्विपलांशं पृथक् पृथक्।
गृह्णीयात्तानि सर्व्वाणि जलद्रोणे पचेच्छनैः॥
अष्टमांशावशेषन्तु कषायमवतारयेत्।
विधाय वाससा पूतं स्थापयेद्भाजने दृढे॥
भल्लातकसहस्राणि क्षिप्त्वा त्रीण्यमलेऽम्भसि।
पचेदष्टावशेषन्तु कषायमवतारयेत्॥
तच्च वस्त्रेण संशोध्य द्वौ कषायौ विमिश्रयेत्।
गुडस्य च तुलां दत्त्वा लेहवत् साधु साधयेत्॥
भल्लातकसहस्राणि तच्च बीजानि निःक्षिपेत्।
त्रिकटुः त्रिफला मुस्तं विडङ्गं चक्रकं तथा॥
चन्दनं सैन्धवं कुष्ठं दीप्यकञ्च पलं पलम्।
सौगन्ध्यर्थं क्षिपेत्तत्र चातुर्जातं पलं पृथक्॥
महाभल्लातको ह्येष महादेवेन भाषितः।
प्राणिनां हितकामाय जयेच्छीघ्रं प्रयोजितः॥
श्वित्रमौडुम्बरं दद्रुमृक्षजिह्वं सकाकणम्।
पुण्डरीकञ्च चर्म्माख्यं विस्फोटं रक्तमण्डलम्॥
कण्डूं कपालकं कुष्ठं पामानञ्च विपादिकाम्।
वातरक्तं षडर्शांसि पाण्डुरोगं व्रणकृमीन्॥

सारिवेति मदनपालः॥ अरुणा अतीस्
।
अवल्गुजः सोमराजी। अनन्ता
दुरालभा।
चन्दनं श्वेतम्। भार्ग्या अलाभे
कण्टकारी-
मूलम्। श्यामा कृष्णा साउ।
हस्तिकर्णः
हथिकण। द्रेका वका इति। सप्ताह्वः
छति-
वन्। कृष्णवेत्रः जलवेतसः।
उच्चटाफलं आरक्त-
गुञ्जाफलम्। कुरण्टकः कटसरैषा।
दीप्यकः
इति यवानी। महाभल्लातकः॥
"मञ्जिष्ठा त्रिफला तिक्ता वचा दारु
निशा-
मृता।
निम्बश्चैषां कृतः क्वाथः सर्व्वकुष्ठानि
नाशयेत्॥"
इति लघुमञ्जिष्ठादिक्वाथः॥ * ॥
"मञ्जिष्ठा वाकुची चक्रमर्द्दञ्च
पिचुमर्द्दकम्।
हरीतकी हरिद्रा च धात्री वासा
शतावरी॥
बला नागबला यष्ठीमधुकं क्षुरकीपि च
।
पटोलस्य लतोशीरं गुडूची रक्तचन्दनम्
॥
मञ्जिष्ठादिरयं क्वाथः कुष्ठानां नाशनः
परः।
वातरक्तस्य संहर्त्ता
कण्डूमण्डलखण्डनः॥"
इति मध्यममञ्जिष्ठादिक्वाथः॥ * ॥
"मञ्जिष्ठा कुटजामृता घनवचा शुण्ठी
हरिद्रा
द्वयं
क्षुद्रारिष्टपटोलकुष्ठकटुका भार्गी
विडङ्गा-
ग्निकम्।

एतस्याभ्यङ्गतः श्वित्रं विवर्णं तत्क्षणाद्भवेत्॥
तैलमेतज्जयेत् कण्डूं पामां सिध्मं विचर्च्चिकाम्
।
पुण्डरीकं तथा दद्रुं शून्यतां नित्यसेविनाम्॥"
इति लघुमरिचाद्यं तैलम्॥ * ॥
"मरिचं त्रिवृता दन्ती क्षीरमार्क्कं शकृद्रसः।
देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम्॥
विशाला करवीरश्च हरितालं नमःशिला।
चित्रकं लाङ्गली मुस्ता विडङ्गं चक्रमर्द्दकः॥
शिरीषः कुटजो निम्बः सप्तपर्णोऽमृता स्नुही।
सम्पाको नक्तमालञ्च खदिरो वाकुची वचा॥
ज्योतिष्मती च पलिका विषं द्विपलिकं भवेत्।
आपकं कटुतैलस्य गोमूत्रञ्च चतुर्गुणम्॥
मृत्पात्रे लोहपात्रे च शनैर्मृद्वग्निना पचेत्।
मरिचाद्यमिदं तैलं महन्मुनिभिरीरितम्॥
भिषगेतेन तैलेन म्रक्षयेत् कौष्ठिकान् व्रणान्।
पामाविचर्च्चिकादद्रुकण्डूविस्फोटकानि च॥
वलयः पलितं क्षामा नीलं व्यङ्गं तथैव च।
अभ्यङ्गेन प्रणश्यन्ति सौकुमार्य्यञ्च जायते॥
प्रथमे वयसि स्त्रीणां यासां नस्यं प्रदीयते।
तासामपि जरां प्राप्य न स्यातां स्खलितौ
स्तनौ॥
वलीवर्द्दस्तुरङ्गो वा गजो वा वायुपीडितः।
त्रिभिरभ्यञ्जनै रम्यं भवेन्मारुतविक्रमः॥"
ज्योतिष्मती मालकङ्गुणीति लोके। इति महा-
मरिचादितैलम्॥ * ॥
"तालकस्य तु पत्राणि यस्य सन्ति पृथक् पृथक्
।
अभ्रकस्यैव तद्ग्राह्यं हरितालं चिकित्सकैः॥
पुनर्नवायाः स्वरसे तालकं तद्विमर्द्दयेत्।
दिनमेकं ततस्तस्मिन् घनत्वं गमिते सति॥
कुर्व्वीत चक्रिकां तान्तु शोषयेत् सम्यगातपे।
पुनर्नवासमस्ताङ्गक्षारैः स्थालीं गलावधि॥
पूरयेच्च ततः क्षारं द्रढयेत् पीडनेन हि।
क्षारस्योपरि तां दद्यात् तालकस्य तु चक्रि-
काम्॥
तत आच्छादनं दत्त्वा मुद्रां कृत्वा विशेषयेत्।
स्थालीं चुल्ल्यां निधायाग्निममन्दं ज्वालयेद्-
भिषक्॥
निरन्तरमहोरात्रं पञ्चकं तेन सिध्यति।
स्वाङ्गशीतं समुत्तार्य्य गृह्णीयाद्रसमुत्तमम्॥

रक्तपित्तमुदावर्त्तकासश्वासंभगन्दरम् ॥
सदाभ्यासेन पलितमामवातं सुदुस्तरम् ॥
निर्यन्त्रणस्तु कथितो विहाराहारमैथुनैः ।
कुरुते परमां कान्तिं प्रदीप्तं जठरानलम् ॥
अनुपानं प्रयोक्तव्यं छिन्नातोयं पयोऽथवा ।
भोजने तु सदा त्याज्यमुष्णमम्लं विशेषतः ॥”
गोपा श्वेत साउ इति लोके । यत आह
निघण्टः ।
“सारिवा सारदा स्फोटा गोपकन्या प्रता-
निका ।”
तद्वाचको गोपीशब्दश्च यत आह । गोपी
श्यामा सारिवा स्यादनन्तोत्पलसारिवाइव्य-
मरः ॥ गोपाङ्गना गोपवल्ली लताह्वा काष्ठ-

मूर्व्वा दारु कलिङ्गभृङ्गमगधा त्रायन्ति
पाठा
वरी
गायत्री त्रिफला किरातकमहानिम्बा
सना-
रग्वधम् ॥
श्यामा वल्गुजचन्दनं वरुणकं दन्ती
कशा
षोढकं
वासा पर्पटसारिवा प्रतिविषानन्ता
विशाला
जलम् ।
मञ्जिष्ठादिरयं कषायविधिना नित्यं
पुमान् यः
पिबेत्
त्त्वग्दोषा ह्यचिरेण यान्ति विलयं
कुष्ठानि
चाष्टादश ॥
नाशं गच्छति वातरक्तमखिलं नश्यन्ति
रक्तामया
वीसर्पस्त्वचि शून्यता नयनजा रोगाः
प्रशा-
म्यन्ति च ॥”
अरिष्टः निम्बः । कलिङ्गः इन्द्रयवः ।
भृङ्गं
भृङ्गरा । वरी शतावरी । गायत्री
स्वदिरः ।
असनः विजयसारः । श्यामा प्रियङ्गुः ।
चन्द्रनमत्र रक्तं ग्राह्यम् । साविरा साउ
।
अनन्ता दुरालभा । विशाला
इन्दवारुणी
इति । जलं नेत्रवाला ।
बृहन्मञ्जिष्ठादिक्वाथः ॥
“मरिचं त्रिवृता मुस्ता हरितालं
मनःशिला ।
देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम्
॥
विशालां करवीरञ्च क्षीरमर्क्वसमुद्भवम्
।
गोमयस्य रसं कुर्य्यात् प्रत्येकं
कर्षसम्मितम् ॥

तालकेश्वरनामायमुक्तो गुञ्जामितो रसः ।
गुडूच्यादिकषायेण गदानेपान् विनाशयेत् ॥
अष्टादशापि कुष्ठानि वातरक्तं तथोद्धतम् ।
फिरङ्गदेशजं रोगं दुस्तरं च व्यपोहति ॥
एतद्भेषजसेवी तु लवणाम्ले विवर्ज्जयेत् ।
तथा कटुरसं वह्निमातपं दूरतस्त्यजेत् ॥
लवणं यः परित्यक्तुं न शक्नोति कथञ्चन ।
स तु सैन्धवमश्रीयात् मधुरोपरसो हि सः ॥”
इति तालकेश्वरो रसः ॥ * ॥
“तालताप्यशिलासूतं टङ्कणं सिधुसंयुतम् ।
गन्धार्कौ द्विगुणौ सूताज्जम्बीराद्भिः प्रमर्द्दयेत् ॥
षडहं पुटितं षोढा भूधरे सकलं त्विदम् ।
षट्पदं द्विपलं ताम्रं लोहभस्म चतुष्पलम् ॥

| | विषस्यार्द्धपलं देयं तैलं प्रस्थमितं कटु ।<br>पचेच्चतुर्गुणे नीरे गोमूत्रे द्विगुणे तथा ॥<br>मरिचाद्यमिदं तैलमभ्यङ्गात् कुष्ठनाशनम् । | |
|---|---|---|

जम्बीराद्भिर्दिनं घृष्टं त्रिंशदंशं विषं क्षिपेत् ।
अस्य माषद्वयं खादेन्माहिषीघृतसंयुतम् ॥
मध्वाज्यैर्व्वाकुचीबीजैः कर्षं लिह्यात्ततः परम् ।
तालकेश्वरनामायं सर्व्वकुष्ठहरो रसः ॥”
अर्को मारितं ताम्रम् । इति द्बितीयतालकेश्वरो रसः ॥ * ॥
“रसो वलिस्ताम्रमयः पुरोऽग्निः शिलाजतु स्याद्विषतिन्दुकश्च ।
वरा च तुल्यं गगनं करञ्ज-
बीजं पृथग्भागचतुष्टयञ्च ॥
संमर्द्द्य सर्व्वं मधुना घृतेन घृतस्य पात्रे निहितं प्रयत्नात् ।
कर्षं भजेत् प्रत्यहमस्य पथ्यं शाल्योदनं दुग्धमधुत्रयञ्च ॥
विशीर्णकर्णाङ्गुलिनासिकोऽपि भवेदनेन स्मरतुल्यमूर्त्तिः ।
दारापरित्याग इह प्रदिष्टो तिलौदनं तत्र निबद्धमूले ॥”
ताम्रमयश्च मारितम् । पुरो गुग्गुलुः । अग्नि-
श्चित्रकम् । विषतिन्दुकः कुचिला । वरा त्रिफला । रसादि त्रिफलान्तं सर्व्वं तुल्यम् ।
गगनमभ्रकम् । करञ्जबीजञ्च पृथक् चतुर्गुणं रसात् । तत्र कुष्ठे बद्धमूले सति तिलौदनमेव पथ्यम् । इति गलत्कुष्ठाधिकारः । इति भाव-
प्रकाशः ॥ * ॥ अथ सर्व्वव्याधिहरकवचम् ।
हरिरुवाच ।
“सर्व्वव्याधिहरं वक्ष्ये वैष्णवं कवचं शिवम् ।
त्रिविक्रमस्तु मे देवः सर्व्वान् पापान् निकृन्ततु ।
नरनारायणौ देवौ बुद्धिं पालयतां मम ।
शेषो मे निर्म्मलं ज्ञानं करोत्वज्ञाननाशनम् ।
बलरामो नाशयतु कल्मषं यत् कृतं मया ॥
पद्भ्यां ददातु परमो मुखं मूर्द्ध्नां मम प्रभुः ।
दत्तात्रेयः कलयतु सपुत्त्रपशुबान्धवम् ॥
सर्व्वानरीन्नाशयतु रामः परशुना मम ।
रक्षोघ्नस्तु दाशरथिः पातु नित्यं महाभुजः ॥
शत्रून् मे समरे हन्याद्रामो यादवनन्दनः ।
प्रलम्बकेशिचाणूरपूतनाकंसनाशनः ॥
कृष्णस्य यो बालभावः स मे कामान् प्रयच्छतु ।
अन्धकारं तमो घोरं पुरुषं कृष्णपिङ्गलम् ॥
पश्यामि भयसन्तप्तः पाशहस्तमिवान्तकम् ।
ततोऽहं पुण्डरीकाक्षमच्युतं शरणं गतः ॥
धन्योऽहं निर्भयो नित्यं यस्य मे भगवान् हरिः ।
श्रुत्वा नारायणं देवं सर्व्वोपद्रवनाशनम् ॥
वैष्णवं कवचं बद्ध्वा विचरामि महीतले ।
अप्रधृष्योऽस्मि भूतानां सर्व्वदेवमयो ह्यहम् ॥
स्मरणाद्देवदेवस्य विष्णोरमिततेजसः ।
सिद्धिर्भवतु मे नित्यं यथामन्त्रमुदाहृतम् ॥
यो मां पश्यति चक्षुर्भ्यां यांश्च पश्यामि चक्षुषा ।
सर्व्वेषां पापदृष्टीनां विष्णुर्बध्नाति चक्षुषा ॥
वासुदेवस्य यच्चक्रं तस्य चक्रस्य ये त्वराः ।
ते छिन्दन्तु च पापं मे मम हिंसन्तु हिंसकान् ॥
राक्षसेषु पिशाचेषु कान्तारेष्वटवीषु च ।
विवादे राजमार्गेषु द्यूतेषु कलहेषु च ॥
नदीसन्तरणे घाते संप्राप्ते प्राणसंशये ।
अग्निचौरनिपाते च सर्व्वग्रहनिवारणे ॥
विद्युत्सर्पविषोद्वेगे रोगेऽथ विघ्नशङ्कटे ।
जप्यमेतज्जपेन्नित्यं शरीरे भयमागते ॥
अयं भगवतो मन्त्रो मन्त्राणां परमो महान् ।
विख्यातं कवचं गुह्यं सर्व्वपापप्रणाशनम् ॥
स्वमायाकृतिनिर्म्माणकल्पान्तगूहनोमहत् ।
अनाद्यन्त जगद्बीज पद्मनाभ नमोऽस्तु ते ॥
ॐ कालाय स्वाहा । ॐ कालपुरुषाय स्वाहा ।
ॐ कृष्णाय स्वाहा । ॐ कृष्णपुरुषाय स्वाहा ।
ॐ चण्डाय स्वाहा । ॐ चण्डपुरुषाय स्वाहा ।
ॐ प्रचण्डाय स्वाहा । ॐ प्रचण्डपुरुषाय स्वाहा । ॐ सर्व्वाय स्वाहा । ॐ सर्व्वपुरुषाय स्वाहा । ॐ नमो भुवनेशाय त्रिलोकधात्रे इरिटि मिरिटि स्वाहा । ॐ नमो अम्बे चाभये गान्धारि विषमोह विषविषमांसं मोहयतु स्वाहा । दक्षिणतो रक्ष मां अमुकस्य सर्व्व-
भूतभयोपद्रवेभ्यो रक्ष रक्ष जय जय विजयते न हीयते विप्रश्रसोऽहं कृतवाद्यते । भयरुदय भयवोभयोऽभयं दिशतु ममास्तात् सादनमच्युतः ।
तदुदरमखिलम् विशन्तु लोका युगपरिवर्त्तसहस्रं क्षयास्तमनमिब प्रविशन्ति कस्मयनो ॥
वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ।
सर्व्वज्वरान्मम घ्नन्तु विष्णुर्नारायणो हरिः ॥”
इत्यादिमहापुराणे गारुडे सर्व्वव्याधिहरविष्णु-कवचं नाम २०० अध्यायः ॥

**व्याधिघातः**, पुं, (व्याधेर्घातो यस्मात् ।) आर-ग्वधवृक्षः । इत्यमरः ॥

**व्याधितः**, त्रि, (व्याधिः संजातोऽस्येति । तारका-दित्वादितच् ।) व्याधियुक्तः । तत्पर्य्यायः । आमयावी २ विकृतः ३ अपटुः ४ आतुरः ५ अभ्यमितः ६ अभ्यान्तः ७ । इत्यमरः ॥ रोगी ८ । इति जटाधरः ॥ (यथा, हितोपदेशे ।
“दरिद्रान् भर कौन्तेय मा प्रयच्छेश्वरे धनम् ।
व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः ॥”)

**व्याधिहन्ता**, [ऋ] पुं, (व्याधेर्हन्ता ।) वाराही-कन्दः । इति राजनिर्घण्टः ॥ व्याधिघातके, त्रि ॥

**व्याधुतः**, त्रि, (वि + आ + धु + क्तः ।) कम्पितः । इति शब्दरत्नावली ॥

**व्याधूतः**, त्रि, (वि + आ + धू + क्तः ।) कम्पितः । इति शब्दरत्नाबली ॥ (यथा, गीतगोविन्दे । १ । ३८ ।
“उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर-क्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्ण-ज्वराः ॥”)

**व्यानः**, पुं, (व्यानिति सर्व्वशरीरं व्याप्नोतीति । वि + आ + अन + अच् ।) शरीरस्थपञ्चवाय्वन्तर्गत-सर्व्वशरीरगवायुः । इत्यमरः ॥ इमे प्राणादयः पञ्चवायबः शरीरे तिष्ठन्ति ते च नियत-स्थानस्थाः । यदाहुः ।

येन रक्षा कृता शम्भोः श्वेतं रक्षयतः पुरा ॥
प्रणम्य देवमीशानमजं नित्यमनामयम् ।
देवं सर्व्वेश्वरं विष्णुं सर्व्वव्यापिनमव्ययम् ॥
वध्नाम्यहं प्रतिसरं नमस्कृत्य जनार्द्दनम् ।
अमोघाप्रतिमं सर्व्वं सर्व्वदुष्टनिवारणम् ॥
विष्णुर्मामग्रतः पातु कृष्णो रक्षतु पृष्ठतः ।
हरिर्मे रक्षतु शिरो हृदयञ्च जनार्द्दनः ॥
मनो मम हृषीकेशो जिह्वां रक्षतु केशवः ।
पातु नेत्रे वासुदेवः श्रोत्रे सङ्कर्षणोऽवतु ॥
प्रद्युम्नः पातु मे घ्राणमनिरुद्धश्च चर्म्मकम् ।
वनमाली गलस्यान्तं श्रीवत्सो रक्षतामुरः ॥
पार्श्वं रक्षतु मे चक्रं वामं दैत्यनिवारणः ।
दक्षिणन्तु गदा देवी सर्व्वासुरनिवारिणी ॥
उदरं मुषलं पातु पृष्ठं मे पातु लाङ्गलम् ।
ऊरू रक्षतु मे शार्ङ्गं जङ्घे रक्षतु नन्दकः ॥
पार्ष्णी रक्षतु शङ्खश्च पद्मं मे चरणावुभौ ।
सर्व्वकार्य्यार्थसिद्ध्यर्थं पातु मां गरुडः सदा ॥
वराहो रक्षतु जले विषमेषु च वामनः ।
अटव्यां नरसिंहश्च सर्व्वतः पातु केशवः ॥
हिरण्यगर्भो भगवान् हिरण्यं मे प्रयच्छतु ।
सांख्याचार्य्यस्तु कपिलो धातुसाम्यं करोतु मे ॥
ये ये सत्त्वा या पात्रचरा वैषा दैत्यदानवयक्षराक्षसभूतपिशाचकुष्माण्डापस्मारकोच्छादनज्वराणामैकाहिकद्वितीयतृतीयचातुर्थकमौहूर्त्तिकदिनज्वररात्रिज्वरसन्ध्याज्वरसर्व्वज्वरादीनां लूताकीटकण्टपूतनाभुजङ्गस्थावरजङ्गम विषादीनामिदं शरीरं ममाप्यपथ्यं भवतु तुम्बुरुस्फुटप्रकटोत्कठविकटदंष्ट्रपूर्व्वतो रक्ष । ॐ हैहै हैहै दिनकर सहस्रकाल ममाग्रतो जय पश्चिमतो रक्ष । ॐ निवि निवि प्रदीप्तज्वलनज्वालाकारा महाकपिल उत्तरतो रक्ष । ॐ मिलि मिलि विलि विलि गारुडि गौरि
"हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः ।
उदानः कण्ठदेशे च व्यानः सर्व्वशरीरगः ॥"
इति ॥
एवं तद्व्यापाराश्च यथा, --
"अन्नप्रवेशनं मूत्राद्युत्सर्गोऽन्नविपाचनम् ।
भाषणादि निमेषादि तद्ब्यापाराः क्रमादमी ॥"
इति भरतः ॥
श्रीधरस्वामिमते तत्कर्म्म । व्यायनम् । आकुञ्चनप्रसारणादि । अन्यच्च ।
"व्यानो व्यानशयत्यन्नं सर्व्वव्याधिप्रकोपणः ।
महारजतसुप्रख्यो हानोपादानकारणः ॥
स चाक्षिकर्णयोर्मध्ये कठ्यां वै गुल्फयोरपि ।
घ्राणे गले स्फिगुद्देशे तिष्ठत्यत्र निरन्तरम् ।
स्कन्दयत्यधरं वक्त्रं गात्रनेत्रप्रकोपणः ॥"
इति शारदातिलकटीका ॥

**व्यापकः**, त्रि, (वि + आप् + ण्वुल् ।) विशेषेणाप्नोति यः । तद्वन्निष्ठात्यन्ताभावाप्रतियोगी ।

| | | |
|---|---|---|
| श्वेतद्वीपनिवासी च श्वेतद्वीपं नयत्वजः ।<br>सर्व्वान् शत्रून् सूदयतु मधुकैटभसूदनः ॥<br>विष्णुः सदा विकिरतु किल्विषं मम विग्रहात् ।<br>हंसो मत्स्यस्तथा कूर्म्मः पातु मां सर्व्वतो दिशम् ॥ | | |

यथा, --
"साध्यस्य व्यापको यस्तु
हेतोरव्यापकस्तथा ।
स उपाधिर्भवेत्तस्य निष्कर्षोऽयं प्रदर्श्यते
॥"
इति भाषापरिच्छेदः ॥
आच्छादकः । यथा, --
"पक्षस्य व्यापकं सारमसन्दिग्धमनाकुलम् ।
अव्याख्यागम्यमित्येवमुत्तरं तद्विदो विदुः
॥"
पक्षस्य भाषार्थस्य व्यापकं आच्छादकं
अभि-
योगाप्रतिकूलमिति यावत् । इति व्यवहार-
तत्त्वम् ॥ (यथा, कुमारसम्भवे । ६ । ७१ ।
"तिर्य्यगूर्द्ध्वमधस्ताच्च व्यापको महिमा
हरेः ॥")

**व्यापकन्यासः**, पुं, शिरस्तः पादान्तं पादतः
शिरोऽन्तं मूलमन्त्रविन्यासः । यथा ।
"आदावृष्यादिको न्यासः करशुद्धिस्ततः
परम् ।
अङ्गुलिव्यापकन्यासौ हृदादिन्यास एव च ॥
तालत्रयञ्च दिग्बन्धः प्रणायामस्ततः परम् ।
ध्यानं पूजा जपश्चैव सर्व्वतन्त्रेष्वयं विधिः
॥"
इति तन्त्रसारः ॥
प्रपञ्चस्तु न्यासशब्दे द्रष्टव्यः ॥

**व्यापद्**, स्त्री, विपूर्व्वाङ्पूर्व्वपदधातोः क्विप्प्रत्ययेन
निष्पन्नमेतत् ॥ मृत्युः । आपत् । (यथा,
कथा-
सरित्सागरे । २९ । १०९ ।
"पश्य श्वश्रूकृता व्यापदिहापि फलिता मम
॥")

**व्यापनं**, क्ली, (वि + आप + ल्युट् ।) आच्छा-
दनम् । व्याप्तिः । यथा । अत्र लङ्घनमसंक्र-
मणञ्च रवेस्तदा भवति यदा तन्मासतत्पुर्ब्ब-
मासान्त्यक्षणयोस्क्रराश्यवस्थितस्य
तन्मासान्त-
रमेव राश्यन्तरसंयोगः न
त्वेकराशिस्थितस्य

अर्द्धावयवरूपा च द्वापरे संवृता भिया ॥
कलौ महाप्रमत्ता च सर्व्वत्र व्यापिका भवेत् ।
कपटेन समं भ्रात्रा भ्रमत्येव गृहे गृहे ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे १ अध्यायः ॥

**व्यापारः**, पुं, (वि + आ + पृ + घञ् ।) कर्म्म ।
यथा, --
"स्यात् प्राणवियोगफलको व्यापारो हननं
स्मृतम् ।
रागाद्द्वषात् प्रमादाद्वा स्वतः परत एव वा ॥"
इति प्रायश्चित्ततत्त्वधृताग्निपुराणवचनम्॥
(साहाय्यम् । इति मल्लीनाथः ॥ यथा,
कुमारे । ६ । ३२ ।
"आर्य्याप्यरुन्धती तत्र व्यापारं कर्त्तुमर्हति ।
प्रायेणैवंविधे कार्य्ये पुरन्ध्रीणां प्रगल्भता ॥"
तज्जन्यत्वे सति तज्जन्यजनकः । इति
न्याय-
शास्त्रम् ॥ यथा, भाषापरिच्छेदे ।
"विषयेन्द्रियसंयोगो व्यापारः सोऽपि षड्-
विधः ॥")

**व्यापारी**, [न्] त्रि, (व्यापारोऽस्यास्तीति ।
व्यापार + इनिः ।) व्यापारविशिष्टः । व्यव-
सायी । यथा, --
"लाक्षालोहादिव्यापारी रसादिविक्रयी च यः ।
स याति नागवेष्टञ्च नागैर्वेष्टित एव च ॥"
इति ब्रह्मवैवर्त्तपुराणम् ॥

**व्यापी**, [न्] पुं, (व्याप्नोति सर्व्वमिति । वि +
आप + णिनिः ।) विष्णुः । यथा, --
"स्वपनः स्ववशो व्यापी नैकात्मा
नैककर्म्मकृत् ॥"
इति महाभारते ।
तस्य सहस्रनामस्तोत्रे । १३ । १४९ । ६३ ॥
त्रि,
व्यापकः । यथा, --
"त्रिसन्ध्यव्यापिनी या तु सैव पूज्या सदा
तिथिः ।
न तत्र युग्मादरणमन्यत्र हरिवासरात् ॥"
इति तिथ्यादितत्त्वधृतपराशरवचनम्॥

**व्यापृतः**, पुं, (वि + आ + पृ + क्तः ।) कर्म्म-

"सत्यं विधातुं निजभृत्यभाषितं
व्याप्तिञ्च भूतेषु खिलेषु चात्मनः ॥")
रम्भः । इति मेदिनी ॥ रम्भस्थाने
लम्भनमिति
हेमचन्द्रे पाठः ॥
शिवस्याष्टैश्वर्य्यान्तर्गतैश्वर्य्य
विशेषः । यथा, --
"अनिमा लघिमा व्याप्तिः प्राकाम्यं महिमे-
शिता ।
वशिकामावशायित्वे ऐश्वर्य्यमष्टधा स्मृतम्
॥"
इति शब्दमाला ॥ * ॥
न्यायमते साध्यवदन्यावृत्तित्वम् । यथा ।
अग्न्य-
भावस्थाने धूमस्यावर्त्तमानत्वम् । इयं
अन्वय-
व्याप्तिः । अस्या ज्ञानं प्रति व्यभिचारज्ञाना-
भावः सहचारज्ञानञ्च कारणम् । एवं साध्या-
भावव्यापकीभूताभावप्रतियोगित्वम् । इयं
व्यति-
रेकव्याप्तिः । अस्या ज्ञानं प्रति साध्याभाव
एवं
हेत्वभावस्य सहचारज्ञानं व्यभिचारज्ञाना-
भावश्च कारणं तत्र प्रमाणम् ।
व्याप्तः साध्यवदन्यस्मिन्नसम्बन्धउदाहृतः
।
अथवा हेतुमन्निष्ठविरहाप्रतियोगिना ॥
साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ।
व्यभिचारस्याग्रहोऽपि सहचारग्रहस्तथा ॥
हेतुर्व्याप्तिग्रहे तर्कः क्वचित् शङ्कानिवर्त्तकः
।
द्वैविध्यन्तु भवेद्व्याप्तेरन्वयव्यतिरेकतः ॥
अन्वयव्याप्तिरुक्तैव व्यतिरेकादथोच्यते ।
साध्याभावव्यापकत्वं हेत्वभावस्य यद्भवेत्
॥"
इति भाषापरिच्छेदः ॥

**व्याप्तिकर्म्मा**, [न्] पुं, (व्याप्तिविशिष्टं कर्म्म यस्य ।
व्यापनक्रियाविशिष्टः । सर्व्वत्र व्याप्तक्रियः
तद्वैदिकपर्य्यायः । इन्वति १ नक्षति २
आक्षाणः ३ आनट् ४ आष्ट ५ आपानः ६

मासव्यापनमात्रम् । इति मलमासतत्त्वम् ॥

**व्यापन्नः**, त्रि, (वि + आ + पद + क्तः ।) मृतः ।

इति हेमचन्द्रः ॥

**व्यापादः**, पुं, (वि + आ + पद + घञ् ।) द्रोह-

चिन्तनम् । इत्यमरः ॥ (यथा, राजतरङ्गि-
ण्याम् । ८ । २१११ ।
"इत्युदीर्य्य नृपः सुज्जेः सज्जो
व्यापादसिद्धये ॥")

**व्यापादनं** क्ली, (वि + आ + पद + णिच् + ल्युट् ।)

मारणम् । इति हेमचन्द्रः ॥ (यथा, मार्क-
ण्डेये । २१ । ३२ ।
"अतीते च दिने
बालामात्मव्यापादनोद्याताम्।
सुरभिः प्राह नायं त्वां प्राप्स्यते दानवाधमः
॥")
परानिष्टचिन्तनम् । इत्यमरटीकायां रामा-
श्रमः ॥

**व्यापादितः** त्रि, (वि + आ + पद + णिच् + क्तः ।)

मारितः । यथा, --
"एका चेद्बहुभिः क्वापि दैवाद्व्यापादिता
भवेत् ।
पादं पादञ्च हत्यायाश्चरेयुस्ते पृथक् पृथक्
॥"
इति प्रायश्चित्ततत्त्वधृतसम्बर्त्तवचनम्॥

**व्यापिका**, स्त्री, (व्यापक + टापि अत इत्वम् ।)

व्यापिनी । यथा, --
"अधर्म्मपत्नी मिथ्या सा सर्व्वधूर्त्तैश्च
पूजिता ।
यया विना जगन्मुक्तमुच्छन्नं विधिनिर्म्मितम्
॥
सत्ये चादर्शना या च त्रेतायां सूक्ष्मरूपिणी ।

सचिवः । यथा, --
"नियोगी कर्म्मसचिव आयुक्तो व्यापृतश्च सः
॥"
इति हेमचन्द्रः ॥
व्यापारयुक्ते, त्रि । वि-आङ्-पूर्ब्ब-पृ-धातोः
क्तप्रत्ययेन निष्पन्नः ॥ (यथा, उत्तरचरिते । १
।
"आशिथिलपरिरम्भव्यापृतैकैकदोष्णो-
रविदितगतयामा रात्रिरेव व्यरंसीत् ॥")

**व्याप्तं**, त्रि, (वि + आप् + क्तः ।) सम्पूर्णम् । तत्-

पर्य्यायः । पूर्णम् २ आचितम् ३ छन्नम् ४
पूरितम् ५ भरितम् ६ निचितम् ७ । इति
हेमचन्द्रः ॥ (यथा, गीतायाम् । ११ । २० ।
"द्यावापृथिव्योरिदमन्तरंहि
व्याप्तं त्वयैकेन दिशश्च सर्व्वाः ॥")
ख्यातम् । समाक्रान्तम् । इति मेदिनी ॥
स्थापितम् । यथा । प्राप्तं प्रणिहिते समे इत्यत्र
व्याप्तमपि पाठः । इत्यमरटीकायां रायमुकुटः
॥

**व्याप्तिः**, स्त्री, (वि + आप् + क्तिन् ।) व्यापनम् ।

(यथा, भागवते । ७ । ८ । १७ ।

अशत् ७ नशत् ८ आनसे ९ अश्नुते १० ।
इति दश व्याप्तिकर्म्माणः । इति वेदनिघण्टौ
२
अध्याये । १८ ॥

**व्याप्यं**, क्ली, (व्याप्यते इति । वि + आप् + ण्यत् ।)

साधनम् । यथा । वाप्यं लिङ्गञ्च साधनम् ।
इति सङ्कीर्णवर्गे त्रिकाण्डशेषः ॥ कुष्ठौषधम्
।
इत्यमरः ॥

**व्याप्यः**, त्रि, (वि + आप् + ण्यत् ।) व्याप्ति-

विशिष्टः । व्यापनीयः । यथा, --
"प्रस्थानं ते कुलिशकलनान्निश्चितं
पण्डिताग्रौ-
श्चित्तेऽस्माकं तदपि रमते याहि याहीति
वाणी ।
अप्रामाण्यं कथयति सदा नन्दसूनोर्व्वियोगो
व्याप्यज्ञानाद्व्रजकुलभुवां
व्यापकस्यापिसिद्धौ ॥"
इति पदाङ्कदूतः ॥
(यथा, भागवते । ७ । ६ । २२ ।
"प्रत्यगात्मस्वरूपेण दृश्यरूपेण च स्वयम् ।
व्याप्य व्यापकनिर्द्देश्यो
ह्यनिर्द्देश्योऽविकल्पितः ॥")

**व्यामः**, पुं, (विशेषेण अम्यतेऽनेनेति । अम गतौ +

घञ् ।) तिर्य्यक्पार्श्वे ततयोः
सहस्तयोर्बाह्वोर-
न्तरम् । वैँउ इति भाषा । व्यामीयतेऽनेन
व्यामः कृद्धोः कभाव इत्युक्तेर्माङो डः ।
इत्य-
मरभरतौ ॥
"व्यामव्यायामन्यग्रोधास्तिर्य्यक्बाहू

प्रसारितौ ।” इति हेमचन्द्रः ॥ (यथा, महा-
भारते । ३ । ११ । ३९ ।
“ततो भीमो महाबाहुरारुज्य तरसा द्रुमम् ।
दशव्याममथोद्विद्धं निष्पत्रमकरोत् तदा ॥”)

**व्यामनं**, क्ली, (वि + आ + अम + ल्युट् ।) व्यामः ।
इति त्रिकाण्डशेषः ॥

**व्यामिश्रं**, त्रि, (वि + आ + मिश्र + घञ् ।)
संमिलितम् । भिन्नविषयाणामेकीभावकरणम् ।
यथा, --
“व्यामिश्रेणेव वाक्यन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥”
इति श्रीभगवद्गीतायाम् । ३ । २ ॥
क्वचित् कर्म्मप्रशंसा क्वचित् ज्ञानप्रशंसा इत्येवं
व्यामिश्रं सन्देहोत्पादकमिव यद्वाक्यं तेन मे
मतिमुभयत्र दोलायितां कुर्व्वन् मोहयसीव ।
इति तट्टीकायां श्रीधरस्वामी ॥

**व्यायतं**, त्रि, (विशेषेण आयतम् ।) व्यापृतम् ।
दैर्घ्यम् । (यथा, शाकुन्तले । २ ।
“अपचितमपि गात्रं व्यायतत्वादलक्ष्यं ।
गिरिचर इव नागः प्राणसारं विभर्त्ति ॥”)
दृढम् । अतिशयः । इति मेदिनी ॥

**व्यायामः**, पुं, (वि + आ + यम + घञ् ।) पौरुषः ।
(यथा, महाभारते । ४ । ३८ । ७ ।
“व्यायामसहमत्यर्थं तृणराजसमं महत् ।
सर्व्वायुधमहामात्रं शत्रुसंवादकारकम् ॥”)
श्रमः । (यथा, महाभारते । १ । १७६ । ६ ।
“व्ययामकर्षितः सोऽथ मृगलिप्सुः पिपासितः ।
आजगाम नरश्रेष्ठ वशिष्ठस्याश्रमं प्रति ॥”)
विषमः । दुर्गसञ्चारः । इति मेदिनी ॥ व्यामः ।
इति हेमचन्द्रः ॥ मल्लक्रीडा । कुस्ती इति
पारस्य भाषा । (यथा, महाभारते । १२ ।
२१ । ७ ।
अतिव्यायामतः कासो रक्तपित्तं प्रजायते ॥
श्रमः क्लमः क्षयस्तृष्णा ज्वरश्छर्द्दिश्च
जायते ॥”
इति राजवल्लभः ॥

**व्यायोगः**, पुं, (वि + आ + युज + घञ् ।) दश-
विधरूपकान्तर्गतरूपकविशेषः । यथा, --
“स्यान्नाटकं प्रकरणं भाणः प्रहसनं डिमः ।
व्यायोगः समवाकारो विथ्यङ्केहामृगा इति ॥
अभिनेयप्रकाराः स्युर्भाषाः षट्
संस्कृतादिकाः ॥”
इति हेमचन्द्रः ॥
(तल्लक्षण यथा, साहित्यदर्पणे । ६ । ५१४ ।
“ख्यातेतिवृत्तो व्यायोगः स्वल्पस्त्रीजनसंयुतः ।
हीनो गर्भविमर्षाभ्यां नरैर्ब्बहुभिराश्रितः ॥
एकाङ्कश्च भवेदस्त्रीनिमित्तसमरोदयः ।
कौशिकीवृत्तिरहितः प्रख्यातस्तत्र नायकः ॥
राजर्षिरथ दिव्यो वा भवेद्धीरोद्धतश्च सः ।
हास्यशृङ्गारशान्तेभ्य इतरेऽत्राङ्गिनो रसाः ॥”)

**व्यालः**, पुं, (विशेषेण आसमन्तात् अलतीति ।
अल पर्य्याप्तौ + अच् ।) सर्पः । श्वापदः ।
इत्यमरः ॥ (यथा, मनुः । १ । ४३ ।
“पशवश्च मृगाश्चैव व्यालाश्चोभयतोदतः ।
रक्षांसि च पिशाचाश्च मनुष्याश्च जरायुजाः ॥”)
दुष्टगजः । इति मेदिनी ॥ (यथा, माघे । १२ । २८ ।
“व्यालद्विपा यन्तृभिरुन्मदिष्णवः
कथञ्चिदारादपथेन निन्यिरे ॥”)
चित्रकः । व्याघ्रः । इति राजनिर्घण्टः ॥ राजा ।
इत्यमरटीकायां मथुरेशः ॥

**व्यालः**, त्रि, (वि + आ + अल + अच् ।) शठः ।
धूर्त्तः । इति जटाधरः ॥

**व्यालकः**, पुं, (व्याल एव । स्वार्थे कन् ।) दुष्ट-
गजः । तत्पर्य्यायः । गम्भीरवेदी २ अङ्कुश-
दुर्द्धरः ३ चालकः ४ । इति त्रिकाण्डशेषः ॥

**व्यालनखः**, पुं, (व्यालस्य नख इव आकृतिर्य्यस्य ।)
गन्धद्रव्यविशेषः । वघ्नहा इति हिन्दी भाषा ।
तत्पर्य्यायः । कूटस्थः २ चक्रनायकः ३ चक्री ४
चक्रनखः ५ त्र्यस्रफलः ६ व्याघ्रनखः ७ द्वीपि-
नखः ८ खपुरः ९ व्यालपाणिजः १० व्याला-
युधः ११ व्यालबलः १२ व्यालखड्गः १३ ।
अस्य गुणाः । तिक्तत्वम् । उष्णत्वम् । कषा-
यत्वम् । कफवातकुष्ठकण्डूव्रणनाशित्वम् । वर्ण्य-
त्वम् । सौगन्ध्यप्रदत्वञ्च । इति राजनिर्घण्टः ॥

**व्यालपत्रा**, स्त्री (व्यालानि तीक्ष्णाणि पत्राणि
यस्याः ।) एर्व्वारुः । इति राजनिर्घण्टः ॥

**व्यालबलः**, पुं, व्यालनखः । इति राजनिर्घण्टः ॥

**व्यालमृगः**, पुं, (व्यालो हिंस्रो मृगः पशुः ।)
चित्रव्याघ्रः । चिता वाघ इति भाषा । इति
महाभारते राजधर्म्मः ॥ (यथा, महाभारते ।
३ । १६६ । ३ ।
“रथनेमिस्वनश्चैव घण्टाशब्दश्च भारत ! ।
पृथक् व्यालमृगाणाञ्च पक्षिणामिव सर्व्वशः ॥”)

**व्यालम्बः**, पुं, (विशेषेण आलम्बते इति । वि +
आ + लम्ब + अच् ।) रक्तैरण्डः । इति वैद्य-
कम् ॥ (लम्बमाने, त्रि । यथा, महाभारते ।
७ । ८८ । १० ।
“व्यालम्बहस्तान् संबद्धान् सपक्षानिव पर्व्व-
तान् ॥”)

**व्यालायुधं**, क्ली, (व्यालस्यायुधं नख इव आकृति-
र्यस्य ।) नखीनामगन्धद्रव्यम् । इत्यमरटीकायां
मथुरेशः ॥

**व्यालायुधः**, पुं, (व्यालस्यायुधमिवाकृतिर्य्यस्य ।)
व्यालनखः । इति राजनिर्घण्टः ॥

**व्यावक्रोशी**, स्त्री, (वि + अव + क्रुश + “कर्म्म-

"अन्ये साम प्रशंसन्ति व्यायाममपरे जनाः ॥")
अस्य गुणादि यथा, --
"व्यायामो हि सदा पथ्यो बालनां स्निग्ध-भोजिनाम् ।
स च शीते वसन्ते च तेषां पथ्यतमः स्मृतः ॥
सर्व्वेष्वृतुषु सर्व्वैर्हि शूरैरात्महितार्थिभिः ।
शक्त्यर्द्धेन तु कर्त्तव्यो व्यायामो हन्त्यतो व्यथाम् ॥
कुक्षौ ललाटे ग्रीवायां यदा घर्म्मः प्रवर्त्तते ।
शक्त्यर्द्धं तं विजानीयादायतोच्छ्वासमेव च ॥
लाघवं कर्म्मसामर्थ्यं स्थैर्य्यं क्लेशसहिष्णुता ।
दोषक्षयोऽग्निवृद्धिश्च व्यायामादुपजायते ॥
व्यायामं कुर्व्वतो नित्यं विरुद्धमपि भोजनम् ।
विदग्धमविदग्धं वा निर्द्दोषं परिपच्यते ॥
न स व्यायामसदृशमन्यत् स्थौल्यापकर्षणम् ।
न च व्यायामिनं मर्त्यं मर्द्दयन्त्यरयो बलात् ॥
न चैनं सहसाक्रम्य जरा समधिगच्छति ॥
व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्त्तितस्य च ।
व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः ॥
रक्तपित्ती क्षयी शोषी कासी श्वासी क्षतातुरः ।
भुक्तवान् स्त्रीषु च क्षीणो व्यायामं परिवर्जयेत् ॥
वातपित्तामयी बालो वृद्धोऽजीर्णी च संत्यजेत् ।

(श्वापदः । यथा, महाभारते । १३ । ११११ । ८५ ।
"जायते व्यालकश्चापि मासं तस्मात्तु मानुषः ॥")

**व्यालखड्गः**, पुं, व्यालनखः । इति राजनिर्घण्टः ॥

**व्यालगन्धा**, स्त्री, (व्यालस्येव गन्धो यस्याः ।) नाकुली । इति राजनिर्घण्टः ॥

**व्यालग्राहः**, पुं, (व्यालं गृह्णातीति । व्याल + ग्रह + अण् ।) व्यालग्राही । इत्यमरटीकायां भरतः ॥ (यथा, मनुः । ८ । २६० ।
"व्यालग्राहानुञ्छवृत्तीनन्यांश्चवनचारिणः ॥")

**व्यालग्राही**, [न्] पुं, (व्यालं गृह्णातीति । ग्रह + णिनिः ।) भिक्षार्थं सर्पधारी । सर्पखेलकः । सापुडिया इति वादिया इति च भाषा । तत्पर्य्यायः । अहितुण्डिकः २ । इत्यमरः ॥ जाङ्गुलिः ३ जाङ्गलिः ४ आहितुण्डिकः ५ व्यालग्राहः ६ गारुडिकः ७ विषवैद्यः ८ । इति शब्दरत्नावली ॥

**व्यालजिह्वा**, स्त्री, (व्यालस्य जिह्वेव आकृतिर्यस्याः ।) महासमङ्गा । इति राजनिर्घण्टः ॥ (व्यालजिह्वा च ॥)

**व्यालदंष्ट्रः**, पुं, (व्यालस्य दंष्ट्रेव आकृतिर्य्यस्य ।) गोक्षुरः । इति राजनिर्घण्टः ॥

व्यतिहारे णच् स्त्रियाम् ।" ३ । ३ । ४३ । इति णच् । ततः "णचः स्त्रियामञ् ।" ५ । ४ । १४ । इति स्वार्थे अञ् । "न कर्म्मव्यतिहारे । ७ । ३ । ६ । इति ऐङ-प्रतिषेधः । स्त्रियां ङीप् ।) परस्पराक्रोशनम् । इति स्त्रीलिङ्गसंग्रहटीकायां भरतः ॥

**व्यावभासी**, स्त्री, (वि + अव + भास + णच् । स्वार्थे अञ् । ङीप् ।) व्यावक्रोशी । इत्यमरटीकायां रायमुकुटः ॥

**व्यावर्त्तः**, पुं, (वि + आ + वृत् + अच् ।) नाभिकण्टकः । इति शब्दरत्नावली ॥ तत्र आवर्त्तकोऽपि पाठः ॥

**व्यावहारी**, स्त्री, (वि + अव + हृ + णच् । स्वार्थे अञ् । ङीप् ।) परस्परहरणम् । इत्यमरटीकायां भरतः ॥

**व्यावहासी**, स्त्री, (वि + अव + हस + णच् । स्वार्थे अञ् । ङीप् ।) परस्परहसनम् । इत्यमरटीकायां भरतः ॥

**व्यावृत्तः**, त्रि, (वि + आ + वृत् + क्तः ।) वृतः । यथा । वृते तु बृत्तव्यावृत्तौ । इति हेमचन्द्रः ॥ आवृतश्च ॥ (प्रतिनिवृत्तः । यथा, रघुः । १ । २७ ।
"व्यवृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता ॥"

**व्यावृत्तिः**, स्त्री, (वि + आ + वृत् + क्तिन् ।)

खण्डनम् । यथा, --
"अतीतः पन्थानं तव च महिमा वाङ्मनसयो-
रतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि ।
स कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः ।
पदे त्वर्व्वाचीने पतति न मनः कस्य न वचः ॥"
इति महिम्नस्तोत्रम् ॥
आवृत्तिः । यथा ।
सर्व्वसपक्षव्यावृत्तिरेव दोषो न विपक्षव्यावृत्तिरपि तस्याननुगुणत्वात् । इति चिन्तामणौ असाधारणमूलम् ॥

**व्यासः**, पुं, (वि + अस् + घञ् ।) विस्तारः ।

इत्यमरः ॥ (यथा, महाभारते । १ । १ । ५१ ।
"विस्तीर्य्यैतत् महज्ज्ञानमृषिः संक्षिप्य चाब्रवीत् ।
इष्टं हि विदुषां लोके समासव्यासधारणम् ॥"
"समासः संक्षेपः व्यासो विस्तारः ।" इति तट्टीका ॥) मानभेदः । इति शब्दरत्नावली ॥
पाठकब्राह्मणः । यथा, नैयतकालिकतल्पतरौ भविष्यपुराणम् ॥
"विस्पष्टमद्रुतं शान्तं स्पष्टाक्षरपदं तथा ।
कलस्वरसमायुक्तं रसभावसमन्वितम् ॥
बुध्यमानः सदर्थं वै ग्रन्थार्थं कृत्स्नशो नृप ।
तदा वेदविभागञ्च पुराणञ्च चकार ह ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ४ अध्यायः ॥ * ॥
तस्य जन्मान्तरं यथा, --
"अथ भूयो जगत्स्रष्टा भोः शब्देनानुवादयन् ।
सरस्वतीमुच्चचार तत्र सारस्वतोऽभवत् ॥
अपान्तरतमा नाम सुतो वाक्सम्भवः प्रभुः ।
भूतभव्यभविष्यज्ञः सत्यवादी दृढव्रतः ॥
तमुवाच नतं मूर्द्ध्ना देवानामादिरव्ययः ।
वेदाख्याने श्रुतिः कार्य्या यथा मतिमतां वर ॥
तस्मात् कुरु यथाज्ञप्तं ममैतद्वचनं मुने ।
तेन भिन्नास्तदा वेदा मनोः स्वायम्भुवोऽन्तरे ॥
ततस्तुतोष भगवान् हरिस्तेनास्य कर्म्मणा ।
तपसा च सुतप्तेन यमेन नियमेन च ॥
मन्वन्तरेषु पुत्त्रत्वमेवमेवं प्रवर्त्तकः ।
भविष्यस्यचलो ब्रह्मन्नप्रधृष्यश्च नित्यशः ॥"
इति महाभारते मोक्षधर्म्मः ॥ * ॥
अन्यच्च ।
"सुतं त्वजनयच्छक्तरदृश्यन्तीपराशरम् ।
काली पराशरात् जज्ञे कृष्णद्वैपायनं मुनिम् ॥
द्वैपायनादरुण्यां वै शुको जज्ञे गुणान्वितः ।"
इति वह्निपुराणे प्रजापतिसर्गो नामाध्यायः ॥ *
युगभेदे व्यासभेदो यथा, --
"यस्मिन्मन्वन्तरे व्यासा ये ये तांस्तान्निबोध मे ।
यथा च भेदः शास्त्वानां व्यासेन क्रियते मुने ॥
अष्टाविंशतिकृत्वो वै वेदो व्यस्तो महर्षिभिः ।
वैवस्वतेऽन्तरे त्वस्मिन् द्वापरेषु पुनः पुनः ॥
वेदव्यासा व्यतीता ये अष्टाविंशतिसत्तमाः ।
चतुर्धा यैः कृतो वेदो द्वापरेषु पुनः पुनः ॥
द्वापरे प्रथमे व्यस्ताः स्वयं वेदाः स्वयम्भुवा ।
द्वितीये द्वापरे चैव वेदव्यासः प्रजापतिः ॥
तृतीये चोशना व्यासश्चतुर्थे तु बृहस्पतिः ।
सविता पञ्चमे व्यासो मृत्युः षष्ठे स्मृतः प्रभुः ॥
सप्तमे च तथैवेन्द्रो वशिष्टश्चाष्टमे स्मृतः ।
सारस्वतश्च नवमे त्रिधामा दशमे स्मृतः ॥
एकादशे वै त्रिवृषो भारद्वाजस्ततः परम् ।
त्रयोदशे चान्तरीक्षो धर्म्मी चापि चतुर्द्दशे ॥
त्रय्यारुणः पञ्चदशे षोडशे तु धनञ्जयः ।
कृतञ्जयः सप्तदशे ऋणज्योऽष्टादशे स्मृतः ॥
ततो व्यासो भरद्वाजो भरद्वाजात्तु गोतमः ।
गोतमादुत्तमो व्यासो हर्य्यात्मा योऽभिधीयते ॥
अथ हर्य्यात्मनो वेणः स्मृतो वाजश्रवास्तु यः ।
पञ्चदशे त्र्यायणः । अष्टादशे ऋतञ्जयः । एक-
विंशे वाजश्रवाः । द्वाविंशे शुष्मापणः । त्रयो-
विंशे तृणविन्दुः । चतुर्व्विंशे वाल्मीकिः । पञ्च-
विंशे विष्णुः । अन्यत् विष्णपुराणवत् ॥ (एतद्-
विवरणञ्च देवीभागवते १ स्कन्धे ३ अध्याये
च द्रष्टव्यम् ॥)

**व्यासक्तः**, त्रि, (वि + आ + सञ्ज + क्तः ।) विशे-

षेणासक्तः । संलग्नः । यथा, --
"व्याकोषेन्दीवराभा कनकपरिलसत्पीतवासाः सुहासा
वर्हैरुच्चन्द्रकान्तैर्व्वलयितचिकुरा चारुकर्णावतंसा ।
अंसव्यासक्तवंशध्वनिसुस्वितजगद्बल्लवीभिर्लसन्ती
मूर्त्तिर्गोपस्य विष्णोरवतु जगति नः स्रग्धरा हारिहारा ॥"
इति छन्दोमञ्जरी ॥

**व्यासङ्गः**, पुं, विशेषेण आसङ्गः । वि-आङ्-

पूर्ब्बसन्जधातोर्घञ्प्रत्ययेन निष्पन्नमेतत् ॥

**व्यासमाता**, [ऋ] स्त्री, (व्यासस्य माता ।)

वेदव्यासजननी । इति त्रिकाण्डशेषः ॥ तत्-
पर्य्यायः । सत्यवती १ वासवी २ गन्धकालिका ३
योजनगन्धा ४ दासेयी ५ शीलंकायनजीवसूः ६ ।
इति हेमचन्द्रः ॥ ग्रन्थान्तरे शालङ्कायनजा
इति च पाठः । काली ७ झषोदरी ८ विचित्र-
वीर्य्यसूः ९ चित्राङ्गदसूः १० योजनगन्धिका ११ ।
इति त्रिकाण्डशेषः ॥ गन्धकाली १२ सत्या १३
दासनन्दिनी १४ । इति शब्दरत्नावली ॥

**व्यासिद्धः**, त्रि, (वि + आ + सिध + क्तः ।) निषिद्धः ।

इति मिताक्षरा ॥

**व्याहतः**, त्रि, (वि + आ + हन + क्तः ।) विशेषे-

णाहतः । व्यर्थः । यथा । सुप्तव्यासक्तमनसाञ्चे-
न्द्रियार्थयोः सन्निकर्षनिमित्तत्वात् तैश्चाप-
देशाज्ज्ञानविशेषाणां व्याहतत्वादहेतुः । इति
गोतमसूत्रे प्रत्यक्षपरीक्षाप्रकरणम् ॥ अपि च ।
"अव्याहताज्ञः सर्व्वासु यः सदा देवयोनिषु ।
निर्ज्जिताखिलदैत्यारिः स यदाह शृणुष्व तत् ॥"

ब्राह्मणादिषु सर्व्वेषु
ग्रन्थार्थञ्चार्पयेन्नृप ।
य एवं वाचयेद्ब्रह्मन् स विप्रो
व्यास उच्यते ॥”
इति तिथ्यादितत्त्वम् ॥
गोलस्य मध्यरेखा । यथा, --
“व्यासे भनन्दाग्निहते विभक्ते
खवाणसूर्य्यैः परिधिस्तु सूक्ष्मः
।
द्वाविंशतिघ्ने विहृतेऽथ शैलैः
स्थूलोऽथवा
स्याद्ब्यवहारयोगः ॥”
उदाहरणम् ।
“विष्कम्भमानं किल यत्र सप्त
तत्र प्रमाणं परिधेः प्रचक्ष्व ।
द्वाविंशतिर्यत् परिधिप्रमाणं
तद्व्याससंख्या च सखे
विचिन्त्य ॥”
इति लीलावती ॥ * ॥
(व्यास्यति वेदानिति । वि +
आ + अस् +
अच् ।) मुनिविशेषः । तस्य
पर्य्यायो वेदव्यास-
शब्दे द्रष्टव्यः ॥ (अस्य
निरुक्तिर्यथा महा-
भारते । १ । १०५ । १४ ।
“यो व्यस्य वेदांश्चतुरस्तपसा
भगवानृषिः ।
लोके व्यासत्वमापेदे कार्ष्णात्
कृष्णत्वमेव च ॥”)
स च सत्यवत्यां कन्याकाले
पराशराज्जातः ।
श्रीकृष्णस्य पञ्चकलोद्भवः ।
यथा, --
“व्यासः पुराणसूत्रञ्च पप्रच्छ
वाल्मिकं यदा ।
मौनीभूतः स सस्मार त्वामेव
जगदम्बिकाम् ॥
तदा चकार सिद्धान्तं त्वद्बरेण
मुनीश्वरः ।
संप्राप निर्म्मलं ज्ञानं
भ्रमान्धध्वंसदीपकम् ॥

सोमो मुख्यायनस्तस्मात्तृणबिन्दुरिति स्मृतः ॥
ऋक्षोऽभूद्भार्गवस्तस्माद्वाल्मीकिर्योऽभिधीयते।
तस्मादस्मत्पिता शक्तिर्व्यासस्तस्मादहं मुने ॥
जातुकर्णोऽभवन्मत्तः कृष्णद्वैपायनस्ततः ।
अष्टाविंशतिरित्येते वेदव्यासाः पुरातनाः ॥
एको वेदश्चतुर्धा तु तैः कृतो द्वापरादिषु ।
भविष्ये द्वापरे चापि द्रौणिर्व्यासो भविष्यति ।
व्यतीते मम पुत्त्रेऽस्मिन् कृष्णद्वैपायने मुनौ ॥”
इति विष्णुपुराणे ३ अंशे ३ अध्यायः ॥ * ॥
कूर्म्मपुराणे त्वियान् विशेषः । द्वादशे द्वापरे
शततेजाः । त्रयोदशे धर्म्मः । चतुर्द्दशे तरक्षुः ।

इति देवीमाहात्म्यम् ॥

**व्याहारः**, पुं, (वि + आ + हृ + घञ् ।) वाक्यम् ।

इत्यमरः ॥ (यथा, बृहत्संहितायाम् । ४६ ।
७१ ।
“श्वभिरस्थिशवावयवप्रवेशनं मन्दिरेषु मर-
काय ।
पशुशस्त्रव्याहारे नृपमृत्युर्म्मुनिवचश्चेदम् ॥”)

**व्याहृतिः**, स्त्री, (वि + आ + हृ + क्तिन् ।)

व्याहारः । मन्त्रविशेषः । यथा, --
“ॐकारमादितः कृत्वा व्याहृतिस्तदनन्तरम् ।
ततोऽधीयीत सावित्रीमेकाग्रश्रद्धयान्वितः ॥
पुराकल्पे समुत्पन्ना भूर्भुवःस्वःसनातनाः ।
महाव्याहृतयस्तिस्रः सर्व्वाशुभनिवर्हणाः ॥
प्रधानपुरुषः कालो ब्रह्मविष्णुमहेश्वराः ।
सत्त्वं रजस्तमस्तिस्रः क्रमाद्व्याहृतयः स्मृताः ॥

| | | |
|---|---|---|
| पुराणसूत्रं श्रुत्वा स व्यासः<br>पञ्चकलोद्भवः ।<br>त्वां सिषेवे प्रदध्यौ च शतवर्षञ्च<br>पुष्करे ॥<br>तदा त्वत्तो वरं प्राप्य स<br>कवीन्द्रो बभूव ह । | | |

ओङ्कारस्तत्परं ब्रह्म सावित्री स्यात्तदक्षरम् ।
एष मन्त्रो महाभाग सारात्सार उदाहृतः ॥”
इति कौर्म्मे उपविभागे १३ अध्यायः ॥
(वाक्यम् । यथा, कुमारसम्भवे । ३ । ६३ ।
“न हीश्वरव्याहृतयः कदाचित्
पुष्णन्ति लोके विपरीतमर्थम् ॥”)

**व्युतः**, त्रि, (वि + वे + क्तः ।) स्यूतम् । इति

भरतद्विरूपकोषः ॥

**व्युतिः**, स्त्री, (वि + वे + क्तिन् ।) ऊतिः । तन्तु-

सन्ततिः । इति भरतद्विरूपकोषः ॥

**व्युत्क्रमः**, पुं, (वि + उत् + क्रम + घञ् ।) क्रम-

विपर्य्ययः । व्यतिक्रमः । तत्पर्य्यायः ।
उत्क्रमः २
अक्रमः ३ । इति हेमचन्द्रः ॥ (यथा, साहित्य-
दर्पणे । १० ।
“पश्येत् कश्चिच्चल चपल रे का त्वराहं
कुमारी
हस्तग्राहं वितर हहहा व्युत्क्रमः क्वासि
यासि ॥”)

**व्युत्थानं**, क्ली, (वि + उत् + स्था + ल्युट् ।)
स्वातन्त्र्य-

कृत्यम् । विरोधाचरणम् । इति मेदिनी ॥
(यथा, महाभारते । १४ । २९ । १६ ।
“एवं ते द्रविडाभीरा पुण्ड्राश्च शवरैः सह ।
वृषलत्वं परिगता व्युत्थानात् क्षत्रधर्म्मिणः
॥”)
प्रतिरोधनम् । समाधिपारणम् । इति हेम-
चन्द्रः ॥ नृत्यभेदः । इति शब्दरत्नावली ॥
विशेषेणोत्थानञ्च ॥ (चित्तस्यावस्थाविशषः ।
इति पातञ्जलदर्शनम् ॥)

**व्युत्पत्तिः**, स्त्री, (वि + उत् + पद् + क्तिन् ।) विशेषे-

णोत्पत्तिः । संस्कारः । इति व्युत्पन्नशब्दार्थ-
दर्शनात् । यथा । शरत्कालबोधनीयत्वेन
शारदा-
पदव्युत्पत्तेस्तत् पदं तालव्यादि सारं
दतातीति
व्युत्पत्तिस्तु काल्पनिकी । इति
तिथ्यादितत्त्वम् ॥

तिथ्यादितत्त्वम् ॥ (यथा च महाभारते । १२
।
१९ । १८ ।
“अथैकान्तव्युदासेन शरीरे पाञ्चभौतिके ॥”)

**व्युष्टं**, क्ली, (वि + वस् + क्तः ।) फलम् । दिनम् ।

प्रभातम् । (यथा, माघे । १२ । ४ ।
“व्युष्टं प्रयाणञ्च वियोगवेदना
विदूननारीकमभूत् समन्तदा ॥”)
पर्य्युषितम् । इति हेमचन्द्रः ॥ (प्रभातार्थे
क्वचित्
पुंलिङ्गोऽपि । स तु दोषायाः पुत्रः । यथा,
भागवते । ४ । १३ । १४ ।
“प्रदोषो निशिथो व्युष्ट इति दोषासुतास्त्रयः ।
व्युष्टः सुतं पुष्करिण्यां सर्व्वतेजसमादधे ॥”)

**व्युष्टः**, त्रि, (वि + वस + क्तः ।) उषितः । (यथा,

महाभारते । ३ । ६९ । २८ ।
“सा व्युष्टा रजनीं तत्र पितुर्वेश्म विभाविनी
।”)
दग्धः । इति मेदिनी ॥

**व्युष्टिः**, स्त्री, (वि + वस् + क्तिन् ।) फलम् । (यथा,

महाभारते । १२ । २२८ । ४ ।
“महतस्तपसो व्युष्ट्या पश्यन्नोकौ परावरौ
॥”)
समृद्धिः । इति मेदिनी ॥ स्तुतिः । इति हेम-
चन्द्रः ॥ (प्रकाशः । यथा, ऋग्वेदे । १ ।
१७१ । ५ ।
“व्युष्टिषु शवसा शश्वतीनाम् ॥”
“व्युष्टिषु सतीषु प्रकाशेषु सत्सु ।” इति तद्-
भाष्ये सायणः ॥)

**व्यूढः**, त्रि, (विशेषेण उह्यतेस्म । वि + वह + क्तः ।)

विन्यस्तः । संहतः । इत्यमरः । ३ । ३ ।
४४ ॥
(व्यूहरचनयाधिष्ठितः । यथा, गीतायाम् । १
। २ ।
“दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्य्योधनस्तदा
।
आचार्य्यमुपसंगम्य राजा वचनमब्रवीत् ॥”)

युद्धार्थसेनारचना । तत्पर्य्यायः ।
बलविन्यासः २ ।
इत्यमरः ॥ “युद्धार्थं सैन्यस्य देशविशेषे
विभज्य
दुर्लङ्घ्यत्वनिमित्तं स्थापनं व्यूहः । ऊह
वितर्के
विपूर्ब्बात् घञ् । युद्धे दण्डादयो भेदा
विशेषा
व्यूहस्येत्यर्थात् आदिना भोगमण्डलसं
हतानां
ग्रहः । यथाह कामन्दकिः ।
तिर्य्यग्वृत्तिश्च दण्डः
स्याद्भोगोऽन्वावृत्तिरेव च ।
मण्डलं सर्व्वतो वृत्तिः पृथग्वृत्तिरसंहतः ॥
इति ॥
एषां चतूर्णाञ्च बहवो भेदाः क्रौञ्चचक्रादयो
ग्रन्थगौरवभयान्नोक्ताः । इति भरतः ॥
अपि च ।
“समग्रस्य तु सैन्यस्य विन्यासः
स्थानभेदतः ।
स व्यूह इति विख्यातो युद्धेषु
पृथिवीभुजाम् ॥
व्यूहभेदास्तु चत्वारो दण्डो
भोगोऽस्त्रमण्डलम् ।
असंहतश्च निर्णीता नीतिसारादिसम्मताः
॥
अन्येऽपि प्रकृतिव्यूहाः क्रौञ्चचक्रादयः
क्वचित् ।
तिर्य्यग्वृत्तिस्तु दण्डः
स्याद्भोगोऽन्वावृत्तिरेव च ॥
मण्डलं सर्व्वतो वृत्तिः पृथग्वृत्तिरसंहतः ।
सैन्यानां नीतिसारादौ व्यूहभेदाः
समीरिताः ।
क्रौञ्चचक्रादिभेदानां लक्षणं भारतादिषु ॥”
इति शब्दरत्नावली ॥
(यथा च कामन्दकीयनीतौ । १९ । २९ --
५७ ।
“सर्व्वव्यूहविधानज्ञा युद्धकर्म्मसु कर्म्मणः
॥
उरः कक्षे च पक्षौ च मध्यं पृष्ठं प्रतिग्रहः ।

शक्तिज्ञानम् । यथा । व्यवहारादिवाधकं विना विवरणादपि व्युत्पत्तेः । वाधकं विना स्वसाध्यस्य वाधकं यद्विशेषणं तदभाववत्त्वविशेषणसहकारेण व्युत्पत्तेः व्युत्पत्तिसम्भवात् शक्तिग्रहसम्भवादिति यावत् । इति आख्यातवादस्य माथुरी टीका ॥

**व्युत्पन्नः**, त्रि, (वि + उत् + पद + क्तः ।) संस्कृतः । इति हेमचन्द्रशब्दरत्नावल्यौ ॥ व्युत्पत्तियुक्तः । यथा । व्याकरणव्युत्पन्नशब्दज्ञानाधीनं शास्त्रान्तरज्ञानं तदधीना च वैदिकक्रिया तत्फलं स्वर्गादि । इति मुग्धबोधटीकायां दुर्गादासः ॥

**व्युत्पादकः**, त्रि, (विशेषेणोत्पादयति ज्ञानम् । वि + उत् + पद + णिच् + ण्वुल् ।) व्युत्पत्तिजनकः । यथा । शब्दव्युत्पादकशास्त्रारम्भे शब्दैरेव मङ्गलं कर्त्तव्यम् । इति मुग्धबोधटीकायां दुर्गादासः ॥

**व्युदासः**, पुं, (वि + उत् + अस + घञ् ।) निरासः । परित्यागः । यथा । तदैवेत्येवकारश्रवणात्तिथिद्वैधे खण्डविशेषो नियम्यते कर्म्मणि खण्डान्तरव्युदासाय । इत्यमावास्याश्राद्धकालनिरूपणे पृथुलः । इति मेदिनी ॥ (यथा, रघुः । १ । १३ ।
"व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महाभुजः ।
आत्मकर्म्मक्षमं देहं क्षात्त्रो धर्म्म इवाश्रितः ॥")

**व्यूढकङ्कटः**, त्रि, (व्यूढः कङ्कटः सन्नाहो येन ।) सन्नद्धः । इत्यमरः ॥

**व्यूढिः**, स्त्री, (वि + वह + क्तिन् ।) विन्यासः । संहतिः । पृथुलता । इति व्यूढशब्दार्थदर्शनात् ॥

**व्यूतं**, त्रि, ऊतम् । तन्तुसन्ततम् । विपूर्व्ववेञ्धातोः क्तप्रत्ययेन निष्पन्नमेतत् ॥

**व्यूतिः**, स्त्री, (वि + वे अव वा + क्तिन् । "ऊतियूतिजूतीति ।" ३ । ३ । ९७ । इति निपातितः ।) वस्त्रादिवपनक्रिया । तत्पर्य्यायः । वाणिः २ । इत्यमरः ॥ व्युतिः ३ । इति तट्टीका ॥ वाणी ४ । इति शब्दरत्नावली ॥

**व्यूहः**, पुं, (वि + ऊह + घञ् ।) समूहः । निर्म्माणम् । तर्कः । इति मेदिनी ॥ देहः । (यथा, भागवते । ११ । ६ । १० ।
"यः सात्वतैः समविभूतय आत्मवद्भिर्व्यूहेऽर्च्चितः सवनशः स्वरतिक्रमाय ॥")
सैन्यः । इति त्रिकाण्डशेषः ॥ (परिणामः । लिङ्गम् । यथा, भागवते । ४ । २९ । ७० ।
"यावद्बुद्धिमनोऽक्षार्थगुणव्यूहो ह्यनादिमान् ॥")
कोटी च व्यूहशास्त्रज्ञैः सप्ताङ्गो व्यूह इष्यते ॥
उरश्च कक्षपक्षौ च व्यूहोऽयं सप्रतिग्रहः ।
गुरोरेष च शुक्रस्य कक्षाभ्यां परिवर्ज्जितः ॥
अभेद्याः कुलजा मेध्या लब्धलक्ष्याः प्रहारिणः ।
सेनाङ्गपतयः कार्य्या दृष्टयुद्धप्रतिक्रियाः ॥
प्रवीरपुरुषैरेतैस्तिष्ठेयुः परिवारिताः ।
अभेदेन च युद्ध्येरन् रक्षेयुश्च परस्परम् ॥
फल्गु सैन्यस्य यत्किञ्चिन्मध्ये व्यूहस्य तद्भवेत् ।
युद्धवस्तु च यत्किञ्चित्प्रायस्तज्जघने भवेत् ॥
युद्धार्थं युद्धकुशलं चण्डानीकं प्रयोजयेत् ।
युद्धं हि नायकप्राणं हन्यते तदनायकम् ॥
व्यूहोऽनुपृष्ठमचलः पत्त्यश्वरथदन्तिभिः ।
तथाप्रतिहतो ज्ञेयो हस्त्यश्वरथपत्तिभिः ॥
मध्ये देशे हयानीकं रथानीकं तु कक्षयोः ।
पक्षयोश्च गजानीकं व्यूहोऽन्तभिदयं स्मृतः ॥
रथस्थाने हयान्दद्यात्पदातींश्च हयाश्रये ।
रथाभावे तु मतिमान्नागानेव प्रकल्पयेत् ॥
विभज्य प्रक्षिपेन्मध्ये पत्त्यश्वरथकुञ्जरान् ।
मध्ये कुर्व्वीत नागेन्द्रान् पत्त्यश्वरथवारितान् ॥
धनुः सूची च दण्डश्च शकटो मकरध्वजः ॥
इत्यादयो महाव्यूहास्तदाकारान् प्रकल्पयेत् ॥
यदि स्याद्दण्डबाहुल्यं तदा चापः प्रकीर्त्तितः ।
मण्डलोऽसंहतो भोगो दण्डश्चेति मनीषिभिः ॥
कथिताः प्रकृतिव्यूहा भेदास्तेषां प्रकीर्त्तिताः ।
यः स तं व्यूह्य मतिमान् काले स्थाने प्रकल्पयेत् ॥
तिर्य्यग्वृत्तिश्च दण्डः स्याद्भोगत्वाद्वृत्तिरेव च ।
प्रदरो दृढकोऽसह्यश्चापो वै तद्विपर्य्ययः ॥
प्रतिष्ठः सुप्रतिष्ठश्च श्येनी विजयसञ्जयौ ।

सुखाख्यो वलयश्चैव दण्डभेदाः सुदुर्ज्जयः ।
अतिक्रान्तः प्रतिक्रान्तः कक्षाभ्याञ्चैकपक्षतः ॥
अतिक्रान्तश्च पक्षाभ्यां त्रयोऽन्यस्तु विपर्य्ययः ।
स्थूणापक्षो धनुःपक्षो द्विस्थूणो दण्ड ऊद्ध्वगः ॥
द्विगुणान्तस्त्वतिक्रान्तपक्षोऽन्योऽस्य विपर्य्ययः ।
द्विचतुर्द्दण्ड इत्येवं ज्ञेया लक्षणतः क्रमात् ॥
गोमूत्रिकाहिसञ्चारी शकटो मकरस्तथा ।
भोगभेदाः समाख्यातास्तथा परिपतन्तकः ॥
दण्डपक्षो युगोरस्यः शकटस्तद्विपर्य्ययः ।
मकरो व्यवकीर्णश्च शेषः कुञ्जरराजिभिः ॥
मण्डलव्यूहभेदौ च सर्व्वतोभद्रदुर्ज्जयौ ।
गजानीको द्वितीयस्तु प्रथमः सर्व्वतोमुखः ॥
अर्द्धचन्द्रक उद्धारो वज्रो भेदास्त्वसंहतेः ।
तथा कुक्कुटशृङ्गी च काकपादी च गोधिका ॥
त्रिचतुःपञ्चसैन्यानां ज्ञेया आकारभेदतः ।
इति व्यूहाः समाख्याता व्यूहभेदप्रयोक्तृभिः ॥
एते सप्तदश प्रोक्ता दण्डव्यूहाश्च पञ्चधा ।
तथा व्यूहद्वयञ्चैव मण्डलस्य प्रयोक्तृभिः ॥
असंहतास्तु षड्व्यूहा भोगव्यूहाश्च पञ्चधा ।
व्यूहज्ञैस्तु प्रयोज्याः स्युर्युद्धकाल उपस्थिते ॥
पक्षादीनामनीकेन हत्वा शेषं परिक्षिपेत् ।
तरसा च समाहत्य कोटिभ्यां परिवेष्टयन् ॥
परकोटिमुपक्रम्य पक्षाभ्यामप्रतिग्रहः ।
कोटिभ्यां जघने हन्यादुरसा च प्रपीडयेत् ॥
एवं व्यूहप्रयत्नेन यत्नवानवनीपतिः ।
विदारयेद्व्यूहजातं बलैश्च द्विषताम्बलम् ॥”)

**व्यूहनं**, क्ली, (वि + ऊह + ल्युट् ।) सैन्यसंस्थानम् । विपूर्व्वोहधातोरनट्प्रत्ययेन निष्पन्नमिदम् ॥ (मेलनम् । यथा, भागवते । ३ । २६ । ३६ ।
“चालनं व्यूहनं प्राप्तिर्नेतृत्वं द्रव्यशब्दयोः ॥”
“व्यूहनं मेलनं तृणादेः ।” इति तट्टीकायां स्वामी ॥ क्षोभके, त्रि । यथा, हरिवंशे । १२९ । ३९ ।
“परं गुणेभ्यः पृश्निगर्भस्वरूपं
यशः शृङ्गं व्यूहनं कान्तरूपम् ॥”

यद्वा अवतिर्गत्यर्थः भावे मन् ओम् । अवनं
गमनं विविधमस्मिन् विद्यते । यद्वा रक्ष-
णार्थः विशेषेणावति
प्राणिनोऽवकाशप्रदानेन ।
उणादौ तु नामन् सीमन् व्योमन्
इत्यादिना
व्येञ् संवरणे इत्यस्मान्मनिनि उत्वं
निपात्यते ।
दीयते तद्वायुना व्योम । तथाच
निरुक्तम्
योनिरन्तरिक्षं महानवयवः परिवीतो
वायुना
इति ।” इति निघण्टुटीका । १ । ३ । ३ ।)
आकाशः । इत्यमरः ॥ (यथा, रघुः । ४ । २९ ।
“रजोभिः स्यन्दनोद्धूतैर्गजैश्च
घनसन्निभैः ।
भुवस्तलमिव व्योम कुर्व्वन् व्योमेव
भूतलम् ॥”)
जलम् । भास्करस्यार्च्चनाश्रयः ।
इति मेदिनी ॥
अभ्रकम् । इति राजनिर्घण्टः ॥

**व्योमकेशः**, पुं, (व्योम एव केशा यस्य । विराट्मूर्त्तित्वादस्य तथात्वम् ।) शिवः । इत्यमरः ॥
(यथा, महाभारते । ७ । २०० । १२९ ।
“सूर्य्याचन्द्रमसौ लोके प्रकाशन्ते
रुचश्च याः ।
ते केशसंज्ञितास्त्र्यक्षे व्योमकेश इति
स्मृतः ॥”)

**व्योमकेशी**, [न्] पुं, महादेवः । गङ्गाधारणकाले व्योमव्यापिनः केशा अस्य सन्तीति व्योम-
केशशब्दात् इन्प्रत्ययेन निष्पन्नमेतत् ॥

**व्रज**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर० सक०-सेट् ।) व्रजति । इति दुर्गादासः ॥

**व्रज**, क संस्कृतौ । गतौ । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-सक०-सेट् ।) क, व्राजयति । विरेफौ तौ । तौ एतौ विरेफौ रेफरहितौ च स्याताम् । इति दुर्गादासः ॥

**व्रजं**, क्ली, व्रजनम् । गमनम् । व्रज गतौ इत्यस्मात् घप्रत्ययेन निष्पन्नमिदम् । इति सिद्धान्तकौमुदी ॥

**व्रजः**, पुं, (व्रज गतौ + “गोचरसंचरेति ।” ३ । ३ । ११९ । इति घप्रत्ययेन निपातनात् साधुः ।) समूहः । इत्यमरः ॥ (यथा, महाभारते । १ । १८९ । १२ ।
“ततः प्रतापः सुमहान् शब्दश्चैव विभावसोः ।
प्रादुरासीत् तदा तेन बुबुधे स जनव्रजः ॥”)
गोष्ठम् । (यथा, माघे । २ । ६४ ।
“निरुद्धवीवधासारप्रसारागा इव व्रजम् ।
उपरुन्धन्तु दशार्हाः पुरीं माहिष्मतीं द्विषः ॥
पन्थाः । इति मेदिनी ॥ अग्रवणमथुरयोश्चतु
ष्पार्श्ववर्त्तिदेशः । अस्य विवरणं यथा, मात्स्ये ।
“व्रजमण्डलभूगोलं शेषनागफणं वरम् ।
कुमुदाख्यं महाश्रेष्ठं सर्व्वेषां मध्यसंस्थितम् ॥
तस्योपरिस्थितं लोकं सर्व्वस्थानं महाफलम् ।
कृष्णलीलाविहारार्थमुच्चस्थानविराजितम् ॥
चतुरष्टकक्रोशेन परिपूर्णविराजितम् ।
अस्य प्रदक्षिणीकुर्व्वन् धनधान्यसुखं लभेत् ॥
दानार्च्चावासतो लोको विष्णुलोकमवाप्नुयात् ।
आवासान्म्रियते चेह पुनर्जन्म न विद्यते ॥
पुण्यं लक्षगुणं लब्ध्वा कृतेऽस्मिन् व्रजमण्डले ।
कृष्णेन निर्म्मितास्तीर्थाः सार्द्धद्वयसहस्रकाः ॥” *
तत्रादौ वनोपवनप्रतिवनाधिवनान्यष्टचत्वा-
रिंशत् तानि चतुरष्टक्रोशपरिमाणस्थितानि
चतुर्भागशोऽभ्यन्तरस्थितानिक्रमश आह ।
पाद्मे ।
“वनानि द्वादशान्याहुर्यमुनोत्तरदक्षिणे ।
महावनं महाश्रेष्ठं १ द्वयं काम्यवनं शुभम् २ ॥
कोकिलाख्यं तृतीयञ्च ३ तूर्य्यं तालवनं तथा ४ ।
पञ्चमं कुमुदाख्यञ्च ५ षष्ठं भाण्डीरसंज्ञकम् ६ ॥
नाम्ना छत्रवनं श्रेष्ठं सप्तमं परिकीर्त्तितम् ७ ।

"व्यूहनं जगत्क्षोभकम् ।" इति तट्टीकायां नीलकण्ठः ॥)

**व्यूहपार्ष्णिः**, पुं, (व्यूहस्य पार्ष्णिः ।) व्यूहपश्चाद्भागः । तत्पर्य्यायः । प्रत्यासारः २ । इत्यमरः ॥
प्रत्यासरः ३ । इति तट्टीका ॥ व्यूहस्य पश्चाद्-
व्यूहान्तरम् । इति केचित् । इति भरतः ॥
व्यूहमध्यम् । इति शब्दरत्नावली ॥

**व्ये**, ञ ऐ वृतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-उभ०-सक०-अनिट् ।) ञ, व्ययति व्ययते । ऐ,
वीयात् । इति दुर्गादासः ॥

**व्योकारः** पुं, लौहकारः । इत्यमरः ॥

**व्योम**, [न्] क्ली, (व्ये ञै वृतौ + "नामन् सीमन्निति ।" उणा० ४ । १४६ । इति निपातनात् साधुः । यद्वा, "विपूर्ब्बादवतेर्व्याप्त्यर्थत्वात् औणादिके 'सर्व्वधातुभ्यो मनिन् ।' इति सूत्रेण
मनिन्प्रत्यये
'ज्वरत्वरस्रिव्यविमवामुपधायाश्च।'
इत्युटि गुणः । व्यवति व्याप्नोति सर्वं जगत् ।

**व्योमचारिपुरं**, क्ली, (व्योमचारि आकाशगामि पुरम् ।) शौभपुरम् । इति भूरिप्रयागः ॥

**व्योमचारी**, [न्] पुं, (व्योम्नि चरतीति । चर + णिनिः ।) देवता । पक्षी । इति मेदिनी ॥
चिरजीवी । द्विजातः । इति विश्वः ॥ (आकाश-
चारिणि, त्रि । यथा, कथासरित्सागरे । २२ ।
५६ ।
"अस्ति पूर्व्वमहं व्योमचारी विद्याधरोऽभ-
वम् ॥")

**व्योमधूमः**, पुं, (व्योम्नः घूमः ।) मेघः । इति त्रिकाण्डशेषः ॥

**व्योमनासिका**, स्त्री, भारतीपक्षी । इति त्रिकाण्ड-शेषः ॥

**व्योममञ्जरं**, क्ली, (व्योम्नः मञ्जरमिव ।) पताका । इति त्रिकाण्डशेषः ॥

**व्योममण्डलं**, क्ली, (व्योम्नः मण्डलम् ।) पताका । इति शब्दरत्नावली ॥ आकाशञ्च ॥

**व्योममुद्गरः**, पुं, (व्योम्नः मुद्गर इव ।) निर्घातः । इति हारावली ॥

**व्योमयानं**, क्ली, (व्योमगामि यानम् ।) विमानम् । इत्यमरः ॥

**व्योमस्थली**, स्त्री, भूमिः । इति भूरिप्रयोगः ॥ (व्योम्नः स्थली ।) नभःस्थलञ्च ॥

**व्योमाभः**, पुं, (व्योम्ना शून्येन आभातीति । आ + भा + कः ।) बुद्धः । इति त्रिकाण्डशेषः ॥

**व्योमोदकं**, क्ली, (व्योम्नः उदकम् ।) दिव्योदकम् ।

अष्टमं खदिरं प्रोक्तं ८ नवमं लोहजं वनम् ९ ॥
नाम्ना भद्रवनं श्रेष्ठं दशमं बहुपुण्यदम् १० ।
एकादशं समाख्यातं वहुलावनसंज्ञकम् ११ ॥
नाम्ना विल्ववनं श्रेष्ठं द्वादशं कामनाप्रदम् १२ ।
इति द्वादशसं ज्ञानि वनानि शुभदानि च ॥"
इति द्वादशवनानि ॥
अथ द्वादशोपवनान्याह वाराहे ।
"आदौ ब्रह्मवनं नाम १ द्वितीयं त्यप्सरा-
वनम् २ ।
तृतीयं विह्वलं नाम ३ कदम्बाख्यं चतुर्थकम् ४ ॥
नाम्ना स्वर्णवनं श्रेष्ठं पञ्चमं परिकीर्त्तितम् ५ ।
सुरभीवननामानं षष्ठमाह्लादवर्द्धनम् ६ ॥
श्रेष्ठं प्रेमवनं नाम सप्तमं शुभदं नृणाम् ७ ।

|  | इति राजनिर्घण्टः ॥<br>**व्योषं**, क्ली, (विशेषेण ओषतीति । उष दाहे + पचाद्यच् ।) त्रिकटु । इत्यमरः ॥<br>(यथा, सुश्रुते ।<br>१ । ४४ ।<br>“व्योषं त्रिजातकं मुस्ता विडङ्गामलके तथा ॥”) |  |
| --- | --- | --- |

मयूरवननामानमष्टमं परिकीर्त्तितम् ८ ॥
मालेङ्गितवनं श्रेष्ठं नवमं मानवर्द्धनम् ९ ।
शेषशायिवनं श्रेष्ठं दशमं पापनाशनम् १० ॥
एकादशं समाख्यातं नारदाख्यं शुभोदितम्
११ ।
द्वादशं परमानन्दवनं सर्व्वार्थदायकम् १२ ॥
इति द्वादशसंज्ञानि वनान्युपवनानि च ॥”
इति द्वादशोपवनानि ॥ * ॥
अथ द्वादशप्रतिवनानि । भविष्ये ।
“आदौ रङ्कवनं श्रेष्ठं पुरसंज्ञाविराजितम् १ ।
वार्त्तावनं द्वितीयञ्च २ करहाख्यं तृतीयकम्
३ ॥
चतुर्थं काम्यनामानं वनं कामप्रदं नृणाम् ४ ।
वनमञ्जननामानं पञ्चमं स्त्रीशुभप्रदम् ५ ॥
नाम्ना कर्णवनं श्रेष्ठं षष्ठं स्वप्नवरप्रदम् ६ ।
कृष्णाक्षिपलकं नाम वनं सप्तममीरितम् ७ ॥
बन्दप्रेक्षणकृष्णाख्यं वनं नन्दनमष्टमम् ८ ।
वनमिन्द्रवनं नाम नवमं कृष्णपूजितम् ९ ॥
शिक्षावनं शुभं प्रोक्तं दशमं नन्दभाषितम् १०
।
चन्द्रावलीवनं श्रेष्ठमेकादशमुदाहृतम् ११ ॥
नाम्ना लोहवनं श्रेष्ठं द्वादशं शुभदं नृणाम् १२
।
इति प्रतिवनान्याहुर्म्मर्गे वामे च दक्षिणे ।
इति द्वादशसंज्ञास्ते देवावासफलप्रदाः ॥”
इति द्वादश प्रतिवनानि ॥ * ॥
अथ द्वादशाधिवनानि । विष्णुपुराणे ।
“मथुरा प्रथमं नाम १ राधाकुण्डं द्वितीयकम्
२ ।
नन्दग्रामं तृतीयञ्च ३ गूढस्थानं चतुर्थकम् ४
॥
पञ्चमं ललिताग्रामं ५ वृषभानुपुरञ्च षट् ६ ।
सप्तमं गोकुलं स्थान-७ मष्टमं बलदेवकम् ८
॥
गोवर्द्धनवनं श्रेष्ठं नवमं कामनाप्रदम् ९ ।
वनं जाववटं नाम दशमं परिकीर्त्तितम् १० ॥
मुख्यवृन्दावनं श्रेष्ठमेकादशं प्रकीर्त्तितम् ११
।
सङ्केतवटकं स्थानं वनं द्वादशं कीर्त्तितम् १२
॥
इति द्वादशसंज्ञानि वनान्यधिवनानि च ।

नमः मुखे व्रजकिशोराय नमः हृदि गायत्री-
च्छन्दसे नमः । अथ ध्यानम् ।
‘ललितासंयुतं कृष्णं सर्व्वैस्तु सखिभिर्युतम्
।
ध्यायेत्त्रिवेणिकूपस्थं महारासकृतोत्सवम् ॥’
इति ध्यात्वा यथाशक्ति जपं कृत्वा
गुह्यातीत्या-
दिना जपं समर्पयेत् । इति ललिताग्रामाधिप-
व्रजकिशोरमन्त्रः ।” इति व्रजभक्तिविलासे १
अध्यायः ॥

**व्रजनाथः**, पुं, (व्रजस्य नाथः ।) श्रीकृष्णः । इति
पुराणम् ॥

**व्रजभूः**, पुं, (व्रजे भूरुत्पत्तिर्यस्य ।) केलिकदम्बः ।
इति शब्दचन्द्रिका ॥ (व्रजस्य भूर्भूमिः ।)
व्रजभूमौ, स्त्री । व्रजजाते, त्रि ॥

**व्रजमण्डलं**, क्ली, (व्रजस्य मण्डलम् ।) व्रजभूमिः ।
यथा, मात्स्ये ।
“व्रजमण्डलभूगोलं शेषनागफणं वरम् ।
कुमुदाख्यं महाश्रेष्ठं सर्व्वेषां मध्यसंस्थितम्
॥”
इति व्रजविलासे १ अध्यायः ॥

**व्रजमोहनः**, पुं, (व्रजान् व्रजवासिनो मोहय-
तीति । मुह + णिच् + ण्वुल् ।) श्रीकृष्णः ।
इति
पुराणम् ॥

**व्रजवरः**, पुं, (व्रजे वरः श्रेष्ठः ।) श्रीकृष्णः । स तु
द्वादशाधिवनान्तर्गततजाववटाधिवनाधिपो
देवः ।
“अथ जाववटाधिवनाधिपव्रजवरमन्त्रः ।
शौन-
कीये ।
‘वटाद्बहिः समन्तात्तु सघनं वनमास्थितम् ।
तमेवाधिवनं ख्यातं वटसेवापरायणम् ॥
तस्मिन्मध्ये वटं श्रेष्ठं कृष्णक्रीडावरप्रदम् ।
वटाद्बहिर्वनं ज्ञातं मध्ये चैव वटं स्मृतम् ॥
वटं वृक्षं स्थितं तत्र वटसंज्ञं विधीयते ।
वटजावानुसारेण वटलिङ्गानि दर्शयेत् ॥’

**व्रज्या**, स्त्री, (व्रजनमिति । व्रज गतौ + “व्रजयजो-
भवि क्यप् ।” ३ । ३ । ९८ । इति क्यप् ।)
पर्य्यटनम् । जिगीषोः प्रयाणम् । गमनम् ।
इत्यमरः ॥ वर्गः । इति मेदिनी ॥ (सजाती-
यानामेकत्र सन्निवेशः । यथा, साहित्यदर्पणे
।
६ । ५६५ ।
“कोषः शोकसमूहस्तु स्यादन्योन्यानपेक्षकः
।
व्रज्याक्रमेण रचितः स एवातिमनोहरः ॥”)
रङ्गः । इति धरणिः ॥

**व्रण**, शब्दे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
अक०-सेट् ।) व्रणति । इति दुर्गादासः ॥

**व्रण**, त् क अङ्गचूर्णे । इति कविकल्पद्रुमः ॥
(अदन्त चुरा०-पर०-सक०-सेट् ।)
अङ्गचूर्णः
अङ्गभेदः । व्रणयति गात्रं बाणेन भटः । इति
दुर्गादासः ॥

**व्रणः**, पुं, क्ली, (व्रणयति गात्रमिति । व्रण अङ्ग-
चूर्णे + पचादित्वात् अच् ।) क्षतम् ।
तत्पर्य्यायः ।
ईर्म्मम् २ अरुः ३ । इत्यमरः ॥ ईर्म्मः ४ ।
इति
तट्टीका ॥ (यथा, रघुः । १२ । ५५ ।
“स रावणहृतां ताभ्यां वचसाचष्ट मैथिलीम् ।
आत्मनः सुमहत् कर्म्म व्रणैरावेद्य संस्थितः
॥”)
अथ व्रणाधिकारः ।
“व्रणो द्विधा परिज्ञेयो दोषजागन्तुभेदतः ।
दोषजो दुष्टदोषैः स्यादन्यः शस्त्रादिसम्भवः
॥”
तत्र वातिकस्य लक्षणमाह ।
“स्तब्धः कठिनसंस्पर्शो मन्दस्रावो
महारुजः ।
तुद्यते स्फुटितश्यावो व्रणो मारुतसम्भवः
॥”
स्तब्धः अचलः ॥ * ॥ पैत्तिकमाह ।
“तृष्णामोहज्वरक्लेददाहदुःखावदारणैः ।

वनानामधिपाः प्रोक्ता व्रजमण्डलमध्यगाः ॥
एषां नैव विलोकेन वनयात्रा च निष्फला ।
एषाञ्च दर्शनेनैव वनयात्रा शुभप्रदा ॥
आदौ लीलां यदा पश्येद्वनयात्रां ततश्चरेत् ।
सर्व्वान् कामानवाप्नोति
विष्णुलोकमवाप्नुयात् ।
सर्व्वत्र विजयी भूयाद्वनयात्राप्रभावतः ॥”
इति व्रजभक्तिविलासे १ अध्यायः ॥

**व्रजकः**, पुं, तपस्वी । इति शब्दरत्नावली ॥

**व्रजकिशोरः**, पुं, (व्रजस्य किशोरः ।) श्रीकृष्णः ।

स तु
द्वादशाधिवनान्तर्गतललिताग्रामाधिवना-
धिपो देवः । “अथ ललिताग्रामाधिपव्रज-
किशोरमन्त्रः । यथा श्रीधरोपनिषदि । ॐ श्रीँ
ललिताग्रामाधिवनाधिपतयेव्रजकिशोराय
नमः । इत्येकविंशाक्षरो व्रजकिशोरमन्त्रः ।
अनेन मन्त्रेण प्राणायामः । अस्य मन्त्रस्य
विभाण्डक ऋषिर्व्रजकिशोरो देवता गायत्री
च्छन्दः मम सकलपापक्षयद्वारा
युगलकृष्णदर्श-
नार्थे विनियोगः । शिरसि विभाण्डकऋषये
वटस्थानलिङ्गम् । ॐ ठः जाँ वटाधिवनाधि-
पतये व्रजवराय नमः । इत्येकोनविंशाक्षरो
जाववटाधिवनाधिपव्रजवरमन्त्रः। अनेन
मन्त्रेण
प्राणायामः । अस्य मन्त्रस्य व्यलीक ऋषि-
र्जाववटाधिपो व्रजवरो देवता पङ्क्तिच्छन्दः
मम सकलसौभाग्यसम्पत्फलप्राप्त्यर्थेजपे
विनि-
योगः । न्यासं पूर्व्ववत् । अथ ध्यानम् ।
‘नानाशृङ्गारभूषाढ्यं राधाकृष्णं मनोहरम् ।
ध्यायेद्युगलमूर्त्तिञ्च वनयात्रावरप्रदम् ॥’
इति ध्यात्वा यथाशक्ति जपं कृत्वा
गुह्यातीत्या-
दिना जपं समर्पयेत् । इति जाववटाधिवना-
धिपव्रजवरमन्त्रः ।” इति व्रजभक्तिविलासे १
अध्यायः ॥

**व्रजवल्लभः**, पुं, (व्रजानां व्रजवासिनां वल्लभः

प्रियः ।) श्रीकृष्णः । इति पुराणम् ॥

**व्रजाङ्गना**, स्त्री, (व्रजस्य अङ्गना ।) गोपी ।

यथा, छन्दोमञ्जर्य्याम् ।
“विलासवंशस्थविलं मुखानिलैः
प्रपूर्य्य यः पञ्चमरागमुद्गिरन् ।
व्रजाङ्गनानामपि गानशालिनां
जहार मानं स हरिः पुनातु वः ॥”

व्रणं पित्तकृतं विद्यात् सावैर्गन्धैश्च पूतिकैः
॥”
क्लेद आर्द्रता । दुःखं व्यथारूपम् ।
अवदारणं
व्रणे विदारणवत् पीडा ॥ * ॥ श्लैष्मिकमाह
।
“बहुपिच्छो गुरुः स्निग्धस्तिमितो
मन्दवेदनः ।
पाण्डुवर्णोऽल्पसंक्लेदश्चिरपाकी कफव्रणः
॥”
बहुपिच्छः बहुपिच्छिलः । अल्पसंक्लेद
ईष-
दार्द्रः ॥ * ॥ रौधिरं द्वन्द्वजं
सान्निपातिकमाह ।
“रक्तो रक्तस्रुती रक्ताद्द्वित्रिजः
स्यात्तदन्वयः ।”
तदन्वयः द्वित्रिदोषलिङ्गसम्बन्धः ॥ * ॥
शुद्ध-
व्रणलिङ्गमाह ।
“जिह्वातलाभोऽतिमृदुः स्वस्थः
स्निग्धोऽल्प-
वेदनः ।
सुव्यवस्थो निरस्रावः शुद्धव्रण इति स्मृतः
॥”
जिह्वातलाभः तलशब्दोऽत्र स्वरूपार्थः । तेन
जिह्वावद्रक्तः । सुव्यवस्थः उच्छनतारहितः
॥
दुष्टव्रणलिङ्गमाह ।
“पूतिपूयादिदुष्टासृक्स्राव्युत्सङ्गी
चिरस्थितिः ।
दुष्टव्रणोऽतिगन्धादिः शुद्धलिङ्गविपर्य्ययः ॥”
उत्सङ्गी कोटरवान् । अतिगन्धादिः आदि-
शब्देन स्राववेदनाविवर्णतादयः संगृह्यन्ते ॥
* ॥
संरोहव्रणस्य लिङ्गमाह ।
“कपोतवर्णप्रतिमा यस्यां तालोदवर्जिताः ।
स्थिराश्च पिडकावन्तो रोहन्तीति
तमादिशेत् ॥”

कपोतवर्णप्रतिमाः पाण्डुधूसराः । स्थिराः विदीर्णतारहिताः । पिडकावन्तः संरोहणार्था ये मांसाङ्कुरास्तद्युक्ताः ॥ * ॥ सरूढलिङ्ग-माह ।
"रूढवर्त्मानमग्रन्थिमशूलमरुजंव्रणम् ।
त्वक्सवर्णं समतलं सम्यग्रूढं विनिर्दिशेत् ॥"
रूढवर्त्मानं संरूढस्रावमार्गम् । समतलं अनि-म्नम् ॥ * ॥ सुखसाध्यत्वादिकमाह।
"त्वङ्मांसजः सुखे देशे तरुणस्यानुपद्रवः ।
धीमतोऽभिनवः काले सुखे साध्यः सुखव्रणः ॥"
सुखे देशे मर्मरहिते । अनुपद्रवः ज्वरतृष्णा-श्वासकासारोचकादिरहितः। धीमतः पथ्य-सेविनः । सुखे काले हेमन्ते शिशिरे च ।
"गुणैरन्यतरैरेभिर्हीनः कृच्छ्रो व्रणः स्मृतः ।
सर्व्वैर्विहीनो विज्ञेयस्त्वसाध्यो निरुपक्रमः ॥"
एभिस्त्वङ्मांसजत्वादिभिः। निरुपमक्रमः अनु-पक्रीतः चिरमुपेक्षित इति यावत् ।
"वसामेदोऽथ मज्जानं मस्तुलुङ्गञ्च यः स्रवेत् ।
आगन्तुजो व्रणः सिद्ध्येन्न सिद्ध्येद्दोषसम्भवः ॥"
मस्तुलुङ्गं मस्तुकाभ्यन्तरस्नेहः ।
"कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम् ।
व्रणाः कृच्छ्रेण सिध्यन्ति येषां चापि व्रणे ब्रणः ॥"
अरिष्टमाह ।
"दह्यन्ते चान्तरत्यर्थं बहिःशीताश्च ये व्रणाः ।
दह्यन्ते बहिरत्यर्थं भवन्त्यतश्च शीतलाः ॥
प्राणमांसक्षयश्वासकासारोचकपीडिताः।
प्रवृद्धपूयरुधिरं व्रणा ये चापि मर्मसु ॥
क्रियाभिः सम्यगारब्धा न सिध्यन्ति च ये व्रणाः ।
चिकित्सेन्नैव तान् वैद्यः संरक्षन्नात्मनो यशः ॥
मद्यागुर्व्वाज्यसुमनाःपद्मचन्दनचम्पकम्।
सगन्धा दिव्यगन्धाश्च मुमूर्षूणां व्रणाः स्मृताः ॥"
मर्मसु पायुनाभिहृदयादिषु । सुमनाः जातिः ।
दिव्यगन्धाः पारिजातादिगन्धाः ॥ * ॥ अथाङ्ग-व्रणस्य निदानमाह ।
"नानाधारामुखैः शस्त्रैर्नानास्थाननिपातितैः ।
भवन्ति नानाकृतयो व्रणांस्तांस्तान्निबोध मे ॥"

आशयः कोष्ठः ॥ * ॥ कोष्ठभेदस्य लक्षणमाह ।
"स्थानान्यामाग्निपक्वानांमूत्रस्य रुधिरस्य च ।
हृदुण्डुकः फुःफुसश्च कोष्ठ इत्यभिधीयते ॥
तस्मिन् भिन्ने रक्तपूर्णे ज्वरो दाहश्च जायते ।
मूत्रमार्गगुदास्येभ्यो रक्तं घ्राणाच्च गच्छति ॥
मूर्च्छाश्वासस्तृषाध्मानमभक्तच्छन्दएव च ।
विण्मूत्रवातसङ्गश्च स्वेदश्यावोऽक्षिरक्तता ॥
लोहगन्धित्वमास्यस्य गात्रदौर्गन्ध्यमेव च ।
हृदि शूलं पार्श्वयोश्च विशेषश्चाभिधीयते ॥"
तस्मिन् कोष्ठे । भिन्ने शक्त्यादिभिः । रक्तपूर्णे
कोष्ठे तस्मादङ्गाद्भिन्नात् स्रुतेन रक्तेन पूर्णे वा ज्वरादयो जायन्ते ॥ * ॥ आमाशये पक्वाशये
च रक्तपूर्णे लक्षणभेदमाह ।
"आमाशयस्थे रुधिरे रुधिरं छर्द्दयत्यपि ।
अध्मानमतिमात्रञ्च शूलञ्च भृशदारुणम् ॥
पक्वाशयगते रक्ते रुजा गौरवमेव च ।
अधःकाये विशेषेण शीतता च भवेदिह ॥"
रुजा शूलम् । गौरवं पक्वाशये । अधःकाये नाभेरधोदेशे विशेषेण गौरवमित्यन्वयः ।
शीतता च भवेदिह । इह नाभेरधोदेशे शीतता च स्यात् । सा च व्याधिस्वभावात् ॥ * ॥ विद्ध-माह ।
"सूक्ष्मास्यशल्याभिहतंपदं गत्वाशयं विना ।"
उत्तुण्डितं निर्गतं वा तद्विद्धमिति निर्द्दिशेत् ॥"
आशयं विना कोष्ठं विना । उत्तुण्डितं अनि-र्गतशल्यम् । निर्गतं वा निर्गतशल्यं वा ॥ * ॥
सशल्यस्य व्रणस्य लक्षणमाह ।
"श्यावं सशोथं पिडकायुतञ्च
मुहुर्मुहुः शोणितवाहनञ्च ।
मृदूद्गतं वुद्बुदतुल्यमांसं
व्रणं सशल्यं सरुजं वदन्ति ॥"
मुहुर्मुहुः शोणितवाहनं यदा यदा शल्यं चलति तदा तदा रुधिरं वहति । उद्गतं

"प्रहारपीडनाभ्यान्तु यदङ्गं पृथुतां गतम् ।
सास्थि तत् पिच्चितं
विद्याद्रक्तमज्जपरिप्लुतम् ॥"
प्रहारो मुद्गरादिना । पीडनं कपाटादिना ।
पृथुतां चिपिटताम् ॥ * ॥ घृष्टमाह ।
"घर्षणादपि घाताद्वा यदङ्गं विगतत्वचम् ।
उष्मस्रावान्वितं तत्तु घृष्टमित्यभिधीयते ॥
घर्षणात् कर्कशेष्टिकापाषाणभिन्नादिभिः ॥" * ॥
मांसशिरास्नायुसन्ध्यस्थिमर्म्मसु क्षतेषु सामान्य-लक्षणमाह ।
"भ्रमः प्रलापः पतनं प्रमोहो
विचेष्टनं ग्लानिरथोष्णता च ।
स्रस्ताङ्गता मूर्च्छनमूद्र्ध्ववात-
स्तीव्रा रुजो वातकृताश्च तास्ताः ॥
मांसोदकाभं रुधिरञ्च गच्छेत्
सर्व्वेन्द्रियार्थोपरमस्तथैव ।
दशार्द्धसंख्येष्वथ विक्षतेषु
सामान्यतो मर्मसु लिङ्गमुक्तम् ॥"
पतनं भूमौ । विचेष्टनं विरुद्धं चेष्टनं हस्त-पादादिप्रक्षेपणादिकम् । मूर्च्छनं इन्द्रिय-मोहः । प्रमोहो मनोमात्रमोहः । तीव्रा रुजो वातकृताश्च तास्ताः दण्डापतानकादयः । रुधि-रञ्च गच्छेत् मेहनभगगुदास्यघ्राणेभ्यः स्रवेत् ।
सर्व्वेन्द्रियार्थोपरमः इन्द्रियाणां कार्य्यनाशः ॥ * ॥
अथ मर्म्मशिरास्नायुसन्ध्यस्थ्नां विद्धानां पृथग्-लक्षणमाह ।
"सुरेन्द्रगोपप्रतिमं प्रभूतं
रक्तं स्रवेत्तत्क्षयजश्च वायुः ।
करोति रोगान् विविधान् यथोक्तान्
शिरासु विद्धास्वथवा क्षतासु ॥"
सुरेन्द्रगोपो वार्षिकोत्थितकीटविशेषः । वीर-बहुटी इति लोके सिद्धम् । प्रभूतं बहु । रोगान्

नानाधारामुखानि येषां तैः शस्त्रैः अर्द्धचन्द्र-
खड्गभल्लकुन्तशूलशरादिभिः । नानाकृतयः
षडाकृतयः । ता आकृतीराह ।
“छिन्नं भिन्नं तथा बिद्धं क्षतं पिच्चितमेव च ।
घृष्टमाहुस्तथा षष्ठं तेषां वक्ष्यामि लक्षणम् ॥”
अत्र छिन्नस्य लक्षणमाह ।
“तिर्य्यक् छिन्न ऋजुर्व्वापि यो व्रणस्त्वायतो
भवेत् ।
गात्रस्य पातनं तद्धि छिन्नमित्यभिधीयते ॥”
यो व्रणः तिर्य्यक्छिन्नः
खड्गादिकृततिर्य्यक्छेद-
कृतः । ऋजुर्व्वापि अथवा खड्गादिकृतो रक्तो
व्रणः । आयतः दीर्घः । आयत इति तिर्य्यक्-
छिन्नस्य ऋजोश्च विशेषणम् । गात्रस्य पातनं
गात्रस्यैकदेशस्य छेदेन पृथक्करणं वा च्छिन्न-
मित्यभिधीयते ॥ * ॥ भिन्नमाह ।
“शक्तिकुन्तेषुखड्गाग्रविषाणैराशयो हतः ।
यत्किञ्चित् प्रसवेत्तद्धि भिन्नमित्यभिधीयते ॥”

उत्थितमुखम् ॥ * ॥ कोष्ठस्थितस्य
शल्यस्य
लक्षणमाह ।
“त्वचोऽतीत्य शिरादीनि भित्त्वाङ्गं परिहृत्य
वा ।
कोष्ठे प्रतिष्ठितं शल्यं कुर्य्यादुक्तानुपद्रवान्
॥”
त्वचः सप्तापि अतिक्रम्य उक्तानुपद्रवान्
आटो-
पानाहौ व्रणमुखेनात्र पुरीषदर्शनञ्च ॥ * ॥
असाध्यस्य कोष्ठस्य रक्तस्य पुरीषस्य
लक्षण-
माह ।
“कोष्ठान्तर्ल्लोहितं पाण्डु शीतपादकराननम् ।
शीतोच्छ्वासं रक्तनेत्रमानद्धञ्च विवर्जयेत् ॥”
आनद्धं आनाहवन्तम् ॥ * ॥
क्षतमाह ।
“नातिच्छिन्नं नातिभिन्नमुभयोर्ल्लक्षणान्वितम्
।
विषमं व्रणमङ्गे यत्तत् क्षतं परिकीर्त्तितम् ॥”
नातिच्छिन्नं नातिदीर्घघातम् । नातिभिन्नं
नातिगम्भीरघातम् । उभयोश्छिन्नभिन्नयोः ।
विषमं व्रणमङ्गे यत् यद्व्रणमङ्गवैषम्यकरम् ॥
* ॥
पिच्चितमाह ।

शिरोऽभितापान्धताक्षयकादीन् । विद्धासु
शरा-
दिना । क्षतासु खड्गादिना ।
“कौब्ज्यं शरीरावयवावसादः
क्रियाश्च शक्तिस्तुमुला रुजाश्च ।
चिराद्व्रणो रोहति यस्य चापि
तं स्नायुविद्धं पुरुषं वदन्ति ॥”
कौब्ज्यं विद्धस्याङ्गस्य वक्रता । तुमुला
महती ।
“शोथातिवृद्धिस्तुमुला रुजश्च
बलक्षयः सर्व्वत एव शोथः ।
क्षतेषु सन्धिष्वचलाबलेषु
स्यात् सन्धिकर्म्मोपरमश्च लिङ्गम् ॥”
सर्व्वत एव शोथः सर्व्वसन्धीन् व्याप्य
शोथः ।
उपरमः नाशः ।
“घोरा रुजो यस्य निशादिनेषु
सर्व्वास्ववस्थासु न चैति शान्तिम् ।
भिषग्विपश्चिद्विदितार्थसूत्र-
स्तमस्थिविद्धं पुरुषं प्रवक्ति ॥”
सर्व्वास्वस्थासु शयनासनादिकासु ।
विदितार्थ-
सूत्रः ज्ञानशल्यतन्त्रम् ॥ * ॥ अथ
मर्म्मशिरादि-
विद्धलिङ्गानि पृथगभिधाय मर्म्मशिरादीनां
विद्धानां पृथग्लिङ्गान्यतिदेशेनाह ।

"यथास्वमेतानि विभावयेच्च
लिङ्गानि मर्म्मस्वपि ताडितेषु ।"
यथास्वं शिरादीनां विद्धानां एतानि लिङ्गानि
पृथगुक्तानि लिङ्गानि चकारात् भ्रमप्रलापा-
दीनि च मर्मस्वपि शिरादिषु ताडितेषु विद्धेषु ।
विभावयेत् जानीयात ॥ * ॥ सर्व्वव्रणानामुप-
द्रवानाह ।
"विसर्पपक्षघातश्च शिरास्तम्भोऽपतानकः ।
मोहोन्मादौ व्रणे पीडा ज्वरस्तृष्णा हनुग्रहः ॥
कासश्छर्द्दिरतीसारो हिक्का श्वासः सवेपथुः ।
षोडशोपद्रवाः प्रोक्ता व्रणानां व्रणचिन्तकैः ॥"
अथाग्निदग्धस्य निदानमाह ।
"तत्राग्निर्द्विविधो ज्ञेयः स्नेहरूक्षः समाश्रितः ।
स्नेहस्तत्र तु तैलादि रूक्षं लौहादि कथ्यते ॥"
अग्निदग्धं चतुर्व्विधमाह ।
"अग्निदग्धं चतुर्द्धा स्यात् प्लुष्टं दुर्दग्धमेव च ।
सम्यग्दग्धं तथा तीव्रदग्धञ्च परिकीर्त्तितम् ॥"
तेषां ललणमाह ।
"यद्विवर्णमतिप्लुष्टं तत् प्लुष्टमभिधीयते ।
तीव्रदाहो व्यथावन्तो यत्र स्फोटा भवन्ति हि ।
चिरेण ते प्रशाम्यन्ति तद्दुर्द्दग्धमुदाहृतम् ॥
ताम्रवर्णमगम्भीरं दाहपीडासमन्वितम् ।
सुसंस्थितञ्च कथितं सम्यग्दग्धं भिषग्वरैः ॥
त्वङ्मांसं यत्र दग्धं स्याद्विश्लेषो वपुषस्तथा ।
शिरास्नाय्वस्थिसन्धीनांतं वदन्त्यतिदग्धकम्
॥
अत्यर्थं वेदना दाहो ज्वरस्तृण्मूर्च्छ्या सह ।
स्याद्व्रणस्तु चिरादद्रोहे रूढो याति विव-
र्णताम् ॥" * ॥
अथ व्रणस्य चिकित्सा ।
"आदौ शोथहरो लेपस्ततस्तु परिषेचनम् ।
विम्लापनमसृङ्मोक्षस्ततःस्यादुपनाहनम् ॥
पाचनं भेदनं पश्चात् पीडनं शोधनं तथा ।
रोपणं वर्णकरणं व्रणस्यैते क्रमाः स्मृताः ॥"
क्रमाश्चिकित्साः । सुश्रुतेषु व्रणस्य
षष्टिरूपक्रमा
लिखिताः सन्ति । ते सर्व्वेऽत्र विस्तरभयान्न
लिखिताः ॥ * ॥ तत्रादौ शोथहरं लेपमाह ।
"यथा प्रज्वलिते वेश्मन्यम्भसा परिषेचनम् ।
क्षिप्रं प्रशमयत्यग्निमेवमालेपनं रुजम् ॥
बीजपूरजटाह्निस्रा देवदारु मलौषधम् ।
न रात्रौ लेपनं दद्याद्दत्तं च पतितं तथा ।
न च पर्य्युषितं शुष्यमाणं तत्रैव धारयेत् ॥"
दत्तं दत्तमेव पुनर्न दद्यात् । पतितं दीयमानं
यदङ्गात् पतितम् । पर्य्युषितं लेपनद्रव्यकल्की-
कृतं यत् पर्य्युषितम् ।
"तमसा पिहितो ह्युष्मा रोमकूपमुखे स्थितः ।
विना लेपेन निर्याति रात्रौ नालेपयेदतः ॥
रात्रावपि प्रलेपस्तु विधातव्यो विचक्षणैः ।
अपाकिशोथे गम्भीरे रक्तपित्तसमुद्भवे ॥" * ॥
अथ परिषेचनमाह ।
"यथाम्बुभिः सिच्यमानः शान्तिमग्निर्हि गच्छति
।
दोषाग्निरेवं सहसा परिषेकेण शाम्यति ॥"
तद्यथा, --
"वातघ्नौषधनिक्वाथैस्तैलैर्मांसरसैर्घृतैः ।
उष्णैः संसेचयेत् शोथं वातिकं काञ्जिकेन तु ॥
पित्तरक्ताभिघातोत्थं शोथं सिञ्चेत्तु शीतलैः ।
क्षीराज्यमधुखण्डेक्षुरसैः पित्तहरैः शृतैः ॥
कफघ्नौषधनिःक्वाथैरशीतैः परिषेचयेत् ।
तैलक्षाराम्बुसूत्रैश्च शोथं श्लेष्मसमुद्भवम् ॥" *
॥
अथ विम्लापनमाह ।
"रुजतः कठिनस्यास्य कार्य्यं विम्लापनं शनैः
।"
अथ शोथस्य विम्लापनस्य विधिमाह । सुश्रुतः
।
"अभ्यज्य स्वेदयित्वा तु वेणुनाड्या शनैः शनैः
।
विमर्द्दयेद्भिषङ्मन्दं तलेनाङ्गुष्ठकेन वा ॥"
वेणुनाड्या स्वेदयित्वा उष्णस्वेदं कृत्वा ॥ * ॥
रक्तमोक्षणमाह ।
"वेदनोपशमार्थाय तथा पाकसमाय च ।
अचिरोत्पतिते शोथे शोणितस्रावणञ्चरेत् ॥"
चरेत् कुर्य्यात् ।
"एकतस्तु क्रियाः सर्व्वा रक्तमोक्षणमेकतः ।
रक्तं हि वेदनामूलं तच्चेन्नास्ति न चापि रुक् ॥
विवर्णे कठिने श्यावे व्रणे चात्यन्तवेदने ।
सविशेषे विशेषेण जलौकोभिः षदैरपि ॥"
शोणितस्रावणञ्चरेदित्यनेनान्वयः ॥ * ॥
अथोपनाहस्वेदमाह । तस्य विधिर्भेषजसाधन-
प्रकरणे कथित एवास्ति ।
दशमूल्यादिरूपमाह ।
"पुनर्नवा दारु शुण्ठी शिग्रुः सिद्धार्थ एव
च ।
अम्लपिष्टः सुखोष्णोऽयं प्रलेपः
सर्व्वशोथहा ॥"
पुनर्नवादिः ॥ * ॥
अथ पाचनमाह ।
"न प्रशाम्यति यः शोथः
प्रलेपादिविधानतः ।
द्रव्याणि पाचनीयानि दद्यात्तत्रोपनाहने
॥"
पाचनद्रव्याण्याह ।
"शणकमूलशिग्रूणां फलानि
तिलसर्षपाः ।
अतसीसक्तवः किण्वमुष्णद्रव्यञ्च
पाचनम् ॥"
शणफलादीनामतस्यन्ताःसक्तवः
कर्त्तव्याः ।
किण्वं सुराबीजम् ।
यवगोधूमधान्यादिप्रकारः
अन्यच्चोष्णद्रव्यं व्रणस्य पाचनं भवति
॥ * ॥
अथ भेदनमाह ।
"अन्तःपूयेषु वक्त्रेषु
तथैवोत्सङ्गवत्स्वपि ।
गतिमत्स्वथ रोगेषु भेदनं संप्रयुज्यते
॥"
उत्सङ्गवत्सु कोटरवत्सु । गतिमत्सु
नाडी-
व्रणेषु । भेदनं शस्त्रमौषधकर्म्म च ॥ *
॥ तत्र
शस्त्रेण भेदनमाह ।
"रोगे व्यधनसाध्ये तु यथादेशं
प्रमाणतः ।
शस्त्रं विधाय दोषस्तु स्रावयेत् कथितं
यथा ॥"
क्वचिच्छस्त्रनिक्षेपापवादमाह ।
"बालवृद्धासहक्षीणाभीरूणां
योषितामपि ।
व्रणेषु मर्म्मजातेषु भेदनं द्रव्यलेपनम् ॥"
तत्र भेदमाह ।

रास्नाग्निमन्थो लेपोऽयं वातशोथविनाशनः ॥ * मधुकं चन्दनं दूर्व्वा नलमूलन्तु पद्मकम् ।
उशीरं बालकं पद्मं लेपोऽयं पित्तशोथहा ॥
न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः ।
ससर्पिष्कैः प्रदेहः स्याच्छोथे पित्तसमुद्भवे ॥ * ॥
आगन्तुजे रक्तजे च लेप एषोऽभिपूजितः ।
अजगन्धाजशृङ्गी च मञ्जिष्ठा सरलस्तथा ।
एकैकिकाश्वगन्धा च लेपोऽयं श्लेष्मशोथहा ॥”
अजशृङ्गी मेढाशृङ्गी । एकैकिका श्यामनि-
सोतः ।
“कृष्णा पुराणपिण्याकं शिशुत्वक् शिकता शिवा ।
मूत्रपिष्टः सुखोष्णोऽयं प्रलेपः श्लेष्मशोथहा ॥ * ॥

“रुजावतां दारुणानां कठिनानां तथव च ।
शोथानां स्वेदनं कार्य्यं ये चाप्येवं विचारणात् ॥”
शोथानां सामान्यानां व्रणाः व्रणशोथाः तेषा-
मपि स्वेदनं कार्य्यम् ।
“शोथयोरुपनाहन्तु दद्यादामविदग्धयाः ।
प्रशाम्यत्यविदग्धस्तु विदग्धः पाकमेति च ॥”
अविदग्धः आमः । विदग्धः पाकोन्मुखः । स यथा, --
“दशमूली बला रास्ना वाजिगन्धा प्रसारिणी ।
मूलं फलञ्च वातारिसिन्दुवारपुनर्नवाः ॥
शोभाञ्जनः कणा चापि सैन्धवं विश्वभेषजम् ।
शणकार्पासयोर्बीजमतसीच कुलत्थिका ॥
तिला यवाश्च सिद्धार्थः कुठेरो मूलकं मिसिः ।
यथाप्राप्तैरमीभिस्तु द्रव्यैरम्लेन संयुतैः ॥
कल्कीकृतैः सुखोष्णैश्च स्वेदयेद्विधिवच्छनैः ।
अनेन प्रशमं याति वातशोथो न संशयः ॥”

“चिरविल्वोऽग्निको दन्ती चित्रको हयमारकः ।
कपोतकङ्कगृध्राणां मलं लेपेन दारणम् ॥”
चिरबिल्वः करञ्जः । अग्निकः भल्लातकः ।
“भल्लातकासहत्वे तु रक्तचन्दनमिष्यते ॥”
हयमारकः करवीरः । दारणं भेदनम् ।
“क्षारद्रव्यं तथा क्षारो दारणः परिकीर्त्तितः ॥”
क्षारद्रव्यं अपामार्गादि । क्षारः स्वर्जिका यव-
क्षारादिः ।
“हस्तिदन्तो जले पिष्ठो बिन्दुमात्रः प्रलेपतः ।
अत्यन्तकठिने शोथे कथितो भेदनः परः ॥” * ॥
अथ पीडनमाह ।
“पूयगर्भाननूद्धारान् व्रणान् मर्म्मगतानपि ।
यथोक्तैः पीडनद्रव्यैः समन्तात् परिपीडयेत् ॥”
पीडनद्रव्याण्याह ।
“द्रव्याणां पिच्छिलानान्तु त्वङ्मूलानि प्रपी-
ड्येत् ।
यवगोधूममाषाणां चूर्णानि च समासतः ॥
शुष्यमाणमुपेक्षेत प्रलेपं पीडनं प्रति ।
न चापि मुखमालिम्पेत्तथा दोषः प्रसिच्यते ॥”
पीडनं प्रति पीडनद्रव्यलेपं प्रति । पीडनद्रव्य-
लेपे शुष्यन्तमपि धारयेदित्यर्थः । तथा व्रणस्य
मुखे लेपं विना प्रसिच्यते स्रवति ॥ * ॥
अथ शोधनमाह ।
“व्रणस्य त्वविशुद्धस्य क्वाथः शुद्धिकरः परः ।
पटोलनिम्बपत्रस्य सर्व्वथैव प्रयुज्यते ॥
वातिके दशमूलानां क्षीरिणां पैत्तिके व्रणे ।

अश्वत्थोडुम्बरप्लक्षवटवेतसजं सृतम् ।
व्रणशोथोपदंशानां नाशनं क्षालनात् स्मृतम्
॥
तैलसैन्धवयष्ट्याह्वनिम्बपत्रनिशायुगैः ।
त्रिवृद्धनयुतैः कार्य्यः प्रलेपो व्रणशोधनः ॥
एकैकं सारिवामूलं सर्व्वव्रणविशोधनम् ।
निम्बपत्रतिलादन्तीत्रिवृत्सैन्धवमाक्षिकम् ।
दुष्टव्रणप्रशमनो लेपः शोधनकेशरी ॥”
शोधनकेशरी शोधनश्रेष्ठः ।
“लेपान्निम्बदलैः कल्कैर्व्र णशोधनरोपणः ।
भक्षणाच्छर्द्दिमन्दाग्निपित्तश्लेष्मकृमीन्
हरेत् ॥
व्रणान् विशोधयेत् वर्त्त्या सूक्ष्मा स्यात्
सन्धि-
मर्म्मजान् ।
अभयत्रिवृतादन्तीलाङ्गलीमधुसैन्धवैः ॥
निम्बपत्रघृतक्षौद्रदार्व्वीमधुकसंयुता ।
वस्तिस्तिलानां कल्को वा शोधयेद्रोपयेद्-
व्रणम् ॥” * ॥
अथ रोपणमाह ।
“अपेतपूतिमांसानां मांसस्थानमरोहताम् ।
कल्कस्तु रोपणे देयस्तिलजो मधुसंयुतः ॥
अश्वगन्धा रुहा लोध्रः कट्फलं
मधुयष्टिका ।
समङ्गा धातकीपुष्पं परमं व्रणरोपणम् ॥
मधुयुक्ता शरपुङ्खा सर्व्वव्रणरोपणी कथिता
।
सुखवीपत्रधत्तूरबला मोचा कुठेरका ॥
पृथगेते प्रलेपेन गम्भीरव्रणरोपणाः ॥”
सुखवीपत्र कलौञ्जीपत्र । अस्या एतदेव
नाम
पुस्तके धृतम् । कुठेरक वरवरी ।
“ककुभोडुम्बराश्वत्थजम्बुकट्फललोध्रजैः
।
त्वक्चूर्णैश्चूर्णिता लेपात् प्ररोहन्ति
महाव्रणाः ॥
प्रियङ्गुधातकीपुष्पयष्टीमधुजतूनिच ।
सूक्ष्मचूर्णीकृतानि स्यू रोपणान्यवधूननात्
॥
यवचूर्णं समधुकं सतैलं सह सर्पिषा ।
दद्यादालेपनं कोष्णं दाहशूलोपशान्तये ॥

सदाडिमैः सामलकैः घृतभृष्टैः ससैन्धवैः ।
अन्यैरेवं गुणैर्व्वापि मुद्गादीनां रसेन च ॥”
एभिः सह जीर्णशाल्योदनं भुञ्जानः शीघ्रं व्रण-
मपोहतीत्यन्वयः ।
“अम्लं दधि च शाकञ्च मांसमानूपमोदकम् ।
क्षीरं गुरूणि चान्यानि व्रणितः परिवर्ज्जयेत् ॥
व्रणे श्वयथुरायासात् स च रागश्च जागरात् ।
तौ च रुक् च दिवास्वापात् ताश्च मृत्युश्च
मैथुनात् ॥” * ॥
अथाङ्गव्रणचिकित्सा ।
“क्रुद्धे सद्यो व्रणं कुर्य्यादूर्द्ध्वञ्चाधश्च
शोधनम् ।
क्रिया शीता प्रयोक्तव्या रक्तपित्तोष्मनाशिनी
॥
लङ्घनञ्च बलं ज्ञात्वा भोजनं चास्रमोक्षणम् ।
घृष्टे विदलिते चैव सुतरामिष्यते विधिः ॥
छिन्ने भिन्ने तथा विद्धे क्षते वासृगतिस्रवेत् ।
रक्तक्षयात्तत्र रुजः करोति पवनो भृशम् ॥
स्नेहपानपरीषेकलेपास्तत्रोपनाहनम् ।
कुर्व्वीत स्नेहवस्तिञ्च मारुतघ्नौषधैर्भिषक् ॥
खड्गादिच्छिन्नगात्रस्य तत्कालं पूतितो व्रणः
।
गाङ्गेरुकीमूलरसैः सद्यः स्यात् गतवेदनः ॥”
गाङ्गेरुकी नागबला गुरसकरी इति लोके ।
“कषायमधुराः शीताः क्रियाः सर्व्वाः प्रयो-
जयेत् ।
सद्यो व्रणानां सप्ताहात् पश्चात् पूर्व्वोक्तमाच-
रेत् ॥
आमाशयस्थे रुधिरे विदध्याद्वमनं नरः ।
तस्मिन् पक्वाशयस्थे तु गृह्णीयात् स विरे-
चनम् ॥
क्वाथो वंशत्वगेरण्डस्वदंष्ट्राश्मभिदा कृतः ।
हिङ्गुसैन्धवसंयुक्तः कोष्ठस्थं स्रावयेदसृक् ॥
यवकोलकुलत्थानां निस्नेहेन रसेन च ।
भुञ्जीतान्नं यवागुं वा पिबेत् सैन्धवसंयुतम् ॥
जातीनिम्बपटोलपत्रकटुकादार्वीनिशाशारिवा-
मञ्जिष्ठाभयतिक्ततुत्थमधुकैर्नक्ताह्वबीजैः समैः
।
सर्पिःसिद्धमनेन सूक्ष्मवदना मर्माश्रिताः
स्राविणो
गम्भीराः सरुजो व्रणाः सगतिकाः शुध्यन्ति

तैलं जात्यादि नाम्नैतत् प्रसिद्धं भिषगादृतम्
॥”
इति जात्यादितैलम् ॥ * ॥
“चित्रकरसोनरामठशरपुङ्खालाङ्गलीकसिन्दूरैः
।
सविषैस्तथा सकुष्ठैः कटुतैलं साधसंयुक्तम् ॥
विपरीतमल्लतैलं दुष्टव्रणं तथा नाडीम् ।
बहुभेषजै रसाध्यामपथ्यभोक्तुश्च निर्णुदति
॥”
इति विपरीतमल्लतैलम् ॥ * ॥
“अमृतापटोलमूलत्रिफलात्रिकटुक्रिमिघ्नानाम्
।
समभागानां चूर्णं सर्व्वसमो गुग्गुलोर्भागः ॥
प्रतिवासरमेकैकां खादेदिहाक्षपरिमाणाम् ।
जेतुं व्रणवातासृग्गुल्मोदरशोथवातरोगांश्च॥”
इति अमृतादिगुग्गुलुः ॥ * ॥
अथाग्निदग्धस्य चिकित्सा ।
“प्लुष्टस्याग्निप्रपतनं कार्य्यमुष्णं तथौषधम् ।
सम्यकस्विन्ने शरीरे तु स्विन्नं भवति शोभि-
तम् ॥
प्रकृत्या सलिलं शीतं
स्कन्दयन्त्यतिशोणितम् ।
तस्मात् सुखयति प्लुष्टं न तु शीतं कदाचन
॥”
स्कन्दयन्ति शोषयन्ति ।
“शीतामुष्णाञ्च दुर्दग्धे क्रियां कुर्य्यात्ततः पुनः
।
घृतालेपप्रसेकास्तु शीतानेवास्य कारयेत् ॥
सम्यग्दग्धे तुगाक्षीरीप्लक्षचन्दनगैरिकैः ।
सामृतैः सर्पिषा युक्तैरालेपं कारयेद्भिषक् ॥
ग्राम्यानूपौदकैर्मांसैः पिष्टैरेनं प्रलेपलेत् ।
अतिदग्धे विशीर्णानि मांसानुद्धृत्य शीतलाम्
॥
क्रियां कुर्य्यात् ततः
पश्चाच्छालितण्डुलकण्डनैः ।
तिन्दुक्याश्च कषायैर्व्वा घृतमिश्रैः प्रलेपयेत्
॥
वदरीत्वक्कषायैर्व्वा घृतमिश्रैः प्रलेपनम् ।
यवान् दग्ध्वा मसीकृत्य तैलेन युतया तया ॥
अयं सर्व्वाग्निदग्धेषु लेपनाद्व्रणरोपणः ।
व्रणं गूढविचित्रं वा छादयेदथवोदनैः ॥

करञ्जारिष्टनिर्गुण्डीलेपो हन्याद्व्रणं कृमीन्
।
लसुनस्याथवा लेपो हिङ्गुनिम्बकृतोऽथवा
॥
निम्बपत्रवचाहिङ्गुसर्पिर्ल्लवणसर्षपैः ।
धूपनं स्याद्व्रणे रक्षःकृमिकण्डूरुजापहम् ॥
ये क्लेदपाकस्रुतिगन्धवन्तो
व्रणाश्चिरोत्थाः समताश्च शोथाः ।
प्रयान्ति ते गुग्गुलुमिश्रितेन
पीतेन शान्तिः त्रिफलासृतेन ॥
पटोलनिम्बासनसारधात्री-
पथ्याक्षनिर्य्यूहमरुर्मुखे तु ।
पिबेत् द्रुतं गुग्गुलुना विसर्प-
विस्फोटदुष्टव्रणशान्तिमिच्छन् ॥" * ॥
अथ सवर्णताकरणम् ।
"मनःशिला समञ्जिष्ठा सलाक्षा रजनीद्वयम्
।
प्रलेपः सघृतक्षौद्रस्त्वचः सावर्ण्यकृत्
स्मृतः ॥" *
अथ व्रणिनो भोजनम् ।
"जीर्णशाल्योदनं स्निग्धमल्पमुष्णं
द्रवोत्तरम् ।
भुञ्जानो जाङ्गलैर्मांसैः शीघ्रं व्रणमपोहति ॥
तण्डुलीयकजीवन्तीवास्तूकसुनिषण्णकैः
।
बालं मूलकवार्त्ताकुपटोलैः कारवेल्लकैः ॥

रोहन्ति च ॥
वृद्धवैद्योपदेशेन पारम्पर्य्योपदेशतः ।
जातीघृतेन संसिद्धे क्षेप्तव्यं सिक्थकं बुधैः ॥"
इति जात्यादिघृतम् ॥ * ॥
"जातीनिम्बपटालानां नक्तमालस्य पल्लवाः ।
सिक्थं समधुकं कुष्ठं द्वे निशे कटुरोहिणी ॥
मञ्जिष्ठा पद्मकं पथ्या लोध्रत्वक्नीलमुत्पलम् ।
सारिवा तुत्थकं चापि नक्तमालफलं तथा ॥"
सारिवास्थाने सनिम्ब इति च पाठः ।
"एतानि समभागानि कल्कीकृत्य प्रयत्नतः ।
तिलतैलं पचेत् सम्यक् वैद्यः पाकविचक्षणः ॥
विषव्रणे समुत्पन्ने स्फोटके कक्षरोगिणि ।
दद्रुवीसर्परोगेषु कीटदष्टेषु सर्व्वथा ॥
सद्यः शस्त्रप्रहारेषु दग्धविद्धेषु चैव हि ।
नखदन्तक्षते देह्वे दुष्टमांसापकर्षणे ॥
भक्षणेन हितं तैलमिदं शोधनरोपणम् ।

मधूच्छिष्टं समधुकं लेपं सर्जरसं तथा ।
मञ्जिष्ठाचन्दनं मूर्व्वां पिष्ट्वा सर्पिषि पाच-
येत् ।
सर्व्वेषामग्निदग्धानामेतद्रोपणमुत्तमम् ॥"
इति सिक्थकादिघृतम् ॥ * ॥
"सिद्धं कषायकल्काभ्यां पटोल्या
कटुतैलकम् ।
व्रणदग्धरुजा स्रावदाहविस्फोटनाशनम् ॥"
इति पटोलीतैलम् ॥
"वातोष्णमश्रुतं दुष्टं संशोष्य ग्रथितं व्रणम् ।
कुर्य्यात् सदाहं कण्ड्वाढ्यं व्रणग्रन्थिस्तु स
स्मृतः ॥
कम्पिल्यकं विडङ्गानि त्वचं दार्व्व्यास्तथैव च
।
पिष्ट्वा तैलं पचेत्तन्तु व्रणग्रन्थिहरं परम् ॥"
इति व्रणागन्तुव्रणाग्निदग्धव्रणाधिकारः ॥ * ॥
भग्नाधिकारस्तु भग्नशब्दे द्रष्टव्यः । नाडीव्रण-
निदानं नाडीव्रणशब्दे द्रष्टव्यम् ॥ * ॥ अथ
नाडीव्रणस्य चिकित्सा ।
"स्नुह्यर्कदुग्धदार्वीभिर्वर्त्तिं कृत्वा प्रपूरयेत् ।
एष सर्व्वशरीरस्थां नाडीं हन्यात् प्रयोगराट् ॥
आरग्वधनिशाकालाचूर्णाठ्याक्षौद्रसंयुता ।
सूत्रवर्त्तिर्व्रणे योज्या शोधनी गतिनाशिनी ॥"
काला मञ्जिष्ठा ।

"जात्यर्कसम्पाककरञ्जदन्ती-
सिन्धूत्थसौवर्च्चलयावशूकैः ।
वर्त्तिः कृता हन्त्यचिरेण नाडीं
स्नुक्क्षीरपिष्टा सह चित्रकेण ॥
नाड्याः शस्त्रेण वदनं बृहत् कृत्वा प्रवेशयेत् ।
कुशलो वस्तिविधिना तैलं
जात्यादिसाधितम् ॥
एवमन्यच्च यत्तैलं घृतं वा स्वरसं तथा ॥
यत्तैलं यद्घनं पक्वं स्वरसं वा तथैव च ॥"
इति वा पाठः ॥
"नाड्या अभ्यन्तरे वैद्यो लघुहस्तः प्रवेशयेत्
।
कर्पूरकरसैस्तैलं सिद्धार्थकभवं भिषक् ।
पचेत् सिन्दूरकल्केन नाडीदुष्टव्रणापहम् ॥
गुग्गुलुत्रिफलाव्योषैः समांशैराज्ययोजितम् ।
अक्षप्रमाणां गुटिकां खादेच्छीताम्बुना नरः ॥
नाडीदुष्टव्रणं शूलमुदावर्त्तभगन्दरम् ।
गुल्मञ्च गुदजान् हन्यात् पक्षिराट् पन्नगानिव
॥"
सप्ताङ्गो गुग्गुलुः । इति नाडीव्रणाधिकारः ॥
* ॥
भगन्दरस्य निदानं चिकित्सा च भगन्दरशब्दे
द्रष्टव्यम् । उपदंशस्य निदानाद्युपदंशशब्दे
द्रष्टव्यम् ॥ * ॥ अथोपदंशस्य चिकित्सा ।
"उपदंशेषु सर्व्वेषु स्निग्धस्विन्नस्य देहिनः ।
मेढ्रमध्ये शिरां विध्येत् पातयेद्वा जलौकसः
॥
सद्यो निर्हृतदोषस्य रुक्शोथावुपशाम्यतः ।
पाको निवार्य्यो यत्नेन शिश्नक्षयकरः स यत्
॥
वटप्ररोहार्ज्जुनजम्बुलोध्र-
पथ्याहरिद्रारचितः प्रलेपः ।
व्यथां तथा शोथमपाकरोति
सर्व्वोपदंशेषु ततो हितोऽयम् ॥
उपदंशेषु पक्वेषु व्रणप्रक्षालनं हितम् ।
त्रिफलायाः कषायेण भृङ्गराजरसेन वा ॥
नीलोत्पलं सुकुमुदं पद्मं सौगन्धिकं तथा ।
एष चूर्णं धूलनार्थं प्रलेपश्चात्र शस्यते ॥
बन्धूकदलचूर्णेन रजसा दाडिमत्वचः ।
गुण्ठनान्तद्व्रणे कुर्य्याल्लेपं पूगफलेन वा ॥
दहेत् कटाहे त्रिफला तन्मखी मधुसंयुता ।

"उडुम्बरं वटप्लक्षं जम्बुद्वयमथार्ज्जुनम् ।
पिप्पलञ्च कदम्बञ्च पलाशलोध्रतिन्दुकम् ॥
मधूकमाम्रसर्जञ्च वदरं पद्मकेशरम् ।
शिरीषबीजं कतकमेतत् क्वाथेन साधितम् ।
तैलं हन्ति व्रणाल्लेपाच्चिरकालभवानपि ॥"
इति गारुडे १९८ अध्यायः ॥

**व्रणकृत्**, पुं, (व्रणं करोतीति । कृ + क्विप् । तुगा-
गमश्च ।) भल्लातकः । इति रत्नमाला ॥ क्षत-
कारके, त्रि ॥

**व्रणकेतुघ्नी**, स्त्री, (व्रणकेतुं हन्तीति । हन + टक् ।
ङीप् ।) दुग्धफेणीक्षुपः । इति राजनिर्घण्टः ॥

**व्रणद्विट्**, [ष्] पुं, (व्रणस्य द्विट् शत्रुः ।) ब्राह्मण-
यष्टिका । इति शब्दचन्द्रिका ॥ व्रणद्वेषके, त्रि ॥

**व्रणहः**, पुं, (व्रणं हन्तीति । हन + डः ।) एरण्ड-
वृक्षः । इति शब्दचन्द्रिका ॥ व्रणघातके, त्रि ॥

**व्रणहा**, स्त्री, (व्रणं हन्तीति । हन + डः ।
स्त्रियां टाप् ।) गुडुची । इति शब्दचन्द्रिका ॥

**व्रणहृत्**, पुं, (व्रणं हरतीति । हृ + क्विप् । तुक्
च ।) कलिकारीवृक्षः । इति राजनिर्घण्टः ॥

**व्रणारिः**, पुं, (व्रणस्य अरिः शत्रुः ।) वोलम् ।
अगस्त्यवृक्षः । इति राजनिर्घण्टः ॥

**व्रतं**, क्ली पुं, भक्षणम् । इत्युणादिकोषः ॥ (व्रियते
इति । वृञ् वरणे + बाहुलकात् अतच् । सच
कित् ।) पुण्यजनकोपवासादि । तत्पर्य्यायः ।
नियमः २ पुण्यकम् ३ । इत्यमरः ॥ नियामः ४
संयमः ५ । इति शब्दरत्नावली ॥ अथ व्रत-
विधिः । तदारम्भप्रतिष्ठयोर्व्वर्ज्यकालमाह
ज्योतिषे । गुरोर्भृगोरस्तबाल्ये वार्द्धके सिंहगे
गुरौ इति । वृद्धो बालो दिनत्रयमित्यन्तम् ।
मठप्रतिष्ठातत्त्वादावनुसन्धेयम् ॥ * ॥
बुधाष्टमी-
व्रते विशेषो राजमार्त्तण्डोक्तो यथा, --
"द्विजेन्द्रसुतसंयुक्ता पूर्णा या च सिताष्टमी ।
तस्यां नियमकर्त्तारो न स्युः खण्डितसम्पदः ॥
पतङ्गे मकरे याते देवे जाग्रति माधवे ।

इति छन्दोगपरिशिष्टादेकाहार पूर्व्वदिने
कृता
परदिने स्नात्वाचम्य सूर्य्यादिदेवेभ्यो
निवेद्य ।
ॐ सूर्य्यः सोमो यम इत्यादिमन्त्रेण
सान्निध्यं
प्रार्थ्य व्रतमाचरेत् । ततः सङ्कल्पयेत् ।
यद्वा
सूर्य्यादिदेवेभ्यो निवेद्य पूजनीयद्रव्यादि
दत्त्वा
व्रतमाचरेत् व्रतं कुर्य्यात् । तद्विधानञ्च
शान्ति-
पर्व्वणि ।
"गृहीत्वौडम्बरं पात्रं वारिपूर्णमुदङ्मुखः ।
उपवासन्तु गृह्णीयात् यद्वा वार्य्येव धारयेत्
॥" * ॥
कर्म्मादौ सूर्य्यपूजामाह ब्रह्मपुराणम् ।
"यावन्न दीयते चार्घ्यं भास्कराय महात्मने
।
तावन्न पूजयेद्विष्णुं शङ्करं वा महेश्वरीम् ॥"
नवग्रहपूजामाह मत्स्यपुराणम् ।
"नवग्रहमखं कृत्वा ततः कर्म्म समारभेत् ।
अन्यथा फलदं पुंसां न काम्यं जायते
क्वचित् ॥"
आदित्यादिपूजामाह पद्मपुराणम् ।
"आदित्यं गणनाथञ्च देवीं रुद्रं यथाक्रमम्
।
नारायणं विशुद्धाख्यं अन्ते च कुलदेवताम्
॥"
यत्तु ।
"देवतादौ यदा मोहात् गणेशञ्च न पूजयेत्
।
तदा पूजाफलं हन्ति विघ्नराजो गणाधिपः
॥"
इत्यनेन गणेशपूजनस्यादित्वमुक्तं तत्
सूर्य्यपूजे-
तरपरम् । कुलदेवतेत्यत्र कुलाद्युपलक्षणम्
।
"व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्च्चने जपे ।
आरब्धे सूतकं न स्यादनारब्धे तु सूतकम्
॥"

प्रलेपेनोपदंशस्य व्रणः सद्यः प्ररोहयेत् ॥
पटोलनिम्बत्रिफलाकिरात-
क्वाथं पिबेद्वा खदिरासनाभ्याम्।
सगुग्गुलुं वा त्रिफलायुतं वा
सर्व्वोपदंशोपहरः प्रयोगः ॥
भूनिम्बनिम्बत्रिफलापटोल-
करञ्जधात्रीखदिरासनानाम्।
कषायकल्कैः शृतमाशु चाज्यं
सर्व्वोपदंशोपहरं प्रदिष्टम् ॥
इति भूनिम्बादिघृतम् ॥
“घृतानि यानि प्रोक्तानि कुष्ठे नाडीव्रणे व्रणे ।
उपदंशे प्रयोज्यानि सेकाभ्यञ्जनभोजने ॥
क्षारसूत्रेण संछिद्य लिङ्गवर्त्तिमशेषतः ।
दहेच्च तान्ततस्ताभ्यां चिकित्सां
व्रणवच्चरेत् ॥”
इत्युपदंशाधिकारः ॥ * ॥
शूकदोषाधिकारः शूकदोषशब्दे द्रष्टव्यः ।
इति
भावप्रकाशः ॥ * ॥ अथ व्रणनाशकतैलम् ।

बुधाष्टमीं प्रकुर्वीत वर्जयित्वा तु चैत्रकीम् ॥
प्रसुप्ते च जगन्नाथे सन्ध्याकाले मधौ तथा ।
बुधाष्टमीं न कुर्वीत कृता हन्ति पुराकृतम् ॥”
अथ व्रतानुष्ठानम् । तत्र देवलः ।
“अभुक्त्वा प्रातराहारं स्नात्वा चैव समाहितः ।
सूर्य्यादिदेवताभ्यश्च निवेद्य व्रतमाचरेत् ॥
ब्रह्मचर्य्यं तथा शौचं सत्यमामिषवर्ज्जनम् ।
व्रतेष्वेतानि चत्वारि वरिष्ठानीति निश्चयः ॥”
अत्र प्रातरित्यस्याभुक्त्वेत्यत्र नान्वयः । किन्तु
व्रतमित्यनेनान्वयोऽभ्यर्हितत्वात् ।
“प्रातः सङ्कल्पयेद्विद्वानुपवासव्रतादिकम्।
नापराह्णे न मध्याह्ने पित्रकालौ हि तौ स्मृतौ ॥”
इति वराहपुराणैकवाक्यत्वाच्च ।
वतश्चाभुक्त्वा
प्रातराहारमिति ।
“मुनिभिर्द्दिरशनं प्रोक्तं विप्राणां मर्त्यवासिनां
नित्यम् ।
अहनि च तथा तमस्विन्यां सार्द्धप्रहरया-
मान्तः ॥”

तत्र विशेषयति मत्स्यपुराणम् ।
“गर्भिणी सूतिका नक्तं कुमारी च
रजस्वला
यदाशुद्धा तदान्येन कारयेत् क्रियते सदा
॥
उपवासाशक्तौ तु नक्तं भोजनं कुर्वीत ।
“उपवासेष्वशक्तानां नक्तं भोजनमिष्यते
।”
इति वचनान्तरात् अशुद्धा चेत् पूजां
कारयेत्
कायिकञ्चोपवासादिकं सदा शुद्धया
अशुद्धया
वा स्वयं क्रियते । अत्यन्तासामर्थ्ये
पुत्रादिप्रति-
निधिद्वारा उपवासः कार्य्यः । तदभावेऽनु-
कल्पः । गरुडपुराणम् ।
“भार्य्या भर्त्तृव्रतं कुर्य्यात् जायायास्तु
पति-
स्तथा ।
असामर्थ्यात् द्वयोस्ताभ्यां व्रतभङ्गो न
जायते ॥
पुत्रं वा विनयोपेतं भगिनीं भ्रातरं तथा ।
एषामभाव एवान्यं ब्राह्मणं विनियोजयेत्
॥”
आरब्धव्रतस्यासमाप्तौ मरणेऽपि
तत्फलप्राप्ति-
माहाङ्गिराः ।
“यो यदर्थं चरेद्धर्म्मं न समाप्य मृतो भवेत्
।
स तत्पुण्यफलं प्रेत्य प्राप्नुयान्मनुरब्रवीत्
॥”
प्रेत्य परलोके । शाम्बपुराणम् ।
“लोभान्मोहात् प्रमादाद्वा व्रतभङ्गो यदा
भवेत् ।
उपवासत्रयं कुर्य्यात् कुर्य्याद्वा
केशमुण्डनम् ॥”
मोहो भ्रमः । प्रमादोऽनवधानता । वाशब्दः
समुच्चये तेन मुण्डनञ्च कार्य्यं
मुण्डनाकरणे
द्विगुणं प्रायश्चित्तम् । उपवासत्रयाशक्तौ
चतु-
र्विंशतिपणा देयाः । पद्मपुराणम् ।

"वपनं नैव नारीणां नानुव्रज्याजपादिकम्।
न गोष्ठे शयनं तासां न च दध्याद्गवाजिनम्॥
सर्व्वान् केशान् समुद्धृत्य छेदयेदङ्गुलिद्वयम्।
एवमेव तु नारीणां मुण्डमुण्डनमादिशेत्॥"
इति गोवधप्रकरणे विवेचितम्।
"प्रायश्चित्तमिदं कृत्वा पुनरेव व्रती भवेत्।
पूर्ब्बं गृहीत्वा सङ्कल्पं प्रमादान्नाचरेद्यदि।
जीवन् भवति चण्डालो मृतः श्वा चाभि-
जायते॥"
इति प्रायश्चित्तविवेकधृतवचनम्॥
देवलः।
"सर्व्वभूतभयं व्याधिः प्रमादो गुरुशासनम्।
अव्रतघ्नानि कथ्यन्ते सकृदेतानि शास्त्रतः
॥"
भर्त्तुरनुज्ञया स्त्रीणां व्रतकरणे न दोषः। कामं
भर्त्तुरनुज्ञया
व्रतोपवासनियमेज्यादीनामभ्यासः
स्त्रीधर्म्म इति संवत्सरप्रदीपधृतशङ्खवचनात्
॥
अत्र कथाश्रवणमाह देवीपुराणम्।
"तद्ध्यानं तज्जपः स्नानं
तत्कथाश्रवणादिकम्।
उपवासकृतो ह्येते गुणाः प्रोक्ता मनीषिभिः॥"
अथ व्रतप्रतिष्ठाविधिः।
श्रीभगवानुवाच।
"गोपथारामसेतूनां मठसंक्रमवेश्मनाम्।
नियमव्रतकृच्छ्राणां प्रतिष्ठां शृणु सत्तम॥
ब्राह्म्येण विधिना वह्निं समाधाय विचक्षणः।
शिलां पूर्णघटं कांस्यं सम्भवे स्थापयेद्बुधः॥
ब्रह्मन् सर्व्वं समासाद्य श्रपयेद्यवमयं चरुम्।
क्षीरेण कपिलायास्तु तद्विष्णोरिति साधकः॥
प्रणवेनाभिघार्य्याथ दर्व्व्यां संघट्टयेत् ततः।
साधयित्वावतार्य्याथ तद्विष्णोरिति होमयेत्॥
व्याहृत्या चैव गायत्र्या तद्विप्रासेति होमयेत्।
विश्वतश्चक्षुरित्युक्त्वा वेदाद्यैर्होमयेत्तथा॥
ॐ भूरग्नये स्वाहा। ॐ सूर्य्याय स्वाहा। ॐ
प्रजापतये स्वाहा। ॐ अन्तरीक्षाय स्वाहा।
ॐ द्यौः स्वाहा। ॐ ब्रह्मणे स्वाहा। ॐ
पृथिव्यै स्वाहा। ॐ महाराजाय स्वाहा।
ॐ सोमं राजानमिति जुहुयात्। ॐ लोक-

सेतुप्रदानादिन्द्रस्य लोकमाप्नोति मानवः।
प्रपादानाद्वारुणञ्च लोकमाप्नोत्यसंशयम्॥
संक्रमाणान्तु यः कर्त्ता दुर्गतिं तरते नरः।
स्वर्गलोके च निवसेत् इष्टकासेतुकृत्तथा॥
गोमार्गस्य तथा कर्त्ता गोलोके क्रीडते चिरम्
।
नियमव्रतकृद्याति विष्णुलोकं नरोत्तमः॥
कृच्छ्रकृत् स्वर्गमाप्नोति
सर्व्वपापविवर्ज्जितः।
अनेन विधिना मर्त्यः संपूर्णं फलमाप्नुयात्
॥ * ॥
इयं प्रतिष्ठा सामान्या सर्व्वसाधारणानघ।
कर्त्तव्या देशिकेन्द्रैस्तु प्रतिष्ठा यत्र विद्यते॥
इति संक्षेपतः प्रोक्तः समुदायविधिस्तव।
सर्व्वेषामेव वर्णानां सर्व्वकामफलप्रदः॥
सर्व्वेषूक्तेषु कर्त्तव्या प्रतिष्ठा विधिना बुधैः।
फलार्थिभिस्त्वप्रतिष्ठं यस्मान्निष्फलमुच्यते
॥"
इति हयशीर्षे समुदायप्रतिष्ठापटलः॥ * ॥
ब्राह्म्येण वैदिकेन स्वगृह्योक्तविधिनेति
यावत्।
शिलेति उदूखलोपलक्षणम्। कांस्यं
अग्निप्रण-
यनार्थम्। कांस्येन अग्निप्रणयनमाह। गृह्या-
संग्रहे।
"शुभं पात्रन्तु कांस्यं स्यात्तेनाग्निं प्रणयेद्-
बुधः॥
तस्याभावे सरावेण नवेनाभिमुखञ्च तम्।
सर्व्वतः पाणिपादान्तः
सर्व्वतोऽक्षिशिरोमुखः।
विश्वरूपो महानग्निः प्रणीतः सर्व्वकर्म्मसु
॥"
एवञ्चाग्निप्रणयनानन्तरं सर्व्वत इत्यस्य
पाठो
युक्तः। प्रणीत इति मन्त्रलिङ्गात्। अन्यथा
स्थापनानन्तरं एतद्विधानं व्यर्थं स्यात्॥ *
॥
अत्र च पाकाङ्गत्वात् साहसनामानमग्निमाह
गृह्यासंग्रहः।
"प्रायश्चित्ते विधुश्चैव पाकयज्ञे तु साहसः।
पूर्णाहुत्यां मृडो नाम शान्तिके वरदस्तथा।

यजुषा द्विस्तूष्णीमित्यनेन
निर्व्वापक्रमाभिधानात्
सामगेन तन्मात्रं कर्त्तव्यम्। अत्र च विष्णवे
त्वा जुष्टं निर्व्वपामीत्यनेन यजुषा चरु
इत्यभि-
धानात् हवनीयनिर्व्वापणादिचरुनिष्पत्तिः
कर्त्तव्या। तत्र छन्दोगपरिशिष्टम्।
"देवतासंख्यया गृह्य निर्व्वापांश्च पृथक्
पृथक्।
तूष्णीं द्विरेव गृह्णीयाद्धोमश्चापि पृथक् पृथक्
॥"
अत्र देवतासंख्यया पृथक् पृथक् निर्व्वापः।
अनुनिर्व्वापस्तन्त्रेणैव। होमोऽपि पृथक् पृथ-
गेवेति। आलस्यादिपुरुषदोषेण गृहीततण्डु-
लेनापि मन्त्रेण निर्व्वापादिकं समाचरन्ति
याज्ञिकाः।
"घाते न्यूने तथा च्छिन्ने सान्नाज्ये मान्त्रेके
तथा।
यज्ञे मन्त्राः प्रयोक्तव्या मन्त्रा यज्ञार्थसाधकाः
॥"
इत्युक्तेः। मान्त्रिके मन्त्रमाध्ये अवघातादौ
न्यूने
तत्काले मन्त्रपाठाभावे मन्त्राः प्रयोक्तव्याः।
कपिलाया अभावे अन्यधेनोरपि घृतेन
सप्रणव-
तद्विष्णोरित्यनेनाभिधार्य्य दर्व्या
दक्षिणावर्त्तेन
संमिश्रयेत्। दर्व्वी च प्रादेशप्रमाणा द्व्यङ्गुल-
विस्तारा ग्राह्या।
"इध्मजातीयमिध्मार्द्धप्रमाणंमेक्षणं भवेत्।
वृत्तं वार्क्षञ्च पृथ्वग्रमवदानक्रियाक्षमम्॥
एषैव दर्व्वी यस्तत्र विशेषस्तमहं ब्रुवे।
दर्व्वी द्व्यङ्गुलपृथ्वग्रा तुरीयोनञ्च मेक्षणम्॥"
इति छन्दोगपरिशिष्टात्।
इध्मार्द्धप्रमाणं प्रादेशमात्रम्।
प्रादेशद्वयमिध्मस्य
प्रमाणं परिकीर्त्तितम्। इति छन्दोगपरि-
शिष्टोक्तेः। अथेत्यनेन
स्वगृह्योक्तशेषकर्म्मसमा-
पनानन्तरं प्रकृतहोमः। अत्र बहुदेवताक-
चरुहोमादुपघातहोमः।

पालेभ्यः स्वाहा ।
स्वस्वमन्त्रैर्जुहुयाद्ग्रहेभ्यश्च ।
एवं हुत्वा चरोर्भागं दद्यात् दशदिशां बलिम् ।
ततः पलाशसमिधा हुनेदष्टोत्तरं शतम् ॥
आज्यन्तु जुहुयात् पश्चादेभिर्मन्त्रैर्द्विजोत्तमः ।
ततः पुरुषसूक्तैश्च मन्त्रैराज्यन्तु होमयेत् ॥
इरावतीति जुहुयात् तिलान् घृतपरिप्लुतान् ।
हुत्वा च ब्रह्मविष्णीशदेवानामनुयायिनम् ॥
ग्रहाणामाहुतीर्हुत्वा लोकेशानामथो पुनः ।
पर्व्वतानां नदीनाञ्च समुद्राणां तथैव च ॥
हुत्वा व्याहृतिभिर्दद्यात् श्रुचा पूर्णाहुतित्रयम् ।
वौषडन्तेन मन्त्रेण वैष्णवेन सुरोत्तम ॥
पञ्चगव्यञ्च संप्राश्य दद्यादाचार्य्यदक्षिणाम् ।
तिलपात्रं हेमयुक्तं सवस्त्रं गामलङ्कृताम् ।
प्रीयतां भगवान् विष्णुरित्युत्सृजेद्व्रतं नरः ॥ * ॥
आरामं कारयेद्यस्तु नन्दने स चिरं वसेत् ।
मठप्रदानात् स्वर्लोकं प्राप्नोति पुरुषः सदा ॥

आहूय चैव होतव्यं यत्र यो विहितोऽनलः ॥”
प्रायश्चित्ते होमकर्म्मवैगुण्यसमाधानार्थं प्राय-
श्चित्तात्मकमहाव्याहृतिहोमादौ। तथा च छन्दोगपरिशिष्टम् ।
“यत्र व्याहृतिभिर्होमः प्रायश्चित्तात्मको भवेत् ।
चतस्रस्तत्र विज्ञेयाः स्त्रीपाणिग्रहणे यथा ॥
अपि वाज्ञातमित्येषा प्राजापत्यापि वाहुतिः ।
होतव्या त्रिर्विकल्पोऽयं प्रायश्चित्तविधिः स्मृतः ॥”
अत्र त्रिर्विकल्प इत्यभिधानात् सामगानां भव-
देवभट्टोक्तशाठ्यायनहोमो निष्प्रामाणिकः ।
अत्रामुकाग्ने इहागच्छागच्छ इत्युच्चार्य्य यवा-
भावे व्रीह्यादिभिरपि होमः ।
“हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः ।
माषकोद्रवगौरादीन् सर्व्वाभावे विवर्ज्जयेत् ॥
यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् ।
यवानामिव गोधूमा व्रीहीणामिव शालयः ॥”
इति छन्दोगपरिशिष्टात् ॥
तत्र गोभिलेन अथ हविर्निर्व्वपति व्रीहीन् यवान् वा कांस्ये चरुस्थाल्यां वा अमुष्मै त्वा
जुष्टं निर्व्वपामीति देवतानामोद्देशः । सकृद्-

“चरौ तु बहुदैवत्ये होमः स्यादुपघातवत् ।”
इति छन्दोगपरिशिष्टधृतवचनात् ॥
उपघातलक्षणमाह गृह्यासंग्रहः ।
“पाणिना मेक्षणेनाथ स्रुवेणैव तु यद्धविः ।
हूयते चानुपस्तीर्य्य उपघातः स उच्यते ॥
यद्युपघातं जुहुयाच्चरावाज्यं समापयेत् ।
मेक्षणेन तु होतव्यं नाज्यभागो न स्विष्टिकृत् ॥”
अनुपस्तीर्य्य इत्यनेन स्रुचि यच्चतुरावर्त्तं पञ्चा-
वर्त्तं वा घृतोपस्तरणादिकं तदत्र नास्ति तेन मेक्षणादिना सकृत् गृहीत्वा होतव्यम् ॥ * ॥
प्रकृतहोमात् प्राक् वह्निपूजनमाह मार्कण्डेय-
पुराणम् ।
“पूजयेच्च ततो वह्निं दद्याच्चाप्याहुतीः क्रमात् ।”
तत इति वह्नेर्नामकरणध्यानानन्तरम्।
होमानुष्ठाने स्मृतिः ।
“मन्त्रेणोङ्कारपूर्व्वेण स्वाहान्तेन विचक्षणः ।
स्वाहावसाने जुहुयाद्ध्यायन् वै मन्त्रदेवताम् ॥”
ततस्तद्विष्णोरितिमन्त्रेणचरुणा होमयेत् । एवं
व्याहृत्या प्रत्येकं भूरित्यादिना । गायत्र्या
सावित्र्या । तद्विप्रासेति तद्विप्रासो विपण्यवो
जागृवांस इत्यादिना । विश्वत इति विश्वत-

श्चक्षुरुत विश्वतोमुख इत्यादिना । वेदाद्यैः
अग्निमीले इत्यादिना । इषेत्वोर्ज्येत्वा
इत्यादिना ।
अग्न आयाहि इत्यादिना । शन्नो
देवीरित्यादिना
चतुर्भिः । भूरग्नये इत्याद्यष्टभिः । ततः सोमं
राजानमित्यादिना । ततो लोकपालेभ्य
इत्या-
दिना
स्वस्वमन्त्रैस्तत्तद्वेदोक्तदशदिक्पालमन्त्रैः।
तत्र सामगानां इन्द्रस्य त्रातारमित्यादिना ।
अग्नेश्च अग्निं दूतं वृणीमहे इत्यादिना ।
यमस्य
नाके सुपर्णमित्यादिना । निरृतेर्वेत्थाहि निरृ-
तीनां इत्यादिना । वरुणस्य घृतवती
भुवनाना-
मित्यादिना । वायोः वात आवातु भेषजं
इत्या-
दिना । सोमस्य सोमं राजानमित्यादिना ।
ईशानस्य अभित्ता शूरणो नुम इत्यादिना ।
ब्रह्मणो ब्रह्मयज्ज्ञानं प्रथममित्यादिना । अन-
न्तस्य चर्षणीधृतमित्यादिता । तथा च गोभि-
लीयकर्म्मप्रदीपे ।
“त्रातारमिन्द्रमवितारमिन्द्रस्यपरिकीर्त्तितः ।
अग्निं दूतं वृणीमहे वह्नेर्मन्त्रो यमस्य वै ॥
नाके सुपर्णसुपयत् वेत्थाहिर्णिरृतेस्तथा ।
घृतवतीति वरुणस्य वात आवातु भेषजम् ॥
वायोर्मन्त्रः समुद्दिष्टः सोमं राजानमित्यृचा ।
सोमस्य मन्त्रः कथितस्त्वभित्वेऽतीश उच्यते
॥”
ईशे ईशानस्य ।
“ब्रह्मयज्ज्ञानं प्रथमं ब्रह्मणः परिकीर्त्तितः ।
चर्षणीधृतमिति च सर्पस्य समुदाहृतः ॥”
ग्रहेभ्यः नवग्रहेभ्यः स्वस्वमन्त्रैः
सर्व्ववेदसाधा-
रणैः । सूर्य्यस्याकृष्णेनेत्यादिना ।
सोमस्याप्याये-
त्यादिना । मङ्गलस्याग्निर्मूद्धा इत्यादिना ।
बुध-
स्याग्ने विवस्वदित्यादिना । बृहस्पतेर्बृहस्पते

इति वलौ प्रयुज्यते । एभिर्मन्त्रैस्तद्विष्णोः
परमं
पदं इत्यादियावन्मन्त्रैः । आज्यन्त्विति
तुशब्देन
समिद्धोमे तेषां व्यावर्त्तनात् मन्त्राकाङ्क्षायां
प्राथ-
मिकत्वेन तद्विष्णोरित्यस्य परिग्रहः ।
ततस्त-
द्विष्णोरिति मन्त्रेण स्वाहान्तेन
घृताक्तपलाश-
समिद्भिरष्टोत्तरशतं जुहुयात् । पूर्व्वोक्तमन्त्रैः
पूर्ब्बोक्तदेवताभ्यः स्रुवेणाज्याहुतीर्जुहुयात् ।
पुरुषसूक्तस्तत्तद्वेदोक्तः । तत्र सामगानाम् ।
ॐ
इदं विष्णुरिति । प्रेक्षकस्य विष्णोरिति ।
प्राकाव्य-
मुषलेव ब्रुवाण इति । सहस्रशीर्षेति । त्रिपा-
दूर्द्ध्व इति । पुरुष एवेदमिति । एतावानस्य
इति । ततो विराडिति । कयान इत्यादि
पुरुष-
सूक्तम् । तथा च सामिधेनी श्रुतिः । इदं
विष्णुः प्रेक्षकस्य विष्णोः प्राकाव्यमुषलेव
ब्रुवाणः इति वाराहमन्त्यं पुरुषव्रते चैषा
वैष्णर्वानामसहितेनां प्रयुञ्जन् विष्णुः प्रीणाति
इति प्राकाव्यमुषलेव ब्रुवाण इति
वाराहमन्त्य-
मित्यनेन एको मन्त्रः प्रकाशितः । पुरुष
इत्य-
नेन पुरुषपदयुक्तपञ्चमन्त्राः । व्रते इत्यनेन
कयान-
श्चित्र इत्येको मन्त्रः । सामगो जुहुयात् ।
यजुर्व्वेदी तु तत्र प्रसिद्धाभिः सहस्रशीर्षेत्यादि
ऋग्भिः षोडशाहुतीर्जुहुयात् । इरावतीति
तिलान् धृताक्तान् सकृज्जुहुयात् ।
एवंब्रह्मानु-
यायिभ्यः म्वाहा विष्णवनुयायिभ्यः स्वाहा
ईशानानुयायिभ्यः स्वाहा । एवं पूर्व्वोक्तनव-
ग्रहमन्त्रैः पूर्ब्बोक्तैर्दिक्पालमन्त्रैश्च जुहुयात् ।
एवं पर्व्वतेभ्यः स्वाहा नदीभ्यः स्वाहा
नदेभ्यः
स्वाहा समुद्रेभ्यः स्वाहा भूः स्वाहा भुवः

प्रतिष्ठा समुदायप्रतिष्ठा । तथा च
कपिलपञ्च-
रात्रम् ।
“प्रतिष्ठाशब्दसंसिद्धिः प्रतिपूर्ब्बाच्च तिष्ठतेः
।
बह्वर्थत्वान्निपातानां संस्कारादौ
प्रतेःस्थितिः ॥”
तथा च गोपथादेरुक्तकर्म्मसंस्कृतस्य
फलजन-
कत्वम् । अप्रतिष्ठन्तु निष्फलमित्युक्तेः ।
एतद्-
व्रतकर्म्मणा प्रीयतां भगवान् विष्णुरिति
समा-
प्नुयात् ॥ * ॥ अथ व्रतप्रतिष्ठाप्रयोगः । तत्र
कृतनित्यक्रियः कथान्तं व्रतं समाप्य
तत्तद्देवता-
प्रीतिकामो यथाशक्ति दानादि दद्यात् ।
“व्रते देवगृहोत्सर्गे कूपादीनां प्रतिष्टने ।
दद्यात् षोडशदानानि द्विषड्दानानि चैव वा
॥”
इति दानसागरधृतवचनात्॥
ॐ तत् सदित्युच्चार्य्य ॐ अद्येत्याति
अमुक-
गोत्रोऽमुकदेवशर्म्मा
तत्तद्व्रतफलप्राप्तिकामः
कृतैतत् अमुकव्रतप्रतिष्ठामहं करिष्ये । स्त्री
चेद्व्रतकारिणी तदा अमुकगोत्रामुकी देवी-
त्याद्यूह्यं इति सङ्कल्पं कुर्य्यात् । ततो घटं
संस्थाप्य
पञ्च देवान् संपूज्य गौर्य्यादिषोडशमातृकाः
संपूज्याः । पुरुषश्चेत्तदा नान्दीश्राद्धं
कुर्य्यात् ।
तत उत्तराभिमुखं ब्राह्मणमुपवेश्य तत्समीपे
आसनमानीय प्राङ्मुखो यजमानः ॐ साधु
भवानास्तां इति कृताञ्जलिर्व्वदेत् । ॐ
साध्वह-
मासे इति प्रतिवचनम् । ॐ अर्च्चयिष्यामो
भवन्तं इति पुनरुक्ते ॐ अर्च्चयेति
प्रतिवचनम् ।
ततो वस्त्रालङ्कारगन्धपुष्पादिभिरभ्यर्च्च्य
दक्षिणं

परिदीयेत्यादिना। शुक्रस्य
शुक्रन्तेऽन्यद्यजतन्त
इत्यादिना। शनैश्चरस्य शन्नो
देवीरित्यादिना।
राहोः कयानश्चित्रेत्यादिना। केतोः केतुं
कृण्व-
न्नित्यादिना। तथा च मत्स्यपुराणम्।
"आकृष्णेनेति सूर्य्याय होमः कार्य्यो
विजानता।
आप्यायस्वेति सोमाय मन्त्रेण जुहुयात् पुनः
॥
अग्निर्मूर्द्धा दिवो मन्त्रमिति भौमाय कीर्त्तयेत्।
अग्ने विवस्वदुषस इति सोमसुताय च।
बृहस्पते परिदीया रथेनेति गुरोर्मतः।
शुक्रन्तेऽन्यदिति च शुक्रस्यापि निगद्यते॥
शनैश्चरायेति पुनः शन्नो देवीति होमयेत्।
कयानश्चित्र आभुव दूती राहोरुदाहृतः।
केतुं कृण्वन्निति कुर्य्यात् केतूनामुपशान्तये
॥"
एवं चरुहोमं समाप्य चरुशेषेण प्राच्यादि-
दिग्भ्यः पायसवलिं दद्यात्। तद्यथा। एष
पायसवलिः ॐ प्राच्यै दिशे नमः इत्यादिना।
दक्षिणायै दिशे स्वाहा इति श्रुतिदर्शनात्।
हरि-
हरपद्धतिकृत्यप्रदीपाभ्यां स्वाहान्तेन
बलिदान-
मुक्तम्। वस्तुतस्तु वलिप्रकरण एव
प्राच्यूर्द्धा-
वाचीभ्योऽहरहर्त्तिय्ं प्रयोग इति गोभिलसूत्रे
स्त्रीलिङ्गनिर्द्देशात् दिशां देवतात्वं वलौ प्रती-
यते। अत्र त्ववाचीतिपाठात् श्रुत्युक्तहोमीये
दक्षिणायै इत्यनादृत्य ॐ अवाच्यै दिशे नम
स्वाहा इति जुहुयात्। ततः परिभाषासिद्धं
स्वशाखोक्तमहाव्याहृतिहोमंप्रायश्चित्तहोमञ्च
कृत्वा स्रुचा तद्विष्णोरिति मन्त्रेण वौषडन्तेन
पूर्णाहुतित्रयमुत्थाय जुहुयादिति विशेषोपा-
दानात् नात्र स्वशाखोक्तपूर्णहोमः। ततः
पञ्चगव्यं चरुशेषं प्राश्य घ्रात्वा वा हेमयुक्तं
सवस्त्रं तिलपात्रं अलङ्कृतां गाञ्च दक्षिणा-
माचार्य्याय दद्यात्। आचार्य्यपदञ्च।
"उदाहरति वेदार्थान् यज्ञविद्याः स्मृतीरपि।
श्रुतिस्मृतिसमापन्नमाचार्य्यतं विदुर्बुधाः॥"
इति छन्दोगपरिशिष्टात्॥
कर्म्मोपदेष्टुराचार्य्यत्वेन आचार्य्यपदं स्वयं
होतृ-
पक्षे ब्रह्मपरं अन्यहोतृपक्षे ब्रह्महोतृद्वयपरम्।
स्वयं ब्रह्महोतृकर्म्मकरणपक्षे पुस्तकधारक-
परम्।
"ब्रह्मणे दक्षिणा देया यत्र या परिकीर्त्तिता।
कर्म्मान्तेऽनुच्यमानायां पूर्णपात्रादिका भवेत्
॥
विदध्याद्धौत्रमन्यश्चेद्दक्षिणार्द्धहरो भवेत्।
स्वयञ्चेदुभयं कुर्य्यादन्यस्मै प्रतिपादयेत्॥"
इति छन्दोगपरिशिष्टैकवाक्यत्वात्॥
एवं ब्रह्मविधिना अग्निस्थापनादि प्रीयतां भग-
वान्
विष्णुरित्यन्तकर्म्मसंस्कृतगोपथादिदान-
नियमव्रतकृच्छ्रादिकरणान्यतररूपा समुदाय-
प्रतिष्ठा कर्त्तव्या। समुदायस्य
प्रकृतगोपथादेः
जानु धृत्वा ॐ अद्येत्यादि अमुकगोत्रममुक-
देवशर्म्माणमर्च्चितं
कृतैतदमुकव्रतप्रतिष्ठाकर्म्मणि
होमादिकर्म्मकरणाय भवन्तमहं वृणे। ॐ
वृतोऽस्मीति प्रतिवचनम्। ॐ यथाविहितं
वृतकर्म्म कुरु। ॐ यथाज्ञानं करवाणि इति
प्रतिवचनम्। ततो वेदीं पञ्चगव्येनाभ्युक्ष्य
पूर्व्वे
पञ्च घटान् घटमेकं वा संस्थाप्य
प्रथमलिखित-
क्रमेण भूतशुद्ध्यादिगणेशादिपूजां
विधायतत्तद्-
देवतां क्रमेण पूजयेत्। ततो होता
स्वगृह्योक्त-
विधिनाग्निं संस्थाप्य ब्रह्मस्थापनानन्तरं
चरु-
श्रपणं कुर्य्यात्। अन्यत् सर्व्वं प्रतिष्ठापद्धतौ
ज्ञेयम्॥ * ॥ अथ व्रतप्रयोगः।
स्वस्तिवाचनं कृत्वा
सूर्य्यः सोम इति पठित्या सङ्कल्पं कुर्य्यात्।
अद्ये-
त्यादि अमुककामोऽमुकव्रतमहंकरिष्ये।
व्रता-
वृत्तौ आवृत्तिसंख्यामुल्लिखेत् अद्यारभ्येति
च।
उदङ्मुखो भूत्वा एतत् कुर्य्यात्। ॐ यसः
क्षित्यै नम इति स्थण्डिलं मार्जयेत्। ॐ स
इत्यभ्युक्षयेत्। वामहस्तेन स्थण्डिलं
गृहीत्वा
कुशेन प्रणवपूर्व्वकं चतुर्थ्यन्तव्रतदेवतानाम
लिखेत्। हस्तप्रमाणं स्थण्डिलं चतुरस्रं
सित-
तण्डुलेनापूर्य्य मध्ये वितस्त्यूद्र्ध्वकर्णिकं
हरिद्रा-
चूर्णेन
तद्वहिर्वितस्तिप्रमाणान्यन्योन्यसक्तानि
अष्टदलानि सिततण्डुलचूर्णेन पत्रमूले
केशराणि
कुसुम्भचूर्णेन पत्रसन्धीर्व्विल्वादिपत्रचूर्णेन
पीठ-
गात्राणि दग्धपुलाकजेन कृत्वा घटं
संस्थाप्य

ञ्चाभ्युक्ष्य गणेशादीन् नवग्रहांश्चैव पूजयेत्
।
ततो व्रतदेवताः पूजयेत् । इति व्रततत्त्वम्
॥ * ॥
अथ व्रतलक्षणम् ।
दीर्घकालानुपालनीयसङ्कल्पो
व्रतमिति नारायणोपाध्यायानां स्वरसः ।
स्वकर्त्तव्यविषयो नियतः सङ्कल्पो
व्रतमिति
श्रीदत्तहरिनाथवर्द्धमानप्रभृतयः॥
सङ्कल्पश्च
भावे मयैतत् कर्त्तव्यमेव निषेधे न
कर्त्तव्यमिति
ज्ञानविशेषः । अतएव सङ्कल्पः
कर्म्ममानस-
मित्याभिधानिकाः । वस्तुतस्तु
पूर्ब्बोक्तवराह-
पुराणववनेनैकादश्युपवासस्य
व्रतत्वाभिधानात् ।
“एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन चैकेन पादकृच्छ्र उदाहृतः ॥”
इत्यादि याज्ञवल्क्याद्युक्तेषु
एकभक्तनक्तायाचित-
भोजनोपवासादिषु
पादकृच्छ्रादित्वाभिधानाच्च
न सङ्कल्पो व्रतम् । किन्तु
सङ्कल्पविषयतत्तत्-
कर्म्मैव व्रतमिति । अतएव व्रतानां
सङ्कल्पसम्भव-
त्वमाह मनुः ।
“सङ्कल्पमूलः कामो वै यज्ञाः
सङ्कल्पसम्भवाः ।
व्रता नियमधर्म्माश्च सर्व्वे सङ्कल्पजाः
स्मृताः ॥”
अनेन कर्म्मणा इदमिष्टं फलं साध्यते
इत्येवं
विषया बुद्धिः
सङ्कल्पस्तदनन्तरमिष्टसाधनतया
अवगते तस्मिन् इच्छा जायते ततस्तदर्थं
प्रयत्नं

द्वादशीव्रतमादाय व्रतभङ्गं करोति यः
।
द्वादशाब्दं व्रतं चीर्णं निष्फलं तस्य
जायते ॥”
इति नारदीयवचनात् द्वादश्यां
विशेषोऽपि ॥ * ॥
प्रायश्चित्तमाह पद्मपुराणम् ।
“लोभान्मोहात् प्रमादाद्वा व्रतभङ्गो
यदा
भवेत् ।
उपवासत्रयं कुर्य्यात् कुर्य्याद्वा
केशमुण्डनम् ।
प्रायश्चित्तमिदं कृत्वा पुनरेव व्रती
भवेत् ॥”
वाशब्दः समुच्चये तेन मुण्डनञ्च
कर्त्तव्यमिति
प्रायश्चित्तविवेकः ॥ प्रमादादस्य
सकृत्कृतत्वे
प्रतिप्रसूते देवलः ।
“सर्व्वभूतभयं व्याधिः प्रमादो
गुरुशासनम् ।
अव्रतघ्नानि कथ्यन्ते सकृदेतानि
शास्त्रतः ॥”
इत्येकादशीतत्त्वम् ॥ * ॥
पुण्यजनकव्रतानि यथा । वैशाखस्य
शुक्लतृती-
यायां अक्षयतृतीयाव्रतम् १ तस्य
शुक्ला द्वादशी
पिपीतकी २ तच्चतुर्द्दशी
नृसिंहचतुर्द्दशी ३
तस्य कृष्णाष्टमी त्रिलोचनाष्टमी ४
तस्य कृष्ण-
चतुर्द्दशी सावित्री ५
ज्यैष्ठशुक्लतृतीया रम्भा-
तृतीया ६ तस्य शुक्ला चतुर्थी
उमाचतुर्थी ७
तस्य शुक्ला षष्ठी अरण्यषष्ठी ८
तच्चतुर्द्दशी
चम्पकचतुर्द्दशी ९ आषाढी
शुक्लैकादशी शयनै-

देवीपुराणे कृष्णाष्टमीव्रतनामाध्याये सम्मा-
र्जनमाहात्म्याध्याये च द्रष्टव्यम् ॥ * ॥ तिथ्यादि-
व्रतं गारुडे ११६ अध्याये अगस्त्यार्घ्यव्रतं
गारुडे ११९ अध्याये चातुर्मास्यव्रतानि गारुडे
१२१ अध्याये भीष्मपञ्चकादिव्रतं गारुडे १२३
अध्याये द्रष्टव्यम् ॥ * ॥ कार्त्तिकस्नानव्रतं
कार्त्तिकव्रतं कार्त्तिकप्रदीपदानव्रतञ्च पाद्मोत्तर-
खण्डे १४० अध्याये द्रष्टव्यम् ॥ * ॥ प्रतिपत्कल्पे
ब्रह्मव्रतम् । द्वितीयाकल्पे पुष्पद्वितीयाव्रतं फल-
द्वितीयाव्रतञ्च । तृतीयाकल्पे गौरीव्रतम् ।
चतुर्थीकल्पे गणेशचतुर्थी । पञ्चमीकल्पे भाद्र-
शुक्ला पञ्चमी नागपञ्चमी । षष्ठीकल्पे भाद्र-
शुक्ला षष्ठी गुहषष्ठी । सप्तमीकल्पे माघशुक्ल-
सप्तमी रथसप्तमी । शुक्लपक्षे रविवारे सप्तम्यां
रोहिणीनक्षत्रयोगे विजयासप्तमी । रविवारे
संक्रान्तौ आदित्यहृदयव्रतम् । शुक्लपक्षीय-
सप्तम्यां पञ्चतारकनक्षत्रयोगे जया सप्तमी ।
माघशुक्लसप्तमी जयन्ती । भाद्रशुक्लसप्तमी
अपराजिता सप्तमी । शुक्लपक्षे सप्तम्यां रवि-
संक्रमणे महाजया सप्तमी । मार्गशीर्षस्य
शुक्ला सप्तमी नन्दा सप्तमी । शुक्लसप्तम्यां हस्ता-
नक्षत्रयोगे भद्रासप्तमीव्रतम् । फाल्गुनस्य शुक्ला
सप्तमी कामदा सप्तमी । पापनाशिनी सप्तमी-
व्रतम् । भानुपदव्रतम् । सर्व्वव्याप्तिसप्तमीव्रतम् ।
मार्त्तण्डसप्तमीव्रतम् । भाद्रशुक्लसप्तमी नत-
सप्तमी । श्रावणशुक्लसप्तमी अभ्यङ्गसप्तमी ।
मार्गशीर्षस्य सितसप्तम्यां हस्तानक्षत्रयोगे
त्रितयप्रदाव्रतम् । इति भविष्यपुराणम् ॥ * ॥
उत्तरायणे शुक्लपक्षे बुधवारे अष्टमी बुधाष्टमी ।
अमावस्याव्रतम् । वैशाखीपूर्णिमा मिष्टपूर्णिमा ।
मेषसंक्रान्तौ मधुसंक्रान्तिः । जलसंक्रान्तिः ।
फलसंक्रान्तिः । अन्नसंक्रान्तिः । दधिसंक्रान्ति-
व्रतञ्च ॥ * ॥ अथ व्रतविधिः । तत्र व्रतधर्म्माः ।
तत्र विष्णुहारीतौ ।
“दिनान्ते नखरोमादीन् प्रवाप्य स्नानमाचरेत् ।
भस्मगोमयमृद्वारिपञ्चगव्यादिकल्पितम्॥
मलापकर्षणं कार्य्यं बाह्याशौचात्मसिद्धये ।
दन्तधावनपूर्ब्बेण पञ्चगव्येन संयुतम् ।
व्रतं निशामुखे ग्राह्यं वहिस्तारकदर्शने ॥”
तेन प्रायश्चित्तव्रतारम्भे पूर्ब्बदिने पञ्चगव्यं
प्राश्य दन्तधावनं कृत्वा सायं समये व्रतसङ्कल्पः

कुर्व्वीत इत्येवं यज्ञाः सङ्कल्पसम्भवाः ।
व्रता
नियमरूपा धर्म्माश्चतुर्थाध्याये
वक्ष्यमाणाः ।
सर्व्वे इत्यनेन अन्येऽपि शास्त्रार्थाः
सङ्कल्पादेव
जायन्ते इति कुल्लूकभट्टः ॥ * ॥
सङ्कल्पमाह
वराहपुराणम् ।
“प्रातः सङ्कल्पयेद्विद्वानुपवासव्रतादिकम् ।
नापराह्णे न मध्याह्ने पित्र्यकालौ हि तौ
स्मृतौ ॥”
सङ्कल्प व्रतस्यारम्भ इत्युक्तं राघवधृतो
विष्णुः ।
“व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्च्चने जपे ।
आरब्धे सूतकं न स्यादनारब्धे तु सूतकम्
॥
आरम्भो वरणं यज्ञे सङ्कल्पो व्रतजापयोः ।
नान्दीश्राद्धं विवाहादौ श्राद्धे
पाकपरिष्क्रिया ।
निमन्त्रणन्तु वा श्राद्धे आरम्भः स्यादिति
श्रुतिः ॥”
पाकपरिष्क्रियेति साग्नेर्दर्शश्राद्धविषयम् ।
तत्रैव
तस्याग्न्युद्धरणविधानेन
तदग्निपाकस्यासाधा-
रणत्वात् ॥ * ॥ सङ्कल्पविधानन्तु
संवत्सरप्रदीपे ।
“प्रातःसन्ध्यां ततः कृत्वा सङ्कल्पं बुध
आचरेत् ।”
शान्तिपर्व्वणि ।
“गृहीत्वौडुम्बरं पात्रं वारिपूर्णमुदङ्मुखः ।
उपवासन्तु गृह्णीयाद्यद्वा सङ्कल्पयेद्बुधः ॥
देवतास्तस्य तुष्यन्ति कामिकं तस्य
सिध्यति ।
अन्यथा तु वृथा मर्त्त्याः क्लिश्यन्ति
स्वल्प-
बुद्धयः ॥”
यद्वेति पक्षान्तरम् । तेन ताम्रपात्राभावे
सङ्कल्पमात्रं करणीयम् ॥ * ॥
गृहीतव्रताकरणे
दोषमाह छागलेयः ।

कादशी १० श्रावणी कृष्णाष्टमी
श्रीकृष्णजन्मा-
ष्टमी ११ भाद्रशुक्ला चतुर्थी शिवा
चतुर्थी १२
तस्य शुक्ला षष्ठी चपेटा षष्ठी १३
तस्य शुक्ला
सप्तमी ललिता सप्तमी तत्र
कुक्कुटीव्रतम् १४
तस्य शुक्लाष्टमी दूर्व्वाष्टमी १५
राधाष्टमी च
१६ तस्य शुक्ला नवमी तालनवमी
१७ तस्य
शुक्लैकादश्यां पार्श्वपरिवर्त्तनव्रतम्
१८ तस्य
शुक्ला द्वादशी श्रवणद्वादशी १९
तस्य शुक्ला
चतुर्द्दशी अनन्तचतुर्द्दशी २० तस्य
कृष्णा
चतुर्थी गणेशचतुर्थी २१
आश्विनशुक्लाष्टमी
महाष्टमी २२ कार्त्तिकशुक्ला नवमी
दुर्गानवमी
२३ तस्य शुक्लैकादशी
उत्थानैकादशी २४ तस्य
शुक्ला चतुर्द्दशी पाषाणचतुर्द्दशो २५
तन्मासी-
यैकादश्यादिपञ्चतिथ्यात्मकं
वकपञ्चकम् २६
वृश्चिकसंक्रान्त्यां सर्व्वजयाव्रतम् २७
कार्त्ति-
केयव्रतञ्च २८ अग्रहायणस्य शुक्ला
षष्ठी गुह-
षष्ठी २९ तस्य शुक्ला सप्तमी
मित्रसप्तमी ३०
तस्य शुक्ला द्वादशी अखण्डा द्वादशी
३१ माघ-
शुक्ला चतुर्थी वरदा चतुर्थी ३२ तस्व
शुक्ल-
पञ्चम्यां श्रीपञ्चमीव्रतं षड्वर्षनिष्पाद्यम्
३३
तस्य शुक्ला षष्ठी शीतला षष्ठी ३४
तस्य शुक्ला

कर्त्तव्यः । वशिष्ठः । श्मश्रुकेशनखान् वापयेदक्षि-
लोमशिखावर्ज्जम् । केशधारणेच्छायां द्विगुण-
व्रतमाह हारीतः ।
“राजा वा राजपुत्त्रो वा ब्राह्मणो वा बहुश्रुतः ।
केशानां वपनं कृत्वा प्रायश्चित्तं समाचरेत् ॥
केशानां धारणार्थन्तु द्विगुणं व्रतमाचरेत् ।
द्विगुणे तु व्रते चीर्णे दक्षिणा द्विगुणा भवेत् ॥” *
स्त्रियाः केशवपनं न कार्य्यमित्याह बौधायनः ।
कृच्छ्रेत्रिसवनमुदकोपस्पर्शनमधःशयनमेकवासता
केशश्मश्रुनखरोमवापनंएतदेव स्त्रियाः केश-
वपनवर्ज्जम् । पञ्चगव्यघृतप्राशनयोर्व्विकल्पः ।

| | | |
|---|---|---|
| “पूर्वं व्रतं गृहीत्वा यो नाचरेत्<br>काममोहितः ।<br>जीवन् भवति चाण्डालो मृतः श्वा चैव<br>जायते ॥ | सप्तमी आरोग्यसप्तमी ३५ तस्य<br>शुक्लैकादशी<br>भीमैकादशी ३६ तद्द्वादशी<br>वराहद्वादशी ३७<br>तस्य कृष्णा चतुर्द्दशी शिवरात्रिः ३८<br>फाल्-<br>गुनशुक्ला द्वादशी गोविन्दद्वादशी ३९<br>चैत्र-<br>कृष्णा षष्ठी स्कन्दषष्ठी ४०<br>चैत्रशुक्लाष्टमी<br>अशोकाष्टमी ४१ तस्य शुक्ला नवमी<br>श्रीराम-<br>नवमी ४२ तस्य शुक्ला त्रयोदशी<br>मदनत्रयो-<br>दशी ४३ । इति स्मृतिः ॥ * ॥<br>अयाचितव्रतं<br>नक्तव्रतं उमामाहेश्वरव्रतं<br>शङ्करनारायणव्रतं | |

तथा शङ्खलिखितौ ।
“वाप्य केशनखान् पूर्ब्बं घृतं प्राश्य वहिर्निशि ।
प्रत्येकं नियतं कालमात्मनो व्रतमादिशेत् ॥
प्रायश्चित्तमुपासीनो वाग्यतस्त्रिसवनं स्पृशेत् ।
एकवासार्द्रवासा वा लघ्वाशी स्थण्डिलेशयः ॥
स्नानी वीरासनी मौनी मौञ्जी दण्डकमण्डलुम् ।
भैक्षचर्य्याग्निकार्य्यञ्च कुष्माण्डैर्जुहुयाद्घृतम् ॥”
प्रत्येकं नियतं कालमिति व्रतसंख्या सङ्कल्प-
वाक्ये उल्लेखनीया इत्यर्थः । वीरासनी भित्त्या-
द्यनाश्रितः । दण्डकमण्डलुं आर्षत्वात् मतुपो
लोपेन तेनैतद्युक्त इत्यर्थः । कुष्माण्डैर्यद्देवा
देवहेलनमित्यादिमन्त्रैः । मनुः ।
“महाव्याहृतिभिर्होमः कर्त्तव्यः स्वयमन्व-
हम् ।
अहिंसासत्यमक्रोधमार्ज्जवञ्च समाचरेत् ।
त्रिरह्नस्त्रिर्निशायाञ्च सवासा जलमाविशेत् ॥”
त्रिरह्नस्त्रिर्निशायाञ्च इति षट्स्नानविषयमिदम् ।
पिपीलिकामध्यचान्द्रायणादितप्तकृच्छ्रवर्ज्जं फला-
तिशयार्थं वहुषु त्रिसवनविधानात् । तथा ।
“स्त्रीशूद्रपतितांश्चैव नाभिभाषेत कर्हिचित् ।
स्नानासनाभ्यां विहरेदशक्तोऽधःशयी भवेत् ॥
ब्रह्मचारी व्रती च स्याद्गुरुदेवद्विजार्च्चकः ।
सावित्रीञ्च जपेन्नित्यं पवित्राणि च शक्तितः ॥
सर्व्वेषु च व्रतेष्वेवं प्रायश्चित्तार्थमादृतः ॥”
ब्रह्मचारी मैथुनवर्ज्जं व्रती छत्रोपानहमाल्या-
ञ्जनगन्धादिवर्ज्जम् । शूद्रेण सावित्रीजपस्थाने
नारायणादिमन्त्रजपः कार्य्यः । अन्यद्वारा वा
कारयितव्यः । एवमन्यत्रापि । यथा वराह-
पुराणम् ।
“अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते ॥”
जावालः ।
“आरम्भे सर्व्वकृच्छ्राणां समाप्तौ च विशेषतः ।
आज्येनैव हि शालाग्नौ जुहुयाद्ब्याहृतीः
पृथक् ॥
आद्धं कुर्य्याद्व्रतान्ते च गोहिरण्यादिदक्षि-
णाम् ।
गृहे गृही वसन् कुर्व्वन् ब्रह्मलोके महीयते ॥
स्त्रीणां होमो न कर्त्तव्यः पञ्चगव्यन्तथैव च ।
शूद्राणां पापिनाञ्चैव संवादं न च कारयेत् ॥
संवादस्तु न कर्त्तव्यस्त्रिवर्णैश्च कदाचन ।
ब्राह्मणेनैव वक्तव्य उत्पन्ने प्राणसंशये ॥”

“असंस्कृतो निरुत्साहो रोगी
नवतिजीवकः ।
यथाशक्ति प्रकुर्व्वीत व्रतं ह्येषु न लुप्यते
॥”
अशक्तावन्यद्वारापि कार्य्यमिति उक्तञ्च
ब्रह्म-
पुराणे ।
“रोगी वृद्धस्तु पोगण्डः कुर्व्वन्त्यन्यैर्व्रतं
सदा ।
चतुर्थाद्वत्सरादूर्द्ध्वमष्टमं यावदेव हि ॥
शिशोर्व्रतं प्रकुर्व्वीरन्
गुरुसम्बन्धिबान्धवाः ।
गुर्व्विणी बालवत्सा च रोगी द्रव्यपरायणः
॥
एते नक्तेषु भुञ्जन्ति बाला मध्याह्न एव च
।
व्रतस्थः प्राणरक्षार्थं कदाचिदुदकं पिबेत्
॥
फलमूले तथा क्षीरं यज्ञशिष्टं तथा हविः
।
व्रतमध्ये तु रोगार्त्तो वैद्यप्रोक्तमथौषधम
॥
करोति च गुरोर्व्वाक्यं
व्रतस्थस्तत्क्षणादपि ।
ब्राह्मणस्याभिलषितं साधयेदविचारयन्
॥
एतान्यष्टौ व्रतस्थानामव्रतघ्नानि
कुत्रचित् ।
व्रतेष्वेतेषु देवांस्तान् व्रतस्थस्तु
प्रपूजयेत् ॥”
पोगण्डो बालः । द्रव्यपरायणः कुटुम्बी
द्रव्या-
र्जनपालनपरः सन्नित्यर्थः । बौधायनः ।
“अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं
पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्व्वचनमौषधम्
॥”
हारीतयमौ ।
“वलयश्चोपहारश्च हवींषि चरवस्तथा ।
निर्व्विशङ्केन भोक्तव्यं व्रतमस्य न लुप्यते
॥”

उपपातकयुक्तानामनादिष्टेषु चैव हि ॥
प्रकाशे च रहस्ये च अभिसन्ध्याद्यपेक्षया
।
जातिशक्तिगुणान् दृष्ट्वा सकृद्बुद्धिकृतं तथा
।
अनुबन्धादिकं दृष्ट्वा सर्व्वं कार्य्यं
यथाक्रमम् ॥”
इति प्रायश्चित्ततत्त्वम् ॥ * ॥
द्वादशवार्षिकादिव्रतं प्रायश्चित्तविवेकादौ
द्रष्ट-
व्यम् ॥

**व्रततिः**, स्त्री, (प्र + तन विस्तारे + क्तिच् ।
पृषोदरादित्वात् पस्य वः ।) विस्तारः ।
लता ।
इत्यमरः ॥ (यदा, ऋग्वेदे । ८ । ४० । ६
।
“अपि वृश्च पुराणवद्व्रततेरिव
गुष्पितमोजो दासस्य दम्भय ॥”
“व्रततेरिव यथा लताया गुष्पितं निर्गतां
शाखां
वृश्चति ।” इति तद्भाष्ये सायणः ॥)

**व्रतती**, स्त्री, (व्रतति + पक्षे ङीष् ।) विस्तारः ।
लता । इति भरतद्विरूपकोषः ॥ (यथा,
रघुः । १४ । १ ।
“अपश्यतां दाशरथी जनन्यौ
छेदादिवोपघ्नतरोर्व्रतत्यौ ॥”)

**व्रतभिक्षा**, स्त्री, (व्रते उपनयनकाले भिक्षा ।)
उपनयनकालीनभिक्षा । तस्या विधिर्यथा
।
अथ भैक्ष्यञ्चरति । अथ
शब्दस्तूष्णीमादित्योप-
स्थानमग्निप्रदक्षिणञ्च शंसति ।
“प्रतिगृह्येप्सितं दण्डमुपस्थाप च
भास्करम् ।
प्रदक्षिणं परीत्याग्निं चरेत् भैक्ष्यं यथाविधि
॥”
इति मनुवचनात् ॥
भिक्षासमूहं भैक्ष्यं तच्चरति आवहति
इत्यर्थः ।

श्राद्धमिति शुद्ध्यर्थं श्राद्धं दर्शितम् । स्त्रीभि-
र्होमो न कर्त्तव्यः पञ्चगव्यपानञ्च कृत्यानां
कर्त्तरि वेति षष्ठी । प्रारब्धव्रतपीडया प्राण-
संशये । अन्ये वर्णा न प्रष्टव्या ब्राह्मण एव
प्रष्टव्यः । व्रतं मौनं पूर्ब्बोक्तं । तत्र विशेषमाह
आपस्तम्बः । तत्र मौनमुक्तं त्रैविद्यवृद्धैर्मुनिभि-
रन्यैराश्रमिभिर्ब्बहुशुतैर्दन्तैर्द्दन्तान् सन्धायान्त-
र्मुख एव यावद्यावदर्थं भाषते न मन्त्रलोपो
भवतीति विज्ञायते । मन्त्रलोपो व्रतलोपः ।
बालवृद्धादिभिरङ्गहीनमपिव्रतं कार्य्यमित्याह
कघुविष्णुः ।

वलिर्वैश्यदेवादिदेवताभ्यो दत्तः ।
उपहारो
नैवेद्यम् । चरुः पार्व्वणस्थालीपाकादि ।
अत्र
चैषां दत्तावशिष्टं भक्षणीयमिति । देवलः
।
“उपवासो विनश्येत
दिवास्वप्नाक्षमैथुनैः ।
अत्यये जलपानेन नोपवासः प्रणश्यति
॥”
वृद्धशातातपः ।
“गन्धालङ्कारवस्त्राणि
पुष्पमाल्यानुलेपनम् ।
उपवासे न दुष्यन्ति दन्तधावनमञ्जनम्
॥”
अलङ्कारवस्त्रसिन्दूरादि उपवासेन हेतुना
इत्यर्थः । तथा ।
“स्त्रीणां सम्प्रेक्षणात् स्पर्शात् ताभिः
संकथना-
दपि ।
ब्रह्मचर्य्यं विपद्येत न दारसङ्गमादपि ॥”
संप्रेक्षणात् संकथनात् इति अत्र
सरागत्वं
संशब्दस्यार्थः । इति प्रायश्चित्तविवेकः
॥ * ॥
प्रायश्चित्तात्मकव्रतानियथा ।
विश्वामित्रः ।
“कृच्छ्रचान्द्रायणादीनि
शुद्ध्यभ्युदयकारणम् ।
प्रकाशे च रहस्ये च संशयेऽनुक्तकेऽस्फुटे
॥
प्राजापत्यः सान्तपनः शिशुकृच्छ्रः
पराककः ।
अतिकृच्छ्रः पर्णकृच्छ्रः सौम्यः
कृच्छ्रातिकृच्छ्रकः ॥
महासान्तपनः शुद्ध्यै तप्तकृच्छ्रस्तु
पावनः ।
जलोपवासकृच्छ्रस्तु ब्रह्मकूर्च्चस्तु
शोधकः ॥
एते व्यस्ताः समस्ता वा
प्रत्येकमेकशोऽपि वा ।
पातकादिषु सर्व्वेषु पापकेषु प्रयत्नतः ॥

मातरमेवाग्रे ये चान्ये सुहृदो यावत्यो वा
सन्निहिताः स्युः । याचते इत्यध्याहार्य्यम्
।
सुहृदे स्निग्धहृदये स्वस्राद्ये । तथा च
मनुः ।
“मातरं वा स्वसारं वा मातुर्व्वा भगिनीं
निजाम् ।
भिक्ष्येत भिक्षां प्रथमां या चैनं नावमानयेत्
॥”
सन्निहितास्तद्देशस्थाः न तु प्रतिगृहं गत्वा
।
भवति भिक्षां देहीति ब्राह्मणभिक्षाप्रयोगः ।
तथा च मनुः ।
“भवत्पूर्व्वं चरेत् भैक्ष्यमुपनीतद्विजोत्तमः
।
भवन्मध्यन्तु राजन्यो वैश्यस्तु भवदुत्तरम्
॥
आदिमध्यावसानेषु भवच्छब्दोपलक्षिता ।
ब्राह्मणक्षत्त्रियविशां भैक्ष्यचर्य्या
यथाक्रमम् ॥”
इति याज्ञवल्क्यवचनाच्च ॥ इति
संस्कारतत्त्वम् ॥

**व्रतसंग्रहः**, पुं, (व्रतस्य संग्रहः ।) दीक्षा । इति
हेमचन्द्रः ॥

**व्रतादेशः**, पुं, (व्रतस्यादेशः ।) उपनयनम् । यथा,
“आदन्तजननात् सद्य
आचूडादेकरात्रकम् ।
त्रिरात्रमाव्रतादेशात् दशरात्रमतः परम् ॥”
इति शुद्धितत्त्वम् ॥

**व्रती**, [न्] पुं, (व्रतमस्यास्तीति । व्रत + इनिः ।)
यजमानः । इत्यमरः ॥ (ब्रह्मचारी । यथा,
मनुः । २ । १८८ ।
“भैक्षेण वर्त्तयेन्नित्यं नैकान्नादी भवेद्व्रती
।
भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता
॥”)

| | | |
|---|---|---|
| | कार्य्याश्चान्द्रायणैर्युक्ताः केवला वा विशुद्धये ।<br>शिशुचान्द्रायणं प्रोक्तं यतिचान्द्रायणं तथा ॥<br>यवमध्यं तथा प्रोक्तं तथा पिपीलिकाकृति ।<br>उपवासस्त्रिरात्रन्तु मासः पक्षस्तदर्द्धकम् ॥<br>षडहर्द्वादशाहादि कार्य्यं शुद्धिफलार्थिना । | |

व्रतविशिष्टे, त्रि । यथा, --
"तिथ्यन्ते चोत्सवान्ते वा व्रती कुर्व्वीत पार-
णम् ॥"
इति तिथ्यादितत्त्वम् ॥

**वश्च**, ऊ श छेदे । इति कविकल्पद्रुमः ॥ (तुदा०-
पर०-सक०-वेट् ।) दन्त्योपधः चयोगात्
तालव्यः ।
तेन क्विपि शच्छ्राजेति षङि निमित्ताभावे
नैमि-
त्तिकस्याप्यभाव इति न्यायात् तालव्यस्य
दन्त्यत्वे
संयोगादेः सस्य लोपे सुवृट् इति । तथा च
।
"नकारजावनुस्वारपञ्चमौझलि धातुषु ।
सकारजः शकारः स्यात् षाट्टवर्गस्तवर्गजः
॥"
इति वोपदेवः ॥
अस्यार्थः । धातुषु मध्ये झलि झसे परे
अनु-
स्वारपञ्चमौ नकारजौ ज्ञेयौ
तालव्यशकारश्च
दन्त्यसकारजातः मूर्द्धन्यषकारात्
परष्टवर्गोऽपि
तवर्गजातो ज्ञेय इति । ञिष्ठास्थाने इत्यादी-
नाञ्च थकारादिप्रकृतित्वे तस्थौ
इत्यादिबोध्यम् ।
ऊ, अव्रश्चीत् अव्राक्षीत् । श, वृश्चति ।
इति
दुर्गादासः ॥

**व्रश्चनं**, क्ली, (व्रश्च + ल्युट् ।) छेदनम् । व्रश्चधातो-
रनट्प्रत्ययेन निष्पन्नम् ॥ (यथा, शतपथ-
ब्राह्मणे । ३ । ६ । ४ । ७ ।
"स रातमना व्रश्चनाय भवति ॥")

**व्रश्चनः**, पुं, (व्रश्चति छिनत्ति पतिकृतीरिति ।
व्रश्च + ल्युः । यद्वा, वृश्चत्यनेनेति करणे
ल्युट् ।)
स्वर्णादिच्छेदिका । छेनी इति भाषा । तत्-
पर्य्यायः । पत्रपरशुः २ । इत्यमरः ॥ पत्र-
(मनुष्यः । इति निघण्टुः । २ । ३ । "वृञ्
वरणे
'तातव्रातलातसुपित्त' इत्यादिसूत्रेण भोज-
राजेन कृतप्रत्यये आडागमो निपात्यते ।
वृण्वन्ति स्वमभिमतं देवताभ्यः
तपसाराधितेभ्यः
प्रव्रियन्ते वा यज्ञादौ । यद्वा, व्रातो
धान्यादि-
सञ्चयः । तद्वन्तो व्राता मत्वर्थीयोऽकारः ।
यद्वा, व्रतमिति कर्म्मनाम अन्नं वा ।
अन्नमपि
व्रतायैतस्मादेवेत्युक्तेः तदीयाः 'तस्येदम्'
इत्यण् ।
'कर्म्मणा जायते जन्तुः कर्म्मणैव प्रमुच्यते'
इत्युक्तेः
कर्म्मणामधिकारित्वाच्च मनुष्याणां
कर्म्मसम्बन्धि-
त्वम् । 'अथो अन्नाद् भूतानि जायन्ते
जाता-
न्यन्नेन वर्द्धन्ते' इति । अन्नात् रेतो रेतसः
पुरुषः
इति च श्रुतेः मनुष्याणामन्नसम्बन्धित्वम् ।"
इति तट्टीकायां देवराजयज्वा ॥ अस्मिन्नर्थे
प्रायशो बहुवचनप्रयोगो दृश्यते ॥ * ॥
क्ली,
शरीरायासजीविकर्म्म । इति काशिका । ५
।
२ । २१ ॥)

**व्रातीनः**, पुं, (शरीरायासेन ये जीवन्ति तेषां
कर्म्म व्रातं तेन जीवतीति । व्रात + "व्रातेन
जीवति ।" ५ । २ । २१ । इति खञ् ।)
संघ-
जीवी । इति हेमचन्द्रः ॥ (यथा, भट्टिः । ४
। १२ ।
"व्रातीनव्यालदीप्रास्त्रः सुत्वनः परिपूज-
यन् ॥")

**व्रात्यः**, पुं, (व्रातो व्यालादिः स इव । "शाखा-
दिभ्यो यत् ।" ५ । ३ । १०३ । इति यत्
।)

**व्रात्यस्तोमः**, पुं, यज्ञविशेषः । यथा, --
"सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते
क्रतोः ॥
इति गारुडे ९४ अध्याये ॥ तथा, याज्ञवल्क्ये
।
१ । ३८ ॥

**व्री**, ग गि वृत्याम् । इति कविकल्पद्रुमः ॥ (क्र्या०-
प्या०-पर०-सक०-अनिट् ।) रेफोपधः । गि,
व्रिणाति । व्रीणः वीणिः । ग, यो व्रीणाति जय-
श्रियं रणमुखे । व्रीतः व्रीतिः । इति दुर्गादासः ॥

**व्री**, य ङ ओ गतौ । वृत्याम् । इति कविकल्पद्रुमः ॥
(दिवा० आत्म०-सक०-अनिट् ।) रेफोपधः ॥
य ङ, व्रीयते । ओ, व्रीणः । इति दुर्गादासः ॥

**व्रीड**, य ञि क्षिपि । लज्जे । इति कविकल्पद्रुमः ॥
(दिवा०-पर०-सक०-लज्जे-अक०-सेट् ।)
रेफ-
युक्तः । य, व्रीड्यति बाणं चापः । व्रीड्यति
बधूः ।
ञि, व्रीडितोऽस्ति । इति दुर्गादासः ॥

**व्रीडः**, पुं, (व्रीड + भावे घञ् ।) लज्जा । इत्य-
मरः ॥ (यथा, कुमारे । ७ । ६७ ।
"न नूनमारूढरुषा शरीर-
मनेन दग्धं कुसुमायुधस्य ।
व्रीडादमुं देवमुदीक्ष्य मन्ये
सन्न्यस्तदेहः स्वयमेव कामः ॥")

**व्रीडनं**, क्ली, (व्रीड + ल्युट् ।) लज्जा । यथा, --
"अथ मन्दाक्षमन्दास्यं लज्जा लज्या च
ह्रीस्त्रपा ।
व्रीडो व्रीडा व्रीडनञ्च लज्जापर्य्याय ईरितः ॥"
इति शब्दरत्नावली ॥

**व्रीडा**, स्त्री, (व्रीड + "गुरोश्च हलः ।" ३ । ३ ।
१०३ । इत्यः । टाप् ।) लज्जा । इत्यमरः ॥
(यथा आर्य्यासप्तशत्याम् । ३५७ ।
"प्रातरुपागत्य मृषा वदतः सखि नास्य विद्यते
व्रीडा ।
मुखलग्नयापि योऽयं न लज्जते दग्धकालि-
कया ॥")

पर्शुः ३ । इति शब्दरत्नावली ॥
स्वर्णलोहादि-
भेदकः ४ । इति जटाधरः ॥
वृक्षच्छेदनजात-
निर्यासः । यथा, --
"देवतार्थं हविः शिग्रुं लोहितान्
व्रश्चनांस्तथा ।
अनुपाकृतमांसानि विड्जानि कवकानि च
॥"
इति याज्ञवल्क्यः ॥
व्रश्चनान् वृक्षच्छेदनजातान् लोहितानपि ।
यथा, मनुः ।
"लोहितान् वृक्षनिर्यासान्
व्रश्चनप्रभवांस्तथा ।"
इति मिताक्षरायामाचाराध्यायः॥
(करणे ल्युटि तस्य कुठारादिवाचकता
विशेष्य-
लिङ्गता च । यथा, कातन्त्रे कृत्सु करणाधि-
करणयोश्चेत्यत्र कलापचन्द्रः । "युडन्तश्च
शब्दः प्रायो विधेयलिङ्गग्राही यथा व्रश्चनः
कुठारो गोदोहनी घटी टङ्कः पाषाणदारण
इति ॥")

**व्राजिः**, स्त्री, (व्रजति गच्छतीति । व्रज गतौ +
"वसिवपियजीति ।" उणा० ४ । १२४ ।
इति
इञ् ।) वायुः । व्रजधातोरौणादिकेञ्प्रत्ययेन
निष्पन्नमेतत् ॥

**व्रातः**, पुं, समूहः । इत्यमरः ॥ (यथा, भागवते ।
४ । २५ । १९ ।
"बानारण्यमृगव्रातैरनाबाधे मुनिव्रतैः ।
आहूतं मन्यते पान्थो यत्र कोकिलकूजितैः
॥")
व्याधादिः । इति व्रात्यशब्दटीकायां भरतः
॥

दशसंस्काररहितः । षोडशवर्षादूर्द्ध्वं
अकृतव्रत-
बन्धो भ्रष्टगायत्रीको वा । इति भरतः ॥
तत्-
पर्य्यायः । संस्कारहीनः २ । इत्यमरः ॥
सावित्री-
पतितः ३ वाग्दुष्टः ४ पुरुषोक्तिकः ५ । इति
जटाधरः ॥ तस्य प्रायश्चित्तादि यथा, --
"अथ व्रात्यविधिं देवि ! प्रायश्चित्तन्तु
यद्भवेत् ।
तत् शृणुष्व महेशानि सर्व्ववर्णे विशेषतः ॥
दश वर्षाणि पञ्चैव ब्राह्मणश्चोपनीयते ।
एकविंशतिवर्षाणि यावद्वर्षमुपावशेत् ।
अत ऊर्द्ध्वं पतन्नेव सर्व्वधर्म्मबहिष्कृतः ॥
गायत्रीपतिता व्रात्या व्रात्यस्तोमेन
संस्कृतः ।
अशक्ते चैव यज्ञस्य चरेदौद्दानिकं व्रतम् ॥
द्वौ मासौ यावकाहारो मासमेकं पयः पिबेत्
।
दध्ना च पक्षमेकन्तु सप्तरात्रं घृतेन तु ॥
अयाचितेन षड्रात्रं त्रिरात्रं बर्त्तयेज्जलैः ।
अहोरात्रं न भुञ्जीत ततः संस्कारमर्हति ॥
पतिता यस्य गायत्री दश वर्षाणि पञ्च च ।
प्रायश्चित्तं भवेत्तस्य प्रोवाच भगवान् शिवः
॥
सशिखं वपनं कृत्वा व्रतं कुर्य्यात् समाहितः
।
हविष्यं भोजयेदन्नं ब्राह्मणान् सप्त पञ्च वा ॥
एकविंशतिरात्रन्तु पिबेत् प्रसृतियावकम् ।
ततो यावकशुद्धस्य तस्योपनयनं स्मृतम् ॥
व्रतस्याचरणाशक्तौ कुर्य्याच्चान्द्रायणत्रयम्
।
सावित्रीपतिता येषां देशकालादिविप्लवात्
॥
चान्द्रायणं चरेद्यस्तु व्रतान्ते धेनुमुत्सृजेत् ।
क्षीरंवापि पिबेन्मासं दद्याद्गां
वत्सशालिनीम् ॥"
इति मत्स्यसूक्ते प्रायश्चित्तप्रकरणे ३८
पटलः ॥

**व्रीस**, कि वधे । इति कविकल्पद्रुमः ॥ (चुरा०-पक्षे
भ्वा०-सक०-सेट् ।) कि, व्रीसयति व्रीसति ।
इति दुर्गादासः ॥

**व्रीहिः**, पुं, (वर्हति वृद्धिं गच्छतीति । वृह वृद्धौ
+ "इगुपधात् कित् ।" उणा० ४ । ११९ ।
इति
इन् । पृषोदरादित्वात् साधुः ।) धान्यमात्रम् ।
आशुधान्यम् । इत्यमरः ॥ अस्य सामान्यनाम-
गणना गुणाश्च यथा, --
"धान्यं भोग्यञ्च भोगार्हमन्नाद्यं जीवसाधनम् ।
तच्च तावत्त्रिधा ज्ञेयं शूकशिम्बीतृणाह्वयम् ॥
व्रीह्यादिकं यदि ह शूकसमन्वितं स्यात्
यत् शूकधान्यमयमुद्गमकुष्टकादि ।
शिम्बीनिगूढमिति तत्प्रवदन्ति शिम्बी-
धान्यं तृणोद्भवतया तृणधान्यमन्यत् ।
तत्र त्रिदोषशमनं लघु शूकधान्यं
तेजोबलातिशयवीर्य्यविवृद्धिदायि ।
शिम्बीभवं गुरु हिमञ्च विबन्धदायि
वातालकन्तु शिशिरं तृणधान्यमाहुः ॥

देशे देशे शूकधान्येषु संख्या
ज्ञातुं शक्या नैव तैर्द्दैवतैर्व्वा ।
अस्मादेषां येषु भोगोपभोगा-
स्तान्यस्माभिर्व्याक्रियन्तेकियन्ति ॥
शालयः कलमा रुच्या व्रीहिश्रेष्ठा नृपप्रियाः ।
धान्योत्तमाश्च विज्ञेयाः कैदाराः सुकुमारकाः ॥
राजान्नषष्टिकसितेत्तररक्तमुण्ड-
स्थूलाणुगन्धतिरियादिकशालिसंज्ञाः ।
व्रीहिस्तथेति दशधा भुवि शायनाः स्यु-
स्तेषां क्रमेण गुणनामगणं ब्रवीमि ॥
व्रीहिर्गौरो मधुरशिशिरः पित्तहारी कषायः
स्निग्धो वृष्यः कृमिकफहरस्तापरक्तापहश्च।
पुष्टिं दत्ते श्रमशमनकृद्वीर्य्यवृद्धिं विधत्ते
रुच्योऽत्यन्तं जनयति मुदं
वातकृन्मेचकोऽन्यः ॥"
इति राजनिर्घण्टः ॥
अपि च ।
"वार्षिकाः काण्डिताः शुक्ला व्रीहयश्चिर-
पाकिनः ।
कृष्णव्रीहिः पाटलश्च कुक्कुटाण्डक इत्यपि ॥
शालमुखो जतुमुख इत्याद्या व्रीहयः स्मृताः ।
कृष्णव्रीहिः स विज्ञेयो यत्कृष्णतुषतण्डुलाः ॥
पाटलः पाटलापुष्पवर्णको व्रीहिरुच्यते ।
कुक्कुटाण्डाकृतिर्व्रीहिः कुक्कुटाण्डक उच्यते ॥
शालमुखः कृष्णशूकः कृष्णतण्डुल उच्यते ।
लाक्षावर्णमुखं तस्य ज्ञेयो जतुमुखस्तु सः ॥
व्रीहयः कथिताः पाके मधुरा वीर्य्यतो हिमाः ।
अल्पाभिष्यन्दिनो बद्धवर्च्चस्काः षष्टिकैः
समाः ॥
कृष्णव्रीहिर्व्वरस्तेषां तस्मादल्पगुणाः परे ॥"
इति भावप्रकाशः ॥
तस्य यज्ञीयत्वं यथा, --
"यज्ञार्थं तन्तु भूतानां भक्ष्यमित्येव वै श्रुतिः ।
दिव्यो भौमस्तथा पैत्रो मानुषो ब्राह्म एव च ॥
एते पञ्च महायज्ञा ब्रह्मणा निर्म्मिताः पुरा ।
ब्राह्मणानां हितार्थाय इतरेषां च तन्मुखाः ॥
इतरेषां तु वर्णानां ब्राह्मणैः कारिताः शुभाः ।
एवं कृत्वा नरो भुक्त्वास्माद्धरित्रि ! विशुध्यति ॥
"तिलैर्व्रीहियवैर्मषैरद्भिर्मूलफलेन वा ।
दत्तेन मासं प्रीयन्ते विधिवत् पितरो नृणाम् ॥"
व्रीहिः शरत्पक्वधान्यम् । याज्ञवल्क्यः ।
"हविष्यान्नेन वै मासं पायसेन च वत्सरम् ।
मात्स्यहारिणकौरभ्रशाकुनिच्छागपार्षतैः ॥
ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम् ।
मासवृद्ध्याभितृप्यन्ति दत्तेनेह पितामहाः ॥"
हरिष्यान्नेन शालिव्रीह्यन्नेन । इति । अमा-
वास्यास्त्रिस्रोऽष्टका माघी प्रौष्ठपद्यूर्द्ध्वं
कृष्णत्रयो-
दशी व्रीहियवपाकौ च ।
"एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजा-
पतिः ।
श्राद्धमेतेष्वकुर्व्वाणो नरकं प्रतिपद्यते ॥"
इति विष्णुवचनं नवान्नागमश्राद्धस्यैव व्रीहि-
यवोभयप्राप्तिविषयकत्वेन विधायकं ग्रैष्मादि-
धान्यव्युदासाय । शालिधान्यस्य तु प्राप्तिः ।
"शरद्वसन्तयोः केचित् नवयज्ञं प्रचक्षते ।
धान्यपाकवशादन्ये श्यामाको वनिनः स्मृतः ॥"
इति छन्दोगपरिशिष्टे व्रीह्यप्राप्त्या नवशस्येऽष्टौ-
शालिविधानात् यज्ञतुल्यन्यायात् श्राद्धेऽपि तथा
कल्पनात् । इति च श्राद्धतत्त्वम् ॥ * ॥ नवान्न-
श्राद्धकालो यथा । विष्णुः । अमावस्यास्तिस्रो-
ऽष्टकास्तिस्रोऽन्वष्टका माघी प्रौष्टपद्यूर्द्ध्वं कृष्ण-
त्रयोदशी व्रीहियवपाकौ च ।
"एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः ।
श्राद्धमेतेष्वकुर्व्वाणो नरकं प्रतिपद्यते ॥
व्रीहिपाके च कर्त्तव्यं यवपाके च पार्थिव ।
न तावाद्यौ महाराज विना श्राद्धं कथञ्चन ॥"
इति मलमासतत्त्वम् ॥
तेन यागकरणं यथा, --
व्रीहिभिर्यजेत यवैर्यजेत इति श्रूयते ॥ तत्र
"व्रीहिप्रयोगे प्रतीतयवप्रामाण्यपरित्यागः।
अप्रतीतयवाप्रामाण्यकल्पनम्।" इत्येकादशी-
तत्त्वम् ॥ * ॥ व्रीह्यप्राप्तौ शालिधान्येन कर्म्म-
करणं यथा, --
"यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् ।
यवानामिव गोधूमा व्रीहीणामिव शालयः ॥"
इति तिथ्यादितत्त्वम् ॥

**व्रीहिकः**, त्रि, (व्रीहिरस्यास्तीति । व्रीहि +

**व्रीहिकाञ्चनः**, पुं, (व्रीहिः काञ्चनमिव । अभि-
धानात् पुंस्त्वम् ।) मसूरः । इति
त्रिकाण्डशेषः ॥

**व्रीहिपर्णी**, स्त्री, (व्रीहेः पर्णमिव पर्णमस्याः ।
ङीष् ।) शालपर्णी । इति राजनिर्घण्टः ॥

**व्रीहिभेदः**, पुं, (व्रीहेर्भेदः ।) धान्यविशेषः ।
चिना इति ख्यातः । तत्पर्य्यायः ।
अनुः २ ।
इत्यमरः ॥

**व्रीहिमयः**, पुं, (व्रीहेः पुरोडाशः । व्रीहि + "व्रीहेः
पुरोडाशे ।" ४ । ३ । १४८ । इति
मयट् ।)
व्रीहिनिर्म्मितपुरोडाशः । इति
सिद्धान्तकौमुदी ॥
(व्रीह्यात्मके, त्रि । यथा, महाभरते ।
१३ ।
११५ । ५६ ।
"श्रूयते हि पुरा कल्पे नृणां व्रीहिमयः
पशुः ।
येनायजन्त यज्वानः
पुण्यलोकपरायणाः ॥")

**व्रीहिराजकः**, पुं, (व्रीहीनां राजा । टच् समासे ।
ततः कन् ।) कङ्गुधान्यम् ।
चीनकधान्यम् ।
इति मेदिनी ॥

**व्रीहिश्रेष्ठः**, पुं, (व्रीहिषु श्रेष्ठः) शालिधान्यम् ।
इति राजनिर्घण्टः ॥

**व्रीही**, [न्] त्रि, (व्रीहिरस्यास्तीति । व्रीहि +
"व्रीह्यादिभ्यश्च ।" ५ । २ । ११६
इति इनिः ।)
व्रीहियुक्तक्षेत्रादि । इति सिद्धान्तकौमुदी ॥

**व्रीह्यगारं**, क्ली, (व्रीहीनामगारम् ।) धान्यगृहम् ।
तत्पर्य्यायः । कुसूलः २ । इति
त्रिकाण्डशेषः ॥

| | | |
|---|---|---|
| अन्यथा व्रीहयोऽप्येते एकैके मृगपक्षिणः ।<br>मन्तव्या दातृभोक्तॄणां महामांसं तु तत्<br>स्मृतम् ॥”<br>इति वाराहे आदिकृतवृत्तान्ताध्यायः ॥<br>तेन पितृतृप्तिर्यथा । मनुः । | “व्रीह्यादिभ्यश्च ।” ५ । २ । ११६ । इति ठन्<br>।)<br>धान्यविशिष्टः । इति सिद्धान्तकौमुदी ॥ | **व्रुड**, शि संवृतिसंहत्योः । मज्जे । इति कविकल्प-<br>द्रुमः ॥ (तुदा०-कुटा०-पर०-सक०-<br>अकर्म्म-सेट् ।)<br>रेफयुक्तः । शि, व्रुडति अव्रुडीत् वुव्रोड<br>।<br>मज्जो मज्जनम् । इति दुर्गादासः ॥<br><br>**व्रूस**, कि वधे । इति कविकल्पद्रुमः ॥ (चुरा०-पक्षे<br>भ्वा०-सक०-सेट् ।) रेफयुक्तो दीर्घी ।<br>कि,<br>व्रूसयति व्रूसति । इति दुर्गादासः ॥<br><br>**व्रैहः**, त्रि, (व्रीहेरवयवो विकारो वा । व्रीहि +<br>“बिल्वादिभ्योऽण् ।” ४ । ३ । १३६ ।<br>इत्यण् ।)<br>व्रीहिनिर्म्मितः । इति सिद्धान्तकौमुदी<br>॥<br><br>**व्रैहेयः**, त्रि, (व्रीहीनां भवनं क्षेत्रम् । वीहि +<br>“व्रीहिशाल्योर्ढक् ।” ५ । २ । २ । इति<br>ढक् ।)<br>आशुधान्योपयुक्तभूम्यादिः । इत्यमरः<br>॥<br><br>**व्ली**, ग, गि गतिवृत्योः । इति कविकल्पद्रुमः ॥<br>(क्र्या०-प्या०-पर०-सक०-अनिट् ।)<br>अन्तःस्थ-<br>तृतीयोपधः । गि, व्लिनाति । व्लीनः<br>वीनिः ।<br>इति दुर्गादासः ॥ |

**शब्दकल्पद्रुमः । पञ्चमकाण्डम् ।**

**श**, तालव्यशकारः । म तु शवर्गीयप्रथमवर्णः ।
व्यञ्जनत्रिंशद्वर्णश्च । अस्योच्चारणस्थानं तालु ।
इति तन्त्रव्याकरणे ॥ (तथा च शिक्षायाम् ।१७ ।
"कण्ठ्या वहाविचुयशास्तालव्या ओष्ठजावुपू ॥")
अस्य स्वरूपं यथा, --
"शकारं परमेशानि ! शृणु वर्णं शुचिस्मिते ! ।
रक्तवर्णप्रभाकारं स्वयं परमकुण्डली ॥
चतुर्व्वर्गप्रदं देवि ! शकारं ब्रह्मविग्रहम् ।
पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं प्रिये ! ॥
रजःसत्त्वतमोयुक्तं त्रिबिन्दुसहितं सदा ।
त्रिशक्तिसहित वर्णमात्मादितत्त्वसंयुतम् ॥"
इति कामधेनुतन्त्रम् ॥ * ॥
(वङ्गीयवर्णमालायाम् ।) तल्लेखनप्रकारो यथा,
"कुञ्चिता वामतो दक्षगता च गोकृतिस्त्वधः ।
पुनरूर्द्ध्वगता तालु वह्निचन्द्रदिवाकराः ।
मात्रा भवानी विज्ञेया ध्यानमस्य प्रचक्षते ॥"
इति वर्णोद्धारतन्त्रम् ॥ * ॥
तद्वाचकानि यथा, --
"शः सव्यश्च कामरूपो कामरूपो महामतिः ।
सौख्यनामा कुमारोऽस्थि श्रोकण्ठो वृषकेतनः ॥
वृषघ्नः शयनं शान्ता सुभगा विस्फुलिङ्गिनी ।
मृत्युर्देवो महालक्ष्मीमहेन्द्रः कुलकौलिनी ॥
बाहुर्हंसो वियद्वक्त्रं हृदनङ्गाङ्कुशः खलः ।
वामोरुः पुण्डरोकात्मा कान्तिः कल्याण-वाचकः ॥"

**शं**, [म्] व्य, कल्याणम् । (यथा, राजेन्द्रकर्ण-
पुरे । ५१ ।
"यः कीर्त्तौ भवतो वतो नृपगुणैर्यः शंतनुः शन्तनुः ॥")
शुभम् । शास्त्रम् । इति शब्दरत्नावली ॥

**शः**, पुं, शिवः । शस्त्रम् । इति शब्दरत्नावली ॥

**शंयुः**, त्रि, (शंशुभमस्यास्तीति । शं + "कंशंभ्यां
वभयुस्तितुतयसः ।" ५ । २ । १३८ । इति
युस् ।) शुभान्वितः । इति त्रिकाण्डशेषः ॥
(यथा, भट्टिः । ४ । १८ ।
"कुर्व्वाणा पश्यतः शंयून् स्रग्विणी सुहसानना ॥"
पुं, बृहस्पतिपुत्त्रोऽग्निविशेषः । यथा, महा-
भारते । ३ । २१८ । २ ।
"आहुतिष्वेव यस्याग्रेर्हविषाज्यं विधीयते ।
सोऽग्निर्वृहस्पतेः पुत्त्रः शंयुर्नाम महाब्रतः ॥")

**शंवः**, पुं, मुसलाग्रस्थलौहमण्डलकः । वज्रम् ।
इति धरणिः ॥

**शंवः**, त्रि, (शमस्यास्तीति । शं + "कंशंभ्या-
मिति ।" ५ । २ । १३८ । इति वः ।) शुभा-
न्वितः । इति त्रिकाण्डशेषः ॥

**शंवरं**, क्ली, (शं वृणोतीति । वृ + अच् ।)
जलम् । इत्यमरः ॥

**शंस**, उ हिंसास्तुत्योः । इति कविकल्पद्रुमः ॥
(भ्वा०-पर०-सक०-सेट् । क्त्वावेट् ।) ताल-
व्यादिः । उ, शंसित्वा शस्त्वा । यः शंसति
सतामिति हलायुधः ॥ अनेकार्थत्वात् कथने-
ऽप्ययम् । यथा, रघौ । शशंस वाचा पुनरुक्त-
येवेति । न मे ह्रिया शंसति किञ्चिदी-
प्सितमित्यादि च । इति दुर्गादासः ॥
"ब्राह्मणाश्च महात्मानः सोमपाः शंसित-
व्रताः ॥")

**शंस्ता**, [ऋ] पुं, (शंस + "तृन्तृचौ शंसि-
क्षदादिभ्यः संज्ञायां चानिटौ ।" उणा० २ ।
९४ । इति तृन् । यद्वा, छन्दसि "ग्रसितस्क-
भितस्तभितेति ।" ७ । २ । ३४ । इति
निपातनात् साधुः ।) स्तोता । होता । इति
संक्षिप्तसारोणादिवृत्तिः ॥ (प्रशास्ता । यथा,
ऋग्वेदे । १ । १६२ । ५ ।
"होताध्वर्य्युरावया अग्निमिन्धो
ग्रावग्राभ उत शंस्ता सुविप्रः ॥"
"शंस्ता प्रशास्ता ।" इति तद्भाष्ये सायणः ॥)

**शंस्थः**, त्रि, (शं शुभे तिष्ठतीति । शम् + स्था +
"स्थः कच ।" ३ । २ । ७७ । इति कः ।) शुभा-
न्वितः । शंपूर्व्वस्थाधातोर्डप्रत्ययेन निष्पन्न-
मिदम् ॥

**शंस्थाः**, स्त्रि, (शं + स्था + "स्थः कच ।" ३ । २ ।
७७ । इति क्विप् ।) शुभान्वितः । शम्-
पूर्व्वस्थाधातोः क्विप्प्रत्ययेन निष्पन्नमेतत् ॥

**शंस्यः**, त्रि, (शंस + ण्यत् । "ईडवन्दवृशंसदुहां
ण्यतः ।" ६ । १ । २१४ । इत्याद्युदात्तः ।) हिंस्यः ।
स्तुत्यः । शन्सधातोः घ्यण्प्रत्ययेन निष्पन्नमेतत् ॥

**शक**, इ ङ त्रासशङ्कयोः । इति कविकल्पद्रुमः ॥
(भ्वा०-आत्म०-त्रासे अक०-शङ्कायां सक०-
सेट् ।) त्रासो भयम् । शङ्का संशयारोपः । इ,
शङ्क्यते व्याघ्राज्जनेन । ङ, शङ्कते पुरुषत्वं

इति योगिनीतन्त्रे ३ भागे ७ पटले वर्णाभिधानम् ॥

(काव्यादावस्य प्रथमप्रयोगे सुखं फलम् । यथा,
वृत्तरत्नाकरटीकायाम्।
"शः सुखं सस्तु खेदम् ॥"
धात्वनुबन्धविशेषः । यथा,
कविकल्पद्रुमः ।
" -- वो वृतादिः श्तुदादिकः ॥"
एतेन तुदौ ञश् व्यथे तुदति इति स्यात् ॥)

**शं**, क्ली, शुभम् । इति त्रिकाण्डशेषशब्दरत्नावल्यौ ॥ (यथा, देवीभागवते । ३ । १८ । ७ ।
"न च हर्म्ये वने शं मे दीर्घिकायां न पर्व्वते ॥")

**शंसा**, स्त्री, (शंस + अः । स्त्रियां टाप् ।) वाक्यम् । वाञ्छा । इति मेदिनी ॥ प्रशंसा ।
इति शब्दरत्नावली ॥

**शंसितः**, त्रि, (शंस + क्तः ।) निश्चितः । इति हलायुधः ॥ हिंसितः । स्तुतः । इति शन्स-
धातोः क्तप्रत्ययेन निष्पन्नमेतत् ॥ (यथा, महाभारते । १ । ११९ । २५ ।

स्थाणौ । स्थाणुर्व्वा पुरुषो वा इति संशयमारोपयतीत्यर्थः । इति दुर्गादासः ॥

**शक**, न इर् ऊ शक्ती । इति कविकल्पद्रुमः ॥

(भ्वा०-पर०-अक०-सक०-च-वेट् ।) न, शक्नो-
त्यशक्यमप्याजौ विजेतुं य इति हलायुधः ।
इर, अशकत् अशकीत् अशाक्षीत् ।
लृदित्त्वे-
नास्मान्नित्यं ङ इत्यन्ये । ऊ, शकिष्यति
शक्ष्यति । पृथकपाठादाद्यो न स्वादिः । द्वावे-
वानिमाबित्यन्ये । षष्ठस्वरानुबन्धः केषाञ्चि-
दनरोधात् । द्वावेव सकर्म्मकौ । तथा च ।

शक्योऽस्य मन्युर्भवता विनेतुमिति रघुः ।
रजः-
परिणामभेदो न शक्यते प्रत्याख्यातुमिति तत्त्व-
कौमुद्यां वाचस्पतिमिश्रः । शक्या मखेनापि
मुदोऽमराणामिति नैषधम् । इति दुर्गादासः ॥

**शक**, य ञ शक्तौ । इति कविकल्पद्रुमः ॥ (दिवा०

उभ०-सक०-सेट् ।) शक्तिर्दिवादिपक्षे क्षमा
खादिपक्षे सामर्थ्यम् । यञ, शक्यति शक्यते
दुःखं दीनः । इति दुर्गादासः ।

**शकः**, पुं, (शक + अच् ।) जातिभेदः । नृपभेदः ।

इति मेदिनी ॥ स च नृपः शकादित्यः इति
शालिवाहन इति च नाम्ना ख्यातः । तस्य
मरणदिनावधि वत्सरगणनाङ्कः शकाब्देति
नाम्ना पञ्जिकायां लिख्यते । स च म्लेच्छ-
जातिविशेषः । सत्ययुगे सगरराजेनास्य मस्त-
कार्द्धं मुण्डयित्वा वेदबाह्यत्वमकारि । यथा, --
"ततः शकान् सयवनान् काम्बोजान् पारदां-
स्तथा ।
पह्लवांश्चापि निःशेषान् कर्त्तुं व्यवसितो नृपः ॥
ते हन्यमाना बीरेण सगरेण महौजसा ।
वशिष्ठं शरणं जग्मुः सूर्य्यवंशपुरोहितम् ॥
वशिष्ठः शरणापन्नान समये स्थाप्य तानृषिः ।
सगरं वारयामास तेभ्यो दत्त्वाभयं तदा ॥
सगरस्तां प्रतिज्ञान्तु निशम्य सुमहाबलः ।
कापि यान्ति शिशुयाचिताशनाः
सूर्य्यतप्तपिठराम्बुपायिनः ॥")

**शकटहा**, [न्] पुं, (शकटं हन्तीति । हन् +

क्विप् ।) श्रीकृष्णः । इति हेमचन्द्रः ॥ (एतद्वि-
वरणं भागवगे १० स्कन्धे ७ अध्याये तथा
हरिवंशे ६१ अध्याये च द्रष्टव्यम ॥) शकट-
नाशके, त्रि ॥

**शकटाह्वा**, स्त्री, (शकटमिति आह्वा यस्याः ।)

रोहिणीनक्षत्रम । तस्याः पञ्चतारामयशकटा-
कृतित्वात् ॥

**शकलं**, क्ली, (शक्नोतीति । शक् + "शकिशम्यो-

र्नित् ।" उणा० १ । १११ । इति कलः ।)
त्वक् । खण्डम् । (यथा, रघुः । २ । ४६ ।
"अथान्धकारं गिरिगह्वराणां
दंष्ट्रामयूखैः शकलानि कुर्व्वन् ॥")
रागवस्तु । वल्कलम् । इति मेदिनी ॥ शल्कम् ।
आँश इति भाषा । इति शकलिन्शब्ददर्शनात् ॥

**शकलः**, पुं, क्ली, (शक् + कलः ।) एकदेशः ।

(यथा, मनुः । ६ । ८८ ।
"प्रतिगृह्य पुटेनैव पाणिना शकलेन वा ॥")
खण्डम् । यथा, --
"भित्तं शकलखण्डे वा पुंस्यर्द्धोऽद्‌र्ध्वं समेऽंशके ॥"
इत्यमरः ॥
(यथा, मनुः । १ । १३ ।
"ताभ्यां स शकलाभ्याञ्च दिवंभूमिञ्चनिर्म्ममे ॥")

**शकली**, [न्] पुं, (शकलमस्यास्तीति । इनिः ।)

मत्स्यः । इत्यमरः ॥

**शकान्तकः**, पुं, (शकस्य म्ले च्छजातिविशेषस्य

गीर्व्वाणवीणाफलभद्रपीठ-
पुष्पाञ्जनालङ्करणायुधानि ।
ताम्वूलयानासनवर्द्धमान-
ध्वजातपत्रव्यजनाम्बराणि ॥
अम्भोजभृङ्गारसमृद्धवह्नि-
गजाजवाह्यः कुशचामराणि ।
रत्नानि चामीकररूप्यताम्र-
बद्धैडकाश्चोषधयः सुराश्च ॥
वनस्पतेर्नूतनशाकमेवं
माङ्गल्यपञ्चाशदिदं प्रदिष्टम् ।
शुभेषु कार्य्येष्वशुभेषु चैव
कार्य्ये गतानां शुभदाः सदैव ॥
एतानि दृष्ट्वा शुभदर्शनानि
कुर्व्वन्ति दृष्टः पथि दक्षिणेन ।
सकृद्विलोकादशुभावहानि
त्यक्तानि वामेन शुभा भवन्ति ॥
गान्धारषड्जावृषभस्तथान्ये
स्वरेषु गम्भीरमनोरमा ये ।
वादित्रवेदध्वनिगीतनृत्य-
मित्यादिशस्तं किल यत्र रीद्रम् ॥
आदाय रिक्तं कलसं जलार्थी
यदि व्रजेत् कोऽपि सहाध्वगेन ।
पूर्णं समादाय निवर्त्ततेऽसौ
यथा कृतार्थः पथिकस्तथैव ॥ * ॥
अङ्गारभस्मे न्धनरज्जुपङ्क-
पिण्याककार्पासतुषास्थिविष्ठाः।
कृष्णायसावस्करकृष्णधान्य-
पाषाणकेशा भुजगौषधानि ॥
तैलं गुडं चर्म्म वसा विभिन्नं
रिक्तञ्च भाण्डं लवणं तृणञ्च ।
तक्रार्गला शृङ्खलवृष्टिवाताः
कार्य्ये क्वचित् त्रिंशदिमे न शस्ताः ॥ * ॥
स्वपादयानस्खलनं नृपाणां
भङ्गः क्वचिद्यानपलायनञ्च ।
द्वाराभिघाताध्वगशस्त्रपाताः
प्रस्थानविघ्नं कथयन्तु यातुः ॥
मार्ज्जारियुद्धारवदर्शनानि
कलिः कुटुम्वस्य परस्परञ्च ।
चित्तस्य कालुष्यकरञ्च सर्व्वं

धर्म्मं जघान तेषाञ्च वेशानन्यांश्चकार ह ॥
अर्द्धं शिरः शकानान्तु मुण्डयामास भूपतिः ।
जवनानां शिरः सर्व्वं काम्बोजानामपि द्विज ॥
पारदान्मुक्तकेशांस्तु पह्नवान् श्मश्रुधारिणः ।
निःस्वाध्यायवषट्कारान्सर्व्वानेव चकार ह ॥”
इति पाद्मे स्वर्गखण्डे सगरोपाख्यानम् १५ अः ॥
देशभेदः । इति विश्वः ॥ (यथा, मात्स्ये । १२० । ४५ ।
“तुषारान् वर्व्वरान् कारान् पह्नवान् पारदान्
शकान् ।
एतान् जनपदान् मङ्क्षु प्लावयित्वोदधिं गता ॥”)

**शकटः**, पुं, क्ली, (शक्नोति भारं वोढुमिति ।
शक् + “शकादिभ्योऽटन् ।” उणा ०४ । ८१ । इति
अटन् ।) यानविशेषः । गाडी इति भाषा ॥
तत्पर्य्यायः । अनः २ । इत्यमरः ॥ अक्षः ३ ।
इति शब्दरत्नावलौ ॥
विष्णुवध्यासुरविशेषः ।
द्विसहस्रपलपरिमाणम् । तत्पर्य्यायः । भारः
२ आचितः ३ शाकटीनः ४ शलाटः ५ । इति
हेमचन्द्रः ॥ उक्तञ्च ।
“शकटः शाकिनी गावो यानमस्कन्दनं वनम् ।
अनूपः पर्व्वतो राजा दुर्भिक्षे नव वृत्तयः ॥”
इति भरतः ॥
तिनिसवृक्षः । इति राजनिर्घण्टः ॥ (व्यूह-
विशेषः । यथा, मनुः । ७ । १८७ ।
“दण्डव्यूहेन तन्मार्गं यायात्तु शकटेन वा ॥”
अन्तकः ।) विक्रमादित्यराजः । इति
केचित् ॥

**शकारः**, पुं, राज्ञः अनूढायाः स्त्रिया भ्राता ।
यथा, साहित्यदर्पणे ३ परिच्छेदे ॥
“मदमूर्खताभिमानी दुष्कुलतश्वर्य्यसंयुक्तः ।
सोऽयमनूढाभ्राता राज्ञः श्यालः शकार इत्युक्तः ॥”

**शकारिः**, पुं, (शकस्य म्लेच्छजातिविशेषस्यारिः
शत्रुः ।) विक्रमादित्यराजः । स तु उज्जयनी-
देशाधिपतिः । यथा, --
“साहसाङ्कःशकारिः स्याद्विक्रमादित्य इत्यपि ॥”
इति जटाधरः ॥

**शकुनं**, क्ली, (शक्नोति शुभाशुभं विज्ञातुमनेनेति ।
शक् + “शकेरुनोन्तोन्त्युनयः ।” उणा० ३ । ४९ ।
इति उनः ।) शुभशंसिनिमित्तम् । इति
मेदिनी ॥ सगुन् इतिहिन्दीभाषा ।
फललक्षणम् ।
इत्यजयपालः ॥ * ॥ अथ शुभशकुनानि ।
“कीर्त्तनात् श्रवणतो विलोकनात्
स्पर्शनात् समधिकं समोत्तरम् ।
मङ्गलाय दधिचन्दनादिकं
स्यात् प्रवासभवनप्रवेशयोः ॥
दध्याज्यदूर्व्वाक्षतपूर्णकुम्भाः
मिद्धान्नसिद्धार्थकचन्दनानि ।
आदर्शशङ्खामिषमौनमृत्सा-
गोरोचनागोमयगोमधूलिः ।
गन्तुः प्रयाणप्रतिषेधनाय ॥
दृष्टे शवे रोदनशब्दहीने
महार्थसिद्धिः कथितोद्यमेषु ॥
गृहप्रवेशेषु शवः शवत्वं
रुजं सदीर्घामथवा ददाति ॥
गण्डूषमावर्जयतां नराणा-
मन्तर्गलं चेत् प्रविशत्यकस्मात् ।
भवेत् तदाभोप्सितसौख्यलाभो
यः कौतुकी तेन निरूप्यमेतत् ॥
उज्झितं झटिति दन्तधावनं
संमुखं पतति यत्र वासरे ।
भोजनं भवति तत्र वीक्षितं
व्यासभाषितमिदं हि नानृतम् ॥”

| | | |
|---|---|---|
| शकटाकृतित्वात् रोहिणीनक्षत्रम्। यथा, बृहत्संहितायाम्। २४। ३०। “रोहिणीशकटमध्यसंस्थिते चन्द्रमस्यशरणीकृता जनाः। | | |

इति वसन्तराजशाकुने विचारिताः
शुभावहाः ॥
अथ नराङ्कितविचारः ।
"अथाभिधास्ये द्विपदेषु तावत्
प्रधानभावात् शकुनं नराणाम् ।
नैमित्तिकं यत् प्रतिभाव्य सर्व्वं
फलं शुभाशोभनयोर्ब्रवीति ॥
नरोऽभिरूपः सितवस्त्रमाल्यो
वाचं प्रशस्तां मधुराञ्च जल्पन् ।
एवंविधा योषिदपि प्रयाणे
प्रवेशकाले च करोति सिद्धिम् ॥ * ॥
वमदुविकेशो हतमानगर्व्वः
क्षिण्णाङ्गनग्नान्त्यजतैलदिग्धाः ।
रजस्वला गर्भवती रुदन्ती
मलान्वितोन्मत्तजराधवाश्च ॥
दीनो द्विषत्कृष्णविमुक्तकेशाः
क्रमेलकस्थाः खरसैरिभस्थाः ।
सन्न्यासिसांक्रन्दनपुंसकाद्या
दुःखावहाः सर्व्वसमीहितेषु ॥ * ॥
पृथ्वीपतिर्ब्राह्मणहर्षयुक्तो
वेश्या कुमारी सुहृदः सुकेशाः ।
नार्य्यो नराश्चाश्ववृषाधिरूढाः
शुभाय दृष्टाः शकुनोद्यमेषु ॥ * ॥
कृष्णाम्बराः कृष्णविलेपनाढ्याः
कृष्णां स्रजं भूद्‌र्ध्नि विधारयन्ती ।
दृष्टा सकोपा यदि कृष्णवर्णा
नारी नरैस्तद्विपदो भवन्ति ॥ * ॥
श्वेताम्बरा श्वेतविलेपनाढ्या
मालां सितां मूद्‌र्ध्नि विधारयन्ती ।
दृष्टा प्रकृष्टा यदि गौरवर्णा
नारी नरैः स्यात्तदभीष्टसिद्धिः ॥
धृतातपत्रः सुविशुक्लवासाः
पुष्पान्वितश्चन्दनचित्रिताङ्गः ।
निश्रावयुक्तः कृतभोजनो वा
विप्रः पठन् यच्छति सर्व्वसिद्धिम् ॥
अभ्युपगच्छति यस्य हि याने
स्त्रीपुरुषोऽप्यथवा फलहस्तः ।
सर्व्वसमीहितसिद्धिरवश्यं
तस्य नरस्य भवत्यचिरेण ॥"

उग्रं भवेद्रोदनमग्रभागे
भयं भवेद्वह्निविभागभूते
नैरृत्यकोणे रणमार्गरोधो
वायव्यकोणे रुदितं समृद्‌ध्यै ॥
मृत्युः सुतानां रुदितेन पृष्ठे
लाभो भवेत्तत्र निवर्त्तनेन ।
मृत्युस्तदाग्रे रुदितेन गन्तुः
सिद्धिं विधत्ते रुदितं रिपूणाम् ॥"
इति वसन्तराजशाकुने नराङ्किते उपश्रुति-प्रकरणम् ॥ * ॥ वकचक्रवाकटङ्कटिट्टिभकारण्डवभासभारद्वाजमयूरकपिञ्जल-लावकगृध्रोलूककपोतगोवत्सकुक्कुटकलविङ्कभारतीचासखञ्जनकाकपिङ्गलारूपाणिशकुनानि घोटकवृषमहिषखरगोमहिष्यजाजमेढ़ैडकोष्ट्रछुच्छुन्दरीमूषिकमार्जारवानरमृगवराहकृकलासनकुलवृश्चिकपिपीलिकापल्ली-कुक्कुरादिरूपशकुनानिच वसन्तराजशाकुने द्रष्टव्यानि । हस्तिशशकशृगालषट्पदशरभसर्परूपाणि शकुनानि तत्तच्छब्दे द्रष्टव्यानि ॥

**शकुनः**, पुं, (शक + उनः ।) पक्षिमात्रम् । (यथा, महाभारते । १ । ७२ । १० ।
"तं वने विजने गर्भं सिंहव्याघ्रसमाकुलं ।
दृष्ट्वा शयानं शकुनाः समन्तात् पर्य्यवारयन् ॥")
पक्षिविशेषः । गृध्र इति ख्यातः । इति मेदिनी ॥ कश्यपपत्नीताम्रायाःश्येनगृध्रादयः पुत्त्राः । इति श्रीभागवतम् ॥ गृध्रस्याशुभफलं यथा, --
"वामेऽपसव्ये पुरतश्च पृष्ठे
युद्धं विभेदं मरणं स्त्रियश्च ।
गृध्रः स्थितः सन् कुरुते क्रमेण
शब्दोऽपसव्योऽस्य विपत्तिहेतुः ॥"
इति वसन्तराजशाकुनम् ॥
विप्रभेदः । इत्युणादिकोषः । तद्विवरणं भागवते उक्तम् । गीतविशेषः । तत्तु उत्सवादिषु मङ्गलार्थगेयम् । इत्यजयपालः ॥ शुभशंसी । इति शब्दरत्नावली ॥

**शकुनज्ञा**, स्त्री, (शकुनं जनातीति । ज्ञा + कः । स्त्रियामाप् ।) ज्यैष्ठी । इति त्रिकाण्डशेषः ॥ शकुनज्ञातरि, त्रि ॥ (यथा, कथासरित्-

भारते शल्यपर्व्वणि द्रष्टव्यम् ॥)
ववाद्येकादश-करणान्तर्गताष्टमकरणम् । इति मेदिनी ॥
तत्करणजातफलम् ।
"परजनधनहर्त्ता वञ्चकः क्रूरचेष्टः
करधृतकरवालो व्याहतस्वामिपक्षः ।
अतिशयपरदारासक्तचित्तःसरोषो
भवति शकुनिजन्मा मानवः शीघ्रकर्म्मा ॥"
इति कोष्ठीप्रदीपः ॥ * ॥
दुःसहपुत्त्रः । यथा, --
"दुःसहस्याभवत् भार्य्या
निर्म्माष्टिर्नाम नामतः ।
जाता कलेस्तु पाप्मायां ऋतौ
चण्डालदर्शनात् ॥
तयोरपत्यान्यभवन् जगद्‌व्यापीनि षोडश ।
अष्टौ कुमाराः कन्याश्च
तथाष्टावतिभीषणाः ॥
दन्ताकृष्टिस्तथोक्तिश्च परिवर्त्तस्तथा परः ।
अङ्गधुक् शकुनिश्चैव
गण्डप्रान्तरतिस्तथा ॥"
तस्य पञ्च पुत्त्रा यथा, --
"श्येनकाककपोतांश्च गृघ्रोलूकौ च वै सुतान् ।
अवाप शकुनिः पञ्च जगृहुस्तान्
सुरासुराः ॥
श्येनं जग्राह वै मृत्युः काकं कालो गृहीत-वान् ।
उलूकं निरृतिश्चापि
जग्राहातिभयावहम् ॥
गृध्रं व्याधिस्तदीशोऽथ कपोतञ्च
स्वयं यमः ।
एतेषामेव चैवोक्ताः कृताः
पापोपपादने ॥

इति वसन्तराजशाकुने नराङ्कितेक्षित-
संज्ञम् ॥ * ॥
"गच्छेति पृष्ठे पुरतस्तथैव
वागीदृशी केनचिदुच्यमाना ।
सर्व्वाशिषश्चातिशयेन ताभ्य-
श्चित्तस्य तुष्टिर्विजयाय पुंसाम् ॥
सिद्ध्यै विरावा जहि छिन्दि भिन्दि
चेत्यादयः शत्रुवधोद्यतानाम् ।
क्व यासि मागच्छत चैवमाद्याः
प्रयोजनारम्भनिवारणार्थाः ॥
स्थैर्य्ये स्थिरार्थाद्गमनं तदर्था-
द्वाक्यान्निवृत्तिर्विनिवर्त्तितार्थात् ।
लाभं जयं भङ्गममङ्गलं वा
बध्येत तत्तत्प्रतिपादनार्थात् ॥
सागरे । ३१ । ५३ ।
"प्राहिणोत्प्राङ्निषिद्धापिस्वसख्या शकुनज्ञया ।
स्वतन्त्रोऽभिनवारूढो युवतीनां मनोभवः ॥")

**शकुनिः**, पुं, (शक्नोति उन्नेतुमात्मानमिति ।

शक + "शकेरुनोन्तोन्त्युनयः ।" उणा ० ३ । ४९ ।
इति उनिः ।) पक्षी । इत्यमरः ॥ (यथा,
मनुः । ५ । ११ ।
"क्रव्यादान् शकुनीन् सर्व्वांस्तथा ग्राम-
निवासिनः ।
अनिद्दिष्टांश्चैकशफांष्टिट्टिभञ्च विवर्जयेत् ॥")
चिल्लपक्षी । इति हेमचन्द्रः ॥ सौवलः । स तु
कौरवमातुलः । (अयं हि दुर्य्योधनमन्त्री । द्यूते
पाण्डवान् जित्वा वनं प्रेरयामास । असौ हि
कौरवयुद्धे सहदेवेन निहतः । एतद्विवरणं महा-

तस्मात् श्येनादयो यस्य निलीयन्ते
शिरस्यथ ।
तेनात्मरक्षणायालं शान्तिः कार्य्या
द्विजोत्तम ॥
गेहे प्रसूतिरेतेषां तद्वन्नीडनिवेशनम् ।
न शस्तं वर्जयेद्गेहं
कपोताक्रान्तमस्तकम् ॥
श्येनः कपोतो गृध्रो वा कौशिको वा
गृहे
द्विजः ।
प्रविष्टः कथयन्त्यन्तं वसतां तत्र
वेश्मनि ॥
ईदृक् परित्यजेद्गेहं शान्तिं
कुर्य्याद्द्विजोत्तम ।
स्वप्नेऽपि हि कपोतस्य दर्शनं न
प्रशस्यते ॥"
इति मार्कण्डेयपुराणे
दुःसहवंशोत्पत्तिनामा-
ध्यायः ॥ * ॥ विकुक्षिपुत्त्रः । यथा,
--
"वैवस्वतमनोरासीदिक्ष्वाकुः
पृथिवीपतिः ।
तस्य पुत्त्रशतं चासीद्विकुक्षिर्ज्येष्ठ
उच्यते ॥
सोऽयोध्याधिपतिर्वीरस्तस्यपञ्चदश
स्मृताः ।
शकुनिप्रमुखाः पुत्त्रा रक्षिता
रोमहर्षिताः ॥"
इति वह्निपुराणे
सगरोपाख्याननामाध्यायः ॥

**शकुनिप्रपा**, स्त्री, (शकुनीनां पक्षिणां पानार्थं
या

प्रपा ।) पक्षिणः पानीयशाला ।
तत्पर्य्यायः ।
श्रीग्रहः २ । इति हारावली ॥

**शकुनी**, स्त्री, श्यामापक्षी । इति राजनिर्घण्टः
॥

चटकी । इति केचित् ॥
(पक्षिरूपधारिणी
पूतना । यथा, महाभारते । ५ ।
१३० । ४५ ।

|  |  | "अनेन हि हता बाल्ये पूतना शकुनी तथा ।"<br>तथा च हरिवंशे । ६२ । १ -- २ ।<br>"कस्यचित्त्वथकालस्य शकुनीवेशधारिणी ।<br>धात्री कंसस्य भोजस्य पूतनेति परिश्रुता ॥<br>पूतना नाम शकुनी घोरा प्राणिभयङ्करी ।<br>आजगामार्द्धरात्रे तु पक्षौ क्रोधात् विधु-<br>न्वती ॥" |
|---|---|---|

**शकुनीश्वरः**, पुं, (शकुनीनां पक्षिणामीश्वरः ।)
गरुडः । इति धनञ्जयः ॥

**शकुन्तः**, पुं, (शक्नोति उत्पतितुमिति । शक +
"शकेरुनोन्तोन्त्युनयः ।" उणा ०३ । ४९ । इति
उन्तः ।) पक्षी । इत्यमरः ॥ (यथा, महा-
भारते । १ । ७२ । ११ ।
"नेमां हिंस्युर्वने बालां क्रव्यादा मांसगृद्धिनः ।
पर्य्यरक्षन्त तां तत्र शकुन्ता मेनकात्मजाम् ॥")
कीटभेदः । भासपक्षी । इति मेदिनी ॥

**शकुन्तला**, स्त्री, (शकुन्तैः पक्षिभिर्लाल्यते पाल्यते
इति । ला + घञर्थे कः । स्त्रियामाप् ।) मेन-
काप्सरःसु विश्वामित्रेण जनिता कन्या । सा
कण्वमुनिना प्रतिपालिता । दुष्मन्तराजेन विवा-
हिता । अस्याः पुत्त्रो भरतः राजचक्रवर्त्ती ।
अस्या नामकारणं यथा, --
"निर्जने तु वने यस्मात् शकुन्तैः परिरक्षिता ।
शकुन्तलेति नामास्याः कृतञ्चापि ततो मया ॥"
इति महाभारते । १ । ७२ । १५ ॥
अस्या विववणं कालिदासकृताभिज्ञानशकुन्तल-
नाटके द्रष्टव्यम् । पाद्मे स्वर्गखण्डे प्रथमादि-
पञ्चाध्यायेषु महाभारते आदिपर्व्वणि ६९
अध्यायमारभ्य च ज्ञातव्यम् ॥

**शकुन्तलात्मजः**, पुं, (शकुन्तलाया आत्मजः पुत्रः ।)
भरतराजः । यथा, --
"दौष्मन्तिर्भरतः सर्व्वदमः शकुन्तलात्मजः ॥"
इति हेमचन्द्रः ॥

**शकुन्तिः**, पुं, (शक्नोति उत्पतितुमिति । शक +
उन्तिः ।) पक्षिमात्रम् । इत्यमरः ॥ (यथा,

**शकुलार्भकः**, पुं, (शकुलस्य अर्भक इव ।) गडक-
मत्स्यः । इत्यमरः ॥ (गड्इमाछ इति
भाषा ॥)

**शकुली**, स्त्री, (शकुल + ङीष् ।) मत्स्यविशेषः ।
मृगाल् इति भाषा । महाशकुल इति केचित् ।
अस्या आकारो गुणाश्च ।
"शकुली रोहिताकारा भूमौ प्रायश्चरत्यसौ ।
गुर्व्वी पाके च मधुरा भेदिका दोषकोपना ॥"
इति राजवल्लभः ॥
पुस्तकान्तरे शकली इति च पाठः ॥ (नदी-
विशेषः । यथा, मार्कण्डेये । ५७ । २३ ।
"सुमेरुजा शुक्तिमती शकुली त्रिदिवा क्रमुः ।
स्कन्धपादप्रसूता वै तामान्या वेगवाहिनी ॥")

**शकृत्**, क्ली, (शक्नोति सर्त्तुमिति । शक् + "शके-
रृतिन् ।" उणा० ४ । ५८ । इति ऋतिन् ।)
विष्ठा । इत्यमरः ॥ (यथा, भागवते । ३ ।
३० । १९ ।
"स दृष्ट्वा त्रस्तहृदयः शकृन्मूत्रं विमुञ्चति ॥")

**शकृत्करिः**, पुं, स्त्री, (शकृत् करोतीति । शकृत् +
कृ + "स्तम्बशकृतोरिन् ।" ३ । २ । २४ । इति इन् ।)
वत्सः । इत्यमरः ॥ दन्त्यादिरिति विद्याविनोदः ॥

**शकृत्कारः**, त्रि, मलत्यागकारकः । शकृत् करोती-
त्यर्थे शकृच्छन्दात् कृधातोः षण् (अण्) प्रत्य-
येन निष्पन्नः ॥

**शकृद्द्वारं**, क्ली, (शकृतो द्वारम् ।) मलद्वारम् ।
इति हेमचन्द्रः ॥ (यथा, मनुः । ९ । २०७ ।
"भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्म्मणा ।
न निर्भाज्यः स्वकादंशात् किञ्चिद्दत्वोपजीव-
नम् ॥")
प्रियंवदः । इति शक्नशब्दटीकायां स्वामी ॥

**शक्तवः**, पुं, भूम्नि, भ्रष्टयवादिचूर्णम् । छातु इति
भाषा । यथा, --
"धाना भ्रष्टयवे भूम्नि स्त्रियां पुंभूम्नि शक्तवः ।
केचित्तु शक्तुरस्त्रीति वन्धुरा भूमनि स्त्रियाम् ॥"
इति जटाधरः ॥
अस्य विवरणं शक्तुशब्दे द्रष्टव्यम् ॥

**शक्तिः**, स्त्री, (शक + क्तिन् ।) कायजनन-
सामर्थ्यम् । यथा, --
"या देवी सर्व्वभूतेषु शक्तिरूपेण संस्थिता ।"
इति देवीमाहात्म्यस्य टीकायां नागोजीभट्टः ॥
शक्यते जेतुमनया । सा प्रभावोत्साहमन्त्रज-
भेदात्त्रिविधा । तत्र प्रभुत्वे साधकत्वात् कोष-
दण्डौ प्रभुशक्तिः १ । विक्रमेण स्वशक्त्या विस्फु-
रणमुत्साहशक्तिः २ । सन्ध्यादीनां सामादी-
नाञ्च यथावस्थानं मन्त्रशक्तिः ३ ॥ सामर्थ्य-
मात्रम् । तत्पर्य्यायः । द्रविणम् २ तरः ३ सहः
४ बलम् ५ शौर्य्यम् ६ स्थाम ७ शुष्मम् ८ परा-

ऋग्वेदे । २ । ४२ । ३ ।
"अवक्रन्द दक्षिणतो गृहाणां
सुमङ्गलो भद्रवादी शकुन्ते ! ॥")
भासपक्षी । इत्युणादिकोषः ॥

**शकुलः**, पुं, (शक्नोति गन्तुं वेगेनेति । शक +
"मद्गुरादयश्च ।" उणा० १ । ४२ । इति
उरच् । रस्य लः ।) मत्स्यविशेषः । इत्यमरः
॥
शौल इति भाषा ॥ (यथा, महाभारते । १२
।
१३७ । ३ ।
"नातिगाधे जलाधारे सुहृदः शकुलास्त्रयः ।
प्रभूतमत्स्ये कौन्तेय ! बभूवुः सहचारिणः
॥")
अस्य गुणाः । मधुरत्वम् । रूक्षत्वम् । ग्राहि-
त्वम् । पित्तामजित्त्वम् । गुरुत्वञ्च । इति
राज-
वल्लभः ॥

**शकुलगण्डः**, पुं, (शकुलस्य गण्ड इव गण्डो यस्य ।)
शालमत्स्यः । इति त्रिकाण्डशेषः ॥

**शकुलाक्षकः**, पुं, श्वेतदूर्व्वा । इत्यमरः ॥

**शकुलाक्षी**, स्त्री, गण्डदूर्व्वा । इति राजनिर्घण्टः ॥

**शकुलादनी**, स्त्री, (शकुलानां अदनं यस्याः ।
ङीप् ।) चक्राङ्गी । इत्यमरः ॥ कट्की इति
भाषा ॥ कञ्चटशाकः । इति मेदिनी ॥
काँचडा-
दाम इति भाषा ॥ मांसी । किञ्चुलिका ।
जलपिप्पलो । कट्फलः । इति विश्वः ॥
गजो-
षणा । इति राजनिर्घण्टः ॥

तत्पर्य्यायः । अपानम् २ पायुः ३ गुदम् ४
च्युतिः ५ अधोमर्म्म ६ त्रिवलीकः ७ वली
८ ।
इति हेमचन्द्रः ॥

**शक्करः**, पुं, वृषः । इति हेमचन्द्रः ॥

**शक्करिः**, पुं, वृषः । इति त्रिकाण्डशेषः ॥

**शक्करी**, स्त्री, छन्दोभेदः । नदीभेदः । मेखला ।
इति मेदिनी ॥ सा च समवृत्तषड्विंशति-
च्छन्दोऽन्तर्गतचतुर्द्दशच्छन्दः । यथा, --
"उक्थात्युक्था तथा मध्या प्रतिष्ठान्या
सुपूर्व्विका ।
गायत्र्युष्णिगनुष्णुप् च बृहती पङ्क्तिरेव
च ॥
त्रिष्टुप् च जगती चैव तथातिजगती मता ।
शक्करी सातिपूर्ब्बा स्यादष्टयत्यष्टी तथा
मता ॥
धृतिश्चातिधृतिश्चैव कृतिः
प्रकृतिराकृतिः ।
विकृतिः संकृतिश्चापि तथा
चैवातिसत्कृतिः ॥
इत्याख्याः समवृत्तानां छन्दसां क्रमशः
कृताः ॥"
तत्र चतुर्द्दशाक्षरपादसप्तच्छन्दांसिसन्ति ।
तेषां
नामानि गणाश्च यथा ।
मो गो गो नौ मः शरनवभिरसंबाधा । १ ।
ज्ञेयं वसन्ततिलकं तभजा जगौ गः । २ ।
ननरसलयुगैः स्वरैरपराजिता । ३ ।
ननभनलगितिप्रहरणकलिका । ४ ।
मस्तो नो मो गौ यदि गदिता वासन्तीयम्
। ५ ।
द्विः सप्त छिदि लोलाम्सौ म्भौ गौ चरणे
चेत् । ६ ।
स्वरभिदि यदि नौ तौ च नान्दीमुखीयम् ।
७ ।
इति छन्दोमञ्जरी ॥
एतेषामुदाहरणानि बाहुल्यभिया नोक्तानि
॥

**शक्तः**, त्रि, (शक + क्तः ।) शक्तिविशिष्टः । समर्थः ।
क्रमः ९ प्राणः १० । इत्यमरः ॥ शुष्म
११ सहम्
१२ । इति शब्दरत्नावली ॥ ऊर्ज्जः १३
। इति
जटाधरः ॥ कासूः । सा तु
शर्व्वलानामास्त्रम् ।
इति नानार्थे अमरभरतौ ॥ गौरी । इति
मेदिनी ॥ लक्ष्मीः । इति शब्दमाला ॥ *
॥
त्रिशक्तयो यथा, --
"एषा त्रिशक्तिरुद्दिष्टा नयसिद्धान्तगामिनी
।
एषा श्वेता परा सृष्टिः सात्त्विकी
ब्रह्मसंस्थिता ॥
एषैव रक्ता रजसि वैष्णवी परिकीर्त्तिता ।
एषैव कृष्णा तमसी रौद्री देवी प्रकीर्त्तिता
॥
परमात्मा यथा देवो एक एव त्रिधा स्थितः
।
प्रयोजनवशाच्छक्तिरेकैव त्रिविधाभवत्
॥"
इति वाराहे त्रिशक्तिमाहात्म्यनामाध्यायः
॥ * ॥
अपि च ।
"बिन्दुः शिवात्मकस्तत्र बीजं
शक्त्यात्मकं
स्मृतम् ।
तयोर्योगे भवेन्नादस्तेभ्यो
जातास्त्रिशक्तयः ॥"
इति क्रियासारः ॥
अन्यच्च ।
"इच्छा क्रिया तथा ज्ञानं गौरी ब्राह्मी तु
वैष्णवी ।
त्रिधा शक्तिः स्थिता यत्र तत्परं ज्योतिरो-
मिति ॥"
इति गोरक्षसंहिता ॥ * ॥
अष्ट शक्तयो यथा, --
"इन्द्राणी वैष्णवी शान्ता ब्रह्माणी
ब्रह्मवादिनी ।
कौमारी नारसिंही च वाराही विकटाकृतिः
॥

|  | तत्पर्य्यायः । सहः २ क्षमः ३ प्रभुः ४ उष्णुः ५ । | माहेश्वरी महामाया भैरवी भीरुरूपिणी ।<br>अष्टौ च शक्तयः सर्व्वा रथस्थाः प्रययुर्मुदा ॥”<br>इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे बाणयुद्धं नाम<br>११९ अध्यायः ॥ * ॥ |
|---|---|---|

नव शक्तयो यथा, --
“तत्र पद्मे चाष्टदले मध्ये च भक्तिपूर्ब्बकम् ।
वैष्णवीञ्चैव ब्रह्माणीं रौद्रीं माहेश्वरीं तथा ॥
नारसिंहीञ्च वाराहीमिन्द्राणीं कार्त्तिकीं तथा ।
सर्व्वशक्तिस्वरूपाञ्च प्रधानां सर्व्वमङ्गलाम् ॥
नवशक्तीश्च संपूज्य घटे देवांश्च पूजयेत् ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ६१ अध्यायः ॥
* ॥
पञ्चाशद्विष्णुशक्तयो यथा, --
“कीर्त्तिः कान्तिस्तष्टिपष्टी धृतिः शान्तिः
क्रिया
दया ।
मेधा सहर्षा श्रद्धा स्याल्लज्जा लक्ष्मीः
सरस्वती ॥
प्रीती रती रमा प्रोक्ताः क्रमेण स्वरशक्तयः ।
जया दुर्गा प्रभा सत्या चण्डा वाणी विलासिनी
॥
विरजा विजया विश्वा विनदा सुनदा स्मृतिः ।
ऋद्धिः समृद्धिः शुद्धिश्च भक्तिर्मुक्तिर्मतिः क्षमा
॥
रमोमा क्लेदिनी क्लिन्ना वसुदा वसुधा परा ।
परा परायणा सूक्ष्मा सन्ध्या प्रज्ञा प्रभा निशा
॥
अमोघा विद्युता चेति शक्तयः सर्व्वकामदाः ।
एताः प्रियतमाङ्केषु निषण्णाः सस्मिताननाः ॥
विद्युद्दामसमानाङ्ग्यः पङ्कजाभयबाहवः ॥” *
॥
पञ्चाशद्रुद्रशक्तयो यथा, --
“गुणोदरी स्याद्विरजा शाल्मली तदनन्तरम् ।
लोलाक्षी वर्त्तुलाक्षी च दीर्घघोणा समीरिता ॥
सदीर्घमुखीगोमुख्यौ दीर्घजिह्वा तथैव च ।
कुण्डोदर्य्यर्द्धकेश्यौ च तथा विकृतमुख्यपि ॥
ज्वालामुखी ततो ज्ञेया पश्चादुल्कामुखी ततः
।
सुश्रीमुखी चैव विद्यामुख्येताः स्वरशक्तयः ॥
महाकालीसरस्वत्यौ सर्व्वसिद्धिसमन्विते ।
गौरी त्रैलोक्यविद्या स्यान्मन्त्रसिद्धिस्ततः
परम् ॥
आत्मशक्तिर्भूतमाता तथा लम्बोदरी स्मृता ।

वातवैद्याङ्गना देवि जवनी द्विविधा
स्मृता ॥
बौद्धकन्या त्रिधा देवि तथा
कोचाङ्गना प्रिया ।
पूर्व्वोक्ताभिः सहैकत्र चतुःषष्टिश्च
शक्तयः ॥”
इति रेवतीतन्त्रे ३ पटलः ॥ * ॥
अपि च ।
“पञ्चाचारेण देवेशि ! कुलशक्तिं
प्रपूजयेत् ।
नटी कापालिकी वेश्या रजकी
नापिताङ्गना ॥
ब्राह्मणी शूद्रकन्या च तथा
गोपालकन्यका ।
मालाकारस्य कन्या च नव कन्या
प्रकीर्त्तिताः ।
विशेषवैदग्ध्ययुताः सर्व्वा एव
कुलाङ्गनाः ।
रूपयौवनंसम्पन्ना
शीलसौभाग्यशालिनी ।
पूजनीया प्रयत्नेन ततः सिद्धिर्भवेद्
ध्रुवम् ॥”
इति गुप्तसाधनतन्त्रे १ पटलः ॥ *
॥
तस्याः प्रशंसा यथा ।
“शक्तिं विना महेशानि ! सदाहं
शवरूपकः ।
शक्तियुक्तो यदा देवि ! शिवोऽहं
सर्व्वकामदः ॥
शक्तियुक्तं जपेन्मन्त्रं न मन्त्रं केवलं
जपेत् ।
सावित्रीसहितो ब्रह्मा
सिद्धोऽभून्नगनन्दिनि ॥
द्वारवत्यां कृष्णदेवः सिद्धोऽभूत्
सत्यया सह ।
तथा कोचबधूसङ्गान्मम
सिद्धिर्व्वरानने ॥
ईश्वरोऽहं महादेवि ! केवलं
शक्तियोगतः ।

विना शक्त्या तथाहञ्च स्वसृष्टिं कर्त्तुमक्षमः ।
शक्तिप्रधाना सृष्टिश्च सर्व्वदर्शनसम्मता ॥
अहमात्मा च निर्लिप्तोऽदृश्यः साक्षी च देहि-
नाम् ।
देहाः प्राकृतिकाः सर्व्वे नश्वराः
पाञ्चभौतिकाः ॥
अहं नित्यशरीरी च भानुविग्रहविग्रहः ।
सर्व्वाधारा च प्रकृतिः सर्व्वात्माहं जगत्सु च
॥
अहमात्मा मनो ब्रह्मा ज्ञानरूपो महेश्वरः ।
पञ्च प्राणाः स्वयं विष्णुर्ब्बुद्धिः प्रकृतिरीश्वरी
॥
शक्त्यो निद्रादयश्चैताः सर्व्वाश्च प्रकृतेः
कलाः ।
सा च शैलेन्द्रकन्येयं इति वेदनिरूपितम् ॥”
इति ब्रह्मवैवर्त्ते गणेशखण्डे ७ अध्यायः ॥ *
॥
अपि च ।
“सा शक्तिः सृष्टिकाले च पञ्चधा चेश्वरेच्छया
॥
राधा पद्मा च सावित्री दुर्गा देवी सरस्वती ॥
प्राणाधिष्ठातृदेवी या कृष्णस्य परमात्मनः ।
प्राणाधिकप्रियतमा सा राधा परिकीर्त्तिता ॥
ऐश्वर्य्याधिष्ठातृदेवी सर्व्वमङ्गलकारिणी ।
परमानन्दरूपा च सा लक्ष्मीः परिकीर्त्तिता ॥
विद्याधिष्ठातृदेवी या परमेशस्य दुर्लभा ।
वेदशास्त्रयोगमाता सा सावित्री प्रकीर्त्तिता ॥
बुद्ध्यधिष्ठातृदेवी या सर्व्वशक्तिस्वरूपिणी ।
सर्व्वज्ञानात्मिका सर्व्वा सा दुर्गा दुर्गनाशिनी
॥
रागाधिष्ठातृदेवी या शास्त्रज्ञानप्रदा सदा ।
कृष्णकण्ठोद्भवा या च सा च देवी सरस्वती ॥
पञ्चधादौ स्वयं देवी मूलप्रकृतिरीश्वरी ॥
ततः सृष्टिकमेणैव बहुधा कलया च सा ।
योषितः प्रकृतेरंशाः पुमांसः पुरुषस्य च ॥”
इति च ब्रह्मवैवर्त्ते गणेशखण्डे ४० अध्यायः
॥ * ॥
ब्रह्माणीशक्त्युत्पत्तिर्यथा ।
“ततो ब्रह्मादयो देवा भयं जग्मुः सवासवाः ।

द्रावणी नागरी भूयः खेचरी चापि मञ्जरी ॥
रूपिणी चित्रिणी पश्चात् काकोदर्य्यपि पूतना
।
स्याद्भद्रकाली योगिन्यौ शङ्खिनी गर्ज्जिनी तथा
॥
कालरात्रिश्च कुब्जिन्या कपर्दिन्यपि वज्रया ।
जया च सुमुखेश्वर्य्या रेवती माधवी ततः ॥
वारुणी वार्षवी प्रोक्ता पश्चाद्रक्षोविदारिणी।
ततश्च सहजा लक्ष्मीर्व्यापिनी माययान्विता ॥
एता रुद्राङ्कपीठस्थाः सिन्दूरारुणविग्रहाः ॥
रक्तोत्पलकपालाभ्यामलङ्कृतकराम्बुजाः ॥”
इति प्रपञ्चसारः ॥ * ॥
कुलशक्तयो यथा, --
“शक्तयः परमेशानि ! विदग्धाः सर्व्वयोषितः ।
नटी कापालिकी वेश्या मालिनी कुङ्कुमालिनी
॥
चाण्डाली च कुलाली च रजकी नापिताङ्गना ।
गोपिनी योगिनी शुद्धा ब्राह्मणी राजकन्यका ॥
कोचाङ्गना च देवेशि ! तथैव शङ्खकारिणी ।
एता षड्विंशतिः कन्या देवानामपि दुर्लभा ॥
दैवज्ञा व्याधवामा च तथा मांसापहारिणी ।
बौद्धा च जवनी देवि तथा रसपसारिणी ॥
वेश्या चतुर्व्विधा प्रोक्ता द्विविधा कुङ्कुमालिनी ।
धीवरी द्विविधा प्रोक्ता तथैव गणिकाङ्गना ॥
कुम्भकारी द्विधा प्रोक्ता तथैव गोपिनी स्मृता ।
शक्तियोगेन देवेशि यदि सिद्धिर्न
जायते ॥
तदैव परमेशानि मम वाक्यं वृथा
भवेत् ।
यद्दत्तं जलगण्डूषं शक्तिवक्त्रे
सुरेश्वरि ! ॥
सिन्धुरूपं महेशानि ! तज्जलं नात्र
संशयः ।
स्वीयेष्टदेवीभावेन भोजयेत्ताञ्च
यत्नतः ॥
शक्तिश्च कथ्यते देवि शृणुष्व
सुरसुन्दरि ।
त्रयो दशाब्दादूर्द्ध्वं या
पञ्चविंशतिवार्षिकी ॥
अप्रसूता विशेषेण पञ्चमेऽपि भवेत्
प्रिये ।
सुन्दरी तु विशेषेण प्रसूता
वाप्रसूतिका ॥
अवश्यं पञ्चमं कुर्य्यात् शक्तिमात्रे
महेश्वरि ॥”
इति शक्तिकागमसर्व्वस्वम् ॥ * ॥
तस्या उत्पत्तिमाहात्म्यादिर्य्यथा, --
नारायण उवाच ।
“सह बुद्ध्या बुद्धिमन्तो न
वक्तुमुचितं सुराः ।
सर्व्वे शक्त्यालया विश्वे शक्तिमन्तो
हि जीविनः ॥
ब्रह्मादितृणपर्य्यन्तं सर्व्वं प्राकृतिकं
जगत् ।
सत्यं नित्यं विना माञ्च मया शक्तिः
प्रकाशिता ॥
अविर्भूता च सा मत्तः सृष्टौ देवी
मदीच्छया ।
तिरोहिता च सा शेषे सृष्टिसंहरणे
मयि ॥
सृष्टिकर्त्री च प्रकृतिः सर्व्वेषां जननी
परा ।
मम तुल्या च मन्माया तेन नारायणी
स्मृता ॥
सुचिरञ्च तपस्तप्तं शम्भुना ध्यायता
च माम् ।
यदि स्यान्निर्ज्जितो देवः क्षयः
सर्व्वदिवौकसाम् ॥
एतस्मिन्नन्तरे शक्र ! ब्रह्मा चिन्तयते क्रियाः ।
स्त्रीरूपधारिणी भूत्वा सहायत्वं महेश्वरे ॥
क्षिप्रं कुरु स्वकार्य्ये त्वं एवं विश्वेश्वरे रणे ।
ततो द्योतितवान् शम्भुः स्वशक्तिं किरणोज्ज्व-
लाम् ॥
ब्रह्मरूपधरां किन्तु ललनाकारविग्रहाम्।
हंसस्यन्दनमारूढा स्वकीयायुधधारिणी ॥
तर्ज्जयन्ती महौजेन दानवानां भयङ्करी ।
तस्य घोराणि कर्म्माणि दृष्ट्वा स विस्मयन्
शिवः ।
का पुनः स्रष्टुः सुस्नेहा सदातिप्रतिपक्षजित्।
तस्याः शक्तिं द्वितीयाञ्च सृजामि अपराजि-
ताम् ॥”
इति देवीपुराणे रुरुवधे ब्रह्माण्युत्पत्तिः ॥ * ॥
नन्दातीर्थे शक्तिमन्त्रविचारनिषेधो यथा ।
“योऽसावनादिमध्यान्तशिवशक्तिमयःपरः ।
तस्यैव परमानन्दा सर्व्वकिल्विषनाशिनी ॥
तत्प्रभावेण प्राप्नोति तपोयज्ञादिकं फलम् ।
मन्त्राणां देवशक्तीनां न विचारो वरानने ॥”
इति देवीपुराणे नन्दाकुण्डप्रवेशः प्रथमा-
ध्यायः ॥ * ॥

| | | |
|---|---|---|
| | तेन तस्मै मया दत्ता तपसां फलरूपिणी ॥<br>व्रतञ्च लोकशिक्षार्थमस्या न स्वार्थमेव च ।<br>स्वयं व्रतानां तपसां फलदात्री जगत्त्रये ॥<br>मायया मोहिताः सर्व्वे किमस्या वास्तवं व्रतम् ।<br>साध्यमस्या व्रतफलं कल्पे कल्पे पुनः पुनः ॥<br>सुरेश्वरा यदंशाश्च ब्रह्मविष्णुमहेश्वराः ।<br>कलाः कलांशरूपास्ते जीविनश्च सुरादयः ॥<br>मृदा विना कुलालश्च घटं कर्त्तुं यथाक्षमः ।<br>विना स्वर्णं स्वर्णकारः कुण्डलं कर्त्तुमक्षमः ॥ | |

प्रकृतिः । यथा, --
"प्रधानं प्रकृतिः शक्तिर्नित्या चाविकृतिस्तथा
।
एतानि तस्या नामानि पुरुषं या समाश्रिता ॥"
तस्या गुणानाह ।
"सत्त्वं रजस्तमस्त्रीणि विज्ञेयाः प्रकृतेर्गुणाः ।"
इति भावप्रकाशः ॥ * ॥
शक्तिविषयकपुष्पाणि यथा, --
"अथ पुष्पं प्रवक्ष्यामि कर्म्मयोगे महेश्वरि ।
शृणुष्व परया भक्त्या यथोक्तं ब्रह्मणा पुरा ॥
कमले करवीरे द्वे कुसुम्भे तुलसीद्वयम् ।
जात्यशोके केतकी द्वे कुमारीचम्पकोत्पलम् ॥
कुन्दमन्दारपुन्नागपाटलानागचम्पकम् ।
आरग्वधं कर्णिकारं पावन्ती नवमल्लिका ॥
सौगन्धिकं सकोरण्डं पलाशाशोकसर्ज्जकाः
।
सिन्धुवारो ह्यपामार्गवापुलीकञ्च कामजम् ॥
व्याघ्रचेलं दमनकं मरुवकं ततः परम् ।
लवङ्गं जलकर्पूरं तगरञ्च जवा तथा ॥
शिवपुष्पं द्रोणपुष्पं कामराजं सुकेतकम् ।
अन्यानि वनपुष्पाणि जलजस्थलजानि च ।
गिरिजानि देशजानि नानापुष्पाण्यतः परम् ॥"
इति प्रपञ्चसारः ॥

**शक्तिग्रहः**, पुं, (शक्तिं गृह्णातीति । शक्ति + ग्रह
+ "शक्तिलाङ्गुलाङ्कुशेति ।" ३ । २ । ९ ।
इत्यस्य
वार्त्तिकोक्त्या अच् ।) शिवः । कार्त्तिकेयः ।
शक्तिं गृह्णाति यः इत्यर्थे शक्तिशब्दपूर्व्वकग्रह-
धातोरल्प्रत्ययेन निष्पन्न इति केचित् ॥
(शक्ते-
र्ग्रहो ग्रहणम् ।) शब्दशक्तिज्ञानम् । यथा ।
"अस्मात् शब्दात् अयमर्थो बोद्धव्य
इतीश्वरेच्छा
शक्तिरिति तार्किकाः । तज्ज्ञानन्तु व्याकरणा-
दिभ्यः । अतएव ।
'शक्तिग्रहं व्याकरणोपमान-
कोषाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्व्वदन्ति
सान्निध्यतः सिद्धपदस्य वृद्धाः ॥'

**शक्तिहेतिकः**, त्रि, (शक्तिर्हेतिः प्रहरणास्त्रं यस्य ।)
शक्त्यस्त्रधारियोद्धा । तत्पर्य्यायः ।
शाक्तीकः २ ।
इत्यमरः ॥ लक्ष्यायुधधरः ३ । इति
शब्दरत्नावली ॥

**शक्तुः**, पुं, क्ली, (शक + बाहुलकात् तुन् ।) भर्ज्जित-
यवादिचूर्णम् । छातु इति भाषा । यथा, --
"धाना भृष्टयवे भूम्नि स्त्रियां पुं भूम्नि
शक्तवः ।
केचित्तु शक्तुरस्त्रीति बन्धुरा भूमनि
स्त्रियाम् ॥"
इति जटाधरः ॥
अस्य गुणाः ।
"यवानां शक्तवो रूक्षा लेखना वह्निवर्द्धनाः
।
वातलाः कफरोगघ्ना
वातवर्च्चोऽनुलोमनाः ॥
धानासंज्ञास्तु तेऽतीव दुर्जरा लेखनाः
स्मृताः ।
गुर्व्वी पिण्डीकृतात्यर्थं लघ्वी सैव
विपर्य्ययात् ।
शक्तूनामाशु जीर्य्येत मृदुत्वादवलेहिका
॥"
इति राजवल्लभः ॥
अथ शक्तवः ।
"धान्यानि भ्राष्ट्रभृष्टानि यन्त्रपिष्टानि
शक्तवः ।"
तत्र यवशक्तवः ।
"यवजाः शक्तवः शीता दीपना लघवः
सराः ।
कफपित्तहरा रूक्षा लेखनाश्च प्रकीर्त्तिताः
॥
ते पीता बलदा वृष्या बृंहणा भेदनास्तथा ।
तर्पणा मधुरा रुच्याः परिणामे बलावहाः ॥
कफपित्तश्रमक्षुत्तृड्व्रणनेत्रामयापहाः ।
प्रशस्ता घर्म्मदाहद्या
व्यायामार्त्तशरीरिणाम् ॥"
अथ चणकयवशक्तवः ।

**शक्तुकः**, पुं, विषभेदः । तस्य लक्षणस्वरूपे यथा,
"यद्ग्रन्थिः शक्तुकेनैव पूर्णमध्यः स
शक्तुकः ॥"
इति भावप्रकाशः ॥

**शक्तुफला**, स्त्री, शमीवृक्षः । इत्यमरः ॥

**शक्तुफली**, स्त्री, शमीवृक्षः । इति शब्दरत्नावली
॥

**शक्त्यर्द्धः**, पुं, (शक्तेरर्द्धः ।) श्रमद्वारा कुक्षिललाट-
ग्रीवासूत्पन्नो घर्म्मः दीर्घनिश्वासश्च ।
यथा, --
"कुक्षौ ललाटे ग्रीवायां यदा घर्म्मः
प्रवर्त्तते ।
शक्त्यर्द्धं तं विजानीयादायतोच्छासमेव
च ॥"
इति राजवल्लभः ॥

**शक्त्रिः**, पुं, वशिष्ठमुनेर्ज्येष्ठपुत्त्रः । इति पुराणम्
॥
(यथा, महाभारते । १ । १७७ । ६ ।
"अपश्यदजितः संख्ये मुनिं
प्रतिमुखागतम् ।
शक्त्रिं नाम महाभागं वशिष्ठकुलवर्द्धनम्
।
ज्येष्ठं पुत्त्रं पुत्त्रशतात् वशिष्ठस्य
महात्मनः ॥"
अयं हि इक्ष्वाकुवंशीयं
कल्माषपादनृपतिं
अशपत् । स च नृपती राक्षसो भूत्वा
एन-
मभक्षयत् । एतद्वृत्तान्तस्तु महाभारते १
। १७७
अध्याये द्रष्टव्यः ॥)

**शक्नः**, त्रि, प्रियंवदः । इत्यमरटीकायां भरतः ॥

**शक्नुः**, त्रि, प्रियंवदः । इत्यमरः ॥

**शक्मा**, [न्] पुं, (शक + "अशिशकिभ्यां छन्दसि
।"
उणा० ४ । १४६ । इति मनिन् ।)
शक्तिः ।

इति प्राञ्चः ।” इति दुर्गादासः ॥

**शक्तिग्राहकः**, पुं, व्याकरणोपमानादिः । शक्ति-

ग्रहीता च । शक्तिं ग्राहयति गृह्णाति च
इत्यर्थे
ञ्यन्ताञ्यन्तग्रहधातोर्ण्क्(ण्वुल्)प्रत्ययेन
निष्पन्नमेतत् ॥

**शक्तिधरः**, पुं, (धरतीति । धृ + अच् । शक्तेर्धरः ।)

कार्त्तिकेयः । इत्यमरः ॥ (यथा, हरिवंशे ।
७३ । ९ ।
“बलेन वपुषा चैव बाल्येन चरितेन च ।
स्यात्ते शक्तिधरस्तुल्यो न तु कश्चन मानुषः
॥”)
शक्तिधारके, त्रि ॥ (यथा, बृहत्संहितायाम् ।
५८ । ४१ ।
“स्कन्दः कुमाररूपः शक्तिधरो वर्हिकेतुश्च
॥”)

**शक्तिपर्णः**, पुं, सप्तपर्णवृक्षः । इति जटाधरः ॥

**शक्तिपाणिः**, पुं, (शक्तिरस्त्रविशेषः पाणौ यस्य ।)

कार्त्तिकेयः । इति हलायुधः ॥

**शक्तिभृत्**, पुं, (शक्तिं बिभर्त्तीति । भृ + क्विप् ।

तुक् च ।) कार्त्तिकेयः । इति हेमचन्द्रः ॥
शक्त्यस्तधारके, त्रि ॥

“निस्तुषैश्चणकैर्भृष्टैस्तूर्य्यांशैश्च यवैः
कृताः ।
शक्तवः शर्करासर्पिःशक्ता
ग्रीष्मेऽतिपूजिताः ॥”
अथ शालिशक्तवः ।
“शक्तवः शालिसंभूता वह्निदा लघवो
हिमाः ।
मधुरा ग्राहिणो रुच्याः पथ्याश्च
बलशुक्रदाः ॥
न भुक्त्वा न रदैश्छित्त्वा न निशायां न वा
बहून् ।
न जलान्तरितान् न द्विः शक्तूनद्यान्न
केवलान् ॥
पृथक्पानं पुनर्द्दानं सामिषं पयसा निशि ।
दन्तच्छेदनमुष्टञ्च सप्त शक्तुषु वर्ज्जयेत् ॥”
इति भावप्रकाशः ॥
जन्मतिथौ तद्भक्षणफलम् । ज्योतिषे ।
“शक्तून् खादति यस्तु तस्य रिपवो नाशं
प्रयान्ति ध्रुवं
भुङ्क्ते यस्तु निरामिषं स हि भवेत्
जन्मान्तरे
पण्डितः ।”
इति तिथ्यादितत्त्वम् ॥
मेषसंक्रान्त्यां तद्दानविधिर्य्यथा । स्मृतिः ।
“मेषादौ शक्तवो देया वारिपूर्णा च गर्गरी ।”
महार्णवे ।
“यो ददाति हि मेषादौ
शक्तूनम्बुघटान्वितान् ।
पितृनुद्दिश्य विप्रेभ्यः सर्व्वपापैः प्रमुच्यते ।
विप्रेभ्यः पादुके छत्रं पितृभ्यो विषुवे शुभम्
॥”
इति तिथ्यादितत्त्वम् ॥
चातुर्मास्यव्रते प्रातः स्नानस्य घृतशक्तवो
दक्षिणा
यथा । नारदीयम् ।
“नित्यस्नाने हविर्द्दद्यान्निःस्नेहे घृतशक्तवः
॥”
नित्यस्नाने प्रातःस्नाने । इति
मलमासतत्त्वम् ॥

शकधातोरौणादिकमनिन्प्रत्ययेन
निष्पन्नम् । इति
सिद्धान्तकौमुदी ॥ (इन्द्रः । इत्युज्ज्वलः
। ४ ।
१४६ ॥ क्ली, शक्यतेऽनेनाभिमतं प्राप्तुं
शक्नो-
तीष्टं साधयितुं वा शक्यते कर्त्तुमिति वा
।
शक + मनिन् । कर्म्म । इति निघण्टुः ।
२ । १ ॥
यथा, ऋग्वेदे । ९ । ३४ । ३ ।
“दुहन्ति शक्मना पयः ॥”
“शक्मना कर्म्मणा ।” इति तद्भाष्ये
सायणः ॥)

**शक्यः**, त्रि, (शक + “शकिसहोश्च ।” ३ । १ । ९९ ।

इति यत् ।) समर्थनीयः । (यथा, रघुः ।
२ । ४९ ।
“शक्योऽस्य मन्युर्भवता विनेतुं
गाः कोटिशः स्पर्शयता घटोध्नीः ॥”)
शक्त्याश्रयः । (यदा भावे यत् स्यात्
तदा
क्लीवलिङ्गः स्यात् । यथा, गीतायाम् ।
१८ । ११ ।
“नहि शक्यं देहभृता त्यक्तुं
कर्म्माण्यशेषतः ॥”
तथाच रामायणे । २ । १३ । ५ ।
“तानि सर्व्वाणि संयन्तुं शक्यं राम
जितेन्द्रियैः ॥”)
पुं, वाच्योऽर्थः । यथा, --
“शक्योऽर्थोऽभिधया ज्ञेयः लक्ष्यो
लक्षणया
मतः ।
व्यङ्ग्यो व्यञ्जनया ज्ञेयस्तिस्रः शब्दस्य
वृत्तयः ॥”
इत्यलङ्कारशास्त्रम् ॥
अन्यच्च ।
“शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ
गुणः ।”
इति भाषापरिच्छेदः ॥

|  |  |  |
| --- | --- | --- |
|  |  | अपि च । “ईश्वरसङ्केतः शक्तिस्तया अर्थबोधकं पदं वाचकम् । यथा गोत्वादिविशिष्टबोधकं गवादिपदं तद्बोध्योऽर्थो गवादिर्वाच्यः स एव मुख्यार्थ इत्युच्यते ।” इति शक्तिवादः ॥ |

**शक्यतावच्छेदकं**, त्रि, (शक्यताया अवच्छेदकम् ।)

शक्यांशे भासमानधर्म्मः । यथा ।
"एवञ्च तादृशधर्म्मस्य शक्यतावच्छेदकत्वं दुर्व्वारमेव ।" इति शक्तिवादः ॥

**शक्रः**, पुं, (शक्नोति दैत्यान् नाशयितुम् । शक +
"स्फायितञ्चीति ।" उणा० २ । १३ । इति रक् ।)
इन्द्रः । इत्यमरः । (यथा, रघुः । ३ । ३९ ।
"धनुर्भृतामग्रत एव रक्षिणां
जहार शक्रः किल गूढविग्रहः ॥")
कुटजवृक्षः । अर्ज्जुनवृक्षः । इति मेदिनी ॥
ज्येष्ठानक्षत्त्रम् । यथा, --
"शक्रो निरृतिस्तोयं विश्वविरिञ्ची हरिर्वसु-
र्व्वरुणः ।
अजपादोऽहिव्रध्नः पूषा चेतीश्वरा भानाम् ॥"
इति ज्योतिस्तत्त्वम् ॥
चतुर्द्दशन्द्रा यथा, --
"विश्वभुक् च विपश्चिद्यः सुवित्तिः शिविरेव च ।
विभुर्म्मनोजवश्चैव तथौजस्वी वडिस्तथा ॥
अद्भुतश्च तथा शान्तिस्तथा देवचरो वृषः ।
ऋतधामा दिवःस्वामी शुचिः शक्राश्चतुर्द्दश ॥" *
ब्राह्मदिनमासाब्देषु इन्द्राणां नाशसंख्या यथा ।
"ब्राह्मे दिने वै नश्यन्ति चतुर्द्दश पुरन्दराः ।
शतानि मासि चत्वारि विंशत्या सहितानि च ।
अब्दे पञ्चसहस्राणि चत्वारिंशच्छतानि च ॥"
इत्याद्ये वह्निपुराणे गणभेदनामाध्यायः ॥ * ॥
इन्द्रत्वप्राप्तिकारणं यथा, --
इन्द्र उवाच ।
"रमाकान्त भवत्प्रीत्यै कृतं क्रतुशतं पुरा ।
तेन पुण्येन सम्प्राप्तं मया पौरन्दरं पदम् ॥
इदानीं नूतनः कोऽपि जातो दिवि पुरन्दरः ।
न तेन धर्म्मो विहितो न तेन क्रतवः कृताः ।
मम सिंहासनं दिव्यं कथमाक्रान्तमच्युत ॥
तया भक्त्या तु संप्राप्तं तव साम्राज्यमुत्त-
मम् ॥"
इति पाद्मोत्तरखण्डे ९६ अध्यायः ॥
(समर्थे, त्रि । यथा, ऋग्वेदे । ४ । १६ । ६ ।
"विश्वानि शक्रो नर्य्याणि विद्वा-
नपो रिरेच सखिभिर्निकामैः ॥"
"विद्वान् जानन् शक्रः समर्थ इन्द्रः ।" इति
तद्भाष्ये सायणः ॥)

**शक्रक्रीडाचलः**, पुं, (शक्रस्य क्रीडाचलः क्रीडा-
पर्व्वतः ।) सुमेरुपर्व्वतः । इति हलायुधः ॥

**शक्रगोपः**, पुं, इन्द्रगोपकीटः । इति जटाधरः ॥

(यथा, हरिवंशे । ६६ । ५ ।
"नववर्षावसिक्तानि
शक्रगोपाकुलानि च ।
नष्टदावाग्निमार्गाणि वनानि
प्रचकाशिरे ॥")

**शक्रजः**, पुं, (शक्राज्जायते इति । जन + डः ।)

काकः । इति त्रिकाण्डशेषः ॥
इन्द्रजाते, त्रि ॥

**शक्रजातः**, पुं, (शक्राज्जातः ।) काकः । इति
शब्दरत्नावली ॥ इन्द्रजाते, त्रि ॥

**शक्रजित्**, पुं, (शक्रं जितवानिति । जि + क्विप् ।)

रावणपुत्त्रः । इति त्रिकाण्डशेषः ॥ (यथा,
रघुः । १४ । ८३ ।
"अपि प्रभुः सानुशयोऽधुना स्यात्
किमुत्सुकः शक्रजितोऽपि हन्ता ॥")

उडुम्बराजकर्णञ्च पञ्चैते शोभना हरेः ।
ध्वजार्थे वर्जयेद्वत्स देव उद्यानजान् द्रुमान् ॥
कन्या मध्ये तु या यष्टीः करमानेन कल्पयेत् ।
एकादशकरा वत्स नव पञ्च करापरा ॥
अरालतां क्रिमिचितां तथा पक्षिनिकेतनाम् ।
वल्मीकपितृवनजां सुशुष्ककोटरान्तराम् ॥
कुब्जाञ्च घटसिक्ताञ्च तथा स्त्रीनामगर्हिताम् ।
विद्युद्वज्रहताञ्चैव दग्धाञ्च परिवर्जयेत् ॥
अलाभे चन्दनं आम्रं शालशाकमयं तथा ।
कर्त्तव्यं शक्रचिह्नार्थे न चान्यं वृक्षजं क्वचित् ॥
शुभभूमिभवं ग्राह्यं शुभतोयं शुभावहम् ।
ततः संपूजयेद्वृक्षं प्राङ्मुखोदङ्मुखोऽपि वा ॥
नमो वृक्षपते वृक्ष त्वामर्च्चयति पार्थिवः ।
ध्वजार्थं तत्त्वतो नाथ अन्यथा उपगम्यताम् ॥
रात्रौ देयो वलिस्तत्र युगवृक्षे तथव च ।
वासवानां महावृक्षं कृत्वा चान्यत्र गम्यताम् ॥
ध्वजार्थे देवराजस्य न क्षान्तिस्तव अत्र च ।
पूजयित्वा ततो वृक्षं बलिं भूताय दापयेत् ॥
प्रभाते छेदयेद्वृक्षं शुभस्वप्नादिदर्शनैः ।
शुक्लाम्बरधरश्चैव समुद्रतरणं नदी ॥
वृक्षान्नम्रान् शुभान् क्षीरानारोहेत् देवता-
लयम् ।
देवो द्विजस्तथा साधुलिङ्गब्रह्म हरेरपि ॥
प्रतिमा पूजिता स्वप्ने क्षिप्रं सिद्धिफलप्रदा ।
मत्स्यमांसदधिलाभं रुधिरं मृतरोदनम् ॥
अगम्यागमनं दृष्ट्वा आशु सिद्धिफलप्रदम् ।
द्रुमांस्तिलं घनं धान्यं शत्रुनाशं यथा शुभम् ॥
फलं पुष्पं सिता दूर्व्वा स्वप्ने लब्धा जयावहाः ।
शङ्खगावस्तथा दन्तिलाभा राज्यप्रदायकाः ॥
गौः सवत्सा नवसुता दृष्टा पुत्त्रफलप्रदा ।
पङ्कस्योद्धरणं कूपे व्याधिमोक्षकरं चिरात् ॥
एवं स्वप्नान् शुभान् दृष्ट्वा तथा छिन्देत पाद-
पम् ।
उदङ्मुखः प्राङ्मुखो पा मधुवज्राक्तपर्शुना ॥
पूर्व्वोत्तरे च पतनं शस्तोऽशब्दोऽव्रणः शुभः ।
अलग्नपादपे चान्ये अन्यथा तु परित्यजेत् ॥
अष्टाङ्गुलं त्यजेत् मूले अग्रे तन्तु जले क्षिपेत् ।
तथा तमानयेद्वत्स शकटेन वृषैरपि ॥

इत्येवं वदतस्तस्य श्रुत्वा वाक्यं रमापतिः ।
उन्मीलितस्मिताक्षोऽसावुवाचमधुरं वचः ॥
श्रीभगवानुवाच ।
देवादयो मनुष्यान्ता मम सेवापरायणाः ।
मद्याजनरता लोका मद्भक्तिस्तुतिपाठकाः ॥
मन्मूर्त्तिषु कृतध्याना मत्कथाश्रवणा इह ।
मत्पादोदकनैवेद्यभोजिनोऽन्वहमेव ये ॥
मन्नामकीर्त्तनपरा मम स्मृतिपरायणाः ।
मन्मन्त्रजापका नित्यमनन्याश्रयसम्पदः ॥
किं विधित्वं किमिन्द्रत्वं देवत्वमपरं किमु ।
तेषामलभ्यं यत्किञ्चित् दुर्लभं नास्ति संसृतौ ॥
किं दानैरल्पफलदैः किं तपोभिः किमध्वरैः ।
सेव्यमानैः क्षितितले स मम प्रीतिमान् सदा ॥
इन्द्र उवाच ।
भगवन् कर्म्मणा केन स त्वत्प्रीतिपरो भवेत् ।
तद्वदस्व महाबाहो प्रपन्नभयभञ्जन ॥
श्रीभगवानुवाच ।
अनेकधा मद्भजनं मम प्रीतिकरं परम् ।
यद्भक्त्या तत् पदं लेभे तत् शृणुष्व पुरन्दर ॥
जपत्यष्टादशाध्यायगीतानांश्लोकपञ्चकम् ।

इन्द्रजेतरि, त्रि ॥

**शक्रद्रुमः**, (शक्रस्य द्रुमः ।) देवदारुवृक्षः । इति

भावप्रकाशः ॥

**शक्रधनुः**, [स्] क्ली, (शक्रस्य धनुः ।) इन्द्रधनुः ।

इत्यमरः ॥ गण्डी इति रामधनुक
इति च
भाषा ॥
“इन्द्रायुधं शक्रधनुः
कौशिकायुधमित्यपि ।
ऐरावतं रोहितं स्यादवक्रं यदि
तद्धनुः ॥”
इति शब्दरत्नावली ॥
(यथा, महाभारते । ५ । ५६ । ११
।
“यथाकाशे शक्रधनुः प्रकाशते
न चैकवर्णं न च वेद्मि किन्नु तत् ॥”)

**शक्रध्वजः**, (शक्रस्य ध्वजः ।) इन्द्रध्वजः । (यथा,

आर्य्यासप्तसत्याम् । २६९ ।
“ते श्रेष्ठिनः क्व सम्प्रति शक्रध्वज ! यैः कृत-
स्तवोच्छ्रायः ।
ईषां वा मेढिं वाधुनातनास्त्वां
विधित्सन्ति ॥”)
तद्विवरणं यथा, --
नृपवाहन उवाच ।
“भगवन् श्रोतुमिच्छामि तस्य
उत्थापनं यथा ।
क्रियते दिन ऋक्षे च द्रव्यमन्त्रविधिं
वद ॥
अगस्त्य उवाच ।
ब्रह्मणा कथितं शक्र
बृहस्पतिसमीपतः ।
यथा तथा प्रवक्ष्यामि विधिं केतोः
समुच्छ्रये ॥
बृहस्पतिरुवाच ।
शुभाहे ऋक्षे करणे मुहूर्त्ते शुभमङ्गले
।
युवानैर्बलसम्पन्नैर्नेयं तत्पुरतः परम् ।
नीयमाना यदा यष्टी समा वा चतुरस्रका ॥
वृत्ता वा भङ्गमाधत्ते राज्ञः पुत्त्रं पुरोहितम् ।
आरभङ्गे बलं भिन्द्याद्राज्यनाशं क्षयं तथा ॥
अर्थस्य अक्षभङ्गेन शान्तिन्तत्र तु कारयेत् ।
इन्द्रर्जच्छत्रमन्त्रेण जातदेवसमापि वा ॥
तथा नीत्वा शुभे लग्ने पुरस्तादुपवेशयेत् ।
द्वारशोभां पथरथ्या गृहे हट्टे च कारयेत् ॥
यदा पटहनादाश्च वेश्याशङ्खद्विजातयः ।
सङ्कुलैर्वेदशब्दैश्च ता नेया यत्र उच्छ्रयेत् ॥
तत्रस्थाश्चित्रकर्म्माविनिर्म्मितैस्तान्तु वेष्टयेत् ।
वस्त्रैरण्डजरोमोत्थैः शुभैः शुक्लैर्यथाक्रम् ॥
नन्दोपनन्दसंज्ञाश्च कुमार्य्यः प्रथमांशगाः ।
देवो जयविजयाख्याः षोडशांशव्यवस्थिताः ॥

|  | दैवज्ञः सूत्रधारश्च वनं गच्छेत् सहायवान् ॥<br>देवीप्रतिष्ठाविधिना यात्रायां या प्रचोदिता ।<br>गत्वा बृक्षं शुभं पुष्पं धवार्ज्जुनप्रियङ्करम् ॥ |  |
| --- | --- | --- |

अधिके शत्रुजयित्री तथार्थजा दैवतैर्दण्डाः ।
ध्वजपरिमाणार्थं सपरिधिः प्रथमं पिटम् ॥
षोडशांशविहीनानि कुर्य्याच्छेषाणि बुद्धिमान् ।
रसनां विचित्रवर्णां प्रथमां दद्यात् स्वयम्भूः ॥
सुरक्तां चतुरस्राञ्च विश्वकर्म्मा द्वितीयतः ।
अष्टास्रान्तु स्वयं शक्रो नीलरक्तां प्रदापयेत् ॥
कृष्णं यमेन वृत्तञ्च वरुणेन सहस्रिकम् ।
मञ्जिष्ठाजलदाकारं वासुदेवो मसूरकम् ॥
नीलवर्णञ्च तं दद्यात् स्कन्दो बहुविचित्रितम् ।
वृत्तन्तु दहनो दत्यात् सुवर्णाभं तथाष्टमम् ॥
वैदूर्य्यसदृशमिन्द्रो ग्रैवेयं दापयेद् बुधः ।
चक्राङ्काकृतिन्तु सूर्य्यो विश्वेदेवाः पद्मनिभम् ॥
ऋषयो नियमं दद्युर्नीलं नीलोत्पलाभासम् ।
गुरुणा शुक्रेण ततो विशालं मूर्द्धतो न्यस्तम् ॥
गृहैर्विचित्राणि बहुमातृभिः स्वानि रूपाणि ।
यद्येकेनैव दत्तन्तु केतोस्तत्तस्य भूषणम् ॥
तदैव तं विजानीयाद्यन्त्रादिभिस्तमुच्छ्रयेत् ।
प्रथमं प्रविशमाना भूमिं यष्टिर्हन्ति राष्ट्रम् ॥
बालानां तालशब्देन देशविधातं समाचष्टे ।
नृपवधकरा विशीर्णा शुभावहा सर्व्वसान्द्रा च ॥
शम्भुमूर्य्यमशक्रसोमधनदवारुणैः ।
बह्वीशऋषिमन्त्राश्च होतव्या दधि चाक्षताः ॥
शुक्रस्कन्दगुरुरुद्रअप्सरादिप्रपाठयेत् ।
हुत्वा तु विधिवद्वह्निज्वालां लक्षेत बुद्धिमान् ॥
सुतेजाः सुमनो दीप्तः संहतो रुचिरप्रभः ।
रक्ताशोकसमाकारो रथभेरीस्वनः शुभः ॥
शङ्खदुन्दुभिमेघानां नादाः शस्तास्तु पावके ।
ततः सकदलीक्षुदण्डान् पताकानि समुच्छ्रये ॥
अन्याश्च विविधाः शोभाः शक्रकेतुसमुच्छ्रये ।
प्रौष्ठपदे तु अष्टम्यां शुक्लायां शोभने ऋक्षे ॥
आश्विने वाथ शुक्लायां श्रवणेनाथ उच्छ्रयेत् ।
पौरजनलग्नवृन्दैः पटभेरीनिनादितम् ॥
वितानध्वजशोभाढ्यं पताकाभिः समुज्वलम् ।
विष्णवीशशक्रमन्त्रेण सिंहरक्षाकृतेन च ॥
दृढमातृकरन्ध्रस्थं शुभतोरणमाकुलम् ।
अविलम्बितमुत्थानमभग्नपिटकंसमम् ॥
न हुतं वा समुत्थाप्य केतुं वासवजं विभो ।
उच्छ्रितं रक्षयेत्प्राज्ञः काकोलूककपोतयोः ॥
न समुत्थापनं दद्यादन्येषामपि पक्षिणाम् ।
पाते तु तथैव कुर्य्यादुत्थाने यादृशी पूजा ।
रात्रौ शुभकृत् पातनं नो दृष्टं काककपोतैः ॥
याति नृपं सहराष्ट्रं यश्चैव कारयेत् केतुम् ।
नगरे वा पुरे खेटे यद्येवं कुर्व्वते पौराः ॥
पुरे नगरस्य द्वारे वृषसिंहखगोत्थितम् ।
केतु समस्तघोराणां नाशनं जयदं महत् ॥
एवं पूर्ब्बं हरिः केतुं प्राप्तवान् वृषवाहनात् ।
तथा ब्रह्मसुतेनैव ब्रह्मणः शक्रमागतः ॥
तेन सोमस्य तद्वृत्तं ततो दक्षे समागतम् ।
तदाप्रभृति कुर्व्वन्ति नृपा अद्यापि उच्छ्रयम् ॥
एवं यः कारयेद्राजा केतुं विजयकारकम् ।
तस्य पृथ्वी बलोपेता सद्वीपा वशगा भवेत् ॥”
इत्याद्ये देवीपुराणे इन्द्रध्वजलक्षणम् २१ अध्यायः ॥

**शक्रनन्दनः**, पुं, (शक्रस्य नन्दनः ।) अर्ज्जुनः ।
इति जटाधरः ॥ (इन्द्रपुत्त्रमात्रमपि ॥ शक्रं नन्दयतीति । नन्दि + ल्युः ।) इन्द्रानन्द-कारके, त्रि ॥

**शक्रपर्य्यायः**, पुं, (शक्रस्य पर्य्यायो नाम यस्य ।)
कुटजवृक्षः । इति रत्नमाला ॥ इन्द्रवाचकश्च ॥

**शक्रपादपः**, पुं, (शक्रस्य पादपः ।) देवदारुवृक्षः ।
इत्यमरः ॥ कुटजवृक्षः । इति राजनिर्घण्टः ॥

**शक्रशाखी**, [न्] पुं, (शक्रनामकः शाखी ।)
कुटजवृक्षः । इति भावप्रकाशः ॥

**शक्रशाला**, स्त्री, प्रतिश्रयः । इति भूरिप्रयोगः ॥
पुस्तकान्तरे सत्रशाला इति पाठश्च ॥ (शक्रस्य शाला ।) इन्द्रगृहञ्च ॥

**शक्रशिरः**, [स्] क्ली, (शक्रस्य शिर इव ।) वल्मीकः ।
इति राजनिर्घण्टः ॥ इन्द्रमस्तकश्च ॥ * ॥

**शक्रसारथिः**, पुं, (शक्रस्य सारथिः ।) मातलिः ।
इति हलायुधः ॥

**शक्रसुतः**, पुं, (शक्रस्य सुतः ।) वालिवानरः ।
इति हलायुधः ॥ इन्द्रपुत्त्रमात्रञ्च ॥

**शक्रसुधा**, स्त्री, (शक्रस्य सुधेव ।) पालङ्की । इति
शब्दचन्द्रिका ॥ कुन्दुरुखोटी इति भाषा ॥

**शक्रसृष्टा**, स्त्री, (शक्रेण सृष्टा ।) हरीतकी ।
इति त्रिकाण्डशेषः ॥

**शक्राख्यः**, पुं, (शक्रस्य आख्या यस्य ।) पेचकः ।
इति त्रिकाण्डशेषः ॥ इन्द्रनामके, त्रि ॥

**शक्राणी**, स्त्री, (शक्रस्य पत्नी । ङीष् । आनुक् ।)
शची । इति शब्दमाला ॥ (यथा, महा-भारते । ५ । ११ । २२ ।
“बृहस्पतिरथोवाच शक्राणीं भयमोहिताम् ॥”)

**शक्राशनं**, क्ली, (शक्रेण अश्यते इति । अश + ल्युट् ।) भङ्गा । भाङ् इति भाषा । अस्य गुणाः ।
“शक्राशनन्तु तीक्ष्णोष्णं मोहकृत् कुष्ठनाशनम् ।
बलमेधाग्निकृत् श्लेष्मदोषहारि रसायनम् ॥”

यन्त्रोद्देशेन तं कुर्य्यात् मुखं केतोर्यथाविधि ॥
तथा सुसंस्थितं पूज्यं मुखयन्त्रसुयन्त्रितम् ।
रात्रौ जागरणं कुर्य्यादिन्द्रमन्त्रानुकीर्त्तनम् ॥
पुरोहितः सदैवज्ञः शुभशान्तिरतः सदा ।
छत्रपातो नृपं हन्यात् पताका महिषीवधम् ॥
पिटके युवराजस्य सचिवमनुकम्पते ।
राष्ट्रं तोरणपातेन ध्वजे अन्नक्षयो भवेत् ॥
पतिते शक्रदण्डे तु नृपमन्यं समादिशेत् ।
कृमिजालक उत्थाने शलभात्तस्कराद्भयम् ।
सुसमे संस्थिते शान्तिर्नृपस्य नगरस्य च ॥
याचोच्छ्रितन्तु तिष्ठन्ति तावत् पौराः सदा हृष्टाः ।
केतोर्न्निरता यजने भुञ्जीयाद्विप्रकन्याश्च ॥

**शक्रपुष्पिका**, स्त्री, (शक्रपुष्पी + स्वार्थे कन् । अत इत्वम् ।) अग्निशिखावृक्षः । इति रत्नमाला ॥

**शक्रपुष्पी**, स्त्री, अग्निशिखावृक्षः । इत्यमरः ॥

**शक्रबीजं**, क्ली, इन्द्रजवः । इति राजनिर्घण्टः ॥

**शक्रभवनं**, क्ली, (शक्रस्य भवनम् ।) स्वर्गः । इति त्रिकाण्डशेषः ॥

**शक्रभित्**, [द्] पुं, (शक्रं भिनत्तीति । भिद् + क्विप् ।) इन्द्रजित् । स च रावणपुत्त्रः । इति शब्दरत्नावली ॥

**शक्रभूभवा**, स्त्री, इन्द्रवारुणी । इति शब्द-चन्द्रिका ॥

**शक्रमाता**, स्त्री, (शक्रस्य मातेव ।) भार्गी । इति राजनिर्घण्टः ॥ इन्द्रजननी च ॥

**शक्रमातृका**, स्त्री, (शक्रस्य मातृकेव ।) शक्र-ध्वजाङ्गयष्टिविशेषः । यथा, कालिकापुराणम् ।
“कुमार्य्यः पञ्च कर्त्तव्याः शक्रस्य नृपसत्तम ।
शालमय्यस्तु ताः सर्व्वास्त्वपराः शक्रमातृकाः ॥
केतोः पादप्रमाणेन कार्य्याः शक्रकुमारिकाः ।
मातृकार्द्धप्रमाणा तु यन्त्रं हस्तद्वयं तथा ॥
एवं कृत्वा कुमारीश्च मातृकां केतुमेव च ।
एकादश्यां सिते पक्षे यष्टीनामधिवासनम् ॥”
इति तिथ्यादितत्त्वम् ॥

**शक्रमूर्द्धा**, [न्] स्त्री, (शक्रस्येव मूर्द्धा यस्य ।) वल्मीकः । इति त्रिकाण्डशेषः ॥

**शक्रवली**, स्त्री, (शक्रप्रिया वल्ली ।) इन्द्र-वारुणी । इति राजनिर्घण्टः ॥
इति राजवल्लभः ॥
अन्यत् विजयाशब्दे द्रष्टव्यम् ।
इन्द्रभोजनञ्च ॥

**शक्राशनः**, पुं, (शक्र इति नाम अश्नुते व्याप्नो-तीति । अश + ल्युः ।) कुटजवृक्षः । इति शब्द-चन्द्रिका ॥

**शक्राह्वः**, पुं, (शक्रस्य आह्वा यस्य ।) इन्द्रयवः । इति राजनिर्घण्टः ॥ इन्द्रनामके, त्रि ॥

**शक्रिः**, पुं, (शक + बाहुलकात् क्रिन् ।) मेघः । वज्रम् । हस्ती । पर्व्वतः । इति संक्षिप्तसारो-णादिवृत्तिः ॥

**शक्रोत्थानं**, क्ली, (शक्रस्य शक्रध्वजस्य उत्थानम् ।) शक्रध्वजोत्सवः । अस्य विधिर्लिख्यते ।
श्रीऔर्व्व उवाच ।
“अथातः शृणु राजेन्द्र शक्रोत्थानध्वजोत्सवम् ।
यत्कृत्वा नृपतिर्याति नो कदाचित् पराभवम् ॥
रवौ हरिस्थे द्वादश्यां श्रवणे स्तिपक्षके ।
आराधयेन्नृपः सम्यक् सर्व्वविघ्नोपशान्तये ॥
राजोपरिचरो नाम वसुनामापरस्तु यः ।
नृपस्तेनायमतुलो यज्ञः प्राविर्त्तितः पुरा ॥
प्राविट्काले च नभसि द्वादश्यामसितेतरे ।
पुरोहितो बहुविधैर्वाद्यैस्तूर्य्यैः समन्वितः ॥
प्रथमं शक्रकेत्वर्थे वृक्षमामन्त्र्य वर्द्धयेत् ।
सांवत्सरो वार्द्धकिश्च कृतकौतुकमङ्गलः ॥
उद्याने देवतागारे श्मशाने मार्गमध्यतः ।
ये जातास्तरवस्तांस्तु वर्जयेद्वासवध्वजे ॥
बहुवल्लीयुतं शुष्कं बहुकण्टकसंयुतम् ।

| | | |
|---|---|---|
| | **शक्रवाहनः**, पुं, (शक्रं वाहयतीति । वह + णिच् + ल्युः ।) मेघः । इति शब्दचन्द्रिका ॥<br><br>**शक्रशरासनं**, क्ली, (शक्रस्य शरासनम् ।) इन्द्र-धनुः । इति हलायुधः ॥ | |

कुब्जं वृक्षादनीयुक्तं लताच्छन्नं तरुं त्यजेत्
॥
पक्षिवाससमाकीर्णं कोटरैर्ब्बहुभिर्युतम् ।
पवनानलविध्वस्तं तरुं यत्नेन वर्जयेत् ॥
नारीसंज्ञाश्च ये वृक्षा अतिह्रस्वा
अतिकृशाः ।
तान् सदा वर्जयेद्धीरः सर्व्वदा शक्रपूजने ॥
अर्ज्जुनोऽप्यश्वकर्णश्च प्रियको धव एव च
।
औडुम्बरश्च पञ्चैते केत्वर्थे सत्तमाः स्मृताः
॥
अन्ये च देवदार्व्वाद्याः
शालाद्यास्तरवस्तथा।
प्रशस्तास्तु परिग्राह्या नाप्रशस्ताः कदाचन
।
तञ्च वृक्षं ततो रात्रौ स्पृष्ट्वा मन्त्रमिमं पठेत्
॥
यानि वृक्षे तु भूतानि तेभ्यः स्वस्ति
नमोऽस्तु वः ।
उपहारं गृहीत्वेमं क्रियतां वासवध्वजः ॥
पार्थिवस्त्वां वरयते स्वस्ति तेऽस्तु नगोत्तम
।
ध्वजाथदेवराजस्य पूजेयं प्रतिगृह्यताम् ॥
ततोपरेऽह्नि तं छित्त्वा मूलमष्टाङ्गुलं पुनः ।
जले क्षिपेत्तदग्रस्य छित्त्वैवं चतुरङ्गुलम् ॥
ततो नीत्वा पुरद्वारं केतुं निर्म्माय तत्र वै ।
शुक्लाष्टम्यां भाद्रपदे केतुं वेदीं प्रवेशयेत् ॥
द्वाविंशद्धस्तमानस्तु अधमः केतुरुच्यते ।
द्वात्रिंशत्त ततो ज्यायान् द्वाचत्वारिंशिदेव च
।
ततोऽधिकः समाख्यातो
द्वापञ्चाशत्तथोत्तमः।
कुमार्य्यः पञ्च कर्त्तव्याः शक्रस्य नृपसत्तम
।
शालमय्यस्तु ताः सर्व्वास्त्वपराः
शक्रमातृकाः ॥
केतोः पादप्रमाणेन कार्य्याः शक्रकुमारिकाः
॥
मातृकार्द्धप्रमाणात्तु यन्त्रं हस्तद्वयं तथा ।
पेटकैः स्थाने पट्टकैरिति च पाठः ।
“बृहद्भिरतिकान्तैश्च नानाद्रव्यसुपूरितैः ।
यथावर्णैर्यथादेशयोजितैर्व्वस्त्रवेष्टितैः ॥
युक्तं तं किङ्किणीजालैर्बृहद्घण्टौघचामरैः ।
भूषितं बहुरत्नैश्च माल्यैर्ब्बहुविधैस्तथा ॥
बहुपुष्पैः सुगन्धैश्च भूषितं रत्नमालया ।
चित्रमाल्याम्बरधरैश्चतुर्भिरपि तोरणैः ॥
उत्थापयेन्महाकेतुं राजामात्यैः शनैः शनैः ।
तमुत्थाप्य महाकेतुं पूजितं मण्डलान्तरे ॥
प्रतिमां तां नयेन्मूलं केतोः शक्रं विचिन्तयन्
।
यजेत्तं पूर्व्ववत्तत्र शचीं मातलिमेव च ॥
जयन्तं तनयं तस्य वज्रमैरावतं तथा ।
ग्रहांश्चाप्यथ दिक्पालान् सर्व्वांश्च
गणदेवताः ॥
अपूपाद्यैः पूजयेत्तु बलिभिः पायसादिभिः ।
पूजितानाञ्च देवानां शश्वद्धोमं समाचरेत् ॥
होमान्ते तु बलिं दद्यात् वासवाय महात्मने ॥
तिलं घृतं चाक्षतञ्च पुष्पं दूर्व्वां तथैव च ।
एतैस्तु जुहुयाद्देवान् स्वैः स्वैर्मन्त्रैर्नरोत्तमः ॥
ततो होमावसाने तु भोजयेदपि ब्राह्मणान् ।
एवं संपूजयेन्नित्यं सप्तरात्रं दिने दिने ॥
ब्राह्मणैः सहितो राजा वेदवेदाङ्गपारगैः ।
सर्व्वत्र शक्रपूजासु यज्ञेषु परिकीर्त्तितः ॥
त्रातारमिति मन्त्रोऽयं वासवस्य प्रियः सदा ।
एवं कृत्वा दिवाभागे शक्रोत्थापनमादितः ॥
श्रवणर्क्षयुतायान्तु द्वादश्यां पार्थिवः स्वयम् ।
अन्त्यपादे भरण्यास्तु निशि शक्रं विसर्जयेत्
॥
सुप्तेषु सर्व्वलोकेषु यथा राजा न पश्यति ।
षण्मासान्मृत्युमाप्नोति राजा दृष्ट्वा
विसर्जनम् ॥
शक्रस्य नृपशार्द्दूल तस्मान्नेक्षेत तं नृपः ।
विसर्ज्जनस्य मन्त्रोऽयं पुराविद्भिरुदीरितः ॥
सार्द्धं सुरासुरगणैः पुरन्दर शतक्रतो ।
उपहारं गृहीत्वेमं महेन्द्रध्वज गम्यताम् ॥
सूतकेतुसमुत्पन्ने वारे भौमस्य वा शनेः ।
भूमिकम्पादिकोत्पाते वासवं न विसर्जयेत् ॥
उत्पाते सप्तरात्रन्तु तथोपप्लवदर्शने ।
तत्तुल्यः कोऽपि नान्योऽस्ति प्रियः
शक्रस्य
पार्थिव ।
तस्य पूजा सर्व्वपूजा केशवाद्याश्च
तत्रगाः ॥
सकलकलुषहारि व्याधिदुर्भिक्षनाशि
सकलभवनिवेशं सर्व्वसौभाग्यकारि ।
सुरपतिगृहगामीहार्च्चनं शक्रकेतोः
प्रतिशरदमनेकैः पूजयेत् श्रीविवृद्ध्यै
॥”
इति श्रीकालिकापुराणे ८८ अध्यायः ॥

**शक्रोत्सवः**, पुं, (शक्रस्योत्मवः ।) इन्द्रस्य उत्सवः ।

तत्पर्य्यायः । ध्वजोत्थानम् २ । इति
त्रिकाण्ड-
शेषः ॥ (यथा, महाभारते । १ । ६३ ।
२७ ।
“वरदानमहायज्ञैस्तथा शक्रोत्सवेन च ।
संपूजिता मघवता वसुश्चेदीश्वरो नृपः
॥”)
अस्य विवरणं शक्रोत्थानशब्दे द्रष्टव्यम्
॥

**शक्लः**, पुं, (शक + “मूङ्शक्यविभ्यः क्लः ।” उणा०

४ । १०८ । इति क्लः ।) प्रियंवदः ।
इति शक्न-
शब्दटीकायां भरतः ॥

**शक्वरः**, पुं, वृषः । इति सिद्धान्तकौमुद्यामुणादि-

वृत्तिः ॥

**शक्वरी**, स्त्री, (शक्नोति कर्म्माणि कर्त्तुमिति ।

शक + “स्नामदिपदीति ।” उणा० ४ ।
११२ ।
इति वणिप् । “वनो रच ।” ४ । १ । ७
। इति
ङीब्रौ ।) अङ्गुली । इति
सिद्धान्तकोमुद्या-

एवं कृत्वा कुमारीश्च मातृकां केतुमेव च ॥
एकादश्यां सिते पक्षे यष्टिं तामधिवासयेत् ।
अधिवास्य ततो यष्टिं गन्धद्वारादिमन्त्रकैः
॥
द्वादश्यां मण्डलं कृत्वा वासवं
विस्तृतात्मकम् ।
अच्युवं पूजयित्वा तु शक्रं पश्चात् प्रपूजयेत्
॥
शक्रस्य प्रतिमां कुर्य्यात् कानकीं दारवीं
तथा ।
अन्यतैजसभूतां वा सर्व्वाभावे तु मृण्मयीम्
॥
तां मण्डलस्य मध्ये तु पूजयित्वा विशेषतः
।
ततः शुभे मुहूर्त्ते तु केतुमुत्थापयेन्नृपः ॥
वज्रहस्त सुरारिघ्न बहुनेत्र पुरन्दर ।
क्षेमार्थं सर्व्वलोकानां पूजेयं प्रतिगृह्यताम् ॥
एह्येहि सर्व्वामरसिद्धसंघै-
रभिष्टुतो वज्रधरामरेश ।
समुत्थितस्त्वं श्रवणाद्यपादे
गृहाण पूजां भगवन् नमस्ते ॥
एवमुत्तरतन्त्रोक्तैर्द्दहनप्लवनादिभिः ।
इति मन्त्रेण तन्त्रेण नानानैवेद्यवेदनैः ॥
आपूपैः पायसैः पानैर्गुडैर्धानाभिरेव च ।
भक्ष्यैर्भोज्यैश्च विविधैः पूजयेत् श्रीविवृद्धये
॥
घटेषु दशदिक्पालान् ग्रहांश्च परिपूजयेत् ।
साध्यादीन् सकलान्देवान् मातृः
सर्व्वास्त्वनु-
क्रमात् ॥
ततः शुभे मुहूर्त्ते तु ज्ञानिवर्द्धकिसंयुतः ।
केतोरुत्थानभूमिन्तु यज्ञवेद्याश्च पश्चिमे ।
विप्रैः प्ररोहितैः सार्द्धं गच्छेद्राजा सुमङ्गलैः
॥
रज्जुभिः पञ्चभिर्ब्बद्धं यन्त्रश्लिष्टं
समातृकम् ।
कुमारीभिश्च संयुक्तं दिक्पालानाञ्च पेटकैः
॥”

व्यतीत्य शनिर्भौमौ च ह्यन्यर्क्षेऽपि
विसर्ज्जयेत् ॥
मृतके त्वथ संप्राप्ते व्यतीते सूतके पुनः ।
तस्मिंस्तस्मिन् दिने चैव सूतकान्ते
विसर्ज्जयेत् ॥
तथा रक्षेन्नृपः केतुं पतन्ति शकुना यथा ।
न केतौ नृपशार्द्दूल यावन्नपि विसर्जनम् ॥
शनैः शनैः पातयेत्तु यथोत्थापनमादितः ।
कृतं तथान्यथा भग्ने केतौ मृत्युमवाप्नुयात् ॥
विसृष्टं शक्रकेतुं तं सालङ्कारं तथा निशि ।
क्षिपेदनेन मन्त्रेण त्वगाधे सलिले नृपः ॥
तिष्ठ केतो महाभाग यावत् संवत्सरं जले ।
भवाय सर्व्वलोकानामन्तरायविनाशक ॥
उत्थापयेत्तूर्य्यरवैः सर्व्वलोकस्य वै पुरः ।
रहो विसर्जयेत् केतुं विशेषोऽयं प्रपूजने ॥
एवं यः कुरुते पूजां वासवस्य महात्मनः ।
स चिरं पृथिवीं भुक्त्वा वासवं
लोकमाप्नुयात् ॥
न तस्य राज्ये दुर्भिक्षं नेतयो नाप्यधर्म्मकृत्
।
स्थास्यन्ति मृत्युर्नाकाले जनानां तत्र जायते
॥

मुणादिवृत्तिः ॥ नदीविशेषः । मेखला ।
छन्दो-
भेदः । इति मेदिनी ॥ स तु
चतुर्द्दशाक्षरपाद-
वृत्तम् । तद्भेदा यथा । असंवाधा १
वसन्त-
तिलकम् २ सिंहोद्धता ३ अपराजिता
४ प्रह-
रणकलिका ५ वासन्ती ६ लोला ७
नान्दीमुखी
८ । इति छन्दोमञ्जरी ॥ (ऋक् । यथा,
ऋग्-
वेदे । १० । ७१ । ११ ।
“ऋचां त्वः पोषमास्ते पुपुष्वान्
गायत्रं त्वो गायति शक्वरीषु ॥” * ॥
शक्नोति क्षीरादिप्रदानेन तद्वन्तं
प्रीणयितुं
स्पर्शनेन वा पापमपनेतुमिति । शक +
वनिप् ।
ङीब्रौ च । गौः । इति निघण्टुः । २ ।
११ ॥)

**शक्वा**, [न्] पुं, (शक्नोतीति । शक् + “स्नामदिप-
दीति ।” उणा० ४ । ११२ । इति
वनिप् ।)
हस्ती । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

**शङ्कः**, पुं, शकटादिवाहकवृषभः । यथा, --
“स्कन्धवाहस्तु शङ्कश्च शृङ्गी
गौरक्षधूर्त्तिलः ।”
इति हारावली ॥

**शङ्करः**, पुं, (शं कल्याणं करोतीति । शम् +
कृ + “शमिधातोः संज्ञायाम् ।” ३ । २
। १४ ।
इति अच् ।) शिवः । इत्यमरः ॥ अस्य
व्युत्-
पत्तिर्यथा, --
“सदा ध्यानाच्च भक्तानां पवनं
यन्निरामयम् ।

| | | भूतनाथत्वमप्यस्मात्तेनाहंशङ्करः स्मृतः ॥"<br>इति स्कन्दपुराणम् ॥<br>अस्य भस्मास्थिधारणकारणंयथा, --<br>"विसृज्य तान् ब्रह्मविष्णुमयान वृषभवाहनः ।<br>आदाय सगणान् सर्व्वान् कामरूपान्तरं ययौ ॥<br>उग्रतारां ततो देवीं गणांश्च प्राह शङ्करः |

उत्सारयन्तु सकलान् इमान् लोकान् गणा
द्रुतम् ।
उग्रतारे महादेवि त्वञ्चाप्युत्सारय द्रुतम् ॥
ततो गणाः कामरूपाद्देवी चाप्यपराजिता ।
लोकानुत्सारयामासुः पीठं कर्त्तुं रहस्यकम् ॥
उत्सार्य्यमाणे लोके तु चतुर्व्वर्णैर्द्विजातिभिः ।
सन्ध्याचलं गतो विप्रो वशिष्ठः कुपितो मुनिः ॥
सोऽप्युग्रतारया देव्या उत्सारयितुमीशया ।
गणैः सह धृतः प्राह शापं कुर्व्वन् सुदारुणम् ॥
यस्मादहं धृतो वामे त्वयोत्सारयितुं मुनिः ।
तस्मात्त्वं वाम्यभावेन पूज्या भव समन्त्रिका ॥
भर्त्स्यन्ति म्लेच्छवद्यस्माद्गणास्ते मन्दबुद्धयः ।
भवन्तु म्लेच्छास्तस्माद्वै भवत्याः कामरूपके ॥
महादेवोऽपि यस्मान्मां निःसारयितुमुद्यतः ।
तपोधनं मुनिं दान्तं म्ले च्छवद्वेदपारगम् ।
तस्मात् म्लेच्छप्रियो भूयात् शङ्करश्चास्थिभस्म-
धृक् ॥”
इति कालिकापुराणे ८३ अध्यायः ॥ * ॥
शङ्करगीता देवीपुराणे ७ अध्याये द्रष्टव्या ॥
शिवावतारविशेषः । यथा, --
“तद्भवान् लोकरक्षार्थमुत्साद्य निखिलान्

**शङ्कराचार्य्यः**, पुं, (शङ्कर आचार्य्यश्च ।) स्वनाम-
ख्याताचार्य्यः । स तु अद्वैतवादी वेदान्तभाष्य-
कर्त्ता च । यथा, --
“श्रीशङ्कराचार्य्यनरावतारं
विश्वेश्वरं विश्वगुरुं प्रणम्य ।
वेदान्तशास्त्रश्रवणालसानां
बोधाय कुर्व्वे कमपि प्रयत्नम् ॥”
इति
मधुसूदनसरस्वतीकृतसिद्धान्तबिन्दुप्रथम-
श्लोकः ॥

**शङ्करावासः**, पुं, (शङ्करस्य आवास इव शुक्ल-
त्वात् ।) कर्पूरभेदः । इति राजनिर्घण्टः ॥
(शङ्करस्य महादेवस्य आवासः ।) कैलासश्च ॥

**शङ्करी**, स्त्री, मञ्जिष्ठा । इति शब्दचन्द्रिका ॥
शमी । इति राजनिर्घण्टः ॥ शङ्करभार्य्या ।
यथा ।
“शङ्करी शम्भुपत्नी च शिवा शतनिनादिनी ।
शुभा शुभप्रदा नित्या शतसूर्य्यसमप्रभा ॥”
इति रुद्रयामले अन्नपूर्णासहस्रनामस्तोत्रम्॥

**शङ्का**, स्त्री, (शङ्क + अः । स्त्रियां टाप् ।) त्रासः ।
(यथा, हितोपदेशे ।
“शङ्काभिः सर्व्वमाक्रान्तमन्नं पानञ्च भूतले ।
प्रवृत्तिः कुत्र कर्त्तव्या जीवितव्यं कथं नु वा ॥”)
वितर्कः । इति मेदिनी ॥ (यथा, भागवते ।
८ । २ । ६ ।
“यत्र संगीतसन्नादैर्नदद्गुहममर्षया ।
अभिगर्ज्जन्ति हरयः श्लाघिनः परशङ्कया ॥”)

**शङ्कितः**, त्रि, (शङ्का जाता अस्य । शङ्का +
इतच् ।) भीतः । इति त्रिकाण्डशेषः ॥ (यथा,
“अशङ्कमपि शङ्केत नित्यं शङ्केत शङ्कितान् ॥”)
वितर्कितः । इति शङ्काशब्दार्थदर्शनात् ॥
चोरक-
नामगन्धद्रव्ये, पुं । इति राजनिर्घण्टः ॥

**शङ्कितवर्णकः**, पुं, (शङ्कितं अत्र कोऽप्यस्ति नास्ती-
त्यादिकं वा वर्णयति तर्कयतीति । वर्णि +
ण्वुल् ।) चौरः । इति त्रिकाण्डशेषः ॥

षट्पूरितदिवादण्डं लब्धं दण्डादिकं भवेत् ॥
पूर्ब्बाह्णच्छाययातीतं
पराह्णच्छाययैष्यकम् ।
शून्यैकरामबाणेभदिशो रुद्राः । ० । १ । ३ ।
५ । ८ । १० । ११ । क्रमोत्क्रमैः ॥
आषाढादिषु मासेषु च्छाया माध्याह्निकी मता ।
अयनांशजमासान्ते व्युत्क्रमेणादितो बुधैः ।
संख्योक्तान्यदिने भागहारे वृद्धीतरे तथा ॥”
इति ज्योतिस्तत्त्वम् ॥
तस्य नामान्तरं नरः । यथा ।
अथ करणसूत्रम् ।
“शङ्कुः प्रदीपतलशङ्कुतलान्तरघ्न-
श्छाया भवेद्विनरदीपशिख्यौच्च्यभक्तः ।”
उदाहरणम् ।
“शङ्कुप्रदीपान्तरभूस्त्रिहस्ता
दीपोच्छ्रितिः सार्द्धकरत्रया चेत् ।
शङ्कोस्तथार्काङ्गुलसंमितस्य
तस्य प्रभा स्यात् कियती वदाशु ॥”
न्यासः । शङ्कुः १२ भूः ३ दीपः ७ लब्धानि
च्छायाङ्गुलानि १२ । इति लीलावत्यां छाया-
व्यवहारः द्वादशाङ्गुलपरिमाणम् । यथा । विष्णु-
धर्न्मोत्तरीयप्रथमकाण्डम् ।
“द्वादशाङ्गुलिकः शङ्कुस्तद्द्वयन्तु शयः स्मृतः ।
तच्चतुष्कं धनुः प्रोक्तं क्रोशो धनुःसहस्रिकः ॥”
इति तिथ्यादितत्त्वम् ॥
(जनमेजयस्य पुत्त्रः । यथा, महाभारते । १ ।
९५ । ८६ ।

खलान् ।
वर्त्म स्थापयतु श्रौतं जगद्येन मुखं व्रजेत् ॥
इत्युक्त्रोपरतान् देवानुवाच गिरिजाप्रियः ।
मनोरथं पूरयिष्ये मानुष्यमवलम्ब्य वः ॥
दुष्टाचारविनाशाय धर्म्मसंस्थापनाय च ।
भाष्यं कुर्व्वन् ब्रह्मसूत्रतात्पर्य्यार्थविनिर्णयम् ॥
मोहयन् प्रकृतिद्वैतध्वान्तमध्याह्नभानुभिः।
चतुर्भिः सहितः शिष्यैश्चतुरैर्हरिवद्भुजैः ॥
यतीन्द्रः शङ्करो नाम्ना भविष्यामि महीतले ।
मद्वत्तथा भवन्तोऽपि मानुषीं तनुमाश्रिताः ॥
तं मामनुसरिष्यन्ति सर्व्वे त्रिदिववासिनः ।
तदा मनोरथः पूर्णो भवतां स्यान्न संशयः ॥"
इति माधवीयसंक्षेपशङ्करजये १ सर्गः ॥ * ॥
(अयं हि द्वात्रिंशद्वर्षवयसि भौतिकशरीरं परित्यज्य परब्रह्मणि लीन आसीत् ।
यथा, तत्रैव ।
"एवंप्रकारैः किल कल्मषघ्नैः
शिवावतारस्य शुभैश्चरित्रैः ।
द्वात्रिंशदस्योज्ज्वलकीर्त्तिराशेः
समा व्यतीयुः किल शङ्करस्य ॥")
मङ्गलकारके, त्रि । यथा, --
"क्षेमङ्करोऽरिष्टतातिः स्यान्मद्रङ्करशङ्करौ ॥"
इति त्रिकाण्डशेषः ॥
(यथा च महाभारते । ३ । २२८ । ६ ।
"हिरण्यगर्भ भद्रं ते लोकानां शङ्करो भव ॥")

**शङ्करप्रियः**, पुं, (शङ्करस्य प्रियः ।) तित्तिरिपक्षी ।

**शङ्कुः**, पुं, (शङ्क्यतेऽस्मादिति । शङ्क + "खरुशङ्कु-पीयुनीलङ्गुलिगु ।" उणा० १ । ३७ । इति कुप्रत्ययेन निपातितः ।) स्थाणुः । मुडा गाछ इति भाषा । मत्स्यविशेषः । शाँकोच इति भाषा । शल्यास्त्रम् । शेल इति भाषा । इत्य-मरभरतौ ॥ संख्याविशेषः । स तु लीलावती-मते दशलक्षकोटिः । कीलः । गौँज इति भाषा । (यथा, मनुः । ८ । २७१ ।
"निःक्षेप्योऽयोमयः शङ्कुर्ज्जलन्नास्ये दशाङ्गुलः ॥")
ईशः । कलुषः । इति मेदिनी ॥ पत्रशिरा-जालम् । मेढ्रः । इति हेमचन्द्रः ॥ राक्षसः । इति शब्दमाला ॥ नखीनामगन्धद्रव्यम् । इति जटाधरः ॥ दीपसूर्य्ययोश्छायापरिमाणार्थं काष्ठादिनिर्म्मितः क्रमेण सूक्ष्माग्रद्वादशाङ्गुल-परिमितः कीलकः । यथा ।
"अर्काङ्गुला तु सूच्यग्रा काष्ठी द्व्यङ्गुलमूलिका ।
शङ्कुसंज्ञा भवेच्चैव तच्छायां परिकल्पयेत् ॥
मध्याह्नहीनैरादित्ययुक्तैश्छायाङ्गुलैर्हरेत् ।
"भवतो वपुष्टमायां द्वौ पुत्रौ जज्ञाते शतानीकः
शङ्कुश्च ॥" * ॥ उग्रसेनस्य पुत्त्रविशेषः । यथा,
भागवते । ९ । २४ । २४ ।
"कंसः सुनामा न्यग्रोधः कङ्कः शङ्कुः सुहुस्तथा ।
राष्ट्रपालोऽथ धृष्टिश्च तुष्टिमानौग्रसेनयः ॥")

**शङ्कुकर्णः** पुं, (शङ्कू इव कर्णौ यस्य ।) गर्द्दभः । इति त्रिकाण्डशेषः ॥ (दानवदिशेषः । यथा,
हरिवंशे । ३ । ८१ ।
"शङ्कुकर्णो विवादश्च गवेष्ठो दुन्दुभिस्तथा ॥"
नागविशेषः । यथा, महाभारते । १ । ५७ । १५ ।
"शङ्कुकर्णः पिठरकः कुठारसुखसेचकौ ॥"
शङ्कुसदृशकर्णविशिष्टे, त्रि । यथा, भागवते ।
७ । ९ । १५ ।
"आन्त्रस्रजः क्षतजकेशरशङ्कुकर्णा-न्निहादभीतदिगिभादरिभिन्नखाग्रात् ॥")

**शङ्कुचिः**, पुं, शङ्कुमत्स्यः । इति शब्दरत्नावली ॥

**शङ्कुतरुः**, पुं, (शङ्कुरिव तरुः ।) शालवृक्षः । इति शब्दरत्नावली ॥

**शङ्कुरः** त्रि, (शङ्कतेऽस्मादिति । शङ्क + बाहुल-कात् उरच् ।) त्रासदायी । इति हेमचन्द्रः ॥

**शङ्कुला**, स्त्री, ("शङ्कुपूर्व्वात् लातेः 'आतोऽनुप-सर्गे कः ।' ३ । २ । ३ । इति के शङ्कुला ।" इत्यु-णादिवृत्तौ उज्ज्वलः । १ । ३७ ॥
"शङ्कुपूर्व्वा-ल्लातेर्घञर्थे कविधानमिति वा कप्रत्ययः ।" इति

| इति केचित् ॥ शिववल्लभे, त्रि । (यथा, कथा-<br>सरित्सागरे । ९५ । ८८ ।<br>"एतद्गणेभ्यः श्रुत्वा सा शरण्या शङ्कर-<br>प्रिया ।<br>शान्तानङ्गास्त्रयोऽप्येते जीवन्त्विति समादि-<br>शत् ॥") | | काशिका । ६ । २ । २ ।) उत्पलपत्रिका । इति |
|---|---|---|

संक्षिप्तसारोणादिवृत्तिः ॥ पूगकर्त्तनी । जाँती इति भाषा । इति केचित् ॥

**शङ्कुवृक्षः**, पुं, (शङ्कुरिव वृक्षः ।) शालवृक्षः । इति रत्नमाला ॥

**शङ्कोचः**, पुं, शङ्कुमत्स्यः । इति जटाधरः ॥

**शङ्कोचिः**, पुं, मत्स्यविशेषः । शाँकोच इति भाषा ।

यथा, --
"अथ शङ्कुः शङ्कुचिः स्यात् शङ्कोचिः शङ्कुची-
त्यपि ॥"
इति शब्दरत्नावली ॥

**शङ्खः**, पुं, क्ली, (शाम्यति अशुभमस्मादिति । शम + "शमेः खः ।" उणा० १ । १०४ । इति खः ।)
समुद्रोद्भवजन्तुविशेषः । शाँख इति भाषा ।
तत्पर्य्यायः । कम्बुः २ । इत्यमरः ॥
कम्बोजः ७
अब्जः ४ जलजः ५ । इति शब्दरत्नावली ॥
अर्णोभवः ६ पावनध्वनिः ७ अन्तःकुटिलः ८
महानादः ९ श्वेतः १० पूतः ११ मुखरः १२
दीर्घनादः १३ बहुनादः १४ हरिप्रियः १५ ।
अस्य गुणाः । कटुरसत्वम् । शीतत्वम् । पुष्टि-
वीर्य्यबलप्रदत्वम् ।
गुल्मशूलकफश्वासविषदोषना-
शित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
"कम्बुशङ्खनखश्चापि शुक्तिशम्बूककर्कटाः ।
जीवा एवंविधाश्चान्ये कोषस्थाः परिकीर्त्तिताः ॥
कोषस्था मधुराः स्निग्धाः पित्तवातहरा हिमाः ।
वृंहणा बहुवर्च्चस्का वृष्याश्च बलवर्द्धनाः ॥"
इति भावप्रकाशः ॥

यज्ञायुतसहस्रस्य स्नापयित्वा लभेत् फलम् ॥
पयस्विन्याः शुभं क्षीरं शङ्खे कृत्वा तु नारद ।
यः स्नापयति देवेशं स गच्छेद्ब्रह्मणः पदम् ॥
क्षिप्त्वा गङ्गोदकं शङ्खे यः स्नापयति माधवम् ।
नमो नारायणेत्युक्त्वा मुच्यते योनिसङ्कटात् ॥
शङ्खलग्नन्तु यत्तोयं भ्रमितं केशवोपरि ।
निःक्षिपेन्मूर्द्ध्नि सततं गङ्गास्नानेन तस्य किम् ॥
कृत्वा पादोदकं शङ्खे वैष्णवाय प्रयच्छति ।
तिलमिश्रं तुलस्या च चान्द्रायणफलं लभेत् ॥
नदीतडागजं वारि वापीकूपह्रदोद्भवम् ।
गाङ्गेयं तद्भवेत् सर्व्वं कृतं शङ्खे हरिप्रिय ॥
गृहीत्वा विष्णुपादाम्बु शङ्खे कृत्वा च वैष्णवः ।
यो वहेत् शिरसा नित्यं स मुने तापसोत्तमः ॥
त्रैलोक्ये यानि तीर्थानि वासूदेवाज्ञया मुने ।
शङ्खं तान्यधितिष्ठन्ति तस्मात् शङ्खं सदार्च्चयेत् ॥
त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ।
नमितः सर्व्वदेवैश्च पाञ्चजन्य नमोऽस्तु ते ॥
पुरतो वासुदेवस्य सपुष्पफलचन्दनैः ।
शङ्खः समर्च्चितो येन तस्य लक्ष्मीर्न दुर्लभा ॥

ते वामदक्षिणावर्त्तभेदेन द्विविधा मताः ।
दक्षिणावर्त्तशङ्खस्तु कुर्य्यादायुर्यशो धनम् ॥
तेनैव शिरसा यस्तु श्रद्दधानः प्रतीच्छति ।
वारि हित्वा स पापानि पुण्यमाप्नोति मानवः ॥
वृत्तत्वं स्निग्धताच्छत्वं शङ्खस्येति गुणत्रयम् ।
आवर्त्तभङ्गदोषो हि हेमयोगाद्विनश्यति ॥
ब्रह्मादिजातिभेदेन स पुनस्तु चतुर्व्विधः ॥" * ॥
इति युक्तिकल्पतरुः ॥
श्रीकृष्णार्ज्जुनादिशङ्खनामानि यथा, --
"पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्म्मा वृकोदरः ॥
अनन्तविजयं राजा कुन्तीपुत्त्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥"
इति श्रीभगवद्गीतायाम् १ अध्यायः ॥
अयन्तु रणवाद्यविशेषः । यथा, --
"भक्ततूर्य्यं गन्धतूर्य्यं रणतूर्य्यं महास्वनः ।
संग्रामपटहः शङ्खस्तथा चाभयडिण्डिमः ॥
महाद्वन्द्वो नृपाभीरुर्भीरुः कोलाहलोऽपि च ।
युद्धवादस्य पर्य्यायश्चान्ये भेदाः शलादयः ॥"
इति शब्दरत्नावली ॥
ललाटास्थि । (यथा, सुश्रुते । १ । ५ ।
"तत्र भ्रूगण्डशङ्खललाटाक्षिपुटौष्ठदन्तवेष्टकक्षा-कुक्षिवङ्क्षणेषु तिर्य्यक्छेद उक्तः ॥") कुवेरस्य निधिविशेषः । (यथा, महाभारते । २ । १० । ३६ ।
"निधिप्रवरमुख्यौ च शङ्खपद्मौ धनेश्वरौ ॥"
यथा च मार्कण्डेये । ६८ । ४२ -- ४५ ।
"रजस्तमोमयश्चान्यः शङ्खसंज्ञो हि यो निधिः ।
तेनापि नीयते विप्र तद्गुनित्वं निधीश्वरः ॥
एकस्यैव भवत्येष नरं नान्यमुपैति च ।
यस्य शङ्खो निधिस्तस्य स्वरूपं क्रौष्टुके शृणु ॥
एक एवात्मना सृष्टमन्नं भुङ्क्ते तथाम्बरम् ।
कदन्नभुक् परिजनो न च शोभनवस्त्रधृक् ॥
न ददाति सुहृद्भार्य्या भ्रातृपुत्त्रस्नुषादिषु ।
स्वपोषणपरः शङ्खी नरो भवति सर्व्वदा ॥")
नखीनामगन्धद्रव्यम् । इत्यमरमेदिनीकारौ ॥
(यथा, सुश्रुते । ६ । १७ ।

अन्यच्च ।
“शङ्खोदधिमलौ शीतौ कषायावतिलेखनौ ।”
इति राजवल्लभः ॥ * ॥
अस्योत्पत्त्यादिर्य्यथा ।
“अथ शम्भुर्हरेः शूलं जग्राह दानवं प्रति ।
ग्रीष्ममध्याह्नमार्त्तण्डशतकरुचमुत्तमम्॥
शूलञ्च भ्रमणं कृत्वा पपात दानवोपरि ।
चकार भस्मसात्तञ्च सरथञ्चावलीलया ॥
स शिवस्तेन शूलेन दानवस्यास्थिजालकम्
।
प्रेम्णा च प्रेरयामास लवणोदे च सादरम् ॥
अस्थिभिः शङ्खचूडस्य शङ्खजातिर्ब्बभूव ह ।
नानाप्रकाररूपा च शश्वत्पूता सुराच्चर्ने ॥
प्रशस्तं शङ्खतोयञ्च देवानां प्रीतिदं परम् ।
तीर्थतोयस्वरूपञ्च पवित्रं शम्भुना विना ॥
शङ्खशब्दो भवेद्यत्र तत्र लक्ष्मीश्च सुस्थिरा ।
स स्नातः सर्व्वतीर्थेषु यः स्नातः
शङ्खवारिणा ॥
शङ्खे हरेरधिष्ठानं यतः शङ्खस्ततो हरिः ।
तत्रैव सततं लक्ष्मीर्द्दूरीभूतममङ्गलम् ॥
स्त्रीणाञ्च शङ्खध्वनिभिः शूद्रानाञ्च विशेषतः ।
भीता रुष्टा याति लक्ष्मीः स्थलमन्यत्
स्थला-
न्ततः ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे १८ अध्यायः ॥
* ॥
अथ शङ्खमाहात्म्यम् ।
ब्रह्मोवाच ।
“शृणु शङ्खस्य माहात्म्यं सर्व्वपापहरं शुभम्
॥
कपिला क्षीरमादाय शङ्खे कृत्वा जनार्द्दनम् ।
दर्शनेनापि शङ्खस्य किमु
तस्यार्च्चनेन च ।
विलयं यान्ति पापानि हिमः
सूर्य्योदये यथा ॥
गर्भा देवारिनारीणां विनश्यन्ति
सहस्रधा ।
तव नादेन पाताले पाञ्चजन्य
नमोऽस्तु ते ॥
तीर्थोदकं हरेर्मूर्द्ध्नि भ्रामयेत्
शङ्खसंस्थितम् ।
ददाति मुक्तिं देवेशः
क्षीरसागरजाप्रियः ॥
यमदूताश्च
कुष्माण्डपिशाचोरगराक्षसाः ।
दृष्ट्वा शङ्खोदकं मूर्द्ध्नि भीता यान्ति
दिशो दश ॥
नित्ये नैमित्तिके काम्ये
स्नानार्च्चनविलेपने ।
शङ्खं समर्च्चयति यः श्वेतद्वीपे
वसेद्धि सः ॥”
इति पाद्मोत्तरखण्डे १२९ अध्यायः
॥ * ॥
अथ दक्षिणावर्त्तशङ्खमाहात्म्यम् ।
“दक्षिणावर्त्तशङ्खेन गत्वा प्राक्श्रोतसं
नदीम् ।
कृत्वाभिषेकं विधिवत् ततः पापैः
प्रमुच्यते ॥
दक्षिणावर्त्तशङ्खेन तिलमिश्रोदकेन तु
।
उदके नाभिमात्रे तु यः
कुर्य्यादभिषेचनम् ॥
प्राक्श्रोतस्यां तु वै नद्यां
नरस्तत्राम्भसाप्लुतः ।
यावज्जीवकृतं पाषं तत्क्षणादेव
नश्यति ॥
दक्षिणावर्त्तशङ्खेन पात्रशोधं धरे
स्थितम् ।
उदकं यः प्रतीच्छेत शिरसा
हृष्टमानसः ॥
तस्य जन्मकृतं पापं तत्क्षणादेव
नश्यति ।
“मनःशिला त्र्यूषणशङ्खमाक्षिकैः
ससिन्धुकासीसरसाञ्जनैः क्रियाः ॥”)
कर्णसमीपास्थि । इति राजनिर्घण्टः ॥ (यथा,
याज्ञवल्क्ये । ३ । ९६ ।
“कर्णौ शङ्खौ भ्रुवौ दण्डवेष्टावोष्ठौ ककुन्दरे ॥”)
अष्टनागनायकान्तर्गतनागविशेषः । (यथा,
मनसापूजापद्धतौ ।
“अनन्तो वासुकिः पद्मो महापद्मस्तु तक्षकः ।
कुलीरः कर्कटः शङ्खो ह्यष्टौ नागाः प्रकी-
र्त्तिताः ॥”)
हस्तिदन्तमध्यम् । इति त्रिकाण्डशेषः ॥ दश-
निखर्व्वसंख्या । लक्षकोटिरिति यावत् । यथा,
“एकं दशशतञ्चैव सहस्रमयुतं तथा ।
लक्षञ्च नियुतं चैव कोटिरर्व्वुदमेव च ॥
वृन्दः खर्व्वो निखर्व्वश्च शङ्खपद्मौ च सागरः ।

| | | |
|---|---|---|
| | न शङ्खेन पिबेत्तोयं न हन्यान्मत्स्यशूकरौ ॥”<br>इति वाराहे प्रबोधनीमाहात्म्याध्यायः ॥ * ॥<br>दक्षिणावर्त्तशङ्खतोयेन विष्णुपूजाफलं यथा ।<br>स्कान्दे ।<br>“दक्षिणावर्त्तशङ्खस्य तोयेन योऽर्च्चयेद्धरिम् ।<br>सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ॥”<br>इत्याह्निकाचारतत्त्वम् ॥<br>स च शङ्खः रत्नविशेषः । तल्लक्षणादि यथा, --<br>“क्षीरोदकूलेऽपि सुराष्ट्रदेशे तदन्यतोऽपि प्रभवन्ति शङ्खाः ।<br>अरुष्कवर्णाः शशिशुभ्रभासः सुसूक्ष्मवक्त्रा गुरवो महान्तः ॥ | |

अन्त्यं मध्यं परार्द्धञ्च दशवृद्ध्या यथाक्रमम् ॥”
इति भरतधृतब्रह्माण्डपुराणवचनम्॥ * ॥
धर्म्मशास्त्रप्रयोजकमुनिविशेषः । यथा, --
“मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः।
यमापस्तम्बसम्बर्त्ताःकात्यायनबृहस्पती ॥
पराशरव्यासशङ्खलिखितादक्षगोतमौ ।
शातातपो वशिष्ठश्च धर्म्मशास्त्रप्रयोजकाः ॥”
इति याज्ञवल्क्यवचनम्॥

**शङ्खकं**, क्ली, बलयः । इति मेदिनी ॥

**शङ्खकः**, पुं, क्ली, (शङ्ख + स्वार्थे कन् ।) कम्बुः ।
शिरोरोगे, पुं । इति मेदिनी ॥ तस्य लक्षणादि यथा, --
शङ्खकमाह ।
“पित्तरक्तानिला दुष्टाः शङ्खदेशे विमूर्च्छिताः ।
तीव्ररुद्गाहरागं हि शोथं कुर्व्वन्ति दारुणम् ॥
स शिरो विषवद्वेगान्निरुध्याशुगलं तथा ।
त्रिरात्राज्जीवितं हन्ति शङ्खको नाम नामतः ।
त्र्यहाज्जीवति भैषज्यं प्रत्याख्येयस्य कारयेत् ॥”
पित्तरक्तानिलाः अत्र कफोऽपि योज्यः ।
कृतानुतापः कफपित्तरक्तैरिति सुश्रुतवचनात् ।
विमूर्च्छिताः प्रवृद्धाः । त्रिरात्रात् त्रिरात्रमध्ये मारयति । इति भावप्रकाशः ॥ अस्य चिकित्सा शिरोरोगशब्दे द्रष्टव्या ॥ (ललाटास्थि । यथा, याज्ञवल्क्यः । ३ । ९० ।
“द्वौ शङ्खकौ कपालानि चत्वारि शिरसस्तथा ।
ऊरः सप्तदशास्थीनि पुरुषस्थास्थिसंग्रहः ॥”)

**शङ्खकारः**, पुं, (शङ्खं करोतीति । शङ्ख + कृ + अण् ।)
वर्णसङ्करजातिविशेषः । शाँखारि इति भाषा । स तु शूद्रागर्भे विश्वकर्म्मौरसाज्जातः। इति ब्रह्मवैवर्त्तपुराणम् ॥ तत्पर्य्यायः । शाङ्खिकः २ काम्बजकः ३ । इति शब्दरत्नावली ॥ शाम्बविकः ४ । इति जटाधरः ॥

**शङ्खचरी**, स्त्री, (शङ्खे ललाटास्थ्नि चरतीति । चर + टः । स्त्रियां ङीप् ।) ललाटिका । इति त्रिकाण्डशेषः ॥

**शङ्खचर्च्ची**, स्त्री, ललाटिका । इति शब्दरत्ना-
द्विगुणं पञ्चलवणं मातुलुङ्गरसेन च ॥
काचकुप्यान्तु सप्ताहं
वासयेदम्लयोगतः ।
शङ्खचूर्णपलं दत्त्वा
वारुणीयन्त्रमुद्धरेत् ॥
सर्व्वधातून् हरेच्छीघ्रं
वराटीशङ्खकादिकान् ।
उदरादिसर्व्वरोगाणां सद्यो हि
नाशकः परः ॥”
इति शङ्खद्रावकः ॥ * ॥
अपि च ।
“योगिनीभैरवाभ्याञ्च बलिमादौ
प्रदापयेत् ।
पश्चाद्यन्त्रञ्च कर्त्तव्यमेवाह
परमेश्वरी ॥
रसः शङ्खद्रवो नाम शम्भुदेवेन
भाषितः ।
गुह्याद्गुह्यतमं गुह्यमिदानीं
कथ्यते मया ॥
शङ्खचूर्णं यवक्षारं
सर्ज्जिकाक्षारटङ्गणम् ।
समञ्च पञ्चलवणं स्फटिकारी
नृशादरः ॥
काचकुप्यां ततः क्षिप्त्वा
वारुणीयन्त्रमुद्धरेत् ।
यामार्द्धं द्रावयत्येष
शङ्खशुक्तिवराटकान्॥
अर्शांसि नाशयेत् षट् च
मूत्रकृच्छ्राश्मरीं तथा ।
उदराष्टविधं हन्ति
गुल्मप्लीहोदराणि च ॥
अजीर्णं नाशयेच्छीघ्रं ग्रहणीञ्च
विसूचिकाम् ।
भुक्तशेषे च भोक्तव्यो माषमात्रो
रसोत्तमः ॥
क्षणमात्राद्भवेद्भस्म
पुनर्भोजनमिच्छति ।
१० भूलग्ना ११ शङ्खमालिनी १२ । अस्या गुणाः । हिमत्वम् । तिक्तत्वम् । मेधास्वरकारित्वम् । ग्रहभूतादिदोषनाशित्वम् । वशीकरणसिद्धिदातृत्वञ्च । इति राजनिर्घण्टः ॥
अपि च ।
“शङ्खपुष्पी तु तीक्ष्णोष्णा मेध्या क्रिमिविषापहा ॥”
इति राजवल्लभः ॥
अन्यच्च ।
“शङ्खपुष्पी तु शङ्खाह्वा मङ्गल्या कुसुमापि च ।
शङ्खपुष्पी सरा मेध्या वृष्या मानसरोगनुत् ॥
रसायनी कषायोष्णा स्मृतिकान्तिबलाग्निदा ।
दोषापस्मारभूतासृक्कुष्ठक्रिमिविषप्रणुत् ॥”
इति भावप्रकाशः ॥

**शङ्खप्रस्थः**, पुं, चन्द्रस्य चिह्नम् । यथा, --
“लिङ्गं शृङ्गञ्च चिह्नञ्च शङ्खप्रस्थो विधोरथ ।”
इति शब्दमाला ॥

**शङ्खभृत्**, पुं, (शङ्खं बिभर्त्तीति । भृ + क्विप् ।)
विष्णुः । इति हेमचन्द्रः ॥ (यथा, महाभारते । १३ । १४९ । १२० ।
“शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः ॥”)

**शङ्खमुखः**, पुं, (शङ्खवत् मुखं यस्य ।) कुम्भीरः ।
इति हेमचन्द्रः ॥ (नागविशेषः । यथा, महाभारते । १ । ३५ । ११ ।
“नागः शङ्खमुखश्चैव तथा कुष्माण्डकः परः ॥”)

**शङ्खमूलं**, क्ली, (शङ्खवत् शुक्लं क्रमसूक्ष्मं वा मूलं यस्य ।) मूलकम् । इति राजनिर्घण्टः ॥

**शङ्खाख्यः**, पुं, (शङ्ख इति आख्या यस्य ।) बृहन्नखी । इति रत्नमाला ॥

**शङ्खाह्वा**, स्त्री, (शङ्ख इति आह्वा नाम यस्याः ।)
शङ्खपुष्पी । इति राजनिर्घण्टः ॥

**शङ्खिका**, स्त्री, (शङ्खवत् पुष्पमस्त्यस्याः । शङ्ख + ठन् ।) तृणविशेषः । चोरवहुली इति भाषा । यथा । शङ्खिन्यां शङ्खिका चोरा । इति शब्द-

वली ॥

**शङ्खचूर्णं**, क्ली, (शङ्खस्य चूर्णम् ।) शङ्खजात-

चूर्णम् । शाँखेर चूण इति भाषा । अस्य
गुणाः ।
"शङ्खचूर्णं कटु क्षारमुष्णं क्रिमिहरं परम् ॥"
इति राजवल्लभः ॥

**शङ्खजः**, पुं, (शङ्खाज्जायते इति । जन + डः ।)

कपोतडिम्बवदबृहन्मुक्ता। इति केचित् ॥ शङ्ख-
जातवस्तुनि, त्रि ॥

**शङ्खद्रावकः**, पुं, (शङ्खं द्रावयतीति । द्रु + णिच् +

ण्वुल् ।) औषधविशेषः । यथा, --
"अर्कस्नुही तथा चिञ्चा तिलारग्वधचित्रकम्।
अपामार्गभस्मसमं वस्त्रपूतं जलं हरेत् ॥
मृद्वग्निना पचेत्तत्तु यावल्लवणतां गतम् ।
लवणेन समौ ग्राह्यौ द्वौ क्षारौ टङ्गणं तथा ॥
समुद्रफेनगोदन्ताकाशीशं सोरका तथा ।
प्रत्यहं भोजनान्ते च संसेव्योऽयं
रसोत्तमः ॥
न रुजायां भयं क्वापि सत्यं
सत्यं वदाम्यहम् ।
न देयं यस्य कस्यापि सदा
गोप्यञ्च कारयेत् ।
रसः शङ्खद्रवो नाम
वैद्यानामुपकारकः ॥"
शङ्खद्रावको रसः । इति
भैषज्यरत्नावली ॥

**शङ्खद्रावी**, [न्] पुं, (शङ्खं द्रावयतीति । द्रु + णिच्

+ णिनिः ।) अम्लवेतसः । इति
राजनिर्घण्टः ॥

**शङ्खधरा**, स्त्री, (धरतीति । धृ + अच् टाप् ।

शङ्खस्य धरा ।) हिलमोचिका ।
इति रत्न-
माला ॥

**शङ्खध्मः**, पुं, (शङ्खं धमतीति । ध्मा + कः ।) शङ्ख-

वादकः । तत्पर्य्यायः । शाङ्खिकः
२ । इति जटा-
धरः ॥ (यथा,
वाजसनेयसंहितायाम् । ३० ।
१९ ।
"क्रोशाय तूणवध्ममवरम्पराय
शङ्खध्मम् ॥"

**शङ्खध्माः**, पुं, (शङ्खं धमतीति । ध्मा + क्विप् ।)

शङ्खवादकः । इति
मुग्धबोधव्याकरणम्॥

**शङ्खनखः**, पुं, क्षुद्रशङ्खः । जोङ्गडा इति भाषा ।

इत्यमरभरतौ ॥ (यथा,
महाभारते । १३ । ५० । २० ।
"नग्रैः शङ्खनखैर्गात्रैः
क्रोडैश्चित्रैरिवार्पितम् ॥")
नखीनामगन्धद्रव्यम्। इति
शब्दरत्नावली ॥
चन्द्रिका ॥

**शङ्खिनी**, स्त्री, (शङ्खवत् पुष्पमस्त्यस्याः । शङ्ख +

इनिः ।) चोरपुष्पी । इत्यमरः ॥ श्वेतपुन्नागः ।
इति विश्वः ॥ श्वेतवृन्दा । इति मेदिनी ॥
श्वेत-
चुक्रा । इति शब्दरत्नावली ॥ बुद्धशक्तिभेदः ।
इति त्रिकाण्डशेषः ॥ यवतिक्ता । इति राज-
निर्घण्टः ॥ चतुर्व्विधस्त्रीमध्ये स्त्रीविशेषः ।
तल्ल-
क्षणं यथा, --
"दीर्घा सुदीर्घनयना वरसुन्दरी या
कामोपभोगरसिका गुणशीलयुक्ता ।
रेखात्रयेण च विभूषितकण्ठदेशा
सम्भोगकेलिरसिका किल शङ्खिनी सा ॥
शशकं पद्मिनी तुष्टा चित्रिणी रमते मृगम् ।
वृषभं शङ्खिनी तुष्टा हस्तिनी रमते हयम् ॥
पद्मिनी पद्मगन्धा च मीनगन्धा च चित्रिणी ।
शङ्खिनी क्षारगंन्धा स्यात् मदगन्धा च
हस्तिनी ॥"
इति रसमञ्जरी ॥

बृहन्नखी । यथा, --

“महांस्त्वसौ शङ्खनखः

शङ्खाख्यो गन्धसारणः ।”

इति रत्नमाला ॥

**शङ्खनखा**, स्त्री, शङ्खनखी । यथा, --

“द्विधा शङ्खनखाख्यान्या

शुक्त्याख्या वदरी-

च्छदः ।”

इति रत्नमाला ॥

**शङ्खपुष्पी**, स्त्री, (शङ्खवत् पुष्पं यस्याः । ङीष् ।)

वृक्षविशेषः । शङ्खाहुली इति

डानकुनी इति

च भाषा । तत्पर्य्यायः । सुपुष्पी

२ शङ्खाह्वा ३

कम्बुमालिनी ४ पीतपुष्पी ५

कम्बुपुष्पी ६ मेध्या

७ मलविनाशिनी ८ किरिटी ९

शङ्खकुसुमा

शङ्खयुक्ता । यथा, --
"शङ्खिनी चापिनी
वाणभुशुण्डीपरिघायुधा ॥"
इति देवीमाहात्म्यम् ॥
उपदेवताविशेषः ।
शङ्खिनीवासशब्दार्थदर्श-
नात् ॥

**शङ्खिनीफलः**, पुं, (शङ्खिन्याः फलमिव फलं यस्य ।)

शिरीषवृक्षः । इति राजनिर्घण्टः ॥

**शङ्खिनीवासः**, पुं, (शङ्खिन्या वास आश्रय-

स्थानम् ।) शाखोटवृक्षः । इति
शब्दचन्द्रिका ॥

**शङ्खी**, [न्] पुं, (शङ्खोऽस्यास्तीति । शङ्ख + इनिः ।)

विष्णुः । समुद्रः । इति मेदिनी ॥
शाङ्खिकः ।
शङ्खविशिष्टे, त्रि । इति शब्दरत्नावली ॥ (यथा,
हरिवंशे भविष्यपर्व्वणि । ९ । १२ ।
"शङ्खिनं चक्रिणं विष्णुं खड्गिनं गदिनं
विभुम् ॥"
शङ्खनिधिविशिष्टे च त्रि । यथा,
मार्कण्डेये । ६८ ।
४५ ।
"स्वपोषणपरः शङ्खी नरो भवति
सर्व्वदा ॥")

**शच**, इ ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-सक०-सेट् ।) ङ, शञ्चते ।
इति दुर्गा-
दासः ॥

**शच**, ङ वाचि । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-सक०-सेट् ।) ङ, शचते ।
इति दुर्गा-
दासः ॥

**शचिः**, स्त्री, (शच वाचि + "सर्व्वधातुभ्य इन् ।"

**शट**, सादे । शीर्णौ । गतौ । रुजि । इति कवि-

कल्पद्रुमः ॥ (भ्वा०-पर०-अक०-गतौ सक०-
सेट् ।) सादोऽवसादः । शीर्णिर्भेदः । शटति
लोकः अवसीदति । विशृणाति । गच्छति ।
रुजति वा इत्यर्थः । इति दुर्गादासः ॥

**शट**, क ङ श्लाघे । इति कविकल्पद्रुमः ॥ (चुरा०-

आत्म०-सक०-सेट् ।) क ङ, शाटयते । इति
दुर्गादासः ॥

**शटः**, त्रि, अम्लः । शटधातोरच्प्रत्ययेन निष्पन्न-

मेतत् । इति सिद्धान्तकौमुदी ॥

**शटा**, स्त्री, (शट + अच् । टाप् ।) सटा । जटा ।

इत्यमरटीका ॥

**शटिः**, स्त्री, (शट + इन् ।) शटी । इति शब्द-

रत्नावली ॥

**शटी**, स्त्री, (शटि + वा ङीष् ।) स्वनामख्यातौ-

षधिः । वन आदा इति भाषा । कचूर इति
हिन्दी भाषा । तत्पर्य्यायः । गन्धमूली २
षड्ग्रन्थिका ३ कर्व्वूरः ४ पलाशः ५ । इत्य-
मरः ॥ सटी ६ षटी ७ गन्धशटी ८ कर्व्वुरः ९
कर्च्चूरः १० । इति भरतादयः ॥ सुगन्धा ११
सटिः १२ शटिः १३ गन्धमूला १४ गन्धोलिः
१५
गन्धमूलकः १६ । इति शब्दरत्नावली ॥ गन्ध-
सटा १७ बधूः १८ गन्धमूलम् १९ । इति
जटाधरः ॥ जीमूतमूलम् २० कच्छोरम् २१
हिमजा २२ । इति रत्नमाला ॥ हैमी २३
षड्ग्रन्थिः २४ सुव्रता २५ गन्धाली २६
पलाशा २७ हिमा २८ । इति ग्रन्थान्तरम् ॥
षड्ग्रन्था २९ आम्लनिशा ३० सुगन्धमूला
३१
गन्धाली ३२ शटीका ३३ पलाशिका ३४
सुभद्रा ३५ तृणी ३६ दूर्व्वा ३७ गन्धा ३८
पृथुपलाशिका ३९ सौम्या ४० हिमोद्भवा ४१
गन्धबधूः ४२ । अस्या गुणाः । तिक्तत्वम् ।
अम्लरसत्वम् । लघुत्वम् । उष्णत्वम् । रुचि-
कारित्वम् । ज्वरकफास्रकण्डुव्रणदोषरक्तामय-

**शठ**, क आलस्ये । गत्यसंस्कृतसंस्कृते । इति कवि-

कल्पद्रुमः ॥ (चुरा०-पर०-अक०-सेट् ।)
क,
शाठयति वृद्धः क्रियासु मन्दः स्यादित्यर्थः
।
इति दुर्गादासः ॥

**शठ**, क ङ श्लाघे । इति कविकल्पद्रुमः ॥ (चुरा०-

आत्म०-अक०-सेट् ।) क ङ, शाठयते ।
इति
दुर्गादासः ॥

**शठ**, त् क दुर्व्वाचि । इति कविकल्पद्रुमः ॥

(अदन्तचुरा०-पर०-सक०-सेट् ।)
शठयति
नीचः कुत्सितं वदतीत्यर्थः । रमानाथस्तु
सम्यग्भाषणे इति मत्वा शठयति
सम्यग्वदती-
त्यर्थ इत्याह । सम्यग्भाषणे इति जौमराः ।
समग्भावे इत्येके । इति दुर्गादासः ॥

**शठं**, क्ली, (शठ + अच् ।) तगरम् । कुङ्कुमम् ।

लोहम् । इति राजनिर्घण्टः ॥

**शठः**, पुं, मध्यस्थपुरुषः । धूर्त्तः । (यथा, मनुः ॥

४ । ३० ।
"पाषण्डिनो विकर्म्मस्थान् वैडालव्रतिकान्
शठान् ।
हैतुकान् वकवृत्तींश्च वाङ्मात्रेणापि
नार्च्चयेत् ॥")
धुस्तूरः । इति मेदिनी ॥ शठस्य लक्षणम्
॥
यथा, --
"प्रियं वक्ति पुरोऽन्यत्र विप्रियं कुरुते भृशम्
।
व्यक्तापराधचेष्टश्च शठोऽयं कथितो बुधैः
॥"
इति विष्णुपुराणे । ३ । १८ । २१ ।
श्लोकटीका ॥

उणा० ४ । ११७ । इति इन् ।)
इन्द्रपत्नी ।
इत्यमरटीकायां भरतः ॥

**शची**, स्त्री, (शचि + कृदिकारादिति ङीष् ।)

इन्द्रपत्नी । तत्पर्य्यायः । पुलोमजा २
इन्द्राणी ३ ।
इत्यमरः ॥ शचिः ४ सची ५ सचिः ६
। इति
भरतः ॥ पूतक्रतायी ७ पौलोमी ८ ।
इति जटा-
धरः ॥ माहेन्द्री ९ जयवाहिनी १०
ऐन्द्री ११
शतावरी १२ । इति शब्दरत्नावली ॥
(यथा,
रघुः । ३ । २३ ।
"उमावृषाङ्कौ शरजन्मना यथा
यथा जयजन्तेन शचीपुरन्दरौ ।
तथा नृपः सा च सुतेन मागधी
ननन्दतुस्तत्सदृशेन तत्समौ ॥")
शतमूली । स्त्रीकरणान्तरम् । तच्चु
विष्टिकरण-
मिति केचित् ॥ इति मेदिनी ॥ (कर्म्म
। इति
इति निघण्टुः । २ । १ ॥ यथा,
ऋग्वेदे । ८ । ३२ । १५ ।
"न किरस्य शचीनां नियन्ता
सुनृतानाम् ॥"
प्रज्ञा । इति निघण्टुः । ३ । ९ ॥ वाक्
। इति च
निघण्टुः । १ । ११ ॥)

**शचीपतिः**, पुं, (शच्याः पतिः ।) इन्द्रः । इत्यमरः ॥

(यथा, मार्कण्डेये । १५ । ७० ।
"यदि जानासि धर्म्मं त्वं त्वं वा शक्र
शचीपते ।
मम यावत् प्रमाणन्तु शुभं तद्वक्तुमर्हतः
॥"
कर्म्मपालके, त्रि । यथा ऋग्वेदे । ७ ।
६७ । ५ ।
"शक्तं शचीपती शचीभिः ॥"
ध्वंसकारित्वम् । हृद्यत्वञ्च । इति राजनिर्घण्टः
॥
अपि च । अथ गन्धपलाशी सुगन्धद्रव्यं
काश्मीरे
प्रसिद्धम् ।
"शटी पलाशी षड्ग्रन्था सुव्रता गन्ध-
मूलिका ।
गन्धारिका गन्धवधूर्वधूः पृथुपलाशिका ॥
भवेद्गन्धपलाशी तु कषाया ग्राहिणी लघुः ।
तिक्ता तीक्ष्णा च कटुकानुष्णास्यमलनाशिनी ।
शोषकासव्रणश्वासशूलाध्मानग्रहापहा ॥"
इति भावप्रकाशः ॥

**शट्टकं**, क्ली, घृतजलमिश्रितशालिचूर्णम् । मयदार

शटा इति भाषा । यथा,
"शालिचूर्णं घृतं तोयं मिश्रितं शट्टकं वदेत् ॥"
इति भावप्रकाशः ॥

**शठ**, वधक्लेशकैतवे । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) क्लेशो दुःखानुभवः ।
कैतवं मित्रवञ्चनम् । शठति खलः साधुं
वञ्चयतीत्यर्थः । इति दुर्गादासः ॥
चतुर्व्विधपत्यन्तर्गतपतिविशेषः । तस्य
लक्षणम् ।
कामिनीविषयकपटपटुः । यथा, --
"मौलौ दाम विधाय भालफलके
व्यालिख्य
पत्रावलीं
केयूरं भुजयोर्निधाय कुचयोर्व्विन्यस्य
मुक्ता-
स्रजम् ।
विश्वासं समुपार्ज्जयन् मृगदृशः
काञ्चीनिवेश-
च्छला-
न्नीवीग्रन्थिमपाकरोति मृदुना हस्तेन वाम-
भ्रुवः ॥"
इति रसमञ्जरी ॥
(वृष्णिवंशीयविशेषः । यथा, हरिवंशे ।
भविष्य-
पर्व्वणि । २ । ३ ।
"बलभद्रं शिनेः पुत्रं हार्द्दिक्यं शठसारणौ
॥")

**शठता**, स्त्री, (शठ + तल् ।) शठस्य भावः ।

तत्पर्य्यायः । माया २ शाठ्यम् ३ कुसृतिः
४
निकृतिः ५ । इति हेमचन्द्रः ॥ अन्यच्च ।
"अस्त्रियां कपटो व्याज उपधिर्द्दम्भ एव च
।
कूटं कल्कं छलं छद्म मिषकैरवकैतवम् ॥
अथ शाठ्यञ्च शठता कुसृतिर्न्निकृतिश्च
सा ।
हिंसाफले चतुष्कं स्यात् शाठ्यपर्य्याय
ईरितः ॥
पूर्व्वः कपटपर्य्यायः फले वञ्चनमात्रके ।
उभयोरेकपर्य्याय इति केचित् प्रचक्षते ॥"
इति शब्दरत्नावली ॥

**शठाम्बा**, स्त्री, अम्बष्ठा । इति राजनिर्घण्टः ॥

**शड**, इ ङ संघरुजोः । इति कविकल्पद्रुमः ॥

(भ्वा०-आत्म०-सक०-सेट् ।)
तालव्यादिः । इ,

| | | |
|---|---|---|
| “हे शचीपती शचीति कर्म्मनाम कर्म्मणां<br>पालकौ ।” इति तद्भाष्ये सायणः ॥) | | |

शण्ड्यते । ङ, शण्डते । काण्डो वीरं रुजतीत्यर्थः । इति दुर्गादासः ॥

**शण**, म दाने । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) म, शणयति । इति दुर्गादासः ॥

**शणं**, क्ली, (शण + अच् ।) क्षुपविशेषः । तत्पर्य्यायः । भङ्गा २ मातुलानी ३ । इति हेमचन्द्रः ॥ (यथा, महाभारते । १ । १४५ । ११ ।
"शणं तैलं घृतञ्चैव जतु दारूणि चैव हि ।
तस्मिन् वेश्मनि सर्व्वाणि निःक्षिपेथाः समन्ततः ॥")

**शणः**, पुं, (शण + पचाद्यच् ।) स्वनामख्यातक्षुपः । तत्पर्य्यायः । माल्यपुष्पः २ वमनः ३ कटुतिक्तकः ४ निशावनः ५ दीर्घशाखः ६ त्वक्सारः ७ दीर्घपल्लवः ८ । अस्य गुणाः । अम्लत्वम् । कषायत्वम् । मलगर्भास्रपातनत्वम् । वातकारित्वम् । पित्तकफतीव्राङ्गमर्द्दनाशित्वञ्च । इति राजनिर्घण्टः ॥

**शणघण्टिका**, स्त्री, (शणस्य घण्टेव तत्तुल्यशब्दकारिफलवत्त्वात् । इवार्थे कन् । टापि अत इत्वम् ।) शणपुष्पी । इति राजनिर्घण्टः ॥

**शणपर्णी**, स्त्री, (शणस्य पर्णमिव पर्णमस्याः । ङीष् ।) अशनपर्णी । इति शब्दरत्नावली ॥

**शणपुष्पिका**, स्त्री, (शणपुष्पी + स्वार्थे कन् । अत इत्वम् ।) घण्टारवा । इत्यमरभरतौ ॥ झनझनिया इति वनशोण इति च भाषा ॥

**शणपुष्पी**, स्त्री, (शणस्य पुष्पमिव पुष्पमस्याः ।) क्षुपविशेषः । शणहुली इति शणै इति वनशणै इति च भाषा । तत्पर्य्यायः । बृहत्पुष्पी २ शणिका ३ शणघण्टिका ४ पीतपुष्पी ५
स्थूलफला ६ लोमशा ७ माल्यपुष्पिका ८ ।

**शणिका**, स्त्री, (शण + स्त्रियां टाप् । कन् । अत इत्वम् ।) शणपुष्पी । इति राजनिर्घण्टः ॥

**शणीरं**, क्ली, शोणमध्यस्थपुलिनम् । दर्दरीतटम् । इति मेदिनी ॥

**शण्डं**, क्ली, पद्मादिसमूहः । इति शब्दरत्नावली ॥

**शण्डः**, पुं, नपुंसकम् । गोपतिः । इति भरतद्विरूपकोषः ॥

**शण्डता**, स्त्री, (शण्डस्य भावः । तल् ।) षण्डत्वम् ।
शण्डशब्दात् भावे तप्रत्ययस्यानन्तरं आप्
प्रत्ययेन निष्पन्नमेतत् ॥

**शण्डिलः**, पुं, (शडि रुजायाम् + "सलिकल्यनिमहिभडिभण्डिशण्डीति ।" उणा० १ । ५५ । इति
इलच् ।) मुनिविशेषः । इति सिद्धान्तकौमुदी ॥

**शण्ढः**, पुं, (शाम्यति ग्राम्यधर्म्मात् । शम + "शमेर्ढः ।"
उणा० १ । १३१ । इति ढः ।)
अन्तर्महल्लिकः ।
अभ्यन्तरस्त्रीरक्षकोऽयम् । खोजा इति भाषा ।
तत्पर्य्यायः । वर्षवरः २ । तल्लक्षणम्
यथा, --
"ये त्वल्पसत्त्वाः प्रथमाः क्लीवाश्च स्त्रीस्वभाविनः ।
जात्या न दुष्टाः कार्य्येषु ते वै वर्षवराः स्मृताः ॥"
इति ॥
नपुंसकम् । हिज्डे इति भाषा । इत्यमरभरतौ ॥ गोपतिः । शाँड इति भाषा ।
इति

**शतकुम्भः**, पुं, पर्व्वतविशेषः । इति शातकुम्भशब्दटीकायां भरतः ॥ (स्त्री,
नदीतीर्थविशेषः ।
यथा, महाभारते । ३ । ८४ । १० ।
"सुगन्धां शतकुम्भाञ्च पञ्चयक्षाञ्च भारत ।
अभिगम्य नरश्रेष्ठ स्वर्गलोके महीयते ॥")

**शतकोटिः**, पुं, (शतं कोटयोऽग्राः शिखा यस्य ।) वज्रम् । इत्यमरः ॥ वृन्दसंख्या
लीलावतीमते
अब्जसंख्या ॥

**शतक्रतुः**, पुं, (शतं क्रतवो यस्य ।) इन्द्रः । इति धनञ्जयकोषः ॥ (यथा, महाभारते । ३ । ४२ । १२ ।
"आह मामरश्रेष्ठः पिता तव शतक्रतुः ॥"
बहुकर्म्मा । बहुप्रज्ञः । यथा, ऋग्वेदे । १ । १० । १ ।
"ब्रह्माणस्त्वा शतक्रत उद्वंशामिव येमिरे ॥"
"हे शतक्रतो बहुकर्म्मन् बहुप्रज्ञ वा ।"
इति
तद्भाष्ये सायणः ॥)

**शतखण्डं**, क्ली, सुवर्णम् । यथा, --
"सौमेरुकं महाधातुः शतखण्डं मृदुल्लकम् ॥"
इति शब्दचन्द्रिका ॥
शतभागश्च ॥

**शतग्रन्थिः**, स्त्री, (शतं ग्रन्थयो यस्याः ।) दूर्व्वा । इति राजनिर्घण्टः ॥

**शतघ्नी**, स्त्री, (शतं हन्तीति । हन + टक् । ङीप् ।) शस्त्रभेदः । अस्य लक्षणम् ।
यथा, --
"अयःकण्टकसंछन्ना शतघ्नी महती शिला ।"
इति विजयरक्षितः ॥
"दुर्गञ्च परिखोपेतं चयाट्टालकसंयुतम् ।

अस्या गुणाः । क्षुद्रतिक्तत्वम् । वमिकारित्वम्
।
रसनियामकत्वञ्च । इति राजनिर्घण्टः ॥

**शणसूत्रं**, क्ली, (शणस्य सूत्रम् ।) पवित्रकम् ।

इत्यमरः ॥ "द्वे शणसूत्रजाले । शणस्य सूत्रं
शणसूत्रम् । शणति ददाति सूत्रं शणः । शण
श्रन्म दाने अन् । शणः तालव्यशादिर्मूर्द्धन्य-
णान्तः इति बहवः । सनो
दन्त्यसादिर्दन्त्यनान्त
इति केचित् । तन्मते षन द ञु दाने इत्यस्य
रूपम् । सणो दन्त्यसादिर्मूर्द्धन्यणान्त
इत्यपरे ।
सणकिणमणिकाकणकोणकाणाइति मूर्द्धन्य-
णान्ते विद्याभरणम् ॥
'कार्पासमुपवीतं स्याद्विप्रस्योर्द्ध्वकृतं त्रिवृत्
।
सनसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम् ॥'
इति
मनुवचनात् पवित्रकमपि तदुच्यते । आनाय
इत्यादि चतुष्कं जाले इत्येके । आनाय
इद्यादि
श्लोकार्द्धं क्वचिद्दृश्यते तत्
स्वाम्याद्युपेक्षितमपि
अन्यैरादृतमिति विवृतम् ।" इति तट्टीकायां
भरतः ॥

**शणालुकः**, पुं, (शणालुरेव । स्वार्थे कन् ।) आरेवत-

वृक्षः । इति शब्दरत्नावली ॥ शोणालु इति
भाषा ॥

मेदिनी ॥ बन्ध्यपुरुषः । इति जटाधरः ॥
उन्मत्तः । इति धनञ्जयः ॥

**शतं**, क्ली, (दश दशतः परिमाणमस्येति ।

"पंक्तिविंशतित्रिंशदिति ।" ५ । १ । ५९
। इति
तः । दशाणां शभावश्च निपात्यते ।)
दशगुणित-
दशसङ्ख्या । एकशओ इति हिन्दीभाषा
।
(यथा, शान्तिशतके ।
"निःस्वो वष्टि शतं शती दशशतं लक्षं
सहस्रा-
धिपः ॥")
तत्पर्य्यायः । दशतिः २ । इति पुराणम् ॥
तद्वाचकानि । धार्त्तराष्ट्रः १ शतभिषातारा
२
पुरुषायुषः ३ रावणाङ्गुलिः ४ पद्मदलम्
५
इन्द्रयज्ञः ६ अब्धियोजनम् ७ । इति
कवि-
कल्पलता ॥ (बहु । इति निघण्टुः । ३ ।
१ ॥
यथा, ऋग्वेदे । ८ । १ । ५ । "वज्रिवो न
शताय
शतामघ ।" "शताय बहुनामैतत् अपरि-
मिताय ।" इति तद्भाष्ये सायणः ॥)

**शतकः**, त्रि, (शतं परिमाणमस्य । शत +

"संख्याया अतिशदन्तायाः कन् ।" ५ ।
१ । २२ ।
इति कन् ।) शतसंख्याविशिष्टः । यथा ।
शान्ति-
शतकामरुशतकादिः । शतशब्दात्
कप्रत्ययेन
निष्पन्नमेतत् । (यथा, मार्कण्डेये । ४६ ।
३० ।
"सन्ध्यासन्ध्यांशकश्चैव शतकौ
समुदाहृतौ ॥")
स्वार्थे के शतकञ्च ॥

**शतकीर्त्तिः**, पुं, भाव्यर्हद्विशेषः । इति हेमचन्द्रः ॥

**शतकुन्दः**, पुं, (शतं कुन्दा यस्य ।) करवीरः ।

शतघ्नीयन्त्रमुख्यैश्च शतशश्च
समावृतम् ॥
गोपुरं सकवाटञ्च तत्र स्यात् सुमनोहरम् ।
सपताकं गजारूढो येन राजा विशेत् पुरम्
॥"
इति मात्स्ये राजधर्म्मे दुर्गसम्पत्तिर्नाम
१९१
अध्यायः ॥ * ॥ (यथा, रघुः । १२ ।
९५ ।
"अयःशङ्कुचितां रक्षः शतघ्नीमथ शत्रवे ।
हृतां वैवस्वतस्यैव कूटशाल्मलिमक्षिपत्
॥"
"अथ रक्षो रावणः अयसः शङ्कुभिः
कीलै-
श्चितां कीर्णां शतघ्नीं
लौहकण्टककीलितयष्टि-
विशेषाम् । शतघ्नी तु चतुस्ताला
लोहकण्टक-
सञ्चिता । यष्टिः -- ॥ इति केशवः ॥"
इति तट्टीकायां मल्लिनाथः ॥)
वृश्चिकाली ।
करञ्जकः । इति मेदिनी ॥ गलरोगविशेषः
।
अस्य निदानलक्षणचिकित्साः
रोहिणीशब्दे
द्रष्टव्याः ॥

**शतच्छदः**, पुं, (शतं छदा यस्य ।) काष्ठकुट्टपक्षी ।

काङ्ठोकरा इति भाषा । इति
त्रिकाण्डशेषः ॥
शतदलपद्मञ्च ॥

**शततमः**, त्रि, शतस्य पूरणः । शतशब्दात्तमट्-

प्रत्ययेन निष्पन्नमेतत् ॥

**शततारा**, स्त्री, (शतं तारा यस्याम् ।) शत-

भिषानक्षत्रम् । इति केचित् ॥

**शतदन्तिका**, स्त्री, नागदन्ती । इति राजनिर्घण्टः ।

**शतद्रुः**, स्त्री, (शतधा द्रवतीति । शत + द्रु ।
"शतेच"

उणा० १ । ३६ । इति कुः ।)
नदीविशेषः ।

दुत्पन्ना विपाशायां मिलिता । (अस्या नाम-
निरुक्तिर्यथा, महाभारते । १ । १७८ । ९ ।
“शतधा विद्रुता यस्माच्छतद्रुरिति विश्रुता ॥”)
तत्पर्य्यायः । शितद्रुः २ । इत्यमरः ॥ शुतुद्रिः ३
शतद्रूः ४ । पुत्त्रशोकसन्तप्तो वशिष्ठः कण्ठे
शिलां बद्ध्वानद्यामस्यां प्रविष्टस्ततो भीत्या
इयं शतधा द्रुता इति शतद्रुः । इति तट्टीकायां
भरतः ॥ (एतद्वृत्तान्तस्तु महाभारते । १ । १७८ ।
अध्याये द्रष्टव्यः ॥) अस्या जलगुणाः ।
“शतद्रोर्विपाशायुजः सिन्धुनद्याः
सुशीतं लघु स्वादु सर्व्वामयघ्नम् ।
जलं निर्म्मलं दीपनं पाचनञ्च
प्रदत्ते बलं बुद्धिमेधायुषञ्च ॥”
इति राजनिर्घण्टः ॥

**शतधा**, स्त्री, दूर्व्वा । इति शब्दचन्द्रिका ॥

**शतधा**, व्य, (शत + धाच् ।) शतप्रकारम् । यथा,

“आस्तीकवचनं श्रुत्वा यः सर्पो न निवर्त्तते ।
शतधा भिद्यते मूर्द्ध्नि शिरीषस्य फलं यथा ॥”
इति महाभारतम् ॥

**शतधामा**, [न्] पुं, (शतं धामानि वर्च्चांसि यस्य ।)

विष्णुः । इति जटाधरः ॥

**शतधारं**, क्ली, (शतं धाराः कोणा यस्य ।)

वज्रम् । इति त्रिकाण्डशेषः ॥ शतधारायुक्ते,
त्रि । यथा, --
“वसोः पवित्रमसि शतधारं वसोः पवित्रमसि
यत्वम् । कुष्ठमुखस्फोटपित्तदाहनाशित्वम् ।
रुच्यत्वम् । सुरभित्वञ्च । इति राजनिर्घण्टः ॥

**शतपत्त्रिका**, स्त्री, (शतपत्त्री + कन् । टाप् । अत

इत्वम् ।) शतपत्त्री । इति राजनिर्घण्टः ॥

**शतपथिकः**, त्रि, (शतपथमधीते तद्वेद इति वा ।)

“शतषष्टेः षिकन् पथो बहुलम् ।” ४ । २ । ६० ।
इत्यस्य वार्त्तिकोक्त्या शत-शब्दोत्तरपथिन्-
शब्दात् षिकन्प्रत्ययेन निष्पन्नः ।) नानामताव-
लम्बी । नानापथगामी । इति सिद्धान्तकौमुदी ॥

**शतपदचक्रं**, क्ली, (शतं पदानि कोष्ठा यस्य तच्च

तच्चक्रञ्चेति ।) नाम्ना नक्षत्रज्ञानार्थं चक्रम् ।
यथा, --
“चक्रं शतपदं वक्ष्ये ऋक्षांशाक्षरसम्भवम् ।
नामादिवर्णतो ज्ञेया ऋक्षराश्यंशकास्तथा ॥
तिर्य्यगूर्द्ध्वगता रेखा रुद्रसंख्या लिखेद्बुधः ।
जायते कोष्ठकानाञ्च शतैकं १०० नात्र संशयः ॥
अ-व-क-ह-डा ऐशान्यां म-ट प-र-ता हरिति चाग्नेय्याम् ।
न-य-भ-ज-खा नैरृत्यां ग-स-द-च-ला व्याय-व्याम् ॥
पञ्च पञ्च क्रमेणैव विंशवर्णान् प्रयोजयेत् ।
पञ्चस्वरसमायोगे एकैकं पञ्चधा कुरु ॥
अवर्णाद्यास्त्रयो ज्ञेयाः सन्ध्यक्षरयुतास्तथा ।
सजातीयैक्यमास्थाय पञ्चस्वरविनिर्णयः ॥
ऋद्‌लृतोरप्यकारेण शेन सस्य परिग्रहः ।
कुर्य्यात् कु-पु-भु-दुस्थाने त्रीणि त्रीण्यक्षराणि च ॥
कु-घ-ङ-छा भवेत् स्तम्भे रौरे त्वीशानगोचरे ।
पु-ष-ण-ठा भवेत् स्तम्भे हस्ते चाग्नेयसंज्ञके ॥
भु-ध-फ-ढा भवेत् स्तम्भे पूर्व्वाषाढे च नैरृते ।
दे दो च चि २७ । चु चे चो ल १ । लि लु ले
लो २ । ऋलृयुक्तः अकारयुक्तेन ज्ञेयः । ह्रस्वेन
दीर्घो ज्ञेयः । तालव्यशकारेण दन्त्यसकारो
ज्ञेयः । इति शतपदचक्रम् । इति ज्योतिस्तत्त्वम् ॥

**शतपदी**, स्त्री, (शतं पादा यस्याः । ङीप् ।)

बहुपदयुक्तकीटविशेषः । काणविछा इति
काणकोटारी इति च भाषा । तत्पर्य्यायः ।
कर्णजलौकाः २ । इत्यमरः ॥ कर्णकीटी ३
भीरुः ४ शतपादिका ५ कर्णजलुका ६ । इति
शब्दरत्नावली ॥ शतपात् ७ शतपादी ८ । इति
जटाधरः ॥ शतावरी । इति राजनिर्घण्टः ॥

**शतपद्मं**, क्ली, श्वेतकमलम् । यथा, --

“शतपद्मं महापद्मं पुण्डरीकं सिताम्बुजम् ॥”
इति रत्नमाला ॥

**शतपर्व्वा**, [न्] पुं, (शतं पर्व्वाणि यस्य ।) वंशः ।

इत्यमरः ॥ इक्षुभेदः । यथा, --
“शतपर्व्वा भवेत् किञ्चित्कोशकारगुणान्वितः ।
विशेषात् किञ्चिदुष्णश्च सक्षारः पवनापहः ॥”
इति भावप्रकाशः ॥

**शतपर्व्वा**, स्त्री, (शतं पर्व्वाणि यस्याः ।) दूर्व्वा ।

वचा । भार्गवपत्नी । (यथा, महाभारते । ५ । ११७ । १३ ।
“बृहस्पतिश्च तारायां शुक्रश्च शतपर्व्वया ॥”)
कोजागरपूर्णिमा । इति शब्दरत्नावली ॥
कटुका । इति राजनिर्घण्टः ॥

सहस्रधारम् ।
वसोः पवित्रेण शतधारेण सुत्वा
कामधुक्ष्व ॥”
इति पशुपतिपद्धतिः ॥

**शतधृतिः**, पुं, इन्द्रः । (यथा, महिम्नः स्तोत्रे ।

“रथः क्षौणी यन्ता शतधृतिरगेन्द्रो
धनुरथो ॥”)
ब्रह्मा । इति मेदिनी ॥ (यथा, भागवते ।
७ । ४ । १ ।
“एवं वृतं शतधृतिर्हिरण्यकशिपोरथ ॥”)
स्वर्गः । इति विश्वः ॥

**शतपत्रं**, क्ली, (शतं पत्राणि यस्य ।) पद्मम् । इत्य-

मरः ॥ (यथा, महाभारते । ३ । ६८ ।
२० ।
“इमामसितकेशान्तां शतपत्रायतेक्षणाम्
॥”)

**शतपत्रः**, पुं, (शतं पत्राणि पक्षा यस्य ।) मयूरः ।

सारसः । दार्व्वाघाटपक्षी । इति मेदिनी
॥
राजकीरः । नुरी इति भाषा । इति हेम-
चन्द्रराजनिर्घण्टौ ॥ (यथा, महाभारते ।
३ ।
१०८ । ८ ।
“मयूरैः शतपत्रैश्च जीवञ्जीवककोकिलैः
॥”)

**शतपत्रकः**, पुं, (शतपत्र + स्वार्थे कन् ।)
दार्व्वाघाट-

पक्षी । इत्यमरः ॥ काड्डोक्रा इति भाषा ॥

**शतपत्रनिवासः**, पुं, (शतपत्रे निवासो यस्य ।)

ब्रह्मा । इति कविकल्पतता ॥ पद्मस्थे,
त्रि ॥

**शतपत्री**, स्त्री, (शतं पत्राणि यस्याः । ङीप् ।)

पुष्पविशेषः । सेउती इति भाषा ।
पाटल-
वर्णासौ गोलाव इति वदन्ति ।
तत्पर्य्यायः ।
सुमनाः २ सुशीता ३ शिववल्लभा ४
सौम्य-

दु-थ-झ-ञा भवेत् स्तम्भे वायव्ये भाद्र उत्तरे
॥
एवं स्तम्भचतुष्कञ्च ज्ञातव्यं स्वरवेदिभिः ॥
धिष्ट्यानि कृत्तिकादीनि प्रत्येकं चतुरक्षरैः ।
साभिजिन्त्यंशकास्तत्र शतैकं द्वादशाधिकम्
॥
यदृक्षांशककोष्ठस्थः क्रूरः सौम्योऽपि वा ग्रहः
।
तत्रस्थो वेधयेत् सम्यक् पुंसो नामादिमाक्षरम्
॥
सौम्यैर्विद्धं शुभं ज्ञेयमशुभं पापखेचरैः ।
मिश्रैर्मिश्रफलं तत्र निर्व्वेधेन शुभाशुभम् ॥
यद्वाच्यं सर्व्वतोभद्रे ग्रहोपग्रहवेधतः ।
शुमाशुभफलं सर्व्वं तदिहापि विचिन्तयेत् ॥”
पञ्चस्वरा अ-इ-उ-ए-ओकारास्तैर्योगे
धिष्ट्यानि
नक्षत्राणि । अत्र चतुर्भिर्व्वर्णैरेकनक्षत्रं यथा, --
अ इ उ ए ३ । ओ व वि वु ४ । वे वो क कि
५ । कु घ ङ छ ६ । के को ह हि ७ । हु हे
हो ड ८ । डि डु डे डो ९ । म मि मु मे १० ।
मो ट टि टु ११ । टे टो प पि १२ । पु ष ण
ठ १३ । पे पो र रि १४ । रु रे रो त १५ ।
ति तु ते तो १६ । न नि नु ने १७ । नो य यि
यु १८ । ये यो भ भि १९ । भु ध फ ढ २० ।
भे भो ज जि २१ । जु जे जो ख । ० । खि ख
खे खो २२ । ग गि गु गे २३ । गो श शि शु
२४ । शे षो द दि २५ । दु थ झ ञ २६ ।

**शतपर्व्विका**, स्त्री, (शतपर्व्वा + कन् । टापि अत

इत्वम् ।) दूर्व्वा । वचा । इति मेदिनी ॥
यवः ।
इति शब्दरत्नावली ॥

**शतपर्व्वेशः**, पुं, (शतपर्व्वाया ईशः ।) शुक्रग्रहः ।

इति त्रिकाण्डशेषः ॥

**शतपात्**, स्त्री, (शतं पादा यस्याः । पाद्स्य

पात् ।) कर्णजलौकाः । इति जटा-
धरः ॥

**शतपाद्**, स्त्री, (शतं पादा यस्याः । पाद्स्य

पात् ।) कर्णजलौकाः । इति जटा-
धरः ॥

**शतपादिका**, स्त्री, (शतपाद + स्वार्थ कन् + टाप् ।

अत इत्वम् ।) काकोली । इति जटाधरः
॥ कर्ण-
जलौकाः । इति शब्दरत्नावली ॥

**शतपुष्पः**, पुं, भारविः । स तु किराताज्ज्र्जुनीयग्रन्थ-

कर्त्ता । इति त्रिकाण्डशेषः ॥

**शतपुष्पा**, स्त्री, (शतं पुष्पाणि यस्याः ।) शाक-

विशेषः । इति भरतः ॥ शलुफा इति
ख्याता ।
(यथा, बृहत्संहितायाम् । ५१ । १५ ।
“गन्धमांसिशतपुष्पया वदेत् ॥”)
तत्पर्य्यायः । सितच्छत्रा २ अतिच्छत्रा ३
मधुरा
४ मिसिः ५ अवाक्पुष्पी ६ कारवी ७ ।
इत्य-
मरः ॥ शताक्षी ८ शतपुष्पिका ९
मधुरिका
१० शताह्वा ११ छत्रा १२ मिशिः १३
मिशी
१५ । इति शब्दरत्नावली ॥ माधवी १५
घोषा
१६ । इति जटाधरः ॥ अस्या गुणाः ।
मधु-
रत्वम् । वातपित्तहरत्वम् । गुरुत्वञ्च ।
इति

| गन्धी ५ शतदला ६ सुवृत्ता ७ शतपत्रिका ८ ।<br>अस्या गुणाः । हिमत्वम् । तिक्तत्वम् । कषा- | | राजवल्लभः ॥ * ॥ क्षुपविशेषः । मौरी इति भाषा । तत्पर्य्यायः । शताह्वा २ मिसिः ३ घोषा ४ पोतिका ५ अतिच्छत्रा ६ अवाक्- |
|---|---|---|

पुष्पी ७ माधवी ८ कारवी ९ शिफा १०
संघातपत्रिका ११ छत्रा १२ वज्रपुष्पा १३
सुपुष्पिका १४ शतप्रसूना १५ वहला १६
पुष्पाह्वा १७ शतपत्रिका १८ वनपुष्पा १९
भूरिपुष्पा २० सुगन्धा २१ सूक्ष्मपत्रिका २२
मधुरिका २३ अतिच्छत्रा २४ । अस्या गुणाः ।
कटुत्वम् । तिक्तत्वम् । स्निग्धत्वम् । श्लेष्माति-
सारज्वरनेत्रव्रणनाशित्वम् । वस्तिकर्म्मणि प्रश-
स्यत्वञ्च ॥ * ॥ तद्दलगुणाः । उष्णत्वम् । मधु-
रत्वम् । गुल्मशूलवातनाशित्वम् । दीपनत्वम् ।
पथ्यत्वम् । पित्तहारित्वम् । रुचिदायकत्वञ्च ।
इति राजनिर्घण्टः ॥ * ॥ अपि च ।
"शताह्वानिलदाहामशूलतृट्छर्द्दिनाशिनी ।"
इति द्रव्यगुणः ॥
अन्यच्च ।
"शतपुष्पा कटुः स्निग्धा तिक्तोष्णा कफवातकृत् ।
रुच्या वस्तिहिता नेत्र्या बद्धविट्कृमिशुक्रहृत् ।
संग्राही शीतला तिक्ता दाहनुत् वातला
लघुः ॥"
इति भावप्रकाशः ।
अन्यन्मधुरिकाशब्दे द्रष्टव्यम् ॥

**शतपुष्पिका**, स्त्री, (शतपुष्पा + स्वार्थे कन् ।
टापि अत इत्वम् ।) शतपुष्पा । इति शब्द-
रत्नावली ॥

**शतप्रसूना**, स्त्रो, (शतं प्रसूनानि पुष्पाणि यस्याः ।)
शतपुष्पा । इति राजनिर्घण्टः ॥

**शतप्रासः**, पुं, (शतं प्रासा इव फलानि यस्य ।)
करवीरवृक्षः । इत्यमरः ॥

**शतभिषक्**, [ज्] स्त्री, (शतं भिषज इव तारा
यत्र ।) शतभिषानक्षत्रम् । इति शब्दरत्ना-
वली ॥ (यथा, बृहत्संहितायाम् । ९ । ३४ ।
"शतभिषजि शौण्डिकाना-
मजैकपे द्यूतजीविनां पीडा ॥"
शतभिषजि जात, त्रि । अत्र "वत्सशाला-
भिजिदश्वयुक्छतभिषजो वा ।" ४ । ३ । ३६ ।
इति जातार्थप्रत्ययस्य लुक् ॥)

सा तु अधोमुखी । यथा, --
"अश्लेषवह्नियमपित्र्यविशाखयुक्तं
पूर्व्वात्रयं शतभिषा च नवाप्युडूनि ।
एतान्यधोमुखगणानि शिवानि नित्यं
विद्यार्घ्यभूमिखननेषु च तूषितानि ॥"
इति ज्योतिस्तत्तम् ॥ * ॥
तत्र जातफलम् ।
"शीतभीतिरतिसाहसी सदा
निष्ठुरो हि चतुरो नरो भवेत् ।
वैरिणामतिशयेन दारुणो
वारुणोडु यदि यस्य सम्भवे ॥"
इति कोष्ठीप्रदीपः ॥ * ॥
तत्र जातस्य मिश्रगुणाः । यथा ।
"शतानलादित्यविशाखमैत्र-
शक्रोद्भवा मिश्रगुणाः प्रदिष्टाः ।
शिवाजहस्ताहिभवा जघन्याः
शेषोद्भवाः सत्पुरुषा भवन्ति ॥" * ॥
रविवारादौ शतभिषादियोगे
ज्वरोत्पत्तिफलं
यथा, --
"शिवशतभिषावातो याम्यसर्पस्त्रिपूर्व्वाः
शनिरविकुजवारे भूतगोष्ठीनवम्याम् ।
इह हि मरणयोगे यो हि रोगोपयुक्तः
पशुपतिसमदेहः सोऽपि मृत्युं प्रयाति ॥
उत्तरे विंशतिर्ज्ञेया द्वौ मासौ श्रवणे तथा ।
धनिष्ठायामर्द्धमासं वारुणेन दशाहकम् ॥"
इति ज्योतिःसारधृतकौशिकवचनम् ॥

**शतभीरुः**, स्त्री, मल्लिका । इत्यमरः ॥ शतं बहवो
वियोगिनो भीरवोऽस्या इति शतभीरुः ।
शीत-
भीरुरिति च पाठः । तदा ग्रैष्मिकत्वेन
शीता-
द्बिभेतीति शीतभीरुः । इति भरतः ॥

**शतमखः**, पुं, (शतं मखा यज्ञा यस्य ।) इन्द्रः ।
इति हलायुधः ॥ (यथा, कुमारे । २ । ६४
।
"सहचरमधुहस्तन्यस्तचूताङ्कुरस्त्रः
शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा ॥")

"इन्द्रस्य रूपं शतमानमायु-
श्चन्द्रेण ज्योतिरमृतं दधाशः ॥"
"शतानामनेकेषां प्राणिनां मानं
पूजा यस्मिन्
तत् जगत्पूज्यमित्यर्थः ।" इति
तद्भाष्ये मही-
धरः ॥)

**शतमार्जः**, पुं, (शतं शतवारं मार्जयति
शस्त्रा-
णीति । मृज शुद्धौ + णिच् + अच्
।) अस्त्र-
कारकः । इति केचित् ॥ (क्वचित्
शस्त्रमार्ज
इति पाठः ॥)

**शतमूला**, स्त्री, (शतं मूलानि यस्याः ।)
दूर्व्वा ।
वचा । इति राजनिर्घण्टः ॥

**शतमूलिका**, स्त्री, (शतं मुलानि यस्याः ।
ततः
स्वार्थे कन् ।) द्रवन्ती । इति
राजनिर्घण्टः ॥

**शतमूली**, स्त्री, (शतं मूलानि यस्याः ।
"पाककर्णेति ।"
४ । १ । ६४ । ङीष् ।)
स्वनामख्यातौषधविशेषः ।
तत्पर्य्यायः । बहुसुता २ अभीरुः
३ इन्दीवरी
४ वरी ५ ऋष्यप्रोक्ता ६ भीरुपत्री
७ नारा-
यणी ८ शतावरी ९ अहेरुः १० ।
इत्यमरः ॥
रङ्गिणी ११ शटी १२ द्वीपिशत्रुः
१३ । इति
जटाधरः ॥ ऋष्यगता १४ । इति
शब्दरत्ना-
वली ॥ शतपदी १५ पीवरी १६
धीवरी १७

**शतभिषा**, स्त्री, अश्विन्यादिसप्तविंशतिनक्षत्रान्त-

र्गतचतुर्विंशनक्षत्रम् । तत्पर्य्यायः । शतभिषक् २ ।
इति शब्दरत्नावली ॥ अस्या आकृतिर्मण्डला-
कारशततारामयी । यथा, --
"मण्डलाभशततारकाकुलै-
र्मध्यभाजि नभसः प्रचेतसि ।
बाणशैलधरणीमिताः कलाः
शारदेन्दुमुखि तावुरेर्य्ययुः ॥" दं २ । पं ५५ ।
इति कालिदासकृतरात्रिलग्नमाननिरूपणम्॥
अस्या अधिष्ठातृदेवता वरुणः । यथा, --
"अश्वियमदहनकमलजशशिशूलभृददितिजीव
फणिपितरः ।
योन्यर्यमदिनकृत्तष्टृपवनशक्राग्निमित्राः ॥
शक्रो निरृतिस्तोयं विश्वविरिञ्ची हरिर्व्वसु-
र्व्वरुणः ।
अजपादोऽहिव्रध्नः पूषा चेतीश्वरा भानाम् ॥"

**शतमन्युः**, पुं, (शतं मन्यवः क्रतवो यस्य ।) इन्द्रः ।

इत्यमरः ॥ (यथा, भागवते । १ । ८ । ६
।
"याजयित्वाश्वमेधैस्तं
त्रिभिरुत्तमकल्पकैः ।
तद्यशः पावनं दिक्षु शतमन्योरिवातनोत्
॥"
शतयज्ञकारिणि, त्रि । यथा, बृहत्संहि-
तायाम् । ४३ । ५४ ।
"त्वमन्तकः सर्व्वहरः कृशानुः
सहस्रशीर्षा शतमन्युरीड्यः ॥"
बहुक्रोधे च त्रि । यथा, ऋग्वेदे । १० ।
१०३ । ७ ।
"वीरः शतमन्युरिन्द्रः ।"
"शतमन्युः बहुयज्ञः बहुक्रोधो वा ।" इति
तद्भाष्ये सायणः ॥)

**शतमानः**, पुं, क्ली, रूप्यपलम् । आढकः । इत्य-

मरभरतौ ॥ (यथा, मनुः । ८ । १३७ ।
"धरणानि दश ज्ञेयाः शतमानस्तु राजतः
।
चतुः सौवर्णिको निष्को विज्ञेयस्तु
प्रमाणतः ॥"
शतलोकपूज्ये, त्रि । यथा,
वाजसनेयसंहिता-
याम् । १९ । ९३ ।

वृष्या १८ दिव्या १९ दीपिका
२० दरकण्ठिका
२१ सूक्ष्मपत्रा २२ सुपत्रा २३
बहुमूला २४
शताह्वया २५ स्वादुरसा २६
शताह्वा २७
लघुपर्णिका २८ आत्मगुप्ता २९
जटा ३० मूला
३१ शतवीर्य्या ३२ महौषधी ३३
मधुरा ३४
शतमूला ३५ केशिका ३६
शतपत्रिका ३७
विश्वस्था ३८ वैष्णवी ३९ पार्ष्णी
४० वामुदेव-
प्रियङ्करी ४१ दुर्मना ४२ तैलवल्ली
४३ । अस्या
गुणाः । वृष्यत्वम् । मधुरत्वम् ।
हिमत्वम् । मेह-
कफवातपित्तनाशित्वम् ।
तिक्तत्वम् । श्रेष्ठत्वम् ।
रसायनत्वञ्च । इति राजनिर्घण्टः
॥ अपि च ।
"शतावरी बहुसुता भीरुरिन्दीवरी
वरी ।
नारायणी शतपदी शतवीर्य्या च
पीवरी ॥
महाशतावरी त्वन्या
शतभूल्यूर्द्ध्वकण्टिका ।
सहस्रवीर्य्या हेतुश्च ऋष्यप्रोक्ता
महोदरी ॥
शतावरी गुरुः शीता तिक्ता स्वाद्वी
रसायणी ।
मेधाग्निपुष्टिदा स्निग्धा नेत्र्या
गुल्मातिसार-
जित् ।
शुक्रस्तन्यकरी बल्या
वातपित्तास्रशोथजित् ॥"
इति भावप्रकाशः ॥ * ॥
अन्यच्च ।
"शतावरी वातपित्तमेहकुष्ठहरा
सरा ।"

| | | |
|---|---|---|
| | | इति राजवल्लभः ॥<br>**शतयष्टिकः**, पुं, (शतं यष्टयो गुच्छा यस्य ।)<br>शतलतिकहारः । तत्पर्य्यायः ।<br>देवच्छन्दः २ ।<br>इत्यमरः ॥<br>**शतरु(द्रि)द्रीयं**, त्रि, (शतं रुद्रा देवता अस्य ।<br>शतरुद्र + “शतरुद्राच्छश्च घश्च<br>।” ४ । २ । २८ ।<br>इत्यस्य वार्त्तिकोक्त्या घः पक्षे<br>छश्च ।) हविरा-<br>दिकम् । इति सिद्धान्तकौमुदी ॥<br>(यथा, महा-<br>भारते । ७ । ७९ । १३ । |

"गृणन्तौ वेदविद्वांसौ तद्ब्रह्म
शतरुद्रियम् ॥"
यजुर्व्वेदोक्तग्रन्थविशेषे, क्ली । यथा,
महा-
भारते । ७ । २०० । १४६ ।
"पठन् वै शतरुद्रीयं शृण्वंश्च
सततोत्थितः ॥")

**शतरूपा**, स्त्री, (शतं रूपाणि अस्याः ।) ब्रह्मणः
कन्या पत्नी च । यथा, --
"एवन्तत्त्वात्मकं कृत्वा
जगद्वेधास्त्वजीजनत् ।
सावित्रीं लोकसिद्ध्यर्थं हृदि कृत्वा
समास्थितः ॥
ततः संजपतस्तस्य भित्त्वा
देहमकल्मषम् ।
स्त्रीरूपमर्द्धमकरोदर्द्धं पुरुषरूपवत् ॥
शतरूपा च सा ख्याता सावित्री च
निगद्यते ।
सरस्वत्यथ गायत्री ब्रह्माणी च
परन्तप ॥
दृष्ट्वा तां व्यथितस्तावत्
कामवाणार्द्दितो विभुः ।
उपयेमे स विश्वात्मा
शतरूपामनिन्दिताम् ॥
ततः कालेन महता ततः
पुत्त्रोऽभवन्मनुः ।
स्वायम्भुव इति ख्यातः स विराडिति
नः
श्रुतम् ॥"
इति मात्स्ये ३ अध्यायः ॥
(विष्णुपुराणमते इयं स्वायम्भुवमनोः
पत्नी ।
यथा, तत्रैव । १ । ७ । १४ -- १६ ।
"ततो ब्रह्मात्मसम्भूतं पूर्व्वं स्वायम्भुवं
प्रभुः ।
आत्मानमेव कृतवान् प्रजापाल्ये मनुं
द्विज ॥
शतरूपां तु तां नारीं
तपोनिर्धूतकल्मषाम् ।

**शताक्षी**, स्त्री, रात्रिः । शतपुष्पा । इति शब्द-
रत्नावली ॥ पार्व्वती । यथा, --
"भूयश्च शतवार्षिक्यामनावृष्ट्यामनम्भसि
।
मुनिभिः संस्तुता भूमौ
सम्भविष्याम्ययोनिजा ॥
ततः शतेन नेत्राणां निरीक्षिष्यामि यन्मुनीन्
।
कीर्त्तयिष्यन्ति मनुजाः शताक्षीमिति मां
ततः ॥"
इति मार्कण्डेयपुराणे देवीमाहात्म्ये देव्या-
श्चरितस्तुतिनामाध्यायः ॥

**शताङ्गः**, पुं, (शतं अङ्गानि अवयवा यस्य ।)
रथः । इत्यमरः ॥ तिनिसवृक्षः । इति राज-
निर्घण्टः ॥ (दानवविशेषः । यथा, हरिवंशे ।
२३२ । ६ ।
"करालो ज्वालजिह्वश्च शताङ्गः शतलोचनः
॥"
शतावयवविशिष्टे, त्रि । यथा, महाभारते ।
१ । १८९ । २२ ।
"शताङ्गानि च तुर्य्याणि वादकाः समवाद-
यन् ॥")

**शतानकं**, क्ली, श्मशानम् । इति त्रिकाण्डशेषः ॥

**शतानन्दः**, पुं, (शतं बहुलः आनन्दो यस्य ।)
मुनिभेदः । स तु जनकराजपुरोहितः ।
देवकी-
नन्दनः । इति मेदिनी ॥ ब्रह्मा । गौतममुनिः
।
इति हेमचन्द्रः ॥ विष्णुरथः । इति त्रिकाण्ड-
शेषः ॥ (विष्णुः । यथा, महाभारते । १३ ।
१४९ । ७९ ।
"स्वक्षः स्वङ्ग शतानन्दो
नन्दिर्ज्योतिर्गणेश्वरः ॥")

**शतानीकः**, पुं, (शतं अनीकानि यस्य ।) वृद्धः ।
मुनिभेदः । स तु व्यासशिष्यः । राजभेदः ।
स
च चतुर्थयुगे चन्द्रवंशीयद्वितीयराजः । तस्य

वर्त्तते इति वा शतावर्त्तः ।" इति तत्र शाङ्कर-
भाष्यम् ॥ महादेवः । यथा, महाभारते । १२
।
२८४ । ६ ।
"शतोदर शतावर्त्त शतजिह्व नमोऽस्तु ते ॥")

**शतावर्त्ती** [न्] पुं, विष्णुः । इति त्रिकाण्डशेषः ॥

**शताह्वा**, स्त्री, (शतं आह्वा यस्याः ।) शतपुष्पा ।
इति जटाधरः ॥ शतावरी ॥ इति राज-
निर्घण्टः ॥

**शतिकः**, त्रि, (शत + "शताच्च ठन् यतावशते ।"
५ । १ । २१ । इति ठन् ।) शतेन क्रीतः ।
शतस्य विकारः । शतसम्बन्धी । इति
सिद्धान्त-
कौमुदी ॥

**शतेरः**, पुं, (शद शातने + "शदेस्त च ।" उणा०
१ । ६१ । इति एरक् तकारान्तादेशश्च ।)
शत्रुः । हिंसा । इत्युणादिकोषः ॥

**शत्यः**, त्रि, (शत + "शताच्च ठन्यतावशते ।" ५ ।
१ । २१ । इति यत् ।) शतस्य विकारः ।
शतेन
क्रीतः । धनपतिसंयोगः । शतमस्मै वृद्धिः
आयः
लाभः शुल्कमुपदा वा दीयते इत्यर्थे शत्यः
शतिकः । शत्यं शतिकम् । दक्षिणाक्षिस्पन्दनं
शतस्य निमित्तमित्यर्थः । इति
सिद्धान्तकौमुदी ॥

**शत्रिः**, पुं, (शद् + "राशदिभ्यां त्रिप् ।" उणा०
४ । ६७ । इति त्रिप् ।) हस्ती । इति
सिद्धान्त-
कौमुद्यामुणादिवृत्तिः ॥ (राजर्षिविशेषः ।
यथा,
ऋग्वेदे । ५ । ४ । ९ ।
"शत्रिमग्न उपमां केतुमर्य्यः ॥"
"शत्रिं एतन्नामकं राजर्षिम् ।" इति तद्भाष्ये
सायणः ॥)

**शत्रुः**, पुं, (शद् शातने + "रुशदिभ्यां क्रुन् ।"

स्वायम्भुवो मनुर्द्देवः पत्नीत्वे जगृहे विभुः ॥
तस्माच्च पुरुषात् देवी शतरूपा व्यजायत ।
प्रियव्रतोत्तानपादौ प्रसूत्याकूतिसंज्ञितम् ॥”)

**शतलुम्पः**, पुं, भारविः । इति त्रिकाण्ड-शेषभूरिप्रयोगौ ॥

**शतलुम्पकः**, पुं, भारविः । इति त्रिकाण्ड-शेषभूरिप्रयोगौ ॥

**शतवीर्य्या**, स्त्री, (शतं वीर्य्याणि यस्याः ।) श्वेत-दूर्व्वा । इत्यमरः ॥ शतावरी । कपिलद्राक्षा । इति राजनिर्घण्टः ॥

**शतवेधी**, [न्] पुं, (शतं विधतीति । विध + णिनिः ।) अम्लवेतसः । इत्यमरः ॥

**शतसहस्रं**, क्ली, (शतगुणितं सहस्रम् । मध्यपद-लोपिकर्म्मधारयः ।) शतगुणितसहस्रम् । लक्ष-मिति यावत् । यथा हारीतः । मणिवासो गवादीनां प्रतिग्रहे सावित्र्यष्टसहस्रं जपेत् पञ्च मध्यमे दशोत्तमे द्वादशरात्रं पयोव्रतं शतसहस्र-मसत्प्रतिग्रहेष्विति । इति शुद्धितत्त्वम् ॥ (यथा च हरिवंशे । १२१ । १३ ।
“अष्टौ शतसहस्राणि देशजाश्चोत्तमा हयाः ॥”)

**शतह्रदा**, स्त्री, (शतं ह्रदा अर्च्चींषि यस्याः । यद्वा, शतं ह्रादाः शब्दाः यस्याः । निपातनात् ह्रस्वः ।) विद्युत् । इत्यमरः ॥ (यथा, हरिवंशे । १४६ । ४८ ।
पिता जनमेजयः पुत्त्रः सहस्रानीकः । इति मेदिनी ॥ सुदासराजपुत्त्रः । इति श्रीभागवते ९ स्कन्धे २२ अध्यायः ॥ (नकुलपुत्त्रः । यथा, महाभारते । १ । २३४ । १० ।
“पुत्त्रस्ते प्रतिविन्ध्यश्च सुतसोमस्तथा विभुः ।
श्रुतकर्म्मार्ज्जुनिश्चैव शतानीकश्च नाकुलिः ॥
सहदेवाच्च यो जातः श्रुतसेनस्तवात्मजः ।
सर्व्वे कुशलिनो वीराः कृतास्त्राश्च सुतास्तव ॥”)

**शतारं**, क्ली, (शतं आराणि अस्य ।) वज्रम् । इति त्रिकाण्डशेषः ॥

**शतारुः**, [स्] क्ली, कुष्ठभेदः । इति शब्दरत्ना-वली ॥ तस्य रूपमाह ।
“रक्तं श्यावं सदाहार्त्ति शतारुः स्याद्बहुव्रणम् ।”
इति भावप्रकाशः ॥

**शतारुषी**, स्त्री, कुष्ठभेदः । इति शब्दरत्ना-वली ॥ तस्य रूपमाह ।
“रक्तं श्यावं सदाहार्त्ति शतारुः स्याद्बहुव्रणम् ।”
इति भावप्रकाशः ॥

**शतावरी**, स्त्री, (शतं आवृणतेति । आ + वृ + अच् । गौरादित्वात् ङीष् ।) शतमूली । इत्य-मरः ॥ इन्द्रभार्य्या । इति शब्दरत्नावली ॥ शटी । इति मेदिनी ॥

**शतावर्त्तः**, पुं, विष्णुः । इति हेमचन्द्रः ॥ (यथा, महाभारते । १३ । १४९ । ५० ।
“अनुकूलः शतावर्त्तः पद्मी पद्मनिभेक्षणः ॥”
“धर्म्मत्राणाय शतमावर्त्तमानाः प्रादुर्भावा अस्येति शतावर्त्तः । नाडीशतेन प्राणरूपेण
उणा० ४ । १०३ । इति क्रुन् ।) स्वदेशादनन्त-रोऽव्यवहितैकविषयाभिनिवेशिराजः । यथा, --
“विषयानन्तरो राजा शत्रुर्मित्रमतः परम् ॥” इति, शातकः । निपातकारीत्यर्थः । तत्पर्य्यायः । रिपुः २ वैरिः ३ सपत्नः ४ अरिः ५ द्विशः ६ द्वेषणः ७ दुर्हृद् ८ द्विट् ९ विपक्षः १० अहितः ११ अमित्रः १२ दस्युः १३ शात्रवः १४ अभि-घाती १५ परः १६ अरातिः १७ प्रत्यर्थी १८ परिपन्थी १९ । इति चामरः ॥ वृषः २० प्रति-पक्षः २१ । इति जटाधरः ॥ द्विषन् २२ घातकः २३ द्वेषी २४ विद्विषः २५ हिंसकः २६ विद्विट् २७ अप्रियः २८ अभिघातिः २९ अहितः ३० दौर्हृदः ३१ । इति शब्दरत्ना-वली ॥ तस्य जयोपायो यथा, --
मत्स्य उवाच ।
“सर्व्वेषामप्युपायानां दानं श्रेष्ठतमं मतम् ।
स्वदत्तेनेह भवति दानेनोभयलोकजित् ॥
न सोऽस्ति राजन् दानेन वशयोगो न जायते ।
दानेन वशगा देवा भवन्तीह सदा वृणाम् ॥
दानमेवोपजीवन्ति प्रजाः सर्व्वा नृपोत्तम ।
प्रियो हिदानवान् लोके सर्व्वस्यैवोपजायते ॥
दानवानचिरेणैव तथा राजा परान् जयेत् ।

| | | |
|---|---|---|
| "समुद्रमेघः स रराज राजन्<br>शतह्रदास्त्रीप्रभयाभिरामः ॥")<br>वज्रम् । इति मेदिनी ॥<br>दक्षकन्याविशेषः । यथा,<br>"ददौ च बाहुपुत्राय द्वौ तडिच्च<br>शतह्रदा ।<br>तयोः पुत्राश्च विद्वांसश्चतस्रो<br>विद्युतः शुभाः ॥"<br>इति वह्निपुराणे सर्गानुकीर्त्तने<br>सतीदेहत्यागो<br>नामाध्यायः ॥ | | |

दानवानेव शक्नोति संहतान् भेदितुं परान् ॥
यद्यप्यलुब्धा गम्भीराः पुरुषाः सागरोपमाः ।
न गृह्णन्ति तथाप्येते जायन्ते पक्षपातिनः ॥
अन्यत्रापि कृतं दानं करोत्यन्यं तथा वशे ।
उपायेभ्यः प्रशंसन्ति दानं श्रेष्ठतमं जनाः ॥
दानं श्रेयस्करं श्रेष्ठं दानं श्रेष्ठकरं परम् ।
दानवानेव लोकेषु पुत्त्रत्वे ध्रियते सदा ॥
न केवलं दानपरा जयन्ति
भूर्लोकमेकं पुरुषाः सुवीराः ।
जयन्ति ते राजसुरेन्द्रलोकं
सुदुर्जयं यद्विवुधाधिवासम् ॥”
इति मात्स्ये २२४ अध्यायः ॥ * ॥
मत्स्य उवाच ।
“न शक्या ये वशे कर्त्तुमुपायत्रितयेन तु ।
दण्डेन तान् वशान् कुर्य्यात् दण्डो हि वश-
कृन्नृणाम् ॥
सम्यक् प्रणयनं तस्य तथा कार्य्यं महीक्षिता
।
धर्म्मशास्त्रानुसारेण सुसहायेन धीमता ॥
तस्य सम्यक्प्रणयनं तथा कार्य्यं महीक्षिता
।
वानप्रस्थांश्च धर्म्मज्ञान् निर्म्ममान् निष्परि-
ग्रहान् ।
स्वदेशे परदेशे च धर्म्मशास्त्रविशारदान् ।
समीक्ष्य प्रणयेद्दण्डं सर्व्वं दण्डे प्रतिष्ठितम् ॥
आश्रमी यदि वा वर्णी पूज्यो वाथ गुरुर्महान्
।
नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्म्मे न
तिष्ठति ॥
अदण्ड्यान् दण्डयेद्राजा
दण्ड्यांश्चैवाप्यदण्ड-
यन् ।
इह राज्यपरिभ्रष्टो नरकं प्रतिपद्यते ॥
तस्माद्राजा विनीतेन धर्म्मशास्त्रानुसारतः ।
दण्डप्रणयनं कार्य्यं लोकानुग्रहकाम्यया ॥
यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा ।
प्रजास्तत्र न मुह्यन्ति नेता चेत् साधु पश्यति
॥
वालवृद्धातुरयतिद्विजस्त्रीविक्लवात्मतः॥

दण्डस्य भीतैस्त्रिदशैः समेतै-
र्भागो धृतः शूलधरस्य यज्ञे ।
भवस्य पुत्त्रं ध्वजिनीपतिञ्च
वरं शिशूनाञ्च भयात्तु दुस्थम् ॥”
इति मात्स्ये १९९ अध्यायः ॥
सामभेदौ तत्तच्छब्दे द्रष्टव्यौ ॥

**शत्रुघ्नः**, पुं, (शत्रून् हन्तीति । हन् + मूलविभु-
जादित्वात् कः । यद्वा,
अमनुष्यकर्त्तृकेऽपि चेत्यपि
शब्दात् कृतघ्न शत्रुघ्नादयः
सिद्धा इति दुर्ग-
सिंहः ।) श्रीरामस्य भ्राता ।
तत्पर्य्यायः ।
शत्रुमर्द्दनः २ । इति
शब्दरत्नावली ॥ स तु
सुमित्रया
हुतोच्छिष्टभोजनादसावि।
यथा, --
“निष्ठां गते दत्त्रिमसभ्यतोषे
विहित्रिमे कर्म्मणि राजपत्न्यः ।
प्राशुर्हु तोच्छिष्टमुदारवंश्या-
स्तिस्रः प्रसोतुं चतुरः सुपुत्त्रान्
॥
कौशल्ययासावि सुखेन रामः
प्राक् केकयीतो भरतस्ततोऽभूत्
।
प्रासोष्ट शत्रुघ्नमुदारचेष्ट-
मेका सुमित्रा सह लक्ष्मणेन ॥”
इति भट्टिकाव्ये १ सर्गः ॥
(अयं हि मधुपुरनिवासिनो
लवणाख्यराक्ष-
सस्य निहन्ता । एतद्विवरणं
रामायणे उत्तर-
काण्डे ७३ अध्यायमारभ्य
द्रष्टव्यम् ॥ * ॥ शत्रु-
हन्तरि, त्रि । यथा, रामायणे । २
। १ । १ ।

**शद**, लृ ज औ शाते । इति कविकल्पद्रुमः ॥
(भ्वा०-पर०-अक०-सक० च-अनिट् ।) लृ,
अशदत् । ज, शादः शदः । औ, शत्स्यति । शातः
पतनं पातनञ्च । शीयते पत्रं वृक्षात् वायुः ।
शदोऽपि ममित्यव्विषये आत्मनेपदम् । केचि-
दिमं तुदादौ पठित्वा तत्सामर्थ्यात् आत्मने-
पदानित्यत्वे शीयती शीयन्तीत्युदाहरन्ति । इति
दुर्गादासः ॥

**शद**, औ गतौ । आङ्पूर्व्वोऽयमिति कविकल्प-
द्रुमः ॥ (भ्वा०-पर०-सक०-अनिट् ।) ताल-
व्यादिः । आशीयते । औ, आशात्सीत् ।
इति दुर्गादासः ॥

**शदः**, पुं, फलमूलादिः । शदधातोरच्प्रत्ययेन
निष्पन्नमेतत् । इति सिद्धान्तकौमुदी ॥

**शद्रिः**, पुं, (शीयते इति । शद + अदिशदिभूशु-
भिभ्यः क्रिन् ।” उणा० ४ । ६५ । इति क्रिन् ।)
मेघः । जिष्णुः । इति मेदिनी ॥ हस्ती । इत्यु-
णादिकोषः ॥

**शद्रिः**, स्त्री, (शद गतौ + “अदिशदीति क्रिन् ।)
विद्युत् । इति हेमचन्द्रः ॥ खण्डः । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

**शद्रुः**, त्रि, (शद शाते + “दाधेट्सिशदसदो रुः ।”
३ । २ । १५९ । इति रुः ।) पतनकर्त्ता ।
गन्ता । इति शदधातो रुप्रत्ययेन निष्पन्नमेतत् ।
इति व्याकरणम् ॥

**शनकावलिः**, स्त्री, गजपिप्पली । इति शब्द-
चन्द्रिका ॥

**शनपर्णी**, स्त्री, (शनस्येव पर्णान्यस्याः । ङीष् ।
पृषोदरादित्वात् णस्य नः ।) कटुकी । इति
शब्दचन्द्रिका ॥

**शनिः**, पुं, रव्यादिनवग्रहान्तर्गतसप्तमग्रहः । तत्प-
र्य्यायः । सौरिः २ शनैश्चरः ३ । इत्यमरः ॥
नीलवासाः ४ मन्दः ५ छायात्मजः ६ । इति
त्रिकाण्डशेषः ॥ पातङ्गिः ७ ग्रहनायकः ८

सर्व्वे बलिष्ठा भक्षेरन् यदि दण्डं न पातयेत्
॥
देवदैत्योरगगणाः सिद्धभूतपतत्रिणः ।
उपक्रमेयुर्म्मर्य्यादां यदि दण्डं न पातयेत् ॥
एष ब्रह्माभिशापेषु सर्व्वप्रहरणेषु च ।
सर्व्वविक्रमकोपेषु व्यवसाये च तिष्ठति ॥
पूज्यन्ते दण्डिनो देवा न पूज्यन्ते
त्वदण्डिनः ।
न ब्रह्माणं विधातारं न पूषार्य्यमणावपि ॥
य एते मानवाः केचित् प्रशान्ताः
सर्व्वकर्म्मसु ।
रुद्रमग्निञ्च शक्रञ्च सूर्य्याचन्द्रमसौ तथा ।
विष्णुं देवगणांश्चान्यान् दण्डिनः पूजयन्ति
च ॥
दण्डः शास्ति प्रजाः सर्व्वा दण्ड
एवाभिरक्षति ।
दण्डः सुप्तेषु जागर्त्ति दण्डं धर्म्मं विदुर्बुधाः ॥
राजदण्डभयाद्के पापाः पापं न कुर्व्वते ।
यमदण्डभयाद्के परस्परभयादपि ॥
एवं हि सात्त्विके लोके सर्व्वं दण्डे प्रतिष्ठितम्
।
अन्धे तमसि मज्जेयुर्यदि दण्डं न पातयेत् ॥
तस्मात् दण्डो दमयति अदण्ड्यं
दण्डयत्यपि ।
दमनाद्दण्डनाच्चैव तस्मात् दण्डं विदुर्ब्बुधाः
॥

"गच्छता मातुलकुलं भरतेन
तदानघः ।
शत्रुघ्नो नित्यशत्रुघ्नो नीतः
प्रीतिपुरस्कृतः ॥")

**शत्रुघ्नजननी**, स्त्री, (शत्रुघ्नस्य जननी ।) सुमित्रा ।

इति शब्दरत्नावली ॥

**शत्रुजित्**, पुं, (शत्रून् जयतीति । जि + "सत्सूद्वि-
षेति ।" ३ । २ । ६१ । इति
क्विप् । ततस्तुक् ।)
राजविशेषः । तस्य पुत्त्रः
ऋतध्वजः । स एव
कुवलयाश्वः । इति
मार्कण्डेयपुराणम् ॥

**शत्रुञ्जयः**, पुं, विमलाद्रिः । इति हेमचन्द्रः ॥

(नागविशेषः । यथा, रामायणे ।
२ । ३२ । १० ।
"नागः शत्रुञ्जयो नाम मातुलोऽयं
ददौ मम ।
तं ते निष्कसहस्रेण ददामि
द्विजपुङ्गव ॥"
शत्रुं जयतीति । जि + "संज्ञायां
भृतॄवृ-
जीति ।" ३ । २ । ४६ । इति
खच् । ततो मुम् ।)
शत्रुजेतरि, त्रि ॥

**शत्रुन्तपः**, त्रि, (शत्रुं तपति तापयति वा । तप +
"संज्ञायां भृतॄवृजीति ।" ३ । २
। ४६ । इति
खच् । ततो मुम् ।) वैरितापकृत्
। इति
मुग्धबोधव्याकरणम् ॥ (यथा,
महाभारते । ४ ।
५२ । ११ ।
"शत्रुन्तपः कोपममृष्यमाणः
समर्द्दयत् कूर्म्मनखेन पार्थम्
॥")

छायासुतः ९ भास्करिः १० नीलाम्बरः ११ ।
इति शब्दरत्नावली ॥ आरः १२ क्रोडः १३
वक्रः १४ कोलः १५ सप्तांशुः १६ पङ्गुः १७ ।
इति जटाधरः ॥ कालः १८ सूर्य्यपुत्त्रः १९
असितः २० । इति ज्योतिस्तत्त्वम् ॥ अस्य
वर्णः कृष्णः ।
पश्चिमदिङ्नपुंसकान्त्यजजातितमो-
गुणकषायरसमकरकुम्भराशिनीलकान्तमणिसौ-
राष्ट्रदेशानामधिपतिरयम् । कश्यपमुनिसन्तानः ।
शूद्रवर्णः । सूर्य्यमुखः । चतुरङ्गुलपरिमाणः ।
कृष्णवर्णवस्त्रः । गृध्रवाहनः । सूर्य्यपुत्त्रः । चतु-
र्भुजः । भल्लवाणवरशूलधनुर्धारी । अस्याधि-
देवता यमः । प्रत्यधिदेवता प्रजापतिः । इति
ग्रहयागतत्त्वबृहज्जातकादयः ॥ अपि च ।
"शनिर्विहङ्गोऽनिलवन्यवन्ध्या
शूद्राङ्गना धातुसमः स्थिरश्च ।
क्रूरः प्रतीची तुवरोऽतिवृद्धो-
ऽकरक्षितीट् दीर्घसुनीललौहम् ॥"
इति नीलकण्ठीयजातकम् ॥ * ॥

| | | |
|---|---|---|
| | **शत्रुमर्द्दनः**, पुं, (शत्रुं मृद्नातीति । मृद् + ल्युः ।)<br>शत्रुघ्नः । इति शब्दरत्नावली ॥<br>(शत्रुहन्तरि,<br>त्रि । यथा, कथासरित्सागरे ।<br>४२ । १२५ ।<br>"अध्यास्ते यमदंष्ट्राख्यः स्वामी<br>नः शत्रुमर्द्दनः ॥")<br>**शत्वरी**, स्त्री, रात्रिः । इति त्रिकाण्डशेषः ॥ | |

अस्योत्पत्तिर्य्यथा, --
“मरीचेः कश्यपो जज्ञे तस्माज्जज्ञे
विभावसुः ।
तस्य भार्य्याभवत् संज्ञा पुत्त्री त्वष्टुः
प्रजापतेः ॥
नातितेजोमयं रूपं सोढुं सालं
विवस्वतः ।
मायामयीं ततश्छायां सवर्णां निर्म्ममे
स्वतः ॥
संज्ञोवाच ततश्छायां सवर्णे शृणु मे वचः
।
अहं यास्यामि सदनं पितुस्त्वं पुनरत्र मे
।
भवने वस कल्याणि निर्व्विशङ्कं
ममाज्ञया ॥
इति च्छायां गृहे स्थाप्य संज्ञागात्
पितुरा-
लयम् ।
मन्यमानोऽथ तां संज्ञां सवर्णायां तथा
रविः ॥
सावर्णिं जनयामास मनुश्रेष्ठं महीपते ।
शनैश्चरं द्बितीयञ्च सुतं भद्रां
तृतीयिकाम् ॥”
इति पाद्मे स्वर्गखण्डे ११ अध्यायः ॥
तस्य क्रूरदृष्टेः कारणं यथा, --
“एतस्मिन्नन्तरे तत्र द्रष्टुं शङ्करनन्दनम् ।
आजगाम महायोगी सूर्य्यपुत्त्रः
शनैश्चरः ॥
अत्यन्तानम्रवदन ईषन्मीलितलोचनः ।
द्बारिणं शूलहस्तञ्च विशालाक्षमुवाच ह
॥
शनैश्चर उवाच ।
शिवाज्ञया शिशुं द्रष्टुं यामि शङ्करकिङ्कर
।
विष्णुप्रमुखदेवानां मुनीनामनुरोधतः ॥
विशालाक्ष उवाच ।
आज्ञावहो न देवानां नाहं शङ्करकिङ्करः
।
तेन मातर्न पश्यामि किञ्चिद्वस्तु
स्वचक्षुषा ।
ततः प्रभृति नम्रास्यः
प्राणिहिंसाभयादहम् ॥”
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ११
अध्यायः ॥ * ॥
अस्य भोगकालो यथा, --
“रविर्मासं निशानाथः
सपाददिवसद्बयम् ।
पक्षत्रयं भूमिपुत्त्रो बुधोऽष्टादश
वासरान् ॥
वर्षमेकं सुराचार्य्यश्चाष्टाविंशदिनं
भृगुः ।
शनिः सार्द्धद्बयं वर्षं स्वर्भानुः
सार्द्धवत्सरम् ॥”
इति ज्योतिस्तत्त्वम् ॥
तस्य जपमन्त्रो यथा, --
“प्रणवं वाग्भवं मायां श्रीमुद्धृत्य
शनैश्चरम् ।
चतुर्थ्यन्तं मनुं प्रोक्तं
रविसूनोर्नवाक्षरम् ॥”
ॐ ऐं ह्रीँ श्रीँ शनैश्चराय । इति
रुद्रयामलम् ॥
ऊर्द्ध्वपाणिस्तन्मन्त्रं जपेत् । यथा,
--
“सूर्य्यारराहुमन्दानामूर्द्धपाणौ
जपेद्बुधः ।
सोमकेत्वोरधः पाण्योरन्येषां
शुद्धपाणिकः ॥”
इति च रुद्रयामलम् ॥
तस्य होममन्त्रो यथा । ॐ शन्नो
देवीरभीष्टये
शन्नो भवन्तु पीतये शंयोरभिस्रवन्तु
नः । यथा
शनैश्चरायेति पुनः शन्नो देवीति
होमयेत् ।
इत्युद्वाहतत्त्वधृतमत्स्यपुराणम् ॥ *
॥ वारविशेषः ।
तत्र वारवेला यथा, --
“कृतमुनियमशरमङ्गल-
पीतवस्त्रद्बयं जीवे हरिद्राकनकानि च ।
अश्वः शुक्रे सितो देयः शुक्लधान्यानि यानि च ॥
शनौ च सतिला देया कृष्णा गौर्लौहमुत्तमम् ।
राहौ च महिषीच्छागौ माषाश्च तिलसर्षपाः ॥
अजामेषौ च दातव्यौ केतौ चान्नञ्च मिश्रितम् ।
स्वर्णगोविप्रपूजाभिः सर्व्वेषां शान्तिरुत्तमा ॥”
इति ज्योतिस्तत्त्वम् ॥
ग्रहाणां वलयो यथा, --
“गुडौदनं पायसञ्च हविष्यं क्षीरषष्टिकम् ।
दध्योदनं हविश्चूर्णं मांसं चित्रान्नमेव च ॥
दद्यात् ग्रहक्रमाच्चेदं द्बिजेभ्यो भोजनं बुधः ।
शक्तितो वा यथालाभं सत्कृत्य विधिपूर्व्वकम् ॥”
ग्रहाणां दक्षिणा यथा, --
“धेनुः शङ्खस्तथानड्वान् हेम वासो हयस्तथा ।
कृष्णा गौरायसं छागएता वै दक्षिणाः क्रमात् ॥”
इति संस्कारतत्त्वम् ॥

**शनिचक्रं**, क्ली, (शनेश्चक्रम् ।) नृणां शुभाशुभ-
ज्ञानार्थशनिभोग्यनक्षत्रादिसप्तविंशतिनक्षत्रयुक्त-
नराकारचक्रम् । यथा, --
“शनिचक्रं नराकारं लिखित्वा सौरिभादितः ।
नाम ऋक्षं भवेद्यत्र फलं तत्र शुभाशुभम् ॥
एकं मुखे दक्षहस्ते चत्वारि षट् पदद्बये ।
हृदि पञ्च करे वामे चत्वारि मस्तके त्रयम् ॥
द्बयं नेत्रद्बये गुह्ये द्बयं तत्र न्यसेद्बुधः ।
मुखे हानिर्जयो दक्षे भ्रमः पादे श्रियो हृदि ।
वामे भीर्मस्तके राज्यं नेत्रे सौख्यं मृतिर्गुदे ॥
तूर्य्याष्टद्बादशे ऋक्षे यदा विघ्नकरः शनिः ।
तदा सौख्यं वपुःस्थन्तु हृच्छीर्षे नेत्रदक्षयोः ॥
तृतीयैकादशे षष्ठे यदा सौख्यकरः शनिः ।
तदा विघ्नः शरीरस्थो गुह्ये वक्त्रेऽङ्घ्रिवामयोः ॥
यस्य पीडाकरः शौरिस्तस्य चक्रे फलन्त्विदम् ।
लिखित्वा कृष्णद्रव्येण तैलमध्ये क्षिपेत्ततः ॥
निक्षिप्य भूमिमध्यस्थं कृष्णपुष्पैः प्रपूजयेत् ।
तुष्टिं याति न सन्देहः पीडां त्यक्त्वा शनैश्चरः ॥”
इति ज्योतिस्तत्त्वम् ॥

**शनिप्रसूः**, स्त्री, (शनेः प्रसूर्जननी ।) छाया ।
सूर्य्यपत्नी । इति भूरिप्रयोगः ॥

**शनिप्रियं**, क्ली, (शनेः पियम् ।) नीलमणिः ।

द्वारं दातुमशक्तोऽहं विना मन्मातुराज्ञया ॥
ददौ वर्त्म ग्रहेशाय चक्षुःकोणाज्ञया ततः ।
शनिरभ्यन्तरं गत्वा ननामानम्रकन्धरः ॥
रत्नसिंहासनस्थाञ्च पार्व्वतीं सस्मितां मुदा ।
नतं सूर्य्यसुतं दृष्ट्वा दुर्गा संभाष्य यत्नतः ।
शुभाशिषं ददौ तस्मै पृष्ट्वा तत्कुशलं शुभा ॥
पार्व्वत्युवाच ।
कथमानम्रवक्त्रस्त्वं श्रोतुमिच्छामि साम्प्रतम् ।
कथं न पश्यसि मां साधो बालकञ्च ग्रहेश्वर ॥
शनिरुवाच ।
सर्व्वे स्वकर्म्मणः साध्वि भुञ्जते वाञ्छितं फलम् ।
शुभाशुभं वा यत् कर्म्म कोटिकल्पैर्न लुप्यते ॥
इतिहासं चातिगोप्यं शृणु शङ्करवल्लभे ।
अकथ्यं
जननीसाक्षाल्लज्जाजनककारणम्॥
आबालात् कृष्णभक्तोऽहं कृष्णध्यानैकमानसः ।
तपस्यासु रतः शश्वद्विषये विरतः सदा ॥
पिता ददौ विवाहेन कन्यां चित्ररथस्य च ।
अतितेजस्विनी शश्वत्तपस्यानुरता सती ॥
एकदा सा ऋतुस्नाता सुवेशं स्वं विधाय च ।
रत्नालङ्कारसंयुक्ता मुनिमानसमोहिनी ॥
हरिपादं ध्यायमानं सा मां पश्येत्युवाच ह ।
मत्समीपं समागत्य सस्मिताननलोचना ।
रामर्त्तुभास्करादियामार्द्धे।
प्रभवति हि वारवेला
न शुभाशुभकार्य्यकरणाय ॥" * ॥
तत्र कालवेला यथा, --
"कालस्य वेला रवितः शराक्षि-
कालानलागाम्बुधयो गजेन्दू ।
दिने निशायामृतुवैदनेत्र-
नगेषु रामा विधुदन्तिनौ च ॥"
तत्र कुलिकवेला यथा, --
"षष्ठाष्टैकं दिनेशात् क्रमश इह दिने मन्त्रि-
चण्डेश्वरोक्तः
पूर्व्वे वारार्द्धयामः कुलिक इह परो मध्यमश्चेति
कालः ।"
तद्दिने पूर्व्वदिग्गमननिषेधो यथा, --
"शुक्रादित्यदिने न वारुणदिशं न ज्ञे कुजे
चोत्तरां
मन्देन्दोश्च दिने न शक्रककुभं याम्यां गुरौ न
व्रजेत् ॥" * ॥
तत्र पथमरजोयोगे दोषो यथा, --
"आदित्ये विधवा नारी सोमे चैव पतिव्रता ।
वेश्या मङ्गलवारे च बुधे सौभाग्यमेव च ॥
बृहस्पतौ पतिः श्रीमान् शुक्रे चापत्यमेव च ।
शनौ बन्ध्यां विजानीयात् प्रथमे स्त्री रजस्वला ॥"
इति ज्योतिस्तत्त्वम् ॥
अथ नवानां ग्रहाणां दानानि ।
"सूर्य्ये धेनुञ्च ताम्रञ्च गोधूमं रक्तचन्दनम् ।
चन्द्रे चन्दनशङ्खौ च वस्त्रञ्च तिलतण्डुलान् ॥
कुजे वृषः प्रदातव्यो रक्तवस्त्रं गुडौदनम् ।
बुधे कर्पूरमुद्गञ्च हरिद्वस्त्रं हिरण्यकम् ॥
इति केचित् ॥

**शनिवारः**, पुं, (शनिभोग्यः शनेर्वा वारः ।) शनि-
भोग्यसावनदिनम् । तत्तु उदयादोदयकालः । यथा, --
"सूतकादिपरिच्छेदो दिनमासाब्दपास्तधा ।
मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तिताः ॥"
दिनाधिपस्य रव्यादेर्भोग्यं दिनं वाररूपं सावनगणनोक्तम् ।
"उदयादोदयाद्भानोर्भौमसावनवासराः॥"
इति तिथ्यादितत्त्वम् ॥
शतभिषानक्षत्रयुक्तमधुकृष्णत्रयोदश्यां शनिवार-
योगे महावारुणी स्यात् । यथा । स्कन्दपुराणे ।
"वारुणेन समातुक्ता मधौ कृष्णा त्रयोदशी ।
गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समा ।

| शशाप मामपश्यन्तमृतुनष्टा स्वकोपतः ।<br>बाह्यज्ञानविहीनञ्च ध्यानैकतानमानसम् ॥<br>न दृष्टाहं त्वया येन न कृतं ऋतुरक्षणम् ।<br>त्वया दृष्टन्तु यद्यत्तु मूढ सर्व्वं विनश्यति ॥<br>अहञ्च विरते ध्याने तामतोषं पुरा सतीम् ।<br>शापं मोक्तुं न शक्ता सा पश्चात्तापं चकार ह ॥ | | |
|---|---|---|

शनिवारसमायुक्ता सा महावारुणी स्मृता ॥”
इति तिथ्यादितत्त्वम् ॥ * ॥
तत्र जातफलं यथा, --
“कृशः सुवेशः कुलकीर्त्तिहीनो
ज्वरायुतो मध्यधनोऽङ्गहीनः ।
तमोगुणः क्लेशकरो नराणां
मन्दस्य वारप्रभवोऽतिमन्दः ॥”
इति कोष्ठीप्रदीपः ॥ * ॥
तत्र यात्रानिषेधो यथा, --
“संत्यजेद्दिवसे यात्रां
सूर्य्यारार्कीन्द्वक्रिणाम् ।”
इति ज्योतिस्तत्त्वम् ॥
वारवेलादि शनिशब्दे द्रष्टव्यम् ॥

**शनैः**, [स्] व्य, अद्रुतम् । इत्यमरः । यथा, --

“शनैर्व्विद्या शनैः कन्था शनैः
पर्व्वतमारुहेत् ।
शनैः कामश्च धर्म्मश्च पञ्चैतानि
शनैः शनैः ॥”
इति गारुडे १०९ अध्यायः ॥
शनैश्चरः । इति मेदिनी ॥

**शनैश्चरः**, पुं, (शनैर्मन्दं मन्दं चरतीति । चर-

गतौ + पदाद्यच् ।) शनिः ।
इत्यमरः ॥ अस्य
स्तोत्रं यथा, --
“नीलाञ्जनचयप्रख्यं रविसूनुं
महाग्रहम् ।
छायाया गर्भसम्भूतं वन्दे भक्त्या
शनैश्चरम् ॥
व्यासेनोक्तमिदं स्तोत्रं यः पठेत्
प्रयतो नरः ।
दिवा वा यदि वा रात्रौ
शान्तिस्तस्य न सं-
शयः ॥”
इति व्यासभाषितस्तोत्रम् ॥

**शप्**, व्य, स्वीकारः । शप् करोति । इति सिद्धान्त-

पर्य्यायः । शपनम् २ । इत्यमरः ॥ शपः ३ ।
इति हेमचन्द्रः ॥ सत्यम् ४ समयः ५ शापः ६
प्रत्ययः ७ अभिषङ्गः ८ । इति जटाधरः ॥ *
॥
चतुष्पादव्यवहारस्य क्रियापादाङ्गम् । यथा ।
अथ शपथः ।
“युक्तिष्वप्यवसन्नासु शपथैरेनमर्द्दयेत् ।
अर्थकालवलापेक्षमग्न्यम्बुसुकृतादिभिः ॥”
अर्थस्य विवादास्पदस्य बलं बह्वल्पभावः ।
कालस्य च बलं पुण्यापुण्यत्वम् । तदपेक्षं
यथा
स्यादित्यर्थः । दूर्व्वाकरत्वस्य
पुत्त्रादिस्पर्शस्य
चाग्रे दर्शनीयत्वात् । अत्र मयैतत् कृतं न वा
इति प्रतिज्ञामुच्चार्य्याग्नौ जले वा हस्तं प्रक्षि-
पेत् । एतन्मिथ्यात्वे मम सुकृतं नश्येदिति वा
ब्रूयात् । न त्वग्निपरीक्षां जलपरीक्षां वा कुर्य्यात्
इत्यभिप्रायवर्णनं युक्तम् । तस्या महाभियोग-
विषयकत्वेन शपथसमभिव्याहारानर्हत्वात् ।
सुकृतादिभिरित्यादिना दूर्व्वासत्याभ्युपग्रहः ।
तथा च विष्णुः । सर्व्वेष्वेवार्थजातेषु मूल्यं
कनकं
प्रकल्पयेत् । तत्र कृष्णलोने शूद्रं दूर्व्वाकरं
शापयेत् । द्विकृष्णलोने तिलकरम् । त्रिकृष्ण-
लोने जलकरम् । चतुःकृष्णलोने स्वर्णकरम् ।
पञ्चकृष्णलोने सीतोद्धृतमहीकरम् ।
सुवर्णार्द्धोने
कोषो देयः । शूद्रस्य यथासमये विहिता क्रिया
तथा द्विगुणेऽर्थे राजन्यस्य त्रिगुणेऽर्थे वैश्यस्य
चतुर्गुणेऽर्थे ब्राह्मणस्येति । कृष्णलः काञ्चन-
रत्तिका तन्मूल्यादूने कृष्णलोने एवमन्यत्र ।
मनुः ।
“सत्येन शापयेद्विप्रं क्षत्त्रियं वाहनायुधैः ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्व्वैस्तु पातकैः ।
पुत्त्रदारस्य वाप्येवं शिरांसि स्पर्शयेत् पृथक्
॥”
ब्राह्मणेन मयैतत् कृतं न कृतं वेति प्रतिज्ञा-
मुच्चार्य्य सत्यमिति वक्तव्यम् । तथैव
क्षत्त्रियेण

“आचतुर्द्दशकादह्नो यस्य नो राजदैविकम् ।
व्यसनं जायते घोरं स ज्ञेयः शपथे शुचिः ॥”
व्यसनमापत् । घोरमतिपीडाकरम् । तथा च
कोषाधिकारे यस्य पश्येदित्यनुवृत्तौ विष्णुः ।
“रोगोऽग्निर्ज्ञातिमरणं राजातङ्कमथापि वा ।
तमशुद्धं विजानीयात्तथा शुद्धं विपर्य्ययात् ॥”
कात्यायनः ।
“तस्यैकस्य न सर्व्वस्य जनस्य यदि सम्भवेत्
।
रोगोऽग्निर्ज्ञातिमरणमृणं दद्यात् दमञ्च सः ॥
ज्वरातिसारविस्फोटगूढास्थिपरिपीडनम्।
नेत्ररुग्गलरोगश्च तथोन्मादः प्रजायते ॥
शिरोरुग्गुदभङ्गश्च दैविका व्याधयो नृणाम् ॥”
तस्यैकस्येति न तु देशव्यापकमरणादिः । मनुः
।
“न वृथा शपथं कुर्य्यात् स्वल्पेऽप्यर्थे नरो बुधः
।
वृथा हि शपथं कुर्व्वन् प्रेत्य चेह च नश्यति ॥
कामिनीषु विवाहेषु गवां भक्ष्ये तथेन्धने ।
ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकम् ॥”
कामिनीष्विति रहसि कामिनीसन्तोषार्थं वृथा
शपथः । एवं विवाहसिद्ध्यर्थं गोग्रासार्थं
आवश्यकहोमेन्धनार्थं ब्राह्मणरक्षार्थमङ्गीकृत-
धनादौ । यमः ।
“वृथा तु शपथं कृत्वा कीटस्य वधसंयुतम् ।
अनृतेन च युज्येत वधेन च तथा नरः ।
तस्मान्न शपथं कुर्य्यान्नरो मिथ्यावधेप्सितम् ॥”
कीटस्येति प्राणिमात्रोपलक्षणम् । तद्वधपापेन
वृथाशपथकर्त्ता युज्यत इत्यर्थः । इति
व्यवहार-
तत्त्वम् ॥

**शपनं**, क्ली, (शप क्रोशे + ल्युट् ।) शपथः । इत्य-

मरः ॥ गालिः । इति त्रिकाण्डशेषः ॥

**शप्तः**, पुं, (शप + क्तः ।) तृणविशेषः । इति शब्द-

चन्द्रिका ॥ उलु इति भाषा ॥ अभिशापग्रस्ते,
त्रि ॥ (यथा, भागवते । १ । १८ । ४१ ।
“निशम्य शप्तमतदर्हं नरेन्द्रं
स ब्राह्मणो नात्मजमभ्यनन्दत् ॥”)

कौमुदी ॥

**शप**, य ञ औ क्रोशे । इति कविकल्पद्रुमः ।

(दिवा०-भ्वा०-च-उभ०-सक०-अनिट् ।) द्बौ तालव्यादी । य ञ, शप्यति शप्यते । औ, शप्ता । औ, अशाप्सीत् । ञ, शपति शपते । क्रोश उक्तिविशेषः । निर्भर्त्सनमिति चतुर्भुजः । सहस्रशोऽसौ शपथानपश्यत् । क्रोशो भ्वादिपक्षे गालिदानम् । शपते । ञित्वेऽपि शपथाशीर्गत्यनुकारेति नियमात् शपथे आत्मनेपदं अन्यत्र परस्मैपदम् । कृष्णाय शपते गापी । प्रजेति त्वां शशाप सा । इति रघौ । सख्यः शपामि यदि किञ्चिदपि स्मरामि । इति वाचा शरीरस्पर्शनाभावादिति पाणिनीयाः । केचित्तु शपथे नित्यमात्मनेपदं अन्यत्र विभाषया इत्याहुः । तेन प्रतिवाचमदत्त केशवः शपमानाय न चेदिभूभृते । इति माघः । इति दुर्गादासः ॥

**शप**, औ ञ क्रोशे । इति कविकल्पद्रुमः ।

(दिवा०-भ्वा०-च-उभ०-सक०-अनिट् ।) द्बौ तालव्यादी । य ञ, शप्यति शप्यते । औ, शप्ता । औ, अशाप्सीत् । ञ, शपति शपते । क्रोश उक्तिविशेषः । निर्भर्त्सनमिति चतुर्भुजः । सहस्रशोऽसौ शपथानपश्यत् ।

वाहनायुधं स्प्रष्टव्यम् । तथैव वैश्येन गोबीज-काञ्चनानामन्यतमं स्प्रष्टव्यम् । शूद्रेण तु पूर्व्वोक्तं सर्व्वमेव स्प्रष्टव्यम् । तेषां वृथाकृतस्पर्शानां पातकहेतुत्वात् पातकशब्देन निर्द्देशः । हलायुधोऽप्येवम् । दैवक्रियाविषयमाह नारदः ।

"अरण्ये निर्ज्जने रात्रावन्तर्वेश्मनि साहसे ।
न्यासापहरणे चैव दिव्या सम्भवति क्रिया ॥"

बृहस्पतिः ।

"देवब्राह्मणपादांश्च पुत्त्रदारशिरांसि च ।
एते तु शपथाः प्रोक्ता मनुना स्वल्पकारणे ।
साहसेष्वभिशापे च दिव्यानि तु विशोधनम् ॥"

अत्र शपथदिव्ययोः पृथक्त्वप्रतीतेः शपथे न दिव्यधर्म्माः । किन्तु वैधे कर्म्मणि तत्र शौचार्थं स्नानाचमनादि कार्य्यम् । दिव्यानि तु दिव्यतत्त्वे कथितानि नात्र लिखितानि । अत्राभियुक्तेन शपथः कर्त्तव्य इत्युत्सर्गः । उभयेच्छया अभियोक्तापि । इत्याह नारदः ।

"अभियोक्ता शिरोवर्त्ती सर्व्वत्रैव प्रकीर्त्तितः ।
इच्छयान्यतरः कुर्य्यादितरो वर्त्तयेच्छिरः ॥"

इतरः शपथकर्त्तृभिन्नः । तथा कात्यायनः ।

**शफं**, क्ली, गवादीनां खुरः । (यथा, याज्ञवल्क्यः । १ । २०४ ।

"हेमशृङ्गा शफैरौप्यैः सुशीला वस्त्रसंयुता ।
सकांस्यपात्रा दातव्या क्षीरिणी गौः सदक्षिणा ॥")

वृक्षमूलम् । इति मेदिनी ॥

**शफरः**, पुं, स्त्री, मत्स्यविशेषः । इत्यमरः ॥ पुँटी इति भाषा ॥ (यथा, --

"कैवर्त्तकर्कशकरात् शफरश्च्युतोऽपि
जाले पुनर्निपतितः सकरो विपाकः ॥"

यथा च ।

"अगाधजलसञ्चारी विकारो न च रोहितः ।
गण्डूषजलमात्रेण शफरी फर्फरायते ॥"

इत्युद्भटः ॥)

**शफराधिपः**, पुं, (शफराणां मत्स्यानां अधिपः ।) इल्लीशमत्स्यः । इति त्रिकाण्डशेषः ॥ तत्पर्य्यायः । इल्लिशः २ वारिकर्पूरः ३ गाङ्गेयः ४ जमतालः ५ । इति त्रिकाण्डशेषः ।

क्रोशो भ्वादिपक्षे गालिदानम् ।

शपते । ञित्वे-

ऽपि शपथाशीर्गत्यनुकारेति

नियमात् शपथे

आत्मनेपदं अन्यत्र परस्मैपदम् ।

कृष्णाय शपते

गापी । प्रजेति त्वां शशाप सा ।

इति रघौ ।

सख्यः शपामि यदि किञ्चिदपि

स्मरामि । इति

वाचा शरीरस्पर्शनाभावादिति

पाणिनीयाः ।

केचित्तु शपथे नित्यमात्मनेपदं

अन्यत्र विभा-

षया इत्याहुः । तेन प्रतिवाचमदत्त

केशवः

शपमानाय न चेदिभूभृते । इति

माघः । इति

दुर्गादासः ॥

**शपः**, पुं, शपथः । इति हेमचन्द्रः ॥ निर्भर्त्सनम् ।

गालिदानम् । इति

शपधात्वर्थदर्शनात् ॥

**शपथः**, पुं, (शप क्रोशे + “शीङ्शपिरुशमौति ।”

उणा० ३ । ११३ । इति अथः ।)

अनृतं वदन्

घोरं नरकं यास्यामि इत्येवं रूपं

मिथ्यानिर-

मनम् । सत्यावधारणम् । इति

साञ्झः । वाचा

शरीरस्पर्शनम् । इति गोयीचन्द्रः

॥ शपथो

दिव्यम् । इति रमानाथः । इति

भरतः ॥ तत्-

**शब्द**, क शब्दकृतौ । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-अक०-सेट् ।) क, शब्दयति । सोपसर्ग-स्त्वाविष्कृतौ मतः । प्रशब्दयति गभीरमत्यर्थं शिष्यः स्फुटीकरोतीत्यर्थः । इति दुर्गादासः ॥

**शब्दः**, पुं, (शब्द + भावे घञ् । यद्वा, शप आक्रोशे + "शाशपिभ्यां ददनौ ।" उणा ० ४ । ९७ । इति दन् । पकारस्य बकारः ।) श्रोत्रग्राह्यगुणपदार्थ-विशेषः । तत्पर्य्यायः । निनादः २ निनदः ३ ध्वनिः
४ ध्वानः ५ रवः ६ स्वनः ७ स्वानः ८ निर्घोषः ९ निर्ह्रादः १० नादः ११ निःस्वानः १२ निःस्वनः १३ आरवः १४ आरावः १५ संरावः १६ विरावः १७ । इत्यमरः ॥ संरवः १८ रावः १९ । इति शब्दचन्द्रिका ॥ घोषः २० । इति जटा-धरः ॥ स च ध्वन्यात्मको वर्णात्मकश्च । यथा,
"कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः ।
सर्व्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते ॥
वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्त्तिता ।
कदम्बगोलकन्यायाद्रुत्पत्तिः कस्यचिन्मते ॥
उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता ।
सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते ।
तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् ॥"
इति भाषापरिच्छेदः ॥
शब्दं निरूपयति ।
"शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः ।
सर्व्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते ॥"
इति ॥
नभोवृत्तिराकाशसमवेतः । दूरस्थशब्दस्याग्र-हणादाह श्रोत्रोत्पन्न इति कण्ठसंयोगादिजन्या वर्णास्ते कादयो मता इति । ननु मृदङ्गाद्यव-च्छेदेनोत्पन्ने शब्दे श्रोत्रे कथमुत्पत्तिरत आह वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्त्तिता इति । आद्यशब्दस्य बहिर्दशदिगवच्छिन्नोऽन्यः शब्द-स्तेनैव शब्देन जन्यते तेन चापरस्तद्व्यापक एवं क्रमेण श्रोत्रोत्पन्नो गृह्यते इति । कदम्ब-गोलकन्यायाद्रुत्पत्तिः कस्यचिन्मते इति । आद्य शब्दात् दशदिक्षु दश शब्दा उत्पद्यन्ते । तत-
मया कृतं तदेवान्येनापि कृतमित्यादि दर्शना-
दिति भावः । इति सिद्धान्तमुक्तावली ॥ * ॥
दशविधशब्दा यथा, --
"षड्जर्षभसगान्धारमध्यमः पञ्चमस्तथा ।
अतः परन्तु विज्ञेयो निषादो धैवतस्तथा ।
इष्टश्चानिष्टशब्दश्च संहतः प्रविभागवान् ॥"
इत्याश्वमेधिकपर्व्व ॥
शब्दविशेषाणां नामविशेषा यथा, --
"शब्दो गुणानुरागोत्थः प्रणादः शीत्कृतं नृणाम् ।
पर्द्दनं गुदजे शब्दे कर्द्दनं कुक्षिसम्भवे ॥
क्ष्वेडा तु सिंहनादोऽथ क्रन्दनं सुभटध्वनिः ।
कोलाहलः कलकलस्तुमुलो व्याकुलो रवः ॥
मर्म्मरो वस्त्रपर्णादेर्भूषणानान्तु शिञ्जितम् ।
हेषा ह्रेषा तुरङ्गाणां गजानां गर्ज्जबृंहिते ॥
विस्फारो धनुषां हम्भारम्भे गोर्जलदस्य च ।
स्तनितं गर्जितं गर्ज्जिः स्वनितं रसितादि च ॥
कूजितं स्याद्विहङ्गानां तिरश्चां रुतवाशिते ।
वृकस्य रेषणं रेवा वुक्कनं भषणं शुनः ॥
पीडितानान्तु कणितं मणितं रतकूजितम् ।
प्रक्काणः प्रक्कणस्तन्त्र्या मर्द्दलस्य तु गुन्दलः ॥
क्षीजनन्तु कीचकानां भेर्य्या नादस्तु टट्टरः ।
विभा ५१ ॥ * ॥ अथ संस्कृतप्राकृतसमपुंलिङ्ग-शब्दाः । आहार १ हार २ विहार ३ सार
४ समर ५ सम्भोग ६ रोग ७ असुर ८ संहार
९ अमर १० वार ११ वारण १२ गण १३
टङ्कार १४ भार १५ आकर १६ लोल १७
उल्लोल १८ विलास १९ वायस २० हर २१
अहङ्कार २२ हीर २३ अङ्कुर २४ नीहार २५
उरग २६ राग २७ भाल २८ तरल २९
गोविन्द ३० कन्द ३१ उदर ३२ तरुण ३३
तरणि ३४ दास ३५ मोह ३६ सन्दोह ३७
मास ३८ खुर ३९ खर ४० तर ४१ मल ४२
सङ्गर ४३ आरम्भ ४४ हास ४५ कर ४६
करि ४७ किरि ४८ कीर ४९ कोल ५० कन्दोल
५१ धीर ५२ मल ५३ मलय ५४ करीर ५५
वामदेव ५६ असि ५७ वीर ५८ नर ५९ नरक
६० करङ्क ६१ दण्ड ६२ चण्डाल ६३ रङ्ग ६४
दर ६५ सरल ६६ कलङ्क ६७ कम्बल ६८
आकार ६९ पङ्क ७० खल ७१ बहुल ७२
कुरङ्ग ७३ देह ७४ सन्देह ७५ सङ्ग ७६ पर

श्चान्ये दश शब्दा उत्पद्यन्ते इति भावः ।
अस्मिन् कल्पे गौरवादुक्तं कस्यचिन्मते इति ।
ननु शब्दस्य नित्यत्वादुत्पत्तिः कथमत आह ।
उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता इति ।
शब्दानामुत्पादविनाशप्रत्ययशालित्वादनित्यत्व
मित्यर्थः । ननु स एवायं ककार इत्यादि प्रत्य-
भिज्ञानाच्छब्दानां नित्यत्वम् । इत्थञ्चोत्पाद-
विनाशबुद्धिभ्रमरूपा चेत्यत आह सोऽयं क
इति बुद्धिस्तु साजात्यमवलम्बते । तदेवौषध-
मित्यादौ सजातीयेपि दर्शनात् इति ॥ तत्र
प्रत्यभिज्ञानस्य तत्सजातीयत्वं विषयः । ननु
तद्व्यक्त्यभेदो विषयः उक्तप्रतीतिविरोधात् ।
इत्थञ्च द्वयोरपि बुद्ध्योर्न भ्रमत्वमिति । ननु
सजातीयत्वं सोऽयमिति प्रत्यभिज्ञायां भाषते
इति कुत्र दृष्टमित्यत आह तदेवेति । यदौषधं

तारोऽत्युच्चैर्ध्वनिर्मन्द्रो गम्भीरो मधुरः
कलः ॥
काकली तु कलः सूक्ष्म एकतालो
लयानुगः ।
काकुर्ध्वनिविकारः स्यात् प्रतिश्रुत्तु
प्रतिध्वनिः ॥”
इति हेमचन्द्रः ॥
अथैकार्थानुलोमविलोमसमशन्दाः।
नयन १
नर्त्तन २ कनक ३ कण्टक ४ महिम ५
कलङ्क
६ कालिका ७ सरस ८ सहास ९
मध्यम १०
सदस्य ११ नवेन १२ तावता १३
तारता १४
विभवि १५ करक १६ कम्बुक १७
काञ्चिका १८
नन्दन १९ दन्तद २० दम्भद २१
योग्ययोः २२
लगुल २३ नुततनु २४ हाववहा २५
पतदातप २६
वरभैरव २७ कलपुलक २८ वरकैरव
२९ वरपौरव
३० तरुणीरुत ३१ रदसोदर ३२
नदभेदन ३३
दम्पतीपदम् ३४ लङ्काकङ्काल ३५
माधववल्लव-
वधमा ३६ नन्दनन्दन ३७ तद्धित
३८ समास
३९ कारिका ४० पादपाः ४१ जलज
४२ नाना
४३ मम ४४ ॥ * ॥
अथान्यार्थकानुलोमविलोम-
शब्दाः । वन्दे १ देवे २ लेख ३ रवी ४
भानो ५
हंसा ६ जीवा ७ यामा ८ विभु ९ वद
१०
रम ११ यम १२ कम्प १३ राधा १४
राधया
१५ सूत्रामा १६ नन्दक १७ मालिका
१८

७७ कुरर ७८ तरङ्ग ७९ चारु ८०
सञ्चार ८१
भङ्ग ८२ अरि ८३ हरि ८४ परिणाह
८५
कण्ठ ८६ कुण्ठ ८७ अहि ८८ दाह
८९ परि-
सर ९० रवि ९१ हाहा ९२ मञ्जु ९३
मञ्जीर
९४ वाह ९५ अचल ९६ कुल ९७
कुमार ९८
कुम्भ ९९ कुम्भीर १०० सार १०१
विरल १०२
कवल १०३ जार १०४ कन्दर १०५
उदार
१०६ पार १०७ जम्बीर १०८
केशरि १०९
वराह ११० मुरारि १११ काल ११२
काकोल
११३ कुन्तल ११४ चमूरु ११५
विराम ११६
बाल ११७ आलोल ११८ बाहु
११९ रण १२०
सङ्गर १२१ चोल १२२ भार १२३
संसार १२४
केरल १२५ समीरण १२६ टङ्क
१२७ ताल
१२८ आसार १२९ चामर १३०
कुलीर १३१
तुरङ्ग १३२ सूर १३३ कङ्काल १३४
कन्दल १३५
कराल १३६ विकास १३७ पूर
१३८ हेरम्ब
१३९ कम्बु १४० विधु १४१ सिन्धु
१४२ बुध
१४३ अनुबन्ध १४४ कुन्द १४५
इन्दु १४६
मन्दर १४७ समीर १४८ समह
१४९ गन्ध
१५० भीम १५१ अङ्क १५२ सङ्कर
१५३

| | | |
|---|---|---|
| | कालिनी १९ राजते २० भारती २१ हासिका<br>२२ गगन २३ करका २४ भार्गव २५ कटकम्<br>२६ दीनरक्षा २७ महोरगा २८ वातापिना<br>२९ पिनाकिना ३० सदालिका ३१ यमराज<br>३२ हरिदैवे ३३ सव्यायामा ३४ भोविकर्त्तन ३५<br>नन्दनवन ३६ नलकूवर ३७ सहसानुत ३८<br>रसविभवेन ३९ साहमहमिक ४० नवतम-<br>संमद ४१ मार ४२ वत ४३ युवा ४४ सदा ४५<br>वशि ४६ मया ४७ लता ४८ नुत ४९ लव ५० | किरीट १५४ तमाल १५५ गुञ्जा १५६ हिन्ताल<br>१५७ तोमर १५८ महीरुह १५९ विम्ब १६०<br>पुञ्ज १६१ हिण्डीर १६२ पिण्ड १६३ वर १६४<br>संवर १६५ कोण १६६ काण १६७ संरम्भ<br>१६८ सोम १६९ परिरम्भ १७० विकार १७१<br>वाण १७२ वसन्त १७३ आसब १७४ वेसन्त<br>१७५ वास १७६ वासव १७७ वासर १७८<br>कासार १७९ सार १८० सरस १८१ किरण<br>१८२ अरुण १८३ वारण १८४ ॥ * ॥ अथ<br>संस्कृतप्राकृतसमस्त्रीलिङ्गशब्दाः। हेला १<br>खेला २ कला ३ माला ४ रसाला ५ काहला<br>६ अचला ७ कीला ८ लीला ९ वला १०<br>वाला ११ लोला १२ दोला १३ अलसा १४ |

मसी १५ धरणी १६ धारणी १७ गोणी १८
रोहिणी १९ रमणी २० मणी २१ वीणा २२
वाणी २३ वसा २४ वेणी २५ रीढा २६ गङ्गा
२७ तरङ्गिणी २८ कन्दली २९ लहरी ३०
नारी ३१ रामा ३२ भेरी ३३ वसुन्धरा ३४
काली ३५ कराली ३६ चामुण्डा ३७ चण्डा
३८ रण्डा ३९ तुला ४० मही ४१ ॥ * ॥
अथ
संस्कृतप्राकृतक्लीवलिङ्गसमशब्दाः। जल १
फल
२ पल ३ मूल ४ वारि ५ कीलाल ६ कूल ७
वल ८ पलल ९ दुकूल १० लिङ्ग ११ गम्भीर
१२ कूल १३ सलिल १४ कमल १५ चीर
१६
तुच्छ १७ राजीव १८ नीर १९ हल २०
रजत
२१ कुटीर २२ दारु २३ लाल २४ पटीर
२५
कारण २६ रोहण २७ चेल २८ कुहर २९
अम्बर ३० मन्दिर ३१ कुट्मल ३२ मण्डल
३३
तामरस ३४ कुण्डल ३५ अङ्गद ३६ पुर ३७
अरबिन्द ३८ लोह ३९ अङ्ग ४० तडाग ४१
करण ४२ कुल ४३ तोरण ४४ मरण ४५
तुङ्ग
४६ अलम् ४७ आगार ४८ भासुर ४९ ॥ *
॥
अथ संस्कृतप्राकृतसमक्रियापदानि। भण १
देहि २ गच्छ ३ संहर ४ कुरु ५ चोरय ६
मारय ७ अवगच्छ ८ अवलोकय ९
अवचिन्तय
१० खाद ११ ॥ * ॥ अथ
निरोष्ठ्यपुंलिङ्गशब्दाः।
नीहार १ हार २ हरिण ३ अङ्क ४ हर ५
अट्टहास ६ कैलास ७ कास ८ रद ९ नारद
१० सिंह ११ शङ्ख १२ शेष १३ अहि १४
हंस १५ घनसार १६ हलि १७ इन्द्र १८
नाग १९ हिण्डीर २० निर्झर २१ शरद्घन २२
चन्द्रकान्त २३ शृङ्गार २४ सागर २५ तडाग
कृति २४ छाया २५ जाया २६ कथा
२७
कान्ता २८ धात्री २९ रात्रि ३० रति ३१
गति ३२ कन्धरा ३४ धारणा ३४ धारा
३५
तारा ३६ कारा ३७ जरा ३८ धरा ३९
आजि ४० राजि ४१ रजनी ४२ अर्त्ति
४३
कीर्त्ति ४४ कन्या ४५ तटी ४६ नटी ४७
नारी ४८
सारी ४९ दरी ५० दासी ५१ घटिका
५२
खटिका ५३ जटा ५४ कक्षा ५५ रक्षा
५६
शिखा ५७ संख्या ५८ कालिन्दी ५९
कलिका ६०
कला ६१ काली ६२ कराली ६३ दुर्गा
६४ ॥ *
अथ निरोष्ठ्यक्लीवलिङ्गशब्दाः। चरण
१
करण २ चक्र ३ क्षत्त्र ४ नक्षत्र ५ तक्र ६
रजत ७ शत ८ शरीर ९ क्षीर १० नीर
११
अक्षि १२ तीर १३ धन १४ कनक १५
निधान १६ ध्यान १७ सन्धान १८ दान
१९
नलिन २० नगर २१ गात्र २२ छत्र २३
नेत्र २४
अस्थि २५ दात्र २६ आलिङ्गन २७
स्थान २८
शिरः २९ चरित्र ३० जल ३१ स्थल
३२
स्थाल ३३ कलत्र ३४ चित्र ३५ कीलाल
३६
जाल ३७ अलक ३८ नाल ३९ दैन्य
४० लिङ्ग ४१
अङ्ग ४२ लावण्य ४३ हिरण्य ४४ सैन्य
४५

**शब्दभेदी**, [न्] पुं, (शब्दमनुसृत्य भेत्तुं शीलमस्य ।
भिद् + णिनिः ।) अर्ज्जुनः । इति
त्रिकाण्डशेषः ॥
पायुः । इति केचित् ॥ वाणविशेषः ।
इति
रामायणम् ॥

**शब्दवेधी**, [न्] पुं, (शब्दमनुसृत्य वेद्धुं शील-
मस्य । विध + णिनिः ।) अर्ज्जुनः ।
इति धन-
ञ्जयः ॥ दशरथराजः । यथा, --
“लब्धशब्देन कौशल्ये कुमारेण
धनुष्मता ।
कुमारः शब्दवेधीति मया पापमिदं कृतम्
॥”
इति वाल्मीकीये रामायणे ६३ अध्यायः
॥
शब्दवेधी इत्येवं लब्धकीर्त्तिनिति यावत्
। इति
तट्टीका ॥

**शब्दाधिष्ठानं**, क्ली, (शब्दस्य अधिष्ठानं आश्रय-
स्थानम् ।) कर्णः । इति हेमचन्द्रः ॥

**शम**, उ भ य इर् शमे । इति कविकल्पद्रुमः ॥
(दिवा०-पर०-अक०-सेट् । क्त्रावेट् ।)
उ,
शमित्वा शान्त्वा । भ य, शाम्यति । इर्,
अश-
मत् अशमीत् । पुषादित्वान्नित्यं ङ
इत्यन्ये । शमः
शान्तीभावः । शशाम वृष्ट्यापि विना
दवाग्नि-
रिति रघुः । शम इति पदस्य
ञ्यन्तस्यापि
सम्भवे शान्तीकरणेऽप्ययमिति
धातुप्रदीपः ।
‘वरेण शमितुं लोकानलं दग्धुं हि तत्तपः
॥’

२६ जलाशय २७ अग २८ हर्य्यक्ष २९
तक्षक
३० नख ३१ क्षत ३२ दीक्षित ३३ अक्ष ३४
नाराच ३५ काच ३६ कच ३७ कीचक ३८
चञ्चरीक ३९ चाणक्य ४० चारण ४१ गण
४२
क्षण ४३ काण ४४ शोण ४५ संहार ४६
सारस ४७ रस ४८ अरि ४९ रसाल ५०
साल ५१ कङ्काल ५२ काल ५३ कलि ५४
शैल ५५ खल ५६ अनल ५७ अर्क ५८
किञ्जल्क
५९ कल्क ५० कर ६१ शङ्कर ६२ कीर ६३
हीर ६४ लङ्केश ६५ केश ६६ गर ६७ केशव
६८ देश ६९ लेश ७० आनन्द ७१ नन्दन
७२
धनञ्जय ७३ खञ्जरीट ७४ कीट ७५ अग्नि
७६
कण्टक ७७ कटाह ७८ कटाक्ष ७९ यक्ष ८०
दक्ष ८१ अङ्ग ८२ यज्ञ ८३ जनक ८४
अञ्जलि ८५
यन्त्र ८६ यत्न ८७ रत्नाकर ८८ अन्धक
८९
धराधर ९० धीर ९१ शीर ९२ नासीर ९३
नारायण ९४ कृष्ण ९५ हृषीकेश ९६ ॥ * ॥
अथ निरोष्ठ्यस्त्रीलिङ्गशब्दाः। गङ्गा १ गीता
२
सती ३ सीता ४ सिद्धि ५ सन्ध्या ६ मदा ७
गया ८ आशीः ९ काशी १० निशा ११
नासा १२ कान्ति १३ शान्ति १४ दया १५
रसा १६ आर्द्रा १७ निद्रा १८ हरिद्रा १९
दृक् २० द्राक्षा २१ लाक्षा २२ धृति २३
अञ्ज ४६ अजिन ४७ यान ४८ असृक्
४९
काञ्चन ५० आनन ५१ कानन ५२
हाटक ५३
नाटक ५४ नाट्य ५५ तैल ५६ चेल
५७ रसा-
तल ५८ अदन ५९ सदन ६० ज्ञान ६१
निदान
६२ दधि ६३ चन्दन ६४ अक्षर ६५
लक्षण ६६
लक्ष ६७ शस्त्र ६८ शास्त्र ६९ दल ७१
हल ७१ ॥ * ॥ अथ
निरोष्ठ्यक्रियापदानि।
आशास्ते १ अस्ति २ चकास्ति ३
निन्दति ४
सृजति ५ आशंसति ६ क्रीडति ७
ध्यायति ८
अर्च्चति ९ याचते १० द्यति ११ वहति
१२
आराधति १३ त्रस्यति १४ शेते १५
गच्छति १६
यच्छति १७ इच्छति १८ नयति १९
आयाति २०
हन्ति २१ ईहते २२ अश्नाति २३
स्नाति २४
दधाति २५ याति २६ जयति २७ हसति
२८
करोति २९ । इति कविकल्पलतायां १
स्तवके
२ कुसुमम् ॥

**शब्दकारः**, त्रि, (शब्दं करोतीति । कृ + अण् ।

"न शब्दश्लोककलहगाथेति ।" ३ । २ ।
२४ ।
इति टप्रतिषेधः ।) शब्दं करोति यः ।
यथा,
"सतामरुस्करं पक्षी वैरकारं नराशनम् ।
हन्तुं कलहकारोऽसौ शब्दकारः पपात
खम् ॥"
इति भट्टौ ५ सर्गः ॥

**शब्दग्रहः**, पुं, (शब्दं गृह्णात्यनेनेति । ग्रह +
इति कुमारसम्भवम् ॥
'वचो निशम्याधिपतिर्द्दिवौकसाम् ।'
इत्यादावनेकार्थत्वात् श्रुत्वेत्यर्थः ॥ वा
शम यम
इत्यत्र वाशब्दस्य
व्यवस्थावाचित्वादस्यञौ नित्यं
ह्रस्वः शममति । इति दुर्गादासः ॥

**शम**, ङ क ञ आलोचे । इति कविकल्पद्रुमः ॥

(चुरा०-आत्म०-उभ०-इति केचित्-
सक०-सेट् ।)
आलोचः प्रणिधानम् । वा शम यम
इत्यत्र
वाशब्दस्य व्यवस्थावाचित्वात् अस्य
स्वार्थे ञौ
ह्रस्वाभावः । ङ क, शामयते कार्य्यं
सधीः । ञ,
शामयति शामयते ।
'निशामय तदुत्पत्तिं विस्तराद्गदतो मम
॥'
अयमात्मनेपदीत्यन्ये । इति दुर्गादासः
॥

**शमः**, पुं, (शम्यत इति । शम + हलश्चेति घञ्

नोदात्तोपदेशेति वृद्ध्यभावः ।) शान्तिः
। इत्य-
मरः ॥ (यथा, राजतरङ्गिण्याम् । ४ ।
३८१ ।
"विरागशैलमथितात् तस्य
चित्तमहोदधेः ।
प्रकोपकालकूटस्य पश्चात्
शमसुधोदयात् ॥")
मोक्षः । इति त्रिकाण्डशेषः ॥ पाणिः ।
इति
शमशब्दटीकायां रामाश्रमः ॥ उपचारः
।
इति राजनिर्घण्टः ॥
अन्तरिन्द्रियनिग्रहः ।
इति वेदान्तसारः ॥ अन्तःकरणसंयमः
।
इति भगवद्गीतादशमाध्यायस्य ४
श्लोकटीका-

| | | |
|---|---|---|
| | "ग्रहवृदृनिश्चिगमश्च।" ३ । ३ । ५८ । इति<br>अप् ।) कर्णः । इत्यमरः ॥ शब्दस्य ज्ञानञ्च ॥<br>**शब्दनः**, त्रि, (शब्दं कर्त्तुं शीलमस्य । शब्द +<br>"चलनशब्दार्थादकर्म्मकाद्युच् ।" ३ । २ । १४९ ।<br>इति तच्छीले युच् ।) शब्दकर्त्ता । तत्पर्य्यायः ।<br>रवणः २ । इत्यमरः ॥ (शब्द + भावे ल्युट् ।)<br>शब्दमात्रे, क्ली ॥ | याम् श्रीधरस्वामी ॥ (यथा, गीतायाम् । १० । ४ ।<br>"बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ॥")<br>विक्षेपककर्म्मोपरमः । इति च तस्यैव ६ अध्या-<br>यस्य ३ श्लोकटीकायां श्रीधरस्वामी ॥ (वाह्ये-<br>न्द्रियनिग्रहः । यथा, भागवते । ३ । ३२ । ३३ ।<br>"सत्यं शौचं दया मौनंबुद्धिर्ह्रीः श्रीर्यशःक्षमा ।<br>शमो दमो भगश्चेति यत्सङ्गाद्याति संक्षयम् ॥" |

सर्व्वकर्म्मनिवृत्तिः । यथा, गीतायाम् । ६ । ३ ।
"योगारूढस्य तस्यैव शमः कारणमुच्यते ॥"
"शमः उपरमः सर्व्वकर्म्मभ्यो निवृत्तिः ।" इति शङ्करभाष्यम् ॥ शान्तरसस्य स्थायिभावः । यथा, साहित्यदर्पणे । ३ । २३८ ।
"शान्तः शमः स्थायिभाव उत्तमः प्रकृति-
र्म्मतः ॥"
निवृत्तिः । यथा, राजतरङ्गिण्याम् । २ । ५६ ।
"अभवन्निर्म्मलं व्योम देवीकृत्यैः सह क्रमात् ।
साकं भूपालशोकेन दुर्भिक्षञ्च शमं ययौ ॥")

**शमकः**, त्रि, (शामयतीति । शम + णिच् + ण्वुल् ।
"नोदात्तोपदेशेति ।" ७ । ३ । ३४ । इति न दीर्घः ।) शान्तिकारकः । ञ्यन्तशमधातो-
र्णकप्रत्ययेन निष्पन्नमेतत् ॥

**शमथः**, पुं, (शम + "दृशमिदमिभ्यश्च ।" इति
अथः । इत्युज्ज्वलदत्तः । ३ । ११४ ।) शान्तिः ।
इत्यमरः ॥ मन्त्री । इति मेदिनी ॥

**शमनं**, क्ली, (शम + ल्युट् ।) यज्ञार्थपशुहननम् ।
इत्यमरः ॥ शान्तिः । इति मेदिनी ॥ (यथा, पाणिनौ । ५ । १ । ३८ । "वातस्य शमनं कोपनं वा ।" इति काशिका ॥) चर्व्वणम् ।

**शमितः**, त्रि, (शम + क्तः ।) शान्तः । इत्यमरः ॥

**शमिरः**, पुं, शमीवृक्षः । इति शब्दरत्नावली ॥

**शमिरोहः**, पुं, शिवः । इति त्रिकाण्डशेषः ॥

**शमी**, स्त्री, वृक्षविशेषः । शाँइ इति भाषा ।
(यथा, शाकुन्तले । ३ ।
"अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव ॥")
तत्पर्य्यायः । शक्तुफला २ शिवा ३ । इत्यमरः ॥ शक्तुफली ४ । इति शब्दरत्नावली ॥ शान्ता ५ तुङ्गा ६ कचरिपुफला ७ केशमथनी ८ ईशानी ९ लक्ष्मीः १० तपनतनया ११ इष्टा १२ शुभ-करी १३ हविर्गन्धा १४ मेध्या १५ दुरितदमनी १६ शक्तुफलिका १७ समुद्रा १८ मङ्गल्या १९ सुरभिः २० पापशमनी २१ भद्रा २२ शङ्करी २३ केशहन्त्री २४ शिवाफला २५ सुपत्रा २६ सुखदा २७ । अस्य गुणाः । रूक्षत्वम् । कषा-यत्वम् । रक्तपित्तातिसारनाशित्वञ्च । तत्फल-गुणाः । गुरुत्वम् । स्वादुत्वम् । रूक्षत्वम् । उष्णत्वम् । केशनाशित्वञ्च । इति राज-निर्घण्टः ॥ अपि च ।
"शमी शक्तुफला तुङ्गा केशहन्त्री शिवाफला ।
मङ्गल्या च तथा लक्ष्मीः शमीरः स्वल्पिका स्मृता ॥
शमी तिक्ता कटुः शीता कषाया रेचनी लघुः ।
कम्पकासश्रमश्वासकुष्ठार्शःकृमिजित् स्मृता ॥"
इति भावप्रकाशः ॥ * ॥
शिम्बा । छिमडा इति भाषा । इत्यमरः ॥
वागुजिः । इति मेदिनी ॥ (कर्म्म । यथा, ऋग्-वेदे । ६ । २ । २ ।
"ईजे यज्ञेभिः शशमे शमीभिः ।"
"शमीभिः कर्म्मभिः कृच्छ्रचान्द्रायणादिभिः ॥"
इति तद्भाष्ये सायणः ॥)

**शमी**, [न्] त्रि, शान्तः । शमो विद्यतेऽस्य इत्यर्थे
इन्प्रत्ययेन निष्पन्नमिदम् ॥

**शमीकः**, पुं, मुनिविशेषः । यथा, --
"जलाशयमचक्षाणः प्रविवेश तमाश्रमम् ।
ददर्श मुनिमासीनं शान्तं मीलितलोचनम् ॥"
इति श्रीभागवते । १ । १८ ॥

अपि च ।
"शूकधान्यं शमीधान्यं समातीतं प्रशस्यते ।
परतो वातकृद्रूक्षं प्रायेणातिनवं गुरु ॥
यवगोधूममाषाश्च तिलाश्चातिनवा हिताः ।
पुराणा विरसा रूक्षा न तथार्थकरा मताः ॥"
इति राजवल्लभः ॥

**शमीपत्रा**, स्त्री, (शम्याः पत्राणीव पत्राणि
यस्याः ।) लज्जालुवृक्षः । इति जटाधरः ॥

**शमीरः**, पुं, (ह्रस्वा शमी । "कुटीशमीशुण्डाभ्यो
रः ।" ५ । ३ । ८८ । इति रः ।) अल्पा शमी ।
इत्यमरः ॥

**शम्पा**, स्त्री, विद्युत् । इत्यमरः ॥

**शम्पाकः**, पुं, आरग्वधः । इत्यमरः ॥ विपाकः ।
यावकः । इति हेमचन्द्रः ॥ (हस्तिनापुरवासी कश्चिद्ब्राह्मणः । यथा, महाभारते । १२ । १७६ । २३ ।
"इत्येतद्धास्तिनपुरे ब्राह्मणेनोपवर्णितम् ।
सम्पाकेन पुरा मह्यं तस्मात्त्यागः परो मतः ॥")

**शम्पातः**, पुं, आरग्वधः । इति शब्दरत्नावली ॥

**शम्ब**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) शम्बति । इति दुर्गादासः ॥

**शम्बः**, पुं, (शम् + "शमेर्व्वन् ।" उणा० ४ । ९४ ।
इति वन् । यद्वा, शमस्त्यस्येति । शं + "कंशंभ्यां

इति धरणिः ॥ हिंसा । इति हेमचन्द्रः ॥
(प्रतिसंहारः । यथा, मार्कण्डेये । ७८ । १३ ।
"निमेषकाष्ठादिमयः कालरूपः क्षयात्मकः ।
प्रसीद स्वेच्छया रूपं स्वतेजःशमनं कुरु ॥"
निवारकः । यथा, तत्रैव देवीमाहात्म्ये ।
"दुर्व्वृत्तवृत्तशमनं तव देवि ! शीलम् ॥")

**शमनः**, पुं, (शमयति पापिनां कर्म्म आलोचय-
तीति । कर्त्तरि ल्युः ।) यमः । इत्यमरः ॥ मृग-
भेदः । इति शब्दचन्द्रिका ॥ कलायः । इति राजनिर्घण्टः ॥

**शमनस्वसा**, [ऋ] स्त्री, (शमनस्य यमस्य
स्वसा ।) यमुना । इत्यमरः ॥

**शमनी**, स्त्री, (शमयति नृणां व्यापारान् । शम +
ल्युः । स्त्रियां ङीप् ।) रात्रिः । इति शमनी-
षदशब्ददर्शनात् ॥ (शाम्यते अनेन इत्यर्थे
करणे ल्युटि शान्तिकारके, त्रि । यथा, भाग-
वते । ३ । २४ । ३९ ।
"मात्रे चाध्यात्मिकीं विद्यां शमनीं सर्व्वकर्म्म-
णाम् ॥")

**शमनीषदः**, पुं, (शमन्यां सीदन्तीति । सद् +
अच् ।) निशाचरः । राक्षसः । इति त्रिकाण्ड-
शेषः ॥

**शमलं**, क्ली, (शम + "शाकशम्योर्न्नित् ।" उणा०

अस्यार्थः । अचक्षाणः अपश्यन् । तं प्रसिद्ध-
माश्रमं तस्मिन् मुनिं शमीकम् । इति श्रीधर-
स्वामी ॥

**शमीगर्भः**, पुं, (शम्या गर्भः ।) ब्राह्मणः । अग्निः ।
इति हेमचन्द्रः ॥

**शमीधान्यं**, क्ली, (शमी यज्ञादिकर्म्म तदर्थं धान्यम् ।)
माषादिः । इत्यमरः ॥ तत्पर्य्यायगुणाः ।
"शमीजाः शिम्बिजाः शिम्बातराः सूप्याश्च वैदलाः ।
वैदला मधुरा रूक्षाः कषायाः कटुपाकिनः ॥
वातलाः कफपित्तघ्ना बद्धमूत्रमला हिमाः ।
ऋते मुद्गमसूराभ्यामन्ये त्वाध्मानकारकाः ॥"
मुद्गमसूरयोराध्मानकारित्वमन्यद्वैदलापेक्षया ।
नतु सर्व्वथा । एतयोरपि किञ्चिदाध्मान-
कारित्वदर्शनात् । इति भावप्रकाशः ॥ * ॥

वभयुस्तितुतयसः ।" ५ । ६ । १३८ । इति वः ।)
वज्रम् । (यथा, ऋग्वेदे । १० । ४२ । ७ ।
"उग्रो यः शम्बः पुरुहूत तेन ।"
"शम्ब इति वज्रनाम ।" इति तद्भाष्ये सायणः ॥)
मुषलाग्रस्थलोहमण्डलकम् । इति मेदिनी ॥
लौहकाञ्ची । इति हेमचन्द्रः ॥ अनुलोमकर्ष-
णम् । इति शम्बाकृतशब्दटीकायां भरतः ॥
दरिद्रः । इति संक्षिप्तसारोणादिवृत्तिः ॥ भाग्य-
वति, त्रि । इति रामाश्रमः ॥

**शम्बरं**, क्ली, सलिलम् । व्रतम् । वित्तम् । इति
नानार्थरत्नमाला ॥ चित्रम् । बौद्धव्रतविशेषः ।
इति विश्वहेमचन्द्रौ ॥ (मेघः । यथा, ऋग्वेदे ।
२ । २४ । २ । "अदर्द्दर्मन्युना शम्बराणि ॥"
"शम्बराणि मेघनामैतत् मेघान् व्यदर्द्दः वर्ष-
णार्थं विदारितवान् ॥" इति तद्भाष्ये सायणः ॥)

**शम्बरः**, पुं, मृगविशेषः । दैत्यविशेषः । इति
मेदिनी ॥ (यथा, ऋग्वेदे । १ । ५१ । ६ ।
"अरन्धयो तिथिग्वाय शम्बरम् ।"
"शम्बरं एतन्नामानमसुरम् ।" इति तद्भाष्ये
सायणः ॥ यथा च महाभारते । १ । ६५ । २२ ।
"शम्बरो नसुचिश्चैव पुलोमा चेति विश्रुतः ।
असिलोमा च केशी च दुर्ज्जयश्चैव दानवः ॥")

१ ॥ १११ । इति कलः ।) विष्ठा । इत्यमरः ॥
पापम् । इति संक्षिप्तसारोणादिवृत्तिः ॥ (यथा,
भागवते । २ । ७ । ३ ।
“ऊचे ययात्मशमलं गुणसङ्गपङ्कम् ॥”)

**शमान्तकः**, पुं, (शमस्य शान्तेरन्तकः ।) काम-
देवः । इति त्रिकाण्डशेषः ॥

**शमिः**, स्त्री, शिम्बा । इति हेमचन्द्रः ॥

मत्स्यविशेषः । शैवविशेषः । जिनभेदः । इति
विश्वः ॥ युद्धम् । श्रेष्ठः । इति धरणिः ॥
चित्रकवृक्षः । लोध्रः । अर्ज्जुनवृक्षः । इति
राजनिर्घण्टः ॥ शम्बरासुरस्य वधोपाख्यानं
श्रीभागवते १० स्कन्धे ५५ अध्याये द्रष्टव्यम् ॥

**शम्बरकन्दः**, पुं, (शम्बरनामकः कन्दः ।) वाराही-
कन्दः । इति राजनिर्घण्टः ॥

**शम्बरचन्दनं**, क्ली, (शम्बरनामकं चन्दनम् ।)

चन्दनविशेषः । तत्पर्य्यायः । कैरातम् २ वहल-
गन्धम् ३ बल्यम् ४ गन्धकाष्ठम् ५ कैरातकम् ६
शैलगन्धम् ७ । अस्य गुणाः । शीतलत्वम् ।
तिक्तत्वम् । उष्णत्वम् । श्लेष्मानिलश्रमपित्त-
विस्फोटपामादिकुष्ठतृषातापविमोहनाशित्वञ्च ।
इति राजनिर्घण्टः ॥

**शम्बरसूदनः**, पुं, (शम्बरं सूदयतीति । सूद + ल्युः ।)

कामदेवः । इति हलायुधः ॥

**शम्बरारिः**, पुं, (शम्बरस्यारिः ।) कामदेवः ।

इत्यमरः ॥

**शम्बरी**, स्त्री, आखुपर्णी । इति मेदिनी ॥ माया ।

इति शब्दरत्नावली ॥

**शम्बलः**, पुं, क्ली, कूलम् । पाथेयम् । मत्सरः ।

इति मेदिनी ॥

**शम्बाकृतं**, त्रि, (शम्ब + "कृञो द्वितीयतृतीयशम्ब-

बीजात् कृषौ ।" ५ । ४ । ५८ । इति डाच् ।)
द्विवार-
कृष्टक्षेत्रम् । तत्पर्य्यायः । द्विगुणाकृतम् २
द्वितीया-
कृतम् ३ द्विहल्यम् ४ द्विसीत्यम् ५ । इत्यमरः ॥

**शम्बुः**, पुं, शम्बुकः । यथा, --

"शम्बूकः शम्बुको ज्ञेयः पूर्व्वः कान्तस्तु सर्व्वदा
।
ककारेण विना शेषो दृश्यते ग्रन्थविस्तरे ॥"
इति हड्डचन्द्रः । इत्यमरटीकायां भरतः ॥

**शम्बुकः**, पुं, (शम्बु + स्वार्थे कन् ।) सृम्बुकः । यथा,

"शम्बूकः शम्बुको ज्ञेयः पूर्ब्बः कान्तस्तु सर्व्वदा
।
ककारेण विना शेषो दृश्यते ग्रन्थविस्तरे ॥"
इति हड्डचन्द्रः । इत्यमरटीकायां भरतः ॥

**शम्बुक्कः**, पुं, शम्बूकः । इति शब्दरत्नावली ॥

**शम्बूकः**, पुं, स्त्री, (शम् + "उलूकादयश्चेति" उणा०

४ । ४१ । इति उकः वुगागमश्च निपात्यते ।)

पताकाध्वजचित्राद्यैर्यथेन्द्रस्यामरावती ॥
यत्रास्ते षष्टितीर्थानां सम्भवः
शम्भलेऽभवत् ।
मृत्यौ मोक्षः क्षितौ कल्केरकल्कस्य
क्षयाश्रयः ॥
वनोपवनसन्ताननानाकुसुमसङ्कुलैः ।
शोभितं शम्भलग्रामं मन्ये मोक्षोपमं भुवि ॥
महीमाश्वास्य भगवान् निजजन्मकृतोद्यमः
।
शम्भलग्रामविप्रर्षिमाविवेश परात्मकः ॥
सुमत्यां विष्णुयशसा गर्भमाधत्त वैष्णवम् ।
द्वादश्यां शुक्लपक्षस्य माधवे मासि माधवः
॥
जातो ददृशतुः पुत्त्रं पितरौ हृष्टमानसौ ।
धात्रीमाता महाषष्ठी नाडीच्छेत्री तदाम्बिका
॥
गङ्गोदकक्लेदमोक्षा सावित्री मार्ज्जनोद्यता
।
तस्य विष्णोरनन्तस्य मातृकादात्
पयःसुधाम् ॥
सुमतिस्तं सुतं लब्ध्वा विष्णुं जिष्णुं
जगत्प्रभुम् ।
पूर्णकामा विप्रमुख्यानाहूयादात् गवां शतम्
॥
तं बालकं नराकारं विष्णुं मत्वा मुनीश्वराः
।
कल्किं कल्कविनाशार्थमाविर्भूतं विदुर्बुधाः
।
नामाकुर्व्वंस्ततस्तस्य
कल्किरित्यभिविश्रुतम् ॥"
इति कल्किपुराणे १ अध्यायः ॥

**शम्भली**, स्त्री, (शम्भं कल्याणयुक्तं नायकादिकं

लाति गृह्णातीति । ला + कः । गौरादित्वात्
ङीष् ।) कुट्टनी । इत्यमरः ॥

**शम्भुः**, पुं, (शं मङ्गलं भवत्यस्मादिति । शम् +

"मितद्र्वादिभ्य उपसंख्यानम् ।" ३ । २ ।
१८० ।

**शम्भुनन्दनः**, पुं, (शम्भोर्नन्दनः ।) गणेशः ।
इति

शब्दरत्नावली ॥ कार्त्तिकेयश्च ॥

**शम्भुप्रिया**, स्त्री, (शम्भोः प्रिया ।) आमलकी
।

इति शब्दचन्द्रिका ॥ दुर्गा च ॥

**शम्भुवल्लभं**, क्ली, (शम्भोर्वल्लभम् ।)
श्वेतकमलम् ।

इति राजनिर्घण्टः ॥ शिवप्रिये, त्रि
॥

**शम्या**, स्त्री, (शम्यतेऽनयेति । शम + यत् ।
टाप् ।)

युगकीलकः । इत्यमरः ॥ (यथा,
ऋग्वेदे । ३ ।
३३ । १३ ।
"उद्व ऊर्म्मिः शम्याः हन्त्वापो
योक्त्राणि
मुञ्चत ॥")
दक्षिणहस्तगृहीततालविशेषः । इति
सङ्गीत-
शास्त्रम् ॥ (दण्डयष्टिः । इति
मेधातिथिः ॥
यथा, मनुः । ८ । २३७ ।
"शम्यापातास्त्रयो वापि त्रिगुणो
नगरस्य तु ॥")

**शम्याक्षेपः**, पुं, (शम्यायाः क्षेपो यत्र ।)
भ्रमित-

क्षिप्तयष्टिप्राप्तयावद्भूप्रदेशः । यथा, -
-
"भ्रामयित्वा बहुगुणं यष्टिः क्षिप्ता
समाप्नुयात् ।
भुवः प्रदेशं यावन्तं शम्याक्षेपः स
उच्यते ॥"
इति मार्कण्डेयपुराणे विविंशचरितं
नामा-
ध्यायः ॥ (यज्ञविशेषः । यथा,
महाभारते ।
३ । ९० । ५ ।

जलजन्तुविशेषः । शामूक इति भाषा । तत्-
पर्य्यायः । जलशुक्तिः २ । इत्यमरः ॥ शम्बुका ३
शम्बुकः ४ शम्बुक्कः ५ शाम्बुकः ६ शम्बुः ७
शाम्बुक्कः ८ । इति शब्दरत्नावली ॥ जल-
डिम्बः ९ दुश्चरः १० पङ्कमण्डूकः ११ । इति
हारावली ॥ पुं, गजकुम्भान्तर्भागः । घोङ्गः ।
शूद्रतापसः । (यथा, उत्तरचरिते । २ ।
"दत्ताभये त्वयि यमादपि दण्डधारे
सञ्जीवितः शिशुरयं मम चेयमृद्धिः ।
शम्बूक एष शिरसा चरणौ नतस्ते
सत्सङ्गजानि निधनान्यपि तारयन्ति ॥")
इति मेदिनी ॥ दैत्यविशेषः । शङ्कः । इति
हेमचन्द्रः क्षुद्रशङ्कः । इति राजनिर्घण्टः ॥

**शम्बूका**, स्त्री, (शम्बुक + टाप् ।) जलशुक्तिः ।
इति राजनिर्घण्टः ॥

**शम्भलः**, पुं, ग्रामविशेषः । अधुना सम्बल-मोरदा-
वाद इति नाम्ना ख्यातः । तत्र षष्टितीर्थानि
सन्ति कल्की चाविर्भूय सहस्रं समाः स्थास्यति ।
यथा, --
"शम्भले वसतस्तस्य सहस्रं परिवत्सराः ।
व्यतीता भ्रातृपुत्त्रस्वज्ञातिसम्बन्धिभिःसह ॥
शम्भले शुशुभे श्रेणीसभापणकचत्वरैः ।
इत्यस्य वार्त्तिकोक्त्या डुः ।) शिवः ।
इत्यमरः ॥
(यथा, भागवते । ४ । ७ । ५७ ।
"एतद्भगवतः शम्भोः कर्म्मदक्षाध्वरद्रुहः ।
श्रुतं भागवतात् शिष्यादुद्धवान्मे बृहस्पतेः ॥"
एकादशरुद्राणामन्यतमः । यथा,
विष्णुपुराणे ।
१ । ५ । १२३ -- १२४ ।
"हरश्च बहुरूपश्च त्र्यम्बकश्चापराजतः ।
वृषाकपिश्च शम्भुश्च कपर्द्दी रैवतस्तथा ॥
मृगव्याधश्च शर्व्वश्च कपाली च महामुने ।
एकादशैते प्रथिता रुद्रास्त्रिभुवनेश्वराः ॥)
ब्रह्मा । (यथा, महाभारते । १ । ६४ । ४५ ।
"तामुवाच महाराज भूमिं भूमिपतिः प्रभुः ।
प्रभवः सर्व्वभूतानामीशः शम्भुः प्रजापतिः ॥")
बुद्धः । इति मेदिनी ॥ विष्णुः । इति
हलायुधः ॥
(यथा, महाभारते । १२ । ४३ । ७ ।
"त्रिचक्षुः शम्भुरेकस्त्वं विभुर्दामोदरोऽपि च ॥")
सिद्धः । इति शब्दरत्नावली ॥ श्वेतार्कः । इति
चन्द्रिका ॥ (अग्निः । यथा, महाभारते । ३ ।
२२० । ५ ।
"शम्भुमग्निमथ प्राहुर्ब्राह्मणा वेदपारगाः ।
आवसथ्यं द्विजाः प्राहुर्दीप्तमग्निं महाप्रभम् ॥"
सुखस्य भावयितरि, त्रि । यथा, ऋग्वेदे । १ ।
४६ । १३ ।
"मनुष्वच्छम्भू आगतम् ॥"
"हे शम्भू सुखस्य भावयितारौ ।" इति
तद्भाष्ये
सायणः ॥)

**शम्भुतनयः**, पुं, (शम्भोस्तनयः ।) कार्त्तिकेयः ।
इति शब्दरत्नावली ॥ गणेशश्च ॥
"पुण्यञ्चाख्यायते दिव्यं
शिवमग्निशिरोऽनघ ।
सहदेवोऽयजत् यत्र शम्याक्षेपेण
भारत ! ॥"
"बलवता क्षिप्ता शम्या लगुडविशेषो
यावद्दूरं
पतेत् तावान् यज्ञमण्डपो यस्मिन्
यज्ञे न शम्या-
क्षेपस्तेन ।" इति तट्टीकायां
नीलकण्ठः ॥)

**शयः**, पुं, (शेते सर्व्वमस्मिन्निति प्रायो वस्तुनः करा-
धीनत्वात् । शी + पुंसीति घः ।)
हस्तः । इत्य-
मरः ॥ शय्या । सर्पः । इति मेदिनी
॥ निद्रा ।
पणः । इति विश्वः ॥

**शयण्डः**, त्रि, (शेते इति । शी + अण्डन् । इत्यु-
ज्ज्वलः । १ । १२८ ।) निद्राशीलः
। इत्युणा-
दिकोषः ॥ (पुं, विषयः । देशः ।
इत्युणादि-
टीका । १ । १२८ ॥)

**शयतः**, पुं, निद्रालुः । इति संक्षिप्तसारोणादि-
वृत्तिः ॥

**शयथः**, पुं, (शेते इति । शीङ् + "शीङ्शपिरुशमि-
जीविप्राणिभ्योऽथः ।" उणा० ३ ।
११३ । इति
अथः ।) अजगरः । मृत्युः ।
निद्रालुः । इति
हेमचन्द्रः ॥ वराहः । मत्स्यः । इति
संक्षिप्त-
सारोणादिवृत्तिः ॥ (मरणम् । यथा,
ऋग्वेदे ।
६ । १७ । ९ ।
"विश्वायुः शयथे जघान ॥"
"शयथे शयननिमित्ते मरणायेत्यर्थः ।" इति

| | | तद्भाष्ये सायणः ॥) |
| --- | --- | --- |
| | | **शयनं**, क्ली, (शी + ल्युट् ।) निद्रा । शय्या ।<br>इत्यमरः ॥ (यथा, महाभारते । १ । १४५ । १४ ।<br>"आसनानि च दिव्यानि यानानि शयनानि च ।<br>विधातव्यानि पाण्डूनां यथा तुष्येत वै पिता ॥")<br>मैथुनम् । इति मेदिनी ॥ अथ सर्व्वदेवशयन-<br>कालः । |

पुलस्त्य उवाच ।
“यदाषाढी समायाति व्रजते
चोत्तरायणम् ।
तदा स्वपिति देवेशो भोगिभोगे श्रियः
पतिः ॥
प्रतिसुप्ते विभौ तस्मिन्
देवगन्धर्व्वगुह्यकाः ।
देवानां मातरश्चापि
प्रसुप्ताश्चाप्यनुक्रमात्॥
नारद उवाच ।
कथयस्व सुरादीनां शयने विधिमुत्तमम्
।
सर्व्वञ्चानुक्रमेणैव पुरस्कृत्य जनार्द्दनम्
॥
पुलस्त्य उवाच ।
मिथुनाभिगते सूर्य्ये शुक्लपक्षे तपोधन ।
एकादश्यां जगत्स्वामिशयनं
परिकल्पयेत् ॥
शेषाहिभोगपर्य्यङ्कं कृत्वा संपूज्य
केशवम् ।
कृत्वोपवीतकञ्चैव सम्यक् संपूज्य च
द्विजान् ॥
अनुज्ञां ब्राह्मणेभ्यश्च द्वादश्यां प्रयतः
शुचिः ।
लब्ध्वा पीताम्बरधरं स्वस्तिनिद्रां
समानयेत् ॥
त्रयोदश्यां ततः कामः स्वपते शयने शुभे
।
कदम्बानां सुगन्धानां कुसुमैः
परिकल्पिते ॥
चतुर्दश्यां ततो यक्षाः स्वपन्ति
सुखशीतले ।
सुवर्णपङ्कजकृते सुखास्तीर्णोपधानके॥
पौर्णमास्यामुमानाथः स्वपते
चर्म्मसंस्तरे ।
वैयाघ्रे च जटाभारं
समुद्ग्रथ्यान्यचर्म्मणा ॥
ततो दिवाकरो राशिं संप्रयाति च
कर्कटम् ।
नक्तं भुञ्जीत देवर्षे तैलक्षारविवर्जितम् ॥
द्वितीयेऽह्नि द्विजाग्र्याय फलं
दद्याद्विचक्षणः ।
लक्ष्मीधर प्रीयतां मे इत्युच्चार्य्य
निवेदयेत् ॥
अनेन तु विधानेन चातुर्मास्यव्रतं चरेत् ।
यावद्वृश्चिकराशिस्थः प्रतिभाति
दिवाकरः ।
ततो विबुध्यन्ति सुराः क्रमशः क्रमशो
मुने ॥
नभस्ये मासि च तथा या स्यात्
कृष्णाष्टमी
शुभा ।
युक्ता मृगशिरेणैव सा तु कामाष्टमी स्मृता
॥
तस्यां सर्व्वेषु लिङ्गेषु तिथौ स्वपिति
शङ्करः ।
वसते सन्निधाने तु तत्र पूजाक्षया स्मृता
॥”
इति वामने १६ अध्यायः ॥ * ॥
अथ हरिशयनादिव्यवस्था।
भविष्यनारदी-
ययोः ।
“मैत्राद्यपादे स्वपितीह विष्णु-
र्व्वैष्णव्यमध्ये परिवर्त्तते च ।
पौष्णावसाने च सुरारिहन्ता
प्रबुध्यते मासचतुष्टयेन ॥”
मैत्रमनुराधा । वैष्णवं श्रवणा । पौष्णं
रेवती ।
भविष्ये ।
“निशि स्वापो दिवोत्थानं सन्ध्यायां
परिवर्त्तनम् ।
अन्यत्र पादयोगे तु द्वादश्यामेव कारयेत्
॥”
इत्थञ्च नक्षत्रयोगप्राप्तौ फलातिशयः ।
एत-
द्विधानं वामनपुराणे ।
“एकादश्यां जगत्स्वामिशयनं
परिकल्पयेत् ।
“एवमुक्तेन मन्त्रेण कृष्णं सुष्वापयेत्ततः ।
सुप्ते त्वयि जगन्नाथ जगत् सुप्तं भवेदिदम् ।
विबुद्धे त्वयि बुध्येत जगत् सर्व्वं चराचरम् ॥”
इति मन्त्रेण पूजयेत् ॥ * ॥
“प्राप्ते भाद्रपदे मासि एकादश्यां सितेऽहनि ।
कटदानं भवेद्विष्णोर्महापूजा प्रवर्त्तते ॥”
कटदानं पार्श्वपरिवर्त्तः । कामरूपीयनिबन्धे ।
“एवं संपूज्य विधिवत् भाद्रस्य द्वादशीदिने ।
मन्त्रेणानेन देवेशं पार्श्वेन परिवर्त्तयेत् ॥
वासुदेव जगन्नाथ प्राप्तेयं द्वादशी तव ।
पार्श्वेन परिवर्त्तस्व सुखं स्वपिहि माधव ॥
त्वयि सुप्ते जगन्नाथ जगत् सर्व्वं चराचरम् ॥”
ब्रह्मपुराणे ।
“एकादश्यान्तु शुक्लायां कार्त्तिके मासि
केशवम् ।
प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः ॥”
रात्रौ प्रसुप्तमित्यन्वयः । बोधनन्तु दिवैव ॥
“कृत्वा वै मम कर्म्माणि द्वादश्यां मत्परो नरः ।
ममैव बोधनार्थाय इमं मन्त्रमुदीरयेत् ॥
महेन्द्ररुद्रैरभिनूयमानो
भवानृषिर्व्वन्दितवन्दनीयः ।
प्राप्ता तवेयं किल कौमुदाख्या
जागृष्व जागृष्व च लोकनाथ ॥
मेघा गता निर्म्मलपूर्णचन्द्रः
शारद्यपुष्पाणि च लोकनाथ ।
अहं ददानीति च पुण्यहेतो-
र्जागृष्व जागृष्व च लोकनाथ ॥
एवं कर्म्माणि कुर्व्वीरन् द्वादश्यां ये यशस्विनि ।
मम भक्ता नरश्रेष्ठास्ते यान्ति परमां गतिम् ॥”
अत्र मन्त्रद्वयपाठानन्तरम्।
“उत्तिष्ठोत्तिष्ठ गोविन्द त्यज निद्रां जगत्पते ।
त्वया चोत्थीयमानेन उत्थितं भुवनत्रयम् ॥”
इति सम्प्रदायागतस्तृतीयःश्लोक इति वाच-
स्पतिमिश्राः ॥ शयनोत्थानमन्त्रास्तु
कल्पतरु-
प्रभृतिग्रन्थसंवादाल्लिखिताः । तदेवं द्वादश्यां
एकादश्यां वा रेवत्यन्तपादयोगवशाद्दिवोत्थानं
नक्षत्रयोगाभावे तु द्वादश्यामेव कारयेदिति
गुरुचरणाः । जीमूतवाहनस्तु भविष्ये ।

ततोऽमराणां रजनी भवते दक्षिणायनम्
॥
ब्रह्मा प्रतिपदि तथा नीलोत्पलदलेऽनघ
।
तल्पे स्वपिति देवानां दर्शयन्
मार्गमुत्तमम् ॥
विश्वकर्म्मा द्वितीयायां तृतीयायां गिरेः
सुता ।
विनायकश्चतुर्थ्यान्तु पञ्चम्यामपि
धर्म्मराट् ॥
षष्ठ्यां स्कन्दश्च स्वपिति सप्तम्यां
भगवान् रविः ।
कात्यायनी तथाष्टम्यां नवम्यां
कमलालया ॥
दशम्यां भुजगेन्द्राश्च स्वपन्ति
वायुभोजनाः ।
एकादश्यान्तु कृष्णायां साध्या ब्रह्मन्
स्वपन्ति
हि ॥
एष क्रमस्ते गदितो निशायां शयने मुने ।
स्वपत्सु तेषु देवेषु प्रावृट्कालः समाययौ
॥
कङ्काः समं वलाकाभिरारोहन्ति
नगोत्तमान् ।
वायसाश्चापि कुर्व्वन्ति नीडानि
मुनिपुङ्गव ।
वायस्यश्च स्वपन्त्येता ऋतौ
गर्भभरालसाः ॥
यस्यां तिथ्यां प्रस्वपिति विश्वकर्म्मा
प्रजापतिः ।
द्वितीया सा शुभा पुण्या सुपुण्या
शयनोदिता ॥
तस्यां तिथावर्च्च्य हरिं श्रीवत्साङ्कं
चतुर्भुजम् ।
पर्य्यङ्कस्थं समं लक्ष्म्या
गन्धपुष्पादिभिर्म्मुने ॥
ततो देवाय शय्यायां फलानि प्रक्षिपेत्
क्रमात् ।
सुरभीणि निवेद्येत्थं विज्ञाप्यो मधुसूदनः
॥
यथा हि लक्ष्म्या न वियुज्यसे त्वं
शेषाहिभोगपर्य्यङ्कं कृत्वा संपूज्य केशवम्
॥
अनुज्ञां ब्राह्मणेभ्यश्च द्वादश्यां प्रयतः
शुचिः ।
लब्धा पीताम्बरधरं देवं निद्रां समानयेत्
॥”
अनुज्ञां लब्ध्वा इत्यन्वयः ।
एकादशीसमये दिवा-
शयनीयकल्पनं रात्रौ द्वादशीक्षणे निद्रेति
।
विष्णुधर्म्मोत्तरे ।
“स्वास्तीर्णशयनं कृत्वा
प्रीणयेद्भोगशायिनम् ।
आषाडशुक्लद्वादश्यां विष्णुलोके
महीयते ॥”
स्वास्तीर्णशयनं शोभनास्तरणयुक्तं
खट्टादि ।
वराहपुराणे श्रीभगवानुवाच ।
“अन्यत्तु संप्रवक्ष्यामि कर्म्म
संसारमोचनम् ।
कदम्बकुटजश्चैव धवकोऽर्ज्जुनकस्तथा
॥
एभिरभ्यर्च्चनं कुर्य्याद्विधिदृष्टेन कर्म्मणा
।
ततः संस्थापनं कृत्वा मम मन्त्रविधिः
स्मृतः ।
नमो नारायणायोक्त्वा इमं मन्त्रमुदीरयेत्
॥
पश्यन्तु मेघानपि मेघश्यामं
ह्युपागतं सिच्यमानं महीमिमाम् ।
निद्रां भगवान् गृह्णातु लोकनाथ
वर्षास्विमं पश्यतु मेघवृन्दम् ॥
ज्ञात्वैव पश्यैव च लोकनाथ मासा-
श्चत्वारि वैकुण्ठस्य च पश्य नाथ ।
आषाढशुक्लद्वादश्यां सर्व्वशान्तिकरम्
शिवम् ॥
य एतेन विधानेन भूमि ! मे कर्म्म कारयेत्
।
स पुमान् न प्रणश्येत्तु संसारेषु युगे युगे ॥
शयने कुटजविधानात्
विष्णुधर्म्मोत्तरीयनिषे-
“आ-भा-का-सितपक्षेषु मैत्रश्रवणरेवती ।
आदिमध्यावसानेषु प्रस्वापावर्त्तबोधनम् ॥”
आ-भा-का-सितपक्षेषु आषाढभाद्रकार्त्तिक-
शुक्लपक्षेषु । एषाञ्च द्वादश्यां प्राप्तौ मुख्य-
कल्पः । भविष्यपुराणम् ।
“निशि स्वापो दिवोत्थानं सन्ध्यायां
परिवर्त्तनम् ।
अन्यत्र पादयोगे तु द्वादश्यामेव कारयेत् ॥”
विष्णुधर्म्मोत्तरे ।
“विष्णुर्दिवा न स्वपिति न रात्रौ प्रतिबुध्यते ।
द्वादश्यामृक्षसंयोगे पादयोगो न कारणम् ॥
अप्राप्ते द्वादशीमृक्षे उत्थानशयने हरेः ।
पादयोगेन कर्त्तव्येनाहोरात्रं विचिन्तयेत् ॥”
वचनान्तरम् ।
“रेवत्यन्तो यदा रात्रौ द्वादश्या च समन्वित
तदा विबुध्यते विष्णुर्दिनान्ते प्राप्य रेवतीम् ॥

| त्रिविक्रमानन्त जगन्निवास ।<br>तथास्त्वशून्यं शयनं सदैव<br>त्वस्माकमेवेह तव प्रसादात् ॥<br>तदा त्वशून्यं तव देव तल्पं<br>स्वयं हि लक्ष्म्या शयने सुरेश ।<br>सत्येन तेनामितवीर्य्य विष्णो<br>गार्हस्थ्यरागो मम चास्तु देव ॥<br>इत्युच्चार्य्य प्रणम्येशं प्रसाद्य च पुनः<br>पुनः । | धोऽन्यत्र । धवकः कपित्थः । संस्थापनं<br>समा-<br>पनम् । भूमि इति पृथिव्याः सम्बोधनम् । | |
|---|---|---|

दिनान्ते त्रिधा विभक्तदिनतृतीयभागे
दिवोत्थान-
मित्यनुरोधात् । अतएव ।
“रात्रौ विबोधो विनिहन्ति पौरान्
स्वापो दिवा राष्ट्रकुलं नृभर्त्तुः ।
सन्ध्याद्वये स्वल्पफला धरित्री
भवेन्नराणामपि रोगदुःखम् ॥”
इति श्रुतिः ॥ वराहपुराणे ।
“द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे ।
आ-भा-का-सितपक्षेषु शयनावर्त्तनादिकम् ॥”
तदेवं शयनादौ कालचतुष्टयम् । द्वादश्यां
निशादौ नक्षत्रयोगः । तदभावेऽपि निशाद्य-
नादरेण तिथ्यन्तरे पादयोगः । तस्याप्यभावे-
ऽपि सन्ध्यायां नक्षत्रमात्रयोगः । तस्याप्यभावे
द्वादश्यां सन्ध्यायामिति । विष्णुधर्म्मोत्तरे ।
“किं तन्मैत्राद्यपादेन दशम्यंशेन यो दिवा ।
पौष्णशेषेण किं तेन प्रतिपद्यध यो निशि ॥”
इति दशमीप्रतिपदोर्न्निषेधात्
एकादश्यादिपौर्ण-
मास्यन्तानां तिथीनामभ्यनुज्ञानम् ॥ * ॥
पद्मपुराणे सर्व्वदेवशयनादिकमुक्तं यथा, --
“प्रतिपद्धनदस्योक्ता पवित्रारोहणे तिथिः ।
श्रिया देव्या द्बितीया तु तिथीनामुत्तमा स्मृता
॥
तृतीया तु भवान्याश्च चतुर्थी तत्सुतस्य च ।
पञ्चमी सोमराजस्य षष्ठी प्रोक्ता गुहस्य च ॥
सप्तमी भास्करस्योक्ता दुर्गायाश्चाष्टमी स्मृता
।
मातृणां नवमी प्रोक्ता दशमी वासुकेस्तथा ॥
एकादशी ऋषीणान्तु द्बादशी चक्रपाणिनः ।”
चक्रपाणिन इति पणव्यवहार इत्यस्मात् ।
“त्रयोदशी त्वनङ्गस्य शिवस्योक्ता चतुर्द्दशी ।
मम चैव मुनिश्रेष्ठ पौर्णमासी तिथिः स्मृता ॥
यस्य यस्य तु देवस्य यन्नक्षत्रं तिथिश्च या ।
तस्य देवस्य तस्मिंश्च शयनावर्त्तनादिकम् ॥”
अत्र हरिशयनाद्याषाढादिविधानात्तत्साह-
चर्य्यादन्येषामपि तथा । ज्योतिषेऽपि ।
“व्रजति यदा मिथुनं विहाय
कर्कं राजविवर्ज्जितां तिथिं सूर्य्यः ।
ब्रह्मपुराणे यद्यप्येकादश्यां प्रबोधसमयः ।
तेन
वराहपुराणे द्वादश्यां प्रबोधाभिधानम् ।
यम-
स्मृतौ कार्त्तिक्यां प्रबोधाभिधानम्
सर्व्वसमञ्जस-
मिति । एवमेव श्रीदत्तोपाध्यायाः ।
कल्पतरुस्तु
एकादश्यामेव शयनं प्रबोधश्च ।
यमस्मृतावा-
षाढी कार्त्तिकस्येयमिति वुत्पत्त्या न
तत्प्रत्य-
यानुपपत्तिः । अपवादविषयके
क्वचिदुत्सर्ग-
प्रवृत्तेरित्याह । श्रीभगवद्वाक्यम् ।
“मच्छयने मदुत्थाने मत्पार्श्वपरिवर्त्तने ।
फलमूलजलाहारी हृदि शल्यं ममार्पयेत्
॥”
फलाहारपदमनशनपरम् । तेन सर्व्वथा
अन-
शनपरत्वम् । इत्येकादशीतत्त्वम् ॥ * ॥
मर्त्यानां शयनविधिनिषेधौ यथा, --
सूत उवाच ।
“उपास्य पश्चिमां सन्ध्यां
हुत्वाग्नींस्तानुपास्य च ।
भृत्यैः परिवृतो भुक्त्वा नातितृप्तोऽथ
संविशेत् ॥
शुचिं देशं विविक्तन्तु गोमयेन तु लेपयेत् ।
प्रागुदक्प्रवणे चैव संस्वपेत सदा बुधः ॥
प्राक्शिराश्च स्वपेन्नित्यं तथा वै
दक्षिणाशिराः ।
स्वपेदुदक्शिरा नैव तथा प्रत्यक्शिरा न
च ।
न चान्तर्द्धानहीने तु न तिर्य्यक् च
कदाचन ॥
शून्यालये श्मशाने तु एकवृक्षे चतुष्पथे ।
महादेवगृहे चापि मातृवेश्मनि न स्वपेत् ॥
न यक्षनागायतने स्कन्दस्यायतने तथा ।
प्रत्यक्शिराः प्रवासे तु न
कदाचिदुदक्शिराः ॥”
मार्कण्डेयपुराणे ।
“प्राक्शिराः शयने विद्यात् धनमायुश्च
दक्षिणे ।
पश्चिमे प्रबलां चिन्तां हानिं मृत्युं
तथोत्तरे ॥”
तथा ।
“नमस्कृत्याव्ययं विष्णुं समाधिस्थः
स्वपेन्निशि ।”
मार्कण्डेयः ।
“शून्यागारे श्मशाने च एकवृक्षे चतुष्पथे
।
महादेवगृहे चापि शर्करालोष्ट्रपांशुषु ॥
धान्यगोविप्रदेवानां गुरूणाञ्च तथोपरि ।
न चापि भग्नशयने नाशुचौ नाशुचिः
स्वयम् ॥
नार्द्रवासा न नग्नश्च नोत्तरापरमस्तकः ।
नाकाशे सर्व्वशून्ये च न च चैत्यद्रुमे तथा
॥”
न स्वपेदित्यर्थः । इत्याह्निकाचारतत्त्वम्
॥ * ॥
अन्यच्च ।
“भुक्त्वा च विधिवन्मन्त्रैर्द्विजो
भुक्तावशिष्टकम् ।
ससुहृद्बान्धवजनः स्वपेत् शुष्कपदो
निशि ॥
नोत्तराभिमुखः स्वप्यात्
पश्चिमाभिमुखो न
च ।
न चाकाशे न नग्नो वा नाशुचिर्नासने
क्वचित् ॥
न शीर्णायान्तु खट्वायां शून्यागारे न चैव
हि ।
नापि वंश्ये च पालाशे शयने वा कदाचन
॥”
इति कौर्म्मे उपविभागे १८ अध्यायः ॥
* ॥
अपि च ।

भवति तदा नियतं द्विराषाढः
सुरशयनादिविधिर्द्वितीयेमासि ॥”
राज्ञा चन्द्रेण विवर्ज्जितां अमावास्याम् ।
पूर्व्व-
कृष्णपक्षे मिथुने संक्रान्ते इति शेषः । हरि-
नाथोपाध्यायास्तु । यमः ।
“क्षीराब्धौ शेषपर्य्यङ्के आषाढ्यां संविशेद्धरिः
।
निद्रां त्यजति कार्त्तिक्यां तयोस्तं पूजयेत्
सदा ॥
ब्रह्महत्यासमं पापं क्षिप्रमेव व्यपोहति ।
हिंस्रात्मकैश्च किं तस्य यज्ञैः कार्य्यं
महात्मनः ।
प्रस्वापे च प्रबोधे च पूजितो येन केशवः ॥”
आषाढशुक्लैकादशीमारभ्य पौर्णमासीपर्य्यन्तं
विष्णोर्निद्राग्रहणरूपशयनसमयः । अतएव
एकादश्यां शयनमभिधाय तदादिदिनपञ्चके
कर्म्मकथनं ब्रह्मपुराणे । वराहपुराणीये तु ।
एकादशीकालीनमन्त्रे निद्राग्रहणाभिधानम् ।
यमस्मृतौ पौर्णमास्यां शयनाभिधानम् ।
आषाढीपदस्यानुपाधेस्तत्रैव प्रवृत्तेः । एवञ्च

गर्भेषु च विना दीक्षां न स्वपेच्च कथञ्चन
॥
धान्यगेहे च विप्राणां गुरूणाञ्च तथोपरि ।
नाशुचौ पर्णकीर्णे तु नाशुचिर्नाशिखस्तथा
॥
दिने सन्धौ न नग्नश्च नोत्तरापरमस्तकः
।
आकाशे पर्व्वते शून्ये न च चैत्यद्रुमे तथा
॥
न तु द्वारेऽम्भसाकीर्णे
नार्द्रपादस्त्वधावितः ।
पालाशे शयने नैव बहुदारकृते न च ॥
न दग्धे विद्युता चैव वह्निप्लुष्टे जले तथा ।
न स्वपेत् सन्ध्ययोर्नित्यं न शिरस्यासने
कटे ॥
एवं खपन् नरो नित्यं सुखस्येह परत्रभाक्
।
व्यत्यये च भवेद्दुःखी मृतो नरकमश्नुते
॥”
इति वह्निपुराणे आह्निकतपोनामाध्यायः
॥ * ॥
अपि च । सति सूर्य्ये शय्या च न
पातनीया
सूर्य्योदयात् पूर्व्वमुत्तोलनीया । तथा च
स्मृतिः ।
“भास्करादृष्टशय्यानि
नित्याग्निसलिलानि च ।
सूर्य्यावलोककिदीपानि लक्ष्म्या वेश्मानि
भाज-
नम् ॥
आसनं वसनं शय्या जायापत्यं
कमण्डलुः ।
आत्मनः शुचिरेतानि न परेषां कदाचन
॥”
न कदाचन इत्यनुमतिं विना
अन्यथातिथ्यानु-
पपत्तेः । व्यासः ।
“शुचौ देशे विविक्ते तु गोमयेनोपलिप्तके ।
प्रागुदक्प्लवने चैव संविशेत्तु सदा बुधः ॥
माङ्गल्यं पूर्णकुम्भञ्च शिरःस्थाने
निधापयेत् ।

“कृतपादादिशौचश्च भुक्त्वा सायं ततो
गृही ।
गच्छेत् शय्यां समन्त्राञ्च अथवा
दारुनिर्म्मिताम् ॥
शाल्मलस्य कदम्बस्य नीपमन्दारकस्य
च ।
किंशुकस्य वटस्याथ तथा कुशमयस्य
च ॥
आरोहणात भवेत् पापं तस्मात्तेषु न च
स्वपेत् ।
प्ररोहशय्यां सूत्रे वा अपर्णे परमेश्वरि ! ॥
न शुक्रे नापवित्रे च न तृणे न च भूतले ।
तूलिकायां तथा वस्त्रे शय्याभावे
स्वपेद्गृही ।
स्वपेन्न पट्टवस्त्रे च कलङ्की कम्बलेषु च
॥”
इति मत्स्यसूक्ते ४४ पटलः ॥ * ॥
अपि च ।
“सूर्य्येणाभ्युदितो यस्तु त्यक्तः सूर्य्येण
यः स्वपन् ।
अन्यत्रातुरभावाच्च प्रायश्चित्तीयते नरः
॥”
इति विष्णुपुराणे ३ अंशे ११ अध्यायः
॥
यस्मिन् सुप्ते सूर्य्य उदेति स
सूर्य्येणाभ्युदितः ।
यस्मिन् सुप्ते अस्तं याति स सूर्य्येण
त्यक्तः ॥
सूर्य्योदयास्तसमययोः स्वपन्
प्रायश्चित्तीयते
पातकी भवेदित्यर्थः । इति तस्य टीका
च ॥
किञ्च ।
“श्वासानष्टौ समुत्तानस्तान् द्वि १६
पार्श्वे च
दक्षिणे ।
ततस्तद्द्विगुणान् ३२ वामे पश्चात्
स्वप्यात्
यथासुखम् ॥
वामदिशायामनलो नाभेरूद्‌र्ध्वोऽस्ति
जन्तू-

| | | |
|---|---|---|
| | वैदिकैर्गारुडैर्म्मन्त्रै रक्षां कृत्वा स्वपेत्ततः ॥”<br>गर्गः ।<br>“स्वगृहे प्राक्शिराः शेते आयुष्ये दक्षिणा-शिराः । | नाम ।<br>तस्मात्तु वामपार्श्वे शयीत भुक्तप्रपाकार्थम् ॥”<br>इति भावप्रकाशः ॥ |

**शयनीयं**, क्ली, (शेतेऽस्यामिति । शी + अधिकरणे

अनीयर् ।) शय्या । इत्यमरः ॥
(यथा,
माघे । ११ । ५ ।
"रतिपरिचियनश्यन्नैद्रतन्द्रः
कथञ्चित्
गमयति शयनीये शर्व्वरीं किं करोतु
॥" * ॥)
शयनयोग्ये, त्रि ॥ (यथा, रामायणे ।
२ ।
७२ । ११ ।
"शून्योऽयं शयनीयस्ते पर्य्यङ्को
हेमभूषितः ।
न चायमिक्ष्वाकुजनः प्रहृष्टः
प्रतिभाति मे ॥")

**शयनीयकं**, क्ली, (शयनीयमेव । स्वार्थे कन् ।)

शय्या । इति शब्दरत्नावली ॥
(यथा, कथा-
सरित्सागरे । ३३ । १७७ ।
"गत्वा कलिङ्गसेनायाः सुप्तायाः
शयनीयके ।
सुप्तं मदनवेगं तं स्वरूपे स्थितमैक्षत
॥")

**शयनैकादशी**, स्त्री, (शयनाय शयनस्य वा एका-

दशी ।) श्रीहरेः
शयनसम्बन्धितिथिः । सा
चाषाढशुक्लैकादशी । तद्विवरणं
शयनशब्दे
हरिशयनशब्दे च द्रष्टव्यम् ॥

**शयानकः**, पुं, (शी + शानच् । ततः कन् । यद्वा,

"आनकः शीङ्भियः ।" इति
आनक् ।) सर्पः ।
इत्युणादिकोषः ॥ कृकलासः ।
इति हेमचन्द्रः ॥

**शयुनः**, पुं, अजगरः । इत्युणादिकोषः ॥

**शय्या**, स्त्री, (शी शयने + "संज्ञायां समजेति ।"

३ । ३ । ९९ । इति क्यप् ।) गुम्फनम् । इति
मेदिनी ॥ शीयते यत्र सा । तत्पर्य्यायः । शय-
नीयम् २ शयनम् ३ । इत्यमरः ॥ तल्पम् ४ ।
इति जटाधरः ॥ शयनीयकम् ५ । इति शब्द-
रत्नावली ॥ तस्या गुणाः ।
"सुखशय्यासनं सेव्यं निद्रापुष्टिधृतिप्रदम् ।
श्रमानिलहरं शस्तं विपरीतमतोऽन्यथा ॥
भूशय्यानिलपित्तघ्नी वृंहणी शुक्रवर्द्धिनी ।
खट्वा तु वातला प्रोक्ता पट्टो रूक्षोऽतिवा-
तलः ॥"
इति राजवल्लभः ॥ * ॥
अपि च ।
"त्रिदोषशमनी खट्वा तूली वातकफापहा ।
भूशय्या वृंहणी वृष्या काष्ठपट्टी तु वातला ॥"
अन्यत् पुनराह ।
"भूशय्या वातलातीव रूक्षा पित्तास्रनाशिनी ।
सुशय्याशयनं हृद्यं पुष्टिनिद्राधृतिप्रदम् ।
श्रमानिलहरं वृष्यं विपरीतमतोऽन्यथा ॥"
इति भावप्रकाशः ॥ * ॥
तद्गमनविधानं यथा, --
"कृतपादावशौचश्च भुक्त्वा सायं ततो गृही ।
गच्छेत् शय्यामस्फुटितामेव दारुमयीं नृप ॥
नाविशालां न वै भग्नां नासमां मलिनां न च ।
न च जन्तुमयीं शय्यामधिगच्छेद्नास्तृताम् ॥"
इति विष्णुपुराणे ३ अंशे ११ अध्यायः ॥ * ॥
तद्दानफलं यथा । याज्ञवल्क्यः ।
"गृहधान्याभयोपानच्छत्रमाल्यानुलेपनम् ।
यानं वृक्षं प्रियं शय्यां दत्त्वात्यन्तं सुखी भवेत्
॥"
प्रियं यद्यस्य हर्म्म्यादि । प्रतिग्रहसमर्थेन
शय्या न प्रत्याख्येया । यथा याज्ञवल्क्यः ।
"कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि
क्षितिः ।
मांसशय्यासनं धानाः प्रत्याख्येयं न वारि च
॥"
मृतोद्देश्यकदत्तशय्याग्रहणेदोषो यथा । ब्रह्म-
पुराणम् ।

**शरः**, पुं, (शृणात्यनेनेति । शॄ गि हिंसे + "ऋदो

रप् ।" ३ । ३ । ५७ । इति अप् ।) बाणः ।
इत्यमरः ॥ (यथा, रघुः । १ । ६१ ।
"तव मन्त्रकृतो मन्त्रैर्दूरात् प्रशमितारिभिः ।
प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः
॥")
दध्यग्रभागः । इति मेदिनी ॥ दुग्धशरस्य
नामान्तरम् । सन्तालिकः । दधिशरस्य
नामा-
न्तरम् । दधिसारः । दधिस्नेहः । कट्टरञ्च ।
इति रत्नमालादयः ॥ तृणविशेषः । काँडा
इति
हिन्दी भाषा । (यथा, महाभारते । १ ।
१३८ । १५ ।
"आचार्य्यः कलसाज्जातो द्रोणः शस्त्रभृतां-
वरः ।
गौतमस्यान्ववाये च शरस्तम्बाच्च गौतमः
॥")
तत्पर्य्यायः । इषुः २ काण्डः ३ बाणः ४
मुञ्जः ५
तेजनः ६ गुन्द्रकः ७ । इति रत्नमाला ॥ उत्-
कटः ८ शायकः ९ क्षुरः १० इक्षुप्रः ११
क्षुरिकापत्रः १२ विशिखः १३ । अस्य गुणाः
।
मधुरत्वम् । सतिक्तत्वम् । कोष्णत्वम् । कफ-
श्रान्तिमदापहत्वम् । बलवीर्य्यकारित्वम् ।
नित्यं
निषेवितञ्चेत् किञ्चिद्वातकारित्वञ्च । इति
राज-
निर्घण्टः ॥ अपि च ।
"भद्रमुञ्जः शरो बाणस्तेजनश्चक्षुवेष्टनः ।
मुञ्जो मुञ्जातको वाणः स्थूलदर्भः सुमेधसः ॥
मुञ्जद्वयन्तु मधुरं तुवरं शिशिरं तथा ।
दाहतृष्णाविसर्पास्रमूत्रवस्त्यक्षिरोगजित् ।
दोषत्रयहरं वृष्यं मेखलासूपयुज्यते ॥"
इति भावप्रकाशः ॥
उशीरः । महापिण्डीतरुः । इति च राज-
निर्घण्टः ॥ हिंसा । इति शृधात्वर्थदर्शनात् ॥

**शयालुः**, त्रि, (शयनशीलः । शी + "शोङो ग्रहणं

कर्त्तव्यम् ।" ३ । २ । १५८ ।
इत्यस्य वार्त्तिकोक्त्या
आलुच् ।) निद्रालुः । इत्यमरः ॥
(यथा,
माघे । २ । ८० ।
"उपायमास्थितस्यापि
नश्यन्त्यर्थाः प्रमाद्यतः ।
हन्ति नोपशयस्थोऽपि
शयालुर्मृगयुर्मृगान् ॥")

**शयालुः**, पुं, (शी + आलुच् ।) अजगरः । कुकरः ।

इति हारावली ॥

**शयितः**, त्रि, (शी + क्तः ।) निद्रालुः । इत्यमरः ॥

(कृतशयनः । यथा,
कथासरित्सागरे । ५६ । १८७ ।
"तयोः स्नपितयोः स्वामि भुञ्जे
भोजितयो-
स्तयोः ।
शये शयितयोस्तेन ज्ञानमीदृग्विधं
मम ॥")
वसन्तकुसुमे, पुं । यथा, --
"वसन्तकुसुमः शेलुः शयितो
द्विजकुत्सितः ॥"
इति शब्दमाला ॥
शयने, क्ली ॥

**शयितवान्**, त्रि, निद्रालुः । शीङ्धातोः क्तवतुप्रत्य-

येन निष्पन्नमेतत् ॥

**शयुः**, पुं, (शेते इति । शी + उः ।) अजगरः ।

इत्यमरः ॥ (ऋषिविशेषः । यथा,
ऋग्वेदे । १ ।
२१२ । १६ ॥
"याभिर्नरा शयवे याभिरत्रये ॥"
"हे नरा नेतारावश्विनौ पुरा
पूर्व्वस्मिन् काले
शयवे एतत् संज्ञकाय ऋषये ।"
इति तद्-

"शय्यालङ्कारवस्त्रादि प्रतिगृह्य मृतस्य च ।
नरकान्न निवर्त्तन्ते धेनुं तिलमयीं तथा ॥" * ॥
सा च औत्तानाङ्गिरोदेवताका । यथा, --
"छत्रं कृष्णाजिनं शय्यां रथमासनमेव च ।
उपानहौ तथा यानं तथा यत् प्राणवर्ज्जितम् ।
औत्तानाङ्गिरसन्त्वेतत् प्रतिगृह्णीत मानवः ॥"
इति शुद्धितत्त्वम् ॥ * ॥
पुष्पाभिषेके शय्यापट्टकं यथा, --
"सर्व्वरत्नमलङ्कारं पट्टं कार्य्यं द्विहस्तकम् ।
हस्तविस्तार उच्छ्राये दशाङ्गुल्यः सुशोभनम्
॥
स्नानाख्यं सार्द्धहस्तन्तु पट्टं वृत्तासनान्वितम्
।
शय्याख्यं द्विगुणा दैर्घ्याद्धनुर्मानं सपीठकम् ॥"
इति देवीपुराणे त्रैलोक्याभ्युदयपादे पुष्पाभि-
षेकनामाध्यायः ॥

**शरं**, क्ली, (शॄ + अप् ।) जलम् । इति मेदिनी ॥

(ज्योतिषोक्तपञ्चमाङ्कः । यथा, साहित्यदर्पणे
।
४ । २६४ ।
"वेदखाग्निशराः शुद्धैरिषुवाणाग्निसायकाः ॥")

**शरजं**, क्ली, (शरात् जायते यत् तत् । जन् + डः ।)

हैयङ्गवीनम् । इति हेमचन्द्रः ॥ नवनीतम् ।
इति केचित् ॥

**शरजन्मा**, [न्] पुं, (शरे शरवणे जन्म यस्य ।)

कार्त्तिकेयः । इत्यमरः ॥ (यथा, रघुः । ३ ।
२३ ।
"उमावृषाङ्कौ शरजन्मना यथा
यथा जयन्तेन शचीपुरन्दरौ ।
तथा नृपः साच सुतेन मागधी
ननन्दतुस्तत्सदृशेन तत्समौ ॥")

**शरटः**, पुं, (शॄ + शकादित्वात् अटन् ।) कुसुम्भ-

शाकः । इति रत्नमाला ॥ कृकलासः । इत्य-
मरटीका ॥ (यथा, --
"भट्टस्य कट्यां शरटः प्रविष्टः ॥"
इति हास्यार्णवे ॥)

**शरणं**, क्ली, (शृणाति दुःखमनेनेति । शॄ + ल्युट् ।)

गृहम् । (यथा, महाभारते । १ । १०६ । ४ ।
"ततोऽम्बिकायां प्रथमं नियुक्तः सत्यवागृषिः
।
दीप्यमानेषु दीपेषु शरणं प्रविवेश ह ॥")
रक्षिता । इत्यमरः ॥ (यथा, वैवाग्यशतके ।
९१ ।

| भाष्यम् ॥ शयाने, त्रि । यथा, ऋग्वेदे । ४ । १८ । १२ । “कस्ते मातरं विधवामचक्रत् शयुं कस्त्वामजिघांसच्चरन्तम् ॥” “कस्त्वत्तोऽन्यः शयुं शयानं चरन्तं जाग्रतं वा त्वां अजिघांसत् ।” इति तद्भाष्यम् ॥) | | |
|---|---|---|

"त्यज संसारमसारं भज शरणं
पार्व्वतीरमणम् ।
विश्वसिहि श्रुतिशिखरं विश्वमिदं तव
निदेश-
कम् ॥")
रक्षणम् । वधः । इति मेदिनी ॥ घातकः ।
इति शब्दरत्नावली ॥

**शरणा**, स्त्री, प्रसारणी । इति शब्दरत्नावली ॥

**शरणागतः**, त्रि, (शरणमागतः प्राप्तः ।) शरणा-
पन्नः । तत्पर्य्यायः । शरणार्पकः २
अभिपन्नः ३
शरणार्थी ४ । इति त्रिकाण्डशेषः ॥
तद्रक्षणा-
रक्षणयोः गुणदोषौ यथा, --
"शस्त्रहीनञ्च भीतञ्च दीनञ्च शरणागतम् ।
यो न रक्षत्यधर्म्मिष्ठः कुम्भीपाके वसेद्युगम्
॥
राजसूयशतानाञ्च रक्षिता लभते फलम् ।
परमैश्वर्य्ययुक्तश्च धर्म्मेण स भवेदिह ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५५ अध्यायः
॥ * ॥
अपि च ।
"शरणागतरक्षां यः प्राणैरपि धनैरपि ।
कुरुते मानवो ज्ञानी तस्य पुण्यं निशामय
॥
सर्व्वपापविनिर्मुक्तो ब्रह्महत्यामुखैरपि ।
आयुषोऽन्ते व्रजेन्मोक्षं योगिनामपि दुर्लभम्
॥"
इति पाद्मे क्रियायोगसारे गङ्गामाहात्म्यं
नाम
८ अध्यायः ॥ अन्यच्च ।
"लोभाद्द्वेषाद्भयाद्वापि यस्त्यजेत्
शरणागतम् ।
ब्रह्महत्यासमं तस्य पापमाहुर्मनीषिणः ॥
शास्त्रेषु निष्कृतिर्दृष्टा महापातकिनामपि ।
शरणागतहातुस्तु न दृष्टा निष्कृतिः
क्वचित् ॥"

**शरण्डः**, पुं, पक्षी । कामुकः । इति शब्दरत्नावली
॥
धूर्त्तः । शरटः । भूषणभेदः । इति मेदिनी
॥
चतुष्पात् । इति संक्षिप्तसारोणादिवृत्तिः ॥

**शरण्यः**, त्रि, (शृणाति भयमिति । शॄ हिंसा-
याम् + "शॄरम्योश्च ।" उणा० ३ । १०१
। इति
अन्यः । यद्वा, शरणमिव । शरण +
"शाखा
दिभ्यो यः ।" ५ । ३ । १०३ । इति यः
।) रक्षा-
कर्त्ता । यथा, --
"ध्येयं सदा परिभवघ्नमभीष्टदोहं
तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ।
भृत्यार्त्तिहं प्रणतपालभवाब्धिपोतं
वन्दे महापुरुष ते चरणारविन्दम् ॥"
इति श्रीभागवतम् ॥

**शरण्या**, स्त्री, (शरण्य + टाप् ।) दुर्गा । यथा, --
"विषाग्निभयघोरेषु शरण्यं स्मरणाद्यतः ।
शरण्या तेन सा देवी पुराणे परिपठ्यते
॥"
इति देवीपुराणे देवीनिरुक्providedाध्यायः ॥

**शरण्युः**, पुं, वारिदः । वातः । इति विश्वः ॥
भरण्युः । इति शब्दमाला ॥

**शरत्**, [द्] स्त्री, (शॄ हिंसायाम् + "शॄ दॄभ-
सोऽदिः ।" उणा० १ । १२९ । इति
अदिः ।)
वत्सरः । (यथा, रघुः । १० । १ ।
"पृथिवीं शासतस्तस्य पाकशासनतेजसः
।
किञ्चिदूनमनूनर्द्धेः शरदामयुतं ययौ ॥")
ऋतुविशेषः । स
चाश्विनकार्त्तिकमासद्वया-
त्मकः । इत्यमरः ॥ तत्पर्य्यायः । शारदा
२
तस्या गुणाः ।
"शरदुष्णा पित्तकर्त्री नृणां मध्यबलावहा ।"
इति भावप्रकाशः ॥ * ॥
तत्र जातफलम् ।
"नरः शरत्संज्ञकलब्धजन्मा
भवेत् सुकर्म्मा मनुजस्तरस्वी ।
शुचिः सुशीलो गुणवान् सुमानी
धनान्वितो राजकुलप्रपन्नः ॥"
इति कोष्ठीप्रदीपः ॥ * ॥
तत्र वर्णनीयानि यथा । चन्द्रपटुता । रवि-
पटुता । जलशुष्कता । अगस्त्यः । हंसः ।
वृषः ।
सर्पः । सप्तच्छदः । पद्मम् । श्वेतमेघः ।
धान्यम् ।
शिखिपक्षमदपातः । इति कविकल्पलता ॥

**शरत्कामी**, [न्] पुं, (शरदि शरत्काले कामयते
कुक्कुरीमिति । कम + णिङ् + णिनिः ।)
कुक्कुरः ।
इति शब्दरत्नावली ॥

**शरत्पद्मं**, क्ली, (शरदः पद्मम् ।) सिताम्भोजम् ।
इति राजनिर्घण्टः ॥

**शरत्पर्व्व**, [न्] क्ली, (शरदः पर्व्व ।) कोजागर-
पूर्णिमा । यथा, --
"कोजागरः शरत्पर्व्व शारदी द्यूतपूर्णिमा ।"
इति जटाधरः ॥

**शरत्पुष्पं**, क्ली, (शरदः पुष्पम् ।) आहुल्यम् ।
इति राजनिर्घण्टः ॥ शरदुद्भवकुसुमञ्च ॥

**शरद्**, स्त्री, (शॄ + अदिः ।) शरत् । इत्यमरः ॥

**शरदन्तः**, पुं, (शरदः तदाख्य-ऋतोरन्तो यस्मात् ।)
हेमन्तः । इति राजनिर्घण्टः ॥

**शरदा**, स्त्री, वत्सरः । शरदृतुः । इति शब्द-
रत्नावली ॥

**शरदिजं**, त्रि, (शरदि जायते यत् । जन + डः ।

इति वह्निपुराणे
दानावस्थानिर्ण्यनामाध्यायः ॥

**शरणार्थी**, [न्] त्रि, (शरणं अर्थयते इति ।
अर्थ + णिनिः ।) शरणागतः । इति हेम-
चन्द्रः ॥ (यथा, महाभारते । १ । १६२ ।
१० ।
"आगतस्य गृहं त्यागस्तथैव शरणार्थिनः ।
याचमानस्य च वधो नृशंसो गर्हितो बुधैः
॥")

**शरणार्पकः**, त्रि, (शराणार्थमर्पयति आत्मान-
मिति । अर्प + ण्वुल् ।) शरणापन्नः । इति
त्रिकाण्डशेषः ॥

**शरणिः**, स्त्री, पन्थाः । इत्यमरः ॥ सरन्त्यनयेति
सरणिः नाम्नीति अनिः इदन्तात् पक्षे ईपि
सरणी च ।
"सरणिः श्रोणिवर्त्मनोरिति दन्त्यादौ
रभसः ।"
शॄ स्वॄ गि हिंसने इत्यस्मात् पूर्व्ववदनौ
शरणि-
स्तालव्यादिश्च । शुभं शुभे प्रदीप्ते च
शरणिः
पथि चावनाविति तालव्यादावजयः । इति
तट्टीकायां भरतः ॥ पृथ्वी । इत्यजयः ॥
(हिंसा ।
यथा, ऋग्वेदे । १ । ३१ । १६ ।
"इमामग्ने शरणिं मीमृषो नः ।"
"हे अग्ने नो ऽस्मत्सम्बन्धिनीं इमामिदानीं
सम्पादितां शरणिं हिंसां व्रतलोपरूपां
मीमृषः
क्षमस्व * * * शरणिं शॄ
हिंसायामित्यस्मादौ-
णादिकः अनिः प्रत्ययः ।" इति
तद्भाष्येसायणः ॥)

**शरणी**, स्त्री, (शरणि + वा ङीष् ।) पन्थाः ।
प्रसारणी । इति शब्दरत्नावली ॥ जयन्ती
।
इति शब्दचन्द्रिका ॥

कालप्रभातः ३ । इति शब्दरत्नावली ॥
काल-
प्रभातम् ४ । इति त्रिकाण्डशेषः ॥ वर्षाव-
सानः ५ मेघान्तः ६ प्रावृडत्ययः ७ ।
(यथा,
रघुः । ४ । २४ ।
"सरितः कुर्व्वती गाधाः
पथश्चाश्यानकर्द्दमान् ।
यात्रायै चोदयामास तं शक्तेः प्रथमं शरत्
॥")
तत्र जलगुणाः ।
"वर्षासु नाभसं वारि सेवतोद्भिदमेव वा ।
सर्व्वं शरदि हेमन्ते तडागं सारसन्तु वा
॥" * ॥
तत्र ग्राह्यवायुर्यथा, --
"वसन्ते दक्षिणो वातो भवेत् वर्षासु
पश्चिमः ।
उत्तरः शारदे काले पूर्व्वो हेमन्तशैशिरे
॥"
इति राजनिर्घण्टः ॥ * ॥
अपि च ।
"शारदञ्चानभिष्यन्दि लघु
तत्परिकीर्त्तितम् ।
हैमन्तिकं जलं स्निग्धं बल्यं वृष्यं हितं
गुरु ॥"
इति राजवल्लभः ॥ * ॥
वैद्यकमते भाद्राश्विनमासात्मकः ।
केचित्तु ।
"ऋतुषट्कं समाख्यातं रवे राशिषु संक्र-
मात् ॥
ग्रीष्मो मेषवृषौ प्रोक्तः प्रावृट् मिथुनकर्कटौ
।
सिंहकन्ये स्मृता वर्षा तुलावृश्चिकयोः
शरत् ।
धनुर्ग्राहौ च हेमन्तो वसन्तः कुम्भमीनकौ
॥"
अन्येतु ।
"शिशिरः पुष्पसमयो ग्रीष्मो वर्षा
शरद्धिमः ।
माघादिमासयुग्मैः स्युरृतवः षट् क्रमादमी
॥"

"प्रावृट्शरत्कालदिवांजे ।" ६ । ३ । १५
। इति
सप्तम्या अलुक् ।) शरत्कालजातम् । यथा,
"नद्यः प्रावृषिजास्तु
पीनसकफश्वासार्त्तिकाश-
प्रदाः
पथ्या वातकफापहाः शरदिजा हेमन्तजा
बुद्धिदाः ।
सन्तापं शमयन्ति संविदधते
शैशिर्य्यवासन्तजा-
स्तृष्णादाहवमिश्रमार्त्तिशमदाग्रीशे यथास्वं
गुणाः ॥
इति राजनिर्घण्टः ॥

**शरदुदाशयं**, क्ली, शरत्कालीनसरोवरम् । यथा, --
"शरदुदाशये साधुजातसत्-
सरसिजोदरश्रीमुषा दृशा ।
सुरतनाथ तेऽशुल्कदासिका
वरद निघ्नतो नेह किं वधः ॥"
इति श्रीभागवते । १० । ३१ । २ ॥
शरदुदाशये शरत्कालीनसरसि । इति
श्रीधर-
स्वामी ॥

**शरधिः**, पुं, (शरा धीयन्तेऽस्मिन्निति । शर +
धा + "कर्म्मण्यधिकरणे च ।" ३ । ३ ।
९३ ।
इति किः ।) तूणः । इति हेमचन्द्रः ॥
(यथा,
राजेन्द्रकर्णपूरे । ३३ ।

"धृत्वाङ्गे कवचं निबध्य शरधिं कृत्वा पुरो माधवं
कामः केरवबान्धवोदयधिया धुन्वन् धनुर्धावति ॥")

**शरपुङ्खा**, स्त्री पुं, (शरस्य पुङ्खेव आकृतिर्यस्याः ।) नीलीवृक्षाकृतिवृक्षविशेषः । शरफोका इति हिन्दीभाषा । तत्पर्य्यायः । काण्डपुङ्खा २ बाणपुङ्खा ३ इषुपुङ्खिका ४ शायकपुङ्खा ५ इषुपुङ्खा ६ । तस्या गुणाः । कटुत्वम् । उष्णत्वम् । कृमिवातरुजापहत्वम् । श्वेताया गुणाढ्यत्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
"शरपुङ्खो यकृत्प्लीहगुल्मव्रणविषापहः ।
तिक्तः कषायः कासास्रज्वरश्वासहरो लघुः ॥"
इति भावप्रकाशः ॥ बाणस्य पक्षे, पुं ॥ (क्ली, यन्त्रविशेषः । यथा, सुश्रुते । १ । ७ । "तेषां गण्डूपदशरपुङ्खसर्पफणवडिशमुखे द्वे द्वे एषणव्यूहनचालनाहरणार्थमुदिश्येते ॥")

**शर(ल)भः**, पुं, (शृणाति हिनस्तीति । शॄ हिंसायाम् + "कृशॄशलिकलिगर्द्दिभ्योऽभच् ।" उणा० ३ । १२२ । इति अभच् ।) मृगेन्द्रविशेषः । इत्यमरः ॥ तत्पर्य्यायः । महामृगः २ महास्कन्धी ३ महामनाः ४ अष्टपादः ५ महासिंहः ६ मनस्वी ७ पर्व्वताश्रयः ८ । इति राजनिर्घण्टः ॥ अस्य लक्षणं यथा, --

**शरयुः**, स्त्री, नदीविशेषः । इति द्विरूपकोषः ॥ दन्त्यसादिरयं शब्दः । इति बहुसम्मतः ॥

**शरयूः**, स्त्री, नदीविशेषः । इति द्विरूपकोषः ॥ दन्त्यसादिरयं शब्दः । इति बहुसम्मतः ॥

**शरलः**, त्रि, विगीतः । स्वच्छहृदयः । वृक्षविशेषे, पुं । इति सारस्वताभिधानम् ॥ दन्त्यसादिरप्ययमिति बहुसम्मतः ॥

**शरलकं**, क्ली, जलम् । इति शब्दचन्द्रिका ॥

**शरवणोद्भवः**, पुं, (शरवणे उद्भवो यस्य ।) कार्त्तिकेयः । इति केचित् ॥ (यथा, महाभारते । ३ । २३१ । ८ ।
"खचारी ब्रह्मचारी च शूरः शरवणोद्भवः ॥")

**शरवाणिः**, पुं, शरमुखम् । पदातिः । शरजीवी । इति हेमचन्द्रः ॥

**शरव्यं**, क्ली, (शरवे हिंसायै बाणशिक्षायै वा साधु । शरु + "उगवादिभ्यो यत् ।" ५ । १ । २ । इति यत् । यद्वा, शरान् व्ययति । व्ये + डः ।) लक्ष्यम् । इत्यमरः ॥ (यथा, माघे । ७ । २४ ।
"विदधाति जनतामनःशरव्यव्यधपटुमन्मथचापनादशङ्काम् ॥")

**शराघातः**, पुं, (शरस्याघातः ।) बाणाघातः । तत्पर्य्यायः । प्रचलाकः २ । इति जटाधरः ॥

**शराटिः**, स्त्री, (शरं जलं अटति प्राप्नोतीति । अट् + इन् ।) शरालिपक्षी । इति शब्दरत्नावली ॥

**शराडिः**, स्त्री, शरालिपक्षी । इति शब्दरत्नावली ॥

**शरातिः**, स्त्री, (शरं जलमततीति । अत + इन् ।) शरालिपक्षी । इत्यमरटीकायां रामा-

**शरारुः**, त्रि, (शृणातीति । शॄ + "शॄवन्द्योरारुः ।" ३ । २ । १७३ । इति आरुः ।) हिंस्रः इत्यमरः ॥

**शरारोपः**, पुं, (शरस्यारोपो यस्मिन् ।) धनुः । इति जटाधरः ॥

**शरालिः**, स्त्री, शरारिपक्षी । इति शब्दरत्नावली ॥

**शरालिका**, स्त्री, शरारिपक्षी । इति शब्दरत्नावली ॥

**शराली**, स्त्री, शरारिपक्षी । इति शब्दरत्नावली ॥

**शरावः**, पुं, क्ली, (शरं जलं अवति रक्षतीति ॥ अव रक्षणे + अण् ।) मृत्पात्रविशेषः । शरा इति भाषा । तत्पर्य्यायः । वर्द्धमानकः २ । इत्यमरः ॥ मार्त्तिकः ३ सरावः ४ शालाजिरम् ५ पार्थिवम् ६ मृत्कांस्यम् ७ । इति शब्दरत्नावली ॥ (यथा, आर्य्यासप्तशत्याम् । १२६ ।
"उदितेऽपि तुहिनगहने गगनप्रान्ते न दीप्यते तपनः ।
कठिनघृतपूरपूर्णे शरावशिरसि प्रदीप इव ॥")
कुडवद्वयपरिमाणम् । तत्तु चतुःषष्टितोलकात्मकम् । सेर इति भाषा । तत्पर्य्यायः । मानिका २ । इति शब्दमाला वैद्यकपरिभाषा च ॥

**शरावती**, स्त्री, (शरास्तृणविशेषाः सन्त्यस्या-

"अष्टपादूर्द्ध्वनयन ऊद्ध्र्वपादचतुष्टयः
।
तं सिंहं हन्तुमागच्छन्मुनेस्तस्य
निवेशनम् ॥"
इति महाभारतम् । १२ । ११७ । १२ ॥
करभः । (यथा, ऋतुसंहारे । १ । २३ ।
"भ्रमति गवययूथः सर्व्वतस्तोयमिच्छन्
शरभकुलमजिह्मं प्रोद्धरत्यम्बु कूपात् ॥")
वानरविशेषः । इति मेदिनी ॥ उष्ट्रः । इति
जटाधरः ॥ (विष्णुः । यथा, महाभारते ।
१३ । १४९ । ५२ ।
"अतुलः शरभो भीमः समयज्ञो हविहरिः
॥"
दनुपुत्रविशेषः । यथा, तत्रैव्र । १ । ६५ ।
२६ ।
"शरभः शलभश्चैव सूर्य्याचन्द्रमसौ तथा
।
एते ख्याता दनोर्व्वंशे दानव्राः
परिकीर्त्तिताः ॥"
नागविशेषः । यथा, तत्रैव । १ । ५७ ।
११ ।
"विहङ्गः शरभो मेदः प्रमोदः संहता-
पनः ॥")

**शरभूः**, पुं, (शरे शरवणे भूरुत्पत्तिर्यस्य ।)

कार्त्तिकेयः । इति हेमचन्द्रः ॥

**शरमयं**, त्रि, (शरस्य विकारोऽवयवो वा । शर +

"नित्यं वृद्धशरादिभ्यः ।" ४ । ३ । १४४
। इति
मयट् ।) शरनिर्म्मितम् । यथा, --
"शरमयवर्हिषा कुशमयवर्हिर्व्वाधव्रत् ।"
इति
स्मृतिः ॥

**शरमल्लः**, पुं, (शरे शरवणे मल्ल इव ।) पक्षि-

विशेषः । इति शब्दचन्द्रिका ॥
गोशालिक इति
भाषा । (शरे बाणनिक्षेपादौ मल्लः ।) वाण-
योद्धा च ॥

श्रमः ॥

**शराभ्यासः**, पुं, (शराणामभ्यासः ।) बाणशिक्षा ।

तत्पर्य्यायः । उपासनम् २ । इत्यमरः ॥ विक-
र्षणम् ३ खुरली ४ शस्त्राभ्यासः ५ । इति
शब्दरत्नावली ॥

**शरारिः**, पुं, (शरं जलं ऋच्छतीति । ऋगतौ +

"अच इः ।" इति इः ।) शरालिपक्षी । तत्प-
र्य्यायः । आटिः २ आडिः ३ । इत्यमरः ॥
आडी ४ शराडी ५ आडिका ६ शराली ७
शरालिः ८ शराटिः ९ शरालिका १० । इति
शब्दरत्नावली ॥ (यथा, ऋतुसंहरे । ४ । ९ ।
"प्रफुल्लनीलोत्पलशोभितानि
शरारिकादम्बविघट्टितानि।
प्रसन्नतोयानि सशैवलानि
सरांसि चेतांसि हरन्ति यूनाम् ॥")
अस्य गुणाः । पवनापहत्वम् । स्निग्धत्वम् ।
सृष्टमलत्वम् । वृष्यत्वम् । वातरक्तहरत्वम् ।
हिमत्वञ्च । इति राजवल्लभः ॥ अपि च ।
"हंससारसकाचाक्षवकक्रौञ्चशरारिकाः।
नन्दीमुखीसकादम्बाःवलाकाद्याः प्लवाः
स्मृताः ॥
प्लवाः पित्तहराः स्निग्धा मधुरा गुरवो हिमाः ।
वातश्लेष्मप्रदाश्चापि बलशुक्रकराः सराः ॥"
इति भावप्रकाशः ॥

मिति । शर + मतुप् । "शरादीनाञ्च ।"
६ ।
३ । १२० । इति दीर्घः ।) नदीविशेषः
। इत्य-
मरः ॥ (यथा, महाभारते । ६ । ९ ।
२० ।
"शरावतीं पयोष्णीञ्च वेण्णां
भीमरथीमपि ॥"
लवस्य राजधानी । यथा, रघुः । १५
। ९७ ।
"स निवेश्य कुशावत्यां रिपुनागाङ्कुशं
कुशम् ।
शरावत्यां सतां सूक्तैः जनिताश्रुलवं
लवम् ॥")

**शरावार्द्धं**, क्ली, (शरावस्य अर्द्धम् ।) कुडवपरि-

माणम् । तत्तु द्वात्रिंशत्तोलकात्मकम्।
आधसेर
इति भाषा । इति वैद्यकपरिभाषा ॥

**शराश्रयः**, पुं, (शराणामाश्रयः ।) तूणः । इति

हेमचन्द्रः ॥

**शरासनं**, क्ली, (शरा अस्यन्ते क्षिप्यन्तेऽनेनेति
।

अस + करणे ल्युट् ।) धनुः । इत्यमरः
॥
(यथा, रघुः । ३ । ५२ ।
"स एवमुक्त्वा मघवन्तमुन्मुखः
करिष्यमाणः सशरं शरासनम् ॥"
पुं, धृतराष्ट्रपुत्त्राणामन्यतमः । यथा,
महा-
भारते । १ । ११७ । ४ ।
"चित्रोपचित्रौ चित्राक्षश्चारुचित्रः शरा-
सनः ॥")

**शरास्यं**, क्ली, (शरा अस्यन्तेऽनेनेति । अस् +

ण्यत् ।) धनुः । यथा, --
"चिच्छेद तस्य तान् वाणान् शरास्यञ्च
महा-
मुने ।
युयुधातेऽतिसंरब्धौ परस्परवधैषिणौ
॥"

इति मार्कण्डेयपुराणे जैमिनिखण्डं पुराणं परि-
पूर्णम् ॥

**शरिमा**, [न्] पुं, (शृणाति यौवनमिति । शृ + "हृभृधृसृस्तृशृभ्य इमणिच् ।" उणा० ४ । १४७ । इति इमणिच् ।) प्रसवः । इति सिद्धान्त-
कौमुद्यामुणादिवृत्तिः ॥

**शरी**, स्त्री, एरकातृणम् । इति भावप्रकाशः ॥

**शरीरं**, क्ली, (शॄ + "कॄशॄपॄकटिपटिशौटिभ्य ईरन् ।" उणा० ४ । ३० । इति ईरन् ।)
शीर्य्यते रोगादिना यत् । तत्पर्य्यायः । कले-
वरम् २ गात्रम् ३ वपुः ४ संहननम् ५ वर्ष्म ६
विग्रहः ७ कायः ८ देहः ९ मूर्त्तिः १० तनुः
११ तनूः १२ । इत्यमरः ॥ क्षेत्रम् १३ पुरम् १४
घनः १५ अङ्गम् १६ पिण्डम् १७ । इति राज-
निर्घण्टः ॥ भूतात्मा १८ स्वर्गलोकेशः १९
स्कन्धः २० पञ्जरः २१ कुलम् २२ बलम् २३
आत्मा २४ । इति जटाधरः ॥ स्कन्धम् २५ ।
इति शब्दरत्नावली ॥ इन्द्रियायतनम् २६ भूः
२७ मूर्त्तिमत् २८ करणम् २९ वेरम् ३०
सञ्चरः ३१ बन्धः ३२ पुद्गलम् ३३ । इति हेम-
चन्द्रः ॥ * ॥ शरीरधर्म्मा यथा, --
"शरीरे भस्मसाद्भूते प्रतिविम्बः स चात्मनः ।
३६ नखः ३७ पर्व्व ३८ चपेटकः ३९ कण्ठः ४०
शिरोधिः ४१ श्मश्रु ४२ मुखम् ४३ ओष्ठः ४४
चिवुकम् ४५ हनुः ४६ सृक्कम् ४७ तालु ४८
रदः ४९ जिह्वा ५० नासा ५१ भ्रूः ५२ गण्डः
५३ लोचनम् ५४ अपाङ्गः ५५ तारा ५६
कर्णः ५७ भालः ५८ मस्तकम् ५९ केशः ६० ।
इति कविकल्पलता ॥ * ॥
परमेश्वरशरीरतो देवानामुत्पत्तिर्यथा, --
"सर्व्वे देवाः सपितरो ब्रह्माद्याश्चाण्डमध्यगाः ।
विष्णोः सकाशादुत्पन्ना इतीयं वैदिकी श्रुतिः ॥
अग्निस्तथाश्विनौ गौरी गजवक्त्रो भुजङ्गमः ।
कार्त्तिकेयस्तथादित्यो मातरो दुर्गया सह ॥
दिशो धनपतिर्विष्णुर्धर्म्मो रुद्रः शशी तथा ।
पितरश्चेति संभूताः प्राधान्येन जगत्पतेः ॥
हिरण्यगर्भस्य तनौ सर्व्व एव समुद्भवाः ।
पृथक् पृथक् ततो गर्व्वं वहमानाः समन्ततः ॥
अहं योग्यस्त्वहं याज्य इति तेषां स्वनोमहान् ।
श्रूयते देवसमितौ क्षुब्धसागरसन्निभः ॥
तेषां विवदमानानां वह्निरुत्थाय पार्थिव ।
उवाच मां यजस्वेति ध्यायध्वं मामिति ब्रुवन् ॥
प्राजापत्यमिदं नूनं शरीरं मद्विना कृतम् ।
विनाशमुपपद्येत यतो नाहं महानहम् ॥
एवमुक्त्वा शरीरन्तु त्यक्त्वा वह्निर्विनिर्ययौ ।
निर्गतेऽपि ततस्तस्मिंस्तच्छरीरं न शीर्य्यते ॥
ततोऽश्विनौ मूर्त्तिमन्तौ प्राणापानशरीरगौ ।
आवां प्रधानावित्येवमूचतुर्याज्यवत्तरौ ॥
एवमुक्त्वा शरीरं तौ विहाय क्वचिदास्थितौ ।
तयोरपि क्षयं कृत्वा क्षीणं तत्पुरमास्थितः ॥
ततश्चैवाब्रवीद्गौरी प्राधान्यमपि संस्थितम् ।
साप्येवमुक्त्वा क्षेत्रात्तु निश्चक्राम बहिः शुभा ॥
तया विनापि तत् क्षेत्रं वागूनं व्यवतिष्ठते ।
ततो गणपतिर्व्वाक्यमाकाशाख्योऽब्रवीत्तदा॥
न मया रहितं किञ्चिच्छरीरस्थोऽपि दूरतः ।
कालान्तरेत्येवमुक्त्वा सोऽपि निष्क्रम्य देहतः ॥
पृथग्भूतस्तथाप्येतच्छरीरं नाप्यनीनशत् ।
विना सांख्यञ्च तत्त्वेन तथापि न विशीर्य्यते ॥
ततो मायाब्रवीत् कोपात् सा च दुर्गा प्रकी-
र्त्तिता ॥
न मयास्य विना भूतिरित्युक्त्वान्तर्दधे पुनः ।
ततो दिशः समुत्तस्थुरूचुश्चैव वचो महत् ॥
नास्माभी रहितं कायं भवतीति न संशयः ।
चतस्र आगताः काष्ठा अपयाताः क्षणात्तदा ॥
ततो धनपतिर्व्वायुर्मध्ये तत्पक्तसम्भवः ।
शरीरस्येति सोऽप्येवमुक्त्वा मूर्द्धानगोऽभवत् ॥
ततो विष्णोर्मनो ब्रूयात् नायं देहो मया विना ।
क्षणमप्युत्सहे स्त्रातुमित्युक्त्वान्तर्दधे पुनः ॥
ततो धर्म्मोऽब्रवीत् सर्व्वमिदं पालितवाहनम् ।
इदानीं मय्युपगते कथमेतद्भविष्यति ।
एवमुक्त्वा गते धर्म्मे तच्छरीरं न शीर्य्यते ॥
ततोऽब्रवीन्महादेवश्चाव्यक्तो भूतनायकः ।
महत्संज्ञो मया हीनं शरीरं नो भवेद्यथा ॥
एवमुक्त्वा गतः शम्भुस्तच्छरीरं न शीर्य्यते ।
तद्दृष्ट्वा पितरश्चोचुस्तन्मात्रा यावदस्मभिः ॥
प्राणान्तरेभिरेतश्च शरीरं शीर्य्यते ध्रुवम् ।
एवमुक्त्वा तु तं देहं त्यक्त्वान्तर्द्धानमागताः ॥
अग्निः प्राणः अपानश्च आकाशश्चैव धातवः ।
क्षेत्रं तद्वत्त्वहंकारो भानुः कामादयो मया ॥
काष्ठा वायुर्व्विष्णुधर्म्मौ शम्भुश्चैवेन्द्रियार्थकाः ।
एतैर्मुक्तन्तु तत् क्षेत्रं मुक्ताविव सुसंस्थितम् ॥
सोमेन पाल्यमानन्तु पुरुषेणेन्दुरूपिणा ।
एवं व्यवस्थिते सोमे षोडशात्मन्यथाक्षरे ॥
प्राग्वत्तत्र गुणोपेतं क्षेत्रमुत्थाय यद्भवेत् ।

जीवस्तत्रान्तरीक्षस्य उवाच विनयं
विभुम् ॥
जीव उवाच ।
सदुक्तिर्व्वा कदुक्तिर्व्वा कोपः सन्तोष
एव च ।
लोभो मोहश्च कामश्च
क्षुत्पिपासादिकञ्च यत् ॥
स्थौल्यं कार्य्यञ्च नाशश्च दृश्यादृश्यं
समुद्भवम् ।
सर्व्वं शरीरधर्म्मश्च न जीवस्य न
चात्मनः ॥
सत्त्वं रजस्तम इति शरीरं
त्रिगुणात्मकम् ।
तच्च नानाप्रकारञ्च प्रबोध कथयामि
ते ॥
किञ्चित् सत्त्वातिरिक्तञ्च किञ्चिदेव
रजो-
ऽधिकम् ।
तमोऽतिरिक्तं किञ्चिच्च न समं
कुत्रचिन्मुने ॥
सत्त्वाद्दया च मुक्तीच्छा कर्म्मेच्छा च
रजो-
गुणात् ।
तमोगुणाज्जीवहिंसा कोपोऽहङ्कार
एव च ॥
कोपात् कदुक्तिर्नियतं कदुक्त्या
शत्रुता भवेत् ।
तया चाप्रियता सद्यः शत्रुः कः कस्य
भूतले ॥
को वा प्रियोऽप्रियो वा कः किं मित्रं
को
रिपुर्भुवि ।
इन्द्रियाणि च जीवानि सर्व्वत्र
शत्रुमित्रयोः ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे
२४ अः ॥ * ॥
अथ स्त्रीपुंसयोः सर्व्वाङ्गानि
पादाग्रादिशिरः-
पर्य्यन्तानि । प्रपदम् १ अङ्घ्रिः २
गुल्फः ३

शुषिरैस्तु विहीनन्तु दृष्ट्वा क्षेत्रं व्यवस्थितम् ।
शरीरधातवः सर्व्वे ते ब्रूयुर्व्वाक्यमेव हि ॥
अस्माभिर्व्यतिरिक्तस्य न शरीरस्य धारणम् ।
भवतीत्येवमुक्त्वा ते जहुः सर्व्वे शरीरिणः ॥
तैर्व्यपेतमपि क्षेत्रं पुरुषेण प्रपाल्यते ।
तद्दृष्ट्वा त्वब्रवीत् स्कन्दः सोऽहङ्कारः प्रकी-
र्त्तितः ॥
मया विना शरीरस्य सम्भू तिरपि नेष्यते ।
एवमुक्त्वा शरीरात्तु सोव्यपेतः पृथक् स्थितः ॥
तेनाक्षतेन तत् क्षेत्रं विना मुक्तवदास्थितम् ।
तद्दृष्ट्वा कुपितो भानुः स आदित्यः प्रकीर्त्तितः
॥
मया विना कथं क्षेत्रमिमं क्षणमपीष्यते ।
एवमुक्त्वाथ यातः स तच्छरीरं न शीर्य्यते ॥
ततः कामादिरुत्थाय गणो मातृकसंज्ञितः ।
न मया व्यतिरिक्तस्य शरीरस्य व्यवस्थितिः ॥
एवमुक्त्वा स यातस्तु शरीरं तन्न शीर्य्यते ।

प्रागवस्थं शरीरन्तु दृष्ट्वा सर्व्वज्ञपालितम्
॥
ताः क्षेत्रदेवताः सर्व्वा वैलक्ष्यं
भावमाश्रिताः
तमेवं तुष्टुवुः सर्व्वास्तं देवं परमेश्वरम् ॥”
इति वाराहे महातपोपाख्याननामाध्यायः
॥ *
शरीरान्नं यथा, --
“शरीरमापः सोमश्च विविधं चान्नमुच्यते ।
प्राणो ह्यग्निस्तथादित्यस्त्रिभोक्ताएक एव तु
॥”
इति गारुडे २१५ अध्यायः ॥ * ॥
मानसकायिकक्लेशसाध्यव्रतं यथा, --
धरण्युवाच ।
“कथमाराध्यसे देव भक्तिमद्भिर्नरैर्विभो ।
स्त्रीभिर्व्वा सर्व्वमेतन्मे शंस त्वं भूतभावन
॥
वाराह उवाच ।
भावसाध्यस्त्वहं देवि न वित्तैर्न जपैरहम् ।
साध्यस्तथापि भूतानां कायक्लेशं वदामि
ते ॥
कर्म्मणा मनसा वाचा मच्चित्तो यो नरो
भवेत् ।
तस्य व्रतानि वक्ष्येऽहं विविधानि निबोध मे
॥
अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यमकल्कता ।
एतानि मानसान्याहुर्व्रतानि तु धराधरे ॥
एकभक्तं तथा नक्तमुपवासादिकञ्च यत् ।
तत् सर्व्वं कायिकं पुंसां व्रतं भवति
नान्यथा ॥”
इति वाराहे सत्यतपोपाख्याननामाध्यायः
॥

**शरीरजः**, पुं, (शरीरात् जायते इति । जन +
डः ।) रोगः । कामदेवः । (यथा, महा-
भारते । १ । १०० । ५६ ।

| | | |
|---|---|---|
| पार्ष्णिः ४ जङ्घा ५ जानु ६ ऊरुः ७ वङ्क्षणः ८<br>कटिः ९ त्रिकम् १० नितम्बः ११ स्फिक् १२<br>वस्तिः १३ उपस्थः १४ ककुन्दरम् १५ जघनम्<br>१६ जठरम् १७ नाभिः १८ वलिः १९ स्तनः २०<br>चूचकम् २१ क्रोडम् २२ रोम २३ कक्षः २४<br>अंसः २५ वक्षः २६ दोः २७ पार्श्वः २८<br>प्रगण्डः २९ कुर्परः ३० हस्तः ३१ प्रकोष्ठः ३२<br>मणिबन्धः ३३ अङ्गुलिः ३४ अङ्गुष्ठः ३५ करभः | | |

"नाकामयत तं दातुं वरं दाशाय
शान्तनुः ।
शरीरजेन तीव्रेण दह्यमानोऽपि
भारत ॥")
पुत्त्रः । इति धरणिः । (यथा,
महाभारते ।
१३ । २४ । ४ ।
"इति पृष्टो मया राजन्
पराशरशरीरजः ।
अब्रवीन्निपुणो धर्म्मे
निःसंशयमनुत्तमम् ॥")
देहजाते, त्रि । यथा, --
"शरीरजैः कर्म्मदोषैर्य्याति
स्थावरतां नरः ।
वाचिकैः पक्षिमृगतां
मानसैरन्त्यजातिताम् ॥"
इति प्रायश्चित्ततत्त्वम् ॥

**शरीरसंस्कारः**, पुं, (शरीरस्य संस्कारः ।) देह-
संस्कारकर्म्म । शरीरस्य शोभनं
मार्जनञ्च ॥

**शरीरावरणं**, क्ली, (शरीरस्य आवरणम् ।) चर्म्म ।
इति राजनिर्घण्टः ॥ कायवेष्टनञ्च ॥
(वर्म्म ।
यथा, महाभारते । ७ । १८५ । ४२
।
"विचित्रैर्विविधाकारैः
शरीरावरणैरपि ।
विचित्रैश्च रथैर्भग्नैर्हतैश्च
गजवाजिभिः ॥")

**शरीरी** [न्] पुं, (शरीरमस्यास्तीति । शरीर +
इनिः ।) शरीरविशिष्टः । तत्पर्य्यायः
।
"भवोद्भवौ च प्राणी तु
शरीरिजन्युजन्तवः ।
प्राणभृच्चेतनो जन्मी चित्तन्तु हृदयं
मनः ॥"
चेतनास्थानमुत्तममिति अयमभिप्रायः ।
"चेतनानामधिष्ठानं मनो देहश्च सेन्द्रियः
।
केशलोमनखाग्रान्तर्म्मलं द्रव्यगुणैर्विना ॥"
इत्युक्तवता चरकेण सकलं शरीरं
चेतनास्थान-
मुक्तं तदपेक्षया हृदयं
विशेषतश्चेतनावस्थान-
मिति ।
"कक्षयोर्व्वक्षसोः सन्धी जत्रुणी समुदाहृते
।
कक्षे उभे समाख्याते तयोः स्याताञ्च
वंक्षणौ ॥
उदरं पञ्चमं भागं षष्ठं पार्श्वद्बयं मतम् ।
सपृष्ठवंशं पृष्ठन्तु समस्तं सप्तमं स्मृतम् ॥
* ॥
उपाङ्गानि च कथ्यन्ते तानि जानीहि
यत्नतः ॥
शोणिताज्जायते प्लीहा वामतो
हृदयादधः ।
रक्तवाहिशिराणां स मूलं ख्यातो
महर्षिभिः ॥
हृदयाद्वामतोऽधश्च फुप्फुसो रक्तफेणजः
।
अधो दक्षिणतश्चापि हृदयाद्यकृतः
स्थितिः ॥
तत्तु रञ्जकपित्तस्य स्थानं शोणितजं मतम्
।
अधस्तु दक्षिणे भागे हृदयात् क्लोम
तिष्ठति ।
जलवाहिशिरामूलं तृष्णाच्छादनकृन्मतम्
॥"
क्लोम तिलकं एतत्तु वातरक्तजम् ।
अत्राह च
वृद्धवाग्भटः ।
"रक्तादनिलसंयुक्तात् कालीयक समुद्भवः
।"
इति ।

**शरुः**, पुं, (शॄ हिंसायाम् + "शॄस्वृस्निहित्रप्य-
सीति ।" उणा० १ । ११ । इति उः ।) क्रोधः ।
वज्रम् । इति मेदिनी ॥ बाणः । इति हेम-
चन्द्रः ॥ आयुधम् । इति सिद्धान्तकौमुद्या-
मुणादिवृत्तिः ॥ (हिंसा । यथा, ऋग्वेदे । ६ ।
२७ । ६ ।
"वृचीवन्तः शरवे पत्यमानाः ।"
"शरवे हिंसायै ।" इति तद्भाष्ये सायणः ॥
गन्धर्व्वविशेषः । यथा, महाभारते । १ ।
१२३ । ५५ ।
"विश्वावसुर्भुमन्युश्च सुचन्द्रश्च शरुस्तथा ॥"
हिंसके, त्रि । यथा, तत्रैव । ७ । ७१ । १ ।
"दिवा नक्तं शरुमस्मद्युयोतम् ॥"
"शरुं हिंसकम् ।" इति तद्भाष्ये सायणः ॥)

**शरेष्टः**, पुं, आम्रः । इति जटाधरः ॥

**शर्करकः**, पुं, (शर्कर + "वुञ्छण्कठेति ।" ४ ।
२ । ८० । इत्यनेन कः ।) मधुरजम्बीरः । इति
राजनिर्घण्टः ॥

**शर्करजा**, स्त्री, (शर्कराज्जायते इति । जन + डः ।
स्त्रियां टाप् ।) सिताखण्डः । इति राज-
निर्घण्टः ॥

**शर्करा**, स्त्री, खण्डविकृतिः । चिनी इति भाषा ।
तत्पर्य्यायः । सिता २ । इत्यमरः ॥ शुक्लोपला
३
शुक्ला ४ सितोपला ५ । इति रत्नमाला ॥
मीनाण्डी ६ श्वेता ७ मत्स्यण्डिका ८ अहि-
च्छत्रा ९ सुसिकता १० गुडोद्भवा ११ । अस्या
गुणाः । मधुरत्वम् । शीतत्वम् । पित्तदाह-
श्रमरक्तदोषभ्रान्तिकृमिकोपनाशित्वञ्च । इति
साधारणशर्करागुणाः ॥ * ॥
अथ शर्कराविशेषगुणाः ।
"स्निग्धा पुण्ड्रकशर्करा हितकरी क्षीणे क्षये-
ऽरोचके
चक्षुष्या बलवर्द्धनी सुमधुरा रूक्षा च वंशे-
क्षुजा ।
वृष्या तृप्तिबलप्रदा श्रमहरा श्यामेक्षुजा
शीतला

इति जटाधरः ॥
शरीरिलक्षणं यथा, --
"गर्भाशयगतं शुक्रमार्त्तवं जीवसंज्ञकः ।
प्रकृतिः सविकारा च तत् सर्व्वं गर्भसंज्ञकम् ॥
कालेन वर्द्धितो गर्भो यद्यङ्गोपाङ्गसंयुतः ।
भवेत्तदा स मुनिभिः शरीरीति निगद्यते ॥"
अङ्गोपाङ्गसंयुतः व्यक्ताङ्गोपाङ्गः ।
"तस्य त्वङ्गान्युपाङ्गानि ज्ञात्वा सुश्रुतशास्त्रतः ।
मस्तकादभिधीयन्ते शिष्याः शृणुत यत्नतः ॥
आद्यमङ्गं शिरः प्रोक्तं तदुपाङ्गानि कुन्तलाः ।
तस्यान्तर्मस्तुलुङ्गश्च ललाटभ्रूयुगं तथा ॥
नेत्रद्वयं तयोरन्तर्व्वर्त्तते द्वे कणीनिके ।
दृष्टिद्वयं कृष्णगोलौ श्वेतभागौ च वर्त्मनि ॥
पक्ष्माण्यपाङ्गौ शङ्खौ च कर्णौ तच्छस्कुलीद्वयम् ।
पाणिद्वयं कपोलौ च नासिका च प्रकीर्त्तिता ॥
ओष्ठाधरौ च सृक्कण्यौ मुखं तालु हनुद्वयम् ।
दन्ताश्च दन्तवेष्टाश्च रसना चिवुकं गलः ॥
द्वितीयमङ्गं ग्रीवा तु यया मूर्द्धा विधार्य्यते ।
तृतीयं बाहुयुगलं तदुपाङ्गान्यथो ब्रुवे ॥
तस्योपरि मतौ स्कन्धौ प्रगण्डौ भवतस्त्वधः ।
कफोणियुग्मं तदधः प्रकोष्ठयुगलं तथा ॥
मणिबन्धौ तले हस्तौ तयोश्चाङ्गुलयो दश ।
"मेदःशोणितयोः साराद्बुक्कयोर्युगलं भवेत् ।
तौ तु पुष्टिकरौ प्रोक्तौ जठरस्थस्य मेदसः ॥
उक्ताः सार्द्धास्त्रयो व्यामाः पुंसामन्त्राणि सूरिभिः ।
अर्द्धव्यामेन हीनानि योषितोऽन्त्राणि निर्द्दिशेत् ॥
उण्डुकश्च कटी चापि त्रिकं वस्तिश्च वंक्षणौ ।
कण्डराणां प्ररोहः स्यान्मेढ्राणां वीर्य्यमूत्रयोः ।
स एव गर्भस्याधानं कुर्य्याद्गर्भाशये स्त्रियाः ॥
शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा च कीर्त्तिता ।
तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता ॥
वृषणौ भवतः सारात् कफासृङ्मांसमेदसाम् ।
वीर्य्यवाहिशिराधारौ तौ मतौ पौरुषावहौ ॥
गुदस्य मानं सर्व्वस्य सर्व्वं स्याच्चतुरङ्गुलम् ।
तत्र स्युर्व्वलयस्तिस्रः शङ्खावर्त्तनिभास्तु ताः ॥
प्रवाहिणी भवेत् पूर्व्वा सार्द्धाङ्गुलमिता मता ।
उत्सर्ज्जिनी तु तदधः सा सार्द्धाङ्गुलसम्मिता ॥
तस्या अधःशम्बरणी स्यादेकाङ्गुलसम्मिता ।
अर्द्धाङ्गुलप्रमाणन्तु बुधैर्गुदमुखं मतम् ॥
मलोत्सर्गस्य मार्गोऽयं पायुर्देहे विनिर्मितः ।
पुंसः प्रोथौ स्मृतौ यौ तु तौ नितम्बौ च योषितः ॥
तयोः कुकुन्दरे स्यातां सक्थिनी त्वङ्गमष्टमम् ।
तदुपाङ्गानि च ब्रूमो जानुनी पिण्डिकाद्वयम् ॥
स्निग्धा कान्तिकरी रसालजनिता रक्तेक्षुजा पित्तजित् ॥"
इति पञ्चेक्षुशर्करागुणाः ॥ * ॥
"यावनाली हिमोत्पन्ना हिमाली हिमशर्करा ।
क्षुद्रशर्करिका क्षुद्रा गुडजा जलबिन्दुजा ॥
हिमजा शर्करा गौल्या सोक्ता तिक्तातिपिच्छिला ।
वातघ्नी सारिका रुच्या दाहपित्तास्रदायिनी ॥"
इति यावनालशर्करागुणाः ॥ * ॥
"शीतजान्या कर्करजा माधवी मधुशर्करा ।
माक्षिका शर्करा प्रोक्ता सिताखण्डश्च खण्डकः ॥
सिताखण्डोऽतिमधुरश्चक्षुष्यश्छर्द्दिनाशनः।
कुष्ठव्रणकफश्वासहिक्कापित्तास्रदोषनुत्॥
यवासशर्क्करा त्वन्या सुधामोदकमोदकः ।
तवराजः खण्डसारः खण्डजा खण्डमोदकः ॥"
इति राजनिर्घण्टः ॥" * ॥

| | | |
|---|---|---|
| नखाश्च दश ते स्थाप्या दश<br>च्छेद्याः प्रकीर्त्तिताः ॥<br>चतुर्थमङ्गं वक्षस्तु तदुपाङ्गान्यथ ब्रुवे<br>।<br>स्तनौ पुंसस्तथा नार्य्या विशेष<br>उभयोरयम् ॥<br>यौवनागमने नार्य्याः पीवरौ भवतः<br>स्तनौ ।<br>गर्भवत्याः प्रसूतायास्तावेतौ<br>क्षीरपूरितौ ॥<br>हृदयं पुण्डरीकेण सदृशं<br>स्यादधोमुखम् ।<br>जाग्रतस्तद्विकसति स्वपतस्तु<br>निमीलति ॥<br>आशयस्तत्तु जीवस्य<br>चेतनास्थानमुत्तमम् ।<br>अतस्तस्मिंस्तमोव्याप्ते प्राणिनः<br>प्रस्वपन्ति हि ॥" | जङ्घे द्वे घुटिके पार्ष्णी तले च प्रपदे तथा ।<br>पादावङ्गुलयस्तत्र दश तासां नखा दश<br>॥"<br>इति भावप्रकाशः ॥<br>(क्षेत्रज्ञो जीवात्मा । यथा, मनुः । १ । ५३<br>।<br>"तस्मिन् स्वपिति तु स्वस्थे कर्म्मात्मानः<br>शरी-<br>रिणः ।<br>स्वकर्म्मभ्यो निवर्त्तन्ते मनश्च<br>ग्लानिमृच्छति ॥") | |

अपि च ।
"मत्स्यण्डिकाः खण्डसिता गुणश्रेष्ठा
यथोत्तरम् ।
विमलाः शीतलाः स्निग्धा गुर्व्व्यः स्वादुतराः
सराः ॥
वृष्यास्तृषाक्षतक्षीणरक्तपित्तानिलापहाः।
मत्स्यण्डी ग्राहिणी बल्या कषाया वातजिद्-
गुरुः ॥
खण्डं गुरु सरं रुच्यं वातघ्नं बलपुष्टिदम् ।
सितोपला सरा गुर्व्वी वातघ्नी न कफप्रदा ॥"
इति पथ्यापथ्यविवेकः ॥ * ॥
अन्यच्च ।
"शर्करा ज्वरपित्तासृङ्मूर्च्छाछर्दितृषापहा ।
तृष्णाघ्नस्तवराजस्तु ज्वरदाहास्रपित्तनुत् ॥
लसिकाफाणितगुडखण्डमत्स्यण्डिकासिताः।
निर्म्मला लघवो ज्ञेयाः शीतवीर्य्या यथोत्तरम् ।
यथा यथैषां वैमल्यं भवेच्छैत्यं तथा तथा ॥"
इति राजवल्लभः ॥ * ॥
किञ्च ।
"खण्डन्तु सिकतारूपं सुश्वेतं शर्करा सिता ।
सिता सुमधुरा रुच्या वातपित्तास्रदाहजित्।
मूर्च्छाछर्दिज्वरान् हन्ति सुशीता शुक्र-
कारिणी ॥ * ॥
भवेन्मधुसिता शीता रक्तपित्तहरी लघुः ।
सितोपला सरा लघ्वी वातपित्तहरी हिमा ॥ *
॥
मधुजा शर्करा रूक्षा कफपित्तहरी गुरुः ।
छर्द्यतीसारतृड्दाहरक्तकृत्तुवरा हिमा ॥
यथा यथैषां नैर्म्मल्यं मधुरत्वं तथा तथा ।
स्नेहलाघवशैत्यानि रसत्वञ्च तथा तथा ॥"
इति भावप्रकाशः ॥ * ॥
उपला । कर्परांशः । (यथा, महाभारते ।
३ । ५५ । २ ।
"ततो वायुर्म्महान् शीघ्रो नीचैः शर्क्करवर्षणः
॥")
शर्करान्वितदेशः । रोगभेदः । शकलम् । इति
मेदिनी ॥ शर्करारोगस्य निदानचिकित्सादि-
र्मूत्रकृच्छ्रशब्दे द्रष्टव्यः ॥ (कूर्म्मचक्रस्य
पुच्छदेश-

सर्व्वबीजानि संस्थाप्य चतुर्दिक्षु
समन्ततः ।
सौवर्णमुखशृङ्गाणि मौक्तिकानयने
तथा ॥
गुडेन तु मुखं कार्य्यं जिह्वा पिष्टमयी
तथा ।
कम्बलं पट्टसूत्रेण कण्ठाभरणभूषितम्
॥
इक्षुपादां रौप्यखुरां नवनीतमयस्तनीम्
।
प्रशस्तपत्रश्रवणां सितचामरमूषिताम्
॥
पञ्चरत्नसमायुक्तां वस्त्रैराच्छादितां
तथा ।
गन्धपुष्पैरलंकृत्य ब्राह्मणाय कुटुम्बिने
॥
श्रोत्रियाय दरिद्राय साधुवृत्ताय धीमते
।
वेदवेदाङ्गविदुषे आहिताग्नेर्विशेषतः ।
अदुष्टाय प्रदातव्या न तु मत्सरिणे नृप
॥
अयने विषुवे पुण्ये व्यतीपाते शशिक्षये
।
एषु पुण्येषु कालेषु यदृच्छा वा
सदार्पयेत् ॥
सत्पात्रन्तु द्विजं दृष्ट्वा आगतं श्रोत्रियं
गृहे ।
तादृशाय प्रदातव्या पुच्छदेशे विगृह्य
च ॥
पूर्ब्बाभिमुखमास्थाय अथवा स
उदङ्मुखः ।
गां पूर्व्वाभिमुखीं कृत्वा वत्समुत्तरतो
न्यसेत् ॥
दानकाले तु ये मन्त्रास्तान् पठित्वा
समर्पयेत् ।
संपूज्य विधिवद्विप्रं मुद्रिकाकर्णभूषणः
॥
स्वशक्त्या दक्षिणां दत्त्वा
वित्तशाठ्यविवर्जितः ।

ईश्वर उवाच ।
"शर्करासप्तमीं वक्ष्ये तद्वत्
कल्मषनाशिनीम् ।
आयुरारोग्यमैश्वर्य्यं ययानन्तं प्रजायते ॥
माधवस्य सिते पक्षे सप्तम्यां शुक्लपक्षतः
॥
प्रातः स्नात्वा तिलैः शुक्लैः
शुक्लमाल्यानु-
लेपनैः ॥
स्थण्डिले पद्ममालिख्यं कुङ्कुमेन
सकर्णिकम् ।
तस्मै नमः सवित्रे तु गन्धपुष्पं निवेदयेत् ॥
स्थापयेदुदकुम्भञ्च शर्करापात्रसंयुतम् ।
शुक्लवस्त्रैरलंकृत्य शुक्लमाल्यानुलेपनैः ।
सुवर्णाश्वसमायुक्तं मन्त्रेणानेन पूजयेत् ॥
विश्ववेदमयो यस्मात् वेदवादीति पठ्यते ।
त्वमेवामृतसर्व्वस्वमतः कान्तिं प्रयच्छ मे
॥
पञ्चगव्यं ततः पीत्वा स्वपेत्तत् पार्श्वतः
क्षितौ ।
सौरसूक्तं स्मरन्नास्ते पुराणश्रवणेन च ॥
अहोरात्रे गते पश्चात् अष्टम्यां कृतनैत्यिकः
।
तत् सर्व्वं वेदविदुषे ब्राह्मणाय निवेदयेत् ॥
भोजयेच्छक्तितो विप्रान् शर्कराघृतपायसैः
।
भुञ्जीतातैललवणं स्वयमप्यथ वाग्यतः ॥
अनेन विधिना सर्व्वं मासि मासि समाचरेत्
॥
संवत्सरान्ते शयनं शर्कराकलसान्वितम् ।
सर्व्वोपस्करसंयुक्तं तथैकां गां पयस्विनीम्
॥
गृहञ्च शक्तितो दद्यात्
समस्तोपस्करान्वितम् ।
सहस्रेणाथ निष्काणां कृत्वा दद्यात् शतेन
वा ॥
दशभिर्व्वाथ निष्काणां तदर्द्धेनाथ शक्तितः
।

स्थितदेशविशेषः । यथा, मार्कण्डेये । ५८ । ३५ ।
"तारक्षुरा ह्यङ्गतकाः शर्कराः शाल्म-
वेश्मकाः ॥")

**शर्कराचलः**, पुं, (शर्करामयोऽचलः ।) दानार्थ-
कृत्रिमशर्करामयाचलविशेषः । अस्य विवरणं पर्व्वतशब्दे द्रष्टव्यम् ॥

**शर्कराधेनुः**, स्त्री, (शर्क्कराभिर्निर्म्मिता धेनुः ।)
दानार्थशर्करानिर्म्मितधेनुः । तद्विधिर्यथा, -- श्रीहोतोवाच ।
"तद्वत्स शर्कराधेनुं शृणु राजन् यथार्थतः ।
अनुलिप्ते महीपृष्ठे कृष्णाजिनकुशोत्तरे ॥
धेनुं शर्करया राजन् कृत्वा भारचतुष्टयम् ।
उत्तमा कथ्यते सद्भिश्चतुर्थांशेन वत्सकम् ॥
तदर्द्धं मध्यमा प्रोक्ता कनिष्ठा भारकेण तु ।
तद्वत् वत्सं प्रकुर्व्वीत चतुर्थांशेन तत्त्वतः ॥
अथ कुर्य्यादष्टशतैरूर्द्धं नृपतिसत्तम ।
स्वशक्त्यां कारयेद्धेनुं यथात्मानं न पीडयेत् ॥
हस्ते तु दक्षिणां दत्त्वा गन्धपुष्पसचन्दनाम् ॥
धेनुं समर्पयेत्तस्य मुखञ्च न विलोकयेत् ।
एकाहं शर्कराहारो ब्राह्मणस्त्रिदिनं वसेत् ॥
सर्व्वपापहरा धेनुः सर्व्वकामप्रदायिनी ।
सर्व्वकामसमृद्धस्तु जायते नात्र संशयः ।
दीयमानां प्रशंसन्ति ते यान्ति परमां गतिम् ॥
य इदं शृणुयाद्भक्त्या पठते वापि मानवः ।
मुच्यते सर्व्वपापेभ्यो विष्णुलोकं स गच्छति ॥"
इति वाराहे शर्कराधेनुमाहात्म्यनामाध्यायः ॥

**शर्कराप्रभा**, स्त्री, (शर्क्करेव प्रभा यस्याः ।) जिनानां
नरकविशेषः । यथा, --
"रत्नशर्करावालुकापङ्कधूमतमप्रभा ।
महातमप्रभा वेत्यधोऽधो नरकभूमयः ॥"
इति हेमचन्द्रः ॥

**शर्करार्व्वुदः**, पुं, क्ली, (शर्क्करावदर्व्वुदः ।) क्षुद्ररोग-
विशेषः । तल्लक्षणं यथा, --
"प्राप्य मांसं शिराः स्नायुं मेदः श्लेष्मा तथानिलः ।
ग्रन्थिं करोत्यसौ भिन्नो मधुसर्पिर्व्वसानिभम् ॥
स्रवत्यास्रावमत्यर्थं तत्र वृद्धिं गतोऽनिलः ।
मांसं विशोष्य ग्रथितां शर्क्करां जनयत्यतः ॥
दुर्गन्धक्लिन्नमत्यर्थं नानावर्णं ततः शिराः ।
श्रवन्ति सहसा रक्तं तं विन्द्याच्छर्करार्व्वुदम् ॥"
सुवर्णाश्वः प्रदातव्यः पूर्ब्बवन्मन्त्रवाचनम् ॥
वित्तशाठ्यं न कुर्वीत कुर्व्वन् दोषं समश्नुते ।
अमृतं पिबतो वक्त्रात् सूर्य्यस्यामृतबिन्दवः ॥
निपेतुर्ये तदुत्थामी शालिमुद्गेक्षवः स्मृताः ।
शर्करापरमस्तस्मादिक्षुसारोऽमृतात्मकः ॥
इष्टा रवेरतः पुण्या शर्कराहव्यकव्ययोः ।
शर्करासप्तमी चैषा वाजपेयफलप्रदा ॥
सर्व्वदुःखोपशमनीं पुत्रसन्ततिवर्द्धनीम् ।
यः कुर्य्यात् परया भक्त्या स परं ब्रह्म गच्छति ।
कल्पमेकं वसेत् स्वर्गे ततो याति महत् पदम् ॥
इदमनघं शृणोतियः स्मरेद्वा परिपठतीह दिवाकरस्य लोके ।
मतिमपि च ददाति सोऽपि दैवैरमरबधूजनमालया च पूज्यः ॥"
इति मात्स्ये ७२ अध्यायः ॥

**शर्करिकः**, त्रि, (शर्क्करा विद्यते अस्मिन् ।
"बुञ्छण्कठजिलेति ।" ४ । २ । ८० । इति कुमुदा-
दित्वात् ठक् ।) शर्करावान् । इति सिद्धान्त-
कौमुदी ॥

**शर्करिलः**, त्रि, (शर्क्करा विद्यते अस्मिन् । "देशे
लुबिलचौ च ।" ५ । २ । १०५ । इति इलच् ।)
शर्करावान् । इत्यमरः ॥

**शर्करी**, स्त्री, छन्दोविशेषः । नदी । मेखला । इति
हस्तलिखितमेदिनी ॥ लेखनी । इति धरणिः ॥
मुद्राङ्कितमेदिनीहेमचन्द्रयोः रेफशून्यद्विककार-
मध्यपाठः । अस्या विवरणं शक्करीशब्दे द्रष्टव्यम् ॥

शर्करा बालुकातुल्या । तच्चिकित्सा यथा, --
“मेरोऽर्व्वुदविधानेन
साधयेच्छर्करार्व्वुदम् ॥”
इति भावप्रकाशः ॥

**शर्करावान्**, [त्] त्रि, (शर्क्करा विद्यतेऽस्मिन् । “देशे-
लुबिलचौ च ।” ५ । २ । १०५ । इति मतुप् ।)
कर्परांशबहुलदेशः । तत्पर्य्यायः ।
शर्करा २
शर्करिलः ३ शार्करः ४ । इत्यमरः ॥

**शर्करासप्तमी**, स्त्री, (शर्क्कराया दानविधायिका
सप्तमी ।) वैशाखीशुक्ला सप्तमी । तत्र व्रतविधि-
र्यथा, --

**शर्करोदकं**, क्ली, (शर्करायुक्तमुदकम् ।) शर्करा-
युक्तजलम् । चिनिरपाना इति शरवत् इति
च
भाषा । यथा, --
"जलेन शीतलेनैव घोलिता शुभ्रशर्करा ।
एलालवङ्गकर्पूरमरिचैश्च समन्विता ॥
शर्करोदकनाम्नैतत् प्रसिद्धं विदुषां मुखे ।
शर्करोदकमाख्यातं शुक्रलं शिशिरं सरम् ॥
बल्यं रुच्यं लघु स्वादु वातपित्तास्रनाशनम्
।
मूर्च्छाच्छर्द्दितृषादाहज्वरशान्तिकरंपरम्
॥"
इति भावप्रकाशः ॥

**शर्द्धः**, पुं, (शृधु शब्दकुत्सायाञ्च + घञ् ।) अपा-
नोत्सर्गः । शृधधातोर्घञ्प्रत्ययेन
निष्पन्नमेतत् ॥
(तेजः । यथा, ऋग्वेदे । ४ । १ । १२ ।
"प्र शर्द्ध आर्त्त प्रथमं विपन्या ॥"
"शर्द्धस्तेजः ।" इति तद्भाष्ये सायणः ॥
समूहः । यथा, तत्रैव । १ । ६४ । १ ।
"वृष्णे शर्द्धाय सुमखाय वेधसे ।"
"शर्द्धाय समूहाय ।" इति तद्भाष्ये सायणः
॥
प्रसहनशीले, त्रि । यथा, तत्रैव । १ । ३७ ।
४ ।
"प्रवः शर्द्धाय घृष्वये त्वेष द्युम्नाय शुष्मिणे
।"
"शर्द्धाय प्रसहनशीलाय ।" इति तद्भाष्ये
सायणः ॥)

**शर्द्धंजहः**, पुं, (शर्द्धं जहातीति । हा + "एजेः
खश् ।" ३ । २ ॥ २८ । इत्यत्र ।
"वातशुनीति-
लशर्द्धेष्विति ।" खश् ।
"अरुर्द्विषदजन्तस्यति ।"
६ । ३ । ६७ । इति मुम् ।) माषः । यथा ।
शर्द्धं आर्द्रत्वं जहाति इति शर्द्धंजहो माषः ।
इति मुग्धबोधव्याकरणटीकायांदुर्गादासः
॥

"ततश्च नाम कुर्व्वीत पितैव दशमेऽहनि ।
देवपूर्ब्बं नराख्यं हि शर्म्मवर्म्मादिसंयुतम्
॥"
देवात् पूर्ब्बं नराख्यं नरनाम तच्च विशिष्टं
शर्म्म-
युतम् । एतच्च विप्रपरम् ।
"शर्म्मा देवश्च विप्रस्य वर्म्म त्राता च
भूभुजः ।
भूतिर्दत्तश्च वैश्यस्य दासः शूद्रस्य
कारयेत् ॥"
इति यमवचनात् ॥
अत्र चकारेण देवशर्म्मणोः समुच्चयः ।
अत्रापि
शर्म्माद्यन्ततामाह शातातपः ॥
"शर्म्मान्तं ब्राह्मणस्य स्याद्वर्म्मान्तं
क्षत्त्रियस्य च ।
धनान्तञ्चैव वैश्यस्य दासान्तं
चान्त्यजन्मनः ॥"
इति श्राद्धतत्त्वम् ॥
(तथा च विष्णुपुराणे । ३ । १० । ८ -- ९
।
"ततश्च नाम कुर्व्वीत पितैव दशमेऽहनि ।
देवपूर्व्वं नराख्यं हि शर्म्मवर्म्मादिसंयुतम् ॥
शर्म्मेति ब्राह्मणस्योक्तं वर्म्मेति क्षत्त्रसंश्रयम्
।
गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः
॥"
"दशमेऽहनि अतीते इति शेषः । तच्चाशौ-
चान्तोपलक्षणम् । अत्रैव कालान्तरमप्याह
।
यथा, --
'नामधेयं दशम्याञ्च केचिदिच्छन्ति पार्थिव
।
द्वादश्यामथवा रात्र्यां मासे पूर्णे तथापरे ॥'
इति ॥
देवपूर्व्वं कुलदेवतानामपूर्व्वकं
कुलदेवतासम्बन्धं
नाम कुर्य्यात् इति शङ्खोक्तेः । नराख्यं
पुरुषवाच-

शर्म्मवद्ब्राह्मणस्य स्याद्राज्ञो
रक्षासमन्वितम् ।
स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम्
।
मङ्गल्यं दीर्घवर्णान्तमाशीर्व्वादाभिधानवत्
॥'
शर्म्मवर्म्मप्रभृतीनि उत्तरपदानि
कार्य्याणीति
मनुटीकापि । स्त्रीनाम तु
यशोदादेवीत्यादि
स्त्रीणां दान्तमित्यपि पूर्व्वप्रतीकमात्रपरम्
।
वैश्यस्य गुप्तान्तमिति तु पराशरः । एवञ्च
दानादौ चैत्रशर्म्मणे ब्राह्मणायेत्यादि
स्वरूपं
वाक्यम् ॥" इति द्वैतनिर्णयः ॥ * ॥)

**शर्म्मरः**, पुं, वस्त्रभेदः । इति धरणिः ॥

**शर्म्मरा**, स्त्री, दारुहरिद्रा । इति धरणिः ॥

**शर्य्या**, स्त्री, रात्रिः । यथा, --
"त्रियामाशर्व्वरी शर्य्या क्षयणी क्षणदा क्षपा
।"
इति भरतधृतवाचस्पतिः ॥
(इषुः । यथा, ऋग्वेदे । १ । १४ । ४ ।
"शर्य्यामिसना मनुद्यून् ।" "शर्य्या इषवः
शर-
मय्यः । इति यास्कः ॥" इति तद्भाष्ये
सायणः ॥
अङ्गुलिः । यथा, तत्रैव । ९ । ११० । ५ ।
"शर्य्याभिर्नभरमाणोगभस्त्योः ।"
"शर्य्याभिरङ्गुलीभिः ।" इति तद्भाष्ये
सायणः ॥)

**शर्य्यातिः**, पुं, वैवस्वतमनुपुत्त्रः । तस्य पुत्त्र
आनर्त्तः ।
यथा, --
"आनर्त्तो नाम शर्य्यातिः सुकन्या नाम
दारिका ॥
आनर्त्तस्याभवत् पुत्त्रो रोचमाणः
प्रतापवान् ।

**शर्द्धनं**, क्ली, (शर्द्ध + ल्युट् ।) अधोवायुः । इति मनुटीकायां कल्लूक-भट्टः ॥ वातकर्म्म इति भाषा ॥

**शर्व्व**, हिंसे । गतौ । इति कविकल्पद्रुमः ॥ शर्व्वति । इति दुर्गादासः ॥

**शर्म्म**, [न्] क्ली, (शॄ + "सर्व्वधातुभ्यो मनिन् ।" उणा० ४ । १४४ । इति मनिन् ।) सुखम् ।
इत्यमरः ॥ (यथा, ऋग्वेदे । ४ । २५ । ४ ।
"तस्मा अग्निर्भारतः शर्म्म यं सत् ।"
"शर्म्म सुखम् ।" इति तद्भाष्ये सायणः ॥ यथाच
कथासरित्सागरे । ७८ । ४९ ।
"स्वामिभक्तस्तदेतस्य शर्म्मोपायमिमं शृणु ॥")
तद्वति, त्रि ॥ गृहम् । इति निघण्टुः । ३ । ४ ॥
यथाच ऋग्वेदे । ३ । १३ । ४ ।
"स नः शर्म्माणि वीतयेऽग्निर्यच्छतु शन्तमा ।"
"शर्म्माणि शर्म्मशब्दो गृहवाची छाया शर्म्मेति
तन्नामसु पाठात् ।" इति तद्भाष्ये सायणः ॥)

**शर्म्मा**, [न्] पुं, (शृणात्यशुभमिति । शॄ + "सर्व्व-धातुभ्यो मनिन् ।" उणा० ४ । १४४ । इति
मनिन् ।) ब्राह्मणस्योपाधिविशेषः । यथा, --
"शर्म्मन्नर्घ्यादिके कार्य्यं शर्म्मा तर्पणकर्म्मणि ।
शर्म्मणोऽक्षय्यकाले च पितॄणां दत्तमक्षयम् ॥"
शर्म्मन्नित्यनेन गोत्रसम्बन्धनामानि पितणां परि-
कल्पयन्नित्येकवाक्यतया शर्म्मान्तं नाम प्रतीयते ।
तथा च विष्णुपुराणम् ।
कम् । तत्र प्रान्त शर्म्मवर्म्मादिसंयुतम् । यथा,
सोमशर्म्मा इन्द्रवर्म्मा चन्द्रवर्म्मा चन्द्रगुप्तः
शिवदासः इत्यादि ।" इति तट्टीकायां स्वामी ॥
"तत्रादौ नाम निर्णयः ।
'शर्म्मेति ब्राह्मणस्योक्तं वर्म्मेति क्षत्त्रसंश्रयम् ।
गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥"
इत्यत्रेति पदस्वरसेन यद्यपि शर्म्मपदात्मकमेव
नामावगम्यते तथापि तावन्मात्रं न नाम किन्तु
तद्वन्नामेति निर्णीयते द्व्यक्षरं चतुरक्षरं इत्यादि
गृह्यदर्शनात् । एवञ्च हरिशर्म्मा नारायण-शर्म्मेत्यादि सिध्यति
शर्म्मपदमात्रात्मकत्वात् त-न्नाम्नश्चतुरक्षरता न स्यादेव । तथाच नारा-
यणादिपदशर्म्मपदाभ्यां निर्णीतमेव नाम द्व्यक्ष-
रादिकन्तु शर्म्मपूर्व्वप्रतीकमात्रमेव अतएव
दानादौ नामोच्चारणे चैत्रशर्म्मणे इत्येव
श्रूयते । गोभिलः ।
'शर्म्मन्नर्घ्यादिके कार्य्यं शर्म्मा तर्पणकर्म्मणि ।
शर्म्मणोऽक्षय्यकाले स्यादेवं कुर्व्वन्न मुह्यति ॥'
इदमप्युत्तरप्रतीकमात्रपरमुक्तगृह्येन सहैकमूल-
त्वात् । एतेन शर्म्म सुखनीयमिति कर्कदर्शनात् ।
शर्म्मपदमर्थपरं तेन शुभङ्करेत्याद्येव नामेत्यपास्तं
गोभिलविरोधात् । कर्कन्तु पूर्व्वप्रतीकमात्रपरम् ।
तेन शुभङ्करशर्म्मा भीमशर्म्मेत्यादि सिध्यति एवञ्च
आनर्त्तो नाम देशोऽभून्नगरी च कुशस्थली ॥"
इति मात्स्ये १२ अध्यायः ॥
(अस्य विशेषविवरणं भागवते । ८ । १३ ॥
एवं ९ । १ । अध्याये च द्रष्टव्यम् ॥)

**शर्व्व**, हिंसे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक-सेट् ।) शर्व्वति । इति दुर्गादासः ॥

**शर्व्वः**, पुं, (शृणाति सर्व्वाः प्रजाः संहरति प्रलये संहारयति वा भक्तानां पापानि । शॄ + "कॄ गॄ शॄ दॄ भ्यो वः ।" उणा० १ । १५५ । इति वः ।)
शिवः । इति हेमचन्द्रः ॥ (यथा, रघुवंशे । ११ । ९३ ।
"कतिचिदवनिपालः शर्व्वरीः शर्व्वकल्पः ॥")
दन्त्यसादिरप्ययम् । विष्णुः । यथा, --
"शर्व्वः सर्व्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः ।"
इति तस्य सहस्रनामस्तोत्रम् ॥

**शर्व्वरं**, क्ली, तमः । कन्दर्पः । इति संक्षिप्तसारो-णादिवृत्तिः ॥

**शर्व्वरी**, स्त्री, (शृणाति चेष्टामिति । शॄ + "कृगॄ-शॄवृचतिभ्यः ष्वरच् ।" उणा० २ । १२३ ।
इति ष्वरच् । षित्वात्ङीष् ।) रात्रिः । इत्यमरः ॥
(यथा, ऋग्वेदे । ५ । ५२ । ३ ।
"अतिस्कन्दन्ति शर्व्वरीः ॥")
योषित् । इति मेदिनी ॥ हरिद्रा । इति विश्वः ॥
सन्ध्या । इति संक्षिप्तसारोणादिवृत्तिः ॥

**शर्व्वला**, स्त्री, तोमरास्त्रम् । इत्यमरटीकायां रायमुकुटः ॥ दन्त्यसादिरप्ययम् ॥

**शर्व्वाणी**, स्त्री, (शर्व्वस्य भार्य्या । "इन्द्रवरुण-भवेति ।" ४ । १ । ४९ । इति ङीष् ।)
पार्व्वती ।

| | हव्यकव्ये चैतादृशमेव नाम तेषां प्रयोज्यम्<br>।<br>अपवादकाभावादिति। अत्रैव मनुः ।<br>‘मङ्गल्यंब्राह्मणस्य स्यात् क्षत्त्रियस्य<br>बलान्वितम्।<br>वैशस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम्॥ | |
|---|---|---|

इति हेमचन्द्रः ॥ (यथा, कथासरित्सागरे
।
१ । ५८ ।
“निपत्य पादयोस्ताभ्यां जयया सह
बोधिता ।
शापान्तं प्रति शर्व्वाणी शनैर्व्वचनमब्रवीत्
॥”)
दन्त्यसादिरप्ययं शब्दः ॥

**शर्शरीकः**, पुं, (शॄ + “शॄपॄवृञां द्वेरुक् चाभ्या-

सस्य ।” उणा० ४ । १९ । इति ईकन्
द्वित्वमभ्यासस्य
रुक् च ।) हिंस्रः । खलः । इत्युणादिकोषः
॥
अश्वः । मङ्गलाभरणम् । अग्निः । इति
संक्षिप्त-
सारोणादिवृत्तिः ॥

**शल**, वेगे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

सक०-सेट् ।) शलति । इति दुर्गादासः ॥

**शल**, क ङ श्लाघे । इति कविकल्पद्रुमः ॥ (चुरा०-

आत्म०-सक०-सेट् ।) क ङ, शालयते
पण्डितं
धीरः । इति दुर्गादासः ॥

**शल**, ङ चलने । स्तृतौ । इति कविकल्पद्रुमः ॥

(भ्वा०-आत्म०-अक०-सक०-च-सेट् ।)
ङ, शलते ।
चलनं कम्पः । स्तृतिरिह संवरणम् । इति
दुर्गादासः ॥

**शल**, ज गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) ज, शालः शलः ।
इति
दुर्गादासः ॥

**शलं**, क्ली, (शल + “ज्वलितिकसन्तेभ्यो णः ।”
३ ।

१ । १४० । इति णः ।) शल्लकीलोम ।
सजारु-

(असुरविशेषः । यथा, हरिवंशे । ३ । ८८ ।
“शरभः शलभश्चैव विप्रचित्तिश्च वीर्य्यवान् ॥”)

**शललं**, क्ली, (शल चलनसंवरणयोः + वृशादित्वात्

कलः ।) शलम् । इत्यमरः ॥

**शलली**, स्त्री, (शलल + गौरादित्वाज्जातित्वाद्वा

ङीष् ।) शलम् । इत्यमरः ॥ शली । इति राज-
निर्घण्टः ॥

**शलाका**, स्त्री, (शल + “बलाकायदश्च ।” उणा०

४ । १४ । इति आकः । स्त्रियां टाप् ।) शल्यम् ।
मदनवृक्षः । शारिका । शल्लकी । छत्रादि-
काष्ठी । (यथा, गुरुगीतायाम् ।
“अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥”)
शरः । इति मेदिनी ॥ आलेख्यकूर्च्चिका । इति
हेमचन्द्रः ॥ अस्थि । इति शब्दचन्द्रिका ॥

**शलाकापरि**, व्य, शलाकाक्रीडायां पराजयः ।

यथा । “अक्षशलाकासंख्याः परिणा ।” २ । १ ।
१० ।
द्यूतव्यवहारे पराजये एवायं समासः । अक्षे
विपरीतं वृत्तम् । अक्षपरि । एवं शलाका-
परि । एकपरि । इति सिद्धान्तकौमुदी ॥
अपि च । नन्वेकस्याक्षस्य शलाकाया वा
द्यूतेऽन्यथापातनमित्यर्थे अक्षपरि शलाकापरि
इत्यव्ययीभावेऽव्याप्तिस्तयोरव्ययगर्भत्वेऽपि
अव्यय-
पूर्व्वत्वाभावात् । इति शब्दशक्तिप्रकाशिका ॥

**शलाकापुरुषाः**, पुं, बौद्धानां त्रिषष्टिदैवपुरुषाः ।

तत्र द्वादश चक्रवर्त्तिनः । चतुर्व्विंशतिर्जिनाः ।
नव वासुदेवाः । नव बलदेवाः । नव प्रति-
वासुदेवाश्च । यथा, --
“यः सर्व्वमण्डलस्येशो राजसूयञ्च योऽयजत् ।
चक्रवर्त्ती सार्व्वभौमस्ते तु द्वादश भारते ॥
आर्षभिर्भरतस्तत्र सगरस्तु सुमित्रभूः ।
मघवा वैजयिरथाश्वसेननृपनन्दनः ॥
सनत्कुमारोऽथ शान्तिकुन्थुररोजिना अपि ।
शुभूमस्तु कार्त्तवीर्य्यः पद्मः पद्मोत्तरात्मजः ॥

**शलाटुः**, त्रि, अपक्वफलम् । इत्यमरः । २ ।
४ । १५ ॥

(यथा, सुश्रुते । १ । ४३ ।
“मदनशलाटु चूर्णान्येवं वा
वकुलरम्यकोप-
युक्तानि मधुलवणयुक्तानीति ॥”)

**शलाटुः**, पुं, मूलविशेषः । इत्युणादिकोषः ॥
विल्वः ।

इति राजनिर्घण्टः ॥

**शलाभोलिः**, पुं, उष्ट्रः । इति हेमचन्द्रः ॥

**शलालु**, क्ली, सुगन्धिद्रव्यविशेषः । इति
सिद्धान्त-

कौमुदी ॥

**शलालुकः**, त्रि, शलालुना क्रीतं वस्तु । यथा
।

“शलालुनोऽन्यतरस्याम् ।” ४ । ४
। ५४ । इति
पक्षे ठक् । शलालुकः । शलालुकी ।
शला-
लुकः । शालालुकी । शलालु
सुगन्धिद्रव्य-
विशेषः । इति सिद्धान्तकौमुदी ॥

**शली**, स्त्री, (शलं शल्लकीलोम अस्त्यस्या
इति ।

शल + अच् । ङीष् ।)
स्वल्पशल्यकः । तत्-
पर्य्यायः । शलली २ श्वावित् ३ ।
अस्य मांस-
गुणाः । गुरुत्वम् । स्निग्धत्वम् ।
शीतलत्वम् ।
कफपित्तनाशित्वञ्च । इति
राजनिर्घण्टः ॥

**शल्कं**, क्ली, (शल चलने स्तृतौ +
“इण्भीका-

पाशल्यतिमर्च्चिभ्यः कन् ।” उणा०
३ । ४३ ।
इति कन् ।) खण्डम् । वल्कलम् ।
इत्यमरः ॥

कांटा इति भाषा । तत्पर्य्यायः । शलली
२
शललम् ३ । इत्यमरः ॥

**शलः**, पुं, शललम् । भृङ्गी । क्षेत्रभेदः । ब्रह्मा ।

इति मेदिनीशब्दरत्नावल्यौ ॥ कुन्तास्त्रम्
। इति
त्रिकाण्डशेषः ॥ उष्ट्रः । इति हेमचन्द्रः ॥
(वासुकिवंशीयसर्पविशेषः । यथा,
महाभारते ।
१ । ५७ । ५ ।
"कोटिशो मानसः पूर्णः शलः पालो
हलीमकः ॥"
शन्तनुराजपुत्त्रः । यथा, भागवते । ९ ।
२२ । १८ ।
"शलश्च शन्तनोरासीत् गङ्गायां भीष्म
आत्म-
वान् ।"
शल्यराजः । यथा, भागवते । १ । १५ ।
१६ ।
"नमृत्रिगर्त्तशलसैन्धववाह्लिकाद्यैः ॥"
कंसामात्यः । यथा, तत्रैव । १० । ३६ ।
२१ ।
"ततो मुष्टिकचाणूरशलतोशलकादिकान्
॥")

**शलकः**, पुं, मर्कटः । इति त्रिकाण्डशेषः ॥
माकड्सा

इति भाषा ॥

**शलङ्गः**, पुं, लोकपालः । लवणविशेषः । इत्यु-

णादिकोषः ॥

**शलभः**, पुं, (शल + "कृशॄ शलिकलिगर्द्दिभ्यो-

ऽभच् ।" उणा० ३ । १२२ । इति अभच्
।)
कीटविशेषः । फडिं इति पङ्गपाल इति च
भाषा । तत्पर्य्यायः । पतङ्गः २ । इत्यमरः
॥
पत्राङ्गः ३ पत्राङ्कः ४ । इति शब्दरत्नावली
॥
स तु ईतिविशेषः । यथा, --

हरिषेणो हरिसुतो जयो विजयनन्दनः ।
ब्रह्मसूनुर्ब्र ह्मदत्तः सर्व्वे चेक्ष्वाकुवंशजाः ॥
प्राजापत्यस्त्रिपृष्ठोऽथ द्विपृष्ठो ब्रह्मसम्भवः ।
स्वयम्भू रुद्रतनयः सोमभूः पुरुषोत्तमः ॥
शैविः पुरुषसिंहोऽथ महासीरः समुद्भवः ।
स्यात् पुरुषपुण्डरीकौ दत्तोऽग्निः सिंहनन्दनः ॥
नारायणो दाशरथिः कृष्णस्तु वसुदेवभूः ।
वासुदेवा अमी कृष्ण नव शुक्ला बलास्त्वमी ॥
अचलो विजयो भद्रः सुप्रभश्च सुदर्शनः ।
आनन्दो नन्दनः पद्मो रामो विष्णुद्विषस्त्वमी ॥
अश्वग्रीवस्तारकश्च मेरको मधुरेव च ।
निशुम्भवलिप्रह्लादलङ्केशमगधेश्वराः ।
जिनः सह त्रिषष्टिः स्युः शलाकापुरुषा अमी ॥"
इति हेमचन्द्रः ॥

**शलाटः**, पुं, शकटपरिमाणम् । यथा, --

"तुलापलशतं तासां विंशत्या भार आचितः ।
शकटः शाकटीनश्च शलाटस्ते दशाचितः ॥"
इति हेमचन्द्रः ॥

मत्स्यत्वक् । आँइस इति भाषा ।
यथा, --
"शल्कं स्यात् वल्कले खण्डे
शल्कन्तु मत्स्य-
वल्कले ॥"
इति भरतधृतकोषः ॥
(यथा, महाभारते । १२ । ३६ ।
२३ ।
"अभक्ष्या ब्राह्मणैर्मत्स्याः शल्कैर्ये
वै विव-
र्जिताः ॥")

**शल्कलं**, क्ली, मत्स्यवल्कलम् । वृक्षत्वक् ।
शल-

धातोः कलच्प्रत्ययेन निष्पन्नमेतत्
। इति
सिद्धान्तकौमुदी ॥

**शल्कली**, [न्] पुं, (शल्कलमस्यास्तीति ।
शल्कल +

इनिः ।) मत्स्यः । इति
शब्दरत्नावली ॥

**शल्की**, [न्] पुं, (शल्कमस्यास्तीति । शल्क
+

इनिः ।) मत्स्यः । इति हेमचन्द्रः ॥

**शल्पदा**, स्त्री, मेदा । इति राजनिर्घण्टः ॥

**शल्पपर्णिका**, स्त्री, मेदा । इति राजनिर्घण्टः
॥

**शल्भ**, ङ कत्थने । इति कविकल्पद्रुमः ॥
(भ्वा०-

आत्म०-सक०-सेट् ।) ङ, शल्भते
। कत्थनं
प्रशंसा । इति दुर्गादासः ॥

**शल्मलिः**, पुं, शाल्मलीवृक्षः । (यथा,
वाजसनेय-

संहितायाम् । २३ । १३ ।
"शाल्मलिर्वृद्ध्या ।"
"शाल्मलिर्वृक्षविशेषो वृद्ध्या
त्वामवतु शल्मलि-
र्वनस्पतीनां वर्षिष्ठं वर्द्धते इति श्रुतेः
।" इति
तद्भाष्यम् ॥)

“अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः ।
प्रत्यासन्नाश्च राजानः षडेते ईतयः स्मृताः ॥”
इति ज्योतिस्तत्त्वम् ॥

**शल्मली**, स्त्री, शाल्मलिवृक्षः । यथा, --

“शल्मलिः स्यात् शाल्मलिश्च शाल्मली शल्मली तथा ॥”
इति भरतद्विरूपकोषः ॥

**शल्यं**, क्ली, (शलति चलतीति । शल + “सानसि-
वर्णसिपर्णसीति ।” उणा० ४ । १०७ । इति

यः ।) क्ष्वेडः । इषुः । (यथा, रघुः ।
९ । ७५ ।
“शल्यप्रोतं प्रेक्ष्य सकुम्भं मुनिपुत्त्रं
तापादन्तःशल्य इवासीत् क्षितिपोऽपि
॥”)
तोमरम् । इति मेदिनी ॥ वंशकन्विका ।
इति
विश्वः ॥ दुःसहम् । दुर्व्वाक्यम् । इति
शब्द-
रत्नावली ॥ पापम् । इति त्रिकाण्डशेषः
॥
अस्थि । यथा । अथ शल्योद्धारविधिः ।
“सुनिश्चितां मन्दिरभूमिमादौ
निखाय तोयावधि यत्नतस्ताम् ।
कुर्य्याद्विशल्यामथवा नृमानं
ज्ञात्वाथवा प्रश्नवशाद्विधिज्ञः ॥
दूर्व्वाप्रबालाक्षतपुष्पपाणिः
शुचिः शुचिं दैवविदं समेत्य ।
पृच्छेद्विनीतो मधुरस्वरेण
शल्यस्य तत्त्वं भवने तदीशः ॥
ततः प्रश्नादिमो वर्णः सन्धार्य्यो
यत्नतोऽथवा ।
क्रमात् पुष्पापगादेव फलानां
ब्राह्मणादितः ॥
प्रणवो धरणी धारिणी करौ च तदनन्तरम्
।
न भूत्यै नम इत्येष मन्त्रो वह्निप्रियान्तकः
॥”
वह्निप्रिया स्वाहा ।
“मन्त्रेणानेन कठिनीमभिमन्त्र्य
विभाजयेत् ।
नवधा सदनक्षेत्रं तया पश्चाद्विलेखयेत् ॥
व-क-च-त-ए-हाः श-प-षा नव चेत् प्रश्ना
क्षराणि जायन्ते ।
प्रागादिकोष्ठे नवके वर्णास्ते
शल्यमाख्यान्ति ॥
प्रश्ने वकारः पुरतो नरास्थि
ब्रवीति शल्यं मरकप्रदायि ।
क्षौणीशदण्डोरगहेतुमृत्यु-
शल्यं त्वपनयेत्तत्र प्रासादे भवनेऽपि वा
॥”
इति ज्योतिस्तत्त्वम् ॥ * ॥
सप्त शल्यानि यथा, --
“नृपो न हरिसेवको व्ययधनो न
कृष्णार्पकः
कविर्न मुरजित् कविः श्रुतगुरुर्न सद्वैष्णवः
।
गुणी न भगवत्परो रसिकधीर्न कृष्णाश्रयः
स न व्रजजनानुगो जगति सप्त शल्यानि च
॥”
इति पाद्मोत्तरखण्डे १०० अध्यायः ॥

**शल्यः**, पुं, (शल गतौ + यः ।) मदनवृक्षः ।
श्वावित् । इत्यमरः ॥ (यथा, भागवते । ८
। २ । २२ ।
“वृका वराहा महिषर्क्षशल्या
गोपुच्छशालावृकमर्क्टाश्च ॥”)
नृपभेदः । स तु युधिष्ठिरमातुलः । (अयं
हि
दुर्य्योधनेन कापट्यात् वशीकृतः
कुरुपाण्डवयुद्धे
दुर्य्योधनपक्षं समाश्रयत् । यथा,
महाभारते ।
१ । २ । २१६ ।
“मद्रराजञ्च राजानमायान्तं पाण्डवान्
प्रति ।
उपहारैर्व्वञ्चयित्वा वर्त्मन्येव सुयोधनः ॥
वरदं तं वरं वव्रे साहाय्यं क्रियतां मम ।
शल्यस्तस्मै प्रतिश्रुत्य जगामोद्दिश्यं
पाण्डवान् ॥”
कर्णार्ज्जुनयोर्द्वैरथयुद्धे शल्यस्य कर्णतेजो
भङ्ग-
करणे प्रतिज्ञा । यथा, तत्रैव । ५ । ८ ।
३७-४५ ।
युधिष्ठिर उवाच ।
“सुकृतं ते कृतं राजन् !
प्रहृष्टेनान्तरात्मना ।
दुर्य्योधनस्य यद्वीर त्वया वाचा प्रतिश्रुतम्
॥

**शल्यः**, पुं, क्ली, शस्त्रविशेषः । शेल इति भाषा ।
तत्पर्य्यायः । शङ्कुः २ । इत्यमरः ॥
दीर्घायुधः
३ शलः ४ कुन्तः ५ विषाङ्कुरः ६ । इति
त्रिकाण्डशेषः ॥

**शल्यकः**, पुं, (शल्य इव । शल्य + इवार्थे कन् ।)
मदनवृक्षः । इति शब्दरत्नावली ॥ शल्लकी-
जन्तुः । इति राजनिर्घण्टः ॥ (यथा, मनुः ।
५ । १८ ।
“श्वाविधं शल्यकं गोधां
खड्गकूर्म्मशशांस्तथा ।
भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः ॥”)

**शल्यकण्ठः**, पुं, (शल्यं तद्वल्लोम कण्ठेऽपि यस्य ।)
शल्लकी । इति शब्दचन्द्रिका ॥

**शल्यलोम**, [न्] क्ली, (शल्यवत् लोम ।) शलली ।
इति राजनिर्घण्टः ॥

**शल्यारिः**, पुं, (शल्यस्य अरिस्तन्नाशकत्वात् ।)
युधिष्ठिरराजः । इति हेमचन्द्रः ॥

**शल्ल**, गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) शल्लकी । इति दुर्गादासः ॥
सौत्रधातुरयम् ॥

**शल्लं**, क्ली, त्वक् । इति शब्दरत्नावली ॥

**शल्लः**, पुं, भेकः । इति शब्दरत्नावली ॥

**शल्लकं**, क्ली, (शल्लमेव । स्वार्थे कन् ।) त्वक् । इति
शब्दरत्नावली ॥

**शल्लकः**, पुं, शोणवृक्षः । इति जटाधरः ॥
(शल्लकीजन्तुः । यथा, याज्ञवल्क्ये । १ ।
१७७ ।
“भक्ष्याः पञ्चनखाः सेधा
गोधाकच्छपशल्लकाः ।
शशाश्च मत्स्येष्वपि हि सिंहतुण्डकरोहिताः
॥”)

**शल्लकी**, स्त्री, पशुविशेषः । शजारु इति वङ्ग-

प्रदं ककारः खरशल्यमग्नौ ॥
याम्यां चकारः प्लवगास्थि वेश्म
प्रभोर्विनाशं प्रकरोति शल्यम् ।
रक्षोदिशि श्वास्थिगृहस्थितानां
महद्भयं वक्ति सुनिश्चितं तः ॥
एः पाशिदिश्यस्थि शिशोर्ब्रवीति
मृत्युं प्रवासाद्गृहमेव शल्यम् ।
हो वायुकोणे नररूपमस्थि
दारिद्र्यमित्रक्षयकृद्विधत्ते ॥"
धनपदिशि शकारः प्राह विप्रास्थि वित्त-
क्षयकृदथ पकारो वक्ति ऋक्षास्थि शम्भौ
।
तदिह कुलविनाशं गोधनानाञ्च हानिं
वितरति गृहनाथस्यापि गुप्तस्य देवैः ॥
यो मध्यभागे भसितं कपालं
कालायसं चाह कुलक्षयाय ।
यत्नादपास्यान्यधना प्रमाणं
सर्व्वत्र तथ्यं कथयामि शल्ये ॥
इन्द्ररक्षोजलेशाने शल्यं सार्द्धकरे कटौ ।
वह्न्यन्तककुबेरेषु पुरुषे मध्यवातयोः ॥"
देवीपुराणम् ।
"पुरुषाधः स्थितं शल्यं न गृहे दोषदं
भवेत् ।
प्रासादे दोषदं शल्यं
भवेद्यावज्जलान्तकम् ॥
गृहारम्भेऽतिकण्डूतिः स्वाम्यङ्गे यदि
जायते ।

एकं त्विच्छामि भद्रन्ते क्रियमाणं महीपते
।
राजन्नकर्त्तव्यमपि कर्त्तुमर्हसि मातुल ॥
मम त्ववेक्षया वीर शृणु विज्ञापयामि ते ।
भवानिह महाराज वासुदेवसमो युधि ॥
कर्णार्ज्जुनाभ्यां संप्राप्ते द्वैरथे राजसत्तम ।
कर्णस्य भवता कार्य्यं सारथ्यं नात्र
संशयः ॥
तत्र पाल्योऽर्जुनो राजन् यदि
मत्प्रियमिच्छसि ।
तेजोवधश्च ते कार्य्यः
सौतेरस्मज्जयावहः ।
अकर्त्तव्यमपि ह्येतत् कर्त्तुमर्हसि मातुल ॥
शल्य उवाच ।
शृणु पाण्डव भद्रं ते यद्ब्रवीति दुरात्मनः ।
तेजोवधनिमित्तं मां सूतपुत्त्रस्य रुंयुगे ॥
अहं तस्य भविष्यामि संग्रामे सारथिर्ध्रुवम्
।
वासुदेवेन हि समं नित्यं मां स हि मन्यते
॥
तस्याहं कुरुशार्दूल प्रतीपमहितं वचः ।
ध्रुवं सङ्कथयिष्यामि योद्धुकामस्य संयुगे ॥
यथा च हृतदर्पश्च हृततेजाश्च पाण्डव ।
भविष्यति सुखं हन्तुं सत्यमेतद्ब्रवीमि ते
॥"
युधिष्ठिरस्तु एनं हतवान् । एतद्वृत्तान्तस्तु
महाभारते शल्यपर्व्वणि १७ अध्याये
द्रष्टव्यः ॥)
सीमा । शलाका । इति हेमचन्द्रः ॥
विल्व-
वृक्षः । मत्स्यभेदः । इति राजनिर्घण्टः ॥
* ॥
शल्यनिःसरणौषधं यथा, --
"रुद्र लाङ्गलिकामूलं हिज्जलस्य तथैव
च ।
तेन व्रणमुखं लिप्तं शल्यो निःसरति
व्रणात् ।
चिरकालप्रविष्टोऽपि तेन मार्गेण शङ्कर ॥"
इति गारुडे १९३ अध्यायः ॥

भाषा । साहिल इति हिन्दीभाषा ॥ तत्-
पर्य्यायः । श्वावित् २ शलका ३ शल्यः ४ ।
इति जटाधरः ॥ क्रकचपादः ५ छेदारः ६ ।
इति शब्दरत्नावली ॥ शल्यकः ७ शल्यमृगः
८
वज्रशल्यः ९ विलेशयः १० । अस्या मांस-
गुणाः ।
"शल्यमांसं गुरुस्निग्धं शीतलं कफपित्तजित्
॥"
इति राजनिर्घण्टः ॥
भावप्रकाशोक्तगुणाः विलेशयशब्दे द्रष्टव्याः
॥
वृक्षविशेषः । (यथा, रामायणे । २ । ५५ । ९
।
"क्रोशमात्रं ततो गत्वा नीलं प्रेक्ष्य च काननम्
।
शल्लकीवदरीमिश्रं राम वन्यैश्च यामुनैः ।
स पन्थाश्चित्रकूटस्य गतस्य बहुशो मया
॥")
तत्पर्य्यायः । गजभक्ष्या २ सुवहा ३ सुरभिः
४
रसा ५ महेरणा ६ कुन्दुरुकी ७ ह्लादिनी ८ ।
इत्यमरः ॥ गजभक्षा ९ सुरभी १० महेरुणा
११
महारणा १२ ह्लादिनी १३ सिल्लकी १४
सल्लकी १५ । इति भरतः ॥ सुरभीरसा १६
शिल्लकी १७ । इति टीकान्तरम् ॥ सिह्लकी
१८
सिह्लभूमिका १९ । इति शब्दरत्नावली ॥
अश्व-
सूत्री २० कुन्ती २१ । इति जटाधरः ॥

**शल्लकीद्रवः**, पुं, सिह्लकः । इति जटाधरः ॥

**शल्वः**, पुं, शाल्वदेशः । इत्युणादिकोषः ॥

**शाल**, ङ ऋ कत्थने । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) कत्थने प्रशंसायाम् । ङ,
शालते गुणिनं गुणी । ऋ, अशशालत् ।
इति दुर्गादासः ॥

**शालः**, पुं, (शल्यते प्रशंस्यते इति । शाल +
घञ् ।) मत्स्यभेदः । गजाड इति ख्यातः ।
प्राकारः । वृक्षविशेषः । तत्पर्य्यायः । सर्जः २
कार्ष्यः ३ अश्वकर्णकः ४ शस्यसम्बरः ५ । इत्य-
मरः ॥ शङ्कुवृक्षः ६ । इति रत्नमाला ॥ नद-
भेदः । इति शब्दरत्नावली ॥ शालनृपः । स तु
शालिवाहनराजः । इति विश्वः ॥ वृक्षमात्रम् ।
इति राजनिर्घण्टः ॥ * ॥ शालो झसे धीवर एव
दाश इत्युष्मभेदात्तालव्यादिः । दन्त्यादिश्च ।
कैवर्त्त इव बद्धराजीवोत्पलसालो वसन्तकाल
आजगाम । इति वासवदत्तश्लेषात् । कैवर्त्त-
पक्षे सालो मत्स्यविशेषः । वसन्तपक्षे सालस्य
पुष्पं सालम् । इति भरतः ॥

**शालग्रामः**, पुं, विष्णुमूर्त्तिविशेषः । स च गण्ड-
क्युद्भववज्रकीटकृतचक्रयुक्तशिला द्वारकोद्भव-
तादृशशिला च । तस्य माहात्म्यलक्षणादि यथा, --
"प्रसङ्गात् कथयिष्यामि शालग्रामशिलार्च्चनम् ।
निष्कामो मुक्तिमाप्नोति मूर्त्तिं ध्यायन् स्तुवन्
सगदाब्जाविशङ्खाय नमः श्रीकृष्णमूर्त्तये ॥
शालग्रामशिलाद्वारगतलग्नद्विचक्रधृक्।
शुक्लाभाख्यश्च सोऽव्याद्वः सदैव श्रीगदाधरः ॥
लग्नद्विचक्रो चक्राभः पूर्व्वभागस्तु पुष्कलः ।
सङ्कर्षणोऽथ प्रद्युम्नः सूक्ष्मचक्रस्तु पीतकः ॥
स दीर्घः स शिरश्छिद्रो योऽनिरुद्धस्तु वर्त्तुलः ।
नानाहारद्विरेखश्च अथ नारायणोऽसितः ॥
मध्ये गदाकृता रेखा नाभिपद्ममहोन्नतः ।
पृथुचक्रो नृसिंहो वः कपिलोऽव्यात्त्रिबिन्दुकः ॥
अथवा पञ्चबिन्दुस्तत्पूजनं ब्रह्मचारिणः ।
वराहशक्तिलिङ्गोऽव्याद्विषमद्वयचक्रकः॥
नीलस्त्रिरेखः स्थूलोऽथ कूर्म्ममूर्त्तिः स्वबिन्दुमान् ।
कृष्णः सवर्त्तुलावर्त्तः पाण्डरोन्नतपृष्ठकः ॥
श्रीधरः पञ्चरेखोऽव्याद्वनमालागदाङ्कितः।
वामनो वर्त्तुलो नाम वामचक्रः सुरेश्वरः ॥
नानावर्णोऽनेकमूर्त्तिर्नागभोगी त्वनन्तकः ।
स्थूलो दामोदरो नीलो मध्ये चक्रः सुनीलकः ॥
संकीर्णद्वारको वोऽव्यादथ ब्रह्मा सुमोहितः ।
सदीर्घरेखा शुषिर एकचक्राम्बुजः पृथुः ॥
प्रत्युच्छिद्रः स्थूलचक्रः कृष्णोऽबिन्दुश्च बिन्दुमत् ।
हयग्रीवोऽङ्कुशाकारः पञ्चरेखः ममन्ततः ॥
वैकुण्ठोऽमलवद्भाति एकचक्रात्मकोऽसितः ।
मत्स्यो दीर्घाम्बुजाकारो द्वाररेखस्तु पाण्डरः ॥
वामचक्रो दक्षरेखः श्यामो वोऽव्यात्त्रिविक्रमः ।
शालग्रामे द्वारकायां स्थिताय गदिने नमः ॥
एकेन लक्षितो वोऽव्याद्गदाधारी सुदर्शनः ।
लक्ष्मीनारायणो द्वाभ्यां त्रिभिर्मूर्त्तिस्त्रिविक्रमः ॥
चतुर्भिश्च चतुर्व्यूहो वासुदेवश्च पञ्चभिः ।
यथा तथा हरिर्व्यापी शालग्रामे प्रकाशते ॥
प्रत्यहं द्वादश शिलाः शालग्रामस्य योऽर्च्चयेत् ।
द्वारवत्याः शिलायुक्ताः स वैकुण्ठे महीयते ॥
शालग्रामशिलायान्तु गह्वरं लक्ष्यते नरः ।
पितरस्तस्य तिष्ठन्ति तृप्ताः कल्पान्तरं दिवि ॥
शालग्रामशिला यत्र यत्र द्वारवतीशिला ।
मृते विष्णुपुरं याति कृतार्थं योजनत्रयम् ॥
जपपूजा च होमश्च सर्व्वं कोटिगुणं भवेत् ।
मनस्कामः सदाभीष्टं क्रोशमात्रं समन्ततः ॥
कीकटेऽपि मृतो याति वैकुण्ठभवनं नरः ।
शालग्रामशिलायां यो मूल्यमुत्पादयेन्नरः ॥
विक्रेता चानुमन्ता च यः परीक्षानुमोदकः ।
सर्व्वे ते नरकं यान्ति यावदाहूतसंप्लवम् ।
अतस्तं वर्ज्जयेद्देवि ! हरिविक्रयणक्रयम् ।
शालग्रामोद्भवो देवो यो देवो द्वारकोद्भवः ।
उभयोः सङ्गमो यत्र मुक्तिस्तत्र न संशयः ॥
द्वारकोद्भवः शुक्लश्च बहुचक्रेण चिह्नितः ।
चक्रमासीत् शिवाकारचित्स्वरूपनिरञ्जनम्॥
नमोऽस्त्वोङ्काररूपाय सदानन्दस्वरूपिणे ।
शालग्रामे महाभाग भक्तस्यानुग्रहं कुरु ।
त्वया युतस्य धर्म्मस्य ऋणग्रस्तस्य मे प्रभो ॥"

जपन् ॥
शङ्खचक्रगदापद्मं केशवाख्यो गदाधरः ।
साब्जकौमोदकीचक्रशङ्खीनारायणो विभुः
॥
स च शङ्खाब्जपदो माधवः श्रीगदाधरः ।
गदाब्जशङ्खचक्री वा गोविन्दाख्यो गदाधरः
॥
पद्मशङ्खादिगदिने विष्णुशङ्खाय वै नमः ।
सशङ्खाब्जगदाचक्रमधुसूदनमूर्त्तये॥
नमो गदासिचक्राब्जयुक्तत्रैविक्रमाय च ।
साविकौमोदकीपद्मशङ्खवामनमूर्त्तये॥
शङ्खाब्जचक्रगदिने नमः श्रीधरमूर्त्तये ।
हृषीकेश साविगदाशङ्खपद्मिन्नमोऽस्तुते ॥
साब्जशङ्खगदाचक्रपद्मनाभस्वरूपिणे।
दामोदर शङ्खगदाचक्रपद्मिन्नमोऽस्तुते ॥
साविशङ्खगदाब्जाय वासुदेव नमो नमः ।
शङ्खाब्जचक्रगदिने दमः सङ्कर्षणाय च ॥
शङ्खचक्रगदाब्जाय धृतप्रद्युम्नमूर्त्तये ।
नमोऽनिरुद्धाय गदाशङ्खाब्जवरधारिणे॥
साब्जशङ्खगदाचक्रपुरुषोत्तममूर्त्तये।
नमोऽधोक्षजरूपाय गदाशङ्खविधारिणे॥
नृसिंहमूर्त्तये पद्मगदाशङ्खविधारिणे।
पद्माविशङ्खगदिने नमोऽस्त्वच्युतमूर्त्तये ॥
सशङ्खचक्राब्जगदं जनार्द्दनमिहो नमः ।
उपेन्द्रं गदिनं साविपद्मशङ्ख नमोऽस्तु ते ॥
सचक्राब्जगदाशङ्खयुक्ताय हरिमूर्त्तये ।

प्रद्युम्नः षड्भिरेवाव्यात् सङ्कर्षण इतः
स्तुतः ॥
पुरुषोत्तमोऽष्टभिः स्याच्च नवव्यूहो
नवान्वितः ।
दशावतारो दशभिरनिरुद्धोऽवतादथ।
द्वादशात्मा द्वादशभिरत ऊर्द्ध्वो ह्यनन्तकः
॥”
इति पाद्मे पातालखण्डे १० अध्यायः ॥
अपि च ।
ईश्वर उवाच ।
“शालग्रामे मणौ यन्त्रे मण्डले प्रतिमासु च ।
नित्यन्तु श्रीहरेः पूजा केवलेन जलेन तु ॥
गण्डक्यामेकदेशे तु शालग्रामस्थलं महत् ।
पाषाणान्तर्भवं यत्तत् शालग्राममिति
स्थितम् ॥
शालग्रामशिलास्पर्शात्
कोटिजन्माघनाशनम्।
किं पुनर्जननं तत्र हरेः सान्निध्यकारणम्॥
शालग्रामैकयजनात् शतलिङ्गफलं लभेत् ।
बहुभिर्जन्मभिः पुण्यैर्यदि कृष्णशिलां लभेत्
॥
गोष्पदेन च चिह्नेन तेन वै त्रायते नरः ।
आदौ शिलां परीक्षेत स्निग्धां श्रेष्ठाञ्च मेच-
काम् ॥
अकृष्णा मध्यमा प्रोक्ता मिश्रा मिश्रफलप्रदा
।
सर्व्वकामप्रदा सौम्या कराला भयदुःखदा ॥
स्निग्धा च श्रीकरी नित्यं रूक्षा दारिद्र्य-
दायिका ।
क्षुद्रा क्षुद्रफला प्रोक्ता स्थूला स्थूलफलप्रदा
॥
सदा काष्ठे स्थितो वह्निर्मन्थने च प्रकाशते ।

इति तत्रैव ११ अध्यायः ॥
अपरञ्च ।
ब्राह्मण उवाच ।
“गण्डकीयं नदी राजन् !
सुरासुरनिषेविता ।
पुण्योदकपरीवाहैर्हृतपातकसञ्चया ॥
दर्शनान्मानसं पापं स्पर्शनात् कर्म्मजं
दहेत् ।
वाचिकं स्वीयतोयस्य पानतः
पापसञ्चयम् ॥
पुरा दुष्टाः प्रजानाथः प्रजाः सर्व्वा
विपाप्मनः ।
स्वगण्डाद्बिन्द्रुषोऽनेकपापघ्नीं
सृष्टवानिमाम् ॥
एनां नदीं ये पुण्योदां स्पृशन्ति
सुतरङ्गिणीम् ।
ते गर्भभाजो नैव स्युरपि पापकृतो नराः
॥
तस्यां भवा ये
चाश्मानश्चक्रचिह्नैरलङ्कृताः ।
ते साक्षाद्भगवन्तो हि स्वस्वरूपधराः
पराः ॥
शिलाः संपूजयेद्यस्तु नित्यं चक्रयुताः
सदा ।
न जातुचिज्जनन्या वै जठरं
समुपाविशेत् ॥
पूजयेद् यो नरो धीमान् शालग्रामशिलां
वराम् ।
तेनाचारवता भाव्यं दम्भमोहवियोगिना ॥
परदारपरद्रव्यविमुखेन नरेण च ।
पूजनीयः प्रयत्नेन शालग्रामः सचक्रकः
॥
द्वारवत्या भवं चक्रं शिला वै गण्डकीभवा
।
पुंसां क्षणाद्धरन्त्येव पापं
जन्मशतार्ज्जितम् ॥
अपि पापसहस्राणां कर्त्ता तावन्नरो भवेत्
।
शालग्रामशिला आपः पीत्वा पूयेत
तत्क्षणात् ॥

| | | |
|---|---|---|
| | | ब्राह्मणः क्षत्त्रियो वैश्यः शूद्रो वेदपथे स्थितः ।<br>शालग्रामं पूजयित्वा गृहस्थो मोक्षमाप्नुयात् ॥<br>न कदाचित् स्त्रिया कार्य्यं शालग्रामस्य पूजनम् ।<br>भर्त्तृदीनाथ सुभगा सर्व्वलोकहितैषया ॥<br>मोहात् स्पृशेत महिला जन्मशीलगुणान्विता ।<br>हित्वा पुण्यसमूहन्तु सत्वरं नरकं व्रजेत् ॥<br>स्त्रीपाणिमुक्तपुष्पाणि शालग्रामशिलोपरि । |

परैरधिकपापानि वदन्ति ब्राह्मणोत्तमाः
॥
चन्दनं विषपङ्काभं कुङ्कुमं वज्रसन्निभम्
।
नैवेद्यं कालकूटाभं भवेद्भगवतः कृतम्
॥
तस्मात् सर्व्वात्मना त्याज्यः स्त्रियाः
स्पर्शः
शिलोपरि ।
कुर्व्वती याति नरकं
यावदिन्द्राश्चतुर्द्दश ॥ * ॥
अपि पापसमाचारो ब्रह्महत्यायुतोऽपि
वा ।
शालग्रामशिलातोयं पीत्वा याति परां
गतिम् ॥
तुलसी चन्दनं चक्रं शङ्खो घण्टाथ
चक्रकम् ।
शिला ताम्रस्य पात्रन्तु विष्णोर्नाम
पदामृतम् ॥
पदामृतन्तु नवभिः पापराशिप्रदाहकम्
।
वदन्ति मुनयः शान्ताः
सर्व्वशास्त्रार्थकोविदाः ॥
सर्व्वतीर्थपरिस्नानात्
सर्व्वक्रतुसमर्च्चनात् ।
पुण्यं भवति यद्राजन् बिन्दौ बिन्दौ
तदद्भुतम् ॥
शालग्रामशिला यत्र पूज्यते पुरुषोत्तमैः
।
तत्र योजनमात्रन्तु
तीर्थकोटिसमन्वितम् ॥ * ॥
शालग्रामाः समाः पूज्याः समेषु द्वितयं
न हि ।
विशमा एव पूज्या वै विषमेषु त्रयं न हि
॥
द्वारवतीभवं चक्रं तथा वै गण्डकीभवम्
।
उभयोः सङ्गमो यत्र तत्र गङ्गा समुद्रगा
॥

शालग्रामशिलां पश्येत् तस्य पापक्षयो भवेत् ॥
शालग्रामशिला विप्र हत्याकोटिविनाशिनी ।
स्मृता संकीर्त्तिता ध्याता पूजिता च नमस्कृता ॥
शालग्रामशिलां दृष्ट्वा यान्ति पापानि देहि-
नाम् ।
सिंहं दृष्ट्वा यथा यान्ति वने मृगगणा भयात् ॥
नमस्कृत्वा तु यः कुर्य्यात् शालग्रामशिलार्च्चनम्
।
भक्त्या वा यदि वाभक्त्या स मुक्तिं समवाप्नुयात्
॥
यः सेवां कुरुते नित्यं शालग्रामशिलाग्रतः ।
वैवस्वताद्भयं तस्य न स्यान्मरणजन्मनी ॥
शालग्रामशिलाचक्रं पयोदधिघृतादिकैः ।
यः स्नापयति नूनं स कल्पकोटिं वसेद्दिवि ॥
शालग्रामे नमस्कारो भावेनापि च यैः कृतः ।
मानवाः किं करिष्यन्ति मद्भक्त्या ते महीतले ॥
मद्भक्तिरणदर्पिष्ठा मत्प्रभुं न नमन्ति ये ।
वैष्णवास्ते न विज्ञेया मद्भक्ताः पापमोहिताः ।
शालग्रामशिला यत्र तत्र पुत्त्र वसाम्यहम् ॥
पूजितोऽहं न तैर्मर्त्यैः स्थापितश्च न तैर्नरैः ।
न कृतं मर्त्यलोके यैः शालग्रामशिलार्च्चनम् ॥
किमर्च्चितैर्लिङ्गशतैर्विष्णुभक्तिबहिष्कृतैः ।
शालग्रामशिलाचक्रं नार्चितं यदि पुत्त्रक ॥
जन्मकोटिसहस्रेण पूजिते मयि यत् फलम् ।
तत् फलं समवाप्नोति शालग्रामशिलार्च्चनात् ॥
अनर्ह्यं मम नैवेद्यं पत्रं पुष्पं फलं जलम् ।
शालग्रामशिलादृष्टं सर्व्वं याति पवित्रताम् ॥
नैवेद्यं मे न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ।
भुक्त्वा केशवनैवेद्यं कोटिभक्तिफलं लभेत् ॥
सकृदभ्यर्च्चितो विष्णुः शालग्रामशिलास्थितः ।
ददाति विपुलां मुक्तिं सर्व्वसङ्गविवर्ज्जिताम् ॥
मल्लिङ्गकोटिभिर्दृष्टैर्यत् फलं पूजितैः स्तुतैः ।
तत्फलं समवाप्नोति शालग्रामैकपूजनात् ॥
शालग्रामशिलाचक्रं यो विद्वान् पश्यति ध्रुवम् ।
अर्च्चयेद्वैष्णवो नित्यं तस्य पुण्यं निबोध मे ॥
कोटिलिङ्गसहस्रैर्यत् पूजितैर्जाह्नवीतटे ।
काशीवासाद्युगान्यष्टौ दिनेनैकेन तद्भवेत् ॥
तस्माद्भक्त्यैव मद्भक्तैः प्रीत्यर्थं मम पुत्त्रक ।
कर्त्तव्यं सर्व्वदा मर्त्यैः शालग्रामशिलार्च्चनम् ॥

तस्योत्पत्तिलक्षणादि यथा, --
“शालग्रामसमुत्पत्तिं शृण्वन्तु
परमाद्भुताम् ।
गण्डक्या प्राक् तपस्तप्तं भवन्तु मम
देवताः ॥
सर्व्वाः पुत्त्राः सुखं दातुं जनानामिति ते
सुराः ।
तस्यास्तु तपसा हृष्टा
ब्रह्मविष्णुमहेश्वराः ॥
वरं दातुं समुद्युक्ता वव्रे सा स्वस्य
पुत्त्रताम् ।
अशक्तास्तं वरं दातुं तदा शप्तास्तया
क्रुधा ॥
प्रतारणं मम सुराः कृतं यस्मात् पुनः
पुनः ।
कीटयोनिं प्रपद्येथाः क्रुद्धास्ते ह्यशपंश्च
ताम् ॥
अविचार्य्य वयं शप्तास्त्वया
यत्तपसोद्धताः ।
तेन कर्म्मविपाकेन जडा कृष्णा नदी
भव ॥
अन्योन्यशापं श्रुत्वेत्थं महान्
कोलाहलोऽभवत् ।
प्रकम्पिताः सुराः सा च ब्रह्माणन्ते
व्यजिज्ञपत् ॥
ब्रह्मन् त्राहि महाशापादन्योन्यपतितात्
क्रुधा ।
इति देववचः श्रुत्वा ब्रह्मा शङ्करमब्रवीत्
॥
शिवः प्रोवाच धातारमहं संहारकारकः ।
त्वं सृष्टिकर्त्ता विष्णुस्तु पालको
बुद्धिमत्तरः ॥
स प्रष्टव्यो यथासङ्ख्यमुभयोः
सम्भवेदिति ।
इति माहेश्वरं श्रुत्वा वचनं विष्णुरब्रवीत्
॥
शृणु ब्रह्मन् महादेव शृणु देव गजानन ।
मद्गणौ ब्राह्मणौ ग्राहमातङ्गौ शापतोऽत्र
तु ॥

रूक्षाः कुर्व्वन्ति पुरुषान्
आयुःश्रीभिर्विवर्ज्जि-
तान् ।
तस्मात् स्निग्धा मनोहारिरूपेण ददति
श्रियम् ॥
आयुष्कामो नरो यस्तु धनकामोऽपि
यः पुमान् ।
पूजयन् सर्व्वमाप्नोति पापं
लौकिकमैहिकम् ॥
प्राणान्तकाले तु यस्य
भवेद्भाग्यबलान्नृप ।
वाचि नाम हरेः पुण्यं
शिलाकृतिस्तदन्तिके ॥
गच्छत्सु प्राणमार्गेषु यस्य
विश्रम्भतोऽपि चेत् ।
शालग्रामशिलामूर्त्तिस्तदामुक्तिर्न
संशयः ॥
पुरा भगवता प्रोक्तमम्बरीषाय धीमते ।
ब्राह्मणो न्यासिनो भक्ताः
शालग्रामशिला
मम ॥
स्वरूपत्रितयं मह्यमेतद्धि क्षितिमण्डले
।
पापिनां पापनिर्व्वारं कर्त्तुं धृतमुदञ्चताम्
॥
निन्दन्ति पापिनो ये वा शालग्रामशिलां
सकृत् ।
कुम्भीपाके पचन्त्याशु
यावदाहूतसंप्लवम् ॥
पूजां समुद्यतं कर्त्तुं यो वारयति मूढधीः
।
तस्य माता पिता बन्धुः सर्व्वे
नरकगामिनः ॥
यो वै कथयति श्रेष्ठं शालग्रामार्च्चनं
कुरु ।
स कृतार्थो नयत्याशु वैकुण्ठं स्वन्तु
पूर्व्वजैः ॥”
इति च तत्रैव २० अध्यायः ॥ * ॥
अन्यच्च ।
श्रीईश्वर उवाच ।

शालग्रामशिलारूपी यत्र तिष्ठति केशवः ।
तत्र देवाः सुरा यक्षा भुवनानि चतुर्दश ॥
शालग्रामशिलाग्रे यैः सकृच्छ्राद्धं कृतं भवेत् ।
वसन्ति पितरस्तेषां विष्णुलोके न संशयः ॥
ये पिबन्ति नरा नित्यं शालग्रामशिलाजलम् ।
पञ्चगव्यसहस्रैस्तु प्राशितैः किं प्रयोजनम् ॥
प्रायश्चित्ते समुत्पन्ने किं दानैः किमुपोषणैः ।
चान्द्रायणैः किं हि तादृक् पीत्वा पादोदकं
शुचिः ॥”
इति पाद्मे उत्तरखण्डे १२७ अध्यायः ॥ * ॥
कलेर्दशसहस्रवर्षानन्तरं स च भारतं त्यक्त्वा
यास्यति । यथा, --
“शालग्रामो हरेर्मूर्त्तिर्जगन्नाथश्च भारतम् ।
कलेर्दशसहस्रान्ते ययौ त्यक्त्वा हरेः पदम् ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ६ अध्यायः ॥ * ॥

भविष्यतस्तयोर्म्मोक्षं भविष्यामि
कलेवरम् ।
शीर्णं भविष्यति यदा
तन्मेदोमज्जसम्भवाः ॥
पाषाणान्तर्गता कीटा वज्राख्या
प्रभविष्यथ ।
अद्यैव गण्डकी पुण्या गङ्गातुल्या
महानदी ॥
गण्डक्यां गिरिराजस्य दक्षिणे
दशयोजनम् ।
विस्तीर्णं तन्मनुं क्षत्त्रं पुण्यक्षेत्रं महीतले
।
चक्रतीर्थमिति ख्यातं त्रिषु लोकेषु
विश्रुतम् ॥
शालग्रामगता देवा देवोद्वारावतीगतः ।
उभयोः सङ्गमो यत्र मुक्तिस्तत्र न संशयः
॥
सर्व्वदेवप्रीतिकरा भुक्तिमुक्तिप्रदायिनी ।
भवन्त्वस्यान्तु पाषाणा ये तदन्तर्गता
सुराः ॥
प्रार्थितं स्वं विना सर्व्वे वज्रकीटा
भवन्त्विति ।
अनेनैव तु गण्डक्याः पुत्त्रत्वं भवतामपि
॥
भविष्यति तदन्तश्च चिह्नं तद्दैवतोद्भवम्
।
विज्ञाय येऽर्च्चयिष्यन्ति सा प्रीता तस्य
देवता ॥
न यन्त्रस्य न मूर्त्तेश्च न वृक्षस्यापि
पूजनात् ।
सन्तोषो जायते तेषां गण्डक्यां
मार्ज्जनाद्यथा ॥
इति विष्णुवचः श्रुत्वा ब्रह्मा
वचनमब्रवीत् ॥ * ॥
कीदृक् पूज्या शिला विष्णोः किञ्छिद्रा
कस्य
वल्लभा ।
किं फलं चाधिकारी च केन मार्गेण तद्वद
॥
इति ब्रह्मवचः श्रुत्वा विष्णुर्व्वचनमब्रवीत्
।

| “शालग्रामशिलायान्तु त्रैलोक्यं सचराचरम् । सदा वसति तेनात्र विष्णुस्तिष्ठति सर्व्वदा ॥ शालग्रामशिलापूजां प्रकुरुष्व षडानन । गङ्गामिव महापुण्यां चतुर्व्वर्गफलप्रदाम् ॥ हृष्टेन मनसा येन स्थापिता पूजिता तथा । यज्ञकोटिसमं पुण्यं आशु तस्मै प्रयच्छति ॥ छिन्नस्तेन महासेन गर्भवासः सुदारुणः । पीतं येन सदा विष्णोः शालग्रामशिलाजलम् ॥ कामासक्तोऽपि यो नित्यं भक्तिभावविवर्ज्जितः । | | स्वीयवर्णा शिला पूज्या ब्राह्मणाद्यैः सुखाप्तये ॥ स्निग्धा शिला मन्त्रसिद्धं रूक्षा सिद्धिं करोति च । मेचका कीर्त्तिता धौताङ्गारवत् सा यशोहरा ॥ पाण्डू रुपार्थशमनी मलिना पापधीकरा । पीता पुत्त्रफलं दद्यादारवर्णा सुतान् हरेत् ॥ नीला संदिशते लक्ष्मीं धूमाभा हरते मतिम् । रोगप्रदा रक्तवर्णा सिन्दूराभा महाकलिम् ॥ दारिद्रकारिणी वक्रा समा सर्व्वार्थसाधिका । |
|---|---|---|

स्थूला निहन्ति चैवायुः सूक्ष्मा स्वल्पमतिं हरेत् ।
पूजाफलं लाञ्छितया निष्फलं लाञ्छनं विना ।
कपिला चित्तवैकल्यं नेत्ररोगञ्च कर्व्वुरा ॥
भग्ना भङ्गकरी ज्ञेया बहुचक्रापमानताम् ।
लक्षणान्तरहीना च देवचक्रा वियोगताम् ॥
बृहन्मुखी कलत्रघ्नी बृहच्चक्रा सुतान् हरेत् ।
संलग्नचक्रा त्वसुखं बद्धचक्रा महागदम् ॥
भग्नचक्रा तु दारिद्रं सर्व्वनाशं त्वधोमुखी ।
कुष्ठादिकं व्यालमुखी विषमा विविधापदम् ॥
विकृतावर्त्तनाभिश्च विकारान् कुरुते बहून् ।
वंशच्छेदो गृहस्थानां नारसिंह्यां प्रजायते ॥
रेखार्त्ता दुःखदात्री च यथा सूक्ष्मा तथा
सुखम् ।
यथा स्निग्धास्तथा लक्ष्मीस्तद्विभेदादतः शृणु ॥
लक्ष्मीहरिः स विज्ञेयो यत्र पद्मं सचक्रकम् ।
केवला वनमाला वा गृहस्थानामभीष्टदः ॥ १ ॥
वासुदेवः स विज्ञेयो यद्द्वारं चक्रयुग्मकम् ।
निरन्तरं समं चापि स श्वेतः पापनाशनः ॥ २ ॥
सङ्कर्षणः स विज्ञेयः प्राक् पश्चाच्चक्रयुग्मकम् ।
संलग्नपूर्व्वभागस्थं महद्रत्नः सुशोभनः ॥ ३ ॥
कूर्म्माख्या तु शिला पृष्ठे वर्त्तुला चोन्नता भवेत्
।
हरितं वर्णमाषन्तु कौस्तुभेन च चिह्निता ॥
शिलाकूर्म्मः स विज्ञेयः कूर्म्माकारस्तु यो भवेत् ।
चक्राङ्किता तथा वृत्ता पूजिता सा पदप्रदा ॥ १८
हयग्रीवोऽङ्कुशाकारा रेखा चक्रा समीपगा ।
बहुबिन्दुसमायुक्तं पृष्टं नीरदनीलकम् ॥ १९ ॥
ज्ञेयः सौम्यहयग्रीवो हयग्रीवासमा शिला ।
दीर्घया लेखया युक्ता रेखा वा तादृशी भवेत् ॥ २० ॥
हयशीर्षः स विज्ञेयो मुखं यस्य हयाकृति ।
पद्माकृति भवेद्वापि साक्षमालं शिरस्तथा ॥ २१
वैकुण्ठस्तिलवर्णाभश्चक्रमेकं तथा ध्वजम् ।
द्वारोपरि तथा रेखा पूज्याकारा सुशोभना ॥ २२
श्रीधरस्तु तथा देवश्चिह्नितो वनमालया ।
कदम्बकुसुमाकारारेखापञ्चकभूषितः ॥ २३ ॥
वामनः स तु विज्ञेयो योऽतिह्रस्वश्च वर्त्तुलः ।
अतसीकुसुमप्रख्यो बिन्दुना परिशोभितः ॥ २४ ॥
दधिवामननामा तु ऊद्ध्र्वाधश्चक्रसंयुतः ।
महाद्युतिरतिह्रस्वः सुभिक्षः क्षेमदायकः ॥ २५ ॥
सुदर्शनस्तथा देवः श्यामवर्णो महाद्युतिः ।
वामपार्श्वे तथा चक्रं रेखैकैव तु दक्षिणे ॥ २६ ॥
सहस्रार्ज्जुननामासौ नानारेखामयी भवेत् ।
चक्राकारा यन्त्रपङ्क्तिः स नष्टद्रव्यदायकः ॥ २७ ॥
स्थूलो दामोदरो यस्य मध्ये चक्रं प्रतिष्ठितम् ।
दूर्व्वाभं द्वारसङ्कीर्णः पीतरेखा धनप्रदः ॥ २८ ॥
राधादामोदरो ज्ञेय ऊद्ध्र्वाधश्चक्रवद्बिलम् ।
नातिदीर्घमुखं मध्ये लम्बरेखा स भोगदः ॥ २९ ॥
वामपार्श्वे चक्रयुग्ममेकरेखा तु दक्षिणे ॥ ४१ ॥
कृष्णो ज्ञेयः शिला कृष्णा सचक्रा वा विच-
क्रिका ।
प्रदक्षिणावर्त्तकृतवनमालाविभूषिता ॥ ४२ ॥
चतुर्म्मुखः स विज्ञेयो द्वे चक्रे मध्यदेशतः ।
चतस्रः पार्श्वगा रेखा वेदशास्त्रागमप्रदः ॥ ४३ ॥
विष्णोर्भेदा इमे प्रोक्ता अत्रैवावाहयेद्धरिम् ।
विसर्ज्जयेच्च पूजान्ते प्रतिष्ठां नात्र कारयेत् ॥ * ॥
शालग्रामाः समाः पूज्या समेषु द्वितयं न हि ।
असमा नैव पूज्यन्ते एकः पूज्यतमो मतः ॥
शिला द्वादश यो नित्यं भक्त्या संपूजयेन्नरः ।
दिने दिने धर्म्मवृद्धिः पापनाशश्च जायते ॥
शालग्रामशिलां यस्तु भक्त्या संपूजयेन्नरः ।
शतं दिनानि यस्तेन कृतः कामः स सिध्यति ॥ *
शालग्रामा मत्स्वरूपाः शृणु तेषान्तु लक्षणम् ।
यत्सेवनाद्भवेदिष्टमिह लोके परत्र च ॥
शिवनाभः स विज्ञेयः सलिङ्गाकारताङ्गतः ।
स्वयम्भुलिङ्गाकृतिमान् मन्त्रसिद्धिविधायकः ॥ १ ॥
त्र्यम्बकः स तु विज्ञेयो यो बिन्दुत्रयभूषितः ।
शूलाकारा तथा रेखा गतपुंस्त्वप्रदायकः ॥ २ ॥
धूर्ज्जटिः स तु विज्ञेयो यत्र रेखा जटासमा ।
तिस्रो यत्र प्रदृश्यन्ते सोऽर्च्चितो ज्ञानदायकः ॥ ३
शम्भस्तु पाण्डरो ज्ञेयो बिन्दुकृष्णस्तु मस्तके
।
विल्वप्रमाणस्तेजस्वी पूजितः स्त्रीवशङ्करः ॥ ४ ॥
ईश्वरः स तु विज्ञेयो रक्तो बिन्दुस्तु मस्तके ।
एकचक्रो द्विचक्रो वाभ्यन्तरेऽधश्च गोपदम् ॥ ५ ॥
मृत्युञ्जयः स विज्ञेयः स्वल्पमृत्युविनाशकः ।
अधश्चक्रं तदूद्ध्र्वञ्च श्वेता रेखा त्रिशूलवान् ॥ ६ ॥

प्रद्युम्नः सूक्ष्मचक्रः स्याच्छिद्रं दीर्घं
विचित्रितम् ।
सुस्थिरान्तर्व्वहिश्छिद्रं पीत
इष्टप्रदायकः ॥ ४ ॥
अनिरुद्धस्तु नीलाभो
वर्त्तुलश्चातिशोभनः ।
रेखाद्वयन्तु तद्द्वारि पृष्ठं पद्मेन
लाञ्छितम् ॥ ५ ॥
केशवः स तु विज्ञेयस्त्वेकं वा द्वयमेव
वा ।
प्राग्वा पश्चाच्च चक्रं स्यात्
चतुष्कोणः स भाग्य-
कृत् ॥ ६ ॥
नारायणः श्यामवर्णः नाभौ चक्रं
तथोन्नतम् ।
दीर्घरेखासमायुक्तं दक्षिणे शुषिरं पृथु
॥ ७ ॥
हरिरूपा शिला सा स्याद्यस्या
ऊद्ध्वं मुखं
भवेत् ।
हरिवद्दृश्यते द्वारं भुक्तिमुक्तिप्रदा तु
सा ॥ ८ ॥
परमेष्ठी स विज्ञेयः पद्मचक्रान्वितस्तु
यः ।
विल्वाकृतिश्च शुक्राभः पृष्ठे च शुषिरं
महत् ॥ ९ ॥
विष्णुस्तु कृष्णवर्णः स्यात्
स्थूलचक्रे सुशोभने ।
द्वारोपरि तथा रेखा दृश्यते
मध्यदेशतः ॥ १० ॥
नारसिंहस्तु कपिलः पृथुचक्रो
बृहन्मुखः ।
त्रयो वा पञ्च वा तत्र बिन्दवो गृहिणां
न
सत् ॥ ११ ॥
कपिलो नरसिंहस्तु गुडलाक्षानिभो
भवेत् ।
स्थूलचक्रद्वयं मध्ये द्वारे रेखा
सुशोभना ॥ १२ ॥
महानृसिंहो विज्ञेयः
पूर्व्वोक्तैर्लक्षणैयुतः ।

दामोदरः स विज्ञेयो यश्चक्रद्वयलाञ्छितः ।
सूक्ष्मं भवेच्च विवरं पूजितः सुखदः सदा ॥
३० ॥
अनन्तो बहुवर्णः स्यान्नागभोगेन चिह्नितः ।
अनेकचक्रसंभिन्नः सर्व्वकामफलप्रदः ॥ ३१
॥
पुरुषोत्तमनामासौ यस्य दिक्षु विदिक्षु च ।
ऊद्ध्वान्यास्यानि दृश्यन्ते पुरुषार्थफलप्रदः
॥ ३२ ॥
योगेश्वरः स विज्ञेयो लिङ्गं यस्य शिरोगतम् ।
ब्रह्महत्यादिपापानां नाशको योगसिद्धिदः ॥
३३
पद्मनाभस्तथा रक्तः पङ्कजच्छत्रसंयुतः ।
तुलस्या पूजितो नित्यं दरिद्रस्त्वीश्वरो भवेत्
॥ ३४
रश्मिज्वालो हिरण्याक्षश्चन्द्राभः स्फटिको-
पमः ।
अथवा जायते नानास्वर्णरेखाभिरन्वितः ॥
३५ ॥
गरुडः स तु विज्ञेयो मध्ये पक्षद्वयान्विते ।
सुदीर्घा दृश्यते रेखा स सर्पविषनाशकः ॥
३६ ॥
जनार्द्दनः स विज्ञेयः केवलानि स्फुटानि च ।
यस्योदरे तु चक्राणि चत्वारि पितृतृप्तिकृत् ॥
३७
लक्ष्मीनारायणो ज्ञेयो वनमालाङ्कितोदरः ।
सूक्ष्मद्वारश्चतुश्चक्रो भुक्तिमुक्तिप्रदायकः ॥
३८ ॥
हृषीकेशः स विज्ञेयो योऽर्द्धचन्द्राकृतिर्भवत् ।
तमभ्यर्च्च्य लभेत् स्वर्गं विषयांश्च
समीहितान् ॥
२९ ॥
लक्ष्मीनरहरिर्ज्ञेयः कृष्णवर्णः सबिन्दुकः ।
वामपार्श्वे समे चक्रे गृहस्थाभीष्टदायकः ॥
४० ॥
त्रिविक्रमस्तु विज्ञेयः श्यामवर्णो महाद्युतिः ।

चन्द्रशेखरनामासावर्द्धचन्द्राकृतिस्तु के ।
मध्ये चक्रद्वयं तस्य सेवनाद्रोगनाशनम् ॥ ७
॥
रुद्रः स एव विज्ञेयः कपिलो मूद्ध्र्नि रक्षितः ।
चक्रमध्ये भवेद्रेखा मारयेद्रिपुसन्ततिम् ॥ ८
॥ * ॥
शालग्रामानथो वक्ष्ये शक्तिकीटसमुद्भवान् ।
येषां पूजनतो देवी भवानी सुप्रसीदति ॥
श्रीविद्या सा तले चक्रमूद्ध्र्वेछत्रं प्रदृश्यते ।
वाह्ये घण्टाङ्कितो मूर्द्धा स्निग्धा श्यामाखिले-
ष्टदा ॥ १ ॥
महाकाली तु सा ज्ञेया योनिचिह्नसमन्विता ॥
२
द्विच्छिद्राद्या सर्व्वशिला त्रिकोणेनाङ्किता च
या ।
यदायुधाकृतिश्चोद्ध्वं तां देवीं तत्र निर्द्दिशेत्
॥
देवीशिला सचक्रा या दक्षमार्गेण तां यजेत् ।
सार्च्चिता वाममार्गेण लोकद्वयसुखावहा ॥
या चक्ररहिता देवी शिला तां वामतोऽर्च्च-
येत् ।
स्पर्शकार्य्येण विप्राणां नगभां क्षोभकृद्भवेत् ॥
* ॥
सौरीशिला दुर्ल्लभैव प्रायः कलियुगे सुराः ।
स्फटिकाभा भवेत् सा तु घर्म्ममुक्ता विमुञ्चति
॥
तुलस्योद्ध्वं स्थिते वह्निं साभिषिक्ता
प्रवर्षणम् ।
कुरुते शपथे मिथ्या कृते स्यात्कुष्ठकारिका ॥
*
गणेशः स तु विज्ञेयः स्वल्पशुण्डाङ्कितो भवेत्
।
शुण्डाकारा शिला वापि गजाननसमापि वा ॥
*
यस्या मध्ये महच्चक्रं सूक्ष्मचक्रञ्च यद्दिशि ।

| रेखाश्च केशराकारा मुखं दीर्घं<br>भयानकम् ॥ १३<br>लक्ष्मीनृसिंहो विज्ञेयश्चतुश्चक्रः<br>सबिन्दुकः ।<br>पूर्व्वोक्तलक्षणैर्युक्तो<br>वनमालाविराजितः ॥ १४ ॥<br>वराहोऽसौ शक्तिलिङ्गे चक्रे च विषमे<br>तथा ।<br>इन्द्रनीलनिभः<br>स्थूलस्त्रिरेखालाञ्छितो भवेत् ॥<br>१५<br>पृथ्वीवाराहनात्नी सा या<br>वराहाकृतिः शिला ।<br>आभुग्ना चैव रेखैका<br>गतराज्यप्रदायिका ॥ १६ ॥<br>मत्स्याख्या सा शिला ज्ञेया<br>बिन्दुत्रयविभूषिता ।<br>कांस्याद्वारा स्वणनिभा दीर्घा सा<br>भुक्ति-<br>मुक्तिदा ॥ १७ ॥ | | |
|---|---|---|

सा शिला तस्य दिक्यस्य सेव्या तद्दिशि राज्यदा ॥ * ॥
अर्द्धचन्द्राकृतिर्यत्र दृश्यते शकलद्वयम् ।
सा तु चन्द्रशिला त्र्यस्रयुक्ता भौमशिला मता ॥ * ॥
बाणाकारेण चिह्नेन ज्ञेया बुधशिला सुराः ।
दीर्घेण चतुरस्रेण युक्ता गुरुशिला मता ॥ * ॥
पञ्चकोणा तु शुक्रस्य चापाकारा शनेर्म्मता ।
सूर्पाकारा तु राहोः स्यात् केतोस्तु ध्वज-
रूपिणी ॥ * ॥
प्राप्ते कलियुगे घोरे वामाचारविमिश्रिते ।
भक्ष्याभक्ष्यविचारादिरहिते म्लेच्छसङ्कुले ॥
कामक्रोधादिभिर्व्याप्ते जने स्त्रीभिर्विनिर्ज्जिते ।
क्व शिष्यः क्व गुरुर्म्मन्त्रः क्व जपः क्व च सिद्धयः ॥
अयुताब्दे कलेर्याति त्यजेद्विष्णुशिला महीम् ।
तदर्द्धाज्जाह्नवीतोयं तदर्द्धाद्देवताशिला ॥
जप एव कलौ श्रेयान् शालग्रामार्च्चनं यथा ॥”
इति मेरुतन्त्रे ५ पटलः ॥
अपि च ।
तुलस्युवाच ।
“हे नाथ ते दया नास्ति पाषाणसदृशस्य च ।
छलेन धर्म्मभङ्गेन मम स्वामी त्वया हतः ॥
पाषाणहृदयस्त्वञ्च दयाहीनो यतः प्रभो ।
तस्मात् पाषाणसदृशस्त्वं भवेह हरेऽधुना ॥
श्रीभगवानुवाच ।
नरसिंहाभिधं ज्ञेयं सद्यो वैराग्यदं नृणाम् ॥
द्विचक्रं विस्तृतास्यञ्च वनमालासमन्वितम् ।
लक्ष्मीनृसिंहं विज्ञेयं गृहिणां सुखदं सदा ॥
द्वारदेशे द्विचक्रञ्च सश्रीकञ्च समं स्फुटम् ।
वासुदेवञ्च विज्ञेयं सर्व्वकामफलप्रदम् ॥
प्रद्युम्नं सूक्ष्मचक्रञ्च नवीननीरदप्रभम् ।
शुषिरे छिद्रबहुलं गृहिणाञ्च सुखप्रदम् ॥
द्वे चक्रे चैकलग्ने तु पृष्ठे यत्र तु पुष्कलम् ।
सङ्कर्षणन्तु विज्ञेयं सुखदं गृहिणां सदा ॥
अनिरुद्धञ्च पीताभं वर्त्तुलञ्चातिशोभनम् ।
सुखप्रदं गृहस्थानां प्रवदन्ति मनीषिणः ॥ * ॥
शालग्रामशिला यत्र तत्र सन्निहितो हरिः ।
तत्रैव लक्ष्मीर्व्वसति सर्व्वतीर्थसमन्विता ॥
यानि कानि च पापानि ब्रह्महत्यादिकानि च ।
तानि सर्व्वाणि नश्यन्ति शालग्रामशिलार्च्चनात् ॥
छत्राकारे भवेद्राज्यं वर्त्तुले च भवेत् श्रियः ।
दुःखञ्च शकटाकारे शूलाग्रे मरणं ध्रुवम् ॥
विकृतास्ये च दारिद्रं पिङ्गले हानिरेव च ।
लग्नचक्रे भवेद्व्याधिर्विदीर्णे मरणं ध्रुवम् ॥
व्रतं दानं प्रतिष्ठा च श्राद्धञ्च देवपूजनम् ।
शालग्रामशिलायाश्चैवाधिष्ठानात् प्रशस्तकम् ॥
स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षितः ।
सर्व्वदाने च यत् पुण्यं प्रादक्षिण्ये भुवस्तथा ॥
सर्व्वयज्ञेषु तीर्थेषु व्रतेष्वनशनेषु च ।
पाठे चतुर्णां वेदानां तपसां करणे सति ।
तत् पुण्यं लभते नूनं शालग्रामशिलार्च्चनात् ॥
शालग्रामशिलातोयं नित्यं भुङ्क्तेच यो नरः ।
सुरेप्सितं प्रसादञ्च जन्ममृत्युजराहरम् ॥
तस्य स्पर्शञ्च वाञ्छन्ति तीर्थानि निखिलानि च ।
जीवन्मुक्तो महापूतोऽप्यन्ते याति हरेः पदम् ॥
तत्रैव हरिणा सार्द्धमसंख्यं प्राकृतं लयम् ।
“विप्रक्षत्त्रियवैश्यानां शालग्रामशिलार्च्चने ।
अधिकारो न शूद्राणां हरेरर्च्चार्च्चने तथा ॥”
इति तत्रैव जन्मखण्डे २१ अध्यायः ॥ * ॥
शालग्रामे सदा विष्णोः स्थितिस्तत्पूजने विशेषश्च
यथा, --
भूमिरुवाच ।
“उक्ता याः प्रतिमाः सर्व्वाः सुवर्णादिविनि-
र्म्मिताः ।
तासु तिष्ठसि सर्व्वासु शालग्रामे च सर्व्वदा ॥
कति पूज्या गृहादौ च अविशेषस्तु पूजने ।
विशेषो वा भवेत्तन्मे रहस्यं वद माधव ॥
वराह उवाच ।
गृहे लिङ्गद्वयं नाच्चर्य्यं शालग्रामद्वयं तथा ।
द्वे चक्रे द्वारकायास्तु नाच्चर्य्यं सूर्य्यद्वयं तथा ॥
शालग्रामशिला भग्ना पूजनीया सचक्रका ।
खण्डिता स्फुटिता वापि शालग्रामशिला शुभा ॥
शिला द्वादश वै देवि शालग्रामसमुद्भवाः ।
विधिवत् पूजिता येन तस्य पुण्यं वदामि ते ॥
कोटिद्वादशलिङ्गैस्तु पूजितैः स्वर्णपङ्कजैः ।
यत् स्यात् द्वादशकल्पैस्तु दिनेनैकेन तद्भवेत् ॥
यः पुनः पूजयेद्भक्त्या शालग्रामशिलाशतम् ।
तत्फलं नव शक्तोऽहं वक्तुं वर्षशतैरपि ॥
शालग्रामो न स्प्रष्टव्यो हीनवर्णैर्व्वसुन्धरे ।
स्त्रीशूद्रकरसंस्पर्शो वज्रस्पर्शाधिको मतः ॥
मोहाद्यः संस्पृशेत् शूद्रो योषिद्वापि कदाचन ।
स पतेन्नरके घोरे यावदाहूतसंप्लवम् ॥
यदि भक्तिर्भवेत्तस्य स्त्रीणां वापि वसुन्धरे ।

अहञ्च शैलरूपी च गण्डकीतीरसन्निधौ ।
अधिष्ठानं करिष्यामि भारते तव शापतः
॥
वज्रकीटाश्च कृमयो वज्रदंष्ट्राश्च तत्र वै ।
तच्छिलाकुहरे चक्रं करिष्यन्ति
मदीयकम् ॥
एकद्वारे चतुश्चक्रं वनमालाविभूषितम् ।
नवीननीरदाकारं लक्ष्मीनारायणाभिधम्
॥
एकद्वारे चतुश्चक्रं नवीननीरदोपमम् ।
लक्ष्मीजनार्द्दनं ज्ञेयं रहितं वनमालया ॥
द्वारद्वये चतुश्चक्रं गोष्पदेन समन्वितम् ।
रघुनाथाभिधं ज्ञेयं वेष्टितं वनमालया ॥
अतिक्षुद्रं द्विचक्रन्तु नवीननीरदप्रभम् ।
दधिवामनं विज्ञेयं गृहिणाञ्च सुखप्रदम् ॥
अतिक्षुद्रं द्विचक्रञ्च वनमालाविभूषितम् ।
श्रीधरं देवि विज्ञेयं श्रीपदं गृहिणां सदा ॥
स्थूलञ्च वर्त्तुलाकारं रहितं वनमालया ।
द्विचक्रं स्फुटमत्यन्तं ज्ञेयं
दामोदराभिधम् ॥
मध्यमं वर्त्तुलाकारं द्विचक्रं बाणविक्षतम्
।
रणरामाभिधं ज्ञेयं शरतूणसमन्वितम् ॥
चतुर्द्दशचक्रं स्थूलञ्च नवीनजलदप्रभम् ।
अनन्ताख्यञ्च विज्ञेयं चतुर्व्वर्गफलप्रदम्
॥
मध्यमं सप्तचक्रञ्च छत्रतूणसमन्वितम् ।
राजराजेश्वरं ज्ञेयं राजसम्पत्करं नृणाम्
॥
चक्राकारं द्विचक्रञ्च सश्रीकं जलदप्रभम्
।
सगोष्पदं मध्यमञ्च विज्ञेयं मधुसूदनम् ॥
सुदर्शनञ्चैकचक्रं गुप्तचक्रं गदाधरम् ।
द्वि चक्रं हयवक्त्राभं हयग्रीवं प्रकीर्त्तितम्
॥
अतीवविस्तृतास्यञ्च द्विचक्रं विकटं सति
।
पश्यन्त्येव हि दास्येव नियुक्तो दास्यकर्म्मणि
॥
यानि कानि च पापानि ब्रह्महत्यादिकानि च ।
तं दृष्ट्वा च भिया यान्ति वैनतेयमिवोरगाः ॥
तत्पादपद्मरजसा सद्यः पूता वसुन्धरा ।
पुंसां लक्षं तत्पितॄणां निस्तरेत्तस्य जन्मनि ॥
शालग्रामशिलातोयं मृत्युकाले च यो लभेत् ।
सर्व्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥
निर्व्वाणमुक्तिं लभते कर्म्मभोगाद्विमुच्यते ।
विष्णुपादप्रलीनश्च भविष्यति न संशयः ॥
शालग्रामशिलां धृत्वा मिथ्यावाक्यं वदेत्तु यः
।
स याति कूर्म्मदंष्ट्रञ्च यावद्वै ब्रह्मणो वयः ॥
शालग्रामशिलां धृत्वा स्वीकारं यो न
पालयेत् ।
स प्रयात्यसिपत्रञ्च लक्षमन्वन्तरावधि ॥
तुलसीपत्रविच्छेद्दं शालग्रामं करोति यः ।
तस्य जन्मान्तरे कान्ते स्त्रीविश्लेषो
भविष्यति ॥
तुलसीपत्रविच्छेद्दं शङ्खं यो हि करोति च ।
भार्य्याहीनो भवेत् सोऽपि रोगी च सप्तजन्मसु
॥
शालग्रामञ्च तुलसीं शङ्खञ्चैकत्र एव च ।
यो रक्षति महाज्ञानी स भवेत् श्रीहरिप्रियः
॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे १९ अध्यायः ॥
* ॥
शूद्राणां तत्पूजनेऽनधिकारो यथा, --
दूरादेवास्पृशन् पूजां कारयेत् सुसमाहितः
॥
चरणामृतपानेन सर्व्वपापक्षयो भवेत् ॥
अभक्ष्यं शिवनिर्म्माल्यं पत्रं पुष्पं फलं
जलम् ।
शालग्रामशिलायोगात् पावनं तद्भवेत् सदा
॥
दद्याद्भक्ताय यो देवि शालग्रामशिलां नरः ।
सुवर्णसहितां तेन सपर्व्वतवनाकरा ।
ससमुद्रा भवेद्दत्ता सत्पात्राय वसुन्धरा ॥
शालग्रामशिलायास्तु मौल्यमुद्घाटयेत्
क्वचित् ।
विक्रेता क्रयकर्त्ता वा नरके वै पतेत् ध्रुवम्
॥
पूजाफलं न शक्येत वक्तुं वर्षशतैरपि ।
एतत्ते कथितं गुह्यं प्रतिमास्थापनं प्रति ॥
शालग्रामे विशेषश्च लिङ्गादीनाञ्च यो भवेत्
।
पूजनादो विधिश्चापि
किमन्यच्छ्रोतुमिच्छसि ॥”
इत्यादि वाराहे
रौप्यसौवर्णार्च्चास्थापननामा-
ध्यायः ॥ * ॥ अथ
शालग्रामशिलामूर्त्तिनिरू-
पणम् ।
“चतुर्व्विंशतिमूर्त्तिः स
शालग्रामशिलास्थितिः ।
द्वारकादिशिलासंस्थो ध्येयः पूज्योऽपि वा
हरिः ॥
मनसोऽभीप्सितं प्राप्य देवो वैमानिको
भवेत् ।
निष्कामो मुक्तिमाप्नोति मूर्त्तीर्ध्यायन्
स्तुवन्
जपन् ॥”
इत्यादि गारुडे मूर्त्तामूर्त्तध्यानं ४४
अध्यायः ॥
अपि च ।
“शङ्खचक्रगदापद्मी केशवाख्यो गदाधरः ।
साब्जकौमोदकीचक्रशङ्खीनारायणो विभुः
॥

सचक्रशङ्खाब्जगदो माधवः श्रीगदाधरः ।
गदाब्जशङ्खचक्री वा गोविन्दोऽर्च्यो गदाधरः ॥
पद्मशङ्खासिगदिने विष्णुरूपाय वै नमः ।
शङ्खाञ्चचक्रगदिने नमः सङ्कर्षणाय च ॥
सुशङ्खसुगदाब्जाविधृते प्रद्युम्नमूर्त्तये ।
नमोऽनिरुद्धाय गदाशङ्खाब्जाविविधारिणे ॥
नमो गदासिशङ्खाब्जयुक्तत्रैविक्रमाय च ।
सासिकौमोदकीपद्मगदिनेवामनमूर्त्तये ॥
चक्राब्जशङ्खगदिने नमः श्रीधरमूर्त्तये ।
हृषीकेश साविगदाशङ्खपद्मिन्नमो नमः ॥
साब्जशङ्खगदाचक्रपद्मनाभस्वरूपिणे।
दामोदर शङ्खगदाचक्रपद्मिन्नमो नमः ॥
साविशङ्खगदाब्जाय वासुदेवाय वै नमः ।
शङ्खाब्जचक्रगदिणे नमः सङ्कर्षणाय च ॥
साब्जशङ्खगदाचक्रपुरुषोत्तममूर्त्तये।
नमोऽधोक्षजरूपाय गदाशङ्खासिपद्मिने ॥
नृसिंहमूर्त्तये पद्मगदाशङ्खाब्जधारिणे।
पद्माब्जशङ्खगदिने नमोऽस्त्वच्युतमूर्त्तये ॥
सशङ्खचक्राब्जगदं जनार्द्दनमिहानमे ।
उपेन्द्रं सगदं साविं पद्मशङ्खिन्नमो नमः ॥
सुचक्राब्जगदाशङ्खयुक्ताय हरिमूर्त्तये ।
सगदाब्जाविशङ्खाय नमः श्रीकृष्णमूर्त्तये ॥
शालग्रामशिलाद्वारगतलग्नद्विचक्रधृक्।
शुक्लाभो वासुदेवाख्यः सोऽव्याद्वः श्रीगदाधरः ॥
लग्नद्विचक्रो रक्ताभः पूर्व्वभागे तु पुष्कलः ।
सङ्कर्षणोऽथ प्रद्युम्नः सूक्ष्मचक्रस्तु पीतकः ॥
सदीर्घशुषिरच्छिद्रो योऽनिरुद्धस्तु वर्त्तुलः ।
नीलो द्वारि त्रिरेखश्च अथ नारायणोऽसितः ॥
मध्ये गदाकृती रेखा नाभिचक्रमहोन्नतः ।
पृथुचक्रो नृसिंहोऽथ कपिलोऽव्यात् त्रिबि-
न्दुकः ॥
अथवा पञ्चबिन्दुस्तत्पूजनं ब्रह्मचारिणः ।
वराहः शक्तिलिङ्गोऽव्याद्विषमद्वयचक्रकः॥
नीलस्त्रिरेखः स्थूलोऽथ कूर्म्ममूर्त्तिः स बिन्दु-
मान् ।
कृष्णः सवर्त्तुलावर्त्तः पातु वोन्नतपृष्ठकः ॥
श्रीधरः पञ्चरेखोऽव्याद्वनमाली गदान्वितः ।
वामनो वर्त्तुलो ह्रस्वो वामचक्रः सुरेश्वरः ॥
लक्ष्मीनारायणो द्वाभ्यां
त्रिभिर्मूर्त्तिस्त्रिविक्रमः ।
चतुर्भुजश्चतुर्व्व्यूहो वासुदेवश्च पञ्चभिः
॥
प्रद्युम्नः षड्भिरेव स्यात् सङ्कर्षण
इतस्ततः ।
पुरुषोत्तमोऽष्टभिः स्यान्नवव्यूहो नवोन्नतः
॥
दशावतारो दशभिरनिरुद्धोऽवतादथ।
द्वादशात्मा द्वादशभिरत ऊर्द्ध्वमनन्तकः
॥
विष्णोर्मूर्त्तिमयं स्तोत्रं यः पठेत् स दिवं
व्रजेत् ॥”
इति गारुडे ४५ अध्यायः ॥ * ॥
अपरञ्च ।
हरिरुवाच ।
“निर्लक्षणा शुभा स्याच्च
चक्राङ्कितशिला-
र्च्चनात् ।
आदौ सुदर्शनो मूर्त्तिर्लक्ष्मीनारायणोऽपरः
॥
त्रिचक्रोऽसावच्युतः स्यात्
चतुश्चक्रश्चतुर्भुजः ।
वासुदेवश्च प्रद्युम्नस्ततः सङ्कर्षणः स्मृतः
॥
पुरुषोत्तमो ह्यष्टमः स्यान्नवव्यूहो
दशात्मकः ।
एकादशोऽनिरुद्धः स्याद्द्वादशो
द्वादशात्मकः ॥
अत ऊर्द्ध्वमनन्तः स्याच्चक्रैरेकादिकैः
क्रमः ।
सुदर्शनाद्या लक्षिताश्च पूजिताः
सर्व्वकामदाः ॥
शालग्रामशिला यत्र देवो द्वारवतीभवः ।
उभयोः सङ्गमो यत्र तत्र मुक्तिर्न संशयः
॥”
इति गारुडे ६५ अध्यायः ॥ * ॥
क्षेत्रविशेषः । यथा, --
धरण्युवाच ।

**शालग्रामगिरिः**, पुं, (शालग्रामस्य गिरिः ।)
शालग्रामोत्पादकपर्व्वतः । यथा, --
वाराह उवाच ।
“कथयिष्यामि ते गुह्यं शालग्राममिति
श्रुतम् ।
तस्मिन् क्षेत्रे हरो देवो मत्स्वरूपेण
संयुतः ॥
शालग्रामे गिरौ तस्मिन् शिलारूपेण
तिष्ठति ।
अहं तिष्ठामि तत्रैव गिरिरूपेण नित्यदा
॥
तस्मिन् शिलाः समग्रास्तु मत्स्वरूपा
न संशयः ।
पूजनीयाः प्रयत्नेन किं
पुनश्चक्रलाञ्छिताः ॥
लिङ्गरूपेण तु हरस्तत्र देवालये गिरौ ।
शिवनाभाः शिलास्तत्र चक्रनाभास्तथा
शिलाः ॥
सोमेश्वराधिष्ठितस्तु शिवरूपो गिरिः
स्मृतः ।
शालग्रामगिरिर्विष्णुरहं सोमेश्वराधिपः
॥
तयोः पर्व्वतयोर्यो वै शिला
विष्णुशिलाभिधाः ॥
रेवया च कृतं पूर्व्वं तपः शिवसुतुष्टिदम्
।
मम त्वत्सदृशः पुत्त्रो भूयादभिहितो
तया ॥
अहं कस्यापि न सुतः किं करिष्यामि
चिन्त-
यन् ।
रेवायाखु वरो देयस्त्ववश्यं मृगलाञ्छन
।
निश्चित्यैवं तदा प्रोक्तं
प्रसन्नेनान्तरात्मना ॥
लिङ्गरूपेण ते देवि गजाननपुरस्कृतः ।
गर्भे तव वसिष्यामि पुत्त्रो भूत्वा
शिवप्रिये ॥

नानावर्णोऽनेकमूर्त्तिर्नागभोगी त्वनन्तकः ।
स्थूलो दामोदरो नीलो मध्ये चक्रः सनीलकः ॥
संकीर्णद्वारको वोऽव्यादथ ब्रह्मा सुलोहितः ।
सदीर्घरेखः शुषिर एकचक्राम्बुजः पृथुः ॥
पृथुच्छिद्रस्थूलचक्रः कृष्णो विष्णुश्च बिन्दुवत् ।
हयग्रीवोऽङ्कुशाकारः पञ्चरेखः सकौस्तुभः ॥
वैकुण्ठो मणिरत्नाभ एकचक्राम्बुजोऽसितः ।
मत्स्यो दीर्घोम्बुजाकारो द्वाररेखश्च पातु वः ॥
वामचक्रो दक्षरेखः श्यामो वोऽव्यात्त्रिविक्रमः ।
शालग्रामे द्वारकायां स्थिताय गदिने नमः ॥
एकेन लक्षितो योऽव्याद्गदाधारी सुदर्शनः ।
एकद्वारे चतुश्चक्रं वनमालाविभूषितम् ॥
स्वर्णरेखासमायुक्तं गाष्पदेन विराजितम् ।
कदम्बकुसुमाकारं लक्ष्मीनारायणं विदुः ॥

“भगवन् देवदेवेश शालङ्कायनको मुनिः ।
किं चकार तपः कुर्व्वन् तव क्षेत्रे विमुक्तिदे ॥
वाराह उवाच ।
अथ दीर्घेण कालेन स ऋषिः संसितव्रतः ।
तप्यमानो यथान्यायं पश्यते शालमुत्तमम् ॥
विश्रामं कुरुते तत्र द्रष्टुकामोऽथ मां मुनिः ।
मायया मम मूढात्मा शक्तो द्रष्टुं न मामभूत् ॥
ततः पूर्व्वेण पार्श्वेन तस्य शालस्य सुन्दरि ।
वैशाखमासद्वादश्यां मद्दर्शनमुपागतः ॥
दृष्ट्वा मां तत्र स मुनिस्तपस्वी शंसितव्रतः ।
तुष्टाव वैदिकैः सूक्तैः प्रणम्य च पुनः पुनः ॥
ततोऽहं स्तूयमानो षै ऋषिमुख्येन सुन्दरि ।
प्राप्तोऽस्मि परमां प्रीतिं तमवोचं ततः ऋषिम् ॥
तत्राश्रमे महाभाग स्थित्वा त्वं तपसांनिधे ।
पुत्त्रेण परमप्रीतो मत्क्षेत्रे मत्समो भव ॥
अन्यच्च गुह्यं वक्ष्यामि शालङ्कायन तच्छृणु ।
तव प्रीत्या प्रवक्ष्यामि येनैतत् क्षेत्रमुत्तमम् ॥
शालग्राममिति ख्यातं तन्निबोध मुने शुभम् ।
योऽयं वृक्षस्त्वया दृष्टः सोऽहमेव न संशयः ॥
एतत् कोऽपि न जानाति विना देवं महेश्वरम् ।
एवं तस्मै वरं दत्त्वा शालङ्कायनकाय वै ॥
पश्यतस्तस्य वसुधे तत्रैवान्तर्हितोऽभवत् ।
वृक्षं दक्षिणतः कृत्वा जगाम स्वाश्रमं मुनिः ॥

मम त्वमपरा मूर्त्तिः ख्याता जलमयी शिवा ।
शिवशक्तिविभेदेन आवामेकत्र संस्थितौ ॥
एवं दत्तवरा रेवा मत्सान्निध्यमिहागता ।
रेवाखण्डमिति ख्यातं ततः प्रभृति गोपते ॥ * ॥
गण्डक्यापि पुरा तप्तं वर्षाणामयुतं विधे ।
शीर्णपर्णाशनं कृत्वा वायुभक्षाप्यनन्तरम् ॥
दिव्यं वर्षशतं तेपे विष्णुं चिन्तयती तदा ।
ततः साक्षाज्जगन्नाथो हरिर्भक्तजनप्रियः ॥
उवाच मधुरं वाक्यं प्रीतः प्रणतवत्सलः ।
गण्डकि ! त्वां प्रसन्नोऽस्मि तपसा विस्मितेऽनघे ॥
अनवच्छिन्नया शक्त्या वरं वरय सुव्रते ।
किं देयं तद्वदस्वाशु प्रीतोऽस्मि वरवर्णिनि ॥
गण्डक्यपि पुरो दृष्ट्वा शङ्खचक्रगदाधरम् ।
दण्डवत् प्रणता भूत्वा ततः स्तोत्रं प्रचक्रमे ॥
अहो देव मया दृष्टो दुर्दर्शो योगिनामपि ।
त्वया सर्व्वमिदं सृष्टं जगत् स्थावरजङ्गमम् ॥
ततो हिमांशे सा देवी गण्डकी लोकतारिणी ।
प्राञ्जलिः प्रणता भूत्वा मधुरं वाक्यमब्रवीत् ॥
यदि देव प्रसन्नोऽसि देयो मे वाञ्छितो वरः ।
मम गर्भगतो भूत्वा विष्णो मत्पुत्त्रतां व्रज ॥
ततः प्रसन्नो भगवान् चिन्तयामास गोपते ।

| | | |
|---|---|---|
| | मम तद्रोचते स्थानं गिरिकूटशिलोच्चये । शालग्राम इति ख्यातं भक्तसंसारमोक्षणम् ॥” इति वाराहे शालग्रामक्षेत्रमाहात्म्यवर्णन-नामाध्यायः ॥ | किं याचितं निम्नगया नित्यं मत्सङ्गलुब्धया ॥ दास्यामि याचितं येन लोकानां भवमोक्षणम् । इत्येवं कृपया देवो निश्चित्य मनसा स्वयम् ॥ गण्डकीं कथयामास शृणु देवि वचो मम । शालग्रामशिलारूपी तव गर्भगतः सदा ॥ तिष्ठामि तव पुत्रत्वे भक्तानुग्रहकारणात् । मत्सान्निध्यान्नदीनां त्वमतिश्रेष्ठा भविष्यसि ॥ दर्शनात् स्पर्शनात् स्नानात् पानाच्चैवावगा-हनात् । |

हरिष्यसि महापापं
वाङ्मनःकायसम्भवम् ॥”
इति वाराहे
सोमेश्वरादिलिङ्गमहिमावमुक्ति-
क्षेत्रत्रिवेण्यादिमहिमानामाध्यायः ॥

**शालङ्कटङ्कटः**, पुं, सुकेशीराक्षसः । स विद्युत्-
केशिभार्य्याशालङ्कटङ्कटायाःपुत्रः ।
इति
वामनपुराणम् ॥

**शालङ्कायनः**, पुं, (शलङ्कस्यापत्यम् ।
“नडादिभ्यः
फक् ।” ४ । १ । ९९ । इति फक् ।)
मुनिविशेषः ।
नन्दी । इति मेदिनी ॥

**शालङ्कायनजीवसूः**, स्त्री, व्यासमाता । यथा, --
“व्यासस्याम्बा सत्यवती वासवी
गन्धकालिका ।
योजनगन्धा दासेयी
शालङ्कायनजीवसूः ॥”
इति हेमचन्द्रः ॥

**शालङ्किः**, पुं, मुनिभेदः । यथा, --
“वशिष्ठोऽरुन्धतीनाथो
मैत्रावरुणिरित्यपि ।
शालातुरीयः शालङ्किर्दाक्षीपुत्त्रस्तु
पाणिनिः ॥”
इति जटाधरः ॥

**शालजः**, पुं, (शालाज्जायते इति । जन् + डः ।)
शालमत्स्यः । यथा । शालः
शालजगर्जकौ ।
इति शब्दरत्नावली ॥

**शालनिर्यासः**, पुं, (शालस्य निर्यासः ।) सर्ज-
रसः । धूना इति भाषा । तत्पर्य्यायः ।
शालनः
२ सर्जः ३ सर्जरसः ४ । इति
रत्नमाला ॥

काष्ठादिनिर्म्मितपुत्त्रिका । (यथा, राजतरङ्गि-
ण्याम् । २ । ६६ ।
“अलोलकीर्त्तिकल्लोलकूलवसनोज्ज्वलाम् ।
बभार यद्भुजस्तम्भो जयश्रीशालभञ्जिकाम् ॥”)
वेश्या । इति जटाधरः ॥

**शालभञ्जी**, स्त्री, काष्ठादिनिर्म्मितपुत्त्रिका । इति
हेमचन्द्रः ॥

**शालवः**, पुं, लोध्रः । इति शब्दरत्नावली ॥

**शालवेष्टः**, पुं, (शालस्य वेष्टो निर्यासः ।) शाल-
निर्यासः । इति त्रिकाण्डशेषः ॥

**शालसारः**, पुं, (शालस्य सारः ।) द्रुमः । हिङ्गुः ।
इति विश्वः ॥

**शाला**, स्त्री, (शो + “बाहुलकात् श्यतेरपि
कालन् ।” इत्युज्ज्वलदत्तोक्त्या कालन् । १ ।
११७ ।)
गृहम् । इत्यमरः ॥ (यथा, भागवते । ८ । ९ ।
१६ ।
“धूपामोदितशालायां जुष्टायां माल्यदीपकैः
॥”)
वृक्षस्य स्कन्धशाखा । गृहैकदेशः । इति
मेदिनी ॥

**शालाकी**, [न्] पुं, अस्त्रवैद्यः । नापितः । शेल-
धारी । इति केचित् ॥

**शालाङ्की**, स्त्री, पुत्तलिका । इति शब्दरत्नावली ॥

**शालाजिरः**, पुं, क्ली, सरावः । इति हेमचन्द्रः
शब्दारत्नावली च ॥

**शालाञ्चिः**, स्त्री, शाकभेदः । इति शब्दरत्नावली ॥

**शालानी**, स्त्री, विदारी । इति शब्दरत्नावली ॥

**शालामृगः**, पुं, (शालाया मृगः ।) श्रृगालः ।
इति हारावली ॥

**शालारं**, क्ली, (शालां ऋच्छतीति । ऋ + अण् ।)
हस्तिनखः । सोपानम् । पक्षिपञ्जरः । इति
मेदिनी ॥

शालीनां नामानि यथा, --
“रक्तशालिः सकलमः पाण्डुकः
शकुनादृतः ।
सुगन्धकः कर्द्दमको महाशालिश्च दूषकः
॥
पुष्पाण्डकः पुण्डरीकस्तथा
महिषमस्तकः ।
दीर्घशूकः काञ्चनको हायनो लोध्रपुष्पकः
।
इत्याद्याः शालयः सन्ति बहवो
बहुदेशजाः ॥”
अथ तेषां गुणाः ।
“शालयो मधुराः स्निग्धा बल्या
बद्धाल्पवर्च्चसः ।
कषाया लघवो रुच्या स्वर्य्या वृष्याश्च
वृंहणाः ॥
अल्पानिलकफाः शीताः पित्तघ्ना
मूत्रलास्तथा ।
शालयो दग्धभूजाताः कषाया
लघुपाकिनः ॥
सृष्टमूत्रपूरीषाश्च रूक्षाः श्लेष्मापकर्षणाः
।
केदाराः वातपित्तघ्ना गुरवः कफशुक्रलाः
॥
कषाया अल्पवर्च्चस्का मधुराश्च
बलावहाः ॥”
केदाराः कृष्टक्षेत्रजा उप्ताः ।
“स्थलजाः स्वादवः पित्तकफघ्ना
वातवह्निदाः ।
किञ्चित्तिक्ताः कषायाश्च विपाके कटुका
अपि ॥”
स्थलजा अकृष्टभूमिजाः स्वयंजाताः ।
“वापिता मधुरा वृष्या बल्याः
पित्तप्रणाशनाः ॥
श्लेष्मलाश्चाल्पवर्च्चस्काः कषाया गुरवो
हिमाः ॥”
वापिताः कृष्णक्षेत्रे अकृष्णक्षेत्रे च ।
“वापिकेभ्यो गुणैः किञ्चिद्धीनाः प्रोक्ता
अवा-

धूनकः ५ वह्निवल्लभः ६ सर्ज्जमणिः ७ । इति
त्रिकाण्डशेषः ॥

**शालपर्णी**, स्त्री, (शालस्य पर्णवत् पर्णमस्याः ।
ङीष् ।) वृक्षविशेषः । शालपाणी इति भाषा ।
तत्पर्य्यायः । सुदला २ सुपत्री ३ स्थिरा ४ सौम्या ५
कुमुदा ६ गुहा ७ ध्रुवा ८ विदारिगन्धा ९
अंशुमती १० सुपर्णिका ११ दीर्घमूला १२
दीर्घपत्रिका १३ वातघ्नी १४ पीतिनी १५
तन्वी १६ सुधा १७ सर्व्वानुकारिणी १८
शोफघ्नी १९ सुभगा २० देवी २१ निश्चला २२
व्रीहिपर्णिका २३ सुमूला २४ सुरूपा २५
शुभपत्रिका २६ सुपर्णी २७ शालिपत्री २८
शालिदला २९ । इति राजनिर्घण्टः । विदारी
३० सालपर्णी ३१ । इत्यमरटीकायां भरतः ॥
अस्या गुणाः । ग्राहित्वम् । कफपित्तनाशि-
त्वञ्च । इति राजवल्लभः ॥ तिक्तत्वम् । गुरु-
त्वम् । उष्णत्वम् । वातदोषविषमज्वरमेहार्शः-
शोफसन्तापनाशित्वञ्च । इति राजनिर्घण्टः ॥
अपि च ।
"शालपर्णी स्थिरा सौम्या त्रिपर्णी पीवरा गुहा ।
विदारिगन्धा दीर्घाङ्घ्रिर्दीर्घपत्रांशुमत्यपि ॥

**शालावृकः**, पुं, (शालायां गृहे शाखायां वा वृक
इव ।) वानरः । कुक्कुरः । शृगालः । इत्यमरः ॥
मृगः । इति शब्दरत्नावली । विडालः । इति
राजनिर्घण्टः ॥

**शालिः**, पुं, (शृणातीति । शॄ + बालुलकात् इञ् ।
रस्य लत्वम् ।) गन्धमार्ज्जारः । इति मेदिनी ॥
कलमादिधान्यम् । षष्टिकादिधान्यम् । इत्य-
मरः ॥ तत्पर्य्यायः । मधुरः २ रुच्यः ३ व्रीहि-
श्रेष्ठः ४ नृपप्रियः ५ धान्योत्तमः ६ कैदारः ७
सुकुमारकः ८ । पुस्तकान्तरे मधुरस्थाने कलम
इति पाठः । स तु दशविधः । यथा, --
"राजान्नषष्टिकसितेतररक्तमण्ड-
स्थूलाणुगन्धतिरियादिकशालिसंज्ञाः ।
व्रीहिस्तथेति दशधा भुवि शालयः स्यु-
स्तेषां क्रमेण गुणनामगणं ब्रवीमि ॥"
इति राजनिर्घण्टः ॥
अस्य गुणाः ।
"शालयो मधुराः शीता लघुपाका बलावहाः ।
पित्तघ्नाश्चानिलकफाः स्निग्धा बद्धाल्पवर्च्चसः ॥"
इति राजवल्लभः ॥ * ॥
अथ शालिधान्यलक्षणम् ।
"कण्डनेन विना शुक्ला हैमन्ताः शालयः स्मृताः ॥"
पिताः ॥"
कृष्णक्षेत्रे अकृष्टक्षेत्रे च ।
"रोपितास्तु नवाः वृष्याः पुराणा लघवः स्मृताः ।
रोपितारोपिता भूयः शीघ्रपाका गुणाधिकाः ॥
छिन्नरूढा हिमा रूक्षा बल्याः पित्तकफा-पहाः ।
बद्धविट्काः कषायाश्च लघवश्चाल्पतिक्तकाः ॥"
अथ रक्तशालेर्गुणाः ॥
"रक्तशालिर्व्वरस्तेषु बल्यो वर्ण्यस्त्रिदोषजित् ।
चक्षुष्यो मूत्रलः स्वर्य्यः शुक्रलस्तृड्ज्वरापहः ।
विषव्रणश्वासकासदाहनुद्वह्निपुष्टिदः ।
तस्मादल्पान्तरगुणाः शालयो महदादयः ॥"
रक्तशालिः दाउदखानी इति मगधदेशे प्रसिद्धः ।
इति भावप्रकाशः ॥ (पक्षी । इत्युणादिवृत्तौ
उज्ज्वलः । ४ । १२७ ॥)

**शालिका**, स्त्री, (शालिरेव । स्वार्थे कन् । विदा-
दिका । इति शब्दरत्नावली ॥

**शालिञ्चः**, पुं, शाकविशेषः । शाञ्च्या इति भाषा ।
तत्पर्य्यायः । शालञ्चः २ शितसारः ३ पत्रकेष्टः ४
लोहसारकः ५ । अस्य गुणाः । दीपनत्वम् ।
तिक्तत्वम् । प्लीहार्शःकफवातनाशित्वञ्च । इति
राजनिर्घण्टः ॥

**शालिञ्ची**, स्त्री, (शालिञ्च + स्त्रियां ङीष् ।)
शाकभेदः । शाञ्चे इति भाषा । अस्य प्रमाणं
शौल्फशब्दे द्रष्टव्यम् ॥

**शालिनीकरणं**, क्ली, न्यग्भावनम् । इति त्रिकाण्ड-
शेषः ॥ तिरस्कार इति यावत् ॥

शालपर्णी

गरच्छर्द्दिज्वरश्वासातिसारजित्।

शोषदोषत्रयहरी वृंहण्युक्ता रसायनी ।

तिक्ता विषहरी स्वादुः

क्षतकाशकृमिप्रणुत् ॥”

इति भावप्रकाशः ॥

**शालभञ्जिका**, स्त्री, (शालेन भज्यते निर्म्मीयते इति ।

भन्ज + “क्वुन्

शिल्पिसंज्ञयोरपूर्व्वस्यापि ।”

उणा० २ । ३२ । इति क्वुन् । टापि

अत इत्वम् ।)

**शालिपर्णी**, स्त्री, (शालेरिव पर्णानि यस्याः ।

ङीष् ।) माषपर्णी । इति राजनिर्घण्टः ॥

**शालिपिष्टं**, क्ली, (शालेः पिष्टमिव शुभ्रत्वात् ।)

स्फटिकम् । इति त्रिकाण्डशेषः ॥

**शालिवाहनः**, पुं, राजविशेषः । स तु शककर्त्ता

विक्रमादित्यशत्रुश्च ॥

**शालिहोत्रः**, पुं, घोटकः । इति त्रिकाण्डशेषः ॥

**शाली**, [न्] त्रि, (शालास्यास्तीति । इनिः ।)

शालाविशिष्टः । पदान्ते युक्तवाचकः । यथा, --
"चन्दनचर्च्चितनीलकलेवरपीतवसनवनमाली ।
केलिचलन्मणिकुण्डलमण्डितगण्डयुगस्मित-
शाली ॥"
इति जयदेवः ॥
(श्लाघ्यः । यथा, भागवते । ३ । २४ । १ ।
"दायालुः शालिनीमाह शुक्लाभिर्व्याहृतं
स्मरन् ॥")

**शाली**, स्त्री, कृष्णजीरकः । इति राजनिर्घण्टः ॥

**शालीनः**, त्रि, (शालाप्रवेशनमर्हतीति । शाला +

"शालीनकौपीने अधृष्टाकार्य्ययोः ।" ५ । २ । २० ।
इति खञ्प्रत्ययेन निपातनात् सिद्धम् ।)
अधृष्टः । इत्यमरः ॥ (यथा, मार्कण्डेये । ४१ । ९ ।
"अथ नित्यं गृहस्थेषु शालीनेषु चरेद्यतिः ॥")
शालासम्बन्धी च ॥

**शालीना**, स्त्री, (शालिन + टाप् ।) मिश्रया ।

इति राजनिर्घण्टः ॥

**शालु**, क्ली, (शृणाति शीतागमे । शॄ + बाहुलकात्

ञुण् रेफस्य लत्वञ्च । इत्युज्ज्वलः । १ । ५ ।)
शालूकम् । इति शब्दरत्नावली ॥

**शालुः**, पुं, (शॄ + ञुण् रेफस्य लत्वञ्च ।) कषाय-

द्रव्यम् । चौरकाख्यौषधिः । इति मेदिनी ॥
भेकः । इति हेमचन्द्रः ॥

**शालुकं**, क्ली, कुमुदादिमूलम् । तत्पर्य्यायः । पङ्क-

शूरणम् २ शालूकः ३ शालु ४ । इति शब्द-
रत्नावली ॥

**शालूकं**, क्ली, (शल + "शलिमण्डिभ्यामूकण् ।"

**शालोत्तरीयः**, पुं, (शालोत्तरे ग्रामे भवः । शालो-

त्तर + छः ।) पाणिनिमुनिः । इति त्रिकाण्ड-
शेषः ॥

**शाल्मलः**, पुं, शाल्मलीवृक्षः । इति शब्दरत्ना-

वली ॥ (यथा, महाभारते । ३ । ६४ । ३ ।
"अर्ज्जनारिष्टसञ्छन्नं स्यन्दनैश्च सशाल्मलैः ॥")
द्वीपविशेषः । इति शब्दमाला ॥ तद्विवरणं
यथा, --
"अत ऊर्द्ध्वं प्रवक्ष्यामि शाल्मलस्य निबोधत ।
शाल्मलो द्विगुणो द्वीपः क्रौञ्चद्वीपस्य विस्तरात् ॥
परिवार्य्य समुद्रन्तु दधिमण्डोदकं स्थितः ।
तत्र पुण्या जनपदाश्चिराच्च म्रियते जनः ॥
कुत एव सुदुर्भिक्षं क्षमातेजोयुता हि ते ।
प्रथमः सूर्य्यसङ्काशः सुमना नाम पर्व्वतः ॥
पीतस्तु मध्यमस्तत्र शातकौम्भमयो गिरिः ।
नाम्ना सर्व्वसुखो नाम दिव्यौषधिसमन्वितः ॥
तृतीयश्चैव सौवर्णो भृङ्गपत्रनिभो गिरिः ।
स नाम्ना रोहितो नाम दिव्यो गिरिवरो महान् ॥
सुमनाः कुशलो देशः सुखोदर्कः सुखोदयः ।
रोहितस्तु तृतीयस्तु रोहिणी नाम विश्रुतः ॥
कपिला ब्राह्मणाः प्रोक्ता राजानश्चारुणास्तथा ।
पीता वैश्यास्तथा कृष्णा द्वीपेऽस्मिन् वृषला द्विजाः ॥"
इति कौर्म्मे भुवनविन्यासे ४६ अध्यायः ॥ * ॥
मोचरसः । इति रत्नमाला ॥

**शाल्मलिः**, पुं, स्त्री, वृक्षविशेषः । शिमुल इति

भाषा ॥ (यथा मनौ । ८ । ४६ ।
"शाल्मलीन् शालतालांश्च क्षीरिणश्चैव पाद-
पान् ॥")
तत्पर्य्यायः । पिच्छिला २ पूरणी ३ मोचा ४
स्थिरायुः ५ । इत्यमरः ॥ दुरारोहा ६ शाल्म-
लिनी ७ शाल्मलः ८ । इति शब्दरत्नावली ॥
तुलिनी ९ कुक्कुटी १० रक्तपुष्पा ११ कण्ट-
कारी १२ मोचनी १३ । इति जटाधरः ॥
चिरजीवी १४ पिच्छिलः १५ रक्तपुष्पकः १६
तूलवृक्षः १७ मोचाख्यः १८ कण्टकद्रुमः १९
रक्तोत्पलः २० रम्यपुष्पः २१ बहुवीर्य्यः २२
यमद्रुमः २३ दीर्घद्रुमः २४ स्थूलफलः २५
दोर्घायुः २६ । इति राजनिर्घण्टः ॥ कण्ट-
काष्ठः २७ । इति भावप्रकाशः ॥ अस्य गुणाः ।
पिच्छिलत्वम् । वृष्यत्वम् । बल्यत्वम् । मधु-
रत्वम् । शीतलत्वम् । कषायत्वम् । लघुत्वम् ।

उणा० ४ । ४२ । इति ऊकण् ।) कुमुदादि-
मूलम् । इत्यमरः ॥ जातीफलम् । इति राज-
निर्घण्टः ॥

**शालूकः**, पुं, (शल + "शलिमण्डिभ्यामूकण् ।"
उणा० ४ । ४२ । इत्यूकण् ।) कुमुदादिमूलम् ।
इति त्रिकाण्डशेषः ॥ (यथा, बृहत्संहिता-
याम् । ४१ । ३ ।
"मिथुनेपि धान्यशारदवल्लीशालूककार्पासाः ॥")
मण्डूकः । इति राजनिर्घण्टः ॥

**शालूरः**, पुं, (शलते प्लवेन गच्छतीति । शल +
"खर्ज्जिपिञ्जादिभ्यः ऊरोलचौ ।" उणा० ४ । ९० ।
इति ऊरः ।) भेकः । इत्यमरः ॥

**शालेयं**, त्रि, (शालीनां क्षेत्रम् । शालि + "व्रीहि-
शाल्योर्ढक् ।" ५ । २ । २ । इति ढक् ।) शाल्युद्भव-
क्षेत्रम् । इत्यमरः ॥ शालासम्बन्धि शालसम्बन्धि
च ॥

**शालेयः**, पुं, मधुरिका । इत्यमरः ॥

**शालेया**, स्त्री, (शालेय + टाप् ।) मिश्रेया ।
इति राजनिर्घण्टः ॥

तत्र रत्नान्यनेकानि स्वयं रक्षति
वासवः ।
प्रजापतिमुपादाय प्रसन्नो विधिवत्
स्वयम् ॥
न तत्र नद्यो वर्षं वा शीतोष्णञ्चैव
तद्विधम् ।
वर्णाश्रमाणां वार्त्ता वा त्रिषु द्वीपेषु
विद्यते ॥
न गृहं न च दण्डोऽस्ति ईर्ष्यासूया
भयं तथा ।
उद्भिदान्युदकान्यत्र गिरिप्रस्रवणानि
च ॥
भोजनं षड्रसं तत्र तेषां
स्वयमुपस्थितम् ।
अधमोत्तमो न तेष्वस्ति न लोभो न
परिग्रहः ॥
अरोगा बलवन्तश्च एकान्तसुखिताः
प्रजाः ।
त्रिंशद्वर्षसहस्राणि मानसीं
सिद्धिमास्थिताः ॥
स्वस्वमायुःस्वरूपञ्च धर्म्मैश्वर्य्यं
तथैव च ।
शाल्मलाद्येषु विज्ञेयं द्वीपेषु त्रिषु
सर्व्वशः ॥
व्याख्यातः शाल्मलाद्यानां
द्वीपानान्तु विधिः
शुभः ।
परिमण्डलस्तु स द्वीपश्चक्रवत्
परिवेष्टितः ।
सुरोदेन समुद्रेण द्विगुणेन समन्वितः
॥"
इति मत्स्यपुराणे भुवनकोषे
सप्तद्वीपनिवेशनं
नाम १०० अध्यायः ॥ * ॥ अपि च
।
"प्लक्षद्वीपप्रमाणात्तु द्विगुणेन
समन्ततः ।
संवेष्ट्येक्षुरसाम्भोधिं शाल्मलिः
संव्यवस्थितः ॥
सप्त वर्षाणि तत्रैव तत्रैव कुलपर्व्वताः
।

स्निग्धत्वम् । शुक्रश्लेष्मवर्द्धनत्वञ्च ।
तद्रसगुणाः ।
ग्राहित्वम् । कषायत्वम् ।
कफनाशित्वञ्च ॥
तत्पुष्पं फलञ्च तद्विधम् । इति
राजनिर्घण्टः ।
"शाल्मली शीलता स्वाद्वी रसे पाके
रसायनी ।
श्लेष्मला स्निग्धबीजा च वृंहणी
रक्तपित्तजित ॥
शाल्मलीपुष्पशाकन्तु
घृतसैन्धवसाधितम् ।
प्रदरं नाशयत्येव दुःसाध्यञ्च न
संशयः ॥
रसे पाके च मधुरं कषायं शीतलं गुरु
।
कफपित्तास्रजिद्ग्राहि वातलञ्च
प्रकीर्त्तितम् ॥"
इति भावप्रकाशः ॥ * ॥
नरकविशेषः । तत्र शाल्मलिकण्टकैः
पीड्यन्ते ॥

**शाल्मलिकः**, पुं, (शाल्मली +
"वुञ्छण्कठजिति ।"
४ । २ । ८० । इति कुमुदादित्वात्
ठक् ।)
रोहितकवृक्षः । इति राजनिर्घण्टः ॥

**शाल्मलिनी**, स्त्री, शाल्मलिवृक्षः । इति
शब्दरत्ना-
वली ॥

**शाल्मलिपत्रकः**, पुं, (शाल्मलिपत्रमिव पत्रं
यस्य ।)
सप्तच्छदवृक्षः । इति राजनिर्घण्टः ॥

**शाल्मलिस्थः**, पुं, (शाल्मलौ वृक्षे तिष्ठतीति ।
स्था
+ कः ।) गरुडः । इति राजनिर्घण्टः
॥

**शाल्मली**, स्त्री, (शाल्मलि + कृदिकारादिति
वा
ङीष् ।) शाल्मलिवृक्षः । इत्यमरः ॥
शलति

| | | |
|---|---|---|
| | ऋज्वायताः सुपर्व्वाणः सप्त नद्यश्च सुव्रताः ॥<br>कुमुदश्चोन्नतश्चैव तृतीयश्च बलाहकः ।<br>द्रोणः कर्णस्तु महिषः ककुद्मान् सप्त पर्व्वताः ॥<br>योनितोषा विभृष्टा च चन्द्रा शुक्ला विमोचनी ।<br>निवृत्तिश्चेति ता नद्यः स्मृताः पापहराः<br>शिवाः ॥<br>न तेषु विद्यते लोभः क्रोधो वा द्विजसत्तमाः ।<br>न चैवास्ति युगावस्था जना जीवन्त्यनामयाः ॥<br>यजन्ति सततं तत्र वर्णा वायुं सनातनम् ।<br>तेषां तस्याथ सायुज्यं स्वारूप्यञ्च सलोकताम् ॥ | दैर्घ्यात् दूरं गच्छति शाल्मलिः । शल ज गतौ<br>नाम्नीति मलिण् वृद्धिः । द्वयोरित्युक्ते स्त्रीपक्षे<br>पाच्छोणादीति ईपि शल्मली च शाल्मलिश्चेति<br>केचित् तन्मते विभाषया वृद्धिः । शल्मली रक्त-<br>पुष्पा च ककुटी चिरजीविका इति कोषान्तर-<br>मिति मुकुटः । इत्यमरटीकायां भरतः ॥<br><br>**शाल्मली**, [न्] पुं, (शाल्मलः आश्रयत्वेनास्त्यस्येति ।<br>इनिः ।) गरुडः । इति त्रिकाण्डशेषः ॥ |

**शाल्मलीकन्दः**, पुं, (शाल्मल्याः कन्दः ।) शाल्मलि-

वृक्षमूलम् । तत्पर्य्यायः । विजुलः २ वन-

वासकः ३ वनवासी ४ मलघ्नः ५ मलहन्ता

६ ।

अस्य गुणाः । मधुरत्वम् । मलसंग्रहरोधजय-

कारित्वम् । शिशिरत्वम् । पित्तदाहार्त्तिशोफ-

सन्तापनाशित्वञ्च । इति राजनिर्घण्टः ॥

**शाल्मलीफलः**, पुं, (शाल्मल्याः फलमिव फलं यस्य ।)

तेजःफलवृक्षः । इति राजनिर्घण्टः ॥

**शाल्मलीवेष्टः**, पुं, (शाल्मल्या वेष्टः ।) शाल्मलि-

निर्यासः । शिमुल आठा इति भाषा ॥ तत्-

पर्य्यायः । पिच्छा २ । इत्यमरः ॥ मोचरसः

३

शाल्मलः ४ शाल्मलीवेष्टकः ५ । इति रत्न-

माला ॥ मोचस्रावः ६ मोचनिर्यासः ७ ।

अस्य गुणाः ।

"मोचस्रावो हिमो ग्राही स्निग्धो वृष्यः

कषायकः ।

प्रवाहिकातिसारामकफपित्तास्रदाहनुत्॥"

इति भावप्रकाशः ॥

**शाल्मलीवेष्टकः**, पुं, (शाल्मलीवेष्ट + स्वार्थे कन् ।)

शाल्मलीवेष्टः । इति रत्नमाला ॥

**शाल्वः**, पुं, देशविशेषः । यथा, --

"शाल्वास्तु कारकुक्षीया मरवस्तु दशेरकाः

॥"

इति हेमचन्द्रः ॥

राजविशेषः । इति महाभारतम् ॥ (भीष्मेण

सहास्य युद्धवृत्तान्तो महाभारते आदिपर्व्वणि

१०२ अध्याये तथा कृष्णेन सहास्य युद्ध-

वृत्तान्तस्तत्रैव वनपर्व्वणि १५

अध्यायमारभ्य

द्रष्टव्यः ॥)

**शाल्वणः**, पुं, वातघ्नौषधगणविशेषः । यथा, --

"काकोल्यादिः स वातघ्नः

सर्व्वाम्लद्रव्यसंयुतः ।

"संपूज्य प्रेषणं कुर्य्यात् दशम्यां

शावरोत्सवैः ॥"

इति तिथ्यादितत्त्वम् ॥

**शावरभेदाक्षं**, क्ली, ताम्रम् । इति हेमचन्द्रः ॥

**शावरी**, स्त्री, शूकशिम्बी । इति मेदिनी ॥

**शावरोत्सवः**, पुं, (शावराणामुत्सवः ।) म्लेच्छ-

कृतोत्सवः । यथा, --

"पूजयित्वा महाष्टम्यां नवम्यां बलिभिस्तथा

।

विसर्ज्जयेत् दशम्यां तु श्रवणे शावरोत्सवैः

॥

अन्तःपादो दिवाभागे श्रवणस्य यदा भवेत् ।

तदा संप्रेषणं देव्या दशम्यां शावरोत्सवैः ॥

रागिणीभिः कुमारीभिर्व्वेश्याभिर्नर्त्तकैस्तथा

।

शङ्खतूर्य्यनिनादैश्च मृदङ्गैः पटहैस्तथा ॥

ध्वजैर्व्वस्त्रैर्ब्बहुविधैर्लाजपुष्पप्रकीर्णकैः ।

धूलीकर्द्दमविक्षेपैः क्रीडाकौतुकमङ्गलैः ॥

भगलिङ्गविधानैश्च भगलिङ्गप्रगीतकैः ।

भगलिङ्गादिशब्दैश्च क्रीडयेयुरलं जनाः ॥

परैर्निक्षिप्यते यस्तु यः परं नाक्षिपत्यपि ।

क्रुद्धा भगवती तस्य शापं दद्यात् सुदारुणम्

॥"

इति कालिकापुराणे उत्तरतन्त्रे ६०

अध्यायः ॥

**शाश्वतं**, त्रि, (शश्वद्भवम् । शश्वत् + अण् ।)

नित्यम् । इत्यमरः ॥ (यथा, रामायणे ।

१ । २ । १५ ।

"मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः

समाः ।

यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम्

॥")

पारिभाषिकशाश्वतं यथा, --

"शाश्वतं देवपूजादि विप्रदानञ्च शाश्वतम् ।

शाश्वतं सगुणा विद्याः सुहृन्मित्रञ्च शाश्वतम्

॥"

इति गारुडे नीतिसागरे १०९ अध्यायः ॥

**शासनं**, क्ली, (शास + ल्युट् ।) आज्ञा । (यथा,

मनौ । ९ । २६२ ।

"कुर्व्वीत शासनं राजा सम्यक्

सारापरा-

धतः ॥")

तत्पर्य्यायः । अववादः २ निर्द्देशः ३

निदेशः ४

शिष्टिः ५ । इत्यमरः ॥ शास्तिः ६ ।

इति

भरतः ॥ आदेशः ७ आदेशनम् ८ ।

इति

शब्दरत्नावली ॥ शास्त्रम् ९ । इति

जटाधरः ॥

राजदत्तभूमिः । लेखा । शास्त्रम् ।

शास्तिः ।

इति मेदिनी ॥

(दानलिखितताम्रफलकादिः ।

यथा, कथासरित्सागरे । १२४ ।

६२-६३ ।

"शासनं लेखयित्वा च तमेवं स

समादिशत् ।

ॐकारपीठमार्गेण भद्र गच्छोत्तरां

दिशम् ॥

तत्रामुना शासनेन ग्रामं भुङ्क्ष्व

मदर्पितम् ।

नाम्ना तं खण्डवटकं पृच्छन्

गच्छन्नवाप्स्यसि ॥"

यथाच मार्कण्डेये । ३६ । ८ ।

"वाच्यं ते शासनं पट्टे

क्षुद्राक्षरनिवेशितम् ॥"

स्त्रियां धर्म्मोपदेशकर्त्री । यथा, ऋग्वेदे

। १ ।

३१ । ११ ।

"इळामकृण्वन्मनुषस्य शासनीम् ॥")

**शासनहरः**, पुं, (हरतीति । हृ + अच् । शास-

नस्य हरः ।) राजदूतः । आज्ञावाहकः

। इति

केचित् ॥

सानूपोदकमांसस्तु सर्व्वस्नेहसमन्वितः ॥
सुखोष्णः स्पष्टलवणः शाल्वणः परिकीर्त्तितः ।
तेनीपनाहं कुर्व्वीत सर्व्वदा वातरोगिणाम् ॥"
इति सुश्रुते चिकित्सितस्थाने ५ अध्यायः ॥

**शावः**, पुं, (शव्यते प्राप्यते इति । शव गतौ + घञ् ।) शिशुः । इति शब्दरत्नावली ॥ (यथा रघुवंशे । ६ । ३ ।
"शिलाविभङ्गैर्मृगराजशावः
तुङ्गं नगोत्सङ्गमिवारुरोह ॥"
शवस्यायम् । शव + अण् ।) शवसम्बन्धिनि, त्रि ॥ यथा, --
"ग्रहणे शावमाशौचं विमुक्तो सौतिकं स्मृतम् ।
तयोः सम्पत्तिमात्रेण उपस्पृश्य क्रियाक्रमः ॥"
इति तिथ्यादितत्त्वे ब्रह्माण्डपुराणम् ॥

**शावकः**, पुं, (शाव एव । स्वार्थे कन् ।) शिशुः । इत्यमरः ॥ (यथा, वृहत्संहितायाम् । ४८ । १३ ।
"दत्ताभयखगमृगशावकेषु तेष्वाश्रमेष्वथवा ॥")

**शावरः**, पुं, (शवराणामयम् । शवर + अण् ।) पापम् । अपराधः । लोध्रवृक्षः । इति मेदिनी ॥
शवरस्वामिकृतभाष्यविशेषः । शिवकृततन्त्र-विशेषश्च । शवरसम्बन्धिनि, त्रि । यथा, --

**शाश्वतः**, पुं, वेदव्यासः । इति शब्दरत्नावली ॥
(शिवः । यथा महाभारते । १३ । १७ । ३२ ।
"प्रवृत्तिश्च निवृत्तिश्च नियतः श्वाश्वतो ध्रुवः ॥")

**शास्कुलः**, त्रि, मांसाशी । इति हेमचन्द्रः ॥

**शास्कुलिकं**, क्ली, (शस्कुल + समूहार्थे ठक् ।)
शस्कुलिसमूहः । इत्यमरः ॥

**शास**, उ क्ष लु शासने । इति कविकल्पद्रुमः ॥
(अदा०-पर०-सक०-सेट् । क्तावेट् ।) उ, शासित्वा शिष्ट्वा । क्ष, शासति । लु, शास्ति ।
शास्ति यश्चाज्ञया राज्ञः स सम्राडित्यमरः ।
इति दुर्गादासः ॥

**शास** ङ उ आशिषि । इति कविकल्पद्रुमः ॥
(भ्वा०-अदा० च-आत्म०-सक०-सेट् ।) आङ्पूर्ब्बा इति केवलानामन्यपूर्ब्बा-णाञ्च प्रयोगनिरासार्थम् । किन्तु इदं गुरुभ्यः पूर्ब्बेभ्यो नमो वाकं प्रशास्महे ।
इत्युत्तरचरिते
प्रपूर्ब्बोऽपि दृश्यते । ङ, आशासते । उ, आशा-
सित्वा आशास्त्वा ।
पञ्चमस्वरानुबन्धसामर्थ्यात्
क्त्राप्रत्ययस्य न यप् समासाभावादिति गोविन्द-
भट्टः । किन्तु अस्य उदनुबन्धफलं छन्दस्येवेति
धातुप्रदीपः । ल ङ, आशास्ते शासु ङिद्धस ङे
इत्यत्र जक्षादीयशास्तेरेव ग्रहणादस्योपधाया इकारो न स्यात् । आशीरिष्टार्थाशंसनम् ।
इच्छायामित्यन्ये । इति दुर्गादासः ॥

**शास** ल ङ आशिषि । इति कविकल्पद्रुमः ॥
(भ्वा०-अदा० च-आत्म०-सक०-सेट् ।) आङ्पूर्ब्बा इति केवलानामन्यपूर्ब्बा-णाञ्च प्रयोगनिरासार्थम् । किन्तु इदं गुरुभ्यः

**शासितः**, त्रि, (शास + क्तः ।) कृतशासनः । यथा,
"सुजीर्णमन्नं सुविचक्षणः सुतः
सुशासिता स्त्री नृपतिः सुसेवितः ।
सुचिन्त्य चोक्तं सुविचार्य्य यत् कृतं
सुदीर्घकालेऽपि न याति विक्रियाम् ॥"
इति पञ्चरत्नम् ॥

**शासिता**, [ऋ] त्रि, (शासु + तृच् ।) शास्ता ।
इति त्रिकाण्डशेषः ॥ (यथा, मनौ । ७ । १७ ।
"स राजा पुरुषो दण्डः स नेता
शासिता च सः ॥"
व्याख्याता । यथा, तत्रैव । २ । १५० ।
"ब्राह्मस्य जन्मनः कर्त्ता स्वधर्म्मस्य च
शासिता ॥")

**शास्ता**, [ऋ] त्रि, (शासु + "तृन्तृचौ शंसीति ।"
उणा० २ । ९४ । इति असंज्ञायामपि तृन् ।
स च अनिट् ।) शासनकर्त्ता ।
तत्पर्य्यायः । देशकः
२ शासिता ३ । इति त्रिकाण्डशेषः ॥
यथा, --
"द्वौ धाता च विधाता च पौराणौ जगतः
पती ।
द्वौ शास्तारौ त्रिलोकेऽस्मिन् धर्म्माधर्म्मौ प्रकी-
र्त्तितौ ॥"
इति वह्निपुराणे गणभेदनामाध्यायः ॥
(यथा च भागवते । १ । १२ । २६ ।
"राजर्षीणां जनयिता शास्ता चोत्पथगामि-
नाम् ॥")

**शास्ता**, [ऋ] पुं, (शासु + "तृन्तृचौ शसिक्ष-
दादिभ्यः संज्ञायां चानिटौ ।" उणा० २ । ९४ ।

| | | |
|---|---|---|
| | पूर्ब्बेभ्यो नमो वाकं प्रशास्महे ।<br>इत्युत्तरचरिते<br>प्रपूर्ब्बोऽपि दृश्यते । ङ, आशासते । उ,<br>आशा-<br>सित्वा आशास्त्वा ।<br>पञ्चमस्वरानुबन्धसामर्थ्यात्<br>क्त्राप्रत्ययस्य न यप् समासाभावादिति<br>गोविन्द-<br>भट्टः । किन्तु अस्य उदनुबन्धफलं<br>छन्दस्येवेति<br>धातुप्रदीपः । ल ङ, आशास्ते शासु ङिद्बस<br>ङे<br>इत्यत्र जक्षादीयशास्तेरेव ग्रहणादस्योपधाया<br>इकारो न स्यात् । आशीरिष्टार्थाशंसनम् ।<br>इच्छायामित्यन्ये । इति दुर्गादासः ॥ | इति तृन् । स च अनिट् ।) बुद्धः ।<br>इत्यमरः ॥<br>उपाध्यायः । राजा । पिता । इति<br>संक्षिप्त-<br>सारोणादिवृत्तिः ॥ |

**शास्तिः**, स्त्री, (शास + बाहुलकात् तिः । इत्यु-
ज्जलदत्तः । ४ । १७९ ।) शासनम् । इति
शब्दरत्नावली ॥ (यथा, मार्कण्डेये । १३२
। २० ।
“प्राहोच्चैरस्त्रमेतन्मे दुष्टशास्तिसमुद्यतम्
॥”)

**शास्त्रं**, क्ली, (शिष्यते अनेन । शास + “सर्व्व-
धातुभ्यष्ट्रन् ।” उणा० ४ । १५८ । इति
ष्ट्रन् ।)
निदेशः । ग्रन्थः । इत्यमरः ॥ स च ग्रन्थः
अष्टादशविधः । तस्य विवरणं विद्याशब्दे
द्रष्टव्यम् ॥ * ॥ शास्त्रोत्पत्तिर्यथा, --
मत्स्य उवाच ।
“तपश्चचार प्रथमममराणां पितामहः ।
आविर्भूतास्ततो वेदाः साङ्गोपाङ्गपदक्रमाः
॥
पुराणं सर्व्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ।
नित्यशब्दमयं पुण्यं शतकोटिप्रविस्तरम् ॥
अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य
विनिःसृताः ।
मीमांसान्यायविद्याश्च प्रमाणं तर्कसंयुताः
॥
वेदाभ्यासरतस्यास्य प्रजाकामस्य मानसाः
।
मनसः पूर्ब्बसृष्टा वै जाता ये तेन मानसाः
॥”
इति मात्स्ये ३ अध्यायः ॥ * ॥
शास्त्रोक्तकर्म्म कर्त्तव्यं न तु शास्त्रविरुद्धम् ।
यथा, --
“श्रुतिस्मृतिसदाचारविहितंकर्म्म केवलम् ।
सेवितव्यं चतुर्व्वर्णैर्भजद्भिः केशवं सदा ॥
अन्यथा निरयं यान्ति कुमार्गागमसेवनात् ।
अतो वेदविरुद्धार्थं शास्त्रोक्तं कर्म्म संत्यजेत्
॥
स्वबुद्धिरचितैः शास्त्रैः प्रतार्य्येह च
बालिशान् ।
विघ्नन्ति श्रेयसो मार्गं लोकनाशाय केवलम्
॥
वेदमूर्त्तिरहं विप्रा नान्यशास्त्रार्थवादिभिः ।
ज्ञायते मत्स्वरूपञ्च त्यक्त्वा वेदं
सनातनम् ॥”
इति कौर्म्मे उपविभागे ३६ अध्यायः ॥ *
॥
अपि च । कूर्म्मपुराणे हिमालयं प्रति देवी-
वाक्यम् ।
“यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन्
विवि-
धानि च ।
श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां हि
तामसी ॥
करालभैरवञ्चापि यामलं वामनाश्रितम् ।
एवंविधानि चान्यानि मोहनार्थानि तानि तु
।
मया सृष्टानि चान्यानि मोहायैषां भवार्णवे
॥”
तस्मात् सद्भिः श्रुतिस्मृतिविरुद्धे वर्त्मनि
न कदा-
चित् पदं न्यस्तव्यम् । इति मलमासतत्त्वम्
॥ * ॥
पृथिव्यां तन्त्रशास्त्रावतरणं यथा, --
शिव उवाच ।
“लम्बोदर महाभाग शृणु मे परमं वचः ।
इदं महासुसन्दर्भं मम वक्त्राद्विनिर्गतम् ॥
निर्गतं पार्व्वतीवक्त्रात्तन्त्रं परमदुर्लभम् ।
विलिख्य बहुयत्नेन गच्छ सिद्धाश्रमं सुत
॥
यत्र तिष्ठन्ति मुनयो वेदवेदाङ्गपारगाः ।
अणिमादिगुणैर्युक्तः शीघ्रं त्वं भव मे सुत ॥
इत्युक्तः शङ्करेणासौ चाष्टबाहुरभूत्ततः ।
चतुर्भिर्हस्तैः संलिख्य शिवाय
विनिवेदयेत् ॥
शिव उवाच ।
गच्छ पुत्त्र महाबाहो तन्त्रमादाय सत्वरम्
।
सिद्धाश्रमं वनं रम्यं यथेन्द्रस्य च नन्दनम्
।

**शास्त्रचक्षुः**, [स्] क्ली, (शास्त्रेषु चक्षुरिव ।)
व्याकरणम् । इति केचित् ॥

**शास्त्रचारणः**, त्रि, (शास्त्रं चारयति प्रचारय
तीति । चर + णिच् + ल्युः ।) शास्त्रदर्शी
।
इति शब्दरत्नावली ॥

**शास्त्रज्ञः**, त्रि (शास्त्रं जानातीति । ज्ञा + कः ।)
शास्त्रवेत्ता । यथा, --
“अनियुक्तो नियुक्तो वा शास्त्रज्ञो
वक्तुमर्हति ।
दैवीं वाचं स वदति यः शास्त्रमुपजीवति
॥”
इति व्यवहारतत्त्वधृतनारदवचनम् ॥

**शास्त्रतत्त्वज्ञः**, पुं, (शास्त्रस्य तत्त्वं जानातीति ।
ज्ञा + कः ।) गणकः । यथा,
शब्दरत्नावल्याम् ।
“दैवज्ञो गणको ज्ञानी मौहूर्त्तो दैवलेखकः
।
वार्त्तान्तिको ज्योतिषिको
मौहूर्त्तिकप्रसूचकौ ॥
संवत्सरो वर्षकोषो रेखाजीवी गणाङ्कभुक्
।
तान्त्रिको ज्ञातसिद्धान्तः शास्त्रतत्त्वज्ञ
ईरितः ॥”

**शास्त्रदर्शी**, [न्] त्रि, (शास्त्रं द्रष्टुं शीलमस्य ।
णिनिः ।) शास्त्रज्ञः । तत्पर्य्यायः ।
अन्तर्व्वाणिः
२ शास्त्रवित् ३ शास्त्रचारणः ४ । इति
शब्द-
रत्नावली ॥

**शास्त्रवित्**, [द्] त्रि, (शास्त्रं वेत्तीति । विद् + सत्-
सूद्विषेति क्विप् ।) शास्त्रदर्शी । इत्यमरः
॥

**शास्त्रविप्रतिषिद्धः**, त्रि, (शास्त्रेण विप्रतिषिद्धः ।)

निन्दन्ति देवता वेदांस्तपो निन्दन्ति सद्द्विजान् ।
तेन ते निरयं यान्ति ह्यसच्छास्त्रनिषेवणात् ॥
श्रुतिस्मृतिसदाचारविहितंकर्म्म शाश्वतम् ।
स्वं स्वं धर्म्मं प्रयत्नेन श्रेयोऽर्थीह समाचरेत् ॥
स्वबुद्धिरचितैः शास्त्रैर्मोहयित्वा जनं नराः ।
तेन ते निरयं यान्ति युगानां सप्तविंशतिः ॥”
इति पाद्मे उत्तरखण्डे १७ अध्यायः ॥ * ॥
अध्यात्मशास्त्रातिरिक्तशास्त्रनिन्दायथा, --
“पुराणं भारतं वेदधर्म्मशास्त्राणि यानि च ।
आयुषः क्षपणायैव धर्म्मतश्चेन्न चाचरेत् ॥
पुत्त्रदारादिसंभारः पुंसां संमूढचेतसाम् ।
विदुषां शास्त्रसंभारः तद्योगाभ्यासविघ्नकृत् ॥
इदं ज्ञेयमिदं ज्ञेयं यः सर्व्वं ज्ञातुमिच्छति ।
अपि वर्षशतेनापि शास्त्रान्तं नाधिगच्छति ॥
विज्ञायाक्षरतन्मात्रं जीवितुञ्चापि सञ्चलन् ।
विहाय शास्त्रजालानि पारलौकिकमाचरेत् ॥
पण्डितोऽपि हि मूर्खोऽसौ शक्तियुक्तोऽप्य-शक्तिकः ।
यः संसारान्न चात्मानं समुत्तारयितुं क्षमः ॥”
इति वह्निपुराणे सुनामद्वादशीनामाध्यायः॥ * ॥
वेदविरुद्धशास्त्राणि यथा, --
“अन्यानि चैव शास्त्राणि लोकेऽस्मिन्मोहनानि च ।
वेदवादविरुद्धानि मयैव कथितानि तु ॥
वामं पाशुपतं योगं नाकुलं चैव भैरवम् ।
असेव्यमेतत् कथितं वेदवाह्यं तथेतरत् ॥
प्रणम्य प्रययौ शीघ्रं तन्त्रमादाय तद्वनम् ॥”
इत्युपक्रम्य ।
“मुनेर्व्वाक्यं ततः श्रुत्वा तत्तन्त्रं मुनये ददौ ।
एवं तन्त्राणि सर्व्वाणि विलिख्य विनिवेदयेत् ॥”
इति गायत्त्रीतन्त्रे दशमब्राह्मणपटलः ॥ * ॥
शैवपाशुपतादिशास्त्रोत्पत्तिर्यथा, --
“प्रथमं हि मया प्रोक्तं शैवं पाशुपतादिकम् ।
मच्छक्त्यावेशितैर्व्विप्रैः संप्रोक्तानि ततः परम् ॥
कणादेन च संप्रोक्तं शास्त्रं वैशेशिकं महत् ।
गौतमेन तथा न्यायं सांख्यन्तु कपिलेन तु ॥
धिषणेन तथा प्रोक्तं चार्व्वाकमतिगर्हितम् ॥
दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा ।
बौद्धशास्त्रं तथा प्रोक्तं लग्ननीलपटादिकम् ॥
आपत्यं शुतिवाक्यानां दर्शयन् लोकगर्हितम् ।
कर्म्मस्वरूपत्याज्यत्वमत्र वै प्रतिपद्यते ।
सर्व्वकर्म्मपरिभ्रष्टं कल्मषन्तु तदुच्यते ॥
गौतमप्रोक्तशास्त्रार्थनिरताः सर्व्व एव हि ।
शार्गालीं योनिमापन्नाः सन्दिग्धाः सर्व्व-कर्म्मसु ॥”
इति गन्धर्व्वतन्त्रे प्रथमपटलः ॥

**शास्त्रकृत्**, पुं, (शास्त्रं करोतीति । कृ + क्विप् ।) ऋषिः । इति त्रिकाण्डशेषः ॥ शास्त्रकर्त्तरि, त्रि ॥ (यथा, भागवते । १ । १० । २२ । “विधित्समानोऽनुससारशास्त्रकृत् ॥”)

**शास्त्रगण्डः**, त्रि, प्रघटावित् । इति त्रिकाण्डशेषः ॥ हारावल्यां छात्रगण्ड इति पाठः ॥ शास्त्रनिषिद्धः ।
शास्त्रशब्दपूर्ब्बकविपूर्ब्बकसिध-धातोः कर्म्मणि क्तप्रत्ययेन निष्पन्नो वा ॥

**शास्त्रशिल्पी**, [न्] पुं, (शास्त्रं शिल्पमस्यास्तीति । इनिः ।) काश्मीरदेशः । तद्देशस्थे, पुं भूम्नि । इति त्रिकाण्डशेषः ॥

**शास्त्री**, [न्] त्रि, शास्त्रज्ञः । शास्त्रं वेत्तीत्यर्थे णिन्प्रत्ययेन निष्पन्नः ॥

**शास्यः**, त्रि, (शास् + ण्यत् ।) शासनीयः । शासितव्यः । (यथा, मनौ । ८ । १९१ ।
“यो निक्षेपं नार्पयति यश्चानिक्षिप्य याचते ।
तावुभौ चौरवच्छास्यौ दाप्यौ वा तत्समं दमम् ॥”
शिक्षणीयः । यथा, ऋग्वेदे । १ । १८९ । ७ ।
“अभिपित्ते मनवे शास्यो भूः ।”
“शास्यो भूः शिक्षणीयो भव इदं कुरु इदं कुरु इति विधेयो भव ।” इति तद्भाष्ये सायणः ॥)

**शि**, न ञ निशाने । इति कविकल्पद्रुमः ॥ (स्वा०-उभ०-सक०-अनिट् ।) निशानमिति श्यते रूपम् । शान ञ तेजे इत्यस्य नित्यसनन्तत्वात् । अनेकार्थत्वात् निशानमिह तीक्ष्णीकरणम् । न ञ, शिनोति शिनुते खड्गं कर्म्मकारः । इति दुर्गादासः ॥

**शिंशपा**, स्त्री, वृक्षविशेषः । शिशु इति भाषा । तत्पर्य्यायः । पिच्छिला २ अगुरुः ३ कपिला ४ भस्मगर्भा ५ । इत्यमरः ॥ अगुरुशिंशपा ६ । इति भरतः ॥ कृष्णसारा ७ । इति जटाधरः ॥

| | | |
|---|---|---|
| | | पिङ्गला ८ पिच्छला ९ बीरा १० । इति रत्न-<br>माला ॥ * ॥ यथा, --<br>“शिंशपा गुरुसारा च पिच्छिला गुरुशिंशपा ।<br>सा चेत् कपिलवर्णा स्याद्भस्मगर्भा निगद्यते ॥ |

क्वचित्तु कपिला भस्मगर्भा चागुरुशिंशपा ।
पिच्छिला शिंशपा युग्मपत्रिकागुरु चेत्यपि ॥”
इति शब्दरत्नावली ॥
अस्या गुणाः । “शिंशपा वातनाशिनी ।” इति
राजवल्लभः ॥ अपि च ।
“शिंशपा कटुका तिक्ता कषाया शोषकारिणी ।
उष्णवीर्य्या हरेन्मेदः कुष्ठचित्रवमिकृमीन् ।
वस्तिवद्ब्रणदाहास्रवलासागर्भपातिनी ॥”
इति भावप्रकाशः ॥
(तत्काष्ठनिर्म्मितरथस्तु दृढो भवति । यथा,
ऋग्-
वेदे । ३ । ५३ । १९ ।
“अभिव्ययस्व खदिरस्य सार-
मोजो धेहि स्पन्दने शिंशपायाम् ।”
स्पन्दने रथस्य गमने सति शिंशपायां शिंश-
पाख्यदारुनिर्म्मिते रथस्य फलके ओजो धेहि
दार्ढ्यं कुरु ।” इति तद्भाष्ये सायणः ॥)

**शिक्**, [च्] स्त्री, शिक्यम् । इति शब्दरत्ना-
वली ॥

**शक्कुः**, त्रि, अव्यवसायी । इति त्रिकाण्डशेषः ॥

**शिक्थं**, क्ली, मधुजातद्रव्यविशेषः । मोम् इति
भाषा । तत्पर्य्यायः । शिक्थकम् २ मधुजम् ३
विघसम् ४ मधुसम्भवम् ५ मोदनम् ६ काचम्
७
उच्छिष्टमोदनम् ८ मक्षिकामलम् ९ क्षौद्रेयम्
१० पीतरागम् ११ स्निग्धम् १२ माक्षिकजम्
१३ क्षौद्रजम् १४ मधुशेषम् १५ द्रावकम् १६
माक्षिकाश्रयम् १७ मधूत्थितम् १८ मधूत्थम्
१९ । अस्य गुणाः । पिच्छिलत्वम् ।
स्वादुत्वम् ।
कुष्ठवातास्रनाशित्वम् । मृदुत्वम् । कटुत्वम् ।
स्निग्धत्वम् । लेपेन स्फुटिताङ्गविलोपनत्वञ्च
।
इति राजनिर्घण्टः ॥

**शिक्थकं**, क्ली, (शिक्थ + स्वार्थे कन् ।) शिक्-
थम् । इति राजनिर्घण्टः ॥

**शिक्यं**, क्ली, (स्रंस + “स्रंसेः शि कुट् किच्च ।”

**शिक्षा**, स्त्री, (शिक्ष + “गुरोश्च हलः ।” ३ । ३ ।
१०३ ।
इत्यः । ततष्टाप् ।) शिक्षणम् ।
श्योनाकवृक्षः ।
इति शब्दमाला ॥ वेदाङ्गशास्त्रविशेषः ।
इत्य-
मरः ॥ यथा, --
“शिक्षा कल्पो व्याकरणं निरुक्तं
ज्योतिषां
गणः ।
छन्दोविचितिरित्येतैः षडङ्गो वेद उच्यते
॥”
इति ।
तत्र अकारादिवर्णानां
स्थलकरणप्रयत्नबोधिका
अ-कु-ए-ह-विसर्ज्जनीयाः कण्ठ्या
इत्यादिका
शिक्षा । इति तट्टीकायां भरतः ॥ * ॥ *
॥
अथ शिक्षाशास्त्रं लिख्यते ।
“अथ शिक्षां प्रवक्ष्यामि पाणिनीयमतं
यथा ।
शास्त्रानुपूर्व्वं तद्विद्याद्यथोक्तं लोकवेदयोः
॥
प्रसिद्धमपि शब्दार्थमविज्ञातमबुद्धिभिः ।
पुनर्व्यक्तीकरिष्यामि वाच उच्चारणे
विधिम् ॥
त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः
।
प्राकृते संस्कृते चापि स्वयं प्रोक्ताः
स्वयम्भुवा ॥
स्वरा विंशतिरेकश्च स्पर्शानां
पञ्चविंशतिः ।
यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः
स्मृताः ॥
अनुस्वारो विसर्गश्च ZकVपौ चापि
पराश्रितौ ।
दुःस्पृष्टश्चेति विज्ञेयः ऌकारः प्लुत एव
च ॥

ओकारौकारयोर्मात्रा तयोर्व्विवृतसंवृतम्
॥
संवृतं मात्रिकं ज्ञेयं विवृतन्तु द्विमात्रिकम्
।
घोषा वा संवृताः सर्व्वे अघोषा विवृताः
स्मृताः ॥
स्वराणामुष्मणाञ्चैव विवृतं करणं स्मृतम्
।
तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव
च ॥
अनुस्वारयमाणाञ्च
नासिकास्थानमुच्यते।
अयोगवाहा विज्ञेया
आश्रयस्थानभागिनः ॥
अलावुवीणानिर्घोषो दन्त्यमूल्यस्वराननु
।
अनुस्वारस्तु कर्त्तव्यो नित्यं ह्नोः श-ष-
सेषु च ॥
अनुस्वारे विवृत्यान्तु विरामे चाक्षरद्वये ।
द्विरोष्ठ्यौ तु विगृह्णीयाद्यत्रैकारवकारयोः
॥
व्याघ्री यथा हरेत् पुत्त्रान् दंष्ट्राभ्यां न च
पीड-
येत् ।
भीता पतनभेदाभ्यां तद्वद्वर्णान्
प्रयोजयेत् ॥
यथा सौराष्ट्रिका नारी तक्रँ इत्यभिभाषते
।
एवं रङ्गाः प्रयोक्तव्याः खेअ-राँ इव
खेदया ॥
रक्तवर्णं प्रयुञ्जीरन् नो ग्रसेत् पूर्व्वमक्षरम्
।
दीर्घस्वरं प्रयुञ्जीयात्
पश्चान्नासिक्यमाचरेत् ॥
हृदये चैकमात्रः स्यादर्द्धमात्रस्तु मूर्द्धनि ।
नासिकायां तथार्द्धञ्च रङ्गस्यैवं द्विमात्रता
॥
हृदयादुत्करे तिष्ठन् कांस्येन समनुस्वरम्
।

उणा ० ५ । १६ । इति यत् । स च कित् । कुडागमः शिरादेशश्च ।) द्रव्यरक्षार्थरज्जुमया-धारविशेषः । शिका इति भाषा । तत्पर्य्यायः । काचः २ शिक्या ३ शिक् ४ । इति शब्दरत्नावली ॥ (यथा, भागवते । १० । ८ । ३० । "हस्ताग्राह्ये रचयति विधिं पीठकोलूखलाद्यै-श्छिद्रं ह्यन्तर्निहितवयुनः शिक्यभाण्डेषु तद्वित् ॥")

**शिक्या**, स्त्री, (शिक्य + स्त्रियां टाप् ।) शिक्यम् । इति शब्दरत्नावली ॥

**शिक्यितं**, त्रि, (शिक्ये स्थापितमित्यर्थे प्रातिपदिकात् धात्वर्थे इति णिच् ततः क्तः ।) शिक्यस्थापितवस्तु । तत्पर्य्यायः । काचितः २ । इत्यमरः ॥

**शिक्ष**, ङ शिक्षणे । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट् ।) ह्रस्वी । ङ, शिक्षते । शिक्षणं विद्याग्रहणम् । अशिक्षतास्त्रं पितुरेव मन्त्रविदिति रघुः । इति दुर्गादासः ॥

**शिक्षणं**, क्ली, (शिक्ष + ल्युट् ।) विद्योपादानम् । इति शिक्षाशब्दटीकायां भरतः ॥

आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥
मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् ।
प्रातःसवनयोगन्तं छन्दो गायत्त्रमाश्रितम् ॥
कण्ठे माध्यन्दिनयुतं मध्यमं त्रैष्टुभानुगम् ।
तारं तार्त्तीयसवनं शीर्षण्यं जागतानुगम् ॥
सोदीर्णो मूद्ध्न्यर्भिहतो वक्त्रमापद्य मारुतः ।
वर्णाञ्जनयते तेषां विभागः पञ्चधा स्मृतः ॥
स्वरतः कालतः स्थानात् प्रयत्नानुप्रदानतः ।
इति वर्णविदः प्राहुर्निपुणं तं निबोधत ॥
उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः ।
ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि ॥
उदात्ते निषादगन्धारावनुदात्ते ऋषभधैवतौ ।
स्वरितप्रभवा ह्येते षड्जमध्यमपञ्चमाः ॥
अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलञ्च दन्ताश्च नासिकौष्ठौ च तालु च ॥
ओभावश्च विवृत्तिश्च श-ष-सा रेफ एव च ।
जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ॥
यद्योभावप्रसन्धानमुकारादिपरंपदम् ।
स्वरान्तं तादृशं विद्याद्यदन्यद्व्यक्तमुष्मणः ॥
हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम् ।
औरस्यं तं विजानीयात् कण्ठ्यमाहुरसंयुतम् ॥

मार्दवञ्च द्विमात्रञ्च जघन्र्वा इति निदर्शनम् ॥
मध्ये तु कम्पयेत् कम्पमुभौ पार्श्वौ समौ तथा ।
स रङ्गं कम्पयेत् कम्पं रथीवेति निदर्शनम् ॥
एवं वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडयेत् ।
सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते ॥
गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः ।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ॥
माधुर्य्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः ।
धैर्य्यं लयसमर्थश्च षडेते पाठका गुणाः ॥
शङ्कितं भीतमुद्घुष्टमव्यक्तमनुनासिकम् ।
काकस्वरं शिरसि गतं तथा स्थानविवर्ज्जितम् ॥
उपांशुदुष्टं त्वरितं निरस्तं विलम्बितं गद्गदितं प्रगीतम् ।
निष्पीडितं ग्रस्तपदाक्षरञ्च वदेन्न दीनं न तु सानुनास्यम् ॥
प्रातः पठेन्नित्यमुरःस्थितेन स्वरेण शार्द्दूलरुतोपमेन ।
मध्यं दिने कण्ठगतेन चैव चक्राह्वसंकूजितसन्निभेन ॥
तारन्तु विद्यात् सवनं तृतीयं शिरोगतं तच्च सदा प्रयोज्यम् ।
मयूरहंसान्यभृतस्वराणां तुल्येन नादेन शिरःस्थितेन ॥
अचोऽस्पृष्टा यणस्त्वीषन्नमस्पृष्टाः शरस्तथा ।
शेषाः स्पृष्टा हलः प्रोक्ता निबोधानुप्रदानतः ॥
यमोऽनुनासिका न ह्रो नादिनो ह-झषः स्मृताः ।
ईषन्नादा यणो जश्च श्वासिनश्च खफादयः ॥

|  | कण्ठ्यावहा वि-चु-य-शास्तालव्या<br>ओष्ठजावुपू।<br>स्युर्मूर्द्धन्या ऋ-टु-र-षा दन्त्या ऌ-तु-ल-<br>साः<br>स्मृताः ॥<br>जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो वः<br>स्मृतो<br>बुधैः ।<br>ए ऐ तु कण्ठतालव्या ओ औ कण्ठोष्ठजौ<br>स्मृतौ ॥<br>अर्द्धमात्रा तु कण्ठ्या<br>स्यादेकारैकारयोर्भवेत् । | ईषच्छ्वासांश्चरो विद्यात् गोर्द्धमैतत्<br>प्रचक्षते ।<br>दाक्षीपुत्रः पाणिनिना येनेदं व्यापितं<br>भुवि ॥<br>छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ<br>पठ्यते । |
|---|---|---|

ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते
॥
शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं
स्मृतम् ।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके
महीयते ॥
उदात्तमाख्याति वृषोऽङ्गुलीनां
प्रदेशिनीमूलनिविष्टमूर्द्धा ।
उपान्तमध्ये स्वरितं धृतञ्च
कनिष्ठिकायामनुदात्तमेव ॥
उदात्तं प्रदेशिनीं विद्यात्प्रचयं
मध्यतोङ्गुलिम् ।
निहतन्तु कनिष्ठिक्यां
स्वरितोपकनिष्ठिकाम् ॥
अन्तोदात्तमाद्युदात्तमुदात्त-
मनुदात्तं नीचस्वरितम् ।
मध्योदात्तं स्वरितं द्व्युदात्तं
त्र्युदात्तमिति नव पदशय्या ॥
अग्निः सोमः प्र वो वीर्य्यं हविषां
स्वर्बृहस्पतिरिन्द्राबृहस्पती ।
अग्निरित्यन्तोदात्तं सोम इत्याद्युदात्तं प्र
इत्यु-
दात्तं व इत्यनुदात्तं वीर्य्यं नीचस्वरितम्
॥
हविषां मध्योदात्तं स्वरिति स्वरितम् ।
बृहस्पति-
रिति द्व्युदात्तमिन्द्राबृहस्पती इति
त्र्युदात्तम् ॥
अनुदात्तो हृदि ज्ञेयो मूद्धर्न्युदात्त
उदाहृतः ।
स्वरितः कर्णमूले तु सर्व्वास्ये प्रचयः
स्मृतः ।
चाषस्तु बदते मात्रां द्विमात्रन्त्वेव
वायसः ।
शिखी रौति त्रिमात्रन्तुं
नकुलस्त्वर्द्धमात्रकम् ॥
कुतीर्थादागतं दग्धमपवर्णञ्च भक्षितम् ।
न तस्य पाठे मोक्षोऽस्ति पापाहेरिव
किल्वि-
शङ्कर एकादश ॥” इति
वेदशिक्षासमाप्तिम-
गमत् ॥ * ॥ अपि च ।
अग्निरुवाच ।
“वक्ष्ये शिक्षां त्रिषष्टिः स्युर्व्वर्णा वा चतुरा-
धिकाः ।
स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः
॥
यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः
स्मृताः ।
अनुस्वारो विसर्गश्च ZкVपौ चापि परा-
श्रितौ ॥
दुःस्पृष्टश्चति विज्ञेयः ऌकारः प्लुत एव च
।
रङ्गश्च खे अराँ इव हकारः पञ्चमैर्युतः ॥
अन्तःस्थाभिः समायुक्तः औरस्यः
कण्ठ्य
एव सः ।
आत्मा बुद्ध्या समेत्यार्थं मनो युङ्क्ते
विवक्षया ॥
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्
।
मारुतस्तूरसि चरन्मन्त्रं जनयति स्वरम् ॥
प्रातःसवनयोगन्तं छन्दो गायत्रमाश्रितम्
।
कण्ठे माध्यन्दिनयुतं मध्यमं त्रैष्टभानुगम्
॥
तारं तार्त्तीयसवनं शीर्षण्यं जगतानुगम् ।
सोदीर्णो मूद्धर्न्यभिहतो वक्त्रमापद्य
मारुतः ॥
वर्णान् जनयते तेषां विभागाः पञ्चधा
स्मृताः ।
स्वरः कालगतः स्थानात्
प्रयत्नानुप्रदानतः ॥
अष्टौ स्थानानि वर्णानामुरः कण्ठः
शिरस्तथा ।
जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु
च ॥

**शिक्षाकरः**, पुं, (करोतीति । कृ + अच् । शिक्षाया
करः ।) व्यासः । इति शब्दमाला ॥ शिक्षा-
कर्त्तरि, त्रि ॥

**शिक्षागुरुः**, पुं, (शिक्षाया गुरुः ।) विद्यादाता
गुरुः । मन्त्राद्युपदेशकर्त्ता दीक्षागुरुः । यथा ।
इयं हि रसभावविशेषदीक्षागुरोर्विक्रमादित्य-
स्याभिरूपभूयिष्ठा परिषत् । इत्यभिज्ञान-
शकुन्तलायाम् १ अङ्कः ॥

**शिक्षितः**, त्रि, (शिक्ष + क्तः ।) विज्ञः । इत्य-
मरः ॥ शिक्षायुक्तः । यथा, --
“आपरितोषाद्विदुषां न साधु मन्ये
प्रयोगविज्ञा-
नम् ।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥”
इत्यभिज्ञानशकुन्तलायाम् १ अङ्कः ॥

**शिक्षिताक्षरः**, पुं, (शिक्षितानि अक्षराणि येन ।)
शिक्षाकारी । छात्रः । यथा, --
“स्यादक्षरमुखः कालाक्षरिकः शिक्षिताक्षरः ।”
इति त्रिकाण्डशेषः ॥
(शिक्षिते, त्रि । यथा, राजतरङ्गिण्याम् । ५ ।
८३ ।
“स सुय्यनामा मतिमान् प्रबुद्धः शिक्षिता-
क्षरः ।
कस्याप्यासीद्गृहपतेरर्भकाध्यापको गृहे ॥”)

**शिखकः**, पुं, लेखकः । इति संक्षिप्तसारोणादि-
वृत्तिः ॥

**शिखण्डः**, पुं, मयूरपुच्छः । इत्यमरः ॥ यथा, --
“शिखण्डोऽस्त्री पिच्छवर्हे शिखिपुच्छशिख-
ण्डके ।”
इति शब्दरत्नावली ॥
(यथा, महाभारते । १२ । २८१ । ५८ ।
“वृत्रस्य रुधिराच्चैव शिखण्डाः पार्थ जज्ञिरे ।
द्विजातिभिरभक्षास्ते दीक्षितैश्च तपोधनैः ॥”)
चूडा । इति मेदिनी ॥

**शिखण्डकः**, पुं, (शिखण्ड इव । कन् ।) काक-

षात् ॥
सुतीर्थादागतं व्यक्तं साम्नाय्यं
सुव्यवस्थितम् ।
सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते ॥
मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥
अनक्षरं हतायुष्यं विखरं व्याधिपीडितम्
।
अक्षता शस्त्ररूपेण वज्रं पतति मस्तके
॥
हस्तहीनन्तु योऽधीते
स्वरवर्णविवर्ज्जितम् ।
ऋग्यजुःसामभिर्द्दग्धो
वियोनिमधिगच्छति ॥
हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम्
।
ऋग्यजुःसामभिः पूतो ब्रह्मलोके
महीयते ॥
शङ्करः शाङ्करीं प्रादाद्दाक्षीपुत्त्राय धीमते
।
वाङ्मयेभ्यः समाहृत्य दैवीं वाचमिति
स्थितिः ॥
येनाक्षरसमाम्नायमधिगम्यमहेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये
नमः ॥
येन धौता गिरः पुंसां विमलैः
शब्दवारिभिः ।
तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये
नमः ॥
अज्ञानान्धस्य लोकस्य
ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै पाणिनये नमः
॥
त्रिनयनमुखनिःसृतामिमांय
इह पठेत् प्रयतश्च सदा द्विजः ।
स भवति धनधान्यपशुपुत्त्रकीर्त्तिमा-
नतुलञ्च सुखं समश्नुते दिवीति दिवीति
॥

ओ-भावश्च विवृत्तिश्च श-ष-सा रेफ एव
च ।
जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ॥
यद्योभावप्रसन्धानमुकारादिपरंपदम् ।
स्वरान्तं तादृशं विद्यात्
यदन्यद्व्यक्तमुष्मणः ॥
कुतीर्थादागतं दग्धमपवर्णञ्च भक्षितम् ।
एवमुच्चारणं पापमेवमुच्चारणं शुभम् ॥
सुतीर्थादागतं द्रव्यं स्नानार्थं
सुव्यवस्थितम् ।
सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजत ॥
न करालो न लम्बोष्ठो नाव्यक्तो
नानुनासिकः ।
गद्गदाबद्धजिह्वश्च न वर्णान् वक्तुमर्हति ॥
उदात्तश्चानुदात्तश्च स्वरितश्च
स्वरास्त्रयः ।
ह्रस्वो दीर्घः प्लुत इति कालतो नियमा
अचि ॥
कण्ठ्यावहा वि-चु-य-शास्तालव्या
ओष्ठजावुपू ।
स्युर्मूर्द्धन्या ऋ-टु-र-षा दन्त्या लृ-तु-ल-
साः
स्मृताः ॥
जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो वः
स्मृतो
बुधैः ।
एऐ तु कण्ठ्यतालव्यौ ओ औ
कण्ठ्योष्ठजौ
स्मृतौ ॥
अर्द्धमात्रा तु कण्ठ्या स्यात्
एकारैकारयोर्भवेत् ।
अयोगवाहा विज्ञेया आश्रयस्थानभागिनः
॥
अचोऽस्पृष्टा यणस्त्वीषन्नमस्पृष्टाः शरः
स्मृताः ।
शेषाः स्पृष्टा हलः प्रोक्तो
निबोधानुप्रदानतः ॥
यमोऽनुनासिका न ह्रो नादिनो ह झषः
स्मृताः ।
ईषन्नादा यणो जश्च श्वासिनश्च
खफादयः ।

पक्षः । इत्यमरः । जुल्पी इति भाषा । “द्वे
क्षत्त्रियकुमाराणां शिखात्रये । उक्तञ्च ।
‘बालानाञ्च शिरः कार्य्यं त्रिंशिखं मुण्डमेव
चेति ।’
शिखापञ्चके इत्यन्ये । सामान्येन चूडाया-
मित्यन्ये । काकपक्षाकारत्वात् काकपक्षः ।
शिरसि खण्डते शिखण्डकः मनीषादिः ताल-
व्यादिः । शिखण्डे तु शिखावर्हे इति
तालव्यादौ
रभसः । शिखाण्डकश्च ।
शिखण्डकशिखाण्डका-
विति वाचस्ततिः ।” इति तट्टीकायां भरतः ॥
(यथा, रघुः । ११ । ५ ।
“तौ पितुर्नयनजेन वारिणा
किञ्चिदुक्षितशिखण्डकावुभौ ।
धन्विनौ तमृषिमन्वगच्छतां
पौरदृष्टिकृतमार्गतोरणौ ॥”)
मयूरपुच्छे, क्ली च ॥ इति शब्दरत्नावली ॥

**शिखण्डिकः**, पुं, (शिखण्डीव कायति शब्दायते
इति । कै + कः । यद्वा, शिखण्डोऽस्यास्तीति
।
शिखण्ड + ठन् ।) कुक्कुटः । इति हेमचन्द्रः
॥

| अथ शिक्षामात्मोदात्तश्च हकारं स्वराणां<br>यथा सौराष्ट्रिका । गीत्यचोस्पृष्टोदात्तं चाषस्तु | ईषच्छ्वासांश्चरो विद्याद्गोधमैतत् प्रचक्षते ॥"<br>इत्याग्नेये महापुराणे शिक्षानिरूपणं नाम ३३६ अध्यायः ॥ | |
|---|---|---|

शिखण्डिका, स्त्री, शिखा । यथा, --
"चूडा केशी केशपाशी शिखा शिखण्डिका
समाः ॥"
इति हेमचन्द्रः ॥

**शिखण्डिनी**, स्त्री, (शिखण्डश्चूडा अस्त्यस्या इति ।
इनि । ङीप् ।) यूथिका । गुञ्जा । इति मेदिनी ॥
द्रुपदराजकन्या । (यथा, महाभारते । ५ । १९२ । २ ।
"कन्या शिखण्डिनी जाता पुरुषो वै निवे-
दितः ॥")
सा यक्षस्य पुंस्त्वग्रहणेन पुरुषो भूत्वा शिख-
ण्डीति नाम्ना ख्यातः । एतद्विवरणं महा-
भारते । ५ । १९० अध्यायमारभ्य विशेषतो
द्रष्टव्यम् ॥ मयूरी । शिखण्डिन्-शब्दात् स्त्रियां
ईप्प्रत्ययेन निष्पन्ना ॥ (विजिताश्वराजस्त्री ।
यथा, भागवते । ४ । २४ । ३ ।
"अपत्यत्रयमाधत्त शिखण्डिन्यां सुसम्मतम् ॥"
शिखण्डविशिष्टा । यथा, महाभारते । ४ ।
३५ । १ ।
"सा प्राद्रवत् काञ्चनमाल्यधारिणी
ज्येष्ठेन भ्रात्रा प्रहिता यशस्विनी ।
सुदक्षिणा वेदिविलग्नमध्या
सा पद्मपत्राभनिभा शिखण्डिनी ॥")

**शिखण्डी**, [न्] पुं, मयूरपुच्छः । गाङ्गेयारिः । स
तु द्रुपदराजपुत्त्रः । (अस्य जन्मादिविवरणं

**शिखरिणी**, स्त्री, रसाला । वृत्तभेदः । नारी-
रत्नम् । मल्लिका । रोमावली । इति मेदिनी ॥
वृत्तभेदो यथा, --
"रसै रुद्रैश्छिन्ना य-म-न-स भला गः शिख-
रिणी ।
करादस्य भ्रष्टे ननु शिखरिणी दृश्यति शिशो-
र्विलीनाः स्मः सत्यं नियतमवधेयं तदखिलैः ।
इति त्रस्यद्गोपानुचितनिभृतालापजनितं
स्मितं बिभ्रत् देवो जगदवतु गोवर्द्धनधरः ॥"
इति छन्दोमञ्जर्य्याम् २ स्तवकः ॥
नवमालिका । द्राक्षाविशेषः । इति राज-
निर्घण्टः ॥ मूर्व्वा । इति शब्दचन्द्रिका ॥

**शिखरी**, [न्] पुं, (शिखरोऽस्यास्तीति । शिखर +
इनिः ।) पर्व्वतः । (यथा, गीतायाम् । १० ।
२३ ।
"वसूनां पावकश्चास्मि मेरुः शिखरिणाम-
हम् ॥")
वृक्षः । अपामार्गः । इति मेदिनी ॥ कोट्टः ।
कोयष्टिः । इति हेमचन्द्रः । वन्दाकः । कर्कट-
शृङ्गी । कुन्दुरुकः । यावनालः । इति राज-
निर्घण्टः ॥ (कोटिविशिष्टे, त्रि । यथा, महा-
भारते । १ । ७४ । ४ ।
"दन्तैः शुक्लैः शिखरिभिः सिंहसंहननो-
महान् ॥")

**शिखलोहितः**, पुं, वृक्षविशेषः । इति शब्द-
चन्द्रिका ॥ कुकुरमुडा इति भाषा ॥

**शिखा**, स्त्री, (शी + "शीङो ह्रस्वश्च ।" उणा०
५ । २४ । इति खः ह्रस्वो गुणाभावश्च । स्त्रियां
टाप् ।) अग्निज्वाला । तत्पर्य्यायः । ज्वालः २
कीलः ३ अर्च्चिः ४ हेतिः ५ शिखा ६ । इत्य-
मरः ॥ (यथा, माघे, । १ । २० ।
"विद्युते वाडवजातवेदसः
शिखाभिराश्लिष्ट इवाम्भसां निधिः ॥")
पिण्डितशिखाग्रेः शुभसूचकत्वं यथा, वायु-
पुराणे ।
शूद्रस्य शिखाबन्धे मन्त्रो यथा, --
"ब्रह्मवाणीसहस्राणि शिववाणी शतानि च ।
विष्णोर्नामसहस्रेण शिखाबन्धं करोम्यहम्
॥" *
शिखामोचनमन्त्रो यथा, --
"गच्छन्तु सकला देवा ब्रह्मविष्णुमहेश्वराः ।
तिष्ठत्वत्राचला लक्ष्मीः शिखामुक्तं करोम्य-
हम् ॥" * ॥
शिखाबन्धनानन्तरमाचमनंयथा, --
"निबद्धशिख आसीनो द्विज आचमनं चरेत् ।
कृत्वोपवीतं सव्येऽंशे वाङ्मनःकायसंयतः ॥"
* ॥
मुक्तशिखस्याचमने दोषो यथा, --
"शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि
वा ।
अकृत्वा पादयोः शौचं आचान्तोऽप्यशुचि-
र्भवेत् ॥"
इति आह्निकतत्त्वम् ॥ * ॥
शाखा । वर्हिचूडा । (यथा, महाभारते ।
१२ । २८२ । ५३ ।
"रन्ध्रागतमथाश्वानां शिखोद्भेदश्च वर्हिणाम्
॥")
लाङ्गलिकी । अग्रमात्रम् । (यथा, भागवते ।
३ । १३ । ४४ ।
"सटाशिखोद्धूतशिवाम्बुबिन्दुभिः ॥")
चूडामात्रम् । प्रपदम् । इति मेदिनी ॥ प्रधा-
णम् । शिफा । घृणिः । इति हेमचन्द्रः ॥ (यथा,
कथासरित्सागरे । २१ । ८५ ।
"स्फुरद्रत्नशिखाजालं धात्रा मोहतमोप-
हम् ॥")
स्मरज्वरः । इति शब्दरत्नावली ॥

**शिखाकन्दं**, क्ली, (शिखायुक्तः कन्दो यस्य ।)
गृञ्जनम् । इति राजनिर्घण्टः ॥

**शिखाण्डकः**, पुं, काकपक्षः । इति हेमचन्द्रः ॥

**शिखातरुः**, पुं, (शिखायाः दीपशिखायास्तरु-
रिव ।) दीपवृक्षः । इति त्रिकाण्डशेषः ॥ पिल-

महाभारते । ५ । १९० अध्याये द्रष्टव्यम् ॥)
मयूरः । इति मेदिनी ॥ (यथा, रघुः । १ । ३९ ।
"षड्जसंवादिनीः केका द्विधाभिन्नाः शिख-
ण्डिभिः ॥")
कुक्कुटः । बाणः । इति हेमचन्द्रः ॥ गुञ्जा ।
स्वर्णयूथिका । इति राजनिर्घण्टः ॥ विष्णुः ।
यथा । शिखण्डी नहुशो वृषेति तस्य सहस्र-
नामस्तोत्रम् ॥ (शिवः । यथा, महाभारते ।
१३ । १७ । ३१ ।
"जटी चर्म्मी शिखण्डी च सर्व्वाङ्गः सर्व्व-
भावनः ॥")

**शिखरं**, क्ली, (शिखास्यास्तीति । "वुञ्छण्-
कठजिति ।" ४ । २ । ८० । अश्मादित्वात् रः
ह्रस्वश्च ।) पर्व्वताग्रम् । तत्पर्य्यायः । कूटम् २
शृङ्गम् ३ । इत्यमरः ॥ शैलाग्रदेशकम् ४ ।
इति शब्दरत्नावली ॥ (यथा, महाभारते ।
१ । १९ । २८ ।
"विदारयन् गिरिशिखराणि पत्रिभिः ॥")

**शिखरः**, पुं, क्ली, (शिखास्त्यस्येति । शिखा + रः ।
ह्रस्वश्च ।) वृक्षाग्रम् । तत्पर्य्यायः । शिरः २
अग्रम् ३ । इत्यमरः ॥ शिरम् ४ । इति शब्द-
रत्नावली ॥ प्राग्रम् ५ । इति राजनिर्घण्टः ॥

"अर्च्चिष्मान् पिण्डितशिखः सर्पिःकाञ्चनसन्निभः ।
स्निग्धः प्रदक्षिणश्चैव वह्निः स्यात् कार्य्य-
सिद्धये ॥" * ॥
अग्नेरशुभलक्षणं यथा । ब्रह्मपुराणे ।
"अल्पे रूक्षे सस्फुलिङ्गे वामावर्त्ते भयानके ।
आर्द्रकाष्ठैश्च सम्पन्ने फुत्कारवति पावके ॥
कृष्णार्च्चिषि सुदुर्गन्धे तथा लिहति मेदिनीम् ।
आहुतीर्जुहुयात् यश्च तस्य नाशो भवेत् ध्रुवम् ॥"
इति तिथितत्त्वम् ॥ * ॥
शिरोमध्यस्थकेशः । तत्पर्य्यायः । चूडा २ केश-
पाशी ३ । इत्यमरः ॥ जुटिका ४ जूटिका ५ ।
इति शब्दरत्नावली ॥ केशी ६ शिखण्डिका ७ ।
इति हेमचन्द्रः ॥ * ॥ गायत्र्या शिखाबन्धन यथा, --
"गायत्र्या तु शिखां बद्ध्वा नैरृत्यां ब्रह्मरन्ध्रतः ।
जुटिकाञ्च ततो बद्ध्वा ततः कर्म्म समारभेत् ॥" *

सुज इति भाषा ॥

**शिखाधरः**, पुं, (शिखाया धरः ।) मयूरः । इति
शब्दमाला ॥ मञ्जुघोषः । इति त्रिकाण्ड-
शेषः ॥

**शिखाधारः**, पुं, (शिखां धरतीति । धृ + अण् ।)
मयूरः । इति शब्दरत्नावली ॥

**शिखामूलं**, क्ली, (शिखायुक्तं मूलं यस्य ।) गृञ्ज-
नम् । इति राजनिर्घण्टः ॥

**शिखालुः**, पुं, मयूरशिखा । इति राजनिर्घण्टः ॥

**शिखावती**, स्त्री, (शिखा विद्यतेऽस्याः । शिखा +
मतुप् । मस्य वः । स्त्रियां ङीप् ।) मूर्व्वा । इति
शब्दचन्द्रिका ॥

**शिखावरः**, पुं, (शिखा विद्यते अस्य । शिखा +
"दन्तशिखात् संज्ञायाम् ।" ५ । २ । १३३ ।
इति वल्च । रस्य लत्वम् ।) पनसवृक्षः । इति
शब्दमाला ॥

**शिखावलः**, पुं, (शिखा विद्यतेऽस्य । शिखा +
"दन्तशिखात् संज्ञायाम् ।" ५ । २ । १३३ ।
इति वल्च ।) मयूरः । इत्यमरः ॥ (शिखावल-
नगरम् । शिखावला स्थूणा । इति काशिका ॥)

| | | |
|---|---|---|
| पर्व्वतशृङ्गम् । पुलकः । कक्षः । पक्वदाडिम-बीजाममाणिक्यम् । सकलाग्रम् । इति मेदिनी ॥ कोटिः । इति त्रिकाण्डशेषः ॥<br>**शिखरवासिनी**, स्त्री, (शिखरे वसतीति । वस + णिनिः । ङीप् ।) दुर्गा । इति त्रिकाण्डशेषः ॥<br>**शिखरा**, स्त्री, मूर्व्वा । इति शब्दचन्द्रिका ॥ | | |

**शिखावला**, स्त्री, (शिखा + वलच् । टाप् ।)
मयूरशिखा । इति राजनिर्घण्टः ॥

**शिखावान्**, [त्] पुं, (शिखा विद्यतेऽस्य । शिखा
+ मतुप् । मस्य वः ।) अग्निः । चित्रकवृक्षः ।
इत्यमरः ॥ केतुग्रहः । इति शब्दरत्नावली ॥
शिखायुक्ते, त्रि ॥ (यथा, मनौ । १ । ३८ श्लोके ।
"केतवः शिखावन्ति ज्योतींषि ।" इति मेधा-
तिथिकुल्लूकौ ॥)

**शिखावृक्षः**, पुं, (शिखाया वृक्षः इव ।) दीपवृक्षः ।
इति शिखातरुशब्ददर्शनात् ॥

**शिखावृद्धिः**, स्त्री, (शिखेव वृद्धिर्यस्याः ।) कायिका
वृद्धिः । प्रात्यहिकदेयलाभः । इति स्मृतिः ॥

**शिखिकण्ठं**, क्ली, (शिखिनो मयूरस्य कण्ठ इव
आकृतिर्यस्य ।) तुत्थम् । इति रत्नमाला ॥

**शिखिग्रीवं**, क्ली, (शिखिनः ग्रीवेव आकृतिर्यस्य ।)
तुत्थम् । इत्यमरः ॥

**शिखिध्वजः**, पुं, (शिखिनो वह्नेर्ध्वज इव ।) धूमः ।
इति त्रिकाण्डशेषः ॥ (शिखी मयूरो ध्वजो
यस्य ।) कार्त्तिकेयः । इति शब्दरत्नावली ॥

**शिखिनी**, स्त्री, (शिखा विद्यतेऽस्याः । इनिः ।
स्त्रियां ङीष् ।) मयूरशिखा । इति राज-
निर्घण्टः ॥

अग्निः । (यथा, महाभारते । ४ । ५१ । ९ ।
"खड्गी च धन्वी च विभाति पार्थः
शिखी वृतः स्रुग्भिरिवाज्यसिक्तः ॥")
चित्रकवृक्षः । इत्यमरः । बलीवर्द्दः । शरः ।
केतुग्रहः । द्रुमः । कुक्कुटः । इति मेदिनी ॥
घोटकः । इति हेमचन्द्रः ॥ अजलोमा । इति
रत्नमाला ॥ सितावरः । मेथिका । इति राज-
निर्घण्टः ॥ पर्व्वतः । ब्राह्मणः । दीपः । इति
केचित् ॥ शिखायुक्ते, त्रि । इति मेदिनी ॥

**शिग्रुः**, पुं, (शेते स्वल्पेपि वायौ । शी + "जत्र्वा-
दयश्च ।" उणा० ४ । १०२ । इति रुः । ह्रस्वो गुगा-
गमश्च ।) शाकम् । इत्यमरः ॥ वृक्षविशेषः ।
शजिना इति भाषा । तत्पर्य्यायः । हरित-
शाकः २ शाकपत्रः ३ सुपत्रकः ४ उपदंशः ५
क्षमादंशः ६ कोमलपत्रकः ७ बहुमूलः ८
दंशमूलः ९ तीक्ष्णमूलः १० । अस्य गुणाः ।
कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । तीक्ष्णत्वम् ।
वातकफमुखजाड्यव्रणदोषहरत्वम् । दीपनत्वम् ।
रुच्यत्वञ्च । तस्य पत्रशाकगुणाः । रुच्यत्वम् ।
वातकफकृमिनाशित्वम् । कटुत्वम् । उष्णत्वम् ।
दीपनत्वम् । पथ्यत्वम् । पाचनत्वञ्च ॥ * ॥
अपि च ।
"शोभाञ्जनो नीलशिग्रुस्तीक्ष्णगन्धो जनप्रियः ।
मुखमोदः कृष्णशिग्रुश्चक्षुष्यो रुचिराञ्जनः ॥
शोभाञ्जनस्तीक्ष्णकटुः स्वादूष्णः पिच्छिलस्तथा ।
जन्तुवातार्त्तिशूलघ्नश्चक्षुष्योरोचनः परः ॥ * ॥
श्वेतशिग्रुः सुतीक्ष्णः स्यान्मुखभङ्गः सिताह्वयः ।
समूलः श्वेतमरिचो रोचनो मधुशिग्रुकः ॥
श्वेतशिग्रुः कटुस्तीक्ष्णः शोफानिलनिकृन्तनः ।
अङ्गव्यथाहरो रुच्यो दीपनो मुखजाड्यनुत् ॥ * ॥
रक्तको रक्तशिग्रुः स्यान्मधुरो बहुलच्छदः ।
सुगन्धिः केशरी सिंहो मृगारिश्च प्रकी-
र्त्तितः ॥
रक्तशिग्रुर्महावीर्य्यो मधुरश्च रसायनः ।
शोफाध्मानसमीरार्त्तिपित्तश्लेष्मापसारकः ॥"
इति राजनिर्घण्टः ॥
(बाणप्रस्थाश्रमिणां तद्भक्षणनिषेधो यथा मनौ ।

काचपत्रम् । लोहमलम् । नासिकामलम् ।
इति मेदिनी ॥ शिक्नि इति भाषा ॥

**शिङ्घाणकः**, पुं, (शिङ्घ्यते इति । शिघ + "आणको
लूधूशिंघिधाञ्भ्यः ।" उणा० ३ । ८३ । इति
आणकः ।) श्लेष्मा । इत्युणादिकोषः ॥

**शिङ्घाणकः**, पुं, क्ली, (शिङ्घ + आणकः ।) नासिका-
मलम् । इत्युणादिकोषः ॥

**शिङ्घितं**, त्रि, (शिङ्घ + क्तः ।) घ्रातम् । इति
शब्दरत्नावली ॥

**शिज**, इ ल कि ङ अस्फुटध्वनौ । इति कविकल्प-
द्रुमः ॥ (चुरा०-पक्षे भ्वा०-अदा० च-आत्म०-
अक०-सेट् ।) अस्फुटध्वनिरिह भूषणकर्त्तृक
एव । भूषणानान्तु शिञ्जितमित्यमरात् । इ,
शिञ्ज्यते । ल ङ, शिङ्क्ते । कि ङ, शिञ्जयते
शिञ्जते मञ्जीरम् । तालैः शिञ्जद्वलयसुभगै-
र्न्नर्त्तितः कान्तयाने इत्यत्र शिञ्जदिति गणकृता-
नित्यत्वादिति रमानाथः । वस्तुतस्तु शिङ्क्ते
शिञ्जः पचादित्वादन् ततः शिञ्ज इवाचरतीति
क्वौ शत्रन्तम् । इति दुर्गादासः ॥

**शिञ्जा**, स्त्री, (शिजि अव्यक्तशब्दे + "गुरोश्च
हलः ।" ३ । ३ । १०३ । इत्यः । टाप् ।) भूषण-
शब्दः । इति शब्दरत्नावली ॥ धनुर्गुणः । इति

**शिखिपुच्छं**, क्ली, (शिखिनः पुच्छम् ।) मयूर-

पिच्छम् । यथा, --
"शिखण्डोऽस्त्री पिच्छवर्हे
शिखिपुच्छशिख-
ण्डके ॥"
इति शब्दरत्नावली ॥

**शिखिप्रियः**, पुं, (शिखिनः प्रियः ।) लगुवदरः
।

इति राजनिर्घण्टः ॥

**शिखिमण्डलः**, पुं, वरुणवृक्षः । इति
शब्दरत्ना-

वली ॥

**शिखिमोदा**, स्त्री, (शिखिनं मोदयतीति । मुद्
+

णिच् + अच् । टाप् ।) अजमोदा ।
इति
राजनिर्घण्टः ॥

**शिखियूपः**, पुं, श्रीकारी मृगः । इति राज-

निर्घण्टः ॥

**शिखिवर्द्धकः**, पुं, (शिखिनं जठराग्निं
वर्द्धयतीति ।

वृध + ण्वुल् ।) कुष्माण्डः । इति
शब्दरत्नावली ॥

**शिखिवाहनः**, पुं, (शिखी वाहनं यस्य ।)
कार्त्ति-

केयः । इत्यमरः ॥

**शिखिव्रतं**, क्ली, (शिखिनो व्रतम् ।)
व्रतविशेषः ।

यथा, --
ब्रह्मोवाच ।
"वक्ष्ये प्रतिपदादीनि व्रतानि व्यास
श्रूयताम् ।
प्रतिपद्येकभक्ताशी समाप्ते
कपिलाप्रदः ।
वैश्वानरपदं याति शिखिव्रतमिदं
स्मृतम् ॥"
इति गारुडे १२९ अध्यायः ॥

**शिखी**, [न्] पुं, (शिखास्यास्तीति । शिखा +

६ । १४ ।
"वर्ज्जयेन्मधुमांसञ्च भौमानि कवकानि च ।
भूस्तृणं शिग्रुकञ्चैव श्लेष्मातकफलानि च ॥"
"शिग्रुकं वाह्लीकेषु प्रसिद्धं शाकम् ।" इति
मेधातिथिकुल्लूकौ ॥)

**शिग्रुजं**, क्ली, (शिग्रोर्ज्जायते इति । जन + डः ।)

शोभाञ्जनबीजम् । तत्पर्य्यायः । श्वेतमरिचम् २ ।
इत्यमरः ॥ शिग्रुभवे, त्रि ॥

**शिग्रुबीजं**, क्ली, (शिग्रोर्ब्बीजम् ।) शोभाञ्जन-

बीजम् । इति शब्दचन्द्रिका ॥

**शिघ**, इ आघ्राणे । इति कविकल्पद्रुमः ॥ (भ्वा०

पर०-सक०-सेट् ।) इ, शिङ्घ्यते । इति दुर्गा-
दासः ॥

**शिङ्घाणं**, क्ली, (शिङ्घ + आणकः । पृषोदरादित्वात्

कलोपः । इत्युणादिवृत्तौ उज्ज्वलदत्तः । ३ । ८३
।)

हेमचन्द्रः ॥

**शिञ्जितं**, क्ली, (शिञ्ज + क्तः ।) भूषणध्वनिः ।

इत्यमरः ॥ (यथा, --
"नखानि विधुशङ्कया विरहिणी
करेणावृणोत्
ततः किशलयभ्रमात्
स्वयमथाक्षिपद्भूरतः ।
ततो वलयशिञ्जितं भ्रमरगुञ्जिताशङ्कया
उहूरिति कुहूरवध्वनिधिया ततो
मूर्च्छिता ॥"
इत्युद्भटः ॥)

**शिञ्जिनी**, स्त्री, (शिञ्जति आकृष्टमुक्तां शब्दा-

यते इति । शिञ्ज + णिनिः । स्त्रियां ङीप्
।)
धनुर्गुणः । इत्यमरः ॥ नूपुरः । इति हेम-
चन्द्रः ॥

**शिञ्जी**, [न्] त्रि, भूषणशब्दविशिष्टः । शिञ्जा

विद्यतेऽस्य इत्यर्थे इन्प्रत्ययेन निष्पन्नः
॥

**शिट**, अनादरे । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) शेटति खलं लोकः
। इति
दुर्गादासः ॥

**शिण्डाकी**, स्त्री, खाद्यद्रव्यविशेषः । यथा, --

"शिण्डाकी राजिकायुक्तैः
स्यान्मूलकदलद्रवैः ।
सर्षपस्वरसैर्व्वापि शालिपिष्टकसंयुतैः ।
शिण्डाकी रोचनी गुर्व्वी पित्तश्लेष्मकरी
स्मृता ॥"
इति राजनिर्घण्टः ॥

**शितं**, त्रि, (शो तनूकरणे + क्तः । "शाच्छोरन्य-

तरस्याम् ।" ७ । ४ । ४१ । इति
इकारादेशः ।)
दुर्ब्बलः । निशितः । इति मेदिनी ॥
(यथा,
रघौ । ६ । ४२ ।
"धारां शितां रामपरश्वधस्य

| | | |
|---|---|---|
| “व्रीह्यादिभ्यश्च ।” ५ । २ । ११६ । इति इनिः ।) मयूरः । (यथा, बृहत्संहितायाम् । ३ । २८ । “शिखिपत्रनिभः सलिलं न करोति द्वाद- शाब्दानि ॥”) | | सम्भावयत्युत्पलपत्रसाराम् ॥”) कृशः । इति विश्वः ॥ (पुं, विश्वामित्रगोत्रीय ऋषिः । यथा, महाभारते । १३ । ४ । ५३ । |

"आङ्घ्रिको नैकट्टक् चैव शिलायूपः
शितः
शुचिः ॥")

**शितद्रुः**, स्त्री, शतद्रुनदी । इत्यमरः ॥ शतलज्
इति ख्याता ॥ क्षीरमोरटः । इति
रत्नमाला ॥

**शितशूकः**, पुं, (शितं निशितं शूकं यस्य ।)
यवः । इत्यमरः ॥ दन्त्यादिरित्येके इति
भरतः ॥
गोधूमः । इति त्रिकाण्डशेषः ॥

**शितिः**, त्रि, (शतिः सौत्रो धातुः + "क्रमि-
तमिशतिस्तम्भामत इच्च ।" उणा० ४ ।
१२१ ।
इति इन् । स च कित् । अत इकारश्च ।)
शुक्त्रः । कृष्णः । (यथा, माघे । १५ ।
४८ ।
"शितितारकानुमितताम्र-
नयनमरुणीकृतं क्रुधा ॥")
भूर्जवृक्षे, पुं । इति मेदिनी ॥ यथा चे ।
"शितिस्त्रिषु सिते कृष्णे भूर्जे सारेऽपि च
द्वयोः ।"
इति शब्दरत्नावली ॥

**शितिकण्ठः**, पुं, (शितिः कण्ठे यस्य ।) शिवः ।
इत्यमरः ॥ (यथा, भागवते । ४ । ३ ।
१२ ।
यासां व्रजद्भिः शितिकण्ठ ! मण्डितं
नभो विमानैः कलहंसपाण्डुभिः ॥")
दात्यूहपक्षी । इति त्रिकाण्डशेषः ॥) यथा,
महाभारते । १ । ९० । ६ ।
"यदा तु तान् वितुदन्ते वयांसि
तथा गृध्राः शितिकण्ठाः पतङ्गाः ॥")

**शितिचारः**, पुं, शाकविशेषः । यथा, --
"शितिचारः सूतपुत्त्रो वितन्नं
सुनिषण्णकम् ॥"
इति जटाधरः ॥

**शितिच्छदः**, पुं, (शिती छदौ यस्य ।) हंसः । इति

**शिनिः**, पुं, क्षत्त्रियभेदः । इत्युणादिकोषः ॥ (यथा
महाभारते । २ । ४ । ३० ।
"अक्रूरः कृतकर्म्मा च सत्यकश्च
शिनेः सुतः ॥")

**शिनेर्नप्ता**, [ऋ] पुं, सात्यकिः । इति त्रिकाण्ड-
शेषः ॥

**शिपविष्टः**, पुं, शिपिविष्टः । इत्यमरटीकायां रमा-
नाथः ॥

**शिपिः**, पुं, रश्मिः । यथा, --
"शैत्यात् शयनयोगाच्च शिपिवारि
प्रचक्षते ।
तत्पानाद्रक्षणांच्चैव शिपयो रश्मयो
मताः ।
तेषु प्रवेशात् विश्वेशः शिपिविष्ट
इहोच्यते ॥"
इति व्यासवनम् ॥

**शिपिविष्टः**, पुं, खलतिः । दुश्चर्म्मा । महेश्वरः ।
इत्यमरः ॥ कुष्ठी । इत्यमरटीकायां
रायमुकुटः ॥
अस्य रूपान्तरम् । शिपविष्टः ।
शिपिविष्टः ।
इत्यमरटीका ॥ विष्णुः यथा, --
"नैकरूपी बृहद्रुपः शिपिविष्टः
प्रकाशनः ॥"
इति तस्य सहस्रनामस्तोत्रं
रमानाथश्च ॥
(पशुप्रविष्टे, त्रि । यथा, भागवते । ४ ।
१३ । ३५ ।
"पुरोडाशं निरवपन् शिपिविष्टाय
विष्णवे ॥"
"शिपिषु पशुषु यज्ञरूपेण प्रविष्टाय ।
तथाच
श्रुतिः यज्ञो वै विष्णुः पशवः शिपिः
यज्ञ एव

मरः ॥ मूलम् ३ । इति जटाधरः ॥ नदी
(यथा ऋग्वेदे । १ । १०४ । ३ ।
"हते ते स्यातां प्रवणे शिफायाः ।"
"शिफायाः शिफा नाम नदी तस्याः ।" इति
तद्भाष्ये सायणः ॥) मांसिका । माता । इति
मेदिनी ॥ शतपुष्पा । हरिद्रा । इति राज-
निर्घण्टः ॥ पद्मकन्दः । इति मुकुटधृतस्वामी ॥
(लता । इति मेधातिथिः ॥ यथा, मनौ । ९ ।
२३० ।
"शिफाविदलरज्वाद्यैर्व्विदध्यान्नृपतिर्द्दमम् ॥)

**शिफाकः**, पुं, (शिफा इव । कन् ।) पद्ममूलम् ।
इति शब्दरत्नावली ॥

**शिफाकन्दः**, पुं, (शिफायुक्तः कन्दो यस्य ।) पद्म-
मूलम् । तत्पर्य्यायः । करहाटः २ । इत्यमरः ॥
शिफाकः ३ । इति शब्दरत्नावली ॥ पद्मकन्दः
४ कर्कटः ५ । इति जटाधरः ॥ शिफा ६ कन्दः
७ । इति मुकुटधृतस्वामी ॥

**शिफाधरः**, पुं, (शिफाया धरः ।) शाखा । इति
शब्दचन्द्रिका ॥

**शिफारुहः**, पुं, (शिफाया रोहतीति । रुह +
कः ।) वटवृक्षः । इति राजनिर्घण्टः ॥

**शिमृडी**, स्त्री, क्षुपविशेषः । चाङ्गेनि इति
हिन्दीभाषा । तत्पर्य्यायः । मतिदा २ बल्या ३
पङ्गुल्यहारिणी ४ द्रवत्पत्री ५ वातघ्नी ६ गुच्छ-
पुष्पी ७ । अस्या गुणाः । कटुत्वम् । उष्णत्वम् ।
वातपृष्ठशूलनाशित्वम् । रसायने युक्ता चेत्
देहदार्ढ्यकारित्वञ्च । इति राजनिर्घण्टः ॥

**शिम्बः**, पुं, चक्रमर्द्दकः । इति शब्दचन्द्रिका ॥

**शिम्बा**, स्त्री, (शिम्ब + टाप् ।) कलयादित्वक् ।
सुँटी इति छिम्डा इति च भाषा । तत्-
पर्य्यायः । समी २ । इत्यमरः ॥ सिम्बा ३
सिम्बी ४ शिम्बी ५ शिम्बिका ६ शमी ७
सिम्बिका ८ शिम्बिः ९ । इति शब्दरत्नावली ॥
शमिः १० । इति हेमचन्द्रः ॥

**शिम्बिः**, स्त्री, शिम्बा । इति हेमचन्द्रः ॥ एरका ।

शब्दरत्नावली ॥

**शितिपक्षः**, पुं, (शिती शुक्लौ प्रक्षौ यस्य ।) हंसः । इति शब्दरत्नावली ॥

**शितिसारकः**, पुं, (शितिः सारो यस्य ।) तिन्दु-वृक्षः । इत्यमरः ॥

**शिथिलं**, त्रि, (श्रथ + "अजिरशिशिरशिथि-लेति ।" उणा० १ । ५४ । इति किरच्-प्रत्ययेन साधुः ।) श्लथः । इति हेमचन्द्रः ॥
(यथा, भागवते । ४ । २८ । १५ ।
"शिथिलावयवो यर्हि गन्धर्व्वैर्हृ तपौरुषः ॥")

**शिथिलं**, क्ली, (श्रथ + किरच् ।) मन्दबन्धनम् । मन्यरत्वम् । इति संक्षिप्तसारोणादिवृत्तिः ॥
संयोगविशेषः । यथा, --
"प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते ।"
इति भाषापरिच्छेदः ॥
"प्रचय इति मूले शिथिलाख्य इति किञ्चिदव-
यवावच्छेदेनावयवान्तरसंयोगिनि महत्त्ववति
अवयवे वर्त्तमानः संयोगः प्रचय इत्येके । अत्र
महत्त्वपद न देयं परमाणुसंयोगस्य प्रचयत्वे-
ऽपि न क्षतिरित्यन्ये । भूयोऽवयवावच्छेदेनाव-
यवान्तरसंयोगिन्यवयवे वर्त्तमानः संयोगः
प्रचयः तेन परमाणुसंयोगो द्व्यणुकसंयोगो वा
न प्रचय इत्यमरे ।" इति सिद्धान्तमुक्तावली-
टीकादिनकरी ॥

पशुषु प्रतितिष्ठतीति ।" इति श्रीधरस्वामी ॥)

**शिप्रः**, पुं, सरोवरविशेषः । यथा, --
"एवं विवाह्य विधिवत् सौवर्णे मानसाचले ।
अरुन्धतीं वशिष्ठस्तु मोदमाप तया सह ॥
तत्र यत् पतितं तोयं मानसाचलकन्दरे ।
विवाहावभृतार्थाय शान्त्यर्थं वसुधाकृतम् ॥
ब्रह्मविष्णुमहादेवपाणिभिः समुदीरितम् ।
तत्तोयं सप्तधा भूत्वा पतितं मानसाचलात् ॥
हेमाद्रेः कन्दरे सानौ सरस्याञ्च पृथक् पृथक् ।
तत्तोयं पतितं शिप्रे देवभोग्ये सरोवरे ।
तेन शिप्रा नदी जाता विष्णुना प्रेरिता क्षितिम् ॥"
इति कालिकापुराणे २३ अध्यायः ॥

**शिपा**, स्त्री, नदीविशेषः । यथा, --
"ततो हिमवतः प्रस्थे प्रतीच्यां तत्पुरस्य च ।
शिप्र नामं सरः पूर्णं ददृशुर्द्रुहिणादयः ॥
तद्ब्रहस्थानमासाद्य ब्रह्मशक्रादयः सुराः ।
उपविष्टा यथान्यायं पुरस्कृत्य महेश्वरम् ॥
तं शिप्रसंज्ञकासारं मनोज्ञं सर्व्वदेहिनाम् ।
शीतामलजलं सर्व्वैर्गुणैर्मानससम्मितम् ॥
दृष्ट्वा क्षणं हरस्तस्मिन् सौत्सुकोऽभूदवेक्षणे ।
शिप्रां नाम नदीं तस्मान्निःसृतां दक्षिणोदधिम् ।

इति भावप्रकाशः ॥

**शिम्बिकः**, पुं, कृष्णमुद्गः । यथा, --
"कृष्णे प्रवरवासन्तहरिमन्थजशिम्बिकाः ॥"
इति हेमचन्द्रः ॥

**शिम्बिका**, स्त्री, (शिम्बि + कन् । टाप् ।) शिम्बा इति शब्दरत्नावली ॥

**शिम्बिपर्णिका**, स्त्री, (शिम्बिपर्णी + स्वार्थे कन् ।) मुद्गपर्णी । इति रत्नमाला ॥

**शिम्बिपर्णी**, स्त्री, (शिम्बेः पर्णमिव पर्णमस्याः । ङीष् ।) मुद्गपर्णी । इति शब्दचन्द्रिका ॥

**शिम्बी**, स्त्री, (शिम्बि + पक्षे ङीष् ।) शिम्बा । इति शब्दरत्नावली ॥ (यथा, राजतर-ङ्गिण्याम् । १ । १११ ।
"भुञ्जाने कच्छगुच्छानां शिम्बीरम्बुजलोचने ॥
मुद्गपर्णी । कपिकच्छुः । इति राजनिर्घण्टः ॥

**शिरः**, पुं, पिप्पलीमूलम् । इति मेदिनी । मस्त-कम् । इति जटाधर ॥ (यथा, --

गच्छन्तीश्च ददर्शासौ पावयन्तीं जगज्जनान् ॥”

इति कालिकापुराणे १९ अध्यायः ॥

(हनुः । यथा, ऋग्वेदे । ८ । ६५ । १० ।

“उत्तिष्ठन्नोजसा सह पीत्वी शिप्रे अवेपयः ।”

“शिप्रे हनू ।” इति तद्भाष्ये सायणः ॥)

**शिफः**, पुं, शिफा । इत्यमरटीकायां विद्याविनोदः ॥

**शिफा**, स्त्री, वृक्षाणां जटाकारमूलम् । शिकड़

इति ख्यातम् । तत्पर्य्यायः । जटा । २ । इत्य-

"पिण्डं दद्यात् गयाशिरे ।" इति वायुपुराणम् ॥
"शिरो वाटी शिरोऽदन्तो रजोवाटी रजस्तथा ।"
इति कोषान्तरम् ॥) शय्या । अजगरः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**शिरः**, [स्] क्ली, (श्रि + "श्रयतेः स्वाङ्गे शिरः किच्च ।" उणा० ४ । १९३ । असुन् । सच कित् ।
धातोः शिरादेशश्च ।) शिखरम् । (यथा, महाभारते । ४ । २३ । २ ।
"यथा वज्रेण वै दीर्णं पर्व्वतस्य महच्छिरः ॥")
मस्तकम् । इत्यमरः ॥ (यथा, लक्ष्मीचरित्रे ।
"शिरः सपुष्पं चरणौ सुपूजितौ ॥")
तच्च मासमात्रेण भवति । इति सुखबोधः ॥
तद्रोगनाशकौषधम् । यथा, --
"शिरोरोगहरं लेपात् गुञ्जामूलं सकाञ्जिकम् ।"
इति गारुडे १८८ अध्यायः ॥
प्रधानम् । (यथा, भागवते । ५ । १४ । ४५ ।
"योगाय सांख्यशिरसे प्रकृतीश्वराय ॥")
सेनाग्रम् । इति मेदिनी ॥

**शिरःकपाली**, [न्] पुं, (शिरःकपालोऽस्यास्तीति इनिः ।) नरमस्तककपालधारी सन्न्यासी । इति केचित् ॥

**शिरःफलः**, पुं, (शिरस्तुल्यं फलं यस्य ।) नारिकेलः । इति त्रिकाण्डशेषः ॥

**शिरःशूलं**, क्ली, (शिरसः शूलम् ।) मस्तकवेदनारोगः । (यथा, कथासरित्सागरे । १३ । १५५ ।
शिरस्त्रम् ५ । इत्यमरः ॥ (यथा, रघौ । ४ । ६४ ।
"अपनीतशिरस्त्राणाः शेषास्त शरणं ययुः ॥")

**शिरस्यः**, पुं, (शिरस् + "शाखादिभ्यो यत् ।" ५ । ३ । १०३ । इति यत् ।) विशदकचः । तत्पर्य्यायः । शीर्षण्यः २ । इत्यमरः ॥ द्वे स्वतः
स्नानादिना वा निर्म्मले अन्योन्यासंपृक्ते केशे ।
इति भरतः ॥

**शिरा**, स्त्री, धमनिः । इति मेदिनी ॥ शिर इति भाषा । अस्याः पर्य्यायादिकं नाडीशब्दे द्रष्टव्यम् ॥

**शिरापत्रः**, पुं, (शिरायुक्तं पत्रं यस्य ।) हिन्तालवृक्षः । इति राजनिर्घण्टः ॥ कपित्थः । इति शब्दचन्द्रिका ॥

**शिरालं**, क्ली, (शिराः सन्ति अस्य । "प्राणिस्थादातो लजन्यतरस्याम् ।" ५ । २ । ९६ ।
इति लच् ।) कर्म्मरङ्गम् । इति शब्दचन्द्रिका ॥ (शिरायुक्ते, त्रि । यथा, भट्टौ । २ । ३० ।
"आपिङ्गरूक्षोर्द्धशिरस्यबालैः शिरालजङ्घैर्गिरिकूटदघ्नैः ॥")

**शिरालकः**, पुं, (शिराल इव । कन् ।) अस्थिभङ्गवृक्षः । इति शब्दचन्द्रिका ॥ हाडभाङ्गा इति भाषा ॥

**शिरावृत्तं**, क्ली, सीसकम् । इति राजनिर्घण्टः ॥

**शिरिः**, पुं, (शृणात्यनेन + "कॄगॄशॄपॄकुटिभिदिछिदिभ्यश्च ।" उणा० ४ । १४२ । इति इः । स च
शिरीषो मधुरोऽनुष्णस्तिक्तश्च तुवरो लघुः ।
दोषशोथविसर्पघ्नः काशव्रणविषापहः ॥"
इति भावप्रकाशः ॥ * ॥
कण्टकशिरीषस्य पर्य्यायः ।
"कटभी किणिही श्वेता महाश्वेता च रोहिणी ।"
इति रत्नमाला ॥ * ॥
अस्य गुणाः ।
"शिरीषो विषवीसर्पस्वेदत्वग्दोषशोथजित् ।"
इति राजवल्लभः ॥

**शिरीषपत्रिका**, स्त्री, (शिरीषस्य पत्रमिव पत्रमस्याः । ततः स्वार्थे कन् । टापि अत इत्वम् ।)
श्वेतकिणिही । इति राजनिर्घण्टः ॥

**शिरोगृहं**, क्ली, (शिरसो गृहम् ।) अट्टालिकोपरिगृहम् । तत्पर्य्यायः । चन्द्रशाला २ । इति हेमचन्द्रः ॥

**शिरोग्रीवं**, क्ली, शिरश्च ग्रीवा च द्वयोः समाहारः । यथा । द्वन्द्वैकत्वं अव्ययीभावश्च क्लीवे
स्यात् द्वन्द्वस्य समासस्य एकत्वं समाहारद्वन्द्व
इत्यर्थः । यथा, वाक्त्वचं श्रीस्रजं पाणिपदं शिरोग्रीवम् । इति क्लीवलिङ्गसंग्रहटीकायां भरतः ॥

**शिरोधरा**, स्त्री, (शिरसो धरा ।) ग्रीवा । इति हेमचन्द्रः ॥ (यथा भागवते । ३ । १७ । १० ।
"सङ्गीतवद्रोदनवकुन्नमय्य शिरोधराम् ।
व्यमुञ्चन् विविधा वाचो ग्रामसिंहास्ततस्ततः ॥"
क्लीवलिङ्गेऽपि दृश्यते । यथा, तत्रैव । ३ । १३ । ३७ ।
"दीक्षानुजन्मोपसदः शिरोधरम् ॥")

“प्रातः सोऽपि शिरःशूलव्यपदेशेन वेष्टनम् ।
कृत्वा प्रच्छादयामास ललाटतटमङ्कितम् ॥”)
तस्यौषधं यथा, --
“श्वेतापराजितामूलं पिप्पलीशुण्ठिसंयुतम् ।
परिपिष्टं शिरोलेपात् शिरःशूलविनाशनम् ॥”
इति गारुडे १८८ अध्यायः ॥

**शिरजः**, पुं, (शिराज्जायते इति । जन + डः ।) केशः । इति शब्दरत्नावली ॥

**शिरसिजः**, पुं, (शिरसि जायते इति । जन + डः ।) केशः । इति जटाधरः ॥ (यथा, माघे । ७ । ६२ ।
“श्लथशिरसिजपाशपातभारा-
दिव नितरां नतिमद्भिरंसभागैः ॥”)

**शिरसिरुहः**, पुं, (शिरशि रोहतीति । रुह + कः ।) केशः । इति शब्दरत्नावली ॥

**शिरस्कं**, क्ली, शिरस्त्राणम् । इति हेमचन्द्रः ॥ शिरःसम्बन्धिनि, त्रि ॥

**शिरस्त्रं**, क्ली, (शिरस्त्रायते इति । त्रै + कः ।) शिरोरक्षणसन्नाहः । टोप् इति ख्यातः । इत्यमरभरतौ ॥ (यथा राजतरङ्गिण्यम् । ५ । ४७ ।
“वल्गन् मध्येऽश्ववाराणां नृत्यत्येवाग्रवाजिना
वल्गाङ्केनोद्वहल्लम्बं शिरस्त्रं वामपाणिना ॥”)

**शिरस्त्राणां**, क्ली, (शिरस्त्रायते अनेन । त्रै + ल्युट् ।) शिरोरक्षणसन्नाहः । खोपडा इति टोप् इति च भाषा । तत्पर्य्यायः । शीर्षण्यम् २ शीर्षकम ३ शिरस्कम् ४ । इति हेमचन्द्रः ॥

(शृणातीति । शॄ + “शॄस्वृस्निहीति ।” उणा० १ । १० । इति उः । स च कित् ।) खड्गः । शरः । हिंस्रः । इत्युणादिकोषः ॥ शलभः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**शिरीषः**, पुं, (शृणाति झटिति म्लायतीति । शॄ + “शॄपॄभ्यां किच्च ।” उणा० ४ । २७ । इति ईषन् सच कित् ।) स्वनामख्यातवृक्षः । (यथा, कुमारे । ५ । ४ ।
“पदं सहेत भ्रमरस्य पेलवं
शिरीषपुष्पं न पुनः पतत्रिणः ॥”)
तत्पर्य्यायः । कपीतनः २ भण्डिलः ३ । इत्यमरः ॥ भण्डिरः ४ भण्डीरः ५ भण्डीलः ६ । इति तट्टीका ॥ मृदुपुष्पः ७ शुकतरुः ८ विषनाशनः ९ । इति रत्नमाला ॥ शीतपुष्पः १० भण्डिकः ११ स्वर्णपुष्पकः १२ शुकेष्टः १३ वर्हपुष्पः १४ विषहन्ता १५ सुपुष्पकः १६ उद्दानकः १७ शुक्रतरुः १८ लोमशपुष्पकः १९ कपीतकः २० कलिङ्गः २१ श्यामलः २२ शङ्खिनीफलः २३ मधुपुष्पः २४ वृत्तपुष्पः २५ । पुस्तकान्तरे शिखिनीफलः २६ भण्डी २७ प्लवगः २८ शुकपुष्पः २९ । अस्य गुणाः । कटुत्वम् । शीतत्वम् । विषवातपामास्रकुष्ठकण्डूतित्वग्दोषनाशित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
“शिरीषो भण्डिलो भण्डी भण्डीरश्च कपीतनः
शुकपुष्पः शुकतरुर्मृदुपुष्पः शुकपियः ॥

**शिरोधिः**, स्त्री, (शिरो धीयते अनया । धा + “कर्म्मण्यधिकरणे च ।” ३ । ३ । ९३ । इति किः ।) ग्रीवा । इत्यमरः ॥

**शिरोमणिः**, पुं स्त्री, (शिरसो मणिः ।) मस्तकधार्य्यरत्नम् । तत्पर्य्यायः । चूडामणिः २ शिरोरत्नम् ३ । इति शब्दरत्नावली ॥ पण्डितस्य उपाधिविशेषश्च ॥ (द्वयोरुदाहरणम् । यथा, --
“यस्य सांसारिकी चिन्ता चिन्ता चिन्तामणेः कुतः ।
तयैव हि शिरःकम्पः क्व शिरोमणिधारणम् ॥”
इत्युद्भटः ॥)

**शिरोमर्म्मा**, [न्] पुं, (शिर एव मर्म्म जीवाधानं यस्य ।) शूकरः । इति हेमचन्द्रः ॥

**शिरोरत्नं**, क्ली, (शिरसो रत्नम् ।) शिरोमणिः । इत्यमरः ॥

**शिरोरुजा**, स्त्री, (शिरसि रुजतीति । रुज + कः । टाप् ।) सप्तपर्णवृक्षः । इति त्रिकाण्डशेषः ॥ मस्तकरोगश्च ॥

**शिरोरुट्**, [ह्] पुं, (शिरसि रोहतीति । रुह + क्विप् ।) केशः । इति शब्दरत्नावली ॥

**शिरोरुहः**, पुं, (शिरसि रोहतीति । रुह + कः ।) केशः । इत्यमरः ॥ (यथा, भागवते । ४ । २८ । ४४ ।
“चीरवासा व्रतक्षामा वेणीभूतशिरोरुहा ॥”)

**शिरोरोगः**, पुं, (शिरसो रोमः ।) मस्तकपीडा ।

यथा, --
अथ शिरोरोगाधिकारः । अत्र शिरोरोगस्य
निदानं सख्याञ्चाह ।
“शिरोरोगास्तु जायन्ते वातपित्तकफैस्त्रिभिः
।
सन्निपातेन रक्तेन क्षयेण कृमिभिस्तथा ॥
सूर्य्यावर्त्तानन्तवातशंखकार्द्धावभेदकाः ।
एकादशविधस्यास्य लक्षणानि प्रचक्षते ॥”
शिरोरोगा अत्र शिरोरोगः शूलरूपा रुगभि-
धीयते । वातपित्तकफैस्त्रिभिः । ननु
वातपित्त-
कफैरित्युक्ते तत्त्रित्वबोधात् । किमर्थं त्रिभि-
रिति पदम् । वातपित्तकफानां पृथक्कार-
णत्वबोधनार्थम् । तर्हि सर्व एव शिरोरोगाः
सन्निपातसमुद्भवा इति कथम् । तदा वातादय
उल्वणतया पृथक्कारणानि बोद्धव्यानि ।
क्षयेण
रसादिक्षयेण ॥ * ॥ वातिकस्य लक्षणमाह ।
“यस्यानिमित्तं शिरसो रुजश्च
भवन्ति तीव्रा निशि चातिमात्रम्
बन्धोपतापैः प्रशमश्च यत्र
शिरोऽभितापः स समीरणेन ॥”
भवेदिति विशेषः । अनिमित्तं अतर्कितविप्र-
कृष्टनिमित्तम् । निशि चातिमात्रं रात्री शैत्येन
रोगाधिक्यात् । प्रतापः स्वेदनम् । शिरोऽभि-
तापः शिरःपीडा ॥ * ॥ पैत्तिकमाह ।
“यस्योष्णमङ्गारचितं यथैव
भवेच्छिरो दह्यति नाक्षिनाशम् ।
शीतेन रात्रौ च भवेच्छमश्च
शिरोऽभितापः स तु पित्तकोपात् ॥
दह्यतीत्यार्षत्वात् ॥ * ॥ श्लैष्मिकमाह ।
“शिरो भवेद्यस्य कफोपदिग्धं
गुरु प्रतिष्टब्धमथो हिमञ्च ।
सूनाक्षिनासावदनञ्च यस्य
शिरोऽभितापः स कफप्रकोपात् ॥”
कफोपदिग्धं अन्तःकफलिप्तम् । प्रतिष्टब्धं
स्तब्ध-
शिरम् ॥ * ॥ सान्निपातिकमाह ।

घ्राणाच्च गच्छेद्रुधिरं सपूयं
शिरोऽभितापः कृमिभिः सघोरः ॥”
संभक्ष्यमाणं कृमिभिरिति शेषः । घ्नाणाच्चेति
चकारेण कृमिनिर्गमोऽपि बोध्यते ॥ * ॥
सूर्य्या-
वर्त्तमाह ।
“सूर्य्योदयं या प्रतिमन्दमन्द-
मक्षिभ्रुवं रुक् समुपैति गाढम् ।
विवर्द्धते चांशुमता सहैव
सूर्य्यावववृत्तौ विनिवर्त्तते च ॥
शीतेन शान्तिं लभते च किञ्चि-
दुष्णेन जन्तुः सुखमाप्नुयाद्वा ।
सर्व्वात्मकं कष्टतमं विकारं
सूर्य्याववर्त्तं तमुदाहरन्ति ॥”
सूर्य्योदयमिति लक्षीकृत्य आरभ्येति यावत् ।
सूर्य्यस्याववृत्ती सूर्य्यस्याधोगतौ ॥ * ॥
अनन्त-
वातमाह ।
“दोषास्तु दुष्टाः स्वयमेव मन्यां
संपीड्य घाटां स्वरुजां सुतीव्राम् ।
कुर्वन्ति सोऽक्षिण भ्रुवि शङ्खदेशे
स्थितिं करोत्याशु विशेषतस्तु ॥
गण्डस्य पार्श्वे तु करोति कम्पं
हनुग्रहं लोचनजान् विकारान् ।
अनन्तवातं तमुदाहरन्ति
दोषत्रयोत्थं शिरसो विकारम् ॥”
एवशब्दोऽत्राप्यर्थः । अव्ययानामनेकार्थत्वात्
।
स्वरुजां स्वस्य रुजां व्यथादाहगौरवादिरूपां
दोषाः कुर्वन्ति । अयमनन्तवातः । स अनन्त-
वातः अक्ष्यादिषु स्थितिं करोति । विशेषतः
गण्डपार्श्वे स्थितिं करोति । पीडया स्थितिं
कृत्वा कम्पादींश्च करोति ॥ * ॥ शङ्खकमाह ।
“पित्तरक्तानिला दुष्टाः शङ्खदेशे विमूर्च्छिताः ॥
तीव्ररुग्दाहरागं हि शोथं कुर्वन्ति दारुणम् ॥
स शिरोविषवद्वेगान् निरुध्याशु गलं तथा ।
त्रिरात्राज्जीवितं हन्ति शङ्खको नाम नामतः ।
त्र्यहाज्जीवति भैषज्यं प्रत्याख्येयस्य कारयेत्
॥”

कटूष्णं शिरसः पीडां भाले लेपनतो
हरेत् ॥
रसः श्वासकुठारोत्थस्तस्य नस्यं
विशेषतः ।
शिरःशूलं हरत्येव विधेयो नात्र
संशयः ॥” * ॥
अथ शिरोवस्तिविधिः ।
“आशिरोव्यापि तच्चर्म्म
षोडषाङ्गुलमुच्छ्रितम् ।
तेनावेष्ट्य
शिरोऽधस्तान्माषकल्केन लेपयेत् ॥
निश्चलस्योपविष्टस्य तैलैः कोष्णैः
प्रपूरयेत् ।
धारयेदारुजः शान्त्यै यामं
यामार्द्धमेव च ॥
शिरोवस्तिर्हरत्येष शिरोरोगं
मरुद्भवम् ।
हनुमन्याक्षिकर्णार्त्तिमर्द्दितं
मूर्द्धकम्पनम् ।
विना भोजनमेवैष शिरोवस्त्याः
प्रयुज्यते ॥
दिनानि पञ्च वा सप्त रुजि
तत्परतोऽपि वा ।
ततोऽपनीतस्नेहस्तु
मोचयेद्वस्तिबन्धनम् ॥
शिरोललाटवदनग्रीवादीनिविमर्द्दयेत्
।
सुखोष्णेनाम्भसा गात्रं
प्रक्षाल्याश्नाति यद्धितम ॥
आमिषं जाङ्गलं पथ्यं तत्र
शाल्यादयोऽपि च ।
मुद्गान् माषान् कुलत्थांश्च खादेद्वा
निशि
केवलान् ॥
कटुकोष्णान्ससर्पिष्कानुष्णं क्षीरं
पिबेत्तथा ।
पित्तात्मके शिरोरोगे शीतानां
चन्दनाम्भसाम् ॥

"शिरोऽभितापे त्रितयप्रवृत्ते
सर्वाणि लिङ्गानि समुद्भवन्ति ॥" * ॥
रक्तजमाह ।
"रक्तात्मिकः पित्तसमानलिङ्ग-
स्पर्शासहत्वं शिरसो भवेच्च ॥"
पैत्तिकाद्भेदकलिङ्गमाह । शिरःस्पर्शासहत्व-
मिति ॥ * ॥ क्षयजमाह ।
"वसावलासक्षतसम्भवानां
शिरोगतानामतिसंक्षयेण ।
क्षयप्रवृत्तिः शिरसोऽभितापः
कष्टो भवेदुग्ररुजोऽतिमात्रम् ॥"
क्षतसम्भवं रुधिरम् । कष्टः कृच्छ्रसाध्यः ।
"श्रमो भ्रमति तुद्येत शिरो विभ्रान्तनेत्रता ।
मूर्च्छा गात्रावसादश्च शिरोरोगे क्षयात्मिके
॥"
कृमिजमाह ।
"निस्तुद्यते यस्य शिरोऽतिमात्रं
संभक्ष्यमाणं स्फुरतीव चान्तः ।

पित्तरक्तानिलाः अत्र कफोऽपि योज्यः ।
कृतानु-
तापः कफपित्तरक्तैरिति सुश्रुतवचनात् । विमू-
र्च्छिताः प्रवृद्धाः । स शोथः । त्रिरात्रात्
त्रिरात्रमध्ये मारयति ॥ * ॥ अर्द्धावभेदकमाह
।
"रूक्षाशनाद्यध्यशनावश्याप्राग्वातमैथुनैः ।
वेगसंधारणायासव्यायामैः कुपितोऽनिलः ॥
केवलः सकफो वार्द्धं गृहीत्वा शिरसो बली ।
मन्याभ्रूशङ्खकर्णाक्षिललाटार्द्धेषुवेदनाम् ॥
शस्त्राशनिनिभां कुर्य्यात्तीव्रां सोऽर्द्धावभेदकः ।
नयनं वाथवा श्रोत्रमभिवृद्धौ विनाशयेत् ॥"
अवश्या अवश्यायः । आयासः अतिबलेन
भारोद्वहनादिभिः । व्यायामः स्वल्पश्रमः ।
शस्त्राशनिनिभां शस्त्रपातेनैव वज्रपातेनैव वेद-
नाम् ॥ * ॥ अथ शिरोरोगाणां चिकित्स्या ।
"वातजाते शिरोरोगे स्नेहस्वेदं विवर्द्धनम् ।
पानाहारोपनाहांश्च कुर्य्याद्वातामयापहां ॥
कुष्ठमेरण्डमूले च नागरे तत्र पेषितम् ।

कुमुदोत्पलपद्मानां स्पर्शाः सेव्याश्च
मारुताः ।
सर्पिषः शतधौतस्य शिरसा धारणं
हितम् ॥
रसः श्वासकुठारोत्थः कर्पूरं कुङ्कुमं
नवम् ।
शीतं छागीपयः सर्वं वदनेनानुवर्षयेत्
॥
तस्य नस्यं भिषग्दद्यात् पित्तलायां
शिरोरुजि ।
किन्तु मस्तकशूलेषु सर्वेष्वेवं हितं
मतम् ॥
गुडनागरकल्कस्य नस्यं
मस्तकशूलनुत् ॥ * ॥
रक्तजे पित्तवत् सर्वं
भोजनालेपसेवनम् ॥
शीतोष्णयोश्च विन्यासो विशेषो
रक्तमोक्षणम् ।
कफजे लङ्घनं स्वेदो रूक्षोष्णैः
पावकात्मकैः ॥ * ॥
सन्निपातभवे कार्य्या सन्निपातहरी
क्रिया ।
पुराणसर्पिसः पानं विशेषेण दिशन्ति
हि ॥
एरण्डमूलं तगरं शताह्वा
जीवन्तिका सैन्धवरास्निके च ।
भृङ्गं विडङ्गं मधुयष्टिका च
विश्वौषधं कृष्णतिलस्य तैलम् ॥
अजापयस्तैलविमिश्रितञ्च
चतुर्गुणं भृङ्गरसे विपक्वम् ।
षड्बिन्दवो नासिकयोः प्रदेयाः
सर्व्वाणि हन्युः शिरसो विकारान् ॥
च्युतांश्च केशान् पलितांश्च दन्तान्
निर्बध्य मूलान् प्रकटीकरोति ।
सुपर्णगृध्रप्रतिमञ्च चक्षुः
कुर्वन्ति बाह्वोरधिकं बलञ्च ॥"
जीवन्तिका अत्र हरीतकी
शाकविशेषश्च ।
इति षड्बिन्दुतैलम् ॥ * ॥
"क्षयजे क्षयनाशाय कर्त्तव्यो बृंहणो
विधिः ।

| | | |
|---|---|---|
| | | पाने नस्ये च सर्पिः स्याद्वातघ्नैर्मधुरैः शृतम् ॥ * ॥ कृमिजे व्योषणञ्चाहुः शिग्रुबीजैश्च लावणम् । अजामूत्रयुतं नस्यं कर्त्तव्यं कृमिनुत् परम् ॥ सूर्य्यावर्त्ते विधातव्यं नस्यकर्म्मादिभेषजम् । योजयेत् सगुडं सर्पिर्घृतपूपांश्च भक्षयेत् ॥ |

लावनं क्षीरसर्पिर्भ्यां पानञ्च क्षीरसर्पिषोः ।
क्षीरपिष्टैस्तिलैः स्वेदी जीवनीयैश्च शस्यते ॥
भृङ्गराजरसच्छागक्षीरतुल्यार्क्कतापितः ।
सूर्य्यावर्त्तं निहन्त्याशु नस्येनैव प्रयोगराट् ॥ * ॥
अर्द्धावभेदके पूर्व्वं स्नेहस्वेदो हि भेषजम् ॥
विरेकः कायशुद्धिश्च
धूपस्निग्धोष्णभोजणम् ।
विडङ्गानि तिलान् कृष्णान् समान् पिष्ट्वा विलेपयेत् ॥
नस्यं वाप्याचरेत्तस्मादर्द्धभेदं व्यपोहति ।
पिबेत् सशकरं क्षीरं नीरं वा नारिकेलजम् ॥
सुशीतं वापि पानीयं सर्पिर्व्वा नस्ततस्तयोः ॥"
नस्ततः नासिकया पिबेदित्यन्वयः । तयोः सूर्य्यावर्त्तार्द्धभेदयोः ॥ * ॥
"अनन्तवाते कर्त्तव्यः सूर्य्यावर्त्तहितो विधिः ।
शिराव्यधश्च कर्त्तव्योऽनन्तवातप्रशान्तये ॥
आहारश्च प्रदातव्यो वातपित्तविनाशनः ।
मधुमस्तकसंयावघृतपूपैर्विशेषतः ॥"
संयावः पक्वान्नविशेषः । एरकिया इति लोके ।
स च मधुमस्तकः मघुनोपलिप्तः । घृतपूरोऽपूपः ।
"पथ्याक्षधात्री रजनी गुडूची
भूनिम्बनिम्बैः सगुडः कषायः ।
भ्रूशङ्ककर्णाक्षिशिरोऽर्द्धशूलं
निहन्ति नासानिहितः क्षणेन ॥"
इति पथ्यादिक्वाथः ॥ * ॥
"दार्व्वी हरिद्रा मञ्जिष्ठा सनिम्बोशीरपद्मकम् ।
एतत्प्रलेपनं कुर्य्याच्छङ्खकस्य विनाशयेत् ॥
पीततोयाभिषेकञ्च शीतलक्षीरसेवनम् ।
कल्कैश्च क्षीरवृक्षाणां शङ्खके लेपनं हितम् ॥"
सर्व्वषु ।
तत्पर्य्यायः । उष्णीषः २ वेष्टनम् ३ वेष्टकम् ४ ।
इति शब्दरत्नावली ॥ शिरोवेष्टः ५ चेलो-
ण्डुकः ६ । इति त्रिकाण्डशेषः ॥

**शिरोऽस्थि**, क्ली, (शिरसोऽस्थि ।) मस्तकास्थि ।
माथार खुलि इति भाषा । तत्पर्य्यायः ।
करोटिः २ शिरस्त्राणम् ३ शीर्षकम् ४ । इति
राजनिर्घण्टः ॥

**शिल**, श उञ्छे । इति कविकल्पद्रुमः ॥ (तुदा०-
पर०-सक०-सेट् ।) उञ्छ उद्धृतशस्यशेषाहर-
णम् । श, शिलति धान्यं दीनः । शेलिता ।
इति दुर्गादासः ॥

**शिलः**, पुं, क्ली, (शिल + कः ।) उञ्छः । इति
मेदिनी ॥ (यथा, भागवते । ११ । १७ । ४१ ।
"अन्याभ्यामेव जीवेत शिलैर्वा दोषदृक् तयोः ॥")
जीवनोपायविशेषः । यथा, --
"ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा ।
सत्यानृताभ्यामपि वा न श्ववृत्त्या कदाचन ॥
ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् ।
मृतन्तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम् ॥"
इति मानवे ४ अध्यायः ॥
"अवाधितस्थानेषु पथि वा क्षेत्रेषु वा अप्रति-
हतावकाशेषु यत्र यत्रौषधयो विद्यन्ते तत्र
७ शैलम् ८ अद्रिजम् ९ । इति रत्नमामाला ॥
शैलेयम् १० शीतपुष्पकम् ११ । इति शब्द-
चन्द्रिका ॥ शिलाव्याधिः १२ । इति त्रिकाण्ड-
शेषः ॥ अश्मोत्थम् १३ अश्मलाक्षा १४ अश्म-
जतुकम् १५ जत्वश्मकम् १६ । अस्य गुणाः ।
तिक्तत्वम् । कटुत्वम् । उष्णत्वम् । रसायनत्वम् ।
मेहोन्मादाश्मरीशोफकुष्ठापस्मरनाशित्वं च ।
इति राजनिर्घण्टः ॥ अपि च । शर्करासर्व-
रोगहरत्वम् । योगवाहित्वम् । अत्युष्णशीत-
कत्वञ्च । इति राजवल्लभः ॥ अस्योत्पत्तिनाम-
लक्षणगुणाः ।
"निदाघे घर्म्मसन्तप्ता धातुसार धराधराः ।
निर्यासवत् प्रमुञ्चन्ति तच्छिलाजतु कीर्त्तितम् ॥
सौवर्णं राजतं ताम्रं आयसं तच्चतुर्बिधम् ।
शिलाजत्वद्रिजतु च शैलनिर्यास इत्यपि ॥
गैरेयमश्मजञ्चापि गिरिजं शैलधातुजम् ।
शिलाह्वं कटुतिक्तोष्णं कटुपाकं रसायनम् ॥
छेदि योगवहं हन्ति कफमेदाश्मशर्कराः ।
मूत्रकृच्छ्रं क्षयं श्वासं वातास्रार्शांसि पाण्डुताम् ॥
अपस्मारं तथोन्मादं शोथकूष्ठोदरक्रिमीन् ।
सौवर्णन्तु जवापुष्पवर्णं भवति तद्रसात् ॥
मधुरं कटुतिक्तन्तु शीतलं कटुपाकि च ।
राजतं पाण्डुरं शीतं कटुकं स्वादुपाकि च ॥
ताम्रम् मयूरकण्ठाभं तत्तिक्तं लवणं भवेत् ।
विपाके कटुकं शीतं सर्वश्रेष्ठमुदाहृतम् ॥"
इति भावप्रकाशः ॥

**शिलाञ्जनी**, स्त्री, (शिलामञ्जयतीति । अञ्ज +
ल्युः । स्त्रियां ङीप् ।) कालाञ्जनीवृक्षः । इति
राजनिर्घण्टः ॥

**शिलाटकः**, पुं, (शिलामटतीति । अट + ण्वुल् ।)

"यष्टीमधुकमाषः स्यात् तूर्य्यांशन्तु
विषम्भवेत् ।
तयोश्चूर्णन्तु सूक्ष्मं स्यात्तच्चूर्णं
सर्षपोन्मितम् ॥
नासिकाभ्यन्तरे न्यस्तं सर्व्वां शीर्षव्यथां
हरेत् ।
दृष्टप्रयोगो योगोऽयमनुभाविभिरादृतः ॥
आर्द्रं यच्छक्तिकाचूर्णं चूर्णितं नवसादरम् ।
उभयं योजितं गन्धात्तस्य नश्यति शीर्षरुक
॥"
इति भावप्रकाशे शिरोरोगाधिकारः ॥

**शिरोऽर्त्तिः**, स्त्री, (शिरसोऽर्त्तिः ।) शिरःपीडा ।

इति लोके प्रसिद्धिः ॥ (यथा,
कथासरित्सागरे ।
१३ । १५२ ।
"जागरेणातिपानेन शिरोऽर्त्तिं व्यपदिश्य च ।
प्रातः स तस्थौ वस्त्रेण वेष्टयित्वाङ्कितं शिरः
॥")

**शिरोवल्ली**, स्त्री, (शिरसो वल्लीव ।) बर्हिचूडा ।

इति शब्दचन्द्रिका ॥

**शिरोवृत्तं**, क्ली, (शिर इव वृत्तम् ।) मरिचम् ।

इति राजनिर्घण्टः ॥

**शिरोवृत्तफलः**, पुं, (शिरसि वृत्तं फलं यस्य ।)

रक्तापामार्गः । इति भावप्रकाशः ॥

**शिरोवेष्टः**, पुं, (शिरो वेष्टयतीति । वेष्ट + अच्)

उष्णीषः । इति त्रिकाण्डशेषः ॥

**शिरोवेष्टनं**, क्ली, (शिरो वेष्टयतीति । वेष्ट +

ल्युः ।) शिरःप्रावरणम् । पाग्डी इति भाषा ।
तत्राङ्गुलीभ्यां एकैकं कणं
समुच्चयित्वा इति
बौधायनदर्शनात् ।
एकैकधान्यादिगुडकोच्चय-
मुञ्छः ।
मञ्जर्य्यात्मकानेकधान्याच्चयनं शिलः
।
उञ्छश्च शिलश्च इत्येकवद्भावः । तत्
सत्यसमान-
फलत्वादृतमित्युच्यते ।" इति
तट्टीकायां कुल्लूक-
भट्टः ॥ (रघुवंशीयपारियात्रनृपपुत्त्रः ।
यथा,
रघुवंशे । १८ । १७ ।
"तस्याभवत् सूनुरुदारशीलः
शिलः शिलापट्टविशालवक्षाः ॥")

**शिलगर्भजः**, पुं, पाषाणभेदनः । इति राज-

निर्घण्टः ॥

**शिला**, स्त्री, पाषाणः । (यथा, मनौ । २ ।

२०४ ।
"गोऽश्वोष्ट्रयानप्रासादस्रस्तेषु कटेषु
च ।
आसीत गुरुणा सार्द्धं शिलाफलकनौषु
च ॥")
द्वाराधःस्थितदारु । इत्यमरः ॥
स्तम्भशीर्षम् ।
मनःशिला । इति मेदिनी ॥ कर्पूरः ।
इति
राजनिर्घण्टः ॥

**शिलाकर्णी**, स्त्री, (शिलेव कर्णः कोणो यस्याः ।

ङीष् ।) शल्लकीवृक्षः । इति
शब्दचन्द्रिका ॥

**शिलाकुट्टकः**, पुं, (शिलां कुट्टयति दारयतीति ।

कुट्ट + ण्वुल् ।) टङ्कः । इति
शब्दरत्नावली ॥

**शिलाजं**, क्ली, (शिलाया जायते इति । जन +

डः ।) शैलेयम् । इति शब्दचन्द्रिका ॥
लोहम् ।
अट्टः । विलम् । इति मेदिनी ॥

**शिलात्मजं**, क्ली, (शिलाया आत्मजमिव ।)

लोहम् । इति राजनिर्घण्टः ॥

**शिलात्मिका**, स्त्री, मूषा । इति शब्दचन्द्रिका ॥

**शिलादद्रुः**, पुं, (शिलाया दद्रुरिव ।) शैलेयम् ।

इति राजनिर्घण्टः ॥

**शिलाधातुः**, पुं, (शिलानां धातुः ।) सितो-

पलः । इति त्रिकाण्डशेषः ॥ खडा इति भाषा
॥
गैरिकभेदः । स तु पीतवर्णः । इति राज-
निर्घण्टः ॥
"सितोपलः शिलाधातुर्व्वर्णरेखा च मक्कलम्
।
शिलाधातुविशेषस्तु विज्ञेयो लोकशास्त्रतः
॥"
इति शब्दरत्नावली ॥

**शिलापट्टः**, पुं, (शिलायाः पट्टः ।) पेषणार्थ-

शिला । शिल् इति भाषा । इति केचित् ॥

**शिलापुत्त्रः**, पुं, (शिलायाः पुत्त्र इव ।) पेषणयोग्य-

शिला । लोडा इति भाषा । तत्पर्य्यायः ।
घष-
नालः २ शिलापुत्त्रकः ३ । इति शब्दरत्ना-
वली ।

**शिलापुष्पं**, क्ली, (शिलायाः पुष्पमिव ।) शैले-

यम् । इति राजनिर्घण्टः ॥

| | | |
|---|---|---|
| | इति राजनिर्घण्टः ॥<br>**शिलाजतु,** क्ली, (शिलाया जतु ।) पर्वतजातो-<br>पधातुविशेषः । शिलाजित् इति<br>हिन्दीभाषा ।<br>तत्पर्य्यायः । गैरेयम् २ अर्घ्यम् ३<br>गिरिजम् ४<br>अश्मजम् ५ । इत्यमरः ॥ शिलाजम् ६<br>अगजम् | |

**शिलाभवं**, क्ली, (शिलाया भवः डत्पत्तिर्यस्य ।)
शैलेयम् । इति जटाधरः ॥

**शिलाभेदः**, पुं, (शिलां भिनत्तीति । भिद् + अच्)
पाषाणभेदी वृक्षः । इति रत्नमाला ॥
प्रस्तर-
भेदकास्त्रे, क्ली, ॥

**शिलारम्भा**, स्त्री, (शिलेव दृढा रम्भा ।) काष्ठ-
कदली । इति राजनिर्घण्टः ॥

**शिलावल्का**, स्त्री, (शिलेव कठिनो वल्कों
यस्याः ।) औषधद्रव्यविशेषः । शिलावाक्
इति
हिन्दी भाषा । तत्पर्य्यायः । शिलजा २
शैल-
वल्कला ३ वल्कला ४ शैलगर्भाह्वा ५
शिला-
त्वक् ६ श्वेता ७ । अस्या गुणाः ।
हिमत्वम् ।
स्वादुत्वम् ।
कृच्छ्रमेहमूत्ररोधाश्मरीशूलज्वर-
पित्तनाशित्वञ्च । इति राजनिर्घण्टः ॥

**शिलाव्याधिः**, पुं, (शिलाया व्याधिरिव ।) शिला
जतु । इति त्रिकाण्डशेषः ॥

**शिलासनं**, क्ली, (शिला आसनं यस्य ।) शैलेयम् ।
इति शब्दरत्नावली ॥
प्रस्तरनिर्म्मितासनञ्च ॥

**शिलासारं**, क्ली, (शिलावत् सारो यत्र ।)
लोहम् । इति हेमचन्द्रः ॥

**शिलाह्वं**, क्ली, (शिलाइत्याह्वा यस्य ।) शिला-
जतु । इति भावप्रकाशः ॥

**शिलिः**, पुं, भूर्जपत्रवृक्षः । इति शब्दमाला ॥

**शिलिः**, स्त्री, द्वाराधःस्थितकाष्ठम् । इति शब्द-
रत्नावली ॥ गोवराट् इति भाषा ॥

**शिलिन्दः**, पुं, मत्स्यविशेषः । यथा, --
ये देशास्तेषु जायन्ते श्लीपदानि विशेषतः
॥"
विशेषत इति वचनेनान्यत्रापि श्लीपदानि
भवन्ति
इति बोध्यते ॥ * ॥ सामान्यं लक्षणमाह ।
"यः सज्वरो वंक्षणजो भृशार्त्तिः
शोथो नृणां पादगतः क्रमेण ।
तत् श्लीपदं स्यात् करकर्णनेत्र-
शिश्नोष्ठनासास्वपि केचिदाहुः ॥"
तत्त्रिविधम् । वातिकं पैत्तिकं श्लैष्मिकञ्चेति
।
तेषां लक्षणमाह ।
"वातजं कृणरूक्षं हि स्फुटितं तीव्रवेदनम् ।
अनिमित्तरुजञ्चास्य बहुशो ज्वर एव च ॥ *
॥
पित्तजं पीतसङ्काशं दाहज्वरयुतं भृशम् ॥ *
॥
श्लैष्मिकन्तु भवेत् स्निग्धं तथा पाण्डुगुरु
स्थिरम् ॥
त्रीण्यप्येतानि जानीयात् श्लीपदानि कफो-
च्छ्रयात् ।
गुरुत्वञ्च महत्त्वञ्च यस्मान्नास्ति विना कफान्
॥"
असाध्यमाह ।
"वल्मीकमिव संजातं कण्टकैरुपचीयते ।
सर्व्वात्मकं महत्त्वञ्च वर्जनीयं विशेषतः ॥
यत् श्लेष्मलाहारविहारजातै-
र्जातं तथा भूरिकफस्य पुंसः ।
सास्रावमप्युन्नतिसर्वलिङ्गं
सकण्टकं वापि विवर्जीनीयम् ॥"
अस्य चिकित्सा ।
"लङ्घनालेपनस्वेदरेचनै रक्तमोक्षणैः ।
प्रायः श्लेष्महरैरुष्णैः श्लीपदं समुपाचरेत् ॥
सिद्धार्थशोभाञ्जनदेवदारु-
विश्वौषधैर्मूत्रयुतैः प्रलिम्पेत् ।
पुनर्नवा नागरसर्षपाणां
कल्केन वा काञ्जिकमिश्रितेन ॥"
श्लीपदमिति शेषः ।
"धत्तूरैरण्डनिर्गुण्डीवर्षाभूशिग्रसर्षपैः ।
बाणः । इत्यमरः ॥ (यथा, महाभारते । ४
।
४० । ११ ।
"कस्यायं शायको दीर्घः शिलीपृष्टः
शिली-
मुखः ॥")
युद्धम् । जडीभूतः । इति शब्दरत्नावली
॥

**शिलेयं**, क्ली, (शिलायां भवम् । शिला + ढः ।)
शैलजम् । इति शब्दरत्नावली ॥
शिलासम्ब-
न्धिनि, त्रि, ॥ (शिलेव + "शिलाया ढः
।" ५ ।
३ । १०२ । इति ढः । शिलासदृशे च त्रि
॥
यथा, शिलेयं दधि । इति काशिका ॥)

**शिलोच्चयः**, पुं, (शिलाया उच्चयो यत्र । पर्वतः ॥
इत्यमरः ॥ (यथा, रघुवंशे । २ । २७ ।
"न पादपोन्मूलनशक्तिरंहः
शिलोच्चये मूर्च्छति मारुतस्य ॥")

**शिलोञ्छः**, पुं, उञ्छशिलम् । उपात्तशस्यात्
क्षेत्रात् शेषावचयनम् । उञ्छेन
परिचञ्च्वादान-
वद्ग्रहणेन शिष्यते सञ्चीयते उञ्छशिलम
।
उछि शुञ्छे शिल शुञ्छे कृद्धोरित्युक्ते कृ
ग ञ्जेति
इजुङत्वात् कः उञ्छशिलं
संघातविगृहीतं
विपर्य्यस्तम् ।
"शक्यं न चेदुञ्छशिलेन वृत्तिः
फलेन मूलेन च वारिणा च ।"
इति समाहारद्वन्द्वे । उञ्छं शिलञ्च ।
"उञ्छभैक्षञ्च यच्चान्यत् तत् परिग्रहणं
त्वृतम् ।"
इति निगमाभिधाने क्लीवं पुमानुञ्छ ऋतं
शिलं

"शिलिन्दः श्लेष्मलो बल्यो विपाके मधुरो
गुरुः ।
आमवातकरो हृद्यो वातपित्तहरो मतः ॥"
इति राजवल्लभः ॥

**शिली**, स्त्री, (शिलि + कृदिकारादिति ङीष् ।)

द्वाराधःस्थितकाष्ठम् ।) इति शब्दरत्नावली ॥
गण्डूपदी । स्तम्भशीर्षम् । इति मेदिनी ॥

**शिलीन्ध्रं**, क्ली, कदलीपुष्पम् । यथा, माघे ।

६ । ३२ ।
"नवकदम्बरजोरुणिताम्बरै-
रधिपुरन्ध्रिशिलीन्ध्रसुगन्धिभिः ॥")
करका । इति मेदिनी ॥ त्रिपुटा । इति विश्वः ॥

**शिलीन्ध्रः**, पुं, वृक्षविशेषः । इति मेदिनी ॥ मत्स्य-

विशेषः । स तु चित्रफलकमत्स्यः । इति जटा-
धरः ॥

**शिलीन्ध्रकं**, क्ली, गोमयच्छत्रिका । यथा, --

"गोमयच्छत्रिकामाहुर्दिलीरञ्च शिलीन्ध्रकम् ।"
इति हारावली ॥

**शिलीन्ध्री**, स्त्री, विहगीभेदः । गण्डूपदी । मृत्तिका

इति मेदिनी ॥

**शिलीपदः**, पुं, (शिलीव स्थूलं पदमस्मात् ।)

पादरोगविशेषः । गोद इति भाषा ।
तत्पर्य्यायः
पदगण्डीरः २ श्लीपदः ३ । इति शब्दरत्नावली ॥
पादवल्मोकः ४ । इति हेमचन्द्रः ॥
श्लीपदस्य
विप्रकृष्टं निदानमाह ।
"पुराणोदकभूयिष्ठाः सर्व्वर्त्तुषु च शीतलाः
।
प्रलेपः श्लीपदं हन्ति चिरोत्थमपि दारुणम्
॥
असाध्यमपि यात्यन्तं श्लीपदं चिरकालजम्
।
मूलेन सहचरायाः तालमिश्रेण लेपनात् ॥"
तालस्य फलरसो ग्राह्यः ।
"सप्तलास्थूलपत्राणां कल्कं तप्तेन वारिणा ।
संसृष्टं लवणोपेतं सेवितं श्लीपदं हरेत् ॥
शाखोटवल्कलक्वाथं गोमूत्रेण युतं पिबेत् ।
श्लीपदानां विनाशाय मेदोदोषनिवृत्तये ॥
रजनीं गुडसंयुक्तां गोमूत्रेण पिबेन्नरः ।
वर्षोत्थं श्लीपदं हन्ति दद्रुकुष्ठं विशेषतः ॥
वर्षाभूत्रिफलाचूर्णं पिप्पल्या सह योजितम् ।
सक्षौद्रं श्लीपदं लिह्याच्चिरोत्थं श्लीपदं जयेत् ॥
गन्धर्वतैलसिद्धां हरीतकीं गोऽम्बुना पिबति ।
श्लीपदविबन्धमुक्तो भवत्यसौ सप्तरात्रेण ॥"
गन्धर्वतैलं एरण्डतैलम् । गोऽम्बुना गोमुत्रेण ।
इति भावप्रकाशः ॥

**शिलीमुखः**, पुं, (शिलीव मुखं यस्य ।) भ्रमरः ।

(यथा, रघुः । ४ । ५७ ।
"कटेषु करिणां पेतुः पुन्नागेभ्यः शिली-
मुखाः ॥")

इति वोपालिते पुंस्युञ्छः ।
"रघुकाराहृतसारे
परिणतवाक् कल्मकेदारे ।
भवभूतिकृतशिलोञ्छे
तत्तलपतितं वयं चिनुमः ॥"
इति गोवर्द्धनः ।
केचिदुञ्छशिलयोर्भेदमाहुः ।
प्रतिग्रहात् शिलं श्रेयस्ततोऽप्युञ्छः प्रशस्यते
इति । तत्र
शाल्यादेर्निपातितपरित्यक्तमञ्ज-
रीणां आदानं शिलम् । शिलं धान्यमञ्जरी-
संग्रह इति स्वामी च । एकैकशः कपोत-
बद्धान्यकणोद्ग्रहणमुञ्छः । तदुक्तं उञ्छो धान्य-
कणोच्चय इति । शिलं तालव्यादि दन्त्यादि च ।
इत्यमरटीकायां भरतः ॥ यथा, मनौ ७ ।
३३ ।
"एवं वृत्तस्य नृपतेः शिलोञ्छेनापि
जीवतः ।
विस्तीर्य्यते यशो लोके
तैलबिन्दुरिभाम्भसि ॥")

**शिलोत्थं**, क्ली, शिलाया उत्तिष्ठतीति । उत् +

स्था + कः । (शैलेयम् । इति राजनिर्घण्टः ॥

**शिलोद्भवं**, क्ली, (शिलाया उद्भबो यस्य ।) शैले-

यम् । इति राजनिर्घण्टः ॥ चन्दनविशेषः
।
यथा, --
"सुशीतलं चन्दनं यत् तैलपर्णिकमुच्यते
।
उभौ च तस्य पर्य्यायौ सोमयोनि शिलोद्भवम् ॥"
इति शब्दचन्द्रिका ॥

**शिलौकाः**, [स्] पुं, (शिला पर्वतः ओको वास-

स्थानं यस्य ।) गरुडः । इति त्रिकाण्डशेषः ॥

**शिल्पं**, क्ली, (शील समाधौ + "खष्पशिल्पशष्प-

वाष्परूपपर्पतल्पाः ।" उणा० । २ । २८ । इति

पः ह्रस्वश्च ।) कलादिकं कर्म्म । इत्यमरः ॥

हुनर इति पारसीकभाषा । कारीगरी इति हिन्दीभाषा ॥

वात्स्यायनोक्तनृत्यगीतवाद्यादि

श्चतुषष्टिः वाह्यक्रियाः तथा आलिङ्गनचुम्ब-

नादिचतुषष्टिः अभ्यन्तरक्रियाः कलाः ।

आदिना स्वर्णकारादिकारुकर्म्मग्रहः । एतत्

सर्व्वं शिल्पं कथ्यते । इति तट्टीकायां भरतः ॥

(यथा कथासरित्सागरे । २५ । १७५ ।

"ते तन्निरूप्य जगदुर्न्नेदृशो देव शक्यते ।

अपरः कर्त्तुमेतद्धि दिव्यं शिल्पं न मानुषम् ॥")

स्रुवः । इति मेदिनी ॥

**शिल्पकारः**, पुं, (शिल्पं करोतीति । कृ + अण् ।)

शिल्पी । शिल्पविद्याव्यवसायी । कारिकर

इति भाषा । शिल्पं करोति इत्यर्थे षण्प्रत्ययेन

निष्पन्नः ॥

**शिल्पकारी**, [न्] त्रि, (शिल्पं कर्त्तुं शीलमस्य ।

णिनिः ।) शिल्पकर्म्मकर्त्ता । तस्योत्पत्त्यादि

यथा, --

"विश्वकर्म्मा च शूद्रायां वीर्य्याधानं चकार सः ।

ततो बभूवुः पुत्त्राश्च नवैते शिल्पकारिणः ॥

मालाकारः कर्म्मकारः शङ्ककारः कुविन्दकः ।

कुम्भकारः कंसकारः षडेते शिल्पिनां वराः ॥

सूत्रधारश्चित्रकरः स्वर्णकारस्तथैव च ।

पतितास्ते ब्रह्मशापादजात्या वर्णसङ्कराः ॥

चैत्रे शोककरं गृहादि रचितं स्यान्माधवेऽर्थ-

प्रदं

ज्यैष्ठे मृत्युकरं शुचौ पशुहरं तद्वृद्धिदं श्रावणे ।

शून्यं भाद्रपदेऽश्विने कलिकरं भृत्यक्षयं कार्त्तिके

धान्यं मार्गसहस्ययोर्द्दहनभोर्माघे श्रियः फाल्गुने ॥

आदित्ये हरिकर्कनक्रघटगे पूर्व्वापरास्यं गृहं

कर्त्तव्यं तुलमेषवृश्चिकवृषे याम्योत्तरास्यं तथा ।

द्वारं भिन्नतथा करोति कुमती रोगार्थनाश-

स्तदा

कन्यामीनधनुर्गते मिथुनगे चास्मिन्न कार्य्यं गृहम् ॥

कन्यादित्रिषु पूर्व्वतो यमदिशि त्याज्यञ्च चापादितो

द्वारं पश्चिमतस्त्रिके जलचरात् सौम्येरवौ युग्मतः ।

यस्माद्वत्समुखं दिशासु भवनं द्वारादिकं हानिकृत्

सिंहं वापि वृषञ्च वृश्चिकघटं वाते हितं सर्व्वतः ॥

प्राची मेषतुलारवावुदयति स्याद्वैष्णवे वह्निभे

चित्रास्वात्रिभमध्यगा निगदिता प्राची बुधैः पञ्चधा ।

प्रासादो भवनं करोति नगरं दिङ्मूढमर्थक्षयं

हर्म्येदेवगृहे पुरे चनितरामायुर्धनं दिङ्मुखे ॥

तारे मार्कटिके ध्रुवस्य समतां नीते बले वैनते

दीपाग्रेण तदैक्यतश्च कथिता सूत्रेण सौम्या

दिशा ।

शङ्कोर्नेत्रगुणेन ३६ मण्डलवरे छाया तयो-

र्मत्स्ययो-

परीक्षितायां भुवि विघ्नराजं

समर्च्चयेत् चण्डिकया समेतम् ।

क्षेत्राधिपं चाष्टदिशाधिनाथान्

सुपुष्पधूपैर्बलिभिः सुखाय ॥

खातं भूमिपरीक्षणे करमितं तत् पूरयेत्तन्मृदा

हीने हीनफलं समे समफलं लाभो रजोवर्द्धिते ।

तत् कृत्वा जलपूर्णमाशतपदं गत्वा परीक्ष्यं पुनः

पादोनेऽर्द्धविहीनकेऽथ निभृते मध्याधमेष्टाम्बुनि

भूमेः प्राक् प्रवणञ्च शङ्करककुप्सौम्याश्रितं सौख्यदं

वह्नौ वह्निभयं यमे च मरणं चौराद्भयं रक्षसि

वायव्ये प्रवणञ्च धान्यहरणं स्याच्छोकदं वारुणं

विप्रादेरनुवर्णतश्च सुखदं सृष्टिक्रमात् सौम्यतः

अग्नौ राक्षसवायुशङ्करदिशि स्थाप्याः क्रमात्

कीलकाः

अश्वत्थात् खदिरात् शिरीषककुभात् वृक्षात्

क्रमेण द्विजाः ।

वर्णानां कुशमुञ्जकाशशणजं सूत्रं क्रमात् सूत्रणे

निम्ना भू स्फुटितोषरा विलवती शल्यैर्युता

नाशुभा ॥"

ककुभादित्यत्र वकुलादिति च पाठः ॥ * ॥

"प्रश्नत्रयं वापि गृहाधिपेन

देवस्य वृक्षस्य फलस्य वापि ।

वाच्यं हि कोष्ठाक्षरसंयुतेन

सत्यं विलोक्यं भवनेषु सृष्ट्या ॥

वा का चा टा ता ए ह सा पापवर्णाः

स्वर्णकारः स्वर्णचौर्य्यात् ब्राह्मणानां
द्विजोत्तम ।
बभूव सद्यः पतितो ब्रह्मशापेन कर्म्मणा ॥
सूत्रधारो द्विजातीनां शापेन पतितो भुवि ।
शीघ्रञ्च यज्ञकाष्ठञ्च न ददौ तेन हेतुना ॥
व्यतिक्रमेण चित्राणां सद्यश्चित्रकरस्तथा ।
पतितो ब्रह्मशापेन ब्राह्मणानाञ्च कोपतः ॥
कश्चिद्वणिग्विशेषश्च संसर्गात् स्वर्णकारिणः
।
स्वर्णचौर्य्यादिदोषेण पतितो ब्रह्मशापतः ॥”
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १० अध्यायः ॥

**शिल्पशाला**, स्त्री, क्ली, (शिल्पानां शाला ।)
स्वर्णकारादीनां कर्म्मगृहम् । कारखाना इति
पारसीकभाषा । तत्पर्य्यायः । आवेशनम् २
।
इत्यमरः ॥ शिल्पशाला ३ शिल्पशालम् ४
शिल्पिशालम् ५ । इति तट्टीका ॥

**शिल्पशास्त्रं**, क्ली, (शिल्पस्य शास्त्रम् ।) शिल्प-
कर्म्मग्रन्थः । तच्छास्त्राणि बहूनि सन्ति
तन्मध्ये
वास्तुशास्त्रैकं लिख्यते । यथा, --
“स्त्रीपुत्त्रादिकभोगसौख्यजनकं
धर्म्मार्थकाम-
प्रदं
जन्तूनां लयनं सुखास्पदमिदं शीताम्बु
घर्म्मा-
पहम् ।
वापीदेवगृहादिपुण्यमखिलंगेहात् समुत्पद्यते
गेहं पूर्व्वमुशन्ति तेन विबुधाः श्रीविश्वकर्म्मा-
दयः ॥
मिद्ध्यै गृहारम्भमुशन्ति वृद्धा
यथोदिते मामि वलक्षपक्षे ।
शशाङ्कवीर्य्ये सुदिने निमित्ते
शुभं रवौ सीम्यगते प्रवेशम् ॥
र्जाता पत्त्रयुतिस्तु शङ्कुतलतो
याम्योत्तरैस्तत्-
त्रुटेः ॥
राशोनामलिमीनसिंहभवनं पूर्व्वामुखं
शोभनं
कन्याकर्कटनक्रराशिगृहिणां याम्याननं
मन्दिरम् ।
राशेर्धन्वितुलायुगस्य सदनं शस्तं
प्रतीचीमुखं
पुंसां कुम्भवृषाजराशिभजतां सौम्याननं
स्याद्गृहम् ॥” * ॥
अथ भूपरिग्रहः ।
“श्वेता ब्राह्मणभूमिका च घृतवद्गन्धा
शुभ-
स्वादिनी
रक्ता शोणितगन्धिनी नृपतिभूः स्वादे
कषाया
च सा ।
स्वादेऽम्ला तिलतैलगन्धिरुदिता पीता च
वैश्या
मही
कृष्णा मत्स्यसगन्विनी च कटुका शूद्रेति
भूलक्षणम् ॥
स्वादे भवेद्या मधुरा सिताभा
चतुर्षु वर्णेषु मही प्रशस्ता ।
स्नेहान्विता बभ्रु भुजङ्गयोर्या
सौहार्दवत्याखुविडालयोर्व्वा ॥ * ॥
प्राच्यादिस्थे कोष्ठके शल्यमुक्तम् ।
केशाङ्गाराः काष्ठलोहास्थिकाट्यं
तस्मात् कार्य्यं शोधनं भूमिकायाः ॥
शल्यं गवां भूपभयं हयानां
रुजं शुनोऽत्वोः कलहप्रणाशौ ।
स्वरोष्ट्रयोर्हानिमपत्यनाशं
स्त्रीणामजस्याग्निभयं तनोति ॥ * ॥
कन्यादौ रवितस्त्रये फणिमुखं
पूर्वादिसृष्टिक्रमं
ख्यातं वास्तुवपुर्दिशात्रयगतं लाङ्गुलपृष्ठं
शिरः
द्वारं तस्य मुखे गृहादि भयदं कुक्षिद्वये
सौख्यदं
दुःखं प्राक्खनने शिरोऽङ्घ्रिवपुषः कुक्षौ
सुखं
दक्षिणे ॥
प्राच्यां नागमुखं बुधैर्निगदितं भाद्राश्विने
कार्त्तिके ।
मार्गात् फालगुनशुक्रतः क्रमतया याम्ये
जले
चोत्तरे ।
क्षेत्रे चाष्टविभाजिते दिनकराद्वाराल्लिखेत्
कोष्ठगान्
शन्यङ्गारकयोश्च तत्र फणिनः शारीरकं
नो
खनेत् ॥ * ॥
शीर्षे मातृपितृक्षयः प्रथमतः खाते रुजा
पुच्छके
पृष्ठे हानिभये च कुक्षिखनने स्यात्
पुत्त्रधान्या-
दिकम् ।

पूर्वास्येऽनिलखातनं यममुखे खातं शिवे
कारयेत्
शीर्षे पश्चिमगे च वह्निखननं सौम्ये
खनेन्नैरृते
दक्षिणकोणे पूर्वविभागे पूजनपूर्वं शिला
समर्प्या ।
स्थाप्या शेषशिला दक्षिणतः स्तम्भाः
समर्प्या
विधानेन ॥” * ॥
ब्रह्मशम्भुर्यथा ।
“सूत्रं भित्तिशिलान्यासं स्तम्भस्यारोपणं
तथा ।
पूर्वदक्षिणोर्मध्ये कुर्य्यादित्याह काश्यपः
॥”
नारदः ।
“नभस्यादिषु मासेषु त्रिषु त्रिषु यथाक्रमम् ।
पूर्वादिदिक्शिरोवामपार्श्वशायांप्रद-
क्षिणम् ॥”
वास्तुशास्त्रेऽप्युक्तम् ।
“वास्तोः शिरसि पुच्छे च वामकुक्षौ च
पृष्ठतः ।
आयुष्कामः खनेन्नैव दक्षकुक्षौ खनिः शुभा
॥
भित्तेर्मूलं स्थापनीयं जलान्ते
पाषाणे वा हेमरत्नैः सगर्भम् ।
शीर्षे गुर्व्वो लेपहीनाधिका वा
सन्धिश्रेणिः पादहीनार्थहान्यैः ॥
भवनपुरसुराणां सूत्रणे पूर्वमुक्तः
कथित इह पृथिव्याः शोधनेऽपि द्वितीयः ।
तदनु मुखनिवेशे स्तम्भसंरोपणे स्या-
द्भवनवसनकाले पञ्चधा वास्तुयज्ञः ॥ * ॥
वृक्षा दुग्धसकण्टाश्च फलिनस्त्याज्या
गृहाद्
दूरतः
शस्ते चम्भकपाटले च कदली जाती तथा
केतकी ।
यामादूद्र्ध्वमशेषवृक्षसुरजा च्छाया न
शस्ता गृहे
पार्श्वे कस्य हरेरवीशपुरतो जैनानुचण्ड्याः

उत्सङ्गो नरवाहनाभिवदनः सृष्ट्या यथा
निर्म्मितः
प्राग्वक्त्रोऽपि च पूर्णबाहुरुदितो गेहे चतुर्द्धा
पुरे ॥ * ॥
हस्तः पर्वाष्टयुक्तो मुनिवररचितः पर्व चैकं
त्रिमात्रं
मात्रा षण्णां यवानामुदरमिलिता निस्त्वचा-
मुत्तमानाम् ।
पुष्पैश्चत्वारि पूर्वं तदनु च विभजेदङ्गुलैः
पर्व-
पुष्पै-
र्निग्रन्थी रक्तकाष्ठो मधुमय उदितः खादिरो
वंशधात्वोः ॥
ज्येष्ठोऽष्टाभिर्यवोदरैस्तु मुनिभिर्म्मध्यस्तु
षट्
कन्यसो
माप्यं चोत्तमकेन ग्रामनगरक्रोशादिकं योज-
नम् ।
प्रासादप्रतिमे नृपस्य भवनं मध्येन
हर्म्यादिकं
यानं षड्यवसम्भवेन शयनं छत्रासनास्त्रा-
दिकम् ॥ * ॥
रुद्रो वायुर्विश्वकर्म्मा हुताशो
ब्रह्मा कालस्तोयपः सोमविष्णुः ।
पुष्पे देवा मूलतोऽस्मिंश्च मध्यात्
पञ्चाष्टान्त्यं द्व्यग्निवेदैर्विभज्यम् ॥
ईशो मारुतविश्ववह्निविधयःसूर्य्यश्च रुद्रो
यमो
वैरूपो वसवोऽष्ट दन्तिवरुणौ षड्वक्त्र
इच्छा
क्रिया ।
ज्ञानं वित्तपतिर्निशाकरजयौ श्रीवासुदेवो
हली
कामो विष्णुरितिक्रमेण मरुतो हस्ते त्रयो-
विंशतिः ॥ * ॥
उच्चाटनं रोगभयञ्च दुःखं
वह्नेर्भयं पीडनकं प्रजायाः ।
मृत्युर्विनाशोऽपि धनक्षयः स्यान्-
मोहः क्रमाद्दैवतपीडनेन ॥ * ॥

तस्माद्भूतमभूच्च भीतिजननं
द्यावापृथिव्यां-
महत् ।
तद्देवै रभसा विगृह्य निहितं
भूमावधोवक्त्रकं
देवानां रसनाच्च वास्तुपुरुषस्तेनैव
पुज्यो बुधैः ॥
प्रासादे भवने तडागखनने कूपे च
वापीवने
जीर्णोद्धारपुरे च यागभवने
प्रारम्भनिर्व्वर्त्तने ।
वास्तोः पूजनकं सुखाय कथितं पूजां
विना
हानये
पादौ रक्षसि कं शिवेऽङ्घ्रिकरयोः सन्धी
च
कोणद्वये ॥
क्षेत्राकृतिर्वास्तुरिहार्च्चनीय-
स्त्वेकांशतोभागसहस्रयुक्तः ।
साधारणोऽष्टाष्टपदोऽपितेषु
चैकाधिकाशीतिपदस्तथैव ॥ * ॥
ग्रामे भूपतिमन्दिरे च नगरे
पूज्यश्चतुःषष्टिकै-
रेकाशीतिपदैःसमस्तभवने जीर्णे
नवाब्ध्यंशकैः ।
प्रासादेऽथ शतांशकैस्तु सकले
पूज्यस्तथा मण्डपे
कूपे षण्णवचन्द्रभागसहिते १९६
वापीतडागे
वने ॥
ईशो मूर्द्धिन समाश्रितः श्रवणयोः
पर्जन्यनामा
दिति-
रापस्तस्य गले तदंशयुगले प्रोक्तो
जयश्चा-
दितिः ।
उक्तावर्य्यमभूधरौ स्तनयुगे स्यादापवत्सो
हृदि

क्वचित् ॥
स दुग्धवृक्षा द्रविणस्य नाशं
कुवन्ति ते कण्टकिनोऽरिभीतिम्।
प्रजाविनाशं फलिनः समीपे
गृहस्य वर्ज्याः कलधौतपुष्पाः ॥
दुष्टो भूतसमाश्रितोऽपि विटपी नोच्छिद्यते शक्तितः
तद्विल्वीञ्च शमीमशोकवकुलौ पुन्नाग-सच्चम्पकौ ।
द्राक्षापुष्पकमण्डपञ्च तिलकान् कृष्णां वपे-द्दाडिमीं
सौम्यादेः शुभदौ कपीतनवटावौदुम्बराश्व-त्थकौ ॥
उत्सङ्गनामाभिमुखः प्रवेशः
स्यात् पृष्ठभङ्गो भवनस्य पृष्ठात् ।
विनाशहेतुः कथितोऽपसव्यः
सृष्ट्या प्रशस्तो भवनेऽखिलेऽसौ ॥
प्रावेशः प्रतिकायको वरुणदिग्वक्त्रो भवेत् सृष्टितो
वामावर्त्त उदाहृतो यममुखेऽसौ हीनबाहु-र्बुधैः ।

हस्तो यत्नात् पुष्पयोरन्तराले
त्वष्ट्रा धार्य्यो मन्दिरादौ निवेशे ।
हस्ताद्भूमौ यात्यकस्मात्तदासौ
कार्य्ये विघ्नं दुःखमाविष्करोति ॥
तालो द्वादशमात्रिकापरिमितस्तालद्वयं स्यात्
करः
पादोनद्विकरोऽपि
किष्कुरुदितश्चापश्चतुर्भिः
करैः ।
क्रोशो दण्डसहस्रयुग्ममुदितो द्वाभ्याश्च गव्यूतिका
ताभ्यां योजनमेव भूमिरखिला कोटीशतं योजनैः ॥
सूत्राष्टकं दृष्टिनृहस्तमौञ्जं
कार्पासजं स्यादवलम्बसंज्ञम् ।
काष्ठञ्च सृष्टाख्यमतोऽपि लेख्य-
मित्यष्ट सूत्राणि वदन्ति सन्तः ॥
इति वास्तुशास्त्रे राजवल्लभमण्डने मिश्रका लक्षणवर्णनं नाम १ अध्यायः ॥ * ॥
“संग्रामेऽन्धकरुद्रयोस्तु पतितः स्वेदो महेशात्
क्षितौ

पञ्चेन्द्रादिसुराश्च दक्षिणभुजे वामे च नागा-
दयः ॥
सावित्रः सविता च दक्षिणकरे वामे द्वयं रुद्रतो
मृत्युर्मैत्रगणस्तथोरुविषये स्यान्नाभिपृष्ठे विधिः
मेढ्रे शत्रुजयौ च जानुयुगले तौ वह्निरोगौ स्मृतौ
पूष्णो नन्दिगणाश्च सप्त विबुधाः
कल्प्याः पदोः
पैतृकः ॥ * ॥
ईशस्तु पर्ज्जन्यजयेन्द्रसूर्य्याः
शत्यो भृशाकाशक एव पूर्व्वे ।
वह्निश्च पूषा वितथाभिधानो
गृहक्षतः प्रेतपतिः क्रमेण ॥
गन्धर्वभृङ्गौ मृगपितृसंज्ञौ
द्वारस्थसुग्रीवकपुष्पदन्ताः।
जलाधिनाथोऽप्यसुरश्च शेषः
स पापयक्ष्मापि च रोगनागौ ॥
मुख्यश्च भल्लाटकुवेरशैला-
स्तथैव बाह्यो दितितोऽदितिश्च।
द्वात्रिंशदेवं क्रमतोऽर्च्चनीया-
स्त्रयोदशैव त्रिदशाश्च मध्ये ॥
प्रागर्य्यमा दक्षिणतो विवस्वान्
मैत्रोऽपरे सौम्यदिशाविभागे।
पृथ्वीधरोऽसावथ मध्यतोऽपि
ब्रह्मार्च्चनीयः सकलेषु मध्ये ॥
आपापवत्सौ शिवकोणमध्ये
सावित्रकोऽग्नौ सविता तथैव ।
कोणे महेन्द्रेन्द्रजयौ तृतीये
रुद्रोऽनिलेऽन्योऽपि च रुद्रदासः ॥

ईशानबाह्ये चरकी द्वितीये
विदारिका पूतनिका तृतीये ।
पापाभिधा मारुतकोणके तु
पूज्याः सुरा उक्तविधानतस्तु ॥ * ॥
ब्रह्मा वेदपदस्तु तेन समका
देवार्य्यमाद्यास्त्वमी
कोणेऽष्टौ द्विपदास्तथाष्टमरुतः
कोणेऽर्द्धभागाद्
बहिः ।
शेषा एकपदाः सुरास्तु कथिता
वेदर्त्तुके-६४
ऽथो नव
ब्रह्मा षट्पदिनोऽर्य्यमादिविबुधा
ईशादयश्चै-
कशः ॥
ब्रह्मा कलांशो वसुतोऽर्य्यमाद्याः
कोणेऽष्ट वाह्येऽपि च सार्द्धभागाः ।
विधातृकोणे द्विपदास्तथाष्टौ
शेषाः सुरा एकपदाः शतांशे ॥ * ॥
ब्रह्माजिनांश २४ उदितः
शिवतोऽर्य्यमाद्याः
कोणेषु सार्द्धपदतोऽपि तथैव चाष्टौ ।
शेषा द्विभागसमका रविभागकोऽयं
पूज्यो रथाश्वगजवाहनकेऽम्बुयन्त्रे ॥
यन्त्रे त्रयोदशपदैरपि पूजनीय-
स्तत् पञ्चविंशतिरजो दशतोऽर्य्यमाद्याः ।
कोणेऽब्धयोऽमरगणा वहिके कलांशा
भद्रेऽब्धिकं रविविभागपरे द्विभागाः ॥ *
॥
द्वात्रिंशत् कमलासनोऽर्य्यममुखाः स्युः
सूर्य्य-
भागा क्रमात्
कोणेऽन्त्येऽष्टसुरा द्विभागसहिता बाह्येषु
सार्द्धांशकाः ।
अष्टौ रामपदाः पुनर्द्विपदकाः
षड्भागिनोऽष्टौ
सुराः
क्षेत्रे षण्णवचन्द्रभागसहिते १९६
स्याद्देवतानां

एतत्पदानां कथितं सहस्रं
क्षेत्रञ्च सर्वोत्तममेव वास्तोः ॥ * ॥
मध्ये ब्रह्मा पूजनीयः शतांशै-
श्चत्वारिंशद्भिः पदैर्बाह्यवीथी ।
प्रोक्ता देवा अर्य्यमाद्या अशीत्या
मध्ये कोणेऽष्टौ शतं चाष्टषष्ट्या ॥
कोणेऽब्धयो नन्दपदैः सुराश्च
शेषाश्च बाह्ये वसुभागिनश्च ।
वीथी च बाह्ये रविभागयुक्तं
शतं पदानां कथितं मुनिन्द्रैः ॥
दुर्गप्रतिष्ठाविषये निवेश
तथा महार्च्चासु च कोटिहोमे ।
मेरौ च राष्ट्रेष्वपि ज्येष्ठलिङ्गे
वास्तुः सहस्रेण पदैः प्रपूज्यः ॥ * ॥
त्रिमेखलं शङ्करदिग्विभागे
कुण्डं प्रकुर्य्यात् करतो युगास्रम् ।
होमं सुराणां शतमष्टयुक्तं
प्रत्येकमष्टाधिकविंशतिं वा ॥
मध्वाज्यदुग्धैर्दधिशर्कराभ्यां
कृष्णैस्तिलैर्व्रीहियवैर्नवान्नैः ।
पलाशदूर्वाङ्कुरदुग्धवृक्षै-
र्होमं तदन्ते सुरपूजनञ्च ॥
ईशे घृतान्नमपरे सघृतोदनञ्च
दद्याज्जयाय हरिताम्बरमेव कूर्म्मम् ।
रत्नानि पिष्टकमयं कुलिशं सुरेन्द्रे
धूम्रं वितानमुदितञ्च दिवाकरस्य ॥
गोधूमयुक्तं घृतमेव सत्ये
मत्स्यान् भृशे शष्कुलिमन्तरीक्षे ।
वह्नौ स्रु चं पूष्णि तथैव लाजा
दद्यादधर्म्मे चणकौदनञ्च ॥
मध्वन्नञ्च गृहक्षताय यमतो मांसौदनं
दापयेत्
गन्धर्वे शतपत्रमोदनयुतं भृङ्गेऽजजिह्वां
तथा ।
प्रोक्ता नीलजवा मृगाय पितृतो देयाश्च
सन्मोदकाः
पैष्टं कृष्णबलिं तथैव विधिवद्दद्याच्च
दौवारिके ॥

तत्सिद्धमन्नन्त्वपि रुद्रदासे
सद्रत्नमालां पृथिवीधराय ।
पयस्वलां गाममृतं घटञ्च
दद्याद्विधौ स्वर्णमतोऽखिलेभ्यः ॥
सुरास्थिमांसं विहितं चरक्ये
तथैव पीतौदनको विदार्य्यै ।
रक्तौदनैः पूतनिकार्च्चनीया
मत्स्यासवेनापि तथैव पापाः ॥
मांसं पक्वं पिलिपिञ्जाय तज्जृम्भायै विहितं
सद्यः ।
स्कन्दाय तन्मदिरायुक्तं चार्य्यम्णे दिशि
पूर्व्वादौ ॥
यः पूजयेद्वास्तुमनन्ययुक्ता
न तस्य दुःखं भवतीह किञ्चित् ।
जीवत्यसौ वर्षशतं सुखेन
स्वर्गे नरस्तिष्ठति कल्पमेकम् ॥”
इति श्रीसूत्रधारमण्डनविरचितेवास्तुशास्त्रे
राजवल्लभे वास्तुलक्षणम् २ अध्यायः ॥ * ॥
“आयर्क्षव्ययतारकांशकविधुं राशिं गृहाद्यं
तथा
धान्यं सौख्ययशोऽभिवृद्धिरधिकायस्मादतः
कथ्यते ।
आयास्तु ध्वजधूमसिंहशुनका गोरासभेभाः
क्रमात्
ध्वाङ्क्षस्त्वष्टम आयभेषु विषमाः श्रेष्ठाः
सुराणां
गृहे ॥
मानं देवगृहादिभूपसदने शास्त्रोक्तहस्तेन तत्
गेहे कर्म्मकरस्य नाथकरतः शास्त्रेण देयं गृहे
अयो दण्डकराङ्गुलादिमपि ते
हस्ताङ्गुलैरंशतः
क्षेत्रस्याप्यनुमानतोऽपि नगरे दण्डेन मानं पुरे
आयः कल्प्यो हस्तमेयैः करैश्च
क्षेत्रे मात्रानिर्म्मिते मातृकाभिः ।
मध्ये पर्य्यङ्कासने मन्दिरे च
देवागारे मण्डपे भित्तिवाह्ये
छत्रे देवगृहे द्विजस्य भवने स्याद्वेदिकायां जले
विस्तारोच्छ्र्यवस्त्रभूषणमठागारेषु शस्तो
ध्वजः

क्रमः ॥ * ॥
वेदांशो विधिरर्य्यमप्रभृतयस्त्रंशा नवस्वष्टके
कोणेऽन्त्येऽष्टपदार्द्धगाः परसुराः षड्भागहीने
पदे ।
वास्तोर्नन्दयुगांश ४९ एवमधुनाष्टांशैश्चतुः-
षष्टिके
सन्धेः सूत्रमितान् सुधीः परिहरेद्भित्तीस्तुलाः
स्तम्भकात् ॥ * ॥
रेखाद्वयं कोणगतं विधेय-
मंशान्तरेणैव तु कर्णसूत्रात् ।
यदष्टसूत्रैः कथितं तु पद्मं
तत्पीडनात् स्वामिधनप्रणाशः ॥
प्रोक्तं चतुर्विंशतिलाङ्गुलं यत्
पादार्द्धगं हानिकरं प्रजायाः ।
पड भिस्तु सूत्रैर्मरणाय वज्रं
कोण त्रिशूलञ्च रिपोर्भयाय ॥
परीक्ष्य भूमीमवसेचयेत्तां
सुपञ्चगव्येन ततो विलेख्या ।
रेखा सुवर्णन मणिप्रबालैः
पिष्टाक्षतैर्वापि पुनस्तदूर्द्धे ॥
द्वात्रि शदंशाः पृथुले च दैर्घ्य
कोणेषु वर्ज्या जिनसंख्य २४ भागाः ।

सुग्रीवाय च पूपका गणवरे श्वेतप्रसूनं
पयः
पद्मं वारुणके सुराप्यसुरके तैलं तिलाः
शेषके ।
पापाख्येऽपि च पक्वमांसमुदितं रोगाय
सर्वौषधीः
गोक्षीरं फणिने च मुख्यविबुधे
श्रीखण्डभक्षे
तथा ॥
भल्लाटाय सुवर्णकं धनपतौ मण्डाज्यदुग्धं
तथा
शक्तून् पर्वतकेऽदितेस्तु लपिकां
दद्याद्दितौ
पूरिकाम् ।
सक्षीरं दधिकं क्रमेणा विहितं त्वापापवत्से
तथा-
प्यर्य्यम्णेऽरुणचन्दनञ्च पयसा युक्ता तथा
शर्करा ॥
सावित्रेऽपि च लड्डुकाश्च सवितुः पूपा
गुडा
सद्धृता
देयं वाथ विवस्वत घृतयुतं दुग्धं तथा
मोदकाः
इन्द्राख्ये कुसुमस्रगिन्द्रजयके देयं तथा
चम्पकं
मैत्रे दुग्धघृतञ्च गुग्गुलुयुतो गन्धस्तथा
रुद्रके ॥

धूमो वह्न्युपजीविनामपि गृहे कुण्डे च
होमोद्भवे
सिंहद्वारनृपालयेऽस्त्रनिचये सिंहश्च सिंहासने
॥
चण्डाले शुनको विशान्तु वृषभो हर्म्ये हयानां
हितो
बानिज्ये धनभोजनस्य भवनेऽथो बाह्यगेहे
खरः ।
वादित्रे स्वरजीविनामपि गृहे शौद्रे गजो
योजितो
याने स्त्रीगृहवाहने च शयने शस्तो गृहे
हस्तिनाम् ॥
ध्वाङ्क्षः शिल्पितपस्विनां हितकरस्तेषां मुखं
नामवत्
ध्वाङ्क्षः काकमुखो विडालवदनो धूमो ध्वजो
मानुषः ।

मव पक्षिपदा हरेरिव गलो हस्तौ नरस्येव
तु
प्राच्याः सृष्टिगताः क्रमेण पतयो ह्यष्टौ च
ते
सम्मुखाः ॥ * ॥
देयाः सिंहगजध्वजादिवृषभे सिंहध्वजौ
कुञ्जरे
सिंहो वै ध्वज इष्यते न वृषभोऽन्यत्रापि
देयो बुधैः ।
सिंहो हस्तिवृषालये मृतिकरस्त्वायस्य
वक्त्रं गृहं
तस्मिन्नेव च वामदक्षिणदिशाद्वारे स
आयः शुभः ॥
व्यासे दैर्घ्यगुणेऽष्टभिर्विभजिते शेषो
ध्वजाद्यायको-
ऽष्टघ्ने तद्गुणिते च धिष्ट्यभजिते
स्यादृक्षमञ्चा-
दिकम् ।
नक्षत्रे वसुभिर्व्ययोऽपि भजिते हीनस्तु
लक्ष्मीप्रद-
स्तुल्यायश्च पिशाचको ध्वजमृते
संवर्द्धितो राक्षसः ॥
तन्मूले व्ययहर्म्यनामसहिते भक्ते
त्रिभिस्त्वं शकः
स्यादिन्द्रोपमभूपतिक्रमवशाद्वेवसुरेन्द्रो
हितः ।
वेद्यामेव यमस्तु पुण्यभवने नागे तथा
भैरवे
राजांशो गजवाजियाननगरे राजालये
मन्दिरे ॥ * ॥
यावद्गृहर्क्षं गणयेत् स्वधिष्ट्या-
त्ताराविभक्ते नवभिश्च शेषाः ।
बुधैस्तृतीया सकले विवर्ज्या
या पञ्चमी सप्तमिका न शस्ता ॥
धिष्ट्यानीह च सप्तशः क्रमतया वह्नेस्तु
पूर्वादितः
सृष्ट्या तानि भवन्ति यत्र गृहभं तत्रैव
चन्द्रो
भवेत् ।

ज्येष्ठाश्लेषमपीह दैत्यमनुजे मृत्युस्तु दैवे कलिः
वैरं चोत्तरफल्गुनीयुगलयोः स्वातीभरण्यो-
र्द्वयो-
रोहिण्युत्तरषाढयोः श्रुतिपुनर्वस्वोर्विरोधं
तथा ।
चित्राहस्तभयोश्च पुष्यफणिनोर्ज्येष्ठाविशाखा-
ख्ययोः
प्रासादे भवनासने च शयने नक्षत्रवैरं त्यजेत् ॥
विप्राः कर्कझषालिनो निगदिताः सिंहाजचापा
नृपा
विट्कन्या मकरो वृषोऽथ वृषला युग्मञ्च
कुम्भस्तुला ।
वर्णेनोत्तमकामिनी च भवनं वर्ज्यं बुधैर्यत्नतः
श्रेष्ठा द्वादश नन्दरागगुणतो विप्र क्रमाद्राशयः ॥
अश्वोऽश्विनीशतभयोर्यमपूषि हस्ती
छागोऽग्निपुष्य उरगोऽपि विधातृसौम्ये ।
मूलार्द्रयोः शुनक ओतुरहावदित्ये
पूर्वा मघासु मत उन्दुरुरेव योनिः ॥
गौर्भद्रोत्तरफल्गुनीत उदिता स्वातौ करे
माहिषी
व्याघ्रास्त्वाष्ट्रविशाखयोश्च हरिणो ज्येष्ठानु-
राधाभयोः ।
पूषाढश्रवणे कपिर्निगदितो वैश्वाभिजिन्नाकुलं
पूभायां वसुभे मृगेन्द्र उदितो वैरं त्यजेल्लोकतः
आयर्क्षतारा व्ययमंशकञ्च
ह्येकत्र कृत्वा विभजेत् क्रमेण ।
तिथ्या च वारेण तथैव लग्नैः
शेषैस्तु भान्येव भवेयुरङ्कैः ॥
दैर्घ्यं पृथुत्वेन च ताडनीयं
तयोर्यदैक्यं पुनरुच्छ्रयेण ।
शेषेऽधिनाथो वसुभाजितेऽस्मिन्
समः प्रशस्तो विषमस्तु नैव ॥ * ॥
वर्गाष्टकस्य पतयो गरुडो विडालः
सिंहस्तथैव शुनकोरगमूषकेणाः ।
मेढाककारच-ट-ताः प-य-शाश्च वर्गा
यः पञ्चमः स रिपुरेव बुधैर्विवर्ज्यः ॥
अश्विन्यादिकभत्रयं फणिनिभं चक्रं त्रिनाड्यु-
द्भवं

दुर्गं सर्वजनाय शर्म्मजननं विश्राममेकं
परम् ॥
सिंहो वैरिपराभवं प्रकुरुते तिष्ठन् गिरौ
गह्वरे
दुर्गस्थो नृपतिः प्रभूतकटकं शत्रुं
जयेत् सङ्गरे ।
कैलासे नगरं शिवेन रचितं
गौर्य्यादिसंरक्षणे
दुर्गं पश्चिमसागरे च हरिणाप्येषां
किमत्रो-
च्यते ॥
भूदुर्गं जलदुर्गमद्रिविषये दुर्गं भवेद्गह्वरे
तेषामुत्तममद्रिमूर्द्ध्नि रचितं तद्वैरिणां
दुर्गमम्
अम्लाद्यैर्घृततोयतैललवणैः
काष्ठैस्तृणाद्यैस्तथा
यन्त्रोपस्करबाणशस्त्रसुभटै
संपूरयेद्भूमिपः ॥
माहेन्द्रं चतुरस्रमायतपुरं तत्
सर्वतोभद्रकं
वृत्तं सिंहविलोकनं सुपृतनायत्तं तथा
वारुणम्
नन्दाख्यञ्च विमुक्तकोणमथ
नन्दावर्त्तिस्वस्त्याकृति
प्रोक्त तद्यववज्जयन्तमपि तद्दिव्यं
गिरेर्मस्तके
पुष्पं चाष्टदलोपमञ्च पुरुषाकारं पुरं
पौरुषं
स्नेहं कुक्षिषु भूधरस्य कथितं
दण्डाभिधं दैर्घ्य-
कम् ।
शात्र प्राक् सरिता परत्र कमलं याम्ये
नदी
धार्म्मिकं
द्वाभ्यां चैव महाजयञ्च धनदाशायां
नदी
सौम्यकम् ॥
दुर्गैकेन युतं श्रियाख्यनगरं द्वाभ्यां
रिपुघ्नं पुरं

हानिं पृष्ठगतः करोति पुरतस्त्वायुःक्षयं चन्द्रमाः
पार्श्वे दक्षिणवामके शुभकरोऽग्रे देवभूपालये ॥
प्रीतिः स्यात् समसप्तमी च दशमी चैकादशी
शोभना
दारिद्र्यं युगला करोति मरणं षष्ठी कलिः पञ्चमी ।
मेषोऽश्वित्रितये हरिस्तु
पितृभाच्चापस्त्रये
मूलतः
शेषैः स्युर्नव राशयः परमते
नन्दांशकैस्ते
पृथक् ॥
भौमोवृश्चिकमेषयोर्वृषतुले शुक्रस्य राषिद्वयं
कन्या युग्मबुधस्य कर्कसदनं चन्द्रस्य सिंहो रवेः ।
जीवो मीनधनुःपतिर्मृगघटौ मन्दस्य गेहं स्मृतं
मित्राण्यर्क्ककुजेन्दुदेवगुरवोऽन्ये चारयस्ते मिथः
दैवर्क्षं श्रुतिपुष्यभेऽश्विभमृग मैत्रानिलं पौष्णभं
हस्तादित्यमथोऽनुरन्तकविधीपूर्व्वोत्तरा रुद्रभम् ।
रक्षोमूलविशाखिकाग्निपितृभंचित्रा धनिष्ठा-
द्वयं

ह्येकस्यां वरकन्ययोश्च यदि भं तन्मुत्युदं चांशतः
नाडीसेवकमित्रगेहपुरतस्त्वेका शुभा सव्यधा
आयादित्रिकपञ्चसप्तनवभिस्त्वङ्कैर्गृहं सौख्यदम्
गुणगणं लघुदोषसमन्वितं
भवनदेवगृहादिकमिष्यते ।
जललवेन शिखी बहुतापवा-
न्न शममेति गुणैरधिको यतः ॥”
इति श्रीसूत्रधारमण्डनविरचितेवास्तुशास्त्रे राजवल्लभे आयादिलक्षणं ३ अध्यायः ॥
“वापीकूपतडागदेवभवनान्यारामयागादिकं
तीर्थानामवगाहनञ्च विधिवत् कन्याप्रदाना-
दिकम् ।
सर्वं पुण्यमिदं नृपः स लभते यः कारयेत्
पवते

त्वष्टास्रं कथयन्ति स्वस्तिकमिति
प्रोक्ता गुणा
विंशतिः ।
भूपानां सुखदा यशोऽर्थफलदाः
कीर्त्तिप्रतापो-
द्भवा
लोकानाञ्च निवासतो विरचिताः
प्राक्शम्भुनैते
गुणाः ॥”
इति पुराणां विंशतिगुणाः ॥ * ॥
“वह्नेर्भीतिकरं त्रिकोणनगरं षट्कोणकं क्लेशदं
वज्रे वज्रभयञ्च शाकटपुरे रोगस्त्रिशूले कलिः
प्रोक्तं तस्करभीतये द्विशकटं
कर्णाधिकेऽर्थक्षयो
दोषाः सप्त भयावहाः प्रकटिता ये विश्वकर्मो
दिताः ॥”
इति पुराणां सप्तदोषाः ॥ * ॥
“वक्ष्येऽथो विविधं पुरं मुनिमतं
मध्योत्तमं
कन्यसं
तेषां हस्तसहस्रमन्तिमपुरंमध्यं ततः सार्द्ध-
कम् ।
ज्येष्ठं युग्मसहस्रमेषु चरमं
भागाष्टकेनाचितं
मध्यं द्वादशभागतः शशिकलं ज्येष्ठं विदध्यात्
सुधीः ॥
मार्गाः सप्तदशैव चादिमपुरे हीनं चतुर्भिः पुरं
प्रोक्तं कन्यसमेव मार्गनवभिर्दैर्घ्ये तथा विस्तरे
ग्रामश्चैव पुरार्द्धतो हि तदनु ग्रामार्द्धतो खेटकं
खेटार्द्धेन तु कूटमेव विबुधैः प्रोक्तं ततः खर्व-
टम् ॥

|  |  | हस्तानाञ्च युगाष्टषोडशसहस्रं<br>भूपतीनां पुरं<br>तन्मध्ये दशधा वदन्ति मुनयो वृद्ध्या<br>सहस्रेण<br>तत् । |
| --- | --- | --- |

आयामे वसुपादसार्द्धवसुतो भागः
प्रशस्तो-
ऽधिक-
स्त्वेकैकञ्च चतुर्विधं निगदितं कार्य्यं
समं
कर्णयोः ॥
षट्त्रिंशतः षट् क्रमतो विवृद्ध्या
दैवे पुरे चत्वरके क्रमेण ।
यदृच्छया मानमुशन्ति केचित्
प्राकारकोष्ठस्य च भित्तिकायाः ॥ * ॥
पूर्व्वापरास्याः पुरसम्मुखाश्च
देवाः शुभा नोत्तरदक्षिणाश्च ।
भङ्गं पुरस्यापि पराङ्मुखास्ते
कुर्व्वन्ति धात्रर्कजनार्द्दनेशाः ॥
ब्रह्मा विष्णुशिवेन्द्रभास्करगुहाः
पूर्व्वापरास्याः
शुभाः
प्रोक्तौ सर्व्वदिशामुखौ शिवजिनौ
विष्णुर्विधाता
तथा ।
चामुण्डा ग्रहमातरो धनपतिर्द्रैमातुरो
भैरवो
देवा दक्षिणदिङ्मुखाः कपिवरो
नैरृत्यवक्त्रो
भवेत् ॥
मार्गाः सप्तदशाङ्कपञ्चशिखिनो युग्मं
पुरात्
खर्व्वटं
मार्गाः षोडश सूर्य्यविंशतिकराः
कार्य्यास्त्रिधा
विस्तरे ।
प्राकारोदयविंशहस्तमभितो द्वाभ्यां
विहीनो-
ऽधिको
व्यासार्द्धेन तदूर्द्धतश्च
कपिशीर्षाण्यष्टमात्रा-
न्तरम् ॥
प्राकारेऽपि च कोष्ठका दशकराः
सूर्य्येन्द्र-
प्रोक्ता अन्त्यजचर्म्मकारवरटाः स्युः
शौण्डिका
राक्षसे ।
पण्यस्त्रीनिरृतौ च मारुतयुते कोणे न्यसेल्-
लुब्धकान्
वापीकूपतडागकुण्डमखिलं तोयं तथा
वारुणे
सिंहद्वारचतुष्टयञ्च खटकीद्वाराणि चाष्टौ तथा
कर्त्तव्यानि दृढार्गलानि रुचिरैः कापाटकैः
सुदृढैः ।
कीर्त्तिस्तम्भनृपालयामरगृहैर्हट्टैः
सुधानिर्मितै-
र्हर्म्म्यैश्चोपवनैर्जलाश्रययुतैः कार्य्यं पुरं
शोभ-
नम् ॥”
इति नगरप्रमाणम् ॥ * ॥
“यन्त्राः पुराणामथ रक्षणाय
संग्रामवह्न्यम्बुसमीरणाख्याः ।
विनिर्म्मितास्ते जयदा नृपाणां
भवन्ति पूज्याः सुरया च मांसैः ॥
हस्ता अष्ट च भैरवो नरकरश्चान्द्रो दशाद्यो
भवे-
द्रुद्रो भीमगजोऽपि भास्करकरैर्युग्मन्तु विश्वैः
शिखी ।
प्रोक्तोऽसौ यमदण्ड एव मुनिभिस्तिथ्या
महा-
भैरवो
ह्यष्टौ शङ्करनिर्म्मिताश्च समरे देवासुरे भैरवे
॥
यन्त्रे चाष्टकरेऽष्टहस्तफणिनीसूर्य्याङ्गुला
विस्तरे
स्तम्भा मर्कटिका च पञ्जरमतः
षट्त्रिंशहस्ता
क्रमात् ।
यष्ट्या पृष्ठविभागतोऽपि
रदनैस्तुल्योऽष्टमात्रा-
ङ्गुलैः
प्रोक्ता कुण्डलवल्लवी च वहितो
मध्यादशीत्य-
जया त्रिवक्त्रा नवकूटयुक्ता-
स्त्वर्कैस्तु कूटैर्विजया मता सा ॥ * ॥
सरोऽर्द्धचन्द्रश्च महासरश्च
वृत्तं चतुष्कोणकमेव भद्रम् ।
भद्रैः सुभद्रं परिघैकयुग्मं
वकस्थलैकद्वयमेव यस्मिन् ॥
ज्येष्ठं मितं दण्डसहस्रकैस्तु
मध्यं तदर्द्धेन ततः कनिष्ठम् ।
ज्येष्ठं करैः पञ्चशतानि दैर्घे-
स्तदर्द्धमध्यं तु ततः कनिष्ठम् ॥ * ॥
भद्राख्यकुण्डं चतुरस्रकञ्च
सुभद्रकं भद्रयुत द्वितीयम् ।
नन्दाख्यकं स्यात् प्रतिभद्रयुक्तं
मध्ये सुभद्रं परिघं चतुर्थम् ॥
कराष्टतो हस्तशतं प्रमाणं
द्वारैश्चतुर्भिः सहितानि कुर्य्यात् ।
मध्ये गवाक्षश्च दिशो विभागे
कोणे चतुष्कास्त्वपि पट्टशालाः ॥ * ॥
गङ्गाद्या रवयो हरेश्च दशकं रुद्रा
दशैकाकिका
दुर्गा भैरवमातृका गणपतिर्वह्नेस्त्रिकं
चण्डिका
दुर्व्वासा मुनिनारदस्तु सकला द्वारावती
लीलिका
लोकाः पञ्च पितामहादिविबुधाः
स्युर्मध्यभित्तौ
सदा ॥
तस्योद्र्ध्वतः श्रीधरमाडकस्य
संदर्शनात् पूर्व्वफलञ्च काश्याः ।
स्नानाच्च गङ्गाप्लवनस्य पुण्यं
कृतं भवेच्चेद्विधिवद्विधिज्ञैः ॥
विधारितं जीवनमेव येन
तद्गोपदैकेन समं पृथिव्याम् ।
स षष्टिसंख्यं च सहस्रवर्षं
स्वर्लोकसौख्यान्यखिलानिभुङ्क्ते ॥
ग्रामे वाथ पुरे नरेन्द्रभवने तत्षोडशांशं भवेत्
मध्यात् पश्चिमदिक्समाश्रितमिदंदुर्गे
भवेद्भूव-
शात् ।

हस्तास्तथा
प्रोक्तास्तेन समैव कोणसहिता
विद्याधरी
मध्यमा ।
तस्या वाथ सुवृत्तके च विविधं
युद्धासनं कारयेत्
प्राकारोदयतो विधाय परिखाविस्तार
उक्तो
बुधैः ॥
विद्याधरीकोष्ठकयोश्च मध्ये
बाहुप्रमाणं शररामहस्तम् ।
पञ्चाधिकं पञ्चकरेण हीन-
मिति त्रिधा वास्तुमतो हितञ्च ॥ * ॥
दुर्गोदयं नन्दकरप्रमाणं
तिथ्या समं सप्तदशैव केचित् ।
एकोनविंशं पृथुलं त्रयाणां
दिक्कालसूर्य्याष्टकरा वदन्ति ॥
ताम्बूलं फलदन्तगन्धकुसुमं मुक्तादिकं
यद्भवेत्
राजद्वारसुराग्रतो हि सुधिया कार्य्यं पुरे
सर्व्वतः ।
प्राग्विप्राश्च नृपा हि दक्षिणदिशि स्युः
सौम्यतः
शूद्रकाः
कर्त्तव्याः पुरमध्यतोऽपि बणिजो वैश्वा
विचित्रै-
र्गृहैः ॥
ईशे रङ्गकराः कुविन्दरजका वह्नौ च
तज्जी-
विनः

ङ्गुलैः ॥
यष्ट्या दृढां मर्कटिकां विदध्या-
ल्लोहस्य कीलेन च चर्म्मणापि ।
यन्त्रं प्रकुर्य्याद्दृढकाष्ठकञ्च
तन्मानया ज्योतिकया समेतम् ॥
कराङ्गुलैः पञ्जरकस्य दैर्घं
केषां मते हस्तमिते च यन्त्रे ।
याटी कुली वह्निजलानिलाख्या-
स्ते लक्षणज्ञैः परिकल्पनीयाः ॥”
इति यन्त्राष्टकप्रमाणानि ॥ * ॥
“नीराश्रयं पुण्यवतां विधेयं
मध्ये पुरस्यापि तथैव बाह्ये ।
वाप्यश्चतस्रोऽपि तथैव कूपा-
श्चत्वारि कुण्डानि च षट् तडागाः ॥ * ॥
कूपाः श्रीमुखवैजयौ च तदनु प्रान्तस्तथा
दुन्दुभि-
स्तस्मादेव मनोहरश्च परतः प्रोक्तस्तु चूडा-
मणिः ।
दिग्भद्रोजयनन्दशङ्करमतोवेदादिहस्तैर्मिता
विश्वान्तैः क्रमवर्द्धितैश्च कथिता वेदादधः
कूपिका ॥ * ॥
वापी च नन्दैकमुखा त्रिकूटा
षट्कूटिका युग्ममुखा च भद्रा ।

द्वारं दक्षिणवामतश्च पुरतः कार्य्यास्त्रय-
श्चत्वराः
सर्वं वास्तुगृहादिवासरचना भूपेच्छया कार-
येत् ॥”
इति सूत्रधारमण्डनविरचिते वास्तशास्त्रे
राज
वल्लभे प्राकारयन्त्रवापीकूपतडागलक्षणम् ४
अध्यायः ॥ * ॥
“अथो नृपाणां भवनानि वक्ष्ये
त्वेकातपत्रावनिपालकस्य ।
शतञ्च हस्ताष्टसमन्वितञ्च
व्यासे गृहं चोत्तममेव तस्य ॥
ये द्वापरे भूमिभुजो बभूवु-
स्तेषां गृहं हस्तशतं द्विहीनम् ।
तत्र्यं शभूमीश्वरको नृनाथ-
स्त्वष्टाधिकाशीतिकरं गृहं स्यात् ॥
ग्रामैकलक्षद्वयमस्ति यस्य
प्रोक्तो महामण्डलिको नरेशः ।

प्रशीतिहस्तं द्विकरेण हीनं
कुर्य्याद्गृहं शोभनमेव तस्य ॥
पञ्चायुतेशो नृपमण्डलीको
भवेद्गृहं तस्य कराष्टषष्टिः ।
सामन्त्यमुख्यो द्व्ययुताधिपोऽसौ
तद्गेहमष्टेषु करप्रमाणम् ॥
तद्वेश्म पञ्चाशदपि द्विहीनं
सामन्तसंज्ञोऽयुतनाथ एव ।
तथा तृतीयोऽपि ततो द्विहीनं
त्रिंशत्कराष्टाधिकमेव गेहम् ॥
प्रोक्तः प्रवीणैश्चतुराशिकोऽसौ
ग्रामा हि यस्यैव सहस्रमेकम् ।
अष्टाधिकं विंशतिहस्तहर्म्म्यं
सिद्ध्यै समस्तानि यथोदितानि ॥
ग्रामाधिपा ये तु शताधिपाश्च
ते स्वल्पराष्ट्रा अपि सैनिकाश्च ।
तेषां गृहा अष्टदशाधिकैश्च
करैः समाना मुनिभिर्म्मताश्च ॥
भूपालकार्द्धेन च मन्त्रिगेहं
यथाधिकारेण भवन्ति हीनम् ।
व्यासाद्दशांशाधिकमेव दैर्घं
कूर्य्यादथो पञ्चमभागमिष्टम् ॥
गृहं चतुर्हस्तमितं करादि-
वृद्ध्या द्विरामान्तमिति प्रमाणम् ।
ततः परं भूपतिमन्दिराणि
यावच्छतं चाष्टकरादियुक्तम् ॥
स्याद्भूमिरेका वसुहस्तगेहे
दशाभिवृद्ध्या द्वितया पुनश्च ।
प्रासाद एवामरभूपयोश्च
हर्म्म्याणि लोके मुनिनोदितानि
शालाया नवधा च पञ्चकरतो
मानञ्च विश्वा-
न्तकं
भित्तेरेव चतुर्द्दशाङ्गुलमितिर्यावत्
सपादं करम् ।
आगारस्य तु
षोडशांशरहितोऽप्यर्द्धेनहीनोऽथवा
भित्तेर्मानमिदं त्रिधा विरचितं
कल्प्यं यथा-

कनिष्ठिका रुद्रकरा क्रमेण
व्यासेऽष्ट सप्तैव च रागसंख्या ॥
वेश्मव्यासकलांशकैर्युगगुणैर्हस्तैस्त्रिसार्द्धैर्युतै-
र्हर्म्म्यस्य त्रिविधोदयः क्षितितलाद्यावच्च पट्टो-
द्ध्वर्कम् ।
एकैकोऽपि पुनस्त्रिधा निगदितः सर्वेत एकादश
क्षेपाः षण्णवतौ नखाः शशिकला अष्टादशाद्य-
स्त्रिधा ॥
त्रिस्थाने युगपर्वता ८४ स्तिथियुता धिष्ट्यैक-
विंशान्विता
मध्योऽयं त्रिकरैस्तदंशसहितैः प्रोक्तः कनिष्ठ-
स्त्रिधा । * ।
वृक्षं दुग्धविशुष्ककण्टकयुतं नीडैस्तु चैत्यद्रुमं
क्षीरं मारुतपातितञ्च भवने चिञ्चाविभीतं
त्यजेत् ॥
शाकः शालमधूकसर्ज्जखदिरा रक्तासनाः
शोभना
एकोऽसौ सरलीऽर्ज्जुनश्च पनसः श्रीपर्णिनी
शिंशपा ।
हारिद्रः पिचुमर्द्दचन्दनतरुः पद्माख्यकस्तिन्दुकी
नैतेऽन्येन युता भवन्ति फलदाः शाकादयः
शोभनाः ॥ * ॥
गेहोदयन्तु नवधा विभजेत् षडंशं
स्तम्भोद्ध्वर्भागसमकं भरणं शिरश्च ।
कुम्भी ह्युदम्बरसमैकविभागतुल्या
पट्टश्च तत्त्रिकयुतोऽशसमान एव ॥
शालालीन्द उदाहृतो हि विबुधैर्बाणेषु युग्मांशकः
सप्तांशेषु गुणैश्च नन्दपदतो वेदांशतुल्यस्तथा ।
कापाटं गृहदक्षिणे निगदितं वामे भवेदर्गला
सृष्ट्यानिष्क्रमणं कृतं मुनिवरैर्द्वारेषु सर्वेषु यत् ॥
शालाजिनांशैमनुरेव मध्ये
त्रयो हयान्ते द्वयमस्य पार्श्वे ।
द्वारोत्तमाङ्गेन समानकर्णाः
शस्ता न शस्ता भवनाभिवक्त्राः ॥ * ॥
दीपालयो दक्षिणदिग्विभागे
सदा विधेयोऽर्गलया समानः ।
वामे च मध्ये न शुभाय गेहे
सुरालये वामदिशीष्टसिद्ध्यै ॥
द्वाराग्रे खटकीमुखे च तदधो द्वाः षोडशां-

गेहाद्यं यत् पूर्व्ववास्तुस्वरूपं
तेषां भङ्गान्नैव सौख्यं कदाचित् ॥
द्वारव्यासरदांशतोऽधिकमिदंकार्य्यं गृहं
दक्षिणे
तुल्यं हस्तिगृहञ्च वाजिभवनं तेनाधिकं
वामतः ।
अष्टांशेऽथ नवांशके च वितथे तोये जयेन्द्रे
हितं
द्वारं सौम्यगृहक्षते च कुसुमे भल्लाटके
शस्यते ॥
प्राग्द्वाराष्टकमध्यतोऽपि न शुभं सूर्य्येश-
पर्जन्यतो
याम्यायाञ्च यमाग्निपौष्णमपरे शेषासुरं
पापकम् ।
सौम्यायामथ रोगनागगिरिजं त्याज्यं
तथान्य-
च्छुभं
कैश्चिद्वारुणसौम्यकं न हि हितं प्रोक्तञ्च
वातायने ॥
द्वारं विद्धमशोभनञ्च
तरुणाकोणभ्रमस्तम्भकैः
कूपेनापि च मार्गदेवभवनैर्विद्धं तथा
कीलकैः ।
उच्छ्रायाद्द्विगुणां विहाय पृथिवीं वेधो न
भित्त्यन्तरे
प्राकारान्तरराजमार्गपरतो वेधो न
कोणद्वये ॥
दैर्घ्ये सार्द्धशताङ्गुलञ्च दशभिर्हीनम् १४०
। १३० ।
१२० । ११० चतुर्द्धा विधिः
प्रोक्तं वाथ शतं त्वगीतिसहितं १८० युग्मं
२००
नवत्या शतम् १९० ।
तद्वत् षोडशभिः शतञ्च ११६ नवभिर्युक्तं
तथा-
शीतिकम् ८९
द्वारं मत्स्यमतानुसारि दशकं योग्यं विधेयं
बुधैः ॥ * ॥
स्वयमपि च कपाटोद्घाटनं वा पिघानं

| | | |
|---|---|---|
| योगतः ॥<br>दैर्घ्ये चन्द्रकलाङ्गुलोत्तमशिला मध्याङ्गुलो<br>नान्तिमा<br>व्यासे दिङ्नवभूभृदुच्छ्रितिरपि त्रिंशेन विस्ता-<br>रतः ।<br>हस्तादेस्त्रिकरोदयं नवविधं पीठं गृहे सर्वतो<br>विप्रादे रसभूतवेदगुणकाः स्युः पीठक मेखलाः ॥<br>षष्ट्या वाथ<br>शतार्द्धसप्ततियुतर्व्यासस्य हस्ता-ङ्गुलै-<br>द्वारस्योदयको भवेच्च भवने मध्यः कनिष्ठोत्तमैः<br>दैर्घ्यार्द्धेन तु विस्तरः शशिकलाभागोऽधिकः<br>सप्तते-<br>दैर्घ्यं त्र्यंशविहीनमर्द्धरहितं मध्यं कनिष्ठं<br>क्रमात् ॥<br>ज्येष्ठा प्रतोली तिथिहस्तसंख्या<br>प्रोक्तोदये विश्वकरा च मध्या । | शाधिकं<br>सर्व्वं वा शुभमिच्छता च सततं कार्य्यन्तु पट्टादधः ।<br>तन्न्यूनं न शुभन्तुलातलगतं कुक्षौ तथा पृष्ठगं<br>काष्ठं पञ्चक एव नीतरहितं यन्मूलपूर्वात्तरम् ॥<br>द्वारोर्द्ध्वे यद्द्वारमस्य प्रमाणं<br>संकीर्णं वा शोभनं नाधिक तत् ।<br>ह्रस्वद्वाराण्येव यानि पृथूनि<br>तेषां शीर्षाण्येकसूत्राणि कुर्य्यात् ॥<br>सर्वं द्वारं नीचमानं रुजायै<br>यद्वा ह्रस्वं तत् करोत्यर्थनाशम् । | भयदमधिकहीनं शाखयोर्वा विचाले ।<br>पुरुषयुवतिनाशस्तम्भशाखाविहीनं<br>भयदमखिलकाष्ठाग्रं यदाधःस्थितं स्यात् ॥<br>देवालयं वा भवनं मठश्च<br>भानोः करैर्वायुभिरत्र भिन्नम् ।<br>तन्मूलभूमौ परिवर्जनीया<br>छाया गता यस्य गृहस्य कल्प ॥<br>नैको लघुर्वामदिशाविभागे<br>मध्ये द्विषट् दारुणवर्णगेहे ।<br>स्तम्भासनं हीनमपि क्षयाय<br>यदाधिकं रोगकर तदा स्यात् ॥<br>स्तम्भोऽष्टास्रसुवृत्तभद्रसहितोरूपेण चालङ्कृतो<br>युक्तः पल्लवकस्तथाभरणकं यत् पल्लवेनावृतम् ।<br>कुम्भी भद्रयुता कुमारसहितं शीर्षं तथा किन्नराः<br>पत्रञ्चेति गृहे न शोभनमिदं प्रासादके शस्यते ॥<br>स्तम्भो द्वयोमध्यगतो न शस्तो<br>शुभंकरी पट्टयुगांशतो द्वौ ।<br>गृह प्रशस्ताश्चतुरस्रकास्ते<br>स्तम्भा न कन्दन विना प्रशस्ताः ॥<br>हानिस्तुलामध्यगता खनस्य<br>स्तम्भभदन्तालयभित्तिमूलम्। |

संलग्नचत्वार्य्यपि हानये स्युः
स्तम्भासनं स्तम्भशिरश्च शीर्षम् ॥
उत्सेधार्द्धविनिर्गतं शरयुगांशेनाधिकं
शस्यते
छाद्यं पट्टसमानकं सुखकरं नाशाय
निम्नोन्नतम्
तत् काकस्य च पक्षवच्च कुमुदाभं
सूर्य्यकालायकं
प्रालम्बञ्च करालकञ्च विबुधैः प्रोक्तञ्च तत्
षड्विधम् ॥
भूम्यारोहणमूद्ध्‌र्ध्वतस्तदुपरि प्रादक्षिणं
शस्यते
द्वारं तूद्ध्‌र्ध्वभवञ्च भूमिरपरा ह्रस्वार्कभागैः
क्रमात् ।
प्रासादे च मठे नरेन्द्रभवने शैलः शुभो नो
गृहे
तस्मिन् भित्तिषु वाह्यकास्तु शुभदाः
प्राग्भूमि-
कुम्भ्यां तथा ॥ * ॥
पृष्ठे क्षणानन्तरमेव बाह्यात्
गृहप्रवेशो न शुभङ्करोऽसौ ।
गृहस्य पृष्ठे यदि राजमार्ग-
स्तदादिभूमेर्न हि पृष्ठमीक्ष्यम् ॥
जीर्णं गृहं भित्तिमग्नं विशीर्णं
तत् पातव्यं स्वर्णनागस्य दन्तैः ।
गोशृङ्गैर्व्वा शिल्पिना निश्चयेन
पूजां कृत्वा वास्तुदोषो न तस्य ॥
हर्म्म्यस्यापि समन्ततो गृहपतिर्वृद्धिं यदा-
पीहते
सर्व्वाशासु विवर्द्धितञ्च फलदं दुष्टं तदेकत्र
च ।
प्राङ्गित्रैरपि वैरमुत्तरदिशाभागे
मनस्तापकृत्
पश्चादर्थविनाशदक्षिणदिशि शत्रोर्भयं
वर्द्धते ॥
वामाङ्गे धनवस्त्रदेवभवनं धातुः श्रियो
वाजिनो
नार्य्यस्त्वौषधिभोजनस्य भवनं
स्याद्वाटिका

छत्रं चामरतापसाः
स्वगुरवस्ताम्बूलधृग्दक्षिणे
गेहाधीशयदृच्छया च शयनं सर्व्वासु
भूमीषु
च ॥
विवस्वदाख्ये शयनं प्रशस्तं
वादित्रगेहं सवितुर्विधेयम् ।
पूषाश्रितं भोजनमन्दिरञ्च
महानसं वह्निदिशाविभागे ॥
माहेन्द्राख्ये गोपुरं द्वित्रिभूमिं
भानोः संख्या तस्य मध्ये विधेया ।
उक्तानुक्तं मन्दिरादौ निवेशे
त्वष्ट्रा कार्य्यं चाक्षया भूपतीनाम् ॥
दिक्शालान्तं ह्येकशालादिगेहं
ज्येष्ठा मध्या कन्यसा दक्षिणाङ्गात् ।
शाला कार्य्या लोकगेहे युगान्तात्
त्रिद्व्येकाः स्युर्भूमयस्तेषु नूनम् ॥”
इति श्रीसूत्रधारमण्डनविरचिवे
वास्तुशास्त्रे
राजवल्लभे राजगृहनिवेशादिलक्षणं ५ अः
॥ * ॥
“अथैकशालं द्विगुणाब्धिशालं
प्रस्तारतो लक्षणमेव तेषाम् ।
यथोदितं वास्तुमते तथैव
ब्रवीमि राज्ञामथ मानवानाम् ॥
चत्वारो गुरवस्तु पूर्व्वगुरुतोऽधो
ह्रस्वतोऽन्ये
समाः
भूयः पश्चिमपूरितञ्च गुरुभिर्यावल्लघुत्वं
भवेत् ।
उद्दिष्टे द्विगुणाङ्कैर्लघुभवैः
संख्यैकमिश्रीकृते
नष्टे स्तो विषमे समे गुरुलघू रूपे
तदर्द्धार्द्धतः
स्थाने लघोः सद्ममुखादलिन्दं
प्रदक्षिणं तं क्रमतो विदध्यात् ।
प्रस्तारतः शोडशकं गृहाणां
प्रोक्तं तथाख्यां कथयामि तेषाम् ॥ * ॥
ध्रुवञ्च धान्यं जयनन्दसंज्ञे

चोद्वृत्तं वृषमुत्थितञ्च व्ययमानन्दं सुनन्दं
क्रमात् ॥”
इति हंसादिषोडषगृहाणि ॥ * ॥
“मध्येऽपवर्गं ध्रुवरूपकाणा-
मलङ्कृताह्वं प्रथमञ्च तत्र ।
तथाप्यलङ्कारमिति क्रमेण
ख्यातं तदन्यं रमणञ्च पूर्व्वम् ॥
तत्रेश्वरं तदनु पुण्यमतः सुगर्भं
प्रोक्तं गृह कलसदुर्गतमेव रिक्तम् ।
स्यादीप्सितं तदनु भद्रकवञ्चिते च
दीनं गृहं विभवकामदमेव सख्या ॥”
इत्यलङ्कृतादिषोडशगृहाणि ॥ * ॥
“षड्दारु सर्व्वेष्वपवर्गकेषु
प्रभावसञ्ज्ञं त्वथ भावितञ्च ।
रुक्मं तथान्यत्तिलकञ्च तत्र
सत् क्रीडनं सौख्यमतो यशोदम् ॥
कुमुदमपि च कालं भासुरं भूषणञ्च
वसुधरमथ गेहं धान्यनाशं तदन्यत् ।
कुपितमपि च वित्तं वृद्धिदं प्रोक्तमेत-
त्तदनु कुलसमृद्धं षोडशं प्रोक्तमाद्यैः ॥”
इति प्रभवादिषोडशगृहाणि ॥ * ॥
“सर्व्वे मुखालिन्दसमन्विताश्च
दारुद्विषट्कं ह्यपवर्गमध्ये ।
ततश्च चूडामणिकं प्रभद्रं
क्षेमं तथा शेषसमुच्छ्रितञ्च ॥
विशालसंज्ञं त्वथ भूतिदञ्च
हृष्टं विरोधं कथितं क्रमेण ।
तत्कालपाशं हि निरामयन्तु
सुशालरौद्रे मुनिसम्मताश्च ॥
वेद्यं गृहं चैव मनोरमञ्च
सुभद्रसंज्ञं कथिता च संख्या ।
इत्येकशालानि गृहाणि विद्या-
च्छतञ्च चत्वार्य्यधिकं ध्रुवादि ॥
अपवरकं यत् कथितं तद्वामे धीमता गृहे
कार्य्यम् ।
यत् षड्दारुकमुदितं ज्ञेया सा पट्टजा श्रेणी
॥”
इति चूडामण्यादिषोडशगृहाणि। इति चतु-
रुत्तरं शतमेकशालगृहाणि ॥ * ॥

वामतः ।
वह्नेर्गोजलदन्तिशस्त्रसदनं स्त्रीणां तथा
दक्षिणे
स्थानं माहिषमाजमौर्णिकमिदं
याम्याग्निमध्ये
शुभम् ॥
सुग्रीवे वरुणेऽसुरे गणवरे स्याद्घोटकानां
गृहं
द्वाःस्थे युद्धगृहञ्च नृत्यरमणं
गान्धर्व्ववेदाश्रितम्
राज्ञो मातृगृहं गजेन्द्रजयके रुद्रे महिष्या
गृहं
सत्ये धर्म्मगृहं रवौ व्ययगृहं प्रोक्तं जये
श्रीगृहम् ॥
ईशप्राच्योरन्तरे गर्भभाना-
मुष्ट्राणां वा स्थानमेवात्र कार्य्यम् ।
धान्यागारं स्यात्तथा प्राणकोणे
भृङ्गेऽप्येवं शम्भुकोणे शिवार्च्चा ॥
प्राक् पश्चिमे मारुतवह्निकोणे
प्रोक्ता प्रवीणैरपि नृत्यशाला ।
वर्च्चोगृहं रात्रिचरस्य कोणे
स्यात् पश्चिमे भोजनशालिका च ॥ * ॥
प्राक् शोभा नृपमन्दिरे च पुरतः स्थानं
तथा
पुत्त्रकं
वामाङ्गे नृपतेस्तथायुधधराः
कृष्णातपत्राणि
च ।

खराख्यकन्दञ्च मनोरमाख्यम् ।
सुवक्त्रमस्मात् किल दुर्मुखाख्यं
क्रूरं विपक्षं धनदं क्षयञ्च ॥
आक्रन्दकं वैपुलवैजयञ्च
फलानि नाम्ना सदृशानि तेषाम् ।
इति ध्रुवादिषोडशगृहाणि ॥ * ॥
धान्यादितोऽष्टौ विजयान्तकं हि
त्वलिन्दयुग्मं मुखतो विदध्यात् ॥
रम्यं श्रीधरमोदिते च परतस्तद्वर्द्धमानं गृहं
कारालञ्च सुनाभमेव तदनु धाङ्क्षं समृद्धं
तथा
इति रम्याष्टकम् ॥ * ॥
सर्व्वाणि ध्रुववद्भवन्ति नियतं षड्दारुकैः
सुन्दर
प्रोक्तं तद्वरदञ्च भद्रकुमुदेऽथो
वैमुखाख्यंशिवम्
तत्सर्व्वलाभञ्च विशालसंज्ञं
तथा विलक्षं त्वशुभं ध्वजञ्च ।
उद्योतमेवं त्वथ भीषणञ्च ॥
सौम्याजिते स्तः कुलनन्दनञ्च ॥”
इति सून्दरादिषोडशगृहाणि ॥ * ॥
“पूर्व्वालिन्दसमस्तकेषु युगलं पट्टस्य
शालान्तरे
हंसञ्चैव सुलक्षणञ्च परतः सौम्यं हयं
भावुकम्
तस्मादुत्तमरौचिरे च सततं क्षेमं तथा
क्षेपकम्

“अथ द्विशालालयलक्षणानि
पदैस्त्रिभिः कोष्ठकरन्ध्रसंख्या ।
तन्मध्यकोष्ठं परिहृत्य युग्मं
शालाश्चतस्रो हि भवन्ति दिक्षु ॥
याम्याग्निगा च करिणी धनदाभिवक्त्रा
पूर्व्वानिना च महिषौ पितृवारुणस्था ।
गावी यमाभिवदनापि च रोगसौम्ये
च्छागी महेन्द्रशिवयोर्व्वरुणाभिवक्त्रा ॥
हस्तिन्या महिषी द्विशालभवनं सिद्धार्थकं
तच्छुभं
गावी माहिषसंज्ञकं मृतिकरं तद्यामसूर्य्यं
भवेत् ।
दण्डं छागगवान्वितं धनहरं हस्तिन्यजाभ्यां
तथा

काचं गोकरिणीयुतं न हि शुभं चुल्ली च पर्व्वा-
परम् ॥
नामान्यतः सन्ततशान्तिदञ्च
स्याद्वर्द्धमानं त्वथ कुक्कुटाख्यम् ।
हस्त्यादितो नाम चतुष्टयञ्च
हर्म्म्यं द्विशालं प्रथमं तथैव ॥
यत् स्वस्तिकं तद्रमदारुमध्ये
ऽलिन्दस्तथाग्रे कथितं द्विशालम् ।
हंमाख्यकं स्यादथ वर्द्धमानं
कीर्त्तेर्विनाशं भवनं चतुर्थम् ॥
अलिन्दयुग्मं पुरतो विदध्यात्
षड्दारु मध्येऽपि च शान्तसंज्ञम् ।
तस्माद्गृहे हर्षणवैपुले च
तथा चतुर्थं कथितं करालम् ॥
तस्मिन् गृहे दक्षिणतो ह्यलिन्दे
वित्तञ्च चित्तं धनकालदण्डे ।
वामे पुनर्बन्धुदपुत्त्रदं स्यात्
सर्व्वन्तु तस्मिन्नपि कालचक्रम् ॥
लघुश्च पश्चात् पुरतोऽपि युग्मं
स्याद्दक्षिणैको रसदारुमध्ये ।
तत्त्रैपुरं सुन्दरमेव नीलं
स्यात् कौटिलञ्चैव यथा क्रमेण ॥
प्रदक्षिणैकः पुरतोऽपि युग्मं
षट्कं गृहान्तः किल शाश्वदाख्यम् ।
ततो द्वितीयं खलु शास्त्रदं स्या-
च्छीलं तथा कोटरमेव संज्ञम् ॥
सौम्यं गृहं मण्डपसंयुतञ्च
तत्तुल्यरूपं विबुधैर्विधेयम् ।
सुभद्रमस्मादपि वर्द्धमानं
क्रूरञ्च सर्व्वेष्वशुभं चतुर्थम् ॥
मुखे त्रयं दक्षिणपश्चिमैकः
षड्दारुकं श्रीधरनामधेयम् ।
प्रोक्ते गृहे कामदपुष्टिदे च
चतुर्थकं कीर्त्तिविनाशमेव ॥
वामे तथा दक्षिणपश्चिमैको
युग्म मुखे मण्डपमग्रतश्च ।
श्रीभूषणं श्रीवसनं ततश्च
श्रीशोभकीर्त्तिक्षयमेव तद्वत् ॥

महान्तमेतन्महितञ्च दक्षं
कुलक्षयं मण्डपसंयुतं स्यात् ॥
भ्रमद्वयं दिक्त्रितये विभागे
मुखे त्रिकं मण्डपमग्रतश्च ।
प्रतापवर्द्धन्यमिदञ्च दिव्यं
मुखाधिकं सौख्यहरं चतुर्थम् ॥
तस्यैव रूपं रसदारुयुग्मं
पुनस्त्वलिन्दोऽजगजन्ततश्च ।
स्यात् सिंहनादं त्वथ हस्तियानं
ज्ञेयं तथा कण्टकमेतदन्त्यम् ॥
शान्तादिगेहानि च षोडशैव
द्विशालकानीह यथाक्रमेण ।
नामानि चत्वार्य्यपि रूपमेकं
हस्त्यादिभेदैः क्रमतो विधेयम ॥”
इति सूत्रधारमण्डनविरचिते वास्तुशास्त्रेराज-
वल्लभे एकद्विशालगहलक्षणं ६ अध्यायः ॥ * ॥
“द्विशालगेहानि तु षोडशैव
वास्तूदधेः सारतरं पुनश्च ।
वक्ष्याम्यलिन्दोऽपि षणो लघुश्च ।
द्वौ तिन्दुकाख्यौ कथितावलिन्दौ ॥
सूर्य्यं द्विशालं लघुरस्य वामे
मुखे त्रिकं दक्षिणतस्तथैकः ।
मुखे तथा वासवमेव गेहं
वामेऽपसव्ये लघुरेक एव ॥
प्रासादसंज्ञं मुखतस्त्रयञ्चेत्
प्रदक्षिणं तिन्दुकवेष्टितं स्यात् ।
अलिन्दयुक्तं विमलं द्विशालं
तद्वीर्य्यवन्तं सह मण्डपेन ॥
अथ द्विशालेषु समस्तकेषु
मध्ये विदध्याद्रसदारु चैकम् ।
तदा भवेद्वासुरमग्रयुग्म-
मेको लघुर्दक्षिणदिग्विभागे ॥
एको लघुर्दक्षिणपूर्व्वगः स्यात्
तद्दुन्दुभाह्वं मुखमण्डपेन ।
द्वौ पूर्व्वतो दक्षिणतस्तथैको
युग्मं भवेन्मण्डपगं सुतेजः ॥
मुखे गुणा दक्षिणतस्तथैको

प्राग्ग्रामा लघवो विलासभवने वामे लघुर्दक्षिणे
तच्चेन्मण्डलसंयुतञ्च कमलं स्याद्वृद्धिदं सौख्य-
दम् ।
वेदास्तूदरके मुखे च सततं वामेक्षणे दक्षिणे
तस्याग्रे मुखमण्डपस्य फलदानेवं गृहान् षोडश ॥”
इति सूर्य्यादिषोडशगृहाणि ॥ * ॥
“अथ त्रिशालं त्रिदशेक्षणैकं
स्यात्त्रैदशावासमरूपसंज्ञम् ।
तथा चतुर्थं कुमुदाभिधानं
हस्त्यादिभेदैः क्रमतो विधेयम् ॥
छत्रं ह्यलिन्दञ्च तथैव पुत्त्रं
हरञ्च कामन्त्वथ ह्रस्वभद्रम् ।
षट्कञ्च मध्ये स्वधनं कुबेरं
पक्षं तथा कामदमेतदेव ॥
अलिन्दयुग्मं त्वथ भद्रयुक्तं
मध्ये कपाटं जलजाभिधानम् ।
स्यान्मेघजं चैव गजं कृपञ्च
षड्दारु मध्ये सकले यथातः ॥
स्याद्वैजयं मण्डपह्रस्वभद्रं
जयं निनादं त्वथ कीर्त्तिजञ्च ।
भद्रोनह्रस्वाधिकसाकलाह्वं
निर्लोभकं वासदकौशले च ॥
त्र्येकं क्रमादीश्वरवारदाख्यं
भीमञ्च कौशल्यमतः क्रमेण ।
तद्वेद बुद्धस्वजनं तृतीयं
स्यात् कौशलं नीलमिदं चतुर्थम् ॥
मुखगुणलघुवामे दचिणे चैक एत-
द्वरदशरदमुक्तं दण्डकं काकपक्षम् ।
इदमिह हि निनादं मण्डपेनाधिकं स्या-
त्तदनु च गजनादं बाहुलं कीर्त्तिजाह्वम् ॥
सृष्ट्यादिरूपमुखमण्डपमेव सिंहं
ज्ञेये गृहे वृषगजे अपि कोशसंज्ञम् ।
वामेऽधिकञ्च लघुना कथितं सुभद्रं
स्यान्माणिभद्रमपि रत्नजकाञ्चनाख्ये ॥
युगमुखमपरैको भैरवं दक्षिणे च
भरत नरजमेतत् स्याच्चतुर्थं कुबेरम् ।
पुनरपि लघु वामे हस्तियानं वियानं

एकोऽपरे दक्षिणवामतश्च
यन्मध्यगं श्रीधरयुग्मपूर्व्वम् ।
सर्व्वार्थदं स्यान्मुखतस्त्रयञ्चेत्
लक्ष्मीनिवासं कुपितञ्च नाम्ना ॥
युग्मं मुखे मण्डपमेव चाग्रे
युग्मं तथा दक्षिणतोऽन्तभित्तिः ।
पृष्ठे तु उद्योतकबाहुतेजः
सुतेज एवं कलहावहं स्यात् ॥
उद्योतके पश्चिमभागतो द्वौ
कुर्य्यात् द्विशालञ्च वहिर्निवासम् ।
तत् पुष्टिदं कोपसमानमन्त्य-
मनुक्तषट्कं क्रमतो विधेयम् ॥
लघुत्रिकं पूर्व्वदिशाविभागे
एको भवेद्दक्षिणवामपश्चात् ।

द्वौ मण्डपेऽस्मिन् हयजाभिधानम् ।
महान्तगेहं मुखजे त्रिके तु
युग्मान्वितं मण्डपमेतदेव ॥
मुखे तथा मण्डपके च युग्मं
वामेऽपसव्ये युगलं लघोश्च ।
लोकत्रयाडम्बरमस्य नाम
षडक्षरं शम्भुगणेशयोश्च ॥
युग्मं मुखे मण्डपगं द्वयं स्या-
त्तथा द्वयं दक्षिणवामतश्च ।
एको हि पश्चाद्वरदाभिधानं
श्रीविश्वकर्म्मोक्तमताद्द्विशालम्॥
मालीनसंज्ञं मुखगैश्चतुर्भि-
र्युग्मं भवेद्दक्षिणवामभागे ।
युग्मं तथा पश्चिमदिग् विभागे
तस्याग्रतो मण्डप एक एव ॥

हयजकृपजगेहं तच्चतुर्थं क्रमेण ॥
वर्णानां शुभदञ्च सागरगृहं पञ्चैव ह्रस्वामुखे
प्रोक्तं क्षीरदरत्नदाह्वयमिदं कोलाहलञ्चापरम् ।
षड्दारुद्वयभद्रसप्तलघवस्तिर्य्यक् युतं शालया
गान्धर्व्वं क्षितिभूषणञ्च कथितं सर्व्वज्ञकं दर्प-कम् ॥
धान्यं वृद्धिकरं त्रिशालमुदितं शालां विना पावनी
प्राक्शाला रहितं शुभं निगदितं सुक्षेत्रमर्थ-प्रदम् ।
चुल्लीसंज्ञमिदं करोति मरणं हीनं तथा याम्यया
पक्षघ्नं महिषीमृते च भवनं तत्पुत्त्रबन्धुक्षयम् ॥”
इति त्रिदशादिषोडशगृहाणि ॥ * ॥

"त्रैशालानि च षोडश प्रथमतः
सोमञ्च षड्-
दारुकं
तच्चैकेन पुरोऽपि शङ्करमिदं मध्ये
क्रमात्
पूर्व्ववत् ।
रुद्रे द्वौ मुखतोऽपि
दक्षिणलघुस्त्वेकाधिकं
सागरं
चत्वारो नृपशोभितञ्च पुरतः
प्राग्दक्षिणैको
लघुः ॥
पञ्चाग्रे सकलं भ्रमञ्च लघुना सर्वस्य
तत्
सौख्यदं
रागाख्यं भ्रमसंयुतञ्च भवनं तत्
सर्वशालं
भवेत् ।
प्राग्वाणङ्गुलनन्दनं क्रमतया
त्वेकद्वयैकान्वितं
तस्मिन्दक्षिणसंयुते च लघुके
कल्याणसंज्ञं तथा
सर्व्वाशासु लघुत्रयं शरमुखं तत्
पट्टयुग्मं
क्रमात्
तत्सौभाग्यविवर्द्धनञ्च भवनं राज्ञां
सदा निर्मि-
तम् ।
आनन्दं सुखराजिदक्षिणलघुवमिच
पृष्ठे द्वयं
रागास्यं जनशोभनं गुणगणैकेनान्वितं
सृष्टितः
स्याद्गोवर्द्धनमग्रतो रसयुतं
युग्माग्निनेत्रैः क्रमात्
सप्ताग्रे त्रिगुणं त्रिकश्च लघवो
लोकत्रिकं
सुन्दरम् ।
गेहं श्रीतिलकं च भद्रसहितं ह्रस्वेन
हीनं मुखे

"शुद्धादयो मुनिमतेऽष्टविधा च शाला-
स्तासां षडेव कथिता भवनप्रसङ्गे ।
शालालिमध्यरचितोऽपिलघुः सुखाय
यद्वा तदग्ररचिताः पृथगेव शालाः ॥"
इति सूत्रधारमण्डनविरचिते वास्तुशास्त्रे
राज-
वल्लभे
द्विशालत्रिशालचतुःशालगृहलक्षणवर्ण्नं
सप्तमोऽध्यायः ॥ * ॥
"शयनमथ नृपाणां त्वङ्गुलानां शतैकं
नवतिरपि सुतानां मन्त्रिणः षड्विहीनम् ।
बलपतिगुणहस्तं त्र्यङ्गुलोनं गुरोश्च
तदनु युगलहीनं ब्राह्मणादेः प्रशस्तम् ॥
व्यासोर्द्धभागे नतदैर्घ्यतश्च
कलांसमात्रोऽधिक एव शस्तः ।
त्र्यंशेन पादेन समुच्छ्र्यः स्यात्
द्वित्र्यङ्गुलानामधिको न कार्य्यः ॥
श्रीपर्णी धनदासनोऽपि गदहावित्तप्रदा
तिन्दुकी
वृद्धिः शिंशपयाथ शाकशयने शर्म्मापि शालैः
कृते ।
आयुः पद्मकजे च चन्दनमये शत्रुक्षयः स्यात्
सुखं
श्रेष्ठं चैकमलं शिरीषजनितं पर्य्यङ्कयाना-
सनम् ॥"
इति शयनम् ॥ * ॥
"सिंहासनं चोत्तममङ्गुलानां
षष्ट्या दशोनञ्च परं तथैव ।
दशांशवस्वंशमतो विहीनं
व्यासे च दैर्घ्यार्द्धसमुच्छ्र्यः स्यात् ॥
मुनिभिरथ शिवैर्व्वा भद्रभागत्रयं स्या-
दुदय इति विभागैर्भाजिते पीठमष्टौ ।
कनकमपि रसांश सप्तधा ग्रासपट्टी
शिवनवमुनिरत्नैर्दन्तिवाहौ निवेद्यौ ॥
छाद्यं स्याद्रसभागमेव तिथितो भागेन
कक्षासनं
युक्तं स्तम्भयुगेन तोरणयुतं रत्नैः शुभै राजि-
तम् ।
कर्त्तव्यं नृपवल्लभं मतिमता ज्येष्ठञ्च सिंहासनं

छाद्यैकेन युतः सुवक्त्र उदितो द्वाभ्यां प्रियङ्गो
भवेत् ।
एकोनः परिपद्मनाभ उदितस्तद्वीपचित्रो युगै-
र्वैचित्रः शरपङ्क्तिभिस्तु विविधाकारैर्युतः
पञ्च च ॥
सिंहो दैर्घ्यविवर्द्धितो हि पृथुले हंसो गवाक्षो
भवेत्
कुम्भोऽसौ मतिदोऽपि भद्रसहितो ज्ञेयस्तु
बुद्ध्यर्णवः ।
द्वारेणैव युगास्रकेण गरुडः पक्षद्वये जालकं
प्रोक्ताः पञ्चदशैव रूपमदला वेद्यादिकक्षा-
सनैः ॥"
इति पञ्चदश गवाक्षाः ॥ * ॥
"सभा च नन्दा परतोऽथ भद्रा
जया च पूर्णा क्रमतोऽपि दिव्या ।
पक्षी सुरत्नोद्भविकोत्पलाष्टौ
बुंधैर्विधेयावनिपालगेहे ॥
क्षेत्रं चतुष्टयपदैरपि षोडशांशं
मध्ये तुरीयपदमेकपदो लघुश्च ।
नन्देति भद्रसहिता च पदेन भद्रा
तद्वेदतश्च जयदा लघुना च पूर्णा ॥
दिव्या सभा केवलनन्दभागा
भद्रैश्चतुर्भिः सहिता च पक्षी ।
रत्नोद्भवा स्याद्युगतोऽपि तुल्यै-
स्तथोत्पलाख्या प्रतिभद्रतश्च ॥
स्तम्भैस्तोरणराजितैश्च मदला
निर्यूहवैतानकै-
र्लूच्छाद्यैर्गजसिंहराजविविधैर्नृत्यान्वितैः
शोभितम् ।
रत्नस्फाटिकरङ्गभूमिनृपतेः क्रीडास्पदं
मण्डपं
कुर्य्याद्दक्षिणभद्रके च रुचिरां यन्मध्यतो वेदि-
काम् ॥"
इति सभाष्टकम् ॥ * ॥
"वेदी कोणचतुष्टयेन सकले पाणिग्रहे
स्वस्तिका
कल्याणं रविकोणकैश्च नृपतेः सा भद्रिका
सर्व्वदा ।
कोणैः श्रीधरिका च विंशतिमितैस्त्रिस्रोऽम-

तद्युक्तं लघुना च भद्रसहितं
विष्णुप्रियं
भूपतेः ॥"
इति सोमादिषोडशगृहाणि ॥ * ॥
"षड्दारुकं श्रीत्रिदशं त्रिशालं
तत् श्रीनिवासं मुखह्रस्वयुक्तम् ।
श्रीवत्सतः श्रीधरमेव वृद्ध्या
श्रीभूषणं वेदमुखञ्च गेहम् ॥
बाणैः श्रीजयमग्रतोऽपि ऋतुभिः
श्रीतैलिकं
मन्दिरं
रागाग्रं रसदारुयुग्मसहितं तत्
श्रीविलासं
भवेत् ।
श्रीतेजोजयमग्रतश्च मुनिभिः
शडदारु युग्मान्वितं
सोमादित्रिदशादिभूपतिगृहाः
पञ्चाधिका
विंशतिः ॥"
इति त्रिदशादिनवगृहाणि ॥ * ॥
"भवननवकमुक्तं
यच्चतुःशालमध्यात्
नयनलघुमुखं स्याद्दक्षिणैकेन चन्द्रम्
।
भवति सदनमध्ये सर्वतो दारुषट्कं
द्वितयमपि च तेषामन्तिमं युग्मयुक्तम्
॥
मलयमथ च गेहं वामह्रस्वाधिकं
स्यात्
भवति च गुणह्रस्वं शोभणं पूर्व्वतोऽपि
।
त्रिभिरपि च सुकर्णा पृष्ठयाम्ये तथैक-
स्तदधिकमपि वामे वेश्म
नागेन्द्रसंज्ञम् ॥
चक्रं चतुष्टयमुखं सकलेषु शस्तं
ग्राम्योत्तरे हि लघुनापि जयावहं
स्यात् ।
भद्राह्वयञ्च मकराह्वयमेव तस्मिन्
पृष्टाग्रह्रस्वमपि कामदमग्रभद्रम् ॥"
इति विजयादिनवचतुःशालगृहाणि ॥
* ॥

ज्ञातव्यञ्च यशोऽभिवर्द्धनमिभैः सिंहैर्नृकक्षा-
सनम् ॥
नरैस्तु वेदी पुनरेव छाद्यं
सुखासनं तोरणसंयुतं स्यात् ।
पीठञ्च कुम्भः कलसं विटङ्क-
मुत्तङ्गसंज्ञं सह छाद्यकेन ॥
पीठे गोहरिवेदिके च सुयशश्छाद्येन सिंहासनं
हस्ती मातृकवेदिकासनयुतं तद्दीपचित्रं भवेत्
छत्रं ज्येष्ठमशीतिवेदसहितं द्वासप्ततिर्मध्यमं
षष्ट्या कन्यसमङ्गुलैर्नरपतेर्देवं शतार्द्धं शुभम्
॥"
इति सिंहासनच्छत्रलक्षणानि ॥ * ॥
"वातायनो लुम्बिकया विहीनो
बुधैरुदीर्णस्त्रिपताक एव ।
द्विलुम्बिकश्चोभयसंज्ञकश्च
यः स्वस्तिकोऽसौ युगलुम्बियुक्तः ॥
स्याद्बाणैः प्रियवक्त्र एव सुमुखः षड्भिः पुन-
श्चेति च

राणां गृहे
कोणैरष्टभिरन्विता च शुभदा चण्ड्यर्च्चने
पद्मिनी ॥
विप्रे सप्तकराञ्च भूपमवने षट्पञ्च वैश्ये तथा
कुर्य्याद्धस्तचतुष्टयाञ्च वृषले त्रिद्व्येकतो
हीनके
तस्योर्द्ध्वे च नरेश्वरासनमतो माण्डं
चतुस्तम्भकं
हेम्ना मौक्तिकपदृकूलमणिमिः सौम्याननं
राजितम् ॥"
इति वेदिकाचतुष्टयम् ॥ * ॥
"दीपस्तम्भं त्रिकरमुदये षड्भिरूनं क्रमेण
हस्तान्तं तं विहितमपि तैः पीठकुम्भान्वितञ्च
दीपस्योद्ध्वे कनककलसं शोभितं कङ्कणाद्यैः
कुर्य्याद्धातोरथ तरुमतो नागवङ्गे विवर्ज्ये ॥"
इति श्रीसूत्रधारमण्डनविरचितेवास्तुशास्त्रे
राजवल्लभे शयनसिंहासनच्छत्रगवाक्षसभा-
ष्टकवेदिकाचतुष्टयदीपस्तम्भलक्षणं८
अध्यायः

“गृहा वास्तुशास्त्रोदधौ राजयोग्या
अनन्ता हि सन्त्यत्र तेभ्यः कियन्तः
।
मयोक्ताश्च योग्या नृपाणां समृद्ध्यै
सुशोभान्वितास्ते च कल्याणदाश्च
॥
त्रिशालं गृहं दिकत्रये ह्रस्वयुग्मं
मुखे वीयिकाग्रे च षड् दारुमध्यम् ।
गुणालिन्दचातुर्द्दिशं चैकवक्त्रं
गवाक्षञ्च कोणे च भद्रे विधेयम् ॥
मुखे भद्रके श्रीधरं माण्डयुक्तं
तथा भूमिका पञ्चसप्तैकभूम्याम् ।
विनाच्छादनं मण्डपं वेदवक्त्रै
रिपुघ्नं गृहं राज्यवर्द्धन्यमेतत ॥
मध्ये निम्नन्त्वङ्गणाग्रं तथोच्चैः
शस्तं दैवं पुत्त्रनाशाय गेहम् ।
स्तम्भश्रेणी मध्यमानेन कार्य्या
न्यूनाधिक्ये नैव पूज्या न च श्रीः ॥
हीनस्तम्भे शालयोर्बाह्यपट्टे
नो वेद्यः स्यादन्यतो वेध एव ।
भूमेर्ज्ञेयं रुद्रसंख्याप्रमाणं
तुल्या नेष्टा वर्द्धमानाः शुभाः स्युः ॥
सार्द्धत्रयेन विभजेत् करतत्त्वसख्य-
मध्ये नवांशमुदितञ्च करार्द्धभित्तिः ।
स्तुम्भाश्च षोडशगृहेऽपि च भद्रकेषु
दन्तैर्मिताश्च सकलासु चतुर्मुखं
स्यात् ॥
भद्रे च भूमिद्वयमूर्द्धमाण्डं
सार्द्धत्रिभूमं कथितञ्च गेहम् ।
प्रतापवर्द्धन्यमिदं नृपाणां
लक्ष्मीविलासञ्च वदामि तस्मात् ॥
स्तम्भा दश दश भद्रञ्चैकं
षोडशमध्ये तत्समरूपम् ।
मदनशरावनिमाण्डसमेतं
लक्ष्मीः कर्म्मकरोति च नित्यम् ॥
भागाः पञ्चगुणाश्च पञ्च भवनं
षड्विंशता
स्तम्भकैः
त्रिभागेन तत्कण्ठतो निम्नमेवं
गृहस्योदयार्द्धेन पीठं नृपाणाम् ॥
उत्तानपट्टो नृपमन्दिरेऽसौ
हस्ते च हस्ते द्वियवोन्नतः स्यात् ।
पाषाणतः सौख्यकरो नृपाणां
धनक्षयं सोऽपि करोति गेहे ॥
सुधेष्टके शर्करया वियुक्ते
सकर्करैस्तैः सुदृढा गृहे भूः ।
शस्ता न शस्तं भवनेषु चित्रं
कपोतगृध्नाः कपिकाकरौद्रम् ॥
शुद्धोऽलिन्दविशेषतश्च सकला
भूम्यौच्चरण्ड्या-
न्विता
छाद्येनाप्यथ मत्तवारणयुतं माण्डं
तथार्द्धो-
दयम् ।
मौडो भद्रचतुष्किकाभिरुदितोमण्डेन
युक्त-
स्तथा
मल्लैस्तुल्यसपादकैस्तु मुकुलो वा
शीर्षकैः
शेखरः ॥
राज्ञो गृहं छन्दचतुयं स्यात्
तथैव घण्टाकलसेन युक्तम् ।
तुङ्गारसंज्ञस्त्वथ सिंहकर्णः
प्रासादके तेऽपि षडेव शस्ताः ॥
षड्जातिगेहं तृणपर्णपट्टै-
र्वंशैः कडैर्वापि मृदा शिलाभिः ।
छत्रं प्रकारैः कथितञ्च षड्भि-
र्लोकप्रसिद्ध्या च परीक्षणीयम् ॥”
इति राजगृहादि ॥ * ॥
“वामे भागे दक्षिणे वा नृपाणां
त्रेधा कार्य्या वाटिका क्रीडनार्थम् ।
एकद्वित्रिर्द्दण्डसंख्या शतं स्यान्-
मध्ये धारामण्डपं तोययन्त्रैः ॥
क्षेत्रं सप्तविभागभाजितमतो भद्रञ्च
भागत्रयं
तन्मध्ये जलवापिकाजिनपदैरेकांशतो
वेदिका
अन्ये भोज्यविचित्रखाद्यसुफलास्तेरोपणीया
बुधैः
यद्याप्नोति न भूतले शुभतरूंस्तच्चम्पकान्
वापयेत् ॥
आस्थानं प्रतिषेचनाय च घटीयन्त्रस्तुषारोद्भवे
दोला स्त्रीजनखेलनाय रुचिरे वर्षावसन्तोत्-
सवे ।
बालाप्रौढबधूसुमध्यवनितागानैर्मनोहारिभि-
र्ग्रीष्मे शारदकेऽथ शीतलजलक्रीडा शुभे
मण्डपे ॥
इति वाटिका ॥ * ॥
“तुरङ्गमाणां गृहवामभागे
शाला चतु षष्टिकरा विधेया ।
शतार्द्धतो मध्यमिका च दैर्घ्ये
कनीयसी तैर्दशभिर्विहीना ॥
व्यासे च ज्येष्ठा तिथिहस्तमाना
त्रयोदशैकादशकैः क्रमेण ।
तद्बाह्यभित्तिश्च करप्रमाणा
पञ्चार्द्धपञ्चाब्धिकरोदयास्यात् ॥
तेजोहानिमपीहया विदधते पूर्व्वापरास्या
नृणां
ते याम्योत्तरतो मुखादि सततं कीर्त्तिर्यशो
धान्यकम् ।
कर्त्तव्यो धिषणं प्रतीह कलसस्थानं द्विहस्तोदयं
तस्यास्तोरणमच्छ्रितञ्च मुनिमिहस्तैः सुशोभा-
न्वितम् ॥
षष्ट्या साधुहयाङ्गुलैर्निगदितो वेदाङ्गुलेनाधिकः
श्रीवत्सस्त्वहिलाव एव च मनोहारी द्विसप्ता-
ङ्गुलः ।
रागाद्यङ्गुलकैस्तु वाजिविजयोऽशीत्या तथा
भैरवः
शान्ताख्यस्तु युगाष्टमात्र उदये मानं हरेः
सप्तधा ॥”
इत्यश्वशाला ॥ * ॥
“सिंहद्वारं पूर्व्वमानेन कार्य्यं
त्रिद्व्येका वा मालिका स्तम्भशीर्षे ॥
स्यातां मध्ये ताडकौ रक्षणार्थं
तुल्यौ भागेनाधिकौ वापि सार्द्धौ ॥
भागे दक्षिणवामके च करिणां शाला हरे-

कुड्ये चार्द्धपदे च नन्दपदकैर्भद्रं चतुर्द्वारिकैः ।
भद्रे वैगुणभद्रकाणि सकलेऽष्टाशीतिका स्तम्भका
माण्डं भूत्रितये च सार्द्धशरभूः स्याच्छ्रीनिवास गृहम् ॥
मध्ये स्तम्भशतञ्च भागसमके भित्तिश्चतुर्द्वारकं
सप्तांशाद्रिशरांशरामसहितंभद्रं चतुस्त्रिंशता ।
षट्त्रिंशत् द्विशती च ते तु सकलः स्तम्भाः क्षितौ पूर्व्वतो
नाम्ना तत् कमलोद्भवञ्च कथितं भूम्यर्द्धसप्ता-न्वितम् ॥
हर्म्यस्योदयकं विभज्य नवधा कुम्भी भवेद्भागतः
पादोनं भरणं शिरश्च कथितं पट्टः सपादो भवेत् ।
स्तम्भः पञ्चपदोनभाग उदितः कोणाष्टवृत्तस्तथा
भागार्द्धेन जयन्तिका निगदिता सा तन्त्रकस्यो परि ॥
गृहस्योदयं दिग्विभागैर्विभाज्यं
द्विभागेन कक्षासनं वेदिका स्यात् ।
स्तम्भैर्द्वादशभिश्च मध्यरचितः कोणेषु कूपान्वितः
कर्त्तव्यो जलयन्त्र एष विधिवत भोगाय भूमी-भुजाम् ॥
तस्यां चम्पककुन्दजातिसुमनोवल्ल्यः सुनि-र्व्वालुका
जातीहेमसमानकेतकिरपि श्वेता तथा पाटला ।
नारङ्गः करणा वसन्तलतिका चारक्तपुष्पादिकं
जम्बीरो वदरी च पूगमधुका जम्बूश्च चूतद्रुमाः ॥
मालूरः कदली च चन्दनवटावश्वत्थपथ्याशिवा-
चिञ्चाशोककदम्बनिम्बतरवःखर्ज्जूरिका दाडिमी ।
कर्पूरागुरुकिंशुका हयरिपुः पुन्नागको निम्बुकी
प्रोक्ता नागलता च बीजनिभृता स्यात् तिन्दुकी लाङ्गली ॥
द्राक्षैला शतपत्रिका च वकुला धत्तूरकंकोलकौ
शालस्तालतमालकौ मुनिवरो मन्दारपारि-द्रुमौ ।
द्वारतः
कर्त्तव्या सुदृढोन्नता च कलसैर्घण्टादिभि-र्भूषिता ।
संकीर्णो रसनो नगैर्निगदितो मन्दा मृगा-श्चाष्टतः
सर्वेषूत्तमभद्रजातिरुदितो नन्दैः करैरुच्छ्रितः ॥
इति गजशाला ॥ * ॥
“अष्टोत्तरहस्तशतं पृथुत्वे
नृपालयं चोत्तममेव तस्मात् ।
अष्टाभिरष्टाभिरतो विहीनं
पञ्चैव भागाधिकतोऽपि दैर्घ्ये ॥
अशीतितो रागकरैश्च हीनाः
पञ्चालया भूपसुतप्रियाश्च ।

त्रिभागदैर्घ्येऽधिकतो विधेया
गृहाः क्रमेर्णव यथोदिताश्च ॥
प्रोक्तं चतुःषष्टिकरं पृथुत्वे
क्रमेण षड्भिश्च करैर्विहीनम् ।
षड्भागतो दैर्घ्य मतोऽधिकं स्या-
द्वलाधिपस्यैव च पञ्चवृद्धैः ॥
षष्ट्या हस्तैर्मन्त्रिगेहं पृथत्वे
हीनं हीनं पञ्चकं वेदवेदैः ।
कुर्य्याद्धस्तैरष्टमांशोऽधिकोऽसौ
व्यामादग्रे वर्द्धितो दैर्घ्य एव ॥
सामन्तादिकभूपतेश्च भवनं विध्यब्धिहस्तैः
समं
हस्तैर्वेदविहीनकैः क्रमतया भागाधिकं
दैर्घ्यतः ।
दैवज्ञञ्च सभासदस्य गुरुतः पौरोधमं भैषजं
विंशत्यष्टकरं द्विहस्तरहितं दैर्घ्ये द्विधा तद्-
भवेत् ॥
वेश्याकञ्चुकिशिल्पिनामपिगृहे वेदाधिका
विशति-
र्मानं हस्तचतुष्टयैर्विरहितं दैर्घ्येऽधिका
व्यासतः ।
हर्म्म्यं द्यूतकरान्तिकस्य रचितो हस्तैः समं
विस्तरे
हीनं त्वर्द्धकरेण पञ्चकमिदं तुर्य्यांशदैर्घ्याधि-
कम् ॥
द्वात्रिंशता मानमिदं द्विजादे-
र्हीनं चतुर्भिः क्रमतो विधेयम् ।
दिगष्टरागाब्धिविभागतश्च
क्रमेण तद्वर्णचतुष्टयेऽपि ॥
कर्णाधिकं विस्तरतोऽधिकञ्च
शीघ्रं विनाशं समुपैति गेहम् ।
द्वारं नतं मूर्द्ध्नि यदाग्रतश्च
तत् सन्ततेर्हानिकरं प्रदिष्टम् ॥
व्यासे सप्ततिहस्तवियुक्ते
शालामानमिदं मनुभुक्ते ।
पञ्चत्रिंशत् पुनरपि तस्मिन्
मानमुशन्ति लघोरिव वृद्धाः ॥
एकं द्वारं प्राङ्मुखं शोभनं स्यात्
चातुर्वक्त्रं धातृभूपेशजैने ।
"ब्राह्मणैः
शिल्पिभिर्यन्त्रैर्यवसेनोदकेन च ॥")
तत्पपर्य्यायः । कारुः २ । इत्यमरः
॥ अस्य विव-
रणं शिल्पकारशब्दे द्रष्टव्यम् ।
शिल्पसम्बन्धी
च ॥

**शिवं**, क्ली, (शी + "सर्व्वनिघृष्वरिष्वलष्वशिव-
पद्वप्रह्वेष्वा अतन्त्रे ।" उणा० १ ।
१५३ । वन्
प्रत्ययेन साधु ।) मङ्गलम् । इत्यमरः
॥ (यथा,
रघुः । १६० ।
"उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य
मे ।
दैवीनां मानुषीनाञ्च प्रतिहर्त्ता
त्वमापदाम् ॥"
सुस्वम् । जलम् । इत्युणादिकोषः ॥
मैन्धवम् ।
समुद्रलवणम् । श्वेतटङ्कणम् । इति
राज-
निर्घण्टः ॥ (मङ्गलवति, त्रि ॥ यथा,
महा-
भारते । १ । २०८ । ३६ ।
"तत्र रम्ये शिवे देशे कौरवस्य
निवेशनम् ॥")

**शिवः**, पुं, (शी + "सर्वनिघृष्वेति ।" उणा० १ । १५३
इति वन्प्रत्ययेन साधुः ।) ब्रह्मणः
संज्ञाविशेषः ।
तस्य व्युत्पत्तिर्यथा । शिवं कल्याणं
विद्यतेऽस्य
शिवः । श्यति अशुभमिति वा ।
शेरतेऽवतिष्ठन्ते
अणिमादयोऽष्टौ गुणा अस्मिन् इति
वा शिवः ।
इत्यमरटीकायां भरतः ॥ तत्पर्य्यायः
। शम्भुः २
प्रियतमः १०३ विषमाक्षः १०४ भद्रः १०५
ऊद्‌र्ध्वरेताः १०६ यमान्तकः १०७
नन्दीश्वरः १०८
अष्टमूर्त्तिः १०९ अर्घीशः ११० खेचरः
१११
भृङ्गीशः ११२ अर्द्धनारीशः ११३
रसनायकः ११४ ।
इति शब्दरत्नावली ॥ उः ११५ पिनाक-
पाणिः ११६ फणधरधरः ११७
कैलासनिके-
तनः ११८ हिमाद्रितनयापतिः ११९ । इति
कविकल्पलता ॥ तस्य सहस्रनामानि
श्रीमहा-
भारते अनुशासनपर्व्वणि १७ अध्याये द्रष्ट-
व्यानि ॥ * ॥ अस्य कपालिनामककारणं
यथा, --
ईश्वर उवाच ।
"आसीत्तत्र वरारोहे ब्रह्मणस्तु शिरोऽपरम् ।
पञ्चमं शृणु सुश्रोणि जातं काञ्चनसुप्रभम् ॥
ज्वलन्तं परमं शीर्षं जातं तस्य महात्मनः ।
स एवमब्रवीद्देवि ! जन्म जानामि ते ह्यहम् ॥
अतः क्रोधपरीतेन संरक्तनयनेन च ।
वामाङ्गुष्ठनखाग्रेण छिन्नं तस्य शिरो मया ॥
ब्रह्मोवाच ।
यस्मादनपराधेन शिरश्छिन्नं त्वया मम ।
तस्माच्छापसमायुक्तः कपालीत्वं भविष्यसि
॥"
इति मात्स्ये १८५ अध्यायः ॥ * ॥
अथ शिवमन्त्राः । तत्र एकाक्षरमन्त्रो यथा, --
"सान्तमौकारसंयुक्तं बिन्दुभूषितमस्तकम् ।
प्रासादाख्यो मनुः प्रोक्तो भजतां कामदो
मणिः ॥" हौ ॥ * ॥
अस्य पूजा । प्रातःकत्यादिमातृकान्यासं
प्राणा-
यामञ्च विधाय श्रीकण्ठादिन्यासं मातृका-
स्थानेषु कुर्य्यात् । ततः
सामान्यपूजापद्धत्युक्त-
पीठन्यासं कृत्वा पीठशक्तीर्न्यसेत । ततः
ऋष्यादिन्यासः । ततः कराङ्गन्यासौ । ततः

युग्मं प्राच्यां पश्चिमे स्यात्त्रिकेषु
मूलं द्वारं दक्षिणे वर्ज्जनीयम् ॥”
इति वास्तुशास्त्रे राजवल्लभमण्डने वाजगृहा-
दिल क्षणं नाम नवमोऽध्यायः ॥ * ॥

**शिल्पिका**, स्त्री, तृणविशेषः । लहानसिपी इति
हिन्दीभाषा । तत्पर्य्यायः । शिल्पिनी २
शीता
३ क्षेत्रजा ४ मृदुच्छदा ५ । अस्या गुणाः ।
मूत्ररोधाश्मरीशूलज्वरपित्तापहारकत्वम्।
इति
राजनिर्घण्टः ॥

**शिल्पिनी**, स्त्री, कोलदलौषधिः । इति मेदिनी

**शिल्पिशाला**, स्त्री, क्ली, (शिल्पिनां शाला ।)
शिल्पशाला । इत्यमरटीकायां स्वामी ॥

**शिल्पी**, [न्] त्रि, (शिल्पं क्रियाकौशलमस्यास्तीति
इनि ।) शिल्पकर्त्ता । (यथा, मनौ । ७ । ७५
।

ईशः ३ पशुपतिः ४ शूली ५
महेश्वरः ६ ईश्वरः
७ सर्व्वः ८ ईशानः ९ शङ्करः १०
चन्द्रशेखरः
११ भूतेशः १२ खण्डपरशुः १३
गिरीशः १४
गिरिशः १५ मृडः १६ मृत्युञ्जयः
१७ कृत्ति-
वासाः १८ पिनाकी १९ प्रमथाधिपः
२० उग्रः २१
कपर्द्दी २२ श्रीकण्ठः २३
शितिकण्ठः २४
कपालभृत् २५ वामदेवः २६
महादेवः २७
विरूपाक्षः २८ त्रिलोचनः २९
कृशानरेताः ३०
सर्व्वज्ञः ३१ धूर्ज्जटिः ३२
नीललोहितः ३३
हरः ३४ स्मरहरः ३५ भर्गः ३६
त्र्यम्बकः ३७
त्रिपुरान्तकः ३८ गङ्गाधरः ३९
अन्धकरिपुः ४०
क्रतुध्वंसी ४१ वृषध्वजः ४२
व्योमकेशः ४३
भवः ४४ भीमः ४५ स्थाणुः ४६
रुद्रः ४७
उमापतिः ४८ । इत्यमरः ॥
वृषपर्व्वा ४९
रेरिहाणः ५० भगाली ५१
पांशुचन्दनः ५२
दिगम्बरः ५३ अट्टहासः ५४
कालञ्जरः ५५
पुरद्विट् ५६ वृषाकपिः ५७
महाकालः ५८
वराकः ५९ नन्दिवर्द्धनः ६० हीरः
६१ वीरः ६२
खरुः ६३ भूरिः ६४ कटप्रूः ६५
भैरवः ६६
ध्रुवः ६७ शिविपिष्टः ६८ गुडाकेशः
६९ देव-

ईशानाद्याः पञ्चमूर्त्तीर्न्यसेत् । शूद्रस्तु
एतत्पर्य्यन्तं
न्यासं कृत्वा ध्यायेत् । अन्यत्रानधिकारात्।
तत ऊद्‌र्ध्वप्राग् दक्षिणोत्तरपश्चिमेषु मुखेषु
ईशा-
नस्य पञ्चकलाः पञ्च ब्रह्म ऋचः पदादिकाः
प्रणावाद्या नमोऽन्ता न्यसेत् । ततः
पूर्वपश्चिम-
दक्षिणोत्तरेषु तत्पुरुषस्य चतस्रः कला विन्य-
सेत् । ततो हृदये ग्रीवायां अंशद्वये नाभौ
कुक्षौ पृष्ठे वक्षसि अघोरस्याष्टौ कलाः न्यसेत्
।
ततो गुह्ये अण्डकोषे ऊरुद्वये जानुद्वये जङ्घा-
द्वये कुक्षिद्वये कट्यां पार्श्वयोः वामदेवस्य
त्रयोदशकलाः विन्यसेत् । ततः पार्श्वयोः
स्तनयोर्नासिकायां मूद्‌र्ध्नि बाहुयुग्मे सद्यो
जातस्याष्टौ कला न्यसेत् । ततः पञ्चाङ्गुलीषु
ईशानाद्याः पञ्च ऋचो न्यसेत् । एवं मूर्द्धास्य
हृदयगुह्यपादेष्वेता ऋचो न्यसेत् । ततोऽङ्ग-
न्यासान्तरं कुर्य्यात् । एवं विन्यस्य ध्यायेत् ।
“मुक्तापीतपयोदमौक्तिकजवावर्णैर्मुखैः
पञ्चभि-
स्त्र्यक्षैरञ्चितमीशमिन्दुमुकुटं पूर्णेन्दुकोटि-
प्रभम् ।
शूलं टङ्ककृपाणवज्रदहनान्नागेन्द्रघण्टाङ्कुशान्
पाशं भीतिहरं दधानममिताकल्पोज्ज्वलाङ्गं
भजे ॥”

| | | |
|---|---|---|
| | देवः ७० महानटः ७१ । इति<br>जटाधरः ॥<br>तीव्रः ७२ खण्डपर्शुः ७३ पञ्चाननः<br>७४ कण्ठे-<br>कालः ७५ भरुः ७६ भीरुः ७७<br>भीषणः ७८<br>कङ्कालमाली ७९ जटाधरः ८०<br>व्योमदेवः ८१<br>सिद्धदेवः ८२ धरणीश्वरः ८३<br>विश्वेशः ८४<br>जयन्तः ८५ हररूपः ८६<br>सन्ध्यानाटी ८७<br>सुप्रसादः ८८ चन्द्रापीडः ८९<br>शूलधरः ९०<br>वृषाङ्कः ९१ वृषभध्वजः ९२<br>भूतनाथः ९३<br>शिपिविष्टः ९४ वरेश्वरः ९५<br>विश्वेश्वरः ९६<br>बिश्वनाथः ९७ काशीनाथः ९८<br>कुलेश्वरः ९९<br>अस्थिमाली १०० विशालाक्षः<br>१०१ हिण्डी १०२ | |

एवं ध्यात्वा मानसैः संपृज्य
अर्घ्यस्थापनं कृत्वा
शैवोक्तपीठपूजां विधाय पुनर्ध्यात्वा
आवाह-
नादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं कृत्वा
आवरण-
पूजां विधाय धूपादिविसर्ज्जनान्तं कर्म्म
समा-
पयेत् । अस्य पुरश्चरणं पञ्चलक्षजपः ॥
१ ॥ * ॥
अस्याष्टाक्षरमन्त्रो यथा, --
"षडक्षरः शक्तिरुद्धः कथितोऽष्टाक्षरो
मनुः ॥"
ह्रौँ ॐ नमः शिवाय ह्रौँ । अस्य पूजा ।
प्रातः-
कृत्यादिशैवोक्तं पीठमन्वन्तं न्यासं
विधाय
ऋष्यादिन्यासकराङ्गन्यासान्
प्राणायामञ्च कृत्वा
ध्यायेत् ।
"बन्धुकाभं त्रिनेत्रं शशिशकलधरं
स्मेरवक्त्रं वहन्तं
हस्तैः शूलं कपालं वरदमभयदं
चारुहासं
भजामि ।
वामोरूस्तम्भगायाः
करतलविलसच्चारुरक्तोत्-
पलाया
हस्तेनाश्लिष्टदेहं
मणिमयविलसद्भूषणायाः
प्रियायाः ॥"
एवं ध्यात्वा मानसैः संपूज्यार्घ्यस्थापनं
कृत्वा
शैवोक्तपीठपूजां विधाय पुनर्ध्यात्वावाह्य
पञ्च-
पुष्पाञ्जलिदानपर्य्यन्तं विधायावरणपूजां
कृत्वा
धूपदानादिविसर्ज्जनान्तं कर्म्म
समापयेत् । अस्य

कान्त्या विश्वविमोहनं पशुपतिं मृत्युञ्जयं
भावये ॥"
एवं ध्यात्वा मानसैः सम्पूज्यार्घ्यस्थापनं
कृत्वा
पीठमन्वन्तां पीठपूजां विधाय
पुनर्ध्यात्वावाह-
नादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं कृत्वा
आवरण-
पूजां विधाय धूपादिविसर्ज्जनान्तं कर्म्म
समा-
पयेत् । अस्य पुरश्चरणं लक्षत्रयजपः ॥ ४ ॥
* ॥
अथास्यापरद्वादशाक्षरमृत्युञ्जयमन्त्रः ।
"मृत्युञ्जयं समुच्चार्य्य पालय द्वितयं वदेत् ।
मृत्युञ्जयं समुच्चार्य्य पुनरेव विलोमतः ॥
द्वादशाक्षरोऽयं मन्त्रः स्यात् मृत्युञ्जयाभिधो-
ऽपरः ।"
ॐ जुँ सः पालय पालय ॐ जुँ सः । अस्य
ध्यानपूजादिकं सर्वं पूर्ववत् ॥ ५ ॥ * ॥
अस्य
द्वाविंशत्यक्षरमन्त्रः ।
"प्रणवो हृदयं पश्चात् ततो भगवते पदम् ।
ङेऽन्तञ्च दक्षिणामूर्त्तिं मह्यं मेधामुदीरयेत् ।
प्रयच्छ ठद्वयान्तोऽयं द्वाविंशत्यक्षरो मनुः ॥"
ॐ नमो भगवते दक्षिणामूर्त्तये मह्यं मेघां
प्रयच्छ स्वाहा । अस्य पूजा । प्रातःकृत्यादि-
शैवोक्तपीठमन्वन्तं विन्यस्य ऋष्यादिन्यासं
कराङ्गन्यासौ च कृत्वा ध्यायेत् ।
"वटवृक्षं महोच्छ्रायं पद्मरागफलोज्ज्वलम् ।
गारुत्मतमयैः पत्रैर्विचित्रैरुपशोभितम् ॥
नवरत्नमहाकल्पैर्लम्बमानैरलङ्कृतम् ।
विचिन्त्य वटमूलस्थं चिन्तयेल्लोकनायकम् ॥
स्फटिकरजतवर्णम्मौक्तिकीमक्षमाला-
ममृतकलसविद्याज्ञानमुद्राः कराब्जैः ।
दधतमुरगकक्षं चन्द्रचूडं त्रिनेत्रं
विधृतविविधभूषं दक्षिणामूर्त्तिमीडे ॥"
एवं ध्यात्वा मानसैः सम्पूज्य
अर्घ्यस्थापनादि-
शैवोक्तपीठपूजां विधाय पुनर्ध्यात्वावाहनादि-

अस्य पुरश्चरणं लक्षजपः । अयं
अर्द्धनारी-
श्वरः ॥ ७ ॥ * ॥
"पार्श्वो वह्निसमारूढस्तारवानाद्यमीरितम्
।
धान्तो वह्निसमारूढस्तूर्य्यस्वरसमन्वितः
॥
बिन्दुमांस्तु द्वितीयः स्यात् टान्तः सर्गी
तृती-
यकः ।
नीलकण्ठात्मको मन्त्रो विषद्वयहरः परः
॥"
प्रमाणान्तरम् ।
"लोहितोऽग्न्यासनः सत्यो बिन्दुमान् प्रय
पुनः ।
द्वितीया वह्निबीजस्था दीर्घा
शान्तीन्दुभूषिता ॥
तृतीया लाङ्गली सर्गी मन्त्रो
बीजत्रयात्मकः ।
नीलकण्ठात्मको मन्त्रो विषद्वयहरः परः
॥"
प्रौँ ञ्रीँ ठः इति मन्त्रः । अस्य पूजा । प्रातः
कृत्यादिशैवोक्तपीठन्यासान्तं कृत्वा
ऋष्यादि-
न्यासं कराङ्गन्यासौ च विधाय ध्यानं
कुर्य्यात् ।
"बालार्कायुततेजसं
धृतजटाजूटेन्दुखण्डोज्ज्वलं
नागेन्द्रैः कृतशेखरं जपवटीं शूलं कपालं
करैः ।
खट्वाङ्गं विधृतं त्रिनेत्रविलसत्पञ्चाननं
सुन्दरं
व्याघ्रत्वक्परिधानमब्जनिलयं
श्रीनीलकण्ठं
भजे ॥"
एवं ध्यात्वा मानसैः संपूज्य
अर्घ्यस्थापनादि-
शैवोक्तपीठपूजां विधाय पुनर्ध्यात्वा
आवाह-

पुरश्चरणं चतुर्द्दशलक्षजपः ॥ २ ॥ * ॥
तस्या-
ष्टाक्षरमन्त्रान्तरं यथा, --
"तारो माया
वियद्बिन्दुमनुस्वारविभूषितम्।
पञ्चाक्षरममायुक्तो वसुवर्णो मनुर्म्मतः ॥"
ॐ ह्रीँ हौँ नमःशिवाय । अस्य पूजा ।
प्रातः-
कृत्यादिशैवोक्तपीठन्यासान्तं विधाय
पूर्व्ववदृष्या-
दिन्यासं कराङ्गन्यासौ च कृत्वा ध्यायेत्
।
"वन्दे सिन्दूरवर्णं
मणिमुकुटलसच्चारुचन्द्रावतंसं
भालोद्यन्नेतमीशं स्मितमुखकमलं
दिव्यभूषाङ्ग-
रागम् ।
वामोरुन्यस्तपाणेररुणकुवलयं
संदधत्याः
प्रियाया-
श्चण्डोत्तुङ्गस्तनाग्रे न्निहितकरतटं
वेदटङ्केऽष्ट-
हस्तम् ॥"
एवं ध्यात्वा मानसैः संपूज्यार्घ्यस्थापनं
कृत्वा
पीठपूजां विधाय
पुनर्ध्यात्वावाहनादिपञ्चपुष्पा-
ञ्जलिदानपर्य्यन्तं विधाय आवरणपूजां
कृत्वा
धूपादिविसर्ज्जनान्तं कर्म्म समापयेत् ।
अस्य
पुरश्चरणमष्टलक्षजपः ॥ ३ ॥ * ॥
अथास्य मृत्यु-
ञ्जयाख्यमन्त्रः ।
"तारं स्थिरा सकर्णेन्दुर्भृगुः
सर्गसमन्वितः ।
त्र्यक्षरात्मा निगदितो मन्त्रो
मृत्युञ्जयात्मकः ॥"
ॐ जुँ सः । अस्य पूजा ।
प्रातःकृत्यादिशैवोक्त-
पञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधायावरणपूजां
कृत्वा धूपादिविसर्ज्जनान्तं कर्म्म समापयेत्
।
अस्य पुरश्चरणं लक्षजपः ॥ ६ ॥ * ॥
अथास्य
मन्त्रान्तरम् ।
"अग्निसम्बर्त्तकादित्यरानिलौषष्ठबिन्दुमत् ।
चिन्तामणिरिति ख्यातं बीजं सर्व्वसमृद्धिदम्
॥"
र-क्ष म-र य-औ ॐ ॥ प्रपञ्चसारे ।
"अनलक-ष-मरेफ-प्राणसत्यान्तवाम-
श्रुतिहिमरुचिखण्डैर्म्मण्डितो मन्त्रराजः ।"
अस्य पूजा ।
प्रातःकृत्यादिशैवोक्तपीठमन्वन्तं
विन्यस्य ऋष्यादिन्यासं कराङ्गन्यासौ च
कृत्वा
ध्यायेत् ।
"नीलप्रबालरुचिरं विलसत्त्रिनेत्रं
पाशारुणोत्पलकपालकशूलहस्तम्।
अर्द्धाम्बिकेशमनिशं प्रविभक्तभूषं
बालेन्दुबद्धमुकुटं प्रणमामि रूपम् ॥"
एवं ध्यात्वा मानसैः संपूज्यार्घ्यं संस्थाप्य
शैवोक्तपीठपूजां विधाय पुनर्ध्यात्वावाहनादि-
पञ्चपुष्पाञ्जलिदानपर्य्यन्तं कृत्वा
आवरणपूजां
विधाय धूपादिविसर्ज्जनान्तं कर्म्म समापयेत्
।
नादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं कृत्वा
आवरण-
पूजां विधाय धूपादिविसर्ज्जनान्तं कर्म्म
समा-
पयेत् । अस्य पुरश्चरणं त्रिलक्षजपः । अयं
नीलकण्ठः ॥ ८ ॥ * ॥ अस्याष्टाक्षरमन्त्रो
यथा--
"तारो हृन्नीलकण्ठाय मन्त्रश्चाष्टाक्षरः
परम् ।
ॐ नमो नीलकण्ठाय । अस्य पूजादिकं
सर्व्वं
पूर्व्ववत् ॥ ९ ॥ * ॥ अस्य पञ्चाक्षरमन्त्रः
षड-
क्षरमन्त्रश्च यथा, --
"हृदयं वपरं साक्षिन् लान्तोऽनन्तान्वितो
मरुत् ।
पञ्चाक्षरो मनुः प्रोक्तस्ताराद्योऽयं षडक्षरः
॥"
नमः शिवाय । ॐ नमः शिवाय । अस्य
पूजा ।
प्रातःकृत्यादिशैवोक्तपीठमन्वन्तं न्यासं
विधाय
ऋष्यादिन्यासं कुर्य्यात् । ततो
मूर्त्तिन्यासः ।
ततः कराङ्गन्यासौ । ततो गोलकन्यासः ।
ततो
व्यापकन्यासं प्राणायामञ्च कृत्वा ध्यायेत्
।
"ध्यायेन्नित्यं महेशं रजतगिरिनिभं
चारुचन्द्रा-
वतंसं
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्त
प्रसन्नम् ।
पद्मासीनं समन्तात्
स्तुतममरगणैर्व्याघ्रकृत्तिं
वसानं
विश्वाद्यं विश्वबीजं निखिलभयहरं
पञ्चवक्त्रं
त्रिनेत्रम् ॥"
एवं ध्यात्वा मानसैः सम्पूज्यार्घ्यस्थापनं
कृत्वा

| पीठन्यासान्तं विधाय ऋष्यादिन्यासं कराङ्ग-<br>न्यासौ च कृत्वा ध्यायेत् ।<br>“चन्द्रार्क्काग्निविलोचनं स्मितमुखं पद्मद्वयन्तः-<br>स्थितं<br>मुद्रापाशमृगाक्षसूत्रविलसत्पार्णिहिमांशु-<br>प्रभम् ।<br>कोटीरेन्दुगलत्सुधाप्लुततनुं<br>हारादिभूषोज्ज्वलं | | शैवोक्तपीठपूजां विधाय<br>पुनर्ध्यात्वावाहनादि-<br>पञ्चपुष्पाञ्जलिदानपर्य्यन्तं<br>विधायावरणपूजां<br>कृत्वा धूपादिविसर्ज्जनान्तं कर्म्म<br>समापयेत् । |
|---|---|---|

अस्य पुरश्चरणं षट्त्रिंशल्लक्षजपः ॥ १० ॥ * ॥
अथास्य त्र्यक्षरमन्त्रः ।
"अर्घीशो वह्निशिखरो लान्तस्थो दान्त ईरीतः
फडन्तश्चण्डमन्त्रोऽयं त्रिवर्णात्मा समीरितः ॥"
ऊद्ध्र्व फट् इति मन्त्रः । अस्य पूजा । प्रातः-
कृत्यादिशैवोक्तपीठन्यासान्तं विधाय ऋष्यादि-
न्यासं कराङ्गन्यासौ च कृत्वा ध्यायेत् ।
"चण्डेश्वरं रक्ततनुं त्रिनेत्रं
रक्तांशुकाढ्यं हृदि भावयामि ।
टङ्कं त्रिशूलं स्फटिकाक्षमालां
कमण्डलुं विभ्रतमिन्दुचूडम् ॥"
एवं ध्यात्वा मानसैः संपूज्यार्घ्यस्थापनादिशैवो
क्तपीठपूजान्तं विधाय ठमिति बीजेन मूर्त्तिं
संकल्प्य
पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदान
पर्य्यन्तं विधायावरणपूजां कृत्वा
धूपादिविसर्ज्ज-
नान्तं कर्म्म समापयेत् । अस्य पुरश्चरणं
त्रिलक्षजपः । अयं चण्डेश्वरः ॥ ११ ॥ इति
तन्त्रसारे शिवमन्त्राः ॥ * ॥ * ॥ विष्णुशिवयोर-
भेदो यथा, --
वराह उवाच ।
"शिवो मे दक्षिणं स्थानं तिष्ठते विगतज्वरः ।
लोकानां प्रवरः श्रेष्ठः सर्व्वलोकवरो हरः ॥
तं ये विन्दन्ति ते देवि ! नूनं मामेव विन्दति ।
ये मां विन्दति देवेशि ! ते विन्दन्ति शिवं
परम् ॥
अहं यत्र शिवस्तत्र शिवो यत्र वसुन्धरे ।
अहं तत्रापि तिष्ठामि आवयोर्नान्तरं क्वचित् ॥
शिवं यो वन्दते भूमे ! स हि मामेव वन्दते ।
लभते पुष्कलां सिद्धिमेवं यो वेत्ति तत्त्वतः ॥"
इति वाराहे शालग्रामक्षेत्रमाहात्म्यवर्णननामा-
ध्यायः ॥ * ॥ देवीविष्णुशिवानामभेदो यथा, --
"अयं नारायणो गौरी जगन्माता सनातनः ।
विभज्य संस्थितो देवः स्वात्मनं बहुधेश्वरः ॥
न मे विदुः परं मत्त्वं देवाद्या न महर्षयः ।
एकोऽयं देवदेवात्मा भवानी विष्णुरेव च ॥
अहं हि निष्क्रियः शान्तः केवलो निष्परिग्रहः
मामेव केशवं देवमाहुर्देवीमथाम्बिकाम् ॥"

आत्मन्यात्मानमावेश्य भूत्वा देवो
महेश्वरः ।
दहेदशेषं ब्रह्माण्डं सदेवासुरमानुषम् ॥
तमावेश्य महादेवो भगवान्नीललोहितः
।
करोति लोकसंहारं भीषणं
लोकमाश्रितः ॥
प्रविश्य मण्डलं घोरं कृत्वासौ बहुधा
पुनः ।
निर्द्दहत्यखिलं लोकं
सप्तमूर्त्तिस्वरूपधृक् ॥
स दग्ध्वा सकलं सत्त्वमस्त्रं ब्रह्मशिरो
महत् ।
देवतानां शरीरेषु क्षिपत्यखिलदाहकः
॥
दग्धेष्वशेषदेहेषु देवी गिरिवरात्मजा ।
एषा सा साक्षिणः शम्भोस्तिष्ठते
वैदिकी श्रुतिः
शिवः कपालैर्द्देवानां कृतस्रग्वरभूषणः
।
आदित्यचन्द्रादिगणैः
पूरयन्व्योममण्डलम् ॥
सहस्रनयनो देवः सहस्राकृतिरीश्वरः
।
सहस्रहस्तचरणः
सहस्रार्च्चिर्म्महाभुजः ॥
दंष्ट्राकरालवदनः प्रदीप्तानललोचनः ।
त्रिशूलं कृत्तिवसनो
योगमैश्वरमास्थितः ॥
पीत्वा तत् परमानन्दं प्रभूतममृतं
स्वकम् ।
करोति ताण्डवं देवमालोक्य
परमेश्वरः ॥
पीत्वा नृत्यामृतं देवी भर्त्तुः परममङ्गला
।
योगमास्थाय देवस्य देहमायाति
शूलिनः ॥
स भुक्त्वा ताण्डवरसं स्वेच्छयैव
पिनाकधृक् ।

ज्योतिर्म्मयस्य भागो
मेऽनेकोऽनेकोऽहमंशकः ॥
कस्त्वं कोऽहञ्च को ब्रह्मा ममैव
परमात्मनः ।
अंशत्रयमिदं भिन्नं सृष्टिस्थित्यन्तकारणम्
॥
चिन्तयन् स्वात्मनात्मानं सम्भवं कुरु
चात्मनि ।
एकत्वं ब्रह्मवैकुण्ठशम्भूनां हृद्गतं कुरु ॥
शिरोग्रीवादिभेदेन यथैवैकस्य धर्म्मिणः ।
अङ्गानि मे तथैकस्य भागत्रयमिदं हर ॥
यज्ज्योतिरूयं स्वपरप्रकाशं
कूटस्थमव्यक्तमनन्तरूपम् ।
नित्यञ्च दीर्घादिविशेषणाद्यै-
र्हीनं परं तच्च वयं न भिन्नाः ॥"
इति कालिकापुराणे ११ अध्यायः ॥
अपि च ।
"ततो ब्रह्मा च शारीरं त्रिधा चक्रे महेश्वर
।
प्रधानेच्छाबलाच्छम्भो त्रिगुणं
त्रिगुणीकृतम् ॥
तदूद्र्ध्वभागः
संजातश्चतुर्वक्त्रश्चतुर्भुजः ।
पद्मकेशरगौराङ्गकायो ब्रह्मा महेश्वर ॥
तन्मध्यभागो नीलाङ्ग एकवक्त्रश्चतुर्भुजः
।
शङ्खचक्रगदापद्मपाणिः कायः स वैष्णवः
॥
अभवत्तदधोभागः पञ्चवक्त्रश्चतुर्भुजः ।
स्फटिकाभ्रसमः कायः शुक्लः स
चन्द्रशेखरः ॥
ईशस्ततो ब्रह्मकाये सृष्टिशक्तिं
न्ययोजयत् ।
स्वयमेवाभवत् सृष्टा ब्रह्मरूपेण लोकभृत्
॥
स्थितिशक्तिं निजां मायां प्रकृत्याख्यां
न्ययो-
जयत् ।

इति कौर्म्मे १४ अध्यायः ॥ * ॥
शिवनिन्दानिषेधो यथा, --
“परात् परतरं यान्ति नारायणपरा जनाः ।
न ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरम् ॥
ध्यानं होमस्तपस्तप्तं ज्ञानं यज्ञादिको विधिः
तेषां विनश्यति क्षिप्रं ये निन्दन्ति पिनाकिनम्
यो मां समाश्रयेन्नित्यमेकान्तं भावमाश्रितः ।
विनिन्दन्देवमीशानं स याति नरकायुतम् ॥
तस्मात् सा परिहर्त्तव्या निन्दा पशुपतेर्द्विज ।
कर्म्मणा मनसा वाचा तद्भक्तेष्वपि यत्नतः ॥”
इति कौर्म्मे २५ अध्यायः ॥ * ॥
तस्य प्रलयकारकत्वं यथा, --
“गते परार्द्धद्वितये काले लोकप्रकालकः ।
कालाग्निर्भस्मसात् कर्त्तुं करोति निखिलं
मतिम ॥
याति स्वभावं भगवान् दग्ध्वा
ब्रह्माण्डमण्डलम्
संस्थितेष्वथ देवेषु ब्रह्मविष्णुपिनाकिषु
।
गुणैरनेकैः पृथिवी विलयं याति वारिषु
॥
सवारितत्त्वं सगुणं ग्रसते हव्यवाहनः ।
तेजःस्वगुणसंयुक्तं वायौ संयाति
संक्षयम् ॥
आकाशे सगुणो वायुः प्रलयं याति
संक्षयम् ।
भूतादौ च तथाकाशं लीयते
गुणसंयुतम् ॥
इन्द्रियाणि च सर्वाणि तैजसे यान्ति
संक्षयम् ।
वैकारिके देवगणा प्रलयं यान्ति
सत्तमाः ॥
वैकारिकास्तेजसश्च भूतादिश्चेति
सत्तमाः ।
त्रिविधोऽयमहङ्कारो महते प्रलयं व्रजेत्
॥
महान्तमेभिः सहितं
ब्राह्मणममितौजसम्।
अव्यक्तं जगतो योनिः संहरेदेकमव्ययः
॥
एवं संहृत्य भूतानि तत्त्वानि च
महेश्वरः ।
वियोजयत्यथान्योन्यं प्रधानं पुरुषं
परम् ॥
प्रधानपुंसोरजयोरेष संहार ईरितः ।
महेश्वरेच्छाजनितो न स्वयं विद्यते
लयः ।
गुणसाम्यं तदव्यक्तं प्रकृतिः परिगीयते
।
प्रधानं जगतो योनिराद्यतत्त्वमचेतनम्
॥
कूटस्थश्चिन्मयो ह्यात्मा केवलः
पञ्चविंशकः ।
गीयते मुनिभिः साक्षी महानेकः
पितामहः ॥
एवं संहारकरणी शक्तिर्माहेश्वरी ध्रुवा ।
महेशो वैष्णवे काये ज्ञानशक्तिं निजां तथा
॥
स्थितिकर्त्ता भवेद्विष्णुरहमेव महेश्वरः ।
सर्व्वशक्तिनियोगेन सदा तद्रूपता मम ॥
अन्तशक्तिं तथा काये शाम्भवे
संन्ययोजयत् ।
अन्तकर्त्ता भवेच्छम्भुः स एव परमेश्वरः
॥
ततस्त्रिषु शरीरेषु स्वयमेव प्रकाशते ।
ज्ञानरूपं परं ज्योतिरनादिर्भगवान् प्रभुः
॥
सृष्टिस्थित्यन्तकरणादेक एव महेश्वरः ।
ब्रह्मा विष्णुः शिवश्चेति संज्ञामपि पृथक्
पृथक् ॥
अतस्त्वञ्च विधाता च तथाहमपि न
पृथक् ।
एवं शरीरं रूपञ्च ज्ञानमस्माकमन्तरम् ॥”
इति तत्रैव १२ अध्यायः ॥ * ॥
मार्कण्डेय उवाच ।
“ततो ब्रह्माण्डसंस्थानं दर्शयामास
शम्भवे ।
ववृधे तोयराशिस्थ ब्रह्माण्डञ्च यथा पुरा
॥
तन्मध्ये पद्मगर्भाभं ब्रह्माणं जगतः पतिम्
।
ज्योतीरूपं प्रकाशार्थं सृष्ट्यर्थञ्च
पृथग्गतम्
शरीरिणं स ददृशे ब्रह्माण्डान्तर्गतं मुहुः ।
चतुर्भुजं प्रकाशन्तं ज्योतिर्भिः
कमलासनम् ॥
तत्रैव च त्रिधाभूतं वपुर्ब्राह्म्यं ददर्श स ।
ऊद्र्ध्वमध्यान्तभागैस्तु
ब्रह्मविष्णुशिवात्मकम् ॥
अथोर्द्धभागो वपुषो ब्रह्मत्वमगमत्तथा ।
मध्यस्तदा विष्णुभूतो ददर्शान्तस्य
शम्भुताम् ॥
एकमेव शरीरन्तु त्रिधाभूतं मुहुर्म्मुहुः ।
हरो ददर्श स्वे गर्भे तथा सर्वमिदं जगत् ॥
कदाचित् वैष्णवं कायं ब्राह्म्ये काये लयं
ब्रजेत् ।

| | | |
|---|---|---|
| | प्रधानञ्च विशेषान्तं दहेद्रुद्र इति श्रुतिः ॥<br>योगिनामथ सर्वेषां ज्ञानविन्यस्तचतसाम्।<br>आत्यन्तिकञ्चैव लयं विदधातीह शङ्करः ॥”<br>इति कौर्म्मे उपविभागे ४ ३ अध्यायः ॥ * ॥<br>ब्रह्मविष्णुशिवानामभेदो यथा, --<br>श्रीभगवानुवाच।<br>“न ब्रह्मा भवतो भिन्नो न शम्भुर्ब्रह्मणस्तथा।<br>न चाहं युवयोर्भिन्नो ह्यभिन्नत्वम् सनातनम् ॥<br>प्रधानस्याप्रधानस्य भागाभागस्य रूपिणः। | ब्राह्म्यं तथा वैष्णवे च शाम्भवं वैष्णवे तथा ॥ |

शाम्भवं वैष्णवे काये ब्राह्म्ये चाप्यथ
शाम्भवम् ।
गच्छन्तं लीनतां शम्भुरेकताञ्च मुहुर्म्मुहुः
॥
ददर्श वामदेवोऽपि भिन्नञ्चाप्यपृथग्गतम् ।
परमात्मनि गच्छन्तं लीनतां तद्वपुश्च यत्
॥"
इति कालिकापुराणे १३ अध्यायः ॥ * ॥
अस्य शरभरूपधारणकारणं यथा, --
"इति तेषां निगदतां श्रुत्वा वाक्यं
जनार्द्दनः ।
उवाच शङ्करं देवं ब्रह्माणञ्च विशेषतः ॥
यत्कृते देवताः सर्व्वाः प्रजाश्च सकला
इमाः ।
प्राप्नुवन्ति महद्दुःखं शीर्य्यते सकलं जगत्
॥
वाराहं सकलं कायं त्यक्तुमिच्छामि शङ्करः
।
त्वं त्याजयस्व तत् कायं यत्नात्मा
शङ्कराधुना ॥
त्वमाप्यायस्व तेजोभिर्ब्रह्मन् स्वरहरं मुहुः
।
आप्यायन्तु तदा देवाः शङ्करो हन्तु
पोत्रिणम् ॥
वासुदेवोऽपि तान् सर्व्वान् विसृज्य
त्रिदशां-
स्तदा ।
वाराहं तेजसा हर्त्तुं स्वयं ध्यानपरोऽभवत्
॥
शनैः शनैर्यदा तेज आहरत्येष माधवः ।
तदा देहन्तु वाराहं सत्त्वहीनं व्यजायत ॥
तेजोहीनं यदा देहं ज्ञातं सर्व्वैरथामरैः ।
आससाद महादेवो यज्ञवाराहमद्भुतम् ॥
ब्रह्माद्यास्त्रिदशाः सर्व्वे महादेवमुपापतिम्
।
अनुजग्मुस्तदा तेज आधातुं स्मरनाशने ॥
ततः सर्व्वैर्देवगणैः स्वं स्वं तेजो वृषध्वजे
।

कोऽन्यः प्रार्थयितुं शक्तः सुतां मम
विना
हरात् ॥
हरेणानुगृहीता या तामन्यः कः
समुत्सहेत् ।
हरं गृहीत्वा मनसा नान्यं सापीह
वाञ्छति ॥
इत्युक्त्वा मेनया सार्द्धं सुतां दातुञ्च
शम्भवे ।
अङ्गीकृत्य विसृष्टास्ते
मुनयोऽगुर्महेश्वरम् ॥
ते गत्वा मुनयः सर्वे मरीचिप्रमुखा
द्विजाः ।
शैलराजो यदाचष्ट तदूचुर्मदनारये ॥
हिमवांस्तनयां दातुं तुभ्यमुत्सहते हर ।
यदिदानीं त्वया कर्त्तुं युज्यते
क्रियतान्तु तत् ॥
अस्मांश्चाप्यनुजानीहि हर गन्तुं
निजास्पदम् ।
सिद्धं ज्ञात्वा हरः साध्यं मुदितस्तान्
विसृष्ट-
वान् ॥
यथायोग्यं समाभाष्य क्रमादेकैकशो
मुनीन् ॥
कालीविवाहदिवसे यूयमायात मां प्रति
।
इति चापि हरेणोक्तं प्रतिश्रुत्यर्षयो ययुः
॥
अथान्योन्यप्रियतया कृत्वा कृत्वा
गतागतम् ।
समयं कारयामास विवाहाय हरो
गिरिम् ॥
माधवे मासि पञ्चम्यां सितपक्षे गुरोर्द्दिने
।
चन्द्रे चोत्तरफल्गुन्यां भरण्यादौ स्थिते
रवौ ॥
आगता मुनयस्तत्र मरीचिप्रमुखा मुहुः
।

हिमवत्तनया भूत्वा पुनः प्राप महेश्वरम् ॥"
इति कालिकापुराणे ४३ ध्यायः ॥ * ॥
अस्य गणा यथा, --
पुलस्त्य उवाच ।
"हरोऽपि शम्बरे याते समाहूयाशु नन्दिनम् ।
प्राहामन्त्रय शैलादौ ये स्थितास्तव शासने ॥
ततो महेशवचनान्नन्दी सर्व्वगणाधिपः ।
उपस्पृश्य जलं धीमान् सस्मार गणनायकान् ॥
नन्दिना संस्मृताः सर्व्वे गणनाथाः सहस्रशः ।
समुत्पत्य त्वरायुक्ताः प्रणतास्त्रिदशेश्वरम् ॥
आगतांश्च गणान्नन्दी कृताञ्जलिपुटोऽव्ययः ।
सर्व्वान्निवेदयामास शङ्कराय महात्मने ॥
नन्द्युवाच ।
यानेतान् पश्यसि शम्भो त्रिनेत्रान् जटिलान्
शुचीन् ।
एते रुद्रा इति ख्याताः कोट्य एकादशैव च ॥
वानरास्यान् पश्यसि यान् शार्द्दूलसमविक्र-
मान् ।
एते वै द्वारपालास्ते मन्नामानो यशोधनाः ॥
षण्मुखान् पश्यसि यांश्च शक्तिपाणीन् शिखि-
ध्वजान् ।
षट् च षष्टिस्तथा कोट्यः स्कन्दनाम्नः कुमार-
कान् ॥
एतावत्यस्तथा कोट्यः शाखा नाम षडाननाः ।
विशाखास्तावद्वोक्ता नैगमेयाश्च शङ्कर ! ॥
सप्तकोटिशताः शम्भो अमी वै प्रथमोत्तमाः ।
एकैकं प्रति देवेश तावत्यो ह्यपि मातरः ॥
भग्नारुणितदेहाश्च त्रिनेत्राः शूलपाणयः ।
एते शैवा इति प्रोक्तास्तव भक्ता गणेश्वराः ॥
तया पाशुपताश्चान्ये भस्मप्रहरणा विभो ।
एते गणास्त्वसंख्याताः साहाय्यार्थं समागताः
॥
पिनाकधारिणो रौद्रा गणाः कालमुखाः परे ।
तव भक्ताः समायाता जटामण्डलिनोऽद्भुताः ॥
खट्टाङ्गयोधिनो वीरा रक्तचर्म्मसमावृताः ।
इमे प्राप्ता गणा योद्ध्वुं महाव्रतिन उत्तमाः ॥
दिग्वाससो यौनिनश्च घण्टाप्रहरणास्तथा ।
निरामया नाम गणाः समायाता जगद्गुरो ॥
सार्द्धद्विनेत्राः पद्माक्षाः श्रीवत्साङ्कितवक्षसः ।

आदधे तेन बलवान् सोऽतीव समजायत ॥
ततः शरभरूपी स तत्क्षणाद्गिरिशोऽभवत्।
ऊर्द्ध्वाधोभागतश्चाष्टपादयुक्तः सुभैरवः ।
द्विलक्षयोजनोच्छ्रयः सार्द्धलक्षकविस्मृतः ॥”
इति कालिकापुराणे २९ अध्यायः ॥
अस्य विवाहो यथा, --
ईश्वर उवाच ।
“हिताय सर्व्वजगतां सम्भोगायात्मनस्तथा।
दारान् ग्रहीतुमिच्छामि तथा सन्तानवृद्धये ॥
साहाय्यं तत्र कुर्व्वन्तु भवन्तो मम सांप्रतम् ।
मदर्थे तनयां कालीं याचन्तान्तु हिमाचलम् ॥
मार्कण्डेय उवाच ।
हरं सम्बोध्य मुनयो ह्यगच्छन् गिरिराड्गृहम् ।
तेन संपूजितास्ते तु प्रोचुस्ते मुनयो गिरिम् ॥
यश्चन्द्रशेखरो देवो देवदेवश्च यो मतः ।
शापानुग्रहणे शक्तो य एको जगतां पतिः ॥
यः संहरति सर्व्वाणि जगन्ति प्रलयोद्भवे ।
यो विभूतिप्रदो भक्ते नानारूपो मनोहरः ॥
स ते दुहितरं कालीं भार्य्यामादातुमिच्छति ।
यदि पश्यति त्वद्योग्यं वरं त्वं दुहितुः समम् ।
तदा प्रयच्छ तनयां कालीं शशिभृते गिरे ॥
मार्कण्डेय उवाच ।
इत्युक्तस्तैर्गिरिपतिर्व्वरं यद्धृदयस्थितम् ।
दुहितुश्च प्रियं ज्ञात्वा प्राप्यं मुदमगात्तदा ॥
दास्यामि सम्भवे पुत्त्रीं युष्माभिः प्रार्थित-स्त्वहम् ।
पूर्व्वमेव तपस्तप्त्वा तयेशः पतिरीहितः ॥
धातुर्न्नियोजनमिदं कोऽन्याथा कर्त्तुमुत्सहेत् ।
हरेण चिन्तिताः सर्व्वे तथा ब्रह्मादयः सुराः ॥
तथा च सर्व्वे दिक्पाला मुनयो ये तपोधनाः ।
शच्या सह तदा शक्रो ब्रह्मान्याद्यास्तु मातरः ॥
नारदश्च गतस्तत्र देवर्षिर्ब्रह्मणः सुतः ।
एतैः परिकरैः सार्द्धं गणैराप्यायितः स्वकैः ।
कन्याविवाहविधिना गिरिपुत्त्रीं हरोऽग्रहीत् ॥
विवाहे गिरिणा शम्भोः सर्पा येऽष्टौ तनौ स्थिताः ।
ते जाम्बूनदसन्नद्धा अलङ्कारास्तदाभवन् ॥
द्विभुजोऽभून्महादेवो जटाः केशत्वमागताः ।
शिरःस्थितश्चन्द्रखण्डः शोचिषा ज्वलितोऽभवत्
ललाटनेत्रमभवत्तढा रत्नं महार्घ्यकम् ।
विचित्रवसनं व्याघ्रकृत्तिरासीत्तदा द्विजाः ॥
विभूतिलेपोऽभूत्तस्य सुगन्धिमलयोद्भवः ।
चारुरूपो हरस्तत्र बभूवाद्भुतदर्शनः ॥
ततो देवाः सगन्धर्व्वाः सिद्ध्वा विद्याधरोरगाः ।
विस्मयं परमं प्रापुर्हरं दृष्ट्वा तथाविधम् ।
हिमवान् मुदितश्चाभूत् सहपुत्त्रैश्च मेनया ।
ज्ञातयश्चास्य मुमुहुर्हरं दृष्ट्वा तथाविधम् ॥
इदं ब्रह्मा तत्र जगौ हरं दृष्ट्वा मनोहरम् ॥
सर्व्वं शिवकरं यस्माद्भस्माद्यस्याभवत् सुराः ।
तस्मात् शिवोऽयं लोकेषु नास्मादन्योऽधिकः
समायाताः खगारूढा वृषभध्वजिनोऽव्ययाः ॥
महापाशुपता नाम चक्रशूलधरास्तथा ।
भैरवो विष्णुना सार्द्धमभेदेनार्च्चितो हि यैः ॥
इमे मृगेन्द्रवदनाः शूलबाणधनुर्धराः ।
गणास्त्वद्रोमसम्भूता वीरभद्रपुरोगमाः ॥
एते चान्ये च बहवः शतशोऽथ सहस्रशः ।
साहाय्यार्थं तवायाता यथापीत्यादिशस्व तान्
ततोऽभ्येत्य गणाः सर्व्वे प्रणेमुर्वृषकेतनम् ॥”
इति वामनपुराणे ६४ अध्यायः ॥
अस्य लिङ्गपूजादि शिवलिङ्गशब्दे द्रष्टव्यम् ॥
अस्मात् कोचविहारदेशीयराजवंशोत्पत्तिर्यथा,
श्रीदेव्यु वाच ।
“देवेश परमेशान सर्व्वज्ञ सर्बपूजित ।
क्व गच्छसि मुहुर्न्नाथ कृपया वद शङ्कर ॥

| | | |
|---|---|---|
| | शिवः ॥<br>महेश्वरसमायुक्तमीदृशं यः स्मरेद्धृदा ।<br>सततं तस्य कल्याणं वाञ्छितञ्च<br>भविष्यति ॥<br>एवं काली महामाया योगनिद्रा<br>जगत्प्रसूः ।<br>पूर्व्वं दाक्षायणी भूत्वा पश्चात्<br>गिरिसुताभवत्<br>स्वयं समर्थापि सती काली सम्मोहितुं<br>हरम् ।<br>तथाप्युग्रं तपस्तेपे हिताय जगतां<br>शिवा ।<br>एवं सम्मोहयामास कालिका<br>चन्द्रशेखरम् ॥<br>इत्येतत् कथितं सर्वं त्यक्तदेहा सती<br>यथा । | |

ईश्वर उवाच ।
कोचाख्याने च देशे च योनिगर्त्तसमीपतः
।
साध्वी सती वाम्बिका हि रेवती
जनविश्रुता ॥
म्लेच्छदेशोद्भवा या तु योगिनी सुन्दरी
मता ।
तत्कुचौ कठिनौ द्वन्द्वौ योनेस्तस्याश्च
पीनता ॥
भिक्षाचारप्रसङ्गेन गच्छामि च
दिवानिशम् ।
तत्सन्निधौ महेशानि तया मे रमणं महत्
॥
देव्युवाच ।
कुत्रासीत् किं तपस्तप्तं कथं प्राप्तं
महीतलम् ।
त्वया सार्द्धं रतिर्यत् स्यात् नाल्पस्य
तपसः
फलम् ॥
तवापि च कृपा तस्यां लक्ष्यते महती
मया ।
इदानीं किमभूत् सा हि कृपया परया वद
॥
ईश्वर उवाच ।
नगेन्द्रतनये बाले शृणु मत्प्राणवल्लभे ।
शावरोचरितं किञ्चित् कथयामि
शुचिस्मिते ॥
रसक्रीडाञ्चकाराहम्केकाम्रकानेन मुदा ।
वेदाङ्गसम्भवा साध्वी योगिनी सा सुरी
मता ।
नाभूत्तस्याः सुतृप्तिर्म्मे मत्क्रियायां
नगात्मजे
मामाप्तुमुत्कटं तप्तं द्वये मे क्षेत्रकामदे ॥
एकाम्रगहने देवि पर्व्वते तीर्थसङ्कुले ।
तत्रैको ब्राह्मणो जातो भिक्षार्थं तामुवाच
ह ॥
न दत्तमुत्तरं तस्मै भिक्षा तिष्ठतु दूरतः ।
ततः शशाप विप्रस्तां म्लेच्छतां याहि
दुर्म्मदे ।
यावत्तु परमेशानि भुङ्क्ते शापं परात्मिके ।
कामाख्या हि महामाये तदन्ते सफला
भवेत् ॥
एव ते कथितं देवि ब्रह्मशापविमोचनम् ।
कामाख्याया महेशानि साकल्येन मया
ध्रुवम् ॥”
इति श्रीयोगिनीतन्त्रेद्वेवीश्वरसंवादे
चतुर्विंशति
साहस्रे १३ पटलः ॥ मोक्षः । कीलग्रहः ।
वालुकम् । गुग्गुलुः । वेदः । पुण्डरीकद्रुमः
।
इति मेदिनी ॥ कृष्णधुस्तूरः । पारदः ।
इति
राजनिर्घण्टः ॥ देवः । इति शब्दरत्नावली
॥
लिङ्गः । इत्युणादिकोषः ॥
विष्कुम्भादिसप्त-
विंशतियोगान्तर्गतविंशतितमयोगः । तत्र
जात-
फलम् ।
“महेशभक्तः श्रुतिपारदृश्वो
जितेन्द्रियश्चारुतनुर्म्महात्मा ।
शिवाभिधानः खलु योगराजः
प्रसूतिकाले यदि मानवानाम् ॥”
इति कोष्ठीप्रदीपः ॥

**शिवकः**, पुं, कीलकः । इत्यमरः ॥ द्वेखोँटा इति
ख्याते । गवां गात्रकण्डूयनार्थं गोष्ठे
निखात-
स्तम्भे इति सुभूतिः । कण्डूयनार्थकाष्ठे
इति
केचित् । बन्धनखट्टे इति केचित् । यत्र
बद्धा
गौर्दुह्यते इति केचित् । श्यति गात्रकण्डुं
शिवः
शो तनुकरणे नाम्नीति डिवः स्वार्थे कन्
कः
शिवकस्तालव्यादिः ।
कील्यतेवध्यतेऽस्मिन् कील
कील बन्धे घञ् स्वार्थे कः कीलकः । इति

मार्गशीर्षे त्रयोदश्यां सितायामेकभक्तकम् ।
प्राथयेद्देवदेवेशं त्वामहं शरणं गतः ॥
चतुर्द्दश्यां निराहारः समभ्यर्च्च्य च शङ्करम् ।
सुवर्णवृषभं दत्त्वा भोक्ष्यामीति परेऽहनि ॥
एवं नियमकृत् सुप्त्वा प्रातरुत्थाय मानवः ।
कृतस्नानजपः पश्चादुमया सह शङ्करम् ॥
पूजयेत् कमलैः शुक्लैर्गन्धधूपानुलेपनैः ।
पादौ नमः शिवायेति शिरः सर्व्वात्मने नमः
॥
ललाटं वामदेवाय नेत्राणि हरये नमः ।
मुखमिन्दुमुखायेति श्रीकण्ठायेति कन्धरम् ॥
सद्योजाताय कर्णौ तु वामदेवाय वै भुजौ ।
अघोरहृदयायेति हृदयञ्चापि पूजयेत् ॥
स्तनौ तत्पुरुषायेति तथेशायेति चोदरम् ।
पार्श्वे चानन्तधर्म्माय ज्ञानभूताय वै कटिम् ॥
ऊरू चानन्तवैराजसिंहायेति च पूजयेत् ।
अनन्तैश्वर्य्यनाथाय जानुनी चार्च्चयेद्बुधः ॥
प्रधानाय नमो जङ्घेगुल्फौ व्योमात्मने नमः ।
व्योमकेशात्मरूपाय पृष्ठमभ्यर्च्चयेन्नरः ॥
नमः पुष्ट्यै नमस्तुष्टै पार्व्वतीञ्चापि पूजयेत् ।
ततस्तु वृषभं हैममुदकुम्भसमन्वितम् ॥
शुक्लमाल्याम्बरयुतं पञ्चरत्नपरिष्कृतम् ।
भक्ष्यैर्नानाविधैर्युक्तं ब्राह्मनाय निवेदयेत् ॥
प्रीयतां देवदेवोऽत्र सद्योजातः पिनाकधृक् ।
ततस्तु विप्रानन्नेन तर्पयेच्छक्तितः शुभान् ॥
पृषदाज्यञ्च संप्राश्य स्वपेद्भूमावुदङ्मुखः ।
पञ्चदश्यां ततः पूज्य विप्रान् भूञ्जीत वाग्यतः
॥
तद्वत् कृष्णचतुर्द्दश्यामेतत् सर्व्वं समाचरेत् ।
चतुर्द्दशीषु सर्व्वासु कुर्य्यात् पूर्व्ववदर्च्चनम् ॥
ये तु मासविशेषाः स्युस्तान्निबोध क्रमादिह ।
मार्गशीर्षादिमासेषु स्तवमेतदुदीरयेत् ॥
शङ्कराय नमम्तुभ्यं नमस्ते करवीरकम् ।
त्र्यम्बकाय नमस्तेऽस्तु महेश्वर नमः परम् ॥
नमस्तेऽस्तु महादेव स्थाणवे च ततः परम् ।
नमः पशुपते नाथ नमस्ते शम्भवे पुनः ॥
नमस्ते परमानन्द नमः सोमार्द्धधारिणे ।
नमो भीमाय इत्येवं त्वामहं शरणं गतः ॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।

इत्युक्त्वा स ययौ विप्रो म्लेच्छत्वमाप योगिनी ।
अतोऽर्थिनः समर्थश्चेत् याचितं न ददाति च ॥
स दुर्गतिमवाप्नोत्यसमर्थो विनयञ्चरेत् ।
तस्यास्तु तपसा देवि क्रीतोऽहमभवं सदा ॥ * ॥
अतस्तया रतिर्जाता मम कामिनि सर्व्वदा ।
तस्याः पुत्त्रो विनुसिंहो मदौरससमुद्भवः ॥
एकेन जितवान् कामान् सौमारान् गौडपञ्च-
मान् ।
विनिर्ज्जित्य नृपान् सर्व्वान् एकः श्रीमान्
महामतिः ॥
तस्यापि बहवः पुत्त्राः पृथिवीपरिपालकाः ।
कुवाचा धार्म्मिकाः सर्व्वे राजानो युद्धदुर्म्मदाः ॥
ततोऽपि स विनुसिंहो योगमाश्रित्य विह्वले ।
त्रिष्ठत्यव्यक्तरूपेण पट्टे आकल्पमम्बिके ॥
कामात् सा माधवी देवि मद्देहे लीनतां गता
यथा जाया नन्दिमाता तथेयं योगिनी मता ॥
यथा पुत्त्रो भृङ्गरीटिस्तथा विनुर्म्ममात्मजः ।
विनुसिहोऽपि कल्पान्ते परां सिद्धिमवाप्स्यति ॥
तद्वशजास्तु राजानः सर्व्वे कैलासवासिनः ।
भविष्यन्ति महात्मानो गणेशाः सर्ब्बशालिनः ॥
रूपयौवनसम्पन्नैर्ब्बकन्यागणैः सह ।
विहरन्ति सदा देवि क्रीडन्ति भैरवा यथा ॥ * ॥
भरतः ॥

**शिवकरः**, पुं, (शिवस्य करः ।) चतुर्विंशति-
भूतार्हदन्तर्गतजिनविशेषः । इति हेमचन्द्रः ॥
मङ्गलकारके, त्रि ॥

**शिवकाञ्ची**, स्त्री, पुरीविशेषः । यथा, --
"शिवकाञ्ची विष्णुकाञ्ची काञ्चीयुग्मञ्च सम्मतम्
एतास्तु पृथिवीमध्ये न गण्यन्ते कदाचन ॥
काशी शिवत्रिशूलस्था काञ्ची हरिहरात्मिका
वामदक्षिणहस्ताभ्यां दधार द्विजपुङ्गवाः ॥"
इति भूतशुद्धितन्त्रम् ॥

**शिवकीर्त्तनः**, पुं, (शिवं सुखकरं कीर्त्तनं यस्य ।)
भृङ्गरीटः । विष्णुः । इति मेदिनी ॥ शैवः । इति शब्दरत्नावली ॥

**शिवगतिः**, पुं, भूतार्हद्विशेषः । इति हेमचन्द्रः ॥

**शिवघर्म्मजः**, पुं, (शिवघर्म्माज्जातः । जन् + डः ।)
मङ्गलग्रहः । अस्य प्रमाणं मङ्गलशब्दे द्रष्ट-
व्यम् ॥

**शिवङ्करः**, त्रि, मङ्गलकर्त्ता । तत्पर्य्यायः । क्षेम-
ङ्करः २ अरिष्टतातिः ३ शिवतातिः ४ । इति
हेमचन्द्रः ॥ (पुं, बालग्रहविशेषः । यथा, हरि-
वंशे । १६६ । ७५ ।
"संघट्टनः संकुचमः काष्ठभूतः शिवङ्करः ॥")

**शिवचतुर्द्दशी**, स्त्री, (शिवप्रिया चतुर्द्दशी ।)
चतुर्दशीकर्त्तव्यशिवव्रतविशेषः । यथा, --
नन्दिकेश्वर उवाच ।
"शृणुष्वावहितो ब्रह्मन् वक्ष्ये माहेश्वरं व्रतम्
त्रिषु लोकेषु विख्याता नाम्ना शिवचतुर्द्दशी ॥
पञ्चगव्यं तथा विल्वं यवान् गोशृङ्गवारि च ॥
तिलांश्च कृष्णान् विधिवत् प्राशनं क्रमशः स्मृतम् ।
प्रतिमासं चतुर्द्दश्योरेकैकं प्राशनं स्मृतम् ॥
मन्दारैर्म्मालतीभिश्च तथा धुस्तूरकैरपि ।
सिन्धूवारैरशोकैश्च मल्लिकाभिश्च पाटलैः ॥
अर्कपुष्पकदम्बैश्च शतपत्रैस्तथोत्पलैः ।
एकैकेन चतुर्द्दश्यामर्च्चयेत् पार्व्वतीपतिम् ॥
पुनश्च कार्त्तिके मासि संप्राप्ते तर्पयेत् द्विजान् ।
अन्नैर्नानाविधैर्भक्षैर्वस्त्रमाल्यविभूषणैः ॥
कृत्वा नीलवृषोत्सर्गं श्रुत्युक्तविधिना नरः ।
उमामहेश्वरं हैमं वृषभञ्च गवा सह ॥
मुक्ताफलाष्टकयुतं सितनेत्रत्रयावृतम् ।
सर्व्वोपस्करयुक्तायां शय्यायामुदकुम्भयोः ॥
ताम्रपात्रोपरि पुनः शालितण्डुलसंयुतम् ।

| | | |
|---|---|---|
| यदा यदा ब्रह्मशापः कामाख्यायां भवेत् पुनः<br>तदा तदावतीर्य्याहं विश्वकामस्य पालकः ॥<br>तथा तद्वंशजाः सर्व्वे भवेयुः कामपालकाः ।<br>कल्पान्तमेवं देवेशि यावत् शापो विमुच्यते ॥<br>तावदेव महामाये मद्योर्य्यात् क्रीडते ध्रुवम् ।<br>कल्पमेवं महेशानि कलौ वर्षशतत्रयम् ॥ | | |

स्थाप्य विप्राय शान्ताय वेदव्रतपराय च ॥
ज्येष्ठसामविदे देयं न वकव्रतिने क्वचित् ।
गुणज्ञे श्रोत्रिये दद्यादाचार्ये तत्त्ववेदिनि ॥
अव्यङ्गाङ्गाय सौम्याय सदाकल्याणकारिणि ।
सपत्नीकाय संपूज्य माल्यवस्त्रविभूषणैः ॥
गुरौ सति गुरोर्देयं तदभावे द्विजातये ।
न वित्तशाठ्यं कुर्व्वीत कुर्व्वन् मोहात् पतत्यधः
अनेन विधिना यस्तु कुर्य्यात् शिवचतुर्द्दशीम् ।
सोऽश्वमेधसहस्रस्य फलमाप्नोति मानवः ॥
ब्रह्महत्यादिकं किञ्चिद्यदत्रामुत्र वा कृतम् ।
पितृभिर्भ्रातृभिश्चैव तत् सर्व्वं नाशमाप्नुयात् ॥
दीर्घायुरारोग्यकुलाभिवृद्धि-
रत्राक्षयामुत्र चतुर्भुजत्वम् ।
गणाधिपत्यं दिवि कल्पकोटि-
शतं वसित्वा पदमेति शम्भोः ॥

न बृहस्पतिरप्यनन्तमस्याः
पहल्मिन्द्रो न पितामहोऽपि वक्तुम् ।
न च सिद्धगणोऽप्यलं न चाहं
यदि जिह्वायुतकोटयोऽपि वक्त्रे ॥
भवत्यमरवल्लभः पठति यः स्मरेद्वा सदा
शृणोति च विमत्सरः सकलपापविध्वंसिनीम् ।
इमां शिवचतुर्द्दशीममरकामिनीकोटयः
स्तुवन्ति तमनिन्दितं किमु समाचरेद्यः सदा ॥
या वाथ नारी कुरुते ह भक्त्या
भर्त्तारमापृच्छ सुतं गुरुं वा ।
सापि प्रसादात् परमेश्वरस्य
परं पदं याति पिणाकपाणेः ॥”
इति मात्स्ये शिवचतुर्द्दशीव्रतं ८० अध्यायः ॥ * ॥
फाल्गुनी कृष्णा चतुर्द्दशी । तत्र शिवव्रतं कर्त्त-
व्यम् । तस्य विवरणं शिवरात्रिशब्दे द्रष्टव्यम् ॥
माघ फाल्गुन-चैत्र-वैशाख-श्रावण-भाद्रेषु दिवादण्डा यथा ।

**शिवज्ञा**, स्त्री, (शिवं जानातीति । ज्ञा + कः ।)

शिवोपासिका । मङ्गलज्ञात्री । शिवं जानाति
या इत्यर्थे डप्रत्ययः ॥

**शिवज्ञानं**, क्ली, (शिवस्य ज्ञानमस्मात् ।) शुभा-

शुभकालबोधकशास्त्रम् । यदा यात्रादिक्रिया
अवश्यकर्त्तव्या ज्योतिः शास्त्रोक्तशुभक्षणप्राप्तिश्च
न भवति तदा शिवज्ञानोक्तशुभसमये कर्म्म
कर्त्तुमुचितं भवति ।
एतच्छिवज्ञानोक्तमाहेन्द्र-
योगे कृतयात्रादिर्जयं अमृतयोगे कार्य्यसिद्धिं
वक्रे कार्य्यनाशं शून्ये मृत्युं अपमानं वा
प्राप्नोति । दिवारात्रौ माघ-फाल्गुन-चैत्र-
वैशाखश्रावणभाद्रेषु एते योगा एकरुपाः
आश्विनकार्त्तिकाग्रहायणपौषेषु एकप्रकाराः
ज्यैष्ठाषाढयोश्च एकरूपा भवन्ति ॥ यथा, --

**माघ फाल्गुन-चैत्र-वैशाख-श्रावण-भाद्रेषु**

दिवादण्डा यथा ।
रविवारे मा २ अ ८ शू ८ मा २ व १० ।
सोमवारे अ ४ व ८ अ ६ व ६ मा ४ शू २ ।
मङ्गलवारे व ४ शू २ अ ६ व ४ शू २ अ ४ शू २ अ ४ शू २ ।
बुधवारे अ ४ व ६ अ ४ शू २ व ४ मा ४ अ ४ शू २ ।
गुरुवारे मा ४ शू २ व ६ मा ६ शू ४ व ४ शू ४ ।
शुक्रवारे अ २ व २ अ ६ व ६ अ ६ शू ४ अ ४ ।
शनिवारे शू ४ व ४ शू २ अ ८ शू ४ व ४ शू ४ ।

**तेषु रात्रिदण्डा यथा ।**

रविवारे शू २ मा २ अ ४ व ८ मा ८ शू ६

सोमवारे व २ अ ६ व ६ अ ८ शू ८ ।

मङ्गलवारे अ २ व ४ शू २ अ ६ व ६ अ ४ व ४ शू २ ।

बुधवारे शू २ अ ६ मा ४ व ४ शू ४ अ १० ।

गुरुवारे व १४ शू ४ व ४ अ २ शू ६ ।

शुक्रवारे व ४ अ ४ शू ४ मा २ व ६ शू ४ अ २ मा २ शू २ ।

शनिवारे शू २ व ४ अ ६ व ४ अ ४ व २ अ ४ शू ४ ।

**आश्विन-कार्त्तिकाग्रहायणपौषेषु**

दिवादण्डा यथा ।

रविवारे शू २ अ ६ व ८ अ ८ शू २ मा २ शू २ ।

सोमवारे अ ४ शू ४ अ ६ व १६ ।

मङ्गलवारे अ २ व २ अ १० व ६ शू ६ व ४ ।

बुधवारे अ २ मा २ अ २ व ६ अ ६ शू २ मा ६ व ४ ।

गुरुवारे अ ४ व ४ शू ४ व ६ शू २ अ ४ व ६ ।

शुक्रवारे अ २ व २ अ ६ व ६ अ ८ शू २ अ ४ ।

शनिवारे अ २ व २ अ ६ व ६ अ ८ शू २ अ ४ ।

**तेषु रात्रिदण्डा यथा ।**

रविवारे शू २ व ४ अ ४ व ६ अ ४ शू २ अ ८ ।

सोमवारे व ६ अ ८ व ८ अ २ व ६ ।

मङ्गलवारे मा ६ अ २ शू २ अ ६ व ४ मा ४ शू २ अ ४ ।

बुधवारे व २ अ २ व ४ अ १६ व २ शू ४ ।

गुरुवारे शू २ अ ८ व ६ अ ८ शू २ अ ४ ।

शुक्रवारे व २ अ ८ व ६ अ ८ शू २ अ ४ ।

शनिवारे व १४ शू ४ व ४ अ २ शू ६ ।

**ज्यैष्ठाषाढयोर्द्दिवादण्डा यथा ।**

रविवारे शू ४ अ ६ व ६ अ ६ व ४ मा २ शू २ ।
सोमवारे व ८ अ ४ शू ६ व ८ शू ४ ।
मङ्गलवारे अ ६ शू ४ अ ६ व ६ मा २ अ २ मा २ शू २ ।
बुधवारे शू २ व ४ अ ८ व ६ अ ८ शू २ ।
गुरुवारे मा २ शू २ व ६ मा ४ शू ४ व ६ अ ६ ।
शुक्रवारे शू २ मा २ व ६ मा २ शू ४ अ ६ व ४ शू ४ ।
शनिवारे मा २ शू २ व ६ मा ६ शू ४ व ४ अ ६ ।

**तत्र रात्रिदण्डा यथा ।**

रविवारे अ ४ शू ४ व ४ अ ६ व ८ शू ४ ।
सोमवारे व ८ अ ८ शू ४ अ ४ शू २ मा २ शू २ ।
मङ्गलवारे अ २ व ४ मा ४ शू ४ व २ अ ६ शू २ व ६ ।
बुधवारे अ १० शू २ व ४ अ ४ शू १० ।
गुरुवारे शू २ अ ६ शू २ व ४ शू २ अ ६ शू ४ अ ४ ।
शुक्रवारे अ ६ शू २ व ४ शू ६ अ ६ शू २ अ ४ ।
शनिवारे शू २ अ २ व ८ शू २ अ ६ शू ४ अ ६ ।
मतान्तरे अस्य प्रमाणं यथा, --
“माहेन्द्रे विजयो नित्यं अमृते कार्य्यशोभनम् ।
वक्रे कार्य्यविलम्बः स्याच्छून्ये च मरणं ध्रुवम् ॥
वैशाखादिश्रावणान्तं एकभावेन संवहेत् ।
अमृतादि दिवारात्रौ चतुर्मासं यथाक्रमम् ॥
याममानं दिवामाने ज्ञेयं सर्व्वत्र मासके ।

तस्या उत्पत्तिमन्त्रध्यानादियथा, --
“कौषिक्या हृदयाद्देवी निःसृता ध्यानतो हरेः ।
शिवदूतीति विख्याता शिवाशतसुसंवृता ॥
मन्त्रमस्याः प्रवक्ष्यामि धर्म्मकामार्थदायकम् ।
यत् श्रुत्वा साधको याति दुर्लभं शिवमन्दिरम् ॥
येनाराध्य महादेवीं शिवदूतीं शिवात्मिकाम् ।
न चिराल्लभते कामान्नरः सर्व्वजयी भवेत् ॥
अन्तःसमाप्तिसहितो बिन्द्विन्दुभ्यां दशावरा ।
स्वरेण पान्त्यदन्त्येन संसृष्टोऽन्तेन पूर्वशः ॥
स एव बिन्दुयुगलपूर्वस्थोपान्त्यपावकः ।
षष्ठस्वरकलाशून्यैः संहितः प्रथमस्थितः ॥
मन्त्रोऽयं शिवदूत्यास्तु शिवदूतीजयप्रदः ।
रूपमस्याः प्रवक्ष्यामि शृणु वत्सक संमतम् ॥
चतुर्भुजं महाकायं सिन्दूरसदृशद्युतिम् ।
रक्तदन्तं मुण्डमालाजटाजूटार्द्धचन्द्रधृक्॥
नागकुण्डलहाराभ्यां शोभितं नखरोज्वलम् ।
व्याघ्रचर्म्मपरीधानं दक्षिणे शूलचक्रधृक् ॥
वामे पाशं तथा चर्म्म बिभ्रदूद्ध्वं परिक्रमात् ।
स्थूलवक्त्रञ्च पीनोष्ठं तुङ्गमूर्त्तिं भयङ्करम् ॥
निक्षिप्य दक्षिणं पादं सन्तिष्ठेत् कुणपोपरि ।
वामपादं शृगालस्य पृष्ठे फेरुशतैर्वृतम् ॥
ईदृशं शिवदूत्यास्तु मूर्द्ध्नि ध्यायेद्विभूतये ।
ध्यानमात्रादथैतस्या नरः कल्याणमाप्नुयात्॥
पूजनादचिराद्देवो सर्व्वान् कामान् ददाति च ॥
यः शिवाविरुतं श्रुत्वा शिवदूतों शिवप्रदाम् ।
प्रणमेत् साधको भक्त्या तस्य कामाः करे स्थिताः ॥
यदा जघान जगतां रक्तबीजं हिताय वै ।
महादेवी महामाया तदास्याः कायतः सृता ॥
दूतं प्रस्थापयामास शिवं शुम्भाय साम्बिका ।
तेन सा शिवदूतीति देवैः सर्व्वैः प्रगीयते ॥
क्षेमङ्करी च शान्ता च वेदमाता महोदरी ।
कराला कामदा देवी भगास्या भगमालिनी ॥

भगोदरी भगाहारा भगजिह्वा भगा तथा ।
एता द्वादश योगिन्यः पूजने परिकीर्त्तिताः ॥
एता द्वादश योगिन्यः शिवदूत्याः सदैव हि ।
विचरन्ति स्वयं देवी यत्र यत्रैव गच्छति ॥”
इति कालिकापुराणे उत्तरतन्त्रे ५० अध्यायः ॥
प्रमाणानन्तरं वामने ५३ अध्याये मार्कण्डेय-
पुराणे देवीमाहात्म्ये रक्तबीजवधाध्याये च
द्रष्टव्यम् ॥

**शिवद्रुमः**, पुं, (शिवप्रियो द्रुमः ।) विल्ववृक्षः ।
इति राजनिर्घण्टः ॥

**शिवद्विष्टा**, स्त्री, (शिवेन द्विष्टा तत्पूजनानर्ह-
त्वात् ।) केतकी । इति राजनिर्घण्टः ॥

**शिवधातुः**, पुं, (शिवस्य धातुः ।) पारदम् ।
पारदं शिववीर्य्यं स्यादिति दर्शनात् । गोदन्त-
मणिः । इति केचित् ॥

**शिवनाभिः**, पुं, (शिवस्य नाभिरिव ।) शिवलिङ्ग-
विशेषः । यथा, --
“उत्तमं मध्यमधमं त्रिविधं लिङ्गमीरितम् ।
चतुरङ्गुलमुत्सेधे रम्यवेदिकमुत्तकम् ॥
उत्तमं लिङ्गमाख्यातं मुनिभिः शास्त्रकोविदैः ।
तदर्द्धं मध्यमं प्रोक्तं तदर्द्धमधमं स्मृतम् ॥
शिवनाभिमयं लिङ्गं प्रतिपूज्य महर्षिभिः ।
श्रेष्ठञ्च सर्व्वलिङ्गेभ्यस्तस्मात् पूज्यं विधानतः ॥”
इति वीरमित्रोदयः ॥

**शिवपुरी**, स्त्री, (शिवस्य पुरी ।) काशी । इति

तत्प्रमाणेन ज्ञातव्यं दण्डमानं विचक्षणैः
।
रात्रिमानप्रमाणेन ज्ञेयो दण्डप्रमाणकः ॥
न वारतिथिनक्षत्रं न योगकरणं तथा ।
शिवज्ञानं समासाद्य सर्व्वं मुनिर्व्विचारयेत्
॥”
तथा ।
“भाद्रादिमार्गपर्य्यन्तं सप्तवारे समादिशेत्
।
शून्यवक्रादियोगं हि पीषादिचैत्रतस्तथा
॥”
इति ज्योतिषे शिवज्ञानम् ॥ * ॥
अनेकप्रकारं शिवज्ञानं शिवाज्ञा
शिवालिखितं
अमृतघटी च दृष्टं किन्तु परस्परमनैक्यं
जातम् ॥

**शिवतातिः**, स्त्री, कल्याणकारिणी । इति हेम-

चन्द्रः ॥ अस्य पर्य्यायः शिवङ्करशब्दे
द्रष्टव्यः ॥

**शिवदत्तं**, क्ली, (शिवेन दत्तम् ।) विष्णुचक्रम् ।

इति केचित् ॥ शिवेन शिवाय वा दत्तं
द्रव्य-
मात्रञ्च ॥

**शिवदारु**, क्ली, (शिवस्य दारु ।) देवदारुवृक्षः ।

इति राजनिर्घण्टः ॥

**शिवदूतिका**, स्त्री, (शिवदूती + स्वार्थे कन् ।)

मातृकाविशेषः । इति शब्दरत्नावली ॥

**शिवदूती**, स्त्री, (शिवेन दूतयति सन्देशं प्रापयती-

न्यर्थे दूत + णिच् + पचाद्यच् । यद्वा,
शिवो दूतो
यस्याः । गौरादेराकृतिगणत्वात् ङीष् ।)
दुर्गा ।
इति त्रिकाण्डशेषः ॥ योगिनीविशेषः ।
यथा,
“ब्रह्माणो प्रथमा प्रोक्ता ततो माहेश्वरी
परा ।
कीमारी वेष्णवी चैव वाराही पञ्चमी तथा
॥

हेमचन्द्रः ॥

**शिवप्रियं**, क्ली, (शिवस्य प्रियम् ।) रुद्रा-

क्षम् । इति राजनिर्घण्टः ॥ शिवस्य
प्रियद्रष्ये
त्रि ॥

**शिवपियः**, पुं, (शिवस्य प्रियः ।) वकवृक्ष । इति

जटाधरः ॥ स्फटिकः । धुस्तूरः । इति
राजनिर्घण्टः ॥

**शिवप्रिया**, स्त्री, (शिवस्य प्रिया ।) दुर्गा ।

इति शब्दमाला ॥

**शिवमल्लकः**, पुं, अर्ज्जुनवृक्षः । इति राज-

निर्घण्टः ॥

**शिवमल्लिका**, स्त्री, (शिवप्रिया मल्लिका ।)

वसूकः । इति राजनिर्घण्टः ॥

**शिवमल्ली**, स्त्री, (शिवप्रिया मल्ली ।) वकवृक्षः ।

इत्यमरः ॥

**शिवरसः**, पुं, त्र्यहात् पर्य्युषितरसः । तत्पर्य्यायः ।

अन्नोदकजः २ । अस्य गुणाः । दीपनत्वम् ।
मधुरत्वम् । अम्लत्वम् । असृग्दाहदत्वम् । लघु-
तर्पणत्वञ्च । इति राजनिर्घण्टः ॥

**शिवरात्रिः**, स्त्री, (शिवप्रिया रात्रिः ।) शिव-

चतुर्द्दशी । यथा, कालमाधवीये स्कान्दे नागर-
खण्डम् ।
"माघमासस्य शेषे या प्रथमे फाल्गुणस्य च ।
कृष्णा चतुर्द्दशी सा तु शिवरात्रिः प्रकीर्त्तिता ॥"
अत्रैकस्यास्तिथेर्म्माघीयत्वफाल्गुनीयत्वे मुख्य-
गौणवृत्तिभ्यां अविरुद्धे । ततस्तु माघ्यनन्तरा
चतुर्द्दशी शिवरात्रिः तस्यामुपवासः प्रधानम् ।
"न स्नानेन न वस्त्रेन न धूपेन न चार्च्चया ।
तुष्यामि न तथा पुष्पैर्यथा तत्रोपवासतः ॥"
इति शङ्करोक्तेः ॥ * ॥
स्कान्दे ।
"ततो रात्रौ प्रकर्त्तव्यं शिवप्रीणनतत्परः ।
प्रहरे प्रहरे स्नानं पूजाञ्चैव विशेषतः ॥"
अत्र वीप्सया प्रहरचतुष्टयसाध्यं व्रतं प्रतीयते
नरसिंहाचार्य्यधृतेश्वरसंहितायाम् ।
"शैवो वा वैष्णवो वापि यो वा स्यादन्यपूजकः ।
सर्व्वं पूजाफलं हन्ति शिवरात्रिबहिर्म्मखः ॥ *
॥
संवत्सरप्रदीपे ।
"दुग्धेन प्रथमं स्नानं दध्ना चैव द्वितीयके ।
तृतीये च तथाज्येन चतुर्थे मधुना तथा ॥"
ईशानसंहितायाम् ।
"माघे कृष्णचतुर्द्दश्यां रविवारो यदा भवेत् ।
ऊद्ध्र्वमनन्तरम् । वायुपुराणे ।
"त्रयोदश्यस्तगे सूर्य्ये चतसृष्वपि नाडिषु
।
भूतविद्धा तु या तत्र शिवरात्रिव्रतञ्चरेत् ॥"
ईशानसंहितायाम् ।
"माघे कृष्णचतुर्द्दश्यामादिदेवो महानिशि
।
शिवलिङ्गतयोद्भूतः कोटिसूर्य्यसमप्रभः ॥
तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते
तिथिः ।
अर्द्धरात्रादधश्चोद्ध्र्वं युक्ता यत्र चतुर्द्दशी
॥
व्याप्ता सा दृश्यते यस्यां तस्यां कुर्य्यात्
व्रतं
नरः ॥"
अत्र ।
"महानिशा द्वे घटिके रात्रर्मध्यमयामयोः
॥"
इति देवलोक्ता महानिशा ग्राह्या ॥ घटिका
एकदण्डः । एवञ्च यद्दिने प्रदोषनिशिथो-
भयव्यापिनी चतुर्दशी तद्दिने व्रतं उभय-
व्याप्त्यनुरोधात् । कालमाधवीयेऽप्येवम् ।
एतेन
परदिने उभयव्यापित्वेऽपि
पूर्व्वदिवसीयरात्रि-
द्वितीययामप्रभृतिचतुर्द्दशीसत्त्वे
बहुप्रहरव्या-
पित्वेन पूर्व्वदिन एव व्रतमिति निरस्तम् ।
यदा
तु पूर्व्वेद्युर्निशीथमात्रव्याप्तिः परेद्युः
प्रदोष-
मात्रव्याप्तिस्तदा पूर्व्वेद्युर्व्रतम् ।
प्रधानकाल-
व्याप्त्यनुरोधात् ।
"पूर्व्वेद्युरपरेद्युर्व्वा महानिशि चतुर्दशी ।
व्याप्ता सा दृश्यते यस्यां तस्यां
कुर्य्याद्व्रतं
नरः ॥"
इतीशानसंहितावचनाच्च ॥
व्यापिनी चतुर्दशी तद्दिने व्रतम् । यदा
तु पूर्व्व-
द्युर्निशीथव्यापिनी परेद्युः
प्रदोषमात्रव्यापिनी
तदा पूर्व्वेद्युर्व्रतम् । यदा तु न
पूर्व्वेद्युर्निशीथ-
व्याप्तिः परेद्युः प्रदोष व्यापिनींतदा
परदिने ।
पारणन्तु परदिने चतुर्दशीलाभे
चतुर्दश्यां तद-
लाभे अमावस्यायाम् । तत्र प्रयोगः ॥
* ॥
प्रातरुदङ्मुखः तत् सदित्युच्चार्य्य
सूर्य्यः सोम
इति पठित्वा जलादीन्यादाय
सङ्कल्पयेत् ।
"मन्त्रेणानेन गृह्णीयान्नियमं
भक्तिमान्नरः ।
शिवरात्रिव्रतं ह्येतत् करिष्येऽहं
महाफलम् ।
निर्विघ्नमस्तु मे चात्र
त्वत्प्रसादाज्जगत्पते ॥"
इति शिवरहस्यात् शिवरात्रि
इत्यादिना-
नियम्य ।
"चतुर्दश्यां निराहारो भूत्वा शम्भो
परेऽहनि
भोक्ष्येऽहं भुक्तिमुक्त्यर्थं शरणं मे
भवेश्वर ॥"
इति गरुडपुराणीयं पठेत् ।
रात्रौ प्रथमप्रहरे प्रतिष्ठिते लिङ्गे
अप्रतिष्ठिते
वा प्रतिष्ठां विधाय पूजां कुर्य्यात् । हौँ
अस्त्राय
फडिति पादघातत्रयेण
विघ्नान्निःसार्य्य तेनैव
तालत्रयेण करच्छोटिकया च
दशदिग्बन्धनं

भौमो वापि भवेद्देवि कर्त्तव्यं व्रतमुत्तमम् ॥
शिवयोगस्य यौगेन तद्भवेदुत्तमोत्तमम् ।
शिवरात्रिव्रतं नाम सर्व्वपापप्रणाशनम् ।
आचाण्डालमनुष्याणां भुक्तिमुक्तिप्रदायकम् ॥"
नागरखण्डे ।
"उपवासप्रभावेण बलादपि च जागरात् ।
शिवरात्रेस्तथा तस्य लिङ्गस्यापि प्रपूजया ।
अक्षयान्लभते लोकान् शिवसायुज्यमाप्नुयात्
॥"
पाद्मे ।
"वर्षे वर्षे महादेवि नरो नारी पतिव्रता ।
शिवरात्रौ महादेवं कामं भक्त्या प्रपूजयेत् ॥"
ईश्वानसंहितायाम्
"एवमेव व्रतं कुर्य्यात् प्रति संवत्सरं व्रती ।
द्वादशाब्दिकमेतद्धि चतुर्व्विंशाब्दिकं तथा ।
सर्व्वान् कामानवाप्नोति प्रेत्यचेह च मानवः ॥"
हेमाद्रिधृता स्मृतिः ।
"प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्द्दशी ॥"
प्रदोषमाह वत्सः ।
"प्रदोषोऽस्तमयाद्धूर्ध्वं घटिकाद्वयमिष्यते ॥"

एतद्विषय एव भविष्यपुराणम् ।
"अर्द्धरात्रात् पुरस्तात्तु जयायोगो भवेद्यदि
।
पूर्व्वविद्धैव कर्त्तव्या शिवरात्रिः शिवप्रियैः
॥"
विष्णुधर्म्मोत्तरे ।
"जयन्ती शिवरात्रिश्च कार्य्ये
भद्रजयान्विते ।
कृत्वोपवासं तिथ्यन्ते तदा कुर्य्याच्च
पारणम् ॥"
तिथ्यन्ते पारणं जयन्तीमात्रपरं अत्र
चतुर्दश्या-
मेव तत् ।
"ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति
वै
पूजितानि भवन्तीह भूतायां पारणे कृते
॥"
इति स्कान्दात् ।
"दिनमानप्रमाणेन या तु रात्रौ चतुर्द्दशी ।
शिवरात्रिस्त सा ज्ञेया चतुर्दश्यान्तु
पारणम् ॥"
इति गौतमीयाच्च ।
यदा तु पूर्व्वदिने न निशीथव्याप्तिः परदिने
प्रदोषमात्रव्यापिनी तदा परा ग्राह्या ।
प्रदोष-
व्यापिनीति प्रागुक्तत्वात्
तिथेस्त्रिसन्ध्यव्यापि-
त्वाच्च । एतद्विषय एव लिङ्गपुराणम्
"शिवरात्रिव्रते भूतां कामविद्धां विवर्जयेत्
।
एकेनैवोपवासेन ब्रह्महत्यां व्यपोहति ॥"
अत्रामावास्यायामेव पारणम् ।
"शिवा घोरा तथा प्रेता सावित्री च चतु-
र्दशी ।
कुहूयुक्तैव कर्त्तव्या कुह्वामेव हि पारणम्
॥"
इति वचनात् ॥ * ॥
तदयं संक्षेपः । यद्दिने प्रदोषनिशीथोभय-

कृत्वा भूतशुद्धिं विधाय हां हृदयाय
नम इत्या-
दिना षडङ्गानि न्यस्य हौँ इति मन्त्रेण
प्राणा-
यामं विधाय पूजयेत् । पार्थिवलिङ्गे
चेत्तदा
वक्ष्यमाणपूजाविधिना पूजयेत् ।
तत्रायं विशेषः
हौँ ईशानाय नम इति प्रथमप्रहरे
दुग्धेन
स्नापयित्वा पुनर्जलेन स्नापयित्वा ।
"शिवरात्रिव्रतं देव पूजाजपपरायणः ।
करोमि विधिवद्दत्तं गृहाणार्घ्यं महेश्वर
॥"
इत्यनेनार्घ्यं दत्त्वा गन्धादिभिः
संपूज्यमूलमन्त्र
जपित्वा प्रणम्य गीतनृत्यादिभिस्तं
प्रहरं नयेत् ॥
"तद्ध्यानं तज्जपः स्नानं
तत्कथाश्रवणादिकम् ।
उपवासकृतौ ह्येते गुणाः प्रोक्ता
मनीषिभिः ॥"
इति देवीपुराणे सामान्यतः श्रवणात्
अत्रापि
तथा ॥ * ॥ द्वितीयप्रहरे तु विशेषः ।
हौँ
अघोराय नम इति दध्ना स्नानम् ।
अर्घ्यमन्त्रस्तु ॥
"नमः शिवाय शान्ताय
सर्व्वपापहराय च ।
शिवरात्रौ ददाम्यर्घ्यं प्रसीद उमयां
सह ॥" * ॥
तृतीयप्रहरे तु । हौँ वामदेवाय नम
इति
घृतेन स्नानम् । अर्घ्यमन्त्रस्तु ।
"दुःखदारिद्र्यशोकेन दग्धोऽहं
पार्व्वतीश्वर ।
शिवरात्रौ ददाम्यर्घ्यमुमाकान्त गृहाण
मे ॥ * ॥
चतुर्थप्रहरे तु । हौँ सद्योजाताय नम
इति

|  |  |  |
| --- | --- | --- |
|  |  | मधुना स्नानम् । अर्घ्यमन्त्रस्तु ।<br>“मया कृतान्यनेकानि पापानि हर शङ्कर ।<br>शिवरात्रौ ददाम्यर्घ्यं उमाकान्त गृहाण मे ॥”<br>ततो नमः शिवाय इति मूलमन्त्रं जपित्वा<br>प्रभातेऽविघ्नेन<br>इत्यादिवक्ष्यमानमन्त्रान्पठेत् ॥<br>तथा च गरुडपुराणम् ।<br>“मूलमन्त्रं ततो जप्त्वा प्रभाते तत् समापयेत् ।<br>अविघ्नेन व्रतं देव त्वत्प्रसादात् समर्पितम् ॥<br>क्षमस्व जगतां नाथ त्रैलोक्याधिपते हर ।<br>यन्मयाद्य कृतं पुण्यं तद्रुद्रस्य निवेदितम् ॥ |

त्वत्प्रसादान्मया देव व्रतमद्य समर्पितम् ।
प्रसन्नो भव मे श्रीमन् मद्भूतिं प्रतिपद्यताम्
।
त्वदालोकनमात्रेण पवित्रोऽस्मि न संशयः
॥”
परदिने ब्राह्मणान् भोजयित्वा
चतुर्दशीलाभे
तत्र तदलाभे अमावस्यायां पारणं कुर्य्यात्
।
तत्र मन्त्रः ।
“संसारक्लेशदग्धस्य व्रतेनानेन शङ्कर ।
प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव ॥”
* ॥
तत्र पार्थिवशिवलिङ्गपूजाविधिः । तत्र
शिव-
वाक्यं स्कान्दे ।
“विप्रस्य तु सदैवाहं शुचेरप्यशुचेरपि ।
गृह्णन् वलिं प्रहृष्यामि विप्राणामिव दर्शनात्
॥
वलिं पूजाम् । तथा,
“शूद्रः कर्म्माणि यो नित्यं स्वीयानि कुरुते
प्रिये ।
तस्याहमर्च्चां गृह्णामि चन्द्रखण्डविभूषिते
॥”
तथा,
“नमोऽन्तेन शिवेनैव स्त्रीणां पूजा
विधीयते ॥”
एवकारेण प्रणवनिवृत्तिः । एवं शूद्रस्यापि
।
तथा नृसिंहतापनीये । “सावित्रों प्रणवं
यजु-
र्लक्ष्मीं स्त्रीशूद्रयोर्नेच्छन्ति । सावित्रीं
प्रणवं
यजुर्लक्ष्मीं स्त्री शूद्रो यदि जानीयात् स
मृतोऽधो गच्छति इति ।” नेच्छन्ति
पर्य्यन्तं
पराशरभाष्येऽपि लिखितम् । गोविन्दभट्ट-
धृतम् ।

“प्राक्पश्चिमोदगास्यस्तुप्रातः सायं निशासु
च ॥”
इति वचनात् ॥
इति वाचस्पतिमिश्राः । मैवं पूजा
रत्नाकरोक्त-
भविष्यपुराणीयसप्ताक्षरसूर्य्यमन्त्रप्रस्ताव एव
प्रागादिदिङ्नियमाभिधानात् । व्यवहारोऽपि
अत्र न तथेति ॥ * ॥ लिङ्गपुराणे ।
“विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया ।
पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः ।
तस्मान्मृदापि कर्त्तव्यं ललाटेऽपि
त्रिपुण्ड्रकम् ॥
नन्दिपुराणे ।
“आयुष्मान् बलवान् श्रीमान् पुत्त्रवान् धन-
वान् सुखी ।
वरमिष्टं लभेल्लिङ्गं पार्थिवं यः समार्च्चयेत् ।
तस्मात्तु पार्थिवं लिङ्गं ज्ञेयं सर्वार्थसाधकम्
॥”
भविष्ये ।
“मृद्भस्मगोशकृत्पिण्डं ताम्रकांस्यमयं तथा ।
कृत्वा लिङ्गं सकृत् पूज्य वसेत् कल्पायुतं
दिवि ॥
वार्क्षं वित्तप्रदं लिङ्गं स्फाटिकं सर्वकामदम् ।
नर्म्मदागिरिजं श्रेष्ठमन्यदपि हि लिङ्गवत् ॥”
लिङ्गवत् लिङ्गाकारम् । कालकौमुद्याम् ।
“अक्षादल्पपरीमाणं न लिङ्गं कुत्रचिन्नरः ।
कुर्व्वीताङ्गुष्ठतो ह्रस्वं न कदाचित् समाचरेत्
॥
अक्षोऽशीतिरक्तिका । अङ्गुष्ठतः बृहत्पर्व्व-
ग्रन्थितः ।
“अङ्गुष्ठाङ्गुलिमानन्तु यत्र यत्रोपदिश्यते ।
तत्र तत्र बृहत्पर्व्वग्रन्थिभिर्मिनुयात् सदा ॥”
इति छन्दोगपरिशिष्टात् ॥
शिवधर्म्मे ।
“सहस्रमर्च्चयेल्लिङ्गं निरयं स न गच्छति ।
रुद्रलोकमवाप्नोति भुक्त्वा भोगाननुत्तमान्
॥”
तथा ।

कार्य्याणि । अदृष्टार्थयोरर्थक्रमासम्भवेन
पांठ-
क्रमादेव आवाहनात् प्राक् प्रतिष्ठा श्राद्ध
कुशासनदानवत् ॥ * ॥ तत्रानुष्ठानम् ।
हराय
नम इति मृदाहरणम् । महेश्वराय नम
इति
संघट्टनम् । शूलपाणे इह सुप्रतिष्ठितो भव
इति
प्रतिष्ठा । ध्यायेन्नित्यमित्यादिना ध्यात्वा
पिनाक
धृक् इहागच्छ इत्याद्यावाहनम् ।
पशुपतये नम
इति स्नपनम् । एतत् पाद्यं नमः शिवाय
नम
एवमर्घ्यादिना पूजयेत् । विसर्ज्जनात्
पूर्व्वं
भविष्यपुराणोक्तं
स्वभावसिद्धप्राच्यैशान्यादि-
दिक्षु वामावर्त्तेन पूजनम् । यथा । सर्वाय
क्षितिमूर्त्तये नमः । भवाय जलमूर्त्तये नमः
।
रुद्राय अग्निमूर्त्तये नमः । उग्राय
वायुमूर्त्तये
नमः । भीमाय आकाशमूर्त्तये नमः ।
पशुपतये
यजमानमूर्त्तये नमः । महादेवाय
सोममूर्त्तये
नमः । ईशानाय सूर्य्यमूर्त्तये नमः ।
“मूर्त्तयोऽष्टौ शिवस्यैताः
पूर्व्वादिक्रमयोगतः ।
आग्नेय्यन्ताः प्रपूज्यास्ता वेद्यां लिङ्गे
शिवं
यजेत् ॥”
ततो महादेव क्षमस्व इति संहारमुद्रया
विस-
र्ज्जयेत् ॥ * ॥ नन्दिपुराणे ।
“गोभूतिलहिरण्यादिवलिपुष्पनिवेदने ।

"स्वाहाप्रणवसंयुक्तं शूद्रे मन्त्रं ददद्द्विजः
।
शूद्रो निरयमाप्नोति ब्राह्मणः शूद्रतामियात्
॥"
गौतमः ।
"रात्रावुदङ्मुखः कुर्य्यात् दैवकार्य्यं सदैव
हि ।
शिवार्च्चनं सदाप्येवं शुचिः
कुर्य्यादुदङ्मुखः ॥"
सदा दिवारात्रौ । अत्र हेतुमाह रुद्रयामले ।
"न प्राचीमग्रतः शम्भोर्नोदीचीं शक्ति-
संस्थिताम् ।
न प्रतीचीं यतः पृष्ठमतो दक्षं समाश्रयेत्
॥"
यजमानः शम्भोः प्राचीमवस्थितये न
समा-
श्रयेत् शम्भोर्जगत्संहारकस्याग्रतः
सांमुख्यात्
पञ्चवक्त्रपक्षे प्रधानं वक्त्रं प्राच्यवस्थितम्
॥
एकवक्त्रपक्षे सुतरां तथा । तद्रूपमाह
भविष्य-
पुराणम् ।
"सौम्यं मौलीन्दुभृत् त्र्यक्षं एकवक्त्रं
चतुर्भुजम्
शिवरूपं गृहे कुर्य्यात् प्रासादे
वाप्यनिन्दितम् ॥
अत्राग्रे पुजानिषेधात् देवाग्रे स्वस्य चाप्यग्रे
प्राची प्रोक्ता गुरुक्रमैः । इत्यस्य न विषयः
।
किन्त्वभिधानादिप्रसिद्धाप्राची ग्राह्या ।
एत-
दनुसाराद्वक्ष्यमाणपूर्व्वाद्याग्नेय्यन्तपूजा।
अत-
एव तन्त्रान्तरम् ।
"यत्रैव भानुस्तु वियत्युदेति
प्राचीति तां वेदविदो वदन्ति ।
तथा पुरः पूजकपूज्ययोश्च
सदागमज्ञाः प्रवदन्ति तान्तु ॥"
एवञ्च देवतान्तरपूजा पूर्व्वाह्ने प्राङ्मुखेन
सायं

"वालुकानि च लिङ्गानि सहस्राणि च
कारयेत्
सहस्रमर्च्चनात् सोऽपि लभते वाञ्छितं
फलम् ॥"
ततश्चामुकतिथावारभ्यामुकलाभकामः
सहस्र-
मितपार्थिवशिवलिङ्गपूजनमिति यथास्थाने
वाक्ये देयम् ॥ * ॥ ब्रह्मपुराणे ।
"यावन्न दीयते चार्घ्यं भास्कराय निवेदितम्
।
तावन्न पूजयेद्विष्णुं शङ्करं वा महेश्वरीम् ॥"
राघवभट्टधृतम् ।
"सर्व्वत्रैव प्रशस्तोऽब्जः शिवसूर्य्यार्च्चनं
विना ॥"
अब्जः शङ्खः । अग्निपुराणे ।
"तल्लिङ्गैः पूजयेन्मन्त्रैः सर्व्वदेवान् पृथक्
पृथक् ।
ध्यात्वा प्रणवपूर्व्वन्तु तन्नाम्ना सुसमाहितः ।
नमस्कारेण मन्त्रेण पुष्पाणि विन्यसेत् पृथक्
॥"
देवीपुराणे ।
"मृदाहरणसंघट्टप्रतिष्ठाह्वानम्बेव च ।
स्नपनं पूजनञ्चैव विसर्ज्जनमतः परम् ॥
हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक् ।
पशुपतिः शिवश्चैव महादेव इति क्रमात् ॥"
अत्र पूर्व्वोक्तसप्तकर्म्माणि परवचनोक्तसप्त-
नामभिः क्रियानुरूपविभक्तिमद्भिर्य्यथायथं

ज्ञेयो नमः शिवायेति मन्त्रः
सर्व्वार्थसाधकः ॥
सर्व्वमन्त्राधिकश्चायमोङ्काराद्यः षडक्षरः
।
तन्मन्त्रजापी तत्कर्म्मरतस्तद्गतमानसः
।
निष्कामः पुरुषो राजन् स रुद्रपदमश्नुते
॥"
भविष्ये पञ्चाक्षरमुपक्रम्य ।
"अपवित्रः पवित्रो वा सर्वावस्थां
गतोऽपिवा ।
महापातकयुक्तो वा मन्त्रस्यास्य जपे
यथा ।
अधिकारी भवेत् सर्व्व इति
देवोऽब्रवीच्छिवः ॥"
इति तथेत्यर्थः ॥
पूर्व्वोक्तयथापदानुरोधात्।
तेन यथाधिकारी भवेत्तथाब्रवीदित्यर्थः ।
तथा,
"सर्व्वेषामेव पात्राणां परं पात्रं महेश्वरः ।
पतन्तं त्रायते यस्मादतीव नरकार्णवात् ॥
शिवमुद्दिश्य यद्दत्तं सर्व्व कारणकारणम् ।
तदनन्तफलं दातुर्भवतीह किमद्भुतम् ॥
दत्त्वा नैवेद्यवस्त्रादि नाददीत कदाचन ।
त्यक्तव्यं शिवमुद्दिश्य तदादाने न
तत्फलम् ॥"
आदाने ग्रहणे । शिवधर्मे ।
"तस्मात् पुष्पैः फलैः पत्रैस्तोयैरपि च
यत्फलम्
तदनन्तफलं ज्ञेयं भक्तिरेवात्र कारणम् ॥"
भविष्ये ।
"लिङ्गानुलेपनं कार्य्यं दिव्यगन्धैः
सुगन्धिभिः ।
वर्षकोटिशतं दिव्यं शिवलोके महीयते ॥"
शिवधर्म्मे ।
"तस्मात् पुष्पप्रदानेन लिङ्गेषु प्रतिमासु
च ।
अशीतिवर्षकोटीनां दुर्गतिं न नरो व्रजेत्
॥"
स्कान्दे ।

| | | |
|---|---|---|
| पपिमाभिमुखेन रात्राबुदङ्मुखेन कार्य्या। | | “शुष्काण्यपि च पत्राणि श्रीवृक्षस्य सदैव हि ॥”<br>दातव्यानीति शेषः। भविष्ये।<br>“धुस्तूरकैश्च यो लिङ्गं सकृत् पूजयते नरः।<br>स गोलक्षफलं प्राप्य शिवलोके महीयते ॥ |

विल्वपत्रैरखण्डैश्च यो लिङ्गं पूजयेत् सकृत्
।
सर्व्वपापैर्विनिर्मुक्तः शिवलोके महीयते ॥”
तथा ।
“सर्व्वकामप्रदं विल्वं दारिद्रस्य प्रणाशनम् ।
विल्वपत्रात् परं नास्ति येन तुष्यति शङ्करः
॥”
तथा ।
“केशकीटापबिद्धानि निशि पर्य्युषितानि च
।
स्वयं पतितपुष्पाणि त्यजेदुपहतानि च ॥”
तथा ।
“देवदारुममेतञ्च सर्ज्जश्रीवासकुन्दुरुम् ।
श्रीफलं चाज्यमिश्रन्तु दत्त्वाप्नोति परां
गतिम्”
सर्ज्जः शालरसः । श्रीवासः सरलद्रवः ।
कुन्दुरुः
शैलेयम् ।
“एभ्यः सौगन्धिकं धूपं षट्सहस्रगुणोत्तरम्
।
अगुरुं शतसाहस्रं द्विगुणञ्चासितागुरुम् ।
गुग्गुलुं घृतसंयुक्तं साक्षात् गृह्नाति शङ्करः ॥”
तथा ।
“तैलेनापि हि यो दद्यात् घृताभावेन मानवः
।
तेन दीपप्रदानेन शिववद्राजते भुवि ॥”
नन्दिकेश्वरे ।
“अथ भक्त्या शिवं पूज्य नैवेद्यमुपकल्पयेत्
।
यद्यदेवात्मनः श्रेयस्तत्तदीशाय कल्पयेत्
॥”
शालितण्डुलप्रस्थस्य कुर्य्यादन्नं
सुसंस्कृतम् ।
शिवाय तं चरुं दद्यात् चतुर्दश्यां विशेषतः
॥”
प्रस्थमानं प्रागुक्तम् । शिवसर्व्वस्वे स्कान्दम्
।
एकमाम्रफलं पक्वं यः शम्भोर्विनिवेदयेत् ।
वर्षाणामयुतं भोगैः क्रीडते स शिवे पुरे ॥

सर्व्वं तरति तत् पापं भावयन् शिवमात्मना
।
राघवभट्टधृतम् ।
“अधोमुखे वामहस्ते ऊद्ध्वास्यं
दक्षहस्तकम् ।
क्षिप्त्वाङ्गुलीरङ्गुलीभिः संगृह्य परिवर्त्तयेत् ।
प्रोक्ता संहारमुद्रेयमर्पणे तु प्रशस्यते ॥”
अर्पणे आत्मनीति शेषः । स्कान्दे ।
“निर्म्माल्यं यो हि मद्भक्त्या शिरसा धारयि-
ष्यति ।
अशुचिर्भिन्नमर्य्यादो नरः पापसमन्वितः ॥
नरके पच्यते घोरे तिर्य्यग्योनौ च जायते ।
ब्रह्महापि शुचिर्भूत्वा निर्म्माल्यं यस्तु
धारयेत्
तस्य पापं महच्छीघ्रं नाशयिष्ये महाव्रते ॥”
शुचिः स्नानादिनेति शेषः । एवञ्च ।
“स्पृष्ट्वा रुद्रस्य निर्म्माल्यं सवासा
आप्लुतः
शुचिः ॥”
इति कालिकापुराणीयमशुचिविषयम्॥
अनुपनीतविषयमिति श्रीदत्तः । बह्वृचगृह्य-
परिशिष्टम् ।
“अग्राह्यं शिवनैवेद्यं पत्रं पुष्पं फलं जलम् ।
शालग्रामशिलास्पर्शात् सर्व्वं याति
पवित्रताम् ॥
कालिकापुराणे ।
“यो यद्देवार्च्चनरतः स तन्नैवेद्यभक्षकः ।
केवलं सौरशैवे तु वैष्णवो नैव भक्षयेत् ॥”
इति तिथ्यादितत्त्वम् ॥ * ॥
अन्यच्च ।
ब्रह्मोवाच ।
“शिवरात्रिव्रतं वक्ष्ये कथाञ्च सर्व्वकामदाम् ।
यथा च गौरी भूतेशं पृच्छति स्म परं व्रतम् ॥
श्रीमहादेव उवाच ।
माघफाल्गुनयोर्म्मध्ये या च कृष्णा चतुर्दशी
।
तस्यां जागरणाद्रुद्रः पूजितो भुक्तिमुक्तिदः ॥
कामयुक्तो हरः पूज्यो द्वादश्यामेव केशवः ।
उपोषितैः पूजितः सन्नरकात्तारयेत्तथा ॥

भोक्ष्येऽहं भुक्तिमुक्त्यर्थं शरणं मे
भवेश्वर ॥
पञ्चगव्यामृतैः स्नात्वा अन्तकाले गुरुं
श्रितः ।
ॐ नमो नमः शिवाय गन्धाद्यैः
पूजयेद्धरम् ॥
तिलतण्डुलव्रीहींश्च जुहुयात् स्वशृतं
चरुम् ।
हुत्वा पूर्णाहुतिं दद्यात्
शृणुयाद्गीतसत्कथाम् ॥
अर्द्धरात्रे त्रियामे च चतुर्थे च पुनर्यजेत् ।
मूलमन्त्रं तथा जप्त्वा प्रभाते च
क्षमापयेत् ॥
अविघ्नेन व्रतं देव त्वत्प्रसादात्
समर्पितम् ।
क्षमस्व जगतां नाथ त्रैलोक्याधिपते
शिव ॥
यन्मयाद्य कृतं पुण्यं तच्छिवस्य
निवेदितम् ।
त्वत्प्रसादान्मया देव व्रतमद्य समर्पितम्
॥
प्रसन्नो भव मे श्रीमन् मद्गृहं
प्रतिगम्यताम् ।
तदालोकनमात्रेण पवित्रोऽस्मि न संशयः
।
भोजयेद्ध्याननिष्ठांश्च वस्त्रच्छत्रादिकं
ददेत् ॥
देवादिदेव भूतेश लोकानुग्रहकारक ।
यन्मया श्रद्धया दत्तं प्रीयतां तेन मे प्रभुः
॥
इति क्षमाप्य च यतीन् कुर्य्यात्
द्वादशवार्षिकम्
कीर्त्तिश्रीपुत्त्रराज्यादि प्राप्य शैवं पुरं
व्रजेत् ॥
द्वादशस्वपि मासेषु प्रकुर्य्यादिह जागरम्
।
यतीन् द्वादश संपूज्य दीपदः
स्वर्गमाप्नुयात् ॥”

एकं मोचाफलं पक्वं यः शिवाय निवेदयेत् ।
वर्षलक्षं तथाभोगैः शिवलोके महीयते ॥”
शिवपुराणे ।
“नैवेद्यं घृतसंयुक्तं मधुपर्कं निवेदयेत् ।
अग्निष्टोमस्य यज्ञस्य फलमाप्नोति मानवः ॥”
शिवसर्व्वस्वे स्कान्दम् ।
“परिपक्वं सुसंमृष्टमाज्यसिक्तं सुसंस्कृतम् ।
शिवाय मांसं दत्त्वा तुं शृणु यत् फलमाप्नुयात् ॥
अशेषफलदानेन यत् फलं परिकीर्त्तितम् ।
तत् फलं प्राप्नु यान्नित्यं सर्व्वं मांसनिवेदनात् ॥”
शिवधर्म्मे ।
“लिङ्गवेदी भवेद्देवी लिङ्गं साक्षात् महेश्वरः ।
तयोः संपूजनात् स्यातां देवी देवश्च पूजितौ ॥”
देवीपुराणे ।
“सव्यं व्रजेत्ततोऽसव्यं प्रणालं नैव लङ्घयेत् ।
एकीभूतमना रुद्रे यः कुर्य्यात् त्रिः प्रदक्षिणम् ॥
छिन्नस्तेन भवग्रन्थिर्न तस्य पुनरुद्भवः ॥”
भविष्ये ।
“जानुभ्यां चैव पाणिभ्यां शिरसा च विचक्षणः ।
कृत्वा प्रणामं देवेशे सर्व्वान् कामानवाप्नुयात् ॥”
लिङ्गपुराणे ।
“गन्धपुष्पनमस्कारैर्मुखवाद्यैश्च सर्व्वशः ।
यो मामर्च्चयते तत्र तदा तुष्याम्यहं सदा ॥”
महाभारते ।
“सर्व्वलक्षणहीनोऽपि युक्तो वा सर्व्वपातकैः ।
निषादश्चार्व्वुदे राजा पापी सुन्दरसेनकः ।
स कुक्कुरैकसंयुक्तो मृगान् हन्तुं वनं गतः ॥
मृगादिकमसंप्राप्य क्षुत्पिपामार्दितो गिरौ ।
रात्रौ तडागतीरे स निकुञ्जे जाग्रदास्थितः ॥
तत्रास्ति लिङ्गं स्वं रक्षञ्छरीरं चाक्षिपत्ततः ।
पर्णानि चापतन्मूद्‌र्ध्नि लिङ्गस्यैवं न जानतः ॥
तेन धूलिनिरोधाय क्षिप्तं नीरञ्च लिङ्गके ।
शरः प्रमादेनैकस्तु प्रच्युतः करपल्लवात् ॥
जानुभ्यामवनीं गत्वा लिङ्गं स्पृष्ट्वा गृहीतवान्
एवं स्नानं स्पर्शनञ्च पूजनं जागरोऽभवत् ॥
प्रातर्गृहागतो भार्य्यादत्तान्नं भुक्तवान् स च ।
काले मृतो यमभटैः पाशैर्बद्ध्वा तु नीयते ॥
तदा मम गणैर्युद्धे जित्वा मुक्तीकृतः स च ।
कुक्कुरेण सहैवाभूद्‌गणो मत्पार्श्वगोऽमलः ॥
एवमज्ञानतः पुण्यं ज्ञानात् पुण्यमथाक्षयम् ।
त्रयोदश्यां शिवं पूज्य कुर्य्यात्तन्नियमं व्रती ॥
प्रातर्देव चतुर्द्दश्यां जागरिष्याम्यहं निशि ।
पूजां दानं जपं होमं करिष्याम्यात्मशक्तितः ॥
चतुर्द्दश्यां निराहारो भूत्वा शम्भो परेऽहनि ।
इति गारुडे शिवरात्रिव्रतकथा १२४ अध्यायः ॥

**शिवलिङ्गं**, क्ली, (शिवस्य लिङ्गम् ।) महादेवस्य शेफः । तस्योत्पत्तिर्य्यथा, --
“तत्रापि गत्वा मदनो ददर्श वृषकेतनम् ।
दृष्ट्वा प्रहर्त्तुकामोऽस्य ततः स प्राद्रवद्धरः ॥
ततो दारुवनं घोरं मदनाभिसृतो हरः ।
विवेश ऋषयो यत्र सपत्नीका व्यवस्थिताः ॥
ते चापि ऋषयः सर्व्वे दृष्ट्वा मूर्ध्ना नताभवन् ।
ततस्तान् प्राह भगवान् भिक्षां मे प्रतिदीयताम्
ततस्ते मौनिनस्तस्थुः सर्व्व एव महर्षयः ।
तदाश्रमाणि पुण्यानि परिचक्राम नारद ! ॥
तं प्रविष्टं तदा दृष्ट्वा भार्गवात्रेययोषितः ।
प्रक्षोभमगमन् सर्व्वा हीनसत्त्वाः समन्ततः ॥
ऋते त्वरुन्धतीमेनामनसूयाञ्च भाविनीम् ।
एताभ्यां भर्त्तृपूजासु कृतं वै सुस्थिरं मनः ॥
ततः संक्षुभिताः सर्व्वा यत्र याति महेश्वरः ।
तत्र प्रयान्ति कामार्त्ता मदविह्वलितेन्द्रियाः ॥
त्यक्त्वाश्रमाणि शून्यानि खानि ता मुनियोषितः ।
अनुजग्मुर्यथा मत्तं करिण्य इव कुञ्जरम् ॥
ततस्तु ऋषयो दृष्ट्वा भार्गवाङ्गिरसो मुने ।
क्रोधान्विताब्रुवन् सर्व्वे लिङ्गोऽस्य पततां भुवि
ततः पपात देवस्य लिङ्गं पृथ्वीं विदारयत् ।
अन्तर्द्धानं जगामाथ त्रिशूली नीललोहितः ॥

| | | |
|---|---|---|
| | | ततस्तत्पतितं लिङ्गं विभिद्य<br>वसुधातलम् ।<br>रसातलं विवेशाशु ब्रह्माण्डं<br>चोद्र्ध्वतोऽभिनत् ॥<br>ततश्चचाल पृथिवी गिरयः सरितो नगाः<br>।<br>पातालभुवनाः सर्व्वे जङ्गमाजङ्गमाः<br>स्थिताः ॥<br>संक्षुब्धान् भुवनान् दृष्ट्वा भूर्लोकादीन्<br>पितामहः ।<br>जगाम माधवं द्रष्टुं क्षीरोदं नाम सागरम् ॥<br>तत्र दृष्ट्वा हृषीकेशं प्रणिपत्य च भक्तितः<br>।<br>उवाच देव भुवनाः किमर्थं क्षुभिता विभो<br>॥ |

अथोवाच हरिर्ब्रह्मन् शार्व्वं लिङ्गं महर्षिभिः ।
पातितन्तस्य भारार्त्ता सञ्चचाल वसुन्धरा ॥
ततस्तदद्भुतमयं श्रुत्वा देवः पितामहः ।
तत्र गच्छामि देवेश एवमाह पुनः पुनः ॥
ततः पितामहो देवः केशवश्च जगत्पतिः ।
आजगाम तमुद्देशं यत्र लिङ्गं भवस्य तत् ॥
ततोऽनन्तं हरिर्लिङ्गं दृष्ट्वारुह्य खगेश्वरम् ।
पातालं प्रविवेशाथ विस्मयात्त्वरितो विभुः ॥
ब्रह्मा पद्मविमानेन ऊद्र्ध्वमाक्रम्य सर्व्वगः ।
नैवान्तमलभद्ब्रह्मा विस्मितः पुनरागतः ॥
विष्णुर्गत्वाथ पातालं सप्तलोकपरायणः ।
चक्रपाणिर्विनिष्क्रान्तो लेभेऽन्तं न महामुने ॥
विष्णुं पितामहश्चाह हरिर्ब्रह्माणमाह च ।
नमोऽस्तु ते शूलपाणे नमोऽस्तु वृषभध्वज ।
जीमूतवाहन कवे सर्व्वत्र्यम्बक शङ्कर ॥
महेश्वर हरेशान सुवर्णाक्ष वृषाकपे ।
दक्षयज्ञक्षयकर काल रुद्र नमोऽस्तु ते ॥
त्वमादिरस्य जगतस्त्वं मध्यं परमेश्वरः ।
भवानन्तश्च भगवान् सर्व्वगस्त्वं नमोऽस्तु ते ॥
पुलस्त्य उवाच ।
एवं संस्तूयमानस्तु तस्मिन् दारुवने हरः ।
सुरूपी ताविदं वाक्यमुवाच वदतां वरः ॥
हर उवाच ।
किमर्थं देवतानाथौ परिभूतक्रमन्त्विह ।
मां स्तुवाते भृशासुस्थं कामतापितविग्रहम् ॥
देवावूचतुः ।
तवाङ्गपातितं लिङ्गं यदेतद्भुवि शङ्कर ।
एतत् प्रगृह्यतां भूयस्ततो देव वदावहे ॥
हर उवाच ।
यद्यर्च्चयन्ति त्रिदशा मम लिङ्गं सुरोत्तमौ ।
तदेतत् प्रतिगृह्णीयात् नान्यथेति कथञ्चन ॥
ततः प्रोवाच भगवानेवमस्त्विति केशवः ॥
ब्रह्मा स्वयञ्च जग्राह लिङ्गं कनकपिङ्गलम् ।
ततश्चकार भगवांश्चातुर्वर्ण्यं हरार्च्चने ॥
शास्त्राणि चैषां मुख्यानि नानोक्तिविदि-
तानि च ।
आद्यं शैवं परिख्यातमन्यत् पाशुपतं मुने ॥
तृतीयं कालवदनं चतुर्थञ्च कपालिनम् ।

अपिच ।
"ततः सृष्टिं चिन्तयतो ब्रह्मणो
मोहितस्य च ।
बालिखिल्याः समुत्पन्नास्तपस्तप्तं
समारभन् ॥
दिव्यं वर्षसहस्रं वै तेपुस्ते दुश्चरं तपः
।
ततः कालेन महता पार्व्वती च
पतिव्रता ॥
तेषां तपः समालोक्य चाति देवी
सुदुःखिता ।
प्रसाद्य देवदेवेशं शङ्करं प्राह सुव्रता ॥
क्लिश्यन्ति बालिखिल्याश्च प्रसादार्थं
तव प्रभो ।
एतेभ्योऽपि प्रियं देव विधिवत् कुरु
सेवया ॥
तच्छ्रुत्वा वचनं देव्याः पिनाकी
परचिन्तकः ।
प्रोवाच कान्ते कालञ्च वचनं प्रियया
सह ॥
न वेत्सि देवि तत्त्वेन धर्म्मस्य गहना
गतिः ।
नैते धर्म्मं विजानन्ति यथार्थं
धर्म्मचारिणः ॥
न दास्यामि वरं तेभ्यो यस्मात्ते
मूढबुद्धयः ।
एतत् श्रुत्वाब्रवीत् देवी मा मैवं
शंसितव्रताः ॥
ततो रुद्र उवाचेदं देवी देवः
स्मिताननः ।
तिष्ठ त्वमत्र यास्यामि यत्रैते
मुनिसत्तमाः ॥
इत्युक्ता तु ततो देवी शङ्करेण
महात्मना ।
गच्छस्वे त्याह मुदिता भर्त्तारं
भुवनेश्वरी ॥
यत्र ते मुनयः सर्व्वे
काष्ठलोष्टसमाश्रिताः ।

उवाचैको मुनिवरस्तत्र बुद्धिमतां वरः ।
विरिञ्चिं शरणं यामः स हि ज्ञास्यति
चेष्टि-
तम् ॥
एवमुक्त्वा सर्व्व एव ऋषयो लज्जिता
भृशम् ।
ब्रह्मणः सदनं जग्मुर्देवैः सह निषेवितम् ॥
ऋषय ऊचुः ।
अज्ञानाच्च कृतं
ब्रह्मन्नस्माभिर्ज्ञानिदुर्ब्बलैः ।
तस्योपशमने यत्नं कुरु सर्व्वोपकारक ॥
ब्रह्मोवाच ।
गच्छामः शरणं देवं शूलपाणिं त्रिलोचनम्
।
प्रसादाद्देवदेवस्य भविष्यथ यथा पुरा ॥
इत्युक्त्वा ब्रह्मणा सार्द्धं कैलासं
गिरिमुत्तमम् ।
ददृशुस्ते समासीनमुमया सहितं हरम् ॥
ततः स्तोतुं समारब्धो ब्रह्मा
लोकपितामहः ।
अनन्ताय नमस्तुभ्यं वरदाय पिनाकिने
॥
एवं स्तुतो महादेवो ब्रह्मणा ऋषिभिस्तथा
।
उवाच मां मा व्रजतु लिङ्गं भोः पुरतः
पुनः ॥
क्रियतां मद्वचः शीघ्रं येन मे प्रीतिरुत्तमा
।
भविष्यति प्रकृष्टा या लिङ्गस्यात्र न
संशयः ॥
ये लिङ्गं पूजयिष्वन्ति मम
भक्तिसमाश्रिताः ।
न तेषां दुर्लभं किञ्चित् भविष्यति हितं
फलम् ॥"
इति वामने ४२ अध्यायः ॥ * ॥
कुरुक्षेत्रस्थितानि लिङ्गानि यथा, --
सनत्कुमार उवाच ।
"वटस्य दक्षिणे भागे चक्रतीर्थं
प्रकीर्त्तितम् ।

शैव आसीत् स्वयं शक्त्रिर्वशिष्ठस्य प्रियः सुतः ॥
तस्य शिष्यो बभूवाथ गोपायन इति श्रुतः ।
महापाशुपतस्त्वासीद्भारद्वाजस्तपोधनः॥
तस्य शिष्योऽप्यभूद्राजा ऋषभः सोमकेश्वरः ।
कालास्यो भगवानासीदापस्तम्बस्तपोधनः॥
तस्य शिष्यो वको वैश्यो नाम्ना क्राथेश्वरो मुने ।
महाव्रती च धनदस्तस्य शिष्यश्च वीर्य्यवान् ॥
कुन्दोदर इति ख्यातो जात्या शूद्रो महातपाः
एवं स भगवान् ब्रह्मा पूजनाय शिवस्य च ॥
कृत्वा तु चातुराश्रम्यं स्वमेव भवनं गतः ।
गते ब्रह्मणि सर्व्वोऽपि तपः संहृत्य तं तदा ॥
लिङ्गं चित्रवने सूक्ष्मं प्रतिष्ठाप्य चचार ह ॥”
इति वामनपुराणे ६ अध्यायः ॥ * ॥

तान् विलोक्य ततो देवो नग्नः सर्व्वाङ्गसुन्दरः ॥
वनमालाकृतापीडो युवा भिक्षाकपालभृत् ।
आश्रमे पर्य्यटन् भिक्षां मुनीनां नियतात्मनाम् ॥
देहि भिक्षां ततश्चोक्त्वा स भ्रमन्नाश्रमं ययौ ।
तं विलोक्याश्रमगतं योषितो ब्रह्मवादिनाम् ॥
सकौतुकस्वभावेन तस्य रूपेण मोहिताः ।
प्रोचुः परस्परं कार्य्यमस्ति पश्याम भिक्षुकम् ॥
परस्परमितीवोक्त्वा गृह्य मूलफलं बहु ।
गृहाण भिक्षामूचुस्तास्तं देवं मुनियोषितः ॥
तस्मै दत्त्वैव तां भिक्षां पप्रच्छुस्ताः स्मरातुराः
नार्य्य ऊचुः ।
कोऽसौ नाम व्रतविधिस्तया तापस सेव्यते ।
यत्र नग्नेन लिङ्गेन वनमालाविभूषितः ॥
भवान् वै तापसो हृद्यो हृद्याः स्मो यदि मन्यसे ।
इत्युक्तस्तापसस्ताभिः प्रोवाच हसिताननः ॥
इदं मम व्रतं किञ्चिन्न रहस्यं प्रकाशते ।
शृण्वन्ति बहवो यत्र तत्र तत्र न विद्यते ॥
तस्य व्रतस्य सुभगा इति मत्वा भविष्यथ ।
एवमुक्तास्तदा तेन ताः प्रत्यूचुस्तदा मुनिम् ॥
ततोऽभ्येत्य गमिष्यामो मुने नः कौतुकं महत्
इत्युक्त्वा तास्तदातीव जगृहुः पाणिपल्लवैः ॥
काचिच्चकर्ष बाहुभ्यां काचित् कामपरा तथा

स्थाणोर्वटस्य पूर्व्वेण मम तीर्थं प्रकीर्त्तितम् ॥
स्थाणोर्वटस्योत्तरतस्तीर्थं गाणेश्वरं मतम् ।
स्थाणोटर्वस्य पश्चिमतः स्कन्दतीर्थं प्रकीर्त्तितम् ॥
इमानि पुण्यतीर्थानि मध्ये रुद्रवटः स्थितः ।
महादेवं समभ्यर्च्च्य प्राप्नोति परमं पदम् ॥
वटस्य चोत्तरे पार्श्वे तक्षकेण महात्मना ।
प्रतिष्ठितं महालिङ्गं सर्व्वकामप्रदायकम् ॥
वटस्य पूर्व्वदिग्भागे विश्वकर्म्मकृतं महत् ।
लिङ्गं प्रत्यङ्मुखं दृष्ट्वा सिद्धिमाप्नोति मानवः ॥
तत्रैव लिङ्गरूपेण संस्थिता या सरस्वती ।
तां प्रणम्य प्रयत्नेन बुद्धिं मेधाञ्च विन्दति ॥
वटपार्श्वस्थितं लिङ्गं ब्रह्मणा तत् प्रतिष्ठितम् ।
दृष्ट्वा वटेश्वरं देवं प्रयाति परमं पदम् ॥
ततः स्थाणुवटं दृष्ट्वा कृत्वा चापि प्रदक्षिणम् ।
प्रदक्षिणीकृता तेन सप्त द्वीपा वसुन्धरा ॥
स्थाणोः पश्चिमदिग्भागे नकुलीशो गणः स्मृतः ।
तमभ्यर्च्च्य प्रयत्नेन सर्व्वपापैः प्रमुच्यते ॥
तस्य दक्षिणदिग्भागे तीर्थं रुद्राकरं स्मृतम् ।
तस्मिन् स्नातः सर्व्वतीर्थस्नातो भवति मानवः ॥
तस्य चोत्तरदिग्भागे रावणेन महात्मना ।
प्रतिष्ठितं महालिङ्गं गोकर्णं नाम नामतः ॥
आषाढमासे या कृष्णा भविष्यति चतुर्दशी ।

| | | |
|---|---|---|
| | जानुभ्यामपरा नाभ्यां कचेषु ललनापरा ॥<br>अपरा तु कटीबन्धे चापरा पादयोरपि !<br>क्षोभं विलोक्य मुनय आश्रमेषु स्वयोषिताम् ॥<br>हन्यतामिति संभाष्य काष्ठपाषाणपाणयः ।<br>पातयन्ति च देवस्य लिङ्गमुद्धुध्य भीषणम् ॥<br>पातिते तु ततो लिङ्गे गतोऽन्तर्द्धानमीश्वरः ।<br>देव्या स भगवान् रुद्रः कैलासं नगमाश्रितः ॥<br>पतिते देवदेवस्य लिङ्गे नष्टे चराचरे ।<br>क्षोभो बभूव सुमहानृषीणां भावितात्मनाम् ॥ | तस्यां पश्यति गोकर्णं तस्य पुण्यफलं शृणु ॥<br>कामतोऽकामतो वापि यत् पापं तेन सञ्चि-<br>तम् । |

तस्माद्विमुच्यते पापात् पूजयित्वा हरं शुचिः
॥
कौमारब्रह्मचर्य्येण यत् पुण्यं प्राप्यते नरैः ।
तत् पुण्यं सकलं तेषामष्टम्यां
योऽर्च्चयेच्छिवम्
यदिच्छेत् परमं रूपं सौभाग्यं धनसम्पदम् ।
कुमारेश्वरमाहात्म्यात् सिध्यते नात्र संशयः
॥
तस्य चोत्तरदिग्भागे लिङ्गपूजां विभीषणः ।
अजरश्चामरश्चैव कल्पयित्वा बभूव ह ॥
आषाढस्य तु मासस्य शुक्ला या चाष्टमी
भवेत् ।
तस्याम्पूज्य सोपवासश्चामृतत्वमवाप्नुयात्
॥
पूर्व्वैश्च पूजितं लिङ्गं तस्मिन् स्थाने
द्विजोत्तम ।
पूजयित्वा प्रयत्नेन सर्वकाममवाप्नुयात् ॥
दूषणस्त्रिशिराश्चैव तत्र पूज्य महेश्वरम् ।
यथाभिलषितान् कामानवापतुर्मुदान्वितौ ॥
चैत्रे मासि सिते पक्षे यो नरस्तत्र पूजयेत् ।
तस्य तौ वरदौ देवौ प्रयच्छेतां हि वाञ्छितम्
॥
स्थानोर्वटस्य पूर्व्वेण हस्तिपादेश्वरः
स्थितः ।
तं दृष्ट्वा मुच्यते पापैरन्यजन्मसमुद्भवैः ॥
तस्य दक्षिणतो लिङ्गं हारीतस्य ऋषेः
स्थितम् ।
यं प्रणम्य प्रयत्नेन सिद्धिमाप्नोति मानवः ॥
तस्य दक्षिणपार्श्वे तु हारितस्य महात्मनः ।
लिङ्गं त्रैलोक्यविख्यातं सर्व्वपापहरं शिवम्
॥
कङ्कालरूपिणा चापि रुद्रेणाशु महात्मना ।
प्रतिष्ठितं महालिङ्गं सर्व्वपापविनाशनम् ॥
भुक्तिमुक्तिप्रदं प्रोक्तं सर्वकिल्विषनाशनम् ।
तल्लिङ्गस्पर्शनादेव अग्निष्टोमफलं लभेत् ॥
तस्य पश्चिमदिग्भागे लिङ्गं सिद्धप्रतिष्ठितम्
।
सिद्धेश्वरं भुवि ख्यातं सर्वसिद्धिप्रदायकम्
॥

तस्याप्युत्तरदिग्भागे तत्पार्श्वे स्थापितं पुनः
॥
आराध्य हनुमांश्चाप सिद्धिं देवप्रसादतः ।
तस्यैव पूर्व्वदिग्भागे विष्णुना प्रभविष्णुना ॥
आराध्य वरदं देवं चक्रं लब्धं सुदर्शनम् ।
तस्यापि पूर्व्वदिग्भागे इन्द्रेण वरुणेन च ॥
प्रतिष्ठितौ लिङ्गवरौ सर्व्वकामप्रदायकौ ।
एतानि मुनिभिः साध्यैरादित्यैर्वसुभिस्तथा
॥
सेवितानि प्रयत्नेन सर्व्वपापहराणि वै ।
स्थाणुलिङ्गस्य परितः
ऋषिभिस्तत्त्वदर्शिभिः ॥
प्रतिष्ठितानि लिङ्गानि येषां संख्या न विद्यते
।
तथाह्युत्तरतश्चैव यावदोघवती नदी ॥
सहस्रमेकं लिङ्गानां देवपश्चिमतः स्थितम्
।
तस्यापि पूर्व्वदिग्भागे बालिखिल्यैर्म्महर्षिभिः
॥
प्रतिष्ठिता रुद्रकोटिर्यावत् सन्निहितं सरः ।
दक्षिणेन तु देवस्य गन्धर्व्वैर्यक्षकिन्नरैः ॥
प्रतिष्ठितानि लिङ्गानि तेषां संख्या न विद्यते
।
तिस्रः कोट्यर्द्धकोटी च लिङ्गानां
वायुरब्रवीत् ॥
असंख्याताः सहस्राणि ये रुद्रा स्थाणु-
माश्रिताः ।
एतज्ज्ञात्वा श्रद्दधानः स्थाणुलिङ्गं
समाश्रयेत् ॥
यस्य प्रमादात् प्राप्नोति मनसा चिन्तितं
फलम्
अकामो वा सकामो वा प्रतिष्ठ्य स्थाणु-
मन्दिरम् ॥
विभुक्तः पातकैर्घोरैः प्राप्नोति परमं पदम् ।
चैत्रमासे त्रयोदश्यां दिने पुण्यतमे शुभे ॥
प्रतिष्ठितं स्थाणुलिङ्गं ब्रह्मणा लोकधारिणा ।
ऋषिभिर्देवसंघैश्च पूजितं शाश्वतीः समाः
॥
तस्मिन् काले निराहारा मानवाः श्रद्धया-

शिवार्च्चनन्तु पूजासु यद्गृहे वर्ज्जितं
सदा ।
विष्ठागर्त्तसमं देवि तद्गृहं विद्धि पार्व्वति
॥
शाक्तो वा वैष्णवो वापि शैवो वा
परमेश्वरि ।
आदौ लिङ्गं समभ्यर्च्च्य
विल्वपत्रैर्वरानने ॥
पश्चादन्यं महेशानि शिवं प्रार्थ्य
प्रपूजयेत् ।
शिवपूजां विना देवि ! अन्यपूजां करोति
यः ॥
स एव रसनाहीनः कुम्भीरो जायते प्रिये
।
निर्म्माय पार्थिवं लिङ्गं रुद्रं
संहाररूपिणम् ॥
आशुतोषं महादेवं शङ्करं वृषमध्वजम् ।
निर्म्माय पार्थिवं लिङ्गं विधिवत् पूजयेत्
शिवम् ॥
शिवपूजा महेशानि यद्गृहे सततं प्रिये ।
काशीपुरं महेशानि तद्गृहं वरवर्णिनि ।
शिवलिङ्गं प्रपूज्याथ सर्व्वपूजाफलं
लभेद् ॥" * ॥
चतुर्विधलिङ्गं यथा, --
"चतुर्द्धा पार्थिवं लिङ्गं मृत्स्नाभेदेन
पार्व्वति ।
शुक्लं रक्तं तथा पीतं कृष्णञ्च परमेश्वरि
॥
शुक्लन्तु ब्राह्मणे शस्तं क्षत्त्रिये
रक्तमिष्यते ।
हरितं वैश्यजातौ तु कृष्णं शूद्रे
प्रकीर्त्तितम् ।
चन्दनञ्च महेशानि सर्व्वजातिषु शस्यते
॥"
इति लिङ्गार्च्चनतन्त्रे १ । २ । ३ पटलाः
॥ * ॥
अस्य पञ्चवक्त्राणि यथा, --
"तत् सर्व्वं शृणु चार्व्वङ्गि पार्थिवस्य मुखं
प्रिये ।

तद्दर्शनात् पूजनाच्च सर्व्वसिद्धिं हि बिन्दति ।
तस्य दक्षिणदिग्भागे मृकण्डेन महात्मना ॥
प्रतिष्ठितं यत्तु लिङ्गं दर्शनात् सिद्धिदायकम् ।
तस्य पूर्व्वे च दिग्भागे आदित्येन महात्मना ॥
प्रतिष्ठितं लिङ्गवरं सर्व्वकिल्विषनाशनम् ।
चित्राङ्गदस्तु गन्धर्व्वो रम्भा चाप्सरसां वरा ॥
परस्परं सानुरागौ स्थाणुदर्शनकाङ्क्षिणौ ।
दृष्ट्वा स्थाणुं पूजयित्वा सानुरागौ परस्परम् ॥
आगम्य वरदं देवं प्रतिष्ठाप्य महेश्वरम् ।
चित्राङ्गदेश्वरं दृष्ट्वा तथा रम्भेश्वरं हिज ॥
सुभगो दर्शनीयश्च कुले जन्म समाप्नुयात् ।
तस्य दक्षिणतो लिङ्गं शक्त्रिणा स्थापितं पुरा ॥
तस्य प्रसादात् सम्प्राप्तं मनसाचिन्तितं फलम् ।
पराशरेण मुनिना तथैवाराध्य शङ्करम् ॥
प्राप्तं कवित्वं परमं दर्शनाच्छङ्करस्य च ।
वेदव्यासेन मुनिना चाराध्य परमेश्वरम् ॥
सर्व्वज्ञत्वं ब्रह्मज्ञानं प्राप्तं देवप्रसादतः ।
स्थाणोः पश्चिमदिग्भागे वायुना जगदायुना ॥
प्रतिष्ठितं महालिङ्गं दर्शनात् पापनाशनम् ।
तस्यापि दक्षिणे भागे लिङ्गं हैमवतेश्वरम् ॥
प्रतिष्ठितं पुण्यकृता दर्शनात् सिद्धिदायकम् ।
तस्यापि पश्चिमे भागे कार्त्तवीर्य्येण स्थापितम् ॥
लिङ्गं पापहरं सद्यो दर्शनात् पुण्यमाप्नुयात् ।
न्विताः ।
पूजयन्ति शिवं ये वै ते यान्ति परमं पदम् ॥
स्थाणुतीर्थमिदं ज्ञात्वा ये कुर्वन्ति प्रदक्षिणम् ।
प्रदक्षिणीकृता तैस्तु सप्तद्वीपा वमुन्धरा ॥”
इति वामणपुराणे ४३ अध्यायः ॥ * ॥
एकगृहे लिङ्गद्वयार्च्चननिषेधो यथा, --
“गेहे लिङ्गद्वयं नार्च्च्यं शालग्रामद्वयं तथा ।
द्वे चक्रे द्वारकायास्तु नार्च्च्यं सूर्य्यद्वयं तथा ॥”
तन्निर्म्माल्यभक्षणविधिनिषेधो यथा, --
“अभक्ष्यं शिवनिर्म्माल्यं पत्रं पुष्पं फलं जलम् ।
शालग्रामशिलायोगात् पावनं तद्भवेत् सदा ॥”
इति वाराहे रौप्यसौवर्णार्च्चास्थापननामाध्यायः ॥ * ॥ लिङ्गपूजां विनान्यपूजाकरणनिषेधो यथा, --
“लिङ्गपूजां विना देवि ! अन्यपूजां करोति यः
विफला तस्य पूजा स्यादन्ते नरकमाप्नुयात् ।
तस्माल्लिङ्गं महेशानि प्रथमं परिपूजयेत ॥”
* ॥
तत्पूजनप्रशंसा यथा, --
“यद्राष्ट्रं लिङ्गपूजायां रहितं सततं प्रिये ।
तद्राष्ट्रं पतितं मन्ये विष्ठाभूमिसमं स्मृतम् ॥
ब्रह्मक्षत्त्रियविट् देवि यदि लिङ्गं न पूजयेत् ।
तत्क्षणात् परमेशानि त्रयश्चाण्डालतां व्रजेत् ॥
शूद्रश्च परमेशानि सदा शूकरवत् प्रिये ।
पूजयेत् परमेशानि चत्वारो ब्राह्मणादयः ॥
विभाव्य मुखपद्मं हि शिवस्य वरवर्णिनि ॥
सद्योजातं वामदेवमघोरञ्च ततः परम् ।
तत्पुरुषं तथेशानं पञ्चवक्त्रं प्रकीर्त्तितम् ॥
सद्योजातञ्च वै शुक्लं शुद्धस्फटिकसन्निभम् ।
पीतवर्णं तथा सौम्यं वामदेवं मनोहरम् ॥
कृष्णवर्णमघोरञ्च समं भीमविवर्द्धनम् ।
रक्तं तत्पुरुषं देवं दिव्यमूर्त्तिमनोहरम् ॥
श्यामलञ्च तथेशानं सर्व्वदेवशिवात्मकम् ।
चिन्तयेत् पश्चिमे चाद्यं द्वितीयन्तु तथोत्तरे ॥
अघोरं दक्षिणे देवं पूर्व्वे तत्पुरुषं तथा ।
ईशानं मध्यतो ध्येयं चिन्तयेत् भक्तितत्परः ॥”
इति तत्रैव ६ पटलः ॥ * ॥
अस्य पूजायां मुखवाद्यकरणावश्यकत्वं यथा,
“संपूज्य पार्थिवं लिङ्गं परं ब्रह्म स्वयं प्रिये ।
ततस्तु लिङ्गकवचं पठित्वा कमलानने ॥
मुखवाद्यं सनृत्यं हि कृत्वा तु परमेश्वरि ।
मातृकामन्त्रसहितं मुखवाद्यं सुदुर्ल्लभम् ॥
अकारादिक्षकारान्तं अनुलोमविलोभतः ।
उच्चार्य्य परमेशानि मुखवाद्यं श्रुचिस्मिते ॥
सबिन्दुवर्णमुच्चार्य्य पञ्चाशन्मातृकां प्रिये ।
अनुलोमविलोम्नेन सर्व्वेण च वरानने ॥
अनेनैव विधानेन मुखवाद्यं करोति यः ।
स सिद्धः सगणः सोऽपि स शिवो नात्र संशयः ॥
मृत्युञ्जयोऽहं देवेशि मुखवाद्यप्रसादतः ।
यस्मिन् काले महेशानि असुरो बलवद्भवेत ॥

| | | |
|---|---|---|
| | | तस्मिन् काले महेशानि मुखवाद्यं करोम्यहम्<br>तत् श्रुत्वा परमेशानि असुरा राक्षशाश्च ये ॥<br>पलायन्ते महेशानि तत् श्रुत्वा परमेश्वरी ।<br>ये नरा भवि तिष्ठन्ति मखवाद्यं विना प्रिये ॥ |

स सर्व्वयातना भोगी अन्ते कुम्भिरतां
व्रजेत् ॥”
इति च तत्रैव ८ पटलः ॥ * ॥
अस्य निर्म्माल्यभोजनदोषकारणम्यथा,
--
देव्युवाच ।
“दुर्लभं तव निर्माल्यं ब्रह्मादीनां कृपानिधे
।
तत्कथं परमेशान निर्माल्यं तव दूषितम् ॥
ईश्वर उवाच ।
मध्यस्थानस्थितं यत्तु तन्मुखं परमेश्वरि
।
श्यामलं तत्तु ईशानं सदा उद्‌र्ध्वं
शुचिस्मिते ॥
कालाग्निरूपिणं तत्तु सर्व्वशक्तिमयं सदा ।
तेजोमयं महेशानि मुखमूद्‌र्ध्वं वरानने ॥
क्षीरोदमथने देवि उत्थितं गरलं महत् ।
ततः करतलीकृत्य तद्विषं परमेश्वरि ॥
निपीतं तद्विषं सूक्ष्मं तीक्ष्णं
ब्रह्माण्डनाशनम् ।
तद्विषं कण्ठदेशे तु स्थितं हि सर्वदा मम
॥
ततःप्रभृति देविशि मुखं ज्वालायते सदा
।
पत्रं वा यदि वापुष्पं फलं वा वरवणिनि ॥
अन्यं हि परमेशानि उपचारं मनोहरम् ।
यो दद्यात् परमेशानि मन्मुखोपरि पार्व्वति
॥
अग्राह्यं तत्तु निर्म्माल्यं साक्षाद्‌ब्रह्ममयं
यतः
एतत्तु परमेशानि निर्म्माल्यं यस्तु धारयेत्
॥
म भ्रष्टोजायते देवि निष्कृ तिर्नास्ति तत्र वै
।
अग्राह्यं मम निर्म्माल्यं अतएब वरानने ॥
यद्दत्तं सम्मुखे देवि षुष्पं वा पत्रमुत्तमम् ।
तन्निर्म्माल्यं महेशान्ति गृह्णीयात् शिरसा
सदा
प्रथमं विष्णवे दत्त्वा विष्णुमन्त्रेण पार्व्वति
।

शिवनाभिलक्षणणं तच्छब्दे द्रष्टव्यम् ॥
* ॥ अथ
दैवलिङ्गलक्षणम् । दैवलिङ्गमधिकृत्य
सिद्धान्त-
शेखरे ।
“करसंपुटसंस्पर्शं शूलटङ्केन्दुभूषितम् ।
रेखाकोटरसंयुक्तं निम्नोन्नतसमन्नितम्
।
दीर्घाकारञ्च यल्लिङ्गं
ब्रह्मभागादिवर्ज्जितम् ॥”
अथ गोललिङ्गलक्षणम् ।
“लिङ्गं गोलमिति प्रोक्तं गोलकं
प्रोच्यतेऽधुना ।
कुष्माण्डस्य फलाकारं
नागरङ्गफलोपमम् ।
काकडिम्बफलाकारं
गोललिङ्गमितीरितम् ॥”
इति गोललिङ्गलक्षणम् ॥ * ॥
अथार्षलिङ्गलक्षणम् । तत्रैव ।
“नानाकोलफलाकारं
ब्रह्मसूत्रविवर्त्तनम् ।
मूले स्थूलञ्च यल्लिङ्गं
कपित्थफलसन्निभम् ॥
नालस्य वा फलाकारं मध्ये स्थूलञ्च
यद्भवेत् ।
मध्ये स्थूलं वरं
लिङ्गमृषिवाणमुदीरितम् ॥”
इत्यर्घलिङ्गलक्षणम् ॥ * ॥
लिङ्गं हि द्विविधमकृत्रिमं कृत्रिमञ्च ।
अकृ-
त्रिमं स्वयम्भूतं स्वयम्भु बाणलिङ्गादि ।
कृत्रिमं
निर्म्मितं धातुलिङ्गादि । सिद्धान्तशेखरे
।
“तल्लिङ्गं द्विविधं ज्ञेयमचलञ्च चलं तथा
।
प्रत्थेकं त्रिविधं ज्ञेयं लिङ्गं
तदुभयात्मकम् ॥

वीरमित्रोदयधृतकल्पोत्तरेऽपि ।
“सर्व्वा फलप्रदा भूमिर्म्मणयस्तद्वदेव हि ।
अनन्ताद्याः स्मृता ह्यष्टौ मणयो विद्युदुज्वलाः
॥
रात्रौ प्रकाशकाः सर्व्वे विषाद्याघातकारिणः ।
नानावर्णास्तु विज्ञेया रसैर्गन्धैश्च रूपतः ॥
वज्राद्याः स्फाटिकाद्याश्च गुडान्नादिविनि-
र्म्मितम् ।
सर्व्वकामप्रदं पुंसां लिङ्गं तात्कालिकं मतम् ॥”
लक्षणसमुच्चये ।
“गान्धं सौभ्याग्यदं लिङ्गं पौष्पं मुक्तिप्रदाय-
कम् ।”
तथा ।
“नानागुणोद्भवं लिङ्गं नानाकामप्रदायकम् ।
सैकतं गुणदं लिङ्गं सौभ्याग्याय च लावणम् ॥
उच्चाटने तु पाशाप्तं मौलं शत्रुक्षयावहम् ।
तात्कालिकं दरिद्रश्च कृत्वा भक्त्या
समर्च्चयेत् ॥
तथा ।
“कस्तुरिकया द्वौ भागौ चत्वारश्चन्दनस्य च ।
कुङ्कुमस्य त्रयश्चैव शशिना च चतुःसमम् ॥
एतद्वै गन्धलिङ्गन्तु कृत्वा संपूज्य भक्तितः ।
शिवसायुज्यमाप्नोति बन्धुभिः सहितो नरः ॥
कार्य्यं पुष्पमयं लिङ्गं हयगन्धसमन्वितम् ।
नवखण्डां धरां भुक्तां गणेशोऽधिपतिर्भवेत् ॥
रजोभिर्निर्म्मितं लिङ्गं यः पूजयति भक्तितः ।
विद्याधरपदं प्राप्य पश्चात् शिवसमो भवेत् ॥
श्रीकामो गोशकृल्लिङ्गं कृत्वा भक्त्या प्रपूजयेत्
स्वच्छेन कापिलेनैव गोमयेन प्रकल्पयेत् ॥
कार्य्यं यष्टिक्रमं लिङ्गं यवगोधूमशालिजम् ।
श्रीकामः पुष्टिकामश्च पुत्त्रकामस्तदर्च्चयेत् ॥
सिताखण्डमयं लिङ्गं कार्य्यमारोग्यवर्द्धनम् ।
वश्ये लवणजं लिङ्गं तालत्रिकटुकान्वितम् ॥
गव्यधृतमयं लिङ्गं संपूज्य बुद्धिवर्द्धनम् ।
लवणेन च सौभाग्यं पार्थिवं सर्व्वकामदम् ॥
कामदं तिलपिष्टोत्थं तुषोत्थं मारणे स्मृतम् ।
भस्मोत्थं सर्व्वफलदं गुडोत्थं प्रीतिवर्द्धनम् ॥
गन्धोत्थं गुणदं भूरि शर्करोत्थं सुखप्रदम् ।
वंशाङ्कुरोत्थं वशकरं गोमयं सर्व्वरोगदम् ॥

निर्म्माल्यं मम देवेशि विष्णोर्ग्राह्यं वरानने ॥
देवासुरमनुष्याश्च गन्धर्व्वा किन्नरादयः ।
ते सर्व्वे परमेशानि वराकाः क्षुद्रबुद्धयः ।
निर्म्माल्येषु च देवेशि अधिकारी कथं भवेत् ॥”
इति च तत्रैव १३ । १४ पटलौ ॥ * ॥
“चतुर्द्दश्यां महेशानि शुक्लायां वरवर्णिनि ।
कृष्णायां वा महेशानि अमावास्यां विशेषतः ।
निर्माय च चतुर्द्दश्यां लिङ्गं भक्त्या च पूजयेत् ।
एकहस्ते महेशानि निर्माय पार्थिवं शिवम् ॥
दक्षिणे वामहस्ते वा निर्माय ये च पार्थिवम् ।
तत्फल परमेशानि लक्षलिङ्गसमं भवेत् ॥”
इति लिङ्गार्च्चनतन्त्रम् ॥ * ॥
बाणलिङ्गलक्षणादिकं बाणलिङ्गशब्देद्रष्टव्यम् ॥
अथ रौद्रलिङ्गलक्षणम् । वीरमित्रोदयधृतम् ।
“नदी समुद्भवं रौद्रमन्योन्यस्य विघषणात् ।
नदीवेगात् समं स्निग्धं सजातं रौद्रमुच्यते ॥”
ममुच्चयेऽपि ।
“सरित्प्रवाहसंस्थानं बाणलिङ्गसमाकृति ।
तदन्यदपि बोद्धव्यं रौद्रलिङ्गं सुखावहम् ॥
नदीसारनर्म्मदायां बाणलिङ्गसमाकृति ।
तदन्यदपि बोद्धव्यं लिङ्गं रौद्रं भविष्यति ॥
रौद्रलिङ्गं तथाख्यातं बाणलिङ्गसमाकृति ।
श्वेतरक्तं तथा पित्तं कृष्णं विप्रादिपूजितम् ॥
स्वभावात् कृष्णवर्णं वा सर्व्वजातिषु सिद्धिदम् ।
प्रासादे स्थापितं लिङ्गमचलं तच्छिलादिजम् ।
स्थापितं अचलं गेहे स्थिरं लिङ्गमयोजिते ॥
पञ्चधा तत् स्थितं लिङ्गं स्वयम्भु दैवपालकम् ।
आर्षञ्च मानसं लिङ्गं तेषां लक्षणमुच्यते ॥
सिद्धान्तशेखरे ।
“नानाच्छिद्रसुसंयुक्तं नानावर्णसमन्वितम् ।
अदृष्टमूलं यल्लिङ्गं कर्कशं भुवि दृश्यते ॥
तत् लिङ्गन्तु स्वयम्भतमपरं लक्षणाच्युतम् ।
स्वयम्भु लिङ्गमित्युक्तं तच्च नानाविधं मतम् ॥
शङ्खाभमस्तकं लिङ्गं वैष्णवं तदुदाहृतम् ।
पद्माभमस्तकं ब्राह्मं छत्राभं शाक्रमच्यते ॥
शिरोयुग्मं तथाग्नेयं त्रिपदं याम्यमीरितम् ।
खड्गाभं नैरृतं लिङ्गं वारुणं कलसाकृति ॥
वायव्यं ध्वजवाँल्लिङ्गं कौबेरन्तु गदान्वितम् ।
ईशानस्य त्रिशूलाभं लोकपालादिनिःसृतम् ।
स्वयम्भु लिङ्गमाख्यातं सर्व्वशास्त्रविशारदैः ॥”
इति स्वयम्भुलिङ्गलक्षणम् ॥ * ॥
मत्स्यसूक्ते ।
“दृष्ट्वा लिङ्गं महेशस्य स्वयम्भूतस्य पार्व्वति ।
सर्व्वपापविनिर्मुक्तः परे ब्रह्मणि लीयते ॥” * ॥
एतेषां पूजाफलन्तु तत्रैव ।
“विशेषाच्छैलजं मुक्त्यै भुक्तये चानुषङ्गतः ।
केशास्थिसम्भव लिङ्गं सर्व्वशत्रुविनाशनम् ।
क्षोभणे मारणे पिष्टसम्भवं लिङ्गमुत्तमम् ॥
दारिद्र्यदं द्रुमोद्भूतं पिष्टं सारस्वतप्रदम् ।
दधिदुग्धोद्भवं लिङ्गं कीर्त्तिलक्ष्मीसुखप्रदम् ।
धान्यदं धान्यज लिङ्गं फलोत्थं फलदं भवेत् ॥
पुष्पोत्थं दिव्यभोगायुर्मुक्त्यै धावीफलोद्भवम् ।
नवनीतोद्भवं लिङ्गं कीर्त्तिसौभाग्यवर्द्धनम् ॥
दूर्वाकाण्डसमुद्भूतमपमृत्युविनाशनम् ।
कर्पूरसम्भवं लिङ्गं चला वै भुक्तिमुक्तिदा ।
अयस्कान्तं चतुर्द्धा तु ज्ञेयं सामान्यसिद्धिषु ॥”
इति गरुडपुराणम् ॥
“सर्व्वं मणिभवं श्रेष्ठं तत्र वज्रमरिच्छिदि ।
यमलिङ्गं महाभूत्यै सौभाग्याय च मौक्तिकम् ॥
पुष्टिमूलं महानोलं ज्योतिस्तीरसमुद्भवम् ।
स्पशक कुलसन्नसत्यै तैजसं सूर्य्यकान्तजम् ॥

| | | |
|---|---|---|
| नर्म्मदासम्भवं रौद्रं बाणलिङ्गवदीरितम्<br>॥”<br>इति रौद्रलिङ्गलक्षणम् ॥ | पार्थिवं भुक्तये शस्तं मुक्तये चानुषङ्गतः<br>॥<br>एवं वै दारुजं ज्ञेयं चिह्नलिङ्गं तथा पुनः<br>।<br>स्थिरलक्ष्मीप्रद ज्ञेयं हैमं राज्यप्रदञ्च<br>तत् ।<br>पुत्त्रवृद्धिकरं ताम्रं राङ्गमायुःप्रवर्द्धनम्<br>॥”<br>पद्मपुराणम् ।<br>“पारदञ्च महाभूत्यै सौभाग्याय च<br>मौक्ति-<br>कम् ।<br>चन्द्रकान्तं मृत्युजित् स्याद्वाटकं<br>सर्व्वकामदम् ॥” | |

चन्द्रापीडं मृत्युजितं स्फाटिकं सर्व्वकामटम् ।
शूलाख्यमणिजं शत्रुक्षयार्थं मौक्तिकं तथा ॥
आपत्यं हीरकं ज्ञेय रोगहृन्मौक्तिकोद्भवम् ।
शुभकृत् पुष्कलं तीर्थे वैदुर्य्यं शत्रुदर्पहृत् ।
नीलं लक्ष्मीप्रदं ज्ञेयं स्फाटिकं सर्व्वकामदम् ॥"
इति सारसंग्रहः ॥
"महामुक्तिप्रदं हैमं राजतं भूतिवर्द्धनम् ।
आरकूटं तथा कांस्यं शृणु सामान्यमुक्तिदम् ॥
त्रपुसीसायसं लिङ्गं शत्रूणां नाशने हितम् ।
कीर्त्तिदं कांस्यजं लिङ्गं राजतं पुत्रवर्द्धनम् ॥
पैत्तलं भुक्तिमुक्त्यर्थं मिश्रजं सर्व्वसिद्धिदम् ॥"
इति कालोत्तरतन्त्रम् ॥
तत्रैव शिवनारदसंवादे ।
"पितॄणां मुक्तये लिङ्गं पुज्यं रजतसम्भवम् ।
हैमजं सत्यलोकस्य प्राप्तये पूजयेत् पुमान् ।
पूजयेत्ताम्रजं लिङ्गं पुष्टिकामो हि मानवः ॥"
मत्स्यसूक्ते ।
"ताम्रलिङ्गं कलौ नार्च्चेत् रैत्यस्य सीसकस्य च
रक्तचन्दनलिङ्गञ्च शङ्खकांस्यायसं तथा ॥" * ॥
मातृकाभेदतन्त्रे १२ पटले ।
"पार्थिवे शिवपूजायां सर्व्वसिद्धियुतो भवेत् ।
पाषाणे शिवपूजायां द्विगुणं फलमीरितम् ॥
एतदन्यन्न कुर्व्वीत कदाचिदपि पार्व्वति ! ॥"
इति मातृकाभेदतन्त्रे ७ पटलः ॥
अपि च ।
"मृत्तिकातोलकं ग्राह्यमथवा तोलकद्वयम् ।
त्रिसूत्रस्य प्रमाणेन घटनं कारयेद्बुधः ।
अङ्गुष्ठपर्व्व मानन्तु कृत्वा लिङ्गं प्रपूजयेत् ॥"
इति षट्कर्म्मदीपिकाधृतविश्वसारतन्त्रम् ॥ * ॥
त्रिसूत्रीकरणमुक्तं कालोत्तरे ।
"लिङ्गे वेद्यां तथा पीठे समसूत्रनिपातनात् ।
समञ्चैव विजानीयात् त्रिसूत्रीकरणन्त्विदम् ॥"
मृत्तिकाभद्नेन ब्राह्मणादीनां पूजाफलस्य प्रश-स्तत्वमुक्तं तत्रैव ।
"शुक्लं हि पार्थिवं लिङ्गं निर्म्माय यस्तु पूजयेत् ।
स एव परमेशानि त्रिवर्गफलभाग्भवेत् ॥
क्षत्रियस्तु वरारोहे रक्तं निर्म्माय पार्थिवम् ।
पूजयेत् सततं यस्तु त्रिवगफलभाग्भवेत् ॥
हरितं पार्थिवं देवि निर्म्माय यस्तु पूजयेत् ।
स च वैश्यो महेशानि त्रिवर्गफलभाग्भवेत् ॥
कृष्णं हि पार्थिवं लिङ्गं निर्म्माय यस्तु पूजयेत्
स शूद्रः परमेशानि त्रिवर्गफलभाग्भवेत् ॥
शिलादौ च महेशानि स्थूलञ्च फलदायकम् ।
अङ्गुष्ठमानं देवेशि यद्वा हेमाद्रिमानकम् ॥
क्रमेण देवदेवेशि फलं बहुविधं लभेत् ।
स्थूलात् स्थूलतरं लिङ्गं रुद्राक्षं परमेश्वरि ।
पूजनाङ्गारणाद्देवि फलं बहुविधं स्मृतम् ॥"
स्थूलात् स्थूलतरमिति पार्थिवलिङ्गे तरपरम् ।
मृत्तिकातोलकं ग्राह्यमित्यादिवचनात् ॥ * ॥
शिलास्फाटिकमरकतादीनांपञ्चसूत्रीकरण-मुक्तम् । यथा, --
"शिवलिङ्गस्य यन्मानं तन्मानं दक्षसव्ययोः ।
योन्यग्रमपि यन्मानं तदधोऽपि तथा भवेत् ॥"
इति लैङ्गम् ॥
"लिङ्गस्य यादृग्विस्तारः परिणाहोऽपि तादृशः
लिङ्गस्य द्विगुणा वेदी योनिस्तदर्द्धसम्मिता ॥
कुर्व्वीताङ्गष्ठतो ह्रस्वं न कदाचिदपि क्वचित् ।
रत्नादिशिवनिर्म्माणे मानमिच्छावशाद्भवेत् ॥"
इति तन्त्रान्तरम् ॥
द्रव्यविशेषेण पूजादिफलमपि तत्रैव ।
"वस्त्रपूतजलैर्लिङ्गं स्नपित्वा मम मानवाः ।
लक्षाणाञ्चाश्वमेधानां फलमाप्नोति सत्तमः ॥
सुगन्धिचन्दनरसैर्लिङ्गमालिप्य भक्तितः ।
आलिप्यते सुरस्त्रीभिः सुगन्धैयक्षकर्द्दमैः ॥" * ॥
लिङ्गपूजनाकरणे दोषस्तत्पूजाफलञ्च तत्रैव शिवनारदसंवादे ।
"विना लिङ्गार्च्चनंयस्य कालो गच्छति नित्यशः ।
महाहानिभवेत्तस्य दुर्गतस्य दुरात्मनः ॥
एकतः सर्व्वदानानि व्रतानि विविधानि च ।
तीर्थानि नियमा यज्ञा लिङ्गाराधनमेकतः ॥
न लिङ्गाराधनादन्यत् पुरा वेदे चतुर्ष्वपि ।
विद्यते सर्व्वशास्त्राणामेष एव सुनिश्चितः ॥
भुक्तिमुक्तिप्रदं लिङ्गं विविधापन्निवारणम् ।
पूजयित्वा नरो नित्यं शिवसायुज्यमाप्नुयात् ॥
सर्व्वमन्यत् परित्यज्य क्रियाजालमशेषतः ।
भक्त्या परमया विद्वान् लिङ्गमेकं प्रपूजयेत् ॥"
इति स्कन्दपुराणम् ॥ * ॥
"अश्वमेधसहस्राणि वाजपेयशतानि च ।
महेशार्च्च नपुण्यस्य कलां नार्हन्ति षोडशीम् ॥"
इति मत्स्यसूक्ते १६ पटलः ॥ * ॥
"स्वयं नारायणः प्रोक्तो यदि शम्भुं प्रपूजयेत् ।
स्वर्गे मर्त्ये च पाताले ये देवाः संस्थिताः सदा ।
तेषां पूजा भवेद्देवि शम्भुनाथस्य पूजनात् ॥"
इति मातृकाभेदतन्त्रम् ॥ * ॥
षट्कर्म्मदीपिकायाम् ।
"असारे खलु संसारे सारमेतच्चतुष्टयम् ।
काश्यां वासः सतां सङ्गो गङ्गाम्भः शम्भु-सेवनम् ॥ * ॥
अथ पारदशिवलिङ्गमाहात्मम् ।

स्वर्णलिङ्गे च पूजायां शत्रूणां नाशनं मतम् ।
सर्व्वसिद्धीश्वरो रौप्ये फलं तस्माच्चतुर्गुणम् ॥
ताम्रे पुष्टिं विजानीयात् कांस्ये च धनसंक्षयः
गङ्गायाञ्च लक्षगुणं लाक्षायां रोगवान् भवेत् ॥
स्फाटिके सर्व्वसिद्धिः स्यात्तथा मरकते प्रिये ।
लौद्वलिङ्गे रिपोर्नाशं कामदं भस्मलिङ्गकम् ॥
वालुकायां काम्यसिद्धिर्गोमये रिपुहिंसनम् ।
सव्वलिङ्गस्य माहात्म्यं धर्म्मकामार्थमोक्षदम्
संस्कारेण विना देवि पाषाणादौ न पूजयेत् ॥"
तत्संस्कारस्तत्रै यथा, --
"रौप्यञ्च स्वर्णलिङ्गञ्च स्वर्णपात्रे निधाय च ।
तस्मादुत्तोल्य तल्लिङ्गं दुग्धमध्ये दिनत्रयम् ॥
त्र्यम्बकेण स्नापयित्वा कालरुद्रं प्रपूजयेत् ।
वोडशेनोपचारेण वेद्यान्तु पार्व्वतीं यजेत् ॥
तस्मादुत्तोल्य तल्लिङ्ग गङ्गातोये दिनत्रयम् ।
ततो वेदोक्तविधिना संस्कारमाचरेत् सुधीः ॥"
लक्षणहीनलिङ्गपूजने दोषो यथा, --
"लिङ्ग सुलक्षण कुर्य्यात् त्यजेल्लिङ्गमलक्षणम् ।
दैर्घ्यहोने भवेद्व्याधिरधिके शत्रुवर्द्धनम् ॥
मानहीने विनाशः स्यादधिके च शिशुक्षयः ।
विस्तारे चाधिके हीने राष्ट्रनाशो भवेत् ध्रुवम् ॥

लिङ्गशब्दव्युत्प्रत्तिर्यथा, --
"आकाशं लिङ्गमित्याहुः पृथिवी तस्य पीठिका ।
आलयः सर्व्वदेवानां लयनाल्लिङ्गमुच्यते ॥"
इति स्कन्दपुराणम् ॥ * ॥
लिङ्गमहिमा यथा, --
शिव उचाच ।
"न तुष्याम्यर्च्चितोऽर्च्चायां पुष्पधूपनिवेदनैः ।
लिङ्गेऽर्च्चिते तथात्यर्थं परं तुष्यामि पार्व्वति ॥
एष देवि पुरा कृत्ये जीनाऽहं सर्व्वदैवतैः ॥
लिङ्गत्वाल्लिङ्गमित्युक्तं सदेवासुरकिन्नरैः ॥
प्रयच्छामि दिवं देवि यो मल्लिङ्गार्च्चने रतः ।
त्यक्त्वा सर्व्वाणि पापानि निर्गदो दग्धकल्पषः ।
मन्मना मन्नमस्कारो मामेव प्रतिपद्यते ॥"
इति वीरमित्रोदयधृतस्कन्दपुराणम्॥ * ॥

"ज्योतिर्म्मयं महालिङ्गं कैलाशनगरे प्रिये ।
तस्यैव षोडशांशैकः काश्यां विश्वेश्वरः स्थितः ॥
पूर्णलिङ्गं महेशानि शिवबीजं न चान्यथा ।
शिलामध्ये यथा चक्रं लक्ष्मीनारायणः परम् ॥
पारदस्य शतांशैको लक्ष्मीनारायणो न हि ।
पकारं विष्णुरूपञ्च आकारं कालिका स्वयम् ॥
रेफं शिवं दकारञ्च ब्रह्मरूपं न चान्यथा ।
पारदं परमेशानि ब्रह्मविष्णुशिवात्मकम् ।
यो यजेत् पारदं लिङ्गं स एव शम्भुरव्ययः ॥"
इति मातृकाभेदतन्त्रे ८ पटलः ॥
तस्य निर्म्माणविधानं पारदशब्दे द्रष्टव्यम् ॥ * ॥
प्रकारान्तरशिवलिङ्गोत्पत्तिर्य्यथा --
"ततो विवाहं निर्व्वर्त्त्य कृतकृत्या यथागताः ।
गताः सर्व्वे महेशोऽपि सत्या सह तदा गृहम् ।
जगाम रेमे सत्या च चिरं निर्भरमानसः ॥
अथ काले कदाचित्तु सत्या सह महेश्वरः ।
रेमे न शेके तं सोढुं सती श्रान्ताभवत्तदा ।
उवाच दीनया वाचा देवदेवं जगद्गुरुम् ॥
भगवन्न हि शक्नोमि तव भारं सुदुःसहम् ।
क्षमस्व मां महादेव कृपां कुरु जगत्पते ॥
निशम्य वचनं तस्या भगवान् वृषभध्वजः ।
निभरं रमणं चक्रे गाढं निर्द्दयमानसः ॥

| | | |
|---|---|---|
| पीठहीने तु दारिद्र्यं शिरोहोने कुलक्षयः ।<br>ब्रह्मसूत्रविहीने च राज्ञां राष्ट्रञ्च नश्यति ।<br>तस्मात् सर्व्वप्रयत्नेन लिङ्गं कुर्य्यात् सुलक्षणम् ॥"<br>अथ लिङ्गप्रमाणम् ।<br>देव्युवाच ।<br>"लिङ्गप्रमाणं देवेश कथयस्व मयि प्रभो ।<br>पार्थिवे च शिलादौ च विशेषो यत्र यद्भवेत् ॥<br>श्रीशिव उवा च !<br>मृत्तिकातोलकं ग्राह्यमथवा तोलकद्वयम् । | | |

कृत्वा संपूर्णरमणं सती च त्यक्तमैथुना ।
उत्थानाय मनश्चक्रे उभयोस्तेज उत्तमम्
।
पपात धरणीपृष्ठे तैर्व्याप्तमखिलं जगत् ॥
पाताले भूतले स्वर्गे
शिवलिङ्गास्तदाभवन्।
तेन भूता भविष्याश्च शिवलिङ्गाः
सयोनयः ॥
यत्र लिङ्गं तत्र योनिर्यत्र योनिस्ततः शिवः
।
उभयोश्चैव तेजोभिः शिवलिङ्गं व्यजायत
॥”
इति नारदपञ्चरात्रे ३ रात्रम् ॥ * ॥
कामनाभेदे पार्थिवलिङ्गसंख्या यथा, --
“संख्या पार्थिवलिङ्गस्य यथाकामं
निगद्यते ।
मृल्लिङ्गं पार्थिवं नाम भुक्तिमुक्तिकरं परम्
॥
देशकालादिकं ज्ञात्वा कुर्य्यात् लिङ्गं
फलप्रदम्
न करोति यदा ज्ञात्वा न कार्य्यं तस्य
सिध्यति
विद्यार्थी शतसाहस्रं धनार्थी च तदर्द्धकम्
।
पुत्त्रार्थी सार्द्धसाहस्रं कन्यार्थी च
शतत्रयम् ॥
विद्वान् लिङ्गायुतं कुर्य्यात् सर्व्वपापहरं
परम् ।
राज्यार्थी शतसाहस्रं कान्तार्थी
शतपञ्चकम् ॥
मोक्षार्थी कोटिगुणितं भूतिकामः
सहस्रकम् ।
रूपार्थी त्रिसहस्रन्तु तीर्थार्थी
द्विसहस्रकमम् ।
सुहृत्कामः सहस्रन्तु वस्त्रार्थं शतमष्टकम्
॥
मारणार्थं सप्तशतं मोहनार्थं शताष्टकम् ॥
उच्चाटनवशश्चैव सहस्रन्तु यथोक्ततः ।
निर्म्माय पार्थिवं लिङ्गं कुण्डलीसहितं प्रिये
॥
या लिङ्गं परमेशानि स रुद्रः परमेश्वरः ।
कुण्डली वेष्टनी तस्य सा देवी परमेश्वरी ॥
शिवस्य पूजनात् देवि देवीदेवौ च पूजितौ
॥”
इति मत्स्यसूक्तम् ॥ * ॥
बाणलिङ्गनिर्म्माल्यग्रहणेप्रतिप्रसवो यथा, -
-
“बाणलिङ्गे न चाशौचं न च
निर्म्माल्यकल्पना
सर्व्वं बाणार्पितं ग्राह्यं भक्त्या भक्तैश्च
नान्यथा ॥
ग्राह्याग्राह्यविचारोऽयंबाणलिङ्गे न विद्यते ।
तदर्पितं जलं पत्रं ग्राह्यं प्रसादसंज्ञया ॥
बाणलिङ्गे स्वयम्भूते चन्द्रकान्तेन्द्रसंस्थिते
।
चान्द्रायणसमं ज्ञेयं शम्भोर्नैवेद्यभक्षणैः ॥”
इति शिवनारदसंवादः ॥

**शिवलोकः**, पुं, (शिवस्य लोकः ।) कैलासः । यथा,

“विल्वपत्रैरखण्डैश्च यो लिङ्गं पूजयेत्
सकृत् ।
सर्व्वपापैर्व्विनिर्मुक्तः शिवलोके महीयते ॥”
इति तिथ्यादितत्त्वधृतभविष्यपुराणम्॥
शिवस्य भुवनं जनश्च ॥

**शिववल्लभा**, स्त्री, (शिवस्य वल्लभा ।) शतपत्री ।

इति राजनिर्घण्टः ॥ शिवप्रिये त्रि ॥

**शिववल्लिका**, स्त्री, (शिवस्य वल्लिका ।) लिङ्गिनी

इति राजनिर्घण्टः ॥

**शिववल्ली**, स्त्री, (शिवस्य वल्ली ।) लिङ्गिनी ।

श्रीवल्ली । इति राजनिर्घण्टः ॥

**शिववाहनः**, पुं, (शिवस्य वाहनः ।) अनड्वान् ।

इति राजनिर्घण्टः ॥

**शिववीजं**, क्ली, (शिवस्य वीजम् ।) पारदः ।

इति राजनिर्घण्टः ॥

अपरञ्च ।
“शश्च कल्याणवचन इरेवोत्कृष्टवाचकः ।
समूहवाचकश्चैव वाकारो दातृवाचकः ॥
श्रेयःसंघोत्कृष्टदात्री शिवा तेन प्रकीर्त्तिता
।
शिवराशिर्मूर्त्तिमती शिवा तेन प्रकीर्त्तिता ॥
शिवो हि मोक्षवचनश्चाकारो दातृवाचकः ।
स्वयं निर्व्वाणदात्री या सा शिवा
परिकीत्तिता”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे २७
अध्यायः ॥
शमीवृक्षः । हरीतकी । शृगालः । ताम-
लकी । इत्यमरः ॥ आमलकी । इति
मेदिनी ॥
बुद्धशक्तिविशेषः । स तु द्वाविंशजिनमाता ।
इति त्रिकाण्डशेषः ॥ हरिद्रा । दूर्व्वा ।
गोरो-
चना । इति राजनिर्घण्टः ॥ * ॥ शृगालस्य
ध्वनेः शुभाशुभं यथा, --
“शोभनं शुभफलाप्तिसूचकं
कथ्यतेत्यवितथं शिवारुतम् ।
शान्तदीप्तककुभां विशेषतो
ज्ञानमत्र च सदोपयुज्यते ॥
दग्धा दिगुक्ता दिननाथयुक्ता
विवस्वदाप्ता भवति प्रदीप्ता ।
सा धूमिता यां सविता प्रयातः
शेषा दिगन्ताः किल पञ्च शान्ताः ॥
दग्धा दिगैशी ज्वलिता दिगैन्द्री
प्रधूमिता चानलदिक्क्रमेण ।
प्रत्येकमेकं प्रहराष्टकेन
भुङ्क्ते दिशोऽष्टौ सविता क्रमेण ॥
आद्ये दिनस्य प्रहरे प्रवृत्ते
महेशदेवेशहुताशदिक्षु ।
शिवा रटन्ती कुरुते नराणां
संत्रासकायव्ययबन्धनानि॥
अह्नो द्वितीये प्रहरस्य भागे
सहस्रनेत्रानलकालदिक्षु ।
शिवा रटन्ती कुरुते नराणां
संत्रासकायव्ययबन्धनानि॥

स्तम्भने च सहस्रन्तु दारणे च तदर्द्धकम्
॥
महाराजभये पञ्चशतञ्चापदि सङ्कटे ।
सहस्रमयुतं सर्व्व कामदं परिकीर्त्तितम् ॥
एकं पापहरं प्रोक्तं द्विलिङ्गञ्चार्थसिद्धिदम्
।
त्रिलिङ्गं सर्व्वकामानां कारणं परमीरितम्
॥”
तथा ।
“लिङ्गानामयुतं कृत्वा पूजा राजभयं हरेत्
।
सहस्राणि च लिङ्गानां
निगडान्मोचयेद्ध्रुवम् ॥
कारागृहविमुक्त्यर्थमयुतं कारयेद्बुधः ।
डाकिन्यादिभये पञ्चसहस्रं कारयेत्तथा ।
सहस्राणाञ्च पञ्चाशदपुत्त्रो हि प्रकारयेत्
॥”
इति वीरमित्रोदयधृतम् ॥
“अनेन च क्रमाद्देवि लक्षं यस्तु प्रपूजयेत्
।
सर्व्वाभीष्टफलं देवि लभते नात्र संशयः
॥” * ॥
एकीकृत्य लिङ्गपूजाविधिनिषेधौ यथा, --
“एकीकृत्य महेशानि युगलं न तु पूजयेत्
।
एकीकृत्य महेशानि दश पञ्चशतानि च ॥
प्रत्येकेनाथवा देवि विल्वपत्रैः प्रपूजयेत् ।
एकैकं पूजयेल्लिङ्गं युगलं न तु पूजयेत् ।
दरिद्रो जायते देवि युगलस्य च पूजनात्
॥”
इति लिङ्गार्च्चनतन्त्रम् ॥ * ॥
शिवलिङ्गमृत्तिकादिनिरूपणंयथा, --
“तीर्थमृत्स्नां समाहृत्य निर्म्माय
लिङ्गमद्भुतम्
तीर्थाभावे महेशानि क्षुद्रस्य मृत्तिकां प्रिये
॥
पर्व्वतप्रभवा देवि नदीनाम्नेत्युदाहृतम् ।
एतद्भिन्ना महेशानि नदी क्षुद्रा इति प्रिये ॥
निर्झरस्य च देवेशि नदी सम्पत्प्रदायिनी
।

**शिवशेखरः**, पुं, (शिवः सुखकरः शिवप्रियो वा
शेखरोऽग्रो यस्य ।) वकवृक्षः । इति जटा-
धरः ॥ धुस्तूरः । इति राजनिर्घण्टः ॥
शिवस्य
मस्तकञ्च ॥

**शिवसायुज्यं**, क्ली, (शिवस्य सायुज्यम् ।) मोक्ष-
विशेषः । स च शिवेन सह योगः । यथा ।
नागरखण्डे ।
“उपवासप्रभावेण बलादपि च जागरात् ।
शिवरात्रेस्तथा तस्य लिङ्गस्यापि प्रपूजया ।
अक्षयान् लभते लोकान् शिवसायुज्यमाप्नु-
यात् ॥”
इति तिथ्यादितत्त्वम् ॥

**शिवसुन्दरी**, स्त्री, (शिवस्य सुन्दरी ।) दुर्गा ।
इति तन्त्रशास्त्रम् ॥

**शिवा**, स्त्री, (शिव + टाप् ।) दुर्गा । मुक्तिः ।
यथा, --
“शिवा मुक्तिः समाख्याता योगिनां मोक्ष-
गामिनी ।
शिवाय यां जपेद्देवीं शिवा लोके ततः स्मृता
॥”
इति देवीपुराणे ४५ अध्यायः ॥
अपि च ।
“शिवा कल्पाणरूपा च शिवदा च शिवप्रिया
।
प्रिये दातरि चाशब्दः शिवा तेन प्रकीर्त्तिता
॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५४ अध्यायः
॥

ब्राह्म्ये तृतीये प्रहरे दिनस्य
हुताशवैवस्वतयातुदिक्षु ।
शिवा रटन्ती कुरुते नराणां
संत्रासकायव्ययबन्धनानि ॥
समागतेऽह्नः प्रहरे तुरीये
प्रेतेशरक्षःपतिपाशिदिक्षु ।
शिवा रटन्ती कुरुते नराणां
संत्रासकायव्ययबन्धनानि ॥
आद्ये निशायाः प्रहरे प्रवृत्ते
रक्षोऽधियादःपतिवातदिक्षु ।
शिवा रटन्ती कुरुते नराणां
संत्रासकायव्ययबन्धनानि ॥
ततो द्वितीयप्रहरे रजन्या-
स्तोयोऽधिनाथानिलसोमदिक्षु ॥
शिवा रटन्ती कुरुते नराणां
संत्रासकायव्ययबन्धनानि ॥
यामे तृतीयेऽपि च यामवत्याः
समीरदोषाकरशम्भदिक्षु ।

| | | |
|---|---|---|
| सर्व्वाभावे महेशानि गोष्पदस्थाञ्च मृत्तिकाम ।<br>अथवा परमेशानि यत्र चित्तं प्रसीदति ॥<br>सुपीनं सुन्दरं रम्यं शर्करारहितं सदा ॥ | | |

शिवा रटन्ती कुरुते नराणां
सत्रासकायव्ययबन्धनानि॥
समागते रात्रितुरीययामे
निशाकरेशानसुरेशदिक्षु ।
शिवा रटन्ती कुरुते नराणां
संत्रासकायव्ययबन्धनानि॥"
इति शिवारुते दग्धदीप्तधूमितदिक्त्रययाम-
प्रकरणं प्रथमम् ॥ * ॥
"इतीरितं दिक्त्रययामयोगात्
फलं विरुद्धं विरुतैः शिवायाः ।
ब्रूमोऽथ दिक्पञ्चकयामयोगात्
फलानि पुंसां क्रमतः शुभानि ॥
कृतान्तरक्षोवरुणानिलेन्दु-
दिक्ष्वाद्ययामे रटितैः, शृगाल्याः ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धि
र्लाभः सुभिक्षं प्रियलोकसङ्गः ॥
रक्षः प्रचेतोऽनिलसोमशम्भु-
दिक्षु द्वितीये प्रहरे रुतेन ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धि
र्लाभः सुभिक्षं प्रियलोकसङ्गः ॥
जलेशवातेन्दुशिवामरेश-
दिक्ष्वारवेण प्रहरे तृतीये ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धि
र्लाभः सुभिक्षं प्रियलोकसङ्गः ॥
समीरसोमेशसुरेशवह्नि-
दिक्षु स्वरेण प्रहरे चतुर्थे ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धि
र्लाभः सुभिक्षं प्रियलोकसङ्गः ॥
शशाङ्करुद्रेन्द्रहुताशकाल-
दिक्ष्वारवैः पञ्चमयामभागे ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धि
र्लाभः सुभिक्षं प्रियलोकसङ्गः ॥
ईशानशक्राग्निकृतान्तरक्षो-
दिक्षु स्वरेण प्रहरे च षष्ठे ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धि
र्लाभः मुभिक्षं प्रियलोकसङ्गः ॥
इन्द्राग्निकालस्रपपाशपाणि-
दिक्ष्वारवैः सप्तमयामकाले ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धि

भयं प्रलापं सकलञ्च सौख्य-
मेकादिशब्दैः कुरुते प्रशान्ते ॥
भयान्यनिष्टश्रुतिरर्थहानि-
रिष्टैर्व्वियोगो महती च भीतिः ।
स्याद्विग्रहाप्तिर्म्मरणञ्च दीप्ते
त्वेकादिना चेत् कृतसप्तकेन ॥
ऐन्द्र्यां निनादे प्रथमेऽर्थलाभो
भवेद्द्वितीये निधिदर्शनञ्च ।
कन्यां तृतीये लभते चतुर्थे
अध्वागमं पञ्चमकेऽथ सिद्धिम् ॥
षष्ठे रवे कुप्यति भूमिनाथो
भीः सप्तमे स्याद्विफलोऽष्टमेषु ॥
त्रासोऽग्निभागे प्रथमे द्वितीये
नराधिपः कुप्यति भीस्तृ तीये ॥
घातश्चतुर्थे नगरस्य शब्दे
शिवाकृते पञ्चमके च युद्धम् ।
वदन्ति तज्ज्ञाः कलहञ्च षष्ठे
भीः सप्तमे स्याद्विफलोऽष्टमस्तु ॥
आद्ये शुभं स्यादशुभं द्वितीये
याम्ये महाव्याधिभयं तृतीये ।
स्वरे चतुर्थे स्वजनागमः स्यात्
पुत्रो भवेत् पञ्चसु फेत्कृतेषु ॥
जायेत कन्या रटिते च षष्ठे
भोः सप्तमे स्याद्विफलोऽष्टमस्तु ।
ग्रामस्य घातो दिशि राक्षसाना-
माद्ये द्वितीयेऽपि च गोकुलस्य ॥
मृत्युस्तृतीये द्विचतुष्पदानां
हानिश्चतुर्थेऽपि च पञ्चमेऽत्र ।
चौराद्भयं राजभयञ्च षष्ठे
भीः सप्तमे स्याद्विफलोऽष्टमस्तु ॥
शब्दे शिवाया वरुणस्य भागे
आद्ये भयं हानिरथ द्वितीये ।
स्याद्राजदूतागमनं तृतीये
दाहश्चतुर्थे खलु चौरभीतिः ॥
स्यात् पञ्चमे राजभयश्च षष्ठे
भीः सप्तमे स्याद्विफलोऽष्टमस्तु ।
वायव्यभागे भयमेकशब्दे
भयातिरेको भवति द्वितीये ॥
वृष्टिस्तृतीये महती चतुर्थे

सङ्गो भवेद्वैरिजनश्च षष्ठे
भीः सप्तमे स्याद्विफलोऽष्टमस्तु ॥
आद्ये भवेद्दर्दिनमीशदेशे
वृष्टिर्द्वितीये च रवे शिवायाः ।
वातस्तुतीये त्वशनिश्चतुर्थे
म्रियेत कश्चित् खलु पञ्चमे च ॥
लभेत पृथ्वीं निनदे च षष्ठे
भीः सप्तमे स्याद्विफलोऽष्टमस्तु ॥"
इति श्रीवसन्तराजे शिवारुते
स्वराष्टकप्रकरणं
तृतीयम् ॥ * ॥
"क्षेमलाभपुनरागमनानां
निश्चयं यमधिगम्य विशङ्कः ।
येन याति पथिकः परदेशं
तं शिवारुतमथ प्रथयामः ॥
यं यं देशं गन्तुमभ्युद्यतानां
पुंसां शब्दानुच्चरन्ती शृगाली ।
शान्तायां सा सिद्धये वाञ्छितानां
दीप्तायान्तु स्यादभीष्टक्षयाय ॥
प्राचीं दिशं सन्मुखभानुविम्बं
प्रतिष्ठमानस्य नरस्य यस्य ।
शब्दं शृगाली पुरतः करोति
बन्धं वधं वा प्रकरोति तस्य ॥
प्राचीदिगीशाभिमुखस्य पुंसः
प्रस्थानकामस्य शिवा सशब्दा ।
भियेऽर्थनाशाय च दक्षिणा स्या-
द्वामा पुनर्वाञ्छितकार्य्यसिद्ध्यै ॥
प्रत्यर्कमाशां चलितस्य पूर्व्वां
शिवा विरावं पुरुषस्य यस्य ।
करोति पृष्ठे प्रकरोति तस्य
सर्व्वप्रकारामभिलाषसिद्धिम् ॥
प्रस्थापिनो यस्य च दक्षिणाशां
शिवा रवं मुञ्चति दक्षिणेन ।
आदित्यमुक्ता यदि नो तदानीं
ध्रुवं भवेत्तस्य महीपतित्वम् ॥
वैवस्वताशां चलितस्य यस्य
दिवाकरस्तिष्ठति दक्षिणेन ।
शिवा च वामा कुरुते विरावं
सम्पद्यते तस्य समस्तमिष्टम् ॥

र्लाभः सुभिक्षं प्रियलोकसङ्गः ॥
अत्यन्तकृन्नैरृतपाशिवात-
दिक्ष्वष्टमे च प्रहरे रवेण ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धि
र्लाभः सुभिक्षं प्रियलोकसङ्गः ॥”
इति श्रीवसन्तराजे शिवारुते
दिग्यामप्रकरणं
द्वितीयम् ॥ * ॥
“एकादिकानां निधनाष्टमानां
शिवारुतानामधुना यदर्थम् ।
प्राच्यादिकास्वष्टसु दिक्ष्वशेषं
यद्यत् फलं तत्तदुदीरयामः ॥
धनान्यभीष्टाप्तिमभीष्टलाभं
ध्रुवं ततोऽर्थस्य फलं शुभञ्च ।

मेघागमो वर्षति पञ्चमे च ।
क्रोधं विधत्ते मृपतेश्च षष्ठे
भीः सप्तमे स्याद्विफलोऽष्टमस्तु ॥
दिश्युत्तरस्यां विहिते विरावे
म्रियेत कश्चित् प्रथमे द्वितीये ।
महाभयं विप्रवधस्तृतीये
क्षत्रं चतुर्थे खलु हन्यते च ॥
विट् पञ्चमे षष्ठरवे च शूद्रो
भीः सप्तमे स्याद्विफलोऽष्टमस्तु ।
राहोस्तथा दर्शनमाद्यशब्दे
केतोर्द्वितीये च तथोत्तरेण ॥
उल्काप्रपातस्त्रिषु दुर्दिनञ्च
चतुर्षु भद्रं खलु पञ्चमे च ।

पुमान् यदा याम्यककुप्प्रवासी
करोति शब्दं पुरतः श्रृगाली ।
आस्ते विवस्वानपि सम्मु खश्चेत्
भवेत् तदानीमचिरेण मृत्युः ॥
नरस्य याम्यां ककुभं यियासोः
श्रृगालभार्य्या यदि पृष्ठभागे ।
फेत्कारमामुञ्चति मानवस्य
मृत्युश्च पुत्रेण भवत्यवश्यम् ॥
दिशं प्रतीचीं व्रजतः श्रृगाली
नरस्य यस्याभिमुखी विरौति ।
शान्ता स्थिता शान्तफलप्रदात्नी
दीप्ता तु दीप्तं फलमातनोति ॥
प्राचेतसों सञ्चलितस्य काष्ठां
श्रृगालिका जल्पति दक्षिणेन ।

यदा तदानीं सुबहूननर्थान्
करोति चार्थानपि हन्ति पुंसः ॥
दिशं प्रवेतःपरिपाल्यमानां
नरस्य यस्य व्रजतः श्रृगाली ।
वामा विरावं प्रकरोति शान्ता
भवन्त्यभिप्रेतफलानि तस्य ॥
यो वारुणों याति दिशं मनुष्यः
श्रृण्वन् शिवाया रटितानि पृष्ठे ।
गतस्य तस्याशु हुताशभीति-
रसंशयं स्यात् द्रविणक्षयश्च ॥
यस्योत्तराशां चलितस्य पुंमः
प्राच्यां शिवा मुञ्चति फेत्कृतानि ।
भानुःप्रतीच्यां विहितस्थितिश्चे-
दपेक्षितं सिध्यति तत्क्षणेन ॥
मुञ्चत्यदीचीं चलितस्य पृष्ठे
शिवा विरावं पुरुषस्य यस्य ।
आस्ते च मध्ये नभसो विवस्वां-
स्तस्यार्थहानिर्मरणं प्रदिष्टम् ॥
कुबेरकाष्ठां प्रति यः प्रयाति
ज्वालामुखी चाभिमुखी विरौति ।
तस्याध्वगस्याभिमतार्थसिद्धि-
र्भवेच्च सम्पत् पुनरागमश्च ॥
तिष्ठति तीव्रकरो दिशि यस्यां
फेत् कुरुते यदि तत्र श्रृगाली ।
तद्व्रजतः पथिकस्य भवेतां
निश्चयतो धनजीवितनाशौ ॥
दक्षिणतः प्रथमं यदि पश्चात्
वामगता पथिकस्य श्रृगाली ।
फेत् कुरुते कुरुते तदवश्यं
क्षेमधनाप्तिगृहागमनानि ॥
अध्यास्य शान्तां ककुभं नरस्य
वामा श्रृगाली यदि वा रटन्ती ॥
तदार्थलाभं वितरत्यवश्य-
मर्थक्षयं दक्षिणतो रटन्ती ॥
वामा प्रदीप्ते ककुभः प्रदेशे-
ऽलाभं तथानर्थमुपादिशन्ति ।
शिवा रटन्ती पथि दक्षिणा तु
क्षिपत्यनर्थानथ सङ्कटेषु ॥
शान्ते दिगन्ते यदि वा प्रदीप्ते
अग्रेसरा वा पथि या यियासोः
सा द्विप्रकारापि मनोरथाप्त्यै ॥
नृपस्य यात्रासमये पुरस्तात्
प्रयाति चेद्वर्त्म निवेदयन्ती ।
कुर्य्याच्छिवा वैरिपराभवं त-
ज्जयश्रियञ्चाभिमतं विदध्यात् ॥
कार्य्यान्तरेष्वप्यनुगम्यमाना
श्रेयःप्रदा शान्तदिशि प्रदिष्टा ।
शिवा प्रदीप्ते तु दिशि प्रदेशे
समारटन्ती महते भयाय ॥
भयोद्गमे दीप्तदिशि प्रदीप्तै-
नर्दैनृणां हन्ति भयानि देवी ।
महान्ति सर्व्वाण्यपि शान्तनादाः
शान्तस्थिता सर्व्व भयप्रदात्री ॥
यदा च नद्युत्तरगा नराणां
शब्दे श्रृगाली कुरुते कदाचित् ।
तटद्वये तत् परिरक्षणीयं
महद्भयं भावि जलेचरेभ्यः ॥"
इति श्रीवसन्तराजे शिवारुते यात्राप्रकरणं
चतुर्थम् ॥ * ॥
"स्थानस्थितानामपि योगभाजां
नैमित्तिकानामुपदिश्यते तु ।
शिवाविरावैरशिवं शिवञ्च
सुनिश्चितार्थं मुनिसम्मतेन ॥
करोति फे फे इति सर्व्वदिक्षु
यदा तदा स्थानविघातयुद्धे ।
शिवा विधत्ते क्षुधिता त्वसंख्यान्
रौद्रान् स्वरान् मुञ्चति चेदुपेक्षाम् ॥
निरन्तरं रौति विदिक्षु दिक्षु
समन्दकारुण्यरवातुरा चेत् ।
अपत्यमोहेन यदा श्रृगाली
त्यक्त्यस्पृ हा सा कथितेह तज्ज्ञैः ॥
स्थित्वा प्रदीप्ते ककुभो विभागे
ज्वालामुखी फेत् कुरुतेऽतिरौद्रम् ।
ग्रामस्य तस्य प्रकरोति नाशं
तस्याथवा तिष्ठात यस्य मध्ये ॥
ग्रामस्य मध्यं समवाप्य यस्य
ज्वालामुखी मुञ्चति फेत्कृतानि ।
स शून्यतां गच्छति निश्चयेन
स्थानस्य यस्योपगता समीपं
दिनानि पञ्चोच्चरति प्रभावे ।
स्वरेण रौद्रेण श्रृगालभार्य्या
स्यात्तत्र हानिर्महती नराणाम् ॥
सुरक्षितस्यापि मनुष्यलक्षै-
र्ग्रामस्य शीघ्रं ग्रहणं विधत्ते ।
त्रयं दिनानां दिवसावसाने
शिवा रटन्ति परुषस्वरेण ॥
दिक्ष्वारटन्ति सकलासु रौद्रं
भ्रमत्यखिन्ना परितः पुरश्चेत् ।
श्रृगालभार्य्या खलु तद्व्रवीति
युद्धं महत्तत्र महाभिघातम् ॥
ज्वालां विमुञ्चत्यतिरौद्रनादा
समाकुला धावति या समन्तात् ।
कौमारकं या जनयत्यकस्मात् ।
कुर्य्याच्छिवा सा युवराजपातम् ॥
रोमोद्गमं या जनयत्यकस्मात्
फे इत्यतिक्रूररवा नराणाम् ।
मूत्रं पुरीषन्तु तुरङ्गमाणां
सा सर्व्वदा स्यादशिवा शिवेह ॥
तरङ्गिणीरोधसि सौम्यरूपां-
स्त्रीन् पञ्च वा मुच्यति या निनादान् ।
शिवां शिवां तां नृपतित्वदात्रीं
वन्देत देवीमभिवन्दनीयाम् ॥
श्मशानभूमौ दिनमध्यभागे
मध्ये रजन्याः स्वगृहप्रदेशे ।
या रौति तस्यै बलिमर्घ्ययुक्त्रं
भक्त्या प्रदद्याद्यदि भद्रमिच्छेत् ॥
सर्व्वेषु कार्य्येषु समुद्यतेषु
बलिः शिवाया विनिवेदनीयः ।
गृह्णाति यन्मिन् विषयेऽभ्युपेत्य
देवी बलिं जल्पति तत्र सिद्धिम् ॥"
इति श्रीवसन्तराजे शिवारुते
स्थानस्थितप्र-
करणं पञ्चमम् ॥ * ॥
"कथ्यते बलिविधानमिदानीं
शाकुनागममतेन शिवायाः ।
दिव्यमन्त्रबलिवाधितदोषं
साधिताखिलसमुद्यतकार्य्यम् ॥

| | | |
|---|---|---|
| पृष्ठे प्रयाणे प्रतिषेधयित्रो ।<br>शब्दायमाना तु शिवा पुरस्तात्<br>निमज्जयत्यापदगाधसिन्धौ॥<br>वामेऽपसव्ये पुरतोऽथ पृष्ठे<br>पुंमः शिवा जल्पति यत्र तत्र ।<br>आयान्ति चौराः प्रथमे विरावे<br>द्वयोर्भवेत्तस्करदर्शनञ्च ॥<br>नृपादरोऽर्थागमनं तृतीये<br>तुर्य्ये क्षतिः पञ्चमकेऽर्थलाभः ।<br>वाणिज्यसेवादिफलाय षष्ठे<br>भोः मप्तमे स्याद्विफलोऽष्टमस्तु॥<br>हाहारवं मुञ्चति हृष्टभावा<br>हास्यं तु तस्यास्तदुदाहरन्ति । | लोकस्य वा स्यादसुख प्रभूतम् ॥<br>ग्रामान्तिके सप्त दिनानि यावत<br>महाभयोत्पादितफेत्कृतानि ।<br>विरौति चेत्तत् कुरुते श्रृगाली<br>तद्वासिलोकस्य भयं प्रभूतम् ॥<br>मध्यं दिने यावदहानि पञ्च<br>शिवा समीपे नगरस्य तस्य<br>विरौति घातं विदधाति यस्य<br>भयञ्च वह्निप्रभवं प्रभूतम् ॥<br>पञ्चार्द्धरात्राणि कथञ्चिदेषा<br>क्रू रारवा व्याहरते श्रृगाली ।<br>यस्यान्तिके तं बहवो हठेन<br>मुष्णन्ति चौरा जनसन्निवेशे ॥ | शून्यालयं रुद्रगृहं श्मशानं<br>चतुष्पथं मातृगृहं जलान्तम् ।<br>बन्ध्यावनिश्चत्वरमेवमाद्या<br>बलिप्रदानाय मताः प्रदेशाः ॥<br>तेषाञ्च मध्यादुचितप्रदेशे<br>विशोधितं मण्डलिकं विदध्यात् ।<br>पौराणिकश्लोकपरीक्षितायाः<br>संगृह्य गोर्गोमयमन्तरीक्षात् ॥<br>अत्यन्तजीर्णदेहाया बन्ध्यायाश्च विशेषतः<br>।<br>रोगार्त्तनवसूताया न गोर्गोमयमाहरेत् ॥<br>तस्मिन् विचित्रं विततं विदध्यात्<br>पिष्टाक्तकेनाष्टदलं सरोजम् ।<br>मंपूजयेत्तत्र सुराधिपादीन्<br>क्रमेण सर्व्वानपि लोकपालान् ॥ |

मध्ये सुतैः पञ्चभिरभ्युपेता
शिवान्विता पिष्टमयी प्रसन्ना ।
पूज्या शिवा तुष्यति भक्तियोगात्
प्रभूतपुष्पाक्षतधूपदीपैः ॥
साज्यगुडौदनमाषकुलत्थै-
र्यावकपूपलिकामिषमद्यैः ।
संभृतिरत्र नरासनमात्रं
बुद्धिमता बलिकर्म्मणि कार्य्या ॥
प्राप्याष्टमीं वाथ चतुर्द्दशीं वा
संमन्त्र्य मन्त्रण च सप्तकृत्वः ।
बलि शिवाया निशि निश्चयेन
दद्यान्मनुष्यो यदि भद्रमिच्छेत् ॥
अत्र मन्त्रः । ॐ शिवे ज्वालामुखि बलिं
गृहाण गृहाण हुं फट् स्वाहा । ॐ शिवे
शिवदूति भगवति चण्डे इदमर्घ्यं
बलिलीला-
समुचितं गृहाण गृहाण आगच्छ आगच्छ
वायुवेगेन शुभं कुरु कुरु स्वाहा । इत्यर्घ्य-
मन्त्रः । बलिदानाय मन्त्रान्तरम् । ॐ
नमो
भगवति एनं एनं बलिं गृह्ण गृह्ण गन्धपुष्प-
धूपदीपादिकं दह दह पच पच घोररूपिणि
भो भगवति पिबत पिबत स्वाहा ।
एतस्य मन्त्रद्वितयस्य मध्या-
देकेन केनाप्यभिमन्त्रणीयः ।
बलिः शिवायाः सुमहाप्रभावं
पृथक् पृथक् मन्त्रयुगं यदेतत् ॥
ताम्बूलवस्त्रासनदक्षिणाभि-
र्नैमित्तिकं शाकुनशास्त्रदक्षम् ।
प्रपूजयेत्तत्र भवत्यभीष्ट-
माचार्य्यवर्य्ये परितोषिते हि ॥
अश्लेषिकावह्निकृतान्तरुद्र-
धिष्ट्यानि पूर्व्वात्रितयेन सार्द्धम् ।
ज्यष्ठाञ्च सन्त्यज्य विरौति येह
श्रेयस्करी जम्बुकगेहिनी सा ॥
हितैषिणी सर्व्वसमीहितेषु
देवी भवानी भुवि फेरवा च ।
कृताधिवासा कृपया सदव
शिवारुते तेन यतेत विद्वान् ॥"
गृहीत्वा शापं दत्त्वा च शिवा रोदिति निर्जने
॥
एकया भुज्यते यत्र शिवया देव भैरव ।
तत्रैव सर्व्व शक्तीनां प्रीतिः परमदुर्लभा ॥
पशुशक्तिः पक्षिशक्तिर्न्नरशक्तिर्यथाक्रमात् ।
पूजनात् द्विगुणं कर्म्म मङ्गलं साधयेत्ततः ॥
तेन सर्व्वप्रयत्नेन कर्त्तव्यं पूजनं महत् ।
राजादिभयमापन्ने देशान्तरभयादिके ॥
शुभाशुभानि कर्म्माणि विचिन्त्य
बलिमाहरेत् ।
गृह्ण देवि महाभागे शिवे कालाग्निरूपिणि ॥
शुभाशुभफलं व्यक्तं ब्रूहि गृह्ण बलिं तव ।
एवमुच्चार्य्य दातव्यो बलिः कुलजनप्रियः
॥
यदि नो भुज्यते वत्स तदा नैव शुभं भवेत्
।
शुभं यदि भवेत्तत्र भुज्यते तदशेषतः ।
एवं ज्ञात्वा महादेव शान्तिस्वस्त्ययनं चरेत्
॥"
इति तन्त्रसारः ॥

**शिवाक्षं**, क्ली, (शिवस्याक्षि कारणत्वेनास्त्यस्येति ।
अच् ।) रुद्राक्षम् । इति राजनिर्घण्टः ॥
(अस्य विवरणं रुद्राक्षशब्दे द्रष्टव्यम् ॥)

**शिवाटिका**, स्त्री, वंशपत्री । इति भावप्रकाशः ॥

**शिवात्मकं**, क्ली, (शिवः सुखकरः आत्मा स्वरूपो
यस्य ।) सैन्धवम । इति राजनिर्घण्टः ॥
शिव-
मये, त्रि ॥

**शिवानी**, स्त्री, (शिवस्य भार्य्या । यद्वा, शिवं
मङ्गलमानयतीति । आ + नी + डः । गौरा-
दित्वात् ङीष् ।) दुर्गा । इति लोकप्रसिद्धिः
॥
जयन्तीवृक्षः । इति शब्दचन्द्रिका ॥

**शिवाप्रियः**, पुं, (शिवायाः प्रियः ।) छागः । इति
त्रिकाण्डशेषः ॥ शिवस्य शिवाया
अप्रियवस्तुनि
पशुरूपधरायाति परिवारगणैः सह ॥
भुक्त्वा रौति यदैश्यान्यां मुखमुत्तोल्य
सुस्वरम् ।
तदैव मङ्गलं तस्य नान्यथाकुल भूषण ॥
अवश्यमन्नदानेन नियतं तोषयेच्छिवाम् ।
नित्यश्राद्धं तथा सन्ध्यावन्दनं पितृतर्पणम्
॥
तथैव कुलसेव्यानां नित्यता कुलपूजने ।
पशुरुपां शिवां देवीं यो नार्च्चयति निर्ज्जने
॥
शिवारावेण तस्याशु सर्व्वं नश्यति
निश्चितम् ।
जपपूजाविधानानि यत्किञ्चित् सुकृतानि च
॥
गृहीत्वा शापं दत्त्वा च शिवा रोदिति
निर्ज्जने ।
एकया भुज्यते यत्र शिवया देव भैरव ॥
तत्रैव सर्व्व शक्तीनां प्रीतिः परमदुर्ल्लभा ।
पशुशक्तिः पक्षिशक्तिर्न्नरशक्तिर्यथाक्रमात् ॥
पूजनात् द्विगुणं कर्म्म मङ्गलं साधयेत्ततः ।
तेन सर्व्व प्रयत्नेन कर्त्तव्यं पूजनं महत् ॥ *
॥
राजादिभयमापन्ने देशान्तरभयादिके ।
शुभाशुभानि कर्म्माणि विचिन्त्य
बलिमाहरेत् ॥
गृह्ण देवि महाभागे शिवे कालाग्निरूपिणि ।
शुभाशुभफलं व्यक्तं ब्रूहि गृह्ण बलिं तव ॥
एवमुच्चार्य्य दातव्यो वलिः कुलजनप्रियः
।
यदि न भुज्यते वत्स तदा नैव शुभं भवेत् ॥
शुभं यदि भवेत्तत्र भुज्यते तदशेषतः ।
एवं ज्ञात्वा महादेव शान्तिस्वस्त्ययनं चरेत्
॥
नैवेद्योपरि मूलमन्त्रमष्टोत्तरशतं जप्त्वा
वलिं
दद्यादिति शेषः ॥" इति तन्त्रसारः ॥

**शिवास्मृतिः**, स्त्री, जयन्तीवृक्षः । इति शब्द-
चन्द्रिका ॥

इति श्रीवसन्तराजशाकुने
सदागमार्थशोभने
समस्तसत्यकौतुके विरचितं शिवारुतं
षष्ठम् ॥ *
अथ तान्त्रिकशिवाबलिः । तदुक्तं
कुलचूडामणौ
“विल्वमूले प्रान्तरे वा श्मशाने वाथ
साधकः ।
मांसप्रधानं नैवेद्यं सन्ध्याकाले निवेदयेत्
॥
कालि कालीति वक्तव्यं ततः सा
शिवरूपिणी
पशुरूपा समायाति परिवारगणैः सह ॥
भुक्त्वा रौति यदैशान्यां मुखमुत्तोल्य
सुस्वरम् ।
तदैव मङ्गल तस्य नान्यथा कुलभूषण ॥
अवश्यमन्नदानेन नियतं तोषयेच्छिवाम् ।
नित्यश्राद्धं तथा सन्ध्यावन्दनं
पितृतर्पणम् ॥
तथैव कुलसेव्यानां नित्यता कुलपूजने ।
पशुरूपां शिवां देवीं यो नार्च्चयति निर्जने
॥
शिवारावेण तस्याशु सर्व्वं नश्यति
निश्चितम् ।
जपपूजाविधानानि यत्किञ्चित् सुकृतानि
च ।

शिवाया वल्लभे च त्रि ॥

**शिवापीडः**, पुं, (शिवस्यापीड इव ।) वकवृक्षः ।

इति राजनिर्घण्टः ॥ शिवाशिवयोः
शेखरश्च ॥

**शिवाफला**, स्त्री, (शिवाया इव फलमस्याः ।)

शमीवृक्षः । इति राजनिर्घण्टः ॥

**शिवारातिः**, पुं, (शिवायाः शृगालस्यारातिः ।)

कुक्कुरः । इति शब्दमाला ॥ शिवाशिवयोः
शत्रुश्च

**शिवालयं**, क्ली, (शिवा आलीयतेऽत्रेति । आ +

ली + अच् ।) श्मशानम् । इति हारावली ॥
(यथा, कथासरित्सागरे । ३ । ३३ ।
“बख्यर्थं युद्ध्यमानौ च पुण्येशून्ये
शिवालये ॥”)

**शिवालयः**, पुं, (शिवायाः शिवस्य वा आलयः ।)

रक्ततुलसी । इति शब्दचन्द्रिका ॥ शिवस्य
गृहम् । यथा, रामार्च्चनचन्द्रिकायाम ।
“चन्द्रसूर्य्यग्रहे तीर्थे सिद्धक्षेत्रे शिवालये ।
मन्त्रमात्रप्रकथनमुपदेशः स उच्यते ॥”
इति तिथ्यादितत्त्वम् ॥

**शिवालुः**, पुं, शृगालः । इति राजनिर्घण्टः ॥

**शिवा(ब)वलिः**, पुं, (शिवाभ्यो दीयमानो वलिः ।)

रात्रौ शिवादेयमांसप्रधाननैवेद्यम् । यथा ।
अथ शिवावलिः । कुलचूडामणौ ।
“विल्वमूले प्रान्तरे वा श्मशाने वापि
साधकः
मांसप्रधाननैवेद्यं सन्ध्याकाले निवेदयेत् ॥
कालि कालीति वक्तव्ये तत्रोमा
शिवरूपिणी ।

**शिवाह्लादः**, पुं, (शिवस्याह्लादो यस्मात् ।) वक-

वृक्षः । इति राजनिर्घण्टः ॥
शिवस्यानन्दश्च ॥

**शिवाह्वा**, स्त्री, (शिवेन आह्वा यस्याः ।) रुद्र-

जटा इति राजनिर्घण्टः ॥ शिवनामके त्रि,
॥

**शिविः**, पुं, हिंस्रपशुः । इति त्रिकाण्डशेषः ॥

भूर्ज्जवृक्षः । राजविशेषः । स च
उशीनरराज-
पुत्त्रः । इति मेदिनी ॥ तस्य चरित्रं यथा, -
-
मैत्रेय उवाच ।
“शृणु राजन् ! प्रवक्ष्यामि स्वमांसं शिविना
यथा
समांशं दत्त्ववान् सत्यं पुरा ह्यौशीनरो युवा
॥
सत्यदानरतं ज्ञात्वा शिविमिन्द्राशुशुक्षणी ।
जिज्ञासार्थं समेयातां वर्त्तमाने महाध्वरे ॥
वह्निर्भुत्वा कपोतस्तु हरिश्येनपुरःसरः ।
शरणार्थो महीपालं निनिन्ये भयविह्वलः ॥
त्राहि मां पृथिवीपालेत्यवदत् श्येनजाद्भयात्
।
स तमाश्वासयामास कपोतं शरणागतम् ॥
राजानमुपगम्याथ श्येनः प्रोवाच संसदि ।
वचनं शृणु मे राजन् ! क्षुधार्त्तस्य कुटुम्बिनः
॥
धर्म्मात्मानं त्वामाहुर्वै पृथिव्यां
सर्व्वपार्थिवाः ।
तद्विरुद्धं कथं कर्म्म कर्त्तुमिच्छसि पार्थिव
॥
सर्व्वस्य सम्पदः स्वार्थाः स्वपरार्थास्तु
कस्यचित् ।
परार्था भवतो नित्यं सफलस्य तरोरिव ॥
नोपकारपरेऽप्ये वमुपकारपरो जनः ।
अपकारपरेऽपि त्वमुपकारपरः सदा ॥
ममैव विहितो धात्रा भक्ष्योऽयं त्वं समुत्सृज
।

स श्येनमाह संप्राप्तस्त्राणार्थो सन्निधा मम ॥
तस्मात्तवाहं न समर्पयिष्ये
कपोतकं श्येन यदत्र युक्तम् ।
त्वं मन्यसे तत् करवाणि सर्व्व-
मृते कपोतात् खलु सत्यमत्र ॥
तुभ्यं हि सुमहद्राज्यं प्रयच्छामि विहङ्गम ।
यथा कामयसे चान्यद्वर्ज्जयित्वा कपोतकम् ॥
श्येनः प्राह किमेतत्ते प्रीतिरासीत् खगे दृढा ।
कथञ्चिदस्य तुल्यानि स्वमांसानि प्रयच्छ मे ॥
राजा तमब्रवीद्धृष्टो यन्मे मांसानि याचसे ।
एतद्यच्छामि ते सद्यः स्वमांसं तुलया धृतम् ॥
एवमुक्त्वा स्वमांसानि कपोतेन समं नृपः ।
उत्कृत्य तोलयामास प्रहृष्टो मनसा ततः ॥
तुलया ध्रियमाणस्तु कपोतो व्यतिरिच्यते ।
पुनश्चोत्कृत्य मांसानि ततः प्रादात् स पार्थिवः
न विद्यते यदा मांसं कपोतेन समं क्वचित् ।
ततः प्रक्षीणमांसोऽपि साधुः सुखयते परम् ॥
यदा तेन न तुल्यं तत् स तुलामारुहत् स्वयम् ।
अन्तःपुरस्त्रीषु न राज्ये न च जीविते ॥
करुणासक्तचित्तेन तेनापेक्षा कृता क्वचित् ।
परदुःखातुरा नित्यं स्वसुखानि महन्त्यपि ॥
नापेक्षन्ते महात्मानः सर्व्वभूतहिते रताः ।
पराथमुद्यताः सन्तः सन्तः किं किं न कुर्वते ॥
तादृगप्यम्बुधेर्व्वारि जलदैस्तत् प्रपीयते ।
एक एव सतां मार्गो यदङ्गीकृतपालनम् ॥
दहन्तमकरोत् क्रोडे पावकं यदपां पतिः ।

मार्गशोर्घे शुभे पक्षे समुपोष्य हरेर्द्दिने ।
माघफाल्गुनयोर्व्वापि वैशाखस्य शरत्सु च ॥
द्वादश्यां हरिमभ्यर्च्च कलसोपरिसंस्थितम् ।
शिविकां चक्रवंशोत्थां ऋजुदारुमयीं तथा ॥
आनीय सन्निधिं विष्णोः शुभ्रच्छत्रसमन्विताम्
संभूष्य च सगेण्डूकां जागरं तत्र कारयेत् ॥
विद्याभिजनसम्पन्नविदग्धंशास्त्रवित्तमम् ।
आज्ञासारं शुचिं दक्षं कलत्रापत्यभूषितम् ॥
प्रातः सभार्य्यमभ्यर्च्य वासोभिः स्वर्णभूषणैः ।
उपानच्छुरिकां खड्गां पट्टकञ्चुकवेणुकाम् ॥
आदर्शस्थगिकां पानीयपात्रं कांस्यभाजनम् ।
चत्वारो वृषभा देया धेनवः शुभलक्षणाः ॥
शिविकावाहकानान्तु तथा छत्रस्य धारके ।
वृत्तिर्देया तथान्नञ्च वर्षान्नं ब्राह्मणस्य तु ॥
वर्षे वर्षे पुनर्देयं ब्राह्मणस्य तदैव तु ।
वृत्तिरेव त्वसम्पत्तौ वर्षे वर्षेऽपि वार्षिकी ॥
इहामुत्रातपत्राणं कुरु केशव मे प्रभो ।
त्वत्प्रीणनाय मे दत्तं शास्त्रविद्ब्राह्मणाय वै ॥
यत् प्रभो शिविकां देव प्रीतो भव जनार्द्दन ।
दत्तवान् ज्ञानविदुषे सपत्नीकाय पुत्त्रिणे ॥
सुरापस्तयकृत्सङ्गी ब्रह्महा गुरुतल्पगः ।
शिविकांदानमाहात्म्यात् मुच्यते नात्र संशयः ॥
पितृपक्षान्मातृपक्षान् पत्नीपक्षांस्तथैव च ।
आत्मानं बन्धुपक्षांश्च तारयेन्नरकार्णवात् ॥
भुक्त्वा स विपुलान् भोगान् इहामुत्र सुखप्रदान् ।
सपत्नीकः सपितृको विष्णुसायुज्यमश्नु ते ॥”
इति वह्निपुराणे शिविकादानाध्यायः ॥

**शिविपिष्टः**, पुं, महादेवः । इति शब्दरत्नावली ॥
शिपिविष्टशब्दार्थोऽप्यत्र ॥

**शिविरं**, क्ली, (शेरते राजबलान्यत्र । शीङ स्वप्ने +
बाहुलकात् किरच्प्रत्ययेन साधु । इत्युणादि- वृत्तौ उज्ज्वलदत्तः । १ । ५४ ।) निवेशः । इत्य-

शुभप्रदश्च सर्व्वत्र सुरकारो निशामय ।
विल्वश्च पनसश्चैव जम्बोरो वदरी तथा ॥
प्रजाप्रदञ्च पूर्व्वस्मिन् दक्षिणे धनदस्तथा ।
सम्पत्प्रदश्च सर्व्वत्र यतो हि वर्द्धते गृही ॥
जम्बु वृक्षश्च दाडिम्बः कदल्याम्रातकस्तथा ।
बन्धुप्रदश्च पूर्व्वस्मिन् दक्षिणे मित्रदस्तथा ॥
सर्व्वत्र शुभदश्चैव धनपुत्त्रशुभप्रदः ।
हर्षप्रदो गुवाकश्च दक्षिणे पश्चिमे तथा ॥
ईशाने सुखदश्चैव सर्व्वत्रैवं निशामय ।
सर्व्वत्र चम्पकः शुद्धो भुवि भद्रप्रदस्तथा ॥
अलावुश्चापि कुष्माण्डं मायाम्बुश्च सुकामुकः ।
खर्ज्जूरी कर्कटी चापि शिविरे मङ्गलप्रदाः ॥
वास्तूकः कारवेल्लश्च वार्त्ताकुश्च शुभप्रदाः ।
लताफलञ्च शुभदं सर्वं सर्वत्र निश्चितम् ॥ * ॥
प्रशस्तं कथितं कारो निसिद्धञ्च निशामय ।
वन्यवृक्षो निषिद्धश्च शिविरे नगरेऽपि च ॥
वटो निसिद्धः शिविरे नित्यं चौरभयं ततः ।
नगरेषु प्रसिद्धश्च दर्शनात् पुण्यदस्तथा ॥
हे कारो तिन्तिडीवृक्षो यत्नात्तं परिवर्ज्जय ।
शरेण धनहानिः स्यात् प्रजाहानिर्भवेत् ध्रुवम् ॥
शिविरेऽतिनिषिद्धश्च नगरे किञ्चिदेव च ।

आत्मानं पीडयित्वापि साधुः सुखयते परम् ॥
ह्लादयन् तापितान् वृक्षो दुःखञ्च सहते स्वयम्
अथ तस्मिन् समारूढे पुष्पवर्षं पपात च ॥
देवदुन्दुभयो नेदुस्तुलामौशीनरे नृपे ।
ततस्तस्य तदा ज्ञात्वा वाक्यं चैतदभाषत ॥
शक्रः स्वरूपमास्थाय धर्म्मे राज्ञः परिस्थितिम् ।
इन्द्रोऽहमस्मि भद्रं ते कपोतो हव्यवाहनः ॥
जिज्ञासमानौ त्वां राजन्निमं यज्ञमुपागतौ ।
महाकारुणिकेनेह यत् कृतं तत् सुदुष्करम् ॥
नैव पूर्व्वे नृपाश्चक्रुर्न्नं करिष्यन्ति चापरे ।
यत्ते मांसानि गात्रेभ्यः समुत्कृत्तानि पार्थिव ॥
एषा ते शाश्वती कीर्त्तिर्लोकाननुभविष्यति ।
दिष्यरूपधरश्चैव पालयित्वा महीं चिरम् ॥
सर्व्वान् लोकानतिक्रम्य ब्रह्मलोकं गमिष्यति ।
एव मुक्त्वा तमिन्द्राग्नी जग्मतुस्त्रिदशालयम् ।
राजा तु क्रतुमिष्टा तं मुमुदे देवतां तदा ॥”
इति वह्निपुराणे शिवेरुपाख्याननामाध्यायः ॥

**शिविका**, स्त्री, (शिवं करातीति । शिव + णिच्
ततो ण्वुल् । टापि अत इत्वम् ।)
यानविशेषः ।
झाँपान् इति ख्यातः । इति भरतः ॥ डुली इति
पाल्को इति च भाषा । तत्पर्य्यायः । याप्य-
यानम् २ । इत्यमरः ॥ शिवीरथः ३ । इति
हारावली ॥ तद्दानविधिर्यथा --
वह्निरुवाच ।
“शृणु तावन्महीपाल महादानमनुत्तमम् ।
येन वै दत्तमात्रेण मुच्यते नरकार्णवात् ॥
मरः ॥ द्वे आगन्तुकसैन्यवासे । कटके इत्यन्ये ।
नृपस्य मूलस्थाने इत्येके । इति भरतः ॥
“शिविरन्तु निवेशे च क्लीवन्तु युद्धवेश्मनि ॥”
इत्युणादिकोषः ॥ * ॥
अथ शिविरलक्षणम् ।
श्रीभगवानुवाच ।
“शिविरं परिखायुक्तमुच्चैःप्राकारवेष्टितम् ।
युक्तद्वादशद्वारञ्च सिंहद्वारपुरस्कृतम् ॥
युक्तं चित्रैर्व्विचित्रैश्च कृत्रिमैश्च कपाटकैः ।
निषिद्धवृक्षरहितं प्रसिद्धेश्च पुरस्कृतम् ।
सुलक्षणं चन्द्रवेधं प्राङ्गणञ्च तथैव च ॥”
तत्र विहितनिषिद्धकाष्ठे यथा, --
विश्वकारुरुवाच ।
“कस्य कस्य तरोः काष्ठं प्रशस्तं शिविरे प्रभो ।
अमङ्गलञ्च केषां वा सर्व्वं मां वक्तुमर्हसि ॥
श्रीभगवानुवाच ।
आश्रमे नारिकेलश्च गृहिणाञ्च धनप्रदः ।
शिविरस्य यदीशाने पूर्व्वे पुत्त्रप्रदस्तरुः ॥
सर्व्वत्र मङ्गलार्हश्च तरुराजो मनोहरः ।
रसालवृक्षः पूर्व्वस्मिन् नृणां सम्पत्प्रदस्तथा ॥
न निषिद्धः प्रषिद्धश्च नगरेषु तथा पुरे ॥
वाट्यामतिनिषिद्धश्च प्राज्ञस्तं परिवर्ज्जयेत् ।
खर्ज्जूरश्च डहुश्चैव निषिद्धः शिविरे तथा ॥
न निषिद्धः प्रसिद्धश्च ग्रामेषु नगरेषु च ।
वृक्षश्च चनकादीनां धान्यञ्च मङ्गलप्रदम् ॥
ग्रामेषु नगरे चापि शिविरे च तथैव च ।
इक्षुवृक्षश्च शुभदः सन्ततं शुभदस्तथा ॥
अशोकश्च शिरीषश्च कदम्बश्च शुभप्रदः ।
कच्ची हरिद्रा शुभदा शुभदश्चार्द्रकस्तथा ॥
हरीतकी च शुभदा ग्रामेषु नगरेषु च ॥
न वाट्यां भद्रदा नित्यं तथा चामलकी ध्रुवम् ॥
गजानामस्थि शुभदमश्वानाञ्च तथैव च ।
कल्याणमुच्चैःश्रवसां वास्तौ स्थापनकारिणाम् ॥
न शुभप्रदमन्ये षामुच्छन्नकारणं परम् ।
वानराणां नराणाञ्च गर्द्दभानां गवामपि ॥
कुक्कुराणां शृगालानां माज्जर्राराणामभद्रकम् ।
भेटकानां शूकरानां सर्व्वेषाञ्चाशुभप्रदम् ॥
ईशाने चापि पूर्व्वस्मिन् पश्चिमे च तथोत्तरे ।
शिविरस्य जलं भद्रमन्यत्राशुभम्मेव च ॥ * ॥
दीर्घे प्रस्थे समानञ्च न कुर्य्यान्मन्दिरं बुधः ।
चतुरस्रे गृहे कारो गृहिणां धननाशनम् ॥
दीर्घप्रस्थः परिमितो नेत्राङ्केनापि संहृतम् ।
शून्येन रहितं भद्रं शून्यं शून्यप्रदं नृणाम् ॥
प्रस्थे हस्तद्वयात् पूर्व्वं दीर्घे हस्तत्रयं तथा ।

|  |  |  |
| --- | --- | --- |
|  |  | गृहिणां शुभदं द्वारं प्राकारस्य गृहस्य च ।<br>न मध्यदेशे कर्त्तव्यं किञ्चिन्न्यूनाधिके शुभम् ॥<br>चतुरस्रं चन्द्रवेधं शिविरं मङ्गलप्रदम् ।<br>अभद्रं सूर्य्यवेधञ्च शिविरं मङ्गलाप्रदम् ।<br>अभद्रदं सूर्य्यवेधं प्राङ्गनञ्च तथैव च ॥<br>शिविराभ्यन्तरे भद्रा स्थापिता तुलसी नृणा<br>धनपुत्त्रप्रदात्री च पुण्यदा हरिभक्तिदा ॥ |

प्रभाते तुलसीं दृष्ट्वा स्वर्णदानफलं लभेत्
।
मालती यूथिका कुन्दमाधवी केतकी तथा
॥
नागेश्वरं मल्लिका च काञ्चनं वकुलं शुभम् ।
अपराजिता च सुभदा तेषामुद्यानमीप्सितम्
॥
पूर्व्वे च दक्षिणे चैव शुभदं नात्र संशयः ।
ऊद्ध्वं षोडशहस्तेभ्यो नैवं कुर्य्याद्गृहं
गृही ॥
ऊद्ध्वं विंशति हस्तेभ्यः प्राकारं न
शुभप्रदम् ।
सूत्रधारं तैलकारं स्वर्णकारञ्च हीरकम् ॥
वाटीमूले ग्राममध्ये न कुर्य्यात् स्थापनं
बुधः ।
ब्राह्मणं क्षत्त्रियं वैश्यं सच्छूद्रं गणकं शुभम्
॥
भट्टं वैद्यं पुष्पकारं स्थापयेत् शिविरान्तिके
॥ *
प्रस्थे च परिखामानं शतहस्तं प्रशस्तकम्
।
परितः शिविराणाञ्च गम्भीरं दशहस्तकम् ॥
सङ्केतपूर्वकञ्चैव परिखाद्वारमीप्सितम् ।
शत्रीरगम्यं मित्रस्य गम्यमेव सुखेन च ॥
शाल्मलीनां तिन्तिडीनां हिन्तालानां तथैव
च ।
निम्बानां सिन्धूवाराणां
उडम्बराणामभद्रकम् ॥
धुस्तूराणां
वटानाञ्चाप्येरण्डानामवाञ्छितम् ।
एतेषामतिरिक्तानां शिविरे काष्ठमीप्सितम्
॥
वृक्षञ्च वज्रहतकं दूरतो वर्जयेद्बुधः ।
पुत्त्रदारधनं हन्यादित्याह कमलोद्भवः ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १०२
अध्यायः

**शिवीरथः**, पुं, याप्ययानम् । इति हारावली ॥

**शिवेष्टः**, पुं, (शिवस्य इष्टः ।) वकवृक्षः । इति
अपि च ।
“शिशिरः शीतलोऽतीवरूक्षो वाताग्नि-
वर्द्धनः ।”
इति भावप्रकाशः ॥

**शिशिरः**, त्रि, (शश प्लुतगतौ + किरच्प्रत्ययेन
साधुः ।) शीतगुणयुक्तः । यथाह अमरः ।
“शीतं गुणे तद्वदर्थाः सुषीमः शिशिरो जडः ।
तुषारः शीतलः शीतो हिमः सप्तान्य-
लिङ्गकाः ॥”
(यथा, रघुः । १४ । ३ ।
“आनन्दजः शोकजमश्रु वाष्प-
स्तयोरशीतं शिशिरो बिभेद ॥)

**शिशुः**, पुं, (श्यतीति । शो + “शः कित् सन्वच्च ।”
उणा ० १ । २१ । इति उः ।) बालकः । तत्-
पर्य्यायः । पोतः २ पाकः ३ अर्भकः ४ डिम्भः
५
पृथुकः ६ शावकः ७ । इत्यमरः ॥ शावः ८ ।
अर्भः ९ शिशुकः १० पोतकः ११ भिष्टकः
१२
इति शब्दरत्नावली ॥ गर्भः १३ । इति जटा-
धरः ॥ तस्य लक्षणादि यथा । वृद्धशातातपः ।
“शिशोरभ्युक्षणं प्रोक्तं बालस्याचमनं स्मृतम् ।
रजस्वलादि संस्पृश्य स्नातव्यन्तु कुमारकैः ॥
प्राक् चूडाकरणाद्बालः प्रागन्नप्राशनाच्छिशुः ।
कुमारस्तु स विज्ञेयो यावन्मौञ्जी न बन्धनम्
॥”
इति गोपालन्यायपञ्चाननकृतस्मृतिनिर्णयः ॥
अपि च ।
“चतुर्थाद्वत्सराद्रूद्ध्वं यावदष्टौ समा वयः ।
शिशोर्व्रतं प्रकुर्व्वन्ति गुरुसम्बन्धिबान्धवाः ॥”
इति ब्रह्मपुराणवचनम् ॥
“जातमात्रः शिशुस्तावत् यावदष्टौ समा वयः ।
स हि गर्भसमो ज्ञेयो व्यक्तिमात्रप्रदर्शकः ॥
भक्ष्याभक्ष्ये तथा पेये वाच्यावाच्ये तथानृते ।
तस्मिन् काले न दोषः स्यात् स यावन्नोपनी-
यते ॥”
इति मनुवचनम् ॥ * ॥
तस्याध्यापनक्रमो यथा, --
त्यन्ये । भाँगाल इति ख्याते इत्येके ।
शिशुमार
एव उच्यते इति सर्व्वस्वम् । तथा च
रत्न-
कोषादौ ‘चुलुपी शिशुमारः स्यादुलूपी
शिशुक-
स्तथा ।’ ऊद्ध्वं लुम्पति भ्राम्यति
उलूपी लुप ऌ
शपञौ छेदे उत्पूर्व्वः ग्रहादित्वाण्णिन्
मनी-
षादित्वात् तलोपः लोर्दीर्घश्च
द्विह्रस्वोकारो-
ऽपि । ‘शिशुकस्तूलुपी बालः प्रोष्ठी तु
सफरी
द्वयोः ।’ इति वाचस्पतिः । चुलुपीति
चवर्गादि-
पाठ इति केचित् । शिशुरिव शिशुकः
।
‘शिशुकः शिशुमारेऽपि
बालकोलुपिनोरपि ॥’
इति रुद्रः ॥”
इति भरतः ॥ अपि च ।
“उलुपी स्यादुलुपीव चुलुम्पी चुलुकी
तथा ।
शिशुकश्चेति पर्य्यायः शिशुमाराकृतौ
झसे ।
कैश्चिदुत्पलमत्स्ये तु पर्य्यायोऽयं
निगद्यते ॥”
इति शब्दरत्नावली ॥
“शिशुकः शिशुमारश्च स च ग्राहो
वराहकः ॥”
इति राजनिर्घण्टः ॥ * ॥
शिशुमारः । (यथा, महाभारते । १२ ।
२९ । २७ ।
“कूर्म्मान् कर्कटकान् नक्रान् मकरान्
शिशु-
कानपि ॥”)
बालकः । इति मेदिनी ॥ (यथा,
कथासरित्-

राजनिर्घण्टः ॥ शिवप्रिये, त्रि ॥

**शिवेष्टा**, स्त्री, (शिवस्य इष्टा प्रिया ।) दूर्व्वा ।
इति राजनिर्घण्टः ॥

**शिशिरः**, पुं, (शशति इतस्ततो गच्छतीति ।
शश + किरच् प्रत्ययेन साधुः ।) हिमः । इति
मेदिनी ॥ (विष्णुः । यथा, महाभारते । १३ ।
१४९ । ११० ।
"शब्दातिगः शब्दसहः शिशिरः शर्व्वरीकरः ॥")

**शिशिरः**, पुं, क्ली, (शशति गच्छति वृक्षादिशोभा
यस्मात् । शश + "अजिरशिशिरशिथिलेति ।"
उणा ०१ । ५४ । इति किरच्प्रत्ययेन साधुः ।)
ऋतुविशेषः । इत्यमरः ॥ स तु माघफाल्गुन-
मासद्वयात्मकः । तत्पर्य्यायः । कम्पनः २ शीतः
३ हिमकूटः ४ कोटनः ५ । कचित् पुस्तके
कोटनस्थाने कोडव इति पाठः । इति राज-
निर्घण्टः ॥ तत्कालीनजलगुणा जलशब्द
द्रष्टव्याः ॥ * ॥ तत्र जातफलम् ॥
"मिष्टान्नभोगी मधुरप्रणादी
कलत्रपुत्त्रादियुतः क्षुधार्त्तः ।
क्रोधी सुधीश्चारुकलेवरश्च
यस्य प्रसूतिः शिशिराभिधाने ॥"
इति कोष्ठीप्रदीपः ॥ * ॥
तत्र वर्णनीयानि । करीयधूपः कुन्दः पद्मनाहः
शिशिरोत्कर्षश्च । इति कविकल्पलता ॥ * ॥
अस्य गुणाः !
"शिशिरं शीतलं वृष्यं शीतं वातप्रकोपणम् ।"
इति राजवल्लभः ॥
"प्राङ्मुखो गुरुरासीनो वरुणाभिमुखं शिशुम्
अध्यापयेच्च प्रथमं द्विजाशीर्भिः प्रपूजितम् ॥"
इति मलमासतत्त्वे बृहस्पतिवनम् ॥ * ॥
शिशुपुत्त्रं त्यक्त्वा प्रव्रज्याश्रमनिषेधो यथा, --
"मातरं पितरं वृद्धं भार्य्याञ्चैव पतिव्रताम् ।
शिशुञ्च तनयं हित्वा नावधूताश्रमं व्रजेत् ॥"
इति महानिर्व्वाणतन्त्रम् ॥
अन्यद्बालशब्दे द्रष्टव्यम् ॥ * ॥ (कुमारः । कार्त्ति-
केयः यथा, महाभारते । ३ । २३१ । ४ ।
"शिशुः शीघ्रः शुचिश्चण्डो दीप्तवर्णः शुभा-
ननः ॥")

**शिशुकः**, पुं, (शिशोरिव प्रतिकृतिः । शिशु +
इवार्थे कन् ।) जलजन्तुविशेषः । शुशुक् इति
भाषा । तत्पर्य्यायः । उलूपी २ । इत्यमरः ॥
द्वे उपल इति ख्याते अति चञ्चले मत्स्ये । शिशु
माराकृतिर्म्मत्स्यभेदः उलूपी । इति कलिङ्गा-
दयः । शोशु इति ख्यातो मत्स्यविशेषः उलूपी-
सागरे । २१ । ३९ ।
"शिशुकद्वयसंयुक्ता ब्राह्मणी कापि दुर्गता ।
द्वारि स्थिता महाराज देवदर्शनकाङ्क्षिणी ॥")
वृक्षविशेषः । इति हेमचन्द्रः ॥

**शिशुगन्धा**, स्त्री, (शिशोर्गन्धो यत्र ।) मल्लिका-
विशेषः । यथा --
"लक्ष्मीपतिर्लवङ्गे स्यात् नोमाली नवमालिका
शिशुगन्धा मधुमल्ली तथा करुणमल्ल्यथ ॥"
इति शब्दमाला ॥

**शिशुचान्द्रायणं**, क्ली, (शिशुरिव चान्द्रायणम् ।
स्वल्पचान्द्रायणमित्यर्थः ।)
व्रतविशेषः । यथा,
"चतुरः प्रातरश्नीयात् पिण्डान् विप्रः समा-
हितः ।
चतुरोऽस्तमिते सूर्य्ये शिशुचान्द्रायणं स्मृतम् ॥"
इति मनुः ॥

**शिशुता**, स्त्री, (शिशोर्भावः । शिशु + तल् ।)
शिशुत्वम् । शिशोरवस्था । इति जटाधरः ॥

**शिशुत्वं**, क्ली, (शिशोर्भावः । शिशु + त्व ।) शैश-
वम् । इत्यमरः ॥ तत्पर्य्यायः बाल्यशब्दे द्रष्टव्यः ॥

**शिशुपालः**, पुं, चेदिदेशीयराजः । स तु कृष्णेन
हतः । शिशुपालवधकाव्यं माघेन कृतमा
तत्पर्य्यायः । दमघोषसुतः २ चैद्यः ३ चदि
राड् ४ । इति जटाधरः ॥ शिशुपालकः ५ ।
इति त्रिकाण्डशेषः ॥ (यथा, भागवते । ७ ।

| | | १० । ३८ ।<br>“ताविहाथ पुनर्जातौ<br>शिशुपालकरूषजौ ।<br>हरौ वैरानुबन्धेन पश्यतस्ते समीयतुः<br>॥”)<br>**शिशुपालकः**, पुं, शिशुपाल + स्वार्थे कन् ।)<br>दमघोषसुतः । इति त्रिकाण्डशेषः ॥<br>केलि-<br>कदम्बवृक्षः । इति शब्दचन्द्रिका ॥<br>(शिशुं |
|---|---|---|

पालयतीति । पालि + ण्वल् ।)
बालकपालके,
त्रि ।

**शिशुपालहा**, [न्] पुं, (शिशुपालं हतवानिति ।
हन् + क्विप् ।) श्रीकृष्णः । इति हेमचन्द्रः ॥

**शिशुभावः**, पुं, (शिशोर्भावः ।) शिशुत्वम् ।
तान्त्रिकभावविशेषः । यथा, --
"उक्तानुक्तञ्च यत्किञ्चित् क्रियते सर्व्वदा प्रिये ।
शिशभाव इति ख्यातः सर्व्वतन्त्रेषु गोपितः ॥"
इति तन्त्रम् ॥

**शिशुमारः**, पुं, (शिशून् मारयतीति । मृ + णिच् +
अण् ।) जलजन्तुभेदः । शौँष इति शुशुक् इति च ख्यातः । इत्यमरभरतौ ॥ (यथा, वाजसनेयसंहितायाम् । २४ । ३० ।
"नीलङ्गोः कृमिः समुद्राय शिशुमारो हिमवते हस्ती ॥" * ॥) अस्य पर्य्यायः शिशुकशब्दे द्रष्टव्यः । अस्य गणना गुणाश्च पादिशब्दे द्रष्टव्याः ॥ तारात्मकाच्युतः । इति मेदिनी ॥
तद्विवरणं यथा, --
"शिशुमारस्तु यः प्रोक्तः स ध्रुवो यत्र तिष्ठति ।
सन्निवेशञ्च तस्यापि शृणुष्व मुनिसत्तम ॥
यदह्ना कुरुते पापं दृष्ट्वा तन्निशि मुच्यते ।
तावत्यश्चै व तारास्ताः शिशुमाराश्रिता दिवि ॥
तावन्त्येव तु वर्षाणि जीवन्त्यभ्यधिकानि तु ।
उत्तानपादस्तस्याथ विज्ञेयोऽप्युत्तरो हनुः ॥
यक्षोऽधरश्च विज्ञेयो धर्म्मो मूर्द्धानमाश्रितः ।
हृदि नारायणश्चास्ते अश्विनौ पूर्व्वपादयोः ॥
वरुणश्चार्य्यमा चैव पश्चिमे तस्य सक्थिनी ।
इति विष्णुपुराणे २ अंशे १२ अध्यायः ॥ * ॥
अपि च । "केचिदेतज्ज्योतिरनीकं शिशुमार-संस्थानेन भगवतो वासुदेवस्य योगधारणाया-मनुवर्णयन्ति । यस्य पुच्छाग्रेऽवाक्शिरसः कुण्डलीभूतदेहस्य घ्रुव उपकृप्तः । तस्य लाङ्गूले प्रजापतिः अग्निरिन्द्रो धर्म्म इति पुच्छमूले धाता विधाता च कट्यां सप्तर्षयः ॥
तस्य दक्षिणावर्त्तकुण्डलीभूतशरीरस्य यान्यु-दगयनानि दक्षिणपार्श्वे नक्षत्राणि उपकल्प-यन्ति । दक्षिणायनानि तु सव्ये यथा शिशु-मारस्य कुण्डलाभोगसन्निवेशस्य पार्श्वयोरुभयो-रप्यवयवाः समसंख्या भवन्ति । पृष्ठे त्वजवीथी आंकाशगङ्गा चोदरतः । पुनर्व्वसुपुष्यौ दक्षिण-वामयोः श्रोण्योराद्राश्लेषा च दक्षिणवामयोः पादयोरभिजिदुत्तराषाढे दक्षिणवामयोर्नासि-कयोर्यथासंख्यं श्रवणपूर्वाषाढे दक्षिणवामयो-र्लोचनयोर्धनिष्ठामूलञ्च दक्षिणवामयोः कर्णयो र्मघादीन्यष्टनक्षत्राणि दक्षिणायनानि वाम-पार्श्ववङ्क्रिषु युञ्जीत । वङ्क्रिषु अस्थिषु । तथैव मृगशीर्षादीन्युदगयनानि दक्षिणपार्श्वेषु प्राति लोम्येन युञ्जीत । शतभिषा ज्येष्ठे स्कन्धयो-र्दक्षिणवामयोर्न्यसेत् । उत्तराहनावगस्त्यः अध-राहनौ यमः मुखे चाङ्गारकः शनैश्चर उपस्थे बृहस्पतिः ककुदि वक्षस्यादित्यो हृदये नारा-यणो मनसि चन्द्रो नाभ्यामुशनास्तनयोरश्विनौ बुधः प्राणापानयो राहुर्गले केतवः सर्व्वाङ्गेषु रामसु सर्व्वे तारागणाः । एतदुहैव भगवतो विष्णोः सर्व्वदेवतामयं रूपमहरहः सन्ध्यायां प्रयतो वाग्यतो निरीक्षमाण उपतिष्ठेत नमो

षादिः द्वितालव्यः । कृष्णं पापाचारत्वात् मलिनं कर्म्मास्य कृष्णकर्म्मा । केचित्तु अकृष्ण-कर्म्मा इति पठन्ति । द्वे निष्पापे । श्विदि शौक्ले इत्यस्य काने शिश्विदानः । अकृष्णं निष्पाप-त्वात् शुक्लं कर्म्मास्य अकृष्णकर्म्मा शुक्लकर्म्मा इत्यर्थः । इति व्याचक्षते च । इति भरतः ॥ * ॥
"शिश्विदानः कृष्णकर्म्मा शुक्लकर्मेति कस्य-चित् ॥"
इति जटाधरः ॥
(यथा, प्रद्युम्नविजये । ७ । अङ्के ।
"खाङ्गिक ! छिद्यतां छिद्यतां एष क्षुद्रः शिश्विदानः ॥")

**शिष**, वधे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) शेषति । इति दुर्गादासः ॥

**शिष**, ऌ घ औ विशेषे । इति कविकल्पद्रुमः ॥
(रुधा०-पर०-सक०-अनिट् ।) विशेष उप-रञ्जनम् । ऌ, अशिषत् । ध, विशिनष्टि स्मरं मूर्त्या यः । इति हलायुधः । मूर्त्तिविशिष्टं करोति इत्यर्थः । औ, शेष्टा । इति दुर्गादासः ।

**शिष**, कि असर्व्वोपयोगे । इति कविकल्पद्रुमः ॥
(चुरा०-पक्षे-भ्वा०-सक०-सेट् । असर्व्वोप-योगः परिशेषीकरणम् । कि, शेषयति शेषति

शिश्नं संवत्सरस्तस्य मित्रोऽपानं समाश्रितः ॥
पुच्छेऽग्निश्च महेन्द्रश्च कश्यपोऽथ ततो ध्रुवः ।
तारका शिशुमारस्य नास्तमेति चतुष्टयम् ॥
इत्येष सन्निवेशोऽयं पृथिव्यां ज्योतिषां तथा ।
द्वीपानामुदधीनाञ्च पर्व्वतानाञ्च कीर्त्तितः ॥
वर्षाणाञ्च नदीनाञ्च ये च तेषु वसन्ति वै ।
तैषां स्वरूपमाख्यातं संक्षेपः श्रूयतां पुनः ॥
पदन्तु वैष्णवः कायस्ततो विप्र वसुन्धरा ।
पद्माकारा समुद्भूता पर्व्वताब्ध्यादिसंयुता ॥
ज्योतींषि विष्णुर्भुवनानि विष्णु-
र्वनानि विष्णुर्व्विदिशो दिशश्च ।
नद्यः समुद्राश्च स एव सर्व्वं
यदस्ति यन्नास्ति च विप्रवर्य्य ॥
ज्ञानस्वरूपो भगवान् यतोऽसा
वशेषमूर्त्तिर्न तु वस्तुभूतः ।
ततो हि शैलाब्धिधरादिभेदान्
जानीहि विज्ञानविज्म्भितानि ॥
यदा हि शुद्धं निजरूपसर्व्वं
कर्म्मक्षये ज्ञानमयास्तदोषम् ।
तदा हि सङ्कल्पतरोः फलानि
भवन्ति नो वस्तुषु वस्तुभेदाः ॥
महोघटत्वं घटतः कपालिका
कपालिकाचूर्णरजस्ततोऽप्यनुः ।
जनैः स्वकर्म्मस्तिमितात्मनिश्चयै-
सलक्ष्यते वस्तु किमत्र वस्तु ॥"

नमो ज्योतिर्लोकाय कालायनायानिमिषां
पतये महापुरुषायाभिधीमहीति ।
ग्रहर्क्षतारामयमाधिदैविकं
पापापहं मन्त्रकृतां त्रिकालम् ।
नमस्यतः स्मरतो वा त्रिकालं
नश्येत तत्कालजमाशु पापम् ॥"
इति श्राभागवते ५ स्कन्धे
शिशुमारसंस्थानम्
२३ अध्यायः ॥

**शिशुवाहकः**, पुं, (शिशुं वहतीति । वह + ण्वुल् ।
वनच्छागलः । इति हेमचन्द्रः ॥
बालकवोढरि,
त्रि ॥

**शिशुवाह्यकः**, पुं, (शिशुर्वाह्यो यस्य । ततः कन् ।
वनच्छागः । इति त्रिकाण्डशेषः ॥

**शिश्नः**, पुं, (शशतीति । शश + बाहुलकात् नक्-
प्रत्ययेन साधुः ।) मेढ्रः । इत्यमरः ॥ (यथा, भागवते । २ । ६ । ८ ।
"पंसः शिश्न उपस्थस्तु प्रजात्यानन्दनिर्व्वृतेः ॥")
अस्य पर्य्यायः लिङ्गशब्दे द्रष्टव्यः ॥

**शिश्विदानः**, त्रि, (श्वेतितुमिच्छतीति । श्वित +
सन् + "श्वितेर्दश्च ।" उणा० २ । ९३ । इति आनच्
सनो लुक् तकारस्य च दकारः । पापकर्म्मा ।
तत्पर्य्यायः । कृष्णकर्म्मा २ । इत्यमरः ॥ द्वे
पापाचारे । शश्वन्निन्द्यतेऽसौ शिश्विदानो मनी-
यशोराशिं लोकः अवशिष्टं करोति
इत्यर्थः ।
वेरतिशायने शिष किरनुवर्त्तते । कि, विशेषयति
विशेषति सम्पत्त्या भूपं विधिः । इति दुर्गा-
दासः ॥

**शिष्टः**, त्रि, (शास + क्तः । "शास इदङ्हलोः ।"
६ । ४ । ३४ । इति उपधाया इकारः ।
"शासिवसिघसीनाञ्च ।" ८ । ३ । ६० इति सस्य
षः ।) शान्तः । सुबुद्धिः । धीरः । तस्य
लक्षणं यथा, --
"न पानिपादचपलो न नेत्रचपलो मुनिः ।
न च वागङ्गचपल इति शिष्टस्य लक्षणम् ॥"
इति महाभारते अश्वमेधपर्व्व ॥
अपिच ।
"धर्म्मो नाभिगतो यैस्तु वेदः सपरिबृंहणः ।
ते शिष्टा ब्राह्मणाः प्रोक्ता नित्यमात्मगुणा-
न्विताः ॥"
इति कौर्म उपविभागे २४ अध्यायः ॥ * ॥
अन्यच्च ।
"विशेषशब्दनिष्ठस्तु शेषः शिष्टः प्रचक्षते ।
मन्वन्तरेषु ये शिष्टा इहतिष्ठन्ति धार्म्मिकाः ॥
मनुः सप्तर्षयश्चव
लोकसन्तानकारणात् ।
तिष्ठन्तीह च धर्माथं तान् शिष्टान् परिचक्षते ।
तैः शिष्टैः पालितधर्म्मः स्थाप्यते वै युगे युगे ॥"
इति मात्स्ये १२० अध्यायः ॥

| | | (अवशिष्टः । यथा, गीतायाम् । ४ । ३० ।<br>"यज्ञशिष्टामृतभुजो यान्ति ब्रह्मसनातनम् ॥"<br>**शिष्टाचारः**, पुं, (शिष्ट आचारः । शिष्टानामा-चारो वा ।) साधुव्यवहारः । यथा, --<br>"ततः स्मार्त्तः स्मृतो धर्म्मो वर्णाश्रमविभागशः ।<br>एवं वै द्विविधो धर्म्मः शिष्टाचारः स उच्यते ॥ |
|---|---|---|

त्रयी वार्त्ता दण्डनीतिः प्रजा वर्णाश्रमेज्यया ।
शिष्टैराचर्य्यते यस्मात् शिष्टाचारः स
शाश्वतः ॥
दानं यत्यं तपोऽलोभो विद्येज्या पूजनं दमः ।
अष्टौ वानि चरित्राणि शिष्टाचारस्य लक्ष-
णम् ॥
शिष्टा यस्माच्चरन्त्येनं मनुः सप्तर्षयश्च ये ।
मन्वन्तरेषु सर्व्वेषु शिष्टाचारस्ततः स्मृतः ॥
श्रुतिस्मृतिभ्यां विहितो धर्म्मो
वर्णाश्रमात्मकः ।
शिष्टाचारविवृद्धस्तु धर्म्मः स साधुसम्मतः
॥”
इति मात्स्ये १२० अध्यायः ॥

**शिष्टिः**, स्त्री, (शाम + क्तिन् । “शास इदङ्हलोः ।”
६ । ४ । ३४ । इति उपधाया इः ।) आज्ञा ।
शामनम् । इत्यमरः ॥ (यथा, मनुः । ४ ।
१६४ ।
“अन्यत्र पुत्त्रात् शिष्याद्वा शिष्ट्यर्थं
ताडयेत्तु
तौ ॥”)

**शिष्यः** त्रि, (शिष्यतेऽसाविति । शास + “एतिस्तु-
शास्वृदृजुषः क्यप् ।” ३ । १ । १०९ । इति
क्यप् ।
“शाम इदङ्हलोः ।” ६ । ४ । ३४ । इति इः
। “शास-
वमीति” । ८ । ३ । ६० । इति षः ।)
उपदेश्यः । तत्-
पर्य्यायः । छात्रः २ अन्तेवासी ३ । इत्यमरः
॥
अन्तेसत् ४ । अन्तेषदः ५ । यथा, --
“छात्रान्तेवासिशिष्यान्तेषद एकार्थता इमे
॥”
इति जटाधरः ॥
तस्य लक्षणं यथा, --
“वाङ्मनः कायवसुभिर्गुरुशुश्रूषणे रतः ।
एतादृशगुणोपेतः शिष्यो भवति नारद ॥
देवताचार्य्यशुश्रूषां मनोवाक्कायकर्म्मभिः ।
शुद्धभावो महोत्साहो बोद्धा शिष्य इति
अध्यापयेद्विधानेन मन्त्ररत्नमनुत्तमम्
॥”
इति पाद्मोत्तरखण्डे २५ अध्यायः ॥ *
॥
पुत्त्रशिष्ययोस्तुल्यत्वं यथा, --
“यथा पुत्त्रस्तथा शिष्यो न भेदः
पत्त्रशिष्ययोः ।
तर्पणे पिण्डदाने च पालने परिपोषणे ॥
यथाग्निदाता पुत्त्रश्च तथा शिष्यश्च
निश्चितम् ।
इतीदं काण्वशाखायामुवाच कमलोद्भवः
॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ६१
अध्यायः ॥
पुत्त्रशिष्याभ्यां विशेषो यथा, --
सनत्कुमार उवाच ।
“पुत्त्र एवास्मि देवेश यतः शिष्योऽस्म्यहं
विभो ।
न विशेषोऽस्ति पुत्त्रस्य शिष्यस्य च
पितामह ॥
ब्रह्मोवाच ।
विशेषः शिष्यपुत्त्राभ्यां विद्यते
धर्म्मनन्दन ।
धर्म्मकर्म्मसमायोगे तथापि गदतः शृणु ॥
पुन्नाम्नो नरकात्त्राति पुत्त्रस्तेनेह गीयते
।
शेषपापहरः शिष्यैतीयं वैदिकी श्रुतिः ॥
सनत् कुमार उवाच ।
कोऽयं पुन्नामको देव नरकात्त्राति
पुत्त्रकः ।
कस्माच्छेषं ततः पापं हरेच्छिष्यश्च
तद्वद ॥”
इति वामने ५७ अध्यायः ॥
ब्रह्मोवाच ।
“अतः परं प्रवक्ष्यामि शेषपापस्य
लक्षणम् ।
ऋणं देवर्षिभूतानां मनुष्याणां विशेषतः
॥
पितॄणाञ्च द्विजश्रेष्ठ सर्व्ववर्णेषु चैकतः ।
रौक्ष्यघ्ना इति वा पाठः । इति राजवल्लभः
॥
अन्यत् तुरुष्कशब्दे द्रष्टव्यम् ॥

**शी**, ङ ल ञि स्वप्ने । इति कविकल्पद्रुमः ॥
(अदा०-
आत्म०-अक०-सेट् । ङ ल, शेते । ञि,
शयि-
तोऽस्ति । मण्डपे शयामीति
गणकृतानित्यत्वात्
परस्मैपदे शपोऽलुग्भावे चेति रमानाथः ।
वस्तुतस्तु शेते शयः पश्चात् शय
इवाचरतीति
क्वौ साध्यम् । इति दुर्गादामः ॥

**शीः**, स्त्री, (शी + क्विप् ।) शान्तिः । शयनम् ।
इति शब्दरत्नावली ॥

**शीक**, ऋ ङ सेके । सर्पे । इति कविकल्पद्रुमः ॥
(भ्वा०-आत्म०-सक०-सेट् ।) ऋ,
अशिशीकत् ।
ङ, शीकते । इति दुर्गादासः ॥

**शीक**, कि आमर्शे । सेके । इति कविकल्पद्रुमः ॥
(चुरा०-पक्षे भ्वा०-सक०-सेट् ।) कि,
शीक-
यति शीकति । आमर्शः स्पर्शः । तथा च ।
“चन्द्रावतीतरङ्गार्द्रा शीकयन्ति च यद्वपुः
।”
इति हलायुधः ॥
वायवः स्पृशन्ति इत्यर्थः । भट्टमल्लस्तु
आमर्षण
इति मूद्दर्ध्वन्यषमध्यं पठित्वा क्षमार्थमाह ।
इति
दुर्गादासः ॥

**शीकरं**, क्ली, (शीक्यतेऽनेनेति । शीक + बाहु-
लकात् अरः ।) शरलद्रवः । इति मेदिनी ॥

**शीकरः**, पं, (शीक्यतेऽनेनेति । शीक + बाहुलकात्
अरः । इत्युज्ज्वलदत्तः । ३ । १३१ ।)
वातादिप्रेरित-

स्मृतः ॥”
इति दीक्षातत्त्वम् ॥
अपिच ।
“शान्तो विनीतः शुद्धात्मा श्रद्धावान् धारण-
क्षमः ।
समर्थश्च कुलीनश्च प्राज्ञः मच्चरितो व्रती ।
एवमादिगुणैर्युक्तः शिष्यो भवति नान्यथा ॥”
* ॥
निषिद्धशिष्यलक्षणमाह।
“पापिने क्रूरचेष्टाय शठाय कृपणाय च ।
दीनायाचारशून्याय मन्त्रद्वेषपराय च ॥
निन्दकाय च मूर्खाय तीर्थद्वेषपराय च ।
भक्तिहीनाय देवेशि न देया मलिनाय च ॥
मुरुता शिष्यता वापि तयोर्वत्सरवासतः ॥”
तथा चोक्तं सारसंग्रहे ।
“मद्गुरुः स्वाश्रितं शिष्यं वर्षमेकं परीक्षयेत्
।
वर्षेकेन भवेद्योग्यो विप्रो गुणसमन्वितः ॥
वर्षद्वयेन राजन्यो वैश्यस्तु वत्सरैस्त्रिभिः ।
चतुर्भिर्वत्सरैः शूद्रः कथिता शिष्ययोग्यता
॥”
इति तन्त्रसारः ॥ * ॥
अन्यच्च ।
“आचारे शासयेद्यस्तु स आचार्य्य उदाहृत ।
यस्त्वाचार्य्यपराधीनस्तद्वाक्यं शास्यते हृदि
।
शामने स्थिरवृत्तिश्च शिष्यः सद्भिरुदाहृतः
॥
एवं लक्षणसंयुक्तं शिष्यं सर्व्वगुणान्वितम् ।
ॐ कारादिनिवृत्तिश्च पापकार्य्यकृतिश्च
या ॥
हत्यादिकं महापापं त्वगम्यागमनं तथा ।
घृतादिविक्रयं घोरं चण्डालादिप्रतिग्रहम्
॥
स्वदोषगोपनं पापं परदोषप्रकाशनम् ।
ईर्ष्याविद्धं वाक्यदुष्टं निष्ठुरत्वं षडम्बरम्
॥
ढाकित्वं तालवादित्वं नाम्ना
वाचाप्यधर्म्मजम् ।
मारणत्वमधार्म्मिक्यं नरकावहमुच्यते ॥
एतैः पापैश्च संयुक्तः पात्यते यदि
शङ्करम् ।
ज्ञानाधिकमशेषेण शेषात् पापात्
जयेत्ततः ॥
शारीरं वाचिकं यत्तु मानसं त्रिविधं तथा
।
पितृमातृकृतं यच्च कृतं यच्चाश्रितैर्नरैः
॥
ज्ञातिभिर्ब्बान्धवैश्चापि तस्मिन् जन्मनि
धर्म्मज
तत्सर्व्वं विलयं याति कर्म्मणा
सुतशिष्ययोः ॥
तस्मात् पुत्त्रश्च शिष्यश्च विधातव्यो
विपश्चिता ।
श्रुतमर्थमभिध्याय शिष्यात् श्रेष्ठतरः
सुतः ।
शेषात्तारयते शिष्यः सर्व्वत्रैव हि पुत्त्रकः
॥”
इति वामने ५८ अध्यायः ॥

**शिह्लः**, पुं, शिह्लकः । इति शब्दचन्द्रिका ॥

**शिह्लकः**, पुं, (शिह्ल एव । स्वार्थे कन् ।) गन्धद्रव्य-
विशेषः । शिलारसः । शिह्ला इति
लोवान् इति
च भाषा । तत्पर्य्यायः । कपिनामा २
कपिः ३
तैलम् ४ कृत्रिमम् ५ कपिलः ६ चला ७
तुरुष्कः ८ मुक्तिमुक्तः ९ पिण्डातः १०
वरः ११ ।
इति रत्नमाला ॥ पिण्डकः १२ सिह्लः
१३
जलकणा । इत्यमरः ॥ (यथा, कुमारे । १
। १५ ।
“भागीरथीनिर्झरशीकराणां
वोढा मुहुः कम्पितदेवदारुः ॥”)
वायुः । इति मेदिनी ॥

**शीघ्रं**, क्ली, (शिङ्घति व्याप्नोतीति । शिघ व्याप्तौ
+ रक्प्रत्ययेन साधु ।) विलम्बाभावः ।
तत्-
पर्य्यायः । त्वरितम् २ लघु ३ क्षिप्रम् ४
अरम् ५
द्रुतम् ६ सत्वरम् ७ चपलम् ८ तूर्णम् ९
अवि-
लम्बितम् १० आशु ११ । अव्ययाः शीघ्र-
वाचकाः यथा । स्राक् १२ झटिति १३
अञ्जसा
१४ अह्नाय १५ सपदि १६ द्राक् १७ मंक्षु
१८ ।
इत्यमरः ॥ तद्वैदिकपर्य्यायः । नु १ मक्षु २
द्रवत्
३ ओषम् ४ जीराः ५ जूर्णिः ६ शूर्त्ताः ७
शूघ-
नाशः ८ शीभम् ९ तृषु १० तूयम् ११
तूर्णिः १२
अजिरम् १३ भुरण्युः १४ शु १५ आशुः
१६
प्राशः १७ तूतुजिः १८ तूतुजानः १९
तुज्यमानासः २० अज्वाः २१ साचिवित्
२२
द्युगत् २३ ताजत् २४ तरणिः २५ वात-
रम्हा २६ । इति षड्विंशतिः क्षिप्रनामानि
इति वेदनिघण्टौ । २ । १५ ॥
लामज्जकम् ।
इति राजनिर्घण्टः ॥ (पुं,
कुशवशौयाग्निवर्णस्य
पुत्त्रः । यथा, भागवते । ९ । १२ । ५ ।
“सुदर्शनोऽथाग्निवर्णः शीघ्रस्तस्य मरुः
सुतः ॥”)
शीघ्रविशिष्टे, त्रि । इत्यमरः ॥ (यथा, महा-
भारते । ३ । ६७ । ६ ।
“स त्वमातिष्ठ योगं तं येन शीघ्रा हया मम
।

| | | |
|---|---|---|
| | यावनः १४ । इत्यमरः ॥<br>अस्यानुलेपनगुणाः ।<br>“शिह्लकः परमा मांसी देवदारु मुरा नखम् ।<br>सर्व्वेऽमी परमा लक्ष्मी रक्षोघ्ना ज्वरनाशनाः ॥” | भवेयुरश्वाध्यक्षोऽसि वेतनं ते शतं शताः ॥”) |

**शीघ्रगः**, त्रि, (शीघ्रं गच्छतीति । गम् + डः ।)

द्रुतगामी । यथा, --
"हरिते रोगोऽनुतापः शस्यानामीतिभिश्च विध्वंसः ।
कपिले शीघ्रगसत्वम्ले च्छध्वंसोऽथ दुर्भिक्षम् ॥"
इति तिथ्यादितत्त्वम् ॥
वायौ, पुं, । इत्यमरे आशुगशब्ददर्शनात् ॥
(यथा, महाभारते । ३ । ३ । २५ ।
"मनः सुपर्णो भूतासिः शीघ्रगः प्राण-
धारणः ॥")

**शीघ्रगामी**, [न्] त्रि, आशुगमनशीलः । शीघ्रं

गच्छतीत्यर्थे
शीघ्रशब्दपूर्व्वकगमधातोर्णिन्-
प्रत्ययेन निष्पन्नः ॥

**शीघ्रचेतनः**, पुं, (शीघ्रं चेततीति । चित + ल्युः ।)

कुक्कुरः । इति शब्दमाला ॥
द्रुतचेतनायुक्ते, त्रि

**शीघ्रजन्मा**, [न्] पुं, (शीघ्रं जन्म यस्य ।) करञ्ज-

विशेषः । कांटाकरञ्ज इति भाषा । यथा, --
"पूतीकः पांशुलः पोष्टा शीघ्रजन्मा कुवृत्ति-
कृत् ॥"
इति शब्दचन्द्रिका ॥

**शीघ्रपुष्पः**, पुं, (शीघ्रं पुष्पं यस्य ।) अगस्त्य-

वृक्षः । इति राजनिर्घ ण्टः ॥

**शीघ्रवेधी**, [न्] पुं, (शीघ्रं विधतीति । विध

छिद्रीकरणे + णिनिः ।) क्षिप्रशरवेधकर्त्ता ।
तत्पर्य्यायः । लघुहस्तः २ । इति हेमचन्द्रः
॥

**शीघ्रा**, स्त्री, दन्तीवृक्षः । इति राजनिर्घण्ठः ॥

**शीघ्रीयं**, त्रि, द्रुतसम्बन्धि । शीघ्रभवम् । शीघ्र-

शब्दात् णीयप्रत्ययेन निष्पन्नम् ॥

**शीतं**, क्ली, (श्यै ङ गतौ + क्तः । "द्रवमूर्त्ति-

पर्णी । इति शब्दरत्नावली ॥ वृश्चिकः । इति
शब्दमाला ॥ (देशविशेषः । यथा, बृहत्-
संहितायाम् । १४ । २७ ।
माणहलहूणकोहलशीतकमाण्डव्यभूत-
पुराः ॥")

**शीतकरः**, पुं, (शीतः शीतलः करो यस्य ।)

चन्द्रः । इति हिमकरशब्ददर्शनात् ॥ (यथा,
बृहत्संहितायाम् । ४ । २९ ।
"भस्मनिभः परुषोऽरुणमूर्त्तिः
शीतकरः किरणैः परिहीणः ॥")
शीतलपाणियुक्ते शीतकारिणि च त्रि ॥

**शीतकषायः**, पुं, (शीतस्य कषायः ।) हिम-

कषायः । यथा, --
"क्षुण्णं द्रव्यफलं सम्यक् षडभिर्जलपलैः प्लुतम्
।
शर्व्वरीमुषितः स स्याद्धिमशीतकषायकः ॥")
इति वैद्यकम् ॥

**शीतकालः**, पुं, (शीतस्य कालः ।) हिम ऋतुः ।

स तु अग्रहायणपौषमासद्वयकालात्मकः। तत्-
पर्य्यायः । शीतकः २ । इति मेदिनी ॥ हेमन्तः
३ । इत्यमरः ॥ सहाः ४ । इति जटाधरः ॥
हैमनः ५ । इति शब्दरत्नावली ॥ यथा, --
"कूपोदकं वटच्छाया श्यामा स्त्री इष्टकागृहम् ।
शीतकाले भवेदुष्णं उष्णकालेच शीतलम् ॥"
इति चाणक्यम् ॥

**शीतकिरणः**, पुं, (शीतं शीतलं किरणं यस्य ।)

चन्द्रः । यथा, --
"कान्ते कोऽयमुदेति शीतकिरणो जातः कुतो वारिधौ
कस्ते सुन्दरि सोदरः करमहो दत्ते त्वदीये स्तने ।
धन्या त्वं युवती सती कुलवती भ्रातापि धन्यस्तव
इत्थं श्रीपरिहासकेलिकलया मुग्धो हरिः पातु वः ॥"
इत्युद्भटः ॥

**शीतचम्पकः**, पुं, दर्पणम् । प्रदीपः । इति मेदिनी-

शब्दरत्नावल्यौ ॥

**शीतपर्णी**, स्त्री, (शीतं पर्णं यस्याः । ङीष् ।)

अर्कपुष्पिका । इति रत्नमाला ॥
अर्कहुली इति
भाषा ॥

**शीतपल्लवा**, स्त्री, (शीतं पल्लवं यस्याः ।) भूमि-

जम्बुः । इति रत्नमाला ॥

**शीतपाकिनी**, स्त्री, (शीते पाकोऽस्या अस्तीति ।

इनिः !) काकोली । इति
शब्दमाला ॥ महा-
समङ्गा । इति राजनिर्घण्टः ॥

**शीतपाकी**, स्त्री, (शीते पाको यस्याः । ङीष् ।)

वाट्यालकः । इति शब्दरत्नावली
॥ काकोली ।
इति रत्नमाला ॥ गुञ्जा । इति
राजनिर्घण्टः ॥

**शीतपुष्प**, क्ली, (शीतं पुष्पं यस्य ।) परिपेलम् ।

इति राजनिर्घण्टः ॥

**शीतपुष्पः**, पुं, (शीतं पुष्पं यस्य ।) शिरीषवृक्षः ।

इति राजनिर्घण्टः ॥

**शीतपुष्पकं**, क्ली, (शीतं पुष्पमिव । कन् ।) शैले-

यम् । इति शब्दचन्द्रिका ॥

**शीतपुष्पकः**, पुं, (शीतं पुष्पं यस्य । बहुब्रीहौ

कन्) अर्कवृक्षः । इति राजनिर्घण्टः
॥

**शीतपुष्पा**, स्त्री, (शीतं पुष्पं यस्याः ।) अति-

वला । इति राजनिर्घण्टः ॥

**शीतप्रभः**, पुं, (शीता प्रभा यस्य ।) कर्पूरः ।

स्पर्शयोः श्यः ।” ६ । १ । २४ । इति सम्प्रसार-
णम् । “हलः ।” ६ । ४ । २ । इति दीर्घः ।)
हिमगुणः । इत्यमरः ॥ (यथा, मनुः । ११ । ११४ ।
“उष्णे वर्षति शीते वा मारुते वाति वा भृशम् ।
न कुर्व्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः ॥”)
जलम् । इति शब्दमाला ॥ त्वचम् । इति राज-
निर्घण्टः ॥ शीतं तुषारवानीरबह्वारद्रुमेषु
च इति भरतधृताजयः ॥

**शीतः**, पुं, (श्यै + क्तः ।) वेतसवृक्षः । बहुवारक-
वृक्षः । इत्यमरः ॥ अशनपर्णी । इति शब्द-
रत्नावली ॥ पर्पटः । निम्बः । कर्पूरः । इति
राजनिर्घण्टः ॥ हिम ऋतुः । अस्य विवरणं
हेमन्तशब्दे द्रष्टव्यम् ॥

**शीतः**, त्रि, (श्यै + क्तः ।) शीतलः । इत्यमरः ॥
(यथा, महाभारते । ३ । १६८ । ५० ।
“शीतस्तत्र सुखो वायुःसुगन्धो जीवनः शुचिः ॥
सर्व्वरत्नविचित्रा च भूमिः पुष्पविभूषिता ॥”)
अलसः । इति मेदिनी ॥ क्वथितः । इति
शब्दचन्द्रिका ॥ शीतलद्रव्यगुणाः । पित्त-
नाशित्वम् । बलकफवायुकारित्वम् । गुरुत्वञ्च ।
इति राजवल्लभः ॥

**शीतकः**, पुं, (शीत + स्वार्थे कन् ।) शीतकालः ।
सुस्थितः । दीर्घसूत्री । इति मेदिनी ॥ अशन-

**शीतकुम्भः**, पुं, करवीरः । इति रत्नमाला ॥

**शीतकुम्भी**, स्त्री, जलजवृक्षविशेषः । शीउली-
छोप् इति भाषा । यथा, --
“शीतली शीतकुम्भी च शुक्रपुष्पा जलोद्भवा ।”
इति रत्नमाला ॥

**शीतकृच्छ्रः**, पुं, व्रतविशेषः । यथा । “यदा तु शीतं
क्षीरादि पीयते तदा शीतकृच्छ्रः ।
“त्र्यहं शीतं पिबेत्तोयं त्र्यहं शीतं पयः पिबेत् ।
त्र्यहं शीतं घृतं पीत्वा वायुभक्षः परत्र्यहम् ॥”
इति यमस्मरणात् । इति मिताक्षरा ॥

**शीतक्षारं**, क्ली, (शीतः क्षारो यस्य ।) श्वेत-
टङ्कणम् । इति राजनिर्घण्टः ॥

**शीतगन्धं**, क्ली, (शीतो गन्धो यस्य ।) श्वेत-
चन्दनम् । इति । राजनिर्घण्टः ॥

**शीतगुः**, पुं, (शीता गौः किरणो यस्य ।) चन्द्रः ।
इति वोपदेवः ॥ (यथा, साहित्यदर्पणे । १० ।
“भुजङ्गकुण्डली व्यक्तशशिशुभ्रांशुशीतगुः ॥”)

इति राजनिर्घण्टः ॥
शीतलप्रभायुक्ते, त्रि ॥

**शीतप्रियः**, पुं, (शीतः प्रियो यस्य ।) पर्पटः ।
इति राजनिर्घण्टः ॥

**शीतफलः**, पुं, (शीते फलं यस्य ।) उडुम्बरः ।
शेलुः । इति राजनिर्घण्टः ॥

**शीतबला**, स्त्री, महासमङ्गा । इति राजनिर्घण्टः ॥

**शीतभानुः**, पुं, (शीतो भानुर्यस्य ।) चन्द्रः । इति
शब्दरत्नावली ॥

**शीतभीरुः**, स्त्री, (शीताद्भीरुः ।) मल्लिका ।
इत्यमरः । शीतभीते, त्रि ॥

**शीतमञ्जरी**, स्त्री, (शीता मञ्जरी यस्याः ।)
शेफाली । इति राजनिर्घ ण्टः ॥

**शीतमयूखः**, पुं, (शीतो मयूखो यस्य ।) चन्द्रः ।
कर्पूरः । इति मेदिनी ॥

**शीतमरीचिः**, पुं, (शीता मरीचिर्यस्य ।) चन्द्रः ।
कर्पूरः । इति शब्दरत्नावली ॥

**शीतमूलकं**, क्ली, (शीतं मूलं यस्य । बहुब्रीहौ
कन् ।) उशीरम् । इति राजनिर्घ ण्टः ॥
शीतलमूलयुक्ते, त्रि ॥

**शीतरम्यः**, पुं, (शीते रम्यः ।) प्रदीपः । इति
जटाधरः ॥ शीतरमणीये, त्रि ॥

**शीतरश्मिः**, पुं, (शीतो रश्मिर्यस्य ।) चन्द्रः । यथा,
“हेलिः सूर्य्यश्चन्द्रमाः शीतरश्मिः ।”
इति ज्योतिस्तत्त्वम् ॥
कर्पूरश्च ॥ चन्द्रसंज्ञक इति दर्शनात् ॥

**शीतलं**, क्ली, (शीतं लातीति । ला + कः ।) पुष्प-

इति राजनिर्घण्टः ॥ शैत्यम् । इति शब्दरत्ना-
वली ॥ वीरणमूलम् । इति शब्दचन्द्रिका ॥

**शीतलः**, पुं, अशनपर्णी । इत्यमरः ॥ अर्हद्विशेषः ।
स तु चतुर्विंशतितीर्थङ्करमध्ये दशमतीर्थङ्करः ।
इति हेमचन्द्रः ॥ व्रतविशेषः । स तु मेष-
संक्रान्त्यां कर्त्तव्यः । चन्द्रः । इति शब्दचन्द्रिका ॥
चम्पकः । कर्पूरभेदः । रालः । इति राज-
निर्घण्टः ॥

**शीतलः**, त्रि, (शीतोऽस्यास्तीति । शीत + "सिध्मा-
दिभ्यश्च ।" ५ । २ । ९७ । इति लच् ।) शीत-
गुणविशिष्टः । तत्पर्य्यायः । सुषीमः २ शिशिरः
३ जडः ४ तुषारः ५ शीतः ६ हिमः ७ ।
इत्यमरः ॥

**शीतलकं**, क्ली, सितोत्पलम् । इति राजनिर्घण्टः ॥

**शीतलकः**, पुं, मरुवकः । इति राजनिर्घण्टः ॥

**शीतलच्छदः**, पुं, (शीतलश्छदो यस्य ।) चम्पकः ।
इति राजनिर्घण्टः ॥ शीतलपत्रञ्च ॥

**शीतलजलं**, क्ली, (शीतलं जलं यस्य ।) उत्पलम् ।
इति राजनिर्घण्टः ॥ हिमवारि च ॥

**शीतलता**, स्त्री, (शीतलस्य भावः । तल् ।) शीत-
लत्वम् । शीतलस्य भाव इत्यर्थे तद्भावे तात्व-
मिति संक्षिप्तसारसूत्रेण ताप्रत्ययनिष्पन्ना ॥

**शीतलत्वं**, क्ली, (शीतलस्य भावः । त्व ।) जडता ।
इति राजनिर्घण्टः ॥ शीतलता च ॥

**शीतलप्रदः**, पुं, (शीतलं प्रददाति । प्र + दा + कः ।)
चन्दनम् । इति केचित् ॥ हिमदातरि, त्रि ॥

**शीतलवातकः**, पुं, (शीतलो वातो यस्य । कन् ।)
अशनपर्णी । इति शब्दरत्नावली ॥ शीतल-
नाड्याख्या कार्त्तिके मासि मार्गे मूलकरूपिणी
पौषे मास्यन्नरूपा च शीतला तपसि स्मृता ।
गोरूपिणी फाल्गुने च चैत्रेऽशोका प्रकी-
र्त्तिता ॥"
इति स्कन्दपुराणम् ॥

**शीतली**, स्त्री, जलजवृक्षविशेषः । शिउलीछोप्
इति भाषा । तत्पर्य्यायः । शीतकुम्भी २ शुक्ल-
पुष्पा ३ जलोद्भवा ४ कालानुसारिवा ५ । इति
रत्नमाला ॥

**शीतवल्कः**, पुं, (शीतलो वल्को यस्य ।) उड्म्बरः ।
इति राजनिर्घण्टः ॥ शीतलवल्कले, त्रि ॥

**शीतवीर्य्यकः**, पुं, (शीतं वीर्य्यं यस्य । कन् ।)
प्लक्षवृक्षः । इति राजनिर्घण्टः ॥ शीतलवीर्य्य-
युक्ते, त्रि ॥

**शीतशिवं**, क्ली, (शीते शीतकाले शिवं मङ्गल-
प्रदम् ।) सैन्धवलवणम् । शैलेयनामगन्धद्रव्यम् ।
इत्यमरः ॥

**शीतशिवः**, पुं, (शीते शीतकाले शिवः शुभप्रदः ।
मधुरिका । इत्यमरः ॥ शक्तुफलावृक्षः । इति
मेदिनी ॥

**शीतशिवा**, स्त्री, (शीते शिवा मङ्गलप्रदा ।)
मिश्रेया । इति राजनिर्घ ण्टः ॥ शमीवृक्षः ।
इति रत्नमाला ॥

**शीतशूकः**, पुं, शीते शूको यस्य ।) यवः । इति
केचित् ॥ शीतलशूकयुक्ते, त्रि ॥

**शीतसहः**, पुं, (शीतं सहते इति । सह + अच् ।)

**शीतादः**, पुं, (शीतमादत्ते इति । आ + दा + कः ।)
दन्तरोगविशेषः । तस्य निदानं दन्तशब्दे द्रष्ट-
व्यम् । तदौषधं यथा, --
"शीतादे हतरक्ते तु तोयनागरसर्षपान् ।
निष्क्वाथ्य त्रिफलाञ्चापि कुर्य्याद्गण्डूषधारणम् ॥
कासीसलोध्रकृष्णा मनःशिला सप्रियङ्गुतेजोह्वा
एतच्चूर्णं मधुयुक् शीतादे पूतिमांसहरम् ॥"
तेजोह्वा तेजवला ।
"तैलं घृतं वा वातघ्नं शीतादे संप्रशस्यते ।"
इति भावप्रकाशः ॥

**शीताद्रिः**, पुं, (शीतजनकोऽद्रिः । शीतप्रधानोऽद्रि-
रिति वा ।) हिमालयपर्व्वतः । इति केचित् ॥

**शीताबला**, स्त्री, महासमङ्गा । इति राजनिर्घण्टः ॥

**शीतार्त्तः**, त्रि, (शीतेन ऋतः पीडितः ।) शीतेन
पीडितः । तत्पर्य्यायः । शीतालुः २ । इति
जटाधरः ॥ (यथा, शिवरात्रिव्रतकथायाम् ।
"शीतार्त्तश्च क्षुधार्त्तश्च कम्पान्वितकलेवरः ।
जजागार तदा रात्रौ प्लुतो नीहारवारिणा ॥")

**शीतालुः**, त्रि, (शीतं न सहते इति । शीत +
"शीतोष्णतृप्रेभ्यस्तन्न सहते ।" ५ । २ । १२२ ।
इत्यस्य वार्त्तिकोक्त्या आलुच् ।) शीतार्त्तः । इति
जटाधरः ॥

**शीताश्मा**, [न्] पुं, (शीतः शीतलोऽश्मा ।)

वायुयुक्ते, त्रि ॥

**शीतला**, स्त्री, (शीतल + स्त्रियां टाप् ।) शीतली-

वृक्षः । यथा, --
"शीतला शीतली शीतकुम्भी
पाण्डरपुष्पिका ।"
इति शब्दचन्द्रिका ॥
देवीविशेषः । सा च
वसन्तविस्फोटकादेरधि-
ष्ठात्री देवता । यथा, --
स्कन्द उवाच ।
"भगवन् देवदेवेश शीतलायाः स्तवं शुभम् ।
वक्तुमर्हस्यशेषेण विस्फोटकभयापहम् ॥
ईश्वर उवाच ।
नमामि शीतलां देवीं रासभस्थां दिगम्बरीम्
।
मार्ज्जनीकलसोपेतां सूर्पालङ्कृतमस्तकाम्
॥
इति स्कन्दपुराणम् ॥
अस्या विवरणं मसूरिकाशब्दे द्रष्टव्यम् ॥
कुटु-
म्बिनी । आरामशीतला । वालुका । इति
राजनिर्घ ण्टः ॥

**शीतलाषष्ठी**, स्त्री, (शीतला षष्ठी ।) माघशुक्ला

षष्ठी । यथा, --
"प्रसूत्या द्वादशे मासि पूज्यापत्यविवृद्धये ।
सुते जाते तथा षष्ठ्यां षष्ठी द्वादशरूपिणी
॥
वैशाखे चान्दनी षष्ठी ज्यैष्ठे चारण्यसंज्ञिता
।
आषाढे कार्द्दमी ज्ञेया श्रावणे लुण्ठनी तथा
॥
भाद्रे चपेटी विख्याता दुर्गाख्याश्वयुजे तथा
।

पीलुवृक्षः । इति जटाधरः ॥
शीतसहनीये,
त्रि ॥

**शीतसहा**, स्त्री, (शीतसह + टाप् ।) नीलसिन्धु-

वारः । वासन्ती । इति राजनिर्घण्टः ॥

**शीता**, स्त्री, रामपत्नी । इति शब्दरत्नावली ॥

लाङ्गलपद्धतिः । इत्यमरटीकायां भरतः
॥
यथा, --
"शीता नभःसरिदिति लाङ्गलपद्धतौ च
शीता दशाननरिपोः सहधर्म्मिणी च ।
शीतं स्मृतं हिमगुणे च तदन्विते च
शीतोऽलसे च बहुवारतरौ च दृष्टः ॥"
इति तालव्यादौ धरणिः ॥
अतिबला । कुटुम्बिनी । दूर्व्वा ।
शिल्पिका-
तृणम् । इति राजनिर्घ ण्टः ॥

**शीतांशुः**, पुं, (शीताः अंशवो यस्य ।) कर्पूरः ।

इति राजनिर्घ ण्टः ॥ चन्द्रः । यथा, --
"शीतांशुर्म्मिष्टमन्नं जनयति सततं
जन्मराशौ
नराणाम् ।"
इति ज्योतिस्तत्त्वम् ॥

**शीतांशुतैलं**, क्ली, (शीतांशोः कर्पूरस्य तैलम् ।)

कर्पूरतैलम् । इति राजनिर्घ ण्टः ॥

**शीताङ्गी**, स्त्री, (शीतं अङ्गमस्याः ङीष् ।)

हंसपदीवृक्षः । इति राजनिर्घ ण्टः ॥
शीत-
लाङ्गे, त्रि ॥ (यथा, सुश्रुते । २ । ८ ।
"प्रविध्यति शिरो यातु शीताङ्गी निरपत्रपा
।
नीलोद्धतशिरा हन्ति सा गर्भं स च तां
तथा ॥")

चन्द्रकान्तमणिः । इति राजनिर्घण्टः ॥
शीतल-
प्रस्तरश्च ॥

**शीतीभावः**, पुं, (शीत + भू + घञ् । अभूततद्भावे

च्विः ।) मोक्षः । इति त्रिकाण्डशेषः ॥
शीतल-
त्वञ्च ॥

**शीतोत्तमं**, क्ली, (शीतेषु वस्तुषु मध्ये उत्तमम् ।)

जलम् । इति शब्दचन्द्रिका ॥

**शीत्यं**, त्रि, सीत्यम् । कृष्टम् । इत्यमरटीकायां

रमानाथः ॥ शीतयोग्यञ्च ॥

**शीत्कारः**, पुं, (शीदितिशब्दस्य कारः करणम् ।)

वरस्त्रीणां रतिकालध्वनिः । यथा, --
"शीत्कारो रतनारीचः सुरते वरयोषिताम्
।"
इति जटाधरः ॥
(शीत्कृतिमात्रे । यथा, कथासरित्सागरे ।
१ । २ ।
"सन्ध्यानृत्योत्सवे ताराः करेणोद्धूय
विघ्नजित् ।
शीत्कारशीकरैरन्याः कल्पयन्निव पातु वः
॥")

**शीत्कृतं**, क्ली, (शीदिति शब्दस्य कृतं करणम् ।)

शीत्कारः । इति धरणिः ॥

**शीधुः**, पुं, क्ली, (शेतेऽनेनेति । शी + "शीङो

धुग्लग्वलञ् वानलः ।" उणा० ४ । ३८ ।
इति
धुक् ।) पक्वेक्षुरसकृतमद्यम् ।
इत्यमरभरतौ ॥

**शीधुपः**, त्रि, (शीधुं पातीति । पा + कः ।)

शीधुपानकर्त्ता । इति शाब्दिकाः ॥

**शीधुगन्धः**, पुं, (शीधोर्मद्यविशेषस्य गन्धो यत्र ।)

वकुलवृक्षः । इति त्रिकाण्डशेषः ॥
मद्यगन्धश्च ॥

**शीनं**, त्रि, (श्यैङ गतौ + क्तः । "द्रवमूर्त्तिस्पर्शयोः

| | | |
|---|---|---|
| | | श्यः ।” ६ । १ । २४ । इति सम्प्रसारणम् ।<br>“श्योऽस्पर्शे ।” ८ । २ । ४७ । इति नः ।)<br>घनीभूतघृतादि । इति मुग्धबोधव्याकरणम् ॥ |

**शीनः**, पुं, (श्यै + क्तः ।) मूर्खः । अजगरः । इति मेदिनी ॥

**शीफालिका**, स्त्री, शेफालिका । इत्यमरटीकायां भरतः ॥

**शीभ**, ऋ ङ कथने । इति कविकल्पद्रुमः ॥ (भ्वा० आत्म०-सक०-सेट् ।) ऋ, अशिशीभत् । ङ, शीभते । कत्थनं प्रशंसा । इति दुर्गादासः ॥

**शीभवः**, पुं, शीकरः । इति शब्दरत्नावली ॥

**शीभ्यः**, पुं, शीभ्यते प्रशंस्यते इति । शीभ + ण्यत् ।) शिवः । वृषः इति केचित् ॥ (त्रि, आत्मश्लाघिभवः । जलप्रवाहभवः । क्षिप्रभवः ।
यथा, वाजसनेयसंहितायाम् । १६ । ३१ ।
"शीभ्याय च नम ऊर्म्माय ।"
"शीभृ कत्थने शीभते कत्थते इति । शीभ आत्मश्लाघी पदाद्यच् । तत्र भवः शीभ्यः । शीभो जलप्रवाहो वा शीभः क्षिप्रो वा तत्र भवाय नमः ।" इति तट्टीकायां महीधरः ॥)

**शीरः**, पुं, (शेते इति । शी + "स्फायितञ्चीति ।" उणा० २ । १३ । इति रक् ।) अजगरसर्पः । इति शब्दरत्नावली ॥

**शीरी**, [न्] पुं, हरिदर्भः । इति राजनिर्घण्टः ॥ हरिद्गर्भ इति वा पाठः ॥

**शीर्णं**, क्ली, (शॄ + क्तः ।) स्थौणेयकम् । इति भावप्रकाशः ॥

**शीर्णं**, त्रि, (शॄ + क्तः ।) कृशः । विशीर्णः । इति

**शीर्व्विः**, त्रि, (शृणातीति । शॄ + "जॄशॄस्तॄजागृभ्यः क्विन् ।" उणा० ४ । ५४ । इति किन् ।) अप-
कारकः । हिंसकः । इति सिद्धान्तकौमुदी ॥

**शीर्षं**, क्ली, मस्तकम् । इत्यमरः ॥ (यथा, हरि-
वंशे । १७८ । ६ ।
"शीर्षाणां वै सहस्रन्तु विहितं शार्ङ्गधन्वना ।
सहस्रञ्चैव कायानां वहन् सङ्कर्षणस्तदा ॥")
कृष्णागुरुः । इति राजनिर्घण्टः ॥

**शीर्षकं**, क्ली, (शीर्षे कं सुखमस्मात् ।) शिरो-
रक्षणसन्नाहः । टोप् इति भाषा । तत्-
पर्य्यायः । शीर्षण्यम् २ शिरस्त्रम् ३ । इत्यमरः ॥
शिरोऽस्थि । इति राजनिर्घण्टः ॥ जयपराजय-
पत्रम् । यथा, याज्ञवल्क्यः ।
"तुलाग्न्यापो विषं कोषो दिव्यानीह विशुद्धये ।
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ॥"
विशुद्धये सन्दिग्धार्थस्य सन्देहनिवृत्तये ॥ म-
हाभियोगेषु महापातकादिगुरुतराभियोगेषु ।
शीर्षकस्थे शीर्षकं प्रधानं शिरो व्यवहारस्य
चतुष्पादः जयपराजयलक्षणः । तेन दण्डो
लक्ष्यते तत्र तिष्ठतीति शीर्षकस्थः तत्प्रयुक्तदण्ड-
भागीत्यर्थः । इति दिव्यतत्त्वम् ॥

**शीर्षकः**, पुं, (शीर्षमिव । इवार्थे कन् ।) राहु-
ग्रहः । इति शब्दरत्नावली ॥ मस्तके, क्ली ॥

शीर्षण्यं ढघे कादिति यः । पाददन्तेत्यादिना
शीर्षस्य शीर्षणादेशः । इति भरतः ॥ (शिरसि-
निबद्धे, त्रि । यथा, ऋग्वेदे । १ । १६२ । ८ ।
"शीर्षण्या रसना रज्जुरस्य ।"
"शीर्षण्या शिरसि बद्धा रसना मेखला इव ।"
इति तद्भाष्ये सायणः ॥ * ॥ श्रेष्ठे च त्रि । यथा,
भागवते । ५ । ४ । १५ ।
"यद्यच्छीर्षण्याचरितं तत्तदनुवर्त्तते लोकः ॥"
शीर्षण्यः श्रेष्ठस्तेनाचरितम ।" इति तट्टीका ॥)

**शीर्षरक्षं**, क्ली, (शीर्षं मस्तकं रक्षतीति । रक्ष + अण् ।) शिरस्त्राणम् । यथा, --
"शिरस्त्रं शीर्षरक्षञ्च शीर्षण्यं शीर्षकञ्च तत् ।"
इति हारावली । ७३ ॥

**शीर्षोदयः**, पुं, (शीर्षे शीर्षदेशे उदयो यस्य ।)
मिथुन-सिंह-कन्या-तुला-वृश्चिक-कुम्भ-मीन-
लग्नरूपः । यथा, --
"अजगोपतियुग्मञ्च कर्किधन्विमृगास्तथा ।
निशासंज्ञाः स्मृताश्चैते शेषाश्चान्ये दिना-
त्मकाः ॥
निशासंज्ञा विमिथुनाः स्मृताः पृष्ठोदयास्तथा ॥
शेषाः शीर्षोदया ह्येते मीनश्चोभयसंज्ञकः ॥"
इति ज्योतिस्तत्त्वम् ॥

**शील**, ञि समाधौ । इति कविकल्पद्रुमः ॥ (भ्वा०
पर०-सक०-सेट् ।) ञि, शीलितोऽस्ति ।
समाधिः सेवानुभावनं प्रवृत्तिर्व्वा । यः शीलति
सदा धर्म्ममिति हलायुधः । इति दुर्गादासः ॥

**शील**, त् क अभ्यासे । अतिशायने । इति कवि-
कल्पद्रुमः ॥ (अदन्त चुरा०-पर०-सक०-सेट् ।)

मेदिनी ॥ (यथा, आर्य्यासप्तशत्याम् । ५९७ ।
"शीर्णप्रासादोपरि जिगीषुरिव कलरवः क्वणति ॥")

**शीर्णमाला**, स्त्री, पृश्निपर्णी । इति शब्दचन्द्रिका ॥ विशीर्णमाल्यञ्च ॥

**शीर्णपत्रः**, पुं, (शीर्णं पत्रमस्य ।) कर्णिकार-वृक्षः । इति शब्दचन्द्रिका ॥ पट्टिकालोध्रः । निम्बः । इति राजनिर्घण्टः ॥ विशीर्णपत्रे, क्ली ॥

**शीर्णपर्णः**, पुं, (शीर्णं पर्णमस्य ।) निम्बवृक्षः । इति राजनिर्घण्टः ॥ विशीर्णपत्रे, क्ली ॥

**शीर्णपादः**, पुं, (शीर्णौ पादौ यस्य । विमातृ-शापादेवास्य तथात्वम् ।) यमः । इति त्रिकाण्ड-शेषः ॥ कृशचरणश्च ॥

**शीर्णपुष्पिका**, स्त्री, (शीर्णं पुष्पं यस्याः । शीर्ण-पुष्पी । ततः स्वार्थे कन् ।) अवाक्पुष्पी । इति शब्दचन्द्रिका ॥

**शीर्णवृन्तं**, क्ली, (शीर्णं वृन्तं यस्य ।) वृहद्गोलम् । इति शब्दचन्द्रिका ॥ तरमुज् इति भाषा । तत्पर्य्यायः । सुखवामः २ । इति रत्नमाला ॥ सुखाशः ३ । इति केचित् ॥ अस्य गुणाः । कफभेदाग्निरुचिशुक्रकारित्वम् । क्षारत्वम् । मधुरत्वम् । आनाहप्लीहनाशित्वम् । लघु-पाकितश्च । इति राजवल्लभः ॥

**शीर्णाङ्घ्रिः**, पुं, (शीर्णौ अङ्घ्री यस्य । विमातृ-शापादवास्य तथात्वम् ।) यमः । इति हेम-चन्द्रः । कृशपादे, त्रि ॥

**शीर्षघाती**, [न्] त्रि, (शीर्षं हन्तीति । हन + "कुमारशीर्षयोर्णिनिः ।" ३ । २ । ५१ । इति णिनिः ।) मस्तकच्छेदकः । शीर्षशब्दपूर्व्वक-हनधातोः कर्म्मभ्यां कुमारशीर्षाभ्यां हन इति मंक्षिप्तमारसूत्रेण णिनप्रत्ययेन निष्पन्नः ॥

**शीर्षच्छेदिकः**, त्रि, (शीर्षच्छेदमर्हतीति । शीर्ष-च्छेद + ठक् ।) वधार्हः । यथा, --
"स शीर्षच्छेदिकः शीर्षच्छेद्यो यो वधमर्हति ॥"
इति हेमचन्द्रः ॥

**शीर्षच्छेद्यः**, त्रि, (शीर्षच्छेदं नित्यमर्हतीति । "शीर्षच्छेदात यच्च ।" ५ । १ । ६५ । इति यत ।) मस्तकच्छे दनोपयक्तः । वध्यः । इत्यमरः ॥ (यथा, उत्तरचरिते २ अङ्के ।
"शम्वको नाम बृषलः पृथिव्यां तप्यते तपः ।
शीर्षच्छेद्यः सते राम तं हत्वा जीवय द्विजम् ॥")
शीर्षण्यं, क्ली, (शिरसे हितम् । शिरस् + "शरीरावयवात् यत् ।" ५ । १ । ६ । इति यत् । "ये च तद्धिते ।" ६ । १ । ६१ । इति शिरसः शीर्ष-न्नादेशः ।) शीर्षकम् । शिरस्त्रम् । इत्यमरः ॥ त्रीणि शिरोरक्षणमन्नाहे टोप् इति ख्याते । शीर्षे कं सुखमस्मात् शीर्षकम् । शीर्षमारो हति शीर्षण्यं ढघे कादिति यः । शिरस्त्रायते शिरस्त्रं डः । इति भरतः ॥

**शीर्षण्यः**, पुं, (शिरसि भवः । शिरस + "शरीरा-वयवाच्च ।" ४ । ३ । ५५ । इति यत् । "वा अतिशायनं अतिशयकरणम् । तालव्यादि । अशिशीलत् । उपधारणे इत्यन्ये । शीलय नीलनिचोलमिति जयदेवः । इति दुर्गादासः ॥

**शील**, क्ली, (शीलयतीति । शीलत क अति-शायन + अच् । यद्वा शोङ् स्वप्ने + "शीङो धुक् लक् वलञ, वालनः ।" उणा० ४ । ३८ । इति लक् । अर्द्धर्च्चादित्वात् पुलिङ्गमपि ।) स्वभावः । सद्वृत्तम् । इत्यमरमेदिन्यौ ॥ (यथा, रामा-यणे । २ । ३९ । २४ ।
"साध्वीनान्तुस्थितानान्तुशीले सत्य श्रुते स्थिते
स्त्रीणां पवित्रं परमं पतिरेको विशिष्यते ॥")
ब्रह्मण्यतादित्रयोदशविधधर्म्ममूलम् । रागद्वेष-वर्जनम् । यथा, --
"वेदोऽखिलो धर्म्ममूलं स्मृतिशीले च तद्-विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव ॥"
इति मानवे २ अध्यायः ॥ * ॥
शीलं ब्रह्मण्यतादिरूपम् । तदाह हारीतः । ब्रह्मण्यता देवपितृभक्तता सौम्यता अपरोप-तापिता अनसूयता मृदुता अपारुव्यं मैत्रता प्रियवादित्वं कृतज्ञता शरण्यता कारुण्यं प्रशान्तिश्चेति त्रयोदशविधं शीलम् । गोविन्द-राजस्तु । शीलं रागद्वे षपरित्याग इत्याह । इति तट्टीकायां कुक्कूकभट्टः ॥

|  |  |  |
| --- | --- | --- |
|  | केशेषु ।” ६ । १ । ६१ । इत्यस्य वार्त्तिकोक्त्या शीर्षन्नादेशः ।) विशदकचः । तत्पर्य्यायः । शिरस्यः २ । इत्यमरः ॥ द्वे स्वतः स्नानादिना वा निर्म्मले अन्योन्यासंपृक्ते केशे । शीर्षे भवं |  |

**शीलः**, पुं, (शील अतिशायने + अच् ।) अज-
गरसर्पः । इति शब्दरत्नावली ॥ चरित्रम्
।
इत्यमरटीकायां नयनानन्दः ॥

**शीलनं**, क्ली, (शील + ल्युट् ।) अभ्यासनम् ।
(यथा, महाभारते । १२ । ३२१ । ४३ ।
"पुरा वृका भयङ्करा मनुष्यदेहगोचराः ।
अभिद्रवन्ति सर्व्वतो यतस्व पुण्यशीलने
॥")
अतिशायनम् । उपधारणम् ।
सेवानुभावनम् ।
प्रवर्त्तनम् । इति शोलधातोरनट्प्रत्ययेन
निष्प-
न्नम् ॥ पाठनिश्चयः । यथा, --
"भविनी गुणनी शीलनं स्मृतम् ।"
इति ब्रह्मवर्गे त्रिकाण्डशेषः ॥

**शीलवान्**, [त्] त्रि, (शीलमस्यास्तीति । शील +
मतुप् । मस्य वः ।) शीलविशिष्टः । सत्-
स्वभावः । यथा, --
"पथ्याशिनां शीलवतां नराणां
सद्वृत्तभाजां विजितेन्द्रियाणाम् ।
एवंविधानामिदमायुरत्र
चिन्त्यं सदा वृद्धमुनिप्रवादः ॥"
इति मलमासतत्त्वम् ॥
सद्वृत्तः । इति शीलशब्दार्थदर्शनात् ॥

**शीला**, स्त्री, (शीलमस्या अस्तीति । शील + अच्
।
टाप् ।) कौण्डिन्यमुनिपत्नी । यथा, --
"मध्याह्ने भोज्यवेलायां समुत्तीर्य्य
सरित्तटे ।
ददर्श शीला सा स्त्रीणां समूहं रक्तवास-
साम् ॥"
इति तिथ्यादितत्त्वम् ॥

**शीलितं**, क्ली, (शील + क्तः ।) चीर्णम् । इति
त्रिकाण्डशेषः ॥ अभ्यस्ते, त्रि ॥

**शीवलं**, क्ली, (शी + बाहुलकात् वलः गुणाभा-

दाडिमप्रियः ५ रक्ततुण्डः ६ वक्रचञ्चः ७
चिमिः
८ चिमिकः ९ । इति शब्दरत्नावली ॥ शूकः
१० प्रियदर्शनः ११ । इति जटाधरः ॥
मञ्जु-
पाठकः १२ । (यथा, आर्य्यासप्तशत्याम् ।
३८१ ।
"प्रकटयति रागमधिकं लपनमिदं वक्रिमाण-
मावहति ।
प्रीणयति च प्रतिपदं दूति शुकस्येव
दयितस्य ॥"
अस्य मांसगणाः । परमवृष्यत्वम् । विपाके
गुरुत्वम् । शीतलत्वन् ।
कासश्वासक्षयहरत्वम् ।
संग्राहित्वम् । लघुत्वम् । दीपनत्वञ्च । इति
राजनिर्घण्टः ॥ * ॥ तस्य शुभसूचकत्वं
यथा,
"वामः पठन् राजशुकः प्रयाणे
शुभं भवेद्दक्षिणतः प्रवेशे ।
वनेचराः काष्ठशुकाः प्रयातुः
स्युः सिद्धिदाः संमुखमापतन्तः ॥"
इति वसन्तराजशाकुने ८ वर्गः ॥ * ॥
व्यासपुत्त्रः । स च परीक्षिताय श्रीमद्भागवतं
श्रावयामास । तस्योत्पत्त्यादिर्यथा । हरिवंशे
वायवीये च ।
"पराशरकुलोत्पन्नः शुको नाम महायशाः ।
व्यासादरण्यां सम्भूतो विधूमोऽग्निरिव
ज्वलन्
स तस्यां पितृकन्यायां पीवर्य्यां जनयिष्यति
।
कृष्णं गौरं प्रभुं शम्भुं तथा भूरिश्रुतं जयम् ॥
कन्यां कीर्त्तिमतीं षष्ठीं योगिनीं योगमातरम् ।
ब्रह्मदत्तस्य जननीं गृहीणीमनुहस्य च ॥"
इति विष्णुपुराणे ४ अंशे १९
अध्यायटीकायां
श्रीधरस्वामी ॥ वह्निपराणे
प्रजापतिसर्गनामा-
ध्यायेऽप्ये वम् ॥ * ॥ अपि च ।
"द्वैपायनाच्छुको जज्ञे भगवानेष शङ्करः ।

तस्माच्छुकः समुद्भूतो व्यासाकृतिमनोहरः
॥
विस्मयं जनयन् बालः संजातस्तदरण्यजः
।
यथाध्वरे समिद्धोऽग्निर्भाति हव्येन
दीप्तिमान् ॥
व्यासस्तु सुतमालोक्य विस्मयं परमङ्गतः
।
किमेतदिति सञ्चिन्त्य वरदानाच्छिवस्य वै
॥
तेजोरूपी शुको जातोऽप्यरणीगर्भसम्भवः
।
द्वितीयोऽग्निरिवात्यर्थं दीप्यमानः
स्वतेजसा ॥
विलोकयामास तदा व्यासस्तु मुदितं
सुतम् ।
दिव्येन तेजसा युक्तं गार्हपत्यमिवापरम् ॥
गङ्गाम्भः स्नापयामास समागत्य गिरेस्तदा
।
पुष्पवृष्टिस्तु खाज्जाता शिशोरुपरि
तापसाः ! ॥
जातकर्म्मादिकं चक्रे व्यासस्तस्य
महात्मनः ।
देवदुन्दुभयो नेदुर्न्ननृतुश्चाप्सरोगणाः ॥
जगुर्गन्धर्व्वपतयो मुदितास्ते दिदृक्षवः ।
विश्वावसुर्नारदश्च तुम्बुरुः शुकसम्भवे ॥
तुष्टुवुर्मुदिताः सर्व्वे देवा विद्याधरास्तथा ।
दृष्ट्वा व्याससुतं दिव्यमरणीगर्भसम्भवम् ॥
अन्तरीक्षात् पपातोर्व्यां दण्डः कृष्णाजिनं
शभम्
कमण्डलुस्तथा दिव्यः शुकस्यार्थे
द्विजोत्तमाः ॥
सद्यः स ववृधे बालो
जातमात्रोऽतिदीप्तिमान् ।
तस्योपनयनं चक्रे व्यासो विद्याविधानवित्
॥
उत्पन्नमात्रं तं वेदाः सरहस्याः ससंग्रहाः ।
उपतस्थुर्महात्मानं यथास्य पितरन्तथा ॥
यतो दृष्टं शुकीरूपं घृताच्या सम्भवे तदा ।

वश्च ।) शैलेयम् । शैवालम् । इति मेदिनी ॥

**शीवा**, [न्] पुं, (शेते इति । शी + “शीङ्क्रुशि-रुहीति ।” उणा ० ४ । ११३ । इति क्वनिप् ।) अजगरसर्पः । इति सिद्धान्तकौमुदी ॥

**शुक**, सर्पे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) शोकति । सर्पो गमनम् । इति दुर्गादासः ॥

**शुक्**, [च्] स्त्री, (शुच् शोके + क्विप् ।) शोकः । इत्यमरः ॥ (यथा, रघुः । १२ । ७५ ।
“कामं जीवति मे नाथः इति सा विजहौ शुचम् ।
प्राङ्गत्वा सत्यमस्यान्तं जीवितास्मीति लज्जिता ॥”)

**शुकं**, क्ली, (शोभते इति । शुभ दीप्तौ + “शुक-वल्कोल्काः ।” उणा० ३ । ४२ । इति कप्रत्ययेन निपातनान् साधु ।) ग्रन्थिपर्णम् । इत्यमरः ॥ वस्त्रम् । वस्त्राञ्चलम् । शिरस्त्राणम् । इति हेमचन्द्रः ॥ शोणकवृक्षः । इति विश्वः ॥

**शुकः**, पुं, (शुभ दीप्तौ + कप्रत्ययेन साधुः । उणा० ३ । ४२ ।) पक्षिविशेषः । शुया इति वङ्ग-भाषा । शुगा इति हिन्दी भाषा । तत्पर्य्यायः । कीरः २ । इत्यमरः ॥ वक्रतुण्डः ३ । मेधावी ४

अंशेनैवावतीर्य्योर्व्यां संप्राप परमं पदम् ॥
शुकस्याप्यभवन् पुत्त्राः पञ्चात्यन्ततपस्विनः ।
भूरिश्रवाः प्रभुः शम्भुः कृष्णो गौरश्च पञ्चमः ।
कन्या कीर्त्तिमती चैव योगमाता धृतव्रता ॥”
इति कौर्म्मे १७ अध्यायः ॥ * ॥ (अस्यान्यविधोत्पत्तिविवरणंयथा, देवीभागवते । १ । १४ । १ -- २३ ।
श्रीसूत उवाच ।
“दृष्ट्वा तामसितापाङ्गीं व्यासश्चिन्तापरोऽभवत् ।
किं करोमि न मे योग्या देवकन्ये यमप्सराः ॥
एवं चिन्तयमानन्तु दृष्ट्वा व्यासं तदाप्सराः ।
भयभीता हि सञ्जाता शापं मां विसृजेदयम् ॥
सा कृत्वाथ शुकीरूपं निर्गता भयविह्वला ।
कृष्णस्तु विस्मयं प्राप्तो विहङ्गीं तां विलोकयन् ॥
कामस्तु देहे व्यासस्य दर्शनादेव सङ्गतः ।
मनोऽतिविस्मितं जातं सर्व्वगात्रेषु विस्मितः ॥
स तु धैर्य्येण महता निगृह्णन् मानसं मुनिः ।
न शशाक नियन्तुञ्च स व्यासः प्रसृतं मनः ॥
बहुशो गृह्यमाणञ्च घृताच्या मोहितं मनः ।
भावित्वान्नैव विधृतं व्यासस्यामिततेजसः ॥
मन्थनं कुर्व्वतस्तस्य मुनेरग्निचिकीर्षया ।
अरण्यामेव सहसा तस्य शुक्रमथापतत् ॥
सोऽविचिन्त्य तथा पातं ममन्थारणिमेव च ।
शुकेति नाम पुत्त्रस्य चकार मुनिसत्तमाः ! ॥
बृहस्पतिमुपाध्यायं कृत्वा व्याससुतस्तदा ।
व्रतानि ब्रह्मचर्य्यस्य चकार विधिपूर्व्वकम् ॥
सोऽधीत्य निखिलान् वेदान् सरहस्यान् ससंग्रहान् ।
धर्म्मशास्त्राणि सर्व्वाणि कृत्वा गुरुकुले शुकः ॥
गुरवे दक्षिणां दत्त्वा समावृत्तो मुनिस्तदा ।
आजगाम पितुः पार्श्वे कृष्णद्वैपायनस्य च ॥”
अस्य दारपरिग्रहादिवृत्तान्तस्तु तत्रैव विशेषतो द्रष्टव्यः ॥ * ॥) स च श्रीकृष्णस्य क्रीडार्थं वृन्दावने उपनन्दस्य कन्या अभूत् । इति पाद्मे पातालखण्डम् ॥ * ॥ रावणमन्त्री । शिरीषवृक्षः । इति मेदिनी ॥ वृक्षविशेषः । इति रत्नमाला ॥ शेयालकाँटा इति भाषा ॥

**शुकच्छदं**, क्ली, (शुकवत् छदो यस्य ।) ग्रन्थि-पर्णम् । इति जटाधरः ॥

**शुकजिह्वा**, स्त्री, (शुकस्य जिह्वेव फलं यस्याः ।) वृक्षविशेषः । शुयाठोँटी इति भाषा ॥ यथा,
“शुकाख्या शुकनामा च शुकजिह्वा शुकानना”
इति रत्नमाला ॥

**शुकतरुः**, पुं, (शुकवत् तरुः । शुकवर्णपर्ण-विशिष्टत्वादस्य तथात्वम् । शुकप्रियस्तरुर्वा ।) शिरीषवृक्षः । इति रत्नमाला ॥

**शुकद्रुमः**, पुं, (शुकवत् द्रुमः । तद्वर्णपर्णविशि-ष्टत्वात् तथात्वम् । यद्वा, शुकप्रियो द्रुमः ।)

**शुकनामा**, स्त्री, (शुकस्य नाम नाम यस्याः ।)

शुकजिह्वा । इति रत्नमाला ॥

शुकसंज्ञके, त्नि ॥

**शुकनाशनः**, पुं, (शुकं नाशयतीति । नश + णिच्

+ ल्युः ।) दद्रुघ्नः । इति राजनिर्घण्टः

॥ शुक-

नाशके, त्रि ॥

**शुकनासः**, पुं, (शुकस्य नासेव फलं यस्य ।)

श्योणाकवृक्षः । इत्यमरः ॥

शुकवन्नासायुक्ते, त्रि ॥

**शुकपिण्डिः**, स्त्री, शूकशिम्बी । इति शब्दरत्ना-

वली ॥

**शुकपुच्छः**, पुं, (शुकस्य पुच्छ इव ।) गन्धकः ।

इति हेमचन्द्रः ॥ शुकस्य लाङ्गुलञ्च ॥

**शुकपुच्छकं**, क्ली, (शुकस्य पुच्छ इव । कन् ।)

स्थौणेयम् । इति राजनिर्घ ण्टः ॥

शुकवत्पुच्छ-

युक्ते, त्रि ॥

**शुकपुष्पं**, क्ली, (शुकप्रियं पुष्पमस्य ।) स्थौणेयम्

इति भावप्रकाशः ॥

**शुकपुष्पः**, पुं, (शुकप्रियं पुष्पमस्य ।) शिरीष-

वृक्षः । इति राजनिर्घ ण्टः ॥

**शुकप्रियः**, पुं, (शुकस्य प्रियः ।) शिरीषवृक्षः ।

इति भावप्रकाशः ॥ शुकवल्लभे, त्रि ॥

**शुकप्रिया**, स्त्री, (शुकस्य प्रिया ।) जम्बूः । इति

राजनिर्घ ण्टः ॥

**शुकफलः**, पुं, (शुक इव फलमस्य । तद्वर्णफल-

वत्त्वात् तथात्वम् ।) अर्कवृक्षः । इति

राज-

निर्घण्टः ॥

**शुकवर्हं**, क्ली, (शुकस्य वर्हमिव ।) गन्धद्रव्य-

**शुकोदरं**, क्ली, (शुकस्योदरमिव ।) तालीश-

पत्रम् । इति राजनिर्घ ण्टः ॥ कीरजठरञ्च ॥

**शुक्तं**, क्ली, (शुच क्लेदे + क्तः ।) मांसम् । इति

शब्दचन्द्रिका ॥ काञ्जिकम् । इति हारावली

॥

द्रवद्रव्यविशेषः । यथा, --

"कन्दमूलफलादीनि सस्नेहलवणानि च ।

यत्तद्द्रव्येऽभिसूयन्ते तच्छुक्तमभिधीयते ॥"

अस्य गुणाः ।

"शुक्तं तीक्ष्णोष्णलवणं पित्तकृत् कटुकं लधु

।

रूक्षं कृम्युदरानाहशोथार्शोविषकुष्ठनुत् ॥"

इति राजनिर्घ ण्टः ॥ * ॥

शुक्त यन्मधुरं कालवशादम्लतां गतम् । इति

प्रायश्चित्तविवेकः ॥ तस्य भक्षणनिषेधो यथा

।

यमः ।

"अपूपाश्च करम्भाश्च धाना वटकशक्तवः ।

शाकं मांसमपूपञ्च सूपं कृशरमेव च ॥

यवागुं पायसञ्चैव यच्चान्यत् स्नेहसम्भवम् ।

सर्व्वं पर्य्युषितं भक्ष्यं शुक्तञ्च परिवर्ज्जयेत् ॥"

तत्प्रतिप्रसवो यथा । मनुः ।

"दधिभक्ष्यञ्च शुक्तेषु मर्व्वञ्च दधिसम्भवम् ॥"

इति तिथ्यादितत्त्वम् ॥

(यथा च मनुः । २ । १७७

"वर्ज्जयेन्मधुर्मासञ्च गन्धं माल्यं रसान्

स्त्रियः ।

शुक्तानि यानि सर्व्वाणि प्राणिनाञ्चैव हिंसनम्

॥"

"यानि स्वभावतो मधुरादिरसानि कालवशेन

उदकवासादिना चाम्लवन्ति तानि शुक्तानि

।"

इति तट्टीकायां कुल्लूकभट्टः

**शुक्तं**, त्रि, (शुच् + क्तः ।) निष्ठुरम् । इति मेदिनी ॥

पूतम् । अम्लम् । इति विश्वः ॥ श्लिष्टम् ।

निर्ज्जनम् । इति शब्दरत्नावली ॥

**शुक्ता**, स्त्री, (शुक्त + स्त्रियां टाप् ।) चुक्रिका ।

शुक्लाभाः शितिनिचिताः स शुक्तिसंज्ञः ।"

श्यावा इत्यादि वर्णत्रयविकल्पो बोद्धव्यः ॥

* ॥

अथास्याश्चिकित्सा ।

"सेक आश्चोतनं पिण्डीविडालस्तर्पणं

तथा ।

पुटपाकोऽञ्जनं चैभिः कल्पैर्नेत्रमुपाचरेत् ॥"

इति कल्पविधिः ॥

तत्र सेकविधिर्यथा, --

"सेकस्तु दिवसे कार्य्यो रात्रौ चात्यन्तिके

गदे ।

सेकस्तु सूक्ष्मधाराभिः सर्व्वस्मिन्नयने हितः

॥

मीलिताक्षस्य मर्त्यस्य प्रदेयश्चतुरङ्गुलम्

एरण्डदलमूलत्वक्शृतमाजंपयो हितम् ।

सुखोष्णं नेत्रयोः सिक्तं

वाताभिष्यन्दनाशनम् १ ॥

यष्टीगैरिकसिन्धूत्थदार्व्वीतार्क्षैः समांसकैः ।

जलपिष्टैर्वहिर्लेपः सर्व्वनेत्रामयापहः ॥" २

॥

इति भावप्रकाशः ॥ * ॥

कर्षद्वयपरिमाणम् । इति शब्दमाला ॥ चतु-

स्तोलकपरिमाणम् । तत्पर्य्यायः ।

अष्टमिका

२ । इति वैद्यकपरिभाषा ॥

**शुक्तिका**, स्त्री, (शुक्तिरेव । स्वार्थे कन् ।) मुक्ता-

स्फोटः । इति जटाधरः ॥ चुक्रिका । इति

शब्दरत्नावली ॥

**शुक्तिजं**, क्ली, (शुक्तेर्जायते यदिति । शुक्ति +

जन् + डः ।) मुक्ता । इति हेमचन्द्रः ॥

(यथा,

बृहत्संहितायाम् । १२ । ४ ।

"प्रचलत्तिमिशुक्तिजशङ्खचितः

सलिलेऽपहृतेऽपि पतिः सरिताम् ॥")

**शुक्तिबीजं**, क्ली, (शुक्तेर्बीजमिव ।) मुक्ता । इति

त्रिकाण्डशेषः ॥

**शुक्तिमान्**, [त्] पुं, पर्व्वतविशेषः । यथा, --

विशेषः । इति शब्दरत्नावली ॥
गाँठियाला
इति भाषा ॥

**शुकम्**, व्य, शीघ्रम् । इति केचित् ॥

**शुकवल्लभः**, पुं, (शुकस्य वल्लभः प्रियः ।) दाडिमः ।

इति राजनिर्घण्टः । शुकप्रिये, त्रि ॥

**शुकवाहः**, पुं, (शुको वाहो वाहनं यस्य ।)

कामदेवः । इति केचित् ॥
शुकपक्षिवाहके, त्रि ॥

**शुकशिम्बा**, स्त्री, कपिकच्छुः । इति शब्दरत्नावली ॥

**शुकशिम्बिः**, स्त्री, कपिकच्छुः । इति शब्दरत्ना-

वली ॥

**शुकाख्या**, स्त्री, (शुकस्य आख्या आख्या यस्याः ।)

वृक्षविशेषः । शुयाठोँटी इति भाषा । तत्-
पर्य्यायः । शुकनामा २ शुकजिह्वा ३ शुका-
नना ४ । इति रत्नमाला ॥

**शुकादनः**, पुं, (शुकेन अद्यतेऽसौ इति । अद् +

कर्म्मणि ल्युट् ।) दाडिमः । इति शब्द-
चन्द्रिका ॥ शुकस्यादनीयद्रव्यमात्रे, त्रि
॥

**शुकानना**, स्त्री, (शुकस्याननमिव फलं यस्याः ।

शुकाख्यावृक्षः । इति रत्नमाला ॥
शुकतुल्य-
मुखे, त्रि ॥

**शुकी**, स्त्री, (शुक + ङीष् ।) कश्यपपत्नी । यथा,

"शुकी श्येनी च भाषा च सुग्रीवा शुचि-
गृध्रिका ॥"
अत्र शुचिभाषिका इत्यपि पाठः ।
"शुकी शुकानजनयदुलूकी
प्रत्युलूककान् ॥"
इति गारुडे ६ अध्यायः ॥
शुकपक्षिणी च ॥

इति शब्दरत्नावली ॥

**शुक्तिः**, स्त्री, (शुच् + क्तिन् ।) जलजन्तुविशेषः ।

झिनुक् इति भाषा । तत्पर्य्यायः । मुक्ता-
स्फोटः २ । इत्यमरः ॥ शुक्तिका ३ । इति
जटाधरः ॥ मुक्तिप्रसूः ४ महाशुक्तिः ५
तौतिकः ६ मौक्तिकप्रसवा ७ मौक्तिकशुक्तिः
८
मुक्तामाता ९ । अस्या गुणाः । कटुत्वम् ।
स्निग्धत्वम् । श्वासहृद्ग्रहनाशित्वम् । शूल-
प्रशमनत्वम् । रुच्यत्वम् । मधुरत्वम् । दीप-
नत्वञ्च । इति राजनिर्घ ण्टः ॥ कपालखण्डम्
।
शङ्खः । शङ्खनखः । नखी । अश्वावर्त्तः ।
अर्शोरोगः । इति मेदिनी ॥ चक्षूरोगविशेषः ।
इति हेमचन्द्रः ॥ तद्विवरणं यथा, --
"प्रस्तारिशुक्लक्षतजोऽधिमांस-
स्नाग्वर्म्मसंज्ञाः खलु पञ्च रोगाः ।
स्याच्छक्तिका सार्ज्जुनपिष्टकाख्या
जालं शिराणां पिडिकाश्च तासाम् ॥
रोगा वलासग्रथितेन सार्द्ध-
मेकादशोक्ताः खलु शुक्रभागे ॥"
शुक्तिमाह ।
"श्यावाः स्युः पिशितनिभाश्च बिन्दवोऽयं

"महेन्द्रो मलयः सह्यः शुक्तिमान्
गन्धमादनः ।
बिन्ध्यश्च पारिपात्रश्च सप्तैते च कुलाचलाः
॥"
इति त्रिकाण्डशेषः ॥

**शुक्रं**, क्ली, (शुच क्लेदे + "ऋज्रे न्द्राग्रवज्रेति ।"

उणा० २ । २८ । इति रन्प्रत्ययेन साधु ।)
मज्जजातधातुः । तत्पर्य्यायः । पुंस्त्वम् २
रेतः ३
बीजम् ४ वीर्य्यम् ५ पौरुषम् ६ तेजः ७
इन्द्रि-
यम् ८ अन्नविकारः ९ मज्जारसः १० रोह-
णम् ११ बलम् १२ । इति राजनिर्घ ण्टः ॥
तस्योत्पत्तिर्य्यथा, --
"रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते ।
मेदसोऽस्थि ततो मज्जा मज्जात् शुक्रस्य
सम्भवः ॥
तस्य स्वरूपं यथा, --
"शुक्रं शोष्यं सितं स्निग्धं बलपुष्टिकरं
स्मृतम् ।
गर्भवीजं वपुःसारो जीवस्याश्रय उत्तमः ॥"
जीवस्याश्रय उत्तम इति । यत आह ।
"जीवो वसति सर्व्वस्मिन् देहे तत्र विशेषतः
।
वीर्य्ये रक्ते मले यस्मिन् क्षीणे याति क्षयं
क्षणात् ॥" * ॥
गर्भसंजननशुक्रस्य लक्षणं यथा, --
"स्फटिकाभं द्रवं स्निग्धं मधुरं मधुगन्धि च
।
शुक्रमिच्छन्ति केचित्तु तैलक्षौद्रनिभञ्च तत्
॥"
तस्य स्थानमाह ।

"यथा पयमि सर्पिस्तु गूढश्चेक्षौ रमो यथा ।
एवं हि मकले काये शुक्रं तिष्ठति देहिनाम् ॥"
अत्र सर्पिर्दृष्टान्तो बहुशुक्रेऽल्पमथनेन सर्पिः-शुक्रयोर्लभात् ।
इक्षुरसदृष्टान्तस्तु स्वल्पशुक्रे पु सि अतिपीडनेनेक्षुरसशुक्रयोर्लभात् ॥ * ॥
तस्य क्षरणमार्गो यथा, --
"द्व्यङ्गले दक्षिणे पार्श्वे वस्तिद्वारस्य चाप्पधः ।
मूत्रस्रोतःपथे शुक्रं पुरुषस्य प्रवर्त्तते ॥" * ॥
अथ शुक्रस्य क्षरणकारणमाह ।
"कृत्स्नदेहस्थितं शक्रं प्रसन्नमनसस्तथा ।
स्त्रीषु व्याययुतश्चापि हर्षात्तत् संप्रवत्तते ॥"
स्त्रीषु व्याययुतः सुरतरूपं व्यायामं कुर्व्वतः ।
अन्यच्च ।
"शुक्रं कामेन कामिन्या दर्शनात् स्पर्शनादपि ।
शब्दसंश्रवणात् ध्यानात् संभोगाच्च प्रवर्त्तते ॥"
इति भावप्रकाशः ॥ * ॥
शुक्रक्षयकरद्रव्याणि यथा ।
सार्षपतैलम् १ राज-माषः २ तिलः ३ पटोलवास्तूककाकमाचीपुनर्नवाशाकभिन्नसर्व्वशाकम् ४ तावदम्लद्रव्यम् ५ कारवेल्लकफलम् ६ कर्कोटकफलम् ७ वादा-मम् ८ लिकुचम् ९ शुष्कमरिचम् १० गुड-

प्रसहामांसम् ५२ भूशयामांसम् ५३ अनूप-मांसम् ५४ जलजमांसम् ५५ जलेचरमांसम् ५६
छागमांसम् ५७ वाराहमांसम् ५८ कूर्म्म-मांसम् ५९ तित्तिरि-६० कुलिङ्ग-६१ चट-कानां मांसम् ६२ हंसमांसम् ६३ हंसबीजम् ६४
शुकपक्षिमांसम् ६५ मयूर-६६ शरारि-६७ मद्गु-६८ कादम्ब-६९ वलाका-७० वक-मांसम् ७१ जीर्णमद्यम् ७२ समस्तक्षीरम् ७३ गोदुग्धम् ७४ हस्तिनीदुग्धम् ७५ तावत्क्षीर-सन्तालिका ७६ माहिषदधि ७७ दधिसरः ७८
दधिमस्तु ७९ नवनीतम् ८० तावद्घृतम् ८१ तावदिक्षुः ८२ विशेषतः पौण्डकेक्षुः ८३ दन्त-
निष्पीडितेक्षुरसः ८४ यन्त्रनिष्पीडितेक्षुरसः ८५
अग्निपक्वे क्षुरसः ८६ इक्षुफाणितम् ८७ इक्षु-गुडः ८८ इक्षुखण्डम् ८९ मधुरी ९० शुष्क-पिप्पली ९१ शुण्ठी ९२ आर्द्रकम् ९३ लशु-नम् ९४ पलाण्डुः ९५ सैन्धवम् ९६ अन्नम् ९७
सतैललवणान्वितदग्धमत्स्यः ९८ तैललवणयुक्त-
पलालवेष्टितकर्द्दमलेपिताङ्गारदग्धलवणक्षावारपुरस्कृतसार्द्रककटुतैलसन्तालितमत्स्यः ९९
शाकमत्स्याख्यव्यञ्जनम् १०० मांसरसः १०१
परिशुष्काख्यमांसम् १०२ घृतपूरः १०३ मधु-
मस्तकम् १०४ दुग्धफेनकः १०५ भूशय्या १०६
एरण्डमूलम् १०७ गोक्षुरः १०८ सामान्य-वला १०९ विशेषतः पीतवला ११० अश्वगन्धा
१११ प्रसारणी ११२ माषपर्णी ११३ रुदन्ती वृक्षः ११४ राजवृक्षफलम् ११५ शिलाजतुः

रथाद्भार्गवमानिन्ये सिंहः क्षुद्रमृगं यथा ।
तमादाय हराभ्यासमाजगाम विनायकः ॥
निपात्य रक्षिणः सर्व्वानथ शुक्रं न्यवेदयत् ।
तमानीतं कविं शर्व्वः प्राक्षिपद्वदने प्रभुः ॥
स शम्भुना कविश्रेष्ठो ग्रस्तो जठरमास्थितः ।
तुष्टाव भगवन्तं तं वाग्मी वाग्भिरथादरात् ॥
शुक्र उवाच ।
नमोऽस्तु ते शङ्कर शर्व्व शम्भो सहस्रनेत्राङ्घ्रिशिरो नमस्ते ।
दृष्ट्वैव सर्व्वं भुवनं तवोदरे श्रान्तो भवन्तं शरणं प्रपन्नः ॥
इत्येवमुक्ते वचने महात्मा शम्भुर्व्वचः प्राह ततो विहस्य ।
निर्गच्छ पुत्रोऽसि ममाधुना त्वं शिश्नेन भो भार्गशवंशचन्द्रः ॥
नाम्ना तु शुक्रेति चराचरास्त्वां स्तोष्यन्ति नैवात्र विचारणास्ति ।
इत्येवमुक्त्वा भगवान् मुमोच शिश्नेन शुक्रः स च निर्जगाम ॥
विनिर्गतो भार्गववंशचन्द्रः शुक्रत्वमापद्य महानुभावः ॥"
इति वामने ६६ अध्यायः ॥ * ॥
अयं श्यामवर्णाग्निकोणस्त्रीब्राह्मणजातियजुर्व्वेदरजोगुणाम्लरसवृषराशिहीरकरत्नभोजकट देशानामधिपतिः । भृगुमुनिसन्तानः । नवा-ङ्गुलशरीरः । पद्मस्थः । सूर्य्यमुखः । श्वेतवर्णः । चतुर्भुजः । सदाजपमालावरकमण्डलुदण्ड धारी । शुक्लवस्त्रः । इन्द्रादिदेवताकः । शची-प्रत्यधिदेवताकः । शुभग्रहः । अपराह्णकाले प्रबलः । जलचारी । कफप्रकृतिः । रूप्यद्रव्य-धान्यादिस्वामी । मध्यवयः । रतीश्वरः । जल-भूमिचारी । स्निग्धरुचिः । द्विपदमनुष्याणां स्वामी च । इति बृहज्जातकग्रहयागतत्त्वा-दयः ॥ * ॥ तस्य भोग्यं दिनं शुक्रवारः । तत्र जातफलम् ।
"प्रसन्नचित्तो मतिमान् गुणज्ञः सुकेशवेशः सितवस्त्रमाल्यः ।
बन्धुप्रियो भार्गववारजातः शीघ्रप्रसादः कुशलो नरः स्यात् ॥"

त्वक् ११

पिप्पलीशण्ठीभिन्नकटुरसः १२ । इति राजवल्लभात् संगृहीतम् ॥ * ॥

अपि च ।

"वोजक्षयकरं नित्यं भक्ष्यं भोज्यञ्च पानकम् ।
वर्जयेत् क्षारशाकाद्यानत्यम्बु बहुतिक्तकम् ॥
कांस्यराजतरङ्गस्थं तोयं पानेऽप्यवर्द्धनम् ।
मूत्रान्ते मूत्रवर्द्धीजक्षयकारि विवर्ज्जयेत् ॥"

शुक्रवृद्धिकरजल यथा, --

"ताम्रायःस्वर्णसीसानां पात्रस्थं फलचर्म्मणोः ।
शुक्रवृद्धिकरं तोयं तत्तु पेयं प्रयत्नतः ॥"

इति कालिकापुराणे ८९ अध्यायः ॥ * ॥

शुक्रवर्द्धकद्रव्याणि यथा ।

पानीयम् १ विशेषतः हैमन्तिकजलम् २ तालाम्बु ३ चन्दनादिद्रव्यानु-लेपनम् ४ रक्तशालिधान्यम् ५ हैमन्तिकषष्टि-कधान्यम् ६ गोधूमः ७ माषः ८ सामान्यशुष्क-नारीचपत्रशाकम् ९ सामान्यक्लिन्नशुष्कनारीच पत्रशाकजलम् १० कलम्बीशाकम् ११ काक-माचीशाकम् १२ गोक्षुरशाकम् १३ मुञ्जा-तकः १४ वार्त्ताकुः १५ विदारी १६ हस्त्या-लुकम् १७ मध्वालुकम् १८ पक्वाम्रम् १९ दुग्धाम्रम् २० नागरङ्गम् २१ बहुवारफलम् २२ ११६ । इति राजवल्लभात् सगृहीतम् ॥ * ॥

नेत्ररोगविशेषः । इति मेदिनी ॥ अस्य विवरणं शुक्लशब्दे द्रष्टव्यम् ॥

**शुक्रः**, पुं, (शुच + रन् ।) ग्रहविशेषः । तत्पर्य्यायः

दैत्यगुरुः २ काव्यः ३ उशनाः ४ भार्गवः ५ कविः ६ । इत्यमरः ॥ सितः ७ आस्फुजित् ८
शतपर्व्वेशः ९ भृगुसुतः १० भृगुः ११ षोड-शार्च्चिः १२ मघाभूः १३ श्वेतः १४ श्वेतरथः १५
इति शब्दरत्नावली ॥ षोडशांशुः १६ । इति जटाधरः ॥ * ॥ तस्य शुक्रेति नामकारणं यथा, --

"निकुम्भादिषु दैत्येषु भूय एवोत्थितेष्वथ ।
युद्धायाभ्यागतेष्वेव नन्दी शङ्करमब्रवीत् ॥
महादेव वचोऽसह्यं शृणु त्वं परमाद्भूतम् ।
अविचिन्त्यमसह्यञ्च मृतानां जीवनं पुनः ॥
ये हताः प्रमथैर्दैत्या यथाशक्त्या रणाजिरे ।
ते सर्व्वे जीविता भूयो भार्गवेणाथ विद्यया ॥
तदिदं वै महादेव महत् कर्म्म कृतं रणे ।
संजातमफलं देव शुक्रविद्याबलाश्रयात् ॥
इत्येवमुक्ते वचने नन्दिना कुलनन्दिना ।
प्रत्युवाच प्रभुः प्रीत्या स्वार्थसाधनमुत्तमम् ।
गच्छ शुक्रं गणपते ममान्तिकमुपानय ॥
अहं तं संयतिष्यामि यथायोगं समेत्यति ॥
इत्येवमुक्ते रुद्रेण नन्दी गणपतिस्ततः ॥
तमनन्तमुपागम्य नन्दी संपूज्य वेगवान् ॥

तस्य क्षेत्रजातफलम् ।

"शुक्रालये काव्यकलाविदग्धो
दातातिथेयः श्रुतशास्त्रदक्षः ।
कलिप्रियो वातकफान्वितः स्या-
न्मेधान्वितो हास्यपटुर्मदाद्यः ॥"

तस्य द्रीक्काणजातफलम् ।

"द्रेक्काणे भृगुनन्दनस्य सुतनुः पात्रं धरित्रीपतेः
सर्व्वज्ञः स्वजनानुरागकुशलो दाता सतां वल्लभ
संपूणश्च वराङ्गनात्मजधनैः स्फीतः कृपालुः शुचिः
शान्तः सत्यरतोऽभियुक्तहृदयो धर्म्मानुरक्तो नरः ॥"

| | | |
|---|---|---|
| पक्वकण्टाफलम् २३<br>कण्टाफलास्थि २४ पक्व-<br>तालम् २५ पक्वकदलम् २६<br>चम्पककदलम् २७<br>द्राक्षा २८ खर्ज्जूरम् २९ धात्री<br>३० कुष्माण्ड-<br>मज्जा ३१ तावन्मत्स्याः ३२<br>वृहन्मत्स्यः ३३<br>समुद्रमत्स्यः ३४ रोहितमत्स्यः<br>३५ भाकूट-<br>मत्स्यः ३६ पाठीनमत्स्यः ३७<br>भेगलिमत्स्यः ३८<br>चित्रफलमत्स्यः २९<br>वाउशमत्स्यः ४० मद्गुर-<br>मत्स्यः ४१ वर्म्मिमत्स्यः ४२<br>फलीमत्स्यः ४३<br>चिङ्गटमत्स्यः ४४ पर्व्वतमत्स्यः<br>४५ एलङ्गमत्स्यः<br>४६ शकलीमत्स्यः ४७<br>चम्पकुन्दमत्स्यः ४८ प्रोष्ठी-<br>मत्स्यः ४९ दग्धमत्स्यः ५०<br>सामान्यमांसम् ५१ | | |

तस्य नवांशजातफलम् ।
“नारीरक्तो ललितनयनो मञ्जुकेशः
कृशाङ्गः
कम्बुग्रीवो भवति कनकश्यामवर्णः
सुकेशः ।
क्रू रः स्त्रैणः कविरतिधनो
दानशीलो गुणज्ञो
व्यानम्रास्यो विमलयशसा मानवो
भार्गवांशे ॥”
तस्य द्वादशांशजातफलम् ।
“शूरो बहुधनो भोगो नृत्यगीतप्रियः
सदा ।
शुचिर्द्धाता क्षमी भोक्ता द्वादशांशे
भृगोनरः ॥”
तस्य त्रिंशांशजातफलम् ।
“बहुगुणपरिपूर्णः सुन्दरश्चारुदृष्टि-
र्युवतिजनविनोदी
लब्धसौख्यार्थभोगः ।
द्विजसुरगुरुभक्तो दानशीलः
कृपालु-
रसुरपतिगुरोः स्यान्मानवस्त्रिं
शकांशे ॥”
इति कोष्ठीप्रदीपः ॥
विष्कुम्भादि-सप्तविंशति-
योगान्तर्गत-चतुर्विंश-
योगः । तत्र जातफलम् ।
“हास्यो विवादे विजयी सभायां
मद्गन्धमाल्याम्बररत्नयुक्तः ।
जितेन्द्रियः स्यान्मनुजो महौजाः
शुक्राभिधाने जननं हि यस्य ॥”
इति कोष्ठीप्रदीपः ॥ * ॥
अग्निः । चित्रकवृक्षः । ज्यैष्ठमासः
। इत्यमरः ।

**शुक्रकरः**, पुं, (करोतीति । कृ + पचाद्यच् । शुक्रस्य
करः ।) मज्जा । इति हेमचन्द्रः ॥
वीर्य्य-
कारके, त्रि ॥

अक्षिरोगविशेषः । इति जटाधरः ॥ स तु
चक्षुःशुक्लभागजरोगः । तद्विरणं यथा, --
“प्रस्तारिशुक्लक्षतजाधिमांस-
स्नाव्वर्म्मसंज्ञाः खलु पञ्च रोगाः ॥”
तत्र शुक्लमाह ।
“सुश्वे तं मृदुशुक्लाम्र्मं शुक्लं तद्वर्द्धते
चिरात् ॥”
अस्य चिकित्सा ।
“भुक्त्वा पाणितलं घृष्ट्वा चक्षुषोर्यदि दीयते
।
अचिरेणैव तद्वारि तिमिराणि व्यपोहति ॥
स्नानं कृष्णतिलैर्व्वापि चक्षुष्यमनिलापहम्
।
आमलैः सततं स्नानं परदृष्टिबलापहम् ॥
शुण्ठीनिम्बदलैः
पिण्डीसुखोष्णास्वल्पसैन्धवा ।
धार्य्या नेत्रेऽनिलश्ले ष्मशोथकण्डूव्यथाहरी
।
त्रिफला पिण्डिका नेत्रे वातपित्तकफापहा
॥”
अन्यदौषधं शुक्तिशुक्रशब्दयोर्द्रष्टव्यम् ।
काञ्जि-
कादि । यथा, --
“कार्त्तिके वर्जयेत्तैलं कार्त्तिके वर्जयेन्मधु ।
कार्त्तिके वर्ज येत्कांस्यं कार्त्तिके
शुक्लसन्धि-
तम् ॥”
इति श्रीगोपालभट्टविलिखितेभगवद्भक्ति-
विलासे १६ विलामः ॥ शुक्लं काञ्जिकादि-
पर्य्युषिताम्लद्रष्यं मन्धितञ्च वर्जयेत् । इति
श्रीजीवगोस्वामिकृततट्टीका दिग्दर्शनी ॥

**शुक्लः**, पुं, (शुच + रन् । रस्य लः ।) वर्णविशेषः
सादा इति भाषा । तत्पर्य्यायः । शुभ्रः २
शुचिः-
३ श्वेतः ४ विशदः ५ श्येतः ६ पाण्डरः ७
अव-
दातः ८ सितः ९ गौरः १० वलक्षः ११
धवलः १२ अर्ज्जुनः १३ । इत्यमरः ॥
श्वेता १४

शुक्लकृष्णवाचकानि वस्तूनि यथा, --
“सितकृष्णौ विधुहरी शितिताराभ्रकनाग-
राजघनसाराः ।
रामपयोराश्यर्ज्जुनसिंहीजानन्तचन्द्र-
हामाद्याः ॥”
विधुश्चन्द्रो विष्णुश्च । हरिः कृष्णः सिंहश्च ।
शिती धवलमेचकौ । तारा नक्षत्रं अक्ष्णः
कनीनिका च । अभ्रकं निरिजं मेघश्च
नागराजः शेषो गजश्च । घनमारः कर्पूरं
मेघश्रेष्ठश्च । रामो बलभद्रो दाशरथिश्च ।
पयोरारिर्दुग्धमसूहः समद्रश्च । अर्ज्जुनः शुभ्रः
पार्थश्च । सिंहीजः सिंहो राहुश्च । अनन्तो
बलभद्रः कृष्णश्च । चन्द्रहासः चन्द्रहास्यं
खड्गश्च ।
“शङ्ककरतारकेशसदाकाशव्योमकेशतालाङ्काः ।
नीलांशुकाधिकेशारिष्टसदासिचयकलकण्ठाः ॥
शङ्ककरः कम्बु कान्तिः कृष्णश्च ।
तारकेशश्चन्द्रः
उज्वलबाकश्च । सदाकाशः सर्व्वदाकाशः सद्
गगनञ्च । व्योमकेशः शिवो नभोबालौ च ।
तालाङ्को बलभद्रस्तालकलङ्कौच । नीलांशुको
बलभद्रः कृष्णकान्तिश्च । अधिकेशो अधिक-
शिवो अधिकबालश्च । अरिष्टस्तक्रं काकश्च
सदासिचयः सिचयो वस्त्रं असिचयः खड्ग-
समूहश्च । कलकण्ठो हंसः पिकश्च ।
“कलकण्ठः पिके पारावते हंसे कलध्वनौ ॥
हरिजिष्णुघनाब्धिभ्यो गजाः सिन्धुर्मुरारितः ।
अद्भ्यो वाहोऽब्जानि कृष्णाद्यमुना कुम्भितो
द्विषः ॥”
शुक्लश्यामाभिधायका भवन्तीति सम्बन्ध
हरिगज ऐरावतः । एवं जिष्णुगजः । अब्धि-
गजः । घनगजः । पक्षे हरिर्विष्णुर्गजो हस्ती ।
एवं सर्व्वत्र । गजा इति बहुवचननिर्द्देशात्
गजपर्य्यायो गृह्यते । मुरारिसिन्धुर्गङ्गा कृष्ण-
समुद्रौ च । अम्बुवाहः उच्चैःश्रवाः मेघश्च ।
कृष्णाब्जं नाभीपुण्डरीकं नीलाब्जञ्च । यमुनारि-
र्बलभद्रो यमुनाद्वेषी च ।
“कृष्टार्थाग्रात्तटिनीवाचकशब्दात्परो वरो
योज्यः ।

**शुक्रभुक्**, [ज्] पुं, (शुक्रं भुङ्क्ते इति । भुज +
क्विप् ।) मयूरः । इति
शब्दचन्द्रिका ॥ रेतो-
भोजके, त्रि ॥

**शुक्रभूः**, पुं, (शुक्रात् भूरुत्पत्तिर्य्यस्य ।) मज्जा ।
इति शब्दचन्द्रिका ॥
बीर्य्यजातमात्रे, त्रि ॥

**शुक्रला**, स्त्री, (शुक्रं लाति ददातीति । दा + कः
उच्चटा । इति
चक्रलाशब्दटीकायां भरतः ॥
वीर्य्यदातरि, त्रि ॥

**शुक्रवारः**, पुं, (शुक्रस्य वारः ।) शुक्रग्रहभोग्य-
दिनम् । यथा । तीर्थेतरत्र
प्रतिप्रसवमाह ।
स्मृतिः ।
"अयने विषुवे चैव संक्रान्त्यां
ग्रहणेषु च ।
उपाकर्म्मणि चोत्सर्गे युगादौ
मृतवासरे ।
सूर्य्यशुक्रादिवारेऽपि न
दोषस्तिलतर्पणे ॥"
इति प्रायश्चित्ततत्त्वम् ॥

**शुक्रशिष्यः**, पुं, (शुक्रस्य शिष्यः ।) असुरः ।
इत्यमरः ॥

**शुक्राङ्गः**, पुं, मयूरः । इति जटाधरः ॥

**शुक्रियः**, त्रि, शुक्रसम्बन्धी । शुक्रशब्दात् इयप्रत्यय
निष्पन्नः ॥ (शुक्रो देवता अस्येति
। शुक्र +
"शुक्रात् । घन् ।" ४ । २ । २६ ।
इति घन् ।
शुक्रदेवताको हविरादिः । इति
सिद्धान्तकौमुदी
यथा, याज्ञवल्क्ये ! ३ । ३०८ ।
"शुक्रियारण्यकजपा गायत्र्याश्च
विशेषतः ॥")

श्वेता १५ श्वेनी १६ विषदः १७ मिता
१८
अवलक्षः १९ । इति तट्टीका ॥ शितिः २०
पाण्डुः २१ । इति शब्दरत्नावली ॥ रामः
२२
खरुः २३ । इति जटाधरः ॥ शक्रयोगः ।
इति
मेदिनी ॥ श्वेतेरण्डः । इति राजनिर्घण्टः ॥
शुक्लपक्षः । यथा षट्त्रिंशन्मतम् ।
"तत्र पक्षावभौ मासे शुक्लकृष्णौ क्रमेण हि
।
चन्द्रवृद्धिकरः शुक्लः
कृष्णश्चन्द्रक्षयात्मकः ॥"
इति तिथ्यादितत्त्वम् ॥
शुक्लगुणयुक्ते, त्रि ॥ * ॥ शुक्लवस्तूनि
यथा, --
"सुधांशूच्चैःश्रवाः
शम्भुकीर्त्तिज्योत्स्नाशरद्धनाः ।
प्रासादसौधतगरमन्दारद्रुहिमाद्रयः॥
सूर्य्येन्दुकान्तकर्पूरकरम्भा रजतं हली ।
निर्मोकभस्महिण्डीरचन्दनंकरका हिमम् ॥
हारोर्णनाभतन्त्वस्थि स्वर्गङ्गेभरदाभ्रकम् ।
शेषाहिः शर्करा दुग्धं दधि गङ्गा सुधा जलम्
॥
मृणालसिकताहसवककैरवचामरम् ।
रम्भागर्भं पुण्डरीककेतकीशङ्खनिर्झराः ॥
लोध्रसिंहध्वजच्छत्रचूर्णशुक्तिकपर्द्दकाः ।
मुक्ताकुसुमनक्षत्रदन्तपुण्योशनोगुणाः॥
कैलासकाशकार्पासहासवासवकुञ्जराः ।
नारदः पारदः कुन्दखटिकास्फटिकादयः
॥"
इति श्वेतानि ॥ * ॥

नीरदघनोपलसितसदाहिमकरसिन्धुवेणि-
पृथुलाजाभाः ॥"
सितश्यामवाचका इति पूर्व्व वत् । कृष्णार्था-
ग्रात्तटिनीवाचकशब्दाद्वरोयथा । कृष्णनदी-
वरकान्तिः गङ्गाश्रेष्ठकान्तिः । पक्षे कृष्णनदी-
वरस्य समुद्रस्येव कान्तिः । नीरदो निश्चितो
दन्तो मेघश्च । घनोपलसितः घनोपलः करका
तद्वत् सितः घनो मेघः तद्वदुपलसितः कान्तः ।
सदाहिमकरः चन्द्रः सर्पमकरौ च । सिन्धु-
वेणिर्नदीप्रवाहः समुद्रकेशविन्यासौ च । पृथु-
लाजाभः महती भ्रष्टधान्यस्येवाभा यस्य कृष्ण-
स्येव च । तथा च ।
"वहलकलभवच्छायमन्धकारातिदीधितिः।
सदाधिकेशवच्छायो नेकपीयसमच्छविः ॥

| | | |
|---|---|---|
| **शुक्लं**, क्ली, (शुच शौचे + "ऋज्रेन्द्रेति ।" उणा०<br>२ । २८ । इति रन् प्रत्ययेण माधु<br>।) रजतम् ।<br>इति मेदिना ॥ नवनातम् । इति<br>चब्दचन्दिका । | | |

वपुर्महोदधिच्छायं बिभ्रत् सैन्धवकान्तिमान् ।
स्फाटिकी च लसल्लक्ष्मोः पट्टांशुककटिं वहन् ॥
धौताम्बरश्रियं धत्ते स्फटिकान्तश्रियान्वितः ।
अर्जुनद्युतिविद्योतीत्ये वमादि समुन्नयेत् ॥ *” ॥
रक्तश्वेतवाचकानि वस्तूनि यथा, --
“रक्तश्वेतौ हरिशुचिपुष्करशतपत्रसूर्य्य-
कान्ताब्जाः ।
नवहसमहापद्मार्क्कृशोदराः कमलकीलाले ॥”
हरिश्चन्द्रसूर्य्ययोः । शुचिः श्वेतवैश्वानरयोः ।
पुष्करं जलपद्मयोः । शतशत्रं हंसपद्मयोः ।
सूर्य्यकान्तः स्फटिके सूर्य्यकान्ते च । अब्जः
शङ्खाम्बुजयोः । नवहंसः नवहंसे प्रत्यग्रसूर्य्ये च
।
महापद्मः श्वेतनागे पद्मे च । अर्कः स्फटिक-
सूर्य्ययोः । कमलं जलाम्बुजयोः । कीलालं
जलरक्तयोः ।
“सुहृद्रत्नादिभिर्भानो रत्नेनाग्ने रदांशुकैः ।
जलेभ्यो जन्मशोभाभिः सरोजकुमुदारिभि ॥”
भानोः परस्मात् सुहृद्रत्नादिभिः सितरक्तौ
यथा । रविमित्रं चन्द्रः रवितुल्यश्च । भानुरत्रं
सूर्य्यकान्तो रविपद्मरागौच । अग्निरत्नं सूर्य्य-
कान्तो अग्निपद्मरागौ च । रदांशुकं दन्तवस्त्रे
अधरश्च जलशोभा जलजा चासौ शोभा
चेति पक्षे पद्मकान्तिः । एवं सरोजारिशोभा
सरोजस्पर्द्धिशोभा पक्षे सरोजारिश्चन्द्रः । कुमु-
दारिशोभा कुमुदस्पर्द्धिशोभा । पक्षे कुमुदारि-
रादित्यः ॥ * ॥ पीतश्वेतवाचकानि वस्तूनि
यथा, --
“पीतश्वेतौ गौरद्विजराजकपर्द्दशम्भुहरि-
तार्क्ष्याः ।
हैमस्तोमाष्टापदमहारजतचन्द्रकलधौताः॥”
गौरः श्वेतपीतयोः । द्विजराजो गुरुचन्द्रयोः ।
कपर्द्दः शम्भुजटाजूटवराटयोः । शम्भुर्ब्रह्म-
त्रिलीचनयोः । हरिः पिङ्गलसिंहयोः । तार्क्ष्यो
गरुडः पक्षे उच्चैःश्रवाः । हैमस्तोमः हेम्नोऽयं
हैमः । पक्षे हिमस्यायम् । अष्टापदं सुवर्ण-
सरभयोः । महारजतं सुवर्णरूप्ययोः । चन्द्रः
स्वर्णशशाङ्कयोः । कलधौतं हेमरूप्ययोः ।
“सुशोभितारकूटश्रीः स्वर्णस्तोमसमद्युतिः ।

**शुक्लकण्ठकः**, पुं, (शुक्लः कण्ठो यस्य । कन् ।)
दात्यूहपक्षी । इति शब्दमाला ॥ श्वेतगलयुक्ते
त्रि, ॥

**शुक्लकन्दः**, पुं, (शुक्लः कन्दो यस्य ।) महिषकन्दः ।
इति राजनिर्घण्टः ॥ श्वेतमूलञ्च ॥

**शुक्लकन्दा**, स्त्री, (शुक्लः कन्दो यस्याः ।) अति-
विषा ॥ इति राजनिर्घण्टः ॥

**शुक्लकर्म्मा**, [न्] त्रि, (शुक्लं पूतं कर्म्म यस्य ।)
अकृष्णकर्म्मा । सुकर्म्मशीलः । इति जटाधरः
॥

**शुक्लकुष्ठं**, क्ली, (शुक्लं कुष्ठम् ।) श्वेतवर्णकुष्ठ-
रोगः ॥ तस्यौषधं यथा, --
“सोमराजस्य बीजानि नवनीतयुतानि च ।
मधुना स्वादितानि स्युः शुक्लकुष्ठहराणि वै
॥”
इति गारुडे १९५ अध्यायः ॥

**शुक्लक्षीरा**, स्त्री, (शुक्लं क्षीरं यस्याः ।) कालोली ।
इति राजनिर्घ ण्टः ॥ श्वेतदुग्धयुक्ते, त्रि ॥

**शुक्लत्वं**, क्ली, (शुक्लस्य भावः । शुक्ल + त्व ।)
शुक्लस्य भाव इत्यर्थे त्वप्रत्ययेन निष्पन्नम् ॥

**शुक्लदुग्धः**, पुं, (शुक्लं दुग्धं निर्य्यासो यस्य ।)
शृङ्गाटकः । इति शब्दचन्द्रिका ॥ श्वेतदुग्ध-
युक्ते, त्रि ॥

**शुक्लधातुः**, पुं, (शुक्लः शुक्लवर्णो धातुः ।) कठिनी ।
इति हेमचन्द्रः ॥ श्वेतवर्णधातुद्रव्यञ्च ॥

**शुक्लपक्षः**, पुं, (शुक्लः पक्षः ।) सितपक्षः । चन्द्र-
सम्बन्धि-वृद्ध्यनुकूल-पञ्चदशकलाक्रिया-
प्रचयः
तत्पर्य्यायः ।
“सितस्त्वापूर्य्यमाणः स्यात् शुक्लश्च विशदः
शुचि
शुक्लपक्षः कृष्णपक्षो बहुलो वदि च स्मृतः ॥”
इति राजनिर्घण्टः ॥

“प्रतिष्ठा सर्व्वदेवानां केशवस्य
विशेषतः ।
उत्तरायण आपन्ने शुक्लपक्षे शुभे
दिने ॥”
गृहारम्भगृहप्रवेशयोः
शुक्लपक्षकर्त्तव्यता यथा ।
मत्स्यपुराणे ।
“शुक्लपक्षे भवेत् सौख्यं कृष्णे
तस्करतो भयम् ॥”
इति ज्योतिस्तत्त्वम् ॥
नवान्नश्राद्धस्य
शुक्लपक्षकर्त्तव्यता यथा ।
आश्विनाधिकारे ।
“शुक्लपक्षे नवं धान्यं पक्वं
ज्ञात्वा सुशोभनम् ।
गच्छेत् क्षेत्री विधानेन
गीतवाद्यपुरःसरम् ।
तेन देवान् पितॄंश्चैव
तर्पयेदर्च्चयेत्तथा ॥”
अपि च ।
“वृश्चिके शुक्लपक्षे तु नवान्नं
शस्यते बुधैः ॥”
इति तिथ्यादितत्त्वम् ॥

**शुक्लपुष्पः**, पुं, (शुक्लं पुष्पमस्य ।)
छत्रकवृक्षः ।
कुन्दपुष्पवृक्षः । मरुवकः । हति
रत्नमाला ॥
श्वेतकुसुमयुक्ते, त्रि ॥

**शुक्लपुष्पा**, स्त्री, (शुक्लं पुष्पमस्याः ।)
नागदन्ती ।
शीतकुम्भी । इति रत्नमाला ॥

**शुक्लपुष्पी**, स्त्री, (शुक्लं पुष्पमस्याः ।
ङीष् ।)
नागदन्ती । इति राजनिर्घण्टः ॥

**शुक्लपृष्ठकः**, पुं, (शुक्लं पृष्ठं यस्य । कन्
।) सिन्धुक-
वृक्षः । इति शब्दचन्द्रिका ॥
श्वेतवर्णपृष्ठयुक्ते,

दहनोपलसत्कान्तिगङ्घियच्छविपेशलः ॥”
तारुकूटो रूप्यसमूहः । पक्षे आरकूटो रीतिः । सुशोभनमर्णः कनकञ्च ॥ * ॥ अथ श्लोकोत्ती-र्णानि । गोपतिताक्ष्र्यकान्तिः रविगरुडच्छविः । पक्षे गोपतिरिन्द्रस्तस्य ताक्ष्र्यस्तुरङ्गः । वाम-देवगिरिर्मनोज्ञमेरुः कैलासश्च । इति कवि-कल्पलतायाम् २ श्लेषे उद्दिष्टवर्णनं १ कुसुमम् ॥

**शुक्लकः**, पुं, (शुक्ल + स्वार्थे कन् ।) शुक्लपक्षः ।

यथा, --
“पक्षत्याद्यास्तु तिथयः क्रमात् पञ्चदशं स्स्मृताः ।
दर्शान्ताः कृष्णपक्षे ताः पूर्णिमान्ताश्च शुक्लके ॥”
इति तिथ्यादितत्त्वन् ॥
श्वेतवर्णश्च ॥

स तु शुक्लप्रतिपदादिपौर्णमास्यन्तपञ्चदश-तिथ्यात्मकः । यथा, --
“तत्र पक्षावुभौ मासे शुक्लकृष्णौ क्रमेण हि ।
चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः ॥”
इति तिथ्यादितत्वम् ॥ * ॥
कर्म्मविशेषे तत्रोदयगामितिथेर्ग्राह्यत्वं यथा, --
“शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः ॥”
इति विष्णुधर्म्मोत्तरम् ॥
संस्कारकर्म्मणः शुक्लपक्षकर्त्तव्यता यथा । आश्वलायनः । उदगयने आपूर्य्यमाणे पक्षे कल्याणे नक्षत्रे चौडकर्म्मोपनयनगोदान-विवाहाः । विवाहः सार्व्वकालिक इत्येके ॥ * ॥
विद्यारम्भस्य शुक्लपक्षकर्त्तव्यता यथा । मदन-पारिजाते ।
“रवेर्गुरोर्भृगोर्लग्ने तत्स्थेऽर्केऽपीन्दुवृद्धितः ।
गुर्व्वर्केन्दूडुशुद्धौ च विद्यारम्भः प्रशस्यते ॥” * ॥
पुष्करिण्यारम्भस्य शुक्लपक्षकर्त्तव्यता यथा । मत्स्यपुराणे ।
“प्राप्य पक्षं शुभं शुक्लमतीते चोत्तरायणे ॥”
इत्यादि ॥
देवप्रतिष्ठायाः शुक्लपक्षकर्त्तव्यता यथा । व्यव-हारसमुच्चये ।

त्रि ॥

**शुक्लबलः**, पुं, जिनविशेषः । यथा, --

“वासुदेवा अमी कृष्णा नव शुक्ला बलास्त्वमी ।
अचलो विजलो भद्रः सुप्रभश्च सुदर्शनः ।
आनन्दो नन्दनः पद्मो रामो रिष्णुद्विषस्त्वमी ॥”
इति हेमचन्द्रः ॥

**शुक्लमण्डलं**, क्ली, (शुक्लं मण्डलम् ।) चक्षुःश्वेत-क्षेत्रम् । इति केचित् ॥
श्वेतवर्णगोलवस्तु च ॥

**शुक्लरोहितः**, पुं, (शुक्लः श्वेतवर्णो रोहितः ।) श्वेतरोहितवृक्षः । इति राजनिर्घण्टः ॥ शुभ्र-रोहितमत्स्यश्च ॥

**शुक्लला**, स्त्री, (शुक्लं लातीति । ला + कः ।) उच्चटा । इति रत्नमाला ॥
श्वेतदातरि, त्रि ॥

**शुक्लवर्गः**, पुं, (शुक्लानां वर्गः समूहः ।) श्वेतवर्ण-सजातीयद्रव्यम् । तथा ।
शङ्खशुक्तिकपर्द्दकादि ।
इति राजनिर्घण्टः ॥

**शुक्लवायसः**, पुं, (शुक्लो वायस इव ।) वकः ।
इति त्रिकाण्डशेषः ॥
श्वेतकाकश्च ॥

**शुक्लशालः**, पुं, (शुक्लः शाल इव ।) गिरिनिम्बः ।
इति राजनिर्घण्टः ॥
श्वेतशालवृक्षश्च ॥

**शुक्ला**, स्त्री, (शुक्लो वर्णोऽस्त्यस्या इति । अच् ।

टाप् ।) सरस्वती । इति त्रिकाण्डशेषः ॥
शर्करा । इति शब्दचन्द्रिका ॥
काकोली ।
विदारी । स्नु ही । इति राजनिर्घण्टः ॥ श्वेत-
वर्णा च ॥

**शुक्लाङ्गी**, स्त्री, (शुक्लं अङ्गं यस्याः । ङीष् ।)

शेफालिका । इति राजनिर्घण्टः ॥ श्वेतावयव-
युक्ते, त्रि ॥

**शुक्लापाङ्गः**, पुं, (शुक्लो अपाङ्गौ यस्य ।) मयूरः ।
इति हेमचन्द्रः ॥ श्वेतवर्णनेत्रान्ते, त्रि ॥ (यथा,
मेघदूते । २३ ।
"शुक्लापाङ्गैः सजलनयनैः स्वागतीकृत्य केकाः
प्रत्युद्यातः कथमपि भवान् गन्तुमाशु व्यवस्येत् ")

**शुक्लाम्लं**, क्ली, (शुक्लं अम्लम् ।) अम्लशाकः । इति
राजनिर्घण्टः ॥

**शुक्लार्म्म**, [न्] क्ली, नेत्ररोगभेदः । यथा, । अथ
शुक्लभागजा रोगाः । तेषां नामानि संख्या-
ञ्चाह ।
"प्रस्तारिशुक्लक्षतजाधिमांस-
स्नाय्वर्म्मसंज्ञाः खलु पञ्च रोगाः ।
स्याच्छुक्तिका सार्ज्जुनपिष्टकाख्या
जालं शिराणां पिडिकाश्च तासाम् ॥
रोगा बलासग्रथितेन सार्द्ध-
मेकादशोक्ताः खलु शुक्लभागे ॥"
तेषु प्रस्तार्य्यर्मणो लक्षणमाह ।
"प्रस्तार्य्यर्म्म तनुस्तीर्णं श्यावरक्तनिभं सितम् ।"
तनुः पुत्तली । स्तीर्णं विस्तीर्णम् । श्यावरक्त-
मित्यत्र विकल्पो बोद्धव्यः ॥ * ॥
शुक्लार्म्माह ।
"सुश्वेतं मृदु शुक्लार्म्म शुक्लं तद्वर्द्धते चिरात् ॥"
रक्तार्म्माह ।
"पद्माभं मृदुरक्तार्म्म यन्मांसं चीयते सिते ।"
पद्माभं पर्णेन रक्तमित्यर्थः । चीयते उपचीयते ॥
अधिमांसार्म्माह ।
"पृथ मृद्वधिमांसार्म्म बहुलञ्च यकृन्निभम् ।"
वारिबिन्दुकल्पः एतेन मनागुन्नतत्वं बोध्यते ।
वलाससंज्ञः वलासग्रथितसंज्ञः । क्वचिदेकदेशे-
नापि समुदयावगमात् । यथा भीमो भीमसेन
इति । अतएव सुश्रुते । नामसंग्रहे वलास-
ग्रथितपदं निर्द्दिष्टम् । इति भावप्रकाशः ॥

**शुक्लिमा**, [न्] पुं, (शुक्लस्य भावः । शुक्ल + "वर्ण-
दृढादिभ्यः ष्यञ् च ।" ५ । १ । १२३ । इमनिच् ।)
शुक्लता । शुक्लशब्दादिमन्प्रत्ययेन निष्पन्नः ॥

**शुक्लोपला**, स्त्री, (शुक्ल उपल इव आकृतिर्यस्याः ।)
शर्करा । इति रत्नमाला ॥ श्वेतप्रस्तरे, पुं ॥

**शुक्षिः**, पुं, (शुष्यत्यनेनेति । शुष + "प्लुषिकुषि-
शुषिभ्यः क्सिः ।" उणा० ३ । १५५ । इति क्सिः ।)
वायुः । तेजः । चित्रम् । इति संक्षिप्तसारो-
णादिवृत्तिः ॥

**शुङ्गः**, पुं, वटवृक्षः । आम्रातकवृक्षः । इति
मेदिनी ॥ शूकः । शूँया इति भाषा । इति
शूकशब्दार्थे मेदिन्यु णादिकोषौ ॥

**शुङ्गा**, स्त्री, (शुङ्गोऽस्त्यस्या इति । अच् ।
टाप् ।) पर्कटीवृक्षः । इति मेदिनी ॥ नव-
पल्लवकोशी । इति हेमचन्द्रः ॥ धान्यादिशूकञ्च ।
शुँया यस्य प्रसिद्धिः ॥ (यथा, सुश्रुते । ४ । २६ ।
"अश्वत्थफलमूलत्वक्शुङ्गासिद्धंपयो नरः ।
पीत्वा सशर्करा क्षौद्रं कुलिङ्ग इव हृष्यति ॥")

**शुङ्गाकर्म्म**, [न्] क्ली, पुंसवनसंस्कारविशेषः । यथा
"अग्निस्तु मारुतो नाम गर्भाधाने विधीयते ।
पुंसवने चन्द्रनामा शुङ्गाकर्म्मणि शोभनः ॥"
इति तिथ्यादितत्त्वम् ॥
योगः । ओषधयः सुमनसो भूत्वा अस्या वीर्य्यं
समाधत्त इयं कर्म्म करिष्यति । ततस्तां वट-
शुङ्गां तृणेन वेष्टितामन्तरीक्षेणानीय अन्तरीक्षे
स्थापयेत् । ततः कृतशोभननाम्नो अग्नेरुत्तरतः
प्रक्षालितशिलायां ब्रह्मचारी कुमारी भगवती
वा श्रुतस्वाध्यायशीलो वा ब्राह्मणः आचारतो
नीहारजलेनानावृतलोष्ट्रे ण पुनः पुनः पेषयेत् ।
ततोऽग्नेः पश्चिमतः उत्तराग्रेषु कुशेषु पश्चि-
माभिमुखीं बधूं पूर्व्वदिगानतमस्तकां कृत्वा
पृष्ठदेशे स्थितः पतिर्दक्षिणपाणेरङ्गुष्ठानामि-
काभ्यां वस्त्रबद्धां पेषितवटशुङ्गां गृहीत्वा गर्भ-
वत्या दक्षिणनासाविवरे शुङ्गारसं निक्षिपति
अनेन मन्त्रेण । प्रजापतिरृषिरनुष्टुप्च्छन्दो-
ऽग्नीन्द्रबृहस्पतयो देवता न्यग्रोधशुङ्गारसस्य
दाने विनियोगः ।
पुमानग्निः पुमानिन्द्रः पुमान् देवो बृहस्पतिः ।
पुमांसं पुत्त्रं विन्दस्ब तं पुमाननुजायताम् ॥
ततो महाव्याहृतिहोमं कृत्वा प्रादेशप्रमाणां
घृताक्तां समिधं तूणीमग्नौ हुत्वा प्रकृतं कर्म्म
समाप्य उदीच्यं शाव्यायनहोमादिवामदेव्य-

पृय विस्तीर्णम् । बहुलं पुष्टम् । यकृन्निभं ईषत्
कृष्णलोहितम् ॥ * ॥ स्नाय्वर्म्माह ।
"स्थिरं प्रसारि मांसाढ्यं शुक्लं स्नाय्वर्म्म पञ्च-
मम् ।"
स्थिरं कठिनम् । शुक्लं स्रावरहितम् ॥ * ॥
शुक्तिमाह ।
"श्यावाः स्युः पिशितनिभाश्च बिन्दवो यं
शुक्लाभाः सितनिचिताः स शुक्तिसंज्ञः ।"
श्यावा इत्यादिवर्णत्रये विकल्पो बोद्धव्यः ॥ * ॥
अर्ज्जुनमाह ।
"एको यः शशरुधिरप्रभस्तु बिन्दुः
शुक्लस्थो भवति तमर्ज्जुनं वदन्ति ॥"
पिष्टकमाह ।
"श्लेष्ममारुतकोपेन शुक्ले मांसं समुन्नतम् ।
पिष्टवत् पिष्टकं विद्धि मलाक्तादर्शसन्निभम् ॥"
पिष्टवत् श्वेतम् ॥ * ॥ शिराजालमाह ।
"जालाभः कठिनः शिरोऽरुणः शिराणां
मन्तानो भवति शिरादिजालसंज्ञः ॥"
गिरादिजालसंज्ञः शिराजालसंज्ञः ॥ * ॥
शिरापिडिकामाह ।
"गुक्रस्थाः सितपिडिकाः शिरावृता या-
स्ता विद्यादसितसमोपजाः शिराजाः ।"
वलासग्रथितमाह ।
"कांस्याभोऽमृदुरय वारिबिन्दुकल्पो
विज्ञेयो नयनसिते वलाससंज्ञः ।"
कांस्याभः श्वेत इत्यर्थः । अमृदुः कठिनः ।
तत्कर्म्मानुष्ठानं यथा । शोभननामानमग्निं
संस्थाप्य विरूपाक्षजपान्तां कुशण्डिकां समाप्य
वटवृक्षस्य पूर्व्वोत्तरशाखायां फलयुगलशालिनीं
कृमिभिरनुपहतां वटशुङ्गा यवानां माषाणां
वा त्रिभिस्त्रिभिर्गुडकैः सप्तवारान् सप्तभिर्मन्त्रैः
क्रीणीयात् । सप्तानां मन्त्राणामृष्यादयः साधा-
रणाः । प्रजापतिरृषिः सोमवरुणवसुरुद्रा-
दित्यमरुद्विश्वेदेवादेवता न्यग्रोधशुङ्गापरिक्रयणे
विनियोगः । ॐ यद्यसि सौमी सोमाय त्वा
राज्ञे परिक्रीणामि । इति गुडकत्रयेण एकं
परिक्रयणम् ॥ यद्यसि वारुणी वरुणाय त्वा
राज्ञे परिक्रीणामि । इति गुडकत्रयेण द्वितीयं
परिक्रयणम् ॥ यद्यसि वसुभ्यो वसुभ्यस्त्वा राज्ञे
परिक्रीणामि । इति गुडकत्रयेण तृतीयं परि-
क्रयणम् ॥ यद्यसि रुद्रे भ्यो रुद्रेभ्यस्त्वा राज्ञे
परिक्रीणामि । इति गुडकत्रयेण चतुर्थं परि-
क्रयणम् ॥ यद्यसि आदित्येभ्यः आदित्येभ्यस्त्वा
राज्ञे परिक्रीणामि । इति गुडकत्रयेण पञ्चमं
परिक्रयणम् ॥ यद्यसि मरुद्भ्यो मरुद्भ्यस्त्वा राज्ञे
परिक्रीणामि । इति गुडकत्रयेण षष्ठं परि-
क्रयणम् ॥ यद्यसि विश्वे भ्यो देवेभ्यो विश्वेभ्यो
देवेभ्यस्त्वा राज्ञे परिक्रीणामि । इति गुडक-
त्रयेण सप्तमं परिक्रयणम् ॥ ततः क्रीतां वट-
शुङ्गां अनेनं मन्त्रेण वृक्षादानयेत् । प्रजापति-
ऋषिरोसध्यो देवतान्यग्रोधशुङ्गाच्छेदने विनि-
गानान्तं कर्म्म समाप्य कर्म्मकारयितृब्राह्मणाय
दक्षिणां दद्यात् । इति भवदेवः ॥

**शुङ्गी**, [न्] पुं, (शुङ्गा अस्त्यस्येति । शुङ्गा +
इनिः ।) प्लहवृक्षः । वटवृक्षः । इति जटा-
धरः ॥ शुङ्गाविशिष्टे, त्रि ॥

**शुच**, शोके । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) तालव्यादिः । शोचति । शोकः
पुत्त्रादेरदर्शनाद्दुःखानुभवः । किं शोचते-
हाभ्युदये वतास्मानिति भट्टिः । प्रियतमा मां
शोचते शोचते । इति महानाटकम् । गण-
कृतानित्यत्वादात्मनेपदम् । इति दुर्गादासः ॥

**शुच**, इर्, य ञ ई शौचे । विशरणे । क्लेदे । इति
कविकल्पद्रुमः ॥ (दिवा०-उभ० क्लेदे शौचे च
अक०-अन्यत्र सक०-सेट् । निष्ठायां अनिट् ।)
शौचं शुद्धिः । विशरणं विभेदः । क्लेदः आर्द्र-
भावः । इर् अशुचत् अशोचीत् । य ञ, शुच्यते
लोकः स्नानात् । शुच्यति गात्रं बाणः । शुच्यति
वस्त्रमम्भसा । ई, शूक्तः । शुचि र पूतीभावे
इति प्राञ्चः । रमानाथस्तु एतदनुरोधादेता-
नर्थान् व्याख्याति । इति दुर्गादासः ॥

**शुचा**, स्त्री, (शुच शोके + क्विप् । पक्षे टाप् ।)
शोकः । इति शब्दरत्नावली ॥

**शुचिः**, पुं, (शुच्यति अनेनेति । शुच + "इगुप-
धात् कित् ।" उणा ० ४ । ११९ । इति इन् । सच

| | | |
|---|---|---|
| | | कित् ।) अग्निः । (यथा, भागवते । ४ । २४ । ४ । "पावकः पवमानश्चः शुचिरित्यग्नयः पुरा । वशिष्ठशापादुत्पन्नाः पुनर्योगगतिं गताः ॥") चित्रकवृक्षः । आषाढमासः । शुक्लवर्णः । शृङ्गाररसः । इत्यमरः ॥ ग्रीष्मः । शुद्धमन्त्री । ज्यैष्ठमासः । इति मेदिनी ॥ सौराग्निः । यथा "पावकः पवमानश्च शुचिरग्निश्च ते त्रयः । निर्म्मथ्यः पवमानः स्यात् वैद्युतः पावकः स्मृतः ॥ |

यश्चासौ तपते सूर्य्यः
शुचिरग्निस्त्वसौ स्मृतः ।
तेषान्तु सन्ततावन्ये चत्वारिंशत्तु
पञ्च च ॥
पावकः पवमानश्च शुचिस्तेषां
पिता च यः ।
एते चैकोनपञ्चाशद्वह्नयः
परिकीर्त्तिताः ॥”
इति कौर्म्मे १२ अध्यायः ॥
सूर्य्यः । यथा, --
“तपनस्तापनश्चैव शुचिः
सप्नाश्ववाहनः ॥”
इति शाम्बपुराणम् ॥
चन्द्रः । शुक्रः । ब्राह्मणः । इति
केचित् ॥
(अन्धकस्य पुत्त्रविशेषः । यथा,
भागवते । ९ ।
२४ । १९ ।
“कुकुरो भजमानश्च शुचिः
कम्बलबर्हिषः ॥”
कार्त्तिक्यः । इति महाभारतम् ।
३ । २३१ । ४ ॥)

**शुचिः**, स्त्री, (शुच + इन् ।) कश्यपपत्न्या-
स्ताम्रायाः सुता । यथा, --
“षट सुताश्च महासत्त्वास्ताम्रायाः
परि-
कीर्त्तिताः ।
शुकी श्येनी च भाषा च सुग्रीवी
शुचि-
गृध्रिका ॥”
इति गारुडे ६ अध्यायः ॥

**शुचिः**, त्रि, (शुच + इन् ।)
शुक्लगुणविशिष्टः ।
इत्यमरः ॥ शुद्धः । (यथा,
महाभारते । १ ।
१२८ । ४९ ।
“क्रीडावसाने ते सर्व्वे शुचिवस्त्राः
स्वल-

“आचामः स्यादाचमनमुपस्पर्शः शुचिप्रणीः ।”
इति शब्दरत्नावली ॥

**शुचिमल्लिका**, स्त्री, (शुचिर्मल्लिका ।) नव-
मालिका । इति राजनिर्घण्टः ॥

**शुचिरोचिः**, [स्] पुं, (शुचिः शुक्लं रोचिः
किरणो यस्य ।) चन्द्रः । इति केचित् ॥ शुक्ल-
किरणे, त्रि ॥

**शुच्य**, ई अभिषवे । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-अक०-सक०-च-सेट् । निष्ठायामनिट् ।)
तालव्यादिः । पञ्चमस्वरी । तालव्यवर्गाद्योपधः ।
ई, शुक्तः । यद्वा, यान्तोऽयमित्यके । अभिषवः
स्नानं मन्थनं पीडनं सन्धानञ्च । इति दुर्गा-
दासः ॥

**शुटीरता**, स्त्री, वीर्य्यम् । इति त्रिकाण्डशेषः ॥

**शुटीर्य्यं**, क्ली, वीर्य्यम् । इति शब्दरत्नावली ॥

**शुट**, खोटने । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
अक०-सेट् ।) खोटनमिह गत्याघातः । शोटति
पयः सेतुना । इति दुर्गादासः ॥

**शुठ**, इ खोटने । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-अक०-सेट् ।) खोटनमिह गत्याघातः ।
इ, शुण्ठ्यते । इति दुर्गादासः ॥

**शुठ**, इ कि शोषणे । इति कविकल्पद्रुमः ।
(चुरा० पक्षे भ्वा०-अक०-सेट् ।) इ, शुण्ठ्यते ।
कि, शुण्ठयति शुण्ठति पत्रमातपात् । रमा-
नाथस्तु भ्वादिपक्षे शुष्कीभावे । चुरादिपक्षे
शुष्कीकरणेऽयमिति मत्वा भ्वादौ शुण्ठति पत्रं
चुरादौ शुण्ठयति काष्ठमातप इत्युदाहृतवान् ।
वस्तुतस्तु उभयत्र शुष्कीभावः अन्यथा भौवा-
दिकस्यैव प्रेरणवाचित्वाच्चुरादिपाठोऽनर्थकः
स्यात् । इति दुर्गादासः ॥

**शुठ**, क आलस्ये । इति कविकल्पद्रुमः ॥ चुरा-
पर०-अक०-सेट् ।) क, शोठयति वृद्धः क्रियासु
मन्दः स्यादित्यर्थः । इति दुर्गादासः ॥

**शुण्ठिः**, स्त्री, शुठि शोषणे + इन् ।) शुण्ठी ।

स्निग्धोष्णा मधुरा पाके
कफवातविबन्धनुत् ॥
वृष्या स्वर्य्या च
निःश्वासशूलकासहृदामयान् ।
हन्ति श्लीपदशोथार्श-
आनाहोदरमारुतान् ॥
आग्नेयगुणभूयिष्ठं तोयांशं परिशोषयेत् ।
संगृह्णन्ति मलं तत्तु ग्राहि शुण्ठ्यादयो
यथा ॥
विबन्धभेदिनी या तुसा कथं ग्राहिणी
भवेत् ।
शक्तिर्व्विबन्धभेदे स्याद्यतो न मलपातने
॥”
इति भावप्रकाशः ॥
अन्यच्च ।
“शुण्ठी तु कफवातघ्नी सस्नेहा
लघुदीपनी ।
विपाके मधुरा वृष्या हृद्योष्णा कटुरोचनी
॥”
इति राजवल्लभः ॥
शुण्ठ्यं, क्ली, शुण्ठी । इति
शब्दचन्द्रिका ॥

**शुण्डः**, पुं, (शुन गतौ + अमन्तात् डः ।) मद-
निर्झरः । इति हेमचन्द्रः ॥ करिकरश्च ॥
(यथा,
महाभारते । ७ । ३५ । ३५ ।
“घण्टाशुण्डान् विषाणाग्रान्
क्षुरमाख्यपदा-
नुगान् ।
शरैर्निशितधाराग्रैः शात्रवाणामशातयत्
॥”)

**शुण्डकः**, पुं, शौण्डिकः । इति शब्दरत्नावली ।
युद्धवेणुः । इति शब्दमाला ॥

**शुण्डरोहः**, पुं, (शुण्डवत् रोहतीति । रुह +
अच् ।) भूतृणम् । इति राजनिर्घण्टः ॥
पुस्त-
कान्तरे शृङ्गरोह इति पाठः ॥

ङ्कृताः ॥”)
अनुपहतः । इति मेदिनी ॥ * ॥
परस्वर्णस्पर्शे
हस्तक्षालनात् शुचिर्यथा, --
“दैवात् परस्त्रियं दृष्ट्वा विरमेद् यो हरिं स्मरन्
स्पृष्ट्वा परसुवर्णञ्च
हस्तप्रक्षालनात् शुचिः ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ३५ अध्यायः ॥
(निरपराधी । यथा, महाभारते । १ । १४९ । १४ ।
“अहो धिक् धृतराष्ट्रस्य
बुद्धिर्नास्ति समञ्जसी
यः शुचीन् पाण्डुदायादान्
दाहयामास
शत्रुवत् ॥”
शुद्धान्तःकरणः । यथा, मनुः । ७ । ३८ ।
“वृद्धांश्च नित्यं सेवेत विप्रान्
वेदविदो शुचीन्
वृद्धसेवी हि सततं रक्षोभिरपि
पूज्यते ॥”)

**शुचिता**, स्त्री, (शुचेर्भावः । शुचि + तल् ।)
शुचित्वम् । यथा, --
“शैत्थं नाम गुणस्तवैव सहजः
स्वाभाविकी
स्वच्छता
किं ब्रूमः शुचितां भवन्ति शुचयः
स्पर्शेन
यस्यापरे ।
किञ्चान्यत् कथयाम ते स्तुतिपदं
त्वं जीविनां
जीवनं
त्वञ्चेन्नीचपथेन यास्यसि पयः
कस्त्वां निषेद्धुं
क्षमः ॥”
इति लक्ष्मणसेनः ॥

**शुचिद्रुमः**, पुं, (शुचिः पवित्रो द्रुमः ।) अश्वत्थ-
इत्यमरटीका ॥ (यथा, आर्य्यासप्तशत्याम् । २७१
“तस्मिन् गताद्र भावे वीतरसे शुण्ठिशकल इव
पुरुषे ।
अपि भूतिभाजि मलिने नागरशब्दो बिड-
म्बाय ॥”)

**शुण्ठी**, स्त्री, (शुण्ठि + वा ङीष् ।) शुष्कार्द्रकम् ।
शुंट् इति भाषा ॥ तत्पर्य्यायः । महौषधम् २
विश्वम् ३ नागरम् ४ विश्वभेषजम् ५ । इत्य-
मरः ॥ शुण्ठिः ६ विश्वा ७ महौषधी ८ । इति
तट्टीका ॥ इन्द्रभेषजम् ९ भेषजम् १० । इति
शब्दरत्नावली ॥ विश्वौषधम् ११ कटुग्रन्थिः १२
कटुभद्रम् १३ कटूष्णम् १४ सौपर्णम् १५
शृङ्गवेरम् १६ कफारि १७ चान्द्रकम् १८
शोषणम् १९ नागराह्वम् २० । अस्या गुणाः ।
कटुत्वम् । उष्णत्वम् । स्निग्धत्वम् । कफशोफा-
निलशूलबन्धोदराध्मानश्वासश्लीपदनाशित्वञ्च ।
इति राजनिर्घण्टः ॥ * ॥ अपि च ।
“शुण्ठी रुच्यामवातघ्नी पाचनी कटका लघुः ।

**शुण्डा**, स्त्री, (शुन् + ड । टाप् ।) मद्यपानगृहम् ।
अम्बुहस्तिनी । वेश्या । सुरा ।
हस्तिहस्तः ।
इति मेदिनी ॥ शुँड् इति भाषा ॥ नलिनी ॥
इति विश्वः ॥ कुट्टनी । इति शब्दमाला ॥

**शुण्डापानं**, क्ली, (शुण्डाया आपानम् ।) मद्य-
पानगृहम् । तत्पर्य्यायः । मदस्थानम् । इत्य-
मरः ॥ मदस्थलम् । इति शब्दरत्नावली ॥

**शुण्डारः**, पुं, (शुण्डां रातीति । रा + कः ।)
शौण्डिकः । इति शब्दरत्नावली ॥
(ह्रस्वा
शुण्डा । “कुटीशमीशु ण्डाभ्यो रः ।” ५ । ३ ।
८८ । इति रः । स्वल्पशु ण्डा । इति सिद्धान्त-
कौमुदी ॥)

**शुण्डालः**, पुं, (शुण्डेन अलतीति । अल पर्य्याप्तौ
+ अच् ।) हस्ती । इति धनञ्जयः ॥

**शुण्डिका**, स्त्री, अलिजिह्वा । इति कोचत् ॥
शुण्डाशब्दार्थाप्येषा ॥

**शुण्डिमूषिका**, स्त्री, (शुण्डिनी शुण्डविशिष्टा
मूषिका ।) छुच्छुन्दरी । इति
राजनिर्घण्टः ॥

**शुण्डी**, [न्] पुं, (श ण्डा अस्त्यस्येति । शु ण्डा +
इनिः ।) शौण्डिकः । इति शब्दरत्नावली ॥
हस्ती च ॥

**शुण्डी**, स्त्री, हस्तिशु ण्डीवृक्षः । इति राज-
निर्घण्टः ॥

**शुतुद्रिः**, स्त्री, शतद्रुनदी । इत्यमरटीकायां भरतः ॥

**शुतुद्रुः**, स्त्री, शतद्रुनदी । इति भरतद्विरूपकोषः ॥

**शुद्धं**, क्ली, (शुध + क्तः ।) सैन्धवम् । मरिचम् ।

| | | |
|---|---|---|
| वृक्षः । इति राजनिर्घण्टः ॥<br>शुद्धवृक्षश्च ॥<br>**शुचिप्रणीः**, पुं, (शुचिं प्रणयतीति । प्र + नी +<br>क्विप् ।) आचमनम् । यथा, -- | | इति राजनिर्घण्टः ॥ मरिचपर्य्याये मृषं यद्वि-<br>खितं तदशुहम् ॥ |

**शुद्धः**, त्रि, (शुध + क्तः ।) केवलम् । (यथा,

मनुः । ९ । २७९ ।

"तडागमेदकं हन्यादप्सु शुद्धवधेन वा ।

तद्वापि प्रतिसंकुर्य्यात् दाप्यस्तूत्तमसाहसम्

॥")

निर्द्दोषः । (यथा, बृहत्संहितायाम् । ४९ । ४

।

"सर्व्वे च शुद्धकाञ्चनविनिर्म्मिताः श्रेयसो

वृद्ध्यै ॥")

पवित्रः । इति मेदिनी ॥ (उज्ज्वलः । यथा,

रघुः ।

१ । ४६ ।

"काप्यभिख्या तयोरासीत् व्रजतोः शुद्ध-

वेशयोः ॥")

शुक्लः । इति धरणिः ॥ रागान्तरामिश्रित-

रागः । इति संगीतशास्त्रम् ॥ * ॥ शरीरा-

शुद्धताकारणं यथा, --

नारद उवाच ।

"मानवानां द्विजादीनां शरीरस्यापवित्रता ।

भवेत् केन प्रकारेण कथ्यतां तत् सदाशिव ॥

सर्व्ववेदपुराणादिशास्त्रज्ञानां द्विजन्मनाम् ।

जितेन्द्रियस्मृतिविदां तनोः कथय पूतताम् ॥

सदाशिव उवाच ।

यथा देहापवित्रत्वं विप्रादीनां यतो भवेत् ।

देवर्षे शृणु तत् सर्व्वं नराणामानुपूर्व्विकम् ॥

जातके मृतकेऽस्नाते जलौकोभिः क्षते तथा ।

अपवित्रो द्विजादीनां देहः सन्ध्यादिकर्म्मसु ॥

अपूततनुरुत्सर्गे नरो मूत्रपुरीषयोः ।

अस्पृश्यस्पर्शने नैव ब्रह्मयज्ञजपादिषु ॥

रक्तपाते नखशृङ्गदन्तखड्गादिभिः क्षते ।

विप्रादेरशुचिः कायः शस्त्रास्त्रैः कण्टकादिभिः

॥

भुक्त्वा हस्ताननोच्छिष्टेऽपवित्रःकृतमैथुने ।

शयने ब्राह्मणादीनां शरीरं क्षुरकर्म्मणि ॥

ज्वरादिभिश्चतुःषष्टिरोगैर्युक्तद्विजन्मनाम् ।

वपुरप्रयतं पूजादानहोमजपादिषु ॥

धूमोद्गारे वमौ श्राद्धपतितान्नादिभोजनैः ।

तथा च रेतःस्खलने मर्त्यदेहापवित्रता ॥

अपवित्रं द्विजादीनां वपुः स्याद्राहुदर्शने ।

"उपकारिणि विश्रब्धे शुद्धमतौ यः

समाचरति

पापम् ।

तं जनमसत्यसन्धं भगवति वसुधे

कथं वहसि ॥"

**शुद्धमांसं**, क्ली, (शुद्धं मांसं यस्य ।) मांसव्यञ्जन-

विशेषः । यथा, --

"पाकपात्रे घृतं दद्यात्तैलं वा

तदभावतः ।

तत्र हिङ्गुहरिद्राञ्च भर्ज्जयेत्तदनन्तरम्

॥

छागादेरस्थिरहितं मांसं तत्

खण्डखण्डितम्

धौतनिर्गालितं तस्मिन् घृते

तद्भर्ज्जयेच्छनैः ॥

सिद्धयोग्यं जलं दत्त्वा लवणञ्च पचेत्

ततः ।

सिद्धे जलेन संपिष्य वेसवारं

परिक्षिपेत् ॥

द्रव्याणि वेसवारस्य नागवल्ली दलानि

हि ।

तण्डुलाश्च लवङ्गानि मरिचानि

समासतः ।

अनेन विधिना सिद्धं शुद्धमांसमिति

स्मृतम् ॥

शुद्धमांसं परं वृष्यं वल्यं रुच्यञ्च

बृंहणम् ।

त्रिदोषशमनं श्रेष्ठं दोपणं धातुवर्द्धनम्

॥"

इति भावप्रकाशः ॥

**शुद्धवल्लिका**, स्त्री, (शुद्धा वल्लिका लता ।) गुडूची

इति शब्दचन्द्रिका ॥ पवित्रलता च ॥

**शुद्धान्तः**, पुं, शुद्धः अन्तो यस्य । शुद्धा रक्षकाः

अन्ते यस्य इति वा ।) अन्तःपुरम् ।

(यथा,

मार्ज्जना । इति जटाधरः ॥

वैदिककर्म्मार्हत्व-

प्रयोजकसंस्कारविशेषः । यथा ।

शुद्ध्यशुद्ध्योः

संस्काररूपत्वेन

एकपुरुषस्यैकदोभयस्थितिर्घटते

अशु द्धेर्भावरूपत्वे शुद्धे स्तदभावरूपत्वे

नैतत्

विरोधात् । अतएव शङ्खः ।

"ततः श्राद्धमशु द्धौ तु कुर्य्यादिकादशे तथा ।

कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः

॥"

अशुद्धौ चतुर्थाहादौ । कथमशुद्धौ श्राद्धं

कालाशौचस्याधिकारिविशेषणत्वादत आह-

कर्त्तुस्तात्कालिकीति । श्राद्धविधानाक्षेपात्त-

न्मात्रनिष्ठा शुद्धिः कल्प्यते । स पुनरशुद्ध

एव

कर्म्मान्तर एव । इति श्राद्धविवेकः ॥ एवं

शुद्धे-

र्भावरूपत्वे अशौचस्य तदभावरूपत्वे

विरोधः ।

तथात्वे अशौचसङ्करोऽपि न स्यात् ।

एकस्मिन्

शु द्ध्यभावरूपे अशौचे सत्यपरस्य

तद्रूपस्य

तदानीं तत्पुरुषीयशु द्धिरूपप्रतियोग्यन्तरा-

भावादनुत्पत्तेः । तस्मात् शुद्ध्यशु

द्ध्योर्भावरूप-

त्वम् । इति शुद्धितत्वम् ॥ * ॥

अथाशौचिशुद्धिः ।

"अघवृद्धिमदाशौचमूर्द्ध्वञ्चेत्तेन शुध्यति ।

अथ चेत् पञ्चमीं रात्रिमतीत्य परतो भवेत् ।

अघवृद्धिमदाशौचं तदा पूर्व्वेण शुध्यति ॥"

अघवृद्धिमत्तन्तु । सपिण्डजननाशौचापेक्षया

स्वपुत्रजननाशौचस्य

सपिण्डमरणाशौचापेक्षया

पितृमातृमर्तृमरणाशौचस्य । * ।

"जाते पुत्त्रे पितुः स्नानं सचेलन्तु विधीयते

।

गर्हितदानग्रहणे पतिते पातकादिभिः ॥
अशौचान्तेन शुद्धिः स्यात् जातके मृतकेऽपि च ।
सर्व्ववर्णाश्रमादीनां तनोः सन्ध्यादिकर्म्मसु ॥”
इति पाद्मे उत्तरखण्डे १९ अध्यायः ॥

**शुद्धजङ्घः**, पुं, (शुद्धा जङ्घा यस्य ।) गर्दभः ।
इति त्रिकाण्डशेषः ॥ पवित्रजङ्घायुक्ते, त्रि ॥

**शुद्धदत्**, त्रि, शुद्धा दन्ता यस्य सः । (“अग्रान्त-
शुद्धशुभ्रवृषवराहेभ्यश्च ।” ५ । ४ । १४५ ।
इति दन्तस्य दत्रादेशः ।) शुक्लदन्तयुक्तः ।
यथा --
“गते तम्मिन् जलशुचिः शुद्धदद्रावणः शिखी ।
जंजपृकोऽक्षमालावान् धारयो मृदलावुनः ॥”
इति भट्टौ । ५ । ६१ ॥

**शुद्धमतिः**, पुं, (शुद्धा मतिर्यस्य ।) चतुर्विंशति-
भृतार्हदन्तर्गतजिनविशेषः । इति हेमचन्द्रः ॥
(शुद्धा मतिः ।) पवित्रबुद्धी, स्त्री । तद्वति, त्रि ॥
(यथा, द्वितोपदेशे । १ । ८० ।
कुमारे । ६ । ५२ ।
“विधिप्रयुक्तसत्कारैः स्वयं मार्गस्य दर्शकः ।
स तैराक्रमयामास शुद्धान्तं शुद्धकर्म्मभिः ॥”)
नृपस्यासर्व्वगोचरकक्षान्तरम् ।
इत्यमरमेदिन्यौ
राजयोषित् । इत्यजयः ॥ (यथा, नैषधे । ३ । ९३ ।
“शुद्धान्तसंभोगनितान्ततुष्टे
न नैषधे कार्य्यमिदं निगाद्यम् ।
अपां हि तृप्ताय न वारिधारा
स्वादुः सुगन्धिः स्वदते तुषारा ॥”)
अशौचान्तः । इति धरणिः ।

**शुद्धान्तपालकः**, पुं, (शुद्धान्तं पालयतीति ।
पालि + ण्वुल् ।) अन्तःपुररक्षकः ।
तत्पर्य्यायः ।
गृहदौवारिकः २ कक्षारक्षकः ३ रात्रि-
हिण्डकः ४ । इति शब्दमाला ॥
तस्य लक्षणं
यथा, --
“वृद्धः कुलोद्गतः सूक्तः
पितृपैतामहः शुचिः ।
राज्ञामन्तपुराध्यक्षो विनीतश्च
तथेष्यते ॥”
इति मात्स्ये १८९ अध्यायः ॥

**शुद्धान्ता**, स्त्री, (शुद्धान्तः आश्रयत्वेनास्त्यस्या-
इति अच् । टाप् ।) राज्ञो । यथा, --
“शुद्धान्तश्च विशुद्धान्ते शुद्धान्ता राजयोषितः ॥”
इति धरणिः ॥

**शुद्धापह्नुतिः**, स्त्री, (शुद्धा अपह्नुतिः ।) अल-
ङ्कारविशेषः । यथा, --
“शुद्धापह्नुतिरन्यस्यारोपार्थो धर्म्मनिह्नवः ।
नायं सुधांशुः किं तर्हि
व्योमगङ्गासरोरुहम् ॥”
इति चन्द्रालोकः ॥

**शुद्धिः**, स्त्री, (शुध + क्तिन् ।) दुर्गा । यथा, --
माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः ॥”
शुध्येत् स्पर्शमात्रे उत्तरवाक्ये तथा दर्शनात् । * ।
जननाशौचमध्ये तु यद्यपरं जननं स्यात् तदा
पूर्व्वाशौचव्यपगमे शुद्धिः रात्रिशेषे दिनद्वयेन
प्रभाते दिनत्रयेण मरणाशौचमध्ये ज्ञातिमरणे
ऽप्येवमिति ॥ * ॥
“यस्य यस्य तु वर्णस्य यद्यत् स्यात् पश्चिमं त्वहः ।
स तत्र वस्त्रशु द्धिञ्च गृहशुद्धिं करोत्यपि ॥
समाप्य दशमं पिण्डं यथाशास्त्रमुदाहृतम् ।
ग्रामाद्बहिस्ततो गत्वा प्रेतस्पृष्टे च वाससी ॥
अन्त्यानामाश्रितानाञ्चत्यक्त्वा स्नानं करोत्यपि ।
श्मश्रुलोमनखानाञ्च यत्त्याज्यं तज्जहात्यपि ॥
गौरसर्षपकल्केन तिलतैलेन संयुतः ।
शिरः स्नानं ततः कृत्वा तोयेनाचम्य वाग्यतः ॥
वासोयुगं नवं शु भ्रमव्रणं शुद्धमेव च ।
गृहीत्वा गां सुवर्णञ्च मङ्गलानि शुभानि च ॥
स्पृष्ट्वा संकीर्त्तयित्वा तु पश्चात् शुद्धो भवेन्नरः ॥”
गृहशुद्धिः प्राक्तनपाकभाण्डपरित्याग उपलेपा-
दिना । त्याज्यं त्यागार्हम् ।
“अघाहःसु निवृत्तेषु सुस्नाताः कृतमङ्गलाः ।
आशुच्याद्विप्रमुच्येत ब्राह्मणान् स्वस्तिवाच्य च
स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि ।
न तु पूर्व्वेण शुद्धिः स्यात् स्वकालेनैव शुध्यति
ममानं लघु चाशौचं पूर्व्वेणैव विशु ध्यति ।
यदि स्यात् सूतके सूतिर्मृ तके च मृतिर्भवेत् ॥
शेषेणैव भवेच्छुद्धिरहःशेषे द्विरात्रकम् ।

| | “स्मरणाच्चिन्तनाद्वापि शोध्यते स हि पातकात्<br>तेन शु द्धिः समाख्याता देवी रुद्रतनौ स्थिता ॥”<br>इति देवीपुराणे देवीनिरुक्ताध्यायः ४५ ॥ | |
|---|---|---|

मरणोत्पत्तियोगे तु मरणाच्छुद्धिरिष्यते ॥
* ॥
अर्व्वाक् षण्मासतः स्त्रीणां यदि स्यात् गर्भ-
संस्रवः ।
तदा माससमैस्तासां दिवसैः शुद्धिरिष्यिते ॥
गर्भश्रुत्यां यथामासमचिरे तूत्तमे त्र्यहः ।
राजन्ये तु चतूरात्रं वैश्ये पञ्चाहमेव च ॥
अष्टाहेन तु शूद्रस्य शुद्धिरेषा प्रकीर्त्तिता ।
रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यति ॥
रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला ।
शुद्धा भर्त्तुश्चतुर्थेऽह्नि अशुद्धा दैवपैत्रयोः ।
दैवे कर्म्मणि पैत्र्ये च पञ्चमेऽहनि शुध्यति ॥ * ॥
दत्ता नारी पितुर्गेहे सूयते म्रियतेऽथवा ।
स्वमशौचं चरेत् सम्यक् पृथक्स्थानव्यवस्थिता॥
तद्वन्धुवर्गस्त्वेकेन शुध्येत्तु जनकस्त्रिभिः ।
यस्तैः सहासनं कुर्य्यात् शयनादीनि चैव हि ।
बान्धवो वा परो वापि स दशाहेन शुध्यति ॥
स्त्रीणामसंस्कृतानान्तु त्र्यहात् शुध्यन्ति बान्धवाः ।
यथोक्तेनैव कल्पेन शुध्यन्ति हि सनाभयः ॥ * ॥
षण्मासाभ्यन्तरे शूद्रे मृते बाले त्र्यहं विदुः ।
अनतीते द्विवर्षे वै मृते शुध्येत्तु पञ्चभिः ॥
बालस्त्वन्तर्दशाहे तु प्रेतत्वं यदि गच्छति ।
सद्य एव विशुद्धिः स्यान्नाशौचं नैव सूतकम् ॥
नृणामकृतचूडानामशुद्धिर्नैशिकी स्मृता ।
निवृतचूडकानान्तु त्रिरात्राच्छुद्धिरिष्यते ॥
* ॥
दशाहेन सपिण्डास्तु शुध्यन्ति प्रेतसूतके ।
अनदन्नन्नमह्नैव न चेत्तस्मिन् गृहे वसेत् ॥ * ॥
अस्थिसञ्चयनादर्व्वाक्यदि विप्रोऽश्रु पातयेत् ।
मृते शूद्रे गृहं गत्वा त्रिरात्रेण विशुध्यति ॥
अस्थिसञ्चयनादूर्द्ध्वं यावन्मासं द्विजातयः ।
दिवसेनैव शुद्धिः स्याद्वाससां क्षालनेन च ॥
* ॥
स्वजातेर्दिवसेनैव त्र्यहात् क्षत्रियवैश्ययोः ।
स्पर्शं विनानुगमने शूद्रो नक्तेन शुध्यति ॥ * ॥
अजा गावो महिष्यश्च ब्राह्मणी च प्रसूतिका ।
दशरात्रेण शुध्यन्ति भूमिष्ठञ्च नवोदकम् ॥ * ॥
उदक्या सूतिका वापि अन्त्यजं संस्पृशेद्यदि ।
त्रिरात्रेणैव शुद्धिः स्यादिति शातातपोऽब्र-
वीत् ॥ *
नवखातजलं गावो महिष्यश्छागयोनयः।
शु ध्यन्ति दिवसैरेव दशभिर्नात्र संशयः ॥
काले नवोदकं शुद्धं न पातव्यन्तु तत्त्र्यहम् ॥" * ॥
अथ द्रव्यशुद्धिः । ब्राह्मे ।
"सुवर्णरूप्यशङ्खाश्मशु क्तिरत्नमयानि च ।
कांसायस्ताम्ररैत्यानि त्रपुसीसमयानि च ॥
निर्लेपानि विशु ध्यन्ति केवलेन जलेन तु ।
शुद्रोच्छिष्टानि शुध्यन्ति त्रिधाक्षाराम्ल-
वारिभिः ॥
सूतिकाशवविण्मूत्ररजस्वलाहतानिच ।
प्रक्षेप्तव्यानि तानग्नौ यच्च यावत् सहेदपि ॥"
रैत्यं पित्तलम् । त्रपु रङ्गम् । यत्पात्रं यावत् ।
कालमग्निं सहेत तत् पात्रं प्रक्षालनान्तरं ।
तावत्तापनीयमित्यर्थः ॥ * ॥ बृहस्पतिः ।
"अम्भसा हेमरत्नायः कांस्यं शुध्येत भस्मना ।
अम्लैस्ताम्रञ्च रैत्यञ्च पुनःपाकेन मृण्मयम् ॥"
राजधर्म्मे ।
ब्राह्मणैर्य्यद्वाचा प्रशस्यते इति शूलपाणिमहा-
महोपाध्यायकुल्लूकभट्टौ ॥ * ॥
शातातपः ।
"गोकुले कन्दुशालायां तैलयन्त्रेक्षुयन्त्रयोः ।
अमीमांस्यानि शौचानि स्त्रीषु वालातुरेषु च ॥"
मनुः ।
"मक्षिका विप्रुषश्छाया गौरश्वः सूर्य्यरश्मयः ।
रजो भूर्व्वायुरग्निश्च स्पर्शे मेध्यानि निर्दिशेत् ॥"
बौधायनः ।
"अदुष्टाः सन्तताधारा वातोद्धूताश्च रेणवः ।
आकराः शुचयः सर्व्वे वर्जयित्वा सुराकरम् ॥"
शङ्खलिखितौ । आकरद्रव्याणि प्रोक्षितानि
शुचीनि ॥ * ॥ यमः ।
"आममांसं घृतं क्षौद्रं स्नेहाश्च फलसम्भवाः ।
म्लेच्छभाण्डस्थिता दुष्टा निष्क्रान्ताः शुचयः
स्मृताः ॥"
विष्णुधर्म्मोत्तरे ।
"मुखवर्जञ्च गौः शुद्धा मार्ज्जारश्चक्रमे शुचिः ।
पुष्पाणाञ्च फलानाञ्च प्रोक्षणात् शुद्धिरिष्यते ॥"
अत्रिः ।
"मक्षिका सन्तताधारा भूमिस्तोयं हुताशनः ।
मार्ज्जारश्चापि दर्व्वी च मारुतश्च सदा शुचिः ॥"
बौधायनः । अनेकोद्वाह्ये दारुशिले भूमिसमे

त्रिरात्रेण सकुख्यास्तु स्नात्वा शुध्यन्ति गोत्रजाः ॥
शुध्ये द्विप्रो दशाहेन द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति ॥
दशमेऽहनि शूद्रस्य कार्य्यं संस्पर्शनं बुधैः ।
मासेनैव विशुद्धिः स्यात् सूतके मृतकेऽपि वा ॥
संस्थिते पक्षिणीं रात्रिं दौहित्रे भगिनीसुते ।
संस्कृते तु त्रिरात्रं स्यादिति धर्म्मो व्यवस्थितः ॥
पित्रोरुपरमे स्त्रीणामूढानान्तु कथं भवेत् ।
त्रिरात्रेणैव शुद्धिः स्यादित्याह भगवान् शिवः ॥
यदा भोजनकाले तु अशुचिर्भवति द्विजः ।
भूमौ निःक्षिप्य तद्ग्रासं स्नात्वा चैव विशु-
ध्यति ॥ * ॥
चिकित्सकौ यत् कुरुते तदन्येन न शक्यते ।
तस्मात् चिकित्सकस्पर्शे शुद्धो भवति नित्यशः ॥
गर्भिणी सूतिका नक्तं कुमारी च रजस्वला ।
यदाशुद्धा तदान्येन कारयेत् क्रियते सदा ॥ * ॥
प्रेतीभूतं द्विजं विप्रो योऽनुगच्छति कामतः ।
स्नात्वा सचेलं स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति ।
एकाहात् क्षत्त्रिये शुद्धिर्वैश्ये च स्याद्द्व्यहेन तु ।
शूद्रे दिनत्रयं प्रोक्तं प्राणायामशतं पुनः ॥ * ॥
नारं स्पृष्ट्वास्थि सस्नेहं स्नात्वा विप्रो विशुध्यति ।
आचम्यैव तु निस्नेहं गामालभ्यार्कमीक्ष्य वा ॥
असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् ।
विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥
यद्यन्नमत्ति तेषान्तु स दशाहेन शुध्यति ।

“पज्जलोच्छिष्टकांस्यं यत् गवाघ्रातमथापि वा ।
गण्डूषोच्छिष्टममि च विशुध्येद्दशभिस्तु तत् ॥”
दशभिर्दिनैरिति शेषः । तथा च ।
“कांस्ये न धावयेत् पादौ यत्र स्यादपि भोजन-
मिति ।”
यत्र पात्रान्तरे भोजनं तत्र श्रुतस्यैव तस्य साहचर्य्यात् कांस्यवच्छुद्धिः ॥ * ॥
बौधायनः ।
“भिन्नकांस्ये त योऽश्नीयात् नद्यां स्नात्वा जपेद्विजः ।
गायत्र्यष्टसहस्रन्तु एकभक्तस्ततः शुचिः ॥”
देवलः । ताम्ररजतसुवर्णाश्मस्फटिकानां भिन्न-
मभिन्नम् । इति भिन्नत्वेऽपि न दोष इत्यर्थः ॥ * ॥
विष्णुः । शारीरैर्मलैः सुराभिर्मद्यैर्वा यदुपहतं तदत्यन्तोपहतं सर्व्वं लौहभाण्डमग्नौ प्रतप्तं शध्ये त । मणिमयमश्ममयमब्जमयञ्च सप्तरात्रं
महीखननेन शृङ्गदन्तास्थिमयञ्च तक्षणेन दारु
मयं मृण्मयं जह्यादिति । लौहपद सुवर्णाद्य-
ष्टकपरम् ॥ * ॥ मनुः ।
“त्रीणिदेवाः पवित्राणि ब्राह्मणानामकल्पयन् अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥”
अदृष्टमुपघातशङ्कादिभिरज्ञातम्। अज्ञातञ्च सदा शुचि इति याज्ञवल्क्यैकवाक्यत्वात्। वाचेति उपघातशङ्कायां पवित्रं भवत्विति

इष्टकाश्च सङ्कीर्णीभूताः इति ।
सङ्कीर्णीभूताः
परस्परसम्बद्धाः ॥ * ॥ विष्णुः ।
प्रोक्षणेन पुस्तकं
इति ॥ * ॥ शातातपः ।
“तापनं घृततैलानां प्लावनं गोरसस्य च ।
तन्मात्रमुद्धृतं शुध्येत् कठिनन्तु पयो दधि ।
अविलीनं तथा सर्पिर्व्विलीनं श्रपणेन तु ॥”
अविलीनं कठिनम् ॥ * ॥ मनुः ।
“द्रव्याणाञ्चैव सर्व्वेषां शुद्धिरुत्प्लवनं स्मृतम् ।
प्रोक्षणं संहतानाञ्च द्वारवाणाञ्च तक्षणम् ॥”
इदन्तूच्छिष्टाद्यल्पदोषे। उत्प्लवनं वस्त्रान्तर-
निर्व्वापणेन कीटाद्यपनयनम्॥ * ॥
शातातपः ।
“क्लीवाभिशप्तपतितैः
सूतिकोदक्यनास्तिकैः ।
दृष्टं वा स्यात् यदन्नन्तु तस्य निष्कृ
तिरुच्यते ॥
अभ्युक्ष्य किञ्चिदुद्धृत्य
भुञ्जीताप्यविशङ्कितः॥ * ॥
देवलः ।
“चाण्डालेन शुना वापि दृष्टं हविरयज्ञियम्।
विडालादिभिरुच्छिष्टं दुष्टमन्नं विवर्जयेत् ॥”
अन्यत्र हिरण्योदकस्पर्शादिति॥ * ॥
मनुः ।
“अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम्।
प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते ॥”
शुद्धिरित्यनुवृत्तौ विष्णुः ।
गुडानामिक्षुविका-
राणां प्रभूतानां वाय्वग्निदानेन
सर्व्वलवणाना-

| | | |
|---|---|---|
| | | ञ्चेति ॥ * ॥ अङ्गिराः ।<br>"यथा यतस्ततो ह्यापः शुद्धिं यान्ति नदीं गताः<br>शूद्राद्विप्रगृहेष्वन्नं प्रविष्टन्तु सदा शुचि ॥"<br>प्रविष्टं स्वत्वापादकप्रतिग्राहादिनेति शेषः ॥<br>"सकुणपं सकर्द्दमं तेभ्यस्तोयमपास्य तत् ।<br>प्रक्षिपेत् पञ्चगव्यञ्च समन्त्रं सर्व्वशुद्धिकृत् ॥<br>अपास्य कुणपं तेभ्यो बहुतोयेभ्य एष वा । |

शतं षष्ट्यथवा त्रिंशत् तोयकुम्भान् समुद्धरेत् ॥
पञ्चनव्यं ततस्तेषु प्रक्षिपेन्मन्त्रपूर्व्वकम् ॥”
शतादि अल्पत्वाद्यपेक्षया अत्यल्पस्य सर्व्वोद्धारणाभिधानात् ॥ * ॥ बृहन्मनुः ।
“श्वशूद्रपतिताश्चान्त्यामृताश्चे द्विजमन्दिरे ।
शौचं तत्र प्रवक्ष्यामि मनुना भाषितं यथा ॥
दशरात्राच्छुनि प्रेते मासात् शूद्रे भवेच्छुचिः ।
द्वाभ्यान्तु पतिते गेहे अन्त्ये मासचतुष्टयात् ।
अन्यन्त्ये वर्जयेद्गेहमित्येवं मनुरब्रवीत् ॥”
यमः ।
“द्विजस्व मरणे वेश्म विशुध्यति दिनत्रयात् ।
दिनैकेन बहिर्भुमिरग्निक्षेपणलेपनैः ॥” * ॥
यथोक्तकालानन्तरं कर्त्तव्यमाह सम्बर्त्तः ।
“गृहशुद्धिं प्रवक्ष्यामि अन्तःस्थशवदूषिते ।
प्रोत्सृज्य मृण्मयं पात्रं सिद्धमन्नं तथैव च ॥
गृहादपास्य तत् सर्व्वं गोमयेनानुलेपयेत् ।
गोमयेनानुलिप्याथ छागेनाघ्रापयेद्बुधः ॥
व्राह्मणैर्म्मन्त्रपूतैश्च हिरण्यकुशवारिभिः ।
सर्व्वमभ्यु क्षयेद्वेश्म ततः शुध्यत्यसंशयः ॥”
मन्त्रानादेशे गायत्री ॥ * ॥ देवलः ।
“पञ्चधा वा चतुर्धा वा भूरमेध्या विशुध्यति ।
दुष्टा द्विधा त्रिधा वापि शुध्यते मलिनैकधा ॥
दहनं खननं भूमेरुपलेपनवापने ।
पर्जन्यवर्षणञ्चापि शौचं पञ्चविधं स्मृतम् ॥
प्रसूते गर्भिणी यत्र म्रियते यत्र मानुषः ।
चाण्डालैरुषितं यत्र यत्र विन्यस्यते शवः ॥
विण्मुत्रोपहतं यच्च कुणपो यत्र दृश्यते ।
एवं कश्मलभूयिष्ठा भूरमेध्यातिकथ्यते ॥
कृमिकीटपदक्षेपर्दूषिता यत्र मेदिनी ।
त्रप्सया कर्षणैः क्षिप्ता वान्तैर्व्वा दुष्टतां व्रजेत् ॥
नखदन्ततनूजत्वक्तुषपांशुरजोमलैः ।
भस्मपङ्कतृणैर्व्वापि प्रच्छन्ना मलिना भवेत् ॥”
वापनं मृदन्तरेण पूरणम् । त्रप्सा घनीभूतश्लेष्मादि । इति शुद्धितत्त्वम् ॥ * ॥ अपिच ।
याज्ञवल्क्य उवाच ।
“द्रव्यशुद्धिं प्रवक्ष्यामि तान्निबोधत सत्तमाः ।
सौवर्णराजताब्जानां शाकवज्रादिचर्म्मणाम् ॥
पात्राणां चमसानाञ्च वारिणा शुद्धिरिष्यते ।
आचान्तः पुनराचामेत् वासो व्युत्परिधायच ।
क्षुते निष्ठीविते स्वापे परिधानेऽश्रुपातने ॥
पञ्चस्वेतेषु नाचामेत् दक्षिणं श्रवणं स्पृशेत् ।
तिष्ठन्त्यग्न्यादयो देवा विप्रकर्णे तु दक्षिणे ॥”
इति गारुडे ९७ अध्यायः ॥
अन्यच्च ।
“मणिवस्त्रप्रबालानां तद्वन्मुक्ताफलस्य च ।
शैलदारुमयानाञ्च तृणगुल्मौषधस्य च ॥
शाकधान्याजिनानाञ्च संहतानाञ्च वाससाम् ।
वल्कलानामशेषाणामम्बुना शुद्धिरिष्यते ॥
सस्नेहानामथोष्णेन तिलकल्केन शोधनम् ।
कार्पासिकानां वस्त्राणां शुद्धिः स्यात् सह भस्मना ॥
नागदन्तास्थिशृङ्गाणां तक्षणाच्छुद्धिरिष्यते ।
पुनःपाकेन भाण्डानां मृण्मयानाञ्च शुद्धता ॥
शुद्धं भक्षं कारुहस्तः पण्यं योषिन्मु कं तथा ।
रथ्यागतमविज्ञातं दासवर्गेण यत् कृतम् ॥
वाक्यशस्तं चिरानीतमनेकान्तरितं लघु ।
चेष्टितं बालवृद्धानां बालस्य तु मुखं शुचि ॥
म्ले च्छानामपि गोशालास्तनन्धयसुताः स्त्रियः
वाग्विप्रुषो द्विजेन्द्राणां पाठे वागम्बुबिन्दवः ॥
भूमिर्विशुध्यते खातदाहगोक्रमसेचनैः ।
लेपादुल्ले खनात् सेकात् वेश्मसम्मार्ज्जनाज्जलात्
केशकीटावपन्नेऽन्ने गोघ्राते मक्षिकान्विते ।
मृद्वारिभस्मक्षाराणि प्रक्षेप्तव्यानि शुद्धये ॥
उडम्बराणाञ्चाम्लेन क्षारेण त्रपुसीसयोः ।
कांस्यानां भस्मना शुद्धिस्तोयाच्छुद्धिर्द्रवस्य च ॥
अमेध्याक्तस्य मृत्तोयैर्गन्धापहरणेन च ।
अन्येषामपि तद्द्रव्यैः शुद्धिर्गन्धावहारतः ॥
त्वञ्च धारय मां नित्यं पवित्रं कुरु चासनम् ॥”
मण्डपशुद्धिर्यथा, --
“पञ्चगव्येन मूलेन मण्डपं परिशोधयेत् ॥”
गौतमीये ।
“शञ्चगव्येन तद्गेहं मण्डलञ्च विशोधयेत् ॥”
पञ्चगव्यप्रमाणन्तु तत्रैव ।
“पलमात्रं दुग्धभागं गोमूत्रं तावदिष्यते ।
घृतञ्च पलमात्रं स्यात् गोमयं तोलकद्वयम् ॥
दधि प्रसृतिमात्रं स्यात् पञ्चगव्यमिदं स्मृतम् ।
अथवा पञ्चगव्यानां समानो भाग इष्यते ॥
मूलमन्त्रेण संमन्त्र्य तेनैव परिशोधयेत् ।
तेन सर्व्वविशुद्धिः स्यात् सर्व्वपापनिकृन्तनम् ॥”
इति तन्त्रसारः ॥ * ॥
ग्रहशुद्धिर्गोचरशब्दे द्रष्टव्या ॥

**शुद्ध्वोदनसुतः**, पुं, (शुद्धोदनस्य सुतः ।) बुद्धभेदः ।
इति हेमचन्द्रः ॥

**शुध**, ऌ य औ शौचे । इति कविकल्पद्रुमः । (दिवा० पर०-अक०-अनिट् ।) ऌ, अशुधत् । य, शुध्यति लोकः स्नानात् । औ, शोद्धा । रजसा शुध्यते नारीत्यत्र शुध्यतीति क्विपि शुधं करोतीति ञौ कर्म्मणि यकि रूपम् । इति दुर्गादासः ॥

**शुन**, श गत्याम् । इति कविकल्पद्रुमः ॥ (तुदा०-

उष्णवार्भिः श्रुक्श्रुवयोर्धान्यादेः प्रोक्षणेन च ॥
तक्षणात् दारुशृङ्गादेर्य्यज्ञपात्रस्य मार्जनात् ।
सोष्णैरुदकगोमूत्रैः शुध्यत्याविककैशिकम् ॥
भैक्षं योषिन्मु खं पुण्यं पुनः पाकान्महीमयम् ।
गोघ्राते च तथा केशमक्षिकाकीटदूषिते ।
भस्मक्षेपाद्विशुद्धिः स्याद्विशुद्धिर्मार्जनादिना ॥
त्रपुसीसकताम्राणां क्षाराम्लोदकवारिभिः ।
भस्माद्भिर्लोहकांस्यानामज्ञातञ्चसदा शुचि ॥
अमेध्याक्तस्य मृत्तोयैर्गन्धलेपापकर्षणात् ।
शुचि गोतृप्तिदं तोयं प्रकृतिस्थं महीगतम् ॥
तथा मांसं श्वचाण्डालक्रव्यदादिनिपातितम् ।
रश्मिरग्नी रजश्छाया गौरश्वो वसुधानिलः ॥
अश्वाजविप्र षो मेध्यास्तथा चामलबिन्दवः ।
स्नात्वा पीत्वा क्षुते सुप्ते भुक्ता रथ्योपसर्पणे ॥
मातुः प्रसवने वत्सः शकुनिः फलपातने ।
गर्द्दभो भारहारित्वे श्वा मृगग्रहणे शुचिः ॥
रथ्याकर्द्द मतोयानि नावः पथि तृणानि च ।
मारुतेनैव शुध्यन्ति पक्वेष्टरचितानि च ॥
शृतं द्रोणाढकस्यान्तममेध्याभिप्लु तं भवेत्
।
अग्रमुद्धृत्य सन्त्याज्यं शेषस्य प्रोक्षणं
स्मृतम् ॥
उपवासं त्रिरात्रं वा दूषितान्नस्य भोजने ।
अज्ञाते ज्ञातपूर्व्वे च नैव शुद्धिर्व्विधीयते ॥
उदक्याश्वानननग्नांश्च
सूतिकान्त्यावशायिनः ।
स्पृष्ट्वा स्नायीत शौचार्थं तथैव मृतहारिणः
॥
सस्ने हमस्थि संस्पृश्य सवासाः
स्नानमाचरेत् ।
आचम्यैव तु निःस्नेहं गामालभ्यार्कमीक्ष्य
च ॥”
इति वामनपुराणे १४ अध्यायः ॥
अन्यत् मार्कण्डेयपुराणे सदाचाराध्याये
द्रष्ट-
व्यम् ॥ जलशुद्धिर्यथा, --
“गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्म्मदे सिन्धुकावेरि जलेऽस्मिन् सन्निधिं
कुरु ॥”
भूतशुद्धिस्तु तच्छब्दे द्रष्टव्या ॥ * ॥
आसन-
शुद्धिर्यथा । “एते गन्धपुष्पे
आधारशक्तिकमला-
सनाय नमः । आसनमन्त्रस्य मेरुपृष्ठ ऋषिः
सुतलं छन्दः कूर्म्मो देवता आसनपरिग्रहे
विनियोगः ।
पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना
धृता
पर०-सक०-सेट् ।) श, शुननि ।
शोनिता ।
इति दुर्गादासः ॥

**शुनः**, पुं, (शुनति सदा इतस्ततो गच्छतीति ।
शुन + कः ।) कुक्कुरः । यथा, --
“कुक्कु रस्तु शुनिः श्वानः कपिलो
मण्डलः
शुनः ॥”
इत्यमरटीकायां भरतधृतवाचस्पतिः
॥
(शुनति क्षिप्रं गच्छतीति । कः । वायुः
। इति
निघण्टु टीकायां देवराजयज्वा ॥ ५ ।
३ । ३४ ।
क्ली, सुखम् । इति ऋग्वेदभाष्ये
सायणः । ४ ।
५७ । ९ ॥)

**शुनःशेफः**, पुं, मुनिविशेषः । स तु ऋचीकमुनि-
पुत्त्रः । अम्बरीषेण यज्ञार्थं क्रीतः
विश्वामित्रेण
रक्षितश्च । इति रामायणे वाल्मीकीये
बाल-
काण्डे ६१ सर्गः ॥ (वरुणशापात्
जलोदररोग-
पीडितो हरिश्चन्द्रः अजीगर्त्तपुत्त्रं
शुनःशेफं पशुं
विधाय वरुणतुष्ट्यर्थं यज्ञमारब्धवान्
। करुणा-
र्द्रचित्तो शिश्वामित्रस्तु
तमतीवव्याकुलमव-
लोक्य मोचयामास । ततः प्रभृति
शुनःशेफोऽयं
विश्वामित्रस्य पुत्त्र इति
प्रसिद्ध्वोऽभूत् । एतद्वृ-
त्तान्तस्तु देवीभागवते ७ स्कन्धे १६
अध्याय-
मारभ्य द्रष्टव्यः ॥ कुक्कु रशिश्ने,
क्ली ॥

**शुनकः**, पुं, (शुनति इतस्ततो गच्छतीति ।

| | | |
|---|---|---|
| | | शुन गतौ + “क्वुन् शिल्पिसञ्ज्ञयोरपूर्व्वस्यापि ।” उणा० २ । ३२ । इति क्वुन् । कुक्कुरः । इति राजनिर्घण्टः ॥ (यथा, महाभारते । १३ । १२७ । १६ । “भिन्नभाण्डञ्च खट्वाञ्च कुक्कुटं शुनकं तथा । अप्रशस्तानि सर्व्वाणि यश्च वृक्षो गृहेरुहः ॥” ऋषिविशेषः । यथा, महाभारते । २ । ४ । १० । |

“असितो देवलः सत्यः शर्पमाली
महाशिराः ।
अर्काविसुः सुमित्रश्चमैत्रेयः शुनको
बलिः ॥”)

**शुनकचञ्चुका**, स्त्री, (शुनकस्य चञ्चरिव । इवार्थे

कन् ।) क्षुद्रचञ्चुक्षुपः । इति
राजनिर्घण्टः ॥

**शुनकचिल्ली**, स्त्री, (शुनकप्रिया चिल्ली ।) शाक-

विशेषः । तत्पर्य्यायः । श्वचिल्ली २
श्वानचिल्लिका
३ । अस्या गुणाः । कटुत्वम् ।
तीक्ष्णत्वम् ।
कण्डूव्रणनाशित्वञ्च । इति
राजनिर्घण्टः ।

**शुनाशीरः**, पुं, (शुनाशीरौ वायुसूर्य्यै अस्य स्त

इति । अर्श-आदित्वादच् ।) इन्द्रः ।
इति
भरतद्विरूपकोषः ॥

**शुनासीरः**, पुं, (शुनासीरौ वायुसूर्य्यै अस्य स्त

इति । शुन । सीर + अर्शआद्यच् ।)
इन्द्रः ।
यथा, --
“शुनाशीरो द्वितालव्यः शुनासीरो
द्विदन्त्यकः
तालव्यादिर्दन्त्थमध्यः शुनासीरश्च
दृश्यते ॥”
इत्यमरटीकायां भरतः ॥
(यथा, तैत्तिरीयसंहितायाम् । १ । ८ ।
७ । १ ।
“इन्द्राय शुनासीराय पुरोडाशमिति ॥”
* ॥
वायुसूर्य्यौ । इति निघण्टुः । ५ । ३ ॥
“शु-शब्दार्थ-
विशिष्टात् शुन गतौ इत्यस्मात्
इगुपधलक्षणः
कः । क्षिप्रं गच्छत्यन्तरिक्षमिति शुनो
वायुः

**शुन्ध्युः**, पुं, (शुन्ध शुद्ध्वौ + “यजिमनिशुन्धिदसि-

जनिभ्यो युच् ।” उणा० ३ । २० । इति युच् ।)
अग्निः । इत्युणादिकोषः ॥ (आदित्यः । पक्षि-
विशेषः । यथा, ऋग्वेदे । १ । १२४ । ४ ।
“उपो अदर्शि शुन्ध्युवो न वक्षः ॥”
“शुन्ध्यु रादित्यः सर्व्वेषां शोधकत्वात् ***
यद्वा-
शुन्ध्य रिति जलचरः श्वेतवर्णः पक्षिविशेषः ।”
इति तद्भाष्ये मायणः ॥)

**शुन्भ**, श दीप्तिहिंसनयोः । इति कविकल्पद्रुमः ॥

(तुदा०-पर०-अक०-हिंसने सक०-सेट् ।) श,
शुभति शुम्भति । शुशोभ शुशुम्भ । इति दुर्गा-
दासः ॥

**शुन्यं**, क्ली, शुनीसमूहः । इति त्रिकाण्डशेषः ॥

रिक्ते, त्रि । इति जटाधरः ॥ (यथा, साहित्य-
दर्पणे ३ परिच्छेदे ।
“शुन्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चित्
शनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्बर्ण्य पत्यु-
र्मुखम् ॥”
शुने हितम् । श्वन् + “उगवादिभ्यो यत् ।”
५ । १ । २ । इति यत् । “शुनः सम्प्रसारणं वा च
दीर्घत्वम् ।” इत्युक्त्या सम्प्रसारणम् ॥)

**शुभ**, प श दीप्तिहिंसनयोः । इति कविकल्पद्रुमः ।

(तुदा०-पर०-अक०-हिंसने सक०-सेट् । प
श, शुम्भति शुशोभ । प्राञ्चस्तु ह्लादौ च शुभ
शुन्भ भासनहिंसनयोरिति पठन्ति । इति
दुर्गादासः ॥

**शुभ**, लृ ङ दीप्तौ । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-अक०-सेट् ।) लृ, अशुभत् । ङ,
शोभते । न शोभति सभामध्ये इति गणकृता-
नित्यत्वादिति रमानाथः । वस्तुतस्तु शोभते
शोभः पचादित्वादन् । ततः शोभ इवाचरतीति
क्वौ साध्यम् । इति दुर्गादासः ॥

**शुभं**, क्ली, (शोभते इति । शुभ दीप्तौ + कः ।)

मङ्गलम् । इत्यमरः ॥ (यथा, कथासरित्सागरे ।

**शुभंयुः**, त्रि, (शुभमस्यास्तीति । शुभम् + “अहं-

शुभमोर्युस् ।” ५ । २ । १४० । इति
युस् ।)
मङ्गलान्वितः । इत्यमरः ॥ (यथा, रघुः
। ८ । ६ ।
“अधिकं शुशुभे शुभंयुना
द्वितयेन द्वयमेव सङ्गतम् ॥”)

**शुभगन्धकं**, क्ली, (शुभो गन्धो यस्य ।) वोलम् ।

इति राजनिर्घण्टः ॥ मङ्गलगन्धयुक्ते, त्रि
॥

**शुभग्रहः**, पुं, (शुभः ग्रहः ।) सौम्यग्रहः । स तु

गुरुः शुक्रः पापायुतबुधः
अर्द्धाधिकचन्द्रश्च ।
यथा, --
“अर्द्धो नेन्दुः कुजो राहुः शनिस्तैर्युत
इन्दुजः ।
रविः पापा भवन्त्ये ते शुभाश्चान्ये
प्रकीर्त्तिताः ॥”
इति सारसंग्रहः ॥
तद्वारे शुभकर्म्मकरणं यथा, --
“शुभग्रहार्कवारे च मृदुक्षिप्रध्रुवेषु च ।
शुभराशिविलग्ने च शुभं
शान्तिकपौष्टिकम् ॥”
इति संस्कारतत्त्वम् ॥

**शुभङ्करः**, त्रि, (शुभं करोतीति । शुभ + कृ +

खच् ।) मङ्गलकारकः । यथा,
भूरिप्रयोगे ।
“क्षेमङ्करः क्षेमकारो मद्रङ्करशुभङ्करौ ॥”
स्वनामख्याताङ्कशास्त्रकारके, पुं, ॥
शुभङ्करी, स्त्री, (शुभं करोति या । कृ +
खच्
ङीष् ।) पार्व्वती । इति शब्दरत्नावली
॥

**शुभदः**, पुं, (शुभं ददातीति । दा + कः ।)
अश्वत्थ-

वृक्षः । इति राजनिर्घण्टः ॥ शुभदातरि,
त्रि ॥

यद्वा, शु-शब्दोपपदान्नयतेर्गतिकर्मणः अन्ये-
ष्वपि दृश्यते इति डः । भाष्ये तु शु एतदर्थतो
निर्वचनं प्रायेण । सर्त्तेः ‘डिण्डीरवानीरगभीर
गम्भोर-कुम्भीर-शीरकाश्मीरजम्बीरकीरतीरा-
दयः’ इति ईरन्-प्रत्ययष्टिलोपश्च निपात्यते ।
सदा सरणात् सीर आदित्यः । शुनञ्च सीरञ्च
देवताद्वन्द्वे च इत्यङ् ।” इति तट्टीकायां देव-
राजयज्वा ॥ * ॥ इन्द्रवायू । यथा, ऋग्वेदे । ४ ।
५७ । ९ ।
“शुनासीरा शुनमस्मासु धत्तम् ॥”)
“हे शुनासीरा इन्द्रवाय्वादित्यौ वा ।” इति ।
तद्भाष्ये सायणः )

**शुनिः**, पुं, (शुनति क्षिप्रं गच्छतीति । शुन गतौ
+ “इगुपधात् कित् ।” उणा० ४ । ११९ । इति
इन् । स च कित् ।) कुक्कुरः । इति हेमचन्द्रः

**शुनी**, स्त्री, (श्वन् + गौरादित्वात् ङीष् ।) कुक्कुरी ।
इत्यमरः ॥ (यथा, भागवते । ९ । १८ । ११ ।
“अहो निरीक्ष्यतामस्या दास्याः कर्म्म ह्यसाम्प्रतम् ।
अस्मद्धार्य्यं धृतवती शुनीव हविरध्वरे ॥”)
कुष्माण्डी । इति राजनिर्घण्टः ॥

**शुनीरः**, पुं, कुक्कुरीसमूहः । इति त्रिकाण्डशेषः
शुन्ध, क शुद्धौ । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-अक०-सेट् । क, श्रुन्धयति । अयमात्मने
१२४ । ११२ ।
“अहो मूर्खोऽयमशुभं शुभमित्यभिनन्दति ॥”
पद्मकाष्ठम् । इति राजनिर्घण्टः ॥ (उदकम् ।
इति निघण्टुः । १ । १२ ॥ शुभपर्य्याये शुम-
मित्यव्ययमप्यस्ति । इति काशिका । ५ । २ ।
१४० ॥)
शुभः, पुं, (शोभते इति । शुभ + कः ।) विष्कु-
म्भादिसप्तविंशतियोगान्तर्गतत्रयोविंशयोगः ।
तत्र जातफलम् । यथा, कोष्ठीप्रदीपे ।
“शुभप्रसूतः शुभकृन्नराणां
शुभोदयेष्टो विदुषां समाजे ।
करोति नित्यं शुभकर्म्म धीमान्
शोभाधिकः शोभनवेशधारी ॥”

**शुभः**, त्रि, (शुभमस्यास्तीति । अर्शआद्यच् ।)
क्षेमशाली । (यथा, मनुः । ८ । २९७ ।
“पञ्चाशत्तु भवेद्दण्डः शुभेषु मगपक्षिषु ॥”)
खसञ्चारिपुरम् । इति मेदिनी । भे, ८ ॥
(यथा, वृहत्संहितायाम् । ९ । २२ ।
“अपरस्यां स्वात्याद्यं
ज्येष्ठाद्यं चापि मण्डलं शुभदम् ॥”)

**शुभदन्ती**, स्त्री, (शुभौ दन्तौ यस्याः । ङीष् ।)
पुष्पदन्तभयोषित् । सुदती । इति मेदिनी ॥

**शुभपत्रिका**, स्त्री, (शुभानि पत्राणि यस्याः ।
स्वार्थे कन् । टापि अत इत्वम् ।) शालपर्णी ।
इति राजनिर्घण्टः ॥ मङ्गलपत्रिका च ॥

**शुभवासनः**, पुं, (शुभं शोभनं यथा तथा वासयति
मुखमिति । शुभ + वस + णिच् + ल्युः ।) मुख-
वासकरगन्धः । यथा, --
“मुखवासकरो गन्ध आमोदी मुखवासनः ।
सुखवासन इत्येके शुभवासन इत्यपि ॥”
इति शब्दरत्नावली ॥

**शुभसूचनी**, स्त्री, (शुभं सूचयतीति । सूच् +
निच् + ल्युः । स्त्रियां ङीष् ।) देवीविशेषः ।
सुवचनीति ख्याता । सा च स्त्रिया पूज्या ।
तस्याः ध्यानं यथा, --
“रक्ता पद्मचतुर्म्मुखी त्रिनयनी चामीकरालङ्कृता
पीनोत्तुङ्गकुचादुकूलवसना हंसाधिरूढा परा
ब्रह्मानन्दमयी कमण्डलुकराक्षाभीतिहस्ता शिवा
ध्येया सा शुभसूचनी त्रिजगतामम्बापदुद्धा-
रिणी ॥”
इत्याचारमोर्त्तण्डः ॥

**शुभस्थली**, स्त्री, (शुभा स्थली ।) यज्ञभूमिः ।
इति केचित् ॥ मङ्गलभूमिश्च ॥

| | | |
|---|---|---|
| पदीत्येके । इति दुर्गादासः ॥<br>**शुन्ध**, ञ शुद्धौ । इति कविकल्पद्रुमः ॥ (भ्वा०-उभ०-अक०-सक० च-सेट् ।) शुद्धिरिह शुद्धीभावः शुद्धीकरणञ्च । ञ, शुन्धति शुन्धते जलेन लोकः । यो गां शुन्धति सत्येनेति हलायुधः । नां वाचम् । इति दुर्गादासः ॥ | | |

**शुभा**, स्त्री, शोभा । कान्तिः । इच्छा । इति
मेदिनी ॥ वंशरोचना । गोरोचना । शमी ।
प्रियङ्गुः । श्वेतदूर्व्वा । इति राजनिर्घण्टः ॥
देवसभा । इति शब्दरत्नावली ॥
उमासखी-
विशेषः । इति शब्दमाला ॥ मङ्गलजनिका
च ॥

**शुभाङ्गी**, स्त्री, (शुभानि अङ्गानि यस्याः । ङीष् ।)
कुबेरपत्नी । कामदेवपत्नी । इति केचित्
॥
(कुरुराजपत्नी । यथा, महाभारते । १ ।
९५ । ३९
"कुरुः खलु दशार्हीमुपयेमे शुभाङ्गीं नाम
तस्यामस्य जज्ञे विदूरथः ॥")
मङ्गलावयव-
युक्ते, त्रि ॥

**शुभाचारा**, स्त्री, (शुभः आचारो यस्याः ।)
उमासखी । इति शब्दमाला ॥
शोभनाचार-
वति, त्रि ॥

**शुभाञ्जनः**, पुं, शोभाञ्जनवृक्षः । इति शब्दरत्ना-
वली ॥

**शुभान्वितः**, त्रि, (शुभेन अन्वितः ।) मङ्गलयुक्तः ।
तत्पर्य्यायः । शुभयुः २ । इत्यमरः ॥

**शुभ्रं**, क्ली, (शोभते इति । शुभ दीप्तौ + "स्फायि
तञ्चिवञ्चीति ।" उणा ० २ । १३ । इति
रक् ।)
अभ्रकम् । इति मेदिनी ॥ गडलवणम् ।
रौप्यम्
कासीसम् । इति राजनिर्घण्टः ॥

**शुभ्रः**, पुं, (भ दीप्तौ + रक् ।) शुक्लवर्णः । इत्य-
मरः ॥ चन्दनम् । इति शब्दचन्द्रिका ॥

**शुभ्रः**, त्रि, (शुभ + रक् ।) उद्दीप्तः । शुक्लगुण-

ज्येष्ठः शुम्भ इति ख्यातो
निशुन्भश्चापरोऽसुरः ॥"
इति वामनपुराणे ५२ अध्यायः ॥
अपरञ्च ।
ऋषिरुवाच ।
"निशुम्भं निहतं दृष्ट्वा भ्रातरं
प्राणसम्मितम् ।
हन्यमानं बलञ्चैव शुम्भः
क्रुद्धोऽब्रवीद्वचः ॥
बलावलेपदुष्टे त्वं मा दुर्गे गर्व्वमावह ।"
इत्यादि ॥
"स क्षिप्तो धरणीं प्राप्य मुष्टिमुद्यम्य
वेगितः ।
अभ्याधवत दुष्टात्मा
चण्डिकानिधनेच्छया ॥
तमायान्तं ततो देवी सर्व्वदैत्यजनेश्वरम्
।
जगत्यां पातयामास भित्त्वा शूलेन
वक्षसि ।
स गतासुः पपातोर्व्व्यां
देवीशूलाग्रविक्षतः ॥"
इति मार्कण्डेयपुराणे देवीमाहात्मे
शुम्भवधः
१० अध्यायः ॥

**शुम्भघातिनी**, स्त्री, (शुम्भं हन्तीति । हन +
णिनिः । ङीप् ।) दुर्गा । इति
शब्दरत्नावली ॥

**शुम्भपुरं**, क्ली, (शुम्भस्य पुरम् ।) शुम्भदैत्यस्य
पुरी तत्पर्य्यायः । एकचक्रम् ३ हरिघम्
३ ।
इति भूरिप्रयोगः ॥ अधुना शुम्भलपुर
इति
ख्यातम् ॥

**शुम्भपुरी**, स्त्री, (शुम्भस्य पुरी ।) शुम्भपुरम् ।
इति त्रिकाण्डशेषः ॥

**शुम्भमर्द्दिनी**, स्त्री, (शुम्भं मृद्नातीति । मृद् +
णिनिः ।) दुर्गा । इति हेमचन्द्रः ॥

**शुल्व**, क माने । सर्गे । इति कविकल्पद्रुमः ॥
(चुरा०-पर०-सक-सेट् ।) पञ्चमस्वरयुक्त-
स्तालव्यादिरन्तःस्थतृतीयोपधः। सर्गः
सृष्टिः ।
क, शुल्वयति वेधाः पृथिवीं परिमाति सृजति
वा इत्यर्थः । इति दुर्गादासः ॥

**शुल्वं**, क्ली, (शुल्वयत्यनेनेति । शुल्व माने + घञ् ।
यद्वा, शुच शोके + "उल्वादयश्च ।" उणा०
४ । ९५ । इति वन्प्रत्ययेन निपातनात् साधु
)
ताम्रम् । रज्जुः । इत्यमरः ॥ (यथा, भागवते
।
२ । ७ । ३० ।
"गृह्णीत यद्यदुपबन्धममुष्य माता
शुल्वं सुतस्य न तु तत्तदमुष्य माति ॥")
ताम्रपात्रपक्वान्नभोजनदोषोयथा, --
"ताम्रे पक्त्वा चक्षुर्हानिर्म्मणौ भवति वै क्षयम्
।"
इति मत्स्यसूक्ते ४२ पटलः ॥
यज्ञकर्म्म । आचारः । जलसन्निधिः । इति
मेदिनी ॥

**शुल्वारिः**, पुं, (शुल्वस्य अरिः ।) गन्धकः । इति
हेमचन्द्रः ॥

**शुशुमा**, स्त्री, शुक्रपत्नी । इति केचित् ॥

**शुश्रुवान्**, [स्] त्रि, श्रुतवान् । श्रुधातोः क्वसु-
प्रत्ययेन निष्पन्नः । इति सिद्धान्तकौमुदी ॥
(यथा, भट्टिः । १ । २० ।
"स शुश्रुवान् तद्वचनं मुमोह
राजा सहिष्णुः सुतविप्रयोगम् ॥")

**शश्रूः**, स्त्री, माता । यथा । "शिशोः शुश्रूषणात्
शुश्रूः ।" इति महाभारते । १२ । २६५ ।
३२ ॥

**शुश्रूषणं**, क्ली, (श्रु + सन् + ल्यूट् ।) सेवा यथा,
"शुश्रूषणोपासनञ्च सेवोपास्तिरुपासना ।"
इति शब्दरत्नावली ॥
(यथा, भागवते । १० । ७८ । ३९ ।

युक्तः । इत्यमरः ॥ (यथा, रघुः । २ । ६९ ।
"पपौ वशिष्ठे न कृताभ्यनुज्ञः
शुभ्रं यशो मूर्त्तमिवातितृष्णः ॥")

**शुभ्रदन्ती**, स्त्री, (शुभ्रौ दन्तौ यस्याः । शुभ-
दन्ती । सा तु पुष्पदन्तनामदिग्गजकरिणी ।
इत्यमरटीका ।

**शुभ्ररश्मिः**, पुं, (शुभ्रा रश्मयो यस्य ।) चन्द्रः ।
इति केचित् ॥ श्वेतकिरणश्च ॥

**शुभ्रांशुः**, पुं, (शुभ्रा अंशवो यस्य ।) चन्द्रः ।
इत्यमरः ॥ कर्पूरः । इति राजनिर्घण्टः ॥

**शुभ्रालुः**, पुं, (शुभ्रः शुक्ल आलुः ।) महिष-
कन्दः । इति राजनिर्घण्टः ॥ श्वेतालुश्च ॥

**शुभ्रिः**, पुं, (शोभते इति । शुभ + "अदिशदिभू-
शुभिभ्यः क्रिन् ।" ४ । ६५ । इति क्रिन् ।)
ब्रह्मा । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**शुम्भः**, पुं, दानवविशेषः । स तु गवेष्ठीपुत्त्रः
प्रह्लादपौत्त्रः अम्बिकया हतश्च । यथा, --
"विरोचनस्तु प्राह्लादिः पञ्च तस्यानुजाः स्मृताः
गवेष्ठी कालनेमिश्च जम्भो वास्कल एव च ॥
शम्भुः श्रेष्ठोऽनुजस्तेषां पुत्त्रानेषामतः शृणु ।
शुम्भश्चैव निशुम्भश्च विश्वक्सेनो महौजसः ।
गवेष्ठिनः सुता ह्येते जम्भस्य सुतदुन्दुभिः ॥"
इत्याद्ये वह्निपुराणे कस्यपीयप्रजासर्गाध्यायः ॥
अन्यच्च ।
पुलस्त्य उवाच ।
कश्यपस्य दनुर्न्नाम भार्य्यासीत् द्विजसत्तम ।

**शुल्क**, क भाषे । सर्ज्जने । वर्ज्जने । इति कवि-
कल्पद्रुमः ॥ (चुरा०-पर०-सक०-सेट् ।) क,
शुल्कयति । शुल्क श्लोक इत्येतयोरेतावर्थौ
कैश्चिन्न मन्यते । भाषः कथनम् । इति दुर्गा-
दासः ॥

**शुल्कः**, पुं, क्ली, (शुल्क + घञ् ।) घट्टादिदेयम् ।
मासुल इति भाषा । इत्यमरः ॥ घट्टः पन्थाः तत्र
आदिना द्रव्यक्रयविक्रयस्थानादौच यद्देयंदीयते
स शुल्को जगात् इति घटी इति राज इति
च ख्यातः । शलति प्रतिबन्धोऽनेनेति शुल्कः ।
शल ज गतौ तालव्यादिः नाम्नीतिकः निपा-
तनादत उत्वम् । घट्ट चाले घट्ट्यतेऽत्र इति घञि
घट्टः । घट्टो वर्त्मोति माधवी । घट्टो राजग्राह्य-
ग्रहणस्थानादिरिति मुकुटः । घट्टो घाट इति
ख्याते इति रमानाथः । इति तट्टीकायां
भरतः ॥ (यथा, मनुः । ८ । ३०७ ।
"योऽरक्षन् बलिमादत्ते करं शुल्कञ्च पार्थिवः ।
प्रतिभागञ्च दण्डञ्च स सद्यो नरकं व्रजेत् ॥")
वरादर्थग्रहणम् इति मेदिनी ॥ (यथा, मनुः ।
३ । ५१ ।
"न कन्यायाः पिता विद्वान् गृह्णीयात् शुल्क-
मण्वपि ।
गृह्णन् शुल्कं हि लोभेन स्यान्नरोऽपत्यविक्रयी ॥"
पणः । यथा, महाभारते । १ । १९१ । ४ ।
"तं पापं जहि दासार्ह तन्नःशुश्रूषणं परम् ॥"

**शुश्रूषा**, स्त्री, (श्रु + सन् "अ प्रत्ययात् ।" ३ । ३ ।
१०२ । इति अः ।) उपासनम् । (यथा,
मनुः । २ । ११२ ।
"धर्म्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा
तत्र विद्या न वप्तव्या शुभं बीजमिवोषरे ॥")
कथनम् । श्रोतुमिच्छा । इति मेदिनी ॥ (यथा,
कामन्दकीये । ४ । २२ ।
"शुश्रूषा श्रवणञ्चैव ग्रहणं धारणन्तथा ।
उहोऽपोहोऽर्थविज्ञानं तत्त्वज्ञानञ्च धीगुणाः ॥")

**शुष**, य औ ऌ शोषे । इति कविकल्पद्रुमः ॥
(दिवा०-पर०-अक०-अनिट् ।) शोषः स्नेह-
रहितोभावः । य, शुष्यति धान्यमातपेन । औ,
शोष्टा ऌ । अ, अशुषत् । इति दुर्गादासः ॥
शुषः पुं,) शष + कः ।) 'शोषणम् । गर्त्तः । इत्य
जयपालः ॥

**शुषिः**, स्त्री, (शुष + इन् । स च कित् ।) शोषः ।
विलम् । इति मेदिनी ॥

**शुषिरं**, क्ली, (शुष शोषणे + "इषिमदिमुदिती ।"
उणा० १ । ५२ । इति किस्च् । यद्वा, शुषि-

| | | |
|---|---|---|
| तस्यास्तु द्वौ सुतावास्तां<br>सहस्राक्षाद्बलाधिकौ ॥ | “इत्युक्तो धनुरायम्य शुल्कावाप्तं<br>महाबलः ।<br>भ्राता भीसेन सहितस्तस्थौ<br>गिरिरिवाचलः ॥”)<br>**शुल्लं**, क्ली, रज्जुः । ताम्रम् । इत्यमरटीका ॥ | |

श्छिद्रमस्यास्तीति । शुषि +
"ऊषशुषिमुष्क-
मधो रः ।" ५ । २ । १०७ । इति रः ।)
विवरम् ।
वंश्यादिवाद्यम् । सरन्धृए, त्रि ।
इत्यमरः ॥
(आकाशः । इत्युज्वलदत्तः । १ । ५२
॥)

**शुषिरः**, पुं, (शुषिर्विलमस्यास्तीति । शुषि + रः ॥।
मूषिकः । इति मेदिनी ॥ अग्निः । इति
विश्वः

**शुषिरा**, स्त्री, (शुषिर + टाप् ।) नदी । इति
धरणिः ॥ नलीनामगन्धद्रव्यम् ।
इत्यमरः ॥

**शुषिलः**, पुं, (शुष + "गुपादिभ्यः कित् ।" उणा०
१ । ५७ । इति इलच् । स च कित् ।)
वायुः ।
इत्युणादिकोषः ॥

**शुष्कः**, त्रि, (शुष शोषे + क्तः । यद्वा, "सृवृभूशु-
षिमुषिभ्यः कक् ।" उणा ० ३ । ४१ ।
इति कक् ।
निस्नेहः । शुक्ना इति भाषा । यथा, --
"शुष्कं पर्य्युषितं वापि नीतं वा
दुरदेशतः ।
कुक्कुरस्य मुखाद्भ्रष्टं तदन्नं पापनं
महत् ॥"
इति स्कान्दे उत्कलखण्डम् ॥
(निष्प्रयोजनम् । यथा, मनुः । ४ ।
१३९ ।
"शुष्कवैरं विवादञ्च न कुर्य्यात् केनचित्
सह ॥"

**शुष्कपत्रं**, क्ली, (शुष्कं पत्रम् ।) स्नेहरहितदलम् ।
आतपादिशोषितपट्टशाकम् । नालिता
इति
शुक्ता इति च भाषा । तस्य गुणाः ।

**शुष्कव्रणः**, पुं, (शुष्को व्रणः ।) किणः । इति
त्रिकाण्डशेषः ॥

**शुष्काङ्गः**, पुं, (शुष्कं अङ्गं यस्य ।) धववृक्षः ।
इति वैद्यकम् ॥ स्ने हशून्यावयवे, त्रि ॥

**शुष्काङ्गी**, स्त्री, (शुष्काणीव अङ्गानि यस्याः ।)
गोधिका । इति शब्दचन्द्रिका ॥

**शुष्कार्द्रं**, क्ली, (शुष्कं आर्द्रम् ।) शुण्ठी । इति
शब्दचन्द्रिका ॥

**शुष्णः**, पुं, (शुष्यत्यनेनेति । शुष + "तृषिशुषिर-
सिभ्यः कित् ।" उणा ० ३ । १२ । इति नः ।
स
च कित् ।) सूर्य्यः । इत्युणादिकोषः ॥ अग्निः ।
इति संक्षिप्तसारोणादिवृत्तिः ॥ (बले, क्ली ।
इति निघण्टुः । २ । ९ ॥)

**शुष्मं**, क्ली, शुष्यत्यनेनेति । शुष शोषे + "अवि-
सिविसिशुषिभ्यः कित् ।" उणा० १ । १४३ ।
इति मन् । स च कित् ।) तेजः । इति मेदिनी
॥
पराक्रमः । इति हेमचन्द्रः ॥

**शुष्मः**, पुं, (शुष्यत्यनेनेति । शुष + मन् ।) सूर्य्यः ।
इति मेदिनी ॥ अग्निः । इति त्रिकाण्डशेषः ॥
वायुः । पक्षी । इति संक्षिप्तसारोणादिवृत्तिः ॥
अर्च्चिः । यथा । शुष्मोऽर्च्चिषि हुताशने । इति
शुभाङ्कः । इत्यमरटीकायां भरतः ॥

**शुष्म**, [न्] क्ली, (शुष + मनिन् । संज्ञापूर्व्वकत्वात्
नगुणः ।) तेजः । इति जटाधरः ॥ सौर्य्यम् ।
इति हेमचन्द्रः ॥

**शुष्मा**, [न्] पुं, (शुष्यत्यनेनेति । शुष शोषे +
मनिन् ।) अग्निः । चित्रकवृक्षः । इत्यमरः ॥
अदन्तोऽपि शुष्मेति सर्व्वस्वम् । इति भरतः ॥

**शूकः**, पुं, क्ली, (शो तनूकरणे + "उलूकादयश्च ।"
इति ऊकप्रत्ययेन साधुः ।) श्लक्ष्णतीक्ष्णाग्रम्
।

"अश्वगन्धा वरी कुष्ठं मांसी
सिंहीफलान्वितम्
चतुर्गुणेन दुग्धेन तिलतैलं विपाचयेत् ।
तत्तैलं मेढ्रवक्षोजकर्णपाणिविवर्द्धनम् ॥"
ते च शूकदोषा दश चाष्टौ च भवन्ति ॥ *
॥
तेष्वादौ सर्षपिकामाह ।
"गौरसर्षपसंस्थाना शूकदुर्भगहेतुका ।
पिडिका श्लेष्मवाताभ्यां ज्ञेया सर्षपिका
तु सा ॥"
शूकदुभगहेतुका शूकनिमित्ता दुष्टयोनि-
निमित्ता च ॥ * ॥ अष्ठीलिकामाह ।
"कठिना विषमेर्भुग्नैर्व्वायुनाष्ठीलिका भवेत्
।"
अष्ठीला लाहकारस्य भाण्डविशेषः ।
निहाइ
इति लोके । तद्वत् कठिना इत्यष्ठीलिका ।
विषमैर्भुग्नैरिति वक्ष्यमाणशूकविशेषणम् ।
विष
मैर्ह्र स्वदीर्घैः । भुग्नैः वक्रैः ॥ * ॥
ग्रथितमाह ।
"शूकेर्यत् पूरितं शश्वत् ग्रथितं नाम तत्
कफात्
यल्लिङ्गं सदा शूकैः पूरितं
तद्ग्रथितत्वाद्ग्रथि
तम् ॥ * ॥ कुम्भिकामाह ॥
"कुम्भिका रक्तपित्तोत्था
जम्बुकास्थिनिभा
सिता ॥"
कुम्भिका कुम्भतुल्यफलत्वात् ॥ * ॥
अलजीमाह
"अलजी स्यात्तथा यादृक्
प्रमेहपिडिकालजी ।
सा च रक्ता सिता स्फोटदारुणा कथिता
च
सा ॥"
एषा रक्तपित्तनिमित्ता ज्ञेया ॥ * ॥
मृदिता-
माह ।

"शुष्कपत्रं पयोमिश्रं पित्तश्ले

श्मज्वरापहम् ॥)

तत् शुष्कपत्रं जलदोषनाशनं

विशेषतः पित्तकफज्वरापहम्।

जलञ्च तस्यापि च पित्तहारकं

सुरोचनं व्यञ्जनयोगकारकम्॥"

इति राजवल्लभः ॥

**शुष्कमत्स्यः**, पुं, शुष्को मत्स्यः ।) आतपादिना

निस्नेहीकृतमीनः । शुक्टी माछ इति

भाषा ॥

तस्य गुणा मत्स्यशब्दे द्रष्टव्याः ॥

**शुष्कमांसं**, क्ली, (शुष्कं मांसम् ।) आतपादिना

निस्नेहीकृतमांसम् । तत्पर्य्यायः ।

उत्तप्तम् २

वल्लरम् ३ । इत्यमरः ॥ वल्लूरा ४

शुष्कनी ५ ।

इति तट्टीका ॥ अस्य गुणाः ।

"वृद्धानां दोषलं मांसं बालानां बलदं

लघु ।

त्रिदोषकृद्व्यालजुष्टं शुष्कं शूलकरं गुरु

॥"

इति भावप्रकाशः ॥

**शुष्करेवती**, स्त्री, मातृकाविशेषः । यथा, --

"अस्थिभ्यश्च तथा काली सृष्टा पूर्व्वं

महात्मना

तथा तद्रुधिरं पीतमन्धकानां

महात्मनाम्।

या चास्मिन् कथिता लोके नामतः

शुष्क-

रेवती ॥"

इति मत्स्यपुराणे १५४ अध्यायः ॥

**शुष्कलः**, त्रि, आमिषम् । इत्युणादिकोषः ॥

आमिषाशी ॥ इत्यमरटीकायां भरतः ॥

**शुष्कली**, स्त्री, शुष्कमांसम् । मांसमात्रम् । यथा,

"शुष्कली शुष्कमांसे स्यान्मांसमत्रेऽपि

दृश्यते ।"

इति शौष्कलशब्दटीकायां भरतः ॥

**शुष्कवृक्षः**, पुं, (शुष्को वृक्षः इव ।) धववृक्षः ।

शुँया इति भाषा । तत्पर्य्यायः । किंशारुः २ ।

इत्यमरः ॥ शुङ्गा ३ कोशी ४ । इति हेमचन्द्रः

॥

दया । इति मेदिनी ॥

सविषाल्पडुण्डुभादिजल-

मलोद्भवजन्तुः । शूकप्रधानलिङ्गवृद्धिकरयोगः

।

तद्विवरणं यथा । अथ शूकदोषाधिकारः । तत्र

शूकदोषस्य निदानमाह ।

"अक्रमाच्छेफसो वृद्धिं योऽभिवाञ्छति मूढधीः

व्याधयस्तस्य जायन्ते दश चाष्टौ च शूकजाः

॥"

अक्रमात् अनुचितवृद्धिक्रमात्। अनुचिता च

वृद्धिः भूरिविकारजनकस्य शूकस्य योगेन ।

शूकजाः । शूको जलशूकः सविषो जलजन्तु

विशेषः । स तु जलमलोद्भवः । अल्पडुण्डुभ

इत्यादिकः । तथा शूकप्रधानो लिङ्गवृद्धिकरो

वात्स्यायनाद्युक्तो योगः शूक उच्यते । यथा,

"भल्लातकास्थिजलशूकमथाब्जपत्र

मन्तर्विदह्य मतिमान् सह सैन्धवेन ।

एतद्विरूढबृहतीफलतोयपिष्ट

मालेपितं महिषविड्विमलीकृतेऽङ्गे ॥

स्थूलं महद्वरतुरङ्गमलिङ्गतुल्यं

शेफः करोत्यभिमतं न हि संशयोऽस्ति ।"

इत्यादि । यत्तु जलशूकरहितमश्वगन्धादितैलं

तदुचितमेव लिङ्गवर्द्धनम्।

"मृदितं पीडितं यत्तु संरब्धं वातकोपतः ।

पाणिभ्यां भृशसंभूढे संमूढपिडिका भवेत्

॥"

शूकदोषे जाते पाणिभ्यां भृशसंमूढे

पिच्चिते

लिङ्गे अत्रापि वातकोपत इत्यनुवर्त्तते ॥ *

॥

अवमन्थमाह ।

"दीर्घा वाह्यश्च पिडिका दीर्य्यते

मध्यमस्तु याम्

सोऽवमन्थः कफासृग्भ्यां वेदना

लोमहर्षकृत् ॥"

दीर्घा दीर्घाङ्कुराः ॥ * ॥ पुष्करिकामाह।

"पिडिका पिडिकाव्याप्ता

पित्तशोणितसम्भवा।

पद्मकर्णिकसंस्थाना ज्ञेया पुष्करिकेति सा

॥"

पिडिकाव्याप्ता क्षुद्रपिडिकाव्याप्ता।

अतएव

पद्मकर्णिकसंस्थाना ॥ * ॥

स्पर्शहानिमाह ।

"स्पर्शहानिञ्च जनयेच्छोणितं शूकदूषितम्

।"

अत्र स्पर्शासहत्वमेव लक्षणम् ॥ * ॥

उत्तमा-

माह ।

"मुद्गमासोपमा रक्ता रक्तपित्तोद्भवा च सा

।

एषोत्तमाख्या पिडिका शूके

जीर्णसमुद्भवा" * ॥

शतयोनकमाह।

"च्छिद्रैरनुमुखैर्लिङ्गंचिरं यस्य समन्ततः ।

वातशोणितजो व्याधिर्विज्ञेयः शतयोनकः

॥"

शतयोनकं चालनी

तत्तुल्यत्वाच्छतयोनकः ॥ * ॥

त्वक्पाकमाह।

"वातपित्तकृते ज्ञेयस्त्वक्पाको

ज्वरदाहकृत् ।"

एतस्य लिङ्गं त्वक्पाकलक्षणम्॥ * ॥

शोणिता-

लिङ्गं वासरुजश्चोग्रा ज्ञेयं तत्
शोणितार्व्वुदम् ॥”
वासरुजः स्फोटकाधिस्थाने वेदना ॥ * ॥
मांसा-
र्वुदमाह ।
“मांसदुष्ट्या विजानीयादर्वुदं मांससम्भवम्
।”
मांसपाकमाह ।
“शीर्य्यन्ते यस्य मांसानि यस्य सर्व्वाश्च
वेदनाः
विद्यात्तं मांसपाकन्तु सर्व्वदोषकृतं भिषक्
॥”
शीर्य्यन्तेगलन्ति । सर्व्ववेदनाः
वातपित्तकफजाः
विद्रधिमाह ।
“विद्रधिं सन्निपातेन यथोक्तमभिनिर्द्दिशेत् ।
उक्तं सान्निपातिकविद्रधितुल्यंकथयेत् ॥ *
॥
तिलकालकमाह ।
“कृष्णानि चित्राण्यथवा शूकाणि सविषाणि
तु
पतितानि पचन्त्याशु मेढ्रं निरवशेषतः ॥
कलानि भूत्वा मांसानि शीर्य्यन्ते यस्य
देहिनः ।
सन्निपातसमुत्थांश्च विद्यात्तां
तिलकालकान् ॥”
चित्राणि नानावर्णानि । शूकानि शूकव्रणानि
।
मञ्चाः क्रोशन्तीतिवत् । सविषाणि सविष-
शूकाख्यजन्तुविशेषकृतानि । शीर्य्यन्ते
गलन्ति
कृष्णतिलतुल्यत्वात् तिलकालकाः ॥ * ॥
असाध्य
माह ।
“तत्र मांसार्वुदं यच्च मांसपाकश्च यः स्मृतः
।
विद्रधिश्च न सिध्यन्ति ये च
स्युस्तिलकालकाः ॥”
अथ शूकदोषस्य चिकित्सा ।

**शूकधान्यं**, क्ली, (शूकविशिष्टं धान्यम् ।) शुङ्गा-

युक्तशस्यमात्रम् । स तु धान्ययवादिः । यथा, --
“व्रीह्यादिकं यदिह शूकसमन्वितं स्यात्
तत् शूकधान्यमथ मुद्गमकुष्ठकादि ।
शिम्बीनिगूढमिति तत् प्रवदन्ति शिम्बी-
धान्यं तृणोद्भवमथो तृणधान्यमन्यत् ॥”
अस्य गुणाः ।
“तत्र त्रिदोषशमनं लघु शूकधान्यं
तेजोबलातिशयवीर्य्यविवृद्धिदायि ।
देशे देशे शूकधान्येषु संख्या
ज्ञातुं शक्या नैव तैर्दैवतेर्व्वा ॥”
इति राजनिर्घण्टः ॥
अपि च ।
“शूकधान्यं शमीधान्यं समातीतं प्रशस्यते ।
परतो वातकृद्रूक्षं प्रायेणाभिनवं गुरु ॥”
इति राजवल्लभः ॥
अन्यच्च ।
“यवस्तुसितशूकः स्यात् निःशूकोऽतियवः
स्मृतः
तोक्मस्तद्वत् स हरितस्ततः स्वल्पश्च कीर्त्तितः
॥
यवः कषायो मधुरः शीतलो लेखनो मृदुः ।
व्रणेषु तिलवत् पथ्यो रूक्षो मेधाग्निवर्द्धनः ॥
कटुपाकोऽनभिष्यन्दी सर्य्यो बलहरो गुरुः ।
बहुवातमलो वर्णस्थैर्य्यकारी च पिच्छिलः ।
कण्ठत्वगामयश्लेष्मपित्तमेदप्रणाशनः ॥
पीनसश्वासकासोरुस्तम्भलोहिततृट्प्रणुत् ।
अस्मादतियवो न्यून्यूनस्तोक्मो न्यूनतरस्ततः ॥”
इति भावप्रकाशः ॥

**शूकपिण्डिः**, स्त्री, (शूकैः पिण्डते इति । पिण्ड

संहतौ + इन् ।) शूकशिम्बिः । इति शब्दमाला-
शब्दरत्नावल्यौ ॥

**शूकपिण्डी**, स्त्री, (शूकपिण्डि + वा ङीष् ।) शूक

शिम्बिः । इति शब्दमालाशब्दरत्नावल्यौ ॥

**शूकरः**, पुं, (शूकं तद्वल्लोम रातीति । रा + कः ।)

पशुविशेषः । शुओर इति भाषा । तत्पर्य्यायः ।
वराहः २ स्तब्धरोमा ३ रोमशः ४ किरिः ५

**शूकरदंष्ट्रः**, पुं, क्षुद्ररोगविशेषः । तल्लक्षणमाह
।

“सदाहो रक्तपर्य्यन्तस्त्वक्पाकी
तीव्रवेदनः ।
कण्डूमान् ज्वरकारी च स
स्याच्छूकरदंष्ट्रकः ॥”
स गुदभ्रंशः ॥ * ॥ तच्चिकित्सा
यथा, --
“भृङ्गराजकमूलस्य रजन्या
सहितस्य च ।
चूर्णन्तु सहसा
लेपाद्वाराहद्विजनाशनम् ॥
राजीवमूलकल्कस्तु पीतो गव्येन
सर्पिषा प्रातः
शमयति शूकरदंष्ट्रं दंष्ट्रोद्भूतज्वरं
घोरम् ॥
रजनीमार्कवमूलं पिष्टं शीतेन
वारिणा ।
तल्लेपाद्धन्ति वीसर्पं
वाराहदशनाह्वयम् ॥”
इति भावप्रकाशः ॥

**शूकरपादिका**, स्त्री, (शूकरस्य पादा इव
मूला-

न्यस्याः । कन् । टाप् । अत इत्वम्
।) कोल-
शिम्बी । इति राजनिर्घण्टः ॥

**शूकराक्रान्ता**, स्त्री, (शूकरेणाक्रम्यते स्मेति ।
आ

+ क्रम + क्तः ।) वराहक्रान्ता । इति
शब्द-
चन्द्रिका ॥

**शूकरी**, स्त्री, (शूकर + ङीष् ।) वराहक्रान्ता ।

इति शब्दरत्नावली ॥ शूकरपत्नी
च ॥

**शूकरेष्टः**, पुं, (शूकराणामिष्टः ।) कसेरुः ।

इति राजनिर्घण्टः ॥
शूकरप्रियद्रव्ये, त्रि ॥

"शूकदोषेषु सर्व्वेषु विषघ्नीं कारयेत् क्रियाम् ।
जलोकाभिर्हरेद्रक्तं रेचयेल्लघु भोजयेत् ॥
गुग्गुलुं पाचयेच्चापि त्रिफलाक्वाथसंयुताम् ।
क्षीरेण लेपसेकाच्च शीतानेव हि कारयेत् ॥
दार्व्वीसुरसयष्ट्याह्वैर्गृहधूमनिशायुतैः ।
सम्पक्वं तैलमभ्यङ्गान्मेढ्ररोगं विनाशयेत् ॥"
सुरसं तुलसी । दार्व्वीतैलम् ।
"रसाञ्जनं साह्वयमेकमेव
प्रलेपमात्रेण नयेत् प्रशान्तिम् ।
सपूतिपूयव्रणशोथकण्डू-
शूलान्वितं सर्व्वमनङ्गरोगम् ॥"
साह्वयमित्यनङ्गरोगस्य विशेषणम् । अनङ्ग-रोगस्य नामापि दूरीकरोति । इति शूक-दोपाधिकारः । इति भावप्रकाशः ॥

**शूककः**, पुं, (शूकेन कायतीति । कै + कः ।) प्रावटः । रसः । इति मेदिनी ॥

**शूककोटः**, पुं, (शूकविशिष्टः कीटः ।) शूकयुक्त-कीटविशेषः । शूयापोका इति भाषा । तत्प-र्य्यायः । वृश्चिकः २ । इत्यमरः ॥
शूककीटकः ३
इति शब्दरत्नावली ॥

**शूककीटकः**, पुं, (शूककीट + स्वार्थे कन् ।) शूक-कोटः । इति शब्दरत्नावली ॥

**शूकतृणं**, क्ली, (शूकप्रधानं तृणम् ।) तृणविशेषः
**शूकडी** इति हिन्दी भाषा । तत्पर्य्यायः । शूकम् २ शूकाढ्यम् ३ कनिष्ठकम् ४ । अस्य गुणः ।
"दुर्म्मरन्तु पशूनाञ्च शूकाभावे हितञ्च तत् ॥"
इति राजनिर्घण्टः ॥
दुर्म्मरन्तुस्थाने दर्जरनुन् इति पाठः ॥

चक्रदंष्ट्रः ६ किटिः ७ दंष्ट्री ८ क्रोडः ९ दन्ता-युधः १० बली ११ पृथुस्कन्धः १२ पोत्री १३ घोणी १४ भेदनः १५ कोलः १६ पोत्रायुधः १७
शूरः १८ बह्वपत्यः १९ रदायुधः २० । वन्यस्य तस्य मांसगुणाः । गुरुत्वम् । वातहारित्वम् । वृष्यत्वम् । बलस्वेदकरत्वञ्च ॥ ग्राम्यस्य तस्य मांसगुणाः । वन्यवराहमांसादगुरुत्वम् । मेदो-बलवीर्य्यवृद्धिकारित्वञ्च । इति राजनिर्घण्टः ॥
अपि च ।
"लुलापगण्डवाराहचमरीवारणादयः ।
एते कूलेचराः प्रोक्ता यतः कूले चरन्त्यमी ॥
कूलेचरा मरुत्पित्तहरा वृष्यबलापहाः ।
मधुराः शीतलाः स्निग्धा मूत्रलाः श्लेष्म-वर्द्धनाः ॥"
इति भावप्रकाशः ॥

**शूकरकन्दः**, पुं, (शूकरप्रियः कन्दः ।) वाराही-कन्दः । इति राजनिर्घण्टः ॥

**शूकलः**, पुं, (शूकवत् क्लेशं लाति ददातीति । ला + कः ।) दुर्विनीताश्वः । इति हेमचन्द्रः ॥

**शूकवती**, स्त्री, (शूकाः सन्त्यस्याः । शूक + मतुप् ।) कपिकच्छुः । इति शब्दचन्द्रिका ॥
शूकयुक्ते,
त्रि ॥

**शूकशिम्बा**, स्त्री, (शूकविशिष्टा शिम्बा यस्याः ।) कपिकच्छुः । इति शब्दचन्द्रिका ।

**शूकशिम्बिः**, स्त्री, (शूकविशिष्टा शिम्बियस्याः ।) कपिकच्छुः । इत्यमरः ॥

**शूकशिम्बिका**, स्त्री, (शूकयुक्ता शिम्बिका यस्याः ।) कपिकच्छुः । इत्यमरटीका ॥

**शूकशिम्बी**, स्त्री, (शूकयुक्ता शिम्बी यस्याः ।) कपिकच्छुः । इत्यमरटीका ॥

**शूका**, स्त्री, (शूकाः सन्त्थस्याः इति अर्श आदि-त्वादच् ।) कपिकच्छुः । इति शब्दचन्द्रिका ॥

**शूकापुट्टः**, पुं, तृणमणिः । इति हारावली ॥
काफुरदाना इति काहरोवा इति च पारस्य-भाषा ॥

**शूक्ष्मं**, त्रि, अल्पम् । इत्युणादिकोषः ॥ अस्थलम् ।
सरु इति मिही इति च भाषा ।
यथा, --
"बहुतन्तुसमायुक्तं
पट्टसूत्रादिनिर्म्मितम् ।
वासो देवि सुशूक्ष्मञ्च गृहाण
परमेश्वरि ॥"
इति कालिकापुराणम् ॥

| | | |
|---|---|---|
| | | **शूक्ष्मः**, पुं, कृतकः । अध्यात्मा । इत्युणादिकोषः ॥<br><br>**शूतिपर्णः**, पुं, आरग्वधः । इति शब्दरत्नावली ॥<br><br>**शूद्रः**, पुं, (शोचतीति । शुच शोके + “शुचेर्दश्च ।”<br>उणा० २ । १९ । इति रक् दश्चान्तादेशो धातो- दीर्घश्च ।) चतुर्व्वर्णान्तर्गतचतुर्थवर्णः । तत्- पर्य्यायः । अवरवर्णः २ वृषलः ३ जघन्यजः ४ । इत्यमरः ॥ दासः ५ पादजः ६ अन्त्यजन्मा ७ जघन्यः ८ द्विजसेवकः ९ । इति शब्दरत्नावली ॥ |

पद्यः १० । इति जटाधरः ॥ अन्त्यवर्णः
११
पज्जः १२ । इति हेमचन्द्रः ॥ चतुर्थः
१३ द्विज-
दामः १४ उपासकः १५ । इति
राजनिर्घण्टः ॥
प्लक्षद्वीपे तस्य संज्ञा मत्याङ्गः ।
शाल्मलद्वीपे
इषुन्धरः । कुशद्वीपे कुलकः । क्रौञ्चद्वीपे
सेवकः । शाकद्वीपे अनव्रतः ।
पुष्करद्वोपे सर्व्वे
एकवर्णाः । अस्योत्पत्तिर्ब्रह्मणः पादात् ।
अस्य
शास्त्रनिरूपितो धर्म्मः जीविका च
ब्राह्मण-
क्षत्त्रियवैस्यशुश्रूषा । अस्यैकाश्रमो
गार्हस्थ्यः ।
इति श्रीभागवतम् ॥ * ॥ अथ
शूद्रधर्म्मादि ।
"विप्राणामर्च्चनं नित्यं शूद्रधर्म्मो
विधीयते ।
तद्द्वेषी तद्धनग्राही शूद्रश्चाण्डालतां
व्रजेत् ॥
गृध्रः कोटिसहस्राणि शतजन्मानि
शूकरः ।
श्वापदः शतजन्मानि शूद्रो विप्रधनापहा
॥
यः शूद्रो ब्राह्मणीगामी मातृगामी स
पातकी ।
कुम्भीपाके पच्यते स यावद्वै ब्रह्मणः
शतम् ॥
कुम्भीपाके तप्ततैले भुक्तः सर्पैरहर्निशम्
।
शब्दञ्च विकृताकारं कुरुते यमताडनात्
॥
तदा चाण्डालयोनिः स्यात् सप्तजन्मसु
पातकी
सप्तजन्मसु सर्पश्च जलौका सप्तजन्मसु
॥

यदाह भगवान् साधुर्ध न्याश्चेति पुनः पुनः
॥"
इति विष्णुपुराणे ६ । २ । १२ ॥
तस्य मद्यपानादौ दोषो यथा, --
"तथा मद्यस्य पानेन ब्राह्मणीगमनेन च ।
वेदाक्षरविचारेण शूद्रश्चाण्डालतां व्रजेत् ॥"
इति शूद्रकमलाकरधृतपराशरवचनम्॥
ब्राह्मणस्य तदन्नभोजननिषेधो यथा, --
"शूद्रान्नं ब्राह्मणोऽश्नन् वै मासं मासार्द्धमेव
वा ।
तद्योनावभिजायेत सत्यमेतद्बिदुर्बुधाः ॥
अथोदरस्थशूद्रान्नो मृतः श्वानोऽपि जायते
।
द्वादश दश चाष्टौ च गृध्रशूकरपुषकराः ॥
उदरस्थितशूद्रान्नो ह्यधीयानोऽपि नित्यशः
।
जुह्वन् वापि जपन् वापि गतिमूद्र्ध्वं न
विन्दति ॥
अमृतं ब्राह्मणस्यान्नं क्षत्त्रियान्नं पयः स्मृतम्
।
वैश्यस्य चानमेवान्नं शूद्रान्नं रुधिरं स्मृतम् ॥
तस्मात् शूद्रं न भिक्षेत यज्ञार्थं
सद्द्विजातयः ।
श्मशानमिव सच्छूद्रस्तस्मात्तं परिवर्ज्जयेत्
॥
कणानामथवा भिक्षां कुर्य्याच्चातिविकर्षितः
।
सच्छूद्राणां गृहे कुर्व्वन् तत्पापेन न लिप्यते
॥
विशुद्धान्वयसंजातो निवृत्तो मद्यमांसतः ।
द्विजभक्तो बणिग्वृत्तिः शूद्रः स परिकीत्तितः
॥"
इति बृहत्पराशरसंहितायाम् ४ अध्यायः ॥
* ॥
अपि च । हारीतः ।
"शूद्रान्नेन तु भुक्तेन उदरस्थेन यो मृतः ।
स वै खरत्वमुष्ट्रत्वं शूद्रत्वञ्चाधिगच्छति ॥"
शूद्रान्नं शूद्रस्वामिकान्नं तद्दत्तमपि भोजन-
कालेतद्गृहावस्थितं यत्तदपि शूद्रान्नम् ।

"शूद्रेषु दासगोपालकुलमित्रार्द्धशीरिणाम् ।
भोज्यान्नता गृहस्थस्य तीर्थसेवातिदूरतः ॥
एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः ।
निवर्त्तितानि कर्म्माणि व्यवस्थापूर्व्वकं बुधैः
॥"
इति तिथ्यादितत्त्वम् ॥
अपरञ्च ।
व्यास उवाच ।
"नाद्यात् शूद्रस्य विप्रोऽन्नं मोहाद्वा यदि
वान्यतः ।
स शूद्रयोनिं व्रजति यस्तु भुङ्क्ते ह्यनापदि
॥
षण्मासान् यो द्विजो भुङ्क्ते शूद्रस्यान्नं विग-
र्हितम् ।
जीवन्नैव भवेत् शूद्रो मृतः श्वा चाभिजायते
॥
ब्राह्मणक्षत्त्रियविशां शूद्रस्य च मुनीश्वराः ।
यस्यान्नेनोदरस्थेन मृतस्तद्योनिमाप्नुयात्
॥"
कलीतरत्र शूद्रविशेषान्नभोजनविधिर्य्यथा, --
"आर्त्तिजः कुलमित्रञ्च गोपालो दासनापितौ
एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत्
॥
कुशीलवः कुम्भकारः क्षेत्रकर्म्मक एव च ।
एते शूद्रेषु भोज्यान्ना दत्त्वा स्वल्पं पणं बुधैः
।
पायसं स्निग्धपक्वञ्च यावसञ्चैव शक्तवः ।
पिण्याकञ्चैव तैलञ्च शूद्रादग्राह्यं द्विजातिभिः
॥
इति कौर्म्मे उपविभागे १६ अध्यायः ॥
अपि च ।
"कन्दुपक्वानि तैलेन पायसं दधिशक्तवः ।
द्विजैरेतानि भोज्यानि शद्रगेहकृतान्यपि ॥"
* ॥
अन्यच्च ।
"शूद्रास्तु ये दानपरा भवन्ति
व्रतान्विता विप्रपरायणास्तु ।
अन्नं हि तेषां सततं सुभोज्यं
भवेद्विजैर्दृष्टमिदं पुरातनैः ॥

जन्मकोटिसहस्रञ्च विष्ठायां जायते
कृमिः ।
योनिक्रिमिः पुंश्चलीनां स भवेत्
सप्तजन्मसु ॥
गवां व्रणकृमिः स्याच्च पातकी
सप्तजन्मसु ।
योनौ योनौ भ्रमत्येवं न पुनर्जायते नरः
॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ८३
अध्यायः ॥
अपि च ।
“द्विजानां पादशूश्रूषा शूद्रैः कार्य्या सदा
त्विह
पादप्रक्षालनं गन्धैर्भोज्यमुच्छिष्टमात्रकम्
॥
ते तु चक्रु स्तदा चैव तेभ्यो भूयः
पितामहः ।
शूश्रूषार्थं मया यूथं तुरीये तु पदे कृताः
॥
द्विजानां क्षत्त्रवर्गाणां वैश्यानाञ्च
भवद्भिर्द्विधाः ।
त्रिभ्यः शूश्रूषणा कार्य्या
इत्यवादीद्वचस्तदा ॥”
इति पाद्मे सृष्टिखण्डे १६ अध्यायः ॥
किञ्च ।
“शूश्रूषैव द्विजातीनां शूद्राणां
धर्म्मसाधनम् ।
कारुकर्म्म तथाजीवः पाकयज्ञोऽपि
धर्म्मतः ॥
इति गारुडे ४९ अध्यायः ॥
शूद्रराज्ये वासनिषेधो यथा, --
“धार्म्मिकैर्नावृते ग्रामे न व्याधिबहुले
भृशम् ।
न शूद्रराज्ये निवसेत् न पाषण्डजनैर्वृते
॥”
शूद्राय मतिदाननिषेधो यथा, --
“न शूद्राय मतिं दद्यात् कृशरं पायसं
दधि ।
नोच्छिष्टं वा मधु घृतं न च कृष्णाजिनं
हविः ।
तदाहाङ्गिराः ।
“शूद्रवेश्मनि विप्रेण क्षीरं वा यदि वा दधि ।
निवृत्तेन न भोक्तव्यं शूद्रान्नं तदपि स्मृतम्
॥”
अपिशब्दात् साक्षात्तद्दत्तघृततण्डुलादि । न
तु
तद्दत्तकपर्दकादिना क्रीतमपि । स्वगृहागते
पुनरङ्गिराः ।
“यथा यतस्ततो ह्यापः शूद्धिं यान्ति नदीं
गताः ।
शूद्राद्विप्रगृहेष्वन्नं प्रविष्टन्तु सदा शुचि ॥
प्रविष्टं स्वत्वापादकप्रतिग्रहादिनेति शेषः ।
अतएव पराशरः ।
“तावद्भवति शूद्रान्नं यावन्न स्पृशति द्विजः ।
द्विजातिकरसंस्पृष्टं सर्व्वं तद्धविरुच्यते ॥”
स्पृशति प्रतिगृह्णातीति कल्पतरुः ॥ तच्च
संप्रोक्ष्य ग्राह्यमाह विष्णुपुराणम् ।
‘संप्रोक्षयित्वा गृह्णीयाच्छूद्रान्नं गृहमागतम्
॥”
तच्च पात्रान्तरे ग्राह्यमाहाङ्गिराः ।
“स्वपात्रे यत्तु विन्यस्तं शूद्रो यच्छति
नित्यशः
पात्रान्तरगतं ग्राह्यं दुग्धं स्वगृहमागतम् ॥”
एतेन स्वगृहमागतस्यव शुद्धत्वं
तद्गृहगतस्य
शूद्रान्नदोषभागित्वं प्रतीयते ।
ततश्चैतादृगपि
मुमूर्षुणा सर्व्व था शूद्रान्नं न भोक्तव्यम् ।
इति
शुद्धितत्त्वम् ॥ * ॥ कलौ
शूद्रविशेषान्नभोजन-
निषेधो यथा, --
तस्माद्दानं प्रकर्त्तव्यं व्रतस्थेन प्रयत्नतः ।
सर्व्वपापविनाशाय महत्सुखविवृद्धये ॥”
इति वह्निपुराणे वृषदानाध्यायः ॥ * ॥
वैदिकेतरमन्त्रपाठे शूद्रादेरप्यधिकारः । वेद-
मन्त्रवर्ज्जं शूद्रस्येति
छन्दोगाह्निकाचारचिन्ता
मणिधृतस्मृतौ वेदेति विशेषणात् । एवञ्च
पुराणमधिकृत्य ।
“अध्येतव्यं न चान्ये न ब्राह्मणं क्षत्त्रियं विना
।
श्रोतव्यमिह शूद्रेण नाध्येतव्यं कदाचन ॥”
इति भविष्यपुराणवचनं पुराणमन्त्रेतरपरम्
॥
पञ्चयज्ञस्नानश्राद्धेषु पौराणिकमन्त्रोऽपि
निषिद्धः शुद्रमधिकृत्य ।
“नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत् ॥”
इति याज्ञकल्क्येन ॥
“ब्रह्मक्षत्त्रविशामेव मन्त्रवत् स्नानमिष्यते ।
तूष्णीमेव हि शूद्रस्य सनमस्कारकं मतम्
॥”
इति योगियाज्ञवल्क्येन ॥
श्राद्धमधिकृत्य ।
“अयमेव विधिः प्रोक्तः शूद्राणां
मन्त्रवर्ज्जितः ।
अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते ॥”
इति वराहपुराणेन च ॥

| | | |
|---|---|---|
| न चैवास्मै व्रतं ब्रूयात् न च धर्म्मान् वदेद्बुधः ॥<br>इति कौर्म्मे उपविभागे १५ अध्यायः ॥ * ॥<br>शूद्राणां वेदाधिकारनिषेधो यथा, --<br>"त्रयोवर्णा महाभाग यज्ञसामान्यमागिनः ।<br>शूद्रा वेदपवित्रेभ्यो ब्राह्मणैस्तु बहिष्कृताः ॥"<br>इति वाराहे संसारचक्रनामाध्यायः ॥ * ॥<br>कलौ ते धन्याः यथा,<br>"कलिः साध्विति यत् प्रोक्तं शूद्रः साध्विति<br>योषितः । | | |

नमस्कारेणेति तूष्णीमिति
मन्त्रवर्ज्जितमिति
चाभिधानाद्वेतत्परं वैदिकपेरञ्च
शूद्राधिकारे
गोतमवचनम् । अनुमतोऽस्य
नमस्कारो मन्त्र
इति । सावित्रीं प्रणवं यजुर्लक्ष्मीं
स्त्रीशूद्रयो-
र्नेच्छन्ति । सावित्रीं प्रणवं
यजुर्लक्ष्मीं स्त्री शूद्रो
यदि जानीयात् स मृतोऽधो
गच्छतीति । इति
तिथ्यादितत्त्वम् ॥ * ॥ * ॥
प्रसङ्गादत्र कायस्थोत्-
पत्तिर्लिख्यते । पाद्मे सृष्टिखण्डे ।
"सृष्ट्यादौ सदसत्कर्म्मज्ञप्तये
प्राणिनां विधिः ।
क्षणं ध्याने स्थितस्यास्य
सर्व्वकायाद्विनिर्गतः ॥
दिव्यरूपः पुमान् हस्ते मसीपात्रञ्च
लेखनीम् ।
चित्रगुप्त इति ख्यातो
धर्म्मराजसमीपतः ॥
प्राणिनां सदसत्कर्म्मलेखाय स
निरूपितः ।
ब्रह्मणातीन्द्रीयज्ञानी
देव्याग्न्योर्यज्ञभुक् स वै ।
भोजनाच्च सदा तस्मादाहुतिर्दोयते
द्विजैः ॥
ब्रह्मकायोद्भवो यस्मात् कायस्थो
जातिरुच्यते ।
नानागोत्राच्च तद्वंश्याः कायस्था
भुवि सन्ति
वै ॥" * ॥
प्रकारान्तरम् यथा, स्कान्द
रेणुकामाहात्म्य ।
"एवं हत्वार्ज्जुनं रामः सन्धाय
निशितान्
शरान् ।
सदाचारपरा नित्यं रता हरिहरार्च्चने ।
देवविप्रपितृणाञ्च अतिथीनाञ्च पूजकाः ॥" * ॥
प्रकारान्तरम् ।
"माहिष्यवनितासूनुर्व्वैदेहात् यः प्रसूयते ।
स कायस्थ इति प्रोक्तस्तस्य धर्म्मो विधीयते ॥
क्षत्राद्वैश्यायां माहिष्या वैश्याद्विप्राजो वैदेहः ।
लिपीनां देशजातानां लेखनं स समाचरेत् ॥
गणकत्वं विचित्रञ्च बीजपाटी प्रभेदतः ।
अधमः शूद्रजातिभ्यः पञ्चसंस्कारवानसौ ॥
चातुर्व्वर्णस्य सेवां हि लिपिलेखनसाधनाम् ।
व्यवसायः शिल्पकर्म्म तज्जीवनमुदाहृतम् ॥
शिखां यज्ञोपवीतञ्च वस्त्रमारक्तमम्भसा ।
स्पर्शनं देवतानाञ्च कायस्थाद्यो विवर्ज्ज येत् ॥"
इति कमलाकरभट्टकृतशूद्रधर्म्मतत्त्वम् ॥

**शूद्रकृत्यं**, क्ली, (शूद्रस्य कृत्यम् ।) शूद्रकर्त्तव्य-
कर्म्म यथा, --
"प्रणम्य सच्चिदासन्दं शूद्राणां न्यायवर्त्तिनाम् ।
श्राद्धाहःकृत्ययोस्तत्त्वं वक्ति श्रीरघुनन्दनः ॥"
तच्च मत्स्यपुराणम् ।
"एवं शूद्रोऽपि सामान्यं वृद्धिश्राद्धञ्च सर्व्वदा ।
नमस्कारेण मन्त्रेण कुर्य्यादामान्नवद्बुधः ॥
दानः प्रधानः शूद्रः स्यादित्याह भगवान् प्रभुः ।
दानेन सर्व्व कामाप्तिरस्य संजायते यतः ॥"
ततो दानमेवापेक्षितंन तु भोजनमपि । सामान्यं
सर्व्वजनकर्त्तव्यत्वेनप्रतिमासकृष्णपक्षादिविहित
श्राद्धं आभ्यु दयिकश्राद्धञ्च एवं द्विजातिवत्
शूद्रोऽपि कुर्य्यादित्यन्वयः । नमस्कारेण मन्त्रेण
नतुस्वयं पठितमन्त्रेण आमान्नवदित्यनेनजलसेक
सिद्धान्नव्यावृत्तिः । स्विन्नमन्नमुदाहृतम् । इति
वशिष्ठे न स्विन्नस्यैवान्नत्वाभिधानात् ।
कन्दुपक्वस्ये
भृष्टत्वं नतु सिन्नत्वम् । हारीतेन स्वेदनभर्ज्ज-
नयोः पृथक्त्वमुक्तम् । यथा । आदीपनतापन-
स्वेदनभर्ज्जनपचनादिभिः प्रञ्चमीति अस्यार्थः ।
आदीपनं काष्ठानाम् तापनं तोयादेः । स्वेदनं
धान्यादेः । भर्ज्जनं यवादेः । पचनं तण्डुलादेः ।
इति पञ्चमी । सूना इति कल्पतरुः । अतएव
स्विन्नधान्येन व्यवह्रियते ।
"कन्दुपक्वानि तैलेन पायसं दधि शक्तवः ।
"अयमेव विधिः प्रोक्तः शूद्राणां
मन्त्रवर्ज्जितः ।
अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते
॥"
इति वराहपुराणात् ॥
अयं श्राद्धेतिकर्त्तव्यताको विधिः
शूद्रकर्त्तृकमन्त्र-
पाठरहितः । शूद्रस्य
मन्त्रपाठानधिकारसिद्धौ
यदमन्त्रस्येति पुनर्वचनं तत् स्त्रिया
ग्रहणार्थं
परिभाषार्थञ्च । ततश्च
तत्कर्म्मसम्बन्धिमन्त्रेण
विप्रस्तदीयकर्म्मकारयितृब्राह्मणो
गृह्यतो तेन
बाह्मणेन तत्र मन्त्रः पठनीय इति
तात्पर्य्यम् ।
तत्र यजुर्व्वेदिको मन्त्रः । तथा च
स्मृतिः ।
"आर्षक्रमेण सर्व्वत्र शद्रा वाजसनेयिनः
।
तस्माच्छूद्रः स्वयं कर्म्म यजुर्व्वेदीव
कारयेत् ॥"
आर्षक्रमेणमुन्यु क्तक्रमेण
यजुर्वेदिसम्बन्धिगृह्या-
दिना ।
"चतुर्णामपि वर्णानां यानि प्रोक्तानि
वेधसा ।
धर्म्मशास्त्राणि राजेन्द्र शृणु तानि
नृपोत्तम ॥
विशेषतस्तु शूद्राणां पावनानि
मनीषिभिः ।
अष्टादश पुराणानि चरितं राघवस्य च ॥
रामस्य कुरुशार्दुल धर्म्मकामार्थसिद्धये
।
तथोक्तं भारतं वीर पाराशर्य्येण धीमता
।
वेदार्थं सकलं योज्यं धर्म्मशास्त्राणि च
प्रभो ॥"

एक एव ययौ हन्तुं सर्व्वानिवातुरान्
नृपान् ॥
केचिद्गहनमाश्रित्य केचित्
पातालमाविशन्।
सगर्भा चन्द्रसेनस्य भार्य्या
दालभ्याश्रमं ययौ ॥
ततो रामः समायातो
दाल्भ्याश्रममनुत्तमम्।
पूजितो मुनिना
सद्योऽन्वर्थ्यपाद्यासनादिभिः ॥
ददौ मध्याह्नसमये तस्मै
भोजनमादरात्।
रामस्तु भावयामास हृदिस्थं
स्वमनोरथम्।
याचयामास रामाच्च कामं दाल्भ्यो
महा-
मुनिः ॥
ततो द्वौ परमप्रीतौ भोजनं
चक्रतुर्मदा ।
भोजनानन्तरं दाल्भ्यः पप्रच्छ
भार्गवं प्रति ।
यत्त्वया प्रार्थितं देव तत्त्वं
शंसितुमर्हसि ॥
राम उवाच ।
तवाश्रमे महाभाग सगर्भा स्त्री
समागता ।
चन्द्रसेनस्य राजर्षेः क्षत्रियस्य
महात्मनः ॥
तन्मे त्वं प्रार्थितं देहि हिंसेयं तां
महामुने ।
ततो दालभ्यः प्रत्युवाच ददामि तव
वाञ्छितम्
दाल्भ्य उवाच ।
स्त्रियं गर्भममुं बालं तन्मे त्वं
दातुमर्हसि ।
ततो रामोऽब्रवीद्दाल्भ्यं
यदर्थमहमागतः ॥
क्षत्रियान्तकरश्चाहं तत्त्वं
याचितवानसि ।
प्रार्थितश्च त्वया विप्र कायस्थो गर्भ
उत्तमः ॥

द्विजैरेतानि भोज्यानि शूद्रगेहकृतान्यपि ॥"
इति कुर्म्मपुराणवचनेन शूद्रकर्त्तृककन्दुपक्वादे
र्ब्राह्मणस्य भक्ष्यत्वेन श्राद्धे देयत्वं युक्तम् । कन्दु
पक्वं जलोपसेकं विना केवलपात्रेण यद्वह्निना
पक्वम् । पायसं पाकेन काठिन्यविकारापन्नं
दुग्धम् । परमान्नपरत्वे पुंलिङ्गनिर्द्देशापत्तेः ॥
तथा चामरः । परमान्नस्तु पायस इति ।
"दिने त्रयोदशे प्राप्ते पाकेन भोजयेद्द्विजान् ।
अयं विधिः प्रयोक्तव्यः शूद्राणां मन्त्रवर्ज्जितः ॥"
इति श्राद्धचिन्तामणिधृतवराहपुराणवचनमपि
कन्दुपक्वपरम् । एवन्तु एतद्वचनं सच्छू द्रपरं
मैथिलोक्तं हेयम् । एवं आममांसस्यापि श्राद्धे
देयत्वं सामगश्राद्धतत्त्वेऽनुसन्धेयम् । तत्र द्रव्य-
देवताप्रकाशार्थं ब्राह्मणेन मन्त्राः । पाठ्याः ।

इति भविष्यपुराणवचनात्तेषां
पौराणिकादि-
विधिर्योज्यो योजयित्रा । अत्र च श्राद्धे
वेद-
मन्त्रवर्ज्जं शूद्रस्येतिवचने
वेदेत्युपादानात् श्राद्धे
पुराणमन्त्रः शूद्रेण पठनीय इति
मैथिलोक्तम्
तन्न वराहपुराणे शूद्राणां मन्त्रवर्ज्जित
इत्यनेन
मन्त्रमात्रनिषेधात् मत्स्यपुराणेन
नमस्कारेण
मन्त्रेण इत्युपादानाच्च ।
पौराणिकस्यापि श्राद्धे
निषेधः प्रतीयते । एवं स्नानेऽपि ।
"ब्रह्मक्षत्त्रविशामेव मन्त्रवत्
स्नानमिष्यते ।
तूष्णीमेव हि शूद्रस्य सनमस्कारकं
मतम् ॥"
इत्यनेन नमस्कारविधानात् पञ्चयज्ञेऽपि
।
"शूद्रस्य द्विजशूश्रूषा तथा जीवनवान्
भवेत् ।
शिल्पैर्वा विविधैर्जीवेत् द्विजातिहितमा-
चरन् ॥
भार्य्यारतिः शुचिर्भृत्यभर्त्ता
श्राद्धक्रियारतः ।
नमस्कारेण मन्तेण पञ्चयज्ञान्न हापयेत्
॥"
इति नमस्कारमात्रविधानात् श्राद्धादिषु
पौरा-
णिकमन्त्रनिषेधः ततश्च
स्नानश्राद्धपञ्चयज्ञे तरत्र
शूद्रस्य पौराणिकमन्त्रपाठः प्रतीयते ।
अत्र ।
"षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले
॥"
इति मनुवचनात् । चूडा कार्य्या
यथाकुलं इति
याज्ञवल्क्यवचनाच्च संस्कारमात्रे
कुलघर्म्मानु-

तस्मात् कायस्थ इत्याख्या
भविष्यन्ति शिशोः
शुभाः ॥
पवं रामो
महाबाहुर्हित्वान्तर्गर्भमुत्तमम् ॥
निर्जगामाश्रमात्तस्मात्
क्षत्रियान्तकरः प्रभुः ।
कायस्थ एप उत्पन्नः क्षत्रिण्यां
क्षत्रियात्ततः ॥
रामाज्ञया स दाल्भ्येन
क्षत्त्रधर्म्माद्बहिस्कृतः ।
कायस्थधर्म्मोऽस्मै दत्तश्चित्रगुप्तस्य
यः स्मृतः ॥
तहोत्रजाश्च कायस्था
दाल्भ्यगोत्रास्ततोऽभवन्।
दाल्भ्योपदेशतस्ते वै धर्म्मिष्ठाः
सत्यवादिनः ॥

रोधेन कालान्तरस्य
नामविशेषोच्चारणस्याभि
धानाच्च शूद्रादीनां नामकरणे
वसुघोषादिक-
पद्धतियुक्तनामकरणस्यच
प्रतीतेर्व्वैदिककर्म्मणि
शूद्रानां पद्धतियुक्तनामाभिधानं क्रियते
इति ॥
शूद्रस्त्वाचमने दैवतीर्थेन ओष्ठे जलं
सकृत्
क्षिपेत् न पिबेत् । तथा च याज्ञवल्क्यः
।
“हृत्कण्ठतालुगाद्भिस्तु यथासंख्यं
द्बिजातयः ।
शुद्धेरन् स्त्री च शूद्रश्च सकृत्
स्पृष्टाभिरन्ततः ॥”
अन्ततो हृदयादिसमीपेन ओष्ठेन
उत्तरोत्तर-

मपकर्षात् । अतएव स्पृष्टाभिरित्युक्तं न तु भक्षिताभिरिति ।
"स्त्री शूद्रः शुध्यते नित्यं क्षालनाच्च करोष्ठयोः ॥"
इति ब्रह्मपुराणवचनञ्च । याज्ञवल्क्यः ।
"प्राग्वा ब्राह्म्येण तीर्थेन द्विजो नित्यमुपस्पृशेत् ।"
अत्र द्विजस्यैव आचमने ब्राह्म्यतीर्थोपादानात् स्त्रीशूद्रयोर्ण तेनाचमनम् । एवमेव मिताक्षरायां व्यक्तमुक्तं मरीचिना ।
"स्त्रियास्त्रैदशिकं तीर्थं शूद्रजातेस्तथैव च ।
सकृदाचमनाच्छुद्धिरेतयोरेव चोभयोः ॥"
इति ।
एतदनन्तरं इन्द्रियादिस्पर्शनन्तु ब्राह्मणवदेव ।
प्रमाणान्तरन्तु वाजसनेयिसामगश्राद्धाह्निकतत्त्वयोरनुसन्धेयम् । इति वन्द्यघटीयश्रीहरिहर भट्टाचार्य्यात्मजश्रीरघुनन्दनभट्टाचार्य्यविरचितं शूद्राह्निकाचारतत्त्वं समाप्तम् ॥

**शूद्रधर्म्मः**, पुं, (शूद्रस्य धर्म्मः ।) शूद्रस्य शास्त्रविहिताचारः । तस्य विवरणं शूद्रकृत्यशब्दे द्रष्टव्यम् ॥

**शूद्रप्रियः**, पुं, (शूद्राणां प्रियः ।) पलाण्डुः । इति राजनिर्घण्टः ॥ शूद्रस्य प्रियद्रव्ये, त्रि ॥

**शूद्रप्रेष्यः**, पुं, (शूद्रस्य प्रेष्यः ।) शूद्रस्यंपरिचारकब्राह्मणादिः । इति केचित् ॥

**शूद्रशासनं**, क्ली, (शूद्रस्य शासनम् ।) शूद्रस्याधिकारो लेख्यपत्रादिर्व्वा । यथा, --
"स्यादभिष्यन्दिरमणं शाखानगरमित्यपि ।
शासनं धर्म्मकीलः स्यान्मकुतिः शूद्रशासनम् ॥"
इति पुरवर्गे त्रिकाण्डशेषः ॥

**शूद्रा**, स्त्री, (शूद्रस्य जातिः । शूद्र + "शूद्रा

"विप्रात् मूर्द्धाभिषिक्तो हि क्षत्त्रियाण्यां विशः स्त्रियाम् ।
अम्बष्ठः शूद्र्यां निषादो जातः पारशवोऽपि वा ॥")

**शूनः**, त्रि, (टु ओ श्वि गतिवृद्व्योः + क्तः । "ओदितश्च ।" ८ । २ । ४५ । इति निष्ठातस्य नः ।
"वचिस्वपियजादीनां किति । ६ । १ । १५ ।
इति संप्रसारणम् ।) हलः । ६ । ४ । २ । इति दीर्घः । "श्वीदितो निष्ठायाम् ।" ७ । २ । १४ ।
इति इडागमश्च न ।) वर्द्धितः । इति व्याकरणम् ॥ (यथा, सुश्रुते । ५ । २ ।
"दुर्व्वर्णे हरिते शूने जायते चास्य लोचने ॥"
शून्ये, त्रि । यथा ऋग्वेदे । ७ । १ । ११ ।
मा शूने अग्ने निषदाम नृणाम् ॥"
"हे अग्ने ! शूने शून्ये पुत्रादिरहिते गृहे मा निषदाम न निवसाम ।" इति तद्भाष्ये सायणः)

**शूनवान्**, [त्] त्रि, (टु ओ श्वि गतिवृद्ध्योः + क्तवतु ।) वर्द्धितः । इति व्याकरणम् ॥

**शूना**, स्त्री, (श्वयन्ति मृत्युं गच्छन्ति कीटादयो यत्र । श्वि + क्तः । टाप् ।) प्राणिवधस्थानम् ।
इति हलायुधः ॥ पञ्चविधा शूना यथा, --
"पञ्च शूना गृहस्थस्य चुल्ली पेषण्युपस्करः ।

**शून्यमध्यः**, पुं, (शून्यं मध्यं यस्य ।) नलः ।) इति राजनिर्घण्टः ॥ शून्यगर्भवस्तुनि, त्रि ॥

**शून्यवादी**, [न्] पुं, (शून्यं वदतीति । वद् + णिनिः ।) सौगतः । इति जटाधरः ॥ नास्तिकश्च ॥

**शून्या**, स्त्री, नली । इति विश्वमेदिन्यौ ॥ महाकण्टकिनी । इति शब्दचन्द्रिका ॥ फणीमनसा इति ख्याता । बन्ध्या । इति राजनिर्घण्टः ॥

**शून्यालयः**, पुं, (शून्य आलयः ।) निर्ज्जनगृहम् ।
अत्र शयननिषेधो यथा । "मार्कण्डेयः ।
'शून्यालये श्मशाने च एकवृक्षे चतुष्पथे ।
महादेवगृहे चापि शर्करालोष्टपांशुषु ॥
धान्यगोविप्रदेवानां गुरूणाञ्च तथोपरि ।
न चापि भग्नशयने नाशुचौ नाशुचिः स्वयम् ॥
नार्द्रवासा न नग्नश्च नोत्तरापरमस्तकः ।
नाकाशे सर्व्वशून्ये च न च चैत्यद्रुमे तथा ॥'
न स्वपेदित्यर्थः ।" इत्याह्निकतत्त्वम् ॥

**शूपकारः**, पुं, (शूपं करोतीति । कृ + अण् ।) शूद्राणां पाचकः । यथा, --
"शूद्रपाकोपजीवी यः शूपकारः इति स्मृतः ।"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २७ अध्यायः ॥
अन्यत् दन्त्यसकारादौ द्रष्टव्यम् ॥

**शूर**, ङ य ई स्तन्भे । हिंसे । इति कविकल्पद्रुमः ॥
(दिवा०-आत्म०-स्तम्भे अक०-हिंसे सक०-सेट् ।
निष्ठायामनिट् ।) ङ य, शूर्य्यते । ई, शूर्णः ।
स्तम्भो जडीभावः । इति दुर्गादासः ॥

**शूर**, त् क ङ विक्रमे । इति कविकल्पद्रुमः ॥
(अदन्तचुरा०-आत्म०-अक०-सेट् ।) ङ, अशुशूरत् । विक्रमः उद्यमः । इति दुर्गादासः ॥

**शूरः**, पुं, (शूरयति विक्रामतीति । शूर + अच् ।

चामहत्पूर्व्वा जातिः ।” इति टाप् ।) शूद्र-
जातिस्त्री । इत्यमरः ॥ (यथा, मनुः । ३ ।
१३
शूद्रैव भार्य्या शूद्रस्य सा च स्वा च विशः
स्मृते ॥”)

**शूद्रान्न**, क्ली, (शूद्रस्य अन्नम् ।) शूद्रस्वामिकान्नम् ।

यथा, --
“शूदान्ने तु भुक्तेन उदरस्थेन यो मृतः ।
स व खरत्वमुष्ट्रत्वं शूद्रत्वञ्चाधिगच्छति ॥”
शूद्रान्नं शूद्रस्वामिकान्नम् । इति शुद्धितत्त्वम्
॥
अन्यत् शूद्रशब्दे द्रष्टव्यम् ॥

**शूद्राभार्य्यः**, पुं, शूद्रा भार्य्या यस्य सः । शूद्रास्वामी

इति व्याकरणम् ॥

**शूद्रार्त्ता**, स्त्री, (शूद्रेण आर्त्ता ।) प्रियङ्गुवृक्षः ।

इति शब्दचन्द्रिका ॥

**शूद्रावेदी**, [न्] पुं, (शूद्रां विन्दतीति । विद् +

णिनिः ।) शूद्रविवाहकर्त्ता । यथा, --
“शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्यच ।
शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः
॥”
इति दायभागः ॥

**शूद्री**, स्त्री, (शूद्रस्य स्त्री । “पुंयोगादाख्यायाम् ।”

४ । १ । ४८ । इति ङीष ।) शूद्रस्ये भार्य्या
।
इत्यमरः ॥ (यथा, याज्ञवल्क्य । १ । ९१ ।

कण्डनी चोदकुम्भश्च वध्यते याश्च
वाहयन् ॥”
पञ्चशूनापापनाशो यथा, मनुः ।
“अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु
तर्पणम् ।
होमो दैवी वलिर्भौतो
नृयज्ञोऽतिथिपूजनम् ॥
पञ्चैतान् यो महायज्ञान् न हापयति
शक्तितः ।
स गृहेऽपि वसन्नित्यं शूनादोषैर्न
लिप्यते ॥”
इति प्रायश्चित्ततत्त्वम् ॥
अधोजिह्विका । इति हारावली ॥

**शूनावान्**, [न्] पुं, (शूना + मतुप् । मस्य वः ।)

शूना विद्यते यस्य सः । कसाइ इति
भाषा ।
इति केचित् ॥

**शून्यं**, क्ली, आकाशम् । इति शब्दचन्द्रिका ॥

(यथा, भागवते । ६ । १३ । २० ।
“स वै त्वाष्ट्रवधो भूयानपि पापचयो
नृप ।
नीतस्तेनैव शून्याय नीहार इव
भानुना ॥”)
बिन्दु इति हेमचन्द्रः ॥

**शून्यः**, त्रि, अतिशयेन ऊनः । अभावविशिष्टः
।

असम्पूर्णः । खालि इति पारस्यभाषा
। तत्-
पर्य्यायः । वशिकः २ तुच्छः ३
रिक्तकः ४ ।
इत्यमरः ॥ शुन्यम् ५ । इति
तट्टीकायां भरतः ॥
“अविद्यजीवनं शून्यं दिक् शून्या
चेदबान्धवा ।
पुत्त्रहीनं गृहं शून्यं सर्व्वशून्या
दरिद्रता ॥”
इति चाणक्यम् ॥
(शून्यायै प्राणिहिंसायै हितः
रहस्यस्थानत्वात्

यद्वा, शवति वीर्य्यं प्राप्नोतीति । शू +
“शूसिचि-
मिञां दीर्घश्च ।” उणा० २ । २५ । इति क्रन्
दीर्घश्च ।) वोरः । इत्यमरः ॥ (यथा, महा-
भारते । १ । १०९ । ४
“शूराश्च कृतविद्याश्च सन्तश्च
सुखिनोऽभवन् ॥”)
यादवः । स तु श्रीकृष्णस्व पितामहः । इति
मेदिनी ॥ (यथा, भागवते । ९ । २४ । २६ ।
“शूरो विदूरथादासीत् भजमानस्तु तत्सुतः
॥”
सूर्य्यः । इति त्रिकाण्डशेषः ॥ सिंहः । शूकरः
॥
चित्रकः । सालः । लकुचः । मसूरः । इति
राजनिर्घण्टः

**शूरणः**, पुं, (शूर्य्यते इति । शूर हिंसे + ल्युः ।)

मूलविशेषः । ओल इति भाषा । तत्पर्य्यायः ।
अर्शोघ्नः २ कन्दः ३ । इत्यमरः ॥ सूरणः ४
।
इति तट्टीका ॥ ओलः ५ । इति जटाधरः ॥
ओल्लः ६ । इति मेदिनी ॥ कण्डूलः ७ कन्दी
८
सुकन्दी ९ स्थूलकन्दकः १० दुर्नामारिः
११
सुवृत्तः १२ वातारिः १३ कन्दशूरणः १४
तीव्रकण्ठः १५ कन्दार्ह्यः १६ कन्दवर्द्धनः
१७
बहुकन्दः १८ रुच्यकन्दः १९ शूरणकन्दः
२० ।
अस्य गुणाः । कटुत्वम् । रुच्यत्वम् ।
दीपनत्वम् ।
पाचनत्वम् ।
कृमिकफानिलश्वासकासवमनार्श

| | | | |
|---|---|---|---|
| | | शूना + यत् । यद्वा, शूने हितम् । श्वन् + “शुनः । सम्प्रसारणं वा च दीर्घत्वम् । ५ । १ । २ । इत्यस्य वार्त्तिकोक्त्या यत् सम्प्रसारणं दीर्घत्वञ्च ।) निर्ज्जनः । इति मेदिनी ॥ (यथा, भट्टिः । १८ । २९ “केन संविद्रते नान्यस्त्वतो वान्धववत्सलः । विरौमि शून्यं प्रोर्णौमि कथं मन्युसमुद्भवम् ॥”) | |

शूलगुल्मनाशित्वम् ।
अस्रदोषकारित्वञ्च । इति
राजनिर्घण्टः ॥ अपि च ।
"शूरणो दीपनो रुक्षः कषायः
कण्डुकृत् कटुः
विष्टम्भी विषदो रुच्यः कफार्शः
कृन्तनो लघुः ॥
विशेषादर्शसे पथ्यः
प्लीहगुल्मविनाशनः ।
सर्व्वेषां कन्दशाखानां शूरणः श्रेष्ठः
उच्यते ॥
दद्रूणां रक्तपित्तानां कुष्ठानां न हितो
हि सः ।
सन्धानयोगसंप्राप्तः शूरणो
गुणकृत्तमः ॥"
इति भावप्रकाशः ॥
अन्यच्च ।
"शूरणो दीपनो रुच्यः कफघ्नो
विशदो लघुः ।
विशेषादर्शसां पथ्यो ग्राम्यकन्दस्तु
दोषलः ॥"
इति राजवल्लभः ॥
श्योनाकवृक्षः । इति शब्दमाला ॥

**शूरणोद्भुजः**, पुं, हरिद्राङ्गपक्षी । इति शब्द-
चन्द्रिका ॥

**शूरदेवः**, पुं, चतुर्व्विंशतिभाव्यर्हदन्तर्गतार्ह-
द्विशेषः । इति हेमचन्द्रः ॥

**शूरसेनः**, पुं, (शूराः सेना यस्य ।) राजविशेषः
।
देशविशेषः । यथा, --
"शूरसेनो यदुपतिर्मथुरामावसन्
पुरीम् ।
माथुरान् शूरसेनांश्च विषयान् बुभुजे
पुरा ॥"
इति श्रीभागवते १० स्कन्धे १
अध्यायः ॥

**शूर्प**, क माने । इति कविकल्पद्रुमः ॥ (चुरा०-
मालाशब्दरत्नावल्यौ ॥ (यथा, रघुः । १२ ।
३८ ।
"रूपं शूर्पणखानाम्नः सदृशं प्रत्यपद्यत ॥")

**शूर्पणखी**, स्त्री, (शूर्पाकाराणि नखानि यस्याः ।
केवलयौगिकत्वे ङीष् ।) रावणभगिनी । इति
शब्दमालाशब्दरत्नावल्यौ ॥

**शूर्पपर्णी**, स्त्री, (शूर्पा इव पर्णानि यस्याः ।
ङीष् ।) शिम्बीविशेषः । इति शब्दचन्द्रिका ॥

**शूर्पवातः**, पुं, (शूर्पस्य वातः ।) शूर्पस्य वायुः ।
कुलार वातास इति भाषा । तत्पर्य्यायः ।
फुल्लफालः २ । इति त्रिकाण्डशेषः ॥

**शूर्पश्रुतिः**, पुं, (शूर्पौ इव श्रुती यस्य ।) हस्ती ।
इति हाराबली ॥

**शूर्पी**, स्त्री, (शूर्प + गौरादित्यात् ङीष्) क्षुद्र-
सूर्पः । इत्युणादिकोषः ॥ शूर्पणखा । इति
शब्दमाला ॥

**शूर्म्मः**, पुं, लौहप्रतिमा । इत्यमरटीकायां राय-
मुकुटः ॥

**शूर्म्मिः**, स्त्री, लौहप्रतिमा । इति भरतद्विरूप-
कोषः ॥

**शर्म्मिका**, स्त्री, लौहप्रतिमा । इति शब्द-
रत्नावली ॥

**शूर्म्मी**, स्त्री, लौहप्रतिमा । इति शब्द-
रत्नावली ॥

**शूल**, रुजायाम् । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।) दीर्घी । शूलति लोकं
रोगः ।
इति दुर्गादासः ॥

**शूलः**, पुं, क्ली, (शूलति लोकानिति । शूल रोगे +
अच् ।) रोगविशेषः । अस्त्रविशेषः । वर्शा
इति भाला इति च भाषा । इत्यमरः ॥ मृत्युः ।
केतनः । विष्कम्भादिसप्तविंशतियोगान्तर्गत-
कलायमुद्गाढकिकोरदूषात्
अत्यर्थरुक्षाध्यशनाभिघातात् ॥
कषायतिक्तातिविरूढजान्न-
विरुद्धवल्लूरकशूष्कशाकैः ।
विट्छुक्रमूत्रानिलसन्निरोधात्
शोकोपवासादतिहास्यभाषात् ॥
वायुः प्रवृद्धो जनयेद्धि शूलं
हृत्पृष्ठपार्श्वत्रिकवस्तिदेशे ।
जीर्णे प्रदोषे च घनागमे च
शीते च कोपं समुपैति गाढम् ॥
मुहर्मुहुश्चोपशमप्रकोपै-
र्व्विण्मुत्रसंस्तम्भनतोदभेदैः ।
सस्वेदनाभ्यञ्जनमर्द्दनाद्यैः
स्निग्धोष्णभोज्यैश्च समं प्रयाति ॥"
व्यायामो मल्लयुद्धादिः । पानं गुरुगरयादि ।
मैथनं स्त्रीसेवा । प्रजागरं रात्रौ । एषामति-
योगात् । कलायस्त्रिपुटः । आढकी तुवरी ।
कोरदूषकः कोद्रवः । अत्यर्थरूक्षद्रव्यसेवा ।
अध्यशनं भुक्तस्योपरि भोजनम् । अभिघातो
लोष्टादिभिः । कषायतिक्तरससेवा ।
विरूढजान्नं
विरूढमङ्करितमन्नकलायशाकादितज्जमन्नं
भक्ष्यम् । वल्लूरं शुष्कमांसम् । तस्य शूलस्य
देशमाह । हृदयादिषु ॥ * ॥ तस्य हृच्छूलस्य
पृथगपि लक्षणं पठति ।
"कफपित्तावरुद्धस्तु मारुतो रसवर्द्धितः ।
हृदिस्थः कुरुते शूलमुच्छ्वासस्यावरोधकम् ।
स हृच्छूल इति ख्यातो रसमारुतकोपजः
॥"
पार्श्वशूलस्यापि लक्षणमाह ।
कफं निगृह्य पवनः शूचीभिरिव निस्तुदन् ।
पार्श्वस्थः पार्श्वयोः शूल कुर्य्यादाध्मानसंयु-
तम् ।
तेनोच्छ्वसिति वक्त्रेण नरोऽन्नञ्च न काङ्क्षति ।
निद्राञ्च नाप्नु यादेष पार्श्वशूलः प्रकीर्त्तितः
॥"
वस्तिशूलस्यापि लक्षणमाह ।
"संरोधात् कुपितो वायुरस्थि संश्रित्थ
तिष्ठति ।

पर०-सक०-सेट् ।) षष्ठस्वरी । क, शूर्पयति
धान्यं गृही । इति दुर्गादासः ॥

**शूर्पः**, पुं, क्ली, (शूर्पयति धान्यादीनिति । शूर्प +
अच् । यद्वा शॄहिंसायाम् + “षुशॄभ्यां निच्च ।”
उणा० ३ । २६ । इति पः । चकारात् स च
कित् ।) तण्डुलादिस्फोटनार्थं वंशादिनिर्म्मित-
पात्रविशेषः । कुला इति भाषा । तत्पर्य्यायः ।
प्रस्फोटनम् २ । इत्यमरः ॥ सूर्पः ३ कुल्यः ४
प्रस्फोटनी ५ । इति शब्दरत्नावली ॥ (यथा,
“विसृज्य सूर्पवत् दोषान् गुणान् गृह्णन्ति
साधवः ॥”)
द्रोणद्वयपरिमाणम् । इति शब्दमाला ॥

**शूर्पकः**, पुं, (शूर्प इव प्रतिकृतिरस्य । “इवे प्रति-
कृतौ । इति कन् ।) असुरविशेषः । स च
कामदेवस्य शत्रुः । इति हेमचन्द्रः ॥

**शूर्पकर्णः**, पुं, (सूर्पाविव कर्णौ यस्य ।) हस्ती ।
इति त्रिकाण्डशेषः ॥
कुल्यतुल्यश्रुतियुक्ते, त्रि
(यथा, कथासरित्सागरे । ५५ । १६५ ।
“घटोदरः शूर्पकर्णो गणाध्यक्षो मदोत्-
कटः ॥”)

**शूर्पकारातिः**, पुं, (शूर्पकस्तन्नामासुरः अराति-
र्यस्य ।) कामदेवः । इति हलायुधः ॥

**शूर्पकारिः**, पुं, (शूर्पकः अरिर्यस्य ।) कामदेवः ।
नवमयोगः । इति मेदिनी ॥ तद्योगजात-
फलम् । यथा, --
“भीतो दरिद्रो दहिताप्रियश्च
शूलोद्भवः शूल इव स्वबन्धोः ।
विद्यामयाभ्यां रहितोऽथ शूली
करोति लोके न हितं कदाचित् ॥”
इति कोष्ठीप्रदीपः ॥
सुतीक्ष्णः । अयःकीलः । इति धरणिः ॥
(यथा, महाभारते । १ । १०७ । १२ ।
“ततस्ते शूल आरोप्य तं मुनिं रक्षिणस्तदा ।
प्रतिजग्मुर्महीपालं धनान्यादाय तान्यथ ॥”)
व्यथा । इति केचित् ॥ विक्रे तव्यम् । यथा, --
“अट्टशूला जनपदाः शिवशूलाश्चतुष्यथाः ।
प्रमदाः केशशूलिन्यो भविष्यन्ति कलौ युगे ॥”
इति महाभारते आदिपर्व्व ॥ * ॥
अथ शूलाधिकारः । तत्र शूलस्य सन्निकृष्टं
निदानमाह ।
“दोषैः पृथक् समस्तामद्वन्द्वैःशूलोऽष्टधाभवेत्
सर्व्वेष्वेतेषु शूलेषु प्रायेण पवनः प्रभुः ॥”
प्रभुः कर्त्ता ॥ * ॥ वातिकस्य विप्रकृष्टनिदान-
संप्राप्तिलक्षणमाह ।
“व्यायामपानादतिमैथूनाच्च
प्रजागराच्छीतजलादिपानात् ।
वस्तिवङ्क्षणनाडीषु ततः शूलस्तु जायते ॥”
विण्मु त्रवातसंरोधी वस्तिशूलः स उच्यते ॥”
प्रकृतमनुसरति । जीर्णे भुक्ते ॥ प्रदोषे रात्र्या-
गमे रात्रिभवशीतेन वातप्रकोपात् । घनागमे
वर्षासु मेघोदये च ॥ * ॥ तथैव पैत्तिकमाह ।
क्षारातितीक्ष्णोष्णविदाहितैल-
निष्पावपिण्याककूलत्थयूषैः ।
कट्वम्लसौवीरसुराविकारैः
क्रोधानलायासरविप्रतापैः ॥
ग्राम्यातियोगादशनैर्विदग्धैः
पित्तं प्रकुप्याशु करोति शूलम् ।
तृण्मोहदाहार्त्तिकरं हि नाभ्यां
सस्वे दमूर्च्छाभ्रमशोषयुक्तम् ॥
मध्यं दिने कुप्यति चार्द्धरात्रे
निदाघकाले जलदात्यये च ।
शीतेऽतिशीतैः समुपैति शान्तिं
सुस्वादुशीतैरपि भोजनैश्च ॥”

| | | |
|---|---|---|
| इति हलायुधः ॥<br><br>**शूर्पणखा**, स्त्री, (शूर्पा इव नखा यस्याः । “पूर्व-<br>पदात् संज्ञायामगः ।” ८ । ४ । ३ । इति<br>णचम् । “नखमुखात् संज्ञायाम् ।” ४ । १ । ५८ ।<br>इति न ङीप ।) रावणभगिनी । इति शब्द- | | |

निष्पावो राजमाषः। सौवीरं
सन्धानभेदः।
सुराविकारैः।
परिपक्वान्नसन्धानसमुत्पन्नासुरा
मता। तस्या विकारैः। रविप्रतापः
आतपः।
ग्राम्यातियोगो मैथुनाधिक्यम्।
विदाहीत्यु-
क्त्वापि अशनैर्व्विदग्धैरिति बोधयति
। अवि-
दाहिवस्तुनोऽपि पित्तवशाद्विदाहित्वं
भवति।
जलदात्यये शरदि। शीते शीतकाले।
शीतै-
र्व्वातादिभिः॥ * ॥ श्लैष्मिकमाह।
"आनुपवारिजकिलाटपयोविकारै-
र्म्मांसेक्षुपिष्टकृशरातिलशस्कुलीभिः।
अन्यै र्व्वलासजनकैरपि हेतुभिश्च
श्लेष्मा प्रकोपमुपगम्य करोति शूलम्
॥
हृल्लासकाससदनारुचिसंप्रसेकै-
रामाशये स्तिमितकोष्ठशिरोगुरुत्वैः।
भुक्तैः सदैव हि रुजं कुरुतेऽतिमात्रं
सूर्य्योदयेऽथ शिशिरे कुसुमागमे च॥"
आनूपं बहुजलदेशजं भक्ष्यम। वारिजं
शालू-
कादि। किलाटः।
"पक्वं दध्ना समं क्षीरं विज्ञेया
दधिकूर्च्चिका।
तक्रेण तक्रकूर्च्चो स्यात्तयोः पिण्डः
किला-
टकः॥"
पयोविकारः पायसादिः। पिष्टं
माषादि।
अन्यैः गुर्व्वादिभिः
स्तिमितमार्द्रचर्म्मावगुण्ठित-
मिव यत् कोष्ठं शिरश्च तयोर्गुरुत्वैः
सह।

हृत्पार्श्वकुक्षौ हृत्पार्श्वाभ्यां सहिते कुक्षौ।
कफसन्निविष्टं कफेनाविष्टम्॥ * ॥ तन्त्रान्तरोक्त-
मामशूलमाह।
"अतिमात्रं यदा भुक्तं पावके मृदुतां गते।
स्थिरीकृतन्तु तत् कोष्ठे वायुनावृत्य तिष्ठति॥
यदान्नं न गतं पाकं तच्छूलं कुरुते भृशम्।
मूर्च्छाध्मानविदाहांश्च हृत्क्लेशं सविलम्बिकम्
कम्पवातमतीसारं प्रमोहं जनयेदपि।
अविपाकोद्भवं शूलमेतमाहुर्म्मनीषिणः॥"
अविपाकोद्भवं आमोद्भवमित्यर्थः॥ * ॥ शूल-
स्योपद्रवानाह।
"वेदनातितृषा मूर्च्छा आनाही गौरवं ज्वरः।
भ्रमोऽरुचिः कृशत्वञ्च बलहानिस्तथैव च।
उपद्रवा दशैवैते यस्य शूलस्य नास्ति सः॥"
शलस्यैव भेदं परिणाममाह।
"स्वैर्निदानैः प्रकुपितो वायुः सन्निहितो यदा
कफपित्ते समावृत्य शूलकारी भवेद्बली॥
भुक्ते जीर्य्यति यच्छूलं तदेव परिणामजम्॥"
स्वैर्निदानैरित्यादिना निदानपूर्व्विका संप्राप्ति-
रुक्ता। भुक्ते जीर्य्यतीत्यादिना लक्षणमुक्तम्।
समावृत्य व्याप्य॥ * ॥ अथान्नद्रवनामानं शूल-
विशेषमाह।
"जीर्णे जीर्य्यत्यजीर्णे वा यच्छूलमुपजायते।
पथ्यापथ्यप्रयोगेण भोजनाभोजनेन वा।
न शमं याति नियमात् सोऽन्नद्रव उदाहृतः॥"
नेदं शूलमसाध्यं चिकित्साभिधानात्॥ * ॥ अथ
शूलस्य चिकित्सा।
"वमनं लङ्घनं स्वेदं पाचनं फलवर्त्तयः।
क्षारचूर्णानि गुटिकाः शस्यन्ते शूलशान्तये॥
विज्ञाय वातशूलन्तु स्नेहस्वेदैरुपाचरेत्।
शूलशल्याकुलस्य स्यात् स्वेद एव सुखावहः॥
मृत्तिकां सजलां पाकाद्घनीभूतां पटे क्षिपेत्।
कृत्वा तत्पोटलीं शूली तया स्वेदं विधापयेत्॥
इति मृत्तिकास्वेदः॥
"कार्पासास्थिकुलत्थिकातिलयवैरेरण्डमूलातसी-
वर्षाभूषणबीजकाञ्जिकयुतैरेकीकृतैर्व्वा पृथक्
स्वेदः स्यादथ कूर्परोदरशिरःस्फिग्जानुपादा-
ङ्गली-
गुल्फस्कन्धकटीरुजो विजयते निःशेषवाता-

विरेचनं पित्तहरं प्रशस्तं
रमाश्च शस्ताः शशलावकानाम्। * ।
सगुडां घृतसंयुक्तां भक्षयेद्वा हरीतकीम्
।
प्रलिह्याच्छूलशान्त्यर्थं धात्रीचूर्णं
समाक्षिकम्॥
शाल्यन्नं जाङ्गलं मांसमरिष्टं कटुकं
रसम्॥
मधूनि जीर्णगोधूमं कफशूले प्रयोजयेत्
॥"
अरिष्टं भेषजक्वाथसिद्धं मद्यम्॥ * ॥
"लवणत्रयसंयुक्तं पञ्चकोलं सरामठम्।
सुखोष्णेनाम्बुना पीतं कफशूलं
प्रणाशयेत्। *
आमशूले क्रिया कार्य्या
कफशूलप्रणाशिनी।
सेव्यमामहरं सर्व्वं मद्यमग्निविवर्द्धनम्॥
* ॥
तीक्ष्णायश्चूर्णसंयुक्तं
त्रिफलाचूर्णमुत्तमम्।
प्रयोज्यं मधुसर्पिभ्यां
सर्व्वशूलनिवारणम्॥"
तीक्ष्णा राजिका॥ * ॥
"दारुहैमवतीकुष्ठशताहाहिङ्गुसैन्धवैः।
अम्लपिष्टैः सुखोष्णैश्च
लिम्पेच्छूलयुतोदरम्॥
मूलं वैल्वं तथैरण्डं चित्रकं
विश्वभेषजम्।
हिङ्गु सैन्धवसंयुक्तं सद्यः
शूलनिवारणम्॥"
वातरोगान्तर्गताध्मानचिकित्सायां
लिखितो
नाराचनामा रसोऽन्यच्च विरेचनं शूले
हितम्॥
"कुष्माण्ड तनु कृत्वा तु छित्त्वा घर्म्मे
विशोषयेत्
स्थाल्यां निक्षिप्य तत् सर्व्वं पिधानेन
विधाप्य
च॥

सूर्य्योदय इति
त्रिधाविभक्तदिवसप्रथमभाग-
स्योपलक्षणम् । शिशिरे तत्र
कफस्यातिसञ्च-
यात् । कुसुमागमे वसन्ते ॥ * ॥
द्वन्द्वजमाह ।
“द्विदोषलक्षणैरेतैर्व्विद्याच्छूलं
द्विदोषजम् ॥”
त्रिदोषजमाह ।
“सर्व्वेषु देशेषु समस्तलिङ्गं
विद्याद्भिषक् सर्व्वभवं हि शूलम् ।
सुकष्टमेनं विषवज्रतुल्यं
विवर्ज्जनीयञ्च वदन्ति तज्ज्ञाः ॥”
सर्व्वेषु देशेषु
हृत्पृष्ठपार्श्वत्रिकवस्तिनाभ्यामाश-
येषु । सर्व्व भवं त्रिदोषजं शूलं
विन्द्यात् । सुकष्ट-
साध्यं विषवज्रतुल्यं मारणात्मकत्वात्
॥ * ॥
आमजमाह ।
“आटोपहृल्लासवमीगुरुत्वं
स्तैमित्यमानाहकफप्रसेकैः ।
कफस्य लिङ्गेन समानलिङ्ग-
मामोद्भवं शूलमुदाहरन्ति ॥
कफस्य कफशूलस्य । आमोद्भवं
आमादुद्भवो
यस्य तं शूलम् । अत्रामाच्छूले जाते
पश्चा-
द्दोषसम्बन्धः । अतएव
शूलस्याष्टत्वमुक्तम् । स
च प्रथममामाशये भवतिपश्चात्
सम्बन्धिदोषै-
र्वस्तिनाभिहृत्पार्श्वकुक्षिषु भवति
यथा दोष-
सम्बन्धः ॥ * ॥ आमशूलस्य
दोषविशेषेण देश-
विशेषमाह ।
“वातात्मकं वस्तिगतं वदन्ति
पित्तात्मकं चापि वदन्ति नाभ्याम् ।
हृत्पार्श्वकुक्षौ कफसन्निविष्टं
सर्वेषु देशेषु च सन्निपातात् ॥”

र्त्तिहा ॥”
इति कार्पासास्थ्यादिस्वेदः ॥
“तिलैश्च गुटिकां कृत्वा भ्रामयेज्जठरोपरि ।
शूलं सुदुस्तरं तेन शान्तिं गच्छति सत्वरम् ॥
नाभिलेपाज्जयेच्छूलं मदनं काञ्जिकान्वितम् ॥
मदनं मयनफलम् ॥ * ॥
“विश्वमेरण्डमूलन्तु क्वाथं कृत्वा शृतं पिबेत् ।
हिङ्गुसौवर्च्चलोपेतं सद्यः शूलनिवारणम् ॥ * ॥
गुडशालियवाः क्षीरं सर्पिःपानं विरेचनम् ।
जाङ्गलानि च मांसानि भेषजं पित्तशूलिनाम् ॥”
मणीरजतताम्राणां भाजनानि गुरूणि च ।
तोयेनपरिपूर्णानि शूलस्योपरि धारयेत् ॥ * ॥

चुल्ल्यां निवेश्य वह्निञ्च ज्वालयेत्
कुशलो जनः ।
यथा तत्र भवेद्भस्म किन्त्वङ्गारो दृढो
भवेत् ॥
तदा निर्व्वापयेच्छीतं चूर्णितं चूर्णयेत्तु
तम् ।
माषद्वयमितं तावच्छटीचूर्णञ्च मिश्रितम्
॥
जलेन भक्षयेन्नित्यं महाशूलाकुलो नरः
।
असाध्यमपि यच्छूलं तदप्ये तेन
शास्यति ॥”
इति कुष्माण्डक्षारः ॥ * ॥
अथ परिणामशूलस्य चिकित्स ।
“लङ्घनं प्रथमं कुर्य्याद्वमनं सविरेचनम्
।
पक्तिशूलोपशान्त्यर्थं तत्र
वान्तेर्विधिर्यथा ॥
पीत्वा तु
क्षीरमाकण्ठमदनक्वाथसंयुतम् ।
कान्तारकस्य पौण्ड्रस्य कोशकारस्य
वा रसम्
कषायं वाथ निम्बस्य कटुतुम्बीरसं
वचाम् ।
यथाविधि वमेद्धीमान् पक्तिशूलार्द्दितो
जनः ॥
त्रिवृता च तथा दन्त्यास्तैलेनैरण्डजेन
वा ।
दत्तं विरेचनं सद्यः पक्तिशूलं निवारयेत्
॥
विडङ्गं तण्डुलं व्योषं
त्रिवृद्दन्तिसचिक्रकम् ।
सर्व्वाण्येतानि संगृह्य सूक्ष्मचूर्णानि
कारयेत् ॥
गुडेन मोदकान् कृत्वा खादेदुष्णेन
वारिणा ।
जयेत्त्रिदोषजं शूलं परिणामसमुद्भवम्
॥”
इति विडङ्गादि मोदकः ॥ * ॥
“नागरतिलगुडकल्कं पयसा संपिष्य
यः पुमान्

|  |  |  |
| --- | --- | --- |
|  |  | लिह्यात् ।<br>उग्रं परिणतिशूलं नश्येत्तस्य त्रिरात्रेण ।<br>पीतं शम्बूकजं भस्म जलेनोष्णेन तत्क्षणात् ।<br>पक्तिजं नाशयत्येव शूलं विष्णुरिवासुरान् ॥<br>लोहपथ्याकणाशुण्ठीचूर्णंसमधुसर्पिषा ।<br>विलिहन् विनिहन्त्येक शूलं हि परिणामजम् ॥"<br>इति पथ्यादिलोहम् ॥ * ॥ |

"नारिकेलं सतोयश्च लवणेन सुपूरितम् ।
मृदाववेष्टितं शुष्कं पक्वं गोमयवह्निना ॥
पिप्पल्या भक्षितं हन्ति शूलं हि परिणामजम् ।
वातिकं पैत्तिकञ्चापि श्लेष्मिकं सान्निपातिकम् ॥"
इति नारिकेलक्षारः ॥ * ॥
अथान्नद्रवस्य चिकित्सा ।
"अन्नद्रावाख्ये शूले तु न तावत् स्वास्थ्यमश्नुते
यावत् कटुकपीताम्लमन्नं न च्छर्दयेद्द्रवम् ॥
जातमात्रे जरत्पित्ते शूलमाशु विनाशयेत् ।
पित्तार्त्तं वमनं कृत्वा कफार्त्तञ्च विरेचनम् ॥
अन्नद्रवे च तत् कार्य्यं जरत्पित्ते यदीरितम् ।
जरत्पित्तेऽपि तत् पथ्यं प्रोक्तमन्नद्रवे तु यत् ॥
आमपक्वाशये शुद्धे गच्छेदन्नद्रवः शमम् ।
माषेण्डरीं सलवणां सुस्विन्नां तैलपाचिताम् ॥
तादृशों सर्पिषा खादेदन्नद्रवनिपीडितः ।
धात्रीफलभवं चूर्णमयश्चूर्णसमन्वितम् ।
यष्टीचूर्णेन वा युक्तं लिह्यात् क्षौद्रेण तद्गदे ।
श्यामकतण्डुलैः सिद्धं सिद्धं कोद्रवतण्डुलैः ॥
प्रियङ्गुतण्डुलैः सिद्धं पायसं मसितं हितम् ॥"
प्रियङ्गः कङ्गविशेषः ।
"गौडिकं शौरणं कन्दं कुष्माण्डमपि भक्षयेत् ।
इति शूलामपरिणामशूलान्नद्रवजरत्पित्ताधिकारः । इति भावप्रकाशः ॥ * ॥ अपि च ।
"अर्कपत्रं गृहीत्वा तु मन्दाग्नौ तापयेच्छनैः ।
निष्पीड्य पूरयेत् कर्णौ कर्णशूलं विनश्यति ॥ * ॥
साञ्जनञ्च घृतं क्षौद्रं लवणं ताम्रभाजने ।
घृष्टं पयःसमायुक्तं चक्षुःशूलहरं परम् ॥"
साञ्जनञ्च इत्यत्र ताम्बूलञ्च इति वा पाठः ॥
"चूर्णमामलकस्यैव पीतं शूलहरं परम् ॥"
इति गारुडे १८३ । १९५ । १९४ अध्यायाः ॥
किञ्च ।
"सामद्रं सैन्धवं क्षारो राजिका लवण विडम् ।
कटु लोहरजः किट्टं त्रिवृत् शूरणकं समम् ॥
दधिगोमूत्रपयसा मन्दपावकपाचितम् ।
एतच्चाग्निबलं चर्णं पिबेदुष्णेन वारिणा ॥
जीर्णे जीर्णे च भुञ्जीत माषादिघृतभोजनम् ।
नाभिशूलं मूत्रशूलं गुल्मप्लीहभवञ्च यत् ॥
सर्वं शूलहरं चूर्णं जठरानलदीपनम् ।
परिणामसमुत्थस्य शूलस्य च हितं परम् ॥"
इति गारुडे १९९ अध्यायः ॥
तस्य उपपापजत्वं यथा, --
"जलोदरयकृत्प्लीहशूलरोगव्रणानि च ।
श्वासाजीर्णज्वरच्छर्द्दिर्भ्रममोहगलग्रहाः ।
रक्तार्वुदविसर्पाद्या उपपापोद्भवा गदाः ॥"
इति शातातपीयकर्म्मविपाकः ॥

**शूलकः**, पुं, (शूल इव दुर्व्विनीतत्वात् । कन् ।) दुर्वृत्तघोटकः । इति हलायुधः ॥ अत्र शूकल इत्यपि पाठो दृश्यते । यथा, --
"विनीतस्तु साधुवाही दुर्विनीतस्तु शूलकः ।"
इति हेमचन्द्रः ॥

**शूलग्रन्थिः**, स्त्री, मालादूर्व्वा । इति राजनिर्घण्टः

**शूलघातनं**, क्ली, (शूलं तद्रोगं घातयतीति । हन + णिच् + ल्युः ।) मण्डूरम् । इति शब्दचन्द्रिका ॥

**शूलघ्नः**, पुं, (शूलं हन्तीति । हन + टक् । तुम्बुरुवृक्षः । इति रत्नमाला ॥ शूलघातके, त्रि, ॥ (यथा, सुश्रुते । १ । ४५ ।

**शूलधृक्**, [ज्] स्त्री, (शूलं धर्ज्जतीति । धृज् + क्विप् ।) दुर्गा । इति त्रिकाण्डशेषः ॥ महादेवे, पुं ॥ (शूलधृत्-इत्येव क्वचित पाठः ॥)

**शूलनाशनं**, क्ली, (शूलं नाशयतीति । नर्श + णिच् + ल्युः ।) सौवर्च्चललवणम् । इति हेमचन्द्रः ॥

**शूलपत्री**, स्त्री, (शूलवत् पत्रमस्याः । ङीष् ।) शूलीतृणम् । इति राजनिर्घण्टः ॥

**शूलशत्रुः**, पुं, (शूलस्य शत्रुः । एरण्डबृक्षः । इति शब्दचन्द्रिका ॥

**शूलहन्त्री**, स्त्री, (शूलं हन्तीति । हन + तृच् । ङीप् ।) यवानी । इति राजनिर्घण्टः ॥

**शूलहृत्**, पुं, (शूलं हरतीति । हृ + क्विप् ।) हिङ्गुः । इति त्रिकाण्डशेषः ॥

**शूला**, स्त्री, दुष्टवधार्थकीलकः । वेश्या । इति विश्वः ॥

**शूलाकृतं**, त्रि, (शूलेन कृतम् । "शूलात् पाके ।" ५ । ४ । ६५ । इति डाच् ।) लौहादिशलाकया विद्धं पक्वमांसम् । कावाव् इति पारस्यभाषा । तत्पर्य्यायः । भटित्रन् २ शूल्यम् ३ । इत्यमरः ॥ वासितारम् ४ । इति जटाधरः ॥ शूलिकम् ५ इति शब्दचन्द्रिका ॥ अस्य गुणाः शूल्यशब्दे द्रष्टव्याः ॥

**शूलिकं**, क्ली, (शूलः निमित्तत्वे नास्त्यस्येति । शूल + ठन् ।) शूलाकृतम् । इति शब्दचन्द्रिका ॥

कलाययवशक्तून् ता शकून् वा
लाजसंयुतान् ॥”
गौडिकं गुडेन संस्कृतं पक्वान्नम् ॥ * ॥
“कुलत्थशक्तू नथवा दध्नाद्याद्दधिकं तथा ॥
चणकानामथो शक्तून् कोद्रवस्यौदनं तथा ॥”
दधिकं दध्ना संस्कृतं भक्तम् । महेरि इति
लोके ॥ * ॥
“गोधूममण्डकं तत्र सर्पिषा गुडसंयुतम् ॥
ससितं शीतदुग्धेन मृदितं क्वथितं हितम् ॥
अन्नद्रवो दुश्चिकित्स्यो दुर्व्विज्ञे यो महागदः ।
तस्मात्तस्य प्रशमने परं यत्नं समाचरेत् ॥
अन्नद्रवे जरत्पित्ते वह्निर्मन्दो भवेद्यतः ।
तस्मादत्रान्नपानानि मात्राहीनानि कारयेत् ॥
कलाययवगोधूमाः श्यामाकाः कोरदूषकाः ।
राजमाषाश्च माषाश्च कुलत्थाः कङ्गुशालयः ॥
दधिलुप्तरसं क्षीरं सर्पिर्गव्यं समाहिषम् ।
वास्तूकं कारवल्ली च कर्कोटकफलानि च ॥
वर्हिणो हरिणा मत्स्या रोहिताद्याः कपि-
ञ्जलाः ।
एतस्मिन्नामये शस्ता मता मुनिचिकित्सकैः ॥”
दधिलुप्तरसं दध्ना लुप्तः कृतो रसो यस्य तत् ।
क्षोरं दधियुक्तं क्षौरमित्यर्थः ॥ * ॥
“गुडामलकपथ्यानां चूर्णं प्रत्येकशः पलम् ।
त्रिपलं लोहकिट्टस्य तत् सर्व्वं मधुसर्पिषा ॥
“सर्पिर्मण्डस्तु मधुरः सरो योनिश्रोत्राक्षि-
शिरसां शूलघ्नः इति ॥”)

**शूलद्विट्**, [ष्] पुं, (शूलस्य द्विट् शत्रुः ।) हिङ्गुः ।
इति रत्नमाला ॥

**शूलधन्वा**, [न्] पुं, (शूलो धनुर्यस्य ।) शिवः ।
इति शब्दरत्नावली ॥

**शूलधरः**, पुं, (शूलस्य धरः ।) शिवः । इति शब्द-
रत्नावली ॥

**शूलधरा**, स्त्री, (शूलस्य धरा ।) दुर्गा । इति
शब्दरत्नावली ॥

**शूलधारिणी**, स्त्री, (शूलं धरति या । धृ + णिनिः ।)
दुर्गा । यथा, --
“सती साध्वी भवप्रीता भवानी भवमोचनी ।
आर्य्या दुर्गा जया आद्या त्रिनेत्रा शूल-
धारिणी ॥”
इति तन्त्रसारधृतशतच्छ्रतनामस्तोत्रम् ॥

**शूलिकः**, पुं, शशकः । इति हेमचन्द्रः ॥ (शूलः
अस्यास्तीति । ठन् ।) शूलयुक्ते, त्रि, ॥

**शूलिनः**, पुं, भाण्डीरवृक्षः । इति शब्दमाला ॥

**शूलिनी**, स्त्री, (शूलं अस्या अस्तीति । शूल +
इनि । ङीप् ।) दुर्गा । यथा, --
“खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ॥
शङ्खिनी चापिनी बाणभुषुण्डीपरिघायुधा ॥”
इति देवीमाहात्म्यम् ॥

**शूली**, [न्] पुं, शूलमस्यास्तीति । शूल + इनिः ।
शिवः इत्यमरः ॥ (यथा, महाभारते । ३ ।
८४ । ८४ ।
“ततो गृध्रवटं गच्छेत् स्वानं देवस्य शूलिनः ॥”
शशः । इति भावप्रकाशः ॥
शूलास्त्रधारके
शूलरोगयुक्तेच त्रि । यथा, --
“बर्जयेद्द्विदलं शूली कुष्ठी मांसं क्षयी स्त्रियम् ।
इति वैद्यकम् ॥
तस्य कारणं प्रायश्चित्तञ्च यथा, --
“शूली परोपतापेन जायते तत्प्रमार्ज्जकः ।
सोऽन्नदानं प्रकुर्व्वीत तथा रुद्रं जपेन्नरः ॥”
इति शातातपीयकर्म्मविपाकः ॥

**शूली**, स्त्री, तृणभेदः । तत्पर्य्यायः । शूलपत्री २
अशाखा ३ धुम्रमूलिका ४ जलाश्रया ५ मधु-
लता ६ पिच्छिला ७ महिषीप्रिया ८ । अस्या
गुणाः । पिच्छिलत्वम् । कोष्णत्वम् । गुरुत्वम् ।
गौल्यत्वम् । बलप्रदत्वम् ।
पित्तदाहहरत्वम् ।
रुच्यत्वम् । दुग्धवृद्धिकारित्वञ्च । इति राज-

| | | |
|---|---|---|
| समालोड्य समश्नीयादक्षमात्रं प्रमाणतः ।<br>आदिमध्यावसानेषु भोजनस्य निहन्ति तत् ॥<br>अन्नद्रवं जरत्पित्तमम्लपित्तं सुदारुणम् ।<br>परिणामसमुत्थञ्च शूलं संवत्सरोत्थितम् ॥”<br>इति गुडमण्डूरम् ॥ * ॥<br>“व्यायामं मैथुनं मद्यं लवणं कटुकं रसम् ।<br>वेगरोधं शुचं क्रोधं विदलं शूलवान् त्यजेत् ॥” | | निर्घण्टः ॥ |

**शूलोत्खा**, स्त्री, सोमराजी । इति शब्दचन्द्रिका ॥

**शूल्यं**, त्रि (शूलेन संस्कृतम् । शूल + “शूलोत्खात्

यत् ।” ४ । २ । १७ । इति यत्)
शूलाकृतम् ।
इत्यमरः ॥ कावाव् इति
पारस्यभाषा । तत्-
पाकप्रकारो यथा, --
“कालखण्डादिमांसानिग्रथितानि
शलाकया ।
घृतं सलवणं दत्त्वा निर्धूमे दहने
पचेत् ।
तत्त शूल्यमिति प्रोक्तं
पाककर्म्मविचक्षणैः ॥”
अस्य गुणाः ।
“शूल्यं बल्यं सुधातुल्यं रुच्यं
वह्निकरं लघु ।
कफवातहरं वृष्यं किञ्चित् पित्तहरं
हि तत् ॥”
इति भावप्रकाशः ॥
अस्य पर्य्यायः शूलाकृतशब्दे
द्रष्टव्यः ॥

**शूल्यपाकः**, पुं, (शूल्येन पाको यस्य ।) शूलविद्धा-

ङ्गारपक्वमांसादि । इति
पाकराजेश्वरः ॥ कावाव
इति पारस्यभाषा ॥

**शूय**, प्रसवे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

मक०-सेट् ।) शूयति । इति
दुर्गादासः ॥

**शृकालः**, पुं, शृगालः । इति शब्दचन्द्रिका ॥

**शृगालः**, पुं, (सृजति मायामिति । सृज + कालन्

पृषोदरादित्वात् साधुः ।) पशुविशेषः
। शेयाल्
इति भाषा । तत्पर्य्यायः । शिवा २
भूरिमायः ३

“अथ घोण्टा ३ गोपघोण्टा ४ वदरं ५
वादि-
रञ्च ६ तत् ।
वदरीसदृशे सूक्ष्मफले वृक्षे चतुष्टयम् ॥”
इति शब्दरत्नावली ॥

**शृगालघण्टी**, स्त्री, कोकिलाक्षः । इति राज-

निर्घण्टः ॥

**शृगालजम्बुः**, स्त्री, (शृगालस्य जम्बुरिव ।)

गोडुम्बः । घोण्टाफलम् । इति मेदिनी
॥

**शृगालविन्ना**, स्त्री, (शृगालैर्विन्ना ।) पृश्निपर्णी ।

इति राजनिर्घण्टः ॥

**शृगालिका**, स्त्री, शृगालपत्नी । त्रासात् पला-

यनम् । इति मेदिनी ॥ भूमिकुष्माण्डः
इति ।
जटाधरः ॥ क्षुद्रशृगालः । खेँक्शेयाली ।
इति
भाषा । तत्पर्य्यायः । लोमालिका २
दीप्त-
जिह्वा ३ किखिः ५ उल्कामुखी ५ ।
इति
त्रिकाण्डशेषः ॥

**शृगाली**, स्त्री, विद्रवः । पलायनमिति यावत् ।

इति त्रिकाण्डशेषः । कोकिलाक्षः ।
विदारी ।
इति राजनिर्घण्डः ॥ शृगालिका च ॥

**शृङ्खलः**, त्रि, पुंसां कट्याभरणम् । गोट् इति

भाषा ॥ हस्त्यादीनां
लौहमयपादबन्धोपकरणम्
आँदु इति दाँडुका इति च भाषा ।
तत्पर्य्यायः ।
उन्दुकः २ निगडः ३ । इत्यमरः ॥
शृङ्खला ४ ।
इति तट्टीकायां भरतः ॥ (यथा, रघुः ।
५ । ७२ ।

चिह्नम् । क्रीडाजलयन्त्रम् । (यथा रघुः १६ । ७० ।
“वर्णोदकैः काञ्चनशृङ्गमुक्तै-
स्तमायताक्ष्यः प्रणयादसिञ्चन् ॥”)
विषाणम् । (यथा, रघुः । १६ । १२ ।
“वन्यैरिदानीं महिषैस्तदम्भः
शृङ्गाहतं क्रोशति दीर्घिकाणाम् ॥”)
उत्कर्षः । इति मेदिनी ॥ (यथा, रघुः । ९ । ६२ ।
“शृङ्गं स दृप्तविनयाधिकृतः परेषा
मत्युच्छ्रितं न ममृषे न तु दीर्घमायुः ॥”
ऊद्र्ध्वम् । (यथा, कुमारे । ७ । ४० ।
“विमानशृङ्गाण्यवगाहमानः
शशंस देवावसरं सुरेभ्यः ॥”)
तीक्ष्णम् । पङ्कजम् । इति शब्दरत्नावली ॥
(कोटिः । यथा, कुमारे । २ । ६४ ।
“अथ सललितयोषिद् भ्रूलताचारुशृङ्गं
रतिवलयपदाङ्के चापमासज्य कण्ठे ॥”
स्तनम् । यथा, भागवते । ५ । २ । ११ ।
“किं सम्भृतं रुचिरयोर्द्विज शृङ्गयोस्ते
मध्ये कृशो वहसि तत्र दृशिः श्रिता मे ॥”
“स्तनावालक्ष्याह । शृङ्गयोः स्तनयोः किं
सम्भृतं किं पूर्णमस्ति मनोहरं किञ्चिदस्ति इत्ये
तावत् जानामि ।” इति तट्टीकायां स्वामी ॥ * ॥)
महिषादिशृङ्गनिर्म्मितवाद्यविशेषः । शिङ्ग
इति भाषा । यथा, --
“क्वचिद्वनाशाय मनो दधद्व्रजात्
प्रातः समुत्थाय वयस्यवत्सपान् ।
प्रबोधयन् शृङ्गरवेण चारुणा
विनिर्गतो वत्सपुरःसरो हरिः ॥”
इति श्रीभागवते १० स्कन्धे १२ अध्यायः ॥
कामोद्रेकः । यथा, साहित्यदर्पणे । ३ । २१० ।
“शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः ।
उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते ॥” * ॥
गोशृङ्गभङ्गप्रायश्चित्तं यथा । भवदेवभट्टधृतं
यमवचनम् ।
“अस्थिभङ्गं गवां कृत्वा लाङ्गुलच्छेदनं तथा ।
पाटने कर्णशृङ्गाणां मासार्द्धन्तु यवान् पिबेत् ॥”
अङ्गिराः ।
“शृङ्गभङ्गेऽस्थिभङ्गे च चर्म्मनिर्म्मोचनेऽपि वा ।
दशरात्रं चरेद्व्रज्रं सुस्था सा यदि गौर्भवेत् ॥”

गोमायुः ४ मृगधूर्त्तकः ५ वञ्चकः ६
क्रोष्टुः ७
फेरुः ८ फेरवः ९ जम्बुकः १० ।
इत्यमरः ॥
सृगालः ११ जम्बूकः १२ मूत्रमत्तः
१३ कुरवः १४
घोरबासनः १५ वनश्वा १६ फेरः
१७ श्वधूर्त्तः
१८ । इति शब्दरत्नावली ॥
शालावृकः १९
गोमी २० कटस्वादकः २१ । इति
जटाधरः ॥
शिवालुः २२ फेरण्डः २३
व्याघ्रनायकः २४ ।
इति राजनिर्घण्टः ॥ दैत्यभेदः ।
इति मेदिनी ॥
वासुदेवः । निष्ठुरः । खलः । इति
सारस्वता-
भिधानम् ॥ भीरुः ।
इत्यनेकार्थकोषः ॥ * ॥
शृगालशब्दादीनां शुभाशुभसूचकत्वं
यथा, --
"अनर्थहेतुर्गतिशब्दहीनः
सदा शृगालः खलु दृष्टमात्रः ।
शस्ता हि वामा गतिरस्य शस्तो
वामो निनादो निशि यो बहूनाम् ॥
हुवा हुवेति प्रथमं ततस्तु
टटेति दीघः सुतरां रवो यः ।
स्याज्जम्बुकानां स नतः प्रशस्त-
स्तदन्यरूपः कथितः प्रदीप्तः ॥
शृगालशब्दो भवने निशाया-
मुच्चाटनार्थं दिशि पश्चिमायाम् ।
प्राच्यां भयायोत्तरतः शिवाय
भवत्यवाच्यां भयनाशनाय ॥"
इति वसन्तराजशाकुनम् ॥

**शृगालकण्टकः**, पुं, (शृगालरोधकः कण्टको
यस्व ।) क्षुपविशेषः । इति
शब्दचन्द्रिका ॥
शेयालकाटा इति भाषा ॥

**शृगालकोलिः**, पुं, (शृगालप्रियः कोलिर्यस्य ।)
"शय्यां जहात्युभयपक्षविनीतनिद्राः
स्तम्बेरमा मुखरशृङ्खलकर्षिणस्ते ॥")
लौहरज्जुः । शिकल वेडि इत्यादि
भाषा ॥
बन्धनम् । इति हेमचन्द्रः ॥

**शृङ्खलकः**, पुं, (शृङ्खलं बन्धनमस्य । "शृङ्खलमस्य
बन्धनं करभे ।" ५ । २ । ७९ । इति
कन् ।)
उष्ट्रः । इति राजनिर्घण्टः ॥ (यथा, माघे
।
१२ । ७ ।
तीव्रोत्थितास्तावदसह्यरंहसो
विशृङ्खलं शृङ्खलकाः प्रतस्थिरे ॥")
पलायननिषेधाय पादेषु
दारुमयपाशलक्षित-
करभः । इत्यमरभरतौ ॥ (स्वार्थे कन्
।) शृङ्ख-
लश्च ॥

**शृङ्खला**, स्त्री, निगडः । पुंस्कटीवस्त्रबन्धः । इति
मेदिनी ॥ अन्यत् शृङ्खलशब्दे द्रष्टव्यम् ॥

**शृङ्खलितः**, त्रि, (शृङ्खलो जातोऽस्येति । इतच् ।)
शृङ्खलायुक्तः । निगडितः । इति
धनञ्जयः ॥

**शृङ्खली**, स्त्री, कोकिलाक्षः । इति राजनिर्घण्टः ॥

**शृङ्गं**, क्ली, (शॄहिंसे + "शृणातेर्ह्रस्वश्च ।" उणा०
१ । १२५ । इति गन् । धातोर्ह्रस्वत्वँ
कित्त्वं
नुट् च प्रत्ययस्य ।) पर्व्वतोपरिभागः ।
तत्प-
र्य्यायः । कूटम् २ कूटः ३ शिखरम् ४ ।
इत्य-
मरः ॥ दन्तः ५ प्राग्भारः ६ । इति
जटाधरः ॥
शैलाग्रम् ७ । इति त्रिकाण्डशेषः ॥
(यथा,
रघुः । १३ । २६ ।
एतद्गिरेर्माल्यवतः पुरस्ता-
दाविर्भवत्यम्बरलेखि शृङ्गम् ॥")
भवदेवभट्टहरिनाथोपाध्यायधृतंसंवर्त्तवचनम् ।
"शृङ्गभङ्गेऽस्थिभङ्गे च कटिभङ्गे तथैव च ।
यदि जीवति षण्मासान् प्रायश्चित्तं न विद्यते ॥"
अत्र षण्मासोत्तरमरणे तद्दोषशमनाय प्राय-
श्चित्तं नास्ति तदभ्यन्तरमरणे वधप्रायश्चित्तं
भवति । एवञ्च शृङ्गभङ्गादिनिमित्तकपापेपृथक्
प्रायश्चित्तं न कर्त्तव्यम् । वधप्रायश्चित्तेनैव
गुरुणा प्रसङ्गात्तदपगमसिद्धेः । षण्मासोत्तरन्तु
शृङ्गभङ्गादिनिमित्तकपूर्व्वोक्तमासार्द्धयावकपानं
प्राजापत्यं वा कर्त्तव्यम् । इति प्रायश्चित्ततत्त्वम् ॥

**शृङ्गः**, पुं, (शॄ + गन् । उणा० १ । १२५ ।) कूर्च्च-
शीर्षकवृक्षः । इति मेदिनी ॥ मुनिभेदः । इति
शब्दरत्नावली ॥

| | | |
|---|---|---|
| क्षुद्रकोलिवृक्षः । शेयाकुल् इति भाषा । तत्-<br>पर्य्यायः । कर्कन्धुः २ । इति रत्नमाला ॥ अपिच । | सानुः । इति नानार्थे अमरः ॥ प्रभुत्वम् । | |

**शृङ्गकः**, पुं, (शृङ्ग इव । कन् ।) जीवकवृक्षः ।
इति जटाधरः ॥

**शृङ्गकन्दः**, पुं, (शृङ्गवत् कन्दो यस्य ।) शृङ्गा-
टकः । इति राजनिर्घण्टः ॥

**शृङ्गजं**, क्ली, (शृङ्गात् जायते इति । जन + डः ।)
अगुरुः । इति रत्नमाला ॥ शरे, पुं, । यथा
।
शृङ्गाच्छरो जायते । इति
संक्षिप्तसारकारक-
पादः ॥ शृङ्गजाते, त्रि ॥

**शृङ्गबेरं**, क्ली, (शृङ्गस्येव बेरं शरीरं यस्य ।)
आर्द्रकम् । इत्यमरः ॥ शुण्ठी । इति राज-
निर्घण्टः ॥ (यथा, सुश्रुते । १ । ३८ ।
"पिप्पलीमरीचशृङ्गबेराणि त्रिकटुकम् ॥")
गुहचण्डालपुरम् । यथा, --
"मारुते गच्छ शीघ्रं त्वमयोध्यां भरतं प्रति
।
जानीहि कुशली कश्चित् जनो
नृपतिमन्दिरे ॥
शृङ्गबेरपुरं गत्वा ब्रूहि मित्रं गुहं मम ।
जानकीलक्ष्मणोपेतमागतं मां निवेदय ॥"
इत्यध्यात्मरामायणे लङ्काकाण्डे १४
अध्यायः ॥

**शृङ्गबेरकं**, क्ली, (शृङ्गबेरमेव । स्वार्थे कन् ।)
आर्द्रकम् । इति हेमचन्द्रः ॥

**शृङ्गबेराभमूलकः**, पुं, (शृङ्गबेराभं मूलं यस्य ।
कन् ।) एरका इति भावप्रकाशः ॥

**शृङ्गमूलः**, पुं, (शृङ्गवत् मूलं यस्य ।) शृङ्गाटकः ।
इति राजनिर्घण्टः ॥

**शृङ्गमोही**, [न्] पुं, (शृङ्गाय मन्मथोद्रे दाय
मोहयतीति । मुह + णिच् + णिनिः ।)
चम्पकः ।
इति राजनिर्घण्टः ॥

**शृङ्गला**, स्त्री, (शृङ्गवत् लातीति । ला + कः ।)

प्रस्थे २००० द्विसहस्रयोजनानि । यथा
।
उत्तरोत्तरेणेलावृतं नीलः श्वेतः शृङ्गवान्
इति
त्रयो रम्यकहिरण्मयकुरूणां वर्षाणां
मर्य्यादा-
गिरयः प्रागायता उभयतः क्षारोदावधयो
द्विसहस्रयोजनपृथव एकैकशः पूर्व्वस्मात्
पूर्व्व-
स्मादुत्तरोत्तरो दशांशाधिकांशेन दैर्घ्य एव
ह्रसन्ति । एवं दक्षिणेनेलावृतं निषधो हेम-
कूटो हिमालय इति प्रागायता यथा
नीला-
दयः । अयुतयोजनोत्सेधा
हरिवर्षकिंपुरुष-
भारतानां यथासंख्यम् ॥ इति श्रीभागवते
५
स्कन्धे १६ अध्यायः ॥

**शृङ्गाटं**, क्ली, (शृङ्गमुत्कर्षं अटतीति । अट् +
अच् ।) चतुष्पथम् । इति हेमचन्द्रः
धरणिश्च ॥

**शृङ्गाटः**, पुं, (शृङ्गवत् कण्टकं अटतीति ।
अट् + अच् ।) जलकण्टकः । इति भूरि-
प्रयोगत्रिकाण्डशेषौ ॥ स्वादुकण्टकः ।
इति शब्द
रत्नावली ॥ कामाख्यादेशस्थपर्व्वतः ।
यथा, --
"दीपवत्याः पूर्व्वतस्तु शृङ्गाटो नाम
पर्व्वतः ।
तत्र भर्गस्य देवस्य लिङ्गमेकं प्रतिष्ठितम् ॥
सरित्तु सिद्धा त्रिस्रोता दक्षिणोदधिगामिनी
।
शृङ्गाटकस्य सततं स्वनन्ती
ग्राव्लिपादतः ।
दक्षिणं सागरं याति भर्गस्य प्रियकारिणी
॥
सलिले यो नरः स्नाति तिस्रोतायां
नरोत्तमः ।

पुनः सर्पिषि संभृष्टं मांसं शृङ्गाटकं वदेत् ॥
मांसं शृङ्गाटकं रुच्यं बृहणं बलकृत् गुरु ।
वातपित्तहरं वृष्यं कफघ्नं वीर्य्यवर्द्धनम् ॥"

**शृङ्गाटकः**, पुं, (शृङ्गाट एव । स्वार्थे कन् ।) जल-
कण्टकः । इति राजवल्लभः ॥

**शृङ्गारं**, क्ली, (शृङ्गं प्राधान्यं ऋच्छतीति । ऋ +
अण् ।) लवङ्गम् । सिन्दूरम् । चूर्णम् । इति
मेदिनी ॥ आर्द्रकम् । इति शब्दचन्द्रिका ॥
कालागुरुः । इति राजनिर्घण्टः ॥

**शृङ्गारः**, पुं, (शृङ्गं कामोद्रे कमृच्छतीति । ऋ
गतौ + "कर्म्मण्यण् ।" ३ । २ । १ । इत्यण्
। यद्वा,
शॄ हिंसायाम् + "भृङ्गारशुङ्गारौ ।" उणा०
३ । १३६ । इति आरन्प्रत्ययेन साधुः ।)
सुरतः । नाट्यरसः । गजभूषणम् । इति
मेदिनी ॥ * ॥ नाट्यरसस्य लक्षणं यथा, --
"पुंसः स्त्रियां स्त्रियाः पुंसि संयोगं प्रति या
स्पृहा ।
स शृङ्गार इति ख्यातो रतिक्रीडादिकारणम्
॥"
इत्यमरटीकायां भरतः ॥
अपि च ।
"शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः ।
उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते ॥
परोढां वर्जयित्वात्र वेश्याञ्चाननुरागिणीम् ।
आलम्बनं नायिकाः स्युर्दक्षिणाद्याश्च
नायकाः ॥
चन्द्रचन्दनरोलम्बरुताद्युद्दीपनंमतम् ।
भ्रूविक्षेपकटाक्षादिरनुभावः प्रकीर्त्तितः ॥
त्यक्तोग्र्यमरणालस्यजुगुप्साव्यभिचारिणः ।
स्थायी भावो रतिः श्यामवर्णोऽयं
विष्णुदैवतः ॥"
स च द्विधा । विप्रलम्भः संभोगश्च । इति
साहित्यदर्पणम् ॥ अन्यत् मैथुनशब्दे द्रष्ट-
व्यम् ॥ * ॥ शृङ्गारादिभङ्गे नरको यथा, --
"शृङ्गाराहारनिद्राणां यश्च भङ्गं करोति च ।

अजशृङ्गी । इति शब्दचन्द्रिका ॥

**शृङ्गवान्,** [त्] पुं, (शृङ्गाणि सन्ति अस्येति ।
शृङ्ग + मतुप् । मस्य वः ।)
कुरुवर्षीयसीमा-
पर्व्वतः । स तु दीर्घे ८०००० अशीतिसहस्र-
योजनानि । प्रस्थे २००० द्विसहस्रयोजनानि ।
विस्तारे तथैव । यथा, --
"हिमवद्धेमकूटश्च निषधश्चास्य दक्षिणे ।
नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्व्वताः ॥
लक्षप्रमाणौ द्वौ मध्यौ दशहीनास्तथा परे ।
सहस्रद्वितयोच्छ्रयास्तावद्विस्तारिणश्चते ॥"
इति विष्णुपुराणे २ अंशे २ अध्यायः ॥
लक्षप्रमाणौ द्वौ प्राक्पश्चिमतो दैर्घ्येण निषध-
नीलौ । यद्यपि जम्बु द्वीपमण्डलाकारस्य लक्ष-
योजनप्रमाणत्वान्मध्यरेखायामेव मुख्यं लक्ष-
प्रमाणत्वम् । निषधनीलौ तु तन्मध्यरेखातो
दक्षिणतश्चोत्तरतश्च सप्तदशयोजनसहस्रान्तरि-
तत्वादीषन्न्यूनौ । तथापि स्थूलदृष्ट्या लक्ष-
प्रमाणावित्युक्तम् । अपरे तु हेमकूटादयो दश-
हीनादशदशन्यूनाः हेमकूटश्वेतौ नवतियोजन
सहस्रप्रमाणौ हिमवच्छृङ्गिणावशीतियोजन-
प्रमाणौ । तदुक्तं वाराहे ।
"द्वीपस्य मण्डलीभावात् ह्रासवृद्धी प्रकीर्त्तिते ॥"
इति तट्टीकायां श्रीधरस्वामी ॥
भागवतमते दैर्घ्ये १०००० दशमहस्रयोजनानि
शृङ्गाटकं समारुह्य पूजयेल्लिङ्गशङ्करम् ॥
स दीप्तकायः शुद्धात्मा प्राप्य कामानिहातुलान् ।
अन्ते भर्गगृहं याति ततो मोक्षमवाप्नु यात् ॥"
इति कालिकापुराणे ८२ अध्यायः ॥

**शृङ्गाटकं**, क्ली, (शृङ्गाटमेव । स्वार्थे कन् ।)
चतुष्पथम् । इत्यमरः ॥ (यथा, रामायणे ।
२ । ७१ । ४५ ।
"तां शून्यशृङ्गाटकवेश्मरथ्यां
रजोऽरुणद्वारकपाटयन्त्राम् ॥")
जलज-लताफलविशेषः । पानिफल इति शिङ्गाडा
इति च भाषा । तत्पर्य्यायः । जलसूचिः २
संघाटिका ३ वारिकण्टकः ४ । इति जटा-
घरः ॥ शृङ्गाटः ५ वारिकुब्जकः ६ । इति
त्रिकाण्डशेषः ॥ क्षीरशुक्लः ७ जलकण्टकः ८
इति शब्दमाला ॥ शृङ्गाटकः ९ शृङ्गरुहः १०
जलवल्ली ११ जलाशयः १२ शृङ्गकन्दः १३
शृङ्गमूलः १४ विषाणी १५ । अस्य गुणाः ।
शोणितपित्तहरत्वम् । लघुत्वम् । सरत्वम् ।
वृष्यतमत्वम् । विशेषात् त्रिदोषवातभ्रमशोफ-
नाशित्वम् । रुचिप्रदत्वम् । मेहनदार्ढ्यहेतुत्वञ्च ।
इति राजनिर्घण्टः ॥ अपि च । गुरुत्वम् ।
विष्टम्भित्वम् । शीतलत्वञ्च । इति राजवल्लभः ॥
खाद्यविशेषः । समूसा इति हिन्दी भाषा ॥
यथा, भावप्रकाशे ।
"शुद्धमांसं तनूकृत्य कर्त्तितं स्वेदितं जले ।
लवङ्गं हिङ्गुसहितं लवणार्द्रकसंयुतम् ॥
स व्रजेत् कालसूत्रञ्च स्वामिनश्च विशेषतः ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ४२ अध्यायः ॥

**शृङ्गारकं**, क्ली, (शृङ्गारमेव । स्वार्थे कन् ।)
सिन्दूरम् । इति राजनिर्घ ण्टः ॥ शृङ्गविशिष्टे,
त्रि । शृङ्गशब्दात् "शृङ्गवृन्दाभ्यामारकन्
वक्तव्यः ।" ५ । २ । १२२ । इत्यस्य वार्त्तिकोक्त्या
आरकन्प्रत्ययेन निष्पन्नः । इति सिद्धान्त-
कौमुदी ॥ स्वार्थे के शृङ्गारश्च तत्र पुं ॥

**शृङ्गारभूषणं**, क्ली, (शृङ्गारस्य भूषणम् ।)
सिन्दूरम् । इति हेमचन्द्रः ॥

**शृङ्गारयोनिः**, पुं, (शृङ्गारे योनिरुत्पत्तिर्यस्य ।)
कामदेवः । इति हलायुधहेमचन्द्रौ ॥

**शृङ्गारी**, [न्] पुं, (शृङ्गारोऽस्यास्तीति । इनिः ।)
पूगः । गजः । सशृङ्गारः । सुवेशः । इति
मेदिनी ॥ माणिक्यम् । इति राजनिर्घण्टः ॥

**शृङ्गिः**, स्त्री, मत्स्यविशेषः । शिङ्गीमाछ इति
भाषा । यथा, --
"मद्गुरस्यप्रिया श ङ्गी शृङ्गिरित्यपि कुत्रचित्
स्यादप्रिया मद्गुरसीति च नामद्वयम् कचित् ॥"
इति शब्दरत्नावली ॥

|  | एलाजीरकधन्याकनिम्बूरससमन्वितम्॥<br>घृते सगन्धे तद्धृष्टं पूरणं प्रोच्यते बुधैः ॥<br>शृङ्गाटकं समितया कृतं पूरणपूरितम् । |  |
| --- | --- | --- |

**शृङ्गिकं**, क्ली, विषभेदः । इति हलायुधः ॥

**शृङ्गिका**, स्त्री, पतिविषा इति शब्दरत्नावली ॥

**शृङ्गिणः**, पुं, (शृङ्गेस्तः अस्येति । शृङ्ग + “ज्योस्ना-
तमिस्रेति ।” ५ । २ । ११४ । इति इनच् ।)
मेषः । इति हेमचन्द्रः ॥

**शृङ्गिणी**, स्त्री, (शृङ्गे स्तः अस्या इति । शृङ्ग +
इनिः । ङीष् ।) गौः । इत्यमरः ॥ श्लेष्मघ्नी-
वृक्षः । मल्लिकावृक्षः ।
ज्योतिष्मतीवृक्षः । इति
मेदिनी ॥

**शृङ्गी**, [न्] पुं, (शृङ्ग + इनिः ।) हस्ती । वृक्षः ।
पर्व्वतः । (यथा, रघुः । १२ । ८० ।
“रुरोध रामं शृङ्गीव
टङ्कच्छिन्नमनःशिलः ॥”
ऋषिविशेषः । स तु शमीकपुत्त्रः । अभिमन्यूजः
परिक्षित् अनेनाभिशप्तः ।)
शृङ्गयुक्ते, त्रि ।
इति मेदिनी ॥ यथा, रामायणे । २ । २५ । २० ।
“महिषाः शृङ्गिणौरौद्रा नते द्रुह्यन्तु
पुत्त्रक ॥”)

**शृङ्गी**, स्त्री (शृङ्गि + वा ङीष् ।) मत्स्यविशेषः ।
शिङ्गी इति जियल इति च भाषा ।
तत्पर्य्यायः ।
मद्गुरप्रिया २ । इत्यमरः मधुश्च ॥
मद्गरी ३ ।
इति कलिङ्गः ॥ मद्गुरसी ४
अप्रिया ५
शृङ्गिः ६ । इति केचिदिति भरतः ॥
अस्या
चन्द्रिका रत्नमाला च ॥ * ॥ अथ क्वाथविधिः ।
“पानीयं षोडशगुणं क्षुण्ण द्रव्यपले क्षिपेत् ।
मृत्पात्रे क्वाथयेत् ग्राह्यमष्टमांशावशेषितम् ॥
कर्षादौ तु पलं यावत् दद्यात् षोडशिकं जलम् ।
तज्जलं पाययेद्धीमान् कोष्णं मृद्वग्निसाधितम् ।
शृतः काथः कषायश्च निर्य्यूहः स निगद्यते ॥”
क्वाथपानमात्रामाह।
“मात्रोत्तमा पलेन स्यात्त्रिभिरक्षैस्तु मध्यमा ।
जघन्या च पलाङ्र्ग्रेन स्नेहक्वाथौषधेन च ॥”
तन्त्रान्तरे ।
“क्वाथद्रव्यपले वारि द्विरष्टगुणमिष्यते ।
चतुर्भागावशिष्टन्तु पेयं पलचतुष्टयम् ॥
दीप्तानलं महाकायं पाययेत् द्व्यञ्जलिं जलम् ।
अन्ये त्वर्द्धं परित्यज्य प्रसृतन्तु चिकित्सकाः ॥
क्वाथत्यागमनिच्छन्तस्त्वष्टभागावशेषितम् ।
पारम्पर्य्योपदेशेन वृद्धवैद्याः पलद्वयम् ॥”
अष्टभागावशेषितस्य चतुर्भागावशिष्टापेक्षया
गुरुत्वाद्दीप्तानलं महाकायं पलद्वयं पायये-
न्मध्यमाग्निमल्पकायं पलमात्रं पाययेत् ।
मात्रोत्तमा पलेन स्यादित्यादिवचनात्।
“क्वाथे क्षिपेत् सितामशैश्चतुर्थाष्टमषोडशैः ।
वातपित्तकफातङ्के विपरीतं मधु स्मृतम् ॥
जीरकं गुग्गुलुं क्षारं लवणञ्च शिलाजतु ।
हिङ्गु त्रिकटुकञ्चैव क्वाथे शाणोन्मितं क्षिपेत् ॥
क्षीरं घृतं गुडं तैलं मूत्रं चान्यत द्रवं तथा ।
कल्कं चूर्णादिकं क्वाथे निक्षिपेत् कर्षसम्मितम् ॥
तत्रोपविश्य विश्रान्तः प्रसन्नवदनेक्षणः ।
औषधं हेम रजतं मृद्भाजनपरिस्थितम्॥
पिबेत् प्रमन्नहृदयः पीत्वा पात्रमधोमुखम्।
विधायाचम्य सलिलं ताम्बूलाद्युपयोजयेत् ॥”
इति भावप्रकाशः ॥
अन्यच्च ।
“द्रव्यादापोत्थितात्तोये वह्निना परितापितात् ।
निःशृतो यो रसः पूतः स शृतः समुदाहृतः ॥”
इति वैद्यकम् ॥

**शृध**, व लृङ उ पर्दे । इति कविकल्पद्रुमः ॥
(भ्वा०-आत्म०-अक०-सेट् । क्तावेट् ।) व, शर्त्-
स्यति शिशृत्सति । लृ, अशृधत् । ङ, शर्धते ।
उ, शर्द्धित्वा शृद्ध्वा । पर्दोऽपानोत्सर्गः । शृधु

**शॄ**, गि हिंसने । इति कविकल्पद्रुमः ॥ कृया०-
पर०-सक०-सेट् ।) गि, शृणाति । शीर्णः
शीर्णिः । इति दुर्गादासः ॥

**शेखरं**, क्ली, लवङ्गम् । इति राजनिर्घण्टः ॥ शिग्रु-
मूलम् । इति शब्दचन्द्रिका ॥

**शेखरः**, पुं, (शिखि गतौ + बाहुलकात् अरप्रत्य-
येन साधुः ।) शिखावस्थितमाल्यम्। इत्य-
मरः ॥ यथा, --
“शिखाविन्यस्तमालायामापीडः
शेखरोऽपि च ॥”
इति शब्दरत्नावली ॥
(यथा, माघे । ११ । ४६ ।
“नवकरनिकरेण स्पष्टबन्धूकसून-
स्तवकरचितमेते शेखरं बिभ्रतीव ॥”
शिरोभूषणमात्रम्। यथा, कुमारे । ७ । ३२ ।
“बभूव भस्मैव सिताङ्गरागः
कपालमेवामलशेखरश्रीः ॥”)
गीतस्य ध्रुवविशेषः । तल्लक्षणं यथा, --
“द्वादशाक्षरपादः स्यात् स चाल्पशुभकृत्
प्रभोः ।
हंसके च रसे वीरे गीयते शेखरो ध्रुवः ॥”
इति सङ्गीतदामोदरः ॥
लघुशेखरो यथा, --
“लघुर्गुरुर्भवेद्यत्र स भवेल्लघुशेखरः ॥”
इति तत्रैव ॥
(शृङ्गम् । यथा, कथासरित्सागरे । २८ । १८९ ।
“ततोऽस्तगिरिशेखरं व्रजति वासरेशे शनैः
सखीं पुनरुपागमप्रणयिणीं समापृच्छय
ताम् ।
क्षणं जनितविस्मया गगनमार्गमुत्पत्य सा
जगाम वसतिं निजां प्रसवमेव सोमप्रभा
॥”)

**शेखरी**, स्त्री, वन्दा । इति शब्दरत्नावली ॥

**शेपः**, पुं, (शी + बाहुलकात् पः ।) शेफः । इति

गुणाः । स्वादुरमत्वम् । स्निग्धत्वम् । बृंह-
नत्वम् । कफकोपनत्वम् । शोथपाण्डुमरुत्पित्त-
नाशित्वञ्च । इति राजवल्लभः ॥ अतिविषा ।
ऋषभौषधम् । इत्यमरः ॥ कर्कटशृङ्गी । प्लक्षः ।
वटः । विषम् । इति राजनिर्घण्टः ॥ अलङ्कार-
सुवर्णम् । यथा । स्त्री शृङ्गी मण्डनस्वर्णे । इति
भरतधृतरत्नकोषः ॥

**शृङ्गीकनकं**, क्ली (शृङ्गी मण्डनस्वर्णम् । तदेव
कनकम् ।) अलङ्कारसुवर्णम् । इत्यमरः ॥
अलङ्कारस्य कुण्डलादेर्य्यत् सुवर्णं तत् शृङ्गी-
कनकमुच्यते शृङ्गी अलङ्कारः तदर्थं कनकं-
शृङ्गीकनकं अलङ्कारसुवर्णस्य शृङ्गीति च नाम ।
स्त्री शृङ्गी मण्डनस्वर्णे इति रत्नकोषः ॥ शृङ्गी
ह्रस्वान्ता च शृङ्गति कर्णादीन् शृङ्गिः श्रगि
श्लगि व्रजे नाम्नीति इः निपातनात् जिः पाच्छो-
णादीति ईपि शृङ्गी । इति भरतः ॥

**शृणिः**, स्त्री, अङ्कुशः । इत्यमरः ॥ "शृणाति मर्म्म-
स्थाणं शृणिः । शॄ स्वॄ गि हिंसने कृगृज्याग्ला-
हाल्वादेर्निरिति ल्वादित्वात् क्तेर्निः निपा-
तनादिह ह्रस्वः । नाम्नीति ङ्रणिर्व्वा ।
"शृणिरङ्कुशवाची च काशश्च तृणवाचकः ।"
प्रहसने इति चुरादिपरस्मैपदीधातुरन्यैर्न
मन्यते । प्रहसनं विद्रवः । इति गोविन्दभट्टः ।
शर्द्धयति वृद्धं कुत्सितशब्दैर्बालः । इति रमा-
नाथः । इति दुर्गादासः ॥

**शृध**, उ ञ क्लेदने । इति कविकल्पद्रुमः ॥ (भ्वा०-
उभ०-अक०-सेट् । क्त्वाविट् ।) उ, शर्द्धित्वा
शृद्ध्वा । ञ शर्द्धति शर्द्धते । क्लेदनमाद्रभावः ।
इति दुर्गादासः ॥

**शृधुः**, पुं, (शृध + बाहुलकात् कुः ।) बुद्धिः ।
गुदम् । इति विश्वः ॥

**शृधूः**, पुं, (शृध + "नृतिशृध्योः कूः ।" उणा० १ ।
९३ । इति कूः ।) कुत्सितः । अपानम् । इति
संक्षिप्तसारोणादिवृत्तिः ॥
शब्दरत्नावली ॥ (यथा, वाजसनेयसंहितायार
१९ । ८८ ।
"वस्तिर्न शेपो हरसा तरस्वी ॥")

**शेपालः**, पुं, (शी + वालन् । बाहुलकात् वकारस्य
पकारः । इत्युणादिवृत्तौ उज्ज्वलदत्तः । ४
। ३८ ।
शैवालः । इति शब्दरत्नावली ॥

**शेफः**, पुं, शिश्नः । इति शब्दरत्नावली ॥ (यथा,
महाभारते । १० । ७ । ३८ ।
"विकटाः काललम्बौष्ठा बृहच्छेफाण्डपिण्डकाः ॥")

**शेफः**, [स्] क्ली, (शेते रेतःपातानन्तरमिति ।
शी + "वृङ्शीङ्भ्यां स्वरूपाङ्गयोः पुट् च ।"
उणा० ४ । २०० । इति असुन् । अत्र केचित्
फ चेति पठन्ति इत्यतः फः ।) शिश्नः । इत्य-
मरः ॥ शुकपाते सति शेते पतति इति शेफः ।
शीङ् धातोर्नाम्नीति फस्प्रत्ययः । शेफसशेपसी
शेफशेपौ शैवश्चेति पञ्च रूपाणि भवन्तीत्या
चार्य्याः । इति भरतः ॥ (यथा, बृहत्सहि
तायाम् । ६८ । ८ ।
"ऋजुवृत्तशेफसो लगुशिरालशिश्नाश्च धनवन्तः ॥")

| इति शभेदात् तालव्यादिः । सरति मर्म्मस्थानं गच्छति सृणिर्द्दन्त्यादिरित्यन्ये। स्त्रियामित्यत्र द्वयोरिति पाठः । इति मेदिनी ॥ आवक्षमग्र-मवमत्य शृणिं शिताग्रमिति माघः । स्त्रिया-मिति प्रायिकत्वादुक्तमिति मुकुटः ।” इति भरतः ॥<br><br>**शृतं**, त्रि, (श्रा पाके + क्तः ।) “शृतं पाके ।” ६ । १ । २७ । इति शृभावः ।) पक्वक्षीराज्य-पयांसि । इत्यमरः ॥ शृतमन्नं विवर्ज्जयेदिति-त्वार्षम् । इति भरतः ॥ कथितम् । इति शब्द | | |
|---|---|---|

"https://sa.wikisource.org/w/index.php?title=शब्दकल्पद्रुमः/शुकनामा&oldid=44091" इत्यस्माद् पुनः प्राप्तिः

**शेफालिः**, स्त्री, (शेरते इति शेफाः शयनशालिन-

स्तादृशा अलयो भृङ्गा यत्र ।) शेफालिका ।
इति शब्दरत्नावली ॥

**शेफालिका**, स्त्री, (शेफालि + स्वार्थे कन् ।) पुष्प-

वृक्षविशेषः । शिउली इति भाषा ॥ (यथा, --
"शेफालिकां विदलितामवलोक्य तन्वी
पाणान् कथञ्चिदपि धारयितुं प्रभुः सा ।
आकर्ण्य सस्प्रति रुतं चरणायुधानां
किँवा व्यवस्यति न वेद्मि तपस्विनी सा ॥"
इत्यूद्भटः ॥)
तत्पर्य्यायः । सुवहा २ निर्गुण्डी ३ नीलिका ४ ।
इत्यमरः ॥ चत्वारि शेफालिकामात्रे । शिय-
लीति ख्यातनीलपुष्पायां शेफालिकामिति
केचित् । शेफालिकादिद्वयं शेफालिकामात्रे
निर्गुण्ड्यादिद्वयं नीलपुष्पशेफालिकायामिति
केचित् । इति तट्टीकायां भरतः ॥ शेफाली ५
मलिका ६ रजनीहासा ७ निशिपुष्पिका ८ ।
मा शुक्ला चेत् श्वेतसुरस ९ भूतवेशी १० ।
इति शब्दरत्नावली ॥ शुक्लाङ्गी ११ शीत-
मञ्जरी १२ विजया १३ वातारिः १४ भूत-
केशी १५ । अस्या मुणाः । कटुत्वम् । तिक्त-
त्वम् । उष्णत्वम् । रूक्षत्वम् । वातकफाङ्ग-
मन्धिवातगुदवातादिदोषनाशित्वञ्च। इति
राजनिर्घण्टः ॥

**शेफाली**, स्त्री, (शेफालि + कृदिकारादिति वा

ङीष् ।) शेफालिका । इति शब्दरत्नावली ॥
नीलसिन्धुवारः । इति भावप्रकाशः ॥

**शेमुषी**, स्त्री, (शेते इति शेः मोहः । शी + विच्

त मुष्णातीति । मुष स्तेये + मूलविभुजादित्वात्
कः । गौरादित्वात् ङीष् । इत्यमरटीका ।)
बद्धिः । इत्यमरः । १ । ५ । १ ॥ (यथा, राज-
तरङ्गिण्याम् । ३ । २०६ ।
"स्विन्नस्य हि विपर्य्येति तत्त्वज्ञस्यापि शेमुषी ॥"
शेल, ऋ चालगत्योः । इति कविकल्पद्रुमः ॥
(भ्वा०-पर०-सक०-सेट् ।) ऋ, अशिशेलत् ।
इति दुर्गादासः ॥

**शेलुः**, पुं, (शेलतीति । शेल गतौ + उः ।) बहु-

"विद्या ब्राह्मणमेत्याह शेवधिस्तेऽस्मि
रक्ष माम् ।
असूयकाय मां मादास्तथास्यां
वीर्य्यवत्तमा ॥"

**शेवलं**, क्ली, शैवालम् । इति शब्दरत्नावली ॥

(मनुष्यनाम । इति पाणिनिः । ५ । ३ ।
८४ ॥)

**शेवलिनी**, स्त्री, (शेवलं शैवालमस्या अस्तीति ।

इनिः ।) नदी । इति राजनिर्घण्टः ॥

**शेवालं**, क्ली, (शेते जले इति । शी + "शीङो

धुक्लग्वलञ् वालनः ।" उणा० ४ ।
३८ । इति
वालन् ।) शैवालम् । इति
शब्दरत्नावली ॥
(यथा राजेन्द्रकर्णपुरे । २५ ।
"शङ्के पङ्के पतति यतते बालशेवालमूले
कूले लोलः किमपि कुरुते कर्म्म
वैकुण्ठकूर्म्मः ॥"

**शेवाली**, स्त्री, आकाशमांसी । इति, राजनिर्घः ॥

**शेषं**, क्ली, (शिष्यते यदिति । शिष + घञ् ।)

प्रसादः । इति मेदिनी । षे, २८ ॥

**शेषः**, पुं, (शेषति सङ्कर्षतीति । शिष हिसायाम्

+ अच् ।) सङ्कर्षणः । स तु बलदेवः ।
(यथा,
माघे । २ । ६८ ।
"निशम्य ताः शेषगवी
रभिधातुमधोक्षजः ।
शिष्याय बृहतां पत्युः प्रस्तावमादिशत्
दृशा ॥"
शिष वधे + भावे घञ् ।) वधः ।
अनन्तः । स
च सर्पराजः । इति मेदिनी ॥ (यथा,
कुमारे ।
३ । ३ ।
व्यादिश्यते भूधरतामवेक्ष्य
कृष्णेन देहोद्वहनाय शेषः ॥")

भूतभव्यजगन्नाथं परापरपतिं हरिम् ॥
दधार शिरसानन्तः स्वयमेव स्वकां
तनुम् ।
एवं ब्रह्मदिनस्यैव प्रमाणेन निशां हरिः
।
सन्ध्याञ्च समधिप्राप्य शेते
नारायणोऽव्ययः ॥"
इति कालिकापुराणे २७ अध्यायः ॥

**शेषः**, पुं, क्ली, (शिष्यते इति । शिष + घञ् ।)

उपयुक्तेतरवस्तु । इति मेदिनी ॥
शेषोऽवशिष्ट-
मवशिष्टता च शेषः शेषञ्चे त्यादि ।
अनन्ते तु
शेषः पुंलिङ्ग एव शिष्टप्रयोगात् ।
उक्तादन्यः
शेषः यथा । शङ्खपद्मौ निधिवाचकौ
पुलिङ्गौ
जलजे तूभयलिङ्गौ इति सर्व्वानन्दः ।
इत्यमर-
टीकायां भरतः ॥ * ॥
ऋणादिशेषरक्षणनिवेधो
यथा, --
"ऋणशेषञ्चाग्निशेषं शत्रशेषं तथैव च ।
पुनः पुनः प्रवर्द्धन्ते तस्मात् शेषं न
कारयेत् ॥"
इति गारुडे ११६ अध्यायः ॥
(अवशिष्टे, त्रि । यथा, रघुः । ४ । ६४
।
"अपनीतशिरस्त्राणाः शेषास्तं शरणं
ययुः ॥"
तथाच रामायणे । २ । २६ । ३२ ।
"वन्धितव्यस्त्वया नित्यं याः शेषा मम
मातरः

**शेषत्वं**, क्ली, (शेषस्य भावः । शेष + त्व ।) उप-

कारित्वम् पारार्थ्यम् ।
परोद्देश्यप्रवृत्तिकत्वम् ।
यथा, --

वारकवृक्षः । इत्यमरः ॥ (यथा, सुश्रुते । ४ । ३८ ।
"विदार्य्यैरावतीशेलुशाल्मलीधवलाङ्कुराः ॥"
तत्फलमपि । यथा, मनुः । ५ । ६ ।
"शेलुं गव्यञ्च पेयूषं प्रयत्नेन विवर्जयेत् ॥")

**शेवः**, पुं, (शेते रेतःपातानन्तरमिति । शी + "इण् शीङ्भ्यां वन् ।" उणा० १ । १५२ । इति वन् । मेढ्रः । अहिः । उन्नते, त्रि । इत्युणादिकोषः ॥ (क्ली, सुखम् । इति निघण्टुः । ३ । ६ ॥ त्रि, सुखकरम् । यथा, ऋग्वेदे । १ । ५८ । ६ ।
"मित्रं न शेवं दिव्याय जन्मने ॥"
"मित्रं न शेवं यथा सखा सुखकरो भवति तद्वत् सुखकरमित्यर्थः ।" इति तद्भाष्ये सायणः ॥)

**शेवधिः**, पुं, (शेवं सुखं धीयतेऽस्मिन्निति । धा + कः ।) निधिः । इत्यमरः ॥ (यथा, मनुः । २ । ११४ ।

तस्य ध्यानं यथा, --
"फणासहस्रसंयुक्तं चतुर्ब्बाहुं किरीटिनम् ।
नवाम्रपल्लवाकारं पिङ्गलश्मश्रुलोचनम् ॥
पीताम्बरधरं देवं शङ्खचक्रगदाधरम् ।
कराग्रे दक्षिणे पद्मं गदां तस्याप्यधःकरे ।
दधानं सर्व्वलोकेशं सर्व्वाभरणभूषितम् ।
क्षीराब्धिमध्ये श्रीमन्तमनन्तं पूजयेत्ततः ॥"
इति भविष्यपुराणम् ॥
गजः । नागः । स्वीकृतेतरवस्तु । इत्यजयपालः ॥
भगवतो द्वितीया मूर्त्तिः । यथा, --
"एका भगवतो मूर्त्तिर्ज्ञानरूपा शिवामला ।
वासुदेवाभिधाना सा गुणातीता सुनिष्कला ॥
द्वितीया कालसंज्ञान्या तामसी शेषसंज्ञिता ।
निहन्ति सकलांश्चान्ते वैष्णवी परमा तनुः ॥"
इति कौर्म्मे ४८ अध्यायः ॥
शेषशयनप्रकारो यथा, --
"अनन्तस्तत्र गत्वा तु यत्र क्षीरोदसागरः ।
तत्र स्वयं श्रिया युक्तं सुषुप्सन्तं जनार्द्दनम् ॥
तस्योपधानमकरोदनन्तोदक्षिणां फणाम् ।
उत्तरां पादयोश्चक्रे उपधानं महाबलः ।
तालवृन्तं तदा चक्रे स शेषः पश्चिमां फणाम् ॥
स्वयन्तु बीजयामास शेषरूपी जनार्द्दनम् ॥
शङ्खं चक्रं नन्दकासिमिषुधी द्वे महाबलः ।
ऐशानयाथ फणया स दध्रे गरुडं तदा ॥
गवां पद्मञ्च शार्ङ्गञ्च तथैव विविधायुधम् ।

"शेषत्वमुपकारित्वं द्रष्यादावाह वादरिः ।
पारार्थ्यं शेषता तच्च सर्व्वेष्वस्तीति जैमिनिः ॥"
इत्यधिकरणमालायां माधवाचार्य्यः ॥
शेषस्य भावः । इति व्याकरणम् ॥
शेषरात्रिः, स्त्री, (शेषा अवशिष्टा रात्रिः ।)
रात्रिशेषः । तत्पर्य्यायः । उच्चन्द्रः २ अपरात्रः ३ । इति शब्दरत्नावली ॥

**शेषा**, स्त्री, (शिष्यतेऽसौ । शिष् + घञ । टाप् ।) स्वनिर्म्माल्यार्पणम् । इति मेदिनी । (यथा, कुमारे । ३ । २२ ।
"तथेति शेषामिव भर्त्तूराज्ञा-
मादाय मूर्द्ध्ना मदनः प्रतस्थे ॥")

**शैक्षः**, पुं, (शिक्षामधीते इति । शिक्षा + अण् ।) प्राथमकल्पिकः । इत्यमरः ॥ द्वे प्रथमारब्ध-वेदाध्ययने । शिक्षणं शिक्षा । सेमक्तात् सरो-रिति अः । शिक्षा प्रथमोपदेशः तत्साह-चर्य्यात् ग्रन्थोऽपि शिक्षा तामधीयते शैक्षाः । ढघे कादिति ष्णः प्रथमं शिक्षणीयं कल्पं शास्त्रं अधीयते प्राथमकल्पिकाः । इति भरतः ॥ (शिक्षा शीलमस्येति । "छत्रादिभ्यो णः ।" ४ । ६२ । इति णः । शिक्षाशीले, त्रि ॥)

**शैक्षिकः**, त्रि, शिक्षाशास्त्रवेत्ता । शिक्षां वेत्ति अधीते वा इत्यर्थे ष्णिकप्रत्ययेन निष्पन्नः ॥

**शैखरिकः**, पुं, (शिखरे प्रायेण भवतीति शिखर + ठञ् ।) अपामार्गः इत्यमरः ॥

|  |  |  |
| --- | --- | --- |
|  | यानि चान्यानि तस्यासन्नाग्रे य्या<br>फणया दधौ ॥<br>एवं कृत्वा स्वकं काय शयनीयं तदा हरेः<br>। | **शैखरेयः**, पुं, (शिखरे भवः । शिखर + ढ्२अञ् ।)<br>अपामार्गः । इति भरतधृतरत्नकोषः ॥<br>**शैत्यं**, क्ली, (शीतस्य भावः शीत + “वर्णदृढा-<br>दिभ्यः ष्यञ् च ।” ५ । १ । १२३ ।<br>इति ष्य ञ ।) |

शीतलत्वम् । यथा, --
“शैत्यं नाम गुणस्तवैव सहजः
स्वाभाविकी
स्वच्छता
किं ब्रुमः शुचितां भवन्ति शुचयः स्पर्शेन
यस्या-
परे ।
किं वान्यत् कययामि ते स्तुतिपदं त्वं
जीविनां
जीवनं
त्वञ्चेन्नीचपथेन गच्छसि पयः कस्त्वां
निषेद्धुं
क्षमः ॥”
इति लक्ष्मणसेनः ॥

**शैथिल्यं**, क्ली, (शिथिल + भावे ष्यञ् ।) शिथि-
लत्वम् । शिथिलस्य भाव इत्यर्थे
ष्ण्यप्रत्ययेन
निष्पन्नम् ॥ (यथा, मार्कण्डेये । १०९ ।
२२ ।
“भवन्तु केशाः पलिताः वलयः सन्तु मे
शुभे ।
शैथिल्यमेतु मे कायः कृतकृत्योऽस्मि
मानिनि ॥”

**शैनेयः**, पुं, (शिनेर्गोत्रापत्यमिति । शिनि + “इत-
श्चानिञः ।” ४ । १ । १२२ । इति ढक्
।) सात्यकिः ।
स तु श्रीकृष्णसारथिः । इति
त्रिकाण्डशेषः ॥
(यथा, भागवते । १ । ८ । ७ ।
“आमन्त्र्य पाण्डुपुत्रांश्च
शैनयोद्धवसंयुतः ।
द्वैपायनादिभिर्व्विप्रैः पूजितैः प्रतिपूजितः
॥”)

**शैरीयकः**, पुं, नीलझिण्टी ॥ इति रत्नमाला ॥
शैरेयकोऽपि पाठः । दन्त्यसादिश्च ॥

**शैलं**, क्ली, (शिलाया भवम् । शिला + अण् ।)
रत्नमाला ॥ अस्य गुणाः शैलेयशब्दे
द्रष्टव्याः ॥
पर्व्वतजाते, त्रि, ॥

**शैलजा**, स्त्री, (शैले जायतेऽसौ इति । जन +
डः । टाप् ।) सैंहली । गजपिप्पली । इति
राजनिर्घण्टः ॥ दुर्गा । हिमशैलजत्वात् ।
यथा,
“तत् श्रुत्वा भगवद्वाक्यं विस्मिता हिम-
शैलजा ।”
इति शिवरात्रिव्रतकथा ॥

**शैलधन्वा** [न्] (पुं, (शैलवत् दृढं धनुरस्य ।
धनुषो धन्वन्नादेशः ।) महादेवः । इति
त्रिकाण्डशेषः ॥

**शैलधरः**, पुं, (शैलस्य गोवर्द्धनस्यधरः ।) श्रीकृष्णः
इति धनञ्जयः ॥

**शैलनिर्य्यासं**, क्ली, (शैलस्य निर्य्यास इव रसो
यत्र ।) शैलेयम् । इति केचित् ॥

**शैलपत्रः**, पुं, (शैलवत् सुगन्धि पत्रमस्य ।) विल्व-
वृक्षः । इति राजनिर्घण्टः ॥

**शैलवीजः**, पुं, (शैलवत् कठिनं बीजमस्य ।)
भल्लातकवृक्षः । इति राजनिर्घण्टः ॥

**शैलभित्तिः**, स्त्री, (शैलानां भित्तिर्भेदो यस्याः ।)
टङ्कः । इति जटाधरः ॥

**शैलराजः**, पुं, (शैलानां राजा । “राजाहः
सखिभ्यष्टच् ।” ५ । ४ । ९१ । इति टच् ।)
हिमालय-
पर्व्वतः । (यथा, कुमारे । ७ । ६८ ।
“मूर्द्धानमालि क्षितिधारणोच्च-
मुच्चैस्तरं वक्ष्यति शैलराजः ॥”)

**शैलराजसुता**, स्त्री, (मैलराजस्य सुता ।) दुर्गा
यथा, --
“अरूपा परभावत्वाद्बहुरूपा क्रियात्मिका ।
जाता शैलेन्द्रगेहे सा शैलराजसुता ततः ॥”

**शैलाटः**, पुं, (शैले अटतीति । अट + अच् ।)
देवलः । सिंहः । शुक्लकाचः । किरातः ।
इति मेदिनी ॥

**शैलादिः**, पुं, नदी । यथा, --
“निमित्तानीदृशान् दृष्ट्वा भूतभव्यभवो
विभुः ।
शैलादिं प्राह वचनं सस्मितं शशिशेखरः
॥
हर उवाच ।
नन्दिन् जयोऽद्य भावी नो न कथञ्चित्
परा-
जयः ।
निमित्तानीह दृश्यन्ते शुभदानि गणेश्वर ॥
तच्छम्भुवचनं श्रुत्वा शैलादिः प्राह
शङ्करम् ।
कः सन्देहो महादेव यत् त्वं जयसि शात्र-
वान् ॥”)
इति वामने ६५ अध्यायः ॥

**शैलाली**, [न्] पुं, (शिलालिना प्रोक्तं नटसूत्र-
मधीते इति । शिलालि +
“पाराशर्य्यशिला-
लिभ्यां भिक्षुनटसूत्रयोः ।” ४ । ३ ।
११० इति
णिनिः ।) नटः । इत्यमरः ॥

**शैलिक्यः**, पुं, सर्व्वलिङ्गी । इति जटाधरः ॥

**शैली**, स्त्री, (शीलस्येयमिति । शील + अण् ।
ङीष् ।) सङ्केतः । यथा, --
“प्रज्ञप्तिः परिभाषा शैली
सङ्केतसमयकाराश्च ।”
इति त्रिकाण्डशेषः ॥
आचार्य्याणामियं शैली यत्
सामान्येनाभिधाय
विशेषेण विवृणोति । इति
मुग्धबोधटीकायां
दुर्गादासः ॥ (शिलाप्रतिमा । यथा, रामा-
यणे । १ । ६४ । १२ ।

शैलेयम् । तार्क्ष्यशैलम् । इति मेदिनी ॥
शिला-
लतु । इति राजनिर्घण्टः ॥

**शैलः**, पुं, (शिलाः सन्त्यत्रेति । शिला + ज्योत्स्ना-

दित्वादण् ।) पर्व्वतः । इत्यमरः ॥ (यथा,
रघुः । ४ । ७१ ।
"ततो गौरीगुरु शैलमारुरोहाश्वसाधनः ।
वर्द्धयन्निव तत्कूटानुद्धूतैर्धातुरेणुभिः ॥"
शिलासम्बन्धिनि, त्रि । यथा, भागवते ।
११ ।
२७ । १२ ।
"शैलीदारुमयी लौही लेप्या लेख्या च
सैकती
मनोमयी दारुमयी प्रतिमाष्टविधा स्मृता
॥")

**शैलकं**, क्ली, (शैलमेव । स्वार्थे कन् ।) शैलजम् ।

इति शब्दरत्नावली ॥ (यथा, बृहत्संहिता-
याम् । ७७ । १० ।
"हरीतकीशङ्खघनद्रवाम्बुभि-
र्गुडोत्पलैः शैलकमुस्तकान्वितैः ।
नवान्तपादादिविवर्द्धितैः क्रमात्
भवन्ति धूपा बहवो मनोहराः ॥")

**शैलगन्धं**, क्ली, (शैलस्य गन्धो यत्र ।) शावर-

चन्दनम् । इति राजनिर्घण्टः ॥

**शैलगर्भाह्वा**, स्त्री, शिलावल्का । इति राज-

निर्घण्टः ॥

**शैलजं**, क्ली, (शैले पर्व्वते जायते इति । जन +

डः ।) सुगन्धिद्रव्यविशेषः । तत्पर्य्यायः ।
शीत-
शिवम् २ शैलेयम् ३ शिलासनम् ४
शिलेयम् ५
शीतलम् ६ शैलम् ७ कालानुसार्य्यम् ८
शैलकम्
९ वृद्धम् १० कालानुसारि ११
अश्वपुष्पम् १२
शैलख्यम् १३ शिलापुष्पम् १४ गृहम् १५
इतिड

इति देवीपुराणे ४५ अध्यायः ॥
(गङ्गा । यथा, महाभारते । ३ । १०९ । ४
"प्रयाचस्व महाबाहो शैलराजसुतां नदीम् ।
पतमानां सरित्श्रेष्ठां धारयिष्ये त्रिपिष्टपात्
॥"

**शैलवल्कला**, पुं, (शैलं शिला वल्कलं यस्याः ॥)

शिलावल्कला । इति राजनिर्घण्टः ॥

**शैलशिविरं**, क्ली, (शैलानांशिविरमिव समुद्रगर्भे

बहुपर्व्वतावस्थानत्वात्तथात्वम् ।) समुद्रः ।
इति
त्रिकाण्डशेषः ॥

**शैलसुता**, स्त्री, (शैलस्य सुता ।) पार्व्वती ।

यथा, --
"मातः शैलसुतासपत्नि
वसुधाशृङ्गारहारावलि
स्वर्गारोहणवैजयन्ति भवतीं भागीरथीं
प्रार्थये ॥"
इति वाल्मिकीयगङ्गाष्टकम् ॥
ज्योतिष्मती । इति राजनिर्घण्टः ॥

**शैलाख्यं**, क्ली, (शैलमिति आख्या यस्य ।) इति

रत्नमाला ॥

**शैलाग्रं**, क्ली, (शैलस्य अग्रम् ।) शिखरम् । इति

त्रिकाण्डशेषः ॥

**शैलाजं**, क्ली, (शैलादाजायते इति । आ + जन +

ः ।) शैलेयम् । इति राजनिर्घण्टः ॥

"यन्मां लोभयसे रम्भे
कामक्रोधजयैषिणम् ।
दशवर्षसहस्राणि शैली स्थास्यसि दुर्भगे
॥")

**शैलूषः**, पुं, शिलूषस्यापत्यमिति । शिलूष + अण्

नटः । (यथा, माघे । १ । ६९ ।
"अथोपपत्तिं छलनापरोऽपरा-
मवाप्य शैलूष इवैष भूमिकाम् ॥")
विल्ववृक्षः । इत्यमरः ॥ धूर्त्तः ।
तालधारकः ।
इति शब्दरत्नावली ॥

**शैलूषिकः**, पुं, नटवृत्त्यन्वेषी । यथा, --

"वृत्त्यन्वेषी नटानान्तु स तु शैलूषिकः
स्मृतः ॥
इति ब्रह्मपुराणोक्तम् ॥
इति प्रायश्चित्तविवेकः ॥

**शैलूषिकी**, स्त्री, शैलूषिकजातिस्त्री । तद्गमन-

प्रायश्चित्तं यथा । संवर्त्तः ।
नटीं शैलूषिकीं चैव रजकीं वेणुजीविनीम्
।
कामतस्तु यदा
गच्छेच्चरेच्चान्द्रायणद्वयम् ॥"
ततश्चाज्ञानतश्चान्द्रायणम् । चान्द्रायणे
धेन्व-
ष्टकम् । इति प्रायश्चित्ततत्त्वम् ॥)

**शैलेन्द्रः**, पुं, (शैलानामिन्द्रः ।) हिमालयः ।

यथा, --
"ददृशुस्ते ततो देवीमीषद्धासां
व्यवस्थिताम् ।
सिंहस्योपरिशैलेन्द्रशृङ्गे महति काञ्चने ॥"
इति देवीमाहात्म्यम् ॥

**शैलेन्द्रस्थः**, पुं, (शैलेन्द्रे तिष्ठतीति । स्था + कः ।

भूर्जवृक्षः । इति राजनिर्घण्टः ॥

**शैलेयं**, क्ली, (शिलायां भवम् । शिला + ढक् ।)

शैलजाख्यगन्धद्रव्यम् । शेलेयक इति रन्दूच इति
छरिला इति च ख्यातम् । तत्पर्य्यायो यथा, --
"शेलेयं शैलजं वृद्धं शिलापुष्पं शिलोद्भवम् ।
स्थविरं पलितं जीर्णं तथा कालानुसार्य्यकम् ॥
शिलोत्थञ्च शिलादद्रुः शैलाजं गिरिपुष्पकम् ।
शिलाप्रसूनं सुभगं शैलकं षोडशाह्वयम ॥"
अस्य गुणाः ।
"शैलेयं शिशिरं तिक्तं सुगन्धि कफपित्तजित् ।
दाहतृष्णावमिश्वासव्रणदोषविनाशनम्॥"
इति राजनिर्घण्टः ॥
आंप च ।
"शैलेयन्तु शिलापुष्पं वृद्धं कालानुसार्य्यकम् ।
शैलेयं शीतलं हृद्यं कफपित्तहरं लघु ।
कण्डूकुष्ठाश्मरीदाहविषहृद्गुदरक्तहृत्॥"
इति भावप्रकाशः ॥ * ॥
तालपर्णी । सैन्धवम् । इति मेदिनी ॥

**शैलेयं**, त्रि, (शैले भवम् । शैल + ढक् ।) शैल-

सम्भवम् । इति हेमचन्द्रः ॥ शिलातुल्यम् ।
इति शब्दरत्नावली ॥ (शिलेव । शिला +
"शिलाया ढः ।" ५ । ३ । १०२ । इति योग-
विभागेन ढञ् ॥)

**शैलेयः**, पुं, (शैले भवः । शैल + ढक् ।) सिंहः ।

भ्रमरः । इति शब्दरत्नाली ॥

**शैलेयी**, स्त्री, (शैले भवा । शैल + ढक् । ङीष् ।)

पार्व्वती । इति त्रिकाण्डशेषः ॥

**शैलोद्भवा**, स्त्री, (शैलात् उद्भवो यस्याः ।) क्षुद्र-

पाषाणभेदी । इति राजनिर्घण्टः ॥

**शैल्यं**, त्रि, (शिला + ष्यञ् ।) शिलासम्बन्धि ।

महापाशुपतस्त्वासीद्भारद्वाजस्तपोधनः।
तस्य शिष्योऽप्यभूद्राजा ऋषभः सोमकेश्वरः ॥
कालास्यो भगवानासीदापस्तम्बस्तपोधनः।
तस्य शिष्यो वको वश्यो नाम्ना क्राथेश्वरो मुने ॥
महाव्रती च धनदस्तस्य शिष्यश्च वीर्य्यवान् ।
कुल्लोदर इति ख्यातो जात्या शूद्रो महातपाः ॥
एवं स भगवान् ब्रह्मा पूजनाय शिवस्य च ।
कृत्वा तु चातुराश्रम्यं स्वमेव भवनं गतः ॥"
इति वामने ६ अध्यायः ॥ * ॥
तस्य स्वरूपं यथा । आयान्तं शैवमालोक्याह ।
"श्रीमानसावेति जटालमौलि-
र्व्याघ्रत्वगालम्बितमध्यभागः।
विभूतिसंभूषितभास्वदङ्गो
रुद्राक्षमालाकलितोद्र्ध्वदेहः ॥"
इति विद्वन्मोदतरङ्गिण्यां २ तरङ्गः ॥

**शैवलं**, क्ली, (शेते इति । शी + "शीङो धुग्लग्व-

लञ् वालनः ।" उणा ०४ । ३८ । इति वलञ् ।)
पद्मकाष्ठम् । शैवाले, पुं, । इति मेदिनी ॥ (यथा
कुमारे । ५ । ९ ।
"न षट्पदश्रेणिभिरेव पङ्कजं
सशैवलासङ्गमपि प्रकाशते ॥"
विन्ध्यसमीपदक्षिणभागवर्त्तिगिरिविशेषः । यथा,
रामायणे । ७ । ८८ । १३ ।
"शै वलस्योत्तरे पार्श्वे ददर्श सुमहत् सरः ॥")

**शैवलिनी**, स्त्री, (शैवलमस्या अस्तीति । इनिः ।)

नदी । इत्यमरः ॥

**शैवालं**, क्ली, (शी + बाहुलकात् वालञ् ।)

जलजद्रव्यविशेषः । शेयाला इति भाषा ।
(यथा, महाभारते । ४ । ६० । १७ ।
"प्रावर्त्तयन्नदीं घोरां शोनितोदां तरङ्गिणीम् ।

(स्त्री, प्रतीपस्य राज्ञः पत्नी । इति महा-
भारतम् । १ । ९५ । ४४ ॥ सगरस्य राज्ञः पत्नी ।
सा तु असमञ्जसो जननी । यथा, महाभारते ।
३ । १०७ । ३९ ।
"असमञ्जा इति ख्यातः सगरस्य सुतोऽह्यभूत् ।
यं शैव्या जनयामास पौराणां स हि दारकान् ।
गलेषु क्रोशतो गृह्य नद्यां चिक्षेप दुर्ब्बलान् ॥"
शिवसम्बन्धिनि, त्रि ॥

**शैशवं**, क्ली, शिशोर्भावः । (शिशु + "इगन्ताच्च

लघुपूर्व्वात् ।" ५ । १ । १३१ । इति अण ।)
बाल्यम् । इत्यमरः ॥ यथा,
"शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
वार्द्धके मुनीवृत्तीनां योगेनान्ते तनुत्यजाम् ॥"
इति रघुवंशे १ सर्गः ॥

**शैशिरः**, पुं, (शिशिरे ऋतौ भवः । शिशिर +

अण् । श्यामचटकः । इति राजनिर्घण्टः ॥
शिशिरसम्बनि, त्रि, । यथा । श्रुतिः । तप-
स्तपस्यौ शैशिरावृतुः । इति तिथ्यादितत्त्वम् ॥

**शैष्योपाध्यायिका**, स्त्री, (शिष्योपाध्यायानांभावः

कर्म्म वा । शिष्योपध्याय + "द्वन्द्वमनोज्ञादि-
भ्यश्च ।" ५ । १ । १३३ । इति वुञ् ।) शिष्या-
ध्यापना । इति सिद्धान्तकौमुदी ॥

शिलाया इदं इत्यर्थे ष्ण्यप्रत्ययेन निष्पन्नम् ॥

**शैवं**, क्ली, शैवालः । इति शब्दचन्द्रिका ॥

(शिवमधिकृत्य कृतो ग्रन्थः । शिव + अण ।)
शिवपुराणम् । यथा --
"अष्टादश पुराणानि पुराणज्ञाः प्रचक्षते ।
ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतं तथा ॥"
इति मलमासतत्त्वे विष्णुपुराणम् ॥
(शिवस्येदमिति । शिव + अण् ।)
शिवसम्ब-
न्धिनि, त्रि (यथा । कथासरित्सागरे । ४० । ८९ ।
"प्रापदायतनं शैवं नद्यास्तस्यास्तटस्थितम् ॥")
शैवः, पुं, (शिव + अण् ।) वसुकः । धुस्तूरः ।
इति राजनिर्घण्टः ॥ आचारविशेषः । यथा, --
"अष्टाङ्गयोगसंयुक्तो यजेद्देवीं विधानतः ।
यावद्ध्यानं समाधिश्च तावत् शैवः प्रचक्षते ॥"
इत्याचारभेदतन्त्रम् ॥ * ॥
शिवोपासकः । तत्पर्य्यायः ।
औद्ध्र्वश्रोतसिकः २
इति त्रिकाण्डशेषः । एतद्भेदा यथा --
"ततश्चकार भगवान् चातुर्व्वर्ण्यं हरार्च्चने ।
शास्त्राणि चैषां मुख्यानि
नानोक्तिविदितानिच
आद्यं शैवं परिख्यातमन्यत् पाशुपतं मुने ! ।
तृतीयं कालवदनं चतुर्थञ्च कपालिनम् ॥
शैव आसीत् स्वयं शक्तिर्व्व शिष्टस्य प्रियः सुतः ।
तस्य शिष्यो बभूवाथ गोपायन इति श्रुतः ॥
केशशैवालसंवाधां युगान्ते कालनिर्म्मिताम् ॥")
तत्पर्य्यायः । जलनीली २ शैवलः ३ ।
इत्यमरः ॥
शेपालम् ४ शेवलम् ५ शीवलम् ६ शेपालः ७
जलनीलिका ८ । इति वाचस्पतिः ॥ जल-
नीलः ९ । इति मुकुटादयः । इति भरतः ॥
सैवालम् १० शेबालम् ११ वारिचामरः १२
शैवलम् १३ सलिलकुन्तलम् १४ हटपर्णी १५
अम्बुतालम् १६ । इति शब्दरत्नावली ॥
अरकः १७ जलकेशः १८ कावारम् १९ । इति
हारावली ॥ जलजम् २० । अस्य गुणाः ।
शीतलत्वम् । स्निग्धत्वम् । सन्तापव्रणनाशि-
त्वञ्च । इति राजनिर्घण्टः ॥

**शैव्यः**, पुं, श्रीकृष्णस्य घोटकविशेषः । यथा, --

"तुरगाः शैव्यसुग्रीवमेघपुष्पबलाहकाः ।"
इति त्रिकाण्डशेषः ॥
(यथा च महाभारते । १ । २२१ । ३ ।
"रथेन काञ्चनाङ्गेन कल्पितेन यथाविधि ।
शैव्यसुग्रीवयुक्तेन किङ्किणीजालमालिना ॥")
पाण्डवसेनापतिविशेषः । यथा, --
धृष्टकेतुश्चेकितानः काशीराजश्च वीर्य्यवान् ।
पुरुजित् कुन्तिभोजश्च शैव्यश्च नरपुङ्गवः ॥"
इति श्नीभगवद्गीतायाम् । १ । ५ ।

**शो**, य निशाने । इति कविकल्पद्रुमः ॥ (दिवा०-

पर०-सक०-अनिट् ।)
निशानमिहाल्पीकर-
णम् । य, श्यति शत्तुं शूरः । इति
दुर्गादासः ॥

**शोकः**, पुं, शुच + घञ् ।) चित्तविकलता ।

इष्टवियोगानुचिन्तनम् । इति
नागोजीभट्टः ॥
बन्ध्वादिवियोगजनितामनःपीडा ।
इति भाव-
प्रकाशः ॥ तत्पर्य्यायः । मन्युः २ शुक् ३ । इत्य-
मरः ॥ शुचा ४ निशमः ५ । इति
शब्दरत्ना-
वली ॥ शोचनम् ६ खेदः ७ । इति
हेमचन्द्रः ॥
तन्निवारणहेतुर्यथा, --
"भरतं पतितं दीनं शोचन्तं सुभृशं तदा ।
शोचमानं वशिष्ठस्तु वारयामास हेतुभिः ॥
शोचमानस्तु सस्नेहा बान्धवाः सुहृदस्तथा ।
पातयन्ति गतं स्वर्गादश्रुपातेन राघव ॥
भूरिद्युम्नो गतः स्वर्गं पुण्येन पतितः पुनः ।
शोचितो बन्धुवर्गश्च मृतस्ने हं परित्यज ॥"
इति वह्निपुराणम् ॥
अपि च । अथ शोकापनोदनम् ।
याज्ञवल्क्यः ॥
"कृतोदकान् समुत्तीर्णान् मृदुशाद्वलसंस्थि-
तान् ।
स्नातानपनुदेयुस्तानितिहासैः पुरातनैः ॥
मानुष्ये कदलीस्तम्भे निःसारे सारमार्गणम् ।

|  |  |  |
| --- | --- | --- |
|  |  | यः करोति स संमूढो जलवुद्बुदसन्निभे ॥<br>पञ्चधा संभृतः कायो यदि पञ्चत्वमागतः ।<br>कर्म्मभिः स्वशरीरोत्थैस्तत्र का परिवेदना ॥<br>गन्त्री वसुमती नाशमुदधिर्दैवतानि च ।<br>फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति ॥<br>श्ले ष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः ।<br>अतो न रोदितव्यहि क्रियाकार्य्या विधानतः ॥”<br>इति शुद्धितत्त्वम् ॥ |

अन्यच्च ।
श्रीभगवानुवाच ।
“अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासंश्च नानुशोचन्ति पण्डिताः ॥
अव्यक्तोऽयमचिन्त्योऽयमविकार्य्योऽयमुच्यते।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥
अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैनं शोचितुमर्हसि ॥
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्य्येऽर्थे न त्वं शोचितुमर्हसि ॥
देही नित्यमवध्योऽयं देहे सर्व्वस्य भारत ।
तस्मात् सर्व्वाणि भूतानि न त्वं शोचितुमर्हसि ॥”
इति श्रीभगवद्गीतायाम् २ अध्यायः ॥

**शोकनाशः**, पुं, (शोकस्य नाशो यस्मात् ।) अशोकवृक्षः । इति राजनिर्घण्टः ॥

**शोकहारी**, स्त्री, (शोकं हरतीति । हृ + अण् । ङीष् ।) वनवर्व्वरिका । इति राजनिर्घण्टः ॥

**शोकारिः**, पुं, (शोकस्य अरिः ।) कदम्बवृक्षः । इति शब्दचन्द्रिका ॥

**शोचनं**, क्ली, (शुच् + ल्युट् ।) शोकः । इति हेमचन्द्रः ॥ (शोचतीति । शुच शोके + “जुच-ङ्क्रम्यदन्द्रम्यसृगृधीति ।” ३ । २ । १५० । इति युच् । शोकशीले, त्रि ॥)

**शोचना**, स्त्री, शोकोत्पादना । शोचि णिङन्तात् ङनप्रत्ययान्तादात्प्रत्ययनिष्पन्ना। इति संक्षिप्त-सारव्याकरणम् ॥

**शोचिः**, [स्] क्ली, (शुच्यत्यनेनेति । शुच + “अर्चि-शुचिहुसृपीति ।” उणा० २ । १०९ । इति इसिः ।)
प्रभा । इत्यमरः ॥ (यथा, भागवते । ३ । १५ । २६ ।
“तद्विश्वगुर्व्वधिकृतं भुवनैकवन्द्यं
दिव्यं विचित्रविबुधाग्र्यविमानशोचिः ॥”)

**शोचिष्केशः**, पुं, (शोचींषि केशा इव यस्य । नियतं समासेऽनुत्तरपदस्थस्येति षत्वम् ।) अग्निः । वली ॥ रक्तोत्पलाभः ४ । इति जटाधरः ॥
(यथा, भागवते । १ । ११ । २ ।
“स उच्चकाशे धवलोदरोदरो-
ऽप्युरुक्रमस्याधरशोणशोणिमा ॥”)
नदविशेषः । तत्पर्य्यायः । हिरण्यवाहुः ।
इत्यमरः ॥ हिरण्यवाहः ३ । इति भरतः ॥
स तु अमरकण्टकदेशात् पाटलिपुत्रे गङ्गायां
मिलितः । तज्जलगुणाः । रुचिदत्वम् । सन्ताप-
शोषापहत्वम् । पथ्यत्वम् ।
वह्निकरत्वम् ।
बलक्षीणाङ्गवृद्धिप्रदत्वञ्च । इति राजनिर्घण्टः ॥
अग्निः । श्योनाकः । लोहिताश्वः । कोकनद-
च्छाये, त्रि । इति मेदिनी ॥
समुद्रविशेषः ।
इति धरणिः ॥ रक्तेक्षुः ।
श्योनाकप्रभेदः ।
इति राजनिर्घण्टः ॥ (रक्तवर्णे, त्रि । यथा,
कुमारे । १ । ७ ।
“न्यस्ताक्षरा धातुरसेन यत्र
भूर्जत्वचः कुञ्जरबिन्दुशोणाः ॥”)

**शोणकः**, पुं, (शोण एव । स्वार्थे कन् ।) शोणाक-वृक्षः । इत्यमरः ॥

**शोणझिण्टिका**, स्त्री, (शोणा रक्तवर्णा झिण्टिका ।) रक्तसैरेयः । इति राजनिर्घण्टः ॥

**शोणझिण्टी**, स्त्री, (शोणा रक्तवर्णा, झिण्टी ।) कुरुवकः । कण्टकिनी । इति राजनिर्घण्टः ॥

**शोणपत्रः**, पुं, (शोणवत् रक्तानि पत्राणि यस्य ।)

**शोणितपुरं**, क्ली, (शोणिताख्यं पुरम् ।) बाण-पुरम् । इति त्रिकाण्डशेषः ॥

**शोणिताह्वयं**, क्ली, (शोणितं आह्वयो यस्य ।) कुङ्कुमम् । इति रत्नमाला ॥

**शोणितोत्पलं**, क्ली, (शोणितवत् रक्तमुत्पलम् ।) रक्तोत्पलम् । इति केचित् ॥

**शोणी**, स्त्री, (शोण + “शोणात् प्राचाम् ।” ४ । १ । ४३ । इति ङीष ।)
रक्तोत्पलतुल्यवर्णा
स्त्री । इति व्याकरणं जटाधरश्च ॥
(बडवा ।
इति काशिका ॥)

**शोणोपलः**, पुं, (शोणो रक्तवर्ण उपलः ।) माणि-क्यम् । इति राजनिर्घण्टः ॥

**शोथः**, पुं, (शवतीति । शु गतौ + बाहुलकात् थन् । इत्युणादिवृत्तौ उज्ज्वलः । २ । ४ ।)
रोगविशेषः । तत्पर्य्यायः । शोफः २ श्वयथुः ३ ।
इत्यमरः ॥ शोथकः ४ । इति शब्दरत्नावली ॥
अथ शोथाधिकारः । तत्र शोथस्य विप्रकृष्टं
निदानमाह ।
“शुद्‌ध्यामयाभक्तकृशाबलानां
क्षाराम्लतीक्ष्णोष्णगुरूपसेवा ।
दध्याममृच्छाकविरोधिपिष्ट-
गरोपसृष्टान्ननिषेवणञ्च ॥
अर्शांस्यचेष्टा वपुषो ह्यशुद्धि-
र्म्मर्म्मोपघातो विषमा प्रसूतिः ।
मिथ्योपचारः प्रतिकर्म्मणाञ्च
निजस्य हेतुः श्वयथोः प्रदिष्टा ॥”
शुद्धिर्वमनविरेकादि । आमयाः पाण्डुरोगा-

चित्रकवृक्षः । इत्यमरः ॥ (क्वचित् वाच्यलिङ्गो ऽपि । तथा, ऋग्वेदे । १ । ४५ । ६ ।
"शोचिष्केशं पुरुप्रियाग्ने हव्याय वोह्लवे ।"
"शोचिष्केशं दीप्तिरूपकेशोपेतम् ।" इति तद्भाष्ये सायणः ॥)
शोच्यकः, त्रि, अवरः । क्षुद्रः । इति शब्दमाला ॥

**शोटीर्य्यं**, क्ली, वीर्य्यम् । इति शब्दरत्नावली ॥

**शोठः**, त्रि, मूर्खः । अलसः । इति मेदिनी ॥

धूर्त्तः । नीचः । पापरतः । इति शब्दरत्नावली ॥

**शोण**, ऋ गतौ । वर्णे । इति कविकल्पद्रुमः ॥

(भ्वा०-पर०-सक०-वर्णे अक०-सेट् ।) वर्णश्चेह रक्तीभावः । शोणति सूर्य्यः सन्ध्यायाम् । इति दुर्गादासः ॥

**शोणं**, क्ली, (शोणतीति । शोण वर्णे + पचाद्यच् ।)

सिन्दूरम् । रुधिरम् । इति राजनिर्घण्टः ॥

**शोणः**, पुं, (शोण वर्णे + अच् ।) रक्तोत्पलतुल्य-

वर्णः । तत्पर्य्यायः । कोकनदच्छविः २ । इत्यमरः ॥ रक्तोत्पलनिभः ३ । इति शब्दरत्ना-

रक्तपुनर्नवा । इति राजनिर्घण्टः ॥

**शोणपद्मकं**, क्ली, (शोणं रक्तवर्णं पद्मकम् ।) रक्त

कमलम् । इति राजनिर्घण्टः ॥

**शोणपुष्पकः**, पुं, (शोणं पुष्पं यस्य । कन् ।)

कोविदारः । इति राजनिर्घण्टः ॥

**शोणपुष्पी**, स्त्री, (शोणवत् पुष्पमस्याः । ङीष् ।)

सिन्दूरपुष्पी । इति राजनिर्घण्टः ॥

**शोणरत्नं**, क्ली, (शोणं रक्तवर्णं रत्नम् ।) पद्म-

रागमणिः । इत्यमरः ॥

**शोणा**, स्त्री, (शोणो रक्तवर्णोऽस्त्यस्या इति ।

अच् । टाप् ।) शोणवर्णयुक्ता । इति जटाधरः ॥

**शोणाकः**, पुं, वृक्षविशेषः । शोणा इति ख्यातः ।

तत्पर्य्यायः । श्योनाकः २ शुकनासः ३ ऋक्ष्यः ४
दीर्घवृन्तः ५ कुटन्नटः ६ अरलुः ७ स्वर्ण-
वल्कलः ८ ध्वान्तशात्रवः ९ । इति शब्दमाला ॥
मण्डूकपर्णः १० पत्रोर्णः ११ नटः १२ कट्वङ्कः १३
टुण्टुकः १४ शोणकः १५ अरलः १६ । इत्य-
मरः ॥ स्योनाकः १७ अरटुः १८ । इति
तट्टीका ॥

**शोणितं**, क्ली, (शोण वर्णे + क्तः ।) शोण +

जातार्थे इतच् वा ।) रक्तम् । इत्यमरः ॥
(यथा, मनुः । ११ । २०८ ।
"शोणितं यावतः पांशून् संगृह्णाति महीतले ।
तावन्त्यब्दसहस्राणि तत्कर्त्ता नरके वसेत् ॥")
तस्योत्पत्तिर्गर्भस्थस्य पञ्चमे मासि भवति । इति

दयः । अभक्तं अभोजनम् । आमः अपक्वो
भुक्तस्य रसः । पिष्टगरोपसृष्टान्नं पिष्टो यो
गरः संयोगजं विषं तेन उपसृष्टमन्नम् । वपुषो
ह्यशुद्धिः शोधनार्हस्य वपुषोऽशोधनम् । मर्म्मोप-
घातः दोषकृत एव ज्ञेयः । बाह्यहेतुकृतस्तु
मर्म्मोपघातः आगन्तुजशोथहेतुरेव । विषमा
प्रसूतिः आमगर्भपतनादिना । प्रतिकर्म्मणां
वमनादीनां पञ्चकर्म्मणाम् । मिथ्योपचारः
असम्यक्करणम् । श्वयथोः शोथस्य । निजस्य
आत्मीयस्य । सन्निकृष्टस्य हेतोर्वातादेः । हेतुः
रूक्षोष्णमधुरादि ॥ * ॥
सन्निकृष्टनिदानमाह ।
"दोषैः पृथक् द्वयैः सर्व्वैरभिघाताद्विषादपि ।
सर्व्वो हेतुविशेषैस्तु रूपभेदो नवात्मकः ॥" * ॥
संप्राप्तिपूर्व्वकं सामान्यं लक्षणमाह ।
"रक्तपित्तकफान् वायुर्दुष्टो दुष्टान् वहिःशिराः
नीत्वा रुद्धगतिस्तैर्हि कुर्य्यात् त्वङ्मांससंश्रयम्
उत्सेधं संहतं शोथं तमाहुर्निचयादतः ॥
सगौरवं स्यादनवस्थितत्वं सोत्सेधमुष्माथ शिराततत्वम् ।
सलोमहर्षञ्च विवर्णता च सामान्यलिङ्गं श्वयथोः प्रदिष्टम् ॥"
उत्सेधः उन्नतत्वं किं विशिष्टमुत्सेधं अतः
पूर्व्वोक्तान्निचयात् रक्तपित्तकफवातानां समु-

| | | |
|---|---|---|
| | सुखबोधः ॥ कुङ्कुमम् । इति राजनिर्घण्टः ॥<br>**शोणितचन्दनं**, क्ली, (शोणितवत् चन्दनम् ।) रक्तचन्दनम् । इति राजनिर्घण्टः ॥ | दायात् । संहतं घनम् । तमुत्सेधं शोथमाहु-<br>रित्यन्वयः ॥ * ॥ तस्य शोथस्य किं स्यादित्या- |

काङ्क्षयामाह। अनवस्थितत्वं स्यादनियता स्थितिः स्यादित्यर्थः।
चिकित्साव्यतिरेकेणापि
निवृत्तेः। तच्चानवस्थितत्वं सगौरवं स्यात्
।
गौरवमप्यनवस्थितं स्यात्। अथ च
सोत्सेधं
स्यात्। उन्नतत्वमप्यनवस्थितं स्यादित्यर्थः
॥ * ॥
वातिकं शोथमाह।
“चरस्तनुस्त्वक्परुषोऽरुणोऽसितः
प्रसुप्तिहर्षार्त्तियुतो निमित्ततः।
प्रशाम्यति प्रोन्नतमेति पीडितो
दिवा बली स्यात् श्वयथुः समीरणात्॥”
चरः सञ्चारी। प्रसुप्तिः स्पर्शाज्ञता। हर्षोऽत्र
झिनिझिनी रोमाञ्चो वा। अर्त्तिः पीडा।
एतद्युतः। दिवावलीविकृतिविषमसमवाया-
रब्धात्। अतएवोक्तं चरकेण।
“स्नेहोष्मर्दनाद्यैर्यः प्रशाम्येत् स च
वातिकः।
यश्चाप्यरुणवर्णः स्यात् शोथो नक्तं प्रशा-
म्यति॥” * ॥
पैत्तिकमाह।
“मृदुः सुगन्धोऽसितपीतरागवान्
भ्रमज्वरस्वेदतृषामदान्वितः।
य उष्यते स्पर्शरुगक्षिरागकृत्
स पित्तशोथो भृशदाहपाकवान्॥”
उष्यते सन्तप्यते। भृशदाहपाकवान् भृश-
दाहो यः पाकस्तद्युक्तः॥ * ॥ श्लैष्मिकमाह
।
“गुरुः स्थिरः पाण्डररोचकान्वितः
प्रसेकनिद्रा वमिवह्निमान्द्यकृत्।
स कृच्छ्रजन्मप्रशमो निपीडितो
न चोन्नमेद्रात्रिवलीकफात्मकः॥” * ॥
द्वन्द्वजमाह।
“निदानाकृतिसंसर्गात् ज्ञेयः शोथो
द्विदोषजः॥
सान्निपातिकमाह।

अग्रे भवाः। अविषप्राणिनामपीत्यन्ने दंष्ट्रा
दन्तनखानां स्वभावादेव सविषत्वमुक्तम्।
किन्तु
सर्पादिविषं मारकं भवति। अविषप्राणिनां
दंष्ट्रादिविषं शोथव्यथादिकरं भवतीति
विशेषः
विण्मूत्रेत्यादिविडाद्युपहतंमलिनञ्च
यद्वस्त्रम्
तथा सङ्करः संमार्जनीनिःक्षिप्तो
धूल्यादिःतेषां
सम्पर्कात्। गरयोगावचूर्णनात् गरः
संजोगजं
विषं तस्य योगो यस्य तेन
वस्तुनावधूननात्।
अवलम्बी लम्बमानः।
अयमप्यागन्तुजस्तथापि
सामान्यागन्तुजशोथचिकित्सातोऽस्य
विशिष्ट-
चिकित्साभिधानात्पृथक पठितः॥ * ॥
यत्र स्थिता दोषा यत्र शोथं कुर्व्वन्ति तदाह
।
“दोषाः श्वयथुमूर्द्ध्वंहि कुर्वन्त्यामाशये
स्थिताः।
पित्ताशयस्था मध्ये तु
वर्च्चस्थानगतास्त्वधः॥
कृत्स्नं देहमनुप्राप्ताः कुर्य्युः सर्व्वसरं तथा
।”
ऊर्द्ध्वं उरःप्रभृत्यूर्द्धम्। मध्ये
पक्वाशयमध्ये। अघः
पक्वाशयादधः॥ * ॥ उपद्रवानाह।
“श्वासं पिपासा छर्द्दिश्च दौर्बल्यं ज्वर एव
च।
यस्य चान्ने रुचिर्नास्ति शोथिनं तं
विवर्जयेत्॥”
कष्टसाध्यत्वादिकमाह।
“यो मध्यदेशे श्वयथुः स कष्टः सर्व्वगश्च
यः।
अर्द्धाङ्गेऽरिष्टभूतश्च यश्चोर्द्ध्वं परिसर्पति
॥”

हन्ति पित्तकृतं
शोथंतृष्णाज्वरसमन्वितम्॥ * ॥
स्नु क्क्षीरभाविताः कृष्णा पथ्या मूत्रेण
वा युताः
योजिताः शमयन्त्याशु शोथं
श्लेष्मसमुत्थितम्॥
मिश्रे मिश्रक्रियां कुर्य्यात् सर्व्वजे सर्व्वमेव
हि।
विल्वपत्ररसं पूतं शोषणं त्रिभवे पिबेत्॥
* ॥
शोथे त्वागन्तुजे कुर्य्यात्
सेकलेपादिशीतलम्।
भल्लातक्या हरेच्छोथं सतिला
कृष्णमृत्तिका।
महिष्या नवनीतञ्च लेपाद्दग्धतिलान्वितम्
॥”
अत्र दुग्धं महिष्या एव। यत आह।
“महिषीक्षीरसंपिष्टैर्नवनीतसमन्वितैः।
तिलैर्लिप्तः समं याति शोथो
भल्लातकोत्थितः॥
यष्टिदुग्धतिलैर्लेपो नवनीतेन संयुतः।
शोथमारुस्करं हन्ति चूर्णैः शालदलस्य
च॥”
विषजशोथचिकित्सा तु
विषचिकित्सायांद्रष्टव्या
त्रथ सामान्यचिकित्सा।
“पथ्या निशा भार्ग्यमृताग्निदार्व्वी-
पुनर्नवा दारु महौषधञ्च।
क्वाथं प्रपीयोदरपाणिपाद-
मुखागतं हन्त्यचिरेण शोथम्॥”
इति पथ्यादिक्वाथः॥ * ॥
फलत्रिकोद्भवं क्वाथं गोमूत्रेणैव साधयेत्
।
वातश्लेष्मभवं शोथं हन्याद्वृषणसम्भवम्
॥ * ॥
वृश्चीवदेवद्रुमनागरेण
दन्ती त्रिवृत्त्र्यूषणचूर्णकैर्व्वा।
दुग्धं सुसिद्धं विधिना निपीतं
गीतं परं शोथहरं भिषग्भिः॥”

“सर्वाकृतिः सन्निपाताच्छोथो
व्यामिश्रलक्षणः
व्यामिश्रलक्षण इत्युक्ते सर्व्वाकृतिरिति उक्त-
वातजादिशोथसकललक्षणनियमार्थम् ॥ *
॥
अभिघातजमाह ।
“अभिघातेन शस्त्रादिच्छेदभेदक्षतादिभिः ।
हिमानिलोदध्यनिलैर्भल्लातकपिकच्छुजैः ॥
रसैः शूकैश्च संस्पर्शात् श्वयथुः
स्याद्विसर्पवान् ।
भृशोष्मा लोहिताभासः प्रायशः पित्तलक्षणः
॥”
छेदः खड्गादिना भेदः पाषाणादिना क्षतं
शरादिना नाडीब्रणादि च । आदिशब्देन
लगुडप्रहारादि गृह्यते । भल्लातजैः रसैः ।
कपि-
कच्छुजैः शूकैः । विसर्पवान् प्रसरणशीलः ।
पित्तलक्षणः पैत्तिकशोथलक्षणणः ॥ * ॥
विषज-
माह ।
“विषजः सविषप्राणिपरिसर्पणमूत्रणात् ।
दंष्ट्रादन्तनखाघातादविषप्राणिनामपि॥
विण्मूत्रशुक्रोपहतमलवद्वस्त्रसंक्रटात् ।
विषवृक्षानिलस्पर्शात्गरयोगावचूर्णनात् ॥
मृदुश्चलोऽवलम्बी च शीघ्रो बहुरुजाकरः ।”
परिसर्पणं शरीरोपरि सञ्चरणम् । दंष्ट्राद्विगुणी
कृता दन्तावली । चौ ह इति लोके । दन्ता
मध्यदेशे उरःपक्वाशयमध्ये । सर्व्वगः
सकल-
शरीरभवः । सर्व्वज इति पाठे
सान्निपातिकः ।
अर्द्धाङ्गे अर्द्धनारीश्वराकारे । यस्वोद्र्ध्वं
परिसर्प-
तीति पुरुषविषयम् । तथा च ।
“ऊर्द्धगामी नरं पद्भ्यामधोगामी मुखात्
स्त्रियम् ।
उभयं वस्तिसंजातः शोथो हन्ति न
संशयः ॥”
ऊर्द्धगामी मुखगामी । तथा च तन्त्रान्तरे ।
“पादप्रवृत्तः श्वयथुर्नृणां यः प्राप्नु
यान्मुखम् ॥”
इति ॥ स न सिध्यतीति शेषः । अधोगामी
पादगामी । तथा च तन्त्रान्तते ।
“स्त्रीणां वक्त्रात् पदं याति वस्तिजश्च न
सिध्यति ।” इति ॥
उभयं नरं नारीञ्च । अपरञ्च ।
“अनन्योपद्रवकृतः शोथः पादसमुत्थितः
।
पुरुषं हन्ति वा नारींमुखजो वस्तिजो द्वयम्
॥”
अयमर्थः । पादसमुत्थितः
पादाभ्यामुत्थितो
मुखगामीति यावत् शोथः पुरुषं हन्ति स
किं
विशिष्टः अनन्योपद्रवकृतः । शोफादन्ये
व्याधयो
ऽतीसारग्रहण्यर्शःप्रभृतयः तेषामुपद्रवैः
कृतः ।
तदुपद्रवेण जात इत्यर्थः । न
अन्योपद्रवकृतः ।
अनन्योपद्रवकृतः । अर्थात् स्वहेतुभिरेव
जातः ।
शोथव्याधिरेव तु पुनर्मुखजः मुखाज्जातः
पद-
गामीति यावत् नारीं हन्ति ।
सोऽप्यनन्योप-
द्रवकृत एव । वस्तिजः द्वयं पुरुषं नारीञ्च
हन्ति
वृश्चीवः वर्षाभूः ॥ * ॥
“केशस्तथार्कवर्षाभूर्निम्बक्वाथेन
शोथहृत् ।
गोमूत्रेणापि कुर्व्वीत सुखोष्णे नावसेचनम्
॥ * ॥
पुनर्नवा दारु शुण्ठी शिग्रुः
सिद्धार्थकस्तथा ।
अम्लपिष्टः सुखोष्णोऽयं प्रलेपः
सर्व्वशोथहृत् ॥
गुडार्द्रकं वा गुडनागरं वा
गुडाभयां वा गुडपिप्पलीं वा
कर्षाभिवृद्ध्या त्रिपलप्रमाणं
खादेन्नरः पक्षमथापि मासम् ॥
शोथप्रतिश्यायगलास्यरोगान्
सश्वासकासारुचिपीनसादीन्
जीर्णज्वरार्शोग्रहणीविकारान्
हन्यात् तथान्यान् कफवातरोगान् ॥ * ॥
विश्वं गुडेन तुल्यं
वृश्चीवरसानुपानमध्यस्तम्।
विनिहन्ति सर्व्वशोथं
घनवृन्दंचण्डवायुरिव ॥ * ॥
कणानागरजं चूर्णं सगुडं शोथनाशनम् ।
आमाजीर्णप्रशमनं शूलघ्नं वस्तिशोधनम्
॥ * ॥
गुडात् पलत्रयं ग्राह्यं शृङ्गबेरं पलत्रयम् ।
शङ्गबेरसमा कृष्णा लोहविट्तिलयोः
पलम् ॥
चूर्णमेतत् समुद्दिष्टं सर्व्वश्वयथुनाशनम्
॥”
इति गुडादिवटिका ।
“मानकक्वाथकल्काभ्यां घृतप्रस्थं
विपाचयेत्
एकजं द्वन्द्वजं शोथं त्रिदोषञ्च व्यपोहति
॥”
इति मानकघृतम ॥
“शुष्कमूलवर्षाभूदारुरास्नामहौषधैः ।
पक्वमभ्यञ्जनात्तैलं सशूलं श्वयथुं हरेत्
॥”

| | | |
|---|---|---|
| | सोऽप्यनन्योपद्रवकृत्त एव ॥ * ॥ अथ शोथस्य<br>चिकित्सा ।<br>“शुण्ठीपुनर्नवैरण्डपञ्चमूलीशृतं जलम् ।<br>वातिके श्वयथौ शस्तं पानाहारपरिग्रहैः ॥ * ॥<br>पटोलत्रिफलारिष्टदार्व्वीक्वाथःसगुग्गुलुः । | |

शुष्कमूलकतैलम् । इति शोथाधिकारः । इति भावप्रकाशः ॥

**शोथकः**, पुं, (शोथ एव । स्वार्थे कन् ।) शोथः । इति शब्दरत्नावली ॥

**शोथघ्नी**, स्त्री, (शोथं हन्तीति । हन् + “अमनुष्य-कर्त्तृके च ।” ३ । २ । ५३ । इति टक् ।) पुनर्नवा । इत्यमरः । शालपर्णी । इति राजनिर्घण्टः ॥ शोथनाशके, त्रि ॥

**शोथजित्**, पुं, (शोथं जयतीति । जि + क्विप् ।) भल्लातकः । इति त्रिकाण्डशेषः ॥

**शोथजिह्मः**, पुं, (शोथे जिह्मः कुटिल इव । तन्नांशकत्वात् ।) पुनर्नवा । इति त्रिकाण्ड-शेषः ॥

**शोथहृत्**, पुं, (शोथं हरति नाशयतीति । हृ + क्विप् ।) भल्लातकः । इति रत्नमाला ॥ शोफ-हारके, त्रि ॥

**शोधनं**, क्ली, (शोधयतीति । शुध + णिच् + ल्युः ) कङ्कुष्ठम् । इति राजनिर्घण्टः ॥ (शुध + भावे ल्युट् ।) शौचम् । इति शुधधात्वर्थदर्शनात् ॥ (प्रायश्चित्तम् । यथा, मनुः । ११ । १६१ ।
“अभोज्यमन्नं नात्तव्यमात्मनः शुद्धिमिच्छता ।
अज्ञानभुक्तन्तूत्तार्य्यं शोध्यं वाप्याशु शोधनैः ॥”)
कात्यायनः ।
“शोधयेत् पूर्व्वपक्षन्तु यावन्नोत्तरदर्शनम् ।
उत्तरेणावरुद्धस्य निवृत्तं शोधनं भवेत् ॥”
इति व्यवहारतत्त्वम् ॥ * ॥
अङ्कस्य हरणम् । यथा, --
“भाज्याद्धरः शुध्यति यद्गुणः स्या-
दन्त्यात् फलं तत् खलु भागहारे ।
समेन केनाप्यपवर्त्त्य हार-
भाज्यौ भजेद्वा सति सम्भवे तु ॥
इति लीलावती ॥
अन्यत् शुद्धिशब्दे द्रष्टव्यम् ॥

**शोधनः**, पुं, (शोधयतीति । शुध + णिच् + ल्युः ।) निम्बूकः । इति राजनिर्घण्टः ॥

**शोधनः**, त्रि, (शोधयतीति । शुध + णिच् + ल्युः ।) शुद्धिकारकः । यथा, --
“महासान्तपनः शुद्ध्यै तप्तकृच्छ्रस्तु पावनः ।
जलोपवासकृच्छ्रस्तु ब्रह्मकूर्च्चस्तु शोधनः ॥”
इति प्रायश्चित्ततत्त्वधृतविश्वामित्रवचनम्॥
यथा च ।
“तैलसैन्धवयष्ट्याह्वनिम्बपत्रनिशायुतैः ।
त्रिवृद्धनयुतैः पिष्टैः प्रलेपो ब्रणशोधनः ॥
इति भावप्रकाशः ॥

**शोधनी**, स्त्री, (शोध्यतेऽनयेति । शुध शौचे + णिच् + करणे ल्युट् । ङीप् ।) संमार्ज्जनी । इत्यमरः ॥ ताम्रवल्ली । नीली । इति राज-निर्घण्टः ॥

**शोधनीबीजं**, क्ली, (शोधन्या बीजमिव बीजं यस्य ।) जयपालः । इति राजनिर्घण्ठः ॥

**शोधनीयः**, त्रि, शोधितव्यः । शोध्यः । शुधधातो-रनीयप्रत्ययेन निष्पन्नः ॥ (यथा, कथासरित्-सागरे । ५३ । १४१ ।
“भुक्तं मया तदन्नं यत्शोधनीयं मयापि तत् ॥”

**शोभनं**, क्ली, (शोभते इति । शुभ + ल्युः ।) पद्मम् । इति शब्दचन्द्रिका ॥ (शुभ + भावे ल्युट् । शुभम् । यथा, भागवते । ५ । १९ । २१ ।
“अहो वतैषां किमकारि शोभनं
प्रसन्न एषां स्विदुत स्वयं हरिः ॥”)

**शोभनः**, पुं, (शुभ + ल्युः ।) ग्रहः । इति धरणिः ॥ विष्कम्भादिसप्तविंशतियोगान्तर्गतपञ्चमयोनः । इति मेदिनी ॥ तत्र जातफलम् ।
“स्याच्छोभनः शोभनयोगजन्मा
दक्षो विपक्षप्रतिलब्धवित्तः ।
सदुत्तरश्चारुवपुः सुधीरः
संमानयुक्तो मनुजः प्रवीणः ॥”
इति कोष्ठीप्रदीपः ॥

**शोभनः**, त्रि, (शोभते इति । शुभ + ल्युः ।) सुन्दरः । इति मेदिनी ॥ अस्य पर्य्यायो मनोज्ञ-शब्दे द्रष्टव्यः ॥

**शोभनकः**, पुं, (शोभते इति । शुभ + ल्युः । ततः कन् ।) शोभाञ्जनवृक्षः । इति शब्दचन्द्रिका ॥ शोभनशब्दकारके, त्रि ॥

**शोभना**, स्त्री, (शोभन + टाप् ।) हरिद्रा । गोरो-चना । इति राजनिर्घण्टः ॥

**शोभा**, स्त्री, शोभन्तेऽनया । (शुभ + करणे घञ् । टाप् ।) दीप्तिः । तत्पर्य्यायः । कान्तिः २ द्युतिः ३ छविः ४ । इत्यमरः ॥ द्युती ५ छवी ६ इति तट्टीका ॥ अभिख्या ७ । इति जटाधरः ॥ शुभा ८ भाः ९ श्रीः १० भासा ११ भा १२ इति शब्दरत्नावलौ ॥ सुषमा १३ छाया १४ विभा १५ दृक्प्रिया १६ भानम् १७ भातिः १८ कमा १९ रमा २० । इति राजनिर्घण्टः ॥ तस्या लक्षणम् ।
“सा शोभा रूपभोगाद्यैर्यत् स्यादङ्गविभूषणम् ।
शोभैवकान्तिराख्याता मन्मथाप्यायनोज्ज्वला ॥”
इत्युज्ज्वलनीलमणिः ॥ * ॥
गोपीविशेषः । यथा, --
“दृष्टस्त्वं शोभया गोप्या युक्तश्चन्दनकानने ।

विष्ठा । इति शब्दचन्द्रिका ॥
कासीसम् । इति
राजनिर्घण्टः ॥
विहिताविहितमासादिविचा-
रणम् । यथा, --
“सूर्य्यग्रहणकालेन समानो नास्ति
कश्चन ।
तत्र यद्यत् कृतं सर्व्वमनन्तफलदं
भवेत् ।
न मासतिथिवारादिशोधनं
सूर्य्यपर्व्वणि ॥”
इति मलमासतत्त्वम् ॥ * ॥
धातुनिर्द्दोषीकरणम् । यथा, --
“पत्तलीकृतपत्राणि हेम्नो वह्नौ
प्रतापयेत् ।
निषिञ्चेत्तप्ततप्तानि तैलचक्रे च
काञ्जिके ॥
गोमूत्रे च कुलत्थानां कषाये तु
त्रिधा त्रिधा ।
एवं हेम्नः परेषाञ्च धातूनां शोधनं
भवेत् ॥” * ॥
व्रणादिपरिष्करणम् । यथा, --
“व्रणस्य त्वविशुद्धस्य क्वाथः
शुद्धिकरः परः ।
पटोलनिम्बपत्रस्य सर्व्वत्रैव
प्रयुज्यते ॥
वातिके दशमूलानां क्षीरिणां
पैत्तिके व्रणे ।
आरग्वधादेः कफजे कषायः
शोधनं हितम् ॥”
अपि च ।
“अष्टमेनांशशेषेण चतुर्थेनार्द्धकेन
वा ।
अथवा क्वाथनेनैव सिद्धमुष्णोदकं
वदेत् ।
श्लेस्मामवातमेदोघ्नं
वस्तिशोधनदीपनम् ॥”
इति च भावप्रकाशः ॥ * ॥
लिखितपत्रादेः प्रमाणीकरणम् ।
यथा । लेख्य-
शोधनमाह कात्यायनः ।

**शोधितं**, त्रि, (शोध्यते स्मेति । शुध + णिच् + क्तः ।
मक्षिकाद्यपनयनेनकृतशोधनव्यञ्जनादि ।
तत्प-
र्य्यायः । संमृष्टम् २ । इत्यमरभरतौ ॥ अपि
च ।
“व्यञ्चने केशकीटादिशुद्धे संमृष्टशोधिते ॥”
इति शब्दरत्नावली ॥
अपनीतमलम् । तत्पर्य्यायः । निनिक्तम् २
मृष्टम् ३ निःशोध्यम् ४ अनवस्करम् ५ ।
इत्यमरभरतौ ॥

**शोफः**, पुं, (शु गतौ । वाहुलकात् फः ।) शोथः ।
इत्यमरः ॥ (यथा, सुश्रुते । १ । १४ ।
“तद्दुष्टं शोणितमनिर्ह्रियमाणः कण्डूशोफ-
रागदाहपाकव्वेदना जनयेत् ॥”)

**शोफघ्नी**, स्त्री, (शोफं हन्तीति । हन + टक् ।
ङीप् ।) शालपर्णी । रक्तपुनर्नवा । इति राज-
निर्घण्टः ॥

**शोफनाशनः**, पुं, (शोफं नाशयतीति । नश +
णिच् + ल्यः ।) नीलवृक्षः । इति
राजनिर्घण्टः ॥
शौथनाशके, त्रि ॥

**शोफहृत्**, पुं, (शोफं हरतीति । हृ + क्विप् ।) भल्ला-
तकः । इति भावप्रकाशः ॥ शोथहारके, त्रि
॥

सद्यो मच्छब्दमात्रेण तिरोधानं कृतं त्वया ॥
शोभा देहं परित्यज्य जगाम चन्द्रमण्डलम् ।
ततस्तस्याः शरीरञ्च स्निग्धं तेजो बभूव ह ॥
संविभज्य त्वया दत्तं हृदयेन विदूयता ।
रत्नाय किञ्चित् स्वर्णायकिञ्चिन्मणिवरायच ॥
किञ्चित् स्त्रीणां मुखाब्जेभ्यः किञ्चिदब्जाय
किञ्चन ।
किञ्चित् किशलयेभ्यश्च पुष्पेभ्यश्चापि किञ्चन ॥
किञ्चिच्चन्दनपङ्केभ्यस्तोयेभ्यश्चापि किञ्चन ।
किञ्चित् फलेभ्यः शस्येभ्यः सुपक्के भ्यश्च
किञ्चन ।
किञ्चिन्नूतनवस्त्रेभ्यो दुग्धे भ्यश्चापि किञ्चन ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ९ अध्यायः ॥ * ॥
हरिद्रा । गोरोचना । इति राजनिर्घण्टः ॥

**शोभाञ्जनः**, पुं, (शोभं रुचिरं अञ्जनं यस्मात् ।)
वृक्षविशेवः । शजिना इति भाषा । तत्पर्य्यायः ।
शिग्रुः २ तीक्ष्णगन्धकः ३ अक्षीवः ४ मोचकः ५
।
इत्यमरः ॥ तीक्ष्णगन्धः ६ सुतीक्ष्णः ७ घन-

| | | |
|---|---|---|
| “स्वहस्तलेख्यसन्देहे जीवतो वा मृतस्य च ।<br>तत् स्वहस्तकृतैरन्यैः पत्रैस्तल्लेख्यनिर्ण्यः ॥” *<br>विरुद्धलिखितस्य शुद्धीकरणम् ।<br>थथा । तच्छो-<br>धनमाह बृहस्पतिः ।<br>“न्यूनाधिकं पूर्व्वपक्षं तावद्वादी विशोधयेत् ।<br>न दद्यादुत्तरं यावत् प्रत्यर्थी सभ्यसन्निधौ ॥” | | |

पल्लवः ८ श्वेतमरिचः ९ । इति जटाधरः ॥
तीक्ष्णः १० गन्धः ११ गन्धकः १२
काक्षीवकः १३
आक्षीवः १४ शुभाञ्जनः १५ स्त्रीचित्तहारी
१६
द्रविणनाशनः १७ । इति शब्दरत्नावली ॥
कृष्णगन्धा १८ मूलकपर्णी १९ । इति
रत्नमाला ॥
नीलशिग्रुः २० जनप्रियः २१ मुखमोदः
२२
कृष्णशिग्रुः २३ चक्षुष्यः २४ रुचिराञ्जनः
२५ ।
अस्य गुणाः । तीक्ष्णत्वम् । कटुत्वम् ।
स्वादु-
त्वम् । उष्णत्वम् । पिच्छिलत्वम् ।
जन्तुवातार्त्ति-
शूलनाशित्वम् । चक्षुर्हितत्वम् । रोचनत्वञ्च
।
इति राजनिर्घण्टः ॥ अपि च ।
"शोभाञ्जनः कटुस्तिक्तः
शोथविद्रधिगुल्मनुत् ।"
इति राजवल्लभः ॥
अन्यच्च । अथ शोभाञ्जनः श्यामः श्वेतः
रक्तश्च ।
"शोभाञ्जनशिग्रुतीक्ष्णगन्धकाक्षीवमोचकाः।
तद्बीजं श्वेतमरिचं मधुशिग्रः सलोहितः ॥
शिग्रुः कटुः कटुः पाके तीक्ष्णोष्णो मधुरो
लघुः ।
दीपनो रोचनो रूक्षः क्षवस्तिक्तो विदाहकृत्
॥
संग्राह्यशुक्रलो हृद्यः पित्तरक्तप्रकोपणः ।
चक्षुष्यः कफवातघ्नो विद्रधिश्वयथुकृमीन्
॥
मेदोपचीविषप्लीहगुल्मगण्डव्रणान्हरेत् ।
श्वेतः प्रोक्तगुणो ज्ञेयो विशेषाद्दाहकृद्भवेत् ॥
प्लीहानं विद्रधिं हन्ति व्रनघ्नः पित्तरक्तकृत्
।
मधुशिग्रुः प्रोक्तगुणो विशेषाद्दीपनः सरः ।
प्रियङ्गुनिम्बत्रिकटु गोमूत्रेणावघर्षितम् ।
नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनं तथा ॥
अपस्मारविषोन्मादशोषालक्ष्मीज्वरापहम्।
भूतेभ्यश्च भयं हन्ति राजद्वारे च शामनम्
॥"
इति गारुडे १९९ अध्यायः ॥

**शोषणं**, क्ली, (शुष् + ल्युट् ।) रसाकषणम् । चोषण
इति भाषा । तत्पर्य्यायः । रसादनम् २ ।
इति
हेमचन्द्रः ॥ स्ने हरहितीकरणम् । यथा, --
"शोषणेन शरीरस्य तपसाध्ययनेन च ।
पापकृन्मुच्यते पापाद्दानेन च दमेन च ॥"
इति प्रायश्चित्ततत्त्वम् ॥
शुण्ठी । इति राजनिर्घण्टः ॥

**शोषणः**, पुं, (शोषयतीति । शुष + णिच् + ल्युः ।)
कामदेवस्य बाणविशेषः । यथा, --
"उन्मादनः शोषणश्च तापनः
स्तम्भनस्तथा ।"
इति जटाधरः ॥
श्योनाकवृक्षः । इति भावप्रकाशः ॥
(शोषण-
कारके, त्रि ॥)

**शोषसम्भवं**, क्ली, (शोषाय रसाकर्षणाय सम्भवो
यस्य ।) पिप्पलीमूलम् । इति राजनिर्घण्टः
॥

**शोषापहा**, स्त्री, (शोषं अपहन्तीति । हन + डः
टाप् ।) क्लीतनकम् । इति राजनिर्घण्टः ॥
शोषनाशके, त्रि ॥

**शोषितः**, त्रि, (शुष + णिच् + क्तः ।) कृतशोषणः ।
यथा, --
"आतापिर्भक्षितो येन वातापिश्च महासुरः
।
समुद्रः शोषितो येन स मेऽगस्त्यः प्रसीदतु
॥"
इति मलमासतत्त्वम् ॥

**शौकं**, क्ली, (शुकानां समूहः । शुक + "खण्डि-
प्राप्नु वन्ति महाभागे गत्वा शौकरवं प्रति
॥
दश पूर्व्वापरांश्चापि अपरान् सप्त पञ्च च
।
स्वर्गं गच्छन्ति ते तत्र ये मृतास्तेषु
जन्तवः ॥
गमनादेव सुश्रोणि ! मुखस्य मम दर्शनात्
।
सप्तजन्मान्तरे भद्रे जायते विपुले कुले ॥
धनधान्यसमृद्धेषु रूपवान् गुणवान्
शुचिः ।
मद्भक्तश्चैव जायेते मम कर्म्मपरायणः ॥
एवं वै मानुषो भूत्वा अपराधविवर्ज्जितः
।
गमनं तस्य क्षेत्रस्य मरणं तत्र कारणम् ॥
ये मृतास्तत्र सुश्रोणि क्षेत्रे शौकरवे मम ।
शङ्खचक्रगदापद्मचतुर्हस्ताश्चतुर्भुजाः ।
त्यक्त्वा कलेवरं तूर्णं मम लोकाय
गच्छति ॥"
इति वाराहे शौकरतीर्थमाहात्म्ये
आदित्यवर-
प्रदानगृध्रजम्बुकोपाख्याननामाध्यायः॥

**शौक्तिकेय्यं**, क्ली, (शुक्तिकायां भवमिति । शुक्तिका
+ ढक् ।) मुक्ता । इति राजनिर्घण्टः ॥

**शौक्तेयं**, क्ली, (शुक्तौ भवभिति । शुक्ति + ढक् ।)
मुक्ता । इति राजनिर्घण्टः ॥
शुक्तिसम्बन्धिनि,
त्रि ॥

**शौक्ल्यं**, क्ली, (शुक्लस्य भावः । शुक + "वर्णदृढा-
दिभ्यः ष्यञ् च ।" ५ । १ । १२३ ।
इति ष्यञ ।)
शुक्लता यथा --
"पलितं जरसा शौक्ल्यं केशादौ विस्रसा
जरा ।"
इत्यमरः ॥
(यथा, बृहत्संहितायाम् । ४ । ३ ।
"त्यजतोऽर्कतलं शशिनः

शिग्रुवल्कलपत्राणां स्वरसः परमार्त्तिहृत् ॥ * ॥
क्षक्षुष्यं शिग्रुजं बीजं तीक्ष्णोष्णं विषनाशनम् ।
सवृष्यं कफवातघ्नं तन्नस्येन शिरोऽर्त्तिनुत् ॥
शिग्रु शाकं हिमं स्वादु चक्षुष्यं वातपित्तहृत् ।
बृंहणं शुक्रकृत् स्निग्धं रुच्यं मदकृमिप्रणुत् ॥"
अस्य पुष्पगुणाः ।
"शिग्रोः पुष्पन्तु कटुकं तीक्ष्णोष्णं स्नायुशोथनुत् ।
कृमिहृत् कफवातघ्नं विद्रधिप्लीहगुल्मजित् ॥"
अस्य फलगुणाः ।
"शोभाञ्जनफलं स्वादु कषायं कफपित्तनुत् ।
शूलकुष्ठक्षयश्वासगुल्महृत्दीपनं परम् ॥"
इति भावप्रकाशः ॥
अथ रक्तशोभानपर्य्यायः ।
"सुरङ्गी स्वादुगन्धा च मधुलग्नः शुभाञ्जनः ॥"
इति रत्नमाला ॥
अन्यच्च ।
"रक्तशोभाञ्जने तुल्यौ मधुशिग्रु मधुद्रवौ ।"
इति शब्दरत्नावली ॥
अस्य पुष्पगुणाः ।
"मधुशिग्रोस्त्वक्षिहितं रक्तपित्तप्रसादनम् ॥"
इति भावप्रकाशः ॥
अन्यत् रक्तशिग्रु शब्दे द्रष्टव्यम् ॥

**शोली**, स्त्री, वनहरिद्रा । इति राजनिर्घण्टः ।

**शोषः**, पुं, (शुष् + भावे घञ् । शोषनम् । इति मेदिनी ॥ (शुष्यत्यनेनेति । शुष् + करणे घञ् ।)
यक्ष्मरोगः । इत्यमरः ॥ तद्रोगस्यौपधं यथा, --
"वया त्रिकटुकञ्चैव करञ्जं देवदारु च ।
मञ्जिष्टा त्रिफला श्वेता शिरीषो रजनीद्वयम्
कादिभ्यश्च ।" ४ । २ । ४५ । इत्यञ् ।)
शुक-
गणः । इत्यमरः ॥ स्त्रीणां करणम् । इति मेदिनी ॥

**शौकरं**, क्ली, (शूकरस्येदमिति । शूकर + अण् ।) तीर्थविशेषः । यथा, --
वराह उवाच ।

**शौकरवं**, क्ली, (शूकरस्येदमिति । शूकर + अण् ।) तीर्थविशेषः । यथा, --
वराह उवाच ।
"शृणु मे परमं गुह्यं यत्त्वया परिपृच्छितम् ।
मम क्षेत्रं परञ्चैव शुद्धं भागवतप्रियम् ॥
परं कोकामुखं स्थानं तथा कुब्जाम्रकं परम् ।
परं शौकरवं स्थानं सर्वसंसादमोक्षणम् ॥
यत्र संस्था च मे देदि ह्युद्धृतासि रसातलात् ।
यत्र भागीरथी गङ्गा मम शौकरवे स्थिता ॥
धरण्युवाच ।
केषु लोकेषु यान्तीश शौकरे ये मृताः प्रभो ! ।
किं वा पुण्यं भवेत्तत्र स्नातस्य पिबतस्तथा ॥
कति तीर्था विशालाक्ष । क्षेत्रे शौकरवे तव ।
धर्म्मसंस्थापनार्थाय तद्विष्णो ! वक्तुमर्हसि ॥
वराह उवाच ।
शृणु तत्त्वे न मे देवि ! यत्त्वं मां परिपृच्छसि ।
कां गतिं ते प्रपद्यन्ते नरा शौकरवे मृताः ॥
तेषां स्नानस्य वै पुण्यं गतस्यैव मृतस्य वा ।
तत्र यानि च तीर्थानि मम संस्थानसंस्थिताः ॥
शृणु पुण्यं महाभागे मम क्षेत्रेषु सुन्दरि ।
पश्चादवलम्बते यथा शौक्ल्यम् ॥")

**शौचं**, क्ली, (शुचेर्भावः । शुचि + "इगन्ताच्च लघु पूर्व्वात् ।" ५ । १ । १३१ । इत्यण् ।)
शुचिता ।
शुचित्वम् । शुद्धिः । तस्य लक्षणादि यथा, --
"अभक्ष्यपरिहारस्तु संसर्गश्चाप्यनिन्दितैः ।
स्वधर्म्मे च व्यवस्थानं शौचमेतत् प्रकीर्त्तितम् ॥"
इत्येकादशीतत्त्वे बृहस्पतिवचनम् ॥
अन्यच्च ।
"सर्व्वेषामेव शौचानामर्थशौचं विशिष्यते ।
योऽर्थर्थैरशुचिः शौचान्न मृदा वारिणा शुचिः ॥
सत्यशौचं मनःशौचं शौचमिन्द्रियनिग्रहः ।
सर्व्व भूतदयाशौचं जलशौचन्तु पञ्चमम् ॥
यस्य सत्यञ्च शौचञ्च तस्य स्वर्गो न दुर्लभः ॥"
इति गारुडे ११० अध्यायः ॥
अपिच ।
"यावता शुद्धिं मन्येत तावच्छौचं समाचरेत् ।
प्रमाणं शौचसंख्याया न शिष्टैरुपदिश्यते ॥
शौचन्तु द्विविधं प्रोक्त बाह्यमाभ्यन्तरं तथा ।
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिरथान्त-
रम् ॥"
इति गारुडे २१५ अध्यायः ॥
पादादिशौचगुणा यथा, --
"मेध्यं पवित्रमायुष्यमलक्ष्मीकलिनाशनम् ।
पादयोर्मलसर्गाणां शौचाधानमभीक्ष्णशः ॥"
इति राजवल्लभः ॥

अपि च ।
“उद्धृताम्भोमृत्तिकाभ्यामित्थंनारद यत्नतः ।
कृत्वोत्सर्गं ततः कुर्य्यात् शौचं मूत्रपुरीषयोः ॥”
इति पाद्मोत्तरखण्डे १०९ अध्यायः ॥
प्रसङ्गादशौचञ्चात्र लिख्यते ।
व्यास उवाच ।
“दशाहं प्राहुरशौचं सपिण्डेषु विपश्चितः ।
मृतेषु चाथ जातेषु ब्राह्मणानां द्विजोत्तमाः ॥
नित्यानि चैव कर्म्माणि काम्यानि च विशेषतः ।
न कुर्य्याद्विहितं किञ्चित् स्वाध्यायं मनसापि च
शुचीननिधनांस्त्वन्यान् शालाग्नौ हावयेद्द्विजान्
शुष्कांन्नेन फलैर्व्वापि वैतानाजुहुयात्ततः ॥ * ॥
न स्पृशेयुरिमानन्ये न च तेभ्यः समाहरेत् ।
चतुर्थे पञ्चमे वाह्नि संस्पर्शः कथितो बुधैः ॥
सूतके तु सपिण्डानां संस्पर्शो न प्रदुष्यति ।
सूतकं सूतिकाञ्चैव वर्ज्जयित्वा नृणां पुनः ॥
दशाहं निर्गुणे प्रोक्तमशौचं चातिनिर्गुणे ।
एकद्वित्रिगुणैर्युक्तं चतुस्त्र्येकदिनैः शुचिः ॥
दशाहात्तु परं सम्यगधीयीत जुहोति च ।
चतुर्थे तस्य संस्पर्शं मनुः प्राह प्रजापतिः ॥ * ॥
क्रियाहीनस्य मूर्खस्य महारोगिण एव च ।
यथेष्टाचरणस्याहुर्म्मरणान्तमशौचकम् ॥ * ॥
त्रिरात्रं दशरात्रं वा ब्राह्मणानान्तु शावकम् ।
प्राक् संस्कारात् त्रिरात्रं स्यादस्मादूर्द्ध्वं दशाहकम् ॥
ऊनद्विवार्षिके प्रेते मातापित्रोस्तदिष्यते ।
त्रिरात्रेण शुचिस्त्वन्यो यदि ह्यत्यन्तनिर्गुणः ॥
आदन्तजातमरणे पित्रोरेकाहमिष्यते ।
जातदन्ते त्रिरात्रं स्याद्यदि स्यातान्तु निर्गुणौ ॥
अघवृद्धिमदाशौचं तदा पूर्व्वेण शुध्यति ॥ * ॥
देशान्तरगतं श्रुत्वा सूतकं शावमेव तु ।
तावदप्रयतो मर्त्यो यावच्छेषः समाप्यते ॥ * ॥
अतीते मृतके प्रोक्तं सपिण्डानां त्रिरात्रकम् ।
तथैव मरणे स्नानमूद्र्ध्वं संवत्सराद्यदि ॥
वेदार्थविदधीयानो योऽग्निमान् वृत्तिकर्षितः ।
सद्यःशौचं भवेत्तस्य सर्व्वावस्थासु सर्व्वदा ॥
स्त्रीणामसंस्कृतानान्तु प्रदानात् परतः सदा ।
सपिण्डानां त्रिरात्रं स्यात् संस्काराद्भर्त्तुरेव च ॥
अतस्तद्दत्तकन्यानामशौचंमरणे स्मृतम् ।
ऊनद्विवर्षान्मरणे सद्यःशौचमुदाहृतम् ॥
आदन्तात् सोदरे सद्य आचौडादेकरात्रकम् ।
आप्रदानात् त्रिरात्रं स्याद्दशरात्रमतः परम् ॥
मातामहानां मरणे त्रिरात्रं स्यादशौचक म् ।
एकोदकानां मरणे सूतके चैतदेव हि ।
पक्षिणी योनिसम्बन्धे बान्धवेषु तथैव च ॥
एकरात्रं समुद्दिष्टं गुरौ सब्रह्मचारिणाम् ।
प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थितिः ॥
गृहे मृतासु दत्तासु कन्यकासु त्र्यहं पितुः ।
अवरश्चेद्वरं वर्णमवरं वा वरो यदि ॥
अशौचे संस्पृशेत् स्नेहात्तदाशौचेन शुध्यति ॥ * ॥
प्रेतीभूतं द्विजं विप्रो योऽनुगच्छति कामतः ।
स्नात्वा सचेलं स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति ॥
एकाहात् क्षत्त्रिये शुद्धिर्वैश्यानां स्यात् द्व्यहेन तु ।
शूद्रे दिनत्रयं प्रोक्तं प्राणायामशतं पुनः ॥ * ॥
अनस्थिसञ्चिते शूद्रे रौति चेद्ब्राह्मणः स्वकः ।
त्रिरात्रं स्यादथाशौचमेकाहं त्वन्यथा स्मृतम् ॥
अस्थिसञ्चयनादव्वगिकाहं वेश्यशूद्रयोः ।
अन्यथा चैव सज्योतिर्ब्राह्मणे स्नानमेव तु ॥
अनस्थिसञ्चिते विप्रे ब्राह्मणो रौति चेत्तदा ।
स्नानेनैतद्भवेच्छुद्धिः सचेलेन न संशयः ॥ * ॥
यस्तैः सहाशनं कुर्य्याच्छयनादीनि चैव हि ।
बान्धवो वा परो वापि स दशाहेन शुध्यति ॥ * ॥
यस्तेषामन्नमश्नाति सकृदेवापि कामतः ।
तदाशौचे निवृत्तेऽसौ स्नानं कृत्वा विशुध्यति ॥
यावत्तदन्नमश्नाति दुर्भिक्षोपहतो नरः ।
तावन्त्यहान्यशौचं स्यात् प्रायश्चित्तं ततश्चरेत् ॥
दाहाद्यशौचं कर्त्तव्यं द्विजानामग्निहोत्रिणाम् ।
सपिण्डानान्तु मरणे मरणादितरेषु च ॥ * ॥
सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते ।
समानोदकभावम्तु जन्मनाम्नोरवेदने ॥
पिता पितामहाश्चै व तथैव प्रपितामहः ।
लेपभाजश्चतुर्थाद्याः सापिण्ड्यं साप्तपौरुषम् ॥
अनूढानां तथा स्त्रीणां सापिण्ड्यं साप्तपौरुषम्
जायानां भर्त्तृसापिण्ड्यं प्राह देवः पितामहः ॥
ये चैकजाता बहवो भिन्नयोनय एव च ।
भिन्नवर्णास्तु सापिण्ड्यं भवेत्तेषां त्रिपौरुषम् ॥ *
कारवः शिल्पिनो वैद्या दासी दासस्तथैव च ।
दातारो नियमी चैव ब्रह्मविद्ब्रह्मचारिणौ ॥
सत्रिणो व्रतिनस्तावत् सद्यःशौचा उदाहृताः ।
राजा चैवाभिषिक्तश्च विप्राः सत्रिण एव च ॥

आदन्तजननात् सद्य आचूडादेकरात्रकम् ।
त्रिरात्रमौपनयनात् सपिण्डानामुदाहृतम् ॥
जातमात्रस्य बालस्य यदि स्यान्मरणं पितुः
।
सद्यःशौचं सपिण्डानां कर्त्तव्यं सोदरस्य च
॥
ऊद्‌र्ध्वं दशाहादेकाहं सोदरो यदि निर्गुणः ।
अथोर्द्ध्वं दन्तजननात् सपिण्डानामशौचकम्
॥
एकाहं निर्गुणानान्तु चूडादूर्द्ध्वं त्रिरात्रकम् ।
अदन्तजातमरणं सम्भवेद्यदि सत्तमाः ॥
एकरात्रं सपिण्डानां यदि तेऽत्यन्तनिर्गुणाः ।
व्रतादेशात् सपिण्डानामर्व्वाक् स्नानं
विधीयते ।
सर्व्वेषामेव गुणिनामूद्‌र्ध्वन्तु विषमं पुनः ॥ *
॥
अर्व्वाक् षण्मासतः स्त्रीणां यदि
स्याद्‌गर्भसंस्रवः ।
तदा माससमैस्तासामशौचं दिवसैः स्मृतम्
॥
अतऊद्‌र्ध्वन्तु पतने स्त्रीणां स्याद्दशरात्रकम्
।
सद्यःशौचं सपिण्डानां गर्भस्रावाच्च वा ततः
॥
गर्भच्युतावहोरात्रं सपिण्डेऽत्यन्तनिर्गुणे ।
यथेष्टाचरणे ज्ञातौ त्रिरात्रमिति निश्चयः ॥ *
॥
यदि स्यात् सूतके सूतिर्म्मरणे वा मृतिर्भवेत्
।
शेषेणैव भवेच्छुद्धिरहःशेषे त्रिरात्रकम् ।
मरणोत्पत्तियोगे तु मरणाच्छुद्धिरिष्यते ॥
अघवृद्धिमदाशौचमूर्द्ध्वञ्चेत्तेनशुध्यति ।
अथ चेत् पञ्चमों रात्रिमतीत्य परतो भवेत् ।

परपूर्व्वासु भार्य्यासु पुत्रेषु कृतकेषु
च ॥
त्रिरात्रं स्यात्तथाचार्य्ये
स्वभार्य्यास्वन्यगासु च ॥
आचार्य्यपुत्रे पत्न्याश्च
अहोरात्रमुदाहृतम् ॥
एकाहं स्यादुपाध्याये स्वग्रामे
श्रोत्रियेऽपि च ।
त्रिरात्रमसपिण्डेषु स्वगृहे संस्थितेषु
च ॥
एकाहं वा श्वशुर्य्ये स्यादेकरात्रञ्च
शिष्यके ।
त्रिरात्रं श्वश्रूमरणे श्वशुरे चैतदेव हि
॥
सद्यःशौचः समुद्दिष्टं सगोत्रे संस्थिते
सति ॥ * ॥
शुध्येद्विप्रो दशाहेन द्वादशाहेन
भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन
शुध्यति ॥ * ॥
क्षत्रविट्शूद्रदायादा ये स्युर्विप्रस्य
बान्धवाः ।
तेषामशौचे विप्रस्य
दशाहाच्छुद्धिरिष्यते ॥
राजन्यवैश्यावप्येवं हीनवर्णासु
योनिषु ।
स्वमेव शौचं कुर्य्यातां विशुद्‌ध्यर्थं न
संशयः ॥
सर्व्वेतूत्तमवर्णानां शौचं
कुर्य्युरतन्द्रिताः ।
उद्वर्णविधिदृष्टेन स्वन्तु शौचं
स्वयोनिषु ॥
षड्रात्रं वा त्रिरात्रं स्यादेकरात्रं क्रमेण
तु ।
वैश्यक्षत्त्रियविप्राणां शूद्रे ष्वाशौचमेव
तु ॥
अर्द्धमासोऽथ षड्रात्रं त्रिरात्रं
द्विजपुङ्गवाः ।
शूद्रक्षत्त्रियविप्राणां
वैश्येष्वाशौचमिष्यते ॥

यज्ञे विवाहकाले च देवयागे तथैव च ।
सद्यःशौचं समाख्यातं दुर्भिक्षे वाप्यवद्रवे ॥
डिम्बाहवहतानाञ्च विद्युता पार्थिवैर्द्विजैः ।
सद्यःशौचं समाख्यातमज्ञातिमरणेतथा ॥
अग्नौ मरुप्रपतने वीराध्वन्यप्यनाशके ।
ब्राह्मणार्थे च संन्यस्ते सद्यःशौचं विधीयते ॥ *
॥
नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणाम् ।
नाशौचं कीर्त्त्यते सद्भिः पतिते च तथा मृते ॥
पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्तिसञ्चयः
।
न चाश्रुपातः पिण्डो वा कार्य्यं श्राद्धादिकं
क्वचित् ॥
व्यापादयेदथात्मानं स्वयं योऽग्निं विषादिभिः ।
विहितंतस्य नाशौचं नाग्निर्नाप्युदकादिकम् ॥ *
अथ कश्चित् प्रमादेन मृइयतेऽग्निविषादिभिः ।
तस्याशौचं विधातव्यं कार्य्यञ्चैवोदकादिकम् ।
* ।
जाते कुमारे तदहः कामं कुर्य्यात् प्रतिग्रहम् ।
हिरण्यधान्यगोवासस्तिलान्नगुडसर्षपान् ॥
फलानि पुष्पं शाकञ्च लवणं काष्ठमेव च ।
तोयं दधि घृतं क्षीरमौषधं तैलमेव च ।

|  |  |  |
| --- | --- | --- |
|  | षड् रात्रं द्वादशाहञ्च विप्राणां वैश्यशूद्रयोः ।<br>अशौचं क्षत्रिये प्रोक्तं क्रमेण द्विजपुङ्गव ॥<br>शूद्रविट्क्षत्रियाणान्तु ब्राह्मणे संस्थिते सति ।<br>दशरात्रेण शुद्धिः स्यादित्याह कमलोद्भवः ॥ * ॥<br>असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् ।<br>अशित्वा च सहोषित्वा दशरात्रेण शुध्यति ॥<br>यद्यन्नमत्ति तेषान्तु त्रिरात्रेण ततः शुचिः ।<br>अनदन्नन्नमह्नै व न च तस्मिन् गृहे वसन् ॥<br>सोदरेष्वेतदेव स्यान्मातुराप्तेषु बन्धुषु ।<br>दशाहेन शवस्पर्शे सपिण्डश्चैव शुध्यति ॥<br>षड्रात्रेणाथवा सर्व्वे त्रिरात्रेणाथवा पुनः ।<br>अनाथञ्चैव निर्हृत्य ब्राह्मणं धनवर्ज्जितम् ॥<br>स्नात्वा संप्राश्य तु घृतं शुध्यन्ति व्राह्मणादयः । |  |

अशौचिनां गृहाद्ग्राह्यं
शुष्कान्नमेवनित्यशः ॥”
इति कौर्म्मे उपविभागे २२ अध्यायः ॥
अन्यत् पाद्मोत्तरखण्डे १०९ अध्याये
द्रष्टव्यम् ॥

**शौचाचारः**, पुं, (शौचः आचारः ।) शुद्धिकर्म्म ।

यथा, --
“शौचाचारविहीनस्य समस्ता निष्फलाः
क्रियाः ॥”
इत्याह्निकाचारतत्त्वे ब्रह्मपुराणम् ॥
अन्यच्च ।
“उपनीय गुरुः शिष्यं
महाव्याहृतिपूर्व्वकम् ।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत्
॥”
इति याज्ञवल्क्यः ॥

**शौचिकः**, पुं, (शौचं गृहादेः शुचिता कार्य्यत्वे-

नास्त्यस्येति । शौच + ठन् ।)
वर्णसङ्करविशेषः ।
यथा, --
“कैवर्त्तस्य च कन्यायां
शौण्डिकादेवशौचिकः ॥”
इति पराशरपद्धतिः ॥

**शौचेयः**, पुं, (शौचेन वस्त्रादिशुचित्वेन व्यवहर-

तीति । शौच + ढक् ।) रजकः । इति
शब्द-
रत्नावली ॥

**शौट**, ऋ गर्व्व । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-अक०-सेट् ।) चतुर्द्दशस्वरी । ऋ,
अशु-
शौटत् । शौटति वीरः । इति दुर्गादासः ॥

**शौटीरः**, पुं, (शौटतीति । शौट गर्व्वे + “कृशॄपॄ

कटिपटिशौटिभ्यः ईरन् ।” उणा० ४ ।
३० ।
इति ईरन् ।) त्यागी । वोरः ।
इत्युणादिकोषः ॥

ततो गान्धिककन्यायां कैवर्त्तादिव शौण्डिकः ।
कैवर्त्तस्य च कन्यायां शौण्डिकादेव शौचिकः
॥”
इति पराशरपद्धतिः ॥
(अस्य गृहे भोजननिषेधो यथा, मनुः । ४ ।
२१६ ।
“श्ववतां शौण्डिकानाञ्च चेलनिर्न्नेजकस्य च ।
रञ्जकस्य नृशंसस्य यस्य चोपपतिर्गृहे ॥”
एषां गेहे नाद्यात् इत्यर्थः ॥ * ॥ शुण्डिका-
दागते, त्रि, । अत्र “शुण्डिकादिभ्योऽण् ।” ४ ।
३ । ७६ । इत्यण् ॥)

**शौण्डी**, [न्] पुं, (शुण्डा सुरा एव शौण्डं मद्यम् ।

स्वार्थे अण् । तत् पण्यत्वेनास्त्यस्येति ।
शौण्ड +
इन् ।) शौण्डिकः । इति शब्दरत्नावली ॥

**शौण्डी**, स्त्री, (शुण्डायां मद्यपानगेहे भवा ।

मत्तानां रुचिप्रदत्वात् । शुण्डा + अण् । ङीप्
।)
पिप्पली । चव्यम् । इति विश्वः ॥

**शौण्डीरः**, त्रि, (शौटतीति । शौट + ईरन् ।

पृषोदरादित्वात् साधुः ।) अहङ्कारी । यथा, --
“शौण्डीरो गर्व्वि तस्तब्धो मानी चाहङ्कृदुद्धतः
।
उद्ग्रीव उद्धरोऽक्लृप्तो नीचश्च पिशुनो-
ऽधमः ॥”
इति धनञ्जयकोषः ॥

**शौद्धोदनिः**, पुं, (शुद्धोदनस्यापत्यं पुमानिति ।

शुद्धोदन + “अत इञ् ।” ४ । १ । ९५ । इति
इञ् ।) शाक्यवंशावतीर्णबुद्धमुनिविशेषः ।
इत्य
मरः ॥ “शुद्धमोदनस्य इति मनीषादिः ।
शुद्धोदनो नाम राजा । तथाहि ।
“शुद्धोदनो यतो भुङ्क्ते न्यायवत् शुद्धमोदनम्
।”
इत्यार्षाभिधानम् ॥
शुद्धोदनस्यापत्यं शौद्धोदनिः । बाह्वाद्यत इति
ष्णिः ।” इति भरतः ॥

एकोद्दिष्टविधानेन दद्यादित्याह शौनकः
॥”
इति तिथ्यादितत्त्वम् ॥

**शौनिकः**, (शूना प्राणिवधस्थानं प्रयोजनमस्य ।

शूना + ठक् ।) मांसविक्रयकर्त्ता । यथा,
--
‘वैतं सिकःकौटिकश्च मांसिकः
शौनिकः समाः ।’
इति जटाधरः हेमचन्द्रश्च ॥
मृगया । इति शब्दमाला ॥

**शौभं**, क्ली, (शोभायै हितम् । शोमा + अण् ।)

हरिश्चन्द्रपुरम् । इति त्रिकाण्डशेषः ॥
तत्प-
र्य्यायः । व्योमचारिपुरम् २ । इति
भूरिप्रयोगः
(पुरमेतत् शाल्वस्य नृपतेरासीत् ।
कृष्णेनेदं
विनाशितम् । एतद्वृत्तान्तस्तु भागवते
१०
स्कन्धे ७७ अध्याये द्रष्टव्यः ॥)

**शौभः**, पुं, (शुभाय हितः । शुभ + अण् ।) देवता

इति त्रिकाण्डशेषः ॥ गुवाकः । इति
शब्द-
माला ॥

**शौभनेयः**, त्रि, शोभनसम्बन्धी । शोभनशब्दात्

ष्णेयप्रत्ययेन निष्पन्नः ॥

**शौभाञ्जनः**, पुं, (शोभाञ्जन एव । स्वार्थे अण् ।)

शोभाञ्जनवृक्षः । इति भरतद्विरूपकोषः
॥

**शौभिकः**, पुं, (शौभं व्योमचारिपुरं उपलक्षणेन

तद्वदाश्चर्य्यकरं वस्तु
साधनत्वेनास्त्यस्येति । शौभ
+ ठन् ।) इन्द्रजालिकः । इति
शब्दशाला ॥

**शौभ्रेयः**, त्रि, (शुभ्रा + “शुभ्रादिभ्यश्च ।” ४ । १ ।

गर्व्वान्विते, त्रि । इति
सिद्धान्तकौमुद्यामुणादि-
वृत्तिः ॥ (यथा, महाभारते । १२ । ८३ ।
४३ ।
"सन्तुष्टः सम्मतः सत्यः शौटीरो
द्वेष्यपापकः ।
मन्त्रवित् कालवित् शूरः समन्त्रं
श्रोतुमर्हति ॥")

**शौटीर्य्यं**, क्ली, (शौटीरस्य भावः कर्म्म वा ।
शौटीर + "गुणवचनब्राह्मणादिभ्यः
कर्म्मणि
च ।" ५१ । १२४ । इति ष्यञ् ।)
वीर्य्यम् । इति
शब्दरत्नावली ॥ गर्व्वः । शौटीरशब्दात्
भावे
ष्ण्यप्रत्ययेन निष्पन्नम् ॥

**शौड** ऋ गर्व्वे । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-अक०-सेट् ।) चतुर्द्दशस्वरी । ऋ,
अशु-
शौडत् । इति दुर्गादासः ॥

**शौण्डः**, त्रि, (शुण्डायां मद्ये रतः । शुण्डा + अण् ।
मत्तः । इत्यमरः ॥ (यथा, महाभारते । ३
२३३ । ११ ।
"चण्डाश्च शौण्डाश्च महाशनाश्च
चौराश्च दुष्टाश्च पलाश्च वर्ज्याः ॥")

**शौण्डिकः**, पुं, (शुण्डापण्यमस्य । शुण्डा + "तदस्य
पण्यम् ।" ४ । ४ । ५१ । इति ठक् ।)
जातिविशेषः ।
शुडौ इति भाषा । तत्पर्य्यायः ।
मण्डहारकः २
इत्यमरः ॥ शुण्डारः ३ शौण्डी ४
शुण्डकः ५ ।
इति शब्दरत्नावली ॥ ध्वजः ६ पानः ७
पणः ८ ।
इति जटाधरः ॥ कल्पपालः ९ सुराजीवी
१० ।
वापिवामः ११ पानबणिक् १२ ध्वजी
१३ ।

**शौद्रः**, पुं, (शूद्रायां भवः । शूद्रा + अण् ।) द्वादश-
विधपुत्त्रान्तर्गतपुत्त्रविशेषः । स तु ब्राह्मण-
क्षत्त्रियवैश्यान्यतमात् शूद्रायां जातः । यथा, --
"औरसः क्षेत्रजो दत्तो मूढोत्पन्नश्च कृत्रिमः ।
क्रीतापविद्धकानीनशौद्रपौनर्भ्भवा अपि ॥
स्वयं दत्तः सहोढोऽपि द्वावुरस्यौरसौ समौ ॥"
इति जटाधरः ॥
(यथा, मनुः । ९ । १६० ।
"कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ।
स्वय दत्तश्च शौद्रश्च षडदायादबान्धवाः ॥"
* ॥
शूद्रस्येदमिति । अण् ।) शूद्रसम्बन्धिनी, स्त्रि,
॥
(यथा, महाभारते । १२ । ६२ । ४ ।
"क्षात्त्राणि वैश्यानि च सेवमानः
शौद्राणि कर्म्माणि च ब्राह्मणः सन् ।
अस्मिंल्लोके निन्दितो मन्दचेताः
परे च लोके निरयं प्रयाति ॥")

**शौधिका**, स्त्री, रक्तकङ्गः । इति हेमचन्द्रः ॥

**शौनकः**, पुं, (शुनकस्यापत्यमिति । शुनक + "अनृ-
ष्यानन्तर्थे विदादिभ्योऽञ्' । ४ । १ । १०४
।
इति अञ् । मुनिविशेषः । यथा, --
"सपिण्डीकरणाद्धूर्ध्वं न दद्यात्
प्रतिमासिकम् ।
१२३ । इति ढक् ।) शुभ्राया अपत्यम् ।
इति
मुग्धबोधव्याकरणम् ॥ शुभ्रसम्बन्धिनि
च ॥

**शौरिः**, पुं, (शूरस्यापत्यमिति । शूर + इञ् ।)
विष्णुः । (यथा, आनन्दलहर्य्याम् २ ।
"तनीयांसं पांशु तव चरणपङ्केरुहभवं
विरिञ्चिः सञ्चिन्वन् विरचयति
लोकानविकलम्
वहत्येनं शौरिः कथमपि सहस्रेण शिरसां
हरः संक्षुभ्यैनं भजति
भसितोद्धूननविधिम् ॥")
शनैश्चरग्रहः । इत्यमरभरतौ ॥
(शूरवंशीय-
मात्रे । वसुदेवः । यथा, भागवते । ३ । १
। २६ ।
"क्वचित् कुरूणां परमः सुहृन्नो
भामः स आस्ते सुखमङ्गशौरिः ॥"
बलदेवः । यथा, महाभारते । ५ । ७ ।
२५ ।
"ततोऽभ्ययाद्भीमबलो रौहिणेयं
महाबलम् ।
सर्व्वञ्चागमने हेतुं स तस्मै संन्यवेदयत् ।
प्रत्युवाच ततः शौरिर्धार्त्तराष्ट्रमिदं वचः
॥"
कृष्णः । यथा, भागवते । १ । १० ।
३३ ।
"अथ दूरगतान् शौरिः कौरवान् विरहा-
तुरान् ।
संनिवर्त्त्य दृढं स्निग्धान् प्रायात् स्वनगरीं
प्रियैः ॥")

**शौर्पः**, त्रि, (शूर्प + "शूर्पादन्यतरस्याम् ।"
५ । १ । २६ । इति अञ् पक्षे ठञ् ।
शूर्पपरिमितम् । शूर्पशब्दात् ष्णप्रत्ययेन
ष्णिक-
प्रत्ययेन च निष्पन्नौ ॥

**शौर्पिकः**, त्रि, (शूर्प + "शूर्पादन्यतरस्याम् ।"
५ । १ । २६ । इति अञ् पक्षे ठञ् ।

| | | |
|---|---|---|
| आसुतीबलः १४ । इति हेमचन्द्रः ॥ तस्योत्-<br>पतिर्यथा, -- | | शूर्पपरिमितम् । शूर्पशब्दात् ष्णप्रत्ययेन ष्णिक-<br>प्रत्ययेन च निष्पन्नौ ॥<br>**शौर्य्यं**, क्ली, (शूरस्य भावः कर्म्म वा । शूर × व्यञ् ।) शक्तिः । (यथा, रामायणे । ६ । १५ । ३ । |

"सत्त्वेन वीर्य्येण पराक्रमेण
धैर्य्येण शौर्य्येण च तेजसा च ॥")
आरभटी । इति मेदिनी ॥

**शौल्कं**, त्रि, शुल्कसम्बन्धि । शुल्कशब्दात् ष्णप्रत्य-
येन निष्पन्नम् ॥

**शौल्किकः**, पुं, (शुल्के अधिकृतः । शुल्क + ठञ् ।)
शुल्काध्यक्षः । इति हेमचन्द्रः ॥
(यथा, याज्ञ-
वल्क्ये । २ । १७६ ।
"शौल्किकैः स्थानपालैर्व्वा
नष्टापहृतमाहृतम् ।
अर्व्वाक्संवत्सरात् स्वामी हरेत
परतो नृपः ॥")

**शौल्किकेयः**, पुं, विषभेदः । इत्यमरः ॥ शुल्किको
देशभेदस्तत्र भवः शौल्किकेयः ।
ष्णेयः । ताल-
व्यादिः । इति भरतः ॥

**शौल्फं**, क्ली, शाकविशेषः । शुल्फा इति भाषा ।
भूतचतुर्द्दश्यां चतुर्दशशाकमध्ये
तद्भक्षणीयम् ।
यथा, निर्णयामृते ।
"ओलं केमुकवास्तूकं सर्षपं कालञ्च
निम्बं
जयां
शालीञ्चीं हिलमोचिकाञ्च पटुकं
शौल्फं
गुडुचीन्तथा ।
भण्टाकीं सुनिसन्नकं शिवदिने
खादन्ति ये
मानवाः
प्रेतत्वं न च यान्ति कार्त्तिकदिने
कृष्णे च भूते
तिथौ ॥"
इति तिथ्यादितत्त्वम् ॥

णित्त्वे व्रिरिति व्रिः त्वतौ भावे इति त्वम् ।"
इति तट्टीकां ॥

**शौवापदं**, त्रि, (श्वापदस्येदमिति । श्वापद +
अण् । "पादान्तस्यान्यतरस्याम् ।" ७ । ३ । ९ । इति
पक्षे ऐच् ।) श्वापदसम्बन्धि । श्वापदशब्दात्
ष्णप्रत्ययेन निष्पन्नम् । इति मुग्धबोधव्याकर-
णम् ॥ (यथा, अनर्घराघवे । १ । २५ ।
"कच्चित् कान्तारभाजां भवति परिभवः
कोऽपि शौवापदो वा
प्रत्यूहेन क्रतूनां न खलु मखभुजो भुञ्जते
वा हवींषि ॥")

**शौष्कलः**, पुं, (शुष्कलं पण्यमस्येति । अण् ।)
शुष्कमांसस्य पणकः । इति मेदिनी ॥

**शौष्कलः**, त्रि, (शुष्कलीमत्तीति । शुष्कली +
अण् ।) आमिषाशी । इत्यमरः ॥ मत्स्यमांस-
भोजनशीलः । आमिषं अश्नाति आमिषाशी
ग्रहादित्त्वाण्णिन् । शुष्कली शुष्कमांसे स्या-
न्मांसमात्रेऽपि दृश्यते । तामत्ति शौष्कलः ष्णः ।
तालव्यादिमूर्द्धन्यमध्यः । शुष्कं मांसं लाति इति
शुष्कलः प्रज्ञादित्वात् अणि शौष्कलः । इति
विद्याविनोदः । शाष्कलः इति पाठः । इति
स्वामी । इति भरतः ॥

**श्चुत** इर् क्षरणे । इति कविकल्पद्रुमः ॥
(भ्वा०-पर०-अक०-सेट् ।) द्वौतालव्य-
वर्गाद्ययुक्ततालव्यादी । शेषोऽन्तःस्थादियुक्तश्च ।
नकारजावनुस्वारपञ्चमावित्यादिनियमेऽप्यनयो-
स्तालव्यादित्वं तद्वचनस्य व्यभिचारसूचनार्थं
तेन चुलुम्प लोपे इत्यादीनामोष्ठ्यवर्गशेषोप-
धत्वं सङ्गच्छते । तेन क्विपि संयोगान्तलोपे
चुलुम् इत्यादि सिद्धम् । किन्तु द्वौ दन्त्यादी
इति धातुप्रदीपक्रमदीश्वरौ । तेन घृतं श्चोतति
इति घृतश्चुत् तमाचष्टे इति ञौ ञीमंश्चेति
डित्वाट्टिलोपे घृतश्चयति पुनः क्विपि ञेर्लोपे
घृतस्क इति स्थिते संयोगादेः सस्य लोपे घृतक्
इति केचित् ॥ इर, अश्चुतत् अश्चोतीत् ।
अश्च्युतत् अश्च्योतीत् । क्षर इति आसेचनं
क्षरणञ्च । रक्तमाश्च्योतति क्षुर इति । इदं

क्रीडः ४ दाहसरः ५ इति
त्रिकाण्डशेषः ॥
अन्तशय्या ६ पितृकाननम् ९ । इति
जटा-
धरः ॥ * ॥ तस्य व्युत्पत्तिर्यथा, --
"श्मशब्देन शवः प्रोक्तः शानं
शयनमुच्यते ।
निर्व्वचन्ति श्मशानार्थं मुने
शब्दार्थकोविदाः ॥
महान्त्यपि च भूतानि प्रलये
समुपस्थिते ।
शेरतेऽत्र शवा भूत्वा श्मशानन्तु ततो
भवेत् ॥"
महाश्मशानं यथा, --
"वाराणसीति विख्याता रुद्रावास
इति द्विजाः ।
महाश्मशानमित्येवं
प्रोक्तमानन्दकाननम् ॥"
इति श्रीस्कान्दे काशीखण्डे ३० अध्यायः ॥ * ॥
"उत्सवे व्यसने चैव दुर्भिक्षे शत्रु विग्रहे
।
राजद्वारे श्मशाने च यस्तिष्ठति स
बान्धवः ॥"
इति चाणक्यम् । १७ ॥ * ॥
श्मशाने गत्वा विष्णुस्पर्शे दोषो यथा,
--
वराह उवाच ।
"श्मशानं यो नरो गत्वा अस्नात्वैव तु
मां-
स्पृशेत् ।
मम दोषापराधस्य शृणु तत्त्वेन यत्
फलम् ॥
जम्बुको जायते भूमे वर्षाणां नव पञ्च
च ।
गृध्रस्तु सप्तवर्षाणि जायते खचरेश्वरः
॥
चरन्तौ मानुषं मांसं उभौ तौ गृध्रजम्बु
कौ ।

अस्य पर्य्यायगुणाः शतपुष्पाशब्दे
द्रष्टव्याः ॥

**शौल्विकः**, पुं, कंसकारः । काँसारि इति भाषा ।

तत्पर्य्यायः । ताम्रकुट्टकः २ ।
इत्यमरः ॥ काम-
न्दमी ३ कांस्यकारः ४ । इति
जटाधरः ॥
ताम्रिकः ५ ताम्रकारकः ६ । इति
शब्दरत्ना-
वली ॥

**शौवं**, क्ली, (श्वन् + "शुनः सङ्कोच उपसंख्यानम् ।"

६ । ४ । १४४ । इत्यस्य
वार्त्तिकोक्त्या अणि
साधु ।) शुनः सङ्कोचः । शुनो वृन्दम्
। श्वो-
भवम् इति संक्षिप्तसारव्याकरणम् ॥

**शौवनं**, क्ली, (श्वन् + अण् ।) शुनो भावः । शुनो-

ऽपत्यम् । इति
संक्षिप्तसारव्याकरणम् ॥ (शुनः
समूहः । श्वन् +
"खण्डिकादिभ्यश्च ।" ४ । २ ।
४५ ।
इत्यञ् । कुक्कुरसमूहः । इति
व्याकरणम् ॥
शुनो मांसम् । इति काशिका । ६ ।
४ । १३३ ॥)

**शौवस्तिकं**, त्रि, (श्वो भवम् । श्वस् + "श्वसस्तुट्

च ।" ४ । ३ । १५ । इति ठञ
तुडागमश्च ।)
भाविदिनस्थायिवस्तु । यथा, --
आत्मम्भरिस्त्वं पिशितैर्नराणां
फलेग्रहीन् हंसि वनस्पतीनाम् ।
शौवस्तिकत्वं विभवा न येषां
व्रजन्ति तेषां दयसे न कस्मात् ॥"
इति भट्टौ २ सर्गः ॥

कवचमश्च्योतीदिति । निश्च्योतन्ते सुतनुकवरी
बिन्दवो यावदेते । इति मालत्यां गणकृतानि-
त्यत्वम् । इति दुर्गादासः ॥

**श्च्युत** इर् क्षरणे । इति कविकल्पद्रुमः ॥

(भ्वा०-पर०-अक०-सेट् ।) द्वौ तालव्य-
वर्गाद्ययुक्ततालव्यादी । शेषोऽन्तःस्थादियुक्तश्च ।
नकारजावनुस्वारपञ्चमावित्यादिनियमेऽप्यनयो-
स्तालव्यादित्वं तद्वचनस्य व्यभिचारसूचनार्थं
तेन चुलुम्प लोपे इत्यादीनामोष्ठ्यवर्गशेषोप-
धत्वं सङ्गच्छते । तेन क्विपि संयोगान्तलोपे
चुलुम् इत्यादि सिद्धम् । किन्तु द्वौ दन्त्यादी
इति धातुप्रदीपक्रमदीश्वरौ । तेन घृतं श्चोतति
इति घृतश्चुत् तमाचष्टे इति ञौ ञीमंश्चेति
डित्वाट्टिलोपे घृतश्चयति पुनः क्विपि ञेर्लोपे
घृतस्क इति स्थिते संयोगादेः सस्य लोपे घृतक्
इति केचित् ॥ इर, अश्चुतत् अश्चोतीत् ।
अश्च्युतत् अश्च्योतीत् । क्षर इति आसेचनं
क्षरणञ्च । रक्तमाश्च्योतति क्षुर इति । इदं
कवचमश्च्योतीदिति । निश्च्योतन्ते सुतनुकवरी
बिन्दवो यावदेते । इति मालत्यां गणकृतानि-
त्यत्वम् । इति दुर्गादासः ॥

**श्च्योतः**, पुं, (श्च्योतनमिति । श्च्यु + घञ् ।)

प्राघारः । इत्यमरः ॥

**श्म**, [न्] क्ली, मुखम् । इति श्मश्रुशब्दटीकायां

भरतः ॥ (शरीरम् । इति निरुक्तिः । ३ । ५ ॥
शवः । इति पुराणम् । अस्य प्रमाणं श्मशान-
शब्दे द्रष्टव्यम् ॥)

**श्मशानं**, क्ली, (श्मनां शवानां शानं शयनं यत्र ।

यद्वा, शवानां शयनमिति । "पृषोदरादीनि
यथोपदिष्टानि ।" ६ । ३ । १०९ । इति शव-
शब्दस्य श्मादेशः शयनशब्दस्यापि शानशब्द
आदेशः ।) शवदाहस्थानम् । तत्पपर्य्यायः ।
पितृवनम् २ । इत्यमरः ॥ शतानकम् ३ रुद्रा

पिशाचो जायते तत्र वर्षाणि नव पञ्च
च ॥
ततस्तु कुणपोच्छिष्टं त्रिं शद्वर्षाणि
खादति ।
ततो नारायणाच्छ्रु त्वा धरणी
वाक्यमब्रवीत् ॥
एतन्मे परमं गुह्यं लोकनाथ जनार्द्दन ।
परं कौतूहलं देव निखिलं वक्तुमर्हसि
॥
श्मशानं पुण्डरीकाक्ष ईश्वरेण
प्रशंसितम् ।
तत्र किं विगुणं देव पावित्रे शिवभाषिते
॥
स तत्र रमते नित्यं भगवांस्तु
महाद्युतिः ।
कपालं गृह्य देवोऽत्र दीप्तिमन्तं
महौजसम् ॥
प्रशंसितञ्च रुद्रेण भवता किं
विनिन्दितम् ।
श्मशाणं पद्मपत्राक्ष रुद्रस्य च निशि
प्रियम् ॥
वराह उवाच ।
शृणु तत्त्वे न मे देवि
इदमाख्यानमुत्तमम् ।
अद्यापि ते न जानन्ति अनघे
शंसितव्रताः ॥
कृत्वा सुदुष्करं कर्म्म
सर्व्वभूतपतिर्हरः ।
हत्वा च बालवृद्धानि त्रिपुरे रूपिणीः
स्त्रियः ॥
तेन पापेन सम्बद्धो न शक्नोति
विचेष्टितुम् ।
तत ईशो मया चोक्तो वाक्यमेव
सुखावहम् ॥
किमिदं तिष्ठसे रुद्र कश्मलेन
समावृतः ।
तव चैव प्रियार्थाय येनाहमिदमागतः
॥
ततो मम वचः श्रुत्वा लब्धसंज्ञो
महेश्वरः ।

| | | |
|---|---|---|
| "येषां विभवाः सम्पदः शौवस्तिकत्वं भाविदिन-स्थितत्वं न व्रजन्ति तेषां कस्मान्न दयसे । श्वो-भवः शौवस्तिकः श्वसो भवार्थे कण्विधानात् कणि मनीषादित्वात् त्यागमः द्वारस्वरेतिउम् | | उवाच मधुरं वाक्यं पापसन्तप्तलोचनः ॥<br>तव विष्णो प्रसादेन मया तत्त्रिपुरं हतम् ।<br>निहता दानवास्तत्र गर्भिण्यश्च निपातिताः ॥<br>बालवृद्धा हतास्तत्र विष्फुरन्तो दिशो दश ।<br>तस्य पापस्य दोषेण न शक्नोमि विचेष्टितुम् ॥<br>प्रनष्टयोगमायश्च नष्टेश्वर्य्यश्च माधव ।<br>किं मया विप्रकर्त्तव्यमेनोऽवस्थेन माधव ॥<br>विष्णो तत्त्वेन मे ब्रूहि शोधनं पापनाशनम् ।<br>येन वै कृतमात्रेण शीघ्नं मुच्येत किल्विषात ॥ |

एवं चिन्तात्मनस्तत्र मया रुद्रस्य
भाषितम् ।
कपालमालां संगृह्य समलं गच्छ शङ्कर ॥
ममैवं वचनं श्रुत्वा भगवान् परमेश्वरः ।
उवाच मां पुनर्व्यक्तं मां बोधय जगत्पते ॥
कीदृशः समलो विष्णो यत्र गच्छामहे
वयम् ॥
ततस्तस्य वचः श्रुत्वा शङ्करस्य
यशस्विनि ।
तत्पापशोधनार्थाय मयावासं प्रभाषितम्
॥
श्मशानं समलो रुद्र पूतिको व्रणगन्धिकः
।
स्वयं तिष्ठति वै तत्र मनुजा विगतस्पृहाः
॥
तत्र गृह्य कपालानि रम तत्रैव शङ्कर ।
तत्र वर्षसहस्राणि दिव्यान्येव दृढव्रतः ॥
ततो भक्षय मांसानि पापक्षयचिकीर्षुकः ।
हिंस्यमानानि भोज्यानि ये च
भोज्यास्तव
प्रियाः
एवं सर्व्वैर्गणैः सार्द्धं रम तत्र सुनिश्चितः ।
पूर्णे वर्षसहस्रे तु स्थित्वा त्वं समले पुनः
॥
एष्यसि स्वाश्रमं पुण्यं गौतमस्य महामुनेः
।
तत्र ज्ञास्यसि चात्मानं आश्रमे
विधिसंस्थिते ॥
प्रसादात् गोतमस्याथ भविता
गतकिल्विषः ।
एवं तस्य वरं दत्त्वा तत्रै वान्तरधीयत ॥
रुद्रोऽपि भ्रमते तत्र श्मशाने पापसंवृते ।
एवं न रोचते भूमे श्मशानं मे कदाचन ॥
यत्र रुद्रकृतं पापं स्थितं किल भयावहम्
।
एतत्ते कथितं भद्रे श्मशानं मे जुगुप्सितम्
॥
विष्ब्वापि कृतसंस्कारो मम कर्म्मपरायणः
।

कालिके कनिष्ठाभ्यां वौषट् ।
क्लीमादिवाग्-
भवान्तं करतलपृष्ठाभ्यां फट् । एवं
हृदया-
दिषु ॥ * ॥ ततो ध्यानम् ।
“अञ्जनाद्रिनिभां देवीं
श्मशानालयवासिनीम्
रक्तनेत्रां मुक्तकेशीं शुष्कमांसातिभैरवाम्
॥
पिङ्गाक्षीं वामहस्तेन मद्यपूर्णं समांसकम्
।
सद्यःकृत्तशिरो दक्षहस्तेन दधतीं
शिवाम् ।
स्मितवक्त्रां सदा
चाममांसचर्व्वणतत्पराम् ।
नानालङ्कारभूषाङ्गीं नग्नां मत्तां सदासवैः
॥
एवं ध्यात्वा जपेद्देवीं श्मशाने तु
विशेषतः ।
गृहे वापि गृहस्थोऽपि मत्स्यमांसैः
सुभोजनैः ।
नग्नो भूत्वा महापूजां कुर्य्याद्रात्रौ
विशेषतः ॥” * ॥
पूजनन्तु ध्यात्वा मानसैः
संपूज्यार्घ्यस्थापनं
कुर्य्यात् । पुनर्ध्यात्वा यथोपचारैः
संपूज्य पत्रेषु
ब्राह्म्यादिकं पूजयेत् ।
तद्बहिरसिताङ्गादिकं
पूजयेत् । अस्याः पुरश्चरणं
एकादशलक्षजपः ।
तथा च ।
“वर्णलक्षं जपेन्मन्त्रं तद्दशांसेन होमयेत्
।”
मन्त्रान्तरम् । तत्रैव ।
“कामबीजं समालिख्य कालिकायै
समालिखेत्
नमोऽन्तेन च देवेशि सप्तार्णो मनुरुत्तमः
।

“निस्नं वक्त्रमपुत्राणां कृपणानाञ्च ह्रस्वकम् ।
संपूर्णं भोगिनां कान्तं श्मश्र स्निग्धं शुभं मृदु ॥
संहतं चास्फु टिताग्रं रक्तश्मश्रुश्च चौरकः ।
रक्ताल्पपरुषश्मश्रुकर्णाः स्युः पापमृत्यवः ॥”
इति गारुडे ६६ अध्यायः ॥ * ॥
क्रोधार्त्तस्यावर्त्तनं यथा, --
मार्कण्डेय उवाच ।
“इति प्रतिज्ञाय तदा नरिष्यन्तसुतो दमः ।
कोपामर्षविवृत्ताक्षः श्मश्रु मावर्त्त्य पाणिना ॥
हा हतोऽस्मीति पितरं ध्यात्वा दैवं विनिन्द्य च
।
प्रोवाच मन्त्रिणः सर्व्वानानिनाय पुरोहितम् ॥”
इति मार्कण्डेयपुराणे शेषाध्यायः ॥ * ॥
अस्य धारणफलं यथा । दानधर्म्मे ।
“केशश्मश्रु धारयतामग्र्या भवति सन्ततिः ॥”
*
तस्य क्षौरक्रमो यथा । वराहपुराणम् ।
“श्मश्रु कर्म्म कारयित्वा नखच्छेदमनन्तरम् ।”
गोभिलः ।
“केशश्मश्रुलोमनखानि वापयीत शिखावर्जम
।”
इति शुद्धितत्त्वम् ॥

**श्मश्रुमुखी**, स्त्री, (श्मश्रु मुखे यस्याः । ङीष् ।)

श्मश्रु युक्ता नारी । तत्प्रर्य्यायः । पालिः २
पाली
३ । इति शब्दरत्नावली ॥ पोटा ४ । इति
जटाधरः ॥

**श्मील**, निमिषणे । इतिकविकल्पद्रुमः ॥ (भ्वा० पर०

अक०-सेट् ।) ओष्ठ्यवर्गशेषयुक्तः । श्मीलति
चक्षुः पक्ष्मभिरावृतं स्यादित्यर्थः । इति दुर्मा-
दासः ॥

**श्यानः**, त्रि, गतः । श्यैधातोः क्तप्रत्ययेन निष्पन्नः ॥

श्यामं, क्ली, (श्यैङ गतौ + “इषियुधीन्धीति
।”
उणा० १ । १४४ । इति मक् ।) मरिचम् ।
सिन्धुलवणम् । इति मेदिनी ॥

**श्यामः**, त्रि, (श्यायते मनो यस्मात् । श्यै + मक् ।)

प्रायश्चित्तं प्रवक्ष्यामि येन शुध्यति
किल्विषात्
कृत्वा चतुर्थभक्षन्तु दिनानि दश पञ्च च ।
आकाशशयनं कुर्य्यात् एकभक्तः
कुशास्तरे ॥
प्रभाते पञ्चगव्यन्तु पातव्यं कर्म्मशोधनम्
।
प्रमुक्तः सर्व्वपापेभ्यो मम लोकाय
गच्छति ॥”
इति वाराहे
श्मशानप्रवेशापराधप्रायश्रित्त-
नामाध्यायः ॥

**श्मशानकाली**, स्त्री, (श्मशानस्य काली ।)

कालिकाविशेषः । अथ श्मशानकाली ।
तदुक्तं
कालीतन्त्रे ।
“वाणीं मोयां ततो लक्ष्मीं कामबीजमतः
परम्
कालिके संपुटत्वेन चतुष्कं
बीजमालिखेत् ॥
एकादशार्णा देवेशि चतुर्वर्गप्रदायिनी ॥”
* ॥
अस्या यन्त्रम् ।
“पद्ममष्टदलं वृत्तं तद्वाह्ये धरणीतलम् ।
चतुर्द्वारसमायुक्त मध्ये मूलं समालिखेत्
॥
दलेष्वष्टसु विलेखेत् कवर्गाद्यष्टवर्गकम् ।
धरण्यां विलिस्वेदाद्यं चतुष्कञ्च चतुष्कके
।
पूर्व्वादि उत्तरान्तञ्च मध्ये देवीं प्रपूजयेत्
॥” * ॥
अस्याः पूजाक्रमः । प्रातः
कृत्यादिप्राणायामान्तं
कर्म्म कृत्वा ऋष्यादिन्यासं कुर्य्यात् यथा
।
शिरसि भृगुऋषये नमः । हृदि
श्मशानकाकि-
कायै देवतायै नमः । गुह्ये वाग्वीजाय
नमः ।
पादयोर्मायाशक्तये नमः । सर्व्वाङ्गे
कामबीज-
सर्व्वाङ्गे कालिका देवी अन्यत् सर्व्वन्तु
पूर्व्ववत् ॥”
इति तन्त्रसारः ॥

**श्मशानवासी**, [न्] पुं, (श्मशाने वसतीति ।

वस + णिनिः ।) शिवः । यथा, --
“क्षेत्रपः क्षेत्रपालश्च क्षेत्रज्ञः क्षत्रियो
विराट् ।
श्मशानवासौ मांसाशी खर्परराशी
मखान्तकृत् ॥”
इति वटुकभैरवस्तोत्रम् ॥ * ॥
श्मशाने वासकर्त्तरि, त्रि, । यथा ।
शवसम्बन्धि
वस्त्रादिकं श्मशानवासिचण्डालादिभ्यो
दद्यात्
इति शुद्धितत्त्वम् ॥

**श्मशानवेश्मा**, [न्] पुं, (श्मशानं वेश्म यस्य ।)

महादेवः । इति हेमचन्द्रः ॥

**श्मशानवासिनी**, स्त्री, (श्मशाने वसति या ।

वस + णिनिः । ङीप् ।) काली । यथा, -
-
“श्मशानवासिनी सौम्या शिवानी
शिववल्लभा ।”
इति कालिकाशतनामस्तोत्रम् ॥

**श्मशानालयवासिनी**, स्त्री, (श्मशानालये श्मशान-

गृहे वसतीति । वस + णिनिः । ङीप् ।)
काली ।
यथा, --
“घोररावां महारोद्रीं
श्मशानालयवासिनीम् ।”
इति तन्त्रसारे दक्षिणकालिका ध्यानम्
॥

**श्मश्रु**, स्त्री, (श्म मुखं श्रयति आश्रयतीति ।

श्म + श्रि + “श्मनि श्रयतेर्डुम् ।” उणा०
५ ।
२८ । डुन् ।) पुंमुखे वर्द्धितलोम ।
इत्यमरः ॥
दाडी इति भाषा ॥ पुंमुखे पुरुषास्ये तेषां
वृद्धौ
कृष्णगुणविशिष्टः । (यथा, मनुः । ७ । २५ ।
“यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा ।
प्रजास्तत्र न मुह्यन्ति नेता चेत् साधु पश्यति
॥”)
हरिद्गुणविशिष्टः । इत्यमरः ॥

**श्यामः**, पुं, (श्यै + मक् ।) प्रयागस्य वटः । (यथा

रघुः । १३ । ५३ ।
“त्वया पुरस्तादुपयाचितो यः
सोऽयं वटः श्याम इति प्रतीतः ।
राशिर्मणीनामिव गारुडानां
सपद्मरागः फलितो विभाति ॥”)
मेघः । वृद्धदारकः । कोकिलः । कृष्णवर्णः ।
हरिद्वर्णः । इति मेदिनी ॥ धुस्तूरः । पीलु-
वृक्षः । श्यामाकः । इति राजनिर्घण्टः ॥ दम-
नकवृक्षः । गन्धतृणम् । इति विश्वः ॥ * ॥
श्यामवस्तूनि यथा, --
कृष्णानि केशवः सीरिचीरं चन्द्राङ्कराहवः ।
विन्ध्याञ्जनाद्रिवृक्षाहिवनभैरवराक्षसाः ॥
शिवकण्ठघनद्वैपायनरामधनञ्जयाः ।
शनिर्द्रुपदजा काली कलिकोलयमासुराः ॥
केशकज्ज्वलकस्तूरीराजपट्टविड्रूजम् ।

| | | |
|---|---|---|
| कीलकाय नमः । ततः कराङ्गन्यासौ । ऐँ अङ्ग-<br>ष्ठाभ्यां नमः । ह्रीँ तर्ज्जनीभ्यां स्वाहा । श्रीँ<br>मध्यमाभ्यां वषट । क्लीँ आनामिकाभ्यां हुँ । | सत्यां तल्लोम श्मश्रु उच्यते । श्मन्निति मुख<br>नामेति स्मुतिः श्मनि मुखे श्रूयते उपलभ्यते<br>श्मश्रु नाम्नाति डुः श्मश्रु क्लीवमुदन्तम् । श्म<br>मुखं श्रयति श्मनः श्रयतेर्डुन्निति डुनि श्मश्रु<br>नान्तमित्यन्ये । इति भरतः ॥ * ॥ तस्य श्रुभा-<br>शुभलक्षणं यथा, -- | |

विषकोषकुहूशस्त्रागुरुपापतमोनिशाः ॥
मसीपङ्कमदाम्भोधियमुनाधूमकोकिलाः।
गोलाङ्गुलास्यगुञ्जास्ये कण्ठः खञ्जनकेकिनोः ॥
शवलं तालतापिञ्जतिलेन्दीवरवल्लयः ।
रसविद्धूतशृङ्गारौ कटाक्षोऽलिः कणीनिका ॥
नीली जम्बूफलं मुस्ता काककृत्याकुकीर्त्तयः ।
भिन्नश्छाया गजाङ्गारखलान्तःकरणादयः॥"
इति कविकल्पलतायां २ श्लेषस्तवके ४ कुसुमम् ॥

**श्यामकं**, क्ली, (श्याम + संज्ञायां कन् ।) रोहिष-
तृणम् । इति राजनिर्घण्टः ॥ (कृष्णवर्णे, त्रि । यथा, बृहत्सं हितायाम् । ६१ । ८ ।
"श्यामकपुष्पचिताङ्गो
भस्मारुणसन्निभो विडालाक्षः ॥")

**श्यामकः**, पुं, (श्यामं तद्वर्णं अकतीति । अक गतौ
+ अण् । शकन्ध्वादित्वात् साधुः ।) श्यामाकः ।
इति हेमचन्द्रः ॥ (शूरस्य पुत्रविशेषः । स तु वसु-
देवस्य भ्राता । इति भागवतम् । ९ । २४ । २९ ॥)

**श्यामकण्ठः**, पुं, (श्यामः कण्ठो यस्य ।) मयूरः ।
इति हलायुधः ॥ शिवः । पक्षिविशेषः । इति नीलकण्ठशब्ददर्शनात् ॥

**श्यामकन्दा**, स्त्री, (श्यामः कन्दो यस्याः ।)
अतिविषा । इति राजनिर्घण्टः ॥

**श्यामकाण्डा**, स्त्री, (श्यामः काण्डो यस्याः ।)
गण्डदूर्व्वा । इति राजनिर्घण्टः ॥

**श्यामग्रन्थिः**, स्त्री, (श्यामो ग्रन्थिर्यस्य ।) गण्ड-
दूर्व्वा । इति राजनिर्घण्टः ॥

**श्यामपत्रः**, पुं, (श्यामानि पत्राणि यस्य ।) तमाल-
वृक्षः । इति शब्दचन्द्रिका ॥

**श्यामसुन्दरः**, पुं, (श्यामः सुन्दरश्च ।) श्रीकृष्णः ।
यथा, --
"यावन्ति च शरीराणि भोगार्हाणि महामुने ।
प्राकृतानि च सर्व्वाणि श्रीकृष्णविग्रहं विना ॥
ध्यायन्ते योगिनस्तच्च शुद्धं ज्योतिः स्वरूपिणम्
हस्तपादादिरहितं निर्गुणं प्रकृतेः परम् ॥
वैष्णवास्तं न मन्यन्ते तद्भक्ता सूक्ष्मदर्शिनः ।
कुतो बभूव तज्ज्योतिरहो तेजस्विनं विना ।
ज्योतिरभ्यन्तरे नित्यं शरीरं श्यामसुन्दरम् ॥"
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ४१ अध्यायः ॥ * ॥
अन्यच्च ।
श्यामसुन्दर ते दास्यः करवाम तवोदितम् ।
देहि वासांसि धर्म्मज्ञ नो चेद्राज्ञे ब्रुवामहे ॥"
इति श्रीभागवते दशमस्कन्धे २२ अध्यायः ॥ * ॥
अपि च ।
"ददर्श श्रीहरिं ब्रह्मा शङ्करश्च सुरैः सह
वसन्तं तन्मध्यदेशे यथेन्द्रं तारकावृतम् ॥
अमूल्यरत्ननिर्म्माणसर्व्वभूषणभूषितम् ।
किरीटिनं कुण्डलिनं वनमालाविभूषितम् ॥
शङ्खचक्रगदापद्मधारिणञ्चचतुर्भुजम् ।
नवीननीरदश्यामसुन्दरंसुमनोहरम् ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे १४ अध्यायः ॥

**श्यामा**, स्त्री, (श्यामो वर्णोऽस्त्यस्या इति । अच् ।
टाप् ।) शारिवौषधी । अप्रसूताङ्गना ।
प्रियङ्गुः । वागुजिः । यमुना । रात्रिः । कृष्ण-
त्रिवृतिका । नीलिका । इति मेदिनी ॥ गुग्-
गुलुः । सोमलता । गुन्द्रा । कृष्णा । अम्बिका ।
इति विश्वः ॥ गुडूची । कस्तूरी । वटपत्री ।
वन्दा । नीलपुनर्नवा । पिप्पली । हरिद्रा ।
नीलदूर्व्वा । तुलसी । पद्मवीजम् । गौः ।
स्त्री । छाया । कृष्णसारिवा । शिंशपा । इति
राजनिर्घण्टः ॥ (नारीविशेषः । यथा, भट्टिः । ५ । १८ ।
बभूव पुष्पवृष्टिश्च तोयवृष्टिः परा तथा ।
जज्वलुश्चाग्नयः शान्ता जगर्ज्जुश्च घना घनम् ॥
तस्यान्तु जायमानायां सर्व्वं स्वास्थ्यमपद्यत ।
तान्तु दृष्ट्वा यथाजातां नीलोत्पलदलानुगाम्॥
श्यामां सा मेनका देवी मुदमापाति हर्षिता ।
देवाश्च हर्षमतुलं प्रापुस्तत्र मुहुर्मुहुः ॥
तुष्टुवुस्तामन्तरीक्षे गन्धर्व्वाश्चाप्सरोगणाः।
तान्तु नीलोत्पलदलश्यामां हिमवतः सुताम् ॥
कालीति नाम्ना हिमवानाजुहाव कृते दिने ।
बान्धावास्तु स्वसन्तानां नाम्ना तां पार्व्वतीति च ।
कालीति च तथा नाम्ना कीर्त्तिता गिरि-
नन्दिनी ॥"
इति कालिकापुराणे ४० अध्यायः ॥ * ॥
अथ श्यामामन्त्राः । क्रीँ क्रीँ क्रीँ हूँ हूँ ह्रीँ
ह्रीँ दक्षिणे कालिके क्रीँ क्रीँ क्रीँ हूँ हूँ ह्रीँ
ह्रीँ स्वाहा । यथा, कालीतन्त्रे ।
"कामत्रयं वह्निसंस्थं रतिबिन्दुसमन्वितम् ।
कूर्च्चयुग्मं तथा लज्जायुगलं तदन्तरम् ॥
दक्षिणे कालिके चेति पूर्व्वबीजानि चोच्चरेत् ।
अन्ते वह्निबधूं दद्यात् विद्या राज्ञी प्रकी-

**श्यामलः**, पुं, (श्यामवर्णः अस्त्यस्येति । श्याम +

"सिध्मादिभ्यश्च ।" ५ । २ । ९७ । इति
लच् ।) कृष्ण-
वर्णः । पिप्पलः । इतिमेदिनी ॥
कृष्णगुणवति,
त्रि । इत्यमरः ॥ (यथा मुकुन्दमालायाम् । २
।
"जयतु जयतु मेघश्यामलः कोमलाङ्गो
जयतु जयतु पृथ्वीभारनाशो मुकुन्दः ॥")

**श्यामलचूडा**, स्त्री, (श्यामला चूडा यस्याः ।)

गुञ्जा । इति राजनिर्घण्टः ॥

**श्यामलता**, स्त्री, (श्यामा लता ।) स्वनामख्यात-

लता । तत्पर्य्यायः । यथा, शब्दरत्नावल्याम्
।
"गोपी गोपा गोपवल्ली सारिवोल्पलसारिवा ।
अनन्ता शारिवा श्यामा ह्यष्टौ श्यामलताह्वये
॥"
अपि च ।
"कालपेषी महाश्यामा सुभद्रोत्पलसारिवा ।
दीर्घमूला च पालिन्दी मसूरविदला च सा ॥"
इति रत्नमाला ॥
राजनिर्घण्टोक्तपर्य्यायगुणौ सारिवाशब्दे
द्रष्टव्यौ

**श्यामला**, स्त्री, पार्व्वती । श्यामं श्रीकृष्णं लाति

ददातीति व्युत्पत्तिसिद्धा । इति केचित् ॥
अश्व-
गन्धा । कटभी । जम्बूः । कस्तूरी । इति
राज-
निर्घण्टः ॥

**श्यामलिका**, स्त्री, नीली । इति राजनिर्घण्टः ॥

**श्यामलेक्षुः**, पुं, (श्यामलः कृष्णवर्णः इक्षुः ।)

कृष्णेक्षुः । इति राजनिर्घण्टः ॥

"योषिद्वृन्दारिका तस्य दयिता हंसनादिनी ।
दूर्व्वाकाण्डमिव श्यामा न्यग्रोधपरिमण्डला
॥"
तल्लक्षणं यथा, तट्टीकायाम् ।
"शीते सुखोष्णसर्व्वाङ्गी ग्रीष्मे च सुख-
शीतला ।
तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कथ्यते
॥")
पक्षिविशेषः । शामा इति भाषा । तत्पर्य्यायः
।
वराही २ शकुनी ३ कुमारी ४ दुर्गा ५ देवी ६
चटका ७ कृष्णा ८ पोतकी ९ पाण्डविका
१०
वामा ११ कालिका १२ शितिसिम्बिनी १३
।
इति राजनिर्घण्टः ॥ * ॥ श्यामाया
उत्पत्तिर्यथा,
"ततः सा कालिका देवी योगनिद्रा जगन्मयी
।
पूर्व्वत्यक्तसतीरूपा जन्मार्थं मेनकां ययौ ॥
समयस्यानुरूपेण मेनका जठरे शिवा ।
सम्भूय च समुत्पन्ना सा लक्ष्मीरिव सागरात्
॥
वसन्तसमये देवी नवम्यां मृगयोगतः ।
अर्द्धरात्रौ समुत्पन्ना गङ्गेव शशिमण्डनात् ॥
ततस्तस्यान्तु जातायां प्रसन्नाश्चाभवन्
दिशः ।
सानुकूलो ववौ वायुर्गम्भीरो गन्धिलः शुभः ॥

र्त्तिता ॥"
मन्वर्थमाह यामले ।
"ककाराज्जलरूपत्वात् केवलं
मोक्षदायिनी ।
ज्वलनार्णसमायोगात् सर्व्व तेजोमयी
शुभा ।
मायात्रयेण देवेशि
सृष्टिस्थित्यन्तकारिणी ॥
बिन्दूनां निष्फलत्वाच्च
कैवल्यफलदायिनी ।
वीजत्रया शाम्भवी सा केवलं
ज्ञानचित्कला ॥
शब्दबीजद्वयेनैव शब्दराशिप्रबोधिनी
।
लज्जाबीजद्वयेनैव
सृष्टिस्थित्यन्तकारिणी ॥
सम्बोधनपदेनैव सदा सन्निधिकारिणी
।
स्वाहया जगतां माता
सर्व्वपापप्रणाशिनी ॥"
अस्याः पूजाप्रयोगः ।
प्रातःकृत्यादिकं कृत्वाँ
मन्त्राचमनं कुर्य्यात् । यथा, --
"कालिकाभिः स्त्रिभिः पीत्वा
काल्यादिभि-
रुपस्पृशेत् ।
द्वाभ्यामोष्ठौ द्विरुन्मृज्य चकेन
क्षालयेत् करम् ॥
मुखघ्राणेक्षणश्रोत्रनाभ्युरस्कं भुजौ
क्रमात् ।
आचम्यैवं भवेत् काली वत्सरात्तां
प्रपश्यति ॥"
कं शिरः । तद्यथा । क्रीमिति
त्रिराचामेत् ।
ॐ काल्यै नमः कपालिन्यै नमः इति
ओष्ठौ
द्विरुन्मृजेत् । ॐ कुल्लायै नमः इति
करं क्षाल-
येत् । ॐ कुरुकुल्लायै नमः इति मुखे
। ॐ

|  |  | विरोधिन्यै नमः इति दक्षिणनासायाम्<br>। ॐ<br>विप्रचित्तायै नमः इति वामनासायाम्<br>। ॐ<br>उग्रायै नमः ॐ उग्रप्रभायै नमः इति<br>नेत्रयोः ।<br>ॐ दीप्तायै नमः ॐ नीलायै नमः इति<br>श्रोत्रयोः । ॐ घनायै नमः इति नाभौ<br>। ॐ<br>वलाकायै नमः इति वक्षसि । ॐ<br>मात्रायै नमः<br>इति शिरसि । ॐ मुद्रायै नमः ॐ<br>मितायै<br>नमः इत्यंसयोः । इति मन्त्राचमनम् ।<br>* । ततो<br>भूतशुद्ध्यन्तं विधाय मायाबीजेन<br>यथाविधि |
|---|---|---|

प्राणायामत्रयं कुर्य्यात् ॥ * ॥
ऋष्यादिन्यासः ।
यथा । अस्य मन्त्रस्य भैरव
ऋषिरुष्णिक् छन्दो
दक्षिणकालिका देवता ह्रीँ बीजं हूँ
शक्तिः
क्रीँ कीलकं पुरुषार्थचतुष्टयसिद्ध्यर्थे
विनि-
योगः । तथा च कालीक्रमे ।
“कीलकं चाद्यबीजं स्यात्
चतुर्व्वर्गफलप्रदम् ।”
शिरसि वैरवाय ऋषये नमः । मुखे
उष्णिक-
छन्दसे नमः । हृदि दक्षिणकालिकायै
देवतायै
नमः । गुह्ये ह्रीँ बीजाय नमः । पादयोः
हूँ
शक्तये नमः । सर्व्वाङ्गे क्रीँ कीलकाय
नमः ॥
ततः कराङ्गन्यासौ । तदुक्तं कालीतन्त्रे
।
“अङ्गन्यासकरन्यासौ यथावदभिधीयते
।
भैरवोऽस्य ऋषिः प्रोक्तः उष्णिक् छन्द
उदा-
हृतम् ।
देवता कालिका प्रोक्ता लज्जाबीजन्तु
बीजकम् ॥
कीलकं चाद्यबीजं
स्याच्चतुर्व्वर्गफलप्रदम् ॥
शक्तिश्च कूर्च्चबीजं स्यादनिरुद्धा
सरस्वती ।
कवित्वार्थे नियोगः स्यादित्यादि तेन
मायया ॥”
षडङ्गन्यासः ।
“षड्दीर्घभाजा बीजेन प्रणवाद्येन
कल्पयेत् ।”
वीरतन्त्रेऽपि ।

यथा ॐ अं ॐ एवं मातृकापुटिततारम् । एवं
श्रीबीजपुटितां ताम् । तत्पुटितं श्रीबीजम् ।
एवं कामेन पुटितां मातृकाम् । मातृकापुटितं
कामम् । एवं शक्त्या पुटितां मातृकां
मातृका-
पुटितां शक्तिं न्यसेत् । तथा क्रीं द्वन्द्वञ्च ऋ-
ॠ-
ऌ-ॡ-ञ्च पूर्व्ववत् । तत्पुटितां मातृकां
न्यसेत्
मातृकापुटितञ्च तत् । मन्त्रपुटितां मातृकां
तत्पुटितं मनुम् । पुनरनुलोमविलोम्येन केवलं
मातृकास्थाने न्यस्य मूलेनाष्टशतेन व्यापकं
कुर्य्यात् अयं न्यासस्ताराया अपि कार्य्यः ।
“इति गुप्ते न दुर्गाया अङ्गषोढाः प्रकीर्त्तिताः ।
तारायाः कालिकायाश्च उन्मुखाश्च तथापरे
॥
एतस्मिन् न्यामवर्य्ये च सर्व्वं पापं प्रणश्यति
॥”
ततस्तत्त्वन्यासः । यथामूलं त्रिखण्डं विधाय
प्रथमखण्डान्ते ॐ आत्मतत्त्वाय स्वाहेति
पादा-
दिनाभिपर्य्यन्तम् । द्वितीयखण्डान्ते ॐ
विद्या-
तत्त्वाय स्वाहा इति नाभ्यादिहृदयान्तम् ।
तृतीयखण्डान्ते ॐ शिवतत्त्वाय स्वाहा इति
हृदयादिशिरःपर्य्यन्तं न्यसेत् । तदुक्तं
स्वतन्त्रे ।
“मूलविद्यात्रिखण्डान्ते प्रणवाद्यैर्य्यथाविधि ।
आत्मविद्या शिवैस्तत्त्वैस्तत्त्वन्यासं
समाचरेत् ॥”
अथ वीजन्यासः । तदुक्तं कुमारीकल्पे ।
“ब्रह्मरन्धे भ्रुवोर्म्मध्ये ललाटे नाभिदेशके ।
गुह्ये वक्त्रे च सर्व्वाङ्गे सप्तबीजं क्रमान्न्यसेत्
॥”
यथा आद्यबीजं ब्रह्मरन्ध्रे द्वितीयबीजं भ्रूमध्ये
तृतीयबीजं ललाटे चतुर्थबीजं नाभौ
पञ्चमबीजं
गुह्ये षष्ठबीजं वक्त्रे सप्तमबीजं सर्व्वाङ्गे । एत-

दर्शनादुभयमेव पाठः ॥ * ॥ ध्यानान्तरं
स्वतन्त्रे
“अञ्जनाद्रिनिभां देवीं करालवदनां शिवाम् ।
मुण्डमालावलीकीर्णां मुक्तकेशीं
स्मिताननाम् ॥
महाकालहृदम्भोजस्थितां पीनपयोधराम् ।
विपरीतरतासक्तां घोरदंष्ट्रां शिवैः सह ॥
नागयज्ञोपवीताढ्यां चन्द्रार्द्धकृतशेखराम् ।
सर्व्वालङ्कारयुक्ताञ्च मुण्डमालाविभूषिताम् ॥
मृतहस्तसहस्रैस्तु बद्धकाञ्चीं दिगंशुकाम् ।
शिवाकोटिसहस्रैस्तु योगिनीभिर्व्विराजिताम्
॥
रक्तपूर्णमुखाम्भोजां मद्यपानप्रमत्तिकाम् ।
वह्न्यर्कशशिनेत्राञ्च रक्तविस्फुरिताननाम् ॥
विगतासुकिशोराभ्यां कृतकर्णावतंसिनीम् ।
कण्ठावसक्तमुण्डालीगलद्रुधिरचर्च्चिताम् ॥
श्मशानवह्निमध्यस्थां ब्रह्मकेशववन्दिताम् ।
सद्यःकृत्तशिरःखड्गवराभीतिकराम्बुजाम्
॥”
ध्यानान्तरं रहस्ये । यथा, --
“शवारूढां महाभीमां घोरदंष्ट्रां हसन्मुखीम ।
चतुर्भुजां खड्गमुण्डवराभयकरा पराम् ॥
मुण्डमालाधरां देवीं ललज्जिह्वां दिगम्बरीम्
।
एवं सञ्चिन्तयेत् कालों
श्मशानालयवासिनीम् ॥”
एवं ध्यात्वा मानसैः सम्पूज्य शङ्खस्थापनं
कुर्य्यात्
यथा । स्ववामे भूमौ हूङ्कारगर्भं त्रिकोणं वि-
लिख्य अर्घ्यपात्रं संस्थाप्य मूलेन
शुद्धजलादिना ।
शङ्खादिपात्रमापूर्य्य गन्धादिकं दत्त्वा ॐ गङ्गे
चेत्यादिना तीर्थमावाह्य मं वह्निमण्डलाय
दश
कलात्मने नमः इत्याधारम् । अं
सूर्य्यमण्डलाय
द्वादशकलात्मने नमः इति शङ्खम् । उं सोम-
मण्डलाय षोडषकलात्मने नमः इति जलं

"दीर्घषट्कयुताद्येन प्रणवाद्येन
कल्पयेत् ।"
इति वा । तद्यथा । ॐ क्राँ अङ्गष्ठाभ्यां
नमः ।
ॐ क्रीँ तर्ज्जनीभ्यां स्वाहा । ॐ क्रूँ
मध्यमाभ्यां
वषट् । ॐ क्रैँ अनामिकाभ्यां हुँ । ॐ
क्रौँ
कनिष्ठाभ्यां वौषट् । ॐ क्रः
करतलपृष्ठाभ्यां
फट् । एवं हृदयादिषु । ॐ क्राँ हृदयाय
नमः
इत्यादि । एवं ॐ ह्राँ अङ्गुष्ठाभ्यां नमः
इत्यादि
वा ॥ * ॥ ततो वर्णन्यासः । अं आं इं ईं
उं
ऊं ऋं ॠं लृं ॡं नमः इति हृदये । एं ऐं
ॐ औँ अं अः कं खं गं घं नमः इति
दक्षिण-
बाहौ । ङं चं छं जं झं ञं टं ठं डं ढं नमः
।
इति वामबाहौ । णं तं थं दं धं नं पं फं बं
भं
नमः इति दक्षिणपादे । मं यं रं लं वं शं
षं सं
हं व्वं क्षं नमः इति वामपादे ।
विरूपाक्षमते
सबिन्दुरयं न्यासः । यथा वीरतन्त्रे । अं
आं
इं ईं उं ऊं ऋं ॠं लृं ॡं वै हृदये
न्यसेदित्यादि । पुनर्निर्बिन्दुर्यथा । अ
आ इ ई
उ ऊ ऋ ॠ लृ ॡ वै हृदयं
स्पृशेदित्यादि ।
किन्तु सबिन्दून् वा न्यसेदेतान्
निर्बिन्दून् वाथ
वर्णकान्
इत्याचार्य्यपरिगृहितभैरवीयवाक्यात्
उभयमेव युक्तम् ॥ * ॥ अथ
षोढान्यासः ।
तदुक्तं वीरतन्त्रे ।

त्त्रयं काम्यम् ॥ * ॥ ततो मूलेन सप्तधा
व्यापक-
न्यासं कृत्वा यथाविधि मुद्रां प्रदर्श्य ध्यायेत्
।
यथा कालीतन्त्रे ।
"करालवदनां घोरां मुक्तकेशीं चतुर्भुजाम् ।
कालिकां दक्षिणां दिव्यां
मुण्डमालाविभूषिताम्
सद्यश्छिन्नशिरःखड्गवामाधोर्द्ध्वकराम्बुजाम्।
अभयं वरदञ्चैव दक्षिणोद्र्ध्वाधःपाणिकाम्॥
महामेघप्रभां श्यामां तथा चैव दिगम्बरीम् ।
कण्ठावसक्तमुण्डालीगलद्रुधिरचर्च्चिताम् ॥
कर्णावतंसतानीतशवयुग्मभयानकाम् ।
घोरदंष्ट्रां करालास्यां पीनोन्नतपयोधराम्॥
शवानां करसंघातैः कृतकाञ्चीं हसन्मुखीम् ।
सृक्कद्वयगलद्रक्तधाराविस्फुरिताननाम् ॥
घोररावां महारौद्रीं श्मशानालयवासिनीम् ।
बालार्कमण्डलाकारलोचनत्रितयान्विताम्॥
दन्तुरां दक्षिणव्यापिमुक्तालम्बिकचोच्चयाम्
।
शवरूपमहादेवहृदयोपरिसंस्थिताम् ॥
शिवाभिर्घोररावाभिश्चतुर्द्दिक्षुसमन्विताम् ।
महाकालेन च समं विपरीतरतातुराम्॥
सुखप्रसन्नवदनां स्मेराननसरोरुहाम् ।
एवं सञ्चिन्तयेत् कालीं सव्वकामार्थसिद्धि-
दाम् ॥" * ॥
शवयुरमेति घोरबाणावतंसेति
प्रेतकर्णावतंसेति
च ।
शकुन्तपक्षसंयुक्तबाणकर्णविभूषितामिति
विगतासुकिशोराभ्यां
कृतकर्णावतंमिनीमितिच

सम्पूज्य । ॐ ह्रां हृदयाय नमः । ॐ ह्रीं
शिरसे
स्वाहा । ॐ ह्रूँ शिखायै वषट् । ॐ ह्रैँ कव-
चाय हूँ इत्यग्नीशासुरवायुषु । अग्रे ॐ ह्रौँ
नेत्रत्रयाय वौषट् । चतुर्दिक्षु ॐ ह्रः अस्त्राय
फट् । इत्यभ्यर्च्च्य तदुपरि
मत्स्यमुद्रयाच्छाद्य
मूलं दशधा जप्त्वा धेनुमुद्रया अमृतीकृत्य
अस्त्रेण
संरक्ष्य भूतिनीयोनिमुद्रे प्रदर्श्य तज्जलं
किञ्चित्
प्रोक्षणीपात्रे निःक्षिप्य मूलेन
तेनोदकेनात्मानं
पूजोपकरणञ्चाभ्युक्ष्य पीठपूजामारभेत् ॥ *
॥
अस्याः पूजायन्त्रम् । आदौ बिन्दुं स्वबीजं
भुवनेशीञ्च विलिख्य ततस्त्रिकोणं तद्वाह्ये
त्रिकोणचतुष्टयं वृत्तमष्टदलं पद्मं पुनर्वृत्तं
चतु-
र्द्वारात्मकं भूगृहं लिखेत् । तदुक्तं कालीतन्त्रे
।
"आदौ त्रिकोणमालिख्य त्रिकोणं
तद्वहिर्लिखेत्
ततो वै विलिखेन्मन्त्री त्रिकोणत्रयमुत्तमम् ॥
ततो वृत्तं समालिख्य लिखेदष्टदलं ततः ।
वृत्तं विलिख्य विधिवल्लिखेद्भूपुरमेककम् ॥"
कुमारीकल्पे ।
"मध्ये तु बैन्दवं चक्रं बीजमायाविभूषितम्॥
इति ॥ * ॥
अत्र विशेषाधारो मुण्डमालायाम् ।
"ताम्रपात्रे कपाले वा श्मशानकाष्ठनिर्म्मिते ।
शनिभौमदिने वापि शरीरे मृतसम्भवे ॥
स्वर्णे रौप्ये ऽथ लौहे वा चक्रं कार्य्यं
विधानतः ॥"

| | | |
|---|---|---|
| “केवलां मातृकां कृत्वा मातृकां तारसंपुटाम् ।<br>मातृकापुटितं तारं न्यसेत् साधकसत्तमः ॥<br>श्रीबीजपुटितां तान्तु मातृकापुटितन्तु तत् ।<br>कामेन पुटितां देवों तत्पुटं काममेव च ॥<br>शक्त्या च पुटितां देवीं शक्तिञ्च तत्पुटां न्यसेत् ।<br>कों द्वन्द्वञ्च पुनर्न्यस्त्वा ऋ-ॠ-ऌ-ॡ-ञ्च पूर्ववत्<br>“मूलेन पुटितां देवीं तत्पुटं मन्त्रमेव च ॥<br>अनुलोमविलोम्नेन न्यस्त्वा मन्त्रं यथाविधि ।<br>मूलेनाष्टशतं कुर्य्याद्व्यापकं तदनन्तरम् ॥” | | |

यन्त्रान्तरमाह तन्त्रे ।
"शक्त्यग्निभ्याञ्च षट्‌कोणं शक्तिभिश्च नवात्मकम्
पद्मे वसुदले भूमिपुश्चतुर्द्वारसंयुतेति ॥ * ॥
पीठपूजां ततः कुर्य्यादाधारशक्तिपूर्ळ्वकम् ।
प्रकृतिं कमठञ्चैव शेषं पृथ्वीं तथैव च ॥
सुधाम्बधिं मणिद्वीपं चिन्तामणिगृहं तथा ।
श्मशानं पारिजातञ्च तन्मूले रत्नवेदिकाम् ॥
तस्योपरि मणेः पीठं न्यसेत् साधकसत्तमः ।
चतुर्दिक्षु मुनीन् देवान् शिवाश्च शवमुण्ड-
कान् ॥"
धर्म्माद्यधर्म्मादींश्चेत्यादि ह्रीँ ज्ञानात्मने नमः
इत्युन्तं संपूज्य केशरेषु पूर्व्वादिक्रमेण पूजयेत् ।
"इच्छा ज्ञाना क्रिया चैव कामिनी काम-
दायिनी ॥
रती रतिप्रिया नन्दा मध्ये चैव मनोन्मनी ॥"
सर्व्वत्र प्रणवादिनमोऽन्तेन पूजयेत् । तदुपरि
हसौः सदाशिवमहाप्रेतपद्मासनायनमः ॥ * ॥
ततः पुनर्ध्यात्वा पुष्पाञ्जलावानीय मूलमन्त्र-
कल्पितमूर्त्तावावाहयेत् ।
"ॐदेवेशि भक्तिसुलभे परिवारसमन्विते ।
यावत्त्वां पूजयिष्यामि तावत् त्वं सुस्थिरा भव ॥"
ततो मूलमुच्चार्य्य अमुकीदेवि इहावह इह

"सर्व्वाः श्यामा असिकरा मुण्डमालाविभूषिताः
तर्ज्जनीं वामहस्तेन धारयन्त्यः शुचिस्मिताः ॥
दिगम्बर्य्यो हसन्मुख्यः स्वस्ववाहनभूषिताः ॥"
एवं ध्यात्वार्च्चयेत् ॥ * ॥ ततोऽष्टपत्रेषु पूर्व्वादि-
क्रमेण ॐ ब्राह्म्यै नमः । एवं नारायण्यै माहे-
श्वर्य्यै चामुण्डायै कौमार्य्यै अपराजितायै वाराह्यै
नारसिंह्यै एता गन्धादिभिः पूजयेत् । पत्राग्रे
असिताङ्गादिभैरवान् पूजयेत् । ततो मूलेन
पुष्पाञ्जलित्रयं दत्त्वा पाद्यादिना महाकालं
पूजयेत् ॥ * ॥ तस्य ध्यानम् ।
"महाकालं यजेद्देव्या दक्षिणे धूम्रवर्णकम् ।
बिभ्रतं दण्डखद्ृआङ्गौ दंष्ट्राभीममुखं शिशुम् ॥
व्याघ्रचर्म्मावृतकटिं तुन्दिलं रक्तवाससम् ।
त्रिनेत्रं मुक्तकेशञ्च मुण्डमालाविभूषितम्॥
जटाभारलसच्चन्द्रखण्डमुग्रंज्वलन्निभम् ॥"
तथा च कुमारीकल्पे ।
"देव्यास्तु दक्षिणे भागे महाकालं प्रपूजयेत् ।"
हूँ क्षौँ यां रां लां वां आं क्रों महाकाल-
भैरव सर्व्वविघ्नान्नाशय नाशय ह्रीँ श्रीँ फट्
स्वाहा इत्यनेन पाद्यादिभिराराध्यत्रिस्तर्पयित्वा
मूलेन देवीं पञ्चोपचारैः पूजयेत् । तथा च
कालीतन्त्रे ।
"महाकालं यजेद्यत्नात् पश्चाद्देवीं प्रपूजयेत् ।"
कालीकल्पे ।
"कवचं क्षौं समुद्धृत्य यां रां लां वां आं च क्रोन्ततः ।
महाकालभैरवेति सर्व्वविघ्नान्नाशयेति च ॥

"कर्पूराढ्या सदा जिह्वा कर्त्तव्या जपकर्म्मणि ।"
इति विश्वसारवाक्यात् इयं काम्यजप इति
तत्त्वम् । ततोमूलेनाष्टोत्तरशताभिमन्त्रितं पुष्पं
चन्दनञ्च धृत्वा त्रैलोक्यं वशमानयेत् ।
"सर्व्वसिद्धियुतो भूत्वा भैरवो वत्सराद्भवेत् ।"
अस्य पुरश्चरणं लक्षद्वयजपः । तथा च काली-
तन्त्रे ।
"लक्षमेकं जपेन्मन्त्रं हविष्याशी दिवा शुचिः ।
रात्रौ ताम्बूलपूरास्यः शय्यायां लक्षमानतः ॥"
व्यवस्थामाह स्वतन्त्रे ।
"दिवा लक्षं शुचिर्भूत्वा हविष्याशी जपेन्नरः ॥"
ततस्तु तद्दशांशेन होमयेत् हविषा प्रिये ॥"
अत्राङ्गस्य कालान्तरमाह नीलसारस्वते ।
"लक्षमेकं जपेन्मन्त्रं हविष्याशी दिवा शुचिः ।
अशुचिश्च तथा रात्रौ लक्षमेकं तथैव च ॥"
"दशांशं होमयेन्मन्त्री तपयेदभिषेचयेत् ।" इति
साम्प्रदायिकाः । वस्तुतस्तु । कुमारीकरपे ।
"लक्षमेकं जपेद्विद्यां हविष्याशी दिवा शुचिः ।
रात्रौ ताम्बूलपूरास्यः शय्यायां लक्षमानतः ॥
रात्रिजपे तु कालो मुण्डमालायाम्।
"गते तु प्रथमे यामे तृतीयप्रहरावधि ।
निशायास्तु प्रजप्तव्यं रात्रिशेषे जपेन्न तु ॥
एवं लक्षद्वयं जप्त्वा तद्दशांशेन मन्त्रवित् ।
अयुतं होमयेद्देवि दिवारात्रिविभेदतः ॥"
तेन दिवा लक्षं जप्त्वा तद्दाशांशं होमं कुर्य्यात् ।
रात्रौ लक्षं जप्त्वा तद्दशांशं होमं कुर्य्या दिति

तिष्ठ इह सन्निधेहि इह सन्निरुध्यस्व इह सन्नि-
हिता भव । ततः हूमित्यवगुण्ठ्य अङ्गमन्त्रैः
सकलीकृत्य धेनुमुद्रया अमृतीकृत्य परमी-
करणमुद्रया परमीकृत्य भूतिन्याकर्षिणीयोनि-
मुद्राः प्रदर्श्य प्राणप्रतिष्ठां विधाय मूलेन पाद्या-
दिभिः पूजयेत् । ततो मूलमुच्चार्य्य एतत् पाद्य
ममुकदेवतायै नमः । एवमर्घ्यं स्वाहा । आच-
मनीयं स्वधा । स्नानीयं निवेदयामि । पुनरा-
चमनीयं स्वधा । एष गन्धो नमः । एतानि
पुष्पाणि वौषट् । ततो मूलेन पञ्च पुष्पाञ्जलीन्
दत्त्वा धूपदीपौ दद्यात् । वनस्पतीत्यादि पठन्
मूलमुच्चार्य्य एष धूपो नमः । दीपमन्त्रस्तु ।
"सुप्रकाशो महादीपः सर्व्वतस्तिमिरापहः ।
सबाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥"
मूलमुच्चार्य्य एष दीपो नमः । ततः ॐ जय-
ध्वनिमन्त्रमातः स्वाहा इति घण्टां संपूज्यवाम
हस्तेन तां वादयन् नीचैर्धूपं दत्त्वा दृष्टिपर्य्यन्तं
दीपं दद्यात् । ततो मूलेन पुष्पाञ्जलित्रयं दत्त्वा
यथोपपन्नं नैवेद्यं दत्त्वा आवरणपूजां कुर्य्यात् ॥
श्रीअमुकीदेवि आवरणं ते पूजयामि इत्याज्ञां
नाशयेति पुनः प्रोच्य मायां लक्ष्मीं समुद्धरेत् ।
फट् स्वाहया समायुक्तो मन्त्रः सर्व्वार्थसाधकः ॥"
ततो देवीं ध्यात्वा यथाशक्ति जप्त्वा गुह्ये त्यादिना
वामहस्ते जपं समर्प्य आत्मसमर्पणं कुर्य्यात् ।
ततः स्तुत्वा प्रदक्षिणीकृत्य अष्टाङ्गप्रणामं कृत्वा
श्रीजगन्मङ्गलं नाम कवचं पठेत् ॥ * ॥ तत
आवरणदेवता देव्यङ्गे विलोप्य संहारमुद्रया
अमुकीदेवी क्षमस्वेति विसृज्य तत्तेजःपुष्पेण
समं स्वहृद्यारोपयेत् ।
"उत्तरे शिखरे देवि भूम्यां पर्व्व तवासिनि ।
ब्रह्मयोनिसमुत्पन्ने गच्छ देवि ममान्तरम् ॥"
इति मन्त्रेण ॥ * ॥
ततस्तन्नैवेद्यं किञ्चिदुच्छिष्टचाण्डालिन्यै नमः
इत्यैशान्यां दिशि दत्त्वा शेषमिष्टेभ्यो दत्त्वा
किञ्चित् स्वीकृत्य पादोदकं पीत्वा निर्म्माल्यं
शिरसि विधृत्य यथेच्छं विहरेत् ॥ * ॥ ततो
यन्त्रलेपं वामहस्ते कृत्वा सव्यहस्तकनिष्ठया
मायाबीजं विलिख्य तया तिलकं कुर्य्यात् ।
तथा त्र ।
"वामे कृत्वा यन्त्रलेपं मायां सव्यकनिष्ठया ।
विलिख्य तिलकं कुर्य्यात् मन्त्रेणानेन साधकः ॥
ॐ यं यं स्पृशामि पादेन यो मां पश्यति चक्षुषा ।
स एव दासतां यातु राजानो दुष्टदस्यवः ॥"
जपकाले तु कर्पूरयुक्ता जिह्वा कार्य्या ।
रहस्यार्थः ।
"द्विजातीनाञ्च सर्व्वेषां दिवा विधिरिहोच्यते ।
शूद्राणाञ्च तथा प्रोक्तं रात्राविष्टं महाफलम् ॥"
अन्यत्र च ।
"दिवैव प्रजपेन्मन्त्रं न तु रात्रौ कदाचन ॥" * ॥
अथ मन्त्रभेदाः ।
क्रीँ । १ । क्रीँ क्रीँ क्रीँ । ३ । अनयोः पूजा-
प्रयोगः सर्व्वं पूर्व्ववत् । ध्यानं सिद्धेश्वरतन्त्रे ।
"शवारूढां महाभीमां घोरदंष्ट्रां वरप्रदाम् ॥
हास्ययुक्तां त्रिनेत्राञ्च कपालकर्त्तृकाकराम् ॥
मुक्तकेशीं ललज्जिह्वां पिबन्तीं रुधिरं मुहुः ।
चतुर्ब्बाहुयुतां देवीं वराभयकरां स्मरेत् ॥"
अनयोः पुरश्चरणं लक्षजपः ॥ * ॥ ॐ ह्रीँ ह्रीँ
हूँ हूँ क्रीँ क्रीँ क्रीँ दक्षिणे कालिके क्रीँ क्रीँ
क्रीँ हूँ हूँ ह्रीँ ह्रीँ । २१ । अस्याः पूजादिकं
दक्षिणावत् कार्य्यम् । पुरश्चरणं लक्षजपः ॥ * ॥
ॐ ह्रीँ ह्रीँ हूँ हूँ क्रीँ क्रीँ क्रीँ दक्षिणे
कालिके क्रीँ क्रीँ क्रीँ हूँ हूँ ह्रीँ ह्रीँ
स्वाहा । २३ ॥ * ॥ ह्रीँ ह्रीँ हूँ हूँ क्रीँ क्रीँ
क्रीँ दक्षिणे कालिके क्रीँ क्रीँ क्रीँ हूँ हूँ ह्रीँ
ह्रीँ स्वाहा । २२ ॥ * ॥ ह्रीँ ह्रीँ हूँ हूँ क्रीँ
क्रीँ क्रीँ दक्षिणे कालिके क्रीँ क्रीँ क्रीँ हूँ हूँ
ह्रीँ ह्राँ २० । ध्यानपूजादिकं दक्षिणावत् ॥ * ॥
क्रीँ क्रीँ क्रूँ । ३ ॥ * ॥ ॐ ह्रीं क्रीँ मे स्वाहा । ६
अस्याः पूजाप्रयोगः । अस्य भैरव ऋषिर्विराट्
च्छन्दः सिद्धकाली ब्रह्मरूपा भुवनेश्वरी देवता

| | | |
|---|---|---|
| गृहीत्वा केशरेष्वग्न्यादिकोणेषु ॐ ह्राँ ह्रद-<br>यायनमः । ॐ ह्रीँ शिरसे स्वाहा । ॐ हूँ<br>शिखायै वषट् । ॐह्रैँ कवचाय हूँ । ॐह्रौँ<br>नेत्रत्रयाय व्रौषट् । चतुर्दिक्षु ॐ ह्रः अस्त्राय<br>फट् । बहिःषट्कोणे ॐ काल्यै नमः । सर्व्वत्र<br>प्रणवादिनमोऽन्तेन कपालिन्यै कुल्लायै कुरु-<br>कुल्लायै विरोधिन्यै विप्रचित्तायै उग्रायै उग्र-<br>प्रभायै दीप्तायै इत्यन्तस्त्र्यस्ने । ॐनीलायै नमः<br>एवं धनायै वलाकायै इति द्वितीयत्र्यस्रे । एवं<br>मात्रायै मुद्रायै मितायै इति तृतीयत्र्यस्रे । | | |

निजबीजं बीजं लज्वाबीजं शक्तिः। वर्ण-
न्यासादि दक्षिणावत्। ध्यानन्तु।
"खड्गाद्धिन्नेन्दुखण्डस्रवदमृतरसाप्लाविताङ्गी
त्रिनेत्रा।
सव्ये पाणौ कपालोद्गलदसृजमथोमुक्तकेशी
पिबन्ती।
दिग्वस्त्राबद्धकाञ्चीमणिमयमुकुटाद्यैर्युतां दीप्त-
जिह्वा
पायान्नीलोत्पलाभा रविशशिविसत्कुण्डला-
लीढपादा॥"
एवं ध्यात्वा दक्षिणावत् सर्व्वं कार्य्यम्। पुश्चर-
णन्तु एकविंशतिसहस्रजपः॥ * ॥ क्रीँ ह्रीँ ह्रीँ
३ ॥ * ॥ क्रीँ क्रीँ क्रीँ स्वाहा। ५ ॥ * ॥ क्रीँ
क्रीँ क्रीँ फट स्वाहा। ६ ॥ * ॥ क्रीँ क्रीँ क्रीँ
क्रीँ क्रीँ क्रीँ स्वाहा। ८ ॥ * ॥ ऐँ नमः। क्रीँ
ऐँ नमः। क्रीँ कालिकायै स्वाहा। १४ ॥ * ॥
एतस्याः पूजाप्रयोगः। अस्य दक्षिणा मूर्त्ति-
ऋषिः पंक्तिच्छन्द्रः कालिका देवता। ध्यानन्तु
"चतुर्भुजा कृष्णवर्णा मुण्डमालाविभूषिता।
खड्गञ्च दक्षिणे पाणौ बिभ्रतीन्दीवरद्वयम्॥
कर्त्तृञ्च खर्परञ्चैव क्रमाद्वामेन बिभ्रती।
द्यां लिखन्तीं जटामेकां बिभ्रती शिरसाद्वयी॥
मुण्डमालाधरा शीर्षे ग्रीवायामथ चापराम्।
वक्षसा नागहारञ्च बिभ्रती रक्तलोचना॥
कृष्णवस्त्रधरा कठ्यां व्याघ्राजिनसमन्विता।
बामपादं शवहृदि संस्थाप्य दक्षिणं पदम्॥
विलाप्य सिंहपृष्ठे तु लेलिहाना शवं स्वयम्।
साट्टहासा महाघोररावयुक्ता सुभीषणा॥"
ध्यानमेवं अन्यत् सर्व्वं दक्षिणावत्। पुरश्चरणं
लक्षद्वयजपः। अन्यासां मन्त्रवर्णसंख्यलक्ष-
जपः॥ * ॥ क्रीँ ह्रीँ ह्रीँ दक्षिणे कालिके
स्वाहा॥ ११ ॥ क्रीँ हूँ ह्रीँ दक्षिणे कालिके
फट्। १० ॥ * ॥ क्रीँ क्रीँ हूँ हूँ ह्रीँ ह्रीँ दक्षिणे
कालिके क्रीँ क्रीँ हूँ हूँ ह्रीँ ह्रीँ स्वाहा। २०
एतासां दक्षिणा मूर्त्तिऋषिः पंक्तिच्छन्दो दक्षिण
कालिका देवता। अन्यत् सर्व्वं दक्षिणावत्॥ * ॥
क्रीँ स्वाहा ३। भैरवोऽस्य ऋषिः॥ * ॥ क्रीँ
क्रीँ हूँ हूँ ह्रीँ ह्रीँ स्वाहा। ८ ॥ * ॥ क्रीँ
हूँ ह्रीँ स्वाहा। ५। अस्य पञ्चवक्त्र ऋषिः॥ * ॥

स्वाहा। १६ ॥ * ॥ क्रीँ क्रीँ क्रीँ हूँ हूँ ह्रीँ
ह्रीँ गुह्ये कालिके स्वाहा। १४ ॥ * ॥ क्रीँ
हूँ ह्रीँ गुह्ये कालिके हूँ हूँ ह्रीँ ह्रीँ
स्वाहा। १४ ॥ * ॥ क्रीँ हूँ ह्रीँ दक्षिणे
कालिके हूँ हूँ ह्रीँ ह्रीँ स्वाहा। १५ ॥ * ॥
हूँ ह्रीँ गुह्ये कालिके क्रीँ क्रीँ हूँ हूँ ह्रीँ
ह्रीँ स्वाहा १५ ॥ * ॥ क्रीँ गुह्ये कालिके
क्रीँ स्वाहा। ९ ॥ * ॥ क्रीँ दक्षिणे कालिके
क्रीँ स्वाहा। १० ॥ * ॥ एतासां सर्वं पूर्ववत्
।
बलिमन्त्रस्तु। एह्ये हि जगन्मातर्ज्जगतां
जननि
गृह्ण गृह्ण मम बलिं सिद्धिं देहि देहि शत्रुक्षयं
कुरु कुरु क्रूँ क्रूँ ह्रीँ ह्रीँ फट् फट् ॐकालि
कायै नमः फट् स्वाहा॥ * ॥ यद्वा
गुह्यकाल्या
अयं मन्त्रः। एह्येहि गुह्यकालि मम बलिं गृह्ण
गृह्ण मम शत्रन् नाशय नाशय खादय खादय
स्फु र स्फु र छिन्धि छिन्धि सिद्धिं देहि देहि
क्रूँ फट् स्वाहा॥ * ॥ अथ
भद्रकाल्यादिमन्त्राः
क्रीँ क्रीँ क्रीँ हूँ हूँ ह्रीँ ह्रीँ भद्रकाल्यै
क्रीँ क्रीँ क्रीँ हूँ हूँ हँ हँ स्वाहा। २०। * ॥
क्रीँ क्रीँ क्रीँ हूँ हूँ ह्रीँ ह्रीँ श्मशानकालि
क्रीँ क्रीँ क्रीँ हूँ हूँ ह्रीँ ह्रीँ स्वाहा। २१ ॥ * ॥
क्रीँ क्रीँ क्रीँ हूँ हूँ ह्रीँ ह्रीँ महाकालि
क्रीँ क्रीँ क्रीँ हूँ हूँ ह्रीँ ह्रीँ स्वाहा। २० ॥ * ॥
एतासां पूजादिकं दक्षिणावत्। ध्यानन्तु।
"महामेघप्रभां देवीं कृष्णवस्त्रपिधायिनीम्।
ललज्जिह्वां घोरदंष्ट्रां कोटराक्षीं हसन्मुखीम्
॥
नागहारलतोपेतां चन्द्रार्द्धकृतशेखराम्।
द्यां लिखन्तीं जटामेकां लेलिहानां शवं
स्वयम्॥
नागयज्ञोपवीताङ्गीं नागशय्यानिषेदुषीम्।
पञ्चाशन्मुण्डसंयुक्तवनमालां महोदरीम्॥
सहस्रफणसंयुक्तमनन्तं शिरसोपरि।
चतुर्दिक्षु नागफणावेष्टितां गुह्यकालिकाम्॥
तक्षकसर्पराजेन वामकङ्कणभूषिताम्।

हस्ताभ्यां धारयन्ती
ज्वलदनलशिखासन्निभं
पाशयुगमं
दन्तैर्ज्जम्बूफलाभैः परिहरतु भयं
पातु मां
भद्रकाली॥"
अस्याः पुरश्चरणादिकं
दक्षिणकालीतन्त्रवत्।
इति केचित्॥ वस्तुतस्तु
पुरश्चरणमष्टोत्तर-
सहस्रजपः। इति
कृष्णानन्दकृततन्त्रसारः॥ * ॥
श्मशानकालीमन्त्रादिकंतच्छब्दे
द्रष्टव्यम्॥ * ॥
अथ दीपन्विताश्यामापूजा।
यामले।
"कार्त्तिके मासि कृष्णायां
पञ्चदश्यां महानिशि
पूजयेत् योऽतियत्नेन काली विद्या
प्रसीदति॥
मृण्मयीं प्रतिमां कृत्वा महाकालीं
प्रपूजयेत्॥"
व्योमकेशसंहितायाम्।
"तुलार्के यस्त्वमावास्यां निशार्द्धे
घोरदक्षिणाम्
पूजयेद्विधिवद्भक्त्या
सर्व्वसिद्धीश्वरो भवेत्॥" इति॥
एवञ्च अर्द्धरात्रं पूजाया
मुख्यकालः। स च
कालो यद्यु भयदिने तदा पूर्व्वदिने
पूजा। यथ
तत्रैव।
"तत्रोभयदिने शस्तकाले भूतयुता
यदि।
उमा माहेश्वरी सा च तिथिः
सिद्धिप्रदा
सताम्॥
वलिदानं वलितिथावात्मनाशकरं
परम्।

क्रीँ क्रीँ क्रीँ हूँ हूँ ह्रीँ ह्रीँ स्वाहा । ९ ॥ *
क्रीँ दक्षिणे कालिके स्वाहा । ९ ॥ * ॥ क्रीँ ॥
हूँ ह्रीँ क्रीँ हूँ ह्रीँ स्वाहा । ८ ॥ * ॥ क्रीँ ॥
क्रीँ क्रीँ ह्रीँ ह्रीँ हूँ हूँ क्रीँ क्रीँ क्रीँ ह्रीँ
ह्रीँ हूँ हूँ स्वाहा । १६ ॥ * ॥ नमः ऐँ क्रीँ
क्रीँ कालिकायै स्वाहा । ११ ॥ * ॥ नमः आँ
आं क्रौँ क्रौँ फट् स्वाहा कालि कालि
हूँ । १४ ॥ * ॥ एतासां ऋष्यादिकं पूजादिकञ्च
दक्षिणावत् । पुरश्चरणं लक्षजपः ॥ * ॥ अथ
गुह्यकालिकामन्त्राः । क्रीँ क्रीँ क्रीँ हूँ हूँ
ह्रीँ ह्रीँ गुह्ये कालिके क्रीँ क्रीँ क्रीँ हूँ हूँ
ह्रीँ ह्रीँ स्वाहा । २१ ॥ * ॥ क्रीँ हूँ ह्रीँ
गुह्ये कालिके क्रीँ क्रीँ हूँ हूँ ह्रीँ ह्रीँ

अनन्तनागराजेन कृतदक्षिणकङ्कणाम् ॥
नागेन रसनाहारकल्पितां रत्ननूपुराम् ।
वामे शिवस्वरूपन्तं कल्पितं वत्सरूपकम्
॥
द्विभुजां चिन्तयेद्देवीं नागयज्ञोपवीतिनीम् ।
नरदेहसमाबद्धकुण्डलश्रुतिमण्डिताम् ॥
प्रसन्नवदनां सौम्यां नवरत्नविभूषिताम् ।
नारदाद्यैर्म्मुनिगणैः सेवितां शिवमोहिनीम् ।
साट्टहासां महाभीमां साधकाभीष्टदायिनीम्
॥”
गुह्यकाली इत्युपलक्षणम् ॥ * ॥
भद्रकालीमन्त्रा-
न्तरम् ।
“प्रसादबीजमुद्धृत्य कालीति पदमुद्धरेत् ।
महाकालीपदं चोक्त्वा किलियुग्मं ततः परम्
॥
अस्त्रमग्निप्रियान्तोऽयं भद्रकाल्या महामनुः
॥”
ॐ कालि महाकालि किलि किलि फट्
स्वाहा ॥ * ॥ ध्यानं यथा, --
“क्षुत्क्षामा कोटराक्षी मसिमलिनमुखी
मुक्तकेशी रुदन्ती
नाहं तृप्ता वदन्ती जगदखिलमिदं ग्रासमेकं
करोमि ।

ततस्तत्र न कर्त्तव्ये
बलिदानविसर्ज्जने ॥
मन्त्रसिद्धिकरं तत्र परेऽह्नि
जपसाधनम् ।
रात्रौ पूजा प्रकर्त्तव्या रात्रावेव
विसर्ज्जनम् ।
प्रकाशे सिद्धिहानिः स्याद्गोपने
सिद्धिरुत्तमा ॥”
तथा कालीकल्पे ।
“तुलार्के बहुले पक्षे पञ्चदश्यां
महेश्वरीम् ।
यथोपचारैः संपूज्य महानिशि
नृपो भवेत् ।
शनिभौमदिने चेत् स्यात्ततः
शतगुणं फलम् ॥
तत्रोभयदिने भूतयुक्तकुह्वां
महानिशि ॥
इमां यात्रां कारयित्वा चक्रवर्त्ती
भवेन्नृपः ॥”
इति ॥
महेश्वरीं दक्षिणकालीं
तत्प्रकरणोक्तत्वात् ॥ * ।
कार्त्तिकामावास्यायां
कालीपूजाहेतुमाह विश्व-
सारे ।
“कार्त्तिके कृष्णपक्षेतु पञ्चदश्यां
महानिशि ।
आविर्भूता महाकाली
योगिनीकोटिभिः
सह ॥
अतोऽत्र पूजनीया सा तस्मिन्नहनि
मानवैः ।
बलिपूजादिकं सर्व्वं निशायां
क्रियते तु यत् ।
तत्तदक्षयतां याति काली विद्या
प्रसीदति ॥”
महानिशि अर्द्धरात्रे । तथा च
उत्तरकामाख्या-
तन्त्रे ।
“शरत्काले च देवेशि
दीपयात्रादिनेऽपि च ।

| | | |
|---|---|---|
| | | अमावास्यां समासाद्य मध्यरात्रौ विचक्षणः ॥ मृण्मयीं पुत्तलीं कृत्वा दीपादिभिरलङ्कृताम् । बलिं नानाविधं दद्यात् वाद्यभाण्डसमन्वितम् ॥ नृत्यगीतं कौतुकञ्च यावत् सूर्य्योदयं भवेत् । प्रातःकाले शुद्धतोये स्थापयेदरिनाशिनीम् ॥" इति ॥ एतेनास्या दीपयात्राप्यर्द्धरात्रे बोध्या । आवि- |

र्भुतेत्यनेनार्द्धरात्रे जन्मश्रवणात् तत्रैव पूजा
मुख्येति । तथा बृहद्धर्म्मपुराणे ।
“रात्रौ निशीथव्याप्तायाममावास्यामिह्य तु ।
पृथ्वीतलं ममायाता काली दिग्वसनाम्बिका ॥
अतस्तामत्र वै भक्त्या देवदेवीं द्विजातयः ।
पूजयेदात्मनो भक्त्या पशुपुष्पार्घ्यसम्पदा ॥” इति
तथा गुप्तसाधनतन्त्रे ।
“निशा तु परमेशानि सूर्य्ये चास्तमुपागते ।
प्रहरे च गते रात्रौ घटिके द्वे परे च ये ॥
महानिशा समाख्याता ततश्चातिमहानिशा ।
अर्द्धरात्रे गते देवि पशुभावो न पूजयेत् ॥”
अर्द्धरात्रे गते अर्द्धरात्रात् परम् । तथा ।
“दशदण्डे तु या पूजा तत् सर्व्वमक्षयं भवेत् ।
षष्ठक्रोशे महेशानि तत् सर्व्वममृतोपमम् ॥
सप्तमक्रोशके देवि सर्व्वं क्षीरोपमं भवेत् ।
अष्टमक्रोशके देवि ! द्रव्यतुल्यं न संशयः ॥
अतः परं महेशानि विषतुल्यं न संशयः ।
एतत् सर्वं महेशानि पशुभावे मयोदितम् ॥”
अर्द्धरात्रस्य गौणत्वश्रवणात् पशूनां यत्र पूर्व्व-
दिने अर्द्धरात्रव्यापिन्यमावास्यान तु तत्पूर्व्वं
प्राप्तिः परदिने च रात्रेः पञ्चममुहूर्त्तव्यापिनी
तदा परेद्युः पूजेति चेन्न गुप्तसाधनतन्त्रोक्तवच

जन्मतिथिकृत्यत्वात् । न तु नानावचने तुलार्क
श्रवणात् सौरकार्त्तिकपरम् । तथा सति यस्मिन्
वर्षे तुलार्के रात्रौ नामावास्याप्राप्तिस्तद्वर्षे
कृत्यलोपः स्यात् । एवं यत्र वर्षे तुलार्के दर्शद्वयं
तत्रानध्यवसायापत्तेः । स्पष्टमुक्तं विद्योत्पत्तितन्त्रे
“कार्त्तिकस्याप्यमाबास्यागौणचान्द्रप्रमाणतः ।
निशीथव्यापि नी या तु तस्यां पूजां समाचरेत् ॥”
निशीथमर्द्धरात्रम् । एव यत्र पूर्वदिने निशीथ-
व्यापिन्यमावास्या कन्यार्के परदिने च तुलार्के-
ऽर्द्धरात्रात् परं मुहूर्त्तादिव्यापिनी तत्रापि-
पूर्वदिने निशीथस्य मुख्यकालत्वानुरोधात् भूत-
तिथियोगानुरोधाच्च तुलार्कस्य दिनभेदनिया-
मकत्वेन श्रुतत्वात् । परन्तु तुलार्कपदं नाना-
वचने यद्यस्ति तत्प्रायिकाभिप्रायेणगुणफलाभि-
प्रायेण वा बोध्यम् । अतएव तिथितत्त्वधृत-
मादिपुराणम् ।
“ऋक्षराशिविशेषेण यत् कर्म्म विहितं नरैः ।
दैवं वाप्यथवा पैत्र्यं तदन्यत्रापि दृश्यते ॥”
इति ।
अगस्त्यसंहितायाम् ।
“मेषं पूषणि संप्राप्ते लग्ने कर्क्कटकाह्वये ।
आविरासीत् सकलया कौशल्यायांपरःपुमान् ॥”
इति ॥
अत्र मेषार्के जन्मश्रवणं मीनार्केऽपि कदाचित्
उपवासः । यत्तु तन्त्रीयमिति कृत्वा पठन्ति ।
“तुलार्के त्वर्द्धरात्रे या दीपयात्रा तिथिर्भवेत् ।
तत्र संपूजयेत् कालीं सर्वकामार्थसिद्धये ॥
निशार्द्धे सा तिथिर्नास्ति तदधःकालसंयुता ।
तत्रापि पूजयेत् कालीं तुलार्कं नैव लङ्घयेत् ॥”
इति तदमूलम् । समूलकत्वेऽपि तुलार्के इत्यत्र
तुशब्दः कन्यार्कग्राहकः । तेन तुलार्के कन्यार्के
वा इत्यर्थः । तुलार्कमात्रपरत्वे प्रतिसंवत्सर
इत्यस्य वाधापत्ते रुक्तत्वात् । तुलार्कं नैव लङ्घ-
येदित्यस्य तुलार्कविहितपूजां न त्यजेत् इत्यर्थः
तुलार्कविहितपूजायागौणकार्त्तिकत्वेकर्त्तव्य-
तायां विधेस्तात्पर्य्यस्योक्तत्वात् । यद्वा सर्वत्र
तुलार्कघटितवचनेषु तुलार्कस्यामावास्यायामुप-
लक्षणतयान्वयः । न तु विशेषणतया । न वा
पूजायामपि तदन्वयः । तेन तुलार्कोपलक्षिता-

तुलाराशिस्थे भास्करे इत्युल्लेख्यं इति भास्कर
पदोत्तरसप्तम्या उपलक्षणतया तत्कालसम्बन्ध-
बोधनसामर्थ्यात् इति वदन्ति ॥ * ॥
तन्त्रान्तरे ।
“तुलाराशिं गते भानौ दीपयात्रानिशासु च ।
पूजयेत् कालिकां देवीं धर्म्मकामार्थसिद्धये ॥”
तन्त्रे ।
“अर्द्धरात्रात् पुरस्तात्तु यावद्वै घटिकाद्वयम् ।
सा महारात्रिरुद्दिष्टा यद्दत्तमक्षयं भवेत् ॥
महानिशात्र विज्ञे या अर्द्धरात्रात् परं शिवे ।
नाडीचतुष्टयं शस्तं तत्र पूजा महाफला ॥”
विद्योत्पत्तितन्त्रे ।
“दीपोत्सवचतुर्द्दश्याममायायोग एव च ।
कालरात्रिर्म्महेशानि काली तारा प्रियङ्करी ॥”
ज्ञानार्णवे ।
“महारात्रावमावास्यां दक्षिणायाः प्रपूजनम् ।
कार्त्तिके मासि सुश्रोणि कालीप्रीतिकरं परम् ॥
तत्रापि च निशीथे तन्माहासिद्धिप्रदं नृणाम् ।
निशीथात् परतो देवि यत्तु नाडीचतुष्टयम् ॥
सा महारात्रिरुत्कृष्टा तत्र पूजा महाफला ।
तारतम्येन देवेशि पूजायाः फलकल्पनम् ॥”
कुलार्णवेऽपि ।

नञ्च नित्यपूजादिपरम् ।
कार्त्तिकामावास्याया-
मर्द्धरात्रे जन्मनिमित्तकपूजाया
विशेषेणाभि-
धानात् । पशुभिरपि एवंभूतस्थले
पूर्व्वदिने-
अर्द्धरात्र एव पूजा कार्य्या । यथा
श्रीकृष्ण-
पूजायाः सामान्यतो
निशायामकर्त्तव्यत्वेऽपि
जन्माष्टम्यामर्द्धरात्रकर्त्तव्यता
मुख्यतमेति परन्तु
यत्र पूर्व्वदिने अर्द्धरात्रात् परममावास्या
पर-
दिने अर्द्धरात्रात् पूर्वमेव तत्र पशुभाविनः
पर
दिने वीरदिव्ययोश्च पूर्व्वदिने पूजा
कार्य्या इति
प्रमाणं गोप्यगोपनलीलागमीयषष्ठपटले।
एवं
यत्र पूर्व्वदिने अर्द्धरात्रव्यापिन्यमावास्या
पर-
दिने तथा भूतापि कुजवारादियुक्ता
तत्रापि
पूर्व्वदिने पूजा
गुणफलकुजवारादिकमपेक्ष्य चतु-
र्द्दशीयोगस्य मुख्यत्वात् । तथोक्तं
व्योमकेश-
तन्त्रे
"कुजवारे लक्षगुणं पूर्व्वविद्धा
ततोऽधिकेति ।"
कुजवार इति शनिवारोपलक्षणम् ।
"शनिभौमदिने चेत् स्यात्ततः शतगुणं
फलम् ।
इति श्रवणात् ॥
कार्त्तिकामावास्यायांकालीपूजाया
नित्यता-
माह मायातन्त्रे ।
"वर्षे वर्षे च कर्त्तव्यं कालिकाया
महोत्सवम् ।

मावास्यायां निशीथे कालीं पूजयेत् इतिविधि-
स्तेनगौणचान्द्रकार्त्तिकामावास्यालाभः। तस्या-
मेव तुलार्कसम्बन्धनियमात् । अन्यथा तुलास्थ-
रव्यारब्धत्वाभावेन कदाचित् तत्परप्रतिपदादि-
दर्शान्तस्य मुख्यकार्त्ति कत्वानुपपत्तिः । मुख्य-
कार्त्ति कामावास्यायाः कदाचित्वृश्चिके सत्त्वात्
न तु तुलार्के नियमः । तथा च तुलार्कनियता-
मावास्यायां निशीथे कालीं पूजयेदिति पर्य्यव-
सितम् । तुलार्कं नैव लङ्घयेदित्यत्र तुलार्कपदञ्च
तुलार्कोपलक्षितामावास्यापूजापरम्। संकल्प-
वाक्ये तु कार्त्तिके मासीत्युल्लेख्यं न तु राश्युल्ले-
खोऽपि गौणचान्द्रेण विधानात् । केचित्तु उपल-
क्षणतया अमावास्यायां अन्वयतात्पर्य्येण

"भूतयुक्ता महेशानि महारात्रौ तु या
कुहूः ।
सा कालरात्रिरुद्दिष्टा कालीतारा
प्रियङ्करी ॥
तत्र पूजा तयोः कार्य्या
नानापशुविहिंसनम् ।
बलिदानं बलिताथावात्मनाशकरं
शिवे ! ॥"
कुलचूडामणौ ।
"तिथिभ्यः शतगुणं पर्व्व दर्शः
कोटिगुणोत्तरः ।
फलोपचारबहुलैर्ज्यैष्ठे सूर्य्येन्दुसङ्गमे
।
पूजयित्वा महाकालीं नरो
निर्व्वाणमृच्छति ॥
चतुर्वर्गप्रदं दर्शे कार्त्तिके
कालिकार्च्चनम् ।
अनन्तफलदं तत्र पर्व्वयुक्ते च
पर्व्वणि ॥
निशार्द्धे पूजयद्देवों नृमुण्डां
मुण्डमालिनीम् ।
पश्चाज्झिल्लीरवे घोरे
सर्व्वप्राणिभयङ्करे ॥"
कालीकुलसद्भावे ।
"दीपोत्सर्गचतुर्द्दश्या संमिश्रा या
भवेत् कुहूः ।
तस्यां या तामसी रात्रिः सोच्यते
काल-
रात्रिका ॥
तस्यां पूजा प्रकर्त्तव्या काली तारा
प्रियङ्करी ॥
तुलामकरमेषेषु कन्यायां मिथुने
तथा ।
भूतविद्धाप्यमावास्या पूज्या भवति
यत्रतः ॥"
इति जीमूतवाहनकृतधर्म्मरत्ने
कालविवेकधृत
हारीतवचनम् ॥ * ॥
शिवरात्रिप्रकरणे देव-
लोक्तमहानिशा यथाः, --

| | | |
|---|---|---|
| कार्त्तिके तु विशेषेण अमावास्यां<br>निशार्द्धके ॥"<br>इति ॥<br>देव्यागमे च ।<br>प्रतिसंवत्सरं कुर्य्यात् कालिकाया<br>महोत्सवम्<br>कार्त्तिके तु विशेषेण अमावास्यां<br>निशार्द्धके ।<br>त्र संपूजयेद्देवीं भोगमोक्षप्रदायिनीम् ॥"<br>इति ।<br>एवञ्चात्र कार्त्तिकपदं<br>गौणचान्द्रकार्त्तिकपरं | | "महानिशे द्वे घटिके<br>रात्रेर्म्मध्यमयामयोः ॥"<br>इति गङ्गामाहात्म्यप्रकरणे<br>गृहस्थरत्नाकर-<br>धृता तु ।<br>"महानिशा तु विज्ञेया मध्यमं<br>प्रहरद्वयम् ।<br>तत्र स्नानं न कुर्व्वीत<br>नित्यनैमित्तिकादृते ॥"<br>ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ।<br>"षण्मुहूर्त्ते व्यतीते तु रात्रावेव<br>महानिशा ।"<br>कृत्यतत्त्वार्णवे बौधायनः ।<br>"महानिशा तु विज्ञेया मध्यं<br>मध्यमयामयोः ।" |

दव्यागमे ।
"अमावास्यामर्द्धरात्रे दक्षिणां पूजयेत्पराम् ।
कुलऋक्षे च यः कुर्य्यात् स गच्छेच्छिवसन्नि-
धिम् ॥
तुलायां भौमवारे च अमावास्या यदा भवेत् ।
तिथिः सापि महापुण्या शिवेन परिकीर्त्तिता ॥
वर्षैश्चतुर्भिर्यत् पुण्यं विधिवत् पूज्य चण्डिकाम्
तत्फलं लभते वीर अमावास्यां निशार्द्धके ॥"
कालीकुलतन्त्रे ।
"निशार्द्धे पूजयेद्देवीं श्मशानालयवासिनीम् ॥"
इति ॥
मालिनीतन्त्रे ।
"एतत्सन्ध्यात्रयेणैव अर्द्धरात्रौ तु वन्दना ।
महारात्रावपि तथा कार्य्या देशिकसत्तमैः ॥" *
स्वापकालो यथा, --
श्रीदेव्युवाच ।
"देवदेव महादेव संसारार्णवतारक ।
देवतायाः स्वापकालं कथयस्व दयानिधे ॥
श्रीशिव उवाच ।
चतुर्द्दण्डात् परं देवि रात्रेः प्रथमयामकः ।
स्वापकालस्तु कथितः पूजानर्थफलप्रदा ।
पूजा होमस्तोत्रनती जाग्रत्काले प्रशस्यते ॥"
इति कालीकुलामृततन्त्रे ॥ * ॥
"समुद्रमथने देवि देवासुरगणाः पुरा
।
ज्ञानार्णवे ।
"सर्व्वविघ्नोपशान्त्यर्थं रक्षाकालीं प्रपूजयेत् ।
शनिमङ्गलवारे च प्रदोषे पूजयेत् शिवाम् ॥
चतुर्द्दश्याममायां वा नवम्यामष्टमीतिथौ ।
पूजनात् वरदा काली यथेप्सितफलप्रदा ॥"
कालीकूलसर्व्वस्वे ।
"निशामुखे महेशानी काली रक्षार्थमादरात्
पूजनीया नृभिः सर्व्वैरुपचारसमन्वितैः ।
वित्तशाठ्यं न कर्त्तव्यं यथाविभवविस्तरैः ॥"
निरुत्तरतन्त्रे ।
"बलिदानन्तु विधिवत् मधुभिः पायसे न च ।
पूपैर्म्मोदकसंघैश्च पृथुकैः श्रीफलैरपि ॥
नानाफलैः शाकसूपैः पञ्चतत्त्वैर्म्महेश्वरीम् ।
पूजयेद्विघ्नशान्त्यर्थं कालीं रक्षाविधायिनीम् ॥
प्रदोषसमये पूजा कर्त्तव्या भूतिमिच्छता ।
रात्रौ विसर्ज्जनं कार्य्यं क्रीडाकौतुकमङ्गलैः ॥
भैरवतन्त्रे ।
"अथ वक्ष्ये महेशानि घोरे मारीभये तथा ।
औत्पातिके च दुर्भिक्षे युद्धे राष्ट्रभयागते ।
पूजां कुर्य्यात् महाकाल्या रक्षार्थं पञ्चपर्व्वसु ॥
प्रदोषकाले संपूज्य निशायान्तु विसर्ज्जयेत् ।
मधुरत्वम् । तिक्तत्वम् । कषायत्वम् । लघुत्वम् । शीतलत्वम् । वातकारित्वम् । कफपित्तव्रणदोष-नाशित्वम् । सुग्राहित्वञ्च । इति राजनिर्घण्टः ॥
अपि च ।
"श्यामाकः शोषणो रूक्षो वातलः कफपित्त-कृत् ॥"
इति भावप्रकाशः ॥

**श्यामाङ्गः**, पुं, (श्यामानि अङ्गानि यस्य । बुध-ग्रहः । इतित्रिकाण्डशेषः ॥ कृष्णकलेवरे, त्रि
यथा, --
"श्यामाङ्गीं शशिशेखरां निजकरैर्दानञ्च रक्तोत्पलं
रत्नाढ्यं चसकं परं भयहरं संबिभ्रतीं शाश्वतीम् ।
मुक्ताहारलसत्पयोधरनतांनेत्रत्रयोल्लासिनीं
वन्देऽहं सुरपूजितां हरबधूं रक्तारविन्द-स्थिताम् ॥"
इति तन्त्रसारे भुवनेश्वरीध्यानम् ॥

**श्यामाम्ली**, स्त्री, (श्यामा चासौ अम्ली चेति कर्म्मधारयः ।) नीलाम्ली । इति राज-निर्घण्टः ॥

**श्यालः**, पुं, (श्यायते नर्म्मार्थं प्राप्यतेऽसौ इति । श्यै + बाहुलकात् कालन् ।) पत्नीभ्राता । इत्यमरः ॥ शाला इति भाषा ॥ (यथा, गीता-याम् । १ । ३४ ।
"मातुलाः श्वशुराः पौत्राः श्यालाः सम्बन्धिन-स्तथा ।
एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ॥")
तत्पर्य्यायः । वाक्कीरः २ श्यालिकः ३ । इति शब्दरत्नावली ॥ श्वशुर्य्यः ४ आत्मवीरः । इति जटाधरः ॥ तन्मरणे एकरात्राशौचं यथा ।
आचार्य्यपत्रीपुत्त्रोपाध्यायमातुलश्वशुरश्वशुर्य्य सहाध्यायिशिष्येष्वे करात्रेणेति । इति शुद्धि-तत्त्वम् ॥ दन्त्यसादिश्च । (भगिनीपतिः । यथा, ब्रह्मवैवर्त्ते । १ । १० । १५१ ।
"भग्नी पुत्रो भागिनेयो भ्रातृपुत्त्रश्च भ्रातृजः श्यालस्तु भगिनीकान्तो भगिनीपतिरेव ॥")

नाराध्य त्वां प्रमथ्नीयुरतस्त्वं
विषरूपिणी ॥
आविर्भूता महाकाली
ब्रह्माण्डनाशनाशिनी ।
तद्दृष्ट्वा देवा दैत्याश्च भीता मां
शरणं गताः ॥
तेषामपि भयं दृष्ट्वा भीतोऽहं
विषसन्निधौ ।
गत्वा ध्यानपरो भूत्वा विषं पातुं
समारभे ॥
पूर्व्वोक्ता या महाविद्या आविर्भूता च
मे
हृदि ।
तुलां कुह्वां निशार्द्धे च
देवदानवनिद्रिते ॥
मनुष्यपशुपक्ष्यादौ निद्रिते
चान्यजन्तुषु ।
तस्मिन् काले मया पूज्या
इन्द्रेणाप्यसुरेण तु ॥
देव्युवाच ।
कुत्र काले त्वया पूज्या
इन्द्रेणाप्यसुरेण च ॥
महादेव उवाच ।
अर्द्धरात्रान्मुर्त्ते च मया चेन्द्रेण
पूजिता ।
ततो मुहूर्त्ते संपूज्या वीरेणाप्यसुरेण
च ॥
अत आद्यः पाशवः स्यात् वैरः शेषः
प्रकी-
र्त्तितः ।
म्वायम्भुवेन मनुना मर्त्त्ये तेन
प्रपूजिता ॥"
इति गोप्यगोपनलीलागमे ६ पटलः
॥ * ॥
कालीकुलसर्व्वस्वे ।
"निशार्द्धे सा तिथिर्नास्ति तदूद्र्ध्वे
भूतसंयुता ।
तत्रापि पूजयेद्देवों भूतयुक्तां न
लङ्घयेदिति ॥"
अथ रक्षाकालीपूजाप्रमाणम् ।
उत्तरकामाख्या-
मुहूर्त्तद्वितयं कालः
प्रदोषोऽस्तमयात्ततः ॥"
तन्त्रान्तरे ।
"निशामुखे महाकालीं महामारीभये
शिवाम्
कालीं त्रैलोक्यरक्षार्थं पूजयेत्
रक्षणात्मि-
काम् ॥" * ॥
अथ फलहारीपूजाप्रमाणम् ।
"मधुमासे सिताष्टम्यां
वैशाखत्रितयेऽहनि ।
पौर्णमास्यां तथा ज्यैष्ठे अमायाञ्च
महेश्वरि ॥"
इत्यादि ।
"आमायां कार्त्तिके चैवनवम्यां
शुक्लपक्षके ।"
इति कात्यायनीतन्त्रे ७८ पटलः ॥
"ज्यैष्ठे मासि तथामायां सफलं
कालिकार्च्च
नम् ।"
इत्युत्तरकामाख्यातन्त्रे ११ पटलः ॥
"ज्यैष्ठे मासि अमायां वै मध्यरात्रे
महेश्वरि ।
पूजयेत् कालिकां देवीं
नानाद्रव्योपहारकैः ॥
तत्रैव सितपक्षे तु पञ्चदश्यां निशार्द्धके
।
पूजयेच्च फलैर्लक्षैः शक्तितो वापि
कालिकाम् ॥"
इति मायातन्त्रे २७ पटलः ॥
अथ रटन्तीपूजाप्रमाणम् ।
"माघे मास्यसिते पक्षे रटन्त्याख्या
चतुर्द्दशी ।
तस्यां निशार्द्ध समये
पूजयेन्मुण्डमालिनीम् ॥"
इति मायातन्त्रे १७ पटलः ॥
"मकरस्थे रवौ कृष्णचतुर्द्दश्यां
निशार्द्धके ।
पूजयेद्दक्षिणां कालीं
धर्म्मकामार्थसिद्धये ॥"
इत्युतरकामाख्यातन्त्रे ९ पटलः ॥

**श्यालकः**, पुं, श्याल एव । स्वार्थे कन् ।) श्यालः ।

इति रत्नावली ॥ (यथा, ब्रह्मवैवर्त्ते । १ ।
१० । १४९ ।
"पत्नीभ्राता श्यालकश्च पत्नीभग्नी च
श्यालिका ॥")

**श्यालिका**, स्त्री, पत्न्या भगिनी । शाली इति

भाषा । तत्पर्य्यायः । (श्याली २ केलिकुञ्चिका ३
इति शब्दरत्नावली ॥ (यथा, ब्रह्मवैवर्त्ते । १ ।
१० । १४९ ।
"पत्नीभ्राता श्यालकश्च पत्नीभग्नी च
श्यालिका ॥")

**श्यावः**, पुं, (श्यै + बाहुलकात् वः ।) कपिशः ।

इत्यमरः ॥ स तु कृष्णपीतमिश्रवर्णः । इति
भरतः ॥ तद्युक्ते, त्रि ॥ (यथा बृहत्संहि-
तायाम् । ४ । २९ ।

| | | |
|---|---|---|
| तन्त्रे । “मारीभये समायाते दुर्भिक्षभयपीडिते । पूजयेत् परया भक्त्या कालीं कालविनाशिनीम् ॥ रक्षणात् सर्व्वभूतानां रक्षाकालीतिं सा स्मृता ॥” | **श्यामाकः**, पुं, (श्यामं श्यामवर्णमकतीति । अक गतौ + अण् ।) तृणधान्यभेदः । शामा इति भाषा । तत्पर्य्यायः । श्यामकः २ श्यामः ३ त्रिबीजः ४ अविप्रियः ५ सुकुमारः ६ राज-धान्यम् ७ तृणवीजोत्तमः ८ । अस्य गुणाः । | |

"श्यावतनुः स्फुटितः स्फुरणो वा
क्षुत्समरामयचौरभयाय ॥")

**श्यावदन्,** [त्] त्रि, (श्यावा दन्ता यस्य । "विभाषा
श्यावारोकाभ्याम् ।" ५ । ४ । १४४ । इति
दत्रा-
देशः ।) कृष्णपीतमिश्रितवर्णदन्तयुक्तः । इति
सिद्धान्तकौमुदी ॥

**श्यावदन्तः**, त्रि, (श्यावा दन्ता यस्य । "विभाष ।
श्यावारोकाभ्याम् ।" ५ । ४ ।
१४४ । इति विभाषया दत्रादेशो न । स्वार्थे
कन् च ।) स्वाभाविककृष्णवर्णदशनयुक्तः ।
प्रधानदन्तद्वयमध्यस्थक्षुद्रदन्तविशिष्टः।
प्रधान-
दन्तोपरिदन्तान्तरयुक्तः । यथा विष्णुः । अथ
नर-
कानुभूतदुःखानां तिर्य्यक्त्वमुत्तीर्णानां मानुष्ये
लक्षणानि भवन्ति । कुष्ठ्यतिपातकी ।
ब्रह्महा
यक्ष्मी । सुरापः श्यावदन्तकः । सुवर्णहारी
कुनखी । गुरुतल्पगो दुश्चर्म्मा इत्यादि ।
श्याव-
दन्तकः स्वभावकृष्णदन्तः ।
प्रधानदन्तद्वयमध्य-
वर्त्तिक्षुद्रदन्तः । प्रधानदन्तोपरि दन्तान्तर-
मिति केचित् ॥ कुनखी सङ्कुचितनखः ।
दुश्चर्म्मा
स्वभावतः अनावृतमेढ्रः । अतएव महारोगिणो
यावज्जीवमशौचमाह कूर्म्मपुराणम् ।
"क्रियाहीनस्य मूर्खस्य महारोगिण एव च ।
यथेष्टाचरणस्याहुर्म्मरणान्तमशौचकम् ॥"
क्रियाहीनस्य
नित्यनैमित्तिकक्रियाननुष्ठायिनः।
मूर्खस्य गायत्रीरहितस्य । सार्थगायत्रीरहि-
तस्येति रुद्रधरः ॥ महारोगिणः पापरोगाष्ट-
कान्यतमरोगवतः । ते च उन्मादस्त्वग्दोषो
राजयक्ष्मा श्वासो मधुमेहो भगन्दर उदरो-
ऽश्मरी इत्यष्टौ पापरोगा नारदोक्ताः । यथेष्टा-
सञ्चालः इति वाज् इति च भाषा ।
तत्पर्य्यायः ।
शशादनः २ पत्री ३ । इत्यमरः ॥
कपोतारिः ४
पतङ्गीरुः ५ । इति शब्दरत्नावली ।
घाति-
पक्षी ६ ग्राहकः ७ मारकः ८ । इति
जटा-
धरः ॥ शशादः ९ क्रव्यादः १० क्रूरः
११ वेगी १२
खगान्तकः १३ करगः १४
नीलपिच्छः १५
लम्बकर्णः १६ रणप्रियः १७ रणपक्षी
१८
पिच्छवाणः १९ स्थूलनीलः २०
भयङ्करः २१ ।
इति राजनिर्घण्टः ॥ शशघातकः २२
। इति
भावप्रकाशः ॥ अस्य मांसगुणाः
प्रसहशब्दे
द्रष्टव्याः ॥ * ॥ तस्य
शुभाशुभसूचकत्वं यथा, --
"प्रदक्षिणीकृत्य नरं व्रजन्तो
यात्रासु वामेन गताः प्रवेशे ।
श्येनाः प्रशस्ताः प्रकृतस्वरास्ते
शान्ताः प्रदीप्ता विततस्वरास्ते ॥
श्येनो नृणां दक्षिणवामपृष्ठ-
भागेषु भाग्यैः स्थितिमादधाति ।
तिष्ठन् पुरस्तान्मृतये करोति
युद्धे जयं छन्नरथध्वजस्थः ॥"
इति वसन्तराजशाकुने अष्टमवर्गः ॥

**श्येनघण्टा**, स्त्री, दन्तीवृक्षः । इति राज-
निर्घण्टः ॥

**श्येनचित्,** पुं, (श्येनेन चयति अन्यपक्षिण इति ।
चि + क्विप् ॥) श्येनपक्षिरक्षकः ।
इतिकेचित्
(श्येन इव चीयते इति ।
कर्म्मण्यग्न्याख्या-
इति जटाधरः ॥ कटम्भरः १९ मयूरजङ्घः
२०
अरलुकः २१ प्रियजीवः २२ । तद्भेदा
यथा, --
"श्योनाकः पृथुशिम्बोऽन्यो भल्लूको
दीर्घवृन्तकः
टेन्द्रकः पीतवृक्षश्च भूतसारो मुनिद्रुमः ॥
निःसारः फलवृन्ताकः पूतिपत्रो वसन्तकः
।
मण्डूकवर्णः पीताङ्गो जम्बुकः पीतपादकः
॥
वातारिः पीतकः शोणः कुलटश्च विरोचनः
।
भ्रमरेष्टो वह्निजङ्घो नेत्रनेत्रमिताभिधः ॥"
पुस्तकान्तरे टेन्द्रकस्थाने टुण्टकः
फलवृन्ताक-
स्थाने फल्गुवृन्ताकः पीतपादकस्थाने
पीत-
पादपः कुलटस्थाने कुनटः वह्निजङ्घस्थाने
वर्हि-
जङ्घ इति च पाठः ॥ तयोर्गुणाः ।
"श्योनाकयुगलं तिक्तं शीतलञ्च त्रिदोषजित्
।
पित्तश्लेष्मातिसारघ्नं सन्निपातज्वरापहम्
॥"
इति राजनिर्घण्टः ॥ * ॥
अपिच ।
"श्योनाकः शोषणश्च
स्यान्नटकट्वङ्गटुण्टुकाः ।
मण्डूकपर्णपत्रोर्णशुकनासकुटन्नटाः ॥
दीर्घवृन्तोऽरलुश्चापि पृथुशिम्बः कटम्भरः
।
श्योनाको दीपनः पाके कटुकस्तुवरो हिमः
॥
ग्राही तिक्तोऽनिलश्ले
ष्मपित्तक्राशामनाशनः।
कटुकस्य फलं बालं रूक्षं वातकफायहम् ॥
हृद्यं कषायं मधुरं रोचनं लघु दीपनम् ।

चरणस्य द्यूतवेश्याद्यासक्तस्य । एवञ्च भविष्य-
पुराणोक्तं यतिचान्द्रायणप्रायश्चित्तं अकृतप्राय-
श्चित्तानां कुष्ठ्यादीनां दाहे बोद्धव्यम् । अन्य-
थैषां प्रायश्चित्तोपदेशो विफलः स्यात् । यथा
विष्णुः । कुनखी श्यावदन्तश्चद्वादशरात्रं कृच्छ्रं
चरित्वोद्धरेयातां तद्दन्तनखौ इति । अत्र द्वादश-
रात्रं पराकरूपं तत्र पञ्चधेनवः । न तु प्राजा-
पत्यम् । तद्वाहकर्त्तुर्यतिचान्द्रायणेन विषम-
शिष्टत्वात् । अत्र बहूनामेकधर्म्माणामिति वच-
नात् आकाङ्क्षितत्वात् कुष्ठ्यादीनामपि प्रायश्चि-
त्तम् । अतएव प्रायश्चित्तविवेकेऽप्युक्तं एवं
दुश्चर्म्मादिष्वप्यूह्यमिति । महापातकादतिपात-
कस्य गुरुत्वात् तच्छेषेऽपि प्रायश्चित्तं द्विगुणम् ।
इति शुद्धितत्त्वम् ॥

**श्यावदन्तकः**, त्रि, (श्यावा दन्ता यस्य । “विभाष । श्यावारोकाभ्याम् ।” ५ । ४ ।
१४४ । इति विभाषया दत्रादेशो न । स्वार्थे
कन् च ।) स्वाभाविककृष्णवर्णदशनयुक्तः ।
प्रधानदन्तद्वयमध्यस्थक्षुद्रदन्तविशिष्टः। प्रधान-
दन्तोपरिदन्तान्तरयुक्तः । यथा विष्णुः । अथ नर-
कानुभूतदुःखानां तिर्य्यक्त्वमुत्तीर्णानां मानुष्ये
लक्षणानि भवन्ति । कुष्ठ्यतिपातकी । ब्रह्महा
यक्ष्मी । सुरापः श्यावदन्तकः । सुवर्णहारी
कुनखी । गुरुतल्पगो दुश्चर्म्मा इत्यादि । श्याव-
दन्तकः स्वभावकृष्णदन्तः । प्रधानदन्तद्वयमध्य-
वर्त्तिक्षुद्रदन्तः । प्रधानदन्तोपरि दन्तान्तर-
मिति केचित् ॥ कुनखी सङ्कुचितनखः । दुश्चर्म्मा

याम् ।” ३ । २ । ९२ । इति क्विप् । अग्न्यर्थ
इष्टकाचयः । इति काशिका ॥)

**श्येनी**, स्त्री, श्वेतवर्णा । इति जटाधरः ॥ श्येन-
पत्नी च ॥ (सा तु कश्यपात् दक्षकन्यायां
ताम्रायां समुत्पन्ना । यथा, मार्कण्डेये । १०४ । ८ ।
“ताम्रा च सुषुवे श्ये नीप्रमुखाः कन्यका द्विज ।
यासां प्रसूताः खगमाः श्येनभासशुका-
दयः ॥”)

**श्यै**, ङ गतौ । इति कविकल्मद्रुमः ॥ (भ्वा०-
आत्म०-सक०-अनिट् ।) तालव्यादिरन्तस्था-
द्योपधः । ङ, श्यायते । इति दुर्गादासः ॥

**श्यैनम्पाता**, स्त्री, (श्ये नपातोऽस्यां वर्त्तते इति ।
“घञः सास्यां क्रियेति ञः ।” ४ । २ । ५८ ।
इति ञः । “श्येनतिलस्य पाते ञे ।” ६ । ३ । ७१ ।
इति मुमागमः ।) मृगया । इत्यमरः । (यथा,
नैषधे । ११ । १२ ।
“नभसिमहसां ध्वान्तध्वाङ्क्षप्रमापणपत्त्रिणा-
मिह विहरणैः श्यैनम्पातां रवेरवधारयन् ॥”)

**श्यो(णा)नाकः**, पुं, (श्यायते इति । श्यै ङगतौ +
पिणाकादश्चेति निपातनात् साधुः ।) वृक्ष-
विशेषः । शोनागाछ इति भाषा । तत्पर्य्यायः ।
मण्डूकपर्णः २ पत्रोर्णः ३ नटः ४ कट्वङ्गः ५
टुण्टुकः ६ शुकनासः ७ ऋक्षः ८ दीर्घवृन्तः ९

गुल्मार्शः कृमिहृत् प्रोक्तं गुरु वातप्रकोपणम्’ ॥
इति भावप्रकाशः ॥

**श्रक**, इ ङ सर्पे इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) रेफयुक्ताद्यः । इ, श्रङ्क्यते
ङ, श्रङ्कते । सर्पो गतिः । इति दुर्गादासः ॥

**श्रग**, इ व्रजे । इति कविकल्पद्रुमः ॥ (स्वा०-
पर०-सक०-प्लुतौ अक०-सेट् ।) रेफान्तताल-
व्यादिः । अयं प्लुतगताविति भट्टमल्लः । इ,
श्रङ्ग्यते । इति दुर्गादासः ॥

**श्रण**, कन्दाने । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-सक०-सेट् ।) क, श्राणयति । स्वमते अस्यञ्यङि
ह्रस्वविकल्पनेऽप्यष्टमस्वरानुबन्धा-
भावोऽन्ये षामनुरोधात् । इति दुर्गादासः ॥

**श्रण**, म दाने । इति कविकल्पद्रुमः ॥ (भ्वा० पर०
सक०-सेट् । तालव्यादी रेफयुक्तः । म, श्रण-
यति । इति दुर्गादासः ॥
श्रत्, व्य, श्रद्धा । इति मुग्धबोधटीकायां दुर्गा-
दासः ॥ (सत्यम् । इति निघण्टुः । ३ । १० ॥)

**श्रथ**, इ ङ शैथिल्ये । इति कविकल्पद्रुमः ॥ (भ्वा०
आत्म०-अक०-सक०-च सेट् ।) शैथिल्यमिह
शिथिलीभावस्तत्करणञ्च॥ इ, श्रन्थ्यते । ङ,
श्रन्थते वस्त्रं शिथिलं स्यादित्यर्थः । श्रन्थते वस्त्रं
लोकः शिथिलं करोति इत्यर्थः । इति दुर्गा-
दासः ॥

**श्रथ**, क यत्ने । प्रतिहृषि । इति कविकल्पद्रुमः ॥
(चुरा०-पर०-यत्ने अक०-प्रतिहर्षे सक०
सेट् ।

स्वभावतः अनावृतमेढ्रः । अतएव महारोगिणो
यावज्जीवमशौचमाह कूर्म्मपुराणम् ।
“क्रियाहीनस्य मूर्खस्य महारोगिण एव च ।
यथेष्टाचरणस्याहुर्म्मरणान्तमशौचकम् ॥”
क्रियाहीनस्य
नित्यनैमित्तिकक्रियाननुष्ठायिनः ।
मूर्खस्य गायत्रीरहितस्य । सार्थगायत्रीरहि-
तस्येति रुद्रधरः ॥ महारोगिणः पापरोगाष्ट-
कान्यतमरोगवतः । ते च उन्मादस्त्वग्दोषो
राजयक्ष्मा श्वासो मधुमेहो भगन्दर उदरो-
ऽश्मरी इत्यष्टौ पापरोगा नारदोक्ताः । यथेष्टा-
चरणस्य द्यूतवेश्याद्यासक्तस्य । एवञ्च
भविष्य-
पुराणोक्तं यतिचान्द्रायणप्रायश्चित्तं
अकृतप्राय-
श्चित्तानां कुष्ठ्यादीनां दाहे बोद्धव्यम् ।
अन्य-
थैषां प्रायश्चित्तोपदेशो विफलः स्यात् । यथा
विष्णुः । कुनखी श्यावदन्तश्चद्वादशरात्रं
कृच्छ्रं
चरित्वोद्धरेयातां तद्दन्तनखौ इति । अत्र
द्वादश-
रात्रं पराकरूपं तत्र पञ्चधेनवः । न तु प्राजा-
पत्यम् । तद्दाहकर्त्तुर्यतिचान्द्रायणेन विषम-
शिष्टत्वात् । अत्र बहूनामेकधर्म्माणामिति वच-
नात् आकाङ्क्षितत्वात् कुष्ठ्यादीनामपि
प्रायश्चि-
त्तम् । अतएव प्रायश्चित्तविवेकेऽप्युक्तं एवं
दुश्चर्म्मादिष्वप्यूह्यमिति ।
महापातकादतिपात-
कस्य गुरुत्वात् तच्छेषेऽपि प्रायश्चित्तं
द्विगुणम् ।
इति शुद्धितत्त्वम् ॥

**श्येतः**, पुं, (श्यैङ गतौ + “हृश्याभ्यामितन् ।”
उणा ० ३ । ९३ । इति इतन् ।) शुक्लवर्णः ।
तद्वति, त्रि । इत्यमरः ॥

**श्येतकोलकः**, पुं, (श्येतः कोलः क्रोडदेशो यस्य ।
कन् ।) मत्स्यविशेषः । पुँटी इति भाषा ।
यथा । सफरः श्येतकोलकः । इति हारावली
॥

कुटन्नटः १० शोणकः ११ अरलुः
१२ । इत्य-
मरः ॥ स्योनाकः १३ । इति भरतः ॥
शोणः
१४ अवटुः १५ दीर्घवृन्दकः १६ ।
इति शब्द-
रत्नावली ॥ पृथुशिम्बिः १७ शल्लकः
१८ ।

क, श्राथयति पठितुं शिष्यः । श्राथयति
शिशुं
लोकः पुनःपुनर्हर्षयति इत्यर्थः । इति दुर्गा-
दासः ॥

**श्रथ** कि वधे । मोक्षे । वधे । इति कविकल्पद्रुमः ॥
(चुरा०-पक्षे भ्वा०-सक०-सेट् ।) कि, श्राथ-
यति श्रथयति । श्लाघ्यं श्राथयति स्फुटार्थ-
मधुरं गद्यञ्च पद्यं सदा भावालङ्कृतिपेशलं
श्रथयति स्पष्टाक्षरं नाटकम् । श्रथ्नाति प्रथि-
तावदातचरितः शास्त्रं विचित्रञ्च य इति
हलायुधोक्तं श्रथयतीति श्रथ त् क दौर्ब्बल्ये
इत्यदन्तस्य रूपम् । अनेकार्यत्वात् बध्नाती-
त्यर्थः । इति दुर्गादासः

**श्रथ**, त् क दौर्बल्ये । इति कविकल्पद्रुमः ॥ (अदन्त
चुरा०-पर०-अक०-सेट् ।) श्रथयति । इति
दुर्गादासः ॥

**श्रथ**, म वधे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) म, श्रथयति ! इति दुर्गादासः ॥

**श्रथनं**, क्ली, (श्रथ + ल्युट् ।) वधः । यत्नः । पुनः-
पुनर्हर्षणम् । बन्धनम् । मोक्षणम् । शिथिली-
करणम् । इति श्रथधातोरनट्प्रत्ययेन निष्प-
न्नम् ॥

**श्रद्दधानः**, त्रि, (श्रद्दत्ते इति । श्रत् + धा +
शानच् ।) श्रद्धायुक्तः । यथा, --
"तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया ।
पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतगृहीतया ॥"
श्रद्धामात्रेण गृह्यन्ते न करेण न चक्षुषा ॥
कायक्लेशैर्न बहुभिस्तथवार्थस्य राशिभिः ।
धर्म्मः संप्राप्यते सूक्ष्मः श्रद्धाहीनैः सुरैरपि ॥
श्रद्धा धर्म्मः परः सूक्ष्मः श्रद्धा ज्ञानं हुतं तपः ।
श्रद्धा स्वर्गश्च मोक्षश्च श्रद्धा सर्व्वमिदं जगत् ॥
सर्व्वस्वं जीवितं वापि दद्यादश्रद्धया यदि ।
नाप्नुयात्तत्फलं किञ्चित् श्रद्धादानं ततो भवेत् ॥
एवं श्रद्धान्वयाः सर्वे सर्वधर्म्माः प्रकीर्त्तिताः ।
केशवः श्रद्धया गम्यो ध्येयः पूज्यश्च सर्वदा ॥"
इति वह्निपुराणे धेनुदानमाहात्म्याध्यायः ॥
देवलः ।
"अर्थानामुदिते पात्रे श्रद्धया प्रतिपादनम् ।
दानमित्यभिनिर्दिष्टं व्याख्यानन्तस्य वक्ष्यते ॥"
उदिते शास्त्रकथिते । श्रद्धा देवलोक्ता यथा,
"सत्कृतिश्चानसूया च सदा श्रद्धेति कीर्त्तिता ॥"
अतएव भगवद्गीतासु ।
"अश्रद्धया हुतं दत्तं तपस्तप्तं कृतन्तु यत् ।
असदित्युच्यते पार्थ न च तत् प्रेत्य नेह च ॥"
हरिवंशे बलिं प्रति भगवद्वाक्यम् ।
अश्रोत्रियं श्राद्धमधीतमव्रतं
त्वदक्षिणं यज्ञमनृत्विजा हुतम् ।
अश्रद्धया दत्तमसंस्कृतं हवि-
र्भागाः षडेते तव दैत्यपुङ्गव ॥"
इति शुद्धितत्त्वम् ॥
याज्ञवल्क्यः ।

**श्रन्थः**, पुं, (श्रथ्नाति मोचयति भक्तान् संसारा-
दिति । श्रन्थ + अच् ।) विष्णुः । इति त्रिकाण्ड-
शेषः ॥ (श्रन्थ + भावे घञ् ।) श्रन्थधात्वर्थो-
ऽप्यत्र ॥

**श्रन्थनं**, क्ली, (श्रन्थ + भावे ल्युट् ।) ग्रन्थनम् ।
यथा, --
"सन्दर्भो रसना गुम्फः श्रन्थनं ग्रन्थनं समाः ।"
इति हेमचन्द्रः ॥

**श्रन्थितः**, त्रि, ग्रन्थितः । बद्धः । कृतवधः । मुक्तः ।
हर्षितः । इति श्रन्थधातोः क्तप्रत्ययेन निष्पन्नः ॥

**श्रपितं**, त्रि, (श्रप + क्तः ।) घृतदुग्धजलभिन्नपक्व-
द्रव्यम् । यथा, --
"निष्पक्वं क्वथिते पक्वन्त्वाज्यं क्षीरं पयः स्मृतम् ।
अन्यत्तु श्रपितं श्राणं समुदक्तोद्धृते समे ॥"
इति जटाधरः ॥

**श्रपिता**, स्त्री, (श्रप + क्तः । टाप् ।) काञ्जिकम् ।
इति केचित् ॥

**श्रभ** उ भ य ञि इर् तपःखेदयोः । इति कवि-
कल्पद्रुमः ॥ (दिवा०-पर०-अक०-सेट् । क्त्वावेट् ।)
उ, श्रमित्वा श्रान्त्वा । भ य, श्राम्यति लोकः
तपः करोति खिद्यति वेत्यर्थः । ञि, श्रान्तो-
ऽस्ति । इर् अश्रमत् अश्रीत् । अस्मात् पुषा-
दित्वान्नित्यं ङ इत्यन्ये । धूर्य्यान् विश्रामयेति स
इति रघौ श्राम त् क मन्त्रे इत्यदन्तस्य रूपम् ।
इति दुर्गादासः ॥

**श्रमः**, पुं, (श्रम + घञ् । नोदात्तोपदेशस्येति
वृद्ध्यभावः ।) तपः । खेदः । इति श्रमधात्वर्थ-

इति श्रीभागवते १ स्कन्धे २ अध्यायः ॥

**श्रद्धा**, स्त्री, (श्रद्धानमिति । श्रत् + धा + “षिद्-
भिदादिभ्योऽङ् ।” ३ । ३ । १०४ ।
इत्यङ् ।
टाप् ।) संप्रत्ययः । स्पृहा । इत्यमरः ॥
(यथा,
रामायणे । २ । ३८ । २ ।
“चिच्छेद जीविते श्रद्धां धर्म्मे यशसि
चात्मनः ॥”
आदरः । शुद्धिः । इति शब्दरत्नावली ॥
शास्त्रार्थे दृढप्रत्ययः । यथा, --
“प्रत्ययो धर्म्मकार्य्येषु यथा
श्रद्धेत्युदाहृता ।
नास्ति ह्यश्रद्दधानस्य धर्म्मकृत्ये
प्रयोजनम् ॥”
इति स्मृतिः ॥
(यथा, रघुः । २ । १६ ।
“बभौ च सा तेन सतां मतेन ।
श्रद्धेव साक्षात् विधिनोपपन्ना ॥”)
चेतसः प्रसादः । इति पातञ्चलभाष्ये
वेदव्यासः ॥
सा त्रिविधा । यथा, --
श्रीभगवानुवाच ।
“त्रिविधा भवति श्रद्धा देहिनां सा
स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति तां
शृणु ॥
सत्त्वानुरूपा सर्व्वस्य श्रद्धा भवति भारत
।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव
सः ॥
यजन्ते सात्त्विका देवान् यक्षरक्षांसि
राजसाः ।
प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा
जनाः ॥”
इति श्रीभगवद्गीतायां १७ अध्यायः ॥
* ॥
तस्याः प्रशंसा यथा, --
ब्रह्मोवाच ।
“श्रद्धापूर्व्वा इमे धर्म्माः श्रद्धा मध्यान्त-
“श्रद्धाविधिसमायुक्तं कर्म्म यत् क्रियते
नृभिः ।
सुविशुद्धेन भावेन तदानन्त्याय कल्प्यते
॥”
योगियाज्ञवल्क्यः ।
“विधिहीनं भवेद्दुष्टं कृतमश्रद्धया च तत् ।
तद्धरन्त्यसुरास्तस्य मूढस्य दुष्कृतात्मनः
॥”
इति प्रायश्चित्ततत्त्वम् ॥

**श्रद्धालुः**, स्त्री, (श्रद्दधातीति । श्रत् + धा + स्पृहि
गृहिपतिदयिनिद्रेति’ । ३ । २ । १५८ ।
इति
आलुच् ।) दोहदवती । श्रद्धायुक्ते, त्रि ।
इत्य-
मरः ॥ (यथा, भागवते । ३ । ८ । १० ।
“सोऽहं तवैतत् कथयामि वत्स
श्रद्धालवे नित्यमनुव्रताय ॥”)

**श्रद्धावान्,** [त्] त्रि, (श्रद्धा विद्यतेऽस्येति । श्रद्धा
+ मतुप् । मस्य वः ।) श्रद्धायुक्तः । यथा,
--
“श्रद्धावान् लभते ज्ञानं तत्परः
संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां
शान्तिमचिरेणाधिगच्छति ॥”
इति भगवद्गीतायां ४ अध्यायः ॥

**श्रन्थ**, कि दर्भे । वधे । इति कविकल्पद्रुमः ॥
(चुरा०-पक्षे भ्वा०-सक०-सेट् ।) कि,
श्रन्थ-
यति श्रन्थति । दर्भो ग्रन्थनम् । इति दुर्गा-
दासः ॥

**श्रन्थ**, ग मोक्षे । प्रतिहृषि । इति कविकल्पद्रुमः ॥
(क्र्या०-पर०-सक०-सेट् ।) ग, श्रथ्नाति
वत्सं
लोकः मोचयतीत्यर्थः । श्रथ्नाति शिशुं
लोकः
पुनः पुनर्हर्षयति इत्यर्थः । शश्रन्थ । इति
दुर्गा-
दासः ॥
दर्शनात् ॥ श्रान्तिः । तत्पर्य्यायः । क्लमः २
।
क्लेशः ३ परिश्रमः ४ प्रयासः ५ आयासः ६
व्यायामः ७ । इति हेमचन्द्रः ॥ क्लमथः ८ ।
इत्यसरः ॥ (यथा, भागवते । ५ । १९ ।
१४ ।
“यथैहिकामुष्मिककामलम्पटः
सुतेषु दारेषु धनेषु चिन्तयन् ।
शङ्केत विद्वान् कुकलेवरात्ययात्
यस्तस्य यत्नः श्रम एव केवलम् ॥”)
शस्त्राभ्यासः । तत्पर्य्यायः । स्वुरली २
योग्यः ३
अभ्यासः ४ । इति च हेमचन्द्रः ॥

**श्रमणः**, पुं, (श्राम्यति तपस्यतीति । श्रम + स्यु ।)
यतिविशेषः । इति मेदिनी ॥ (स तु बौद्ध-
सन्न्यासी ।) तत्पर्य्यायः ।
“मुक्तिर्मोक्षोऽपवर्गोऽथ मुमुक्षुः श्रमणो यतिः ।
वाचंयमो व्रती साधुरनगार ऋषिर्मुनिः ॥
निर्ग्रन्थो भिक्षुरस्य स्यं तपोयोगशमादयः ।”
इति हेमचन्द्रः ॥
(यथा, रामायणे । १ । १४ । १२ ।
“तापसा भूञ्जते चापि श्रमणाश्चैव भुञ्जते ॥”)
निन्द्यजीविनिं त्रि, । इति मेदिनी ॥

**श्रमणा**, स्त्री, सुदर्शना । मांसी । मुण्डीरी ।
शवरीभेदः इति मेदिनी ॥

**श्रमी** [न्] त्रि, श्रमविशिष्टः । श्रमशब्दादस्त्यर्थे
इन्प्रत्ययेन निष्पन्नः । (यद्वा, श्राम्यतीति ।

| | | |
|---|---|---|
| संस्थिताः ।<br>श्रद्धा नित्या प्रतिष्ठाश्च धर्म्माः श्रंद्धैव कीर्त्तिताः ॥<br>श्रुतिमात्ररसाः सूक्ष्माः प्रधानपुरुषेश्वराः । | | |

श्रम तपः खेदयोः + “शमित्यष्टाभ्यो घिनुण् ।”
३ । २ । १४१ । इति घिनुण् ॥)

**श्रयः**, पुं, (श्रि + “एरच् ।” ३ । ३ । ५६ । इति अच् ।) आश्रयः । श्रिधातोरल्प्रत्ययेन निष्पन्नः

**श्रयणं**, क्ली, (श्रि + ल्युट् ।) आश्रयः । तत्पर्य्यायः श्रायः २ । इत्यमरः ॥ (यथा, भागवते । ८ ।
९ । २८ ।
“तत्रामृतं सुरगणाः फलमञ्जसापु-
र्यत्पादपङ्कजरजःश्रयणान्नदत्याः ॥”)

**श्रवः**, पुं, (श्रूयतेऽनेनेति । श्रु + “ऋदोरप् ।” ३ । ३ । ५७ । इत्यप् ।) कर्णः । (यथा, कथासरित्सागरे । १०३ । १५८ ।
“तुमुलप्रोल्ल सच्छब्दपिहितान्यरवश्रवः ।
चचाल स बलाम्भोधिस्तयोर्गम्भीरभीषणः ॥”
चु + भावे अप् ।) श्रवणम् । इत्यमरटीकायां भरतः ॥ (यथा, रघुः । ११ । ७१ ।
“सप्तसर्प इव दण्डघट्टनात्
रोषितोऽस्मि तव विक्रमश्रवात् ॥”
श्रूयते इति । कर्म्मणि अप् । शब्दः । यथा, वाजसनेयसंहितायाम् । १६ । ३४ ।
“नम्रो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च ॥”)

**श्रवः**, [स्] क्ली, (श्रूयतेऽनेनेति । श्रु + “सर्व-धातुभ्योऽसुन् ॥” इत्यसुन् ।) कर्णः । इत्यमरः ॥
(अन्नम् । इति निघण्टुः । २ । ७ ॥ यथा, ऋग्-
वेदे । ३ । १९ । ५ ।
“अधिश्रवांसि धेहि नस्तनूषु ॥”
धनम् । इति निघण्टुः । २ । १० ॥ यशः । यथा,
भागवते । ४ । १७ । ६ ।

**श्रवणद्वादशी**, स्त्री, (श्रवणयुक्ता द्वादशी ।) श्रवणानक्षत्रयुक्तभाद्रशुक्लद्वादशी । यथा, --
पितामह उवाच ।
“श्रवणद्वादशीं वक्ष्ये भुक्तिमुक्तिप्रदायिनीम् ।
एकादशी द्वादशी च श्रवणेन च संयुता ॥
विजया सा तिथिः प्रोक्ता हरिपूजादि चाक्ष-
यम् ।
एकभक्तेन नक्तेन तथैवायाचितेन च ॥
उपवासेन भक्ष्येण नैवाद्वादशिको भवेत् ।
कांस्यं माषं तथा क्षौद्रं लोभं वितथभाषणम् ॥
व्यायामञ्च व्यवायञ्च दिवास्वप्नमथाञ्जनम् ।
शिलापिष्टं मसूरञ्च द्वादश्यां वर्ज्जयेन्नरः ॥
मासि भाद्रपदे शुक्ले द्वादशी श्रवणान्विता ।
महती द्वादशी ज्ञेया उपवासे महाफला ॥
सङ्गमे सरितः स्नानं बुधयुक्ता महाफला ।
कुम्भे सरत्ने सजले यजेत् स्वर्णन्तु वामनम् ॥
सितवस्त्रयुगच्छन्नं छत्रोपानद्युगान्वितम् ।
ॐ नमो वासुदेवाय शिरः संपूजयेत्ततः ॥
श्रीधराय मुखं तद्वत् कण्ठं कृष्णाय वै नमः ।
नमः श्रीपतये वक्षो भुजौ सर्व्वास्त्रधारिणे ॥
व्यापकाय नमः कक्षौ केशवायोदरं बुधः ।
त्रैलोक्यपतये मेढ्रं जङ्घां सर्व्वपते नमः ॥
सर्व्वात्मने नमः पादौ नैवेद्यं घृतपायसम् ।
कुम्भांश्च मोदकान् दद्यात् जागरं कारयेन्निशि ॥
स्नात्वा प्रीतोऽर्च्चयित्वा तु
कृतपुष्पाञ्जलिर्व्वदेत् ।
नमो नमस्ते गोबिन्द बुध श्रवणसंज्ञक ॥
अघौघसंक्षयं कृत्वा सर्वसौख्यप्रदो भव ।
प्रीयतां देव देवेशो विप्रेभ्यः कलसान् ददेत् ।
नद्यास्तीरेऽथवा कुर्य्यात् सर्व्वान् कामानवा-
प्नुयात् ॥”
इति गारुडे १४१ अध्यायः ॥
अन्यत् द्वादशीशब्दे द्रष्टव्यम् ॥

**श्रवणशीर्षिका**, स्त्री, श्रावणीवृक्षः । इति राज-निर्घण्टः ॥

**श्रवणा**, स्त्री, पुं, नक्षत्रविशेषः । इति मेदिनी ॥ सा तु अश्विन्याद्यन्तर्गतद्वाविंशनक्षत्रम् । तस्याः

श्रवणादौ बुधः षट्के न गच्छेद्दक्षिणां दिशम् ॥
अग्निपीडा भयं शोको राजपीडा धनक्षयः ।
संग्रहे तृणकाष्ठानां कृते वस्वादिपञ्चके ॥”
इति ज्योतिस्तत्त्वम् ॥

**श्रवणा**, स्त्री, मुण्डरिकावृक्षः । इति रत्नमाला ॥

**श्रवाय्यः**, पुं, (श्रु श्रवणे + “श्रुदक्षिस्पृहिगृहिभ्य आय्यः ।” उणा० ३ । ९६ । इति आय्यः ।)
बलियोग्यपशुः । यज्ञियपशुः । इति सिद्धान्त-
कौमुदी ॥ (श्रवणीये, त्रि । यथा, ऋग्वदे । १ ।
२७ । ८ ।
“वाजो अस्ति श्रवाय्यः ॥”
“श्रवाय्यः श्रवणीयो वाजोऽस्ति बलविशेषो-
ऽस्ति ।” इति तद्भाष्यम् ॥)

**श्रविष्ठा**, स्त्री, (श्रवणमिति श्रवः । सोऽस्या अस्तीति । मतुप् । अतिशयेन श्रववती । अति-
शयने तमबिष्ठनौ इति इष्ठन् ।
विन्मतुपोर्लुगिति
मतुपो लुक् ।) धनिष्ठानक्षत्रम् ।
इत्यमरः ॥
(यथा, वामनपुराणे ७७ अध्याये ।
“श्रविष्ठायां तथा पृष्ठं शालिभक्तञ्च दोहदे ।
पुष्ये मुखं पूजयेत दोहदे घृतपायसम् ॥”)

**श्रविष्ठाजः**, पुं, (श्रविष्ठायां जायते इति । जन् + डः ।) बुधग्रहः । इति त्रिकाण्डशेषः ॥ तत्र
जाते, त्रि ॥

“श्रवः सुश्रवसः पुण्यं सर्व्वदेहकथाश्रयम् ॥”
शब्दः । यथा, तत्रैव । ५ । ११ । ९ ।
“गन्धाकृति स्पर्शरसश्रवांसि
विसर्गवत्यर्त्यभिजल्पशिल्पाः ॥”)

**श्रवणं**, क्ली, (श्रूयतेऽनेनेति । श्रु + करणे ल्युट् ।)
कर्णः । इत्यमरः ॥ न स्त्रियां श्रवणः कर्णः ।
इति हेममाली । इति तट्टीकायां भरतः ॥
षण्मासाभ्यन्तरे श्रवणयोश्छिद्रं भवति । इति
सुखबोधः ॥ श्रुतिः । सा तु कर्णेन्द्रियज्ञानम् ।
इति मेदिनी ॥ शोना इति भाषा ॥ (यथा,
मनुः । ८ । ७४ ।
“समक्षद्दर्शनात् साक्ष्यं श्रवणाच्चैव सिध्यति ॥”
तत्तु नीतिशास्त्रोक्तधीगुणानामन्यतमम् । यथा,
कामन्दकीये । ४ । २२ ।
“शुश्रूषा श्रवणञ्चैव ग्रहणं धारणं तथा ।
ऊह्वोऽपोहोऽर्थविज्ञानं तत्त्वज्ञानञ्च धीगुणाः ॥”)
वड्विधलिङ्गैरशेषवेदान्तानामद्वितीये वस्तुनि
तात्पर्य्यावधारणम् । लिङ्गानि तु उपक्रमोप-
संहाराभ्यासापूर्व्वता फलार्थवादोपपत्त्या-
ख्यानि । इति वेदान्तसारः ॥

**श्रवणः**, पुं, क्ली, श्रवणानक्षत्रम् । इति मेदिनी ॥
(यथा च स्मृतिः ।
“अमार्कपाते श्रवणं यदि स्यादिति ॥”)
स्वरूपं शराकारताराात्रयात्मकम् । तस्याधि-
देवो हरिः । यथा, --
“तारकात्रयमिते शराकृतौ
केशवे गगनमध्यवर्त्तिनि ।
मत्तवारणगतेऽजलग्नतो
निर्य्युर्गजमहीध्रलिप्सिकाः ॥” दं १ । पं १८ ।
इति कालिदासकृतरात्रिलग्ननिरूपणम् ॥ * ॥
तत्र जातफलम् ।
“शास्त्रानुरक्तो बहुपुत्त्रमित्रः
सत्पुत्त्रभक्तिर्व्विजितारिवर्गः ।
चेज्जन्मकाले श्रवणा हि यस्य
प्रेमा पुराणश्रवणे प्रवीणः ॥
इति कोष्ठीप्रदीपः ॥ * ॥
तत्र गृहारम्भार्यतृणकाष्ठादिच्छेदनसंग्रहदक्षि-
णादिक्गमननिषेधा यथा, --
“छेदनं संग्रहञ्चैव काष्ठादीनां न कारयेत् ।

**श्रव्यः**, त्रि, श्रोतव्यः । श्रवणार्हवाक्यादिः । श्रुधातो
र्यप्रत्ययेन निष्पन्नः ॥ (यथा,
राधातन्त्रे । ९ । ३ ।
“यत्श्रुत्वा परमेशानि श्रव्यमन्यन्न रोचते ॥”)
श्रा, ल स्वेदे । इति कविकल्पद्रुमः ॥ अदा०-
पर०-अक०-अनिट् ।)
रेफयुक्तस्तालव्यादिः ।
ल, श्राति । इति दुर्गादासः ॥

**श्रा**, ल म पाके । इतिकविकल्कद्रुमः ॥ (अदा०-
पर०-सेक०-अनिट् ।)
रेफयुक्तस्तालव्यादिः । ल,
श्राति । म, श्रपयति । इति दुर्गादासः ॥

**श्राणं**, त्रि, (श्रा + क्तः ।) पक्वम् । इति मेदिनी ॥
घृतदुग्धजलभिन्नपक्वद्रव्यम् । इति
जटाधरः ॥

**श्राणा**, स्त्री, (श्रायते स्मेति । श्रा + क्तः )
यवागूः । इत्यमरः ॥

**श्राद्धं**, क्ली, (श्रद्धा प्रयोजनमस्य । श्रद्धा + “चूडा-
दिभ्य उपसंख्यानम् ।” ५ । १ । ११० । इत्यस्य
वार्त्तिकोक्त्या अण् ।)
शास्त्रोक्तविधानेन पितृ-
कर्म्म । इत्यमरः ॥ पित्रु
द्देश्यकश्रद्धयान्नादि-
दानम् । तस्य लक्षणम् । यथा, --
“संस्कृतव्यञ्जनाढ्यञ्च
पयोदधिघृतान्वितम् ।
श्रद्धया दीयते यस्मात् श्राद्धं तेन निगद्यते ॥”
इति पुलस्त्यवचनात् श्रद्धया
अन्नादेर्दानं श्राद्धं
इति वैदिकप्रयोगाधीनयौगिकम् ।
इति श्राद्ध-

| | | |
|---|---|---|
| | | तत्त्वम् ॥ अपि च ।<br>सम्बोधनपदोपनीतान्<br>पित्रादीन् चतुर्थ्य न्तपदेनोद्दिश्य<br>हविस्त्यागः<br>श्राद्धम् । तत्तु द्वादशविधं यथा ।<br>विश्वामित्रः ।<br>“नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं<br>सपिण्डनग्<br>पार्व्वणञ्चेति विज्ञेयं गोष्ठ्यां<br>शुद्ध्यर्थमष्टमम् ॥<br>कर्म्माङ्गं नवमं प्रोक्तं दैविकं दशमं<br>स्मृतम् ।<br>यात्रार्थैकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं<br>स्मृतम् ॥” |

एतद्भविष्यपुराणे विवृतम् । यथा, भविष्ये ।
“अहन्यहनि यच्छ्राद्धं तन्नित्यमभिधीयते ।
वैश्वदेवविहीनं तदशक्तावुदकेन तु ॥
एकोद्दिष्टन्तु यच्छ्राद्धं तन्नैमित्तकमुच्यते ।
तदप्यदैवं कर्त्तव्यमयुग्मानासयेद्द्विजान् ॥
काम्याय तु हितं काम्यमभिप्रेतार्थसिद्धये ।
पार्व्वणेन विधानेन तदप्युक्तं खगाधिप ॥
वृद्धौ यत् क्रियते श्राद्धं वृद्धिश्राद्धं तदुच्यते ।
सर्व्वं प्रदक्षिणं कार्य्यं पूर्व्वाह्णे तूपवीतिना ॥
गन्धोदकतिलैर्युक्तं कुर्य्यात् पात्रचतुष्टयम् ।
अर्घ्यार्थं पितृपात्रेषु प्रे तपात्रं प्रसेचयेत् ॥
ये समाना इति द्वाभ्यामेतज्ज्ञेयं सपिण्डनम्
।
नित्येन तुल्यं शेषं स्यादेकोद्दिष्टं स्त्रिया अपि
॥
श्रमावास्यां यत् क्रियते तत्
पार्व्वणमुदाहृतम्
क्रियते वा पर्वणि यत् तत् पार्वणमिति
स्थितिः
गोष्ट्यां यत् क्रियते श्राद्धं गोष्ठीश्राद्धं
तदुच्यते
बहूनां विदुषां सम्पत्सुखार्थं पितृतृप्तये ॥
क्रियते शुद्धये यत्तु ब्राह्मणानान्तु भोजनम् ।
शुद्ध्यथमिति तत् प्रोक्तं वेनतेय मनीषिभिः
॥
निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने चैव श्राद्धं कर्म्माङ्गमेव च ॥
देवानुद्दिश्य यच्छ्राद्धं तद्दैविकमिहोच्यते ।
हविष्येण विशिष्टेन सप्तम्यादिषु यत्नतः ॥
गच्छन् देशान्तरं यत्तु श्राद्धं कुर्य्याच्च
सर्पिषा
यात्रार्थमिति तत् प्रोक्तं प्रवेशे च न संशयः ॥
शरीरोपचये श्राद्धमर्थोपचय एव च ।
पुष्ट्यर्थमेतद्विज्ञे यमीपचायिकमुच्यते ॥” *
॥
तस्य पञ्चविधत्वं यथा । बृहस्पतिः ।
“नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं तथैव च
पार्व्वणञ्चेति मनुना श्राद्धं पञ्चविधं स्मृतम्
॥”

नष्टञ्च तं सुतं दृष्ट्वा निमेः शोक
उपाविशत् ।
पुत्रशोकाभिसंयुक्तो दिवा रात्रौ च
चिन्तयन् ॥
निमिः कृत्वा ततः शोकं विधिना तत्र
माधवि
तमेव गतसङ्कल्पस्त्रिरात्रे प्रत्यपद्यत ॥
तस्य प्रतिविशुद्धस्य माघमासे तु
द्वादशीम् ।
मनः संसृज्य विषयं बुद्धिर्विस्तारगामिनी
॥
स निमिश्चिन्तयामास श्राद्धकल्पं
समाहितः ।
यानि तस्यैव भोज्यानि मूलानि च
फलानि च ॥
यानि कानि च भक्ष्याणि नवञ्च
रससम्भवम् ।
यानि तस्यैव चेष्टानि सर्व्वमेतदुदाहरत् ॥
आमन्त्र्य ब्राह्मणं पूर्व्वं शुचिर्भूत्वा
समाहितः ।
दक्षिणावर्त्ततः सर्वं ऋषिः स्वयमकुर्व्वत ।
सप्त कृत्वा ततस्तत्र युगपत् समुपाविशत्
॥
दत्त्वा तु मांसशाकानि मूलानि च फलानि
च
पूजयित्वा तु विप्रान् स सप्तकृत्वस्तु
सुन्दरि ॥
कृत्वा तु दक्षिणाग्रांश्च कुशांश्च प्रयतः
शुचिः ।
प्रददौ श्रीमते पिण्डं नामगोत्रमुदाहरन् ॥
एतस्मिन्नन्तरे देवि नारदो द्विजसत्तमः ।
जगाम तापसारण्यं ऋष्याश्रमविभूषितम्
॥
तं दृष्ट्वा पूजयामास स्वागतेनाथ माधवि
।
भीतो गद्गदया वाचा निश्वसंश्च मुहुर्मुहुः
॥
सव्रीडो भाषते विप्रः कारुण्ये न
समन्वितः ।

पिण्डं श्राद्धस्य पश्यन्ति वायुभूता न
संशयः ॥
पितृयज्ञं विशालाक्षि ये कुर्व्वन्ति विदो
जनाः ।
आयुः कीर्त्तिर्बलं तेजो धनं पुत्त्रपशुस्त्रियः
॥
ददन्ति पितरस्तस्य आरोग्यं नात्र संशयः
।
आत्मकर्म्मवशाल्लोकान् प्राप्नु वन्तीह
शोभनान् ।
तिर्य्यक्ष च विमुच्यन्ते प्रेतभावाच्च मानवाः
।
नरके पच्यमानानां त्राता भवति मानवः ॥
पूजकः पितृदेवानां सर्व्वकालं गृहाश्रमे ।
द्विजातींस्तर्पयित्वां तु पूर्णेन विधिना नरः
॥
अक्षयं तस्य मन्यन्ते पितरः श्राद्धतर्पिताः
।
नरा ये पितृभक्तास्ते प्राप्नु वन्ति परां
गतिम् ॥ *
पक्वान्नं तत्र वै कार्य्यं सुविसृष्टञ्च शुद्धितः ।
वृत्ते तु तत्र मध्याह्ने श्राद्धारम्भन्तु कारयेत्
॥
स्वागतञ्च तथा कृत्वा पाद्यार्थं मण्डलं
शुचिः ।
पाद्यं दत्त्वा तु विप्राय गृहस्याभ्यन्तरं नयेत्
॥
आसनं कल्पयित्वा तु आवाह्य तदनन्तरम्
।
अर्घ्यं दद्याद्विधानेन गन्धमाल्यैः प्रपूज्य च
॥
धूपं दीपं तथा वस्त्रं तिलोदकमथापि वा ।
पात्रञ्च भोजनस्यार्थे विप्राग्रे धारयेत्तथा ॥
भस्मना मण्डलं कार्य्यं पंक्तिदोषनिवारकम्
।
अग्निकार्य्यं ततः कृत्वा अन्नञ्च परिवेशयेत्
॥
तत्र कार्य्यस्तु सङ्कल्पः पितॄनुद्दिश्य
सुन्दरि ।

कूर्म्मपुराणे ।
“अहन्यहनि नित्यं स्यात् काम्यं
नैमित्तिकंपुनः
एकोद्दिष्टन्तु विज्ञेयं बृद्धिश्राद्धञ्च पार्वणम् ॥
एत त् पञ्चविधं श्राद्धं मनुना परिकीर्त्तितम्
॥”
मत्स्यपुराणे त्रैविध्यमुक्तं यथा, --
“नित्य नैमित्तिकं काम्यं त्रिविधं श्राद्धमुच्यते
॥”
तस्य द्वैविध्यम् । विष्णुना
नित्यकाम्यरूपतया
द्वैविध्यं वक्ष्यते । तत्र
नित्यपदमावश्यकरूपतया
पार्व्वणैकोद्दिष्टयोरपि परिग्रहार्थम् । काम्य-
पदमनावश्यकत्वार्थम् । इति श्राद्धविवेकः ॥
* ॥
आदावात्रेयमुनिपुत्त्रेण निमिना तत्पुत्त्रस्य
श्राद्धं कृतम् । यथा, --
धरण्युवाच ।
“को गुणः पितृयज्ञस्य कथमेव प्रपूज्यते ।
केन चोत्पादितं श्राद्धं कस्मिन्नर्थे
किमात्मकम्
एतदिच्छाम्यहं श्रोतुं विस्तरेण ववेस्व मे ॥
वाराह उवाच ।
मनोस्तु वंशसम्भूत आत्रेय इति विश्रुतः ।
आत्रेयस्यात्मजो विप्रो निमिनामा तपोधनः
॥
निमिपुत्त्रस्तु धर्मात्मा त्रिषु लोकेषु विश्रुतः ।
वर्षाणाञ्च सहस्राणि तपस्तप्त्वा वसुन्धरे ॥
मृत्युकालमनुप्राप्तस्ततः पञ्चत्वमागतः ।

कृतः स्नेहश्च पुत्त्रार्थे मया संकल्प्य यत्
कृतम् ॥
तर्पयित्वा द्विजान् सप्त अन्नाद्येन फलेन
च ।
पश्चाद्विसर्ज्जितं पिण्डं दर्भानास्तीर्य्य
भूतले ॥
उदकानयनञ्चैव त्वपसव्येन पायितम् ।
शोकस्ने हप्रभावेण एतत् कर्म्म मया
कृतम् ॥
न च श्रुतं मया पूर्वं न देवैरृ षिभिः कृतम्
।
भयं तीव्रं प्रपश्यामि मुनिशापात्
सुदारुणात्
नारद उवाच ।
न भेतव्यं द्विजश्रेष्ठ पितरं शरणं व्रज ।
अधर्म्मं न च पश्यामि धर्म्मेणैवात्र संशयः
॥
नारदेनैवमुक्तस्तु निमिर्ध्यानमुपाविशत् ।
कर्म्मणा मनसा वाचा पितरं शरणं गतः ॥
ततोऽतिचिन्तयामास वंशकर्त्तारमात्मनः
।
ध्यायमानस्ततोऽप्याशु आजगाम
तपोधनः ॥
पुत्त्रशोकेन सन्तप्तं पुत्त्रं दृष्ट्वा तपोधनः
।
पुत्त्रमाश्वासयामास वाग्भिरिष्टाभिरव्ययैः
॥
निमे सङ्कल्पितश्रेयान् पितृयज्ञस्तपोधन
।
पितृयज्ञेति निर्द्दिष्टो धर्म्मोऽयं ब्रह्मणा
स्वयम् ॥
ततो ह्यतितरो धर्म्मः क्रतुरेकः प्रतिष्ठितः
।
कृतः स्वयम्भुवा पूर्वंश्राद्धे यो
विधिरुत्तमः ॥”
इति वाराहे श्राद्धोत्पत्तिनामाध्यायः ॥ *
॥
अपि च ।
“अपसव्येन दातव्यं मासि मासि
तिलोदकम् ।

ययासुखेन भोक्तव्यमिति ब्रूयाद्द्विजं प्रति
॥
रक्षोघ्नमन्त्रपाठांश्च आचमेत विचक्षणः ।
तृप्तांस्तु ब्राह्मणान् ज्ञात्वा दद्याद्वै विकिरं
ततः ॥
उत्तरापोशनं दत्त्वा पिण्डप्रश्नन्तु कारयेत्
।
दक्षिणाभिमुखो भूत्वा दर्भानास्तीर्य्य भूतले
॥
पिण्डदानं प्रकुर्व्वीत पित्रादित्रितये तथा ।
पिण्डानां पूजनं कार्य्यं तन्तुवृद्ध्यै
यथाविधि ॥
ब्राह्मणस्य च हस्ते तु दद्यादक्षय्यमात्मवान्
।
पिण्डास्त्रयस्तु वसुधे यावत्तिष्ठन्ति भूतले
॥
आप्यायमानाः पितरस्तावत्तिष्ठन्ति वै गृहे
।
उपस्पृश्य शुचिर्भूत्वा दद्यात् शान्त्युदकानि
च ॥
प्रणम्य शिरसा भूमौ निर्वापस्य च धारिणीः
।
वैष्णवी काश्यपी चेति अक्षय्या चेति
नामतः ॥
भक्षयेत् प्रथमं पिण्डं पत्न्यै देयञ्च मध्यमम्
।
तृतीयमुदके दद्यात् श्राद्धे एवं विधिः स्मृतः
॥
पितृदेवं विसृज्याथ भक्त्या तु प्रणमेत्तु
तान् ।
एवं दत्तेन तुष्यन्ति पितृदेवा न संशयः ॥
दीर्घायुष्यं प्रयच्छन्ति पुत्त्रपौत्त्रधनानि च
।
तेनोत्तमेषु विप्रेषु दद्यात् श्राद्धं विधानतः ॥
अन्यथा तत्तु वै श्राद्धं निष्फलं नास्ति
संशयः ।
मन्त्रहीनं क्रियाहीनं यत् श्राद्धं कुरुते द्विजः
।
मद्भक्तस्यासुरेन्द्रस्य फलं भवति भागतः
॥”

| | | |
|---|---|---|
| | प्रणम्य शिरसा देवीर्निर्व्वापस्य च धारिणीः ।<br>वष्णवी काश्यपी चेति अजया चेति नामतः ॥<br>एवं दत्तेन प्रीयन्ते पितरश्च न संशयः ।<br>परमात्मा शरीरस्थो देवतानां मया कृतः ॥<br>त्रयस्तत्र वरारोहे देवगात्राद्विनिस्मृताः ।<br>पितृदेवा भविष्यन्ति भोक्तारः पितृपिण्डकान् ।<br>देवतासुरगन्धर्व्वा यक्षराक्षसपन्नगाः । | इति वाराहे पितृयज्ञनिर्णयनामाध्यायः ॥ * ॥<br>तस्याधिकारिक्रमो यथा, --<br>“पुत्त्रः पौत्त्रः प्रपौत्त्रो वा भ्राता वा भ्रातृ-सन्ततिः ।<br>सपिण्डसन्ततिर्बापि क्रियार्हा नृप जायते ॥<br>तेषामभावे सर्व्वेषां समानोदकसन्ततिः ।<br>मातृपक्षस्य पिण्डेन सम्बद्धा ये जलेन वा ॥ |

कुलद्वयेऽपि चोत्सन्ने स्त्रीभिः कार्य्या क्रिया नृप ।
संघातान्तर्गतैर्व्वापि कार्य्याः प्रेतस्य याः क्रियाः ॥
उत्सन्नबन्धुरिक्थाद्वा कारयेदवनीपतिः ।
पूर्व्वाः क्रिया मध्यमाश्च तथा चैवोत्तराः क्रियाः ॥
त्रिप्रकाराः क्रियास्त्वेतास्तासां भेदं शृणुष्व मे ।
आदाहवार्य्यायुधादिस्पर्शाद्यन्तास्तु याः क्रियाः ॥
ताःपूर्व्वा मध्यमा मासि
मास्येकोद्दिष्टसंज्ञिताः ।
प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु ॥
क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्तेता नृपो-
त्तराः ।
पितृमातृसपिण्डैस्तु समानसलिलैस्तथा ॥
संघातान्तर्गतैश्चैव राज्ञा वा धनहारिणा ।
पूर्व्वाः क्रियास्तु कर्त्तव्याः पुत्राद्यैरेव चोत्तराः ।
दौहित्रैर्व्वा नरश्रेष्ठ कार्य्यास्तत्तनयैस्तथा ।
मृताहनि च कर्त्तव्याः स्त्रीणामप्युत्तराः क्रियाः ॥
प्रतिसंवत्सरं राजन्ने कोद्दिष्टं विधानतः ॥”
इति विष्णुपुराणे ३ अंशे १३ अध्यायः ॥ * ॥
याज्ञवल्क्य उवाच ।
“अथ श्राद्धविधिं वक्ष्ये सर्व्वपापप्रणाशनम् ।
अमावास्याष्टकावृद्धिः कृष्णपक्षोऽयनद्वयम् ॥
द्रव्यं ब्राह्मणसम्पत्तिर्व्विषुवत् सूर्य्यसंक्रमः ।
व्यतीपातो मजच्छाया ग्रहणं चन्द्रसूर्य्ययोः ॥
श्राद्धं प्रतिरुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः ॥ * ॥
अग्रो यः सर्व्ववेदेषु श्रोत्रियो वेदविद्युवा ।
वेदार्थविज्ज्येष्ठसामास्त्रिमधुस्त्रिसुपर्णिकः ॥
स्वस्रीयऋत्विग्‌जामातृयाज्यश्वशुरमातुलाः ।
त्रिणाचिकेतदौहित्रशिष्यसम्बन्धिबान्धवाः ॥

अग्नौ करिष्येत्यादाय पृच्छत्यन्नं घृतप्लुतम् ॥
कुरुष्वेति तथोक्तोऽग्नौ हुत्वासौ पितृयज्ञतः ।
हुतशेषं प्रदद्याच्च भाजनेषु समाहितः ॥
यथालाभोपपन्नेषु रौप्येषु च विशेषतः ।
दत्त्वान्नं पृ थवी ते पात्रमिति पात्राभिमन्त्रणम् ॥
कृत्वेदं विष्णुरित्यन्ने निजाङ्गुष्ठं निवेशयेत् ।
सव्याहृतिकां गायत्रीं मधुवातेत्यृचं तथा ॥
जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः ।
अन्नमिष्टं हविष्यञ्च दद्यादक्रोधनोऽत्वरः ॥
आतृप्तेश्च पवित्राणि जप्त्वा पूर्व्वजपन्तथा ।
अन्नमादाय तृप्ताः स्थ शेषञ्चैवानुमन्य ह ॥
तदन्नं प्रकिरेद्भूमौ दद्याच्चापः सकृत् सकृत् ।
सर्व्व मन्नमुपादाय सतिलं दक्षिणामुखः ॥
उच्छिष्टसन्निधौ पिण्डान् प्रदद्यात् पितृयज्ञवत् ।
मातामहानामप्येवं दद्याच्चाचमनं ततः ॥
स्वस्ति प्रीयन्तामिति चाहैवं विश्वेदेवान् जलं
ददत् ।
स्वस्तिवाच्य ततो दद्यादक्षय्योदकमेव च ॥
दत्त्वा तु दक्षिणां शक्त्या
स्वधाकारमुदीरयेत् ।
वाच्यतामित्युनुज्ञातः पितृभ्यश्च
स्वधोच्यताम् ॥
विप्रैरस्तु स्वधेत्युक्तो भूमौ सिञ्चेत्ततो जलम् ।
दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च ॥
श्रद्धा च नो मा व्यगमत् । बहु देयञ्च
नोऽस्त्विति
इत्युक्त्वापि प्रियं वाचं प्रणिपत्य
विसर्ज्जयेत् ॥

प्रवृत्तचक्रतां पुत्रान्
बाणिज्यप्रभृतींस्तथा ॥
अरोगित्वं यशो वीतशोकतां परमां गतिम् ।
धनं विद्यां भिषक्सिद्धिं कुप्यं गोऽजाविकं तथा ॥
अश्वानायुश्च विधिवद्यः श्राद्धं संप्रयच्छति ।
कृत्तिकादिभरण्यन्तं
सकामानाप्नुयादिमान् ॥
वस्त्राद्याः प्रीणयन्त्येव नवं श्राद्धं कृतं द्विजाः ।
आयुष्प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ॥
प्रयच्छति तथा राज्यं प्रीतो नित्यं पितामहः ॥”
इति गारुडे ९९ अध्यायः ॥ * ॥
अपिच ।
“व्याशश्राद्धमहं वक्ष्ये भुक्तिमुक्तिप्रदं नृणाम् ।
पूर्व्वं निमन्त्रयेद्विप्रान् निशि
स्युर्ब्रह्मचारिणः ॥
प्रदक्षिणोपवीतेन देवान् वामोपवीतिना ।
पितॄन्निमन्त्रयेत् पादौ
क्षालयेद्वाक्यमन्त्रतः ॥
ॐ स्वागतं भवद्भिरिति प्रश्नः । ॐ
सुस्वागतमिति
तैरुक्ते ॐ विश्वेभ्यो देवेभ्य एतत्
पादोकमर्घ्यं
स्वाहा पितृभ्यः स्वधा इति
देवब्राह्मणपादयो-
र्देवतीर्थेनाभुग्नकुशजलकुसुमदानम् ।
ततो
दक्षिणामुखस्य वामोपवीतेन
अमुकगोत्रेभ्यः
अस्मत्पितृपितामहप्रपितामहेभ्यो
यथानाम-

कर्म्मनिष्ठास्तपोनिष्ठाः पाञ्चाग्निर्ब्रह्मचारिणः ।
पितृमातृपराश्चैव ब्राह्मणाः श्राद्धदेवताः ॥ *
॥
रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा ॥
अवकीर्ण्यादयो ये च ये चाचारविवर्ज्जिताः ।
अवैष्णवाश्च ये सर्व्वे न श्राद्धार्हाः कदाचन ॥
* ॥
निमन्त्रयेच्च पूर्व्वेद्युर्द्विजैर्भाव्यिञ्च संयतैः ।
आचान्तश्चैव पूर्व्वाह्णि ह्यासने सूपवेशयेत् ॥
युग्मान्दैवे तथा पित्रे सुप्रदेशे स्वशक्तितः ।
द्वौ दैवे प्रागुदक्पित्र्ये त्रीण्येकं चोभयोः पृथक्
॥
मातामहानामप्येवं तन्त्रं वा वैश्यदेविकम् ।
हस्तप्रक्षालनं दत्त्वा विष्टरार्थं कुशानपि ॥
आवाह्य तदनुज्ञातो विश्वेदेवास इत्यृचा ।
यवैरन्ववकीर्य्याथ भाजने सपवित्रके ॥
शन्नो देव्या पयः क्षिप्त्वा यवोऽसीति
यवांस्तथा ।
या इति मन्त्रेण हस्तेष्वे व विनिक्षिपेत् ॥
नन्धोदके तथा धूपमाल्यदानप्रदीपकम् ।
अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम् ॥
द्विगुणांस्तु कुशान् दत्त्वा उषन्तस्त्वेत्यृचा
पितॄन् ।
आवाह्य तदनुज्ञातो जपेदायान्तु नस्ततः ॥
यवार्थस्तु तिलैः कार्य्यः कुर्य्यादर्घ्यादि
पूर्व्ववत् ।
दत्त्वा तु संश्रवांस्तेषां पात्रे कृत्वा विधानतः ॥
पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः
।

वाजे वाजे इति प्रीत्या पितृपूर्व्वं
विसर्ज्जनम् ।
यस्मि स्ते संश्रवाः पूर्व्व मर्घ्यपात्रे
निपातिताः ॥
पितृपात्रं तदुत्तानं कृत्वा विप्रान्
विसर्ज्जयेत् ।
प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम् ॥
ब्रह्मचारी भवेत्तान्तु रजनीं भार्य्यया सह ।
एवं प्रदक्षिणं कृत्वा वृद्धौ नान्दिमुखानपि ॥
यजेत यवकर्क्कन्धुमिश्राः पिण्डा यवैः
श्रिताः ।
एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम् ।
आवाहनाग्नौ करणरहितं अपसव्यवत् ।
उपतिष्ठतामित्यक्षय्यस्थानेविप्रान्
विसर्ज्जयेत् ॥
अभिरम्यतां प्रब्रूयात् ब्रूयुस्तेऽभिरताः स्म
ह ।
गन्धोदकतिलैमिश्रं कुर्य्यात् पात्रचतुष्टयम्
॥
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ।
ये समाना इति द्वाभ्यां शेषं पूर्व्ववदाचरेत् ॥
एतत् सपिण्डीकरणम्कोद्दिष्टं स्त्रिया अपि ।
अर्व्वाक् सपिण्डीकरणं यस्य
संवत्सराद्भवेत् ॥
तस्याप्यन्नं सोदकुम्भं दद्यात् संवत्सरं द्विज
।
पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि
वा ॥
हविष्यान्नेन वै मासं पायसेन तु वत्सरम् ।
मात्स्यहारिणकौरभ्रशाकुन्तच्छागपार्षतैः ॥
ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम् ।
मासवृद्ध्यापि तुष्यन्ति दत्तैरिह पितामहाः
॥
दद्याद्वर्षा त्रयोदश्यां मघासु च न संशयः ।
प्रतिपत्प्रभृतिष्वेवं कन्यादीन् श्राद्धदो भवेत्
॥
शस्त्रेण निहतानान्तु चतुर्द्दश्यां प्रदीयते ॥ *
॥
स्वर्गं ह्यपत्यमोजश्च शौर्य्यं क्षेत्रं बलं तथा
॥

शर्म्मभ्यः सपत्नीकेभ्य एतत्
पादादकमर्घ्यं स्वधा
इति पित्रादिब्राह्मणपादयोः पितृतीर्थेन
भुग्न-
कुशतिलकुसुमजलदानम् । एवं
मातामहा
दिषु । एतद्व आचमनीयं स्वाहा स्वधेति
ब्राह्मणहस्ते । एष वो अर्घ्यः इति
ब्राह्मणहस्त-
ऽर्घ्यदानम् । एतद्वः पुष्पं इति
ब्राह्मणहस्ते-
पुष्पदानम् । ॐ सिद्धमिदमासनं
इहासध्व-
मित्यभिधाय ॐ भूः ॐ भुवः ॐ स्वः
ॐ महः
ॐ जनः ॐ तपः ॐ सत्यं
सप्तव्याहृतिभिः
पूर्व्व मुखदेवब्राह्मणोपवेशनम् ।
उत्तराभिमुखाः
पितरः ॐ देवताभ्यः पितृभ्यश्च
महायोगिभ्य
एवच । नमः स्वधायै स्वाहायै नित्यमेव
नमो
नमः इति त्रिर्ज्जपेत् । ॐ
अद्यास्मिन्देशे
अमुकमासे अमुकराशिगते सवितरि
अमुकस्यां
तिथौ
अमुकगोत्राणामस्मत्पितृपितामह
प्रपितामहानां यथानामशर्म्मणां
विश्वेदेवपूर्व्वकं
श्राद्धमहं करिष्ये ॐ विश्वेभ्यो देवेभ्य
इदमासनं
स्वाहा । ॐ विश्वान् देवानावाहयिष्ये
ॐ
आवाहय इत्युक्ते ॐ विश्वेदेवास
आगत शृणु-
ताम इमं हवं एदं वर्हिर्निषीदत । ॐ
विश्व-
देवाः शृणुतेमं हवं ये मे अन्तरीक्षे य
उप-

|  |  |  |
| --- | --- | --- |
|  | पुत्रश्रेष्ठान् ससौभ्याम्यानपत्यं मुख्यतां शुभम् । | द्यविष्ट येऽग्निजिह्वा उत वा यजत्रा आस-<br>द्यास्मिन् वर्हिषि मादयध्वम् । ॐ ओषधयः<br>समवदन्त सोमेन सह राज्ञा यस्मै कृणोति<br>ब्राह्मणस्त्वं राजन् पारयामसि ।<br>ॐ आगच्छन्तु महाभागा विश्वेदेवा महाबलाः<br>ये यत्र विहिताः श्राद्धे सावधाना भवन्तु ते ॥<br>ॐ अपहतासुरारक्षांसि वेदिसदः । इति<br>त्रिभिर्यवविकिरणम् । ॐ पवित्रमहं करिष्ये<br>ॐ कुरुष्वेति तेनोक्ते साग्रकुशपत्रद्धयं प्रादेश-<br>प्रमाणं कृत्वा ॐ पवित्रे स्थो वैष्णव्यौ अनेनं<br>कुशान्तरेण छित्त्वा ॐ विष्णुर्मनसा पूते स्थः |

इत्युभ्य क्ष्य कुशान्तरेण त्रिवृतं कृत्वा पात्रे पवित्रनिवेशनम् । शन्नो देवीरभीष्टये आपो भवन्तु पीतये शंयोरभिस्रवन्तु नः । इति पात्रे जलदानम् । ॐ यवोऽसि यवयास्मद्वे शो यवया- राती इति यवदानम् ।
ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईखरीं सर्व्वभूतानां त्वामिहोपह्वये श्रियम् ॥
इति गन्धदानम् ॥
ॐ श्रीश्च ते लक्ष्मीश्च पत्न्या इति पुष्पदानम् । ॐ या दिव्या आपः पयसा सम्बभूवुर्य्या अन्त- रीक्षा उतपार्थ वीर्य्या हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः संश्योनाः सुहवा भवन्तु ॐ धुरिलोचनसंज्ञकेभ्यो विश्वे भ्यो देवेभ्य एषोऽर्घ्यो
नमः । इति हस्तेऽर्घ्यं दत्त्वा अनेनैव पात्रेण सप्लवपवित्रग्रहणं प्रथमपात्रेण संप्लवं पवित्रञ्च गृहीत्वा ब्राह्मणदक्षिणपार्श्वे कुशोपरि उद्र्ध्व- मुखपात्रे स्थापनं तदुपरि कुशदानम् । ततः ॐ धुरिलोचनसंज्ञकेभ्यो विश्वेभ्यो देवेभ्य एतानि
गन्धपुष्पधूपदीपवासोयुग्मसोत्तरीययज्ञोपवीतानि नमः । गन्धादिदानमच्छिद्रमस्तु संकल्पसिद्धि- रस्तु । ब्राह्मणवाचनम् । ततः पितृपितामह- प्रपितामहमातामहप्रमातामहवृद्धप्रमाताम- महानां सपत्नीकानां श्राद्धमहं करिष्ये । अनु- ज्ञापनम् । ॐ कुरुष्वेति ब्राह्मणैरुक्ते । ॐ देव- ताभ्यः तृइभ्यश्च महायोगिभ्य एव च । इति त्रिर्जपेत् । तत ॐ अमुकसगोत्राणां अस्मत्- पितृपितामहप्रपितामहानांयथानामशर्म्मणां सपत्नीकानां श्राद्धं युष्मास्वहं करिष्ये । ॐ कुरुष्व श्राद्धकरणानुज्ञानम् । ॐ अमुक- सगोत्रेभ्यः अस्मत्पितृपितामहप्रपितामहेभ्यो यथानामशर्म्मभ्यः सपत्नीकेभ्य इदमासनं स्वधा ।
ब्राह्माणवामपार्श्वे आसनम् । ॐ पितृनावाह- यिष्ये ॐ आवाहयेत्युक्ते ॐ
उशन्तस्त्वानिधीमह्यु- शन्तः समिधीमही । उशन्नु शत आवह पितॄन् हविषे अत्तवे । ॐ आयान्तु नः पितरः

स्वधा । पितृतीर्थेन गन्धादिदानम् ।
गन्धादि-
दानमच्छिद्रमस्तु सङ्कल्पसिद्धिरस्तु ।
ब्राह्मण-
वाचनम् । एवं
मातामहादीनामनुज्ञापनादि
कर्म्म । ॐ या दिव्येति
भूमिसम्मार्ज्जनम् । ततो
घृताक्तमन्नं गृहीत्वा दक्षिणोपवीतं
पितृ-
ब्राह्मणम् । ॐ अग्नौ करणमहं करिष्ये
ॐ कुरु-
ष्वेति तेनोक्ते ॐ अग्नये कव्यवाहनाय
स्वाहा
ॐ सोमाय पितृमते स्वाहा ।
आहुतिद्वयं देव-
ब्राह्मणहस्ते दत्त्वा
अवशिष्टार्द्धंपिण्डार्थं स्थाप-
यित्वा अपरमर्द्धं पित्रादिपात्रे
मातामहादिपात्रे
च निःक्षिपेत् । पात्रे अन्नादिनिधाय कु
शंदत्त्व
अधोमुखाभ्यां पाणिभ्यां पात्रं गृहीत्वा
। ॐ
पृथिवी ते पात्रं द्यौः पिधानं ब्राह्मणस्य
मुखे
अमृते अमृतं जुहोमि स्वाहा ।
पात्राभि-
मन्त्रणम् । इदं विष्णुर्व्विचक्रमे त्रेधा
निदधे
पदम् । समूढमस्य पांशुले विष्णो
हव्यं रक्षस्व ।
इत्यन्नोपर्य्यधोमुखद्विजाङ्गष्ठनिवेशनम्
। ॐ अप-
हतेति त्रिर्य्यवविकरणम् ।
ॐ निहन्मि सर्व्वं यदमेध्यवद्भवेत्
हताश्च सर्व्वेऽसुरदानवा मया ।
रक्षांसि यक्षाः सपिशाचसंघा
हता मया यातुधानाश्च सर्व्वे ॥

ततस्तृप्तेषु । दक्षिणामुखो वामोपवीती
उच्छिष्ठाग्रतः ।
ॐ अग्निदग्धाश्च ये जीवाः येऽप्यदन्धाः
कुले
मम ।
भूमौ दत्तन तृप्यन्तु तृप्ता यास्तु परां गतिम्
॥
इति भूमौ कुशोपरि सघृमन्नं जलप्लुतं
विकि-
रेत् । ततो देवब्राह्मणक्रमेण जलगण्डूष
दत्त्वा
पूर्व्ववत् पुनः सव्याहृतिकां सावित्रीं
मधुवाते-
त्यृचं मधु मध्विति च जप्त्वा ॐ रुचितं
भव-
द्भिरिति देवब्राह्मणप्रश्नः । सुरुचितमिति
तेनोक्ते ॐ शेषमन्नमप्यस्तीति प्रश्नः ।
इष्टैः सह
भुङ्क्ष्वेति तेनोक्ते पित्रादिब्राह्मणे वामोप-
वीतेन ॐ तृप्तास्थ इति प्रश्नः । ॐ
तृप्तास्म
इत्यक्त शेषमन्नेति प्रश्नः । ॐ इष्टैः सह
भुङ्क्ष्वेति तेनोक्ते मातामहादिब्राह्मणे
तथैव
प्रश्नः । ततः पित्रादिब्राह्मणे पिण्डानहं
पात-
यिष्ये पातयेत्युक्ते ।
तदुच्छिष्टाग्रतोऽभ्युक्षणं
मण्डलञ्च चतुष्कोणं तिलविकिरणं ॐ
अमुक-
गोत्र अस्मत्पितः अमुकशर्म्मन् सपत्नीक
एतत्ते पिण्डासनं स्वधा इत्थं रेखामध्ये
पिता-
महाय प्रपितामहाय च । सव्याहृतिकां
गायत्रीं मधुवातेति त्रिर्ज्जपन् अन्नं साज्यं
पिण्ड
कृत्वा कुशोपरि अमुकगोत्रास्मत्पितः
अमुक-

सौम्यासो अग्निष्वात्ताः पथिभिर्देवयानैः ।
अस्मिन् यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्व-
स्मान् । इत्यावाहनम् । ॐ अपहतासुरा रक्षांसि वेदिसदः । त्रिस्तिलविकिरणम् । ॐ
तिलोऽपि सोमदैवत्यो गोसवो देवनिर्म्मितः ।
प्रत्नमद्भिः पृक्तः स्वधया पितॄन् लोकान् प्रीणाहि नः स्वाहा । तिलदानम् । गन्धपुष्पं हस्ताभ्यां दत्त्वा पितृपात्रमुत्थाप्य या दिष्येति पठित्वा अमुकगोत्र अस्मत्पितः अमुकशर्म्मन् सपत्नीक एष ते अर्घ्यः स्वधा । एवं पितामहादौ ।
सपवित्रं पात्रं गृहीत्वा ब्राह्मणवामपार्श्वे टक्षिणाग्रकुशोपरि ॐ पितृभ्यः स्थानमसीति अधोमुस्वपात्रस्थापनम् । ॐ शुन्धन्तां लोकाः पित्मदनाः पितृसदनमसि । अधोमुखपात्र-
स्पर्शनम् । ततः अमुकसगोत्रेभ्यः अस्मत्पितृ-
पितामहप्रपितामहेभ्यः मपत्नीकेभ्यः एतानि गवपुप्पध पदीपवासोयुगसोत्तरीययज्ञोपवीतानि

इति सिद्धार्थविकिरणम् ॥
ततः ॐ धुरिलोचनसंज्ञकेभ्यो विश्वेभ्यो देवेभ्य
एतदन्नं सघृतं सपानीयं सव्यञ्जनं स्वाहा इति
वारिकुशाद्यैरन्नसङ्कल्पनम् । ॐ श्राद्धमिद-
मच्छिद्रमस्तु सङ्कल्पसिद्धिरस्तु । ततो वामोप-
वीतेन सव्यञ्जनं सघृतमन्नं पित्रादिपात्रे निधाय
तदुपरि भूमिसंलग्नकुशं दत्त्वा ॐ पृथिवी ते
पात्रं अभिमन्त्रणम् । उत्तानाभ्यां पाणिभ्यां
पात्रं गृहीत्वा ॐ इदं विष्णुरित्यन्नोपरि उत्ता-
नाङ्गुष्ठं निवेशयेत् ॐ अपहता इति तिलविकि-
रणम् । भूमिपातितवामजानुः । अमुकगो-
त्रेभ्यः अस्मत्पितृपितामहप्रपितामहेभ्य अमु-
कामुकशर्म्मभ्यः सपत्नीकेभ्य एतदन्नं सघृतं
सपानीयं सव्यञ्जनं प्रतिषिद्धवर्ज्जितं स्वधा ।
अन्नसङ्कल्पः । ॐ ऊर्ज्जं वहन्तीरमृतं घृतं
पयः कीलालं परिस्रु तं स्वधास्त तर्पयत मे
पितॄन् । दक्षिणामुखवारित्यागः । ॐ अन्नमिदमच्छिद्रमस्तु
सङ्कल्पसिद्धिरस्तु । ततः सव्याहृतिकया गायत्र्या
विसर्ज्जयित्वा मधु-
वाता ऋतायते मधु क्षरन्ति सिन्धवः माध्वीर्नः
सन्त्वोषधीः । मधुनक्तमुतोषसो मधुमत् पार्थिवं

शर्म्मन् सपत्नीक एष ते पिण्डः ये चात्र त्वामनु
यांश्च त्वमनु तस्मै ते स्वधा । एवं पितामह-
प्रपितामहमातामहप्रमातामहवृद्धप्रमाताम-
हेभ्यः । पिण्डशेषविकिरणं पिण्डान्तिके । ॐ
लेपभुजः प्रीयन्तां इति स्तरणकुशेषु हस्त-
मार्ज्जनम् । प्रक्षालितेन पिण्डपात्रोदकेन अमुक
गोत्र अस्मत्पितः अमुकशर्म्मन् सपत्नीक
एतत्ते जलमवनेनिक्ष्व ॐ ये चात्र त्वामनु यांश्च
त्वमनु तस्मै ते स्वधेति पितृपिण्डसेचनम् ।
पिण्डपात्रमधोमुखं कृत्वा बद्धाञ्जलि ॐ अत्र
पितरो मादयध्वं यथाभागमावृषायध्वमिति
जपः । अपः स्पृष्ट्वा वामेन परावृत्य उदङ्मुखश्च
प्राणास्त्रिः संयम्य ।
ॐ वसन्ताय नमस्तुभ्यं ग्रीस्माय च नमो नमः ।
वर्षाभ्यश्च शरत्संज्ञ ऋतवे च नमः सदा ॥
हेमन्ताय नमस्तुभ्यं नमस्ते शिशिराय च ।
माससंवत्सरभ्यश्च दिवसेभ्यो नमो नमः ॥
ॐ षड्भ्य ऋतुभ्यो नमः पितृभ्यो नमः । इति
जपः । वामेनेव परावृत्य दक्षिणामुखः अमी
मदन्त पितरो यथाभागमावृषायिषत। इति
जपः । वासः शिथिलीकृत्याञ्जलिं कृत्वा ॐ
नमो वः पितरः पितरो नमो वः । इति जपः ।
गृहान्नः पितरो दत्त । इति गृहवीक्षणम् ॥

| | | |
|---|---|---|
| | रजः मधु द्यौरस्तु नः पिता । मधुमान्नो वन-स्पतिर्मधुमानस्तु सूर्य्यो माध्वीर्गावो भवन्तु नः ॥ मधु मधु मधु इति जपः । यथा सुखं बाग्यता जुषध्वमिति ब्रूयात् । भुक्तवत्सु सप्तव्याधादिकं पितृस्तोत्रं जपत् । ॐ सप्तव्याधा दशार्णेषु मृगाः कालाञ्जरे गिरौ । चक्रवाकाः सरद्वीपे हंसाः सरसि मानसे ॥ तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः । प्रस्थिता दूरमध्वानं यूयं तेभ्योऽवसीदत ॥ | ॐ सदो वः पितरो देष्मः । इति पिण्डवीक्ष-णम् । ॐ एतद्वः पितरो वासः इत्युच्चार्य्य अमुकगोत्र इत्यादिना एतत्ते वासः ॐ ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा । दशाभवसूत्रदानम् । वामेन पाणिना उदक पात्रं गृहीत्वा । ॐ ऊर्ज्जं वहन्तीरमृतं घृतं पयः |

कीलालं इत्यादिना पिण्डोपरि
बारिधारा-
त्यागः । पूर्वस्थापितपात्रशेषोदकैः
प्रत्येकं पिण्ड-
सेचनम् । पिण्डवाह्येन गन्धादिदानम् ।
पिण्डो-
परि कुशं हस्तञ्च दत्त्वा ॐ अक्षन्नमी
मदन्त-
ह्यवप्रिया अधूषत अस्तोषत स्वभानवो
विप्रा न
विष्ठ्या मतीयो यान्विन्द्र ते हरीति जपः
।
इत्थं मातामहादेर्ब्राह्मणानामाचमनं
सुसुप्रो-
क्षितमस्त्विति भूम्यभ्युक्षणं कृत्वा ।
अपां मध्ये स्थिता देवा सर्व्वमप्सु
प्रतिष्ठितम् ।
ब्राह्मणस्य करे न्यस्ताः शिवा आपो
भवन्तु
नः ॥
शिवा आपः सन्त्विति हस्ते ब्राह्मणस्य
जल-
दानम् ।
लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे
।
लक्ष्मीर्वस्ते सदा गोष्ठे सौमनस्यं सदास्तु
मे ॥
मीमनस्यमस्तु पुष्पदानम् ।
ॐ अक्षतञ्चास्तु मे पुण्यं शान्तिः
पुष्टिर्धृतिश्च
मे ।
यद्यत् श्रेयस्करं लोके तत्तदस्तु सदा
मम ॥
ॐ अक्षतञ्चारिष्टञ्चास्तु यवतण्डुलदानम्
। अमुक-
गोत्राणामस्मत् पितृ-पितामह-
प्रपितामहानां
सपत्नीकानां
दत्तमिदमन्नपानादिकमक्षय्यमस्तु

अस्य मध्वः पिबत मादयध्वं
तृप्ता यात पथिभिर्देवयानैः ॥
इति पित्रादिविसर्ज्जनम् ॥
ॐ आ मा वाजस्य प्रसवो जगम्या-
देमे द्यावा पृथिवी विश्वरूपे ।
आ मा गन्तु पितरा मातरा युव-
मा मा सोमोऽमृतत्वाय गम्यात् ॥
इति देवविसर्ज्जनम् ॥
ॐ अभिरम्यतामित्युक्ते अभिरताः स्म इति
ब्राह्मणैरनुज्ञातस्य निवर्त्तनम् । गवादिषु
पिण्ड-
प्रतिपादनमिति ।
एष श्राद्धविधिः प्रोक्तः पठतां पापनाशनः ।
अनेन विधिना श्राद्धं कृतं वै यत्र कुत्रचित् ॥
अक्षयं स्यात् पितॄणाञ्च स्वर्गप्राप्तिर्ध्रुवा तथा ।
इत्युक्तं पार्व्वणश्राद्धं पितॄणां ब्रह्मलोकदम् ॥”
इत्याद्ये गारुडे पार्व्वणश्राद्धम् २२२ अध्यायः
॥
ब्रह्मोवाच ।
“नित्यश्राद्धं प्रवक्ष्यामि पूर्व्ववत्तद्विशेषयेत् ॥
ॐ अमुकसगोत्राणामस्मत्पितृपितामहप्रपि
तामहानाममुकशर्म्मणां सपत्नीकानां श्राद्धं
सिद्धान्नेन युष्मभ्यमहं करिष्ये ।
आसनादिकमत्र स्याद्विश्वे देवविवर्ज्जितम् ।
वृद्धिश्राद्धं प्रवक्ष्यामि पूव्ववत्तद्विशेषकम् ॥
जातपुत्त्रमुखदर्शनादौ वृद्धिश्राद्धे
पूर्व्वाभिमुखेषु
दक्षिणोपवीतिषु मधुयववदरमिश्राः पिण्डा दैव
तीर्थेन नमस्कारान्तेन
दक्षिणोपचारेणकर्त्तव्यम्
दक्षिणजानु गृहीत्वा ॐ अद्यास्मदीयामुकवृद्धौ
अमुक-गोत्राणामस्मत्पितृ-पितामहप्रपिता-
मह-मातामह-प्रमातामह-वृद्धप्रमातामहानां
अमुकशर्म्मणां सपत्नीकानां नान्दीमुखानां
श्राद्धेकर्त्तव्ये वसुसत्यसंज्ञकानां विश्वेषां
देवानां
श्राद्धं सिद्धान्नेन युष्मासु मया कर्त्तव्यम् । इति
देवब्राह्मणामन्त्रणं ॐ करिष्यसीति तेनोक्ते
इत्थमेव मातृपितामहीप्रपितामहीनांदेवब्राह्म

तामहीप्रभृतीनामनुज्ञापनंआसनं
गन्धादि-
दानं अच्छिद्रावधारणम् । इत्थं
प्रपितामहा-
दीनां अनुज्ञापनम् । आसनं आवाहने
गन्धादिदानम् । एवं वृद्धप्रमातामहादीनां
अनुज्ञापनादिकरणम् । ॐ
वसुसत्यसंज्ञकेभ्यो
विश्वेभ्यो देवेभ्य एतदन्नं सघृतं सपानीयं
सव्य-
ञ्जनं सवदरे सदधि प्रतिषिद्धवर्ज्जितं
नमः ।
इति अन्नसङ्कल्पनम् । ॐ अमुकमोत्रे
मत्-
प्रपितामहि अमुकीदेवि नान्दिमुखि
एतदन्नं
सवदरं सदधि नमः । इत्थं
पितामहौमातृ-
ब्राह्मणे । ततः प्रपितामहादिब्राह्मणपात्रे
ॐ
अमुकगोत्रेभ्यो
मत्प्रपितामहपितामहपितृभ्य
एतदन्नं सवदरं सदधि सव्यञ्जनं सपानीयं
नमः ।
एवं वृद्धप्रमातामहादिभ्यः ॥ * ॥
एकोद्दिष्टं पुरावश्यं तद्विशेषं वदे शृणु ॥
प्रथमं निमन्त्रणं पादप्रक्षालनं आसनम् ।
अद्य
अमुकगोत्रस्य मत्पितुरसुकव्वेशर्म्मणः
प्रति-
सांवत्मरिकमेकोद्दिष्टं श्राद्धं सिद्धान्नेन
युष्मासु
अहं करिष्ये । श्राद्धकरणानुज्ञापनम् ।
आसनं
अर्घ्यः । गन्धादिदानं पितृस्थापनम् ।
अन्न-
संङ्कल्पनं जप्यं निवीती
उत्तराभिमुखीभूया-

इति पित्रादिब्राह्मणहस्ते
सतिलजलदानम्।
यजमानस्य प्रश्ने अस्त्विति ब्राह्मणो
वदेत् ।
एवं मातामहादीनामक्षय्यम्। आशिषः ।
ॐ अघोराः पितरः सन्तु गोत्रं नो
वर्द्धताम् ।
दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव
च ।
श्रद्धाच नो मा व्यगमद्बहु देयञ्च
नोऽस्त्विति ॥
अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि ।
याचितारश्च नः सन्तु मा च याचिष्म
कञ्चन ॥
एता एवाशिषः सन्तु सौमनस्यमस्तु
सुसुखं
चास्तु इत्युक्ते पिण्डपात्रे
अर्घ्यसम्बन्धान् कुशान्
पवित्राणि चास्तीर्य्य पित्रादिब्राह्मणं
स्पृष्ट्वा
स्वधां वाचयिष्ये ॐ वाच्यतां ॐ
पितृपितामह-
प्रपितामह-मातामह-प्रमातामह-
वृद्धप्रमाता-
महेभ्यो यथानामशर्म्मभ्यः सपत्नीकेभ्यः
स्वधो-
च्यतां अस्त स्वधा इत्युक्ते ऊर्ज्जं
वहन्तीरमृतं
घृतं इति पिण्डानामुपरि वारिधारां
दद्यात् ।
तत ॐ विश्वेदेवा अस्मिन् यज्ञे प्रीयन्तां
देव-
ब्राह्मणहस्ते यवोदकदानं ॐ
प्रीयन्तामिति
तेनोक्त ॐ देवताभ्य इति त्रिर्ज्जपेत् ।
अधो-
मुखपिण्डपात्राणि चालयित्वा
आचम्यदक्षिणो
पवोती पूर्व्वाभिमुखः ॐ अमुकसगोत्राय
अमुकशर्म्मणे ब्राह्मणाय सपत्नीकाय
श्राद्ध-

णामन्त्रणम् । तत ॐ अमुकगोत्राया मत्-
प्रतितामह्या अमुको देव्या नान्दोमुख्याः श्राद्धं
सिद्धान्नेन युष्मासु मया कर्त्तव्यमिति प्रपिता-
महीब्राह्मणामन्त्रणम् । करिष्यसीति तेनोक्ते
इत्थमेव पितामहाब्राह्मणामन्त्रणं मातृब्राह्मणा
मन्त्रणञ्च । तत ॐ अद्यामुकवृद्धौ अमुक-
गोत्राणामस्मत्-प्रपितामह-पितामह-पितॄणां
नान्दोमुखानां श्राद्धं सिद्धान्नेन युष्मासु मया
कर्त्तव्यमिति ब्राह्मणामन्त्रणं ॐ करिष्यसीति
तेनोक्ते इत्थमेव वृद्धप्रमातामहादिब्राह्मणा-
मन्त्रणम् ।
देवपितृसर्व्वदेवब्राह्मणश्राद्धकरणानु-
ज्ञापनम् । आसने ॐ विश्वे देवास आगत
शृणु-
ताम् इमं हवं एदं वर्हिर्निषीदत ॐ विश्वे-
देवाः शृणुतेमं हवं ये मेऽन्तरीक्षे य उपद्यविष्ट
ये अग्निजिह्वा उतवा यजत्रा आसद्यास्मिन्
वर्हिषि मादयध्वम् । ॐ आगच्छन्तु महाभागा
विश्वेदेवा इति विश्वेदेवावाहनम् । गन्धादि-
दानञ्च । अच्छिद्रावधारणवाचनम्। ततः
प्रपि-

तिथिश्राद्धं कुर्य्यात् । ततस्तृप्तिं ज्ञात्वा
दक्षि-
णाभिमुखो वामोपवीती उच्छिष्टसमीपे ये
अग्निदग्धा इति अन्नविकिरणम् । ॐ
अमुक-
गोत्र पितुरमुकदेवशर्म्मन् एतत्ते
जलमवने-
निक्ष्व ये चात्र त्वामनु यांश्च त्वमनु तस्मै
ते
स्वधा इति रेखोपरि
दक्षिणामुखवारिधारा-
दानम् ।” इति गारुडे २२३ अध्यायः ॥
* ॥
ब्रह्मोवाच ।
“सपिण्डीकरणं वक्ष्ये पूर्णेऽब्दे
तत्क्षयाहनि ।
कृत्वा कुतपकाले तु प्रेतादेः पितृलोकदम्
।
सपिण्डीकरणं कुर्य्यात् अपराह्णे तु
पूर्व्ववत् ॥
पितामहादिब्राह्मणनिमन्त्रनम्। ॐ
पुरोरवो
माद्रवःसंज्ञकेभ्यो देवेभ्य एतदासनं नमः
।
वामपार्श्वे चासनदानम् । ततः पितामह-
प्रपितामहवृद्धप्रपितामहानांसपत्नीकानां
श्राद्धमहं करिष्ये । इत्यनुज्ञाग्रहणम्।
पात्र-
त्रयकरणं पात्रोपरि कुशं दत्त्वा पात्रान्तरेण
पिधाय अच्छिद्रावधारणान्तं परिसमाप्य
तथैव
पितुरपि सपत्नीकस्य प्रेतान्तनाम्ना
श्राद्धकर-
णानुज्ञापनम् । देवपात्राच्छिद्रावधारणम्।
तं
परिसमाप्य
पितामहप्रपितामहवृद्धप्रपितामह-
पितृक्रमेण पात्राणां मनाक् वाचनं
उद्घाटनं
कृत्वा ये समानाः संमनसः पितरो
यमराज्ये ।

| | | |
|---|---|---|
| प्रतिष्ठार्थं दक्षिणामिदं रजतं तुभ्यमहं ददे इति दक्षिणां दद्यात् एवं मातामहादौ ततो देवब्राह्मणाय दक्षिणादानम् । ततः पितृ-ब्राह्मणे । पिण्डपात्रमुत्तानं कृत्वा ॐ पिण्डाः<br>सम्पन्नाः ॐ सुसम्पन्ना इति पिण्डे क्षीरधारां<br>दत्त्वा पिण्डचालनम् ।<br>ॐ वाजे वाजे वतवाजिनो नो<br>धनेषु विप्रा अमृता ऋतज्ञाः । | | तेषां लोकः स्वधा नमो यज्ञो देवेश कल्प्यताम् ॥<br>ये समानाः समनसो जीवा जीवेषु मामकाः ।<br>तेषां श्रीर्मयी कल्प्यतां अस्मिन् लोके शतं<br>समाः ॥<br>एतन्मन्त्रद्वयेन पितृपात्रोदकं पितामहप्रपिता-<br>महवृद्धप्रपितामहपात्रे दत्त्वा वृद्धप्रपितामह-<br>पात्रं परित्यज्य<br>पितामहप्रपितामहयोरुदकं<br>पवित्रञ्च पितृपात्रे निक्षिपेत् । ततः पितृ- |

ब्राह्मणहस्ते पवित्रदानम् । पात्रपुष्पेण शिरसः
करपादार्च्चनं हस्तेऽन्यजलदानं हस्ताभ्यां
पात्र-
मुत्थाप्य ॐ या दिव्येति च पठित्वा अमुक-
गोत्र मत्पितरमुक प्रेत एष ते अर्घ्यो ये
चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा इति
पितृब्राह्मणहस्ते स्तोकमर्घ्योदकं पितृतीर्थेन
दत्त्वा पितामहब्राह्मणहस्ते पवित्रदानं पात्र-
पुष्पेण शिरः करपादार्च्चनं
हस्तेऽन्यजलदानम् ।
हस्ताभ्यां पात्रमुत्थाप्य या दिव्येति पठित्वा
अमुकगोत्र मत्पितामह अमुकदेवशर्म्मन्
सपत्नीक एष तेऽर्घ्यः स्वधा । पितृपात्रेणैव
पितामहब्राह्मणहस्ते स्तोकमर्घ्योदकं दत्त्वा-
शेषमुदवां पिण्डसेचनार्थं पात्रान्तरे निधाय
तेनैव पात्रेण पितामहब्राह्मणानां हस्तस्थं
उदकं पवित्रञ्च गृहीत्वा पितृब्राह्मणवामपार्श्वे-
दक्षिणाग्रकुशोपरि पितृभ्यः स्थानमसीति
अधोमुखपात्रस्थापनम् । पितामहानां
गन्धादि-
दानं अग्नौकरणम् । देवानां अवशिष्टान्नं
पितामहादिपात्रे क्षिपेत् । पितामहादिपात्रा-
भिमन्त्रणादिवाचनपर्य्यन्तं क्रमेण समाप्य
पितृ
ब्राह्मणपात्राभिमन्त्रणं अङ्गुष्ठनिवेशनं तिल-
विकिरणम् । सिद्धान्नविकिरणं कृत्वा अमुक-
गोत्र मत्पितरमुक प्रेत एतत्ते अन्नं सघृतं
सपानीयं सव्यञ्जनं प्रतिषिद्धवर्जितं ये चात्र
त्वामनु यांश्च त्वमनु तस्मै ते स्वधा । ततो
देवप्रभृति आपोशानं दद्यात् । अतिथौ
प्राप्ते अतिथिश्राद्धं कुर्य्यात् अस्मिन्नवसरे ।
ततो विकिरणम् । पितामहादौ प्रश्नं कृत्वा
पितृब्राह्मणे ॐ स्वदितं भवद्भिरिति प्रश्नः
अमुकगोत्र मत्पितामह अमुकशर्म्मन् सप-
त्नीक एष ते पिण्डो ये चात्र त्वामनु यांश्च
त्वमनु तस्मै ते स्वधा । एवमन्ययोः । पिण्ड-
दानमच्छिद्रमस्तु । सङ्कल्पसिद्धिरस्तु इति
वाचनं
कृत्वा ततः पितप्रे तपिण्डपातनं ॐ संकल्प-
यवोदकदानम् । ॐ देवताभ्य इति
त्रिर्ज्जपः ।
पिण्डान् पात्रे तोलयित्वा आचम्य
पितामहा-
दिभ्यो दक्षिणां दत्त्वा ततः पितृब्राह्मणाय
ततो
अतिथिब्राह्मणाय च । आशिषो मे
दीयन्ता-
मित्याशीःप्रार्थनं आशिषः प्रतिगृह्यन्तां
इत्युक्ते
दातारो नोऽभिवर्द्धन्तामिति पात्रमुत्तानं
कृत्वा
वाजे वाजे इति विसर्ज्जनम् ।
अभिरम्यतामिति
पितृब्राह्मणविसर्जनम् ।
सपिण्डीकरणश्राद्धं व्यासप्रोक्तं मया तव
।
श्राद्धं विष्णुः श्राद्धकर्त्ता फलं श्राद्धादिकं
हरिः ॥”
इति गारुडे २२४ अध्यायः ॥ * ॥
तिथ्यादिविशेषे श्राद्धकरणफलं यथा, --
व्यास उवाच ।
“अथ श्राद्धममावास्यां प्राप्य कार्य्यं
हिजोत्तमैः ।
पिण्डान्नाहार्य्यकं
भक्तभुक्तिमुक्तिफलप्रदम् ॥
पिण्डान्नाहार्य्यकं श्राद्धं क्षीणे राजनि
शस्यते ।
अपराह्णे द्विजातीनां प्रशस्ते नामिषेण तु
॥
प्रतिपत्प्रभृति ह्येतास्तिथयः कृष्णपक्षके
।
चतुर्द्दशीं वर्ज्ज यित्वा प्रशस्ता
ह्युत्तरोत्तराः ॥
अमावास्याष्टकास्तिस्रः पौषमाघादिषु
त्रिषु ।
तिस्रश्चान्वष्टकाः पुण्या माघस्य दशमी
तथा ॥
त्रयोदशी मघायुक्ता वर्षासु तु विशेषतः ।
षष्ठ्यां द्युतिं कृषिञ्चापि सप्तम्यां लभते
नरः ॥
अष्टम्यामपि बाणिज्यं लभते श्राद्धदः
सदा ।
स्यान्नवम्यामेकखुरं दशम्यां द्विखुरं बहु
॥
एकादश्यान्तथा रूप्यं ब्रह्मवर्च्चस्विनः
सुतान्
द्वादश्यां जातरूपन्तु रजतं रौप्यमेव च ॥
ज्ञातिश्रैष्ठं त्रयोदश्यां चतुर्द्दश्यान्तु
कुप्रजाः
पञ्चदश्यां सर्व्वकाममाप्नोति श्राद्धदः
सदा ॥
तस्माच्छ्राद्धं न कर्त्तव्यं चतुर्द्दश्यां
द्विजातिभिः ।
शस्त्रेण तु हतानां वै तत्र श्राद्धं प्रकल्पयेत्
॥
द्रव्यब्राह्मणसम्पत्ती न कालनियमः कृतः
।
तस्माद्भोगापवर्गार्थं श्राद्धं कुर्य्यात्
द्विजातिभिः ।
कर्म्मारम्भेषु सर्व्वेषु कुर्य्यादाभ्युदयं पुनः
।
पुत्रजन्मादिषु श्राद्धं पार्व्वणं पर्व्वणि
स्मृतम् ॥
अहन्यहनि नित्यं स्यात् काम्यं नैमित्तिकं
तथा
एकोद्दिष्टन्तु विज्ञेयं वृद्धिश्राद्धञ्च पार्वणम्
॥
एतत् पञ्चविधं श्राद्धं मनुना परिकीर्त्तितम्
।
यात्रायां षष्ठमाख्यातं तत् प्रयत्नेन
पालयेत् ॥
शुद्धये सप्तमं श्राद्धं ब्रह्मणा परिकीर्त्तितम्
।
दैविकं चाष्टमं श्राद्धं यत् कृत्वा मुच्यते
भयात् ॥
सन्ध्यारात्र्योर्न कर्त्तव्यं रात्रोरन्यत्र
दर्शनात् ।

सिद्धिरस्त्विति वाचनम् । तंसमाप्य पिण्डं त्रिधा
कृत्वा ये समानाः समनसः इति मन्त्रद्वयं
पठित्वा पितामहप्रपितामहवृद्धप्रपितामह
पिण्डेषु क्षिपेत् । पिण्डेषु गन्धादिकं पिण्डचाल
नम् । अतिथिब्राह्मणे स्वदितमित्यादि प्रश्नः ।
ब्राह्मणानामाचमनं भुक्तक्रमेण ताम्बूलदानं
सुसुप्रोक्षितमस्तु शिवा आपः सन्तु वृद्धप्रपिता-
महादिक्रमेण ब्राह्मणानां हस्ते जलदानम् ।
गोत्रस्याक्षय्यमस्तु पितृब्राह्मणहस्ते ॐ उप-
तिष्ठतामिति सतिलजलदानं नामगोत्रेण उप-
तिष्ठतामिति तेनोक्ते अघोराः पितरः सन्तु
मन्त्विति उक्ते स्वधां वाचयिष्ये इति पिता-
महादिब्राह्मणानुज्ञापनम्ॐ वाच्यतामित्युक्ते
पितामहादिभ्यः स्वधोच्यताम् अस्तु स्वधा इत्युक्ते
पितृब्राह्मणे पितृभ्यः स्वधोच्यतां इति अस्तु
स्वधा इत्युक्ते ॐ ऊर्ज्जं वहन्तीरमृतं इति
दक्षिणाभिमुखवारिधारात्यागः। ॐ विश्वेदेवा
अस्मिन् यज्ञे प्रीयन्तामिति देवब्राह्मणहस्ते

शस्यपाकश्राद्धकाला नित्यं प्रोक्ता दिने दिने ॥
नैमित्तिकं हि कर्त्तव्यं ग्रहणे चन्द्रसूर्य्ययोः ।
बान्धवानाञ्च मरणे नारकी स्यादथान्यथा ॥
काम्यानि चैव श्राद्धानि शस्यन्ति ग्रहणादिषु ।
अयने विषुवे चैव व्यतीपातेऽप्यनन्तकम् ॥
संक्रान्त्यामक्षयं श्राद्धं तथा जन्मदिनेष्वपि ।
नक्षत्रेषु च सर्व्वेषु तथा कामे विशेषतः ॥
स्वर्गन्तु लभते कृत्वा कृत्तिकासु द्विजोत्तमः ।
अपत्यमथ रोहिण्यां सौम्ये तु ब्रह्मवर्च्चसम् ॥
मुद्राणां कर्म्मणां सिद्धिमार्द्रायां शस्यमेव च ।
पुनर्व्वसौ तथा भूमिं श्रियं पुष्पे तथैव च ॥
सर्व्वान् कामान् तथा सर्पैपैत्रे सौभाग्यमेव च
अर्य्यमणे त धनं विद्यात् फाल्गुन्यां पाप-नाशनम् ॥
ज्ञातिश्रेष्ठं तथा हस्ते चित्रायां सुबहून् सुतान् ।
बाणिज्यसिद्धिं स्वातौ च विशाखायां सुवर्णकम् ।
मैत्रे बहूनि मित्राणि राज्यं शक्रे तथैव च ।
मूले कृषिं लभेद्यानं सिद्धिमाप्ये तथैव च ॥
सर्व्वान् कामान् वैश्वदेवे श्रैष्ठन्तु श्रवणे पुनः ।
श्रविष्ठायां तथा कामान् वारुणेच क्ष परं बलम्
अजैकपादके कुर्य्यादहिव्रध्ने गृहे शुभम् ।
रेवत्यां बहवो रोगा ह्यश्विन्यां तुरगांस्तथा ॥
याम्ये चाजीवनं तस्मात् यदि श्राद्धं प्रयच्छति

देशानाञ्च विशेषेण भवेत् पुण्यमनुत्तमम् ॥
गयायामक्षयं श्राद्धं प्रयागेऽमरकण्टके ।
गायन्ति पितरो गाथां कीर्त्तयन्ति मनीषिणः ॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
यजेत् वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥
एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः ।
तेषान्तु समवेतानां यद्योकोऽपि गयां व्रजेत् ॥
गयां प्राप्यानुषङ्गेण यः श्राद्धं सम्यगाचरेत् ।
तारिताः पितरस्तेन स याति परमां गतिम् ॥
वराहपर्व्वते चैव गङ्गायाञ्च विशेषतः ।
वाराणस्यां विशेषेण यत्र देवः स्वयं हरः ॥
गङ्गाद्वारे प्रभासे च विन्ध्यके नीलपर्वते ।
कुरुक्षेत्रे च कुब्जाम्रे भृङ्गतुङ्गे महालये ॥
केदारे फल्गुतीर्थे च नैमिषारण्य एव च ।
सरस्वत्यां विशेषेण पुष्करे च विशेषतः ॥
नर्म्मदायां कुशावर्त्ते श्रीशैले भद्रकर्णके ।
वेत्रवत्यां विपाशायां गोदावर्य्यां विशेषतः ॥
एवमादिष्वथान्येषु तीर्थेषु पुलिनेषु च ।
नदीनाञ्चैव तीरेषु तुष्यन्ति पितरः सदा ॥
* ॥
ब्रीहिभिश्च यवैर्म्मांसैरद्भिर्म्मूलफलेन च ।
श्यामकैश्च तथा शाकैर्नीवारैश्च प्रियङ्गुभिः ॥
गोधूमैश्च तिलैर्म्मुद्गनेर्म्मासं प्रीणयते पितॄन् ।
आम्रानाम्रातकानिक्षून् मृद्वीकांश्च सदाडि-
मान् ॥
विदारीश्च भरुण्डांश्च श्राद्धकाले प्रदापयेत् ।

|  |  |  |
| --- | --- | --- |
|  | आदित्यवारे चारोग्यं चान्द्रे सौभाग्यमेव च ॥<br>कौजे सर्व्वत्र विजयं सर्व्वान् कामान् बुधस्य च<br>विद्यामभीष्टं जीवे तु धनं वै भार्गवे पुनः ।<br>शनैश्चरे लभेदायुः प्रतिपत्सु शुभान् सुतान् ।<br>कन्यकां वै द्बितीयायां तृतीयायां भुवन्तथा ॥<br>पशून् क्षुद्रांश्चतुर्थ्यान्तु पञ्चम्यां शोभनान् सुतान् । | लाजन्माधुयुतान्दद्यात् शक्तून् शर्कया सह<br>दद्याच्छ्राद्धे प्रयत्नेन शृङ्गाटककशेरुकान् ॥<br>द्वौ मासौ मत्स्यमांसेन त्रीन्मासान् हारिणेन तु ।<br>औरभ्रे णाथ चतुरः शाकुनेन तु पञ्च च ॥<br>षण्माषान् छागमांसेन पाषतेनाथ सप्त व ।<br>अष्टावेणस्य मांसेन रौरवेण नवैव तु ॥<br>दशमासांस्तु तप्यन्ति वराहमहिषामिषैः । |

शशकूर्म्मयोस्तु मांसेन मासानेकादशैव तु ॥
संवत्सरन्तु गव्येन पयसा पायसेन वा ।
वाध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥
कालशाकं महाशल्कं खड्गिनोऽप्यामिषं मधु ।
आनन्त्यायैव कल्प्यन्ते मुन्यन्नानि च सर्व्वशः ॥
क्रीत्वा लब्ध्वा स्वयंवाथ मृतानाहृत्यवै द्विजः ।
दद्यात् श्राद्धे प्रयत्नेन यदस्याक्षयमुच्यते ॥ * ॥
पिप्पलिं शिग्रु कञ्चैव तथा चैव मसूरकम् ॥
कुष्माण्डालाववार्त्ताकान् भूतृणं सुरसं तथा ।
कुसुम्भं पिण्डमूलं वै तण्डुलीयकमेव च ॥
राजमाषांस्तथा क्षीरं माहिषञ्च विवर्जयेत् ।
कोद्रवान् कोविदारांश्च पालङ्कीं मरिचं तथा ।
वर्जयेत् सर्व्वयत्नेन श्राद्धस्थाने द्विजोत्तमः ॥”
इति कौर्म्मे उपविभागे १९ अध्यायः ॥
व्यास उवाच ।
“स्नात्वा यथोक्तं संतर्प्य पितॄन् चन्द्रक्षये द्विजः
पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यात् सौम्यमनाः शुचिः ॥
पूर्व्वमेव परीक्षेत ब्राह्मणं वेदपारगम् ।
तीर्थं तद्धव्यकव्यानां प्रदाने वातिथिः स्मृतः ॥
ये सोमपा विरजसो धर्म्मज्ञाः शान्तचेतसः ।
व्रतिनो नियमस्थाश्च ऋतुकालाभिगामिनः ॥
पञ्चाग्निरप्यधीयानो यजुर्व्वेदविदेव च ।
एव वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः ।
अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरतुष्ठितः ॥ * ॥
मातामहं मातुलञ्च स्वस्रीयं श्वशुरं गुरुम ।
दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोज-येत् ॥ * ॥
न श्राद्धे भोजयेन्मित्रं धनैः कार्य्योऽस्य संग्रः ।
पैशाची दक्षिणा सा हि नैवामुत्र फलप्रदा ॥
कामं श्राद्धेऽर्च्चयेन्मित्रं नाभिरूपमपि त्वरिम् ।
द्विषता हि हविर्भुक्तं भवति प्रेत्य निष्फलम् ॥
ब्राह्मणस्त्वनधीयानस्तुणाग्निरिवशाम्यति ।
तस्मै हव्यं न दातव्यं न च भस्मनि हूयते ॥
यथौषरे बीजसुप्त्वा न वप्ता लभते फलम् ।
तथानृचे हविर्द्दत्त्वा न दाता लभते फलम् ॥
यावतो ग्रसते पिण्डान् हव्यकव्ये ष्वमन्त्रवित् ।
तावतो ग्रसते प्रेत्य दीप्तान् शूलर्ष्ट्यंयोगुडान् ॥
अपि विद्याकुलैर्मुक्ता हीनवृत्ता नराधमाः ।
यत्रेते भुञ्जते हव्यं तद्भवेदासुरं द्विजाः ॥
यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् ।
एष त्वब्राह्मणो नार्हः श्राद्धादिषु कदाचन ॥
शूद्रप्रेष्यो भृतो राज्ञा वृषलग्रामयाजकः ।
वधबन्धोपजीवी च षडेते ब्रह्मबन्धवः ॥
दत्तात्मयोगो वृत्त्यर्थं पतितान्मनुरब्रवीत् ।
वेदविक्रयिणो ह्येते श्राद्धादिषु विगर्हिताः ॥
श्रुतिविक्रयिणो ये तु परपूर्व्वासमुद्भवाः ।
अधमान् ये याजयन्ति पतितास्ते प्रकीर्त्तिताः ॥
असंस्कृताध्यापका ये भृत्यर्थेऽध्यापयन्ति ये ।
अधीयते तथा वेदान् पतितास्ते प्रकीर्त्तिताः ॥
बुद्धश्रावकनिर्ग्रन्थाः पञ्चरात्रिविदो जनाः ।
कापालिकाः पाशुपताः पाषण्डा ये च तद्विधाः ॥
ब्राह्मभावान्निरस्ताश्च वर्ज्ज नीयाः प्रयत्नतः ॥
शूद्रान्नरसपुष्टाङ्गः सन्ध्योपासनयर्ज्जितः ।
महायज्ञविहीनश्च ब्राह्मणः पंक्तिदूषकः ॥
अधीतनाशनश्चैव स्नानहोमविवर्ज्जितः ।
तामसो राजसश्चैव ब्राह्मणः पंक्तिदूषकः ॥
बहुनात्र किमुक्तेन विहितान् ये न कुर्वते ।
निन्दितानाचरन्त्येव वर्ज्जनीयाः प्रयत्नतः ॥”
इति कौर्म्मे उपविभागे २० अध्यायः ॥ * ॥
“गोमयेनोदकैर्भूमिं शोधयित्वा समाहितः ।
सन्निपात्र द्विजान् सर्व्वान् साधुभिः सन्निमन्त्र-येत् ॥
श्वो भविप्यति मे श्राद्धं पूर्व्वेद्युरभिपूज्य च ।
असम्भवे परेद्युर्व्वा यथोक्तलक्षणैर्युतान् ॥
तस्य ते पितरः श्रुत्वा श्राद्धकालमुपस्थितम् ।
अन्योन्यमनसा ध्यात्वा सम्पतन्ति मनोजवाः ॥
ब्राह्मणैस्ते सहाश्नन्ति पितरो ह्यन्तरीक्षगाः ।
वायुभूताश्च तिष्टन्ति भुक्त्वा यान्ति परां गतिम् ॥
आमन्त्रिताश्च ते विप्राः श्राद्धकाल उपस्थिते ।
वसेयुर्नियताः सर्वे ब्रह्मचर्य्यपरायणाः ॥
अक्रोधनोऽत्वरोऽमत्तः सत्यवादी समाहितः ।
भारं मैथुनमध्वानं श्राद्धकृद्वर्जयेज्जपम् ॥
आमन्त्रितो ब्राह्मणो यः अन्यं वै कुरुते क्षणम्

सुबह्वृक् च त्रिषवणस्त्रिमधुर्व्वाथ यो भवेत्
॥
त्रिणाचिकेतश्छन्दोगो ज्ये ष्ठसागम एव च
।
अथर्व्व शिरसोऽध्येता रुद्राध्यायी
विशेषतः ॥
अग्निहोत्रपरो विद्वान् न्यायविच्च
षडङ्गवित् ।
मन्त्रब्राह्मणविच्चैव यश्च
स्याद्धर्म्मपाठकः ।
ऋषिव्रती ऋषिकश्च तथा द्वादशवार्षिकः
॥
ब्रह्मदेयार्थसन्तानो गर्भशुद्धः सहस्रदः ।
चान्द्रायणब्रतचरः सत्यवादी पुराणवित् ।
गुरुदेवाग्निपूजासु प्रसक्तो ज्ञानतत्परः ॥
विमुक्तः सर्व्वतो धीरो ब्रह्मभूतो
द्विजोत्तमः ।
महादेवार्च्चनरतो वैष्णवः पंक्तिपावनः ॥
अहिंसानिरतो नित्यमप्रतिग्राहकस्तथा।
सत्रिणो दाननिरता विज्ञेयाः पंक्तिपावनाः
॥
मातापित्रोर्हिते युक्तः प्रातःस्नायी च वा
द्विजः
अध्यात्मविन्मुनिर्द्दान्तो विज्ञेयः
पंक्तिपावनः ॥
ज्ञाननिष्ठो महायोगी वेदान्तार्थविचिन्तकः
।
श्रद्धालुः श्राद्धनिरतो ब्राह्मणः पंक्तिपावनः
॥
वेदविद्याव्रतस्नातो ब्रह्मचर्य्यापरः सदा ।
आथर्व्वणो मुमुक्षुश्च ब्राह्मणः पंक्तिपावनः
॥
असमानप्रवरको ह्यसगोत्रस्तथैव च ।
असम्बन्धी च विज्ञेयाः ब्राह्मणाः
पंक्तिपावनाः ॥
भोजयेद्योगिनं पूर्व्वं तत्त्वज्ञानरतिं यतिम् ।
अलाभे नैष्ठिकं दान्तमुपकुर्व्वाणकं तथा
॥
तदलाभे गृहस्थं वा मुमुक्षुं सङ्गवर्ज्जितम्
।

यस्याश्नन्ति हवोंष्येते दुरात्मानस्तु तामसाः
।
न तस्य तद्भवेच्छ्राद्धं प्रेत्य चेह फलप्रदम् ॥
अनाश्रमी यो द्विजः स्यादाश्रमी वा निरर्थकः
।
मिथ्याश्रमी च ये विप्रा विज्ञेयाः पंक्तिदूषकाः
॥
दुश्चर्म्मा कुनखी कुष्ठी श्वित्री च
श्यावदन्तकः ।
विद्धप्रजननश्चैव स्तेनः क्लीवोऽथ
नास्तिकः ॥
मद्यपो वृषलीसक्तो वीरहा दिधिषूपतिः ।
अगारदाही कुण्डाशी सोमविक्रयिणो द्विजाः
॥
परिवेत्ता तथा हिंस्राः परिवित्तिर्निराकृतिः ।
पौनर्भवः कुशीदी च तथा नक्षत्रदर्शकः ॥
गीतवादित्रनिरतो व्याधितः काण एव च ।
हीनाङ्गश्चातिरिक्ताङ्गो ह्यवकीर्णी तथैव च ॥
कन्यादूषी कुण्डगोलौं ह्यभिशस्तोऽथ देवलः
।
मित्रध्रुक् पिशुनश्चैव नित्यं भार्य्यानुवर्त्तकः ॥
मातापित्रोर्गुरोस्त्यागी दारत्यागी तथैव च ।
गोत्रभिद्भ्रष्टशौचश्च काण्डपृष्ठस्तथैव च ॥
अनपत्यः कूटसाक्षी याचको रङ्गजीवनः ।
ममुद्रयायी कृतहा तथा समयभेदकः ॥
वेदनिन्दापरश्चै व परदाररतास्तथा ।
द्विजनिन्दारताश्चैव वर्ज्याः श्राद्धादिकर्म्मसु
॥
कृतघ्नः पिशूनः क्रूरो नास्तिको वेदनिन्दकः
।
मित्रध्रुक् कुहकश्चैव विशेषात् पंक्तिदूषकाः ॥
सर्वे पुनरभोज्यान्नास्तदानार्हाहि कर्म्मसु ।

स याति रौरवं घोरं शूकरत्वं प्रयाति च ॥
आमन्त्रयित्वा यो मोहादपरं मन्त्रयेत्
द्विजम् ।
स तस्मादधिकः पापी
विष्ठाकीटोऽभिजायते ॥
श्राद्धे निमन्त्रितो विप्रो मेथुनं
योऽधिगच्छति
ब्रह्महत्यामवाप्नोति तिर्य्यग्योनौ स
गच्छति ॥
श्राद्धं कृत्वा तु भुक्त्वा च योऽध्वानं
प्रतिपद्यते ।
भवन्ति पितरस्तस्य तन्मासं
पांशुभोजनाः ॥
निमन्त्रितस्तु यः श्राद्धे प्रकुर्य्यात् कलहं
द्विजः
भवन्ति तस्य तन्मासं पितरो
मलभोजनाः ॥
तस्मान्निमन्त्रितः श्राद्धे नियतात्मा भवेत्
द्विजः
अक्रोधनः शौचपरः कर्त्ता चैव
जितेन्द्रियः ॥
श्वोभूते दक्षिणां गत्वा दिशं दर्भान्
समाहितः
समूलानाहरेद्वापि दक्षिणाग्रान्
सुनिर्म्मलान् ॥
दक्षिणाप्लवनं स्निग्धं विविक्तं
शुभलक्षणम् ।
शुचिं देशं विविक्तञ्च गोमयेनोपलेपयेत् ॥
नदीतीरेषु तीर्थेषु स्वभूमौ चैव सानुषु ।
विविक्तेषु च तुष्यन्ति दत्ते च पितरं सदा
॥
पारक्ये भूमिभागे तु पितॄणां नैच निर्वपेत्
।
स्वामिभिस्तद्विहन्ये त मोहात् यत्
क्रियते नरेः ॥
अटव्यः पर्व्वताः
पुण्यास्तीर्थान्यायतनानिच ।
सर्व्वाण्यस्वामिकान्याहुर्न हि तेषु
परिग्रहः ॥
तिलानवकिरेत्तत्र सर्वतो बन्धयेदजान् ।

| | | |
|---|---|---|
| सर्व्वालाभे साधकं वा गृहस्थमपि भोजयेत् ॥<br>प्रकृतेर्गुणतत्त्वज्ञो यस्याश्नाति यतिर्हविः ।<br>फलं वेदविदां तस्य सहस्रादतिरिच्यते ॥<br>तस्मात् यत्नेन योगीन्द्रमीश्वरज्ञानतत्परम्।<br>योजयेद्धष्यकव्येषु त्वलाभे त्वितरान् द्विजान् ॥ | | असुरोपहतं सर्व्वं तिलैः शुध्यत्यजेन वा ॥<br>ततोऽन्नं बहुसंस्कारं नैकव्यञ्जनमच्युतम् ।<br>चोष्यपेयसमृद्धञ्च यथाशक्त्या प्रकल्पयेत् ॥<br>ततो निवृत्ते मध्याह्ने न्यु प्तलोमनखान् द्विजान<br>अभिगम्य यथामार्गं प्रयच्छेद्दन्तधावनम् ॥<br>तैलमभ्यञ्जनं स्नानं स्नानोयञ्च पृथम्बिघम् ।<br>पात्रैरौडुम्बरैः कुर्य्यात् वैश्वदेवत्यपूर्व्वकम् ॥<br>ततः स्नात्वा विवृत्तेभ्यः प्रत्युत्थाय कृताञ्जलिः । |

पाद्यमाचमनीयञ्च संप्रयच्छेद्यथाक्रमम् ॥”
पुस्तकान्तरे विवृत्तेभ्यः स्थाने निमित्तेभ्य इति निवृत्तेभ्य इति च पाठः ॥
“ये चात्र विश्वदेवानां द्विजाः पूर्व्वं निमन्त्रिताः
प्राङ्मु खान्यासनान्येषां द्विदर्भोपहितानि च ॥
दक्षिणासुखयुक्तानि पितृणामासनानि च ।
दक्षिणाग्रैकदर्भाणि प्रोक्षितानि तिलोदकैः ॥
तेषूप्रवेशयेदेतानासनं संस्पृशन् द्विजः ।
आसध्वमिति संजल्पन्नासीरंस्ते पृथक् पृथक् ॥
द्वौ दैवे प्राङ्मु खौ पित्रे त्रयश्चोदङ्मुखास्तथा।
एकैकं वा भवेत्तन्त्रं देवमातामहेष्वपि ॥
सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदम्।
पञ्चैतान् विस्तरो हन्ति तस्मान्नेहेत विस्तरम् ॥
अपि वा योजयेदेकं ब्राह्मणं वेदपारगम् ।
श्रुतशीलादिसम्पन्नमलक्षणविवर्ज्जितम् ॥
उद्धृत्य पात्रे चान्नं तत् सर्व्वस्मात् प्राकृतात् पुनः ।
देवतायतने तस्मै निवेद्यान्नं प्रवर्त्तयेत् ॥
प्रास्येदग्नौ तदन्नन्तु दद्याद्वा ब्रह्मचारिणे ।
तस्मादेकमपि श्रेष्ठं विद्वांसं भोजयेत् द्विजम् ॥
भिक्षुक्षो ब्रह्मचारी वा भोजनार्थमुपस्थितः ।
उपविष्टेषु यः श्राद्धे कामं तमपि भोजयेत् ॥
अतिथिर्यस्य नाश्नाति न तत् श्राद्धं प्रशस्यते ।
तस्मात् प्रयत्नात् श्राद्ध्वेषु पूज्या ह्यतिथयो द्विजैः ॥
आतिथ्यरहितश्राद्धे भुञ्जते ये द्विजातयः ।
काकयोनिं व्रजन्त्येते दाता चैव न संशयः ॥ * ॥
हीनाङ्गः पतितः कुष्ठी ब्रणी पुक्कसनास्तिकौ।
कुक्कुटाः शूकराः श्वानो वर्ज्याः श्राद्धेषु दूरतः ॥
वीभत्समशुचिं नग्नं मत्तं धूर्त्तं रजस्वलाम्।
नीलकाषायवसनं पाषण्डांश्च विवर्ज्जयेत् ॥
यत्तत्र क्रियते कर्म्म पैतृकं ब्राह्मणान् प्रति ।
तत् सर्वमेव कर्त्तव्यं वैश्वदैवकपूर्व्व कम् ॥
यथोपदिष्टान् सर्व्वांस्तानलं कुर्य्याद्विभूषणैः ।
स्रग्दामभिः शिरोवेष्टिधूपवासोऽनुलेपनैः ॥
ततस्त्वावाहयेद्देवान् ब्राह्मणानामनुज्ञया।
उदङ्मुखो यथान्यायं विश्वदेवास इत्यृचा ॥
द्वे पवित्रे गृहीत्वा च भाजने क्षालिते पुनः ।
दक्षिणं पातयेज्जानुं देवान् परिचरन् मदा ॥
पितृणां परिचर्य्यासु पालयेदितरं तथा ।
सोमाय वै पितृमते स्वधा नम इति ब्रुवन् ॥
अग्नये कव्यवाहनाय स्वधेति जुहुयात्ततः ।
अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत् ॥
महादेवान्तिके वाथ गोष्ठे वा सुसमाहितः ।
ततस्तेरभ्यनुज्ञातो गत्वा वै दक्षिणां दिशम् ॥
गोमयेनोपलिप्योर्व्वीं स्थानं कृत्वा तु सैकतम् ।
मण्डलं चतुरस्रं वा दक्षिणावनतं शुभम् ।
त्रिरुल्लिखेत्तस्य मध्यं दर्भेणैकेन चैव हि ॥
ततः संस्तीर्य्य तत्स्थाने दर्भान् वै दक्षिणाग्र-
कान् ।
त्रीन् पिण्डान् निर्व्वपेत्तत्र हविःशेषान् समा-
हितः ॥
न्युप्य पिण्डांस्तु तद्धस्तं निर्मृज्याल्लेपभागिनाम्।
तेषु दर्भेष्वथाचम्य त्रिरायम्य शनैरसून् ॥
षडप्यृतून्नमस्कुर्य्यात् पितृनेव च मन्त्रवत् ।
उदकं निनयेच्छेषं शनैः पिण्डान्तिके पुनः ॥
अवजिघ्रेषु तान् पिण्डान् यथाभ्युप्तान् समा-
हितः ।
अथ पिण्डावशिष्टान्नं विधिना भोजयेद्द्विजान् ॥
यो नाश्नाति द्विजो मांसं नियुक्तः पितृकर्म्मणि
स प्रेत्य पशुतां याति सम्भवानेकविंशतिम् ॥
स्वाध्यायं श्रावयेदेषां धर्म्मशास्त्राणि चैव हि ।
इतिहासपुराणानि श्राद्धकल्पांश्च शोभनान् ॥
ततोऽन्नमुत्सृजेद्भुक्तेष्वग्रतो विकिरन् भुवि ।
स्पृष्ट्वा स्वदितमित्येवं तृप्तानाचमयेत्ततः ॥
आचान्ताननुजानीयादभितोरम्यतामिति ।
स्वधास्त्विति च तं ब्रूयुर्ब्राह्मणास्तदनन्तरम्॥
ततो भुक्तवतां तेषामन्नशेषं निवेदयेत् ।
यथा ब्रूयुस्तथा कुर्य्यादनुज्ञातो द्विजोत्तमैः ॥
पित्रे स्वदितमित्येवं वाच्यं गोष्ठेषु सुश्रुतम् ।
सम्पन्नमित्यभ्युदये दैवे रुचितमित्यपि ॥
विसृज्य ब्राह्मणांस्थान् वै पितृपूर्व्वन्तु वाग्यतः
दक्षिणां दिशमाकाङ्क्षन् याचेतेमान् वरान् पितॄन् ॥
दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च ।
श्रद्धा च नो मा व्यगमद्बहु देयञ्च नोऽस्त्विति ॥
पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा
मध्यमन्तु ततः पिण्डमद्यात् पत्नी सुतार्थिनी
प्रक्षाल्य हस्तावाचम्य ज्ञातीन् शेषेण भोजयेत्
ज्ञातिष्वपि च भुक्तेषु स्वान् भृत्यान् भोजयेत्ततः

शन्नो देव्या जलं क्षिप्त्वा यवोऽसीति यवांस्तथा
या दिव्या इति मन्त्रेण हस्ते त्वर्घ्यं निवेदयेत् ।
प्रदद्याद्गन्धमाल्यानि धूपादीनि च शक्तितः ॥
अपसव्यं ततः कृत्वा पितॄणां दक्षिणामुखः ।
आवाहनं ततः कुर्य्यात् उशन्तस्त्वे त्युचा बुधः
॥
आवाह्य तदनुज्ञातो जपेदायान्तु नस्ततः ।
शन्नो देव्योदकं पात्रे तिलोऽसीतितिलां स्तथा
क्षिप्त्वा चाघ्ये यथापूर्वं दत्त्वा हस्तेषु वै पुनः ।
मंस्रवांश्च ततः सर्व्वान् पात्रे कुर्य्यात् समा-
हितः ॥
पितृभ्यः स्थानमेतेन न्युब्जं पात्रं निधाय तु ।
अग्नौ करिष्येत्यादाय पृच्छत्यन्नं घृतप्लुतम् ॥
कुरुष्वेति ह्यनुज्ञातो जुहुयादुपवीतवत् ।
यज्ञोपवीतिना होमः कर्त्तष्यः कुशपाणिना ।
प्राचीनावीतिना पित्र्यं वैश्वदेवन्तु होमयेत् ।

मांसान् पुपांश्च विविधान् दद्यात्
कृशरपाय-
सम् ।
सूपशाकफलानीक्षून् पयो दधि घृतं
मधु ॥
अन्नञ्चैव यथाकामं विविधं
भक्ष्यपेयकम् ।
यदुद्दिष्टं द्विजेन्द्राणां तत्तत्सर्व्वं
निवेदयेत् ॥
धान्यांस्तिलांश्च विविधान् शर्करा
विविधास्तथा
उष्णमन्नं द्विजातिभ्यो दातव्यं श्रेय
इच्छता ॥
अन्यत्र फलमूलेभ्यः पानकेभ्यस्तथैव
च ।
नाश्रूणि पातयेज्जातु न कुप्येन्नानृतं
वदेत् ॥
न पादेन स्पृशेदन्नं न चैतदवधूनयेत्
॥
क्रोधेन चैव यद्दत्तं यद्दत्तं त्वरया पुनः
॥
यातुधाना विलुम्पन्ति जल्पता
चोपपादितम् ।
स्विन्नगात्रो न तिष्ठेत सन्निधौ च
द्विजन्मनाम्
न चात्र श्येनकाकादीन् पक्षिणः
प्रतिषेधयेत् ।
न दद्यादत्र हस्ते न प्रत्यक्षलवणं तथा
॥
न चायसेन पात्रेण न चैवाश्रद्धया पुनः
।
काञ्चनेन तु पात्रेण राजतौडुम्बरेण च
॥
दत्तमक्षयतां याति खाड्गेन च
विशेषतः ।
पात्रे तु मृण्मये यो वै श्राद्धे भोजयते
पितॄन् ॥
स याति नरकं घोरं भोक्ता चैव
पुरोधसा ।
न पंक्त्या विषमं दद्यात् न याचेन्न च
दापयेत्

पश्चात् स्वयञ्च पत्नीभिः शेषमन्नं
समाहरेत् ।
नोद्वासयेत्तदुच्छिष्टं यावन्नास्तं गतो रविः
॥
ब्रह्मचारी भवेतान्तु दम्पती रजनीन्तु ताम्
।
दत्त्वा श्राद्धं तथा भुक्त्वा सेवते यस्तु
मैथुनम् ॥
महारौरवमासाद्य कीटयोनिं व्रजेत् पुनः ।
शुचिरक्रोधनः शान्तः सत्यवादी
समाहितः ॥
स्वाध्यायञ्च तथाध्वानं कर्त्ता भोक्ता च
वर्जयेत् ॥
श्राद्धं कृत्वा परश्राद्धे भुञ्जते ये द्विजातयः
।
महापातकिभिस्तुल्या यान्ति ते नरकान्
बहून्
एष वोऽभिहितः सम्यक् श्राद्धकल्पः
सनातनः ।
अनेन वर्त्तयेन्नित्यमुदासीनोऽथ तत्त्ववित्
॥
अनग्निरध्वगो वापि तथैव व्यसनान्वितः ।
आमश्राद्धं द्विजः कुर्य्यात् वृषलस्तु
सदैवहिः ॥
आमश्राद्धं यदा कुर्य्यात् विधिज्ञः
श्रद्धयान्वितः
तेनाग्नौ करणं कुर्य्यात् पिण्डांस्तेनैव
निर्वपेत् ॥
योऽनेन विधिना श्राद्धं कुर्य्यात्
संयतमानसः ।
व्यपेतकल्मषो नित्यं यतीनां वर्त्तते पदम्
॥
तस्मात् सर्व्वप्रयत्नेन श्राद्धं कुर्य्यात्
द्विजोत्तमः
आराधितो भवेदीशस्तेन सम्यक्
सनातनः ।
अपि मूलफलैर्व्वापि प्रकुर्व्वन्निर्धनो द्विजः
॥
तिलोदकैस्तर्पयेद्वा पितॄन् स्नात्वा
समाहितः ।

| | | |
|---|---|---|
| | याचिता दापिता दाता नरकान्<br>यान्ति-<br>दारुणान् ।<br>भुञ्जीत वाग्यताः स्पृष्टा न ब्रूयुः<br>प्राकृतान्<br>गुणान् ॥<br>तावद्धि पितोरऽश्नन्ति यावन्नोक्ता<br>हविर्गुणाः ।<br>नाग्रासनोपविष्टस्तु भुञ्जीत प्रथमं<br>द्विजः ॥<br>बहूनां पश्यतां सोऽज्ञः पंक्त्या हरति<br>किल्वि-<br>षम् ।<br>न किञ्चिद्वर्ज्जयेच्छ्राद्धे नियुक्तस्तु<br>द्विजोत्तमः ॥<br>न मांसं प्रतिषेधेत<br>नवान्यस्यान्नमीक्षयेत् । | न जीवत्पितृको दद्याद्धामान्तं वा<br>विधीयते ।<br>येषां वापि पिता दद्यात्तेषाञ्चैके प्रचक्षते ।<br>पितापितामहश्चैव तथैव प्रपितामहः ॥<br>यो यस्य म्रियते यस्मै देयं नाम्नास्य तेन<br>तु ।<br>भोजयेद्वापि जीवन्तं यथाकामन्तु भक्तितः<br>॥<br>न जीवन्तमतिक्रम्य ददाति श्रूयते श्रुतिः<br>।<br>द्व्यामुष्यायणिको दद्याद्वीजिक्षेत्रिकयोः<br>समम् ॥<br>ऋक्थादर्द्धं समादद्यात् नियोगोत्पादितो<br>यदि<br>अनियुक्तात् सुतो यस्तु शुल्कतो जायते<br>द्विजः ॥<br>प्रदद्याद्वीजिने पिण्डं क्षेत्रिणे तु ततोऽन्यथा<br>। |

द्वौ पिण्डौ निर्व्वपेत्ताभ्यां क्षेत्रिणे बीजिने तथा ।
कोर्त्तयेदथ चैकस्मिन् बीजिनं क्षेत्रिणं ततः ।
मृताहनि तु कर्त्तव्यमेकोद्दिष्टं विधानतः ॥
अशौचे स्वे परिक्षीणे काम्यं वै कामतस्ततः ।
पूर्व्वाह्णे चैव कर्त्तव्यं श्राद्धमभ्युदयार्थिना ॥
देववत् सर्व्वमेव स्यान्न वै कार्य्या तिलक्रिया ।
दर्भाश्च ऋजवः कार्य्या युग्मान् वै भोजयेत् द्विजान् ॥
नान्दीमुखास्ते पितरः प्रीयन्तामिति वाचयेत् ।
मातृश्राद्धन्तु पूर्व्वं स्यात् पितृणां स्यादनन्तरम् ॥
ततो मातामहानाञ्च वृद्धौ श्राद्धत्रयं स्मृतम् ।
देवपूर्व्वन्तु दद्याद्वै न कुर्य्यादप्रदक्षिणम् ॥
प्राङ्मुखो निर्व्वपेत् पिण्डानुपवीतौ समाहितः ।
पूर्व्वं वै मातरः पूज्या भक्त्या चैव गणेश्वरः ॥
स्थण्डिलेषु पवित्रेषु प्रतिमासु द्विजातिषु ।
पुष्पै र्धूपैश्च नैवेद्यैर्गन्धाद्यैर्भूषणैरपि ॥
पूजयित्वा मातृगणान् कुर्य्यात् श्राद्धत्रयं बुधः ।
अकृत्वा मातृयागन्तु यः श्राद्धं परिवेशयेत् ।
तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः ॥"
इति कौर्म्मे उपविभागे २१ अध्यायः ॥
मात्स्ये १६ । १७ । १८ । अध्यायेषु चान्यत् द्रष्ट-
व्यम् ॥ * ॥ श्राद्धे कदलीपत्रं निषिद्धं भोजन-
पात्रतया । इति हेमाद्रिव्याख्या श्राद्धखण्डे ॥
न जातीकुसुमानि दद्यात् न कदलीपत्रम् ।
इति क्रतुवचनम् ॥ * ॥ श्राद्धोत्तरनिषिद्धानि यथा, --
"यात्रा युद्धं नदीपारं मिथ्यालापो द्विभोजनम् ।
द्यूतक्रीडा दिवानिद्रा श्राद्धे सप्त विवर्ज्जयेत् ॥"
इति कर्म्मलोचनम् ॥
स्मृतिः ।
द्यूतञ्च कलहञ्चैव सायंसन्ध्यां दिवाशयम् ।
श्राद्धकर्त्ता च भोक्ता च पुनर्भुक्तञ्च वर्जयेत् ॥"
अपि च । विष्णुपुराणम् ।
"वर्ज्यानि कुर्व्वता श्राद्धं कोपोऽध्वगमनं त्वरा ।
"विष्णोर्निवेदितान्ने न यष्टव्यं देवतान्तरम् ।
पितृभ्यश्चापि तद्देयं तदानन्त्याय कल्प्यते ॥"
मोक्षधर्म्मे नारदोक्तौ ।
"सात्वतं विधिमास्थाय प्राक् सूर्य्यमुखनिः-
सृतम् ।
पूजयामास देवेशं तच्छेषेण पितामहान् ॥"
ब्रह्माण्डपुराणे ।
"यः श्राद्धकाले हरिभुक्तशेषं
ददाति भक्त्या पितृदेवतानाम् ।
तेनैव पिण्डांस्तुलसीविमिश्रा-
नाकल्पकोटिं पितरः सुतृप्ताः ॥"
स्कान्दे श्रीशिवोक्तौ ।
"देवान् पितॄन् समुद्दिश्य यद्विष्णोर्विनिवेदितम्
तानुद्दिश्य ततः कुर्य्यात् प्रदानं तस्य चैव हि ॥
प्रयान्ति तृप्तिमतुलां सोदकेन तु तेन वै ।
मुकुन्दगात्रलग्नेन ब्राह्मणानां विलेपनम् ॥
चन्दनेन तु पिण्डानां कर्त्तव्यं पितृतृप्तये ।
देवानाञ्च पितृणाञ्च जायते तृप्तिरक्षया ॥
एवं कृते महीपाल मा भवेत् संशयः क्वचित् ॥"
तत्रैव श्रीपुरोषोत्तमखण्डे ।
"अन्नाद्यं श्राद्धकाले तु पतिताद्यैर्न्निरीक्षितम् ।
तुलसीदलमिश्रेण सलिलेनाभिषिञ्चयेत् ॥
तदन्नं शुद्धतामेति विष्णोर्नैवेद्यमिश्रितम् ।
विष्णोर्नैवेद्यशेषन्तु तस्माद्देयं द्विजन्मना ।
पिण्डे चैव विशेषेण पितॄणां तृप्तिमिच्छता ॥"
तत्रैव श्रीब्रह्मनारदसंवादे ।
"पितॄनुद्दिश्य यैः पूजा केशवस्य कृता नरैः ।
अथोपवासदिने श्राद्धनिषेधः । पाद्मे पुष्कर-
खण्डम् ।
"एकादश्यां यदा राम श्राद्धं नैमित्तिकं भवेत् ।
तद्दिने तु परित्यज्य द्वादश्यां श्राद्धमाचरेत् ॥"
तत्रैवोत्तरखण्डे ।
"एकादश्यान्तु प्राप्तायां मातापित्रोर्म्मृतेऽहनि
द्वादश्यां तत् प्रदातव्यं नोपवासदिने क्वचित् ॥
गर्हितान्नं न चाश्नन्ति पितरश्च दिवौकसः ॥"
स्कान्दे ।
"एकादशी यदा नित्या श्राद्धं नैमित्तिकं भवेत्
उपवासं तदा कुर्य्यात् द्वादश्यां श्राद्धमाचरेत् ॥"
ब्रह्मवैवर्त्ते ।
"ये कुर्व्वन्ति महीपाल श्राद्धं त्वेकादशीदिने ।
त्रयस्ते नरकं यान्ति दाता भोक्ता परेतकः ॥"
इति श्रीहरिभक्तिविलासे १२ विलासः ॥

**श्राद्धं**, त्रि, (श्रद्धा अस्त्यस्येति । श्रद्धा + "प्रज्ञा श्रद्धार्च्चावृत्तिभ्यो णः ।" ५ । २ । २०१ । इति णः ।) श्रद्धासमन्वितम् । इति हेमचन्द्रः ॥

**श्राद्धकर्त्ता**, [ऋ] त्रि, (करोतीति । कृ + तृच् । श्राद्धस्य कर्त्ता ।) श्राद्धकारकः । यथा, --
"श्राद्धकर्त्ता च भोक्ता च पुनर्भुक्तञ्च वर्ज्जयेत् ॥"
इति श्राद्धतत्त्वम् ॥

**श्राद्धदेवः**, पुं, (श्राद्धस्य देवः ।) यमः । इत्यमरः ॥

भोक्तुरप्यत्र राजेन्द्र त्रयमेतन्न शस्यते ॥”
राजमार्त्तण्डे ।
“पुनर्भोजनमध्यानं द्युताध्ययनमैथुनम् ।
दानं प्रतिग्रहं सन्ध्यां श्राद्धं कृत्वाष्ट वर्जयेत् ॥”
नव्यवर्द्धमानधृता स्मृतिः ।
“पुनर्भोजनमध्वानं भाराध्ययनमैथुनम् ।
दानं सन्ध्यां पुनः स्नानं श्राद्धं कृत्वाष्ट वर्जयेत्
॥”
इति श्राद्धतत्त्वम् ॥
अथ वैष्णवश्राद्धविधिः ।
“प्राप्ते श्राद्धदिनेऽपि प्रागन्नं भागवतेऽर्पयेत् ।
तच्छेषेणैव कुर्व्वीत श्राद्धं भागवतो नरः ॥”
यच्च स्मृतौ ।
“गृहाग्निशिशुदेवानां यतीनां ब्रह्मचारिणाम् ।
पितृपाकोन दातव्यो यावत् पिण्डान्न निर्वपेत्
॥”
इति ॥
“ईदृक् सामान्यवचनं विशेषवचनघ्नजैः ।
श्रुतिस्मृतिपुराणादिवर्त्तिभिर्व्वाध्यतेध्रुवम् ॥”
तथा च पाद्मे ।
त्यक्त्वा ते नारकीं पीडां मुक्तिं यान्ति
महामुने ॥
धन्यास्ते मानवा लोके कलिकाले
विशेषतः ।
ये कुर्व्वन्ति हरेर्नित्यं पित्रर्थं पूजनं मुने ॥
किं दत्तैर्ब्बहुभिः पिण्डैर्गयाश्राद्धादिभिर्मुने
॥
यैरर्च्चितो हरिर्भक्त्या पित्रर्थश्च दिने
दिने ॥
यमुद्दिश्य हरेः पूजा क्रियते मुनिपुङ्गव ॥
उद्धृत्य नरकावासात्तं नयेत् परमं पदम् ॥
यो ददाति हरेः स्थानं पितॄनुद्दिश्य नारद
।
कर्त्तव्यं हि पितृणां यत्तत् कृतं तेन भो
द्विज ॥” *
श्रुतौ च । एक एव नारायण आसीत् न
ब्रह्मा
नेमे द्यावापृथिव्यौ सर्वे देवाः सर्वे पितरः
सर्वे
मनुष्याः विष्णुना अशितमश्नति विष्णुना
घ्रातं
जिघ्रन्ति विष्णुना पीतं पिबन्ति
तस्साद्विद्वांसो
विष्णूपहृतं भक्षयेयुरिति । अतएवोक्तं
श्रीभग-
वता विष्णुधर्म्मे ।
“प्राणेभ्यो जुहुयादन्नं मन्निवेदितमु त्तमम्
।
तृप्यन्ति सर्व्वदा प्राणा
मन्निवेदितभक्षणात् ॥
तस्मात् सर्व्वप्रयत्नेन प्रदेयं मन्निवेदितम्
।
ममापि हृदयस्थस्य पितृणाञ्च विशेषतः
॥”
किञ्च तत्रै वान्यत्र ।
भक्ष्यं भोज्यञ्च
यत्किञ्चिदनिवेद्याग्रभोक्तरि ।
न देयं पितृदेवेभ्यः प्रायश्चित्ती यतो
भवेत् ॥
सर्गादौ कथितो देवैरग्रभुक् भगवान् हरिः
।
(यथा, मार्कण्डेये । ८ । १५६ ।
“श्राद्धदेवेन कथितं विश्वामित्रस्य
चेष्टितम् ॥”)
स तु विवस्वतः संज्ञायां पत्न्यां जातः ॥
मनु-
मेदः । इति पुराणम् ॥ (यथा, मार्कण्डेये
।
१०६ । ४ ।
“मनुर्वैवस्वतो ज्येष्ठः श्राद्धदेवः
प्रजापतिः ।
ततो यमो यमी चैव यमलौ सम्बभूवतुः
॥”)

**श्राद्धशाकं**, क्ली, (श्राद्धे देयं शाकम् ।) काल-
शाकम् । इति भावप्रकाशः ॥

**श्राद्धिकः**, त्रि, (श्राद्धमनेन भुक्तमिति । श्राद्ध +
“श्राद्धमनेन भुक्तमिनिठनौ ।” ५ । २ ।
८५ ।
इति ठन् ।) श्राद्धभोक्ता । इति
सिद्धान्त-
कौमुदी ॥ श्राद्धसम्बन्धिद्रव्यादि । यथा,
याज्ञ-
वल्क्यः ।
“सन्ध्यागर्ज्जितनिर्घाते
भूकम्पोल्कानिपातने ।
समाप्य वेदं द्युनिशमारण्यकमधीत्य च
॥
पञ्चदश्यां चतुर्द्दश्यामष्टम्यां राहुसूतके ।
ऋतुसन्धिषु भुक्त्वा वा श्राद्धिकं
प्रतिगृह्य च ॥”
इति तिथ्यादितत्त्वम् ॥

**श्राद्धी**, [न्] त्रि, श्राद्धभोक्ता । श्राद्ध + “श्राद्ध-
मनेन भुक्तमिनिठनौ ।” ५ । २ । ८५ ।
इति
सूत्रे ण इनिः । इति सिद्धान्तकौमुदी ॥

**श्रान्तः**, पुं, (श्रम + क्तः ।) शान्तः । जितेन्द्रियः ।
इति हेमचन्द्रः ॥ श्रमयुक्ते, त्रि । श्रम
तपःखेदयोः इत्यस्मात् क्तप्रत्ययेन
निष्पन्नः ।
यथा, --

|  | यज्ञभागभुजो देवा ततस्तेन प्रकल्पिताः ॥"<br>इति श्रीहरिभक्तिविलासे ९ विलासः ॥ * ॥ | "सखि मत्प्राणनाथन्तु साधयन्ती निरन्तरम् ।<br>अतिश्रान्तासि<br>सद्भावस्नेहयोरियमौचिती ॥"<br>इति काव्यचन्द्रिका ॥ |
| --- | --- | --- |

**श्रान्तमंवाहनं**, क्ली, (श्रान्तस्य संवाहनम् ।)
श्रमान्वितस्य आसनादिप्रदानद्वारा श्रमोप-
शमनम् । इति केचित् ॥

**श्राम**, त् क मन्त्रे । इति कविकल्पद्रुमः ॥ (अदन्त-
चुरा०-पर०-सक०-सेट् ।) अशश्रामत् ।
मन्त्रो-
ऽभिमुखीकरणम् । गुप्तोक्तिरित्येके । इति
दुर्गादासः ॥

**श्रामः**, पुं, (श्रामयतीति । श्राम + अच् ।) मासः ।
मण्डपः । कालः । इति मेदिनी ॥

**श्रामणेरः**, पुं, जिनभिक्षुशिष्यः । तत्पर्य्यायः ।
चेलुकः २ प्रव्रजितः ३ महापासकः ४ गोमी
५ ।
इति त्रिकाण्डशेषः ॥

**श्रायः**, पुं, (श्रि श्रये + “श्रिणीभुवोऽनुपसर्गे ।”
३ । ३ । २४ । इति घञ् ।) श्रयणम् ।
आश्रयः ।
इत्यमरः ॥ (यथा, भट्टिः । ७ । ३६ ।
“यात यूथं यमश्रायं दिशं नायेन दक्षिणाम्
॥”)
श्रीसम्बन्धिनि, त्रि । यथा । श्रीर्देवता अस्य
श्रायं हविः । इति श्रीशब्दादण्प्रत्ययेन
निष्पन्न-
मिति सिद्धान्तकौमुदी ॥

**श्रायसः**, त्रि, (श्रेयस् + अण् । “देविकाशिंश-
पेति ।” ७ । ३ । १ । इति आदेरचः आत् ।)
श्रेयसि भवः । इति सिद्धान्तकौमुदी ॥

**श्रावः**, पुं, श्रवणम् । श्रुधातोर्घञ्प्रत्ययेन
निष्पन्नः । इक्ष्वाकुवंशीयनृपतिविशेषः ।
यथा,
महाभारते । ३ । २०१ । ३ ।
“आर्द्रात्तु युवनाश्वस्तु श्रावस्तस्यात्मजो-
ऽभवत् ॥”)

**श्रावकः**, पुं, (शृणोतीति । श्रु + ण्वुल् ।) शाक्य-

“लोकप्रसिद्धो धनवान् वदान्यः
सुहृत्कलत्रात्मजदासयुक्तः ।
आज्ञाकरा यस्य जनस्य सर्व्वे
स श्रावणाख्ये सुतरां प्रसूतः ॥”
अथ श्रावणकृत्यम् । तत्र
देवीपुराणम् ।
“सुप्ते जनार्द्दने कृष्णे पञ्चम्यां
भवनाङ्गने ।
पूजयेन्मनसा देवीं
स्नुहीविटपसंस्थिताम् ॥”
स्नु ही सिजवृक्षः ।
“देवीं संपूज्य नत्वा च न
सर्पभयमाप्नुयात् ।
पञ्चम्यां पूजयेन्नागाननन्ताद्यान्
महोरगान् ।
क्षीरं सर्पिश्च नैवेद्यं देयं
सर्पविषापहम् ॥”
गारुडे ।
“अनन्तं वासुकिं शङ्खं पद्मं
कम्बलमेव च ।
तथा कर्कोटकं नागं धृतराष्ट्रञ्च
शङ्खकम् ॥
कालीयं तक्षकञ्चापि पिङ्गलं
मणिभद्रकम् ।
यजेत्तानसितान्नागान दष्टमुक्तो दिवं
ब्रजेत् ॥”
पुराणान्तरेऽपि ।
अनन्तो वासुकिः पद्मो महापद्मोऽथ
तक्षकः ।
कुलीरः कर्कटः शङ्खो ह्यष्टौ नागाः
प्रकी-
र्त्तिताः ॥”
पाद्मे ।
शेषः पद्मो महापद्मः कुलीरः
शङ्खपालकः ।
वासुकिस्तक्षकश्चैव कालीयो
मणिभद्रकः ।
ऐरावतो धृतराष्ट्रः कर्कोटकधनञ्जयौ
॥”

स्वयं भक्षयेच्च । उभयदिने पूर्व्वाह्णे
मुहूर्त्तान्यून-
पञ्चमीलाभे पूर्व्वदिने पूजा युग्मात् । श्रावण्यां
पौर्णमास्यां श्राद्धमावश्यकम् । इति कृत्यतत्त्वम्
॥
श्रवणानक्षत्रसम्बन्धिनि, त्रि ॥

**श्रावणा**, स्त्री, दध्यालीकवृक्षः । इति मेदिनी ।

**श्रावणिकः**, पुं, (श्रवणा पौर्णमास्यस्मिन्नस्तीति ।
श्रवणा + “विभाषा फाल्गुनीश्रवणाकार्त्तिकी-
चैत्रीभ्यः ।” ४ । २ । २६ । इति ठक् ।)
श्रावण-
मासः । इत्यमरः ॥

**श्रावणी**, स्त्री, (श्रवणेन नक्षत्रेण युक्ता पौर्णमासी ।
श्रवण + “नक्षत्रेण युक्तः कालः ।” ४ । २ । ३
।
इत्यण् । ङीप् ।) श्रावणमासीयपूर्णिमा । यथा,
“पौर्णमासी तथा माघी श्रावणी च नरोत्तम ।
एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः
॥
इति श्राद्धतत्त्वम् ॥
बृक्षविशेषः । मुण्डी इति थोलकुडिया इति च
हिन्दीभाषा । तत्पर्य्यायः । मुण्डितिका २
भिक्षुः ३ श्रवणशीर्षिका ४ श्रवणा ५ प्रव्रजिता
६
परिव्राजी ७ तपोधना ८ । अस्या गुणाः ।
कषायत्वम् । कटुत्वम् । उष्णत्वम् ।
कफवाता-
मातिसारकासविषच्छर्द्दिनाशित्वञ्च। इति
राज-
निर्घण्टः ॥ अपि च ।
“मुण्डी भिक्षुरपि प्रोक्तः श्रावणी च तपोधना ।
श्रवणाह्वा मुण्डितिका तथा श्रवणशीर्षिका ॥
महाश्रावणिकान्या तु सा स्मृ ता भूकदम्बिका
कदम्बपुष्पिका च स्यादव्यथा तु तपस्विनी ।
मुण्डितिका कटुः पाके वीर्य्योष्णा मधुरा लघुः
मेध्या गण्डा पची कृच्छ्रकृमियोन्यर्त्तिपाण्डुनुत
॥
श्लीपदारुच्यपस्मारप्लीहमेदोगुदार्त्तिहृत् ।

मुनिशिष्यविशेषः । काकः । इति त्रिकाण्ड-
शेषः ॥ (श्रावयतीति । श्रु + णिच् + ण्वुल् ।
दूरध्वनिः । यथा, माघे । ११ । १ ।
“प्रणिजगदुरकाकुश्रावकस्निग्धकण्ठाः
परिणतिमिति रात्रे र्मागधा मागधाय ॥”)
श्रोतरि, त्रि । (यथा, पुराणम् ।
“ऋग्वेदश्रावकं पैलं जग्राह विधिवद्द्विजम् ।
यजुर्वेदप्रवक्तारं वैशम्पायनमेव च ॥”)

**श्रावणः**, पुं, (श्रवणेनाचरति न तु कार्य्येणेति ।
श्रवण + अण् । पाषण्डः । इति मेदिनी ॥
(श्रवणेन गृह्यते इति । श्रवण + “शेषे ।” ४ ।
२ । ९२ । इत्यण् । शब्दः । इति काशिका
॥)
वैगाखादि-द्वादशमासान्तर्गत-चतुर्थ-मासः ।
श्रवणानक्षत्रयुक्ता पौर्णमासी श्रावणी सा यत्र
मासे सः । (श्रवणा + अण् ।) तत्पर्य्यायः ।
नभाः २ श्रावणिकः ३ । इत्यमरः ॥ नभः ४
।
इति शब्दरत्नावली । स च द्विविधः सौर-
श्चान्द्रश्च । कर्क्कटस्थरविको मामः सौर-
श्रावणः ।
कर्कटस्थरविप्रारब्धशुक्लप्रतिपदादि
दर्शान्तो मासश्चान्द्रश्रावणः । चान्द्रोऽपि
द्विविधो मुख्यो गौणश्च । तत्र
मुख्यचान्द्रश्राव-
णोयकृष्णप्रतिपदादिपौर्णमास्यन्तो मासो
गौण-
चान्द्रः श्रावणः । मुख्यलक्षर्णं प्रागेवोक्तम् ।
इति मलमासतत्त्वम् ॥ * ॥ तत्र जातफलम् ।
रत्नाकरे ।
“पिचुमर्द्दस्य पत्राणि
स्थापयेद्भवनोदरे ।
स्वयञ्चापि तदश्नीयात् ब्राह्मणानपि
भोजयेत् ॥”
पिचुमर्द्दस्य निम्बस्य ॥ * ॥ तत्र
प्रयोगः ।
हरिशयनानन्तरं गौणचान्द्रेण
श्रावणकृष्ण-
नवम्यां कृतस्नानादिरुदङ्मुखः ।
अद्य श्रावणे
मासि कृष्णे पक्षे पञ्चम्यां तिथौ
अमुकगोत्रः
श्रीअमुकदेवशर्म्मा
सर्पभयाभावकामो मनसा-
देवीपूजामहं करिष्ये । इति सङ्कल्प्य
स्नुही-
वृक्षे पूजयेत् । तदभावे घटे जले वा
न्यासा-
दिकं कृत्वा देवीमम्बेति ध्यात्वा
मनसादेवि
इहागच्छ इहावाह्य एतत् पाद्यं ॐ
मनसा-
देव्यै नमः । इत्यनेन यथाशक्ति
गन्धपुष्पधूप-
दीपनैवेद्यानि दद्यात् ।
ततोऽनन्तादीन्
नागान् पूजयेत् तत्र क्षीरसर्पिर्नैवेद्यं
प्रधानम् ।
अनन्तादिकं पाद्यादिभिः संपूज्य ।
ॐ योऽसावनन्तरूपेण ब्रह्माण्डं
सचराचरम् ।
पुष्पवद्धारयेन्मूध्नि तस्मै नित्यं नमो
नमः ॥”
इत्यनेन त्रिः पूजयेत् । एवं
प्रणवादिनमोऽन्तेन
स्वस्वनाम्ना पूजयेत् । ॐ वासुकय
नमः । ॐ
शङ्णाय नमः । ॐ कम्बलाय नमः
। ॐ कर्को-
महामुण्डी च तत्तुल्या गुणैरुक्ता महर्षिभिः ॥”
इति भावप्रकाशः ॥
अन्यत् मुण्डितिकाशब्दे द्रष्टव्यम् ॥

**श्रावन्ती**, स्त्री, धर्म्मपत्तनाख्यदेशः । इति त्रिकाण्ड-
शेषः ॥

**श्राविष्ठीयः**, त्रि, (श्रविष्ठासु जातः । + श्रविष्ठा +
“श्रविष्ठाफल्गुन्यनुराधेति ।” ४ । ३ । ३४ ।
इतिछण् ।)
श्रवणानक्षत्रजातः ॥ इति सिद्धान्तकौमुदी ॥

**श्रि**, ञ सेवने । इति कविकल्पद्रुमः ॥ (भ्वा०-
उभ०-सक०-सेट् ।) ञ, श्रयति श्रयते । इति
दुर्गादासः ॥

**श्रितः**, त्रि, (श्रि + क्तः । “श्र्युकः किति ।” ७ । २ । ११
इति इडागमो न ।) सेवितः । आश्रितः ।
इति सिद्धान्तकौमुदी ॥ (यथा, रघुः । ११ ।
६१ ।
“भास्करश्च दिशमध्युवास यां
तां श्रिताः प्रतिभयं ववाशिरे ॥”
पक्वः । यथा, रामायणे । २ । ५६ । २८ ।
“लक्ष्मणः पुरुषव्याघ्रमथ राघवमब्रवीत् ।
अयं सर्व्वः समस्ताङ्गः श्रितः कृष्णमृगो मया ।
देवता देवसङ्काश यजस्व कुशलो ह्यसि ॥”)

**श्रितवान्**, [त्] त्रि, (श्रि + क्तवतु । “श्र्युकः
किति । ७ । २ । ११ । इति इडागमो न)
सेवाकारकः । इति मिद्धान्तकौमुदी ॥

|  |  |  |
|---|---|---|
|  | टकाय नमः । ॐ शङ्खकाय नमः । ॐ काली-<br>याय नमः । ॐ तक्षकाय नमः । ॐ पिङ्गलाय<br>नमः । ॐ महापद्माय नमः । ॐ कुलिकाय<br>नमः । ॐ मणिभद्राय नमः । ॐ धनञ्जयाय<br>नमः । ॐ शेषाय नमः । ॐ ऐरावताय<br>नमः । अशक्तौ गन्धपुष्पाभ्यां पूजयेत् । निम्ब-<br>पत्राणि गृहे स्थापयेत् ब्राह्मणेभ्यो दद्यात् |  |

**श्रियंमन्या**, स्त्री, आत्मानंश्रियं मन्यते या । इति
मुग्धबोधव्याकरणम् ॥ (यथा, भट्टिः । ५ । ७१ ।
"मिथ्यैव श्रीः श्रियंमन्या श्रीमन्मन्यो मृषा-
हरिः ॥")

**श्रिष**, उदाहे । इति कविकल्पद्रुमः ॥ (भ्वा० पर०
सक०-सेट् ।) क्त्वावेट् ।) उ, श्रेषित्वा श्रिष्ट्वा ।
इति दुर्गादासः ॥

**श्री**, ञ ग पाके । इति कविकल्पद्रुमः ॥ [क्र्या०-
उभ०-सक०-सेट् ।) ञ ग श्रीणाति श्रीणीते ।
इति दुर्गादासः ॥

**श्रीः**, स्त्री, (श्रयतीति । श्रि + "क्विप्वचिप्रच्छीति ।"
उणा० २ । ५७ । इति क्विप् दीर्घश्च ।) लक्ष्मीः
(यथा, विष्णुपुराणे । १ । ८ । १३ ।
"श्रियञ्च देवदेवस्य पत्नी नारायणस्य च या ॥"
लवङ्गम् । इत्यमरः ॥ वेशरचना । शोभा ।
(यथा, रामायणे । २ । ९४ । १० ।
एवमादिभिराकीर्णः श्रियं पुष्यत्ययं गिरिः ॥")
सरस्वती । सरलवृक्षः । त्रिवर्गः । सम्पत्तिः ।
(यथा, --
"न दातुं नोपभोक्तुं वा शक्नोति कृपणः श्रियम् ॥")
विधा । डपकरणम् । विभूतिः । मतिः । इति
मेदिनी ॥ अधिकारः । प्रभा । कीर्त्तिः । इति
धरणिः ॥ वृद्धिः । सिद्धिः । इति शब्दरत्नावली ॥

समयः । रागमालायां तस्याः स्वरूपम् । रक्त-
वर्णा स्त्री । कोमलाङ्गी । पीतवस्त्रपरीधाना ।
कौतुकाद्भ्रमन्ती सती नायकादभिन्ना सखी-
गणेन सह हास्ययुक्ताम्रतरुतलोपविष्टा ॥ १ ॥
द्वितीया मारवा अथवा मालवा । अस्याः
षाडवजातिः । अस्याः स्वरावलिः । ष प ग
म ध नि । अस्या गृहं षड्जस्वरः । हिमर्त्तौ
शेषवेलायां गानसमयः । रागमालायां तस्याः
स्वरूपं यथा । स्वर्णवस्त्रपरीधाना । पुष्पमाल्य-
धरा ।
नायकमेलनार्थमेकाकिनीसङ्केतस्थानोप-
विष्टा ॥ २ ॥ तृतीया धनाश्रीः । अस्याः षाडव-
जातिः । अस्याः स्वरावलिः । ष प ध नि ऋ
ग । गृहं षड्जस्वरः । हिमर्त्तौ द्वितीयप्रहर-
दिवसे शेषवेलायां वा गानसमयः । राग-
मालायां तस्याः स्वरूपम् । वियोगिनी नारी ।
रक्तवस्त्रपरीधाना । वियोगजसन्तापेन दुःखि-
तातिकृशा । एकाकिनी रोरुद्यमाना बकुल-
तरुतलोपविष्टा ॥ ३ ॥ चतुर्थी वसन्तरागिणी ।
अस्याः सम्पूर्णा जातिः । अस्याः स्वरावलिः ।
ष ऋ ग म प ध नि । अस्या गृहं षड्जस्वरः ।
हिमर्त्तौ मध्याह्ने वसन्तर्त्तौ दिवा मात्रे च गान-
समयः । रागमालायां तस्याः स्वरूपम् ।
सुन्दरपुरुषाकृतिः । कस्यचिन्मते श्यामवर्णा ।
रक्तवसना । मयूरपुच्छशिखा । आम्रमुकुल-
हस्ता । यौवनमदनमदमत्ता । पुष्पमाल्यगल-
देशा । पुष्पोद्याने सह नर्त्तकीसुस्वरगायनीभिः
सुखेन रागरङ्गयुता । वामहस्तधृतताम्बूल-
वीटिका । स्त्रीगणसहितहास्यकौतुकक्रीडा-
नृत्यगीतवाद्यासक्ता । रागमालान्तरे उक्तगुणं-
युक्ता श्रीकृष्णमूर्त्तिसदृशमूर्त्तिर्लिखिता ॥ ४ ॥
पञ्चमी आशावरी । अस्या औडवजातिः ।
अस्याः स्वरावलिः । ध नि ष म प । अस्याः
गृहं धैवतस्वरः । हिमर्त्तौ द्वितीयप्रहरदिवसे
गानसमयः । रागमालायां अस्याः स्वरूपम् ।
श्यामवर्णा स्त्री । कोमलाङ्गी । श्वेतशाटीपरि-
धाना । कर्पूरानुलेपना । हस्तपदयोर्बृहत्सर्प-

त्रिवेणी अथवा तिरवनी २ गौरी ३ केदारा ४
मधुमाधवी ५ पाहाडिका अथवा पाहाडी ६ ।
अस्य पुत्राः पूर्व्वोक्तमतद्वयतुल्याः । तन्मते
अस्य रागस्य रागिणीसहितस्य शिशिरर्त्तौ
गानममयः ॥ * ॥ भरतमते पञ्चमरागोऽयम् ।
अस्य रागिण्यः पञ्च । यथा । सिन्धुवी १ । काफी
२ ठुमरी ३ पूर्व्वदेशे विस्तार इति ख्याता ।
विचित्रा ४ शिरहटी अथवा सोरहठी ५
तन्मते अस्याष्ट पुत्राः यथा । श्रीरमणः १
कोलाहलः २ सामन्तः ३ शङ्करणः ४ राके-
श्वरः ५ खटरागः ६ वडहंसः ७ देशकारः ८ ।
तेषां भार्य्या यथा । विय्या १ धाय्या २ कुम्भा ३
सुहनी ४ शरदा ५ क्षेमा ६ शशरेखा ७ सुर-
सती ८ । इति नानासङ्गीतशास्त्रतः संगृही-
तम् ॥

**श्रीकण्ठः**, पुं, (श्रीः शोभा कण्ठेयस्य ।) शिवः ।
इत्यमरः ॥ कुरुजाङ्गलदेशः । स तु हस्तिना-
पुरस्य उत्तरपश्चिमे वर्त्तते । इति हेमचन्द्रः ॥
(पक्षिविशेषः । यथा, बृहत्संहितायाम् । ८६ । ३८ ।
"स्त्रीसंज्ञा
भासभषककपिश्रीकर्णछिक्कराः ।
शिखिश्रीकण्ठपिप्पीकरुरुश्येनश्च दक्षिणाः ॥")

वृत्तार्हन्माता । इति हेमचन्द्रः ॥
कमलम् ।
विल्ववृक्षः । वृद्धिनामौषधम् । इति राज-
निर्घण्टः ॥ * ॥ देवादिनाम्नः पूर्व्वं श्रीशब्द-
प्रयोगः कर्त्तव्यः । यथा, --
"देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम् ।
सिद्धं सिद्धाधिकारांश्च श्रीपूर्व्वं समुदीरयेत् ॥"
इति राघवभट्टधृतप्रयोगसारदर्शनात् स्वर्ग-
गामित्वादिना सिद्धोऽधिकारो येषां नराणां
इत्यनेन जीवतां श्रीशब्दादित्वं नाम्नः । न तु
मृतानां तथेति शिष्टाचारः । इति संस्कार-
तत्त्वम् ॥ * ॥ पत्रपृष्ठे श्रीशब्ददानप्रमाणं पत्र-
शब्दे द्रष्टव्यम् ॥
(एकाक्षरच्छन्दोविशेषः ।
यथा छन्दोमञ्जर्य्याम् । "श्रीः ।" उदा-
हरणम् । "श्रीस्ते । [सास्ताम् ॥")

**श्रीः**, पुं, (श्रि + क्विप् दीर्घश्च ।) रागविशेषः । स
तु हनुमन्मते षड्रागान्तर्गतपञ्चमरागः ।
पृथिव्या नाभितो निर्गतः । अस्य जातिः
सम्पू र्णा । तस्य स्वरावलिः । ष ऋ ग म प ध
नि अस्य गृहं षड्जस्वरः । हेमन्तर्त्तौ अप-
राह्णे गानसमयः । रागमालायां अस्याकारः ।
सुन्दरपुरुषः । शुक्लवस्त्रपरीधानः । मतान्तरे
रक्तवस्त्रपरीधानः । स्फाटिकपद्मरागमणि-
वेष्टिता केशैर्बद्धचूडा । जलमध्यस्थपर्क्तगुहा-
यामुपविष्टा । रागमालान्तरे उक्तगुणयुक्ता
वृक्षपत्रबद्धकटिदेशा नग्ना लिस्विता ॥ ५ ॥ * ॥
अस्य पुत्त्रा अष्टौ । यथा । सिन्धुः १ मालवः २
गौँडः अथवा गोण्डः ३ अस्य स्थाने केचित्
कल्याणः इति केचिच्च हामीर इति पठन्ति ।
नुण सागरः ४ कुम्भः ५ गम्भीरः ६ शङ्करः
अथवा आगडः ७ विहागरः ८ ॥ * ॥ कल्लि-
नाथमते श्रीरागः प्रथमरागः अस्य भार्य्या षट् ।
यथा । गौरी १ गौलाहली २ धवली ३
रुद्राणी ४ मालकौश अर्थात् कौशिकी ५ देव-
गान्धारी ६ । तन्मते पुत्त्रा अष्टौ हनुमन्मत-
तुल्याः । किन्तु गौँडशङ्करविहागरस्थाने
कल्याण आगडा विगडा लिखिताः ॥ * ॥
सोमेश्वरमतेऽपि प्रथमरागोऽयम् । अस्य
रागिण्यः षट् । यथा । मालवी अथवा मरवा १

**श्रीकण्डपदलाञ्छनः**, पुं, (श्रीकण्ठ इति पदं
लाञ्छनं यस्य ।) भवभूतिः । स तु मालती-
माधवादिनाटककर्त्ता । इति शब्दमाला ॥
(यथा, उत्तरचरिते प्रस्तावगायाम् ।
"अस्ति खलु तत्रभवान् काश्यपः श्रीकण्ठ-
पदलाञ्छनो भवभूतिर्नाम ॥")

**श्रीकण्ठसखः**, पुं, (श्रीकण्ठस्य महादेवस्य सखा ।
समासे टच् ।) कुबेरः । इति हलायुधः ॥

**श्रीकन्दा**, स्त्री, (श्रीः शोभा तद्युक्तः कन्दो
यस्याः ।) बन्ध्याकर्कोटकी । इति राज-
निर्घण्टः ॥

**श्रीकरं**, क्ली, रक्तोत्पलम् । इति त्रिकाण्डशेषः ॥

**श्रीकरः**, पुं, विष्णुः । इति त्रिकाण्डशेषः ॥ स्मृति-
ग्रन्थकारविशेषः । यथा । श्रीकराचार्य्यादि-
ग्रन्थादरपराहतविवेकानाम् । इति दायभागा-
द्यश्लोकटीमायां श्रीकृष्णतर्कालङ्कारः ॥ (श्रियः
शोभायाः करः) । श्रीकारके, त्रि ॥

**श्रीकरणं**, क्ली, (श्रीः क्रियतेऽनेनेति । कृ + करणे
ल्युट् ।) लेखनी । इति शब्दरत्नावली ॥

**श्रीकान्तः**, पुं, (श्रियाः कान्तः ।) विष्णुः । इति
शब्दरत्नावली ॥

**श्रीकारी**, [न्] पुं, (श्रियं शोभां करोतीति । कृ +
णिनिः ।) मृगविशेषः । तत्पर्य्यायः । शिखि-
यूपः २ कुरङ्गः ३ महायवः ४ यवनः ५ वेगि-
हरिणः ६ जङ्घालः ७ जाङ्घिकाह्वयः ८ । अस्य
मांसगुणाः । लघुत्वम् । हृद्यत्वम् । बलप्रदत्वञ्च
इति राजनिर्घण्टः ॥

**श्रीखण्डः**, पुं, क्ली, (श्रियः शोभायाः खण्ड इव

| | | |
|---|---|---|
| मालागलः । पद्मपुष्पहस्तः । विचित्रसिंहा- सनारूढः । अस्य संमुखे गायन्ति गायकाः ॥ हनुमन्मते अस्य भार्य्याः पञ्च । यथा । प्रथमा मालश्रोः । [तस्याः सम्पूर्णजातिः । अस्याः स्वरावलिः । ष ऋ ग म प ध नि । अस्या गृहं षड्जस्वरः । हिमर्त्तौद्वितीयप्रहरदिवसे गान- | | यत्र ।) चन्दनम् । इति त्रिकाण्डशेषः ॥ (यथा, गीतगोविन्दे । ९ । १० । |

"तद्युक्तं विपरीतकारिणि तव
श्रीखण्डचर्च्चा
विषं
शीतांशुस्तपनो हिमं हुतवहः क्रीडामुदो
यातनाः ॥")

**श्रीगर्भः**, पुं, (श्रीर्गर्भेऽस्य ।) विष्णुः । इति त्रिकाण्ड-

शेषः ॥ खड्गः । यथा, --
"असिर्व्विषशनः खड्गस्तीक्ष्णधारो
दुरासदः ।
श्रोगर्भो विनयश्चैव धर्म्मपाल नमोऽस्तु ते
॥"
इति तिथ्यादितत्त्वम् ॥

**श्रीग्रहः**, पुं, (श्रियः ग्रहो यत्र ।) पक्षिणः पानीय-

शाला । तत्पर्य्यायः । शकुनिप्रपा २ ।
इति
हारावली ॥

**श्रीघनं**, क्ली, (श्रिया घनम् ।) दधि । इति जटा-

धरः ॥

**श्रीघनः**, पुं, (श्रिया बुद्ध्या घनः ।) बुद्धः । इत्य-

मरः ॥

**श्रीचक्रं**, क्ली, (श्रियाश्चक्रम् ।) त्रिपुरसुन्दर्य्याः

पूजायन्त्रविशेषः । यथा, --
"श्रीचक्रस्योद्धृतिं वक्ष्ये तत्र पूजाप्रसिद्धये
।
बिन्दुगर्भं त्रिकोणन्तु कृत्वा चाष्टारमुद्धरेत्
॥
दशारद्वयमन्वस्राष्टारषोडशकोणकम्।
त्रिरेखात्मकभूगेहवेष्टितं यन्त्रमालिखेत् ॥"
इति मन्त्रमहोदधौ ११ तरङ्गः ॥
अपिच । अथ श्रीचक्रम् । यथा बिन्दुमत्
त्र्यस्र
अष्टकोणं एतत्रयं संहारचक्रम् । द्विदशारं
चतुर्द्दशारं स्थितिचक्रमेतत्त्रयम् । अष्टपत्रं
षोडशदलं वृत्तत्रयम् । भूसदनत्रयं
चतुर्द्वार-

रत्नादिषु च निर्म्माणे मानमिच्छावशाद्भवेत् ॥
एकतोलं द्वितोलं वा त्रितोलं वेदतोलकम् ।
इतोऽधिकं नरः कृत्वा प्रायश्चित्तीभवेत् ध्रुवम्
॥
रक्तेन रजसापूर्य्य श्रीचक्रं भुवि पूजयेत् ।
नश्यन्ति सर्व्वविघ्नानि प्राप्यते च यथेप्सितम्
॥
दशभागं सुवर्णस्य ताम्रस्य द्वादशं तथा ।
षड्दशं रजतस्याथ चैतल्लोहत्रयं भवेत् ॥
चक्रेऽस्मित् पूजयेद्यो हि स
सौभाग्यमवाप्नुयात
अणिमाद्यष्टसिद्धीनामधिपोजायतेऽचिरात् ॥
विद्रुमे रचिते यन्त्रे पद्मरागेऽथवा प्रिये ।
इन्द्रनीलेऽथ वैदूर्य्ये स्फाटिके मरकतेऽपि वा
।
धनं पुत्त्रं तथा दारान् यशांसि लभते ध्रुवम् ।
ताम्रन्तु कान्तिदं प्रोक्तं सुवर्णं शत्रुनाशनम् ॥
राजतं क्षेमदञ्चैव स्फाटिकं सर्व्वसिद्धिदम् ॥"
एतदयन्त्रमात्रे ज्ञेयम् ॥ * ॥ अथ श्रीचक्रनाशे
प्रायश्चित्तम् ।
"दग्धं च स्फुटितं यन्त्रं हृतं चौरेण वा प्रिये ।
उपवासं प्रकुर्व्वीत दिनमेकमतन्द्रितः ॥
लक्षमात्रं जपेद्विद्यां होमतर्पणपूर्व्वकम् ।
सद्भक्त्या च गुरुं तोष्य ब्राह्मणानपि भोज-
येत् ॥"
लक्षं जप्त्वा दशांशहोमः तद्दशांशञ्च तर्पणम् ।
लक्षमयुतमित्येके ।
"कदाचिल्लुप्तचिह्नं वा स्फु टितादि विदूषणम्
भग्नं करोति यो मर्त्यो मृत्युस्तस्य द्रुतं भवेत्
तस्माच्च तीर्थराजे वा गङ्गादिसरितां वरे ॥
समुद्रे वा क्षिपेद्देवि चान्यथा दुःखमाप्नुयात्
॥"
इदन्तु यन्त्रमात्रविषयम् ॥ * ॥ अथ श्रीचक्र-
पादोदकमाहात्म्यम् ।
"गङ्गापुष्करनर्म्मदासु यमुनागोदावरीगोमती-
गङ्गाद्वारगयाप्रयागवदरीवाराणसीसिन्धुषु।
रेवासेतुसरस्वतीप्रभृतिषुब्रह्माण्डभाण्डोदरे
तीर्थस्नानसहस्रकोटिफलदं
श्रीचक्रपादोदकम्'

**श्रीदः**, पुं, (श्रियं ददातीति । दा + कः ।)

कुबेरः । इत्यमरः ॥ शोभादातरि, त्रि, ॥

**श्रीधरः**, पुं, (धरतीति । धृ + अच् । श्रिया

धरः ।) विष्णुः । (यथा,
मुकुन्दमालायाम् । ९ ।
"मा भैर्मन्दमनो विचिन्त्य बहुधा
यामीश्चिरं
यातना
नामी नः प्रभवन्ति पापरिपवः स्वामी
ननु
श्रीधरः ।
आलस्यं व्यपनीय भक्तिसुलभं
ध्यायस्व नारायणं
लोकस्य व्यसनापनोदनकरो दासस्य
किं न
क्षमः ॥")
भूतार्हद्भेदः । इति हेमचन्द्रः ॥
शालग्राम-
चक्रे, क्ली, । यथा, --
"अतिक्षुद्रं द्विचक्रन्तु
वनमालाविभूषितम् ।
श्रीधरं देवि विज्ञेयं श्रीप्रदं गृहिणां सदा
॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे १९
अध्यायः ॥

**श्रीनन्दनः**, पुं, (श्रियाः नन्दनः ।) कामदेवः ।

इति हेमचन्द्रः ॥ लक्ष्मीपुत्त्रश्च ॥

**श्रीनिकेतनः**, पुं, (श्रियं निकेतयति वासयतीति ।

नि + कित + णिच् + ल्युः ।) विष्णुः ।
इति
शब्दरत्नावली ॥ (यथा, भागवते । ९ ।
१८ । १३ ।
"भगवानपि विश्वात्मा पावनः
श्रीनिकेतनः ॥"
श्रियः आश्रयस्थाने, त्रि । यथा,
भागवते । ३ ।
३ । २० ।

समायुक्तमेतत् सृष्ट्यात्मकम् । तदुक्तं यामले ।
“बिन्दुत्रिकोणवसुकोणदशारयुग्म-
मन्वस्रनागदलसङ्गतषोडशारम्।
वृत्तत्रयञ्च धरणीसदनत्रयञ्च
श्रीचक्रराजमुदितं परदेवतायाः ॥”
चक्रराजं सिन्दूरकुङ्कुमादिना लिखितं सुवर्ण-
रजतपञ्चरत्नस्फटिकताम्राद्युत्कीर्णं कुर्य्यात् ।
तथा भूतभैरवतन्त्रे ।
“अकृत्वा सुसमां रेखां नालिख्य सुसमं मुखम्
योऽत्र यन्त्रे प्रवर्त्तेत तस्य सर्व्वं हराम्यहम् ॥
यस्या यत्र स्थितिर्द्देवि तत्र तां नार्च्चयेद्यदि ।
तन्मांसरुधिरैणैव पारणा तस्य जायते ॥
पशोरालोकनं न स्यात्तथा कुरुत यत्नतः ।
यदि दैवात् पशोरग्रे लिखितं विद्यते क्वचित् ।
ममाङ्गक्षतिरेवात्र क्रियते पापबुद्धिना ॥”
तथा भूतभैरवे ।
“योऽस्मिन् यन्त्रेमहेशानि केशराणि प्रकल्पयेत्
योगिनीसहितास्तस्य हिंसां कुर्व्वन्ति भैरवाः ॥”
इति वचनान्नात्र केशराणि ।
“न रात्रावङ्कयेत् यन्त्रं साधकस्तु कदाचन ।
प्रमादादङ्किते यन्त्रे शापो भवति तत्क्षणात् ॥
तत्रापराजितापुष्पे करवीरे जवासु च ।
तत्र देवी वसेन्नित्यं तद्यन्त्रे पूजनं मम ॥”
तथा सच्छन्दभैरवे ।
“कुर्य्याच्च स्थण्डिले यन्त्रं हस्तमात्रं सुसुन्दरम् ।
अथ दर्शनफलम् ।
“सम्यक् शतक्रतून् कृत्वा यत् फलं समवाप्नुयात्
तत् फलं लभते भक्त्या कृत्वा श्रीचक्रदर्शनम् ॥
षोडशं वा महादानं कृत्वा यल्लभते फलम् ।
तत् फलं समवाप्नोति कृत्वा श्रीचक्रदर्शनम् ॥
सार्द्धत्रिकोटितीर्थेषु स्नात्वा यत् फलमश्नुते ।
तत् फलं लभते भक्त्या कृत्वा श्रीचक्रदर्शनम् ॥
इति तन्त्रसारः ॥

**श्रीजः**, पुं, (श्रियः जायते इति । जन् + डः ।)
कामदेवः । श्रिया जातत्वात् । शाम्बः । इति केचित् ॥

**श्रीतालः**, पुं, (श्रीयुक्तस्तालः ।) तालवृक्षसदृश-
वृक्षविशेषः । तत्पर्य्यायः । मृदुतालः २ लक्ष्मी-
तालः ३ मृदुच्छदः ४ विशालपत्रः ५ लेखार्हः ६ मसीलेख्यदलः ७ शिरालपत्रकः ८ याम्योद्-
भूतः । अस्य गुणाः । मधुरत्वम् । शीतत्वम् । ईषत् कषायत्वम् । पित्तनाशित्वम् । कफकारि-
त्वम् । ईषद्वातप्रकोपणत्वञ्च । इति राज-
निर्घण्टः ॥
“स्निग्धस्मितावलोकेन वाचा पीयूषकल्पया ।
चरित्रे णानवद्येन श्रीनिकेतेन चात्मना ॥”)

**श्रीनिवासः**, पुं, (श्रियो निवास आश्रयस्थानम् ।
विष्णुः । इति त्रिकाण्डशेषः ॥

**श्रीपं**, त्रि, (श्री + पा + कः ।) श्रियं पाति यत् ।
इति मुग्धबोधव्याकरणम्॥

**श्रीपञ्चमी**, स्त्री, (श्रियः सरस्वत्याः पञ्चमी ।)
माघशुक्लपञ्चमी । यथा, --
“चतुर्थी वरदा शुक्ला तत्र गौरी सुपूजिता ।
सौभाग्यमतुलं कुर्य्यात् पञ्चम्यां श्रीरपि श्रियम् ॥
सरस्वतीपूजानध्यायश्चात्रगौडाचारः । अत्र
श्रीपञ्चम्यामारभ्य प्रतिमासं षडब्दसमाप्यं
श्रीपञ्चमीव्रतं कुर्व्वन्ति पठन्ति च । इति संव-
त्सरकौमुदीधृतब्रह्मपुराणवचनम्॥

**श्रीपतिः**, पुं, (श्रियः पतिः ।) विष्णुः । इत्यमरः ॥
(यथा, मुकुन्दमालायाम् । १६ ।
“सेव्यः श्रोपतिरेव सर्व्वजगतामेकान्ततः साक्षिणः
प्रह्लादश्च विभीषणश्च करिराट् पाञ्चाल्य-
हल्या ध्रुवः ॥”)
पृथिवीनाथः । इति मेदिनी ॥

**श्रीपथः**, पुं, (श्रियः पन्थाः । “ऋक्पूरब्धूःपथा-
मानक्षे ।” ५ । ४ । ७४ । इति अः ।) राज-
पथः । इति हेमचन्द्रः ॥

**श्रीपर्णं**, क्ली, (श्रीविशिष्टानि पर्णानि यस्य ।)
पद्मम् । अग्निमन्थवृक्षः । इति मेदिनी ॥

**श्रीपर्णिका**, स्त्री, (श्रीपर्णी एव । स्वार्थे कन् ।)

**श्रीपर्णी**, स्त्री, (श्रीयुक्तानि पर्णानि यस्याः । ङीष्)
गम्भारीवृक्षः । इत्यमरः । कट्फलवृक्षः । इति
मेदिनी ॥ शाल्मलीवृक्षः । हठवृक्षः । इति
हेमचन्द्रः । अग्निमन्थवृक्षः । इति राज-
निर्घण्टः ॥

**श्रीपिष्टः**, पुं, (श्रियः सरलद्रुमस्य पिष्टः ।) सरल-
वृक्षरसः । इत्यमरटीकायां रामाश्रमः ॥

**श्रीपुत्त्रः**, पुं, अश्वः । इति त्रिकाण्डशेषः ॥ (श्रियः
पुत्त्रः ।) कामदेवश्च ॥

**श्रीपुष्पं**, क्ली, (श्रीयुक्तं पुष्पमस्य ।) लवङ्गम् ।
इति राजनिर्घण्टः ॥ पद्मकाष्ठम् । इति रत्न-
माला ॥

**श्रीफलः**, पुं, (श्रीयुक्तं फलमस्य ।) विल्ववृक्षः ।
इत्यमरः । राजादनी । इति राजनिर्घण्टः ॥

**श्रीफला**, स्त्री, (श्रीविशिष्टं फलमस्याः ।) नीली ।
क्षुद्रकारवेल्ली । इति राजनिर्घण्टः ॥

**श्रीफलिका**, स्त्री, (श्रीफला + स्वार्थे कन् । टापि
अत इत्वम् ।) क्षुद्रकारवेल्ली । महानीलीवृक्षः ।
इति राजनिर्घण्टः ॥

**श्रीफली**, स्त्री, (श्रीयुक्तं फलमस्याः । ङीष् ।)
आमलकी । नीली । इति मेदिनी ॥

**श्रीभद्रा**, स्त्री, भद्रमुस्तकः । इति शब्दरत्नावली ॥

**श्रीभागवतं**, क्ली, (श्रीमत् भागवतमिति मध्यपद-
लोपिसमासः ।) अष्टादशमहापुराणान्तर्गता-
ष्टादशसहस्रश्लोकयुक्तपुराणविशेषः ! (तत्तु
मत-
भेदेन विष्णुभागवतदेवीभागवतभेदात् । द्विवि-
धम् ।) यथा, --
"अष्टादशं भागवतं सारमाकृष्य सर्व्वतः ।
कृतवान् भगवान् व्यासः शुकञ्चाध्यापत् सुतम्
॥
स्कन्धैर्द्वादशभिर्युक्तं ब्रह्मविद्यासमन्वितम् ।
वेदवेदान्तसारं तत् पुराणानाञ्च सत्तम ॥
यत्र संकीर्त्तितः कृष्णो भगवान् वै पदे पदे ।
श्रीपार्व्वत्युवाच ।
सर्व्वञ्च हरिलीलाढ्यं श्रीमद्भागवतं
यदि ।
स्कन्धस्य दशमस्यायं महिभा केन
हेतुना ॥
रासलीलेति तत्रापि कथ्यते
सर्वतोऽधिका ।
तत्र मे कारणं श्रोतुमुत्कण्ठा वर्द्धते
भृशम् ॥
श्रीसदाशिव उवाच ।
स्वयं भगवतो जन्म तस्य लीला च
वर्ण्यते ।
श्रुतीनाञ्च स्तुतिर्यत्र
सर्व्ववेदार्थसम्मिता ॥
स्वयं भगवतो लीला सर्वशक्तिश्च
दर्शिता ।
दशमस्कन्धमाहात्म्यं एतद्वै कारणं
मतम् ॥
तत्रापि रासलीलाया
यन्माहात्म्यमुदीरितम् ।
तत्रापि कारणं वच्मि शृणु
पर्वतनन्दिनि ॥
यः स्वयं भगवान् कृष्णः पूर्णैश्वर्य्य
इतीर्य्यते ।
स सर्व्वशक्तिसम्पूर्णः
सर्वलीलाप्रकाशकः ॥
तस्यैव शक्तयो गोप्यः प्रोक्ताः
सर्व्वोत्तमा यतः ।
शक्तीनाञ्च शक्तिमतो लीला यत्रैकतः
स्थिता ।
सा लीला सर्वतः श्रष्ठा कीर्त्तिता
परम-
र्षिभिः ॥"
इति पाद्मे पातालखण्डे ७१
अध्यायः ॥
(तथाच शिवपुराणे ।
"भगवत्याश्च दुर्गायाश्चरितं यत्र
विद्यते ।
स्तेषामेकतमः पुरा विकशितो यः पूर्णिमा-
चन्द्रमाः ।
तेनेदं शरदिन्दुसुन्दरसुधास्यन्दैर्जगत्
मण्डित
शेषेष्वेषु विकस्वरेषु भविता कीदृक् न
जार्ना
महे ॥"
इति कालिदासः ॥)

**श्रीमलापहा**, स्त्री, धूम्रपत्रा । इति राज-
निर्घण्ठः ॥

**श्रीमुखः**, पुं, कालचक्रस्य सप्तमवत्सरः । इति
केचित् ॥ पत्रपृष्ठे श्रीशब्दलिखनम् । इति
लोक-
प्रसिद्धिः ॥ शोभायुक्तानने, क्ली ॥

**श्रीमूर्त्तिः**, स्त्री, (श्रीयुक्ता मूर्त्तिः ।) देवविग्रहः ।
विष्णुप्रतिमा । यथा । अथ श्रीमूर्त्तयः ।
एका-
दशस्कन्धे ।
"शैली दारुमयी लौही लेप्या लेख्या च
मैकता
मनोमयी मणिमयी प्रतिमाष्टविधा मता ॥
चलाचलेति द्विविधा प्रतिष्ठा जीवमन्दिरम् ।
उद्वासावाहने न स्तः स्थिरायामुद्धवार्च्चने
॥
अस्थिरायां विकल्यः स्यात् स्थण्डिले तु
भवेत्
द्वयम् ।
स्नपनं त्वविलेप्यायामन्यत्र परिमार्ज्जनम्
॥
गोपालमन्त्रोद्दिष्टत्वात् तच्छ्रीमूर्त्तिरपेक्षिता ।
तथापि वैष्णवप्रीत्यै लेख्याः
श्रीमूर्त्तयोऽखिलाः ॥"
अथ श्रीमूर्त्तिलक्षणानि । हयशीर्षपञ्चरात्रे ।
भगवच्छ्रीहयशीर्षब्रह्मसंवादे ।
"आदिमूर्त्तिर्वासुदेवः सङ्कर्षणमथासृजत् ।
चतुर्मुर्त्तिः परं प्रोक्तं एकैको भिद्यते त्रिधा ॥
केशवादिप्रभेदेन मूर्त्तिर्द्वादशकं स्मृतम् ।

श्रीभागवतमित्येव ये स्मरन्ति नराः क्वचित् ।
मुच्यन्ते सर्व्वपापेभ्यो यथा नाम्ना गदाभृतः ॥
महीभृतां यथा मेरुर्देवानां केशवो यथा ।
सुरभिः कामधेनूनामप्सरस्सु यथोर्व्वशी ॥
कार्ष्णानां पार्व्वतीनाथो राज्ञां दाशरथिर्यथा ।
सप्तीनाञ्चैव गन्धर्व्वा नदीनां जाह्नवी यथा ।
पुराणानां तथा राजन् श्रीभागवतमुत्तमम् ॥
अम्बरीश उवाच ।
पुराणं तं भागवतं पठ मे पुरतो हरेः ।
चरितं दैत्यराजस्य प्रह्लादस्य च मत्पतेः ॥
गौतम उवाच ।
अम्बरीश शुकप्रोक्तं नित्यं भागवतं शृणु ।
पठस्व स्वमुखेनापि यदीच्छति भवक्षयम् ॥
स्कन्धे स्कन्धेऽश्वमेधस्य फलमाप्नोति मानवः ।
प्रत्यध्यायं राजसूयफलेन परियुज्यते ॥
प्रतिश्लोकं वाजपेयफलं तस्योपजायते ।
पदे पदे महाराज तीर्थस्नानफलं लभेत् ॥
एतद्भागवतं देवि पुराणं मुक्तिसाधकम् ।
तत्रापि दशमस्कन्धः सर्व्वभक्तमनोहरः ।
तत्रापि रासलीलाढ्या पञ्चाध्यायी महाफला ॥
तत्तु भागवतं प्रोक्तं नतु देवीपुराणकम् ॥”
अस्य विशेषविवृतिस्तु पुराणशब्द-भागवत-शब्दयोर्द्रष्टव्यम् ॥)

**श्रीभ्राता**, पुं, (श्रियः भ्राता समुद्रजातत्वात् ।) अश्वः । इति राजनिर्घण्टः ॥ चन्द्रः । समुद्रोत्पन्नत्वात् ॥

**श्रीमतिः**, स्त्री, राधा । यथा, --
“श्रीराधा श्रीमतिः श्रेष्ठा श्रेष्ठरूपा श्रुति-प्रिया ॥”
इति नारदपञ्चरात्रे तस्याः सहस्रनामस्तोत्रम् ॥

**श्रीमती**, स्त्री, (श्रीर्विद्यतेऽस्या इति । मतुप । ङीप् ।) श्रीयुक्ता । योषिन्नाम्नः पूर्व्वं एतच्छब्दो योज्यः । इति शिष्टाचारः ॥

**श्रीमस्तकः**, पुं, (श्रीयुक्तं मस्तकमस्य ।) रसोनः । इति त्रिकाण्डशेषः ॥ (श्रियो मस्तकः ।) लक्ष्मीशिरश्च ॥

**श्रीमान्**, [त्] पुं, (श्रीर्विद्यतेऽस्येति । मतुप् ।) तिलकवृक्षः । इत्यमरः ॥ अश्वत्थवृक्षः । इति राजनिर्घण्टः ॥ विष्णुः । इति शब्दरत्नावली ॥ शिवः । इति त्रिकाण्डशेषः ॥ कुबेरः । इति शब्दमाला ॥

**श्रीमान्**, [त्] त्रि, (श्री + मतुप् ।) मनोज्ञः । (यथा, माघे । १ । १ ।
श्रियः प्रतिः श्रीमति शासितुं जगत्
जगन्निवासो वसुदेवसद्मनि ।
वसन् ददर्शावतरन्तमम्बरात्
हिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥”)
पङ्कजं दक्षिणे दद्यात् पाञ्चजन्यं तथोपरि ॥
वामोपरि गदा यस्य चक्रं चाधोव्यवस्थितम् ।
आदिमूर्त्तेस्तु भेदोऽयं केशवेति प्रकीर्त्त्यते ॥ १ ॥
अधरोत्तरभावेन कृतमेतत्तु यत्र वै ।
नारायणाख्या सा मूर्त्तिः स्थापिता भुक्ति-मुक्तिदा ॥ २ ॥
सव्याधः पङ्कजं यस्य पाञ्चजन्यं तथोपरि ।
दक्षिणोर्द्धे गदा यस्य चक्रं चाधोव्यवस्थितम् ॥
आदिमूर्त्तेस्तु भेदोऽयं माधवेति प्रकीर्त्त्यते ॥ ३ ॥
दक्षिणाधःस्थितं चक्रं गदा यस्योपरिस्थिता ॥
वामोद्‌र्ध्वसंस्थितं पद्मं शङ्खं चाधोव्यवस्थितम् ।
सङ्कर्षणस्य भेदोऽयं गोविन्देति प्रकीर्त्त्यते ॥ ४ ॥
दक्षिणोपरि पद्मं तु गदा चाधोव्यवस्थिता ।
सङ्कर्षणस्य भेदोऽयं विष्णुरित्यभिशब्द्यते ॥ ५ ॥
दक्षिणोपरि शङ्खञ्च चक्रं चाधः प्रदृश्यते ।
वामोपरि तथा पद्मं गदा चाधः प्रदृश्यते ।
मधुसूदननामायं भेदः सङ्कर्षणस्य च ॥ ६ ॥
त्रिविक्रममूर्त्तिमाह ।
दक्षिणोर्द्धे गदा यस्य पङ्कजं चाप्यधः स्थितम् ।
वामोर्द्धे संस्थितं चक्रमधः शङ्खं प्रदृश्यते ।
ब्रह्माण्डगं वामपादं दक्षिणं शेषपृष्ठगम् ॥ ७ ॥
श्रोवामनमूर्त्तिमाह ।
बलिवञ्चनसयुक्त वामनं चाप्यधःस्थितम् ।
वामोर्द्धे कौमोदी यस्य पुण्डरीकमधास्थितम् ॥

|  | धनी । इति मेदिनी ॥ तत्पर्य्यायः ।<br>लक्ष्मीवान् २<br>लक्ष्मणः ३ श्रीलः ४ । इत्यमरः ॥<br>(यथा, --<br>"श्रीमन्नाथ भवद्यशोविटपिनः खे<br>तारकाः<br>कोरका- |  |
|---|---|---|

दक्षिणोर्द्ध्वे सहस्रारं पाञ्चजन्यमधः स्थितम् ।
सप्ततालप्रमाणेन वामनं कारयेत् सदा ॥ ८ ॥
ऊर्द्ध्वे दक्षिणतश्चक्रमधः पद्मं व्यवस्थितम् ।
वामोर्द्ध्वे कौमोदी यस्य पाञ्चजन्यमधःस्थितम् ॥
पद्मा पद्मकरा वामे पार्श्वे तस्य व्यवस्थिता ।
स्थितो वाप्युपविष्टो वा सानुरागविलासवान् ॥
प्रद्युम्नस्य हि भेदोऽयं श्रीधरेति प्रकीर्त्त्यते ॥ ९ ॥
दक्षिणोर्द्ध्वे महाचक्रं कौमोदी तदधःस्थिता ॥
वामोर्द्ध्वे नलिनं यस्य अधः शङ्खं विराजते ।
हृषीकेशेति विज्ञेयः स्थापितः सर्व्वकामदः ॥ १०
दक्षिणोर्द्ध्वे पुण्डरीकं पाञ्चजन्यमधस्तथा ।
वामोर्द्ध्वे संस्थितं चक्रं कौमोदी तदधःस्थिता ॥
पद्मनाभेति सा मूर्त्तिःस्थापिता मोक्षदायिनी ११
दक्षिणोर्द्ध्वे पाञ्चजन्यमधस्तात्तु कुशेशयम् ॥
सव्योर्द्ध्वे कौमोदी देवी हेतिराजमधःस्थितम् ।
अनिरुद्धस्य भेदोऽयं दामोदर इति स्थितः ॥ १२ ॥
एतेषान्तु स्त्रियौ कार्य्ये पद्मवीणाधरे शुभे ।
इति क्रमेण मार्गादिमासाधिपाः केशवादयो द्वादश ॥ * ॥ अथ सिद्धार्थसंहितायां चतुर्व्विंशतिमूर्त्तयः ।
"वासुदेवो गदाशङ्खचक्रपद्मधरो मतः । १ ।
पद्मं शङ्खं तथा चक्रं गदां वहति केशवः ॥ २ ॥
शङ्खं पद्मं गदां चक्रं धत्ते नारायणः सदा । ३ ।
गदां चक्रं तथा शङ्खं पद्मं वहति माधवः ॥ ४ ॥
चक्रं पद्मं तथा शङ्खं गदाञ्च पुरुषोत्तमः । ५ ।
पद्मं कौमदकीं शङ्खं चक्रं धत्तेऽप्यधोक्षजः ॥ ६ ॥
सङ्कर्षणो गदाशङ्खपद्मचक्रधरः स्मृतः । ७ ।
चक्रं गदां पद्मशङ्खौ गोविन्दो धरते भुजे ॥ ८ ॥

सेव्या निजनिजैरेव मन्त्रैः स्वस्वेऽष्ट मूर्त्तयः ।
शालग्रामात्मके रूपे नियमो नैष विद्यते ॥
द्विभुजा जलदश्यामा त्रिभङ्गो मधुराकृतिः ॥
सेव्या ध्यानानुरूपैव श्रीमूर्त्तिः कृष्णदैवतैः ॥
अन्याश्च विविधाः श्रीमदवतारादिमूर्त्तयः ।
प्रादुर्भावविधावग्रे लेख्यास्तत्तद्विशेषतः ॥
नित्यकर्म्मप्रसङ्गेऽत्र मूर्त्तिजन्मप्रतिष्ठयोः ।
विधिर्न्न लेखितुं योग्यः स तु लेखिष्यतेऽग्रतः ॥"
इति श्रीहरिभक्तिविलासे १८१ विलासः ॥

**श्रीयुक्तः**, त्रि, (श्रिया युक्तः ।) लक्ष्मीविशिष्टः । श्रीमान् । जीवत्पुरुषनाम्नः पूर्व्वं दातव्योऽयम् ॥

**श्रीयुतः** त्रि, (श्रिया युतः ।) लक्ष्मीविशिष्टः । श्रीमान् । जीवत्पुरुषनाम्नः पूर्व्वं दातव्योऽयम् ॥

**श्रीरसः**, पुं, (श्रियः रसो निर्य्यासः ।) श्रीवेष्टः । इति राजनिर्घण्टः ॥

**श्रीरङ्गपत्तनं**, क्ली, देशविशेषः । सारंपटन् इति भाषा । इति मादराजाख्यदेशे प्रसिद्धम् ॥

**श्रीरागः**, पुं, षड्रागाणां मध्ये तृतीयरागः । इति हलायुधः । अस्य रागिण्यो यथा, --
"गान्धारी देवगान्धारी मालवश्रीश्च सारवी ।
रामकीर्य्यपि रागिण्यः श्रीरागस्य प्रिया इमाः ॥"
इति सङ्गीतदामोदरः ॥
विस्तारस्तु श्रीशब्दे द्रष्टव्यः ॥

**श्रीरामः**, पुं, (श्रीयुतो रामः ।) रामचन्द्रः । इति शब्दरत्नावली ॥

इति रुद्रमुखात् श्रुत्वा राजा दशरथः सुखी ।
ततश्चक्रे वशयज्ञं स देव्या सह तत्परः ॥
ततः काले महाराज्ञी गर्भं धत्ते मनोहरम्
चैत्रे मासि सिते पक्षे नवम्यां शोभने दिने ।
अतिपुण्यसुसंलग्ने जातो रामः स्वयं हरिः ।
पुनर्व्वस्वक्षसंयुक्ता सा तिथिः सर्व्वकामदा ।
श्रीरामनवमी प्रोक्ता कोटिसूर्य्यग्रहाधिका ॥
अस्मिन् दिने महापुण्ये राममुद्दिश्य भक्तितः ।
यत्किञ्चित् क्रियते कर्म्म तदक्षयकरं स्मृतम् ॥
उपोषणं जागरणं पितॄनुद्दिश्य तर्पणम् ।
तस्मिन् दिने तु कत्तव्यब्रह्मप्राप्तिमभीपसुभिः।
तस्मिन् दिने महापुण्ये राममुद्दिश्य भक्तितः
जपेदेकान्त आसीनो यावत् स्याद्दशमौदिनम् ॥
तेनैव स्यात् पुरश्चर्य्या दशम्यां भोजयेद्द्विजान् ।
भक्ष्यभोज्यैर्बहुविधैर्भक्त्या दद्याच्च दक्षिणाम् ।
कृतकृत्यो भवेत्तेन सद्यो रामः प्रसीदति ॥
यस्तु रामनवम्यान्तु भुङ्क्ते मर्त्यो विमूढधीः ।
कुम्भोपाकेषु घोरेषु पच्यते नात्र संशयः ॥
कुर्य्याद्रामनवम्यां य उपोषणमतन्द्रितः ।
न शेते मातृजठरे स्वयं रामो भवेत्तु सः ॥
श्रीरामनवमी नाम पुण्यात् पुण्यतमग्रतम् ।
इति श्रुत्वा सुसंतुष्टः सनकः पुनरब्रवीत् ।

गदां पद्मं तथा शङ्खं चक्रं विष्णुर्विभर्त्तियः । ९
।
चक्रं शङ्खं तथा पद्मं गदाञ्च मधुसूदनः ॥ १०
॥
गदां सरोजं चक्रञ्च शङ्खं धत्तेऽच्युतः सदा ।
११ ।
शङ्खं कौमोदकीं चक्रमुपेन्द्रः पद्ममुद्वहेत् ॥
१२ ॥
शङ्खचक्रगदापद्मधरः प्रद्युम्न उच्यते । १३ ।
पद्मं कौमोदकीं चक्रं शङ्खं धत्ते त्रिविक्रमः ॥
१४ ॥
शङ्खं चक्रं गदां पद्मं वामनो वहते सदा । १५ ।
पद्मं चक्रं गदां शङ्खं श्रीधरो वहते भुजे ॥ १६
॥
चक्रं पद्मं गदां शङ्खं नरसिंहो बिभर्त्ति यः ।
१७ ।
पद्मं सुदर्शनं शङ्खं गदां धत्ते जनार्द्दनः ॥ १८
॥
अनिरुद्धश्चक्रगदाशङ्खपद्मलसद्भुजः । १९ ।
हृशीकेशो गदां चक्रं पद्मं शङ्खञ्च धारयेत् ॥
२० ॥
पद्मनाभो वहेत् शङ्खं पद्मं चक्रं गदां तथा ।
२१ ।
पद्मं चक्रं गदाशङ्खं धत्ते दामोदरः सदा ॥ २२
॥
शङ्खं चक्रं सरोजञ्च गदां वहति यो हरिः । २३
।
शङ्ख कौमोदकीं पद्मं चक्रं कृष्णो विभर्त्ति
यः ॥ २४ ॥
एताश्च मूर्त्तयो ज्ञेया दक्षिणाधःकरक्रमात् ॥”
मत्स्यपुराणे च ।
“एतदुद्देशतः प्रोक्तं प्रतिमालक्षणं तथा ।
विस्तरेण न शक्नोति बृहस्पतिरपि द्विजाः
॥”
इति ।
सेवानिष्ठा हरेः श्रीमद्वैष्णवाः पाञ्चरात्रिकाः ।
प्राकट्यादखिलाङ्गानां श्रीमूर्त्तिं बहु मन्यते ॥

**श्रीरामनवमी**, स्त्री, (श्रीरामस्य नवमी तज्जन्म
दिनत्वात् ।) चैत्रशुक्लनवमी । सा च
श्रीरामस्य
जन्मतिथिः ॥ तद्व्रतकथा यथा, --
“पुरैकदा सुखासीन ब्रह्माणं जगतां पतिम्
।
उवाच सहसागत्य सनकः संजितेन्द्रियः
॥
सनक उवाच ।
राज्ञा दशरथेनैव राज्ञ्या कोशल्ययापि वा
।
कस्मात् कर्म्मवशाल्लब्धः पुत्त्रोऽसौ
जगतीपतिः ।
दूर्व्वादलश्यामरामो विस्तार्य्य कथयस्व
मे ॥
ब्रह्मोवाच ।
साधु पृष्टं त्वया वत्म जगतां हितकारकम्
।
पुरा राजा दशरथः कौशल्या च समाहितौ
॥
जजाप मन्त्रं दुर्गायाः शिवस्य च विशेषतः
।
तयोर्जपेन तुष्टः सन् शिवः प्रत्यक्षतां गतः
॥
दशरथ उवाच ।
अद्य मे सफलं जन्म अद्य मे सफलं तपः
।
अद्य मे सफलं चक्षुर्यतस्त्वमवलोकितः ॥
श्रीशिव उवाच ।
किन्ते काम्यं महाराज कथयस्व ददामि
तत् ॥
दशरथ उवाच ।
देवदेवाप्यपुत्त्रोऽहमिति दुःखेन दुःखितः
।
चिरं विचार्य्य मनसा शिवाराधनतत्परः ॥
इति श्रुत्वा महादेवस्तमुवाच दयापरः ।
कुरु राजन् वंशयज्ञं ततस्ते जगतीपतिः
॥
श्रीरामनामा पुत्त्रोऽसौ कौशल्यायां
भविष्यति ।

विधिना केन कर्त्तव्यं वद मे कमलोद्भव ॥
* ॥
ब्रह्मोवाच ।
व्रतपूर्व्वदिने स्नात्वा सकृद्भुक्त्वा
निरामिषम् ।
त्यक्त्वा च योषिच्छयनं शयीत
स्थण्डिले कुशे ॥
ब्राह्मे मुहूर्त्ते चोत्थाय कृत्वा प्रातः क्रियां
ततः ।
प्रातः स्नात्वा शुचिर्भूत्वा सङ्कल्पं
विधिनाचरेत्
प्रतिमायां घटे वापि पटे वा यन्त्रतोऽपि
वा ।
शालग्रामशिलायान्तु तुलसीदलकल्पिता
॥
पूजा श्रीरामचन्द्रस्य
कोटिकोटिगुणाधिका ।
कौशल्या पूजनीयादौ राजा चैव ततः
परम् ॥
षडङ्गं पूजयेत्तत्र लक्ष्मणादीन् विशेषतः ।
पूजयेत् परया भक्त्या परिवारं ततः परम्
॥
ततो ग्रहांश्च दिक्पालांस्तदस्त्राणि च
पूजयेत् ।
उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां
तिथौ
लग्ने कर्क्कटके पुनर्व्वसुदिने मेषं गते
पूषणि ।
निर्द्दग्धुं निखिलाः पलाशसमिधो
मध्यादयो-
ध्यारणे-
राविर्भूतमभूदपूर्व्वविभवं यत्किञ्चिदेकं
महः ॥
ततो वाद्यादिकं कृत्वा दद्यादर्घ्यं
विशेषतः ।
मूलमन्त्रेण दद्याद्वै भक्त्या
पुष्पाञ्जलित्रयम् ॥
एवमष्टसु यामेषु अष्टधा च जपेद्व्रती ।
इतिहासकथां श्रुत्वा गीतनृत्यैर्निशां
नयेत् ॥

| | | |
|---|---|---|
| | इत्युक्त्वा तं<br>महादेवस्तयोरन्तर्हितोऽभवत् ॥ * ॥ | ततः परदिने प्रातः स्नानं कृत्वा<br>विधानतः ।<br>रामं दूर्व्वादलश्यामं भक्त्या भक्त्या<br>प्रपूजयेत् ।<br>दक्षिणां विधिवद्दत्त्वा<br>ततोऽच्छिद्रावधारयेत् ।<br>भोजयित्वा ततो विप्रान् स्वयं<br>पारणमाचरेत् ।<br>य इदं शृणुयान्नित्यं पुण्याहे च विशेषतः ।<br>बहुपुत्रो धनाढ्यश्च अन्ते<br>ब्रह्मत्वमाप्नुयात् ॥<br>संग्रामे वैरिणो हन्ता सर्वत्र विजयी भवेत्<br>राजद्वारे महाघोरे संग्रामे शत्रुसङ्क ले ॥ |

दूर्व्वादलश्यामरामस्तस्य रक्षाकरो भवेत्
॥
भक्त्या यः शृणुयाद्रोगी उल्लाषः स भवेत्
सदा
बन्ध्या पुत्त्रवती सा च
पतिचित्तानुवर्त्तिनी ।
सपत्नीदर्पदलनी सा भवेन्नात्र संशयः ॥
दरिद्रो लभते वित्तं भीतो भवति निर्भयः
।
यज्ञदानतपांस्यस्य तीर्थस्नानादिकाः
क्रियाः ॥
न रामनवमी-नाम-व्रतस्यैककला-समाः
।
यस्मै कस्मै न दातव्यं न प्रकाश्यं
कदाचन ॥
शिष्याय भक्तियुक्ताय शुचयेऽपि
प्रदापयेत् ।
शठाय परतन्त्राय विकत्थनरताय च ॥
भ्रमादपि न वक्तव्यं यदीच्छेदात्मनो
हितम् ।
मयैतत् कथितं वत्स तव
स्नेहाद्व्रतोत्तमम् ॥
य इदं कुरुते भक्त्या श्रीरामनवमीव्रतम्
।
सर्व्वपापप्रमुक्तश्च अन्ते
ब्रह्मत्वमाप्नुयात् ॥”
इति श्रीरामभक्तितरङ्गिण्यां
ब्रह्मसनकसंवादे
श्रीरामनवमीव्रतकथा समाप्ता ॥

**श्रीलः**, त्रि, (श्रीर्विद्यतेऽस्येति । श्री + सिध्मादि-
त्वात् लच् ।) लक्ष्मीवान् । इत्यमरः ॥
शोभा-
युक्तश्च ॥

**श्रीलता**, स्त्री, (श्रीविशिष्टा लता ।) महा-
ज्योतिष्मती । इति राजनिर्घण्टः ॥

**श्रीवत्सः**, पुं, (श्रीयुक्तं वत्सं वक्षो यस्य ।) विष्णुः ।
पहत्वञ्च । तत्फलं तैललेपघ्नमत्यम्लं
रुचिकृत्
परम् । इति राजनिर्घण्टः ॥

**श्रीवाटी**, स्त्री, नागवल्लीभेदः । इति राजनिर्घण्टः
॥

**श्रीवारकः**, पुं, (श्रियं वारयति कामयते इति ।
वृ + णिच् + ण्युल् ।) सितावरशाकः ।
इति
राजनिर्घण्टः ॥

**श्रीवासः**, पुं, (श्रियं सरलवृक्षं वासयतीति ।
वस + णिच् + अच् ।) सरलवृक्षरसः ।
टार-
पिन् इति भाषा । तत्पर्य्यायः । पायसः
२ वृक-
धूपः ३ श्रीवेष्टः ४ सरलद्रवः ५ ।
इत्यमरः ॥
तैलपर्णी ६ श्रीपिष्टः ७ । इति जटाधरः
॥
श्रीवेशः ८ । इति शब्दरत्नावली ॥
अस्य गुणाः ।
“श्रीवासः सरलं पूतिः
कुन्दुरुर्ग्रन्थिपर्णकम् ।
सिह्लकः परमा मांसी देवदारु मुरा
नखम् ।
सर्व्वेऽमी परमा लक्ष्मी रक्षोघ्ना ज्वर-
नाशनाः ॥”
इति राजवल्लभः ॥
अन्यत श्रीवेष्टशब्दे द्रष्टव्यम् ॥ (श्रियो
लक्ष्म्या
वासः आश्रयस्थानम् ।) पद्मम् ।
(यथा, राजेन्द्र
कर्णपूरे । ४२ ।
“श्रीवासो यशसां पदं
सुमनसामप्यास्पदं सम्पदां
यत्रागच्छति गोचरं नयनयोः
काश्मीरमीन-
ध्वजः ॥”)
“बालार्कमण्डलाभासां चतुर्बाहुं त्रिलोचनाम्
पाशाङ्कुशशरांश्चापं धारयन्तीं शिवां श्रये ॥”
एवं ध्यात्वा मानसपूजादिकं कुर्य्यात् । इति
तन्त्रसारः ॥

**श्रीवृक्षः**, पुं, (श्रीप्रदः श्रीप्रियो वा वृक्षः । शाक
पार्थिवादिवत् सभासः ।) अश्वत्थवृक्षः । इति
हेमचन्द्रः ॥ विल्ववृक्षः । यथा, --
“इषे मास्यसिते पक्षे नवम्यामार्द्रयोगतः ।
श्रीवृक्षे बोधयामि त्वां यावत् पूजां करो-
म्यहम् ॥”
इति तिथ्यादितत्त्वधृतश्रीदुर्गाबोधनमन्त्रः ॥
(विष्णोर्वक्षस्थःलस्थशुभावर्त्तविशेषः । यथा,
विष्णुपादादिकेशान्तवर्णनस्तोत्रे । २८ ।
“वक्षः श्रीवृक्ष-कान्तं मधुकरनिकरश्यामलं
शार्ङ्गपाणेः
संसाराध्वश्रमात्तैरुपवनमिवयत् सेवितं तत्
प्रपद्ये ॥”
अश्वस्य ह्रदावर्त्तः । इति माघटीकायां मल्लि-
नाथः । ५ । ५६ ॥)

**श्रीवृक्षकः**, पुं, (श्रीवृक्ष एव । स्वार्थे कन् ।)
अश्वस्य ह्रदावर्त्तः । इति त्रिकाण्डशेषः ॥
(अस्य प्रमाणं माघे । ५ । ५६ । इत्यस्य
टीकायां द्रष्टव्यम् ॥ * ॥)

**श्रीवेष्टः**, पुं, (श्रियः सरलवृक्षस्य वेष्टः निर्य्यासः ।)
सरलवृक्षस्य निर्यासः । तत्पर्य्यायः ।
“श्रीवेष्टो वृक्षधूपश्च चितागन्धो रसायकः ।
श्रीवासः श्रीरसो वेष्टो लक्ष्मीवेष्टस्तु वेष्टकः ॥
वेष्टसारो रसावेष्टः क्षीरशीर्षः सुधूपकः ।
धूपाङ्गस्तिलपर्णश्च सरलाङ्गोऽपि षोडश ॥”
तद्गुणाः ।
“श्रीवेष्टः कटुतिक्तश्च कषायः श्लेष्मपित्तजित्
।
योनिदोषरुजाजीर्णव्रणघ्नाध्मानदोषनुत् ॥”
इति राजनिर्घण्टः ॥ * ॥
अपि च ।
“श्रीवासः सरलः श्रावः श्रीवेष्टो वृक्षधूपकः ।

विष्णुचिह्नविशेषः । स तु वक्षस्यशुक्लवर्ण-
दक्षिणावर्त्तलोमावली । (यथा, रघुः । १० । १० ।
“प्रभानुलिप्तश्रीवत्सं लक्ष्मीविभ्रमदर्पणम् ।
कौस्तुभाख्यमपांसारं बिभाणं बृहतोरसा ॥”)
अर्हतां ध्वजः । इति हेमचन्द्रः ॥ सुरुङ्गाभेदः ।
इति त्रिकाण्डशेषः ॥

**श्रीवत्सकी**, [न्] पुं, श्रीवत्सकः श्रीवत्सवत् चिह्न-
मस्त्यस्येति । श्रीवत्सक + इनिः ।) हृद्वक्रावर्त्त-
हयः । इति हेमचन्द्रः ॥

**श्रीवत्सभृत्**, पुं, (श्रीवत्सं बिभर्त्तीति । भृ +
क्विप् ।) विष्णुः । इति हेमचन्द्रः ॥

**श्रीवत्सलाञ्छनः**, पुं, विष्णुः । इत्यमरः । १ । १ । २२ ॥
“श्रीवत्सो लाञ्छनं चिह्नं यस्य श्रीवत्सलाञ्छनः ।
वक्षस्यनन्यमहापुरुषलक्षणं श्वेतरोमावर्त्त-
विशेषः श्रीवत्स इति सर्व्वस्वे । श्रीवत्सो हृत्-
सङ्गतमणिविशेषः कौस्तुभवदिति कृष्णदासः ।”
इत्यरमटीकायां भरतः ॥

**श्रीवत्साङ्कः**, पुं, (श्रीवत्सः अङ्कश्चिह्नं यस्य ।)
विष्णुः । इति हलायुधः ॥ (यथा, बृहत्सं-
हितायाम् । ४३ । ३ ।
“लब्धवराः क्षीरोदं गत्वा ते तुष्टुवुः सुराः सेन्द्राः ।
श्रीवत्साङ्कं कौस्तुभमणिकिरणोद्भासितोर
स्कम् ॥”)

**श्रीवराहः**, पुं, (श्रिया युक्तो वराहः ।) विष्णुः ।
विष्णुः । इति मेदिनी ॥ शिवः । इति शब्द-
रत्नावली ॥

**श्रीवासाः**, [स्] पुं, श्रियं सरलवृक्षं वासयतीति ।
वस + णिच् + असुन् ।) सरलद्रवः । इत्यमर-
टीका ॥

**श्रीविद्या**, स्त्री, (श्रिया विद्या ।) महाविद्यावि-
शेषः । सा तु त्रिपुरसुन्दरी । तस्याः षट्त्रिंश-
द्भेदाः ग्रन्थबाहुल्यभिया न लिखिताः । अथ
श्रीविद्या । तत्र मेरुः । ज्ञानार्णवे ।
“भुमिश्चन्द्रः शिवो माया शक्तिः कृष्णाध्व-
मादनौ ।
अर्द्धचन्द्रश्च बिन्दुश्च नवार्णो मेरुरुच्यते ॥
महात्रिपुरसुन्दर्य्या मन्त्रा मेरुसमुद्भवाः ।
सकला भुवनेशानी कामेशी बीजमुद्धृतम् ।
अनेन सकला विद्याः कथयामि वरानने ॥
शक्त्यन्तस्तुर्य्यवर्णोऽयं कलमध्ये सुलोचने ।
वाग्भवं पञ्चवर्णाठ्यं कामराजमथोच्यते ॥
मादनं शिवचन्द्राठ्यं शिवान्तं मीनलोचने ।
कामराजमिदं भद्रे षड्वर्णं सर्व्वमोहनम् ॥
शक्तिबीजं वरारोहे चन्द्राद्यं सर्व्वमोहनम् ।
एतामुपास्य देवेशि कामः सर्व्वाङ्गसुन्दरः ।
कामराजो भवेद्देवि विद्येयं ब्रह्मरूपिणी ॥”
अस्यार्थः । शक्तिरेकारः तूर्य्य ईकारः तेन
श्रीवासो मधुरस्तिक्तः स्निग्धोष्णस्तुवरः सरः ॥
पित्तलावातमूर्द्धाक्षिस्वररोगकफापहः ।
रक्षोऽश्रीस्वे ददौर्गन्ध्ययूकाकण्डूव्रणप्रणुत् ॥”
इति भावप्रकाशः ॥

**श्रीशः**, पुं, (श्रिया ईशः ।) विष्णुः । (यथा,
मुग्धबोधे ।
“श्रीशोऽधिशेतेऽहिमधिष्ठितोऽब्धि-
मध्यास्य घोषं मथुरामनूष्य ।
यो द्वारकामध्यु षितो विकुण्ठ-
मुपावसच्चावसतात् स ह्नन्नः ॥”)
श्रीरामः । इति शब्दरत्नावली ॥

**श्रीसंज्ञं**, क्ली, (श्रियः संज्ञा संज्ञा यस्य ।)
लवङ्गम् इत्यमरः ॥

**श्रीसहोदरः**, पुं, (श्रियाः सहोदरः समुद्रजात-
त्वात् ।) चन्द्रः । इति केचित् ॥

**श्रीहस्तिनी**, स्त्री, (श्रीयुक्ता हस्तीनीव ।) वृक्ष-
विशेषः । हातिशूडा इति भाषा । तत्पर्य्यायः
पूरुण्डी २ । इत्यमरः ॥ नागदन्ती ३ । इति
जटाधरः ॥

| इति त्रिकाण्डशेषः ॥<br>**श्रीवल्ली**, स्त्री, (श्रीयुता वल्ली ।) कण्टकवृक्षभेदः ।<br>तत्पर्य्यायः । शिववल्ली २ कण्टवल्ली ३ शावली<br>४ अम्ला ५ कटुफला ६ दुरारोहा ७ । अस्या<br>गुणाः । कटुत्वम् । अम्लत्वम् । वातशोफकफा- | ककार एकार ईकारलकारमहामाया वाग्-<br>भवकूटम् । शिवो हकारः चन्द्रः सकारः तेन<br>हकारमकारलकारमहामायाइति कामराज-<br>कूटम् । चन्द्रः सकारः तेन सकारककारलकार-<br>महामाया इति शक्तिकूटम् । तेन त्रिभिः कूटैः<br>कामराजविद्येयम् ॥ * ॥ अस्याः ध्यानं यथा, -- | |
|---|---|---|

**श्रु**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

सक०-अनिट् ।) श्रवति । रेफरहितोऽप्यय-
मिति केचित् । शवति । इति दुर्गादासः ॥

**श्रु**, न गतौ । श्रुतौ । इति कविकल्पद्रुमः ॥

(स्वा०-पर०-सक०-अनिट् । न, शृणोति ।
रक्षांसीति पुरापि संशृणुमहे । इति मुरारौ
व्यतीहारादात्मनेपदम् । संशृणुष्व मयाख्या-
तम् । इति गणकृतानित्यत्वात् । आख्यात-
शब्दस्य क्रियाविशेषणतयाकर्म्मकत्वे समो
गमृच्छेत्यादिना म वा । इति दुर्गादासः ॥

**श्रुग्वारुः**, पुं, विकङ्कतवृक्षः । इति रत्नमाला ॥

**श्रुघ्निका**, स्त्री, सर्ज्जिकाक्षारः । इति रत्नमाला ॥

**श्रुतं**, क्ली, (श्रुयते स्म यदिति । श्रु + क्तः ।) शास्त्रम्
।

इत्यमरः ॥ (यथा, रघुः । २ । २१ ।
"श्रुतस्य यायादयमन्तमर्भक-
स्तथा परेषां युधि चेति पार्थिवः ।
अवेक्ष्य धातोर्गमनार्थमर्थवित्
चकार नाम्ना रघुमात्मसम्भवम् ॥")
श्रवणगोचरः । इति शब्दरत्नावली ॥ (यथा,
माण्डूक्योपनिषदि । ३ । २ । ३ ।
"नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुधा श्रुतेन ॥"
पुं, कालिन्दीगर्भजातः कृष्णस्य पुत्त्रविशेषः
।
यथा, भागवते । १० । ६१ । १४ ।
"श्रुतः कविर्वृषो वीरः सुबाहुर्भद्र एकलः ।
शान्तिर्दर्शः पूर्णमासः कालिन्द्याः सोमको-
ऽवरः ॥")

**श्रुतः**, त्रि, (श्रु + क्तः ।) अवधृतः । इत्यमरः ॥ आक-

र्णितः । इति मेदिनी ॥ (यथा, रघुः । १ ।
७८ ।
"स शापो न त्वया राजन् न च सारथिना
श्रुतः ॥")

**श्रुतकीर्त्तिः**, स्त्री, (श्रुता कीर्त्तिर्यस्याः ।) जनक-

भ्रातृकुशध्वजराजकन्या । सा शत्रुघ्नपत्नी
। यथा

छन्दसां लक्षणं येन श्रुतमात्रेण बुध्यते ।
तदहं कथयिष्यामि श्रुतबोधमविस्तरम् ॥"
इति तद्ग्रन्थस्याद्यश्लोकः ॥

**श्रुतर्षिः**, पुं, (श्रुतप्रधान ऋषिः ।) ऋषिविशेषः ।

सतु सुश्रुतादिः । इति त्रिकाण्डशेषः ।
यथा, --
"संहिता ऋग्यजुःसाम्नां सहितास्तैः श्रुत-
र्षिभिः ।
सामान्याद्वै कृताश्चैव दृश्यन्ते द्वापरे त्विह
॥"
इति मात्स्ये १२० अध्यायः ॥

**श्रुतश्रवोऽनुजः**, पुं, (श्रुतश्रवसोऽनुजः ।) शनैश्चर-

ग्रहः । इति हारावली ॥

**श्रुतश्रोणी**, स्त्री, द्रवन्ती । इति भावप्रकाशः ॥

**श्रुतादानं**, क्ली, (श्रुतस्यादानम् ।) ब्रह्मयादः ।

इति हारावली ॥

**श्रुताध्ययनसम्पन्नः**, त्रि, (श्रुतस्य शास्त्रस्य अध्य-

यने सम्पन्नः युक्तः ।) धर्म्मशास्त्रज्ञः ।
यथा,
याज्ञवल्क्यः ।
श्रुताध्यायनसम्पन्नाः कुलीनाः
सत्यवादिनः ।
राज्ञा सभासदः कार्य्याः शत्रौ मित्रे च ये
समाः ॥"
इति व्यवहारतत्त्वम् ॥

**श्रुतान्वितः**, त्रि, (श्रुतेन श्रुशास्त्रेण अन्वितः ।)

शास्त्रज्ञः । यथा, --
"अभून्नृपो विबुधसखः परन्तपः
श्रुतान्नितो दशरथ इत्युदाहृतः ।
गुणैर्व्वरं भुवनहितच्छलेन यं
सनातनः पितरमुपागमत् स्वयम् ॥"
इति भट्टिः । १ । १ ॥

**श्रुतार्थः**, पुं, (श्रुतोऽर्थः ।) शाब्दबोधविषयी-

भूतार्थः । श्रवणमात्रबोध्योऽर्थः । यथा, --

"घ्राणस्य नोचरो गन्धो गन्धत्वादिरपि
स्मृतः ।
तथा रसो रसज्ञायास्तथा शब्दोऽपि च
श्रुतेः ॥"
इति भाषापरिच्छेद ॥
कर्णस्य शुभाशुभलक्षणमाह ।
"रक्ताल्पपरुषश्मश्रुकर्णाःस्युः पापमृत्यवः
।
निर्म्मांसैश्चिपिटैर्भोगाः कृपणा
ह्रस्वकर्णका ।
शङ्कुकर्णाश्च राजानो रोमकर्णाः शतायुषः
।
बृहत्कर्णाश्च राजानो धनिनः
परिकीर्त्तिताः ॥"
इति गारुडे ६६ अध्यायः ॥
(श्रु + भावे क्तिन् ।) श्रोत्रकर्म्म । (यथा,
भाग-
वते । ९ । ५ । १६ ।
"यन्नामश्रुतिमात्रेण पुमान् भवति निर्म्मलः
तस्य तीर्थपदः किंवा दासानामवशिष्यते
॥")
वार्त्ता । इति मेदिनी ॥ (यथा, रघुः । १ ।
२७ ।
"व्यावृत्ता यत्परस्वे भ्यः श्रुतौ तस्करता
स्थिता ॥")
श्रवणानक्षत्रम् । इति शब्दरत्नावली ॥
षड्-
जाद्यारम्भिका । इति हेमचन्द्रः ॥ शोरत्
इति
भाषा । (यथा, शिशुपालवधे । १ । १० ।
"रणद्भिराघट्टनया नभस्वतः
पृथक्विभिन्नश्रुतिमण्डलैः स्वरैः ॥)
सा च द्वाविंशतिप्रकारा यथा, --
"नान्दी चालनिका रसा च सुमुखी चित्रा
विचित्रा घना
मातङ्गी सरसामृता मधुकरी मैत्री शिवा
माधवी ।
बाला शार्ङ्गरवी कला कलरवा माला
विशाला

"शत्रुघ्नञ्चापि धर्म्मात्मा
अब्रवीन्मिथिलेश्वरः ।
श्रुतकीर्त्तेर्महाबाहो पाणिं गृह्णीष्व पाणिना
॥"
इति वाल्मीकीये रामायणे बालकाण्डे ७३
सर्गः ॥
अपि च ।
"एवं भवत् भद्रं ते कुशध्वजसुते इमे ।
पत्न्यौ भजेतां सहितौ शत्रु घ्नभरतावुभौ ॥
इति तत्रैव ७२ सर्गः ॥
देवर्षौ, पुं, । (द्रौपदीगर्भजाते अर्ज्जुनस्य
पुत्रे च
पुं । यथा, महाभारते । १ । ६३ । १२० ।
"अर्ज्जुनात् श्रुतकीर्त्तिश्च शतानीकश्च
नाकुलिः ॥")
कीर्त्तियुक्ते, त्रि । इति केचित् ॥

**श्रुतदेवी**, स्त्री, (त्रुतस्य शास्त्रस्व देवी ।) सर-

स्वती । इति हेमचन्द्रः ॥

**श्रुतबोधः**, पुं, (श्रुतस्य बोधो यस्मात् । श्रुतमात्रं

बोधयतीति वा । बुध + णिच् + अच् ।)
कालि-
दासकृतच्छन्दोग्रन्थविशेषः । यथा, --
"श्रुतार्थस्य परित्यागादश्रुतार्थस्य
कल्पनात् ।
प्राप्तस्य वाधादित्येवं परिसङ्ख्या
त्रिदोषिका ॥"
इति प्रायश्चित्ततत्त्वम् ॥
(त्रि, श्रुतोऽर्थो येन सः । यथा, हरिवंशे ।
११५ । २७ ।
"श्रुतार्थो देव गुह्यस्य भवान् यत्र वयं
स्थिताः ॥")

**श्रुतायुः**, पुं, सूर्य्यवंशीयराजविशेषः । स तु कुशस्य

चतुर्द्दशपुरुषः । यथा, --
"नाभागस्याम्बरीषोऽभूत्
सिन्धुद्वीपस्ततोऽभवत्
ततः श्रुतायुः पुत्त्रोऽभूत
ऋतुपालस्ततोऽभवत् ॥"
इति मात्स्ये १३ अध्यायः ॥

**श्रुतिः**, स्त्री, (श्रूयतेऽनयेति । श्रु + "श्रुयजिस्तुभ्यः

करणे ।" ३ । ३ । ९४ । इत्यस्य
वार्त्तिकोक्त्या
करणे ।" क्तिन् ।) वेदः । (यथा, मनुः । २
। १० ।
"श्रुतिस्तु वेदो विज्ञेयो धर्म्मशास्त्रन्तु वै
स्मृतिः ॥")
कर्णः । इत्यमरः ॥ (यथा, भागवते । ९ ।
४ । १८ ।
"करौ हरेर्मन्दिरमार्ज्जनादिषु
श्रुतिं चकाराच्यु तसत्कथोदये ॥")
गर्भस्थस्य पञ्चमासैः श्रुतिर्भवति । इति
सुख-
बोधः ॥ श्रुतोन्द्रियग्राह्यः शब्दः
शब्दत्वादिः ।
यथा, --
जया
मात्रेति श्रुतयः पुराणकविभिर्द्वाविंशतिः
कीर्त्तिताः ॥
नान्दी-विशाला-सुमुखी-विचित्रासम्भवः
सदा ।
षड्जो मतो मुनीन्द्रेण भरतेन शिवेन च ॥
चित्रा घना चालनिका निवेशात्
संजायतेऽसौ ऋषभस्तथैव ।
स्वरोऽपि माला सरसानिवेशात्
गान्धारनामा प्रथितः पृथिव्याम् ॥
मातङ्गी माधवी मैत्री शिवाजातस्तु पञ्चमः
।
कला कलरवा बाला शार्ङ्गरव्यास्तु पञ्चमः
॥
जायामृतारसानान्तु संयोगाद्धैवतस्वरः ।
मात्रा मधुकरी योगात् निषादः संप्रजायते
॥
श्रुतिस्थाने स्वरान् वक्तुं नालं ब्रह्मापि
तत्त्वतः
जले च सुतरां मार्गो मीनानां नोपलक्ष्यते ॥
गगने पक्षिणां यद्वत् तद्वत् स्वरगता श्रुतिः ।
श्रुतिर्नादवशा प्रोक्ता तथाढ्या च कला
मता ।
यथा तैलगतं सर्पिर्यथा काष्ठगतोऽनलः ।
ज्ञायतेऽत्रोपदेशेन यथा स्वरगता श्रुतिः ॥
वीणादेस्तु श्रुतिज्ञानं स्वरज्ञानन्तु वंशजम्
।
अश्विनौ वसवो रुद्राः सहैणाङ्केन शुश्रुवुः ।
प्रशशंसुर्हरेर्नादमतो द्वाविंशतिः श्रुतिः ॥"
इति सङ्गीतदामोदरः ।

अन्यच्च ।
"तीव्राकुमुद्वतीमन्दाछन्दोवत्यस्तुषड्जगाः ।
दयावती रञ्जनी च रतिका ऋषभे स्थिताः ॥
रीद्री क्रोधा च गान्धारे वज्जिकाथ प्रसा-
रिणी ।
प्रोतिश्च मार्ज्जनीत्येताः श्रुतयो मध्यमाश्रिताः ॥
क्षिती रक्ता च सन्दीपन्यालापिन्यपि पञ्चमे ।
मदन्ती रोहिणी रम्येत्येता धैवतसंश्रयाः ।
उग्रा च क्षोभिणीति द्वे निषादे वसतः श्रुती ॥"
इति सङ्गीतरत्नाकरः ॥

**श्रुतिकटः**, पुं, (श्रुतिं कटतीति । कट् + अच् ।)

प्राञ्चल्लोहः । अहिः । पापशोधनम् । इति
मेदिनी ॥

**श्रुतिकटुः**, पुं, (श्रुतौ कटुः ।) कठोरशब्दः ।

अलङ्कारस्य दोषविशेषः । यथा, --
"श्रुतिकटुश्च्यतसंस्कृतिरक्रमोक्त्यनृचिताकवि-
जुष्टविमन्धिकाः ।" उदाहरणम् ।
"वाचा मधुरया तन्वि स्मितापाङ्गतरङ्गया ।
मनाग्वदनमुत्तोल्य कार्त्तार्थ्यं कुरु मादृशाम् ॥"
इति काव्यचन्द्रिका ॥

**श्रुतिकथितः**, त्रि, (श्रुतौ कथितः ।) श्रुत्युक्तः ।

वेदोक्तः । इति लोकप्रसिद्धिः ॥

**श्रुतिजीविका**, स्त्री, (श्रुतिरेव जीविका यस्याः ।)

धर्म्मशास्त्रम् । यथा, --
"स्मृतिर्धर्म्मसंहिता च संहिता श्रुतिजीविका ।"
इति शब्दरत्नावली ॥
वेदजीवनोपायश्च ॥

**श्रुतितत्परः**, त्रि, (श्रुतौ तत्परः ।) सकर्णः । इति

जटाधरः ॥ वेदाभ्यासरतश्च ॥

**श्रुतिधरः**, त्रि, (श्रुत्या श्रवणमात्रेण धरतीति ।

धृ + अच् । श्रुतिमात्रधारकः । श्रवणमात्रे-
णाभ्यासकर्त्ता । (यथा, गीतगोविन्दे । १ । ४ ।
"स्पर्द्धी कोऽपि न विश्रुतः श्रुतिधरो धोयी कविः
क्ष्मापतिः ॥")
तदौषधं यथा, --
सौम्यैस्त्र्यायत्रिकोणकण्टकगतैः
पापैस्त्रिलाभा-
रिगै-
रोजोऽब्दे श्रुतिवेध इत्यसितभे लग्ने तु काले
शुभे ॥"
इति ज्योतिस्तत्त्वम् ॥
अन्यच्च । तत्र तिथयः रिक्ताभिन्नाः
प्रशस्ताः ।
वाराः बृहस्पतिबुधशुक्राणां प्रशस्ताः । नक्ष-
त्राणि अश्विनी रेवती हस्ता चित्रा पुनर्व्वसु-
धनिष्ठा मृगशिरः पुष्यः श्रवणानुराधा उत्तर-
फल्गुनी उत्तराषाढा उत्तरभाद्रपत्स्वाती ।
लग्नानि वृषतुलाधनुर्मीनसंज्ञकानि । अयुग्म-
वर्षे । जन्ममासचैत्रपौषाग्रहायणभिन्नमासाः
प्रशस्ताः । शुक्लपक्षे चन्द्रतारादिशुद्धौ
हरि-
शयनभिन्नकाले कालशुद्धौ श्रुतिवेधः
कार्य्यः ।
इति ज्योतिषम् ॥

**श्रुतिस्फोटा**, स्त्री, (श्रुतिं स्फोटयतीति । स्फुट् +

अच् । टाप् ।) कर्णस्फोटा लता । इति
राज-
निर्घण्टः ॥

**श्रुवः**, पुं, (श्रु + कः ।) यागः । इति जटाधरः ॥

स्रुवे, क्ली । इति केचित् ॥

**श्रुवा**, स्त्री, मूर्व्वा । इति राजनिर्घण्टः ॥

**श्रुवावृक्षः**, पुं, विकङ्कतवृक्षः । इति राजनिर्घण्टः

**श्रेढी**, स्त्री, अङ्कविशेषः । भिन्नं भिन्नं यत्किञ्चिद्-

द्रव्यादिकमेकीक्रियते तद्गणनायाः श्रेढ्या
मिश्र
प्रायत्वात्तद्गणनानन्तरमारब्धः
श्रेढीव्यवहारः ।
इति मुनीश्वरगणककृतलीलावतीटीका ॥
अ-
स्याद्यसूत्रं यथा । अथ श्रेढीव्यवहारे करण-
सूत्रम् ।
"सैकपदघ्नपदार्द्ध मथैका
णिः ।) निश्छिद्रपंक्तिः ।
तत्पर्य्यायः । पंक्तिः २
श्रेणी ३ विञ्जोली ४ वीथी ५
आलिः ६
पालिः ७ आवलिः ८ आली ९
पाली १०
आवली ११ वीथिः १२
वीथिका १३ राजी १४
राजिः १५ रेखा १६ लेखा १७
। इति शब्द-
रत्नावली ॥ (यथा, कुमारे । ५ ।
९ ।
"न षट्पदश्रेणिभिरेव पङ्कजं
सशैवलासङ्गमपि प्रकाशते ॥")
समानशिल्पिसंहतिः । इति
मेदिनी ॥ कोम्पानि
इति इङ्गरेजीयभाषा ॥
सेकपात्रम् । इति
विश्वः ॥

**श्रेणिकः**, पुं, मगधदेशीयराजविशेषः ।
इति

हेमचन्द्रः ॥

**श्रेणी**, स्त्री, (श्रेणि + कृदिकारादिति ङीष्
।)

श्रेणिः । इति शब्दरत्नावली ॥
(यथा, रघुः ।
१ । ४१ ।
"श्रेणीबन्धात् वितन्वद्भिरस्तम्भां
तोरणस्रजम् ।
सारसैः कलनिर्ह्रादैः
कचिदुन्नमिताननौ ॥"

**श्रेयः**, [स] क्ली, (इदमनयोरतिशयेन
प्रशस्यम् ।

प्रशस्य + ईयसुन् । "प्रशस्यस्य
श्रः ।" ५ । ३ ।
६० । इति श्रः ।) धर्म्मम् ।
मुक्तिः । इत्यमरः ॥
(चतुर्व्वर्ग एव श्रेयः । यथा, मनुः
। २ । २२४ ।

हरिरुवाच ।

"हस्तिकर्णस्य वै मूलं गृहीत्वा चूर्णयेद्धर ।

सर्व्वरोगविनिर्मुक्तं चूर्णं पलशतं शिव ॥

सक्षीरं भक्षितं कुर्य्यात् सप्ताहेन वृषध्वज ।

नरं श्रुतिधरं शूरं मृगेन्द्रगतिविक्रमम् ॥

पद्मगौरप्रतीकाशं युक्तं दशशतायुषा ।

षोडशाब्दाकृतिं विप्र सततं दुग्धभोजितम् ॥

मधुसर्पिःसमायुक्तं जग्धमायुष्करं भवेत् ।

तज्जग्धं मधुना सार्द्धं दशवर्षसहस्रिणम् ।

कुर्य्यान्नरं श्रुतिधरं प्रमदाजनवल्लभम् ॥"

इति गारुडे १९१ अध्यायः ॥

**श्रुतिवर्ज्जितः**, त्रि, (श्रुत्या वर्जितः ।) वधिरः ।

इति जटाधरः ॥ वेदरहितश्च ॥

**श्रुतिवेधः**, पुं, (श्रुतेः कर्णस्य वेधो यत्र ।) कर्ण-

वेधः । तस्य विहितकालो यथा दीपिकायाम् ।

"नो जन्मेन्दुममासस्सूर्य्यरविजक्ष्माजाहसुप्ताच्युते

शस्तेऽर्के लघुयुग्मविष्णुमृदुभे स्वात्युत्तरादित्यभे

द्यङ्कयुतिः किल संकलिताख्या ।

सा द्वियुतेन पदेन विनिघ्नी

स्यात् त्रिहृता किल संकलितैक्यम् ॥"

उदाहरणम् ।

"एकादीनां नवान्तानां पृथक् संकलितानि

मे

तेषां संकलितैक्यञ्च प्रचक्ष्व गणक द्रुतम् ॥"

न्यासः । १ । २ । ३ । ४ । ५ । ६ । ७ । ८

। ९ ।

लब्धान्ये तेषां संकलितानि । १ । ३ । ६ ।

१० ।

१५ । २१ । २८ । ३६ । ४५ । अथ तेषां

संक-

लितैक्यानि । १ । ४ । १० । २० । ३५ ।

५६ ।

८४ । १२० । १६५ । तस्य शेषसूत्रं यथा

।

करणसूत्रं सार्द्धमार्य्या ।

"पादाक्षरमिते गच्छे गुणवर्गफलञ्चये द्विगुणे

।

समवृत्तानां संख्या तद्वर्गो वर्गवर्गश्च ।

स्वस्व-

पदोनौ स्यातां अर्द्धसमानाञ्च विषमाणाम्

॥"

उदाहरणम् ।

"समानामर्द्धतुल्यानां विषमाणां पृथक्

पृथक् ।

वृत्तानां वद मे संख्यामनुष्टु प्छन्दसां द्रुतम्

॥"

न्यासः उत्तरो द्वि २ गुणः गच्छः ८ लब्धा

सम-

वृत्तानां संख्या २५६ । तथार्द्ध समानञ्च

६५२८०

विषमाणाञ्च ४२९४९०१७६० । इति

लीलावती ॥

**श्रेणिः**, पुं, स्त्री, (श्रयति श्रीयते वा । श्रि +

"वर्हिश्रिश्रुयुद्रिति ।" उणा० ४ । ५१ । इति

"धर्म्मार्थावुच्यते श्रेयः कामार्थौ

धर्म्म एव च ॥

अर्थ एवेह वाश्रेयस्त्रिवर्ग इति तु

स्थितिः ॥"

"धर्म्मार्थकामात्मकः

परप्सराविरुद्धस्त्रिवर्ग एव

पुरुषार्थतया श्रेय इति

विनिश्चयः । एवञ्च

बुभुक्षून् प्रत्युपदेशो न मुमुक्षून् ।

मुमुक्षूणान्तु

मोक्ष एव श्रेयः इति षष्ठे वक्ष्यते

।" इति

तट्टीकायां कुल्लूकः ॥) शुभम् ।

इति मेदिनी ॥

(यथा, रघुः । १ । ७९ ।

"प्रतिबध्नाति हि श्रेयः

पूज्यपूजाव्यतिक्रमः ॥")

**श्रेयसी**, स्त्री, (इयमनयोरतिशयेन प्रशस्या

।

प्रशस्य + इयसुन् । प्रशस्यस्य

श्रः । उगित्वात्

ङीप् ।) हरीतकी । पाठा ।

करिपिप्पली ।

इत्यमरः ॥ रास्ना । इति विश्वः

॥ शुभयुक्ता च ॥

**श्रेयांसः**, पुं, वृत्तार्हद्विशेषः । इति हेमचन्द्रः ॥

**श्रेयान्**, [स] त्रि, (अयमनयोरतिशयेन प्रशस्यः ।

प्रशस्य + इयसुन् । "प्रशस्यस्य

श्रः ।" ५ । ३ । ६० ।

इति श्रः ।) श्रेष्ठः । इत्यमरः ॥

(यथा, मनुः ।

१० । ११२ ।

"प्रतिग्रहाच्छिलः

श्रेयांस्ततोऽप्युञ्छः प्रशस्यते

॥"

शुभयुक्तञ्च ॥

**श्रेष्ठं**, क्ली, (अयमेषामतिशयेन प्रशस्यः ।

प्रशस्य + इष्ठन् । प्रशस्यस्य श्रः

५ । ३ । ६० ।

| | | इति श्रः ।) गोदुग्धम् । इति त्रिकाण्डशेषः ॥<br>**श्रेष्ठः**, पुं, (प्रशस्य + इष्ठन् ।) कुबेरः । नृपः ।<br>द्विजः । इति शब्दरत्नावली ॥<br>विष्णुः । इति<br>तस्य सहस्रनामस्तोत्रम् ॥<br>(महादेवः । यथा,<br>महाभारते तस्य<br>सहस्रनामस्तोत्रे । १३ । १७ ।<br>४० ।<br>“विश्वरूपः स्वयं श्रेष्ठो वलवीरो<br>बलो गणः ॥”)<br>**श्रेष्ठः**, त्रि, (प्रशस्य + इष्ठन् ।) प्रशस्तः । वरः ।<br>(यथा, रामायणे । २ । १ । २०<br>। |
|---|---|---|

"इष्वस्त्रे च पितुः श्रेष्ठो बभूव भरताग्रजः ॥")

तत्पर्य्यायः । श्रेयान् २ पुष्कलः ३ सत्तमः ४ अतिशोभनः ५ । इत्यमरः ॥ मुख्यः ६ वरेण्यः ७ प्रमुखः ८ अग्रः ९ अग्रहरः १० उत्तमः ११ प्रग्रहः १२ अनुत्तमः १३ अग्रीयः १४ प्रवेकः १५ अग्र्यः १६ अग्रियः १७ । इति शब्दरत्नावली ॥ अनवरः १८ अग्रिमः १९ प्राग्रः २० प्राग्रहरः २१ प्रवर्हः २२ । इति जटाधरः ॥ वृद्धः । ज्येष्ठः । इति शब्दरत्नावली ॥

**श्रेष्ठकाष्ठः**, पुं, श्रेष्ठं काष्ठमस्य ।) शाकवृक्षः । इति राजनिर्घण्टः ॥

श्रेष्ठा, स्त्री, (इयमासामतिशयेन प्रशस्या । इष्ठन् । टाप् ।) स्थलपद्मिनी । इति राजनिर्घण्टः ॥ मेदा । इति केचित् ॥ उत्तमा नारी च ॥

**श्रेष्ठाम्लं**, क्ली, (श्रेष्ठं अस्तम् ।) वृक्षास्लम् । इति राजनिर्घण्टः ॥

**श्रेष्ठाश्रमः**, पुं, (श्रेष्ठ आश्रमः ।) गृहस्थाश्रमः । आश्रमत्रयाणां पालकत्वात् ॥

**श्रेष्ठी**, [न्] पुं, (श्रेष्ठं धनादिकमस्त्यस्येति । इनिः ।) कुलोत्तमशिल्पी । यथा, --

"कुलीकस्तु कुलीश्रेष्ठी कुलश्रेष्ठिनि शिल्पि-
नाम् ॥"

इति जटाधरः ॥

(यथा, बृहत्संहितायाम् । २९ । १० ।

"श्रेष्ठी सुवर्णपुष्पैः पद्मैर्विप्राः पुरोहिताः

**श्रोणिफलं**, क्ली, (श्रोणिः फलं फलकमिव ।) कटिः इति राजनिर्घण्टः ॥

**श्रोणिफलकं**, क्ली, (श्रोणिफल + स्वार्थे कन् ।) कटिपार्श्वः । तत्पर्य्यायः । कटः २ । इत्यमरः ॥ फलकं चर्म्म तदाकारत्वात् श्रोणिः फलकमिव श्रोणिफलकम् । कट्यते आव्रियते कटः कटे वर्षावरणयोः अल् । कटिः । इति केचित् । इति भरतः

**श्रोणिबिम्बं**, क्ली, कटिसूत्रम् । इति धनञ्जयः ॥

**श्रोणिसूत्रं**, क्ली, (श्रोणिस्थितं सूत्रम ।) खड्ग-बन्धनसूत्रम् । परतला इति हिन्दीभाषा ॥ कटिबन्धनसूत्रम् । इति केचित् ॥ घुन्शी इति भाषा ॥

**श्रोणी**, स्त्री, (श्रोणि + वा ङीष् ।) कटिः । पन्थाः । इति भरतद्विरूपकोषः ॥

**श्रोतः**, [स्] क्ली, (श्रु + असुन् । तुट् च ।) कर्णः । नदीवेगः । इति जटाधरः ॥ इन्द्रियम् । यथा,

"हृषीकमक्षं करणं श्रोतः खं विषयीन्द्रियम् ॥"

इति हेमचन्द्रः ॥

**श्रोतव्यं**, त्रि, (श्रु + तव्य ।) श्रवणीयम् । यथा,

"अध्ये तव्यं न चान्येन ब्राह्मणं क्षत्रियं विना ।
श्रोतव्यमिह शूद्रेण नाध्येतव्यं कदाचन ॥"

इति तिथ्यादितत्त्वम् ॥

**श्रोता**, [ऋ] त्रि, (शृणोतीति । श्रु + तृच् ।)

"एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य च
षट्कर्म्मनिरतो विप्रः श्रोत्रियो नाम धर्म्मवित् ॥

इति दानकमलाकरः ॥

**श्रोत्रियता**, स्त्री, (श्रोत्रियस्य भावः । श्रोत्रिय + तल् ।) श्रोत्रियधर्म्मः । तत्पर्य्यायः । श्रोत्रम् २ । इति त्रिकाण्डशेषः ॥

**श्रौतं**, क्ली, (श्रुतौ भवम् । श्रुति + अण् ।) गार्ह-पत्याहवनीयदक्षिणाग्नयः । यथा, --

"त्रयो ये गार्हपत्याहवनीयदक्षिणाग्नयः ।
इदमग्नित्रिकं श्रौतं त्रेताग्निहोत्रमित्यपि ॥"

इति जटाधरः ॥

**श्रौतः**, त्रि, (श्रुतौ भवः । श्रुति + अण् ।) श्रुति-विहितधर्म्मादिः । यथा, --

"धर्मज्ञैर्विहितो धर्म्मः श्रौतः स्मार्त्तो द्विधा द्विजैः
दानाग्निहोत्रसम्बन्धमिज्याश्रौतस्य लक्षणम् ॥
स्मार्त्तो वर्णाश्रमाचारो यमैश्च नियमैर्युतः ।
पूर्वेभ्यो वेदयित्वेह श्रौतं सप्तर्षयोऽब्रुवन् ॥
ऋचो यजूंषि सामानि ब्रह्मणोऽङ्गानि सा श्रुतिः
मन्वन्तरस्यातीतस्य स्मृत्वा तन्मनुरब्रवीत् ॥
ततः स्मार्त्तः स्मृ तो धर्मो वर्णाश्रमविभागशः ।
एवं वै द्विविधो धर्म्मः शिष्टाचारः स उच्यते ॥
इज्यावेदात्मकः श्रौतः स्मार्त्तो वर्णाश्रमात्मकः ॥

इति मात्स्ये १२० अध्यायः ॥

अपि च । अधिकरणमालाकृन्माधवाचार्य्य-धृतपराशरभाष्ये शातातपः ।

"श्रौतं कर्म्म स्वयं कुर्य्यादन्योऽपि स्मार्त्तमाचरेत्
अशक्तौ श्रौतमप्यन्यः कुर्य्यादाचारमन्ततः ॥"

इति तिथ्यादितत्त्वम् ॥

**श्रौत्रं**, क्ली, श्रोत्रमेव । प्रज्ञादित्वादण् ।) कर्णः । (श्रोत्रियस्य भावः कर्म्म वा । "हायनान्तयुवा-दिभ्योऽण् ।" ५ । १ । १३० । इत्यण् । "श्रोत्रि-यस्य यलोपश्च वाच्यः ।" इति यलोपः ।) श्रोत्रियकर्म्म । तत्पर्य्यायः । श्रौत्रियता २ । इति शब्दरत्नावली ॥ (श्रोत्रस्य भावः कर्म्म वा । अण् ।) श्रोत्रकर्म्म च ॥ (श्रोत्राणां समूहः

कुमुदैः ॥")

**श्रै**, स्वेदे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
अक०-अनिट् ।) श्रायति रौद्राल्लोकः । इति
दुर्गादासः ॥

**श्रै** म पचने । इति कल्पद्रुमः ॥ भ्वा०-पर०-
सक०-अनिट् ।) म, श्रपयति । इति दुर्गा-
दासः ॥

**श्रोण**, ऋ संघाते । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।) ऋ अशुश्रोणत् । संघातो
राशीकरणम् । इति दुर्गादासः ॥

**श्रोणः**, पुं, (श्रोणतीति । श्रोण संघाते + अच् ।
यद्वा शृणोतीति । श्रु श्रवणे बाहुलकात् नः ।
इत्युणादिटीकायां उज्ज्वलदत्तः । ३ । ६
।) पङ्गः ।
इत्यमरः ॥

**श्रोणा**, स्त्री, (श्रोणसंघाते + अच् ।) श्रवणा-
नक्षत्रम् । (यथा, भागवते । ८ । १८ । ५
।
"श्रोणायां श्रवणद्वादश्यां मुहूर्त्तेऽभिजिति प्रभुः
सर्व्वे नक्षत्रताराद्याश्चक्रु
स्तज्जन्मदक्षिणम् ॥")
काञ्जिकम् । पक्वे, त्रि । इति केचित् ॥

**श्रोणिः**, स्त्री, (श्रोण मंघाते + इन् । यद्वा, श्रु-
श्रवणे + "वहिश्रिश्रुष्विति ।" उणा० ४ । ५१ ।
इति निः ।) कटिः । इत्यमरः ॥ (यथा, बृहत्-
मंहितायाम् । ५६ । ७ ।
"फुल्लतीरद्रुमोत्तंसाः सङ्गमश्रोणिमण्डलाः ।
पुलिनाभ्यु न्नतोरस्या हंसहासाश्च
निम्नगाः ॥")
सा तु गर्भस्थस्य मासद्वयेन भवति । इति सुख-
श्रवणकर्त्ता । यथा, --
"अप्रियस्य च पथ्यस्य वक्ता श्रोता च
दुर्लभः ॥"
इति हितोपदेशः ॥
पुराणश्रोतृत्वे प्रमाणमाह ।
"पठेदर्थं बुध्यमानः श्रावयेद्वै नरोत्तमे ।
श्रोता तु प्राङ्मु खो भूत्वा शृणुयात् भक्ति-
तत्परः ॥"
इति पाद्मे पातालखण्डे ७१ अध्यायः
॥

**श्रोत्रं**, क्ली, (श्रू यतेऽनेनेति । श्रु + "हुयामाश्रु-
भसिभ्यस्त्रन् ।" उणा ०५ । १६७ । इति त्रन् ।)
कर्णम् । इत्यमरः ॥ (यथा, रघुः । ७ । १६ ।
"इत्युद्गताः पौरबधूमुखेभ्यः
शृण्वन् कथाः श्रोत्रसुखाः कुमारः ॥")
श्रोत्रियता । इति त्रिकाण्डशेषः ॥

**श्रोत्रियः**, पुं, (छन्दोऽधीते इति । छन्दस् + श्रोत्रियं-
श्छन्दोऽधीते ।" ५ । २ । ८४ । इति घन्प्रत्ययेन
साधुः ।) वेदाध्येतृब्राह्मणः । तत्पर्य्यायः ।
छान्दसः २ । इत्यमरः ॥ श्रूयते धर्म्माधर्म्माविनेन
इति श्रोत्रो वेदः त्रासुसिति त्रः श्रोत्रं वेत्ति
अधीते वा श्रोत्रियः धघे कादिति इयः । छन्दो-
ऽधीते इत्यर्थे इये छन्दःशब्दस्य श्रोत्रादेशः ।
इति परे । छन्दो वेत्ति अधीते वा छान्दसः ।
इति पूर्वेण ष्णः । इति भरतः ॥ * ॥ तस्य लक्षणं
यथा, --
"जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज
उच्यते
"भिक्षादिभ्योऽण् ।" ४ । २ । ३८ । इति अण्
॥)

**श्रौषट्**, व्य, देवहविर्दानम् । इत्यमरः । देवहवि-
र्दानं इत्यनेनायं मन्त्रः सूचितः । इति भरत-
मतम् ॥

**श्याह्वं**, क्ली, श्रिय आह्वा आह्वा यस्य ।) पद्मम् ।
इति केचित् ॥

**श्लक**, इ ङ सर्पे । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) अन्तःस्थतृतीयवर्ण-
युक्तादिः । इ, श्लङ्क्यते । ङ, श्लङ्कते । सर्पो गतिः
इति दुर्गादासः ॥

**श्लक्ष्णं**, त्रि, (श्लिष आलिङ्गने + "श्लिषेरच्चोप-
धायाः ।" उणा० ३ । १९ । इति क्स्नः अकार-
श्चोपधायाः ।) अल्पम् । इत्यमरः ॥ मनोहरम् ।
इत्युणादिकोषः ॥ (यथा, मनुः । २ । १५९ ।
"अहिंसयैव भूतानां कार्य्यं श्रेयोऽनुशासनम्
वाक् चैव मधुरा श्लक्ष्णा प्रयोज्या धर्म्म-
मिच्छता ॥")

| | | |
|---|---|---|
| बोधः ॥ पन्थाः । इति शब्दरत्नावली ॥ | विद्याभ्यासी भवेद्विप्रः श्रोत्रियस्त्रिभिरेव हि ॥”<br>इति पाद्मे उत्तरखण्डे ११६ अध्यायः ॥<br>मानवे मार्कण्डेयपुराणे चाप्येवम् ॥ * ॥<br>अपिच । | |

**श्लक्ष्णकं**, क्ली, पूगफलम् । इति राजनिर्घण्टः ॥

(त्रि, श्लक्ष्णमेव । स्वार्थे कन् ।)
मनोहरञ्च ॥

**श्लक्ष्णत्वक**, [च्] पुं, (श्लक्ष्णा मनोहरा त्वक्

यस्य ।) अश्मन्तकवृक्षः । इति
राजनिर्घण्टः ॥
सुन्दरवल्कलश्च ॥

**श्लग**, इ व्रजे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

सक०-सेट् ।) ।
अन्तःस्थतृतीयवर्ण्युक्तताल-
व्यादिः । इ, श्लङ्यते । इति
दुर्गादासः ॥

**श्लथ**, त् क दीर्ब्बल्ये । इति कविकल्पद्रुमः ॥

(अदन्तचुरा०-पर०-अक०-सेट् ।)
अन्तस्थः-
तृतीययुक्तादिः । क, श्लथयति । इति
दुर्गा-
दासः ॥

**श्लथ**, त्रि, (श्लथयतीति । श्लथ + अच् ।) शिथिलः ॥

यथा । "शिथिलः प्रश्लथः श्लथः ।"
इति लटा-
धरः ॥ (यथा, माघे । ७ । ६२ ।]
"श्लथशिरसिजपातभारा-
दिव नितरां नतिमङ्गिरंसभागैः ॥")
दुर्ब्बलः । इति श्लथधात्वर्थदर्शनात्
॥

**श्लाख**, ऋ ष्याप्तौ । इति कविकल्पद्रुमः ॥ (भ्वा०

पर०-सक०-सेट् ।)
अन्तःस्थतृतीययुक्तः । ऋ,
अशश्लाखत् । इति दुर्गादासः ॥

**श्लाघ**, ऋ ङ कत्थने । इति कविकल्पद्रुमः ॥ (भ्वा०

रूढम् । श्लिष्यति कामपीति जयदेवः ।
प्राप्ता-
वप्ययम् । श्लिष्यति वृक्षं लता । इति
दुर्गा-
दासः ॥

**श्लिष**, क श्लेषे । इति कविकल्पद्रुमः ॥ (चुरा०-पर०

सक०-सेट् ।) अन्तःस्थतृतीययुक्तः । क,
श्लेष-
यति । इति दुर्गादासः ॥

**श्लिषा**, स्त्री, आलिङ्गनम् । त्रिकाण्डशेषः ॥

**श्लिष्टः**, त्रि, (श्लिष + क्तः ।) श्लेषयुक्तशब्दादिः ।

भिन्नार्थैकैकरूपान्वितवाक्यम् । तस्य
लक्षणं
यथा, --
"श्लिष्टमिष्टमविस्पष्टमेकरूपान्वितं वचः
।"
इति सरस्वतीकण्ठाभरणम् ॥

**श्लीपदं**, क्ली, (श्रीयुक्तं वृद्धिमत् पदमत्रेति । पृषो

दरादित्वात् साधु ।) स्फीतपादादि । गोद
इति भाषा । तत्पर्य्याय । पादवल्मीकम् २
।
इति हेमचन्द्रः ॥ (यथा,
आर्य्यासप्तशत्याम् ।
४८५ ।
"यन्नोपकारकं यन्न भूषणं यत्
प्रकोपमातनुते ।
गुरुणापि तेन कार्य्यं पदेन किं श्लीपदेनेव
॥")
अथ श्लीपदाधिकारः । तत्र श्लीपदस्य
विप्रकृष्टं
निदानमाह ।
"पुराणोदकभूयिष्ठाः सर्व्वर्त्तुषु च शीतलाः
।
ये देशास्तेषु जायन्ते श्लोपदानि विशेषतः
॥"
विशेषत इति वचनेनान्यत्रापि श्लीपदं
भवति

श्लीपदमिति शेषः ॥ २ ॥
"धत्तूरैण्डनिर्गुण्डीवर्षाभूशिग्रुसर्षपैः ।
प्रलेपः श्लीपदं हन्ति चिरोत्थमपि दारुणम् ॥ ३
॥
असाध्यमपि यात्यन्तं श्लीपदं चिरकालजम् ।
मूलेन सहचरायास्तालमिश्रेण लेपनात् ॥
तालस्य फलरसो ग्राह्यः ॥ ४ ॥
सप्तलास्थूलपत्राणां कल्कं तप्तेन वारिणा ।
संमृष्टं लवणोपेतं सेवितं श्लीपदं हरेत् ॥ ५ ॥
शाखोटवल्कलक्वाथं गोमूत्रेण युतं पिबेत् ।
श्लीपदानां विनाशाय मेदोदोषनिवृत्तये ॥ ६ ॥
रजनीं गुडसंयुक्तां गोमूत्रेण पिबेन्नरः ।
वर्षोत्थं श्लीपदं हन्ति दद्रुकुष्ठं विशेषतः ॥ ७ ॥
वर्षाभूत्रिफलाचूर्णं पिप्पल्या सह योजितम् ।
सक्षौद्रं श्लीपदं लिह्यात् चिरोत्थं श्लीपदं जयेत्
॥
गन्धर्व्वतैलसिद्धां हरीतकीं गोऽम्बुना पिबति ।
श्लीपदविबन्धमुक्तो भवत्यसौ सप्तरात्रेण ॥"
गन्धर्व्वतैलं एरण्डतैलम् । गोऽम्बुना गोमूत्रेण ॥ ९
इति श्लीपदाधिकारः । इति भावप्रकाशः ॥ * ॥
तस्य कर्म्मविपाको यथा । गोतमोऽपि क्वचिद्-
विशेषमाह । अनृतवागुल्वणो मुहुर्मुहुः संलग्न-
वाक् जलोदरो दारत्यागी कूटसाक्षी श्लीपदी ॥
इति मिताक्षरायां प्रायश्चित्ताध्यायः ॥ कूटमा-
क्ष्यस्य सूरापानसमत्वे नानुपातकत्वात्
तत्कर्म्म-
जन्यश्लीपदरोगयुक्तेन पराकव्रतं कर्त्तव्यम् । इति
मन्वादिमतम् ॥

**श्लीपदप्रभवः**, पुं, (श्लीपदवत प्रभवतीति । प्र +

भू + अच् ।) आम्रवृक्षः । इति शब्दमाला ॥

**श्लीपदापहः**, पुं, (श्लीपदं अपहन्तीति । हन

+ डः ।) पुत्त्रजीववृक्षः । इति त्रिकाण्ड
शेषः ॥

**श्लीलः**, त्रि, (श्रीर्विद्यतेऽस्येति । श्री + लच् ।

रस्य लः ।) लक्ष्मीवान् । इति श्रीलशब्द-
टीकायां स्वामी ॥

**श्लेषः**, पुं, (श्लिष + घञ् ।) संयोगः । तत्पर्य्यायः ॥

आत्म०-सक०-सेट् ।)
अन्तःस्थतृतीययुक्तः
तालव्यादिः । कत्थनं प्रशंसा । ऋ,
अश्लाघत् ।
ङ, श्लाघते गुणिनं गुणी । इति
दुर्गादामः ॥
श्लाधा, स्त्री, (श्लाघ कत्थने + अः ।
टाप् ।)
प्रशंमा । (यथा, रघुः । १ । २२ ।
“ज्ञाने मौनं क्षमा शक्तौ त्यागे
श्लाघाविपर्य्ययः ।
गुणा गुणानुवन्धित्वात् तस्य सप्रसवा
इव ॥”)
परिचर्य्या । अभिलासः । इति मेदिनी
॥

**श्लाघ्यः**, त्रि, (श्लाघ + ण्यत् ।) श्लाघनीयः । प्रशंस्यः ।

यथा, --
“मौरवितास्त्वाचार्य्यमिश्राः
श्लाघ्यास्तत्रभवन्-
मुखाः ॥”
इति त्रिकाण्डशेषः ॥
(यथा, रघुः । ११ । ८६ ।
“आहितो जयविपर्य्ययोऽपि मे
श्लाघ्य एव परमेष्ठिना त्वया ॥”)

**श्लिकु**, क्ली, (श्लिष्यति ग्रहादीनिति । श्लिष +

“श्लिषेः कश्च ।” उणा० १ । ३३ ।
इति कुः । कश्चा-
न्तादेशः ।) ज्योतिःशास्त्रम् ।
इत्यणादिकोषः ॥

**श्लिकुः**, पुं, (श्लिष आलिङ्गने + कुः ।) मृत्यः । इति

सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ षिङ्गः
। इत्यु-
णादिकोषः ॥

**श्लिष**, उ दाहे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०

सक०-सेट् । क्त्वावेट् ।)
अन्तःस्थतृतीययुक्तः ।
इति बोध्यते ॥ * ॥ सामान्यं लक्षणमाह
॥
“यः सज्वरो वंक्षणजो भृशार्त्तिः
शोथो नृणां पादगतः क्रमेण ।
तत् श्लीपदं स्यात् करनेत्रकर्ण-
शिश्नोष्ठनासास्वपि केचिदाहुः ॥”
तत् त्रिविधम् । वातिकं पैत्तिकं
श्लैष्मिकञ्चेति ।
तेषां लक्षणमाह ।
“वातजं कृष्णरुक्षं हि स्फुटितं तीव्रवेदनम्
।
अनिमित्तरुजं चास्य बहुशो ज्वर एव च ॥
पित्तजं पीतसङ्काशं दाहज्वरयुतं भृशम् ।
श्लैष्मिकन्तु भवेत् स्निग्धं तथा पाण्डुगुरु
स्थिरम् ॥
त्रीस्यप्येतानि जानीयात् श्लीपदानि
कफो-
च्छ्रयात् ।
मुरुत्वञ्च महत्त्वञ्च यस्मान्नास्ति विना
कफात् ॥”
असाध्यमाह ।
“वल्मीकमिव संजातं कण्टकैरुपचीयते ।
सर्व्वात्मकं महत्त्वन्तु वर्ज्जनीयं विशेषतः
॥
यत् श्लेष्मलाहारविहारजातै-
र्जातं तथा भूरिकफस्य पुंसः ।
सास्रावमप्यत्र तु सर्व्वलिङ्गं
सकण्डुकं वापि विवर्ज्जनीयम् ॥” * ॥
श्लीपदस्य चिकित्सा ।
“लङ्घनालेपनस्वेदरेचनै रक्तमोक्षणैः ।
प्रायः श्लेष्महरैरुष्णैः श्लीपदं समुपाचरेत्
॥ १ ॥
सिद्धार्थशोभाञ्जनदेवदारु-
विश्वौषधैर्मूत्रयुतैः प्रलिम्पेत् ।
पुनर्नवानागरसर्षपाणां
कल्केन वा काञ्जिकमिश्रितेन ॥
सन्धिः २ । इत्यमरः ॥ दाहः । आलिङ्गनम् ।
इति श्लिषधात्वर्थदर्शनात् ॥ * ॥ (यथा आर्य्या-
सप्तसत्याम् । ३८८ ।
“पुलकितकठोरपीवरकुचकलशश्लेषवेदना-
भिज्ञः ।
शम्भोरुपवीतफणी वाञ्छति मानग्रहं
देव्याः ॥” * ॥
श्लिष्यतीति । श्लिष + “श्याद्व्यधास्रुसंस्रिविति
।”
३ । १ । १४१ । इति णः ।) शब्दालङ्कारविशेषः
।
तस्य लक्षणादिर्यथा, --
“वाच्यभेदेन भिन्ना यद्युगपद्भाषणस्पृशः ।
श्लिष्यन्ति शब्दाः श्लेशोऽसावक्षरादिभिरष्टधा
॥”
अर्थभेदेन शब्दभेद इति दर्शने काव्यमार्गे स्वरो
न गण्यते इति च न ये वाक्यभेदेन भिन्ना अपि
शब्दा यद्युगपदुच्चारणेन श्लिष्यन्ति भिन्न-
स्वरूपमपह्नुवते स श्लेषः ॥ * ॥ स च वर्णपद-
लिङ्गभाषाप्रकृतिप्रत्ययविभक्तिवचनानांभेदा-
दष्टधा । क्रमेणोदाहरणम् ।

| | | |
|---|---|---|
| उ, श्लेषित्वा श्लिष्ट्वा । इति दुर्गादासः ॥<br><br>**श्लिष**, औ य ऌ ञि श्लषे । इति कविकल्पद्रुमः ॥<br><br>(दिवा०-पर०-सक०-अनिट् ।) अन्तःस्थतृतीय-युक्तादिः । औ श्लेष्टा । य, श्लिष्यति । ऌ, अश्लिषत् । आलिङ्गने तु अश्लिक्षत् । ञि श्लिष्टो-ऽस्ति । श्लेष आलिङ्गनम् । तच्च बाहुभ्यामेव | | |

"अलङ्कारः शङ्काकरनरकपालं
परिजनो
विशीर्णाङ्गो भृङ्गी वसु च वृष एको
बहुवयाः ।
अवस्थेयं स्थाणोरपि भवति
सर्व्वामरगुरो-
र्विधौ वक्रे मूद्‌र्ध्नि स्थितवति वयं के
पुनरमी ॥
पृयुकार्त्तस्वरपात्रं
भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं सम्प्रति
सममावयोः सदनम्
भक्तिप्रह्वविलोकनप्रणयिणी
नीलोत्पलस्पर्द्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीते
हितप्राप्तये ।
लावण्यैकमहानिधी रसिकतां
लक्ष्मीदृशो-
स्तन्वती
युष्माकं कुरुतां भवार्त्तिशमनं नेत्रे
तनुर्व्वा
हरेः ॥"
एष एव वचनश्लेषोऽपि ।
"महदे सुर सन्धम्मे तमवसमासं
गमागमा
हरणे ।
हर वहु शरणं तं चित्तमोहमबसर उमे
सहमा ॥
अयं सर्व्वाणि शास्त्राणि हृदि ज्ञेषु च
वक्ष्यति
सामर्थ्यकृदमित्राणां मित्राणाञ्च
नृपात्मजः ॥
रजनिरमणमौलेः पादपद्मावलोक-
क्षणसमयपराप्ता पूर्व्वसम्पत्सहस्रम् ।
प्रथमनिवहमध्ये जातु चित्तप्रसादा-
दहमुचित्रुचिः स्यान्नन्दिता सा तथा मे
॥
सर्व्वस्वं हर सर्व्वस्य त्वं
भवच्छेदतत्परः ।
यथा कमलमिव मुखं मनोज्ञमेतत्
कचतितरा-
मित्यादौ गुणसाम्ये क्रियासाम्ये उभयसाम्ये
वा उपमा तथा सकलकलं पुरमेतज्जातं
संप्रति
च सितांशुविम्बमिक्त्यादौ शब्दमात्रसाम्ये-
ऽपि युक्तैव तथा ह्युक्तं रुद्रटेन । स्फुटं
अर्थालङ्कारावेतौ उपमासमुच्चयौ किन्तु ।
आश्रित्य शब्दमात्रं सामान्यमिहापि सम्भवत
इति । न च कमलमिव मुख्यमित्यादि साधा-
रणधर्म्मप्रयोगशून्य उपमाविषय इति वक्तुं
युक्तं पूर्णोपमाया निर्विषयत्वापत्तेः ।
देवत्वमेव
पातालमाशानां त्वं निबन्धनम् ।
त्वञ्चामरमरुद्
भूमिरेको लोकत्रयात्मकः । इत्यादिश्लेषस्य
चोपमाद्यलङ्कारविविक्तोऽस्तिविषयः । इति
द्वयोर्योगे सङ्कर एव उपपत्तिपर्य्यालोचने तु
उपमाया एवायं युक्तो विपयः अन्यथा विष-
यापहार एव पूर्णोपमायाः स्यात् । न च
अबिन्दुसुन्दरी नित्यं
गलल्लावण्यविन्दुकेत्यादौ
विरोधप्रतिभोत्पत्तिहेतुः श्लेषः । अपि तु
श्लेष-
प्रतिभोत्पत्तिहेतुर्विरोधः । न ह्यत्रार्थद्वयप्रति-
पादकः शब्दः श्लेषः द्वितीयार्थस्य प्रतिभात-
मात्रस्य प्ररोहाभावात् । न च विरोधाभारा
इव विरोधः । श्लेषाभास इव
श्लेषस्तस्मादेव-
मादिषु वाक्येषु
श्लेषप्रतिभोत्पत्तिहेतुरलङ्कारा-
न्तरमेव साधीयः । तथा च सद्वं शमुक्तामणि-
र्नान्यः कविरिव स्वल्पश्लोको देव महान्
भवान्
"अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः ।
अहो दैवगतिश्चित्रा न तथापि समागमः ॥
आदाय चापमचलं कृत्वा हीनं गुणं विषम-
दृष्टिः ।
श्लेष्मघ्नी, स्त्री, (श्लेष्माणं हन्तीति । हन +
टक् )
टित्वात् ङीष् ।) ज्योतिष्मती । इति जटा-
धरः ॥ मल्लिका । इति मेदिनी ॥ त्रिकटुः ।
इति शब्दरत्नावली ॥

**श्लेष्मणः**, त्रि, (श्लेष्मा अस्त्यस्येति श्लेष्मन् +
"लोमादिपामादिपिच्छादिभ्यःशनेलचः ।"
५
२ । १०० । इति नः ।) कफी । इत्यमरः ॥
श्लेष्मणा, स्त्री, (श्लेष्मन् + पामादित्वात् नः
।
टाप् ।) वृक्षविशेषः । यथा, --
"गुरुस्कन्धस्तर्पणी च श्लेष्मणा च वृषापि च
।"
इति शब्दमाला ॥

**श्लेष्मलः**, त्रि, (श्लेष्मास्त्यस्येति । श्लेष्मन् +
"सिध्मादिभ्यश्च ।" ५ । २ । ९७ । इति
लच् ।)
श्लेष्मयुक्तः । इत्यमरः ॥

**श्लेष्मलः**, पुं, श्लेष्मन् + लच ।) वृक्षविशेषः । वहु-
यार इति ख्यात्रः । इति शब्दचन्द्रिका ॥

**श्लेष्महः**, पुं, (श्लेष्माणं हन्तीति । हन + डः ।)
कट्फलवृक्षः । इति शब्दचन्द्रिका । कफ-
नाशके, त्रि ॥

**श्लेष्मा**, [न्] पुं, श्लिष + "सर्व्वधातुभ्यो मणिन् ।"
उणा० ४ । १४४ । इति मणिन् ।) कफः ।
इत्यमरः ॥ तस्य प्रकोपहेतुर्यथा, --
"गुरुमधुररसातिस्निग्धदुग्धेक्षुभक्ष्य-
द्रवदधिदिननिद्रापूपसर्पिःप्रपूरैः ।
तुहिनपतनकाले श्लेष्मणः संप्रकोपः
प्रभवति दिवसादौ भुक्तमात्रे वसन्ते ॥" * ॥
तस्य लक्षणं यथा,
"स्तैमित्यं मधुरास्यता शिशिरता शौक्ल्यं
प्रसेको मल-
प्राचुर्य्यं स्थिरता रसश्च लवणः
कण्डूरतिस्वल्पता

नयोपकारसाम्मुख्यमायासि
तनुवर्त्तनम् ॥”
‘भेदाभावात् । प्रकृत्यादेर्भेदोऽपि
नवमो भवेत् ॥’
नवमोऽपीत्यपिर्भिन्नक्रमः । उदाहरणम्
।
“योऽसकृत् परगोत्राणां
पक्षच्छेदक्षणक्षमः ।
शतकोटिदतां बिभ्रद्विबुधेन्द्रः स राजते
॥”
अत्र प्रकरणादिनियमाभावात्
द्वावप्यर्थौ वाच्यौ
ननु स्वरितादिगुणभेदात्
भिन्नप्रयत्नोच्चार्य्याणां
तदभेदादभिन्नप्रयत्नोच्चार्य्याणाञ्च
शब्दानां बन्धे-
ऽनियमेनालङ्कारान्तरप्रतिभोत्पत्तिहेतुः
। शब्द-
श्लेषोऽर्थश्लेषश्चेति
द्विविधोऽप्ययमर्थालङ्कारमध्ये
गणितोऽन्यैरिति कथमयं शब्दालङ्कारः
।
उच्यते । इह दोषगुणालङ्काराणां
शब्दार्थगत-
त्वेन यो विभागः
सोऽन्वयव्यतिरेकाभ्यामेव
व्यवतिष्ठते । तथा हि
कष्टत्वादिगाडत्वाद्यनुप्रा-
सादयो व्यर्थत्वादिप्रौढत्वाद्युपमादयः
सद्भावत-
दभावानुविधायित्वाच्च
शब्दार्थगतत्वेन व्यव-
प्यन्ते । तथाहि ।
“स्वयञ्च
पल्लवाताम्रभास्वत्करविराजिता।”
इत्यभङ्गश्लेषः ॥ प्रभातसन्ध्ये वा
श्वापफललुब्धे
हितप्रदेति सभङ्गशब्दश्लेषश्चेति
द्वावपि शब्दै-
कसमाश्रयाविति द्वयोरपि
शब्दश्लेषत्वमुपपन्नम्
यश्चित्रमच्यु तशरो लक्षमभाङ्क्षीन्नमस्तस्मै
॥”
इत्यादावेकदेशविवर्त्तिरूपश्ले
षव्यतिरेकसमासो
क्तिविरोधत्वमुचितं न तु श्ले षत्वं शब्दश्ले ष
इति
चोच्यते । अर्थालङ्कारमध्ये च लक्षत इति
कोऽयं नयः किन्तु वैचित्र्यमलङ्कारः
इतियत्रैव
कविप्रतिभासंरम्भगोचरस्तत्रैव विचित्रतेति
सैवालङ्कारभूमिः । अर्थमुखमपेक्षित्वमेतेषां
शब्दानामिति चेत् अनुप्रासादीनामपि
तथैवेति
तेऽप्यर्थालङ्काराः किं नोच्यन्ते
रसादिव्यञ्जक-
स्वरूपवाच्यविशेषव्यपेक्षेत्यनुप्रासादीनामल-
ङ्कारताशब्दगुणदोषाणामप्यर्थापेक्षयैव गुणदो-
षता । अर्थगुणदोषालङ्काराणां शब्दापेक्षयैव
ष्यवस्थितिरिति तेऽपि
शब्दगतत्वेनोच्यन्ताम् ।
विधौ वक्रे मूर्द्धि ख्यितवतीत्यादौ च वर्णादि-
श्लेषे एकप्रयत्नोच्चार्य्यत्वेऽर्थश्लेषत्वं
शब्दभेदेऽपि
प्रसज्यतामित्येवमादि स्वयं विचार्य्यम् । इति
काव्यप्रकाशे शब्दालङ्कारनिर्णया नाम ९
उल्लासः ॥

**श्लेष्मकः**, पुं, (श्लेष्मा एव । स्वार्थे कन् ।) कफः ।

इति शब्दचन्द्रिका ॥

**श्लेष्मघ्ना**, स्त्री, (श्लेष्माणं हन्तीति । हन + टक्

अभिधानात् टाप् ।) मल्लिका । केतकौ । इति
विश्वमेदिन्यौ ॥ श्लेष्मनाशके, त्रि ॥
आलस्यं चिरकारिता कठिनता शोथारुचिः
स्निग्धता
तन्द्रा तृप्त्युपदेहकासगुरुता एताः कफोक्ता
रुजः ॥” * ॥
अस्य प्रशमताकारणं यथा, --
“गुरुशीतमृदुस्निग्धं मधुरस्थिरपिच्छिलाः ।
श्लेष्मणः प्रशमं यान्ति विपरीतगुणैर्गुणाः ॥
रूक्षक्षारकषायतिक्तकटुकव्यायामनिष्ठीवन-
स्त्रीसेवाध्वनियुद्धजागररतिक्रीडापदाघातनम्
धूमात्युष्णशिरीविरेकवमनस्वे दोपनाहादिकं
पानाहारविहारभेषजमिदं श्लेष्माणमुग्रं
जयेत् ॥” * ॥
स च पञ्चविधो यथा, --
“अवलम्बक इत्येकः क्लेदकः
श्लेष्मकोऽपरः ।
बोधकस्तर्पकश्चेति श्लेष्मा पञ्चविधः स्मृतः
॥” *
एतेषां लक्षणानि यथा, --
“कफधाम्नान्तु शेषाणां यत्
करोत्यवलम्बनम् ।
ततोऽवलम्बकाख्यातिं श्लेष्मा
प्राप्नोत्युरःस्थितः ॥
आमाशयाश्रितः सोऽन्नक्ले दनात् क्लेदकः
स्मृतः ॥ २ ॥
श्लेष्मकः श्लेषणात् सन्धेः स च सन्ध्यां
व्यव-
स्थितः ॥ ३ ॥

| न त्वाद्यस्यार्थश्लेषत्वम् ।<br>अथेश्लेषस्यतु स विषयः<br>यत्र शब्दपरिवर्त्तनेऽपि न<br>श्लेषत्वखण्डना ।<br>यथा,<br>“स्ताकेनोन्नतिमायाति<br>स्तोकेनायात्यधोगतिम्<br>अहो स्वसदृशी वृत्तिस्तुलाकोटेः<br>खलस्य च ॥”<br>न चायमुपमाप्रतिभोत्पत्तिहेतुः श्लेषः ।<br>अपि<br>तु श्लेषप्रतिमोत्पत्तिहेतुरुपमा । तथा<br>हि । | | |
|---|---|---|

रसनावस्थितस्त्वेष बोधको रसबोधनात्
। ४ ।
शिरसि प्रस्थितश्चासौ तर्पको
नेत्रतर्पणात् ॥” ५ ॥
अस्य स्थानानि ।
“उरःकण्ठशिरःक्लोमपर्व्वाण्यामाशयो
रसः ।
मेदो घ्राणञ्च जिह्वा च कफस्थानमुरः परम्
॥”
तत्प्रकृतिकलक्षणम् । यथा, --
“गम्भीरबुद्धिः स्थूलाङ्गः स्निग्धकेशो
महाबलः ।
स्वप्ने जलाशयालोकी श्लेष्मप्रकृतिको
नरः ॥ * ॥
स्नेहो बन्धः स्थिरत्वञ्च गौरवं वृष्यता
बलम् ।”
क्षमा धृतिरलोभश्च कफकर्म्माविकारजम्
॥”
इति सुखबोधः ॥ * ॥
श्लेष्मकरद्रव्याणि यथा, --
“भोजनानन्तरं स्नानं जलपानं विना तृषा
।
तिलतैलं स्निग्धतैलं
स्निग्धमामलकीद्रवम् ॥
पर्य्युषितान्नं तक्रञ्च पक्वरम्भाफलं दधि ।
मायाम्बुशर्करातोयं सुस्निग्धस्थलसेवनम्
॥
नारिकेलोदकं रूक्षस्नानं पर्य्युषितं जलम्
।
तरुमुञ्जापक्वफलं सुपक्वकर्क्टीफलम् ॥
खातस्नानञ्च वर्षासु मूलकं श्लेष्मकारणम्
।
तज्जलत्वं ब्रह्मरन्ध्रे च
महद्वीर्य्यविनाशनम् ॥” * ॥
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १६ अध्यायः ॥
अपिच । एरण्डतैलम् १ अनूपदेशवारि २
वार्षिकपानीयम् ३ पाल्वलजलम् ४
सामान्य-
मज्जा ७३ । इति द्रव्यगुणात् संगृहीतम्
॥
श्लेष्मनाशकद्रव्याणि यथा, --
“वह्निस्वेदं भृष्टभङ्गं पक्वतैलं
विशोषकम् ।
भ्रमणं शुष्कभक्ष्यञ्च शुष्कपक्वहरीतकी
॥
पिण्डारकमपक्वञ्च
रम्भाफलमपक्वकम् ।
वेशवारसिन्धुवारमनाहारमपानकम् ॥
सघृतं रोचनाचूर्णं सघृतं शुष्कशर्करम् ।
मरीचं पिप्पलीं शुष्कमार्द्रकं जीरकं मधु
।
द्रव्याण्येतानि गन्धर्व्वि !
सद्यःश्लेष्महराणि च ॥”
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १६ अध्यायः
॥ * ॥
अपि च । सार्षपतैलम् १ तैलाभ्यङ्गः २
उद्व-
र्त्तनम् ३ शैशिरजलम् ४ वाप्यजलम् ५
कौप-
जलम् ६ नैर्झरजलम् ७ नादेयजलम् ८
सामान्योष्णोदकम् ९ विशेषतः
पादशेषोष्णो-
दकम् १०
पेषितवचामुस्तकसंयुक्तजलस्नानम्
११
अगुरु १२ कुङ्कु मम् १३ पत्रकम् १४
कक्को-
लम् १५ शटी १६
दग्धभूमिजातशालि-
धान्यम् १७ अतिरोप्यधान्यम् १८
यवः १९
श्यामाकधान्यम् २० कोद्रवधान्यम्
२१ कङ्गु-
धान्यम् २२ हस्तिश्यामाकधान्यम् २३
चीनक-
धान्यम् २४ मुद्गः २५ मुकुष्टम् २६
राजमाषः २७
मधु १०३ पुराणमधु १०४ नूतनमधु १०५
मेषोक्षीरम् १०६ उष्ट्रीक्षीरम् १०७ शृतोष्ण-
दुग्धम् १०८ छागदधि १०९ हास्तिनदधि
११०
दधिमस्तुः १११ दधिसरः ११२ मथिततक्रम
११३
आविकघृतम् ११४ औष्ट्रकघृतम् ११५
पक्वेक्षु-
रसः ११६ हिङ्गु ११७ जीरकम् ११८
वास्पिका ११९ शुष्कधन्याकम् १२०
कासुन्दी-
वटिका १२१ हरिद्रा १२२ यमानी १२३
शुष्कपिप्पली १२४ आर्द्रपिप्पली १२५ शुण्ठी
१२६ आर्द्रकम १२७ सर्षपः १२८ सिद्धार्थः
१२९
पलाण्डुः १३० गुडत्वक् १३१ पत्रम् १३२
यव-
क्षारः १३३ सर्ज्जिकाक्षारः १३४ टङ्कण-
क्षारः १३५ मण्डः १३६ भृष्टतण्डुलः १३७
लाजाः १३८ लाजमण्डः १३९ अपक्वयव-
शक्तुः १४० वाट्यमण्डः स तु भृष्टयवमण्डः
१४१
मुद्गयूषः १४२ रागयूषः स च दाडिमद्राक्षा-
युक्तमु द्गयूषः १४३ मसूरयूषः १४४ कुलत्थ-
यूषः १४५ खडयूषः १४६ काम्बलिकयूषः स
तु
लवणघृतादितिलमाषमिश्रितपक्वदधि१४७
पलालवेष्टित-कर्दम-लेपिताङ्गार-दग्धलवणवेश
वारपुरस्कृतसार्द्रककटुतैलसन्तोलितमत्स्यः
१४८
प्रदिग्धम् १४९ शालिपिष्टकम् १५० ताम्बू-
लम् १५१ चूर्णम् १५२ खदिरः १५३ एला
१५४
जातीफलम् १५५ कर्पूरम् १५६ कटुरसः
१५७
तिक्तरसः १५८ कषायरसः १५९
उष्णस्वभाव-
द्रव्यम् १६० मालतीपुष्पम् १६१ मल्लिका-

शालिधान्यम् ५ माषः ६ अतसी ७
नूतनधान्यम् ८
मधुरनारीचशाकम् ९ कञ्चटशाकम् १०
कलम्बीशाकम् ११ उत्पदिकाशाकम् १२
मध्यमकुष्माण्डफलम् १३ अलावुफलम्
१४
शीर्णवृन्तफलम् १५ चेलानम् १६
दीर्घपटो-
लिका १७ अलावुनाडिका १८
पिण्डालुकम् १९
करीषपलालक्षितिवेणुभ्यो जातं छत्रिका-
शाकम् २० विशेषतः
पलालजातसंस्वेदज-
शाकम् २१ मधुकुक्कुटिका २२ बहुवार-
फलम् २३ बालाम्लिकाफलम् २४
चीरुकम् २५
पक्वकण्टाफलम् २६ कण्टाफलास्थि
२७ पक्व-
कदलम् २८ तावन्मत्स्यः २९
पाण्डरमत्स्यः ३०
क्वथितमत्स्यः ३१ लवणभावितमत्स्यः
३२ भाकुट-
मत्स्यः ३३ पाठीनमत्स्यः ३४
शिलिन्दमत्स्यः ३५
मेकलिमत्स्यः ३६ गरमत्स्यः ३७
कर्णफलमत्स्यः ३८
इल्लिशमत्स्यः ३९ शृङ्गीमत्स्यः ४०
चिङ्गट-
मत्स्यः ४१ वाचमत्स्यः ४२
चिङ्गटीमत्स्यः ४३
गवाचीमत्स्यः अर्थात्पाँकालमत्स्यः ४४
कुलिङ्ग
पक्षिमासम् ४५ तावत्क्षीरम् ४६ आम-
दुग्धम् ४७ आविकदधि ४८ माहिषदधि
४९
स्वादुदधि ५० अत्यम्लदधि ५१
तावद्धृतम् ५२
माहिषघृतम् ५३ तावदिक्षुः ५४ विशेषतो
भीरुनामकेक्षुः ५५ कान्तारीक्षुः ५६
इक्षुः-
फाणितम् ५७ इक्षुखण्डः ५८ नवान्नम्
५९
मसूरः २८ चणकः २९ कुलत्थः ३०
तुवरी ३१
नानाशिम्बा ३२
जलसंयोगिसामान्यशुष्क-
नारीचपत्रशाकम् ३३ हिलमोचीशाकत्
३४
शालञ्चीशाकम् ३५ ग्रीष्मसुन्दरशाकम्
३६
पूनर्नवाशाकम् ३७ कलायशाकम् ३८
ब्रह्मी-
शाकम् ३९ चाङ्गेरीशाकम् ४०
पृक्काशाकम् ४१
पालङ्कीशाकम् ४२ चणकपत्रशाकम्
४३
कौसुम्भशाकम् ४४ ओषणीशाकम् ४५
महा-
राष्ट्रीशाकम् ४६ कदलीमोचकम् ४७
क्षुद्र-
वार्त्ताकुफलम् ४८ अङ्गारपक्ववार्त्ताकुः
४९
पाण्डुरङ्गफलम् ५० कारवेल्लफलम्
५१ कर्क्कों-
टकफलम् ५२ पटोलनाडी ५३
कुष्माण्ड-
नाडिका ५४ वेत्राग्रम् ५५ शूरणः ५६
केचुक-
मूलम् ५७ घृततैलाभ्यां सिद्धं मूलम्
५८
मूलकपुष्पम् ५९ खण्डकर्णः ६०
मूलकफलम् ६१
वाराहीकन्दमूलम् ६२ आम्रपेषी ६३
अम्लरस-
दाडिमम् ६४ मातुलुङ्गत्वक् ६५
लिम्पाकम् ६६
जम्बीरम् ६७ कर्कन्धुः ६८
शुष्कसमस्तकोल-
फलम् ६९ अञ्जीरम् ७० जवनालम्
७१
लवलीफलम् ७२ जाम्बवम् ७३
पक्वाम्लिका-
फलम् ७४ पक्वतिन्दुकम् ७५
अम्लवेतसम् ७६
पुष्पम् १६२ पद्मपुष्पम् १६३ वकुलपुष्पम्
१६४
पुन्नागपुष्पम् १६५ कह्लारपुष्पम् १६६ उत्पेल-
पुष्पम् १६७ पाटलपुष्पम् १६८ चम्पकपुष्पम्
१६९
रात्रिजागरणम् १७० विल्वमूलम् १७१
पाटला १७२ शालपर्णी १७३ पृश्निपर्णी
१७४
एरण्डमूलम् १७५ कण्टकारिका १७६
विशाला १७७ लोध्रः १७८ भृङ्गराजः १७९
केशराजः १८० द्रोणपुष्पी १८१ झिण्डी
१८२
वचा १८३ शक्राशनम् १८४ हरिद्रा १८५
दार्व्वो १८६ अवल्गुजः १८७ एडगजः १८८
रेणुका १८९ भूर्जः १९० आसना १९१
निम्ब-
पत्रम् १९२ भूनिम्बः १९३ कुटजः १९४
यासः १९५ दुरालमा १९६ कटुकी १९७
त्रायन्ती १९८ शृङ्गी १९९ कट्फलम् २००
कुष्ठम् २०१ पारिभद्रः २०२ वासकः २०३
मधुयुक्तगुडूची २०४ पिप्पलीमुलम् २०५
चविका २०६ गजपिप्पली २०७ अर्कः २०८
धुस्तूरः २०९ सामान्यगुल्गुलुः २१० नूतन-
पुरातनगुग्गुलुः २११ अरुणा त्रिवृता २१२
सिता त्रिवृता २१३ सिन्धुवारः २१४ मनो-
ऽङ्गा २१५ सौराष्ट्री २१६ ताम्रम् २१७
कांस्यम् २१८ ॥ इति द्रव्यगुणात् सगृहीतम् ॥

**श्लेष्मातः**, पुं, श्लेष्माणमततीति । अत + अच ।)
श्लेष्मातकवृक्षः । इति शब्दरत्नावली ॥

**श्लेष्मातकः**, पुं, (श्लेष्मात एव । स्वार्थे कन् ।) नहु
वारकवृक्षः । इत्यमरः ॥ (यथा मनुः ६ । १४ ।

| | | |
|---|---|---|
| चिपिटः ६० घृतपूरः ६१ पायसः ६२<br>शस्कुली ६३<br>सरसगुवाकफलम् ६४ मधुररसः ६५<br>अति-<br>शयाम्लभोजनम् ६६ लवणरसः ६७<br>शीतवीर्य्य-<br>द्रव्यम् ६८ कुन्दुकपुष्पम् ६९<br>यूथिकापुष्पम् ७०<br>वन्धूकपुष्पम् ७१ तावज्जन्तुरसः ७२<br>तावज्जन्तु- | महार्द्रम् ७७ करुणम् ७८<br>कोचाम्रफलम् ७९<br>तालास्थिमज्जा ८० बालविल्वम् ८१<br>विल्व-<br>पेषिका ८२ धात्री ८३ विभीतकम् ८४<br>विभीत-<br>मज्जा ८५ धात्रीमज्जा ८६<br>नन्द्यावर्त्तमत्स्यः ८७<br>कवयीमत्स्यः ८८ एलङ्गमत्स्यः ८९<br>दण्डिक-<br>मत्स्यः ९० त्रिकण्टमत्स्यः ९१<br>प्रोष्ठीमत्स्यः ९२<br>मत्स्याण्डम् ९३ कूर्म्माण्डम् ९४<br>खगाण्डम् ९५<br>एणमांसम् ९६ खङ्गिमांसम् ९७<br>कूर्म्मपादः ९८<br>कपिञ्जलमांसम् ९९ वर्त्तिकापक्षिमांसम्<br>१००<br>प्रसन्नामद्यम् १०१ अरिष्टमद्यम् १०२<br>अर्घ्य- | |

"वर्जयेत् मधुमांसञ्च भौमानि कवकानि च ।
भूस्तृ णं शिग्रुकञ्चैव श्ल ष्मातकफलानि च ॥")

**श्लेष्मान्तकः**, पुं, (श्लेष्मणा स्वसेवनजनितकफेन
अन्तयति नाशयतीति । अन्त + णिच + ण्वुल ।)
वृक्षविशेषः । वहुयार इति वङ्गभाषा । लसोडा
इति हिन्दी भाषा । तत्पर्य्यायः । बहुवारः २
पिच्छिलः ३ द्विजकुत्सितः ४ शेलुः ५ शीत-
फलः ६ शोतः ७ शाकटः ८ कर्व्वुदारकः ९
भूतद्रुमः १० गन्धपुष्पः ११ । अस्य गुणाः ।
कटुत्वम् । हिमत्वम् मधुरत्वम् । कषायत्वम् ।
स्वादुत्वम् । पाचनत्वम् कृमिशूलहरत्वम् ।
आमास्रदोषमलरोधबह्व्रणार्त्तिविस्फोटशान्ति-
करत्वम् । कफकारकत्वञ्च । इति राजनिर्घण्टः ॥
अस्यामफलगुणाः । विष्टम्भित्वम् । रूक्षत्वम् ।
पित्तकफास्रनाशित्वञ्च । तत्पक्वफलगुणाः । मधु-
रत्वम् । स्निग्धत्वम् । श्लेष्मत्वम् । शीतलत्वम् ।
गुरुत्वञ्च । इति भावप्रकाशः ॥

**श्लेष्मिकं**, त्रि, (श्लेष्मणः शमनं कोपनं वा ।
श्लेष्मन् + "वातपित्तश्लेष्मभ्यः शमनकोपनयोः
।"
५ । १ । ३८ । इत्यस्य वार्त्तिकोक्त्या ठञ् ।
कफशमनम् । कफकोपनम् । इति व्याकरणम् ॥)
श्लेष्मोद्भवम् । श्लेष्मसम्बन्धोयम् । इति श्लेष्म-
शब्दात् ष्णिकप्रत्ययेन निष्पन्नम् ॥ (यथा,
सुश्रुते । १ । ३ ।
"चिकित्साप्रविभागीये वाताभिष्यन्दवराणः ।
पेत्तिकस्य श्लैष्मिकस्य रौधिरस्य तथैव च ॥")

**श्लोक**, ऋ ङ संघाते । वर्ज्जने । सर्ज्जने । इति कवि-
कल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-सक०-च-
सेट् ।
मघात इह छन्दोविशिष्टवाक्यरचनम् । ऋ,
अशश्लोकत् । ङ, श्लोकते कविः । इति दुर्गा-
दासः ॥

**श्लोकः**, पुं, (श्लोक्यते इति । श्लोकसंघाते + घञ् ।)
पद्यम् । यशः । इत्यमरः ॥ * ॥ (वाक् । इति
निघण्टुः । १ । ११ ॥ "श्रुश्रवणे 'इण् भीका-
पाशल्यतिमचिभ्यः कन्' इति कन्प्रत्ययो

**श्वः**, [स्] व्य, अनागताहः । इत्यमरः ॥ कालि
इति भाषा ॥ (यथा, रामायणे । २
। ६४ । ३६ ।
"श्वो मया सह गन्तासि जनन्या च
समेधितः ॥")

**श्वःश्रेयसं**, क्ली, (श्वः आगामिकाले श्रेयो यत्र ।
"श्वसी वसीयःश्रेयसः ।" ५ । ४ ।
८० । इति
अच् ।) कल्याणम् । इत्यमरः ॥
(यथा,
भट्टिः । ४ । ३८ ।
"श्वःश्रेयसमवाप्तासि भ्रातृभ्यां
प्रत्यभाणि सा ॥")
परमात्मा । शर्म्म । इति मेदिनी ॥
कल्याण-
युक्ते, त्रि ॥

**श्वक**, इ ङ सर्पे । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।)
वकारयुक्ताद्यः । इ,
शङ्क्यते । ङ श्वङ्कते । सर्पो गतिः
। इति
दुर्गादासः ॥

**श्वगणः**, पुं, (शुनां गणः ।) कुक्वुरसमूहः । यथा ।
द्वारादेयवयोरिमुमौ स्यातां
णित्तद्धिते परे ।
श्वापदन्यङ्क्वोस्तु वा । न तु
श्वगणप्रभृतीनाम् ।
इति मुग्धबोधव्याकरणटीकायां
दुर्गादासः ॥
(यथा, हरिवंशे भविष्यपर्व्वणि । ८
। १४ ।
"श्वगणा नात्र दृश्यन्ते पिशाचा
मांम-
भोजनाः ॥")

**श्वच**, ङ गत्याम् । इति कविकल्पद्रुमः ॥

कुक्करनिशा । यथा, --
कुक्करनिशा । यथा, --
"यस्यां मत्ता निशि श्वानः श्वनिशं
श्वनिशा च
सा ॥"
इति जटाधरः ॥

**श्वपक्** [च] पुं, (श्वानं पचतीति । पच + क्विप् ।
चण्डालः । यथा । निषादः । श्वपचः
श्वपक् ।
इति भरतधृतवोपालितः ॥ (यथा, मनुः ।
३ । ९२
"शुनाञ्च पतितानाञ्च श्वपचां पापरोगिणाम्
।
वायसानां कृमीणाञ्च शनकैर्निर्व्वपेत् भुवि
॥")

**श्वपचः**, पुं, (श्वानं पचतीति । पच + अच् ।)
चण्डालः । इत्यमरः ॥ तस्य संज्ञा
अन्त्याव-
सायी । तस्य धर्म्मो यथा, --
"चण्डालश्वपचानान्तु बहिर्ग्रामात्
प्रतिश्रयः ।
अपपात्राश्च कर्त्तव्या धनं येषां श्वगर्द्दभम्
॥
वासांसि मृतचेलानि भिन्नभाण्डेषु भोजनम्
।
कार्ष्णायः समलङ्कारः परिव्रज्या च
नित्यशः ॥
न तैः समयमन्विच्छेत् पुरुषो धर्म्ममाचरन्
।
व्यवहारो मिथस्तेषां विवाहः सदृशैः सह ॥
अन्नं येषां पराधीनं देयं स्याद्भिन्नभाजने ।
रात्रौ न विचरेयुस्ते ग्रामेषु नगरेषु च ॥
दिवा चरेयुः कार्य्यार्थं चिह्निता राजशासनैः
।
अबान्धवं शवञ्चैव निर्हरेयुरिति स्थितिः ॥
बध्यांश्च हन्युः सततं यथाशास्त्रं नृपाज्ञया
।

वाहुलकाद्भवति गुणः कविलकादित्वाल्लत्वम्। श्रूयते इति श्लोकः । यद्वा श्लोक संघाते 'पुंसि सञ्ज्ञायां घः ।' श्लोक्यते पद्यते रूपेण संहन्यते कविभिः श्लोकः ।" इति तट्टीका ॥) श्लोकनाम कारणम् । यथा, --

"मा निपाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
वत्क्रौञ्चमिथुनादेकमवधोः काममोहितम् ॥
तस्येन्थं ब्रुवतश्चिन्ता बभूव हृदि वीक्षतः ।
गोकार्त्तेनास्य शकुनेः किमिदं व्याहृतं मया ॥
चिन्तयन् स महाप्राज्ञश्चकार मतिमान् मतिम् ।
शिष्यञ्चैवाब्रवीद्वाक्यमिदंस मुनिपुङ्गवः ॥
पादबन्धोऽक्षरसमस्तन्त्रीलयसमन्वितः।
गोकार्त्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा ॥"
इति रामायणे वाल्मीकीये बालकाण्डे २ स्वर्गः ॥

**श्लोण**, ऋ सहाते । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) ऋ, अशुश्लोणत् । संहातो राशीकरणम् । इति दुर्गादासः ॥

(भ्वा०-आत्म०-सक०-सेट् ।) द्वौ वकारयुक्तादी । पुनःपाठादाद्यो नेदनुबन्धः । ङितौ तु द्वौ । एक एवेत्पाठबलाद्वाध्य इति नियमात् । ङ, श्वचते । इ, श्वञ्च्यते । ङ, श्वञ्चते । इति दुर्गादासः ॥

**श्वच**, इ ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट् ।) द्वौ वकारयुक्तादी । पुनःपाठादाद्यो नेदनुबन्धः । ङितौ तु द्वौ । एक एवेत्पाठबलाद्वाध्य इति नियमात् । ङ, श्वचते । इ, श्वञ्च्यते । ङ, श्वञ्चते । इति दुर्गादासः ॥

**श्वठ**, क गतौ । असंस्कृते । संस्कृते । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-सक०-सेट् ।) द्वौ वकारयुक्तौ पुनःपाठादाद्यो नेदनुबन्धः । त्रयः अर्थाः । क, श्वाठयति । इ क श्वण्ठयति जनः । गच्छति किमपि संस्करोति वा इत्यर्थः । संस्कारगत्योरिति केचित् । इति दुर्गादासः ॥

**श्वठ**, इ क गतौ । असंस्कृते । संस्कृते । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-सक०-सेट् ।) द्वौ वकारयुक्तौ पुनःपाठादाद्यो नेदनुबन्धः । त्रयः अर्थाः । क, श्वाठयति । इ क श्वण्ठयति जनः । गच्छति किमपि संस्करोति वा इत्यर्थः । संस्कारगत्योरिति केचित् । इति दुर्गादासः ॥

वध्यवासांसि गृह्णीयुः शय्याश्चाभरणानि च ॥ * ।
चाण्डालः श्वपचः क्षत्ता मृतो वैदेहकस्तथा ।
मागधायोगवौ चैव सप्तैतेऽन्त्यावसयिनः ॥"

तस्यान्नभक्षणे प्रायश्चित्तं यथा, --

"अन्त्यावसायिनामन्नमश्नीयाद्यस्तु कामतः ।
स तु चान्द्रायणं कुर्य्यात् तप्तकृच्छमथापि वा ॥"
इति प्रायश्चित्ततत्त्वधृताङ्गिरोवचनम्॥

**श्वपाकः**, पुं, (शुनां पाकः कार्य्यवेन यस्य ।) चण्डालः । इत्यमरः ॥ तस्योत्पत्तिर्यथा, --

"क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्यते ॥"
इति मानवे १० अध्यायः ॥ * ॥

रजस्वलायास्तस्य स्पर्शने प्रायश्चित्तं यथा, --

"चाण्डालेन श्वपाकेन संस्पृष्टा चेत् रजस्वला ।
अतिक्रम्य तान्यहानि प्रायश्चित्तं समाचरेत् ॥
त्रिरात्रमुपवासः स्यात् पञ्चगव्येन शुध्यति ।
तां निशान्तु व्यतिक्रम्य स्वजात्युक्तन्त कारयेत् ॥"

इति वचनान्तरदर्शनात् एतत् कामतः । अत्रा-ज्ञाने बृहस्पतिः ।

"पतितान्त्यश्वपाकैस्तु संस्पृष्टा स्त्री रजस्वला ।
तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत् ॥
प्रथमेऽह्नि त्रिरात्रन्तु द्वितीये द्व्यहमाचरेत् ।
अहारात्रं तृतोयेऽह्नि चतुर्थे नक्तमाचरेत् ॥"

चतुर्थेऽह्नीति शुद्धिस्नानात् पूर्व्वम् । इतिप्राय-श्चित्ततत्त्वम् ॥

**श्वफलः**, पुं, (श्वप्रियं फलमस्य ।) बीतपुरः । इति

**श्वठ**, त् क दुर्व्वाचि । इति कविकल्पद्रुमः ॥

(अदन्तचुरा०-पर०-सक०-सेट् ।)
वकारयुक्तः ।
श्वठयति नीचः । कुत्सितं
वदतीत्यर्थः । रमा-
नाथस्तु सम्यग्भाषणे इति मत्वा
श्वठयति
सम्यग्वदतीत्यर्थ इत्याह ।
सम्यग्भाग इत्यप्येके
इति दुर्गादासः ॥

**श्वदंष्ट्रक**, पुं, (शुनो दंष्ट्रेव कण्टकोऽस्य ।)

गोक्षुरः । इति राजनिर्घण्टः ॥

**श्वदष्ट्रा**, स्त्री, (शुनो दंष्ट्रेव कण्टकावृतत्वात् ।)

गोक्षुरकः । इत्यमरः ॥ (यथा,
सुश्रुते । १ । ४६ ।
"पिप्पल्यादीनां श्वदंष्टावसुकामवः
कुष्माण्डा-
दीनां दार्व्वीकरामवः ॥")

**श्वधूर्त्तः**, पुं, (शुनि धूर्त्तस्तद्वञ्चकत्वात् ।) शृगालः ।

इति शब्दरत्नावली ॥

**श्वनिशं**, क्ली, (शुनां निशा । "सुरासेना-

च्छायाशालानिशा स्त्रियाञ्च ।"
इति लिङ्गानुशासनसूत्रेण विभागया
क्लीव-
त्वम् ।) शुनां निशा । इत्यमरभरतौ
॥ मत्त-

**श्वनिशा**, स्त्री, (शुनां निशा । "सुरासेना-

च्छायाशालानिशा स्त्रियाञ्च ।"
इति लिङ्गानुशासनसूत्रेण विभागया
क्लीव-
त्वम् ।) शुनां निशा । इत्यमरभरतौ
॥ मत्त-

रत्नमाला ॥

**श्वफल्कः**, पुं, वृष्णिपुत्त्रः । म च अक्रूरपिता ।

यथा । अनमित्वस्यान्वयेऽन्या वृष्णिः ।
तस्मात्
श्वफल्कः । तत्प्रभावः कथितएव ।
श्वपल्वस्थान्यः

कनीयान् चित्रको नाम भाता । श्वफल्काद्-
क्रूरो गान्दिन्यामभवत् । इति विष्णुपुराणे ४
अश १४ अध्यायः ॥

**श्वभीरुः**, पुं, (शुनः कुक्कुरात् भीरुर्भयशीलः ।)
श्रृगालः । इति शब्दमाला ॥

**श्वभ्र**, क विले । गती । तङ्कॆ । इति कविकल्पद्रुमः ॥
(चुरा०-पर०-सक०-तङ्के अक०-सेट् ।) विलं
रन्ध्रकरणम् । क, श्वभ्रयति भाण्डं बालकः ।
तङ्क इति तकि दौःस्थ्ये इत्यस्य रूपम् ।
श्वभ्र-
यति दीनः दुःखेन जीवतीत्यर्थः । तङ्कस्थाने
तन्त्र इत्यपपाठः । इति दुर्गादासः ॥

**श्वभ्रं**, क्ली, (श्वभ्र्यते यदिति । श्वभ्र विले +
कर्म्मणि घञ् ।) छिद्रम् । इत्यमरः ॥ (यथा,
मार्कण्डेये । ४३ । २९ ।
"पततो यस्य वै गर्त्ते स्वप्ने द्वारं पिधीयते ।
न चोत्तिष्ठति यः श्वभ्रात् तदन्तं तस्य जीवि-
तम् ॥")

**श्वयथुः**, पुं, (टु ओ श्वि गतिवृद्ध्योः + "ट्वितोऽ-
थुच् ।" ३ । ३ । ८९ । अथुच् ।) शोथः ।
इत्य-
मरः ॥ (यथा, बृहत्संहितायाम् । ३२ । १० ।
"श्वयथुश्वासोन्मादज्वरकासभवावणिक्-
पीडा ॥")

**श्वयीची**, स्त्री, (श्वयतीति । श्वि गतिवृद्ध्योः +
"श्वयतेश्चित् ।" उणा० ४ । ७१ । इति
ईचिः ।
वा ङीष् ।) पीडा । इति सिद्धान्तकौमुदी ॥

**श्वल**, वेगे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
अक०-सेट् । वकारयुक्तादिः । श्वलति । वेगः
शीघ्रगतिः । इति दुर्गादासः ॥

**श्वल्क**, क भाषे । इति कविकल्पद्रुमः । (चुरा०-
पर०-सक०-सेट् ।)
वकारयुक्तस्तालव्यादिरन्तः-
उरन् । "शुशब्दोऽत्राशुशब्दाभिधायी ।
आशु
व्याप्तव्यः श्वशुर इति धातुपारायणम् ।"
इति
तट्टीकायां उज्ज्वलदत्तः ॥) पतिपत्न्योः
पिता ।
इत्यमरः ॥ (यथा, --
"मसारे खलु संसार सारः श्वशुरमन्दिरम्
।
हिमालये हरः शेते हरिः शेते महोदधौ ॥"
इत्युद्भटः ॥)
पूज्यः । इति मेदिनी ॥

**श्वशुरौ**, पुं, (श्वश्रूश्च श्वशुरश्च तौ । "श्वशुरः
श्वश्वा ।" १ । २ । ७१ । इति पाक्षिक
एक-
शेषः ।) श्वश्रूश्वशुरौ । द्विवचनान्तोऽयम्
।
इत्यमरः ॥ श्वशुर शाशुडी इति भाषा ॥

**श्वशुर्य्यः**, पुं, (श्वशुरस्यापत्यमिति । श्वशुर +
"राजश्वशुरात् यत् ।" ४ । १ । १३७ ।
इति
यत् ।) देवरः । श्यारः । इत्यमरः ॥
(यथा,
कथासरित्सागरे । १९ । ५७ ।
ददौ वैदेहदेशे च राज्यं गोपालकाय सः ।
सत्कारहेतोर्नृपतिः श्वशुर्य्यायानुग्च्छते
॥")

**श्वश्रूः**, स्त्री, (श्वशुरस्य स्त्री । श्वशुर + "श्वशुर-
स्योकारलोपश्च ।" ४ । १ । ६८ ।
इत्यस्य वार्त्ति-
कोक्त्या ऊङ् उकारलोपश्चं ।)
पतिपत्न्योः प्रसूः ।
इत्यमरः ॥ शाशुडी इति भाषा ॥ * ॥
तस्याः
स्नुषाभिः सहाविश्वासकारणं यथा, --
धर्म्मव्याध उवाच ।
"मया ते दुहिता दत्ता पुत्त्रार्थे वरवर्णिनी ।
इवाचरतीति क्वौ साध्यम् ।" इति
दुर्गादासः ॥

**श्वस**, लुर स्वप्ने । इति कविकल्पद्रुमः ॥ (अदा०-
पर०-अक०-सेट् ।) लु, श्वस्ति । र,
वैदिकः ।
इति दुर्गादासः ॥

**श्वसनं**, क्ली, (श्वस + ल्युट् ।) श्वसितम् ।
निश्वासः ।
इति मेदिनी ॥ (यथा, किराते । १० ।
३४ ।
"श्वसनचलितपल्लवाधरोष्ठे
नवनिहितेर्ष्यमिवावधूनयन्ती ॥" * ॥
स्पर्शनम् । इति श्रीधरस्वामी ॥ यथा,
भागवते
२ । २ । २९ ।
"घ्राणेन गन्धं रमनेन वै रसं
रूपञ्च दृष्ट्या श्वसनं त्वचैव ॥")

**श्वसनः**, पुं, श्वसितीति । श्वस + ल्युः ।) वायुः ।
(यथा, बृहत्संहितायाम् । ३४ । २ ।
"इन्द्रयमवरुणनिरृति-
श्वमनेशपितामहाग्निकृत्ताः ॥")
मदनवृक्षः । इत्यमरः ॥

**श्वसनाशनः**, पुं, (श्वसनो वायुरशनं भक्ष्यं यस्य ।
सर्पः । इति हारावली ॥ (यथा, राजतर-
ङ्गिण्याम् । १ । २२५ ।
"जगाद तं द्विजन्मानं निश्वस्य
श्वसनाशनः ॥")

**श्वसनेश्वरः**, पुं, (श्वसन ईश्वरो यस्य ॥) अर्ज्जुन-
वृक्षः । इति शब्दचन्द्रिका ॥

**श्वसनोतसुकः**, पुं, (श्वसनाय उत्सुकः । सर्पः ।
इति शब्दरत्नावली ॥

**श्वसितं**, क्ली, (श्वस + क्तः ।) श्वासः । यथा, --
"श्वासस्तु श्वसितं सोऽन्तर्मुखे उच्छास
आहरः

स्थतृतीयोपधः । क, श्वल्कयति । भाषः कथ-
नम् । इति दुर्गादासः ॥

**श्वल्ल** वेगे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
अक०-सेट् ।) वकारयुक्तादिः लद्वयान्तः ।
श्वल्लति । वेगः शीघ्रगतिः । इति दुर्गादासः ॥

**श्ववृत्तिः**, स्त्री, (शुनः कुक्कुरस्येव पराधोना वृत्तिः ।
सवा । इत्यमरः ॥ चाक्री इति भाषा । शुन
इव वृत्तिः परपिण्डोपजीवनात् । इति भरतः ॥
अपि च ।
"सत्यानृतन्तु वाणिज्यं तेन चैवापि जीव्यते ।
सेवा श्ववृत्तिराख्याता तस्मात्ता परिवर्जयेत् ॥"
इति मानवे ४ अध्याये ६ श्लोकः ॥
"सेवा तु दीनदृष्टिसन्दर्शनस्वामितर्ज्जननीच-
क्रियादिधर्म्मयोगात् शुन इव वृत्तिरतः श्ववृत्ति-
रुक्ता तस्मात्तां प्रकृतो ब्राह्मणस्त्यजेत् ।" इति
कुल्लूकभट्टः ॥

**श्वव्याघ्रः**, पुं, (शुनो व्याघ्रः ।) हिंस्रपशुः । यथा,
"शार्दूलः पुण्डरीकश्च द्वीपी चाथ सृगादनः ।
श्वव्याघ्रश्च तरक्षुश्च व्याडश्च श्वापदः समौ ॥"
इति जटाधरः ॥

**श्वशुरः**, पुं, (शु आशु अश्यते व्याप्यते इति ।
अश + "शावशेराप्तौ ।" उणा० १ । ४५ । इति
सा च त्वद्भार्य्यया प्रोक्ता दुहिता जन्तुघातिनः ॥
अतोऽर्थमागतोऽहं ते गृहं प्रति समीक्षितुम् ।
आचारं देवपूजाञ्च अतिथीनाञ्च तर्पणम् ॥
एतेषागेकमप्यत्र कुर्व्वन्नपि न दृश्यते ।
तद्गृहं गन्तुमिच्छामि पितॄणां श्राद्धकाम्यया ॥
स्वगृहे नैव भुञ्जामि पितॄणां कार्य्यमित्युत ।
अहं व्याधो जीवघाती न तु तल्लोकहिंसकः ॥
मत्सुता जीवघातस्य यदूढा त्वत्सुतेन च ।
त्वन्महत्वञ्च संप्राप्तं प्रायश्चित्तं तपोधन ॥
एवमुक्त्वा स चोत्थाय शप्त्वा नारीं तदा धरे ।
मा स्नुषाभिः समं श्वश्वा विश्वासो भवतु क्वचित्
मा च स्नुषा कदाचित् स्यात् या श्वश्रूं जीवतीमिषेत् ।
एवमुक्त्वा गतो व्याधः स्वगृहं प्रति भामिनि ॥"
इति वाराहे आदिकृतवृत्तान्तनामाध्यायः ॥

**श्वश्रूश्वशुरौ**, पुं, (श्वश्रूश्च श्वशुरश्च तौ ।) श्वश्रू-
श्वशुरयोः सहोक्तिः । तत्पर्य्यायः ।
श्वशुरौ २ ।
इत्यमरः ॥

**श्वस**, घ लु प्राणने । इति कविकल्पद्रुमः ॥ (अदा०
पर०-अक०-सेट् ।) "वकारयुक्तादिः । घ लु,
श्वसिति लोकः जीवतीत्यर्थः ।
आश्वसेयुर्निशा-
चरान् । इति भट्टौ । न विश्वसेत् पूर्व्वविरो-
धितस्येति । पञ्चतन्त्रे ।
'तविखसेदविश्वस्तं विश्वस्ते नातिविश्वसेत् ।'
आनो बहिर्मुखस्तु स्यान्निःश्वासः पान एतनः ॥
इति हेमचन्द्रः ॥

**श्वसुनः**, पुं, (श्वस + बाहुलकात् उगन् ।) क्षतघ्न-
वृक्षः । इति शब्दचन्द्रिका ॥ कुकुरशोङ्गा
इति भाषा ॥

**श्वस्तनं**, त्रि, (श्वो भवम् । श्वस् + "एषमोह्यः
श्वसोऽन्यतरस्याम् ।" ४ । २ । १०५ । इति त्यब्-
भावे ट्युट्युलौ तुट् च ।) भविष्यद्वस्तु । इति
शब्दमाला ॥ (यथा, भागवते । ११ । ८ । १२ ।
"सायन्तनं श्वस्तनं वा न संगृह्णीत भिक्षुकः ।
मक्षिका इव संगृह्णन् सह तेन विनश्यति ॥")
भविष्यत्काले, क्ली । इति राजनिर्घण्टः ॥

**श्वस्त्यं** त्रि, (श्वो भवमिति । श्वस् + "एषमोह्यः
श्वसोऽन्यतरस्याम् ।" ४ । २ । १०५ ।
इति त्यब् ।)
श्वोभववस्तु । इति शब्दमाला ॥

**श्वा**, [न्] पुं, (श्वयति गच्छतीति । श्विगतौ +
"श्वन् उक्षन् पूषन्निति ।" उणा० १ । १५८ ।
इति कनिन्प्रत्ययेन साधु ।) कुक्कुरः । तत्-
पर्य्यायः ।
"कुक्कुरः श्वा च भषकः शुनको मृगदंशकः ।
कौलेयको रन्तिदेवः सारमेयो रतव्रणः ॥
"कुक्कुरो दीर्घसुरतः श्वानो ग्राममृगोऽपि च ।
वक्रपुच्छः शयालुः स्यात् शरत्काम्यरतत्रपः ॥
औषधादियोगितः श्वा स्यादलर्क्कोऽप्यलर्क्ककः ।

| | | |
|---|---|---|
| | इत्यादौ च गणकृतमनित्यमिति न्यायात् शपः स्थितौ साध्यम् । अथवा हादेराकृतिगणत्वात् तत्र दष्टव्यम् । वस्तुतस्तु “पचादित्वादनिश्वस | |

मृगयाकुशलः श्वा तु विश्वकद्रुः
पुमानयम् ॥”
इति शब्दरत्नावली ॥

**श्वागणिकः**, त्रि, श्वगणेन चरति यः । “श्वग-
णात् ठञ् च ।” ४ । ४ । ११ । इति
ठञ् । श्वगणेन
चरति । श्वागणिकः श्वागणिकी
श्वगणिकः
श्वगणिकी । इति सिद्ध्वान्तकौमुदी ॥

**श्वादन्तः**, पुं, (शुनो दन्त इव दन्तो यस्य । “शुनो
दन्तदंष्ट्रेति ।” ६ । ४ । १३७ ।
इत्यस्य वार्त्ति-
कोक्त्या दीर्घः ।) कुक्कुरदशनः । इति
सिद्धान्त-
कौमुदी ॥

**श्वानः**, पुं, (श्वा एव । श्वन् + स्वार्थे अण् ।)
कुक्कुरः । इति शब्दरत्नावली ॥ (शुनां
समूहः
सण्डिकादित्वात् अञ् । कुक्कुरसमूहे,
क्ली ॥)

**श्वानचिल्लिका**, स्त्री, (श्वानप्रिया चिल्लिका ।)
शुनकचिल्ली । इति राजनिर्घण्टः ॥

**श्वानी**, स्त्री, (श्वान + स्त्रियां ङीष् ।) कुक्कुरी ।
इति शब्दरत्नावली ॥

**श्वापदः**, पुं, (शुन इव पदं यस्य । “शुनो दन्त-
दंष्ट्राकर्णकुन्दवराहपुच्छपदेषु ।” ६ । ४
। १३७ ।
इत्यस्य वार्त्तिकोक्त्या दीर्घः ।)
हिंस्रपशुः । इति
हेमचाद्रः ॥ (यथा, विष्णुपुराणे । १ । ५
। ५१ ।
“श्वापदो द्विखुरो हस्ती वानरः
पक्षिपञ्चमः ।
औदकाः पशवः षष्ठाः सप्तमास्तु
सरीसृपाः ॥”)

श्वासाजीर्णज्वरच्छर्द्दिभ्रममोहगलग्रहाः ।
रक्तार्व्वुदविसर्पाद्या उपपापोद्भवा गदाः ॥”
इति मलमासतत्त्वम् ॥ * ॥
अथ श्वासाधिकारः । तत्र निदानमाह ।
“यैरेव कारणैर्हिक्का देहिनां संप्रवर्त्तते ।
तैरेव बहुभिः श्वासो व्याधिर्घोरः प्रजायते
॥”
श्वासस्य भेदानाह ।
“महोर्द्ध्वच्छिन्नतमक्षुद्रभेदैस्तु पञ्चधा ।
भिद्यते स महाव्याधिः श्वास एको विशेषतः
॥”
पूर्व्वरूपमाह ।
“प्राग्रूपं तस्य हृत्पीडा शूलमाध्मानमेव च ।
आनाहो वक्त्रवैरस्यं शङ्खनिस्तोद एव च ॥”
* ॥
मंप्राप्तिमाह ।
“यदा स्रोतांसि संरुध्य मारुतः कफपूर्त्तकः
।
विश्वग्व्रजतिसं रुद्धस्तदा श्वासं करोति सः
॥”
स्रोतांसि प्राणोदकान्नवहानि ।
कफपूर्व्वकःकफः
पूर्व्वः प्रधानं यस्य सः । विश्वग्व्रजति
सर्व्वतो
विमार्गान् याति । संरुद्धः कफेन रुद्धमार्गः ॥
* ॥
महाश्वासस्य लक्षणमाह ।
“उद्धूयमानवातो यः शब्दवत् दुःखितो नरः
।
उच्चैः श्वसिति सन्नद्धो मत्तर्षभ इवानिशम्
॥
प्रनष्टज्ञानविज्ञानस्तथा विभ्रान्तलोचनः ।
विवृताक्ष्याननो बद्धमूत्रवर्च्चा विशीर्णवाक् ॥
दीनः प्रश्वसितं चास्य दूरात् विज्ञायते
भृशम् ।
महाश्वासोपसृष्टस्तु क्षिप्रमेव विपद्यते ॥”
उद्धूयमानवातः ऊर्द्ध्वं नीयमानो वातो
यस्य सः

आनाहस्वेदमूर्च्छार्त्तो दह्यमानेन वस्तिना ।
विप्लुताक्षः परिक्षीणः श्वसन् रक्तैकलोचनः
॥
विचेताः परिशुष्कास्यो विवर्णः प्रलपन्नरः ।
छिन्नश्वासेन विच्छिन्नः स शीघ्रं
विजहात्यसून् ॥”
विच्छिन्नं सविच्छेदम् । सर्व्वप्रःणेन यावद्बलेन
।
मर्म्मच्छेदरुजार्द्दितः हृदयशिरश्छेदवेदनयेव
पीडितः । दह्यमानेन वस्तिना डपलक्षितः ।
विप्लुताक्षः अश्रुपूर्णनेत्रः । विचेता उद्विग्न-
चित्तः । छिन्नश्वासेन विच्छिन्नः सः । यस्तु
श्वसिति विच्छिन्नमित्यादिलक्षणयुक्तो यः स
नरश्छिन्नश्वासेन विच्छिन्नः पीडितो बोद्धव्य
इत्यर्थः । मारकश्चायं विच्छिन्नश्वासः ॥ *
॥
तमकश्वासमाह ।
“प्रतिलोमं यथा वायुः स्रोतांसि प्रतिपद्यते ।
ग्रीवां शिरश्च संगृह्य श्लेष्माणं समुदीर्य्य च ॥
करोति पीनसन्तेन कण्ठे घुर्घुरकं तथा ।
अतीव तीव्रवेगञ्च श्वासं प्राणप्रपीडकम् ॥
प्रताम्यति स वेगेन त्रस्यते संनिरुध्यते ।
प्रमोहं कासमानश्च स गच्छति मुहुर्म्मुहुः ॥
श्लेष्मणा मुच्यमानेन भृशं भवति दुःखितः ।
तस्यैव च विमोक्षान्ते मुहूर्त्तं लभते सुखम् ॥
तथास्योद्ध्वंसते कण्ठः कृच्छ्राच्छक्नोति
भाषितुम्
न चापि निद्रां लभते शयानः श्वासपीडितः ॥
पार्श्वे तस्यावगृह्णाति शयानस्य समीरणः ।
आसीनो लभते सौख्यमुष्णञ्चैवाभिनन्दति ॥
उच्छ्रिताक्षो ललाटेन क्लिद्यता
भृशमार्त्तिमान्
विशुष्कास्यो मुहुः श्वासो मुहुश्चैवावधम्यते
॥
मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्च विवर्द्धते ।
स याप्यस्तमकः श्वासः साध्यो वा
स्यान्नवो-
त्थितः ॥”
संगृह्य व्यथया समुदीर्य्य वर्द्धयित्वा । पीनसं

व्याघः। इति शब्दरत्नावली॥

**श्वावित्,** [ध्] पुं, (श्वानं विध्यतीति। व्यध +

क्विप्। "नहि वृतीति।" ६। ३।

११६। इति

दीर्घः।) शल्यः। इत्यमरः॥ सजारु

इति

भाषा॥ (यथा, मनुः। ५। १८।

"श्वाविधं शल्यकं गोधां

खड्गकूर्म्मशशांस्तथा।

भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतो

दतः॥")

**श्वाविद्,** (ध्) पुं, (श्वानं विध्यतीति। व्यध + क्विप्।

"नहिवृताति।" ६। ३। ११६। इति

दीर्घः।)

शल्यः। इत्यमरः॥ सजारु इति भाषा

॥

**श्वाश्वाः**, पुं, (श्वा कुक्कुरः अश्व इव वाहनं यस्य।)

भैरव। कुक्कुरवाहनत्वात्। इति

केचित्॥

**श्वासः**, पुं, (श्वसित्यनेनेति। श्वस + करणे घञ्।

यद्वा, श्वसितीति। श्वस +

"श्याद्व्यधेति।" ३।

१। १४१। इति णः।) श्वसितम्।

वायुः।

इति हेमचन्द्रः॥ तत्पर्य्यायः। प्राणः २

। इति

राजनिर्घण्टः॥ (यथा, साहित्यदर्पणे।

१। १४७।

"श्वासान् मुञ्चति भूतले विलुठति

त्वन्मार्ग-

मालोकते

दीर्घं रोदिति विक्षिपत्यत इतः क्षामां

भुजा-

वल्लरीम्॥")

रोगविशेषः। स तु बलवान्

महापातकजः।

यथा, --

शब्दवत् शब्दं यथा स्यात् कीदृक् स

शब्दस्तद्-

बोधयितुमाह। मत्तर्षभ इव उच्चैः श्वसिती-

त्यन्वयः। सन्नद्धः आनद्धः आनाहयुक्त इति

यावत्। ज्ञानं शास्त्रम्। विज्ञानं तदर्थविनि-

श्चयः। विशीर्णवाक् स्खलितवचनः। दीनः

ग्लानः। मारकश्चाथं महाश्वासः॥ * ॥

ऊर्द्ध-

श्वासमाह।

"ऊद्ध्वं श्वसिति योऽत्यर्थं न च

प्रत्याहरत्यधः।

श्लेष्मावृतमुखस्रोतः क्रुद्धगन्धवहार्द्दितः।

ऊद्ध्वदृष्टिर्विपश्यंस्तु विभ्रान्ताक्ष इतस्ततः

।

प्रमुह्यन् वेदनार्त्तश्च शुष्कास्यो रतिपीडितः

॥

ऊद्ध्वश्वासे प्रकुपिते ह्यधःश्वासो

निरुध्यते।

मुह्यतस्ताम्यतश्चोद्ध्वश्वासस्तस्यैव

हन्त्यसून्॥"

सर्वेषु श्वासेषूर्द्धं श्वसते। अत्र अत्यर्थमिति

विशेषः। न च प्रत्याहरत्यधः न श्वासमधः

करोति। श्लेष्मावृतेत्यादि। श्वेष्मणा

आवृतं

यन्मुखं स्रोतांसि च तैः क्रूद्धो यो गन्धवहस्ते

नार्द्दितः। विपश्यन् इतस्ततो विकृतं यथा

स्यादेवं पश्यन्। अधःश्वासो निरुध्यते

श्वासो

नाधः प्रवर्त्तत इत्यर्थः॥ * ॥

ऊर्द्धश्वासस्यारि-

ष्टस्य लक्षणमाह। मुह्यतो मोहं प्राप्नुवतः

ताम्यतो ग्लानिं प्राप्नुवतश्च ऊर्द्धश्वासः

असून्

प्राणान् हन्ति। तस्यैवेति न तु मोहग्लानि-

रहितस्य॥ * ॥ छिन्नश्वासमाह।

"यस्तु श्वसिति विच्छिन्नं सर्वप्राणेन

पीडितः।

न चाश्वसिति दुःखार्त्तो मर्म्मच्छदरुजार्द्दितः

॥

नासास्रावम्। तेन श्लेष्मणा घुर्घुरकं घुर्घुर-

शब्दम्। प्राणप्रपीडकं प्राणाधिष्ठानहृदय-

प्रपीडकम्। प्रताम्यति तमसि प्रविशतीव।

वेगेन श्वासवेगेन। संनिरुध्यते निश्चेष्टो भव

तीति चक्रः। संनिरुध्यते श्वास इति

जेज्जटः।

श्लेष्मणा अमुच्यमानेन। सुखं सुखमिव।

उद्धं-

सते व्यथितो भवति। शयानः

शय्यानिहिताङ्गः

अवगृह्णाति पीडयति। उष्णञ्चैवाभिनन्दति

इत्यनेन तमको वातकफारब्ध इति बोधव्यम्

।

उच्छ्रिताक्षः शूनाक्षः। ललाटेन स्विद्यता

उपलक्षितः। अवधम्यते गजारूढस्येव

सर्वगात्र

चाल्यते॥ * ॥ तमकस्यैव

पित्तानुबन्धजनित-

ज्वरादियोगेन प्रतमकसंज्ञामाह।

"ज्वरमूर्च्छापरीतस्य विद्यात् प्रतमकं तु तत्

।

उदावर्त्तरुजोऽजीर्णक्लिन्नकायनिरोधतः॥

तमसा वर्द्धतेऽत्यर्थं शीतैश्चाशु प्रशाम्यति।

मज्जतस्तमसी चास्य विद्यात् प्रतमकं तु

तत्॥"

क्षुद्रश्वासमाह।

"रूक्षायासोद्भवः कोष्ठे क्षुद्रो वात उदीरयन्।

क्षुश्वद्रामेन सोऽत्यर्थं दुःखेनाङ्गप्रवाधकः॥

हिनस्ति न च गात्राणि न च दुखो यथेतरे।

| “उन्मादश्चत्वचां दोषो राजयक्ष्माश्मरी तथा ।<br>श्वासश्च मधुमेहौ द्वावुदरी पापसंज्ञकाः ॥<br>इति नारदोक्तम् ॥”<br>इति शुद्धितत्त्वम् । स च हीनबल उपपातकजः<br>यथा, --<br>जलोदस्यकतमीहशूलरोगव्रणानिच । | | |
|---|---|---|

न च भोजनपानानां निरुणद्ध्युचितां गतिम्
॥
नेन्द्रिमाणां व्यथाञ्चापि काञ्चिदुत्पादयेद्रुजम् ।
स साध्य उक्तो बलिनः सर्व्वे वा व्यक्तलक्षणाः
॥”
क्षुद्रः अल्पनिदानलिङ्गः । उदीरयन् ऊद्ध्र्वं-
गच्छन् । दुःखः दुःखप्रदः । सर्व्वे महाश्वासा-
दयोऽपि ॥ * ॥ श्वासानां साध्यत्वादिकमाह
।
“क्षुद्रः साध्यतमस्तेषां तमकः कृच्छ्र उच्यते ।
त्रयः श्वासा न सिध्यन्ति तमको दुर्बलस्य च
॥
कामं प्राणहरा रोगा बहवो न ज्वरादयः ।
तथा यथा श्वासहिक्के हरतो जीवमाशु ते ॥”
अथ श्वासस्य चिकित्सा ।
“श्वासहिक्कातुरं प्रायः स्निग्धैः
स्वेदैरुपाचरेत् ।
युक्तैर्लवणतैलाभ्यां तैरस्य ग्रथितः कफः ॥
श्वासो विलयमायाति मारुतश्चोपशाम्यति ।
स्निग्धं ज्ञात्वा ततश्चैनं भोजयेच्च रसोदनम्
॥
स्वरसं शृङ्गवेरस्य माक्षिकेण समन्वितम् ।
पाययेत् श्वासकासघ्नं प्रतिश्यायकफापहम्
॥”
शृङ्गवेरमार्द्रकम् ।
“प्रस्थं विभीतकानां अस्थि विना
साधयेदजा-
मूत्रे ।
अयमवलेहो लीढो मधुसहितः
श्वासकासघ्नः ॥
दशमूली शटी रास्ना पिप्पली विश्वपौष्करौ ॥
शृङ्गतामलकीभार्गीगुडूचीनागराग्निभिः ॥
यवागूं विधिना सिद्धां कषायं वा पिबेन्नरः ।
श्वासहृद्ग्रहपार्श्वार्त्तिहिक्काकासप्रशान्तये
॥”
तामलकी भूम्यामलकी ।
“दशमूलस्य वा क्वाथः पौष्करेणावचूर्णितः ।
श्वासकासप्रशमनः पार्श्वशूलविनाशनः ॥
रम्भाकुन्दशिरीषाणां कुसुमं पिप्पलीयुतम् ।
स्वरवर्णप्रदो ह्येष जठराग्नेश्च दीपनः ।
नाम्ना भार्गीगुडख्यातो भिषग्भिः सकलैर्मतः
॥”
इति भार्गीगुडः ॥
“रसो गन्धो विषञ्चापि दङ्कणञ्च मनः शिला ।
एतानि कर्षमात्राणि मरिचं चाष्टकर्षकम् ॥
कटुत्रयं कर्षयुग्मं पृथगत्र विनिःक्षिपेत् ।
रसः श्वासकुठारोऽयं सर्व्वश्वासनिवारणः
॥”
श्वासकुठारो रसः । इति श्वासाधिकारः ।
इति
भावप्रकाशः ॥ * ॥ अन्यच्च ।
“विभीतकस्य वै चूर्णं समधु श्वामनाशनम् ।
पिप्पलीत्रिफलाचूर्णं मधुसैन्धवसंयुगम् ।
सर्व्वरोगज्वरश्वासशोषपीनसहृद्भवेत् ॥”
इति गारुडे १८९ अध्यायः ॥ * ॥
तस्य पुराणोक्तनिदानं यथा, --
धन्वन्तरिरुवाच ।
“अथातः श्वासरोगस्य निदानं प्रवदाम्यहम्
।
कासवृद्ध्या भवेच्छ्वासः पूर्व्वो वा
दोषकौपनैः ॥
आमातिसारवमथुविषपाण्डुज्वरैरपि ।
रजोधूमानिलैर्म्मर्म्मघातादपि हिमाम्बुना ॥
क्षुद्रकस्तमकश्छिन्नो महानूद्र्ध्वश्च पञ्चमः ।
कफोपरुद्धगमनः पवनो विश्वमास्थितः ॥
प्राणोदकान्नवाहीनि दुष्टस्रोतांसि दूषयन् ।
उरःस्थः कुरुते श्वासमामाशयसमुद्भवम् ॥
* ॥
प्राग्रूपं तस्य हृत्पार्श्वशूलं प्राणविलोमता ।
आनाहः शङ्खभेदश्च तत्रापासीत भोजनैः ॥
प्रेरितः प्रेरयन् क्षुद्रं स्वयं ससमलं मरुत् ।
प्रतिलोमं शिरा गच्छेत् उदीर्य्य पवनः कफम्
॥
परिगृह्य शिरोग्रीवमूरःपार्श्वे च पीडयन् ।
कासं घुर्घुरकं मोहमरुचिं पीनसं भृशम् ॥
करोति तीव्रवेगञ्च श्वासं प्राणोपतापनम् ।
प्रभ्राम्येत्तस्य वेगेन निष्ठ्रतान्ते क्षणं सुखी ॥
कृच्छ्राच्छयानः श्वसिति निषण्णः स्वास्थ्य-
इति गारुडे श्वासरोगनिदानं १५४
अध्यायः ॥
अथ श्वासरोगस्य कर्म्मविपाकः ।
“श्वासरोगो महानुग्रो देहिदेहावघातकः
।
कर्म्मणा येन भवति तन्मे निगदतः शृणु
।
महोद्ध्र्वच्छिन्नतमकक्षुद्राभेदोऽस्य
पञ्चधा ॥
श्वासः संजायते नृणां पृथक्
कर्म्मानुसारता ॥
यस्तु यज्ञं समासाद्य पशुश्वासं
निरुध्य च
हन्ति खादन्ति वातञ्च महाश्वासेन
गृह्यते ॥ १ ॥
पौराणिककथामध्ये यस्तु वाचान्यथा
भवेत् ।
स ऊद्ध्र्वश्वासमासाद्य
दुनोत्यहरहर्निशम् ॥ २ ॥
निषिद्धदानग्रहणात् छिन्नश्वासेन गृह्यते
। ३ ।
मर्त्यः शास्त्रार्थनिर्णीतवाक्यं यो
दूषयत्यपि ॥
पीड्यते तमकश्वासैः क्षुद्रैः पाकस्य
विघ्नतः । ४ । ५
परत्र कर्म्मतो देहि नरकेषु विपच्यते ॥
नरकान्ते पुनर्व्याघ्रयोनिं
शूकरवायसीम् ।
पृथक्कर्म्मवशाद्योनिं गत्वा संप्राप्य
तप्यते ॥
मानुषत्वमनुप्राप्य पूर्व्वोक्तेनोपगृह्यते ।
श्रुत्वा तूग्रन्तु कदनं श्वासरोगसमुद्भवम्
।
प्रणम्य भरतः श्रीमान् भृगुं वाचमुवाचह
॥
राजोवाच ।
श्वासकर्म्मक्षयं येन दानेन नियमेन च ।
कृतेन मुक्तो भवति तन्मे वद प्रसादतः
॥

पिष्ट्वा तण्डुलतोयेन पीत्वा श्वासमपोहति ॥
शृङ्गीमहौषधकणाघनपुष्कराणां
चूर्णं शटीमरिचयोश्च सिताविमिश्रम् ।
क्वाथेन पीतममृता वृषपञ्चमूल्या
श्वासं त्र्यहेन विनिहन्ति हि घोररूपम् ॥
पञ्चमूली तु सामान्यात् पित्ते योज्या
कनीयसी
महती मारुते देया सैव देया कफेऽधिके ॥
कुष्माण्डकशिफाचूर्णं पीतं कोष्णेन वारिणा ।
शीघ्रं शमयति श्वासं कासञ्चापि सुदारुणम् ॥
हरिद्रां मरिचं द्राक्षां कणां रास्नां शटीं
गुडम् ।
कटुतैलं लिहन् हन्यात् श्वासान् प्राणहरानपि
॥
शतं संगृह्य भार्ग्यास्तु दशमूल्यास्तथापरम् ।
शतं हरीतकीनाञ्च पचेत्तोये चतुर्गुणे ॥
पादावशेषे तस्मिंस्तु रसे वस्त्रनिपीडिते ।
आलोड्य च तुलां पूतां गुडस्य त्वभयां ततः
॥
पुनः पचेत्तु मृद्वग्नौ यावल्लेहत्वमेति तत् ।
शीते च मधुनस्तत्र षट् फलानि विनिक्षिपेत् ॥
त्रिकटु त्रिसुगन्धश्च पलमात्रं पृथक् पृथक् ।
यवक्षारं कर्षयुग्मं संचूर्ण्य प्रक्षिपेत्ततः ॥
भक्षयेदभयामेकां लेहस्यार्द्धं पल तथा ।
श्वासं सुदारुणं हन्ति कासं पञ्चविधं तथा ॥
अर्शास्यरोचकं गुल्मं शकृद्भेदं क्षयं तथा ।

मिच्छति ।
उच्छ्रिताक्षो ललाटेन स्विद्यता
भृशमार्त्तिमान् ॥
विशुष्कास्यो मुहुः श्वासः कांक्षत्युष्णं
सवेपथुम् ।
मेवाम्बु शीतप्राग्वातैः श्लेष्मलैश्च विवर्द्धते ॥
स याप्यस्तमकः साध्यो नरस्य बलिनो
भवेत् ।
ज्वरमूर्च्छायुतः शीतैः शाम्येत् प्रतमकस्तु
सः ॥
कासश्वसितविच्छिन्नमर्म्मच्छेदरुजार्द्दितः ।
सस्वेदमूर्च्छः सानाहो वस्तिदाहनिरोधवान्
॥
अधोदृष्टिः प्लुताक्षस्तु मुह्यन्रक्तकलोचनः ।
शुष्कास्यः प्रलपन् दीनो नष्टच्छायो
विचेतनः ॥
महतामहता दीनो नादेन श्वसिति क्वथन् ।
उद्धूयमानः संरब्धो मत्तर्षभ इवानिशम् ॥
प्रनष्टज्ञानविज्ञानो विभ्रान्तनयनाननः ।
अक्ष समाक्षिपन्बद्धमूत्रवर्चा विशीर्णवाक् ॥
शुष्पकण्ठा मुहुर्म्मुहुः कर्णशङ्कशिरोऽभिरुक् ।
यो दीर्घमुच्छसित्यूद्र्ध्वं न च प्रत्याहरत्यधः
॥
श्लेष्मावृतमुखश्रोत्रः क्रुद्धगन्धवहार्द्दितः ।
ऊद्र्ध्वदृग्वीक्षते भ्रान्तमक्षिणी परितः क्षिपन्
॥
मर्म्मसु च्छिद्यमानेषु परिदेवी निरुद्धवाक् ।
एते सिद्ध्येयुरव्यक्ता व्यक्ताः प्राणहरा ध्रुवम्
॥”

भृगुरुवाच ।
हाटकीं कारयेन्मूर्त्तिं भक्त्या
वरुणवातयोः ।
ताम्रपात्रोपरि स्थाप्य तत्पात्रं
कलसोपरि ।
राजतं कारयेत् पाशं ध्वजञ्चैव
पलद्वयम् ।
वामदक्षिणतो मूर्त्तिं सपाशां
गन्धदीपकेः ॥
वायोर्ध्वजसमायुक्तां
गन्धमाल्यपरिष्कृताम् ।
वरुणस्यापसव्ये तु कुर्य्याद्वायोः
प्रपूजनम् ॥
न च श्वासं विनाकासस्तच्छ्वासः
कासतोऽपि वा
तस्मात् पूज्याविमौ सम्यक् वायुर्वरुण
एव च ॥
वारुणं कारयेद्धोमं वरुणस्ये ति
मन्त्रतः ।
घृतक्षौद्रतिलयवैः सहस्रं वा
स्वशक्तितः ॥
वायोस्तिलयवैः कार्य्यं मनोवातेति
मन्त्रतः ।
सादरं ब्राह्मणं पूज्य
वस्त्रमाल्याक्षतादिभिः ॥
कर्म्मोपशमवाक्येन ब्राह्मणाय
निवेदयेत् ।
सदक्षिणाञ्च तन्मूर्त्तिं दत्त्वा गाथां
पठेन्नरः ।
ॐ नमः पाशभृते तुभ्यं ध्वजातिपतये
नमः ।
जलाधिपतये तुभ्यं वायो सर्व्वजनप्रिय
॥
शुचये दीयते दानं ध्वजपाशौ तु
राजतौ ।
श्वासकासौ हरेयातां प्रीतौ
सर्व्वजनप्रियौ ॥
पूर्व्वजन्मविपाकोत्थौ श्वासकासौ च
दारुणम् ।
सहिरण्यं प्रयच्छामि मुक्तोऽहं
त्वत्प्रसादतः ॥

|  |  |  |
| --- | --- | --- |
|  |  | सादरं माधवं नत्वा दिग्देवान् भास्करं शिवम् ।<br>वस्त्रान्तरं कृतं विप्रं पुनर्भानुमुदीरयेत् ॥<br>अतः परं प्रकुर्व्वीत यदा सोऽद्भुतदुर्वहौ ।<br>श्वासकासौ ज्वरव्याधी दानं तस्योपशान्तये ॥<br>पशुघतोद्भवे श्वासे कुर्य्यादग्नेस्तु तप णम् ।<br>ॐ अग्ने मूर्द्धेति मन्त्रेण छागं दद्यात् सदक्षिणम्<br>कथाविघ्नोद्भवे रोगे कुर्य्यात् सारस्वतं नृप ।<br>दधिपात्रं सरजतं सरस्वत्यै निवेदयेत् ॥<br>निपिद्धदानग्रहणे गीदानन्तु समाचरेत् । |

इच्छाहारेण सन्तर्प्य द्विजञ्चापि प्रजापतिम् ॥
होमेनानेन दानेन मुक्तो भवति कर्म्मतः ।
मादरं माधवं नत्वा सन्तर्प्य द्विजपुङ्गवान् ॥
स्नात्वा कलसतोयेन मुक्तो भवति मानुषः ॥"
इति भृगुभरतोक्तश्वासकासकर्म्मविपाकः ॥
अपि च ।
"पिशुनो नरकस्यान्ते जायते श्वासकासवान् ।
घृतं तेन प्रदातव्यं सहस्रपलसम्मितम् ॥"
इति शातातपीयकर्म्मविपाकः ॥

**श्वासकासः**, पुं, (श्वासयुक्तः कासः ।) श्वासयुक्त-
कासरोगः । श्वासजनककासः । यथा, --
"कासवृद्ध्या भवेच्छ्वासः पूर्व्वो वा दोषकोपनैः ।"
इति गारुडे १५४ अध्यायः ॥
अन्यत् श्वासशब्दे द्रष्टव्यम् ॥

**श्वासकुठारः**, पुं, (श्वासस्य कुठार इव तन्नाशक-
त्वात् ।) श्वासरोगस्य औषधविशेषः । यथा, --
"रसो गन्धो विषञ्चापि टङ्कणञ्च मनःशिला ।
एतानि कर्षमात्राणि मरिचञ्चाष्टकर्षकम् ॥
कटुत्रयं कर्षयुग्मं पृथगत्र विनिःक्षिपेत् ।
रसः श्वासकुठारोऽयं सर्व्वश्वासनिवारणः ॥"
इति भावप्रकाशः ॥

**श्वासप्रश्वासधारणं**, क्ली, (श्वासप्रश्वासयोर्धारणं
यत्र ।) प्राणायामः । इति हेमचन्द्रः ॥

**श्वासहेतिः**, स्त्री, (श्वासस्य हेतिरिव ।) निद्रा ।
इति हेमचन्द्रः ॥

**श्वासारिः**, पुं, (श्वासस्य अरिः ।) पुष्करमूलम् ।
इति राजनिर्घण्टः ॥

**श्वासी**, [न्] पुं, (श्वासयतीति । श्वस + णिच् +
णिनिः ।) वायुः । इति शब्दरत्नावली ॥
(श्वासोऽस्यास्तीति । इनिः ।) श्वासयुक्ते, त्रि ॥
(यथा, सुश्रुते । १ । २९ ।
"वामाचारा रुदन्तश्च श्वासिनो विकृतेक्षणाः ।
याम्यां दिशं प्राञ्जलयो विषमैकपदे स्थिताः ।

अथ त्वगृष्टिसाम्यात् कुष्ठभेदत्वच्चात्रैव श्वित्र-
माह ।
"कुष्ठैकसम्भवं श्वित्रं किलासञ्चारुणं भवेत् ।
निर्द्दिष्टमपरिस्राविं त्रिधातूद्भवसंश्रयम् ॥"
कुष्ठैकसम्भवं कुष्ठोन सह एकस्तुल्यः सम्भवो
निदानं यस्य तत् । श्वित्रस्य भेदानाह ।
किलासं चारुणं भवेत् । श्वित्रमेव रक्तमांसा-
श्रयात् किलासमरुणं भवेत् इत्यन्वयः । ननु
कुष्ठस्य श्वित्रस्य को भेदः इत्यत आह । निर्दिष्ट-
मपरिस्रावीति । श्वित्रमपरिस्रावि भवति कुष्ठन्तु स्रावि अथच त्रिधातूद्भवसंश्रयमिति
त्रयो धातवो वातपित्तकफास्तेभ्यः पृथग्भूतेभ्य
उद्भवो यस्य तत् । अथ च त्रयो धातवो रक्त-
मांसमेदांसि संश्रयोऽधिष्ठानं यस्य तत् । कुष्ठं
सान्निपातिकं सर्व्वधातुगतञ्च भवति इति भेदः ॥ दोषभेदेन लक्षणभेदमाह ।
"वाताद्रूक्षारुणं पित्तात्ताम्रं कमलपत्रवत् ।
सदाहं रोमविध्वंसि कफाच्छ्वेतं घनं गुरु ॥
सकण्डूकं क्रमात् रक्तं मांसमेदः स चादिशेत् ।
वर्णेनैवेदमुभयं कष्टं तच्चोत्तरोत्तरम् ॥"
अरुणमीषल्लोहितम् । कमलपत्रवत् इत्यनेन
मध्ये श्वेतभन्ते लोहितं बोधयति ।
"घनं पुष्टं क्रमाद्रक्तं मांसमेदासु चादिशेत् ।"
तथा च चरकः ।
"अरुणं रक्तगे वाते ताम्रं पित्ते पलङ्गते ।

"क्वाथः सवाकुचीचूर्णं धात्रीखदिरसारयोः ।
शङ्खेन्दुकुन्दधवलं श्वित्रं संसेवितो हन्ति ॥ ४ ॥
मथितेन पिबेच्चूर्णं काकोदुम्बरवल्गुर्जम् ।
तैलाक्तं घर्म्मसेवी स्यात्तक्राशी श्वित्रहृद्भवेत् ॥"
मथितं निर्जलं विलोडितं दधि । तक्रं चतुर्थांश
जलयुक्तं वस्त्रपुतं दधि ॥ ५ ॥
"खदिरस्य पलान्यष्टौ सोमराज्याः पलद्वयम् ।
त्रिफला पिचुमर्द्दश्च दारुदार्व्यथ पर्पटः ॥
पृथक् फलान् समुद्धृत्य सिंहिकायाः पलद्वयम्
जलाढकद्वये साध्यं यावत् पादावशेषितम् ॥
क्वाथ्यमानञ्च मृद्वग्नौ घृतप्रस्थं विपाचयेत् ।
चतुःपलं सोमराज्याः खदिरस्य पलं तथा ॥
पटोलमूलत्रिफलात्रायमाणादुरालभा ।
कषार्द्धं कटुकञ्चापि कार्षिकान् सूक्ष्मपेवितान् ॥
पलद्वयं कौषिकस्य शुद्धस्यात्र प्रदापयेत ।
सिद्धं सर्पिरिदं श्वित्रं हन्यादम्भ इवानलम् ॥
अष्टादशानां कुष्ठानां परमं वै तथौषधम् ।
सोमराजीघृतं नाम निर्म्मितं ब्रह्मणा पुरा ॥
लोकानामुपकाराय श्वित्रकुष्ठादिरोगिणाम् ॥"
इति सोमराजीघृतम् ॥ ६ ॥
"महौषधं महामेदां निम्बपत्राणि सर्षपाः ।
मनःशिला च सिन्दूरं पद्मवारिण्यवल्गुजम् ॥
हरिद्रे हरितालञ्च त्रिफला पीतगन्धकान् ।

वैदां य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥
श्वासरोगयुक्ते च त्रि । यथा, तत्रैव । ६ । ५१ ।
“स्नेहवस्तिं विना केचिदूर्द्ध्वञ्चाधश्च शोधनम् ।
मृदुप्राणवतां श्रेष्ठं श्वासिनामादिशन्ति हि ॥”

**श्वि**, टु ऐ ओ इर् गतिवृद्ध्योः । इति कविकल्प-

द्रुमः ॥ भ्वा०-पर०-सक०-सेट् ।)
तालव्यादिः ।
टु, श्वयथुः । ऐ, शूयात् । ओ, शूनः । इर्,
अश्वत अश्वयीत् । इति दुर्गादासः ॥

**श्वित**, ऌ आ ङ शौक्ल्ये । इति कविकल्पद्रुमः ॥

(भ्वा०-आत्म०-अक०-सेट् ।) वकारयुक्तः ।
ऌ, अश्वितत् । आ, श्विततिं श्वित्तम् । ङ,
खतते प्रासादः । इति दुर्गादासः ॥

**श्वित्रं**, क्ली, (श्वेतते इति । श्वित शौक्ल्ये +

“स्फायितञ्चिवञ्चीति ।” उणा० २ । १३ ।
इति
रक् ।) श्वेतकुष्ठम् । तत्पर्य्यायः । कुष्ठम् २ ।
वत्यमरः ॥ श्वेतम् ३ श्वेत्रम् । इति तट्टीका ॥
(यथा, भागवते । ७ । १ । १८ ।
“शपतोरसकृद्विष्णुं यद्ब्रह्म परमव्ययम् ।
श्विनं न जातं जिहायां नान्धं विविशतुस्तमः
॥”)

श्वेतं श्लेष्मणि मेदःस्थे श्वित्रं कुष्ठं परं
परम् ॥”
इति ॥
उभयं द्विविधमपि श्वित्रं वर्णेन ईदृगेव ।
अरुणं
ताम्रं श्वेतञ्च दोषभेदात् । द्विविधं दोषजं
व्रणजञ्च । तथा च भोजः ।
“श्वित्रञ्च द्विविधं विद्याद्दोषजं ब्रणजं
तथेति ॥”
श्वित्रं साध्यमसाध्यमाह ।
“अशुक्लरोमावहलमसंसृष्टं मिथो नवम्
॥
अनग्निदग्धजं साध्यं श्वित्रं
वर्ज्यमतोऽन्यथा ॥”
अवहलं तनु । अन्यच्च ।
“गुह्यपाणितलौष्टेषु जातमप्यचिरन्तनम् ।
वर्ज्जनीयं विशेषेण किलासं
सिद्धिमिच्छता ॥”
मुह्य मेहनं भगञ्च । तलमत्र पादतलम् ।
सुश्रुतेनान्ते जातमिति सामान्यतो
निर्द्दिष्ट-
त्वात् ॥ * ॥ अथ श्वित्रस्य चिकित्सा ।
“विभीतकत्वङ् मलपूजटानां
क्वाथेन कृत्वा गुडसंयुतेन ।
अवल्गुजं बीजमपाकरोति
श्वित्राणि कृच्छ्राण्यपि पुण्डरीकम् ॥”
मलपूः कटुवरी । अवल्गुजः वाकुची ॥ १
॥
“कुडवावल्गुजबीजं हरितालं
तच्चतुर्थांशम् ।
मनःशिला तालकार्द्धा
गुञ्चाफलमग्निमूलञ्च ॥
मूत्रेण गवां पिष्टं सवर्णताकारकं श्वित्रस्या
।” २ ।
“श्वित्रकुष्ठं व्रजत्यस्तं पक्षार्द्धेनाधिकेन
वा ।
गिरिकर्ण्याः सितायाश्च मूलेन
परिलेपितम् ॥”
गिरिकर्णी नीलापराजिता । धन्वन्तरौति
लोके ॥ ३ ॥

एतानि समभागानि विषार्द्धांशानि
योजयेत् ॥
सर्पिषश्च पलान्य ष्टौ देवदारुरसं शुभम् ।
हिगुणं त्रिगुणं क्षीरं गोमूत्रञ्च चतुर्गुणम् ॥
ताम्रपात्रे तु संस्थाप्य शनैर्म्मृद्वग्निना पचेत्
।
चतुर्भागावशेषन्तु सकल्कमवतारयेत् ॥
अग्नौ क्षिप्तन्तु निःशब्दं जलमुक्तं विचक्षणः
।
अभ्यङ्गपानयोगात्तदाशु सर्व्वान् गदान्
जयेत्
अष्टादशानां कुष्ठानां दद्रूणां श्वित्रिणां
तथा
दुष्टनाडीषु मर्त्यानां स्राविणां कीटिनां
तथा ।
असृक्स्रावपरीता ये ये च
त्यक्तभिषक्क्रियाः
सर्व्वग्रहवियुक्तानां शीर्णाङ्गानां विशेषवः
॥
सर्व्वधातुगते कुष्ठे पतितभ्रूशिरोरुहम् ।
घर्घराव्यक्तघोषाणां तथा
सर्व्वाङ्गवातिनाम् ॥
पानेऽभ्यङ्गे तथा नस्ये वस्तिकर्म्मणि
नित्यशः ।
सप्तरात्रप्रयोगेण सर्व्वकुष्ठानि नाशयेत् ॥
द्विसप्ताहप्रयोगेण पूर्णचन्द्रनिभाननः ।
जातकेशनखश्मश्रुर्भाति षोडशवर्षवत् ॥
अनङ्गसहितं साक्षात् सर्व्वामयविनाशनः
।
एतद्धृतं महाश्रेष्ठं भार्गवेणावतारितम् ॥
मनुष्याणां हितार्थाय सर्व्वव्याधिहरं परम्
।
महामार्त्तण्डकमिदं घृतं सर्व्वामरार्च्चितम्
॥ ७ ॥
इति भावप्रकाशः ॥
अपि च ।
“धात्रीखदिरयोः क्वाथं पीत्वा च
जम्बुसंयुतम् ।
शङ्केन्दुधवलश्वित्रं हन्ति तूर्णं न संशयः
॥”
इति गारुडे १७५ अध्यायः ॥

| | | |
|---|---|---|
| | | **श्वित्रघ्नी**, स्त्री, (श्वित हन्तीति । हन + टक् । ङीष् ।) पीतपर्णी । इति शब्दचन्द्रिका ॥ विछुटी इति भाषा ॥ |

**श्वित्री**, [न्] त्रि, (श्वित्रमस्त्यस्येति । श्वित्र + इनिः ।) श्वित्ररोगयुक्तः । यथा, --
"श्वित्री वस्त्रंश्वा रसन्तु चीरी
लवणहारकः ॥"
इति याज्ञवल्क्यः । ३ । २१५ ॥

**श्विद**, इ ङ शौक्ल्ये । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-अक०-सेट् ।) वकारयुक्तः ।
इ, श्विन्द्यते ।
ङ, श्विन्दते पुण्डरीकम् । इति
दुर्गादासः ॥

**श्वेतं**, क्ली, (श्वेतते इति । श्वित + अच् ।)
रूप्यम् । इत्यमरः ॥

**श्वेतः**, पुं, (श्वेतते इति । श्वित शौक्ल्ये + पचाद्यच् ।)
शुक्लवर्णः । द्वीपविशेषः (यथा,
महाभारते ।
१२ । ३३५ । ८ ।
"क्षीरोदवेर्योत्तरतो हि द्वीपः
श्वेतः स नाम्ना प्रथितो विशालः
॥")
पर्व्वतभेदः । इति मेदिनी ॥ (स तु
जम्बुद्वीप-
पर्व्वतानामन्यतमः । यथा,
मार्कण्डेये । ५४ । ९ ।
"हिमवान् हेमकूटश्च ऋषभो मेरुरेव
च ।
नीलः श्वेतस्तथा शृङ्गी सप्तास्मिन्
वर्षपर्व्वताः ॥"
श्वेतपर्व्वतस्य परिमाणादि यथा ।
"उत्तरोत्तरे
णेलावृतं नीलः श्वेतः शृङ्गवानिति
त्रयो
रम्यकहिरण्मयकुरूणां
मर्य्यादागिरयः प्रागा-
यताः उभयतः क्षारोदावधयो
द्विसहस्रयोजन-
अष्टाविंशतिराख्याता ह्यन्ते कलियुगे प्रभोः ॥"
इति कौर्म्मे ५० अध्यायः ॥ * ॥
राजविशेषः । यथा, --
ब्रह्मोवाच ।
"श्वेताभिजनसम्पन्नः सत्यवागनसूयकः ।
त्वयाधीतं हुतं दत्तं गुरवः परितोषिताः ॥
न ते दत्तं द्विजेभ्योऽन्नं कदाचिद्धि बुभुक्षिते ।
तस्मात्तोव्रेह संजाता क्षुधा ते नृपसत्तम ॥
अन्नदानादृते पुंसां न स्यात्तृप्तिर्महीतले ।
सर्गे वापि तथा नात्र अन्नदानं ततोऽधिकम् ॥"
इति वह्निपुराणे अन्नदाननामाध्यायः ॥
(नागविशेषः । यथा, भागवते । ५ । २४ । ३१
।
"ततोऽधस्तात् पाताले नागलोकपतयो
वासुकि-
प्रमुखाः शङ्खकुलिकमहाशङ्खश्वेतधनञ्जयधृत-
राष्ट्रशङ्खचूडकम्बलाश्वतरदेवदत्तादयो महा-
भोगिनो महामर्षा निवसन्ति ॥")

**श्वेतः**, त्रि, (श्वेतो वर्णोऽस्यास्तीति । श्वेत + अर्श
आद्यचु ।) शुक्लवर्णयुक्तः । इत्यमरः ॥ * ॥
(यथा, रघुः । १ । ८३ ।
"ललाटोदयमाभुग्नं पल्लवस्निग्धपाटला ।
बिभ्रती श्वेतरोमाङ्कं सन्ध्येव शशिनं नवम् ॥")
श्वेतवस्तूनि यथा । अथ श्वेतानि ।
"सुधांशूच्चैःश्रवः
शम्भुकीर्त्तिज्योत्स्नाशरद्घनाः ।
प्रासादसौधतगरमन्दारद्रुहिमाद्रयः ॥
सूर्य्येन्दुकान्तकर्पूरकरम्भारजतं हली ।
हिर्म्मोकभस्म हिण्डीरचन्दनं करका हिमम् ॥
हारोर्णनाभतन्त्वस्थि स्वर्गङ्गेभरदाभ्रकम् ।
शेषाहिः शर्करा दुग्धं दधि गङ्गा सुधाजलम् ॥
मृणालसिकता हंसवककैरवचामरम् ।
रम्भागर्भपुण्डरीककेतकोशङ्खनिर्झराः ॥
लोध्रसिंहध्वजच्छत्रचूर्णसूक्तिकपर्द्दकाः ।
मुक्ताकुसुमनक्षत्रदन्तपुण्योशनोगुणाः ॥
कलासकासकार्पासहासवासवकुञ्जराः ।
नारदः पारदः कुन्दखटिका स्फाटिकादयः ॥"
इति कविकल्पलतायां द्वितीये श्लेषस्तवके
वर्णो
चान्द्री २० चन्द्रपुष्पा २१ प्रियङ्करी २२
नाकुली २३ दुर्लभा २४ रास्ना २५ । अरया
गणाः । रुच्यत्वम् । कटुत्वम् । डष्णत्वम् ।
कफवातनाशित्वम् । चक्षुष्यत्वम् । दीपनत्वम्
।
रसनियामकत्वञ्च । इति राजनिर्घण्टः ॥ * ॥
अन्यच्च ।
"श्वेता क्षुद्रा चन्द्रहासा लक्ष्मणा क्षेत्रदूतिका ।
गर्द्दभा चन्द्रभा चान्द्री चन्द्रपुष्पा प्रियङ्करी ॥
कण्टकारी सरा तिक्ता कटुका दीपनी लघुः ।
रूक्षोणा पाचनी कासश्वासज्वरकफानिलान्
।
निहन्ति पीनसं पार्श्वपीडाकृमिहृद्दामयान् ।
तयोः पलं कटुरसं पाके च कटुकं भवेत् ॥
शुक्रस्य रेचनं भेदि तिक्ता पिताग्निकृल्लघः ।
हन्यात् कफमरुत्कण्डूकासमेदःकृमिज्वरान्
॥
तद्वत् प्रोक्ता सिता क्षुद्रा विशेषाद्गर्भकारिणी
॥"
इति भावप्रकाशः ॥

**श्वेतकन्दा**, स्त्री, (श्वेता कन्दा ।) अतिविषा ।
इति राजनिर्घण्टः ॥

**श्वेतकिणिही**, स्त्री, (श्वेता किणिही ।) वृक्ष-
तिशेषः । तत्पर्य्यायः । सिताभिकटभी २
गिरि-
कर्णिका ३ शिरीषपत्री ४ कालिन्दी ५ शत-
पत्रा ६ विषघ्निका ७ महाश्वेता ८ महा-
शौण्डी ९ महादिकटभी १० । अस्या गुणाः ।
कटुत्वम् । उष्णत्वम् ।
गुल्मपिषाध्मानशूलदोष-
नाशित्वम् । वातकफजीर्णरोगशमनत्वञ्च ।
श्वेता
च तत्र गुणयुक्ता । इति राजनिर्घण्टः ॥
पुस्तकान्तरे सितामिकटभीस्थाने सितालि-
कटभी । भहादिकटभीस्थाने
महालिकटभौति
च पाठः ॥

**श्वेतकुञ्जरः**, पुं, (श्वेतः कुञ्जरः ।) ऐरावतहस्ती ।

पृथव एकैकशः पूर्व्वस्मात्
पूर्व्वस्मादुत्तरोत्तरो
दशांशाधिकांशेन दैर्घ्य एव ह्रसन्ति ।
एवं
दक्षिणेनेलावृतं निषधा हेमकूटो
हिमालय इति
प्रागायत्ना यथा नोलादयः ।
अयुतयोजनोत्सेधा
हरिवर्षकिंपुरुषभारतानां
यथासंख्यम् ।” इति
श्रीभागवते ५ स्कन्धे १६ अध्यायः
॥ * ॥
कपर्द्दकः । इति हेमचन्द्रः ॥ शुक्रग्रहः
।
श्वेताभ्रः । इति शब्दरत्नावली ॥
शङ्खः । इति
राजनिर्घण्टः ॥ जीवकः । इति
जटाधरः ॥
शिवावतारविशेषः । यथा, --
“वेदव्यासावताराणि द्वापरे
कथितानि तु ।
महादेवावताराणि कलौ शृणुत
सुव्रताः ॥
आदौ कलियुगे श्वेतो देवदेवो
महाद्युतिः ।
नाम्ना हिताय
विप्राणामभूद्वैवस्वतेऽन्तरे ॥
हिमवच्छिखरे रस्ये छगले पर्वतोत्तमे
।
तस्य शिष्याः शिखायुक्ता
बभूवुरमितप्रभाः ॥
श्वेतः श्वेतशिखश्चैव श्वेतास्यः
श्वेतलोहितः ।
चत्वारस्ते महात्मानो व्राह्मणा
वेदपारगाः ॥
सुभावो दमनश्चाथ सुहोत्रः
कङ्कणस्तथा ।
लोकाक्षिरथ योगीन्द्रो जैगीषव्यस्तु
सप्तमे ॥
अष्टमे दधिबाहुः स्यान्नवमे वृषभप्रभुः
।

नाम द्वितीयं कुसुमम् ॥

**श्वेतकं**, क्ली, (श्वतमेव । स्वार्थे कन् ।) रूप्यम् ।

इति राजनिघण्टः ॥

**श्वेतकः**, पुं, (श्वेत एव । स्वार्थे कन् ।) वराटकः ।

इति भूरिप्रयोगः ॥ (श्वेतशब्दार्थोऽप्यत्र ॥
श्वेतगुणविशिष्टे, त्रि । यथा, बृहत्संहिता-
याम् । ८१ । १९ ।
“कृष्णश्वेतकपोतकताम्राणामीषदपिच
विषमाणाभ् ॥”)

**श्वेतकण्टकारी**, स्त्री, (श्वेता कण्टकारी ।) शुक्ल-

कण्टकारिका । श्वेत रेङ्गनी इति हिन्दी-
भाषा । तत्पर्य्यायः । सितकण्टकारिका २ ।
श्वेता ३ क्षेत्रदूती ४ लक्ष्मणा ५ सितसिंही ६
सितक्षुदा ७ क्षुद्रवार्त्ताकिनी ८ सिता ९
सिक्ता १० कटुवार्त्ताकिनी ११ क्षेत्रजा १२
कपटे
श्वरी १३ निःस्नेहफला १४ वामा १५ सित-
कण्ठा १६ महीषधी १७ गर्द्दभी १८ चन्द्रिका
१९

इति शब्दरत्नावली ॥ शुक्लगजश्च ॥

**श्वेतकुशः**, पुं, (श्वोतः कुशः ।) तृणविशेषः ।

तत्पर्य्यायः । सितदर्भः २ ह्रस्वकुशः ३ पूतः
४
यज्ञीयपत्रकः ५ वज्राः ३ ब्रह्मपवित्रः ७
तीक्ष्णः ८
यज्ञभूषणः ९ सूचीमुखः १० पुण्यतृणः ११
बर्हिः १२ पूतयणः १२ । अस्य मूलगुणाः ।
हिमत्वम् । रुच्यत्वम् । मधुरत्वम् । पित्तरक्त-
ऽधरतषाश्वासकामलादोषनाशित्वञ्च। इति
राजनिर्घण्टः ॥

**श्वेतकेतुः**, पुं, (श्वेतः केतुर्यस्य ।) बुद्धः । इति

त्रिकाण्डशेषः ॥ केतुग्रहविशेषः । यथा, --
“केतवो ह्यत्र दृश्यन्ते वारुणास्त्रय एव ते ।
ऊर्म्मिकेतुः श्वेतकेतुर्धूमकेतुस्तृतीयकः ॥
श्वेतकेतुर्यदा दृश्येत् श्वेतास्थि कुरुते महीम्
।
तदा मानुषमांसानि भक्षयन्तीह मानुषाः ॥
क्षुद्भयार्त्तं जगत् कृतस्वं चक्रवद्भ्रमते तदा
॥”
अपि च ।
“श्वेतः शस्त्राकुलं कुर्य्यात्लोहितस्त्वग्निजं
भयम्
क्षुद्भयं पीतकः कुर्य्यात् कृष्णो रोगमथोल्वणम्
॥”
अन्यच्च ।
“अवन्ती पुष्करारण्यं यावद्धन्यात्तथापरान्।
देशान् कचित् कृचिद्रोगदुर्भिक्षैः परिपीडितान्

| | | |
|---|---|---|
| भृगुस्तु दशमे प्राक्तस्तस्ताद्गुः परः<br>स्मृतः ॥<br>द्वादशेऽत्रिः समाख्यातो बाली चाथ<br>त्रयो-<br>दशे ।<br>चतुर्दशे गौतमस्तु वेदशीर्प्रा ततः<br>परम् ॥<br>गोकणश्चाभवत्तस्मात्‌गुहावासः<br>शिखण्ड्यथ ।<br>जटामाल्यट्टहासश्च दारुको लाङ्गलो<br>क्रमात् ॥<br>श्व तस्तथापरः शूली तिण्डी मुण्डी<br>च वै क्रमात्<br>साहष्णुः सोमशर्म्मा च<br>नकुलीशोऽन्तिमे प्रभुः ॥<br>ववस्वतेऽन्तरे<br>शम्भोरवतारास्त्रिशूलिनः। | | |

श्वेताख्यस्तु जटाकारी श्यामो व्योमत्रिभा-
गगः ।
निवर्त्ततेऽपसव्येन त्रिभागीकुरुते प्रजाः ॥”
इति समयामृतम् ॥
(मुनिविशेषः । यथा, महाभारते । १ । ५ ।
३ । ७ ।
“उद्दालकः प्रमतकः श्वेतकेतुश्च पिङ्गलः
॥”
स तु उद्दालकमुनेः पुत्त्रः । पुरा किल
नार्य्यः
प्रायशः पूर्व्वपतिं परित्यज्य पत्यन्तरं जगृहुः
।
अनेन तु तद्दोषमपाकृष्य समाजमर्य्यादा
स्थापिता । यथा, महाभारते । १ । १२२ ।
९ -- २०
“बमूवोद्दालको नाम महर्षिरिति नः श्रुतम् ।
श्वेतकेतुरितिख्यातः पुत्त्रस्तस्याभवन्मुनिः
॥
मर्य्यादेयं कृता तेन धर्म्या वै श्वेतकेतुना ।
कोपात्कमसपत्राक्षि ! यदर्थं तं निबोध मे ॥
श्वेतकेतोः किल पुरा समक्षं मातरं पितुः ।
जग्राहं ब्राह्मणः पाणौ गच्छाव इति चाब्रवीत्
॥
ऋषिपुत्त्रस्ततः कोपं चकारामर्षचोदितः ।
मातरं तां तथा दृष्ट्वा नीयमानां बलादिव ॥
क्रूद्धं तन्तु पिता दृष्ट्वा श्वेतकेतुमुवाच ह ।
मा तात कोप कार्षीस्त्वमेष धर्म्मः सनातनः
॥
अनावृता हि सर्वेषां वर्णानामङ्गना भुवि ।
यथा गावः स्थितास्तात स्वे स्वे वर्णे तथा
प्रजाः ॥
ऋषिपुत्त्रोऽथ तं धर्मं श्वेतकेतुर्न चक्षमे ।
चकार चैव मर्य्यादामिमां स्त्रीपुंसयोर्भुवि ॥
मानुषेषु महाभागे न त्वेवान्येषु जन्तुषु ।
तदाप्रभृति मर्य्यादा स्थितेयमिति नः श्रुतम्
॥
व्युच्चरन्त्याः पतिं नार्य्या अद्यप्रभुति
पातकम् ।
भ्रूणहत्यासमं घोरं भविष्यत्यसुखावहम् ॥

**श्वेतगजः**, पुं, (श्वेतः शुक्लो गजः ।) इन्द्रहस्ती ।
इति हेमचन्द्रः ॥ शुक्लवर्णहस्ती च ॥

**श्वेतगरुत्**, पुं, (श्वेतः गरुत् पक्षो यस्य ।) हंसः ।
इत्यमरः । २ । ५ । २३ ॥

**श्वेतगुञ्जा**, स्त्री, (श्वेता गुञ्जा ।) शुक्लगुञ्जा ।
सादा कुँच इति भाषा । तत्पर्य्यायः । श्वेत-
काम्बोजी २ भृण्टिका ३ काकादनी ४
काक-
पीलुः ५ चक्रशल्या ६ चूडाला ७ । अस्या
गुणाः । तीक्ष्णत्यम् । उष्णत्वम् । तस्या
बीजं
वान्तिकरम् । तस्याः शिफा
शूलविषनाशिनी ।
तस्याः पत्रं वश्ये शस्तम् । इति
राजनिर्घण्टः ॥
अपि च ।
“श्वेता रक्तोच्चटा प्रोक्ता कृष्णला चापि सा
स्मृता ।
रक्ता सा काकचिञ्ची स्यात् काकनन्ती च
रक्तिका ॥
काकादनी काकपीलुः सा स्मृताङ्गारवल्लरी
।
गुञ्जाद्वयन्तु कश्यं स्यात् वातपित्तज्वरापहम्
॥
मुखशोषभ्रमश्वासतृष्णामदविनाशनम् ।
नेत्रामयहरं वृष्यं बल्यं कण्डूं व्रणं हरेत् ।
कृमीन्द्रलुप्तकुष्ठानि रक्ता च धवलापि च ॥”
इति भावप्रकाशः ॥
अन्य्यच्च ।
“गुञ्जा शिखण्डिका ताम्रा रक्तिका काक-
शान्तिका ।
श्वेतान्या चक्रिका चूडा दुमाषा
काकपीलुका ॥
युञ्जा केश्या बलकरा रुच्या पित्तकफापहा ।
नेत्रामयहरा वृष्या हन्ति कण्डुग्रहव्रणान् ।
कृमीन्द्रलुप्तकुष्ठानि तद्वच्छ्वेतापि शस्यते ॥”
इति मदनपालनिर्घण्टः ॥

**श्वेतचन्दनं**, क्ली, (श्वेतं चन्दनम् ।) शुक्लचन्दनम् ।
शीतक्षारम् ९ टङ्कणम् १० । अस्य गुणाः
।
स्निग्धत्वम् । कटुत्वम् । उष्णत्वम् ।
कफवाताम-
क्षयश्वासविश्वकासमलनाशित्वञ्च । इति
राज
निर्घण्टः ॥

**श्वेतदूर्व्वा**, स्त्री, (श्वेता दूर्व्वा ।) शुक्लदूर्व्वा ।
तत्-
पर्य्यायः । गोलमी २ सिताख्या ३ चण्डा
४
भद्रा ५ भार्गवी ६ दुर्म्मरा ७ गौरी ८
विघ्ने-
शानकान्ता ९ अनन्ता १० श्वेता ११
दिव्या १३
श्वेतकाण्डा १३ प्रचण्डा १४
सहस्रवोर्य्या १५
सहस्रकाण्डा १६ सहस्रपर्व्वा १७
सुरवल्लभा १८
शुभा १९ सुपर्व्वा २० सितच्छदा २१
स्वच्छा २२
कच्छान्तरुहा २३ । अस्या गुणाः ।
अतिशिशि-
रत्वम् । मधुरत्वम् ।
वान्तिपित्तामातिसार-
कासदाहतृषानाशित्वम् । रुच्यत्वञ्च ।
इति
राजनिर्घण्टः ॥

**श्वेतद्विपः**, पुं, (श्वेतः शुक्लो द्विपः ।) इन्द्र-
हस्ती । इति त्रिकाण्डशेषः ॥
शुक्लगजश्च ॥

**श्वेतद्वीपः**, पुं, क्ली, (श्वेतो द्वीपः ।) चन्द्रद्वीपः ।
स च वैकुण्ठाख्यविष्णुधाम । यथा, --
“श्वेतद्वीपं गतवति त्वयि द्रष्टुं तदीश्वरम्
।
तत्र हायमभूत् प्रश्नस्त्वं मां यमनुपृच्छसि
॥”

भार्य्यां तथा व्युच्चरतः कौमारब्रह्मचारिणीम्
।
पतिव्रतामेतदेव भविता पातकं भुवि ॥
पत्या नियुक्ता या चैव पत्नी पुत्त्रार्थमेव च ।
न करिष्यति तस्याश्च भविष्यति तदेव हि
॥
इति तेन पुरा भीरु मर्य्यादा स्थापिता
बलात्
उद्दालकस्य पुत्त्रेण धर्म्म्या वै श्वेतकेतुना
॥”)

**श्वेतकेशः**, पुं, (श्वेताः केशा यस्मात् ।) रक्त-

शिग्रुः । इति जटाधरः ॥ (श्वेतः केशः ।)
शुक्लकचश्च ॥

**श्वेतकोलः**, पुं, (श्वेतः कोलः क्रोडदेशो यस्य ।)

शफरमत्स्यः । इति त्रिकाण्डशेषः ॥

**श्वेतखदिरः**, पुं, (श्वेतः खदिरः ।) शुक्लखदिरः ।

तत्पर्य्यायः । कदरः २ श्वेतसारः ३
कार्मुकः ४ ।
कुब्जकण्टकः ५ सोमसारः ६ सोमवृक्षः ७
सोमवत्कः ८ पथिद्रुमः ९ । अस्य गुणाः ।
तिक्तत्वम् । कषायत्वम् । कटुत्वम् ।
उष्णत्वम् ।
कण्डूतिभूतकुष्ठकफवातर्वणनाशित्वञ्च ।
इति
राजनिर्घण्टः ॥ पुस्तकान्तरे कार्मुकस्थाने
कामुकः कुब्जकण्टकस्थाने कुष्ठकण्ठकः
इति च
पाटः ॥ * ॥ अन्यच्च ।
“खदिरः श्वेतसारोऽन्यः कदरः
सोमवल्कलः ।
कदरो विशदोऽव्रण्यो मुखरोगकफास्रजित्
॥”
इति भावप्रकाशः ॥

इति राजनिर्घण्टः ॥ अस्य पर्य्यायगुणौ
चन्दन-
शब्दे द्रष्टव्यौ ॥

**श्वेतचिल्ली**, स्त्री, (श्वेता चिल्ली ।) शाकभेदः ।

तत्पर्य्यायः । वास्तुकी २ सुपथ्या ३ श्वेत-
चिल्लिका ४ सितचिल्ली ५ उपचिल्ली ६
ज्वरघ्नी
७ क्षुद्रवास्तुकी ८ । अस्या गुणाः ।
“श्वेतचिल्ली सुमधुरा क्षारा च शिशिरा च
सा ।
त्रिदोषशमनी पथ्या ज्वरदोषविनाशिनी ॥”
इति राजनिर्घण्टः ॥

**श्वेतच्छदः**, पुं, (श्वेतः च्छदोयस्य ।) हंसः । इति

हलायुधः ॥ गन्धपत्रः । इति शब्दचन्द्रिका
॥
बाबुइ तुलसी इति भाषा ॥

**श्वेतजीरकः**, पुं, (श्वेतो जीरकः ।) गौर-

जीरकः । इति राजनिर्घण्टः ॥

**श्वेतटङ्कं**, क्ली, (श्वेतं टङ्ककम् ।) श्वेतटङ्कणम् ।

इति राजनिर्घण्टः ॥

**श्वेतटङ्कणं**, क्ली, (श्वेतं टङ्कणम् ।) क्षारविशेषः ।

सादा सोहागा इति भाषा । तत्पर्य्यायः ।
श्वेतटङ्ककम् २ लोहि ३ सिन्धुकरम् ४
सिब्धु ५
मालतीतीरसम्भवम् ६ शिवम् ७ द्रावकरम्
८

इति श्रीभागवते १० स्कन्धे ८७
अध्यायः ॥
अपि च ।
“एकदा ब्रह्मणो लोकादायान्तं नारदं
मुनिम् ।
पर्य्यटन् रावणो लोकान् दृष्ट्वा
नत्वाब्रवीद्वचः ॥
भगवन् ! ब्रूहि मे युद्धं कुत्र सन्ति
महाबलाः ।
योद्धुमिच्छामि बलिभिस्त्वं जानासि
जगत्त्रयम् ॥
मुनिर्ध्यात्वा तु सुचिरं
श्वेतद्वीपनिवासिनः ।
महाबला महाकायास्तत्र याहि महामते
॥
विष्णुपूतारता ये वै विष्णुना निहताश्च ये
।
त एव तत्र संजाता अजेयाश्च सूरासुरैः
॥
श्रुत्वा तद्रावणो वेगान्मन्त्रिभिः पुष्पकेण
तान् ।
याद्धुकामः समागत्य श्वेतद्वीपसमीपतः
॥
तत्प्रभाहततेजस्कं पुष्पकं नाचलत्ततः ।
त्यक्त्वा विमानं प्रययौ मन्त्रिणश्च
दशाननः ॥
प्रविशन्नेव तद्द्वीपं धृतो हस्तेन योषिता ।
पृष्टश्च त्वं कुतः कोऽसि प्रेषितः केन वा
वद ॥
इत्युक्तो लीलया स्त्रीभिर्हसन्तीभिः पुनः
पुनः ॥
कृच्छ्राद्धस्ताद्विनिर्म्मुक्तस्तासां स्त्रीणां
दशाननः ॥
आश्चर्य्यमतुल लब्ध्वा चिन्तयामास
दुर्म्मतिः ।
विष्णुना निहतो यामि वैकुण्ठमिति
निश्चितः ॥
मयि विष्णुर्यथा कुप्येत्तथा कार्य्यं
करोम्यहम् ॥
इति निश्चित्य वैदेहीं जहार विपिनेऽसुरः
॥

| | | ज्ञात्वैव परमात्मानं स जहारावनीसुताम् ॥”<br>इति श्रीब्रह्माण्डपुराणे श्रीमदध्यात्मरामायणे उत्तरकाण्डे ४ अध्यायः ॥ अन्यच्च ।<br>“श्वेतां गङ्गां नरः स्नात्वा यः पश्येत् श्वेत-<br>माधवम् ।<br>मत्स्याक्षं माधवञ्चैव श्वेतद्वीपं स गच्छति ॥”<br>इति तीर्थचिन्तामणिः ॥<br>**श्वेतधातुः**, पुं, (श्वेतो धातुः ।) खटिका । इति राजनिर्घण्टः ॥ शुक्लवर्णधातुद्रव्यञ्च ॥ |
|---|---|---|

**श्वेतधामा**, [न्] पुं, (श्वेतं धाम किरणं यस्य ।)

चन्द्रः । कर्पूरः । समुद्रफेनः । इति
मेदिनी ॥

**श्वेतनीलः**, पुं, (श्वेतो नीलश्च । वर्णो वर्णेनेति

समासः ।) मेघः । इति शब्दरत्नावली
॥ शुक्ल-
नीलवर्णश्च ॥

**श्वेतपत्रः**, पुं, (श्वेतं पत्रं पक्षो यस्य ।) हसः ।

इति श्वेतपत्ररथशब्दार्थदर्शनात् ।
शुक्लपर्णे,
क्ली ॥

**श्वेतपत्ररथः**, पुं, श्वेतपत्रो हंसो रथो वाहनं

यस्य । ब्रह्मा । इति शब्दमाला ॥

**श्वेतपद्मं**, क्ली, (श्वेतं शुक्लं पद्मम् ।)
सिताम्भोजम् ।

तत्पर्य्यायः । सिताब्जम् २
पुण्डरीकम् ३ श्वेत-
वारिजम् ४ हरिनेत्रम् ५ शरत्पद्मम् ६
शार-
दम् ७ शम्भुवल्लभम् ८ । अस्य गुणाः
। हिम-
त्वम् । तिक्तत्वम् । मधुरत्वम् ।
पित्तदाहास्रभ्रम-
दोषपिपासानाशित्वञ्च । इति
राजनिर्घण्टः ॥

**श्वेतपर्णा**, स्त्री, (श्वेतानि पर्णानि यस्याः ।)

वारिपर्णो । इति रत्नमाला ॥ पाना
इति
भाषा ॥ (भद्राश्ववर्षस्य पर्वतविशेषे, पुं
। यथा,
मार्कण्डेये । ५९ । ४ ।
"पूर्व्वेण यत् स्थितं वर्षं भद्राश्वं
तन्निबोध मे ।
श्वेतपर्णश्च नीलश्च
शैवालश्चाचलोत्तमः ।

**श्वेतपुष्पिका**, स्त्री, (श्वेतं पुष्पं यस्याः । ततः

स्वार्थे कन् । टापि अत इत्वम् ।) पुत्रदात्री ।
महाशणपुष्पिका । इति राजनिर्घण्टः ॥

**श्वेतप्रसनकः**, पुं, (श्वेतानि प्रसूनानि यस्य ।

कप् । वृक्षविशेषः । यथा, --
"तिक्तः शाकतरुः सेतुवृक्षः श्वेतप्रसूनकः ।"
इति शब्दमाला ॥
शुक्लपुष्पयुक्ते, ति ॥

**श्वेतबृहती**, स्त्री, (श्वेता बृहती ।) शुक्लक्षुद्र-

वार्त्ताकी । तत्पर्य्यायः । श्वेता २ श्वेतमहो-
टिका ३ श्वेतसिंही ४ श्वेतफला ५
श्वेतवार्त्ता-
किनी ६ । अस्या गुणाः ।
"विज्ञेया श्वेतबृहती वातश्लेष्मविनाशिनी ।
रुच्या व्यञ्जनयोगेन नानानेत्रामयापहा ॥"
इति राजनिर्घण्टः ॥

**श्वेतभण्डा**, स्त्री, (श्वेता भण्डा ।) श्वेतापरा-

जिता । इति रत्नमाला ॥

**श्वेतमन्दारकः**, पुं, (श्वेतो मन्दारकः ।) वृक्ष-

विशेषः । श्वेत आक इति हिन्दी भाषा ॥
तत्पर्य्यायः । पृथ्वीकुरुवकः २ दीर्घायुष्यः ३
सितालर्कः ४ दीर्घालर्कः ५ सिताह्वयः ६ ।
इति राजनिर्घण्टः ॥

**श्वेतमरिचं**, क्ली, (श्वेतं मरिचमिव ।) शोभा-

ञ्जनबीजम् । इत्यमरः ॥ शुक्लमरिचञ्च ॥

**श्वेतमालः**, पुं, (श्वेता शुक्लवर्णा माला यस्य ।)

मेघः । धूमः । इति विश्वः ॥ मेदिनीशब्द-
रत्नावल्योः खतमाल इति पाठः ॥

**श्वेतरक्तः**, पुं, (श्वेतो रक्तश्च ।) पाटलवर्णः ।

इत्यमरः ॥ योलावी रङ् इति भाषा ॥

**श्वेतरञ्जनं**, क्ली, (श्वेतं सिताभ्रं रञ्जयतीति ।

रञ्ज + ल्युः ।) सीसकम् । इति केचित् ॥

**श्वेतरथः**, पुं, (श्वेतो रथो यस्य ।) शुक्रग्रहः ।

अतिगुणाठ्यत्वम् । मतिमेधायुःसमृद्धिदत्वम्
।
कफनाशित्वञ्च । इति राजनिर्घण्टः ॥
अन्यच्च ।
"पारसीकवचा शुक्ला प्रोक्ता हैमवतीति सा ।
हैमवत्युदिता तद्वच्छूलं हन्ति विशेषतः ॥"
तद्वत् वचावत् । इति भावप्रकाशः ॥

**श्वेतवल्कलः**, पुं, (श्वेतं वल्कलं यस्य ।) उडुम्बर-

वृक्षः । इति जटाधरः ॥ शुक्लत्वक् च ॥

**श्वेतवाजी**, [न्] पुं, (श्वेतो वाजी घोटको यस्य ।)

चन्द्रः । इति हेमचन्द्रः ॥ अर्ज्जनः इति
जटाधरः ॥ शुक्लघोटकश्च ॥

**श्वेतवासाः** [स्] पुं, श्वेतं वासो यस्य ।) शुक्ल-

वस्त्रधारिसन्न्यासी । इति हलायुधः ॥
परिहित
शुक्लवसने, त्रि ॥

**श्वेतवाः**, [ह्] पुं, (श्वेतेन वाहनेन उह्यते इति

वह + ण्विः ।) इन्द्रः । इति मुग्धबोधव्याक-
रणम् ॥

**श्वेतवाहः**, पुं, (श्वेतः शुक्लो वाहो घोटको यस्य ।)

अर्ज्जुनः । इन्द्रः । इति केचित् ॥

**श्वेतवाहनः**, पुं, (श्वेतं वाहनं यस्य ।) चन्द्रः ।

अर्ज्युनः । इति मेदिनी ॥ (यथा, महाभारते ।
४ । ४२ । १५ ।
"श्वेताः काञ्चनसन्नाहा रथे युज्यन्ति मे हयाः
।
संग्रामे युध्यमानस्य तेनाहं श्वेतवाहनः ॥")
मकरः । इति शब्दरत्नावली ॥ (राजाधि-
देवस्य पुत्त्रः । स तु विदूरथस्य पौत्त्रः ।
यथा,
हरिवंशे । ३८ । २ ।
"राजाधिदेवः शूरश्च विदूरथसुतोऽभवत् ।
राजाधिदेवपुत्त्रास्तु जज्ञिरे वीर्य्यवत्तराः ।
दत्तातिदत्तौ बलिनौ पानश्वः श्वेतवाहनः
॥")

कौरङ्गः पणशालाग्रः पञ्चैते तु
कुलाचलाः ॥”)
श्वेतपर्णासः, पुं, (श्वेतः पर्णासः ।)
श्वेततुलसी ।
यथा, --
“अर्ज्जकः श्वेतपर्णासो गन्धपत्रः
कुठेरकः ॥”
इति रत्नमाला ॥

**श्वेतपाटला**, स्त्री, (श्वेता पाटला ।) शुक्लपाटला-

वृक्षः । इति जटाधरः ॥

**श्वेतपिङ्गः**, पुं, (देहेन श्वेतः जटया पिङ्गश्च ।

वर्णो वर्णेनेति समासः ।) सिंहः । इति हेम-
चन्द्रः ॥

**श्वेतपिङ्गलः**, पुं, (श्वेतः पिङ्गलश्च ।) सिंहः ।

इति त्रिकाण्डशेषः ॥
शुक्लकपिलवणयुक्ते, त्रि ॥
(महादेवः । यथा, महाभारते । १३ । १७ ।
१३६ ।
“महाप्रसादो दमनः शत्रुहा श्वेतपिङ्गलः ॥”)

**श्वेतपिङ्गलकः**, पुं, (श्वेतपिङ्गल + स्वार्थे कन् ।)

सिंहः । इति शब्दमाला ॥

**श्वेतपिण्डीतकः**, पुं, (श्वेतः शुक्लः पिण्डीतकः ।)

महापिण्डीतरुः । इति राजनिर्घण्टः ॥

**श्वेतपुष्पः**, पुं, (श्वेतानि पुष्पाणि यस्य ।) सिन्धु-

वारवृक्षः । इति जटाधरः
राजनिघण्टश्च ॥
(श्वेतं पुष्पम् ।) शुक्लकुसुमे, क्ली । (यथा,
सुश्रुते । १ । ११ ।
“श्वेतपुष्प-रक्तपुष्प-सहस्रं जुहुयात् ॥”)

इति शब्दरत्नावली ॥ शुक्लवर्णस्यन्दनश्च ॥

**श्वेतराजी**, स्त्री, (श्वेतेन वर्णेन राजते इति ।

राज + अच् । गौरादित्वात् ङीष् ।) चचेण्डा ।
इति राजनिर्घण्टः ॥

**श्वेतरोचिः**, [स्] पुं, (श्वेतं रोचिर्य्यस्य ।) चन्द्रः ।

इति हलायुधः ।

**श्वेतरोहितः**, पुं, (पुष्पेण श्वेतः फलेन लोहितः

लस्य रः ।) वृक्षविशेषः । श्वेत रोहिड इति
हिन्दी भाषा । तत्पर्य्यायः । सितपुष्पः २
सिताह्वयः ३ सिताङ्गः ४ शुक्लरोहितः ५
लक्ष्मीवान् ६ जनवल्लभः ७ । अस्य गुणाः ।
कटुत्वम् । स्निग्धत्वम् । कषायत्वम् । सुशी-
तलत्वम् ।
कृमिदोषव्रणप्लीहरक्तनेत्रामयनाशि-
त्वञ्च । इति राजनिर्घण्टः ॥

**श्वेतलोध्रः**, पुं, (श्वेतो लोध्रः ।) पट्टीकालोध्रः ।

इति राजनिर्घण्टः ॥

**श्वेतवचा**, स्त्री, (श्वेता वचा ।) अतिविषा ।

शुक्लवचा । सादा वच् इति भाषा ।
तत्पर्य्यायः ।
मेध्या २ षड्ग्रन्था ३ दीर्घपत्रिका ४ तीक्ष्ण-
गन्धा ५ हैमवती ६ मङ्गल्या ७ । अस्या
गुणाः ।

**श्वेतवाही**, [न्] पुं, (श्वेतवाहः श्वेतघोटकोऽस्या-

स्तीति । इनिः ।) अर्ज्जुनः । इति
शब्दरत्नावली ॥

**श्वेतवुह्ना**, स्त्री, (श्वेता वुह्ना ।) वनतिक्ता ।

यथा, --
श्वेतवुह्ना कपीतस्तु वनतिक्ता विसर्पिणी ।
शङ्खिनी चाकचिच्चा च गिरिजा धूसरच्छदा
॥”
इति रत्नमाला ॥

**श्वेतवृक्षः**, पुं, (श्वेतो वृक्षः ।) वरुणवृक्षः ।

इति राजनिर्घण्टः ॥ शुक्लतरुश्च ॥

**श्वेतशरपुङ्खा**, स्त्री, (श्वेता शरपुङ्खा ।) क्षुप-

विशेषः । श्वेत शरफोँका इति हिन्दी भाषा ।
तत्पर्य्यायः । सितशायका २ सितपुङ्खा ३ श्वेत-
पुङ्खा ४ शुभ्रपुङ्खा ५ । अस्या गुणाः ।
कटुत्वम् ।
उष्णत्वम् । कृमिवातरुजापहत्वम् । गुणाठ्य-
त्वञ्च इति राजनिर्घण्टः ॥

**श्वेतशिग्रुः**, पुं, (श्वेतः शुक्लः शिग्रुः ।) शुक्ल

शोभाञ्जनः । सादा शजिना इति भाषा ।
तत्पर्य्यायः । सुतीक्ष्णः २ मुखभङ्गः ३ सिता-
ह्वयः ४ सुमूलः ५ श्वेतमरिचः ६ रोचनः ७
मधुशिग्रुकः ८ । अस्य गुणाः । कटुत्वम् ।
तीक्ष्णत्वम् ।
शोफानिलाङ्गव्यथामुखजाड्यनाशि
त्वम् । रुच्यत्वम् । दीपनत्वञ्च । इति राज-
निर्घण्टः ॥

**श्वेतपुष्पकः**, पुं, (श्वेतानि पुष्पाणि यस्य । कप् ।)

करवीरवृक्षः । इति राजनिर्घण्टः ॥

शुक्लपुष्प-

युक्ते, त्रि ॥

**श्वेतपुष्पा**, स्त्री, (श्वेतं पुष्पं यस्याः ।) घोषातकी ।

श्वेतघोषा इति भाषा । इति रत्नमाला ।

नागदन्ती । मृगेर्व्वारुः । इति

राजनिर्घण्ठः ॥

"शिग्रुवल्कलपत्राणां सुरसः परमार्त्तिहृत्।
चक्षुष्यं शिग्रुजं वीजं तीक्ष्णोष्णं विषनाशनम्।
अवृष्यं कफवातघ्न तन्नस्येन शिरोऽर्त्तिनुत्॥"
इति भावप्रकाशः॥

**श्वेतशिंशपा**, स्त्री, (श्वेता शिंशपा।) शुक्ल-
शिंशपावृक्षः। तत्पर्य्यायः। श्वोतपत्रा २
श्वेतचिल्लिका ३। अस्या गुणाः। तिक्तत्वम्।
शिशिरत्वम्। पित्तदाहनाशित्वञ्च। इति
राजनिर्घण्टः॥

**श्वेतशुङ्गः**, पुं, (श्वेता शुङ्गा यस्य।) यवः। इति
जटाधरः॥ शुक्लशूङ्गायुक्ते, त्रि॥

**श्वेतशूरणः**, पुं, (श्वेतः शूरणः।) वनशूरणः।
इति राजतिर्घण्टः॥

**श्वेतसर्पः**, पुं, वरुणवृक्षः। इति जटाधरः॥
(श्वेतः सर्पः।) शुक्लवर्णाहिश्च॥

**श्वेतसारः**, पुं, (श्वेतः सारो यस्य।) खदिरः।
इति जटाधरः॥

**श्वेतसुरसा**, स्त्री, (श्वेता सुरसा।) शुक्लशेफा-
लिका। इत्यमरः॥

**श्वेतस्पन्दा**, स्त्री, अपराजिता। इति राज-
निर्घण्टः॥

**श्वेतहयः**, पुं, (श्वेतो हयः।) इन्द्राश्वः। इति
त्रिकाण्डशेषः॥ (श्वेतो हयो यस्य।) अर्ज्जुनः।
इति हेमचन्द्रः॥ (यथा, महाभारते। ७। २७। ३।
"ततः श्वेतहयः कृष्णमब्रवीदजितञ्जयः।
एष मां भ्रातृभिः सार्द्धं सुशर्म्माह्वयतेऽच्युत!॥")
इन्द्रः। शुक्लवर्णघोऽकश्च॥

**श्वेतहस्ती**, [न्] पुं, (श्वेतो हस्ती।) ऐरावतः।
इति भूरिप्रयोगः॥ शुक्लगजश्च॥

**श्वेता**, स्त्री, वराटिका। काष्ठपाटला। शङ्खिनी।
इति मेदिनी॥ अतिविषा। इति रत्नमाला॥
अपराजिता। श्वेतबृहती। श्वेतकण्टकारी।
पाषाणभेदी। शिलावल्कला। श्वेतदूर्व्वा।
य्यर्यायः। तपनः २ श्वेतः ३ प्रतापः ४ सिता-
र्क्ककः ५ शर्करापुष्पः ६ वृत्तमल्लिका ७। अस्य
गुणाः। कटुत्वम्। तिक्तत्वम्। उष्णत्वम्।
मलशोधनकारकत्वम्। मूत्रकृच्छ्रास्रशोफार्त्ति-
व्रणदोषविनाशनत्वञ्च। इति राजनिर्घण्टः॥

**श्वेतावरः**, पुं, (श्वेतं शुक्लवर्णमावृणोतीति।
आ वृ + अच्।) सितावरशाकः। इति राज-
निर्घण्टः॥

**श्वेताह्वा**, स्त्री, (श्वेता आह्वा यस्याः।) सित-
पाटला। इति राजनिर्घण्टः॥

**श्वेतेक्षुः**, पुं, (श्वेत इक्षुः।) शुक्लवर्णेक्षुः। सादा
आक् इति भाषा। तत्पर्य्यायः। सितेक्षुः २
कोष्ठेक्षुः ३ वंशपत्रकः ४ सुवेशः ५ पाण्डु-
रेक्षुः ६। अस्य गुणाः। कठिनत्वम्। रुच्य-
त्वम्। गुरुत्वम्। कफमूत्रकारित्वम्। दीपन-
त्वम्। पित्तदाहनाशित्वम्। विपाके कोष्णल-
त्वञ्च। इति राजनिर्घण्टः॥

**श्वेतोदरः**, पुं, (श्वेतं उदरं यस्य।) कुबेरः।
इति त्रिकाण्डशेषः॥ (दर्व्वीकरसर्पाणामन्य-
तमः। यथा, सुश्रुते कल्पस्थाने ४ अध्याये।
"श्वेतोदरो महाशिरा अलगर्द्दो आशीविष
इति॥") शुक्लवर्णजठरश्च॥

**श्वेत्रं**, क्ली, श्वित्रम्। इत्यमरटीका।

**श्वेतौही**, स्त्री, (श्वेतवाह + ङीष्।) इन्द्राणी।
इति मुग्धबोधव्याकरणम्॥

**श्वोवसीयसं**, क्ली, (वसुशब्दः प्रशस्तवाची तत
ईयसुनि वसीयः। श्वः शब्द उत्तरपदार्थ-
प्रशंसामाशीर्विषयतामाह। मयूरव्यं सकादि-
त्वात् समासः। "श्वसो वसीयःश्रेयसः।" ५। ४। ८०
इति अच्।) कल्याणम्। यथा, --
"श्वःश्रेयसं शुभशिवे कल्याणं श्वोवसीयसं श्रेयः।
क्षेमं भावुकभविककुशलप्रङ्गलभद्रमद्रशस्तानि॥"
इति हेमचन्द्रः॥ तद्वति, त्रि॥

वंशरोचना । स्फटी । शर्करा । वृक्षभेदः ।
केना इति कन्ने इति च हिन्दी भाषा । तत्-
पर्य्यायः । छुरिकापत्री २ पर्व्वमूला ३ अवि-
प्रिया ४ । अस्या गुणाः । अतिमधुरत्वम् ।
शीतलत्वम् । स्तन्यदातृत्वम् । रुचिकारित्वञ्च ।
इति राजनिर्घण्टः ॥

**श्वेतात्रिवृत्**, स्त्री, शुक्लत्रिवृता । सादा तेउडी
इति भाषा । तत्पर्य्यायः । त्रिभण्डी २ त्रिवृता ३
त्रिपुटा ४ सर्व्वानुभूती ५ सरला ६ निशो-
त्तरा ७ रेचनी ८ । अस्या गुणाः । रेचनत्वम् ।
स्वादुत्वम् । उष्णत्वम् । ससीरपित्तज्वरश्लेष्म-
पित्तशोथोदरनाशित्वम् । रूक्षत्वञ्च । इति भाव-
प्रकाशः ।

**श्वेताम्लिः**, स्त्री, क्षुपविशेषः । तत्पर्य्यायः । अम्लिका
२ पिष्टोडी ३ पिण्डिका ४ । अस्या गुणाः ।
मधुरत्वम् । वृष्यत्वम् । पित्तनाशित्वम् । बल-
दातृत्वञ्च । इति राजनिर्घण्टः ॥

**श्वेतार्कः**, पुं, (श्वेतः शुक्लवर्णः अर्कः ।) शुक्लार्क-
वृक्षः । सादा आकन्द इति भाषा । तत्प-

**ष**

**ष**, मूद्ध न्यषकारः । स तु एकपञ्चाशद्वर्णान्तर्गत-

सप्तचत्वारिंशद्वर्णः । चतुस्त्रिंशद्व्यञ्जनान्त-

र्गतैकत्रिंशत्तमव्यञ्जनञ्च । अस्योच्चारणस्थानं

मूर्द्धा । इति व्याकरणम् ॥ (यथा, शिक्षायाम् । १७ ।

स्युर्मूर्द्धन्या ऋटुरसा दन्त्या लृतुलसाः स्मृताः ॥”)

तत्पर्य्यायः ।

“षः श्वेतो १ वासुदेवश्च २

पीता ३ प्राज्ञा ४ विनायकः ५ ।

परमेष्ठी ६ वामबाहुः ७

श्रेष्ठो ८ गर्भविमोचनः ९ ॥

लम्बोदरो १० यमौजेशः ११

कामधुक् १२ कामधूमकः १३ ।

सुश्रीः १४ उश्ना १५ वृषो १६ लज्जा १७

मरुद्भक्ष्यः १८ प्रियः १९ शिवः २० ॥

सूर्य्यात्मा २१ जठरः २२ कोषो २३

मत्ता २४ वक्षो २५ विदारिणी २६ ।

कलकण्ठो २७ मध्यभिन्ना २८

युद्धात्मा २९ मलपूः ३० शिरः ३१ ॥”

इति तन्त्रम् ॥ * ॥

अपि च ।

“षकारः श्वेत आख्यातो मूर्द्धन्यो वृषसंज्ञकः ।

पित्तं शिक्तिश्च माया च महायोनिः स्वबिन्दुमत् ॥”

इति मन्त्राभिधानम् ॥

अस्य स्वरूपं यथा, --

“षकारं शृणु चार्व्वङ्गि ! अष्टकोणमयं सदा ।

रक्तचन्द्रप्रतीकाशं स्वयं परमकुण्डली ॥

चतुर्व्वर्गमयं वर्णं सुधानिर्म्मितविग्रहम् ।

पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा ॥

रजःसत्त्वतमोयुक्तं त्रिशक्तिसहितं सदा ।

त्रिबिन्दुसहितं वर्णं आत्मादितत्त्वसंयुतम् ॥

सर्व्वदेवमयं वर्णं हृदि भावय पार्व्वति ॥”

इति कामधेनुतन्त्रम् ॥

अस्य लेखनप्रकारो यथा, --

“चतुष्कोणात्मिका रेखा वामदक्षिणतः क्रमात्

वह्नीन्द्रविष्णवस्तासु तिष्ठन्ति क्रमतः सदा ॥

ऊर्द्ध्वमात्रा शक्तिरूपा महालक्ष्मीसमा स्मृता ।

मात्रा मध्यगता या तु वाग्देवी सा परा

स्मृता ॥”

अस्य ध्यानं यथा, --

"चतुर्भुजां चकोराक्षीं चारुचन्दनचर्च्चिताम् ।
शुक्लवर्णां त्रिनयनां वरदाञ्च शुचिस्मिताम् ॥
रत्नालङ्कारभूषाठ्यां श्वेतमाल्योपशोभिताम् ।
देववृन्दैरभिवन्द्यां सेवितां मोक्षकाङ्क्षिभिः ॥
एवं ध्यात्वा षकारन्तु तन्मन्त्रं दशधा जपेत् ॥
इति च वर्णोद्धारतन्त्रम् ॥

(धात्वनुबन्धविशेषः । यथा, कविकल्पद्रुमे ।
"शिः कुटादिः षः कृदङ्वान् क्षो जक्षादी र
वैदिकः ॥"
"आख्यातिकस्याङोऽप्राप्त्यर्थंकृदिति विशे-
षणम् । स्वमते तूभयत्र ङ एव । डु ञौ ष पच
पाके । भीषिचिन्तीति पचा ।" इति तट्टीका ॥)

**षः**, पुं, कचः । इति मेदिनी ॥ मानवः । सर्व्वः ।

श्रेष्ठः । गर्भविमोचनः । इति कश्चिदेकाक्षरकोषः ॥

**षः**, त्रि, विज्ञः । श्रेष्ठः । इति मेदिनी ॥

**षग**, म ए सवृतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) म, सिषगयिषति । ए,
असगीत् । इति दुर्गादासः ॥

**षघ**, न हिंसे । इति कविकल्पद्रुमः ॥ (स्वा०-पर०-

सक०-सेट् ।) न, सघ्नोति । असीषघत् । इति
दुर्गादासः ॥

**षच**, सम्बन्धे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०
सक०-सेट् ।) सचति । इति दुर्गादासः ॥

**षच**, ङ सेचने । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-मक०-सेट् ।) ङ, सचते जलं
मेघः ।
इति दुर्गादासः ॥

**षट**, अंशके । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
अक०-सेट् ।) अंशके अवयवे । सटति
पटः
अवयवी स्वादित्यर्थः । इति दुर्गादासः ॥

**षट्**, [ष] त्रि, संख्याविशेषः । छय इति भाषा ।
तद्वाचकानि यथा, । वज्रकोणः १
त्रिशिरो-
नेत्रम् २ तर्कः ३ अङ्गम् ४ दर्शनम् ५
चक्र-
वर्त्ती ६ कार्त्तिकेयमुखम् ७ गुणः ८ रसः
९
ऋतुः १० ज्वरबाहुः ११ रूपम् १२ ।
इति
कविकल्पलता ॥

**षट्कर्म्म**, [न्] क्ली, (षट्प्रकारं कर्म्म ।) षट्-
प्रकारशान्त्यादिकर्म्म । यथा, शारदायाम्
।
"अथाभिधास्ये तन्त्रेऽस्मिन् सम्यक्
षट्कर्म्म-
लक्षणम् ।
सर्व्वतन्त्रानुसारेण प्रयोगः फलसिद्धिदः
॥
शान्तिवश्यस्तम्भनानि विद्वेषोच्चाटने
ततः ।
मारणान्तानि शंसन्ति षट्कर्म्माणि
मनीषिणः ॥
रोगकृत्या ग्रहादीनां निराशः
शान्तिरीरिता ।
वश्यं जनानां सर्व्वेषां विधेयत्वमुदीरितम्
॥
चतुर्द्दश्यष्टमी कृष्णा अमावास्या तथैव च ।
मन्दभौमदिनोपेता शस्ता मारणकर्म्मणि ॥
बुधचन्द्रदिनोपेता पञ्चमी दशमी तथा ।
पौर्णमासी तु विज्ञेया तिथिः
स्तम्भनकर्म्मणि ॥
शुभग्रहोदये कुर्य्यात् शुभानि च शुभोदये ।
रौद्रकर्म्माणि रिक्तार्के मृत्युयोगे च मारणम् ॥
*
जपेत् पूर्व्वमुखो वश्ये दक्षिणञ्चाभिचारके ।
पश्चिमे स्तम्भनं विद्यात् उत्तरे शान्तिकं
भवेत् ॥
आकर्षणमथाग्नेये नैरृते मारणं तथा ।
उच्चाटनन्तु वायव्ये ऐशान्यां मोक्षदायकम्
॥ * ॥
अथाभिचारे कार्य्या च दक्षिणाप्लवना मही ।
वसनं लोहितं प्रोक्तं उष्णीषं लोहितं स्मृतम्
॥
भूषणं लौहद्रव्येण वामेन पूजनादिकम् ।
नरस्नायुविशेषेण मारणे रज्जुरीरिता
मृतस्य युद्धशून्यस्य दन्तस्य गर्द्दभस्य वा ।
कृत्वाक्षमालां जप्तव्यं शत्रूणां वधमिच्छता ॥
भग्नेभदन्तमणिभिर्जपेदाकर्षकर्म्मणि ।
साध्यकेशसूत्रप्रोतस्तुरङ्गदशदनोद्भवैः ।
अक्षमालां समालोक्य विद्वेषोच्चाटने जपेत्
॥ *
पद्माक्षं स्वस्तिकं भूयो विकटं कुक्कुटं पुनः
।
वज्रं भद्रकमित्याहुरासनानि मनीषिणः ॥
पद्मासनन्तु संयोज्य जानूर्व्वोरन्तरे करौ ।
निवेश्य भूमौ संस्थाप्य व्योमस्थं
कुक्कुटासनम् ॥
अन्यानि वक्तव्यानि ॥ * ॥
"षण्मुद्राः क्रमतो ज्ञेयाः पद्मपाशगदाह्वयाः ।
मुषलाशनिखड्गाख्याः शान्तिकादिषु कर्म्मसु
॥
जलं शान्तिविधौ शस्तं वश्ये वह्निरुदीरितः
।
स्तम्भने पृथिवी शस्ता विद्वेषे व्योम
कोर्त्तितम् ॥
देवताकालमुद्रादीन् सम्यक् ज्ञात्वा
विचक्षणः ।
षट्कर्म्माणि प्रयुञ्जीत यथोक्तफलसिद्धये
॥ * ॥
उच्चाटने वषट् प्रोक्तं हूँ फडन्तश्च मारणे
।
स्तन्भने च नमः प्रोक्तं स्वाहा
शान्तिकपौष्टिके ॥
होमतर्पणयोः स्वाहा न्यासपूजनयोर्न्नमः ।
मन्त्रान्ते योजयेन्मन्त्री जपकाले
यथास्थिति ॥"
अस्यार्थः एतानि तत्तत्कर्म्मणि जपकाले
मन्त्रान्ते योजयित्वा मन्त्रं जपेत् ।
होमादिषु
नायं नियमः । होम इति कश्चित् तन्न ।
"अग्निकार्य्ये जपेत् स्वाहा नमः सर्व्वत्र
चार्च्चने
शान्तिपुष्टिवशद्वेषाकर्षोच्चाटनमारणे॥
स्वाहा-स्वधा-वषट्-हूञ्च वौषट् फट्
योजयेत्
क्रमात् ।
वश्याकर्षणसन्तापज्वरे स्वाहा प्रकीर्त्तिता
॥
क्रोधोपशमने शान्तौ प्रीतौ योज्यं नमो
बुधैः ।
वौषट् सम्मोहनोद्दीपपुष्टिमृत्युञ्जयेषु च ॥
हूङ्कारं प्रीतिनाशे च मारणे च्छेदने तथा ।
उच्चाटने च विद्वेषे वषट् पङ्कृतौ वषट् ।
मन्त्रोद्दीपनकार्य्येषु लाभालाभे वषट्
स्मृतः ॥"
इति विशेषवचनाद्धोमे नायं विधिः ॥ * ॥
शान्तिकादौ मन्त्रलिखनपत्रादिनियमस्तत्र
एव
"शान्तिके राजतं ताम्रं भूर्ज्जपत्रञ्च वश्यके
।
सर्व्वकार्य्येषु सौवर्णं क्रूरे स्यात् प्रेतकर्पटम्
॥
त्रिगन्धं शान्तिके प्रोक्तं पञ्चगन्धन्तु वश्यके
।

प्रवृत्तिरोधः सर्व्वेषां स्तम्भनं तदुदाहृतम्
।
स्निग्धानां क्लेशजननं मिथोविद्वेषणं
मतम् ॥
उच्चाटनं स्वदेशादेर्भ्रंशनं परिकीर्त्तितम् ।
प्राणिनां प्राणहरणं मारणं तदुदाहृतम् ॥
स्वदेवतादिक्कालादोन् ज्ञात्वा कर्म्माणि
साधयेत्
रतिर्वाणी रमा ज्येष्ठा दुर्गा काली
यथाक्रमम् ।
षट्कर्म्मदेवताः प्रोक्ताः कर्म्मादौ ताः
प्रपूजयेत् ॥
ईशचन्द्रेन्द्रनिरृतिवाय्वग्नीनान्दिशोमताः
।
सूर्य्योदयं समारभ्य घटिकादशकं क्रमात्
॥
ऋतवः स्युर्व्वसन्ताद्याः अहोरात्रं दिने
दिने ।
वसन्तग्रीष्मवर्षाख्यशरद्धेमन्तशैशिराः
॥”
यद्वा, --
“अर्द्धरात्रं शरत्कालो हेमन्तश्च प्रभातकः
।
पूर्व्वाह्णश्च वसन्तः स्यात् मध्याह्नो ग्रीष्म
एव च ॥
प्रावृडरूपोऽपराह्णः स्यात् प्रदोषः
शिशिरः
स्मृतः ॥”
अथवा, --
“ऊषोयोगे च हेमन्तः प्रभाते शिशिरागमः
।
प्रहरार्द्धे वसन्तः स्यात् ग्रीष्मो
मध्यन्दिनागमे ।
तुर्य्ययामे च वर्षाख्यः शरदस्तं गते रवौ
॥” * ॥
अथ कालनियमः ।
“हेमन्तः शान्तिके प्रोक्तो वसन्तो
वश्यकर्म्मणि ।
शिशिरं स्तम्भने प्रोक्तो विद्वेषे ग्रीष्म एव च
।

उच्चाटने स्मृतो वायुर्भूयोऽग्निर्म्मारणे स्मृतः
।
तत्तद्भूतोदये सम्यक् तत्तन्मण्डलसंयुतम् ।
तत्तत् कर्म्म विधातव्यं मन्त्रिणा
निश्चितात्मना ॥ *
शीतांशुसलिलक्षौणीव्योमवाय्वह्विर्भुजाम् ।
वर्णः स्युर्म्मन्त्रबीजानि षट्कर्म्मसु
यथाक्रमम् ॥
ग्रन्थनञ्च विदर्भश्च संपुटो रोधनं तथा ।
योगः पल्लव इत्येते विन्यास्याः षट्सु
कर्म्मसु ॥
मन्त्रार्णान्तरितान् कुर्य्यात् साध्यवर्णान्
यथा-
विधि ।
ग्रन्थतं तद्विजानीयात् प्रशस्तं
शान्तिकर्म्मणि ॥
मन्त्राणद्वयमध्यस्तं साध्यानामाक्षरं लिखेत्
॥
विदर्भ एष विज्ञेयो मन्त्रिभिर्व्वश्यकर्म्मणि ॥
आदायन्ते च मन्त्रः स्यान्नाम्नासौ संपुटः
स्मृतः ।
एष स्यात् स्तम्भने शस्त इत्युक्तो
मन्त्रवेदिभिः ॥
नाम्न आद्यन्तमध्येषु मन्त्रः स्याद्रोधनं
मतम् ।
विद्वेषणविधानेषु प्रशस्तमिदमीरितम्॥
मन्त्रस्यान्ते भवेन्नामयोगः प्रोच्चाटने मतः ।
अन्ते नाम्नो भवेन्मन्त्रः पल्लवो मारणे मतः
॥
सितरक्तपोतमिश्रकृष्णधूम्राः प्रकीर्त्तिताः ।
वर्णतो मन्त्रसंप्रोक्ता देवताः षट्सु कर्म्मसु ॥
* ॥
मन्त्राणां लिखनद्रव्यं चन्दनं रोचनं निशा ।
गृहधूमचिताङ्गारौ मारणेऽष्ट विषाणि च ॥
श्येनाग्निलोलपित्तानि धुस्तूरकरसस्ततः ।
गृहधूमस्त्रिकटुकं विषाष्टकमितीरितम् ॥

सर्व्वकार्य्येऽष्टगन्धः स्यात् क्रूरे
चाष्टविषाणि च
शान्तिके लेखनी दूर्व्वा वश्यादौ शिखि-
पुच्छिका ॥
हेम्ना सर्व्वाणि कार्य्याणि क्रूरे स्यात् काक-
पुच्छिका ॥
गृहेषु शान्तिकर्म्म स्यात् वश्यञ्च
चण्डिकागृहे
देवालये च सर्व्वाणि श्मशाने क्रूरकर्म्म च
॥” * ॥
अथ भूतानामुदयः ।
“दण्डाकारा गतिर्भूमेः पुटयोरुभयोरपि ।
तोयस्य पावकस्योर्द्धे गतिस्तिर्य्यक्
नभस्वतः ॥
गतिर्व्योम्नो भवेन्मध्ये मूतानामुदयः
स्मृतः ।
धरणेरुदये कुर्य्यात् स्तम्भनं
वश्यमात्मवित् ॥
शान्तिकं पौष्टिकं कर्म्म तोयस्य समये
वसोः ।
मारणादीनि मरुतो विपक्षोच्चाटनादिके ।
क्ष्वेडादिनाशने शस्तमुदये च विहायसः
॥” * ॥
अथ भूतानां मण्डलानि ।
“वृत्तंदिवस्तत् षड्बिन्दुलाञ्छितं
मातरिश्वनः
त्रिकोणं स्वस्तिकोपेतं वह्नेरर्द्धेन्दुसंयुतम्
॥
अम्भोजसन्भसो भूमेश्चतुरस्रं सवज्रकम् ।
तत्तद्भूतसमाभानि मण्डलानि विदुर्बुधाः ॥
वर्णैः स्वे रञ्जितान्याहुः
स्वस्वनामावृतान्यपि ।
स्वयं वियत् मरुत् कृष्णो रक्तोऽग्निविषदं
पयः ॥”
पीडाभूतादिप्रयोगानन्तरंकुलार्णवे ।
“एकलक्षं जपेन्मन्त्रं
ध्यानन्यासससमन्वितम् ।
प्रयोगदोषशान्त्यर्थमात्मरक्षार्थकारणम्
न चेत् फलञ्च नाप्नोति
देवताशापमाप्नुयात् ॥”
यत्तु ।

| | | |
|---|---|---|
| प्रावृडुच्चाटने ज्ञेया शरन्मारणकर्म्मणि ॥” * ॥<br>अथ तिथिनियमः ।<br>“ग्रञ्चमो च द्वितीया च तृतीया सप्तमी तथा ।<br>बुधेज्यबारसंयुक्ता विज्ञेया द्वेषकर्म्मणि ॥<br>कृष्णा चतुर्द्दशी तद्वदष्टमी मन्दवारकाः ।<br>उच्चाटने तिथिः शस्ता प्रदोषे च विशेषतः ॥ | | “न शस्तं मारणं कर्म्म कुर्य्याच्चेदयुतं जपेत् ।” |

तत् प्रायश्चित्तपरम् । इति तन्त्रसारः ॥
* ॥
योगाङ्गषट्प्रकारक्रिया । तद्यथा, --
“धौतिर्वस्तिस्तथा नेतिर्नौलिकी
त्राटकस्तथा ।
कपालभातिश्चैतानि षटकर्म्माणि
समाचरेत् ॥
अन्तधौतिर्द्दन्तधौतिहृद्धौतिर्मलशोधनम्
।
धौत्यश्चतुर्विधाः प्रोक्ता घटं कुर्व्वन्ति
निर्म्म-
लम् ॥
वातसारं वारिसारं वह्निसारं बहिष्कृतम् ।
घटस्य निर्म्मलार्थाय
अन्तधौतिश्चतुर्विधा ॥” * ॥
प्रयोगः ।
“काकचञ्चुवदास्येन पिबेद्वायुं शनैः शनैः
।
चालयेदुदरं पश्चाद्वर्त्मना रेचयेत् शनैः ॥
वातसारं परं गोप्यं देहनिर्म्मलकारकम् ।
सर्व्वरोगक्षयकरं देहानलविवर्द्धकम् ॥ १
॥
आकण्ठं पुरयेद्वारि वक्त्रेण च पिबेत्
शनैः ।
चालयेदुदरेणैव चोदराद्रेचयेदधः ॥
वारिसारं परं धौतं देहनिर्म्मलकारकम् ।
साधयेद्यः प्रयत्नेन देवदेहं प्रपद्यते ॥ २
॥
नाभिग्रन्थिं मेरुपृष्ठं शतवारञ्च कारयेत् ।
उदरामयजां त्यक्त्वा जठराग्निं विवर्द्धयेत्
।
वह्निसारमिदं धौतं योगिनां योगसिद्धिदम्
॥ ३ ॥
काकीमुद्रां साधयित्वा पुरयेदुदरं मरुत् ।
धारयेदर्द्धयामन्तु चालयेदधवर्त्मना ॥
इदं धौतं परं गोप्यं न प्रकाश्यं कदाचन ।
नाभिमग्नजले स्थित्वा शक्तिनाडीं
विसर्ज्जयेत् ॥
नाडीनिर्म्मलतां याति दिव्यदृष्टिः
प्रजायते ।
निद्रान्ते भोजनान्ते च दिवान्ते च दिने
दिने ॥ ५
हृद्धौतिं त्रिविधां कुर्य्यात्
दण्डवज्जलवाससा ।
रम्भादण्डं हरिद्दण्डं वेत्रदण्डन्तथैव च
॥
हृमध्ये चालयित्वा तु पुनः प्रत्याहरेत्
शनैः ।
कफपित्तं तथा क्लेदं रेचयेदूर्द्ध्ववर्त्मना
।
दण्डधौतिविधानेन हृद्रोगं नाशयेत्
ध्रुवम् ॥”
हरिद्दण्ड वटझुरि ॥ १ ॥
“भोजनान्ते पिबेद्वारि आकण्ठं पूर्णितं
सुधीः ।
ऊर्द्ध्वदृष्टिं क्षणं कृत्वा तज्जलं
वमयेत् पुनः ।
नित्यमभ्यासयोगोऽयं कफपित्तं
निवारयेत् ॥ २
चतुरङ्गुलविस्तारं सूक्ष्मवस्त्रं शनैर्ग्रसेत्
।
पुनः प्रत्याहरेदेतत् प्रोच्यते
धौतकर्म्मकम् ॥
गुल्मज्वरप्लीहकुष्ठं कफपित्तं
विनश्यति ।
आरोग्यं बलपुष्टिश्च भवेत्तस्य दिने
दिने ॥ ३ ॥
अपानक्रूरतां तावन्मलं यावन्न शोधयेत्
।
तस्मात् सर्व्वप्रयत्नेन
मलशोधनमाचरेत् ॥
पीतमूलस्य दण्डेन मध्यमाङ्गुलिनापि
वा ।
यत्नेन क्षालयेद्गुह्यं वारिणा च पुनः
पुनः ॥
वारयेत् कोष्ठकाठिन्यमामाजीर्णं
निवारयेत् ।
पायं पायं प्रकुर्व्वंश्चेत् श्लेष्मदोषं निवारयेत् ॥
न जायते वार्द्धकञ्च ज्वरी नैव प्रजायते ॥”
इति घेरण्डसंहितायां षट्कर्म्मशोधनं प्रथमो-
ऽध्यायः ॥

**षट्कर्म्मा**, [न्] पुं, (षट् कर्म्माणि यजनादीनि
यस्य । यागादिभिर्युतो ब्राह्मणः । इत्यमरः ।
तथा च ।
“इज्याध्ययनदानानि याजनाध्यापने तथा ।
प्रतिग्रहश्च तैर्युक्तः षट्कर्म्मा विप्र उच्यते ॥”
षट् कर्म्माण्यस्य इति बहुब्रीहिः । इति भरतः ।

**षट्कूटा**, स्त्री, भैरवीविशेषः । यथा, --
अथ षट्कूटा भैरवी ।
“डाकिनी राकिनी बीजे लाकिनी काकिनी-
युगम् ।
साकिनो हाकिनी बीजे आहृत्य सुरसुन्दरि ॥
आद्यमैकारसंयुक्तमन्यदीकारमण्डितम् ।
शक्रस्वरान्वितं देवि तार्त्तीयं बीजमालिखेत् ।
बिन्दुनादकलाक्रान्तं त्रितयं शैलसम्भवे ॥”
तृतीयबीजं सविसर्गं इत्यपि केचित् । तन्त्रा-
न्तरे ।
“ऊरौ क्ष्मामादनं जीवं शिवमत्र त्रिधा लिखेत्
अर्केण मायाशक्राभ्यां क्रमात्तं मण्डितं कुरु ॥
बिन्दुनादान्वितं चाद्यद्वयमन्त्यं विसर्गवत् ।
ध्यानमस्याः प्रवक्ष्यामि सर्व्वभूतनिकृन्तनम् ॥
बालसूर्य्यप्रभां देवीं जवाकुसुमसन्निभाम् ।
मुण्डमालावलीरम्यां बालसूर्य्यसमांशुकाम् ॥
सुवर्णकलसाकारपीनोन्नतपयोधराम् ।
पाशाङ्कुशौ पुस्तकञ्च तथा च जपमालिकाम् ॥”
दधतीमिति शेषः ।
“द्विरावृत्त्या षडङ्गानि विधाय परमेश्वरि ।
यन्त्रमस्या वरारोहे त्रिकोणं तत्पुटं लिखेत् ॥
वहिरष्टदलं पद्मं रविपत्रं ततो लिखेत् ।
चतुरस्रं चतुर्द्वारमेवं मण्डलमालिखेत् ॥
षडङ्गावरणं देवि ! पूजयेत् पूर्व्ववच्छिवे ।
रत्यादि त्रितयं देवि त्रिकोणे परिपूजयेत् ॥
डाकिन्याद्याश्च षट्कोणे वसुपत्रे ततः परम् ।
ब्राह्म्यादि युगलं पश्चाद्रविपत्रे ततः परम् ॥
बालायाः पीठशक्तीस्तु वामाद्याः पूजयेत्

कराभ्यां क्षालयेन्नाडीं
यावन्मलविसर्ज्जनम् ।
तावत् प्रक्षाल्य नाडीञ्च उदरे वेशयेत्
पुनः ॥
इदं प्रक्षालनं गोप्यं देवानामपि दुर्ल्लभम् ।
केवलं धौतिमात्रेण देवदेहो भवेत् ध्रुवम्
॥
यामार्द्धधारणात् शक्तिं यावन्न साधयेन्नरः
।
वहिष्कृतमहद्धौतिस्तावन्नैव न जायते ॥
४ ॥
दन्तमूलं जिह्वामूलं रन्ध्रे च कर्णयुग्मयोः
।
कपालरन्ध्रं पञ्चैते दन्तधौतिर्विधीयते ।
॥ *” ॥
प्रयोगः
“खादिरेण रसेनाथ मृत्तिकाभिश्च
शुद्धिभिः ।
मार्ज्जयेद्दन्तमूलञ्च यावत्
किल्विषमाहरेत् ॥
दन्तमूलं परं धौतिर्योगिनां योगसाधने ।
नित्यं कुर्य्यात् प्रभाते च दन्तरक्षाय
योगवित् ॥
दन्तमूलं धारणादिकार्य्येषु योगिनां यतः
। १ ।
अथातः संप्रवक्ष्यामि
जिह्वाशोधनकारणम् ॥
जरामरणरोगादि नाशयेत् दीर्घलम्बिका ।
तर्ज्जनी मध्यमानामा अङ्गुलित्रययोगतः
॥
वेशयेद्गलमध्ये तु
मार्ज्जयेल्लम्बिकामलम् ।
शनैः शनैर्म्मार्ज्जयित्वा कफदोषं
निवारयेत् ॥
मार्ज्जयेन्नवनीतेन दोहयेच्च पुनः पुनः ।
तदग्रं लोहयन्त्रेण घर्षयित्वा पुनः पुनः ॥
नित्यं कुर्य्यात् प्रयत्नेन
रवेरुदयकेऽस्तके ।
एवं कृते तु नित्ये च लम्बिका दीर्घतां
गता ॥ २
कारणं कान्तिपुष्ट्योश्च दीपनं
वह्निमण्डलम् ॥ * ॥
जलवस्तिः शुष्कवस्तिर्वस्ती च
द्विविधौ स्मृतौ ।
जलवस्तिं जले कुर्य्यात् शुष्कवस्तिं
क्षितौ सदा ॥
नाभिमग्नजले पायुं
न्यस्तनालोत्कटासनम् ।
आकुञ्चनं प्रकाशञ्च जलवस्तिं
समाचरेत् ॥
प्रमेहञ्च गुदावर्त्तं क्रूरवायुं निवारयेत् ।
भवेत् स्वच्छन्ददेहश्च कामदेवसमो
भवेत् ॥”
न्यस्तनालोत्कटासनं ऊरुद्वये हस्त
दत्त्वा
शारङ्गवदुदरं कुर्य्यादित्यर्थः । १ ।
“वस्तिं पश्चिमतानेन चालयित्वा शनैः
शनैः ।
अश्विनीमुद्रया पायुं आकुञ्चयेत्
प्रकाशयेत् ॥
एवमभ्यासयोगेन कोष्ठदोषो न विद्यते ।
विवर्द्धयेत् जाठराग्निं आमवातं
विनाशयेत् ॥ २
वितस्तिमानं सूक्ष्मसूत्रं नाशानाले
प्रवेशयेत् ।
मुखान्निर्ममयेत् पश्चात् प्रोच्यते
नेतिकर्म्मकम् ॥
साधनान्नेतिकर्म्मापि
खेचरीसिद्धिमाप्नुयात् ।
कफदोषा विनश्यन्ति दिव्यदृष्टिश्च
जायते ॥ * ॥
अमन्दवेगे तुन्दञ्च भ्रामयेदुभपार्श्वयोः
।
सर्व्वरोगान्निहन्तीह देहानलविवर्द्धनम्
॥”
इति नौलिकी ॥ * ॥
“निमेषोन्मेषकं त्यक्त्वा सूक्ष्मलक्ष्यं
निरीक्षयेत् ।
यावदश्रु निपतति त्राटकं प्रोच्यते बुधैः
॥
क्रमात् ।
चतुरस्रे लोकपालान् सायुधान् परमेश्वरि ।
अनेनैव विधानेन नित्याख्यां भैरवीं यजेत् ॥”
इति तन्त्रसारः ॥

**षट्कोणं**, क्ली, लग्नात् षष्ठगृहम् । तत्तु रिपु-
स्थानम् । यथा, --
“पातालं हिबुकं चैव सुहृदम्भश्चतुर्थकम् ।
त्रित्रिकोणञ्च नवमं दुश्चिक्यं स्यात् तृतीयकम् ॥
धीस्थानं पञ्चमं ज्ञेयं यामित्रं सप्तमं स्मृतम् ।
द्युनं द्युनं तथास्ताख्यं षट्कोणं रिपुमन्दिरम् ॥”
इति ज्योतिस्तत्त्वम् ॥ * ॥
(षट् कोणा यस्य ।) वज्रम् । इति राज-
निर्घण्टः ॥ षडस्रन्तन्त्रोक्तो यन्त्रभेदः । यथा,
गणेशयन्त्रम् ।

| | | |
|---|---|---|
| तर्ज्जन्यङ्गुल्यकाग्रेण मार्ज्जयेत् कर्णरन्ध्रयोः ।<br>नित्यमभ्यासयोगेन नादान्तरप्रकाशनम् ॥ ३ ॥ ४ ॥<br>वृद्धाङ्गुष्ठेन दक्षेण मार्ज्जयेद्दालरन्ध्रकम् ।<br>एवमभ्यासयोगेन कफदोषं निवारयेत् ॥ | एवमभ्यासयोगेन शाम्भवी जायते ध्रुवम् ।<br>न जायते नेत्ररोगो दिव्यदृष्टिप्रदायकम् ॥ * ॥<br>सीत्कृत्य पीत्वा वक्त्रेण नासानालैर्विरेचयेत् ।<br>व्युत्क्रमेण व्युत्क्रमेण सीत्क्रमेण विशेषतः ॥<br>भालभातिं त्रिधा कुर्य्यात् कफदोषं निवारयेत् ॥<br>ईडया पूरयेद्वायुं रेचयेत् पिङ्गलया पुनः ।<br>पिङ्गलया पूरयित्वा पुनश्चन्द्रेण रेचयेत् ॥<br>पूरकं रेचकं कृत्वा वेगेन न तु धारयेत् ।<br>एवमभ्यासयोगेन कफदोषं निवारयेत् ॥ * ॥<br>नासाभ्यां जलमाकृष्य वक्त्रेण रेचयेत् पुनः । | |

"वीजं षट्कोणमध्यं स्फुरदनलपुरे
तारगं दिक्षु
लक्ष्मीः
माया कन्दर्पभूमिस्तदनु
रसपुटेष्वालिखेद्बीज-
षट्कम् ।"
इति तन्त्रसारः ॥

**षट्चक्रं**, क्ली, (षण्णां चक्राणां समाहारः ।)
शरीरस्थपद्माकारषट्प्रकारचक्रम्।
यथा, --
"सप्तपद्मानि तत्रैव सन्ति लोका इव प्रभो
।
गुदे पृथ्वीसमं चक्रं हरिद्वर्णं चतुर्द्दलम् ॥
लिङ्गेतु षड्दलं चक्रं स्वाधिष्ठानमिति
स्मृतम् ।
त्रिलोकवह्निनिलयं तप्तचामीकरप्रभम् ॥
नाभौ दशदलं चक्रं कुण्डलिन्या
समन्वितम् ।
नीलाञ्जननिभं ब्रह्मस्थानं पूर्व्वकमन्दिरम्
॥
मणिपूराभिधं स्वच्छं जलस्थानं
प्रकीर्त्तितम् ।
उद्यदादित्यसंकाशं हृदि चक्रमनाहतम् ॥
कुम्भकाख्यं द्वादशारं वैष्णवं
वायुमन्दिरम् ।
कण्ठे विशुद्धशरणं षोडशारं पुरोदयम् ॥
शाम्भवीवरचक्राख्यं
चन्द्रबिन्दुविभूषितम् ।
षष्ठमाज्ञालयं चक्रं द्विदलं श्वेतमुत्तमम् ॥
राधाचक्रमिति ख्यातं मनःस्थानं
प्रकीर्त्तितम् ।
सहस्रदलमेकार्णं परमात्मप्रकाशकम् ॥
नित्यज्ञानमयं सत्यं
सहस्रादित्यसन्निभम् ।
षट् चक्राणीह भेद्यानि नैतद्वेद्यं कथञ्चन
॥"
इति पाद्मे स्वर्गखण्डे २७ अध्यायः ॥ *
॥
अन्यच्च ।
मूलमाधारषट्कानां मूलाधारं ततो
विदुः !
स्वशब्देन परं लिङ्गं स्वाधिष्ठानं
ततो विदुः ॥
तदूर्द्ध्वे नाभिदेशे तु मणिपूरं
महत्प्रभम् ।
मेघाभं विद्युदाभञ्च बहुतेजोमयं
ततः ।
मणिवद्भिन्नं तत् पद्मं मणिपूरं
तथोच्यते ॥
दशभिश्च दलैर्युक्तं
डादिफान्ताक्षरान्वितम् ।
शिवेनाधिष्ठितं पद्मं
विश्वलोकैककारणम् ॥
तदूर्द्ध्वेऽनाहतं
पद्ममुद्यदादित्यसन्निभम् ।
कादिठान्ताक्षरैरर्कपत्रैश्च
समधिष्ठितम् ॥
तन्मध्ये वाणलिङ्गन्तु
सूर्य्यायुतसमप्रभम् ।
शब्दब्रह्ममयं शब्दोऽनाहतस्तत्र
दृश्यते ॥
तेनाहताख्यं पद्मं तत् मुनिभिः
परिकीर्त्त्यते ।
आनन्दसदनं तक्षु पुरुषाधिष्ठितं
परम् ॥
तदूर्द्ध्वन्तु विशुद्धाख्यं
दलषोडशपङ्कजम् ।
स्वरैः षोडशकैर्युक्तं धूम्रवर्णं
महत्प्रभम् ॥
विशुद्धिं तनुते यस्मात् जीवस्य
हंसलोकनात् ।
विशुद्धं पद्ममाख्यातं आकाशाख्यं
महत् परम्
आज्ञाचक्रं तदूर्द्ध्वे तु
आत्मनाधिष्ठितं परम् ।
आज्ञासंक्रमणं तत्र गुरोराज्ञेति
कीर्त्तितम् ॥
ताम्बूलादिकनैवेद्यं पुष्पमालां तथैव च ॥
अनुलेपश्च शय्या च चामरव्यजनं तथा ।
आदर्शदर्शनञ्चैव नमस्कारोऽथ नर्त्तनम् ॥
गोतवाद्ये च दानानि स्तुतिहोमप्रदक्षिणम् ।
दन्तकाष्ठप्रदानञ्च ततो देवविसर्ज्जनम् ॥
उपचारा इमे ज्ञेयाः षट्त्रिंशत् सुरपूजने ॥"
इत्येकादशीतत्त्वम् ॥

**षट्त्रिंशन्मतं** क्ली, (षट्त्रिं शतस्तत्संख्यकधर्म्म-
शास्त्रकारिणां मुनीनां मतम् ।) षडधिकत्रिंश-
त्सङ्ख्यकधर्म्मशास्त्रप्रयोजकमुनीनामभिप्रायः।
यथा । तथा च षट्त्रिंशन्मतम् । इति तिथि
स्वरूपकथने तिथ्यादितत्त्वम् । तेषां नामानि
यथा, --
"मनुर्विष्णुर्यमो दक्षः अङ्गिरोऽत्रिबृहस्पती ।
आपस्तम्बश्चोशना च कात्यायनपराशरौ ॥
वशिष्ठव्याससंवर्त्ता हारीतगोतमावपि ।
प्रचेताः शङ्खलिखितौ याज्ञवल्क्यश्च काश्यपः ॥
शातातपो लोमशश्च जमदग्निः प्रजापतिः ।
विश्वामित्रपैठीनसी बौधायनपितामहौ ॥
छागलेयश्च जावालो मरीचिश्च्यवनो भृगुः ।
ऋष्यशृङ्गो नारदश्च षट्त्रिंशत् स्मृति-
कारकाः ॥
एतेषान्तु मतं यत्तु षट्त्रिंशन्मतमुच्यते ॥"
इति शङ्खलिखितौ ॥

**षट्पदः** पुं, (षट् पदानि यस्य ।) भ्रमरः । इत्य-
मरः ॥ (यथा, रघुः । ६ । ६९ ।
"न हि प्रफुल्लं सहकारमेत्य
वृक्षान्तरं काङ्क्षति षट्पदाली ॥")
तच्छकुनानि यथा, --
"ये षट्पदाद्याः शकुनानि तेषा-
माश्चर्य्यरूपाणि निरूपयामः ।
श्रयेत वामो यदि मञ्जु गुञ्जन्
पश्येत वा वामदिशं प्रसर्पन् ।
आस्वादयेद्वा कुसुमं प्रशस्तं
भृङ्गस्तदा स्यात् सुमहान् प्रमोदः ।
अत्रापरे सन्ति च षट्पदा ये
यात्रासु ते वामगताः प्रशस्ताः ॥"
इति वसन्तराजशाकुने षट्पदादयः १५ वर्गः ॥ *

“तत्त्वस्वरूपमेकं तत् षट्चक्रं प्रतिलक्षयेत् ।
षट्चक्रेऽपि महामायां क्षणं ध्यात्वा प्रयत्नतः ॥
लम्बयेन्मूलमन्त्रेण आदिषोडशचक्रकम् ।
आदिषोडशचक्रस्थां साधकानन्दकारिणीम् ॥
चिन्तयन् साधको देवीं जपकर्म्म सभारभेत् ।
भ्रुवोरुपरि नाडीनां त्रयाणां प्रान्त उच्यते ।
तत्प्रान्तं त्रिपथस्थानं षट्कोणं चतुरङ्गुलम् ॥
रक्तवर्णन्तु योगज्ञैराज्ञाचक्रमितीरितम् ॥
कण्ठे त्रयाणां नाडीनां वेष्टनं विद्यते नृणाम् ।
सुषुम्नेडापिङ्गलानां षट्कोणं तत् षडङ्ग्गुलम् ॥
तत् षट्चक्रमिति प्रोक्तं शुक्लं कण्ठस्य मध्य-
गम् ।
त्रयाणामथ नाडीनां हृदये चैकता भवेत् ॥
तत्स्थानं षोडशास्रं स्यात् सप्ताङ्गुलप्रमाणतः ।
तत् पीतमुक्तं योगज्ञैरादिषोडशचक्रकम् ॥
ध्यानानामथ मन्त्राणां चिन्तनस्य जपस्य च ।
यस्मादाद्यञ्च हृदयं तस्मादादीति गद्यते ॥”
इति कालिकापुराणे ५४ अध्यायः ॥ * ॥
अपरञ्च ।
“मूलाधारे त्रिकोणाख्ये इच्छाज्ञानक्रियात्मके
मध्ये स्वयम्भुलिङ्गन्तु कोटिसूर्य्यसमप्रभम् ॥
तदूर्द्ध्वे कामबीजन्तु क-ल-शान्तीन्दूनादकम् ।
कैलासाख्यं तदूर्द्ध्वे तु बोधनीन्तु तदूर्द्ध्वतः ।
एवञ्च शिवचक्राणि प्रोक्तानि तव सुव्रत ॥
सहस्राराम्बुजं बिन्दुस्थानं तदूद्र्ध्वमीरितम् ।
इत्येतत् कथितं सर्वं योगमार्गमनुत्तमम् ॥”
इति तन्त्रसारः ॥

**षट्चरणः**, पुं, (षट् चरणा यस्य ।) भ्रमरः ।
इति हलायुधः ॥ (यथा, आर्य्यासप्तशत्याम् । ५८७ ।
“षट्चरणकीटजुष्टं परागघुणपूर्णमायुधं त्यक्त्वा ।
त्वां मुष्टिमेयमध्यामधुना शक्तिं स्मरो वहति ॥”)
यूका । इति राजनिर्घण्टः ॥ षट्पादश्च ॥

**षट्टः**, क निकेतने । हिंसे । दाने । बले । इति
कविकल्पद्रुमः ॥ (चुरा०-पर० वासे बले च
अक०-हिंसे दाने च सक०-सेट् ।) मूर्द्धन्यादि-
ष्टद्वयान्तः । क, षट्टयति लोकः । निवसति
हन्ति बली स्यात् ददाति वा इत्यर्थः । इति
दुर्गादासः ॥

**षट्तिली**, [न्] त्रि, (उद्वर्त्तनादिभेदेन षट्प्रकारा-
स्तिलाः सन्त्यस्येति । षट्तिल + इनिः ।) जन्म-
तिथ्यादौ तिलकरणकषट्कर्म्मकारी । यथा, --
“तिलोद्वर्त्ती तिलस्नायी तिलहोमी तिलप्रदः ।

यूका । इति राजनिर्घण्टः ॥ षट्चरणे, त्रि ॥
(षट्पदविशेष्टे च त्रि । यथा, महाभारते ।
१४ । ५ । १६ ।
“पुरञ्च ते सुगुप्तं स्यात् दृढप्राकारतोरणम् ।
अदृआट्टालकसंवाधं षट्पदं सर्व्वतोदिशम् ॥”)

**षट्पदप्रियः**, पुं, (षट्पदानां भ्रमराणां प्रियः ।)
नागकेशरवृक्षः । इति शब्दमाला ॥

**षट्पदातिथिः**, पुं, (षट्पदः अतिथिरिव यत्र ।
आम्रवृक्षः । इति त्रिकाण्डशेषः ॥

**षट्पदानन्दवर्द्धनः**, पुं, (षट्पदानामानन्दं वर्द्धय-
तीति । वृध + ल्युः ।) किंकिरातवृक्षः । इति
राजनिर्घण्टः ॥

**षट्पदी**, स्त्री, (षट्पदानि यस्याः । ङीष् ।)
यूका । इति हेमचन्द्रः ॥ भ्रमरपत्नी च ॥

तदूर्द्ध्वे तु शिखाकारा कुण्डली ब्रह्मविग्रहा ॥

तद्बाह्ये हेमवर्णाभं व-स-वर्णचतुर्द्दलम् ।

द्रुतहेमसमप्रख्यं पद्मं तत्र विभावयेत् ॥

तदूर्द्ध्वेऽग्निसमप्रख्य षड्दलं हीरकप्रभम् ।

वादिलान्तषडर्णेन युक्ताधिष्ठानसंज्ञकम् ॥

तिलभुक् तिलवापी च षट्तिली नावसीदति ॥”

इति तिथ्यादितत्त्वम् ॥

**षट्त्रिंशत्**, स्त्री, (षडधिका त्रिशत् । मध्यपद-

लोपि समासः ।) संख्याविशेषः । छत्रिश इति

भाषा । यथा, आह्निकचिन्तामणौ ।

“आसनाभ्यञ्जने

तद्वदुद्वर्त्तनविरूक्षणे ।

सन्मार्जनं सर्पिरादिस्नपनावाहने तथा ॥

पाद्यार्घ्याचमनीयञ्च

स्नानीयमधुपर्क्ककौ ।

पुनराचमनीयञ्च वस्त्रयज्ञोपवीतके ॥

अलङ्कारो गन्धपुष्पधूपदीपौ तथैव च ।

**षट्प्रज्ञः**, पुं, (षट्सु रसेषु प्रज्ञा यस्य ।)

कामुकः । यथा, --

"षिड्गौ व्यलीकः षट्पज्ञः

कामकेलिर्व्विदूषकः

पीठकेलिः पीठमर्द्दो भविलश्छिद्रुरो विटः ॥"

इति त्रिकाण्डशेषः ॥

(षट्सु धर्म्मादिषु प्रज्ञा यस्य ।)

धर्म्मादि-

शास्त्रविज्ञः । यथा, --

"धर्म्मार्थकाममोक्षेषु लोकतत्त्वार्थयोरपि ।

षट्सु प्रज्ञास्ति यस्योच्चैः स षट्प्रज्ञ

इति स्मृतः ॥"

इति च त्रिकाण्डशेषः ॥

**षडक्षीणः**, पुं, (षट्सु रसेषु अक्षीणः ।) मत्स्यः ।

इति केचित् ॥

**षडङ्गं**, क्ली, (षणां अङ्गानां समाहारः । शरी-

रस्य षडवयवम् । यथा, --

"जङ्घे बाहू शिरो मध्यं षडङ्गमिदमुच्यते ॥"

इति शब्दचन्द्रिका ॥

वेदाङ्गषट्शास्त्राणि । यथा, --

"शिक्षा कल्पो व्याकरणं निरुक्तं

ज्योतिषं तथा

छन्दश्चेति षडङ्गानि वेदानां वैदिका

विदुः ॥"

इति शब्दरत्नावली ॥ * ॥

अपि च । अङ्गान्याह शिक्षापद्यम् ।

"छन्दःपादौ तु वेदस्य हस्तौ कल्पोऽथ

कथ्यते ।

ज्योतिषामयनं नेत्रं निरुक्तं श्रोत्रमुच्यते ॥

शिक्षाघ्राणन्तु वेदस्य मुखं व्याकरणं

स्मृतम् ।

तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥"

इति तिथ्यादितत्त्वम् ॥ * ॥

**षडशीतिचक्रं**, क्ली, (षडशीतेश्चक्रम् ।) मिथुन

कन्याधनुर्म्मीनराशिस्थरवेः

शुभाशुभफलज्ञानार्थं

नक्षत्राङ्गनराकारचक्रम् । यथा, --

"मुखे चैकं करे वेदाः पादयुग्मे द्वयं द्वयम् ।

क्रोडे वाणस्तथा वेदाः करे सव्येतरेऽपि

च ॥

द्वयं द्वयं तथा नेत्रे मस्तके त्रितयं तथा ।

द्वयञ्चैय तथा गुह्ये षडशीत्यां स्वभे स्थिते ॥

मुखे दुःखं करे लाभः पादयोर्भ्रमणं हृदि ।

कान्ता स्याद्वन्धनं वामे हस्ते स्यात्

स्वीयभे

नृणाम् ॥

सम्मानं नेत्रयोश्चैव अपमानञ्च मस्तके ।

गुह्ये चैव भवेन्मृत्युः षडशीतिफलश्रुतिः ॥"

इति ज्योतिस्तत्त्वम् ॥

**षडष्टकं**, क्ली, योगविशेषः । स तु वरकन्ययोः

स्वस्वराश्यपेक्षया

परस्परषष्ठाष्टमराशिसम्बन्धः

स च मित्रारिभेदेन द्विविधः । तत्र

मित्रषड-

ष्टकं यथा । श्रीपतिरत्नमालायाम् ।

"मकरसमेतं मिथुनं कन्याकलसौ मृगेन्द्र-

मीनौ च ।

वृषभतुले अलिमेषौ कर्क्कष्टधनुषी च

मित्र-

विधौ ॥"

षडष्टकाविति शेषः ॥ * ॥

अरिषडष्टकमाह ।

"मकरः करिकुलरिपुना

कन्या मेषेण मह झषस्तुलया ।

कर्किघटौ वृषधनुषी

वृश्चिकमिथुने चारिविधौ ॥

यदि कन्याष्टमे भर्त्ता भर्त्तुः षष्ठे च

कन्यका ।

"स्तोष्यामि देवैरृषिभिश्च जुष्टं

भक्त्या गुहं नामभिरप्रमेयम् ।

षडाननं शक्तिधरं सुवीरं

निबोध चैतानि कुरुप्रवीर ! ॥")

तस्य कार्त्तिकेयनामकारणं यथा, --

"अग्निपुत्त्रः कुमारस्तु शरस्तम्बे व्यजायत ।

तस्य साखो विशाखश्च नैगमेयश्च पृष्ठजः ॥

अपत्यं कृत्तिकानाञ्च कार्त्तिकेयस्ततः स्मृतः ॥"

इति मात्स्ये ५ अध्यायः ॥

(षट्सु वदनेषु, क्ली । यथा, रघः । १४ ।

२२ ।

"सर्व्वासु मातृष्वपि वत्सलत्वात्

स निर्व्विशेषप्रतिपत्तिरासीत् ।

षडाननापीतपयोधरासु

नेता चमूनामिव कृत्तिकासु ॥")

**षडाम्नायाः**, पुं, (षट् आम्नायाः ।) शिवस्य

षड्वक्त्रविनिर्गतषट्प्रकारतन्त्रशास्त्रम् ।

यथा,

श्रीशिव उवाच ।

"अथेदानीं प्रवक्ष्यामि आम्नायकथनं पृथक् ।

पूर्व्वाम्नायो यदा मन्त्रस्तदा प्राचीदिशि स्थित

सदाशिवोऽहं भगवानाचारः परिकीर्त्तितः ।

एवं वै दक्षिणाम्नायो दक्षिणस्यां दिशि स्थित

एवं हि पश्चिमाम्नायः पश्चिमायां दिशि

स्थित

एवमेवोत्तराम्नाय उत्तरस्यां दिशि स्थितः ॥

मुखमूर्द्धकृतं देवि ! यत् प्रोक्तं तव सन्निधौ ।

ऊर्द्धाम्नायश्च कथितो देवानामपि दुर्ल्लभः ॥

यदा चाधोमुखं देवि यत् प्रोक्तं गिरिजे प्रिये ।

अध आम्नाय इत्युक्तः सत्यं सत्यं सुमध्यमे ।

षडाम्नायाश्चं कथिताश्चोत्पत्तिक्रमनामतः॥ * ॥

यस्मिन् यस्मिंश्च ये देवाः कथिताश्च वरानने ।

तान्देवांश्च प्रवक्ष्यामि साधकानां हिताय बै ॥

श्रीविद्याभेदसहिता तारा च त्रिपुरा तथा ।

भुवनेशी चान्नपूर्णा पूर्व्वाम्नाये प्रकीर्त्तिताः ॥

वगलामुखी च वशिनी त्वरिता धनदा तथा ।

आद्यश्राद्धीयदानाङ्गपीठादिकम्। इति लोक-
प्रसिद्धम् ॥ * ॥ षट्प्रकारगव्यविशेषः।
यथा, --
"गोमूत्रं गोमयं क्षीरं सर्पिर्दधि च रोचना।
षडङ्गमेतन्माङ्गल्यं पवित्रं सर्व्वदा गवाम् ॥
इति स्मृतिः ॥ * ॥
हृदयादिषडवयवम्। तत्प्रमाणं न्यासशब्दे
द्रष्टव्यम् ॥

**षडङ्गः**, पुं, (षट् अङ्गानि यस्य।) क्षुद्रगोक्षुरकः।
इति राजनिर्घण्टः ॥ (वेदः। यथा, --
"शिक्षाकल्पो व्याकरणं निरुक्तं छन्दसाञ्चयः।
ज्योतिषामयनञ्चैव षडङ्गो वेद उच्यते ॥")

**षडङ्गजित्**, पुं, (षडङ्गं जितवानिति। जि + क्विप्।
विष्णुः। इति शब्दमाला ॥ षडङ्गजेतरि, त्रि ॥

**षडभिज्ञः**, पुं, (षट्सु धर्म्मार्थकाममोक्षलोकत-
त्त्वार्थेषु अभिज्ञा यस्य। बुद्धः ॥ इत्यमरः ॥

**षडशीतिः**, स्त्री, रविसंक्रान्तिविशेषः। सा तु
मिथुनकन्याधनुर्म्मीनराशिषुभवति। यथा,
भविष्यमात्स्यज्योतिषेषु।
"मृगकर्क्कटसंक्रान्ती द्वे तूदग्दक्षिणायने।
विषुवती तुलामेषे गोलमध्ये तथापराः ॥
धनुर्म्मिथुनकन्यासु मीने च षडशीतयः।
वृषवृश्चिककुम्भेषु सिंहे विष्णुपदी स्मृता ॥"
इति तिथ्यादितत्त्वम् ॥
अस्याः पुण्यकालः संक्रान्तिशब्दे द्रष्टव्यः ॥ * ॥
षडधिकाशीतिसंख्या। इत्यङ्कशास्त्रम् ॥ छेयाशी
षडष्टकं विजानीयात् वर्ज्जितं त्रिद्रशैरपि ॥" *
षडष्टकादौ तारानियममाह।
भीमपराक्रमः।
"सीहृद्ये ह्युभयोर्द्वयोरपि
तयोरैकाधिपत्येऽपिवा
ताराषट् च
सुमित्रमित्रजननक्षेमार्थसम्पद्यदि
षट्काष्टे नव पञ्चके व्यथधने योगे च युंयोषितोः
प्रीत्थायुःसुखवृद्धिपुष्टिजनकः कार्य्यो विवाह-
स्तदा ॥"
गर्गः।
"मरणं तारविरोधे ग्रहरिपुभाबे चिरेण।
रोगादि नरनार्व्योः षट्काष्टे वैरं भवेदाशु ॥"
व्यासः।
"मैत्रादियोगेऽपि षडष्टकादौ
तारा विपत्प्रत्यरिनैधनाख्याः।
वर्ज्या विवाहे पुरुषोडुतो हि
प्रीतिः परा जन्मसु तारकासु ॥"
इति ज्योतिस्तत्त्वम् ॥ * ॥
मतान्तरं यथा, --
"सिंहेन मकरः श्रेष्ठो कन्यया मेष उत्तमः।
तुलया सह मीनस्तु कुम्भेन सह कर्क्कटः ॥
धनुषा वृषभः श्रेष्ठो मिथुनेन च वृश्चिकः।
एतत् षडष्टकं प्रीत्यै भवत्यव न संशयः ॥"
इति गारुडे ६१ अध्याथः ॥

**षडाननः**, पुं, (कृत्तिकादीनां षण्णां स्तनपानार्थे
षट् आननानि यस्य।) कार्त्तिकेयः। इत्यमरः ॥
(यथा, महाभारते। ३। २३१। २०।
वशिनी बालभैरवोत्यर्थः।
महिषघ्नी महालक्ष्मीर्द्दक्षिणाम्नायकीर्त्तिताः॥
महास्वरस्वती विद्या तथा वाग्वादिनी परा।
प्रत्यङ्गिरा भवानी च पश्चिमाम्नायकीर्त्तिताः ॥
कालिका भेदसहिता ताराभेदैश्च संयुता।
मातङ्गी भैरवी च्छिन्ना तथा धूमावती परा।
उत्तराम्रायकथिताः कलौ शीघ्रफलप्रदाः ॥
समस्तभेदसहिताः कालिकायाः प्रकीर्त्तिताः।
द्वाविंशत्यक्षरी तासां दक्षिणास्नायकीर्त्तिता ॥
एकजटा षडाम्नाये महामोक्षप्रदायिनी।
तत्परा परमा विद्या न विद्यान्तरगोपिता ॥
परप्रसादमन्त्रश्च ऊद्ध्वाम्नाये प्रकीर्त्तितः।
वागीश्वरादयो देवा अध आम्नायकीर्त्तिताः ॥
ऊद्ध्वाम्नायो अधश्चैव केवलं मोक्षदो भवेत्।
धर्म्मार्थकाममोक्षार्थे आम्नायान्ये प्रकीर्त्तिताः ॥
यथोक्तविधिना भद्रे कृत्वा फलमवाप्नुयात् ॥ * ॥
पूर्व्वाम्नायादिसर्व्वासां विधानं शृणु सुन्दरि।
कृत्वा येनाशु लभते फलं यदुत्तमोत्तमम् ॥
षट्कर्म्मफलदा नृणां षडाम्नायाः प्रकीर्त्तिताः।

उत्तराम्नायो देवेशि तेषामाशु फलप्रदः
॥”
इति समयाचारतन्त्रे २ पटलः ॥ * ॥
तत्र आम्नायभेदेनाचारभेद उक्तः । यथा,
--
“पूर्व्वाम्नायोदितं कर्म्म पाशवं कथितं
प्रिये ।
यदुक्तं दक्षिणाम्नाये तदेव पाशवं स्मृतम्
॥
पश्चिमाम्नायजं कर्म्म
पशुवीरसमाश्रितम् ।
उत्तराम्नायजं कर्म्म दिव्यवीराश्रितं प्रिये
॥
दिव्योऽपि वीरभावेन साधयेत्
पितृकानने ।
वीरासनं विना दिव्यः पूजयेत्
पितृकानने ।
ऊद्ध्वाम्नायोदितं कर्म्म दिष्यभावाश्रितं
प्रिये ॥”
इति निरुत्तरतन्त्रे १ पटलः ॥

**षडूषणं**, क्ली, (षण्णामूषणानां समाहारः ।)

मिश्रितषट्कटुद्रव्यम् । यथा --
“पिप्पली मरिचं शुण्ठी
त्रयमेतद्विमिश्रितम् ।
त्रिकटु त्र्युषणं व्योषं कटुत्रिकमथोच्यते ।
ग्रन्थिकानलचव्यैस्तु चतुः पञ्च षडूषणम्
॥”
इति शब्दचन्द्रिका ॥
अपि च ।
“पञ्चकोलं समरिचं षडूषणमुदाहृतम् ।
पञ्चकोलगुणं तत्तु रूक्षमुष्णं विषापहम्
॥”
इति भावप्रकाशः ॥

**षड्गया**, स्त्री, षड्विधगया । यथा, --

“गयागजो गयादित्यो गायत्त्री च
गदाधरः ।
गया गयासुरश्चैव षड्गया मुक्तिदायिका
॥”
“नासां कण्ठमुरस्तालु जिह्वां दन्तांश्च
संश्रितः ।
षड्भ्यः संजायते यस्मात् तस्मात्
षड्ज इति
स्मृतः ॥”
स च मयूरस्वरतुल्यस्वरः । यथा, --
“षड्जं रौति मयूरो हि गावो नर्द्दन्ति
चर्षभम् ।
अजा विरौतिगान्धारं क्लौञ्चो नदति
मध्यमम् ॥”
इति भरतः ॥
(अस्मिन् चतस्रः श्रुतयो वसन्ति ।
यथा, सङ्गीत-
दपणे । ५३ ।
‘तीव्रा कुमुद्वती मन्दा छन्दोवत्यस्तु
षड्जगाः ॥’)
तानसेनमते सप्तस्वराणां मध्ये
प्रथमस्वरोऽयम् ।
स्वरज् इति लोके ख्यातः ।
अस्योच्चारणस्थानं
कण्ठः । अयं विप्रवर्णः । अस्यार्च्चिकं
नाम ।
अर्थात् एकस्वरमिलितः ।
सर्व्वस्वरापेक्षया
क्षुद्रस्वरोऽयम् । अस्य ताल एकः ।
अस्याष्टौ
भेदा भवन्ति । इति सङ्गीतशास्त्रम् ॥

**षड्दुर्गं**, क्ली, (षट् प्रकारं दुर्गम् ।) षट्प्रकार-

कोट्टम् । तद्यथा । धन्वदुर्गम् १
महीदुर्गम् २
गिरिदुर्गम् ३ मनुष्यदुर्गम् ४ मृद्दर्गम् ५
वन-
दुर्गञ्च ६ । इति महाभारते राजधर्म्मः ।

**षड्धा**, व्य, (षष् + धाच् ।) षट्प्रकारम् । इति

व्याकरणम् ॥

**षड्बिन्दुः**, पुं, विष्णुः । इति त्रिकाण्डशेषः ।
कीट-

**षड्भुजा**, स्त्री, (षट् भुजा इव रेखा यस्याम् ।)

फललताविशेषः । खरवुजा इति भाषा ।
(अस्मि-
न्नर्थे क्लीवलिङ्गेऽपि दृश्यते ॥) तत्पर्य्यायः ।
मधु
फला २ षड्रेखा ३ वृत्तकर्कटी ४ तिक्ता ५
तिक्तफला ६ मधुपाका ७ वृत्तेर्व्वारुः ८
षण्मुखा ९ । अस्याः फलगुणाः ।
“तिक्तं बाल्ये तदनु मधुरं किञ्चिदम्लञ्च पाके
निष्पक्वञ्चेत् तदमृतसमं तर्पणं पुष्टिदायि ।
वृष्यं दाहश्रमविशमनं मूत्रशुद्धं विधत्ते
पित्तोन्मादापहरकफदंषड्भुजं वीर्य्यकारि ॥”
इति राजनिर्घण्टः ॥ * ॥
चण्डिका । यथा । पूर्व्वदले चण्डिकां पीन-
वक्षःस्थलरुहां अग्निप्रभां षड्भुजां दक्षिणे
गदाभयवज्रधरां वामे शक्तिशूलपरशुधरां देवी-
मिती ॥ * ॥ रुद्रचण्डा । यथा । दक्षिणदले रुद्र-
चण्डां कृष्णवर्णां दिव्याभरणभूषितां प्रसन्नवदनां
षड्भुजा दक्षिणे वज्रशूलपरशुधरां वामे पाशा-
ङ्कुशकेशधरां देवीमिति ॥ * ॥ चण्डवती । यथा
।
वायुदले चण्डवतीं धूम्रवर्णां प्रसन्नवदनां सर्व्वा-
लङ्कारभूषितां षड्भुजां दक्षिणे अङ्कुशपाशाक्ष-
सूत्रधरां वामे दण्डशूलडमरुधरां देवीमिति ॥
इति बृहन्नन्दिकेश्वरपुराणोक्तदुर्गापूजापद्धतिः ॥

**षड्रसः**, पुं, (षट्प्रकारो रसः ।) मधुरादि-

षट्प्रकाररसः । यथा, --
“मधुरो लवणस्तिक्तः कषायोऽम्लः कटुस्तथा ।
सन्तीति रसनीयत्वादन्नाद्ये षडमी रसाः ॥”
एषां नामलक्षणे ।
“मधुरं गौल्यमित्याहुरिक्ष्वादौ स च लक्ष्यते ।
लवणस्तु पटुः प्रोक्तः सैन्धवादौ स दृश्यते ॥
तिक्तस्तु पिचुमर्द्दादौ व्यक्तमासाद्यते रसः ।
कषायस्तुवरस्तूक्तः स च पूगीफलादिषु ।
कटुस्तु क्षारसंज्ञः स्यान्मरीचादौ स चेष्यते ॥”
इति राजनिर्घण्टः ॥
एषां गुणास्तत्तच्छब्दे द्रष्टव्याः ॥

**षड्रात्रं**, क्ली, (षण्णां रात्रीणां समाहारः ।)

इति वायुपुराणे गयापद्धतिः ॥

**षड्गवं**, त्रि, (षट् गावो यत्र । सम्यसे अच् ।)

गोषट्कयुक्तहलादि । यथा, --
"अष्टागवं धर्म्म्यहलं षड्गवं
जीविकार्थिनाम् ।
चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनाम्
॥"
इत्याह्निकाचारतत्त्वम् ॥ * ॥
प्रत्ययविशेषः । (सतु । "प्रकृत्यर्थस्य
षट्त्वे
षड्गवच् ।" ५ । २ । २९ । इत्यस्य
वार्त्तिकोक्त्या
भवति ॥) यथा, --
"पशुभ्यो गोयुगं युग्मे परं षट्त्वे तु
षड्गवम् ॥"
इति हेमचन्द्रः ॥
(यथा च महाभारते । ८ । ३८ । ६ ।
"अन्यं तस्मै वरं दद्यां सौवर्णं
हस्तिषड्गवम् ॥")
षण्णां गवां समाहारः । इति
द्विगुसमासनिष्प-
न्नम् । तत्र, क्ली ॥

**षड्ग्रन्था**, (षट् ग्रन्था यस्याः सा ।) वचा ।

इति भावप्रकाशः ॥ श्वतवचा । शटी ।
महा-
करञ्जः । इति राजनिर्घण्टः ॥

**षड्ग्रन्थि**, क्ली, (षट् ग्रन्थयो यस्य) पिप्पली-

मूलम् । इति वैद्यकम् ॥ षट्पर्व्वणि, पुं,
भूम्नि ॥

**षड्ग्रन्थिका**, स्त्री, (षड्ग्रन्था एव । स्वार्थे कन् ।

टापि अत इत्वम् ।) शटी । इत्यमरः ॥

**षड्ग्रन्थी**, स्त्री, (षट् ग्रन्था यस्याः । ङीष् ।)

वचा । इति शब्दरत्नावली ॥

**षड्जः**, पुं, (षड्भ्यः स्थानेभ्यः जायते इति ।

जन + डः ।)
तन्त्रीकण्ठोत्थितस्वरविशेषः ।
इत्यमरः ॥ अस्य व्युत्पत्तिर्यथा, --
भेदः । इति मेदिनी । शिरोरोगस्य
पक्वतैल-
विशेषः । यथा, --
"एरण्डमूलं तगरं शताह्वा
जीवन्तिका सैन्धवराम्निके च ।
भृङ्गं विडङ्गं मधुयष्टिका च
विश्वौषधं कृष्णतिलस्य तैलम् ॥
अजापयस्तैलविमिश्रितञ्च
चतुर्गुणे भृङ्गरसे विपक्वम् ।
षड्बिन्दवो नासिकयोः प्रदेयाः
सर्व्वान्निहन्यु शिरसो विकारान् ॥
च्युतांश्च केशान् पलितांश्च दन्तान्
निर्वध्य मूलान् सुदृढीकरोति
सुपर्णगृध्रप्रतिमञ्च चक्षुः
कुर्व्वन्ति बाह्वोरधिकं बलञ्च ॥"
जीवन्तिकात्र हरीतकीशाकविशेषः ।
इति
भावप्रकाशः ॥

**षड्भुजः**, त्रि, (षट् भुजा यस्य ।) षढस्तयुक्तः ।

यथा, --
"भीमस्त्रिपादस्त्रिशिराः षड् भुजो
नवलोचनः ।
भग्नप्रहरणो रौद्रः कालान्तकयमोपमः
॥"
इति ब्रह्मवैवर्त्तपुराणे
माहेश्वरज्वररूपम् ॥
(यथा च महानिर्व्वाणतन्त्रे । ४ । १७ ।
"चतुर्भुजा त्वं द्विभुजा षड्भुजाष्टभुजा
तथा ।
त्वमेव विश्वरक्षार्थं
नानाशस्त्रार्थधारिणी ॥")
चैतन्यदेवे, पुं, । स तु पुरुषोत्तमक्षेत्रे
षड्भुजो
भूत्वा श्रीजगन्नाथदेवशरीरे लीनोऽभूत्
। इति
लोकप्रसिद्धिः ॥
षडहः । यथा, --
सद्यःशौचं भवेद्विद्वन् तथा चोक्तं चतुर्व्विधम् ।
गर्भस्रावे च वेदोक्तं पूर्व्वकाले त्वचेतसः ॥
ब्राह्मणानामहोरात्रं क्षत्त्रियाणां दिनत्रयम् ।
षड्रात्रञ्चैव वैश्याणां शूद्राणां द्वादशा-
ह्निकम् ॥"
इति वामने १४ अध्यायः ॥

**षड्रेखा**, स्त्री, (षट्रेखा यत्र ।) षड्भुजा ।

इति राजनिर्घण्टः ॥ षड्राजी च ॥

**षड्लवणं**, क्ली, (षट्गुणितं लवणम् ।) मृज्जो-

पेतं पञ्चलवणम् । इति राजनिर्घण्टः ॥

**षड्वक्त्रः**, पुं, (षड्वक्त्राणि यस्य ।) कार्त्तिकेयः ।

यथा, --
"यतस्ततो विशाखोऽसौ ख्यातो लोकेषु
षण्मुखः ।
स्कन्दो विशाखः षड्वक्तः कार्त्तिकेयश्च
विश्रुतः ॥"
इति मत्स्यपुराण १३४ अध्यायः

**षड्विधं**, त्रि, (षट् विधाः प्रकारा यत्र ।)

षट् प्रकारम् । यथा, --
"संज्ञा च परिभाषा च विधिर्नियम एव च ।
अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम् ॥"
इति मुग्धबोधटीकायां दुर्गादासः ॥
अपि च ।
"तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता ।
षड्विधस्तु रसस्तत्र गन्धोऽपि द्विविधो मतः ॥"
इति भाषापरिच्छेदः ॥

**षण्डः**, पुं, (षणु दाने + "ञमन्तात् डः ।" उणा० १ । ११३ । इति डः । बहुलवचनात् सत्वाभावः ।)

वृषभः । षाँड इति भाषा । तत्पर्य्यायः । गोपतिः २ इट्चरः ३ । इत्यमरः ॥ षण्टः ४ शण्डः ५ शण्टः ६ । इति शब्दरत्नावली ॥
क्लीवम् । इति जटाधरामरटीके ॥
समूहः ।
इति वृद्धाः ॥ (यथा, हरिवंशे । ३३ । ३२ ।
"नता निश्चलमूर्द्धानो बभूवुस्ते महोरगाः ।
सायाह्ने कदलीषण्डे कम्पितास्तस्य वायुना ॥")

**षण्डः**, पुं, क्ली, (षणु दाने + डः ।) अब्जादिकदम्बम् ।

पद्मकुसुदादिसमूहः । इत्यमरः । (यथा, माघे । ११ । १५
"कलरवमुपगीते षट् पदौघेन धत्तः
कुमुदकमलषण्डे तुल्यरूपामवस्थाम् ॥"
चिह्नम् । यथा, भागवते । ४ । १९ । २३ ।
तेषां लक्षणानि यथा, --
"ध्वजादिरहितोत्पन्नो निसर्गषण्ढ उच्यते । १ ।
गलिताण्डो भवेद्बद्धः २ पक्षान्तरितशक्तिमान् ॥
पक्षषण्ढः ३ कीलकस्तु यः क्लैव्यादात्मनः स्त्रियम्
परेण सह संयोज्य पश्चात्तामेव सेवते ॥ ४ ॥
शापादिषण्ढो गुर्व्वादिशापाद्देवाप्रहर्षणः । ५ ।
सदा स्तम्भितरेतास्तु रतिस्तब्धः ६ स ईर्षकः ॥
दृष्ट्वा व्यवायमन्येषां व्यवाये यः प्रवर्त्तते । ७ ।
बहुस्त्रीसेवनाज्जातविरसः सेव्यकः स्मृतः ॥ ८ ॥
प्रत्यक्प्रवृत्तवीर्य्यो यो विसर्गसमये भवेत् ।
आक्षिप्तबीजः स ज्ञेयो ९ मोघबीजस्तु स स्मृतः ॥
धृष्टस्त्रीसन्निधानाद्वेर्य्यो भवेत् पतिध्वजः । १० ।
अत्र शालीनलक्षणं पतितम् ॥ ११ ॥
परस्यामेव यस्यास्तिपुंस्त्वं सोऽन्यापतिर्म्मतः १२
वक्त्र एव तु यः कुर्य्यान्मैथुनं स मुखेभगः ॥ १३ ॥
वातरेता विसर्गे यो वातं लिङ्गेन मुञ्चति । १४
कुम्भीकः स तु वो नार्य्याः पाणावेव प्रवर्त्तते ॥ १५ ॥
अविकारिध्वजः पण्डो १६ नष्टो रोगादशुक्रकः । १७ ।
शुक्रप्राण्यध्वजोच्छ्रयी आसेव्यः १८ ससुगन्धिकः ॥
यो योनिसेफसोर्गन्धमाघ्राय लभते बलम् । १०
षण्ढः स्त्रीतुल्यवाक्चेष्टः स्त्रीधर्म्मा छिन्नलिङ्गकः ॥" २० ॥
इति वाचस्पतिकृतस्मृतिरत्नावख्यामुद्वाहरहस्यविकाशः ॥ तद्दर्शनस्पर्शनयोः प्रायश्चित्तं यथा, --
"नालपेज्जनविद्विष्टान् वीरहीनां तथा स्त्रियम्
देवतापितृसच्छास्त्रयज्ञसत्रादिनिन्दकै ॥
कृत्वा तु स्पर्शनालापं शुद्ध्येतार्कावलोकनात् ।
अवलोक्य तथोदक्यामन्त्यजं पतितं शवम् ॥
विधर्म्मिसूतिकाषण्ढविवस्त्रान्तावसायिनः ।
मृतनिर्य्यातकांश्चैव परदाररताश्च ये ॥
वैनासिके विनाशः
स्याद्देहद्रविणसम्पदाम् ॥"
इति ज्योतिस्तत्त्वम् ॥

**षण्मास्यः**, त्रि, (षण्मासे भवः । षण्मास + "षण्मासात् ण्यच्च ।" ५ । १ । ८३ । इति यत् ।) षाण्मास्यः ।
इति सिद्धान्तकौमुदी ॥

**षण्मुखः**, पुं, (षट् मुखानि यस्य ।) कार्त्तिकेयः ।

इति हलायुधः ॥ (यथा, महाभारते । ३ । २३१ । १६ ।
"त्वं क्रीडसे षण्मुख कुक्कुटेन
यथेष्टनानाविधकामरूपी ॥")
षट् संख्यकवदने, क्ली । तद्वति, त्रि ॥

**षण्मुखा**, स्त्री, (षट् मुखानीव रेखा यस्याम् ।)

षड्भुजा । इति राजनिर्घण्टः ॥

**षत्वं**, क्ली, (षस्य भावः । ष + त्व ।) मूर्द्धन्यषकारस्य भावः । यथा । एत्वषत्वे । इति मुग्धबोधव्याकरणम् ॥

**षद**, ऌ ज औ श विषादे । शरणे । गतौ । इति कविकल्पद्रुमः ॥ (तुदा०-पर०-सक०-विषादे अक०-अनिट् ।) ऌ, असदत् । ज, सादः सदः ।
औ असात्सीत् । श, सीदती सीदन्ती । विषाद आकुलीभावः । सीदति राधा रासगृहे । शरणं हिंसा । इति दुर्गादासः ।

**षद**, क गतौ । आङ्पूर्व्वोऽयम् । इति कविकल्प-

"यानि रूपाणि जगृहे इन्द्रो
हयजिहीर्षया ।
नगते पापस्य षण्डानि लिङ्गं
षण्डमिहोच्यते ॥")

**षण्डाली**, स्त्री, तैलमानम् छटाक् इति भाषा ।

सरसी । (षण्डेन वृषभवत्
कामुकपुरुषेण अलति
पर्य्याप्नोतीति । अल + अच् ।
गौरादिलात्
ङाष् । कामुकस्त्री । इति मेदिनी ॥
मुद्रा-
ङ्कितमेदिन्य । दन्त्यसकारादौ लिखिता
॥

**षण्ढः**, पुं, (शाम्यति शिश्नामावात् । शम +

"शमेर्ढः ।" उणा० १ । १०१ । इति
ढप्रत्ययेन
साधूः ।) नपुंसकः । इति राजनिर्घण्टः
हेम-
चन्द्रश्च ॥ स च चतुर्द्दशविधः
विशतिविधश्च ।
यथा नारदः ।
"परीक्ष्यः पुरुषः पुंस्त्वे
निजैरेवाङ्गलक्षणैः ।
चतुर्द्दशविधः शास्त्रे षण्ढो दृष्टो
मनीषिभिः ॥
चिकित्स्यश्चाचिकित्स्यश्चतेषामुक्तो
विधिः
क्रमात् ।
निसर्गषण्ढो वद्धश्च पक्षषण्डस्तथैव च
॥
प्रतिशापाद्गुरो रोगात् देवक्रोधात्तथैव च
।
ईर्ष्याषण्डश्च सेव्यश्च वातरेता
मुखेभगः ॥
आक्षिप्तमोघबीजौ च
शालिनोऽन्यापतिस्तथा॥"
१४ ॥
कामतन्त्रे तु ।
"निसर्गषण्ढो बद्धश्च पक्षषण्डश्च
कीलकः ।

एतदेव हि कर्त्तव्यं प्राज्ञैः शोधनमात्मनः ।
अभोज्यसूतिकाषण्ढमार्ज्जारारवूंश्च कुक्कुटान् ॥
पतितापविद्धचाण्डालमृतहारांश्चधर्म्मवित् ।
संस्पृश्य शुध्यते स्नानादुदक्याग्रामशूकरौ ॥"
इति मार्मार्कण्डेये सदाचाराध्यायः ॥

**षण्णाडीचक्रं**, क्ली, (षड्विधं नाडीचक्रम् ।)

नराणां जन्मादिषण्णक्षत्रघटितचक्रविशेषः ।
यथा, --
"जन्माद्यं कर्म्म ततोऽपि दशमं सांहातिकं
षोडषभम् ।
समुदायमष्टादशभं विनाशसंज्ञं त्रयोविंशम् ॥
आद्यात्तु पञ्चविंशं मानसमेवं नरः षड्कक्षः
स्यात् ॥" * ॥
तेषां फलम् ।
"इहादेहार्थहानिः स्याज्जन्मर्क्ष उपतापिते ।
कर्म्मर्क्षे कर्म्मणां हानिः पीडा मनसि मानसे ॥
मूर्त्तिद्रविणबन्धूनां हानिः सांहातिके तथा ॥
सन्तप्ते सामुदयिके मित्रभृत्यार्थसङ्क्षयः ।

द्रुमः ॥ (चुरा०-पर०-सक०-सेट् ।)
मूर्द्धन्यादि ।
क, आसादयति । इति दुर्गादासः ॥

**षन**, सम्भक्तौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

सक०-सेट् ।) सम्भक्तिः सेवनम् ।
सनति गुरुं
लोकः । इति दुर्गादासः ।

**षन**, द ञ उ दाने । इति कविकल्पद्रुमः ॥ (तना०-

उभ०-सक०-सेट् । क्त्वावेट् ।) द
ञ, सनोति
सनुते । उ सनित्वा सत्वा । इति
दुर्गादासः ॥

**षन्च**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

सक०-सेट् ।) सञ्चति । इति
दुर्गादासः ॥

**षन्ज**, औ ञि सङ्ग्रे । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-अक०-अनिट् ।) औ,
असाङ्क्षीत् । ञि,
सक्तोऽस्ति । सजति वपुषि वासः ।
इति दुर्गा-
दासः ॥

**षप**, सम्बे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

अक०-सेट् ।) सपति । असीषपत् ।
सम्बः
सम्बन्धः । इति दुर्गादासः ॥

**षम**, वैक्लव्ये । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

अक०-सेट् ।) वैक्लव्यं विह्वलीभावः
।
"समन्ति यद्वियोगेन सीमन्तिन्यः
स्मरातुराः ।"
इति दुर्गादासः ॥

**षम**, त् क वैक्लव्ये । इति कविकल्पद्रुमः ॥ (अदन्त

| | | |
|---|---|---|
| शापादिषण्ढस्तब्धश्च ईर्षकः<br>सेव्यकस्तथा ॥<br>आक्षिप्तमोघबीजौ च<br>शालीनोऽन्यापतिस्तथा ।<br>मखेभगो वातरेताः कुम्भीकः<br>पण्डनष्टकौ ॥<br>आसेव्यश्च सुगन्धी च षण्ढः क्लीवानि<br>विंशतिः ॥”<br>२० ॥ | | चुरा०-पर०-अक०-सेट् ।)<br>सिषमयिषति । इति<br>दुर्गादासः ॥<br>**षम्ब**, सर्पणे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-<br>सक०-सेट् ।) सम्बति । इति<br>दुर्गादासः ॥<br>**षर्ज्ज**, अर्ज्जने । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-<br>सक०-सेट् ।) सिषर्ज्जयिषति ।<br>सर्ज्जति धनं<br>लोकः । इति दुर्गादासः ॥ |

**षर्व्व**, सर्पणे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) सर्व्वति । इति दुर्गादासः ॥

**षर्षपी**, स्त्री, पक्षिविशेषः । यथा, --
"हापुत्त्रिका खञ्जनिकाषर्षपी
खञ्जनाकृतौ ।"
इति शब्दरत्नावली ॥

**षल**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) सलति । सिषालयिषति । इति
दुर्गादासः ॥

**षष्टिः**, स्त्री, (षड् दशतः परिमाणमस्य । "पङ्क्ति-
विंशतित्रिंशदिति ।" ५ । १ । ५९ । इति निपा-
तनात् साधुः ।) संख्याविशेषः । षाट इति
भाषा । इति ज्योतिषम् ॥ (यथा, मनुः । ३ ।
१७७ ।
"वीक्ष्यान्धो नवतेः काणः षष्टेः श्वित्री शतस्य
तु ।
पापरोगी सहस्रस्य दातुर्नाशयते फलम् ॥")

**षष्टिकः**, पुं, (षष्टिरात्रेण पच्यन्ते इति । "षष्टिकाः
षष्टिरात्रेण पच्यन्ते ।" ५ । १ । ९० । इति कन्-
प्रत्ययेन निपातितः ।) धान्यविशेषः । षष्टि-
रात्रेण पच्यते षाटिया इति स्वामिसुभूती ।
इत्यमरभरतौ ॥ तत्पर्य्यायः । षष्टिशलिः २
षष्टिजः ३ स्निग्धतण्डुलः ४
षष्टिवासरजः ५ ।
अस्या गुणाः ।

अथ षष्टिसंवत्सरगणना ।
"शाकेन्द्रकालः पृथगाकृतिघ्नः २२
शशाङ्कनन्दाश्वियुगैः ४२९१ समेतः ।
शराद्रिवस्विन्दु १८७५ हृतः सलब्धः
षष्ट्यावशिष्टाः प्रभवादयोऽब्दाः ॥
वर्षवर्ज्जन्तुयच्छेषं सूर्य्यैः संपूर्य्य खोर्म्मिभिः ६० ।
हृतव्युत्क्रमतः खाग्निहृतेऽंशे मासकादयः ॥"
अस्यार्थः । शाकेन्द्रकालः शकराजाब्दकालः
पृथक् द्विष्ठः तत्रैव आकृतिघ्नः २२ द्वाविंशत्या
पूरितः शशाङ्कनन्दाश्वियुगैरेकनवत्यधिकशत-
द्वयाधिकचतुःसहस्रैः समेतोऽङ्कः । शराद्रिव-
स्विन्दुहृतः
पञ्चसप्तत्यधिकाष्टादशशतैर्य्यावत्सख्यं
हर्त्तुं शक्नोति तावता हृतः कर्त्तव्यः । सलब्धः
पूर्व्वशकाब्दः शरेत्यादिना लब्धसंख्यया युतः
कार्य्यः षष्ट्याप्तशेषे पश्चादेषोऽङ्कः पूर्ववत् षष्ट्या
हृते लब्धस्यावशिष्टे प्रभवादयः । एकावशेषे
प्रभवः द्व्याद्यवशिष्टे विभवादिः । वर्षवर्ज्जन्तु
यच्छेषं वर्षातिरिक्तं शराद्रिवस्विन्दुहृता-
वशिष्टं तत् सूर्य्यैर्द्वादशभिः संपूर्य्य खो-
र्म्मिभिः षष्ट्या हृते व्युत्क्रमत इत्यनेन षष्टि-
हृतावशिष्टाः अङ्का दण्डाः षष्टिहृतलब्धांशके
खाग्निहृते त्रिंशता हृते अवशिष्टा अंशका
लब्धा मासाः स्युरिति ॥ * ॥ प्रभवादिषष्टिवर्षा-
ण्युपक्रम्य ।
"आद्या तु विंशतिर्ब्राह्मी द्वितीया वैष्णवी
स्मृता ।
तृतीया रुद्रदैवत्या श्रेष्ठा मध्याधमा भवेत् ॥"
भविष्यपुराणे ।
भरव उवाच ।
"षष्ट्यब्दं कथयाम्यत्र क्रूराः सौम्याश्च ये प्रिये ।
संवत्सरफलं मुख्यं प्रभवादौ वरानने ॥
बहुतोयास्तथा मेघाः सर्वशस्या च मेदिनी ।
बहुक्षीरास्तथा गावो व्याधिरोगविवर्ज्जिताः ।
प्रशान्ताः पार्थिवाश्चैव प्रभवे परिकीर्त्तिताः ॥ १
सुभिक्षं क्षेममारोग्यं सर्वे व्याधिविवर्ज्जिताः ।
प्रशान्ता मानवाः सर्वे बहुशस्या वसुन्धरा ।

निष्पत्तिः सर्वशस्यानां मध्या धातरि
कीर्त्तिता
इक्षुक्षीरगुडादीनां प्रबलत्वं वरानने ॥
१० ॥
सुभिक्षं क्षेममारोग्यं कार्पासस्य
महार्घता ।
लवणं मधु गव्यञ्च ईश्वरे दुर्ल्लभं प्रिये
॥ ११ ॥
सुभिक्षं क्षेममारोग्यं प्रशान्ताः
पार्थिवाः
प्रिये ।
तस्करोपहतं वित्तं बहुधान्ये वरानने
॥ १२ ॥
राष्ट्रभङ्गश्च दुर्भिक्षं
तस्करैश्चोपपीडनम् ।
जानीयाद्विग्रहं घोरं प्रमाथिनि वरानने
॥ १३ ॥
जायन्ते सर्वशस्यानि मेदिनी
निरुपद्रवा ।
लवणं मधु गव्यञ्च महार्घं विक्रमे प्रिये
॥ १४ ॥
कोद्रवाः शालिमुद्गाश्च
शकुमाषास्तथैव च ।
महार्घं जायते सर्वं वृषे च सुरवन्दिते
॥ १५ ॥
चणका मुद्गभाषाश्च अन्यच्च विदलं
प्रिये ॥
महार्घं जायते सर्व्वं चित्रभानौ वरानने
॥ १६ ॥
सुभिक्षं क्षेममारोग्यं विश्वञ्च
निरुपद्रवम् ।
व्यवहारो भवेत् श्रेयान् स्वर्भानौ
देवपूजिते ॥ १७
अतिवृष्टिश्च जायेत धान्यस्याथ
प्रपीडनम् ।
शस्यं भवति सामान्यं दारुणे
देवन्दिते ॥ १८ ॥
बहुशस्यानि जायन्ते सर्व्वदेशे
सुलोचने ।

"गौरो नीलः षष्टिकोऽयं द्विधा स्या-
दाद्यो रुच्यः शीतलो दोषहारी ।
बल्यः पथ्यो दीपनो वीर्य्यवृद्धिं
दत्ते तस्मात् किञ्चिदूनो द्वितीयः ॥"
इति राजनिर्घण्टः ॥
षष्टिसंख्याक्रीते, त्रि ॥

**षष्टिका**, स्त्री, (षष्टिक + स्त्रियां टाप् ।) षष्टिक-
धान्यम् । यथा, --
"हैमन्तिकं सितास्विन्नं धान्यं
मुद्गास्तिला यवाः
कलायकङ्गनीवारा बास्तूकं हिलमोचिका
।
षष्टिका कालशाकञ्च मूलकं केमुकेतरत्
॥"
इति तिथ्यादितत्त्वे
हविष्यान्नप्रकरणीयस्मृति-
वचनम् ॥ किञ्च । शरदि षष्टिकाभिः
पार्व्वणं
नित्यमिति वाचस्पतिमिश्राः ॥

**षष्टिक्यं**, त्रि, (षष्टिकानां भवनं क्षेत्रम् । षष्टिक +
"यवयवकषष्टिकात् यत्" ५ । २ । ३ ।
इति
यत् ।) षष्टिकधान्योपयुक्तक्षेत्रादि ।
इत्यमरः ।
२ । ९ । ७ ॥

**षष्टितमः**, त्रि,) षष्टि + "षष्ठ्यादेश्चासंख्यादेः ।"
५ । २ । ५८ । इति तमट् ।) षष्टेः पूरणः
।
इति मुग्धबोधव्याकरणम् ॥

**षष्टिधा**, व्य, षष्टिप्रकारम् । षष्टिशब्दात् धाच्-
प्रत्ययेन निष्पन्नम् ॥

**षष्टिमत्तः**, पुं, (षष्ट्या वर्षैर्मत्तः ।) हस्ती । षष्टि-
वर्षपर्य्यन्तं वयःपूर्व्वार्द्धस्थित्या षष्टिमत्तः
। इति
सारस्वताभिधानं शब्दमाला च ॥

**षष्टिलता**, स्त्री, भ्रमरमारी । इति राजनिर्घण्टः ॥

**षष्टिसंवत्सराः**, पुं, (षष्टिगुणिताः संवत्सराः ।)

हृष्टास्तुष्टा जनाः सर्वे विभवे च वरानने ॥ २ ॥
रोगा बहुविधाश्चैव मनुष्या वाजिकुञ्जराः ।
सर्व एव प्रणश्यन्ति शुक्रे वर्षे वरानने ॥ ३ ॥
उन्मत्तञ्च जगत् सर्वं धनधान्यसमाकुलम् ।
नित्योत्सवः प्रजावृद्धिः प्रमोदे जायते प्रिये ॥ ४
नीरोगाश्च निराबाधा मानवा विगतद्विषः ।
बहुक्षीरास्तथा गावः प्राजापत्ये वरानने ॥ ५ ॥
निरातङ्कं जगत् सर्व्वं धनयौवनगर्व्वितम् ।
अङ्गिरसि प्रजा सर्वा नित्योत्साहा वरानने ।
॥ ६ ॥
सुभिज्ञं क्षेममारोग्यं वर्षाकालं सुशोभनम् ।
शस्यवृद्धिं विजानीयात् श्रीमुखे सुरवन्दिते ॥ ७
बहुक्षीरास्तथा गावो धान्यञ्च बलवत्तरम् ।
जायन्ते सर्व्वशस्यानि भावे वर्षे वरानने ॥ ८ ॥
महार्घं जायते सर्वं घृततैलरसादिकम् ।
प्रजानाञ्च भवेद्वृद्धिर्यूनि संवत्सरे शुभे ॥ ९ ॥

सौराष्ट्रे नाटदेशे च पार्थिवे नात्र
संशयः ॥ १९ ॥
दुर्भिक्षं जायते घोरं सर्व्वोपद्रवसंयुतम्
।
अनावृष्टिः समाख्याता व्यये संवत्सरे
प्रिये ॥ २० ॥
उद्यतो वर्षणे मेघो जलं नैवोपयच्छति
।
महार्घं सर्व्वजिद्वर्षे सर्व्वमेव वरानने ॥
२१ ॥
कोद्रवाः शालिमुग्दाश्च
कङ्गुमाषास्तथैव च ।
सुलभं जायते सुस्थं जगद्वै
सर्व्वधारिणि ॥ २२ ॥
अनग्निप्रबला लोका
धान्योषधिप्रपीडनम् ।
जायते मानुषे कष्टं विरोधिनि न
संशयः ॥ २३ ॥
सर्व्वाः प्रजाः प्रपीड्यन्ते व्याधिः
शोकश्च जायते
शिरोवक्षोऽक्षिरोगाश्च पापाद्धि विकृते
जनाः ॥ २४ ॥
उपद्रुतं जगत् सर्व्वं तस्करैर्मूषिकैः
खगैः ।
पीडिताश्च प्रजाः सर्व्वाः देशभङ्गः
खरे प्रिये ॥ २५
सुभिक्षं क्षेममारोग्यं शस्यं भवति
शोभनम् ।
बहुक्षीरास्तथा गावो नन्दनं नन्दने
प्रिये ॥ २६ ॥
अल्पतोयास्तथा मेघा वर्षन्ति
खण्डमण्डले ।
नश्यन्ति सर्व्वशस्यानि विजये नात्र
संशयः ॥ २७ ॥
क्षत्त्रियाश्च तथा वैश्याः शूद्राश्च
नटनर्त्तकाः ।
पीडितास्ते वरारोहे जये सर्व्वे न
संशयः ॥ २८ ॥
सरोगञ्च तथा देवि
दाहज्वरसमन्वितम् ।

| | | |
|---|---|---|
| प्रभवादिषष्टिसंख्यकवर्षम् । यथा, -- | | अभिभूतं जगत् सर्वं मन्मथे<br>सुरवन्दिते ॥ २९ ॥<br>तुषधान्यक्षयो देवि<br>सर्व्वशस्यमहार्घता ।<br>व्यवहाराश्च नश्यन्ति दुर्म्मुखे<br>दुर्म्मुखाः प्रजाः ॥ ३०<br>पीड्यन्ते सर्व्वशस्यानि देशे देशे<br>शुचिस्मिते ।<br>हेमलम्बेप्रजाः सर्व्वाः क्षीयन्ते नात्र<br>सशयः ॥ ३१<br>तस्करैः पार्थिवैश्चैव अभिभूतमिदं<br>जगत् ।<br>अर्थो भवति सामान्यो विलम्बे तु भयं<br>महत् ॥ ३२<br>विषमस्थं जगत् सर्व्वं विरोधे<br>भवसंप्लवम् ।<br>विकारी सर्व्वतोऽपायो मम वाक्यन्तु<br>नान्यथा ३३<br>क्वचिद्वर्षति पर्ज्जन्यो देशे<br>संछिन्नमण्डलः ।<br>दुर्भिक्षं सर्व्वरीवर्षे व्यवहारो विपर्य्ययः<br>॥ ३४ ॥ |

दुर्भिक्षं जायते सर्व्वा मेदिनी दुष्यति प्रिये ।
प्लेवे पवन्ति तोयानि मानवा दु खिता भुवि ॥
३५
सुवर्णरूप्यधान्यानि जगत् सर्व्वं सुशोभनम् ।
ब्राह्मणा बणिजस्तुष्टाः सुभिक्षे शुभकृत् प्रिये ॥
३६
सुभिक्षं क्षेममारोग्यं तृप्ता गोब्राह्मणाः प्रिये ।
सुस्थिताः शोभने वर्षे प्रजाः सर्व्वाः सुलोचने ॥
३७
विषमस्थं जगत् सर्व्वं व्याकुलं समुदाहृतम् ।
जनानां जायते भद्रे क्रोधे क्रोधः परस्परम् ॥
३८
सर्व्वत्र जायते क्षेमं सर्व्वशस्यमहार्घता ।
विश्वावसौ वरारोहे कार्पासस्य महार्घता ॥ ३९
॥
पार्थिवैर्नृपसैन्यैश्च समस्तैः खण्डमण्डले ।
प्रपीड्यन्ते जनाः सर्व्वे भयभीताः पराभवे ॥
४० ॥
तृणधान्यानि पीड्यन्ते ग्रीष्मे वर्षति वासवः ।
प्लवङ्ग पीडिताः सर्व्वाः प्रजाश्च सुरवन्दिते ॥
४१ ॥
जायन्ते सर्व्वशस्यानि सुभिक्षं निरुपद्रवम् ।
सौम्यदृष्टिर्भवेद्राजा कालिके च शुभं वदेत् ॥
४२
मुभिक्षं क्षेममारोग्यं सुखञ्च निरुपद्रवम् ।
सौम्यदृष्टिभवेद्राजा सौम्ये सौख्यं प्रकीर्त्तितम्
॥ ४३
तायपूर्णो भवेन्मेघो वर्वते च दिने दिने ।
निरुपद्रवाश्च राजानः सर्व्वसाधारणे प्रिये ॥
४४
वासवो वर्षते देवि देशे चाखण्डमण्डले ।
अहिछत्रे कान्यकुब्जे विरोधि कृषिनाशकृत् ॥
४५
अभिभूतं जगत् सर्व्वं क्लेशैर्बहुविधैः प्रिये ।
मारुतैः फलदाहैश्च परिवारिणि शोभने ॥ ४६
॥
निष्पत्तिः सर्वशस्यानां सुभिक्षं भवति प्रिये ।
प्रमाथिनि जलोद्गारी जलदो मोदते प्रजा ॥
४७ ।
रक्ते संवत्सरे देवि क्रूरबुद्धिर्नराधिपः ।
मानवाः क्रूरचेष्टाश्च सग्रामे रुधिरंभवेत् ॥
५७ ॥
दुर्भिक्षं मरणं घोरं धान्यौषधिप्रपीडनम् ।
पापरोगो भवेद्देवि रक्ताख्येऽमरवन्दिनि ॥
५८ ॥
रोगो मरणदुर्भिक्षं विरोधो बहुसङ्कुलम् ।
क्रोधे तु विषमं सर्व्वं समाख्यातं हरप्रिये ॥
५९
मेदिनी लभते देवि सर्व्वभूतं चराचरम् ।
देशभङ्गश्च दुर्भिक्षं क्षये संक्षीयते प्रजा ॥
सौराष्ट्रे मालवे देशे दक्षिणे कोङ्कणे तथा ।
दर्भिक्षं जायते घोरं क्षये संवत्सरे प्रिये ॥
कौमुदीनर्म्मदाद्याश्च यमुनानर्म्मदातटम् ।
विन्ध्यायां सैन्धवञ्चापि विनश्यति न संशयः
॥
सिंहलं मध्यदेशञ्च कालञ्जरं तथैव च ।
क्षये क्षयन्ति सर्व्वाणि नान्यथा वरवर्णिनि
॥” ६०
इति ज्योतिस्तत्त्वम् ॥

**षष्टिहायनः**, पुं, (षष्टिर्हायना आयुःकालो यस्य ।)
गजः । धान्यविशेषः । इति मेदिनी राज-
निर्घण्टश्च ॥ षष्टिसख्यकवत्सरः ।
तत्संख्यवयो-
युते, त्रि, ॥ (यथा, महाभारते । १ । १५४ ।
४४ ।
“वभञ्जतुस्तदा वृक्षाँल्लताश्चाकर्षतुस्तदा ।
मत्ताविव च संरब्धौ वारुणौ षष्ठिहायनौ ॥”)

**षष्ठः**, त्रि, (षष् + तस्य पूरणे डट् । ५ । २ ।
४८ । डट् । षट्कतिकतिपयचतुरांथुक् । ५
।
२ । ५१ । इति थुक् ।) षण्मां पूरणः । इति
मेदिनी ॥ (यथा, रघुः । १७ । ७८ ।
“पञ्चमं लोकपालानामूचुः साधर्म्मयोगतः ।
भूतानां महतां षष्ठमष्टमं कुलभूभृताम् ॥”)

**षष्ठकः**, त्रि, षष्ठः । षष्ठशब्दात् स्वार्थे कन्प्रत्ययेन

शश्वन्नियमिता चैषा नित्या
काम्याहुतिः परा ॥
मातृरूपा दयारूपा
शश्वद्रक्षणरूपिणी ।
जले स्थले चान्तरीक्षे शिशूनां
स्वप्नगोचरे ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे १
अध्यायः ॥ * ॥
अपि च ।
श्रीनारायण उवाच ।
“षष्ठांशा प्रकृतेर्या च सा तु षष्ठी
प्रकीर्त्तिता ।
तस्याः पूजाविधौ ब्रह्मन्
इतिहासमिमं शृणु ॥
राजा प्रियव्रतश्चासीत्
स्वायम्भुवमनोः सुतः ।
योगीन्द्रो न वहेद्भार्य्यां तपस्यासु
रतः सदा ॥
ब्रह्माज्ञया च यत्नेन कृतदारो बभूव
सः ।
सुचिरं कृतदारश्च न लेभे तनयं
ततः ॥
पुत्रेष्टियज्ञं तञ्चापि कारयामास
कश्यपः ।
मानिन्यै तस्य कान्तायै
मुनिर्यज्ञचरुं ददौ ॥
भुक्त्वा चरुञ्च तस्याश्च सद्यो गर्भो
बभूव ह ।
दधार तञ्च सा देवी दैवं
द्वादशवत्सरम् ॥
ततः सुषाव सा ब्रह्मन् कुमारं
कनकप्रभम् ।
सर्व्वावयवसम्पन्नं
मृतमुत्तानलोचनम् ॥
श्मशानञ्च ययौ राजा गृहीत्वा
बालकं मुने ।
एतस्मिन्नन्तरे तत्र विमानञ्च ददर्श ह
॥

निष्पत्तिः सर्व्वशस्यानां सर्व्वशस्यामहार्घता ।
घृतं तैलसमं याति आनन्दे नन्दति प्रजा ॥ ४८ ॥
कोद्रवाः शालिमुद्गाश्च पीड्यन्ते वरवर्न्निनि ।
सर्व्वौषधानि धान्यानि राक्षसे निष्ठुराः प्रजाः ॥ ४९ ॥
दुर्भिक्षं जायते घोरं धान्यौषधिप्रपीडनम् ।
अनले च समाख्यातं नात्र कार्य्या विचारणा ॥ ५०
देशभङ्गः सुदुर्भिक्षं समासात् कथयाम्यहम् ।
पिङ्गले चारुपद्माक्षि दुर्भिक्षं नर्म्मदातटे ॥ ५१ ॥
गोमहिष्यो विनश्यन्ति ये चान्ये नटनर्त्तकाः ।
वासवो वर्षते देवि शस्यञ्च नहि जायते ॥
तिलसर्षपमाषादिकार्पासानां महार्घता ।
गोमहिष्यः सुवर्णानि कांस्यताम्राद्यशेषतः ॥
तत्सर्व्वं देवि विक्रीय कर्त्तव्यो धान्यसञ्चयः ।
तेन धान्येन लोकोऽयं निस्तरिष्यति दुर्द्दिनम् ।
पार्थिवांमोषकादीनाः कालयुक्ते प्रपीडिताः ॥ ५२
तोयपूर्णाः स्मृता मेघा बहुशस्या च मेदिनी ।
निष्ठुराः प्रार्थिवा देवि सिद्धार्थे च वरानने ॥ ५३
अल्पतोया घनाश्चैव कीटकाः प्रबलाः स्मृताः ।
विरुद्धाः प्रार्थिवा देवि रौद्रे संवत्सरे प्रिये ॥ ५४
दुर्भिक्षं मध्यमं प्रोक्तं व्यवहारो न वचते ।
भवेद्वै मध्यमा वृष्टिर्दुर्म्मतौ समुपस्थिते ॥ ५५ ॥
दुर्भिक्षं जायते लोकाः सर्व्वे द्रविणवर्ज्जिताः ।
प्राणिनां जायतेऽहर्षो दुन्दुभौ बरवर्णिनि ॥ ५६ ॥
महिषीगोहिरण्यादिताम्रकांस्याद्यशेषतः ।
तत् सर्वं देवि विक्रीय कर्त्तव्यो धान्यसञ्चयः ॥

निष्पन्नः ॥ (षष्ठो भागः । “मानपश्वङ्गयोः कन्-
लुकौ च ।” ५ । ३ । ५१ । इति कन् । “षष्ठको
भागो मानञ्चद्भवति ।” इति काशिका ॥)

**षष्ठालुकालकं**, क्ली, द्वित्र्यहानन्तरभुक्तम् । यथा

“द्व्यन्तरे त्र्यन्तरे भुक्तमाहुः षष्ठालुकालकम् ।”
इति त्रिकाण्डशेषः ॥

**षष्ठिका**, स्त्री, (षष्ठी + स्वार्थे कन् ।) यथा ।

चामुण्डत्यत्र षष्ठिकेत्यूह्यम् । इति दुर्गोत्सवीय-
बलिदानप्रकरणे तिथ्यादितत्त्वम् ॥

**षष्ठी**, स्त्री, (षष्ठ + ङीप् ।) कात्यायनी । इति

मेदिनी ॥ षोडशमातृकान्तर्गतमातृकाविशेषः ।
सा प्रकृतेः षष्ठीकला स्कन्दभार्य्या च ।
तस्याः स्वरूपादिर्यथा, --
“प्रधानांशस्वरूपा या देवसेना च नारद ! ।
मातृकासु पूज्यतमा सा च षष्ठी प्रकीर्त्तिता ॥
शिशूनां प्रतिविश्वेषु प्रतिपालनकारिणी ।
तपस्विनी विष्णुभक्ता कार्त्तिकेयस्य कामिनी ॥
षष्ठांशरूपा प्रकृतेस्तेन षष्ठी प्रकीर्त्तिता ।
पुत्त्रपौत्त्रप्रदात्री च धात्री त्रिजगतां सती ॥
सुन्दरी युवती रम्या सन्ततं भर्त्तुरन्तिके ।
स्थाने शिशूनां परमा वृद्धरूपा च योगिनी ॥
पूजा द्वादशमासेषु यस्या विश्वेषु सन्ततम् ।
पूजा च सूतिकागारे परा षष्ठदिने शिशोः ।
एकविंशतिमे चैव पूजा कल्याणहेतुकी ।

ददर्श तत्र देवीञ्च कमनीयां मनोहराम् ।
दृष्ट्वा तां पुरतो राजा तुष्टाव परमादरम् ॥
पप्रच्छ राजा तां दृष्ट्वा ग्रीष्मसूर्य्यसमप्रभाम् ।
तेजसा ज्वलितां कान्तां शान्तां स्कन्दस्य नारद ॥
प्रियव्रत उवाच ।
का त्वं सुशोभने कस्य कान्ते कान्तासि सुव्रते ।
कस्य कन्या वरारोहा धन्या मान्या च योषि-
ताम् ॥
देवसेनोवाच ।
ब्रह्मणो मानसी कन्या देवसेनाहमीश्वरी ।
दृष्ट्वा मां मनसा धाता ददौ स्कन्दाय भूमिप ॥
मातृकासु च विख्याता स्कन्दभार्य्या च सुव्रता
बिश्वे षष्ठीति विख्याता षष्ठाशा प्रकृतेर्यतः ॥
इत्येवमुक्त्वा सा देवी गृहीत्वा बालकं मुने ।
महाज्ञानेन तपसा जीवयामास लीलया ॥
गृहीत्वा बालकं देवी गगनं गन्तुमुद्यता ।
पुनस्तुष्टाव तां राजा शुष्ककण्ठौष्ठतालुकः ॥
नृपस्तोत्रेण सा देवी परितुष्टा बभूव ह ।
उवाच तं नृपं ब्रह्मन् ! वेदोक्तं कर्म्मनिर्म्मितम् ॥
देवसेनोवाच ।
त्रिषु लोकेषु राजा त्वं स्वायम्भुवमनोः सुतः ।
मम पूजाञ्च सर्व्वत्र कारयित्वा स्वयं कुरु ॥

| | | |
|---|---|---|
| | | तदा दास्यामि पुत्रन्ते<br>कुलपद्ममनोहरम् ।<br>इत्येवमुक्त्वा सा देवी तस्मै<br>तद्बालकं ददौ ॥<br>राजा चकार स्वीकारं तत्पूजार्थञ्च<br>सुव्रतः ।<br>जगाम देवी स्वर्गञ्च दत्त्वा तस्मै शुभं<br>वरम् ॥<br>आजगाम महाराजः स्वगृहं<br>हृष्टमानसः ।<br>देवीं तां पूजयामास ब्राह्मणेभ्यो धनं<br>ददौ ॥<br>राजा च प्रतिमासेषु शुक्लषष्ठ्यां<br>महोत्सवम् ।<br>षष्ठ्या देव्याश्च यत्नेन कारयामास<br>सर्व्वतः ॥<br>बालानां सूतिकागारे षष्ठाहे<br>यत्नपूर्व्वकम् ।<br>तापूजां कारयामास<br>चैकविंशतिवासरे ॥ |

बालानां शुभकार्य्ये च शुभान्नप्राशने
तथा ।
सर्व्वत्र वर्द्धयामास स्वयमेव चकार ह ॥
ध्यानं पूजाविधानञ्च स्तोत्रं मत्तो
निशामय ।
यत् श्रुतं धर्म्मवक्त्रेण कौथुमोक्तञ्च सुव्रत
॥
शालग्रामे घटे वाथ वटमूलेऽथवा मुने ।
भित्तौ पुत्तलिकां कृत्वा पूजयेद्वा
विचक्षणः ॥
षष्ठांशां प्रकृतेः शुद्धां सुप्रतिष्ठाञ्च
सुप्रभाम् ।
सुपुत्त्रदाञ्च शुभदां दयारूपां जगत्प्रसूम्
॥
श्वेतचम्पकवर्णाभां रत्नभूषणभूषिताम् ।
पवित्ररूपां परमां देवसेनामहं भजे ॥
इति ध्यात्वा स्वशिरसि पुष्पं दत्त्वा
विचक्षणः
पुनर्ध्यात्वा च मूलेन पूजयेत् सुव्रतां
सतीम् ॥
पाद्यार्घ्याचमनीयैश्च गन्धधूपप्रदीपकैः ।
नैवेद्यैर्विविधैश्चापि फलेन शोभनेन च ॥
मूलेनौँ ह्रीँ षष्ठीदेव्यै स्वाहेति
विधिपूर्व्वकम्
अष्टाक्षरं महामन्त्रं यथाशक्ति जपेन्नरः ॥
ततः स्तुत्वा च प्रणमेद्भक्तियुक्तः
समाहितः ।
स्तोत्रञ्च सामवेदोक्तं वरपुत्त्रफलप्रदम् ॥
अष्टाक्षरं महामन्त्रं लक्षधा यो जपेन्मुने ।
स पुत्त्रं लभते नूनमित्याह कमलोद्भवः
॥ * ॥
स्तोत्रं शृणु मुनिश्रेष्ठ सर्व्वकामशुभावहम्
।
आज्ञाप्रदञ्च सर्व्वेषां गूढं वेदेषु नारद ॥
प्रियव्रत उवाच ।
नमो देव्यै महादेव्यै सिद्ध्यै शान्त्यै नमो
नमः
शुभायै देवसेनायै षष्ठ्यै देव्यै नमो नमः
॥

मासञ्च मुच्यते बालः षष्ठीदेवीप्रसादतः ॥
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ४० अध्यायः ॥
* ॥
चन्द्रस्य षष्ठकलाक्रियारूपतिथिविशेषः । स
तु
शुक्लकृष्णपक्षभेदेन द्विविधः । तत्र चन्द्रस्य
वृद्ध्यनुकूलषष्ठकलाक्रियारूपः शुक्लपक्षीयः
। तस्य
ह्रासानुकूलषष्ठकलाक्रियारूपः कृष्णपक्षीयः ।
* ॥
वैशाखादिषु तस्या विशेषनामानि यथा, --
"प्रसूत्या द्वादशे मासि सम्पूज्यापत्यवृद्धये ।
सुते जाते तथा षष्ठ्यां षष्ठी द्वादशरूपिणी ॥
वैशाखे चान्दनी षष्ठी ज्यैष्ठे चारण्यसंज्ञिता ।
आषाढे कार्द्दमी ज्ञेया श्रावणे लुण्ठनी तथा ॥
भाद्रे चपेटी विख्याता दुर्गाख्याश्वयुजे तथा ।
नाड्याख्या कार्त्तिके मासि मार्गे मूलकरूपिणी
पौषे मास्यन्नरूपा च शीतला तपसि स्मृता ।
गोरूपिणी फाल्गुने च चैत्रेऽशोका प्रकीर्त्तिता
॥"
इति स्कन्दपुराणम् ॥
तत्कृत्यादि यथा, --
अथ षष्ठी सा सप्तमीयुता ग्राह्या युग्मात् ।
राजमार्त्तण्डे ।
"ज्यैष्ठे मासि सिते पक्षे षष्ठी चारण्यसंज्ञिता
व्यजनैककरास्तस्यामटन्ति विपिने स्त्रियः ॥
तां विन्ध्यवासिनीं स्कन्दषष्ठीमाराधयन्ति च ।
कन्दमूलफलाहारा लभन्ते सन्ततिं शुभाम् ॥"
कन्दं सूरणादि । मूलं तदितरत् । भविष्ये ।
"येयं मार्गशिरे मासि षष्ठी भरतसत्तम ।
पुण्या पापहरा धन्या शिवा शान्तागुहप्रिया ॥"
देवीपुराणे चैत्रमधिकृत्य ।
"षष्ठ्यां स्कन्दस्य कर्त्तव्या पूजा
सर्व्वोपचारिका
तद्दैव सुखसौभाग्यमन्ते विष्णुपुरं व्रजेत् ॥"
इयमेव स्कन्दषष्ठी पञ्चमीयुतैवोपोष्या ।
"कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिचतुर्द्दशी ।
एताः पूर्व्वयुताः कार्य्यास्तिथ्यन्ते पारणं भवेत्
॥"

तत्र यात्राकरणदोषो यथा, --
"पञ्चम्यामीप्सितार्थः स्यात् षष्ठ्यां
व्याधियुतो
भवेत् ।
सप्तम्यामर्थलाभः
स्यादष्टम्यामस्त्रपीडनम् ।
षष्ठ्यष्टमीद्वादशीषु न गच्छेत्त्रिदिनस्पृशि
॥"
इति ज्योतिस्तत्त्वम् ॥

**षस**, लु र स्वापे । इति कविकल्पद्रुमः ॥ (अदा०-
पर०-अक०-सेट् ।) मूर्द्धन्यादिः । लु,
सस्ति ।
र, वैदिकः । स्वापः शयनम् । इति
दुर्गादासः ॥

**षस्ज**, सर्पणे । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-
सक०-सेट् ।) दन्त्यसोपधः । क्विपि
संयोगादि-
लोपे सक् । सज्जति । वचोऽपि
परुषाक्षरं न च
पदेषु संसज्जते । इति शाकुन्तले
गणकृता-
नित्यत्वात् । इति दुर्गादासः ॥

**षस्त**, इ लु र स्वप्ने । इति कविकल्पद्रुमः ॥
(अदा०-
पर०-अक०-सेट् ।) मूर्द्धन्यादिः
दन्त्यसोपधः । इ,
संस्त्यते । नमध्यपाठेऽपि
नस्योपधत्वाभावादेव
लोपाभावे इदनुबन्धो वेदेषूच्चारणभेदार्थः
। लु,
संस्ति । र, वैदिकः । इति दुर्गादासः ॥

**षह**, ज ङ शक्तौ । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) इहापि शक्तिः
क्षमा ।
ज, साहः सहः । ङ, अन्यायं सहते नासौ
।

वरदायै पुत्त्रदायै धनदायै नमो नमः ।
सुखदायै मोक्षदायै षष्ठीदेव्यै नमो नमः ॥
शक्तिषष्ठांशरूपायै सिद्धायै च नमो नमः
।
मायायै सिद्धयोगिन्यै षष्ठीदेव्यै नमो नमः
॥
सारायै सारदायै च पारायै सर्व्वकारिण्यै
।
बालाधिष्ठातृदेव्यै च षष्ठीदेव्यै नमो नमः
॥
कल्याणदायै कल्याण्यै फलदायै च
कर्म्मणाम् ।
प्रत्यक्षायै च भक्तानां षष्ठीदेव्यै नमो नमः
॥
पूज्यायै स्कन्दकान्तायै सर्व्वेषां
सर्व्वकर्म्मसु ।
देवरक्षणकारिण्यै षष्ठीदेव्यै नमो नमः ॥
शुद्धसत्त्वस्वरूपायै वन्दितायै नृणां सदा
।
हिंसाक्रोधवर्ज्जितायै षष्ठीदेव्यै नमो
नमः ॥
धनं देहि प्रियां देहि पुत्त्रं देति सुरेश्वरि ।
धर्म्मं देहि यशो देहि षष्ठीदेव्यै नमो नमः
॥
देहि भूमिं प्रजां देहि विद्यां देहि सुपूजिते
।
कल्याणञ्च जयं देहि षष्ठीदेव्यै नमो नमः
॥
इति देवीञ्च संस्तूय लेभे पुत्त्रं प्रियव्रतः
।
यशस्विनञ्च राजेन्द्रं षष्ठीदेवीप्रसादतः ॥
षष्ठीस्तोत्रमिदं ब्रह्मन् यः शृणोति च
वत्सरम् ।
अपुत्त्रो लभते पुत्त्रं वरं सुचिरजीविनम्
॥
वर्षमेकञ्च या भक्ता संस्तुत्येदं शृणोति च
।
सर्व्वपापविनिर्म्मुक्त्या महाबन्ध्या
प्रसूयते ॥
वीरं पुत्त्रञ्च गुणिनं विद्यावन्तं
यशस्विनम् ।

इति ब्रह्मवैवर्त्तवचनात् ॥
विष्णुधर्म्मोत्तरे ।
"अष्टमीञ्च तथा षष्ठीं नवमीञ्च चतुर्दशीम् ।
शिरोऽभ्यङ्गं न कुर्व्वीत पर्व्वसन्धौ तथैव च ॥"
इति तिथ्यादितत्त्वम् ॥ * ॥
सा च कार्त्तिक्याभिषेकतिथिः । यथा, --
"स्वयं स्कन्दो महादेवः सर्व्वपापप्रणाशनः ।
तस्य षष्ठीं तिथिं प्रादादभिषेके पितामहः ॥
अस्यां फलाशनो यस्तु यजेन्नियतमानसः ।
अपुत्त्रोऽपि लभेत् पुत्त्रान् अधनोऽपि लभेत्
धनम्
यं यमिच्छेत मनसा तं तं लभति मानवः ॥
यश्चैतत् पठति स्तोत्रं कार्त्तिकेयस्य मानवः ।
तस्य गेहे कुमाराणां क्षेमारोग्यं भवेद्ध्रुवम् ॥"
इति वाराहे स्कन्दोत्पत्तिनामाध्यायः ॥ * ॥
तत्र जातफलम् ।
"विद्वान् वरिष्ठश्चतुरः सुकीर्त्तिः
प्रलम्बबाहुर्व्रणकीर्णगात्रः ।
सत्यप्रतिष्ठो धनपुत्त्रयुक्तः
षष्ठीप्रसूतो मनुजश्चिरायुः ॥"
इति कोष्ठीप्रदीपः ॥ * ॥

इति हलायुधः । इति दुर्गादासः ॥

**षह**, य कि शक्तौ । इति कविकल्पद्रुमः ॥ (दिवा०
चुरा०-भ्वा०-च-पर०-सक०-सेट् ।)
शक्तिरिह
दैवादिकस्य शकधातो रूपंतेन क्षमा
इत्यर्थः ।
य, सह्यति दुःखं लोकः सहत इत्यर्थः ।
कि,
साहयति । स एवायं नागः सहति
कलभेभ्यः
परिभवम् । इति दुर्गादासः ॥

**षहसानुः**, पुं, क्षमावान् । यज्ञः । मयूरः । इति
संक्षिप्तसारोणादिवृत्तिः ॥

**षाट्**, व्य, सम्बोधनम् । इति केचित् ॥

**षाडवः**, पुं, गानम् । रसः । इति मेदिनी ॥ रागस्य
जातिविशेषः । स च षट्स्वरमिलितराग-
रागिण्यौ । यथा, --
"औडवः पञ्चभिः प्रोक्तः स्वरैः षड्भिस्तु
षाडवः ॥
सम्पूर्णः सप्तभिर्ज्ञेय एवं रागस्त्रिधा मतः
॥"
इति सङ्गीतदर्पणम् ॥

**षाड्गुण्यं**, क्ली, (षड्गुणा एव । "चातुर्वर्ण्या-
दीनां स्वार्थे ।" ५ । १ । १२४ । इत्यस्य
वार्त्ति-
कोक्त्या ष्यञ् ।) राज्ञां राज्यरक्षणे
उपायाः
षट् । यथा । सन्धानासनं सन्धिं कृत्वा
अव
स्थानम् १ । यात्रासन्धानं युद्धार्थयानम्
२ ।
विगृह्यासनं वैरं कृत्वावस्थानम् ३ । यात्रां
संपरिगृह्यासनं शत्रोर्भयप्रदर्शनार्थं यानं
प्रदर्श्य
स्वस्थाने अवस्थानम् ४ । द्वैधीभावः
उभयत्र
सन्धीकरणम् ५ । अन्येषां संश्रयः
दुर्गादिर्म्महा-
राजस्य वा आश्रयः ६ । इति महाभारते

| शुचिं चिरायुष्मन्तमेव षष्ठीदेवीपसादतः ॥<br>काकबन्ध्या च या नारी मृतापत्या च या भवेत्<br>वर्षं श्रुत्वा लभेत् पुत्त्रं षष्ठीदेवीप्रसादतः ॥<br>रोगयुक्ते च बाले च पिता माता शृणोति चेत् | | राजधर्म्मः ॥ (यथा, माघे । २ । ९३ ।<br>“षाड्गुण्यमुपयुञ्जीत शक्त्यपेक्षं रसायनम् ।<br>भवन्त्यस्यैवमङ्गानि स्थास्नूनि बलवन्ति च ॥”) |
|---|---|---|

षाण्मातुरः, पुं, (षण्णां मातॄणामपत्यमिति ।
"मातुरुत्संख्यासंभद्रपूर्व्वायाः ।" ४ । १ ।
११५ ।
इति अण् । उकारश्चान्तादेशः ।) कार्त्तिकेयः
।
इत्यमरः ॥

**षात्वणत्विकः**, त्रि, षत्वणत्वविधायकशास्त्रव्या-
ख्यानम् । तत्र भवः । यथा ।
षत्वणत्वयोर्विधा-
यकं शास्त्रं षात्वणत्वं तस्य व्याख्यानान्तत्र
भवो
वा षात्वणत्विकः । इति सिद्धान्तकौमुदी ॥

**षाध**, ओ न य सिद्धौ । इति कविकल्पद्रुमः ॥
(स्वा०-दिवा० च-पर०-अक०-अनिट् ।) औ,
शिषात्सति । न, साध्नोति । य, साध्यति ।
सिद्धिर्निष्पत्तिः । इति दुर्गादासः ॥

**षान्त्व**, क सामयोगे । इतिकविकल्पद्रुमः ॥ (चुरा०
पर०-सक०-सेट् ।) क, सान्त्वयति शोकार्त्तं
दयालुः । सिषान्त्वयिषति । इति दुर्गादासः ॥

**षाष्ठः**, त्रि, षष्ठः । षष्ठशब्दात् स्वार्थे ष्ण (अण्)
प्रत्ययेन निष्पन्नः ॥ (पुं, षष्ठो भागः । "षष्ठाष्ट-
माभ्यां ञ च ।" ५ । ३ । ५० । इति ञः ।
इति
सिद्धान्त्रकौमुदी ॥)

**षि**, ग ञ न बन्धे । इति कविकल्पद्रुमः ॥ (क्र्या०-
स्वा०-च-उभ०-सक०-अनिट् ।) मूर्द्धन्यादिः
।
ग ञ, सिनाति सिनीते । न, सिनोति सिनुते ।
ईति दुर्गादासः ॥

**षिच**, प श ञ औ क्षरणे । इति कविकल्पद्रुमः ॥
(तुदा०-उभ०-सक०-अनिट् ।) प श ञ,
सिञ्चति सिञ्चते । औ, सेक्ता । सिषिचुरवनि-
मम्बुवहाः । इति भारविः । इति दुर्गादासः ॥
षिट, अनादरे । इति कविकल्पद्रुमः ॥
(भ्वा०-
सेधित्वा सिद्ध्वा । य, सिध्यति । औ,
असैत्-
सीत् । अस्मात् पुषादित्वान्नित्यं ङ
इत्यन्ये ।
सिद्धिर्निष्पत्तिः । सिध्यति घटो निष्पन्नः
स्यात्
इत्यर्थः । इति दुर्गादासः ॥

**षिध**, ऊ शिवे । शास्त्रे । इति कविकल्पद्रुमः ॥
(भ्वा०-पर०-शिवे अक०-अनुशासने
सक०-
वेट् ।) मूर्द्धन्यादिः । ऊ, असेधीत्
असैत्-
सीत् । शिवं मङ्गलम् । तदाकर्म्मकः ।
सिद्ध्वो
वर्णसमाम्नाय इति कातन्त्रस्याद्यसूत्रम् ।
शास्त्र-
मनुशासनम् । सेधति शिष्यं गुरुः । इति
दुर्गा-
दासः ॥

**षिन्भ**, उ हिंसने । दीप्तौ । इति कविकल्पद्रुमः ॥
(भ्वा०-पर०-सक०-दीप्तौ अक०-सेट् ।
क्वावेट्
उ, सिम्भित्वा सिब्ध्वा । इति दुर्गादासः
॥

**षिल**, श उञ्छे । इति कविकल्पद्रुमः ॥ (तुदा०
पर०-सक०-सेट् ।) उञ्छ
उद्धृतशस्यशेषापह-
रणम् । श, सिलति धान्यं दीनः । सेलिता
।
इति दुर्गादासः ॥

**षिव**, य उ तन्तुततौ । इति कविकल्पद्रुमः ॥
(दिवा०-पर०-सक०-सेट् । क्वावेट् ।)
तन्तु-
ततिस्तन्तुभिर्ग्रन्थनम् । य, सीव्यति वस्त्रं
सौचिकः । उ, सेवित्वा स्यूत्वा । इति
दुर्गा-
दासः ॥

सोरिता सुषोर । भा दीप्तिः ।
ऐश्यमैश्वर्य्यम् ।
इति दुर्गादासः ॥

**षुह**, ल य तृपि । शक्तौ । इति कविकल्पद्रुमः ॥
(दिवा०-पर०-सक०-सेट् ।) शक्तिः
क्षमा ।
ऌ, असुहत् । य, सुह्यति दुःखं मुनिः
सहत
इत्यर्थः । सुषोह । इति दुर्गादासः ॥

**षू**, ङ ल सूतौ । इति कविकल्पद्रुमः ॥ (अदा०
आत्म०-सक०-अनिट् ।) मूर्द्धन्यादिः ।
ङल,
सूते । इति दुर्गादासः ॥

**षू**, य ङ औ सूतौ । इति कविकल्पद्रुमः ॥
(दिवा०
आत्म०-सक० अनिट् ।) य ङ, सूयते ।
ओ,
सूनः । सूतिर्गर्भविमोचनम् । सूते पुत्त्रं
नारी ।
अन्यत्रापि धर्म्मोऽर्थं प्रसूयते । इति
दुर्गादासः ॥

**षू**, श क्षेपे । इति कविकल्पद्रुमः ॥ (तुदा०-पर०
सक०-अनिट् ।) मूर्द्धन्यादिः । श,
सुवति ।
इति दुर्गादासः ॥

**षूः**, स्त्रो, गर्भविमोचनम् । इति कश्चिदेकाक्षर-
कोषः ॥

**षूद**, क्षणने । इति प्राञ्चः । (भ्वा०-पर०-सक०
सेट् ।) क्षणनमवदारणं
हिंसोपलक्षणमिति
रमानाथेन व्याख्यातम् । इति दुर्गादासः
॥

**षूद**, क आश्रुतिहत्योः । निरासे । इति कविकल्प
द्रुमः ॥ (चुरा०-पर०-सक०-सेट् ।)
आश्रुति-

पर०-सक०-सेट् ।) मूद्र्धन्यादिः । सेटति खलं
लोकः । इति दुर्गादासः ॥

**षिङ्गः**, पुं, (षिट् अनादरे + बाहुलकात् अतोऽपि गन् सत्वाभावश्च । इत्यणादिटीकायां उज्ज्वलः । १ । १२३ ।) कापुकः । लोच्चा इति
भाषा । तत्पर्य्यायः । विदग्धः २ नागरः ३ भविलः ४ छिदुरः ५ विटः ६ व्यलीकः ७ षट्-
प्रज्ञः ८ कामकेलिः ९ विदूषकः १० । इति भूरिप्रयोगः ॥ पीठकेलिः ११ पीठमर्द्दः १२ । इति त्रिकाण्डशेषः ॥ पल्लविकः १३ । इति हेमचन्द्रः ॥ (यथा, माघे । ५ । ३४ ।
"पन्थानमाशु विजहीहि पुरः स्तनौ ते
पश्यन् प्रतिद्विरदकुम्भविशङ्किचेताः ।
स्तम्बेरमः परिणिनं सुरसावुपैति
षिङ्गैरगद्यत ससम्भ्रममेव काचित् ॥")

**षिध**, गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) सेधति । निष्ठायां सिधितः । इति दुर्गादासः ॥

**षिध**, उ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् । क्वा वेट् ।) सेधति । उ, मेधित्वा सिद्ध्वा । क्वावेट्त्वान्नेम् ङीश्वीति इमो
निपेधे मिद्धः । इति दुर्गादासः ॥

**षिध**, उ य औ सिद्धौ । इति दुर्गादासः ॥ (दिवा०-पर०-अक०-अनिट् । क्वावेट् ।) उ,

**षु**, गतौ । ऐश्वर्य्यप्रसवयोश्च । इति कविकल्पद्रुमः (भ्वा०-पर०-सक०-अनिट् ।) सवति । इति
दुर्गादासः ॥

**षु**, ञ गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-उभ० सक०-अनिट् ।) ञ, सुषाव सुषुवे । इति दुर्गादासः ॥

**षु**, न ञ सन्धाक्लेदपीडमन्थे । इति कविकल्पद्रुमः ॥ (स्वा०-उभ०-सक०-अक० च-अनिट् ।) मूर्द्ध-
न्यादिः । न ञ, सुनोति सुनुते । सन्धा सन्धा-
नम् । क्लेद इह स्नानं मङ्गलस्नानं वा । तथाच
षु ञ अभिषवे । इति प्राञ्चः । अभिषवः पीडनं
मन्थनं वेति त्रिलोचनादयः । स्नानञ्चेति दुर्गः । सन्धानं मङ्गलस्नानं वेति धातुप्रदीपः ।
इति दुर्गादासः ॥

**षु**, ल ऐश्वर्य्यप्रसवयोः । इति कविकल्पद्रुमः ॥ (अदा०-पर०-अक०-सक० चसेट् ।) ल, सौति । इति दुर्गादासः ॥

**षुः**, पुं, गर्भविमोचनम् । इत्येकाक्षरकोषः ॥

**षुट्ट**, क तौच्छ्ये । अनादरे । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-सक०-सेट् ।) पञ्चमस्वरी टद्व-
यान्तः । क, सुट्टयति । दन्त्यादिरयमिति भीमः । तौच्छ्यमल्पीभावः । इति दुर्गा-
दासः ॥

**षुन्भ**, दीपनहिंसयोः । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-दीपने अक०-हिंसायां सक०-सेट् ।)
मूर्द्धन्यादिः । पञ्चमस्वरी । सुम्भति सुषुम्भ ।
इति दुर्गादासः ॥

**षुर**, श भेश्ययोः । इति कविकल्पद्रुमः ॥ (तुदा०-

रङ्गीकारः । क, सूदयति धनं विप्राय दातुं
दाता । रमानाथस्तु आस्रवण इति दन्त्यसकारं
पठित्वा सूदयति मदिरा भाण्डात् क्षरति
इत्यर्थ इत्याह । इति दुर्गादासः ।

**षूद**, ङ निरासे । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट् ।) षष्ठस्वरी । ङ, सूदते ।
निरासो निःक्षेपः । इति दुर्गादासः ॥

**षूर**, ङ य ई स्तम्भे । हिंसे इति कविकल्पद्रुमः ॥ (दिवा०-आत्म०-स्तम्भे अक०-हिंसे सक०-
सेट् । निष्ठायां अनिट् ।) ङ य, सूर्य्यते । ई,
सूर्णः । कैश्चिदयं न मन्यते । स्तम्भो जडी-
भावः । इति दुर्गादासः ॥

**षूर्क्ष**, नादरे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) रेफयुक्तः । षष्ठस्वरी । सूर्क्षति
दुष्टं लोकः । इति दुर्गादासः ॥

**षूर्क्ष्य**, ईर्षे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट् ।) सूर्क्ष्यति सुषूर्क्ष्य । षद्वयान्तो-
ऽयमित्येके । इति दुर्गादासः ॥

**षूष**, प्रसवे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) षष्ठस्वरी मूर्द्धन्यादिः । सूषति ।
इति दुर्गादासः ॥

**षेक**, ऋ ङ सर्पणे । इति कविकल्पद्रुमः ॥ (भ्वा० आत्म०-सक०-सेट् ।) मूर्द्धन्यादिः । अस्य
षोपदेशविधौ वर्ज्जनेऽपीह पाठः कस्यचिदनु-
रोधात् । ऋ, असिषेकत् । ङ, षेकते । इति

| | | |
|---|---|---|
| | पर०-अक०-सेट् ।) मूर्द्धन्यादिः । श, सुरति | दुर्गादासः ॥<br><br>**षेल**, ऋ चालगत्योः । इति कविकल्पद्रुमः ॥ (भ्वा०<br><br>पर०-सक०-सेट् ।) मूर्द्धन्यादिः । ऋ, असि-<br>षेलत् । इति दुर्गादासः ॥ |

**षेव**, ऋ ञ ङ सेवने । इतिकविकल्पद्रुमः ॥ (भ्वा०
उभ०-आत्म०-च-सक-सेट् ।) ऋ, असि-
षेवत् । ञ, सेवति सेवते । ङ, सेवते । सेवन-
माराधनमुपभोग आश्रयणञ्च । विष्णुं सेवते
सुस्वं सेवते तीर्थं सेवते साधुः । अन्ये त्वस्मात्
परस्मैपदममन्यमानाः नीचं समृद्धमपि सेवति
नीच एव । स्वाधीने विभवेऽप्यहो नरपतिं
सेवन्ति किं मानिन इत्यादौ गणकृतानित्यत्व-
माहुः । इति दुर्गादासः ॥

**षै**, क्षये । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
अक०-अनिट् ।) मूर्द्धन्यादिः । सायति । इति
दुर्गादासः ॥

**षो**, य नाशे । इति कविकल्पद्रुमः ॥ (दिवा०-
पर०-सक०-अनिट् ।) मूर्द्धन्यादिः । नाश इह
नष्टीकरणम् । य, स्यति यमो जन्तून् । इति
दुर्गादासः ॥

**षोडन्**, [त्] पुं, (षट् दन्ता अस्य । "पृषोदरा-
दीनि यथोपदिष्टम् ।" ६ । ३ । १०९ । इति
षष उत्वं
दतृदशधासूत्तरपदादेष्टुत्वञ्च ।) षड्-
दन्तयुक्तवृषः । इति हेमचन्द्रः ॥

**षोडश**, [न्] त्रि, (षट् च दश च । "पृषोदरा-
दीनि यथोपदिष्टम् ।" ६ । ३ । १०९ । इति

तत् षोडशषोडशकैरेको दानसागरो भवति ॥
तत्र भूमेः पूजायां दानवाक्ये च प्रियदत्तेति
विशेषणम् । भूमेर्द्देवता विष्णुः षष्ठिवर्षसह-
स्रावच्छिन्नस्वर्गवासः फलम् । प्रतिग्रहे तद्भूमेः
प्रदक्षिणीकरणम् । तद्भूमेरसन्निधाने तामुद्दिश्य
प्रदक्षिणम् ॥ १ ॥ आसनस्य उत्तानाङ्गिरसो
देवता राज्यस्थानानुत्तमस्वर्गप्राप्तिः फलम् ।
तत्र विशेषानुपदेशात् करमध्यात्माग्नेयेन
तीर्थेन प्रतिग्रहः । एवमन्यत्रापि आग्नेयं कर-
तलम् ॥ २ ॥ जलस्य वरुणो देवता तृप्तिप्राप्तिः
फलम् ॥ ३ ॥ वस्त्रस्य बृहस्पतिर्द्देवता चन्द्र-
सालोक्यप्राप्तिः फलम् । प्रतिग्रहे दशान्तग्रहण-
परिधाने ॥ ४ ॥ दीपस्य अग्निर्द्देवता उत्तमचक्षुः
प्राप्तिः फलम् ॥ ५ ॥ अन्नस्य प्रजापतिर्द्देवता
अक्षयसुखप्राप्तिः फलम् । प्रतिग्रहे मुष्टिग्रह-
णम् ॥ ६ ॥ ताम्बूलस्य वनस्पतिर्द्देवता मेधा-
वित्वसुभगत्वप्राज्ञत्वदर्शनीयत्वप्राप्तिः
फलम् ॥ ७ ॥
छत्रस्य उत्तानाङ्गिरसो देवता सर्व्वव्याधिविनि-
र्मुक्तत्वश्रीमत्त्वबहुपुत्रत्वप्राप्तिः फलम् । प्रति-
ग्रहे दण्डधारणम् ॥ ८ ॥ गन्धस्य गन्धर्व्वो देवता
ब्रह्मपदप्रयाणं फलम् ॥ ९ ॥ माल्यस्य वनस्पति
र्देवता अत्यन्तसुखित्वभवनं फलम् ॥ १० फलस्य-
वनस्पतिर्देवता मुदा युक्तत्वं फलम् ॥ ११ ॥

तत्त्वम् ॥ * ॥ गयापद्धत्युक्तषोडशदादनं यथा,
"स्वर्णं रौप्यं तथा ताम्रं कांस्यं गावो गजा हयाः ।
गृहं भूमिर्वृषो वस्त्रं शाय्या क्षेत्रमुपानहौ ॥
दास्यन्नं पितृयज्ञेषु दानं षोडशकं मतम् ॥"
इति वायुपुराणे गयामाहात्म्यम् ॥

**षोडशभूजा**, स्त्री, (षोडश भूजा यस्याः ।) षोड-
शहस्तयुक्ता दुर्गा । यथा, --
"यदा तु षोडशभुजां महामायां प्रपूजयेत् ।
दुर्गातन्त्रेण मन्त्रेण विशेषं तत्र वै शृणु ॥
कन्यायां कृष्णपक्षस्य एकादश्यामुपोषितः ।
द्वादश्यामेकभक्तन्तु नक्तं कुर्य्यात् परेऽहनि ॥
चतुर्द्दश्यां महामायां बोधयित्वा विधानतः ।
गीतवादित्रनिर्षोषैर्नानानैवेद्यवेदनैः ॥
अयाचितं बुधः कुर्य्यात् उपवासं परेऽहनि ।
एवमेव व्रतं कुर्य्यात् यावद्वै नवमी भवेत् ॥
ज्येष्ठायान्तु समभ्यच्चर्य मूलेन प्रतिपूजयेत् ।
उत्तरेणार्च्चनं कृत्वा श्रवणान्ते विसर्ज्जयेत् ॥"
इति कालिकापुराणे ५९ अध्यायः ॥

**षोडशमातृकाः**, स्त्री, (षोडशसंख्यकाः मातृकाः ।)
षोडशसंख्यकदेवोविशेषः । यथा । गौर्य्यादि-
षोडशमातृकाभ्यो नमः । इति दुर्गोत्सव-
पद्धतिः ॥ तासां नामानि यथा, श्राद्धतत्त्वे ।
"गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥
शान्तिः पुष्टिर्धृतिस्तुष्टिरात्मद्वेवतया सह ।
आदौ विनायकः पूज्यः अन्ते च कुलदेवता ॥"

**षोडशर्त्विक्क्रतुः**, पुं, (षोडश ऋत्विजो यत्र ।
तादृशः क्रतुः ।) षोडशपुरोहितसाध्ययाग-
विशेषः । स तु ज्योतिष्टोमयागः । द्वादशाह-
साध्यसत्रयागश्च । यथा । ज्योतिष्टोमे द्वादश-
शतगोदक्षिणाविभागः षोडशर्त्विजां तद्विकृती-
भूते सत्रात्मके द्वादशाहसाध्ये शतेनार्द्धिनो
दीक्षयन्तीत्यादिदर्शनेन निर्णीयते । तत्र विभारं
मनुरप्याह ।
"सर्व्वेषामर्द्धिनो मुख्यास्तदर्द्धेनार्द्धिनोऽपरे।
तृतीयिनस्तृतीयांशाश्चतुर्थांश्चैकपादिनः ॥"

साधुः ।) संख्याविशेषः । षडधिका दश ।
षोल इति भाषा । तद्वाचकौ इन्दुकलामातृका-
शब्दौ । इति कविकल्पलता ॥ नित्यबहुवचना-
न्तोऽयम् ॥ (यथा, मनुः । ११ । २४९ ।
“सव्याहृतिप्रणवकाः प्राणायामास्तु षोडश ।
अपि भ्रूणहनं मासात् पुनन्त्यहरहःकृताः ॥”)

**षोडशः**, त्रि, षोडशानां पूरणः । षोडशन्शब्दात्
उट्प्रत्ययेन निष्पन्नः । इति सिद्धान्तकौमुदी ।
(यथा, भागवते । २ । ९ । ६ ।
“स्पर्शेषु यत् षौडशमेकविंशं
निष्कञ्चनानां नृप यद्धनं विदुः ॥”)

**षोडशकलाः**, स्त्री, (षोडशसंख्यान्विताः कलाः ।)
चन्द्रमण्डलस्य षडधिकदशभागाः । तासां
नामानि यथा । ततश्चन्द्रस्य अमृतादिषोडश-
कलाः पूर्व्ववत् प्राणप्रतिष्ठां कृत्वा पूजयेत् । अं
अमृतायै नमः १ । आं मानदायै २ । इं
पूषायै ३ । ईं तुष्ट्यै ४ । उं पुष्ट्यै ५ । ऊं रत्यै
६ । ऋं धृत्यै ७ । ॠं शशिन्यै ८ । ऌं
चन्द्रिकायै ९ । ॡं कान्त्यै । १० एं ज्योत्-
स्नायै ११ । ऐं श्रियै १२ । ओं प्रीत्यै १३ ।
औं अङ्गदायै १४ । अं पूर्णाय २५ । अः पूर्णा-
मृतायै १६ । नमः सर्व्वत्र । शक्तश्चेत् प्रत्येक-
शय्यायाः उत्तानाङ्गिरसो देवता अत्यन्तसुखित्व
भवनं फलम् । प्रतिग्रहे आरोहणम् ॥ १२ ॥
पादुकायुगलस्य उत्तानाङ्गिरसो देवता सर्व्व-
लोकसुखगमनं फलम् । प्रतिग्रहे आरोह-
णम् ॥ १३ ॥ धेनो रुद्रो देवता सूर्य्यलोकप्राप्तिः
फलम् । तत्र धेनुं प्राङ्मुखीमात्मसमीप-
मानीय ।
“ॐ या लक्ष्मीः सर्व्वभूतानां या च देवेष्वव-
स्थिता ।
धेनुरूपेण सा देवी मम शान्तिं प्रयच्छतु ॥
ॐ देवस्था या च रुद्राणी शङ्करस्य च या
प्रिया ।
धेनुरूपेण सा देवी मम शान्तिं प्रयच्छतु ॥
ॐ विष्णोर्वक्षसि या लक्ष्मीर्या लक्ष्मीर्धनदस्य
च ।
या लक्ष्मीः सर्व्वभूतानां सा धेनुर्व्वरदास्तु मे
॥
ॐ चतुर्मुखस्य या लक्ष्मीः स्वाहा चैव विभा-
वसोः ।
चन्द्रार्कशक्रशक्तिर्या धेनुरूपास्तु सा श्रिये ॥
ॐ स्वधा त्वं पितृसंघानां स्वाहा यज्ञभूजां
यतः ।
सर्व्वपापहरा धेनुस्तस्माच्छान्तिं प्रयच्छ मे
॥
सर्व्वदेवमयीं देवीं सर्व्ववेदमयीन्तथा ।
सर्व्वलोकनिमित्ताय सर्व्वलोकमपि स्थिराम्
।
प्रयच्छामि महाभागामक्षयाय सुखाय च ॥”
इत्युच्चार्य्य उत्सृजेत् । प्रतिग्रहे पुच्छधार-
णम् ॥ १४ ॥ हिरण्यस्याग्निर्द्देवता दीर्घायुः-
प्राप्तिः फलम् ॥ १५ ॥ रजतस्य चन्द्रमा देवता
उत्तमरूपप्राप्तिः फलम् ॥ १६ ॥ इति शुद्धि-
दक्षिणा गोशतविभागाय श्रौतकात्यायनोऽपि ।
अथ द्वादश द्वादश आद्येभ्यः षट् षट् द्वितीयेभ्य-
श्चतस्रश्चतस्रस्तृतीयेभ्यस्तिस्रस्तिस्र इतरेभ्यः ।
इत्यत्र षोडशर्त्विजां चतुरश्चतुरः कृत्वा चत्वारो
वर्गाः । इति मलमासतत्त्वम् ॥ * ॥ एषां
ऋत्विजां नामानि यथा ब्रह्मा १ ब्राह्म-
णाच्छंसी २ आग्निध्रः ३ पोता ४ । एते सार्व्व-
वेदीयाः । होता ५ मैत्रावरुणः ६ अच्छावाक् ७
ग्रावस्तोता ८ । एते ऋग्वेदिनः । अधर्य्युः ९
प्रतिप्रस्थाता १० नेष्टा ११ उन्वेता १२ । एते
याजुषाः । उद्गाता १३ प्रस्तोता १४ प्रतिहर्त्ता
१५ सुब्रह्मण्यः १६ । एते सामगाः । इति महा-
भारते मोक्षधर्म्मे १०५ अध्याये नीलकण्ठटीका

**षोडशाशुः**, पुं, (षोडश अंशवो यस्य ।) शुक्रः ।
इति शब्दमाला ॥ षोडशकिरणयुक्ते, त्रि

| | | |
|---|---|---|
| मावाह्य गन्धादिभिः पूजयेत् । इति तन्त्रसारः ॥<br>**षोडशदानं**, क्ली, (षोडशप्रकारं दानम् ।)<br>श्राद्धादौ षोडशप्रकारदेयद्रव्यम् । तत्क्रममाहुः साम्प्रदायिकाः ।<br>"भूम्यामनं जलं वस्त्रं प्रदीपोऽन्नं ततः परम् ।<br>ताम्बलच्छत्रगन्धाश्च माल्यं फलमतः परम् ॥<br>शय्या च पादुका गावः काञ्चनं रजतं तथा ।<br>दानमेतत् षोडशकं प्रेतमुद्दिश्य दीयते ॥" | | |

**षोडशाङ्गः**, पुं, (षोडश द्रव्याणि अङ्गानि यस्य ।)

षोडशप्रकारसुगन्धिद्रव्यमिश्रितधूपः। यथा, --
"गुग्गुलुं सरलं दारु पत्रं मलयसम्भवम् ।
ह्रीवेरमगुरुं कुष्ठं गुडं सर्ज्जरसं घनम् ॥
हरीतकीं नखीं लाक्षां जटामांसीञ्च शैलजम् ।
षोडशाङ्गं विदुर्धूपं दैवे पैत्र्ये च कर्म्मणि ॥"
इति तन्त्रसारः ॥
षोडशावयवयुक्ते, त्रि ॥

**षोडशाङ्घ्रिः**, पुं, (षोडश अङ्घ्रयो यस्य ।) कर्कटः ।

इति हेमचन्द्रः ॥ षोडशचरणयुक्ते, त्रि ॥

**षोडशारं**, क्ली, (षोडश अराणि इव दलानि

यस्य ।) षोडशदलपद्मम् । यथा, तन्त्रे ।
"आधारे लिङ्गनाभौ हृदयसरसिजे तालुमूले
ललाटे
द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्द्धे
चतुष्के ।
वासान्ते वादिलान्ते ड-फ-क-ठ-सहिते कण्ट-
देशे स्वरणां
हक्षौ कोदण्डमध्ये सकलदलगतं वर्णरूपं
नमामि ॥"
जलाशयोत्सर्गीयवेदिकोपरिकर्त्तव्यचक्रम् ।
यथा,
मत्स्यपुराणे ।
"रजसा मण्डलं कुर्य्यात् पञ्चवर्णेन तत्त्ववित् ।
षोडशारं भवेच्चक्रं पद्मगर्भं चतुर्म्मुखम् ॥
चतुरस्रन्तु परितो वृत्तं मध्ये गुणोत्तरम् ।
वेद्याश्चोपरि तत् कृत्वा ग्रहाल्लोकपतींस्तथा ।
विन्यसेन्मन्त्रतः सर्व्वान् प्रतिदिक्षु विचक्षणः ॥"
इति जलाशयोत्सर्गतत्त्वम् ॥

**षोडशार्च्चिः**, [स्] पुं, (षोडश अर्च्चींषि यस्य ।)

शुक्रग्रहः । इति भूरिप्रयोगः ॥ षोडशशिखा-
युक्ते, त्रि ॥

**षोडशावर्त्तः**, पुं, (षोडश आवर्त्ता यस्य ।) शङ्खः ।

इति हेमचन्द्रः ॥ षोडशावर्त्तनयुक्ते, त्रि ।

**षोडशिकाम्रं**, क्ली, पलपरिमाणम् । इति वैद्यक-

परिभाषा ॥

अस्यार्थः चन्द्रान्तं हकारः । वारुणान्तं
शकारः । शक्रादी रेफः । वामाक्षि
ईकारः ।
विद्यादौ पुर्व्वोक्तद्वादशविद्यादौ ।
"वेदादिमण्डिता देवि शिवशक्तिमयी
सदा ।
तदा भेदास्तु सकलाः षट्कूटा
परमेश्वरि ।
वैष्णवी नवकूटा स्यात् सप्तकूटा च
शाङ्करी ॥"
अस्यार्थः शिवशक्तिमयी पूर्व्वोक्ता
बीजद्वय-
वती । वेदादिः प्रणवः । मण्डिता आदौ
भूषिता ॥ * ॥ अथ महाषोडशी ।
"आद्यवीजद्वयं भद्रे विपरीतक्रमेण हि ।
विलिख्य परमेशानि ततोऽन्यानि
समुद्धरेत् ॥
अन्तर्म्मुखी वरारोहे कुमारी त्रिपुरेश्वरी ।
एभिस्तु पञ्चसंख्याकैर्बीजैः संपुटितां
यजेत् ॥
षट्कूटां परमेशानि विद्येयं षोडशाक्षरी ।
त्रिकूटाः सफला भद्रे षोडशार्णा भवन्ति
हि ।
वैष्णव्येकोनविंशार्णा शैवी सप्तदशाक्षरी
॥"
अस्यार्थः । आद्यबीजद्वयं
मायारमात्मकम् ।
विपरीतक्रमः आदौ रमा पश्चान्माया ।
अन्तर्मध्य स्थितं कामबीजं मुखे आदौ
यस्याः
कुमार्य्याः । एभिः पञ्चसंख्याकैर्बीजैः
षट्कूटां
सप्तकूटां नवकूटां वा संपुटितां संपुटवत्
कृतां तेनांनुलोमविलोमतः
संपुटितामित्यर्थः ।
योगिनीतन्त्रे ।
"श्रीबीजमायास्मरयोनिशक्ति-
स्तारञ्च माया कमलाथ विद्या ।
शक्त्यादिबीजैश्च विलोमतोक्त्या

ततः स्वात्मविशुद्ध्यर्थं लक्षमेकं
जपेद्गुरुः ॥" * ॥
बीजषोडशीमाह । सिद्धयामले ।
कामो माया रमा बाला त्रिकूटा स्त्री
भगा-
ङ्कुशौ ।
काली कामकला कूर्च्चं सर्व्वादौ प्रणवः
प्रिये ॥
श्रीमहाषोडशीयञ्च या ख्याता भुवनत्रये
।
ज्ञानेन मृत्युहा विद्या
सर्व्वाम्नायैर्नमस्कृता ॥
सप्तलक्षमहाविद्यास्तन्त्रादौकथिताः
प्रिये ।
सारात्सारतरा भूता या या विद्याः
सुगोपिताः ॥
बहुना किमिहोक्तेन तासां सारा तु
षोडशी ।
प्रकाशिता महादेवी या पृष्टा ते पुनः
पुनः ॥" *
शाक्तकामराजन्तु श्रीक्रमे ।
"मायाबीजं तथा झिण्टी कामं शक्रं
वियत्
क्रमात् ।
जातवेदो मृगाङ्केन लाञ्छितं परमेश्वरी
॥
एतद्वाग्भवकूटञ्च पूर्व्ववत् कामराजकम्
।
तथैव शक्तिबीजन्तु सुन्दर्य्येषा
प्रकीर्त्तिता ॥"
अत्रापि पूर्व्ववद्वीजसंयोगः । माया
ईकारः ।
झिण्टी एकारः । पुनः शाक्तमाह ।
"एतद्वर्गं ततो माया ब्रह्मा शक्रो
हरोऽग्निना
वामनेत्रेण संयुक्तो नादबिन्दुविभूषितः ।
एतद्वाग्भवमुद्दिष्टं पूर्व्ववत् कामशक्तिकम्
॥"

**षोडशी**, [न्] पुं, यज्ञपात्रविशेषः । यथा अति-

रात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं
गृह्णातीति । षोडशी ससोमकपात्रविशेषः ।
इति मलमासतत्त्वम् ॥

**षोडशी**, स्त्री, द्वादशमहाविद्यान्तर्गतविद्या-

विशेषः । यथा, --
"काली तारा महाविद्या षोडशी भुवनेश्वरी ।
भैरवी छिन्नमस्ता च विद्या धूमावती तथा ॥
वगला सिद्धविद्या च मातङ्गी कमलात्मिका ।
एता दश महाविद्याः सिद्धविद्याः प्रकीर्त्तिताः ॥"
तत्र पारिभाषिकीं षाडशीमाह ज्ञानार्णवे ।
"चन्द्रान्तं वारुणान्तञ्च शक्रादिमहितं पृथक् ।
वामाक्षिबिन्दुनादाढ्यं विश्वमातृकलात्मकम् ॥
विद्यादौ योजयेद्देवि साक्षात् जाग्रत्स्वरूपिणी ।
विकुटाः सकला भेदाः पञ्चकूटा भवन्ति हि ।
वैष्णवी वसुकूटा स्यात् षट्कूटा शाङ्करी
भवेत् ॥"

श्रीषोडशीयञ्च शिवप्रदिष्टा ॥"
तथा च रुद्रयामले ।
"श्रीर्म्माया मदनो वाणी परा तारं
शिवप्रिया ।
हरिप्रिया त्रिकूटा सा परा वाणी मनोभवः
।
मातालक्ष्मीर्म्महाविद्या श्रीबीजं षोडशी
परा ॥"
अथ बीजावली षोडशी । रुद्रयामले ।
"श्रीबीजमाये संलिख्य तथैव च
कुमारिकाम् ।
श्रीबीजमाये कामञ्च वाङ्माया कमला
तथा ॥
परां कामञ्च वाग्बीजं माया श्रीबी जमेव
च ।
बीजावली षोडशीयं सर्व्वतन्त्रेषु गोपिता
॥
राज्यं देयं शिरो देयं न देया षोडशाक्षरी
॥" * ॥
तन्त्रान्तरे ।
"आद्या कुण्डलिनी शक्तिः शक्तिराद्या
ततः परा
निवेशयेत्तयोर्म्मध्ये देवि गोविन्दवल्लभाम्
॥
ततस्तु मन्मथं बीजं श्रीबीजं तदनन्तरम्
।
हृल्लेखा रभयोर्वक्त्रे वेदवक्त्रं
विनिःक्षिपेत् ॥
ततो लोपा न्यसेद्देवि त्रिकूटामथवा
पराम् ।
आद्यानि पञ्चबीजानि पश्चाद्विन्यस्य
सुन्दरि ।
षोडशीयं सुगोप्या हि स्नेहाद्देवि
प्रकाशिता ॥
अस्या माहात्म्यमतुलं
जिह्वाकोटिशतैरपि ।
वक्तुं न शक्यते देवि किं पुनः
पञ्चभिर्मुखैः ॥
अपि प्रियतमं देयं सुतदारधनादिकम् ।
राज्यं देयं शिरो देयं न देया षोडशाक्षरी
॥"

भग एकारः । अत्रापि पूर्व्ववद्बीजसंयोगः
। अत्र
विशेषः ।
"ब्रह्मबीजं यदा दद्यात् त्रिकूटेषु वरानने
।
प्रथमा सुन्दरी देवी द्वितीया ब्रह्मसुन्दरी
॥
शक्तिकूटे महेशानि अनन्तसुन्दरी मता
।
एषा तु सुन्दरी विद्या मतभेदेन दर्शिता
॥
त्रिकूटान्ते हंसवीजं बिन्दुसर्गविभूषितम्
।
एषा श्रीप्राणसंयुक्ता
दारिद्र्यदुःखमोचिनी ॥"
इति तन्त्रसारः ॥ * ॥
ऊनविंशतिपिण्डदानक्रिया । यथा, --
प्रेतशिलोक्तरीत्या द्वादशपिण्डान्
षोडशी-
पिण्डांश्च दद्यात् । इति
तीर्थयात्राप्रयोगतत्त्वम्
तद्विधानं यथा, --
"अमावस्यान्तु कन्यार्के तीर्थप्राप्तौ
तथा नृप
कृत्वा श्राद्धं विधानेन दद्यात्
षोडशपिण्डकम् ॥
वायुपुराणीयस्तत्प्रयोगो यथा ।
ऊनविंशति-
दास्यमानप्रिण्डस्थानानियथादक्षिणं
भाग-
चतुष्टयेन कृतानि तत्र दक्षिणाग्रान्
कुशान्
आस्तीर्य्य ।
"अस्मत्कुले मृता ये च गतिर्येषां न
विद्यते ।
आवाहयिष्ये तान् सर्व्वान् दर्भपृष्ठे
तिलोदकैः ॥
मातामहकुले ये च गतिर्येषां न विद्यते ।
आवाहयिष्ये तान् सर्व्वात् दर्भपृष्ठे
तिलोदकैः
बन्धुवर्गकुले ये च गतिर्य्येयां न विद्यते ।

| | | |
|---|---|---|
| | तन्त्रान्तरे ।<br>“सिन्दूररजसा वापि कुङ्कुमेन विलेपिते ।<br>लिखित्वा दर्शयेद्भूमौ न च कर्णे प्रकाशयेत् ॥ | आवाहयिष्ये तान् सर्व्वान् दर्भपृष्ठे तिलोदकैः ॥”<br>इत्येतैस्तिलोदकैरावाह्य ।<br>“आब्रह्मस्तम्बपर्य्यन्तं देवर्षिपितृमानवाः ।<br>तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥<br>अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ।<br>आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम ।” |

इत्येताभ्यां तिलोदकाञ्जलीन् दद्यात् । ततो मू-
लादितः पितृतीर्थेन पिण्डान् दद्यात् । तत्र क्रमः
“अस्मत्कुले मृता ये च गतिर्येषां न विद्यते ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ १ ॥
मातामहकुले ये च गतिर्येषां न विद्यते ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ २ ॥
बन्धुवर्गकुले ये च गतिर्येषां न विद्यते ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ३ ॥
अजातदन्ता ये केचित् ये च गर्भे प्रपीडिताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ४ ॥
अग्निदग्धाश्च ये केचिन्नाग्निदग्धास्तथा परे ।
विद्युच्चौरहता ये च तेभ्यः पिण्डं ददाम्यहम् ॥ ५
दावदाहे मृता ये च मिंहव्याघ्रहताश्च ये ।
दष्ट्रिभिः शृङ्गिभिर्व्वापि तेभ्यः पिण्डं ददा-
म्यहम् ॥ ६ ॥
उद्बन्धनमृता ये च विषशस्त्रहताश्च ये ।
आत्मापघातिनो ये च तेभ्यः पिण्डं ददाम्यहम् ॥ ७
अरण्ये वर्त्मनि वने क्षुधया तृषया हताः ।
भूतप्रतपिशाचाश्च तेभ्यः पिण्डं ददाम्यहम् ॥
वने जले ॥ ८ ॥
रौरवे चान्धतामिस्रे कालसूत्रे च ये स्थिताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ९ ॥
अनेकयातनासंस्थाः प्रेतलोके च ये गताः ।
जन्मान्तरे ये मम दासभूता-
स्तेभ्यः स्वधा पिण्डमहं ददानि ॥ १९ ॥
अत्रोनविंशतिपिण्डे षोडशपिण्डत्वं पारिभाषिकं पञ्चाम्रवत् । इति तिथ्यादितत्त्वम् ॥ * ॥ एतेषां मन्त्राणां स्त्रीलिङ्गोहेन स्त्रीषोडशीत्वं भवति ॥ *
अथ मातृषोडशी ।
“गर्भादवगमे चैव विषमे भूमिवर्त्मनि ।
तस्या निष्क्रमणार्थाय मातृपिण्डं ददाम्यहम् ॥
मासि मासि कृतं कष्टं वेदना प्रसवेषु च ।
तस्या निष्क्रमणार्थाय मातृपिण्डं ददाम्यहम् ॥
शैथिल्ये प्रसवे चैव मातुरत्यन्तदुष्करम् ।
तस्या निष्क्रमणार्थाय मातृपिण्डं ददाम्यहम् ॥
पद्भ्यां जनयते मातुर्दुःखञ्चैव सुदुस्तरम् ।
तस्या निष्क्रमणार्थाय मातृपिण्डं ददाम्यहम् ॥
पद्भ्यामित्यत्र दद्भ्यामिति च पाठः ॥ ४ ॥
अग्निना शोषते देहं त्रिरात्रानशनेषु च ।
तस्या निष्क्रमणार्थाय मातृपिण्डं ददाम्यहम् ॥
पिबेच्च कटुद्रव्याणि क्लेशानि विविधानि च ।
तस्या निष्क्रमणार्थाय मातृपिण्डं ददाम्यहम् ॥
दुर्ल्लभं भक्षद्रव्यस्य त्यागे विन्दति यत् फलम् ।
तस्या निष्क्रमणार्थाय मातृपिण्डं ददाम्यहम् ॥
रात्रौ मूत्रपुरीषाभ्यां भिद्यते मातृकर्पटम् ।
तस्या निष्क्रमणार्थाय मातृपिण्डं ददाम्यहम् ॥
पुत्त्रं व्याधिसमायुक्तं मातृदुःखमहर्निशम् ।
तस्या निष्क्रमणार्थाय मातृपिण्डं ददाम्यहम् ॥
यदा पुत्त्रो न लभते तदा मातुश्च शोचनम् ।
तस्या निष्क्रमणार्थाय मातृपिण्डं ददाम्यहम् ॥
क्षुधयां विह्वले पुत्त्रे ददाति निर्भरं स्तनम् ।
तस्या निष्क्रमणार्थाय मातृपिण्डं ददाम्यहम् ॥
दिवा रात्रौ यदा मातुः शोषणञ्च पुनः पुनः ।
तस्या निष्क्रमणार्थाय मातृपिण्डं ददाम्यहम् ॥
पूर्णे तु दशमे मासि मातुरत्यन्तदुष्करम् ।
तस्या निष्क्रमणार्थाय मातृपिण्डं ददाम्यहम् ॥
गात्रभङ्गो भवेन्मातुस्तृप्तिं नैव प्रयच्छति ।
तस्या निष्क्रमणार्थाय मातृपिण्डं ददाम्यहम् ॥
अल्पाहारवती माता यावत् पुत्त्रोऽस्ति बालकः
तस्या निष्क्रमणार्थाय मातृपिण्डं ददाम्यहम् ॥
यमद्वारे महाधीरे पथि मातुश्च शोचनम् ।
तस्या निष्क्रमणार्थाय मातृपिण्डं ददाम्यहम् ॥
संख्याया धाच्प्रकारे । इति सूत्रेण षष्शब्दात्
धाच्प्रत्ययेन निपातनान्निष्पन्नम् । इति मुग्ध-
बोधव्याकरणम् ॥

**षोढान्यासः**, पुं, (षोढा षड्धा न्यासः ।) विधिना
शरीरे मन्त्रविन्यासः । यथा । अथ षोढान्यासः ।
तदुक्तं वीरतन्त्रे ।
“केवलां मातृकां कृत्वा मातृकां तारसंपुटाम् ।
मातृकापुटितं तारं न्यसेत् साधकसत्तमः ॥ १ ॥
श्रीबीजपुटितां तान्तु मात्कापुटितन्तु तत् ॥ २
कामेन पुटितां देवीं तत्पुटं काममेव च ॥ ३ ॥
शक्त्या च पुटितां देवीं शक्तिञ्च तत्पुटां न्यसेत्
क्रीं द्वन्द्वञ्च पुनर्न्यस्त्वा ऋ-ॠ-ऌ-ॡञ्च पूर्ववत् ॥ ५
मूलेन पुटितां देवीं तत्पुटं मन्त्रमेव च ॥ ६ ॥
अनुलोमविलोम्नेन न्यस्त्वा मन्त्रं यथाविधि ।
मूलेनाष्टशतं कुर्य्यात् व्यापकं तदनन्तरम् ॥”
यथा, प्रणवपुटितां मातृकाम् । एवं मातृका-
पुटितं तारम् । एवं श्रीबीजपुटितां ताम् । तत्-
पुटितं श्रीबीजम् । एवं कामेन पुटितां मातृ-
काम् । मातृकापुटितं कामम् । एवं शक्त्या
पुटितां मातृकाम् । मातृकापुटितां शक्तिं

तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥
१० ॥
अनेकयातनासंस्था ये नीता यमकिङ्करैः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥
११ ॥
नरकेषु समस्तेषु यातनासु च ये स्थिताः ।
तेषामुद्धरणार्थायि इमं पिण्डं ददाम्यहम् ॥
१२ ॥
पशुयोनिगता ये च पक्षिकीटसरीसृपाः ।
अथवा वृक्षयोनिस्थास्तेभ्यः पिण्ड
ददाम्य-
हम् ॥ १३ ॥
जात्यन्तरसहस्रेषु भ्रमन्तः स्वेन कर्म्मणा
।
मानुष्यं दुर्ल्लभं येषां तेभ्यः पिण्डं
ददाम्यहम् ॥ १४
दिव्यन्तरीक्षभूमिष्ठाः पितरो बान्धवादयः
।
मृता असंस्कृता ये च तेभ्यः पिण्डं
ददाम्य-
हम् ॥ १५ ॥
ये केचित् प्रेतरूपेण वर्त्तन्ते पितरो मम ।
ते सर्व्वे तृप्तिमायान्तु पिण्डदानेन सर्वदा ॥
१६
येऽबान्धवा बान्धवा वा येऽन्यजन्मनि
बान्धवाः ।
तेषां पिण्डो मया दत्तः अक्षय्यमुपतिष्ठताम्
॥ १७
पितृवंशे मृता ये च मातृवंशे च ये मृताः ।
गुरुश्वशुरबन्धूनां ये चान्ये बान्धवा मृताः
॥
ये मे कुले लुप्तपिण्डाः पुत्तदारविवर्ज्जिताः
।
क्रियालोपगता ये च जात्यन्धाः
पङ्गवस्तथा ॥
विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले
मम ।
तेषां पिण्डो मया दत्तः अक्षय्यमुपतिष्ठताम्
॥ १८
आब्रह्मणो ये पितृवंशजाता
मातुस्तथा वंशभवा मदीयाः ।

इति गयायां प्रसिद्धिः ॥

**षोडशोपचारः**, पुं, (षोडशप्रकार उपचारः ।)

षोडशप्रकारपूजाद्रव्यम् । यथा, --
“आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ।
मधुपर्काचमनस्नानवसनाभरणानिच ॥
सुगन्धिसुसनोधूपदीपनैवेद्यवन्दनम् ।
प्रयोजयेदर्च्चनायां उपचारांस्तु षोडश ॥”
इति तन्त्रसारः ॥

**षोढा**, व्य, (षष् + धाच् । पृषोदरादित्वात् साधु ।

षट्प्रकारम् । यथा, --
“सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा ।
निर्व्वाहकैककार्य्यत्वे षोढा सङ्गतिरिष्यते ॥”
इत्यनुमितौ जागदीशी टीका ॥

न्यसेत् । तथा क्रीं द्वन्द्वञ्च ऋ-ॠ-ऌ-
ॡञ्च पूर्व-
वत् । तत्पुटितां मातृकां न्यसेत् ।
मातृकापुटि
तञ्च तत् । मन्त्रपुटितां मातृकाम् ।
तत्पुटितं
मन्त्रम् । पुनरनुलोमविलोमेन केवलं
मातृका-
स्थाने न्यस्य मूलेनाष्टशतेन व्यापकं
कुर्य्यात् ।
अयं न्यासस्ताराया अपि कार्य्यः ।
“इति गुप्तेन दुर्गाया अङ्गषोढा
प्रकीर्त्तिता ।
तारायाः कालिकायाश्च उन्मुख्याश्च
तथा-
परे ।
एतस्मिन् न्यासवर्य्ये च सर्व्वं पापं
प्रणश्यति ॥”
इति तन्त्रसारः ॥

**ष्टक**, म प्रतीघाते । इति कविकल्पद्रुमः ॥
(भ्वा०

पर०-सक०-सेट् ।) म, तिष्टकयिषति
। इति
दुर्गादासः ॥

**ष्टग**, म ए संवृतौ । इति कविकल्पद्रुमः ॥
(भ्वा०-

पर०-सक०-सेट् ।) म, तिष्टगयिषति ।
दन्त्य-
वर्गद्वितीयोपध इति केचित् । इति
दुर्गा-
दासः ॥

**ष्टन**, मि शब्दे । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-अक०-सेट् ।) मि, स्तनयति
स्तानयति
अतिष्टनत् । इति दुर्गादासः ॥

**ष्टभ**, इ ङ स्तम्भे । इति कविकल्पद्रुमः ॥
(भ्वा०-

आत्म०-अक०-सक०-चसेट् ।) इ,
स्तम्भ्यते । ङ,

| | | |
|---|---|---|
| कुलद्वये य मम दासभूता<br>भृत्यास्तयैवाश्रितसेवकाश्च ॥<br>मित्राणि सख्यः पशवश्च वृक्षा<br>दृष्टा ह्यदृष्टाश्च कृतोपकाराः । | | स्तम्भते । तिष्टम्भयिषति । इकारस्य<br>पुनरुक्तिः<br>पूर्व्वत्र तत्सम्बन्धनिषेधायैव<br>ङितस्तुसर्वे । एक<br>एवेत् पाठबलात् वाध्य इति वत् ।<br>स्तम्भो जडी<br>भावः जडीकरणञ्च । स्तम्भौ<br>स्थूणाजडीभावौ<br>इत्यमरोक्तेः । शीतेनावस्तब्धः<br>जडीकृत इत्यर्थः ।<br>इति क्रमदीश्वरोक्तेश्च । स्तम्भ इह<br>क्रिया<br>निरोधः । इति भीमः । दीषवृद्धिरिति<br>गोविन्द<br>भट्टः । स्तम्भो रुद्धीकरणञ्च ।<br>स्तम्भते कबाटेन<br>द्वारं लोकः । इति दुर्गादासः ॥ |

**ष्टम**, वैक्लव्ये । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
अक०-सेट् ।) वैक्लव्यं विह्वलीभावः । स्तमति ।
अतिष्टमत् । इति दुर्गादासः ॥

**ष्टम**, त् क वैक्लव्ये । इति कविकल्पद्रुमः ॥ (अदन्त
चुरा०-पर०-अक०-सेट् ।) मूर्द्धन्यादिः । षोप-
देशपाठो भ्वाद्यादीति दन्त्यत्वे कृतसकारादि-
त्वात् षत्वार्थः । तिष्टमयिषति । एवं सर्वत्र ।
इति दुर्गादासः ॥

**ष्टिघ**, न ङ आस्कदि । इति कविकल्पद्रुमः ॥
(स्वा०-आत्म०-सक०-सेट् ।) आस्कत् आस्क-
न्दनम् । अभियोग इति भट्टमल्लः । न ङ,
स्तिघ्नुते नदीं पान्थः । तिष्टिघे । इति दुर्गा-
दासः ॥

**ष्टिप**, ऋ ङ श्च्युति । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-अक०-सेट् ।) ऋ, अतिष्टेपत् । ङ,
स्तेपते तिष्टेपे । श्च्युति क्षरणे । इति
दुर्गादासः ॥

**ष्टिम**, य क्लेदे । इति कविकल्पद्रुमः ॥ (दिवा०-
पर०-अक०-सेट् ।) य, स्तिम्यति तिष्टेम । क्लेदः
आर्द्रभावः । इति दुर्गादासः ॥

**ष्टीम**, य क्लेदे । इति कविकल्पद्रुमः ॥ (दिवा०-
पर०-अक०-सेट् ।) य, ष्टीम्यति तिष्टीम । क्लेद
आर्द्रभावः । इति दुर्गादासः ॥

**ष्टु**, ञ ल स्तुतौ । इति कविकल्पद्रुमः ॥ अदा०-
उभ०-सक०-अनिट् ।) मूर्द्धन्यादिः । ञ ल,
स्तौति स्तवीति स्तुते । इति दुर्गादासः ॥

**ष्टुच**, ङ प्रसादे । इति कविकल्पद्रुमः ॥ (भ्वा०-

**ष्टृह**, ऊ श वधे । इति कविकल्पद्रुमः ॥ (तुदा०-
पर०-सक०-वेट् ।) मूर्द्धन्यादिः तमध्यः । ऊ,
अस्तर्हीत् । अस्तृक्षत् । श, स्तृहती स्तृहन्ती ।
तिष्टर्हयिषति । इति दुर्गादासः ॥

**ष्टॄह**, ऊ श वधे । इति कविकल्पद्रुमः ॥ (तुदा०-
पर०-सक०-वेट् ।) मूर्द्धन्यादिः तमध्यः । अष्ट-
मस्वरी । ऊ, अस्तृहीत् अस्तृक्षत् । श स्तृहती
स्तृहन्ती । तिष्टॄहयिषति । इति दुर्गादासः
॥

**ष्टेप**, ऋ ङ श्च्युति । इतिकविकल्पद्रुमः ॥ (भ्वा०
आत्म०-अक०-सेट् ।) ऋ, अतिष्टेपत् । ङ,
स्तेपते तिष्टेपे । श्च्युति क्षरणे । इति दुर्गा-
दासः ॥

**ष्ट्यूमः**, पुं, चन्द्रः । दीप्तिः । इति केचित् ॥

**ष्ट्यै**, संहतौ । ध्वनौ । इतिकविकल्पद्रुमः ॥ (भ्वा०
पर०-अक०-अनिट् ।) अन्तःस्थाद्ययुक्तदन्त्य-
वर्गाद्यमध्यः षयोगात् टः । तेन तष्ट्यौ । तष्ट्या-
सति । ताष्ट्यायते । संहतिः समूहः । ष्ट्यायति
लोकः एकत्र समूहायते शब्दायते वा इत्यर्थः ॥
दन्त्यविधौ ष्ट्यैष्वक्कष्ठिवां वर्ज्जनान्न दन्त्यः । इति
दुर्गादासः ॥

**ष्ठग**, म ए संवृतौ । इति कविकल्पद्रुमः ॥ (भ्वा
पर०-अक०-सेट् ।) मूर्द्धन्यादिस्थमध्यः षयोगात्
तदस्य सर्वसम्मतत्वाभावात् । निरास इह फुत-
कार इति भट्टमल्लः । मुखेन श्लेष्मादेर्वमन-
मिति केचित् । ष्ठीवत्यन्नं लोकः । ष्ठीवासि
शुष्केक्षुलतास्थिकल्पम् । इति दुर्गादासः ॥

**ष्णस**, य लृ उ मि निवासे । इति कविकल्पद्रुमः ।
(दिवा०-पर०-अक०-सेट् । क्त्वावेट् ।) मूर्द्ध-
न्यादिर्दन्त्यनकारयुक्तः । ष, स्नस्यति । लृ,
अस्नसत् । उ, स्नसिता स्नुस्त्वा । मि, स्नसयति
स्नासयति । इति दुर्गादासः ॥

**ष्णा**, ल शोधने । इति कविकल्पद्रुमः ॥ (अदा०
पर०-अक०-अनिट् ।) मूर्द्धन्यादिरयम् ।
दन्त्यादिरयमिति कश्चित् । ल, स्नाति गङ्गायां
धीरः । अनुपसर्गस्य ञौ ज्वलह्वलेत्यादिना
ह्रस्वो वा स्नपयति स्नापयति । सोपसर्गस्य तु
प्रस्नापयति । इति दुर्गादासः ॥

**ष्णिह**, ऊ य लृ ञि प्रीतौ । इति कविकल्पद्रुमः ॥
(दिवा०-पर०-अक०-वेट् ।) ऊ, स्नेहिष्यति
स्नेक्ष्यति । य, स्निह्यति बन्धुः । लृ, अस्नि-
हत् । ञि, स्निग्धः स्नीढोऽस्ति । इति दुर्गा-
दासः ॥

**ष्णिह**, क स्नेहने । इति कविकल्पद्रुमः ॥ (चुरा०
पर-अक०-सेट् ।) स्नेहनं स्निग्धीभावः । क,
स्नेहयति वर्त्तिका तैलेन । इति दुर्गादासः
॥

आत्म०-सक०-सेट् ।) मूर्द्धन्यादिस्तमध्यः ।
प्रसादः प्रसन्नीभावः । ङ, स्तोचते जनं तोष्टु-
च्यते । षस्याधो मूर्द्धन्यण इति केचित् । स्नोचते
मोस्नुच्यते । इति दुर्गादासः ॥

**ष्टुभ**, उ ङ स्तम्भे । इति कविकल्पद्रुमः ॥ (भ्वा०

आत्म०-अक०-सक० च-सेट् । क्त्वावेट् ।) उ,
स्तोभित्वा । स्तुब्ध्वा । ङ, स्तोभते तुष्टोभयि-
षति । स्तम्भो जडीभावः तत्करणञ्च । स्तम्भौ
स्थूणाजडीभावावित्यमरोक्तेः । शीतेनावस्तब्धो
जडीकृत इत्यर्थः । इति क्रमदीश्वरोक्तेश्च ।
"शास्त्रेण स्तोभते भूयो लघुप्रकृतिको नरः ।"
इति हलायुधः ।
स्तोभते वृषं शीतो वायुः । इति चतुर्भुजः ।
स्तम्भ इह क्रियानिरोधः । इति भीमः । दोष-
वृद्धिरिति गोविन्दभट्टः । इति दुर्गादासः ।

**ष्टूप**, क उच्छ्राये । इति कविकल्पद्रुमः ॥ (चुरा०-

पर०-सक०-सेट् ।) षष्ठस्वरी । उच्छ्रायो
राशीकरणम् । क, स्तूपयति धान्यं कृषकः ।
तुष्टूपयिषति । इति दुर्गादासः ॥

**ष्टूप**, य इर् उच्छ्राये । इति कविकल्पद्रुमः ॥

(दिवा०-पर०-सक०-सेट् ।) षष्ठस्वरी । य,
स्तूप्यति । इर्, अस्तूपत् अस्तूपीत् । पुषादित्वा-
न्नित्यं ङ इत्यन्ये । अतुष्टूपत् । इति
दुर्गादासः ॥

**ष्टृक्ष**, गमने । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०

सक०-सेट् ।) सप्तमस्वरयुक्तः तमध्यः । स्तृक्षति
तरीष्टृक्ष्यते । इति दुर्गादासः ॥

ठः । म, तिष्ठगयिषति । ए, अस्थगीत् । दन्त्य-
वर्गप्रथममध्यः इति केचित् । तिष्ठगयिषति
अतिष्ठगत् । इति दुर्गादासः ॥

**ष्ठल**, ज स्थितौ । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-अक०-सेट् ।) ज, स्थालः स्थलः । स्थलति
लोकस्तिष्ठतीत्यर्थः । इति दुर्गादासः ॥

**ष्ठा**, ञि स्थाने । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-अक०-अनिट् ।) ञि, स्थितोऽस्ति । स्थानं
गतिनिवृत्तिः । तिष्ठति साधुर्धर्मे । पृष्ठतस्तिष्ठ-
मान इति वीरचरिते प्रकाशार्थे आत्मनेपद-
विधानात् शानः । अथवा ताच्छील्ये शतुः
शानः । इति दुर्गादासः ॥

**ष्ठिव**, उ निरासे । इति कविकल्पद्रुमः ॥ (भ्वा०

पर०-सक०-सेट् । क्त्वावेट् ।) उ, ष्ठेवित्वा
ष्ठ्युत्वा । अस्य नेम् ङीश्वी इत्यादिना इमो
निषेधे निष्ठायां ष्ठ्यूत इति भेदः । निरास इह
फुत्कार इति भट्टमल्लः । मुखेन श्लेष्मादेर्वमन-
मिति केचित् । इति दुर्गादासः ॥

**ष्ठिव**, य निरासे । इति कविकल्पद्रुमः ॥ (दिवा०

पर०-सक०-सेट् ।) य, ष्ठीव्यति । इति दुर्गा-
दासः ॥

**ष्ठीव**, निरासे । इति कविकल्पद्रुमः ॥ (भ्वा०
पर०-

सक०-सेट् ।) ष्ठीवति । यं ह्स्विनं मत्वा
ष्ठिवुक्लमाचमोऽपीति दीर्घिणं विदधामः स

**ष्णु**, ञ ल स्तुतौ । इति कविकल्पद्रुमः ॥ (अदा०

उभ०-सक०-अनिट् ।) ञ ल, स्तौति स्तवीति
स्तुते । इति दुर्गादासः ॥

**ष्णुच**, ङ सेचने । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-सक०-सेट् । स्नोचते सुष्णुचे । इति
दुर्गादासः ॥

**ष्णुम**, य भक्षे । इति कविकल्पद्रुमः ॥ (दिवा०

पर०-सक०-सेट् ।) दन्त्यनकारयुक्तः । य,
स्नुम्यति सुष्णोम । इति दुर्गादासः ॥

**ष्णुह**, य ऊ लृ उद्गारे । इति कविकल्पद्रुमः ॥

(दिवा०-पर०-सक०-वेट् ।) दन्त्यनकारयुक्तः ।
उद्गारो वान्तिः । य, स्नुह्यत्यन्नं लोकः । ऊ,
स्नोहिष्यति स्नोक्ष्यति । लृ, अस्नुहत् । इति
दुर्गादासः ॥

**ष्णै**, वेष्टे । इति कविकल्पद्रुमः (भ्वा०-पर०-सक०

अनिट् ।) प्रकृत्या दन्त्यवर्गशेषोपधः । स्नायति
वृक्षं लता । अनुपसर्गस्य ञौ ज्वलह्वलेत्यादिना
ह्रस्वो वा । स्नपयति स्नापवति । सोपसर्गस्य
तु प्रस्नापयति । इति दुर्गादासः ॥

**ष्मि**, ङ स्मिते । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-अक०-अनिट् । स्मितमीषद्धास्यम् ।
ङ, स्मयते बधूः । विस्मापयते । इति दुर्गा-
दासः ॥

**ष्वक्क**, ङ सर्पणे । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-सक-सेट् ।) वकारयुक्तादिः कोपधः ।

| | | |
|---|---|---|
| | एवायं ष्ठीविष्यति इत्यादिसाधनाय दीर्घो पठ्यते । तेन ह्रस्विनो ग्रहणेनास्मिन् गृहीते भ्वाद्यादि ष्णः स्न इत्यादिना मूर्द्धन्यषस्य दन्त्य- सो न स्यात् एवं ष्ठिवजाद्योः खेरित्यादिना खेष्ठ- कारस्य तकारे तिष्ठीव टिष्ठीवेत्यपि स्यात् । यत्तु सत्यप्यस्मिन्ननटि ष्ठीवनमिति निपातनं | ङ, ष्वक्कते षिष्वक्किषते षाष्वक्क्यते । दन्त्य- विधावस्य वर्ज्जनान्न दन्त्यः । चन्द्रोदयस्तु इमं पञ्चमस्वरिणं मत्वा षुक्कते षुषुक्किषते षोषुक्क्यते इत्याह ॥ इति दुर्गादासः ॥ |

**ष्वद**, क स्वादे । छेदे । इति कविकल्पद्रुमः ॥

(चुरा०-पर०-सक०-सेट् ।) स्वादो रसो-
पादानम् । क, स्वादयति क्षीरं लोकः । इति
दुर्गादासः ॥

**ष्वद**, ङ प्रीतिलिहोः । इति कविकल्पद्रुमः ॥

(भ्वा०-आत्म०-अक०-सेट् ।) प्रीतिः प्रीती-
करणम् । लिट् रसोपादानम् । ङ, अपां हि
तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते
तुषारा । इति श्रीहर्षः । इति दुर्गादासः ॥

**ष्वन्ज**, औ ञि ङ आलिङ्गे । इति कविकल्पद्रुमः ॥

(भ्वा०-आत्म०-सक०-अनिट् ।) वकारयुक्तादिः ।
आलिङ्ग आलिङ्गनम् । औ, स्वङ्क्ता । ञि,
स्वक्तोऽस्ति । ङ, स्वजते युवतीं युवा । परि-
ष्वजति पाञ्चाली मध्यमं पाण्डुनन्दनमिति
गणकृतानित्यत्वात् । इति दुर्गादासः ॥

**ष्वप**, औ घ लु ञि शये । इति कविकल्पद्रुमः ॥

(अदा०-पर-अक०-अनिट् ।) वकारयुक्त-
मूर्द्धन्यादिः । औ, अस्वाप्सीत् । घ लु, स्वपिति ।
ञि, सुप्तोऽस्ति । शयः शयनम् । इति दुर्गादासः ॥

**ष्वर्त्त**, क गत्याम् । तङ्के । इति कविकल्पद्रुमः ॥

(चुरा०-पर०-सक०-तङ्के अक०-सेट् ।) वकार-
युक्तमूर्द्धन्यादिः । तङ्को दुःखेन जीवनम् । क,
स्वर्त्तयति जनो गच्छति दुःखेन जीवति
वेत्यर्थः । असिष्वर्त्तत् । इति दुर्गादासः ॥

**ष्विद**, ऌ औ य आ ञि स्विदि । इति कविकल्प-

द्रुमः ॥ (दिवा०-पर०-अक०-अनिट् ।) ऌ,
अस्विदत् । औ, स्वेत्ता । य, स्विद्यति । आ,
स्वेदितं स्विन्नं तेन । ञि, स्विन्नोऽस्ति । स्विदीति
मोहस्नेहमोक्षेष्विति वोपदेवः । गात्रप्रक्षरणे
इति प्राञ्चः । न च स्विद्यति तस्याङ्गमिति
हलायुधः ॥ इति दुर्गादासः ॥

**ष्विद**, ञि आ ङ ऌ मोहस्नेहमोक्षेषु । इति कवि-

कल्पद्रुमः । (भ्वा०-आत्म०-अक०-सेट् ।) ञि,
स्विन्नोऽस्ति ॥ आ, स्वेदितं स्विन्नं तेन । ङ,
स्वेदते तिलः तैलं मुञ्चति इत्यर्थः । ऌ, अस्वि-

**स**

**स**, दन्त्यसकारः । स तु व्यञ्जनद्वात्रिंशवर्णः ।

अस्योच्चारणस्थानं दन्तः । इति व्याकरणम् ॥
(तथाच शिक्षायाम् । १७ ।
"स्युर्मूर्द्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः ॥")
तत्स्वरूपं यथा, --
"सकारं शृणु चार्व्वङ्गि शक्तिवीजं परात्परम् ।
कोटिविद्युल्लताकारं कुण्डलीत्रयसंयुतम् ॥
पञ्चदेवमयं देवि पञ्चप्राणात्मकं सदा ।
रजःसत्त्वतमोयुक्तं त्रिबिन्दुसहितं सदा ॥"
इति कामधेनुतन्त्रम् ॥ * ॥
अस्य लेखनप्रकारो यथा, --
"कुञ्चिता वामतो दक्षगता च गोकृतिल्वधः ।
पुनरूद्र्ध्वगता तासु वह्निचन्द्रदिवाकराः ।
मात्रा भवानी विज्ञेया ध्यानमस्य प्रचक्ष्यते ॥"
अस्य ध्यानादि ।
"शुक्लाम्बरां शुक्लवर्णां द्विभुजां रक्तलोचनाम् ।
श्वेतचन्दनलिप्ताङ्गीं मुक्ताहारोपशोभिताम् ॥
गन्धर्व्वगीयमानाञ्च सदानन्दमयीं पराम् ।
अष्टसिद्धिप्रदां नित्यां भक्तानन्दविवर्द्धिनीम् ॥
एवं ध्यात्वा सकारन्तु तन्मन्त्रं दशधा जपेत् ॥
त्रिशक्ति सहितं वर्णं आत्मादितत्त्वसंयुतम् ।
प्रणम्य सततं देवि हृदि भावय सुन्दरि ॥"
इति वर्णोद्धारतन्त्रम् ॥ * ॥
तत्पर्य्यायः
"सो हंसः सुयशा विष्णुर्भृग्वीशश्चन्द्रसंज्ञकः ।
जगद्वीजं शक्तिनामा सोऽहं वेशवती भृगुः ॥
प्रकृतिरीश्वरः शुद्धः प्रभा श्वेता कुलोज्वलः ।
दक्षपादोऽमृतं ब्राह्मी परमात्मा परोऽक्षरः ॥
सुरूपा च गुणेशो गौः कलकण्ठो वृकोदरी ।
प्राणाद्याश्च पुरादेवी लक्ष्मीः सोमो हिरण्यपूः ।
दुर्गोत्तारिणि सम्मोहाज्जीवो मूर्त्तिर्मनोहरः ॥"
इति तन्त्रम् ॥

**सं**, [म्] व्य, शोभनार्थः । समार्थः । सङ्गतार्थः ।

प्रकृष्टार्थः । इति मेदिनी ॥ उपसर्गविशेषः ।
अस्यार्थाः यथा । सम् प्रकर्षाश्लेषनैरन्तर्य्यौ-
चित्याभिमुख्येषु । इति मुग्धबोधटीकायां दुर्गा-
दासः ॥

**संज्ञपनं**, क्ली, (सं + ज्ञा + णिच् + ल्युट् ।) मार-

णम् । इत्यमरः ॥ (यथा, भागवते । ४ । ५ । २२ ।
"दृष्ट्वा संज्ञपनं योगं पशूनां स पतिर्मखे ।
यजमानपशोः कस्य कायात्तेनाहरच्छिरः ॥")
विज्ञापनञ्च ॥

**संज्ञप्तिः**, स्त्री, (सं + ज्ञा + णिच् + क्तिन् ।) मार-

णम् । इति हेमचन्द्रः ॥ विज्ञापनञ्च ॥

**संज्ञा**, स्त्री, (सं + ज्ञा + भावे अङ् ।) चेतना ।

(यथा, कुमारे । ६ । ४४ ।
"रतिखेदसमुत्पन्ना निद्रा संज्ञाविपर्य्ययः ॥")
बुद्धिः । (ज्ञानम् । यथा, भागवते । ६ । ७ । १७ ।
"गुरोर्नाधिगतः संज्ञां परीक्षन् भगवान् स्वराट् ।
ध्यायन् धिया सुरैर्युक्तः शर्म्म नालभतात्मनः ॥"
तथा च गीतायाम् । १ । ७ ।
"नायका मम सैन्यस्य संज्ञार्थं तान् ब्रवीमिते ॥"
नाम । आख्या । (यथा, मनुः । ८ । १३१ ।
"शोकसंव्यवहारार्थं याः संज्ञाः प्रथिता भुवि ।
ताम्ररूप्यसुवर्णानां ताः प्रवक्ष्याम्यशेषतः ॥")
हस्ताद्यैरर्थसूचना । हस्तभ्रूलोचनादिभिः प्रयो-
जनस्य ज्ञापना । इत्यमरभरतौ ॥ (यथा
कुमारे । ३ । ४१ ।
"मुखार्पितैकाङ्गुलिसंज्ञयैव
मा चापलायेति गणान् व्यनैषीत् ॥")
गायत्री । सूर्य्यपत्नी । इति मेदिनी ॥ (यथा,
मार्कण्डेये । ७७ । १ ।
"मार्त्तण्डस्य रवेर्भार्य्या तनया विश्वकर्म्मणः ।
संज्ञा नाम महाभाग तस्यां भानुरजीजनत् ॥"
अस्या विशेषविवरणन्तु तत्रैवाध्याये द्रष्ट-
व्यम् ॥)

**संज्ञासुतः**, पुं, (संज्ञायाः सुतः ।) शनिः । इति

केचित् ॥

**संज्ञुः**, त्रि, (संहते संलग्नेजानुनी यस्य । प्रसंभ्यां

जानुनोर्ज्ञुः । ५ । ४ । १२९ । इति ज्ञुः ।)
सहतजानुकः । इत्यमरः ॥

**संज्वरः**, पुं, (संज्वरयतीति । सं + ज्वर + णिच् +

अच् ।) अग्निजतापः इत्यमरः ॥ (यथा,

**सः**, पुं, ईश्वरः । सर्पः । इति शब्दरत्नावली ॥

पक्षी । इत्येक्षाकरकोषः ॥ विष्णुः । यथा । सः
स्याद्विष्णौ हरे सर्पे । इति भरतैकार्थसंग्रहः ॥
पूर्व्वोक्तपरामर्शकः । से इति भाषा । तच्छब्दस्य
प्रथमैकवचननिष्पन्नः । यथा भट्टिः । १ । २ ।
“सौऽध्यैष्ट वेदांस्त्रिदशानयष्ट
पितॄनपारीत् सममंस्त बन्धून् ॥”
समासपूर्व्वपदत्वे सहार्थः । यथा । समातृकः ।
क्वचित् समानार्थश्च । यथा । सरूपः । इति
व्याकरणम् ॥

**संग्राही**, [न्] पुं, संगृह्णातीति । सं + ग्रह +

णिनिः ।) कुटजवृक्षः । इति राजनिर्घण्टः ॥
धारके, वि ॥ (यथा, सुश्रुते । १ । ४५ ।
“दीपनं लघु संग्राहि श्वासकाशास्रपित्तनुत् ॥”
संग्रहकारके च । यथा, कामन्दकीयनीति-
सारे । ४ । १० ।
“प्रख्यातवंशमक्रूरं लोकसंग्राहिणं शुचिम् ।
कुर्व्वीतात्महिताकाङ्क्षी परिवारं महीपतिः ॥”

**संझं**, क्ली, पीतकाष्ठम् । यथा, --

“जायकं झावुकं संझं प्रचेलं प्राविरः पुमान् ।
कालीयकञ्च कालानुसार्य्यञ्चाथ समर्थकम् ॥”
जायकादिसप्तपीतकाष्ठे । इति शब्दचन्द्रिका ॥

**संज्ञः**, त्रि, (सम्यक्प्रकारेण जानाति यः । सं +

ज्ञा + कः ।) लग्नजानुकः । यथा, --
“प्रज्ञुः प्रगतजानुः स्यात् प्रज्ञोऽत्रैव च दृश्यते ।
संज्ञुः संहतजानुश्च भवेत् संज्ञोऽपि तत्र हि ॥”
इति साहसाङ्कः । इत्यमरटीकायां भरतः ॥

कथासरित्सागरे । ५५ । ६३ ।
“कदलीपत्रपवनैर्व्वीज्यमानां सखीजनैः ।
पाण्डुक्षामामभिव्यक्तस्मरसंज्वरलक्षणाम् ॥”)

**संयः**, पुं, कङ्कालः । इति शब्दचन्द्रिका ॥

**संयत्**, पुं, स्त्री, (संयम्यतेऽत्रेति । सं + यम् +

क्विप् । “गमादीनाम् ।” ६ । ४ । ४० । इत्यम्य
वार्त्तिकोक्त्या मलोपः । तुक् ।) युद्धम् । इत्य-
मरभरतौ ॥ (यथा, रघुः । ७ । ३९ ।
“उत्थापितः संयति रेणुरश्वैः
सान्द्रीकृतः स्यन्दनवंशचक्रैः ॥”)

**संयतः**, त्रि, (सं + यम् + क्तः ।) बद्धः । इत्यमरः ॥

(यथा, राभायणे । १ । १० । २५ ।
“मायामिव परिभ्रष्टां हरिणीमिव संयताम् ॥”
कृतसंयमः । यथा ब्रह्मपुराणम् ।
“यो यः कश्चित्तीर्थयात्रान्तु गच्छेत्
सुसंयतः स च पूर्व्वं गृहे स्वे ।

कृतोपवासः शुचिरप्रमत्तः
संपूजयेद्भक्तिनम्रो गणेशम् ॥”
इति प्रायश्चित्ततत्त्वम् ॥

**संयत्वरः**, पुं, वाग्यतः । जन्तुसमूहः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**संयद्वरः**, पुं, (संयच्छतोति । सं + यम + छित्वर-च्छत्वरेति । उणा० ३ । १ । इति ष्वरच्प्रत्य-येन साधु ।) नृपः । इत्युणादिकोषः ॥

**संयत्ता**, [ऋ] त्रि संयमनकर्त्ता । नियन्ता । संपूर्व्वयमधातोस्तृन्प्रत्ययेन निष्पन्नः ॥ (यथा, महाभारते । ४ । ६२ । ४८ ।
“तं विसंज्ञमपोवाह संयन्ता रथवाजिनाम् ।
उपदेशमनुस्मृत्य रक्षमाणो महारथम् ॥”)

**संयमः**, पुं, (सं + यम + “यमः समुपनिविषु च ।” ३ । ३ । ६३ । इति अप् ।) व्रताद्यङ्गपूर्व्वदिन-कर्त्तव्याचारः । तत्पर्य्यायः । वियामः २ वियमः ३ यामः ४ यमः ५ संयामः ६ । इत्यमरः ॥ संयमनम् ७ नियमः ८ इति धरणिः ॥ तद्-विधानं यथा । अथ दशमीनियमाः । सूरि-सन्तोषे ।
“कांस्यं मांसं मसूरञ्च चणकं कोरदूषकम् ।
शाकं मधु परान्नञ्च त्यजेदुपवसन् स्त्रियम् ॥”
अत्रोपवसन्निति तद्दिने भोजनासम्भवात् सामी-प्यात् पूर्व्वापरदिनयोर्ग्रहणम् । स्मृतिः ।
“शाकं माषं मसूरञ्च पुनर्भोजनमैथुने ।
भवितव्यं भवद्भिश्च श्वोभूते श्राद्धकर्म्मणि ।
दक्षिणं जानु चालभ्य त्वं मयात्र निमन्त्रितः ।
एवं निमन्त्र्य नियमान् श्रावयेत् पैतृकान्बुधः ॥”
तन्नियममाह ।
“अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः ।
भवितव्यं भवद्भिश्च मया च श्राद्धकर्म्मणि ॥”
इति श्राद्धतत्त्वम् ॥ * ॥
तीर्थयात्रापूर्व्वदिनकर्त्तव्यनियममाह । ब्रह्म-पुराणम् ।
“यो यः कश्चित्तीर्थयात्रान्तु गच्छेत्
सुसयतः स च पूर्व्वं गृहे स्वे ।
कृतोपवासः शुचिरप्रमत्तः
संपूजयेद्भक्तिनम्रो गणेशम ॥
देवान् पितॄन् ब्राह्मणांश्चैव साधून्
धीमान् प्रीणयन् वित्तशक्त्या प्रयत्नात् ।
प्रत्यागतश्चापि पुनस्तथैव
देवान् पितॄन् ब्राह्मणान् पूजयेच्च ॥”
एवं प्रकुर्व्वतस्तस्य तीर्थाद्युक्तं फलं तत् स्यान्नात्र सन्देह एव । सुसंयतः पूर्व्वदिने कृतैकभक्तादिनियमस्तदुत्तरदिने कृतोपवास इत्यादि । उपवासदिने मुण्डनमपि ।
“प्रयागे तीर्थयात्रायां पितृमातृवियोगतः ।
कचानां वपनं कार्य्यं वृथा न विकचो भवेत् ॥”
इति विष्णुपुराणात् । इति प्रायश्चित्ततत्त्वम् ॥
प्रायश्चित्तपूर्व्वाहकृत्यं यथा । शङ्खलिखितौ ।
“वाप्य केशनखान् पूर्व्वं घृतं प्राश्य वहिर्निशि
प्रत्येकं नियतं कालमात्मनो व्रतमादिशेत् ॥”
इति प्रायश्चित्ततत्त्वम् ॥
(बन्धनम् । यथा, साहित्यदर्पणे । ३ । १५५ ।
“कापि कुन्तलसंव्यानसंयमव्यपदेशतः ।
बाहुमूलं स्तनौ नाभिपङ्कजं दर्शयेत् स्फुटम् ॥”
संकोचः । यथा, मार्कण्डेये । ७७ । ४ ।
“मयि दृष्टे सदा यस्मात् कुरुषे नेत्रसंयमम् ।
तस्माज्जनिष्यते मूढे प्रजासंयमनं यमम् ॥”)

**संयमकः**, त्रि, (संयच्छतीति । सं + यम् + ण्वुल् । संयच्छतीति । सं + यम + ल्युः । नियन्तरि, त्रि । यथा, मार्कण्डेये । ७७ । ४ ।
“तस्माज्जनिष्यते मूढे प्रजासंयमनं यम् ॥”)

**संयमनी**, स्त्री, (संमम्यतेऽस्यामिति । सं + यम् + अधिकरणे ल्युट् ।) यमपुरी । इति मेदिनी ॥ (यथा, भागवते । १० । ४५ । ४२ ।
“ततः संयमनीं नाम यमस्य दयितां पुरीम् ।
गत्वा जनार्द्दनः शङ्खं प्रदध्मौ सहलायुधः ॥”)

**संयमितः**, त्रि, जातसंयमः । संयमशब्दात् इतो ऽस्य जाते इत्यनेन इतप्रत्ययेन निष्पन्नः ॥

**संयमी**, [न्] पुं, (संयमोऽस्यास्तीति । संयम + इनिः ।) मुनिः । इति धरणिः ॥ निगृहीते-न्द्रिये, त्रि । यथा, --
“या निशा सर्व्वभूतानां तस्यां जागर्त्ति संयमी
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुने ॥”
इति श्रीभगवद्गीतायाम् २ अध्यायः ॥

**संयात्रा**, स्त्री, द्वीपान्तरगमनम् । संपूर्व्वो याति-र्द्वीपान्तरगमनवृत्तिस्ततस्त्रासुसितित्रः स्त्रिया-माप् संयात्रा । द्वीपान्तरगमनं सम्यग्यात्रा संयात्रा वा । इति सांयात्रिकशब्दटीकायां भरतः ॥

**संयानं**, क्ली, सम्यग्गमनम् । संपूर्व्वयाधातोरनट-(ल्युट्) प्रत्ययेन निष्पन्नम् ॥ (यथा, महा-भारते । ३ । १९ । ५ ।
“स त्वं सात्वतमुख्याद्य लब्धसंज्ञो यदृच्छया ।
पश्य मे हयसंयाने शिक्षां केशवनन्दन ! ॥”
प्रेतनिर्हारः । यथा, रामायणे । १ । ७६ । २ ।
“अलं शोकेन भद्रं ते राजपुत्त्र महायशः ।
प्राप्तकालं नरपतेः कुरु संयानमुत्तमम् ॥”)

**संयामः**, पुं, (सं + यम + “यमः समुपनिविषु च ।” ३ । ३ । ६३ । इति पक्षे घञ् ।) संयमः । इत्य-

द्युतमत्यम्बुपानञ्च दशम्यां
वैष्णवस्त्यजेत् ॥
कांस्यं मांसं सुरां क्षौद्रं लोभं
वितथभाषणम् ।
व्यायामञ्च व्यवायञ्च दिवास्वप्नं
तथाञ्जनम् ॥
तिलपिष्टं मसूरञ्च दशम्यां वर्ज्जयेत्
पुमान् ।
दशम्याकेकभक्तञ्च कुर्व्वीत नियतेन्द्रियः
॥
आचम्यदन्तकाष्ठञ्च खादेत तदनन्तरम्
।
पूर्व्वं हरिदिनाल्लोकाः सेवध्वं
चैकभोजनम् ॥
अवनीपृष्ठशयनाः स्त्रियाः
सङ्गविवर्जिताः ।
सेवध्वं देवदेवेशं पुराणं पुरुषोत्तमम् ।
सकृद्भोजनसंयुक्ता द्वादश्याञ्च भविष्यथ
॥”
इत्येकादशीतत्त्वम् ॥ * ॥
श्राद्धपूर्व्वदिनकर्त्तव्यनियमो यथा ।
देवलः ।
“श्वः कर्त्तास्मीति निश्चित्य दाता
विप्रान्निमन्त्र-
येत् ।
निरामिषं सकृत् भुक्त्वा सर्व्वमुप्तजने
गृहे ।
असम्भवे परेद्युर्व्वा
ब्राह्मणांस्तान्निमन्त्रयेत् ॥”
वराहपुराणम् ।
“वस्त्रशौचादि कर्त्तव्यंश्वः कर्त्तास्मीति
जानता ।
स्थानोपलेपनञ्चैव कृत्वा
विप्रान्निमन्त्रयेत् ।
दन्तकाष्ठञ्च विसृजेत् ब्रह्मचारी
शुचिर्भवेत् ॥”
विसृजेत् श्राद्धीयब्राह्मणेभ्यो दद्यात् ।
मार्क-
ण्डयपुराणम् ।
“निमन्त्रयेच्च पूर्व्वेद्युः पूर्व्वोक्तान्
द्विजसत्तमान् ।

नियन्ता । यथा, --
“स एव धाता सर्व्वस्य तन्नियोगकरा वयम् ।
यमसंयमने त्यक्तः सोऽस्मत्संयमको हरिः ॥”
इति वह्निपुराणे नारसिंहप्रादुर्भावाध्यायः ॥
संयमी च ॥

**संयमनं**, क्ली, (सं + यम + ल्युट् ।) बन्धनम् ।

(यथा, साहित्यदर्पणे । ६ । ३१८ ।
“यथावा वेण्यां
द्रौपदीकेशसंयमनहेतुर्भीमसेन-
क्रोधापचितो युधिष्टिरोत्साहः ॥”) व्रतम् ।
इति मेदिनी ॥ चतुःशालम् । इति सञ्चवन-
शब्दटीकायां भरतः ॥ (यमगृहम् । यथा,
महाभारते । ३ । १६३ । ९ ।
“एतत् संयमनं पुण्यमतीवाद्भुतदर्शनम् ।
प्रेतराजस्य भवनमृद्ध्या परमया युतम् ॥”
शासनम् । दमनम् । यथा, भागवते । १० ।
१६ । ६ ।
“तं चण्डवेगविषवोर्य्यमवेक्ष्य तेन ।
दुष्टां नदीञ्च खलसंयमनावतारः ॥” * ॥

मरः ॥

**संयावः**, पुं, (सं + यु + “समि युद्रुदुवः ।” ३ । ३ ।

२३ । इति घञ् ।) घृतक्षीरादिपक्वगोधूमः ।
यथा, --
“संयावस्तु घृतक्षीरगुडगोधूमपाकजः ।”
इति शब्दचन्द्रिका ॥
पिष्टकविशेषः । पेराकी इति भाषा । यथा, --
“पर्य्यट्यः साज्यसमिता निर्म्मिता
घृतभर्ज्जिताः
कुट्टिताश्चालिताः शुद्धाः
शर्कराभिर्व्विमर्द्दिताः ॥
तच्चूर्णे प्रक्षिपेदेलां लवङ्गमरिचानि च ।
नालिकेलं सकर्पूरं वारबीजान्यनेकशः ॥
घृताक्तसमितापुष्टरोटिकारचिता ततः ।
तस्यां तत्पुरणात्तस्य कुर्य्यान्मुद्रां दृढां सुधीः
॥
सर्पिषि प्रचुरे तान्तु सुपचेन्निपुणो जनः ।
प्रकारज्ञैः प्रकारोऽयं संयाव इति कीर्त्तितः ।
मण्ठकोऽपि समो ज्ञेयः संयावोऽपि गुणैर्जनैः
॥”
इति भावप्रकाशः ॥

**संयुक्** [ज्] त्रि, (सं + युज् + क्विप् ।) गुण-

वान् । यथा, --
“सम्बन्धी गुणवान् संयुक् मित्रयुङ्क्त्रिवत्सलः
।”
इति त्रिकाण्डशेषः ।

| अप्राप्तौ तद्दिने वापि हित्वा<br>योषित्प्रसङ्गिनम् ॥”<br>यमः ।<br>“प्राथेयेत् प्रदोषान्ते भुक्तान्न शयितान्<br>द्विजान् ।<br>सर्व्वायासविनिर्मुक्तः<br>कामक्रोधविवर्ज्जितैः ॥ | | |
|---|---|---|

(यथा, महाभारते । २ । ३६ । २२ ।
"आचार्य्यमृत्विजञ्चैव संयुजञ्च युधिष्ठिर ।
स्नातकञ्च प्रियं प्राहुः षडर्घार्हान् नृपं तथा ॥")
संयुक्तश्च ॥

**संयुक्तः**, त्रि, (सं + युज् + क्तः ।) संयोगाश्रयः ।
यथा, तिथ्यादितत्त्वे ।
"कुर्य्यादलाभे संयुक्तां नालाभेऽपि प्रवेशिनीम ॥"

**संयुगः**, पुं, ("युजिर योगे + घञ् । उक्थादिषु युगशब्दस्य पाठात् निपातनादगुणत्वम् । 'विशे-
षोऽसौ निपातनमिष्यते कालविशेषे रथाद्युप-
करशे च ।' इति वृत्तिः । सङ्गता रथयुगा
यस्मिन् वा ।" इति निरुक्तटीकायां देवराज-
यज्वा । २ । १७ । २९ ।) युद्धम् । इत्यमरः । २
८ । १०५ ॥ (यथा, महाभारते । २ । १७ । ५ ।
"अनयस्यानुपायस्य संयुगे परमः क्षयः ।
सशयो जायते साम्यात् जयश्च न भवेत् द्वयोः ॥"
संयोगश्च ॥

**संयुतः**, त्रि, संयुक्तः । यथा, --
"चतुर्थीसंयुता कार्य्या पञ्चमी परया न तु ।
दैवे कर्म्मणि पेत्रे च शुक्लपक्षे तथासिते ॥"
इति तिथ्यादितत्त्वम् ॥

**संयोगः**, पुं, (सं + युज् + घञ् ।) मेलनम् । न्याय-
मते गुणपदार्थः । स च सम्बन्धविशेषः । अ-
संयोगपृथक्त्वन्यायात् । स च न्यायश्चतुर्थाध्याये
उक्तः । यथा । खादिरे पशुं बध्नाति खादिरं
वीर्य्यकामस्य यूपं कुर्व्वीत इति श्रूयते । अश्र
सशयः । किं काम्यस्यैव खादिरता नित्येऽपि
स्यादुत नेति । तत्र फलार्थत्वेनानित्यतया नित्य-
प्रयोगाङ्गता न युक्ता । यत्तु नित्यऽपि खादि-
रत्वश्रवणं तत् काम्यस्यैव पशुनन्धनाय यूपा-
श्रयज्ञापनार्थं अतो न नित्ये खादिरता इति
प्राप्ते राद्धान्ताय चतुर्थाध्यायसूत्रम् । एकस्य
तूभयत्वे संयोगपृथक्त्वमिति । अत्र संयोगः
सम्बन्धमात्रं पृथक्त्वं भेदः । एकस्य खादिरस्य
क्रत्वर्थत्वपुरुषार्थत्वरूपोभयात्मकत्वे वाक्यद्वयेन
चक्रतुशेषत्वफलशेषत्वलक्षणसंयोगभेदावगमान्न
नित्यानित्यसंयोगविरोधः । न चाश्रयज्ञानार्थं
नित्यवाक्यं सन्निधानादेवाश्रयलाभात् । अत
उभयार्था खादिरतेति । एवं दध्ना जुहोति
दध्नेन्द्रियकामस्य इत्यादावुभयार्थत्वैव । दधि-
त्वस्य द्वेधाश्रवणात् । इति प्रायश्चित्ततत्त्वम् ॥

**संयोगविरुद्धं**, क्ली, (संयोगेन विरुद्धम् ।) पर-
स्परसंयोगेन रोगजनकखाद्यद्रव्यम् । यथा, --
"शाकाम्लपलपिण्याककुलत्थलवणामिषैः ।
करीरदधिमाषैश्च प्रायः क्षीरं विरुध्यते ॥
प्राणहारी तु हारीतो हरिद्रालवणैः शृतः ।
रुरोस्तैलेऽनलैर्भृष्टं विषं मायूरमामिषम् ॥
वराहवसया भृष्टा वलाका तु हरत्यसून् ।
संयुक्ता सैव वारुण्या कुल्माषंश्च बिरुध्यते ॥
अविं कुसुम्भशाकेन मत्स्यतैलैः कणां त्यजेत् ।
मांसैरिक्षविकारांश्च काञ्जिकैस्तिलशस्कुलीम् ॥
कपोतः सार्षपे भृष्टो घृतं कांस्ये दशाहगम् ।
विषं घृतसमं क्षौद्रं मधुना गगनाम्बु च ॥
मूलकं माषसूपेन मधुना च न भक्षयेत् ।
एकत्र सर्व्वमांसानि विरुध्यन्ते परस्परम् ॥
रात्र्यन्धवीसर्पदकोदराणां
विष्फोटिकोन्मादभगन्दराणाम् ।
मूर्च्छामदाध्मानगलग्रहाणां
पाण्ड्वामयस्यामविषस्यचैव ॥
किलासकुष्ठग्रहणीगदानां
शोथातिसारज्वरपीनसानाम् ।
सन्तानदोषस्य तथैव मृत्यो-

**संयोजितः**, त्रि, (सं + युज + णिच् + क्तः ।)
पदार्थः पदार्थान्तरेण संयुक्तीकृतः । तत्पर्य्यायः
उपाहितः २ । इत्यमरः ॥ संयोगितः ३ ।
इति भरतः ॥ (यथा, भागवते । ५ । २३ । ३ ।
"यथामेधीस्तम्भ आक्रमणपशवः संयोजिताः ।
त्रिभिः सवनैर्यथास्थानं मण्डलानि चरन्ति ॥")

**संरम्भः**, पुं, (सं + रभ + घञ् । नुम् ।) क्रोधः ।
इति शब्दरत्नावली ॥ (यथा, मनुः । ४ । १६६ ।
"ताडयित्वा तृणेनापि संरम्भात् मतिपूर्व्वकम् ।
एकविंशतिमाजातीः पापयोनिषु जायते ॥")
आटोपः । इति त्रिकाण्डशेषः ॥ (सम्भ्रमः ॥
यथा, भागवते । ८ । ६ । २४ ।
"न संरम्भेण सिध्यन्ति सर्व्वार्थाः सान्त्वया
यथा ॥")
वेगः । यथा, तत्रैव । ८ । ११ । ४५ ।
"संयम्य मन्युसंरम्भं मानयन्तो मुनेर्व्वचः ।
उपगीयमानामुचरैर्ययुः सर्व्वे त्रिविष्टपम् ॥")
उत्साहः । यथा, --
"कार्य्यारम्भेषु संरम्भः स्थेय उत्साह इष्यते ।"
इति साहित्यदर्पणे ३ परिच्छेदः ॥

**संरावः**, पुं, (सं + रु ल ध्वनौ + "उपसर्गेरुवः ।"
३ । ३ । २२ । इति घञ् ।) शब्दः । इत्यमरः ॥
(यथा, राजतरङ्गिण्याम् । ३ । ३४२ ।

प्राप्तवस्तुद्वयस्य प्राप्तिः । स च त्रिविधो यथा ।
एककर्म्मजन्यः । यथा पर्व्वते पक्षिसंयोगः ॥ १ ॥
उभयमर्म्मजन्यः । यथा मेषद्वयसंयोगः ॥ २ ॥
संयोगजन्यसंयोगः । यथा कपालतरुसंयोग-
जन्यतरुकुम्भसंयोगः ॥ ३ ॥ कर्म्मजन्यसंयोगो-
ऽपि द्विविधः । अभिघातः । तस्मात् शब्दो
जायते ॥ १ ॥ नोदनः । तस्मात् शब्दो न
जायते ॥ २ ॥ अत्र प्रमाणम् ।
"अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः ।
कीर्त्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्म्मजः ॥
तथोभयोः कर्म्मजन्यो भवेत् संयोगजोऽपरः ।
आदिमः श्येनशैलादिसंयोगः परिकीर्त्तितः ॥
मेषयोः सन्निपातो यः स द्वितीय उदाहृतः ।
कपालतरुसंयोगात् संयोगस्तरुकुम्भयोः ॥
द्वितीयः स्यात् कर्म्मजोऽपि द्विधैव परिकीर्त्तितः
अभिघातो नोदनश्च शब्दहेतुरिहादिमः ।
शब्दाहेतुर्द्विर्द्वितीयः स्याद्विभागोऽपि त्रिधा
भवेत् ॥"
इति भाषापरिच्छेदः ॥ * ॥
उदयात् पूर्व्वं दशभ्याः शेषः । यथा, --
"उदयात् प्राक् दशम्यास्तु शेषः संयोग इष्यते ।
उपरिष्टात् प्रवेशस्तु तस्मात् तां परिवर्ज्जयेत् ॥"
इति तिथ्यादितत्त्वम् ॥

व्विरुद्धमन्नं प्रवदन्ति हेतुम् ॥
विरुद्धाहारजान् रोगान् विनिहन्ति विरेचनम् ।
वमनं शमनं वापि पूर्व्वं वा हितसेवनम् ॥"
इति संयोगविरुद्धम् । इति राजवल्लः ॥

**संयोगितः**, त्रि, जातसंयोगः । संयोगशब्दा-
दितप्रत्ययेन निष्पन्नः । इति संयोजितशब्द-
टीकायां भरतः ॥

**संयोगी**, [न्] त्रि, (संयोगोऽस्यास्तीति । संयोग
+ इनिः ।) संयोगविशिष्टः । यथा, --
"अग्रे वृक्षः कपिसंयोगी न मूले ।" इति
सिद्धान्तलक्षणजागदीशी ॥

**संयोजनं**, क्ली, (सं + युज् + ल्युट् ।) मैथुनम् ।
इति हारावली ॥ संयोगश्च ॥

"ततस्तस्य सरित्पाते
मुक्तसंरावमग्रतः ।
ऊर्द्ध्वबाहुर्महद्भूतं प्रादुरासीत्
महौजसः ॥")

**संरावी**, [न्] त्रि, प्रशस्तशब्दविशिष्टः । संराव-
शब्दादत्स्यर्थे इन्प्रत्ययेन निष्पन्नः ॥

**संरूढः**, त्रि, (सं + रुह + क्तः ।) प्रौढः । अङ्कु-
रितः । इति मेदिनी ॥ (यथा, महाभारते ॥
१२ । २२८ । २ ।
"तन्नो मनसि संरूढं करिष्यामस्तथा च तत् ॥"

**संरोधः**, पुं, (सं + रुध + घञ् ।) रोधनम् ।
(यथा, भागवते । १० । ७३ । २ ।
"क्षुत्क्षामाः शुष्कवदनाः संरोधपरिकर्शिताः
ददृशुस्ते घनश्यामं पीतकौशेयवाससम् ॥")
क्षेपः । इति मेदिनी ॥

**संलग्नः**, त्रि, संयुक्तः । संपूर्व्वलगधातोः क्तप्रत्ययेन
निष्पन्नः ॥ यथा, कथासरित्सागरे । १२३ । १११ ।
"स चाब्धिवेलया नीत्वा विधिगत्येव रोधसि ।
क्षिप्तस्तद्द्वीपसंलग्नो महामत्स्योऽवसन्नवान् ॥"

**संलयः**, पुं, (सं + ली + अच् ।) निद्रा । इति
हेमचन्द्रः ॥ प्रलयश्च ॥

**संलापः**, पुं, (सं + लप + घञ् ।) परस्परभाष-
णम् । इत्यमरः ॥ अन्योन्यं प्रीतिभाषणं
संलापः । उक्तिप्रत्युक्तिभावेन विरोधरहित
मन्योन्यभाषणं संलापः । इति परेऽपि । रहसि
भाषणं संलापः । इति कौमुदी । मिथोऽन्योन्य

| | | |
|---|---|---|
| सम्बन्धमात्रम् । इति संयोगपृथक्त्वन्यायार्थ-दर्शनात् ॥<br>**संयोगपृथक्त्वं** क्ली, (संयोगेन फलसम्बन्धभेदेन पृथक्त्वं, नानाविधत्वं यत्र ।) न्यायविशेषः । यथा । एकस्य कर्म्मणो नित्यत्वकाम्यत्वाभ्यां द्वैरूप्याङ्गीकारे नित्यानित्यसंयगविरोधः । मैवं | | रहस्यपि । इति वक्ष्यति । समन्ताल्लपनं संलाप प्रियादिकथा घञ् । यस्त्वालापः स तु केनापि क्रियते । इदन्तु परस्परभाषणमेवेति भेदः । इति भरतः ॥ “उक्तिप्रत्युक्तिमद्वाक्यं संलाप इति कीर्त्त्यते ।” इत्युज्ज्वलनीलमणिः ॥ |

**संवत्**, व्य, वत्सरः । इत्यमरः ॥ अधुना विक्रि-
मादित्यराजवत्सरः संवत् इति ख्यातः ॥
(स्त्री
भूमिविशेषः । यथा, वाजेसनेयसंहितायाम्
।
११ । १२ ।
"वरिष्ठामनु संवतम् ।"
"वन सम्भक्तौ संवन्यते सम्यग्भज्यते
मृद्धरणार्थं
सेव्यते इति संवत् संपूर्वस्य वनतेः
छिप्येतदूपम् ।
मृत्खननयोग्या भूमिः संवत् । सा च
पाषाणाद्य-
भावेनातिप्रशस्तत्वाद्वरिष्ठेत्युच्यते ।" इति
तद्-
भाष्यम् ॥ * ॥ संग्रामः । इति निघण्टुः । २
। १७ ॥)

**संवत्सरः**, पुं, (स वसन्ति ऋतवौ यत्र । सं + वस
निवासे + "संपूर्व्वात् चित् ।" उणा० ३ ।
७२ ।
इति तसरन् ।) वत्सरः । इत्यमरः ॥
"संवसन्ति
ऋतवो अत्र संवत्सरः । वस औ निवासे
नाम्नीति सरः सस्य तः । संवदति भावान्
इति वदो रूपंवा ।" इति भरतः ॥ पञ्चविध-
वत्सरान्तर्गतप्रथमवत्सरः । यथा --
"शकाब्दात् पञ्चभिः शेषात् समाद्यादिषु
वत्-
सराः ।
संपरीदानुपूर्व्वाश्च तथोदापूर्वका मताः ॥"
संबत्सरादिफलं विष्णुधर्म्मोत्तरे ।
"संवत्सरे तथा दानं तिलस्य च महाफलम्
।
परिपूर्वे तथा दानं यवानाञ्च द्विजोत्तमाः ॥
इदापूर्व्वेऽन्नवस्त्राणां धान्यानाञ्चानुपूर्व्वके ।
उदासंवत्सरे दानं रजतस्य महाफलम् ॥
ज्योतिर्व्विदस्त्विज्यमध्यात् प्रभवादेश्च
सम्भवम् ।

**संवर्त्तः**, पुं, (सं + वृत् + घञ् ।) प्रलयः । इत्य-
मरः ॥ (यथा, भागवते । ८ । १५ । २६ ।
"दहन्निव दिशो दिग्भिः संवर्त्ताग्निरिवो-
त्थितः ॥")
मुनिविशेषः । (यथा, मार्कण्डेये । १३० ।
११ ।
"ऋत्विक् तस्य तु संवर्त्तो बभूवाङ्गिरसः
सुतः ।
भ्राता बृहस्पतेर्विप्र महात्मा तपसां निधिः ॥"
अयं हि धर्म्मशास्त्रप्रयोजकानामन्यतमः ॥)
कर्षफलवृक्षः । इति मेदिनी ॥ मेघः । इति
शब्दरत्नावली ॥ (यथा, हरिवंशे । १२० ।
९० ।
"शुश्रुवे सुमहान् शब्दः सवर्त्तनिनदो यथा
॥")
मेघनायकांवशेषः । तस्य विवरणं यथा, --
"त्रियुते शाकवर्षे तु चतुर्भिः शेषिते क्रमात् ।
आवर्त्तं विद्धि संवर्त्तं पुष्करं द्रोणमम्बुदम् ॥
आवर्त्तो निर्जलो मेघः संवर्त्तश्च बहूदकः ।
पुष्करो दुष्करजलो द्रोणः शस्यप्रपूरकः ॥"
इति ज्योतिस्तत्त्वम् ॥
संपूर्व्वकान्तःस्थवकारादिवृतधातोः
घञ्प्रत्ययेन
निष्पन्नत्वादनुस्वारमध्यः । मकारमध्योऽप्य-
यम् ॥

**संवर्त्तकः**, पुं, (संवर्त्तयतीति । सं + वृत् + णिच्
ण्वुल् ।) बलदेवः । इति शब्दरत्नावली ॥
बल-
देवस्य लाङ्गलम् । बडवानलः । इति
हेमचन्द्रः ॥
(यथा भागवते । १२ । ४ । ९ ।
"ततः संवर्त्तको वह्निः सङ्कर्षणमुखोत्थितः ।
दहत्यनिलवेगोत्थः शून्यान् भूविवरानथ ॥")

**संवर्त्तकी**, [न्] पुं, (संवर्त्तकोऽस्यास्तीति ।
इनिः ।) बलदेवः । इति त्रिकाण्डशेषः ॥

**संवर्त्तिः**, स्त्री, (सम्यक्प्रकारेण वर्त्तते इति ।
सं + वृत् + "हृपिषिरुहीति ।" उणा० ४ ।
११८ । इति इन् ।) संवर्त्तिका । इत्यमर-

**संवर्द्धितः**, त्रि, (सं + वृध् + णिच् + क्तः ।)
सम्यग्वृद्धिविशिष्टः । यथा, --
"अथ प्रभावोपनतैः कुमारं
कल्पद्रुमोत्थैरवकीर्य्य पुष्पैः ।
उवाच वाग्मी दशनप्रभाभिः
संवर्द्धितोरःस्थलतारहारः ॥"
इति रघौ ५ सर्गः ॥

**संवलितः**, त्रि, (सं + वल + क्तः ।) मिश्रितः ।
एकत्रीकृतः । यथा ।
प्रकृतग्रन्थस्थस्वरसंवलित-
स्यैव पाठस्य
धर्त्तुमुचितत्वाद्व्याप्त्यवधारणं
युक्तम् । इति पक्षताजागदीशी टीका ॥
अन्यच्च ।
"प्रतीयमानः प्रत्येकं प्रथमं हेतुरुच्यते ।
ततः संवलितः सर्व्वो विभवादिः
सचेतसाम् ॥"
इति साहित्यदर्पणे ३ परिच्छेदः ॥

**संवसथः**, पुं, (संवसत्यत्रेति । सं + वस + "उप-
सर्गे वसेः ।" उणा० ३ । ११४ । इति
अथः ।)
ग्रामः । इत्यमरः ॥

**संवहः**, पुं, (संवहतीति । सं + वह + अच् ।
सप्तवाय्वन्तर्गतप्रशस्तवायुः । स तु
उद्वहवायो-
रुपरिष्ठः । इति सिद्धान्तशिरोमणिः ॥
(यथा,
महाभारते । १२ । ३२८ । ४२ ।
"चतुर्थः संवहो नाम वायुः स गिरिमर्द्दनः
।
येन वेगवता रुग्ना रुक्षेणारुजता नगान् ॥
वायुना सहिता मेघास्ते भवन्ति
बलाहकाः ।
दारुणोत्पातसञ्चारो नभसः
स्तनयित्नुमान् ॥"
संवाटिका, स्त्री, शृङ्गाटकः । इति जटा-
धरः ॥

**संवादः**, पुं, (सं + वद् + घञ् ।) सन्देशवाक्यम् ।

ऊचुस्तद्वत् समाद्यादिवर्षाणामपि सम्भवम् ॥”
इति मलमासतत्त्वम् ॥

**संवदनं**, क्ली, (सं + वद् + ल्युट् ।) आलोचनम् । वशीकरणम् । इति मेदिनी ॥ (यथा, महा-भारते । ३ । २३२ । ५७ ।
“एतज्जानाम्यहं कर्त्तुं भर्त्तुः संवदनं महत् ।
असत्स्त्रीणां समाचारं नाहं कुर्य्यान्न कामये ॥”)
संवादः । इति हेमचन्द्रः ॥

**संवदना**, स्त्री, संवदनम् । वशक्रिया । यथा । मणिमन्त्रौषधैर्वशीकरणं संवदनम् । संपूर्व्वो वदिर्वशीकरणे भावेऽनट् । संवदना चेति केचित् । करणेऽनटि वशक्रियासाधने मणि-मन्त्रादावपि । जयश्रियः संवदनं यतस्तदिति रघुः । संचलनमिति पाठान्तरम् इत्यमर-टीकायां भरतः ॥

**संवननं**, क्ली, (सं + वन + ल्युट् ।) संवदनम् । इत्यमरटीकायां रामाश्रमः ॥ (यथा, कथा-सरित्सागरे । ३४ । १६९ ।
“हृदयानुप्रवेशो हि प्रभोः संवननं महत् ॥”)

**संवरं**, क्ली, (सं + वृ + “ग्रहवृदृनिश्चिगमश्च ।” २ । ३ । ५८ । इति अप् ।) जलम् । बौद्धव्रत-विशेषः । इति केचित् ॥ रभसे मकारमध्य-पाठः । तत्र सम्बधातोररप्रत्ययेन निष्पन्नम् ॥

**संवरः**, पुं, दैत्यविशेषः । मत्स्यविशेषः । हरिण-विशेषः । इति केचित् ॥ रभसकोषे सम्बर इति पाठः ॥ (क्वचित् शम्बर इति च दृश्यते ॥)
टीकायां भरतः ॥

**संवर्त्तिका**, स्त्री, पद्मस्य केशरसमीपस्थदलम् । इत्यमरः ॥ पद्मादीनां जटिकाकारे नववत्रे इत्यन्ये । सम्यक् वर्त्तते वर्द्धते इति संवर्त्तिका णकः । संवर्त्तयति वेष्टयतीति वा नाम्नीति इ-प्रत्यये संवर्त्तिरपि । संवर्त्तिनवपत्रिकेति वोपा लितः । पाच्छोणादीति ईपि संवर्त्ती च अतः स्वार्थे के संवर्त्तिका । सामान्यनूतनपत्रेऽपि संवर्त्तिकेति हड्डचन्द्रः ॥ दलमात्रे च संवर्त्ति-केति मधुः । कुर्व्वाणा समकोचयद्दशशतान्य-म्भोजसंवर्त्तिकेति मुरारिः । इति भरतः ॥

**संवर्द्धकः**, त्रि, (संवर्द्धयतीति । सं + वृध् + णिच् + ण्वुल् ।) संवर्द्धनकारी । इति हेमचन्द्रः ॥

**संवर्द्धनं**, क्ली, (सं + वृध् + ल्युट् ।) सम्यग्-वृद्धिः । सन्दीपनम् । संपूर्व्ववृधधातारनट्प्रत्य-येन निष्पन्नम् ॥) यथा, महाभारते १ । ६३ । १०१ ।
“पुरुषः स विभुः कर्त्ता सर्वभूतपितामहः ।
धर्म्मसंवर्द्ध नार्थाय प्रयज्ञेऽन्धकवृष्णिषु ॥”
क्रीडनम् । यथा, रामायणे । १११ । १० ।
“नित्यञ्च प्रियवादेन तथा संवर्द्धनेन च ॥”
“संवर्द्धनं क्रीडनम् ।” इति तट्टीका ॥)
समाचार इति यावत् । तत्पर्य्यायः । वाचिकम् २ सन्देशः ३ । इति जटाधरः ॥ सन्देशवाक् ४ । इत्यमरः ॥ वाचिकं तद्भवेद्यत्र दूतत्वेनाभि-शंसनम् । इति शब्दरत्नावली ॥ (मिथः-सम्भाषणम् । यथा, गीतायां । १८ । ७० ।
“अध्येष्यते च य इमं धर्म्मं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥”)

**संवासः**, पुं, (संवसन्त्यत्रेति । सं + वस् + घञ् ।) गृहम् । इति शब्दरत्नावली ॥ (यथा, बृहत्-संहितायाम् । ९५ । १३ ।
“भयदो जनसंवासात्
यदि भाण्डान्यपनयेत् काकः ॥”)
पुरवासिनां विहारार्थं पुरमध्ये बहिर्व्वा अनावृतस्थानम् । तत्पर्य्यायः । सन्निवेशः २ सन्निकर्षणम् ३ । इति जटाधरः ॥ (यथा, रामायणे । २ । ४९ । ४ ।
“शृण्वन् वाचो मनुष्याणां ग्रामस वास-वासिनाम् ।
राजानं धिक् दशरथं कामस्य वशमास्थितम् ॥”
एकत्रावस्थानम् । यथा, मनुः । ८ । २७३ ।
“व्रात्यया सह संवासे चाण्डाल्या तावदेव तु ॥”

**संवाहः**, पुं, (संवाहतीति । सं + वह + णिच् + अच् ।) अङ्गविमर्द्दकः । इति जटाधरः ॥

(सप्राकारमुद्यानम् । इति नीलकण्ठः ॥ यथा, महाभारते । ३ । १६० । ३७ ।
"द्वारतोरणनिर्व्यूहध्वजसंवादशोभिना ॥"
सं + वह + घञ् । विमर्द्दनम् । यथा, मार्कण्डेये । १६ । १५ ।
"तं तथा व्याधितं भार्य्या पतिं देवमियार्च्चयत् ।
पादाभ्यङ्गाङ्गसंवाहस्नानाच्छादनभोजनैः ॥")

**संवाहकः**, त्रि, (संवाहयतीति । सं + वह + णिच् + ण्वुल् ।) अङ्गमर्द्दकारकः । तत्पर्य्यायः ।
अङ्गमर्द्दकः २ । इति त्रिकाण्डशेषः ॥ अङ्गमर्दः ३ । इति हेमचन्द्रः ॥ (यथा, कामन्दकीयनीतिसारे । १२ । ४५ ।
"प्रसाधका भोजकाश्च गात्रसंवाहका अपि ।
जलताम्बूलकुसुमगन्धभूषणदायकाः ।
कर्त्तव्याश्च सदा ह्येते ये चान्येऽभ्यासवर्त्तिनः ॥"

**संवाहनं**, क्ली, (सं + वह + णिच् + ल्युट् ।) अङ्गमर्द्दनम् । (यथा, मार्कण्डेये । १० । ७४ ।
"तैलाभ्यङ्गी बान्धवानामङ्गसंवाहनञ्च यत् ।
तेन चाप्याय्यते जन्तुर्यच्चाश्नन्ति सबान्धवाः ॥")
भारादिवहनम् । इति मेदिनी ॥

**संवित्तिः**, स्त्री, (सं + विद् + क्तिन् ।) प्रतिपत्तिः जनस्याविवादः । इति मेदिनी ॥ चेतना । बुद्धिः । इति शब्दरत्नावली हेमचन्द्रश्च ॥ (यथा, किराते । १६ । ३२ ।
"छायां विनिर्द्धूय तमोमयीन्तां
तत्त्वस्य संवित्तिरिवाप विद्याम ॥"
अनुभवः । यथा तत्रैव । ११ । ३४ ॥
"श्वस्त्वया सुखसंवित्तिः स्मरणीयाधुनातनी ।
इति स्वप्नोपमान् मत्वाकामान् मागास्तदङ्गताम् ॥")

**संवित्**, स्त्री, (सं + विद् + क्विप् ।) अङ्गीकारः । ज्ञानम् । (यथा, श्रीधर-

**संवीक्षणं**, क्ली, (सं + वि + ईक्ष + ल्युट् ।) अन्वेषणम् । अपहृतवस्तुनस्तात्पर्य्येणान्वेषणम् ।
इत्यमरः ॥ सम्यक्तात्पर्य्येण विविधप्रकारेरीक्षणं संवीक्षणं अनट् । इति भरतः ॥

**संवीतं**, त्रि, (सं + व्ये + क्तः ।) रुद्धम् । आवृतम् ।
इत्यमरः ॥ (यथा, मनुः । ४ । ४९ ।
"तिरस्कृत्योच्चरेत् काष्ठलोष्टपत्रतृणादिना ।
नियम्य पयतो वाचं संवीताङ्गोऽवगुण्ठितः ॥")

**संवृतः**, पुं, आवृतः । संपूर्व्ववृञ्धातोः क्तप्रत्ययेन निष्पन्नः ॥

**संवृत्तः**, पुं, (सं + वृत् + क्तः ।) वरुणः । इति शब्दमाला ॥

**संवृत्तिः**, स्त्री, (सं + वृत् + क्तिन् ।) सम्यक्प्रकारेण वर्त्तनम् । (यथा, कथासरित्सागरे । ५६ । ४१४ ।
"हसता हृदि भीमभूभुजा
कृतसंवृत्त्युपचारसत्क्रियः ।
ऋतुपार्णनृपोऽपि तं नलं
प्रतिपूज्याथ जगाम कोशलान् ॥")
आवरणम् । इति संपूर्व्वकवृत्धातोः क्तिप्रत्ययेन निष्पन्ना ॥ (देवीविशेषः । यथा, महाभारते । २ । ११ । ३९ ।
"संवृत्तिराशा नियतिः सृष्टिर्देवी रतिस्तथा ।
एताश्चान्याश्च वै देव्य उपतस्थुः प्रजापतिम् ॥")

**संवेगः**, पुं, (सं + विज + घञ् ।) भयादिजनितत्वरा । इत्यमरः ॥ (यथा, महाभारते । २ । ७२ । १४ ।
"अथ सभ्याः सभामध्ये
समुच्छ्रितकरास्तदा ।
ऊचुरुद्विग्नमनसः संवेगात् सर्व्व एव हि ॥")
सम्यक्वेगश्च ॥ (यथा, राजतरङ्गिण्याम् । ४ ।

**संवेशनं**, क्ली, (सं + विश + ल्युट् ।) रतिक्रिया ।
इति हेमचन्द्रः ॥ (उपवेशनम् । यथा, भागवते । ५ । ९ । १० ।
"शीतोष्णवातवर्षेषु वृष इवानावृताङ्गः पीनः संहननाङ्गः स्थण्डिलसंवेशनामर्द्दनामज्जनरजसा महामणिरिव *** विचचार ॥")

**संव्यानं**, क्ली, (संवीयतेऽनेनेति + सं + व्य + ल्युट् ।) उत्तरीयवस्त्रम् । इत्यमरः ॥ (यथा, किराते । ४ । २८ ।
"विपाण्डु संव्यानमिवानिलोद्धतं
निरुन्धतीः सप्तपलाशजं रजः ॥")
वस्त्रम् । इति मेदिनी ॥

**संशप्तकः**, पुं, समयात् संग्रामादनिवर्त्ती । इत्यमरः ॥ समयात् कुलाचारात् शपथाद्वा संग्रामादनिवर्त्तिनोऽपराङ्मुखा अपलायमानाश्चाक्रोशन्ति ते संशप्तकाः । शपेर्भावे क्ते शप्तं सम्यक् सत्यं शप्तं येषां ते संशप्तकाः ।
इति भरतः ॥ नारायणीसेनाविशेषः । इति महाभारतम् ॥ (यथा, महाभारते । १ । १ । १८७ ।
"तदाश्रौषं चास्मदीयान् महारथान्
व्यवस्थितानर्ज्जुनस्यान्तकाय ।
संशप्तकान् निहतानर्ज्जुनेन
तदा नाशंसे विजयाय सञ्जय ॥"
एतद्वधवृत्तान्तादिकं महाभारते द्रोणपर्व्वणि १७ अध्यायमारभ्य द्रष्टव्यम् ॥)

**संशयः**, पुं, (सं + शी + अच् ।) सन्देहः । इत्यमरः ॥ तस्य लक्षणं यथा, --
"स संशयो भवेद्या धीरेकत्राभावभावयोः ।

स्वामी ।

**संवित्,** स्त्री, (सं + विद् + क्विप् ।) अङ्गी-

कारः । ज्ञानम् । (यथा, श्रीधर-
स्वामी ।
"वागीशा यस्य वदने लक्ष्मीर्यस्य च वक्षसि ।
यस्यास्ति हृदये संवित् तं नृसिंहमहं भजे ॥"
सम्भाषा । क्रियाकारः । युद्धम् । इत्यमरः ॥
आचारः । (यथा, माघे । १२ । ३५ ।
"ओजस्विवर्णोज्ज्वलवृत्तशालिनः
प्रसादिनोऽनुज्झितगोत्रसंविदः ।
श्लोकानुपेन्द्रस्य पुरः स्म भूयसो
गुणान् समुद्दिश्य पठन्ति वन्दिनः ॥")
सङ्केतः । (यथा, रघुः । ७ । ३१ ।
"स राजलोकः कृतपूर्व्वसंवित्
आरम्भसिद्धौ समयोपलभ्यम् ।
आदास्यमानः प्रमदामिषं तत्
आवृत्य पन्थानमजस्य तस्थौ ॥")
नाम । तोषणम् । इति मेदिनी ॥ समाधिः ।
इति शब्दरत्नावली ॥

**संविदितः**, त्रि, (सं + विद् + क्तः ।) अङ्गीकृतः ।

इत्यमरः ॥

**संविषा**, स्त्री, (सं सम्यक् विषो यत्र ।) अति-

विषा । इति शब्दचन्द्रिका ॥

३९० ।
"अभग्नशमसंवेगलब्धसिद्धिर्नराधिपः ।
श्रीपर्वतादावद्यापि भव्यानामेति दृक्पथम्
॥")

**संवेदः**, पुं, (सं + विद् + घञ् ।) अनुभवः ।

तत्पर्य्यायः । वेदना २ । इत्यमरः ॥ द्वे
अनुभवे ।
विद ल मतौ घञ् संवेदः । ञीषिश्रन्थीति
अने वेदना । न नेत्युक्तेः क्ली वेदनम् । तत्र
विशेषेणापि सामान्यं वाध्यते न क्वचित् कृ-
तीति अनट् । इति भरतः ॥ (यथा, हरिवंशे
।
२०३ । २३ ।
"संवेदजननी धात्री चेति मात्रा प्रचोदिता ।
अनुतां तनुताञ्चैव जन्तूनां कर्म्मभोगिनाम्
॥"

**संवेशः**, पुं, (सं + विश + घञ् ।) निद्रा । इत्य-

मरः ॥ (यथा, रघुः । ९३ ।
"अथ प्रदोषे दोषज्ञः संवेशाय विशांपतिम् ।
सूनुः सूनृतवाक् स्रष्टुः
विससर्ज्जोदितश्रियम् ॥"
स्त्रीरतबन्धः । इति मेदिनी ॥ पीठः । इति
हेमचन्द्रः ॥ (उपभोगस्थानम् । इति स्वामी
॥
यथा, भागवते । ३ । २३ । २० ।
"विहारस्थानविश्रामसंवेशप्राङ्गनाजिरैः ।
यथोपजोषं रचितैर्व्विसापिनमिवात्मनः ॥")

साधारणादिधर्म्मस्य ज्ञानं
संशयकारणम् ॥"
इति भाषापरिच्छेदः ॥
"संशयं लक्षयति संशत इति ।
एकधर्म्मिक-
विरुद्धभावाभावप्रकारकंज्ञानं संशय
इत्यर्थः ।
साधारणेति उभयसाधारणो यो
धर्म्मस्तज्-
ज्ञानं संशयसाधनम् । यथा उच्चैस्तरत्वं
स्थाणुत्वसाधारणं ज्ञात्वा अयं स्थाणुर्न
वेति
सन्दिग्धे । एवमसाधारणज्ञानं
संशयकारणम् ।
यथा शब्दत्वं नित्यानित्यव्यावृत्तं शब्दे
गृहीत्वा
शब्दो नित्यो न वेति सन्दिग्धे ।
विप्रतिपत्तिस्तु
शब्दोऽनित्यो न वेति शब्दात्मिका न
संशय-
कारणं शब्दव्याप्तिज्ञानादीनां
निश्चयमात्रजन-
कत्वस्वाभाव्यात् । किन्त्वत्र शब्देन
कोटिद्वय-
ज्ञानम् जन्यते संशयस्तु मानस एवेति ।
एवं-
ज्ञानेऽप्रामाण्यसंशयाद्विषयसंशयः । एवं
व्याप्य-
संशयादपि व्यापकसंशय इत्यादिकं
बोध्यम् ।
किन्तु संशये धर्म्मिज्ञानं
धर्म्मीन्द्रियसन्निकर्षो
वा कारणमिति ।" इति तट्टीका
सिद्धान्त-
मुक्तावली ॥

**संशयानः**, त्रि, संशययुक्तः । संपूर्व्वशीङ्धातोः

शानप्रत्ययेन निष्पन्नः ॥

**संशयापन्नमानसः**, त्रि, (संशयमापन्नं मानसं

यस्य यत्रेति वा ।) संशयविषयः ।
संशययुक्तः ।

तत्पर्य्यायः । सांशयिकः २ ।
इत्यमरः ॥ द्वे संशय-
विषये स्थाण्वादौ । संशयमापन्नः
सांशयिकः
ष्णिकः । संशयमापन्नं मानसं यत्र
स्थाण्वादौ
स तथा । संशयमापन्नं मानसं
यस्य स
तथेति षष्ठ्यन्यपदार्थत्वे
संशयितरि पुरुषा-
दावप्ये तच्छब्दद्वयप्रवृत्तिः
स्यात् । इति भरतः ॥

**संशयालुः**, । त्रि, संशयिता । इति हेमचन्द्रः ॥

**संशयिता**, [ऋ] त्रि, (सं + शी + तृच् ।)
संशयकर्त्ता । इति हेमचन्द्रः ॥

**संशरणं**, क्ली, (सं + शॄ + ल्युट् ।) रणारम्भः ।
इति शब्दमाला ॥ (संरक्षणम् ।
यथा,
कामन्दकीये । ६ । ४ ।
"लोकानुग्रहमन्विच्छन्
शरीरमनुपालयेत् ।
राज्ञः संशरणं धाम शरीरं
धर्म्मसाधनम् ॥")

**सांशितं**, त्रि, (सं + शो + क्तः ।) सम्यक्सम्पा-
दितम् । व्रतविषयकयत्नवान् ।
यथा संशितं
व्रतम् । सम्यक्
सम्पादितमित्यर्थः । संशितो
ब्राह्मणः ।
व्रतविषकयत्नवानित्यर्थः । इति
सिद्धान्तकौमुदी ॥

**संशुद्धिः**, स्त्री, (सं + शुध + क्तिन् ।) सम्यक्
शीधनम् । शरीरमार्ज्जनम् ।
यथा, --

**संश्रितः**, त्रि, (सं + श्रि + क्तः ।) आश्रितः । यथा,
"न पाचीमग्रतः शम्भोर्नोदीचीं शक्तिसंश्रि-
ताम् ।
न प्रतीचों यतः पृष्ठमतो दक्षं समाश्रयेत् ॥"
इति तिथ्यादितत्त्वम् ॥

**संश्रुतः**, त्रि, (सं + श्रु + क्तः ।) अङ्गीकृतः ।
इत्यमरः ॥ (यथा, रामायणे । ३ । १० । ३६
।
"मया चैतद्वचः श्रुत्वा कार्त्स्न्येन परिपालनम्
।
ऋषोणां दण्डकारण्य संश्रुतं जनकात्मजे ॥")

**संश्लिष्टः**, त्रि, आश्लिष्टः । मिलितः । संपूर्व्व-
श्लिषधातोः क्तप्रत्ययेन निष्पन्नः ॥

**संश्लेषः**, पुं, (सं + श्लिष + घञ् ।) आलिङ्गनम् ।
इत्यमरः ॥ (यथा, महाभारते । १२ । १३३
। १७ ।
"संश्लेषञ्च परस्त्रीभिर्दस्युरेतानि वर्जयेत् ॥")
मेलनम् ॥ (यथा मार्कण्डेये । ३७ । १५ ।
"अनन्तरैश्च संश्लेषमभ्येत्य तदनन्तरम् ।
तेषामन्यतमैर्भृत्यैः समाक्रम्यानयद्वशम् ॥")

**संश्वत्**, क्ली, (सं + श्वि + अतिप्रत्ययेन निपा-
तनात् सिद्धम् । "संपूर्व्वात् श्वयतेः
संश्वदिति
सुभूतिचन्द्रः ।" इत्युणादिटीकायां उज्ज्वल-
दत्तः । २ । ८५ ।) माया यथा, --
"संश्चत्तु कुहके ज्ञेयं संश्वत् तत्रैव ते ममे ।"
इत्युणादिकोषः ॥

**संसक्तः**, त्रि, (सं + सञ्ज + क्तः ।) संलग्नः ।
अव्यवहितः । इत्यमरः ॥

**संसक्तिः**, स्त्री, संसक्तता । संपूर्व्वषन्जधातो-
र्भवि क्तिन्प्रत्ययेन निष्पन्ना ॥

**संसत्**, स्त्री, (संसीदन्त्यस्यामिति । सं +
सद् + क्विप् ।) सभा । इत्यमरः ॥
(यथा, रघुः । १६ । २४ ।

**संसद्** स्त्री, (संसीदन्त्यस्यामिति । सं +

शुष्कान्नभोजिनः पादमित्याह भगवान् मनुः ॥
तस्याविज्ञातचण्डालसहितैकवेश्मस्थसङ्करीकर-
णरूपमूलपाककर्त्तुः द्वितीयसंसर्गिणः । तथा
चापस्तम्बः ।
"अन्त्यजातिरविज्ञातो निवसेद्यस्य वेश्मनि ।
स वै ज्ञात्वा तु कालेन कुर्य्यात्तस्य विशोधनम् ॥
चान्द्रायणं पराको वा द्विजातीनां विशोधनम् ।
प्राजापत्यस्तु शूद्राणां तथा संसर्गदूषणे ॥
यैस्तत्र भुक्तं पक्वान्नं कृच्छ्रं तेषां विनिर्द्दिशेत् ।
तेषामपि च यैर्भुक्तं तेषामर्द्धं विधीयते ।
तेषामपि च यैर्भुक्तं कृच्छपादो विधीयते ॥"
अत्र तृतीयसंसर्गिण एव प्रायश्चित्तदर्शनात्
चतुर्थसंसर्गे दोषो नास्ति । प्रायश्चित्तविवेको-
ऽप्येवम् ।" इति प्रायश्चित्ततत्त्वम् ॥ * ॥ अथ
संसर्गनिरूपणम् । तत्र महापातकिसंसर्गस्य
पापहेतुत्वमाह मनुः ।
"ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गणागभः ।
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥"
प्रायश्चित्तमपि दर्शितम् ।
"एषां पापकृतामुक्ता चतुर्णामपि निष्कृतिः ।
पतितैः संप्रयुक्तानामिमाः शृणुत निष्कृतीः ॥
यो येन पतितेनैषां संसगं याति मानवः ।
स तस्यैव व्रतं कुर्य्यात् तत्स सर्गविशुद्धये ॥
प्रायश्चित्तीयतां प्राप्य दैवात् पापकृतेन वा ।
न संसर्गं व्रजेत् सद्भिः प्रायश्चित्तेऽकृते द्विजः ॥"
पापिष्ठसंसर्गी पातकी भवति इति कल्प्यश्रुतिः ॥
विष्णुः । यश्च येन पापात्मना मह संसृजेत् स
तस्यैव प्रायश्चित्तं कुर्य्यात् । गोतमोऽप्याह ।
ब्रह्महसुरापगुरुतल्पगपितृमातृयोनिसम्बन्धाय
स्तेनाभक्ष्यभक्ष्यनास्तिकनिन्दकनिन्दितकर्म्मा
त्यागिपतितात्याग्यपतितत्यागिनःपतिताः
पातकसंप्रयोकाश्च तैश्चाब्दं समाचरन् ।
निषिद्धपतितसंसर्गात् पततीति श्रुतिः कल्प्या ॥
के ते संसर्गप्रकारा इत्यत्राह बृहस्पतिः ।
"एकशय्यासनं पङ्क्तिर्भाण्डपक्वान्नमिश्रणम् ।
याजनाध्यापनं योनिस्तथा च सहभोजनम् ।
नवधा सङ्करः प्रोक्तो न कर्त्तव्योऽधमैः सह ॥"
छागलेयः ।
"आलापात् गात्रसंस्पर्शात् निश्वासात् सह-
भोजनात् ।

सम्मार्ज्जनञ्च संशुद्धिः
संशोधनविशोधने ॥”
इति रत्नमाला ॥

**संशुष्कं**, त्रि, आतपादिना संशोषितवस्तु ।

संपूर्व्वशुषधातोः क्तप्रत्ययेन
निष्पन्नम् ॥

**संशोधनं**, क्ली, (सं + शुध + ल्युट् ।) संशुद्धिः ।

इति रत्नमाला ॥

**संशोधितं**, त्रि, (सं + शुध + क्तः ।) शुद्धीकृत-

वस्तु । यथा, --
“य लेपाः कुष्ठानां युज्यन्ते
निर्गताश्रदोषाणाम्
संशोधिताशयानां सद्यः
सिद्धिर्भवेत्तेषाम् ॥”
इति मधुमती ॥

**संश्चत्**, क्ली, (संचिनोति मायामिति । सं +

चि + “मश्चत्तृपद्वेहत् ।” उणा०
२ । ८५ ।
इति अतिप्रत्ययेन निपातनात्
साधु ।) कुहकः ।
इत्युणादिकोषः ॥

**संश्यानः**, त्रि, (सं + श्यै + क्तः ।) शीतेन सङ्कु-

चितः । इति मुग्धबोधव्याकरणम्
॥

**संश्रयः**, पुं, (सं + श्रि + अच् ।) आश्रयः । यथा,

स्तुता सुरैः पूर्व्व मभोष्टसंश्रया-
त्तथा सुरेन्द्रेण दिनेषु सेविता ।
करोतु सा नः शुभहेतुरोश्वरी
शुभानि भद्राण्यभिहन्तु चापदः
॥”
इति मार्कण्डेयपुराणे
देवीमाहात्म्ये ५ अध्यायः ॥
(आश्रयस्थानम् । यथा, रामायणे
। २ । ४१ । ६ ।

सद् + क्विप् ।) सभा । इत्यमरः ॥
(यथा, रघुः । १६ । २४ ।
“तदद्भुतं संसदि रात्रिवृत्तं
प्रातर्द्विजेभ्यो नृपतिः शशंस ॥”)

**संसरणं**, क्ली, (सं + सृ गतौ + ल्युट् ।) प्राणि-

जन्म । असंवाधसैन्यगमनम् । घण्टापथः ।
इत्यमरः ॥ रणारम्भः । मेदिनी ॥ गमनम् ।
इति शब्दरत्नावली ॥ (संसारः । यथा,
भागवते । १० । ४० । २८ ।
“पुंसो भवेद्यर्हि संसरणापवर्ग-
स्तत्य्यब्जनाभ सदुपासनया मतिः स्यात् ॥”)

**संसर्गः**, पुं, (सं + सृज् + घञ् ।) सम्बन्धः ।

स च समवायादिः । इति न्यायशास्त्रम् ॥ *
॥
पापिष्ठान्त्यजादिसंसर्गप्रायश्चित्तम् । यथा, -
-
“स्तेयादिना पतिता इत्युपक्रम्य उक्तम् ।
अत्रा-
ज्ञानतो वत्सरेण पातित्यम् ।
“संवत्सरेण पतति पतितेन सहाचरन् ।
याजनाध्यापनाद्नादकशय्यासनाशनात्॥”
इति हारीतवचनात् ।
ज्ञानतो वत्सरार्द्धेनेति ।
तदसंस्रष्टुस्तद्दोषाभाव
एव ।
“बान्धवोऽपि पृथग्भृत्वा तत् पापं नाप्नुयात्
क्वचित् ।”
इति देवलवचनात् ॥ * ॥
“यस्तस्य भुङ्क्ते पक्वान्नं कृच्छ्रार्द्धं तस्य
निर्द्दिशेत् ।

सहशय्यासनाध्यायात् पापं संक्रमते नृणाम् ॥”
यमः ।
“दष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठति ।
यो यस्यान्नमिहाश्नाति स तस्याश्नाति किल्वि-
षम् ॥”
देवलः ।
“पतितेन सहोषित्वा जानन् संवत्सरं नरः ।
मिश्रितस्तेन सोऽब्दान्ते स्वयञ्च पतितो भवेत् ॥
याजनं योनिसम्बन्धं स्वाध्यायं सहभोजनम् ।
कृत्वा सद्यः पतन्त्येते पतितेन न संशयः ॥”
व्यासः ।
“ब्रह्महा मद्यपः स्तेनो गुरुतल्पग एव च ।

| | | |
|---|---|---|
| “अहो निश्चतनो राजा<br>जीवलोकस्य संश्रयम् ।<br>धर्म्मो सत्यव्रत्रं रामं वनवासे<br>प्रवत्स्यति ॥”)<br><br>**संश्रवः**, पुं, (सं + श्रु + अप् ।) अङ्गीकारः ।<br><br>इत्यमरः ॥ (मम्यक् श्रवणम् ।<br>यथा, महा-<br>भारते । १५ । ३ । ६ ।<br>“अय भीमः सुहृन्मध्ये बाहुशब्दं<br>तदाकरोत् ।<br>स यवे धृतराष्ट्रस्य गान्धार्य्याश्च<br>। प्यमर्षणः ॥”) | | |

महापातकिनस्त्वेते यश्च तैः सह संवसेत्
॥
संवत्सरन्तु पतितैः संसर्गं कुरुते तु यः ।
यानशय्यासतैर्न्नित्यं जानन् स पतितो भवेत्
॥”
ननु द्बितीयतृतीयसंर्गिणि प्रमाणं नास्ति
अतएव वृद्धशातातपः ।
“अशुचिं संस्पृशेद्यस्तु एक एव स दुष्यति ।
तत्स्पृष्ट्यन्यो न दुष्येत सर्व्वद्रव्येष्वयं
विधिः ॥”
तथा ।
“संहतानान्तु पात्राणां यद्येकमुपहन्यते ।
तस्य तत् शोधनं प्रोक्तं न तु तत्स्पृष्टिनामपि
॥”
उच्यते । यश्च येन पापात्मनेति यो येन
संपिबे-
दिति संसर्गी येन संसर्गमिति विष्णुव्यास-
जावालवचनैः सामान्येन पापिष्ठसंसर्गी
पापी
भवति इति प्रतिपादनात्
संसर्गपापिष्ठस्यापि
संसर्गी पापयुक्तो भवतीति एभिरेव प्रति-
पादितम् ॥ * ॥ पतितोत्पन्नानां
शुद्धिमिच्छतां
पतितानां प्रायश्चित्तस्य तृतीयो
भागस्तत्प्राय-
श्चित्ते ज्ञेयम् । स्त्री च पतितोत्पन्ना तृतीय-
भागस्य तृतीयभागं कुर्य्यात् । इति
प्रायश्चित्त-
विवेकः ॥

**संसर्गाभावः**, पुं, (संसर्गेण सम्बन्धेन अवच्छिन्नो-
ऽभावः ।) सम्बन्धरहितत्वम् । न्यायमते
अभाव-
पदार्थविशेषः । स तु भेदभिन्नाभावः । स च
त्रिविधः । प्रागभावः १ ध्वंसः २ अन्त्यता-
भावः ३ । यथा, --
“अभावस्तु द्विधा संसर्गान्धोन्याभावभेदतः
।
यिकाः ॥ यथा । संसारश्च
मिथ्याधीप्रभवा
वासना । इति प्रामाण्यवादगादाधरी
टीप्पनी ॥
स्वादृष्टोपनिबद्धशरीरपरिग्रहः। इति
कलाप-
टीकायां गोपीनाथः ॥ संसरणम् । इति
शब्द-
रत्नावली ॥ तत्पर्य्यायः । दुःखलोकः २
भवः ३
कष्टकारकः ४ । इति त्रिकाण्डशेषः ॥
अपिच ।
“अस्माद्विजायते विश्वमत्रैव प्रविलीयते
।
अभायी मायया बद्धः करोति
विविधास्तनूः ॥
न चाप्ययं संसरति न च संसारयेत् प्रभुः
।
नायं पृथ्वी न सलिलं न तेजः पवनो न
तत् ॥
न प्राणो न मनो व्यक्तं न शब्दः स्पर्श एव
च ।
न रूपरसगन्धाश्च नाहं कर्त्ता न वागपि
॥
न पाणिपादौ नो पायुर्न चोपस्थो
द्विजोत्तमाः ।
न कर्त्ता न च भोक्ता वा न च
प्रकृतिपूरुषौ ॥
न माया नैव च प्राणश्चैतन्यं परमार्थतः ।
अहं कर्त्ता सुखी दुःखी कृशः स्थूलेति
या मतिः
सा चाहङ्कारकर्त्तृत्वादात्मन्यारोप्यते
जनैः ।
वदन्ति वेदविद्वांसः साक्षिणं प्रकृतेः परम्
॥
भोक्तारमक्षरं शुद्धं सर्व्वत्र समवस्थितम् ।
तस्सादज्ञानमूलोऽयं संसारः
सर्व्वदेहिनाम् ॥”
इति कौर्म्मे ईश्वरगीतासु २ अध्यायः ॥
किञ्च ।
ये मानवा विगतरागपरावरज्ञा
नारायण सुरगुरुं सततं स्मरन्ति ।
ते धौतपाण्डरपटा इव राजहंसाः
संसारसागरजलस्य तरन्ति पारम् ॥”
इति वामने ९० अध्यायः ॥

**संसारी**, [न्] पुं, (संसारोऽस्त्यस्येति । इनिः ।)
संसारविशिष्टप्राणी । इति हलायुधः ॥ शरीरी
।
यथा । संसारिणामिति संसारित्वं शरीरित्वम्
।
शरीरित्वञ्च भोगावच्छेदकत्वं न तु चेष्टावत्त्वम्
।
अत
ईश्वरपरिगृहीतरामकृष्णादिशरीरव्युदासः
मिथ्याज्ञानजन्यवासनाया अदृष्टस्य वा न
संसारपदेन विवक्षासम्भवः । इति बौद्धाधि-
कारस्य गादाधरी टिप्पनी ॥

**संसिद्धिः**, स्त्री, (स + सिध + क्तिन् ।) प्रकृतिः ।
स्वभावः । इत्यमरः ॥ सम्यक्सिद्धिः । मदीग्रा
।
इति मेदिनी ॥ परमा सिद्धिः । मोक्षः । यथा,
“मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः
॥”
इति श्रीभगवद्गीतायां ८ अध्याये १५
श्लोकः ॥
(फलम् । इति स्वामी ॥ यथा, भागवते । १ ।
२ । १३ ।
“अतः पुंभिर्द्विजश्रेष्ठा वर्णाश्रमविभागशः ।
स्वनुष्ठितस्य धर्म्मस्य संसिद्धिर्हरितोषणम्
॥”)

**संसृतिः**, स्त्री, (सं + सृ + क्तिन् ।) संसारः ॥
इति शब्दरत्नावली ॥ (यथा, भागवते । १ ।
१ । १४ ।
“आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन् ।
ततः सद्यो विमुच्येत यद्बिभेति स्वयं भयम्
॥”)
प्रवाहः । इति त्रिकाण्डशेषः ॥

प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च ॥
एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते ॥"
इति भाषापरिच्छेदः ॥ * ॥
भेदत्वं
तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम् । विनाश्यभावत्वं प्रागभावत्वम् १
जन्याभावत्वं ध्वंसत्वम् २
नित्यसंसर्गाभावत्वमत्यन्ताभावत्वम् ३ । इति सिद्धान्तमुक्तावली ॥

**संसर्गी**, [न्] (संसर्गोऽस्यास्तीति । इनिः ।

यद्वा, सं + सृज + "संपृचानुरुधेति ।" ३ । २ । १४२ । इति घिणुन् ।) संसर्गविशिष्टः । यथा ।
विभागानन्तरं मैत्र्यात्
पितृभ्रातृपितृष्यभ्रातृपुत्त्राणां यथायथं एकत्रावस्थानं संसर्गः । तद्युक्तः संसर्गी । एवम्भूतस्य संसर्गिणो मृतस्य
धनं तज्जातस्यापत्यस्य तदपत्याभावे संसर्गी
स्वयं गृह्लीयात् । इति दायतत्त्वम् ॥

**संसर्पः**, पुं, सम्यक्प्रकारेण गमनम् । सर्पादिगमनवद्गमनम् । संपूर्व्वसृपधातोर्घञ्प्रत्ययेन निष्पन्नः ॥

**संसर्पी**, [न्] त्रि, संसर्पशब्दादिन्प्रत्ययेन संपूर्व्वकसृपधातोर्णिन्प्रत्ययेन वा निष्पन्नः ॥ संसर्पविविष्टः । सम्यग्गमनशीलः ॥ (यथा, रघुः । ७ । २६ ।
"कपोलसंसर्पिशिखः स तस्याः
मुहुर्त्तकर्णोत्पलतां प्रपेदे ॥")

**संसारः**, पुं, (संसरत्यस्मादिति । सं + सृ गतौ + घञ् ।) मिथ्याज्ञानजन्यवासना । इति नैया-

"पितृमातृसुहृद्भ्रातृकलत्रादिकृतेन च ।
हष्टोऽसकृत्तथा दैन्यमश्रुपूर्णाननो गतः ॥
एवं संसारचक्रेऽस्मिन् भ्रमता तात सङ्कटे ।
ज्ञानमेतन्मया प्राप्तं मोक्षसंप्राप्तिकारकम् ॥"
इति मार्कण्डेयपुराणे
पितापुत्त्रसंवादनामाध्यायः ॥

**संसारगुरुः**, पुं, (संसारस्य गुरुः ।) कामदेवः ।

इति त्रिकाण्डशेषः ॥ जगद्गुरुश्च ॥

**संसारमार्गः**, पुं, (संसारस्य मार्गः ।) योनिः ।

इति त्रिकाण्डशेषः ॥

**संसारमोक्षणं**, त्रि, (संसारस्य मोक्षनं यस्मात् ।)

भवतारकम् । यथा, --
"एवमेतन्महाशास्त्रं देवि ! संसारमोक्षणम् ।
मम भक्तव्यवस्थायै प्रयुक्तं परमं मया ॥"
इति वाराहे
सुतस्वामिमाहात्म्यनामाध्यायः॥ *
(संसारस्य मोक्षणम् ।) भवमोचने, क्ली । तदुपाया यथा, --
बलिरुवाच ।
"संसारार्णवमग्नानां नराणामन्यचेतसाम् ।
तरणे यो भवेत् पोतस्तन्मे
व्याख्यातुमर्हसि ॥
प्रह्लाद उवाच ।
ये शङ्खचक्राब्जकरं तु शार्ङ्गिणं
खगेन्द्रकेतुं वरदं श्रियः पतिम् ।
समाश्रयन्ते भवभीतिनाशनं
संसारगर्त्तेन पतन्ति ते पुनः ॥
वैकुण्ठं खण्डपरशुं भवबन्धसमुच्छिदम् ।
प्रणिपत्य महात्मानं संसारे न पुनर्भवेत् ॥
ध्यायेत् दामोदरं यस्तु भक्तिनम्रोऽर्च्चयेत वा ।
न स संसारगर्त्तेऽस्मिन् मज्जते
दानवेश्वर ! ॥

**संसृष्टः**, त्रि, (सं + सृज + क्तः ।) संसर्गः ।

वमनादिना संशुद्धः । इति मेदिनीकरहेमचन्द्रौ ॥ विभागानन्तरं मैत्र्यात् पितृभ्रातृपितृव्यभ्रातृपुत्त्राणां यथायथं एकत्रावस्थानसंसर्गस्तद्युक्तः । अथ संसृष्टधनविभागः । एकपितृजातयोरपि सोदरविमातृजयोर्मृतदेयषट्पुरुषपिण्डदातृत्वेन सोदरस्यैव धनाधिकारो
न तु पित्रादित्रयमात्रपिण्डदातुर्विमातृजस्य । क्वचित्तु संसृष्टत्वेन
विमातृजस्याप्यसंसृष्टसोदरेण सह तुल्याधिकारिता सोदरम्य संसृष्टत्वे स एव गृह्लीयान्न संसृष्ट्यपि विमातृज इति । तथा च याज्ञवल्क्यः ।
"संसृष्टिनन्तु संसृष्टी सोदरस्य तु सोदरः ।
दद्याच्चापहरेद्दंशं जातस्य च मृतस्य च ॥
अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्यो धनं हरेत् ।
असंसृष्ट्यपि चादद्यात् संसृष्टो नान्यमातृजः ॥"
संसृष्टिनमाह बृहस्पतिः ।
"विभक्तो यः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः ।
पितृव्येणाथवा प्रीत्या स तु संसृष्ट उच्यते ॥"
तेन विभागानन्तरं मैत्र्यात् पितृभ्रातृपितृव्यभ्रातृपुत्त्राणां यथायथं एकवावस्थानं संसर्गः तद्युक्तः संसर्गी । एवम्भूतस्य संसर्गिणो मृतस्य

धनं तज्जातस्यापत्यस्य तदपत्याभावे संसर्गो स्वयं गृह्णीयात् । एवं सोदरस्य तु सोदरः ! ॥ * ॥ ततश्च स सृष्टिनस्तु संसृष्टीत्येतद्वचनं तुल्यरूप-सम्बन्धिसंसर्गकृतविशेषप्रतिपत्त्यर्थं तेन सोद-राणां सापत्नानां भ्रातृपुत्त्राणां पितृव्याणां तुल्यानां सद्भावे संसर्गी गृह्णीयात् वाक्याद-विशेषश्रुतेः । पूर्व्ववचने सर्व्वेषामेव प्रकृतत्वात् सर्व्वेषु चाक्षेपासम्भवात् । अतो न भ्रातृमात्र-विषयमिदं वचनमिति जीमूतवाहनः ॥ सोदरे त्वसंसृष्टिनि संसृष्टिन्यसोदरे च सति कतर-स्तावत् गृह्णीयात् । एवंसोदरासोदरयोः संसृ-ष्टयोः सद्भावे कतर इत्यत्र प्रथमत आह अन्योदर्य्यस्त्विति । अन्योदर्य्यः पुनः संसृष्टी सन् गृह्णीयात् नान्योदर्य्यमात्रः किन्तु असं-सृष्ट्यपि पूर्व्ववचनस्थसोदरपदानुषङ्गात्प्राप्तः सोदरश्च गृह्णीयात् । तेन एकत्र विषये पूर्व्ववचनोक्तसंसृष्टत्वसोदरत्वयोरेकशस्तुल्यत्वा-दुभयोर्विभज्य ग्रहणम् । तदुभयसत्त्वे च असो-दर्य्यस्यासंसृष्टिनोऽतुल्यरूपत्वान्नेति । द्वितीये आह संसृष्टो नान्यमातृज इति । सोदरे संसृष्टिनि सति अन्यमातृजः संसृष्ट्यपि न गृह्णीयात् । अर्थात्तत्र संसृष्टी सोदर एव गृह्णीयात् । संसृष्टत्वाविशेषेऽपि सोदरत्वेन तस्य बलवत्त्वात् । दायभागकारास्तु अन्योदर्य्यस्तु संसृष्टी सन् सत्यपि सोदरेऽसंसृष्टिनि धनं हरेत् नान्योदर्य्यः संसृष्ट्यपि गृह्णीयादिति पूर्व्वार्द्धस्यार्थः । तत्र किं सोदरस्तदानीं न गृह्णीयादेवेत्यपेक्षायामुत्तरार्द्धेनोक्तंअसंसृष्ट्यपि चादद्यात् सोदर इत्यनुषज्यते न संसृष्टोऽन्य-मातृजः केवलः । किन्तु उभाभ्यामेव विभज्य ग्रहीतव्यमित्याहुः । मिताक्षरादयोऽप्येवम् । याज्ञवल्क्यदीपकलिकायांशूलपाणिमहामही-पाध्यायस्तु । अन्योदर्य्यस्तु संसृष्टी नान्योदर्थ्यी धनं हरेत् । असंसृष्ट्यपि सोदर एव गृह्णीयात् न तु संसृष्टः सापत्न्यो भ्राता । संसृष्ट इति गभसंसृष्टः सोदर इति केचित् । नान्योदर्य्यो धनं हरेत् इति पाठे अन्योदर्य्यः सन् धनं न गृह्णीयात् इति व्याख्या असंसृष्टसोदरस्याधि-कारार्थमिदं वचनमतो न पुनरुक्तिरित्याहुः । रत्नाकरप्रभृतयस्तु कल्पतरौ नान्योदर्य्यधनं हरे

“संसृष्टिनन्तु संसृष्टी सोदरस्य तु सोदरः ।
दद्याच्चापहरेद्दंशं जातस्य च मृतस्य च ॥
अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्यो धनं हरेत् ।
असंसृष्ट्यपि चादद्यात् संसृष्टो नान्यमातृजः ॥”
इति दायतत्त्वम् ॥

**संस्कारः**, पुं, (सं + कृ + घञ् ।) प्रतियत्नः । अनुभवः । मानसकर्म्म इति मेदिनी ॥ न्याय-मते गुणविशेषः । स च त्रिविधः । वेगाख्य-संस्कारः १ अयं मूर्त्तपदार्थस्थायी । क्वचिद्वेग-जन्यः क्वचित्कर्म्मजन्यश्च । स्थितिस्थापक-संस्कारः २ अयं पृथिवीगुणः केषाञ्चिन्मते पृथि-व्यादिचतुःपदार्थगुणः । अयं अतिन्द्रियः स्पन्दनकारणञ्च । भावनाख्यसंस्कारः ३ अयं आत्मनः अतीन्द्रियगुणः । उपेक्षानात्मक-निश्चयजन्यः । अयं स्मरणप्रत्यभिक्षयोः कार-णञ्च ॥ * ॥ अस्य प्रमाणम् ।
“संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने ।
मूर्त्तमात्रे तु वेगः स्यात् कर्म्मजो वेगजः क्वचित् ॥
स्थितिस्थापकसंस्कारः क्षितौ केचिच्चतुर्ष्वपि ।
अतीन्द्रियः स विज्ञेयः क्वचित् स्पन्देऽपि कारणम् ॥
भगिन्यश्च निजादंशाद्दत्त्वांशन्तु तुरीयकम् ॥”
असंस्कृता भ्रातरो भगिन्यश्च पूर्व्वसंस्कृतैरुप-नीतैः । अन्यथा मन्त्रपाठानधिकारापत्तेःइत्यु-द्वाहतत्त्वम् ॥ एषां विवरणं तत्तच्छब्दे द्रष्टव्यम् ।
गरुडपुराणोक्तसंस्कारास्तत्रैव ९३ । ९४ । ९५ अध्यायेषु द्रष्टव्याः ॥ * ॥
अथ जीर्णदेवगृहादिसंस्कारफलम् ।
“अथ चेज्जीर्णसंस्कारविधिः पुण्यो महामुने !
देवतादिषु कर्त्तव्यो महाभोगफलेप्सुभिः ॥
मूलादष्टगुणं पुण्यं जीर्णसंस्कारतो भवेत् ।
तस्मादनाथजीर्णेषु कार्य्यं संस्करणं मुने ! ।
स्वकीयं परकीयं वा यथाविभवविस्तरैः ॥
स्वतो वा परतो वाद्य यस्तु संस्कुरुते सुरान् ।
स यावच्चन्द्रसूर्य्यौ गौस्तावत्कालं सुखी-भवेत् ॥
लोकेषु तेषु देवानां विरजस्केषु हृष्टधीः ।
यथा गोमेधयज्ञेषु पशुरोमसमाः समाः ॥
वसते दिवि हृष्टात्मा जीर्णसंस्कारकारकः ।
अनाथा वा सनाथा वा पूजनीयाः सदा सुराः ॥
इति देवीपुराणे पूजाविधिनामाध्यायः ॥

**संस्कारजः**, त्रि, संस्कारेण जातः । संस्कार-शब्दपूर्व्वकजनधातोर्ड्प्रत्ययेन निष्पन्नः ॥

**संस्कारवर्ज्जितः**, पुं, (संस्कारेण जातः ।) उप-नयनसंस्कारहीनः । तत्पर्य्यायः । व्रात्यः २ । इति हेमचन्द्रः ॥ दशसंस्कारहीने, त्रि ॥

**संस्कारहीनः**, पुं, (संस्कारहीनः ।) व्रात्यः ।

दिति पाठो दृश्यते स मूलभूतयाज्ञवल्क्यमिताक्षरापारिजातहलायुधग्रन्थेषु नान्योदर्य्यो धनं हरेदिति पाठदर्शनात् तदनुसारव्याख्यादर्श-नाच्च लिपिकरप्रमाद इत्याहुः । इति दाय-तत्त्वम् ॥

**संसृष्टत्वं**, क्ली, (संसृष्ट + त्व ।) संसृष्टस्य भावः ।

यथा । तेन एकत्र विषये पूर्ववचनोक्तसंसृष्टत्व-सोदरत्वयोरेकशस्तुल्यत्वादुभयोर्विभज्य ग्रह-णम् । इति दायतत्त्वम् ॥

**संसृष्टी**, [न्] पुं, संसृष्टं संसृष्टत्वमस्यास्तीति ।

इनिः ।) संसृष्टत्वविशिष्टः । यथा, याज्ञ-वल्क्यः ॥

भावनाख्यस्तु संस्कारो
जीववृत्तिरतीन्द्रियः ।
उपेक्षानात्मकस्तस्य निश्चयः
कारणं भवेत् ॥
स्मरणे प्रत्यभिज्ञायामप्यसौ
हेतुरुच्यते ॥”
इति भाषापरिच्छेदः ॥ * ॥
शुद्धिः अदृष्टविशेषजनककर्म्म ।
यथा । यद्यग्नि-
स्थापनान्तरं कर्म्मकाले
वृष्ट्यादिशङ्कया संस्फृ-
ताग्निरन्यत्रानीयते तदा
पुनर्भूसंस्ककारः
कर्त्तव्यः । संमुह्य उपलिप्य
उल्लिख्य उद्धृत्य
अभ्युक्षयेत् एष संस्कारोऽनुगतोऽग्नौ
भूयः ।
इति गृह्यान्तरात् । इति
संस्कारतत्त्वम् ॥ * ॥
दशविधसंस्कारा यथा । विवाहः १
गर्भा-
धानम् २ पुसवनम् ३
सीमन्तोन्नयनम् ४
जातकर्म्म ५ नामकरणम् ६
अन्नप्राशनम् ७
चूडाकरणम् ८ उपनयनम् ९
समावर्त्तनम् १० ।
यथा हारीतः । गर्भाधानवदुपेतो
ब्रह्मगर्भं
सन्दधाति पुंसवनात् पुंसीकरोति
फलस्थापनात्
मातापितृज पाप्मानमपोहति
रेतोरक्तगर्भो-
पघातः पञ्चगुणो जातकर्म्मणा
प्रथममपोहति
नामकरणेन द्वितीयं प्राशनेन तृतीयं
चूडा-
करणेन चतुर्थं स्नापनेन पञ्चमं
एतैरष्टाभिः
संस्कारैर्गर्भोपघातात् पूतो भवतीति
। स्नान-

इत्यमरः ॥ संस्कारहीनत्वकालमाह ।
यमः ।
“पतिता यस्य सावित्री दशवर्षाणि पञ्च च
।
ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः
।
प्रायश्चित्तं भवेदेषां प्रोवाच वदतां वरः ॥”
तथा मार्कण्डेयः ।
“विप्रस्य षोडशाद्वर्षात् राज्ञो द्वाविंशतेः
परम् ।
वैश्यस्याष्टाधिकादब्दात् सावित्रीपतनं
भवेत् ॥”
विष्णुधर्म्मोत्तरे ।
“षोडशाब्दा हि विप्रस्य राजन्यस्य द्विविं-
शतिः ।
विंशतिः सचतुर्थी च वैश्यस्य
परिकीर्त्तिता ॥
सावित्री नातिरिच्येत अत ऊद्र्ध्वं
निवर्त्तते ॥”
इति मलमासतत्त्वम् ॥

**संस्कृतं**, क्ली, (सं + कृ + क्तः ।) लक्षणोपेतम् ।

इति मेदिनी ॥
पाणिन्यादिकृतव्याकरणसूत्रेण
उपेत उपगतो लक्षणोपेतः साधुशब्दः ।
इत्य-
मरटीकायां भरतः ॥ स तु देववाणी ।
यथा,
“गौर्व्वाणवाणीवदनं मुकुन्द-
संकीर्त्तनञ्चेत्युभयं हि लोके ।
सुदुर्ल्लभ तच्च न मुग्धबोधा-
न्न लभ्यतेऽतः पठनीयमेतत् ॥”
इति मुग्धबोधव्याकरणप्रशंसाश्लोकः ॥

**संस्कृतः**, त्रि, (सं + कृ + क्तः ।) कृत्रिमः । इत्य-

मरः ॥ करणेन निर्वृत्तः कृत्रिमा घटादिः ।
इति भरतः ॥ पक्वः । स्वतो
गुणान्तराधानम् ।

| | मत्र समावर्त्तनरूपमिति कल्पतरुः । इति संस्कारतत्त्वम् ॥ * ॥ याज्ञवल्क्यः ।<br>“गर्भाधानमृतौ पुंसः सवनं स्पन्दनात् पुरा ।<br>षष्ठेऽष्टमे वा सीमन्तः प्रसवे जातकर्म्म च ॥<br>अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः ।<br>षष्ठेऽन्नपाशनं माभि चूडा कार्य्या यथाकुलम् ॥<br>एवमेनः शमं याति बीजगर्भसमुद्भवम् ॥”<br>इति मलमासतत्त्वम् ॥ * ॥<br>संस्कृतानामधिकारमाह याज्ञवल्क्यः ।<br>“असस्कृतास्तु संस्कार्य्या भ्रातृभिः पूर्व्वसंस्कृतैः | |
|---|---|---|

इत्यमरटीकायां स्वामी ॥ शस्तः । भूषितः ।
इति मेदिनी ॥ शोधितः । इति जटाधरः ॥
(यथा, देवीभागवते । १ । २ । ११ ।
"पुराणमुत्तमं पुण्यं श्रीमद्भागवताभिधम् ।
अष्टादशसहस्राणि श्लोकास्तत्र तु संस्कृताः
॥")

**संस्क्रिया**, स्त्री, (सं + कृ + "कृञः शच ।" ३ ।
३ । १०० । इति शः ।) शवदाहादिक्रिया ।
इति त्रिकाण्डशेषः ॥ संस्कारश्च ॥

**संस्तरः**, पुं, (संस्तीर्य्यते इति । सं + स्तॄ +
अप् ।) शय्या । यज्ञः । इति हेमचन्द्रः ॥
पल्लवादिरचितशय्या । इति शब्दरत्नावली ॥
(यथा, रघुः । ८ । ५७ ।
"नवपल्लवसंस्तरेऽपि ते
मृदु दूयेत् यदङ्गमर्पितम् ।
तदिदं विषहिष्यते कथं
वद बामोरु चिताधिरोहणम् ॥")

**संस्तवः**, पुं, (सं + स्तु + अप् ।) परिचयः ।
इत्यमरः ॥ (यथा, किराते । ४ । २५ ।
"विहाय वाञ्छामुदिते मदात्यया-
दरक्तकण्ठस्य रुते शिखण्डिनः ।
श्रुतिः श्रयत्युस्मदहसनिःस्वनं
गुणाः प्रियत्वेऽधिकृता न संस्तवः ॥")
सम्यक्स्तुतिश्च ॥ (यथा, भागवते । ११ ।
१३ । १४ ।
"इति मे छिन्नसन्देहा मुनयः सनकादयः ।
समाजयित्वा परया भक्त्या गृणत संस्तवैः
॥")

**संस्तवानः**, त्रि, (संस्तवीतीति । सं + स्तु +
"सम्यानच् स्तुवः ।" उणा० ३ । ८९ । इति
आनच् ।) सद्वक्ता । इत्युणादिकोषः ॥ वाग्मी ।
उद्गाता । हर्षः । इति संक्षिप्तसारोणादिवृत्तिः
॥

**संस्तावः**, पुं, (समेत्य स्तुवन्ति यस्मिन् देशे छन्दोगा
इति । सम् + स्तु + "यज्ञे समि स्तुवः ।" ३ ।
३ । ३१ । इति घञ् ।) क्रतुषु द्विजन्मनां
स्तुतिभूमिः । इत्यमरः ॥ यज्ञेषु स्तुतिकारिणां

**संस्थः**, त्रि, (संतिष्ठते इति । सं + स्था + कः ।)
अवस्थितः । इति मेदिनी ॥ (यथा,
हरिवंशे
भविष्यपर्व्वणि । ८ । ६६ ।
"यदा मे मरणं भूयात् तदा मा भूत्
स्मृतिभ्रमः ।
दिने दिने क्षणं चित्तं त्वयि संस्थं
भवत्विति ॥")
मृतः । इति शब्दरत्नावली ॥

**संस्था**, स्त्री, (संतिष्ठतेऽनयेति । सं + स्था +
अङ् ।) न्याय्यपथस्थितिः । इत्यमरः
॥ सन्ति-
ष्ठतेऽनया सम्यगवस्थानं वा संस्था ।
इति
भरतः ॥ अस्याः पर्य्यायो मर्य्यादाशब्दे
द्रष्टव्यः ॥
(यथा, उपदेशशतके । ९० ।
"अपि शक्तः परिहर्त्तुं ययातिशापं
हरिर्हते
कंसे ।
राजासनं न भेजे पुरातनीं पालयेत्
संस्थाम् ॥"
प्रतिज्ञा । यथा, रघुः । ११ । ३८ ।
"तस्य वीक्ष्य ललितं वपुः शिशोः
पार्थिवः प्रथितवंशजन्मनः ।
स्वं विचिन्त्य च धनुर्दुरानमं
पीडितो दुहितृशुल्कसंस्थया ॥")
स्थितिः सादृश्यम् । नाशः । इति
मेदिनी ॥
व्यवस्था । (यथा, मनुः । १ । २१ ।
"सर्व्वेषान्तु स नामानि कर्म्माणि च
पृथक्
पृथक् ।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च
निर्म्ममे ॥")
व्यक्तिः । क्रतुभेदः । (यथा, भागवते ।
१० ।
२३ । ८ ।
"दीक्षायाः पशुसंस्थायाः सोत्रामण्याश्च

**संस्थितः**, त्रि, (स + स्था + क्तः ।) मृतः । इत्य-
मरः ॥ (यथा, मनुः । ९ । १९० ।
"संस्थितस्यानपत्यस्य सगोत्रात्
पुत्त्रमाहरेत् ।
यत्र यद्रिक्थजातं स्यात् तत्तस्मिन् प्रतिपाद-
येत् ॥")
सम्यक्स्थितिविशिष्टश्च ॥ (यथा, कौर्म्मे ।
१ । २१ ।
"इदन्तु पञ्चदशमं पुराणं कौर्म्ममुत्तमम् ।
चतुर्द्धासंस्थितं पुण्यं संहितानां प्रभेदतः ॥"

**संस्थितिः**, स्त्री, (सं + स्था + क्तिन् ।) संस्था-
नम् । (यथा, मनुः । ६ । ९० ।
"यथा नदीनदाः सर्वे सागरे यान्ति संस्थि-
तिम् ।
तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम्
॥"
मृत्युः । गृहम् । इति केचित् ॥

**संस्पर्शः**, पुं, (सं + स्पृश + घञ् ।) सम्यक्-
स्पर्शः । स तु त्वगिन्द्रियग्राह्यगुणविशेषः ।
यथा,
छागलेयः ।
"आलापात् गात्रसंस्पर्शात् निश्वासात् सह-
भोजनात् ।
सहशय्यासनाध्यायात्पापं संक्रमते नृणाम्
॥"
इति प्रायश्चित्तविवेकः ॥

**संस्पर्शा**, स्त्री, (संस्पृश्यतेऽसौ इति । सं + स्पृश
+ कर्म्मणि घञ् । टाप् ।) जनीनामगन्ध-
द्रव्यम् । इत्यमरः ॥

**संस्फालः**, पुं, (सम्यक् स्फालः स्फुरणं यस्य ।)
मेषः । इति त्रिकाण्डशेषः ॥

**संस्फुटः**, त्रि, (संस्फुटतीति । सं + स्फुट + इ-
गुपधेति कः ।) विकसितः । इति
शब्दरत्नावली ॥

**संस्फेटः**, पुं, (सं + स्फिट अनादरे + अधिकरणे
घञ् ।) युद्धम् । इत्यभरटीकायां भरतः ॥

ब्राह्मणानां अवस्थानभूमिः संस्ताव उच्यते ।
क्रतुषु यज्ञविषयेषु द्विजानां या स्तुतिभूमिः
स्थानं स संस्ताव इत्यन्वयः । समेत्य स्तूयते
छन्दोगरत्र इति संस्तावः घञ् । इति भरतः ॥

**संस्तुतः**, त्रि, (सं + स्तु + क्तः ।) सम्यक्प्रकारेण

स्तुतिप्राः । सम्यक्स्तवविषयीभूतः । यथा, --
“भूयश्च शतवार्षिक्यामनावृष्ट्यामनम्भसि ।
मुनिभिः संस्तुता भूमौ सम्भविष्याम्ययोनिजा
॥”
इति देवीमाहात्म्यम् ॥

**संस्त्यायः**, पुं, (सं + स्त्यै + घञ् । आतो युक् ।)

संघातः । सन्निवेशः । इत्यमरः ॥ संस्थानम् ।
विस्तृतिः । इति मेदिनी ॥ गृहम् । इति हेम-
चन्द्रः ॥

**संस्थः**, पुं, (संतिष्ठते स्वपरराष्ट्रेषु इति । सं +

स्था + कः ।) चरः । इति मेदिनी ॥ निज-
राष्ट्रकः इति हेमचन्द्रः ॥ (यथा, कामन्द-
कीये । १२ । ३६ ।
“सस्थाः स्युश्चारसंस्थित्यै दत्तदायाः शुभा-
शयाः ॥”)

सत्तमाः ।
अन्यत्र दीक्षितस्यापि नान्नमश्नन् हि
दुष्यति ॥”
समाप्तिः । इति हेमचन्द्रः ॥
प्रलयचतुष्टयम् ।
यथा, --
“नैमित्तिकः प्राकृतिको नित्य
आत्यन्तिको
लयः ।
संस्थेति कविभिः प्रोक्तश्चतुर्धास्य
स्वभावतः ॥”
इति पुराणम् ॥

**संस्थानं**, क्ली, (सं + स्था + ल्युट् ।) सन्निवेशः
।

(यथा, मनुः । ८ । ३७१ ।
“भर्त्तारं लङ्घयेत् या तु
स्त्रीज्ञातिगुणदर्प्पिता ।
तां श्वभिः खादयेद्राजा संस्थाने
बहुसंस्थिते ॥”)
चतुष्पथः । इत्यमरः ॥ आकृतिः ।
मृत्युः ।
इति मेदिनी ॥ चिह्नम् । इत्यजयपालः
॥ सम्यक्
स्थितिश्च ॥ (व्यवस्था । यथा,
भागवते । ३ ।
९ । २७ ।
“लोकसंस्थानविज्ञान आत्मानं
परिखिद्यतः ।
तामाहागाधया वाचा कश्मलं शमयन्निव
॥”)

**संस्थापनं**, क्ली, (स + स्था + णिच् + ल्युट् ।)

सम्यक्स्थितिप्रापणम् । स्थिरीकरणम्
। यथा,
“परित्राणाय साधूनां विनाशाय च
दुष्कृताम् ।
धर्म्मसंस्थापनार्थाय संभवामि युगे युगे
॥”
इति भगवद्गीतायाम् ३ अध्यायः ॥
“साधुरक्षणेन दुष्टवधेन च धर्म्मं
स्थिरीकर्त्तुम् ।”
इति तट्टीमायां श्रीधरस्वामी ॥

**संस्फोटः**, पुं, (संस्फोटत्यत्रेति । सं + स्फुट् भेदने

+ घञ् ।) युद्धम् । इत्यमरः ॥

**संस्मरणं**, क्ली, (सं + स्मृ + ल्युट् ।) संस्मृतिः ।

संस्कारजन्यज्ञानम् । यथा,
योगियाज्ञवल्क्यः ।
“ध्यायेन्नारायणं नित्यं स्नानादिषु च कर्मसु
।
तद्विष्णोरिति मन्त्रेण स्नायादप्सु पुनः पुनः
॥
गायत्री वैष्णवी ह्येषा विष्णोः संस्मरणाय वै
।”
इति तिथ्यादितत्त्वम् ॥

**संस्मृतिः**, स्त्री, संस्मरणम् । संपूर्वस्मृधातोः

क्तिन्प्रत्ययेन निष्पन्ना ॥ (यथा, कथासरित्-
सागरे । ५५ । २०६ ।
“तच्छ्रुत्वा संस्मृतिं लब्ध्वा स राजा
प्रत्युवाच
तम् ॥”)

**संहतः**, त्रि, (सं + हन + क्तः ।) दृढसन्धिः ।

इत्यमरः ॥ मिलितः । दृढः । इति
मेदिनीकर-
हेमचन्द्रौ ॥ सम्यक्प्रकारेण हतश्च ॥

**संहतजानुः**, त्रि, (संहते जानुनी यस्य ।)

लग्नजानुकः । यथा, --
“प्रज्ञुः प्रगतजानुः स्यात् प्रज्ञोऽत्रैव च दृश्यते
संज्ञुः संहतजानुश्च भवेत् संज्ञोऽपि तत्र हि ।
ऊर्द्ध्वज्ञु रूर्द्ध्वजानुः
स्यादूर्द्ध्वज्ञोऽप्यूर्द्ध्वजानुकः ॥”
इति भरतधृतसाहसाङ्कः ॥

**संहतजानुकः**, त्रि, (संहतजानुरेव । स्वार्थे कन् ।)
लग्नजानुकः । तत्पर्य्यायः । संज्ञुः २ । इत्यमरः ॥ संहतजानुः ३ संज्ञः ४ । इति तट्टीकायां भरतः ॥

**संहतलः**, पुं, (संहतं परस्परयोर्मेलनं लातीति ।
ला + कः ।) मिलितपाणिद्वयम् । इत्यमरः ॥
द्वौ वामदक्षिणौ प्रतलौ संहतौ मिलितौ
संहतल उच्यते । प्रतलद्वयं मिलितं संहतलः
।
स्यादित्यर्थः । संहतं लाति संहतलः हनजनादितिडः । निर्विसर्गपाठे द्वौ वामदक्षिणौ
पाणी संहतौ मिलितौ चेत् तदा संहतलपतलावुच्येते । अस्मिन्नर्थे प्रतलोऽयं चपेटे
संह-
तले च वर्त्तमानत्वात् नानार्थः । इति भरतः ॥

**संहतिः**, स्त्री, (सं + हत + क्तिन् ।) समूहः ।
इत्यमरः ॥ (यथा, हितोपदेशे ।
"अल्पानामपि वस्तूनां संहतिः कार्य्यसाधिका
।
तृणैर्गुणत्वमापन्नैर्वध्यन्ते मत्तदन्तिनः ॥")

**संहननं**, क्ली, (संहन्यते इति । सं + हन +
ल्युट् ।) शरीरम् । इत्यमरः ॥ (यथा, भागतते । ५ । २ । २१ ।
"आग्नीध्रसुतास्ते मातुरनुग्रणादौत्पत्तिकेनैव
संहननबलोपेताः पित्रा विभक्ता आत्मतुल्यनानामि यथाविभागं जम्बूद्वीपवर्षाणि बुभुजुः
॥"
सम्यग्घातनञ्च ॥ (कठिने, त्रि । यथा, भागवते । ५ । ९ । १० ।
"शीतोष्णवातवर्षेषु वृष इवानाधृताङ्गः पीनः
संहननाङ्गः * * * विचचार ॥" "संहन्यन्ते
निविडीभवन्ति अङ्गानि यस्य । कठिनावयव
इत्यर्थः ॥" इति तट्टीकायां स्वामी ॥)

**संहराख्यः**, पुं, (संहर इति आख्या यस्य ।)
पावकनामाग्निः । इति मत्स्यपुराणम् ॥

**संहर्षः**, पुं, (सं + हृष + घञ् ।) प्रमोदः ।
"अधोमुखे वामहस्ते ऊर्द्ध्वास्यं
दक्षहस्तकम् ।
क्षिप्ताङ्गुलीरङ्गुलीभिः संगृह्य परिवर्त्तयेत्
।
प्रोक्ता संहारमुद्रेयमर्पणे तु प्रशस्यते ॥"
अर्पणे आत्मनीति शेषः । इति
तिथ्यादितत्त्वम् ॥
भैरवविशेषः । यथा, --
"असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्त
एव च ।
कपाली भीषणश्चैव संहाराश्चाष्ट भैरवाः
॥"
इति तन्त्रम् ॥

**संहितः**, त्रि, मिलितः । संपूर्व्वधाधातोः क्तप्रत्य-
येन निष्पन्नः ॥

**संहितपुष्पिका**, स्त्री, (संहितानि मिलितानि
पुष्पाणि यस्याः । कापि अत इत्वम् ।)
मिश्रेया ।
इति राजनिर्घण्टः ॥

**संहिता**, स्त्री, सम्यक् (धीयते स्मेति । धा +
कर्म्मणि क्तः । यद्वा सम्यक् हितं
प्रतिपाद्यं
यस्याः ।) मन्वादिप्रणीतधर्म्मशास्त्रम् ।
तत्प-
र्य्यायः । स्मृतिः २ धर्म्मसंहिता ३
श्रुति-
जीविका ४ । इति शब्दरत्नावली ॥
संहिता-
विशेषा यथा, --
"एवं पुराणसंख्यानं चतुर्लक्षमुदाहृतम् ।
अष्टादशपुराणानामेवमेव विदुर्बुधाः ।
एवञ्चोपपुराणानामष्टादश प्रकीर्त्तिताः ॥
इतिहासो भारतञ्च वाल्मीकं काव्यमेव च
।
पञ्चकं पञ्चरात्राणां कृष्णमाहात्स्यमुत्तमम्
॥
वाशिष्ठं नारदीयञ्च कापिलं गौतमीयकम्
।

**संहूतिः**, स्त्री, (सं + ह्वे + क्तिन् ।) बहुभिः
कृताह्वानम् । इत्यमरः ॥

**संहृतः**, त्रि, (सं + हृ + क्तः ।) कृतसंहारः । यथा,
"अहं विभूत्या बहुभिरिह रूपैर्यदा स्थिता ।
तत् संहृतं मयैकैव तिष्ठाम्याजौ स्थिरो भव
॥"
इति मार्कण्डेयपुराणीयदेवीमाहात्म्यम् ॥

**संहृतिः**, स्त्री, (सं + हृ + क्तिन् ।) संहारः ।
यथा, --
"विसृष्टौ सृष्टिरूपा त्वं स्थितिरूपा च
पालने ।
तथा संहृतिरूपान्ते जगतोऽस्य जगन्मये
॥"
इति मार्कण्डेयपुराणे देवीमाहात्म्यम् ॥

**संक्षयः**, पुं, (सं + क्षि + अच् ।) नाशः । यथा, --
"रिपवः संक्षयं यान्ति कल्याणं चोपपद्यते ।
नन्दते च कुलं पुंसां माहात्म्यं मम शृण्वताम्
॥"
इति मार्कण्डेयपुराणे देवीमाहात्म्यम् ॥
प्रलयः । इति शब्दरत्नावली ॥

**संक्षिप्तः**, त्रि, (सं + क्षिप् + क्तः ।) कृतसंक्षेपः ।
संक्षेपविशिष्टः । यथा, --
"ससाहृत्यान्यतन्त्राणि संहिप्तैः
प्रतिसंस्कृतैः ।
सम्पूर्णमुच्यते वर्गैर्नामलिङ्गानुशासनम् ॥"
इत्यमरः ॥
संक्षिप्तैः अल्पेनैव बह्वर्थप्रतिपादकतयाभिहितैः । इति तट्टीकायां भरतः ॥

**संक्षेपः**, पुं, (सं + क्षिप् + घञ् ।) स्तोकेन भूयसोऽभिधानम् । इत्यमरटीकायां भरतः ॥
चुम्बक
इति स्वल्प इति च ख्यातः ॥

**संक्षुब्धः**, त्रि, (सं + क्षुभ + क्तः ।) सञ्चलनविशिष्टः ।
इति क्षुभधात्वर्थदर्शनात् । आकुलः । यथा,
--
"दृष्ट्वा समस्तं संक्षुब्धं त्रैलोक्यममरारयः ।

स्पर्द्धा । (यथा, महाभारते । ३ । २१८ । २४ ।
"संहर्षाद्वारयन् क्रोधं धन्वी स्रग्वी रथस्थितः ।
समरे नाशयेत् शत्रूनमोघो नाम पावलः ॥"
वायुः । इति विश्वमेदिन्यौ ॥ (लोमहर्षः । यथा, सुश्रुते । ६ । ६ ।
"दाहसंहर्षताभ्रत्वशोकनिस्तोदगौरवैः ॥")

**संहवनं**, क्ली, सम्यक्प्रकारेणाहुतिः । संपूर्व्व-
हुधातोभविऽनट् (ल्युट्) प्रत्ययेन निष्पन्नम् ॥

**संहारः**, पुं, (संह्रियतेऽनेनेति । सं + हृ +
"अध्यायन्यायेति ।" ३ । ३ । १२२ । इति घञन्तः
साधुः ।) नरकविशेषः । इत्यमरः ॥ प्रलयः । इति हेमचन्द्रः ॥ (यथा, मनुः । १ । ८० ।
"मन्वन्तराण्यसंख्यानि सर्गः संहार एव च ।
काडविवैतत् कुरुते परमेष्ठी पुनः पुनः ॥")
मक्षेपः । इति जटाधरः ॥ संहरणञ्च ॥ (यथा, रघुः । ५ । ५७ ।
"संमोहनं नाम सखे ! ममास्त्रं
प्रयागम हारविभक्तमन्त्रम् ॥")

**संहारमदा**, स्त्री, (संहारस्य मुद्रा ।) विस-
र्ज्जनमुद्रा । यथा, राघवभट्टधृतम् ।
परं सनत्कुमारीयं पञ्चरात्रञ्च पञ्चकम् ।
पञ्चभ्यः सहितानाञ्च
कृष्णभक्तिसमन्विताः ।
ब्रम्मणश्च शिवस्यापि प्रह्लादस्य तथैव च ।
गौतमस्य कुमारस्य संहिताः
परिकीर्त्तिताः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १३२ अध्यायः ॥
अपि च ।
"इदन्तु पञ्चदशमं पुराणं कौर्म्ममुत्तमम् ॥
चतुर्धा संस्थितं पुण्यं संहितानां प्रभेदतः ॥
ब्राह्मी भागवती शैवी वैष्णवी च
प्रकीर्त्तिता ।
चतस्रः संहिताः पुण्या
धर्म्मकामार्थमोक्षदाः ॥
इयन्तु संहिता ब्राह्मी चतुर्व्वेदैः
समन्यिता ।
भवन्ति षट्सहस्राणि श्लोकानामत्र
संख्यया ॥"
इति कौर्म्मे १ अध्यायः ॥
तत्र स्कन्दपुराणोक्तषट्संहिता यथा, --
"स्कान्दमद्याभिवक्ष्यामि पुराणं
श्रुतिसम्मितम् ।
षड्विधं संहिताभेदैः
पञ्चाशत्खण्डमण्डितम् ॥
आद्या सनत्कुमारोक्ता द्वितीया
सूतसंहिता ।
तृतीया शाङ्करी विप्राश्चतुर्थी वैष्णवी
मता ॥
तत्परा संहिता ब्राह्मी सौरान्त्या संहिता
मता ।
ग्रन्थतः पञ्चपञ्चाशत्सहस्रेणोपलक्षिता ॥
आद्या तु संहिता विप्रा द्वितीया
षट्सहस्रिका ।
तृतीया ग्रन्थतस्त्रिंशत् सहस्रेणोपलक्षिता ।
तुरीया संहिता पञ्चसहस्रेणोपलक्षिता ।
ततोऽन्ना त्रिसहस्रेण ग्रन्थेनैव विनिर्म्मिता ।
सन्नद्धाखिलसैन्यास्ते समुत्तस्थरुदायुधाः ॥"
इति मार्कण्डेयपुराणे देवीमाहात्मम् ॥

**संक्षेपणं**, क्ली, (सं + क्षिप् + ल्युट् ।) विस्ती-
र्णानां संक्षेपः । प्रपञ्चकरणवैपरीत्यम् । इति भरतः ॥ तत्पर्य्यायः । समसनम् २ ।
इत्यमरः ॥
संहारः ३ समाहारः ४ संग्रहः ५ समासः ६ ।
इति जटाधरः ॥

**संक्षोभः**, पुं, (सं + क्षुभ + घञ् ।) चाञ्चल्यम् ।
सञ्चलनम् । यथा । "संक्षोभमक्षरयुषामपि
चित्ततन्वोः ।" इति श्रीभागवतम् ॥

**सकः**, पुं, पूर्व्वोक्तपरामर्शकः । से इति भाषा ।
तच्छब्दस्य टेः पूर्व्वं अकि परत्र
आप्प्रत्यये च कृते प्रथमैकवचणनिष्पन्नं पद-
द्वयम् ॥ (यथा, ऋग्वेदे । १ । १९१ । ११ ।
"इयत्तिका शकुन्तिका सका जघास ते
विषम् ॥")

**सका**, स्त्री, पूर्व्वोक्तपरामर्शकः । से इति भाषा ।
तच्छब्दस्य टेः पूर्व्वं अकि परत्र
आप्प्रत्यये च कृते प्रथमैकवचणनिष्पन्नं पद-
द्वयम् ॥ (यथा, ऋग्वेदे । १ । १९१ । ११ ।
"इयत्तिका शकुन्तिका सका जघास ते
विषम् ॥")

**सकटः**, पुं, (कटेन अशुचिना शवादिना सह
वर्त्तमानः ।) शाखोटवृक्षः । इति भूरिप्रयोगः ॥

**सकटान्नं**, क्ली, (कटशब्देनाशौचं लक्ष्यते तत्-
सहचरितमन्नं सकटान्नम् । इति मिताक्षरा ।)
अशुद्धान्नम् । इति केचित् ॥ (यथा, याज्ञ-
वल्क्यः । ३ । १५ ।
"आचार्य्यपित्रुपाध्यायान्निर्हृत्यापि व्रती व्रती ।

|  | अन्या सहस्रतः सृष्टा ग्रन्थतः पण्डितोत्तमाः ॥"<br>इति स्कन्दपुराणे सूतसंहितायां शिवमाहात्म्य-<br>खण्डे १ अध्यायः ॥ | सकटान्नं न चाश्नीयात् न च तैः सह संवसेत् ॥" |
| --- | --- | --- |

**सकण्टकः**, पुं, (कण्टकेन सह वर्त्तमानः ।)

शैवालः । इति शब्दचन्द्रिका ॥ करञ्जविशेषः ।
इति रत्नमाला ॥ नाटाकरञ्ज इति भाषा ॥
कण्टकयुक्ते, त्रि । यथा, --
“शीतलोष्णसमायुक्तसकण्टकदलान्वित ।
हर पापमपामार्ग भ्राम्यमाणः पुनः पुनः ॥”
इति तिथ्यादितत्त्वम् ॥
(लोमाञ्चिते च त्रि । यथा, कथासरित्-
सागरे । २५ । २२० ।
“स तं साहसिकस्पर्शभीतैरिव सकण्टकैः ।
अङ्गैः प्रणतमालिङ्ग्य मुमुदे भूपतिश्चिरम् ॥”)
सकरः, त्रि, हस्तयुक्तः । राजस्वविशिष्टः । शुण्ड-
युक्तः । किरणविशिष्टः । करेण सह वर्त्तते
योऽसौ । इति बहुव्रीहिसमासनिष्पन्नः ॥

**सकरुणः**, त्रि, (करुणया सह वर्त्तमानः !)

करुणायुक्तः । सदयः । यथा, --
“भवानि त्वं दासे मयि वितर दृष्टिं सकरुणा-
मिति स्तोतुं वाच्छन् कथयति भवानि त्वमिति
यः ।
तदैव त्वं तस्मै दिशसि निजसायुज्यपदवीं
मुकुन्दब्रह्मेन्द्रस्फुटमुकुटनीराजितपदाम् ॥”
इत्यानन्दलहरी ॥

**सकर्णः**, त्रि, (कर्णाभ्यां सह वर्त्तमानः ।) श्रवण-

शीलः । तत्पर्य्यायः । श्रुतितत्परः २ । इति
जटाधरः ॥ कर्णयुक्तश्च ॥

**सकर्म्मकः**, पुं, (कर्म्मणा सह वर्त्तमानः । कप् ।)

कर्म्मयुक्तधातुः । कर्म्मान्वयिक्रियार्थकः । यथा ।
क्वचित् सकर्म्मकाद्धातोर्भावेऽपि क्रियाव्याप्ति-
रस्ति । यथा । कां दिशं गन्तव्यम् । इति मुग्ध-
बोधटीकायां दुर्गादासः ॥ (कर्म्मयुक्ते, त्रि ।
यथा, भागवते । ५ । २० । ३२ ।
“देवि दैत्येश्वरः शुम्भस्त्रै लोक्ये परमेश्वरः ।
दूतोऽहं प्रेषितस्तेन त्वत्सकाशमिहागतः ॥”
इति मार्कण्डेयपुराणे देवीमाहात्म्यम् ॥
काशयुक्ते, त्रि ॥

**सकुरुण्डः**, पुं, साकुरुण्डवृक्षः । इति राज-

निर्घण्टः ॥

**सकुलः**, पुं, (कुलेन सह वर्त्तते इति ।) शकुल-

मत्स्यः । इति शब्दरत्नावली ॥

**सकुल्यः**, त्रि, (समाने कुले भवः । यत् ।)

सगोत्रः । यथा, --
“जारो लङ्गः सगोत्रास्तु स्वजनज्ञातिबान्धवाः ।
सकुल्यबन्धुदायादस्वसमानोदकाअपि ॥”
इति जटाधरः ॥ * ॥
स्वावध्यूद्र्ध्वतनाष्टमावधिदशमपुरुषपर्य्यन्तपुरुष-
त्रयम् । तेषां दशमपुरुषपर्य्यन्तसन्ततिः । स्वाव-
ध्यधस्तनाष्टमावधिदशमपुरुषपर्य्यन्तसन्ततिश्च ॥
तेषामशौचं यथा, बृहस्पतिः ।
“दशाहेन सपिण्डास्तु शुध्यन्ति प्रेतसूतके ।
त्रिरात्रेण सकुल्यास्तु स्नात्वा शुध्यन्ति गोत्रजाः ॥”
इति शुद्धितत्त्वम् ॥ * ॥
दायाधिकारिसकुल्यास्तु पञ्चमपुरुषावधयः ।
यथा । बौधायनः । प्रपितामहः पितामहः
पिता स्वयं सोदर्य्यभ्रातरः सवर्णायाः पुत्त्रः
पौत्त्रः प्रपौत्रो वा एतानविभक्तदायादान्
सपिण्डान् आचक्षते । विभक्तदायादान् सकु-
ल्यान् आचक्षते सत्सङ्गजेषु तद्गामी ह्यर्थो भव-
तीति । इति दायतत्त्वं शुद्धितत्त्वञ्च ॥ * ॥ तस्य
कन्यादानाधिकारित्वं यथा । विष्णुः । पिता
पितामहो भ्राता सकुल्यो मातामही माता
चेति कन्याप्रदः पूर्व्वनाशे प्रकृतिस्थः परः
परः । नारदश्च ।
‘पिता दद्यात् स्वयं कन्यां भ्राता वानुमतः पितुः
मातामहो मातुलश्च सकुल्यो बान्धवस्तथा ॥
माता त्वभावे सर्व्वेषां प्रकृतौ यदि वर्त्तते ।
तस्यामप्रकृतिस्थायां कन्यां दद्युः स्वजातयः ॥’
इत्युद्वाहतत्त्वम् ॥

**सकुली**, स्त्री, मत्स्यविशेषः । अस्या गुणादि-

**सकृद्गर्भः**, पुं, (सकृत् गर्भो यस्य ।) खेसरः ।

इति राजनिर्घण्टः ॥
एकमात्रगर्भिण्यां, स्त्री ॥

**सकृद्वीरः**, पुं, (सकृत् वीर इव ।) एकवीरवृक्षः ।

इति राजनिर्घण्टः ॥

**सक्तः**, त्रि, (सन्ज + क्तः ।) अविरतः । इति

हेमचन्द्रः ॥ आसक्तः ॥ (यथा, रामायणे ।
६ । ४ । ११८ ।
“अन्योन्यैराहताः सक्ता सस्वनुर्भीमनिःस्वनाः
ऊर्म्मयः सिन्धुराजस्य महाभेर्य्य इवाहवे ॥”)

**सक्तिः**, स्त्री, सङ्गः । सन्जधातोः क्तिप्रत्ययेन

निष्पन्ना ॥ (यथा, किराते । ५ । ४६ ।
“सक्तिं जवादपनयत्यनिले लतानां
वैरोचनैर्द्विगुणिताः सहसा मयूखैः ।
रोधोभुवां मुहुरमुत्र हिरण्मयीनां
भासस्तडिद्विलसितानि विडम्बयन्ति ॥”)

**सक्तुः**, पुं, (सच्यते सिच्यते इति । सच सेचने +

“सितनिगमिमसिसचीति ।” उणा० १ । ७० ।
इति तुन् ।) भृष्टयवादिचूर्णः । छातु इति
भाषा । यथा, --
“भृष्टा यवाः पुनर्धाना
धानाचूर्णन्तु सक्तवः ॥”
इति हेमचन्द्रः ॥
अस्य गुणादिः तालव्यादिशक्तुशब्दे द्रष्टव्यः ॥

"तद्वर्षपुरुषा भगवन्तं ब्रह्मरूपिणं सकर्म्मकेण कर्म्मणाराधयन्ति ॥" "सकर्म्मकेण ब्रह्मसालो-
क्यादिसाधनेन ।" इति तट्टीका ॥)

**सकलं**, त्रि, (कलया सह वर्त्तमानम् ।) समु-

दायः । तत्पर्य्यायः ! समम् २ सर्व्वम् ३ विश्वम् ४
अशेषम् ५ कृत्स्नम् ६ समस्तम् ७ निखिलम् ८
अखिलम् ९ निःशेषम् १० समग्रम् ११ पूर्णम् १२
अखण्डम् १३ अमूलकम् १४ । इत्यमरः ॥
अनन्तम् १५ । इति शब्दरत्नावली ॥ (यथा,
भागवते । ४ । २८ । ४ ।
"द्वार्भिः प्रविश्य सुभृशं प्रार्दयन् सकलां पुरीम् ॥"
कला प्रकृतिस्तया सह वर्त्तते इति । सगुणम् ।
यथा महाभारते । १३ । १६ । ८ ।
"निष्कलं सकलं ब्रह्म निर्गुणं गुणगोचरम् ॥")

**सकामः**, त्रि, (कामेन सह वर्त्तमान इति ।)

कामनाविशिष्टः । यथा, --
"अकामो वा सकामो वा यत्र क्वापि बहिर्जले
इह चामुत्र दुःखानि माघस्नायी न पश्यति ॥"
इति तिथ्यादितत्त्वम् ॥

**सकाशः**, पुं, (काशः प्रकाशस्तेन सह वर्त्तते इति ।)

समीपः । यथा, --

स्तालव्यशकारादिशुक्लशब्दे द्रष्टव्यः ॥

**सकृत्**, व्य, (एक + "एकस्य सकृच्च ।" ५ । ४ । १९ ।

इति सुच् सकृदादेशश्च । संयोगास्येति सुचो
लोपः ।) एकवारम् । (यथा, --
"सकृदंशो निपपति सकृत् कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सकृत् सकृत् ॥"
इति महाभारतम् ॥)
सह । इत्यमरः ॥ विष्ठा । इति तट्टीका ॥
(अस्मिन्नर्थे तालव्यशकारस्य प्रयोगः प्रायशो
दृश्यते ॥)

**सकृत्प्रजः**, पुं, (सकृत् प्रजा यस्य ।) काकः ।

इत्यमरः ॥ जातैकमात्रापत्ये, त्रि ॥

**सकृत्फला**, स्त्री, (सकृत् फलानि यस्याः ।)

कदली । इति राजनिर्घण्टः ॥

(यथा, कथासरित्सागरे । ४ । १२२ ।
"एकः शरावः सक्तूनामेकः प्रत्यहमम्भसः ।
शकटालस्य तत्रान्तः सपुत्त्रस्य न्यधीयत ॥"
अर्द्धर्च्चादित्वात् क्लीवलिङ्गेऽपि दृश्यते ॥ प्रायशो
ऽयं शब्दः बहुवचने प्रयुज्यते ॥)

**सक्तुकः**, पुं, (सक्तुरिव । कन् ।) विषभेदः ।

इति हेमचन्द्रः ॥ स्वार्थे के सक्तुश्च ॥

**सक्तुफला**, स्त्री, (सक्तव इव फलानि यस्याः ।

अजादित्वात् टाप् ।) शमीवृक्षः । इत्यमरः ॥

**सक्तुफली**, स्त्री, (सक्तव इव फलानि यस्याः ।

ङीष् ।) शमीवृक्षः । इति शब्दरत्नावली ॥

**सक्थि**, [न्] क्ली, (सज्यते इति । सन्ज सङ्गे +

"असिसञ्जिभ्यां क्थिन् ।" उणा० ३ । १५४ ।
क्थिन् ।) ऊरुः । इत्यमरः ॥ (यथा, मार्क-
ण्डेये । १८ । ४९ ।
"नृणां पदे स्थिता लक्ष्मीर्निलयं संप्रयच्छति ।
सक्थ्नोश्च संस्थिता वस्त्रं तथा नानाविधं वसु ॥")
शकटावयवविशेषः । इत्युणादिकोषः ॥

**सक्षमः**, त्रि, क्षमताविशिष्टः । क्षमाविशिष्टः ।

क्षमेण क्षमया वा सह वर्त्तमानः । इति बहु-
व्रीहिनिष्पन्नः ॥

**सक्षारः**, त्रि, लवणयुक्तः । क्षारेण सह वर्त्तमानः ।

| | | |
|---|---|---|
| | | इति बहुव्रीहिसमासनिष्पन्नः ॥ (यथा, सुश्रुते । १ । ४५ । "वातश्लेष्महरं वाप्यं सक्षारं कटुपित्तलम् ॥") <br> **सखा**, [इ] पुं, (समानः ख्यायते इति । समान + ख्या + "समाने ख्यः सचोदात्तः ।" उणा० ४ । १३६ । इति इञ् । टिलोपयलोपौ समा- नस्य स्वभावश्च ।) सौहार्दयुक्तः । समानः ख्यायते जनैः नाम्नीति ङिः मनीषादित्वात् |

ख्यातेर्य्यलोपः समानस्य सभावश्च
सख्युदृभ्या-
मिति सेर्डा । इत्यमरटीकायां भरतः ॥
तत्प-
र्य्यायः । आक्रन्दः २ मित्रम् ३ सुहृत् ४ ।
इति
जटाधरः ॥ वयस्थः ५ सवयाः ३ स्निग्धः
७
सहचरः ८ । इति हेमचन्द्रः ॥ (यथा माघे
।
२ । ३६ ।
"सखागरीयान् शत्रुश्च कृत्रिमस्तौ हि
कार्य्यतः
स्यातामित्रौ मित्रे च सहजप्राकृतावपि
॥")
सहायः ! इति मेदिनी ॥ तत्पत्नीगमने
दोषो
यथा, --
"गुरुतल्पव्रतं कुर्य्यात् रेतः तिक्त्वा
स्वयोनिषु ।
सख्युः पुत्रस्य च स्त्रीषु
कुमारीष्वन्त्यजासु च ॥
इति प्रायश्चित्ततत्त्वम् ॥

**सखिता**, स्त्री, (सख्युर्भावः । सखि + तल् ।)

सख्यम् । यथा, --
"मीमांसे बहुसेवितासि सुहृदस्तर्कीः
समस्ताः
स्थमे
वेदान्ताः परमात्मबोधगुरवो यूयं
मयोपासिताः
जाता व्याकरणाति बालसखिता
युष्माभिरभ्यर्थ्यये
प्राप्तोऽयं समयो मनूक्तविवृतौ
साहाय्यमाल-
म्ब्यताम् ॥"
इति मनुटीकायां कुल्लूकभट्टः ॥

**सखित्वं**, क्ली, (सख्युर्भावः । सखि + त्व ।)
सख्यम् ।

(यथा, महाभारते । १ । १३७ । १५ ।

सूर्य्यवंशे महाराजी बाहुर्नाम महानभूत् ।
तस्य राज्यं हृतं सर्व्वं
हैहयैस्तालजङ्घकैः ॥
काम्बोजाः पह्लवाश्चैव पारदा यवनाः
शकाः ।
एते पञ्चगणा ब्रह्मन् हैहयार्थे पराक्रमन् ॥
हृतराज्यः स वै विप्र तदा बाहुर्व्वनं ययौ
।
पत्नी तु यादवी तस्य गुर्व्विण्यासीत्
पतिव्रता ॥
तत्सपत्नी पूर्व्वमेव तस्या
गर्भजिघांसया ।
भोजनेन सह प्रादात् गरं धर्म्मानवेक्षया
॥
यादव्यास्तु तपोयोगात् गर्भो मैव ममार
ह ।
न ममार च सा राज्ञी देवानामनुकम्पया
॥
पतिं सानुययौ साध्वी सिषेवे तं वने
सदा !
स राजा विपिने तस्मिन् प्राणांस्तत्याज
योग-
वान् ॥
सा तु भर्त्तुश्चितिं कृत्वा वने
तामध्यरोहत ।
और्व्वस्तां भार्गवस्तात कारुण्यात्
समवारयत् ॥
तस्याश्रमे च सा गर्भं सुषुवे ज्वलनप्रभम्
।
व्यजायत महाबाहुर्गरेणैव सह द्विज ॥
सगरो नाम तेनाभूत्
बालकोऽतिमनोहरः ।
और्वस्तु जातकर्म्मादि तस्य कृत्वा
महात्मनः ॥
अध्याप्य वेदानखिलान् शस्त्राणि
प्रत्यपादयत् ।
आग्नेयन्तु महाघोरममरैरपि दुःसहम् ॥
स तेनास्त्रबलेनाजौ बलेन च
समन्वितः !

एका षष्टिसहस्राणि सुतमेकं तथा परा ॥
गृह्णातु वंशकर्त्तारं प्रभा गृह्णाद्बहूं स्तथा ।
एकं भानुमतीपुत्त्रमगृह्णादसमञ्जसम्॥
ततः षष्टिसहस्राणि सुषुवे यादवी प्रभा ।
खनन्तः पृथिवीं दग्धा विष्णुना येऽश्वमार्गणे ॥
असमञ्जसस्तु तनयः अंशुमान् नाम विश्रुतः ।
तस्य पुत्त्रो दिलीपस्तु दिलीपात्तु भगीरथः ॥
येन भागीरथी गङ्गा तपः कृत्वावतारिता ।
भगीरयस्य तनयो नाभाग इति विश्रुतः ॥"
इति मात्स्ये १२ अध्यायः ॥

**सगर्भः**, पुं, (समानो गर्भोयस्य । समानस्य सः ।)

सहोदरः । इति शब्दरत्नावली ॥ त्रि, अभ्य
न्तरितसूक्ष्मपत्रादियुक्तः । यथा --
"दर्भान् सगर्भानादाय नव सप्त च पञ्च वा ।
साग्रान् समूलानच्छिन्नान् द्विजो दक्षिण-
पाणिना ।
अन्वारब्धेन सव्येन तर्पयेत् षड्विनायकान् ॥"
इति काशीखण्डे सदाचारो नाम ३५ अध्यायः
॥
(गर्भविशिष्टे च त्रि ॥ यथा कथासरित्सागरे ।
२० । ८४ ।
"अनलोऽपि सगर्भोभूत् तेन वोर्य्येण धूर्जटेः ॥"

**सगर्भा**, स्त्री, (गर्भेण सह वर्त्तमाना ।) गर्भवती ।

यथा --
"केचिद्गहनमाश्रित्य केचित् पातालमाविशन् ।
सगर्भा चन्द्रसेनस्य भार्य्या दाल्भ्याश्रमं ययौ
॥"
इति पाद्मे सृष्टिखण्डे १ अध्यायः ॥
सहोदरा । इति सगर्भशब्ददर्शनात् ॥

**सगर्भ्यः**, पुं, (समाने गर्भे भवः । "सगर्भसयूथ-

सनुतात् यन् ।" ४ । ४ । ११४ । इति यन् ।)
सहोदरः । इत्यमरः ॥ (यथा, वाजसनेयसंहि-
तायाम् । ४ । २० ।
"अनु त्वा माता मन्यतामनु पितानु भ्राता
सगर्भोऽनु सखा सयूथ्यः ॥")

**सगोत्रं**, क्ली, (समानं गात्रमिति । समानस्य सः ।)

कुलम् । यथा, --

"कृतं सर्व्वेण मेऽन्येन सखित्वन्तु त्वया वृणे ।
द्वन्द्वयुद्धञ्च पार्थेन कर्त्तुमिच्छाम्यहं प्रभो ! ॥")

**सखी**, स्त्री, ("सख्यश्विश्वीति भाषायाम् ।" ४ ।
१ । ६२ । इति ङीष् ।) सहचरी ।
तत्पर्य्यायः ।
आलिः २ वयस्या ३ । इत्यमरः । सध्रीची ४ ।
इति हेमचन्द्रः ॥ (यथा, रघुः । ३ ।
"अथेप्सितं भर्त्तुरुपस्थितोदयं
सखीजनोद्वीक्षणकोमुदीमुखम् ।
निदानमिक्ष्वाकुकुलस्य सन्ततेः
सुदक्षिणा दौर्हृदलक्षणं दधौ ॥")

**सख्यं**, क्ली, (सख्युर्भावः कर्म्म वा । सखि + यत् ।)
मित्रता । तत्पर्य्यायः । सौहृदम् २
सौहाद्दम् ३
साप्तपदीनम् ४ मैत्रम् ५ जर्य्यम् ६ सङ्गतम् ७ ।
इति हेमचन्द्रः ॥ (यथा, रघुः । १३ । ५७ ।
"वधनिर्धूतशापस्य कवन्धस्योपदेशतः ।
मुमूर्च्छ सख्यं रामस्य समानव्यसने हरौ ॥")

**सग**, म ए संवृतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।) म, सिसगयिषति । ए, असगीत् । इति दुर्गादासः ॥

**सगन्धः**, पुं, (गन्धन सह वर्त्तमान इति ।) ज्ञातिः ।
इति त्रिकाण्डशेषः ॥ गन्धयुक्ते, त्रि ॥ (यथा,
बृहत्संहितायाम् । ४३ । ३६ ।
"द्विरदमदमहीसरोजलाजै-
र्घृतमधुना च हुताशने सगन्धे ॥")

**सगरः**, पुं, (गरेण सह वर्त्तमानः ।) अर्हद्भेदः ।
इति हेमचन्द्रः ॥ सूर्य्यवंशीयराजविशेषः । स तु
अयोध्याधिपतिबाहुराजपुत्रः
तस्योत्पत्त्यादि
हैहयांस्तालजङ्घांश्च जघ्न रुद्रः पशूनिव ॥
जनयामास लोकेऽस्मिन् कीर्त्तिं कीर्त्तिमतांवरः
ततः शकान् सयवनान् काम्बोजान् पारदां-
स्तथा ।
पह्लवांश्चापि निःशेषान् कर्त्तुं व्यवसितो नृपः ॥
ते हन्यमाना वारेण सगरेण महीजसा ।
वशिष्ठं शरणं जग्मुः सूर्य्यवंशपुरोहितम् ॥
वशिष्ठः शरणापन्नान् समये स्थाप्य तानृषिः ।
सगरं वारयामास तेभ्या दत्त्वाभयं तदा ॥
सगरस्तां प्रांतज्ञान्तु निशम्य सुमहाबलः ।
धर्म्मं जघान तेषाञ्च वेशानन्यांश्चकार ह ॥
अर्द्धं शिरः शकानान्तु मुण्डयामास भूपतिः ।
यवनानां शिरः सर्व्वं काम्बाजानामपि द्विज ॥
पारदान् मुक्तकेशास्तु पह्लवान् श्मश्रुधारिणः ।
निस्वाध्यायवषट्कारान् सर्व्वानेव चकारह ॥
कालिसर्पा माहिषका दार्व्वाश्चोलाः सकेरलाः
खसास्तुषाराश्चीनाश्च मद्राः किष्किन्धका-
स्तथा ।
कोन्तलाश्च तथा बन्धाः शाम्बाः कोङ्कणका-
स्तथा ।
सर्व्वे ते क्षत्त्रियास्तात धर्म्मास्तेषां निराकृताः ॥
पुराहितस्य वाक्यन कृता विकृतवेशिनः ।
वश कृत्य सराजन्यान् स्वराज्यमन्वशासत ॥"
"कुलं गौत्रं सगोत्रञ्च तुल्यगोत्रे निगद्यते ।"
इति शब्दरत्नावली ॥

**सगोत्रः**, पुं, (समानं गोत्रमस्य । "ज्योतिर्जन-
पदरात्रीति ।" ६ । ३ । ८५ । इति समानस्य सः ।)
ज्ञातिः । यथा, --
"सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाःसमाः ॥"
इत्यमरः ॥
(यथा, मनुः । ९ । १९० ।
"संस्थितस्यानपत्यस्य सगोत्रात् पुत्रमाहरेत् ॥")

**सग्धिः**, स्त्री, सहभोजनम् । इत्यमरः ॥ समाना
सह वा जग्धिः सग्धिः । अदः क्तिः जग्धाऽदो
इति जग्धं जग्धिः निपातनात् सग्धिरादेशः ।
सग्धिरपि छन्दसीति परे । इत्यमरटीकायां भरतः ॥

**सघ**, न हिंसे । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।) न, सघ्नोति । असीसघत् ।
इति दर्गादासः ॥

| | | |
|---|---|---|
| यथा, -- | इति पाद्मे स्वर्गखण्डे १५ अध्यायः ॥<br>* ॥<br>अपि च ।<br>“रोहिताच्च वृको जातो<br>वृकाद्बाहुरजायत ॥<br>सगरस्तस्य पुत्त्रोऽभूत् राजा<br>परमधार्म्मिकः ॥<br>द्वे भार्य्ये सगरस्यापि प्रभा भानुमती<br>तथा ।<br>ताभ्यामाराधितः पूर्व्वं मौर्व्वोऽग्निः<br>पुत्त्रकाम्यया<br>और्व्वस्तुष्टस्तुयाः प्रादात् यथेष्टं<br>वरमुत्तमम् । | |

**सङ्कटः**, त्रि, (सम् + “संप्रोदश्च कटच् ।” ५ । २ ।
२९ । इति कटच् ।) संवाधः । इत्यमरः ॥ द्वे अल्पावकाशे वर्त्मादौ । सम्यक् कटति आवृणोति सङ्कटं अल् । सम्यगन्योन्यं वाधन्तऽत्र संवाधः घञ् । वाच्यलिङ्गता च । संवाधं बृहदपि तद्बभूव वर्त्म इति माघः । इति भरतः ॥ दुःखे, क्ली । यथा, --
“सर्व्वाबाधासु घोरासु वेदनाभ्यर्दितोऽपि वा ।
स्मरन्ममैतच्चरितं नरो मुच्येत सङ्कटात् ॥”
सङ्कटं दुःखमुत्तरार्द्धमुत्तरान्वयि । इति देवीमाहात्म्यस्य टीकायां नागोजीभट्टः ॥

**सङ्कटा**, स्त्री, (सम्यक् कटति आवृणोति या ।
सम् + कट् + अच् । टाप् ।) देवीविशेषः । सा च वाराणस्यां प्रसिद्धा । योगिनीविशेषः । यथा,
“मङ्गला पिङ्गला धन्या भ्रामरी भद्रिका तथा ।
उल्का सिद्धिः सङ्कटा च योगिन्योऽष्टौ प्रकीर्त्तिताः ॥”
इति ज्योतिषम् ॥

**सङ्कटाक्षः**, पुं, (संकटं अक्षतीति । अक्ष व्याप्तौ +
अण् ।) धववृक्षः । इति विश्वः ॥

**सङ्कथनं**, क्ली, (सम्यक् कथनम् ।) सम्यग्भाषणम् । यथा, --
“उपवासफलं नश्येत् दिवास्वप्नाक्षमैथुनात ।
स्त्रीणां सप्रेक्षणात स्पर्शात्ताभिः सङ्कथनादपि ॥”
इत्येकादशीतत्त्वम् ॥

**सङ्कथा**, स्त्री, (सम्यक् कथा ।) परस्परभाषणम् ।
यथा, --
“उल्लापः काकुवागन्योन्योक्तिः संलापसङ्कथे ।”
इति हेमचन्द्रः ॥
(यथा, भागवते । १० । ८२ । १७ ।
“पृथा भ्रातॄन् स्वसॄर्वीक्ष्य तत्पुत्त्रान् पितरावपि ।
भ्रातृपत्नीर्मुकुन्दञ्च जहौ संकथया शुचः ॥”)
सम्यक्कथनञ्च ॥

**सङ्करः**, पुं, (सङ्कीर्य्यते इति । सं + कॄ विक्षेपे +
अप् ।) सम्मार्ज्जन्या क्षिप्तधूल्यादिः । तत्पविप्रान्मूर्द्धवसिक्तो हि क्षत्रियायां विशः स्त्रियाम् ॥
जातोऽम्बष्ठस्तु शुद्रायां निषादः पार्षतोऽपि वा ।
माहिष्योग्रौ प्रजायेते विट्शुद्राङ्गनयोर्नृपात् ॥
वेश्यां शुद्राच्च राजन्यां माहिष्योग्रौ सुतौ स्मृतौ ।
शूद्रायां करणो वैश्यात् विद्वान् एष विधिः स्मृतः ॥
ब्राह्मण्यां क्षत्त्रियात् सूतो वैश्याद्वैदेहकस्तथा ।
शूद्राज्जातस्तु चाण्डालः सर्व्वधर्म्मबहितष्कृतः ॥
क्षत्त्रिया मागधं वैश्यात् शूद्रात् क्षत्तारमेव च ।
शूद्रादायोगवं वैश्या जनयामास वै सुतम् ॥
माहिष्येण करण्यान्तु रथकारः प्रजायते ।
असंस्तुताश्च विज्ञेयाः प्रातिलोमानुलोमजाः ॥
जात्युत्कर्षाद्द्विजो ज्ञेयः सप्तमे पञ्चमेऽपि वा ।
व्यत्यये कर्म्मणां साम्ये पूर्व्ववच्चोत्तरावरम् ॥”
इति गारुडे ९६ अध्यायः ॥

**सङ्करी**, स्त्री, (सं + कॄ + अप् । गौरादित्वात्
ङीष् ।) नवदूषितकन्या । इति मेदिनी ॥

**सङ्करीकरणं**, क्ली, (असङ्करः सङ्करः क्रियतेऽने-
नेति । सङ्कर + कृ + ल्युट् । अभूततद्भावे च्वि ।) नवविधपापान्तर्गतपापविशेषः । यथा, विष्णुः । अथ पुरुषस्य कामक्रोधलोभाख्यं रिपुत्रयं भवति । परिग्रहप्रसङ्गेन विशेषाद्गृहाश्रमिणः । तेनायमाक्रान्तोऽतिपातकमहापातकानुपातकोपपातकेषु वर्त्तते । जातिभ्रंशकरेषु सङ्करकरणेष्वप्रात्रीकरणषु मलावहेषु प्रकीर्णकेषु । तद्यथा, --
“खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा ।
सङ्करीकरणं ज्ञयं मीनाहिमहिषस्य च ॥”
तस्य प्रायश्चित्तं यथा, --
“सङ्करापात्रकृत्यासु मास शोधनमैन्दवम् ।
मलिनीकरणीयेषु तप्तः स्याद्यावकस्त्र्यहः ॥”
तथा विष्णुः ।
“ग्राम्यारण्याणां पशूनां हिंसा सङ्कीर्णोकरणम् ।
सङ्करीकरणं कृत्वा मासमश्नाति यावकम् ।
कृच्छ्रातिकृच्छमथवा प्रायश्चित्तन्तु कारयेत् ॥”
“कर्षणेनास्य गर्भस्य स्वगर्भाच्चावितस्य वै ।
सङ्कर्षणो नाम शुभे तव पुत्त्रो भविष्यति ॥”
तथा च भागवते । १० । २ । १३ ।
“गर्भसंकर्षणात् तं वै प्राहुः सङ्कर्षणं भुवि ॥”)

**सङ्कलः**, पुं, सङ्कलनम् । योगः । संपूर्व्वकलधातोभवि अल्प्रत्ययेन निष्पन्नः ॥

**सङ्कलनं**, क्ली, (सं + कल + ल्युट् ।) एकत्रीकरणम् । योजनम् । इति लीलावती ॥ ठिक देओया इति भाषा ॥

**सङ्कलितः**, त्रि, (सं + कल + क्तः ।) लेखादिना संवृतः । तत्पर्य्यायः । संगूढः २ । इत्यमरभरतौ ॥ योजिताङ्कम् । ठिक देओया आँक इति भाषा । यथा । अथ सङ्कलितव्यवकलितयोः करणसूत्रम् । इति लीलावती ॥ पुञ्जीकृतधान्यादि । इति केचित् ॥

**सङ्कल्पः**, पुं, (सं + कृप + भावे घञ् । गुणे कृते रस्य लः ।) कर्म्मणो मानसम् । इत्यमरः ॥
“सङ्कल्प उक्तो हारीतेन । यथा । मनसा सङ्कल्पयति वाचा अभिलपति कर्म्मणा चोपपादयति इति । भविष्यपुराणवचनेन च ।
‘सङ्कल्पेन विना राजन् यत्किञ्चित् कुरुते नरः ।

र्य्यायः । अवकरः २ । इत्यमरः ॥ सङ्कारः ३ । इति शब्दरत्नावली ॥ अग्निचटत्कारः । इति । मेदिनीहारावल्यौ ॥ मिश्रितत्वम् । यथा, --
“भेदाख्यानाय न द्वन्द्वो नैकशेषो न सङ्करः ।”
इत्यमरः ॥
परस्परात्यन्ताभावसमानाधिकरणयोरेकाधि-करण्यम् । यथा । मूर्त्तत्वं मनसि वर्त्तते भूतत्वं नास्ति आकाशे भूतत्वं वर्त्तते मूर्त्तत्वं नास्ति । पृथिव्यां भूतत्वं वत्तते मूर्त्तत्वञ्चास्तीति जाति-साङ्कर्य्यम् । तथा चोक्तम् ।
“व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः ।
रूपहानिरसम्बन्धो जातिवाधकसंग्रहः ॥”
इति सिद्धान्तमुक्तावली ॥ * ॥
वर्णशङ्करजातिः । यथा, --
याज्ञवल्का उवाच ।
“वक्ष्ये सङ्करजात्यादि गृहस्थादिविधि परम् ।

इति प्रायश्चित्तविवेकः ॥

**सङ्कर्षणं**, क्ली, आकर्षणम् । सम्यक्प्रकारेण कर्ष-णम् । संपूर्व्वकृषधातोरनट्प्रत्ययेन निष्पन्नम् ॥ (यथा, भागवते । १० । २ । १३ ।
“गर्भसंकर्षणात् तं वै प्राहुः सङ्कर्षणं भुवि ॥”
एकीकरणम् । इति स्वामी ॥ यथा, भागवते । ५ । २५ । १ ।
“तस्य मूलदेशे त्रिंशयोजनसहस्रान्तरे आस्ते या वै कला भगवतस्तामसी समाख्याता अनन्त इति सात्वतीया द्रष्टृदृश्ययोः सङ्कर्षणं अह-मित्यभिमानलक्षणं यं सङ्कर्षण इत्याचक्षते ॥”)

**सङ्कर्षणः**, पुं, (सम्यक् कर्षतीति । सं + कृष् + ल्युः ।) बलुदेवः । इत्यमरः ॥ (अस्य नामनि-रुक्तिर्यथा, हरिवंशे । ५९ । ६ ।

फलञ्चाल्पाल्पकं तस्य
धर्म्मस्याद्धक्षयो भवेत् ॥’
इति । ब्रह्मपुराणेनापि ।
‘आशास्य च शुभं कार्य्यमुद्दिश्य
च मनोगतम्’ ।
इत्यगस्त्यपूजने उक्तम् ।
मनोगतं शुभं फलं
आशास्य मनसा सङ्कल्प्य
उद्दिश्य वाचा अभि-
लप्य कार्य्यं कर्म्मणा उपपाद्यम्
। भविष्ये ।
‘शुक्तिशङ्खाश्महस्तैश्च
कांस्यरूप्यादिभिस्तया।
सङ्कल्पो नैव कर्त्तव्यो मृण्मयेन
कदाचन ॥
गृहीत्वौडुम्बरं पात्रं वारिपूर्णं
गुणान्वितम् ।
दर्भत्रय साग्रमूलं
फलपुष्पतिलान्वितम्॥
जलाशयारामकूमे सङ्कल्पे
पूर्वदिङ्मुखः ।
साधारणे चोत्तरास्य ऐशान्यां
निक्षिपेज्जलम् ॥’
अत्र केवलहस्तनिषेधस्तु
पात्रान्तरसद्भाव-
विषयः । शङ्खादिसाहचर्य्यात्
एकहस्तपरो वा ।
“गृहीत्वौडुम्बरं पात्रं
वारिपूर्णमुदङ्मुखः ।
उपवासन्तु गृह्णीयाद् यद्वा
वार्य्येव धारयेत् ॥”
इति वराहपुराणदर्शनात् ।” इति
तिथ्यादि-
तत्त्वम् ॥ * ॥ सङ्कल्पश्च भावे
मयैतर्त् कर्त्तव्य-
मेव निषधे तु मयैतन्न
कर्त्तव्यमिति ज्ञानविशेषः ।
व्रतादीनां सङ्कल्पसम्भवत्वं
यथा, --
“सङ्कल्पमूलः कामो वै यज्ञाः
सङ्कल्पसम्भवाः ।

|  |  |  |
| --- | --- | --- |
|  |  | व्रता नियमधर्म्माश्च सर्वे<br>सङ्कल्पजाः स्मृताः ॥"<br>इत्येकादशोतत्त्वम् ॥<br>तद्वाक्यरचना यथा, --<br>"श्रीपद पूर्वमुच्चार्य्य ततो<br>विष्णुपदं वदेत् ।<br>ॐ तत् सदित्युच्चार्य्य नाम गोत्रं<br>ततो वदेत् ॥<br>तत इष्टप्रोतिकामो मूलबीजं<br>समुन्नयेत् ।<br>ततोऽस्याञ्च वरारोहे<br>गङ्गास्नानमहं ततः ॥<br>करिष्ये इति सङ्कल्प्य<br>शिरःस्नानं समाचरेत् ।<br>त्रिः स्नात्वा चञ्चलापाङ्गि ! इति<br>-- वाक्यं सुरा-<br>च्चिते ! ॥ |

अद्येत्याद्यस्य चार्व्वङ्गि ! रहस्यं प्रवदामि ते ॥”
इति कामधेनुतन्त्रे ३२ पटलः ॥ * ॥
अपि च । अथ सङ्कल्पविधानम् ।
“असङ्कल्पितमर्त्यो यन्न्यूनाधिकमथापि वा ।
न सम्यक्फलभाग्भूयात्तस्मान्नियममाचरेत् ॥
ताम्रपात्रं सदूवञ्च सतिलं जलपूरितम् ।
सकुशञ्च फलैर्द्देवि ! गृहीत्वाचम्य कल्पतः ॥
अभ्यर्च्च्य च शिरःपद्मे श्रीगुरुं करुणामयम् ।
यक्षेशवदनो वापि देवेन्द्रवदनोऽपि वा ॥
मासं पक्षं तिथिञ्चैव देवपर्व्वादिकन्तथा ।
आद्यन्तकालञ्च तथा गोत्रं नाम च कामिनाम्
क्रियाह्वयं करिष्येऽन्तमेवं समुतसृजेत् पयः ॥”
इति योगिनीतन्त्रे प्रथमखण्डीयः २ पटलः ॥ * ॥
अन्यच्च । शिवपूजायां मानससङ्कल्पो यथा, --
“ततस्तु परमेशानि ! कृत्वा सङ्कल्पमानसम् ।
यथापूर्व्वं महादेवि ! ब्रह्माण्डस्थितिमानसः ॥
तथा भवतु सर्व्वाङ्गं इति सङ्कल्प्य मानसः ।
न गोत्रं मम देवेशि ! न नाम परमेश्वरि ॥
न माता परमेशानि न पिता मम कामिनि ।
तस्मिन् काले महेशानि मम सर्वं न हि प्रिये ॥
न वारं न तिथिं देवि तस्मिन् काले शुचिस्मिते
न काष्ठां न कलां देवि तस्मिन् काले वरानने
न दिवा परमेशानि न रात्रिं परमेश्वरि ।
अतएव महेशानि सङ्कल्पं मानसं स्मृतम् ॥
मानसं यदि आयाति तदा स्थानेन किं प्रिये ।
सङ्कल्पं मानसं देवि चतुर्व्वर्गप्रदायकम् ॥
स्थूलं हि परमेशानि सङ्कल्पं व्यर्थमुच्यते ॥
सङ्कल्पेन विना देवि यत्किञ्चित् कृतवान्सुधीः
तदुक्तं परमेशानि तत् सर्व्वं मानसं परम् ॥
यदुक्तं परमेशानि मुनिना क्षुद्रबुद्धिना ।
तत् सर्व्वं परमेशानि व्यर्थं भवति पार्व्वति ।
इति सङ्कल्पमाचर्य्य जीवन्यासं समाचरेत् ॥”
इति लिङ्गार्च्चनतन्त्रे ५ पटलः ॥

**सङ्कल्पजन्मा,** [न्] पुं, (सङ्कल्पात् जन्म यस्य ।) कामदेवः । इति हलायुधः ॥ (यथा, कथा-मरित्सागरे । ४९ । २३८ ।
“दग्धोऽपि कामः सङ्कल्पजन्मा शर्व्वेण (यथा, महाभारते । १२ । १९३ । १३ ।
“लोष्टमर्द्दी तृणच्छेदी नखखादी तु यो नरः ।
नित्योच्छिष्टः सङ्कसुको नेहायुर्व्विन्दते महत् ॥”

**सङ्कारः**, पुं, (संकीर्य्यते इति । सं + कृ + विक्षेपे + घञ् ।) सम्मार्ज्जन्या क्षिप्तधूल्यादिः । इति शब्दरत्नावली ॥ अग्निचटत्कारः । इति मेदिनी ॥

**सङ्कारी**, स्त्री, नवदूषितकन्या । इति मेदिनी ॥

**सङ्काशः**, त्रि, (सम्यक् काशते प्रकाशते इति । काश + पचाद्यच् ।) सदृशः । (यथा, महा-भारते । १ । १२३ । ३ ।
“आजगाम ततो देवो धर्म्मो मन्त्रबलात् ततः ।
विमाने सूर्य्यसङ्काशे कुन्ती यत्र जपस्थिता ॥”)
अन्तिकः । इति विश्वः ॥

**सङ्किलः**, पुं, दहनोल्का । इति त्रिकाण्डशेषः ॥

**सङ्कीर्णं**, त्रि, (सं + कृ + क्तः ।) जनादिभिर्न्निर-वकाशः । इति भरतः ॥ नानाजातिसंमिलितम् । इति भानुदीक्षितः ॥ तत्पर्य्यायः । सङ्कुलम् २ आकीर्णम् ३ । इत्यमरः ॥ निचितम् ४ । इति नानार्थे अमरः ॥ व्याप्तम् ५ समाकीर्णम् ६ । इति शब्दरत्नावली ॥ (यथा, महाभारते । १ । १३४ । २९ ।
“द्रोणः सङ्कीर्णयुद्धे च शिक्षयामास वीर्य्यवान् ॥”)
प्रथमसङ्कीर्त्तनारम्भप्रमाणंयथा । पुष्करतीर्थे नारदं प्रति ब्रह्मवाक्यम् ।
“श्रीकृष्णरससङ्गीतं वीणाध्वनिसमन्वितम् ।
कुरु वत्साधुनात्रैव शृण्वन्तु मुनयः सुराः ॥
गोपीनां वस्त्रहरणं परं रासमहोत्सवम् ।
ताभिः सार्द्धं जलक्रीडां हरेरुत्कीर्त्तनं कुरु ॥
कृष्णसङ्कीर्त्तनं तूर्णं पुनाति श्रुतिमात्रतः ।
श्रोतारञ्च प्रवक्तारं पुरुषैः सप्तभिः सह ॥
यत्रैव प्रभवेद्वत्स ! तन्नामगुणकीर्त्तणम् ।
तत्र सर्व्वाणि तीर्थानि पुण्यानि मङ्गलानि च ॥
तत्कीर्त्तनध्वनिं श्रुत्वा सर्व्वाणि पातकानि च ॥
दूरादेव पलायन्ते वैतनेयमिवोरगाः ॥
तद्दिनं सफलं धन्यं यशस्यं सर्व्वमङ्गलम् ।
श्रीकृष्णकीर्त्तनं यत्र तत्र वै नायुषोऽव्ययः ॥
कृष्णसंकीर्त्तनस्थाने ये च नृत्यन्ति वैष्णवाः ।
तेषां पादरजःस्पर्शात् सद्यः पूता वसुन्धरा ॥
उत्कीर्त्तनं भवेद्यत्र कृष्णस्य परमात्मनः ।
स्थानं तच्च भवेत्तीर्थं मृतानां तत्र मुक्तिदम् ॥
नात्र पापानि तिष्ठन्ति पुण्यानि सुस्थिराणि च ।
तपस्विनाञ्च व्रतिनां व्रतानां तपसां स्थलम् ॥
वर्त्तन्ते पापिनां देहे पापानि त्रिविधानि च ।
महापापोपपापातिपापान्येम्र स्मृतानि च ॥
कृष्णसंकीर्त्तनाद्ध्यानात्तन्मन्त्रग्रहणादहो।
मुच्यन्ते पातकैस्तैश्च पापिनस्त्रिविधा जनाः ॥”
इति नारदपञ्चरात्रे ज्ञानामृतसारे प्रथमैक-रात्रे महोत्सवारम्भो नाम १० अध्यायः ॥

**सङ्कीर्त्तितः**, त्रि, (सं + कीर्त्त + क्तः ।) सम्यगु-च्चरितः । संस्तुतः । यथा, --
“अज्ञानादथवा ज्ञानादुत्तमश्लोकनाम यत् ।
संकीर्त्तितमघं पुंसो दहेदेधो यथानलः ॥”
इति श्रीभागवते ६ स्कन्धे २ अध्यायः ॥

**सङ्कुचितं**, क्ली, (सं + कुच् + क्तः ।) संङ्कोच-युक्तम् । अप्रफुल्लम् । तत्पर्य्यायः । निद्राणम् २ मीलितम् ३ मुद्रितम् ४ । इति हेमचन्द्रः ॥ सुप्तम् ५ मिलितम् ६ नतम् ७ निकुञ्चितम् ८ । सनिद्रम् ९ अलसम् १० । इति राजनिर्घण्टः ॥ (यथा, आर्य्यासप्तशत्याम् । ६५४ ।

निर्म्मितः ॥”)

**सङ्कल्पभवः**, पुं, (सङ्कल्पात् भव उत्पत्तिर्य्यस्य ।) कामदेवः । इति त्रिकाण्डशेषः ॥ (अभिलाष-

**सम्भूतमात्रे**, त्रि । यथा, महाभारते । १३ । ४१ । ८ ।
“त्वदर्थमागतं विद्धि देवेन्द्रं मां शुचिस्मिते ।
क्लिश्यमानमनङ्गेन त्वत्सङ्कल्पभवेन ह ॥”)

**सङ्कल्पयोनिः**, पुं, (सङ्कल्पात् योनिर्य्यस्य ।) कामदेवः । इति हेमचन्द्रः ॥

**सङ्कसुकः**, त्रि, (सम्यक् कसति इतस्ततो गच्छतीति । सस + कस गतौ + “समि कसेरुकन् ।”
उणा० २ । २९ । इति उकन् ।) अस्थिरः ।
इत्यमरः ॥ दुर्ब्बलः । इत्युणादिकोषः ॥ मन्दः ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥ संकीर्णः ।
अपवादशीलः । इति संक्षिप्तसारोणादिवृत्तिः ॥

सङ्कटः । इत्यजयः ।
परस्परविजातीयः । यथा,
“विशेष्यनिघ्नैः
संकीर्णैर्नानार्थैरव्ययैरपि ।”
इत्यमरश्लोकटीकायांभरतः ॥
अशुद्धः । इति नानार्थे अमरः ॥

**सङ्कीर्णः**, पुं, (सं + कॄ + क्तः ।) अम्बष्ठकरणादि-
चाण्डालपर्य्यन्तमिश्रजातिः ।
इत्यमरः ॥ मिश्रित-
रागः । इति संगीतशास्त्रम् ॥

**सङ्कीर्त्तनं**, क्ली, स्त्री, (सं + कीर्त्त + ल्युट् ।) सम्यक्-
प्रकारेण देवतानामोच्चारणम् ।
गुणादि-
कथनम् । यथा, --
“कृष्णवर्णं त्विषा कृष्णं
साङ्गोपाङ्गास्त्रपार्षदम्
यज्ञैः सङ्कीर्त्तनप्रायैर्यजन्ति हि
सुमेधसः ॥”
इति श्रीमद्भागवते ११ स्कन्धे ५
अध्यायः ॥
“रूक्षतां व्यावर्त्तयति । त्विषा
कान्त्या कृष्णं
इन्द्रनीलमणिवदुज्ज्वलम् । यद्वा त्विषा
कृष्णं
कृष्णावतारं अनेन कलौ
कृष्णावतारस्य प्राधान्यं
दर्शयति । अङ्गानि हृदयादीनि ।
उपाङ्गानि
कौस्तुभादीनि । अस्त्राणि
सुदर्शनादीनि ।
पार्षदाः सुनन्दादयः । तत्सहितं
यज्ञैरर्च्चनैः ।
सङ्कीर्त्तनं नामोच्चारणं स्तुतिश्च
तत्प्रधानैः ।
सुमेधसो विवेकिनः ।” इति
तट्टीकायां श्रीधर-
स्वामी ॥ * ॥ तन्माहात्म्य यथा, --
“सङ्कीर्त्तनध्वनिं श्रुत्वा ये चनृत्यन्ति
मानवाः ।

“सङ्कुचिताङ्गीं द्विगुणांशुकां मनोमात्रविस्फुरन्मदनाम् ।
दयितां भजामि मुग्धामिव तुहिन इव प्रसादेन ॥”)

**सङ्कुलं**, क्ली, (सङ्कुलतीति । सं + कुलं संस्त्याने + इगुपधेति कः ।) युद्धम् । इत्यजयः ॥ (यथा,
हरिवंशे । ९१ । ९५ ।
“ततो बलेन महता गजानीकेन चाप्यथ ।
उभयोरन्तरं ताभ्यां सङ्कुलं समपद्यत ॥”)
परस्परपराहतवाक्यम् । तत्पर्य्यायः । क्लिष्टम् २ ।
इत्यमरः ॥ “द्वे पूर्व्वापरविरुद्धे वाक्ये । यथा --
‘यावज्जीवमहं मौनी ब्रह्मचारी पिता मम ।
माता च मम बन्ध्या स्यात् स्मरामोऽनुपमो
भवान् ॥’

|  | तेषां पादरजःस्पर्शात् सद्यः पूता वसुन्धरा ॥"<br>इति बृहन्नारदीयपुराणम् ॥<br>अपि च ।<br>"नामसङ्कीर्त्तनं यत्र कृष्णस्य परमात्मनः ।<br>स्थानं तत्तु पवित्रं स्यान्मृतानां तत्तु मुक्तिदम् ॥"<br>इति पद्मपुराणम् ॥ * ॥ |  |
| --- | --- | --- |

कुलजबन्धुसंहत्योः संपूर्व्वः इजुङन्त्वात् कः ।
क्लिश्यतेः क्तः क्लिष्टम् । परस्परं पराहतं
विरुद्धं परस्परपराहतम् । तत्र सरस्वती-
कण्ठाभरणे तु क्लिष्टलक्षणं यथा, --
‘दूरे यस्यार्थसंवित्तिः क्लिष्टं नेष्टं हि तत्
सताम् ।’
यथा, --
‘विजितात्मभवद्वेषिगुरुपादहतोजनः ।
हिमापहामित्रधरैर्व्याप्तं व्योमाभिनन्दति ॥’
अस्यार्थः । विना गरुडेन जित इन्द्रस्तस्यात्म-
भवोऽर्ज्जुनस्तस्य द्वेषी कर्णः तस्य गुरुः पिता
सूर्य्यः तस्य पादै रश्मिभिर्हतो जनो लोकः
व्योम आकाशमभिनन्दति । कीदृशं हिमापहो-
ऽग्निस्तस्यामित्रं जलं तद्धारयन्ति ये तैर्मेघैर्व्या-
प्तम् ।” इति तट्टीकायां भरतः ॥ (सङ्कीर्णता ।
यथा, महाभारते । ३ । १४२ । ३८ ।
“एतस्मिन् सङ्कुले तात वर्त्तमाने भयङ्करे ।
अतिभारात् वसुमती योजनानां शतं गता ॥”)

**सङ्कुलं**, त्रि, (सं + कुल संस्त्याने + कः ।) जना-
दिभिर्न्निरवकाशम् । तत्पर्य्यायः । सङ्कीर्णम् २ ।
आकीर्णम् ३ । इत्यमरः ॥ कलिलम् ४ गह-
नम् ५ । इति केचित् ॥ सङ्कीर्य्यते स्म जना-
दिभिर्न्निरन्तरं व्याप्यते स्म सङ्कीर्णं कृश विक्षेपे
क्तः । संकुलति सङ्कुलं कुल ज बन्धुसंहत्योः
संपूर्व्वेजुङ्त्वात् कः । संकुलं दन्त्यादि । शकि-
धातोरुले शङ्कुलं तालव्यादीति स्वामी ।
आकीर्णं सङ्कीर्णवत् । इति भरतः ॥ (यथा,
महाभारते । १ । ११३ । २६ ।
“ततः सेनामुपादाय पाण्डुर्नानाविधध्वजाम् ।
प्रभूतहस्त्यश्वयुतां पदातिरथसङ्कुलाम् ॥”)

**सङ्केतः**, पुं, सङ्कित्यते उच्यतेऽत्र । (सं + कित +
धञ् ।) स्वाभिप्रायष्यञ्जकचेष्टाविशेषः । तत्प-
र्य्यायः । प्रज्ञप्तिः २ परिभाषा ३ शैली ४ समयः
५ आकारः ६ । इति त्रिकाण्डशेषः ॥ उदा-
हरणं यथा, --
“सङ्केतप्रियशङ्कया निजपतिं प्रावोचदध्वश्रमम्
।”
इति रससंग्रहः ॥
(यथा च साहित्यदर्पणे ।

**सङ्केतनिकेतनं**, क्ली, (सङ्केतस्य निकेतनम् ।) प्रिय-
मेलनार्थावधारितगृहम् । यथा, --
“सङ्केतनिकेतने प्रियमनवलोक्य
समाकुलहृदया
विप्रलब्धा ।
‘सङ्केतकेलिगृहमेत्य निरीक्ष्य शून्य-
मेणीदृशो निभृतनिःश्वसिताधरायाः ।
अद्धक्षिरं वचनमर्द्धविकाशि नेत्रं
ताम्बूलमर्द्धकवलीकृतमेव तस्थौ ॥’
सङ्केतस्थलं प्रति भर्त्तुरनागमनकाणं
चिन्तयति
या सोत्कण्ठिता ॥” इति रसमञ्जरी ॥

**सङ्कोचं**, क्ली, सङ्कुचतीति । सं + कुच् + अच् ।)
कुङ्कुमम् । इत्यमरः ॥

**सङ्कोचः**, पुं, (संकुचतीति । सं + कुच् + अच् ।)
मत्स्यभेदः । (सं + कुच्भावे घञ् ।)
बन्धः ।
इति मेदिनी ॥ (यथा, कथासरित्सागरे
। ९० ।
६५ ।
“निनाय च निशामिन्दुविषमामब्जिनीव
ताम्
बद्धमोहालिपटले हृदि सङ्कोचमेत्य सा
॥”)
बहुविषयक-वाक्याथदिरल्पविषय-
स्थापनम् ।
यथा, सामान्यशब्दार्थस्य विशेषनिष्ठत्वं
सङ्कोचः
इति श्राद्धविवेकः ॥ रोधः । जडीभाव
इत्यर्थः ।
यथा, --
“यस्मिन् प्रमुदिते राज्ञि तमः सङ्कोचति
क्षितौ ॥”
इति कविकल्पद्रुमटीकायां दुर्गादासः ॥

**सङ्कोचनी**, स्त्री, (सङ्कुचतीति । सं + कुच् + ल्युः
।
ङीष् ।) लज्जालुलता । इति रत्नमाला
॥

**सङ्क्रमः**, पुं, (सं + क्रम + घञ् ।) क्रमणम् ।
सम्यग्राशिसञ्चारवस्तु । इति धरणिः ॥
(यथा,
भागवते । ४ । १२ । ४८ ।
“दिनक्षयेव्यतीपाते सङ्क्रमेऽर्कदिनेऽपि वा
॥”)
रविसंक्रमकालो यथा, --
“त्रुटेः सहस्रभागो यः स कालो रविसङ्-
क्रमः ॥”
इति तिथ्यादितत्त्वम् ॥

**सङ्क्रमणं**, क्ली, (सं + क्रम + ल्युट् ।) गमनम् ।
सूर्य्यस्य राश्यन्तरप्रवेशः । यथा ।
कालकौमुद्यां
जावालिः ।
“पूर्णे चेदर्द्धरात्रे तु रविसङ्क्रमणं भवेत् ।
प्राहुर्दिनद्वयं पुण्यं त्यक्त्वा मकरकर्क्कटौ
॥”
देवीपुराणे ।
“रविसङ्क्रमणे पुण्ये न स्नानायात्
यस्तुमानवः ।
सप्तजन्म भवेत् कुष्ठी दरिद्रश्चोपजायते
॥”
इति तिथ्यादितत्त्वम् ॥
(प्रापणम् । यथा, हरिवंशे । ३२ । १६ ।
“अत्रैवोदाहरन्तीमं भरद्वाजस्य धीमतः ।
धर्म्मसङ्क्रमणञ्चापि मरुद्भिर्भरताय वै ॥”

**सङ्क्रान्तः**, त्रि, (संक्रान्तिरस्यास्तीति । अच् ।)
संक्रान्तिविशिष्टः । यथा, --
“असङ्क्रान्तमासोऽधिमासःस्फुटः
स्यात्
द्विसंक्रान्तमासः क्षयाख्यः कदाचित् ।”
इति मलमासतत्त्वम् ॥
(सं + क्रम् + क्तः ।) प्राप्तः । गतः ।
क्रमापत-
धनादि । यथा । स्त्रीसङ्क्रान्तधनस्य
स्त्रीधनत्वा-
भावात् अधिकारविशेषस्यात्र
वचनादप्राप्त्या-

"सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकुतं लीलापद्मं निमीलितम् ॥")
न्यायमते यथा । सङ्केतो लक्षणा चार्थे पद-
वृत्तिः । वृत्त्या पदप्रतिपाद्योऽर्थ एव पदार्थ
इत्यभिधीयते । इदं पदमिमर्थं बोधयत्विति
अस्माच्छब्दादयमर्थो बोद्धव्य इति वेच्छा
सङ्केतरूपा वृत्तिः । तत्राधुनिकसङ्केतः परि-
भाषा । तया अर्थबोधकं पदं पारिभाषिकम् ।
यथा शास्त्रकारादिसङ्केतितनदीवृद्ध्यादिपदम् ।
ईश्वरसङ्केतः शक्तिः । तया अर्थबोधकं पदं
वाचकम् । यथा गोत्वादिविशिष्टबोधकगवादि
पदम् । तद्बोध्योऽर्थो गवादिर्वाच्यः स एव
मुख्यार्थ इत्युच्यते । इति शक्तिवादे गादाधरी
टीका ॥

**सङ्कोचपिशुनं**, क्ली, (सङ्कोचेन पिशुनम् ।)

कुङ्कुमम् । इति भावप्रकाशः ॥

**सङ्क्रन्दनः**, पुं, (सङ्क्रन्दयति असुरानिति । सं +

क्रन्द + णिच् + ल्युः ।) इन्द्रः ।
इत्यमरः ॥
(भौत्यस्य मनोः पुत्त्रविशेषः । यथा,
मार्क-
ण्डेये । १०० । ३२ ।
"स्त्रीमाणी च प्रतीरश्च विष्णुः
सङ्क्रदनस्तथा ।
तेजस्वी सुबलश्चैव भौत्यस्यैते मनोः
सुताः ॥"
सं + क्रन्द + भावे ल्युट् ।) रोदने, क्ली
। (यथा,
महाभारते । ११ । २३ । ४ ।
"दिष्ट्या नैनं महाराज दारुणं
भरतक्षयम् ।
कुरु संक्रन्दनं घोरं युगान्तमनुपश्यसि
॥"
सङ्क्रन्दयति शत्रूनिति । शत्रुतापके,
त्रि ।
यथा, महाभारते । ४ । ५ । २६ ।
"तस्य मौर्व्वीमपाकर्षत् शूरः
सङ्क्रन्दनो
युधि ।
कुले नास्ति समो रूपे यस्येति नकुलः
स्मृतः ॥")

**सङ्क्रमः**, पुं, क्ली, दुर्गसञ्चरः । साँको इति

भाषा । इत्यमरः ॥ संक्रामति अनेन
संक्रम्यते
असौ वा संक्रमः । घञ् । दुर्गं सेत्वादि
सञ्च-
रत्यनेन दुर्गसञ्चरः करणे अल् । सञ्चरो
निर्ग-
मोऽम्बुपथः । इति रत्नकोषः । इति
भरतः ॥
(यथा, मनुः । ९ । २८५ ।
"संक्रमध्वजयष्टीनां प्रतिमानाञ्च भेदकः
।
काङ्क्षया कल्पने सादृश्यात्
स्त्रीसङ्क्रान्तधन-
मात्रस्य पूर्व्वस्वामिदायादरूपोऽधिकारी
कल्प-
नीय एतदर्थं पत्नीपदस्य
स्त्रीलक्षकत्वमिति
भावः । इति दायभागटीकायां
श्रीकृष्णतर्का-
लङ्कारः ॥

**संङ्क्रान्तिः**, स्त्री, (सं + क्रम + क्तिन् ।) राश्य-

न्तरसंयोगानुकूलव्यापारः । यथा, --
"नाडीनक्षत्रदिवसे रविभौमशनैश्चराः ।
सङ्क्रान्तिं यस्य कुर्व्वन्ति तस्य
क्लेशोऽभिजायते ॥
इति तिथ्यादितत्त्वम् ॥
रविसंक्रान्तिर्यथा ।
भविष्यमात्स्यज्योतिषेषु ।
"मृगकर्क्कटसंक्रान्ती द्वे तूदग्दक्षिणायने ।
विषुवती तुलामेषे गोलमध्ये तथापराः ॥"
मृगो मकरः । गोलो राशिचक्रम् ।
"धनुर्म्मिथुनकन्यासु मीने च षडशीतयः ।
वृषवृश्चिकसिंहेषु कुम्भे विष्णुपदी स्मृता
॥"
देवीपुराणम् ।
"यावद्विंशकला भुक्तास्तत् पुण्यं
चोत्तरायणे ।
निरंशे भास्करे दृष्टे दिनान्तं दक्षिणायने ॥
अर्द्धरात्रे त्वसंपूर्णे दिवा पुण्यमनागतम् ।
अर्द्धरात्रे व्यतीते तु विज्ञेयं चापरेऽहनि ॥
संपूर्णे चार्द्धरात्रे च उदयेऽस्तमयेऽपि वा ।
मानार्द्धे भास्करे पुण्यमपूर्णे शर्व्वरीदले ॥
सम्पूर्णे तूभयोर्ज्ञेयमतिरेके परेऽहनि ।

षडशीतिमुखेऽतीते वृत्ते च विषुवद्वये ॥
भविष्यत्ययने पुण्यमतीते चोत्तरायणे।
आदौ पुण्यं विजानीयात् यद्यभिन्ना
तिथिर्भवेत् ॥”
विंशकला विंशतितमी कला
संक्रान्तिक्षणादूर्ध्वं
यावद्भवति तावत् पुण्यम्।
निरंशेऽंशशून्ये
संक्रान्तिकाले हि भास्करोऽंशरहितो
भवति
तस्मिन् दृष्टे दिवेति यावत्। दिनञ्च
दिनकर-
करसंस्कृतास्त्रिंशन्नाडिका इति
ज्योतिर्विदः।
तदन्तं तत्समाप्तिं यावत् तावत् पुण्यम्।
तथा
च बृहद्वशिष्ठः। त्रिंशत्कर्क्कटके नाड्यो
मकरे
विंशतिः स्मृताः। नाडी दण्डः।
“उत्पलाद्विपलं षष्ट्या विपलात्तु पलं
नयेत्।
पलात्षष्ट्या नयेन्नाडों तत्षष्ट्या तु
रवेर्द्दिनम् ॥”
इति सिद्धान्तसन्दर्भात् ॥
ततश्च
देवीपुराणबृहद्वशिष्ठयोरेकवाक्यतया
कलानाड्योः पर्य्यायिता ॥ * ॥
रात्रिसंक्रमणे
त्वाह अर्द्धरात्रे त्विति। असम्पूर्णे
कलान्यूना-
र्द्धरात्रे।
“कलान्यूनार्द्धरात्रे तु यदि संक्रमणं
भवेत्।
तदहः पुण्यमिच्छन्ति गार्गगालवगातमाः
॥”
इति
कृत्यचिन्तामणिवर्षकृत्यधृतगर्गवचनात्
।
कालकौमुद्याञ्च गालवेत्यत्र हारीत इति
पाठः।

न हि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम्
॥”
इति लिङ्गपुराणात् मोक्षधर्म्माच्च ॥
तत्रापि दक्षिणायने पूर्व्वदिनार्द्धमात्रमिति
विशेषः। उत्तरायणे परदिनार्द्धमात्रमिति
विशेषः। मानार्द्धमिति भास्करे भास्करोप-
लक्षिते काले दिवेति यावत् तस्मिन्
संक्रमणे-
ऽपि मानार्द्धं पुण्यम्। एतच्च
विषुवषडशीति-
विषयम्! अयनकालयोः पूर्व्वमुक्तत्वात्
विष्णु-
पद्याञ्चोभयतः षोडशकलानां पञ्चदशनाडि-
कानां वा पुण्यत्वस्य शातातपादिवचनेन
वक्ष्य-
माणत्वात्। तेन दिवासंक्रमण
एवायनादित्वेन
पुण्यकाले विशेषः। रात्रिसंक्रमणे तु अर्द्ध-
रात्रीयमकरकर्क्कटसंक्रमणव्यतिरिक्ते
सर्व्वेषां
तुल्यतेति। अपूर्णे शर्व्वरीदले
कलान्यूनार्द्धरात्रे
इत्यत्रापि मानार्द्धमित्यनुषज्यते।
दिवापुण्य-
मिति यत् प्रागुक्तं अत्र तदेव मानार्द्धत्वेन
विशेषितमित्यपुनरुक्तिः। एवमुदयास्तमये
यन्मानार्द्धं पुण्यं तत् किमेकदिने
दिनयोर्व्वेति
तत्राह संपूर्णे तूभयोरिति उभयोः पूर्व्वापर-
दिनयोर्म्मानार्द्धं पुण्यं तेन
पूर्व्वदिनस्यास्तम-
यपर्य्यन्तं परदिनस्य उदयमारभ्य मानार्द्धं
पुण्यमित्यर्थः। अतिरेके अर्द्धरात्रात् परतः
संक्रमणे परेऽहनि मानार्द्धं पुण्यमित्यनुष-
ज्यते। मानार्द्धन्तु प्रहरद्वयम्।
“अर्द्धरात्रादधस्तस्मिन्
मध्याह्नस्योपरिक्रिया।
ऊर्द्ध्वं संक्रमणे भानोरुदयात् प्रहरद्वयम्।
पूर्णार्द्धरात्रसंक्रान्तौ द्वे दिनार्द्धे तु पुण्यदे ॥”

अर्द्धरात्रे विशेषमाह आदावित्यादि। अर्द्धरात्र-
संक्रान्तावादौ पूर्व्वदिन एव मानार्द्धं पुण्यम्।
यद्यभिन्ना संक्रान्तिकाले पूर्व्वदिने च एकैव
तिथिर्भवेत् तेन मध्यरात्रे संक्रमणेयदुमयदिन-
मानार्द्धं पुण्यमुक्तं तद्भिन्नतिथिविषयम्।
अतीते
पुनरर्द्धरात्रे पूर्व्वेणाह्ना तिथ्यभेदेऽपि
परदिनस्यैव
पूर्व्वार्द्धं पुण्यमिति तात्पर्य्यार्थः ॥ एवञ्च रात्रि-
संक्रान्तौ दिन एव पुण्यत्वाभिधानात्।
“राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु।
स्नानदानादिकं कुर्य्युर्निशि काम्यव्रतेषु च ॥”
इति देवलेन दिनसंक्रमणस्य रात्रिप्रविष्टपुण्य-
कालांशे सक्रान्तिनिमित्तेन स्नानदानादि
विधीयते इति ॥ * ॥ यत्तु।
“मन्दा मन्दाकिनी ध्वाङ्क्षी घोरा चैव महोदरी
राक्षसी मिश्रिता प्रोक्ता संक्रान्तिः सप्तधा नृप
मन्दा ध्नुवेषु विज्ञेया मृदो मन्दाकिनी तथा।
क्षिप्रे ध्वाङ्क्षीं विजानीयादुग्रे घोरा प्रकीर्त्तिता
चरे महोदरी ज्ञेया क्रूरैर्ऋक्षैश्च राक्षसी।
मिश्रिता चैव विज्ञेया मिश्रितर्क्षैस्तु संक्रमे ॥”
इत्येतैर्द्वादशस्वेव संक्रान्तिषु ध्रुवादिनक्षत्र-
योगान्मन्दादिरूपतया सप्तधाभिन्नासु।
“त्रि चतुः पञ्च सप्ताष्ट नव द्वादश एव च।
क्रमेण घटिका ह्येतास्तत्पुण्यं पारमार्थिकम्
॥”
इति देवीपुराणे एव त्रिचतुरादिघटिकानां
पुण्यत्वमुक्तं तद्दिवारात्र्योस्तत्तत्कालोपदेशात्
अवकाशमलभमानं
सन्ध्याद्वयसंक्रान्तिविषयमि-
ति समयप्रकाशः ॥ * ॥ ध्रुवादिगणस्तु
दीपिकायाम्
“उग्रः पूर्व्वमघान्तकाः ध्रुवगणस्त्रीण्युत्तराणि
स्वभू-
र्व्वातादित्यहरित्रयं चरगणः पुष्याश्विहस्ता
लघुः।
चित्रामित्रमृगान्त्यभं मृदुगणस्तीक्ष्णोऽहि-
रुद्रेन्द्रयुक्
मिश्रोऽग्निः सविशाखभः शुभफलाः
सर्व्वेस्वकुत्ये

ततश्च कलान्यूनार्द्धरात्राभ्यन्तरे
द्वादशस्वेव
संक्रान्तिषु अनागतं नागतं संक्रमणेन
यत्र
दिवा तदेव पुण्यं पुण्यजनकम् । तत्तु
पूर्व्वदिनं
तदैव संक्रान्तेरनागतत्वसन्भवात । तेन
संक्र-
मणकालादव्वग्वि दिवापरार्द्धे
स्नानादिकं
कर्त्तव्यमित्यर्थः । अर्द्धरात्रे व्यतीते
कालाधिकार्द्ध
रात्रे व्यतीते । संपूर्णे अर्द्धरात्रे रात्रिमध्य-
कलयोः । कलान्यूनार्द्धरात्रे त्विति
वचना-
नन्तरं भुजबलभीमे ।
'अर्द्धरात्रे कलाधिक्ये यदा स क्रमते
रविः ।
तदोत्तरदिनं ग्राह्य स्नानदानजपादिषु ॥
अर्द्ध रात्रे तु संपूर्णे यदा संक्रमते रविः ।
प्राहुद्दिनद्वय पुण्यं त्यक्त्वा
भकरकर्क्कटौ ॥"
इति वचनाभ्या तथा प्रतीतेः ।
कालविवेके
कालकौमुद्याञ्च शातातपजावाली ।
"पूर्णे चेदर्द्धरात्रे तु रविसंक्रमण भवेत् ।
प्राहुर्द्दिनद्वयं पुण्यं त्यक्त्वा
मकरकर्क्कटौ ॥"
एतयोर्व्यवस्था आह कालमाधवीये
भविष्यो-
त्तरीयम् ।
मियुनात् कर्किसंक्रान्तिर्यदि
स्यादंशुमालिनः ।
प्रदोषे वा निशीथे वा कुर्य्यादहनि
पूर्व्वतः ॥
कार्म्मुकन्तु परित्यज्य झष संक्रमते
रविः ।
प्रभात वार्द्धरात्रे वा स्नान कुर्य्यात्
परेऽहनि ॥"
ततश्च
रात्रिमध्यदण्डद्वयात्मकार्द्धरात्रसंक्रान्ता-

इति स
वत्सरप्रदीपगङ्गावाक्यावलीधृतवशिष्ठ
सौरधर्म्मवचनैकवाक्यत्वात् !
"अर्द्धरात्रादधश्चैव दिनार्द्धस्योपरि क्रिया ।
ऊर्द्धं संक्रमणे भानोरुदयात् प्रहरद्वयम् ॥"
इति
भोजराजकृत्यचिन्तामणिधृतैकवाक्यत्वाच्च
अधः पूर्व्वं ऊर्द्ध परत । क्रिया स्नानादिका
।
एवञ्च गर्गवचनस्थतदहरिति यामद्वयपरम् ।
अन्यथा मूलभूतश्रुत्यन्तरकल्पनापत्तेः ।
एवञ्च
षडशीतिमुखेऽतीते इत्यादि दिवासंक्रमण-
विषयम् । तेन दिवा षडशीतिसंक्रमणे भूते
भविष्यन्मानार्द्धं पुण्यं एवं विषुवद्वयेऽपि ।
दिवोत्तरायणेऽपि भविष्यद्विंशतिदण्डानां
पुण्यत्वम् । अत्रोत्तरायणस्य पृथगभिधानात्
अयन इति पद दक्षिणायनपरं
गीवलीवर्द्दन्या-
यात् । तेन दिवा दक्षिणायने भविष्यति भूत-
त्रिंशद्दण्डानां पुण्यत्वम । एवञ्च षडशीत्या-
दिष्वप्यवकाशमलभमानम् ।
"अर्व्वाक् षोडश विज्ञया नाड्यः पश्चाच्च
षोडश ।
कालः
पुण्योऽकसक्रान्तेर्व्विद्वद्भिःपरिकीत्तितः ॥"
इति शातातपोयम् ।
"अतीतानागतो भोगो नाड्यः पञ्चदश
स्मृताः ।"
इति देवीपुराणीयञ्च वचन दिवा विष्णपदी
विषयम् । अतएव जावालिबृहद्वशिष्ठौ ।
"पुण्यायां विष्णुपद्याञ्च प्राक् पश्चादपि
षोडश ।"

गणाः ॥"
अन्तको भरणी । स्वभू रोहिणौ । वातादित्य-
हरित्रयं स्वाती पुनवसुः श्रवणा धनिष्ठा
शतभिषा । मित्रमृगान्त्यभं अनुराधामृगशिरो
रेवत्यः । अहिरुद्रन्द्रयुक् अश्लषा आर्द्रा
ज्येष्ठा मूला । आग्नः कृत्तिका । कल्पतरुस्तु ।
क्रमेण यथासंख्यन एता घटिकास्तत्पुण्यं
तस्य
सक्रमणस्य पुण्यहेतुत्वात् पुण्यं पारमार्थिक
मुख्यम् ।
"त्रुटेः सहस्रभागो यः स कालो रविसंक्रमः ।"
इत्युक्तसूक्ष्मसङ्क्रमकालानानुष्ठानजन्यपुण्य
समपुण्यहेतवं इत्याह । त्रुटिस्तु ।
"लघ्वक्षरचतुर्भागस्त्रुटिरित्यभिधीयते।
त्रुटिद्वय लवः प्रोक्ता निमेषस्तु लवद्वयम् ॥"
इति स्मृत्युक्ता ॥
एतदेव मत युक्तम् । अतएव देवलेन ।
"या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः
स्मृताः ।"

| वदयेऽस्तमयऽपि वा इत्यनेन<br>उदयोपक्रममस्त-<br>मयान्तञ्च मानार्द्धं पुण्यम् ।<br>एवञ्चोभयदिने<br>पुण्यकाले पूर्व्वदिनाकरण एव परदिने ।<br>“श्वः कार्य्यसद्य कत्तव्य पूर्व्वाह्णि<br>चापराह्णि<br>कम् । | | |
|---|---|---|

इत्यक्तम् । एवञ्चेता घटिकाः पुण्यतमाः माना-
र्द्धादिकन्तु पुण्यमात्रमिति तस्मान्मन्देत्यादि न
सन्ध्यासंक्रान्ति विषयकमिति ।
सन्ध्यासंक्रान्ति-
विषयत्वे पारमार्थिकमित्यनुपपत्तेः । पुण्य-
मित्यनेनैव सिद्धिः । पारमार्थिकमित्यत्र कल्प-
तरुव्यांख्यानावलोकनात्रविसंक्रम इति
पाठकल्पनं कल्पनमेव । समयप्रकाशकृतापि
तथा पठितत्वात् । जीमूतवाहनाऽपि काल-
विवेके ।
"अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्त्तितम् ।
रात्रौ संक्रमणे भानोर्द्दिनार्द्धं स्नानदानयोः ॥"
इति बृहद्वशिष्ठादिवचनपर्य्यालाचनयादिवा-
संक्रान्तौ दिनमात्रं पुण्यं पुण्यतरास्तु विशेष-
विहिता नाड्यः इत्याह । अतएव तद्धृतजा-
बालिबृहस्पतिशातातपवचनमपिसङ्गच्छते ।
यथा, --
"वर्त्तमाने तुलामेषे नाड्यस्तूभयतो दश ॥"
कालमाधवीयेऽपि । अहीत्यभिधाय प्राशस्त्य-
तारतम्यमुक्तम् । एवञ्च दिवासंक्रान्तौ कृत्स्नं
दिनं पुण्यं षडशीतिमुखेऽतीते इति वचनं
पुण्यतरपरम् ॥ * ॥ ननु देवीपुराणे दिवा-
रात्र्योः संक्रमणे विशिष्यकालाभिधानात्
सन्ध्यासंक्रान्तेः कः काल इति चेत् ।
"त्रिंशन्मुहूर्त्तं कथितमहोरात्रन्तु यन्मया ।"
इति विष्णुपुराणेन सन्ध्ययोः पृथगनुपादानात्
दिवारात्रिसम्बन्धित्वान्मुहूर्त्तार्द्धेन तयोरन्तर्भावः
तथा च दक्षः ।
"अहोरात्रस्य यः सन्धिः सूर्य्यनक्षत्रवर्ज्जितः ।
सा तु सन्ध्या समाख्यातामुनिभिस्तत्त्वदर्शिभिः
॥"
योगियाज्ञवल्क्यः ।
"ह्रासवृद्धी च सततं दिनरात्र्योर्यथाक्रमम् ।
सन्ध्या मुहूर्त्तमाख्याता ह्रासे वृद्धौ समा
स्मृता ॥"
वराहः ।
"अर्द्धास्तमयात् सन्ध्या व्यक्तीभूता न तारका
यावत् ॥"
तेजःपरिहानिरुषा भानोरर्द्धोदयं यावत् ॥"
अतएव केनापि मुनिना नानादेशीयसंग्रह-
यने तद्दिवसीयशेषयामद्वयं उत्तरायणे तु
पर-
दिवसीयाद्ययामद्वयं पुण्यमिति ।
मध्यरात्रीय-
कलोत्तरशेषार्द्धरात्रसंक्रमणमात्रे तु
परदिनाद्य-
यामद्वयं पुण्यमिति । सन्ध्यासंक्रमणे तु
दिन-
दण्डेदिनस्य रात्रिदण्डे रात्रेर्व्यवस्थेति ॥
* ॥ * ॥
ब्रह्मपुराणे ।
"शुक्लपक्षस्य सप्तम्यां यदा संक्रमते
रविः ।
महाजया तदा प्रोक्ता सप्तमी भास्करप्रिया
॥
स्नानं दानं तपो होमः पितृदेवाभिपूजनम्
।
सर्व्वं कोटीगुणं प्रोक्तं तपनेन महौजसा
॥"
अत्र ।
"मासपक्षतिथीनाञ्च निमित्तानाञ्च
सर्व्वशः ।"
इत्यनेन प्राप्ततिथ्युल्लेखे तद्विशेषणत्वेन
महा-
जया इत्युल्लेख्यम् । संज्ञाविधेरेतदेव
प्रयोजनं
यत्तया निर्द्देश इत्युक्तत्वात् । एवञ्च
संक्रान्ति-
विशेषस्य निमित्तत्वेन प्राप्तौ विषुवाद्यु-
ल्लेखोऽपि ॥ * ॥ स्कान्दे ।
"एकान्ततो मया प्रोक्ताः कालाः
संक्रान्ति-
संज्ञकाः ।
नैतेषु विद्यतेऽनिष्टं यतश्चाक्षयसंज्ञिताः ॥
अश्रद्धयापि यद्दत्तं कुपात्रेभ्योऽपि मानवैः
।
अकालेऽपि हि तत् सर्व्वं सत्यमक्षयतां
व्रजेत् ॥"
मात्स्ये ।
"अयने कोटिगुणितं लक्षं विष्णुपदीषु च ।
संक्रान्त्याञ्च त्रयोदश्यां पक्षान्ते
नवमीदिने ।
सप्तम्यां रविवारे च
स्नानमामलकैस्त्यजेत् ॥"
शातातपः ।
"रविवारेऽर्कसंक्रान्त्यां षष्ठ्यां वै
सप्तमीतिथौ ।
आरोग्यकामस्तु नरो निम्बपत्रं न
भक्षयेत् ॥" *
कृत्यचिन्तामणौ गुणिसर्व्वस्वे च ।
"चैत्रे मासि च सम्पूज्यो घण्टाकर्णो
घटात्मकः ।
आरोग्याय स्नुहीमूलं सक्रान्त्यां तत्र
कारयेत् ॥"
पूजामन्त्रः ।
"घण्टाकर्ण महावीर
सर्व्वव्याधिविनाशन ।
विस्फोटकभये प्राप्ते रक्ष रक्ष महाबल !
॥"
शिवपुराणे ।
"घण्टाकर्णो गणः श्रीमान्
शिवस्यातीव-
वल्लभः ॥" * ॥
कृत्यचिन्तामणौ ।
"मसूरं निम्बपत्रञ्च योऽत्ति मेषगते रवौ ।
अपि रोषान्वितस्तस्य तक्षकः किं
करिष्यति ॥"
संवत्सरप्रदीपे तूत्तरार्द्धे ।
"मेषस्थे च विधौ तस्य नास्त्यङ्गे विषजं
भयम् ॥"
स्मृतिः ।
"मेषादौ शक्तवो देया वारिपूर्णा च गर्गरी
॥"
वारिदानमन्त्रः ।
"एष धर्म्मघटो दत्तो
ब्रह्मविष्णुशिवात्मकः ।
अस्य प्रदानात् सफला मम सन्तु
मनोरथाः ॥
वैशाखे यो घटं पूर्णं सभोज्यं वै
द्विजन्मने ।

कारेण च सन्ध्यासंक्रान्तित्वेन विशेषो नाभिहितः ॥ * ॥ * ॥ तदयं संक्षेपः । दिनसंक्रमणे कृत्स्नं दिनं पुण्यम् । षडशीतिमुखेऽतीते इत्याद्युक्तं पुण्यतरं । मन्दा मन्दाकिनीत्यादिरूपेण त्रिचतुरादिघटिकाः पुण्यतमाः । दिनवृत्तोत्तरायणादिविहितत्रिंशतिदण्डादीनां रात्रिप्रविष्टभागस्यापि पुण्यत्वम् । रात्रिसंक्रमणे तु कलान्यूनप्रथमार्द्धरात्रगते तद्दिवसीयशेषयामद्वयं पुण्यम् । कलाद्वयात्मकमध्यरात्रगते तद्दिवसीयतिथिरभेदे तद्दिवसीयशेषयामद्वयं पुण्यम् । भेदे तु तद्दिवसीयशेषयामद्वयं परदिवसीयाद्ययामद्वयञ्च पुण्यम् । उभयदिने पुण्यकालेऽपि पूर्व्वदिनाकरण एव परदिने तद्विहितं कार्य्यम् । तिथिभेदाभेदयोर्द्दक्षिणा-

षडशीतिसहस्रन्तु षडशीत्यामुदाहृतम् ॥
शतमिन्दुक्षये पुण्यं सहस्रन्तु दिनक्षये ।
विषुवे शतसाहस्रमा का-मा-वैष्वनन्तकम्
॥”
आ-का-मा-वैषु आषाडीकार्त्तिकीमाघीवैशाखीपूर्णिमासु । देवीपुराणे ।
“रविसंक्रमणे पुण्ये न स्नायाद्यस्तु
मानवः ।
सप्तजन्मस्वसौ रोगी निर्द्धनश्चोपजायते
॥” * ॥
दीपिकायाम् ।
“नाडीनक्षत्रदिवसे रविभौमशनैश्चराः ।
संक्रान्तिं यस्य कुर्व्वन्ति तस्य
क्लेशोऽभिजायते ॥
गोमूत्रसर्षपैः स्नानं सर्व्वौषधिजलेन च ।
विशुद्धं काञ्चनं दद्यान्नाडीदोषोपशान्तये
॥
नाडीनक्षत्राणि
चाद्यदशषोडशाष्टादशत्रयोविंशतिपञ्चविंशतयः । रत्नमालायाम् ।
“ताराबलादिन्दुरथेन्दुवीर्य्याद्दिवाकरः संक्रममाण उक्तः ।
ग्रहाश्च सर्व्वे सवितुर्बलेन
महीसुताद्याः क्रमशः प्रशस्ताः ॥” * ॥
संवत्सरप्रदीपे ।
“धुस्तूरबीजसलिलैः स्नायात्
संक्रान्तिशान्तये
तथा सर्व्वौषधीभिश्च विष्णुमन्त्राश्च
संजपेत् ॥
यदाह्नि मेषसंक्रान्तिस्तुलासंक्रमणं निशि
।
तदा प्रजा विवर्द्धन्ते धनधान्यसमृद्धिभिः
॥
कुजार्कशनिवारेण महासंक्रमणं यदा ।
तदा भवेत् प्रजानाशो दुर्भिक्षादिभयं महत्
॥”
षट्त्रिंशन्मतनिगमौ ।
“संक्रान्त्यां पञ्चदश्याञ्च द्वादश्यां
श्राद्धवासरे ।
वस्त्रं न पीडयेत्तत्र न च क्षारेण योजयेत् ॥

ददात्यभुक्त्वा राजेन्द्र स याति परमां
गतिम् ॥”
पूर्णं जलेनेति शेषः । महार्णवे ।
“यो ददाति हि मेषादौ
शक्तूनम्बूघटान्वितान्
पितॄनुद्दिश्य विप्रेभ्यः सर्व्वपापैः
प्रमुच्यते ॥
विप्रेभ्यः पादुके छत्रं पितृभ्यो विषुवे
शुभम् ।”
पितृभ्यः पितॄनुद्दिश्य इत्यर्थः । अत्र
विषुवस्य
पुण्यविशेषजनकत्वेन विवक्षितत्वात्
मेषादाविति
विषुवसंक्रान्तिपुण्यकालपरम् ।
अन्यथा कालद्व-
यकल्पनापत्तेः ॥ * ॥ कर्म्मोपदेशिन्यां
व्यासः ।
“संक्रान्त्यां पक्षयोरन्ते द्वादश्यां
श्राद्धवासरे ।
सायंसन्ध्यां न कुर्व्वीत कृते च पितृहा
भवेत् ॥”
देवीपुराणे ।
“अतीतानागतो भोगो नाड्यः पञ्चदश
स्मृताः ।
सान्निध्यन्तु भवेत्तत्र ग्रहाणां संक्रमे रवेः
॥
पुण्यपापविभागेन फलं देवी प्रयच्छति
।”
भोगः पुण्यपापजननयोग्यकालः ।
पुण्यपाप-
विवेचने विश्वामित्रः ।
“यमार्य्याः क्रियमाणं हि
शंसन्त्यागमवेदिभिः ।
स धर्म्मो यं विगर्हन्ति तमधर्म्मं प्रचक्षते
॥”
आगमवेदिभिः क्रियमाणमिति सम्बन्धः
।
तान्त्रिकास्तु ।
“विहितक्रियया साध्यो धर्म्मः पुंसो
गुणो मता ।
प्रतिषिद्धक्रियासाध्यः स गुणोऽधर्म्म
उच्यते ॥”

|  |  |  |
| --- | --- | --- |
|  |  | अत्रैकस्मिन्नेव काले पुण्यपापफलदानदर्शनात् संक्रमणपुण्यकाल एव स्नानादिवत्तैलादित्यागः एवमेव गुरुचरणाः । एकादशीप्रकरणोक्त-सक्रान्त्यु पवासस्य व्रतत्वेन भावरूपत्वात् भाव- |

घटितत्वाद्वोभयथापि तत्र पूज्ये
विधेर्वृत्तिरित्य-
नेन पुण्यकालयुक्ताहोरात्रकर्त्तव्यता
अष्टम्युप-
वासवत् । एकादशीतत्त्वे एतद्बहुधा विमृष्टम् ।
एवञ्च रात्रिप्रागर्द्धसंक्रान्तौ
दिवाशेषार्द्धमात्रस्य
तत्पुण्यकालत्वाद्रात्रिमुहूर्त्तार्द्धे सायं
सन्ध्यो-
पासनं कार्य्यमेव । * । ब्रह्मपुराणे ।
"नित्यं द्वयोरयनयोर्न्नित्यं विषुवतोर्द्वयोः ।
चन्द्रार्क्कयोर्ग्रहणयोर्व्यतीपातेषु पर्व्वसु ॥
अहोरात्रोषितः स्नानं श्राद्धं दानं तथा जपम्
।
यः करोति प्रसन्नात्मा तस्य स्यादक्षयञ्च
तत् ॥"
अहोरात्रोषितः पूर्व्वदिने कृतोपवासः ।
एतत-
परमेव ।
"अर्द्धरात्रे व्यतीते तु संक्रान्तिर्यदहर्भवेत् ।
पूर्व्वे व्रतादिकं कुर्य्यात् परेद्युः स्नानदानयोः
॥"
इति भीमपराक्रमीयम् ॥
स्नानदानयोरित्यत्र सप्तमीनिर्द्देषात् परदिव-
सायस्नानदानादिनिमित्तकंपूर्व्वदिने
उपवास-
संयमरूपः व्रतादिकं कुर्य्यादित्यर्थः । इति
तिथ्यादितत्त्वम् ॥ * ॥ अथ
रविसंक्रान्तिगणनम्
"नवाष्टशक्रहीनेन शकाब्दाङ्केन पूरिताः ।
भूर्व्वाणचन्द्रावेकाम्नी कुरामौ वेदयुग्मके ॥
१ । १५ । ३१ । ३१ । २४ ॥
अङ्का अनुपलादेस्तु षष्ट्या
लब्धाङ्कमिश्रिताः ।
दण्डात् खाम्बी हयेषू च ३० । ५७ ।
पलाद्धित्वा
ततः पुनः ॥
सप्तावशिष्टा वाराः स्युस्ततो दण्डादिकाः
परे ।
त्रितयं करपादेषु पयोविषुवभक्रमात् ॥
मानं मूर्द्ध्नि मुखे चैवं हृदये
सुखसम्भवः ।
दोः पदोर्दक्षयोर्भोगस्त्रासश्च वामयोः
स्वभे ॥"
इति जलविषुवचक्रफलम् ॥ * ॥
"शीर्षे पञ्च मुखे त्रीणि हस्तयोश्च त्रयं
त्रयम् ।
हृदि पञ्च शशी नाभौ गुदे च पादयो
रसाः ।
उत्तरायणभाज्ज्ञेयं स्वनक्षत्रस्थितेः
फलम् ॥
शीर्षेऽर्थलाभो वदने सुखानि
दक्षे करेऽङ्घ्रौ हृदये च सौख्यम् ।
नाभौ शुभं वामकरेऽर्थनाशो
गुह्ये भयं वामपदे प्रवासः ॥"
इत्युत्तरायणचक्रफलम् ॥ * ॥
"शीर्षे त्रीणि मुखे त्रीणि हृदये पञ्च
हस्तयोः ।
अष्टौ पादद्वयेऽप्यष्टौ
दक्षिणायनभक्रमात् ॥
शीर्षे मानं मुखे विद्या हृदये वित्तसञ्चयः
।
प्रवासः स्यात् करे वामे भिक्षालाभश्च
दक्षिणे ।
निष्फलं वामपादे च किञ्चिल्लाभश्च
दक्षिणे ॥"
इति दक्षिणायनचक्रफलम् ॥ * ॥
"ऋक्षे संक्रसणं यत्र विष्णुपद्यां मुखे च
तत् ।
चत्वारि दक्षिणे बाहौ त्रीणि त्रीणि
पदद्वये ॥
चत्वारि वामवाहौ च हृदये पञ्च
निर्द्दिशेत् ।
अक्ष्णोर्द्वयं द्वयं योज्यं मूर्द्ध्नि द्वौ
चैककं
गुदे ॥
रोगो भोगस्तथा यानं बन्धनं लाभ एव
च ।
विचारणा । इत्यमरः ॥ (यथा, महाभारते ।
२ । ५७ । ७ ।
"यो वेत्ति संख्यां निकृतौ विधिज्ञ-
श्चेष्टास्वखिन्नः कितवोऽक्षजासु ।
महामतिर्यश्च जानाति द्यूतं
स वै सर्व्वं सहते प्रक्रियासु ॥")
एकत्वादिः । इति मेदिनी ॥ सङ्ख्येये, त्रि ।
यथा, --
"विपणो विक्रयः सङ्ख्याः सङ्ख्येये ह्यादश
त्रिषु
विंशत्याद्याः सदैकत्वे सर्व्वाः
सङ्ख्येयसङ्ख्ययोः ॥
सङ्ख्यार्थे द्विबहुत्वे स्तस्तासु चानवतेः स्त्रियः
।
पङ्क्तेः शतसहस्रादि क्रमाद्दशगुणोत्तरम् ॥"
इति चामरः ॥
"आदश दशश्रुतिपर्य्यन्तं अष्टादश यावत् एका-
दिकाः संख्याशब्दाः संख्येये द्रव्ये वर्त्तन्ते ।
त्रिषु
लिङ्गेषु तेन संख्यासंख्येययोः
सामानाधिकरण्येन
वृत्तिः । यथा एका शाटी एकः पटः एकं
कुण्डम् । हि शब्दो अवधारणे संख्येय एव न तु
संख्यायामित्यर्थः । तेन घटा दश इति साधुर्न
घटानां दशेति । किन्तु द्व्येकयोर्द्विवचनैक-
वचने इति सूत्रे द्व्येकयोरिति निर्द्देशात् संख्या-
मात्रेऽपि सम्भव इति भाव्यम् । घटानां
पञ्च इत्यपि स्यादिति सुभूतिः । वार्त्ताकुरेषा
गुणसप्तयुक्ता इति वैद्यकम् । आङ्शब्देन
दशशब्दस्याव्ययीभावः । दशशब्दस्य त्रिलि-
ङ्गत्वात् नपुंसकत्वपक्षे क्लीवाद्वेति पक्षे अः तेन
आदशं आदशेति पाठः । विंशः । अष्टादश-
परा विंशत्याद्याः सर्व्वा एव सख्याः संख्यायां
संख्येये च नित्यमेकवचनान्ता भवन्ति यथा
विंशतिर्भावः गवां विंशतिः । संख्या । इह
संख्या संख्यान्तरं अन्यथा पूर्व्वेण विरोधः
स्यात् संख्या अर्थः अभिधेयो यस्य स
संख्यार्थः
तत्र संख्यार्थे विंशत्यादौ संख्यायां संख्येये च
सामानाधिकरण्यात् द्विवचनबहुवचने मवतः

मेषसंक्रमणे भानोः सिद्धान्तस्फुटसम्मताः ॥
भुजौ षडिषू रामाग्नी २ । ५६ । ३३ । कालो जातिर्गजावनी । ६ । २२ । १८
रामश्चन्द्रोऽग्नियुग्मश्च ३ । १ । २३ । तर्कोऽङ्क दृङ्-
नवाशुभौ ॥ ६ । २९ । ५९ ॥
द्वावङ्कदृग्वेदबाणा २ । २९ । ५४ । अब्धिर्वाणशरौ
सुराः । ४ । ५५ । ३३ ।
षणागवेदौ शून्येन्दू ६ । ४८ । १० । एकं शैलभुवौ
शराः ॥ १ । १७ । ५ ॥
द्वौ षडग्नी तथा काला २ । ३६ । ६ । अब्धीरामाः
शरावनी । ४ । ३ । १५ ।
पश्चाग्नीषू तथा रुग्रा ५ । ५३ । ११ । मेष-संक्रमवारतः ।
अङ्कैर्योज्या वृषादेस्तु वाराद्याः संक्रमे रवेः ॥"
इति ज्योतिस्तत्त्वम् ॥

**सङ्क्रान्तिचक्रं**, क्ली, (संक्रान्त्याश्चक्रम् ।) नराणां शुमाशुभ-ज्ञानार्थनक्षत्राङ्कितनराकारचक्रम् । यथा, --
"मूर्द्ध्नि सप्त मुखे त्रीणि हृदये पञ्च विन्यसेत् ।
त्रितयं हस्तपादेषु महाविषुवभक्रमात् ॥
मस्तके भूपतेः सौख्यं वदने पटुता स्वभे ।
हृदये च धनाध्यक्षोऽर्थप्राप्तिर्दक्षिणे करे ॥
वामकरे महद्दुखं सुखं पादे च दक्षिणे ।
भ्रमणं वामपादे च कथितं विषुवत्फलम् ॥"
इति महाविषुवचक्रम् ॥ * ॥
"षड्मूर्द्ध्नि वदने पञ्च चत्वारि हृदये तथा ।
ऐश्वर्य्यं राजपूजा च अपमृत्युरिति क्रमात् ॥"
इति विष्णुपदीचक्रफलम् ॥ * ॥
"मुखे चैकं करे वेदाः पादयुग्मे द्वयं द्वयम् ।
क्रोडे वाणस्तथा वेदाः करे सव्येतरेऽपि च ॥
द्वयं द्वयं तथा नेत्रे मस्तके त्रितयं तथा ।
द्वयञ्चैव तथा गुह्ये षडशीत्यां स्वभे स्थिते ॥
मुखे दुःखं करे लाभः पादयोर्भ्रमणं हृदि ।
कान्ता स्याद्वन्धनं वामे हस्ते स्यात् स्वीयभे नृणाम् ॥
सम्मानं नेत्रयोश्चैव अपमानञ्च मस्तके ।
गुह्ये चैव भवेन्मृत्युः षडशीतिफलश्रुतिः ॥"
इति षडशीतिचक्रफलम् ॥ * ॥
इति ज्योतिस्तत्त्वम् ॥

**सङ्क्रामः**, पुं, (सं + क्रम + घञ् ।) दुर्गसञ्चरः ।
इति हेमचन्द्रः ॥

**सङ्क्लेदः**, पुं, (सं + क्लिद् + घञ् ।) आर्द्रीभावः ।
(यथा, हरिवंशे । ५३ ।
"अनया सह जाह्नष्या मोदमानो ममाज्ञया ।
इमं सलिलसंक्लेदं विस्मरिष्यसि सागर ! ॥")

**सङ्ख्यं**, क्ली, (सम्यक् ख्यायतेऽत्रेति । सं + ख्या + बाहुलकात् कः ।) युद्धम् । इत्यमरः ॥ (यथा, गीतायाम् । १ । ४६ ।
"एवमुक्त्वार्ज्जुनः संख्ये रथोपस्थ उपाविशत् ॥"
सङ्ख्येये, त्रि ॥

**सङ्ख्यता**, स्त्री, सङ्ख्यत्वम् सङ्ख्येयता । सङ्ख्य-यथा द्वे विंशती गावः गवां वा तिस्रो विंश-तयो गावः गवां वा एवं द्वे शते दश शतानी-त्यादि । अयमभिप्रायः सदा विंशत्यादीनाम-नावृत्तिरेकैव विंशतिरेकमेव शतमित्येवं स्यात् तदा पूर्व्वेण एकवचनान्ततैव यथोक्तं विंशति-र्गावः गवां विंशतिरिति । यदा विंश्यत्यादे-रावृत्तिर्विंशतिद्वयं शतद्वयमित्येवं स्यात् तदा अनेन द्विवचनबहुवचनान्तता स्यात् यथोक्तं द्वे विंशती तिस्रो विंशतयः । अतएव परे परिभाषन्ते । विंशत्यादेरनावृत्तौ बहुत्वे-ऽप्येकवचनं इति एकशेषात् द्वे विंशती तिस्रो विंशतयः इत्यन्येऽपि । स्वमतेऽपि त्र्यादयः संख्याशब्दाव्वान्ता इत्युक्तेः टेर्लोप इति सूत्रे विंशतेस्तेस्त्वाङाविति ङिवर्ज्जनेनैव एकवचना न्तताज्ञापकात् क्वद्वव्वानि इत्यनेन चावृत्तौ द्वित्वबहुत्वसम्भवाच्चायमर्थोऽवगम्यः। तासु संख्यासु विंशताद्या नवत्यग्त्याः स्त्रीलिङ्गाः भिन्नलिङ्गेनापि सामानाधिकरण्ये स्तिय एव

| | | |
|---|---|---|
| | शब्दात् भावे तप्रत्ययेन निष्पन्नम् ॥<br><br>**सङ्ख्या**, स्त्री, (संख्यायतेऽनयेति । सं + ख्या +<br><br>अङ् । टाप् ।) बुद्धिः । इति<br><br>राजनिर्घण्टः ॥ | |

यथा विंशत्या पुरुषैः विंशतिः कुलानीति
विंशतिः श्रुतिरष्टाविंशतियावत् एवं त्रिंशत्
श्रुतिरष्टात्रिंशद्यावत् एवं चत्वारिंशदादौ ।
पङ्क्तिर्दशसङ्ख्या तामारभ्य परार्द्धन्तं
दश-
गुणोत्तरं दशगुणाधिकं क्रमात् शतसहस्रादि
भवति । क्रमादितिपदोपादानादयमर्थः एकं
दशगुणितं पङ्क्तिरुच्यते । दशपङ्क्तयः
शतम् ।
दशशतानि सहस्रम् । एवं दशगुणितं
सहस्र-
मयुतम् । एवं लक्षनियुतादि ज्ञेयम् । तथा
च ।
ब्रह्माण्डपुराणम् ।
‘एकं दश शतञ्चैव सहस्रमयुतं तथा ।
लक्षञ्च नियुतञ्चैव कोटिरर्वुदमेव च ॥
वृन्दः खर्व्वो निखर्व्वश्च शङ्खपद्मौ च
सागरः ।
अन्त्यं मध्यं परार्द्धञ्च दशवृद्ध्या
यथाक्रमम् ॥’
शतं तालव्यशकारम् । सहस्रं
द्विदन्त्यसका-
रम् ।” इति भरतः ॥ * ॥ न्यायमते अस्या
गणनव्यवहारे कारणत्वम् । एकत्वं नित्य-
वस्तुनि नित्यम् । अन्यत्र अनित्यम् ।
द्वित्वादि-
परार्द्धपर्य्यन्तं अपेक्षाबुद्धेर्ज्जायते । एवं
अपेक्षा-
बुद्धिनाशे तेषां नाशः । पर्य्याप्तिसम्बन्धेन
अने-
काश्रये तिष्ठन्ति । यथा, --
“गणनव्यवहारे तु हेतुः संख्या विधीयते ।
नित्येषु नित्यमेकत्वमनित्येऽनित्यमिष्यते
॥
द्वित्वादयः परार्द्धन्ता अपेक्षा बुद्धिजा मताः
।
अनेकाश्रयपर्य्याप्ता एते तु परिकीर्त्तिताः ॥
अपेक्षाबुद्धिनाशाच्च तेषां नाशो निरूपितः
।
अनेकैकत्वबुद्धिर्या सापेक्षा बुद्धिरुच्यते ॥”

**सङ्ख्यावान्**, पुं, (संख्या बुद्धिरस्त्यस्येति । मतुप् ।
मस्य वः ।) पण्डितः । इत्यमरः ॥
(यथा,
काशीखण्डे । ८२ । ८ ।
“रणाङ्गणे कृतान्ताभः
सङ्ख्यावांश्च सदोजिरे ॥”)
सङ्ख्यायुक्ते, त्रि । इति मेदिनी ॥

**सङ्ख्येयं**, त्रि, (संख्यातुं योग्यमिति । सं + ख्या +
यत् ।) सङ्ख्यायोम्यम् ।
तत्पर्य्यायः । गणेयम् २
गणनीयम् ३ । इति जटाधरः ॥
गण्यम् ४ ।
इति हेमचन्द्रः ॥ (यथा,
साहित्यदर्पणे । ४ !
२५५ ।
“एकोऽपि भेदोऽनन्तत्वात्
सङ्ख्येयस्तस्य नैव
यत् ॥”)

**सङ्गः**, पुं, (सञ्जसङ्गे + घञ् ।) मेलनम् । तत्प-
र्य्यायः । मेलकः २ सङ्गमः ३ ।
इत्यमरः ॥
(यथा, देवीभागवते । १ । २० ।
६७ ।
“अम्बिका च यदा स्नाता नारी
ऋतुमती तदा
सङ्गं प्राप्य मुनेः पुत्त्रमसूतान्धं
महाबलम् ॥”)
रागः । यथा । “रागसङ्गौ तु गृध्नुता
।” इति
त्रिकाण्डशेषः ॥ (यथा, कुमारे । १
। २७ ।
“अनन्तपुष्पस्य मधोर्हि चूते
द्विरेफमाला सविशेषसङ्गा ॥” * ॥)
सङ्गदोषो यथा, --
“स मे समाधिर्ज्जलवासमित्र-
मत्स्यस्य सङ्गात् सहसैव नष्टः ।
परिग्रहः सङ्गकृतो ममायं

**सङ्गतिः**, स्त्री, (सं + गम + क्तिन् ।) सङ्गमः ।
ज्ञानम् । इति मेदिनी ॥ न्यायमते । आनन्त-
र्य्याभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयो
ह्यर्थः । सा च षोढा । प्रसङ्गः १ । सङ्गतित्वे
सति उपोद्घातादिभिन्नः । यथा सामान्यलक्ष-
णायां प्रसङ्गसङ्गतिः । उपोद्घोतः २ । निर्द्दि-
ष्टोपपादकत्वम् । यथा परामर्शप्रवर्त्तकज्ञाने च
उपोद्घातसङ्गतिः ! हेतुता ३ । यथा । प्रत्यक्ष-
प्रमाणे हेतुतासङ्गतिः । अवसरः ४ । अनन्तर-
वक्तव्यत्वम् । यथा । उपमाने अवसरसङ्गतिः ।
निर्व्वाहकम् ५ । कारणतानिनिर्व्वाहकं कार्य्यत्वम्
यथा । अनुगाने कार्य्यतासङ्गतिः । एककार्य्य-
त्वम् ६ । एककार्य्यकारित्वम् । यथा हेत्वाभासे
एककार्य्यकारित्वसङ्गतिः । इति अनुमितिग्रन्थे
जगदीशतर्कालङ्कारः ॥ (मेलनम् । यथा, मोह-
मुद्गरे । ६ ।
“क्षणमिह सज्जनसङ्गतिरेका
भवति भवार्णवतरणे नौका ॥”
युक्तिः । यथा, --
“त्वमद्य भव नो राजा राजपुत्त्र महायशः ।
सङ्गत्या नापराध्नोति राज्यमेतदनायकम् ॥”
इति रामायणे । २ । ७९ । ३ ॥)

**सङ्गमः**, पुं, क्ली, (सं + गम + “ग्रहवृदृनिश्चि-
गमश्च ।” ३ । ३ । ५८ । इति अप् ।) सङ्गः ।
इत्यमरः ॥ (यथा, साहित्यदर्पणे ।
“सङ्गमविरहविकल्पे वरमिह विरहो न
सङ्गमस्तस्याः ।
सङ्गमे सैव तथैका त्रिभुवनमपि तन्मयं
विरहे ॥”)
नद्यादिमेलकः । इति पुंनपुंसकलिङ्गसंग्रह-
टीकायां भरतः ॥ स्त्रीपुंसोर्म्मिथुनीभावः । स
त्रिविधः । प्रथमः १ । मध्यमः २ । उत्तमः ३ ।
यथा, --
“त्रिविधं तत्समाख्यातं प्रथमं मध्यमोत्तमम् ।
अदेशकालभाषाभिर्न्निर्ज्जने च परस्त्रियाः ।
कटाक्षावेक्षणं हास्यं प्रथमं साहसं स्मृतम् ॥ १ ॥
प्रेरणं गन्धमाल्यानां धूपभूषणवाससाम् ।
प्रलोभनञ्चान्नपानैर्म्मध्यमं साहसं स्मृतम् ॥ २ ॥
सहासनं विविक्तेषु परस्परसमाश्रयः ।

इति भाषापरिच्छेदः ॥ * ॥
अपि च ।
श्रीमैत्रेय उवाच ।
"परार्द्धसंख्यां भगवन् ! ममाचक्ष यया तु
सः ।
द्विगुणीकृतया ज्ञेयः प्राकृतः प्रतिसञ्चरः ॥
श्रीपराशर उवाच ।
स्थानात् स्थानं दशगुणमेकस्माद्गुण्यते
द्विज ।
ततोऽष्टादशमे भागे परार्द्धमभिधीयते ॥
परार्द्धद्वितयं यत्तु प्राकृतः प्रलयो द्विजः ।
तदाव्यक्तेऽखिलं व्यक्तं सहेतौ लयमेति वै
॥"
इति विष्णुपुराणे ६ अंशे ३ अध्यायः ॥

**सङ्ख्यातं**, त्रि, (सं + ख्या + क्तः ।) कृतसङ्ख्यम्
।

तत्पर्य्यायः । गणितम् २ । इत्यमरः ॥
(यथा,
भागवते । ६ । १४ । ३ ।
"इजोभिः समसंख्याताः पार्थिवैरिह
जन्तवः ।
तेषां ये केचनेहन्ते श्रेयो वै मनुजादयः ॥")

**सङ्ख्यानं**, क्ली, (सं + ख्या + ल्युट् ।) सङ्ख्या ।

संपूर्व्वख्याधातोरनट्प्रत्ययेन निष्पन्नम् ॥
(यथा,
मनुः । ८ । ४०० ।
"मिथ्यावादी च संख्याने
दाप्योऽष्टगुणमत्ययम् ॥"
प्रकाशः यथा, भागवते ५ । १७ । १७ ।
"ॐ नमो भगवते महापुरुषाय
सर्व्वगुणसंख्या-
नायानन्तायाव्यक्ताय नम इति ॥"
"सर्व्वेषां गुणानां संख्यानं प्रकाशो यस्मात्
।"
इति तत्र श्रीधरस्वामी ॥)

परिग्रहोत्थाश्च महाविवित्साः ॥"
इति विष्णुपुराणे ४ अंशे २
अध्यायः ॥
अन्यच्च ।
"अहोऽस्य दारसंयोगः कथं
तमूर्द्धरेतसः ।
दृष्ट्वा तयोश्च शृङ्गारं मुनिः कामी
बभूव ह ।
जितेन्द्रियेऽसतां सङ्गात् दोषः
सांसर्गिको
भवेत् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे
२३ अध्यायः ॥
अपि च ।
"असतां सङ्गदोषेण को न याति
पराभवम् ।
त्रिदशैर्वन्दितो वह्निर्भस्मना सहितो
यथा ॥"
इति चाणक्यम् ॥
किञ्च ।
"यत्र यत्र स्थितो जीवस्तमोयोगेन
लज्जते ।
उपहासाय किं न स्यादसत्सङ्गो
मनीषिणाम् ॥"
इति ज्योतिस्तत्त्वम् ॥

**सङ्गणिका** स्त्री, अप्रतिरूपकथा । इति
त्रिकाण्ड-

शेषः ॥

**सङ्गतं**, क्ली, (सं + गम् + क्तः ।) सौहार्द्दम् ।

इति हेमचन्द्रः ॥ यथा, कुमारे । ५ ।
३९ ।
"यतः सतां सन्नतगात्रि ! सङ्गतं
मनीषिभिः साप्तपदीनमुच्यते ॥")
युक्तियुक्तवाक्यम् । इति भरतः ॥
तत्पर्य्यायः ।
हृदयङ्गमम् २ ॥ इत्यमरः । १ । ६
। १८ ॥ (मौर्य्य-
वंशीयनृपतिविशेषे, पुं । यथा,
भागवते । १२ ।
१ । १३ ॥

केशाकेशिग्रहश्चैव सम्यक्संग्रहणं स्मृतम् ॥" ३ ॥
इति मिताक्षराधृतव्यासवचनम् ॥

**सङ्गरं**, क्ली, (संगीर्य्यते इति । सं + गॄ + अप् ।)

शमीवृक्षफलम् । इति मेदिनी ॥

**सङ्गरः**, पुं, (संगृणन्ति शब्दायन्ते वीरा यत्र ।

सं + गॄशब्दे + अप् ।) युद्धम् । (यथा, कथा-
सरित्सागरे । ३१ । ९३ ।
"सङ्कटे हि परीक्ष्यन्ते प्राज्ञाः शूराश्च सङ्गरे ॥")
आपत् । अङ्गीकारः । (यथा, रघुः । ५ । २६ ।
"तथेति तस्या वितथं प्रतीतः
प्रत्यग्रहीत् सङ्गरमग्रजन्मा ॥")
संवित् । इत्यमरः ॥ क्रियाकारः । विषम् ।
इति मेदिनी ॥

**सङ्गवः**, पुं, (सङ्गताः गावो दोहनार्थं यत्र ।

निपातनात् साधुः ।) प्रातःकालात् परं मुहूर्त्त-
त्रयम् । यथा, --
"प्रातःकालो मुहूर्त्तांस्त्रीन्
सङ्गवस्तावदेव तु ।
मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णस्ततः परम् ।
सायाह्नस्त्रिमुहूर्त्तः स्याच्छ्राद्धं तत्र न कारयेत् ॥"
इति तिथ्यादितत्त्वम् ॥
(यथा, ऋग्वेदे । ६ । ७६ । ३ ।
"उतायातं सङ्गवे प्रातरह्नो
मध्यन्दिन उदिता सूर्य्यस्य ॥"
"अह्नोद्वेधा त्रेधा पञ्चदशधेति समाना विभागाः
सन्ति इह पञ्चधा विभाग आत्तः
उतापिचायातं
आगच्छतं कदा सङ्गवे सङ्गवकाले । सङ्गच्छन्ते
गावो दोहनभूमिं यस्मिन् काले स सङ्गवः ।
रात्र्यपरकाले हि गावो वने
हिमतृणानि
भक्षयित्वा पुनर्दोहाय सङ्गवे
प्रतिनिवर्त्तन्ते ॥"
इति तद्भाष्ये सायणः ॥)

**सङ्गी**, [न्] त्रि, (सङ्गोऽस्यास्तीति । इनिः ।)

सङ्गविशिष्टः । यथा, --
"आमृत्युतो नैव प्नमनोरथाना-
मन्तोऽस्ति विज्ञातमिदं मयाद्य !
मनोरथासक्तिपरस्य चित्तं
न जायते वै परमार्थसङ्गि ॥"
इति विष्णुपुराणे ४ अंशे २ अध्यायः ॥

**सङ्गीतं**, क्ली, (सं + गै + क्तः ।) प्रेक्षणार्थनृत्य-

गीतवाद्यम् । यथा, हेमचन्द्रः ।

**सङ्गीतिः**, स्त्री, (सं + गै + "स्थागापापचो भावे ।"

३ । ३ । ९५ । इति क्तिन् ।) आलापः । इति हलायुधः ॥ सङ्गीतञ्च ॥

**सङ्गीर्णं**, त्रि, (सं + गॄ + क्तः ।) अङ्गीकृतम् ।

इत्यमरः ॥

**सङ्गुप्तः**, पुं, (सं + गु + क्तः ।) बुद्धभेदः । इति

हेमचन्द्रः ॥ सङ्गोपनाश्रये, त्रि ॥

**सङ्गूढः**, त्रि, (सं + गुह + क्तः ।) लेखादिना

संवृतः । इति भरतः ॥ रेखादिना पुञ्जीकृत-
धान्यादिः । इति नीलकण्ठः ॥ तत्पर्य्यायः ।
सङ्कलितः २ इत्यमरः ॥

**सङ्गोपनं**, क्ली, (सं + गुप + ल्युट् ।) सम्यक्प्रका-

रेणंगोपनम् । संपूर्व्वगुपधातोरनट्प्रत्ययेन
निष्पन्नम् ॥

**सङ्ग्रहः**, पुं, (सं + ग्रह + अप् ।) समाहृतिः ।

इत्यमरः ॥ (यथा, रघुः । १७ । ६० ।
"कोशेनाश्रयणीयत्वमिति तस्यार्थसंग्रहः ।
अम्बुगर्भो हि जीमूतश्चातकैरभिनन्द्यते ॥")
"संक्षेपेण गृह्यन्ते नानास्थाने विप्रकीर्णा अर्था
बुध्यन्तेऽनेन संग्रहः । संपूर्व्वात् ग्रह आदाने-ऽल् ।
'विस्तरेणोपदिष्टानामर्थानों सूत्रभाष्ययोः ।
निबन्धा यः समासेन संग्रहं तं विदुर्बुधाः ॥'
इति ॥
इतस्तत आकृष्य एकत्र निबन्धनं संग्रहः । इति
कल्पतरुप्रभृतयः ।" इत्यमरटीकायां भरतः ॥
नानाग्रन्थस्था अर्थाः संगृह्यन्ते एकस्थानस्थाः
क्रियन्ते इति संग्रहो ग्रन्थविशेषः । इति
श्राद्धविवेकटीकायां श्रीकृष्णतर्कालङ्कारः ॥ * ॥
(यथा, हरिवंशे । ८९ । ७ ।
"चतुष्पादं धनुर्व्वेदं शास्त्रग्रामं ससङ्ग्रहम् ।

तालीसपिप्पलीपथ्यास्थूलजीरकचित्रकै ।
शुण्ठीविडङ्गमरिचैः समभागैर्विचूर्णितैः ॥
यावन्त्येतानि सर्व्वाणि दद्याद्भृङ्गाञ्च तावतीम् ।
सर्व्वचूर्णसमानांशा प्रदेया शुभ्रशर्करा ॥
कर्षमात्रमिदं खादेन्मधुनाप्लावितं जनः ।
नाशयेद्ग्रहणीं कासं क्षयं श्वासमरोचकम् ॥"
इति जातीफलादिचूर्णम् ॥ *
"चित्रकं पिप्पलीमूलं क्षारौ लवणपञ्चकम् ।
व्योषं हिङ्ग्वजमोदाञ्च चव्यं चैकत्र चूर्णयेत् ॥
वटिका मातुलुङ्गस्य रसैर्व्वा दाडिमस्य वा ।
कृता विपाचयत्यामं प्रदीपयति चानलम् ॥"
क्षारौ स्वर्ज्जिकायवक्षारौ । लवणपञ्चकमिति ।
सैन्धवं रुचकञ्चैव विडं सामुद्रिकं गडमिति ।
व्योषं शुण्ठीपिप्पलीमरिचानि । अजमोदात्र
यवानिका । मातुलुङ्गं बीजपूरकम् । चित्र-
कादिवटिका ॥ * ॥
"श्रीफलशलाटुकल्को नागरचूर्णेन मिश्रितः सगुडः ।
ग्रहणीमदमत्युग्रं तक्रभुजा शीलितो जयति ॥"
श्रीफलशलाटुः विल्वस्यामं फलम् । गुडस्यात्र
भागद्वयम् । विल्वकल्कः ॥ * ॥
"चतुष्पलं सुधाकाण्डं त्रिफलं लवणत्रयम् ।
वार्त्ताकोः कुडवञ्चाकमूलाद्विल्वे तथानलात् ॥
दग्धद्रवेण वार्त्ताकोर्गुटिका भोजनोत्तरम् ।
भुक्ताभुक्तं पचत्याशु नाशयेद्ग्रहणीगदम् ।
कासं श्वासं तथार्शांसि विसूचीञ्च हृदामयम् ॥"
इति वार्त्ताकुगुटिका ॥ * ॥
"मुस्तकातिविषाविल्वकौटजंसूक्ष्मचूर्णितम् ।
मधुना च समांलीढं ग्रहणीं सर्व्वजान्त्यजेत् ॥"
कौटजं इन्द्रयवः । मुस्तादिचूर्णम् ॥ * ॥
"श्वेतो वा यदि वा रक्तः सुपक्वो ग्रहणीगदः ।
गुडेनाधिकसर्ज्जेन भक्षितेनाशु नश्यति ॥"
सर्ज्जः राल इति लोके । सर्जरसचूर्णम् ॥ * ॥
"विल्वाब्दशक्रयवबालकमोचसिद्ध
माजं पयः पिबति यो दिवसत्रयेण ।
सोऽतिप्रवृद्धचिरजंग्रहणीविकारं
सामं सशोणितमसाध्यमपि क्षिणोति ॥"
मोचो मोचरसः । क्षिणोति हन्ति ।

"गीतवाद्यनृत्यत्रयं नाट्यं
तौर्य्यत्रिकञ्च तत् ।
सङ्गीतं प्रक्षणार्थेऽस्मिन् शास्त्रोक्ते
नाट्य-
धर्म्मिका ॥"
नृत्यगीतवाद्यस्य शास्त्रम् । तत्तु
सोमेश्वरभरत-
हनूमत्कल्लिनाथमतभेद्दात्
चतुर्व्विधम् । अधुना
हनूमन्मतं प्रचलितम् । तस्य
अध्यायाः सप्त ।
स्वराध्यायः १ रागाध्यायः २
तालाध्यायः ३
नृत्याध्यायः ४ भावाध्यायः ५
कोकाध्यायः ६
हस्ताध्यायश्च ७ । इति
सङ्गीतशास्त्रम् ॥ * ॥
सङ्गीतावसाने ताम्बूलदानप्रमाणं
यथा, --
"ता वासुदेवोऽप्यनुरक्तचित्तः
संनृत्य गीताभिनयैरुदारैः ।
नरेन्द्रसूनो परितोषितेन
ताम्बूलयोगेन वराप्सरोभिः ॥
तदागताभिर्नृवराहृतास्तु
कृष्णेप्सया मानमयास्तथैव ।
फलानि गन्धोत्तमवन्ति वीरा-
श्छालिक्यगान्धर्व्वमथाहृतञ्च ॥
कृष्णेच्छया च त्रिदिवान्नृदेव
अनुग्रहार्थं भुवि मानुषाणाम् ।
स्थितञ्च रम्यं हरितेजसेव
प्रयोजयामास स रौक्मिणेयः ।
छालिक्यगान्धर्व्वमुदारबुद्धि-
स्तेनेव ताम्बूलमथ प्रयुक्तम् ॥"
इति हरिवंशे भानुमतीहरणे
जलक्रीडायाम्
१४८ अध्यायः ॥

अचिरेणैव कालेन गुरुस्तावभ्यशिक्षयत् ॥")
बृहत् । उत्तुङ्गः । ग्रहणम् । (यथा, रघुः । १ ।
६६ ।
"नूनं मत्तः परं वंश्याः पिण्डविच्छेददर्शिनः ।
न प्रकामभुजः श्राद्धे स्वधासंग्रहतत्पराः ॥")
संक्षेपः । इति मेदिनी ॥ मुष्टिः । इति विश्वः
॥
स्वीकारः । महोद्योगः । इति नानार्थरत्न-
माला ॥

**सङ्ग्रहणी**, स्त्री, (सञ्चिता ग्रहणी ।) ग्रहणी-
रोगः । तस्य निदानादि ग्रहणीशब्दे द्रष्टव्यम्
।
अथ सामान्यग्रहणीरोगस्य चिकित्सामाह ।
"ग्रहणीमाश्रितं रोगमजीणवदुपाचरेत् ।
लङ्घनैर्दीपनीयैश्च मन्दातीसारभेषजैः ॥
दोषं सामं निरामञ्च विद्यादत्रातिसारवत् ।
अतिसारोक्तविधिना तस्यामञ्च विपाचयेत् ॥
पेयादि पटु लघ्वन्नं पञ्चकोलादिभिर्य्युतम् ।
दीपनानि च तक्रञ्च ग्रहण्यां योजयोद्भिषक् ॥
कपित्थविल्वचाङ्गेरीतक्रदाडिमसाधिता ।
यवागूः पाचयत्यामं सकृत् संवर्त्तयत्यपि ॥"
संवत्तयति घनीकरीति ॥ * ॥ औषधान्याह
।
"जातीफललवङ्गैलापत्रत्वङ् नागकेशरैः ।
कर्पूरं चन्दनन्तिल्वत्वक्क्षीरतगरामलैः ॥
"प्रस्थत्रये त्वामलकीरसस्य
शुद्धस्य दत्त्वार्द्धतुलां गुडस्य ।
चूर्णीकृतैर्ग्रन्थितजीरचव्य-
व्योषेभकृष्णाहवुषाजमोदैः ॥
विडङ्गसिन्धुत्रिफलायवानी
पाठाग्निधान्यैश्च पलप्रमाणैः
दत्त्वा त्रिवृच्चूर्णपलानि चाष्टा-
वष्टौ च तैलस्य पचेद्यथावत् ॥
तं भक्षयेदक्षफलप्रमाणं
यथेष्टचेष्टस्त्रिसुगन्धियुक्तम् ।
अनेन सर्व्वा ग्रहणीविकाराः
सश्वासकासस्वरभेदशोथाः ॥
शाम्यन्ति चायं चिरमन्तराग्ने-
र्हतस्य पुंस्त्वस्य च वृद्धिहेतुः ।

स्त्रीणान्तु बन्ध्यामयनाशनः स्यात्
कल्याणको नाम गुडः प्रसिद्धः ॥
तैले मनाक् त्रिवृत् भृष्टा त्रिसुगन्धिपलं
पलम् ।
सिद्धे निधेयमत्रैव गुडे कल्याणपूर्व्वके ॥”
इति कल्याणकगुडः ॥ * ॥
“पिप्पली पिप्पलीमूलं चव्यकं
गजपिप्पली ।
धान्यकञ्च विडङ्गानि यवानी मरिचानि च
॥
त्रिफला चाजमोदा च नलिनी
जीरकस्तथा ।
सैन्धवं रौमकं चापि सामुद्रं रुचकं विडम्
॥
आराग्वधश्च त्वक् पत्रं सूक्ष्मैला
चोपकुञ्चिका ।
शुण्ठी शक्रयवाश्चैव प्रत्येकं कर्षसम्मिता
॥
मृद्वीकायाः पलान्यत्र चत्वारि कथितानि
हि ।
त्रिवृतायाः पलान्यष्टौ गुडस्यार्द्धतुला तथा
॥
तिलतैलपलान्यष्टौ चामलक्या रसस्य तु
।
प्रस्थत्रयमिदं सर्व्वं शनैर्मृद्वग्निना पचेत् ॥
उडम्बरं चामलकं वादरं वा यथाफलम् ।
तावन्मात्रमिदं खादेद्भक्षयेद्वा यथानलम् ॥
निखिलान् ग्रहणीरोगान्
प्रमेहांश्चैकविंशतिम् ।
उरोघातं प्रतिश्यायं दौर्ब्बल्यं वह्निसंक्षयम्
॥
ज्वरानपि हरेत् सर्व्वान् कुर्य्यात् कान्तिं
मतिं
स्वरम् ।
पिचुपाठान्वयाद्धन्ति रक्तपित्तञ्च चिद्ग्रहम्
॥
धातुक्षीणो वयक्षीणः स्त्रीषु क्षीणः क्षयी च
यः ।

असंग्रासत् । ङ, संग्रामयते । ङ, संग्रामयति
संग्रामयते । ञितैवोभयपदसिद्धौ ङित्करणं
अफलवत्कर्त्तरि आत्मनेपदार्थम् । एवं सर्व्वत्र ।
किन्तु अयमात्मनेपदीति प्राञ्चः कदाचित्
परस्मैपदार्थो ञकारः । इति दुर्गादासः ॥

**सङ्ग्रामः**, पुं, (सङ्ग्राम + णिच् + भावे घञ् ।)
युद्धम् । इत्यमरः ॥ (यथा, मनुः । ७ । ८७ ।
“न निवर्त्तेत संग्रामात् क्षात्रं धर्म्ममनुस्मरन् ॥”)

**सङ्ग्रामपटहः**, पुं, (सङ्ग्रामस्य पटहः ।) रण-
वाद्यम् । यथा, त्रिकाण्डशेषे ।
“रणतूर्य्यन्तु संग्रामपटहोऽभयडिण्डिमः ।”

**सङ्ग्राहः**, पुं, (संग्रहणमिति । सं + ग्रह + “समि
मुष्टौ ।” ३ । ३ । ३६ । इति घञ् ।) फलकस्य
मुष्टिः । फलकग्रहणस्थानमिति यावत् । मुष्टि-
बन्धनक्रिया । तत्पर्य्यायः । मुष्टिबन्धः २ । द्वे
मुष्टिबन्धनक्रियायाम् । मुष्टेर्बन्धोऽङ्गुलिविन्यासो
मुष्टिबन्धः । मुष्टिना बन्धो दृढग्रहणं संग्राह
इत्यपरे । मुष्ट्यामेव संग्रह इत्यन्ये । मुष्टिः
स्त्रियाञ्च संग्रह इति वोपालितः । संपूर्व्वग्रहे-
र्घञ् संग्राहः । इत्यमरभरतौ ॥ (यथा, महा-
भारते । ५ । १५४ । २० ।
“सुसंग्राहाः सुसम्पन्नाः हेमभाण्डपरिच्छदाः ।”
“पदातिनो नरास्तत्र बभूवुर्हेममालिनः ॥”)

**सङ्ग्राही**, [न्] पुं, (संगृह्णाति मलमिति । सं + ग्रह
+ णिनिः ।) कुटजवृक्षः । इति राजनिर्घण्टः ॥
(मलसन्धारके, त्रि । यथा, सुश्रुते । १ । ४५ ।
“दीपनं लघु संग्राहि श्वासकाशास्रपित्तनुत् ॥”
संग्राहके, त्रि । यथा, कामन्दकीये । ४ । १० ।
“प्रख्यातवंशमक्रूरं लोकसंग्राहिणं शुचिम् ।
कुर्व्वीतात्महिताकाङ्क्षी परिवारं महीपतिः ॥”)

**सङ्घः**, पुं, (सं + हन + “संघोद्घौ गणप्रशंसयोः ।”
३ । ३ । ८६ । इति अप् ढिलोपो घत्वञ्च निपा-
त्यते ।) समूहः । इत्यमरः ॥ सजातीयानां
विजातीयानाञ्च जन्तूनां वृन्दे सङ्घसार्थौ
स्याताम् । यथा भिक्षुसङ्घः बणिक्सार्थः । संह-
न्यते परिच्छिद्यतेऽनेनेति सङ्घः । संपूर्व्वात् हन-

गठनम् । यथा, --
“मृदाहरणसङ्घट्टप्रतिष्ठाह्वानमेव च ।
स्नपनं पूजनञ्चैव विसर्ज्जनमतः
परम् ॥”
इति तिथ्यादितत्त्वम् ॥
चक्रविशेषश्च ॥

**सङ्घट्टचक्रं**, क्ली, (संघट्ट एव चक्रम् ।) युद्धविचा-
रार्थनक्षत्राङ्कितचक्रविशेषः । यथा, --
“अश्विन्यादि लिखेच्चक्रं
सप्तविंशतितारकैः ।
त्रिकोणं नवभिर्व्वेधः
कर्त्तव्यस्तिर्य्यगाकृतिः ॥
अश्विनीरेवतीवेधो
अश्विनीज्येष्ठयोस्तथा ।
मघापुष्णोः
सर्पपित्रोरश्लेषामूलयोस्तथा ॥
ज्येष्ठामूलकयोर्व्वेधो भवेत्
सङ्घट्टचक्रके ।
एवं सङ्घट्टचक्रे च कार्य्या ऋक्षगता
ग्रहाः ॥
भूपनामर्क्षसङ्घट्टे युद्धं भवति नान्यथा
।
निर्व्वेधे सौम्यवेधे च युद्धं
नास्तिरणेशयोः ॥
क्रुरवेधे भवेद्युद्धं तत्काले
घोरदारुणम् ।
युद्धाकाङ्क्षी भवेद्राजा यस्य भं
क्रूरवेधितम् ॥
युद्धद्वेषी भवेत् सौम्यैर्भे च
वेधविवर्ज्जिते ।
सौम्यक्रूरविभागेन मित्रामित्रक्रमेण च
।
वक्रातिचारगत्या च युद्धमत्रास्ति
नास्ति च ॥”
इति स्वरोदये सङ्घट्टकालानलचक्रम्
॥

**सङ्घट्टनं**, क्ली, स्त्री, (सं + घट्ट + ल्युट् । स्त्रियां

तेभ्यो हितश्च बन्ध्यायै महाकल्याणको गुडः ॥”
इति महाकल्याणकगुडः ॥ * ॥
‘कुष्माण्डानां सुपक्वानां श्वित्रानां लिकुचत्वचाम्
सर्पिःप्रस्थे पलशतं ताम्रपात्रे शनैः पचेत् ॥
पिप्पली पिप्पलीमूलं चित्रकं गजपिप्पली ।
धान्यकानि विडङ्गानि नागरं मरिचानि च ॥
त्रिफला चाजमोदा च कलिङ्गाजाजिसैन्धवम् ।
एकैकस्य पलं चैकं त्रिवृतोऽष्टपलानि च ॥
तैलस्य च पलान्यष्टौ गुडात् पञ्चाशदेव तु ।
आमलक्या रसस्यात्र प्रस्थत्रयमुदीरितम् ॥
तावत् पाकंप्रकुर्व्वीत मृदुना वह्निना भिषक् ।
यावत् दर्व्वीप्रलेपः स्यात् तदैनमवतारयेत् ॥
औडुम्बरं चामलकं वादरं वा यथाफलम् ।
तावन्मात्रमिदं खादेद्भक्षयेद्वा यथानलम् ॥
अनेनैव विधानेन प्रयुक्तश्च दिने दिने ।
निहन्ति ग्रहणीरोगान् कुष्ठान्यर्शोभगन्दरान् ॥
ज्वरमानाहहृदोगगुल्मोदरविसूचिकाः।
कामलां पाण्डुरोगञ्च प्रमेहांश्चैकविंशतिम् ॥
वातशोणितवीसर्प्दद्रुपक्षहलीमकान् ।
वातपित्तकफान् सर्व्वान् दुष्टान् शुद्धान् समाचरेत्
व्याधिक्षीणा वयःक्षीणा स्त्रीषु क्षीणाश्च ये नराः ।
तेभ्यो हितो गुडोऽयंस्यात् बन्ध्यानामपि पुत्त्रदः ।
वृष्या बल्यो बृंहणश्च वयसः स्थापनः परः ॥”
इति कुष्माण्डकल्याणगुडः ॥ * ॥
अतीसाराधिकारलिखितंविल्वं तैलञ्चात्र धातोर्नाम्नीति डः निपात्नात् ह्रस्य घः । इति भरतः ॥ (यथा, महाभारते । १ । १२० । १ ।
“तत्रापि तपसि श्रेष्ठे वर्त्तमानः स वीर्य्यवान् ।
सिद्धचारणसङ्घानां बभूव प्रियदर्शनः ॥”)

**सङ्घचारी**, [न्] पूं, (सद्ध्वेन चरतीति । चर + णिनिः ।) मत्स्यः । इति हेमचन्द्रः ॥ बहुभिः सहगामिनि, त्रि ॥ (यथा महाभारते । ९ । ११ । १९ ।
“ततस्तद्युद्धमत्युग्रमभवत् सङ्घचारिणाम् ॥”)

**सङ्घजीवी**, [न्] पुं, (सङ्घेन जीवतीति । जीव + णिनिः ।) व्रातीनः । इति हेमचन्द्रः ॥

**सङ्घट्टः**, पुं, (सं + घट्ट + घञ् ।) अन्योन्यविमर्द्दनम् ।
यथा, --
“नैवान्यत्र मदान्धसिन्धुरघटासङ्घट्टघण्टारणत्
कारत्रस्तसमस्तवैरिवनितालब्धस्तुतिर्भूपतिः ।”
इति वाल्मीकिकृतगङ्गाष्टकस्तात्रम् ॥
युच् ।) मेलनम् । गठनम् । घटना । इति केचित् ॥ (यथा, साहित्यदर्पणे । ९ । ६२४ ।
“पदसंघट्टना रीतिरङ्गसंस्थाविशेषवत् ।
उपकर्त्री रसादीनां सा पुनः स्याच्चतुर्व्विधा ॥”)

**सङ्घट्टा**, स्त्री, (संघट्टते इति । सं + घट्ट + अच् + टाप् ।) लता । इति शब्दचन्दिका ।

**सङ्घतलः**, पुं, (सङ्घे संहते तले यत्र ।) मिलित-प्रतलद्वयम् । इत्यमरः ॥ योड हात इति भाषा ॥

**सङ्घपुष्पी**, स्त्री, (संङ्घानि पुष्पाणि यस्याः ।) धातकी । इति राजनिर्घण्टः ॥

**सङ्घर्षः**, पुं, (सं + घृष + घञ् ।) सङ्घर्षणम् ।
(यथा, महाभारते । १ । १८ । २३ ।
“तेषां सङ्घर्षजश्चाग्निरर्च्चिर्भिः प्रज्वलन् मुहुः ।
विद्युद्भिरिव नीलाभ्रमावृणोत् मन्दरं गिरिम् ॥”)
स्पर्द्धा । (यथा, महाभारते । १ । ७६ । ५ ।
“सुराणामसुराणाञ्च समजायत वै मिथः ।
ऐश्वर्य्यं प्रति संघर्षस्त्रैलोक्ये सचराचरे ॥”)
संसर्पः । इति शब्दरत्नावली ॥

**सङ्घाटिका**, स्त्री, (संघाटयतीति । सं + घट + णिच् + ण्वुल् । टापि अत इत्वम् ।) युग्मम् ।
कुट्टनी । जलकण्टकम् । इति मेदिनी ॥
घ्राणम् । इति विश्वः ॥

**सङ्घातः**, पुं, (सं + हन + घञ् ।) समूहः ।
(यथा, कुमारे । ५ । ५५ ।
“न जातु बाला लभते स्म निर्वृतिं

| | | |
|---|---|---|
| हितम् । इति ग्रहणीरोगाधिकारः । इति भावप्रकाशः ।<br>**सङ्ग्राम**, ङ ञ त् क युद्धे । इति कविकल्पद्रुमः ॥<br>(अदन्त चुरा०-आत्म०-उभ०-च-अक०-सेट् ।) | | तुषारसङ्घातशिलातलेष्वपि ॥”)<br>नरकभेदः । इत्यमरः ॥ हननम् ।<br>इति मेदिनी ।<br>(निविडसंयोगः । यथा, कुमारे । २ । ११ ।<br>“द्रवः सङ्घातकठिनः स्थूलः सूक्ष्मो लघुर्गुरुः ।<br>व्यक्तो व्यक्तेतरश्चासि प्राकाम्यं ते विभूतिषु ॥”) |

कफः । इति राजनिर्घण्टः ॥ नाटके गति-
विशेषः । इति केचित् ॥

**सङ्घातपत्रिका**, स्त्री, (सङ्घातयुक्तानि पत्राणि
यस्याः । कापि अत इत्वम् ।) शतपुष्पा । इति
राजनिर्घण्टः ॥

**सङ्घुषितं**, त्रि, सम्यग्घोषणाश्रयः ॥ संपूर्व्व-
घुषधातोः क्तप्रत्यये कृते वा रुषा-
मह्रषत्वरसंघुषास्वन इत्यनेन विकल्पेन इमा
निष्पन्नम् । इति मुग्धबोधव्याकरणम् ॥ (यथा,
महानिर्व्वाणतन्त्रे । १ । ४ ।
"मत्तकोकिलसन्दोहसंघुष्टविपिनान्तरे ॥")

**सङ्घुष्टं**, त्रि, सम्यग्घोषणाश्रयः ॥ संपूर्व्व-
घुषधातोः क्तप्रत्यये कृते वा रुषा-
मह्रषत्वरसंघुषास्वन इत्यनेन विकल्पेन इमा
निष्पन्नम् । इति मुग्धबोधव्याकरणम् ॥ (यथा,
महानिर्व्वाणतन्त्रे । १ । ४ ।
"मत्तकोकिलसन्दोहसंघुष्टविपिनान्तरे ॥")

**सचिः**, स्त्री, (सच समवाये + "सर्व्वधातुभ्य
इन् ।" उणा० ४ । ११७ । इति इन् ।) शची ।
इत्यमरटीकायां रामाश्रमः ॥

**सचिल्लकः**, त्रि, क्लिन्नचक्षुः । इति शब्दरत्नावली ॥

**सचिवः**, पुं, (सच समवाये + इन् । तथा सन्
वातीति । वा + कः ।) मन्त्री । सहायः ।
इत्यमरः ॥ (यथा, देवीभागवते । २ । ९ । ४२
।
"इत्युक्त्वा सचिवान् राजा कल्पयित्वा सुरक्ष-
कान् ।
कारयित्वाथ प्रासादं सप्तभूमिकमुत्तमम् ।
आरुरोहोत्तरासूनुः सचिवैः सह तत्क्षणम् ॥")
कृष्णधत्तूरकः । इति राजनिर्घण्टः ॥

**सचिवामयः**, पुं, (सचिवानामामयः ।) विसर्पः ।
इति राजनिर्घण्टः ॥

**सची**, स्त्री, (सचि + कृदिकारादिति ङीष् ।)
शची । इन्द्राणी । शचते व्यक्तं व्यक्ति शची
साकारदेवविशेषणे, त्रि । यथा, --
"मुकुन्दं सच्चिदानन्दं प्रणिपत्य प्रणीयते
।"
इत्यादि मुग्धबोधव्याकरणम् ॥

**सजम्बालः**, त्रि, (जम्बालेन पङ्केन सह वर्त्तमानः
।)
पङ्किलः । इत्यमरः ॥

**सजातिः**, पुं, (समाना जातिरस्य । समानस्य
सः ।) समानजातिस्त्रीपुंसोः पुत्त्रः ।
यथा, --
"सवर्णेभ्यः सवर्णासु जायन्ते हि
सजातयः ।
अनिन्द्येषु विवाहेषु पुत्त्राः
सन्तानवर्द्धनाः ॥"
इति मिताक्षरायां आचाराध्यायः ॥
समानजातौ, त्रि ॥

**सजातीयः**, त्रि, (जातौ भवः जातीयः । समानो
जातीयः । समानस्य सः ।)
समानघर्म्मा-
क्रान्तः । यथा, --
"सजातीयैः कुलं यूथं तिरश्चां पुं
नपुंसकम् ।"
इत्यमरः ॥

**सजूः**, [ष्] व्य, सहार्थः । इति शब्दरत्नावली
भरतश्च ॥ (यथा, भागवते । ६ । १८ ।
६७ ।
"सजूरिन्द्रेण पञ्चाशत् देवास्ते
मरुतोऽभवन् ॥")

**सजूः**, [ष्] जुष सेवे + क्विप् । जुषा सह
वर्त्तते इति । सहस्य सः । "ससजुषो रुः
।" ८ ।
२ । ६६ । इति रुः । र्व्वोरिति दीर्घः ।)
प्रीति-
युक्ता । सेवायुक्ता । इति
मुग्धबोधव्याकरणम् ॥

**सज्जना**, स्त्री, (सज्ज + णिच् + न्यासश्रन्थेति
युच् । टाप् ।) नायकस्यारोहणार्थं
गजसज्जी-
करणम् । तत्पर्य्यायः । कल्पना २ ।
इत्य-
मरः ॥ (यथा, आर्य्यासप्तशत्याम् ।
३१६ ।
"निजपदगतिगुणरञ्जितजगतांकरिणाञ्च
सत्कवीनाञ्च ।
वहतामपि महिमानं शोभायै सज्जना एव
॥")

**सज्जा**, स्त्री, वेशः । साज इति भाषा सन्नाहः ।
साँजओया इति भाषा । षस्जधातोभवि
आत्-
प्रत्ययनिष्पन्ना । इति व्याकरणम् ॥

**सज्जितः**, त्रि, भूषितः । कृतसज्जः । वर्म्मितः ।
सन्नद्धः । षस्जधातोः क्तप्रत्ययेन
निष्पन्नः ॥

**सञ्चः**, पुं, (संचिनोति वर्णानिति । सं + चि +
डः ।) पुस्तकलेस्वनार्थपत्रचयः । साँच्
इति
भाषा । यथा, --
"श्रीताडीपत्रजे सञ्चे समे पत्रसुसञ्चिते ।
विचित्रकं विपार्श्वे च चर्म्मणा संपुटीकृते
॥
रक्तेन अथ कृष्णेन मूर्द्धन्यावर्द्धितेन च ।
दृढसूत्रसुबन्धेन एवंविधकृतेन च ॥
यस्तु द्वादशसाहस्रीं संहितामुपलेखयेत्
।
ददाति चाभियुक्ताय स याति परमां
गतिम् ॥"
इति देवीपुराणे
विद्यादानमाहात्म्यफलनामा-
ध्यायः ॥

**सञ्चत्**, पुं, ("संश्चत्तृपद्वेहत् ।" उणा० २ । ८५ ।

शच ङ वाति तालव्यादिः नाम्नीति इः पाच्छोणादीति पक्षे ईपि शची । कौशिकी च शची कोशातकीति वर्णादिशमालायां तालव्य-शेषु पठ्यते । सची दन्त्यादिश्च तत्र सचते आप्याययति इन्द्रमिति ष च ङ सेचने पूर्व्ववन इः ईप च । इत्यमरटीकायां भरतः ॥ सचिः शचीति भरतद्विरूपकोषश्च ॥

**सचीनन्दनः**, पुं, (सच्या नन्दनः ।) शचीसुतः ।

स च जयन्तः । चैतन्यदेवः । यथा, --
"शाके मुनिव्योमयुगेन्दुगण्ये
पुण्ये तिथौ फाल्गुनपौर्णमास्याम् ॥
त्रैलोक्यभाग्योदयपुण्यकीर्त्ति-
दवः सचीनन्दन आविरासीत् ॥"
इति चैतन्यचन्द्रोदयनाटकम् ॥

**सचेष्टः**, पुं, आम्रः । इति शब्दमाला ॥ चेष्टया

मह वर्त्तमाने, त्रि ॥

**सच्चारा**, स्त्री, हरिद्रा । इति शब्दचन्द्रिका ॥

**सच्चित्**, क्ली, ब्रह्म । इति मुग्धबोधव्याकरणम् ॥

**सच्चिदानन्दः**, पुं, (संश्चासौ चिच्चासौ आनन्द-

श्चेति त्रिपदे कर्म्मधारयः ।) नित्यज्ञानसुख-स्वरूपं ब्रह्म । यथा, --
"अहं देवो न चान्योऽस्मि ब्रह्मैवास्मि न शोकभाक् ।
सच्चिदानन्दरूपोऽहं नित्यमुक्तस्वभाववान् ॥"
इत्याह्निकतत्त्वम् ॥

"जुषी प्रीतिसेवनयोः । जोषणं जुट् सह जुषा
वर्त्तते या सा सजूः ।" इति तट्टीकायां दुर्गा-
दासः ॥ तापसः । इति
संक्षिप्तसारव्याकरणम् ॥

**सज्जः**, त्रि, (सज्जतीति । सज्ज + अच् ।) सन्नद्धः ।

इत्यमरः ॥ सम्भृतः । इति विश्वमेदिन्यौ ॥
निभृतः । इति शब्दरत्नावली ॥
सज्जायुक्तश्च ॥
(यथा, महाभारते । १ । २ । २३२ ।
"ते तस्य वचनं श्रुत्वा मन्त्रयित्वा तु यद्धितम् ।
सांग्रामिकं ततः सर्व्वं सज्जञ्चक्रुः परन्तपाः ॥")

**सज्जनं**, क्ली, (सज्ज + णिच् + ल्युट् ।) रक्षणार्थं

सैन्यस्थानम् । चौकीति ख्यातम् ।
तत्पर्य्यायः ।
उपरक्षणम् २ । इत्यमरः ॥ घट्टः । इति
मेदिनी ॥ सज्जा च ॥

**सज्जनः**, पुं, (सन् चासौ जनश्चेति ।) सत्कुलो-

द्भवः । तत्पर्य्यायः । महाकुलः २
कुलीनः ३
आर्य्यः ४ सभ्यः ५ साधुः ६ । इत्यमरः ॥
कुलजः ७ सम्बः ८ साधुजः ९ । इति शब्द-
रत्नावली ॥ मेदिनीकारभते
वाच्यलिङ्गोऽयम् ।
तल्लक्षणं यथा, --
दान्त उवाच ।
"निजाचारग्राहिणो ये कुर्व्वन्तो
वेदसम्मतम् ।
पापाभिलाषरहिताः सज्जनास्ते
प्रकीर्त्तिताः ॥"
इति पाद्मे क्रियायोगसारे १६ अध्यायः ॥

इत्यत्र "सञ्चत्" इति पाठेन
अतिप्रत्ययान्तो
निपात्यते ।) प्रतारकः । इति
सिद्धान्तकौमुदी ॥

**सञ्चयः**, पुं, (सञ्चीयते इति । सम् + चि +

"एरच्" ३ । ३ । ५६ । इत्यच् ।) समूहः ।
इत्यमरः ॥ यथा, कथासरित्सागरे । १८ ।
१२८ ।
"तस्थौ स सेवमानस्तं राजानं स
तदाश्रितः ।
भुञ्जानश्च सहान्यै
स्तैर्ब्राह्मणैर्ग्रामसञ्चयम् ॥")
संग्रहः । यथा,
"शक्तेनापि हि शूद्रेण न कार्य्यो
धनसञ्चयः ।
शूद्रो हि धनमासाद्य ब्राह्मणानेव बाधते ॥"
इत्याह्निकाचारतत्त्वम् ।

**सञ्चयनं**, क्ली, (सं + चि + ल्युट् ।) सञ्चयः ।

यथा, संवर्त्तः ।
"चतुर्थेऽहनि कर्त्तव्यमस्थिसञ्चयनं
द्विजैः ।
ततः सञ्चयनादूर्द्ध्वमङ्गस्पर्शो विधीयते ॥"
इति शुद्धितत्त्वम् ।

**सञ्चयी**, [न्] त्रि, सञ्चयविशिष्टः । संग्रहकर्त्ता ।

सञ्चयशब्दादस्त्यर्थे इन्प्रत्ययेन
निष्पन्नः ! यथा,
सञ्चयी नावसीदति । इति महाभारतम् ॥

**सञ्चरः**, पुं, (सञ्चरन्तेऽनेनेति । सम् + चर +

"गोचरसंचरेति ।" ३ । ३ । ११९ ।
इति घः ।)
सेतुः । इति त्रिकाण्डशेषः ॥ सञ्चरो
निर्गमो-
ऽम्बुपथः । इति भरतधृतरत्नमाला ॥
(मार्गः ।

| | | |
|---|---|---|
| | तत्सङ्गप्रशंसा यथा, --<br>“नलिनीदलगतजलवत्तरलं<br>तद्वज्जीवनमतिशयचपलम्।<br>क्षणमिह सज्जनसङ्गतिरेका<br>भवति भवार्णवतरणे नौका ॥”<br>इति श्रीशङ्कराचार्य्यकृतमोहमुद्गरः ॥ | इति सिद्धान्तकौमुदी ॥ यथा, कुमारे ।<br>६ । ४३ ।<br>“यथौषधिप्रकाशेन नक्तं दर्शितसञ्चराः ।<br>अनभिज्ञास्तमिस्राणां<br>दुर्दिनेष्वभिसारिकाः ॥”)<br>देहः । इति हेमचन्द्रः ॥ |

**सञ्चलनं**, क्ली, कम्पनम् । संपूर्व्वचलधातोरनट्-

(ल्युट्) प्रत्ययेन निष्पन्नम् ॥ (यथा, मार्कण्डेये ।
९ । १८ ।
"केचिद्गिरिनिपातेन केचिदम्भोधिवारिणा ।
केचित् महीसञ्चलनात् प्रययुः प्राणिनः क्षयम् ॥"

**सञ्चानः**, पुं, श्येनपक्षी । इति केचित् ॥ शिक्रे

इति भाषा ॥

**सञ्चाय्यः**, पुं, (संचीयतेऽस्मिन् सोम इति । सं +

चि + "क्रतौ कुण्डपाय्यसञ्चाय्यौ ।" ३ । १ । १३० ।
इति ण्यदायादेशौ निपात्येते ।) यज्ञविशेषः ।
इति मुग्धबोधव्याकरणम् ॥

**सञ्चारः**, पुं, (सं + चर + घञ् ।) दुर्गसञ्चरः ।

इत्यमरटीका ॥ गमनम् । यथा । सञ्चारो रति-
मन्दिरावधि इत्यादि काव्यप्रकाशः ॥ (यथा, रघुः । २ । १५ ।
"सञ्चारपूतानि दिगन्तराणि
कृत्वा दिनान्ते निलयाय गन्तुं ।
प्रचक्रमे पल्लवरागताम्रा
प्रभा पतङ्गस्य मुनेश्च धेनुः ॥")
ग्रहादे राश्यन्तरसंक्रमनञ्च ॥ (यथा, याज्ञ-
वल्क्ये । ३ । १७२ ।
"तारा नक्षत्रसञ्चारैर्ज्जागरैः स्वप्नजैरपि ॥" * ॥
सञ्चरत्यस्मिन्निति । अधिकरणे घञ् । देशः ।
इति रामायणटीका ॥ यथा, रामायणे । २ । ११९ । १८ ।
"तावूचुस्ते वनचरास्तापसा धर्म्मचारिणः ।
वनस्य तस्य संञ्चारं राक्षसैः समभिप्लुतम् ॥")

**सञ्चारजीवी**, [न्] त्रि, (सञ्चारेण जीव-

तीति । जीव + णिनिः ।) शरणापन्नः । इति
त्रिकाण्डशेषः ॥

"अङ्गेष्वाभरणं करोति बहुशः पत्रेऽपि सञ्चारिणि
प्राप्तं त्वां परिशङ्कते वितनुते शय्यां चिरं ध्यायति ॥")

**सञ्चारिणी**, स्त्री, (सञ्चरतीति । सं + चर +

णिनिः । ङीप् ।) हंसपदी । इति राज-
निर्घण्टः ॥ (गतिशीला । यथा, कुमारे । ३ । ५४ ।
"पर्य्याप्तपुष्पस्तवकावनम्रा
सञ्चारिणी पल्लविनी लतेव ॥")

**सञ्चाली**, स्त्री, गुञ्जा । यथा, --

"सञ्चाली प्रोच्यते गुञ्जा सा तिस्रो रूपकं भवेत् ॥"
इति युक्तिकल्पतरुः ॥

**सञ्चित्रा**, स्त्री, (सम्यक् चित्रमस्यामिति ।) मूषी-

कर्णी । इति शब्दरत्नावली ॥

**सञ्चेयं**, त्रि, सञ्चयनीयम् । सञ्चेतष्यम् । संपूर्व्वक-

चिञधातोः कर्म्मणि यप्रत्ययेन निष्पन्नम् ॥

**सञ्जः**, पुं, (सम्यक् जायते इति । सं + जन + डः ।

सम्यक् जयतीति । जि + अन्येष्वपीति वा डः ।)
ब्रह्मा । शिवः । इति मेदिनी ॥

**सञ्जवनं**, क्ली, (सञ्जवन्ति संमिलन्त्यत्रेति । सं +

जु गतौ + अधिकरणे ल्युट् ।) अन्योन्याभिमुख-
गृहचतुष्टयम् । तत्पर्य्यायः । चतुःशालम् २ ।
इत्यमरः ॥ सयमनम् ३ चतुःशाली ४ । इति
भरतः ॥ सञ्जीवनम् ५ शाला ६ निलयः ७
चतुःशालकम् ८ । इति शब्दरत्नावली ॥ (यथा,
हरिवंशे । १५५ । ५६ ।

**सञ्ज्ञा**, स्त्री, (सं + ज्ञा + अङ् ।) संज्ञा । इति

मेदिनी ॥

**सञ्ज्ञुः**, त्रि, (संहते जानुनी यस्य । "प्रसंभ्यां

जानुनोर्ज्ञुः ।" ५ । ४ । १२९ । इति ज्ञुः ।)
संज्ञुः । इत्यमरः ॥

**सञ्ज्वरः**, पुं, (सम्यक् ज्वरः ।) संज्वरः । इत्य-

मरः ॥

**सटं**, क्ली, (सटतीति । सट् अवयवे + अच् ।)

जटा । यथा, --
"जटा जटिर्जटी जूटो जुटकन्तु सटं सटा ।
कौटीरं जूटकं हस्तं शिखायां व्रतिनामपि ॥"
इति शब्दरत्नावली ॥

**सटा**, स्त्री, (सट अवयवे + अच् ।) जटा ।

केशरः । इति मेदिनी ॥ (यथा, रघुः । ९ । ६० ।
"तं वाहनादवनतोत्तरकायमीषत्
विध्यन्तमुद्धृतसटाः प्रतिहन्तुमीयुः ॥")
शिखा । इति शब्दरत्नावली ॥ (यथा, भाग-
वते । ४ । ५ । २ ।
"क्रुद्धः सुदष्टौष्ठपुटः स धूर्जटि-
र्जटां तडिद्वह्निसटोग्ररोचिषम् ।")

**सटाङ्कः**, पुं, (सटा अङ्कश्चिह्नं यस्य ।) सिंहः ।

इति शब्दरत्नावली ॥

**सटिः**, स्त्री, (सटतीति । सट अवयवे + इन ।)

शटी । इति शब्दरत्नावली ॥

**सटिका**, स्त्री, गन्धपत्रा । सटी । इति राज-

निर्घण्टः ॥

**सटी**, स्त्री, (सटि + वा ङीष् ।) गन्धद्रव्यविशेषः ॥

वन आदा इति अम्लहरिद्रा इति च भाषा ।

**सञ्चारिका**, स्त्री, (सञ्चारयति नायकयोर्व्वार्त्ता-
मिती । सं + चर + णिच् + ण्वुल् ।) दूती । इत्यमरः ॥ युगलम् । कुट्टनी । घ्राणम् । इति मेदिनी ॥

**सञ्चारी**, [न्] पुं, (सञ्चरतीति । सं + चर +
णिनिः ।) धूपः । इति त्रिकाण्डशेषः ॥ वायुः ॥
इति शब्दचन्द्रिका ॥ भावविशेषः । यथा, --
"स्थायिसात्त्विकसञ्चारिभेदैः स्याद्रतिः पुनः ।"
इति हेमचन्द्रः ॥
अन्यच्च ।
"सञ्चारिणः प्रधानानि देवादिविषया रतिः ।
उद्बुद्धमात्रस्थायी च भाव इत्यभिधियते ॥"
अपि च ।
"नानाभिनयसम्बन्धान् भावयन्ति रसान् यतः ।
तस्माद्भावा अमी प्रोक्ताः स्थायिसञ्चारि-
सात्त्विकाः ॥"
वात्मल्यरससञ्चारिणो यथा, --
"सञ्चारिणोऽनिष्टशङ्काहर्षगर्व्वादयो मताः ॥"
वीररससञ्चारिणस्तु । "धृतिमतिगर्व्व स्मृतितर्क-
रोमाञ्चाः ।" इति साहित्यदर्पणे ३ परिच्छेदः ॥
(गतिशीले, त्रि । यथा, गीतगोविन्दे । ६ । ११ ।
"तस्मिन् सुविहिताः सर्व्वे रुक्मदण्डाः पताकिनः
सदने वासुदेवस्य मार्गसञ्जवनध्वजाः ॥")

**सञ्जा**, स्त्री, छागी । इति त्रिकाण्डशेषः ॥

**सञ्जीवनं**, क्ली, (सञ्जीव्यतेऽस्मिन्निति । सं + जीव +
अधिकरणे ल्युट् ।) सञ्जवनम् । इति शब्द-
रत्नावली ॥ (सं + जीव + भावे ल्युट् ।)
सस्यक्प्रकारेण प्राणधारणञ्च ॥ (यथा, मुकुन्द-
मालायाम् । ३० ।
"व्यामोहोद्दलनौषधं मुनिमनोवृत्तिप्रवृत्त्यौषधं
दैत्यानर्थकरौषधं त्रिजगतां सञ्जीवनैकौषधम् ।
भक्तार्त्तिप्रशमौषधं भवभयप्रध्वंसि दिव्यौषधं
श्रेयः प्राप्तिकरौषधं पिब मनः श्रीकृष्णनामौ-
षधम् ॥"
नरकविशेषः । यथा, मनुः । ४ । ८९ ।
"नरकं कालसूत्रञ्च महानरकमेव च ।
सञ्जीवनं सहावीचिं तपनं सम्प्रतापनम् ॥"
स्त्री, विद्याविशेषः । यथा महाभारते । १ ।
७६ । ३३ ।
"ततः सञ्जीवनीं विद्यां प्रयुज्य कचमाह्वयत् ॥")

**सञ्ज्ञं**, क्ली, संज्ञम् । इति शब्दचन्द्रिका ॥

**सञ्ज्ञः**, त्रि, संज्ञः । इत्यमरटीक्वायां भरतः ॥

**सञ्ज्ञपनं**, क्ली, (सं + ज्ञा + णिच् + ल्युट् ।)
संज्ञपनम् । इत्यमरः ॥

**सञ्ज्ञप्तिः**, स्त्री, (सं + ज्ञा + णिच् + क्तिन् ।)
संज्ञप्तिः । इति हेमचन्द्रः ॥
आवेहलदी इति कोङ्कणे प्रसिद्धा ।
तत्पर्य्यायः ।
शिटी २ गन्धशटी ३ सुगन्धा ४ सटिः ५
शटिः ६ गन्धमूला ७ गन्धमूली ८ पलाशः ९
कर्व्वुरः १० षड्ग्रन्थिका ११ कर्व्वूरः १२
गन्धोलिः १३ गन्धमूलकः १४ । इति शब्दरत्ना-
वली ॥ शठी १५ षड्ग्रन्था १६ अम्लनिशा १७
बधूः १८ गन्धारी १९ सटिका २० पला-
शिका २१ समुद्रा २२ तृणी २३ दूर्व्वा २४
गन्धा २५ पृथुपलाशिका २६ सौम्या २७
हिमोद्भवा २८ गन्धबधूः २९ । अस्या गुणाः ।
सुतिक्तत्वम् । अम्लरसत्वम् । लघुत्वम् । उष्ण-
त्वम् । रुचिप्रदत्वम् । ज्वरकफास्रकण्डूव्रणदोष-
वक्त्रामयनाशित्वम् । हृद्यत्वञ्च । इति राज-
निर्घण्टः ॥

**सड्डा**, स्त्री, पक्षिभेदः । वाद्यम् । इति संक्षिप्त-
सारोणादिवृत्तिः ॥

**सठ**, क श्वठार्थे । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-सक०-सेट् ।) दन्त्यादिः । क, साठयति
सठार्थे गत्यसंस्कृतसंस्कृतेषु । इति दुर्गादासः ॥

**सठी**, स्त्री, शठी । इति राजनिर्घण्टः ॥

**सणसूत्रं**, क्ली, (सणस्य सूत्रम् ।) शणसूत्रम् ।
इत्यमरटीकायां रायमुकुटः ॥

**सण्डः**, पुं, षण्डः । इत्यमरटीका ॥

**सण्डिशः**, पुं, सन्दंशः । साँडाशि इति भाषा ।

यथा, --
"पायसं कृषराच्छागं देवान्नानि च यानि वै ।
भुक्तानि यैरसंस्कृत्य तेषामन्त्राणि पापिनाम् ॥
निपातितानां भूपृष्ठे उद्धृताक्षि निरीक्षताम् ।
सण्डिशैरपकृष्यन्ते नरैर्याम्यैर्म्मुखात्ततः ॥"
इति मार्कण्डेयपुराणे १४ अध्यायः ॥

**सण्डीनं**, क्ली, खगगतिक्रिया । इत्यमरः ॥ खगानां
पक्षिणां गतौ स्थानान्तरसञ्चारे एताः क्रियाः व्यापाराः । कास्ता इत्याह प्रथमडीनं उड्डय-नाय क्रमबन्धः । ऊर्द्ध्वं डीनं उड्डीनं वियद्गमनम् । संगतं डीनं सण्डीनं वृक्षादौ पतनमिति । पृथक् पृथक् पक्षिगतिक्रियासु प्रडीनं सङ्गत-गमनमित्यन्ये । ओ डो ङ य गतौ डीङ च नभोगतौ भावे क्तः सुल्वाद्योदिति नत्वम् । इति भरतः ॥

**सततं**, क्ली, (सन्तन्यते स्मेति । सं + तन + क्तः ।
समो वा हिततततयोरिति पक्षे मलोपः ।) निर-न्तरक्रिया । तद्वति, त्रि । इत्यमरः ॥ तत्पर्य्यायः अनवरतशब्दे नित्यशब्दे च द्रष्टव्यः । अपि च ।
"सतते त्वनवरतानारताश्रान्तसन्ततम् ।
प्रसक्तासक्तनित्याजस्रानद्धाविरतानिशम् ॥"
इति जटाधरः ॥
(यथा, मनुः । ४ । २२ ।
"एतानेक महायज्ञान् यज्ञशास्त्रविदो जनाः ।
अनीहमानाः सततमिन्द्रियेष्वेव जुह्वति ॥")

**सतत्त्वं**, क्ली, स्वभावः । इति हेमचन्द्रः । ६ । १३ ॥

**सतर्कः**, त्रि, तर्केण सह वर्त्तमानः । सावधानः ।
इति लोकप्रसिद्धः ॥

**सतानन्दः**, पुं, गौतममुनिपुत्त्रः । स च जनकराज-
पुरोहितः । इति शब्दरत्नावली ॥

**सतिः**, स्त्री, (सनु दाने + क्तिच् । "सनः क्तिचि
लोपश्चास्यान्यतरस्याम् ।" ६ । ४ । ४५ । इति नलोपः ।) दानम् । अवसानम् । इति साति-शब्दटीकायां भरतः ।

गोमन्ते गोमती नाम मन्दरे कामचारिणी ॥
मदोत्कटा चैत्ररथे जयन्ती हस्तिनापुरे ।
कान्यकुब्जे तथा गौरी रम्भा मलयपर्व्वते ॥
एकाम्रके कीर्त्तिमती विश्वां विश्वेश्वरे विदुः ।
पुष्करे पुरुहूतेति केदारे मार्गदायिनी ॥
नन्दा हिमवतः पृष्ठे गोकर्णे भद्रकर्णिका ।
स्थानेश्वरे भवानी तु विल्वके विल्वपत्रिका ॥
श्रीशैले माधवी नाम भद्रा भद्रेश्वरे तथा ।
जया वराहशैले तु कमला कमलालये ॥
रुद्रकोट्यान्तु रुद्राणी काली कालञ्जरे तथा ।
महालिङ्गे तु कपिला साकोटे कमलेश्वरी ॥"
अत्र कपिलाम्बरा इति च पाठः ।
"शालग्रामे महादेवी शिवलिङ्गे जनप्रिया ।
मायापूर्य्यां कुमारी तु सन्ताने ललिता तथा ॥
उत्पलाक्षी सहस्राक्षे हिरण्याक्षे महोत्पला ।
गयायां मङ्गला नाम विमला पुरुषोत्तमे ॥
विपाशायामघोराक्षी पाटला पुण्ड्रवर्द्धने ।
नारायणी सुपार्श्वे तु त्रिकूटे रुद्रसुन्दरी ॥
विपुले विपुला नाम कल्याणी मलयाचले ।
कौटवी कोटितीर्थेषु सुगन्धा माधवे वने ॥
सूर्य्यविम्बे प्रभा नाम मातृणां वैष्णवी तथा ॥
अरुन्धती सतीनान्तु रामासु च तिलोत्तमा ।
चित्ते ब्रह्मकला नाम शक्तिः सर्व्वशरीरिणाम् ॥
एतदुद्देशतः प्रोक्तं नामाष्टशतमुत्तमम् ।
अष्टोत्तरञ्च तीर्थानां शतमेतदुदाहृतम् ।
यः पठेच्छृणुयाद्वापि सर्व्वपापैः प्रमुच्यते ॥
एषु तीर्थेषु यः कृत्वा स्नानं पश्यति मानवः ।
सर्व्वपापविनिर्म्मुक्तः कल्पं शिवपुरे वसेत् ॥
यस्तु मत्परमः कालं करोत्येतेषु मानवः ।
स भित्त्वा ब्रह्मसदनं पदमभ्येति शाङ्करम् ॥
नामाष्टशतकं यस्तु श्रावयेच्छिवसन्निधौ ।
तृतीयायामथाष्टम्यां बहुपुत्त्री भवेन्नरः ॥
गोदाने श्राद्धकाले वा अहन्यहनि वा पुनः ।
देवार्च्चनविधौ विद्वान् पठन् ब्रह्माधिगच्छति ॥
एवं वदन्ती सा तत्र ददाहात्मानमात्मना ।
स्वायम्भुवेऽपि काले च दक्षप्राचेतसोऽभवत् ॥
पार्व्वती चाभवद्देवी शिवदेहार्द्धधारिणी ।
मेनागर्भसमुत्पन्ना भुक्तिमुक्तिफलप्रदा ॥
अरुन्धती जपन्त्येतत्तदाप्ता योगमुत्तमम् ।
पुरुरवाश्च राजर्षिर्लोकेषु जयतामगात् ॥
ययातिः पुत्त्रलाभन्तु धनलाभन्तु भार्गवः ।

**सती**, स्त्री, (अस्तीति । अस् + शतृ । उगित्वात्

ङीप् ।) दुर्गा । साध्वी । इति मेदिनी ।
(यथा, कुमारे । १ । २१ ।
“सती सती योगविसृष्टदेहा
तां जन्मने शैलबधूं प्रदेपे ॥”)
सौराष्ट्रमृत्तिका । इति हेमचन्द्रः ॥ दानम् ।
अवसानम् । इति नानार्थसातिशब्दटीकायां
भरतः ॥ * ॥ स्थानविशेषे सत्यष्टोत्तरशत-
नामानि यथा, --
देव्युवाच ।
“सर्व्वगा सर्व्वभूतेषु द्रष्टव्या सर्व्वतो भुवि ।
सप्तलोकेषु यत्किञ्चिद्रहितं न मया विना ॥
तथापि येषु स्थानेषु द्रष्टव्याः सिद्धिमीप्सुभिः ।
स्मर्त्तव्या भूतिकामैर्व्वा ता वक्ष्यामि प्रयत्नतः ॥
वाराणस्यां विशालाक्षी नैमिषे लिङ्गधारिणी ।
प्रयागे ललिता देवी कामुका गन्धमादने ॥
मानसे कुमुदा नाम विश्वकाया तथेश्वरे ।
गोदाश्रमे त्रिसन्ध्या तु गङ्गाद्वारे
रतिप्रिया ।
शिवकुण्डे शिवानन्दा नन्दिनी
देविकातटे ॥
रुक्मिणी द्वारवत्यान्तु राधा वृन्दावने
वने ।
देवकी मथुरायान्तु पाताले परमेश्वरी
॥
चित्रकूटे तथा सीता विन्ध्ये
विन्ध्याधिवासिनी
सह्याद्वारे करीरा तु हरिश्चन्द्रे तु
चन्द्रिका ॥
रमणा रामतीर्थे तु यमुनायां मृगावती ।
करवीरे महालक्ष्मीरुमादेवी विनायके
॥
अरोगा वैद्यनाथे तु महाकाले महेश्वरी
।
अभयेत्युष्णतीर्थे तु अमृता
विन्ध्यकन्दरे ॥”
उष्णतीर्थेत्यत्र अश्वतीर्थेति च पाठः ।
“माण्डव्ये माण्डवी नाम स्वाहा
माहेश्वरे
पुरे ।
छगलाण्डे प्रचण्डा तु
चण्डिकामरकण्टके ॥
सोमेश्वरे वरारोहा प्रभावे पुष्करावती
।
देवमाता सरस्वत्यां पारा पारातटे
मता ॥
महालये महाभागा पयोष्ण्यां
पिङ्गलेश्वरी ।
सिंहिका कृतशौचे तु कार्त्तिक्ये तु
शङ्करी ॥
उत्पलावत्तके लोला सुभद्रा
शोणसङ्गमे ।
महासिद्धवने लक्ष्मीरनङ्गा भरताश्रमे
॥
जालन्धरे विश्वमुखी तारा
किष्किन्धपर्व्वते ।
देवदारुवने पुष्टिर्मेधा काश्मीरमण्डले
॥
तथान्ये देवदैत्याश्च ब्राह्मणाः
क्षत्त्रियास्तथा ।
वैश्याः शूद्राश्च बहवः
सिद्धिमीयुर्यथेप्सिताम् ॥
यत्रेतल्लिखितं तिष्ठेत् पूज्यते
देवसन्निधौ ।
न तत्र शोकदौर्गत्यं कदाचिदपि जायते
॥”
इति मत्स्यपुराणे १३ अध्यायः ॥ * ॥
सावित्री । यथा, --
यम उवाच ।
“सावित्रीवरदानेन त्वं सावित्रीकला
सती ।
प्राप्ता पुरा भूभृता च तपसा तत्समा
शुभे ॥
यथा श्रीः श्रीपतेः क्रोडे भवानीव
भवोरसि ।
सौभाग्या सुप्रिया त्वञ्च भव सत्यवति
प्रिये ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २४
अध्यायः ॥ * ॥
विद्यमाना । (यथा, --
“तथा समक्षं दहता मनोभवं
पिनाकिना भग्नमनोरथा सती ।
निनिन्द रूपं हृदयेन पार्व्वती
प्रियेषु सौभाग्यफला हि चारुता ॥”
इति कुमारसम्भवे । ५ । १ ॥)

**सतीनः**, पुं, वंशः । इति शब्दमाला ॥ सतीलकः ।

इत्यमरटीकायां भरतः ॥ (यथा, सुश्रुते
। १ । ४६ ।
“हरेणवः सतीनाश्च विज्ञेया
बद्धवर्च्चसः ॥” * ॥
क्ली, जलम् । इति निर्घण्टुः । १ । १२
॥)

**सतीनकः**, पुं, (सतीन एव । स्वार्थे कन् ।) सती-

लकः । इत्यमरटीका ॥

**सतीर्थः**, पुं, (समानस्तीर्थो गुरुर्यस्य । समानस्य

सः ।) परस्परैकगुरुशिष्यः । इति
शब्दरत्ना-

भीमादेवी हिमाद्रौ च तुष्टिर्वस्त्रेश्वरे तथा ।
कपालमोचने शुद्धिर्म्माया कायावरोहणे ॥
शङ्खोद्धाने धनिर्नाम धृतिः पिण्डारके तथा ।
काला तु चन्द्रभागायामच्छोदे शिवचारिणी ।
वेण्वायाममृता नाम वदर्य्यां वर्च्चसी तथा ।
औषधी चोत्तरकुरौ कुशद्वीपे कुशोदका ।
मन्मथा हेमकुटे तु कुमुदे सत्यवादिनी ॥ * ॥
अश्वत्थे वन्दनोया तु निधिर्वैश्रवणालये ।
गायत्त्री वेदवदने पार्व्वती शिवसन्निधौ ॥
देवलोके तथेन्द्राणी ब्रह्मास्येषु सरस्वती ।

वली ॥

**सतीर्थ्यः**, पुं, (समाने तीर्थे वासीति । “समान-
तीर्थे वासी ।” ४ । ४ । १०७ । इति यत् । “तीर्थे
ये ॥” ६ । ३ । ८७ । इति समानस्य सः ।)
परस्परैकगुरुशिष्यः । इत्यमरः ॥ एकोऽभिन्नो

गुरुर्येषां तेऽन्योन्यं सतीर्थ्याः । समाने तीर्थे
गुरौ वसन्ति सतीर्थ्याः । ढघेकादिति यः ।
ज्योतिर्जनपदेत्यादिना सः ।
तीर्थमृषियुष्टजले
गुरौ इति वक्षते । इति भरतः ॥ अपि च ।
"स्यात् सतीर्थः सतीर्थ्योऽपि
तथैकगुरुरित्यपि ।"
इति शब्दरत्नावली ॥

**सतीलः**, पुं, वंशः । इति हारावली ॥ वायुः ।
इत्यमरटीकायां रायमुकुटः ॥ ("तीलेन तीलवत्
कृष्णवर्णचिह्नेन सह वर्त्तते इति । निपातनादि-
कारस्य दीर्घः ।" इति भरतः ॥)
कलायः । यथा,
"कलायस्त्रिपुटः प्रोक्तः सतीलो वर्त्तुलो मतः ।"
इति भरतधृतव्याडिः ॥

**सतीलकः**, पुं, (सतील एव । स्वार्थे कन् ।)
कलायः । यथा, --
"कलायस्तु सतीलकः हरेणुखण्डिकौ चास्मिन्"
इत्यमरः ॥
"चत्वारि कलाये । मटर इति ख्याते । कलाय-
शब्दो विशेषे सामान्ये च अतएव माषकलाय
इत्यादिप्रयोगः । कड्यते भुज्यते कलायः । कड
भक्षणे नाम्नीति आयः मनीषादित्वात् डस्य
लः । तिलेन तिलवत् कृष्णवर्णचिह्नेन सह वर्त्तते
सतीलः निपातनादिकारस्य दीर्घः स्वार्थे के
मार्थसत्त्वसाधुत्वप्रशस्तत्वादिभिः सच्छब्दोऽपि
अतस्तेन त्रिविधनिर्द्देशेना यद्वा यस्यायं त्रिविधो
निर्द्देशस्तेन परमात्मना ब्राह्मणादयो निर्म्मिताः ॥
वैदिके कर्म्मणि तेषां प्रथमतो निर्द्देशो यथा, --
"तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥"
यस्मादेवं ब्रह्मणो निर्द्देशस्तस्मादोमित्युदाहृत्य
उच्चार्य्य कृता वेदवादिनां यज्ञाद्याः शास्त्रोक्ताः
क्रियाः सततमङ्गवैकल्येऽपि प्रवर्त्तन्ते प्रकर्षेण
वर्त्तन्ते सगुणा भवन्तीति भगवान् शङ्कराचार्य्य-
चरणाः ॥
"तदित्यनभिसन्धाय यज्ञदानतपःक्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥"
तदिति ब्रह्मणोऽभिधानमुदाहृत्यइत्यनुषङ्गः ।
अनभिसन्धाय कर्म्मणः फलमिति शेषः । तस्मात्
फलाभिसन्धानं विना मुमुक्षुणा कर्म्म कर्त्तव्य-
मित्यपि बोध्यम् ।
"सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते ।
प्रशस्ते कर्म्मणि तथा सच्छब्दः पार्थ युज्यते ॥"
यतो विद्यमानजन्मनि उत्कृष्टचरिते च सदि-
त्येतत् प्रयुज्यते । अतो यज्ञादौ कर्म्मणि प्रथ-
मतः सच्छब्दः प्रयुज्यते । इत्येकादशीतत्त्वम् ॥ * ॥

**सत्**, त्रि, (अस्तीति । अस + शतृ ।) सत्यम् ।
साधुः । (यथा, मुग्धबोधे ।
"रामंनमति सानन्दं धर्म्मानभिनिविश्य स सन् ।")
विद्यमानम् । (यथा, हितोपदेशे ।
"दुर्ज्जनः परिहर्त्तव्यो विद्ययालङ्कृतोऽपि सन् ।
मणिना भूषितः सर्पः किमसौ न भयङ्करः ॥")
प्रशस्तम् । अभ्यर्हितम् । इत्यमरः ॥ धीरः ।
इति मेदिनी ॥
(यथा, कुमारे । ६ । ५२ ।
"विधिप्रयुक्तसत्कारैः स्वय मार्गस्य दर्शकः ।
स तैराक्रमयामास शुद्धान्तं शुद्धकर्म्मभिः ॥"
उत्सवविशेषः । यथा, मनुः । २ । ५९ ।
"तस्मादेताः सदा पूज्या भूषणाच्छादनाशणैः ।
भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सयेषु च ॥"
"सत्कारेषु कौमुद्यादिषु उत्सवेषु उपनयना-
दिषु ।" इति तट्टीकायां कुल्लूकः ॥ * ॥)
शवदाहादिक्रिया । इति लोकप्रसिद्धिः ॥

**सत्कुलीनः**, पुं, (सत्कुले जातः । सत्कुल + खः ।
सन् प्रशस्तः कुलीन इति वा ।)
सत्कुलोद्भवः ।
यथा, --
"सत्कुलीनाय शान्ताय ऋजवे दम्भवर्ज्जिते ।
दद्यात् स्तोत्रमिदं पुण्यं सर्व्वकामफलप्रदम् ॥"
इति विश्वसारतन्त्रे वटुकभैरवस्तोत्रम् ॥

**सत्कृतः**, त्रि, (सत् + कृ + क्तः ।) पूजितः । कृत-
सत्कारः । यथा, --
"तस्थौ कञ्चित् स कालञ्च मुनिना तेन सत्-
कृतः ।"
इति देवीमाहात्म्यम् ॥
(महादेवे, पुं । इति महाभारतम् । १३ ।
१७ । ११३ ॥)

**सत्कृतिः**, स्त्री, (सत् + कृ + क्तिन् ।) सत्कारः ।
सत्क्रियाशब्दार्थदर्शनात् ॥ (यथा, भागवते ।
२० । १५ । ४३ ।
"तत्सत्कृतिं समधिगम्य विवेश गोष्ठं
सव्रीडहासविनयं यदपाङ्गमोक्षम् ॥"

सतीलकः दन्त्यादिः । ह्रियते भक्षणार्थं हरति
मनो वा हरेणुः नाम्नीति एणुः । खण्ड्यते
विदार्य्यते खण्डिकः पूर्व्वेण इकः ।
“कलायस्त्रिपुटः प्रोक्तः सतीलो वर्त्तुलो मतः ।
हरेणुः कण्टका ज्ञेया --
इति तु व्याडिः ।” इति भरतः ॥

**सतीला**, स्त्री, कलायविशेषः । तेओडा इति
भाषा । यथा । सतीला निण्डिका तिण्टीति
शब्दचन्द्रिका ॥

**सतुषं**, क्ली, (तुषेण सह वर्त्तमानम् ।) तुषयुक्त-
शस्यम् । धान्यम् । यथा, --
“शस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते ।
आमं वितुषमित्युक्तं खिन्नमन्नमुदाहृतम् ॥”
इति श्राद्धतत्त्वम् ॥

**सतृट्**, [ष्] त्रि, (तृषा सह वर्त्तमानः ।)
तृष्णायुक्तः । तत्पर्य्यायः । तृषितः २ तषितः ३ ।
इति त्रिकाण्डशेषः ॥

**सतेरः**, पुं, तुषः । इति संक्षिप्तसारोणादिवृत्तिः ।

**सत्**, क्ली, (अस्तीति । अस + शतृ) ब्रह्म ।
यथा । भगवद्गीतायाम् ।
“ओम् तत्सदिति निर्द्देशो ब्रह्मणस्त्रिविधः स्मृतः
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥”
ओम् तत् सदिति त्रिविधो ब्रह्मणो जगदी-
श्वरस्य निर्द्देशोऽभिधानं ब्रह्मविद्भिश्चिन्तितम् ।
तत्र तावदोमितिब्रह्मेत्यादि श्रुतिप्रसिद्धेरोमिति
ब्रह्मणो नाम । पातञ्जलिरप्याह अस्यव वाचकः

**सत्कदम्बः**, पुं, (सन् कदम्बः ।) केलिकदम्बः ।
यथा, --
“केलिवृक्षः सत्कदम्बो व्रजभूः शिशुपालकः ।”
इति शब्दचन्द्रिका ॥

**सत्कर्त्ता**, [ऋ] पुं, (सतां कर्त्ता ।) विष्णुः ।
यथा । सत्कर्त्ता सत्कृतः साधुरिति तस्य
सहस्रनामस्तोत्रम् ॥

**सत्कर्म्म**, [न्] क्ली, (सत् प्रशस्तं कर्म्म । वेद-
विहितक्रिया । यथा । विष्णुपुराणे ।
“सत्कर्म्मयोग्यो न जनो नैवापः शौचकारणम्
यस्मिन्ननुदिते तस्मै नमो देवाय भास्वते ॥”
इति प्रायश्चित्ततत्त्वम् ॥

**सत्काञ्चनारः**, पुं, (सन् काञ्चनारः ।) रक्त-
काञ्चनः । यथा, --
“कोविदाते चमरिकः कुद्दालो युगपत्रकः ।
सत्काञ्चनारः कामालुर्ह्यवाहनशङ्करः ॥”
इति शब्दचन्द्रिका ॥

**सत्काण्डः**, पुं, चिलः । इति शब्दचन्द्रिका ॥

**सत्कारः**, पुं, (सत्करणमिति । सत् + कृ + घञ् ।
पूजा । यथा । एवम्भूताः सभासदः सभायां
यथा सीदन्ति उपविशन्ति तथा दानमानसत्-
कारै राज्ञा कर्त्तव्या । इति व्यवहारतत्त्वम् ॥

पुं, विष्णुः । इति महाभारतम् । १३ ।
१४९ । ८८ ॥)

**सत्क्रिया**, स्त्री, (सती क्रिया ।) शवदाहादि-
क्रिया । तत्पर्य्यायः । संस्क्रिया २ । इति त्रिका-
ण्डशेषः । संस्कारः ३ । इति शब्दरत्नावली ॥
यथा, महाभारते । १ । ४४ । ५ ।
“ततो नृपे तक्षकतेजसा हते
प्रयुज्य सर्व्वाः परलोकसत्क्रियाः ।
शुचिर्द्विजो राजपुरोहितस्तदा
तथैव ते तस्य नृपस्य मन्त्रिणः ॥”
परिष्कारः । यथा, रघुः । ११ । ३ ।
“यावदादिशति पार्थिवस्तयो-
र्निर्गमाय पुरमार्गसत्क्रियाम् ।
तावदाशु विदधे मरुत्सखैः
सा सपुष्पजलवर्षिभिर्घनैः ॥”)
सम्मानम् । यथा, मनुः ।
“घटेऽपवर्ज्जिते ज्ञातिमध्यस्थो यवसं गवाम् ।
प्रदद्यात् प्रथमं गोभिः सत्कृतस्य हि सत्क्रिया ॥”
इति प्रायश्चित्ततत्त्वम् ॥

**सत्तमः**, त्रि, (अयमेषामतिशयेन सन् । सत् +
तमप् ।) अतिशोभनः । इत्यमरः ॥ पूज्यतमः ।
साधीयान् । उत्तमः । इति मेदिनी ॥ (यथा,
देवीभागवते । ११ । १६ । ३ ।
“तद्भेदानपि वक्ष्यामि शृणु देवर्षिसत्तम ! ॥”)

**सत्ता**, स्त्री, जातिविशेषः । इति भाषापरिच्छेदा ॥
(सतो भावः । सत् + तल् ।) विद्यमानता ।

| प्रणवः । अस्य ब्रह्मणः । ओम्कारो भगवान् विष्णुरित्यादि तु वाच्यवाचकयोरभेदेन । तथा च । जगत्कारणत्वेन प्रसिद्धत्वादविदुषां परोक्ष- त्वाच्च तच्छब्दोऽपि ब्रह्मणो नाम । एवं पर- | | |
|---|---|---|

यथा । यद्यपि पापस्य कार्य्यानन्वितत्वेन तत्-
सत्तायामप्रामाण्यं प्रतिभाति । इति प्राय-
श्चित्ततत्त्वम् ॥ साधुता । सतो भाय इत्यर्थे
सच्छब्दात् तप्रत्ययेन निष्पन्ना ॥

**सत्त्रं**, क्ली, (सतः साधून् त्रायते इति । त्रै + कः ।
यद्वा, सीदन्ति सज्जना यत्र । सद गतौ +
"गुधृवीपचिवचीति ।" उणा० ४ । १६६ । इति
त्रः ।) यज्ञः । (यथा, भनुः । ८ । ३०३ ।
"अभयस्य हि यो दाता संपूज्यः सततं नृपः ।
सत्त्रं हि वर्द्धते तस्य सदैवाभयदक्षिणम् ॥")
सदादानम् । आच्छादनम् । अरण्यम् । (यथा,
किराते । १३ । ९ ।
"अयमेव मृगव्यसत्त्रकामः
प्रहरिष्यन् मयि मायया समस्थे ।
पृथुभिर्ध्वजिनीरवैरकार्षीत्
चकितोद्भ्रान्तमृगाणि काननानि ॥")
कैतवम् इति मेदिनी ॥ (यथा, महाभारते ।
४ । ३६ । ३८ ।
"सत्त्रेण नूनं छन्नं हि चरन्तं पार्थमर्ज्जुनम् ।
उत्तरः सारथिं कृत्वा निर्य्यातो नगरात्
बहिः ॥")
धनम् । गृहम् । दानम् सरोवरम् । इत्यने-
कार्थकोषः ॥ यागविशेषः । यथा, --
"नैमिषेऽनिमिषक्षेत्रे ऋषयः शौनकादयः ।
सत्त्रं स्वर्गाय लोकाय सहस्रसमभासत ॥
कलिमागतमाज्ञाय क्षेत्रेऽस्मिन् वैष्णवे वयम् ।
आसोना दीर्घसत्त्रेण कथायां सक्षणा हरेः ॥"
इति श्रीभागवते १ स्कन्धे १ अध्यायः ॥ * ॥
द्वादशाहसाध्यसत्त्रं यथा । ज्योतिष्टोमे द्वादश-
गोशतदक्षिणाविभागः षोडशर्त्विजां तद्विकृती-
भूते सत्त्रात्मके द्वादशाहसाध्ये शतेनाह्निनी
दीक्षयन्तीत्यादिदर्शनेन निर्णीयते । तच्च
सावन-
मानेन कर्त्तव्यम् । यथा, --
"सत्त्राण्युपास्यान्यथ सावनेन
लौक्यञ्च यत् स्याद्व्यवहारमर्म्म ।"
इति मलमासतत्त्वम् ॥ * ॥
सदक्षिणं सततान्नदानम् । तन्निन्दकस्पशनादि-
निषेधो यथा, --

**सत्त्राजित्**, पुं, राजविशेषः । स तु श्रीकृष्णस्य
श्वशुरः । परे भल्लाटनगरे
शशिध्वजराजो
बभूव । इति कल्किपुराणे २७
अध्यायः ॥

**सत्त्रिः**, पुं, मेघः । हस्ती । जयशीले, त्रि । इत्यु-
णादिकोषः ॥

**सत्त्रिजातकं**, क्ली, (सत् साधु त्रिजातकं तुल्यत्व-
गेलापत्रादिकं यत्र ।) व्यञ्जनविशेषः ।
यथा, --
"मांसं बहुघृते भृष्टं सिक्त्वा
चोष्णाम्बूना
मुहुः ।
जीरकाद्यैः समायुक्तं परिशुस्कं
तदुच्यते ।
तदेव घृततक्राढ्यं प्रदिग्धं
सत्त्रिजातकम् ॥"
इति शब्दचन्द्रिका ॥

**सत्त्री**, [न्] पुं, (सत्त्रमस्त्यस्येति । इनिः ।)
गृहपतिः । इत्यमरः ॥ द्वे गृहस्थे ।
सत्त्रं सदा
दानं विद्यतेऽस्य सत्त्री इन् । सदेस्त्रं
सत्त्रं
द्वितकारम् । सत्त्रमाच्छादने यज्ञे सदा
दाने च
कैतवे । इति विश्वः । गृहस्य
पतिर्गृहपतिः ।
इति भरतः ॥ नित्यप्रवृत्तान्नदानः ।
यथा विष्णुः ।
नाशौचं राज्ञां राजकर्म्मणि न व्रतिनां
व्रते न
सत्त्रिणां सत्त्रेन कारुणां स्वकर्मणि न
राजाज्ञा-
कारिणां तदिच्छया न
देवप्रतिष्ठाविवाहयोः

आत्मा । चित्तम् । इति मेदिनी ॥ रसः ।
आयुः ।
इति धरणिः ॥ कुबेरः । इति हेमचन्द्रः ॥
धनम् । आत्मता । इति शब्दरत्नावली ॥

**सत्त्वः**, पुं, क्ली, (सत्त्वमस्त्यस्येति । अर्शआदि-
त्वादच् ।) जन्तुः । इत्यमरः ॥ (यथा,
रघुः ।
२ । ८ ।
"रक्षापदेशान्मुनिहोमधेनोः
वन्यान् विनेष्यन्निव दुष्टसत्त्वान् ॥")

**सत्त्वता**, स्त्री, सत्त्वस्य भावः । सत्त्वशब्दात् भावे
तप्रत्ययानन्तरं आप्प्रत्ययेन निष्पन्ना ॥

**सत्त्वसन्तन्नः**, त्रि, (सत्त्वं सम्पन्नः ।) सत्त्वप्राप्तः ।
इति लोकप्रसिद्धिः ॥

**सत्त्वस्थः**, त्रि, (सत्त्वे तिष्ठतीति । स्था + कः ।)
सत्त्ववृत्तिशाली । सत्त्वप्रधानः । यथा, --
"ऊर्द्ध्वं गच्छन्तिसत्त्वस्था मध्ये
तिष्ठन्ति राजसाः
जघन्यगुणवृत्तस्था अधो गच्छन्ति
तामसाः ॥"
इति भगवद्गीताय्यम् । १४ । १८ ।

**सत्पत्रं**, क्ली, (सत्पत्रं यस्य ।) पद्मस्य नवदलम् ।
इति शब्दचन्द्रिका ॥

**सत्पथः**, पुं, (सन् पन्थाः । टच् ।) प्रशस्तपथः ।
तत्पर्य्यायः । अतिपन्थाः २ सुपन्थाः ३
अर्च्चि-
ताध्वा ४ । इत्यमरः ॥ सुपथः ५ । इति
शब्द-
रत्नावली ॥ (यथा, भागवते । ४ । १२ ।
५० ।
"ज्ञानमज्ञाततत्त्वाय यो दद्यात्
सत्पथेऽमृतम्
कृपानोर्दीननाथस्य देवास्तस्यानु गृह्णते
॥")

**सत्पशुः**, पुं, (सन् पशुः ।) यज्ञीयपशुः । इति

"नालपेज्जनविद्विष्टान् वीरहीनां तथा स्त्रियम् ।
देवतापितृसच्छास्त्रयज्ञसत्त्रादिनिन्दकैः ।
कृत्या तु स्पर्शनालापं शुद्ध्येतार्कावलोकनात् ॥"
इति मार्कण्डेयपुराणे सदाचाराध्यायः ॥
सत्त्रं सदक्षिणं सततान्नदानम् । इति तट्टीका ॥

**सत्रं**, [म्] व्य, सह । इति शब्दरत्नावली जटाधरश्च ॥

**सत्त्रशाला**, स्त्री, (सत्त्रस्य शाला ।) अन्नादिदानगृहम् । तत्पर्य्यायः । प्रतिश्रयः २ । इति हेमचन्द्रः ॥ (यथा, कथासरित्सागरे । २१ । ७४ ।
"ततः सा सत्त्रशालान्तः प्रविवेश बणिक्सुता ।
अन्वगात् राजपुत्त्रोऽपि स तां गुप्तमवेक्षितुम् ॥"
सत्त्रा, व्य, सह । इत्यमरः ॥

पूर्व्वसंवृतयोः । इति । सत्त्रिणां नित्यप्रवृत्तान्नदानानां सत्त्रेऽन्नदाने । इति शुद्धितत्त्वम् ॥
(यज्ञान्धिते, त्रि । यथा, महाभारते । १४ । ७ । ३ ।
"सन्यमेतद्भवानाह स मां जानाति सत्त्रिणम् ।
कथयस्व तदेतन्मे क्व नु सम्प्रति नारदः ॥")

**सत्त्वं**, क्ली, (सतो भावः । सत् + त्व ।) प्रकृतेर्गुणविशेषः । अत्र सत्त्वं प्रकाशकज्ञानं सुखहेतुः । सतो भावः सत्त्वम् । त्वतौ भावे इति त्वं निपातनात्तलोप इति केचित् । सत्त्वं हितकारमिति बहवः । इत्यमरभरतौ ॥ * ॥ (यथा, मनुः । १२ । २४ ।
"सत्त्वं रजस्तमश्चैव त्रीन् विद्यादात्मनो गुणान् ।
यैर्व्याप्येमान् स्थितो भावान् महान् सर्व्वानशेषतः ॥")
महाभारतमते सुखजनकगुणः । तस्य धर्म्माः ।
प्रसादः १ हर्षः २ प्रीतिः ३ असन्देहः ४
धृतिः ५ स्मृतिः ६ । इति मोक्षधर्म्मः ॥ द्रव्यम् ।
असुः । (यथा, रामायणे । २ । ६० । १ ।
"ततो भूतोपसृष्टेव वेपमाना पुनः पुनः ।
धरण्यां गतसत्त्वेव कौशल्या सूतमब्रवीत् ॥)"
व्यवसायः ! इत्यमरः ॥ पिशाचादिः । (यथा, रामायणे । २ । ३३ । १० ।

केचित् ॥ शोभनपशुश्च ॥

**सत्पुत्त्रः**, पुं, (सन् पुत्त्रः ।) उत्तमसन्तानः ।
वेदादिविहितपित्रादिकार्य्यकर्त्ता । यथा --
"पुन्नाम्नो नरकाद्यस्मात्त्रायते पितरं सुतः ।
मुखसन्दर्शनेनापि तदुत्पत्तौ यतेत सः ॥"
इति बृहस्पत्युक्तनरकनिस्ताराय ऋणमस्मिन्
समन्नयति अमृतत्वञ्च विन्दति । इति पिता
पुत्त्रस्य जातस्य पश्येच्च जीवतो मुखम् ।
इति वशिष्ठोक्तर्णापनयनाय च यत् पश्येदिति नियमविधानं तदकृतपुत्त्रकार्य्यपुत्त्रपरम् । सत्पुत्त्रस्तु मुखदर्शनं विनापि नरकनिस्तारकः । तथा च विष्णुपुराणम् ।
"सत्पुत्त्रेण तु जातेन वेणोऽपि त्रिदिवं ययौ ।
पुन्नाम्नो नरकात्त्रातः स तेन सुमहात्मना ॥"
ब्रह्मपुराणेऽपि ।
"समुत्पन्नेन भो विप्राः सत्पुत्त्रेण महात्मना ।
त्रातः स पुरुषव्याघ्रः पुन्नाम्नो नरकात्तदा ॥"
इति शुद्धितत्त्वम् ॥

**सत्पुरुषः**, पुं, (सन् पुरुषः ।) पूज्यमानपुरुषः ।
इति संक्षिप्तसारसमासपादः । (यथा, रामायणे । २ । ४८ । ८ ।
"एकः सत्पुरुषो लोके लक्षणः सह सीतया ।
योऽनुगच्छति काकुत्स्थं रामं परिचरन् वने ॥)"

**सत्प्रतिग्रहः**, पुं, सद्भ्यः साधुभ्यः प्रतिग्रहो दानग्रहणम् । साधुजनदत्तद्रव्यग्रहणम् । यथा, --

| | | |
|---|---|---|
| | "अद्य नूनं दशरथः सत्त्वमाविश्य भाषते ।<br>न हि राजा प्रियं पुत्त्रं विवासयितुमर्हति ॥")<br>बलम् । (यथा, रघुः । ४ । ७२ ।<br>"शशंस तुल्यसत्त्वानां सैन्यघोषेऽप्यसम्भ्रमम् ।<br>गुहाशयानां सिंहानां परिवृत्त्यावलो-कितम् ॥")<br>स्वभावः । (यथा, किराते । १२ । ३९ ।<br>"सत्त्वविहितमतुलम्भुजयो-र्बलमस्य पश्यत मृधेऽधिकुप्यतः ॥") | "सप्तवित्तागमा धर्म्म्या दायो लाभः क्रयो जयः |

प्रयोगः कर्म्मयोगश्च सत्प्रतिग्रह एव च ॥”
इति मानवे १० अध्यायः ॥

**सत्प्रतिपक्षः**, पुं, (सन् प्रतिपक्षः ।) तुल्यव्यक्तिः ।

प्रतियोगी । न्यायमते । साध्याभावव्वाप्यवत्
पक्षः । यथा । ह्रदो वह्निमान् धूमादित्यादौ
वह्न्यभाववाप्यवद्ध्रदादिः । इति
सत्प्रतिपक्ष-
ग्रन्थः । तल्लक्षणं यथा । साध्यविरोध्यु
पस्थापन-
समर्थसमानबलोपस्थित्या
प्रतिरुद्धकार्य्यलिङ्गत्वं
तत्त्वं बलञ्च व्याप्तिपक्षधर्म्मतो
विरोधिबोधका-
न्यगमकतौपयिकरूपसम्पत्तिमत्तयाज्ञाय-
मानेन प्रतिरुद्धकार्य्यत्वं वा तत्त्वम् । इति
गङ्गे शोपाध्यायकृतचिन्तामणिः ॥

**सत्फलः**, पुं, (सत् फलं यस्य ।) दाडिमवृक्षः ।

इति शब्दचन्द्रिका ॥ शोभनफलवद्वृक्षश्च ॥

**सत्यं**, क्ली, (सते हितम् । सत् + यत् ।) कृतयुगम् ।

शपथः । यथार्थम् । (यथा, रघुः । १२ । ७५
।
“कामं जीवति मे नाथ इति सा विजहौ
शुचम् ।
प्राङ्गत्वा सत्यमस्यान्तं जीवितास्मीति
लज्जिता ॥”)
तद्वति, त्रि । इति मेदिनी ॥ (यथा, याज्ञ-
वल्क्ये । ३ । १४९ ।
“महाभूतानि सत्यानि यथात्मापि तथैव हि
॥”)
सिद्धान्तः । इति शब्दरत्नावली ॥ * ॥
यथार्थस्य
पर्य्यायः । तथ्यम् २ ऋतम् ३ सम्यक् ४ ।
इत्य-
मरः ॥ अवितथम् ५ भूतम् ६ । इति जटा-
धरः ॥ तल्लक्षणम् । यथा, --
“यथार्थकथनं यश्च सर्व्वलोकसुखप्रदम् ।
नहि मातुः परो बन्धुर्न गुरुर्मन्त्रदात् परः
॥”
इति ब्रह्मवैवर्त्ते जन्मखण्डे ९५ अध्यायः
॥ * ॥
अपि च ।
“तस्मात् सत्यं परं ब्रह्म सत्यमेव परं
तपः ।
सत्यमेव परो यज्ञः सत्यमेव परं श्रुतम् ॥
सत्यं वेदेषु जागर्त्ति सत्यश्च परमं पदम्
।
कीर्त्तिर्यशश्च पुण्यश्च पितृदेवर्षिपूजनम्
॥
आद्यो विधिश्च विद्या च सर्व्वं सत्ये
प्रतिष्ठितम् ।
सत्यं यज्ञस्तथा वेदा मन्त्रा देवाः
सरस्वती ॥
व्रतचर्य्या तथा सत्यं ओङ्कारः सत्यमेव
च ।
सत्येन वायुरभ्येति सत्येन तपते रविः ॥
सत्येनाग्निर्दहेन्नित्यं स्वर्गं सत्येन गच्छति
।
सत्येन चापः क्षिपति पर्जन्यो धरणीतले
॥
परेण सर्व्वदेवानां सर्व्वतीर्थावगाहनम् ।
सत्यस्य वचनाल्लोके
सर्व्वमाप्नोत्यसंशयम् ॥
अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते
॥
सत्येन देवाः प्रीयन्ते पितर ऋषयस्तथा
।
मनुष्याः सिद्धगन्धर्व्वाः सत्यात्
सिद्धिमितो
गताः ॥
अगाधे विपुले शुद्धे सत्यतीर्थे शुचिह्रदे ।
स्नातव्यं मनसा युक्तैः स्नानं तत् परमं
स्मृतम् ॥
आत्मार्थे वा परार्थे वा पुत्रार्थे वापि
मानवाः ।
“सत्यं सन्तोव आस्तिक्यं तथा
चेन्द्रियनिग्रहः ।
देवताभ्यर्च्चनं पूजा ब्राह्मणानां विशेषतः ॥
सत्यं भूतहितं वाक्यमस्तेयं स्वागतम्परम्
।
नियमाः पञ्च सत्याद्या बाह्यमाभ्यन्तरं
द्विधा ॥”
इति गारुडे ४९ अध्यायः ॥ * ॥
अपि च ।
“येऽर्था धर्म्मेण ते सत्या येऽधर्म्मेण
गतश्रियः ।
सत्यशौचं मनःशौचं शौचमिन्द्रियनिग्रहः ॥
सर्व्वभूतदया शौचं जलशौचञ्च पञ्चमम् ।
यस्य सत्यञ्च शौचञ्च तस्य स्वर्गो न
दुर्ल्लभः ॥
सत्यं हि वचनं यस्य
सोऽश्वमेधाद्विशिष्यते ॥”
इति गारुडे ११३ अध्यायः ॥ * ॥
अपि च ।
“न सा सभा यत्र न सन्ति वृद्धा
वृद्धा न ते ये न वदन्ति धर्म्मम् ।
नासौ धर्म्मो यत्र नो सत्यमस्ति
नो तत् सत्यं यच्छलेनानुविद्धम् ॥
ब्राह्मणोऽपि मनुष्याणामादित्यश्चैव
तेजसाम् ।
शिरोऽपि सर्व्वगात्राणां व्रतानां
सत्यमुत्तमम् ॥”
इति गारुडे ११५ अध्यायः ॥
ब्रह्म । यथा । यः सर्व्वज्ञः सर्व्ववित् यस्य
ज्ञान-
मयं तपः सर्व्वस्य वशी सर्व्वस्येशानः यः
पृथिव्यां तिष्ठन् पृथिव्या अन्तरः
सोऽकामयत
बहुस्यां स ईक्षत तत्तेजोऽसृजत् सत्यं
ज्ञान-
मनन्तं ब्रह्म इत्याद्याः । इति
श्रीभागवतदशम-
स्कन्धीय ८७
अध्यायीयतृतीयश्लोकटीकायां

तत् सत्यमिति विज्ञेयमसत्यं तद्विपर्य्ययम्
॥”
इति पाद्मे क्रियायोगसारे १६ अध्यायः ॥ *
॥
तदाकारा यथा, --
“सत्यञ्च समता चैव दमश्चैव न संशयः ।
अमात्सर्य्यं क्षमा चैव ह्रीस्तितिक्षानसूयता ॥
त्यागो ध्यानमथार्य्यत्वं धृतिश्च सततं दया ।
अहिंसा चैव राजेन्द्र सत्याकारास्त्रयोदश ॥”
इति महाभारते राजधर्म्मः ॥ * ॥
तस्यापालने दोषो यथा, --
“कृत्वा शपथरूपञ्च सत्यं हन्ति न पालयेत् ।
स कृतघ्नः कालसूत्रे वसेद्देवचतुर्युगम् ॥
सप्तजन्मसु काकञ्च सप्तजन्मसु पेचकः ।
ततः शूद्रो महाव्याधी जन्मसप्त ततः शुचिः
॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ४८ अध्यायः ॥
* ॥
अपि च ।
“सत्येन लोकं जयति सत्यन्तु परमं तपः ।
यथाभूतप्रसादन्तु सत्यमाहुर्म्मनीषिणः ॥”
इति कौर्म्मेउपविभागे १४ अध्यायः ॥ * ॥
तस्य प्रशंसा यथा, --
“सत्यमायास्यति हरिः सत्यं निष्कपटं वद ।
वद तत् स्वभयं त्यक्त्वा सत्यं ब्रूहि सुसंसदि
॥
वरं कूपशताद्वापी वरं वापीशतात् क्रतुः ।
वरं क्रतुशतात् पुत्त्रः सत्यं पुत्त्रशतात् किल
॥
नहि सत्यात् परो धर्म्मो नानृतात् पातकं
परम
अनृतं ये न भाषन्ते ते बुधाः
स्वर्गगामिनः ॥
तस्मात् सत्यकृतं पञ्च तदनन्तफलं
भवेत् ॥”
इति वह्निपुराणे
दानावस्थानिर्णयनामाध्यायः ॥
अपि च ।
“तडागशतदानेन यत् पुण्यं लभते नरः ।
ततोऽधिकञ्च लभते वापीदानेन
निश्चितम् ॥
दशवापीप्रदानेन यत् फलं लभते नरः ।
ततोऽधिकञ्च लभते पुण्यं कन्याप्रदानतः
॥
दशकन्याप्रदानेन यत् फलं लभते नरः ।
ततोऽधिकञ्च लभते यज्ञ केन नराधिपः
॥
शतयज्ञेन लभते यत् पुण्यं पुण्यकृज्जनः
।
ततोऽधिकञ्च लभते पुत्त्रास्यदर्शनेन च
॥
दर्शने शतपुत्त्राणां यत् पुण्यं लभते नरः
।
तत् पुण्यं लभते नूनं पुण्यवान्
सत्यपालनात् ॥
नहि सत्यात् परो धर्म्मो नानृतात् पातकं
नरः ।
नहि गङ्गासमं तीर्थं न देवः केशवात् परः
॥”
इति ब्रह्मवैवर्त्तपुराणम् ॥ * ॥
अन्यच्च ।
“सत्यमूलं जगत् सर्व्वं सर्व्वं सत्ये
प्रतिष्ठितम् ।
सिद्धं लभन्ते सत्येन ऋषयो वेदपारगाः
॥
सत्येन दीयते कन्या सत्यं जल्पन्ति
ब्राह्मणाः ।
सत्यं वदन्ति राजानः सत्येन वसुधा
धृता ॥
सत्येन गम्यते स्वर्गं मोक्षं सत्येन प्राप्यते
।
श्रीधरस्वामी ॥ * ॥ अपि च ।
“अहमात्मा परं ब्रह्म सत्यं ज्ञानमनन्तकम्
।
विज्ञानमानन्दो ब्रह्म सत्तत्त्वमसि केवलम्
॥
नित्यं शुद्धं बुद्धियुक्तं सत्यमानन्दमद्वयम् ।
योऽसावादित्यपुरुषः सोऽसावहमणण्डतः
।
इति ध्यायन् विमुच्येत ब्रह्मणो
भवबन्धनात् ॥”
इति गारुडे ४९ अध्यायः ॥
तद्वैदिकपर्य्यायः । वट १ श्रत् २ सत्रा ३
अद्धा ४ इत्था ५ ऋतम् ६ । इति षट्
सत्य-
नामानि । इति वेदनिघण्टौ । ३ । १० ॥

**सत्यं**, [म्] व्य, प्रश्नः । स्वीकारः । इति-
रत्नावली ॥

**सत्यः**, पुं, (सते हितः । सत् + यत् ।) श्रीरामः ।
यथा, --
“कौशल्यानन्दनः श्रीशः सत्यो
दशमुस्त्रान्तकः ॥”
इति शब्दरत्नावली ॥
विष्णुः । यथा, --
“औत्तमेऽप्यन्तरे विष्णुः सत्यैः सह
स्यधोत्तमैः ।
सत्यायामभवत् सत्यः सत्यरूपो
जनार्द्दनः ॥”
इति कौर्म्मे ४८ अध्यायः ॥ * ॥
अन्यच्च ।
“सत्यव्रतं सत्यपरं त्रिसत्यं
सत्त्यस्य योनिं निहितञ्च सत्त्ये ।
सत्त्यस्य सत्यमृतसत्यनेत्रं
सत्यात्मकं त्वां शरणं प्रपन्नाः ॥”
इति श्रीभागवते १० स्कन्धे १ अध्यायः
॥ * ॥

|  | सूर्य्यस्तपति सत्येन सोमः सत्येन राजते ॥<br>यमः सत्येन हरति सत्येनेन्द्रो विराजते ।<br>वरुणश्च कुबेरश्च तौ च सत्ये प्रतिष्ठितौ ॥<br>तत् सत्यं मम नश्येत यद्यहं नागमे पुनः ॥”<br>इति वाराहे मथुरामाहात्म्ये अन्धकतीर्थ-प्रभाववर्णननामाध्यायः ॥ * ॥ अन्यच्च । |  |
|---|---|---|

"प्रतिश्रुतं सत्यं कृतमिति हृष्टाः प्रथमं सत्यत्वेन
स्तुवन्ति सत्यव्रतमिति । सत्यं व्रतं सङ्कल्पो यस्य ।
सत्यं परं श्रेष्ठं प्राप्तिसाधनं यस्मिन् तम् ।
त्रिसत्यं त्रिष्वपि कालेषु सृष्टेः पूर्व्वं प्रलयानन्तरं
स्थितिसमये च सत्यं अव्यभिचारेण वर्त्तमानम् ।
तत एवाहुः । सत्त्यस्य योनिमिति । सच्छब्देन
पृथिव्यप्तेजांसि । त्यशब्देन वाय्वाकाशौ । एवं
सच्च त्यश्च सत्त्यं भूतपञ्चकम् । तं सत्त्यमित्या-
चक्षते इति श्रुतेः । तस्य योनिं कारणं अनेन
सृष्टेः पूर्व्वं वर्त्तमानातोक्ता । तथा सत्त्ये तस्मि-
न्नेव निहितं अन्तर्य्यामितया स्थितं अनेन स्थिति-
समये च सत्यत्वमुक्तम् । तथा सत्त्यस्य सत्यं
तस्यैव सत्त्यस्य सत्यं पारमार्थिकं नाशेऽपि
अवशिष्यमानं रूपं अनेन प्रलयेऽप्यवधित्वेन
सत्यत्वं दर्शितं एवं त्रिसत्यत्वमुपपादितम् । तथा
ऋतसत्यनेत्रम् । ऋतञ्च सूनृता वाणी सत्यञ्च
समदर्शनम् । तथा भगवता व्याख्यास्यमानत्वात्
सत्यञ्च समदर्शनमिति ऋतञ्च सूनृता वाणी
कविभिः परिकीर्त्तिता ॥ इति तयोर्नेत्रं नयन-

**सत्यतपाः**, [स्] पुं, (सत्यं तपो यस्य ।) मुनि-
विशेषः । स तु पुरा व्याध आसीत् ततस्तपः
कृत्वा दुर्व्वाससो वरेण वेदादिसर्व्वशास्त्रज्ञो
भूत्वा एतन्नामा बभूव । यथा, --
"तमस्थिशेषं व्याधन्तु क्षुधादुर्ब्बलतां गतम् ।
उवाच वेदाः साङ्गास्ते सरहस्यपदक्रमाः ।
ब्रह्मविद्यापुराणानि प्रत्यक्षाणि भवन्तु ते ॥
एवं प्रादाद्वरं तस्य दुर्व्वासा नाम चाकरोत् ।
भवान् सत्यतपा नाम ऋषिराद्यो भविष्यति ॥"
इति वाराहे सत्यतपौपख्याननामाध्यायः॥

**सत्यधृतिः**, पुं, (सत्या धृतिः ।) ऋषिविशेषः ।
यथा, --
"सरद्वतस्तु दायादमहल्या संप्रसूयते ।
शतानन्दं ऋषिश्रेष्ठं तस्यापि सुमहातपाः ।
तस्य सत्यधृतिर्नाम मुनिर्वेदस्य पारगः ॥"
इति मात्स्ये ४८ अध्यायः ॥
(सत्यशीले, त्रि । यथा, रामायणे । २ । ८२ । ६ ।
"रामस्तथा सत्यधृतिः सतां धर्म्ममनुस्मरन् ।
नाजहात् पितुरादेशं शशी ज्योत्स्नामि-
वोदितः ॥")

**सत्यनारायणः**, पुं, (सत्यो नारायणः ।) देवता-
विशेषः । सत्यपीर इति भाषा । तस्य व्रतकथा
यथा, --
"एकदा मुनयः सर्व्वे सर्व्व लोकहिते रताः ।
सुरम्ये नैमिषारण्ये गोष्ठीञ्चक्रुर्म्मनोरमाम् ॥
तत्रान्तरे महातेजा व्यासविष्यो महायशाः ।
सूतः शिष्यगणैर्युक्तः समायातो हरिं स्मरन् ॥
तमायान्तं समालोक्य सूतं शास्त्रार्थपारगम् ।
नेमुः सर्व्वे समुत्थाय शौनकाद्यास्तपोधनाः ॥
सोऽपि तान् सहसा भक्त्या मुनीन् परमवैष्णवान्
ननाम दण्डवद्भूमौ सर्व्वधर्म्मविदांवरः ॥
वरासने महाबुद्धिस्तैर्द्दत्ते मुनिपुङ्गवैः ।
ज्ञानं संप्राप्य संसारे यः परेभ्यो न यच्छति ।
ज्ञानरूपी हरिस्तस्मै प्रसन्न इव नेक्षते ॥
ज्ञानरत्नैश्च रत्नैश्च परसन्तोषकृन्नरः ।
स ज्ञेयः सुकृतिर्नूनं नररूपधरो हरिः ॥
व्रतेन तपसा किंवा प्राप्यते वाञ्छितं फलम् ।
सर्व्वं तत् श्रोतुमिच्छामि कथयस्व महामते ॥
त्वमेव मुनिशार्दूल वेदवेदाङ्गपारगः ।
त्वदृते नहि वक्तान्यो यतस्त्वं व्यासशासितः ॥
सूत उवाच ।
धन्योऽसि त्वं मुनिश्रेष्ठ त्वमेव वैष्णवाग्रणीः ।
यतः समस्तलोकानां हितं वाच्छसि सर्व्वदा ।
शृणु शौनक वक्ष्यामि यत् त्वया श्रोतुमिष्यते ॥
नारदेनैवमुक्तः सन् भगवान् कमलापतिः ।
सुरर्षये यथैवाह तत् शृणुष्व समाहितः ॥ * ॥
एकदा नारदो योगी परानुग्रहकाङ्क्षया ।
पर्य्यटन् विविधान् लोकान् मर्त्यलोकमुपागतम् ॥
तत्र दृष्टा जनाः सर्व्वे नानादुःखसमन्विताः ।
नानायोनिसमुत्पन्नाः क्लिश्यन्ते पापकर्म्मभिः ॥
केनोपायेन चैतषां दुःखनाशो भवेद्ध्रुवम् ।
इति सञ्चिन्त्य मनसा विष्णुलोकं गतस्तदा ॥
तत्र नारायणं देवं शुक्लवणं चतुर्भुजम् ।
शङ्खचक्रधरं देवं वनमालाविभूषितम्॥
दृष्ट्वा तं देवदेवेशं स्तोतुं समुपचक्रमे ।
नारद उवाच ।
नमस्ते वाङ्मनोऽतीतरूपायानन्तशक्तये।
आदिमध्यान्तहीनाय निर्गुणाय गुणात्मने ॥
सर्व्वेषामादिभूताय भक्तानामार्त्तिनाशिने।
श्रुत्वा स्तोत्रं ततो विष्णुर्नारदं प्रत्यभाषत ॥

साधनं नेतारं प्रवर्त्तकमिति यावत् ।
एवं सर्व्व-
प्रकारेण सत्यात्मकं तां वयं शरणं
प्रपन्ना
इत्यर्थः ।” इति श्रीधरस्वामी ॥ * ॥
अश्वत्थवृक्षः ।
इति राजनिर्घण्टः ॥
नान्दीमुखश्राद्धदेवः । यथा,
“इष्टिश्राद्धे क्रतुर्द्दक्षः सत्यो नान्दीमुखे
वसुः ।
नैमित्तिके कालकामौ काम्येच
धुरिलोचनौ ॥”
इति श्राद्धतत्त्वम् ॥ * ॥
(मुनिविशेषः । यथा, महाभारते । २ ।
४ । १० ।
“असितो देवलः सत्यः सर्पमाली
महाशिराः ॥”
देवगणविशेषः । यथा, मार्कण्डेये ।
७१ । १ -- २
“मन्वन्तरे तृतीयेऽस्मिन् उत्तमस्य
प्रजापतेः ।
देवानिन्द्रानृषीन् भूपान् निबोध गदतो
मम ॥
स्वधामानस्तथा देवा
यथानामानुकारिणः ।
सत्याख्यश्च द्बितीयोऽन्यस्त्रिदशानां
तथा
गणः ॥”)
तपोलोकादूर्द्ध्वलोकः । इति विश्वः
॥ अस्य विव-
रणं सत्यलोकशब्दे द्रष्टव्यम् ॥

**सत्यकं**, क्ली, सत्यङ्कारः । इति केचित् ॥ (सत्यमेव ।

स्वार्थे कन् ।) सत्यम् । तद्युक्ते त्रि ॥
(वृष्टि-
वंशीयविशेषे, पुं, । यथा, भागवते । ९
। २४ । १३ ।
“अनमित्रसुतो योऽन्यः शिनिस्तस्य च
सत्यकः ॥”

**सत्यङ्कारः**, पुं, (सत्यस्य कार इति । कृ + घञ् ।

उवास स सभामध्ये सर्व्वैः शिष्यगणैर्वृतः ॥
तत्रोपविष्टं तं सूतं शौनको मुनिसत्तमः ।
बद्धाञ्जलिरिमां वाचमुवाच विनयान्वितः ॥
शौनक उवाच ।
महर्षे सूत सर्व्वज्ञ कलिकाले समागते ।
केनोपायेन भगवन् हरिभक्तिर्भवेन्नृणाम् ॥
कलौ सर्व्वे भविष्यन्ति पापकर्म्मपरायणाः ।
वेदविद्याविहिनाश्च तेषां श्रेयः कथं भवेत् ॥
कलावन्नगतप्राणा लोकाः स्वल्पायुषस्तथा ।
निधनाश्च भविष्यन्ति नानापीडाप्रपीडिताः
॥
प्रयाससाध्यं सुकृतं शास्त्रेषु श्रूयते द्विज ।
तस्मात् केऽपि करिष्यन्ति कली न सुकृतं
जनाः ॥
सुकृतेषु विनष्टेषु प्रवृत्ते पापकर्म्मणि ।
सवंशाः प्रलयं सर्व्वे गमिष्यन्ति दुराशयाः ॥
स्वल्पश्रमैरल्पवित्तैरल्पकालैश्च सत्तम ॥
यथा भवेन्महापुण्यं तथा कथय सूत नः ॥
यस्योपदेशतः पुण्यं पापं वा कुरुते जनः ।
स तद्भागी भवेन्मर्त्त्य इति शास्त्रेषु निश्चितम्
॥
पुण्योपदेशी सदयः कैतवैश्च विवर्ज्जितः ।
पापायनविरोधी च चत्वारः केशवोपमाः ॥

श्रीभगवानुवाच ।
किमर्थमागतोऽसि त्वं किन्ते मनसि वर्त्तते ।
कथयस्व महाभाग तत् सर्व्वं कथयामि ते ॥
नारद उवाच ।
मर्त्त्यलोके जनाः सर्व्वे नानाशोकसमन्विताः
।
नानायोनिसमुत्पन्नाः पच्यन्ते पापकर्म्मणा
॥
तत् कथं शमयेन्नाथ लघूपायेन तद्वद ।
श्रोतुमिच्छामि तत् सर्व्वं कृपास्ति यदि ते
मयि
श्रीभगवानुवाच ।
साधु पृष्टं त्वया वत्स ! लोकानुग्रहकाम्यया
।
यत् कृत्वा मुच्यते मोहात् तत् शृणुष्व वदामि
ते
व्रतमस्ति महापुण्यं स्वर्गे च भुवि दुर्लभम् ।
तव स्नेहान्मया विप्र प्रकाशीक्रियतेऽधुना ॥
* ॥
सत्यनारायणस्यैतद्व्रतं सम्यग्विधानतः ।
कृत्वा सद्यः सुखं भुक्त्वा परत्र मोक्षमालभेत्
॥
तत् श्रुत्वा भगद्वाक्यं नारदः पुनरब्रवीत् ॥
किं फलं किं विधानञ्च कृतं केनेति वा व्रतम्
।
तत् सर्व्वं विस्तराद्ब्रूहि कदा कार्य्यं हि तद्-
व्रतम् ॥
श्रीभगवानुवाच ।
दुःखशोकादिशमनं धनधान्यविवर्द्धनम् ।
सौभाग्यसन्ततिकरं सर्व्वत्र विजयप्रदम् ॥
यस्मिन् कस्मिन् दिने मर्त्त्यो
भक्तिश्रद्धासमन्वितः
सत्यनारायणं देवं यजेत्तुष्टो निशामुखे ॥

“कारे सत्यागदस्य ।” ६ । ३ । ७० ।
इति
मुम् ।) अवश्यं मयैतत् क्रेतव्यमिति
सत्या-
करणम् । तत्पर्य्यायः । सत्यापनम् २
सत्या-
कृतिः ३ । इत्यमरः ॥ सत्यापना ४ ।
इति
वोपालितः ॥ (यथा, राजतरङ्गिण्याम् ।
६ । ७१ ।
“लेभिरे निधनन्तस्मात् सत्यङ्कारात्
पदातयः ॥”

**सत्यङ्कारकृतः**, त्रि, (सत्यङ्कारेण कृतः ।) अवश्यं
मयेतत् क्र तष्यमिति सत्यं कृत्वा
यद्देयम् ।
वायना इति भाषा । इति मिताक्षरा ॥
(यथा, याज्ञवल्क्यः । २ । ६१ ।
“सत्यङ्कारकृतं द्रव्यं द्विगुणं
प्रतिपादयेत् ॥”)

बान्धवैर्ब्राह्मणैश्चैव सहितो धर्म्मतत्परः ।
नैवेद्यं भक्तितो दद्यात् सपादं भक्ष्यमुत्तमम् ॥
रम्भाफलं घृतं क्षीरं गोधूमस्य च चूर्णकम् ।
अभावे शालिचूर्णं वा शर्करां वा गुडं तथा ॥
सपादसर्व्वभक्ष्याणि एकीकृत्य निवेदयेत् ।
विप्राय दक्षिणां दद्यात् कथां श्रुत्वा जनैः सह ॥
ततश्च बन्धुभिः सार्द्धं विप्रेभ्यः प्रतिपादयन् ।
प्रसादं भक्षयेत् भक्त्या नृत्यगीतादिकं चरेत् ॥
ततः स्तुत्वा गृहं गच्छेत् सत्यनारायणं स्मरन् ।
एवं कृते मनुष्याणां वाञ्छासिद्धिर्भवेद्ध्रुवम् ॥
विशेषतः कलियुगे नान्योपायोऽस्ति भूतले ।
कथामस्य प्रवक्ष्यामि कृतकृत्यो भवेत् द्विजः ॥ * ॥
कश्चित् काशीपुरे ग्रामे आसीद्विप्रश्च निर्द्धनः ।
क्षुधातृष्णाकुलो भूत्वा सततं भ्रमते महीम् ॥
दुःखितं ब्राह्मणं दृष्ट्वा भगवान् ब्राह्मणप्रियः ।
वृद्धब्राह्मणरूपः सन् पप्रच्छ द्विजमादरात् ॥
किमर्थंभ्रमसे विप्र ! महीं कृत्स्नाञ्च दुःखितः ।
तत् सर्व्वं श्रोतुमिच्छामि कथ्यतां यदि रोचते ॥
विप्र उवाच ।
ब्राह्मणोऽतिदरिद्रोऽहं भिक्षार्थं भ्रमते महीम्
बन्धुभिः स्वजनैः सार्द्धं व्रतं कर्त्तुं समुद्यतः ।
एतस्मिन्नेव काले तु काष्ठकेतुः समागतः ।
बहिः काष्ठञ्च संस्थाप्य विप्रस्य मन्दिरं ययौ ॥
तृष्णया पीडितात्मा स विप्रं दृष्ट्वा तथाविधम् ।
प्रणिपत्य द्विजश्रेष्ठं किमिदं क्रियते त्वया ।
कृते किं फलमाप्नोति विस्तराद्वद मे प्रभो ॥
विप्र उवाच ।
सत्यनारायणस्येदं व्रतं सर्व्वेप्सितप्रदम् ।
दुःखशोकादिशमनं सर्वत्र विजयप्रदम् ॥
धनादिसन्ततिकरं सर्वेषामीप्मितप्रदम् ।
यस्य प्रसादान्मे सर्वं धनधान्यादिकं महत् ॥
ततस्तु स व्रतं ज्ञात्वा काष्ठकर्त्ताितिहर्षितः ।
पपौ जलं प्रसादञ्च भुक्त्वा तन्नगरं ययौ ॥
सत्यनारायणं देवं चिन्तयन् स्थिरमानसः ।
काष्ठं विक्रीय नगरे प्राप्स्यते चाद्य यद्धनम् ।
तेनैव सत्यदेवस्य व्रतमद्य करोम्यहम् ॥
इति सञ्चिन्त्य मनसा काष्ठं कृत्वा तु मस्तके ।
जगाम नगरे रम्य धनिनां यत्र सस्थितिः ।
तद्दिने काष्ठमूलञ्च द्विगुणं प्राप्तवानसौ ॥
ततः प्रसन्नहृदयः सुपक्वकदलीफलम् ।
शर्कराञ्च घृतं दुग्धं गोधूमस्य च चूर्णकम् ॥
यत्किञ्चिद्दिवसे तस्य भार्य्या लीलावती सती ।
गर्भयुक्तानन्दचित्ताभवद्धर्म्मपरायणा ॥
पूर्णे गर्भे ततो जाता बालिका चातिनिर्म्मला ।
दिने दिने वर्द्धमाना शुक्लपक्षे यथा शशी ॥
ततो बणिक् सुतायाश्च जातकर्म्मादिकञ्चरन् ।
नाम्ना कलावती चेति तन्नामकरणं कृतम् ॥
ततो लीलावती प्राह स्वामिनं मधुरं वचः ।
न करोषि किमर्थं वा पुरा यच्च प्रतिश्रुतम् ॥
विवाहसमयेऽप्यस्याः करिष्यामि व्रतं प्रिये ।
इति भार्य्यां समाश्वास्य जगाम नगरं प्रति ॥
ततः कलावती कन्या वर्द्धिता पितृवेश्मनि ।
दृष्ट्वा कन्यां ततः साधुर्नगरे बन्धुभिः सह ।
मन्त्रयित्वा द्रुतं दूतं प्रेरयित्वा स धर्म्मवित् ।
विवाहार्थञ्च कन्याया वरं श्रेष्ठं विचारयन् ॥
तेनाज्ञप्तश्च दूतोऽसौ काञ्चनं नगरं ययौ ।
तस्मादेकं बणिक्पुत्त्रं समादायागतो हि सः ॥
दृष्ट्वा तं सुन्दरं बालं बणिक्पुत्त्रं गुणान्वितम् ।
ज्ञातिभिर्बन्धुभिः सार्द्धं परितुष्टेन चेतसा ॥
दत्तवान् साधुराहूय कन्यां विधिविधानतः ।
ततो भाग्यवशात्तेन विस्मृतं व्रतमुत्तमम् ॥
विवाहसमयेऽप्यस्यास्तेन रुष्टोऽभवद्विभुः ॥
ततः कालेन कियता निजधर्म्मविशारदः ।
बाणिज्यार्थं गतः शीघ्रं जामात्रा सहितो बणिक् ॥
रत्नसारपुरे रम्ये गत्वा सिन्धुसमीपतः ।
बाणिज्यं कुरुते साधुर्जामात्रा श्रीमता सह ॥
पुरीं निर्म्माय नगरे चन्द्रकेतोर्नृपस्य च ।
एतस्मिन्नेव काले तु सत्यनारायणः प्रभुः ॥
भ्रष्टप्रतिज्ञमालोक्य शापं तस्मै प्रदत्तवान् ।
अद्यप्रभृति कालञ्च महादुःखं भविष्यति ॥
तस्मिन्नेव दिने राज्ञो धनमादाय तस्करः ।
तेनैव वर्त्मना यातः पृष्ठदेशं विलोकयन् ॥
तत्पश्चाद्धावकान् दूतान् दृष्ट्वा भीतेन चेतसा ।
धनं संस्थाप्य तत्रैव गतः शीघ्रमलक्षितः ॥
ततो दूताः सगायाता यत्रास्ते सज्जनो बणिक् ॥
दृष्ट्वा नृपधनं तत्र बद्ध्वा दूता बणिक्सुतौ ॥
हषयुक्ता धावमाना ऊचुर्नृपसमीपतः ।
तस्करौ द्वौ समानीतौ विलोक्याज्ञापय प्रभो ॥

उपायं यदि जानासि कृपया कथय प्रभो
॥
वृद्ध उवाच ।
सत्यनारायणो देवो वाञ्छितार्थफलप्रदः
।
तस्य त्वं द्विजशार्द्दूल कुरुष्व व्रतमुत्तमम्
॥
यत् कृत्वा सर्व्वदुःखेभ्यो मुक्तो भवति
मानवः ॥
विधानञ्च व्रतस्यास्य विप्रायाभाष्य
यत्नतः ।
सत्यनारायणो वृद्धस्तत्रैवान्तरधीयत ॥
ततः प्रातः करिष्यामि व्रतं मनसि
चिन्तितम्
इति सञ्चिन्त्य विप्रोऽसौ रात्रौ निद्रां न
चाल-
भत् ॥
ततः प्रातः समुत्थाय सत्यनारायणव्रतम्
।
करिष्येऽहञ्च सङ्कल्प्य
भिक्षार्थमगमद्द्विजः ॥
तस्मिन्नेव दिने विप्रः प्रचुरं प्राप्तवान्
धनम् ।
तेनैव बन्धुभिः सार्द्धं सत्यस्य
व्रतमाचरत् ॥
सर्व्वदुःखविनिर्म्मुक्तः
सर्वसम्पत्समन्वितः ।
बभूव स द्विजश्रेष्ठो व्रतस्यास्य प्रभावतः
।
ततः प्रभृतिकालञ्च मासि मासि व्रतं
कृतम् ॥
सूत उवाच ।
एवं नारायणस्येदं व्रतं कृत्वा द्विजोत्तमः
।
सर्वपापविनिर्मुक्तो दुर्ल्लभं मोक्षमाप्नुयात्
॥
व्रतञ्च तद्यथा विप्रः पृथिव्यां सञ्चरिष्यति
।
तदैतत् सर्वदुःखं हि तराणाञ्च विनश्यति
॥
एवं नारायणेनोक्तं नारदाय महात्मने ।

प्रत्येकन्तु सपादञ्च गृहीत्वा गृहमाययौ
।
ततो बन्धून् समाहूय चकार विधिना
व्रतम् ॥
तद्व्रतस्य प्रसादेन
धनपुत्रान्वितोऽभवत् ।
इह लोके सुखं भुक्त्वा चान्ते सत्यपुरं
ययौ ॥”
इति श्रीस्कन्दपुराणे रेवाखण्डे
सत्यनारायण-
कथायां विप्रकाष्ठकेतुसंवादो नाम २
अध्यायः ॥
सूत उवाच ।
“पुनरन्यत् प्रवक्ष्यामि शृणुध्वं
मुनिसत्तमाः ।
आसीदुल्कामुखो नाम नृपतिर्ब्बलिनां
वरः ॥
जितेन्द्रियः सत्यवादी ययौ देवालयं
प्रति ।
दिने दिने धनं दत्त्वा द्विजान् सन्तोषयेत्
सुधीः
भार्य्या तस्य प्रमुग्धा च सरोजवदना
सती ।
सस्मितास्या शरदिन्दुं सकटाक्षं च
बिभ्रती ॥
काञ्चीञ्च बिभ्रती श्यामा
मालतीमाल्यभूषिता
भद्रशीला व्रतं सत्यं
सिन्धुतीरेऽकरोन्मुने ॥
एतस्मिन्नन्तरे नत्र साधुः कोऽपि
समागतः ।
बाणिज्यार्थं बहुधनै रत्नाद्यैः परिपूरितः
॥
नावं संस्थाप्य तत्तीरे जगाम तत्तटं
प्रति ।
दृष्ट्वा तत्र व्रतं सम्यक् पप्रच्छ
विनयान्वितः ॥
साधुरुवाच ।
किमिदं कुरुषे राजन् भक्तियुक्तेन
चेतसा ।

ते नृपाज्ञां समदाय दृढं बद्ध्वा तु तावुभौ ।
स्थापितौ द्वौ महादुर्गे कारागरेऽविचारयन् ॥
सूत उवाच ।
मायया सत्यदेवस्य न श्रुतञ्च तयोर्वचः ।
ततस्तयोर्धनं यच्च गृहीतं चन्द्रकेतुना ॥
तच्छापाच्च तयोर्गेहे भार्य्या च दुःखिताभवत् ।
चौरेणापहृतं सर्व्वं गृहे यच्च स्थितं धनम् ॥
आधिव्याधिसमायुक्ता क्षुत्पिपासातिपीडिता ।
अन्नचिन्तापरा भूत्वा भ्रमते च गृहे गृहे ।
ततः कलावती कन्या बभ्राम प्रतिवासरे ॥
एकस्मिन् दिवसे रात्रौ क्षुधार्त्ता द्विजमन्दिरम् ।
गत्वापश्यद्व्रतं तत्र सत्यनारायणस्य सा ॥
उपविश्य कथां श्रुत्वा वरं प्रार्थयती मुदा ।
प्रसादभक्षणं कृत्वा ययौ रात्रौ गृहं प्रति ॥

मयापि कथितं विप्र किमन्यत् कथयामि ते ॥”
इति श्रीस्कन्दपुराणे रेवाखण्डे सत्यनारायण-
विप्रसंवादो नाम १ अध्यायः ॥ * ॥
शौनक उवाच ।
“तस्माद्विप्र व्रतं केन पृथिव्यां चरितं मुने ।
तत् सर्वं श्रोतुमिच्छामि श्रद्धास्माकं प्रजायते ॥
सूत उवाच ।
शृणुध्वं मुनयः सर्वे तस्माद्येन कृतं भुवि ।
एकदास द्विजवरो यथाविभवविस्तरैः ॥

प्रकाशं कुरु तत् सर्वं श्रोतुमिच्छामि सम्प्रति ॥
राजोवाच ।
पूजनं क्रियते साधो विष्णोरतुलतेजसः ।
व्रतञ्च स्वजनैः सार्द्धं पुत्राद्रिप्राप्तये मया ॥
प्रत्युवाच ततो नत्वा राजानं मधुरं वचः ।
सत्यं कथय मे राजन् व्रतमेतत् करोम्यहम् ॥
ममापि सन्ततिर्नास्ति सत्यमेतत् सुतव्रतम् ।
ततो निवृत्त्य बाणिज्यात् सानन्दं गृहमागतः ॥
भार्य्यायै कथित सर्व्वं व्रतञ्च सन्ततिप्रदम् ।
तदा व्रतं करिष्यामि यदा मे सन्ततिर्भवेत् ॥

ततो लीलावती कन्यां भर्त्सयामास तां भृशम्
।
पूत्रि । रात्रौ स्थिता कुत्र किन्ते मनसि वत्तते
॥
द्विजालये व्रतं भातर्दृष्टं वाञ्छितसिद्धिदम् ॥
तत् श्रुता कन्यकावाक्यं व्रतं कर्त्तुं समुद्यता ।
ससुता सा बणिग्भार्य्या सत्यनारायणस्य च ॥
व्रतं चक्रे च वै साध्वी बन्धुभिः स्वजनैः सह ।
भर्त्तृजामातरौ क्षिप्रमागच्छेतां ममाश्रमम् ॥
इति देवं वरं याचे सत्यदेवं पुनः पुनः ।
अपराधन्तु भर्त्तुर्म्मे जामातुः क्षन्तुमर्हसि ॥
व्रतेन तस्यास्तुष्टोऽसौ सत्यनारायणः प्रभुः ।
दर्शयामास स्वप्नं हि चन्द्रकेतुं नृपोत्तमम ॥
वन्दिनौ मोचय प्रातर्बणिजौ नृपसत्तम् ! ।
देयं धनञ्च तत् सर्व्वं विधिना द्विगुणीकृतम् ॥
नो चेत् त्वां नाशयिष्यामि सराज्यधनपुत्त्रकम्
।
एवमाभाष्य राजानं ध्यानगम्योऽभवत् प्रभुः ॥
ततः प्रभातसमये राजा च स्वजनैः सह ।
उपविश्य सभामध्ये प्राह दूतजनं प्रति ॥
बद्धौ महाजनौ शीघ्रं मोचयध्वं बणिक्सुतौ ।
इति राज्ञो वचः श्रुत्वा मोचयित्वा महाजनौ ॥
समानीय नृपस्याग्रे प्रोचुश्च विनयान्विताः ।
आनितौ द्वौ बणिक्पुत्त्रौ मुक्तौ निगडबन्धनात्
॥
ततो महाजनौ नत्वा चन्द्रकेतुं नृपोत्तमम् ।
स्मृत्वा च पूर्व्ववृत्तान्तं विस्मयाद्भयविह्वलौ ॥
राजा बणिक्सुतौ वीक्ष्य प्रोवाच सादरं वचः ।
दैवात् प्राप्तं महत् कष्टमिदानीं नास्ति ते भयम्
॥
इदानीमेव मुक्तस्त्वं क्षुरकर्म्मादिकञ्चर ॥
ततो नृपवरः श्रीमान् स्वर्णरत्नविभूषणैः ।
अलङ्कृत्य बणिक्पुत्त्रौ वचसाप्रीणयद्भृशम् ।
पुरानीतञ्च यद्द्रव्यं द्विगुणीकृत्य दत्तवान् ॥
प्रोवाच तौ ततो राजा गच्छ साधो निजा-
श्रमम् ।
राजानं प्रणिपत्याह गन्तव्यं त्वत्प्रसादतः ॥
यात्रां कृत्वा ततः साधुर्म्मङ्गलाचारपूर्व्विकाम्
।

जामातुश्च वचः श्रुत्वा तत्सकाशं
गतस्तदा ॥
दृष्ट्वा च दण्डिनं भक्त्या नत्वा प्रोवाच
सादरम् ।
क्षमस्व चापराधं मे यदुक्तं तव सन्निधौ ॥
मया दुरात्मना देव मुग्धोऽहं तव मायया ।
यदुक्तं तद्वचो नाथ दुष्टं मे क्षन्तुमर्हसि ॥
यतः परकृताः सर्वे क्षमासारा हि साधवः ।
पुनः पुनस्ततो नत्वा रुरोद शोकविह्वलः
॥
तमुवाच ततो दण्डी विलपन्तं विलोक्य च
।
मा रोदीः शृणु मे वाक्यं मम पूजापराङ्मुखः
॥
मामवज्ञाय दुर्बुद्धे ! लब्धं दुःस्नं मुहुर्मुहुः ।
तत् श्रुत्वा भगवद्वाक्यं स्तुतिं कर्त्तुं
समुद्यतः ॥
साधुरुवाच ।
त्वन्मायामोहिताः सर्व्वे
ब्रह्माद्यास्त्रिदिवौकसः ।
न जानन्ति गुणं रूपं तवाश्चर्य्यमिदं प्रभो
॥
मूढोऽहं त्वां कथं जाने मोहितस्तव
मायया ।
प्रसीद पूजयिष्यामि यथाविभवविस्तरैः ॥
पुत्त्रं वित्तञ्च मच्चित्तं पाहि मां शरणागतम्
॥
श्रुत्वा भक्तियुतं वाक्यं परितुष्टो जनार्द्दनः
।
वरञ्च वाञ्छितं दत्त्वा तत्रैवान्तरधीयत ॥
ततोऽसौ नावमारुह्य दृष्ट्वा
रत्नादिपूरिताम् ।
कृपया सत्यदेवस्य यत् फलं वाञ्छितं
मम ॥
इत्युक्त्वा स्वजनैः सार्द्धं पूजां कृत्वा
यथाविधि ।
हर्षेण महता साधुः प्रयाणं चाकरोत् द्विजः
॥
नावं संयोज्य वेगेन स्वदेशमगमत्तदा ॥

अतिशोकेन सन्तप्तश्चिन्तयामास
धर्म्मवित् ॥
हृतो हि सत्यदेवेन जामाता सत्यमायया
।
सत्यपूजां करिष्यामि
यथाविभवविस्तरैः ॥
इति सर्व्वान् समाहूय कथितञ्च
मनोरथम् ।
भत्वा च दण्डवद्भूमौ सत्यदेवं पुनः पुनः
॥
ततस्तुष्टः सत्यदेवो गगनाद्वणिजं प्रति ।
जगाद वचनञ्चेदं नैवेद्यमवमन्य च ।
आगता स्वामिनं द्रष्टुमतोऽदृश्योऽभवत्
प्रभुः ॥
गृहं गत्वा प्रसादञ्च भुक्त्वा चायाति सा
पुनः ।
लब्धभर्त्तृसुखा साधो भविष्यति न
संशयः ॥
ततश्च प्राणदं वाक्यं श्रुत्वा
गगनमण्डलात् ।
क्षिप्रं तदा गृहं गत्वा प्रसादं प्रतिभूज्य च
॥
अपश्यत् पुनरागत्य पतिं नावं जनैः सह
।
ततः कलावती तुष्टा जगाद पितरं प्रति
॥
एहि तात गृहं याहि विलम्बं कुरुषे कथम्
।
तत् श्रुत्वा कन्यकावाक्यं
सन्तुष्टोऽभूद्वणिकसुतः
पूजनं सत्यदेवस्य कृत्वा विधिविधानतः
।
धनैर्बन्धुगणैः सार्द्धं जगाम निजमन्दिरम्
॥
पौर्णमास्याञ्च संक्रान्त्यां पूजां कृत्वा
यथाविधि ।
इह लोके सुखं भुक्त्वा चान्ते सत्यपुरं
ययौ ॥”

ब्राह्मणेभ्यो धनं दत्त्वा सहर्षो नगरं ययौ ॥
कियद्दूरे गते साधौ सत्यनारायणः प्रभुः ।
जिज्ञासां कृतवान् साधो किमस्ति तरणौ तव ॥
ततो महाजनो मत्तो हेलया च प्रहस्य च ।
कथं पृच्छसि भो दण्डिन ! मुद्रां किं लब्धुमिच्छसि ॥
लतापत्रादिकञ्चैव वर्त्तते तरणौ मम ।
निष्ठुरञ्च वचः श्रुत्वा सत्यं भवतु ते वचः ॥
एवमुक्त्वा गतः शीघ्र दण्डी तस्य समीपतः ।
कियद्दूरे ततो गत्वा स्थितः सिन्धुसमीपतः ॥
गते दण्डिनि साधुश्च कृतनित्यक्रियस्तदा ।
उत्थितस्तरणीं दृष्ट्वा विस्मयं परमं ययौ ॥
लतापत्रादिकं दृष्ट्वा मूर्च्छितो न्यपतद्भुवि ।
लब्धसंज्ञो बणिक्पुत्रस्ततश्चिन्तापरोऽभवत् ॥
श्वश्रुरं दुहितुः कान्तो वचनञ्चेदमब्रवीत् ॥
जामातोवाच ।
किमथे कुरुते शोकं शापादेतच्च दण्डिनः ।
शक्यते तेन सर्व्वं हि कर्त्तुं हर्त्तुं न संशयः ॥
ततस्तच्छरण यामो वाञ्छितार्थो भविष्यति ।
ततो जामातरं प्राह पश्य वत्स पुरीं मम ।
दूतञ्च प्रेरयामास निजवित्तस्य रक्षकम् ॥
ततोऽसौ नगरं गत्वा साधुभार्य्यां विलोक्य च ।
उवाच वाञ्छितं वाक्यं नत्वा बद्धाञ्जलिस्तदा ॥
निकटे नगरस्यैव जामात्रा सहितो बणिक् ।
आगतौ बन्धुवर्गैश्च धनैर्बहुविधैस्तथा ॥
श्रुत्वा दूतमुखाद्वाक्यं महाहर्षयुता सती ।
सत्यपूजां ततः कृत्वा प्रोवाच तनुजां प्रति ।
व्रजामि शीघ्रमागच्छ साधुसन्दर्शनाय च ॥
इति मातृवचः श्रुत्वा व्रतं कृत्वा समाप्य च ।
प्रसादं संपरित्यज्य गता सा च पतिं प्रति ॥
तेन रुष्टः सत्यदेवो भर्त्तारं तरणीन्तथा ।
संहृत्य च धनैः सार्द्धं जले तस्मिन् समर्पयत् ॥
ततः कलावतीकन्या नालोक्य बणिजं पतिम् ।
शोकेन महता तत्र रुदन्ती चापतद्भुवि ॥
दृष्ट्वा तथाविधां कन्यां न दृष्ट्वा तत्पतिं तरीम् ।
भीतेन महता साधुः किमाश्चर्य्यमिदं महत् ॥
विचिन्त्यमानास्ते सर्व्वे बभूबुस्तरिवाहकाः ।
ततो लीलावती साध्वी दृष्ट्वा तद्विह्वला सती ।
विललापातिदुःखेन भर्त्तारञ्चे दमब्रवीत् ॥
इदानीं नौकया सार्द्धमदृश्योऽभूदलक्षितम् ।
न जाने केन दैवेन हेलया वापहारितम् ॥
सत्यदेवस्य माहात्म्यं किं ज्ञातुं नहि शक्यते ।
इत्युक्त्वा विललापाथ तत्रस्या स्वजनैः सह ॥
इति श्रीस्कन्दपुराणे रेवाखण्डे श्रीसत्यनारायण कथायां बणिक्साधुमोक्षवर्णनो नाम ३ अध्यायः ॥ * ॥
सूत उवाच ।
“अथ चान्यत् प्रवक्ष्यामि शृणुध्वं मुनिसत्तमाः ।
आसीद्वंशध्वजो राजा प्रजापालनतत्परः ॥
प्रसादं सत्यदेवस्य त्यक्त्वा दुःखमवाप सः ।
एकदा स यनं गत्वा हत्वा च विविधान् मृगान्
आगत्य वटमूले च दृष्ट्वा सत्यस्य पूजनम् ।
गोपाः कुर्व्वन्ति सन्तुष्टा भक्तियुक्ताः सबान्धवाः
राजा दृष्ट्वा तु दर्पेण नागतो न ननाम सः ।
ततो गोपगणाः सर्व्वे प्रसादं नृपसन्निधौ ॥
संस्थाप्य पुनरागत्य भुक्त्वा सर्व्वे यथेप्सितम् ।
ततः प्रसादं संत्यज्य राजा दुःखमवास सः ॥
तस्य पुत्त्रशतं नष्टं धनधान्यादिकञ्च यत् ।
सत्यदेवेन तत् सर्व्वं नाशितं मम निश्चितम् ॥
अतस्तत्रैव गच्छामि यत्र देवस्य पूजनम् ।
मनसेति विनिश्चित्य ययौ गोपालसन्निधिम् ॥
ततोऽसौ सत्यदेवस्य पूजां गोपगणैः सह ।
भक्तिश्रद्धान्वितो भूत्वा चकार विधिवन्नृपः ॥
सत्यदेवप्रसादेन धनपुत्त्रान्वितोऽभवत् ।
इह लोके सुखं भुक्त्वा चान्ते विष्णुपरं ययौ ॥

|  |  |  |
| --- | --- | --- |
|  | ततो लीलावती कन्यां क्रोडे कृत्वा रुरोद च ।<br>ततः कलावती कन्या नष्टे स्वामिनि दुःखिता ॥<br>गृहीत्वा पादुकां तस्य अनुगन्तुं मनो दधे ।<br>कन्यायाश्चरितं दृष्ट्वा सभार्य्यः सुजनो बणिक् ॥ | य इदं कुरुते सत्यव्रतं परमदुर्लभम् ।<br>शृणोति च कथां पुण्यां भक्तिमुक्तिफलप्रदाम् ॥<br>धनधान्यादिकं तस्य भवेत् सत्यप्रसादतः ।<br>दरिद्रो लभते वित्तं बद्धो मुच्येत बन्धनात् ॥<br>भीतो भयात् प्रमुच्येत सत्यमेतन्न संशयः ।<br>ईप्सितञ्च फलं भुक्त्वा चान्ते सत्यपुरं व्रजेत् ॥<br>इति वः कथितं विप्राः सत्यनारासणव्रतम् ।<br>यत् कृत्वा सर्व्वदुःखेभ्यो मुक्तो भवति मानवः ॥<br>विशेषतः कलियुगे सत्यपूजाकथाफलम् ।<br>सत्यनारायणं केचित् सत्यदेवं तथापरे ॥ |

नानारूपधरो भूत्वा सर्व्वेषामीप्सितप्रदः ।
भविष्यति कलौ सत्यव्रतरूपी सनातनः ॥
य इदं पठते नित्यं शृणोति मुनिसत्तमाः ।
तस्य नश्यन्ति पापानि सत्यदेवप्रसादतः ॥"
इति श्रीस्कन्दपुराणे रेवाखण्डे सत्यनारायण-
कथानाम ४ अध्यायः ॥ * ॥ इति श्रीसत्यनारा-
यणव्रतकथा समाप्ता ॥ क्वचित् पुस्तके अध्याय-
नाम नास्ति । क्वचित् भविष्यपुराणे इति कृत्वा
एतत्कथा लिखिता ॥ * ॥ अथ सत्यनारायण
पूजापद्धतिः । आदौ स्वस्तिवाचनपूर्व्वकं सङ्कल्पं
कुर्य्यात् । अद्येत्यादि अमुकतिथौ रात्रौ
अर्मुकगोत्रः श्रीअमुकदेवशर्म्मा अमुककामः
गश्चेशादिदेवतापूजापूर्व्वकश्रीसत्यनारायणपूज-
नकथाश्रवणमहं करिष्ये । ततः सूक्तं पठेत् ।
तत आसनशुद्ध्यादिकं कृत्वा गणेशादिदेवत्रा-
नवग्रहदिक्पालान् पूजयेत् । लक्ष्मीसरस्वत्या-
दिपुरुषानादिपुरुषश्रीरामलक्ष्मणपूजांकृत्वा
यवतिलैः सत्यनारायणमावाहयेत् । प्रणवव्या-
हृतीः समुच्चार्य्य भगवन् सत्यनारायण इहागच्छ
इहागच्छ इह तिष्ठ इह तिष्ठ मम पूजां गृहाण
इत्यादिना आवाह्य पुष्पं गृहीत्वा ध्यायेत् ।
"ध्यायेत् सत्यं गुणातीतं गुणत्रयसमन्वितम् ।
लोकनाथं त्रिलोकेशं पीताम्बरधरं हरिम् ॥
इन्दीवरदलश्यामं शङ्खचक्रगदाधरम् ।
नारायणं चतुर्ब्बाहुं श्रीवत्सपदभूषितम् ।
गोविन्दं गोकुलानन्दं जगतः पितरं गुरुम् ॥"
इति ध्यात्वा एतत् पाद्यं सत्यनारायणाय नमः ।
अर्घ्यमन्त्रस्तु ।
"व्यक्ताव्यक्तस्वरूपाय हृषीकपतये नमः ।
मया निवेदितो भक्त्या अर्घ्योऽयं प्रतिगृह्य-
ताम् ॥"
एषोऽर्घ्यः श्रीसत्यनारणाय नमः । पुष्पा-
ञ्जलिं गृहीत्वा ।
"नमस्ते विश्वरूपाय शङ्खचक्रधराय च ।
पद्मनाभाय देवाय हृषीकपतये नमः ।
नमोऽतन्तस्वरूपाय त्रिगुणात्मविभासिने ॥"
नैवेद्यं गृहीत्वा ।
"त्वदीयं वस्तु गोविन्द तुभ्यमेव समर्पितम् ।
गृहाण सुमुखो भूत्वा प्रसीद पुरुषोत्तम ॥"

**सत्यपुरं**, क्ली, (सत्यं पुरम् ।) विष्णुलोकः । यथा,

"ईप्सितञ्च फलं भुक्त्वा चान्ते सत्यपुरं
वसेत् ।
इति वः कथितं विप्राः
सत्यनारायणव्रतम् ॥"
इति
स्कन्दपुराणीयसत्यनारायणव्रतकथा॥

**सत्यफलः**, पुं, (सत्यं फलं यस्य ।) विल्ववृक्षः ।

इति राजनिर्घण्टः ॥

**सत्यभामा**, स्त्री, कृष्णपत्नीभेदः । इति शब्दरत्ना-

वली ॥ सा च
श्रीकृष्णस्याष्टमहिष्यन्तर्गत-
महिषीविशेषः । यथा, --
अष्टौ महिष्यस्ताः सर्व्वा रुक्मिण्याद्या
महा-
त्मनः ।
रुक्मिणी सत्यभामा च कालिन्दी च
शुचि-
स्मिता ॥
मित्रविन्दा जाम्बवती नाग्नजिती सुलक्षणा
।
सुशीला नाम तन्वङ्गी महिष्यश्चाष्टमाः
स्मृताः ॥"
इति पाद्मे उत्तरखण्डे ६९ अध्यायः ॥

**सत्यभारतः**, पुं, (सत्यं भारतं यस्य ।) वेदव्यासः
।

इति त्रिकाण्डशेषः ॥

**सत्ययुगं**, क्ली, (सत्यं युगम् ।) चतुर्युगानां प्रथम-

युगम् । यथा, --
"कृतं सत्ययुगं त्रेताग्नायी द्वापरयज्ञियौ ।
कलिर्झर्झरकः कर्म्मयुगं पापन्तु पातकम्
॥"
इति त्रिकाण्डशेषः ॥ * ॥
तस्य कृतनामकारणं यथा, --
"तदुपाधिकृतः कालो ब्रह्मणो
जन्ममृत्युकृत् ।
कुरुक्षेत्रं तीर्थम् । ग्रहांशो ब्राह्मणः ।
मज्जा-
गताः प्राणाः । इच्छामृत्युः ।
एकविंशति-
हस्तपरिमितो मानवदेहः । लक्षवर्षं
परमायुः ।
सुवर्णनिर्म्मितभोजनपात्रम् ।
सत्ययुगाब्दाः
१७२८००० । सत्ययुगस्य राजा
बलिः वेणः
मान्धाता पुरोरवा धुन्धुमारिकः
कार्त्तवीर्य्यः
एते षट् चक्रवर्त्तिनः ॥ सत्ययुगस्य
लक्षणम् ।
"सत्यधर्म्मरतो नित्यं तीर्थानाञ्च
सदाश्रयम् ।
नन्दन्ति देवताः सर्व्वाः सत्ये
सत्यपरा नराः ॥"
तत्र तारकब्रह्मनाम यथा, --
"नारायणपरा वेदा नारायणपराः
क्षराः ।
नारायणपरा मुक्तिर्नारायणपरा गतिः
॥"
इति मुद्राङ्कितपञ्जिकातः संगृहीतम्
॥

**सत्ययुगाद्या**, स्त्री, (सत्ययुगस्य आद्या तिथि-

रित्यर्थः ।) कृतयुगारम्भकतिथिः ।
सा तु
वैशाखशुक्लतृतीया । तद्विवरणं
युगाद्याशब्दे
द्रष्टव्यम् ॥

**सत्ययौवनः**, पुं, (सत्यमेव यौवनमिव यस्य ।)

विद्याधरः । इति जटाधरः ॥

**सत्यरतः**, पुं, (सत्ये रतः ।)
सत्यव्रतराजपुत्त्रः ।

यथा, --
"त्रिधन्वनः सुतो जातस्त्रय्यारुण
इति स्मृतः ।

ततः अञ्जलिं बद्ध्वा पठेत् ।
"अच्युतं पुण्डरीकाक्षं नृसिंहं दैत्यसूदनम् ।
हृषीकेशं जगन्नाथं वागीशं वरदायकम् ॥
गुणत्रयं गुणातीतं गोविन्दं गरुडध्वजम् ।
जनार्द्दनं जनानन्दं जानकीवल्लभं जयम् ॥
प्रणमामि सदा सत्यनारायणमतः परम्
दुर्गमे विषमे घोरे शत्रुभिः परिपीडिते ॥
विविधापत्सु दुष्टेषु तथान्ये ष्वपि यद्भयम् ।
नामान्येतानि सङ्कीर्त्त्यं ईप्सितं फलमाप्नुयात् ॥
सत्यनाराणं देवं वन्देऽहं कामदं शुभम् ।
लीलया च ततं विश्वं येन तस्मै नमो नमः ॥"
ततो दक्षिणान्दद्यात् । अच्छिद्रावधारणं कुर्य्यात् । इति सत्यनारायणपूजापद्धतिः ॥

शतसंवत्सरे ब्रह्मा लयं प्राप्नोति हि त्वयि ॥
लयान्ते तन्नाभिमध्यादुत्थितः सृजति प्रभुः ।
ततः कृतयुगान्तेऽहं कालं सद्धर्म्मपालकम् ॥
कृतकृत्याः प्रजा यत्र तन्नाम्ना मां कृतं विदुः ॥"
इति कल्किपुराणे १९ अध्यायः ॥ * ॥
तद्धर्म्मा यथा, --
"धर्म्मश्चतुष्पादमवत् कृते पूर्णे जगत्त्रयम् ।
देवा यथोक्तफलदाश्चरन्ति भुवि सर्व्वतः ॥
सर्व्वशस्या वसुमती हृष्टपुष्टजनावृता ।
शाठ्यचौर्य्यानृतैर्हीना आधिव्याधिविवर्ज्जिता ॥
विप्रा वेदविदह् सुमङ्गलयुता नार्य्यस्तु चर्य्याव्रतैः
पूजाहोमपराः पतिव्रतधरा यागोद्यताः क्षक्षियाः ।
वैश्या वस्तुषु धर्म्मतो विनिमयैः श्रीविष्णुपूजापराः
शूद्रास्तु द्विजसेवनाद्धरिकथालापाः सपर्य्या-
पराः ॥"
इति कल्किपुराणे २८ अध्यायः ॥ * ॥
तद्युगमानं यथा,
"चत्वारि त्रीणि द्वे चैकं कृत्यादिषु यथाक्रमम्
संख्यातानि सहस्राणि द्विगुणानि शतानि च ॥"
इति श्रीभागवते १२ स्कन्धे ४ अध्याये २ श्लोक-
टीकायां श्रीधरस्वामी ॥
तस्योत्पत्त्यादिर्यथा ।
वैशाखशुक्लपक्षे तृतीयायां रविवारे सत्य-
युगोत्पत्तिः । तत्रावतारचतुष्टयं मत्स्यकूर्म्म-

तस्य सत्यव्रतो नाम तस्मात् सत्यरतः स्मृतः ॥
तस्य पुत्त्रो हरिश्चन्द्रो हरिश्चन्द्राच्च रोहितः ।"
इति मात्स्ये १२ अध्यायः ॥

**सत्यलोकः**, पुं, (सत्यो लोकः ।) सप्तलोकान्तर्गत-
लोकविशेषः । यथा, --
"षड्गुणेन तपोलोकात् सत्यलोको विराजते ।
अपुनर्मारका यत्र ब्रह्मलोको हि स स्मृतः ॥"
इति विष्णुपुराणे २ अंशे ७ अध्यायः ॥
जनलोकापेक्षयैव षड्गुणेन द्वादशकोट्युच्छ्रा-
येण तपोलोकानन्तरं सत्यलोकः । न तु तपो-
लोकात् षड्गुणेनेति मन्तव्यम् । तथा सत्यष्ट-
चत्वारिंशत्कोट्युच्छ्रायत्वेन ब्रह्माण्डे तस्याव-
काशाभावात् । सूर्य्याण्डगोलयोरन्तःकोट्यःस्युः
पञ्चविंशतिरिति शुकोक्तेः । सत्यलोक एव कक्षा-
भेदेन ब्रह्मधिष्ट्यात् परं वैकुण्ठलोकादि ज्ञेयम् ।
एवञ्च भूतलादूद्र्ध्वं पञ्चदशलक्षोत्तरास्त्रयोविं-
शतिः कोट्यो भवन्ति । सत्यलोकादूद्र्ध्वञ्च पञ्च-
दशलक्षोनकोटिद्वयादण्डकटाहइति ज्ञेयम् ।
अपुनर्मारकाः पुनर्म्मृत्युशून्याः । इति तट्टीका ॥

**सत्यवचाः**, [स्] पुं, (सत्यं वचो यस्य ।) ऋषिः ।
इत्यमरः ॥ सत्यवादिनि, त्रि ॥

**सत्यवती**, स्त्री, (सत्यमस्त्यस्येति । सत्य + मतुप् ।

|  | वराहनृसिंहाः । पूर्णं पुण्यम् । पापं नास्ति । | मस्य वः । ङीप् ।) व्यासमाता । तत्पर्य्यायः । काली २ योजनगन्धा ३ गन्धकाली ४ झषो- दरी ५ व्यासमाता ६ सत्या ७ चित्राङ्गदप्रसुः ८ विचित्रवीर्य्यसूः ९ कस्त्रा १० दासेयी ११ दास- नन्दिनी १२ । इति शब्दरत्नावली ॥ (यथा, भागवते । १ । ३ । २१ । “ततः सप्तदशे जातः सत्यवत्यां पराशरात् । चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः ॥”) |
|---|---|---|

नारदपत्नी । (यथा, महाभारते । ५ । ११७ । १५ ।
"दमयन्त्यां नलश्चैव सत्यवत्याञ्च नारदः ॥")
ऋचीकमुनिपत्नी । इति मेदिनी ॥ (यथा, हरि-
वंशे । २७ । १८ ।
"गाधेः कन्या महाभागा नाम्ना सत्यवती
शुभा ।
तां गाधिः काव्यपुत्त्राय ऋचीकाय ददौ प्रभुः ॥"
सत्यविशिष्टे, त्रि ॥ यथा, भागवते । ४ । २१ । ४६ ।
"पुत्त्रेन जयते लोकानिति सत्यवती श्रुतिः ।
ब्रह्मदण्डहतः पापो
यद्वेणोऽत्यतरत्तमः ॥")
ऋचीकपत्न्याः प्रमाणान्तरं यथा, --
"ब्रह्मपुत्त्रो भृगुर्नाम
ऋचीकस्तत्सुतोऽभवत्।
स भार्य्यार्थी चरन् भूमौ कान्यकुब्जं गतः पुरा ॥
ददर्श चारण्यगतं जह्नोर्वंशसमुद्भवम् ।
कुशिकस्य सुतं गाधिं तपस्थं नृपसत्तमम् ॥
अरण्यस्थस्य तस्याथ पुत्त्रकामस्य भूभृतः ।
सभार्य्यस्य सुता जज्ञे देवकन्यासमा गुणैः ॥
ऋचीको भृगुपुत्त्रस्तां भार्य्यार्थं समयाचत ।
गाधिं नृपतिशार्द्दूलं स चोवाच नृपो मुनिम् ॥
एकतः श्यामकर्णानामश्वानां चन्द्रवर्च्चसाम् ।
सहस्रमेकं यो दद्यात्तस्मै पुत्त्री प्रतीयते ॥
ऋचीक उवाच ।

अथ स्नानदिनेऽश्वत्थमालिङ्ग्यारक्तकं चरुम् ।
अद्यात् सत्यवती तस्या माता फल्गुं सितं चरुम् ॥ * ॥
परिवर्त्तन्तु तं ज्ञात्वा दिव्यज्ञानो भृगुर्म्मुनिः ।
अथागत्य स्नुषां तान्तु वचनञ्चेदमब्रवीत् ॥
विपर्य्ययस्त्वया भद्रे वृक्षालिङ्गनकर्म्मणि ।
तथा चरुप्राशने च तत्रेदन्ते भविष्यति ॥
ब्राह्मणः क्षत्त्रियाचारस्तव पुत्त्रो भविष्यति ।
क्षत्त्रियो ब्राह्मणाचारो मातुस्ते भविता सुतः ॥
इत्युक्त्वा भृगुणा साध्वी तदा सत्यवती भृगुम् ।
पुनः प्रसादयामास पौत्त्रो मेऽस्त्विति तादृशः ।
एवमस्त्विति प्रोक्त्वा स तत्रैवान्तर्द्दधे भृगुः ॥
अथ काले सुतं दीप्तं जमदग्निञ्च गाधिजा ।
सुषुवे जननी तस्या विश्वामित्रं तपोधनम् ॥
जमदग्निस्ततो वेदान् चतुरः प्राप मा चिरम् ।
प्रादुरासद्धनुर्व्वेदः स्वयं तस्मिन् महात्मनि ॥
विश्वामित्रोऽपि सकलान् वेदानपि तथाचिरात्
धनुर्व्वेदं तथा कृत्स्नं विप्रश्चाभूत्तपोधनः ॥
जाज्वल्यमानस्तेजस्वी जमदग्निर्महातपाः ।
वेदैस्तपोभिः स मुनीनत्यक्रामच्च सूर्य्यवत् ॥"
इति श्रीकालिकापुराणे जामदग्न्योपाख्याने ८४ अध्यायः ॥

**सत्यवतीसुतः**, पुं, (सत्यवत्याः सुतः ।) व्यासः ।
इति शब्दरत्नावली ॥ (यथा, महाभारते । १ । १५७ । १२ ।
"एवं स तान् समाश्वास्य व्यासः सत्यवतीसुतः ।
एकचक्रामभिगतः कुन्तीमाश्वासयत् प्रभुः ॥"
जमदग्निः । इति पुराणम् ॥)

**सत्यवाक्**, [च्] पुं, (सत्या वाक् यस्य ।) ऋषिः ।
अस्य विशेषवृत्तान्तस्तु तत्रैव २९२ अध्याय-
मारभ्य द्रष्टव्यः ॥ * ॥ चाक्षुषमनुपुत्तविशेषः ।
यथा, भागवते । ४ । १३ । १६ ।
"स चक्षुः सुतमाकुत्यां पत्न्यां मनुमवाप ह ।
मनोरसूत महिषी विरजान्नड्वला सुतान् ।
पुरुऽ कृत्स्नमृतं द्युम्नं सत्यवन्तं मृतं व्रतम् ॥"
सत्यवति त्रि ॥ (यथा, महाभारते । १३ । ७५ । ३४ ।
"सत्यवन्तः स्वर्गलोके मोदन्ते भरतर्षभ ॥")

**सत्यवृत्तः**, त्रि, (सत्यं वृत्तं यस्य ।) सत्यवादी ।
इति केचित् ॥ (सच्चरित्रे क्ली । यथा, महा-
भारते । १३ । ७३ । ११ ।
"यावज्जीवं सत्यवृत्ते रतश्च
दाने रतो यः क्षमी चापराधे ॥")

**सत्यव्रतः**, पुं, (सत्यमेव व्रतं यस्य ।) त्रेतायुगे
सूर्य्यवंशीयपञ्चविंशराजः । यथा, --
"त्रिधन्वनः सुतो जातस्त्रय्यारुण इति स्मृतः ।
तस्य सत्यव्रतो नाम तस्मात् सत्यरतः स्मृतः ॥"
इति मात्स्ये १२ अध्यायः ॥
स च त्रिशङ्कु राजः । यथा, --
"त्रिधन्वनस्त्रय्यारुणन्त्रय्यारुणात्सत्यव्रतः ।
योऽसौ त्रिशङ्कुसंज्ञामवाप चाण्डालतामुपगतश्च
द्वादशवार्षिक्यामनावृष्ट्यां विश्वामित्रस्य कल-
त्रापत्यपोषणार्थे चाण्डालपरिग्रहपरिहरणार्थञ्च
जाह्नवोतीरे न्यग्रोधे मृगमांसमनुदिनं वबन्ध ।
परितुष्तेन च विश्वामित्रेण सशरीरः स्वर्गं
आरोपितः । त्रिशङ्कोर्हरिश्चन्द्रः ।"
इतिविष्णु-
पुराणे ४ अंशे २ अध्यायः ॥ (धृतराष्ट्रस्य

दास्याम्यश्वसहस्रन्तु तव
राजंस्तथाविधम् ।
कञ्चित्कालं प्रतीक्षस्व
यावत्तदहमानये ॥
गङ्गाजलादुत्थितन्तु दत्तं सम्यक्
प्रचेतसा ।
आदायाश्वसहस्रं स
मुनिर्गाधिमथाभ्ययात् ॥
तानश्वान् गाधिरादाय पुत्त्रीं सत्यवतीं
स्वकाम्
ऋचीकाय ददौ लक्ष्मीं केशवायेव
सागरः ॥
ऋचीको गाधितनयां लब्ध्वा
भार्य्यामनिन्दिताम्
मुदितः स तया रेमे यथाकामं
स्वमाश्रमे ॥
कृतदारं सुतं श्रुत्वा द्रष्टुं पुत्त्रं स्वकं
भृगुः ।
अथाजगाम मतिमान् स्नुषां दृष्ट्वा
ननन्द च ॥
दम्पती तं समासीनं भृगुं
देवगणार्च्चितम् ।
पूजयित्वा समासीनं तस्थतुस्तौ
कृताञ्जली ॥
ततो भृगुः स्नुषां स्वीयां सुप्रीत
इदमब्रवीत् ।
वरं वृणीष्व दास्यामि वाञ्छितं
वरवर्णिनि ।
अदेयं दुष्करं वापि यत्र ते वर्त्तते स्पृहा
॥
ततः सत्यवती पुत्त्रं तप
आम्नायपारगम् ।
मातुश्च वीरमतुलं पुत्त्रं वरमयाचत ॥
स चैवमस्त्वित्युक्त्वैव भूत्वा
ध्यानपरस्तदा ।
विश्वमावत्य मनसा यत्नात् श्वासं
ससर्ज्ज सः ॥
तस्य निःश्वासवातात्तु निःसृतं वै
चरुद्वयम् ।
तस्यै तत् द्वितयं दत्त्वा
भृगुस्तामिदमब्रवीत् ॥

इति शब्दरत्नावली ॥ (कश्यपपत्न्या मुनेः
पुत्त्र-
विशेषः । यथा, महाभारते । १ । ६५ । ४३
।
“सत्यवागर्कपर्णश्च प्रयुतश्चापि विश्रुतः ॥”)
काकः । इति त्रिकाण्डशेषः ॥ (सावर्णमनु-
पुत्त्रविशेषः । यथा, मार्कण्डेये । ८० । ११ ।
“विरजाश्चार्व्ववीरश्च निर्म्मोहः सत्यवाक्
कृतिः ।
विष्णवाद्याश्चैव तनयाः सावर्णस्य मनोर्नृपाः
॥”)
सत्यवादिनि, त्रि ॥ (यथा, रामायणे । २ ।
२९ । ११ ।
“कालश्चायं समुत्पन्नः सत्यवाग् भवतु द्विजः
॥”

**सत्यवादी**, [न्] त्रि, (सत्यं वदतीति । वद् +
णिनिः ।) यथार्थवक्ता । तत्पर्य्यायः ।
सत्योद्यः
२ । इति शब्दमाला ॥ (यथा, महानिर्व्वाण-
तन्त्रे । ३ । ९९ ।
“अस्मिन् धर्म्मे महेशि ! स्यात् सत्यवादी
जितेन्द्रियः ।
परोपकारनिरतो निर्व्विकारः सदाशयः ॥”)

**सत्यवान्**, [त्] पुं, (सत्यमस्त्यस्येति । सत्य +
मतुप् । मस्य वः ।) राजविशेषः । स तु
सावित्री-
पतिः । इति मेदिनी ॥ (अस्य नामनिरुक्ति-
र्यथा, महाभारते । ३ । २९३ । १२ ।
“सत्यं वदत्यस्य पिता सत्यं माता प्रभाषते ।
ततोऽस्य ब्राह्मणाश्चक्रुर्नामैतत् सत्यवानिति
॥”

पुत्त्रविशेषः । यथा, महाभारते । १ । ६३ ।
११७ ।
“जयः सत्यव्रतश्चैव पुरुमित्रश्च भारत ॥”
महादेवः । इति महाभारतम् । १३ । १७ ।
१५० ॥
सत्यरूपव्रते, क्ली । यथा, रामायणे । २ ।
२६ । ३७ ।
“सा त्वं वसेह कल्याणि राज्ञः समनुवर्त्तिनी
।
भरतस्य रता धर्म्मे सत्यव्रतपरायणा ॥”
सत्यव्रतविशिष्टे, त्रि । यथा, हरिवंशे । ३१ ।
५८ ।
“एतेऽहि वंशजाः सर्व्वे राजानः कीर्त्तिता
मया ।
सत्यव्रता महात्मानः प्रजावन्तो महारथाः
॥”)

**सत्यसङ्काशः**, त्रि, (सत्यस्य सङ्काशः सदृशः ।)
सत्यसन्निभः । इति केचित् ॥

**सत्यसङ्गरः**, पुं, (सत्यः सङ्गरः प्रतिज्ञा युद्धं वा
यस्य ।) कुबेरः । इति त्रिकाण्डशेषः ॥
अन्याय-
रहितयुद्धश्च ॥ (ऋषिविशेषः । इति महा-
भारतम् । २ । ७ । १५ ॥)

**सत्यसन्धः**, पुं, (सत्य सन्धा अभिसन्धिर्यस्य ।)
रामानुजभरतः, । जनमेजयः । इति
शब्दरत्ना-
वली ॥ (विष्णुः । इति महाभारतम् । १३ ।
१४९ । ६७ ॥ धृतराष्ट्रपुत्त्रः । इति च महा-
भारतम् । १ । ११७ । ८ ॥) सत्यप्रतिज्ञे,
त्रि ॥
यथा, --
“राजेन्द्रं सत्यसन्धं दशरथतनयं श्यामलं
शान्त-
मूर्त्तिं

| | | |
|---|---|---|
| चरुद्वयं गृहाण त्वं स्नुषे सत्यवति स्वयम् ।<br>स्नात्वा ऋतौ ऋतौ माता तदा त्वञ्च करि-<br>ष्यथः ॥<br>आलिङ्ग्याश्वत्थवृक्षं ते माता पुंसवनाय वै ।<br>चरुमारक्तकं चमं सा भोक्ष्यति सुतस्ततः ॥<br>त्वञ्चोडुम्बरवृक्षन्तु समालिङ्ग्य सितं चरुम् ।<br>भक्षस्वैतेन पुत्रस्ते भविष्यति सनातनः ॥<br>एवमुक्त्वा भृगुर्यातो यथेच्छं सापि संमुदम् ।<br>अवाप मांत्रा महिता भर्त्रा पित्रा च भाविगी ॥ | | |

वन्दे लोकाभिरामं रघुकुलतिलकं राघवं राव-
णारिम् ॥”
इति महानाटके १ अङ्कः ।

**सत्यसन्धा**, स्त्री, (सत्ये सन्धाभिसन्धिर्य्यस्याः ।)
द्रौपदी । इति शब्दरत्नावली ॥

**सत्या**, स्त्री, (सत्यमस्त्यस्या इति । सत्य + अच् ।
टाप् ।) सीता । सा च रामपत्नी । सत्यवती ।
सा तु व्यासमाता । इति शब्दरत्नावली ॥
दुर्गा । इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥ (सत्य-
भामा । सा च कृष्णपत्नी । यथा, भागवते ।
१ । १४ । ३७ ।
“यत्पादशुश्रूषणमुख्यकर्म्मणा
सत्यादयो द्व्यष्ट-सहस्रयोषितः ।
निर्ज्जित्य संख्ये त्रिदशांस्तदाशिषो
हरन्ति वज्रायुधवल्लभोचिताः ॥”
तथा च महाभारते । ३ । २३४ । २ ।
“आरुरुक्षू रथं सत्यामाह्वयामास केशवः ॥”
शंयुपत्नी । यथा, महाभारते । ३ । २१८ । ४ ।
“शंयोरप्रतिमा भार्य्या सत्या सत्याय धर्म्मजा ।
अग्निस्तस्य सुतो दीप्तस्तिस्रः कन्याश्च सुव्रताः ॥”)

**सत्याकृतिः**, स्त्री, (सत्यस्य आकृतिः करणम् ।
“सत्यादशपथे ।” ५ । ४ । ६६ । इति डाच् ।)
अवश्यं मयैतत् क्रेतव्यमिति सत्यकरणम् । तत्-
पर्य्यायः । सत्यङ्कारः २ सत्यापनम् ३ । इत्य-
मरः ॥

“नैमिषेऽनिमिषक्षेत्रे ऋषयः शौनकादयः ।
सत्रं स्वर्गाय लोकाय सहस्रसममासत ॥
कलिमागतमाज्ञाय क्षेत्रेऽस्मिन् वैष्णवे वयम् ।
आसीना दीर्घसत्रेण कथायां सक्षणा हरेः ॥”
इति श्रीभागवते १ स्कन्धे १ अध्यायः ॥

**सत्राजित्**, पुं, (सत्रेण आजयति लोकानिति ।
ता + जि + क्विप् ।) राजविशेषः । स च
श्रीकृष्णश्वशुरः । सत्यभामापिता । परे शशि-
ध्वजराजश्च बभूव । इति कल्किपुराणे २७
अध्यायः ॥ (त्रि, सन्ततजयशीलः । यथा,
ऋग्वेदे । २ । २१ । १ ।
“सत्राजिते नृजित उर्व्वराजिते ।”
“सत्राजिते सत्रा सन्ततं जयशीलाय ।” इति
तद्भाष्ये सायणः ॥)

**सत्रिजातकं**, क्ली, (त्रिजातकेन सह वर्त्तमानम् ।)
मांसव्यञ्जनविशेषः । यथा, --
“मांसं बहुघृते भृष्टं सिक्त्वा चोष्णाम्बुना मुहुः ।
जीरकाद्यैः समायुक्तं परिशुष्कं तदुच्यते ।
तदेव घृततक्राढ्यं प्रदिग्धं सत्रिजातकम् ॥”
इति शब्दचन्द्रिका ॥

**सत्वरं**, क्ली, सह त्वरया वर्त्तते इति । शीघ्रम् ।
इत्यमरः ॥ (यथा, रामायणे । २ । ३९ । १४ ।

विपदि धैर्य्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचौ व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥”)

**सदस्यः**, पुं, (सदसि साधुः । सदस् + यत् ।)
विधिदर्शी । इत्यमरः ॥ न्यूनातिरिक्ततां विप-
र्य्यासञ्च परिहर्त्तुं विधिं वेदोक्तयज्ञक्रियाकलापं
द्रष्टं शीलं येषां ते सदस्याः । सदसि साधवः
कारका इतिविकारसंघेत्यादिना यः । इति
भरतः ॥ तस्य नामान्तरं प्रश्नवक्ता । यथा, --
“एकः कर्म्मनियुक्तः स्यात् द्वितीयस्तन्त्रधारकः ।
तृतीयः प्रश्नकं ब्रूयात्ततः कर्म्म समाचरेत् ॥”
कर्म्मनियुक्तः आचार्य्यः स च ब्रह्माङ्गके होम-
कर्म्मणि ब्रह्मा । स्वयं होमाकरणे होतापि ।
स्वयं प्रधानकर्म्माकरणे प्रतिनिधिरपि । तन्त्र-
धारकः पुस्तकधारकः । प्रश्नवक्ता सदस्यः ।
इति संस्कारतत्त्वम् ॥ * ॥ सभ्यः । यथा । सभ्याः
सदस्याः पार्षद्याः सभास्ताराः सभासदः ।
सामाजिका इत्यादि हेमचन्द्रः ॥

**सदा**, व्य सर्व्वकालः । सर्व्वदा । इत्यमरः ॥ यथा,
“परोपकारनियतः सदा भव महाजन ।”
इतिविष्णुपुराणम् ॥

**सदागतिः**, पुं, (सदा सर्व्वदा गतिर्यस्य ।) वायुः ।
इत्यमरः ॥ (यथा, महाभारते । १ । ७२ । १ ।
“एवमुक्तस्तया शक्रः सन्दिदेश सदागतिम् ।
प्रातिष्ठत तदा काले मेनका वायुना सह ॥)”
सूर्य्यः । निर्व्वाणम् । सदीश्वरः । इति मेदिनी ॥
(सर्व्वदा गमनशीले, त्रि । यथा, महाभारते ।
३ । १३३ । २५ ।
“चतुर्विंशतिपर्व्व त्वां षण्णाभि द्वादशप्रधि ।
तत्त्रिषष्टिशतारं वै चक्रं पातु सदागति ॥”)

**सदाचारः**, पुं, (सतां साधूनामाचारः ।) साधू-
नामाचरणम् । तल्लक्षणादि यथा, --
“सरस्वतीदृशद्वत्योर्द्देवनद्योर्यदन्तरम् ।
तद्देवनिर्म्मितं देशं ब्रह्मावर्त्तं प्रचक्षते ॥

**सत्याग्निः**, पुं, (सस्यत्य अग्निः ।) अगस्त्यमुनिः ।

इति शब्दरत्नावली ॥

**सत्यानृतं**, क्ली, बाणिज्यम् । इत्यमरः किञ्चित्

सत्यं किञ्चदसत्यं सत्यसहितमनृतं वा
यत्र ।
इति भरतः ॥ (यथा, मनुः । ४ । ६ ।
“सत्यानृतञ्च बाणिज्यं तेन चैवापि
जीव्यते ।
सेवा श्ववृत्तिराख्याता तस्मात्तां
परिवर्ज्जयेत् ॥”
सत्यञ्चानृतञ्चेति द्वन्द्वे कृते
द्विवचनप्रयोगः
स्यात् । यथा, वाजसनेयसंहितायाम् ।
१९ । ७७ ।
“दृष्ट्वा रूपे व्याकरोत् सत्यानृते
प्रजापतिः ॥”)

**सत्यापनं**, क्ली, (सत्यस्य करणम् । सत्य + सत्याप-

पाशेति । ३ । १ । २५ । इति णिच्
आपुक्च
ततो ल्युट् ।) सत्याकृतिः । इत्यमरः ॥

**सत्यापना**, स्त्री, (सत्यस्य करणम् । सत्य +

सत्यापपाशेति । ३ । १ । २५ । इति
णिच्
आपुक् च ततो युच् ।) सत्याकृतिः ।
इत्यमर-
टीकायां वोपालितः ॥

**सत्याद्यः**, त्रि, (सत्यस्य वदनम् । वद् + क्यप् ।)

सत्यवादी इति शब्दमाला ॥

**सत्र**, त् ङ क सम्बन्धे । सन्ततौ । इति कविकल्प-

द्रुमः ॥ (अदन्त-चुरा-आत्म-सक-सेट्
।)
दन्त्यवर्गाद्यमध्यः ।
सन्ततिर्निर्व्वाहक्रियेति भट्ट-
मल्लः । ङ सत्रयते । सत्रापयते प्रतिज्ञां
साधुः ।
सन्ततिर्विस्तारणमिति गोविन्दभट्टः ।
इति

“राजा सत्वरमाहूय व्यापृतं वित्तसञ्चये
।
उवाच देशकालज्ञो निश्चितं सर्व्वतः
शुचिः ॥”)
तद्वति, त्रि, । इति भरतः ॥ (यथा,
मनुः ।
९ । ९४ ।
“त्रिंशद्वर्षो वहेत् कन्यां हृद्यां
द्वादशवार्षिकीम्
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति
सत्वरः ॥”)

**सत्सारः**, पुं, (सन् सारो यस्य ।) वृक्षविशेषः ।

चित्रकरः । कविः । इति केचित् ॥
उत्तमसार-
युक्ते त्रि ॥
सथुत्कारं, क्ली, अम्बुकृतम् । इति
हेमचन्द्रः ॥
थुत्कारेण सह वर्त्तमानञ्च ॥

**सदंशकः**, पुं, (दंशकेन सह वर्त्तमानः ।) कर्क्कटः ।

इति राजनिर्घण्टः ॥ दंशयुक्ते, त्रि ॥

**सदंशवदनः**, पुं, (सदंशं दंशाकारसहितं वदनं

यस्य ।) कङ्कपक्षो । इति राजनिर्घण्टः
॥

**सदञ्जनं**, क्ली, (सत् अञ्जनम् ।) कुसुमाञ्जनम् ।

यथा, --
“रीतिपुष्पं पुष्पकेतुं पौष्पकं
कुसुमाञ्जनम् ।
सदञ्जनञ्च चाक्षुष्यं माक्षिकं
धातुमाक्षिकम् ॥”
इति शब्दचन्द्रिका ॥

**सदन**, क्ली, (सीदन्त्यत्रेति । सद् + अधिकरणे

ल्युट् । गृहम् । इत्यमरः ॥ (यथा,
रामा-
यणे । २ । ६४ । ३६ ।
तिष्ठ मा मागमः पुत्त्रः यमस्य सदनं
प्रति ।

तस्मिन् देशे य आचारः पारम्पर्य्यक्रमागतः ।
वर्णानां सान्तरालानां सदाचारः स उच्यते ॥”
इति मनुः ॥ * ॥
अन्यच्च ।
और्व्वौवाच ।
“सदाचारेषु राजेन्द्र विशेषान् शृणु संप्रति ।
यानवश्यं नृपः कुर्य्यात्तान्मत्तः सकलान् शृणु ॥
साधवः क्षीणदोषाश्च सच्छब्दः साधुवाचकः ।
तेषामाचरणं यत्तु सदाचारः स उच्यते ॥
आगमेषु पुराणेषु संहितासु यथोदितान् ।
समुद्दिष्टसदाचारांस्तान्गृह्णीयाद्गृहस्थवत् ॥
ऋषीन् यजेद्वेदपाठैर्द्देवान् होमैस्तु पूजयेत् ।
श्राद्धैः पितॄन् यजेदन्नैर्भूतानि बलिभिस्तथा ॥
मैत्रं प्रसाधनं स्नानं दन्तधावनमञ्जनम् ।
सर्व्वं गृहस्थवत् कुर्य्यात् निषेकाद्यं विधिं तथा ॥
षट्कर्म्मसु नियुञ्जीत राजा विप्रान् समन्ततः ।
तथैव क्षत्त्रियादीनि स्वे स्वे कर्म्मणि योजयेत् ॥

| | | |
|---|---|---|
| दुर्गादासः ॥<br><br>**सत्रं**, क्ली, (सत्र्यते संतन्यते इति । सत्र + घञ् ।)<br><br>यज्ञविशेषः । यथा, -- | श्वो मया सह गन्तासि जनन्या च<br>समे-<br>धितः ॥”)<br>जलम् । इति मेदिनी ॥<br><br>**सदः**, [स्] स्त्री, क्ली, (सीदन्त्यस्यामिति । सद् +<br><br>“सर्व्वधातुभ्योऽसुन् ।” उणा० ४ ।<br>१८८ । इति<br>असुन् ।) सभा । इत्यमरः ॥ (यथा,<br>हितोपदेशे ॥ | |

यः स्वधर्म्मं परित्यज्य परधर्मं
समाचरेत् ।
तं शतेन नृपो दण्ड्यः
पुनस्तस्मिन्नियोजयेत् ॥
सांवत्सरेषु कृत्येषु विशेष्यैतान्
समाचरेत् ।
अवश्यं पार्थिवो राजन् विशेषांस्तु
शृणुष्व मे ॥
शरत्काले महाष्टम्यां दुर्गायाः
परिपूजनम् ।
नीराजनं दशम्यान्तु कुर्य्याद्वै बलवृद्धये
॥
पौषे मासि तृतीयायां कुर्य्यात्
पुष्याभिषेचनम्
पूजयित्वा श्रियं देवीं श्रीपञ्चम्यां
नृपश्चरेत् ॥
श्रीयज्ञं धनधान्यस्य वृद्धये नृपसत्तमः ।
ज्यैष्ठे दशहरायान्तु विष्णोरिष्टं
समाचरेत् ॥
रवौ हरिस्थे द्वादश्यां शक्रपूजां
समाचरेत् ।
विशेष्यैतांस्तु नृपतिः कुर्य्यात् सर्वं
बहुव्ययैः ।
एभिः कृतैर्बलं राज्यं कोषश्चापि
विवर्द्धते ॥
अकृतेष्वेषु यज्ञेषु दुर्भिक्षं मरकं तथां ।
जायते च नृपस्तस्मादेषु यज्ञं समाचरेत्
॥
शरत्काले महाष्टम्यां दुर्गायाः पूजने
विधिः ।
पुरा प्रोक्तस्तु विधिना तेन कार्य्यन्तु
पूजनम् ॥”
इति कालिकापुराणे ८६ अध्यायः ॥ *
॥
अपि च ।
“सदाचारे विशेषोऽयं कथितस्तव
पार्थिव ! ।
निषेधेषु विशेषांस्तु शृणु येन श्रियेष्यते
॥

दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते
॥
ऊद्ध्वर्न्तु पञ्चमाद्वर्षद्दत्ताद्याश्च सुता नृप ।
गृहीत्वा पञ्चवर्षीयं पुत्त्रेष्टिं प्रथमं चरेत् ॥
पौनर्भवन्तु तनयं जातमात्रं समानयेत् ।
कृत्वा पौनर्भवं स्तोमं जातमात्रस्य तस्य वै
॥
सर्व्वांस्तु कुर्य्यात्
संस्कारान्जातकर्म्मादिकान्नरः
कृते पुनर्भवस्तोमे सुतः पौनर्भवस्तथा ॥
एकोद्दिष्टं पितुः कुर्य्यान्न श्राद्धं पार्व्वणादिकम्
क्रीताद्या वनिता मूल्यैः सा दासीति निगद्यते
॥
तस्यां यो जायते पुत्त्रो दासः पुत्त्रस्तु स
स्मृतः ।
न राज्ञो राज्यभाक् स्याद्विपुलानपि
श्राद्धकृत् ।
अधमः सर्व्वपुत्त्रेभ्यस्तं तस्मात् परिवर्जयेत्
॥
पुराणधर्म्मशास्त्राणि संहिताञ्च मुनीरिताम् ।
नाध्यापयेन्नृपः शूद्रैर्व्विहितान्यत् यदृच्छया
॥
यस्य राज्ये सदा शूद्राः पुराणं संहितां तथा
।
पठन्ति स्यान्महीनाशो राजा राष्ट्रेण सान्वयः
।
मोहाद्वा कामतः शूद्रः पुराणं संहितां
स्मृतिम् ।
पठन्नरकमाप्नोति पितृभिः सह पापकृत् ॥
शूद्रोक्त्या विहितं यच्च यच्च मन्त्र उदाहृतः
।
तद्द्वयं विप्रवदानाद्ग्राह्यं शूद्रैः सदैव हि ॥
न योजयेन्नृपः शूद्रं व्यवहारस्य दर्शने ।
नियोज्य तत्र तं भूप ! तामिस्रे तेन पच्यते ।
हीनायुश्च भवेल्लोको राजा चापि सहान्वयः
॥
काणं व्यङ्गमन्धपुत्त्रं वानभिज्ञमजितेन्द्रियम्
।

श्रीमार्कण्डेय उवाच ।
एवमौर्व्वस्तु सगरं शशास मुनिपुङ्गवः ।
शास्त्राणि चैव सर्व्वाणि सदाचारान् संगुह्य-
कान् ।
बहुशः कथयामास सगराय महात्मने ॥
तन्नास्ति यत् पुरौर्व्वेण कथितं सगराय न ।
राजनीतिः सतां
नीतिर्यच्चान्यच्छास्त्रसम्भवम् ॥
संहितासु पुराणेषु यच्चागमचये स्थितम् ।
सर्व्वं शुश्राव सगरो मुखादौर्व्वस्य धीमतः ॥
तेषान्तु कथितं किञ्चिदुद्धृत्य द्विजसत्तमाः ।
विष्णुधर्म्मोत्तरे पूर्व्वं मया रहसि भारते ॥
राजनीतिं सदाचारं वेदवेदाङ्गसङ्गतम् ।
रहस्यं सततं विष्णोर्वीक्षध्वं द्विजसत्तमाः ॥
यच्चानुदितमन्यत्र गदितं वा ससंशयम् ।
संशयच्छेदनं तेषु युष्मभ्यं कथितं त्विदम् ॥
अनुक्तं संशयच्छेदि पुराणं कालिकाह्वयम् ।
योऽभ्यसेत् सततं विप्रः स वेदानां फलं
लभेत् ॥”
इति श्रीकाकिपुराणे ८९ अध्याये
राजनीति-
सदाचारादिकं समाप्तम् ॥ * ॥ अन्यच्च ।
ऋषय ऊचुः ।
“सदाचारो निगदितस्तव योऽस्माभिरादरात्
।
लक्षणं तस्य वक्ष्यामस्तच्छृणुष्व निशाचर ॥
गृहस्थेन सदा कार्य्यमाचारपरिपालनम् ।
न ह्याचारविहीनस्य भद्रमत्र परत्र च ॥
यज्ञदानतपांसीह पुरुषस्य न भूतये ।
भवन्ति यः समुल्लङ्घ्य सदाचारं प्रवर्त्तते ॥
दुराचारो हि पुरुषो नेह नामुत्र नन्दति ।
कार्य्यो यत्नः सदाचारे आचारो
हन्त्यलक्षणम् ॥
तस्य स्वरूपं वक्ष्यामः सदाचारस्य राक्षस ।
शृणुष्वैकमनास्त्वञ्च यदि श्रेयो हि वाञ्छसि
॥
धर्म्मोऽस्य मूलं धनमस्य शाखा
पुष्पञ्च कामः फलमस्य मोक्षः ।
असौ सदाचारतरुः सुकेशिन्

असंपूज्य तथा विष्णुं शिवामग्निं पुरन्दरम् ।
अदत्त्वा च तथा दानं न भुञ्जीयान्नृपः क्वचित् ॥
हावयेदग्निहोत्रन्तु नित्यमेव पुरोहितैः ।
अहुत्वा चाग्निहोत्रन्तु भुञ्जन्नरकमाप्नुयात् ॥
नारक्षिते गृहे राजा रत्नर्द्धिपरिवर्ज्जिते ।
स्वपेत्तथा स्त्रिया सार्द्धं न कदाचन संविशेत् ॥
भुक्त्वान्नं श्रीफलं नाद्यात्तथा धात्रीफलं नृपः ।
बुद्धिक्षयकरा एता माष आसवमृत्तिकाः ॥
निम्बाटरूषवृत्ताश्च बुद्धिवृद्धिकरा न ताः ।
बुद्धिवृद्धिहरान्नित्यं त्यजेद्राजा च भोजने ॥
भोजयेदन्वहं वुद्धिवृद्धिहेतुं नृपोत्तमः ।
न पर्य्यायविहीनन्तु प्रारोहेदासनं नृपः ॥
न यानं न गजानश्वमारोहेद्वीक्ष्य ब्राह्मणम् ।
नैकन्तु विचरेद्राजा कदाचिदपि निर्जने ॥
मदहेतुं न भुञ्जीयात् कदाचिदपि भोजने ॥
कदापि नोपसेवेत ह्यष्टम्यां मांसमैथुने ॥
अमास्नानं गयाश्राद्धं तिलैस्तर्पणमेव च ।
न जीवत्पितृको भूपः कुर्य्यात् कृत्वाघमाप्नुयात्
न क्षेत्रजादींस्तनयान् राजा राज्येऽभिषेचयेत् ।
पितॄणां श्राद्धयेन्नित्यमौरसे तनये सति ॥
औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ।
गूढोत्पन्नोऽपविद्धश्च भागार्हास्तनया इमे ॥

न ह्रस्वं व्याधितं वापि नृपः कुर्य्यात्पुरोहितम् ॥
कृपणस्य धनं राजा न गृह्णीयात् कदाचन ।
न द्विजानां तथा दद्याद्धनानि विपुलान्यपि ॥
नारोहेत् कामुकोन्मत्तं गजं राजा कदाचन ।
आरुह्य कामुकं तन्तु परत्रेह विषीदति ॥
अनायुष्यं न कुर्य्यात्तु कर्म्म भूपः कदाचन ।
सततं आयुषो वृद्ध्यै यतेत सकलैर्बलैः ॥
न क्रूरवारे नाष्टम्यां न षष्ठ्यां नृपसत्तमः ।
अञ्जनाभ्यञ्जने कुर्य्यात्ताम्बूलस्यापि भोजनम् ॥
अतिसूक्ष्मं तथा पूर्णं ग्रहणं चन्द्रसूर्य्ययोः ।
नालोकयेत् स्वयं राजा रक्तं सूर्य्यं तथैव च ॥
उत्पातं जायते यत्तु दिव्यं भौमञ्च नाभसम् ।
नेक्षेत यत्नान्नृपतिर्दृष्ट्वा नाद्यात् त्र्यहं पनः ॥
सर्व्वदा मङ्गलं रत्नं धारयेत् सह दूर्व्वया ।
अवस्त्राच्छादितं गात्रं न विप्रेभ्यः प्रदर्शयेत् ॥
न तोये स्वं मुखं पश्ये न्नाद्यान्मांसानि पर्व्वसु ।
नारोहेत खरं चोष्ट्रं न वामीमपि गुर्व्विणीम् ॥
एवं नययुतो राजा चतुरङ्गं विवर्द्धयन् ।
आत्सानं सततं रक्षन् सदा वीर्य्यं विवर्द्धयेत् ॥
बीजक्षयकरं नित्यं भक्ष्यं भोज्यञ्च पानकम् ।
वर्ज्जयेत् क्षारशाकाद्यानत्यम्बु बहुतिक्तकम् ॥
कांस्यराजतरङ्गस्थं तोयं पानेऽप्यवर्द्धनम् ।
मूत्रवृद्धिकरं बीजक्षयकारि विवर्ज्जयेत् ॥
ताम्रायःस्वर्णसीसानां पात्रस्थं फलचर्म्मणोः ।
शुक्रवृद्धिकरं तोयं तदुपासीत यत्नतः ॥
सर्व्वमूलेषु कृत्येषु सदाचारेखनुष्ठितः ।
भुक्त्वेह विविधान् भोगानैन्द्रं स्थानं व्रजेत् परे ॥

संसेवितो येन स पुण्यभोक्ता ॥
ब्राह्मे मुहुर्त्ते प्रथमे विबुध्ये दनुस्मरेद्देववरं महर्षीन् ।
प्राभातिकं मङ्गलमेव वाक्यं यदुक्तवान् देवपतिस्त्रिनेत्रः ॥
सुकेशी उवाच ।
किं तदुक्तं सुप्रभातं शङ्करेण महात्मना ।
प्रभाते यत् पठन् मर्त्यो मुच्यते पापबन्धनात् ॥
ऋषय ऊचुः ।
श्रूयतां राक्षसश्रेष्ठ सुप्रभात हरोदितम् ।
श्रुत्वा स्मृत्वा पठित्वा च सर्व्वपापैः प्रमुच्यते ॥
ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतो बुधश्च ।
गुरुः सशुक्रः सह भानुजेन कुर्व्वन्तु सर्व्वे मम सुप्रभातम् ॥
भृगुर्वशिष्ठः क्रतुरङ्गिराश्च मनुः पुलस्त्यः पुलहः सगोतमः ।
रैभ्यो मरीचिश्च्यवनो रिभुश्च कुर्व्वन्तु सर्व्वे मम सुप्रभातम् ॥

| | | |
|---|---|---|
| कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ।<br>स्वयंदत्तश्च पोष्यश्च षडिमे पुत्त्रपांशुलाः ॥<br>अभावे पूर्व्व पूर्व्वेषां परान् समभिषेचयेत् ।<br>पौनर्भवं स्वयं दत्तं दासं राज्ये न योजयेत् ॥<br>दत्ताद्याश्चापि तनया निजगोत्रेण संस्थिताः ।<br>आयान्ति पुत्त्रतां सम्यगन्यबीजसमुद्भवाः ॥<br>पितुर्गोत्रेण यः पुत्त्रः संस्कृतः पृथिवीपते ।<br>आचूडान्तं न पुत्त्रः सः पुत्त्रतां याति चान्यतः ॥<br>चूडाद्या यदि संस्कारा निजगोत्रेण वैकृताः । | | |

सनत्कुमारः सनकः सनन्दनः
सनातनोऽप्यासुरिपिङ्गलौच ।
सप्तस्वराः सप्त रसातलाश्च
कुर्व्वन्तु सर्व्वे मम सुप्रभातम् ॥
पृथ्वी सुगन्धा सरसास्तथापः
सस्पर्शवायुर्ज्वलितञ्च तेजः ।
नभः सशब्दं महता सहैव
कुर्व्वन्तु सर्व्वे मम सुप्रभातम् ॥
सप्तार्णवाः सप्त कुलाचलाश्च
सप्तर्षयो द्वीपवराश्च सप्त ।
भूरादि कृत्वा भुवनानि सप्त
कुर्व्वन्तु सर्व्वे मम सुप्रभातम् ॥
इत्थं प्रभाते परमं पवित्रं
यः संस्मरेद्वा शृणुयाच्च भक्त्या ।
दुःस्वप्ननाशो ननु सुप्रभाते
भवेच्च सत्यं भगवत्प्रसादात् ॥
ततः समुत्थाय विचिन्तयेच्च
धर्मं तथार्थञ्च विहाय शय्याम् ।
उत्थाय पश्चाद्धरिरित्युदीर्य्य
गच्छेत्तदोत्सर्गविधिं हि क्वर्त्तुम् ॥
न देवगोब्राह्मणवह्निमार्गे
न राजमार्गे न चतुष्पथे च ।
कुर्य्याद्यथोत्सर्गमपीह गोष्ठे
प्रच्छाद्य शीर्षं मुखनासिकञ्च ॥
ततश्च शौचार्थमुपाहरेन्मृदं
गुदे त्रयं पाणितले च सप्त ।
तथोभयोः पञ्च चतुस्तथैकां
लिङ्गे तथैकां मृदमाहरेच्च ॥
नान्तर्ज्जलाद्राक्षसमूषिकस्थला-
न्न चावशिष्टा सदनादिभग्ना ।
वल्मीकमृच्चैव हि शौचनाय
ग्राह्या सराचारविदा नरेण ।
उदङ्मुखः क्षाल्य पदौ भुविस्थः
समाचमेदद्भिरफेनिलाभिः ।
आचम्य च त्रिः परिमृज्य च द्वि-
स्ततः स्पृशेच्चात्मशिरः करेण ॥
सन्ध्यां स निर्वर्त्त्य ततः क्रमेण
केशांश्च संशोध्य च दन्तधावनम् ।
कृत्वा तथा दर्पणदर्शनञ्च

स्वगोत्रधर्म्मं न हि सन्त्यजेत
तेनापि सिद्धिं समुपाचरेत ।
नासत्प्रलापं न च सत्यहीनं
न निष्ठुरं नागमशास्त्रहीनम् ॥
वाक्यं वदेत् साधुजनेन येन
निन्द्यो भवेन्नैव च धर्म्मभेदी ।
सङ्गं न चासत्सु जनेषु कुर्य्यात्
सन्ध्यासु भक्ष्यं सुरतं दिवा च ।
सर्व्वासु योनीषु पराबलासु
रजस्वलास्वेव जलेषु धीरः ॥
वृथाटनं वृथादानं वृथा च पशुमारणम् ।
न कर्त्तव्यं गृहस्थेन वृथा दारपरिग्रहम् ॥
वृथाटनान्नित्यहानिर्वृथादानाद्धनक्षयः ।
वृथापशुघ्नः प्राप्नोति घातनान्नरकं महत् ॥
सन्तत्या हानिरश्लाघ्या वर्णसङ्करतो भयम् ।
भेतव्यञ्च भवेल्लोके वृथादारपरिग्रहात् ॥
परस्वे परदारे च न कार्य्या बुद्धिरुत्तमैः ।
परस्वं नरकायैव परदाराश्च मृत्यवे ॥
नेक्षेत् परस्त्रियं नग्नां न सम्भाषेच्च तस्करान्
।
उदक्त्या दर्शनं स्पर्शं सम्भाषाञ्च विवर्जयेत्
॥
नैकासने तथा स्थेयं सुन्दर्य्या परजायया ।
तथैव् अस्यान्न मातुश्च तथैव दुहितुस्त्वपि ॥
न भार्य्या वीक्ष्यते नग्ना पुरुषेण कदाचन ।
न च स्नायीत वै नग्नो न शयीत कदाचने ॥
दिग्वाससोऽपि न तथा परिभ्रमणमिष्यते ।
भिन्नासनं भाजनादीन् दूरतः परिवर्जयेत् ॥
नन्दासु नाभ्यङ्गमुपाचरेत्त
क्षौरञ्च रिक्तासु जयासु माषम् ।
पूर्णासु योषित् परिवर्जनीया
भद्रासु सर्व्वाणि समालभेत ॥
नाभ्यङ्गमर्के न च भूमिपुत्रे
क्षौरञ्च शुक्रे रविजे च मांसम् ।
बुधेषु योषिन्न समाचरेत
शेषेषु सर्व्वाणि सदैव कुर्य्यात् ॥
चित्रासु हस्ते श्रवणेषु तैलं ।
क्षौरं विशाखास्वभिजित्सु वर्ज्यम् ।
मूले मृगे भाद्रपदासु मांसं

नाव्यङ्गितं कायमुपस्पृशेच्च
स्नातो न केशान् विधुनीत चापि ॥
गात्राणि चैवाम्बरपाणिना च
स्नातोऽवमृज्यद्रजनीचरेश ।
वसेच्च देशेषु सुराजकेषु
सुसंहितस्वीयजनेषु नित्यम् ॥
अक्रोधना न्यायपरा अमत्सराः
कृषीबला ह्यौषधिजातयश्च ।
न तेषु देशेषु वसेच्च बुद्धिमान्
यस्मिन्नृपो दण्डरुचिस्त्वशक्तः ।
जनोऽपि नित्योत्सवबद्धवैरः
सदा जिगीषुश्च निशाचरेन्द्र ॥
ऋचय ऊचुः ।
यन्न भोज्यं महाबाहो सदा
धर्म्मस्थितैर्नरैः ।
यद्भोज्यञ्च समुद्दिष्टं कथयिष्यामहे वयम्
।
त्यज्यमन्नं पर्य्युषितं स्नेहाक्तं
चिरसंभृतम् ।
अस्नेहा व्रीहयः श्लक्ष्णा विकाराः
पायसा-
स्तथा ॥
शशकः शल्लको गोधा तथा खड्गी च
कच्छपः ।
तद्वद्द्विदलकादीनि भोज्यानि
मनुरब्रवीत् ॥
मणिवस्त्रप्रबालानां तद्वन्मुक्ताफलस्ये च
।
शैलदारुमयानाञ्च तृणगुल्मौषधस्य च ॥
शाकधान्याजिनानाञ्च संहतानाञ्च
वाससाम् ।
बल्कलानामशेषाणामम्बुना शुद्धिरिष्यते
॥
सस्नेहानामयोष्णेन तिलकल्केन
चाविकम् ।
कार्पासिकानां वस्त्राणां शुद्धिः स्यात् सह
भस्मना ॥
नागदन्तास्थिशृङ्गाणां
तक्षणाच्छुद्धिरिष्यत ।

कृत्वा शिरःस्नानमथाह्निकञ्च॥
संपूज्य तोयेन पितॄन् सदेवान्
होमञ्च कृत्वालभनं शुभानाम्।
कृत्वा बहिर्न्निर्गमणं प्रशस्तं
दूर्व्वां दधि सर्प्पिरथोदकुम्भम्॥
धेनुं सवत्सां वृषभं सुवर्णं
मृद्गोमयं स्वस्तिकमक्षतानि।
लाजा मधु ब्राह्मणकन्यकाश्च
श्वेतानि पुष्पाण्यथ शोभनानि॥
हुताशनं चन्दनमर्कविम्ब-
मश्वत्थवृक्षञ्च समालभेत।
ततस्तु कुर्य्यान्निजजातिधर्म्मं
देशानुशिष्टं कुलधर्म्ममग्र्यम्॥

यौषिन्मघाकृत्तिकयोत्तरासु॥
सदैव वर्ज्यं शयने ह्युदक्शिर-
स्तथा प्रतीच्यां रजनीचरेश।
भुञ्जीत नैवेह च दक्षिणामुखो
न च प्रतीचीममिभोजनीयम्॥
देवालयं चैत्यतरुं चतुष्पथं
विद्याधिकञ्चापि गुरुं प्रदक्षिणम्।
कुर्य्यान्न वामं गमने च धीमान्
द्विजान् मृगान् गाश्च निशाचरेश॥
माल्यानुलेपं वसनानि यत्नतो
नान्यैर्धृतान्येव हि धारयेत।
स्नायाच्छिरःस्नानतयाच नित्यं
निष्कारणं चैव विना निशामु॥
ग्रहोपरागे स्वजनामिघाते
मुक्ता च जन्मर्क्षगते शशाङ्के।

पुनःपाकेन भाण्डानां मृण्मयानाञ्च
शुद्धता॥
शुद्धं भैक्ष्यं कारुहस्तः पुण्यं योषिन्मुखं
तथा।
रथ्यागतमविज्ञातं दासवर्गेण यत् कृतम्
॥
वाक्यपूतं चिरानीतमनेकान्तरितं लघु।
चेष्टितं बालवृद्धानां बालस्य तु मुखं शुचि
॥
म्लेच्छानामपि गोशाला स्तनन्धयसुता
स्त्रियः।
वाग्विप्रुषो द्विजेन्द्राणां पाठे
वागम्बुबिन्दवः॥
भूमिर्व्विशुध्यते खातदाहगोक्रमसेचनैः।
लेपादुल्लेखनात् सेकात्
वेश्मसम्मार्ज्जनाज्जलात्॥
केशकीटावपन्नेऽन्ने गोघ्राते मक्षिकान्विते
।
मृद्वारिभस्मक्षाराणि प्रक्षेप्तव्यानि शुद्धये
॥
उडुम्बराणाञ्चाम्लेन क्षारेण त्रपुसीसयोः
।
कांस्यानां भस्मना
शुद्धिस्तोयाच्छुद्धिर्द्रवस्य च॥
अमेध्याक्तस्य मृत्तोयैर्गन्धापहरणेन च।
अन्येषामपि तद्द्रव्ये शुद्धिर्गन्धावहारतः
॥
मातुः प्रसवने वत्सः शकुनिः फलपातने
।
गर्द्दभो भारहारित्वे श्वा मृगग्रहणे शुचिः॥
रथ्याकर्द्दमतोयानि गावः पथि तृणानि च
।
मारुतेनैव शुध्यन्ति पक्वेष्टकचितानि च
॥
शृतं द्रोणाढकस्यान्नममेध्याभिप्लुतं
भवेत्।
अग्रमुद्धृत्य सन्त्येज्यं शेषस्य प्रोक्षणं
स्मृतम्॥
उपवासं त्रिरात्रं वा दूषितान्नस्य भोजने।
अज्ञाते ज्ञातपूर्व्वे च नैव शुद्धिर्व्विधीयते
॥

स्पृष्ट्वा स्नायीत शौचार्थं तथैव मृतहारिणः ॥
सस्नेहमस्थि संस्पृश्य सवासाः स्नानमाचरेत्
।
आलभ्यैव तु निस्नेहं गामालभ्यार्कमीक्ष्य च ॥
न लङ्घयेत् नरं कृष्णवर्त्मानं दुर्ब्बलं तथा ।
गृहादुच्छिष्टविण्मूत्रपादाद्भांसि क्षिपेद्बहिः ॥
पञ्चपिण्डाननुद्धृत्य न स्नायात् परवारिणि ।
स्नायीत देवखातेषु सरोह्रदसरित्सु च ॥
नोद्यानादौ विकालेषु प्राज्ञस्तिष्ठेत् कदाचन ।
नालपेज्जनविद्विष्टं वीरहीनां तथा स्त्रियाम् ॥
देवतापितृसच्छास्त्रयज्ञसत्रादिनिन्दकैः ।
कृत्वा तु स्पर्शनालापं शुध्यतेऽर्कावलोकनात् ॥
अभोज्याः सूतिकाषण्ढमार्ज्याराखुश्वकुक्कुटाः
पतितापविद्धनग्नाश्च चाण्डालाश्चाधमाश्च ये
॥
सुकेशी उवाच ।
भवद्भिः कीर्त्तिता भोज्या य एते सूतिकादयः ।
अमीषां श्रोतुमिच्छामि तत्त्वतो लक्षणानि च ॥
ऋषय ऊचुः ।
ब्राह्मणी ब्राह्मणश्चैव यावच्छेषत्वमागतौ ।
ताबभौ सूतिकेत्युक्तौ तयोरन्नं विगर्हितम् ॥
न जुहोत्युचिते काले न स्नाति च ददाति च ।
पितृदेवार्च्चनाद्धीनः स षण्ढः परिगीयते ॥
दम्भार्थं जपते यश्च तप्यते यजते तथा ।
न परत्रार्थमुद्युक्तो मार्ज्जारः परिकीर्त्तितः ॥
विभवे सति नैवात्ति न ददाति जुहोति च ।
तमाहुराखुं तस्यान्नं भुक्त्वा कृच्छ्रेण शुध्यति ॥
सभागतानां यः सभ्यः पक्षपातं समाश्रयेत् ।
तामाहुः कुक्कुटं देवास्तस्याप्यन्नं विगर्हितम् ॥
स्वधर्म्मं यः समुत्सृज्य परधर्म्मं समाचरेत् ।
अनापदि स विद्वद्भिः पतितः परिकीर्त्त्यते ॥
वेदत्यागी पितृत्यामी गुरुवह्न्युद्यकस्तथा ।
गोब्राह्मणस्त्रीवधकृदपविद्धः स उच्यते ॥
येषां कुले न वेदोऽस्ति न शास्त्रं नैव च व्रतम् ।
ते नग्नाः कीर्त्तिताः सद्भिस्तेषामन्नं विगर्हितम् ॥
आशार्त्तानामदाता च दातुश्च प्रतिषेधकः ।
शरणागतं यस्त्यजति स चाण्डालाधमो नरः ॥
यो बान्धवैः परित्यक्तः साधुभिर्ब्राह्मणैरपि ।
षड्रात्रं चैव वैश्यस्य शूद्राणां
द्वादशाह्निकम् ॥
दशद्वादशमासार्द्धं
माससंख्यादिनैश्च तैः ।
स्नात्वा कर्म्मक्रियाः कुर्य्युः सर्व्वे
वर्णा यथाक्रमम् ॥
प्रेतमुद्दिश्य कर्त्तव्यमेकोद्दिष्टं
विधानतः ।
सपिण्डीकरणं कार्य्यं प्रेतस्य
वत्सरान्तरैः ॥
ततः पितृत्वमापन्ने दर्शपौर्णादिभिः
शुभैः ।
प्रीणनन्तस्य कर्त्तव्यं
यथाश्रुतिनिदर्शनम् ॥
पितुरर्थं समुद्दिश्य भूमिकोषादिकञ्च
यत् ।
कुर्य्याद्येनास्य सुप्रीता पितरो यान्ति
राक्षस ॥
यद्यदिष्टनमं किञ्चित् यच्चास्य
दयितं गृहे ।
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता
॥
अध्येतव्या त्रयी नित्यं भाव्यञ्च
विदुषा सदा ।
धर्म्मतो धनमाहार्य्यं यष्टव्यञ्चापि
शक्तितः ॥
आचारं कुर्व्वतो नात्मा जुगुप्सामेति
राक्षस ।
तत् कर्त्तव्यमशङ्केन यत्न गोप्यं
महाजने ॥
एवमाचर्तो लोके पुरुषस्य गृहे सतः
।
धर्म्मार्थिकामसंप्राप्तिः परत्रेह च
शोभना ॥
एष तूद्देशतः प्रोक्तो गृहस्थाश्रम
उत्तमः ॥ * ॥
वानप्रस्थाश्रमं धर्म्मं ते
वक्ष्यामोऽवधार्य्यताम् ।

(सन् साधुराचारो यस्य । सदाचारणशीले, त्रि । यथा, कथासरित्सागरे । २ । ७ ।
"कात्थायनो जगादैनमुपविष्टः क्षणान्तरे ।
सदाचारो भवानेवं कथमेतां गतिं गता ॥")

**सदाचारवान्**, [त्] त्रि, सदाचारविशिष्टः । सदा-
चारी । सदाचारशब्दादस्त्यर्थे वतुप्रत्यय-
निष्पन्नः ॥ (यथा, मनुः । ४ । १५८ ।
"सर्व्वलक्षणहीनोऽपि यः सदाचारवान् नरः
।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥"
सदातनः, पुं, (सदा भवः । सदा +
सायंचिर-
मिति । ४ । ३ । २३ । इति ट्यट्युलौ तुट्
च ।) विष्णुः । इति त्रिकाण्डशेषः ॥ नित्ये,
त्रि ।
इत्यमरः ॥ (यथा, भट्टिः । ५ । ६५ ।
"सायन्तनीं तिथिप्रण्यः पङ्कजानां
दिवातनीम् ।
कान्तिं कान्त्या सदातन्या ह्रेपयन्ती शुचि-
स्मिता ॥")

**सदातोया**, स्त्री, (सदा तोयं यत्र ।) एलापर्णी ।
इति शब्दचन्द्रिका ॥ करतोया । इति सदा-
नीराशब्ददर्शनात् ॥

**सदादानः**, पुं, (सदा दानं मदजलं यस्य ।) ऐरा-
वतः । गणेशः । मत्तहस्ती । इति मेदिनी ॥
नित्यदाने, क्ली ॥

**सदानन्दः**, पुं, (सदा आनन्दो यस्य ।) शिवः ।
यथा, --
"सदाशिवः सदाकर्त्ता सदाहर्त्ता सदागतिः ।
सदानन्दः सदावर्त्ता सदासङ्गविवर्ज्जितः
॥"
इति श्रीशिवयामले पार्व्व तीश्वरसंवादे
शिव-
सहस्रनामस्तोत्रम् ॥ सतताह्लादयुक्ते, त्रि ।
यथा,
"ममानन्दे सदानन्दः सदानन्दो भविष्यति ।

कुण्डाशी यश्च अस्यान्नं भुक्त्वा चान्द्रायणं चरेत् ॥
यो नित्यकर्म्मणो हानिं कुर्य्यान्नैमित्तिकस्य च ।
भुक्त्वान्नं तस्य शुध्येत त्रिरात्रोपोषितो नरः ॥
नित्यस्य कर्म्मणो हानिः केवलं मृतजन्मसु ।
न तु नैमित्तिकोच्छेदः कर्त्तव्यो हि कथञ्चन ॥
जाते पुत्त्रे पितुः स्नानं सचेलस्य विधीयते ।
मृते च सर्व्वबन्धूनामित्याह भगवान् भृगुः ॥
प्रेताय सलिलं देयं बहिर्द्दग्ध्वा तु गोत्रजैः ।
प्रथमेऽह्नि चतुर्थे वा सप्तमे वास्थिसञ्चयम् ॥
ऊर्द्ध्वं सञ्चयनात्तेषामङ्गस्पर्शो विधीयते ।
सोदकैस्तु क्रिया कार्य्या अशुद्धैस्तु सपिण्डकैः ॥
विषोद्बन्धनशस्त्राम्बुवह्निपातमृतेषु च ।
तथा गृहीतसन्न्यासे देशान्तरमृते तथा ॥
मद्यःशौचं भवेद्विद्वन् तच्चाप्युक्तं चतुर्व्विधम् ।
गर्भस्रावे तदेवोक्तं पूर्णकाले न वै चरेत् ॥
ब्राह्मणानामहोरात्रं क्षत्त्रियाणां दिनत्रयम् ।
अपत्यसन्ततिं दृष्ट्वा प्राज्ञो देहस्य चायतिम् ।
वानप्रस्थाश्रमं गच्छेदात्मनः शुद्धिकारणम् ॥
तत्रारण्योपभोगेन तपोभिश्चात्मकर्षणम् ।
भूमौ शय्या ब्रह्मचर्य्यं पितृदेवातिथिक्रिया ॥
होमस्त्रिसवनस्नानं जटावल्कलधारणम् ।
वन्यस्नेहनिषेवित्वं वानप्रस्थविधिस्त्वयम् ॥ * ॥
सर्व्वसङ्गपरित्यागो ब्रह्मचर्य्यममानिता ।
जितेन्द्रियत्वमावासे नैकस्मिन् वसते चिरम् ॥
अनारम्भस्तथाहारे भिक्षा विप्रे ह्यनिन्दिते ।
आत्मज्ञानं विवेकश्च तथाह्यात्मावबोधनम् ॥
चतुर्थे चाश्रमे धर्म्मा ह्यस्माभिस्ते प्रकीर्त्तिताः ॥
वर्णधर्म्माणि चान्यानि निशामय निशाचर ॥
गार्हस्थ्यं ब्रह्मचर्य्यञ्च वानप्रस्थं त्रयाश्रमाः ।
क्षत्त्रियस्यापि गदिता य आचारो द्विजस्य हि ॥
वैखानसत्वं गार्हस्थ्यमाश्रमद्वितयं विशः ।
गार्हस्थमुत्तमं त्वेकं शूद्रस्य क्षणदाचर ॥
स्वानि वर्णाश्रमोक्तानि धर्म्माणीह न हापयेत् ।
यो हापयति तस्यासौ परिकुप्यति भास्करः ॥
कुपितः कुलनाशाय देहरोगविवृद्धये ।
वर्ष्माशु पतते तस्य नरस्य क्षणदाचर ॥
तस्मात् स्वधर्म्मं न हि संत्यजेत ममानन्दे निरानन्दो निरानन्दो भविष्यति ॥”
इति पुराणे भगवतीवाक्यम् ॥

**सदानर्त्तः**, पुं, (सदा नृत्यतीति । नृत् + अच् ।) खञ्जनपक्षी । इति शब्दचन्द्रिका ॥ सर्व्वदा-नृत्यकारके, त्रि ॥

**सदानीरवहा**, स्त्री, (वहतीति । वह + अच् । सदा सर्व्वदा नीरस्य वहा ।) करतोया नदी । इति शब्दरत्नावली ॥

**सदानीरा**, स्त्री, (सदा नीरं यस्याः ।) करतोया नदी । इत्यमरः ॥ गौरीविवाहसमये शङ्कर-करगलितसम्प्रदानतोयप्रभवत्वात्करस्य तोयं विद्यते अत्रेति करतोया अर्श आदित्वादः । श्रावणे एतद्वर्ज्जं सर्व्वा नद्यो रजस्वला इयन्तु न रजस्वला । अतएव सदा सर्व्वदा नीरमस्या इति सदानीरा । तथा च स्मृतिः ।
“अथादौ कर्क्कटे देवी त्र्यहं गङ्गा रजस्वला ।
सर्व्वा रक्तवहा नद्यः करतोयाम्बुवाहिनी ॥”
इति भरतः ॥
(यथा, महाभारते । २ । २० । २७ ।
“गण्डकीञ्च सदानीरां शर्करावर्त्तमेव च ।
एकपर्व्वतके नद्यः क्रमेनैत्याव्रजन्तु ते ॥”
निरन्तरजलपूर्णे अश्रुजलपूर्णे च त्रि । यथा, आर्य्यासप्तशत्याम् । २२४ ।

| | | |
|---|---|---|
| | न हापयेच्चापि तथात्सवंशम् ।<br>यः संत्यजेच्चापि निजं हि धर्मं<br>तस्मै प्रकुप्येत दिवाकरश्च ॥<br>पुलस्त्य उवाच ।<br>इत्येवमुक्तो मुनिभिः सुकेशी<br>प्रणम्य तान् ब्रह्मऋषीन्महर्षीन् ।<br>जगाम चोत्पत्य पुरं स्वकीयं<br>मुहुर्मुहुर्धर्म्ममवेक्षमाणः ॥”<br>इति श्रीवामनपुराणे १४ अध्यायः<br>॥ * ॥<br>अन्यत् पाद्मे स्वर्गखण्डे २९ । ३०<br>। ३१ अध्या-<br>येषु विष्णुपुराणे ३ अंशे ११<br>अध्याये मार्कण्डेय-<br>पुराणे सदाचारनामाध्याये<br>चालोकनीयम् । | |

"चिरपथिकद्राघिममिलदलकलताश्रै बलावलिग्रथिता।
करतोयेव मृगाक्ष्या दृष्टिरिदानीं सदानीरा ॥")

**सदापुष्पः**, पुं, (सदा पुष्पं यस्य ।) नारिकेलवृक्षः ।

इति शब्दमाला ॥ सर्व्वदाकुसुमयुक्ते, त्रि ॥
(यथा, महाभारते । १४ । ३५ । २०-२२ ।
"अव्यक्तबीजप्रभवो बुद्धिस्कन्धमयो महान् ।
महाहङ्कारविटप इन्द्रियाङ्कुरकोटरः ॥
महाभूतविशेषश्च विशेषप्रतिशाखवान् ।
सदापर्णः सदापुष्पः सदाशुभफलोदयः ॥
आजीवः सर्व्वभूतानां ब्रह्मबीजः सनातनः ।
एतज्ज्ञात्वा च तत्त्वानि ज्ञानेन परमासिना ॥
छित्त्वा चामरतां प्राप्य जहाति मृत्युजन्मनी ॥"

**सदापुष्पी**, स्त्री, (सदा पुष्पं यस्याः । ङीष् ।)

रक्तार्कवृक्षः । इति रत्नमाला ॥

**सदाप्रसूनः**, पुं, (सदा प्रसूनं यस्य ।) रोहितकः ।

अर्कः । कुन्दः । इति राजनिर्घण्टः ॥

**सदाफलः**, पुं, (सदा फलमस्य ।) स्कन्धफलः ।

नारिकेलः । उडम्बरः । इति मेदिनी ॥ विल्वः ।
इति जटाधरः ॥

**सदाफला**, स्त्री, (सदा फलं यस्याः ।) त्रिसन्धि-

पुष्पम् । इति राजनिर्घण्टः ॥ वार्त्ताकुविशेषः ।
सला वेगुन इति कुली वेगुन इति दँको वेगुन
इति च भाषा । अस्या गुणाः ।
"सदाफला त्रिदोषघ्नी रक्तपित्तप्रसादनी ।
कण्डुकच्छूहरी चैव वार्त्ताकीगुणवत्तरा ॥"
इति राजवल्लभः ॥

**सदाभद्रा**, स्त्री, (सदा भद्रमस्याः ।) गम्भारी-

वृक्षः । इति रत्नमाला ॥

**सदायोगी**, [न्] पुं, (सदा सर्व्वस्मिन् काले योगी ।

विष्णुः । इति त्रिकाण्डशेषः ॥ हरिशयने मधु-
मांसवर्ज्जनफलभागी । यथा, --
"सदामुनिः सदायोगी मधुमांसस्य वर्जनात् ।
निराधीर्नीरुगोजस्वी विष्णुभक्तश्च जायते ॥"
इति तिष्यादितत्त्वम् ॥

आगमैः सदृशारम्भ आरम्भसदृशोदयः
॥")
उचितः । इति मेदिनी ॥

**सदृशस्पन्दनं**, क्ली, निष्पन्दः । इति त्रिकाण्डशेषः ॥

**सदेशः**, त्रि, (देशेन सह वर्त्तमानः ।) निकटः ।

इत्यमरः ॥ देशान्वितः । यथा, --
"सदेशसवेशौ निकटे देशवेशान्वितौ
क्रमात् ।"
इति धरणिः ॥

**सद्भूतः**, त्रि, (सन् भूतः ।) सत्यम् । इति

हेमचन्द्रः ॥ (यथा, हरिवंशे । १४८ ।
४४ ।
"तद्भवद्भिर्गुणा चाच्याः प्रद्युम्नस्य
महात्मनः ।
सद्भूताः कुलरूपस्य शीलस्य
वयसस्तथा ॥")

**सद्म**, [न्] क्ली, (सीदन्त्यत्रेति सद + मनिन् ।)

गृहम् । इत्यमरः ॥ (यथा, रघुः । ३ ।
१९ ।
"न केवलं सद्मनि मागधीपतेः
पथि व्यजृम्भन्त दिवीकसामपि ॥" *
॥
"विशीर्य्यते शिलादिषु पातात्
विशीर्य्यन्तेऽनेन
कुड्यादय इति वा । गच्छति
वागच्छति निम्नं
गम्यते वा प्राणिभिः । अवसादयति
पिपासा-
युक्तं वा । सद्लृ विशरणगत्यवसादनेषु +
मनिन् ।" इति निघण्टुटीका । १ ।
१२ । ६६ ।)
जलम् । इति मेदिनी ॥ (साद्यन्त्ये
अवसाद्यन्ते
प्राणिनो यत्रेति । संग्रामः । इति
निघण्टुः ।
२ । १७ ॥)

अग्निमान् श्रोत्रियो राजा सद्यःशौचाः
प्रकी-
र्त्तिताः ॥"
इति गारुडे १०७ अध्यायः ॥ * ॥
अन्यच्च ।
"कारवः शिल्पिनो वैद्या
दासीदासास्तथैव च ।
दातारो नियमी चेव ब्रह्मविद्ब्रह्मचारिणौ
॥
सत्रिणो व्रतिनस्तावत् सद्यःशौचा
उदाहृताः ।
राजा चैवाभिषिक्तश्च प्रातः सत्रिण एव च
॥
यज्ञे विवाहकाले च देवयागे तथैव च ।
सद्यःशौचं समाख्यातं दुर्भिक्षे वाप्युपद्रवे
॥
डिम्बाहवहतानाञ्च विद्युता पार्थिवर्द्विजैः
।
सद्यःशौचं समाख्यातं सजातिमरणे तथा
॥
अग्नौ मरुप्रपतने वीराध्वस्याप्यनाशके ।
ब्राह्मणार्थे च संन्यस्ते सद्यःशौचं
विधीयते ॥"
इति कौर्म्मे उपविभागे २२ अध्यायः ॥
* ॥
अपरञ्च । अथ सद्यःशौचम् । तत्र विष्णुः
।
नाशौचं राज्ञां राजकर्म्मणि न व्रतिनां व्रते
न
सत्रिणां सत्रे न कारूणां स्वकर्म्मणि न
राजाज्ञाकारिणां तदिच्छया न
देवप्रतिष्ठा-
विवाहयोः पूर्व्वसंवृतयोः इति । सत्रिणां
नित्यप्रवृत्तान्नदानानां सत्रे अन्नदाने ।
कारवः
सूपकाराद्याः । आदिपुराणे ।
"सूपकारेण यत् कर्म्म करणीयं नरेष्विह
।

**सदृक्**, [श्] त्रि, (समान इव दृश्यतेऽसौ ।

समान + दृश् + "समानान्ययोश्चेति वक्तव्यम् ।"

३ । २ । ६० । इत्यस्य वार्त्तिकोक्त्या क्विन् । "दृक्-

दृशवतुषु ।" ६ । ३ । ८९ । इति समानस्य

सः ।) तुल्यम् । इत्यमरः ॥ (यथा, कथा-

सरित्सागरे । ३९ । ८८ ।

"न त्वया सवृगन्योऽस्ति त्रैलोक्येऽपि धनुर्धर"

**सदृक्षः**, त्रि, (समान इव दृश्यते इति । समान +

दृश + क्सः । समानस्य सादेशः ।) सदृशः ।

इत्यमरः ॥ (यथा, भागवते । ३ । १ । २९ ।

"कश्चिद्धरेः सौम्य सुतः सदृक्ष

आस्तेऽग्रणी रथिनां साधु साम्बः ॥")

**सदृशः**, त्रि, (समान इव दृश्यतेऽसौ । समान +

दृश + कञ् । "दृक्दृशवतुषु ।" ६ । ३ । ८९ ।

इति समानस्य सः ।) समः । इत्यमरः ॥

(यथा, रघुः । १ । १५ ।

"आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः ।

**सद्यः**, [स्] व्य, (समानेऽहनि इति । "सद्यः

परुत्परार्य्यैषम इति ।" ५ । ३ । २२ । इति

द्यप्रत्ययः समानस्य सभावश्च

निपात्यते ।)

तत्क्षणम् । तत्पर्य्यायः । सपदि २ ।

इत्यमरः ॥

द्वे तत्क्षणे तत्काले । समानेऽह्नि सद्यः

कुतः क्व

कुह इत्यादिनानिपातः । सद्यः पतति

मांसेन

इति सपदि मुकुलिताक्षीम् । द्वयं

दन्त्यादि ।

इति भरतः ॥

**सद्यःकृतं**, क्ली, (सद्यस्तत्क्षणात् कृतम् ।) नाम ।

इति त्रिकाण्डशेषः ॥ तत्क्षणकृते, त्रि ॥

**सद्यःप्राणकरः**, त्रि, (सद्यस्तत्क्षणात् प्राणस्य

बलस्य करः ।) तत्क्षणात्

बलकारकद्रव्यादिः ।

यथा, चाणक्ये ।

"सद्योमांसं नवान्नञ्च बाला स्त्री

क्षीरभोजनम् ।

घृतमुष्णोदकञ्चैव सद्यःप्राणकराणि षट्

॥"

**सद्यःप्राणहरः**, त्रि, (सद्यः प्राणस्य बलस्य हरः ।

तत्क्षणात् बलायुषार्नाशकद्रव्यादि ।

यथा, --

"शुष्कं मांसं स्त्रियो वृद्धा

बालार्कस्तरुणं दधि ।

प्रभाते मैथुनं निद्रा सद्यःप्राणहराणि

षट् ॥

इति चाणक्यम् ॥

**सद्यःशुद्धिः**, स्त्री, (सद्यस्तत्क्षणात् शुद्धिः ।) सद्यः-

शौचम् । यथा, --

"देशान्तरमृते बाले सद्यःशुद्धिर्यतौ मृते

॥"

इति गारुडे १०७ अध्यायः ॥

तदन्यो नैव शक्नोति तस्माच्छुद्धः स

सूपकृत् ॥"

कूर्म्मपुराणे ।

"कारवः शिल्पिनो वैद्या दासा

दास्यस्तथैव च ।

दातारो नियमी चैव ब्रह्मविद्‌ब्रह्मचारिणौ ।

सत्रिणो व्रतिनस्तावत् सद्यःशौचा

उदाहृताः ॥"

आदिपुराणे ।

"शिल्पिनश्चित्रकाराद्याः कर्म्म यत्

साधयन्त्युत ।

तत् कर्म्म नान्यो जानाति तस्मात् शुद्धः

स्वकर्म्मणि ॥

दासा दास्यश्च यत् कर्म्म कुर्व्वन्त्यपि च

लीलया ।

तदन्यो न क्षमः कर्त्तुं तेन ते शुचयः

स्मृताः ॥"

चित्रकराद्यरूपाः शिल्पिनः ।

आद्यशब्दाच्चेल-

निर्णेजकाद्याः । शातातपः ।

"मूल्यकर्म्मकराः शुद्रा दासा

दास्यस्तथैव च ।

स्नाने शरीरसंस्कारे गृहकर्म्मण्यदूषिताः

॥"

स्मृतिः ।

"सद्यःस्पृश्यो गर्भदासो

भक्तिदासस्त्र्यहा-

च्छुचिः ॥"

वैद्या अपि चिकित्सायामेव । तथा च

स्मृतिः ।

"चिकित्सको यत् कुरुते तदन्येन न

शक्यते ।

तस्मात् चिकित्सकः स्पर्शे शुद्धो

भवतिनित्यशः ॥"

दातार आवश्यकप्रत्यहं

गोभूमिहिरण्यादि-

दाने प्रवृत्ताः । तेषां तद्दान एव । प्रत्यहं

दानञ्च । दातव्यं प्रत्यहं पात्रे इति याज्ञ-

वल्क्यात् । कादाचित्कदानकारिणान्तु

दाने

| | | |
|---|---|---|
| | **सद्यःशोथा**, स्त्री, (सद्यःशोथो यस्याः । कपि-<br>कच्छूः । इति शब्दचन्द्रिका ॥<br>**सद्यःशौचं**, क्ली, (सद्य एव शौचं शुद्धिः ।) तत्-<br>क्षणाच्छद्धिः । यथा, --<br>"शिल्पिनः कारवो वैद्या दासीदासाश्च<br>भृत्यकाः | प्रक्रान्ते अशौचं नास्ति तावत् यावत्तत्<br>कर्म्म<br>कुर्व्वन्ति इति । हारलताप्येवम् ।<br>पूर्व्वसङ्कल्पित-<br>द्रव्यदानेऽपि नाशौचम् । यथा च मिता-<br>क्षरायाम् । |

"पूर्व्वसङ्कल्पितं द्रव्यं दीयमानं न
दुष्यति ॥"
इति ॥
आदिपुराणे ।
"निवृत्ते कृच्छ्रहोमादौ ब्राह्मणादिषु
भोजने ।
गृहीतनियमस्यापि न स्यादन्यस्य
कस्यचित् ॥
निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्म्मणि
।
निमन्त्रणाद्धि विप्रस्य
स्वाध्यायाद्विरतस्य च ।
देहे पितृषु तिष्ठत्सु नाशौचं विद्यते
क्वचित् ॥"
प्राजापत्यादिकृच्छ्रे समाप्ते
होमयागजपेषु
समाप्तेषु सम्पूर्णार्थमवश्यं मया ब्राह्मणा
भोजयितष्या इति गृहीतनियमो
यस्तस्या-
शौचेऽन्यकुलजातानामपि भुञ्जानानां
दोषा-
भावः । कस्यचिद्दातृभोक्त्वोरित्यर्थः ।
एवं प्रारब्ध-
श्राद्धेऽपि क्वचिदित्यन्नेन
दातृभोक्त्रोरशौचाभावः।
तथा च विष्णुः ।
"व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्च्चने जपे
।
आरब्धे सूतकं न स्यादनारब्धे तु
सूतकम् ॥"
इति ॥
पराशरः ।
"दीक्षितेष्वभिसिक्तेषु व्रततीर्थपरेषु च ।
तपोदानप्रसक्तेषु नाशौचं मृतसूतके ॥"
यजमानां सोमयागाङ्गदीक्षणीयेष्टौ
कृतायां
दीक्षितत्वं भवति तेन
दीक्षणीयेष्ट्युत्तरकालं

"सद्यःशौचं समाख्यातं दुर्भिक्षे चाप्युपप्लवे ।
डिम्बाहवहतानाञ्च विद्युता पार्थिवैर्द्विजैः ।
सद्यःशौचं समाख्यातं शापादिमरणे तथा ॥"
उपप्लवे राजविप्लवे । औपसर्गिकात्यन्तमरक-
पीडने च सद्यःशौचमुक्तम् । तथा च पराशरः ।
"उपसर्गमृते चैव सद्यःशौचं विधीयते ।"
अतएव ।
"आपद्यपि च कष्टायां सद्यःशौचं विधीयते ।"
इति याज्ञवल्क्यवचने अनिरुद्धभट्टशूलपाणि-
प्रभृतिभिरौपसर्गिकात्यन्तमरकपीडायां सद्यः-
शौचं विधीयते इत्युक्तम् । उपसर्गश्च त्रिवि-
धोत्पातः । तथा च गर्गसंहिताबार्हस्पत्ययोः ।
"अतिलोभादसत्याद्वा नास्तिक्याद्वाप्य-
धर्म्मतः ।
नरापचारान्नियतमुपसर्गः प्रवर्त्तते ॥
अतोऽपचारान्नियतमपवर्ज्जन्ति देवताः ।
ताः सृजन्त्यद्भुतांस्तावद्दिव्यनाभसभूमिजान् ॥
त एव त्रिविधा लोके उत्पाता देवनिर्म्मिताः ।
विचरन्ति विनाशाय रूपैः सम्भावयन्ति च ॥"
यद्यप्युपसर्गः स्मृतो रोगभेदोपप्लवयोरपीति
विश्वकोषादुपसर्गस्योभयवाचकत्वं तथाप्यत्र
मुनिप्रयुक्तत्वेनान्तरङ्गत्वात् त्रिविधोत्पातात्म-
कोपसर्गो गृह्यते न तु रोगविशेषात्मक इति ।
एतेनोपसृजन्तीति व्युत्पत्त्या देहाभ्यन्तर एव
यावद्वर्त्तते तावत्कालमरण एव सद्यःशौचं बहि-
र्भावे व्रणपरम्परया मरणे सति स्वजात्युक्ता-
शौचमेवेति त्र्यहमिति दर्शनस्मृतिसारप्रदीपा
इति वाचस्पतिमिश्रोक्तं हेयम् । द्विजैर्ब्राह्मणैः
शापादीत्यादिशब्देनाभिचारमृतस्य ग्रहणम् ।
ब्रह्मकूर्म्मपुराणाभ्यां यद्ब्राह्मणहतस्याशौचा-
भाव उक्तः स बुद्धिपूर्व्वकहनने बोद्धव्यः । प्रमाद-
हते त्वशौचाद्यस्त्येव अन्यथा मरीचिवचनं
निर्व्विषयं स्यात् । यथा, --
"विषशस्त्रश्वापदाहितिर्य्यग्ब्राह्मणघातिनाम्
चतुर्द्दश्यां क्रिया कार्य्या अन्येषान्तु विगर्हिता
विषादिसाहचर्य्यात् ब्राह्मणकृतघातोऽस्या-
स्तीति प्रतीयते । यच्चात्र ये च वै ब्राह्मणैर्हता
इति ब्रह्मपुराणीयं साधकत्वेनोपन्यस्तं श्राद्ध-
विवेके तच्चिन्त्यम् ।

"भक्षैर्नानाविधैर्युक्तं ब्राह्मणाय
निवेदयेत् ।
प्रीयतां देवदेवोऽत्र सद्योजातः
पिनाकधृक् ॥"
इति म्मत्स्ये शिवचतुर्द्दशीव्रते ७९
अध्यायः ॥
सद्योजाताय नमः । इति शिवरात्रिव्रते
शिवं-
स्नानमन्त्रः । इति तिथ्यादितत्त्वञ्च ॥
तत्क्षणोत्-
पन्ने त्रि ॥

**सद्योभावी**, [न्] पुं, (सद्यो भवतीति । भू +
णिनिः ।) तर्णकः । सद्योजातवत्सः ।
इति
शब्दचन्द्रिका ॥

**सद्रुः**, त्रि, (सीदति गच्छतीति । सद गतौ +
"दाधेट्सिशदसदो रुः ।" ३ । २ ।
१५९ । इति
रुः ।) गमनकर्त्ता । इति
सिद्धान्तकौमुदी ॥

**सद्वसथः**, पुं, ग्रामः । सच्छब्दपूर्व्वकवसधातोरथच्
प्रत्ययेन निष्पन्नः । इति केचित् ॥
किन्तुसंपूर्व्व-
वसधातोरथप्रत्यये संवसथ इति
सिद्धान्तकौ-
मुद्यां निष्पादितम् ॥

**सद्वृत्तं**, क्ली, (सत् वृत्तम् ।) साधुस्वभावः । सच्च-
रित्रम् । इति जटाधरः ॥ (यथा,
कथा-
सरित्सागरे । ५१ । २२७ ।
"सच नरवाहनदत्तः
सद्वृत्तमनोरमामुदारगुणाम्
प्राप्यालङ्कारवतीं वाणीमिव
सुकविरास्त
तद्रसिकः ॥")

यजमानस्य यत् कर्म्म तत्राशौचं नास्ति
।
अभिषिक्तेषु क्षत्त्रियनृपतिषु । तीर्थं
गङ्गादि ।
गुरुरिति कश्चित् ॥ कालमाधवीये
कूर्म्मपुरा-
णम् ।
“काम्योपवासे प्रक्रान्ते अन्तरा
मृतसूतके ।
तत्र काम्यव्रतं कुर्य्यात्
दानार्च्चनविवर्ज्जितम् ॥”
तत्र दानार्च्चनं स्वयं वर्ज्जयेत्
अन्यद्वारा तु
कारयेत् । तथा च मत्स्यपुराणम् ।
“गर्भिणी सूतिका नक्तं कुमारी च
रजस्वला ।
यदाशुद्धा तदान्येन कारयेत् क्रियते
सदा ॥”
उपवासाचरणे गर्भादिपीडासम्भावनायां
नक्तं
भोजनं कुर्य्यात् ।
“उपवासेष्वशक्तस्य तदेव फलमिच्छतः
।
अनभ्यासेन रोगाणां किमिष्टं
व्रतमुच्यताम् ॥”
इति नारदप्रश्नानन्तरम् ।
“उपवासष्वशक्तानां नक्तं भोजनमिष्यते
।”
इति मत्स्यपुराण एवेश्वरप्रतिवचनात् ।
स्वयमशुद्धा शुद्धद्वारा पूजादिकं कारयेत्
।
कायिकमुपवासादि सदा
शुद्ध्यशुद्धिकाले स्वयं
क्रियते । स्मृतिपरिभाषायामप्येवम् ।
विष्णुः ।
“बहुकालिकसङ्कल्पो गृहीतश्च पुरा
यदि ।
सूतके मृतके चैव व्रतं तन्नैव दुष्यति ॥”
एतत्काम्यव्रतपरम् ।
नित्यानान्त्वारब्धानामना-
“महापातकिनो ये च पतितास्ते उदाहृताः ।”
इत्युत्तरार्द्धेन पातित्यमभिधाय तेषां श्राद्ध-
निषेधात् । जावालः ।
“दुर्भिक्षे राष्ट्रसम्पाते शस्त्रगोब्रह्मघातिते ।
पतितेऽनशनप्रेते विदेशस्थे शिशौ न च ॥”
नाशौचमित्यर्थः । इति शुद्धितत्त्वम् ॥

**सद्यस्कः**, त्रि, (सद्यः कायतीति । कै + कः ।)

नूतनम् । इति हेमचन्द्रः ॥ (यथा, सुश्रुते ।
१ । ४५ ।
“नवनीतं पुनः सद्यस्कं लघु सुकुमारं मधुर-
मिति ॥”)

**सद्योजातः**, पुं, (सद्यस्तत्क्षणात् जातः ।) वत्सः ।

इति शब्दचन्द्रिका ॥ शिवः । यथा, --
तद्युक्ते त्रि । यथा, --
“नासमञ्जसशीलैस्तु सहासीत
कदाचन ।
सद्वृत्तसन्निकर्षो हि क्षणार्द्धमपि
शस्यते ॥”
इति तिथ्यादितत्त्वम् ॥

**सद्वृत्तिभाक्**, [ज्] त्रि, (सद्वृत्तिं भजतीति

भज + क्विप् ।) सद्वृत्तिविशिष्टः ।
यथा, सारा-
वल्याम् ।
“पथ्याशिनां शीलवतां नराणां
सद्वृत्तिभाजां विजितेन्द्रियाणाम् ।
एवंविधानामिदमायुरत्र
चिन्त्यं सदा वृद्धमुनिप्रवादः ॥”
इति मलमासतत्त्वम् ॥

**सधर्म्मचारिणी**, स्त्री, (सहधर्म्मं चरतीति । चर
+

णिनिः । “वोपसर्ज्जनस्य । ६ । ३ ।
८२ । इति
सहस्य सः ।) भार्य्या । यथा, --
“सधर्म्मचारिणी पत्नी जाया च
गृहिणी गृहा ॥”
इति हलायुधः ॥
(यथा, महाभारते । १३ । १५० ।
४८ ।
“एतन्मे संशयं सर्वं वक्तुमर्हसि वै प्रभो
।
सधर्म्मचारिणी चाहं भक्ता चेति
वृषध्वजः ॥”

**सधर्म्मा**, [न्] त्रि, (समानो धर्म्मो यस्य ।
“धर्म्मा-

दनिच् केवलात् ।” ५ । ४ । १२४ ।
इति
अनिच् ।) सदृशः । यथा, --
“तुल्यः समानः सदृक्षः सरूपः
सदृशः समः ।
साधारणसधर्म्माणौ सवर्णः सन्निभः
सदृक् ॥”
इति हेमचन्द्रः ॥

| | | |
|---|---|---|
| रब्धानामविशेषेण कर्त्तष्यता ।<br>नाशौचमित्यनु-<br>वृत्तौ ब्रह्मपुराणम् ।<br>“नैष्ठिकस्याथवान्यस्य भिक्षार्थं<br>प्रस्थितस्य च ॥”<br>नैष्ठिकस्य ब्रह्मचारिविशेषस्य । अन्यस्य<br>चतुर्था-<br>श्रमिणः । अशौचिभिक्षाग्रहणे दोषाभावः<br>।<br>इति हारलताप्रभृतयः ॥ कौर्म्मे । | | समानधर्म्मयुक्तश्च ॥ (यथा, मनुः ।<br>१० । ४१ ।<br>“सजातिजानन्तरजाः षट्सुता<br>द्विजर्म्मिणः ।<br>शुद्राणान्तु सधर्म्माणः<br>सर्व्वेऽपध्वंसजाः<br>स्मृताः ॥”) |

**सधर्म्मिणी**, स्त्री, (सह धर्म्मोऽस्या अस्तीति ।
"धर्म्मशीलवर्णान्ताच्च ।" ५ । २ । १३२ । इति
इनिः । "वोपसर्जनस्य ।" ६ । ३ । ८२ । इति
सहस्य सः ।) भार्य्या । यथा, --
"सुवासिनी बधूटी स्याच्चिरण्टयथ सधर्म्मिणी ।
पत्री सहचरी पाणिगृहिती गृहिणी गृहा ॥"
इति हेमचन्द्रः ॥

**सधर्म्मा**, [न्] त्रि, (सह धर्म्मोऽस्त्यस्येति ।
"धर्म्मशीलवर्णान्ताच्च ।" ५ । २ । १३२ । इति
इनिः । "वोपसर्ज्जनस्य ।" ६ । ३ । ८२ । इति
सहस्य सः ।) समानधर्म्माचारी । यथा, --
"पशूनां समजोऽन्येषां समाजोऽथ सधर्मि-
णाम् ॥"
इत्यमरः ॥

**सधवा**, स्त्री, (धवेन भर्त्रा सह वर्त्तमाना ।)
जीवत्पतिका । तत्पर्य्यायः । सभर्त्तृका २ पति-
वत्नी ३ सनाथा ४ । इति जटाधरः ॥ अस्या
धर्मा यथा, --
"भर्त्तुः शुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया ।
तद्बन्धूनाञ्च कल्याण्यः प्रजानाञ्चानुपोषणम् ॥
दुःशीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा ।
पतिः स्त्रीभिर्नहातव्यो लोकेप्सुभिरपातकी ॥"
इति श्रीभागवते १० स्कन्धे २९ अध्यायः ॥

**सधिः**, पुं, अग्निः । इति त्रिकाण्डशेषः ॥

**सधिः**, [स्] पुं, (सहते इति । सह + सहेर्धश्च ।"

**सनः**, पुं, घण्टापाटलिवृक्षः । इति शब्दचन्द्रिका ॥
(सनत्कुमारः । सनकः । सनन्दनः । सनातनः ।
दाने, क्ली, । अखण्डिते, त्रि ॥ यथा, भागवते ।
२ । ७ । ५ ।
"तप्तं तपो विविधलोकसिसृक्षयाम
आदौ सनात् स्वतपनः स चतुःसनोऽभूत् ॥"
"स हरिः चतुसनोऽभूत् । सनत्कुमारः सनकः
सनन्दनः सनातन इति चत्वारः सनशब्दा
नाम्नि यस्य सः । कथम्भूतात् स्वतपसः सनात्
अखण्डितात् यद्वा स्वतपसः सनात् दानात्
समर्पणादित्यर्थः सनु दाने ।" इति तट्टीकायां
श्रीधरस्वामी ॥)

**सनकः**, पुं, विष्णुपारिषभेदः । इति शब्दरत्ना-
वली ॥ स तु ब्रह्मणश्चतुष्पुत्रान्तर्गतपुत्रविशेषः ।
यथा, --
"दृष्ट्वा पापीयसीं सृष्टिं नात्मानं बह्वमन्यत ।
भगवद्ध्यानपूतेन मनसान्यांस्ततोऽसृजत् ॥
सनकञ्च सनन्दञ्च सनातनमथात्मभूः ।
सनत्कुमारञ्च मुनीन् निष्क्रयानूर्द्ध्वरेतसः ॥
तान् बभाषे स्वभूः पुत्रान् प्रजाः सृजत पुत्रकाः
तन्नैच्छन्मोक्षधर्म्माणो वासुदेवपरायणाः ॥"
इति श्रीभागवते ३ स्कन्धे १२ अध्यायः ॥

अपृच्छद्योगविज्ञानं तमुवाच प्रजापतिः ॥
कथयिष्यामि ते सांख्यं यदि पुत्रेति मे वचः ।
शृणोषि कुरुषे तच्च ज्ञानं सांख्यं श्रुतो भव ॥
पितामहवचः श्रुत्वा साध्यः प्राह तपोधन ।
सत्यं हि तव पुत्रोऽहं देव योगं वदस्व माम् ॥
तमुवाच महायोगी त्वन्मातापितरौ यदि ।
दास्येते च ततः सूनुर्दायादो मेऽसि पुत्रकः ॥
सनत्कुमारः प्रोवाच दायादपरिकल्पना ।
येषां हि भवता प्रोक्ता तान् मे व्याख्यातुमर्हसि ॥
तदुक्तं साध्यमुख्येन वाक्यं श्रुत्वा पितामहः ॥
प्राह प्रहस्य भगवान् शृणु वत्सेति नारद ! ॥"
इति वामने ५७ । ५८ अध्यायौ ॥
स च पञ्चहायनवयस्कः चूडादिसंस्कारवेद-
सन्ध्याविहीनश्च । यथा, --
"तच्छ्रुत्वा सृञ्जयो राजा रत्नभूषणभूषिताम् ।
गृहीत्वा कन्यकां रम्यां नारदाय ददौ मुदा ॥
गृहीत्वा च सभार्य्यं तं पुत्रं धाता मुदान्वितः ।
प्रययौ ब्रह्मलोकञ्च देवेन्द्रैर्मुनिभिः सह ॥
तत्राजगाम नग्नश्च प्रज्वलन् ब्रह्मतेजसा ।
सनत्कुमारो भगवान् साक्षाच्च बालको यथा ॥
सृष्टेः पूर्व्वञ्च वयसा यथैवं पञ्चहायनः ।
अचूडोऽनुपवीतश्च वेदसन्ध्याविहीनकः ॥
कृष्णेति मन्त्रं जपति यस्य नारायणो गुरुः ।
अनन्तकालकल्पञ्च भ्रातृभिश्च त्रिभिः सह ॥
वैष्णवानामग्रणीशो ज्ञानिनाञ्च गुरोर्गुरुः ।
आराद्दृष्ट्वा नारदस्तं भ्रातरञ्च सतां वरम् ॥
सहसा शिरसा भूमौ दण्डवत् प्रणनाम तम् ।
उवाच नारदं बालः प्रहस्य परमार्थकम् ॥"

उणा० २ । ११४ । इति इसिन्
धश्चान्तादेशः ।)
वृषभः । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**सध्रीची**, स्त्री, (सह अञ्चति या सा । अञ्च +

ऋत्विगादिना क्विन् । सहस्य सध्रिः ।
अञ्चते-
श्चोपसंख्यानं इति ङीप् । अच
इत्यकारलोपः ।
चाविति दीर्घः ।) सखी । इति हेचन्द्रः ॥
(यथा, भट्टिः । ६ । ७ ।
"सीतांसौमित्रिणा त्यक्तां सध्रीचीं
त्रस्नुमेकिकाम्
विज्ञायामंस्त काकुतस्थः क्षये क्षेमं
सुदुर्लभम् ॥")

**सध्र्यङ्**, [च्] त्रि, (सह अञ्चतीति । अञ्च गतौ +

ऋत्विगादिना क्विन् । सहस्य सध्रिः ।)
सहचरः
इत्यमरः ॥ (यथा, भागवते । २ । ७ ।
४७ ।
"सध्र्यङ् नियम्य यतयो यमकर्त्तहेतिं ।
जह्युः स्वराडिव निपानखनित्रमिन्द्रः ॥"
सम्यक् । यथा, तत्रैव । ४ । २७ । १ ।
"इत्थं पुरञ्जनं सन्ध्रग्वशमानीय विभ्रमैः ।
पुरञ्जनी महाराज रेमे रमयती पतिम् ॥")

**सन्**, पुं, व्याकरणीयप्रत्ययविशेषः । तत्सूत्रादि

यथा । सन्निच्छायाम् । धोः परः सन्
स्यादि-
च्छायाम् । अत्तु मिच्छति जिघत्सति ।
इति
मुग्धबोधव्याकरणे सनन्तपादः ॥ * ॥
प्रथमैक-
वचनान्तपुंलिङ्गसच्छब्दरूपोऽप्येवम् ।
तदुदा-
हरणम् । यथा, --
"रामं नमति सानन्दं धर्म्मानभिनिविश्य
सन् ॥"
इति तत्रैव कारकपादः ॥

**सनः**, पुं, स्त्री, हस्तिकर्णास्फालः । यथा । कर्णा-

तस्य वासस्थानं जनलोकः । इति
काशीखण्डम् ॥

**सनत्**, पुं, ब्रह्मा । इति त्रिकाण्डशेषशब्दरत्ना-

वल्यौ ॥

**सनत्** व्य सर्व्वदा । इत्यमरटीकायां रामाश्रयः ॥

**सनत्कुमारः**, पुं, (सनतो ब्रह्मणः कुमारः ।)

ब्रह्मणः पुत्त्रः । तत्पर्य्यायः । वैधात्रः २ ।
इत्य-
मरः ॥ वैधातकिः ३ । इति भरतः ॥
धातृ-
पुत्त्रः ४ वेधायः ५ । इति शब्दरत्नावली
॥
तन्नामव्युत्पत्तिर्यथा । सनत् ब्रह्मा तस्य
कुमारः
सनत्कुमारः । सन्नित्यकुमारस्तेन
सनत्कुमारो
वापीति स्वामिमतम् । इति भरतः ॥
तन्नाम-
कारणम् । यथा, --
"यथोत्पन्नस्तथैवाहं कुमार इति विद्धि
माम् ।
तस्मात् सनत्कुमारेति नामैतन्मे
प्रतिष्ठितम् ॥"
इति महाभारते हरिवंशः ॥ * ॥
स च धर्म्मस्यौरसेन अहिंसायां जातः
पश्चात्
ब्रह्मणो दत्तपुत्त्रः । अयं साध्यगणः ।
यथा, --
श्रीनारद उवाच ।
"कोऽयं सनत्कुमारेति यस्योक्तं ब्रह्मणा
स्वयम् ।
तवापि तेन गदितं वद मामनुपूर्व्वतः ॥
पुलस्त्य उवाच ।
धर्म्मस्य भार्य्याहिंसाख्या तस्यां
पुत्त्रचतुष्टयम् ।
सस्पाप्तं मुनिशार्द्दूल योगशास्त्रविचारकम्
॥
ज्येष्ठः सनत्कुमाराऽभूत् द्वितीयश्च
सनातनः ॥

इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १२९
अध्यायः ॥
जिनमते
द्वादशसार्व्वभौमान्तर्गतसार्व्वभोमभेदः
इति हेमचन्द्रः ॥

**सनन्दः**, पुं, ब्रह्मणः पुत्त्रचतुष्टयान्तर्गतपुत्त्रविशेषः

स तु जनलोकवासी । इति काशीखण्डम् ॥
॥
स एव दिव्यमनुष्यः । अस्य तर्पणं
निवीतिना
प्रत्यङ्मुखेन प्राजापत्यतीर्थेन सागमेन
कर्त्तव्यम्
तदितरेण उदङ्मु खेन कर्त्तव्यम् । यथा दक्षः
।
"प्रादेशमात्रमुद्धृत्य सलिलं प्राङ्मुखः सुरान् ।
उदङ्मनुष्यांस्तृप्येत पितॄन् दक्षिणतस्तथा ॥
अग्रैस्तु तर्पयेद्देवान् मनुष्यान् कुशमध्यतः ।
पितॄंस्तु कुशमूलाग्रे विधिः कौशो यथाक्रसम्
॥
कृतोपवीती देवेभ्यो निवीती च भवेत्ततः ।
मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्त्रानृषींस्तथा
॥
सनकश्च सनन्दश्च तृतीयश्च सनातनः ।
कपिश्चासुरिश्चैव वोदुः पञ्चनिखस्तथा ।
सर्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा ॥"
अनेनाञ्जलिद्वयम् यथा, --
"एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः ।
अर्हन्ति पितरस्त्रीं स्त्रीन् स्त्रियस्त्वेकैकमञ्ज-
लिम् ॥"
परिशिष्टप्रकाशधृतं सामवेदीयषट्त्रिंशद्-
ब्राह्मणम् । मनुष्याणामेषा दिक् या प्रती-
चीति । तथा च ज्योतिष्टोमे श्रूयते । प्राचीं
देवा अभजन्त दक्षिणां पितरः प्रतीचीं
मनुष्याः
उदीचीमसुराः अपरेषामुदीचीं मनुष्याः ।
विष्णुपुराणे ॥
"प्राजापत्येन तीर्थेन मनुष्यांस्तर्पयेत् पृथक्
।"
इत्याह्निकाचारतत्त्वम् ॥

| | | |
|---|---|---|
| स्फाले सनः सनी । इति शब्दरत्नावली ॥ | तृतीयः सनको नाम चतुर्थश्च सनन्दनः ॥<br>सांख्यवेत्तारमपरं कपिलं वोढुमासुरिम् ।<br>दृष्ट्वा पञ्चशिखं श्रेष्ठं योगयुक्तं तपोनिधिम् ॥<br>ज्ञानयोगं न ते दद्युर्ज्यायांसोऽपिकनीयसाम्।<br>ज्ञानमाद्यं महायोगं कपिलादिर्न चावदत् ॥<br>सनत्कुमारश्चाभ्येत्य ब्रह्माणं कमलोद्भवम् । | |

**सनपर्णी**, स्त्री, (सनस्य पर्णमिव पर्णमस्याः ।
पाककर्णेति ङीष् ।) असनपर्णी । इति शब्द-
रत्नावली ॥

**सनसूत्रं**, क्ली, (सनस्य सूत्रम् ।) पवित्रकम् । द्वे
शणसूत्रजाले । शणस्य सूत्रं शणसूत्रं शणति
ददाति सूत्रं शणः । शण श्रन्म दाने अन् शण-
स्तालव्यादिमूर्द्धन्यणान्तः । इति बहवः । सनो
दन्त्यसादिर्दन्त्यनान्तः । इति केचित् । तन्मते
षन दु ञ दाने इत्यस्य रूपम् । सणो दन्त्य-
सादिर्मूर्द्धन्यणान्त इत्यपरे । सण किण मणि
काकण कोण काणा इति मूर्द्धन्यणान्ते विद्या-
भरणः ।
"कार्पासमुपवीतं स्यात् विप्रस्योर्द्धवृतं त्रिवृत् ।
सनसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम् ॥"
इति मनुवचनात् पवित्रकमपि तदुच्यते । इत्य-
मरटीकायां भरतः ॥

**सना**, व्य नित्यम् । इत्यमरः ॥ (यथा, ऋग्वेदे ।
३ । ५४ । ९ ।
"सना पुराणमध्ये म्यारात् ॥")

**सनात्**, व्य, नित्यम् । इत्यमरटीकायां रामाश्रमः ॥
(चिरात् । यथा, ऋग्वेदे । ४ । २० । ६ ।
"सनादेव सहसे जात उग्रः ॥"
"सनादेव चिरादेव जात उत्पन्नः ॥" इति तद्
भाव्ये सायणः ॥) विष्णुः । इति तस्य सहस्र-
नामस्तोत्रम् ॥

**सनातनः**, पुं, (सना भवः । "सायञ्चिरंप्राह्णे

**सनातनी**, स्त्री, (सनतन + टित्वात् ङीष् ।)
दुर्गा । लक्ष्मीः । सरस्वती । इति शब्दरत्ना-
वली ॥ तस्या व्युत्पत्तिर्यथा, --
"सर्व्वकाले सना प्रोक्ता विद्यमाने तनीति च ।
सर्व्वत्र सर्व्वकालेषु विद्यमाना सनातनी ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५४ अध्यायः ॥
अपि च ।
"निर्गुणस्य च नित्यस्य बाचकश्च सनातनः ।
सदा नित्या निर्गुणा या कीर्त्तिता सा सना-
तनी ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे २७ अध्यायः ॥
अन्यच्च ।
"स्थितिं करोति भूतानां सैव काले सनतनी ।"
इति देवीमाहात्म्यम् ॥

**सनाथा**, स्त्री, (नाथेन सह वर्त्तमाना ।) जीवद्-
भर्त्तृका । इति जटाधरः ॥ (प्रभुविशेष्टे, त्रि ।
यथा, भागवते । १ । ११ । ८ ।
"अहो सनाथा भवता स्म यद्वयं
त्रैपिष्टपानामपि दूरदर्शनम् ।
प्रेमस्मितस्निग्धनिरीक्षणाननं
पश्येम रूपं तव सर्व्वसौभगम् ॥")

**सनाभिः**, पुं, (समानो नाभिर्गोत्रमस्य । "ज्योति-
र्जनपदेति ।" ६ । ३ । ८५ । इति समानस्य
सः ।) सपिण्डः । ज्ञातिः । इत्यमरमेदिनीकरौ ॥
(यथा, मनुः । ५ । ७२ ।
"यथोक्तेनैव कल्पेन शुध्यन्ति तु सनाभयः ॥")

**सनाभिः**, त्रि, (समानो नाभिर्यस्येति । समानस्य
सः ।) तुल्यः । इति मेदिनी ॥ स्नेहयुक्तः । इति
शब्दरत्नावली ॥

**सनामकः**, पुं, शोभाञ्जनः । इति शब्दचन्द्रिका ॥
(समानं नाम यस्य ।) समाननामयुक्ते, त्रि ॥
(यथा, हरिवंशे । ३१ । १४ ।

**सनिष्ठेवं**, क्ली, अम्बुकृतम् । इत्यमरः ॥ निष्ठेवो
मुखवारिबिन्दुः तेन सह वर्त्तते इति सनिष्ठेवं
निपूर्व्वष्ठिवेर्घञ् गुणः सनिष्ठीवमिति क्वचित्
पाठो लिपिकरप्रमादादिति मुकुटः । इत्यमर-
टीकायां भरतः ॥

**सनी**, स्त्री, (सन + इः । वा ङीष् ।) सनिः ।
इत्यमरटीकायां भरतः ॥ हस्तिकर्णास्फालः ।
इति शब्दरत्नावली ॥

**सनीडः**, त्रि, (नीडेन वासस्थानेन सह वर्त्तमानः ।)
निकटः । इत्यमरः ॥ (यथा, भट्टिः । ५ । ३१ ।
"सम्पत्य तत्सनीडेऽसौ तं वृत्तान्तमशिश्रवत् ॥")
नीडयुक्तश्च ॥

**सन्तः**, पुं, संहतलः । इति शब्दचन्द्रिका ॥ सच्छ-
ब्दस्य प्रथमाबहुवचनान्तरूपञ्च ॥ (यथा,
रघुः । १ । १० ।
तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः ।
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा ॥")

**सन्त्रतं**, क्ली, (सम् + तन + क्तः । समो वा हित-
ततयोः इति पक्षे मलोपाभावः ।) सततम् ।
तद्वति, त्रि । इत्यमरः ॥

**सन्तताभ्यासः**, पुं, (सन्ततं यथा तथा अभ्यासः ।)
निरन्तराभ्यासः । यथा । स्वाध्यायः सन्तता-
भ्यासः । इति भूरिप्रयोगः ॥

**सन्ततिः**, स्त्री, (सम् + तन + क्तिन् ।) गोत्रम् ।
इत्यमरः ॥ (यथा, रघुः । १ । ६९ ।
"सन्ततिः शुद्धवंश्याहि परत्रेह च शर्म्मणे ॥")
पंक्तिः । (यथा, कथासरित्सागरे । ११ । ५१ ।
"तत् श्रुत्वा नेत्रयुगलात् सरागादश्रुसन्ततिम् ।

प्रगे इति ।” ४ । ३ । २३ । इति ट्युट्युलौ तुट्
च ।) विष्णुः । शिवः । ब्रह्मा ।
पितृणामतिथिः ।
इति हेमचन्द्रः ॥ दिव्यमनुष्यः । अस्य प्रमाणं
सनन्दशब्दे द्रष्टव्यम् । स च ब्रह्मणः पुत्त्रः ।
यथा, --
“सनत्कुमारो धर्म्मश्च सनकश्च सनातनः ।
सनन्दश्चापि सूर्य्यश्च येऽन्ये वा ब्रह्मणः सुताः ॥
विचक्षणा न यद्वक्तुं के वान्ये जडबुद्धयः ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ३१ अध्यायः ॥
स तु जनलोकवासी । इति काशीखण्डम् ॥
वह्निपुराणमते तु तपोलोकस्थ इति भेदः ।
वैष्णवराजः । इति मत्स्यपुराणम् ॥

**सनातनः**, त्रि, (सनाभवः । सायञ्चिरमिति ट्युट्युलौ

तुट् च ।) नित्यम् । इत्यमरः ॥ सुनिश्चलः ।
इति विश्वः ॥ (यथा, मनुः । ७ । ९८ ।
“एषोऽनुपस्कृतः प्रोक्तो योधधर्म्मः सनातनः ।
अस्माद्धर्म्मान्न च्यवेत क्षत्त्रियो घ्नन् रने रिपून् ॥”)

**सनातनतमः**, पुं, (अयमेषामतिशयेन सनातनः ।

तमप् ।) विष्णुः । इति महाभारते तस्य
सहस्रनामस्तोत्रे । १३ । १४९ । १०९ ॥

“स तासु जनयामास पुत्त्रिकासु सनामकान् ।
दश पुत्त्रान् महात्मासौ तपस्युग्रे रतान् सदा ॥”)

**सनिः**, पुं, (सन + “खनिकष्यञ्जीति ।” उणा०

४ । १३९ । इति इः ।) पूजा । दानम् । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ (यथा, ऋग्वेदे ।
१ । १०० । १३ ।
“तं सचन्ते सनयस्तं धनानि ॥”
“सनयो धनस्य दानानि सचन्ते सेवन्ते ।” इति
तद्भाष्ये सायणः ॥)

**सनिः**, पुं, स्त्री, (सन + “खनिकष्यञ्जीति ।” उणा०

४ । १३९ । इति इः ।) अध्येषणा । इत्यमरः ॥
गुर्व्वादिः सत्कारपूर्व्वकं क्वचिदर्थे नियोजनम् ।
तच्च हे गुरो अस्माकं कर्म्म कुर्व्वि
त्यादिरूपम् ।
सायते दीयते पुष्पादिकमत्र सनिः षन दु ञ
दाने नाम्नीति इः पाच्छोणादीति ईपि सनी
च । अन्वेषणादिवदध्येषणा । इति भरतः ॥
दिक् । इति शब्दमाला ॥

**सनितः**, त्रि, प्रतिपन्नः । इति हेमचन्द्रः ॥

**सनिष्ठीवं**, क्ली, (निष्ठीवेन सह वर्त्तमानम् ।)

सनिष्ठेवम् । इत्यमरटीकायां भरतः ॥

हृदयाद्धीरताञ्चापि समं कन्या मुमोच सा ॥”)
विस्तारः । (यथा, भागवते । १ । ४ । १९ ।
“व्यदधात् यज्ञसन्तत्यै वेदमेकं चतुर्व्विधम् ॥”)
परस्पराभवः । पुत्त्रः । कन्या । इति विश्वः ॥
(यथा, स्मृतिः ।
“सन्तत्या पितॄणन्तु शोधयित्वा परिव्रजेत् ॥”)

**सन्तप्तः**, त्रि, (सम् + तप + क्तः ।) अध्वगमना-

दिना श्रान्तः । तत्पर्य्यायः । सन्तापितः २
धूपितः ३ धूपायितः ४ दूनः ५ । इत्यमरः ॥
तप्तः ६ । इति शब्दरत्नावली ॥ अग्निजताप-
युक्तः । यथा, --
“आदिक्षदादीप्तकृशानुकल्पं
सिंहासनं तस्य सपादपीठम् ।
सन्तप्तचामीकरवल्गुवज्रं
विभागविन्यस्तमहार्घरत्नम् ॥”
इति भट्टिकाव्ये ३ सर्गः ॥

**सन्तमसं**, क्ली, (समन्तात् तमः । “अवसमन्धेभ्य-

स्तमसः ।” ५ । ४ । ७९ । इति अच् । विश्वक्-
तमः । व्यापकान्धकारः । इत्यमरः ॥ (यथा,
माघे । ९ । २२ ।
“अवधार्य्य कार्य्यगुरुतामभव-
न्न भयाय सान्द्रतमसन्तमसम् ॥”)
मोहः । यथा, --

"ममापि किं नो दयसे दयाधन
त्वदङ्घ्रिमग्नं यदि वेत्थ मे मनः ।
निमज्जयन् सन्तमसे पराशयं
विधिस्तु वाच्यः क्व तवागसः कथा ॥"
इति नैषधे ९ सर्गः ॥

**सन्तर्पणं**, क्ली, (सन्तर्पयति इन्द्रियाणीति । सं +
तृप् + णिच् + ल्युः ।)
द्राक्षादाडिमखर्ज्जुरी-
कदलीशर्करालाजाचूर्णमध्वाज्य-
संमिलितम् ।
इति राजनिर्घण्टः ॥ तृप्तिकारके, त्रि ।
यथा,
"पुण्यो महाब्रह्मसमूहजुष्टः
सन्तर्पणो नांकसदां वरेण्यः ।
जज्वाल लोकस्थितये स राजा
यथाध्वरे वह्निरभिप्रणीतः ॥"
इति भट्टिकाव्ये १ सर्गः ॥

**सन्तानः**, पुं, (सन्तनोति विस्तारयति पत्रपुष्पादी-
निति । सम् + तन विस्तारे +
"तनोतेरुप-
संख्यानम् ।" ३ । १ । १४० ।
इत्यस्य वार्त्ति-
कोक्त्या णः ।) कल्पवृक्षः । (संतन्यते
इति ।
तन + घञ् ।) वंशः । इत्यमरः ॥
विस्तारः ।
(यथा, महाभारते । १ । १०३ । १० ।
"तयोरुत्पादयापत्यं सन्तानाय कुलस्य
नः ।
मन्नियोगात् महाबाहो धर्म्मं
कर्त्तुमिहार्हसि ॥")
अपत्यम् । इति मेदिनी ॥ (यथा, मनुः ।
९ । ५९ ।
"देवराद्वा सपिण्डाद्वा स्त्रिया सम्यक्
नियुक्तया
प्रजेप्सिताधिगन्तव्या सन्तानस्य
परिक्षये ॥")

**सन्तापः**, पुं, (सं + तप + धञ् ।) अग्निज-
तापः । तत्पर्य्यायः । संज्वरः २ । इत्यमरः ॥
तापः ३ प्रोषः ४ उष्णा ५ । इति राजनिर्घण्ढः ॥
सम्यक् तापनञ्च ॥ (यथा, कथासरित्सागरे ।
१५ । ७५ ।
"जन्मना ज्वरसन्तापपीडा गाढमवाप सः ॥"
दुःखम् । यथा, भागवते । ६ । १४ । ४१ ।
"दासीनां कोऽनुसन्तापः स्वामिनः परि-
चर्य्यया ।
अभीक्ष्णं लब्धमानानां दास्या दासीव दुर्भगाः ॥"

**सन्तापनः**, पुं, (सन्तापयतीति । सं + तप +
णिच् + ल्युः ।) कामदेवस्य पञ्चबाणान्तर्गत-
बाणविशेषः । इति त्रिकाण्डशेषः ॥ सम्यक्-
तापकारके, त्रि ॥ (यथा, भागवते । ७ । १० ।
२६ ।
"दिष्ट्या ते निहतः पापो लोकसन्तापनो-
ऽसुरः ॥")

**सन्तापितः**, त्रि, (सं + तप + णिच् + क्तः ।
अध्वादिना श्रान्तः । इत्यमर-भरतौ ॥ अस्य
पर्य्यायः सन्तप्तशब्दे द्रष्टव्यः ॥

**सन्तिः**, स्त्री, (सनु दाने + क्तिच् । "सनः क्तिचि
लोपश्चास्यान्यतरस्याम् ।" ६ । ४ । ४५ । इति
नलोपाभावः ।) दानम् । अवसानम् । इत्य-
मरे सातिशब्दटीकायां नीलकण्ठः ॥ सतिश्च
सातिश्च सतिसाती । सनोतेराशिषि तिगन्तस्य
एतौ निपात्यौ । पक्षे सनुतात् इति वाक्ये
तिकिकृते हवत्रतेरिति इम्निषेधे वनतनेत्यत्र
तिकिवर्ज्जनात् नलोपाभावे सन्तिः । इति
मुग्धबोधटीकायां दुर्गादासः ॥ सन्तिशब्दो
निर्विसर्गश्चेत् अस ल भावे इत्यस्मात् अन्ति-
प्रत्ययेन निष्पन्नः । यथा, --
"सन्ति रम्या जनपदा बह्वन्नाः परितः कुरून् ।"
इति महाभारते विराटपर्व्व ॥

**सन्तुष्टः**, त्रि, (सं + तुष + क्तः ।) सन्तोषयुक्तः ।
यथा, --
"गच्छध्वममराः सर्व्वे गृहीत्वार्च्चां स्वमालयम्
सन्तुष्टा वरमस्माकं दत्त्वेदानीं सुपूजिताः ॥"
इति छन्दोगवृषोत्सर्गतत्त्वम् ॥

सन्दंशौ षोडशाङ्गुलौ
भवतस्त्वग्मांसशिरास्नायु-
गतशल्योद्धरणार्थमुपदिश्येते ॥")

**सन्दंशिका**, स्त्री, (सन्दं शतीवेति । सं + दंश +
ण्वुल् । टापि अत इत्वम् ।) सुचुटी ।
साँडासी
इति चिम्टा इति च भाषा । लौहयन्त्रविशेषः
॥
कातारि इति भाषा । इति मेदिनी ॥

**सन्दर्भः**, पुं, (सं + दृभ ग्रन्थने + घञ् ।) रचना ।
इति हलायुधः ॥ (यथा, आर्य्यासप्तशत्याम् ।
७०० ।
"कविसमरसिंहनादः स्वरानुवादः सुधैक-
संवादः ।
विद्वद्विनोदकन्दः सन्दर्भोऽयं मया सृष्टः ॥")
प्रबन्धः । इति त्रिकाण्डशेषः ॥ ग्रन्थनम् ।
यथा, --
"सन्दर्भो रसना गुम्फः श्रन्थनं ग्रन्थनं समाः
।"
इति हेमचन्द्रः ॥
तस्य लक्षणं यथा, --
"गूढार्थस्य प्रकाशश्च सारोक्तिः श्रेष्ठता तथा
।
नानार्थवत्त्वं वेद्यत्वं सन्दर्भः कथ्यते बुधैः ॥"
इति रूपसनातनगोस्वामिकृतश्रीभागवतीय-
षट्सन्दर्भस्य प्रथमसन्दर्भकारिका ॥

**सन्दर्शनं**, क्ली, (सं + दृश + ल्युट् ।) सम्यक्-
प्रकारेण दनर्शम् । यथा, --
"सन्दर्शनार्थमम्बाया नदीपुलिनसंस्थितः ।
स च वैश्यस्तपस्तेपे देवीसूक्तं परं जपन् ॥"
इति मार्कण्डेयपुराणे देवीमाहात्म्यम् ॥
(सं + दृश + णिच् + ल्युट् । कारितदर्शनम्
।
यथा, महाभारते । १ । २ । १८० ।
"अस्त्रसन्दर्शदारम्भो धर्म्मराजस्य सन्निधौ
॥")

**सन्दानं**, क्ली, (सं + दा + ल्युट् ।) दाम । इत्य-
मरः ॥ सम्यग्दानञ्च ॥

तद्वैदिकपर्य्यायः । तुक् १ तोकम् २ तनयः ३
तोक्म ४ तक्म ५ शेषः ६ अप्नः ७ गयः ८ जाः
९ अपत्यम् १० यहुः ११ सूनुः १२ नपात् १३
प्रजा १४ बीजम् १५ । इति पञ्चदशापत्य-
नामानि । इति वेदनिघण्टौ । २ । २ ॥ (अस्त्र-
विशेषे, क्ली । यथा, महाभारते । ५ । ९६ । ४० ।
"सन्तानं नर्त्तकं घोरमास्यमोदकमष्टमम् ।
एतैर्विद्धाः सर्व्व एव मरणं यान्ति मानवाः ॥"

**सन्तानिका**, स्त्री, (सन्तानो विस्तारोऽस्त्यस्या
इति । सन्तान + ठन् ।) क्षीरसरः । मर्कट-
जालकः । छुरिकाफलम् । फेनः । इति हारा-
वली ॥ आद्यस्य गुणाः ।
"सन्तानिकागुरुः शीता वृष्या पित्तास्रवातजित्'
इति राजनिर्घण्टः ॥
मिष्टान्नविशेषः । सरभाजा इति भाषा । तत्-
करणप्रकारो यथा । दुग्धं शरावचतुष्टयं शर्क्क-
रार्द्धशरावपरिमिताघृतं शरावपादैकञ्च गृहीत्वा
तद्दुग्धे आवर्त्तनेन घनीभूते उष्णेस्थिते मन्थान-
दण्डेन मथनेन बहुतरफेनो भविष्यति । तत्फेन
सहितदुग्धस्य तप्ताङ्गारपरिरक्षणात् सरो
जायते । तं सरमस्त्रेण चतुष्कोणाकृतिं निर्म्माय
घृतेन भृष्ट्वा एकतारवद्धशर्क्करारसेमग्नं कुर्य्यात्

**सन्तोषः**, पुं, (सं + तुष + घञ् ।) सन्तुष्टिः । तत्-
पर्य्यायः । धृतिः २ स्वास्थ्यम् ३ । इति हेम-
चन्द्रः ॥ (यथा, हितोपदेशे ।
"सन्तोषामृततृप्तानां यत् सुखं शान्तचेतसाम्
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥")

**सन्दंशः**, पुं, (सन्दशतीवेति । सं + दन्श + अच् ।)
कङ्कमुखः । इति हेमचन्द्रः ॥ साँडासी इति
भाषा ॥ (यथा, मार्कण्डेये । २४ । ६३ ।
"निपातितानां भूपृष्ठे उद्धृत्याक्षि निरीक्षताम्
सन्दंशैः पश्य कृष्यन्ते नरैर्याम्यैर्मुखात्ततः ॥"
वैद्यशास्त्रोक्तयन्त्रविशेषः । यथा, सुश्रुते । १ । ७ ।
"तत्र मनःशरीरावाधकराणि शल्यानि तेषा-
माहरणोपायो यन्त्राणि । तानि षट्प्रकाराणि ।
तद्यथा । स्वस्तिकयन्त्राणि । सन्दंशयन्त्राणि ।

- - - द्वे सन्दंशयन्त्रे *** सनिग्रहोऽनिग्रश्च

**सन्दानः**, पुं, गजस्याष्ठीवतोरधोभागः । इति
त्रिकाण्डशेषः ॥

**सन्दानिका**, स्त्री, अरिखदिरः । इति राज-
निर्घण्टः ॥

**सन्दानितः**, त्रि, (सन्दानं जातमस्येति । सन्दानं +
इतच् ।) बद्धः । इत्यमरः ॥

**सन्दानिनी**, स्त्री, गोगृहम् । इति हेमचन्द्रः ॥
गोयालि इति भाषा ॥

**सन्दावः**, पुं, (सं + दु + "समि युद्रुदुवः ।" ३ ।
३ । २३ । इति घञ् ।) पलायनम् ।
इत्यभरः ॥

**सन्दाहः**, पुं, (सं + दह + घञ् ।) मुखताल्वोष्ठ-
दाहः । इति राजनिर्घण्टः ॥

**सन्दिग्धः**, त्रि, (सं + दिह + क्तः ।) सन्देहयुक्तः ।
यथा, --
"न तावत् सन्दिग्धसाध्यधर्म्मत्वं पक्षत्वमिति
पक्षतामूलम् ॥"

**सन्दिग्धमतिः**, त्रि, सन्देहविषयीभूतबुद्धियुक्तः ।
सन्दिग्धा मतिर्यस्य इति बहुब्रीहिसमास-
निष्पन्नः ॥

**सन्दिग्धार्थः**, पुं, (सन्दिग्धोऽर्थः ।) सन्देहविषयी-
भूतार्थः । (सन्दिग्धोऽर्थो यस्य ।) तद्विशिष्टे
त्रि ॥

| | | |
|---|---|---|
| किन्तु तत्राधिकक्षणं न रक्षेत् । इति पाक-<br>राजेश्वरः ॥ (जालकरज्जुः । यथा, सुश्रुते । १ । १ । ८<br>“अत ऊर्द्ध्वं व्रणबन्धनद्रव्याण्युपदेक्ष्यामः । तद्-<br>यथा क्षौमकार्प्पास-* *<br>विदलरज्जुतूलफल-<br>सन्तानिकालौहानीति ॥”) | | |

**सन्दितः**, त्रि, (सं + दो अवखण्डने + क्तः ।) बद्धः ।
इत्यमरः ॥

**सन्दिष्टं**, क्ली, (सं + दिश + क्तः ।) वार्त्ता । इति
शब्दरत्नावली ॥ कथिते, त्रि ॥

**सन्दिष्टार्थः**, पुं, (सन्दिष्टोऽर्थो यस्य ।) सन्देश-
हरः । इति केचित् ॥

**सन्दिहानः**, त्रि, (सं + दिह + शानच् ।) सन्दिग्धः ।
यथा, जटाधरः ।
"सन्दिहानः सांशयिकः संशयापन्नमानसः
॥"

**सन्दी**, स्त्री, खट्टा । यथा । निषद्या खट्टिका
सन्दी । इति त्रिकाण्डशेषः ॥

**सन्दीप्यः**, पुं, मयूरशिखावृक्षः । इति शब्द-
चन्द्रिका ॥

**सन्देशः**, पुं, (सं + दिश + घञ् ।) संवादः !
इति शब्दरत्नावली ॥ (यथा, मेघदूते । ७ ।
"सन्देशं मे हर धनपतिक्रोधविश्लेषितस्य
गन्तव्या ते वसतिरलका नाम यक्षेश्वराणाम्
॥")
स्वनामख्यातमिष्टान्नविशेषश्च ॥

**सन्देशवाक्**, [च्] स्त्री, (सन्देश एव वाक् ।)
संवादः । तत्पर्य्यायः । वाचिकम् २ ।
इत्यमरः ॥

**सन्देशहरः**, पुं, (हरतीति । हृ + अच् । सन्दे-
शस्य हरः ।) दूतः । इत्यमरः ॥ (यथा,
रघुः । ३ । ६६ ।
"तवैव सन्देशहरात् विशांपतिः ।
शृणोति लोकेश ! तथा विधीयताम् ॥")

**सन्देशहारकः**, पुं, (सन्देशं संवादं हरतीति ।
हृ + ण्वुल् ।) दूतः । इति हेमचन्द्रः ॥

**सन्देहः**, पुं, (सं + दिह + घञ् ।) एकधर्म्मिक-
विरुद्धभावाभावप्रकारकंज्ञानम् । इति
सिद्धा-
न्तमुक्तावली ॥ तत्पर्य्यायः । विचिकित्सा २
पर्य्यायः । अभिषवः २ । इत्यमरः ॥
सन्धानी ३
सन्धिका ४ । इति शब्दरत्नावली ॥
सन्धीयते
सन्धानं वंशाङ्कुरफलादीन् बहुकालं सन्धाय,
यत् क्रियते । इति भरतः ॥ सङ्घट्टनम् । इति
मेदिनी ॥ (यथा, कुमारे । ५ । २७ ।
"मुखेन सा पद्मसुगन्धिना निशि
प्रवेपमानाधरपत्रशोभिना ।
तुषारवृष्टिक्षतपद्मसम्पदां
सरोजसन्धानमिवाकरोदपाम् ॥")
काञ्जिकम् । इति हलायुधः ॥ मदिरा । अव-
दंशः । सौराष्ट्रम् । इति राजनिर्घण्टः ॥
धनुषि बाणयोजनम् । यथा, --
"तदाशु कृतसन्धानं प्रतिसंहर शायकम् ।
आर्त्तत्राणाय वः शस्त्रं न प्रहर्त्तुमनागसि ॥"
इत्यभिज्ञानशकुन्तलायाम् १ अङ्कः ॥
अन्वेषणम् । इति लोकप्रसिद्धम् ॥ (सन्धिः ।
यथा महाभारते । ५ । १० । ३३ ।
"एवं कृते तु सन्धाने वृत्रः प्रमुदितोऽभवत् ।
यत्तः समभवच्चापि शक्रो हर्षसमन्वितः ॥")
सन्दधातीति । सं + धा + ल्युः । धारके, त्रि
।
यथा, सुश्रुते । १ । ४५ ।
"मधु तु मधुरं कषायानुरसं * * हृद्यं सन्धानं
शोधनं रोपणमिति ॥")

**सन्धानिका**, स्त्री, (सन्धानमस्त्यस्या इति सन्धान
+ ठन् ।) खाद्यद्रव्यविशेषः । आचार इति
भाषा । तत्करणप्रकारको यथा । अपक्वाम्र-
फलानि विंशतिः राजिका
शरावषोडशैकभाग-
मिता मरिचं तोलकद्वयं लवणं षट्तोलकं
मेथिकाद्वितोलकं जीरकं तोलकद्वयं हरिद्रा-
तोलकैकं नागरमुस्तकमेकतोलकं
कृष्णजीरकं
तोलकैकं गृतीत्वा आम्रभिन्नं सकलद्रव्यं
चूर्ण-
यित्वा एकत्रीकुर्य्यात् । आम्रन्तु दीर्घं
द्विखण्डं
आपन्नः सन्धिभावेन विदध्यात् कालयाप-
नाम् ॥
ये च दैवेनोपहता राष्ट्रं येषाञ्च दुर्गतम् ।
बहवो रिपवो येषां तेषां सन्धिर्विधीयते ॥
दुर्म्मन्त्रो भिन्नमन्त्रश्च नीचधर्म्मरतश्च यः ।
एतैः सन्धिं न कुर्व्वीत विशेषात् पूर्वपीडितैः
।
सन्धिं हि तादृशैः कुर्व्वन् प्राणैरपि हि हीयते
॥"
इति भोजराजकृतयुक्तिकल्पतरुः ॥ * ॥
षोडशविधसन्धिर्य्यथा, --
"बलीयसाभियुक्तस्तु नृपो नान्यप्रतिक्रियः ।
आपन्नः सन्धिमन्विच्छेत् कुर्व्वाणः
कालयापनम्
कपाल १ उपहारश्च २ सन्तानः ३
सङ्गत-४
स्तथा ।
उपन्यासः ५ प्रतीकारः ६ संयोगः ७
पुरुषा-
न्तरः ८ ॥
अदृष्टनर ९ आदिष्ट १० आत्मादिष्ट ११
उपग्रहः १२ ।
परिक्रय-१३ स्तथोच्छिन्न-१४ स्तथा च
परभूषणः १५ ॥
स्कन्धोपनेयः १६ सन्धिश्च षोडशैते
प्रकीर्त्तिताः
इति षोडशकं प्राहुः सन्धिं सन्धिविचक्षणाः
॥"
तेषां लक्षणानि । यथा, --
"कपालसन्धिर्विज्ञेयः केवलं समसन्धितः ।
१ ।
सम्प्रदानाद्भवति य उपहारः स उच्यते ॥ २
॥
सन्तानसन्धिर्विज्ञेयो दारिकादानपूर्व्वकः ।
३
सद्भिस्तु सङ्गतः सन्धिर्म्मैत्रीपूर्व्वं उदाहृतः
॥
यावदायुःप्रमाणस्तु समानार्थप्रयोजनम् ।
सम्पत्तौ वा विपत्तौ वा कारणैर्यो त भिद्यते
॥
सङ्गतः सन्धिरेवायं प्रकृष्टत्वात् सुवर्णवत् ।

संशयः ३ द्वापरः ४ । इत्यमरः ॥ (यथा, महाभारते । ३ । ५७ । ११ ।
“तान् समीक्ष्य ततः सर्व्वान् निर्विशेषाकृतीन् स्थितान् ।
सन्देहादथ वैदर्भी नाभ्यजानान्नलं नृपम् ॥”)

**सन्दोहः**, पुं, (सं + दुह + घञ् ।) समूहः । इत्य-

मरः ॥ (यथा, आर्य्यासप्तशत्याम् । ५८९ ।
“स्तननूतननखलेखालम्बी तव घर्म्मबिन्दु-
सन्दोहः ।
आभाति पट्टसूत्रे प्रविशन्निव मौक्तिक-
प्रसरः ॥”)

**सन्द्रावः**, पुं, (सं + द्रु + “समि युद्रुदुवः ।” ३ । ३ ।

२३ । इति घञ् ।) पलायनम् । इत्यमरः ॥

**सन्धा**, स्त्री, (सं + धा + अङ् ।) स्थितिः । प्रतिज्ञा ।

इति मेदिनी ॥ (यथा, रघुः । १४ । ५२ ।
“गङ्गां निषादाहृतनौविशेष-
स्ततार सन्धामिव सत्यसन्धः ॥”)
सन्धानम् । इति शब्दरत्नावली ॥ सन्ध्या ।
यथा । सन्धा द्विजमैत्री पितृप्रसूः । इति
भरतधृतवाचस्पतिः ॥

**सन्धानं**, क्ली, (सन्धीयते यदिति । सं + धा + ल्युट् ।)

मद्यसज्जीकरणम् । इति नयनानन्दः ॥
तत्-
चतुष्खण्डं वा कृत्वा अष्ठीं दूरीकृत्य
तदभ्यन्तरे
पूर्व्वोक्तचूर्णं पूरयित्या शलाकया
विद्धाखण्डा-
म्रवत् कुर्य्यात् । ततस्तैले निमज्जयेत् । इति
पाकराजेश्वरः ॥

**सन्धानितः**, त्रि, सन्धानविशिष्टः । सङ्घट्टितः ।

सन्धानशब्दादितप्रत्ययेन निष्पन्नः ॥

**सन्धानिनी**, स्त्री, गोगृहम् । इति केचित् ॥

**सन्धानी**, स्त्री, (सन्धीयते यस्यामिति । सं + धा +

ल्युट् । ङीप् ।) कुप्यशाला । इति हेमचन्द्रः
॥
सन्धानम् । इति शब्दरत्नावली ॥

**सन्धिः**, पुं, (सन्धानमिति । सं + धा + किः ।)

राजादीनां षड्गुणान्तर्गतगुणविशेषः । स तु
स्वर्णादिदानेन बन्धुभिः प्रीत्युत्पादनात्
मित्री-
करणम् । मेल इति ऐक्य इति च भाषा ।
तद्विवरणं यथा, --
“पनबद्धो भवेत् सन्धिः स्वयं हीनस्तमाचरेत्
।
मर्य्यादोल्लङ्घनं नास्ति यदि शत्रोरिति
स्थितिः ॥
मर्य्यादोल्लङ्घनं यत्र शत्रौ संशयितं भवेत् ।
न तं संशयितं कुर्य्यादित्युवाच बृहस्पतिः ॥
बलवद्विगृहीतः सन् नृपोऽनन्यप्रतिश्रयः ।
तथान्यैः सन्धिकुशलैः काञ्चनः स उदाहृतः
॥ ४ ॥
द्रव्यात्मा कार्य्यसिद्धिस्तु समुदिश्य क्रियेत
यः ।
स उपन्यासकुशलैरुपन्यास उदाहृतः ॥ ५
॥
मयास्योपकृतं पूर्व्वं ममाप्येष करिष्यति ।
इति यः क्रियते सन्धिः प्रतीकारः स उच्यते
॥”
अन्यच्च ।
“उपकारं करोम्यस्य ममाप्येष करिष्यति ।
अयञ्चापि प्रतीकारो रामसुग्रीवयोरिव ॥ ६
॥
एकार्थां सम्यगुद्दिश्य क्रियां यत्र हि गच्छति
।
समं हि तत्प्रमाणेन स च संयोग उच्यते ॥ ७
॥
आवयोर्य्योधमुख्यैस्तु मदर्थः साध्यतामिति
।
यस्मिन् पणस्तु क्रियते स सन्धिः
पुरुषान्तरः ॥ ८
त्वयैकेन मदीयोऽर्थः संप्रसाध्यस्त्वसाविति
।
यत्र शत्रुः पणं कुर्य्यात् सोऽदृष्टपुरुषः स्मृतः
॥ ९ ॥
यत्र भूम्येकदेशेन पणेन रिपुवर्ज्जितः ।
सन्धीयते सन्धिविद्भिः स चादिष्ट उदाहृतः
॥ १० ॥
स्वसैन्येन तु सन्धानमात्मादिष्ट उदाहृतः ।
११ ।
क्रियते प्राणरक्षार्थं सर्व्वदानादुपग्रहः ॥ १२
॥
कोषांशेनार्द्धकोषेण सर्व्वकोषेण वा पुनः ।
शिष्टस्य प्रतिरक्षार्थं परिक्रय उदाहृतः ॥
१३ ॥
भुवां सारवतीनान्तु दानादुच्छिन्न उच्यते ।
१४ ।
भूम्युत्थफलदानेन सर्व्वेण परभूषणः ॥ १५
॥
प्रतिच्छिन्नं फलं यत्र प्रतिस्कन्धेन दीयते ।

स्कन्धौपनेयं तं प्राहुः सन्धिं सन्धिविच-
क्षणाः ॥ १६ ॥
परस्परोपकारस्तु मैत्रीसम्बन्धकस्तथा ।
उपहारश्च विज्ञेयाश्चत्वारश्चैव सन्धयः ॥”
इति विष्णुशर्म्मकृतहितोपशे सन्धिर्नाम चतुर्थ-
कथासंग्रहः ॥ संयोगः । तत्पर्य्यायः । श्लेषः २ ।
इत्यमरभरतौ ॥ (यथा, मनुः । ८ । २४८ ।
“तडागान्यु दपानानि वाप्यः प्रस्रवणानि च ।
सीमासन्धिषु कार्य्याणि देवतायतनानि च ॥”)
सुरुङ्गा । भगम् । सङ्घट्टनम् । रूपकाणां
सुखाद्यङ्गम् । सावकाशः । इति मेदिनी ॥ भेदः ।
इति विश्वः ॥ (साधनम् । यथा, रघुः । १९ । १६
।
“तस्य सावरणदृष्टसन्धयः
काम्यवस्तुषु नरेषु सङ्गिनः ।
वल्लभामिरुपसृत्य चक्रिरे
साभिमुक्तविषयाः समागमाः ॥”)
व्याकरणमते वर्णद्वयस्य मेलनम् । (यथा,
कथासरित्सागरे । ६ । ११३ -- ११७ ।
“अथैका तस्य महिषी राज्ञः स्तनभरालसा ।
शिरीषसुकुमाराङ्गी क्रीडन्ती क्लममभ्यगात् ॥
सा जलैरभिषिञ्चन्तं राजानमसहा सती ।
अब्रवीन्मोदकैर्द्देव परिताडय मामिति ॥
तच्छ्रुत्वा मोदकान् राजा द्रुतमानाययन् बहून्
ततो विहस्य सा राज्ञी पुनरेवमभाषत ॥
राजन्नवसरः कोऽत्र मोदकानां जलान्तरे ।
उदकैः सिञ्च मा त्वं मामित्यक्तं हि मया तव ॥
सन्धिमात्रं न जानासि माशब्दोदकशब्दयोः ।
न च प्रकरणं वेत्सि मूर्खस्त्वं कथमीदृशः ॥”)
तस्य लक्षणादिर्यथा । अर्द्धमात्रोच्चारणकालेना-
व्यवहितयोर्व्वर्णयोर्द्रुततरोच्चारणं सन्धिः । अत
एव श्लोकादुर्ध्वयोर्मन्त्रार्द्धयोर्व्वा न सन्धिः । तत्र
अर्द्धमात्रोच्चारणकालव्यवधानस्योचितत्वादिति
प्राञ्चः । स्वमते तु सन्ध्यध्यायसूत्रविहितकार्य्यं
सन्धिरिति सन्धिलक्षणम् । तेन पिपक्षादि-
शब्दानां संयोगान्तलुपि लुपि न सन्ध्याद्यविधी
इति निषेधेऽपि सन्धिग्रहणात् सन्धिलुप्येव न
सन्धिरिति नियमात् झपझसोरित्यनेन चप-
जपौ पिपक् पिपग् इति । भिन्नपदे तु सन्धि-
र्व्विभाषयेति बोध्यम् । तथा च ।
“सन्धिरेकपदे नित्यो नित्यो धातूपसर्गयोः ।
बोधव्याकरणटीकायां दुर्गादासः ॥ * ॥
सर्व्वा-
ङ्कुरसन्धिर्म्मासत्रयेण भवति ।
गात्रसन्धिः सप्त-
मासैर्भवति । इति सुखबोधः ॥
युगसन्धिर्युग-
शब्दे देहसन्धिर्म्मर्म्मशब्दे च द्रष्टव्यः ॥

**सन्धिका**, स्त्री, (सन्धा एव । स्वार्थे कन् ।) मद्य-
सन्धानम् । इति शब्दरत्नावली ॥

**सन्धिचौरः**, पुं, (सन्धिकृत् सुरुङ्गाकारी चौरः ।
सन्धिना चौर इति वा ।) चौरविशेषः ।
सिँधाल चोर इति भाषा । यथा ।
सन्धिचौरस्तु
हारकः । इति शब्दमाला ॥

**सन्धिजं**, क्ली, (सन्धेर्जायते यदिति । जन + डः
।)
आसवादि । यथा, काशीखण्डे ।
“कार्त्तिके वर्ज्जयेत्तैलं कार्त्तिके
वर्ज्जयेन्मधु ।
कार्त्तिके वर्ज्जयेत् कांस्यं कार्त्तिके मासि
सन्धि-
जम् ॥”
सन्धिजमासवादि । इति तिथ्यादितत्त्वम्
॥
(सन्धिसमुत्पन्ने, त्रि । यथा, सुश्रुते । ६ ।
२ ।
“पक्वः शोफः सन्धिजः संस्रवेद्यः
सान्द्रं पूयं पूति पूयालसः सः ॥”)

**सन्धिजीवकः**, त्रि, (सन्धिना अभिसन्धिना जीव-
तीति । जीव + ण्वुल् ।) कुसृत्या
विभवान्वेषी ।
तत्पर्य्यायः । पार्श्वकः २ । इति
त्रिकाण्डशेषः ।

**सन्धितः**, त्रि, (सन्धा जातास्येति । सन्धा +
इतच् ।) सन्धियुक्तः । मिलितः । यथा, -
-
“अस्मद्वराद्दिव्यवपुः सन्धितः
सन्धिमानसौ ।
किन्तु पूर्व्वोक्तसन्ध्यनुरोधान्निशादाविव
खण्ड-
तिथावपि सन्धिपूजा । एवञ्च पूर्णाष्टम्यां
महा-
ष्टमीपूजा तत्परदिने अष्टमीनवम्योः
सन्धिपूजा
तत्परदिने महानवमीपूजा
प्रागुक्तनन्दिकेश्वर-
पुराणाद्युक्तोदयगामितिथ्यनुरोधात्।
तत्पर-
दिने दशम्यां विसर्जनं
पूजानुरोधेनाधिकदिन-
लाभात् । अन्यत् दुर्गाशब्दे द्रष्टव्यम् ॥

**सन्धिबन्धः**, पुं, (सन्धिं बध्नातीति । बन्ध +
अच् ।) भूमिचम्पकः । इति शब्दचन्द्रिका
॥

**सन्धिबन्धनं**, क्ली, (सन्धेर्बन्धनं यस्मात् ।) शिरा
।
इति केचित् ॥

**सन्धिमतिः**, पुं, काश्मीरदेशीयजयेन्द्रराजमन्त्री ।
स च परे राजा बभूव । यथा, --
“सुतो महीमहेन्द्रस्य जयेन्द्रस्तस्य
भूपतेः ।
क्ष्मामाजानुभुजो राजा बुभोजाथ
प्रथुप्रथः ॥
तस्याभूदद्भु तोदन्तभवभक्तिविभूषितः ।
राज्ञः सन्धिमतिर्नाम मन्त्री मतिमतांवरः
॥
अस्मद्वराद्दिव्यवपुः सन्धितः
सन्धिमानसौ ।
आर्य्यत्वादार्य्यराजाख्यः ख्यातो भुवि
भवि-
ष्यति ॥”
इति राजतरङ्गिण्याम् २ तरङ्गः ॥

**सन्धिरन्ध्रका**, स्त्री, (सन्धिरन्ध्रेण कायतीति ।
कै + कः । टाप् ।) सुरुङ्गा । इति केचित्
॥

**सन्धिला**, स्त्री, (सन्धिं लातीति । ला + कः ।)

सूत्रेषु च भवेन्नित्यः सैवान्यत्र विभाषया ॥”
इति प्राञ्चः ।
एकपदे इति स्वभावादेकपदे समासेऽपि ।
यथादानं भवेत् नद्यौ इत्यादि । समासे मुरारिः
हृषीकेशः त्र्यम्बकः गवीशः इत्यादि । धातू-
पसर्गयोस्तु अधीते उपेत्य इत्यादि । अन्यत्र
अत्र अम्भः अत्राम्भः इह इन्दुः इहेन्दुः
इत्यादि । धातूपसर्गयोः समासस्य नित्यत्वादेक-
पदग्रहणेनैवेष्टसिद्धौ तयोः पुनरुपादानं अनित्य-
समासे कदाचिदेकपदेऽपि सन्धिर्विभाष्यते इति
ज्ञापनार्थम् । तेन उच्चारितरुचिरऋचांचान-
नानां चतुर्णां इत्यादि सिद्धिः । इति मुग्ध-

आर्य्यत्वादार्य्यराजाख्यः ख्यातो भुवि
भवि-
ष्यति ॥”
इति राजतरङ्गिण्याम् २ तरङ्गः ॥
आसवादि । यथा, --
“कार्त्तिके वर्ज्जयेत् कांस्यं कार्त्तिके
शुक्लसन्धि-
तम् ।”
इति श्रीहरिभक्तिविलासे १६ विलासः ॥
शुक्लं काञ्जिकादिपर्य्युषितद्रव्यं
सन्धितञ्च वर्ज्ज-
येत् । इति तट्टीका ॥

**सन्धिनी**, स्त्री, (सन्धास्त्यस्या इति । इनिः ।

ङीप् ।) वृषभेणाक्रान्ता गौः । इत्यमरः ॥
या
ऋतुमती वृषभेण आक्रान्ता
निष्पादितमैथुना
सा सन्धिनी । गर्भेण सन्धानं सन्धा सा
विद्यते
अस्याः सन्धिनी इन् । इति भरतः ॥
अकाल-
दुग्धा गौः । इति मेदिनी शब्दरत्नावली च
॥
(यथा, याज्ञवल्क्यः । १ । १७० ।
“सन्धिन्यनिर्द्दशावत्सागोपयः
परिवर्ज्जयेत् ॥”)

**सन्धिपूजा**, स्त्री, (सन्धौ अष्टमीनवमीसन्धिक्षणे

पूजा ।) शारदीयमहापूजान्तर्गततृतीया
पूजा । यथा कालिकापुराणवचनान्तरम्
।
“अष्टमीनवमीसन्धौ तृतीया खलु कथ्यते
।
तत्र पूज्या त्वहं पुत्त्र योगिनीगणसंयुता
॥”
ज्योतिशे ।
“अष्टम्यां सन्धियोगे सकलपरिजनैः
पूजयेत्
सत्त्वभावै, ।”
सप्तमीपूजावत्महाष्टम्यादिकृत्यमपि
षष्टिद-

सुरुङ्गा । नदी । मदिरा । इति मेदिनी ॥

**सन्धिवेला**, स्त्री, (सन्धिरूपा वेला ।) काल-

विशेषः । स तु
अहोरात्रादिमेलनकालरूपः ।
यथा । व्यासः ।
“उपास्ते सन्धिवेलायां निशाया
दिवसस्य च ।
ताभेव सन्ध्यां तस्मात्तु प्रवदन्ति
मनीषिणः ॥”
इत्याह्निकतत्त्वम् ॥

**सन्धिहारकः**, पुं, (सन्धिना हरतीति । हृ +

ण्वुल् ।) सन्धिचौरः । यथा, --
“वन्दिचौरो माचलः स्यात् कुम्भिलः
सन्धि-
हारकः ।”
इति हारावली ॥

**सन्ध्या**, स्त्री, (सं सम्यक् ध्यायत्यस्यामिति स +

ध्यै चिन्तने + “आतश्चोपसर्गे । इत्यङ् ।
यद्वा,
सन्दधातीति । सं + धा +
“अघ्न्यादयश्च ।”
उणा० ४ । ११२ । इति यक्प्रत्ययेन
निपा-
तितः ।) कालविशेषः । स तु दिवारात्रि-
सम्बन्धिदण्डद्वयरूपः । तत्पर्य्यायः ।
पितृप्रसूः २ ।
इत्यमरः ॥ सन्धा ३ द्विजमैत्री ४ । इति
भरत-
धृतवाचस्पतिः । सायम् ५ दिनान्तम् ६
निशादि ७ दिवसात्ययम् ८ । इति राज-
निर्घण्टः ॥ सायाह्नः ९ विकालः १०
ब्रह्म-
भूतिः ११ सायः १२ । इति
शब्दरत्नावली ॥
सा च कालस्य भार्य्या । यथा, --
“कालस्य तिस्रो भार्य्याश्च
सन्ध्यारात्रिदिनानि च
याभिर्विना विधात्रा च संख्यां कर्त्तुं न
शक्यते ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे १ अध्यायः
॥ * ॥

"त्रियामां रजनीं
प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम्।
नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते
॥"
इति प्रायश्चित्ततत्त्वम्॥
तत्सार्थक्यं यथा, --
"समुद्रे हिमवत्पार्श्वे नद्यामस्याञ्च दुर्म्मते
।
रात्रावहनि सन्ध्यायां कस्य गुप्तः परिग्रहः
॥"
इति तिथ्यादितत्त्वम्॥ * ॥
त्रिसन्ध्याकालीनोपासना।
तत्कालोपास्या
देवता । यथा । अथ सन्ध्योपासनम्।
तत्र
छन्दोगपरिशिष्टम्।
"अत ऊर्द्ध्वं प्रवक्ष्यामि
सन्ध्योपासनिकं विधिम्
अनर्हः कर्म्मणां विप्रः सन्ध्याहीनो यतः
स्मृतः ॥"
अतः प्रातःस्नानानन्तरम्। तथा, --
"एतत् सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं
यदधिष्ठितम्
यस्य नास्त्यादरस्तत्र न स ब्राह्मण
उच्यते ॥"
शातातपः ।
"अब्राह्मणास्तु षट् प्रोक्ता ऋषिणा तत्त्व-
वादिना ।
आद्यो राजभृतस्तेषां द्वितीयः क्रयविक्रयी
॥
तृतीयो बहुयाज्यः स्याच्चतुर्थो
ग्रामयाजकः ।
पञ्चमस्तु भृतस्तेषां ग्रामस्य नगरस्य च ॥
अनागतान्तु यः पूर्व्वां सादित्याञ्चैव
पश्चिमाम्।
नोपासीत द्विजः सन्ध्यां स षष्ठोऽब्राह्मणः
स्मृतः ॥"
राजभृतो राजसेवकः । ग्रामादेर्भृतो भर-
णीयः । ग्रामलक्षणमाह मार्कण्डेयपुराणम्
।
तथा शूद्रजनप्रायाः सुसमृद्धकृषीबलाः ।
मण्डलप्रकृष्टतेजोनक्षत्रवर्ज्जितः । तथा च
वराहः ।
"अर्द्धास्तमयात् सन्ध्या व्यक्तीभूता न
तारका
यावत् ।
तेजःपरिहानिरुषा भानोरर्द्धोदयं यावत् ॥"
अत्र आद्यन्तता उक्ता । परिमाणमाह दक्षः ।
"रात्र्यन्तकाले नाड्यौ द्वे सन्ध्यादिः काल
उच्यते ।
दर्शनाद्रविरेखायास्तदन्तो मुनिभिः स्मृतः
॥"
नाडीदण्डः । योगी याज्ञवल्कः ।
"ह्रासवृद्धी च सततं दिनरात्र्योर्यथाक्रमम्।
सन्ध्या मुहूर्त्तमाख्याता ह्रासे वृद्धौ समा
स्मृता ॥"
अत्रोपासनाया अपि सन्ध्यात्वमाह व्यासः ।
"उपास्ते सन्धिवेलायां निशाया दिवस्य च
।
तामेव सन्ध्यां तस्मात्तु प्रवदन्ति मनीषिणः
॥"
उपास्ते यद्वक्ष्यमाणप्राणायामादिक्रिययेति
यावत् ॥ * ॥ तत्काले उपास्या अपि देवता
सन्ध्या । तथा च याज्ञवल्क्यः ।
"सन्धौ सन्ध्यामुपासीत नास्तगे नोद्गते
रवौ ॥"
उपासनोपक्रममाह संवर्त्तः ।
"प्रातःसन्ध्यां सनक्षत्रामुपासीत यथाविधि
।
सादित्यां पश्चिमां सन्ध्यां
अर्द्धास्तमितभास्क-
राम् ॥"
सनक्षत्रामित्यनेन तद्युक्तकाले उपक्रम्य
प्रातः
सन्ध्यामुपासीत।
एवमेवार्द्धास्तमितभास्करा-
रब्धां पश्चिमां सादित्यामित्यनेन
तद्युक्तकाले
उपक्रम्य उपासीतेत्यर्थः ॥ * ॥
मध्याह्नसन्ध्याया
अष्टममुहूर्त्तं कालमाह स्मृतिः ॥
"पूर्व्वापरे तथा सन्ध्ये सनक्षत्रे प्रकीर्त्तिते ।
कुरुते स पूर्व्वमपि ब्रह्मैव सन् प्रज्ञावान् चिर-
जीवित्वं प्राप्तो यथोक्तज्ञानेनाज्ञानोपसमे ब्रह्मैव
प्राप्नोति । इति पराशरभाष्ये माधवाचार्य्यः ॥
अतएव व्यासः ।
"न भिन्नां प्रतिपद्येत गायत्त्रीं ब्रह्मणा सह ।
सोऽहमस्मीत्युपासीत विधिना येन केन-
चित् ॥" * ॥
गायत्तीस्थभर्गपदप्रतिपाद्य ईश्वरः । अहं जीव-
रूपोऽस्मि भवामि इति । अजहत्स्वार्थलक्ष-
णया जीवेश्वरयोरहंकारप्रतिफलितत्वोपाधि-
रहितेन चिद्रूपेणैक्यम् । घटाकाशगृहाकाशयो-
रुपाधिरित्यवगमात्। ऐक्यमिव भावयन् उपा-
सीत । याज्ञवल्क्योऽपि।
"या सन्ध्या सा तु गायत्री द्विधा भूत्वा प्रति-
ष्ठिता ।
सन्ध्या उपासिता येन विष्णुस्तेन उपासितः ॥"
*
उपासनायाः फलमाह स एव ।
"गवां सर्पिः शरीरस्थं न करोत्यङ्गपोषणम्।
निःसृतं कर्म्मसंयुक्तं पुनस्तासां तदौषधम्॥
एवं स हि शरीरस्थः सर्पिर्वत् परमेश्वरः ।
विना चोपासनादेव न करोति हितं नृषु ॥
प्रणवव्याहृतिभ्याञ्च गायत्त्र्या त्रितयेन च ।
उपास्यं परमं ब्रह्म आत्मा यत्र प्रतिष्ठितः ॥"
त्रितयेन प्रणवादित्रितयेन ब्रह्मप्रतिपादकेनो-
च्चारितेन तदर्थावगमेन उपास्यं प्रसादनीयम्।
तदाह स एव ।
"वाच्यः स ईश्वरः प्रोक्तो वाचकः प्रणवः स्मृतः
वाचकेऽपि च विज्ञाते वाच्य एव प्रसीदति ॥
भूर्भुवःस्वस्तथा पूर्व्वं स्वयमेव स्वयम्भुवा ।
व्याहृता ज्ञानदेहेन तस्मात् व्याहृतयः स्मृताः
॥"
ज्ञानदेहेन तत्त्वज्ञानस्य चिद्रूपेश्वरस्य देहेन
शरीररूपेण व्याहृता उक्ताः । तेन तद्वाच्यो-
ऽपीश्वरः । कूर्म्मपुराणम्।
"प्रधानं पुरुषः कालो ब्रह्मविष्णुमहेश्वराः ।
सत्त्वं रजस्तमस्तिस्रः क्रमाद्व्याहृतयः स्मृताः
॥"
एतद्रूपेणापि भावनीयाः । इत्याह्निकाचार-
तत्त्वम्॥ * ॥ अपि च ।
"दिनान्तसन्ध्यां सूर्य्येण पूर्व्वामृक्षैर्युतां बुधः ।

क्षेत्रोपयोगभूमध्ये वसतिर्ग्रामसंज्ञिका ॥”
अत्र सन्ध्यात्रयस्य नित्यत्वाभिधानात् ।
“सर्व्वकालमुपस्थानं सन्ध्यायाः
पार्थिवेष्यते ।
अन्यत्र सूतकाशौचविभ्रमातुरभीतितः ॥”
इति विष्णुपुराणीये सन्ध्याया
इत्येकवचनान्त-
पाठो धर्म्मकोषोक्तो युक्तः । एवमेव
नव्यवर्द्ध-
मानः । सर्व्वकालं
प्रातर्म्मध्याह्नसायंरूपकाल-
त्रये । अन्यथा तदुपादानं व्यर्थंस्यात् ।
विभ्रम-
श्चित्तविक्षेपः । तेन क्षतादावपि
सन्ध्यामाच-
रन्ति । अतएव याज्ञवल्क्यः ।
“सर्व्वावस्थोऽपि यो विप्रः
सन्ध्योपासनतत्परः ।
ब्राह्मण्याच्च न हीयेत अन्त्यजन्मगतोऽपि
सन् ॥”
सर्व्वावस्थोऽपि नित्यं
सेवकादिकर्म्मरतोऽपि ।
यथोचितशौचेऽप्यशक्तोऽपि इति
रत्नाकरः ॥
अन्धाद्यवस्थापन्नोऽपीतियुक्तम् ॥ * ॥
सन्ध्या-
त्रयसाधारणलक्षणमाहयोगियाज्ञवल्यः
।
“त्रयाणाञ्चैव वेदानां ब्रह्मादीनां समागमः ।
सन्धिः सर्व्वसुराणाञ्च तेन सन्ध्या
प्रकीर्त्तिता ॥”
सन्ध्याद्वयकालस्तु
अहोरात्रसम्बन्धिमुहूर्त्ता-
त्मकः । तथा च दक्षः ।
“अहोरात्रस्य यः सन्धिः
सूर्य्यनक्षत्रवर्ज्जितः ।
सा च सन्ध्या समाख्याता मुनिभिस्तत्त्व-
वादिभिः ॥”
सूर्य्यनक्षत्रवर्ज्जितः ।
अर्द्धास्तमितार्द्धोदितसूर्य्य-
समसूर्य्येऽपि मध्याह्ने मुहूर्त्तसप्तमोपरि ॥”
सांख्यायनगृह्यम् । अरण्ये समित्पाणिः
सन्ध्या-
मुपास्ते नित्यं वाग्यत उत्तरापराभिमुखो-
ऽन्वष्टमदिशमानक्षत्रदर्शनात् ।
अतिक्रान्तायां
महाव्याहृतीः सावित्रीं स्वस्त्ययनादि जप्त्वा
एवं
प्रातः प्राङ्मुखस्तिष्ठन् आमण्डलदर्शनादिति
।
उत्तरापराभिमुखो वायुकोणाभिमुखः । कोणं
विवृणोति अन्वष्टमदिशमिति ।
उभयदिगष्टम-
भागमिति यावत् । व्यासः ।
“गायत्री नाम पूर्व्वाह्णे सावित्री मध्यमे दिने
सरस्वती च सायाह्ने सैव सन्ध्या त्रिषु स्मृता
॥
प्रतिग्रहान्न दोषाच्च पातकादुपपातकात् ।
गायत्री प्रोच्यते तस्मात् गायन्तं त्रायते यतः
॥
सवितृद्योतनात् सैव सावित्री परिकीर्त्तिता ।
जगतः प्रसवित्रीत्वात् वाग्रूपत्वात् सरस्वती
॥”
तैत्तिरीयब्राह्मणम् । उद्यन्तमस्तं यान्तं
आदित्य-
मभिध्यायन् कुर्व्वन् ब्राह्मणो विद्वान् सकलं
भद्रमश्नुते । असावादित्यो ब्रह्मा इति ब्रह्मेव
सन् ब्रह्माभ्येति य एवं वेदेत्ययमर्थः ।
वक्ष्यमाण-
प्रकारेण प्राणायामादिकं कुर्व्वन्
यथोक्तनाम-
रूपोपेतं सन्ध्याशब्दस्य वाच्यमादित्यं
ब्रह्मेति
ध्यायन् ऐहिकमामुत्रिकञ्च सकलभद्रमश्नुते
।
य एवमुक्तध्यानेन शुद्धान्तःकरणो
ब्रह्मसाक्षात्
उपतिष्ठेत् यथान्यायं सम्यगाचम्य पार्थिव ॥
सर्व्वकालमुपस्थानं सन्ध्यायाः पार्थिवेष्यते ।
अन्यत्र सूतकाशौचविभ्रमातुरभीतितः ॥
सूर्य्येणाभ्युदितो यस्तु त्यक्तः सूर्य्येण यः स्वपन्
अन्यत्रातुरभावाच्च प्रायश्चित्तीयते नरः ॥
तस्मादनुदिते सूर्य्ये समुत्थाय महीपते ।
उपतिष्ठेन्नरः सन्ध्यां ससूर्य्याञ्च दिनान्तजाम् ॥
उपतिष्ठन्ति वै सन्ध्यां ये न पूर्व्वां न पश्चिमाम्
व्रजन्ति ते दुरात्मानस्तामिस्रं नरकं नृप ॥”
इति विष्णुपुराणे ३ अंशे ११ अध्यायः ॥ * ॥
दीक्षितविशेषस्य सन्ध्याविशेषा यथा, --
भूमिरुवाच ।
“देवदेव कथं सन्ध्यां दीक्षितः कुरुते वद ।
केन मन्त्रेण वा भक्तस्तव कर्म्मपरायणः ॥

वराह उवाच ।
शृणु माधवि तत्त्वेन सन्ध्यामन्त्रमनुत्तमम् ।
यथा वदन्ति वै सूर्य्यं सन्ध्यां पूर्व्वं चिरां तथा ॥
जलाञ्जलिं गृहीत्वा च मम भक्त्या व्यवस्थितः ।
मुहूर्त्तं ध्यानमास्थाय इमं मन्त्रमुदाहरेत् ॥
मन्त्रः । भवोद्भवमादिं व्यक्तमद्वयमादित्यं सर्व्वे
देवा ब्रह्मरुद्रेन्द्रास्ताञ्च कृष्णो यथासीत् ध्यान-
योगस्थिता ते सन्ध्या संज्ञा वासुदेवं नमन्ति
वयं देवमादि व्यक्तरूपं कृत्वा चात्मनि देवसंस्था
तथापि संसारार्थं कर्म्म तत्कारणमेव सन्ध्या
संस्था वासुदेव नमो नमः ।
अनेनैव तु मन्त्रेण सन्ध्यां कुर्य्यात्तु दीक्षितः ॥"
इति वाराहे चतुर्व्वर्णदीक्षानामाध्यायः ॥ * ॥
सन्ध्याप्रशंसा यथा, --
मुनयः ऊचुः ।
"कथं मुने दिवं याति ब्राह्मणो दग्धकिल्विषः ।
अनग्निको हि मे ब्रूहि यदुक्तं वह्निना पुरा ॥
सूत उवाच ।
सायं प्रातश्च यः सन्ध्यामुपास्तेऽस्कन्नमानसः ।
जपन् हि पावनीं देवीं गायत्रीं वेदमातरम् ॥
तपसा भावितो देव्या ब्राह्मणः पूतकिल्विषः ।
न सीदेत् प्रतिगृह्णानो अपि पृथ्वीं ससागराम् ॥
ये चान्ये दारुणाः केचित् ग्रहाः सूर्य्यादयो दिवि ।
ते चास्य सौम्यतां यान्ति शिवाः शिवतरास्तथा ॥
यत्र तत्र गतं चैनं दारुणाः पिशिताशनाः ।
घोररूपा महाकायाः प्रभवन्ति न राक्षसाः ॥"
इति वह्निपुराणे आश्वमेधिकनामाध्यायः ॥ * ॥
अपि च ।
सायंसन्ध्यानिषेधकाला यथा ।
कर्म्मोपदेशिन्यां व्यासः ।
"संक्रान्त्यां पक्षयोरन्ते द्वादश्यां श्राद्धवासरे ।
सायंसन्ध्यां न कुर्व्वीत कृते च पितृहा भवेत् ॥"
इति तिथ्यादितत्त्वम् ॥ * ॥
तत्काले शयनादिनिषेधो यथा, --
"स्वप्नमध्ययनं स्नानमुद्वर्त्तं भोजनं गतिः ।
उभयोः सन्ध्ययोर्नित्यं मध्याह्ने चैव वर्ज्जयेत् ॥"
इति कौर्म्मे १५ अध्यायः ॥
नदीविशेषः । युगसन्धिः । इति मेदिनी ॥
चिन्ता । संश्रवः । सीमा । सन्धानम् । कुसुम-
विशेषः । इति हेमचन्द्रः ॥

**सन्ध्यांशः**, पुं, (सन्ध्याया अंशः ।) युगसन्धिः ।
यथा, --
"चत्वार्य्याहुः सहस्राणि वर्षाणान्तु कृतं युगम् ।
तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः ॥
इतरेषु ससन्ध्येषु ससन्ध्यांशेषु च त्रिषु ।
एकापायेन वर्त्तन्ते सहस्राणि शतानि च ॥"
इति मानवे । १ । ६९-७० ॥
चत्वार्य्याहुरिति । चत्वारि वर्षसहस्राणि कृत-
युगं कालं मन्वादयो वदन्ति तस्य तावद्वर्ष-
शतानि सन्ध्या सन्ध्यांशश्च भवति युगस्य पूर्व्वा
सन्ध्या उत्तरश्च सन्ध्यांशः । तदुक्तं विष्णुपुराणे ।
"तत्प्रमाणैः शतैः सन्ध्यां पूर्व्वां तत्राभिधीयते ।
सन्ध्यांशकश्च तत्तुल्यो युगस्यानन्तरो हि यः ॥
सन्ध्यासन्ध्यांशयोरन्तर्यः कालो मुनिसत्तम ।
युगाख्यः स तु विज्ञेयः कृतत्रेतादिसंज्ञकः ॥"
वर्षसंख्या चेयं दिव्यमानेन तस्यैवानन्तरप्रकृत-
त्वात ।
"दिव्यैर्व्वर्षसहस्रैस्तु कृतत्रेतादिसंज्ञितम् ।
चतुर्युगं द्वादशभिस्तद्विभागं निबोध मे ॥"
निमेर्नाम्ना तु राजर्षेः शापाद्ब्रह्मसुतः पुरा ।
वशिष्ठो ह्यशरीरोऽभूत्तच्छापाच्च निमिस्तथा ॥
ततो ब्रह्मोपदेशेन निर्जने कामरूपके ।
सन्ध्याचले तपस्तेपे तस्य विष्णुरभूत्तदा ॥
प्रत्यक्षस्तस्य देवस्य वरदानान्महामुनिः ।
अमृतान्यवतार्य्यर्थे कुण्डं कृत्वा गिरिस्तटे ॥
तत्र स्नात्वा च पीत्वा च शरीरं प्रापपूरितम् ।
तस्मादमृतकुण्डात्तु सन्ध्या नाम नदीवरा ।
निःस्मृता तत्र चाप्लुत्य चिरायुरगदो भवेत् ॥"
इति च कालिकापुराणे ८१ अध्यायः ॥

**सन्ध्यानाटी**, [न्] पुं, (सन्ध्यायां नटतीति । नट + इनिः ।) शिवः । इति शब्दरत्नावली-
त्रिकाण्डशेषौ ॥

**सन्ध्यापुष्पी**, स्त्री, (सन्ध्यायां पुष्पं यस्याः । ङीष् ।) जाती । इति राजनिर्घण्टः ॥

**सन्ध्याबलः**, पुं, (सन्ध्यायां बलं यस्य ।) राक्षसः । इति त्रिकाण्डशेषः ॥

**सन्ध्याबलिः**, पुं, शिवालयस्थितमृत्काष्ठादि-
र्म्मितवृषः । यथा, --
"ये शिवायतनोत्सृष्टास्ते सन्ध्याबलयो वृषाः ।"
इति हारावली ॥

**सन्ध्याभ्रं** क्ली, (सन्ध्याया अभ्रमिव तद्वर्णत्वात् ।) सुवर्णगैरिकम् । इति राजनिर्घण्टः ॥ (सन्ध्या-
कालीनमेघः । यथा, रघुः । १२ । २८ ।
"सन्ध्याभ्रकपिशस्तस्य विराधो नाम राक्षसः ।

"नित्यं नित्यं त्रिसन्ध्याञ्च करिष्यसि दिने
दिने ।
मध्याह्ने चापि सायाह्ने प्रातरेव शुचिः सदा ॥
सन्ध्याहीनोऽशुचिर्न्नित्यमनर्हः सर्व्वकर्म्मसु ।
यदह्ना कुरुते कर्म्म न तस्य फलभाग्भवेत् ॥
नोपतिष्ठति यः पूर्व्वां नोपास्ते यस्तु
पश्चिमाम् ।
स शूद्रवद्वहिः कार्य्यः सर्व्वस्मात्
द्विजकर्म्मणः ॥
यावज्जीवनपर्य्यन्तं यस्त्रिसन्ध्यं करोति च ।
स च सूर्य्यसमो विप्रस्तेजसा तपसा सदा ॥
तत्पादपद्मरजसा सद्यःपूता वसुन्धरा ।
जीवन्मुक्तः स तेजस्वी सन्ध्यापूतो हि यो
द्विजः ॥
तीर्थानि च पवित्राणि तस्य संस्पर्शमात्रतः ।
ततः पापानि यान्त्येव वैनतेयादिवोरगाः ॥
न गृह्णन्ति सुरास्तेषां पितरः पिण्डतर्पणम् ।
स्वेच्छया च द्विजातिश्च त्रिसन्ध्यरहितस्य
च ॥
विष्णुमन्त्रविहीनश्च त्रिसन्ध्यरहितो द्विजः ।
एकादशीविहीनश्च विषहीनो यथोरगः ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २१ अध्यायः ॥
अन्यत् कौर्म्मे १७ अध्याये गारुडे २१५ ।
२२०
अध्याययोर्द्रष्टव्यम् ॥ * ॥ जननमरणाशौचे
तन्नि-
षेधो यथा, --
"सन्ध्यां पञ्चमहायज्ञं नैत्यिकं स्मृतिकर्म्म च
।
तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रिया ॥"
इति शुद्धितत्त्वम् ॥ * ॥
इति विष्णुपुराणवचनाच्च ।
इतरेष्विति अन्येषु त्रेताद्वापरकलियुगेषु
सन्ध्या
सन्ध्यांशसहितेषु एकहान्या सहस्राणि शतानि
च भवन्ति । तेनेदं सम्पद्यते । त्रीणि वर्षसह-
स्राणि त्रेतायुगं तस्य त्रीणि वर्षशतानि सन्ध्या
सन्ध्यांशश्च । एवं द्वे वर्षसहस्रे द्वापरः तस्य द्वे
वर्षशते सन्ध्या सन्ध्यांशश्च । एवं वर्षसहस्रं
कलिः । तस्यैकवर्षशतं सन्ध्या सन्ध्यांशश्च ।
इति
कुल्लूकभट्टः ॥

**सन्ध्याचलः**, पुं, (सन्ध्याया अचलः ।) पर्व्वत-

विशेषः यथा, --
"आराधनोपदेशाय कापोतस्य वचः स्मरन् ।
जग्मतुर्द्दक्षिणां काष्ठां यत्र सन्ध्याचलः स्थितः
॥
कान्ता नाम नदी तत्र वशिष्ठे नावतारिता ।
तस्यास्तीरे महाशैले स्निग्धच्छाया लता तदा
।
सन्ध्यां वशिष्ठः कृतवान् तत्र यस्माद्विधेः सुतः
।
अतः सन्ध्याचलं नाम तस्य गायन्ति देवताः
॥"
इति कालिकापुराणे ५० अध्यायः ॥ * ॥
अपि च ।
"क्षोभकाख्यान्महाशैलादैशान्यां पर्व्वतोत्तमः ।
तुङ्गः सन्ध्याचलो नाम वशिष्ठो यत्र शप्तवान् ॥
अतिष्ठन्मार्गमावृत्य रामस्येन्दोरिव ग्रहः
॥")

**सन्ध्यारागं**, क्ली, (सन्ध्याया राग इव रागो यस्य
।)

सिन्दूरम् । इति राजनिर्घण्टः ॥ (यथा,
आर्य्या-
सप्तशत्याम् । ३९२ ।
"प्राचीरान्तरितयं प्रियस्य वदनेऽधरं सम-
र्पयति ।
प्रागिरिपिहिता रात्रिः सन्ध्यारागं दिन-
स्येव ॥")

**सन्ध्यारामः**, (सन्ध्यायां रामो रमणं यस्य ।)

ब्रह्मा । इति शब्दरत्नावली ॥

**सन्नः**, पुं, (सद + क्तः ।) पियालवृक्षः । इत्यमर-

टीकायां भरतः ॥ अवसन्ने, त्रि ॥ (यथा,
रामायणे । ६ । ११३ । ८७ ।
"कश्मलाभिहिता सन्ना बभौ सा
रावणोरसि ॥"

**सन्नकः**, पुं, (सीदति स्मेति । सद + क्तः । ततः

स्वार्थे कन् ।) खर्व्वः । इति सन्नकद्रुशब्द-
टीकायां भरतः ॥

**सन्नकद्रुः**, पुं, पियालवृक्षः । इत्यमरः ॥ सन्नकः

खर्व्वो द्रुः स्कन्धोऽस्येति सन्नकद्रुरिति
स्वामी ।
सन्नको द्रुश्चेति द्वे नामनी इति सोमनन्दी
।
इति भरतः ॥

**सन्नतिः**, स्त्री, (सं + नम + क्तिन् ।) प्रणतिः ।

(यथा, भागवते । १० । ७० । २४ ।
"ये च दिग्विजये तस्य सन्नतिं न ययुर्नृपाः
।
प्रसह्य रुद्धास्ते नासन्नयुते द्वे गिरिव्रजे
॥")
ध्वनिः । इति मेदिनी ॥ नम्रता यथा, हरि-
वंशे ।

"यत्र ह्रीः श्रीः स्थिता तत्र यत्र श्रीस्त
त्रसन्नतिः
सन्नतिर्ह्रीस्तथाश्रीश्च नित्यं कृष्णे
महात्मनि ॥"
इति तिथ्यादितत्त्वम् ॥
(तथा च रामायणे । ५ । ६४ । २० ।
"तव चेदं सुसदृशं वाक्यं नान्यस्य
कस्यचित् ।
सन्नतिर्हि तवाख्याति
भविष्यच्छुभयोग्यताम् ॥"

**सन्नध्वः**, त्रि, (सं + नह + क्तः) वर्म्मितः ।

कृतसन्नाहः । (यथा, भागवते । ७ । १० ।
६६ ।
सन्नद्धो रथमास्थाय शरं धनुरुपाददे ॥")
व्यूढः । व्यूहविन्यासयुक्तः । इति मेदिनी
॥
आततायी । वधोद्यतः । इत्यमरटीकायां
राय-
मुकुटः ॥ मन्त्रादिसंयुतः । इति
शब्दरत्नावली ॥
(आबद्धः । यथा, अभिज्ञानशकुन्तले १
अङ्के ।
"कुसुममिव लोभनीयं यौवनमङ्गेषु
सन्नद्धम् ॥"
सञ्जातः । इति मल्लिनाथः ॥ यथा, रघुः ।
३ । ७ ।
"पुराणपत्रापगमादनन्तरं
लतेव सन्नद्धमनोज्ञपल्लवा ॥")

**सन्नयः**, पुं, (सं + नी + अच् ।) समूहः । यथा,

महाभारते । १ । १९० । ६ ।
"अस्मिन् राजसमावाये देवानामिव सन्नये
।
किमयं सदृशं कञ्चित् नृपतिं नैव दृष्टवान्
॥"
पृष्ठस्थायिबलः । इत्यमरमेदिनीकरौ ॥

**सन्नाहः**, युं, (संनह्यतेऽसौ इति । सं + नह +

घञ् ।) अङ्गत्राणम् । साँजोया इति भाषा ।
तत्पर्य्यायः । वर्म्म २ कङ्कटः ३ जगरः ४
कव-

समवायः ४ श्रोत्रादिसमवेतसमवायः ५
तदादि-
विशेषणता ६ ॥ अलीकिकसन्निकर्षस्तु
त्रिविधः ।
सामान्यलक्षणा १ ज्ञानलक्षणा २ योगजः
३ ।
यथा, --
"महत्त्वं षड्विधे हेतुरिन्द्रिथं करणं मतम ।
विषयेन्द्रियसम्बन्धो व्यापारः सोऽपि
षड्विधः
द्रव्यग्रहस्तु संयोगात् संयुक्तसमवायतः ।
द्रव्येषु समवेतानां तथा तत्समवायतः ॥
तत्रापि समवेतानां शब्दस्य ससवायतः ।
तद्वृत्तीनां सममेतसमवायेन तद्ग्रहः ॥
विशेषणतया तद्वदभावानां ग्रहो भवेत् ।
यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते ॥
प्रत्यक्षं समवायस्य विशेषणतया भवेत् ।
अलौकिकः सन्निकर्षस्त्रिविधः
परिकीर्त्तितः ॥
सामान्यलक्षणा ज्ञानलक्षणा योगजस्तथा
।
आसत्तिराश्रयाणान्तु
सासान्यज्ञानमिष्यते ॥
तदिन्द्रियजतद्धर्म्मबोधसामग्र पेक्ष्यते ।
विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः
॥
योगजो द्विविधः प्रोक्तो यक्तयुञ्जानभेदतः ।
युक्तस्य सर्व्वदा भानं चिन्तासहकृत्तोऽपरः
॥"
इति भाषापरिच्छेदः ॥

**सन्निकर्षणं**, क्ली, (सं + नि + कृष + ल्युट् ।) सन्नि-

धानम् । तत्पर्य्यायः । सन्निधिः २ । इति
सङ्कीर्ण-
वर्गे अमरः ॥ सन्निधम् ३ । इति भरतः ॥
(सम्बन्धः । यथा, भागवते । ११ । २८ ।
१२ ।
"यावद्देहेन्द्रियप्राणैरात्मनः सन्निकर्षणम् ।
संसारः फलवांस्तावदपार्थोऽप्यविवेकिनः
॥")

"हीनान्नवस्त्रवेशः स्यात् सर्व्वदा गुरुसन्निधौ ॥"
इन्द्रियगोचरः । इति मेदिनी ॥ (अवस्थानम् ।
यथा, जलशुद्धिप्रकरणे ।
"गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्म्मदे सिन्धुकावेरि जलेऽस्मिन् सन्निधिं कुरु ॥

**सन्निपतितः**, त्रि, एकत्रीकृतः । मिश्रितः । संनि-

पूर्व्वकपतधातोः क्तप्रत्ययेन निष्पन्नः ॥

**सन्निपातः**, पुं, (सम्यक् निपातो पतनं यत्र ।)

तालभेदः । यथा, --
"एक एव गुरुर्यत्र सन्निपातः स उच्यते ।"
इति सङ्गीत्दामोदरः ॥
(सम्यक् निपातो यस्मात् ।) विकारोत्पादक-
मिलितदोषत्रयम् । अस्य त्रयोदश नामलक्ष-
णानि यथा, --
"शीघ्रगस्तान्त्रिकश्चैवमसाध्यश्चित्तविभ्रमः ।
कष्टसाध्यः कण्ठकुब्जः कर्णिको जिम्भगस्तथा ॥
कष्टात् कष्टतमो ज्ञेयो रुग्दाहो हन्ति
मानवम् ।
अन्तको भग्ननेत्रश्च रक्तष्ठीवी निपातकः ॥
शीताङ्गश्च प्रलापश्च अभिन्यासोऽतिमारकः ।
ज्ञातव्याः सर्व्वदा वैद्यैः सन्निपातास्त्रयोदश ॥"
माण्डवीये ।
"शीघ्रगस्तान्त्रिकश्चित्तविभ्रमःकण्ठकुब्जकः ।
कर्णिको जिम्भकश्चैव जग्राहश्चान्तकस्तथा ॥
भग्ननेत्रो विलापश्च प्रलापः शीतलाङ्गकः ।
अभिन्यासश्चेति विद्यात् सन्निपातास्त्रयोदश ॥ *
सदास्यं श्लेष्मणा पूर्णं शूलं कासोऽतिवेदना ।
शोथश्च लक्षणान्येवं शीघ्रगे सान्निपातिके ॥ १ ॥
अतितन्द्रा ज्वरः श्वासकासस्तापोऽतिसारकः ।
स्थूलकण्ठः सिता श्यामा जिह्वा कण्ठे च
कूजति ॥
श्रुतिरल्पा चेति विद्यात् तान्त्रिके सान्नि-
पातिके ॥ २ ॥
मदो मोहो भ्रमस्तापो हास्यशीतप्रलापनम् ।
नित्यं वैकल्पिता पीडा विकटाक्षनिरीक्षणम् ।
लक्षणैः सन्निपातोऽयं ज्ञातव्यश्चित्तविभ्रमः ॥ ३
कण्ठग्रहो ज्वरो मूर्च्छा दाहः कम्पविलापनम्
मोहस्तापः शिरोऽर्त्तिश्च वातार्त्तः प्रलयं गतः ॥
कण्ठकुब्जं सन्निपातं कष्टसाध्यं विनिर्द्दिशेत् ॥ ४

चम् ५ दंशः ६ तनुत्रम् ७ मायी ८ उर-
च्छदः ९ । इति हेमचन्द्रः ॥ (यथा, महा-
भारते । ४ । ३० । १७ ।
“पृथक्
काञ्चनसन्नाहान्रथेष्वश्वानयोजयन् ॥”
उद्योगः । इति रामानुजः ॥ यथा, रामा-
यणे । ६ । ७५ । ४० ।
“ततो रामशरान् दृष्ट्वा विमानेषु गृहेषु च ।
सन्नाहो राक्षसेन्द्राणां तुमुलः समपद्यत
॥”)

**सन्नाह्यः**, पुं, (संनह्यते इति । सं + नह + ण्यत् ।)

युद्धयोग्यगजः । यथा, --
“राजवाह्यस्तूपवाह्यः सन्नाह्यः
समरोचितः ।”
इति हेमचन्द्रः ॥

**सन्निकर्षः**, पुं, (सं + नि + कृष + घञ् ।) सान्नि-

ध्यम् । तत्पर्य्यायः । पार्श्वम् २ समीपम्
३ सवि-
धम् ४ समीपाभ्यासम् ५ सवेशः ६
अन्तिकः ७
सदेशम् ८ अभ्यग्रम् ९ सनीडम् १०
सन्नि-
धानम् ११ उपान्तम् १२ निकटम् १३
उप-
कण्ठम् १४ सन्निकृष्टम् १५ समर्य्यादम्
१६
अभ्यर्णम् १७ आसन्नः १८ सन्निधिः १९
। इति
हेमचन्द्रः (यथा, कुमारे । ३ । ७४ ।
“स्त्रीसन्निकर्षं परिहर्त्तुमिच्छन्
अन्तर्दधे भूतपतिः सभूतः ॥”)
न्यायमते विषयेन्द्रियसम्बन्धः । स च
ज्ञानस्य
कारणम् । स तु द्विविधः ।
लौकिकसन्निकर्षः
अलौकिकसन्निकर्षश्च ।
लौकिकसन्निकर्षश्च षड्-
विधः । इन्द्रियसंयोगः १
इन्द्रियसंयुक्तसमवायः
२ इन्द्रियसंयुक्तसमवेतसमवायः ३
श्रोत्रादि-

**सन्निकृष्टः**, त्रि, (सं + नि + कृष + क्तः ।) सन्नि-

कर्षविशिष्टः । निकटः । इति
विशेष्यनिघ्नवर्गे
अमरः ॥ अस्य पर्य्यायः समीपशब्दे
द्रष्टव्यः ॥

**सन्निधं**, क्ली, (सं + नि + धा + कः ।) सन्निधानम्
।

इति भरतधृतवोपालितः ॥

**सन्निधानं**, क्ली, (सं + नि + धा + ल्युट् ।) निक-

टम् । इति हेमचन्द्रः ॥ (यथा, रामायणे ।
२ । २१ । ५३ ।
“श्रेयो मुहूर्त्तं तव सन्निधानं
ममैव कृस्नादपि जीवलोकात् ॥” * ॥
सम्यङ्निधीयतेऽस्मिन्निति ।) आश्रयः ।
यथा,
“आरम्भः संशयानामविनयभवनं पत्तनं
साह-
सानां
दोषाणां सन्निधानं कपटशतमयं
क्षेत्रमप्रत्यया-
नाम् ।
दुस्त्याज्यं यन्महद्भिः सुरनरवृषभैः
सर्व्वमाया-
करण्डं
स्त्रीरूपं केन लोके विषममृतमयं
धर्म्मनाशाय
सृष्टम् ॥”
इति शान्तिशतकम् ॥
(अवस्थानम् । यथा, मार्कण्डेये । ९७ ।
३५ ।
“यस्मिन् गेहे च लिखितमेतत् तिष्ठति
नित्यदा
सन्निधानं कृते श्राद्धे तत्रास्माकं भविष्यति
॥”)

**सन्निधिः**, स्त्री, (सं + नि + धा + किः ।) सन्नि-

कर्षः । इत्यमरः ॥ (यथा, मनुः । २ ।
१९४ ।

ज्वरः कर्णान्तशोथश्च श्वासः कम्पः प्रलापनः ॥
स्वेदः कण्ठग्रहस्तापस्तृण्मोहोभयमेव च ।
कर्णिके सन्निपाते च लक्षणानि भवन्तिहि । ५ ॥
सङ्कटा कठिना जिह्वा कासः श्वासोऽति-
विह्वलः ।
मूको वधिरता तापो बलहानिश्च लक्षणम् ॥
जिम्भगः सन्निपातोऽयं कष्टात् कष्टतरः परः ॥ ६
॥
मोहस्तापः प्रलापश्च व्यथा कण्ठे भ्रमः श्रमः ॥
वेदना च तृषा जाड्यं श्वासश्च लक्षणैरिभैः ।
कष्टात् कष्टतरो ज्ञेयः कग्राहः सान्निपातिकः ॥
दाहो मोहः शिरःकम्पो हिक्का श्वासाङ्ग-
मद्द नम् ।
सन्तापश्चान्तको ज्ञेयः सन्निपातोऽतिमारकः ॥
८

श्वसनं लोचने भुग्ने स्मृतिः स्थूला
ज्वरोऽधिकः ।
मोहः प्रलापनं कम्पो भ्रमो निद्रा च लक्षणैः
॥
ज्ञातव्यो भुग्ननेत्रोऽयं सन्निपातः क्षयंकरः ॥
९ ॥
रक्तनिष्ठीवनं मूर्च्छा ज्वरो मोहस्तृषा भ्रमः
।
वान्तिर्हिक्कातिसारश्च संज्ञानाशो हृदि
व्यथा ॥
मण्डलं श्यावरक्तञ्च देहेषु लक्षणैरिमैः ।
ज्ञातव्यः सन्निपातोऽयं रक्तष्ठीवी
निपातकः ॥ १०
प्रलापतापकर्णार्त्तिः
प्रज्ञानाशोऽतितापवान् ।
ज्ञेयः प्रलापकश्चिह्नैः
सन्निपातोऽतिमारकः ॥ ११
शरीरं हिमवत् शीतमतिसारश्च कम्पनम् ।
कर्णनादो हस्ततापो हिक्का श्वासः क्रमो-
त्तरम् ।
सर्व्वाङ्गशीतलो हन्ति शीताङ्गः
सन्निपातकः ॥
१२ ॥
त्रिदोषञ्च मुखं शुष्कं निद्रावैकल्यकष्टवाक्
।
निश्चेतनमतिश्वासो मन्दाग्निर्बलहीनता ॥
मृत्युतुल्यमभिन्यासं सन्निपातञ्च लक्षयेत्
॥ १३ ॥
इति चक्रपाणिदत्तः ॥ * ॥
यं दृष्ट्वा यस्य सम्भवः स तस्य सन्निपातः
। सन्नि-
पातविधिरनिमित्तं तद्विघाताय । इति
कलाप-
व्याकरणे ४ वृत्तौ २ प्रकरणम् ॥ समूहः ।
यथा, --
“धूमज्योतिःसलिलमरुतांसन्निपातः क्व
मेघः
सन्देशार्थाः क्व पटुकरणैः प्राणिभिः
प्रापणीयाः ।
इत्यौत्सु क्यादपरिगणयन् गुह्यकस्तं
ययाचे

विप्रकृष्टसन्निकृष्टकारणकथनपूर्व्विकां सम्प्राप्ति-
माह ।
“त्रिदोषजनकैर्व्वातपित्तश्लेष्मामगेहगाः ।
बहिर्निरस्य कोष्ठाग्निं रसगा ज्वरकारिणः ॥”
पूर्व्वरूपमाह ।
“प्राग्रूपाणि त्रिदोषाणां स्युस्त्रिदोषज्वरे
नृणाम् ।”
सन्निपातज्वरस्य सामान्यानि लक्षणान्याह ।
“क्षणे दाहः क्षणे शीतमस्थि सन्धिशिरोरुजा ।
सास्रावे कलुषे रक्ते निर्भुग्ने चापि लोचने ॥
सस्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवावृतः ।
तन्द्रा मोहः प्रलापश्च कासश्वासोऽरुचिर्भ्रमः ॥
परिदग्धा खरस्पर्शा जिह्वा स्रस्ताङ्गता परा ।
ष्ठीवनं रक्तपित्तस्य कफेनोन्मिश्रितस्य च ॥
शिरसो लोठनं तृष्णा निद्रानाशो हृदि व्यथा ।
स्वेदमूत्रपुरीषाणां चिराद्दर्शनमल्पशः ॥
कृशत्वं नातिगात्राणां प्रततं कण्ठकूजनम् ।
कोठानां श्यावरक्तानां मण्डलानाञ्च दर्शनम् ॥
मूकत्वं स्रोतसां पाको गुरुत्वमुदरस्य च ।
चिरात् पाकश्च दोषाणां सन्निपातज्वराकृतिः ॥”
लोचने सास्रावे साश्रुणी । कलुषेऽस्वच्छे ।
निर्भुग्ने निर्गते कूटिले च । कण्ठः शूकैरिव
धान्याग्रैरिवावृतः । जिह्वा परिदग्धा परि-
दग्धेव ज्ञायते । अथवा परिदग्धेव कृष्णा
दृश्यते । स्रस्ताङ्गता शिथिलगात्रता । परा
अतिशयिता । ष्ठीवनमित्यादि कफसंयुक्तस्य
रक्तस्य पित्तस्य च ष्ठीवनम् । शिरसो लोठन-
मितस्ततः शिरश्चालनम् । कृशत्वं नातिगात्राणां
गात्राणामतिशयितं कार्य्यं न व्याधिप्रभवात् ।
प्रततं निरन्तम् । कोठः वरटीदष्टसंस्थानः
कोठ इत्यभिधीयते । श्यावः कपिशो वर्णः ।
मूकत्वमवचनत्वमल्पवचनत्वंवा । स्रोतसां
कर्णनासादीनाम् ॥ * ॥ ननु वातादयः पर-
स्परविरुद्धगुणास्तेषां सम्भूयैककार्य्यारम्भकत्वं
नोपपद्यते परस्परोपघातात् दहनसलिलयोरिव
तत् कथं वातपित्तकफा मिलित्वा विकारोत्-
पादकाः । अत्र समाधानमुक्तं दृढबलेन ।
“विरुद्धैरपि न त्वेते गुणैर्घ्नन्ति परस्परम् ।
दोषाः सहजसात्म्यत्वाद्विषं घोरमहीनिव ॥”
गदाधरस्तु हेत्वन्तरमुक्तवान् ।
“दैवाद्दोषस्वभावाद्वा दोषाणां सान्निपातिके ।

तत्र प्रवृद्धवातो मध्यपित्तो हीनकफः १
मध्य-
वातः प्रवृद्धपित्तो हीनकफः २ हीनवातः
प्रवृद्धपित्तो मध्यकफः ३ प्रवृद्धवातो
हीनपित्तो
मध्यकफः ४ मध्यवातो हीनपित्तः
प्रवृद्धकफः ५
हीनवातो मध्यपित्तः प्रवृद्धकफश्चेति षट्
६ ।
तेषां नामानि क्रमादाह ।
“विस्फारकश्चाशुकारी कम्पनो वभ्रु
संज्ञकः ।
शीघ्रकारी तथा भल्लुः सप्तमः कूटपाकलः
॥
सम्मोहकः पाकलश्च याम्यः क्रकच
इत्यपि ।
तद्वत् कर्क्कटकः प्रोक्तस्ततो
वैदारिकाभिधः ॥”
तन्त्रान्तरे विस्फारक इत्यत्र विस्फुरक
इति
पाठः । बभ्रुस्थाने विभुरिति पाठः । कुत्रापि
विद्ध इत्यपि पाठः । भल्लुरित्यत्र फल्गुरिति
पाठः । याम्य इत्यत्र संग्राम इति पाठः ।
कर्क्कटक इत्यत्र कर्क्कोटक इति पाठः ॥
* ॥ तत्र
वातोल्वणस्य लक्षणमाह ।
“श्वासः कासो भ्रमो मूर्च्छा प्रलापो मोह-
वेपथुः ।
पार्श्वस्य वेदना जृम्भा कषायत्वं मुखस्य च
॥
वातोल्वणस्य लिङ्गानि सन्निपातस्य
लक्षयेत् ।
एष विस्फारको नाम्ना सन्निपातः
सुदारुणः ॥” १
अथ पित्तोल्वणस्य लक्षणमाह ।
अतिसारो भ्रमो मूर्च्छा मुखपाकस्तथैव च
।
गात्रे च बिन्दवो रक्ता दाहोऽतीव प्रजायते ।
पित्तोल्वणस्य लिङ्गानि सन्निपातस्य
लक्षयेत् ।
भिषग्भिः सन्निपातोऽयमाशुकारी प्रकी-

कामार्त्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ॥”
इति मेघदूतम् ॥
सम्यक्प्रकारेण पतनं मरणञ्च ॥

**सन्निपातज्वरः**, पुं, (सम्यक् निपातो नाशो यस्मात् तादृशो ज्वरः ।) त्रिदोषजज्वरः । स तु अष्ट-प्रकारज्वरान्तर्गतज्वरविशेषः । अष्टत्वं विवृ-णोति । वातिकः पैत्तिकः श्लैष्मिकश्चेति त्रयः । द्वन्द्वजाश्च त्रयः । वातपैत्तिकः वातश्लैष्मिकः पित्तश्लैष्मिकश्चेति । संघातनः सन्निपातिक एकः
“द्व्युल्वणैकोल्वणैः षट् स्युर्हीनमध्यादिकैश्च षट् समैश्चैको विकारास्ते सन्निपातास्त्रयोदश ॥”
इति चरकेण त्रयोदश सन्निपाता उक्ताः ॥ ते यथा । वातोल्वणः १ पित्तोल्वणः २ कफो-ल्वणः ३ । वातपित्तोल्वणः ४ वातश्लेष्मोल्वणः ५ पित्तश्लेष्मोल्वणः ६ एवं षट् । अधिकवातो मध्यपित्तो हीनकफः १ अधिकवातो मध्यकफो हीनपित्तः २ अधिकपित्तो मध्यवातो हीन-कफः ३ अधिकपित्तो मध्यमकफो हीनवातः ४ अधिककफो मध्यवातो हीनपित्तः ५ अधिक-कफो मध्यपित्तो हीनवातश्चेति ६ षट् । त्र्युल्वण एकः १ । एवं त्रयोदश । अत्र तु त्रिदोषज-त्वेन साम्यात् सान्निपातिक एक एव गणितः । आगन्तुजोऽपि एक एव । अत्र आगन्तुज-शब्देन अभिघातादयो हेतव उच्यन्ते । कुत्र-विरुद्धैश्च गुणैः कश्चिन्नोपघातः परस्परम् ॥” इति
ननु भिन्नचयप्रकोपकालानांवातपित्तकफानां युगपदुत्थानाभावात् कथं सम्भूय सन्निपात-ज्वरारम्भकत्वमुपपद्यते । उच्यते । त्रिदोष-जनकनिदानबलेन युगपदेषां प्रकोपादिति सिद्धान्तः ॥ * ॥ अथ सामान्यसन्निपातजवरस्य त्रयोदश विशेषानाह ।
“एकोल्वणस्त्रयस्ते स्युर्द्व्युल्वणश्च तथेति षट् ।
त्र्युल्वणश्च भवेदेको विज्ञेयः स तु सप्तमः ॥
प्रवृद्धमध्यहीनैस्तु वातपित्तकफैश्च षट् ।
सन्निपातज्वरस्यैवं स्युर्व्विशेषास्त्रयोदश ॥”

र्त्तितः ॥” २ ॥ * ॥
अथ कपोल्वणस्य लक्षणमाह ।
“जडता गद्गदा वाणी रात्रौ निद्रा भवत्यपि ।
प्रस्तब्धे नयने चैव मुखमाधूर्य्यमेव च ॥
कफोल्वणस्य लिङ्गानि सन्निपातस्य लक्षयेत् ।
मुनिभिः सन्निपातोऽयमुक्तः कम्पनसंज्ञकः ॥” ३ ॥
अथ वातपित्तोल्वणस्य लक्षणमाह ।
“वातपित्ताधिको यस्य सन्निपातः प्रकुप्यति ।
तस्य ज्वरो मदस्तृष्णा मुखशोषप्रमीलकाः ।
आध्मानारुचितन्द्राश्च कासश्वासभ्रमश्रमाः ।
मुनिभिर्बभ्रुनामायं सन्निपात उदाहृतः ॥” ४ ॥ *
अथ वातश्लेष्मोल्वणस्य लक्षणमाह ।
“वातश्ले ष्माधिको यस्य सन्निपातः प्रकुप्यति ।
तस्य शीतज्वरो मुर्च्छा क्षुत्तृष्णा पार्श्वनिग्रहः ॥
शूलमस्विद्यमानस्य हिक्का श्वासश्च जायते ।
असाध्यः सन्निपातोऽयं शीघ्रकारीति कथ्यते ॥
न हि जीवत्यहोरात्रमनेनाविष्टविग्रहः ॥” ५ ॥
अथ पित्तश्लेष्मोल्वणस्य लक्षणमाह ।
“पित्तश्लेष्माधिको यस्य सन्निपातः प्रकुप्यति ।
अन्तर्द्दाहो बहिः शीतं तस्य तृष्णा प्रवर्द्धते ॥
तुद्यते दक्षिणं पार्श्वमुरःशीर्षगलग्रहाः ।
ष्ठीवति श्लेष्मपित्तञ्च कृच्छ्रात् कण्टश्च दूयते ॥
विड्भेदः श्वासहिक्काश्च वर्द्धन्ते सप्रमीलकाः ।
ऋषिभिर्भल्लु नामायं सन्निपात उदाहृतः ॥” ६ ॥
अथ वातपित्तश्लेष्मोल्वणस्य लक्षणमाह ।

| चिद्व्याधयः कार्य्यकारणयोरभेदोपचारात् । इति ज्वराधिकारे भावप्रकाशः ॥ * ॥ अथ सन्नि- पातज्वराधिकारमाह । तत्र सन्निपातज्वरस्य | | "सर्व्वदोषोल्वणे यस्य सन्निपातः प्रकुप्यति । |
| --- | --- | --- |

त्रयाणामपि दोषाणां तस्य रूपाणि लक्षयेत् ॥
व्याधिभ्यो दारुणश्चैव वज्रशस्त्राग्निसन्निभः ।
केवलोच्छासपरमस्तब्धाङ्गस्तब्धलोचनः॥
त्रिरात्रोपरमे तस्य जन्तोर्हरति जीवितम् ।
तदवस्थन्तु तं दृष्ट्वा मूढो व्याहरते जनः ॥
धर्षितो राक्षसैर्न्यूनमवेलायां चरन्ति ये ।
अम्बया ब्रुवते केचित् यक्षिण्या ब्रह्मराक्षसैः ॥
पिशाचैर्गुह्यकैश्चैव तथान्यैर्म्मस्तके हतम् ।
कुलदेवार्च्चनाहीनं धर्षितं कुलदैवतैः ॥
नक्षत्रपीडामपरे गरकर्म्मेति चापरे ।
सन्निपातमिमं प्राहुर्भिषजः कूटपाकलम् ॥” ७ ॥

अथ
प्रवृद्धमध्यहीनवातादिजनितसन्निपातज्वराणां लक्षणान्याह ।

“प्रवृद्धमध्यहीनैस्तु वातपित्तकफैश्च यः ।
तेन रोगास्त एवोक्ता यथादोषबलाश्रयाः ॥
प्रलापायाससम्मोहकम्पमूर्च्छारतिभ्रमाः।
एकपक्षाभिघातश्च तत्राप्येतद्विशेषतः ।
एष सम्मोहको नाम्ना सन्निपातः सुदारुणः ॥”
रोगास्त एवोक्ता उक्ता एव ते रोगाः व्यथा-वेपथुनिद्रानाशविष्टम्भादयोवातजाः । दाह-तृष्णोष्णता स्वेदादयः पित्तजाः । गौरवाग्नि-मान्द्योत्कासिका मुखप्रसेकादयः कफजाः । तत्रापि प्रलापादयः पक्षाघातान्ता विशेषाद्-भवन्ति ॥ * ॥ ननु वातः प्रवृद्धः सन् ज्वरं करिव्यति पित्तन्तु मध्यं सममिति यावत् तत् कथं ज्वरं करिष्यति । यत आह ।

“धातवस्तन्मला दोषा नाशयन्त्यसमास्तनुम् ।
समाः सुखाय विज्ञेया बलायोपचराय च ॥”
इति ।

उच्यते । अत्र पित्तं मध्यमपि अप्रकृतमेव यतो-ऽप्रकृतयोर्वातश्लेष्मणोरपेक्षया मध्यं तेन मध्यं मध्यकुपितमित्यर्थः ॥ * ॥ ननु कफः क्षीणः स कथं ज्वरं करिष्यति हीनशक्तिकत्वात् । उच्यते । दोषाः क्षीणा अपि व्याधीन् कुर्व्वन्त्येव । यत आह ।

शीर्णदन्तश्च मृत्युश्च तत्राप्येतद्विशेषतः ।
भिषग्भिः सन्निपातोऽयं याम्यनामा प्रकी-र्त्तितः ॥ १० ॥ * ॥

अथ प्रवृद्धवातमध्यपित्तहीनकस्य सन्निपातस्य लक्षणमाह ।

“प्रवृद्धमध्यहीनैस्तु वातपित्तकफैश्च यः ।
तेन रोगास्त एवोक्ता यथादोषबलाश्रयाः ॥
प्रलापायाससम्मोहकम्पमूर्च्छारतिभ्रमाः।
मन्यास्तम्भेन मृत्युश्च तत्राप्येतद्विशेषतः ।
उक्तः क्रकचनामायं सन्निपातो भिष-ग्वरैः ॥ ११ ॥ * ॥
मन्यहीनप्रवृद्धैस्तु वातपित्तकफैश्च यः ।
तेन रोगास्तथैवोक्ता यथादोषबलाश्रयाः ॥
अन्तर्द्दाहो विशेषोऽत्र न च वक्तुं स शक्यते ।
रक्तमालक्तकेनेव लक्ष्यते मुखमण्डलम् ॥
यत्नेनाकर्षितः श्लेष्मा हृदयान्न प्रसिच्यते ।
इषुणेवाहतं पार्श्वं तुद्यन्ते खन्यते हृदि ॥
प्रमीलकश्वासहिक्का वर्द्धते तु दिनं दिनम् ।
जिह्वा दग्धा खरस्पर्शा गलः शूकैरिवावृतः ॥
विसर्गं नाभिजानाति कूजेच्चापि कपोतवत् ।
अतीवश्लेष्मणा पूर्णः शुष्कवक्त्रोष्ठतालुकः ॥
तन्द्रानिद्रातियोगार्त्तो हतवाणिर्हतद्युतिः ।
न चातिलभते ग्लानिं विपरीतानि चेच्छति ॥
आयम्यते च बहुशो रक्तं ष्ठीवति चाल्पशः ।
एष कर्क्कटको नाम्ना सन्निपातः सुदा-रुणः ॥ १२ ॥ * ॥
हीनमध्यप्रवृद्धैस्तु वातपित्तकफैश्च यः ।
तेन रोगास्त एवोक्ता यथादोषबलाश्रयाः ॥
अल्पं शूलं कटीतोदो मध्यो दाहो रुजा भ्रमः
भृशं क्लमः शिरो वक्त्रमन्या हृदयवाग्रुजः ॥
प्रमीलकः
श्वासहिक्काकाशजाड्यविसंज्ञताः ।
प्रथमोत्पन्नमेतन्तु साधयन्ति कदाचन ॥
एतस्मिन् सन्निवृत्ते तु कर्णमूले सुदारुणा ।
पिडका जायते जन्तोर्यया कृच्छ्रेण जीवति ॥
स वैदारिकसंज्ञोऽयं सन्निपातः सुदारुणः ।
त्रिरात्रोपरमे तस्य व्यर्थमौषधकल्पनम् ॥” १३ ॥

क्लमबहुकफतान्तर्द्दाहवम्यङ्गपीडा-स्वरविकृतिभिरार्त्तः शीतगात्रः स उक्तः ॥ १ ॥
तन्द्रातीव ततस्तृषातिसरणं श्वासोऽधिकः कासरुक्
सन्तप्तातितनुर्गले श्वयथुना सार्द्धञ्च कण्डूः कफः ।
सुश्यामा रसना क्लमः श्रवणयोर्म्मान्द्यञ्च दाह-स्तथा
यत्र स्यात् स हि तन्द्रिको निगदितो दोष-त्रयोत्थो ज्वरः ॥ २ ॥
यत्र ज्वरे निखिलदोषनितान्तदोष-जाते प्रलापबहुला सहसोत्थिताश्च ।
कम्पव्यथापतनदाहविसंज्ञताः स्यु-र्न्नाम्ना प्रलापक इति प्रथितः पृथिव्याम् ॥ ३ ॥
निष्ठीवो रुधिरस्य रक्तसदृशं कृष्णं तनौ मण्डलं
लौहित्यं नयने
तृषारुचिवमिश्वासातिसारभ्रमाः
आध्मानञ्च विसंज्ञता च तपनं
हिक्वाङ्गपीडा भृशं
रक्तष्ठीविनि सन्निपातजनिते लिङ्गं ज्वरे जायते ॥ ४ ॥
भृशं नयनरक्तताश्वसनकासतन्द्राभ्रमाः
प्रलापमदवेपथुश्रवणहानिमोहास्तथा।
अदो निखिलदोषजे भवति यत्र लिङ्गं ज्वरे
पुरातनचिकित्सकैः स इह भुग्ननेत्रो मतः ॥ ५ ॥
दोषास्तीव्रतरा भवन्ति बलिनः सर्व्वेऽपि यत्र
ज्वरे
मोहोऽतीव विचेष्टता विकलता श्वासो भृशं मूकता ।
दाहश्चिक्कणमाननञ्च दहनो मन्दो बलस्य क्षयः
सोऽभिन्यास इति प्रकीर्त्तित इह प्राज्ञै-र्भिषग्भिः पुरा ॥ ६ ॥
त्रिदोषजनिते ज्वरे भवति यत्र जिह्वा भृशं
वृता कठिनकण्टकैस्तदनु मूकता मूढता ।

“वातक्षयेऽल्पचेष्टत्वं मन्दवाक्त्वं विसंज्ञता ।
पित्तक्षयेऽधिकश्लेष्मा वह्निर्मन्दः प्रभाक्षयः ॥
शिथिलाः सन्धयो मूर्च्छा रौक्ष्यं दाहो कफ-
क्षयः ॥”
इत्याशङ्का सिद्धान्तश्चापरत्रापि ॥ ८ ॥ * ॥
“मध्यप्रवृद्धहीनैस्तु वातपित्तकफैश्च यः ।
तेन रोगास्त एबोक्ता यथादोषबलाश्रयाः ॥
मोहप्रलापमूर्च्छाः स्युर्म्मन्यास्तम्भः शिरोग्रहः
॥
कास श्वासो भ्रमस्तन्द्रा संज्ञानाशो हृदिग्रहः ॥
खेभ्यो रक्तं विसृजति तन्द्रा स्यात्
स्तब्धनेत्रता ।
तत्राप्येते विशेषाः स्युर्म्मृत्युरर्व्वाक् त्रिवासरात्
भिषग्भिः सन्निपातोऽयं कथितः पाकला-
भिधः ॥ ९ ॥
हीनप्रवृद्धमध्यैस्तु वातपित्तकफैश्च यः ।
तेन रोगास्त एवोक्ता यथादोषबलाश्रयाः ॥
हृदयं दह्यते चास्य यकृत्प्लीहान्त्रफुप्फुसाः ।
पच्यन्तेऽत्यर्थमूर्द्ध्वाधः पूयशोणितनिगमः ॥

अथ तन्त्रान्तरे । वातोल्वणादीनां सन्निपात-
ज्वरविशेषाणां त्रयोदशानां शीताङ्गादीनि
त्रयोदश नामान्तराणि लक्षणान्तराणि चाह ।
“शीताङ्गस्त्रिमलोद्भवज्वरगणेतन्द्री प्रलापी
ततो
रक्तष्ठीवयिता च तत्र गणितः
सम्भुग्ननेत्रस्तथा
साभिन्यासकजिह्वकश्चकथितः
प्राकसन्धिगो-
ऽथान्तको
रुग्दाहः सहचित्तविभ्रम इह द्वौ कर्णकण्ठ-
ग्रहौ ॥”
तन्द्री तन्द्रिकः । प्रलापी प्रलापकः ।
रक्तष्ठीव-
यिता रक्तष्ठीवी । सम्भुग्ननेत्रो भुग्ननेत्रः ।
अभि-
न्यासकः अभिन्यासः । कर्णकण्ठग्रहौ
कर्णग्रहः
कर्णकः । कण्ठग्रहः कण्ठकुब्जकः ॥ * ॥
अथ तेषां प्रत्येकलक्षणानि ।
“हिमशिशिरशरीरः सन्निपातज्वरी यः
श्वसनकसनहिक्कामोहकम्पप्रलापै ।

श्रुतिक्षतिबलक्षती श्वसनकाससन्तप्तयः
पुरातनभिषग् वरास्तमिह जिह्वकं चक्षते ॥
७ ॥
व्यथातिशयिता भवेच्छ्वयथुसंयुता
सन्धिषु
प्रभूतकफता मुखे विगतनिद्रता कासरुक्
।
समस्तमिति कीर्त्तितं भवति लक्ष्म यत्र
ज्वरे
त्रिदोषजनिते बुधैः स हि निगद्यते सन्धिगः
॥ ८ ॥
यस्मिन् लक्षणमेतदस्ति सकलैर्द्दोषैरुदीते
ज्वरे-
ऽजस्रंमूर्द्धविधूननं सकसनं
सर्व्वाङ्गपीडाधिका।
हिक्काश्वाससदाहमोहसहिता
देहेऽतिसन्तप्तता
वैकल्यञ्च वृथावचांसि मुनिभिः सङ्कीर्त्तितः
सोऽन्तकः ॥ ९ ॥
दाहोऽधिको भवति यत्र तृषा च तीव्रा
श्वासप्रलापविरुचिभ्रममोहपीडाः।
मन्या हनुव्यथनकण्ठरुजा श्रमाश्च
रुग् दाहसंज्ञ उदितस्त्रिभवो ज्वरोऽयम् ॥
१० ॥
गायति नृत्यति हसति प्रलपति विकृतं
निरी
क्षते मुह्येत् ।
दाहव्यथाभयार्त्तो दोषत्रयचित्तविभ्रमो
ज्वर-
वान् ॥ ११ ॥

निःशेषदोषजनितज्वरशेषजन्मा
स्यात् कर्णमूलविषये श्वयथुर्व्यथा च ।
कण्ठग्रहो वधिरताश्वसनप्रलाप-
प्रस्वेदमोहदहनानि च कर्णकाख्ये ॥ १२ ॥
कण्ठः शूकशताबरुद्धवदति
श्वासःप्रलापोऽरुचि-
र्दाहो देहरुजा तृषापि च हनुस्तम्भः शिरो-
ऽर्त्तिस्तथा ।
मोहो वेपथुना सहेति सकलं लिङ्गं त्रिदोषज्वरे
यत्र स्यात् स हि कण्ठकुब्ज उदितः प्राज्ञै-
श्चिकित्साबुधैः ॥ १३ ॥ * ॥
स्न्धिगस्तेषु साध्यः स्यात्तन्द्रिकश्चित्तविभ्रमः।
कर्णको जिह्वकः कण्ठकुब्जः पञ्चापि कष्टकाः ॥
रुग्दाहस्त्वतिकष्टेन संसाध्यस्तेषु भाषितः ।
रक्तष्ठीवी भुग्ननेत्रः शीतगात्रः प्रलापकः ।
अभिन्यासोऽन्तकश्चैते षडसाध्याः प्रकी-
र्त्तिताः ॥" * ॥
अथ तन्त्रान्तरे । वातोल्वणादीनां सन्निपात-
ज्वरविशेषाणां त्रयोदशानां कुम्भीपाकादीनि
त्रयोदश नामान्तराणि लक्षणान्तराणि चाह ।
"कुम्भीपाकः प्रोर्णुनावः प्रलापी
ह्यन्तर्द्दाहो दण्डपातोऽन्तकश्च ।
एणीदाहश्चाथ हारिद्रसंज्ञो
भेदा एते सन्निपातज्वरस्य ॥
अजघोषभूतहासौ यन्त्रापीडश्च संन्यासः ।
संशोषी च विशेषास्तस्यैवोक्तास्त्रयोदश च ॥"
अथैषां लक्षणानि ।
"घोनाविवरझरद्बहुशोणासितनीललोहितं
सार्त्ति ।
विलुठन् मस्तकमभितः कुम्भीपाकेन पीडितं
विद्यात् ॥
उत्क्षिप्य यः स्वमङ्गं क्षिपत्यधस्तान्नितान्त-
मुच्छसिति ।
तं प्रोर्णुनावजुष्टं विचित्रकष्टं विजानीयात् ॥
स्वेदभ्रमाङ्गपीडा कम्पो दवथुर्वमी व्यथा कण्ठे
गात्रञ्च गुर्व्वतीदं प्रलापिजुष्टस्य जायते
लिङ्गम् ॥
अन्तर्द्दाहः शैत्यं बहिंश्च यस्या विशेषतः श्वासः
अङ्गमिव दग्धकल्पं सोऽन्तर्द्दाहार्द्दितः कथितः
॥
नक्तं दिवा न निद्रामुपैति गृह्णाति मूढधी-
छगलकशरीरगन्धः स्कन्धरुजावान्निरुद्धगल-
रन्ध्रः ।
अजघोषसन्निपातादाताम्राक्षःपुमान् भवति ॥
शब्दादीनधिगच्छति न स्वान्विषयान् यदी-
न्द्रियग्रामः ।
हसति प्रलपति परुषं स ज्ञेयो भूतहासार्त्तः ॥
येन मुहुर्ज्वरवेगाद्यन्त्रेणेवावपीड्यते गात्रम् ।
रक्तं पीतञ्च वमेत् यन्त्रापीडः स विज्ञेयः ॥
अतिसरति वमति कूजति गात्राण्यभितश्चिरं
नरः क्षिपति ।
स न्याससन्निपाते प्रलपति भुग्नाक्षिमण्डलो
भवति ॥
मेचकवपुरतिमेचकलोचनयुगलोऽबलो मलोत्-
सर्गात् ।
संशोषिणि सितपिडकामण्डलयुक्तो ज्वरे
भवति
नारायण एव भिषग्भेषजमेतेषु जाह्नवीनीरम् ।
नैरुज्यहेतुरेको नित्यं मृत्युञ्जयोऽध्येयः ॥" *
॥
अथासाध्यसन्निपातज्वरस्यलक्षणमाह ।
"सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः ।
शोथः संजायते तेन कश्चिदेव प्रमुच्यते ॥"
सुदारुणः मारकत्वात् यतस्तेन शोथेन
कश्चि-
देव प्रमुच्यते । कोऽपि जीवितं त्यजति
इत्यर्थः ।
"सन्निपातज्वरान् कष्टानसाध्यानपरे जगुः ।
दोषे विबद्धे नष्टेऽग्नौ सर्व्वसम्पूर्णलक्षणः ।
सन्निपातज्वरोऽसाध्यः
कष्टसाध्यस्ततोऽन्यथा॥"
दोषे पित्तकफे । विबद्धे अपक्वे सर्व्वसम्पूर्ण-
लक्षणः सर्व्वाणि दाहशीतादीनि सम्पूर्णानि
अन्यूनानि प्रौढानीति यावत् लक्षणानि यस्य
सः । ततोऽन्यथा दोषे पक्वे अग्नौ दीप्ते स्वल्प-
लक्षणकः कष्टसाध्य इत्यर्थः ॥ * ॥ * ॥
अथ सामान्यसन्निपातज्वरस्यचिकित्सा ।
"सन्निपातार्णवे मग्नं योऽभ्युद्धरति मानवम् ।
कस्तेन न कृतो धर्म्मः काञ्च पूजां न सोऽर्हति
॥
मृत्युना सह योद्धव्यं सन्निपातं चिकित्सता ।
यश्च तत्र भवेज्जेता स जेतामयसङ्कुले ॥
"वातस्यानुजयेत् पित्तं
पित्तस्यानुजयेत् कफम् ।"
इति ॥ * ॥
तत्र व्यवस्थामाह तन्त्रान्तरे ।
"ज्वरे त्रिदोषजे सामे शमयेत् प्रथमं
कफम् ।
जीर्य्यत्यामे जयेत् पित्तं निरामे त्वनिलं
जयेत् ॥
इति । प्रथममिति स्थानत्रयेऽपि
सम्बध्यते ।
अन्ये त्विति समादधते ।
"त्रयाणां वा जयेत् पूर्व्वं तं यः
स्याद्बलवत्तरः ।"
इति ।
तथा च ।
"संसर्गे यो गरीयान् स्यादुपक्रम्यः स वै
भवेत्
शेषदोषाविरोधेन सन्निपाते तथैव च ॥"
इति ॥
संसर्गे दोषद्वयसंसर्गे । गरीयान्
बलवत्तरः ।
"अंशांशं यत्र दोषाणां विवेक्तुं नैव शक्नु
यात् ॥
क्रियां साधारणीं तत्र विदधीत्
चिकित्सकः ॥
लङ्घनं वालुकास्वेदो नस्यं निष्ठीवनं
तथा ।
अवलेहोऽञ्जनञ्चैव प्राक् प्रयोज्यं
त्रिदोषजे ॥"
ज्वर इति शेषः ॥ * ॥ ननु ।
"क्रियायास्तु गुणालाभे क्रियामन्यां
प्रयोजयेत्
पूर्व्वस्यां शान्तवेगायां न क्रियासङ्करो
हितः ॥"
इति वचनेन क्रियासङ्करस्य
निषिद्धत्वात् कथ-
मत्र नस्यनिष्ठीवनावलेहाञ्जनानि
युगपद्विधी-
यन्ते इत्याशङ्कायामाह ।
"क्रियाभिस्तुल्यरूपाभिः
क्रियासाङ्कर्य्यमिष्यते ।

र्न्नभसः ।
उत्थाय दण्डपाते भ्रमातुरः सर्वतो भ्रमति ॥”
नभसो गृह्णाति आकाशात् किञ्चिद्ग्रहीतुं
करौ प्रसारयति इत्यर्थः ।
“संपूर्य्यते शरीरं ग्रन्थिभिरभितस्तथोदरंमरुता
श्वासातुरस्य सततं विचेतनस्यान्तकार्त्तस्य ॥
परिधावतीव गात्रे रुक्पात्रे भुजगपतग-
हरिणगणः ।
वेपथुमतः सदाहस्यैणीदाहज्वरार्त्तस्य ॥”
रुक्पात्रे पीडाभाजने । गात्रस्य विशेषणमेतत्
“यस्यातिपीतमङ्गनयने सुतरामलं ततोऽप्यं-
धिकम् ।
दाहोऽतिशीतता बहिरस्य स हारिद्रको ज्ञेयः ॥

श्लेष्मनिग्रहमेवादौ कुर्य्याद्व्याधौ त्रिदोषजे ।
निरस्ते श्लेष्मणि ह्यस्य स्रोतःसूद्द्वाटितेषु च
।
लाघवं जायते सद्यस्तृष्णा चैवोपशाम्यति ॥”
* ॥
भेडोऽप्याह ।
“सन्निपातज्वरे पूर्व्वं कुर्य्यादामकफापहम् ।
पश्चात् श्लेष्मणि संक्षीणे शमयेत् पित्तमारुतौ
॥”
इति ॥ * ॥
ननु तन्त्रान्तरे प्रथमंपित्तस्य प्रतिक्रिया प्रोक्ता
यथा, --
“शमयेत् पित्तमेवादौ ज्वरेषु समवायिषु ।
दुर्न्निवारतरं तद्धि ज्वरार्त्तेषु विशेषतः ॥” इति
अन्यत्रापि ।
“समवाये त्रिदोषाणां पूर्व्वं पित्तमुपाचरेत् ।
ज्वरे चैयातिसारे च सर्व्व त्रान्यत्र मारुतः ॥”
इति ॥
तथान्यत्र प्रथमं वायोः प्रतिक्रिया प्रोक्ता ।
यथा, --

भिन्नरूपतयैतास्तु नहि कुर्व्वन्ति
दूषणम् ॥” * ॥
तत्र लङ्घनस्य अवधिमाह ।
“त्रिरात्रं पञ्चरात्रं वा दशरात्रमथापि वा ।
लङ्घनं सन्निपातेषु कुर्य्याद्वारोग्यदर्शनात्
॥”
लङ्घने त्रिरात्रादिविकल्प
उल्वणवाताद्यपेक्षया
दोषाणां शीघ्रमध्यमन्दशक्तिकत्वात्
व्याधिस्व-
भावाच्च । आरोग्यदर्शनात् इति
यावदरोगता-
दर्शनं स्यात्तावद्वा लङ्घन कुर्य्यात् ।
एतेन
त्रिरात्राद्यवधेरनियतत्वं सूचितम् ।
अतएव
सुश्रुतः प्राह ।
“सप्तमे दिवसे प्राप्ते दशमे द्वादशेऽपि वा
।
पुनर्घोरतरो भूत्वा प्रशमं यान्ति हन्ति
वा ॥”
घोरतर इति घोरः स्वभावादेव तदा
घोरतरो
भूत्वेति ॥ * ॥ हननप्रशमनयोः
कारणमाह ।
“पित्तकफानिलवृद्ध्या
दशदिवसद्वादशाह-
सप्ताहात् ।
हन्ति विमुञ्चत्यथवा त्रिदोषजो
धातुमलपा-
कात् ॥”
त्रिदोषजो ज्वर इति शेषः ।
धातुमलपाकात्
धातुपाकाद्धन्ति
मलपाकाद्विमुञ्चतीत्यर्थः ।
धातुमलपाके प्राक्तनकर्म्मैव हेतुः । तत्र
यदि
जीवनसंवर्द्धकं कर्म्मास्ति तदा
मलपाकोऽन्यथा
धातुपाकः । स च
रसादिशुक्रान्तधातूनांपाको
बोद्धव्यः ॥ * ॥ तत्र धातुपाकस्य
लक्षणमाह ।

|  |  |  |
| --- | --- | --- |
|  |  | “निद्रानाशो हृदि स्तम्भो विष्टम्भो गौरवा-<br>रुची ।<br>अरतिर्बलहानिश्च धातूनां पाकलक्षणम् ॥”<br>विष्टम्भ उदरस्य । गौरवं गात्राणाम् ।<br>अन्यच्च । |

"संवाध्यमानो हृदि नाभिदेशे
गात्रेषु वा पाकरुजायुतेषु ।
पीडाज्वरार्त्तोऽङ्गुलिभिश्च गच्छेत्
स धातुपाकी कथितो भिषग्भिः ॥"
अपरञ्च ।
"नाभेरूर्द्ध्वं हृदोऽधस्तात् पीड्यते व्यथया यदि
धातोः पाकं विजानीयादन्यथा तु मलस्य च ॥"
मलपाकलक्षणमाह ।
"दोषप्रकृतिवैकृत्यं लघुता ज्वरदेहयोः ।
इन्द्रियाणाञ्च वैमल्यं मलानां पाकलक्षणम् ॥"
दोषप्रकृतिवैकृत्यं दोषा वातादयस्तेषां प्रकृति-
र्वेपथुदाहगौरवादिकरणं तस्य वैकृत्यं वैप-
रीत्यम् । वेमल्यं मलराहित्यम् । मलानां
दोषाणाम् । अन्यच्च ।
"शश्वद्धीन्द्रियपञ्चकस्य पटुता वह्नेश्च यत्र
क्रमात्
तृष्णादिप्रशमो ज्वरस्य मृदुता तं दोषपाकं
वदेत् ।
हृन्नाभ्योरतिवेदनातिसरणं तीव्रो ज्वरस्तृण्मद
श्वासाधिक्यमरोचको रतिरिति स्याद्धातु-
पाकाकृतिः ॥" * ॥
आमस्याधिक्येन सप्तमदिवसाद्यवध्यतिक्रमेपर-
मावधिमाह । हारीतः ।
"सप्तमी द्विगुणा यावन्नवम्येकादशी तथा ।
एषा त्रिदोषमर्य्यादा मोक्षाय च वधाय च ॥"
नवम्येकादशी चागमनदिवसं संविहाय बोद्धव्या
तेनागमनदिवसं नीत्वा दशमी द्वादशी च अत्र
रात्रिरित्यध्याह्रियते ।
"सन्निपातज्वरी पूर्व्वं सम्यग्लङ्घनमाचरेत् ।
शृतं शीतं पिबेदम्भः समये भेषजं भवेत् ॥
सन्निपातेन तृष्यन्तं पार्श्वरुक् तालुशोषितम् ।
यः पाययेज्जलं शीतं स मृत्युर्नरविग्रहः ॥"
शीतं अक्वथितम् । शृतं तु शीतं विहितमेव
इति लङ्घनम् ॥ * ॥ अथ वालुकास्वेदः ।
"वातश्ले ष्मकृते स्वेदात् कारयेद्रू क्षनिर्म्मितात्
स्निग्धः स्वेदो निषिद्धोऽत्र विना केवलवातजान्
खर्परभृष्टपटस्थितकाञ्जिकसंसिक्तवालुकास्वेदः
शमयति वातकफामयमस्तकशूलाङ्गभङ्गादीन्॥
श्रोतसामार्द्रवं कृत्वा नीत्वा पावकमाशयम् ।
हत्वा वातकफस्तम्भं स्वेदो ज्वरमपोहति ॥"
इति वालुकास्वेदः ॥ * ॥

मोहामयेन मुग्धं बोधयितुं यादृशः
शक्तः ।
कल्पतरुनामधेयो रसो न तादृक् परं
किञ्चित् ॥"
इति नस्यम् ॥ * ॥
अथ निष्ठीवनम् ।
"जिह्वातालुगलक्लोम मरुत्पित्तेन
चोच्छ्रितः ।
तदा स चारयेच्छोषं जिह्वायाः खरतां
तथा ॥
स्फुटनञ्च तदा जिह्वां
लेपयेन्मधुपिष्टया ।
द्राक्षया साज्यपातेन जिह्वा स्यात्
सरसा
मृदुः ॥
आर्द्रकस्य रसोपेतं सैन्धवं
कटुकत्रयम् ।
आकण्ठाद्धारयेदास्ये निष्ठीवेच्च पुनः
पुनः ॥
तेनास्य
हृदयक्लोममन्यापार्श्वशिरोगलात् ।
नीलोऽप्याकृष्यते श्लेष्मा लाघवं
चास्य जायते ॥
पर्व्वभेदो ज्वरो मूर्च्छा
निद्राश्वासगलामयाः ।
मुखाक्षिगौरवं
जाड्यमुत्क्लेशश्चोपशाम्यति ॥
सकृत् द्विस्त्रिश्चतुः कुर्य्याद्दृष्ट्वा
दोषबलाबलम् ।
एतद्धि परमं प्राहुर्भेषजं सन्निपातिनाम्
॥"
इति कवलग्रहः ॥ * ॥
अथावलेहः ।
"कट्फलं पौष्करं शृङ्गी व्योषं
यासश्च कारवी
श्लक्ष्णचूर्णीकृतं चैतत् मधुना सह
लेहयेत् ॥
एषावलेहिका हन्ति सन्निपातं
सुदारुणम् ।
हिक्कां श्वासञ्च कासञ्च कण्ठरोगञ्च
नाशयेत् ।

तेनाशु शाम्यति श्वासः कासो मूर्च्छारुचि-
स्तथा ॥"
इत्यवलेहः ॥ * ॥
अथाञ्जनम् ।
"शिरीषबीजगोमूत्रकृष्णामरिचसैन्धवैः ।
अञ्जनं स्यात् प्रबोधाय सरसोनशिलावचैः ॥"
इति शिरीषबीजाद्यञ्जनम् ॥ * ॥
"अयोरजः श्वेतलोध्रमञ्जनं मरिचं तथा ।
गोपित्तेन समायुक्तं तन्द्रानाशनमुत्तमम् ॥"
गोपित्तं गोरोचना । लौहचूर्णाद्यञ्जनम् ॥ * ॥
"अञ्जनं सम्यगारब्धं मधुसिन्धुशिलोषणैः ।
प्रमोहद्रोहि भवति भाषितं भिषजां वरैः ॥"
शिला मनःशिला । उषणं मरिचम् । इत्य-
ञ्जनम् ॥ * ॥ अथ क्वाथः ।
"सूतं विषञ्च मरिचं तुत्थकं नवसादरम् ।
चूर्णितं स्वरसैर्म्मर्द्यं धूर्त्तपत्ररसोनयोः ॥
सन्निपातकृते मोहे मूर्द्ध्नि लिम्पेत् पदोपरि ।
अस्थिव्यथास्वनेनैव लेपं कुर्य्यात् पदोपरि ॥"
पदं पीछ इति लोके ।
"विल्वश्योनाकगम्भारीपाटलागणिकारिकाः।
पाचनं वातकफहृत् पञ्चमूलमिदं महत् ॥
शालपर्णी पृश्निपर्णी बृहती कण्टकारिका ।
गोक्षुरो वातपित्तघ्नं कनीयः पञ्चमूलकम् ॥
उभयं दशमूलं तत् पिप्पलीचूर्णसंयुतम् ।
सन्निपातज्वरं हन्ति हृत्कण्ठग्रहनाशनम् ॥
तन्द्रावातकफातङ्कश्वासपार्श्वार्त्तिकासनुत्।
महान्ति यानि मूलानि काष्ठगर्भाणि यानि
च ।
तेषान्तु वल्कलं ग्राह्यं ह्रस्वमूलानि कृत्स्नशः
॥"
अत्र विल्वादीनां पञ्चानां मूलस्य वल्कलं
ग्राह्यम् । दशमूलक्वाथः ॥ * ॥
"दशमूलीकषायस्तु स पौष्करकणान्वितः ।
सन्निपातज्वरे देयः श्वासकाससमन्विते ॥"
इति द्वादशाङ्गक्वाथः ॥ * ॥
"चिरज्वरे वातकफोल्वणे वा
त्रिदोषजे वा दशमूलमिश्रः ।
किराततिक्तादिगणः प्रयोज्यः
शुद्ध्यर्थिने वा त्रिवृता विमिश्रः ॥"
किराततिक्तादिर्यथा, --
किराततिक्तको मुस्तं गुडूची विश्वभेषजम् ।

अथ नस्यम् ।
"सैन्धवं श्वेतमरिचं सर्षपाः कुष्ठमेव च ।
वस्तमूत्रेण संपिष्टं नस्यं तन्द्रानिवारणम् ॥"
श्वेतमरिचं शिग्रु बीजम् । सैन्धवादिनस्यम् ॥
"मधूकसारसिन्धूत्थवचोषणकणाःसमाः ।
श्लक्ष्णं पिष्ट्वाम्भसा नस्य दद्यात् संज्ञाप्रबोध-
नम् ॥"
इति मधूकसारादिनस्यम् ॥
"मातुलुङ्गार्द्रकरसं कोष्णं त्रिलवणान्वितम् ।
अन्यद्वा सिद्धविहितं नस्यं तीक्ष्णं प्रयोजयेत् ॥
तेन प्रभिद्यते श्लेष्मा प्रभिन्नश्च प्रसिव्यते ।
शिरोहृदयकण्ठास्यपार्श्वरुक् चोपशाम्यति ॥

एतद्योज्यं कफोद्रेके चूर्णमार्द्रकजै
रसैः ॥"
तन्त्रान्तरे च उक्तम् ।
"अष्टाङ्गं मधुना लिह्यादार्द्र कस्य
रसेन वा ।
संमोहं दारुणं
हन्यात्तन्द्राकाससमन्वितम् ॥"
इति ।
"सर्व्वेषु सन्निपातेषु न क्षौद्रमवचारयेत्
।
शीतोपचारि क्षौद्रं स्याच्छीतञ्चात्र
विरुध्यते ॥
अयमभिप्रायः । सन्निपातज्वरेषु
श्लेष्मनिग्र-
हार्थं सर्व्वदा स्वेदो हित उक्तः ।
अत्राग्नि-
सम्बन्धाद्देहस्योष्णता तिष्ठेदेव ।
उष्णेन मधुना
विरोधः । उक्तञ्च सुश्रुतेन ।
"उष्णैर्विरुध्यते सर्वं विषान्वयतया
मधु ।
उष्णार्त्तमुष्णैरुष्णञ्च तन्निहन्ति यथा
विषम् ॥"
इति ॥
शीतोपचारि क्षौद्रमिति ।
शीतेनोपचारोऽस्या-
स्तीति शीतोपचारि । शीतञ्चात्र
सन्निपाते
विरुध्यते । अयमवलेहः
प्रायेणोद्र्ध्वजत्रुजरोग-
हरत्वात् सायमुपयुज्यते । यत उक्तं
चरकेण ।
"ऊद्र्ध्वजत्रु गदघ्नी या सा
सायमवलेहिका ।
अधोरोगहरी या सा भोजनात् प्राक्
प्रयु-
ज्यते ॥"
पौष्करं पुष्करमूलं तदलाभे कुष्ठं
देयम् ।
शृङ्गी कर्क्कटशृङ्गी । व्योषं
शुण्ठीपिप्पलीमरि-
चानि । यासो यवासः ।
केचिद्यासस्थाने

किरातादिगणो ह्येष चातुर्भद्रकमित्यपि ॥"
इति चतुर्द्दशाङ्गक्वाथः ॥ * ॥
"दशमूली शठी शृङ्गी पौष्करं सदुरालभम् ।
भार्गी कुटजबीजञ्च पटोलं कटुरोहिणी ॥ ॥
अष्टादशाङ्ग इत्येष सन्निपातज्वरापहः ।
कासहृद्ग्रहपार्श्वार्त्तिश्वासहिक्कावमीहरः ॥"
इत्यष्टादशाङ्गक्वाथः ॥ * ॥
"भूनिम्बदारुदशमूलमहौषधाब्द
तिक्तेन्द्रबीजधनिकेभकणाकषायः ।
तन्द्राप्रलापकसनारुचिदाहमोह
श्वासत्रिदोषजनितज्वरनाशनःस्यात् ॥"
इति द्वितीयोऽष्टादशाङ्गक्वाथः ॥

| | | |
|---|---|---|
| | यवानीं प्रक्षिपन्ति । कारवी मगरैला इति<br>लोके । अष्टाङ्गावलेहिका ॥ * ॥<br>“स्विन्नमामलकं पिष्ट्वा द्राक्षया सह मेलयेत् ।<br>विश्वभेषजसंयुक्तं मधुना सह लेहयेत् । | |

एतस्यैव गुण उक्तो वङ्गसेनेन ।
“अष्टादशाङ्गमित्येष मृत्युकल्पं ज्वरं जयेत् ॥”
इति ॥ * ॥
अथ सन्निपातज्वरे रसाः ।
“विषं त्रिकटुकं गन्धं टङ्कणं मृतशुल्वकम् ।
धुस्तूरस्य च बीजानि हिङ्गुलं नवमं स्मृतम् ॥
एतानि समभागानि दिनैकं विजयाद्रवैः ।
मर्द्दयेच्चणकाकारा कर्त्तव्या वटिकाथ सा ॥
भक्षणीया तु पातव्योरविमूलकषायकः ।
मृतसंजीवती नाम्ना सन्निपातज्वरान्तकृत् ॥”
इति मृतसञ्जीवनी वटिका ॥ * ॥
सन्निपातज्वरे रसप्रदीपे ।
“शुद्धसूतसमं गन्धं सूतांशं मृतताम्रकम् ।
त्रिभिस्तुल्यैर्गवां क्षीरैर्म्मर्द्दयेदातपे खरे ॥
मर्द्दयेद्दिनमेकन्तु निर्गुण्डीशिग्रजद्रवैः ।
विधाय गोलं तं गोलमन्धमूषागतं पचेत् ॥
त्रियामान् वालुकायन्त्रे ततः खल्ले विचूर्णयेत् ।
अष्टमांशं विषं तत्र क्षिपेत्तेनापि मर्द्दयेत् ॥
त्रिनेत्राख्यो रसो ह्येष ज्ञेयो गुञ्जाद्वयोन्मितः ।
पञ्चकोलकषायेण छागीदुग्धेन वा सह ॥
रसेनानेन भुक्तेन सन्निपातज्वरो महान् ।
संक्षयं व्रजति क्षिप्रं कर्त्तव्यो नात्र संशयः ॥”
इति त्रिनेत्रो रसः ॥ * ॥
सन्निपातज्वरे रसप्रदीपे ।
“भस्म षोडशनिष्कं स्यादारण्योपलसम्भवम्।
मरिचं निष्कमात्नञ्च विषं निष्कं विचूर्णयेत् ॥
रसो भस्मेश्वरो नाम्ना सन्निपातज्वरान्तकृत् ।
एकगुञ्जामितो भक्ष्य आर्द्रकस्य द्रवेण हि ॥”
इति भस्मेश्वरो रसः ॥ * ॥

“सूतकं गन्धकञ्चैव हरितालं मनःशिलाम् ।
एकनिष्कं द्विनिष्कञ्च चतुर्निष्कं तथैव च ॥
पञ्चनिष्करसैः कारवेल्ल्याः कल्क प्रकल्पयेत् ।
ताम्रपत्राणि तुल्यानि तेन कल्केन लेपयेत् ॥
सरावसंपुटे तानि कृत्वा तेषामुपर्य्यपि ।
दद्यात्तां पिष्टिकां पश्चात् पुटपाकेन पाचयेत् ॥
ततः संचूर्णयेदेव रसः क्षौद्रेण भक्षितः ।
यवैकमात्रया हन्ति घोरं शीतज्वरं ध्रुवम् ॥”
पाराटङ्कः १ गन्धकटङ्कः २ हरितालटङ्कः ४
मनःशिलाटङ्कः ५ ताम्रपत्रटङ्कः १२ । इति शीतज्वरारिरसः ॥ * ॥ रसप्रदीपे ।
“पारदं गन्धकं तुत्थं दरदञ्च विषं समम् ।
विषादष्टगुणं योज्यं मरिचं विश्वभेषजम् ॥
अश्वगन्धा तु विजया कासमर्दकठिल्लकः ।
चतुर्णाञ्च रसैरेतच्चूर्णं यत्नेन मर्दयेत् ॥
तुलस्यास्तु दलैः सार्द्धं भक्षितो रक्तिकामितः ।
हन्ति शीतज्वरं घोरं नाम्नायं शीतकेशरी ॥”
इति शीतकेशरीरसः ॥ * ॥
रसप्रदीपे ।
“तालकं शूक्तिकाचूर्णं तुल्यं तत्रोभयोपरि ।
नवमांशञ्च तुत्थं स्यात् मर्दयेत् कन्यकाद्रवैः ॥
तत्तु संशुष्कमुपलैर्वन्यैर्गजपुटे पचेत् ।
शीतं तच्चूर्णयेदर्द्धं गुञ्जामात्रं शितायुतम् ॥
प्रभाते भक्षयेत्तेन याति शीतज्वरक्षयम् ।
वान्तिर्भवति कस्यापि कस्यापि न भवत्यपि ॥”
इति शीतभञ्जी ॥ * ॥
“रसकं पारदं तुत्थं तालकं गन्धटङ्कणम् ।
सर्व्वमेतत् समं चूर्णं कारवेल्लीरसैर्दिनम् ॥
मर्दयेत्तेन शुद्धस्य रसकादिसमस्य तु ।
ताम्रस्य भाजनस्यान्तर्लिम्पेदर्द्धाङ्गुलोन्मितम् ॥

साङ्गशीतं समुद्धृत्य कृत्वा खल्लेषु कज्जलीम् ।
गुञ्जाद्वयप्रमाणेन नस्यकर्म्मणि योजयेत् ।
वामभागे ज्वरं हन्ति तत्क्षणात् कौतुकं महत् ।
योजयेद्दक्षिणे भागे आरोग्यं निश्चितं भवेत् ॥”
इत्यर्द्धनारीनाटेश्वरो रसः ॥ * ॥
शीतज्वरादिविषमज्वरेषु रसरत्नप्रदीपे ।
“कट्फलं त्रिफलादारुचन्दनं सपरूषकम् ।
कटुकापद्मकोशीरं विपचेत् कर्षकं जले ॥
त्रिदोषदाहतृष्णाघ्नं पानमात्रेयपूजितम् ।
दीर्घकालज्वरार्त्तानामेतत् स्यादमृतोमम् ॥”
कर्षं कट्फलाद्युशीरान्तानां समुदितानां जले प्रस्थमिते विपचेत् अर्द्धशेषम् । कट्फलादिपानं तृष्णायां दाहे च ।
“सन्निपाते तु दाहार्त्तं यः सिञ्चेच्छीतवारिणा आतुरः स कथं जीवेद्भिषग्वा स कथं भवेत् ॥”
एष सन्निपातिनो दाहे शीताम्बुसेकनिषेधो रुग्-दाहान्यत्र तत्र व्याप्याद्यवगाहनस्योक्तत्वात्॥ * ॥
अथान्नमाह ।
“दुःस्पर्शगोक्षुरक्षुदासिद्धमाहारमर्पयेत् ।
दोषशान्तिबलाग्न्यर्थं त्रिदोषज्वरिणे भिषक् ॥”
दुःस्पर्शो यवासः । आहारमुचितमन्नम्॥
“लाजशक्तून् समश्नीयात् सैन्धवेन समन्वितान्
ते चेज्जीर्य्यन्त्यविघ्नेन ज्वरी जीवेत्तदा ध्रुवम् ॥”
इति केचित् ॥
रक्तपित्ते हितत्वेन तृष्णादाहज्वरेषु च ।
लाजानां शक्तवः शीता न च तेऽत्र हिता मताः ॥
पाचनो दीपनः सोष्णो लाजमण्डो यतः स्मृतः ।
दशमूलादिसंसिद्धः सन्निपातज्वरे हितः ॥
सन्निपातज्वरी यस्तु कम्पते प्रलपत्यपि ।
किञ्चिदेव न जानाति चिकित्सा तस्य कथ्यते ॥
अभ्यञ्जयेत् पुराणेन सर्पिषा पूर्व्वमेव तम् ।
बलारास्नागुडूच्याद्यैस्तैलैश्च परिषेचयेत् ॥
वर्त्तको वर्त्तका लावो वार्त्ताकिस्तित्तिरिः शशः ।
कुलिङ्गश्च रसेनैषां तर्पयेत यथानलम् ॥”
वर्त्तकः वटेर इति लोके । वर्त्तका बटई इति लोके । वार्त्ताको वातचटक इति निर्घण्टः ॥ वगेरा इति लोके । कुलिङ्गो गरगरैया इति लोके ।

सन्निपातज्वरे रसेन्द्रचिन्तामणौ ।
“द्वौ कर्षौ सूतकाद्ग्राह्यौ गन्धकाद्द्वौ तथैव च ।
यत्नतस्तूभयं मर्द्यं दिनं हंसपदीरसैः ॥
कल्कस्य वटिकां कृत्वा निःक्षेत् काचभाजने ।
कर्षैकममृतं तत्र क्षिप्त्वा वक्त्रं निरोधयेत् ॥
कुपिकायाः परौ भागौ वालुकाभिश्च पूरयेत् ।
सार्द्धं यावदहोरात्रं तावत्तत्र पचेद्रसम् ॥
दीपमात्रोऽनलो देयः साङ्गशीतं तमुद्धरेत् ।
तोलार्द्धममृतं तत्रक्षिपेत्तावत्तथोषणम् ॥
भक्षितो रक्तिकामात्रो रसस्त्वग्निकुमारकः ।
सन्निपातज्वरं हन्याद्वातं मन्दाग्नितामपि ॥
शूलं संग्रहणीं गुल्मं क्षयं पाण्डुगदं तथा ।
श्वासकासादिकान् सर्व्वान् गदानेष विनाशयेत् ॥”
इति अग्निकुमारो रसः ॥ * ॥
सन्निपातज्वरादिषु रसेन्दचिन्तामणौ ।
“गन्धेशटङ्कमरिचं विषं धर्त्तूरजैर्द्रवैः ।
दिनसंमर्द्दितं शुष्कं पञ्चवक्त्रो रसो भवेत् ॥
आर्द्रकस्य द्रवेणैष दातव्यो रक्तिकामतः ।
सन्निपातज्वरं घोरं नाशयेन्नात्र संशयः ॥”
ईशः पारदः । टङ्कः टङ्कणः । षञ्चवक्तो रसः ॥ * ॥
सन्निपातज्वरे रसेन्द्रचिन्तामणौ । अथ शीत-
ज्वरे रसाः ।
तत् पचेद्वालुकायन्त्रे यवा यावत् स्फुटन्ति हि ।
शीतलं तद्धि गृह्णीयात्ताम्रपात्रोदराद्भिषक् ॥
शीतभञ्जी रसो माषमात्रो मरिचसंयुतः ।
भक्षितः पर्णखण्डेन नाशयेद्विषमज्वरान् ॥”
इति शीतभञ्जी रसः ॥ * ॥
शीतज्वरादिविषमज्वरेषु रसेन्द्रचिन्तामणौ ।
“तालको दरदोद्धू तपारदो गन्धकः शिला ।
क्रमाद्भागार्द्धरहितं कारवेल्ल्यम्बुमर्द्दितम् ॥
अनेनास्य प्रमाणेन ताम्रपात्रीं प्रलेपयेत् ।
अधोमुखीं दृढे भाण्डे तान्निरुध्याथ पूरयेत् ॥
चुल्ल्यां वालुकया घस्रमग्निं प्रज्वालयेदृढम् ।
शीतं संचूर्ण्य माषोऽस्य नागवल्लीदले स्थितः ॥
भक्षितो मरिचैः सार्द्धं समस्तान् विषमज्वरान्
शीतदाहादिकान् हन्ति पथ्यं शाल्यौदनं पयः ॥”
इति शीतभञ्जीरसः ॥ * ॥
रसरत्नप्रदीपे ।
“रसं गन्धं विषञ्चैव समं शुद्धञ्च टङ्कणम् ।
मर्दयेत् खल्लमध्ये तु यावत् कज्जलसन्निभम् ॥
नकुलस्य मुखे क्षिप्त्वा मृदा संवेष्टयेद्दृढम् ।
स्थापयेत् मृण्मये पात्रे अधोऽर्द्धलवणं न्यसेत् ॥
मुखे भाण्डं संनिरुध्य चतुर्यामं दृढाग्निना ।
“सन्निपाते क्षुधार्त्तं यो भोजयेत् पिशितौदनम्
स कथं भिषगाख्यान्तु लभते मनुजाधमः ॥” * ॥
अथ वातोल्वणसन्निपातज्वरस्यचिकित्सा ।
“पञ्चमूलीकषायन्तु दद्याद् वातोत्तरे ज्वरे ।
भृशोष्णं वा सुखोष्णं वा दृष्ट्वा दोषबलाबलम् ॥”
पञ्चमूली महती प्रथमं प्राप्तायास्त्यागे वचना-
भावात् ॥ * ॥ अथ पित्तोल्वणसन्निपातज्वरस्य चिकित्सा ।
“परुषकाणि त्रिफला देवदारु च कट्फलम् ।
चन्दनं प्रद्मकं चैव तथा कटुकरोहिणी ॥
पृश्नीपर्णी शृतं त्वेभिरुषितं शीतलं जलम् ।
पित्तोत्तरे नृणामेतत् सन्निपाते चिकित्सितम् ॥”
इति परुषकादिक्वाथः ॥ * ॥

"किराततिक्तकं मुस्तं गुडूची विश्वभेषजम् ।
पाठोदीप्यं मृणालञ्च शृतं पित्ताधिके पिबेत्
॥"
इति किरातादिसप्तकम् ॥ * ॥
अथ कफोल्वणसन्निपातज्वरस्यचिकित्सा
।
"बृहत्यौ पौष्करं भार्गी शटी शृङ्गी दुरा-
लभा ।
वत्सकस्य तु वीजानि पटोलं कटुरोहिणी ॥
बृहत्यादिर्गणः शस्तः सन्निपाते कफोत्तरे ।
श्वासादिषु च सर्व्वेषु हितः सोपद्रवेष्वपि ॥"
इति बृहत्यादिक्वाथः ॥ * ॥
अथ वातपित्तोल्वणसन्निपातज्वरस्य
चिकित्सा
"वातपित्तहरं वृष्यं कनीयः पञ्चमूलकम् ।
तत्क्वाथो मधुना हन्ति वातपित्तोत्तरं ज्वरम्
॥"
इति लघुपञ्चमूलम् ॥ * ॥
अथ
वातश्लेष्मोल्वणसन्निपातज्वरचिकित्सा।
किराततिक्तकं मुस्तं गुडूची विश्वभेषजम् ।
चातुर्भद्रकमित्याहुर्व्वातश्लेष्मोल्वणे ज्वरे
॥"
इति चातुर्भद्रकक्वाथः ॥ * ॥
अथ
पित्तश्लेष्मोल्वणसन्निपातज्वरचिकित्सा।
"पर्पटः कट्फलं कुष्ठमुशीरं चन्दनं जलम् ।
नागरं मुस्तकं शृङ्गी पिप्पल्येषां शृतं हितम् ।
तृष्णादाहाग्निमान्द्येषु पित्तश्लेष्मोल्वणे ज्वरे
॥"
इति पर्पटादिक्वाथः ॥ * ॥
अथ
वातपित्तश्लेष्मोल्वणसन्निपातज्वरचिकित्सा
।
"नागरं धान्यकं भार्गी पद्मकं रक्तचन्दनम् ।
पटोलं पिचुमर्दश्च त्रिफला मधुकं बला ॥
शर्करा कटुका मुस्ता गजाह्वा व्याधिघातकः
।
किराततिक्तममृता दशमूली निदिग्धिका ॥
योगराजो निहन्त्येष सन्निपातत्रिकोल्वणम् ।
सन्निपातसमुत्थानं मृत्युमप्यागतं जयेत् ॥"

दशानां विशिष्टा चिकित्सा । तत्र शीताङ्गस्य
चिकित्सामाह ।
"भास्वन्मूलं जीरकं व्योषभार्गी-
व्याघ्रीशुण्ठीपुष्करं गोजलेन ।
सिद्धं सद्यः शीतगात्रादिमोह-
श्वासश्लेष्मोद्रेककासान्निहन्ति ॥"
भास्वन्मूलं अर्कमूलम् ।
"कर्क्कोटिकाकन्दरजः कुलत्थ-
कृष्णावचाकट्फलकृष्णजीरैः ।
किराततिक्तानलकट्वलावु-
पथ्याभिरुद्वर्त्तनमत्र शस्तम् ॥"
कर्क्कोटिकाकन्दरजः खखसामूलरजः ।
"रसविषमरिचमहेशप्रियफलभस्मैकभूचतुर्व-
सुभिः ।
भागैर्म्मितमुद्धूननमिदममितस्वेदशैत्यहरम्
॥" *
अथ तन्त्रिकस्य चिकित्सा ।
"क्षुद्रामृतानागरपौष्कराणि
शृतानि पीतानि शिवायुतानि ।
शुण्ठीकणागस्तिरसोषणानि
नस्येन तन्द्राविजयोल्वणानि ॥
मरिचकचपञ्चपचा वचा रुक्
कृमिहंरनागरशर्व्वरीगवाक्ष्यः ।
छगलकजलकल्किता नितान्तं
नसि निहिता ननु तन्त्रिकं जयन्ति ॥"
कचः बालकः । पञ्चपचा दारुहरिद्रा । रुक्
कुष्ठम् । कृमिहरो विडङ्गः । शर्व्वरी हरिद्रा ।
गवाक्षी इद्रवारुणी । नसि नासिकायाम् ।
"तुरङ्गलालालवणोत्तमेन्द्रः
मनःशिलामागधिकामधूनि ।
नियोजितान्यक्षिणि निश्चितं द्राक्
तन्द्रां सनिद्रां विनिवारयन्ति ॥"
लवणोत्तमं सैन्धवम् । इन्द्रः कर्पूरः । निद्रा
अतिनिद्रा ॥ * ॥ अथ प्रलापकस्य
चिकित्सा ।
"सतगरवरतिक्तो रेवताम्भोदतिक्ता-
नलदतुरगगन्धाभारतीहारहूराः ।
मलयजदशमूलीशङ्खपुष्पीसुपक्वाः
प्रलपनमपहन्युः पानतो नातिदूरात् ॥"
वरतिक्तोऽत्र पर्पटो न तु महानिम्बस्तन्त्रा-

क्लीतकनिम्बयुतं परिपक्वं
वारि भवेदिह शोणितहारि ॥"
क्लीतकं यष्टीमधुकम् । इह रक्तष्ठीविनि ।
"मधुकमधूकपरूषकषाय-
श्चन्दनपल्लवदारुसनाथः ।
श्रीपर्णीफलशीतकषायः
सशित इह स्यादस्रजयाय ॥"
पल्लवं पत्रकम् । पाथः बालः । सनाथः सप्र-
धानः । श्रीपर्णी गम्भारी ॥ * ॥ अथ भुग्न-
नेत्रस्य चिकित्सा ।
"तुरङ्गगन्धालवणोग्रगन्धा-
मधूकसारोषणमागधीभिः ।
वस्ताम्बुशुण्ठीलसुनान्विताभि-
र्न्नस्यं त्वसम्भुग्नदृशं करोति ॥" * ॥
अथाभिन्यासस्य चिकित्सा ।
"शृङ्गीभार्ग्य भयाजाजीकणाभूनिम्बपर्पटैः ।
देवदारुवचाकुष्ठयासकट्फलनागरैः ॥
मुस्तधान्याकतिक्तेन्द्रयवपाठाहरेणुभिः ।
हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकैः ॥
विशलारग्वधारिष्टशटीवाकुचिकाफलैः ।
विडङ्गरजनीदार्व्वीयवानीद्वयसंयुतैः ॥
समांशैर्व्विहितः क्वाथो
हिङ्ग्वार्द्रकरसान्वितः ।
अभिन्यासज्वरं घोरं हन्ति तन्द्राञ्च
तत्क्षणात्
प्रमोहं कर्णशूलञ्च सन्निपातांस्त्रयोदश ।
हिक्कां श्वासञ्च कासञ्च तथा
सर्व्वानुपद्रवान् ॥"
इति शृङ्ग्यादिक्वाथः ॥ * ॥
अथ जिह्वकस्य चिकित्सा ।
"किराततिक्ताकुलकृत्कलिङ्ग-
कर्च्चूरकृष्णाकटुतैलयुक्तः ।
अम्लद्रवः संशमयेद्रसज्ञा
दोषांस्तुतो दाशरथिर्यथाब्धिम् ॥"
आकुलकृत् अकरकरहा इति लोके ।
कलिङ्गं
कुलिञ्जन इति लोके । अम्लद्रवः
वीजपुरादि-
रसः । इति किरातादिकवलः ॥ * ॥
"शालूरपर्णी मालूरमूलामयमधुप्लुता ।

गजाह्वा गजपिप्पली । व्याधिघातकः
आरग्वधः ।
निदिग्धिका द्वैगुण्यार्थं पृथक् पठिता । इति
योगराजक्वाथः ॥ * ॥ अथ
प्रवृद्धमध्यहीनवा-
तादिजनितसन्निपातज्वराणांषण्मां तन्त्रेण
चिकित्सामाह ।
“प्रवृद्धं कर्षयेद्दोषं क्षीणं संवर्द्धयेद्भिषक् ।
चिकित्सेयं विधातव्या दोषयोर्व्वृद्धहीनयोः
॥”
अस्यायमर्थः । प्रवृद्धं दोषं कर्षयेत् तत्क्षैण्य-
हेतुभिरौषधान्नविहारैः कृशीकृत्य
समीकुर्य्यात्
क्षोणं दोषं संवर्द्धयेत् । तद्वृद्धिहेतुभिरौषधान्न-
विहारैर्व्वर्द्ध यित्वा समीकुर्य्यादित्यर्थः ।
“प्रवृद्धे समिते दोषे मध्यमः स्वयमेव हि ।
शान्तिं याति समं नीते त्वनुबन्ध्येऽनुबन्धवत्
॥”
अभ्यायमर्थः । वर्षासु वायुरनुबन्ध्यः सेव्यः
।
प्रधानमिति यावत् । पित्तश्लेष्माणावनुबन्धौ
वायोरनुचरौ शरदि पित्तमनुबन्ध्यं कफोऽनु-
बन्धः । वसन्ते कफोऽनुबन्ध्यो वातपित्ते
अनुबन्धौ
तत्र यथानुबन्ध्ये प्रशमं नीतेऽनुबन्धः
स्वयमेव
गान्तिं याति । तथा प्रवृद्धे दोषे शमिते ह्रास-
यित्वा समीकृते मध्यमो दोषो हि निश्चयेन
स्वयमेव गान्तिं याति प्रकृतो भवतीत्यर्थः ॥
* ॥
अथ गोताङ्गादीनां सन्निपातज्वराणां त्रयो-
न्तरानुरोधात् । नलदं लामज्जकम् ।
तदलाभा-
दुशीरं ग्राह्यम् भारती ब्राह्मी । वरम्भी
इति लोके । हारहूरा द्राक्षा ।
“सान्त्वनैरञ्जनैर्नस्यैस्तीक्ष्णैस्तिमितसेवनैः ।
सर्व्वतो विकृतं चित्तमस्य प्रकृतिमानयेत् ॥”
* ॥
अथ रक्तष्ठीविनश्चिकित्सा ।
“रौहिषधन्वयवासकवासा-
पर्पटगन्धलताकटुकाभिः ।
शर्करया सममेष कषायः
क्षतजष्ठीविन उदित उपायः ॥”
रौहिषं सुगन्धतृणविशेषः । रोहित इति
लोके । गन्धलता प्रियङ्गुः ।
पद्मकचन्दनपर्पटमुस्ता
जातिवरारुणचन्दनवारि ।
शम्बूकपुष्पी सहिता सेव्या वाचां विशुद्धये
॥”
शालूरपर्णी ब्राह्मी । मालूरमूलं विल्वमूलम् ॥
आमयः कुष्ठम् । शम्बूकपुष्पी शङ्खपुष्पी ।
शालूर-
पर्ण्यादिरवलेहः ॥ * ॥
“क्षुद्रा नागरपुष्करामृतलता ब्राह्मी वचा-
सुव्रता ।
भार्गी वासकया सतोयसुरसा क्वाथो जये-
ज्जिह्वकम् ।
विश्वावर्म्मविभावरीयुगवरावत्सादनीवारिद-
व्याघ्रीनिम्बपटोलपुष्करजटारुग्दारुभिर्व्वा
कृतः ॥”
पुष्करं पुष्करमूलम् । तथा चामरसिंहः ।
“मूले पुष्करकाश्मीरपद्मपत्राणिपौष्करे ।”
सुव्रता गन्धपलाशी काश्मीरे प्रसिद्धा ।
सुरसा
तुलसी । विश्वादिर्योगान्तरम् । वर्म्म पर्प्पटः
॥
विभावरीयुगं हरिद्रा दारुहरिद्रा च । वरा
त्रिफला । वत्सादनी गुडूची । व्याघ्री कण्ट-

कारिका । रुक् कुष्ठम् ॥ * ॥ अथ
सन्धिनस्य
चिकित्सा ।
“शटीसुरतरूत्तमाः स्थविरदारुरास्नाः
समाः
सनागरसुधान्विताः पिब
शतावरीसंयुताः ।
मृदुज्वलनपाचिताः सह पुरेण
सन्धिग्रह-
व्यथापहतये वृथा शिशिरसेवनं मा
कृथाः ॥”
उत्तमा त्रिफला । स्थविरदारु विघारा
इति
लोके । सुधा गुडूची । पुरो गुग्गुलुः ।
“वचाकवचकच्छुरासहचरामृताभङ्गुरा-
सुराह्वघननागरातरुणदारुरास्नापुराः।
वृषातरुणभीरुभिः सह भवन्ति
सन्धिग्रह-
व्यथोरुजडिमक्लमभ्रमणपक्षघातद्रुहः
॥”
कवचः पर्प्पटकः । कच्छुरा यवासः ।
भङ्गुरा
अतिषिषा । सुराह्वं देवदारु ।
अतरुणदारु
वृद्धदारु । पुरो गुग्गुलुः । वृषा बृहद्दन्ती
एरण्डवत् पत्रविटपा तदलाभे दन्ती च
ग्राह्या
समानगुणत्वात् । तरुण एरण्डः । भीरुः
शता-
वरी ।
“सुरदारु शटी सुधालता
सुवहा शुण्ठियुता शृता जले ।
सपुराः शमयन्ति सेविताः
सततं सन्धिगतं सदागतिम् ॥”
सुवहा राम्ना ।
“मुस्तैरण्डप्राणदावाणदारु-
च्छिन्नारास्नाभीरुकर्च्चूरतिक्ता ।
वासा विश्वा पञ्चमूलीयुगाढ्या
हन्यान्मन्यास्तम्भसन्धिग्रहार्त्तीः॥”
प्राणदा हरितकी । बाणः
नीलपुष्पसहचरः ।

तेलघृतक्षौद्रैरित्यत्र न समुच्चयः स्नेहेन
केवलेन
मधुनापि लिह्यात् । इति पथ्यावलेहः ॥ *
॥
“प्रशमयति दाहमचिरात् दधियुक्कर्क्कन्धु-
पल्लवैर्लेपः ।
लेपो हिमकरमलयजनिम्बदलैस्तक्रपिष्टैर्व्वा
॥”
हिमकरः कर्पूरः । तथा च
घनसारश्चन्द्रसंज्ञ
इत्यमरः ॥
“उत्तानसुप्तस्य गभीरताम्र-
कांस्यादिपात्रे निहिते च नाभौ ।
शीताम्बुधारा बहला पतन्ती
निहन्ति दाहं त्वरितं ज्वरञ्च ॥
शीताम्भसा तु शतशश्च विलोडितेन
गव्येन चन्दनयुतेन घृतेन दिग्धा ।
दाहज्वरी सकमलोत्पलमाल्यधारी
क्षिप्रं विशेत् सलिलकोष्ठमनल्पकालम्॥
काञ्जिकार्द्रपटेनावगुण्ठनं दाहनाशनम् ।
अथ गोतक्रसंस्विन्नशीतलीकृतवाससा ॥”
* ॥
अथान्नमाह ।
“दाहावमर्द्दितं क्षामं निरन्नं तृष्णयान्वितम् ।
शर्करामधुसंयुक्तं पाययेल्लाजतर्पणम् ॥”
लाजतर्पणं लाजशक्तुभिरुपतर्पणम् ।
“वाप्यः कमलहासिन्यो जलयन्त्रगृहाः
शुभाः ।
नार्य्यश्चन्दनदिग्धाङ्ग्यो दाहदैन्यहरा
मताः ॥
मुक्तावली चन्दनशीतलानां
सुगन्धपुष्पाम्बरभूषितानाम्।
नितम्बिनीनां सुपयोधराणा-
मालिङ्गनान्याशु हरन्ति दाहम् ॥
प्रह्लादं चास्य विज्ञाय ताः स्त्रीरपनयेत् पुनः
।
हितञ्च भोजयेदन्नं येनाप्नोति सुखं महत्
॥”
प्रह्लादकं कामकृतं हर्षम् ॥ * ॥ अथ चित्त-
भ्रमस्य चिकित्सा ।
“कणोषणोग्रालवणोत्तमानि

“मृद्वीकामरदारुमत्स्यशकलामुस्तामलक्योऽमृता
पथ्यारेवतरामसेनकरजोराजीफलैः संयुताः ।
हन्युश्चित्तरुजोऽथ दर्द्दु रदला द्राक्षा पटोली
पयः
पथ्या पर्पटराजवृक्षकटुकाशम्बूकपुष्पः शृताः ॥”
मृद्वीका द्राक्षा । मत्स्यशकला कटुका । आरे-
वतः आरग्वधः । रामसेनकः किराततिक्तकः ।
रजः पर्पटकः । राजीफलः पटोलः । अथ
योगान्तरमाह । दर्दुलदला मण्डूकपर्णी ।
सा च त्र्यर्था ब्राह्मी मञ्जिष्ठा शोणकश्च ।
तथाप्यत्र ब्राह्मी ग्राह्या । यत उक्तं गुणग्रन्थे ।
ब्राह्मी मतिप्रदा मेध्या ज्वरहन्त्री रसायनीति
ब्राह्मी वरम्भी इति लोके । पयः बालकं राज-
वृक्ष आरग्वधः । शम्बूकपुष्पी शङ्खपुष्पी ॥ * ॥
अथ कर्णकस्य चिकित्सा ।
“प्रलेपः समस्तं नयत्यल्पमेकः
समुद्रिक्तशोथञ्च रक्तावसेकः ।
विपक्वञ्च शस्त्रक्रिया पूयजित् सा
व्रणत्वं गतञ्च द्रुतं तच्चिकित्सा ॥”
अयमर्थः । अल्पं तं कर्णकं एकः प्रलेपः अस्तं
नाशं नयति । तच्चिकित्सा व्रणचिकित्सा ।
“निशाविशालामयमाणिमन्थ-
दार्वीङ्गदीमूलकृतः प्रलेपः ।
प्रभाकरक्षीरयुतप्रभावाद्-
व्यस्तः समस्तोऽप्यथ कर्णकघ्नः ॥”
कुलत्थः कटफलं शुण्ठी कारवी च समांशकैः ।
सुखोष्णैर्लेपनं कार्य्यं कर्णमूले मुहुर्म्मुहुः ॥
गैरिकं कठिनीशुण्ठीकट्फलैः सवचैः समैः ।
उष्णैः काञ्जिकसंपिष्टैः प्रलेपः कर्णमूलनुत् ॥
शिग्रुराजिकयोः पिष्ट्वा कर्णमूलं प्रलेपयेत् ।
कर्णमूलभवः शोथस्तेन लेपेन शाम्यति ॥
अशिशिरजलपरिमृदितं मरिचकणाजीर-
सिन्धुजं त्वरितम् ।
नस्यविधिसेवितं ननु कर्णकरुक् नाशकृद्-
गदितम् ॥
भार्गीजयापौष्करकण्टकारी-
कट्त्रिकोग्राघनकुण्डलीभिः ।
कुलीरशृङ्गीकटुकारसाभिः
कृतः कषायः किल कर्णकघ्नः ॥”
भार्गी वभनेटी इति लोके । तदलाभे कण्ट-
कारीमूलं ग्राह्यम् । जया गणियार इति

तिक्ता कटुका ॥ * ॥ अथान्तके विधिः
।
“इहापहाय व्रतमुष्णवारि
ज्वरारिपूयादिगदापहारि।
ज्वरच्छिदं जीवितदञ्च नित्यं
मृत्युञ्जयं चेतसि चिन्तयस्व ॥”
इह अन्तके व्रतं लङ्घनादिनियमम्।
“कर्पूरप्रकरावदातवपुषं सद्योगमुद्राजुषं
शश्वद्भक्तजनेषु भावुकजुषं भालस्फु
रच्चक्षुषम्।
संपूर्णामृतकुम्भसम्भृतकरं
शुभ्राक्षमालाधरं
पिङ्गोत्तुङ्गजटाकलापरुचिरं
चन्द्रार्द्धमौलिं
स्तुहि ॥
भिषग्भिरिति निर्णीतं
सन्निपातेऽन्तकाभिधे।
भेषजं जाह्नवीनीरं वैद्यो गोविन्द एव हि
॥” *
अथ रुग्दाहस्य चिकित्सा।
“उशीरचन्दनोदीच्यद्राक्षामलकपर्प्पटैः
।
शृतं शीतं जलं दद्याद्दाहतृड्ज्वरशान्तये
॥”
इति षडङ्गपानम्॥ * ॥
“सशितो निशि पर्य्युषितः
प्रातर्धान्याक-
तण्डुल क्वाथः।
पीतः शमयत्यचिरादन्तर्द्दाहं ज्वरं पत्तम्
॥”
धान्याकतण्डुलाः कण्डितधान्यकानि।
इति
धान्याकक्वाथः॥ * ॥
“पथ्यां तैलघृतक्षौद्रैर्लिहन्
दाहज्वरापहाम्।
कासासृक्पित्तवीसर्पश्वासान् हन्ति
वमीमपि ॥”

करञ्जबीजं क्षणदामलानि।
पथ्याक्षसिद्धार्थकहिङ्गुशुण्ठी-
युतानि वस्ताम्बुविमिश्रितानि॥
पिष्ट्वा गुटीयं नयने विधेया
प्रचेतनेति प्रथितान्वितार्था।
चित्तभ्रमापस्मृतिभूतदोष-
शिरोऽक्षिरोगभ्रमनाशहेतुः ॥”
वस्ताम्बु छागमूत्रम्।
“कुम्भोद्भवतरोरम्भोगुडविश्वाकणान्वितम्
।
निहितं नसि नूनं स्यात् चित्तभ्रमविनाशनम्
॥”
कुम्भोद्भवतरोरम्भः
अगस्तिवृक्षत्वक्कल्करसः।
“मुरामूर्द्ध जमेधाह्वामधूकमलयोद्भवैः।
मरुत्तरुमधून्मिश्रैः पुरपाणिजपांशुभिः॥
लोहलामज्जकैलाभिर्धूपश्चित्तभ्रमापहः।
ग्रहदोषहरः श्रीदः सौभाग्यकर उत्तमः ॥”
मुरा एकाङ्गी। मूर्द्धजो बाला। मरुत्तरुः
देवदारुः। पुरः गुग्गुलुः। पाणिजः नखः।
पांशुः पर्पटकः। लोहं अगुरुः। लामज्जकं
उशीरवत् पीतच्छवितृणविशेषः। तदलाभे
उशीरं ग्राह्यम्।

लोके। पौष्करं पुष्करमूलम्। उग्रा वचा।
कुण्डली गुडूची। कुलीरशृङ्गी कर्क्कटशृङ्गी।
रसा रास्ना।
“दशमूलमत्स्यशकलाचपला-
त्रिफलामहौषधिकिरातयुतम्।
मरिचं परिक्वथितमाशु बला-
दपहन्ति कर्णरुजः सकला ॥”
चपला पिप्पली॥ * ॥ अथ कण्ठकुब्जस्य
चिकित्सा।
“फलत्रिकत्र्यूषणमुस्तकद्वि-
कलिङ्गसिंहाननशर्व्वरीभिः।

काथः कृतः कृन्तति कण्ठकुब्जं
कण्ठीरवः कुञ्जरमाशु यद्वत् ॥”
सिंहाननो वासकः । शर्व्वरी हरिद्रा ।
“किरातकटुकाकणाकुटजकण्टकारीशटी-
कलिद्रुकिलिमाभयाकुक्रकट्फलाम्भोधरैः ।
विषामलकपुष्करानलकुलीरशृङ्गीवृषै-
र्म्महौषधसखैरयं जयति कण्ठकुब्जं गणः ॥”
शटी कच्चूरः । कलिद्रुः विभीतकः । किलिमं
देवदारुः । कटुकं मरिचम् । विषा अतिविषा ।
पुष्करं पुष्करमूलम् । वृषः वासकः । वृषा-
दिभिः किंविशिष्टैः महौषधसखैः महौ-
षधस्य सखिभिः । तेन एतैः सहितेन महौ-
षधेन इत्यर्थः ॥ * ॥ अथोल्वणवातादिप्रवृद्ध-
मध्यक्षीणवातादिहेतुकानां कुम्भीपाकादिसन्नि-
पातज्वराणां त्रयोदशानां चिकित्साभिधीयते
सा च तुल्यहेतुकानां विस्फु रकादीनां त्रयो-
दशानामिव विधातव्या । इति सन्निपातज्वरा-
धिकारः । इति भावप्रकाशः ॥

**सन्निपातनुत्**, पुं, (सन्निपातं नुदतीति । नुद् +
क्विप् ।) नेपालनिम्बः । इति राजनिर्घण्ढः ॥

**सन्निबद्धः**, त्रि, सम्यग्बन्धनयुक्तः । संनिपूर्व्वबन्ध-
धातोः कर्म्मणि क्तप्रत्ययेन निष्पन्नः ॥

**सन्निबन्धनं**, क्ली, सम्यङ्निश्चितबन्धनम् । सम्यग्
विबन्धनम् । संनिपूर्व्वकबन्धधातोरनट्प्रत्ययेन
निष्पन्नम् ॥

**सन्निभः**, त्रि, (सम्यक् निभातीसि । सं + नि +
भा + कः ।) सदृशः । इति जटाधरः ॥ (यथा,
भागवते । ३ । १३ । २२ ।
“भगवान् यज्ञपुरुषो जगज्जगिन्द्रसन्निभः ॥”)

**सन्निरुद्धगुदः**, पुं, (संनिरुद्धं गुदं यस्मात् ।) गुह्य-
द्वारोद्भवरोगविशेषः । इति भावप्रकाशः ॥
(यथा, सुश्रुते । ४ । २० । ४२ ।
“संनिरुद्धगुदं रोगं वल्मीकं वद्गिरोहिणमि ।
प्रत्याख्याय यथायोगं चिकित्सितमथाचरेत् ॥”
तन्निदानादि क्षुद्ररोगशब्दे द्रष्टव्यम् ॥

**सन्निविष्टः**, त्रि, (सं + नि + विश् + क्तः ।) उप-
विष्टः । यथा, --
“नगरादिबहिः स्वैरविहारचारुभूमिषु ।
तत्र द्वयं निगदितं सन्निवेशो निकर्षणम् ॥”
इति शब्दरत्नावली ॥
(यथा, रघुः । १४ । ७६ ।
अशून्यतीरां मुनिसन्निवेशै-
स्तमोऽपहन्त्रीं तमसां वगाह्य ॥”
संस्थानम् । यथा, कुमारे । ३ । ४५ ।
“उत्तानपानिद्वयसन्निवेशात्
प्रफुल्लराजीवमिवाङ्कमध्ये ॥”)

**सन्निहितं**, त्रि, (सं + नि + धा + क्तः ।) निकट-
स्थितम् । यथा । ब्रह्मपुराणे ।
“षष्ठ्यादौ कृष्णपक्षे तु भूमौ सन्निहिता
भवेत्
यावत् पुण्यममावास्यां दिनानि दश पञ्च च
॥”
इति प्रायश्चित्ततत्त्वम् ॥
(अग्निविशेषे, पुं, । यथा, महाभारते । ३ ।
२२० । १९ ।
“प्राणानाश्रित्य यो देहं प्रवर्त्तयति देहिनाम् ।
तस्य सन्निहितो नाम शब्दरूपस्य साधनः
॥”)

**सन्न्यस्तः**, त्रि, (सं + नि + अस् + क्तः ।) सम्यङ्
न्यासीकृतः । समर्पितः । यथा, --
“योगसन्न्यस्तकर्म्माणं ज्ञानसंछिन्नसंशयम्
।
आत्मवन्तं न कर्म्माणि निबध्नन्ति धनञ्जय
॥”
इति भगवद्गीतायाम् ४ अध्यायः ॥

**सन्न्यासः**, पुं, (सं + नि + अस् + घञ् ।) जटा-
मांसी । इति शब्दचन्द्रिका ॥ काम्यकर्म्मणां
न्यासः । हथा, --
“काम्यानां कर्म्मणां न्यासं सन्न्यासं कवयो
विदुः
सर्व्वकर्म्मफलत्यागं प्राहुस्त्यागं विचक्षणाः
॥”
इति श्रीभगवद्गीतायाम् १८ अध्यायः ॥
अपि च ।
“सन्न्यासः कर्म्मणां न्यासः कृतानामकृतेः
सहा
देवरेण सुतोत्पत्तिं कलौ पञ्च
विवर्ज्जयेत् ॥”
इति कलौ सन्न्यासनिषेधकं
क्षत्त्रियवैश्य विष-
यकम् इति मलमासतत्त्वम् ॥
सन्न्यासप्रति-
षेधश्च कलौ क्षत्त्रविशीर्भवेत् । इति
मलमास-
तत्त्वप्रतिज्ञायां श्रीरघुनन्दनभट्टाचार्य्यः
॥ * ॥
चैत्रमासे सन्न्यासकरणप्रमाणं यथा, --
“चैत्रे शिवोत्सवं कुर्य्यात्
नृत्यगीतमहोत्सवैः ।
स्नायात् त्रिसन्ध्यं रात्रौ च हविष्याशी
जिते-
न्द्रियः ।
शिवस्वरूपतां याति शिवप्रीतिकरः परः
॥
क्षत्त्रियादिषु यो मर्त्यो देहं संपीड्य
भक्तितः ।
अश्वमेधफलं तस्य जायते च पदे पदे
॥
सर्व्वकर्म्मपरित्यागी शिवोत्सवपरायणः
।
भक्तैर्ज्जागरणं कुर्य्याद्रात्रौ
नृत्यकुतूहलैः ॥
नानाविधैर्म्महावाद्यैर्नृत्यैश्च विविधैरपि
।
नानावेशधरैर्नृत्यैः प्रीयते शङ्करप्रभुः ॥
किमलभ्यं भगवति प्रसन्ने नीललोहिते ।
तस्मात् सर्व्वप्रयत्नेन तोषणीयो
महेश्वरः ॥
शङ्खवाद्यं शङ्खतोयं वर्ज्जयेत
शिवसन्निधौ ।
ग्रामाद्वहिरिमं शम्भोरुत्सवं कारयेन्मुदा
।
उपोष्य हुत्वा संक्रान्त्यां व्रतमेतत्
समापयेत् ॥”
इति बृहद्धर्म्मपुराणे उत्तरखण्डे ९
अध्यायः ॥

"ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् कनककुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥"
इत्यादित्यहृदयम् ॥
निकटः । इति केचित् ॥

**सन्निवृत्तिः**, स्त्री, (सं + नि + वृ + क्तिन् ।) सम्यङ्

निवर्त्तनम् । (यथा, रघुः । १० । २७ ।
"गतिस्त्वं वीतरागाणामभूयः सन्निवृत्तये ॥")

**सन्निवेशः**, पुं, (संनिविशन्ते अत्रेति । सं + नि +

विश + घञ् ।) पत्तनादिषु दिगादिपरिच्छिन्न-
प्रदेशः । पूर्व्वद्दिगाद्यवच्छिन्नगृहम् । इति
कलिङ्गः ॥ पुरादेर्बहिर्विहरणभूमिः । इति
स्वाम्यादयः ॥ तत्पर्य्यायः । निकर्षणम् २ । इत्य-
मरभरतौ ॥ किञ्च ।

कुशलाकुशलाभ्यान्तु प्रहाणं न्यास उच्यते
॥"
इति मात्स्ये १२० अध्यायः ॥ * ॥
चतुर्थाश्रमः । तदाश्रमधर्म्मा यथा, --
"सर्व्वसङ्गपरित्यागो ब्रह्मचर्य्यसमन्वितः ।
जितेन्द्रियत्वमावासे नैकस्मिन्
वसतिश्चिरम् ॥
अनारम्भस्तथाहारे भिक्षा विप्रे ह्यनिन्दिते ।
आत्मज्ञानविवेकश्च तथा ह्यात्मावबोधनम्
॥
चतुर्थे चाश्रमे धर्म्मो ह्यस्माभिस्ते
प्रकीर्त्तितः ॥"
इति वामने १४ अध्यायः ॥ * ॥
तदाश्रमकालादि यथा, --
"एवं वनाश्रमे स्थित्वा तृतीयं भागमायुषः ।
चतुर्थमायुषो भागं सन्न्यासेन नयेत् क्रमात्
॥
अग्नीनात्मनि संस्थाप्य द्विजः प्रव्रजितो
भवेत् ।
योगाभ्यासरतः शान्तो ब्रह्मविद्यापरायणः ॥
यदा मनसि सम्पन्नं वैतृष्णं सर्व्ववस्तुषु ।
तदा सन्न्यासमि च्छेत्तु पतितः
स्याद्विपर्य्यये ॥
प्राजापत्यान्निरूप्येष्टिमाग्नेयीमथवा पुनः ।
दान्तः पक्वकषायोऽसौ ब्रह्माश्रममुपाश्रयेत्
॥"
इति कौर्म्मे उपविभागे २७ अध्यायः ॥ * ॥
कलौ क्षत्त्रियबैश्ययोः सन्न्यासनिषेधो
यथा, --
"अश्वमेधं गवालम्भं सन्न्यासं पलपैतृकम्
।

**सन्न्यासी**, [न्] पुं, (संन्यासोऽस्यास्तीति । इनिः
।

सन्न्यासाश्रमविशिष्टः । चतुर्थाश्रमी ।
तत्पर्य्यायः
पाराशरी २ मस्करी ३ परिव्राट् ४
कर्म्मन्दी ५
श्रमणः ६ भिक्षुः ७ । इति जटाधरः ॥
तस्य
लक्षणादि यथा । सर्व्वं गृहादिकं
त्यक्त्वा मुण्डित-
मुण्डो गैरिककौपीनाच्छादनं दण्डं
कमण्डलुञ्च
बिभ्रत् भिक्षावृत्तिर्निर्ज्जने तीर्थे वा
स्थित्वा
केवलमीश्वराराधनं करोति यः स
सन्न्यासी ।
स तु सतुर्व्विधः । कुटीचरः १ बहूदकः
२
हंसः ३ परमहंसः ४ । तस्य धर्म्मा
यथा, --
"सदन्ने वा कदन्ने वा लोष्ट्रे वा काञ्चने
तथा
समबुद्धिर्यस्य शश्वत् स सन्न्यासीति
कीर्त्तितः ॥
दण्डं कमण्डलुं रक्तवस्त्रमात्रञ्च धारयेत्
।
नित्यं प्रवासी नेकत्र स सन्न्यासीति
कीर्त्तितः ॥
शुद्धाचारद्विजान्नञ्च भुङ्क्ते
लोभादिवर्ज्जितः ।
किन्तु किञ्चिन्न याचेत स सन्न्यासीति
कीर्त्तितः
न व्यापारी नाश्रमी च सर्व्व
कर्म्मविवर्ज्जितः ।
ध्यायेन्नारायणं शश्वत् स सन्न्यासीति
कीर्त्तितः
शश्वन्मौनी ब्रह्मचारी
सम्भाषालापवर्ज्जितः ।
सर्व्वं ब्रह्ममयं पश्येत् स सन्न्यासीति
कीर्त्तितः ॥
सर्व्वत्र समबुद्धिश्च
हिंसामायाविवर्ज्जितः ।

| | | |
|---|---|---|
| | | क्रोधाहङ्काररहितः स सन्न्यासीति कीर्त्तितः ॥<br>अयाचितोपस्थितञ्च मिष्टामिष्टञ्च भुक्तवान् ।<br>न याचेत भक्षणार्थी स सन्नासीति कीर्त्तितः ॥<br>न च पश्येत् मुखं स्त्रीणां न तिष्ठेत्तत्समीपतः<br>दारवीमपि योषाञ्च न स्पृशेद् यः स भिक्षुकः ।<br>अयं सन्न्यासिनां धर्म्म इत्याह कमलोद्भवः ॥”<br>इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ३३ अध्यायः ॥ * ॥<br>अपि च ।<br>“सर्व्वन्यासी हरौ भूप धर्म्मः सन्न्यासिनां ध्रुवम् |

रक्तैकवासा दण्डी च बिभर्त्ति मृत्कमण्डलुम् ॥
सर्व्वत्र समदर्शी च स्मरेन्नारायणं सदा ।
करोति भ्रमणं नित्यं गेहे गेहे न तिष्ठति ॥
विद्यामन्त्रञ्च कस्मैचित् न ददाति च दैवतम् ।
करोति नाश्रमं भिक्षुः करोति नान्यवासनाम् ॥
करोति नान्यसङ्गञ्च निर्म्मोहः सङ्गवर्ज्जितः ।
न स्वादु भुङ्क्ते दैवाच्च स्त्रीमुखं न हि पश्यति ॥
न वाञ्छितं भक्ष्यवस्तु याचते गृहिणं व्रती ।
इति सन्न्यासिनां धर्म्ममित्याह कमलोद्भवः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ९५ अध्यायः ॥
अन्यच्च ।
"तपसा कर्षितोऽत्यर्थं यस्तु ध्यानपरो भवेत् ।
सन्न्यासीह स विज्ञेयो वानप्रस्थाश्रमे स्थितः ॥
योगाभ्यासरतो नित्यमारुरुक्षुर्ज्जितेन्द्रियः ।
ज्ञानाय वर्त्तते भिक्षुः प्रोच्यते पारमेष्ठिकः ॥
यस्त्वात्मरतिरेव स्यान्नित्यतृप्तो महामुनिः ।
सम्यक् च दमसम्पन्नः स योगी भिक्षुरुच्यते ॥
भैक्ष्यं श्रुतञ्च मौनित्वं तपो ध्यानं विशेषतः ।
सम्यक् च ज्ञानवैराग्यं धर्म्मोऽयं भिक्षुके मतः ॥
ज्ञानसन्न्यासिनः केचित् वेदसन्न्यासिनोऽपरे ।
कर्म्मसन्न्यासिनः केचित् त्रिविधः पारमेष्ठिकः ॥

एकवासोऽथवा विद्वान् कौपीनाच्छादनोऽथवा मुण्डः शिखी वाथ भवेत् त्रिदण्डी निष्परिग्रहः ।
कषायवासाः सततं ध्यानयोगपरायणः ॥
ग्रामान्ते वृक्षमूले वा वासं देवालयेऽपि वा ।
समः शत्रौ तथा मित्रे तथा मानापमानयोः ॥
भैक्षेण वर्त्तयेन्नित्यं नैकान्नादी भवेत् क्वचित् ।
यस्तु मोहेन चान्यस्मादेकान्नादी भवेद्यदि ॥
न तस्य निष्कृतिः काचिद्धर्म्मशास्त्रेषु कथ्यते ।
रागद्वेषविमुक्तात्मसमलोष्टाश्मकाञ्चनः॥
प्राणिहिंसानिवृत्तश्च मौनी स्यात् सर्व्वनिष्पहः
दृष्टिपूतं न्यसेत् पादं वस्त्रपूतं जलं पिबेत् ।
सत्यपूतां वदेद्वाणीं मनःपूतं समाचरेत् ॥
नैकत्र निवसेद्देशे वर्षाभ्योऽन्यत्र भिक्षुकः ।
स्नानशौचरतो तित्यं कमण्डलुकरः शुचिः ॥
ब्रह्मयज्ञरतो नित्यं वनवासरतो भवेत् ।
मोक्षशास्त्रेषु निरतो ब्रह्मसूत्री जितेन्द्रियः ॥
दम्भाहङ्कारनिर्म्मुक्तो निन्दापैशुन्यवर्ज्जितः ।
आत्मज्ञानगुणोपेतो यतिर्म्मोक्षमवाप्नुयात्॥ * ॥
अभ्यसेत् सततं वेदं प्रणवाख्यं सनातनम् ।
स्नात्वाचम्य विधानेन शचिर्देवालयादिषु ॥
यज्ञोपवीती शान्तात्मा कुशपाणिः समाहितः ।
धौतकाषायवसनो भस्मच्छन्नतनूरुहः ॥
अधियज्ञं ब्रह्म जपेदाधिदैविकमेव च ।
आध्यात्सिकञ्च सततं वेदान्ताभिमतञ्च यत् ॥
पुत्रेषु वाथ निवसन् ब्रह्मचारी यतिर्मुनिः ।
वेदमेवाभ्यसेन्नित्यं स याति परमां गतिम् ॥
अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यं तपः परम् ।
क्षमा दया च सन्तोषो व्रतान्यस्य विशेषतः ॥
वेदान्तज्ञाननिष्ठो वा पञ्चयज्ञान् समाहितः ।
कुर्य्यादहरहः स्नात्वा भैक्षान्नेनैव तेन हि ॥
होममन्त्रान् जपेन्नित्यं काले काले समाहितः ।
स्वाध्यायं चान्वहं कुर्य्यात् सावित्रीं सन्ध्ययोर्ज्जपेत् ॥
ध्यायीत सततं देवमेकान्ते परमेश्वरम् ।
एकान्नं वर्ज्जयेन्नित्यं कामं क्रोधं परिग्रहम् ।
एकवासा द्विवासा वा शिखी यज्ञोपवीतवान् ।
कमण्डलुकरो विद्वांस्त्रिदण्डी याति तत्पदम् ॥"
इति कौर्म्मे उपविभागे २७ अध्यायः ॥ * ॥
व्यास उवाच ।

प्रक्षास्थ पाणिपादौ च समाचम्य यथाविधि ।
आदित्ये दर्शयित्वान्नं भुञ्जीत प्राङ्मुखोऽत्वरः ॥
हुत्वा प्राणाहुतीः पञ्चग्रासानष्टौ समाहितः ।
आचम्य देवं ब्रह्माणं ध्यायीत परमेश्वरम् ॥
अलावुं दारुपात्रञ्च मृण्मयं वैणवं तथा ।
चत्वारि यतिपात्राणि ममुराह प्रजापतिः ॥
प्रदोषे पररात्रे च मध्यरात्रे तथैत च ।
सन्ध्यास्वह्नि विशेषेण चिन्तयेन्नित्यमीश्वरम् ॥
कृत्वा हृत्पद्मनिलये विश्वाख्यं विश्वसम्भवम् ।
आत्मानं सर्व्वभूतानां परत्वात्तमसः स्थितम् ॥
सर्व्व स्याधारमव्यक्तमानन्दंज्योतिरव्ययम् ।
प्रधानपुरुषातीतमाकाशंदहनं परम् ॥
तदन्तः सर्व्वभावानामीश्वरं ब्रह्मरूपिणम् ।
ध्यायेदनादिमद्वैतमानन्दादिगुणालयम्॥
महान्तं परमं ब्रह्म पुरुषं सत्यमव्ययम् ।
सितेतरारुणाकारं महेशं विश्वरूपिणम् ॥
ओङ्कारान्तेऽथवात्मानं संस्थाप्य परमात्मनि ।
आकाशे देवमीशानं ध्यायीताकाशमव्ययम्॥
कारणं सर्व्वभूतानामानन्दैकसमाश्रयम् ।
पुराणं पुरुषं शम्भुं ध्यायन्मुच्येत बन्धनात् ॥
यद्वा गुहायां प्रकृतौ जगत्सम्मोहनालये ।
विचिन्त्य परमं व्योम सर्व्वभूतैककारणम् ॥
जीवनं सर्व्वभूतानां यत्र लोकः प्रलीयते ।
आनन्दं ब्रह्मणः सूक्ष्मं यत् पश्यन्ति मुमुक्षवः ॥
तन्मध्ये निहितं ब्रह्म केवलं ज्ञानलक्षणम् ।
अनन्तं सत्यमीशानं विचिन्त्यासीत संयतः ॥
गुह्याद्गुह्यतमं ज्ञानं यतीनामेतदीश्वरम् ।
योऽनुतिष्ठेत सततं सोऽश्नुते योगमीश्वरम् ॥
तस्मात् ध्यानरतो नित्यमात्मविद्यापरायणः।
ज्ञानं समभ्यसेद्ब्राह्म्यं मुच्येत भवबन्धनात् ॥
यद्वा पृथक्त्वमात्मानं सर्व्वस्मादेव केवलम् ।
आनन्दमक्षरं ज्ञानं ध्यायीत च पुनः परम् ॥
यस्माद्भवन्ति भूतानि यद्गत्वा नेह जायते ।
स तस्मादीश्वरो देवः परस्ताद्योऽधितिष्ठति ॥
यदन्तरे तद्गमनं शाश्वतं शिवमव्ययम् ।
यमाहुस्तत्परो यस्तु स देवः स्यान्महेश्वरः ॥
व्रतानि यानि भिक्षूणां तथैवोपव्रतानि च ।
एकैकातिक्रमे तेषां प्रायश्चित्तं विधीयते ॥
उपेत्य च स्त्रियं कामात् प्रायश्चित्तंसमाहितः।
प्राणायामसमायुक्तं कुर्य्यात् सान्तपनं शुचिः ॥
ततश्चरेत नियमान् कृत्स्नान् संयतमानसः ।

योगी च त्रिविधो ज्ञेयो भौतिको मोक्ष एव
च ।
तृतीयोऽन्त्याश्रमी प्रोक्तो योगमूर्त्तिसमाश्रितः ॥
प्रथमा भावना पूर्व्वे मोक्षे त्वक्षरभावना ।
तृतीये चान्तिमा प्रोक्ता भावना पारमेश्वरी ॥
यतीनां यतचित्तानां न्यासिनामूर्द्ध्वरेतसाम् ।
आनन्दं ब्रह्म तत्स्थानं यस्मान्नावर्त्तते मुनिः ॥
योगिनाममृतं स्थानं व्योमाख्यं परमाक्षरम् ।
आनन्दमैश्वरं यस्मान्मुक्तो नावर्त्तते नरः ॥”
इति गारुडे ४९ अध्यायः ॥ * ॥
अपरञ्च ।
“ज्ञानसन्न्यासिनः केचिद्वेदसन्न्यासिनोऽपरे।
कर्म्मसन्न्यासिनस्त्वन्ये त्रिविधाः परिकीर्त्तिताः ॥
यः सर्व्वसङ्गनिर्म्मुक्तो निर्द्वन्द्वश्चापि निर्भयः ।
प्रोच्यते ज्ञानसन्न्यासी स्वात्मन्येव व्यवस्थितः ॥
वेदमेवाभ्यसेन्नित्यं निराशीर्निष्परिग्रहः ।
प्रोच्यते वेदसन्न्यासी मुमुक्षुर्व्विजितेन्द्रियः ॥
यस्त्वग्नीनात्ससात् कृत्वा ब्रह्मार्पणपरो द्विजः ।
ज्ञेयः स कर्म्मसन्न्यासी महायज्ञपरायणः ॥
त्रयाणामपि चैतेषां ज्ञानी त्वभ्यधिको मतः ।
न तस्य विद्यते कर्म्म न लिङ्गाद्या विपश्चितः ॥
निर्म्ममो निर्भयः शान्तो निर्द्वन्द्वः पर्णभोजनः ।
जीर्णकौपिनवासाः स्यान्नग्नो वा ध्यानतत्परः ॥
“एतत्त्वाश्रमनिष्ठानां यतीनां नियतात्मनाम् ।
भैक्षेन वर्त्तनं प्रोक्तं फलमूलैरथापि वा ॥
एककालं चरेद्भैक्षं न प्रसज्येत विस्तरे ।
भैक्षे प्रसक्तो हि यतिर्विषयेष्वपि सज्जति ॥
सप्तागारं चरेद्भैक्षमलाभे द्वे पुनश्चरेत् ।
प्रक्षाल्य पात्रे भुञ्जीयादद्भिः प्रक्षालयेत्तु तत् ॥
अथवान्यदुपादाय पात्रं भुञ्जीत नित्यशः ।
भुक्त्वा च सन्त्यजेत् पात्रं यात्रामात्रमलोलुपः ॥
विधूमे सन्नमुषले व्यङ्गारे भुक्तवज्जने ।
वृत्ते शरावसंपाते भिक्षां नित्यं यतिश्चरेत् ॥
गोदोहमात्रं तिष्ठेत कालं भिक्षुरधोमुखः ।
भिक्षेत्युक्त्वा सकृत्तूष्णीमश्नीयाद्वाग्यतः शुचिः ॥
पुनराश्रममागत्य चरेद्गिक्षरतन्द्रितः ॥
न नर्म्मयुक्तमनृतं हिनस्तीति मनीषिणः ।
तथापि न च कर्त्तव्यः प्रसङ्गो ह्येष दारुणः ॥
एकरात्रोपवासश्च प्राणायामशतं तथा ।
उक्त्वानृतं प्रकर्त्तव्यं यतिना धर्म्मलिप्सुना ॥
परमापद्गतेनापि न कार्य्यं स्तेयमन्यतः ।
स्तेयादभ्यधिकः कश्चित् नास्त्यधर्म्म इति स्मृतिः ॥
हिंसा चैषा परा तृष्णाया चात्मज्ञाननाशिका।
यदेतद्द्रविणं नाम प्राणास्ते तु बहिश्चराः ॥
स तस्य हरते प्राणान् यो यस्य हरते धनम् ॥
एवं कृत्वा स दुष्टात्मा भिन्नवृत्तौ व्रतच्युतः ।

| | | |
|---|---|---|
| ब्रह्मचारी मिताहारो ग्रामान्नान्नं समाहरेत् । अध्यात्मरतिरासीत निरपेक्षो निरामिषः । आत्मनैव सहायेन स्वर्गार्थं विचरेदिह ॥" स्वर्गार्थमित्यत्र सुखार्थमिति च पाठः । "नाभिनन्देत मरणं नाभिनन्देत जीवितम् ॥ कालमेव प्रतीक्षेत निदेशं भृतको यथा । नाध्येतव्यं न वक्तव्यं न श्रोतव्यं कदाचन ॥ एवं ज्ञानपरो योगी ब्रह्मभूयाय कल्पते । | | |

भूयो निर्व्वेदमापन्नश्चरेच्चान्द्रायणं व्रतम् ॥
विधिना शास्त्रदृष्टेन संवत्सरमिति श्रुतिः ।
भूयो निर्व्वेदमापन्नश्चरेद्भिक्षुरतन्द्रितः ॥
अकस्मादपि हिंसान्तु यदि भिक्षुः समाचरेत् ।
कुर्य्यात् कृच्छ्रातिकृच्छ्रन्तु चान्द्रायणमथापि वा
स्कन्देदिन्द्रियदौर्ब्बल्यात् स्त्रियं दृष्ट्वा यतिर्यदि
तेन धारयितव्या वै प्राणायामास्तु षोडष ॥
दिवा स्वप्ने त्रिरात्रं स्यात् प्राणायामशतं तथा
एकान्ने मधुमांसे च नवश्राद्धे तथैव च ॥
प्रत्यक्षलवणे चोक्तं प्राजापत्यं विशोधनम् ।
ध्याननिष्ठस्य सततं नश्यते सर्व्वपातकम् ॥
तस्मान्महेश्वरं ध्यात्वा तस्य ध्यानरतो भवेत् ।
यद्ब्रह्म परमं ज्योतिः प्रतिष्ठाक्षयमक्षयम् ।
योऽन्तरात्मा परं ब्रह्म स विज्ञेयो महेश्वरः ॥
एष देवो महादेवः केवल परमेश्वरः ।
तदेवाक्षयमद्वैतं तदादित्यान्तरं परम् ॥
यस्मात् महीयते देव स्वधाम्नि ज्ञानसंज्ञिते ।
आत्मयोगाह्वये तत्त्वे महादेवस्ततः स्मृतः ॥
नान्य देवं महादेवाद्व्यतिरिक्त प्रपश्यति ।
तमेवान्मानमन्वेति यः स याति परं पटम् ॥
मन्यन्ते ये स्वमात्मानं विभिन्नं परमेश्वरात् ।
न ते पश्यन्ति तं देवं वृथ तेषां परिश्रमः ॥
एकमेव परं ब्रह्म विज्ञेयं तत्त्वमव्ययम् ।
स देवरतु महादेवो नैतद्विज्ञाय वध्यते ॥
तस्माद्यत्नेन नियतं यतिः संयतमानसः ।
ज्ञानयोगरतः शान्तो महादेवपरायणः ॥
एष वः कथितो विप्रा यतीनामाश्रमः शुभः ।
पितामहेन प्रभुणा मुनीनां पूर्व्वमीरितः ॥
न पुत्रशिष्ययोगिभ्यो दद्यादिदमनुत्तमम् ।

पृथ्वीधराचार्य्यस्य शिष्यत्रयम् । सरस्वती भारती पुरी चेति । इति श्रीशङ्कराचार्य्यविरचितं सप्तम-सूत्रम् ॥ * ॥ अपि च ।
“तीर्थाश्रमवनारण्यगिरिपर्व्वतसागराः ।
सरस्वती भारती च पुरीति दश कीर्त्तिताः ॥”
तेषां लक्षणानि यथा, --
“त्रिवेणीसङ्गमे तीर्थे तत्त्वमस्यादिलक्षणे ।
स्नायात्तत्त्वार्थभावेन तीर्थनामा स उच्यते ॥ १ ॥
आश्रमग्रहणे प्रौढ आशापाशविवर्ज्जितः ।
यातायातविनिर्म्मुक्त एतदाश्रमलक्षणम् ॥ २ ॥
सुरम्ये निर्झरे देशे वने वासं करोति यः ।
आशापाशविनिर्म्मुक्तो वननामा स उच्यते ॥ ३ ॥
अरण्ये संस्थितो नित्यमानन्दनन्दने वने ।
त्यक्त्वा सर्व्वमिदं विश्वमानन्दलक्षणं किल ॥ ४ ॥
वासो गिरिवरे नित्यं गीताभ्यासे हि तत्परः ।
गम्भीराचलबुद्धिश्च गिरिनामा स उच्यते ॥ ५ ॥
वसेत् पर्व्वतमूलेषु प्रौढो यो ध्यानधारणात् ।
सारात् सारं विजानाति पर्व्वतः परि-कीर्त्तितः ॥ ६ ॥
वसेत् सागरगम्भीरो वनरत्नपरिग्रहः ।
मर्य्यादाश्च न लङ्घेत सागरः परिकीर्त्तितः ॥ ७ ॥
स्वरज्ञानवशो नित्यं स्वरवादी कवीश्वरः ।
संसारसागरे साराभिज्ञो यो हि सरस्वती ॥ ८ ॥
विद्याभारेण सम्पूर्णः सर्व्वभारं प्ररित्यजेत् ।
दुःखभारं न जानाति भारती परिकीर्त्तितः ॥ ९ ॥
ज्ञानतत्त्वेन संपूर्णः पूर्णतत्त्वपदे स्थितः ।
पदब्रह्मरतो नित्यं पुरीनामा स उच्यते ॥” १० ॥
इति बृहच्छङ्करविजये विद्यारण्यस्वामिधृतम् ॥
श्रीसदाशिव उवाच ।
“अवधूताश्रमो देवि कलौ सन्न्यास उच्यते ।
विधिना येन कर्त्तव्यं तत् सर्व्वं शृणु साम्प्रतम् ॥
ब्रह्मज्ञाने समुत्पन्ने विरते स्वर्गकर्म्मणि ।
अध्यात्मविद्यानिपुणः सन्न्यासाश्रममाचरेत् ॥
विहाय वृद्धौ पितरौ शिशुंभार्य्यां पतिव्रताम् ।
त्यक्त्रासमर्थान् बन्धूंश्च प्रव्रजन्नारकी भवेत् ॥
सम्पाद्य गृहकर्म्माणि परितोष्यागमानपि ।
निर्म्ममो निलयाद्गच्छेन्निष्कामो विजितेन्द्रियः ॥
आहूय स्वजनान् बन्धून ग्रामस्थान् प्रति-वासिनः ।
प्रीत्यानुमतिमन्विच्छेद्गृहाज्जिगमिषुर्न्नरः ॥

अत्र ये पितरः पूज्या वक्ष्यामि शृणु तानपि ।
पिता पितामहश्चैव प्रपितामह एव च ॥
माता पितामही देवि तथैव प्रपितामही ।
मातामहादयोऽप्येवं मातामह्यादयोऽपि च ॥
प्राच्यामृषीन् यजेद्देवान् दक्षिणस्यां पितॄन् यजेत् ।
मातामहान् प्रतीच्यान्तु पूजयेन्न्यासकर्म्मणि ॥
पूर्व्वादिक्रमतो दद्यादासनानां द्वयं द्वयम् ।
देवादीन् क्रमतस्तत्रावाह्य पूजां समाचरेत् ॥
समच्चर्य विधिवत्तेभ्यः पिण्डान् दद्यात् पृथक् पृथक् ।
पिण्डप्रदानविधिना दत्त्वा पिण्डं यथाक्रमम् ॥
कृताञ्जलीपुटो भूत्वा प्रार्थयेत् पितृदेवताः ।
तृप्यध्वं पितरो देवा देवर्षिमातृकागणाः ॥
गुणातीतपदे यूयमनृणीकुरुताचिरात् ॥
आनृण्यमर्थयित्वा तु प्रणण्य च पुनः पुनः ।
ऋणत्रयविनिर्म्मुक्तमात्मश्राद्धं प्रकल्पयेत् ॥
पिता ह्यात्मैव सर्व्वेषां तत्पिता प्रपितामहः ।
आत्मन्यात्मार्पणार्थाय कुर्य्यादात्मक्रियां सुधीः ॥
उत्तराभिमुखो भूत्वा पूर्व्ववत् कल्पितासने ।
आवाह्यात्मपितृन् देवि दद्यात् पिण्डं समर्च्चयन् ॥
प्रागग्रान् दक्षिणाग्रांश्च पश्चिमाग्रान् यथा-क्रमात् ।
पिण्डार्थमास्तरेद्दर्भानुदगग्रान् स्वकर्म्मणि ॥
समाप्य श्राद्धकर्म्माणि गुरुदर्शितवर्त्मना ।

ज्ञानं स्वयम्भुवा प्रोक्तं यतिधर्म्माश्रमं
शिवम् ॥
इति यतिनियमानामेतदुक्तं विधानं
पशुपतिपरितोषे यद्भवेदेकहेतुः ।
न भवति पुनरेषामुद्भवो वा विनाशः
प्रणिहितमनसा ये नित्यमेवाचरन्ति ॥”
इति कौर्मे उपविभागे यतिधर्म्मो नाम २८
अध्यायः ॥ * ॥ युगभेदे सन्न्यासिनां
नामानि
उपाधयश्च यथा । आदौ वेदान्ताचार्य्यो
ब्रह्मा ।
द्वितीयाचार्य्यो विष्णुः । तृतीयाचार्य्यो रुद्रः
।
चतुर्थाचार्य्यो वशिष्ठः । पञ्चमाचार्य्यः
शक्त्रिः ।
षष्ठाचार्य्यः पराशरः । सप्तमाचार्य्यो व्यासः
।
अष्टमाचार्य्यः शुकः । नवमाचार्य्यो गौडः ।
दशमाचार्य्यो गोविन्दः । एकादशः
श्रीशङ्करा-
चार्य्यः । सत्ययुगमध्ये आचार्य्यत्रयं
ब्रह्मविष्णु-
रुदाः । त्रेतायुगे आचार्य्यत्रयं वशिष्टशक्त्रि-
परशराः । द्वापरे आचार्य्यद्वयं व्यासशुकौ ।
कलियुगे आचार्य्यत्रय गौडगोविन्दशङ्करा-
चार्य्याः । शङ्कराचार्य्यस्य चत्वारः शिष्याः
स्वरूपाचार्य्यः पद्माचार्य्यः त्रोटकाचार्य्यः
पृथ्वी-
धराचार्य्यः इति ॥ * ॥ अथ दश नामानि ।
स्वरूपाचार्य्यस्य शिष्यः तीर्थ आश्रमश्च ।
पद्मा-
चार्य्यस्य शिष्यद्वयं वनः अरण्यश्च ।
त्रोटका-
चार्य्यस्य शिष्यत्रयं गिरिपर्व्वतसागरा इति
।

तेषामनुज्ञामादाय प्रणम्य परदेवताम् ।
ग्रामं प्रदक्षिणीकृत्य निरपेक्षो गृहादियात् ॥
मुक्तः संसारपाशैर्य्यः परमानन्दवृंहितः ।
कुलावधूतं ब्रह्मज्ञं गत्वा संप्रार्थयेदिदम् ॥
गृहाश्रमे परं ब्रह्मन् ममैतद्विगतं वयः ।
प्रसादं कुरु मेनाथ सन्न्यासग्रहणं प्रति ॥
निवृत्तगृहकर्म्माणं विचार्य्य विधिवद्गुरुः ।
शान्तं विवेकिनं वीक्ष्य द्वितीयाश्रममादिशेत् ॥
ततः शिष्यः कृतस्नानो यतात्मा विहिताह्निकः ।
ऋणत्रयविमुक्त्यर्थं देवर्षी श्चार्च्चयेत् पितॄन् ॥
देवा ब्रह्मा च विष्णुश्च रुद्रश्च स्वगणैः सह ।
ऋषयः सनकाद्याश्चात्राद्या देवर्षयस्तथा ॥

मुमुक्षुश्चित्तशुद्ध्यर्थमिमं मन्त्रं शतं जपेत्
॥
ह्रौँ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्
।
उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मा
मृतात्
उपासनानुसारेण विद्यामण्डलपूर्व्वकम् ।
संस्थाप्य कलसं तत्र मुरुः पूजां
समारभेत् ॥
ततस्तु परमब्रह्म ध्यात्वा शाम्भववर्त्मना
।
विधाय पूजां ब्रह्मज्ञो ब्रह्मस्थापनमाचरेत्
॥
प्रागुक्तसंस्कृते वह्नौ सङ्कल्पोक्ताहुतिं गुरुः
।
दत्त्वा शिष्यं समाहूय साकल्यं हावयेत्तु
तम् ।
आदौ व्याहृतिभिर्हुत्वा प्राणहोमं
प्रकल्पयेत् ।
प्राणोऽपानः समानश्चोदानव्यानौ च
वायवः ॥
तत्र होमं ततः कुर्य्याद्देहामेध्यत्वमुक्तये ।
पृथिवी सलिलं वह्निर्वायुराकाशमेव च ॥
गन्धो रसश्च रूपश्च सार्शः शब्दो
यथाक्रमात् ।
ततो वाक्पाणिपादश्च पायूपस्थौ ततः
परम् ॥
श्रोत्रं त्वक् नयनं जिह्वाघ्राणबुद्धीन्द्रियाणि
च
एतानि मे पदान्ते च शुध्यन्ति
पदमुच्चरेत् ॥
ह्रीं ज्योतिरहं विरजा विपाप्मा भूयासं
द्विठ
इत्यपि ।
चतुर्विंशतितत्त्वानि कर्म्माणि वैदिकानि च
।
हुत्वाग्नौ निष्क्रियो देहं मृतवच्चिन्तयेत्ततः
॥
विभाव्य मृतवत् कायं रहितं सर्व्वकर्म्मणा
।
स्मरन् तत् परमं ब्रह्म यज्ञसूत्रं समुद्धरेत्
॥

|  |  |  |
| --- | --- | --- |
|  |  | ऐं क्लीं हुं इति मन्त्रेण स्कन्धादुच्चार्य्यं तत्त्ववित्<br>यज्ञसूत्रं करे धृत्वा पठित्वा व्याहृतित्रयम्<br>।<br>वह्निजायां समुच्चार्य्य घृताक्तमनले क्षिपेत् ॥<br>हुत्वैवमुपवीतञ्च कामबीजं समुच्चरन् । |

छित्त्वा शिखां करे कृत्वा घृतमध्ये नियोजयेत् ॥
ब्रह्मपुत्रि शिखे त्वं हि बाणीरूपा सनातनी ।
दीयते पावके स्थानं गच्छ देवि नमोऽस्तु ते ॥
कामं मायां कूर्च्चमन्त्रं वह्निजायामुदीरयेत् ।
शिखामाश्रित्य पितरो देवो देवर्षयस्तथा ।
सर्व्वाण्याश्रमकर्म्माणि निवसन्ति शिखोपरि ॥
ततः सन्तर्प्य ताः सर्व्वाः देवर्षिपितृदेवताः ।
शिखासूत्रपरित्यागात्देही ब्रह्ममयो भवत् ॥
यज्ञसूत्रशिखात्यागात्सन्न्यासः स्याद्द्विजन्मनाम्
शूद्राणामितरेषाञ्च शिखां हुत्वैव संस्क्रिया ॥
ततो मुक्तशिखासूत्रः प्रणमेद्दण्डवद्गुरुम् ।
गुरुरुत्थाप्य तं शिष्यं दक्षकर्णे वदेदिमम् ॥
तत्त्वमसि महाप्राज्ञ हंसः सोऽहं विभावय ।
निर्म्ममो निरहङ्कारः स्वभावेन सुखं चर ॥
ततो घटञ्च वह्निञ्च विसृज्य ब्रह्मतत्त्ववित् ।
आत्मस्वरूपं तं मत्वा प्रणमेच्छिरसा गुरुम् ॥
नमस्तुभ्यं नमो मह्यं तुभ्यं मह्यं नमो नमः ।
त्वमेव त्वदहमेव विश्वरूपं नमोऽस्तु ते ॥
ब्रह्ममन्त्रोपासकानां तत्त्वज्ञानां जितात्मनाम् ।
स्वमन्त्रेण शिखाच्छेदात् सन्न्यासग्रहणं भवेत् ॥
ब्रह्मज्ञानविशुद्धानां किं यज्ञैः श्राद्धपूजनैः ।
स्वेच्छाचारपराणान्तु प्रत्यवायो न विद्यते ॥
ततो निर्द्वन्द्वरूपोऽसौ निष्कामः स्थिरमानसः ।
निर्म्ममो विहरेत् शिष्यः साक्षाद्ब्रह्ममयो भुवि ॥
श्रेयस्तदेव जानन्तस्तत्रैव दृढनिश्चयाः ।
अतः कर्म्मविधानानि प्रोक्तानि चित्तशुद्धये ॥
नामरूपं बहुविधं तदर्थं कल्पितं मया ।
ब्रह्मज्ञानं विना देवि कर्म्मसंन्यसनं विना ॥
कुर्व्वन् कल्पशतं कर्म्म न भवेन्मुक्तिभाजनः ।
कुलावधूतस्तत्त्वज्ञो जीवन्मुक्तो नराकृतिः ॥
साक्षान्नारायणं मत्वा गृहस्थस्तं प्रपूजयेत् ।
यतेर्द्दर्शनमात्रेण विमुक्तः सर्व्वपातकात् ।
तीर्थव्रततपोदानसर्व्वयज्ञफलं लभेत् ॥"
इत्यवधूताश्रमः । इति महानिर्व्वाणतन्त्रे अष्टमोल्लासः ॥

**सप**, सम्बन्धे । (भ्वा०-पर०-सक०-सेट् ।) असीसपत् । इति दुर्गादासः ॥ कविकल्पद्रुमे मूर्द्धन्यादिरयम् ॥

**सपत्राकरणं**, क्ली, (सपत्र + कृ + ल्युट् । "सपत्रनिष्पत्रादतिव्यथने ।" ५ । ४ । ६१ । इति डाच् ।)
अत्यन्तपीडनम् । इति हलायुधः ॥

**सपत्राकृतः**, पुं, (सपत्र + कृ + क्तः । डाच् ।)
क्षतमृगादिः । अत्यन्तपीडिते, त्रि । इति केचित् ॥

**सपत्राकृतिः**, स्त्री, (सपत्र + कृ + क्तिन् । डाच् ।)
अत्यन्तपीडनम् । तत्पर्य्यायः । निष्पत्राकृतिः २ । इति हेमचन्द्रः ॥

**सपत्नः**, पुं, (सह पतति एकार्थे इति । पत + नः । सहस्य सः ।) शत्रुः । इत्यमरः ॥ (यथा, महाभारते । १ । १४५ । ५ ।
"संरक्ष तात मन्त्रञ्च सपत्नांश्च ममोद्धर ।
निपुणेनाभ्युपायेन यद्ब्रवीमि तथा कुरु ॥")

**सपत्नारिः**, पुं, (सपत्नस्य शत्रोररिरिव दुर्ग्रप्रभवात्वात् ।) वंशविशेषः । वेयुड वाँश इति भाषा । यथा, --
"ब्रह्मयष्टिः सपत्नारिर्बहुसन्ततिराशुपः ।"
इति शब्दचन्द्रिका ॥

**सपत्नी**, स्त्री, (समानः एकः पतिर्यस्याः । "नित्यं

**सपदि**, व्य, (संपद्यते इति । पद गतौ + इन् । पृषोदरादित्वात् मलोपः ।) द्रुतम् । तत्क्षणः । इत्यमरः ॥ (यथा, कुमारे । ३ । ७६ ।
"सपदि मुकुलिताक्षीं रुद्रसंरम्भभीत्या
दुहितरमनुकम्पामद्रिरादायदोर्भ्याम् ।
सुरगज इव बिभ्रत् पद्मिनीं दन्तलग्नां
प्रतिपथगतिरासीत् वेगदीर्घीकृताङ्गः ॥")

**सपर्य्या**, स्त्री, (सपर पूजायाम् + "कण्ड्वादिभ्यो यक् ।" ३ । १ । २७ । इति यक् । "अ प्रत्ययात् ।"
३ । ३ । १०२ । इति अः । ततष्टाप् ।) पूजा ।
इत्यमरः ॥ (यथा, माघे । १ । १४ ।
"तमर्घ्यमर्घ्यादिकयादिपूरुषः
सपर्य्यया साधु स पर्य्यपूपुजत् ॥")

**सपादः**, त्रि, पादेन सह वर्त्तमानः । स तु चरणयुक्तश्चतुर्थभागसहितश्च । यथा, --
"सपादपलमानेन वेला त्रु ट्यति निश्चितम् ।"
इति सत्कृत्यमुक्तावली ॥

**सपादपीठं**, त्रि, (सपादं पादसहितं पीठं यत्र ।)
पादपीठयुक्तसिंहासनादि । यथा, --
"आदिक्षदादीप्तकृशानुकल्पं
सिंहासनं तस्य सपादपीठम् ।
सन्तप्तचामीकरवल्गुवज्रं
विभागविन्यस्तमहार्घरत्नम् ॥"
इति भट्टौ ३ सर्गः ॥

**सपिण्डः**, पुं, (समानः पिण्डो मूलपुरुषो निवापो वा यस्य । समानस्य सः ।) सप्तपुरुषान्तर्गतज्ञातिः । तत्पर्य्यायः । सनाभिः २ । इत्यमरः ॥ स च अशौचविवाहदायभेदात् त्रिविधः ।
तत्राशौचसपिण्डस्य लक्षणं यथा । सप्तपुरुषान्तर्गतत्वे सति गोत्रैक्ये सति दातृत्वभोक्तृत्वान्यतरसम्बन्धेन पिण्डलेपान्यतरवत्त्वम् । दत्त-
कन्यानान्तु भर्त्तृसापिण्ड्येन सापिण्ड्यम् । अद-
त्तानां पित्रवधित्रिपुरुषसापिण्डम् । विवाह-

मुक्तो विधिनिषेधाभ्यां निर्योगक्षेम
आत्मवित् ।
सुखदुःखसमो धीरो जितात्मा विगतस्पृहः
॥
स्थिरात्मा प्राप्तदुःखोऽपि सुखे प्राप्तेऽपि
निष्पृहः
सदानन्दः शुचिः शान्तो निरपेक्षो
निराकुलः ॥
नोद्वेजकः स्याज्जीवानां सदा प्राणिहिते
रतः ।
विगतामर्षभीर्दान्तो निःसङ्कल्पो निरुद्यमः
॥
शोकद्वेषविमुक्तः स्याच्छत्रौ मित्रे समो
भवेत् ।
शीतवातातपसहः समो मानापमानयोः ॥
समः शुभाशुभे तुष्टो यदृच्छालाभवस्तुना ।
निस्त्रैगुण्यो निर्व्विकल्पो निर्लोभः
स्यात्त्वसञ्चयी
यथासत्यनुपाश्रित्य मृषा विश्वं प्रतिष्ठते ।
आत्माश्रितस्तथा देहो जानन्नेवं सुखी
भवेत् ॥
इन्द्रियाण्येव कुर्व्वन्ति स्वं स्वं कर्म्म पृथक्
पृथक्
आत्मा साक्षी विनिर्लिप्तो ज्ञात्वैवं
मोक्षभाग्-
भवेत् ॥
धातुप्रतिग्रहं निन्दामनृतं क्रीडनं स्त्रिया ।
रेतस्त्यागमसूयाञ्च सन्न्यासी
परिवर्ज्जयेत् ॥
सर्व्वत्र समदृष्टिः स्यात् कीटे दैवे तथा नरे
।
सर्व्वं ब्रह्मेति जानीयात् परिव्राट्
सर्व्वकर्म्मसु ।
विप्रान्नं श्वपचान्नं वा यस्मात्तस्मात्
समागतम्
देशं कालं तथा चान्नमश्नीयादविचारयन् ।
अध्यात्मशास्त्राध्ययनैः सदा
तत्त्वविचारणैः ॥
अवधूतो नयेत् कालं स्वेच्छाचारपरायणः
।
सन्न्यासिनां मृतं कायं दाहयेन्न कदाचन
॥

सपन्त्यादिषु ।” ४ । १ । ३५ । इति ङीप् ।
पत्युर्नकारादेशः समानस्य सभावोऽपि निपा-
त्यते ।) समानपतिका । सतीन इति भाषा ॥
(यथा, आर्य्यासप्तशत्याम् । ४६३ ।
“या नीयते सपत्न्या प्रविश्य या वर्ज्जिता
भुजङ्गेन ।
यमुनाया इव तस्याः सखि मलिनं जीवनं
मन्ये ॥
यथा च । दौहित्राभावे सपत्नीपुत्त्रः । तस्य
पुत्त्रत्वस्मरणात् । यथा मनुः ।
“सर्व्वासामेकपत्नीनामेका चेत् पुत्त्रिणी
भवेत् ।
सर्व्वास्तास्तेन पुत्त्रेण प्राह पुत्त्रवतीर्म्मनुः
॥”
एकपत्नीनामिति एकः पतिर्य्यासामिति ।
अत्र सपत्नीपुत्त्रस्य पुत्त्रत्वातिदेशात्
तत्सत्त्वे-
ऽपि स्त्रीणां सपिण्डनं मैथिलैरुक्तम् । तन्न ।
“पुत्त्रेणैव तु कर्त्तव्यं सपिण्डीकरणं स्त्रियाः ।
पुरुषस्य पुनस्त्वन्ये भ्रातृपुत्त्रादयोऽपि ये ॥”
इति लघुहारीतवचने एवकारेणातिदिष्टपुत्त्र-
निषेधात् । इति शुद्धितत्त्वम् ॥

सपिण्डास्तु । पितृपितृबन्ध्वपेक्षया
सप्तमपुरुषा-
वधयः मातामहमातृबन्ध्वपेक्षया पञ्चमपु-
रुषावधयश्च । यथा, --
“पञ्चमात् सप्तमादूर्द्ध्वं मातृतः पितृतः क्रमात्
।
सपिण्डता निवर्त्तेत सर्व्ववर्णेष्वयं विधिः ॥”
इत्युद्वाहतत्त्वधृतनारदवचनम् ॥
दायसपिण्डास्तु । त्रिपुरुषावधयः । ते च
पितृ-
पितामहप्रपितामहाः तेषां पुत्त्रपौत्त्रप्रपौत्त्र-
दौहित्राः । मातामहप्रमातामहवृद्धप्रमाता-
महाः । तत्पुत्त्रपौत्त्रप्रपौत्त्राश्च । इति दाय-
भागः ॥ * ॥ अथ सपिण्डादिविचारः ।
मत्स्य-
पुराणम् ।
“लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः
पिण्डदः सप्तमस्तेषां सापिण्ड्ये साप्तपौरुषम्
॥”
नन्वेवं भ्रात्रादिभिः सह पिण्डतल्लेपमोक्तृत्वा-
सम्भवात् कथं सपिण्डत्वमिति चेदुच्यते ।
तेषा-
मपि पिण्डलेपयोः सम्बन्धोऽस्ति । तथा च
बौधायनः । प्रपितामहः यितामहः पितः स्वयं
सोदर्य्यभ्रातरः । सवर्णायाः पुत्त्रः पौत्त्रः
प्रपौत्त्रो

| संपूज्य गन्धपुष्पाद्यैर्निखनेद्वाप्सु मज्जयेत् ।<br>अप्राप्तयोगमर्त्यानां सदा कामाभिलाषिणाम् ॥<br>प्रभावाज्जायते देवि प्रवृत्तिः कर्म्मसंकुले ।<br>अत्रापि ते सानुरक्ता ध्यानार्च्चाजपसाधने ॥ | | |
|---|---|---|

वा एतानविभक्तदायादान्
सपिण्डानाचक्षते
विभक्तदायादान् सकुल्यानाचक्षते
सत्स्वङ्गजेषु
तद्गामी ह्यर्थो भवति इति । अस्यार्थः ।
पित्रा-
दिपिण्डबयेषु सपिण्डनेन भोक्तृत्वात् ।
पुत्रा-
दिभिस्त्रिभिस्तत्पिण्डदानात्। यश्च
जीवन् यस्य
पिण्डदाता स मृतः सन् सपिण्डनेन
तत्पिण्ड-
भोक्ता एवं सति मध्यस्थितः पुरुषः
पूर्व्वेषां
जीवन् पिण्डदाता मृतः सन्
तत्पिण्डभोक्ता-
परेषां जीवतांपिण्डसम्प्रदानमूतआसीत्
मृतैश्च
तैः सह दौहित्रादिदेयपिण्डभोक्ता । अतो
येषामयं पिण्डदाता ये चास्य
पिण्डभोक्तारस्ते-
ऽविभक्तं पिण्डरूपं दायं अश्नन्तीति
अविभक्त-
दायादाः सपिण्डा इति । इदञ्च
सपिण्डत्वं
सकुल्यत्वञ्च दायग्रहणार्थम् ।
अशौचाद्यर्थन्तु
पिण्डलेपभुजामपि ।
लेपभाजश्चतुर्थाद्याः पि-
त्राद्याः पिण्डभागिनः ॥ इति
प्रागुक्तमत्स्यपुरा-
णात्
वक्ष्यमाणकूर्मपुराणशङ्खलिखितवचनाच्च
पिण्डे यथा परस्परं भोक्तृत्वं तथा लेपे
तुल्य-
न्यायात् । हारलतायां कूर्म्मपुराणम् ।
"सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते ।
समानोदकभावस्तु जन्मनाम्नोरवेदने ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
लेपभाजश्चतुर्थाद्याः सापिण्ड्यं
साप्तपौरुषम् ॥"

अत्र कन्यानामनूढानाम् । अप्रत्तानां त्रिपौ-
रुषमिति वशिष्ठवचनात् । तेन आत्मपञ्चमे
वृद्धप्रपितामहे सापिण्ड्यं निवर्त्तत इति प्रति-
पादितम् । अतएव कन्यायाः प्रपितामहभ्रात्रा
तत्सन्ततिभिश्च सह सापिण्ड्याभावात्
कन्या-
मरणजननयोस्तेषां सपिण्डाशौचं नास्ति
किन्तु
समानोदकनिमित्तमेवाशौचमिति । एवं तेषा-
मपि जननमरणयोः कन्यानामिति शूलपाणि-
महामहोपाध्यायाः ॥ यत्तु कूर्म्मपुराणम् ।
"अप्रत्तानां तथा स्त्रीणां सापिण्ड्यं साप्त-
पौरुषम् ।
प्रत्तानां भर्त्तृसापिण्ड्यं प्राह देवः पितामहः ॥"
इति रत्नाकरधृतं तद्विवाहे पितृपक्षविषयम् ।
यथा, विष्णुपुराणम् ।
"सप्तमीं पितृपक्षाच्च मातृपक्षाच्च पञ्चमीम् ।
उद्वहेत द्विजो भार्य्यां न्यायेन विधिना नृप ॥"
सप्तमीं पञ्चमीं हित्वा इति शेषः ।
भर्त्तृसापिण्ड्य-
मित्यत्र साप्तपौरुषमित्यनुषज्यते । तेन भर्त्तृ-
समानसापिण्ड्यमित्यर्थः । शङ्खलिखितौ ।
"सपिण्डता तु सर्व्वेषां गोत्रतः साप्तपौरुषी ।
पिण्डञ्चोदकदानञ्च शौचाशौचं तदानुगम् ॥"
गोत्रतः गौत्रैक्ये तेन मातामहकुले कदाचित्
षट्पुरुषपर्य्यन्तं पिण्डसम्बन्धेऽपि न
सपिण्डता
तान् सप्तपुरुषान् आ समन्तात्कारेण पिण्डा-
दिकमनुगच्छतीति तदानुगम् । एतेन सपि-
ण्डता एकशरीरावयवान्वयेन भवति । तथा,
हि । पितुः शरीरावयवान्वयेन पित्रा
सह एव पितामहादिभिरपि पितृद्वारेण
तच्छरीरावयवान्वयात् । एवं मातृशरीरा-
वयवान्वयेन मात्रादिभिरपि । एवं पत्या सह
पत्न्या एकशरीरारम्भकतया सापिण्ड्यम् ।
तथा च गर्भोपनिषदि । एतत् षाट्कोषिकं
शरीरं त्रीणि पितृतः त्रीणि मातृतः अस्थि-
स्नायुमज्जानः पितृतः त्वङ्मांसरुधिराणि
मातृतश्चेति । तत्र तत्रावयवान्वयप्रतिपादनात्
निर्व्वाप्य पिण्डान्वये तु सापिण्ड्ये भ्रातृपितृ-

दीनां विशेषवचनाभावात् सपिण्डत्वेन दशा-
हाद्यशौचप्रसङ्गात् मातामहादौ सापिण्ड्यस्य
लोकविरुद्धत्वाच्च । भवतु वा तथा शरीरद्वारा
सापिण्ड्यं तथापि वचनात् यथा
सप्तान्तर्गतत्वं
तन्त्रं तथा गोत्रतः साप्तपौरुषीति वचनात्
गोत्रैक्यमपि प्रागुक्तवचनात् । कन्यास्त्रियौ-
रुषं सापिण्ड्यं ऊढायाश्च भर्त्तृसापिण्ड्येन
सापिण्ड्यमिति चेत् तदेतन्मतेऽपि व्यवस्थायां
न
क्षतिरिति । अतएव सुमन्तुवचनाभिहितं यद्द-
शमपुरुषपर्य्यन्तमशौचंतत्सप्तमपुरुषाभ्यन्तरा-
शौचान्न्यूनं त्रिरात्रम् । यथा ब्राह्मणानामेक-
पिण्डस्वधानामादशमात् धर्म्मविच्छित्तिर्भवति
आसप्तमात् ऋक्थविच्छित्तिर्भवति
आतृतीयात्
स्वधाविच्छित्तिर्भवति अन्यथा
पिण्डाशौचक्रि-
याद्युच्छेदात् ब्रह्मतुल्यो भवतीति । अस्यार्थः
।
एका समाना पिण्डस्वधा येषां ते तथा । यथा
एकोद्दिष्टस्य पिण्डे तु अनुशब्दो न युज्यते
इत्य-
त्रानुशब्देनानुशब्दयुक्तो मन्त्रो लक्ष्यते
अनुयुक्त-
मन्त्रस्तु ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते
स्वधा इति तथापिण्डस्वधाशब्देन
पिण्डसम्बन्धि-
स्वधाशब्दयुक्तमन्त्रकरणकदेयजलं लक्षितम् ।
तथा च । ऊर्ज्जं वहन्तीरमृतं घृतं पयः
कीलालं
परिश्रुतं स्वधास्तर्पयत मे पितॄन् इत्यनेन
पिण्डान् सिञ्चेदित्युक्तम् । ततश्च
एकपिण्डस्वधानां
समानोदकानामित्यर्थः । अतएत मनुः ।
"जन्मन्येकोदकानान्तु त्रिरात्रात् शुद्धिरिष्यते
।"
विष्णुपुराणम् ।
"मातृपक्षस्य पिण्डेन सम्बद्धा ये जलेन वा ।"
मातृपक्षस्य मातामहपक्षस्य पिण्डेन सम्बद्धाः
सपिण्डाः जलेन सम्बद्धाः समानोदका इति

लेपभागिभ्यस्तूद्‌र्ध्वं
यावज्जन्मनाम्नोरवेदनं याव-
दमुकनाम्नोऽस्मात् पूर्व्वपुरुषादयं जातः
इति
विशेषः । अयमस्मत्कुले जात इति
सामा-
न्यतो वा स्मर्य्यते तावत्
समानोदकत्वमिति
हारलता ॥ अत्र परवचनेनैव
सापिण्ड्यसिद्धौ
पूर्व्ववचनपूर्व्वार्द्धं जीवत्पितृकत्वादिना
अधिक-
पुरुषेषु पिण्डलेपसम्बन्धेऽपि
सपिण्डतानिवृत्ति-
ज्ञापनाय । सर्व्वदेशीयाचारोऽपि तथा ।
यथा
श्राद्धविवेकेऽपि पार्व्वणश्राद्धानन्तरं
तित्यश्राद्धे
विकल्प उक्तः । मार्कण्डेयपुराणम् ।
"नित्यक्रियां पितॄणान्तु केचिदिच्छन्ति
सत्तमाः
न पितॄणां तथैवान्ये शेषं पूर्व्ववदाचरेत्
॥"
अत्र पूर्व्वार्द्धात् पितॄणां प्राप्तौ न
पितॄनामित्यत्र
पुनः पितॄणां ग्रहणं
सनकादीनामन्नोत्सर्गा-
भ्यनुज्ञानाथ इति फलान्तरमुक्तम् ।
हरिशर्म्म-
णापि अन्यार्थं पुनर्व्वचनमिति लिखितम्
। अथ
यः खलु पिण्डान् दत्त्वैव मृतः
परतश्चाप्राप्त-
पितृभावः स कथं सपिण्डः
एकपिण्डदातृत्व-
भोक्तृत्वलक्षणसम्बन्धाभावादितिचेत्
तद्योग्य-
तयेति ब्रूमः । योग्यताप्रयोजकञ्च
सामान्य-
शास्त्रविषयत्वम् । ततश्च
अत्यतिवृद्धप्रपिता-
महावधिकाधस्तनानांषण्णां पुंसां
प्रत्येकापेक्षया
व्यादिसापिण्ड्यं न स्यात् । अतिप्रसङ्गस्तु
सप्तान्य-
तमत्वेन प्रयोगोपाधिना निरसनीयः । यद्येवं
मातामहादीनामपि मरणे सपिण्डत्वेन दशा-
हाशौचं प्राप्नोति स्यादेतत् यदि मातामहानां
मरणे त्रिरात्रं स्यादशौचकं इत्यादिविशेष-
वचनं न स्यात् । यत्र तु विशेषवचनं नास्ति
तत्र दशाहमिति मिताक्षरारत्नाकरादिमतम-
पास्तम् । लेपभाज इत्यादिवाचनिकेऽर्थे
सापिण्डे
एकशरीरावयवान्वयरूपस्वकपोलरचितार्थान-
वकाशात् । निर्व्वाप्यपिण्डसम्बन्धेनभ्रात्रादीनां
सापिण्ड्यस्य मत्स्यपुराणबौधायनाभ्यां
पूर्वमुक्त-
त्वात् । कामधेनुहारलताकल्पतरुपारिजात-
कारादिभिस्तथैवव्याख्यातत्वाच्च ।
रेतःशोणित-
परिणामरूपत्वादपत्यशरीरस्यभवतु वा तथा
।
पत्या सह पत्न्या एकशरीरारम्भकतायाः
प्रत्य-
क्षवाधितत्वात् कथं सापिण्ड्यं प्रमातामहा-
श्राद्धविवेकेऽपि व्याख्यातम् ।
"असम्बन्धा भवेद्यातु पिण्डेनैवोदकेन वा ॥"
इति विवाहेऽप्युक्तम् । अत्र पुत्त्रिकायाः पार्व्वणे
पिण्डोदकयोः सम्बन्धात्कन्यामात्रेऽपि
तद्योग्य-
तायाः सत्त्वात् कन्या पिण्डोदकसम्बन्धोच्यते
।
एतदनुसारादपि तस्याः सपिण्डता बोद्धव्या
त-
स्मादेकपिण्डस्वधानामित्यनेन
समानोदकभावः
समाख्यातः । न तु दशमपुरुषपर्य्यन्तं
पित्रादि-
जीवनादिना पिण्डसम्बन्धेऽपि सापिण्ड्यं
विहितं
प्रागुक्तयुक्तेः स्वधेत्यस्य तदनुपयुक्तत्वेन
वैयर्थ्या-
पत्तेः । अपुत्त्रधनाधिकारस्तु
सन्निहिततराभावे
सप्तमपुरुषपर्य्यन्तम् । मृतपितृकस्य स्वधोप-
लक्षितश्राद्धाधिकारः पुरुषत्रयपर्य्यन्तमिति ।
अत्र स्वधाशब्दो मन्त्रपरः पितृभक्षपरोऽपि ।
तथा च गुणविष्णुधृता श्रुतिः । स्वधा वै पितृ-
णामन्नमिति । दशमपुरुषानन्तरं समानोदक-
त्वेऽपि न त्रिरात्रं किन्तु पक्षिण्यादि । तथा
हि । उदकक्रियामधिकृत्य पारस्करः । सर्व्वे
ज्ञातयो भावयन्ति । आसप्तमाद्दशमाद्वा
समानग्रामवासेन यावत् सम्बन्धमनुस्मरेयुर्व्वा
इति । भावयन्ति निष्पादयन्ति । अत्र यावत्
सम्बन्धमनुस्मरेयुरेककुलजाता वयमिति
स्मरणं

| | | |
|---|---|---|
| सप्तानामेकगोत्राणां स्वावधिपरतनानां सप्ता-<br>नाञ्च सापिण्ड्यं<br>पिण्डलेपयोर्दातृत्वभोक्तृत्वसम्ब-<br>न्धादिति । स्त्रीणान्तु भर्त्तृसापिण्ड्येन सापि-<br>ण्ड्यम् । प्रत्तानां भर्त्तृसापिण्ड्यमिति वचनात् ।<br>नन्वेवं कन्यायाः कथंसपिण्डतेति चेत् आदि-<br>पुराणवचनात् त्रैपुरुषं सापिण्डम् । यथा, --<br>“सपिण्डता तु कन्यानां सवर्णानां त्रिपौरुषी ।” | | |

भवतीत्यननैव सर्व्वेषामुदकदाने प्राप्ते यदासप्त-
माद्दशमाद्वेत्युक्तं तत्
सन्निकर्षतारतम्येना-
शौचभेदेऽप्युदककर्म्मसमानार्थमिति । अशौच-
मेदस्तु सप्तमपुरुषपर्य्यन्तं सपिण्डत्वाद्दशाहः ।
ततश्च दशमपुरुषपर्य्यन्तं त्र्यहः । तथा च विष्णु-
बृहस्पती ।
"दशाहेन सपिण्डास्तु शुध्यन्ति मृतसूतके ।
त्रिरात्रेण सकुल्यास्तु स्नात्वा शुध्यन्ति गोत्रजाः ॥"
ततश्चतुर्द्दशपुरुषपर्य्यन्तं पक्षिणी । ततश्च जन्म-
नामस्मृतिपर्य्यन्तमेकाहः । तथा च मिताक्षरा-
विवादचिन्तामण्योर्बृहन्मनुः ।
"सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते ।
समानोदकभावस्तु निवर्त्तेताचतुर्द्दशात् ॥
जन्मनामस्मृतेरेके तत्परं गोत्रमुच्यते ॥"
अत्र समानोदकत्वे द्विविधे । पूर्व्वत्र गोतमः
पक्षिणीमसपिण्डे इति । परत्र हारीतः ।
"मातामहे त्रिरात्रं स्यादेकाहस्त्वसपिण्डके ॥"
अत्रैव गोत्रजानामहः स्मृतमिति जावाल-
वचनम् । ततः परं सर्व्वथा समानोदकतानि-
वृत्तेः स्नानमात्रमिति । स्नात्वा शुध्यन्ति गोत्रजा
इति बृहस्पत्युक्तत्वादिति । इति शुद्धितत्त्वम् ॥

**सपिण्डीकरणं**, क्ली, (सपिण्ड + कृ + ल्युट् । अभूत-
तद्भावे च्विः ।)
पूर्णसंवत्सरक्रियमाणपार्व्वणैको-
अपरञ्च । अथ सपिण्डीकरणम् । तत्र गोभिलः ।
पूर्णे संवत्सरे षण्मासे त्रिपक्षे यदहर्व्वा वृद्धि-
रापद्येत तदहश्चत्वार्य्युदकपात्राणि सतिल-
गन्धपुष्पोदकानि पूरयित्वा त्रीणि पितॄणामेकं
प्रेतस्य प्रेतपात्रं पितृपात्रेष्वासिञ्चति । ये
समानाः समनसः पितरो यमराज्ये तेषां लोकः
स्वधा नमो यज्ञो देवेषु कल्पताम् ।
"ये समानाः समनसो जीवा जीवेषु मामकाः ।
तेषां श्रीर्मयि कल्पतामस्मिन् लोके शतं समाः ॥"
इति ॥
एतेनैव पिण्डो व्याख्यात इति । पूर्णे संवत्सरे
इति मुख्यकल्पः । तदशक्तौ नवमो मासः ।
संवत्सरान्ते विसर्ज्जनं नवममास्यमित्येके । इति
पैठीनसिवचनात् । तदशक्तौ षष्ठो मासः ।
तत्राप्यशक्तौ त्रिपक्षः तत्राप्यशक्तौ अशौचाप-
गमे प्रथममासस्य द्वादशभिर्दिनैर्द्वादशमासि-
कानि श्राद्धानि निर्व्वर्त्य त्रयोदशाहः सपिण्डी-
करणकालः । शूद्रस्य द्वादशाहो न तु त्रयो-
दशाह एव मासिकार्थवत् द्वादशाहश्राद्धं कृत्वा
त्रयोदशेऽह्नि वा तत् कुर्य्यान्मन्त्रवर्ज्यं हि
शूद्राणां द्वादशेऽह्नीति विष्णुवचनात् । मासि-
कार्थवदिति मासिकार्थो मासि मासि क्रिय-
माणश्राद्धप्रयोजनंप्रेताप्यायनादितद्युक्तं द्वाद-
शाहक्रियमाणश्राद्धमित्यर्थः ॥ * ॥ यत्र त्वेका-
मात्रपरमिति प्राचीनमैथिलाः अजहत्स्वार्थ-
लक्षणया स्वजात्युक्ताशौचान्ततृतीयदिनमात्रो-
पलक्षकं इति श्राद्धप्रदीपश्राद्धचिन्तामणी ।
तद्धयमप्ययुक्तम् । द्वादशाहेन वा कुर्य्यात् इति
मरीचिवचनद्वादशाहश्राद्धं कृत्वा त्रयोदशेऽह्नि
वा कुर्य्यात् इति विष्णुवचनाभ्यामेकवाक्यतया
द्वादशाहमित्यस्य द्वादशदिनपरत्वात् । कुल-
धर्म्माणामिति कुलधर्म्मज्योतिरागमादिसिद्धा-
नन्तरभाविनाशपरचक्रभयोत्पन्नम्लेच्छदेशगम-
नादिभिर्निमित्तैः अशौचापगमे द्वादशदिनानि
षोडशश्राद्धापकर्षकाल इति शूलपाण्युपाध्याय-
व्याख्यानात् । मरीचिनैव एकाहे द्वादशाथवेति
सामान्यत एव एकाहविधानाच्च । अतएव
एकाहापेक्षया प्राशस्त्याभिधानमपि सङ्गच्छते
अतएव प्रथममासस्य एकाह एव द्वादश-
मासिकसहितसपिण्डीकरणकालःइति श्राद्ध-
विवेकः । अत्र यानि एकाहकर्त्तव्यतया द्वादश-
मासिकश्राद्धान्युक्तानि तानि शूद्रेणापि आद्य-
मासिकदिन एव कार्य्याणि । न त्वाद्यमासिकं
कृत्वा तत्परदिने एकादशमासिकानीति ज्ञेयम्
एवञ्च तेषामपकर्षे तन्मध्यतदन्तकालकर्त्तव्यतया
षाण्माषिकद्वयसपिण्डीकरणापकर्ष सिध्यतीति
सुधीभिर्विभाव्यम् ॥ * ॥ यदहर्व्वा वृद्धिरिति
वृद्धिराशास्यमानं पुंसवनादि । आपद्येत
आसन्ना भवति तद्दिने सपिण्डीकरणम् । तथा
हि प्रागावर्त्तनादह्नः कालं विद्यात् । इति
गोभिलसूत्रेण पुंसवनादिरूपवृद्धेर्यामद्वयाभ्य-
न्तरे विधानात् सपिण्डीकरणस्य चापराह्णे
विधानात्तयोः कालयोरवाधाय वृद्धिपूर्व्वदिने
अपकर्षः ॥ * ॥ ननु सपिण्डीकरणस्यापराह्णि-
कत्वे किं प्रमाणमिति चेत् अपराह्णे तु पैतृक-
मित्युत्सर्गवचनम् ।
किञ्च "यद्यप्यदन्तकः पूषा पैष्टमत्ति सदा चरुम् ।
अग्नीन्द्रेश्वरसामान्यात्तण्डुलोऽत्र विधीयते ।"
इति छन्दोगपरिशिष्टवचने यथा बहूनामनु-
रोधात्तण्डुलचरुर्नैकानुरोधात् पैष्टचरुः । विरुद्ध-
धर्म्मसमवाये भूयसां स्यात् सधर्म्मकत्वम् । इति
जैमिनिसूत्रात् । तद्वदत्रापि बहुदेवताक-
पार्व्वणानुरोधादेकोद्दिष्टकालवाध इति । एवञ्च
संवत्सरं अधिकृत्य ।

द्विष्टेतिकर्त्तव्यताकश्राद्धम्। यत्र
प्रेतपिण्डस्य
पितृपिण्डेन सह मिश्रीकरणम्। यथा, --
"सपिण्डीकरणं प्रोक्तं पूर्णे संवत्सरे पुनः
।
कुर्य्याच्चत्वारि पात्राणि
प्रेतादीनांद्विजोत्तमाः॥
प्रेतार्थं पितृपात्रेषु पात्रमासेचयेत्ततः।
ये समाना इति द्वाभ्यां पिण्डानप्येवमेव
हि॥
सपिण्डीकरणश्राद्धं देवपूर्व्वं विधीयते।
पितॄनावाहयेद्यत्र पृथक् पिण्डञ्च
निर्द्दिशेत्॥
ये सपिण्डीकृताः प्रेता न तेषां स्यात्
पृथक्
क्रिया।
यस्तु कुर्य्यात् पृथक् पिण्डं पितृहा
सोऽपि
जायते॥"
इति कूर्म्मपुराणे उपविभागे २२
अध्यायः॥ * ॥
अन्यच्च।
"ततः संवत्सरे पूर्णे सपिण्डीकरणं भवेत्
।
सपिण्डीकरणादूर्द्ध्वं प्रेतः
पार्व्वणभुग्यतः॥
वृद्धिपूर्त्तेषु योग्यश्च गृहस्थश्च भवेत्ततः
।
सपिण्डीकरणं श्राद्धं देवपूर्व्वं निजोजयेत्
॥
पितॄनेवाशयेत्तत्र पृथक् प्रेतं विनिर्द्दिशेत्
।
गन्धोदकतिलैर्य्युक्तं कुर्य्यात् पात्रचतुष्टयम्
।
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत्॥
तद्वत् सङ्कल्प्य चतुरः पिण्डान्
पिण्डप्रदस्तदा
ये समाना इति द्वाभ्यामाद्यन्तु
विभजेत्त्रिधा॥
चतुर्थस्य पुनः कार्य्यं न कदाचित् यतो
भवेत्
ततः पितृत्वमापन्नः स चतुर्थस्तदा
पुमान्॥
दशमासाभ्यन्तरेऽधिमासपातः तत्र
त्रयोदशसु
दिनेषु त्रयोदश मासिकानि कृत्वा
चतुर्द्दशेऽह्नि
सपिण्डनं कार्य्यमिति। संवत्सराभ्यन्तरे
यद्यधि-
मासो भवति तदा मासिकार्थं दिनमेकं
वर्द्धयेत्।
इति विष्णुवाक्यात्। शूद्रस्य त्रयोदशदिनेषु
त्रयोदशमासिकानि त्रयोदशेऽह्नि सपिण्डनं
दृष्टपरिकल्पनान्यायात्। एवञ्च
श्राद्धवृद्धिमात्रं
न दिनवृद्धिरिति मिश्रोक्तं हेयम्।
तद्धृतविष्णु-
सूत्रे दिनमेकं वर्द्धयेदिति श्रूतेः।
श्राद्धाधिक्य-
माह सत्यव्रतः।
"संवत्सरस्य मध्ये तु यदि
स्यादधिमासकः।
तदा त्रयोदशे श्राद्धं कार्य्यन्तदधिकं भवेत्
॥"
तत्राप्यशक्तौ प्रथममासस्यैकाह एव द्वादश-
मासिकसहितसपिण्डीकरणकालः।
"मुख्यं श्राद्धं मासि मासि अपर्य्याप्तावृतुं
प्रति।
द्वादशाहेन वा कुर्य्यदिकाहे द्वादशाथवा॥"
इति मरीचिवचनात्। अपर्य्याप्तौ अशक्तौ
ऋतुर्म्मासद्वयम्। अत्र कल्पे
षष्ठमासिकदिने
पञ्चममासिकं कृत्वा प्रथमषाण्मासिकं
कृत्वा
षष्ठमासिकं कार्य्यं तदाद्युत्कर्षन्यायात्। न
तु
तत्पूर्व्वं षाण्मासिकं व्युत्क्रमापत्तेर्न च
पञ्चम-
मासिकमपि पूर्व्वदिने मृततिथ्यभावात् एव-
मेव वाचस्पतिमिश्रः॥ * ॥
अपकर्षनिभित्त-
माह व्याघ्रः।
"आनन्त्यात् कुलधर्म्माणां पुंसाञ्चैवायुषः
क्षयात्।
अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते
॥"
"सपिण्डीकरणं तस्मिन् काले राजेन्द्र तत् शृणु
एकोद्दिष्टविधानेन कार्य्यं तदपि पार्थिव॥"
इति विष्णुपुराणीयमेकोद्दिष्टांशे तदितिकर्त्तव्य-
तापरं न तु तत्कालपरम्। तथा च परिशिष्ट-
प्रकाशधृतम्।
"श्राद्धद्वयमुपक्रम्य कुर्व्वीत सहपिण्डताम्।
तयोः पार्व्वणवत् पूर्व्वमेकोद्दिष्टमथापरम्॥"
इति॥ * ॥
एवञ्च शुद्धितत्त्वलिखित-स्यमन्तकोपाख्यानवत्
वृद्धिं निश्चित्य कृतं सपिण्डीकरणं तदानीं
विघ्नेन वृद्ध्यभावेऽपि वृद्ध्यारम्भकालान्तरं
पूर्ण-

| | | |
|---|---|---|
| अग्निस्वात्तादिमध्यन्तु<br>प्राप्नोत्यमृतमुत्तमम्।<br>सपिण्डीकरणादूर्ध्वं तस्मै तस्मान्न<br>दीयते ॥”<br>इति मात्स्ये १८ अध्यायः ॥ | एतञ्च द्वादशाहपदं<br>शावाशौचान्ततृतीयदिन- | |

संवत्सरं वा प्राप्य पितृत्वप्रापकं इति न सपिण्डनान्तरम्। अत्र श्वः कर्त्तास्मीति निश्चित्य
दाता विप्रान्निमन्त्रयेत्। इतिवन्निश्चित्येति उत्-
कटकोटिकसम्भावनोपलक्षणम्। भविष्यन्निमि-
त्तस्य कर्म्मणः प्रत्यूहार्हत्वात्। एवञ्च वृद्धि-
श्राद्धं यदर्थं कृतं तत्कर्म्म चेत् विघ्नात्तद्दिने न
क्रियते तदा दिनान्तरे तत्कर्म्मणि क्रियमाने
तदङ्गत्वात् पुनर्वृद्धिश्राद्धं कर्त्तव्यमेव।
"प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः।
तदङ्गस्याक्रियायान्तु नावृत्तिर्न च तत् क्रिया॥"
इति छन्दोगपरिशिष्टेन साङ्गकरणाभिधानात्
हेमाद्रिधृतम्।
पूर्णे संवत्सरे श्राद्धं षोडशं परिकीर्त्तितम्।
तेनैव च सपिण्डत्वं तेनैवाब्दिकमिष्यते॥"
अत्र पूर्णसंवत्सरक्रियमाणश्राद्धाद्यथोभय-निर्व्वाहः।
तथापकृष्टसपिण्डनादप्युभयनिर्व्वा-
हान्न पूर्णसंवत्सरे आब्दिकान्तरं कार्य्यम्।
एवञ्च पञ्चदशश्राद्धे कृतेऽप्युन्नेयम्॥ * ॥ उदक-
पात्राणि इति अर्घ्यार्थमुदकयुक्तपात्राणि। अत्र
त्रीणि पितॄणामेकं प्रेतस्येति पाठक्रमदर्श-
नात् सर्व्वत्र छन्दोगानां यजुर्वेदिनाञ्च गृह्यानु-
रोधात् सपिण्डीकरणे प्रेतकर्म्मकरणं पितृकर्म्म-
पूर्व्वकम्। तयोः पार्वणवत् पूर्व्वमेकोद्दिष्टमथा-
परम्। इति पूर्वलिखितवचने शाब्दक्रमदर्श-
एष एव विधिः पूर्व्वमर्घ्यपात्रचतुष्टये॥"
ततस्तदनन्तरं तन्मन्त्रैः पितामहादिभेदेन त्रिरा-
वृत्तैर्या दिव्या इति मन्त्रैश्चकारात् पितामहा-
द्युत्सर्गवाक्यैरर्घ्यमुत्सृज्य ये समाना इति
द्वाभ्यां मन्त्राभ्यामर्घ्यं पुष्पोदक तज्जलं प्रेत-
पात्रस्थजलं तेनैव विधिना प्रत्येकेन पूर्व्ववत्
चतुर्भागरूपं प्रेतपात्रात् समर्पयेत्। तेभ्यः
पितामहादिभ्यस्त्रिभ्यस्तन्मिश्रितपुष्पतिलोदक
रूपमर्घ्यं निवेद्य तत्तद्ब्राह्मणहस्ते प्रक्षिप्य
पश्चादाचमेदित्यर्थः। तेन प्रेतब्राह्मणहस्ते
उत्सृज्य दत्तस्यैवार्घ्यजलस्य तदवशिष्टजलस्य
भागत्रयं पितामहाद्युत्सृष्टार्घ्यजलेषु मिश्री-
कर्त्तव्यमिति प्रतीयते। अतएव दत्तस्यैव प्रेत
पिण्डस्य मिश्रीभाव इति श्राद्धविवेकः॥ * ॥
यच्च न चात्र देवं भोजयेत् प्रागेव दैवे अर्घ्यं
मन्नाद्यञ्च दत्त्वा गन्धमाल्यैः पात्रमर्च्चयित्वा
हुतशेषं पितृभ्यः पात्रेषु दद्यात् इत्याश्वलायन-
वचने पितृपात्रे दैवं न मिश्रयेदिति कल्पतरु-
व्याख्यानुरोधेन मैथिलोक्तं सर्व्वशाखिनान्तथा-
चरणम्। तन्नयुक्तम्। आश्वलायनेन काण्डानु-
शयस्योक्तत्वात् बह्वृचानामेव तथा युक्तत्वात्।
न सामगयजुर्व्वेदिनोः। तयोः पदार्थानुशय-
स्योक्तत्वात। अत्र सामयजुर्व्वेदिनोः श्राद्धसूत्रे
समन्वये मन्त्रदर्शनात्तत्रैव मन्त्रान्वयः पितृ-
दयितादावुक्तः। वस्तुतस्तु पौराणिकत्वात् देव-
ताभ्य इत्यस्य पाठवत् साधारणस्मृतिकार-
शातातपोक्तत्वाच्च विभागेऽपि मन्त्रान्वयो युक्तः
अतएव मैथिलैरपि तथा लिखितमिति॥ * ॥
एवञ्च पार्व्वणे प्रागुक्तवचनेन शेषद्रव्येण पिण्ड-
दानविधानात् तद्विकृतावपि सपिण्डीकरणे
तन्नियमात् यद्यपि शेषाभावे पिण्डनिवृत्ति-
रायाति तथापि।
"यथोक्तवस्त्वसंप्राप्तौ ग्राह्यं तदनुकारि यत्।
यवानामिव गोधूमा ब्रीहीणामिव शालयः॥"
इति छन्दोगपरिशिष्टवचनात् मुख्याभावे प्रति-
निधिः शास्त्रार्थ इति न्यायाच्च मध्वाद्यभावे
गुडादिग्रहणवत् द्रव्यान्तरेणापि पिण्डदानम्
शेषद्रव्यनियमस्तु तत्सम्भवे द्रव्यान्तरत्यागाय।
अन्यथा तदङ्गाभावे कर्म्मवैगुण्यं स्यात्। सह-
पिण्डक्रियायां इति मनूक्तेः प्रेतपिण्डस्य सह-
मिश्रीकरणं यत्रेति सपिण्डीकरणसमाख्या-
भवति तदान्यः पाच्यः मुख्ये कृते चेन्नाशदुष्टी
स्यातां तदाज्येनैव स्विष्टिकृद्धोम इति शरला।
एतेन शेषनाशे पिण्डनिवृत्तिरिति वाचस्पति-
मिश्रोक्तं हेयम्॥ * ॥ एतेन पिण्ड इति।
एतेनार्घ्यदानविधानेन। पिण्डः पिण्डमिश्रण-
प्रकारो व्याख्यातः। तथा च ब्रह्मपुराणम्।
"अथ तेनैव विधिना दर्भमूलेऽवनेजनम्।
पितुर्द्दत्त्वा तु पिण्डन्तु दद्याद्भक्त्या तु पूर्व्ववत्॥
दत्त्वापिण्डान् पितृभ्यस्तु पश्चात् प्रेताय पार्श्वतः
तन्तु पिण्डं त्रिधा कृत्वा आनुपूर्व्व्या च सन्त-
तम्॥
निदध्यात्त्रिषु पिण्डेषु एवं संसर्ज्जने विधिः॥"
पितृभ्यः पितृपितामहादिभ्यः पिण्डान् दत्त्वा
पश्चात् प्रेताय पार्श्वतः पूर्व्वदेशे पिण्डं दद्यादि-
त्यर्थः। तं प्रेताय दत्तपिण्डम्। आनुपूर्व्व्या
पितामहादिक्रमेण। संसर्ज्जने प्रेतपिण्ड-
मिश्रणे। भविष्यपुराणम्।
"गन्धोदकतिलैर्युक्तं कुर्य्यात् पात्रचतुष्टयम्।
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत्॥"
ये समाना इति द्वाभ्यामेतज्ज्ञेयं सपिण्डनम्।
नित्येन तुल्यं शेषं स्यादेकोद्दिष्टं स्त्रिया अपि॥"

नात् । देवकृत्यपितृकृत्ययोर्म्मध्ये प्रेतकृत्येन व्यव-
धानस्यायुक्तत्वाच्च । एतेन अथ सपिण्डीकरणं
संवत्सरमेकं पिण्डमुद्दिश्य संवत्सरान्ते चत्वार्य्यु-
दकपात्राणि प्रयुनक्ति तत्रैकं प्रेतस्य त्रीणि इतरेभ्यः । इत्याश्वलायनदर्शनात् सर्व्वशाखिनां
सपिण्डीकरणे प्रेतादित्वं मैथिलोक्तं निरस्तम् ।
एतद्वचनस्य तच्छाखिमात्रपरत्वात् । किन्त्व-
र्घ्यदानमात्रे पाठक्रमाच्छाब्दक्रमस्य बलवत्त्वात्
ब्रह्मपुराणे प्रेतार्घ्यदानान्तरं ततः पितामहा-
दिभ्यः इति शब्दक्रमस्यावाधायार्घ्यमात्रेषु
गन्धपुष्पदानपर्य्यन्तं पितृपूर्व्वकता उत्सर्गे तु
प्रेतपूर्व्व कतेति । तथा ब्रह्मपुराणम् ।
"चतुर्भ्यश्चार्घ्यपात्रेभ्य एकं वामेन पाणिना ।
गृहीत्वा दक्षिणेनैव पाणिना च तिलोदकम् ॥
सम्मार्ज्जयित्वा पृथिवीं ये समाना इति स्मरन् ।
प्रेतविप्रस्य हस्ते तु चतुर्भागं जलं क्षिपेत् ॥
ततः पितामहादिभ्यस्तन्मन्त्रैश्चपृथक् पृथक् ।
ये समाना इति द्वाभ्यां तज्जलन्तु समर्पयेत् ॥
अर्घ्यं तेनैव विधिना प्रेतपात्राच्च पूर्व्ववत् ।
तेभ्यश्चार्घ्यं निवेद्येव पश्चाच्च स्वयमाचमेत् ॥"
एकं प्रेतपात्रं वामेन अनन्तरंदक्षिणेन गृहीत्वा
इति सम्बन्धः । ये समाना इति मन्त्रद्वयं पठन्
प्रेतपात्रस्थं उत्सृष्टजलं कुशरेखात्रयेण चतुर्धा
सिद्ध्यर्थं सुतरां तत्र तथाचरणम् । प्रतिपत्ति-
रूपकर्म्माङ्ग एव प्रतिपाद्याभावे तन्निवृत्तिः ।
पशुयागे लोहितं निरस्यति सकृन्निरस्यति
इत्यादावुक्ता । अतएव यज्ञवास्तुरूपप्रतिपत्ति-
यागेऽपि यज्ञो यत्र वसति इति यज्ञवास्तुसमा-
ख्यानुरोधेनास्तृतकुशविनाशेऽपि कुशान्तरप्रति
निधिर्भट्टनारायणैः गोभिलभाष्ये उक्तः । प्राक्
स्विष्टिकृत आवापः इति गोभिलसूत्रस्य
व्याख्यानेऽपि आ उच्यते इत्यावापः प्रधानहोमः
स तु स्विष्टिकृद्धोमात् प्राक् न पश्चादित्यर्थः ।
एवञ्च मुख्यहोमे त्वकृते यदि चरुर्नष्टो दुष्टो वा
नित्येनावश्यकेन ततश्च पार्व्वणांशे पार्व्वणेन
एकोद्दिष्टांशे एकोद्दिष्टेन शेषं अङ्गजातं
तुल्यम् । एकोद्दिष्टमिति एकोद्दिष्टं तद्धर्म्म-
ग्राहित्वात् सपिण्डीकरणञ्चेत्युभयपरम् । एतत्
सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि । इति
याज्ञवल्क्यवचनैकवाक्यत्वात् । तेन श्राद्धेषु
मध्ये एतच्छ्राद्धद्वयं स्त्रियाः कर्त्तव्यं न त्वाभ्यु-
दयिकश्राद्धादि । अत्र वा कर्त्तरि कृत्ये इति
कर्त्तरि षष्ठीति कर्त्तृत्वनियमः । वृद्धिश्राद्धादौ
स्त्रीणां भोजनदर्शनान्न भोक्तृत्वनियमः ॥ * ॥
पितरि पूर्व्वमृते तद्वर्षाभ्यन्तरे पितामहे
प्रपितामहे च मृते यथा कर्त्तव्यं तथाह छन्दोग-
परिशिष्टे कात्यायनः ।
"पितुः सपिण्डतां कृत्वा कुर्य्यान्मासानुमासिकम्
असंस्कृतौ न संस्कार्य्यौ पूर्व्वौ पौत्रप्रपौत्रकैः ।
पितरं तत्र संस्कुर्य्यादिति कात्यायनोऽब्रवीत् ॥
पापिष्ठमपि शुद्धेन शुद्धं पापकृतापि वा ।
पितामहेन पितरं संस्कुर्य्यादिति निश्चयः ॥"
पितुः सपिण्डतां कृत्वा प्रेतीभूतयोरपि पिता-
महप्रपितामहयोः सतोः प्रतिमासविहितं पार्व्वणं
पितृवृद्धप्रपितामहातिवृद्धप्रपिता-
महानां कर्त्तव्यं न तु तयोः सपिण्डीकरणापेक्षा
कार्य्या ॥ * ॥ ननु सपिण्डनेनासंस्कृताभ्यां
पितामहप्रपितामहाभ्यांसह पितुः कथं

| | | |
|---|---|---|
| विभज्य भागमेकं प्रेतब्राह्मणहस्ते क्षिपेत् दद्यात् । उत्सृष्टजलपिण्डयोर्व्विभागे मन्त्रस्य करणत्वं व्यक्तमाह शातातपः । “निरूप्य चतुरः पिण्डान् पिण्डदः प्रतिनामतः । ये समाना इति द्वाभ्यामाद्यन्तु विभजेत् त्रिधा । | | सपिण्डनाख्यसंस्कारस्तस्मात् तदर्थं तयोः सपिण्डीकरणमपकर्षणीयं पितुरेव वा सपिण्ड- नमुत्कर्षणीयमित्यत आह असंस्कृताविति । उत्- कर्षाप्रकर्षौ न कार्य्यावित्यनेन वचनेनोक्तम् । कथमसंस्कृतेन सह संस्कार इत्यत्र आह पापि- ष्ठमपीति । पापिष्ठमकृतसपिण्डीकरणं शुद्धेन कृतसपिण्डीकरणेन पितामहेन पापकृता वा |

अकृतसपिण्डीकरणेनापि शुद्धं
कुर्य्यादिति
शास्त्रनिश्चयः। अतो वचनबलाददोषः
इति
तात्पर्य्यम्। अत्र तु प्रेतीभूतपितामहेन
पितुः
संपिण्डने पितामहस्यैकोद्दिष्टमेव।
"असपिण्डीकृतं प्रेतमेकोद्दिष्टेन तर्पयेत्
॥"
इति प्रागुक्तजावालवचनात्।
एवमन्यत्रापि
बोध्यम्। वृद्धप्रपितामहस्य प्रेतत्वे तेन
सह न
कार्य्यमिति तात्पर्य्यम् ॥ * ॥ अत्र मातुः
सपिण्डने
श्वशुरार्य्यश्वशुरयोः पिण्डौ कुशैराच्छाद्यौ
।
तथा च गार्ग्यः।
"पतिनैकेन कर्त्तव्यं सपिण्डीकरणं
स्त्रियाः।
सा गता हि मृतैकत्वं कुशैरन्तरयन् पितॄन्
॥
श्वशुरस्याग्रतो
यस्माच्छिरःप्रच्छादनक्रिया।
पुत्त्रैर्दर्भेण सा कार्य्या मातुरभ्युदयार्थिभिः
॥"
अन्तरयन्तीत्यर्थे अन्तरयन्निति
लिङ्गव्यत्ययेन
पुंस्त्यमिति हलायुधः। परवचनं
गोभिलश्राद्ध-
सूत्रभाष्यकृतापि लिखितम्। अतएव
प्रव्रजिते
पतिते वा पितरि मृते न
पितामहादिभिर्मातुः
सपिण्डीकरणं किन्तु पितामह्यादिभिरेव।
"स्वेन भर्त्रा सहैवास्याः सपिण्डीकरणं
स्त्रियाः
एकत्वं सा गता यस्माच्चरुमन्त्राहुतिव्रतैः
।
तस्मिन् सति सुताः कुर्य्युः पितामह्या
सहैव तु ॥"

स्त्रीणामप्ये वमेवैतदेकोद्दिष्टमुदाहृतम्।
मृताहनि यथान्यायं नृणां यद्वदिहोदितम् ॥"
स्त्रियोऽत्र असवर्णोढा अपरिणीता वेति
श्राद्धविवेकः। सवर्णोढायाः पुत्त्रपौत्त्रप्रपौत्त्रा-
भाव एव विधानात्। तथा शङ्खः।
"पितुः पुत्त्रेण कर्त्तव्या पिण्डदानोदकक्रिया।
तदभावे तु पत्नी स्यात्तदभावे सहोदरः ॥"
स्त्रीणामिति तु सम्प्रदानपरम्। स्त्रीकर्त्तृक-
त्वस्य पूर्व्वार्द्ध एवोक्तत्वात्। एकमेवामन्त्रकमि-
त्यर्थः। इति श्राद्धविवेकः ॥ अत्र स्त्रिय इत्य-
स्यासवर्णोढा अपरिणीतापरत्वव्याख्यानात्
स्त्रीणां मन्त्रनिषेधोऽपि तत्सम्प्रदानकश्राद्ध
एवावगम्यते। न तु स्त्रीसम्प्रदानकमात्रे।
कल्पतरौ तु स्त्रीणामप्येवमिति यादृशेन सम्ब-
न्धेन पितृव्यत्वादिना पुरुषाणामेकादशाहादि-
श्राद्धं तादृशेन सम्बन्धेनैव स्त्रीणामेतत्
कर्त्तव्य-
मिति। एतद्व्याख्याने स्त्रीसम्प्रदानकश्राद्धे
सुतरां मन्त्राः पाठ्याः। याज्ञवल्क्येनापि
समन्त्रकमेकोद्दिष्टं सपिण्डीकरणञ्चोक्त्वा एतत्
सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपीत्यनेन
स्त्रिया अपि तथैवोक्तम्।
"मातुः सपिण्डीकरणं पितामह्या सहोदितम्।
यथोक्तेनैव कल्पेन पुत्त्रिकाया न चेत् सुतः ॥"
इति छन्दोगपरिशिष्टेनापि यथोक्तेनैव कल्पेन
इत्यनेन मन्त्रादिकसर्व्वमतिदिष्टं व्यवहारोऽपि
तथेति। अमन्त्रकं स्त्रीकर्त्तृ कमन्त्रपाठरहितम्
अमन्त्रा हि स्त्रियो मताः। इति बौधायनेन
सामान्यतोऽभिधानात्। न तु ब्राह्मणकर्त्तृक-
मन्त्रपाठरहितम्। तथा च वराहपुराणम्।
"अयमेव विधिः प्रोक्तः शूद्राणां मन्त्रवर्ज्जितः।
अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते ॥"
अत्रामन्त्रस्येति विशेषणस्य
यावदमन्त्रव्याप्त्यर्थ
त्वेन परिभाषारूपत्वान्न प्रेतश्राद्धमात्रविषयः
न वा शूद्रकर्त्तृ कश्राद्धमात्रविषयः। किन्तु स्त्री-
कर्त्तृ कश्राद्धमप्यस्य विषयः। व्यक्तं ब्राह्मे।
"स्त्रीभिश्चावरवर्णैश्च श्राद्धं विप्रानुशासनात्।
मन्त्रवद्विधिपूर्व्वन्तु वह्निपाकविवर्ज्जितम् ॥"
विप्रानुशासनात् विप्रपाठनात्। मन्त्रवन्मन्त्र-

पुरुषस्य पुनस्त्वन्ये भ्रातृपुत्त्रादयोऽपि ये ॥"
आदिशब्दग्राह्यानाह स एव।
"भ्राता वा भ्रातृपुत्त्रो वा सपिण्डः शिष्य एव
वा।
सहपिण्डक्रियां कृत्वा कुर्य्यादभ्यु दयं ततः
॥"
भ्राता वा इति वा शब्दात् भ्रात्रपेक्षया प्रधान-
त्वेन पूर्व्वाधिकारिणां दौहित्रान्तानां
समुच्चयः
अतएव सपिण्डत्वेनैव
भ्रातृतत्पुत्त्रयोरधिकार-
सिद्धौ पृथगुपादानं प्राधान्यज्ञापनार्थम् ॥ *
॥
"महागुरौ प्रेतीभूते वृद्धिकर्म्म न युज्यते ॥"
इति शूलपाणिलिखितवचनेन।
"प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत्।
नापि दैवं न वा पैत्रं यावत् पूर्णो न वत्सरः ॥"
इति देवीपुराणवचनेन च प्रेतीभूतमातापितृ-
कस्य पितुः प्रेतीभूतमातापितृकस्य
संस्कार्य्यस्य
प्रेतीभूतमातापितृकायाःअनूढायः
कन्यायाश्च
वैदिककर्म्मकर्त्तृत्वकर्म्मत्वानर्हत्वेन
तत्परीहा-
राय यदहर्व्वा वृद्धिरापद्येत इत्यनेन पूर्व्वदिने
सपिण्डनं कृत्वा पित्रादिः परदिने अभ्यु
दयम्
नामकरणादिकं कुर्य्यात्। ऊढायास्तु
पतिरेके
गुरुः स्त्रीणाम्। इति वचनोक्तैकपदेन पत्युरेव
महागुरुत्वाभिधानात् तत्प्रेतत्वमात्रे तस्याः
कर्म्मानधिकारः। एवञ्च
पितृमात्रोर्म्महागुरुत्व-
व्यावृत्तेस्तयोर्म्मरणे ऊढाया न
कर्म्मानधिकारः
अत्राभ्युदयसपिण्डनयोरानन्तर्य्यमात्रं
क्त्वाप्रत्य-
यार्थः न त्वेककर्त्तृत्वमपि। अन्यथा
सपिण्ड-
ताधिकारिण्याः पत्न्याः सत्त्वे अभुदयाधि-
कारिणो भ्रातुः सपिण्डनाधिकारापत्तेः।

इत्यत तस्मिन् सतीति
श्राद्धानर्हभर्त्तुरुपलक्ष-
णम् । अतएव ।
“तस्याञ्चैव तु जीवन्त्यां तस्याः श्वश्वेति निश्चयः ।”
इति लघुहारितेन श्वश्रुजीवने तस्या श्वश्रे-
त्युक्तं न तु श्वशुरेणेति क्वचिदप्युक्तम् ॥ * ॥ एवं
पितामह्यादिभिर्म्मातुः सपिण्डीकरणेऽपि साम-
गेन ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा
इति मन्त्रो न पाठ्यः मन्त्रलिङ्गविरोधात् । अत-
एव आभ्यु दयिके मातृपक्षे श्रीदत्तादिभिर्मन्त्रां
न्तरं लिखितं न तु ये चात्र त्वामिति । वस्तु-
तस्तु आभ्यु दयिके छन्दोगानां मातृपक्ष एव
नास्तीति वक्ष्यते । एवञ्च ।
“अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ।
ये समाना इति द्वाभ्यां शेषं पूर्व्व वदाचरेत् ॥”
एतत् सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि ।
इति यात्तवल्क्येन पार्व्वणैकोद्दिष्टविकृतीभूत-
पुंसपिण्डनातिदेशात् तद्विकृतीभूतस्त्रीसपिण्डने
ऽपि ये समाना इति मन्त्रद्वयस्य पार्व्व णोक्तस्य
ये चात्र त्वामिति मन्त्रस्य च लिङ्गार्थासम-
वेतत्वेऽपि प्रकृत्यर्थस्य समवेतार्थत्वात् पाठः ।
“ततश्च मातामहानामप्येवं श्राद्धं कुर्य्याद्विच-
क्षणः ।
मन्त्रोहेन यथान्यायं शेषाणां मन्त्रवर्ज्जितम् ॥”
युक्तम् ।
वह्निपाकविवर्ज्जितमित्यसवर्णस्त्रीकर्त्तृक
श्राद्धपरम् । पतिकर्त्तृकश्राद्धेऽपि पत्न्याः पाका-
धिकारदर्शनात् । तथा च छन्दोगपरिशिष्टम् ।
शाकञ्च फाल्गुनाष्टम्यां स्वयं पत्न्यथवा पचेत् ।
पत्नीत्वञ्च सवर्णोढायाः । ज्येष्ठा पत्नीति वच-
नात् । ज्यैष्ठ्यमाह मनुः ।
“यदि स्वाश्च पराश्चैव विन्देरन् योषितो द्विजाः
तासां वर्णक्रमेणैव ज्यैष्ठ्यं पूजा च वेश्म च ॥”
कुबेरोपाध्यायधृतम् ।
“असंस्कृतप्रमीतानां पिता न श्राद्धमाचरेत् ।
यदि स्नेहेन कुर्व्वीत सपिण्डीकरणं विना ॥”
असंस्कृतप्रमीतानाम् अनुपनीतमृतानाम् ।
लघुहारीतः ।
“पुत्त्रेणैव तु कर्त्तव्यं सपिण्डीकरणं स्त्रियाः ।
यथा, --
“नानिष्ट्वा तु पितॄन् श्राद्धैः कर्म्म वैदिक-
मारभेत् ॥”
इति शातातपवचने पितृकर्त्तृ कवृद्धिश्राद्धा-
नन्तरमेव पुत्रेण विवाहः क्रियते । न तु पुत्रेण
श्राद्धान्तरं क्रियते ॥ * ॥ अत्र पुरुषस्य पुनस्त्वन्ये
इत्यनेन पुत्त्रवत् शिष्यान्तस्य सपिण्डने सामान्य-
तोऽधिकारप्रतिपादनात् अभ्युदयं विनापि
पुरुषस्य सपिण्डनं प्रतीयते ।
“सह पिण्डक्रियां कृत्वा कुर्य्यादभ्युदयं ततः ।”
इति तु सपिण्डीकरणात् पूर्व्वमभ्युदयाभावार्थं
न त्वभ्युदयसत्त्व एव सपिण्डीकरणार्थमिति ॥ * ॥
यत्तु ।
“यानि पञ्चदशाद्यानि अपुत्त्रस्येतराण्यपि ।
एकस्यैव तु दातव्यमपुत्त्रायाश्च योषितः ॥”
इति छन्दोगपरिशिष्टीयं सपिण्डीकरणेतरपञ्च-
दशश्राद्धविधायकं तच्छिष्यपर्य्यन्ताभावे पुरुषस्य
बोध्यम् । इतराणि एकोद्दिष्टविधानेनैव यानिं
प्राप्तानि प्रत्याब्दिकश्राद्धानि तान्येव दातव्यं
दातव्यानि इत्यर्थः । अपुत्त्रायाश्चेति चकारो-
ऽनुक्तसमुच्चायकः पतिरहिताया इति समु-
च्चिनोति ।
“अपुत्त्रायां मृतायान्तु पतिः कुर्य्यात् सपिण्ड-
ताम् ।

| | | |
|---|---|---|
| इत्यनेन यच्छेषाणां मन्त्रवर्ज्जनमित्युक्तं तत्<br>शुन्धन्त्वां पितरः शुन्धन्तां पितामहाः इत्यादि<br>प्रकृत्यूहयोग्यमन्त्रवर्ज्जनपरमिति प्रागुक्तम् ।<br>मार्कण्डेयपुराणम् ।<br>"सर्व्वाभावे स्त्रियः कुर्य्युः स्वभर्त्तॄणाममन्त्रकम्<br>तद्भावे च नृपतिः कारयेत् स्वकुटुम्बवत् ॥ | | |

इति पैठीनसिवचनैकवाक्यत्वात् । अत्र छन्दोग-
परिशिष्टे अपुत्त्रायाः पञ्चदशश्राद्धविधानात् ।
“सपिण्डीकरणं तासां पुत्त्राभावे न विद्यते ।”
इति मार्कण्डेयपुराणाच्च बालकपुत्त्रसत्त्वे सपि-
ण्डीकरणं अन्येनापि कर्त्तव्यमिति प्रतीयते ।
एवं पतिः कुर्य्यादित्यत्राति पतिसत्त्वमात्रं विव-
क्षितम् । तेन ऊढया दुहित्रा सपिण्डनं
कार्य्यम् । अत्र ।
“सर्व्वासामेकपत्नीनामेका चेत् पुत्त्रिणी भवेत्
सर्व्वास्तास्तेन पुत्त्रेण प्राह पुत्त्रवतीर्म्मनुः ॥”
इति मनुवचने सपत्नीपुत्त्रस्य पुत्त्रत्वातिदेशात्
तत्सत्त्वेऽपि स्त्रीणां सपिण्डनं मैथिलैरुक्तम् ।
तन्न । प्रागुक्तलघुहारीतवचने पुत्त्रेणैवेत्येव-
कारेणातिदिष्टपुत्त्रनिषेधात् । अतएव तदुत्त-
रार्द्धे भ्रातृपुत्त्रोपादानं सङ्गच्छते । अन्यथा
भ्रातृपुत्त्रसत्त्वे ।
“यद्येकजाता बहवो भ्रातरश्च सहोदराः ।
एकस्यापि सुते जाते सर्व्वे ते पुत्त्रिणो मताः ॥”
इति बृहस्पतिवचनेन पुत्त्रत्वातिदेशात् भ्रातृ-
पुत्त्रस्य पितृव्यश्राद्धाधिकारे प्राप्ते भ्रातृपुत्तो-
पादानं व्यर्थं स्यात् । पुत्त्रातिदेशफलन्तु तत्सत्त्वे
पुत्त्रान्तराकरणं पुन्नामनरकत्राणञ्च ॥ * ॥ लघु-
हारीतः ।
“सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश
पृथङ्नैव सुताःकुर्य्युः पृथग्द्रव्या अपि क्वचित् ॥
प्रेतसंस्कारकर्म्माणि यानि श्राद्धाणि षोडश ।
यथाकालन्तु कार्य्याणि नान्यथा मुच्यते ततः ॥”
पृथग्द्रव्या अपि विभक्तधना अपि पृथक् न
कुर्य्युः सुतरामपृथग्धनाः पृथक् न कुर्य्युः किन्त्व-
पृथक् कुर्य्युः । अत्र विशेषयति मरीचिः ।
“मृते पितरि पुत्त्रेण क्रिया कार्य्या विधानतः ।
बहवः स्युर्यदा पुत्त्राः पितुरेकत्र वासिनः ॥
सर्वेषान्तु मतं कृत्वा ज्येष्ठेनैव तु यत् कृतम् ।
द्रव्येण चाविभक्तेन सर्व्वैरेव कृतं भवेत् ॥”
पुत्त्रेणेत्यविशेषात् सर्वेषामधिकारे प्राप्ते ज्येष्ठस्य
साक्षात् कर्त्तव्यतामाह बहव इति । ज्येष्ठेनापि
सर्वेषां भ्रातृणां मत्करणेनैव करणं भवतु इति
मतं ज्ञानं कृत्वाविभक्तत्वेन द्रव्यसंश्लेषेण च
कृतं कर्म्म सर्व्वैरेव कृतमेव भवेत् । तदानीं
द्रव्यासंश्लेषे च तस्मात् द्रव्यं प्राप्तव्यमिति कृत्वा
कर्त्तव्यम् । यदि तेन तन्न परिशुध्यते तदा स
अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते ॥”
इति व्याघ्रवचनोक्तप्रशस्यतइत्यनेन कुलाचार-
ज्योतिःशास्त्रादिज्ञानझटितिमरणराष्ट्रोपप्लवा-
दिम्लेच्छदेशादिगमनानुसाराच्च सपिण्डीकर-
णापकर्षे द्वादशाहापेक्षया प्रागुक्तनवममासादि-
गौणकालपरिग्रहः । अथवा यथाकालमित्या-
देर्यदहर्व्वा वृद्धिरापद्येत इत्यनेनावश्यकनाम-
करणादिवृद्ध्यर्थमेवापकर्षो न त्वनावश्यक इष्टा
पूर्त्ताद्यर्थापकर्षः कार्य्य इति तात्पर्य्यम् । अतएव
लघुहारीतेन । तथैव काम्यं यत् कर्म्म वत्सरात्
प्रथमादृते इत्यनेन काम्यस्यापकर्षनिमित्तता
नास्तीत्युक्तम् । यदि त्वावश्यकवृद्धिनिमिक्षेनाप-
कर्षः कृतस्तदा इष्टापूर्त्तादिकाम्यं वत्सराभ्य-
न्तरेऽपि कर्त्तव्यमिति । श्राद्धयिवेकोऽप्येवम् ।
यद्यपि गोभिलसूत्रादौ सपिण्डीकरणस्यैवाप-
कर्षः प्रागुक्तस्तथापि सपिण्डीकरणापकर्षे तत्-
पूर्व्वकर्त्तव्यश्राद्धानामपि तदादितदन्तन्यायाद-
पकर्षा ।
“सपिण्डीकरणान्ता तु ज्ञेया प्रेतक्रिया बुधैः ।”
इति शातातपवचने प्रेतक्रियायाः सपिण्डीकर-
णान्तत्व प्रतीयते ॥ * ॥ अत्र वृद्धिनिनित्तं विनः
सपिण्डनापकर्षे कृते पूर्णसंवत्सरकालं प्राप्य
प्रेतत्वपरिहारमाह विष्णुधर्म्मोत्तरम् ।
“कृते सपिण्डीकरणे नरः सवत्सरात् परम् ।
प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते ॥”
वृद्धिनिमित्तकसपिण्डीकरणापकर्षेकृते तत्-
क्षणादेव प्रेतत्वपरीहारः । तदर्थ एवापकर्षात्
एवञ्चान्यनिमित्तकापकर्षेवृद्धिकालंप्राप्यप्रेतत्व-
परीहारः । तत्कालस्य पूर्णसंवत्सरकालतुल्य-
त्वात् ।
“अर्व्वाक् संवत्सराद्वृद्धौ पूर्णे संवत्सरेऽपि वा
ये सपिण्डीकृताः प्रेता न तेषान्तु पृथक्क्रिया ॥
इति शातातपवचनात् । इति श्राद्धतत्त्वम् ॥

**सपीतकः**, पुं, राजकोषातकी । इति राज-
निर्घण्टः ॥

**सपीतिः**, स्त्री, (पा पाने + क्तिन् । “घुमास्था-
गेति ।” ६ । ४ । ६६ । इति ईत्वम् । सह एकत्र
पीतिः पानम् । सहस्य सः ।) आत्मीयजन-
सहमिलितैककालपानम् । तत्पर्य्यायः । तुल्य-
“सप्त सप्त विलिखेत् प्ररेखिका-
स्तिर्य्यगूर्द्ध्वमथ कृत्तिकादिकम्
।
लेखयेदभिजिता समन्वितं
चैकरेखगखगेन विव्यगे ॥”
इति ज्योतिस्तत्त्वे दीपिका ॥
अपि च ।
“क्रमात् स्वराणां
सप्तानामारोहश्चावरोहणम् ।
मूर्च्छनेत्युच्यते ग्रामत्रये ताः सप्त
सप्त च ॥”
इति संगीतदर्पणम् ॥

**सप्तकः**, त्रि, (सप्तन् + कन् ।) सप्तानां
पूरणः ।

यथा, --
“योटके सप्तके मेषतुले युग्महयी
तथा ।
सिंहघटौ सदा वर्ज्यौ मृतिं
तत्राब्रवीच्छिवः ।”
इति ज्योतिस्तत्त्वम् ॥
सप्तसंख्यावशिष्टः । यथा, --
“यक्ष जगृ दरिद्रा च चकासृ
शास्तिरेव च ।
दीधि वेवी च विज्ञेयो यक्षादिः
सप्तको गणः ॥”
इति मुग्धबोधटीकायां दुर्गादासः
॥
सप्तसंख्या । सप्त एव सप्तकः
स्वार्थे कप्रत्ययः ॥

**सप्तकी**, स्त्री, (सप्तभिः स्वरैरिव कायति
शब्दायते
इति । कै + कः । गौरादित्वात्
ङीष् ।) काञ्ची ।
इत्यमरः ॥

**सप्तमगोदावरं**, क्ली, सप्तानां नोदानरीणां
समा-
हारः । इति मुग्धबोधव्याकरणम्
॥ (यथा,
महाभारते । ३ । ८५ । ४४ ।

ऋणी भवति प्रत्यवायी च भवति । न तु तेन श्राद्धान्तरं कर्त्तव्यमिति श्राद्धविवेकोक्तं युक्तम् । पृथङ्नैव सुताः कुर्य्युरित्यनेन पृथक्करणस्य पर्य्युदस्तत्वेनानधिकारात् । यथाकालमिति अगौचान्तद्वितीयदिनद्वादशमासमृततिथ्येकाह-न्यूनपण्मासद्वितयसंवत्सरेषु । न च विधानसाम-र्थ्यादेव तत्तत्कालप्राप्तेरनर्थकमिदमिति वाच्यम् तचत्कालानां द्वादशहाद्यपेक्षया प्राधान्यबोध-नार्यत्वात् ॥ * ॥ अत्र ।

"आनन्त्यात् कुलधर्म्माणां पुंसाञ्चैवायुचः क्षयात् ।

पानम् २ । इत्यमरः ॥ सहपीतिः ३ । इति शब्दरत्नावली ॥ (यथा, वाजसनेयसहिता-याम् । १८ । ९ ।

"सग्धिश्च मे सपीतिश्च मे कृषिश्च मे * * * यज्ञेन कल्पन्ताम् ॥")

**सपीतिका**, स्त्री, हस्तिघोषा । इति राजनिर्घण्टः ॥

**सप्त**, [न्] त्रि, (सप् समवाये + कनिन् । तुट् च इत्युज्ज्वलः । १ । १५६ ।) संख्याविशेषः । सात इति भाषा । बहुवचनान्तोऽयम् । तद्वाचकानि यथा । पातालम् १ भुवनम् २ मुनिः ३ द्वीपः ४ सूर्य्याश्वः ५ वारः ६ समुद्रः ७ स्वरः ८ राज्या-ङ्गम् ९ व्रीहिः १० वह्निशिखा ११ पर्व्वतः १२ । इति कविकल्पलता ॥ सप्तसंख्याविशिष्टः । यथा,

"सप्तगोदावरे स्नात्वा नियतो नियताशनः ।
महत् पुण्यभवाप्नोति देवलोकञ्च गच्छति ॥")

**सप्तच्छदः**, पुं, (सप्त सप्तच्छदा यस्य ।) वृक्षविशेषः । छातिम् इति भाषा ॥ (यथा, रघुः । ५ । ४८ ।

"सप्तच्छदक्षीरकटुप्रवाह-
मसह्यमाघ्राय मदं तदीयम् ।
विलङ्घिताधोरणतीवयत्नाः
सेनागजेन्द्रा विमुखा बभूवुः ॥")

तत्पर्य्यायः । गुच्छपुष्पः २ युग्मपर्णः ३ मणि-च्छदः ४ बृहत्त्वक् ५ बहुपर्णः ६ शाल्मलि-पत्रकः ७ भदगन्धः ८ गन्धिपर्णः ९ । अस्य गणाः । तिक्तत्वम् । उष्णत्वम् । त्रिदोषघ्नत्वम् । दीपनत्वम् । मदगन्धित्वम् । व्रणरक्तामयकृमिं नाशित्वञ्च । इति राजनिर्घण्ढः ॥ अन्यत् सप्त-पर्णशब्दे द्रष्टव्यम् ॥

**सप्तजिह्वः**, पुं, सप्तजिह्वा काल्यादयो आहुति-ग्रसनार्था यस्य ।) अग्निः । इति त्रिकाण्डशेषः ॥ (यथा, बृहत्संहितायाम् । ७४ । १६ ।

"सुकृतज्ञतयाङ्गना गतासून्
अवगूह्य प्रविशन्ति सप्तजिह्वम् ॥")

तस्य सप्तजिह्वानां नामानि यथा, --

"काली कराली च मनोजवा च
सुलोहिता चैव सुधूम्रवर्णा ।
उग्रा प्रदीप्ता च कृपीटयोनेः
सप्तैव कीलाः कथिताश्च जिह्वाः ॥"

टीकासर्व्वस्वे तु उग्राप्रदीप्तयोः स्थाने स्फुलि-

टीकासारमुन्दरी ॥ कर्म्मविशेषे तासां नामा-
न्तराणि यथा । हिरण्या १ कनका २ रक्ता ३
कृष्णा ४ सुप्रभा ५ बहुरूपा ६ अतिरक्ता ७
एताः सात्त्विक्यो यागकर्म्मणि । काम्यकर्म्मणि
तु
पद्मरागा १ सुवर्णा २ भद्रलोहिता ३ लोहिता
४ श्वेता ५ धूमिनी ६ करालिका ७ एता
राज्यस्यः । क्रूरककर्म्मणि तु । विश्वमूर्त्तिः १
स्फुलिङ्गिनी २ धूम्रवर्णा ३ मनोजवा ४
लोहिता ५ कराला ६ काली ७ एतास्ता-
मस्यः ॥ * ॥ एतासामधिष्ठातृद्वेवता यथा, --
"अमर्त्यपितृगन्धर्व्वयक्षनागपिशाचकाः ।
राक्षसः सप्तजिह्वानामीरिता अधिदेवताः ॥"
एतासां वर्णदिङ्नियमौ यथा । गणेशविम-
र्षिण्याम् ।
"हिरण्या तप्तहेमाभा शूलपाणेर्दिशि स्थिता ।
वैदूर्य्यवर्णा कनका प्राच्यां दिशि समाश्रिता ॥
तरुणादित्यसङ्काशा रक्ता जिह्वाग्निसंस्थिता ।
कृष्णा नीलाभ्रसङ्काशा नैरृत्यां दिशि संस्थिता
सुप्रभा पद्मरागाभा वारुण्यां दिशि संस्थिता ।
अतिरक्ता जवाभासा वायव्यां दिशि संस्थिता
।
तद्बहुरूपा यथा ख्याता दक्षिणोत्तरसंस्थिता ॥"
इति तन्त्रसारः ॥

**सप्तज्वालः**, पुं, (सप्त ज्वाला यस्य ।) अग्निः ।

इति हेमचन्द्रः ॥

**सप्ततन्तुः**, पुं, (सप्तभिर्भूरादिभिर्महाव्याहृतिभि-

रग्निजिह्वाभिर्वा तन्यते इति । तन विस्तारे +
"सितनिगमीति ।" उणा० १ । ७० । इति
तुन् ।
सप्त तन्तवः संस्था यस्येति वा ।) यज्ञः ।
इत्य-
मरः ॥ (यथा, माघे । १४ । ६ ।
"सप्ततन्तुमधिगन्तुमिच्छतः
कुर्व्वनुग्रहमनुज्ञया मम ।
मूलतामुपगते खलु त्वयि
प्रापि धर्म्ममयवृक्षता मया ॥")

**सप्ततिः**, स्त्री, (सप्त दशतः परिमाणमस्य । "पंक्ति-

"ततः सप्तदशे जातः सत्यवत्यां पराशरात् ।
चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः
॥"
इति श्रीभागवते १ स्कन्धे ३ अध्यायः ॥

**सप्तदीधितिः**, पुं, सप्त दीधितयो यस्य ।) अग्निः ।

इति त्रिकाण्डशेषः ॥

**सप्तद्वीपपतिः**, पुं, (सप्तानां द्वीपानां पतिः ।)

सप्तद्वीपानामधिपतिः । यथा, --
"न मूल्यमादाद्वेश्यातः सभार्य्यऋद्धिसंयुतः
।
सप्तद्वीपपतिर्जातः सूर्य्यायुतसमप्रभः ॥"
इति तिथ्यादितत्त्वधृतमत्स्यपुराणम्॥

**सप्तद्वीपा**, स्त्री, (सप्तद्वीपा यस्याम् ।) पृथिवी । यथा,

"मनोः स्वायम्भुवस्यासन् दशपुत्त्रास्तु
तत्समाः
यैरियं पृथिवी सर्व्वा सप्तदीपा सपत्तना ।
ससमुद्रः करवती प्रतिवर्षं विवेशिता ॥"
इति मार्कण्डेयपुराणम् ॥
तेषां नामादि द्वीपशब्दे द्रष्टव्यम् ॥

**सप्तधा**, व्य, (सप्तन् + धाप् ।) सप्तप्रकारम् । यथा,

सप्तवारानुपोथैव सप्तधा संयतेन्द्रियः ।
सप्तजन्मकृतात् पापात् मुच्यते नात्र संशयः
॥"
इति तिथ्यादितत्त्वम् ॥

**सप्तधातवः**, पुं, (सप्तगुणिता धातवः ।) शरीरस्थ-

सप्तसंख्यकधातवः । तद्यथा, --
"रसास्रमांसमेदोऽस्थिमज्जानः शुक्रसंयुताः
।
शरीरस्थैर्यदा सम्यक् विज्ञेयाः सप्तधातवः
॥"
इति राजनिर्घण्टः ॥

**सप्तनाडीचक्रं**, क्ली, (सप्तनाडीनां चक्रम् ।) वृष्टि-

ज्ञानार्थं ग्रहनक्षत्राङ्कितसप्तनाडिकसर्पाकार
चक्रम् । यथा । अथ सप्तनाडीचक्रम् ।
"अथातः संप्रवक्ष्यामि यच्चक्रं सप्तनाडिकम्
।
येन विज्ञानमात्रेण वृष्टिं जानन्ति साधकाः ॥

षष्ठी नाडी च विज्ञेया बुधाख्या
जलनाडिका ॥
अश्लेषर्क्षम् ९ मघा १० विष्णु २२
र्धनिष्ठाभं २३
तथैव च ।
अमृताख्याहि सा आन्द्री सप्तमी
चन्द्रनाडिका
मध्यनाडीस्थिता सौम्या नाडी
तस्याग्रपृष्ठतः ।
सौम्ययाम्यगतं ज्ञेयं नाडिकानां त्रिकं
मिकम् ॥
क्रूरा याम्यगता ज्ञेया सौम्या
सौम्यदिशिस्थिता
मध्यनाडी च मध्यमा ग्रहरूपफलप्रदाः ॥
एकनाडीगता द्व्याद्या ग्रहाः क्रूराः शुभा
यदि
ततो नाडीफलं वाच्यं शुभं वा यदि वाशुभम्
॥
ग्रहाः कुर्य्युर्म्महावातं
गताश्चण्डाख्यनाडिकाम्।
वायुनाडीनता वायुं दहनाश्चामिदाहकाः ॥
सौम्यनाडीगता मध्या नीरस्था मेधवाहकाः
।
जलायां वृष्टिदश्चन्द्रश्चन्द्रनाडीगतास्तथा
॥
एकोऽपि तत् फलं दत्ते स्वनाडीसंस्थितो
ग्रहः
भूसुतः सर्व्व नाडीषु दत्ते नाडीसमं फलम्
॥
प्रावृट्काले तु संप्राप्ते रौद्रऋक्षगते रवौ ।
नाडीवेधसमायोगे जलयोगं वदाम्यहम् ॥
यत्र नाडीस्यितश्चन्द्रस्तत्रस्युः णेचरा यदि
।
क्रूराः सौम्या विमिश्राश्च तद्दिने वृष्टिरुत्तमा
॥
एकऋक्षसमायोगो जायते यादे खेवरैः ।
तत्काले च महावृष्टिर्यावदस्यांशके शशी ॥
केवलैः सौम्यैः पापैर्व्वा ग्रहैर्व्विद्धो यदा
शशी ।
तदा तु तुच्छपानीयं दुर्द्दिनञ्च भवेध्रुवम् ॥

विंशतिस्त्रिंशदिति ।” ५ । १ । ५९ । इति निपा-
तनात् साधुः ।) सङ्ख्याविशेषः । सत्तोर इति
भाषा । यथा, --
“नवतिर्योजनानाञ्च सहस्राणाञ्च सप्ततिः ।
यावद्घटिकमात्रेण तावच्चलति भास्करः ॥”
इत्यादित्यहृदयम् ॥

**सप्ततितमः**, त्रि, (सप्तति “तस्य पूरणे डट् ।”
५ । २ । ४८ । इति डट् ।
“षष्ट्यादेश्चासंख्यादेः ।”
५ । २ । ५८ । इति डटस्तमडागमः ।) सप्ततेः
पूरणः । सप्ततिशब्दात् पूरणार्थे मयट्प्रत्यय-
निष्पन्नः । इति मुग्धबोधव्याकरणम् ॥

**सप्तदश**, [न्] त्रि, (सप्ताधिका दश । सङ्ख्या-
विशेषः । सतरो इति भाषा । तत्संख्या-
विशिष्टः । यथा । एष वै सप्तदश प्रजापति-
यज्ञे यज्ञे अन्वायत्तः । इति मलमासतत्त्वम् ॥
बहुवचनान्तोऽयम् ॥

**सप्तदशः**, त्रि, (सप्तदशन् + “तस्य पूरणे डट् ।”
५ । २ । ४८ । इति डट् ।) सप्तदशानां पूरणः
। यथा,

कृत्तिकादीनि ऋक्षाणि साभिजिद्वै क्रमेण च ।
सप्तनाडीव्यधस्तत्र कर्त्तव्यः पन्नगाकृतिः ॥
ताराचतुष्कवेधेन नाडिकैका प्रजायते ।
तासां नामान्यहं वक्ष्ये तथा चैव फलानि ह
॥
कृत्तिका च ३ विशाखा च १६ मैत्राख्या १७
भरणी २ तथा ।
ऊद्‌र्ध्वाद्या शनिनाडी
स्याच्चण्डनाड्यभिधा मता ॥
रोहिणी ४ स्वाती १५ ज्येष्ठा १८ श्वि १ द्बितीया
नाडिका मता ।
आदित्यप्रभवा नाडी वायुनाडी तथैव च ॥
सौम्यम् ५ चित्रा १४ तथा मूलम् १९ पौष्ण-
र्क्षञ्च २७ चतुर्थकम् ।
तृतीयाङ्गारका नाडी दहनाख्या च सम्मता
॥
रौद्रम् ६ हस्तम् १३ तथा पूर्व्वाषाढा २०
भाद्रपदोत्तरा २६ ।
चतुर्थी जीवना नाडी सौम्यनाडी प्रकीर्त्तिता
पुनर्व्वसू-७ त्तरफल्गुन्यु-१२ त्तराषाढ-२१
तारकाः ।
पूर्व्वभाद्रा च २५ शुक्राख्या पञ्चमी नीर-
नाडिकाः ।
पुष्यर्क्षम् ८ फल्गुनी पूर्व्वा ११ अभिजित् ०
शततारकाः २४ ।

यस्य ग्रहस्य नाडीस्थश्चन्द्रगास्तद्ग्रहेण च
।
दृष्टो युक्तः करोत्यम्भो यदि क्षीणो न जायते
॥
स्त्रियौ सितासितौ चैव सौरिसौम्यौ
नपुंसकौ ।
पुरुषाः पुरुषैर्व्वायुः क्लीवौ तु बुधकारुणौ
॥
स्त्रीपुरुषसमायोगे वृष्टिस्तु प्रबला भवेत् ॥
पीयूषनाडीगश्चन्द्रस्तत्र खेटाः शुभाशुभाः
॥
द्विश्चतुःपञ्च पानीयं तिनान्येकत्रिसप्तकम् ।
एवं जलाख्यनाडीस्थे चन्द्रमिश्रग्रहान्विते
॥
दिनार्द्धं दिवसं पञ्च दिनानि जायते जलम् ।
नीरनाडीस्थिते चन्द्रे अत्रस्थैः पूर्व्ववद्ग्रहैः
॥
यामं दिनार्द्धकं त्रीणि दिनानि जायते जलम्
।
अमृतादि त्रिनाडीषु यदि स्युः सर्व्वखेचराः
॥
तत्र वृष्टिः क्रमाज्ज्ञेया धृत्यर्करसवासरान् ।
सौभ्यनाडीगताः सर्व्वे वृष्टिदास्ते दिनत्रयम्
॥
शेषानाड्यां महाराज दुष्टवृष्टिप्रदा ग्रहाः ।
निर्ज्जला जलदा नाडी भवेद्योगी
शुभाधिकः ॥
क्रूराधिकसमायोगे जलदाश्चापि निर्ज्जलाः
।
याम्यनाडीगताः क्रूरा अनावृष्टिप्रसूचकाः ॥
शुभयुक्ता जलाशस्थाश्चातिवृष्टिःशुभा
ग्रहाः ।
एकनाडीसमायुक्तौ चन्द्रमोधरणीसुतौ ॥
यदि तत्र भवेज्जीवस्तदा वारिमयी मही ।
बुधशुक्रौ यदैकत्र गुरुणा च समन्वितौ ॥
चन्द्रयोगे तदा काले जायते वृष्टिरुत्तमा ।
जलयोगगतौ स्यातां यदा चन्द्रसितौ ग्रहौ ॥
क्रूरदृष्टौ युतौ वापि तदा मेघोऽल्पवृष्टिदः ।
उदयास्तगते मार्गे वक्रयुक्ते च संक्रमौ ॥
जलनाडीगतास्ते तु महावृष्टिप्रदा ग्रहाः ॥”
इति स्वरोदये सप्तनाडीचक्रम् ॥

**तच्चक्ररूपं यथा ।**
सप्तनाडीचक्रं

**सप्तनामा**, स्त्री, (सप्त नामानि यस्याः । “डाबुभा-
भ्यामन्यतरस्याम् ।” ४ । १ । १३ । इति
डाप् ।)
आदित्यभक्ता । इति राजनिर्घण्टः ॥

**सप्तपत्रः**, पुं, (सप्त सत पत्राणि यस्य ।) मुद्गर-
वृक्षः । इति राजनिर्घण्टः ॥

**सप्तपदी**, स्त्री, सप्तानां पदानां समाहारः ।
(“द्विगोः ।” ४ । १ । २१ । इति ङीप् ।)
इति
व्याकरणम् ॥ विवाहाङ्गसप्तपदीगमनं यथा
।
ततो जामाता प्रागुदीचीं गत्वा बधूं सप्तमि-
र्म्मन्त्रैः सप्तमण्डलिकासु सप्तपदानि नयेत्
।
बवृश्च दक्षिणपादं नीत्वा पश्चाद्वामपादं
मण्ड-
लिकां नयत् जामाता च बधूं ब्रूयात् ।
वामेन
पादेन दक्षिणं पादमाक्रमयेति । सप्तानां
मन्त्राणामृष्यादयः साधारणाः । प्रजापति-
रृषिरेकपाद्विराट् छन्दो विष्णुर्द्देवता पादा-
क्रामणे विनियोगः । ॐ एकमिषे
विष्णुस्त्वा
नयतु । द्वे ऊर्ज्जे विष्णुस्त्वा नयतु ।
त्रीणिंव्रताय
विष्णुस्त्वा नयतु । चत्वारि मायो भवाय
विष्णुस्त्वा
नयतु । पञ्चपशुभ्यो विष्णुस्त्वा नयतु ।
षड्-
रायस्पोषाय विष्णुस्त्वा नयतु ।
सप्तसप्तभ्यो
होत्राभ्यो विष्णुस्त्वा नयतु ॥ ततः सप्तमं
पदं
गतां बधूं पतिराशास्ते । प्रजापतिरृषिर्म्मा-
मकीपंक्तिच्छन्दः कन्या देवता
पादाक्रामणा-
नन्तरमाशासने विनियोगः । सखा
सप्तपदीभव
सख्यन्ते गमेयं सख्यन्ते मा योषा
सख्यन्ते
मायोष्ठ्याः । इति सप्तपदीगमनम् । इति
भव-
शब्दरत्नावली ॥ गुत्सपुष्पः १३ शक्तिपर्णः १४
सुपर्णकः १५ । इति जटाधरः ॥ बृहत्वक् १६
इति रत्नमाला ॥ अस्य गुणाः ।
“सप्तपणो ब्रह्मश्लेष्मवातकुष्ठास्रजन्तुजित् ।
दीपनः श्वासगुल्मघ्नः स्निग्धोष्णस्तुवरः स्मृतः
॥”
अन्यत् सप्तच्छदशब्दे द्रष्टव्यम् ॥

**सप्तपर्णी**, स्त्री, (सप्त सप्त पर्णान्यस्याः । ङीष् ।)
लज्जालुलता । इति रत्नमालाराजनिर्घण्टौ ॥

**सप्तपातालं**, क्ली, (सप्तानां पातालानां समा-
हारः ।) सप्तसंख्यकाधोभुवनम् । यथा, --
“आदित्यरश्मितो देवो रुद्ररूपी जनार्द्दनः ।
निःसृत्य प्रथमं यातः पातालतलमन्ततः ॥
सप्तपातालसंस्थांस्तु नागगन्धर्व्वराक्षसान् ।
देवानृषींश्च शेषांश्च जघान वरशूलधृक् ॥”
इति कालिकापुराणे २४ अध्यायः ॥
तन्नामानि यथाह भरतः ।
“अतलं वितलञ्चैव नितलञ्च गभस्तिमत् ।
महाख्यं सुतलञ्चाग्रं पातालं सप्तमं विदुः ॥”

**सप्तपुत्त्रसूः**, स्त्री (सप्त पुत्त्रान् सूते इति । सू +
क्विप् ।) सप्तपुत्त्रप्रसूता । तत्पर्य्यायः । सुत-
वस्करा २ । इति त्रिकाण्डशेषः ॥

**सप्तभद्रः**, पुं, (सप्तसु स्थानेषु भद्रमस्य ।) शिरीष-
वृक्षः । इति शब्दचन्द्रिका ॥

**सप्तमः**, त्रि, (सप्तन् + “तस्य पूरणे डट् ।” ५ ।
२ । ४८ । इति डट् । “नान्तादसंख्यादेर्मट् ।”
५ । २ । ४९ । इति डटो मडागमः ।) सप्तानां
पूरणः । सातै इत्यादि भाषा । यथा, --
“लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥”
इति शुद्धितत्त्वम् ॥

**सप्तमी**, स्त्री, (सप्तन् + टित्त्वात् ङीप् ।) तिथि-
विशेषः । चन्द्रस्य सप्तमकलाक्रिया । तत्र शुक्ल-
पक्षे अमृतपूर्त्यवच्छिन्नसप्तमकलाक्रिया । कृष्ण
पक्षे तु अमृतह्रासानुकूलसप्तमकलाक्रियेति
विशेषः । पञ्चिकायां तस्या अङ्कः शुक्लपक्षे ७
कृष्णपक्षे २२ ॥ * ॥ तत्र जातफलम् ।
“कन्याप्रजो वैरीकुलेभसिंहो
विशालनेत्रः प्रथितप्रभावः ।
अथ सप्तमी । सा च षष्ठीयुता ग्राह्या युग्मात् ।
पैठीनसिवचनाच्च । यथा, --
“पञ्चमी सप्तमी चैव दशमी च त्रयोदशी ।
प्रतिपन्नवमी चैव कर्त्तव्या सांमुखी तिथिः ॥”
सांमुख्यमुक्तं स्कान्दे ।
“सांमुख्यं नाम सायाह्नव्यापिनी दृश्यते यदा ।”
अतएव परदिने त्रिसन्ध्यकालाव्यापित्वेषष्ठी-
युक्तसप्तम्यामुपवासमाह भविष्यपुराणम् ।
“षष्ठीसमेता कर्त्तव्या सप्तमी नाष्टमीयुता ।
पतङ्गोपासनायेह षष्ठ्यामाहुरुपोषणम् ॥”
यथा उपोषणे तथा कर्म्मान्तरे । तथा ।
“षष्ठ्या युता सप्तमी च कर्त्तव्या सर्वदा तिथिः ।
षष्ठी च सप्तमी यत्र तत्र सन्निहितो हरिः ॥”
इति स्कन्दपुराणात् ॥ तथा ।
“शुक्लपक्षस्य सप्तम्यां सूर्य्यवारो यदा भवेत् ।
सप्तमी विजया नाम तत्र दत्तं महाफलम् ॥”
भविष्ये ।
“शालितण्डुलप्रस्थस्य कुर्य्यादन्नं सुसंस्कृतम् ।
सूर्य्याय चरुकं दत्त्वा सप्तम्याञ्च विशेषतः ॥
यावन्तस्तण्डुलास्तस्मिन्नैवेद्ये परिसंख्यया ।
तावद्वर्षसहस्राणि सूर्य्यलोके महीयते ॥”
गोपथब्राह्मणम् ।
“द्वात्रिंशत्पलिकं प्रस्थमुक्तं स्वयमथर्व्वणा ॥”
ज्योतिषे ।
“पलन्तु लौकिकैर्म्मानैः साष्टरत्तिद्विमाषकम् ।
तोलकत्रितयं ज्ञेयं ज्योतिर्ज्ञैः स्मृतिसम्मतम् ॥”
तेन चतूरत्तिकाधिकमाषपञ्चकाधिकषडधिक
शततोलकमिताः प्रस्थतण्डुलाः । इति । एव-
ञ्चैतन्न्यू नाधिकयोः फलतारतम्यं बोध्यम् । एवं
देवतान्तरेऽपि तत्तल्लोकमहितत्वफलेन कल्प-
यितुं युक्तम् । अतएव शिवेऽप्येवं वक्ष्यते ॥ * ॥
वराहपुराणे ।
“अथापरं महाराज व्रतमारोम्यसंज्ञितम् ।
कथयामि परं पुण्यं सर्व्वपापप्रणाशनम् ॥
तस्यैव माघमासस्य सप्तम्यां समुपोषितः ।
पूजयेद्भास्करं देवं विष्णुरूपं सनातनम् ॥
आदित्य भास्कर रवे भानो सूर्य्य दिवाकर ।
प्रभाकरेति संपूज्यो देवः सर्व्वेश्वरो रविः ॥
षष्ठ्याञ्चैककृताहारः सप्तम्यां समुपोषितः ।
अष्टम्याञ्चैव भुञ्जीत एष एव विधिः स्मृतः ॥
अनेन वत्सरं पूर्णं विधिना योऽर्च्चयेद्रविम् ।

देवभट्टः ॥

**सप्तपर्णं**, क्ली, (सप्तानां द्राक्षादीनां पर्णमिव यत्र ।)

मिष्टान्नविशेषः । यथा, --
“द्राक्षादाडि मखर्जूरमृजिताम्रं सशर्करम् ।
लाजचूर्णं समध्वाज्यं सप्तपर्णमुदाहृतम् ॥”
इति शब्दचन्द्रिका ॥

**सप्तपर्णः**, पुं, (सप्त सप्त पर्णानि यस्य ।) वृक्ष-

विशेषः । छातिम् इति भाषा ॥ (यथा, रघुः
।
४ । २३ ।
“प्रसवैः सप्तपर्णानां मदगन्धिभिराहताः ।
असूययेव तन्नागाः सप्तधैव प्रसुस्रुवुः ॥”)
तत्पर्य्यायः । विशालत्वक् २ शारदी ३
विषम-
च्छदः ४ । इत्यमरः ॥ शारदः ५ देववृक्षः
६
दानगन्धिः ७ शिरोरुजा ८ ग्रहनाशः ९
श्रुति-
पर्णः १० गृहाशी ११ ग्रहनाशनः १२ ।
इति

देवद्विजार्च्चारसिको महात्मा
स्यात् सप्तमीजः पितृवित्तहर्त्ता ॥”
इति कोष्ठीपदीपः ॥ * ॥

तस्यारोग्यं धनं धान्यमिह जन्मनि जायते ॥
परत्र च शुभं स्थानं यद्गत्वा न निवर्त्तते ।"
सप्तम्यां समुपोषित इति आदिकर्म्मणि क्तः ।
तेन सप्तम्यां समुपवस्तुमारब्धवानित्यर्थः ।
ततश्च
प्रातः सप्तम्यामेवोपवाससङ्कल्पः । रविश्च
विष्णु-
रूपतया पूजाकाले ध्येयः । अभिलापे तु
तत्तिथावित्युक्त्वा आरभ्येति
ऐहिकारोग्यधन-
धान्यपारलौकिकशुभस्थानलाभकामः
संवत्सरं
यावदारोग्यव्रतमिति विशेषः । ततः प्रभृति-
सप्तम्यामुपवासं कुर्व्वन् ।
"आदित्य भास्कर रवे भानो सूर्य्य दिवाकर ।
प्रभाकर नमस्तुभ्यं अस्माद्रोगाद्विमोचय ॥"
इति मन्त्रेण पूजयेत् । अत्र षष्ठ्यादिषु
तत्तत्-
कर्म्मविधानात् षष्ठीसमेतेत्यस्य न विषयः ।
कालिकापुराणे भक्तं प्रति सूर्य्यवाक्यम् ।
"अदृष्ट्वा मां न भुञ्जीत विण्मूत्रं नैव दर्शयेत्
॥"
तथा ।
"मदर्च्चाधृतनिर्म्माल्यं शरीरे न तु धारयेत्
॥"
अर्च्चा प्रतिमा ॥ * ॥ अथ विधानसप्तमी ।
कृत्यचिन्तामणौ ।
"अर्काग्रं शुचि गोमयं सुमरिचं तोयं
फलञ्चाश्नुते
मूलं नक्तमुपोषणञ्च विधिवत् कृत्वैकभक्तं
नरः ।
क्षीरं वाय्वशनं घृताशनमिति प्रोक्तान्यमूनि
क्रमात्
कृत्वा द्वादश सप्तमीर्दिनकृतः प्राप्नोत्यभीष्टं
फलम् ॥"
अत्र चार्काग्रादीतरभोजननिवृत्तिरवसीयते।
तपस्त्वात् । तथा च मत्स्यपुराणम् ।
"तपोभिः प्राप्यतेऽभीष्टं नासाध्यं हि
तपस्यतः ।
दुर्भगत्वं वृथा लोको वहते सति साधने ॥"
तपसः क्लेशस्वभावत्वं तत्रैवोक्तम् ।
"उमेऽतिचपला पुत्रि न क्षमं तावकं वपुः ।

"प्रारब्धे तु व्रते पश्चात् सम्प्राप्ते त्वधिमासके ।
पूर्व्वमानेन तं त्यक्त्वा कार्य्यं द्वादशमासिकम् ॥"
पूर्व्वमानेन मलिम्लुचशून्याब्दमानेन । तं मल-
मासम् । द्वादशमासेकं द्वादशमासेष्वेव कार्य्यं
न मलमास इत्यर्थः । यत्तु ।
"मासे मलिम्लुचेऽप्येवं यजेद्देवीं सशङ्कराम् ।
किन्तु नोद्यापनं कार्य्यमित्याह भगवान्
शिवः ॥"
हति विष्णुरहस्यवचनम् ॥
तन्मासविशेषानङ्कितमासमात्रकत्तव्यामावास्या-
दिव्रतकर्त्तव्यतापरम् । उद्यापनं प्रतिष्ठा ।
एवमारम्भोऽपि निषिद्धः । गार्ग्यः ।
"अस्तं गते गुरौ शुक्रे बाले वृद्धे मलिम्लु चे ।
उपायनमुपारम्भं व्रतानां नैव कारयेत् ॥"
उपायनं प्रतिष्ठा । उपारम्भमारम्भम् । एनच्च
कालाशुद्धिमात्रपरं तत्तन्मात्रविधिकल्पने गौर-
वात् ॥ * ॥ भविष्ये ।
"भाद्रे मासि सिते पक्षे सप्तम्यां नियमेन या ।
स्नात्वा शिवं लेखयित्वा मण्डले च सहाम्बिकम्
पूजयेच्च तदा तस्या दुष्प्रापं नैव विद्यते ॥"
इदं कुक्कुटीव्रतत्वेन ख्यातम् ॥ * ॥ भविष्ये ।
"सूर्य्यग्रहणतुल्या हि शुक्ला माघस्य सप्तमी ।
अरुणोदयवेलायां तस्यां स्नानं महाफलम् ॥
माघे मासि सिते पक्षे सप्तमी कोटिभास्करा ।
दद्यात् स्नानार्घ्य दानाभ्यामायुरारोग्यसम्पदः ॥
अरुणोदयवेलायां शुक्ला माघस्य सप्तमी ।
गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समा ॥"
कोटिभास्करा कोटिसप्तमीतुल्या । सूर्य्यग्रहण-
फलं स्नानजं सन्निहिते बुद्धिरन्तरङ्गेति न्यायात्
तेन बहुशतसूर्य्यग्रयणकालीनगङ्गास्नानजन्य-
फलसमफलप्राप्तिः फलमत्र ज्ञेयम् । अत्र बहु-
शतसूर्य्यग्रहाणां प्रत्येकाधिकरणतासंसर्गेणान्व-
यात् कालानां स्नानानां तत्फलानामपि बहु-
शतत्वं लभ्यते अतो नाप्रसिद्धिः । पूर्णसप्तम्यां
पूर्व्व परयोर्यत्रारुणोदयकाले सप्तमी पूर्व्व दिने
तत्काले स्नानम् ।
"चतस्रो घटिका प्रातररुणोदय उच्यते ।
यतीनां स्नानकालोऽयं गङ्गाम्भःसदृशः स्मृतः ॥
त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम् ।
नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते ॥"
इति काललाधवीयधृतब्रह्मवैवर्त्तीयेन पूर्व्वस्य
तत्कालस्य पूर्व्वतिथिसम्बन्धिदिनकर्त्तव्यकर्म्माङ्ग
त्वेन इतरस्य चेतराङ्गत्वेनाभिधानात् अतएव

वाक्यत्वात् ॥ * ॥ ये तु सूर्य्योदयात् प्रागपि
प्रातःस्नानविधानात् तत्रैव माघसप्तम्याख्य-
गुणफलविधिर्लाघवादित्याहुस्तच्चिन्त्यम् ।
प्रक-
रणान्यत्वे प्रयोजनान्यत्वं इति जैमिनिसूत्रेण
प्रकरणभेदे गुणविध्यसिद्धेः । अतएव कल्पतरु-
रत्नाकरयोः ।
"य इच्छेद्विपुलान् भोगान् चन्द्रसूर्य्यग्रहोप-
मान् ।
प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्-
गुनौ ॥"
इति विष्णुस्मृतौ नित्यस्नानप्रकरणात्
प्रकरणा-
न्तरास्नानात् प्रकरणान्तराधिकरणन्यायेन
काम्यस्नानान्तरमिदमित्युक्तं न तु गुणफल-
विधिः । किन्तु काम्यकरणे प्रसङ्गान्नित्यसिद्धि-
रिति । अत्र माघमासनिमित्तकमाघसप्तमी-
निमित्तककाम्यस्नानयोः प्रातर्व्विधानात् नैमि-
त्तिकत्वेन प्रायश्चित्तवत् सकृदनुष्ठानम् ।
"प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः ।
तदङ्गस्याक्रियायान्तु नावृत्तिर्न च तत्क्रिया ॥"
इति कात्यायनवचनात् ॥
"न स्नानगाचरेद्भुक्त्वा नातुरो न महानिशि ।
न वासोभिः सहाजस्रं नाविज्ञाते जलाशये ॥"
इति मनुवचनेनैकदाजस्रस्नाननिषेधाच्च ।
"धर्म्मविन्नाचरेत् स्नानमाह्निकञ्च पुनःपुनः ।"
इति मनुवचनाच्च ।
अतएव नान्दीमुखप्रकरणशेषे प्रधानानामपि
काम्यानां तत्तद्देशकालविहितानां तन्त्रेणैव
सिद्धिरिति श्राद्धचिन्तामणिः । निष्कामविष्णु-
प्रीतिकामयोः सुतरां सकृदनुष्ठानं गुणतार-
तम्यात् फलतारतम्यं इति न्यायेन फलं
बोध्यम् । तत्तु इक्षुक्षीरगुडादिमाधुर्य्यभेदव-
न्निर्द्देष्टु मशक्यम् ।
"पक्षान्तरेऽपि कन्यास्थे रवौ श्राद्धं प्रशस्यते ।
कन्यागते पञ्चमे तु विशेषेणैव कारयेत् ॥"
इति हेमाद्रिधृतादित्यपुराणोक्तवत् । एतद्व-
चनप्रागर्द्धं कार्त्तिकमलमासाब्दविषयम् ।
"देशकालाश्रमक्षेत्रद्रव्यदातृमनोगुणाः ।
सुकृशस्यासि दानस्य फलातिशयहेतवः ॥"
इति ब्रह्मपुराणोक्तवच्च ।
तीर्थभेदे त्वेकदापि नानास्नानम् ।
"विषुवद्दिवसे प्राप्ते पञ्चतीर्थी विधानतः ।"

सोढुं क्लेशस्वभावस्य तपसः सौम्यदर्शने ॥"

व्यक्तमुक्तं यथा, --

"अर्कपत्राङ्कुरमात्रमन्तरीक्षगृहीतकम्।
कपिलाविड्यवमात्रं मञ्जुलं मरिचं जलम् ॥
कदलीफलमध्यन्तु कणामात्रमपक्वकम्।
कुशमूलं यवमात्रं स्वच्छायाद्विगुणे क्षणे ॥
भक्ष्यं मितौदनं नक्तं शुद्धोपवसनं तथा।
एकभक्तं मयूराण्डप्रमाणं भोजनं मतम् ॥
अर्द्धप्रसृतिभात्रन्तु कपिलादुग्धभक्षणम्।
स्नात्वा सम्पूज्य मार्त्तण्डं प्राङ्मुखो वायुमाशयेत् ॥
वृतं स्वल्पं पौषमासे माघादब्दं समाचरेत्।
ब्राह्मणान् भोजयेद्भक्त्या गुडक्षीरनिरामिषैः ॥
विप्राय दक्षिणा देया विभवस्यानुरूपतः।
अष्टम्यां पारणं कुर्य्यात् कट्वम्लरहितेन च ॥
मुद्गमाषतिलादीनि घृतञ्चैव विविर्ज्जयेत्।
एकसिद्धं भक्ष्यमुक्तमर्कतन्त्रानुसारतः ॥" * ॥

एतद्व्रतस्य माधादिभासविशेषविहितकर्म्मत्वेन मलमासेतरकर्त्तव्यत्वं आह वशिष्ठलिङ्गपुराणम्।

दक्षेण तत्कालमारभ्याह्निककृत्यमभिहितम्। अत्रारुणोदयकाले मुहूर्त्तान्यू नतिथिलाभ एव स्नानम्।

"व्रतोपवासस्नानादौ घटिकैका यदा भवेत्।
उदये सा तिथिर्ग्राह्या श्राद्धादावस्तगामिनी ॥"

इति विष्णुधर्म्मोत्तरात्।

प्रत्र घटिका मुहूर्त्तं श्राद्धयोग्यकालानुरोधात् इति वक्ष्यते। ब्रह्मवैवर्त्तवचने घटिका दण्डरूपा परवचने नाडीनामाद्यन्तचतुष्टयमित्येक-

इति ब्रह्मपुराणादिवचनात् तीर्थभेदे तन्त्रप्रसङ्गयोरसम्भवाच्च। अतएव गङ्गावाक्यावलीश्राद्धचिन्तामेण्योः। यत्तु प्रयागे त्र्यहस्नानक्रोडीकृतेऽपि माघसप्तमीस्नानादावसाधारणसङ्कल्पेन पुनस्तथैव प्रातःस्नानाचरणं तदयुक्तम्। तदा सकृत्स्नानस्यैव विहितत्वात् अन्यथा तत्त्र्यहफलकामनायां तदानन्त्यापत्तेरित्युक्तम्। * । स्नाने पारपाटीमाह कृत्यकल्पलतायां विष्णुः। सप्तवदरपत्राणि सप्तार्कपत्राणि च शिरसि निधाय।

"यद्यज्जन्मकृतं पापं मया सप्तसु जन्मसु।

तन्मे रोकञ्च शोकञ्च माकरी हन्तु सप्तमी ॥”
इत्यच्चार्य्य स्नायादिति शेषः । रोकं छिद्रम् ।
तिथिकृत्यस्य
पौर्णमास्यन्तमासाङ्कत्वान्माक-
रीति पदं मकरार्कारब्धचान्द्रमासीयतिथिपरम्
“तिथिकृत्ये च कृष्णादिं व्रते शुक्लादिमेव च ।
विवाहादौ च सौरादिं मासं कृत्ये विनिर्द्दि-
शेत् ॥”
इति ब्रह्मपुराणात् ॥
मन्वन्तरादित्वेन तथा युक्तत्वाच्च । यथा,
मत्स्य-
पुराणे ।
“यस्मान्मन्वन्तरादौ तु रथमापुर्द्दिवाकराः ।
माघमासस्य सप्तम्यां तस्मात् सा रथसप्तमी ।
अरुणोदयवेलायां तस्यां स्नानं महाफलम् ॥”
अतएव नारसिंहे रथ्याख्यायामित्युक्तम् ।
यथा,
“महानवम्यां द्वादश्यां भरण्यामपि चैव हि ।
तथाक्षयतृतीयायां शिष्यान्नाध्यापयेद्बुधः ।
माघमासे तु सप्तम्यां रथ्याख्यायान्तु वर्जयेत्
॥”
द्वादश्यां शयनोत्थानद्वादश्याम् । भरण्यां शक्र-
ध्वजपातभरण्याम् । इति कल्पतरुः । अत्र
महानवम्यादिसाहचर्य्याद्गौणचान्द्रत्वंप्रती-
यते । अतएव चतुर्द्द शमन्वन्तरादिगणने
क्वापि
न राश्युल्लेखः । यथा, भविष्यमात्स्ययोः ।
“अश्वयुक्शुक्लनवमी द्वादशी कार्त्तिकी तथा
।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥
फाल्गुनस्याप्यमावास्यापौषस्यैकादशी तथा
।
आषाढस्यापि दशमी तथा माघस्य सप्तमी ॥
श्रावणस्याष्टमी कृष्णा तथाषाढस्य पूर्णिमा ।
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी
सिता ।
मन्वन्तरादयस्त्वेता दत्तस्याक्षयकारिकाः ॥”
अत्रामावास्याष्टमीव्यतिरिक्ताःशुक्लाः । पुनः
पुनस्तथापदोपादानात् उपक्रमोपसंहारयोः
शुक्लत्वकीर्त्तनाच्च । अत्र कामधेनौ तृतीया
चैव माघस्येति । कल्पतरौ तु तृतीया चैत्र-
मासस्येति लिखितम् । अत्र पाठद्वैधे श्रीपति-
रत्नमालायाम् । अश्वयुजि शुक्लनवमी द्वाद-

सप्तव्याहृतिके देवि नमस्ते रविमण्डले ॥”
प्रणाममन्त्रस्तु ।
“सप्तसप्तीवह प्रीत सप्तलोकप्रदीपन ।
सप्तम्यां हि नमस्तुभ्यं नमोऽनन्ताय वेधसे ॥”
सप्तिरश्वः । इति तिथ्यादितत्त्वम् ॥ * ॥ सप्तमी-
व्रतविशेषा यथा, --
ब्रह्मोवाच ।
“भगवत् भवसंसारसागरोत्तारकारकम् ।
किञ्चिद्व्रतं समाचक्ष्व स्वर्गारोग्यसुखप्रदम् ॥
श्रीभगवान् उवाच ।
शौरधर्म्मं प्रवक्ष्यामि नाम्ना कल्याणसप्तमीम् ।
विशोकसप्तमीं तद्वत् फलदां पापनाशिनीम् ॥
शर्करासप्तमीं पुण्यां तथा कमलसप्तमीम् ।
मन्दारसप्तमीं पुण्यां तथैव शुभसप्तमीम् ॥
सर्व्वाः सर्व्वफलाः प्रोक्ताः सर्व्वदेवर्षिपूजिताः ।
विधानमासां वक्ष्यामि यथावदनुपूर्व्वशः ॥
यदा तु शुक्लसप्तम्यामादित्यस्य दिनं भवेत् ।
सा तु कल्याणिनी नाम विजया तु निगद्यते ॥”
आसां इतिकर्त्तव्यताकालौ च मत्स्यपुराणे
६९ अध्यायावधि ७५ अध्यायपर्य्यन्तं द्रष्टव्यौ ॥
* ॥
सा सूर्य्यमूर्त्तिप्रकाशिका तिथिः । यथा, --
“एवमुक्तस्तदा देवैः सौम्यां मूर्त्तिमथाकरोत् ।
प्रकाशत्वं जगामाशु देवतानां महाप्रभः ॥
एतत् सर्व्वं सुराणान्तु दहनं शामितं पुरा ।
सप्तम्यां खलु सूर्य्येण मूर्त्तिञ्च कृतवान् भूवि ॥”
इति वाराहे सुर्य्योत्पत्तिनामाध्यायः ॥

**सप्तरक्तं**, क्ली, (सप्तानां रक्तानां तद्वर्णानां समा-

हारः ।) शरीरस्य रक्तवर्णसप्तावयवाः । ते च
हस्तपादतलनेत्रान्तरतालुकाधरजिह्वानखाः ।
यथा, सामुद्रके ।
“पाणिपादतलौ रक्तौ नेत्रान्तरनखानि च ।
तालुकाधरजिह्वाश्च सप्तरक्तं प्रशस्यते ॥”

**सप्तर्षयः**, पुं, भूम्नि, (सप्त ऋषयः ।) सप्तसंख्यकर्षयः

तेषां नामानि यथा । मरीचिः १ अत्रिः २
अङ्गिराः ३ पुलस्त्यः ४ पुलहः ५ क्रतुः ६ वशिष्ठः
७ ।
इत्यमरः ॥ अपि च ।
“सप्तर्षिमण्डलं तस्माद्दृश्यते सर्व्वतोपरि ।
तत्र सप्तर्षयः सन्ति विनियुक्ताः प्रजासृजा ॥
मरीचिरत्निः पुलहः पुलस्त्यः क्रतुरङ्गिराः ।
वशिष्ठश्च महाभाग ब्रह्मणो मानसाः सुताः ॥

**सप्तशती**, स्त्री, सप्तानां शतानां समाहारा । इति

व्याकरणम् ॥ (“द्विगोः ।” ४ । १ । २१ । इति
ङीप् ।) सप्तशतिका । सप्तशतश्लोकात्मद्यव्वी-
माहात्म्यम् । चण्डीति ख्यातम् । यथा, --
अर्गलं कीलकञ्चादौ पठित्वा कवचं ततः ।
जपेत् सप्तशतीं चण्डीं क्रम एव शिवोदितः ॥”
इत्यर्गलस्तोत्रम् ॥
तथा च नागोजीभट्टः ।
“तत्राद्ये चरिताध्याये श्लोका अशीतिरुत्तमाः
अथ मध्ये चरित्रे तु पञ्चाष्टैकसुसंख्यकाः ॥
त्रयोऽध्यायाश्चतुःसप्तचतुर्व्वेदखवेदकाः ।
अथोत्तरचरित्रे तु षट्षडग्निश्लोकभाक् ।
अग्नीसोमाध्यायवती गीता सप्तशती स्मृता ॥”

**सप्तशलाकः**, पुं, (सप्त शलाकाः तद्वत्रेखा यत्र ।)

विवाहस्य शुभाशुभदिनज्ञानार्थं
तिर्य्यगूद्र्ध्वसप्त-
रेखाविशिष्टचक्रविशेषः । यथा, --
“कृत्तिकादिचतुःसप्तरेस्नाराशौ परिभ्रमन् ।
ग्रहश्चेदेकरेखास्थो वेधः सप्तशलाकजः ॥
सप्त सप्त विलिखेत् प्ररेखिका-
स्तिर्य्यगूद्र्ध्वमथ कृत्तिकादिकम् ।
लेखयेदभिजिता समन्वितं
चैकरेखगखगेन विध्यते ॥
वैश्यस्य चतुर्थेऽंशे श्रवणादौ लिप्तिकाचतुष्के च
अभिजित् तस्थे खचरे विज्ञेया रोहिणीविद्धा ॥”
लिप्तिका दण्डः ।
“यस्याः शशी सप्तशलाकभिन्नः
पापैरपापैरथवा विवाहे ।
रक्तांशुकेनैव तु रोदमाना
श्मशानभूमिं प्रमदा प्रयाति ॥”
इति सप्तशलाकवेधः । इति ज्योतिस्तत्त्वम् ॥
तच्चक्ररूपं यथा ।
२ -- १०
१ -- ११
२७ -- १२
२६ -- १३
२५ -- १४
२४ -- १५
२३ -- १६
३ -- २२
४ -- ०
५ -- २१
६ -- २०

श्यूर्ज्जे मधौ तृतीया चेति पाठाच्चैत्रतृतीयैव ग्राह्या । श्रीदत्तोऽप्येवम् ।
माघसप्तम्याश्चान्द्रत्वं
सौरागमेऽपि ।
"अर्कपत्रैः सवदरैर्दूर्व्वाक्षतसचन्दनैः ।
अष्टाङ्गविधिना चार्घ्यं दद्यादादित्यतुष्टये ॥
माघेऽथ फाल्गुने वापि भवेद्वै माघसप्तमी ।
माकरीति च यत् प्रोक्तं तत् प्रायोवृत्तिदर्श-
नात् ॥"
अटाङ्गविधिना ।
"योऽष्टाङ्गमर्घ्य मापूर्य्य भानोर्मूर्द्ध्नि निवेदयेत् ।
ताम्रपात्रार्घ्यदानेन पुण्यं दशगुणं स्मृतम् ॥"
इति विष्णुपुराणीयेन । आदित्यपुराणे ।
"ऋक्षराशिविशेषेण यत् कर्म्म विहितं नरैः ।
दैवं वाप्यथवा पैत्रं तदन्यत्रापि दृश्यते ॥"
अर्घमन्त्रस्तु ।
"जननी सर्व्वभूतानां सप्तमी सप्तसप्तिके ।
सप्तब्राह्मण इत्येते उच्यन्ते ब्रह्मवादिभिः ।
संभूतिरनसूया च क्षमा प्रीतिश्च सन्नतिः ॥
अरुन्धतिस्तथा लज्जा तत्पत्न्यौ लोकमातरः ।
एतासां तपसा चैतद्धार्य्यते भुवनत्रयम् ॥
सन्ध्यात्रयमुपासीना गायत्रीजपतत्पराः ।
तस्मिन्लोके वसन्त्येते ब्राह्मणाः ब्रह्मवादिनः ॥"
इति पाद्मे स्वर्गखण्डे ११ अध्यायः ॥
(प्रतिमन्वन्तरे सप्तर्षयो भिन्ना एवासन् । तद्-
वृत्तान्तस्तु ऋषिशब्दे द्रष्टव्यः ॥)

**सप्तला**, स्त्री, (सप्त लातीति । ला + कः ।) नव-

मालिका । इत्यमरः ॥ चर्म्मकषा । गुञ्जा ।
पाटला । इति मेदिनी ॥

७ -- १९
८ -- १८
९ -- १७

**सप्तशिरा**, स्त्री, (सप्त शिरा यस्याः ।) नागवल्ली ।

इति राजनिर्घण्टः ॥

**सप्तसप्तिः**, पुं, (सप्त सप्तयो घोटका यस्य ।)

सूर्य्यः । इति हेमचन्द्रः ॥ (यथा, रघुः । १३ ।
४१ ।
"हविर्भुजामेधवतां चतुर्णां,
मध्ये ललाटन्तपसप्तसप्तिः ।
असौ तपस्यत्यपरस्तपस्वी
नाम्ना सुतीक्ष्णश्चरितेन दान्तः ॥")

**सप्तसागरः**, पुं, (सप्त सगरा इव कुण्डानि यत्र ।)

महादानविशेषः । यथा, --
मत्स्य उवाच ।
"अथातः संप्रवक्ष्यामि महादानमनुत्तमम् ।
सप्तसागरकं नाम सर्व्वपापविनाशनम् ॥
पुण्यं दिनमथासाद्य कृत्वा ब्राह्मणवाचनम् ।
तुलापुरुषवत् कुर्य्यात् लोकेशावाहनं बुधः ॥
ऋत्विङ्मण्डपसंभारभूषणाच्छादकादिकम् ।
कारयेत् सप्त कुण्डानि कनकानि विचक्षणः ॥
प्रादेशमात्राणि तथारत्निमात्राणि वा पुनः ।
कुर्य्यात् सप्तपलादूर्द्ध्वमासहस्राच्च शक्तितः ॥
संस्थाप्यानि च सर्व्वाणि कृष्णाजिनतिलोपरि ।
प्रथमं पूरयेत् कुण्डं लवणेन विचक्षणः ॥
द्वितीयं पयसा तद्वत् तृतीयं सर्पिषा पुनः ।
चतुर्थन्तु गुडेनैव दध्ना पञ्चममेव च ॥
षष्ठं शर्करया तद्वत् सप्तमं तीर्थवारिणा ।
स्थापयेल्लवणस्थन्तु ब्रह्माणं काञ्चनं शुभम् ॥
केशवं क्षीरमध्ये तु घृतमध्ये महेश्वरम् ।
भास्करं गुडमध्ये तु दधिमध्ये सुराधिपम् ॥
शर्करायां न्यसेत् लक्ष्मीं जलमध्ये तु पार्व्वतीम् ।
सर्व्वेषु सर्व्वरत्नानि धान्यानि च समन्ततः ॥
तुलापुरुषवत् शेषमत्रापि परिकल्पयेत् ।
ततो वारुणहोमान्ते स्नापितो वेदपुङ्गवैः ।
त्रिः प्रदक्षिणमावृत्य मन्त्रानिमानुदीरयेत् ॥
नमो वः सर्व्वसिन्धूनां आधारेभ्यः सनातनाः ।
जन्तूनां प्राणदेभ्यश्च समुद्रेभ्यो नमो नमः ॥
क्षीरोदकाज्यदधिमाधवलावणेक्षु-
सारामृतेन भुवनत्रयजीवसंघान् ।
आनन्दयन्ति वसुभिश्च यतो भवन्त-
स्तस्मान्ममाप्यघविघातमलंविदध्वम् ॥
यस्मात् समस्तभुवनेषु भवन्त एव
तीर्थामरासुरसुवन्द्यमणिप्रतानम् ।
पापक्षयाद्धरविलोपनभूषणाय
लोकस्य बिभ्रति तदस्तु ममापि लक्ष्मीः ॥
इति ददाति रसाम्बरसंयुतान्
शुचिरविस्मयवानिह सागरान् ।
अमलकाञ्चननवरत्नमयानसौ
पदमुपैति हरेरमरावृतः ॥
सकलपापविघातविराजितं
पितृपितामहपुत्त्रकलत्रकम् ।
नरकलोकसमाकुलमप्यलं
झटिति नेतुमसौ शिवमन्दिरम् ॥"
इति मत्स्यपुराणे महादानानुकीर्त्तने सप्तसागर-
सप्तार्च्चिर्म्मुखमाचक्षुः सप्तलोकैकसंश्रयम्
॥")
चित्रकवृक्षः । इत्यमरः ॥ शनिग्रहः । इति
हेमचन्द्रः ॥ क्रूरचक्षुषि, त्रि । इति मेदिनी ॥
अग्नेः सप्तानामर्च्चिषां नामानि सप्तजिह्वशब्दे
द्रष्टव्यानि ॥

**सप्ताश्वः**, पुं, (सप्त अश्वा यस्य ।) सूर्य्यः । अर्क-

वृक्षः । इत्यमरः ॥ (क्वचित् वाच्यलिङ्गेऽपि
दृश्यते । यथा, ऋग्वेदे । ५ । ४५ । ९ ।
"आ सूर्य्यो यातु सप्ताश्वः क्षेत्रं यदस्योर्व्विया-
दीर्घयाथे ॥"
"सूर्य्यः सर्व्वस्य प्रेरको देवः सप्ताश्वः
सर्पण-
स्वभावाश्वोपेतः सप्तसंख्याकाश्वो वा
आयातु
अस्मदभिमुखमागच्छतु ॥" इति तद्भाष्ये
सायणः ॥)

**सप्ताश्ववाहनः**, पुं, (सप्त अश्वा वाहनान्यस्य ।)

सूर्य्यः । यथा, --
"लोकसाक्षी त्रिलोकेशः कर्त्ता हर्त्ता तमि-
स्रहा ।
तपनस्तापनश्चैव शुचिः सप्ताश्ववाहनः ॥"
इति शाम्बपुराणे सूर्य्यस्तोत्रम् ॥

**सप्तिः**, पुं, ("षप समवाये । 'सपिनसिवसि-

पदिभ्यस्तिप्' इति श्रीभोजदेवः । सपति
सङ्ग्रा-
मेषु सहसामेवैति । गतिकर्म्मणो वा सप्तिः ।
सपतेः स्पर्शार्थात् इति माधवः । सृपि गतौ ।
अस्माद्वा तिप्रत्यये गुणे च रेफलोपो बाहुल-
कात् सर्पति सप्तिः ।" इति निघण्टुटीकायां
देवराजयज्वा । १ । १४ । ५ ।) अश्वः ।
इत्य-
मरः ॥ (यथा, ऋग्वेदे । ८ । ४ । १४ ।
"अर्व्वाञ्चं त्वा सप्तयोऽध्वरश्रियो वहन्तु
सवने-
दुप ॥")

**सफरः**, पुं, मत्स्यविशेषः । पुटी इति भाषा ॥

शयाना स्फुरति पार्श्वेन गच्छतीति शफरी
मनीषादिः नदादित्वादीप् । शोणिशफरी-
शय्याशकटशिलाशरणशतपद्यइत्युष्मभेदात्
मध्ये बले तथा मासं वर्षं विद्यात्तथाबले ॥"
इति पञ्चस्वरा ॥

**सबलिः**, पुं, विकालः । इति हेमचन्द्रः ॥

**सबाधः**, त्रि, पीडायुक्तः । निषेधयुक्तः । बाधया

बाधेन च सह वर्त्तमानो यः इति बहुव्रीहि-
समासनिष्पन्नः ॥

**सब्रह्मचारी**, [न्] पुं, (ब्रह्म वेदस्तदध्ययनार्थं

यद्व्रतं तदपि ब्रह्म तच्चरतीति ब्रह्मचारी
समानो ब्रह्मचारी । यद्वा, समाने ब्रह्मणि
चरतीति । णिनिः । "चरणे ब्रह्मचारिणि ।"
६ । ३ । ८६ । इति समानस्य सः ।) परस्परैक-
ब्रह्मव्रताचारः । इत्यमरः ॥ एकस्माद्गुरो-
र्ब्रह्मणे वेदाय अर्थात् वेदाध्ययनाय व्रतं अभि
ब्रह्मचर्य्याख्यं आचरन्ति ये तेऽन्योन्यं सब्रह्म-
चारिण उच्यन्ते । उपचारात् ब्रह्माध्ययनार्थं
व्रतमपि ब्रह्म । समानं ब्रह्म चरन्तीति ग्रहादि-
त्वाण्णिनि ज्योतिर्ज्जनपदेत्यादिना समानस्य
सभावे सब्रह्मचारिणः । एकब्रह्मव्रताचारा
इत्यत्र एकस्माद्ब्रह्मणे ब्रह्माध्येतुं व्रतमा-
चरन्तीति तुमर्थे चतुर्थ्या विगृह्णतीति परे ।
सब्रह्मचारी भिन्नगुरुशिष्य इति हारलतेति
नयनानन्दः । इति भरतः ॥

**सभर्त्तृका**, स्त्री, (भर्त्त्रा सह वर्त्तमाना । सहस्य

सः ।) विद्यमानपतिका । तत्पर्य्यायः । पति-
वत्नी २ । इत्यमरः ॥ सधवा ३ सनाथा ४ ।
इति जटाधरः ॥

**सभा**, स्त्री, (सह भान्ति शोभन्ते यत्रेति । भा

दीप्तौ + भिदादित्वात् अधिकरणे अङ् । सहस्य
सः ।) सह भान्ति अत्र । मज्लिस् इति पार-
सीक भाषा । पञ्चायित इति हिन्दी भाषा ।
मिटिं इति इङ्गरेजी भाषा । तत्पर्य्यायः ।
समज्या २ परिषत् ३ गोष्ठी ४ समितिः ५
संसत् ६ आस्थानी ७ आस्थानम् ८ सदः ९
समाजः १० । इत्यमरः ॥ पर्षत् ११ इति जटा-
धरः ॥ तल्लक्षणादि यथा । मनुः ।
"यस्मिन् देशे निषीदन्ति विप्रा वेदविदस्त्रयः ।
राज्ञः प्रतिकृतो विद्वान् ब्राह्मणस्तां सभां
विदुः ॥" * ॥
विद्वत्संहतावपि सभापर्य्यायपरिषच्छब्दमाह
स एव ।
"त्रैविद्यो हैतुकस्तर्की निरुक्तो धर्म्मपाठकः ।

प्रादानिको नाम २६१ अध्यायः ॥

**सप्तसूः**, स्त्री, (सप्त सूते इति । सू + क्विप् ।) सप्त-

पुत्त्रप्रसूता । तत्पर्य्यायः । सुतवस्करा २ । इति शब्दरत्नावली ॥

**सप्तांशुपुङ्गवः**, पुं, (सप्तभिरंशुभिः पुङ्गव इव

श्रेष्ठत्वात् ।) शनिग्रहः । इति जटाधरः ॥

**सप्तार्च्चिः**, [स्] पुं, (सप्त अर्च्चींसि यस्य ।)

अग्निः । (यथा, रघुः । १० । २१ ।
“सप्तसामोपगीतं त्वां सप्तार्णवजलेशयम् ।

तालव्यादिः । दन्त्यादिरपीति केचित् ।
शफ-
रश्च । इत्यमरटीकायां भरतः ॥

**सफरी**, स्त्री, (सफर + ङीष् ।) मत्स्यविशेषः ।

इति भरतः ॥ पुँटी इति भाषा ॥ तत्पर्य्यायः
।
शफरी २ प्रोष्ठी ३ । इत्यमरः ॥ शफरः ४
श्वेतकोलः ५ । इति त्रिकाण्डशेषः ॥ (यथा,
--
“अगाधजलसञ्चारी रोहितोऽपि स्थिरायते ।
गण्डूषजलमात्रेण सफरी फर्फरायते ॥”
इत्युद्भटः ॥)

**सफलं**, त्रि, (फलेन सह बर्त्तमानम् ।) फल-

विशिष्टम् । तत्पर्य्यायः । अमोघम् २ । इति
जटाधरः ॥ (यथा, मार्कण्डेये । ६१ । ३७ ।
“सफलं मे भवेज्जन्म यदि मां नावमन्यसे
॥”
सशस्यम् । यथा, कथासरित्सागरे । २५ ।
१२ ।
“अपश्यदाश्रमपदं सफलस्निग्धपादपम् ॥”)

**सबलः**, त्रि, (बलेन सह वर्त्तमानः ।) सैन्ययुक्तः ।

सामर्थ्यवान् । यथा, --
“सबले च गृहे पापे दिनमात्रं प्रचक्षते ।

त्रयश्चाश्रमिणः पूर्व्वे परिषत् स्याद्दशावराः ॥”
त्रैविद्यः त्रिवेदपारगः । हैतुकः सद्युक्ति-
व्यवहारी । अतएवामरसिंहः । सभा सदसि
सभ्ये च । अत्र भा दीप्तिः प्रकाशो ज्ञानमिति
यावत् । तया सह साक्षात् परम्परया वा वर्त्तते
इति सभा ॥ * ॥ कात्यायनः ।
“कुलशीलवयोवृत्तवित्तवद्भिरधिष्ठितम्।
बणिगभिः स्यात कतिपयैः कुलवृद्धैरधिष्ठि-
तम् ॥”
सद इति शेषः । इति व्यवहारतत्त्वम् ॥ * ॥
सामाजिकः । द्यूतम् । एहम् । इति मेदिनी ।

समूहः । इति हेमचन्द्रः ॥ * ॥ सभायां एकाकि-
गमननिषेधो यथा, --
"नैकश्चरेत् सभां विप्रः समवायञ्च वर्ज्ज-
येत् ॥"
इति कौर्म्मे उपविभागे १५ अध्यायः ॥

**सभाज**, त् क सेवने । प्रीतौ । दर्शने । इति
कविकल्पद्रुमः ॥ (अदन्तचुरा०-पर०-सक०-
सेट् ।) अससभाजत् । इति दुर्गादासः ॥

**सभाजनं**, क्ली, (सभाज त् क सेवने प्रीतौ +
ल्युट् ।) गमनागमनादिसमये सुहृदादेः
आलिङ्गनारोग्यप्रश्नस्वागतादिनानन्दोत्पादनम्।
तत्पर्य्यायः । आनन्दनम् २ आप्रच्छनम् ३ ।
इत्यमरः ॥ टु नदि संवृधि सभाज त् क
सेवनप्रीतिदर्शने प्रच्छौ श ञीप्से अनट् ।
नन्दतिः पृच्छतिश्चाङ्पूर्व्वालिङ्गनादाविति
सुभूतिः । गमनसभये सुहृदमालिङ्ग्य गमना-
नुज्ञाग्रहणम् । आगतस्य वा स्वागतारोग्यादि-
पृच्छा आनन्दनमिति रमानाथः । इति भरतः ॥
(यथा, रघुः । १३ । ४३ ।
"सभाजने मे भुजमूर्द्ध्वबाहुः
सव्येतरं प्राध्वमितः प्रयुङ्क्ते ॥"
सभाजयतीति । सभाज त् क प्रीतौ + ल्युः ।
प्रीतिदायके, त्रि । यथा, महाभारते । ४ । १३ । १० ।
"प्रभूतनागाश्वरथं सभाजनं
समृद्धियुक्तं बहुपानभोजनम् ।
मनोहरं काञ्चनचित्रभूषणं
गृहं महत् शोभयतामियं मम ॥")

**सभापतिः**, पुं, (सभायाः पतिः ।) समाजाधि-
पतिः । (यथा, भागवते । ६ । १७ । ७ ।
"जटाधरस्तीव्रतपा ब्रह्मवादी सभापतिः ।
अङ्कीकृत्य स्त्रियञ्चास्ते गतह्रीः प्राकृतो यथा ॥")
द्यूतगृहस्वामी । इति केचित् ॥

**सभासत्** पुं, (सभा + सद् + क्विप् ।) सभाभां
सीदति उपविशति यः । तत्पर्य्यायः ।
सभास्तारः २ सभ्यः ३ सामाजिकः ४ । इत्य-
मरः ॥ परिषद्वलः ५ पर्षद्वलः ६ परिषदः ७
पार्षदः ८ परिसभ्यः ९ । इति शब्दरत्नावली ॥
तल्लक्षणादि यथा । कात्यायनः ।

**सभासद्** पुं, (सभा + सद् + क्विप् ।) सभाभां
सीदति उपविशति यः । तत्पर्य्यायः ।

कार्य्यास्तथाविधास्तत्र द्विजमुख्याः
सभासदः ॥"
इति मत्स्यपुराणे १८९ अध्यायः ॥
बृहस्पतिस्तु सप्त पञ्च त्रयो वा सभासदो
भवन्तीत्याह ।
"लोकवेदज्ञधर्म्मज्ञाः सप्त पञ्च त्रयोऽपि वा
।
यत्रोपाविष्टा विप्राः स्युः सा यज्ञसदृशी
सभा ॥"
किञ्च ।
"सप्राड्विवाकः सामात्यः
सब्राह्मणपुरोहितः ।
ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति
धर्म्मतः ॥"
तत्र ब्राह्मणा अनियुक्ताः सभासदस्तु
नियुक्ता
इति भेदः । तत्र नियुक्तानां
यथावस्थितार्थ-
कथनेऽपि यदि राजान्यथा करोति तदासौ
निवारणीयोऽन्यथा दोषः ।
उक्तञ्चकात्यायनेन ।
"अन्यायेनापि तं यान्तं येऽनुयान्ति
सभासदः ।
तेऽपि तद्भागिनस्तस्माद्बोधनीयःस तैर्नृपः
॥"
इति मिताक्षरा ॥

**सभास्तारः**, पुं, (सभां स्तृणातीति । स्तृञ् आच्छा-
दने + "कर्म्मण्यण् ।" ३ । २ । १ । इत्यण्
।) सभा-
सद् । इत्यमरः ॥ (यथा, महाभारते । २ ।
४९ । २ ।
"के च तत्र सभास्तारा राजानो
ब्रह्मवित्तम ! ॥")

**सभिकः**, पुं, (सभा द्यूतसभा आश्रयत्वेनास्त्यस्येति
।
सभा + व्रीह्यादित्वात् ठन् ।) द्यूतकारकः ।
इत्यमरः ॥ द्वे सहियार इति ख्याते । सभा
द्यूतमस्याश्रयत्वेनास्ति सभिकः
विकारसंघेति
ष्णिकः । सभा द्यूतं सभा गृहमिति रुद्रः ।
द्यूतं कारयति द्यूतकारकः षणन्तात्
स्वार्थेकः ।

**समः**, त्रि, (समतीति । सम वैक्लव्ये + पचाद्यच् ।)
सर्व्वम् । (अस्मिन्नर्थे सर्व्वनामसंज्ञा भवति ।
यथा, मुग्धबोधे ।
"नमः समस्मात् पूर्व्वस्मा अन्तरस्मा अमेध-
साम् ॥")
समानम् । इत्यमरः ॥ (अस्मिन्नर्थे सर्व्वनाम-
संज्ञा न भवति । यथा, मुग्धबोधे ।
"समायैषु परायैषां मुक्तयेऽर्थान्तराय च ॥")
साधुः । इति मेदिनी ॥

**समः**, पुं, (सम वैक्लव्ये + पचाद्यच् ।) राशि-
विशेषाणां संज्ञाविशेषः । ते तु राशयः वृष-
कर्क्कटकन्यावृश्चिकमकरमीनाः । यथा, --
"क्रूरोऽथ सौम्यः पुरुषोऽङ्गना च
ओजोऽथ युग्मं विषमः समश्च ।
चरस्थिरद्ब्यात्मकनामधेया
मेषादयोऽमी क्रमशः प्रदिष्टाः ॥"
इति ज्योतिस्तत्त्वम् ॥ * ॥
मानस्य प्रकारविशेषः । स तु यदा गीतवाद्ययो-
स्तालः गायकस्य हस्तपादादिचालनञ्च एकदा
समभावेन पतति तदा भवति । इति सङ्गीत-
शास्त्रम् ॥ * ॥ वर्गमूलानयनार्थं अङ्कोपरि-
दत्त ऋजुरेखाविशेषः । यथा, --
"त्यक्त्वान्त्याद्विषमात् कृतिं द्विगुणयेन्मूलं समे
तद्धृते
त्यक्त्वा लब्धकृतिं तदाद्यविषमाल्लब्धं द्विनिघ्नं
न्यसेत् ॥"
इत्यादि लीलावली ॥

**समकन्या**, स्त्री, (समा विवाहतुल्या कन्या ।)
विवाहोपयुक्ता । इति धनञ्जयः ॥ सदृश-
कुमारी च ॥

**समकोलः**, पुं, (समः कोलो यस्य ।) सर्पः । इति
त्रिकाण्डशेषः ॥

**समक्नः**, त्रि, गमनकर्त्ता । संपूर्व्वकान्चधातोः
क्तप्रत्ययेन निष्पन्नः । इति मुग्धबोधव्याकरणम्
॥

**समक्षं**, त्रि, अक्ष्णोः समीपम् । संपूर्व्वाक्षिशब्दात्
अप्रत्ययेन निष्पन्नम् । इति मुग्धबोधव्याकर-
णम् ॥ (यथा, कुमारे । ५ । १ ।
"तथा सभक्षं दहता मनोभवं
पिनाकिना भग्नमनोरथा सती ।

सभास्तारः २ सभ्यः ३ सामाजिकः ४ । इत्य-
मरः ॥ परिषद्वलः ५ पर्षद्वलः ६ परिषदः ७
पार्षदः ८ परिसभ्यः ९ । इति शब्दरत्नावली ॥
तल्लक्षणादि यथा । कात्यायनः ।
“सभ्यतावश्यवक्तव्यं धर्म्मार्थसहितं वचः ।
श्रृणोति यदि नो राजा स्यात्तु सभ्यस्तदानृणः ॥”
सभ्यः समायां साधुः । तथाविधानाह याज्ञ-
वल्क्यः ।
“श्रुताध्ययनसम्पन्नाः कुलीनाः सत्यवादिनः ।
राज्ञा सभासदः कार्य्याः शत्रौ मित्रे च ये
समाः ॥”
श्रुताध्यनसम्पन्नाः धर्म्मशास्त्रज्ञाः । कुलीनाः
सङ्करादि-दोषशून्यमातापितृवंश-परम्पराकाः ।
गवस्मूताः मभासदः सभायां यथा सीदन्ति
तथ दानमानसत्कारै राज्ञा कर्त्तव्याः । इति
व्यवहारतत्त्वम् ॥ * ॥ अन्यच्च ।
“समः शत्रौ च मित्रे च धर्म्मशास्त्रविशारदः ।
विपमुख्यः कुलीनश्च धर्म्मधिकरणे भवेत् ॥

इति भरतः ॥ तत्पर्य्यायः ।
“दुरोदरश्च निर्ग्रन्थद्यूतकारकलग्नकाः ।
सभिकः प्रतिभूश्चेति -- ॥”
इति जटाधरः ॥
(यथा, याज्ञवल्क्ये । २ । २०२ ।
“ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकं
शतम् ।
गृह्णीयात् धूर्त्तकितवादितराद्दशकं शतम्
॥”)

**सभीकः**, पुं, द्यूतकारकः । इति शब्दरत्नावली ॥

**सभोचितः**, पुं, (सभायामुचितः ।) पण्डितः ।
इति धनञ्जयः ॥ सभायोग्ये, त्रि ॥

**सभ्यः**, पुं, (सभायां साधुः । सभा + “सभाया यः ।”
४ । ४ । १०५ । इति यः ।) साधुः ।
सभासद् ।
इत्यमरः ॥ (यथा, मनुः । ८ । १० ।
“सोऽस्य कार्य्याणि संपश्येत् सभ्यैरेव
त्रिभि-
र्वृतः ॥”
अस्मिन्नर्थे वाच्यलिङ्गेऽपि दृश्यते । यथा,
रघुः ।
१ । ५५ ।
“तस्मै सभ्याः सभार्य्याय गोप्त्रे
गुप्ततमेन्द्रियाः ।
अर्हणामर्हते चक्रुर्मुनयो नयचक्षुषे ॥”)
सभिकः । इति जटाधरः ॥

**सभ्यः**, त्रि, (सभा + यः ।) प्रत्ययितः । इति
जटाधरः ॥ सभासम्बन्धी च ॥

**सम्**, व्य, समार्थः । प्रकृष्टार्थः । सङ्गतः । शोभनः ।
इति शब्दरत्नावली ॥ समुच्चयः । इति
हेम-
चन्द्रः ॥ चतुर्थोपसर्गः । इति व्याकरणम् ॥
अस्यार्थविशेषाः संशब्दे द्रष्टव्याः ॥

निनिन्द रूपं हृदयेन पार्व्वती
प्रियेषु सौभाग्यफला हि चारुता ॥”)

**समगन्धकः**, पुं, (समास्तुल्या गन्धा गन्धद्रव्याणि
यत्र । कप् ।) कृत्रिमधूपः । यथा, --
“वृकधूपे भक्तकरो गिरिः स्यात् समगन्धकः ।”
इति शब्दचन्द्रिका ॥

**समगन्धिकं**, क्ली, (समस्तुल्यो गन्धोऽस्त्यत्रेति ।
ठन् ।) उशीरम् । इति राजनिर्घण्टः ॥ तुल्य-
गन्धयुक्ते, त्रि ॥

**समग्रः**, त्रि, (समं समकालमेव गृह्णातीति । ग्रह +
डः ।) सकलम् । (यथा, रामायणे । २ ।
५२ । ८४ ।
“चतुर्द्दश हि वर्षाणि समग्राण्युष्य कानने ।

भ्रात्रा सह मया चैव पुनः प्रत्यागमिष्यति ॥")
पूर्णम् । इत्यमरः ॥ (यथा, महाभारते । १ । १५४ । १३ ।
"अवेक्षमाणस्तस्याश्च हिडिम्बो मानुषं वपुः ।
स्रग्दामपूरितशिखं समग्रेन्दुनिभाननम् ॥")

**समङ्गा**, स्त्री, मञ्जिष्ठा । इत्यमरः । लज्जालुलता । वराहक्रान्ता । इति रत्नमाला ॥ बाला । इति राजनिर्घण्टः ॥

**समचित्तं**, क्ली, (समं तुल्यं चित्तम् ।) एकविषयकान्तःकरणवृत्तिः । यथा, --
"मनो बुद्धिश्च चित्तञ्च ते ह्यनीशाः शरीरिणाम् ।
एकचित्तं मनः कृत्वा ज्ञानेन पृथुलोचने ॥
समचित्तं प्रपद्यन्ते न ते लिम्पन्ति मानवाः ।
सर्व्वभक्ष्याणि भक्षन्तः पेयापेयं तथैव च ।
समं चित्तं मयि यदि तदा तस्य न च क्रिया ॥"
इति वाराहे गुह्यकर्म्ममाहात्म्यवर्णनं नामाध्यायः ॥ (समं सर्व्वेषु पदार्थेषु तुल्यरूपं चित्तं यस्येति विग्रहे सर्व्वत्र तुल्यदर्शके, त्रि । यथा, भागवते । ७ । १३ । ९ ।
"न यतेराश्रमः प्रायो धर्म्महेतुर्महात्मनः ।
शान्तस्य समचित्तस्य विभृयादुत वा त्यजेत् ॥")

**समजं**, क्ली, (समजन्ति पशवो यत्र । सम् + अज गतौ + अप् ।) वनम् । इति मेदिनी ॥

**समजः**, पुं, (सं + अज गतौ + "समुदोरजः पशुषु ।" ३ । ३ । ६९ । इति अप् ।) पशुसमूहः । इत्यमरः ॥
मूर्खसंहतिः । इति शब्दरत्नावली ॥

**समज्ञा**, स्त्री, (समैः सर्व्वैर्ज्ञायते इति । ज्ञा + घञर्थे कः ।) कीर्त्तिः । इत्यमरः ॥ समाज्ञा समज्या समाख्या इति च पाठः । इति भरतः ॥

**समदर्शी**, [न्] त्रि, (समं पश्यतीति । दृश + णिनिः ।) सर्व्वभूतेषु तुल्यदर्शनशीलः । यथा, --
"विद्याविनयसन्तन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥"
इति श्रीभगवद्गीता ॥

**समदृष्टिः**, स्त्री, (समा दृष्टिः ।) सर्व्वत्र तुल्यदर्शनम् । यथा, --
"दुःखे सुखे च विप्रेन्द्र या दृष्टिर्व्वर्त्तते सदा ।
तथ शत्रौ च मित्रे च समदृष्टिश्च सा स्मृता ॥"
इति पाद्मे क्रियायोगसारे १६ अध्यायः ॥
(समा दृष्टिर्यस्य ।) समदर्शिनि, त्रि ॥

**समधिकः**, त्रि, (सम्यक् अधिकः ।) अधिकः । तत्पर्य्यायः । अतिरिक्तः २ । इत्यमरः ॥ (यथा, रघुः । १८ । ५३ ।
"प्रतिकृतिरचनाभ्यो दूतिसन्दर्शिताभ्यः
समधिकतररूपाः शुद्धसन्तानकामैः ।
अधिविविदुरमात्यैराहृतास्तस्य यूनः
प्रथमपरिगृहीते श्रीभुवौ राजकन्याः ॥")

**समन्तः**, पुं, सीमा । सम्यक्प्रकारेण अन्तः इति तत्पुरुषसमासनिष्पन्नः ॥

**समन्ततः**, [स्] व्य, चतुर्द्दिगभिव्याप्तः । तत्पर्य्यायः । परितः २ सर्व्वतः ३ विश्वक् ४ । इत्यमरः ॥ समन्तात् ५ । इति शब्दरत्नावली ॥
(यथा, रामायणे । २ । ५७ । ३४ ।
"स्त्रियश्च सर्व्वा रुरुदुः समन्ततः
पुरं तदासीत् पुनरेव सङ्कुलम् ॥")

**समन्तदुग्धा**, स्त्री, (समन्तात् दुग्धं क्षीरमस्याः ।) स्नुहीवृक्षः । इत्यमरः ॥

**समन्तपञ्चकं**, क्ली, (समन्तात् पञ्चकं ह्रदपञ्चकं यत्र ।) कुरुक्षेत्रम् । तच्च कुरुपाण्डवयोर्युद्धस्थानम् । तत्र पुरा परशुरामः क्षत्त्रियरुधिरेण पञ्च ह्रदान् चकार । यथा, --
"त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्त्रियां प्रभुः ।
समन्तपञ्चके पञ्च कृतवान् रुधिरैर्ह्रदान् ॥
स तेषु तर्पयामास पितॄन् भृगुकुलोद्वहः ।
साक्षात् ददर्श पितरं स च रामं न्यवारयत् ॥"

**समन्तभुक्**, [ज्] पुं, (समन्तात् भुङ्क्ते इति । भुज् + क्विप् ।) अग्निः । इति त्रिकाण्डशेषः ॥

**समन्तात्**, व्य, समन्ततः । इति शब्दरत्नावली ॥
(यथा, ऋतुसंहारे । १ । २२ ।
"दिनकरपरितापात् क्षीणतोयाः समन्तात्
विदधति भयमुच्चैर्वीक्ष्यमाणा वनान्ताः ॥")

**समन्युः**, पुं, (मन्युना क्रतुना क्रोधेन वा सह वर्त्तमानः ।) शिवः । इति केचित् ॥ क्रोधयुक्तश्च ॥
(यथा, महाभारते । ३ । २६८ । ४ ।
"बुद्धिं समाच्छाद्य च मे समन्यु-
रुद्धूयते प्राणपतिः शरीरे ॥")

**समन्वितः**, त्रि, (सम् + अनु + इण् + क्तः ।) संयुक्तः । यथा, तिथ्यादितत्त्वे ।
"विस्पष्टमद्रुतं शान्तं स्पष्टाक्षरपदं तथा ।
कलस्वरसमायुक्तं रसभावसमन्वितम् ॥"

**समपदं**, क्ली, (समे पदे यत्र ।) धन्विनां पादयोस्तुल्यरूपतया धारणम् । इत्यमरटीकायां भरतः ॥

**समपदः**, पुं, (समे पदे चरणे यत्र ।) रतिबन्धविशेषः । यथा, --
"योषित्पादौ हृदि स्थाप्य कराभ्यां पीडयेत् स्तनौ ।
यथेष्टं ताडयेद्योनिं बन्धः समपदः स्मृतः ॥"
इति रतिमञ्जरी स्मरदीपिका च ॥

**समपादं**, क्ली, (समौ पादौ यत्र ।) धन्विनां पादयोस्तुल्यरूपतया धारणम् । इति हेमचन्द्रः ॥

**समभिव्याहारः**, पुं, (सम् + अभि + वि + आ + हृ + घञ् ।) सहितः । घटमानय इत्यत्र भवति चाव्यवहितपूर्व्ववर्त्तितालक्षणसमभिव्याहारसम्बन्धेन घटपदनिष्ठस्यानुस्वारपदस्यव्यतिरेकप्रयुक्तो घटवत् कर्म्मत्वमिति भेदान्वयबुद्ध्यभाव इति तादृशान्वयबोधे घटपदस्यानुस्वारपदवत्त्वमाकाङ्क्षा एवं विनिगमनाविरहादव्यवहितोत्तरवर्त्तितारूपसमभिव्याहारसम्बन्धेन अनुस्वारपदनिष्ठस्य घटपदस्य व्यतिरेकप्रयुक्तोऽपि घटवत् कर्म्मत्वमिति भेदान्वयबुद्ध्यभाव इत्यनुस्वारपदस्य घटपदवत्त्वमपि तादृशान्वयबोधे आकाङ्क्षा । इति आकाङ्क्षाग्रन्थे मथुरानाथः ॥

**समज्या**, स्त्री, (समजन्ति सङ्गच्छन्तेऽस्यामिति ।

सम् + अज + "संज्ञायां समजनिषदेति ।"
३ ।
३ । ९९ । इति क्यप् ।) सभा । इत्यमरः
॥
कीर्त्तिः । इति तट्टीकायां रायमुकुटः ॥

**समञ्जसं**, क्ली, (सम्यक् अञ्ज औचित्यं यत्र ।

अच् ।) उचितम् । इत्यमरः ॥

**समञ्जसः**, त्रि, (सम्यक् अञ्ज औचित्यं यत्र ।

अच् ।) समीचीनः । इति त्रिकाण्डशेषः ॥
(यथा, भागवते । ६ । ९ । ३५ ।
"आहोस्विदात्माराम उपशमशीलः
समञ्जस-
दर्शन उदास्त इतिह वाव न विदाम ॥")
अभ्यस्तः । इत्यजयपालः ॥

**समण्ठः**, पुं, गण्डीरः । इति शब्दरत्नावली हारा-

वली च ॥

**समता**, स्त्री, समत्वम् । समस्य भावः इत्यर्थे सम

शब्दात् तप्रत्ययेन निष्पन्ना ॥ (यथा, रघुः
।
९ । ६ ।
"समतया वसुवृष्टिविसर्ज्जनैः
नियमनादसताञ्च नराधिपः ॥")

**समतिरिक्तं**, क्ली, सम्यगधिकम् । सम्यक्प्रकारे

णातिरिक्तं इति तत्पुरुषसमासनिष्पन्नम् ॥

**समत्रयं**, क्ली, (समं त्रयं यत्र ।) समभाग-

हरीतकीनागरगुडम् । इति राजनिर्घण्टः ॥

इति पाद्मे भूमिखण्डे १२४ अध्यायः ॥ * ॥
अन्यच्चे ।
"त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्त्रियां प्रभुः
।
समन्तपञ्चके चक्रे शोणितोदान् ह्रदान् नव ॥"
इति श्रीभागवते ९ स्कन्धे १६ अध्यायः ॥ *
॥
तस्य माहात्म्यं सीमा च यथा, --
"पृथिव्यां नैमिषं तीर्थमन्तरीक्षे च पुष्करम् ।
त्रयाणामपि लोकानां कुरुक्षेत्रं विशिष्यते ॥"
इत्यारभ्य, --
"तरन्तुकारन्तुकयोर्य्यदन्तरं
रामह्रदानाञ्च मचक्रुकस्य च ।
एतत् कुरुक्षेत्रसमन्तपञ्चकं
पितामहस्योत्तरवेदिरुच्यते ॥"
इति महाभारतीयवनपर्व्वणि ८३ अध्यायः ॥

**समन्तभद्रः**, पुं, (समन्तात् भद्रमस्य ।) बुद्धः ।

इत्यमरः ॥

**समभिव्याहृतः**, पुं, (सम् + अभि + वि + आ +

हृ + क्तः ।) सहोच्चरितः । सहितः । यथा
निमित्तानां उत्पत्तिविधिसमभिव्याहृतनियता-
नाम् । इति तिथ्यादितत्त्वम् ॥

**समभिहारः**, पुं, (सम् + अभि + हृ + घञ् ।

पौनःपुन्यम् । भृशार्थः । इति मेदिनी ॥

**समभूमिः**, स्त्री, (समाभूमिः ।) समानस्थानम्

तत्पर्य्यायः । आजिः २ । इति जटाधरः ॥
(यथा, रामायणे । २ । ५६ । ११ ।
"समभूमितले रम्ये द्रुमैर्बहुभिरावृते ।
पुण्ये रंस्यामहे तात चित्रकूटस्य कानने ॥")

**समम्**, व्य, सहितम् । यथा । सार्द्धन्तु साकं सत्रं

समं सह । इत्यमरः ॥ (यथा, मनुः । २ । ११३ ।

"विद्ययैव समं कामं मर्त्तव्यं ब्रह्मवादिना ।
आपद्यपि हि घोरायां नत्वेनामरिणे वपेत् ॥")

**समयः**, पुं, (सम्यगेतीति । सम् + इण् गतौ + पचाद्यच् ।) कालः । (यथा, उत्तरचरिते १ अङ्के ।
"समयः समवर्त्तत इवैष यत्र मां
समनन्दयत् सुमुखि ! गौतमार्पितः ।
अयमागृहीतकमनीयकङ्कण-
स्तव मूर्त्तिमानिव महोत्सवः करः ॥")
शपथः । आचारः । (यथा, महाभारते । १३ । ९० । ५० ।
"ऋषीणां समये नित्यं ये चरन्ति युधिष्ठिर ! ।
निश्चिताः सर्व्वधर्म्मज्ञास्तान् देवान् ब्राह्मणान् विदुः ॥")
सिद्धान्तः । संवित् । इत्यमरः ॥ क्रियाकारः । निर्द्देशः । भाषा । (यथा, महाभारते । ५ । ३३ । ११६ ।
"देशाचारान् समयान् जातिधर्म्मान्
बभूषते यः सः परावरज्ञः ॥")
सङ्केतः । इति मेदिनी ॥ (व्यवहारः । यथा, मनुः । १० । ५३ ।
"न तैः समयमन्विच्छेत् पुरुषो धर्म्ममाचरन् ॥")
सम्पत् । नियमः । (यथा, भागवत । ३ । २२ । १८ ।
"अतो भजिष्ये समयेन साध्वीं
यावत्तेजो विभृयादात्मनो मे ॥")
अवसरः । इति हेमचन्द्रः ॥ * ॥ कालप्रशंसा । यथा, --
परशुराम उवाच ।
"राजेन्द्रोत्तिष्ठ समरं कुरु साहसपूर्व्वकम् ।
कालभेदे जयो नृणां कालभेदे पराजयः ॥
काले सिंहः शृगालञ्च शृगालः सिंहमेव च ।
काले व्याघ्रं नरो हन्ति गजेन्द्रं हरिणस्तथा ॥
महिषं मक्षिका काले गरुडञ्च यथोरगः ।
किङ्करः स्तौति राजेन्द्रं काले राजा च किङ्क-रम् ॥
इन्द्राश्च मनवः काले काले राजा मरिष्यति ।
तिरोहिता च प्रकृतिः काले श्रीकृष्णविग्रहे ॥
मरिष्यन्ति सुराः सर्व्वे त्रिलोकस्थाश्चराचराः ।
सर्व्वे काले लयं यान्ति कालो हि दुरतिक्रमः ॥
कालस्य कालः श्रीकृष्णः स्रष्टुः स्रष्टा यथेच्छया ।
अथ कालनिरूपणम् ।
"आनन्दनन्दनस्यैव परिपूर्णतमस्य च ।
शृणु कालगतिं वत्स मदीयज्ञानगोचराम् ॥
नराणाञ्च पितृणाञ्च सुराणाञ्चापि ब्रह्मणः ।
नागानां राक्षसादीनां तत्परेषाञ्च पुत्त्रक ॥
कथयामि निगूढार्थं सावधानं निशामय ।
सर्व्वस्माच्च परः स्थूलः सर्व्वाधारो महान् विराट् ॥
यस्य लोमसु विश्वानि चासंख्यानि च तानि च ।
सर्व्वस्माच्च परं सूक्ष्मं परमाणुं निशामय ॥
कालारम्भात्मकं सर्व्वस्यानूहं परमीप्सितम् ।
परमः सद्विशेषाणामनेकोऽयुतशस्तथा ॥
परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यथा ।
परमाणुद्वयेनाणुस्त्रसरेणुस्तु ते त्रयः ॥
त्रसरेणुत्रिकेणापि त्रुटिरुक्ता मनीषिभिः ।
वेधस्त्नुटिशतेनैव त्रिवेधेन लवस्तथा ॥
त्रिलवेन निमेषश्च त्रिनिमेषेण च क्षणः ।
काष्ठा पञ्चक्षणेनैव लघुश्च दशकाष्ठया ॥
लघुपञ्चदशे दण्डस्तत्प्रमाणं निशामय ।
द्वादशार्द्धपलोन्मा च चतुर्भिश्चतुरङ्गुलैः ॥
स्वर्णमाषैः कृतच्छिद्रं यावत् प्रच्छजलप्लुतम् ।
दण्डद्वये च मुहूर्त्तः षष्टिदण्डात्मिका तिथिः ॥
तदष्टभागः प्रहरः प्रमाणञ्च निरूपणम् ।
चतुर्भिः प्रहरै रात्रिश्चतुर्भिर्दिनमेव च ॥
तिथिपञ्चदशेनैव पक्षमानं प्रकीर्त्तितम् ।
पक्षद्वयेन मासः स्यात् शुक्लकृष्णाभिधेन च ॥
ऋतुर्म्मासद्वयेनैव तत्षट्केनैव वत्सरः ।
वसन्तग्रीष्मवर्षाश्च शरद्धेमन्तशीतकम् ॥
वर्षाः पञ्चविधा ज्ञेयाः कालविद्भिर्निरूपिताः ।
संवत्सरः प्रवत्सरश्च इलावत्सर एव च ॥
अनुवत्सरो वत्सरोऽयमिति कालविदो विदुः ।
अब्दो द्विषट्कमासैश्च तन्नाम शृणु चोद्धव ॥ * ॥
वैशाखो ज्यैष्ठ आषाढः श्रावणो भाद्र एव च ।
आश्विनः कार्त्तिको मार्गः पौषो माघस्तु फाल्गुनः ॥
चैत्रस्तु चरमो ज्ञेयो वर्षशेषो निरूपितः ।
वसन्तश्चैत्रवैशाखौ मासौ युग्मेन कीर्त्तितः ॥
ज्यैष्ठाषाढद्वयेनैव ग्रीष्मस्तु परिकीर्त्तितः ।
वर्षा श्रावणभाद्रेण चाश्विने कार्त्तिके शरत् ॥
मार्गे पौषे च हेमन्तः शिशिरो माघफाल्गुने ।
अब्दस्तु चायने द्वे चैवोत्तरे दक्षिणायने ॥
माघादिषट्कं नियतं उत्तरायणमीप्सितम् ।
श्रावणादिमासषट्कं दक्षिणायनमेव च ॥
अश्विनी भरणी चापि कृत्तिका रोहिणी तथा ।
मृगशिरास्तथार्द्रा च नक्षत्रे द्वे पुनर्व्वसुः ॥
पुष्याश्लेषा मघा चैव पूर्व्वा चोत्तरफल्गुनी ।
हस्ता चित्रा तथा स्वाती विशाखा चानुरा-धिका ॥
ज्येष्ठा मूला तथा ज्ञेया पूर्व्वाषाढोत्तरा तथा ।
श्रवणाप्यभिजिच्चैव धनिष्ठा च प्रकीर्त्तिता ॥
ततः शतभिषा ज्ञेया पूर्व्वभाद्रपदस्तथा ।
तथोत्तरस्तु विज्ञेयो रेवती चरमा स्मृता ॥
अष्टाविंशच्च नक्षत्रं कलत्रं शशिनोद्धव ।
क्रमेण ताभिः सार्द्धञ्च चन्द्रस्तिष्ठति नित्यशः ॥
सप्तविंशतिनक्षत्रं कलत्रञ्च श्रुतौ श्रुतम् ।
अभिजिच्छ्रवणाच्छाया तेनाष्टाविंशतिः स्मृता ॥
एकदा च मधौ चन्द्रो रोहिण्या रामया सह ।
रेमे दिवानिशं दृष्ट्वा श्रवणा च चुकोप सा ॥
छायां दत्त्वा च चन्द्राय ययौ तातान्तिकं भिया ।
ततः पितरमानीय सा प्रचक्रे विभागकम् ॥
बभूव तेन नक्षत्रमभिजिन्नामकं पुरा ।
एतत् श्रुतं कृष्णमुखाच्छतशृङ्गे च पर्व्वते ।
नक्षत्रं कथितं वत्स तिथ्यां भ्रमति नित्यशः ॥ * ॥
योगञ्च करणञ्चैव मद्वक्त्रेण निशामय ।
विष्कम्भः प्रीतिरायुष्मान् सौभाग्यः शोभनस्तथा ॥
अतिगण्डः सुकर्म्मा च धृतिः शूलस्तथैव च ।
गण्डो वृद्धिर्ध्रुवश्चैव व्याघातो हर्षणस्तथा ॥
वज्रश्चासृग्व्यतीपातो वरीयान् परिघः शिवः ।
सिद्धः साध्यः शुभः शुक्रो ब्रह्मेन्द्रो वैधृतिस्तथा ॥
कीर्त्तितस्तु योगगणः करणं श्रूयतामिति ।
ववश्च बालवश्चैव कौलवस्तैतिलस्तथा ॥
गरश्च बणिजश्चापि विष्टिश्च शकुनिस्तथा ।
चतुष्पाच्चापि नागश्च किन्तुघ्न इति कीर्त्तनम् ॥
नराणाञ्चापि मासेन पितृणाञ्च दिवानिशम् ।
शुक्ले तेषां दिनञ्चापि कृष्णे नक्तं प्रकीर्त्तितम् ॥
वत्सरेण नराणान्तु सुराणाञ्च दिवानिशम् ।
दिनन्तेषामुत्तरेण नक्तञ्च दक्षिणायणे ॥
मन्वन्तरन्तु दिव्यानां युगानामेकसप्ततिः ।
मनोरायुःपरिमितं शक्रस्यायुः प्रकीर्त्तितम् ॥
पञ्चविंशत्सहस्रञ्च तथा पञ्चशतं परम् ।

संहर्त्ता चैव संहर्त्तुः पातुः पाता परात्परः ॥
महास्थूलात् स्थूलतमः सूक्ष्मात् सूक्ष्मतमः कृशः
पराणुः परमः कालः कालश्च कालभेदकः ॥”
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ४० अध्यायः ॥ * ॥
अपि च ।
“कालः करोति संसर्गं बन्धूनां बन्धुभिः समम् ।
कालः करोति विच्छेदं विरोधं प्रीतिमेव च ॥
कालः सृष्टिञ्च कुरुते कालश्च परिपालनम् ।
कालः करोति सानन्दं कालः संहरते प्रजाः ॥
सुखं दुःखं भयं शोकं जरां मृत्युञ्च जन्म च ।
सर्व्वं कर्म्मानुरोधेन काल एव करोति च ।
सर्व्वं कालकृतं तात विस्मयं न व्रज व्रज ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ९० अध्यायः ॥

माघादाषाढपर्य्यन्तं दिनवृद्धिं क्रयेण वै ।
नक्तं वृद्धं श्रावणाच्च पौषपर्य्यन्तमेव च ॥ * ॥
प्रतिपदः पूर्णिमान्तः शुक्लः पक्षः प्रकीर्त्तितः ।
पूर्णिमायाः प्रतिपदः अमावास्यान्त एव च ॥
कृष्णपक्षस्तु विज्ञेयो वेदविद्भिर्निरूपितः ।
द्वितीया च तृतीया च चतुर्थी पञ्चमी तथा ॥
षष्ठी च सप्तमी चैव ह्यष्टमी नवमी तथा ।
दशम्येकादशी चापि द्वादशी च त्रयोदशी ।
चतुर्द्दशी कुहूर्य्याविद्दिनन्तु गणनं स्मृतम् ॥ * ॥

तत्र सूर्य्यगतिर्नास्ति शक्रपातानुसारतः ॥
युगानां षष्टिमधिकं नराणाञ्च प्रकीर्त्तितम् ।
कालेनैतेन शक्रस्य पतनञ्च मनोस्तथा ॥ * ॥
चतुर्द्दशेन्द्रावच्छिन्नकालेन ब्रह्मणो दिनम् ।
एतेनैव च तद्युक्तमुक्तं धातुर्द्दिवानिशम् ॥
एवन्तेषां निपतनं बोद्धव्यं तद्दिवानिशम् ।
तत्र सूर्य्यगतिर्नास्ति शक्रपातानुसारतः ॥
दिवानिशञ्च जानन्ति ब्रह्मलोकनिवासिनः ।
दण्डद्वयं लवपलं शक्रपातेन तत्पलम् ॥
एवं त्रिंशद्दिनेनैव धातुर्म्मासः प्रकीर्त्तितः ।
अब्दो द्वादशभिर्म्मासैरेवन्तस्य शतायुषः ॥
ब्रह्मणः पतनेनैव निमेषः श्रीहरेरपि ॥ * ॥
धातुः पातानुसारेण वैकुण्ठेन दिवानिशम् ।
तत्र सूर्य्यगतिर्न्नास्ति चैवं गोलोकतः स्मृतम् ॥

वैकुण्ठवासिनः सर्व्वे तेन जानन्त्यहर्निशम् ॥
चन्द्रस्यापि ग्रहाणाञ्च गतिर्नास्तीति तत्र वै ।
चक्रं नैव भ्रमत्येव राशीनामिच्छया हरेः ॥
दिनञ्च तेजसा दीप्तं कृष्णस्य परमात्मनः ।
नक्तं तेजोविहीनञ्च हरौ च मन्दिरं गते ॥
एवं कालगतिस्तत्र विष्णुलोकेऽस्ति सन्ततम् ।
कालस्वरूपो भगवान् परमात्मा निराकृतिः ॥
चन्द्रसूर्य्यगतिर्नास्ति पातालेषु च सप्तसु ।
तद्वासिनश्च जानन्ति सङ्केतेन दिवानिशम् ॥
दिने च मूर्द्ध्नि नागानां मणिर्ज्वलति नित्यशः ।
सन्ध्यायां दीप्तिहीनश्च रात्रिश्च तमसावृता ॥
कालं तन्द्रीप्रमाणेन जानन्ति तन्निवासिनः ।
यथा भुवि तथा तत्र परिमाणं प्रकीर्त्तितम् ॥ * ॥
कृतं त्रेता द्वापरञ्च कलिश्चेति चतुर्युगम् ।
दिव्यैर्द्वादशसाहस्रैर्व्वत्सरैश्चापि सम्मितम् ॥
अष्टौ शतान्यप्यधिकं सहस्राणां चतुष्टयम् ।
दिव्यैर्व्वर्षैः कृतयुगं कालविद्भिर्निरूपितम् ॥
अष्टाविंशत्सहस्राण्यप्यविकं परिमाणकम् ।
लक्षाणाञ्च सप्तदश नृमाणं परिकीर्त्तितम् ॥
अधिकं षट्शतान्येव सहस्राणां त्रयं तथा ।
दिव्यैर्वर्षैश्च त्रेतेति वत्स कालविदो विदुः ॥
षण्णवतिसहस्राणि लक्षैर्द्वादशभिः सह ।
नृणां वर्षैश्च त्रेतेति कालविद्भिः प्रकीर्त्तितः ॥
चतुष्टयं शतानाञ्चाप्यधिकं द्विसहस्रकम् ।
वर्षं दिव्यं द्वापरञ्च कालज्ञैः परिकीर्त्तितम् ॥
चतुःषष्टिसहस्राणि लक्षैरष्टभिरेव च ।
नृणां वर्षैर्द्वापरञ्च कालज्ञैः परिकीर्त्तितम् ॥
अधिकं द्विशतञ्चैव दिव्यं वर्षसहस्रकम् ।
एवं मितं कलियुगं वत्स प्राज्ञैः प्रकीर्त्तितम् ॥
द्वात्रिंशच्च सहस्रञ्च चतुर्लक्षं नृमाणकम् ।
वर्षञ्चेति कलियुगं चकार कालकोविदः ॥
लक्षैस्त्रिचत्वारिंशद्भिः सह विंशत्सहस्रकैः ।
नृमाणवर्षैः कालज्ञैर्व्यक्तमेव चतुर्युगम् ॥
इति ते कथितं वत्स कालसंख्यानिरूपणम् ।
यथाश्रुतं यथाज्ञानं गच्छ वत्स हरेः पुरम् ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डेराधोद्धवसंवादे कालनिरूपणम् ९६ अध्यायः ॥ * ॥ अपि च ।
मार्कण्डेय उवाच ।
“निमेषो नाम कालाङ्गो नेत्रोन्मेषविलक्षितः ।
तैरष्टादशभिः काष्ठा काष्ठानां त्रिंशता कला ॥
कलाभिस्तावतीभिस्तु क्षणाख्यः परिकीर्त्तितः ।
क्षणैर्द्वादशभिः प्रोक्तो मुहूर्त्तस्तैस्तु त्रिंशता ॥
मानुष्यः स्यादहोरात्रः पक्षस्ते दश पञ्च च ।
ऋतुभिर्व्वत्सरः षड्भिस्तांश्च शृणु पृथक् पृथक् ॥ * ॥
चैत्रादियुगलैः संज्ञा तैस्तैः षड्भिर्द्विजोत्तमाः ।
वसन्तश्चैत्रवैशाखौ ग्रीष्मो ज्यैष्ठः शुचिस्तथा ॥
प्रावृट् नभोनभस्यौ तु शरत् स्यादिशकार्त्तिकौ ।
सहःपौषौ च हेमन्तः शिशिरो माघफाल्गुनौ ॥
षडिमे ऋतवः प्रोक्ताः यज्ञादौ विहिताः पृथक् ।
नृणां मानेन दशभिर्लक्षैः सप्तभिरुत्तरैः ॥
साष्टाविंशतिसाहस्रैर्म्मानं कृतयुगस्य च ।
सन्ध्या चतुःशतानीह वर्षाणामन्तरालतः ॥
सन्ध्यांशस्तावता प्रोक्तस्तदन्तर्गत ईप्सितः ।
त्रेता द्वादशभिर्लक्षैर्म्मानुषैर्व्वत्सरैर्भवेत् ॥
षण्णवत्या सहस्रैश्च सन्ध्या च स्यात् शतत्रयम् ।
शतत्रयन्तु सन्ध्यांशस्तदन्तः परिकीर्त्तितः ॥
चतुःषष्टिसहस्राणि लक्षाण्यष्टौ प्रमाणतः ।
भवेद्युगं द्वापराख्यं तेषु सन्ध्या शतद्वयम् ॥
शतद्वयन्तु सन्ध्यांशस्तदन्तर्गत इष्यते ।
द्वात्रिंशत्तु सहस्राणि चतुर्लक्षाणि वै कलेः ।
संवत्सरैर्भवेन्मानं सन्ध्यैकं प्रोच्यते शतम् ॥
वत्सराणामेकशतं सन्ध्यांशश्च तदन्तरे ।
एवं कृतञ्च त्रेता च द्वापरश्च तथा कलिः ॥
मानुषेण प्रमाणेन भवेद्युगचतुष्टयम् ।
त्रिचत्वारिंशता लक्षैर्मानं चतुर्युगं भवेत् ॥
सहस्रैरपि विंशत्या सन्ध्यासन्ध्यांशसंयुतम् ।
दैवं दिनं वत्सरेण मानुषेण सरात्रकम् ॥
एवं क्रमं गणित्वा तु मानुषीयैश्चतुर्युगम् ।
दैवं द्वादशसाहस्रं वत्सराणां प्रकीर्त्तितम् ॥
दैवैर्द्वादशसाहस्रैर्व्वत्सरैर्दैविकं युगम् ।
तद्वच्चतुर्युगं नृणां सन्ध्यासन्ध्यांशसंयुतम् ॥
देवानान्तु कृतं त्रेता द्वापरादिव्यवस्थया ।
न युगव्यवहारोऽस्ति न च धर्म्मादिभिन्नता ॥
किन्तु चातुर्युगं नारं भवेद्देवयुगं सदा ।
दैवैरेव च सप्तत्या युगैर्म्मन्वन्तरं भवेत् ॥
दैवे युगसहस्रे द्वे ब्रह्मणः स्यादहर्न्निशम् ।
चतुर्युगसहस्रे द्वे नृणां मानेन तद्भवेत् ॥
एकस्मिन् ब्राह्म्यदिवसे मनवः स्युश्चतुर्द्दश ।
एवं ब्राह्म्येण मानेन दिवसैस्तु त्रिभिः शतैः ॥
सषष्टिभिर्व्वत्सरः स्याद्ब्राह्म्यो वर्षो नृणां यथा ।
ब्राह्म्यैः पञ्चशता वर्षैः परार्द्धः परिकीर्त्तितः ॥
तदीश्वरस्य दिवसं तावती रात्रिरिष्यते ।
शतन ब्रह्मणो वर्षैः कालः स्यात् द्विपरार्द्धकः ॥
परार्द्धेद्वितयेऽतीते ब्रह्मणः प्रलयो भवेत् ।
प्रलीने ब्रह्मणि परे जगतां प्राकृतो लयः ॥
दश काष्ठाः किला नाम तत्संख्या स्याच्च घाटिका ॥
घटिके द्वे मुहूर्त्तः स्यात्तैस्त्रिंशत्या दिवानिशम् ।
चतुर्व्विंशतिवेलाभिरहोरात्रं प्रचक्षते ॥
सूर्य्योदयादिविज्ञेयो मुहूर्त्तानां क्रमः सदा ।
पश्चिमादर्द्धरात्रादिहोराणांविद्यते क्रमः ॥”
इति वह्निपुराणे गणभेदनामाध्यायः ॥ * ॥
अपरं नृसिंहपुराणे २ अध्याये कौर्म्मे ६ अध्याये च द्रष्टव्यम् ॥

**समयकारः**, पुं, (समयस्य कारः करणम् ।) सङ्केतः
यथा, --
“प्रज्ञाप्तिः परिभाषा शैली सङ्केतसमयकाराश्च ।”
इति त्रिकाण्डशेषः ॥

**समया**, व्य, (समयनमिति । सम् + इण् गतौ + “आः समिण्निकषिभ्याम् ।” उणा० ४ । १७४ ।
इति आप्रत्ययः ।) निकटः । अस्य पर्य्यायः ।
बिकषा २ हिरुक् ३ । इत्यमरः ॥ (यथा, शिशुपालवधे । ६ । ७३ ।
“कुटजानि वीक्ष्य शिखिभिः शिखरीन्द्रं
समयावनौ घनमदभ्रमराणि ।
गगनञ्च गीतनिनदस्य गिरोच्चैः
समया वनौघनमदभ्रमराणि ॥”)
मध्यः । इति चामरः । ३ । ३ । २५१ ॥
“समया निकठे मध्ये मध्ये च निकषान्तिके ।
हिरुङ्मध्ये विनार्थे च -- ॥”
इति रुद्रः ॥
हिरुगुक्तञ्च सामीप्ये । इत्यमरमाला ॥ काख-विज्ञापनम् । इति शब्दरत्नावली ॥

**समरः**, पुं, क्ली, (सम्यक् अरणं प्रापणमिति सं + ऋ गतौ + अप् । यद्वा, सम्यक् ऋच्छत्य-त्रेति । “मन्दरकन्दरशीकरेति ।” बाहुलकात् अरप्रत्ययेन साधुः । इत्युज्ज्वलः । ३ । १३१ ।)
युद्धम् । इत्यमरः ॥ (यथा, रघुः । १२ । ८२ ।
“इतराण्यपि रक्षांसि पेतुर्वानरकोटिषु ।

पक्षाभ्यां मनुषो मासः पितॄणां तदहर्न्निशम् ॥
मासैर्द्वादशभिर्व्वर्षो देवानां तदहर्निशम् ॥
कृष्णपक्षः पितॄणान्तु कर्म्मार्थं दिवसो मतः ॥
स्वप्नार्थं शुक्लपक्षस्तु रजनी परिकीर्त्तिता ।
देवानान्तु दिनं प्रोक्तं षण्मासा उत्तरायणम् ॥
रात्रिः स्वप्नाय देवानां षण्मासा दक्षिणायनम् ।
द्वाभ्यां द्वाभ्यान्तु मासाभ्यामर्कजाभ्यामृतुः
स्मृतः ॥
ऋतुभिश्चायनं प्रोक्तं त्रिभिस्तन्मानुषं मतम् ।

समस्तजगदाधारमव्ययंयत् परात्परम् ।
तस्य ब्रह्मस्वरूपस्य दिवारात्रञ्च तद्भवेत् ।
तत्परं नाम तस्यार्द्धं परार्द्धमभिधीयते ॥"
इति श्रीकालिकापुराणे २४ अध्यायः ॥ * ॥
किञ्च ।
"अक्षिपक्ष्मपरिक्षेपो निमेषः परिकीर्त्तितः ।
द्वौ निमेषौ त्रुटिर्नाम द्वे त्रुटी तु लवः स्मृतः ॥
द्विलवः क्षण इत्युक्तः काष्ठा प्रोक्ता दश
क्षणाः ।

रजांसि समरोत्थानि तच्छोणितनदीष्विव ॥")

**समरभः**, पुं, (समरवत् भातीति । भा + कः ।)

रतिबन्धविशेषः । तस्य लक्षणं यथा, --
"स्वजङ्घाद्वयसंयुक्तं कृत्वा योषित्पदद्वयम् ।
स्तनौ धृत्वा रमेत् कामी बन्धः समरभः
स्मृतः ॥"
इति रतिमञ्जरी ॥

**समरूप्यः**, त्रि, (समादागत इति । सम + "हेतु-

मनुष्येभ्योऽन्यतरस्यां रूप्यः ।" ४ । ३ । ८१
।
इति रूप्यः ।) समस्य साधोर्भूतपूर्व्वो गवादिः
।
समशब्दात् रूप्यप्रत्ययेन निष्पन्नः ॥

**समर्थः**, त्रि, (समर्थयते इति । सं + अर्थ + पचा-

द्यच् ।) शक्तिष्ठः । (यथा, तिथितत्त्वे ।
"ये समर्था जगत्यस्मिन्
सृष्टिस्थित्यन्तकारिणः ।
तेऽपि कालेन लीयन्ते कालो हि बलवत्तरः
॥")
सम्बन्धार्थः । हितः । इत्यमरः ॥ (यथा, महा-
भारते । १३ । ५ । २६ ।
"नार्हसे मां सहस्राक्ष द्रुमं त्याजयितुं चिरात् ।
समर्थमुपजीव्येमं त्यजेयं कथमद्य वै ॥")

**समर्थता**, स्त्री, (समर्थस्य भावः । समर्थ + तल् ।)

सामर्थ्यम् । शक्तिः । समर्थत्वम् ।
समर्थशब्दात्
तप्रत्ययेन निष्पन्ना ॥

**समर्थनं**, क्ली, (सम् + अर्थ + ल्युट् ।) इदमुचित-

मिदमनुचितमिति निश्चयः । तत्पर्य्यायः ।
संप्रधारणा २ । इत्यमरः ॥ समर्थना ३ । इति
शब्दरत्नावली ॥ (यथा, कथासरित्सागरे ।
२५ । ७३ ।
"शक्तिदेवस्य पार्श्वस्थो विष्णुदत्तः समर्थनम् ।
विनोदपूर्ब्बकं कुर्व्वन् कथां कथितवानिमाम्
॥")
सामर्थ्यञ्च ॥ (यथा, महाभारते । १ । १३० ।
१० ।
"स तु ज्ञानगरीयस्त्वात् तपसश्च समर्थनात् ।
अवतस्थे महाप्राज्ञो धैर्य्येण परमेण ह ॥")

**समर्थना**, स्त्री, (सम् + अर्थ + युच् । टाप् ।)

अशक्येऽध्यवसायः । यथा । सिन्धुमपि शोष-
याणि । इति मुग्धबोधव्याकरणम् ॥ समर्थनम्
।
इति शब्दरत्नावली ॥ (यथा, महाभारते ।
४ । ४ । २४ ।
"समर्थनासु सर्व्वसु हितञ्च प्रियमेव च ।
मंवर्णयेत्तदेवास्य प्रियादपि हितं वदेत् ॥")

**समर्द्धकः**, त्रि, (समृध्नोतीति । सम् + ऋधु वृद्धौ +

ण्वुल् ।) वरदः । इष्टफलदातृद्देवतादिः ।
इत्यमरः ॥

**समर्पणं**, क्ली, संपूर्व्वस्य ऋधातोर्ञौ (णिचि) कृते

पनि कृतेऽनट् (ल्युट्) प्रत्ययनिष्पन्नम् ।
सम्यक्-
प्रकारेणार्पणम् । सौँपोन इति भाषा । यथा,
"प्राणायामं ततः कृत्वा प्रजपेत् साधकाग्रणीः
।
देव्या हस्ते जपफलसमर्पणमथाचरेत् ॥"
इति तोडलतन्त्रे ३ पटलः ॥

**समर्य्यादः**, पुं, (मर्य्यादया सह वर्त्तमानः ।)

समीपः । मर्य्यादासहिते, त्रि । इति मेदिनी ॥

**समलं**, क्ली, (मलेन सह वर्त्तमानम् ।) बिष्ठा ।

इति शब्दरत्नावली ॥ आविले, त्रि । इति

वृत्तयो मन्दकौशिक्यो नात्र बिन्दुप्रवेशकौ ॥
वीथ्यङ्गानि च तत्र स्युर्यथालाभं त्रयोदश ।
गायत्र्युष्णिङ्मुखान्यत्र छन्दांसि विविधानि च ॥
त्रिशृङ्गारस्त्रिकपटः कार्य्यश्चायं त्रिविद्रवः ।
वस्तु द्वादशनाडीभिर्निष्पाद्यं प्रथमाङ्कगम् ॥
द्वितीयेऽङ्के च तिसृभिर्द्वाभ्यामङ्के तृतीयके ॥
नाडिका षटिकाद्वयमुच्यते । बिन्दुप्रवेशकौ च
नाटकोक्तावपि नेह विधातव्यौ । तत्र ।
धर्मार्थकामैस्त्रिविधः शृङ्गारः कपटः पुनः ।
स्वाभाविकः कृत्रिमश्च दैवजो विद्रवः पुनः ॥
अचेतनैश्चेतनैश्च चेतनाचेतनैः कृतः ॥
तत्र शास्त्राविरोधेन कृतो धर्म्मशृङ्गारः । अर्थ-
लाभार्थकल्पितः अर्थशृङ्गारः । प्रहसन-
शृङ्गारः कामशृङ्गारः । तत्र कामशृङ्गारः
प्रथमाङ्क एव । अन्ययोस्तु न नियम इत्याहुः ।
चेतनाचेतना गजादयः । समववीर्य्यन्ते बह-
वोऽर्था अस्मिन्निति समवकारः । यथा, समुद्र-
मथनम् ।" इति साहित्यदर्पणे । ६ । ५१५ --
५१६ ॥)

**समवतारः**, पुं, तीर्थम् । समवपूर्व्वकतृधातोर्घञ्-

प्रत्ययेन निष्पन्नः ॥ (यथा, किराते । ५ । ७ ।
"दधतमाकरिभिः करिभिः क्षतैः
समवतारसमैरसमैस्तटैः ॥")

**समवर्त्ती**, [न्] पुं, (समं वर्त्तते इति । सम् +

वृत् + णिनिः ।) यमः । इत्यमरः ॥ (यथा,
महाभारते । १२ । २०७ । ३५ ।
"शासितारञ्च पापानां पितृणां समवर्त्तिनम् ।
असृजत् सर्व्वभूतात्मा निधिपञ्च धनेश्वरम् ॥")
तुल्यवर्त्तनशीले, त्रि ॥

**समवायः**, पुं, (समवाय्यते इति । सम् + अव +

अय + घञ् ।) समूहः । इत्यमरः ॥ (यथा,
मनुः । ४ । १०८ ।
"अनध्यायो रुद्यमाने समवाये जनस्य च ॥")
सम्बन्धविशेषः । यथा, --
"घटादीनां कपालादौ द्रव्येषु गुणकर्म्मणोः ।
तेषु जातेश्च सम्बन्धः समवायः प्रकीर्त्तितः ॥"
इति भाषापरिच्छेदः ॥
अवयवावयविनोर्गुणगुणिनोः क्रियाक्रियावतो-
र्जातिव्यक्त्योर्नित्यद्रव्यविशेषयोच्च यः सम्बन्धः स
समवाथः । इति सिद्धान्तमुक्तावली ॥

**समवेतः**, त्रि, (सम् + अव + इण् + क्तः ।) मिलितः ।

"समष्टिरीशः सर्व्वेषां स्वात्मतादात्म्यवेदनात्
।
तदभावात्तदन्ये तु ज्ञायन्ते व्यष्टिसंज्ञया ॥"
इति पञ्चदशी ॥

**समष्ठिलः**, पुं, (समं तिष्ठतीति । स्था + बाहु-

लकात् इलच् ।) क्षुपविशेषः । कोकुयाँ इति
हिन्दी भाषा । तत्पर्य्यायः । भण्डीरः २
नद्याम्रः ३ आम्रगन्धकः ४ कोकाग्रः ५
कण्टकि-
फलः ६ उपदंशः ७ । अस्य गुणाः । कटुत्वम्
।
उष्णत्वम् । रुच्यत्वम् । मुखविशोधनत्वम् ।
कफवातप्रशमनत्वम् । दाहकारित्वम् । दीपन-
त्वञ्च । इति राजनिर्घण्टः ॥

**समष्ठिला**, स्त्री, (समष्ठिल + स्त्रियां टाप् ।)

गण्डीरः । इत्यमरः ॥ द्वे शसा इति ख्याते
शमठ इति ख्याते । अनपदेशजे शाके इति
केचित् । गुण्ठिया इति ख्याते शाके इति
सर्व्वानन्दः । गण्डीनि ग्रन्थियुक्तानि अङ्गानि
ईरयति गण्डीरः षण् । गण्डं रोगविशेषं
ईरयति गण्डीरः शूरणकन्दादिरित्यन्ये ।
सम्य-
गस्थि लाति समष्ठिला डः मनीषादित्वात्
सस्य
षत्वम् । इति भरतः ॥

**समष्ठीला**, स्त्री, समष्ठिला । यथा, --

"समष्ठोऽपि च गण्डीरः समष्ठीला समष्ठिला ।"
इति शब्दरत्नावली ॥

**समसनं**, क्ली, (सम् + अस् + ल्युट् ।) संक्षेपणम् ।

इत्यमरः ॥ (समासः । इति केचित् ॥)

**समसुप्तिः**, पुं, (समेषां सर्व्वेषां सुप्तिर्यत्र ।)

कल्पान्तः । महाप्रलयः । इति हेमचन्द्रः ।
२ । ७५ ॥ (स्त्री, समा सुप्तिरिति ।) तुल्य-
शयनञ्च ॥

**समस्तं**, त्रि, (सम् + अस् + क्तः ।) सम्पूर्णम् ।

तत्पर्य्यायः । समम् २ सर्व्वम् ३ विश्वम् ४
अशेषम् ६ कृत्स्नम् ६ निखिलम् ७ अखिलम्
८

जटाधरः ॥ (कलङ्कविशिष्टे च त्रि । यथा,
कथासरितसागरे । १०६ । ६२ ॥
"समलो व्योम्नि दृष्टोऽद्य चन्द्रोऽनेनेति
कौतुकात् ।
अव्योम्नि दर्शितं धात्रा चन्द्रमन्यमिवामलम्
॥")

**समवकारः**, पुं, (समवकीर्य्यन्ते बहवोऽर्था यस्मि-

न्निति । सम् + अव + कृ + घञ् ।) नाटकभेदः
।
यथा, --
"स्यान्नाटकं प्रकरणं भाणः प्रहसनं डिमः ।
व्यायोगः समवकारो विथ्यङ्केहामृगा इति ।
अभिनेयप्रकाराः स्युर्भाषाः षट् संस्कृता-
दिकाः ॥"
इति हेमचन्द्रः ॥
(तल्लक्षणादिकं यथा, --
अथ समवकारः ।
"वृत्तं समवकारे तु ण्यातं देवासुराश्रयम् ।
सन्धयो निर्व्विमर्षास्तु त्रयोऽङ्कास्तत्र चादिमे ॥
सन्धी द्वावन्त्ययोस्तद्वद्वेक एको भवेत् पुनः ।
नायका द्वादशोदात्ताः प्रख्याता देवदानवाः ॥
फलं पृथक् पृथक् तेषां वीरमुख्योऽखिलो रसः
।

यथा, --
"धर्म्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्व्वत सञ्जय ॥"
इति भगवद्गीतायाम् १ अध्यायः ॥
समवायसम्बन्धेन वृत्तिः । यथा, --
"यत् समवेतं कार्य्यं भवति
ज्ञेयन्त समवायिजनकं तत् ।"
इति भाषापरिच्छेदः ॥

**समश्नुवानः**, त्रि, सम्यक्प्रकारेण व्याप्तिविशिष्टः ।

संपूर्व्वकाशधातोः शानच्प्रत्ययेन निष्पन्नः ॥

**समष्टिः**, स्त्री, (सं + अश व्याप्तौ + क्तिन् ।) समस्तः ।

मिलितः । यथा, --

निःशेषम् ९ समग्रम् १० सकलम् ११ पूर्णम्
१२
अखण्डम् १३ अनूनकम् १४ । इत्यमरः ॥
अनन्तम् १५ । इति शब्दरत्नावली ॥ अन्यू-
नम् १६ अनूनम् १७ । इति जटाधरः ॥
(यथा,
तिष्णुपुराणे । १ । ४ । ३३ ।
"सूक्तान्यशेषाणि शटाकलापो
घ्राणं समस्तानि हवींषि देव ॥")

**समस्थः**, त्रि, (समे तिष्ठतीति । स्था + कः ।)

समानः । समभावेन स्थितः ।
समशब्दपूर्व्वक-
स्थाधातोर्ड्प्रत्ययेन निष्पन्नः ॥ (यथा, बृहत्-
संहितायाम् । ५० । २० ।
"परतो न विशेषफलं
विषमसमस्थास्तु पापशुभफलदाः ॥")

**समस्थली**, स्त्री, (समा स्थली ।) गङ्गायमुनयो-

र्म्मध्यदेशः । तत्पर्य्यायः । अन्तर्व्वेदिः २ ।
इति
हेमचन्द्रः ॥

**समस्या**, स्त्री, (समसनं उक्त्या संक्षेपणम् । सम् +

अस् + ण्यत् । संज्ञापूर्व्वकत्वात् वृद्ध्यभावः
।)
समस्यते संक्षिप्यतेऽनया समस्या अस्यु इर्
क्षेपे शीव्रजयजेत्यादिना क्यप् भिन्नाभि-

प्रायस्य श्लोकादेस्त दीयत्वेन
प्रत्यभिज्ञायमानानां
भागानां स्वकृतेन परकृतेन वा भागान्तरेण
समसनं संघटनं समस्येति माधवी ॥ श्लोकस्य
पादेनैकेन द्वाभ्यां त्रिभिर्व्वा पूरणम् । यथा, --
"मुमूर्षोः किं तवाद्यापि चित्रकाननगारैः ।
स्मर नारायणं येन त्रेतायां रावणो हतः ॥"
इत्यादिश्लोकादौ पादे पूरणरूपेणायमित्येके ।
इति रायमुकुटः ॥ तत्पर्य्यायः । समासार्था २ ।
इत्यमरः ॥ समस्यार्था ३ समाप्त्यर्था ४ । इति
भरतः ॥

**समस्यार्था**, स्त्री, (समस्या अर्थो यस्याः ।)
समस्या । इत्यमरटीकायां भरतः ॥

**समह्वा**, स्त्री, यशः । इति शब्दरत्नावली ॥

**समा**, स्त्री, (सम वैक्लव्ये + पचाद्यच् । ततष्टाप् ।)
वत्सरः । इत्यमरः ॥ समति विकलयति भावान्
समा सम ष्टम वैक्लव्ये पचादित्वादन् आप् ।
समा नित्यबहुवचनान्ताः स्त्रियामिति वामना-
दयः । समां समां विज्ञायते इत्येकत्वेऽपि दृश्यते
इति स्वामी । अतएव समा इति बहुवचनेन
क्वचित् पाठः । समेति क्वचिदेकवचनेन । इति
तट्टीकायां भरतः ॥ (यथा, रामायणे । १ । २ ।
१५ ।
"मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥")

**समांशहारी**, [न्] त्रि, (समांशं हरतीति । हृ +
णिनिः ।) समभागार्हः । यथा, दायतत्त्वे ।
"समांशहारिणी माता पुत्त्राणां स्यात् मृते
पतौ ॥"

**समांशिकः**, त्रि, (समांशोऽस्त्यस्येति । ठन् ।)
समभागार्हः । यथा, --
"यदि कुर्य्यात् समानांशान् पत्न्यः कार्य्याः
समांशिकाः ।
न दत्तं स्त्रीधनं यासां दत्ते त्वर्द्धं प्रकीर्त्तितम् ॥"
इति दायतत्त्वम् ॥

**समांशी**, [न्] त्रि, (समांशोऽस्त्यस्येति । इनिः ।)
तुल्यभागविशिष्टः । समानभागी । यथा, --
"ज्येष्ठं वा श्रेष्ठभागेन सर्व्वे वा स्युः समांशिनः ॥"
इति दायतत्त्वम् ॥

**समांसमीना**, स्त्री, (समां समां विजायते इति ।

"कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ।
योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ॥"
इति भगवद्गीतायाम् । १ । २२ ॥

**समागतिः**, स्त्री, समागमनम् । समाङ्पूर्व्वगम-
धातोः क्तिप्रत्ययनिष्पन्नम् ॥

**समागमः**, पुं, (सं + आ + गम + घञ् ।) सम्यगा-
गमनम् । सम्प्राप्तिः । यथा, --
"रतिशक्तिः स्त्रियः कान्ता भोज्यं भोजन-
शक्तिता ।
दानशक्तिः सविभवा रूपमारोग्यसम्पदः ।
श्राद्धपुष्पमिदं प्रोक्तं फलं ब्रह्मसमागमः ॥"
इति श्राद्धतत्त्वधृतमत्स्यपुराणवचनम्॥

**समाघातः**, पुं, (समाहन्यतेऽत्रेति । सं + आ +
हन + घञ् ।) युद्धम् । इत्यमरः ॥ (यथा,
साहित्यदर्पणे । ६ । ४२१ ।
"सम्फेटस्तु समाघातः क्रुद्धसत्वरयोर्द्वयोः ॥")
वधः । इति मेदिनी ॥

**समाचारः**, पुं, (सम् + आ + चर + घञ् ।)
सम्यगाचरणम् । यथा, --
"पुण्यस्त्रीणां समाचारं श्रोतुमिच्छामि
तत्त्वतः ।"
इति मात्स्ये ६६ अध्यायः ॥
संवादः । इति लोकप्रसिद्धः ॥

**समाजः**, पुं, (संवीयतेऽत्रेति । सं + अज + घञ् ।
"अजेर्व्यघञपोः ।" २ । ४ । ५६ । इति वीभावो
न । "अजिव्रज्योश्च ।" ७ । ३ । ६० । इति
कुत्वनिषेधः ।) पशुभिन्नानां संघः । इत्यमरः ॥
सभा । इति हेमचन्द्रः ॥ (यथा, भागवते ।
१० । ४४ । ९ ।
"धर्म्मव्यतिक्रमोऽह्यस्य समाजस्य ध्रुवं भवेत् ।
यत्राधर्म्मः समुत्तिष्ठेन्न स्थेयं तत्र कर्हिचित् ॥")
हस्ती । इति अनेकार्थकोषः ॥

**समाज्ञा**, स्त्री, (समाज्ञायते इति । सम् + आ +
ज्ञा + "आतश्चोपसर्गे ।" इत्यङ् । टाप् ।)
समज्ञा । इत्यमरटीकायां भरतः ।

**समादानं**, क्ली, (सम् + आ + दा + ल्युट् ।) समी-
चीनग्रहणम् । सम्यग्ग्रहणम् । (यथा, महा-
भारते । १३ । ९४ । ३५ ।
"सर्व्वपापसमादानं नृशंसे चानृते च यत् ।

विषयेभ्यो निगृहीतस्यान्तःकरणस्य श्रवणादौ
तदनुगुणेषु तदुपकारकेषु अमानित्वादिसाधन-
विषयेषु समाधिनैरन्तर्य्येण तच्चिन्तनं समा-
धानमित्यर्थः । इति तट्टीकासुबोधनी ॥ (यथा,
भागवते । ३ । २८ । ६ ।
"स्वधिष्ण्यानामेकदेशे मनसा प्राणधारणा ।
वैकुण्ठलीलाभिध्यानं समाधानं तथात्मनः ॥")
पूर्व्वपक्षस्योत्तरम् । इति लोकप्रसिद्धम् ॥
(नाट-
काङ्गविशेषः । यथा, साहित्यदर्पणे । ६ । ३३८
।
"उपक्षेपः परिकरः परिन्यासो विजोभनम् ।
युक्तिः प्राप्तिः समाधानं विधानं परिभावना ।
उद्भेदः करणं मेद एतान्यङ्गानि वै मुखे ॥"
तल्लक्षणादिकं यथा, तत्रैव । ६ । ३४५ ।
"बीजस्यागमनं यत्त तत् समाधानमुच्यते ।
यथा, वेणीसंहारे ।
नेपथ्ये भो भो विराटद्रुपदप्रभृतयः ! श्रूयताम् ।
'यत् सत्यव्रतभङ्गभीरुमनसायत्नेन मन्दीकृतं
यद्विस्मर्त्तुमपीहितं शमवता शान्तिं कुलस्ये-
च्छता ।
तद्द्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत् कुरुबले यौधिष्ठिरं
जृम्भते ॥'
अत्र 'सुस्था भवन्ति मयि जीवतीति' आदि-
बीजस्य प्रधाननायकाभिमतत्वेन सम्यगाहित-
त्वात् समाधानम् ॥" * ॥)

**समाधिः**, पुं, (समाधीयतेऽस्मिन् मनो जनैरिति ।
सम् + आ + धा + "उपसर्ग धोः किः ।" इति
किः ।) समर्थनम् । नीवाकः । नियमः । इत्य-
मरः ॥ (यथा, कुमारे । ५ । ६ ।
"अयाचतारण्यनिवासमात्मनः
फलोदयान्ताय तपःसमाधये ॥")
समर्थनं अशक्ये अध्यवसायः दुर्घटस्य
घटनत्वं
वा । नीवाको वचनाभावः । इति स्वामी ॥
धान्यादिषु मूल्योत्कर्षपूर्ब्बको जनादरः । इति
सुभूतिः ॥ नियमः अङ्गीकारः । एते समा-
धयः । समाधीयतेऽस्मिन् मनो जनैरिति किः ।
इति भरतः ॥ ध्यानम् । काव्यगुणविशेषः ।
इति मेदिनी ॥ (अर्थालङ्कारविशेषः । यथा,
साहित्यदर्पणे । १० । ७४० ।

"समां समां विजायते ।" ५ । २ । १२ । इति खः ।)

प्रतिवर्षप्रसूतगवी । इत्यमरः ॥

**समाकर्षो**, [न्] पुं, (समाकर्षति चित्तमिति ।

सम् + आ + कृष् + णिनिः ।) अतिदूरगामि-
गन्धः । तत्पर्य्यायः । निर्हारी २ । इत्यमरः ॥
तृष्णाजनकगन्धयुक्ते भक्ष्यादिद्रव्ये द्वयमेतदिति
साञ्झः ॥ तत्र, त्रि ॥

**समाख्या**, स्त्री, (समाख्यायतेऽनयेति । सम् + आ

+ ख्या + अङ् ।) कीर्त्तिः । इति शब्दरत्ना-
वली ॥ संज्ञा । यथा, --
"सपिण्डीकरणसमाख्यासिद्ध्यर्थंसुतरां तत्र
तथाचरणम् ॥" इति तिथ्यादितत्त्वम् ॥

**समागतः**, त्रि, (सम् + आ + गम + क्तः ।) सम्यगा-

गमनविशिष्टः । आगमनाश्रयः । यथा, --

तत्तस्यास्तु सदा पापं यस्ते हरति पुष्करम् ॥")
सौगताह्निकम् । बौद्धानां नित्यकर्म्म । इति
मेदिनी ॥

**समाधाः**, पुं, निष्पत्तिः । विरोधभञ्जनम् । इति

लोकप्रसिद्धम् । समाधानम् । समाङ्पूर्व्वधा-
धातोर्व्विच्प्रत्ययेन निष्पन्नः ॥

**समाधानं**, क्ली, (सम् + आ + धा + ल्युट् ।)

ब्रह्मणि मनःस्थिरीकरणम् । चित्तैकाग्रम् । तत्-
पर्य्यायः । अवधानम् २ प्रणिधानम् ३ समाधिः
४ । इति हेमचन्द्रः ॥ निगृहीतस्य मनसः
श्रवणादौ तदनुगुणविषये च समाधिः समा-
धानम् । इति वेदान्तसारः ॥ इदानीं समा-
धानं लक्षयति । निगृहीतस्येति । शब्दादि-

"समाधिः सुकरे कार्य्ये दैवाद्ध्वस्त्वन्तरागमात्
॥"
यथा, --
"मानमस्या निराकर्त्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्‌चेदमुदीर्णं घनगर्जितम् ॥"
समाधीयतेऽनेनेति करणे किः । कारणसामग्री ।
यथा, रघुः । १ । २९ ।
"तं वेधा विदधे नूनं महाभूतसमाधिना ।
तथाहि सर्व्वे तस्यासन् परार्थैकफला गुणाः
॥")
इन्द्रियनिरोधनम् । इति शब्दरत्नावली ॥ * ॥
समाधिलक्षणं यथा, गारुडे ४४ अध्याये ।
"नित्यं शुद्धं बुद्धियुक्तं सत्यमानन्दमद्वयम् ।
तुरीयमक्षरं ब्रह्म अहमस्मि परं पदम् ।
अहं ब्रह्मेत्यवस्थानं समाधिरिति गीयते ॥"

अपि च तत्रैव २४० अध्याये ।
"द्वादशध्यानपर्य्यन्तं मनो ब्रह्मणि यो नरः ।
तुष्टे तु संयतो मुक्तः समाधिः सोऽभिधीयते ॥
ध्येयमेव हि सर्व्वत्र ध्याता तल्लयतां गतः ।
पश्यति द्वतरहितं समाधिः सोऽभिधीयते ॥"
अन्यच्च विष्णुपुराणे । ६ । ७ । ९० ।
"तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत् ।
मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते ॥"
अपरञ्च ।
"इमं गुणसमाहारमनात्मत्वेन पश्यतः ।
अन्तः शीतलता यस्य समाधिरिति कथ्यते ॥"
इति योगवाशिष्ठे उपशमप्रकरणम् ॥
योगाङ्गविशेषः । यथा । समाधिस्तु द्विविधः ।
सविकल्पको निर्व्विकल्पश्चेति । तत्र सविकल्पको नाम ज्ञातृज्ञानादिविकल्पलयानपेक्षया द्वितीय-वस्तुनि तदाकाराकारितायाच्चित्तवृत्तेरवस्थानम् । तदा मृण्मयगजादिभाणेऽपि मृद्भाणवत् द्वैतभाणेऽप्यद्वैतं वस्तु भासते । तदुक्तमभियुक्तैः ।
"दृशि स्वरूपं गगनोपमं परं
सकृद्विभातं त्वजमेकमव्ययम् ।
अलेपकं सर्व्वगतं यदद्वयं
तदेव चाहं सततं विमुक्तम् ॥
दृशिस्तु शुद्धोऽहमविक्रियात्मको
न मेऽस्ति बद्धो न च मे विमोक्षः ॥"
इत्यादि ॥ * ॥
निर्व्विकल्पकस्तु । ज्ञातृज्ञानादिभेदलयापेक्षया द्वितीयवस्तुनि तदाकाराकारिताया बुद्धिवृत्ते-रतितरामेकीभावेनावस्थानम् । तदा तु जला-काराकारितलवणानवभासेन जलमात्रावभास-वदद्वितीयवस्त्वाकारांकारितचित्तवृत्त्यनवभासेन नाद्वितीयवस्तुमात्रमेवावभासते । ततश्चास्य सुषुप्तेश्चाभेदशङ्का न भवति उभयत्र वृत्त्यभाणे समानेऽपि तत्सद्भावासद्भावमात्रेणानयोर्भेदोप-पत्तेः ॥ अस्याङ्गानि । यमनियमासनप्राणायाम-प्रत्याहारधारणाध्यानसमाधयः। तत्र अहिंसा-सत्यास्तेयब्रह्मचर्य्यापरिग्रहाः यमाः । १ । शौच-सन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः । २ करचरणादिसंस्थानविशेषलक्षणानि पद्मस्वस्ति-कादीनि आसनानि । ३ । रेचकपूरककुम्भक-लक्षणाः प्राणनिग्रहोपायाः प्राणायामाः । ४ । इन्द्रियाणां स्वस्वविषयेभ्यः प्रत्याहरणं प्रत्या-हारः । ५ । अद्वितीयवस्तुन्यन्तरिन्द्रियधारणं धारणा । ६ । तत्राद्वितीयवस्तुनि विच्छिद्य वस्त्वनवलम्बनेनापि चित्तवृत्तेः सविकल्पानन्दा-स्वादनं रसास्वादः । समाध्यारम्भसमये सवि-कल्पानन्दास्वादनं वा । ४ । अनेन विघ्नचतु-ष्टयेन रहितं चित्तं निर्व्वातदीपवदचलं सद-खण्डचैतन्यमात्रमवतिष्टते यदा तदा निर्व्वि-कल्पकः समाधिरित्युच्यते ॥ * ॥ तदुक्तम् ।
"लये सम्बोधयेत् चित्तं विक्षिप्तं शमयेत् पुनः ।
सकषायं विजानीयात् शमप्राप्तं न चालयेत् ॥
नास्वादयेद्रसं तत्र निःसङ्गः प्रज्ञया भवेत् ॥"
इत्यादि । यथा दीपो निवातस्थो नेङ्गते इत्यादि च । इति श्रीसदानन्दयोगीन्द्रविरचित-वेदान्तसारः ॥ (स्वनामख्यातवैश्यविशेषः । अयं हि महामायामाराध्य परं ज्ञानमलभत् । अस्य विशेषवृत्तान्तस्तु देवीमाहात्म्यतो द्रष्टव्यः ॥)

**समाधिस्थः**, त्रि, (समाधौ तिष्ठतीति । स्था + कः ।)
समाधियुक्तः । यथा, --
"मनः संकल्परहितमिन्द्रियार्थानचिन्तयन् ।
यस्य ब्रह्मणि संलीनं समाधिस्थः स कीर्त्तितः ॥
ध्यायतः परमात्मानमात्मस्थं यस्य योगिनः ।
मनस्तल्लयतां याति समाधिस्थः स कीर्त्तितः ॥"
इति गारुडे गीतासारे २४० अध्यायः ॥

**समानं**, त्रि, (समानीति सम्यक्प्रकारेण प्राणि-तीति । सम् + आ + अन + ल्युः । यद्वा, समानं मानमस्य । समानस्य च्छन्दसीति सः ।) सत् । समम् । (यथा, रघुः । २ । ७४ ।
"भुजे भुजङ्गेन्द्रसमानसारे
भूयः स भूमेर्धुरमाससञ्ज ॥")
एकम् । इति मेदिनी ॥ (यथा, मनुः । ४ । ४० ।
"नोपगच्छेत् प्रमत्तोऽपि स्त्रियमार्त्तवदर्शने ।
समानशयने चैव न शयीत तया सह ॥" * ॥
मानेन सह वर्त्तमानमिति विग्रहे गर्व्वसहि-तञ्च । यथा, भागवते । १ । १६ । ३६ ।
"स्थैर्य्यं समानमहरत् मधुमानिनीनां
रोमोत्सवो मम यदङ्घ्रिविटङ्किताया ॥")

**समानः**, पुं, (समन्तादनित्यनेनेति । सम् + अन + घञ् ।) शरीरस्थवायुविशेषः । स तु नाभि-संस्थितः । इत्यमरभरतौ ॥ (यथा, --
"हृदि प्राणो गुदेऽपानः समानो नाभि-संस्थितः ॥")
षर्णभेदः । इति हेमचन्द्रः ॥ स तु एकस्थानो-विशेषः । तर्पणे समानं एकमुदकमस्य । यथा,
"जारो नङ्गः सगोत्रस्तु
स्वजनज्ञातिबान्धवाः ।
सकुल्यबन्धुदायादस्वसमानोदकाअपि ॥"
इति जटाधरः ॥
स तु चतुर्द्दशपुरुषपर्य्यन्तः जन्मनामस्मृति-पर्य्यन्तश्च । तत्र आद्यस्यैकादशपुरुषावधि-चतुर्दशपुरुषपर्य्यन्तस्याशौचं पक्षिणी द्वितीय-स्यैकाहः । यथा । उदकक्रियामधिकृत्य पार-स्करः । सर्व्वे ज्ञातयो भावयन्ति । आसप्त-माद्दशमाद्वा समानग्रामवासेन यावत् सम्बन्ध-मनुस्मरेयुर्व्वा इति भावयन्ति निष्पादयन्ति अत्र यावत् सम्बन्धमनुस्मरेयुरेककुलजाता वय-मिति स्मरणं भवतीत्यनेनैव सर्व्वेषामुदकदाने प्राप्ते यदासप्तमाद्दशमाद्धुक्तं तत्सन्निकर्षतार-तम्येनाशौचभेदेऽप्युदककर्म्म समानार्थमिति । अशौचभेदस्तु सप्तमपुरुषपर्य्यन्तं सपिण्डत्वाद्द-शाहः । ततश्च दशमपुरुषपर्य्यन्तं त्र्यहः । तथा च विष्णुबृहस्पती ।
"दशाहेन सपिण्डास्तु शुध्यन्ति मृतसूतके ।
त्रिरात्रेण सकुल्यास्तु स्नात्वा शुध्यन्ति गोत्रजाः ॥"
ततश्चतुर्दशपुरुषपर्य्यन्तं पक्षिणी ततश्च जन्मना-मस्मृतिपर्य्यन्तमेकाहः । तथा च मिताक्षरा-विवादचिन्तामण्योर्ब्बृहन्मनुः ।
"सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते ।

विच्छिद्य अन्तरिन्द्रियवृत्तिप्रवाहोध्यानम् । ७ । समाधिस्तु उक्तः सविकल्पक एव । ८ । एव-मस्याङ्गिनो निर्व्विकल्पकस्य लयविक्षेपकषाय-रसास्वादलक्षणश्चत्वारोविघ्नाः सम्भवन्ति । लयस्तावत् अखण्डवस्त्वनवलम्बनेन चित्तवृत्ते-र्निद्रा । १ । अखण्डवस्त्वनवलम्बनेन चित्तवृत्ते-रन्यावलम्बनं विक्षेपः । २ । लयविक्षेपाभावेऽपि चित्तवृत्ते रागादिवासनया स्तब्धीभावात् अखण्डवस्त्वनवलम्बनंकषायः । ३ । अखण्ड-

च्चार्य्यवर्णः । यथा । साम्यन्त्वेकस्थानत्वम् । इति
मुग्धबोधव्याकरणम् ॥

**समानकालीनः**, त्रि, (समानकाले भवः । समान-

काल + छः ।) तुल्यकालोत्पत्तिकः । यथा । गोषु दुह्यमानासु आगतः दुग्धास्वागत इत्यादौ समानकालीनत्वं भाषते । तेन गोविषयकवर्त्त-मानदोहनकालीनगमनानुकूलकृतिमान् । एवं गोविषयकातीतदोहनसमानकालीनातीतगम नानुकूलकृतिमानिति बोधः । इति सार-मञ्जरी ॥

**समानोदकः**, पुं, (समानं एकं तर्पणकाले देय-

मुदकं यस्य ।) एकोदकः । स तु ज्ञाति-

समानोदकभावस्तु निवर्त्तेताचतुर्द्दशात् ॥
जन्मनामस्मृतेरेके तत्परं गोत्रमुच्यते ॥”
अत्र समानोदकत्वे द्विविधे पूर्व्वत्र गोतमः
पक्षिणीमसपिण्डे । परत्र हारीतः ।
मातामहे
त्रिरात्रं स्यादेकाहस्त्वसपिण्डके इति ।
अत्रैव
गोत्रजानामहः स्मृतमिति जावालवचनम्
ततः परं सर्व्वथा समानोदकतानिवृत्तेः
स्नान-
मात्रमिति स्नात्वा शुध्यन्ति गोत्रजा इति
बृह-
स्पत्युक्तत्वादिति । इति शुद्धितत्त्वम् ॥

**समानोदर्य्यः**, पुं, (समाने उदरे शयितः । “समा-

नोदरे शयित ओ चोदात्तः ।” ४ । ४ ।
१०८ ।
इति यत् । “विभाषोदरे ।” ६ । ३ । ८८ ।
इति
पक्षे सादेशो न ।) सहोदरः । इत्यमरः ॥
(यथा, भट्टिः । ७ । ८६ ।
“समानोदर्य्यमस्माकं जटायुञ्च
स्तुथादरात् ॥”)

**समापः**, पुं, (समा आपो यस्मिन् । ऋक्पूरित्यः ।

“समाप ईत्वे प्रतिषेधो वक्तव्यः ।” ६ । ३
। ९७ ।
इत्यस्य वार्त्तिकोक्त्या ईत्वप्रतिषेधः ।)
देवयज-
भम् । इति मुग्धबोधव्याकरणम् ॥

**समापकः**, त्रि, समापनकर्त्ता । समापयति यः

संपूर्व्वापधातोर्ण्वकप्रत्ययेन निष्पन्नः ।
यथा, --
“आख्यातास्तिबादयस्तेषाञ्च प्रधानत्वं
वाक्य-
समापकत्वात् ।” इति दुर्गादासः ॥

**समापनं**, क्ली, (सम् + आप् + ल्युट् ।) परिच्छेदः
।

समाप्तिः । (यथा, मनुः । ५ । ८८ ।
“आदिष्टी नोदकं कुर्य्यादाव्रतस्य
समापनात् ।
समाप्ते तूदकं कृत्वा त्रिरात्रेणैव शुध्यति
॥”)

वधः । इति मेदिनी ॥ समाधानम् । इति विश्वः ॥ लब्धम् । इति धरणिः ॥

**समापन्नं**, त्रि, (सम् + आ + पद् + क्तः ।) समाप्तः । प्राप्तः । क्लिष्टः । वधः । इति विश्वः ॥

**समापिका**, स्त्री, (समापयतीति । सम् + आप + ण्वुल् । टापि अत इत्वम् ।) वाक्यसमापकक्रिया । तत्र तिबादयो भवन्ति । यथा । देवदत्तो गच्छति । क्वचित् क्तान्तादिपदेनापि वाक्यसमाप्तिः । यथा । नाम्ना दृष्टः शिवो जनैः । क्वचित् तव्याद्यन्तक्रियाया अपि वाक्य-
समापकत्वम् । यथा । मया कां दिशं गन्तव्यम् ।
कार्दन्तिकी क्रिया असमापिका । तत्र शत्रादयो भवन्ति । यथा । गच्छन् भुङ्क्ते । भुक्त्वा व्रजति । इति व्याकरणटीका ॥

**समापितं**, त्रि, (सम् + आप् + णिच् + क्तः ।) कृतसमापनम् । यथा, --
"आरब्धं मलमासात् प्राक् यत् कर्म्म न समापितम् ।
आगते मलमासेऽपि तत् समाप्यं न संशयः ॥"
इति मलमासतत्त्वम् ॥

**समाप्तः**, त्रि, (सम् + आप् + क्तः ।) समापन-प्राप्तः । समाप्तिविशिष्टः । यथा, --
"समाप्ते यदि जानीयान्मयैतदन्यथाकृतम् ।
यतस्तदन्यथाभूतं तत एव समापयेत् ॥"
इति तिथ्यादितत्त्वम् ॥

**समाप्तालः**, पुं, (समाप्ताय अलतीति । अल + अच् ।) पतिः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**समाप्तिः**, स्त्री, (सम् + आप् + क्तिन् ।) अव-सानम् । (यथा, कुमारे । ३ । २७ ।
"सद्यः प्रबालोद्गमचारुपत्रे
नीते समाप्तिं नवचूतबाणे ।
निवेशयामास मधुर्द्विरेफान्
नामाक्षराणीव मनोभवस्य ॥")
समर्थनम् । इति मेदिनी ॥ परिप्राप्तिः । इति शब्दरत्नावली ॥

**समाप्यर्था**, स्त्री, (समाप्त्या अर्थो यस्याः ।) समस्या । इति समासार्थाशब्दटीकायां कुङ्कुमादिविलेपनम् । इत्यमरः ॥ (यथा, महा-भारते । १३ । १३१ । ९ ।
"गोरोचनासमालम्भो वचाहस्तश्च यो भवेत् ।
घृताक्षतञ्च यो दद्यात् मस्तके तत्परायणः ।
ये च मांसं न खादन्ति तान्न शक्नुम हिंसि-तुम् ॥"
मारणम् । यथा, महाभारते । १२ । ३४ । २८ ।
"वृथा पशुसमालम्भं नैव कुर्य्यान्न कारयेत् ॥")

**समालम्भनं**, क्ली, (सम् + आ + लम्भ + ल्युट् ।) कुङ्कुमादिविलेपनम् । तत्पर्य्यायः । विच्छित्तिः २ कषायः ३ । इति त्रिकाण्डशेषः ॥ समालम्भः ४ विलेपनम् ५ । इत्यमरः ॥ (यथा, रामायणे । ४ । २६ । २८ ।
"समालम्भनमादाय गोरचनमनःशिलाम् ।
आजग्मुखत्र मुदिता वराः कन्याश्च षोडश ॥")
सम्यङ्गारणम् । सम्यक्स्पर्शनम् । यथा । अत ऊर्द्ध्वमसमालम्भनमादशरात्रादितिगोभिल-सूत्रम् ॥

**समाली**, स्त्री, कुसुमाकरः । इति त्रिकाण्डशेषः ॥

**समावर्त्तनं**, क्ली, (सम् + आ + वृत् + ल्युट् ।) वेदाध्ययनानन्तरं गार्हस्थाधिकारप्रयोजकं कर्म्म । यथा । "अथ समावर्त्तनम् । ज्योतिषे ।
'भौमभानुजयोर्व्वारे नक्षत्रे च व्रतोदिते ।
ताराचन्द्रविशुद्धौ च समावर्त्तनमिष्यते ॥'
गोभिलः । अथाप्लवनम् । अथ व्रतानन्तर-माप्लवनं स्नानं कुर्य्यादिति शेषः । उत्तरतः पुरस्तादाचार्य्यकुलस्य परिव्रतं भवति । आचार्य्यगृहादुत्तरस्यां पूर्ब्बस्यां वा स्नानार्थ-मावृतं स्नानं कुर्य्यात् । अत्र प्रागग्रेषु दर्भेषु उदगाचार्य्य उपविशति तत्रावृते उदक् उदङ्मुखः प्राक् ब्रह्मचार्य्युदगग्रेषु दर्भेषु । प्राक् प्राङ्मुख उपविशतीत्यन्वयः । सर्व्वौषधि-विर्फाण्डाभिरद्भिर्गन्धवतीभिः शीतोष्णाभिरा-चार्य्योऽभिषिञ्चेत् । सर्व्वौषधयश्च ।
'व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः ।
यवाश्चौषधयः सप्त विपदो घ्नन्ति धारिताः ॥'
इति छन्दोगपरिशिष्टोक्तास्ताभिःसह या आपो विर्फाण्डा विपक्वा उष्णीकृतास्ताः सर्व्वौ-षधिविर्फाण्डास्ताभिर्गन्धवतीभि-श्चन्दनादि-गन्ध-द्रव्ययुक्ताभिः शीतोष्णाभिः शीतोदकमिश्रि-ताभिरिति भट्टभाष्यम् ॥ स्वयमिव तु मन्त्रवर्णो भवति । इवशब्द एवार्थे । स्वयमेव ब्रह्मचारी धारत्वेन प्राप्तायां भूमौ त्यजति । यदपां घोरं यदपां क्रूरं यदपामशान्तमिति च । अपाम-ञ्जलिमवसिञ्चतीति वर्त्तते चकारात् । यो रोचन-
स्तमिह गृह्णामीत्यात्मानमभिषिञ्चति । प्रकृ-तानामपामञ्जलिना यो रोचन इति मन्त्रेण ब्रह्मचारी आत्मानमभिषिञ्चति । ओम् यशसे तेजते इति च । आत्मानमभिषिञ्चतीति वर्त्तते । येन स्त्रियमकृण्वतमिति च । आत्मानमभिषिञ्च-
तीति वर्त्तते । तूष्णीं चतुर्थम् । आत्मानमभिषिञ्च-
तीति वर्त्तते । अभिषेकः शिरसि कर्त्तव्यः शिरः प्रधानमङ्गानामिति वचनात् । उपोत्थाया-दित्यमुपतिष्ठेत उद्यन् भ्राजभृष्टिभिरित्येतत्-प्रभृतिमन्त्रेण । आचार्य्यसमीपादुत्थाय उद्य-न्नित्येतत्प्रभृतिमन्त्रेण मा हिंसीरित्यन्तमन्त्रेणा-
दित्यमुपतिष्ठेत उपान्मन्त्रेण चेत्यात्मनेपदम् । मेखलामवमुञ्चते उदुत्तमं वरुणमिति । अव-मुञ्चते अधस्तादवतारयति अवशब्दो अधस्ता-दर्थे । ब्राह्मणान् भोजयित्वा स्वयं भुक्त्वा केश-श्मश्रुरोमनखानि वापयतीति शिखावर्ज्जम् । ब्राह्मणान् भोजयित्वा स्वयं भुक्त्वा नापितेन मुण्डयीत । अत्र शिखावर्ज्जमिति वचनात् प्राक् सशिखं वपनमिति दर्शयति । उक्तञ्च । सशिखं वपनं कार्य्यमास्नानात् ब्रह्मचारिणा इति । स्नात्वा अलङ्कृत्याहते वाससी परिधाय स्रजमावध्नीत श्रीरसि मयि रमस्वेति । अलङ्कृत्य
कुण्डलादिनात्मानं योजयित्वा आहते ।
'ईषद्धौतं नवं शुभ्रं सदृशं यन्न धारितम् ।
आहतं तद्विजानीयात् सर्व्वकर्म्मसु पावनम् ॥'
इति वशिष्ठोक्तलक्षणे ।
ईषत् सूक्ष्मम् । न धारितं न परिधानादि कृतम् ।
स्रजं ग्रथितपुष्पं आवध्नीत शिरसीति शेषः । श्रीरसीति मन्त्रेण । नेत्रौ स्थो नयतं मामित्यु-पानहौ । आवध्नीतेत्यनुवर्त्तते । उपानहौ चर्म्म-
पादुके योग्यत्वात् पादयोः । गन्धर्व्वोऽसीति मन्त्रेण वैणवं दण्डं गृह्णाति । वैणवं वंशप्रभवं गन्धर्व्वोऽसीति मन्त्रेण । आचार्य्यं सपरिषत्क-

भरतः ॥

**समाप्यं**, त्रि, (सम् + आप् + ण्यत् ।) समा-

पनीयम् । समापितव्यम् । अस्य प्रमाणं समा-

पितशब्दे द्रष्टव्यम् ॥

**समायोगः**, पुं, (सम् + आ + युज + घञ् ।)

संयोगः । (यथा, मनुः । ९ । ३३ ।
“क्षेत्रभूता स्मृता नारी बीजभूतः स्मृतः
पुमान् ।
क्षेत्रबीजसमायोगात् सम्भवः सर्व्वदेहिनाम्
॥”)
समवायः । प्रयोजनम् । इति मेदिनी ॥

**समालम्बी**, [न्] पुं, (समालम्बते इति । सम् +

आ + लम्ब + णिनिः ।) भूतृणम् । इति राज-

निर्घण्टः ॥

**समालम्भः**, पुं, (सम् + आ + लभ + घञ् । “उप-

सर्गात् खलघञोः ।” ७ । १ । ६७ । इति नुम्
।)

अत्मानमभिषिञ्चेत् । आचार्य्यकर्त्तृकाभिषेकस्तु
परमतो यतो मन्त्रवर्णा भवन्ति । मन्त्रवर्णः
अभिषेकमन्त्रलिङ्गं तच्च तेनाहं मामभिषिञ्चामि
इति तेन मामभिषिञ्चितमिति च । तद्विधि-
माह । येऽप्स्वन्तरग्नयः प्रविष्टा इत्यपामञ्जलि-
मवसिञ्चति । येऽप्स्वन्तरग्नय इति मन्त्रेण
कासामपामञ्जलिं ब्रह्मचारी अवसिञ्चति । क्व
भूमौ कुतः अवसिञ्चति वचनात् । तन्मन्त्रस्था-
भिहितान् सृजामीति यदपामिति मन्त्रस्याभि-
हितान् सृजामि इति मन्त्रलिङ्गद्वयाच्च सर्व्वा-

मभ्येत्याचार्य्यपरिषदमीक्षते । यक्षमिव चक्षुषः
प्रियो वो भूयासमिति । सपरिषत्कं शिष्यादि-
सभासहितं अभ्येत्याभिमुखेन गत्वा आचार्य्यं
परिषदञ्चेक्षते यक्षमिति मन्त्रेण । उपोपविश्य
मुख्यान् प्राणान् संस्पृशन् ओष्ठापिधाना नकु-
लीति उपाचार्य्यसमीपे मुख्यान् प्राणान् मुख-
प्रभवान् वायून् संस्पृशन् स्नातकः । ओष्ठापि-
धानमिति मन्त्रं जपेत् । अत्रैनमाचार्य्योऽर्ह-
येत् । अत्रावसरे एनं स्नातकं विवाहोक्तवरा-
र्हणविधिनार्च्चयेत् । तदशक्तौ गन्धपुष्पाभ्याम्
।
गोयुक्तं रथमुपक्रम्य पक्षसी कूवरवाक्रूराभि-
मृषेत् । वनस्पतिविड्वङ्गो हि भूया इति ।
पक्षसी चक्र । कूवरं रथिकस्थानम् । वाक्रूरं
रथरेखेत्यर्थः । वनस्पतीति मन्त्रेणाभिमृषेत्
स्पृशेत् । आस्था ते जयतु जेत्वानीत्यातिष्ठति
।
रथमारुह्य आस्था ते जयतु जेत्वानीति वन-

स्पते इत्यादिमन्त्रस्य
चतुर्थपादेनातिष्ठति । उप-
विशति प्राग्वा उदग्वाभिप्रयाय
प्रदक्षिण-
मावृत्या उपयाति । तेन रथेन
प्राङ्मुखो वा
प्रयाय प्रकर्षेण गत्वा उपयाति
आचार्य्य-
समीपमागच्छति
उपयातायार्घ्यमिति कोह-
नीयाः ।
उपयातायाचार्य्यसमीपमागतायार्घ्यं
देयमिति कोहनीया आचार्य्या
आहुः । रथा-
भावेऽपि मन्त्रपाठाचारः । चरुकरणे
तण्डुला-
दाववघातादिवत् । अस्य कर्म्मणः
समावर्त्तन-
संज्ञापि ।
'गुरुणानुमतः स्नात्वा समावर्त्तो
यथाविधि ।
उद्वहेत द्विजो भार्य्यां सवर्णां
लक्षणान्विताम् ॥'
इति मनूक्तेः ॥
स्पष्टं शौनककारिकायाम् । कुर्व्वीत
स्वयमेवैतत्
समावर्त्तनसंज्ञकम् ।" इति
संस्कारतत्त्वम् ॥

**समावायः**, पुं, समूहः । इत्यमरटीकायां भरतः ।

(यथा, भागवते । २ । ८ । १३ ।
"यस्मिन् कर्म्मसमावायो यथा
येनोपगृह्यते ।
गुणानां गुणिनां चैव
परिणाममभीप्सताम् ॥")

**समावृतः**, त्रि, (सम् + आ + वृ + क्तः ।) सम्यक्-

प्रकारेण आवृतः । यथा, --
"जय त्वं कालि सर्व्वेशे
सर्व्वभूतसमावृते ।
रक्षमां निजभूतेभ्यो बलिं भुङ्क्ष्व
नमोऽस्तु ते ॥"
इति दुर्गार्च्चाप्रयोगतत्त्वम् ॥

**समावेशितः**, त्रि, सहावस्थितः । प्रविष्टः । समा-

वेशप्राप्तः । समावेश-शब्दादितप्रत्ययेन निष्पन्नः ॥

**समाश्रयः**, पुं, (सम् + आ + श्रि + अच् ।) सम्य-

गाश्रयः । (यथा, रघुः । ८ । १२ ।
"तमरण्यसमाश्रयोन्मुखं
शिरसा वेष्टनशोभिना सुतः ।
पितरं प्रणिपत्य पादयो-
रपरित्यागमयाचतात्मनः ॥")
सम्यगाधारः । सहायः । समाङ्पूर्व्वकश्रिधातो-
रल्प्रत्ययेन निष्पन्नः ॥

**समाश्रितः**, त्रि, (सम् + आ + श्रि + क्तः ।) सम्यक्-

प्रकारेणाश्रितः । यथा, --
"रवेः कवेः किं समरस्य सारः
कृषेर्भयं किं किमदन्ति भृङ्गाः ।
सदा भयञ्चाप्यभयञ्च केषां
भागीरथीतीरसमाश्रितानाम् ॥"
इत्यन्तर्लापिका ॥

**समासः**, पुं, (सम् + अस् + घञ् ।) संक्षेपः ।

(यथा, मनुः । ७ । २०२ ।
"सर्व्वेषान्तु विदित्वैषां समासेन चिकीर्षितम् ।
स्थापयेत् तत्र तद्वंश्यं कुर्य्याच्च समयक्रियाम् ॥")
समर्थनम् । इति मेदिनी ॥ समाहारः । इति
हलायुधः ॥ एकपद्यम् । इति हेमचन्द्रः ॥ सम-
सनं पदयोः पदानां वा एकपदीकरणं समासः ।
इति संक्षिप्तसारव्याकरणम् ॥ स च षड्विधः ।
द्वन्द्वः १ बहुव्रीहिः २ कर्म्मधारयः ३ तत्पुरुषः
४ द्विगुः ५ अव्ययीभावः ६ । तेषां लक्षणं
यथा । भिन्नान्यैकार्थद्व्यादिसंख्याव्यादीनां च-ह-
य-ष-ग-वाः । इति मुग्धबोधव्याकरणम् ॥ * ॥
अपि च ।
"नाम्नां समासो युक्तार्थस्तत्स्था लोप्या विभ-
क्तयः ॥"
इति वैयाकरणाः ॥ तस्य समान्यलक्षणं यथा ।
अभिधानाश्रितलोपाभाववदन्यमध्यवर्त्तिविभक्ति
शून्यनाम-समुदायत्वं समासत्वम् । तत्र कर्म्म-
धारय-द्विगुतत्पुरुष-बहुव्रीहि-द्वन्द्वाव्ययीभावाः
षट् समासा भवन्ति । तत्र कर्म्मधारयत्वं समास-
नियतलक्षणाशून्यासंज्ञास्थसंख्यावाचक पूर्व्वपद-
कान्यमध्यवर्त्तिविभक्तिशून्यतुल्याधिकरणपदसमु
दायत्वम् । यथा नीलोत्पलमित्यादि ॥ १ ॥

प्रयोज्यतासम्बन्धेन पञ्चकपालस्यान्वयो व्युत्पत्ति-
वैचित्र्यात् तथा च पञ्चकपालप्रयोज्यसंस्कारा-
श्रयाभिन्न ओदनः । तद्धितार्थस्य समासेनाभि-
धानात् न तद्धितप्रत्ययाः समाहारेऽभिधेये यथा
पञ्चगवं चतुष्पथं द्विपात्रं त्रिभुवनं चतुर्य्युगमित्या-
दयः । उत्तरपदे यथा । पञ्चगवधनः इत्यादि ॥ २ ॥

तत्पुरुषत्वन्तु । समासाधीनलाक्षणिकविशेष्ष-

णपदकमध्यवर्त्तिविभक्ति-शून्यनामसमुदायत्वम् ।
यथा । राजपुरुषः । कष्टाश्रितः । पुरुषोत्तमः ।
इत्यादि ॥ ३ ॥

समासप्रयुक्तलक्षणानियतोत्तरपदकसमासत्वं

बहुव्रीहित्वम् । समासाधीनलाक्षणिकविशेष्य-
वाचकपदकमध्यवर्त्तिविभक्तिशून्यनामसमुदायत्वं
वा सम्बन्धिलाक्षणिकत्वव्याप्योत्तरपदकत्वंवा
बहुव्रीहित्वम् । बहुव्रीहिश्च द्विविधः । समा-
नाधिकरणो व्यधिकरणश्च । यथा चित्रगुः ।
गृहधान्यकश्चैत्रः । आरूढवानरो वृक्षः ।
इत्यादि ॥ ४ ॥

स्वघटकीभूतप्रत्येकपदार्थान्वितार्थकसोत्तरविभ-

क्तिकमध्यवर्त्ति विभक्तिशून्यनामसमुदायत्वंद्वन्द्व-
त्वम् । यथा धवखदिरपलासांच्छिन्धि । इति ।
द्विविधो द्वन्द्वः । इतरेतरयोगः समाहारश्च । यत्र
समाहारस्यावयवार्थः प्रधानं तत्रेतरेतरयोगः
द्विवचनेऽपि तत्रैव । यथा । देवदत्तयज्ञदत्तौ ।
धवखदिरपलासाः । इति । यत्र संहतिप्राधान्यं
तत्र समाहारस्तत्रैकवचनं नपुंसकलिङ्गता च ।
यथा वाग्दृशदं हस्त्यश्वम् । इत्यादि ॥ ५ ॥

समासप्रयुक्तलक्षणाशून्यावयवपूर्व्वपदकमध्य-

वर्त्तिविभक्तिशून्यतत्पुरुषान्यनामसमुदायत्वंअ-
व्ययीभावत्वम् । यथा । उपकुम्भं अघटं निर्म्म-
क्षिकं अधिस्त्रि इत्यादि ॥ ६ ॥ इति समास-
वादः ॥ * ॥ अन्यच्च । यौगिकेषु समासं लक्षयति ।
"यादृशस्य महावाक्यस्यान्तस्त्वादिनिजार्थके ।
यादृशार्थस्य धीहेतुः स समासस्तदर्थकः ॥"
यादृशमहावाक्योत्तरःत्वतलादिः स्वार्थस्य यादृ-
शार्थावच्छिन्नविषयताशालिबोधेहेतुस्तादृशं
तद्वाक्यं तथाविधार्थे समासः । विभजते ।
"स चायं षड्विधः कर्म्मधारयादिप्रभेदतः ।
यश्चोपपदसंज्ञोऽन्यस्तेनासौ सप्तधा मतः ॥

**समावृत्तः**, पुं, (सम् + आ + वृत् + क्तः ।) वेदा-

ध्ययननिवृत्तः । तत्पर्य्यायः ।

लब्धानुज्ञः २ ।

इत्यमरः ॥ साङ्गवेदाध्ययनानन्तरं त्वमिदानीं

गृहस्थो भव इति गार्हस्थ्याय प्राप्तानुमतिः

समावृत्त उच्यते । समावर्त्तते अध्ययनान्निवर्त्तते

इति समाङ्पूर्व्वात्वृतेः कर्त्तरि क्ते समावृत्तः ।

इति भरतः ॥

"अतः परं समावृत्तः कुर्य्याद्दारपरिग्रहम् ।"

इति उद्वाहतत्त्वञ्च ॥ * ॥

तस्य सर्व्वाशौचे मुण्डनं यथा अशौचाधिकारे

आपस्तम्बः । अनुभाविनाञ्च परिवापनमिति ।

अनुभाविनां स्वाशौचमनुभवतां समावृत्तानां

सर्व्वाशौचे मुण्डनम् । यत् पुनरापस्तम्बः । न

समावृत्ता वपेयुरन्यत्र वीहारादित्येके । वीहा-

रात् दर्शपौर्णमासाङ्गयागविशेषादन्यत्र समा-

वृत्ता गृहस्था न वपेयुः । इत्येकेषां मतम् । तत्

काम्यपरम् । इति शुद्धितत्त्वम् ॥

**समावृत्तकः**, पुं, (समावृत्त एव । स्वार्थे कन् ।)

समावृत्तः । इति शब्दरत्नावली ॥

**समावेशः**, पुं, (सम् + आ + विश + घञ् ।)

एकत्र सहावस्थानम् । यथा । अर्थसाधनत्वं

बलवद्निष्टाननुबन्धीष्टसाधनत्वम् । अनर्थसाध

नत्वं बलवदनिष्टसाधनत्वम् । न चानयोरेकत्र

समविशः । इति तिथ्यादितत्त्वे वैधहिंसा-

तत्र द्विगुत्वम् ।

समासाधीनलक्षणाशून्यमध्य-

पदवर्त्तिविभक्ति-शून्यासंज्ञास्थसंख्यावाचक-पूर्व्व-पदक-तुल्याधिकरणनामसमुदायत्वम् । स च तद्धितार्थे विषयीभूते तद्धितार्थेऽभिधेये उत्तर-पदे वा समाहारे वाभिधेये भवति । उत्तर-पदं पारिभाषिकं यत्पदघटितसमासान्तर्व्वर्त्ति द्विगुस्थपदं तत् पदम् । तेन च पञ्चगावो धनानीत्येवासमस्तप्रयोगो न तु पञ्चगवानि धनानि इति । तद्धितार्थे विषयीभूते यथा पञ्च गर्गरूप्यः पञ्चब्राह्मण्यः पञ्चनापितिः द्वैना-विकमित्यादि । तद्धितार्थेऽभिधेये यथा पञ्च-कपालः ओदनः । समासस्य संस्कतोऽर्थः संस्कारे

पूर्व्वमध्यान्त्यसर्व्वान्यपदप्राधान्यतःपुनः ।

प्राच्यैः पञ्चविधः प्रोक्तः समासो वा भटादिभिः ॥"

तेषु कर्म्मधारयं लक्षयति ।

"क्रमिकं यन्नामयुगमेकार्थेऽन्यार्थबोधकम् ।

तादात्म्येन भवेदेष समासः कर्म्मधारयः ॥"

क्रमिकं यन्नामद्वयं तयोरेकस्य नाम्नोऽर्थे धर्म्मिणि

तादात्म्येनापरनाम्नोऽर्थस्य अन्वयबोधं प्रति

समर्थं तादृशनामद्वयं कर्म्मधारयः । यथा

नीलोत्पलम् ॥ १ ॥ द्विगुं लक्षयति ।

"संख्याशब्दयुतं नाम तदलक्ष्यार्थबोधकम् ।

अभेदेनैव यत् स्वार्थे स द्विगुस्त्रिविधो मतः ॥"

संख्यावच्छिन्नशक्त-यत्-पदोत्तरत्वविशिष्टयन्नाम-

स्वार्थधर्म्मिकं तादात्म्येन तदलक्ष्यार्थस्यान्वयबोधं

| विधारः ॥ (यथा, हरिवंशे भविष्यपर्व्वाणि। १। ६। “परस्परसमावेशात् जगतः पालने स्थितौ। तयोस्तत्र यथाबृत्तं कैलाशे पर्व्वतोत्तमे ॥”) | | |
|---|---|---|

प्रति समर्थं तन्नामोत्तरतापन्नं तन्नामैव तदल-
क्ष्यार्थाभिन्नस्यार्थे द्विगुरुच्यते । तत्र तद्धितार्थ-
द्विगुं लक्षयति ।
"तद्धितार्थान्वितस्वार्थस्तद्धितार्थद्विगुर्म्मतः ।
तद्धितार्थे लाक्षणिकस्वान्त्यनामत्वसर्व्वगः ॥
यो द्विगुः स उत्तरतद्धितार्थान्वितस्वार्थकः ॥"
उत्तरपदद्विगुं लक्षयति ।
"स्वान्तर्निविष्टशब्दाभ्यां शब्दान्तरसमासगः ।
यो द्विगुः शाब्दिकैरुक्तः स उत्तरपदद्विगुः ॥"
यो द्विगुः स्वघटकनामभ्यां सह साकाङ्क्षनामा-
न्तरेण समासस्यान्तर्गतः स उत्तरपदद्विगुः ।
यथा पञ्चगवधनः । समाहारद्विगुं लक्षयति ।
"स्वार्थान्वितसमाहारलक्षकःस्वान्त्यशब्दकः ।
उक्ताभ्यामितरः किं वा समाहारद्विगुर्द्विगुः ॥"
स्वोपस्थाप्यार्थस्य समाहारलक्षको यदीयान्त्य-
शब्दः स द्विगुः समाहारद्विगुः । यथा पञ्चपुली-
त्यादि ॥ २ ॥ तत्पुरुषं लक्षयति ।
"यदीयेन सुबर्थेन युतयद्बोधनक्षमः ।
यः समासस्तस्य तत्र स तत्पुरुष उच्यते ॥"
यदर्थगतेन सुबर्थेन विशिष्टस्य यदर्थस्यान्वय-
बोधं प्रति यः समासः स्वरूपयोग्यः स तदर्थस्य
तदर्थे तत्पुरुषः । न तु यन्नामोत्तरं यन्नाम
यदर्थगतसुबर्थावच्छिन्नस्य यत् स्वार्थस्य बोधकं
तदुत्तरतन्नामैव तदर्थयोस्तत्पुरुषः । पूर्व्वकायो-
ऽर्द्धपिप्पलीत्यादावव्याप्तेः । विभजते ।
"द्वितीयादिसुबर्थस्य भेदादेव च षड्विधः ।
क्रियान्वयी द्वितीयादेरर्थः प्रायोऽत्र
योजितः ॥" ३ ॥
अव्ययीभावं लक्षयति ।
"उत्तरार्थान्वितस्वार्थाव्ययपूर्व्वस्तु यो भवेत् ।
समासः सोऽव्ययीभावः स्त्रीपुंलिङ्गविवर्जितः ॥"
यः समासः सोऽत्तरपदोपस्थाप्येन यदर्थेनान्वि-
तस्य यदर्थस्य बोधकाव्ययपूर्व्वभागकः स तद्वि-
शिष्टस्य तदर्थस्य बोधने अव्ययीभावः । यथा
निर्मक्षिकं उपकुम्भमित्यादि ।
"अमादेशं विना श्रूयमाणषष्ठी न बोधिका ।
स्वार्थे यदर्थस्य यद्वा सोऽव्ययीभाव इष्यते ॥"
अमादेशं विना श्रूयमाणषष्ठी स्वार्थे यत् समा-
सार्थस्यान्वयबोधं प्रत्यसमर्था स एव वाव्ययी-
भावः श्रूयमाणैव षष्ठी स्वार्थे समासान्तरार्थ-
स्यान्वयबोधनेऽसमर्था न तु लुप्तापि ॥ ४ ॥
बहुव्रीहिं लक्षयति ।
"बहुव्रीहिः स्वगभार्थसम्बन्धित्वेन बोधकः ।
ब्देन साकाङ्क्षं विग्रहः कथ्यते । बहुव्रीहिं विभ-
जते ।
"तदतद्गुणसंविज्ञानौ द्वौ भेदौ तदादिमः ।
विग्रहस्य विशेष्यो यस्तद्विशेष्यकबोधकृत् ॥"
तत्र विग्रहवाक्यस्य विशेष्यविधया प्रत्याय्यो
योऽर्थस्तद्विशेष्यकबोधकृत् बहुव्रीहिस्तयोरा-
दिमः तद्गुणसंविज्ञानः । तस्य स्वार्थगुणी-
भूतस्य सम्यग्विशेष्यविधया विज्ञानं
यस्मिन्निति
व्युत्पत्त्या स्वार्थान्वयः संज्ञात्वात् तद्भिन्नश्चा-
तद्गुणसंविज्ञानश्चरम इत्यर्थादवगम्यते ।
प्राचां मतेन तद्गुणसंविज्ञानबहुव्रीहिमन्यथा
निर्व्वक्ति ।
"यः स्वार्थघटकार्थस्य स्वार्थान्धयिनि बोधने
।
अनुकूलो बहुव्रीहिः स तयोरथवादिमः ॥"
यो बहुवीहिः स्वार्थस्यान्वयिनि स्वार्थघटक-
स्याप्यर्थस्यान्वयबोधने समर्थः स तयोस्तद्-
गुणातद्गुणयोरादिमः । लम्बकर्णमानय हार-
ग्रीवं पश्य इत्यादि । पुनर्विभजते ।
"स्वान्तर्निविष्टद्वित्र्यादिनामभिर्विग्रहात् पुनः ।
बहुव्रीहिर्ब्बहुविधो द्विपदत्रिपदादिकः ॥"
द्वित्रिचतुरादिभिरेव स्वघटकनामभिर्विग्रह-
वशात् द्विप्दत्रिपदचतुष्पदादिको बहुव्रीहि-
र्ब्बोध्यः ॥ ५ ॥ द्वन्द्वं लक्षयति ।
"यद्यदर्थकयन्नामव्यूहो यद्यत्प्रकारके ।
बोधे समर्थः स द्वन्द्वः समासस्तावदर्थकः ॥"
यद्यदर्थोपस्थापकस्य
क्रमिकयादृशनामस्तोमस्य
निश्चयस्तदर्थप्रकारकान्वयवोधं प्रति तत्त्वेन
समर्थस्तादृशनामनिवह एव तावदर्थको द्वन्द्व-
समासः । द्वन्द्वं विभजते ।
"द्वौ भेदावस्य शास्त्रोक्तौ समाहारेतरेतरौ ।
एकान्यवचनाकाङ्क्षा हानोपादानतश्च तौ ॥"
अस्य द्वन्द्वस्य द्वौ भेदौ समाहार इतरेतरश्च
शास्त्रसिद्धौ ।
तत्रैकवचनान्यसुवाकाङ्क्षाविहीनः
समाहारः । तथाविधसुवाकाङ्क्षश्चेत्तरेतरः ।
यथा । पाणिपादं हस्त्यश्वं धवखदिरौ ।
इत्यादि ॥ ६ ॥ उपपदसमासं लक्षयति ।
"यदुत्तरपदं नामानुत्तरं यदबोधकम् ।
धातुकृज्जमुपपदसमासः स तदन्तकः ॥"
धातुकृद्भ्यां निष्पन्नं यस्योत्तरपदं शब्दानुत्तरं

**समासञ्जनं**, क्ली, (सं + आ + सञ्ज + ल्युट् ।)

समासङ्गः । मेलनम् । संयोगः । समाङ्-
पूर्ब्बकसन्जधातोरनट्प्रत्ययेन निष्पन्नम् ॥

**समासन्नं**, त्रि, निकटस्थम् । समाङ्पूर्व्वसदधातोः

क्तप्रत्ययेन निष्पन्नम् ॥ (यथा, रघुः । १० । ३५
।
"अथ वेलासमासन्नशैलरन्ध्रानुनादिना ।
स्वरेणोवाच भगवान् परिभूतार्णवध्वनिः ॥")

**समासवान्**, [त्] पुं, (समासः संक्षेपोऽस्त्यस्येति ।

समास + मतुप् । मस्य वः ।) तुन्नवृक्षः । इति
शब्दचन्द्रिका ॥ समासविशिष्टे, त्रि ॥

**समासादितः**, त्रि, (सम् + आ + सद् + णिच् +

क्तः ।) आहृतः । प्राप्तः । समाङ्पूर्व्वण्यन्त-
सदधातोः क्तप्रत्ययेन निष्पन्नः ॥

**समासाद्यं**, त्रि, (सम् + आ + सद् + ण्यत् ।)

प्राप्यम् । इत्यमरः ॥ अनुस्वारशून्यश्चेत् प्राप्त्य-
नन्तरबोधकक्रिया ॥ (यथा, महाभारते । ५ ।
१६ । १६ ।
"अपां फेनं समासाद्य विष्णुतेजोऽभिवृंहितम् ।
त्वया वृत्रो हतः पूर्व्वं देवराज ! जगत्पते ! ॥")

**समासार्था**, स्त्री, (समासेन संक्षेपेण अर्थो

यस्याः ।) समस्या । श्लोकस्य पादेनैकेन द्वाभ्यां
त्रिभिर्व्वा पूरणम् । इत्यमरभरतौ ॥

**समाहरणं**, क्ली, (सं + आ + हृ + ल्युट् ।) समा-

हारः । समाङ्पूर्व्वकहृञ्धातोरनट्प्रत्ययेन
निष्पन्नम् ॥

**समाहारः**, पुं, (सं + आ + हृ + घञ् ।) समु-

च्चयः । इत्यमरः ॥ बहूनां भिन्नानां बाह्य-
व्यापारेण बुद्ध्या वा पञ्चमूली त्रिभुवनवत्
राशीकरणम् । इति भरतः ॥ संक्षेपः । यथा,
"समासस्तु समाहारः संक्षेपः संग्रहोऽपि च ।"
इति हेमचन्द्रः ॥
समाहारद्वन्द्वसमाहारद्विगुसमासयोर्व्विवरणं
समासशब्दे द्रष्टव्यम् ॥

**समाहितः**, त्रि, (सम् + आ + धा + क्तः ।) समा-

धिस्थः । (यथा, देवीभागवते । १ । १७ । ६६ ।
"स्नात्वा प्रातःक्रियां कृत्वा पुनरास्ते समा-
हितः ॥")

निरूढया लक्षणया स्वांशज्ञापकशब्दवान् ॥”
स्वांशस्य निरूढलक्षणया ज्ञापकेन शब्देन
घटितः स्वगर्भस्य यादृशार्थस्य
सम्बन्धित्वप्रकारे-
णान्वयबोधं प्रति समर्थः समासः स्वगर्भतादृ-
शार्थसम्बन्धिबोधने बहुव्रीहिः ।
“अस्यैकं प्रथमान्तं सत् सुबन्तैरितरैः सह ।
यदा भेदसुबन्तेन साकाङ्क्षं नाम विग्रहः ॥”
अस्य बहुव्रीहेर्घटकमेकं नाम प्रथमान्तं सत्
सुबन्तेरितरनामभिः सह भेदार्थकसुबन्तयच्छ-

स यादृशार्थस्य बोधं प्रत्यसमर्थं तादृशार्थे
तादृ-
शार्थकान्त्यपदकः समास उपपदसंज्ञकः ।
कुम्भ-
कारः क्षीरपायीत्यादि । विभजते ।
“कारकैकोपपदकः षड्विधोऽयमिति भ्रमः ।
कर्म्मकर्त्राद्युपपदभेदात् बहुविधस्त्वसौ ॥” ७
॥
इति शब्दशक्तिप्रकाशिका ॥

**समासक्तः**, त्रि, (सम् + आ + सञ्ज + क्तः ।)

संयुक्तः । यथा, कर्पूराख्यस्तोत्रे ।
“त्रिपञ्चारे पीठे शवशिवहृदि स्मेरवदनां
महाकालेनोच्चैर्मदनरसलावण्यनिरताम् ।
समासक्तो नक्तं स्वयमपि रतानन्दनिरतो
जनो यो ध्यायेत्त्वामयि जननि स स्यात् स्मर-
हरः ॥”

उक्तसिद्धान्तः । आहितः । निर्विवादीकृतः ।
प्रतिज्ञातः । इति मेदिनी ॥ निष्पन्नः । इति
धरणिः ॥ शुचौ, पुं । इति शब्दरत्नावली ॥

**समाहृतः**, त्रि, सम्यक्प्रकारेण आहरणीकृतः ।

संगृहीतः । एकत्रीकृतः । संक्षेपेण प्रति-
पादितः । समाङ्पूर्व्वकहृधातोः क्तप्रत्ययेन
निष्पन्नः ॥

**समाहृतिः**, स्त्री, (सम् + आ + हृ + क्तिन् ।)

संग्रहः । इत्यमरः ॥ एककर्त्तृकाणामनेककर्त्तृ-
काणां वा एकाभिप्रायाणां वाक्यानां समा-
हरणं समाहृतिः । समाह्रियते संक्षेपेण प्रति-)
पद्यते अनया समाहृतिः । संपूर्व्वात् आङ्पूर्व्वात्
हृ ञ हरणे इत्यस्मात् क्तिः । इति भरतः ॥

**समाह्वयः**, पुं, (समाहूयतेऽत्रेति । सम् + आ +

ह्वे + पुंसीति घः । बाहुलकात् नात्वम् ।)

द्यूतम् । आह्वानम् । इति शब्दरत्नावली ॥
पशुपक्षिद्यूतम् । सङ्गरम् । इति मेदिनी ॥ * ॥
तस्य निषिद्धत्वं यथा, --
"द्यूतं समाह्वयञ्चैव राजा राष्ट्रान्निवारयेत् ।
राज्यान्तकरणावेतौ द्वौ दोषौ पृथिवीक्षिताम् ॥
प्रकाशमेतत् तस्कर्य्यं यद्देवनसमाह्वयौ ।
तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान् भवेत् ॥
अप्राणिभिर्यत् क्रियते तल्लोके द्यूतमुच्यते ।
प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः ॥
द्यूतं समाह्वयञ्चैव यः कुर्य्यात् कारयेत वा ।
तान् सर्व्वान् घातयेद्राजा शूद्रांश्च द्विज-
लिङ्गिनः ॥"
इति मानवे । ९ । २२१ -- २२४ ॥

**समाह्वा**, स्त्री, (सम्यक् आह्वा यस्याः ।) गो-
जिह्वावृक्षः । इति शब्दचन्द्रिका ॥ समाख्या च ॥

**समिकं**, क्ली, शेलम् । इति शब्दरत्नावली ॥ वँड्सा
इति भाषा ॥

**समित्**, स्त्री, (समीयतेऽत्रेति । सम् + इण् +
क्विप् ।) युद्धम् । इत्यमरः ॥ (यथा, महा-
भारते । ५ । २२ । २३ ।
"पाण्ड्यश्च राजा समितीन्द्रकल्पो
युधि प्रवीरैर्ब्बहुभिः समेतः ॥")

**समित्**, [ध्] स्त्री, (समीध्यतेऽनयेति । इन्ध +
क्विप् ।) अग्निसन्दीपनार्थतृणकाष्ठादिः । तत्-
पर्य्यायः । इन्धनम् २ एधम् ३ इध्मम् ४ एधः
५ । इत्यमरः ॥ समिन्धनम् ६ । एतस्मिन्
सूक्ष्मे किलिञ्जम् । इति शब्दरत्नावली ॥ * ॥
होमीयसमिल्लक्षणं मत्स्यपुराणे ।
"प्रादेशमात्राः सशिखाः सवल्काश्च पला-
सिनीः ।
समिधः कल्पयेत् प्राज्ञः सर्व्वकर्म्मसु सर्व्वदा ॥"
लक्षणान्तरं यथा, छन्दोगपरिशिष्टम् ।
"नाङ्गुष्ठादधिका न्यूना समित् स्थूलतया क्वचित् ।
न निर्म्मुक्तत्वचा चैव न सकीटा न पाटिता ॥
प्रादेशात् नाधिका नोना न तथा स्याद्विशा-
खिका ।
न सपत्रा न निर्वीर्य्या होमेषु च विजानता ॥"
इति संस्कारतत्त्वम् ॥ * ॥

**समिता**, स्त्री, (सम्यक्प्रकारेण इता प्राप्ता ।)
गोधूमचूर्णम् । इति हेमचन्द्रः ॥ मयदा इति
भाषा ॥ तस्या लक्षणं यथा, --
"गोधूमा धवला धौताः कुट्टिताः शोषितास्ततः ।
प्रक्षिप्ताः सा विनिष्पिष्टाश्चालिताः समिता
स्मृता ॥"
इति राजनिर्घण्टः ॥

**समितिः**, स्त्री, (संयन्त्यस्यामिति । सं + इण् +
क्तिन् ।) सभा । (यथा, महाभारते । १ । २ ।
२२४ ।
"प्रभाते राजसमितौ सञ्जयो यत्र वा विभोः ।
ऐक्यात्म्यं वासुदेवस्य प्रोक्तवानर्ज्जुनस्य च ॥")
युद्धम् । (यथा, भागवते । २ । ७ । ३४ ।
"ये वा मृधे समितिशालिन आत्तचापाः
काम्बोजमत्स्यकुरुसृञ्जयकैकयाद्याः ॥")
सङ्गः । इत्यमरमेदिनीकरौ ॥ साम्यम् । इति
हेमचन्द्रः ॥ (सन्निपातः । इति श्रीधरस्वामी ॥
यथा, भागवते । ११ । २५ । ८ ।
"प्रवृत्तिलक्षणे निष्ठा पुमान् यर्हि गृहाश्रमे ।
स्वधर्म्मे चानुतिष्ठेत गुणानां समितिर्हि सा ॥")

**समिथः**, पुं, (समेतीति । सम् + इण् + "समीणः ।"
उणा० २ । ११ । इति थक् ।) अग्निः । इत्यु-
णादिकोषः ॥ युद्धम् । इति सिद्धान्तकौमुद्या-
मुणादिवृत्तिः ॥ (यथा, ऋग्वेदे । ४ । २० । ८ ।
"शिक्षानरः समिथेषु प्रहावान्
वस्वो राशिमभिनेतासि भूरिम् ॥"
अस्मिन्नर्थे क्वचित् क्लीवेऽपि दृश्यते । यथा,
तत्रैव । १ । ५५ । ५ ।
"स इन्महानि समिथानि मज्जना
कृणोति युध्म ओजसा जनेभ्यः ॥")
आहुतिः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**समिद्**, [ध्] स्त्री, (समिध्यतेऽनयेति । सं + इन्ध +
क्विप् ।) समित् । इत्यमरः ॥ (यथा, मनुः ।
२ । १७६ ।
"नित्यः स्नात्वा शुचिः कुर्य्यात् देवर्षिपितृ-
तर्पणम् ।
देवताभ्यर्च्चनञ्चैव समिदाधानमेव च ॥")

**समिद्धः**, पुं, (सं + इन्ध + क्तः ।) प्रदीप्तः । यथा,
कात्यायनः ।
"योऽनर्च्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः ।
मन्दाग्निरामयावी च दरिद्रश्च स जायते ।

**समिरः**, पुं, वायुः । इति हेमचन्द्रः । ४ । १७२ ॥

**समीकं**, क्ली, (सम् + अलीकादयश्चेति ईकः ।)
युद्धम् । इत्यमरः ॥ (यथा, ऋग्वेदे । ४ । २४ ।
३ ।
"तमिन्नरो विह्वयन्ते समीके
रिरिक्वांसस्तन्वः कृण्वतत्राम् ॥")

**समीकृतं**, त्रि, एकीकृतम् । समानीकृतम् । कृञ्-
धातौ परे समशब्दात् च्विप्रत्ययेन निष्पन्नम् ॥

**समीक्षं**, क्ली, (सम्यगीक्ष्यतेऽनेनेति । सम् + ईक्ष् +
घञ् ।) साङ्ख्यशास्त्रम् । इति त्रिकाण्डशेषः ॥
सम्यग्दर्शनञ्च ॥

**समीक्षणं**, क्ली, सम्यक्प्रकारेण दर्शनम् । प्रेक्ष-
णम् । संपूर्व्वेक्षधातोरनट्(ल्युट्)प्रत्ययेन निष्प-
न्नम् ॥ (प्रकाशके त्रि । यथा, भागवते । ८ । २४
। ५० ।
"त्वमर्कदृक्सर्व्वदृशां समीक्षणो
वृतो गुरुर्न स्वगतिं बुभुत्सताम् ॥")

**समीक्षा**, स्त्री, (सम् + ईक्ष + गुरोश्चेत्यः । टाप् ।)
तत्त्वम् । बुद्धिः । निभालनम् । इति मेदिनी ॥
मीमांसाशास्त्रम् । यत्नः । इति शब्दरत्ना-
वली ॥ (आत्मविद्या । इति स्वामी ॥ यथा,
भागवते । ११ । २८ । ३४ ।
"एवं समीक्षा निपुणा सती मे
हन्यात् तमिन्द्रं पुरुषस्य बुद्धेः ॥"
सम्यग्दर्शनम् । यथा, भागवते । ३ । ४ । १० ।
"आशृण्वतो मामनुरागहास-
समीक्षया विश्रमयन्नुवाच ॥")

**समीचः**, पुं, (संयन्ति नद्यो यस्मिन्निति । सं +
इण् + "समीणः ।" उणा० ४ । ९२ । इति
चट् । दीर्घश्च ।) समुद्रः । इत्युणादिकोषः ॥

**समीचकः**, पुं, मैथुनम् । इति केचित् ॥

**समीची**, स्त्री, (संयातीति । सं + इण् + चट् ।
ङीप् ।) मृगी । इत्युणादिकोषः ॥ वन्दना ।
इति त्रिकाण्डशेषः ॥

**समीचीनं**, क्ली, (सम्यगेव । सम्यक् + "विभाषा-
ञ्चेरदिक् स्त्रियाम् ।" ५ । ४ । ८ । इति खः ।)
यथार्थम् । तत्पर्य्यायः । सत्यम् २ सम्यक् ३

तस्य निषिद्धलक्षणं यथा, --
"विशीर्णा विदला ह्रस्वा वक्राः स्थूला द्विधा-
कृताः ।
कृमिदष्टाश्च दीर्घाश्च समिधो नैव कारयेत् ॥"
अत्र दोषो यथा, --
"विशीर्णायुःक्षयं कुर्य्याद्विदला पुत्त्रनाशिनी ।
ह्रस्वा नाशयते पत्नीं वक्रा बन्धुविनाशिनी ॥
कृमिदष्टा रोगकरी विद्वेषकरणी द्विधा ।
पशून् मारयते दीर्घा स्थूला चार्थविनाशिनी
॥"
इति तन्त्रम् ॥ * ॥
नवग्रहाणां समिधो यथा, --
"अर्कः पलाशः खदिरस्त्वपामार्गोऽथ पिप्पलः
।
उडुम्बरः शमी दूर्व्वाः कुशाश्च समिधः क्रमात्
॥"
इति संस्कारतत्त्वे याज्ञवल्क्यवचनम् ॥

तस्मात् समिद्धे होतव्यं नासमिद्धे कदाचन ॥"
इति संस्कारतत्त्वम् ॥

**समिधः**, पुं, (समिध्यते इति । सं + इन्ध + कः ।)

अग्निः । इति त्रिकाण्डशेषः ॥ (यथा, रामा-
यणे । २ । २४ । ६ ।
"अयन्तु मामात्मभवस्तवादर्शनमारुतः ।
विलापदुःखसमिधो रुदिताश्रुहुताहुतिः ॥")

**समिन्धनं**, क्ली, (समिध्यतेऽनेनेति । सं + इन्ध +

ल्युट् ।) समित् । इति शब्दरत्नावली ॥ (यथा,
भट्टिः । २ । २८ ।
"तपोमरुद्भिर्भवतां शराग्निः
संधुक्ष्यतां नोऽरिसमिन्धनेषु ॥")

ऋतम् ४ तथ्यम् ५ यथातथम् ६ यथास्थितम्
७
सद्भूतम् ८ । इति हेमचन्द्रः ॥ तद्वति, त्रि ॥
(यथा, भागवते । २ । ४ । ५ ।
"समीचीनं वचो ब्रह्मन् सर्व्वज्ञस्य तवानघ ।
तमो विशीर्य्यते मह्यं हरेः कथयतः कथाम् ॥")

**समीदः**, पुं, गोधूमचूर्णम् । इति केचित् ॥

**समीनः**, त्रि, (समामधीष्टो भृतो भूतो भावी वा ।

समा + "समायाः खः ।" ५ । १ । ८५ । इति
खः ।) वत्सरसम्बन्धी । समाशब्दात् णीन-
प्रत्ययेन निष्पन्नः ॥

**समीनिका**, स्त्री, प्रतिवर्षप्रसूता गौः । इति

शब्दचन्द्रिका ॥

**समीपः**, त्रि, (सङ्गता आपो यत्र । "ऋक्

पूरब्धूःपथामानक्षे ।" ५ । ४ । ७४ । इति अः ।
"द्व्यन्तरुपसर्गेभ्योऽप ईत् ।" ६ । ३ । ९७
इति ईत् ।) निकटः । इत्यमरः ॥ (क्लीवेऽपि
दृश्यते । यथा, मनुः । २ । १०४ ।

"अपां समीपे नियतो नैत्यकं विधिमास्थितः ।
सावित्रीमप्यधीयीत गत्वारण्यं समाहितः ॥")

**समीपता**, स्त्री, नैकट्यम् । समीपत्वम् । सामीप्यम् । समीपशब्दात् तल्प्रत्ययेन निष्पन्नम् ॥

**समीयः**, त्रि, (सम + "गहादिभ्यश्च ।" ४ । २ । १३८ । इति छः ।) समसम्बन्धी । तुल्यकारणकः । समशब्दात् णीयप्रत्ययेन निष्पन्नह् ॥

**समीरः**, पुं, (सम्यगीर्त्ते गच्छतीति । सं + ईर गतौ + कः ।) वायुः । इत्यमरः । १ । १ । ६५ ॥
(यथा, माघे । ४ । ५४ ।
"समीरशिशिरः शिरःसु वसतां
सतां जवनिका निकामसुखिनाम् ॥")
शमीवृक्षः । इति राजनिर्घण्टः ॥

**समीरणः**, पुं, (समीरयतीति । सम् + ईर + ल्युः ।) वायुः । (यथा, कुमारे । १ । ८ ।
"यः पूरयन् कीचकरन्ध्रभागान्
दरीमुखोत्थेन समीरणेन ।
उद्गास्यतामिच्छति किन्नराणां
तानप्रदायित्वमिवोपगन्तुम् ॥")
मरुवकः । इत्यमरः । २ । ४ । ७९ ॥
पथिकः । इति
मेदिनी ॥ (क्ली, सं + ईर + ल्युट् । प्रेरणम् ।
यथा, महाभारते । ८ । ८४ । २३ ।
"शराभिघाताच्च रुषा च राजन्
स्वया च भासास्त्रसमीरणाच्च ॥" * ॥
प्रेरके, त्रि । यथा, हरिवंशे । १०२ । २२ ।
"सोऽपिबत् पाण्डुराभ्राभस्तत्कालं
ज्ञातिभिर्वृतः ।
वनान्तरगतो रामः पानं मदसमीरणम् ॥")

**समुखः**, त्रि, (मुखेन सह वर्त्तमानः ।) वाग्मी । वावदूकः । इति हेमचन्द्रः ॥

**समुचितः**, त्रि, (सम्यगुचितः । उपयुक्तः । यथा, --
"वदामस्त किंवा जननि वयमुच्चैर्जडधियो
न धाता नापीशो हरिरपि न ते वेत्ति परमम् ।
तथापि त्वद्भक्तिर्मुखरयति चास्माकमसिते

**समुच्छ्रायः**, पुं, समुच्छ्र्यः । समुत्पूर्व्वश्रिधातोर्घञ् प्रत्ययेन निष्पन्नः ॥

**समुच्छ्रितः**, त्रि, उच्चैः । समुत्पूर्व्वश्रिधातोः क्तप्रत्ययेन निष्पन्नः ॥

**समुज्झितः**, त्रि, (सम् + उज्झ उत्सर्गे + क्तः ।) त्यक्तः । इत्यमरः । ३ । १ । १०७ ॥

**समुत्क्रमः**, पुं, ऊद्‌र्ध्वगमनम् । समुत्पूर्ब्बक्रमधातोरल्प्रत्ययेन निष्पन्नः ॥

**समुत्क्रोशः**, पुं, (समुत्क्रोशतीति । सं + उत् + क्रुश + अच् ।) कुररपक्षी । इति शब्दरत्नावली ॥ (भावे घञ् ।) उच्चैःशब्दश्च ॥

**समुत्थः**, त्रि, (समुत्तिष्ठतीति । सं + उत् + स्था + कः ।) समुद्भवः । समुत्थितः । समुत्पूर्व्वस्थाधातोर्डप्रत्ययेन निष्पन्नः ॥ (यथा, मनुः । ७ । ४५ ।
"दश कामसमुत्थानि तथाष्टौ क्रोधजानि च ।
व्यसनानि दुरन्तानि प्रयत्नेन विवर्ज्जयेत् ॥")

**समुत्थानं**, क्ली, (सम् + उत् + स्था + ल्युट् ।) समुद्योगः । (यथा, महाभारते । ३ । ३२ । ७ ।
"सर्व्वेहि स्वं समुत्थानमुपजीवन्ति जन्तवः ।
अपि धाता विधाता च यथायमुदके वकः ॥")
व्याधीनां निर्णयः । इति मेदिनी ॥ (यथा, मनुः । ८ । २८७ ।
"अङ्गावपीडनायाञ्च व्रणशोणितयोस्तथा ।
समुत्थानव्ययं दाप्यः सर्व्वदण्डमथापि वा ॥")
ऊद्‌र्ध्वगमनम् । सम्यक्प्रकारेण उत्थानम् ॥ उत्तोलनम् । यथा, --
"इन्द्रध्वजसमुत्थानं प्रमादान्न कृतं यदि ।
तदा द्वादशमे वर्षे कर्त्तव्यं नान्तरा पुनः ॥"
इति तिथ्यादितत्त्वम् ॥

**समुत्थितः**, पुं, (सम् + उत् + स्था + क्तः ।) सम्यगुत्थितः । यथा, --
"समुत्थितस्त्वं श्रवणाद्यपादे
गृहाण पूजां भगवन्नमस्ते ॥"
इति तिथ्यादितत्त्वे शक्रोत्थानपूजामन्त्रः ॥

**समुत्पन्नः**, त्रि, (सम् + उत् + पद + क्तः ।) समुद्भूतः । यथा, --
"पुस्तकस्था च या विद्या परहस्तगतं धनम् ।

**समुदक्तं**, त्रि, (समुदच्यते स्मेति । सम् + उत् + अन्च + क्तः ।) उद्धृतम् । कूपादेरुद्धृतजलादि । इत्यमरः । ३ । १ । ९० ॥

**समुद्भूतः**, त्रि, (सम् + उत् + भू + क्तः ।) समुत्पन्नः । यथा, देवीमाहात्म्ये ।
"साब्रवीत्तान् सुरान् सुभ्रूर्भवद्भिस्तूयतेऽत्र का ।
शरीरकोषतश्चास्याः समुद्भूताब्रवीच्छिवा ॥"

**समुदयं**, क्ली, (सम् + उत् + इण् + अच् ।) लग्नम् । यथा, --
"सामर्थ्यं तनु कल्यते समुदये वित्तं कुटुम्बं
ततो
विक्रान्तिं सहजं तृतीयभवने योधञ्च सञ्चिन्तयेत् ।"
इत्यादि ज्योतिस्तत्त्वम् ॥
षण्णाडीचक्रान्तर्गतचतुर्थनाडी । सा तु जन्मनक्षत्रावधिकाष्टादशनक्षत्ररूपा । तत्पर्य्यायः । सामुदायिकम् २ । यथा, ज्योतिस्तत्त्वे ।
"जन्मर्क्षं कर्म्म ततो दशमं सांघातिकं
षोडशभम् ।
समुदयमष्टादशभं विनाशसंज्ञं त्रयोविंशम् ॥
सन्तप्ते सामुदायिके मित्रभूत्यर्थसंक्षयः ॥"

**समुदयः**, पुं, (सम् + उत् + इण् + अच् ।) समूहः । इत्यमरः । २ । ५ । ४० ॥ (यथा, कथासरित्सागरे । १० । १९६ ।
"तमुपाजग्मतुस्तौ च सेनासमुदयान्वितौ ।
तं विज्ञायैव संबन्धं मुदा दुहितृवत्सलौ ॥")
युद्धम् । (यथा, महाभारते । ६ । ११३ । ४४
।
"द्रोणः पाञ्चालपुत्रेण समागम्य महारणे ।
महासमुदयं चक्रे शरैः सन्नतपर्व्वभिः ॥")
समुद्गमः । इति मेदिनी ॥ दिवसः । इति शब्दचन्द्रिका ॥

**समुदागमः**, पुं, (सम् + उत् + आ + गम + घञ् ।) समन्ताज्ज्ञानम् । इति त्रिकाण्डशेषः ॥

**समुदाचारः**, पुं, (सम् + उत् + आ + चर + घञ् ।) आशयः । इति त्रिकाण्डशेषः ॥

**समुदायः**, पुं, (सम् + उत् + अय + घञ् ।) समूहः । युद्धम् । इत्यमरः । २ । ५ । ४०;

तदेतत् क्षन्तव्यं न खलु पशुरोषः समुचितः ॥”

इति तन्त्रसारधृतश्यामास्तोत्रम्॥

**समुच्चयः**, पुं, (सं + उत् + चि + अच् ।) समाहारः । इत्यमरः । ३ । २ । १६ ॥ यथा, --
“राशौ द्वयोर्बहूनाञ्च समाहारः समुच्चयः ॥”
इति शब्दरत्नावली ॥
(यथा, कुमारे । १ । ४९ ।
“सर्व्वोपमाद्रव्यसमुच्चयेन
यथाप्रदेशं विनिवेशितेन ।
सा निर्म्मिता विश्वसृजा प्रयन्ता-
देकस्थसौन्दर्य्यदिदृक्षयेव ॥”)

**समुच्छेदः**, पुं, विनाशः । संपूर्व्वोत्पूर्व्वच्छिदधातोर्घञ्प्रत्ययेन निष्पन्नः ॥ (यथा, किराते । ११ । ४९ ।
“वंशलक्ष्मीमनुद्धृत्य समुच्छेदेन विद्विषाम् ।
निर्व्वाणमपि मन्येऽहमन्तरायं जयश्रियः ॥”)

**समुच्छ्रयः**, पुं, (सं + उत् + श्रि + अच् ।) विरोधः । उत्सेधः । इति मेदिनी ॥ (यथा, रघुः । ९ । २० ।
“कनकयूपसमुच्छ्रयशोभिनो
वितमसा तमसासरयूतटाः ॥”)

कार्य्यकाले समुत्पन्ने न सा विद्या न तद्धनम् ॥”
इति चाणक्यम् ॥

**समुत्पिञ्जः**, त्रि, (मम् + उत् + पिजि हिंसायाम् + अच् ।) अत्यन्तव्याकुलः । यथा, --
“उत्पिञ्जलसमुत्पिञ्जपिञ्जलाभृशमाकुले ॥”
इति हेमचन्द्रः ॥

**समुत्पिञ्जः**, पुं, (सम् + उत् + पिञ्ज + पचाद्यच् ।) भृशमाकुलसैन्यम् । इत्यमरः । २ । ८ । ९९ ॥

**समुत्सुकः**, त्रि, (सम्यगुत्सुकः ।) सम्यगुत्कण्ठितः । इति हेमचन्द्रे उत्सुकशब्दार्थदर्शनात् ॥ सम्यगिष्टार्थोद्युक्तः । इत्यमरे उत्सुकशब्दार्थदर्शनात् ॥ (यथा, रघुः । १ । ३३ ।
“तस्यामात्मानुरूपायामात्मजन्मसमुत्मुकः।
विलम्बितफलैः कालं स निनाय मनोरथैः ॥”)

२ । ८ । १०६ ॥ पृष्ठस्थायिबलम् । इत्यजयः ॥
समुच्छ्र्यः । इति मेदिनी ॥

**समुदितः**, त्रि, (सम्यक्प्रकारेण कथितः । संपूर्व्ववदधातोः क्तप्रत्ययेन निष्पन्नः । उदयं प्राप्तः । समुद्भूतः । संपूर्व्वोत्पूर्व्वेनधातोः क्तप्रत्ययेन निष्पन्नः ॥

**समुद्गः**, पुं, (समुद्गच्छतीति । सम् + उत् + गम् + अन्येष्वपीति डः ।) सम्पुटकः । इति हेमचन्द्रः ॥ (यथा, रामायणे । २ । ९१ । ७५ ।
“शुक्लांश्चन्दनकल्कांश्च समुद्गेष्ववतिष्ठतः ॥”
मुद्गेन सह वर्त्तमानः ।) मुद्गसहितश्च ॥

**समुद्गकः**, पुं, (समुद्ग एव । स्वार्थे कन् ।) सम्पुटकः । इत्यमरः । २ । ६ । १३९ ॥ सापूडा इति ख्याते ।
समुद्गच्छतीति हनजनाद्गमादेरिति डे समुद्गः
ततः स्वार्थे कः । सम्पुटति द्रुव्येः संश्लिष्टो भवति
सम्पुटकः पुट शि श्लषे इजुङ्त्वात् कः ततः

स्वार्थे कः । इति भरतः ॥ (यथा, कथा-
सरित्सागरे । ३८ । ४७ ।
"भिक्षुः प्रपञ्चबुद्ध्याख्यः समुद्गकमुपानयत्
॥")
छन्दोविशेषश्च ॥

**समुद्गमः**, पुं, ऊर्द्ध्वगतिः । उत्पत्तिः । संपूर्व्वोत्-
पूर्व्वगमधातोः अल् प्रत्ययेन निष्पन्नः ॥ (यथा,
कथासरित्सागरे । १११ । ९८ ।
"जुह्वतामग्निहोत्राणि धूमराजिसमुद्गमैः ।
प्रदर्शयदिवारोहमार्गं दिवि तपस्विनाम् ॥")

**समुद्गीतं**, त्रि, उच्चैर्गीतम् । समुत्पूर्व्वगैधातोः
क्तप्रत्ययेन निष्पन्नम् ॥

**समुद्गीर्णः**, त्रि, वमितः । उत्तोलितः । कथितः ।
समुत्पूर्व्वगृधातोः क्तप्रत्ययेन निष्पन्नः ॥

**समुद्धतः**, त्रि, (सम् + उत् + हन + क्तः ।) अवि-
नीतः । इत्यमरः । ३ । १ । २ ॥ समुद्गीर्णः ।
इति
हेमचन्द्रः ॥

**समुद्धरणं**, क्ली, (सम् + उत् + हृ + ल्युट् ।)
वान्तान्नम् । उन्नयः । इत्यमरः ॥ वान्तार्थ
उद्गी-
र्णार्थः उन्नयः कूपादेर्जलाद्युत्तोलनं वृक्षा-
द्युन्मूलनं वा अनयोः समुद्धरणम् । समुद्ध्रियते
उत्तोल्यते यत् समुद्धरणं कर्म्मण्यनट् ।
भुक्तोज्-
झितोन्मूलितयोः स्यादुद्धरणमुन्नये । इति
रभसः । इति भरतः ॥ (यथा, महाभारते ।
१२ । ३२७ । १८ ।
"सोऽमृष्यमाणस्तद्वाक्यं समुद्धरणनिश्चितः ।
जग्राह तां तदा शक्तिं न चैनां स व्यकम्पयत्
॥")

**समुद्धृतं**, त्रि, (सम् + उत् + हृ + क्तः ।) समुत्-
कीर्णम् । अपनीतम् । इति मेदिनी ॥ सम्यक्-
प्रकारेण उद्धृतम् । उत्थापितम् । यथा, --
"जलौघमग्ना सचराचरा धरा
विषाणकोठ्याखिलविश्वमूर्त्तिना ।
समुद्धृता येन वराहरूपिणा
स मे स्वयम्भुर्भगवान् प्रसीदतु ॥"
इति पाण्डवगीता ॥

इति जटाधरः ॥ सरिताम्पतिः २४ जलधिः
२५
नीरनिधिः २६ नीरधिः २७ अम्बुधिः २८
पाथोनिधिः २९ पाधोधिः ३०
यादसाम्पतिः
३१ नदीनः ३२ इन्दुजनकः ३३
तिमिकोषः ३४
वारांनिधिः ३५ वारिनिधिः ३६ वार्द्धिः ३७
वारिधिः ३८ तोयनिधिः ३९ कीलालधिः
४०
धरणीपूरः ४१ क्षीराब्धिः ४२ धरणिप्लवः
४३
वाङ्कः ४४ कचङ्गलः ४५ पेरुः ४६ मितद्रुः
४७
वाहिनीपतिः ४८ गङ्गाधरः ४९ दारदः ५०
तिमिः ५१ प्राणभास्वान् ५२ ऊर्म्मिमाली
५३
महाशयः ५४ अम्भोनिधिः ५५ अम्भोधिः
५६
तरिषः ५७ कूलङ्कषः ५८ तारिषः ५९ ।
इति
शब्दरत्नावली ॥ वारिराशिः ६० शैलशिवि-
रम् ६१ पराकुवः ६२ तरन्तः ६३
महीप्राची-
रम् ६४ । इति त्रिकाण्डशेषः ॥ पयोधिः
६५
सरिन्नाथः ६६ अम्भोराशिः ६७ धुनीनाथह्
६८
नित्यः ६९ कन्धिः ७० अपांनाथः ७१ ।
अस्य
जलगुणाः । विस्रत्वम् । लवणरक्तामयप्रद-
त्वम् । उष्णत्वम् । वैवर्णदोषजनकत्वम् ।
विशे-
षाद्वाहार्त्तिपित्तकारित्वञ्च । इति
राजनिर्घण्टः ॥
अपि च ।
"सामुद्रमुदकं क्षारं सर्व्वदोषप्रकोपणम् ॥"
इति राजवल्लभः ॥
मुद्रायुक्ते, त्रि ॥ * ॥ स च समुद्रो ब्रह्मणो
मेढ्राज्जातः । यथा, --
"हृदि कामो भ्रुवोः क्रोधो लोभश्चाधरदच्छ-
दात् ।
आस्याद्वाक् सिन्धवो मेढ्रात् निरृतिः पायो-

शशाप सर्व्वान् बालांश्च यान्तु मूढा महीतलम् ।
गच्छध्वञ्च महीं मूढा जम्बुद्वीपं मनोहरम् ॥
स्थितिर्नैकत्र युष्माकं भविष्यति पृथक् पृथक् ।
द्वीपे द्वीपे स्थितिं कृत्वा तिष्ठन्तु सुखिनः सुताः ।
द्वीपस्थाभिर्नदीभिश्च सह क्रीडन्तु निर्जने ॥
कनिष्ठो मातृशापाच्च लवणोदो बभूव ह ।
कनिष्ठः कथयामास मातृशापञ्च बालकान् ॥
आजग्मुर्दुःखिताः सर्व्वे मातृस्थानञ्च बालकाः ।
श्रुत्वा विवरणं सर्व्वे प्रजग्मुर्धरणीतलम् ॥
प्रणम्य मातुश्चरणं भक्तिनम्रात्मकन्धराः ।
सप्तद्वीपे समुद्राश्च सप्त तस्थुर्विभागशः ॥
कनिष्ठाद्भूद्धपर्य्यन्तं द्विगुणं द्विगुणं मुने ! ।
लवणेक्षुसुरासर्पिर्दधिदुग्धजलार्णवाः ॥
एतेषाञ्च जलं पृथ्व्यां शस्यार्थञ्च भविष्यति ।
व्याप्ताः समुद्राः सप्तैव सप्तद्वीपा वसुन्धराम् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ३ अध्यायः ॥
तस्य ह्रासवृद्धिकारणं यथा, --
"अपां चैव समुद्रेकात् समुद्र इति संज्ञितः ।
उदयतीन्दौ पूर्व्वे तु समुद्रः पूर्य्यते सदा ॥
प्रक्षीयमाणे बहुले क्षीयतेऽस्तमितेन वै ।
आपूर्य्यमाणो ह्युदधिरात्मनैवाभिपूर्य्यते ॥
ततो वै क्षीयमाणस्य स्वात्मन्येव क्षपां क्षयः ।
उद्दीप्यन्तेऽग्निसंयोगात् उखास्वापो यथा
स्वयम् ॥
तथा स्वतः समुद्रोऽपि वर्द्धते शशिनोदये ।
अन्यूनानतिरिक्तास्ता वर्द्धन्त्यापो ह्रसन्ति च ॥
उदयास्तमयेष्विन्दोः पक्षयोः शुक्लकृष्णयोः ।
क्षयो वृद्धिश्च उदधेः सोमवृद्धिक्षयौ यथा ॥
दशोत्तराणि पञ्चाहुरङ्गुलानां शतानि च ।
अपां वृद्धिः क्षयो दृष्टः समुद्राणान्तु पर्व्वसु ॥"
इति मात्स्ये १०० अध्यायः ॥
अन्यत् विष्णुपुराणे २ । ४ अध्याये द्रष्टव्यम् ॥ * ॥
समुद्रे वर्णनीयानि यथा, --
"अब्धौ द्वीपाद्रिरत्नोर्म्मिपोतयादोजलप्लवाः ।
विष्णुकुल्यागमश्चन्द्राद्वृद्धिरौर्व्वाङ्गपूरणम्॥"
इति कविकल्पलतायाम् १ स्तवके ३ कुसुमम् ॥ *
॥
कलौ द्विजानां समुद्रयात्रादिनिषेधो यथा,
उद्वाहतत्त्वधृतबृहन्नारदीयवचनम्।
"ससुद्रयात्रास्वीकारः कमण्डलुविधारणम् ।
द्विजानामसवर्णासु कन्यासूपयमस्तथा ॥
देवरेण सुतोत्पत्तिर्मधुपर्के पशोर्व्वधः ।
मांसादनं तथा श्राद्धे वानप्रस्थाश्रमस्तथा ॥

**समुद्रः**, पुं, जलसमूहस्थानम् । तस्य व्युत्पत्ति-

र्यथा । "चन्द्रोदयात् आपः सम्यगुन्दन्ति क्लिद्यन्ति

अत्र । चन्द्रोदयात् समुन्दयन्ति वा समुद्रः ।

उन्दधी क्लेदे नाम्नीति रक् हसुङ् नलोप इति नलोपः ।

'अपां चैव समुन्नेन स समुद्र इति स्मृतः ।'

इति वायुपुराणम् ॥

मुद्रा मर्य्यादा तया सह वर्त्तते इति वा समुद्रः ।

सम्यगुद्गतो रोऽग्निरत्र इति । मुदं राति ददा-

तीति डे । मुद्राणि रत्नादीनि तैः सह वर्त्तते

इति वा ।" इति भरतः ॥ तत्पर्य्यायः । अब्धिः २

अकूपारः ३ पारावारः ४ सरित्पतिः ५ उद-

न्वान् ६ उदधिः ७ सिन्धुः ८ सरस्वान् ९

सागरः १० अर्णवः ११ रत्नाकरह् १२ जल-

निधिः १३ यादःपतिः १४ अपांपतिः १५ । इत्य-

मरः । १ । ७ । १ ॥ महाकच्छः १६ नदीकान्तः १७

तरीयः १८ द्वीपवान् १९ जलेन्द्रः २० मन्थिरः

२१ क्षौणीप्राचीरम् २२ मकरालयः २३ ।

रघाश्रयः ॥"

इति श्रीभागवते । ३ । १२ । १४ ॥

कल्पभेदे श्रीकृष्णौरसेन विरजागर्भजातः ।

यथा,

"श्रीकृष्णो विरजां दृष्ट्वा सरिद्रूपां प्रियां सतीम् ।

उच्चै रुरोद विरजातीरे नीरमनोहरे ॥

जलादुत्थाय चागच्छ विधाय तनु नूतनम् ।

आजगाम हरेरग्रं साक्षाद्राधेव सुन्दरी ॥

ताञ्च रूपवतीं दृष्ट्वा प्रेम्णोद्रेकां जगत्पतिः ।

चकारालिङ्गनं तूर्णं चुचुम्ब च मुहुर्मुहुः ॥

नानाप्रकारशृङ्गारं विपरीतादिकं प्रभुः ।

रहसि प्रेयसीं प्राप्य चकार च पुनः पुनः ॥

विरजा सा रजोयुक्ता धृत्वा वीर्य्यममोघकम् ।

सद्यो बभूव तत्रैव धन्या गर्भवती सती ।

तस्थौ तत्र सुखासीना सार्द्धं पुत्रैश्च सप्तभिः ॥

एकदा हरिणा सार्द्धं वृन्दारण्ये सुनिर्जने ।

विजहार पुनः साध्वी शृङ्गारासक्तमानसा ॥

एतस्मिन्नन्तरे तत्र मातुः क्रोडं जगाम ह ।

कनिष्ठपुत्त्रस्तस्याश्च भ्रातृभिः पीडितो भिया ॥

भीतं स्वतनयं दृष्ट्वा तत्याज तां कृपानिधिः ।

क्रोडे चकार बालं सा कृष्णो राधागृहं ययौ ॥

प्रबोध्य बालं सा साध्वी न ददर्शान्तिके प्रियम् ।

विललाप भृशं तत्र शृङ्गारातृप्तमानसा ॥

शशाप स्वसुतं कोपात् लवणोदो भविष्यति ।

कदापि ते जलं केन न खादिष्यन्ति जीविनः ॥

दत्तायाश्चैव कन्यायाः पुनर्द्दानं वरस्य च ।

दीर्घकालं ब्रह्मचर्य्यं नरमेधाश्वमेधकौ ॥

महाप्रस्थानगमनं गोमेधञ्च तथा मखम् ।

इमान् धर्म्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः ॥"

(केषाञ्चिमते कलावपि समुद्रयात्रास्वीकारे

न दोषः ॥) क्षीरोदसमुद्रस्य मन्थनवृत्तन्तो

यथा, भागवते । ८ । ७ । १ -- १० ।

"कृतस्थानविभागास्ते एवं कश्यपनन्दनाः ।

ममन्थुः परमं यत्ता अमृतार्थं पयोनिधिम् ॥

मथ्यमानेऽर्णवे सोऽद्रिरनाधारो ह्यपोऽविशत् ।

ध्रियमाणोऽपि बलिभिर्गौरवात् पाण्डुनन्दन ॥
ते सुनिर्व्विण्णमनसः परिम्लानमुखश्रियः ।
आसन् सुपौरुषे नष्टे दैवेनातिबलीयसा ॥
विलोक्य विघ्नेशविधिं तदेश्वरो
दुरन्तवीर्य्योऽवितथाभिसन्धिः ।
कृत्वा वपुः काच्छपमद्भुतं महत्
प्रविश्य तोयं गिरिमुज्जहार ॥
तमुत्थितं वीक्ष्य कुलाचलं पुनः
समुद्यता निर्म्मथितुं सुरासुराः ।
दधार पृष्ठेन स लक्षयोजन-
प्रस्तारिणा द्वीप इवापरो महान् ॥
सुरासुरेन्द्रैर्भुजवीर्य्यवेपितं
परिभ्रमन्तं गिरिमङ्ग पृष्ठतः ।
बिभ्रत्तदावर्त्तनमादिकच्छपो
मेनेऽङ्गकण्डूयनमप्रमेयः ॥”
तथा तत्रैव । ८ । ७ । १८ -- १९ ।
“निर्म्मथ्यमानादुदधेरभूद्विषं
महोल्वणं हालाहलाह्वमग्रतः ।
संभ्रान्तमीनोन्मकराहिकच्छपात्
तिमिद्विपग्राहतिमिङ्गिलाकुलात् ॥
तदुग्रवेगं दिशि दिश्युपर्य्यधो
विसर्पदुत्सर्पदसह्यमप्रति ।
भीताः प्रजा दुद्रुवुरङ्ग सेश्वरा
अरक्षमाणाः शरणं सदाशिवम् ॥”
तथा च तत्रैव । ८ । ७ । ३६ -- ४३ ।
“तद्वीक्ष्य व्यसनं तासां कृपया भृशपीडितः ।
सर्व्वदेवसुहृद्देव इदमाह सतीं प्रियाम् ॥
अहो वत भवान्येतत् प्रजानां पश्य वैशषम् ।
क्षीरोदमथनोद्भूतात् कालकूटादुपस्थितम् ॥
आसां प्राणपरीप्सूनां विधेयमभयं हि मे ।
एतावान् हि प्रभोरर्थो यद्दीनपरिपालनम् ॥
प्राणैश्च प्राणिनः पान्ति साधवः क्षणभङ्गुरैः ॥
बद्धवैरेषु भूतेषु मोहितेष्वात्ममायया ॥
पुंसः कृपयतो भद्रे सर्व्वात्मा प्रीयते हरिः ।
प्रीते हरौ भगवति प्रीयेऽहं सचराचरः ॥
तस्मादिदं गरं भुञ्जे प्रजानां स्वस्तिरस्तु मे ।
एवमामन्त्र्य भगवान् भवानीं विश्वभावनः ॥
तद्विषं जग्धुमारेभे प्रभावज्ञान्वमोदत ।
ततः करतलीकृत्य व्यापि हालाहलं विषम् ॥
अभक्षयन्महादेवः कृपया भूतभावनः ।
तस्यापि दर्शयामास स्ववीर्य्यं जलकल्मषः ॥
यच्चकार गले नीलं तच्च साधोर्विभूषणम् ॥”
तथा तत्रैव । ८ । ८ । १ -- ९ ।
अभ्रमुप्रभृतयोऽष्टौ च करिण्यस्त्वभवन्नृप ॥
कौस्तुभाख्यमभूद्रत्नं पद्मरागं महोदधेः ।
तस्मिन् मणौ स्पृहाञ्चक्रे वक्षोऽलङ्करणे हरिः ॥
ततोऽभवत् पारिजातः सुरलोकविभूषणम् ।
पूरयत्यर्थिनो योऽर्थैः शश्वद्भुवि यथा भवान् ॥
ततश्चाप्सरसो जाता निष्ककण्ठ्यः सुवाससः ।
रमण्यः सर्गिणां बल्गुगतिलीलावलोकनैः ॥
ततश्चाविरभूत् साक्षात् श्रीरमा भगवत्परा ।
रञ्जयन्ती दिशः कान्त्या विद्युत्सौदामनी यथा ॥
तस्यां चक्रुः स्पृहां सर्व्वे ससुरासुरमानवाः ।
रूपौदार्य्यवयोवर्णमहिमाक्षिप्तचेतसः ॥”
तथा तत्रैव । ८ । ८ । २५ ।
“तस्याः श्रियस्त्रिजगतो जनको जनन्या
वक्षोनिवासमकरोत् परमं विभूतेः ।
श्रीः स्वाः प्रजाः सकरुणेन निरीक्षणेन
यत्र स्थितैधयत साधिपतींस्त्रिलोकान् ॥”
तत्रैव । ८ । ८ । ३० -- ३६ ।
“अथासीद्वारुणी देवी कन्या कमललोचना ।
असुरा जगृहुस्तां वै हरेरनुमतेन ते ॥
अथोदधेर्मथ्यमानात् काश्यपैरमृतार्थिभिः ।
उदतिष्ठन्महाराज पुरुषः परमाद्भुतः ॥
दीर्घपीवरदोर्द्दण्डः कम्बुग्रीवोऽरुणेक्षणः ।
श्यामलस्तरुणः स्रग्वी सर्व्वाभरणभूषितः ॥
पीतवासा महोरस्कः सुमृष्टमणिकुण्डलः ।
स्निग्धकुञ्चितकेशान्तसुभगः सिंहविक्रमः ॥
अमृतापूर्णकलसं बिभ्रद्वलयभूषितः ।
स वै भगवतः साक्षाद्विष्णोरंशांशसम्भवः ॥
धन्वन्तरिरिति ख्यात आयुर्व्वेददृगीज्यभाक् ।
तमालोक्यासुराः सर्व्वे कलसं चामृताभृतम् ॥
लिप्सन्तः सर्व्ववस्तूनि कलसं तरसाहरन् ।
नीयमानेऽसुरैस्तस्मिन् कलसेऽमृतभाजने ।
विषण्णमानसा देवा हरिं शरणमाययुः ॥”
तत्रैव । ८ । ८ । ४१ ।
“एतस्मिन्नन्तरे विष्णुः सर्व्वोपायविदीश्वरः ।
योषिद्रूपमनिर्द्देश्यं दधार परमाद्भुतम् ॥”
तत्रैव । ८ । ९ । १२ ।
“ततो गृहीत्वामृतभाजनं हरि-
र्ब्बभाष ईषत्स्मितशोभया गिरा ।
यद्यभ्युपेतः क च साध्वसाधु वा
कृतं मया वो विभजे सुधामिमाम् ॥”
तत्रैव । ८ । ९ । २० ।
“कल्पयित्वा पृथक्पङ्क्तीरुभयेषां जगत्पतिः ।
तांश्चोपवेशयामास स्वेषु स्वेषु च पङ्क्तिषु ॥
पीतप्रायेऽमृते देवैर्भगवान् लोकभावनः ।
पश्यतामसुरेन्द्राणां स्वरूपं जगृहे हरिः ॥”
पाद्मे उत्तरखण्डे ६९ अध्यायेऽप्येवम् ॥
(अन्त-
रिक्षम् । इति निघण्टुः । १ । ३ ॥ अस्य
व्युत्-
पत्तिर्यथा, तट्टीकायाम् । “समुद्द्रवन्ति
सङ्गता
ऊर्द्ध्वं द्रवन्ति गच्छन्त्यस्मादापो
रश्मिभिराकृष्य-
माणा आदित्यमण्डलम् । समुत्-पूर्ब्बात्
द्रवते-
र्गत्यर्थात् अन्येष्वपि दृश्यते इति अपादाने
ड-प्रत्यये टि-लोपे च रूपम् । यद्वा, संहता
अभिद्रवन्त्येनमापो भौमरसलक्षणा वायुना
प्रेर्य्यमाणाः आदित्यमण्डलाद्वा वर्षाकाले
रश्मिभिः प्रवर्त्तमानाः । अत्र उदित्येष उप-
सर्गोऽभीत्यर्थे वर्त्तते । कर्मणि ड-प्रत्यय इति
विशेषः । सम्मोदन्तेऽस्मिन् भूतानि
अन्तरिक्ष-
चारीणीति वा । सम्पूर्वात् मुद हर्षे इत्यस्मात्
स्फायितञ्चिवञ्चि इत्यादिना अधिकरणे रक्-
प्रत्यये समो म-लोपे च रूपम् । यद्वा, सम्
इत्येकीभावे उदकात् उच्छब्दः रो मत्वर्थीयः
।
एकीभूतमुदकमस्मिन् विद्यते वर्षास्विति
उदक-
शब्दस्योद्भावश्छान्दसः । यद्वा सम्पूर्वात्
उन्दी
क्लेदने इत्यस्मात् स्फायितञ्चिवञ्चि
इत्यादिना
कर्त्तरि रक्-प्रत्यये कित्त्वान्नलोपे च समुद्रः
॥”
इति देवराजकृतनिर्व्वचनम् ॥)

**समुद्रकफः**, पुं, (समुद्रस्य कफ इव ।) समुद्रफेनः ।
इति त्रिकाण्डशेषः ॥

**समुद्रकान्ता**, स्त्री, (समुद्रस्य कान्ता ।) नदी ।
इति हलायुधः ॥ पृक्का । इति राजनिर्घण्टः
॥

**समुद्रगा**, स्त्री, (समुद्रं गच्छतीति । गम + डः ।)
नदी । इति हेमचन्द्रः ॥ गङ्गा । यथा, --

"पीते गरे वृषाङ्केण प्रीतास्तेऽमरदानवाः ।
ममन्थुस्तरसा सिन्धुं हविर्द्धानी ततोऽभवत्
तामग्निहोत्रीमृषयो जगृहुर्ब्रह्मवादिनः ।
यज्ञस्य देवयानस्य मेध्याय हविषे नृप ॥
तत उच्चैःश्रवा नाम हयोऽभूच्चन्द्रपाण्डरः ।
तस्मिन् बलिः स्पृहाञ्चक्रे नेन्द्र ईश्वरशिक्षया ॥
तत ऐरावतो नाम वारणेन्द्रो विनिर्गतः ।
दन्तैश्चतुर्भिः श्वेताद्रेर्हरन् हिमवतो महीम् ॥
ऐरावणादयस्त्वष्टौ दिग्गजा अभवंस्ततः ।

दैत्यान् गृहीतकलसो वञ्चयन्नुपसञ्चरैः ।
दूरस्थान् पाययामास जरामृत्युहरां सुधाम् ॥"
तत्रैव । ८ । ९ । २४ ।
"देवलिङ्गप्रतिच्छन्नः स्वर्भानुर्देवसंसदि ।
प्रविष्टः सोममपिबच्चन्द्रार्काभ्याञ्चसूचितः ॥
चक्रेण क्षुरधारेण जहार पिबतः शिरः ।
हरिस्तस्य कबन्धस्तु सुधया प्लावितोऽपतत् ॥
शिरस्त्वमरतां नीतमजो ग्रहमचीकॢपत् ।
यस्तु पर्व्वणि चन्द्रार्कावभिषावति वैरधीः ॥

"यव्यद्वयं श्रावणादि सर्व्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्व्वीत घर्ज्जयित्वा
समुद्रगाम् ॥"
इति प्रायश्चित्ततत्त्वे छन्दोगपरिशिष्टवचनम्
॥
(यथा च महाभारते । ३ । १०९ । १० ।
"सा बभूव विसर्पन्ती त्रिधा राजन् समुद्रगा ।
फेनपुञ्जाकुलजला हंसानामिव पङ्क्तयः ॥")
समुद्रगामिनि, त्रि ॥

**समुद्रगृहं**, क्ली, (समुद्र इव जलयुक्तं गृहम् ।)
जलयन्त्रगृहम् । इति त्रिकाण्डशेषः ॥

**समुद्रचुलुकः**, पुं, (समुद्रश्चुलुक इव अनायासेन
पेयत्वात् यस्य ।) अगस्त्यमुनिः । इति
त्रिकाण्ड-
शेषः ॥

**समुद्रदयिता**, स्त्री, (समुद्रस्य दयिता ।) नदी ।
इति हेमचन्द्रः ॥

**समुद्रनवनीतं**, क्ली, (समुद्रस्य क्षीरोदस्य नव-
नीतमिव ।) अमृतम् । चन्द्रः । इति
मेदिनी ॥

**समुद्रफलं**, क्ली, (समुद्रस्य फलमिव ।) अब्धि-
फलम् । औषधविशेषः । यथा, --
"समुद्रनाम प्रथमं पश्चात् फलमुदाहरेत् ।
समुद्रफलमित्यादि नाम वाच्यं भिषग्वरैः ॥
फलं समुद्रस्य कटूष्णकारि
वातापहं भूतनिरोधकारि ।

त्रिदोषदावानलदोषहारि
कफामयभ्रान्तिविरोधकारि ॥”
इति राजनिर्घण्टः ॥

**समुद्रफेनः**, पुं, (समुद्रस्य फेनः ।) स्वनामख्यात-

द्रव्यम् । तत्पर्य्यायः । फेनः २ अब्धिकफः ३ अर्णवजमलः ४ । इति रत्नमाला ॥ हिण्डीरः ५ । इत्यमरः । २ । ९ । १०५ ॥ समुद्रकफः ६ जलहासः ७ फेनकः ८ । इति त्रिकाण्डशेषः ॥ समुद्रफेनम् ९ फेनम् १० वार्द्धिफेनम् ११ पयोधिजम् १२ सुफेनम् १३ अब्धिहिण्डीरम् १४ सामुद्रम् १५ । अस्य गुणाः । शिशिरत्वम् । कषायत्वम् । नेत्ररोगकफकण्ठामयारुचिकर्णरोगनाशित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
“समुद्रफेनश्चक्षुष्यो लेखनः शीतलश्च सः ।
कषायो विषपित्तघ्नः कर्णरुक्कफहृल्लघुः ॥”
इति भावप्रकाशः ॥

**समुद्रमेखला**, स्त्री, (समुद्रः मेखलेव यस्याः ।)

पृथिवी । इति त्रिकाण्डशेषः ॥

**समुद्रयात्रा**, स्त्री, (समुद्रे यात्रा गमनम् ।)

समुद्रगमनम् । (यथा, हरिवंशे । १४५ । ४ ।
“द्वारवत्यां निवसतो विष्णोरतुलतेजसः ।
समुद्रयात्रा सम्प्राप्ता तीर्थे पिण्डारके नृप! ॥”)
कलियुगे तन्निषेधो यथा, --
“समुद्रयात्रास्वीकारः कमण्डलुविधारणम् ।”
इत्युपक्रम्य ।
“इमान् धर्म्मान् कलियुगे वर्ज्यानाहुर्मनी-
षिणः ॥”
इत्युद्वाहतत्त्वे उक्तवान् ॥

**समुद्रयानं**, क्ली, (समुद्रस्य यानम् ।) पोतम् ।

जाहाज इति भाषा । यथा, --
“पुनस्तत्रैव गमने बणिग्भावे मतिर्गता ।
समुद्रयाने रत्नानि महामौल्यानि साधुभिः ।
रत्नपारीक्षकैः सार्द्धमानयिष्ये बहूनि च ॥
एवं निश्चित्य मनसा महासार्थपुरःसरः ।
समुद्रयायिभिर्लोकैः संविदं सूच्य निर्गतः ॥”
इत्युपक्रम्य ।
“शुकेन सह संप्राप्तो महान्तं लवणार्णवम् ।
पोतारूढास्ततः सर्व्वे पोतवाहैरुपोषिताः ॥”
इति वाराहे गोकर्णमाहात्म्यनामाध्यायः ॥
(समुद्रगमनम् । यथा, मनुः । ८ । १५७ ।
“समुद्रयानकुशला देशकालार्थदर्शिनः ।

**समुद्ररमणा**, स्त्री, (समुद्रो रमण इव यस्याः ।)

पृथ्वी । इति हलायुधः ॥ (क्वचित् समुद्र-
रसना इति पाठो दृश्यते ॥)

**समुद्रलवणं**, क्ली, (समुद्रजातं लवणम् ।) समुद्र-

जलजातलवणम् । करकच् लवण इति भाषा ।
तत्पर्य्यायः । सामुद्रकम् २ सामुद्रम् ३ शिवम् ४
वशिरम् ५ सारोत्थम् ६ अक्षीवम् ७ लवणा-
ब्धिजम् ८ । अस्य गुणाः । लघुत्वम् । हृद्यत्वम् ।
पलितास्रपित्तदत्वम् । विदाहित्वम् । कफवात-
घ्नत्वम् । दीपनत्वम् । रुचिकारित्वञ्च । इति
राजनिर्घण्टः ॥ अपि च, भावप्रकाशे ।
“सामुद्रं यत्तु लवणमक्षीवं वशिरञ्च तत् ।
सामुद्रं मधुरं पाके सतिक्तं मधुरं गुरु ॥
नात्युष्णं दीपनं भेदि अक्षारमविदाहि च ।
श्लेष्मलं वातनुत्तिक्तमरूक्षं नातिशीतलम्
॥”

**समुद्रवह्निः**, पुं, (समुद्रस्य वह्निः ।) बाडवानलः ।

इति हलायुधः ॥

**समुद्रविजयः**, पुं, वृत्तार्हत्पिता । इति हेमचन्द्रः ॥

**समुद्रसुभगा**, स्त्री, (समुद्रस्य सुभगा ।) गङ्गा ।

इति राजनिर्घण्टः ॥

**समुद्रा**, स्त्री, सटी । (सम्यगुद्गतो रोऽग्नि-

र्यस्याः ।) शमी । इति राजनिर्घण्टः ॥

**समुद्रान्तं**, क्ली, (समुद्रस्य अन्त उत्पत्तिस्थानत्वे-

नास्त्यस्येति । अच् ।) जातीफलम् । इति
शब्दचन्द्रिका ॥ (समुद्रस्य अन्तम् ।) समुद्र-
तीरम् ॥ (समुद्रः अन्तो रस्येति । समुद्रान्त-
विशिष्टे, त्रि । यथा, भागवते । १० । ४७ । ३३ ।
“एतदन्तः समाम्नायो योगः सांख्यं मनीषि-
णाम् ।

**समुन्नतिः**, स्त्री, (सम् + उत् + नम + क्तिन् ।)

उच्छ्रायः । उत्सेधः । इति जटाधरः ॥ (यथा,
कुमारे । ६ । ६६ ।
“उपपन्नमिदं सर्व्वमतः परमपि त्वयि ।
मनसः शिखराणाञ्च सदृशी ते समुन्नतिः ॥”)

**समुन्नद्धः**, त्रि, (सम् + उत् + नह + क्तः ।) पण्डित-

म्मन्यः । गर्व्वितः । इत्यमरः । ३ । ३ । १०३ ॥ प्रभुः ।
इत्यजयः ॥ समुद्धूतः । इति मेदिनी ॥ ऊर्द्ध्वबद्धः ।
इति हेमचन्द्रः ॥

**समुपजोषं**, [म्] व्य, (सम् + उप + जुष + अम् ।)

आनन्दः । इत्यमरटीकायां रामाश्रमः । ३ ।
४ । १० ॥ तालव्यशकारादि च ॥

**समुपेयिवान्**, [स्] त्रि, गमनकर्त्ता । गमन-

विशिष्टः । समुपपूर्व्वेधातोः क्वसुप्रत्ययेन
निष्पन्नः ॥

**समुल्लसत्**, त्रि, सम्यगुल्लासयुक्तम् । समुत्पूर्व्वलस-

धातोः शतृप्रत्ययेन निष्पन्नम् ॥

**समुल्लिखन्**, [त्] त्रि, (सम् + उत् + लिख +

शतृ ।) पादादिना भूमिखननकर्त्ता । यथा, --
“तुषारसंघातशिलाः क्षुराग्रैः
समुल्लिखन् दर्पकलः ककुद्मान् ।
दृष्टः कथञ्चिद्गवयैर्विविग्नै-
रसोढसिंहध्वनिरुन्ननाद ॥”
इति कुमारसम्भवे । १ । ५६ ॥

**समूढः**, त्रि, (सम् + वह + क्तः ।) पुञ्जितः ।

(यथा, माघे । १ । ४ ।
“नवानधोऽधो बृहतः पयोधरान्
समूढकर्पूरपरागपाण्डरम् ॥”)
भुग्नः । सद्योजातः । अनुपप्लुतः । इति
मेदिनी ॥ दमितः । विवाहितः । इति धरणिः
॥
शोधितः । इति जटाधरः ॥ मूढेन सहि-
तश्च ॥

**समूरः**, पुं, मृगभेदः । इति हेमचन्द्रः ॥

**समूरुः**, पुं, मृगविशेषः । इत्यमरः । २ । ५ । ९ ॥

**समूलं**, त्रि, मूलेन सह वर्त्तमानम् । मूलसहि-

स्थापयन्ति तु यां वृद्धिं सा तत्राधिगमं प्रति ॥”)

**समुद्रयायी**, [न्] त्रि, (समुद्रे गच्छतीति । गम् +

णिनिः ।) समुद्रगामी । यथा, वाराहे ।
“समुद्रयायिभिलाकैः संविदं सूच्य निर्गतः ॥”
(अस्य निन्दा यथा, मनौ । ३ । १५८ ।
“आगारदाही गरदः कुण्डाशी सोमविक्रयी ।
समुद्रयायी वन्दी च तैलिकः कूटकारकः ॥

- * *

एतान् विगर्हिताचारानपाङ्क्तेयान् द्विजा-
धमान् ।
द्विजातिप्रवरो विद्वानुभयत्र विवर्ज्जयेत् ॥”)

त्यागस्तपो दमः सत्यं समुद्रान्ता इवापगाः
॥”)

**समुद्रान्ता**, स्त्री, (समुद्रस्य अन्तः उत्पत्तिस्थान-

त्वेनास्त्यस्या इति । अच् । टाप् ।)
दुरालभा ।
इत्यमरः । २ । ४ । ९२ ॥ कार्पासी ।
पृक्का । इति
मेदिनी ॥ यवासः । इति राजनिर्घण्टः ॥

**समुद्राम्बरा**, स्त्री, (समुद्रः अम्बरमिव यस्याः ।)

पृथिवी । इति त्रिकाण्डशेषः ॥

**समुद्रारुः**, पुं, (समुद्रं ऋच्छतीति । ऋ + उण् ।)

कुम्भीरः । सेतुबन्धः । तिमिङ्गिलमत्स्यः ।
इति
मेदिनी ॥

**समुद्रियः**, त्रि, (समुद्रे भव इति । समुद्र +

“समुद्राभ्राद्घः ।” ४ । ४ । ११८ । इति घः
।)
समुद्रभवः । समुद्रसम्बन्धी । (यथा, वाज-
सनेयसंहितायाम् । ११ । ४६ ।
“वृषाग्निं वृषणं भरन्नपां गर्भं समुद्रियम् ॥”)

**समुद्रीयः**, त्रि, समुद्रसम्बन्धी । समुद्रशब्दात् णीय-

प्रत्ययेन निष्पन्नः ॥

**समुन्दनं**, क्ली, (सम् + उन्द + ल्युट् ।) आर्द्रीभावः
।

तत्पर्य्यायः । तेमः २ स्तेमः ३ । इत्यमरः ।
३ । २ । २९ ॥

**समुन्नं**, त्रि, (सम् + उन्द + क्तः ।) आर्द्रम् । इत्य-

मरः । ३ । १ । १०५ ॥

**समुन्नतः**, त्रि, (सम् + उत् + नम + क्तः ।) समु-

न्नद्धः । स्तम्भभेदः । इति धरणिः ॥

तम् । यथा, --
“अधर्म्मेणैधते राजंस्ततो भद्राणि पश्यति ।
ततः सपत्नान् जयति समूलन्तु विनश्यति
॥”
इति महाभारते शान्तिपर्व्वणि राजधर्म्मे
युधिष्ठिरं प्रति भीष्मवाक्यम् ॥

**समूहः**, पुं, (समूह्यते इति । सम् + ऊह + घञ् ।)

अनेकः । तत्पर्य्यायः । निवहः २ व्यूहः ३
सन्दोहः ४ विसरः ५ व्रजः ६ स्तोमः ७
ओघः
८ निकरः ९ व्रातः १० वारः ११ संघातः
१२
सञ्चयः १३ समुदायः १४ समुदयः १५ सम-
वायः १६ चयः १७ गणः १८ संहतिः १९
वृन्दम् २० निकुरम्बम् २१ कदम्बकम् २२ ।
इत्यमरः । २ । ५ । ३९-४० ॥ पूगः २३
सन्नयः २४
स्कन्धः २५ निचयः २६ जालम् २७ अग्रम्
२८
पटलम् २९ काण्डम् ३० मण्डलम् ३१
चक्रम्
३२ । इति जटाधरः ॥ विस्तरः ३३ उत्-
कारः ३४ समुच्चयः ३५ आकरः ३६ प्रकरः
३७ संघः ३८ प्रचयः ३९ जातम् ४० । इति
शब्दरत्नावली ॥ (यथा, मनुः । ८ । २२१ ।
“एवं दण्डविधिं कुर्य्याद्धार्म्मिकः पृथिवीपतिः
।
ग्रामजातिसमूहेषु समयव्यभिचारिणाम् ॥”)

**समूहनी**, स्त्री, (समूह्यतेऽनयेति । सम् + ऊह + ल्युट् । स्त्रियां ङीप् ।) सम्मार्ज्जनी । इति हेमचन्द्रः ॥

**समूह्यः**, पुं, (समूह्यते इति । सम् + ऊह + ण्यत् ।) यज्ञाग्निः । तत्पर्य्यायः । परिचाय्यः २ उपचाय्यः ३ । इत्यमरः । २ । ७ । २० ॥ सम्यगूहयोग्ये, त्रि । निर्विसर्गश्चेदानन्तर्य्यार्थः । यथा, --
"प्रागुदक्प्लवनं देशं समं वा परिसमूह्य ॥"
इति गोभिलसूत्रम् ॥

**समृद्धः**, त्रि, (सम् + ऋधु वृद्धौ + क्तः ।) समृद्धियुक्तः । तत्पर्य्यायः । अधिकर्द्धिः २ । इत्यमरः । ३ । १ । ११ ॥ अधिसम्पत्तिशाली ३ । इति शब्दरत्नावली ॥ (यथा, रामायणे । २ । १४ । २७ ॥
"संहृष्टमनुजोपेतां समृद्धविपणापणाम् ॥"
नागविशेषे, पुं । इति महाभारतम् । १ । ५७ । १७ ॥)

**समृद्धिः**, स्त्री, (सम् + ऋध् + क्तिन् ।) सम्यग्वृद्धिः । अतिशयसम्पत्तिः । तत्पर्य्यायः । एधा २ । इत्यमरः । ३ । २ । १० ॥ विधा ३ । इति जटाधरः ॥ (यथा, रघुः । ९ । १३ ।
"चरणयोर्नखरागसमृद्धिभिर्मुकुटरत्नमरीचिभिरस्पृशन् ॥")

**समेतः**, त्रि, (सम् + आ + इण् + क्तः ।) सम्यक्प्राप्तः । संयुक्तः । यथा, --
"नामसमेतं कृतसङ्केतं वादयते मृदु वेणुम् ।
बहु मनुते तनुते तनुसङ्गतपवनचलितमपिरेणुम् ॥"
इति श्रीजयदेवः ॥

**समेधितः**, त्रि, सम्यग्वर्द्धितः । संपूर्व्वैधधातोः क्तप्रत्ययेन निष्पन्नः ॥

**समोदकं**, क्ली, (समं उदकं यत्र ।) मथितार्द्धाम्बुदधि । अर्द्धजलयुक्तघोलम् । इति हेमचन्द्रः ॥ तत्पर्य्यायः । उदश्वित् २ । इत्यमरः । २ । ७ । १३९ ॥

**सम्पः**, पुं, पतनम् । इति भूरिप्रयोगः ॥

**सम्पत्तिः**, स्त्री, (सं + पद् + क्तिन् ।) विभवोत्-
नयशालिनि श्रिय इवाधिपतौ
विरमन्ति न ज्वलितुमौषधयः ॥")
हारभेदः । इति मेदिनी ॥

**सम्पदं**, क्ली, (सम्यक् पदं यत्र ।) समं पदयुगम् । इति शब्दमाला ॥

**सम्पद्वरः**, पुं, (सं + पद + ष्वरच् । इति पुरुषोत्तमदेवः । इत्युणादिटीकायामुज्ज्वलदत्तः ।) राजा । इति सिद्धान्तकौमुदी ॥

**सम्पन्नः**, त्रि, (सं + पद + क्तः ।) साधितः । (यथा, पञ्चदशी । ८ । ८१ ।
"लौकिकं वचनं सार्थं सम्पन्नं
त्वत्प्रसादतः ॥")
सम्पत्तियुक्तः । इति मेदिनी ॥

**सम्परायः**, पुं, (सम्यक् परे काले ईयते इति । इण् + घञ् ।) आपत् । युद्धम् । उत्तरकालः । इत्यमरः । ३ । ३ । १५० ॥

**सम्परायकं**, क्ली, युद्धम् । इत्यमरटीकायां भरतः । २ । ८ । १०४ ॥

**सम्परायिकं**, क्ली, युद्धम् । इत्यमरटीकायां स्वामी । २ । ८ । १०४ ॥

**सम्पर्कः**, पुं, (सम् + पृच् + घञ् ।) मेलकः । रतिः । इति मेदिनी ॥ संसर्गः । यथा, --
"सम्पर्काद्दुष्यते विप्रो जनने मरणेऽपि वा ।
सम्पर्कविनिवर्त्तानां न प्रेतं नैव सूतकम् ॥"
इति शुद्धितत्त्वम् ॥

**सम्पर्की**, [न्] त्रि, (सं + पृची सम्पर्के + "संपृचेति ।" ३ । २ । १४२ । इति घिनुण् ।) सम्पर्क-
हृषीकेशं तदा वाक्यमिदमाह
महीपते ! ॥")
पक्षिणां गतिविशेषः । इति जटाधरः ॥

**सम्पातिः**, पुं, अरुणपुत्रः । स च जटायुषोऽग्रजो भ्राता । यथा, रामायणे । ४ । ५६ । २ ।
"सम्पातिर्नाम नाम्ना तु
चिरजीवी विहङ्गमः ।
भ्राता जटायुषः श्रीमान्
विख्यातबलपौरुषः ॥"
(यथा च तत्रैव गरुडवाक्ये । ३ । १४ । ३२ ।
"द्वौ पुत्रौ विनतायास्तु
गरुडोऽरुण एव च ।
तस्माज्जातोऽहमरुणात्
सम्पातिश्च ममाग्रजः ॥"
यथाच महाभारते । १ । ६६ । ७० ।
"अरुणस्य भार्य्या श्येनी तु
वीर्य्यवन्तौ महाबलौ ।
सम्पातिं जनयामास वीर्य्यवन्तं
जटायुषम् ॥"
तथा तत्रैव । ३ । २७८ । १ ।
"सखा दशरथस्यासीत्
जटायुररुणात्मजः ।
गृध्रराजो महावीरः
सम्पातिर्यस्य सोदरः ॥"
अस्य पक्षदहन-विररणम् । यथा, रामायणे । ४ । ५८ । ४ -- ७ ।
"पुरा वृत्रवधे वृत्ते स चाहञ्च
जयैषिणौ ।
आदित्यमुपयातौ खे ज्वलन्तं
रश्मिमालिनम् ॥
आवृत्याकाशमार्गेण जवेन
स्वर्गतौ भृशम् ।

कर्षः । तत्पर्य्यायः । श्रीः २ लक्ष्मीः ३ सम्पद् ४ । इत्यमरः । २ । ८ । ८२ ॥ ऋद्धिः ५ । इति जटाधरः ॥
भूतिः ६ । इति मेदिनी ॥ (यथा, कथासरित्-सागरे । २४ । १६१ ।
"तदैव च ददौ तस्मै सुतां क्लेशविवर्द्धिताम् ।
निजां शिवाय सम्पत्तिमिव मूढत्वहारिताम् ॥")

**सम्पत्,** [द्] स्त्री, (सं + पद् + क्विप् ।) सम्पत्तिः ।

इत्यमरः । २ । ८ । ८१ ॥ (यथा, रघुः । १ । ६४ ।
"त्वयैवं चिन्त्यमानस्य गुरुणा ब्रह्मयोनिना ।
सानुबन्धाः कथं न स्युः सम्पदो मे निरापदः ॥")
गुणोत्कर्षः । (यथा, किराते । ५ । २४ ।
"गुणसम्पदा समधिगम्य परं
महिमानमत्र महिते जगताम् ।
विशिष्टः । सम्पर्कशब्दादिन्प्रत्ययेन निष्पन्नः ।
इति केचित् ॥

**सम्पर्कीयः**, त्रि, सम्पर्कयुक्तः । सम्बन्धीयः ।

सम्पर्कशब्दात् णीयप्रत्ययेन निष्पन्नः ॥

**सम्पा**, स्त्री, (संपततीति । सं + पत + डः । टाप् ।)

विद्युत् । यथाह कश्चित् ।
"रागान्धा तमसो
विसारिविरहज्वालातिवृष्टेः
स्मरा-
विष्ठा भूतगणात् पथोऽतिविषमाद्भ्रष्टा
बधूः
सत्पथात् ।
पङ्कादेन मदेन पङ्किलतनुः सम्पाति
सम्पाततः
सम्पाभानुभुजङ्गसद्म विजहौ यान्ती
भुजङ्गा-
द्भयम् ॥"

**सम्पाकः**, पुं, (सम्यक् पाको यस्य ।) आरग्वध-

वृक्षः । इत्यमरः । २ । ४ । २३ ॥ (यथा, सुश्रुते
उत्तरतन्त्रे ६१ अध्याये ।
"सम्पाकश्रेयसीसप्तपर्ण्यपामार्गपीलुभिः ॥")
सम्यक्पाकश्च ॥

**सम्पाकः**, त्रि, (सम्यक् पाको यस्य ।) तर्क्ककः ।

धृष्टः । इति मेदिनी ॥ अल्पः । लम्पटः । इति
धरणिः ॥

**सम्पाटः**, पुं, तर्कुः । इति शब्दमाला ॥

**सम्पातः**, पुं, (सम् + पत + घञ् ।) पतनम् ।

इति भूरिप्रयोगः ॥ (यथा, गीतायाम् । १ ।
२० ।
"प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः ।
मध्यं प्राप्ते तु सूर्य्ये तु
जटायुरवसीदति ॥
तमहं भ्रातरं दृष्ट्वा
सूर्य्यरश्मिभिरर्द्दितम् ।
पक्षाभ्यां छादयामास स्नेहात्
परमविक्लवम् ॥
निर्दग्धपक्षः पतितो बिन्ध्येऽहं
वानरर्षभाः ।
अहमस्मिन् वसन् भ्रातुः प्रवृत्तिं
नोपलक्षये ।
जटायुषस्त्वेवमुक्तो भ्रात्रा
सम्पातिना तदा ॥")

**सम्पातिकः**, पुं, (सम्पातिरेव । स्वार्थे कन् ।)

गरुडज्येष्ठपुत्त्रः । इति
शब्दमाला (अरुणस्य
ज्येष्ठपुत्त्रः । इति पुराणम् ॥)

**सम्पादकः**, पुं, (सम्पादयतीति । सं + पद् + णिच्

+ ण्वुल् ।) निष्पादकः ।
सम्पन्नकर्त्ता ॥

**सम्पादनं**, क्ली, निष्पादनम् । संपूर्व्वकण्यन्त-

पदधातोरनट्-(ल्युट्) प्रत्ययेन
निष्पन्नम् ॥
(यथा, कथासरित्सागरे । १५ ।
१४९
"संभाव्य
सिद्ध्युदयमात्मचिकीर्षितस्य
सम्पादनाय सुतरां जगृहुः
प्रयत्नम् ॥")

**सम्पादितः**, त्रि, निष्पादितः । संपूर्व्वण्यन्त-

पदधातोः क्तप्रत्ययेन निष्पन्नः ॥

**सम्पीडनं**, क्ली, सम्यक्प्रकारेण व्यथनम् । सं-

पूर्व्वपीडधातोरनट् (ल्युट्)
प्रत्ययेन निष्पन्नम् ॥

| | | |
|---|---|---|
| | | **सम्पीतिः**, स्त्री, सम्यक्पानम् । संपूर्व्वपाधातोः<br><br>क्तिन्प्रत्ययेन निष्पन्नम् ॥<br><br>**सम्पुटः**, पुं, (सं + पुट् + कः ।) कुरुवकः ।<br><br>इत्यजयः ॥ पेटा । इति<br>हेमचन्द्रः ॥ एकजा-<br>तीयोभयमध्यवर्त्ती । यथा,<br>तन्त्रसारः ।<br>"सकामः संपुटो जप्यो<br>निष्कामः संपुटंविना ।"<br>तथा च तत्रैव ।<br>"केवलां मातृकां कृत्वा मातृका<br>तारसंपुटा ।<br>मातृकापुटितं तारं न्यसेत्<br>साधकसत्तमः ॥"<br>रतिबन्धविशेषः । तल्लक्षणं<br>यथा, --<br>"संप्रसार्य्योभयोः पादौ<br>शय्यागतकपोलकः । |

भगलिङ्गस्य संयोगात् रमते
संपुटो हि सः ॥”
इति रतिमञ्जरी ॥

**सम्पुटकः**, पुं, (सम्पुट्यते इति । सं + पुट +
क्वुन् ।) आधारविशेषः । साँपुडा
इति ख्यातः ।
इति भरतः ॥ तत्पर्य्यायः ।
समुद्गकः २ । इत्य-
मरः । २ । ६ । १३९ ॥ समुद्गः
२ सम्पुटः ४ ।
इति हेमचन्द्रः ॥

**सम्पूर्णं**, त्रि, (सं + पृ + क्तः ।) समग्रम् । परि-
पूर्णम् । साङ्गम् । यथा, --
“गृहीतेऽस्मिन् व्रते देव ! यद्यपूर्णे
त्वहं म्रिये ।
तन्मे भवतु संपूर्णं
त्वत्प्रसादाज्जनार्द्दन! ॥”
इति तिथ्यादितत्त्वम् ॥

**सम्पूर्णः**, पुं, (सं + पृ + क्तः ।) रागस्य जाति-
विशेषः । स तु
सप्तस्वरमिश्रितरागिण्यः । यथा,
“औडवः पञ्चभिः प्रोक्तः स्वरैः
षड्भिस्तु
षाडवः ।
सम्पूर्णः सप्तभिः प्रोक्तो
रागजातिस्त्रिधा मता ॥”
इति सङ्गीतरत्नाकरः ॥
अपि च । सम्पूर्णस्वराः सा ऋ ग
म प ध नि ।
सम्पूर्णरागाः सप्तभिः स्वरैर्यथा । नाट-
वसन्तादयः । इति
सङ्गीतदामोदरः ॥

**सम्पूर्णा**, स्त्री, (सम्पूर्ण + टाप् ।) एकादशी-

**सम्प्रतीतिः**, स्त्री, सम्यक्ख्यातिः । सम्यग्ज्ञानम् ।
संप्रतिपूर्व्वेनधातोः क्तिन्प्रत्ययेन निष्पन्नम् ॥

**सम्प्रदाता**, [ऋ] त्रि, (सं + प्र + दा + तृच् ।)
संप्रदानकर्त्ता । यथा, शुद्धितत्त्वे कात्यायन-
वचनम् ।
“त्रयाणामुदकं कार्य्यं त्रिषु पिण्डः प्रवर्त्तते ।
चतुर्थं संप्रदातैषां पञ्चमो नोपपद्यते ॥”

**सम्प्रदानं**, क्ली, (सं + प्र + दा + ल्युट् ।) सम्य-
क्प्रकारेण दानम् । षट्कारकान्तर्गतकारक-
विशेषः । स च दित्सासूयाक्रोधेर्षारुचिद्रोह-
स्थाह्नुश्लाघस्पृहिशप्राधीक्षाप्रतिश्रुप्रत्यनुगृधार्य्य
र्थानां विषयः । तत्र चतुर्थी विभक्तिः स्यात् ।
मुख्यसंप्रदानन्तु प्रकृष्टं दानं यो लभते सः ।
तथा चोक्तम् ।
“सम्प्रदानं तदेव स्यात् पूजानुग्रहकाम्यया ।
दीयमानेन संयोगात् स्वामित्वं लभते यदि ॥”
इति मुग्धबोधव्याकरणटीकायांदुर्गादासः ॥
अपि च ।
“गत्यादिभिन्ने धात्वर्थे चतुर्थ्या विग्रहस्थया ।
यः स्वार्थो बोधनीयस्तत् संप्रदानत्वमीरितम् ॥”
गत्यादिभिन्ने यद्धातूपस्थाप्य यादृशार्थे विग्रहस्थ-
चतुर्थ्या यः स्वार्थो बोधयितुं शक्यते स तद्धा-
तूपस्थाप्य तादृशक्रियायां संप्रदानत्वमुच्यते ।
ब्राह्मणाय दानं धनस्य इत्यादौ ददातेः स्वत्व-
जनकस्त्यागोऽर्थः तन्निविष्टे च स्वत्वे ब्राह्मणादेः
प्रतियोगित्वं निरुपितत्वं वा चतुर्थ्या बोध्यते इति
तदेव तत्र संप्रदानत्वं ब्राह्मणादिप्रतियोगिकं
यद्धनवृत्तिस्वत्वं तज्जनकस्त्याग इत्येवं तत्र प्रत्य-
यात् धात्वर्थतावच्छेदकीभूतस्वत्वाख्यफलवत्तया
धनादेर्दानकर्म्मत्वात् । न चैवं पशुकामनया
यागकरणदशायां चैत्रः स्वात्मने पशुं ददातीत्यपि
प्रयोगापत्तिः तादृशयागस्य चैत्रीयं यत् पशु-
निष्टं स्वत्वं तज्जनकत्यागत्वादितिवाच्यं स्वत्व-
ध्वंसजनकक्रियापर्य्यवसन्नस्य त्यागस्यैकदेशे
स्वत्व-
ध्वंसेऽपि द्वितीयाद्यर्थस्यान्वयेन पशुफलकयागे
पशुनिष्ठस्य स्वत्वध्वंसस्य जनकत्वविरहात्त-
द्वाक्यस्याप्रमाणत्वात् । ग्रामाय गत इत्यादौ

कारणमिति वचनाच्च अतएव विदेशस्थं
पात्र-
मुद्दिश्य त्यक्तधने स्वीकारमन्तरेणैव
पात्रस्य
मरणस्थले पितृदायत्वेन तद्धनं
पुत्रादिभिर्व्विभज्य
गृह्यते अन्यथा तैरिव उदासीनैरपि तद्धन-
स्यारण्यकुशादेरिवोपादाने यथेष्टनियोगे च
प्रत्यवायो न स्यात् नन्वेवं दानादेव
स्वत्वसिद्धे-
र्दत्तवस्तुनि स्वीकारो व्यर्थ इति चेन्न
लब्ध्वा
चाष्टगुणं फलमित्यादि स्मृतेः
प्रतिगृहीतद्रव्य-
दानस्य फलविशेषं प्रति हेतुत्वेन
तादृशफल-
सम्पत्त्यर्थमेव प्रतिग्रहस्योपयोगात् याजना-
ध्यापनप्रतिग्रहैर्द्विजो
धनमर्जयेदित्यादिश्रुत्या
प्रागुक्तस्मृत्या च प्रतिग्रहस्यापि
स्वत्वहेतुत्व-
बोधनाच्च ।
स्वत्वजनकव्यापारस्यैवार्ज्जनपदार्थ-
त्वात् । दासाय भक्ष्यं ददाति भृतकाय
वेतनं
ददातीत्यादावपि स्वत्वजनकत्यागं
प्रतिपादयन्
ददातिर्मुख्य एव पुण्यजनकन्तु न तादृशं
दानमवैधत्वात् । यत्तु स्वीकारजन्यस्य
स्वत्वस्य
जनकस्त्यागो दानं मनसा पात्रमुद्दिश्य
धनत्या-
गन्तु न दानं किन्तूत्सर्गमात्रं
प्रतिग्रहजन्यस्वत्वं
प्रति हेतुभूतवैधत्यागस्यैव तथात्वात्
उपेक्षा तु
स्वत्वध्वंसमात्रजनकस्त्यागो न तु तत्र
स्वत्व-

विशेषः । सा तु
पूर्व्वारुणोदयव्यापिनी सती
षष्टिदण्डात्मिका । यथा, --
“आदित्योदयवेलायाः
प्राङ्मुहूर्त्तद्वयान्विता ।
सैकादशी हि संपूर्णा विद्धान्या
परिकीर्त्तिता ॥”
इति तिथ्यादितत्त्वम् ॥

**सम्पृक्तः**, त्रि, (सं + पृच् + क्तः ।) मिश्रितः ।

तत्पर्य्यायः । करम्बः २ कवरः
३ मिश्रः ४ खचितः
५ । इति हेमचन्द्रः ॥

**सम्प्रति**, व्य, (सम् च प्रति च द्वयोः समाहारः ।)

अस्मिन् काले । तत्पर्य्यायः ।
एतर्हि २ इदानीं
३ अधुना ४ सांप्रतम् ५ ।
इत्यमरः । ३ । ४ । २३ ॥
(यथा, भागवते । ७ । १ । १७ ।
“सम्प्रत्यमर्षी गोविन्दे
दन्तवक्रश्च दुर्म्मतिः ॥”)

**सम्प्रतिः**, पुं, अतीतकल्पीयार्हद्भेदः । इति हेम-

चन्द्रः ॥

**सम्प्रतिपत्तिः**, स्त्री, (सं + प्रति + पद् + क्तिन् ।)

उत्तरविशेषः । यथा, --
“मिथ्यासंप्रतिपत्तिश्च
प्रत्यवस्कन्दनं तथा ।
प्राङ्न्यायाश्चोत्तराः
प्रोक्ताश्चत्वारः शास्त्र-
वेदिभिः ॥
श्रुत्वाभियोगं प्रत्यर्थी यदि तं
प्रतिपद्यते ।
सा तु संप्रतिपत्तिः
स्याच्छास्त्रविद्भिरुदाहृता ॥”
अभियुज्यते अभियोगः ।
प्रतिपद्यते अङ्गी-

विग्रहस्थचतुर्थ्या धात्वर्थे बोध्यमपि कर्म्मत्वं न गत्यादिभिन्ने । वृक्षाय सेचक इत्यादौ गत्यादि-भिन्ने चतुर्थ्या बोधनीयोऽपि संवर्द्धयितुमित्यादि तुमर्थो न विग्रहस्थयेति न तत्र प्रसङ्गः । संप्रदानशब्दस्तु स्वाश्रयगोचरत्यागजन्यस्वत्वस्य प्रतियोगिन्येव शक्त इति स्वत्वप्रतियोगित्वं संप्र-दानमित्यादिको न प्रयोगः । न च दानस्य स्वत्वहेतुत्वे प्रमाणाभावः ।
‘सप्त वित्तागमा धर्म्म्या दायो लाभः क्रयो जयः ।
प्रयोगः कर्म्मयोगश्च सत्प्रतिग्रह एव च ॥’
इत्यादि मन्वादिवचनैस्तस्य स्वत्वहेतुत्वाप्रति-पादनादिति वाच्यम् । ब्राह्मणाय त्यक्तायां गवि गौरियं ब्राह्मणस्य न तु ममेत्यादि सार्व्वजनीन-प्रतीतेरेव तत्र प्रमाणत्वात् प्रदानं स्वाम्य-

जनकस्यान्तर्भाव इति मैथिलैरुक्तं तन्न
युक्तं
लाघवेन स्वत्वजनकत्यागस्यैव
ददात्यर्थत्वात् ।
तिलानस्मै प्रतियच्छति तुरगमस्मै
विक्रीणीते
इत्यादौ द्रव्यान्तरग्रहणपूर्ब्बकं दानमव
प्रति-
दानम् । मूल्यग्रहणपूर्व्वकं दानमेव विक्रय
इति
तत्रापि मुख्यमेव संप्रदानत्वं चतुर्थ्या
बोध्यते ।
तिलादिकञ्च न मूल्यं पणपुराणादेरेव शास्त्रे
तथात्वोपदेशात् । अदृष्टार्थं दत्तस्यैव च
स्वीकारः प्रतिग्रह इति परेण प्रतिदत्तस्य
विक्रीतस्य वा तिलतुरगादेः स्वीकारो न
दोषावहः । मैत्राय रोचते मोदक इत्यत्र
चतुर्थ्या धात्वर्थान्वितं आधेयत्वं धातुना च
भक्ष्यत्वप्रकारकेच्छोपस्थाप्यते तिङा तु
प्रकाशत
इत्यादाविव विषयत्वलक्षणं कर्त्तृत्वं तथा च
मैत्रनिष्ठायाः भक्ष्यत्वप्रकारकेच्छाया
विषयता-
वान् मोदकः इत्याकारकस्तत्र बोधः । गुरवे
गां धारयते इत्यत्र धृङा गृहावस्थितिः
द्विती-
यया तदन्वितं कर्त्तृत्वं चतुर्थ्या च
तन्निविष्ट-
गृहान्वितं सम्बन्धित्वमुपस्थाप्यते तेन
गोकर्त्तृ-
काया
गुरुसम्बन्धिगृहावस्थितेरनुकूलव्यापार-
वान् इत्याकारकस्तत्र बोधः ।
धातूत्तरणिचा
व्यापारबोधनादिति कालापाः ।
पाणिनीयास्तु
धारेरुत्तमर्णे इति सूत्रानुसारेण चैत्राय शतं
धारयते इत्यादाविव गुरवे गां धारयते
इत्या-
दावपि ऋणग्रहणं धारणं दत्तत्वञ्च
चतुर्थ्यर्थः

करोति । तं साध्यार्थम् । इति व्यवहारतत्त्वम् ॥

(सौमनस्यम् । यथा, माघे । १९ । ३८ ।

“न तस्थौ भर्त्तृतः प्राप्तमानसम्प्रतिपत्तिषु ।

रणैकसर्गेषु भयं मानसं प्रतिपत्तिषु ॥”)

**सम्प्रतिरोधकं**, त्रि, (सम्यक्प्रकारेण प्रतिरुण-

द्धीति । सं + प्रति + रुध + ण्वुल् ।) प्रतिबन्ध-

कम् । सम्प्रतिपूर्व्वरुधधातोर्णकप्रत्ययेन निष्पन्नम् ॥

तथा च गुरुदत्तां गां ऋणत्वेन गृह्णाति इत्या-

कारस्तत्र वाक्यार्थः पश्चात् शोध्यत्वेनाङ्गीकृत्य

गृहीतञ्च द्रव्यमृणमित्याहुः । पुत्त्राय राध्यति

पुत्त्रायेक्षत इत्यादौ दैवनिरूपणं धात्वर्थः तन्नि-

विष्टे च दैव सुबर्थस्य सम्बन्धस्यान्वयस्तेन पुत्त्रस्य

दैवं निरूपयति इत्येवं तत्र बोधः । गुरवे गां

प्रतिशृणोति आशृणोति इत्यादौ देयत्वे नाभ्यु-
पगमः शृणोतेरर्थस्तत्र गोर्विशिष्यत्वेन तदेक-
देशे च दाने गुरोरुद्दिश्यत्वेनान्वयस्तेन गुरू-
द्दश्यकदानकर्म्मत्वेन गामभ्युपगच्छतीत्येवं
तत्र
बोधः । होत्रे प्रतिगृणातीत्यादौ हर्षानुकूल-
व्यापारलक्षणं प्रोत्साहनं गृणातेरर्थस्तदेक-
देशे च हर्षे होत्रादेरन्वयः तेन होतृनिष्ठ-
हर्षानुकूलव्यापारवान् इत्याकारकस्तत्र बोधः
।
चैत्राय कुप्यतीत्यादौ धात्वर्थ उत्कटद्वेषस्तत्र
विषयित्वलक्षणं संप्रदानत्वं चतुर्थ्या बोध्यते
तेन
चैत्रविषयकोत्कटद्वेषवान् इत्याकारकस्तत्र
बोधः । पुत्रे कोपो न युज्यते इत्यत्र
कृदन्तस्य
कोपपदस्यैवार्थे पुत्त्र इत्यस्यान्वयो न तु
धात्वर्थे ।
पटाय यतते इत्यादावपि धात्वर्थकृतौ सुपा
पटस्य विषयित्वं बोध्यते तत्र उद्देश्यत्वमेव
चतु-
र्थ्यर्थः कथमन्यथा पटेच्छया तन्तुनिर्म्माण-
दशायां पटाय यतते इत्यादिकः प्रयोग इत्यपि
वदन्ति । मित्राय द्रुह्यति इत्यत्र द्विष्टाचरणं
द्रोहस्तेन मित्रस्य द्विष्टमाचरतीत्यर्थः ।
शिष्याय
ईर्ष्यति इत्यत्र अनिष्टानुपेक्षणमीर्षा तथा च
शिष्यानिष्टं नोपेक्षत इत्यर्थः । पुत्त्रायासूयति
इत्यत्रासूया गुणद्वेषस्तेन पुत्त्रस्य गुणं द्वेष्टि
इत्याकारकस्तत्र बोधः । मित्रं द्रुह्यति शिष्य-
मीर्ष्यति पुत्त्रमसूयतीत्यपि प्रयोगात् द्रुहादि-
कर्म्मणः संप्रदानत्वं वैकल्पिकमित्युन्नीयते ।
कोपपूर्व्वकस्य द्रोहादेर्द्रुहादिधातुवाच्यत्वे तत्-
कर्म्मणः संप्रदानत्वं द्रोहादिमात्रस्य तथात्वे
तु कर्म्मत्वमेवेति पुनः कौमाराः ।
सोपसर्गयोस्तु
क्रुधद्रुहोः कर्म्मणः कर्म्मतैव न तु संप्रदानता
अतएव शिष्यस्याभिक्रोद्धा मित्रस्याभिद्रोढे-
त्यादौ कृद्योगे कर्म्मणि षष्ठ्येव प्रमाणम् ।”

श्रीमाल्लक्ष्मीपतिः
श्रीमान्माधवेन्द्रपुरिस्तथा ॥
संप्रदायविहीना ये मन्त्रास्ते निष्फला
मताः ।
अतः कलौ भविष्यन्ति चत्वारः
संप्रदायिनः ।
श्रीमाध्विरुद्रसनका वैष्णवाः
क्षितिपावनाः ॥”
तन्त्रोक्तवैष्णवसंप्रदाया यथा, --
श्रीशिव उवाच ।
“वैखानः सामवेदादौ श्रीराधावल्लभी
तथा ।
गोकुलेशो महेशानि ! तथा वृन्दावनी
भवेत् ॥
पाञ्चरात्रः पञ्चमः स्यात् षष्ठः
श्रीवीरवैष्णवः ।
रामानन्दी हविष्याशी निम्बार्कश्च
महेश्वरि ॥
ततो भागवतो देवि दश भेदाः
प्रकीर्त्तिताः ।
शिखी मुण्डी जटी चैव द्वित्रिदण्डी
क्रमेण च ॥
एकदण्डी महेशानि वीरशवस्तथव च ।
सप्त पाशुपताः प्रोक्ता दशधा वष्णवा
मताः ॥
एतेषां वासनं देवि ! शृणु यत्नेन
शाम्भवि ।
वेवेष्टि सव्वं संव्याप्य यस्तिष्ठति स
वैष्णवः ॥
वैखानसादिदक्षाद्यैर्भूषितः
स्मार्त्तवैष्णवः ।
श्रीराधावल्लभं देवि शृणु यत्नेन शाम्भवि
॥
वैष्णवाचारनिरतो विष्णुतन्त्रैकपारगः ।
अनन्यचेताः शान्तात्मा
विष्णुचिन्तापरायणः ॥
श्रीराधावल्लभी देवि गोकुलेशं शृणु प्रिये
।

केवलं विष्णुतत्त्वज्ञः प्रोक्तो भागवतः शिवे
॥”
इति शक्तिसङ्गमतन्त्रे १ खण्डे ८ पटलः
॥

**सम्प्रधारणा**, स्त्री, (सम् + प्र + धृ + णिच् +
युच् । टाप् ।) उचितानुचितनिश्चयः ।
तत्-
पर्य्यायः । समर्थनम् २ । इत्यमरः । २ ।
८ । २५ ॥

**सम्प्रपदं**, क्ली, (सं + प्र + पद गतौ + कः ।)
भ्रमणम् । पर्य्यटनम् । इति केचित् ॥
(यथा,
याज्ञवल्के । ३ । ५१ ।
“स्वप्याद् भूमौ शुचौ रात्रौ
दिवासंप्रपदैर्नयेत् ।
स्थानासनविहारैर्वा योगाभ्यासेन वा तथा
॥”)

**सम्प्रयोगः**, पुं, (सं + प्र + युज + घञ् ।) निधु-
वनम् । रतम् । अन्वितिः । सम्बन्धः ।
(यथा,
रघुः । ५ । ५४ ।
“उष्णत्वमग्न्यातपसंप्रयोगात्
शैत्यं हि यत् सा प्रकृतिर्जलस्य ॥”)
कार्म्मणम् । वशीकरणादिकर्म्म । इति
मेदिनी
करहेमचन्द्रौ ॥ अर्थिते, त्रि । इत्यजयः ॥

**सम्प्रयोगी**, [न्] पुं, (संप्रयोगोऽस्यास्तीति । इनिः
।)
कलाकेलिः । कामुकः । संप्रयोजकः ।
इति
मेदिनी ॥

**सम्प्रसारणं**, क्ली, (सं + प्र + सृ + णिच् + ल्युट्
।)
व्य करणस्य संज्ञाविशेषः । यथा ।
इग्यणः
संप्रसारणम् । यणस्थाने प्रयुज्यमानो य
इक्

इति शब्दशक्तिप्रकाशिका ॥

**सम्प्रदायः**, पुं, (सं + प्र + दा + घञ् । "आतो

युक् चिण्कृतोः ।" ७ । ३ । ३३ । इति युक् ।)
गुरुपरम्परागतसदुपदेशः । शिष्टपरम्परा-
वतीर्णोपदेशः । इति भरतः ॥ तत्पर्य्यायः ।
आम्नायः २ । इत्यमरः । ३ । २ । ७ ॥
(यथा, माघे ।
१४ । ७९ ।
"सम्प्रदायविगमादुपेयुषी-
रेष नाशमविनाशिविग्रहः ।
स्मर्त्तुमप्रतिहतस्मृतिः श्रुती-
र्द्दत्त इत्यभवदत्रिगोत्रजः ॥")
गुरुपरम्परागतसदुपदिष्टव्यक्तिसमूहः । यथा,
"संप्रदायानुरोधेन पौर्व्वापर्य्यानुसारतः ।
श्रीभागवतभावार्थदीपिकेयं प्रतन्यते ॥"
इति श्रीधरस्वामी ॥
तद्भेदा यथा, श्रीपद्मपुराणे ।
"श्रीमन्नारायणो ब्रह्मा नारदो व्यास एव च ।
श्रीलमध्वः पद्मनाभो नृहरिर्माधवस्तथा ॥
अक्षोभो जयतीर्थश्च ज्ञानसिन्धुर्महानिधिः ।
विद्यानिधिश्च राजेन्द्रो जयधर्म्ममुनिस्तथा ॥
पुरुषोत्तमो ब्रह्मण्यो व्यासतीर्थमुनिस्तथा ।

नानाभूषणसम्पन्नो नानासुगन्धिभूषितः
॥
गवां कुलं प्रीणयिता
केलिकृष्णस्वरूपधृक् ।
शरीरमर्थं प्राणांश्च तन्निवेदनकारकम्
॥
अन्तःशक्तिपरो देवि वहिर्वैष्णवरूपधृक्
।
गन्धर्व्वाचारनिरतो लतावेष्टनतत्परः ॥
संप्रदायो गोकुलेशः सर्व्वसिद्धिकरो
भुवि ।
वृन्दावनाख्यं देवेशि शृणु यत्नेन
सांप्रतम् ॥
विगताशः प्रसन्नात्मा
विष्णुभक्तिपरायणः ।
कामिनीसङ्गचपलो वनक्रीडाविनोदधृक्
॥
सौगन्धभूषिततनुः स्त्रीध्यानैकपरायणः
।
विष्णुसारूष्यतत्त्वज्ञः प्रोक्तो वृन्दावनी
शिवे ॥
पाञ्चरात्रो महेणानि तथैव वीरवैष्णवः ।
पूर्ब्बमेव महेशानि कीर्त्तितः परमेश्वरि
॥
राशक्तिरिति विख्याता म शिवः
परिकीर्त्तितः ।
तदानन्दी शान्तचित्ती प्रसन्नात्मा
विचारधृक् ॥
सर्व्वत्र समरूपश्च रामानन्दी
प्रकीर्त्तितः ।
हविष्याशं महेशानि यथावदवधारय ।
पापसंहरणाशक्तो विष्णुभक्तो
जितेन्द्रियः ॥
यमादिनियमैर्युक्तो भक्ताचारपरायणः ।
स्वोपयोगफलाग्राही परकार्य्यपरायणः
॥
हविष्याशी महेशानि
शिवभक्तिस्वरूपधृक् ।
निम्बार्काख्यं संप्रदायं शृणु यत्नेन
सांप्रतम् ॥

स संप्रसारणसंज्ञः स्यात् । इति
सिद्धान्तकी-
मुदी ॥

**सम्प्रहारः**, पुं, (सम्यक्प्रकारेण प्रह्रीयतेऽत्रेति ।

सं + प्र + हृ + घञ् ।) युद्धम् । इत्यमरः ।
२ ।
८ । १०५ ॥ (यथा, रघुः । ७ । ५२ ।
"व्यश्वौ गदाव्यायतसंप्रहारौ
भग्नायुधौ बाहुविमर्द्दनिष्ठौ ॥")
गमनम् । इति मेदिनी ॥ हननम् । इति
धरणिः ॥

**सम्प्राप्तः**, त्रि, (सं + प्र + आप् + क्तः ।) सम्यक्-

प्रकारेण प्राप्तः । यथा । स्कन्दपुराणम् ।
"संप्राप्ते मकरादित्ये पुण्ये पुण्यप्रदे सदा ।
कर्त्तयो नियमः कश्चिद्व्रतरूपी नरोत्तमैः
॥"
इति तिथ्यादितत्त्वम् ॥

**सम्प्राप्तिः**, स्त्री, (सं + प्र + आप् + क्तिन् ।)

सम्यक्प्रापणम् । यथा, --
"आत्मनेपदसंप्राप्तौ परस्मै कुत्रचिद्भवेत्
॥"
इति संक्षिप्तसारव्याकरणम् ॥

**सम्प्रैषः**, पुं, (सं + प्र + इष + घञ् ।) नियोगः ।

विधिः । इति हेमचन्द्रः ॥

**सम्फालः**, पुं, (सम्यक् फालो गमनं यस्य ।) मेषः ।

इति हेमचन्द्रः ॥

**सम्फुल्लः**, त्रि, (सं + फल + क्तः । "उत्फुल्लसंफु-

ल्लयोरिति वक्तव्यम् ।" ८ । २ । ५५ ।
इत्यस्य
वार्त्तिकोक्त्या निपातितः ।) विकसितः ।
प्रफुल्लः ।
इत्यमरः । २ । ४ । ७ ॥

**सम्ब**, सर्पणे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

सक०-सेट् ।) दन्त्यादिः ।
ओष्ठ्यवर्गशेषोपधः ।
सम्बति । सिसम्बयिषति । इति दुर्गादासः
॥

| | | |
|---|---|---|
| | नित्यार्च्चनक्रमासक्तः<br>स्वतन्त्रैकपरायणः ।<br>बाह्यपूजादिनिरतो नान्यभक्तः<br>प्रसन्नधीः ॥<br>आर्य्यपक्षान्वितः स्वच्छः<br>स्वच्छन्दाचारतत्परः ।<br>स्वतन्त्रः स्मार्त्तविद्वेषी निम्बार्को<br>भगवान् हरिः ॥<br>अथ भागवतं देवि कथ्यते शृणु सांप्रतम्<br>॥<br>विष्णुभक्तैकनिपुणो विजातात्मा<br>प्रसन्नधीः ।<br>स्मार्त्तगर्व्वान्वितो देवि<br>तदन्याचारतत्परः ॥<br>आर्य्यपक्षान्वितो देवि तथा<br>स्वरूपवेशधृक् ।<br>शैवद्वेषी तस्य सङ्गात् पुनः<br>स्नानपरायणः । | |

**सम्ब**, क, सम्बन्ध । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-सक०-सेट् ।)
ओष्ठ्यवर्गशेषोपधः । क,
सम्बयति धनं लोकः
संबध्नातीत्यर्थः । ताल-
व्यादिरयमिति धातुप्रदीपः ।
मूर्द्धन्यादिरित्य-
प्येके । इति दुर्गादासः ॥

**सम्बं**, क्ली, (सम्बति सर्पतीति । सम्ब + अच् ।)
जलम् । इति जटाधरः ॥
वारद्वयकर्षणम् ।
इति सम्बाकृतशब्ददर्शनात् ॥

**सम्बद्धः**, त्रि, (सं + बन्ध + क्तः ।) सम्बन्धयुक्तः ।
यथा सुमन्तुः । मातृपितृसम्बद्धा
आसप्तमाद-
विवाह्याः कन्या भवन्ति ।
इत्युद्वाहतत्त्वम् ॥
(यथा च भागवते । २ । ९ । १ ।
"आत्ममायामृते राजन्
परस्यानुभवात्मनः ।
न घटेतार्थसम्बन्धः
स्वप्नद्रष्टुरिवाञ्जसा ॥")
बन्धनविशिष्टः । (यथा, रामायणे ।
५ । ५६ । २७ ।
"दन्तौष्ठपुटसंबद्धं वक्त्रं सापि
तदाकरोत् ॥")

**सम्बन्धः**, पुं, (सम्बध्यते इति । सं + बन्ध +
घञ् ।) ममृद्धिः । न्यायः । इत्यजपः
॥ (सख्यम् ।
इति मल्लिनाथः ॥ यथा, रघुः । २ ।
५८ ।
"सम्बन्धमाभाषणपूर्व्वमाहु-
र्वृत्तः स नौ सङ्गतयोर्व्वनान्ते ॥")
संसर्गः । यथा । एकपदार्थे
अपरपदार्थसंसर्गः
सगर्भः सोदरो भ्राता सगर्भा भगिनी स्मृता ।
भग्नीपुत्त्रो भागिनेयो भ्रातृपुत्त्रश्च भ्रातृजः ॥
श्यालस्तु भगिनीकान्तो भगिनीपतिरेव च ।
श्यालीपतिस्तु भ्राता च श्वशुरैकत्वहेतुना ।
श्वशुरस्तु पिता ज्ञेयो जन्मदातुः समो मुने ॥
अन्नदाता भयत्राता पत्नीतातस्तथैव च ।
विद्यादाता जन्मदाता पञ्चैते पितरो नृणाम् ॥
अन्नदातुश्च या पत्नी भगिनी गुरुकामिनी ।
माता च तत्सपत्नी च कन्या पुत्त्रप्रिया तथा
॥
मातुर्म्माता पितुर्म्माता श्वश्रूः पित्रोः स्वसा
सुता ।
पितृव्याणी मातुलानी मातरश्च चतुर्द्दश ॥
पौत्त्रस्तु पुत्त्रपुत्त्रे च प्रपौत्त्रस्तत्सुतोऽपि च ।
तत्पुत्त्राद्याश्च ये वंशा कुलजाताश्च
कीर्त्तिताः ॥
कन्यापुत्त्रश्च दौहित्रस्तत्पुत्त्राद्याश्च
बान्धवाः ।
भागिनेयसुताद्याश्च पुरुषा बान्धवाः स्मृताः
॥
भ्रातृपुत्त्राश्च पुत्त्राद्यास्ते पुनर्ज्ञातयः स्मृताः
॥
गुरुपुत्त्रस्तथा भ्राता पोष्यः परमबान्धवः ।
गुरुकन्या च भगिनी पोष्या मातृसमा मुने ॥
पुत्त्रस्य च गुरुर्भ्राता पोष्यः सुस्निग्धबान्धवः
।
पुत्त्रस्य श्वशुरभ्राता बन्धुर्वैवाहिकः स्मृतः ॥
कन्यायाश्च श्वशुरे तत्सम्बन्धः परिकीर्त्तितः
।
गुरुश्च कन्यकायाश्च पुरुषा बान्धवाः स्मृताः
॥"
पुरुषा बान्धवाः स्मृता इत्यत्र भ्राता
सुस्निग्ध-
बान्धवा इत्यपि क्वचित् पाठः ।
"गुरुः श्वशुरभ्रातॄणां गुरुतुल्यश्च पूजितः ।
बन्धुता येन सार्द्धञ्च तन्मित्रं परिकीर्त्तितम् ।
मित्रं सुखप्रदं ज्ञेयं दुःखदो रिपुरुच्यते ।
बान्धवो दुःखदो दैवात् निःसम्बन्धी सुखप्रदः
॥
"सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते ।
ग्रन्थादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः
॥"
सप्रयोजन इत्यत्र क्वचित् पुस्तके
साभिधेयक
इति पाठः । इति मुग्धबोधटीकायां दुर्गादासः
॥

**सम्बन्धः**, त्रि, (सम्बध्यते इति । सं + बन्ध + घञ् ।)
शक्तः । हितः । इत्यजयः ॥

**सम्बन्धी**, [न्] त्रि, (सम्बन्धोऽस्यास्तीति । इनिः ।)
सम्बन्धविशिष्टः । तत्पर्य्यायः । गुणवान् २
संयुक्
३ । इति त्रिकाण्डशेषः ॥ (यथा, मनुः । ८ ।
६४ ।
"नार्थसम्बन्धिनो नाप्ता न सहाया न वैरिणः ।
न दृष्टदोषाः कर्त्तव्या न व्याध्यार्त्ता न दूषिताः
॥"
पुं, मातृपक्षीयः । श्वशुरादिः । जामाता ।
श्यालकादिः । यथा, मनुः । २ । १३२ ।
"विप्रोष्य तूपसंग्राह्या ज्ञातिसम्बन्धियोषितः
॥"
"ज्ञातयः पितृपक्षाः पितृव्यादयः ।
सम्बन्धिनो
मातृपक्षाः श्वशुरादयश्च तेषां ज्येष्ठानां या
स्त्रियः ।" इति कुल्लूकभट्टः ॥ * ॥ तथाच
मनुः । ४ । १७९ ।
"बालवृद्धातुरैर्वैद्यैर्ज्ञातिसम्बन्धिबान्धवैः ॥"
"ज्ञातयः पितृपक्षाः । सम्बन्धिनो
जामातृश्याल-
कादयः ।" इति तट्टीकायां कुल्लूकः ॥ * ॥
वैवाहिकः । यथा, उत्तरचरिते । ४ अङ्के ।
"स सम्बन्धी श्लाघ्यः प्रियसुहृदसौ तच्च
हृदयं
स चानन्दः साक्षादपिच निखिलं जीवितपदम्
॥"
मित्रम् । इति मल्लिनाथः ॥ यथा, रघुः । २ ।
५८ ।
"तद्भूतनाथानुग नार्हसि त्वं

संसर्गमर्य्यादया भासते स च
प्रतियोग्यनुयोग्या-
धाराधेयविषयविषयिभावादिः । इति
प्रथमव्युत्-
पत्तिवादीयगादाधरी ॥ सम्पर्कः । स
च त्रिविधः ।
विद्याजः १ योनिजः २ प्रीतिजः ३ ।
तद्विवरणं
यथा, --
"सम्बन्धो येषु येषां यः सर्व्वजातिषु
सर्व्वतः ।
तं त्वां ब्रवीमि वेदोक्तं ब्रह्मणा कथितं
पुरा ॥
पिता तातस्तु जनको जन्मदातरि
वर्त्तते ।
अम्बा माता च लननी गर्भधात्र्यां
प्रसूरिति ॥
पितामहः पितृपिता तत्पिता
प्रपितामहः ।
अत ऊद्‌र्ध्वं ज्ञातयश्च सगोत्राः
परिकीर्त्तिताः ॥
मातामहः पिता मातुः प्रमातामह एव
च ।
मातामहस्य जनकस्तत्पिता
वृद्धपूर्व्वकः ॥
पितामही पितुर्म्माता तत्श्वश्रूः
प्रपितामही ।
मातामही मातृमाता मातृतुल्या च
पूजिता ॥
प्रमातामहीति विख्याता
प्रमातामहकामिनी ॥
वृद्धप्रमातामही ज्ञेया तत्पितुः
कामिनी तथा ।
पितृभ्राता पितृव्यः स्यान्मातुर्भ्राता तु
मातुलः ।
पितुः स्वसा पितुर्भग्नी मातुर्भग्नी च
मासुरी ॥
सूनुश्च तनयः पुत्त्रो
दायादश्चात्मजस्तथा।
धनभाक् वीर्य्यजश्चैव पुंसि जन्ये च
वर्त्तते ॥
सम्बन्धस्त्रिविधः पुंसां विप्रेन्द्र ! जगतीतले ।
विद्याजो योनिजश्चैव प्रीतिजश्च प्रकीर्त्तितः
॥
मित्रन्तु प्रीतिजं ज्ञेयं स सम्बन्धः सुदुर्ल्लभः ।
मित्रमाता मित्रभार्य्या मातृतुल्या न संशयः ॥
मित्रभ्राता मित्रपिता भ्रातृपितृसमो नृणाम् ।
चतुर्थं नाम सम्बन्धमित्याह कमलोद्भवः ॥
जारश्चोपरतिर्ब्बन्धुर्द्दुष्टासंभोगकर्त्तरि ।
उपपत्न्यां नवङ्गी च प्रेयसी चित्तहारिणी ॥
स्वामितुल्यश्च जारश्च नवङ्गी गृहिणीसमा ।
सम्बन्धो देशभेदे च सर्व्वदेशे विगर्हितः ॥
अवैदिको निन्दितस्तु विश्वामित्रेण निर्म्मितः
।
दुस्त्याज्यस्तु महद्भिश्च देशभेदे च सञ्चरेत् ॥
अकीर्त्तिजनकः पुंसां योषिताश्च विशेषतः ।
तेजीयसां न दोषाय विद्यमानो युगे युगे ॥"
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे
सम्बन्धजातिनिर्ण्यो
नाम १० अध्यायः ॥ * ॥ कूर्म्मपुराणे ।
"एकोदकानां मरणे सूतकं चैतदेव हि ।
पक्षिणीं योनिसम्बन्धे बान्धवेषु तथैव च ॥"
योनिसम्बन्धे मातृस्वसीयभागीनेयेषु ॥ अपि
च ।
"असम्बन्धिनो द्विजान् दहित्वा वहित्वा
सद्यः-
शौचं सम्बन्धे तु त्रिरात्रम् । इति शुद्धितत्त्वम् ॥
शब्दव्याकरणयोर्व्युत्पाद्यव्यत्पादकभावः
सम्बन्धः ।
ग्रन्थादौ तस्य वक्तव्यता यथा, --
सम्बन्धिनो मे प्रणयं विहन्तुम् ॥")

**सम्बाकृतं**, त्रि, (सम्बं कृतम् । डाच् ।) वारद्वय-
कृष्टक्षेत्रम् । इत्यमरः । २ । ९ । ९ ॥
तालव्य-
शादि च ॥

**सम्बाधः**, पुं, (सम्यक् बाधा यत्र ।) सङ्कटः ।
(यथा, माघः । ८ । २ ।
"संसक्तैर्विपुलतया मिथो नितम्बैः
सम्बाधं बृहदपि तद्बभूव वर्त्म ॥")
भगम् । इति मेदिनी ॥ भयम् । (यथा, महा-
भारते । ४ । ३८ । ७ ।
"व्यायामसहमत्यर्थं तृणराजसमं महत् ।
सर्व्वायुधमहामात्रं शत्रुसम्बाधकारकम् ॥")
नरकवर्त्म । इति शब्दरत्नावली ॥

**सम्बाधनं**, क्ली, (सम्यक् बाधनं यत्र ।) मद-
नस्य द्वारम् । शूलाग्रम् । द्वारपालः । इति
मेदिनी ॥

**सम्बुद्धः**, पुं, (सं + बुध + क्तः ।) बुद्धावतारः ।
इति त्रिकाण्डशेषः ॥ सम्यग् बोधाश्रये, त्रि ॥

**सम्बुद्धिः**, स्त्री, (सं + बुध + क्तिन् ।) सम्बोधनम् ।
यथा । ल्यर्थसम्बुद्‌ध्युक्तार्थे प्री । इति
मुग्धबोध-
व्याकरणम् ॥

**सम्बोधः**, पुं, (सं + बुध + घञ् ।) बोधनम् ।
(यथा, महाभारते । ३ । ३१२ । ८५ ।
"ज्ञानं तत्त्वार्थसम्बोधः शमश्चित्तप्रशान्तता
।
दयासर्व्वसुखैषित्वमार्ज्जवं समचित्तता ॥")
क्षेपः । इति मेदिनी ॥ नाशः । इत्यजयपालः
॥

| | | |
|---|---|---|
| जन्यायां दुहिता कन्या चात्मजा परिकीर्त्तिता ।<br>पूत्रपत्नी बधूर्ज्ञेया जामाता दुहितुः पतिः ॥<br>पतिः प्रियश्च भर्त्ता च स्वामी कान्ते च वर्त्तते ।<br>पत्नीभ्राता श्यालकश्च पत्नीभग्नी च श्यालिका ॥<br>देवरः स्वामिनो भ्राता ननन्दा स्वामिनः स्वसा ।<br>श्वशुरः स्वामिनस्तातः श्वश्रूश्च स्वामिनः प्रसूः ॥<br>भार्य्या जाया प्रिया कान्ता स्त्री च पत्न्याञ्च<br>वर्त्तते ।<br>पत्नीमाता तथा श्वश्रूस्तत्पिता श्वशुरः स्मृतः ॥ | | |

**सम्बोधनं**, क्ली, (सं + बुध + ल्युट् ।) अन्यत्र

व्यासक्तस्य कार्य्यान्तरे
नियोजनार्थमाभिमुख्य-
विधानम् । यथा हे विष्णो । इति
व्याकरणम् ॥
हे वृक्ष हे लते हे फल इत्यादावचेतने
तूप-
चारः । इति दुर्गादासः ॥ तत्पर्य्यायः ।
आम-
न्त्रणम् २ । इति हेमचन्द्रः ॥ सम्बुद्धिः
३ । इति
मुग्धबोधः ॥ (यथा, साहित्यदर्पणे । ६
। ५१३ ।
“सम्बोधनोक्तिप्रत्युक्ती
कुर्य्यादाकाशभाषितैः ॥”)

**सम्भली**, स्त्री, कुट्टनी । इत्यमरः । २ । ६ । १९
॥

“द्वेपरपुरुषेण सह परनारीं योजयन्त्यां
कुट्टनी
इति ख्यातायाम् । कुट्टयति छिनत्ति
स्त्रीपुरुष-
वैमत्य कुट्टनी नन्द्यादिः । शं कल्याणं
भलते
निरूपयति शम्भली भल ङ निरूपणे
पचा-
दित्वादन् नदादित्वादीप् शम्भली
तालव्यादिः ।
सम्यक् भलते सम्भली
दन्त्यादिरित्यन्ये ।” इति
भरतः ॥

**सम्भवः**, पुं, (सं + भू + अप् ।) हेतुः । उत्पत्तिः
।

(यथा, आर्य्यासप्तशत्याम् । ४५८ ।
“महता प्रियेण निर्म्मितमप्रियमपि
सुभग !
सह्यतां याति ।
सुतसम्भवेन यौवनविनाशनं न खलु
खेदाय ॥”)

रूपं सम्भावनात्वमपि विषयताविशेषः । इति
ध्येयम् ।” इति सत्प्रतिपक्षचिन्तामणिदीधिति-
गादाधरी ॥ धूमदर्शनानन्तरं वह्न्यादिव्यवहा-
रस्तु सम्भावनामात्रादिति कुसुमाञ्जलिटीकायां
हरिदासः । पौराणिकास्तु सम्भवनामकं प्रमा-
णान्तरं मन्यन्ते तत्प्रमाणजन्या प्रमितिः
सम्भावना इति वदन्ति । तन्मतन्तु न चतुष्टय-
मैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात्इति
सूत्रेणोपन्यस्य शब्द ऐतिह्यानर्थान्तरभावादनु-
मानेऽर्थापत्तिसम्भवाभावानामनर्थान्तरभावा-
च्चाप्रतिषेध इति सूत्रेण भगवदक्षपादपादै-
र्निराकृतम् । निश्चित्येति उत्कटकोटिकसम्भा-
वनोपलक्षणं इति तिथ्यादितत्त्वे स्मार्त्तभट्टा-
चार्य्यलिखनन्तु सम्भावनाशब्दस्य संशयमात्र-
परतया सङ्गमनीयम् । इति नानाग्रन्थेभ्यः
संगृहीतम् ॥

**सम्भावितः**, त्रि, (सं + भू + णिच् + क्तः ।) सम्भा-

वनाविशिष्टः । सम्भवनयोग्यः । बहुमतः ।
यथा, भगवद्गीतायाम् । २ । ३४ ।
“अकीर्त्तिं चापि भूतानि कथयिष्यन्ति तेऽव्य-
याम् ।
सम्भावितस्य चाकीर्त्तिर्म्मरणादतिरिच्यते ॥”
“सम्भावितस्य बहुमतस्य ।” इति तट्टीकायां
श्रीधरस्वामी ॥

**सम्भाषणं**, क्ली, (सं + भाष + ल्युट् ।) कथनम् ।

आलापनम् । यथा, --
“कृते सम्भाषणादेव त्रेतायां स्पर्शनेन तु ।
द्वापरे त्वर्थमादाय कलौ पतति कर्म्मणा ॥”
इत्युद्वाहतत्त्वम् ॥

**सम्भाषा**, स्त्री, (सं + भाष + अङ् । टाप् ।)

सम्भाषणम् ॥

**सम्भिन्नः**, त्रि, (सं + भिद् + क्तः ।) सम्यग्भेद-

विशिष्टः । यथा, --
“सम्भिन्नकांस्यवद्घोषो निरेति वदनादयम् ।
कास इत्यच्यते लोके तालव्यान्तो न कीर्त्तितः
॥”
इति प्राचीनकारिका ॥

सर्व्वे वयमिदं कर्म्म मिलिताः कुर्म्म
इत्येवंरूपा
सम्प्रतिपत्तिः समवायस्तेन ये
बणिङ्नटनर्त्तक-
प्रभृतयो लाभलिप्सवो भूत्वा
प्रातिस्विकं कर्म्म
कुर्व्वते तेषां लाभालाभावुपचयौ
यथाद्रव्यं येन
यावद्धनं पण्यग्रहणाद्यर्थं दत्तं
तदनुसारेणाव-
सेयौ । यद्वा ।
प्रधानगुणभावपर्य्यालोचनयास्य
भागद्वयमस्यैको भाग इत्येवंरूपया
संविदा सम-
येन यथा संप्रतिपत्तौ तथा वेदितव्यां ।
किञ्च ।
“प्रतिषिद्धमनादिष्टं प्रमादात् यच्च
नाशितम् ।
स तद्दद्याद्विप्लवाच्च
रक्षिताद्दशमांशभाक् ॥”
तेषां सम्भूय प्रचरतां मध्ये
पण्यमिदमित्थं न
व्यवहर्त्तव्यमिति प्रतिषिद्धमाचरता
यन्नाशितं
अनादिष्टमननुज्ञातं वा कुर्व्वाणेन तथा
प्रमा-
दात् प्रज्ञाहीनतया वा येन यन्नाशितं स
तत्-
पण्यं बणिग्भ्यो दद्यात् । यः पुनस्तेषां
मध्ये
चौरराजादिजनितात् व्यसनात् पण्यं
पालयति
स तस्माद्रक्षितात् पण्यात् दशममंशं
लभते ।
“अर्घप्रक्षेपणाद्विंशं भागं शुल्कं नृपो हरेत्
।
व्यासिद्धं राजयोग्यञ्च विक्रीतं राजगामि
तत् ॥”

मेलकः । आधेयस्य
आधारानतिरिक्तत्वम् ।
इति मेदिनी ॥ सङ्केतः । अपायः ।
इत्यजयः ॥
वर्त्तमानकल्पीयार्हद्भेदः । इति हेमचन्द्रः
॥

**सम्भव्यः**, पुं, (सं + भू + यत् ।) कपित्थः । इति

शब्दचन्द्रिका ॥ सम्भवनीये, त्रि ॥

**सम्भारः**, पुं, (सं + भृ + घञ् ।) सम्भूतिः ।

समूहः । इति मेदिनी ॥ सर्व्वपूर्णत्वम् ।
इति
त्रिकाण्डशेषः ॥
(यज्ञादिकार्य्योपकरणद्रव्यम् ।
यथा, देवीभागवते । १ । १९ । २३ ।
"कृत्वा तस्य मखं पूर्णं करिष्याभि
तवापि वै ।
तावत् कुरुष्व राजेन्द्र सम्भारन्तु शनैः
शनैः ॥"
तथा तत्रैव । २ । ९ । ४ ।
"विवाहार्थञ्च सम्भारं रचयामासतुर्व्वने
॥"
संग्रहः । इति मल्लिनाथः ॥ यथा, कुमारे
।
२ । ३६ ।
"पर्य्यायसेवामुत्सृज्य
पुष्पसम्भारतत्पराः ।
उद्यानपालसामान्यमृतवस्तमुपासते
॥")

**सम्भावनं**, क्ली, (सम्भावयत्यनेनेति । सं + भू +

णिच् + ल्युट् ।) अलङ्कारविशेषः ।
यथा, --
"सम्भावनं यदीदं स्यादित्यूहोऽन्यस्य
सिद्धये ।
यदि शेषो भवेद्वक्ता कथिताः
स्युर्गुणास्तव ॥"
इति चन्द्रालोकः ॥
सम्भावनं क्रियासु योग्यताध्यवसायः ।
इति

**सम्भुः**, त्रि, (सं + भू + "विप्रसंभ्यो ड्वसंज्ञायाम् ।"

३ । २ । १८० । इति डुः ।) सम्भवति यः ।
इति मुग्धबोधव्याकरणम् ॥

**सम्भूतः**, त्रि, (सं + भू + क्तः ।) उत्पन्नः । यथा,

मार्कण्डेयपुराणे । ८४ । ३४ ।
"इत्येतत् कथितं भूप सम्भूता सा यथा पुरा ।
देवी देवशरीरेभ्यो जगत्त्रयहितैषिणी ॥"

**सम्भूतविजयः**, पुं, (सम्भूतो विजयो यस्य ।) श्रुत-

केवलिसंज्ञकबौद्धविशेषः । इति हेमचन्द्रः ॥

**सम्भूयसमुत्थानं**, क्ली, (सम्भूय मिलित्वा समुत्थानं

कर्म्मकरणं यत्र ।) मिलित्वैकमत्या बणिजां
कर्म्मकरणम् । तच्चु विवादपदविशेषः । यथा,
सम्भूयसमुत्थानं नाम विवादपदमिदानीमभि-
दधाति ।
"समवायेन बणिजां लाभार्थं कर्म्म कुर्व्वताम् ।
लाभालाभौ यथाद्रव्यं यथा वा संविदा कृतौ ॥"

इह यतः पण्यस्येयन्मूल्यं इत्यर्घस्तस्य
प्रक्षेपणात्
राजनिरूपणाद्धेतोरसौ
मूल्याद्विंशतितमम्शं
शुल्कार्थं गृह्णीयात् । यत्
पुनर्व्यासिद्धमन्यत्र न
विक्रेयमिति राज्ञा प्रतिषिद्धम् । यच्च
राजयोग्यं
माणिक्याद्यप्रतिषिद्धमपितद्राज्ञे
अनिवेद्य लाभ-
लोभेन
विक्रीतञ्चेद्राजगाभिमूल्यदाननिरपेक्षं
तत् सर्व्वं पण्यं राजापहरेदित्यर्थः ।
"मिथ्या वदन् परीमाणं
शुल्कस्थानादपासरत् ।
दाप्यस्त्वष्टगुणं पञ्च सव्याजक्रयविक्रयी
॥"
यः पुनर्ब्बणिक् शुल्कवञ्चनार्थं परीमाणं
निह्नुते
शुल्कग्रहणस्थानाद्वापसरति
यश्चास्येदमस्य
वेत्येवं विदादास्पदीभूतं पण्यं क्रीणाति
विक्रीणीते
वा ते सर्व्वे पण्याष्टगुणं दण्डनीयाः ।
अपि च ।
"तरिकः स्थलजं शुल्कं गृह्णन् दाप्यः
पणान् दश ।
ब्राह्मणप्रातिवेश्यानामेतदेवानिमन्त्रणे
॥"
शुल्कं हि द्विविधं स्थलजं जलजञ्च ।
तत्र स्थल-
जमर्घप्रक्षेपणाद्विंशं भागं शुल्कं नृपो हरे-
दित्युक्तम् । जलजन्तु मानवेऽभिहितम् ।
"पणं यानं तरे दाप्यं पुरुषोऽर्द्धपणन्तरे ।
पादं पशुश्च योषिच्च पादार्द्धं रिक्तकः
पुमान् ॥
भाण्डपूर्णानि यानानि तार्य्यं दाप्यानि
सारतः ।
रिक्तभाण्डानि यत्किञ्चित्
पुमांसश्चापरिच्छदाः ॥"
शुल्कद्वयेऽप्ययमपरो विशेषः ।

मुग्धबोधव्याकरणम् ॥ (सम्भावके, त्रि । यथा,

भागवते । ४ । १७ । २६ ।

"पुमान् योषिदुत क्लीव

आत्मसम्भावनोऽधमः ।

भूतेषु निरनुक्रोशो नृपाणां तद्वधोऽवधः ॥")

**सम्भावना**, स्त्री, (सं + भू + णिच् + युच् । टाप् ।)

उत्कटकोटिकसंशयः । संपूर्व्वकात् भू क शुद्धि-

चिन्तयोरित्यस्मात्

ञीषिश्रन्थीत्यादिसूत्रेणान-

प्रत्ययनिष्पन्ना । यथा, "एवं कोठ्यंशे औत्कट्य-

"न भिन्नकार्षापणमस्ति शुल्कं

न शिल्पवृत्तौ न शिशौ न दूते ।

न भैक्ष्यलब्धे न हृतावशेषे

न श्रोत्रिये प्रव्रजिते न यज्ञे ॥" इति ।

तीर्य्यतेऽनेनेति तरो

नावादिस्तज्जन्यशुल्केऽधि-

कृतस्तरिकः स यदा स्थलोद्भवं शुल्कं गृह्णाति

तदा दशपणान् दण्डनीयः । वेशो वेश्म प्रति-

वेश इति स्ववेश्मामिमुखं

स्ववेश्मपार्श्वस्थं चोच्यते

तत्र भवाः प्रतिवेश्याः । ब्राह्मणाश्च ते प्राति-

वेश्याश्च ब्राह्मणप्रातिवेश्यास्तेषां

श्रुतवृत्तसम्प

न्नानां श्राद्धादिषु विभवे सत्यनिमन्त्रणे
एतदेव
दशपणात्मकं दण्डनं वेदितव्यम् ॥ * ॥
देशा-
न्तरमृतबणिग्रिक्थं प्रत्याह ।
“देशान्तरगते प्रेते द्रव्यं दायादबान्धवाः ।
ज्ञातयो वा हरेयुस्तदागतास्तैर्व्विना नृपः ॥”
यदा सम्भूयकारिणां मध्ये यः
कश्चिद्देशान्तरं
गतो मृतस्तदा तदीयमंशं दायादः
पुत्राद्यपत्य-
वर्गः बान्धवाः मातृपक्षीयाः मातुलाद्याः
ज्ञातयोऽपत्यवर्ग्यव्यतिरिक्ताः सपिण्डा वा
आ-
गताः सम्भूयव्यवहारिणो ये देशान्तरादाग-
तास्ते वा गृह्णीयुस्तैर्व्विना दायाद्यभावे राजा
गृह्णीयात् । वाशब्देन च दायादीनां
वैकल्पिकं
अधिकारं दर्शयति । पौर्व्वापर्य्यनियमस्तु
पत्नी
दुहितर इत्यादि प्रतिपादित एवात्रापि
विज्ञेयः । शिष्यसब्रह्मचारिब्राह्मणनिषेधो
बणिक्-
प्राप्तिश्च वचनप्रयोजनम् । बणिजामपि मध्ये
यः पिण्डदानर्णदानादिसमर्थः स गृह्णीयात् ।
सामर्थ्याविशेषे पुनः सर्व्वे बणिजः संसृष्टिनो
विभज्य गृह्णीयुस्तेषामभावे दशवर्षं दायाद्या-
गमनं प्रतीक्ष्यानागतेषु स्वयमेव राजा गृह्णी-
यात् तदिदं नारदेन स्पष्टमुक्तम् ।
“एकस्य चेत् स्यात् मरणं दायादोऽस्य
तदाप्नुयात् ।
अन्यो वासति दायादे शक्तश्चेत् सर्व एव ते
॥
तदभावे तु गुप्तं तत् कारयेद्दशवत्सरात् ।
अस्वामिकमदायादं दशवर्षस्थितं ततः ॥
राजा तदात्मसात् कुर्य्यात् एवं धर्म्मो न
हीयते ॥”
किञ्च ।

सुरतम् । (यथा, महाभारते । ४ । १३ ।
२८ ।
“रत्युन्मादसमारम्भाः साक्षात्कारकरा मम
।
आत्मप्रदानसम्भोगात् मामुद्धर्त्तुं त्वमर्हसि
॥”)
जिनशासनम् । इति मेदिनी ॥ हर्षः । इति
शब्द-
रत्नावली ॥ केलिनागरः । इति जटाधरः ॥
शृङ्गारभेदः । इति त्रिकाण्डशेषः ॥ तस्य
लक्षणं
यथा, साहित्यदर्पणे ३ परिच्छेदे ।
“दर्शनस्पर्शनादीनि निषेवेते विलासिनौ ।
यत्रानुरक्तावन्योऽन्यं सम्भोगः समुदाहृतः
॥”

**सम्भोगी**, [न्] पुं, (सम्भोगोऽस्यास्तीति । इनिः ।)

केलिनागरः । इति भूरिप्रयोगः ॥ सम्भोग-
विशिष्टे, त्रि ॥

**सम्भ्रमः**, पुं, (सं + भ्रम + घञ् ।) भयादिजनित-

त्वरा । (यथा, रघुः । ११ । २५ ।
“वीक्ष्य वेदिमथ रक्तबिन्दुभि-
बन्धुजीवपृथुभिः प्रदूषिताम् ।
संभ्रमोऽभवदपोढकर्म्मणां
ऋत्विजां च्युतविकङ्कतस्रुचाम् ॥”)
तत्पर्य्यायः । संवेगः २ । इत्यमरः । १ । ७
। ३४ ॥
आवेगः ३ । इति तट्टीका ॥ प्रवेगः ४ त्वरा
५
त्वरिः ६ । इति वाचस्पतिः ॥ भयम् ।
(यथा,
रामायणे । ४ । २ । १४ ।
“सम्भ्रमस्तज्यतामेष सर्व्वर्वालिकृते महान्
॥”)
आदरः । इति मेदिनी ॥ महाभ्रमः । सूत्रम् ।
इत्यजयपालः ॥

**सम्मतिः**, स्त्री, (सं + मन + क्तिन् ।) अभिलाषः ।

अनुज्ञा । इति मेदिनी ॥ (यथा, किराते ।

“जन्मर्क्षयुक्ता यदि जन्ममासे
यस्य ध्रुवं जन्मतिथिर्भवेच्च ।
भवन्ति तद्वत्सरमेव याव-
न्नैरुज्यसम्मानसुखानि तस्य ॥”

**सम्मानितः**, त्रि, (सम्मानोऽस्य जातः । सम्मान
+

इतच् ।) समादृतः । गौरवितः । यथा,
मार्क-
ण्डेयपुराणे । ८२ । ७० ।
“अन्यैरपि सुरैर्द्देवी भूषणैरायुधैस्तथा ।
सम्मानिता ननादोच्चैः साट्टहासं
मुहुर्म्मुहुः ॥”

**सम्मार्ज्जकः**, पुं, (सम्मार्ज्जयतीति । सं + मृज्
+

ण्वुल् ।) सम्मार्जनी । इति
शब्दरत्नावली ॥
सम्यङ्मार्ज्जनकर्त्तरि, त्रि ॥

**सम्मार्ज्जनं**, क्ली, (सं + मृज + ल्युट् ।)
संशोधनम् ।

यथा, रत्नमालायाम् ।
“सम्मार्ज्जनञ्च संशुद्धिः
संशोधनविशधिने ॥”

**सम्मार्ज्जनी**, स्त्री, (संमृज्यतेऽनयेति । सं + मृज्
+

ल्युट् । ङीप् ।) धूल्यादिमार्ज्जनसाधनी ।
काँस्ता इति झाँटा इति च भाषा । तत्-
पर्य्यायः । शोधनी २ । इत्यमरः । २ ।
२ । १८ ॥
ऊहनी ३ समूहनी ४ । इति
शब्दरत्नावली ॥
बहुकरी ५ वर्द्धनी ६ । इति हेमचन्द्रः ॥

**सम्मितः**, त्रि, (सं + मा + क्तः ।) समानपरि-

माणः । सदृशः । इति जटाधरः ॥

**सम्मिश्रः**, त्रि, (सम्यक् प्रकारेण मिश्रयतीति ।

मिश्र मिश्रणे + अच् ।) संयुक्तः ।
मिश्रितः ।
यथा, तिथ्यादितत्त्वे ।

"जिह्मं त्यजेयुर्निर्लाभमशक्तोऽन्येन कारयेत् ।"
जिह्मो वञ्चकः तं निर्लाभं निर्गतलाभं लाभमा-
च्छिद्य त्यजेयुः बहिष्कुर्य्युः । यश्च सम्भूयकारिणां
मध्ये भाण्डप्रत्यवेक्षणादिकं कर्त्तुमसमर्थोऽसाव-
न्येन स्वं कर्म्म भाण्डभारवाहनं तदायव्ययपरी-
क्षणादिकं कारयेत् । इति मिताक्षरा ॥

**सम्भृतः**, त्रि, (सं + भृ + क्त ।) सम्यक्पुष्टः । सम्यग्-
भृतः । सम्यक्प्रकारेण धृतः ।

**सम्भृतिः**, स्त्री, (सं + भृ + क्तिन् ।) सम्यकपोषणम् ।
सम्यग्भरणम् । सम्यग्धारणम् । (सम्भारः । यथा, कथासरित्सागरे । १०३ । १७१ ।
"अन्येद्युर्गणकैः सूनोर्लग्नाहे निश्चिते नृपः ।
चकारामरदत्तोऽत्र तद्विवाहाय सम्भृतिम् ॥")

**सम्भेदः**, पुं, (सं + भिद् + घञ् ।) सिन्धुनद्योः
सङ्गमः । इत्यमरः । १ । १० । ३५ ॥ (यथा,
मनुः । ८ । ३५६ ।
"परस्त्रियं योऽभिवदेत् तीर्थेऽरण्ये वनेऽपि वा ।
नदीनां वापि सम्भेदे स संग्रहणमाप्नुयात् ॥")
स्फुटनम् । (यथा, सुश्रुते । २ । ५ ।
"कौण्यं गतिक्षयोऽङ्गानां सम्भेदः क्षतसर्पणम् ॥")
मेलनम् । इति मेदिनी ॥

**सम्भोगः**, पुं, (सं + भुज् + घञ् ।) भोगः । (यथा,
मनुः । ८ । २०० ।
"सम्भोगो दृश्यते यत्र न दृश्येतागमः क्वचित् ।
आगमः कारणं तत्र न सम्भोग इति स्थितिः ॥")
१० । ३६ ।
"कथमिव तव सम्मतिर्भवित्री
सममृतुभिर्मुनिनावधीरितस्य ॥")
आत्मज्ञानम् । इत्यजयपालः ॥

**सम्मदः**, पुं, (सम् + मद् + "प्रमदसंमदौ हर्षे ।"
३ । ३ । ६८ । इति अप् ।) हर्षः । (यथा,
साहित्यदर्पणे । ३ । १६७ ।
"मदसम्मदपीडाद्यैर्वैस्वर्य्यं गद्गदं विदुः ॥")
मत्स्यविशेषः । यथा, विष्णुपुराणे । ४ । २ । १९ ।
"बह्वृचश्च सौभरिर्नाम महर्षिरन्तर्ज्जले द्वाद-
शाब्दं कालमुवास । तत्र चान्तर्ज्जले मत्स्यः
सम्मदो नामातिबहुप्रजोऽतिप्रमाणो मीनाधि-
पतिरासीत् ॥" तद्वति, त्रि । इत्यमरः । १ । ४ । २४ ॥

**सम्मर्द्दः**, पुं, (संमृद्यतेऽत्रेति । सं + मृद् + घञ् ।)
युद्धम् । इति केचित् ॥ (यथा, महाभारते । ५ । १६८ । १० ।
"जवे प्रहारे संमर्द्दे सर्व्व एवातिमानुषाः ।
सर्व्वैर्जिता महीपाला दिग्जये भतरर्षभ ॥" * ॥
परस्परविमर्द्दः । यथा, रघुः । १५ । १०१ ।
"यद्गोप्रतरकल्पोऽभूत् संमर्द्दस्तत्र मज्जताम् ।
अतस्तदाख्यया तीर्थं पावनं भुवि पप्रथे ॥")

**सम्मादः**, पुं, (सं + मद् + घञ् ।) सम्यक्प्रकारेण
मत्तता ॥

**सम्मानः**, पुं, (सम् + मन + घञ् ।) समादरः ।
यथा, तिथ्यादितत्त्वे ।
"सम्मिश्रा या चतुर्द्दश्या अमावस्या भवेत् क्वचित् ।
खर्व्वितां तां विदुः केचिदुपेध्वमिति चापरे ॥"

**सम्मुखः**, त्रि, (सम्यक् मुखं यस्य ।) अभिमुखा-
गतः । तत्पर्य्यायः । भग्नपृष्ठः २ । इति त्रिकाण्ड-
शेषः ॥ (यथा, कथासरित्सागरे । २७ । १३८ ।
"तस्यां विक्रमसिंहाख्यो बभूवान्वर्थयाख्यया ।
राजा वैरिमृगा यस्य नैवासन् सम्मुखाः क्वचित् ॥"
अभिमुखे, क्ली । सुमुख इति भाषा ॥ यथा,
कथासरित्सागरे । ४ । ७० ।
"नाशकत् सम्मुखे स्थातुं कष्टो ह्यविनयक्रमः ॥"
तथा च साहित्यदर्पणे । ३ । १५४ ।
"दृष्टा दर्शयति व्रीडां सम्मुखं नैव पश्यति ॥"
सर्व्वं मुखमिति निपातनात् अन्तलोपे सम्मुख-
मिति सिद्धम् । इति शब्दार्थचिन्तामणिः ॥
समस्तमुखे च क्ली । इति काशिका । ५ । २ । ६ ॥)

**सम्मुखी**, [न्] पुं, (सम्मुखमस्यास्तीति । इनिः ।)
दर्पणम् । इति केचित् ॥

**सम्मुखीनः**, त्रि, (सर्व्वस्य मुखस्य दर्शनः ।
सम्मुख + "यथामुखसम्मुखस्य दर्शनः खः ।"
५ । २ । ६ । इति खः ।) अभिमुखः । इति
हेमचन्द्रः । ६ । ७३ ॥ (यथा, रघुः । १५ । १७ ।
"अपशूलं तमासाद्य लवणं लक्ष्मणानुजः ।

**सम्मूढः**, त्रि, (सं + मुह + क्तः ।) सम्यङ्मोहयुक्तः ।

मुग्धः । यथा, शुद्धितत्त्वे ।
"मानुष्ये कदलीस्तम्भे निःसारे सारमार्गणम् ।
यः करोति स सम्मूढो जलवुद्बुदसन्निभे ॥"

**सम्मूर्च्छजः**, पुं, (सम्यक्प्रकारेण मूर्च्छति व्याप्नो-

तीति । मूर्च्छ व्याप्तौ + अच् । तथाविधः सन्
जायत्रे इति । जन + डः ।) तृणादिः । इति
हेमचन्द्रः ॥

**सम्मूर्च्छनं**, क्ली, (सं + मूर्च्छ व्याप्तौ मोहे च +

ल्युट् ।) सर्व्वयो व्याप्तिः । तत्पर्य्यायः । अभि-
व्याप्तिः २ । इत्यमरः । ३ । २ । ६ ॥ उच्छ्रायः ।
मोहः । इति मेदिनी ॥

**सम्मूर्च्छनोद्भवः**, पुं, (संमूर्च्छनादुद्भवतीति ।

उत् + भू + अच् ।) मत्स्यादिः । इति हेम-
चन्द्रः ॥

**सम्मृष्टः**, त्रि, (सं + मृज + क्तः ।) संशोधितः ।

इत्यमरः । २ । ९ । ४६ ॥ द्वे मक्षिकाद्यपनयनेन
शोधिते व्यञ्जनादौ । इति भरतः ॥

**सम्मोदः**, पुं, (सं + मुद् + घञ् ।) प्रीतिः । हर्षः ।

इति शब्दरत्नावली ॥

**सम्यक्**, व्य, समुदयः । इति केचित् ॥ यथा, --

"सम्यक् संसाधनं कर्म्म कर्त्तव्यमधिकारिणा ।
निष्कामेण सदा पार्थ काम्यं कामान्वितेन च ॥"

**सयोनिः**, पुं, (योनिभिः सह वर्त्तमानः ।) इन्द्रः ।

इति केचित् ॥ योन्या सह वर्त्तमाने समानोत्-
पत्तिस्थानके च, त्रि ॥ (यथा ऋग्वेदे । ३ । १ । ६ ।
"सना अत्र युवतयः सयोनी-
रेकं गर्भं दधिरे सप्तवाणीः ॥"
"समानमन्तरिक्षं योनिस्थानं यासां ताः ।"
इति तद्भाष्ये सायणः ॥)

**सरं**, क्ली, (सरतीति । सृ + अच् ।) सरोवरः ।

इति शब्दरत्नावली ॥ जलम् । इति जटाधरः ॥

**सरः**, पुं, (सृ गतौ + पचाद्यच् ।) दध्यग्रम् ।

तत्पर्य्यायः ।
"सरश्च दध्युत्तरगं दधिस्नेहस्तु कद्वरम् ।"
इति रत्नमाला ॥
गतिः । इति मेदिनी ॥ बाणः । लवणः । इति
हेमचन्द्रः ॥ निर्झरे, पुं स्त्री । इति भरत-
द्विरूपकोषः ॥

**सरः**, त्रि, (सृ + अच् ।) सारकः । भेदकः ।

यथा, राजवल्लभः ।
"पिप्पली मधुरा वृष्या कटुका दीपनी सरा ॥"
गमनकर्त्तरि, त्रि ॥

**सरः**, [स्] क्ली, (सरतीति । सृ + "सर्व्वधातुभ्यो-

ऽसुन् ।" उणा० ४ । १८८ । इति असुन् ।)
सरोवरः । इत्यमरः । १ । १० । २६ ॥ (यथा,
महाभारते । १ । १५६ । २४ ।
"तथैव वनदुर्गेषु पुष्पितद्रुमसानुषु ।
सरःसु रमणीयेषु पद्मोत्पलयुतेषु च ॥")

"भल्लापवर्ज्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम् ।
तस्तार सरघाव्याप्तैः सक्षौद्रपटलैरिव ॥")

**सरङ्गः**, पुं, (सरतीति । सृ + अङ्गच् ।) चतुष्पात् ।

पक्षी । इति संक्षिप्तसारोणादिवृत्तिः ॥

**सरजं**, क्ली, (सरात् जायते इति । जन + डः ।)

नवनीतम् । हैयङ्गवीनम् । इति हारावली ॥
(मलिनम् । यथा, भागवते । ३ । २३ । २३ ।
"सा तद्भर्त्तुः समादाय वचः कुवलयेक्षणा ।
सरजं बिभ्रती वासो वेणीभूतान् स्वमूर्द्धजान् ॥")

**सरजाः**, [स्] स्त्री, (रजसा सह वर्त्तमाना ।)

ऋतुमती स्त्री । तत्पर्य्यायः । मलिष्ठा २ ।
इति त्रिकाण्डशेषः ॥ (पङ्कजे, क्ली । इति
काशिका । ५ । ४ । ७७ ॥)

**सरट्**, पुं, (सरतीति । सृ गतौ + "सर्त्तेरटिः ।"

उणा० १ । १३३ । इति अटिः ।) वायुः ।
मेघः । इत्युणादिकोष ॥ मधुमक्षिका । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः॥ कृकलासः ।
इत्यमरटीका ॥

**सरटः**, पुं, (सरतीति । सृ गतौ + शकादित्वादटन् ।)

कृकलासः । इत्यमरः । २ । ५ । १२ ॥ गिरगिट्
इति काँकलोस इति च भाषा ॥ तत्पतनादि-
फलं यथा, --
"वल्ल्याः प्रपाते च फलं सरटस्य प्ररोहणे ।
शीर्षे राजश्रियोऽवाप्तिर्भालि चैश्वर्य्यमेव च ॥
कर्णयोर्भूषणावाप्तिर्नेत्रयोर्बन्धुदर्शनम् ।
नासिकायाञ्च सौगन्ध्यं वक्त्रे मिष्टान्नभोजनम् ॥
कण्ठे चैव श्रियोऽवाप्तिर्भुजयोर्विभवो भवेत् ।
धनलाभो बाहुमूले करयोर्धनवृद्धयः ॥
स्तनमूले च सौभाग्यं हृदि सौख्यविवर्द्धनम् ।
पृष्ठे नित्यं महीलाभः पार्श्वयोर्बन्धुदर्शनम् ॥
कटिद्वये वस्त्रलाभो गुह्ये मृत्युसमागमः ।
जङ्घे चार्थक्षयो नित्यं गुदे रोगभयं भवेत् ॥
ऊर्व्वोश्च वाहनावाप्तिर्जानुजङ्घेऽर्थसंक्षयः ।
वामदक्षिणयोः पादोर्भ्रमणं नियतं भवेत् ॥

इति प्रायश्चित्ततत्त्वम् ॥

**सम्यक्**, [च्] त्रि, (सं + अञ्च + ऋत्विगादिना

क्विन् । "समः समि ।" ६ । ३ । ९३ । इति
सम्यादेशः ।) सत्यवचनम् । अर्थेन सह सम-
ञ्चति सङ्गच्छते । इत्यमरभरतौ ॥ मनोज्ञः ।
सङ्गतः । इति मेदिनी ॥ (यथा, ऋग्वेदे । २ । ३ । ६ ।
"तन्तुं ततं संवयन्ती समीची
यज्ञस्य पेशः सुदुघे पयस्वती ॥")

**सम्राट्**, [ज्] पुं, (सम्यक् राजते इति । सं +

राज + क्विप् । "मो राजि समः क्वौ ।" ८ ।
३ । २५ । इति समो मकारस्य मादेशस्तेन
नानुस्वारः ।) येन राजसूयेन इष्टम् । यो
मण्डलस्येश्वरः । आज्ञया राज्ञः शास्ति यः ।
इत्यमरः ॥ राजसूयश्चक्रवर्त्तिसाध्यो याग-
विशेषः । तेन येन इष्टं यागः कृतः । यो मण्ड-
लस्य द्वादशराजमण्डलस्य ईश्वरः । यश्च राज्ञो
नृपान् आज्ञया शास्ति भृत्यवद्व्यापारेषु नियो-
जयति स सम्राडुच्यते । केचित्तु समुच्चयेन
त्रीण्येतान्याहुः । राजसूययाजी यः स सम्राट्
चतुरब्धिसीमावच्छिन्नाया भूमेर्य ईश्वरः
सोऽपि । यश्च कियत्परिमाणाया भूमेः पती-
नाज्ञया शास्ति सोऽपि । इह परत्र च सम्यक्

अस्य विवरणं
तडागपद्माकरशब्दयोर्द्रष्टव्यम् ॥
अस्य जलगुणाः । यथा, राजवल्लभः ।
"सारसं लघु तृष्णाघ्नं बल्यं स्वादु कषायवत् ॥"
नीरम् । यथा । सरो नीरे तडागे च । इति
रुद्रः । इत्यमरटीकायां भरतः ॥

**सरःकाकः**, पुं, (सरसः काकः ।) हंसः । इति

शब्दरत्नावली ॥

**सरःकाकी**, स्त्री, (सरसः काकी ।) हंसी । इति

शब्दरत्नावली ॥

**सरकं**, क्ली, (सरमेव । स्वार्थे कन् ।) सरोवरः ।

इति शब्दरत्नावली ॥ आकाशम् । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**सरकः**, पुं, क्ली, (सरतीति । सृ + वुन् ।) शीधु-

पात्रम् । शीधुपानम् । इक्षुशीधु । अच्छि-
न्नाध्वगपङ्क्तिः । इति मेदिनी ॥ मद्यपरिवेश-
नम् । इत्यमरटीकायां भरतः ॥ (यथा, कथा-
सरित्सागरे । ५४ । १९९ ।
"प्राप्तायां निशि पप्रच्छ निजं परिजनञ्च सः ।
किमद्य रात्रिपर्य्याप्तमस्ति नः सरकं न वा ॥")

**सरकः**, त्रि, (सुष्ठु सरतीति । सृ + "प्रसृल्वः

समभिहारे वुन् ।" ३ । १ । १४९ । इति वुन् ।)
गतिशीलः । इति शब्दरत्नावली ॥

**सरघा**, स्त्री, (सरं मधुविशेषं हन्तीति । हन +

डः । निपातनात् साधुः ।) मधुमक्षिका ।
इत्यमरः । २ । ५ । २६ ॥ (यथा, रघुः । ४ ।
६३ ।

वल्ल्याः प्ररोहणे चैव पतने सरटस्य च ।
व्यत्यासाच्च फलं चैव तद्वदेवं प्रजायते ॥
वल्ल्याः प्ररोहणं रात्रौ सरटस्य प्रपातनम् ।
निधनार्थाय भवति व्याधिपीडाविपर्य्ययौ ॥
पतनानन्तरं चैवारोहणं यदि जायते ।
पतने फलमुत्कृष्टं रोहणेऽन्यत् फलं भवेत् ॥
आरोहणञ्चोद्र्ध्ववक्त्रे अधोवक्त्रे च पातनम् ।
भवेदिष्टफलं तस्य तत्फलं जायते ध्रुवम् ॥
स्पृष्टमात्रेण यः सद्यः सचेलं जलमाविशेत् ।
पञ्चगव्यप्राशनञ्च कुर्य्यादर्कावलोकनम् ॥
वह्नीरूपं सुवर्णस्य रक्तवस्त्रेण वेष्टयेत् ।
पूजयेत् गन्धपुष्पाद्यैस्तदग्र पूर्णकुम्भके ॥
पञ्चगव्यं पञ्चरत्नं पञ्चामृतं सपल्लवम् ।
पञ्चवृक्षकषायञ्च निःक्षिप्यावाहयेत्ततः ॥
पूजयेद्गन्धपुष्पाद्यैर्लोकपालांस्तथाक्रमात् ।
मृत्युञ्जयेन मन्त्रण सभिद्भिः खादिरैः शुभैः ॥
तिलैर्व्याहृतिभिर्होममष्टोत्तरसहस्रकम् ॥"
वह्नी गृहगोषिका । मृत्युञ्जयमन्त्रस्त्र्यम्बकमन्त्रः ।

| राजते इति क्विप् सम्राट् दान्ते म इत्यत्र सम्राड्वर्ज्जनान्नानुस्वारः । इति भरतः ॥ (यथा, रघुः । २ । ५ । “आम्वादयद्भिः कवलैस्तृणानां कण्डूयनैर्दंशनिवारणैश्च । अव्याहतैः स्वैरगतैः स तस्याः सम्राट् समाराधनतत्परोऽभूत् ॥”) | | |
|---|---|---|

इति विद्याकरः इति ज्योतिस्तत्त्वम् ॥
(वातः ।
इत्युणादिटीकायामुज्ज्वलदत्तः । ४ ।
१०५ ॥)

**सरटिः**, पुं, (सरतीति + सृ + अटिन् ।) वायुः ।
मेघः । इत्युणादिकोषः ॥

**सरटुः**, पुं, (सृ + अटुः ।) कृकलासः । इत्युणादि-
कोषः ॥

**सरणं**, क्ली, (सरतीति । सृ गतौ + "जुचङ्क्रम्य-
दन्द्रम्यसृगृधीति ।" ३ । २ । १५० ।
इति युच् ।)
लोहमलम् । इति हेमचन्द्रः ॥ (सृ + ल्युट्
।)
गमनम् ॥ (यथा, महाभरते । १ । २३१ ।
५ ।
"अजातपक्षाश्च सुता न शक्ताः सरणे मम
॥")

**सरणा**, स्त्री, (सरतीति + सृ + युच् ।) प्रसारणी ।
इत्यमरः । २ । ४ । १५२ ॥
गन्धभादालि इति
भाषा ॥ त्रिवृता । इति शब्दमाला ॥
तेउडी
इति भाषा ॥ गमनकर्त्तरि, त्रि ॥

**सरणिः**, स्त्री, (सरन्त्यनयेति । सृ गतौ + "अर्त्ति-
सृधृधमीति ।" उणा० २ । १०३ । इति
अनिः ।)
पङ्क्तिः । पन्थाः । इति मेदिनी ॥ (यथा,
राजतरङ्गिण्याम् । ३ । ४०१ ।
"सरलां सरणिं त्यक्त्वा जीवितस्पृहया
समम् ।
गुहा तेन ततः सान्द्रतमोभीमा व्यगाह्यत
॥")
प्रसारणी । इत्यमरटीकायां भरतः ॥

**सरणी**, स्त्री, (सरणि + वा ङीष् ।) पङ्क्तिः ।
"गोलाङ्गुलश्चकोरश्च चैत्यापत्यं तथैव च ।
अपत्यं सरमायाश्च गणो वै भ्रमरादयः ॥"
इति वह्निपुराणे काश्यपीयवंशनामाध्यायः ॥

**सरयुः**, पुं, (सरतीति । सृ गतौ + "सर्त्तेरयुः ।"
उणा० ३ । २२ । इति अयुः ।) वायुः । इति
त्रिकाण्डशेषः ॥

**सरयुः** स्त्री, (सरतीति । सृ गतौ + "सर्त्ते-
रयुः ।" उणा० ३ । २२ । इति अयुः ।
"सर्त्तेरयूः ।" इति केचित् ।) नदीविशेषः ।
इत्युणादिकोषः । अस्या जलगुणाः ।
"सरयूसलिलं स्वादु बलपुष्टिप्रदायकम् ।"
इति राजनिर्घण्टः ॥
तस्या उत्पत्तिर्यथा, --

**सरयूः** स्त्री, (सरतीति । सृ गतौ + "सर्त्ते-
रयुः ।" उणा० ३ । २२ । इति अयुः ।
"सर्त्तेरयूः ।" इति केचित् ।) नदीविशेषः ।
इत्युणादिकोषः । अस्या जलगुणाः ।
"सरयूसलिलं स्वादु बलपुष्टिप्रदायकम् ।"
इति राजनिर्घण्टः ॥
तस्या उत्पत्तिर्यथा, --
"एवं विवाह्य विधिवत् सौवर्णे मानसाचले ।
अरुन्धतीं वशिष्ठस्तु मोदमाप तया सह ॥
तत्र यत् पतितं तोयं मानसाचलकन्दरे ।
तत्तोयं सप्तधा भूत्वा मानसाचलकन्दरात् ॥
हेमाद्रेः कन्दरे सानौ सरस्याञ्च पृथक् पृथक् ।
यत्तोयं सङ्गतं कुर्य्याद्धंसा वडवसन्निधौ ।
तेनाभूत् सरयूर्नाम्ना नदी पुण्यतमा शुभा ॥"
इति कालिकापुराणे २३ अध्यायः ॥

**सरलः**, पुं, (सरतीति । सृ + "वृषादिभ्यश्चित् ।"
उणा० १ । १०८ । इति कलच् । बाहुलकात्
गुणः ।
इत्युज्ज्वलदत्तः ।) वृक्षविशेषः । (यथा, कुमारे ।
१ । ९ ।
"कपोलकण्डूः करिभिर्विनेतुं
विघट्टितानां सरलद्रुमाणाम् ।
यत्र स्नुतक्षीरतया प्रसूतः
सानूनि गन्धः सुरभीकरोति ॥")
घृताह्वयः ११ दध्याह्वयः १२
क्षीराह्वयः १३
अवक्रः १४ क्षीरश्रीः १५ वायसः
१६ । इति शब्द-
रत्नावली ॥ अस्य गुणाः श्रीवेष्टशब्दे
द्रष्टव्याः ॥

**सरला**, स्त्री, (सरल + टाप् ।) त्रिपुटा । इत्य-
मरः । २ । ४ । १०८ ॥ नदीभेदः ।
इति भूरिप्रयोगः ॥

**सरलाङ्गः**, पुं, (सरलः पीतद्रुरङ्गमस्य ।) श्रीवेष्टः ।
इति राजनिर्घण्टः ॥

**सरव्यं**, क्ली, (सरं रागं व्ययतीति । व्ये + डः
।)
लक्ष्यम् । इत्यमरटीका ॥
तालव्यशादिश्च ॥

**सरसं**, क्ली, (रसेन जलेन सह वर्त्तमानम् ।)
सरोवरः । इति शब्दरत्नावली ॥
रसयुक्ते, त्रि ।
यथा, --
"कविता कोमलवनिता आयाता
सुखदायिका ।
बलादानीयमाना सा सरसा विरसा
भवेत् ॥"
इत्युद्भटः ॥

**सरसम्प्रतं**, क्ली, त्रिकण्टवृक्षः । तेकाँटासिज् इति
भाषा ॥ यथा, शब्दचन्द्रिकायाम् ।
"त्रिकण्टः पत्रगुप्तश्च पेषणः
सरसम्प्रतम् ॥"

**सरसा**, स्त्री, (रसेन सह वर्त्तमाना ।) श्वेत-
त्रिवृता । इत्यमरटीकायां रायमुकुटः
॥

**सरसिजं**, क्ली, (सरसि जायते इति । जन +
डः ।

पन्थाः । इति मेदिनी ॥ प्रसारणी । इत्यमर-
टीकायां भरतः । २ । ४ । १५ ॥

**सरण्डः**, पुं, (सरतीति । सृ + “अण्डन् कृसृभृ-
वृञः ।” उणा० १ । १२८ । इति अण्डन् ।)
धूर्त्तः । सरटः । भूषणभेदः । इति मेदिनी ॥
कामुकः । पक्षी । इति शब्दरत्नावली ॥

**सरण्यं**, त्रि, (सरण + ष्यञ् ।) गम्यम् । गन्तव्यम् ।
सरणशब्दात् ष्ण्यप्रत्ययेन निष्पन्नम् ॥

**सरण्युः**, पुं, (सरतीति । सृ गतौ + “सृयुवचि-
भ्योऽन्युजागजक्नुचः ।” उणा० ३ । ८१ । इति
अन्युच् ।) मेघः । वायुः । जलम् । इति शब्द-
रत्नावली ॥ वसन्तः । अग्निः । इत्युणादिकोषः ॥

**सरत्**, क्ली, (सृ + शतृ ।) सूत्रम् । इति शब्द-
माला ॥ (गन्तरि, त्रि ॥)

**सरत्निः**, पुं स्त्री, रत्निः । इति केचित् ॥

**सरद्वान्**, [त्] पुं, गौतममुनिः । गोतममुनिपुत्त्रः ।
इति पुराणम् ॥ तालव्यशादिश्च ॥

**सरपत्रिका**, स्त्री, (सरपत्रं जलस्थपत्रमस्त्यस्या
इति । ठन् । टापि अत इत्वम् ।) पद्मम् ।
पद्मपत्रम् । इति शब्दरत्नावली ॥

**सरमा**, स्त्री, (रमया शोभया सह वर्त्तमाना ।)
राक्षसीभेदः । सा च विभीषणपत्नी । (इयं
लङ्कावाससमये सीतायाः प्रणयिनी आसीत् ।
एतद्वृत्तान्तस्तु रामायणे लङ्काकाण्डे । ३३ ।
३४ । अध्याययोर्द्रष्टव्यः ॥) कुक्कुरी । देवशुनी ।
इति मेदिनी ॥ (यथा, महाभारते । १ । ३ । ११ ।
तत्पर्य्यायः । पीतद्रुः २ पूतिकाष्ठम् ३ । इत्य-
मरः । २ । ४ । ६० ॥ धूपवृक्षकः ४ । इति शब्द-
रत्नावली ॥ पीतदारुः ५ भद्रदारुः ३ मनोज्ञः ७ ।
इति रत्नमाला ॥ पीतः ८ स्निग्धदारुसंज्ञः ९
स्निग्धः १० मरिचपत्रकः ११ पीतवृक्षः १२
सुरभिदारुः १३ । अस्य गुणाः । कटुत्वम् ।
तिक्तत्वम् । उष्णत्वम् । कफवातत्वग्दोषशोफ-
कण्डूतिव्रणनाशित्वम् । कोष्ठशुद्धिदातृत्वम् । इति
राजनिर्घण्टः ॥ अन्यच्च भावप्रकाशे ।
“सरलः पीतवृक्षः स्यात् तथा सुरभिदारुकः ।
सरलो मधुकस्तिक्तः कटुपाकरसो लघुः ॥
स्निग्धोष्णः कर्णकण्ठाक्षिरोगरक्षोहरः स्मृतः ।
कफानिलस्वदयूकामलाक्षिव्रणापहः ॥”
बुद्धः । अग्निः । इति धरणिः ॥

**सरलः**, त्रि, (सृ + कलच् । बाहुलकात् गुणः ।)
उदारः । अवक्रः । इति मेदिनी ॥ (यथा,
कथासरित्सागरे । ४ ।
“आदिश्यानाययामास गणकान् सरलाशयः ॥”)

**सरलद्रवः**, पुं, (सरलस्य द्रवः ।) सरलवृक्षरसः ।
टारपीन इति भाषा । तत्पर्य्यायः । पायसः २
श्रीवासः ३ वृकधूपः ४ श्रीवेष्टः ४ । इत्यमरः ।
२ । ६ । १२९ ॥ तैलपर्णी ६ श्रीपिष्टः ७ । इति
जटाधरः ॥ श्रीवशः ८ यासः ९ यवासः १०
सप्तम्या अलुक् ।) पद्मम् । इति राजनिर्घण्टः ॥
(यथा, शाकुन्तले १ अङ्के ।
“सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥”
सरोवरजाते, त्रि । यथा, सुश्रुते । १ । ४६ ।
“अधस्ताद्गुरवो ज्ञेया मत्स्याः सरसिजाः
स्मृताः ॥”)

**सरसी**, स्त्री, (सृ + असुन् । गौरादित्वात् ङीष् ।)
सरोवरः । इत्यमरः । १ । १० । २८ ॥ (यथा,
रघुः । १ । ४३ ।
“सरसीष्वरविन्दानां वीचिविक्षोभशीतलम् ।
आमोदमुपजिध्रन्तौ स्वनिश्वासानुकारिणम् ॥”)

**सरसीकः**, पुं, (सरस्यां कायति शब्दायते इति ।
कै + कः ।) सारसपक्षी । इति शब्दरत्ना-
वली ॥

**सरसीरुहं**, क्ली, (सरस्यां रोहतीति । रुह +
कः ।) पद्मम् । इत्यमरः । १ । १० । ४० ॥
(यथा, गीतगोविन्दे । ८ । २ ।
“तामनुसर सरसीरुहलोचन या तव हरति
विषादम् ॥”)

**सरस्वती**, स्त्री, (सरो नीरं तद्वत् रसो वास्त्यस्या
इति । सरस् + मतुप् । मस्य वः । तसौ मत्वर्थ

| | | |
|---|---|---|
| "जनमेजय एवमुक्तो देवशुन्या सरमया भृशं<br>सम्भ्रान्तो विषण्णश्चासीत् ॥")<br>कश्यपपत्नी-<br>विशेषः । तदपत्यानि भ्रमरादयः । यथा, -- | | इति भत्वान्न वदकार्य्यम् ।) नदी । (यथा,<br>महाभारते । १ । २१४ । ३ ।<br>"ते तया तैश्च सा वीरैः पतिभिः सह पञ्चभिः ।<br>बभूव परमप्रीता नागैरिव सरस्वती ॥")<br>बाणी । (यथा, रघुः । १५ । ४६ ।<br>"उच्चचार पुरस्तस्य गूढरूपा सरस्वती ॥")<br>स्त्रीरत्नम् । गौः । नदीभेदः ।<br>मनुपत्नी । इति |

मेदिनी ॥ ज्योतिष्मती । ब्राह्मी ।
इति राज-
निर्घण्टः ॥ सोमलता । इति
शब्दचन्द्रिका ॥
बुद्धशक्तिविशेषः । इति
त्रिकाण्डशेषः ॥ दुर्गा ।
यथा, देवीपुराणे ४५ अध्याये ।
"स्वराः स्वरणशीलत्वात्
गेयाख्याः सप्त
कीर्त्तिताः ।
अतिप्रापणदाने वा तेन देवी
सरस्वती ॥"
वाग्देवता । तत्पर्य्यायः । ब्राह्मी २
भारती ३
भाषा ४ गीः ५ वाक् ६ बाणी ७ ।
इत्यमरः ॥
इरा ८ सारदा ९ गिरा १०
गिरांदेवी ११
गीर्द्देवी १२ ईश्वरी १३ वाचा
१४ वचसा-
मीशा १५ वाग्देवी १६
वर्णमातृका १७ ।
इति शब्दरत्नावली ॥ गौः १८
श्रीः १९ । इति
जटाधरः ॥ वाक्येश्वरी २०
अन्त्यसन्ध्येश्वरी २१
सायंसन्ध्यादेवता २२ । इति
कविकल्पलता ॥ *
तस्या उत्पत्त्यादि यथा, ब्रह्मवैवर्त्ते
ब्रह्मखण्डे ।
३ । ५२ -- ६३ ।
सौतिरुवाच ।
"आविर्ब्बभूव कन्यैका धर्म्मस्य
वामपार्श्वतः ।
मुक्तिर्मूर्त्तिमती साक्षात् द्बितीया
कमलालया ॥
आविर्ब्बभूव तत्पश्चान्मुखतः
परमात्मनः ।

विद्याधिष्ठात्री या देवी परमेशस्य दुर्लभा ।
वेदशास्त्रयोगमाता सा सावित्री प्रकीर्त्तिता ॥
बुद्ध्यधिष्ठात्री या देवी सर्व्वशक्तिस्वरूपिणी ।
सर्व्वज्ञानात्मिका सर्व्वा सा दुर्गा दुर्गनाशिनी ॥
वागधिष्ठात्री या देवी शास्त्रज्ञानप्रदा सदा ।
कृष्णकण्ठोद्भवा या च सा च देवी सरस्वती ॥
पञ्चधादौ स्वयं देवी मूलप्रकृतिरीश्वरी ।
ततः सृष्टिक्रमेणैव बहुधा कलया च सा ॥" * ॥
तस्याः पूजादिर्यथा, --
श्रीनारायण उवाच ।
"आदौ सरस्वतीपूजा श्रीकृष्णेन विनिर्म्मिता ।
यत्प्रसादान्मुनिश्रेष्ठ मूर्खो भवति पण्डितः ॥
आविर्भूता यदा देवी वक्त्रतः कृष्णयोषितः ।
इयेष कृष्णं कामेन कामुकी कामरूपिणी ॥
स च विज्ञाय तद्भावं सर्व्वज्ञः सर्व्वमातरम् ।
तामुवाच हितं सत्यं परिणामसुखावहम् ॥
श्रीकृष्ण उवाच ।
भज नारायणं साध्वी मदंशं तं चतुर्भुजम् ।
युवानं सुन्दरं सर्व्वगुणयुक्तञ्च मत्समम् ॥
कामज्ञं कामिनीनाञ्च तासाञ्च कामपूरकम् ।
कोटिकन्दर्पलावण्यलीलान्यक्कृतमीश्वरम् ॥
कान्ते कान्तञ्च मां कृत्वा यदि स्थातुमिहेच्छसि ।
त्वत्तो बलवती राधा न ते भद्रं भविष्यति ॥
यो यस्मात् बलवान् वाणि ततोऽन्यं रक्षितुं
क्षमः ।
कथं परान् साधयति यदि स्वयमनीश्वरः ॥
सर्व्वेशः सर्व्वशास्ताहं राधां वाधितुमक्षमः ।
तेजसा मत्समा सा च रूपेण च गुणेन च ॥
प्राणाधिष्ठात्री देवी सा प्राणांस्त्यक्तुञ्च कः क्षमः ।
प्राणतोऽपि प्रियः कुत्र केषां वास्ति च कश्चन ॥
त्वं भद्रे गच्छ वैकुण्ठं तव भद्रं भविष्यति ।
पतिं तमीश्वरं कृत्वा मोदस्व सुचिरं सुखम् ॥
लोभमोहकामकोपमानह्विंसाविवर्जिता ।
तेजसा तत्समा लक्ष्मी रूपेण च गुणेन च ॥
तया सार्द्धं तव प्रीत्या शश्वत्कालं प्रयास्यति ।
गौरवं मद्वराच्चुल्यं करिष्यति पतिर्द्वयोः ॥
प्रतिविश्वेषु ते पूजां महतीं ते मुदान्विताः ।
माघस्य शुक्लपञ्चम्यां विद्यारम्भे च सुन्दरि ॥
मानवा मनवो देवा मुनीन्द्राश्च मुमुक्षवः ।

नारद उवाच ।
पूजाविधानं स्तवनं ध्यानं कवचमीप्सितम् ।
पूजोपयुक्तनैवेद्यं पुष्पञ्च चन्दनादिकम् ॥
वद वेदविदां श्रेष्ठ श्रोतुं कौतूहलं मम ।
वर्द्धते साम्प्रतं शश्वत् किमिदं श्रुतिसुन्दरम्
॥
श्रीनारायण उवाच ।
शृणु नारद वक्ष्यामि काण्वशाखोक्तपद्धतिम् ।
जगन्मातुः सरस्वत्याः पूजां
विधिसमन्विताम् ॥
माघस्य शुक्लपञ्चम्यां विद्यारम्भदिनेऽपि च
।
पूर्व्वेऽह्नि संयमं कृत्वा तत्राह्नि संयतः शुचिः
॥
स्नात्वा नित्यक्रियां कृत्वा घटं संस्थाप्य
भक्तितः ।
संपूज्य देवषट्कञ्च नैवेद्यादिभिरेव च ॥
गणेशञ्च दिनेशञ्च वह्निं विष्णुं शिवं शिवाम् ।
संपूज्य संयतो गेही ततोऽभीष्टं प्रपूजयेत् ॥
ध्यानेन वक्ष्यमाणेन ध्यात्वावाह्य घटे बुधः ।
ध्यात्वा पुनः षोडशोपचारेण पूजयेद्व्रती ॥
पूजोपयुक्तं नैवेद्यं यद्यद्वेदे निरूपितम् ।
वक्ष्यामि सांप्रतं किञ्चित् यथाधीतं यथा-
गमम् ॥
नवनीतं दधि क्षीरं लाजञ्च तिललड्डुकम् ।
इक्षुमिक्षुरसं शुक्लवर्णपक्वगुडं मधु ॥
स्वस्तिकं शर्करा शुक्लधान्यस्याक्षतमक्षतम्
।
अस्विन्नशुक्लधान्यस्य पृथुकं शुक्लमोदकम्
॥
घृतसैन्धवसंस्कारैर्हविष्यान्नञ्च व्यञ्जनैः ।
यवगोधूमचूर्णानां पिष्टकं घृतसंस्कृतम् ॥
पिष्टकं स्वस्तिकस्यापि पक्वरम्भाफलस्य च
।
परमान्नञ्च सघृतं पिष्टान्नञ्च सुधोपमम् ॥
नारिकेलं तदुदकं केशरं मूलमार्द्रकम् ।
पक्वरम्भाफलं चारु श्रीफलं वदरं फलम् ॥
कालदेशोद्भवं पक्वफलं शुक्लं सुसंस्कृतम् ।

एका देवी शुक्लवर्णा
वीणापुस्तकधारिणी ॥
कोटिपूर्णेन्दुशोभाढ्या
शरत्पङ्कजलोचना ।
वह्निशुद्धांशुकाधाना
रत्नाभरणभूषिता ॥
सस्मिता सुदती वामा
सुन्दरीणाञ्च सुन्दरी ।
श्रेष्ठा श्रुतीनां शास्त्राणां विदुषां
जननी परा ॥
वागधिष्ठातृदेवी सा
कवीनामिष्टदेवता ।
शुद्धसत्त्वस्वरूपा च शान्तरूपा
सरस्वती ॥
गोविन्दपुरतः स्थित्वा जगौ
प्रथमतः सुखम् ।
तन्नामगुणकीर्त्तिञ्च वीणया सा
ननर्त्त च ॥
कृतानि यानि कर्म्माणि कल्पे
कल्पे युगे युगे ।
तानि सर्व्वाणि हरिणा तुष्टाव
संपुटाञ्जलिः ॥
सरस्वत्युवाच ।
रासमण्डलमध्यस्थं
रासोल्लाससमुत्सुकम् ।
रत्नसिंहासनस्थञ्च
रत्नभूषणभूषितम् ॥
रासेश्वरं रासकरं वरं
रासेश्वरीश्वरम् ।
रासाधिष्ठातृदेवञ्च वन्दे
रासविनोदिनम् ॥
रासायासपरिश्रान्तं रासे
राजविहारिणम् ।
रासोत्सुकानां गोपीनां कान्तं
शान्तं मनो-
हरम् ॥
प्रणम्य तं यामीत्युक्त्वा
प्रहृष्टवदना सती ।
उवास सा सकामा च
रत्नसिंहासने वरे ॥

सन्तश्च योगिनः सिद्धा नागगन्धर्व्वराक्षसाः ॥
मद्वरेण करिष्यन्ति कल्पे कल्पे लयावधि ।
भक्तियुक्ताश्च दत्त्वा चैवोपचाराणि षोडश ।
काण्वशाखोक्तविधिना ध्यानेन स्तवनेन च ॥
जितेन्द्रियाः संयताश्च घटे च पुस्तकेऽपि च ।
कृत्वा सुवर्णगुटिकां गन्धचन्दनचर्च्चिताम् ॥
कवचं ते ग्रहीष्यन्ति कण्ठे वा दक्षिणे भुजे ।
पठिष्यन्ति च विद्वांसः पूजाकाले च पूजिते ॥
इत्युक्त्वा पूजयामास तां देवीं सर्व्वपूजितः ।
ततस्तत्पूजनञ्चक्रुर्ब्रह्मविष्णुमहेश्वराः ॥
अनन्तश्चापि धर्म्मश्च मुनीन्द्राः सनकादयः ।
सर्व्वे देवाश्च मनवो नृपाश्च मानवादयः ।
बभूव पूजिता नित्या सर्व्वलोकैः सरस्वती ॥

सुगन्धि शुक्लपुष्पञ्च सुगन्धि शुक्लचन्दनम्
॥
नवीनशुक्लवस्त्रञ्च शङ्खञ्च सुन्दरं मुने ।
माल्यञ्च शुक्लपुष्पाणि शुक्लहारञ्च भूषणम्
॥
यद्दृष्टञ्च श्रुतौ ध्यानं प्रशस्यं श्रुतिसुन्दरम् ।
तन्निबोध महाभाग भयभञ्जनकारणम् ॥
सरस्वतीं शुक्लवर्णां सस्मितां सुमनोहराम् ।
कोटिचन्द्रप्रभामुष्टपुष्टश्रीयुक्तविग्रहाम् ॥
बह्निशुद्धांशुकाधानां सस्मितां सुमनोहराम् ॥
रत्नसारेन्द्रनिर्म्माणवरभूषणभूषिताम् ।
सुपूजितां सुरगणैर्ब्रह्मविष्णुशिवादिभिः ॥
वन्दे भक्त्या च वन्द्यां तां मुनीन्द्रमनुमानवैः
।
एवं ध्यात्वा च मूलेन सर्व्वं दत्त्वा विचक्षणः ॥
संस्तूय कवचं धृत्वा प्रणमेद्दण्डवद्भुवि ।
येषां येषामिष्टदेवी तेषां नित्या क्रिया मुने ॥
विद्यारम्भे च वर्षान्ते सर्व्वेषां पञ्चमीदिने ।
सर्व्वोपयुक्तो मूलश्च वैदिकाष्टाक्षरं परम् ॥
येषां येनोपदेशो वा तेषां स मूल एव च ।
सरस्वतीचतुर्थ्यन्तो वह्निजायान्त एव च ॥
लक्ष्मीर्मायादिकश्चैव मन्त्रोऽयं कल्पपादपः ।
पुरा नारायणश्चेमं वाल्मीकाय कृपानिधिः ॥
प्रददौ जाह्नवीतीरे पुण्यक्षेत्रे च भारते ।
भृगुर्ददौ च शुक्राय पुष्करे सूर्य्यपर्व्वणि ॥

| | | |
|---|---|---|
| इति वाणीकृतं स्तोत्रं प्रातरुत्थाय यः पठेत् ।<br>बुद्धिमान् सोऽपि विद्यावान् लक्ष्मीवान् पुत्र-<br>वान् सदा ॥"<br>अपि च तत्रैव गणेशखण्डे । ४० । ६१ -- ६७ ।<br>"सा च शक्तिः सृष्टिकाले पञ्चधा चेश्वरेच्छया ।<br>राधा पद्मा च सावित्री दुर्गा देवी सरस्वती ॥<br>प्राणाधिष्ठात्री या देवी कृष्णस्य परमात्मनः ।<br>प्राणाधिकप्रियतमा सा राधा परिकीर्त्तिता ॥<br>ऐश्वर्य्याधिष्ठातृदेवी सर्व्वमङ्गलकारिणी ।<br>परमानन्दरूपा च सा लक्ष्मीः परिकीर्त्तिता ॥ | | |

चन्द्रपर्व्वणि मारीचो ददौ वाक्पतये मुदा ।
भृगवे च ददौ तुष्टो ब्रह्मा वदरिकाश्रमे ॥
आस्तीकाय जरत्कारुर्द्दौ क्षोरोदसन्निधौ
।
विभाण्डको ददौ मेरौ ऋष्यशृङ्गाय धीमते ॥
शिवः कणादमुनये गोतमाय ददौ मुदा ।
सूर्य्यश्च याज्ञवल्क्याय तथा कात्यायनाय
च ॥
शेषः पाणिनये चैव भरद्वाजाय धीमते ।
ददौ शाकटायनाय सुतले बलिसंसदि ॥
चतुर्लक्षजपेनैव मन्त्रः सिद्धो भवेन्नृणाम् ।
यदि स्यात् सिद्धमन्त्रोऽपि बृहस्पतिसमो
भवेत् ॥
कवचं शृणु विप्रेन्द्र यद्दत्तं विधिना पुरा ।
विश्वश्रेष्ठं विश्वजयं भृगवे गन्धमादने ॥
भृगुरुवाच ।
ब्रह्मन् ब्रह्मविदां श्रेष्ठ ब्रह्मज्ञानविशारद ।
सर्व्वज्ञ सर्व्वजनक सर्व्वेश सर्व्वपूजित ॥
सरस्वत्याश्च कवचं ब्रूहि विश्वजयं प्रभो ।
अयातयाममन्त्राणां समूहसंयुतं परम् ॥
ब्रह्मोवाच ।
शृणु वत्स प्रवक्ष्यामि कवचं सर्व्वकामदम् ।
श्रुतिसारं श्रुतिसुखं श्रुत्युक्तं श्रुतिपूजितम्
॥
उक्तं कृष्णेन गोलोके मह्यं वृन्दावने वने ।
रासेश्वरेण विभुना रासे च रासमण्डले ॥
अतीवगोपनीयञ्च कल्पवृक्षपरं वरम् ।
अश्रुताद्भुतमन्त्राणां समूहैश्च समन्वितम् ॥
यद्धृत्वा पठनाद्ब्रह्मन् बुद्धिमांश्च
बृहस्पतिः ।
यद्धृत्वा भगवान् शुक्रः सर्व्वदैत्येषु पूजितः
॥
पठनाद्धारणाद्वाग्मी कवीन्द्रो वाल्मिको
मुनिः ।
सायम्भुवो मनुश्चैव यद्धृत्वा सर्व्वपूजितः ॥
कणादो गोतमः कण्वः पाणिनिः
शाकटायनः ।
ग्रन्थञ्चकार यद्धृत्वा दक्षः कात्यायनः
स्वयम् ॥

ॐ सर्व्वकण्ठवासिन्यै स्वाहा
प्राच्यां सदावतु ।
ॐ सर्व्वजिह्वावासिन्यै
स्वाहाग्निदिशि रक्षतु ॥
ॐ ऐँ ह्रीँ श्रीँ क्लीँ सरस्वत्यै
बुधजनन्यै स्वाहा ।
सततं मन्त्रराजोऽयं दक्षिणे मां
सदावतु ॥
ऐँ ह्रीँ श्रीँ त्र्यक्षरो मन्त्रो नैरृत्यां
सर्व्वदावतु ॥
ॐ ऐँ कविजिह्वाग्रवासिन्य स्वाहा
मां वारुणे-
ऽवतु ॥
सदम्बिकायै स्वाहा च वायव्ये मां
सदावतु ।
ॐ गद्यपद्यवासिन्यै स्वाहा
मामुत्तरेऽवतु ॥
ऐँ सर्व्वशास्त्रवासिन्यै स्वाहैशान्ये
सदावतु ।
ॐ ह्रीँ सर्व्वपूजितायै स्वाहा चोर्द्ध्वे
सदावतु ॥
ऐँ ह्रीँ पुस्तकवासिन्यै स्वाहाधो मां
सदावतु ।
ॐ ग्रन्थबीजस्वरूपायै स्वाहा मां
सर्व्वतोऽवतु ॥
इति ते कथितं विप्र
सर्व्वमन्त्रौघविग्रहम् ।
इदं विश्वजयं नाम कवचं
ब्रह्मरूपिणम् ॥
पुरा श्रुतं धर्म्मवक्त्रात् पर्व्वते
गन्धमादेने ।
तव स्नेहान्मयाख्यातं प्रवक्तव्यं न
कस्यचित् ॥
गुरुमभ्यर्च्च्य विधिवत्
वस्त्रालङ्कारचन्दनैः ।
प्रणम्य दण्डवद्भूमौ कवचं धारयेत्
सुधीः ॥
पञ्चलक्षजपेनैव सिद्धन्तु कवचं
भवेत् ।

वागधिष्ठातृदेवी या तस्यै नित्यं नमो नमः ॥
हिमचन्दनकुन्देन्दुकुमुदाम्भोजसन्निभा ।
वर्णाधिदेवी या तस्यै चाक्षरायै नमो नमः ॥
विसर्गबिन्दुमात्रासु यदधिष्ठानमेव च ।
तदधिष्ठातृदेवी या तस्यै वाण्यै नमो नमः ॥
यया विनात्र संख्यावान् संख्यां कर्त्तुं न शक्यते ।
कालसंख्यास्वरूपा या तस्यै देव्यै नमो नमः ॥
व्याख्यास्वरूपा या देवी व्याख्याधिष्ठातृ-
देवता ।
भ्रमसिद्धान्तरूपा या तस्यै देव्यै नमो नमः ॥
स्मृतिशक्तिर्ज्ञानशक्तिर्ब्बुद्धिशक्तिस्वरूपिणी ।
प्रतिभाकल्पनाशक्तिर्याच तस्यै नमो नमः ॥
सनत्कुमारो ब्रह्माणं ज्ञानं पप्रच्छ यत्र वै ।
बभूव जडवत् सोऽपि सिद्धान्तं कर्त्तुमक्षमः ॥
तदाजगाम भगवानात्मा श्रीकृष्ण ईश्वरः ।
उवाच सततं स्तौहि वाणीमिति प्रजापते ॥
स च तुष्टाव त्वां ब्रह्मा चाज्ञया परमात्मनः ।
चकार त्वत्प्रसादेन तदा सिद्धान्तमुत्तमम् ॥
यदाप्यनन्तं पप्रच्छ ज्ञानमेकं वसुन्धरा ।
बभूव मूकवत् सोऽपि सिद्धान्तं कर्त्तुमक्षमः ॥
तदा त्वां स च तुष्टाव संत्रस्तः कश्यपाज्ञया ।
ततश्चकार सिद्धान्तं निर्म्मलं भ्रमभञ्जनम् ॥
व्यासः पुराणसूत्रञ्च पप्रच्छ वाल्मिकं यदा ।
मौनीभूतः स सस्मार त्वामेव जगदम्बिकाम् ॥
तदा चकार सिद्धान्तं त्वद्वरेण मुनीश्वरः ।
संप्राप निर्म्मलं ज्ञानं भ्रमान्धध्वंसदीपकम् ॥
पुराणसूत्रं श्रुत्वा स व्यासः कृष्णकलोद्भवः ।
त्वां सिषेवे च दध्यौ च शतवर्षञ्च पुष्करे ॥
तदा त्वत्तो वरं प्राप्य स कवीन्द्रो बभूव ह ।
तदा वेदविभागञ्च पुराणञ्च चकार सः ॥
तदा महेन्द्रः पप्रच्छ तत्त्वज्ञानं शिवाशिवम् ।
क्षणं त्वामेव संचिन्त्य तस्मै ज्ञानं ददौ विभुः ॥
पप्रच्छ शब्दशास्त्रञ्च महेन्द्रश्च बृहस्पतिम् ।
दिव्यं वर्षसहस्रञ्च स त्वां दध्यौ च पुष्करे ॥
तदा त्वत्तो वरं प्राप्य दिव्यं वर्षसहस्रकम् ।
उवाच शब्दशास्त्रञ्च तदर्थञ्च सुरेश्वरम् ॥
अध्यापिताश्च ये शिष्या यैरधीतं मुनीश्वरैः ।
ते च त्वां परिसंचिन्त्य प्रवर्त्तन्ते सुरेश्वरि ॥
त्वं संस्तुता पूजिता च मुनीन्द्रमनुमानवैः ।

धृत्वा वेदविभागञ्च पुराणान्यखिलानि च ।
चकार लीलामात्रेण कृष्णद्वैपायनः स्वयम्
॥
शातातपश्च संवर्त्तो वशिष्ठश्च पराशरः ।
यद्धृत्वा पठनाद्ग्रन्थं याज्ञवल्क्यश्चकार
सः ॥
ऋष्यशृङ्गो भरद्वाजश्चास्तीको देवलस्तथा
।
जैगीषव्यो याजलिश्च यद्धृत्वा सर्व्वपूजितः
॥
कवचस्यास्य विप्रेन्द्र ऋषिरेव प्रजापतिः ।
स्वयं छन्दश्च बृहती देवो रासेश्वरः प्रभुः
॥
सर्व्वतत्त्वपरिज्ञानसर्व्वार्थसाधनेषु च ।
कवितासु च सर्व्वासु विनियोगः प्रकीर्त्तितः
॥
श्रीँ ह्रीँ सरस्वत्यै स्वाहा शिरो मे पातु
सर्व्वतः ।
श्रीँ वाग्देवतायै स्वाहा भालं मे सर्व्वदावतु
॥
ॐ सरस्वत्यै स्वाहेति श्रोत्रं पातु निरन्तरम्
।
ॐ श्रीँ ह्रीँ भारत्यै स्वाहा नेत्रयुग्मं सदावतु
।
ॐ ह्रीँ वाग्वादिन्यै स्वाहा नासां मे सर्व्वतो-
ऽवतु ॥
ह्रीँ विद्याधिष्ठातृदेव्यै स्वाहा चोष्ठं सदावतु
॥
ॐ श्रीँ ह्रीँ ब्राह्म्यै स्वाहेति दन्तपक्तिं
सदावतु ।
ऐमित्येकाक्षरो मन्त्रो मम कण्ठं सदावतु ॥
ॐ श्रीँ ह्रीँ पातु मे ग्रीवां स्कन्धं मे श्रीँ सदा-
वतु ।
ॐ वागधिष्ठातृदेव्यै स्वाहा सर्व्वं सदावतु
॥

यदि स्यात् सिद्धकवचो
बृहस्पतिसमो भवेत् ॥
महावाग्मी कवीन्द्रश्च
त्रैलोक्यविजयी भवेत् ।
शक्नोति सर्व्वं जेतुञ्च कवचस्य
प्रसादतः ॥
इदञ्च काण्वशाखोक्तं कवचं कथितं
मुने ।
स्तोत्रं पूजाविधानञ्च ध्यानञ्च
वन्दनं तथा ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे
सरस्वतीकवचम् ।
४ । ५९ -- ९१ ॥ * ॥
श्रीनारायण उवाच ।
“वाग्देवतायाः स्तवनं श्रूयतां
सर्व्वकामदम् ।
महामुनिर्याज्ञवल्क्यो येन तुष्टाव तां
पुरा ॥
गुरुशापाच्च स मुनिर्हतविद्यो बभूव
ह ।
तदा जगाम दुःखार्त्तो रविस्थानञ्च
पुण्यदम् ॥
स प्राप तपसा सूर्य्यं लोलार्के
दृष्टिगोचरे ।
तुष्टाव सूर्य्यं शोकेन रुरोद च
मुहुर्मुहुः ॥
सूर्य्यस्तं पाठयामास
वेदवेदाङ्गमीश्वरः ।
उवाच स्तुहि वाग्देवीं भक्त्या च
स्मृतिहेतवे ।
तमित्युक्त्वा दीननाथोऽप्यन्तर्द्धानं
चकार सः ।
मुनिः स्नात्वा च तुष्टाव
भक्तिनम्रात्मकन्धरः ॥
याज्ञवल्क्य उवाच ।
कृपां कुरु जगन्मातर्म्मामिव
हततेजसम् ।
गुरुशापात् नष्टस्मृतिं विद्याहीनञ्च
दुःखितम् ॥
ज्ञानं देहि स्मृतिं देहि विद्यां
विद्याधिदैवते ।

दैत्येन्द्रैश्च सुरैश्चापि ब्रह्मविष्णुशिवादिभिः ॥
जडीभूतः सहस्रास्यः पञ्चवक्त्रश्चतुर्म्मुखः ।
यां स्तोतुं किमहं स्तामि त्वामेकास्येन मानवः ॥
इत्युक्त्रा याज्ञवल्क्यश्च भक्तिनम्रात्मकन्धरः ।
प्रणनाम निराहारो रुरोद च मुहुर्म्मुहुः ॥
तदा ज्योतिःस्वरूपा सा तेनादृष्टाप्युवाच तम् ।
सुकवीन्द्रो भवेत्युक्त्वा वैकुण्ठञ्च जगाम ह ॥
याज्ञवल्क्यकृतं वाणीस्तोत्रं यः संयतः पठेत् ।
सुकवीन्द्रो महावाग्मी बृहस्पतिसमो भवेत् ॥
महामूर्खश्च दुर्म्मेधा वर्षमेकं वदा जपेत् ।
स पण्डितश्च मेधावी सुकविश्च भवेद्ध्रुवम् ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे सरस्वत्युपाख्यानम् ।
५ । १ -- ३५ ॥ * ॥

| | | |
|---|---|---|
| | प्रतिष्ठां कवितां देहि शक्तिं शिष्यप्रबोधिकाम् ॥<br>ग्रन्थकर्त्तृत्वशक्तिञ्च सच्छिष्यं सुप्रतिष्ठितम् ।<br>प्रतिभां सत्सभायाञ्च विचारक्षमतां शुभाम् ॥<br>लुप्तं सर्व्वं दैवदोषात् दूरीभूतं पुनः पुनः ।<br>यथाङ्कुरं भस्मनि च करोति देवता पुनः ॥<br>ब्रह्मस्वरूपा परमा ज्योतीरूपा सनातनी ।<br>सर्व्वविद्याधिदेवी या तस्यै वाण्यै नमो नमः ॥<br>यया विना जगत् सर्व्वं शश्वज्जीवन्मृतं परम् ।<br>ज्ञानाधिदेवी या तस्यै सरस्वत्यै नमो नमः ॥<br>यया विना जगत् सर्व्वं मूकमुन्मत्तवत् सदा । | |

अपि च । "संवत्सरप्रदीपे ।
'पञ्चम्यां पूजयेल्लक्ष्मीं पुष्पधूपान्नवारिभिः ।
मस्याधारं लेखनीञ्च पूजयेन्न लिखेत्ततः ॥
माघे मासि सिते पक्षे पञ्चमी या श्रियः प्रिया ।
तम्याः पूर्व्वाह्न एवेह कार्य्यः सारस्वतोत्सवः
॥'
सारस्वत इत्युपादानात् श्रियः सरस्वत्याः ।
तथा च व्याडिः ।
'लक्ष्मीसरस्वतीधीत्रिवर्गसम्पद्विभूतिशोभासु
।
उपकरणवेशरचनाविधासु च श्रीरिति प्रथिता
॥'
तथा चोक्तं गां दद्यादित्यादौ
नानार्थशब्दस्यापि
प्रसिद्धार्थत्वेन व्यवहारः विपरीतार्थग्राहक-
वाक्यशेषसत्त्व तु अप्रसिद्धार्थत्वेन च
व्यवह्रियते
सर्व्वदा नानार्थानां व्यवहारस्तु
श्लेषकाव्यादा-
विति ।
'तरुणशकलमिन्दोर्ब्बिभ्रती शुभ्रकान्तिः
कुचभरनमिताङ्गी सन्निषण्णा सिताब्जे ।
निजकरकमलोद्यल्लेखनीपुस्तकश्रीः
सकलविभवसिद्ध्यै पातु वाग्देवता नः ॥'
इति शारदोक्तं ध्यायेत् ॥
पाद्यादिभिः पूजयित्वा ।
'भद्रकाल्यै नमो नित्यं सरस्वत्यै नमो नमः ।
वेदवेदान्तवेदाङ्गविद्यास्थानेभ्य एव च स्वाहा
॥'
इति ब्रह्मपुराणीयेन त्रिः पूजयेत् ॥
मत्स्यसूक्ते ।
'बन्धुजीवञ्च द्रोणञ्च सरस्वत्यै न दापयेत् ॥'
सरस्वतीं संपूज्य ।
'यथा न देवो भगवान् ब्रह्मा लोकपितामहः ।
त्वां परित्यज्य सन्तिष्ठेत्तथा भव वरप्रदा ॥
वेदाः शास्त्राणि सर्व्वाणि नृत्यगीतादिकञ्च यत्
।
न विहीनं त्वया देवि तथा मे सन्तु सिद्धयः ॥
लक्ष्मीर्म्मेधा धरा पुष्टिर्गौरी तुष्टिः प्रभा धृतिः ।

कादिमान्ताः पञ्च पञ्च वर्गाः
स्युर्मातृकोदिताः ॥
यादिवान्ताः शादिहान्ता ळ-क्षमीशे प्रवि-
न्यसेत् ।
चतुरस्रं चतुर्द्वारं दिक्षु वं ठं विदिक्षु च ॥" *
॥
अस्य पूजाप्रयोगः ।
प्रातःकृत्यादिपीठन्यासान्तं
कर्म्म विधाय केशरेषु मध्ये च
पीठशक्तीर्न्यसेत् ।
यथा, 'ॐ मेधायै नमः । ॐ प्रज्ञायै समः ।
ॐ प्रभायै नमः । ॐ विद्यायै नमः । ॐ
धियै
नमः । ॐ धृत्यै नमः । ॐ स्मृत्यै नमः ।
ॐ
बुद्ध्यै नमः । ॐ विद्येश्वर्य्यै नमः । मध्ये
तदुपरि
ॐ पद्मासनाय नमः ।' प्रणवादिनमोऽन्तेन
पूजयेत् । तथा च सारदातिलके ।
"आधारशक्तिमारभ्य
पीठशक्त्यन्तमर्च्चयेत् ।
मेधाप्रज्ञाप्रभाविद्याधीधृतिस्मृतिबुद्धयः॥
विद्येश्वरी च सम्प्रोक्ता ताराद्या नव शक्तयः
।
वर्णाब्जेनासनं दद्यात् मूर्त्तिं मूलेन कल्पयेत्
॥"
तत ऋष्यादिन्यासः । तद्यथा । शिरसि ॐ
कण्वऋषये नमः । मायापुटितश्चेत् ॐ
बृहस्प-
तये ऋषये नमः । मुखे विराट्छन्दसे नमः
।
हृदि वागीश्वर्य्यै देवतायै नमः ॥ * ॥ अत्र
मन्त्रन्यासः । शिरसि वं नमः । श्रवणयोर्दं
नमः
वं नमः । चक्षुषोर्दं नमः वां नमः । नासि-
कयोर्वां नमः दिं नमः । वदने निं नमः ।
लिङ्गे स्वां नमः । गुह्ये हां नमः ॥ * ॥
ततो मातृकायाः कराङ्गन्यासौ कृत्वा
ध्यायेत् ।

पयेत् ॥ * ॥ अस्य पूरश्चरणं
दशलक्षजपः ।
तथा च ।
"दशलक्षं जपेन्मन्त्रं दशांशं जुहुयात्ततः
।
पुण्डरीकैः
पयोऽभ्यक्तैस्तिलैस्त्रिमधुरान्वितः ॥"
इति ॥ * ॥
मन्त्रान्तरम् ।
"हृदयान्ते भगवति वदशब्दयुगं ततः ।
वाग्देविवह्निजायान्तं वाग्भवाद्यं
समुच्चरेत् ॥"

अस्य पूजाप्रयोगः ।
प्रातःकृत्यादिपीठन्यासान्तं

कर्म्म विधाय केशरेषु मध्ये च
पूर्व्वोक्तमेधादि-
पीठशक्तीः पीठमनुञ्च न्यसेत् । ततः
पूर्व्वोक्त-
मृष्यादिन्यासं कृत्वा कराङ्गन्यासौ
कुर्य्यात् । तद्-
यथा । ऐं अङ्गुष्ठाभ्यां नमः ।
नमस्तर्जनीभ्यां
स्वाहा । भगवति मध्यमाभ्यां वषट् ।
वद वद
अनामिकाभ्यां हुँ । वाग्देवि कनिष्ठाभ्यां
वौषट् । स्वाहा करतलपृष्ठाभ्यां फट् ।
एवं
हृदयादिषु । तथा च निबन्धे ।
"मनोः षड्भिः पदैः कुर्य्यात् जातियुक्तं
षड-
ङ्गकम् ॥" * ॥
ततो ध्यानम् ।
"शुभ्रां स्वच्छविलेपमाल्यवसनां
शीतांशुखण्डो-
ज्ज्वलां
व्याख्यामक्षगुणं सुधाढ्यकलसं
विद्याञ्च हस्ता-
म्बुजैः ।

एताभिः पाहि तनुभिरष्टाभिर्म्मां सरस्वति ॥’
इति मत्स्यपुराणीयैः प्रार्थयेत् ॥”
इति तिथ्यादितत्त्वम्॥ * ॥ अथ सरस्वती-
मन्त्रादि ।
“अद्रिर्व्वरुणसंरुद्धो दवाग्वादिनिठद्वयम् ।
सरस्वत्या दशार्णोऽयं वागैश्वर्य्यफलप्रदः ॥”
मन्त्रो यथा । वद वद वाग्वादिनि वह्निवल्लभेति
दशाक्षरः । तथा निबन्धे ।
‘भुवनेश्वरीसंपुटोऽयं महासारस्वतप्रदः ॥’ *
॥
अस्य यन्त्रम् ।
“व्योमेन्द्वौ रसनार्णकर्णिकमचां द्वन्द्वैः स्फुरत्-
केशरं
पत्रान्तर्गतपञ्चवर्गयशला वर्णादिवर्गं क्रमात् ।
आसास्वश्रिषु लान्तलाङ्गलियुजा क्षौणी-
पुरेणावृतं
यन्त्रं कल्पितमत्र पूजयतु तां वर्णात्मिकां
देवताम् ॥”
गोतमीये ।
“कर्णिकायां प्रेतबीजं विधिना विलिखेत् गुरुः
।
ततः षोडशकेशरेषु विलिखेत् षोडश स्वरान्
॥
तथाष्टदलमध्ये च वर्गाष्टकं यथाविधि ।

तथाच निबन्धे ।
“शिरःश्रवणदृङ्नासावदनान्धुगुर्वेष्विमान्
।
न्यस्य वर्णान् षडङ्गानि मातृकोक्तानि
कल्प-
येत् ॥”
ततो ध्यानम् ।
“तरुणशकलमिन्दोर्बिभ्रती शुभ्रकान्तिः
कुचभरनमिताङ्गी सन्निषण्णा सिताब्जे ।
निजकरकमलोद्यल्लेखनीपुस्तकश्रीः
सकलविभवसिद्ध्यै फतु वाग्देवता नः ॥”
एवं ध्यात्वा मानसैः संपूज्य शङ्खस्थापनं
कुर्य्यात् ।
ततः पीठपूजां कृत्वा केशरेषु मध्ये दिक्षु च
मेधादिपीठमन्वन्तं संपूज्य
पुनर्ध्यात्वावाहनादि-
पञ्चपुष्पाञ्जलिदानपर्य्यन्तं कर्म्म विधाय
आव-
रणपूजां कुर्य्यात् । अग्निकोणे अं कं खं गं
घं
ङं आं हृदयाय नमः । एवं नैरृते इं चं छं जं
झं ञं ईं शिरसे स्वाहा । वायुकोणे उं टं ठं
डं ढं णं ऊं शिखायै वषट् । ईशाने एं तं थं
दं धं नं ऐं कवचाय हुं । मध्ये ओं पं फं बं
भं मं औं नेत्रत्राय वौषट् । दिक्षु अं यं रं लं
वं शं षं सं हं ळं क्षं अः करतलपृष्ठाभ्यां
अस्त्राय फट् । ततः पत्रेषु पूर्ब्बादिषु ॐ
योगायै
नमः । ॐ सत्यायै नमः । ॐ विमलायै
नमः ।
ॐ ज्ञानायै नमः । ॐ बुद्ध्यै नमः । ॐ
स्मृत्यै
नमः । ॐ मेधायै नमः । ॐ प्रज्ञायै नमः ।
दलाग्रेषु । ब्राह्माद्या मातरः पूज्याः
प्रणवादि-
नमोऽन्तिकाः । तद्बहिरिन्द्रादीन् वज्रादींश्च
पूजयेत् । ततो धूपादिविसर्ज्जनान्तं कर्म्म
समा-

बिभ्राणां कमलासनां कुचनतां
वाग्देवतां
सस्मितां
वन्दे वाग्विभवप्रदां त्रिनयनां
सौभाग्यसम्पत्-
करीम् ॥”
एवं ध्यात्वा मानसैः संपूज्य
शङ्खस्थापनं कुर्य्यात् ।
ततः पूर्व्वोक्तक्रमेण पूजयेत् ।
किन्त्वङ्गमन्त्रे
विशेषः । अस्य पुरश्चरणमष्टलक्षजपः
। तथा च ।
“हविष्याशी जपेन्मन्त्रं
वसुलक्षमनन्यधीः ।
दशांशं जुहुयादन्ते
तिलैराज्यपरिप्लुतैः ॥
तारो मायाधरो बिन्दुः शक्तिस्तारः
सरस्वती ।
ङेऽन्तो नमोऽन्तको मन्त्रः प्रोक्त
एकादशा-
क्षरः ॥” * ॥

अस्याः पूजाप्रयोगः ।
प्रातःकृत्यादिपूर्व्वोक्त-

पीठमन्वन्तं विन्यस्य पूर्व्वोक्तं
ऋष्यादिन्यासं
कुर्य्यात् । ततो मन्त्रन्यासः । ॐ नमो
ब्रह्म-
रन्ध्रे । ह्रीँ नमो भ्रूमध्ये । ऐं नमः ह्रीँ
नम-
श्चक्षुषोः । ॐ नमः सं नमः कर्णयोः ।
रं नमः
स्वं नमो नासिकयोः । त्यैं नमो मुखे ।
नं नमो
लिङ्गे । मं नमो गुह्ये । ततः
कराङ्गन्यासौ ।
ऐं अङ्गुष्ठाभ्यां नमः । ऐं तर्ज्जनीभ्यां
स्वाहा ।
इत्यादि । एवं हृदयादिषु । तथा च
निबन्धे ।

| | | “मन्त्रवर्णान् न्यसेन्मन्त्री<br>वाग्भवेनाङ्गकल्पना ।”<br>इत्यादि ॥ * ॥<br>ततो ध्यानम् ।<br>“वाणीं पूर्णनिशाकरोज्ज्वलमुखीं<br>कर्पूरकुन्द-<br>प्रभा-<br>ञ्चन्द्रार्द्धाङ्कितमस्तकां निजकरैः<br>संबिभ्रती-<br>मादरात् । |
|---|---|---|

वीणामक्षगुणं सुधाढ्यकलसं विद्याञ्च तुङ्गस्तनीं
दिव्यैराभरणैर्विभूषिततनुं हंसाधिरूढां भजे ॥”

एवं ध्यात्वा मानसैः संपूज्य शङ्खस्थापनं कुर्य्यात् ।

ततः पीठपूजां विधाय केशरेषु मध्ये च पूर्व्वोक्त-
पीठशक्तीः पीठमनुञ्च यजेत् । ततः पुनर्ध्यात्वा
आवाहनादि
पञ्चपुष्पाञ्जलिदानपर्य्यन्तं कर्म्म
समाप्य आवरणपूजां कुर्य्यात् । देव्या दक्षिणे
ॐ संस्कृतायै वाङ्मय्यै नमः । वामे ॐ प्राकृ-
तायै वाङ्मय्यै नमः । ततः केशरेषु अग्नि-
कोणे ऐं हृदयाय नमः । नैरृते ऐं शिरसे
स्वाहा । वायव्ये ऐं शिखायै वषट् । ईशाने
ऐं कवचाय हुँ । मध्ये ऐं नेत्रत्रयाय वौषट् ।
दिक्षु ऐं अस्त्राय फट् । ततः पूर्व्वादिपत्रेषु ॐ
प्रज्ञायै नमः एवं मेधायै श्रुत्यै शक्त्यै स्मृत्यै
वागीश्वर्य्यै मत्यै स्वस्त्यै । ततः पत्राग्रेषु
ब्राह्म्याद्याः पूजयेत् । तथा च निबन्धे ।
“देव्या दक्षिणतः पूज्या संस्कृता वाङ्मयी शुभा ।
प्राकृता वाङ्मयी पूज्या वामतः सर्व्वदा शुभा ॥
इष्ट्वा पूर्ब्बवदङ्गानि प्रज्ञाद्याः पूजयेत् पुनः ।

तोयं वकारः विष्णोः शयनमाकारः केवलेन

आकाररहितेन ककारेण सहितः तेन वागिति
सिद्धं वाग्भवमित्यर्थः । केचित्तु लक्षितलक्षणा-
भयादेवं वदन्ति आकारयुक्तो वकारः के
मस्तके वलते केवलोऽनुस्वारः तद्युक्तेन कका-
रेण सह वर्त्तते तेन क्वामिति । तन्न । निरूढ-
लक्षणायाः शक्तितुल्यत्वात् । वाक् वाग्भवं
इति पर्य्यायः । वस्तुतस्तु ऐं रुं स्वोम् ।
“द्वादशस्वरमुद्धृत्य बिन्दुनादविभूषितम् ।
बिन्दुनादसमायुक्तं वह्निबीजं समुद्धरेत् ॥
षष्ठस्वरसमायुक्तं द्वितीयं बीजमुद्धरेत् ।
चन्द्रबीजं समुद्धृत्य वरुणं योजयेत्ततः ।
त्रयोदशस्वरारूढं बिन्दुनादविभूषितम् ॥”

इति विश्वसारवचनात् वाग्भवबीजमेव । अस्य

पूजादिकं पूर्ब्बवत् । कराङ्गन्यासस्तु द्विरुक्तै-
स्त्रिभिर्ब्बीजैर्विधेयः । तथा च निबन्धे ।
“अङ्गानि कल्पयेन्मन्त्री द्विरुक्तैर्जातिसंयुतैः ॥”
ध्यानन्तु ।
“मुक्ताहारावदातां शिरसि शशिकलालङ्कृतां बाहुभिः स्वै-
र्व्याख्यां वर्णाक्षमालां मणिमयकलसं पुस्तक-ञ्चोद्वहन्तीम् ।
आपीनोत्तुङ्गवक्षोरुहभरविलसन्मध्यदेशा-मधीशां
वाचामीडे चिराय त्रिभुवननमितां पुण्डरीके निषण्णाम् ॥”

एवं ध्यात्वा पूर्ब्बवत् पूजादिकं कुर्य्यात् । अस्य

पुरश्चरणं त्रिलक्षजपः । तथा च ।
“त्रिलक्षं प्रजपेन्मन्त्रं जुहुयात्तद्दशांशतः ।
पायसैराज्यसंसिक्तैः संस्कृते हव्यवाहने ॥” * ॥

अथ पारिजातसरस्वतीमन्त्राः । मन्त्रदेवप्रका-

पारिजातेश्वरी वाणी देवता परिकीर्त्तिता ॥
तृतीयञ्च द्वितीयञ्च बीजशक्ती च तारकम् ।
कीलकं परमेशानि महासारस्वतप्रदम् ॥
षड्दीर्घस्वरसंभिन्नबीजेनाङ्गानि विन्यसेत् ॥”
ततो ध्यानम् ।
“हंसारूढा हरहसितहारेन्दुकुन्दावदाता
वाणी मन्दस्मिततरमुखी मौलिबद्धेन्दुरेखा ।
विद्यावीणामृतमयघटाक्षस्रजादीप्तहस्ता
शुभ्राब्जस्था भवदभिमतप्राप्तये भारती स्यात् ॥”

अस्य पूजादिकं पूर्ब्बोक्तैकादशाक्षरीवत् । पुर-

श्चरणन्तु द्वादशलक्षजपः ।
सितपद्मैर्नागचम्पकैर्व्वा
जुहुयाद्द्वादशसहस्रमिति । इति तन्त्रसारः ॥ * ॥
नदीविशेषस्य पर्य्यायः । प्लक्षसमुद्भवा २ वाक्-
प्रदा ३ ब्रह्मसुता ४ भारती ५ वेदाग्रणीः ६
पयोष्णिजाता ७ वाणी ८ विशाला ९ कुटिला
१० । तज्जलगुणाः । स्वादुत्वम् । पूतत्वम् । सर्व्व-
रुजापहत्वम् । रुच्यत्वम् । दीपनत्वम् । पथ्यत्वम् ।
देहकान्तिकरत्वम् । लघुत्वञ्च । इति राज-
निर्घण्टः ॥ * ॥ सा तु देशभेदे सप्तनाम्नी यथा ।
पुष्करे पितामहयज्ञे आहूता सुप्रभा १ नैमि-
षारण्ये सत्रयाजिभिरृषिभिराहूता काञ्चनाक्षी

प्रज्ञा मेधा श्रुतिः शक्तिः
स्मृतिर्व्वागीश्वरी
मतिः ।
स्वस्तिश्चेति समाख्याता
ब्राह्म्याद्यास्तदनन्त-
रम् ॥”
तद्बहिरिन्द्रादीन् वज्रादींश्च पूजयेत् ।
ततो
धूपादिविसर्ज्जनान्तं कर्म्म समापयेत्
। अस्य
पुरश्चरणं द्वादशलक्षजपः । तथा च ।
“जपेत् द्वादशलक्षाणि तत्सहस्रं
सिताम्बुजैः ।
नागचम्पकपुष्पैर्व्वा जुहुयात्
साधकोत्तमः ॥” * ॥
मन्त्रान्तरं शारदायाम् ।
“वाचस्पतेऽमृते भूयः प्लुवप्लुरिति
कीर्त्तयेत् ।
वागाद्यो मनुराख्यातो
रुद्रसंख्याक्षरोऽपरः ॥”

अस्य पूजादिकं पूर्व्ववत् ।
कराङ्गन्यासन्तु ऐं

अङ्गुष्ठाभ्यां नमः । वाचस्पते
तर्ज्जनीभ्यां
स्वाहा । अमृते मध्यमाभ्यां वषट् ।
प्लुव
अनामिकाभ्यां हुँ । प्लुः कनिष्ठाभ्यां
फट् ।
एवं हृदयादिषु । तथा च निबन्धे ।
‘कुर्य्यादङ्गानि विधिवत् वागाद्यैः
पञ्चभिः पदैः ॥”
ध्यानन्तु ।
“आसीना कमले करैर्जषवटीं पद्मद्वयं
पुस्तकं
बिभ्राणा तरुणेन्दुबद्धमुकुटा
मुक्तेन्दुकुन्दप्रभा ।
भालोन्मीलितलोचना
कुचभराक्रान्ताभव-
द्भूतये

शिकायाम् । स च प्रणवहृल्लेखा संपुटित-
हकारसकारौकारबिन्दुयुक्तः सरस्वती ङेऽन्ता
नतिश्च । अस्य पूजा ।
प्रातःकृत्यादिपीठमन्वन्तं
विन्यस्य ऋष्यादिन्यासं कुर्य्यात् । शिरसि
कण्व-
ऋषये नमः । मुखे तृष्णुप्छन्दसे नमः । हृदि
पारिजातसरस्वत्यै देवतातै नमः । ततो मातृ-
कोक्तकराङ्गन्यासौ कुर्य्यात् । मूर्द्धि्न
भ्रूमध्यनेत्र-
कर्णनासापुटद्वयजिह्वालिङ्गपायुषु एकादशा-
क्षरन्यासः । ततो ह्सां अङ्गुष्ठाभ्यां नम इत्या-
दिना कराङ्गन्यासौ कुर्य्यात् । अन्यत् सर्व्वं पूर्व्व-
वत् । दक्षिणामूर्त्तिसंहितायान्तु ।
“सम्पत्प्रदाया भैरव्या वाग्भवं बीजमालिखेत् ।
तारेण परया देवि संपुटीकृत्य मन्त्रवित् ।
सरस्वत्यै हृदन्तोऽयं रुद्रार्णो मनुरीरितः ॥”
तथाच प्रपञ्चसारे ।
“आद्यन्तप्रणवशक्तिमध्यसंस्था
वाक् भूयो भवति च सरस्वती ङेऽन्ता ।
नत्यन्तो मनुरयमीशसंख्यवर्णः
संप्रोक्तो भजमानः पारिजातः ॥
दक्षिणामूर्त्तिरृषिः प्रोक्तो गायत्री च्छन्द
ईरितम् ।

२ गयदेशे गयराजयज्ञे आहूता विशाला
३
उत्तरकोशलायां औद्दालकमुनियज्ञे समा-
हूता मनोरमा ४ ऋषभद्वीपे कुरुक्षेत्रे
कुरुराज-
यज्ञे समाहूता ओघवती ५ गङ्गाद्वारे दक्ष-
प्रजापतियज्ञे समाहूता सुरेणुः ६
हिमालय-
पर्व्वते ब्रह्मणः पुनर्यज्ञे समाहूता विमलोदा
७ ।
तत्र सप्तसरस्वत्यः समागताः । अतएव
तत्
तीर्थं सप्तसारस्वतनाम्ना ख्यातम् । इति
महा-
भारते शल्यपर्व्व ॥ * ॥
तस्या उत्पत्तिर्ब्रह्मपत्नीत्वकारणञ्चयथा,
--
नारायण उवाच
“सरस्वती सा वैकुण्ठे स्वयं
नारायणान्तिके ।
गङ्गाशापेन कलया कलहाद्भारते सरित् ॥
पुण्यदा पुण्यजननी पुण्यतीर्थस्वरूपिणी
।
पुण्यवद्भिर्निषेव्या च स्थितिः पुण्यवतां
मुने ॥
तपस्विनां तपोरूपा तपस्याकररूपिणी ।
कृतपापेध्मदाहाय ज्वलदग्निस्वरूपिणी ॥
ज्ञाने सरस्वतीतोये मग्नं यैर्म्मानवैर्भुवि ।
तेषां स्थितिश्च वैकुण्ठे सुचिरं हरिसंसदि
॥
भारते कृतपापी च स्नात्वा तत्रावलीलया
।
मुच्यते सर्व्वपापेभ्यो विष्णुलोके
वसेच्चिरम् ॥
चातुर्म्मास्यां पौर्णमास्यामक्षयायां
दिनक्षये ।
व्यतीपाते च ग्रहणेऽन्यस्मिन्
पुण्यदिनेऽपि च ॥
आनुषङ्गेण यः स्नाति हेलया श्रद्धयापि
वा ।
सारूप्यं लभते नूनं वैकुण्ठे स हरेरपि ॥
सरस्वतीमनुं तत्र मासमेकञ्च यो जपेत् ।

| | | |
|---|---|---|
| भूयाद्वागधिदेवता<br>मुनिगणैरासेव्यमाना-<br>निशम् ॥"<br>एवं ध्यात्वा पूर्ब्बवत् पूजादिकं<br>कुर्य्यात् । अस्य<br>पूरश्चरणमेकादशलक्षजपः । तथा च<br>।<br>"रुद्रलक्षं जपेन्मन्त्रं दशांशं<br>जुहुयाद्घृतैः ॥" *<br>मन्त्रान्तरं शारदायाम् ।<br>"तोपस्थं शयनं विष्णोः<br>सकेवलचतुमुखम् ।<br>अघोंशेन्दुयुतो वह्निर्बिन्दुमत्याम्बुमान्<br>भृगुः ।<br>उक्तानि त्रोणि बीजानि सद्भिः<br>सारस्वता-<br>र्थिनाम् ॥" | | महामूर्खः कवीन्द्रश्च स भवेन्नात्र संशयः<br>॥<br>नित्यं सरस्वतीतोये यः स्नाति<br>मुण्डयेन्नरः ।<br>न गर्भवासं कुरुते पुनरेव स मानवः ॥<br>इत्येवं कथितं किञ्चित्<br>भारतीगुणकीर्त्तनम् ।<br>सुखदं पुण्यदं सारं किं भूयः<br>श्रोतुमिच्छसि ॥ * ॥ |

नारद उवाच ।
कथं सरस्वती देवी गङ्गाशापेन भारते ।
कलया कलहेनैव बभूव पुण्यदा सरित् ॥
नारायण उवाच ।
शृणु नारद वक्ष्यामि कथामेतां पुरातनीम् ।
यस्याः श्रवणमात्रेण सर्व्वपापैः प्रमुच्यते ॥
लक्ष्मीः सरस्वती गङ्गा तिस्रो भार्य्या हरेरपि ।
प्रेम्णा समास्तास्तिष्टन्ति सन्ततं हरिसन्निधौ ॥
चकार सैकदा गङ्गा विष्णोर्म्मुखनिरीक्षणम् ॥
सस्मिता च सकामा च सकटाक्षं पुनः पुनः ।
विभुर्ज्जहास तद्वक्त्रं निरीक्ष्य च क्षणं मुदा ।
क्षमां चकार तद्दृष्ट्वा लक्ष्मीर्नैव सरस्वती ॥
बोधयामास तां पद्मा सत्त्वरूपा च सस्मिता ।
क्रोधाविष्टा च सा वाणी न च शान्ता बभूव ह ॥
उवाच गङ्गां भर्त्तारं रक्तास्या रक्तलोचना ।
कम्पिता कीपवेगेन शश्वत्प्रस्फुरिताधरा ॥
सरस्वत्युवाच ।
सर्व्वत्र समताबुद्धिः सद्भर्त्तुः कामिनीं प्रति ।
धर्म्मिष्ठस्य वरिष्ठस्य विपरीता खलस्य च ॥
ज्ञातं सौभाग्यमधिकं गङ्गायां ते गदाधर ।
कमलायाञ्च तत्तुल्यं न च किञ्चिन्मयि प्रभो ॥
गङ्गायाः पद्मया सार्द्धं प्रीतिश्चास्ति सुसम्मता ।
क्षमां चकार तेनेदं विपरीतं हरिप्रिया ॥
किं जीवनेन मेऽत्रैव दुर्भगायाश्च साम्प्रतम् ।
सरस्वतीं करे धृत्वा वासयामास वक्षसि ।
बोधयामास सर्व्वज्ञः सर्व्वज्ञानं पुरातनम् ॥
श्रीनारायण उवाच ।
लक्ष्मि त्वं कलया गच्छ धर्म्मध्वजगृहं शुभे ।
अयोनिसम्भवा योनौ तस्य कन्या भविष्यसि ॥
तत्रैव दैवदोषेण वृक्षत्वञ्च लभिष्यसि ।
मदंशस्यासुरस्यैव शङ्खचूडस्य कामिनी ॥
भूत्वा पश्चाच्च मत्पत्नी भविष्यसि न संशयः ।
त्रैलोक्यपावनी नाम्ना तुलसीति च भारते ॥
कलया च सरिद्भूत्वा शीघ्रं गच्छ वरानने ।
भारते भांरतीशापात् नाम्ना पद्मावती भव ॥
गङ्गे यास्यसि पश्चात्त्वमंशेन विश्वपावनी ।
भारतं भारतीशापात् पापदाहाय पापिनाम् ॥
भगीरथस्य तपसा तेन नीता सुदुष्करात् ।
नाम्ना भागीरथी पूता भविष्यसि महीतले ॥
मदंशस्थ समुद्रस्य जाया भव ममाज्ञया ।
मत्कलांशस्य तस्यैव शान्तनोश्च सुरेश्वरि ॥ * ॥
गङ्गाशापेन कलया भारतं गच्छ भारति ।
कलहस्य फलं भुङ्क्ष्व सपत्नीभ्यां सहाच्युते ॥
स्वयञ्च ब्रह्मसदनं ब्रह्मणः काभिनी भव ।
गङ्गा यातु शिवस्थानमत्र पद्मैव तिष्ठतु ॥
शान्ता च क्रोधरहिता मद्भक्ता सत्त्वरूपिणी ।
महासाध्वी महाभागा सुशीला धर्म्मचारिणी ॥
यदंशकलया सर्व्वा धर्म्मिष्ठाश्च पतिव्रताः ।
कलया तुलसीरूपा धर्म्मध्वजसुता सती ।
भूत्वा कदा लमिष्यामि त्वत् पादाम्बुजमच्युत ॥
वृक्षरूपा भविष्यामि त्वदधिष्ठातृदेवता ।
मामुद्धरिष्यसि कदा तन्मे ब्रूहि कृपानिधे ॥
गङ्गा सरस्वतीशापात् यदि यास्यति भारतम् ।
सा केन मुक्ता पापाच्च कदा त्वां वा लभि-ष्यति ॥
गङ्गाशापेन सा वाणी यदि यास्यति भारतम् ।
कदा शापाद्विनिर्मुच्य लभिष्यति पदं तव ॥
तां वाणीं ब्रह्मसदनं गङ्गां वा शिवमन्दिरम् ।
गन्तुं वदसि हे नाथ तत् क्षमस्व च ते वचः ॥
इत्युक्त्वा कमला कान्तपदं धृत्वा ननाम च ।
स्वकेशैर्वेष्टनं कृत्वा रुरोद च पुनः पुनः ॥
उवाच पद्मनाभस्तां पद्मां कृत्वा स्ववक्षसि ।
ईषद्धास्यप्रसन्नास्यो भक्तानुग्रहकातरः ॥
श्रीनारायण उवाच ।
त्वद्वाक्यमाचरिष्यामि स्ववाक्यञ्च सुरेश्वरि ।
शमताञ्च करिष्यामि शृणु तत्क्रममेव च ॥
भारती यातु कलया सरिद्रूपा च भारतम् ।
अर्द्धांशा ब्रह्मसदनं स्वयं तिष्ठतु मद्गृहे ॥
भगीरथेन नीता सा गङ्गा यास्यति भारतम् ।
पूतं कर्त्तुं त्रिभुवनं स्वयं तिष्ठतु मद्गृहे ॥
तत्रैव चन्द्रमौलेश्च मौलिं प्राप्स्यति दुर्लभम् ।
ततः स्वभावतः पूताप्यतिपूता भविष्यति ॥
कलांशांशेन त्वं गच्छ भारतं कमले भव ।
पद्मावती सरिद्रूपा तुलसी वृक्षरूपिणी ॥
कलेः पञ्चसहस्रे च गते वर्षे च मोक्षणम् ।
युष्माकं सरिताञ्चैव मद्गृहञ्चागमिष्यति ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे । ६ । १ -- ८९ ॥

**सरस्वान्,** [त्] पुं, (सरो नीरमस्त्यस्येति

निष्फलं जीवनं तस्या या पत्युः
प्रेमवञ्चिता ॥
त्वां सर्व्वेशं सत्त्वरूपं ये वदन्ति मनीषिणः
।
ते च मूर्खा न वेदज्ञा न जानन्ति मतिं तव
॥
सरस्वतीवचः श्रुत्वा दृष्ट्वा तां
कोपसंयुताम् ।
मनसा स समालोच्य प्रजगाम बहिःसभाम्
॥
गते नारायणे गङ्गामुवाच निर्भयं रुषा ।
वागधिष्ठातृदेवी सा वाक्यं श्रवणदुष्करम्
॥
हे निर्लज्जे हे सकामे स्वामिगर्व्वं करोषि
किम् ।
अधिकं स्वामिसौभाग्यं
विज्ञापयितुमिच्छसि ॥
मानचूर्णं करिष्यामि तवाद्य हरिसन्निधौ ।
किं करिष्यति ते कान्तो ममैव
कान्तवल्लभे ॥
इत्येवमुक्त्वा गङ्गायाः केशं ग्रहीतुमुद्यता ।
वारयामास तां पद्मा मध्यदेशे स्थिता
सती ॥
शशाप वाणी तां पद्मां महाकोपवती सती
।
वृक्षरूपा सरिद्रूपा भविष्यसि न संशयः ॥
अत्युन्नताञ्च तां दृष्ट्वा कोपप्रस्फुरिताधरा
।
उवाच गङ्गा तां देवीं पद्माञ्च रक्तलोचना ॥
गङ्गोवाच ।
त्वमुत्सृज महोग्राञ्च पद्मे किं मे करिष्यति
।
वाग्दुष्टा वागधिष्ठात्री देवीयं कलहप्रिया ॥
इत्येवमुक्त्वा सा देवी वाण्यै शापं
ददाविति ।
सरित्स्वरूपा भवतु सा या त्वाञ्च शशाप
ह ॥
अधोमर्त्यं सा प्रयातु सन्ति यत्रैव पापिनः
।
कलौ तेषाञ्च पापांशं लभिष्यसि न संशयः
॥
शान्तरूपाः सुशीलाश्च प्रतिविश्वेषु
योषितः ॥
तिस्रो भार्य्यास्त्रिशालाश्च त्रयो भृत्याश्च
बान्धवाः ।
ध्रुवं वेदविरुद्धाश्च न ह्येते मङ्गलप्रदाः ॥
गच्छ गङ्गे शिवस्थानं ब्रह्मस्थानं सरस्वती
।
अत्र तिष्ठतु मद्गेहे सुशीला कमलालया ॥
इत्युक्त्वा जगतां नाथो विरराम च नारद ।
अत्युच्चै रुरुदुर्देव्यः समालिङ्ग्य
परस्परम् ॥
ताश्च सर्व्वाः समालोच्य क्रमेणोचुः
सदीश्वरम् ।
कम्पिताः साश्रुनेत्राश्च शोकेन च भयेन च
॥
सरस्वत्युवाच ।
विदायं देहि मे नाथ दुष्टाया जन्मशोधनम्
।
सत्स्वामिना परित्यक्ता कुतो जीवन्ति
काः
स्त्रियः ॥
देहत्यागं करिष्यामि योगेन भारते ध्रुवम् ।
अत्युच्छ्रितो निपतनं प्राप्नुमर्हति
निश्चितम् ॥
गङ्गोवाच ।
अह केनापराधेन त्वया त्यक्ता जगतपते ।
देहत्यागं करिष्यामि निर्दोषाया वधं लभ
॥
निर्दोषां कामिनीं त्यागं करोति यो जनो
भवे ।
स याति नरकं कल्पं किं ते सर्वेश्वरस्य वा
॥
महालक्ष्मीरुवाच ।
नाथ सत्त्वस्वरूपस्त्वं कोपः कथमहो तव
।
प्रसादं कुरु भार्य्ये द्वे सदीशस्य क्षमा वरम्
॥
भारतं भारतीशापात् यास्यामि कलया
विभो ।
कतिकालं स्थितिस्तत्र कदा द्रक्ष्यामि ते
पदम् ॥
मतुप् । तसौ मत्वर्थे इति भत्वान्न
पदकार्य्यम् ।)
समुद्रः । इत्यमरः । १ । १० । १ ॥ नदः ।
रसिके,
त्रि । इति मेदिनी ॥

**सरा**, स्त्री, (सरति गच्छतीति । सृ + अच् ।
टाप् ।) निर्झरः । इति भरतद्विरूपकोषः ॥
प्रसारिणी । इति राजनिर्घण्टः ॥

**सरावः**, पुं, (सरात् सरणात् अवतीति । अव
रक्षणे + अच् ।) शरावः । इति भरतद्वि-
रूपकोषः ॥

**सरिः**, पुं, स्त्री, (सरतीति । सृ + इन् ।) निर्झरः ।
इति हेमचन्द्रः ॥

**सरिका**, स्त्री, हिङ्गुपत्री । इति शब्दचन्द्रिका ॥
गमनकर्त्री च ॥

**सरित्**, स्त्री, (सरतीति । सृ गतौ + “हृसृरुहि-
युषिभ्य इतिः ।” उणा० १ । ९९ । इति
इतिः ।)
नदी । इत्यमरः । १ । १० । २९ ॥ (यथा,
देवीमाहात्म्ये ।
“सरितो मार्गवाहिन्यस्तथासंस्तत्र पातिते
॥”)
सूत्रम् । इति शब्दमाला ॥ दुर्गा । यथा, --
“क्रिया कारणरूपत्वात् सरणाच्च
सरिन्मता ।
सङ्गमाद्गमनाद्गङ्गा लोके देवी विभाव्यते
॥”
इति देवीपुराणे ४५ अध्यायः ॥

| | | |
|---|---|---|
| इत्येवं वचनं श्रुत्वा तां शशाप सरस्वती ।<br>त्वमेव यास्यसि महीं पापिपापं लभिष्यसि ॥<br>एतस्मिन्नन्तरे तत्र भगवानाजगाम ह ।<br>चतुर्भुजश्चतुर्भिश्च पार्षदैश्च चतुर्भुजैः ॥ | दास्यन्ति पापिनः पापं मह्यं स्नानावगाहनात् ।<br>केन तेन विमुक्ताहमागमिष्यामि त्वत्पदम् ॥ | |

**सरित्पतिः**, पुं, (सरितां पतिः ।) समुद्रः ।

इत्यमरः । १ । १० । १ ॥ (यथा,
भागवते । ५ । १७ । ७ ।
"एवं माल्यवच्छिखरान्निष्पतन्तीतत
उपरत-
वेगा केतुमालमभि वंक्षुः प्रतीच्यां दिशि
सरित्-
पतिं प्रविशति ॥")

**सरित्वान्**, [त्] पुं, (सरितः सन्त्यस्येति । सरित् +

मतुप् । मस्य वः ।) समुद्रः । इति
केचित् ॥

**सरित्सुतः**, पुं, (सरितो गङ्गायाः सुतः ।) भीष्मः ।

गङ्गापुत्रत्वात् ॥

**सरितांनाथः**, पुं, (सरितां नदीनां नाथः । अलुक्

समासः ।) समुद्रः । यथा, --
"त्वं देव सरितांनाथ ! त्वं देवि सरितां
वरे ।
उभयोः सङ्गमे स्नात्वा मुञ्चामि
दुरितानि वै ॥"
इति प्रायश्चित्ततत्त्वे
गङ्गासागरस्नानमन्त्रः ॥

**सरताम्पतिः**, पुं, (सरितां पतिः । अलुक् समासः ।)

समुद्रः । इति शब्दरत्नावली ॥ (यथा,
कुमारे ।
२ । ३७ ।
"तस्योपायनयोग्यानि रत्नानि
सरिताम्पतिः ।
कथमप्यम्भसामन्तः आनिष्पत्तेः
प्रतीक्षते ॥")

**सरिद्वरा**, स्त्री, (सरित्सु वरा श्रेष्ठा ।) गङ्गा ।

इति हेमचन्द्रः ॥ (यथा, महाभारते । १
। ९६ । ८ ।
"महाभिषस्तु तं दृष्ट्वा नदी
धैर्य्याच्च्युतं नृपम् ।

**सरूपः**, त्रि, (समानं रूपं यस्य । "ज्योतिर्जन

पदेति ।" ६ । ३ । ८५ । इति समानस्य सः
।)
सदृशः । ससानरूपः । इति जटाधरः ॥
(यथा,
मुण्डकोपनिषदि । २ । १ । १ ।
"यथा सुदीप्तात् पावकात् विस्फुलिङ्गाः
सहस्रशः प्रभवन्ते सरूपाः ।
तथाक्षराद्विविधाः सोम्य भावाः
प्रजायन्ते तत्र चैवापि यन्ति ॥")

**सरूपता**, स्त्री, (सरूपस्य भावः । तल् । टाप् ।)

समरूपत्वम् । तुल्यता । सरूपशब्दात् तप्रत्य-
येनापा निष्पन्ना ॥

**सरोजं**, क्ली, (सरसि जायते इति । जन + डः ।)

पद्मम् । इति हेमचन्द्रः ॥ (यथा, कुमारे ।
५ । २७ ।
"मुखेन सा पद्मसुगन्धिना निशि
प्रवेपमानाधरपत्रशोभिना ।
तुषारवृष्टिक्षतपद्मसम्पदां
सरोजसन्धानमिवाकरोदपाम् ॥")
सरोवरजाते, त्रि ॥

**सरोजन्म**, [न्] क्ली, (सरसः जन्म उत्पत्तिर्यस्य ।)

पद्मम् । इति हेमचन्द्रः ॥

**सरोजिनी**, स्त्री, (सरोजानि सन्त्यस्यामिति ।

सरोज + "पुष्करादिभ्यो देशे ।" ५ । २ ।
१३५ ।
इति इनिः ।) कमलाकरः । पद्मम् । इति
मेदिनी ॥ पद्मसमूहः । इति रत्नमाला ॥
(यथा, साहित्यदर्पणे । १० । ७०३ ।
"निसर्गसौरभोद्भ्रान्तभृङ्गसङ्गीतशालिनी ।
उदिते वासराधीशे स्मेराजनि सरोजिनी ॥")

**सरोजी**, [न्] पुं, (सरोजं उत्पत्तिस्थानत्वेनास्त्य-

स्येति । इनिः ।) ब्रह्मा । इति शब्दरत्नावली-
त्रिकाण्डशेषौ ॥

**सरोत्सवः**, पुं, (सरे सरोवरे उत्सवो यस्य ।)

रत्नावली ॥ तल्लक्षणादि पुष्करिणीशब्दे
द्रष्टव्यम् । तस्य जलगुणाः सरःशब्दे
द्रष्टव्याः ॥

**सर्कः**, पुं, वायुः । मनः । प्रजापतिः । इति संक्षिप्त-

सारोणादिवृत्तिः ॥

**सर्गः**, पुं, (सृज् + घञ् ।) स्वभावः । निर्म्मोक्षः ।

(यथा, महाभारते । १३ । १६२ । ३५ ।
"राजमार्गे गवां मध्ये धान्यमध्ये च
धर्म्मिणः ।
नोपसेवन्ति राजेन्द्र सर्गं मूत्रपुरीषयोः ॥")
निश्चयः । (यथा, रघुः । ३ । ५१ ।
"गृहाण शस्त्रं यदि सर्ग एष ते
न खल्वनिर्जित्य रघुं कृती भवान् ॥")
अध्यायः । (यथा, साहित्यदर्पणे । ६ ।
५५९ ।
"नातिस्वल्पा नातिदीर्घाः सर्गा
अष्टाधिका
इह ॥")
सृष्टिः । इत्यमरः । ३ । ३ । २२ ॥
(यथा,
मनुः । १ । २९ ।
"हिंस्राहिंस्रे मृदुक्रूरे धर्म्माधर्म्मावृतानृते ।
यद्यस्य सोऽदधात् सर्गे तत्तस्य
स्वयमाविशत् ॥"
संसारः । यथा, गीतायाम् । ५ । १९ ।
"इहैव तैर्जितः सर्गो येषां साम्ये स्थितं
मनः ॥")
मोहः । उत्साहः । इति मेदिनी ॥
अनुमतिः ।
इति हेमचन्द्रः ॥ * ॥ सर्गविवरणं यथा, --
"अव्याकृतगुणक्षोभात् महतस्त्रिवृतोऽहमः
।
भूतसूक्ष्मेन्द्रियार्थानां सम्भवः सर्ग उच्यते
॥"
इति श्रीभागवतम् ॥
नवधासर्गो यथा, --
"सर्गो नवविधस्तस्य प्राकृतो वैकृतस्तु
यः ।

तमेव मनसाध्यायन्त्युपावर्त्तत्सरिद्वरा ॥”

नदीश्रेष्ठे, त्रि । यथा, महाभारते । १ । ७८ । ९ ।

“सा तमग्निसमं विप्रमनुचिन्त्य सरिद्वरा ।
शतधा विद्रुता यस्माच्छतद्रुरिति विश्रुता ॥”)

**सरिन्नाथः**, पुं, (सरितां नाथः ।) समुद्रः । इति राजनिर्घण्टः ॥

**सरिमा** [न्] पुं, (सरतीति । सृ + “हृ-भृ-धृ-स्तृ-शृभ्य इमनिच् ।” उणा० ४ । १४७ । इति इम-निच् ।) गमनम् । वायुः । इत्युणादिकोषः ॥

**सरिलं**, क्ली, (सलिलम् । रलयोरैक्यात् लस्य रः ।)

सलिलम् । इत्यमरटीकायां भरतः ॥

**सरिषपः**, पुं, (सृ गतौ + अपः युगागमश्च । ततः पृषोदरादित्वात् साधुः । इत्युणादिटीकायां उज्ज्वलदत्तः । ३ । १४१ ।) सर्षपः । इति त्रिका-ण्डशेषः ॥

**सरी**, स्त्री, (सरि + कृदिकारादिति वा ङीष् ।)

निर्झरः । इति भरतद्विरूपकोषः ॥

**सरीसृपः**, पुं, (कुटिलं सर्पतीति । सृप् + यङ् लुक् + पचाद्यच् ।) सर्पः । इत्यमरः । १ । ८ । ७ ॥

(यथा, महाभारते । ३ । २ । ३ ।

“वनञ्च दोषबहुलं बहुव्यालसरीसृपम् ।
परिक्लेशश्च वो मन्ये ध्रुवं तत्र भविष्यति ॥” * ॥

जङ्गमे, त्रि । इति स्वामी ॥ यथा, भागवते । ५ । १८ । २७ ।

“पातुं न शेकुर्द्विपदश्चतुष्पदः ।
सरीसृपं स्थाणु यदत्र दृश्यते ॥”)

सारसपक्षी । इति शब्दरत्नावली ॥

**सरोधः**, त्रि, रुद्धः । रोधेन सह वर्त्तमानः । इति बहुव्रीहिसमासनिष्पन्नः ॥

**सरोरुट्**, [ह्] क्ली, (सरसि रोहतीति । रुह + क्विप् ।) पद्मम् । इति हेमचन्द्रः ॥

**सरोरुहं**, क्ली, (सरसि रोहतीति । रुह + कः ।)

पद्मम् । इति रत्नमाला ॥ (यथा, भागवते । १ । १५ । २८ ।

“एवं चिन्तयतो जिष्णोः कृष्णपादसरोरुहम् ।
सौहार्द्देनातिगाढेन शान्तासीद्विमला मतिः ॥”)

**सरोरुहासनः**, पुं, (सरोरुहमासनं यस्य ।) ब्रह्मा । इति हेमचन्द्रः ॥

**सरोवरः**, पुं, (सरःसु वरः श्रेष्ठः पद्माकरत्वात् ।)

जलाशयविशेषः । (यथा, भागवते । ८ । २४ । २१ ।

“तत आदाय सा राज्ञा क्षिप्ता राजन् सरोवरे ।
तदावृत्यात्मना सोऽयं महामीनोऽन्ववर्द्धत ॥”)

तत्पर्य्यायः । पद्माकरः २ कासारः ३ तडागः ४ तडाकः ५ तटाकः ६ सरसः ७ सरसी ८ सरः ९ सरम् १० सरकम् ११ । इति शब्द-

कालद्रव्यगुणैरस्य त्रिविधः प्रतिसंक्रमः ॥
आद्यस्तु महतः सर्गो गुणवैषम्यमात्मनः ।
द्बितीयस्त्वहमो यत्र द्रव्यज्ञानक्रियोदयः ॥
भूतसर्गस्तृतीयस्तु तन्मात्रो द्रव्यशक्तिमान् ।
चतुर्थ ऐन्द्रियः सर्गो यस्तु ज्ञानक्रियात्मकः ॥
वैकारिको देवसर्गः पञ्चमो यन्मयं मनः ।
षष्ठस्तु तमसः सर्गो यस्त्वबुद्धिकृतः प्रभोः ॥
षडिमे प्राकृताः सर्गा वैकृतानपि मे शृणु ।
रजोभाजो भगवतो लीलेयं हरिमेधसः ॥
सप्तमो मुख्यसर्गस्तु षड्विधस्तस्थुषाञ्च यः ।
वनस्पत्योषधिलतात्वक्सारावीरुधो द्रुमाः ।
उत्स्रोतसस्तमःप्राया अन्तःस्पर्शा विशेषिणः ।
तिरश्चामष्टमः सर्गः सोऽष्टाविंशद्विधो मतः ॥
अविदो भूरितमसो घ्राणज्ञा हृद्यवेदिनः ।
गौरजो महिषः कृष्णः शूकरो गवयो रुरुः ॥
द्बिशफाः पशवश्चेमे अविरुष्ट्रश्च सत्तम ।
खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा ॥
एते चैकशफाः क्षत्तः शृणु पञ्चनखान् पशून् ।
श्वा शृगालो वृको व्याघ्रो मार्जारः शशशल्लकौ ॥
सिंहः कपिर्गजः कूर्म्मो गोधा च मकरादयः ।
कङ्कगृध्रवकश्येनभासभल्लकवर्ह्णिः ॥
हंससारसचक्राह्वकाकोलूकादयःखगाः ।
अर्व्वाक्स्रोतस्तु नवमः क्षत्तरेकविधो नृणाम् ॥
रजोऽधिकाः कर्म्मपरा दुःखे च सुखमानिनः ।
वैकृतास्त्रय एवैते देवसर्गश्च सत्तम ॥

| | | |
|---|---|---|
| **सरुः**, पुं, (सृ + उन् ।) त्सरुः । खड्गमुष्टिः । इत्यमरटीकासारसुन्दरी ॥<br>**सरुः**, त्रि, (सृ + उन् ।) सूक्ष्मः । इति भूरि-प्रयोगः ॥ | | |

वैकारिकस्तु यः प्रोक्तः कौमारस्तूभयात्मकः ।
देवसर्गश्चाष्टविधो विबुधाः पितरोऽसुराः ॥
गन्धर्व्वाप्सरसः सिद्धा यक्षरक्षांसि चारणाः ।
भूतप्रेतपिशाचाश्च विद्याध्राः किन्नरादयः ॥
दशैते विदुराख्याताः सर्गास्ते विश्वसृक्कृताः ।
अतः परं प्रवक्ष्यामि वंशं मन्वन्तराणि च ॥
एवं रजःप्लुतः स्रष्टा कल्पादिष्वात्मभूर्हरिः ।
सृजत्यमोघसंकल्प आत्मैवात्मानमात्मना ॥”
इति च श्रीभागवते । ३ । १० । १४-२६ ॥
(विष्णुः । इति महाभारतम् । १३ । १४१ । ३० ॥
शिवः । इति च तत्रैव । १३ । १७ । १४८ ॥)

**सर्गबन्धः**, पुं, (सर्गैरध्यायैर्ब्बन्धो यस्य ।) महा-
काव्यम् । इति भूरिप्रयोगः ॥ तल्लक्षणं यथा, --
“सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम् ।
आशीर्नमष्क्रिया वस्तुनिर्द्देशो वापि तन्मुखम् ॥
इतिहासकथोद्भूतमितरद्वा तदाश्रयम् ।
चतुर्व्वर्गफलायत्तं चतुरोदात्तनायकम् ॥
नगरार्णवशैलर्त्तुचन्द्रार्कोदयवर्णनैः ।
उद्यानसलिलक्रीडामधुपानरतोत्सवै ॥
विप्रलम्भैर्व्विवाहैश्च कुमारोदयवर्णनैः ।
मन्त्रदूतप्रयाणाजिनायकाभ्युदयैरपि ॥
अलङ्कृतमसंक्षिप्तं रसभावनिरन्तरम् ।
सर्गैरनतिविस्तीर्णैः श्रव्यवृत्तैः सुसन्धिभिः ॥
सर्व्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जनम् ।
काव्यं कल्पान्तरस्थायि जायते सदलङ्कृति ॥”
इति दण्डी ॥

**सर्ज्ज**, अर्ज्जने । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।) सिसर्ज्जयिषति । सर्ज्जति

**सर्ज्जमणिः**, पुं, (सर्ज्जस्य मणिरिव ।) धूनकः ।
इति त्रिकाण्डशेषः ॥

**सर्ज्जरसः**, पुं, (सर्ज्जस्य रसः ।) शालवृक्षनिर्यासः ।
धूना इति भाषा । (यथा, महाभारते । १ । १४५ । ९ ।
“शणसर्ज्जरसादीनि यानि द्रव्याणि कानिचित् ।
आग्नेयान्युत सन्तीह तानि तत्र प्रदापय ॥”)
तत्पर्य्यायः । यक्षधूपः २ अरालः ३ सर्व्वरसः ४
बहुरूपः ५ । इत्यमरः । २ । ६ । १२७ ॥ रालः ६
वह्निवल्लभः ७ । इति भरतधृतरभसः ॥ शालजः
८ शालनिर्यासः ९ सर्ज्ज्यः १० धूनकः ११ शाल-
सारः १२ । इति रत्नमाला ॥ विरूपः १३ ।
इति शब्दरत्नावली ॥ शालवेष्टः १४ अग्नि-
वल्लभः १५ सर्ज्जमणिः १६ । इति हेमचन्द्रः ॥
राजनिर्घण्टोक्तपर्य्यायगुणौ रालशब्दे द्रष्टव्यौ ॥

**सर्ज्जिः**, स्त्री, (सर्ज्ज अर्ज्जने + इन् ।) सर्ज्जिका-
क्षारः । इति रत्नमाला ॥

**सर्ज्जिका**, स्त्री, (सर्ज्जिरेव । स्वार्थे कन् । टाप् ।)
सर्ज्जिकाक्षारः । इति जटाधरः ॥ (नदी-
विशेषः । इति भरतः ॥)

**सर्ज्जिकाक्षारः**, पुं, (सर्ज्जिका एव क्षारः ।)
यद्वा, सर्ज्जिकाया नद्याः क्षारः । इति भरतः ॥
साचिक्षार इति साजिमाटि इति च भाषा ॥
तत्पर्य्यायः । कापोतः २ सुखवर्च्चकः ३ सौव-
र्च्चलम् ४ रुचकम् ५ । इत्यमरः । २ । ९ । १०९ ॥
सृजिकाक्षारः ६ सर्ज्जिका ७ क्षारः ८ । इति
तट्टीका । खर्ज्जका ९ स्वर्ज्जिका १० । इति
शब्दरत्नावली ॥ सुरवर्च्चकः ११ । इति जटा-
धरः ॥ सर्ज्जिक्षारः १२ सर्ज्जिकः १३ सर्ज्जी १४
सुखोर्ज्जिकः १५ सुवर्च्चिकः १६ सुवर्च्ची १७

**सर्ज्यः**, पुं, (सर्ज्जस्येदमिति । यत् ।) सर्जरसः ।
इति रत्नमाला ॥ अर्जनीये, त्रि ॥

**सर्पः**, पुं, (सृप्यते इति । सृप + घञ् ।) नाग-
केशरः । इति रत्नमाला ॥ (सृप + भावे घञ् ।)
गमनम् । इति सृपधात्वर्थदर्शनात् । (सर्पति
इतस्ततो गच्छतीति । सृप + अच् ।) श्मश्रु-
धारी म्लेच्छजातिविशेषः । पुरा अयं क्षत्त्रिय
आसीत् । सगरराजेन अस्य वेदयागादौ अन-
धिकारित्वं कृत्वा वेशान्यत्वं धर्म्मनाशञ्च चकार ।
यथा, महाभारते हरिवंशे २४ अध्याये ।
“सगरः स्वां प्रतिज्ञान्तु गुरोर्व्वाक्यं निशम्य च ।
धर्म्मं जघान तेषां वै वेशान्यत्वं चकार ह ॥
अर्द्धं शकानां शिरसो मुण्डयित्वा व्यसर्जयत् ।
यवनानां शिरः सर्व्वं काम्बोजानां तथैव च ॥
पारदान् मुक्तकेशांस्तु पह्नवान् श्मश्रुधारिणः ।
निःस्वाध्यायवषट्काराःकृतास्तेन महात्मना ॥
शका यवनकाम्बोजाः पारदाः पह्नवास्तथा ।
कोलिसर्पा माहिषका दार्व्वाश्चोलाः सकेरलाः ॥
सर्व्वे ते क्षत्त्रियास्तात धर्म्मस्तेषां निराकृतः ।
वशिष्ठवचनाद्राजन् सगरेण महात्मना ॥”

धनं लोकः । इति दुर्गादासः ॥

**सर्ज्जः**, पुं, (सृजति निर्य्यासादीनिति । सृज + अच् ।) शालवृक्षः । इत्यमरः । ३ । ४ । ४४ ॥
सर्ज्जरसः । इति भरतः ॥ पीतशालः । इति शब्दरत्नावली ॥ (यथा, ऋतुसंहारे । २ । १७ ।
“कदम्बसर्ज्जार्ज्जुननीपकेतकी-
र्विकम्पयं स्तत्कुसुमाधिवासितः ।
सशीकराम्भोधरसङ्गशीतलः
समीरणः कं न करोति सोत्सुकम् ॥”)

**सर्ज्जकः**, पुं, (सर्ज्ज एव । स्वार्थे कन् ।) पीत-शालः । इत्यमरः । २ । ४ । ४४ ॥ (यथा, भावप्रकाशे । १ । १ ।
“सर्जकोऽजककर्णः स्यात् शालो मरिच-
पत्रकः ॥”)
शालः । इति जटाधरः ॥

**सर्ज्जगन्धा**, स्त्री, (सर्ज्जस्येव गन्धो यस्याः ।) रास्ना । इति रत्नमाला ॥

**सर्ज्जनं**, क्ली, (सृज + ल्युट् ।) सैन्यपश्चाद्भागः ।
इति शब्दरत्नावली ॥ विसर्ज्जनम् । सृष्टिः । इति सृजधात्वर्थदर्शनात् ॥ (यथा, सर्व्वदर्शन-
संग्रहे अक्षपाददर्शने ।
“तस्मादीश्वरस्य जगत्सर्ज्जणं न युज्यते ॥”)

**सर्ज्जनिर्यासकः**, पुं, (सर्ज्जस्य निर्य्यासः । स्वार्थे कन् ।) रालः । इति राजनिर्घण्टः ॥

सुखवर्च्चाः १९ । अस्य गुणाः । पटुत्वम् । कटुत्वम् । उष्णत्वम् । कफवातोदरार्त्तिनाशित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
“पाक्यक्षारो यवक्षारो यावशूको यवाग्रजः ।
सर्ज्जिकोऽपि स्मृतः क्षारः कापोतः
सुखवर्च्चकः ॥
कथितः सर्ज्जिकाभेदो विशेषज्ञैः सुवर्च्चिका ।
यवक्षारो लघुः स्निग्धः सुसूक्ष्मो वह्निदीपनः ॥
निहन्ति शूलं वातामश्लेष्मश्वासगलामयान् ।
पाण्ड्वर्शोग्रहणीगुल्मानाहप्लीहहृदामयान्॥
सर्ज्जिकाल्पगुणा तस्माद्विशेषाद्गुल्मशूलहृत् ।
सुवर्च्चिका सर्ज्जिकावद्बोद्धव्या गुणतो जनैः ॥”
इति भावप्रकाशः ॥

**सर्ज्जिक्षारः**, पुं, (सर्ज्जिरेव क्षारः ।) सर्ज्जिकाक्षारः । इति राजनिर्घण्टः ॥

**सर्ज्जी**, स्त्री, (सर्ज्जि + वा ङीष् ।) सर्जिकाक्षारः । इति राजनिर्घण्टः ॥

**सर्ज्जः**, पुं, (सर्ज्जति उपार्ज्जयतीति । सर्ज्ज अर्ज्जने + अच् ।) बणिक् । इति मेदिन्युणादिकोषौ ॥

**सर्ज्जूः**, स्त्री, (सर्ज्जतीति । सर्ज्ज + “कृषिचमि-तनिधनीति ।” उणा० १ । ८२ । इति ऊः ।) विद्युत् । इति मेदिनी ॥ अभिसारः । हारः । इति शब्दरत्नावली ॥

हिंस्रजन्तुविशेषः । साप इति भाषा । तत्-
पर्य्यायः । पृदाकुः २ भुजगः ३ भुजङ्गः ४
अहिः ५ भुजङ्गमः ६ आशीविषः ७ विषधरः
८ चक्री ९ व्यालः १० सरीसृपः ११ कुण्डली
१२ गूढपात् १३ चक्षुःश्रवाः १४ काकोदरः १५
फणी १६ दर्व्वीकरः १७ दीर्घपृष्ठः १८ दन्द-
शूकः १९ विलेशयः २० उरगः २१ पन्नगः २२
भोगी २३ जिह्मगः २४ पवनाशनः २५ । इत्य-
मरः । १ । ८ । ३ ॥ विलशयः २६ कुम्भीनसः
२७ द्विरसनः २८ भेकभुक् २९ श्वसनोत्सुकः
३० फणाधरः ३१ फणधरः ३२ फणावान् ३३
फणवान् ३४ फणाकरः ३५ फणकरः ३६ सम-
कोलः ३७ व्याडः ३८ दंष्ट्री ३९ विषास्यः ४०
गोकर्णः ४१ उरङ्गमः ४२ गूढपादः ४३ विल-
वासी ४४ दर्व्विभृत् ४५ हरिः ४६ । इति शब्द-
रत्नावली ॥ प्रचलाकी ४७ द्विजिह्वः ४८ जल-
रुण्डः ४९ कञ्चुकी ५० चिकुरः ५१ भुजः ५२ ।
इति जटाधरः ॥
अस्योत्पत्तिव्युत्पत्ती यथा,
“अप्रियेणास्य तान् दृष्ट्वा केशाः शीर्य्यन्त वेधसः ।
हीनाः स्वशिरसो भूयः समरोहन् ततः शिरः ।

|  |  |  |
| --- | --- | --- |
|  |  | सर्पणात्तेऽभवन् सर्पा हीनत्वादहयः स्मृताः ॥”<br>इति वह्निपुराणे सर्गकथननामाध्यायः ॥ * ॥<br>सर्पाणामुत्सवतिथिर्य्यथा, --<br>सुमन्तुरुवाच ।<br>“पञ्चमी दयिता राजन् नागानां नन्दिवर्द्धिनी ।<br>पञ्चम्यां किल नागानां भवतीत्युत्सवो महान् ॥<br>वासुकिस्तक्षकश्चैव कालीयो मणिभद्रकः ।<br>ऐरावतो धृतराष्ट्रः कर्क्कोटकधनञ्जयौ ॥<br>एते प्रयच्छन्त्यभयं प्राणिनां प्राणजीविनाम् ।<br>पञ्चम्यां स्नापयन्तीह नागान् क्षीरेण ये नराः ॥<br>तेषां कुले प्रयच्छन्ति अभयं प्राणदक्षिणम् ।<br>शप्ता नागा यदा मात्रा दह्यमाना दिवानिशम् । |

निर्व्वासयन्ति स्नपनर्गवां क्षीरेण मिश्रितैः
।
ये स्नापयन्ति वै नागान् भक्त्या
श्रद्धासमन्विताः ॥
शतानीक उवाच ।
मात्रा शप्ताः कथं नागाः कारणं संवदस्व वै
।
कथं वानन्दकरणं कस्य वा संप्रसादजम्
॥
सुमन्तुरुवाच ।
उच्चैःश्रवा अश्वरत्नं श्वेतो
जातोऽमृतोद्भवः ।
तं दृष्ट्वा चाब्रवीत् कद्रुर्नागानां जननी
स्वसा ॥
अश्वरत्नमिदं श्वेतं संपश्येऽमृतसम्भवम्
।
कृष्णांश्च पश्यसे बालान् स वै श्वेतः
सुता हयैः ॥
विनतोवाच ।
सर्व्वश्वेतो हयवरो नास्य कृष्णो न
लोहितः ।
कथं त्वं पश्यसे कृष्णं विनतोवाच तां
स्वसा ॥
कद्रुरुवाच ।
पश्येऽहमेकनयना कृष्णबालसमन्वितम् ।
द्विनेत्रा त्वन्तु विनते न पश्यसि पणं कुरु
॥
विनतोवाच ।
अहं दासी भवित्री ते कृष्णे केशे प्रदर्शिते ।
न चेद्दर्शनतो कद्रुर्मम दासी भविष्यसि ॥
एवं तेऽविनयं कृत्वा गते क्रोधसमन्विते ।
विनतास्वसा च शयने
कद्रुर्जिह्ममचिन्तयत् ॥
आहूय पुत्रान् प्रोवाच बाला भूत्वा
हयातने ।
तिष्ठध्वं विपणे जेष्ये विनतां जयगृद्धिनीम्
॥
प्रोचुस्तां जिह्मबुद्धिन्ते नागा मातां विगृह्य
तु ।

तत् सत्रं भविता घोरं नागानां
क्षयकारकम् ॥
यास्यन्त्यधर्म्ममरितां दन्दशूका
विषोल्वणाः ।
कोटिसंख्या महाराज
निपतिष्यन्त्यहर्न्निशम् ॥
आप्लवे तु निमग्नानां घोरे रौद्राग्निसागरे ।
आस्तीकस्तत्र भविता तेषां नौर्वह्निसागरे
॥
स्तुत्वा स चाग्निं
राजानमृत्विजस्तदनन्तरम् ।
निवर्त्तयिष्यति तद्यागं नागानां मोहनं
परम् ॥
पञ्चम्यां तच्च भविता ब्रह्मा प्रोवाच
लोहितान् ॥
तस्मादियं महाबाहो पञ्चमी दयिता सदा
।
नागानामानन्दकरी दत्ता वै ब्रह्मणा पुरा ॥
कृत्वा तु भोजनं पूर्व्वं ब्राह्मणानान्तु
कामतः ।
विसृज्य नागाः प्रीयन्तां ये केचित्
पृथिवीतले ॥
ये च हेलिमरीचिस्था येऽन्तरीक्षे दिवि
स्थिताः ।
ये नदीषु महानागा ये सरस्वतिगामिनः ।
ये च वापीतडागेषु तेषु सर्व्वेषु वै नमः ॥
नागान् विप्रांश्च संपूज्य विसृज्य च
यथार्थतः ।
ततः पश्चात्तु भुञ्जीयात् सह
भृत्यैर्नराधिपः ॥
प्रथमं मधुरमश्नीयात् द्वितीयं भुज्य
कामतः ।
एवं नियमयुक्तस्य यत् फलं तन्निबोध मे
॥
मृतो नागपुरं याति पूज्यमानोऽप्सरोगणैः
।
विमानवरमारूढो रमते कालमीप्सितम् ॥
इह चागत्य राजासौ अयुतानां वरो भवेत्
।

यस्य सर्पेण दष्टस्य रेखा दन्तस्य जायते ।
मददष्टं विजानीयात् कश्यपस्य वचो यथा ॥
द्वे च दंष्ट्रे पदे यस्य दृश्येते च महाक्षतम् ।
क्षुधाविष्टं विजानीयात् यथोवाच प्रजापतिः ॥
द्वे दंष्ट्रे यस्य दृश्येते क्वचिद्रुधिरसंकुले ।
विषोल्वणं विजानीयाद्दशन्तं नात्र संशयः ।
अपत्यरक्षणार्थाय जानीयान्नात्र संशयः ॥
यत्तु काकपदाकारं त्रिभिर्द्दन्तैर्व्विच्छिद्रितम् ।
महानाग इति प्रोक्तः कालदष्टं विनिर्द्दिशेत् ॥
* ॥
त्रिविधं दष्टजातेस्तु लक्षणं समुदाहृतम् ।
दृष्टं दष्ट्वा तु पीतञ्च दष्टोद्धृतं तथैव च ॥
यस्तु सर्पो दशित्वा तु पिबते तु विचक्षणः ।
दष्ट्वा तु पीतं विज्ञेयं कश्यपस्य वचो यथा ॥
विषभागौ तु सर्पस्य त्रिभागस्तत्र संक्रमेत् ।
उदरं दर्शयेद्यस्तु उद्धृतं तं विनिर्द्दिशेत् ॥
छर्द्दितं विषवेगेन निर्व्विषः पन्नगो भवेत् ।
असाध्यश्चापि विज्ञेयश्चतुर्द्दंष्ट्राभिपीडितः ॥
ग्रीवाभङ्गो भवेत् किञ्चित् संदष्टो विषयोगतः ।
आर्द्राश्लेषामघाभरणीकृत्तिकासु विशेषतः ॥
विशाखा त्रिषु पूर्व्वासु मूलास्वातिशतात्मके ।
सर्पदष्टा न जीवन्ति विषं पीतञ्च यैस्तथा ॥
शून्यागारे श्मशाने च शुष्कवृक्षे तथैव च ।
न जीवन्ति नरा दष्टा नक्षत्रे तिथिसंयुते ।
हतो दंशस्ततः शुद्धव्यन्तरः परिकीर्त्तितः
॥”
इति भविष्यपुराणे शतसाहस्राद्धसंहितायां
पञ्चमीकल्पे ॥ * ॥
कश्यप डवाच ।
“ततः परं प्रवक्ष्यामि कालदष्टस्य लक्षणम् ।
शृणु गौतम तत्त्वेन यादृशो भवते नरः ॥
जिह्वाभङ्गो हृदि शूलं चक्षुर्भ्याञ्च न पश्यति ।
दंशञ्च दग्धसङ्काशं पक्वजम्बूफलोपमम् ॥
वैवर्णं चैव दन्तानां श्यामो भवति वर्णतः ।
सर्व्वेष्वङ्गेषु शैथिल्यं पुरीषस्य च भेदनम् ॥
भग्नस्कन्धकटिग्रीव ऊर्द्ध्वदृष्टिरधोमुखः ।
दह्यते वेपते चैव स्वपते च मुहुर्म्मुहुः ॥
शस्त्रेण छिद्यमानस्य रुधिरं न प्रवर्त्तते ।
दण्डेन ताड्यमानस्य दण्डराजी न जायते ॥

अधर्म्ममेतन्मातोऽतो न करिष्याम ते वचः
॥
तान् शशाप रुषा कद्रुः पावको वः
प्रधक्ष्यति ।
गते बहुतिथे काले पाण्डवो जनमेजयः ॥
सर्पसत्रं स कर्त्ता वै भुवि अन्यैः सुदुष्करम्
।
तस्मिन् सत्रे स तिग्मांशुः पावको वः
प्रधक्ष्यति ॥
एवं शप्त्वा रुषा कद्रुः प्रोक्तवान्नैव किञ्चन
।
मात्रा शप्तास्तथा नागाः कर्त्तव्यं
नान्वपद्यत ॥
वासुकिं दुःखितं ज्ञात्वा ब्रह्मा प्रोवाच
सान्त्वयन्
मा शुचो वासुकेऽत्यर्थं शृणु मद्वचनं परम्
॥
पराशरकुले जातो जरत्कारुरिति द्विजः ।
भविष्यति महातेजास्तस्मिन् काले
तपोनिधिः ॥
भगिनीञ्च जरत्कारुं तस्य त्वं प्रति
दास्यति ।
भविता तस्य पुत्रोऽसौ आस्तीक इति
विश्रुतः ॥
स तत् सत्रं प्रवृद्धं वै नागानां भयदं महत् ।
निषेधिष्यति स
मुनिर्व्वाग्भिरय़्याभिस्तोष्यति॥
तदिमां भगिनीं राजन् तस्य त्वं
प्रतिदास्थति ।
जरत्कन्यां जरत्कारोः प्रदद्यादविचारयन्
॥
यदासौ प्रार्थतेऽरण्ये यत्किञ्चिद्विवदिष्यति
।
तत् कर्त्तव्यमशङ्केन यदीच्छेः श्रेय
आत्मनः ॥
पितामहवचः श्रुत्वा वासुकिः प्रणिपत्य च
।
तथा करोद्यथा चोक्तं यत्नञ्च परमास्थितः
॥
तच्छ्रुत्वा पन्नगाः सर्व्वे
प्रहर्षोत्फुल्ललोचनाः ।

सर्व्वरत्नसमूहः स्यात् वाहनाढ्यश्च
जायते ॥
पञ्चजन्मन्यसौ राजा द्वापरे द्वापरे भवेत् ।
आधिव्याधिविनिर्म्मुक्तः
पत्नीपुत्त्रसहायवान् ।
तस्मात् पूज्याश्रमाणाञ्च
घृतपायसगुग्गुलैः ॥ * ॥
शतानीक उवाच ।
दशन्ति यं नरं विप्र नागाः
क्रोधसमन्विताः ।
भवेत् किं तस्य दष्टस्य विस्तरात्
प्रब्रवीहि मे ॥
सुमन्तुरुवाच ।
दंष्ट्राशुक्ला च कृष्णा च रक्ता पीता च
दक्षिणा ।
समासेन तु वक्ष्यामि यथा वै वर्णतः
स्मृताः ॥
शुक्लातु ब्राह्मणी ज्ञेया रक्तातु क्षत्त्रिया
स्मृता ।
वैश्या तु पीतिका ज्ञेया कृष्णा शूद्रा तु
कथ्यते ॥ *
अतः परं प्रवक्ष्यामि दंष्ट्राणां विषलक्षणम्
।
दंष्ट्राणान्तु विषं नास्ति नित्यमेव भुजङ्गमे
॥
दक्षिणं नेत्रमासाद्य विषं सर्पस्य तिष्ठति ।
संक्रुद्धस्यैव सर्पस्य विषं गच्छति मस्तके
॥
मस्तकाद्धमनीं याति ततो नाडीषु तिष्ठति
।
नाडीभ्यां गच्छते दंष्ट्रे विषं तत्र प्रवर्त्तते ॥
तत् सर्व्वं कथयिष्यामि यथावदनुपूर्व्वशः
।
अष्टभिः कारणैः सर्पो दशते नात्र संशयः
॥ * ॥
आक्रान्तो दशते पूर्व्वं द्वितीयं पूर्व्ववैरिणम्
।
तृतीयं दशते भीतश्चतुर्थं मददर्पितः ॥
पञ्चमन्तु क्षुधाविष्टः षष्ठञ्चेह विषोल्वणः ।
सप्तमं पुत्त्ररक्षार्थं अष्टमं कालचोदितम् ॥
यस्तु सर्पो दशित्वा तु उदरं परिवर्त्तयेत् ।

दंशे काकपदे सुनीलमसकृज्जम्बूफलाभं
घनं
उच्छूनं रुधिराङ्गसेकबहुलं कृच्छ्रान्निरोधो
भवेत् ।
हिक्काश्वासगलग्रहश्चसुमहान् या दुस्त्वचा
दृश्यते
संस्थानं प्रवदन्ति शास्त्रनिपुणास्तत्
कालदष्टं
विदुः ॥
दंशे यस्याथ शोथः प्रवलितवलितं मण्डलं
वा
सुनीलं
प्रस्वेदो गात्रभेदः स्रवति च रुधिरं
सानुनासञ्च
जल्पेत् ।
दन्तोष्ठाभ्यां वियोगो भ्रमति च हृदयं सन्नि-
रोधश्च तीव्रो
दिव्यानामेष दंशस्थलविपुलमयो विद्धि तं
कालदष्टम् ॥

| | | |
|---|---|---|
| पुनर्जातमिवात्मानं मेनिरे भुजगोत्तमाः ॥<br>तच्च मन्त्रं महाबाहो तव पित्रा प्रवर्त्तितम्<br>।<br>ऋत्विग्भिः सहितेनेह सर्व्वलोकेषु<br>दुष्करम् ॥<br>प्रोक्तञ्च विष्णुना पूर्व्वं धर्म्मपुत्त्रस्य<br>धीमतः ।<br>अवश्यं तस्य भविता नागानां भयकारकम्<br>॥<br>तस्मात् कालान्तराद्राजन् साग्रे वर्षशते<br>गते । | बलभुग्नाकृतिर्दंष्ट्रा आक्रान्तं तं<br>विनिर्द्दिशेत् ॥<br>यस्य सर्पेण दष्टस्य गम्भीरं दृश्यते व्रणम्<br>।<br>वैरदष्टं विजानीयात् कश्यपस्य वचो यथा<br>॥<br>एकदंष्ट्रा पदे यस्य अव्यक्तं न च कूपितम्<br>।<br>भीतदष्टं विजानीयात् यथोवाच प्रजापतिः<br>॥ | |

दन्तैर्द्दन्तान् स्पृशति बहुशो दृष्टिरायासखिन्ना
स्थूलो दंष्ट्रः स्रवति रुधिरं केकरं चक्षुरेकम् ।
प्रत्यादिष्टः श्वसिति सततं सानुनासञ्च
भाषेत्
यद्यद्ब्रूते सकलगदितं कालदष्टं तमाहुः ॥
वेपते वेदना तीव्रा रक्तनेत्रश्च जायते ।
ग्रीवाभङ्गश्च लालाभिः कालदष्टं विनिर्द्दिशेत्
॥
दर्पणे सलिले वापि आत्मच्छायां न पश्यति ।
मन्दरश्मिं तथा दीपं तेजोहीनं दिवाकरम् ॥
वेपते वेदनातस्तु रक्तनेत्रश्च जायते ।
स याति निधनं जन्तुः कालदष्टं विनिर्द्दिशेत्
॥
अष्टम्याञ्च नवम्याञ्च कृष्णपक्षे चतुर्द्दशीम् ।
नागपञ्चमीदष्टानां जीवितस्य च संशयः ।
आर्द्राश्लेषामघाभरणीकृत्तिकासु विशेषतः ।
विशाखा त्रिषु पूर्ब्बासु मूलास्वातिशतात्मके
॥
सर्पदष्टा न जीवन्ति विषं पीतञ्च यैस्तथा ।
शून्यागारे श्मशाने च शुष्कवृक्षे तथैव च ।
न जीवन्ति नरा दष्टा नक्षत्रे तिथिसंयुते ॥
अष्टोत्तरं मर्म्मशतं प्राणिनां समुदाहृतम् ।
तेषां मध्ये तु मर्म्माणि दश द्वे चापि कीर्त्तिते
॥
शङ्खे नेत्रे भ्रुवोर्म्मध्ये वस्तिभ्यां वृषणान्तरे ।
कक्षे स्कन्धे हृदि मध्ये तालुके चिवुके गुदे ॥
एषु द्वादशमर्म्मेषु दष्टः शस्त्रेण वा हतः ।
न जीवन्ति नरा लोके कालदष्टं विनिर्द्दिशेत्
॥ *
अ-क-च-ट-त-प-म-य-शान् वदन्ति प्रोक्त्या
न
जीवन्ति हृत्तस्य गतम् ।
ब्रूवात् यदि स्खलति गिरा तस्य संप्राप्तकालः
॥
भवति च यदि दूत उत्तमस्याधमो वा
यदि भवति च दूत उत्तमो वाधमस्य ॥
आदौ दष्टस्य नाम यदि वदति क्वचिद्वक्ति
तस्याथ पश्चात्

शतानीक उवाच ।
नागदष्टः पिता यस्य भ्राता वा दुहितापि
वा ।
माता पुत्त्रोऽथवा भार्य्या किं कर्त्तव्यं
वदस्व वै ॥
मोक्षाय तस्य विप्रेन्द्र दानं व्रतमुपोषितम्
।
ब्रूहि मे द्विजशार्द्दूल येन तद्वै करोम्यहम्
॥
सुमन्तुरुवाच ।
उपोष्या पञ्चमी राजन् नागानां
पुष्टिवर्द्धिनी ।
शुभैकमेकं राजेन्द्र विधानं शृणु भारत !
॥
मासि भाद्रपदे या तु शुक्लपक्षे महीपते ।
सा तु पुण्या महाप्रोक्ता ग्राह्यापि च
महीपते ॥
ज्ञेया द्वादश संवर्त्ते पञ्चम्यां भरतर्षभ ।
चतुर्थ्यामिकभक्तन्तु तस्यां नक्तं
प्रकीर्त्तितम् ॥
भूरिचन्द्रमयं नागमथवा कलधौतकम् ।
कृत्वा दारुमयं वापि अथवा मृण्मयं नृप
॥
पञ्चम्यामर्च्चयेद्भक्त्या नागं पञ्चफणं नृप
।
करवीरैः शतपत्रैर्जातिपुष्पैश्च सुव्रत ॥
तथा गन्धप्रधूपैश्च पूज्यं पन्नगमुत्तमम् ।
ब्राह्मणं भोजयेत् पश्चात्
घृतपायसमोदकैः ॥
अनन्तं वासुकिं शङ्खं पद्मं कम्बलमेव च
।
तथा कर्क्कोटकं नागं नागं वाश्वतरं नृप
॥
धृतराष्ट्रं शङ्खपालं कालियं तक्षकं तथा ।
पिङ्गलञ्च तथा नागं मासि मासि च
कीर्त्तितम् ॥
संवर्त्तान्ते पारणं
स्यान्महाब्राह्मणभोजनम् ।
इतिहासविदे नागं गैरिकेण कृतं नृप ॥

दंष्ट्राः कतिविधाः प्रोक्ताः किं प्रमाणं
विषागमे
कदा तु गृह्णीते गर्भं कथं वेह प्रसूयते ॥
कीदृशी स्त्री पुमांश्चैव कीदृशञ्च नपुंसकम्
।
किं नाम दशनं चैव एतत् कथय सुव्रत ।
तस्य तद्वचनं श्रुत्वा कश्यपः प्रत्यभाषत ।
शृणु गौतम तत्त्वेन सर्पाणामिह लक्षणम् ॥
* ॥
मास्याषाढे तथा ज्यैष्ठे प्रमाद्यन्ति
भुजङ्गमाः ।
ततो नागो नागिनी च मैथुनं संप्रपद्यते ॥
चतुरो वार्षिकान् मासान् नागी
गर्भमधारयत् ।
ततः कार्त्तिकमासे तु अण्डकानि प्रसूयते
॥
अण्डकानान्तु विज्ञेयं द्वे शते द्वे च विंशती
।
तान्येव भक्षयेत् सा तु भागैकं घृणया
त्यजेत् ॥
सुवर्णार्कवर्णनिभात् पुमान्
संजायतेऽण्डकात् ।
तानेव खादते सर्पी अहोरात्राणि विंशतिम्
॥
अर्क्कोदकसुवर्णाभात्
दीर्घराजीवसन्निभात् ।
तस्मादुत्पाद्यते स्त्री वै अण्डाद्ब्राह्मण-
सत्तम ॥
शिरीषपुष्पवर्णाभादण्डकात्स्यान्नपुंसकम्
।
ततो भिनत्ति चाण्डानि षण्मासेन तु गौतम
॥
ततस्ते प्रीतिसंबन्धात् स्नेहं बध्नन्ति
बालकाः ।
ततोऽसौ सप्तरात्रेण कृष्णो भवति यत्नतः
॥ * ॥
आयुःप्रमाणं सर्पाणां शतं विंशोत्तरं स्मृतम्
।

वर्णान्तं वर्णभेदो यदि भवति समः
प्राप्तकालस्य
दूतः ॥
दूतो वा दण्डहस्तो भवति च युगलं पाश-
हस्तस्तथा वा
रक्तं वस्त्रञ्च कृष्णं अथ शिरसि गतं एक-
वस्त्रश्च दूतः ।
तैलाभ्यक्तश्च तद्वत् यदि
त्वरितगतिर्मुक्तकेशश्च
याति
यः कुर्य्यात् घोरशब्दं करचरणयुगैः प्राप्त-
कालस्य दूतः ॥ * ॥
नागोदयं प्रवक्ष्यामि ईशानेन तु भाषितम् ।
ब्रह्मणा तु पुरा सृष्टा ग्रहा नागास्त्वनेकशः ॥
अनन्तं भास्करं विद्यात् सोमं विद्यात्तु
वासुकिम् ।
तक्षकं भूमिपुत्त्रन्तु कर्क्कोटञ्च बुधं विदुः ॥
पद्मं बृहस्पतिं विद्यान्महापद्मञ्च भार्गवम् ।
कुलिकः शङ्खपालश्च द्वावेतौ तु शनैश्चरः ॥
पूर्ब्बपादः शङ्खपालो द्वितीयः कुलिकोऽस्य च
।
नेत्रभागे यमौ दिष्टौ दिनरात्री तथैव च ॥
शुक्रसोमौ च मध्याह्ने उदये तु क्षमासुतम् ।
प्राणः प्रागष्टमे भागे दिवासन्नाविहोच्यते ॥
ग्रहाश्च भुञ्जते राजन् पथि मृत्युं व्रजत्यधः ।
अधो गत्वा भवेत् सर्पो निर्व्विषो नात्र संशयः
॥

तथार्ज्जुनी प्रदातव्या वाचकस्य महीपते
।
एष पारणके वापि विधिः प्रोक्तो बुधैर्नृप
॥
तव पित्रा कृतश्चैव पितुर्मोक्षाय भारत ।
शुभात्मिकेयं वैधी च पञ्चमी भरतर्षभ ॥
सुवर्णभारनिष्पन्नं नागं दत्त्वा तथा च
गाम् ।
व्याप्तस्य कुरुशार्द्दूल
पितुरानृण्यमाप्नुयात् ॥
तव पित्रा कृतन्त्वेवं पञ्चम्योपासणं नृप ।
उत्सृज्य नागतां वीर तव पूर्व्वपितामहः
॥
पुष्पेतरसदो गत्वा तथा पुष्पसदो नृप ।
सुनासीरसदो गत्वा तथा भङ्गसदो गतः
॥
भूपसदस्ततो गत्वा कञ्जकस्य सदो गतः
।
अन्येऽपि ये करिष्यन्ति इदं
व्रतमनुत्तमम् ।
दष्टकात् मोक्षते तेषां शुभं
स्थानमवाप्स्यति ॥
यश्चेदं शृणुयान्नित्यं नरः श्रद्धासमन्वितः
।
कुले तस्य न नागेभ्यो भयं भवति
कुत्रचित् ॥”
इति भविष्यपुराणे पञ्चमीकल्पे ॥ * ॥
शतानीक उवाच ।
“सर्पाणां कतिरूपाणि के वर्णाः किञ्च
लक्षणम् ।
क जातिस्तु भवेत्तेषां केषु योनिः कुलेषु
वा ॥
सुमन्तुरुवाच ।
अत्र ते वच्मि संवादं कश्यपस्य
महात्मनः ।
यथासीद्गोतमेनेह शृणु पूर्व्वं हिमाचले ॥
हुताग्निहोत्रमासीनं कश्यपन्तु हिमाचले ।
प्रणम्य शिरसा भक्त्या गौतमो
वाक्यमब्रवीत् ॥
सर्पाणां कतिरूपाणि किञ्चिह्नं किञ्च
लक्षणम् ।

मृत्युश्चाष्टविधो ज्ञेयः शृणुष्वात्र यथाक्रमम्
॥
मयूरात् मानुषाद्वापि चकोराद्गोखुरात्तथा
।
विडालान्नकुलाच्चैव वराहाद्वृश्चिकात्तथा
॥
एतेषां यदि मुच्येत जीवेद्विंशोत्तरं शतम् ।
सप्ताहे तु ततः पूर्णे दंष्ट्राणान्तु विरोहणम् ॥
विषस्यागमनं तत्र विक्षेपश्च पुनः पुनः ।
एवं ज्ञात्वा तु तत्त्वेन विषकर्म्म समारभेत्
॥
एकविंशतिरात्रेण विषं दंष्ट्रासु जायते ।
नागीपार्श्वसमावर्त्ती बालसर्पस्तु उच्यते ॥
पञ्चविंशतिरात्रस्तु सद्यः प्राणहरो भवेत् ।
षण्मासाज्जातमात्रस्तु कञ्चुकं वै प्रमुञ्चति
॥
पादानाञ्चापि विज्ञेया द्वे शते द्वे च विंशती ।
गोलोमसदृशाः पादाः प्रविशन्ति क्रमन्ति
च ॥
सन्धीनां चास्य विज्ञेयं द्वे शते विंशती
तथा ।
पांशुल्यश्चापि विज्ञेया द्वे शते
विंशतिस्तथा ॥
अकालजाता ये सर्पा निर्व्विषास्ते
प्रकीर्त्तिताः ।
पञ्चसप्ततिवर्षाणि आयुस्त्रेषां प्रकीर्त्तितम् ॥
रक्तपीतशुक्लदन्ता आनीला मन्दवेगिनः ।
एते चाल्पायुषो ज्ञेया अल्पाहाराश्च
भीरवः ॥
एकञ्चास्य भवेद्वक्त्रं द्वे जिह्वे च प्रकीर्त्तिते ।
प्रथमा ब्रह्मदैवत्या द्वितीया विष्णुदैवता ॥
तृतीया रुद्रदैवत्या चतुर्थी यमदैवता ।
हीना प्रमाणतः सा तु वामनेत्रं समाश्रिता
॥
नास्यां मन्त्राः प्रयोक्तव्या नौषधं नैव
भेषजम् ।
वैद्यः पराङ्मुखो याति मृत्युस्तस्या
विलेखनात् ॥
चिकित्सा न बुधैः कार्य्या तदन्तं तस्य
जीवितम् ।
मकरीं मासिकीं विद्यात् करालीञ्च द्विमा-

| | | |
|---|---|---|
| | जातिं कुलं तथा वर्णान् ब्रूहि सर्व्वं प्रजापते ।<br>कथं वा जायते सर्पः कथं मुञ्चेद्विषं प्रभो ।<br>विषवेगाः कति प्रोक्ताः कत्येव विषनाडिकाः ॥ | सिकीम् ।<br>कालरात्री भवेत् त्रीणि चतुरो यमदूतिका ॥<br>मकरीशस्त्रकं विद्यात् कराली काकपादिका । |

ढकाराकृतिः कालरात्री याम्या कूपाकृतिः स्मृता ॥
मकरी वातुला ज्ञेया कराली पैत्तिकी स्मृता ।
कफात्मिका कालरात्री यमदूती सान्निपातिकी ॥
शुक्ला तु मकरी ज्ञेया कराली रक्तसन्निभा ।
कालरात्री भवेत् पीता कृष्णा च यमदूतिका ॥”
इति भविष्यपुराणे पञ्चमीकल्पे ॥ * ॥
कश्यप उवाच ।
“सविषा दंष्ट्रयोर्म्मध्ये यमदूती तु चेद्भवेत् ।
न चिकित्सा बुधैः कार्य्या तं गतायुं विनिर्द्दिशेत् ॥
प्रहरार्द्धं दिवारात्रौ रकैकं भुञ्जते अहिः ।
एकस्य च समानञ्च द्वितीयं षोडशं तथा ॥
नागोदये ययुद्दष्टो हतो विद्धो विदारितः ।
कालदष्टं विजानीयात् कश्यपस्य वचो यथा ॥
यन्मात्रे पतते बिन्दुर्ब्बालाग्रसलिलोद्धृतम् ।
तन्मात्रं स्रवते दंष्ट्राविषं सर्पस्य दारुणम् ॥
ज्वालाशते तु संपूर्णे देहे संक्रमते विषम् ।
यावत् संक्रामयेद्बाहुं कुञ्चितं वा प्रसारयेत् ॥
अनेन क्षणमात्रेण विषं गच्छति मस्तके ।
वेधते विषवेगस्तु शतशोऽथ सहस्रशः ॥
वर्द्धते रक्तमासाद्य ततो वाते शिखी यथा ।
तैलबिन्दुर्ज्जलं प्राप्य यथा वेगेन वर्द्धते ॥
शिखण्डी आश्रयं प्राप्य मारुतेन समीरितः ।
ततस्तालाशतं प्राप्य त्वचास्थानं विचेष्टितम् ॥
त्वचासु द्विगुणं विद्याच्छोनितेषु चतुर्गुणम् ।
पित्ते तु त्रिगुणं याति श्लेष्मे वै षोडशं भवेत् ॥
वायौ त्रिंशद्गुणञ्चैव मज्जे षष्टिगुणं तथा ।
प्राणे चैकार्णवीभूते सर्व्वस्रोतान्निरोधयेत् ॥
स्रोतेन रुध्यमानेन याति साध्यमसाध्यताम् ।
ततोऽसौ म्रियते जन्तुर्निश्वासोच्छ्वासवर्ज्जितः ॥
निष्क्रान्ते तु ततो जीवे भूते पञ्चत्वमागते ।
तानि भूतानि गच्छन्ति यस्य यस्य यथालयम् ॥
पृथिव्यापस्तथा तेजो वायुराकाशमेव च ।
अङ्गानि तिमिरायन्ते यतन्ते च मुहुर्म्मुहुः ॥
एतानि यस्य चिह्नानि तस्य त्वचगतं विषम् ।
तस्यागदं प्रवक्ष्यामि येन सम्पद्यते सुखम् ॥
अर्कमूलमपामार्गप्रियङ्गु तगरं तथा ॥
एतदालोड्य दातव्यं ततः सम्पद्यते सुखम् ॥
ततस्तस्मिन् कृते विप्रा न निवर्त्तेत चेद्विषम् ।
त्वचस्थानं ततो भित्त्वा रक्तस्थानं प्रधावति ॥ * ॥
विषे च रक्तसंप्राप्ते तस्य रूपानि मे शृणु ।
दह्यते मुह्यते चैव शीतलं बहु मन्यते ॥
एतानि यस्य रूपाणि तस्य रक्तं विषं गतम् ।
तत्रागदं प्रवक्ष्यामि येन सम्पद्यते सुखम् ॥
उशीरं चन्दनं कुष्ठमुत्पलं तगरं तथा ।
महाकालस्य मूलानि सिन्धुवारमृगस्य च ॥
हिङ्गुञ्च मरिचञ्चैव पूर्व्ववेगे तु दापयेत् ।
वृहती वृश्चिकाली च इन्द्रबारुणिमूलकम् ॥
सर्पगन्धा घृतं चैव द्वितीये परिकीर्त्तितम् ।
सिन्दुवारं तथा हिङ्गु तृतीये कारयेद्बुधः ॥
नस्यं पानञ्च कुर्व्वीत अञ्जनं लेपनं तथा ।
एतेनैवोपचारेण ततः सम्पद्यते सुखम् ॥ * ॥
रक्तस्थानं ततो गत्वा पित्तख्यानं प्रधावति ।
पित्तस्थानगते विप्र विषे रूपाणि मे शृणु ॥
उत्तिष्ठते निपतते दह्यते मुह्यते तथा ।
गात्रतः पीतता स्याद्वै दिशः पश्यति पीतिकाः ॥
धवलाश्च भवेन्मूर्च्छा न चात्मानं विजानते ।
विषक्रियां तस्य कुर्य्यात् यथा सम्पद्यते सुखम् ॥
एषोऽगदः सर्व्वविषाणि हन्यात् स्वयम्भुवा देववरेण सृष्टः ॥
अञ्जनञ्चैव नस्यञ्च क्षिप्रं दद्याद्विषान्विते ।
वायुस्थानं ततो मुक्त्वा मज्जस्थानं प्रधावति ॥ *
विषे मज्जगते विप्र तस्य रूपाणि मे शृणु ।
दृष्टिश्च हीयते तस्य भृशमङ्गानि मुञ्चति ॥
एतानि यस्य रूपाणि तस्य मज्जगतं विषम् ।
तस्यागदं प्रवक्ष्यामि येन सम्पद्यते सुखम् ॥
घृतं मधु शर्कराञ्च उशीरं चन्दनं तथा ।
एतदालोड्य दातव्यं पानं तस्य च सुव्रत ॥
ततः प्रणश्यते दुःखं ततः सम्पद्यते सुखम् ।
अथ तस्मिन् कृते योगे विषं तस्य निवर्त्तते ॥ * ॥
मज्जस्थानं ततो गत्वा नर्म्मस्थानं प्रधावति ।
विषे तु मर्म्मसंप्राप्ते शृणु रूपं यथा भवेत् ॥
निश्चेष्टः पतते भूमौ कर्णाभ्यां वधिरो भवेत् ।
करिणा सिच्यमानस्य रोमहर्षो न जायते ॥
दण्डेन हन्यमानस्य दण्डराजी न जायते ।
शस्त्रेण छिद्यमानस्य रुधिरं न प्रवर्त्तते ॥
केशेषु लुञ्च्यमानेषु नैव क्लेशप्रवेदने ।
यस्य कर्णौ च पार्श्वौ च हनू पादौ च सन्धयः ॥
शिथिलानि भवन्तीह स गतासुरिति श्रुतिः ।
एतानि यस्य रूपाणि विपरीतानि गौतम ॥

इत्येषामेव संघातः शरीरमभिधीयते ॥
पृथिवी पृथिवीं याति आपस्तोयेषु लीयते ।
तेजो गच्छति चादित्यं मारुतो मारुतं व्रजेत् ॥
आकाशञ्चैव आकाणे सह तेनैव गच्छति ।
स्वस्थानं ते प्रपद्यन्ते परस्परवियोजिताः ॥
न जीवेदागतः कश्चिदिह जन्मनि सुव्रत ।
विषार्थं न उपेक्षेत त्वरितं तु चिकित्सयेत् ॥ * ॥
एकमस्ति विषं लोके द्वितीयञ्चोपपद्यते ।
यथा चलविषञ्चैव स्थावरन्तु तथैव च ॥
प्रथमे विषवेगे तु रोमहर्षं प्रजायते ।
द्वितीये विषवेगे तु स्वेदो गात्रेषु जायते ॥
तृतीये विषवेगे तु कम्पो गात्रेषु जायते ।
चतुर्थे विषवेगे तु श्रोत्रान्तरनिरोधकृत् ॥
पञ्चमे विषवेगे तु हिक्का गात्रेषु जायते ।
षष्ठे तु विषवेगे तु ग्रीवाभङ्गस्तु जायते ॥
सप्तमे विषवेगे तु प्राणेभ्यो विप्रमुच्यते ।
सप्तधातुवहा ह्येते वैनतेयेन भाषिताः ॥ * ॥
त्वचस्थाने विषे प्राप्ते तस्य रूपाणि मे श्रृणु ।
पिप्पलं मधुकं चैव मधुखण्डघृतं तथा ।
मधुसारमलावुञ्च जातिशर्करवालुकाम् ॥
इन्द्रवारुणिमूलञ्च गवां मूत्रेण पेषयेत् ।
नस्यं तस्य प्रयुञ्जीत पानमालेपमार्ज्जनम् ॥
एतेनैवोपचारेण ततः सम्पद्यते सुखम् ।
पित्तस्थानमतिक्रम्य श्लेष्मस्थानञ्च गच्छति ॥ * ॥
श्लेष्मस्थाने ततः प्राप्ते तस्य रूपाणि मे श्रृणु ।
गात्राणि तस्य रुन्ध्यन्ते निश्वासश्च न जायते ॥
लाला च स्रवते तस्य कण्ठे घुरघुरायते ।
एतानि यस्य रूपाणि तस्य श्लेष्मगतं विषम् ॥
तस्यागदं प्रवक्ष्यामि येन सम्पद्यते सुखम् ।
त्रिकटुकञ्च कोशातकी लोध्रमधुसारकम् ॥
एतेषां सप्तभागानि गवां मूत्रेण पेषयेत् ।
नस्यं पानञ्च कुर्व्वीत अञ्जनं लेपनं तथा ॥
एतेनैवोपचारेण ततः सम्पद्यते सुखम् ।
श्लेष्मस्थनमतिक्रम्य वायुस्थानञ्च गच्छति ॥ * ॥
तत्र रूपाणि वक्ष्यामि वायुस्थानगते विषे ।
आध्मायते च जठरं यत्नवांश्च न पश्यति ॥
ईदृशं कुरुते रूपं दृष्टिभङ्गश्च जायते ।
एतानि यस्य रूपाणि तस्य वायुगतं विषम् ॥
तस्यगदं प्रवक्ष्यामि येन सम्पद्यते सुखम् ।
शोणमूलं पियालञ्च रक्ता च गजपिप्पली ॥
भार्गी वचा पिप्पलिदेवरारु-
मधूकसारं सह सिन्दुवारम् ।
हिङ्गुञ्च पिष्ट्वा गुडिकाञ्च कुर्य्या-
द्दद्याच्च तस्याञ्जनलेपनादीन् ॥
मृतन्तु तं विजानीयात् कश्यपस्य वचो यथा ।
वैद्यास्तस्य न पश्यन्ति ये पश्यन्ति कुशिक्षिताः ॥
विचक्षणास्तु पश्यन्ति मन्त्रौषधिसमन्विताः ।
तस्यागदं प्रवक्ष्यामि स्वयं रुद्रेण भाषितम् ॥
मयूरपित्तं मार्ज्जारपित्तं नकुलपित्तकम् ।
मत्स्यमाहिषपित्तञ्च धानालीमूलमेव च ॥
कुङ्कुमं भार्गवं कुष्ठं काश्मरी च त्वचं तथा ।
उत्पलस्य च किञ्जल्कं पद्मस्य कुमुदस्य च ॥
एतानि समभागानि गामूत्रेण तु शोषयेत् ।
एषोऽगदो यस्य हस्ते दष्टेन म्रियते न वै ।
कालाहिनापि दष्टोऽपि क्षिप्रं भवति निर्व्विषः ॥
क्षिप्रमेव प्रदातव्यं मृतसञ्जीवनौषधम् ।
अञ्जनञ्चैव नस्यञ्च क्षिप्रं दद्यात् विचक्षणः ॥”
इति भविष्यपुराणे ब्रह्मपर्व्वणि पञ्चमीधातुगत-
विषक्रिया ॥ * ॥
गौतम उवाच ।
“कीदृशं एतदाख्याहि सर्व्वं दष्टस्य लक्षणम् ॥
कश्यप उवाच ।
अतः परं प्रवक्ष्यामि नागानां रूपलक्षणम् ।
सर्पदष्टस्य च तथा समासाद्द्विजपुङ्गव ! ॥
अथ सर्पेण दष्टस्य ऊद्‌र्ध्वा दृष्टिः प्रजायते ।
सर्प्या दष्टस्य च तथा अधोदृष्टिः प्रजायते ॥
नपुंसकेन दष्टस्य अङ्गमर्द्दः प्रजायते ।
रुषा दष्टस्य वा साम्या दृष्टिर्द्विजवरोत्तम ॥

|  |  | कुमारेणापि दष्टस्य दक्षिणा एव जायते ।<br>गुर्व्विण्या वाथ दष्टस्य तया स्वेदश्च जायते ॥<br>रोमाञ्चः सूतिकायाश्च वेपथुश्चापि जायते ।<br>पन्नगी प्रभवेद्रात्रौ दिवा सर्पो विषाधिकः<br>नपुंसकन्तु सन्ध्यायां कश्यपेन तु भाषितम् ।<br>अन्धकारे तु दष्टानामुदके गहने वने ॥ |

सुप्तस्य वै प्रमत्तस्य पदे सर्पो न दृश्यते ।
दृष्टरूपाण्यजानन् वै कथं वैद्यश्चिकित्सति ॥
चतुर्व्विधा रहः प्रोक्ताः पन्नगास्तु महात्मना ।
दर्व्वीकरा मण्डलिनो राजिला व्यन्तरास्तथा ॥
दर्व्वीकरा वातविषा मण्डलाः पैत्तिकाः स्मृताः ।
श्लेष्मला राजिला ज्ञेया व्यन्तराः सान्निपातिकाः ॥
रक्तं परीक्षयेद्गाडं सर्पाणान्तु पृथक् पृथक् ।
कृष्णं दर्व्वीकराणान्तु जायते वातमुल्वणम् ॥
रक्तं घनञ्च बहुशः शोणितं मण्डलीकृते ।
पिच्छिलं राजिले स्वल्पं तद्वद्व्यन्तरके तथा ॥ * ॥
ज्ञेवाः सर्पास्तु चत्वारः पञ्चमो नोपलभ्यते ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव चतुर्थकः ॥
ब्राह्मणे मधुरं दद्यात् तिक्तं दद्यात्तथोत्तरे ।
वैश्ये कर्षफलं दद्यात् शूद्रे त्रिफलमेव वा ॥
ब्राह्मणेन तु दष्टस्य दाहो गात्रेषु जायते ।
मूर्च्छा च प्रबला स्याद्वै न ज्ञानमभिजायते ॥
श्यामवर्णं मुखञ्च स्यान्मनस्तम्भश्च जायते ।
तस्य कुर्य्यात् प्रतीकारं येन सम्पद्यते सुखम् ॥
अश्वगन्धामपामार्गं सिन्दुवारं सुरालयम् ।

अवेलायां दशन्ते वै मैथुनार्त्ता भुजङ्गमाः ॥ * ॥
पुष्पगन्धाः स्मृता विप्राः क्षत्रियाश्चन्दनावहाः ।
वैश्याश्च घृतगन्धा वै शूद्राः शूर्म्मस्य गन्धिनः ॥ *
वासं तेषां प्रवक्ष्यामि यथावदनुपूर्व्वशः ।
नदीकूपतडागेषु गिरिप्रस्रवणेषु च ॥
आरामेषु पवित्रेषु शुचिष्वायतनेषु च ॥
वसन्ति ब्राह्मणाः सर्पाः ग्रामद्वारे चतुष्पथे ॥
क्षत्रियो वसते नित्यं तोरणेषु पुरेषु च ।
गोशालास्वश्वशालासु पलालेषु तटेषु च ॥
गोष्ठेषु पथि वृक्षेषु विप्र वैश्या वसन्ति च ।
अविविक्तेषु स्थानेषु निर्झरेषु वनेषु च ।
शून्यागारे श्मशाने च शूद्रा विप्र वसन्ति च ॥
श्वेताश्च कपिलाश्चैव ये सर्पास्त्वनलप्रभाः ।
सात्त्विका मनस्विनो विप्र ब्राह्मणास्ते बुधैः स्मृताः ॥
रक्तवर्णसुवर्णाभप्रबालमणिसन्निभाः ।
सूर्य्यप्रभास्तथा विप्र क्षत्रियास्ते भुजङ्गमाः ॥
नानाविचित्रराजीभिरतसीवर्णसन्निभाः ।
वाणपुष्पसुवर्णाभा वैश्यास्ते च भुजङ्गमाः ॥
काकोदरनिभाः केचित् ये च अञ्जनसन्निभाः ।
काकवर्णा धूम्रवर्णास्ते शद्राः परिकीर्त्तिताः ॥ *
यस्य सर्पेण दष्टस्य दंशमङ्गुलमन्तरम् ।
बालदष्टं विजानीयात् कश्यपस्य वचो यथा ॥
यस्य सर्पेण दष्टस्य दंशं द्व्यङ्गुलमन्तरम् ।
यौवनस्थेन दष्टस्य एतद्भवति लक्षणम् ॥
यस्य सर्पेण दष्टस्य सार्द्धद्व्यङ्गुलमन्तरम् ।
वृद्धदष्टं विजानीयात् कश्यपस्य वचो यथा ॥ * ॥
अनन्तः प्रेक्षते पूर्व्वे वामपार्श्वे तु वासुकिः ।
तक्षको दक्षिणे पार्श्वे कर्क्कोटः पृष्ठतस्तथा ॥
बलेन भ्रमते पद्मो महापद्मो निमज्जति ।
विमज्जंस्तिष्ठते चैव शङ्खपालो मुहुर्म्मुहुः ॥
सर्व्वेषां कुरुते रूपं कुलिकः पन्नगोत्तमः ।
अनन्तस्य दिशा पूर्व्वा वासुकेस्तु हुताशनः ॥
दक्षिणा तक्षकस्योक्ता कर्क्कोटस्य तु नैरृती ।
पश्चिमा पद्मनाभस्य महापद्मस्य वायुजा ॥
उत्तरा शङ्खपालस्य वैशानी कुलिकस्य तु ।
अनन्तस्य भवेत् पद्मं वासुकेः स्यात्तथोत्पलम् ॥
स्वस्तिकं तक्षकस्योक्तं कर्क्कोटस्य त्रिरेखकम् ।
पद्मस्य तु भवेत् पद्मं शूलमश्वतरस्य तु ॥

चतुःषष्टिः समाख्याता भोगिनो मत्तपन्नगाः ॥
अदृश्यास्तेषु षड्विंशा अष्टत्रिंशा महीधराः ।
विंशास्तु कुलिताः प्रोक्ताः सप्त मण्डलिनस्तथा ।
राजीवास्तु दश प्रोक्ता दक्षाः षोडश पञ्च च ॥
इन्दुभो दुन्दुभिश्चैव चैडभः श्रेष्ठवाहनः ॥
नागपुष्पसुवर्णाख्या निर्व्विषा ये च पन्नगाः ।
एवमेवन्तु सर्पाणां शतद्विनवति स्मृतम् ॥
वराहकर्णं गजपिप्पलिञ्च गान्धारिका पिप्पलदेवदारु ।
मधूकसारं सह सिन्धुवारं हिङ्गुञ्च पिष्ट्वा गुडिका च कार्य्या ॥ * ॥
सुमन्तुरुवाच ।
इत्युक्तवान् पुरा वीर गौतमस्य प्रजापतिः ।
लक्षणं सर्व्वनागानां रूपवर्णविषैस्तथा ॥
तस्मात् संपूजयेन्नागान् सदा भक्त्या समन्वितः ।
विशेषतस्तु पञ्चम्यां पयसा पायसेन च ॥
श्रावणे मासि पञ्चम्यां शुक्लपक्षे नराधिप ।
द्वारस्योभयतो लेख्या गोमयेन विषोल्वणाः ॥
पूजयेद्विधिवद्वीर दधिदूर्व्वाक्षतैः कुशैः ।
गन्धपुष्पोपहारैश्च ब्राह्मणानाञ्च तर्पणैः ॥
ये त्वस्यां पूजयन्तीह नागान् भक्तिपुरःसराः ।
न तेषां सर्पतो वीर भयं भवति कर्हिचित् ॥"
इति भविष्ये पञ्चमीकल्पे ॥ * ॥
सुमन्तुरुवाच ।

एतत् सर्पिःसमायुक्तं पानं नस्यञ्च दापयेत् ।
एतेनैवोपचारेण सुखी भवति मानवः ॥ * ॥
क्षत्रियेण तु दष्टस्य कम्पो गात्रेषु जायते ।
मूर्च्छा मोहस्तथा स्याद्वै न ज्ञानमभिजायते ॥
जायते वेदना तस्य ऊद्र्ध्वञ्चैव निरीक्षते ।
तस्य कुर्य्यात् प्रतीकारं येन सम्पद्यते सुखम् ॥
अर्कमूलमपामार्गं प्रियङ्गुमथ वारुणीम् ।
एतत् सर्पिःसमायुक्तं पानं तस्य प्रदापयेत् ।
एतेनैवोपचारेण सुखी भवति मानवः ॥ * ॥
वैश्येनापि हि दष्टस्य शृणु रूपाणि यानि तु ।
श्लेष्मप्रकोपो लाला च नवोद्वहति वेदना ॥
मूर्च्छा च प्रबला यस्य आत्मानं नाभिनन्दति ।
तस्य कुर्य्यात् प्रतीकारं येन सम्पद्यते सुखम् ॥
अश्वगन्धां सगोमूत्रां गृहधूमं सगुग्गुलुम् ।
शिरीषार्कपलाशञ्च श्वेतां च गिरिकर्णिकाम् ॥
गोमूत्रेण समायुक्तं पानं नस्यञ्च दापयेत् ।
एष वैश्येन दष्टानामगदः परिकीर्त्तितः ॥ * ॥
शूद्रेणापि हि दष्टस्य शृणु तत्त्वेन गौतम ।
कुप्यते वेपते चैव ज्वरः शीतञ्च जायते ॥
अङ्गानि चुलुचुलायन्ते शूद्रदष्टस्य लक्षणम् ।
शङ्खजातेर्भवेच्छत्रं कुलिकस्यार्द्धचन्द्रकम् ।
अनन्तः कुलिको विप्रः क्षत्रियौ शङ्खवासुकी ॥
महापद्मस्तक्षकश्च वैश्यो विप्र प्रकीर्त्तितः ।
पद्मकर्क्कोटकौ शूद्रौ सदा ज्ञेयौ मनीषिभिः ॥
अनन्तकुलिकौ शुक्लौ वर्णतो ब्रह्मसम्भवौ ।
वासुकिः शङ्खपालश्च रक्तौ ह्यग्निसमुद्भवौ ॥
तक्षकश्च महापद्म इन्द्रात् पीतौ बभूवतुः ।
पद्मकर्क्कोटकौ विप्र सर्पौ कृष्णौ बभूवतुः ॥ * ॥
हयं यानं वृषं छत्रं राजानमथ पावकम् ।
धरणीमुत्पाद्य धृतानेतान् सिद्धिकरान् विदुः ॥
पूर्णकुम्भः पताका च काञ्चनं मणयस्तथा ।
शरसो मालिका कम्बूजीवञ्जीवेति सुव्रता ॥
एतेषां दर्शनं श्रेष्ठं कन्या च प्रातिसूतिका ।
"तथा भाद्रपदे मासि पञ्चम्यां श्रद्धयान्वितः ।
तथालिख्य नरो नागान् कृष्णवर्णादिवर्णकैः ॥
पूजयेद्गन्धपुष्पैश्च सर्पिःपायसगुग्गुलैः ।
तस्य तुष्टिं समायान्ति पन्नगास्तक्षकादयः ॥
आसप्तमात् कुलात्तस्य न भयं नागतो भवेत् ।
तस्मात् सर्व्वप्रयत्नेन नागान् वै पूजयेद्बुधः ॥"
इति भविष्ये पञ्चमीकल्पे ॥ * ॥
सुमन्तुरुवाच ।
"तथा चाश्वयुजे मासि पञ्चम्यां कुरुनन्दन ।
कृत्वा कुशमयान्नागान् इन्द्राण्या सह पूजयेत् ॥
घृतोदकाभ्यां पयसा स्नापयित्वा विशाम्पते ।
गोधूमैः पयसा स्विन्नैर्भक्ष्यैश्च विविधैस्तथा ॥
यस्त्वस्यां विधिवन्नागान् शुचिर्भक्त्या समन्वितः ।
पूजयेत् कुरुशार्द्दूल तस्य शेषादयो नृप ॥
नागाः प्रीता भवन्तीह शान्तिमाप्नोति मानवः ।
सुशान्तिलोकमासाद्य मोदते शाश्वतीः समाः ॥
इत्येतत् कथितं विप्र पञ्चमीकल्पमुत्तमम् ।
पन्नगान्मुच्यते मन्त्रं सर्व्वसर्पनिषेधकम् ॥"
ॐ कुरु कुले नः फट् स्वाहा । इति भविष्य-
पुराणे शतसाहस्र्यां संहितायां पञ्चमीकल्पे ॥ *
अन्यच्च ।
सूत उवाच ।

| | | |
|---|---|---|
| तस्यागदं प्रवक्ष्यामि येन सम्पद्यते सुखम् ॥<br>पद्मञ्च लोध्रकञ्चैव क्षौद्रं पद्मस्य केशरम् ।<br>मधु मधुकसारञ्च श्वेता च गिरिकर्णिका ॥<br>एतानि समभागानि पेषयेत् शीतवारिणा ।<br>पानं लेपाञ्जनं नस्यं सुखी भवति मानवः ॥ * ॥<br>पूर्व्वाह्ने चरते विप्रो मध्याह्ने क्षत्त्रियश्चरेत् ।<br>अपराह्ने चरेद्वैश्यः शूद्रः सन्ध्याचरो भवेत् ॥<br>आहारश्चात्र पुष्पाणि ब्राह्मणानां विदुर्ब्बुधाः ।<br>मूषिकाः क्षत्त्रियाणाञ्च आहारो द्विजसत्तम ॥<br>वैश्या मण्डूकभक्ष्याश्च शूद्राः सर्व्वाशिनस्तथा ॥<br>अग्रतो दशते विप्रः क्षत्त्रियो दक्षिणेन तु ।<br>वामपार्श्वे सदा वैश्यः पश्चाद्वै शूद्र आदशेत् ॥<br>मदकाले तु संप्राप्ते पीड्यमाना महाविषाः । | | “प्राणेश्वरं गारुडञ्च शिवोक्तं प्रवदाम्यहम् ।<br>स्थानान्यादौ प्रवक्ष्यामि नद्यां दष्टो न जीवति ॥<br>चितावल्मीकशैलादौ कूपे च विवरे तरोः ।<br>दंशे रेखात्रयं यस्य प्राच्छन्नं स न जीवति ॥<br>षष्ठ्याञ्च कर्क्कटे मेषे मूलाश्लेषामघादिषु ।<br>कक्षाश्रोणिगले सन्धौ शङ्ककर्णोदरादिषु ॥ |

दण्डी शस्त्रधरो भिक्षुर्लग्नादिः कालदूतकः ।
वक्त्रे बाहौ च ग्रीवायां पृष्ठे च नहि जीवति ॥
पूर्व्वं दिनपतिर्भुङ्क्ते ह्यर्द्धयामन्ततोऽपरे।
शेषा ग्रहाः प्रतिदिनं षट्सङ्ख्यापरिवर्त्तनैः ॥
नागभोगक्रमो ज्ञेयो रात्रौ वाणविवर्त्तनैः ।
शेषोऽर्कः फणिपश्चन्द्रस्तक्षको भौम ईरितः ॥
कर्क्कोटो ज्ञो गुरुः पद्मो महापद्मश्च भार्गवः ।
शङ्खः शनैश्चरो राहुः कुलिकश्चाहयो ग्रहाः ॥
रात्रौ दिवा सुरगुरोर्भोगे स्यादमरान्तकः।
पङ्गोः कालो दिवा राहुः कुलिकेन सह स्थितः ॥
यामार्द्धसन्धिसंस्थः स वेलां कालयतीञ्चरेत् ।
वाणद्विषड्वह्निवाजियुग्मभूरेकभागतः ॥
दिवा षड्वेदनेत्रादिपञ्चत्रिवसुस्वांशकैः ।
पादाङ्गुष्ठे पादपृष्ठे गुल्फे जानुनि लिङ्गके ॥
नाभौ हृदि स्तनतटे कण्ठे नासापुटेक्षणे ।
कर्णयोश्च भ्रुवोः शङ्खे मस्तके प्रतिपत्क्रमात् ॥
तिष्ठेच्चन्द्रश्च जीवेन पुंसो दक्षिणभागके।
कायस्य वामभागे तु स्त्रिया वायुवहात् करात् ॥
अमवत्त्वकृतो मोहो निवर्त्तेत च मर्द्दनात् ।
आत्मनः परमं बीजं हंसाख्यं स्फाटिकामलम् ॥
ज्ञातव्यं विषपापघ्नं बीजं तस्य चतुर्व्विधम् ।
बिन्दुपञ्चस्वरयुतमाद्यमुक्तं द्वितीयकम् ॥
षष्ठारूढं तृतीयं स्यात् सविसर्गं चतुर्व्विधम् ।
ॐ कुरु कुन्दे स्वाहा ॥
विद्या त्रैलोक्यरक्षार्थं गरुडेन धृता पुरा ।
मन्त्रो हरेत् दष्टकस्य त्वङ्मांसादिगतं विषम् ।
स वायुना समाकृष्य दन्तानां गरलं हरे ।
तनौ न्यसेद्दष्टकेव नीलकण्ठादि संस्मरेत् ॥ * ॥
पीतं प्रत्यङ्गिरामूलं तण्डुलाद्भिर्व्विषापहम् ।
पुनर्नवाफलिनीनां मूलं चक्रजमीदृशम् ॥
मूलं शुक्लवृहत्यास्तु कर्क्कोट्या गैरिकर्णिकम् ।
अद्भिर्घृष्टघृतोपेतलेपोऽयं विषमर्द्दनः ॥
विषमृद्धिं न व्रजेच्च उष्णं पिबति यो घृतम् ।
पञ्चाङ्गन्तु शिरीषस्य मूलं गृञ्जनजन्तथा ।
सर्व्वाङ्गलेपतश्चापि पानाद्वा विषहृद्भवेत् ॥
ह्रीँ गोनसादिविषहृत् ॥
हृल्ललाटविसर्गान्तं ध्यातं वश्यादिकृद्भवेत् ।
न्यस्तं योनौ वशेत् कन्यां कुर्य्यान्मदजलाविलाम् ॥
जप्त्वा सप्ताष्टसाहस्रं गरुत्मानिव सर्व्वगः ।
कविः स्यात् श्रुतिधारी स्याद्वश्यस्त्रीश्चायुरा-प्नुयात् ।
विषहृत् स्यात् कथा तद्वन्मुनिर्वा सम्मतो ध्रुवम् ॥”
इति गारुडे प्राणेश्वरं गारुडं समाप्तं १९ अध्यायः ॥ * ॥ * ॥ अपरञ्च ।
अग्निरुवाच ।
“नागादयोऽथ तारादिदशस्थानानि मर्म्म च ।
सूतकं दष्टचेष्टेति सप्तलक्षणमुच्यते ॥
शेषवासुकितक्षाख्याः कर्क्कटोऽब्जो महाम्बुजः ।
शङ्खपालश्च कुलिक इत्यष्टौ नागवर्य्यकाः ॥
दशाष्टपञ्चत्रिगुणशतमूर्द्धान्विताःक्रमात् ।
विप्रौ नृपौ विशौ शूद्रौ द्वौ द्वौ नागेषु कीर्त्तितौ ॥
तदन्वयाः पञ्चशतं तेभ्यो जाता ह्यसङ्ख्यकाः ।
फणिमण्डलिराजीलवातपित्तकफात्मकाः॥
व्यन्तरा दोषमिश्रास्ते सर्पा दर्वीकराः स्मृताः ।
रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिणः ॥
गोनसा मन्दगा दीर्घा मण्डलैर्व्विविधैः स्थिताः ।
राजीलाश्चित्रिताः स्निग्धास्तिर्य्यगूर्द्ध्वञ्च
दुष्टः सकालः सर्व्वत्र सर्व्वदंशे विनिर्द्दिशेत् ॥
कृत्तिका भरणी स्वाती मूलं पूर्व्वात्रयाश्विनी ।
विशाखार्द्रा मघाश्लेषा चित्रा श्रवणरोहिणी ॥
हस्ता मन्दकुजौ वारौ पञ्चमी चाष्टमी तिथिः ।
षष्ठी रिक्ता शिवा निन्द्या पञ्चमी च चतुर्द्दशी ॥
सन्ध्याचतुष्टयं दुष्टं दग्धयोगाश्च राशयः ।
एकद्विबहवो दंशा दष्टविद्धञ्च खण्डितम् ॥
अदंशमवगुप्तं स्याद्दंशमेवं चतुर्व्विधम् ।
त्रयो द्व्येकक्षता दंशा वेदना रुधिरो नृणाम् ॥
नक्तं द्व्यैकाङ्घ्रिकूर्म्माभा दंशाश्च यमचोदिताः ॥
दाही पिपीलिकास्पर्शी कण्ठशोषरुजान्वितः।
सतोदो ग्रन्थितो दंशः सविषो न्यस्तनिर्व्विषः ॥
देवालये शून्यगृहे वल्मीकोद्यानकोटरे ।
रथ्या सन्ध्या श्मशाने च श्मशाने सिन्धुसङ्गमे ॥
द्वीपे चतुष्पथे सौधे गृहेऽब्जे पर्व्वताग्रतः ।
विलद्वारे जीर्णकूपे जीर्णवेश्मनि कुड्यके ॥
शिग्रुश्लेष्मातकाक्षेषु जम्बूडुम्बरणेषु च ।
वटे च जीर्णप्राकारे खास्यहृतकक्षजत्रुणि ॥
तालौ शङ्खे गले मूर्द्ध्नि चिवुके नाभिपादयोः ।
दंशोऽशुभः शुभो भूतःपुष्पहस्तः सुवाक् सुधीः ॥

वधेप्सुना च नागानां मुखेऽथ प्रणवं न्यसेत्
॥
गले कुरु न्यसेत् पश्चात् हृदि चैव
विशेषतः ।
कुन्दे स्वा गुह्ययोः पादयुगे हान्यास ईरितः
।
गृहेपि लिखिता यत्र तन्नागाः संत्यजन्ति च
॥
सहस्रमन्त्रजप्तन्तु सूत्रं कर्णे धृतं तथा ।
यद्गृहे शर्करा जप्ता क्षिपा नागास्त्यजन्ति
च ।
सप्तलक्षस्य जप्याद्वै सिद्धिः प्राप्ता सुरासुरैः
॥
ॐ सुवर्णरेखे कुक्कुटविग्रहरूपिणि स्वाहा
॥
एवञ्चाष्टदले पद्मे दले वर्णयुगं लिखेत् ।
नामैतत् वारिधाराभिः स्नातो दष्टो विषं
त्यजेत् ॥
ॐ पक्षि स्वाहा ।
अङ्गुष्ठादिकनिष्ठान्तं करे न्यस्याथ देहके ।
के वक्त्रे हृदि लिङ्गे च पादयोर्गरुडो हि सः
॥
नाक्रामन्ति च तच्छायां स्वप्नेऽपि
विषपन्नगाः ।
यस्तु लक्षं जपेच्चास्याः स दृष्ट्वा
नाशयेद्विषम् ॥
ॐ ह्रौँ ह्रौँ ह्रीँ भिरुण्डायै नमः ॥
कर्णे जप्ता त्वियं विद्या दष्टकस्य विषं हरेत्
।
अ-आ न्यसेत्तु पादाग्रे इ-ई गुल्फेऽथ
जानुनि ॥
उ-ऊ ए-ऐ कटितटे ओ नाभौ विन्यसेत्
सुधीः ।
हृदि औ वक्त्रदेशे च अङ्गे अः हंससंयुताः
॥
हंसो विषादि च हरेत् जप्तो ध्यातोऽथ
पूजितः ।
गकडोऽहमिति ध्यात्वा कुर्य्याद्विषहरां
क्रियाम् ॥
हं मन्त्रं गात्रविन्यस्तं विषादिहरमीरितम् ।

राजिभिः ॥
व्यन्तरा मिश्रचिह्नाश्च भूवर्षाग्नेयवायवः ।
चतुर्व्विधास्ते षड् विंश भेदाः षोडश गोनसाः
॥
त्रयोदश च राजीला व्यन्तरा एकविंशतिः ।
येऽनुक्तकाले जायन्ते सर्पास्ते व्यन्तराः स्मृताः
॥
आषाढादित्रिमासैः स्याद्गर्भो मासचतुष्टये ।
अण्डकानां शते द्वे च चत्वारिंशत् प्रसूयते ।
सर्पा ग्रसन्ति सूतौ तान् विना स्त्रीपुंनपुंसकान्
।
उन्मीलतेऽक्षि सप्ताहात् हृष्टो मासाद्भवेद्बहिः ॥
द्वादशाहात् स्वबोधः स्याद्दन्ताः स्युः सूर्य्य-
दर्शनात् ।
द्वात्रिंशद्दिनविंशत्याश्चतस्रस्तेषु दंष्ट्रिकाः ॥
कराली मकरी कालरात्री च यमदूतिकाः ।
एतास्ताः सविषा दंष्ट्रा वामदक्षिणपार्श्वगाः ॥
षण्मासान्मुञ्चते कृत्तिं जीवेत् षष्टिसमाद्वयम् ।
नागाः सूर्य्यादिवारेशाः सप्त उक्ता दिवानिशि ॥
तेषां षट् प्रतिवारेषु कुलिकः सर्व्वसन्धिषु ।
शङ्खेन वा महाब्जेन सह तस्योदयोऽथवा ॥
द्वयोर्व्वा नाडिकामन्त्रमन्तरं कुलिकोदयः ।

लिङ्गवर्णसमानश्च शुक्लवस्त्रोऽमलः
शुचिः ।
अपद्वारागतः शस्त्री प्रमादी भूगतेक्षणः
॥
विवर्णवासाः पाशादिहस्तो
गद्गदवर्णभाक् ।
शुष्ककाष्ठाश्रितः
खिन्नस्तिलाक्तककरांशुकः ॥
आर्द्रवासाः कृष्णरक्तपुष्पो
हेमशिरोरुहः ।
कुचमर्द्दी नखच्छेदी गुदस्पृक्
पादलेखकः ॥
केशलुञ्ची तृणच्छेदी दुष्टा
दूतास्तथैकलः ।
इडान्यावाहयद्द्वेधा यदि दूतस्य
चात्मनः ॥
आभ्यां द्वाभ्यां पृष्टयान्यान् विद्यात्
स्त्रीपुंनपुं-
सकान् ।
दूतः स्पृशति यद्गात्रं तस्मिन्
दंशमुदाहरेत् ॥
दूताङ्घ्रिचलनं दुष्टं सुखिभिर्निश्चला
शुभा ।
जीवपार्श्वे शुभो दूतो दुष्टोऽन्यत्र
समागतः ॥
जीवो गतागते दुष्टः शुभो दूतनिवेदने ।
दूतस्य वाक् प्रदुष्टा सा
पूर्व्वामिजार्द्धनिन्दिता ॥
विभक्तैस्तस्य
वाक्यान्तैर्व्विषनिर्व्विषकालता ।
आद्यैः स्वरैश्च काद्यैश्च
वर्गैर्भिन्नलिपिर्द्विधा ॥
स्वरजोवसुमान् वर्गी इति क्षेप्यश्च
मातृकाः ।
वाताग्नीन्द्रजलात्मानो वर्गेषु च
चतुष्टयम् ॥
नपुंसकाः पञ्चमाः स्युः स्वराः
शक्राम्बुयोनयः ।
दुष्टौ दूतस्य वाक्पादौ वाताग्नी मध्यमो
हरिः ॥

| | | |
|---|---|---|
| न्यस्य हंसं वामकरे नासामुखनिरोधकृत् ॥ | | प्रशस्ता वारुणा वर्णा अतिदुष्टा नपुंसकाः ।<br>प्रस्थाने मङ्गलं वाक्यं गर्ज्जितं मेघहस्तिनोः ॥<br>प्रदक्षिणं फले वृक्षे चासस्य च रुतं जितम् ।<br>शुभा गीतादिशब्दाः स्युरीदृशं स्यादसिद्धये ॥<br>अनर्थगीताथाक्रन्दो दक्षिणे विरुतं क्षुतम् ।<br>वेश्या विप्रो नृपः कन्या गौर्दन्ती मुरजध्वजौ ॥<br>क्षीराज्यदधिशङ्खाम्बुच्छत्रंभेरी फलं सुराः ।<br>तण्डुला हेमरूप्यञ्च सिद्धयेऽभिमुखा अमी ॥<br>सकाष्ठः सानलः कारुर्म्मलिनाम्बरभारभृत् ।<br>गलस्थटङ्को गोमायुर्गृध्रोलूककपर्द्दिकाः ॥<br>तैलं कपालकार्पासा निषेधो भस्मनष्टये । |

विषवेगाश्च सप्त स्युर्धातोर्द्धात्वन्तराप्तितः ॥
विषदंशो ललाटं यात्यतो नेत्रं ततो मुखम् ।
आस्याच्चरणनाभी द्वौ धातून् प्राप्नोति हि
क्रमात् ॥”
इत्याग्नेये २९४ अध्याये लक्षणानि ॥ * ॥
अग्निरुवाच ।
“मन्त्रध्यानौषधैर्दष्टचिकित्सां प्रवदामि ते ।
ॐ नमो भगवते नीलकण्ठायेति ॥
जपनाद्विषहानिः स्यादौषधं जीवरक्षणम् ।
साज्यं सकृद्रसं पेयं द्विविधं विषमुच्यते ॥
जङ्गमं सर्पमूषादि शुङ्गादि स्थावरं विषम् ।
शान्तस्वरान्वितो ब्रह्मा लोहितं तारकः शिवः
॥
विषते नाम मन्त्रोऽयं तार्क्षः शब्दमयः स्मृतः ।
ज्वल महामते हृदयाय । गरुडविलासशिरसे ।
गरुडशिखायै । गरुडविषभञ्जन ३ प्रभेदन ३
वित्रासय ३ विमर्द्दय ३ कवचाय । अप्रति-
हतशासनं वँ हूँ फट् अस्त्राय । उग्ररूप-
धारक सर्व्वभयङ्कर भीषय ३ सर्व्वं दह ३
भस्मीकुरु कुरु स्वाहा नेत्राय ।
सप्तवर्णान्तयुग्माष्टदिग्दलस्वरकेशरात् ।
वर्णरत्नं बहिश्चाभूत् कर्णिकं मातृकाम्बुजम् ।
कृत्वा हृदिस्थं तन्मन्त्री वामहस्ततले स्मरेत्
॥
अङ्गुष्ठादौ न्यसेद्वर्णान् विषभेदोदिताः कलाः ।
पात्रं वज्रचतुष्कोणं पार्थिवं शक्रदैवतम् ॥
वृत्तार्द्धमाप्यं पद्मार्द्धं शुक्लं वरुणदैवतम् ।
त्र्यस्रं स्वस्तिकयुक्तञ्च भैषजं वह्निदैवतम् ॥
वृत्तबिन्दुवृतं वायुदैवतं कृष्णमानिलम् ।
अङ्गुष्ठाद्यङ्गुलीमध्ये पर्य्यास्तेषु स्ववेश्मसु ॥
सर्व्वर्णनागवाहनवेष्टितेषु न्यसेत् क्रमात् ।
विषते चतुरो वर्णान् स्वमण्डलसमत्विषः ।
अरूपे वरतन्मात्रे आकाशे शिवदैवते ॥
कनिष्ठामध्यपर्व्वान्ते न्यसेत्तस्याद्यमक्षरम् ।
नागानामादिवर्णांश्च स्वमण्डलगतान्न्यसेत् ॥
भूतादिवर्णान् विन्यस्य अङ्गुष्ठाद्यन्तपर्व्वसु ।
तन्मात्रादिगुणाद्यर्णानङ्गुलीषु न्यसेद्बुधः ॥
स्पर्शनादेव तार्क्ष्येण हस्ते हन्याद्विषद्वयम् ।
संददात्येव संयुक्तो भूतेजोव्यत्ययात् स्थितः ॥
भूवायुव्यत्ययान्मन्त्रो विषं संक्रामयत्यसौ ।
अन्तस्थो निजवेश्मस्थो बीजाग्नीन्दुजलाम्बुभिः
॥
एतत् कर्म्म नयेन्मन्त्री गरुडाकृतिविग्रहः ।
ताक्ष्र्यवारणगेहस्थस्तर्जनान्नाशयेद्विषम् ॥
जानुदण्डीन्दुमुदितं स्वधाश्रीबीजलाञ्छितम् ।
स्नानपानात् सर्व्वविषजरारोगापमृत्युजित् ॥
पक्षि पक्षि महापक्षि महापक्षि विवि स्वाहा ।
पक्षि पक्षि महापक्षि महापक्षि क्षीक्षी स्वाहा ॥
द्वावेतौ पक्षिराड्मन्त्रौ विषघ्नावभिमन्त्रणात् ।
पक्षिराजाय विद्महे पक्षिदेवाय धीमहि तन्नो
गरुडः प्रचोदयात् ॥
वह्निस्थौ पार्श्वतत्पूर्व्वौ दन्तश्रीकौ च दन्तिनौ ।
सकलो लाङ्गली चेति नीलकण्ठाद्यमीरितः ॥
वक्षःकण्ठशिखाश्वेक्तं न्यसेत् स्तम्भे सुसंस्कृतौ
।
हर हर हृदयाय नमः कपर्द्दिने च शिरसे नील-
कण्ठाय वै शिखाम् ॥
कालकूटविषभक्षणाय स्वाहार्थर्व्व वर्म्म च ।
कण्ठिनेत्रं कृत्तिवासं नेत्रैः प्रत्येकशस्त्रिभिः ।
पूर्व्वाद्यैरानर्नैर्युक्तं श्वेतपीतारुणासितैः ॥
अभयं वरदञ्चापं वासुकिञ्च दधद्भजः ।
यज्ञोपवीतपार्श्वक्तु गौरी रुद्रोऽस्य देवता ॥
पादजानुगुहानाभिहृत्कण्ठाननमूर्द्धसु ।
मन्त्रार्णान्न्यस्य करयोरङ्गुष्ठाद्यङ्गुलीषु च ॥
तर्ज्जन्यादितदन्तासु सर्व्वमङ्गुष्ठयोर्न्यसेत् ।
ध्यात्वैवं संहरेत् क्षिप्रं बद्धया मूलमुद्रया ॥
कनिष्ठा ज्येष्ठया बद्ध्वा तिस्रोऽन्याः
प्रसृतिर्जवः ।
विषनाशो वामहस्तमन्यस्मिन् दक्षिणं करम् ॥
नमो भगवते नीलकण्ठाय चिः । अमलकण्ठाय
चिः सर्व्वज्ञकण्ठाय चिः क्षिप ओम् स्वाहा ॥
नमो नीलकण्ठाय नैकसर्व्वविषापहाय । नमस्ते
रुद्रमन्यव इति सम्माार्ज्जनाद्विषं विनश्यति ॥
न सन्देहः कर्णजाप्या उपनेत्रा विधानतः ।
यजेद्रुद्रविधानेन नीलग्रीवं महेश्वरम् ।
विषव्याधिविनाशः स्यात् कृत्वा रुद्र विधानतः
॥”
सहा ५ सर्पकङ्काली ६
विषनाशिनी ७ । इति
शब्दचन्द्रिका ॥

**सर्पकङ्काली**, स्त्री, (सर्पस्य कङ्कालमिवाङ्गं यस्याः ।
ङीष् ।) सर्पकङ्कालिका । इति
शब्दचन्द्रिका ॥

**सर्पगन्धा**, स्त्री, (सर्पं गन्धयते हिनस्तीति । गन्ध
हिंसने + अण् । टाप् ।)
वृक्षवेशेषः । यथा,
“छत्राकी सर्पगन्धा च रसना च
पलङ्कषा ॥”
इति जटाधरः ॥

**सर्पघातिनी**, स्त्री, (सर्पं हन्तीति । हन + णिनिः ।
ङीष् ।) सर्पकङ्कालीभेदः । यथा,
--
“सर्पसहा सर्पनामा सर्पाङ्गी
सर्पघातिनी ॥”
इति रत्नमाला ॥

**सर्पतृणः**, पुं, (सर्पस्तृणमिव च्छेद्यो यस्य ।)
नकुलः । इति हेमचन्द्रः ॥

**सर्पदंष्ट्रः**, पुं, (सर्पस्य द्रंष्ट्रेव पुष्पमस्य ।) दन्ती-
वृक्षः । इति शब्दचन्द्रिका ॥

**सर्पदंष्ट्रा**, स्त्री, (सर्पस्य द्रंष्ट्रेव ।) वृश्चिकाली ।
इति रत्नमाला ॥

**सर्पदंष्ट्रिका**, स्त्री, (सर्पदंष्ट्रा + स्वार्थे कन् । टापि
अत इत्वम् ।) अजशृङ्गी । इति
राजनिर्घण्टः ॥

**सर्पदण्डा**, स्त्री, (सर्पं दण्डयतीति । दण्ड + अण् ।

मण्डलादिषु तान् वर्णान् विषते करयोजितान्
॥
श्रेष्ठाद्यङ्गुलिभिर्देहनाभिस्थानेषु पर्व्वसु ।
स्रजोन्नतः सवर्णाभमानाभे स्तुहिनप्रभम् ॥
कुङ्कुमारुणमाकण्ठादाकेशान्तात् सितेतरम् ।
ब्रह्माण्डयापिनं तार्क्ष्यं चन्द्राख्यं नागभूषणम् ॥
नीलाग्रनासमात्मानं महापक्षं स्मरेद्बुधः ।
एवं तार्क्ष्यात्मनो वाक्यान्मन्त्रः स्यान्मन्त्रिणो
विषे ॥
स्वस्ति तार्क्ष्यकरस्यान्तः स्थिताङ्गुष्ठविषापहा
।
ताक्ष्यहस्तं समुद्यम्य तत्पञ्चाङ्गुलिचालनात् ॥
कुर्य्याद्विषस्य स्तम्भादींस्तद्धक्रमदवीषया ।
आकाशादेशभूबीजः पश्चाङ्गाधिपतिर्म्म्नुः ॥
संस्तम्भयेति वीषातो भाषया स्तम्भयेद्विषम् ।
व्यत्यस्तभूषया बीजो मन्त्रोऽयं साधुसाधितः
॥
संप्लवः प्लावयशसः शब्दाद्यः संहरेद्विषम् ।
दष्टमुत्थापयेद्वैषं स्वजप्ताम्भोऽभिषेकतः ॥
स्वजप्तशङ्खभेर्य्यादिनिस्वनश्रवणेन वा ।

इत्याग्नेये महापुराणे दष्टचिकित्सा नाम २९५
अध्यायः ॥ * ॥ * ॥ यात्राकाले तस्य शुभा-
शुभसूचकत्वं यथा, --
“गोनासदर्व्वीकरराजिलाद्या
जात्यैव सर्व्वे भयदा भुजङ्गाः ।
विलोक्य सर्पं यदि निर्व्विकल्प्या
निवृत्तविप्रस्य शुभं विचिन्त्यम् ॥
पाषाणसंस्तम्भितकण्टकेषु
दत्त्वा पदं यान्ति विनण्टविघ्नाः ।
सर्पेच्छया पञ्चनखाभिधेयः
प्रयाणकाले स तु वामभागे ।
दृष्टः शुभैः सिद्धिकृदुन्नताग्र-
स्तिष्ठेत् पथार्द्ध यदि राज्यलाभः ॥”
इति सर्पः । इति वसन्तराजशाकुने १५ वर्गः ॥

**सर्पकङ्कालिका**, स्त्री, (सर्पकङ्काली एव । स्वार्थे
कन् ।) वृक्षविशेषः । तत्पर्य्यायः । तीक्ष्णा २
विषदंष्ट्रा ३ विषापहा ४ । इति रत्नमाला ॥

टाप् ।) सैंहली । इति
राजनिर्घण्टः ॥

**सर्पदण्डी**, स्त्री, (सर्पं दण्डयतीति । दण्ड + अण् ।
ङीष् ।) गोरक्षी । इति
राजनिर्घण्टः ॥

**सर्पदन्ती**, स्त्री, (सर्पस्य दन्त इव पुष्पमस्याः ।
गौरादित्वात् ङीष् ।) नागदन्ती ।
इति राज-
निर्घण्टः ॥

**सर्पदमनी**, स्त्री, (सर्पस्य दमनमस्याः । ङीष् ।)
वन्ध्याकर्क्कोटकी । इति
राजनिर्घण्टः ॥

**सर्पनामा**, स्त्री, (सर्पस्य नाम नाम यस्याः ।)
सर्पकङ्कालीभेदः । इति रत्नमाला
॥

**सर्पपुष्पी**, स्त्री, (सर्पस्य दन्त इव पुष्पमस्याः ।
ङीष् ।) नागदन्ती । इति
राजनिर्घण्टः ॥

**सर्पफणजः**, पुं, (सर्पस्य फणात् जायते इति ।
जन + डः ।) सर्पफणजातमणिः
। इति शब्द-
रत्नावली ॥

**सर्पभुक्**, [ज्] पुं, (सर्पं भुङ्क्ते इति । भुज + क्विप् ।)
मयूरः । इति हेमचन्द्रः ॥
सर्पभक्षके, त्रि ॥

**सर्पमाला**, स्त्री, (सर्पस्य मालेव ।) सर्पकङ्काली-
भेदः । इति काचित् रत्नमाला ॥
सर्पनामा
इति साधुपाठः ॥

**सर्पराजः**, पुं, (सर्पाणां राजा । समासे टच् ।)

| | | वासुकिः । इत्यमरः । १ । ८ । ४ ॥ (सर्पश्रेष्ठे, त्रि । यथा, हरिवंशे ६८ । १५ । "एष मोहं गतः कृष्णो मग्नो वैकालिये ह्रदे । भक्ष्यते सर्पराजेन तदागच्छत मारिचम् ॥") <br> **सर्पलता**, स्त्री, (सर्प इव लता ।) नागवल्ली । <br> इति राजनिर्घण्टः ॥ |
|---|---|---|

**सर्पसत्रं**, क्ली, (सर्पनाशकं सत्रम् ।) सर्पनाशक-
यज्ञविशेषः । यथा, श्रीभागवते । १२ । ६ ।
१६-२८ ।
"जनमेजयः स्वपितरं श्रुत्वा तक्षकभक्षितम् ।
यथा जुहाव संक्रुद्धः सर्पान् सत्रे सह द्विजैः ॥
सर्पसत्रे समिद्धाग्नौ दह्यमानान् महोरगान् ।
दृष्टेन्द्रं भयसंविग्नस्तक्षकः शरणं ययौ ॥
अपश्यंस्तक्षकं तत्र राजा पारीक्षितो द्विजान् ।
उवाच तक्षकः कस्मान्न दह्येतोरगाधमः ॥
तं गोपायति राजेन्द्र शक्रः शरणमागतम् ।
तेन संस्तम्भितः सर्पस्तस्मान्नाग्नौ पतत्यसौ ॥
पारीक्षित इति श्रुत्वा प्राहर्त्विज उदारधीः ।
सहेन्द्रस्तक्षको विप्रा नाग्नौ किमिति पात्यते ॥
तच्छ्रुत्वा जुहुवुर्व्विप्राः सहेन्द्रं तक्षकं मखे ।
तक्षकाशु पतस्वेह सहेन्द्रेण मरुत्वता ॥
इति ब्रह्मोदिताक्षेपैः स्थानादिन्द्रः प्रचालितः ।
बभूव संभ्रान्तमतिः सविमानः सतक्षकः ॥
तं पतन्तं विमानेन सह तक्षकमम्बरात् ।
विलोक्याङ्गिरसः प्राह राजानं तं बृहस्पतिः ॥
नैष त्वया मनुष्येन्द्र वधमर्हति सर्पराट् ।
अनेन पीतममृतमथवा अजरामरः ॥
जीवितं मरणं जन्तोर्गतिः स्वेनैव कर्म्मणा ।
राजंस्ततोऽन्यो नास्त्यस्य प्रदाता सुखदुःखयोः ।
सर्पचौराग्निविद्युद्भ्यःक्षुत्तृड्व्याध्यादिभिर्नृप ।
पञ्चत्वमिच्छते जन्तुर्भुङ्क्त आरब्धकर्म्म तत् ॥
तस्मात् सत्रमिदं राजन् संस्थीयेताभिचारिकम् ॥
सर्पा अनागसो दग्धा जनैर्दृष्टं हि भुज्यते ॥
इत्युक्तः स तथेत्याह महर्षेर्मानयन् वचः ।
सर्पसत्रादुपरतः पूजयामास वाक्पतिम् ॥"
(जरत्कारुपुत्त्रस्यास्तीकस्यवचनादेव जनमेजयः
सर्पसत्रात् विरराभेति पुराणान्तरमतम् ॥)

**सर्पसत्री**, [न्] पुं, (सर्पसत्रमस्यास्तीति । इनिः ।)
जनमेजयराजः । इति शब्दरत्नावली ॥

**सर्पसहा**, स्त्री, (सर्पं सहते इति । सह + अच् ।)
सर्पकङ्कालीभेदः । इति रत्नमाला ॥

**सर्पहा**, [न्] पुं, (सर्पं हन्तीति । हन् + क्विप् ।)
नकुलः । इति हेमचन्द्रः ॥

**सर्पाक्षं**, क्ली, (सर्पस्य अक्षीव अङ्गं यस्य । षच् ।)
रुद्राक्षम् । इति राजनिर्घण्टः ॥

**सर्पारिः**, पुं, (सर्पस्य अरिः ।) नकुलः । इति
राजनिर्घण्टः ॥ गरुडश्च ॥ (यथा, हरिवंशे
।
६८ । ३७ ।
"तं दृष्ट्वा पञ्चमूर्द्धानं सर्पं सर्पारिकेतनः ।
अक्रुद्ध एव भगवान् प्रत्युवाचोरगेश्वरम्
॥")

**सर्पावासं**, क्ली, (सर्पस्य आवासो यत्र ।) चन्दनम् ।
इति राजनिर्घण्टः ॥ सर्पस्थाने, पुं, ॥
(यथा,
हरिवंशे । ६८ । २५ ।
"यशोदामनुगच्छन्त्यः सर्पावासमिमं ह्रदम्
।
प्रविशामो न यास्यामो विना दामोदरं
व्रजम् ॥")

**सर्पाशनः**, पुं, (सर्पमश्नातीति । अश + ल्युः ।)
मयूरः । इति हलायुधः ॥ गरुडश्च ॥

**सर्पिः**, [स्] क्ली, (सर्पतीति । सृप गतौ + "अर्चि-
शुचिहुसृपीति ।" उणा० २ । १०९ । इति
इसिः ।) घृतम् । इत्यमरः । २ । ९ । ५२
॥
(यथा, मनुः । ३ । २७४ ।
"अपि नः स कुले जायात् यो नो दद्यात्
त्रयो-
दशीम् ।
पायसं मधुसर्पिर्भ्यां प्राक्छाये कुञ्जरस्य च
॥"
उदकम् । इति निघण्टुः । १ । १२ ॥)

**सर्पिणी**, स्त्री, (सर्पतीति । सृप् + णिनिः ।
ङीप् ।) सर्पभार्य्या । सापिनी इति भाषा ॥
यथा, शब्दरत्नावल्याम् ।
"आशीराशी सर्पदंष्ट्रा तत्स्त्री सर्पी च
सर्पिणी ॥"
क्षुद्रक्षुपभेदः । तत्पर्य्यायः । भुजगी २
भोगी ३
कुण्डली ४ पन्नगी ५ फणी ६ । तस्या
गुणौ ।
विषघ्नत्वम् । कुचवर्द्धनत्वञ्च । इति राज-
निर्घण्टः ॥

सर्व्वस्य सर्व्वदा ज्ञानात् सर्व्वमेतं पचक्षते ॥"
इति विष्णुपुराणम् ॥
विष्णुसहस्रनामस्तोत्रेऽप्येवमेव ॥

**सर्व्वः**, त्रि, (सृ + वन् ।) सम्पूर्णः । इत्यमरः ।
३ । १ । ६४ ॥ अस्य पर्य्यायः सकलशब्दे
द्रष्टव्यः । प्रयोगो यथा, --
"सर्व्वरत्नमयो मेरुः सर्व्वाश्चर्य्यमयं नभः ।
सर्व्वतीर्थमयी गङ्गा सर्व्वदेवमयो हरिः ॥"
इति वह्निपुराणे देवाम्बरीषसंवादे २ अध्यायः
॥

**सर्व्वंसहा**, स्त्री, (सर्व्वं सहते इति । सह + "पूः-
सर्व्वयोर्दारिसहोः ।" ३ । २ । ४१ । इति
खच् ।
अरुर्द्विषदिति मुम् ।) पृथिवी । इत्यमरः । २ ।
१ । ३ ॥
(यथा, आर्य्यासप्तशत्याम् । १३९ ।
"ऊढामुनातिवाह्य पृष्ठे लग्नापि कालमच-
लापि ।
सर्व्वं सहे कठोरत्वचः किमङ्केन कमठस्य ॥"
राज्ञि, पुं, । इति काशिका ॥ सर्व्वक्लेशादि-
सहे, त्रि । यथा, सहित्यदर्पणे । २ । २० ।
"कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि
सर्व्वंसहो
वैदेही तु कथं भविष्यति हहा हा देवि !
धीरा भव ॥")

**सर्व्वकः**, त्रि, सकलः । सर्व्वशब्दस्य टेः पूर्व्वमकि
तस्मात् स्वार्थे के च निष्पन्नः । इति
मुग्धबोध-
व्याकरणम् ॥

**सर्व्वकर्त्ता**, [ऋ] पुं, (सर्व्वेषां कर्त्ता ।) ब्रह्मा ।
इति शब्दरत्नावली ॥

**सर्व्वकर्म्मीणः**, त्रि, (सर्व्वकर्म्माणि व्याप्नोतीति ।
सर्व्वकर्म्म + "तत्सर्व्वादेः पथ्यङ्गकर्म्मपत्रपात्रं
व्याप्नोति ।" ५ । २ । ७ । इति खः ।)
सकल-
कर्म्मकर्त्ता । यथा, भट्टौ ५ सर्गे ।
"संग्रामे सर्व्वकर्म्मीणौ बाहू यस्यौपजानुकौ
॥"

**सर्व्वके**, व्य, सर्व्वत्र । सर्व्वशब्दात् अकच्प्रत्ययेन

**सर्पाक्षी**, स्त्री, (सर्पस्य अक्षीव पुष्पं यस्याः । षच् ।

ङीप् ।) गन्धनाकुली । इति राजनिर्घण्टः ॥

वृक्षविशेषः । सहचरी इति गण्डिनी इति च

हिन्दी भाषा । तत्पर्य्यायः । गण्डाली २ नाडी-

कलापकः ३ । अस्य गुणाः । कटुत्वम् । तिक्त-

त्वम् । उष्णत्वम् । कृमिनाशित्वम् । वृश्चिको-

न्दुरुसर्पाणां विषनाशित्वम् । व्रणरोपणत्वञ्च ।

इति भावप्रकाशः ॥

**सर्पाख्यः**, पुं, (सर्पस्य आख्या आख्या यस्य ।)

महिषकन्दभेदः । इति राजनिर्घण्टः । नाग-

केशरः । इति रत्नमाला ॥ सर्पनामके, त्रि ॥

**सर्पाङ्गी**, स्त्री, (सर्पस्येव अङ्गं यस्याः । ङीष् ।)

सर्पकङ्कालीभेदः । इति रत्नमाला ॥ सैं हली ।

इति राजनिर्घण्टः ॥

**सर्पादनी**, स्त्री, (सर्पस्य तद्विषस्य अदनं भक्षणं

यस्याः । ङीप् ।) नाकुली । इति राजनिर्घण्टः ॥

**सर्पारातिः**, पुं, (सर्पस्य अरातिः ।) गरुडः । इति

हेमचन्द्रः ॥

**सर्पी**, स्त्री, (सर्प + जातौ ङीष् ।) सर्पिणी ।

इति शब्दरत्नावली ॥

**सर्पी**, [न्] त्रि, गमनकर्त्ता । सृपधातोर्णिण्-

प्रत्ययेन निष्पन्नः ॥ (यथा, किराते । ५ ।

३५ ।

"स एष कैलास उपान्तसर्पिणः

करोत्यकालेऽस्तमयं विवस्वतः ॥")

**सर्पीष्टं**, क्ली, (सर्पीणां सर्पभार्य्याणामिष्टम् ।)

श्रीखण्डचन्दनम् । इति रत्नमाला ॥

**सर्पेष्टं**, क्ली, (सर्पाणामिष्टम् ।) श्रीखण्डचन्दनम् ।

इति जटाधरः ॥

**सर्व्व**, सर्पणे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

सक०-सेट् ।) दन्त्यादिः ।

ओष्ठ्यवर्गशेषोपधः ।

सर्व्वति सिसर्व्वयिषति । इति दुर्गादासः ॥

**सर्व्वः**, पुं, (सर्व्वस्मिन् सर्व्वतीति । सर्व्व गतौ + पचा-

द्यच् । यद्वा, सृ गतौ + "सर्व्वनिघृष्वेति ।"

उणा० १ । १५३ । इति वन्प्रत्ययेन

साधुः ।)

शिवः । इत्यमरः । १ । १ । ३२ ॥

क्षितिमूर्त्तिरियम् ।

यथा, विसर्ज्जनात् पूर्व्वं भविष्यपुराणोक्तं स्वभाव-

सिद्धप्राच्यैशान्यादिदिक्षु वामावर्त्तेन

पूजनम् ।

यथा, सर्व्वाय क्षितिमूर्त्तये नम इत्यादि

तिथ्यादितत्त्वम् ॥ विष्णुः । यथा, --

"असतश्च सतश्चैव सर्व्वस्य प्रभवाव्ययाः

।

निष्पन्नः । इति सिद्धान्तकौमुदी ॥

**सर्व्वकेशी** [न्] पुं, (सर्व्वकेशोऽस्यास्तीति । सर्व्व-

केश + "सर्व्वादिश्चेति वक्तव्यम् ।" ५ । २ ।

१३५ ।

इत्यस्य वार्त्तिकोक्त्या इनिः ।) नटः । इति

शब्दरत्नावली ॥

**सर्व्वक्षारः**, पुं, (सर्व्वेषां क्षारः ।) क्षारभेदः ।

सावान् इति भाषा । इति केचित् ॥

तत्पर्य्यायः ।

बहुक्षारः २ समूहक्षारकः ३ स्तोमक्षारः ४

महाक्षारः ५ मलारिः ६ क्षारमेलकः ७ । अस्य

गुणाः । अतिक्षारत्वम् । चक्षुष्यत्वम् । वस्ति-

शोधनत्वम् । उदावर्त्तक्रमिनाशित्वम् ।

मलवस्त्र-

विशोधनत्वञ्च । इति राजनिर्घण्टः ॥

**सर्व्वगं**, क्ली, (सर्व्वं गच्छतीति । गम + "अन्ता-

त्यन्ताध्वेति ।" ३ । २ । ४८ । इति डः ।)

जलम् ।

इति मेदिनी ॥

**सर्व्वगः**, पुं, (सर्व्वं गच्छतीति । गम + डः ।)

शिवः । (यथा, महाभारते । १३ । १७ ।

१०४ ।

"प्रभावः सर्व्वगो वायुरर्य्यमा सविता रविः

॥")

ब्रह्मा । इति मेदिनी ॥ आत्मा । इति शब्द-

माला ॥ (भीमस्य पुत्त्रः । यथा, महाभारते । १ । ९५ । ७७ ।
"भीमोऽपि काश्यां बलधरां नामोपयेमे वीर्य्य-शुल्कां तस्यां सर्व्वगं नामोत्पादयामास ॥")
सर्व्वत्रगामिनि, त्रि ॥ (यथा, याज्ञवल्क्ये । ३ । १३० ।
"करणैरन्वितस्यापि पूर्व्वज्ञानं कथञ्चन ।
वेत्ति सर्व्वगतां कस्मात् सर्व्वगोऽपि न वेद-नाम् ॥")

**सर्व्वगन्धं**, क्ली, (सर्व्वे गन्धा यत्रेति ।) चतुर्जात-कादि । यथा, शब्दचन्द्रिकायाम् ।
"चतुर्जातककक्कोललवङ्गागुरुसिह्लकम् ।
सर्व्वगन्धमिदं चाग्रं मुनिभिः परिकीर्त्तितम् ॥"
अन्यच्च भावप्रकाशे ।
"चातुर्जातककर्पूरकक्कोलागुरुकुङ्कुमम् ।
लवङ्गसहितञ्चैव सर्व्वगन्धं विनिर्द्दिशेत् ॥"
(पुंलिङ्गेऽपि दृश्यते । यथा, बृहत्संहितायाम् । ४८ । ४२ ॥
"रत्नानि सर्व्वगन्धांश्च विल्वञ्च सवितङ्कतम् ।
प्रशस्तनाम्नश्चौषध्यो हिरण्यं मङ्गलानि च ॥"
सर्व्वगन्धविशिष्टे, त्रि । बथा, छान्दोग्योप-निषदि । ३ । १४ । २ ।
"आकाशात्मा सर्व्वकर्म्मा सर्व्वकामः सर्व्वगन्धः सर्व्वरसः सर्व्वमिदमभ्यात्तोऽवाक्यनादरः ॥")

**सर्व्वगा**, स्त्री, (सर्व्वं गच्छतीति । गम + डः । टाप् ।) प्रियङ्गुवृक्षः । इति शब्दचन्द्रिका ॥

**सर्व्वग्रन्थिः**, पुं, (सर्व्वस्मिन् ग्रन्थिरिव यत्र ।) पिप्पलीमूलम् । इति राजनिर्घण्टः ॥

**सर्व्वग्रन्थिकं**, क्ली, (सर्व्वत्र ग्रन्थिरिवात्र । कन् ।) पिप्पलीमूलम् । इति हेमचन्द्रः ॥

**सर्व्वचर्म्मीणः**, त्रि, (सर्व्वचर्म्मणा कृतः । सर्व्व-चर्म्मन् + "सर्व्वचर्म्मणः कृतः खखञौ ।" ५ । २ । ५ । इति खः ।) सकलचर्म्मनिर्म्मितः । इति सिद्धान्तकौमुदी ॥

**सर्व्वजनीनः**, त्रि, (सर्व्वजनाय हितः । सर्व्वजन + "सर्व्वजनात् ठञ् खश्च ।" ५ । १ । ९ । इत्यस्य वार्त्तिकोक्त्या खः ।) सर्व्वजनसम्बन्धी । इति सिद्धान्तकौमुदी ॥

त्रिनेत्रं पार्व्वतीयुक्तं प्रमथैश्च समन्वितम् ।
प्रसन्नवदनं देवं वरदं भक्तवत्सलम् ॥"
इति ध्यात्वा ॐ नमः शिवाय ह्रीँ दुर्गायै नमः । इति मन्त्रेणार्घ्यं कृत्वा पुनर्ध्यात्वा ॐ गौरीसहितहराय नमः । इत्यासनादिना पूज-येत् । ततः पञ्चपुष्पाञ्जलिदानं कृत्वा प्रणमेत् ।
"नमस्ते पार्व्वतीनाथ ! नमस्ते शशिशेखर ! ।
नमस्ते पार्व्वतीदेव्यै चण्डिकायै नमो नमः ॥" * ॥
अथ कथा ।
लक्ष्मीरुवाच ।
"भगवन्तं सुखासीनं लक्ष्मीः पृच्छति केशवम् ।
केन व्रतेन देवेश स्त्रीणां सर्व्वमनोरथम् ॥
सौभाग्यमतुलञ्चापि पुत्त्रपौत्त्रविवर्द्धनम् ।
नानासुखसमायुक्तं लभ्यते वैष्णवं पदम् ॥
तद्व्रतं ब्रूहि मे देव ! क्रियते च यथा प्रभो ॥
श्रीभगवानुवाच ।
अस्ति सर्व्वजया नाम व्रतानां व्रतमुत्तमम् ।
तस्यानुष्ठानमात्रेण स्त्रीणां सर्व्वमनोरथम् ॥
लोकत्रयहिते युक्ता सिध्यतीह न संशयः ।
कुरु त्वं तद्व्रतं देवि ! प्रचारय महीतले ॥
लक्ष्मीरुवाच ।
प्रसन्नो यदि देवेश विधानं मयि कथ्यताम् ।
सुखेन येन देवेश ! क्रियते व्रतमुत्तमम् ॥
श्रीभगवानुवाच ।
सर्व्वजयाव्रतं वक्ष्ये शृणु पद्मे सुशोभनम् ।
नैव दृष्टं व्रतं देवि यथा सर्व्वजयाव्रतम् ॥
पुरुषाणां गयाश्राद्धं स्त्रीणां सर्व्वजयाव्रतम् ।
पित्रुद्धारणकं नाम मनोरथप्रदायकम् ॥
व्रतराजमिदं भद्रे नारीणां सुखदायकम् ॥
मार्गशीर्षे त्यजेत् शाकं पौण्डरीकं फलं लभेत् ॥
पौषे तु लवणं त्यक्त्वा गोसहस्रफलं स्मृतम् ।
माघे तैलं परित्यज्य श्रियं प्राप्नोति मानवी ॥
फाल्गुने च त्यजेत् पूगं भवेत् पतिव्रता सती ।
चैत्रे पुष्पं परित्यज्य सा याति परमां गतिम् ॥

मुक्तफलप्राप्तिकामा शिवदुर्गाप्रीतिकामा वा ब्राह्मणायाहं ददे इति वदेत् । इति कृत्य-चन्द्रिका ॥

**सर्व्वजित्**, पुं, (सर्व्वान् जयतीति । जि + क्विप् ।) कालचक्रस्य एकविंशवर्षः । इति केचित् ॥ (त्वाष्ट्रे युगे आद्यवत्सरः । यथा, बृहत्संहि-तायाम् । ८ । ३७ ।
"त्वाष्ट्रे युगे सर्व्वजिदाद्य उक्तः
संवत्सरोऽन्यः खलु सर्व्वधारी ॥")
सकलजयकर्त्तरि, त्रि ॥

**सर्व्वज्ञः**, पुं, (सर्व्वं जानातीति । ज्ञा + कः ।) शिवः । (यथा, महाभारते । १३ । १७ । ३९ ।
"सुवर्णरेताः सर्व्वज्ञः सुबीजो बीजवाहनः ॥")
बुद्धः । इत्यमरः । १ । १ । ३५ । ; १ । १ । १३ ॥ (विष्णुः ।
यथा, महाभारते । १३ । १४९ । ६१ ।
"सर्व्वदर्शी विमुक्तात्मा सर्व्वज्ञो ज्ञानमुत्तमम् ॥")
सकलज्ञातरि, त्रि ॥ (यथा, रघुः । १० । २० ।
"सर्व्वज्ञस्त्वमविज्ञातः
सर्व्वयोनिस्त्वमात्मभूः ॥")

**सर्व्वज्ञा**, स्त्री, (सर्व्वं जानातीति । ज्ञा + कः । टाप् ।) दुर्गा । यथा, देवीपुराणे ४५ अध्याये ।
"उत्पत्तिस्थितिनाशेषु रजादित्रिगुणा मता ।
सर्व्वज्ञा
सर्व्ववेत्तृत्वाच्छान्तित्वाच्छान्तिरुच्यते ॥"

**सर्व्वतः**, व्य, चतुर्द्दिगभिव्याप्तिः । तत्पर्य्यायः । सम-न्ततः २ परितः ३ विश्वक् ४ । इत्यमरः । ३ । ४ । १३ ॥ (यथा, मुण्डकोपनिषदि । ३ । २ । ५ ।
"ते सर्व्वगं सर्व्वतः प्राप्य धीरा
युक्तात्मानः सर्व्वमेवाविशन्ति ॥" * ॥
सर्व्व + तसिल् । सर्व्वः । यथा, मनुः । १ । ५ ।
"अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्व्वतः ॥"

**सर्व्वजया**, स्त्री, (सर्व्वेषां जयो यस्याः ।) स्त्रीक-

र्त्तव्यमार्गशीर्षादिद्वादशमासनिष्पाद्यव्रतविशेषः । यथा । अथ सर्व्वजयाव्रतम् । सामान्योक्तं कृत्वा अद्य मार्गशीर्षे मासि अमुकपक्षे अमुकतिथौ विष्णुपदीसंक्रान्त्यामारभ्य वर्षपर्य्यन्तं अमुक-गोत्रा श्रीअमुकी द्वादशमासशाकादित्यागफल-प्राप्तिपूर्व्वकपुत्त्रपौत्राद्यैश्वर्य्यप्राप्त्युत्तरस्वर्गकामा मनोरथकामा वा गणेशादिहरगौरीपूजात्मक-सर्व्वजयाव्रतमहं करिष्ये । ततः सामान्योक्तं नवग्रहपूजान्तं कृत्वा अङ्गन्यासं प्रणवेन कृत्वा गौरीसहितहरं ध्यायेत् ।

"श्वेतवर्णं वृषारूढं व्यालयज्ञोपवीतिनम् ।
विभूतिभूषिताङ्गञ्च व्याघ्रचर्म्मधरं शुभम् ॥
पञ्चवक्त्रं दशभुजं जटिलं चन्द्रचूडकम् ।
भक्तं त्यक्त्वाथ वैशाखे याति चन्द्रपुरीं शुभाम् ।
ज्यैष्ठे धाराजलं त्यक्त्वा वारुणं लोकमाप्नुयात् ।
आषाढे च दधि त्यक्त्वा वारुणं लोकमाप्नुयात् ॥
श्रावणे वसनं त्यक्त्वा प्रजापतिपुरं व्रजेत् ।
भाद्रे तु व्यजनं त्यक्त्वा नारायणपुरं व्रजेत् ॥
आश्विने च घृतं त्यक्त्वा लावण्यमुत्तमं लभेत् ।
शय्याञ्च कार्त्तिके त्यक्त्वा प्रयाति परमां गतिम् ॥
मासान्ते चोपभुञ्जीत सर्व्वं दत्त्वा द्विजातये ।
शय्या देया व्रते पूर्णे दानानि विविधानि च ।
गौर्य्या हरञ्च संपूज्य शाकं भुञ्जीत पायसम् ॥
एवं या कुरुते नारी वर्षं यावत् समाप्यते ।
स्वर्गे वसति सा नित्यं पुत्त्रपौत्रप्रतिष्ठिता ॥
तत् कुरुष्व प्रयत्नेन येन सर्व्वजया भव ॥
शचीव देवराजस्य रतीव मदनस्य च ।
तत्सदृशी भवेत् भद्रे व्रतस्यास्य प्रसादतः ॥"

इति स्कन्दपुराणोक्ता सर्व्वजयाव्रतकथा समाप्ता ॥
ततः स्तुत्वा प्रणम्य विसृजेत् । वर्षान्ते प्रतिष्ठा कर्त्तव्या ।
द्रव्यदानेऽमुकमासामुकद्रव्यत्यागजन्य

"प्रसुप्तमिव सर्व्वतः प्रथमार्थे तसिः । स्वकार्य्या-क्षममित्यर्थः ।" इति तट्टीकायां कुल्लूकः ॥ पञ्च-म्यास्तसिल् । सर्व्वस्मात् । सर्व्वेभ्यः । यथा मनुः । ४ । २४७ ।
"सर्व्वतः प्रतिगृह्णीयान्मध्वथाभयदक्षिणाम् ॥"
सप्तम्यास्तसिल् । सर्व्वस्मिन् । यथा, ऋतु-संहारे । १ । २३ ।
"भ्रमति गवययूथः सर्व्वतस्तोयमिच्छन् शरभकुलमजिह्मं प्रोद्धरत्यम्बु कूपात् ॥")

**सर्व्वतःशुभा**, स्त्री, (सर्व्वतः शुभं यस्याः ।

प्रियङ्गुवृक्षः । इति शब्दचन्द्रिका ॥

**सर्व्वतन्त्रः**, पुं, (सर्व्वं तन्त्रमस्येति ।) सकलतन्त्रा-

ध्येता । इति केचित् ॥ (क्ली, सर्व्वं तन्त्रमिति ।) सकलशास्त्रञ्च ॥

**सर्व्वतापनः**, पुं, (सर्व्वान् तापयतीति । तप + 

णिच् + ल्युः ।) कामदेवः । इति केचित् ॥ सर्व्वतापके, त्रि ॥

**सर्व्वतिक्ता**, स्त्री, (सर्व्वतस्तिक्ता ।) काकमाची ।

इति राजनिर्घण्टः ॥

**सर्व्वतोभद्रं**, क्ली, पुं, (सर्व्वतो भद्रमस्मादिति ।)

ईश्वरगृहविशेषः । इत्यमरः । २ । २ । १० ॥ द्वारा-लिन्दादिभेदभिन्नाढ्यगृहम् । तस्य लक्षणमुप-न्यस्तं साञ्जेन यथा, --

"स्वस्तिकं प्राङ्मुखं यत् स्यादलिन्दानुगतं भवेत् ।
तत्पार्श्वानुगतौ चान्यौ तत्पर्य्यन्तगतोऽपरः ॥
अनिषिद्धालिन्दभेदं चतुर्द्वारञ्च यद्गृहम् ।
तद्भवेत् सर्व्वतोभद्रं चतुरालिन्दशोभितम् ॥
प्राक्पश्चिमानुगतौ च शेषावुदरविस्तृतौ ।
यत्रालिन्दौ रुचक्यतो न चेत् स्यादुत्तरामुखम् ॥
क्रमेणोपचीयमानं यत्रालिन्दद्वयं गृहे ।
तद्वर्द्धमानमित्याहुर्न चेत् स्यादुत्तरामुखम् ॥
दक्षिणानुगतालिन्दत्रयं यत् पश्चिमामुखम् ।
पूजनीयोत्तरोच्छ्रायं नन्द्यावर्त्तं वदन्ति तत् ॥
उपर्य्युपरि यद्गेहं तद्विच्छन्दकसंज्ञकम् ॥"
इति वचनेषु स्वस्तिकादीनां क्लीवत्वदर्शनात्
स्वस्तिकादीनां पुंनपुंसकत्वं मन्तव्यम् । एवमादि-
प्राप्तौ रुचकवर्द्धमानौ पुंलिङ्गावपि यदुक्तम् ।
"स्वस्तिकः सर्व्वतोभद्रो रुचको वर्द्धमानकः ।
नन्द्यावर्त्तादयश्चापि द्वारालिन्दादिभेदजाः ॥"
इति भरतः ॥ * ॥
लक्षणान्तरं यथा, भविष्योत्तरे ।
"मेषादिचन्द्रे जातस्य नृपतेः स्युरनुक्रमात् ।
द्वादशैव गृहान् वक्ष्ये तेषां लक्षणमग्रतः ॥
सुनन्दः सर्व्वतोभद्रो भव्यो नान्दीमुखस्तथा ।
विनोदश्च विलासश्च विजयो विमलस्तथा ॥
रङ्गः केलिर्ज्जयो वीरो द्वादशैते प्रकीर्त्तिताः ॥"
तल्लक्षणं यथा, --
"द्वौ राजहस्तावायामे परिणाहे तथैव च ।
इत्ययं सर्व्वतोभद्रः शुक्रश्चास्याधिदेवता ॥
दानवा रक्षकाश्चैव पूज्यास्ते चात्र यत्नतः ।
चतुर्द्दशास्य द्वाराणि कृष्णचित्रावृतानि च ॥
पीठपट्टावृतो ह्येषः सर्व्वानिष्टविनाशनः ।
अत्र स्थित्वा महीपालः सर्व्वान् शत्रून् निकृ-
न्तति ॥"
दीर्घ २१ प्रस्थ २० इति सर्व्वतोभद्रः । इति युक्तिकल्पतरुः ॥ (सर्व्वतो मङ्गलप्रदे, त्रि ।
"इत्युद्धववचो राजन् सर्व्वतोभद्रमच्युतम् ।
देवर्षिर्यदुवृद्धाश्च कृष्णश्च प्रत्यपूजयन् ॥")

**सर्व्वतोभद्रं**, क्ली, (सर्व्वतो भद्रमस्येति ।) वृषोत्-
सर्गव्रतप्रतिष्ठादौ पूजाधारमण्डलविशेषः । यथा, शारदायाम् ।
"चतुरस्रे चतुःकोष्ठे कर्णसूत्रसमन्विते ।
चतुर्ष्वपि च कोष्ठेषु कोणसूत्रचतुष्टयम् ॥
मध्ये मध्ये यथा मत्सा भवेयुः पातयेत्तथा ।
पूर्व्वापरायते द्वे द्वे मन्त्री याम्योत्तरायते ॥
पातयेत्तेषु मत्स्येषु समं सूत्रचतुष्टयम् ।
पूर्व्ववत् कोणकोष्ठेषु कर्णसूत्राणि पातयेत् ॥
तद्वत् भूतेषु मत्स्येषु दद्यात् सूत्रचतुष्टयम् ।
ततः कोष्ठेषु मत्स्याः स्युस्तेषु सूत्राणि पातयेत् ॥
यावत् शतद्वयं मन्त्री षट्पञ्चाशत् पदान्यपि ।
तावत्तेनैव विधिना तत्र सूत्राणि पातयेत् ॥
षट्त्रिंशता पदैर्म्मध्ये लिखेत् पद्मं सुलक्षणम् ।
बहिःपङ्क्त्या भवेत् पीठं पङ्क्तियुग्मेन वीथिका ॥
द्वारशोभोपशोभास्रान् शिष्टाभ्यां परिकल्पयेत् ।
शास्त्रोक्तविधिना मन्त्री ततः पद्मं समालिखेत् ॥
पद्मक्षेत्रस्य संत्यज्य द्वादशांशं बहिः सुधीः ।
तन्मध्यं विभजेत् वृत्तैस्त्रिभिः समविभागतः ॥
आद्यं स्यात् कर्णिकास्थानं केशराणां द्वितीयकम् ।
तृतीयं पद्मपत्राणां मुक्तांशेन दलाग्रकम् ॥
बाह्यवृत्तान्तरालस्य मानेन विधिना सुधीः ।
निधाय केशराग्रेषु परितोऽर्द्धनिशाकरान् ॥
लिखित्वा सन्धिसंस्थानि तत्र सूत्राणि पातयेत् ।
दलाग्राणाञ्च यन्मानं तन्मानाद्वृत्तमालिखेत् ॥
तदन्तरालतन्मध्यसूत्रस्योभयतःसुधीः ।
आलिखेद्वाह्यहस्तेन दलाग्राणि समन्ततः ॥
दलमूलेषु युगशः केशराणि प्रकल्पयेत् ।
एतत् साधारणं प्रोक्तं पङ्कजं तन्त्रवेदिभिः ॥
पदानि त्रीणि पादार्थं पीठकोणेषु मार्जयेत् ।
अवशिष्टैः पदैर्व्विद्वान् पीठगात्राणि कारयेत् ॥
पदानि वीथिसंस्थानि मार्ज्जयेत् पङ्क्त्यभेदतः ।
सर्व्वतोभद्रमण्डलस्य रूपं यथा ।
दिक्षु द्वाराणि रचयेत् द्विचतुःकोष्ठकैस्तथा ॥
पदैस्त्रिभिरथैकेन शोभाः स्युर्द्वारपार्श्वयोः ।
उपशोभाः स्युरेकेन त्रिभिः कोष्ठैरनन्तरम् ॥
अवशिष्टैः पदैः षड्भिः कोणानां स्याच्चतुष्टयम् ।
रञ्जयेत् पञ्चभिर्व्वर्णैर्म्मण्डलं तन्मनोहरम् ॥
पीतं हरिद्राचूर्णं स्यात् सितं तण्डुलसम्भवम् ।
कुसुम्भचूर्णमरुणं कृष्णं दग्धपुलाकजम् ॥
विल्वादिपत्रजं श्यामं इत्युक्तं वर्णपञ्चकम् ।
अङ्गुलोत्सेधविस्ताराः सीमारेखाः सिताः शुभाः ॥
कर्णिकां पीतवर्णेन केशराण्यरुणेन च ।
शुक्लवर्णानि पत्राणि तत्सन्धीन् श्यामलेन च ॥
रजसा रञ्जयेन्मन्त्री यद्वा पीतैव कर्णिका ।
केशराः पीतरक्ताः स्युररुणानि दलान्यपि ॥
सन्धयः कृष्णवर्णाः स्युः सितेनाप्यसितेन वा ।
रञ्जयेत् पीठगर्भाणि पादाः स्युररुणप्रभाः ॥
गात्राणि तस्य शुक्लानि वीथीषु चतसृष्वपि ।
आलिखेत् कल्पलतिका दलपुष्पफलान्विताः ॥
वर्णैर्नानाविधैश्चित्रैः सर्व्वदृष्टिमनोहराः ।
द्वाराणि श्वेतवर्णानि शोभा रक्ताः समीरिताः ॥
उपशोभाः पीतवर्णाः कोणान्यसितभानि च ।
तिस्रो रेखा बहिः कार्य्याः सितरक्तासिताः क्रमात् ॥
मण्डलं सर्व्वतोभद्रमेतत् साधारणं स्मृतम् ॥" * ॥
प्रकारान्तरं यथा, --
"चतुरस्रां भुवं भित्त्वा दिग्भ्यो द्वादशधा सुधीः
पातयेत्तत्र सूत्राणि कोष्ठानां दृश्यते शतम् ॥
चतुश्चत्वारिंशिदाढ्यं पश्चात् षट्त्रिंशताम्बुजम् ।
कोष्ठैः प्रकल्पयेत् पीठं पङ्क्त्या नैवात्र वीथिका ॥
द्वारशोभे यथा पूर्व्वमुपशोभा न दृश्यते ।
अवशिष्टैः पदैः कुर्य्यात् षड्भिः कोणानि तन्त्र-
वित् ।

| | | |
|---|---|---|
| यथा, भागवते । १० । ७१ । ११ । | | विदध्यात् पूर्व्ववत् शेषमेवं वा मण्डलं स्मृतम् ॥”<br>इति तन्त्रसारे १ परिच्छेदः ॥ * ॥<br>सर्व्वतोभद्रमण्डलस्य रूपं यथा । |

नाराणां शुभाशुभज्ञानार्थं चक्रविशेषः । यथा,
“अथातः संप्रवक्ष्यामि चक्रं त्रैलोक्यदीपनम् ।
विख्यातं सर्व्वतोभद्रं सद्यः प्रत्ययकारकम् ॥
ऊर्द्ध्वगा दश विन्यस्य तिर्य्यग्रेखास्तथा दश ।
एकाशीतिपदं चक्रं जायते नात्र संशयः ॥
अकारादिस्वराः कोष्ठेष्वीशादौ विदिशि
क्रमात् ।
प्रदक्षिणक्रमाज्ज्ञेया ज्योतिःशास्त्रविशारदैः ॥
कृत्तिकादीनि धिष्ट्यानि पूर्व्वाशादि लिखेत्ततः ।
सप्त सप्त क्रमेणैव अष्टाविंशति संख्यया ॥
अ-व-क-ह-डाः पूर्व्वस्यां म-ट-प-र-ता
हरिति दक्षिणस्याम् ।
न-य-भ-ज-खा वारुण्यां ग-श-द-च ला-श्चोत्त-
रस्यां स्युः ॥
त्रयस्त्रयो वृषाद्यास्तु पूर्व्वादिक्रमतो बुधैः ।
राशयो द्वादश स्थाप्या मेषान्ता दक्षमार्गतः ॥
शेषेषु कोष्ठकेष्वेवं नन्दादितिथिपञ्चकम् ।
वाराणां सप्तकं लेख्यं भौमाद्यं तत्तिथिक्रमात् ॥
इत्येवं सर्व्वतोभद्रप्रकारः कथितो मया ।
यस्मिन्नृक्षे स्थितः खेटस्ततो वेधत्रयं भवेत् ॥
ग्रहदृष्टिवशेनात्र वामदक्षिणसंमुखे ।
भुक्तं भोग्यं तथाक्रान्तं विद्धं क्रूरग्रहेण भम् ॥
शुभाशुभेषु कार्य्येषु वर्ज्जनीयं प्रयत्नतः ।
वक्रगे दक्षिणा दृष्टिर्वामा दृष्टिश्च शीघ्रगे ॥
संमुखी मध्यचारे च ज्ञेया भौमादिपञ्चके ।
सूर्य्यमुक्ता ग्रहाः शीघ्रास्तथा चार्के द्वितीयगे ॥
समास्तृतीयगे ज्ञेया मन्दा भानौ चतुर्थगे ।
वक्राः स्युः पञ्चषष्ठेऽर्के त्वतिवक्रा नगाष्टगे ॥
नवमे दशमे भानौ जायते सहजा गतिः ।
द्वादशैकादशे सूर्य्ये लभन्ते शीघ्रतां पुनः ॥
रविस्थित्यंशकत्रिंशावधेः संख्यात्र कल्प्यते ।
न तु राश्यन्तरस्पर्शात् द्वितीयादिनिरूपणम् ॥
राहुकेतू सदा वक्रौ शीघ्रगौ चन्द्रभास्करौ ।
गतेरेकस्वभावत्वादेषां दृष्टित्रयं सदा ॥
क्रूरा वक्रा महाक्रूराः सौम्या वक्रा महाशुभाः ।
स्युः सहजस्वभावस्थाः सौम्या क्रूराश्च शीघ्रगाः ॥
घ-ङ-छाः ष-ण-ठाश्चैव ध-फ-ढाश्छ-झ-ञा-
स्तथा ।
एतत् त्रिकं त्रिकं विद्धं विद्धैः क-प-भ-दैः
क्रमात् ॥
घ-ङ-छा रौद्रगे वेधे ष-ण-ठा अस्तगे ग्रहे ।
ध-फ-ढाः पूर्ब्बाषाढायां थ-झ-ञा भाद्र उत्तरे ॥

ऋक्षे भ्रमोऽक्षरे हानिः स्वरे व्याधिर्भयं
तिथौ ।
राशौ विद्धे महाविघ्नः पञ्चविद्धो न
जीवति ॥
एकवेधे भयं युद्धे युग्मवेधे धनक्षयः ।
त्रिवेधे तु भवेद्भङ्गो मृत्युर्वेधचतुष्टये ॥”
दिष्टित्रये उदाहरणमाह ।
“भरण्यकारवृषभं नन्दां भद्रां तुलाञ्च
भम् ।
विशाखां हरिभं विध्येद्ग्रह
आग्नेयसंस्थितः ॥”
उदाहरणान्तरमाह ।
“वं युग्ममौस्वरं कन्यां रेफं
स्वातीमुकारकम् ।
अश्विनीं रोहिणीस्थोऽभिजिद्वम्भं
परेष्वपि ॥
यथा दृष्टफलाः क्रूरास्तथा सौम्याः
शुभप्रदाः ।
क्रूरयुक्तः पुनः सौम्यो ज्ञेयः
क्रूरफलप्रदः ॥
अर्कवेधे मनस्तापो द्रव्यहानिश्च भूसुते
।
रोगपीडाकरः सौरी राहुकेतू च विघ्नदौ
॥
चन्द्रे मिश्रफलं पुंसां रतिलाभश्च भार्गवे
।
बुधवेधे भवेत् प्रज्ञा जीवः सर्व्वशुभप्रदः
॥
स्वक्षेत्रस्थे बलं पूर्णं पादोनं मित्रभे ग्रहे ।
अर्द्धं समगृहे प्रोक्तं पादं शत्रुगृहे स्थिते ॥
इदञ्च सौम्यक्रूराणां बलं स्थानवशात्
समम् ।
एतदेव फलं विद्धि सौम्यैः
क्रूरैर्व्विपर्य्ययात् ॥
स्थानवेधसमायोगात् यत्संख्यं जायते
बलम् ।
तत्संख्यं वेध्यवस्तूनां फलं ज्ञेयं
शुभाशुभम् ॥
दृष्टिहीने पुनर्वेधे न स्यात् किञ्चित्
शुभाशुभम् ।
ग्रहाः सौम्यास्तथा क्रूरा वक्राः
शीघ्रोच्चनीचगाः ॥

राशौ जयस्तिथौ तेजः पदाप्तिः पञ्चकोदये ॥
प्रश्नकाले भवेद्विद्धं यल्लग्नं क्रूरखेचरैः ।
तद्दुष्टं शोभनं सौम्यैर्म्मिश्रैर्म्मिश्रफलं भवेत् ॥
ग्रहाविद्धन्तु यल्लग्नं फलं लग्नस्वभावतः ।
ज्ञातव्यमीक्षिते केन्द्रे भाषितं यच्चरादिकम् ॥
शीर्षोदये सौम्यविलग्नवर्गे
लग्नेऽपि वा सौम्ययुते शुभं स्यात् ।
अतोऽन्यथात्वे तु तदन्यथात्वं
मिश्रं विमिश्रैरधिकं बलाढ्यैः ॥
केन्द्रोपगा नवमपञ्चमगाश्च सौम्याः
केन्द्राष्टवर्ज्जमशुभास्त्रयषष्ठसंस्थाः ।
सर्व्वार्थसाधनकराः परिपृच्छतां स्यु-
रेभिर्विपर्य्ययगतैस्तु विपर्य्ययः स्यात् ॥
लग्नाधिनाथो यदि केन्द्रगः स्यात्
तन्मित्रमेतस्य च केन्द्रगं वा ।
व्ययाष्टकेन्द्रानपहाय पापा
अन्यत्र याता यदि तच्छुभं स्यात् ॥
आद्यो लग्नाधिपः कार्य्येलग्ने कार्य्याधिपो यदि
द्वितीयो लग्नपो लग्ने कार्य्ये कार्य्याधिपो यदि
लग्नपः कार्य्यपश्चापि लग्ने यदि तृतीयकः ।
चतुर्थः कार्य्यपौ स्यातां यदि लग्नपकार्य्यपौ ॥
कार्य्यसिद्धिस्तदा ज्ञेया मित्रञ्चेदधिकं मतम् ।
एवं दृष्टिवशाज्ज्ञेयं फलं तद्वच्चतुष्टयम् ॥
पूर्णनाडीस्थितो दूतो यत् पृच्छति शुभाशुभम्
तत् सर्व्वं सिद्धिमाप्नोति शून्ये शून्यं समीरणे
॥
आदौ शून्यगतः पृच्छेत्पश्चात् पूर्णां विशेद्यदि
तदा सर्व्वार्थसिद्धिः स्यात् वामे वामं न संशयः
श्वासप्रवेशकाले चेद्दूतो जल्पति वाञ्छितम् ।
तस्यार्थः सिद्धिमाप्नोति निर्गमे नास्ति
सुन्दरम्
ऊर्द्ध्ववामाग्रतो दूतो ज्ञेयो वामपथस्थितः ।
पृष्ठे दक्षे तथाधस्ताद्दक्षबाहौ गतो मतः ॥
यात्रादानविवाहेषु वस्त्रालङ्कारभूषणे ।
शुभे कर्म्मणि सन्धौ च प्रवेशे वामगः शुभः ॥
कलहद्यूतयुद्धेषु स्नानभोजनमैथुने ।
व्यवहारे भये भङ्गे दक्षनाडी प्रशस्यते ॥
क्रूरैरुभयतो विद्धा यस्याक्षरतिथिस्वराः ।
राशिर्धिष्ट्यञ्च पञ्चापि तस्य मृत्युर्न संशयः ॥
मण्डलं नगरं ग्रामो दुर्गं देवालयं पुरम् ।
क्रूरैरुभयतो वेधे विनश्यन्ति न संशयः ॥
कृत्तिकायां तथा पुष्ये रेवत्याञ्च पुनर्वसौ ।

रवौ शसौ खयौ चैव जयौ णनौ परस्परम् ।
एकेन हि द्वयं ज्ञेयं शुभाशुभग्रहव्यधे ॥
अवर्णादिस्वरद्वन्द्वे त्वेकवेधात् द्वयोर्व्व्यधः ।
युग्मवर्णात्मके वेधे अनुस्वारविसर्गयोः ॥”
आकारादियुग्मवर्णात्मकवेधवदनुस्वारविसर्गयोः
एकवेधादुभयवेध इत्यर्थः ।
“कोणस्थऋक्षयोर्म्मध्ये अन्त्यादिपादगे ग्रहे ।
अकारादिचतुष्केषु वेधः पूर्णतिथौ तथा ॥
एकादिक्रूरवेधेन फलं पुंसां प्रजायते ।
उद्वेगश्च भयं हानिर्व्याधिर्मृत्युः क्रमेण च ॥

स्थानञ्च वेध्यमित्येवं बलं ज्ञात्वा फलं वदेत् ।
वक्रग्रहे फलं द्विघ्नं त्रिगुणं स्वोच्चसंस्थिते ॥
स्वभावजं फलं शीघ्रे नीचस्थोऽर्द्धफलो ग्रहः ।
तिथिराश्यंशनक्षत्रं विद्धं क्ररग्रहेण यत् ॥
सर्व्वेषु शुभकार्य्येषु वर्ज्जयेत्तत् प्रयत्नतः ।
न नन्दति विवाहे च यात्रायां न निवर्त्तते ॥
रोगान्न मुच्यते रोगी वेधवेलाकृतोद्यमः ।
रोगकाले भवेद्वेधः क्रूरखेचरसम्भवः ॥
वक्रगत्या भवेन्मृत्युः शीघ्रे जाप्यरुजान्वितः ।
वेधस्थाने रणे भङ्गो दुर्गे खण्डिः प्रजायते ॥
कविप्रवेशनं तत्र योधाघातश्च तत्र वै ॥”
कविश्चौरयोद्धा ।
“यत्र पूर्ब्बादिकाष्ठायां वृषराश्यादिगो रविः ।
सा दिगस्तमिता ज्ञेया शेषास्तिस्रः सदोदिताः ॥
ईशानस्थाः स्वराः प्राच्यां ज्ञेया याम्या-मथाग्निगाः ।
नैरृतस्थाश्च वारुण्यां वायव्यां सौम्यगा मताः ।
नक्षत्राणि स्वरा वर्णा राशयस्तिथयो दिशः ॥
ते सर्व्वेऽस्तमिता ज्ञेया यत्र भानुस्त्रिमासिकः ॥
नक्षत्रेऽस्ते रुजा वर्णे हानिः शोकः स्वरेऽस्तगे ।
राशौ विघ्नस्तिथौ भीतिः पञ्चास्ते मरणं भवेत् ॥
यात्रा युद्धं विवादश्च द्वारं प्रासादहर्म्म्ययोः ।
न कर्त्तव्यं शुभं चान्यदस्ताशाभिमुखं नरैः ॥
अस्ताशायां स्थितं यस्य नाम्नः प्रथममक्षरम् ।
स आर्त्तः सर्व्वकार्य्येषु ज्ञेयो दैवहतो नरः ॥
करौ कोष्ठे तथा द्वन्द्वे चातुरङ्गमहाबले ।

विद्धे सति क्रमाद्वेधो वर्णेषु ब्राह्मणादिषु ॥
तौलं भाण्डं रसो धान्यं गजाश्वादिचतुष्पदाः ।
सर्व्वं महार्घतां याति यावत् क्रूरव्यधे स्थितम् ॥
क्रूरवेधसमायोगे यस्योपग्रहसम्भवः ।
तस्य मृत्युर्न सन्देहो रोगाद्वाथ रणादपि ॥
सूर्य्यभात् पञ्चमं धिष्ट्यं ज्ञेयं विद्युन्मुखाभिधम् ।
शूलञ्चाष्टमकं प्रोक्तं सन्निपातं चतुर्द्दशम् ॥
केतुरष्टादशं प्रोक्तमुल्का स्यादेकविंशतिम् ।
द्वाविंशतितमं कम्पं त्रयोविंशञ्च वज्रकम् ॥
निर्घातञ्च चतुर्विंशमुक्ता अष्टावुपग्रहाः ।
प्रस्थाने विघ्नदाः प्रोक्ताः सर्व्वकार्य्येषु सर्व्वदा ॥”
इति सर्व्वतोभद्रचक्रम् । इति ज्योतिषतत्त्वम् ॥
*

| | | |
|---|---|---|
| | वर्ज्याश्चास्तं गता योधा यदीच्छेद्विजयं रणे ॥<br>नक्षत्रेऽभ्युदिते पुष्टिर्वर्णे लाभः स्वरे सुखम् । | |

पृष्ठ ५/३०५

| ; सर्व्वतोभद्रचक्रस्य रूपं यथा । पूर्व्व | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| २ | उ | अ | व | क | ह | ड | ऊ | १० |
| १ | ल | ॡ | वृषः | मिथुनः | कर्क्कटः | ॡ | म | ११ |
| २७ | च | मेषः | ओ | नन्दा | औ | सिंहः | ट | १२ |
| २६ | द | मीनः | रिक्ता | पूर्णा | भद्रा | कन्या | प | १३ |
| २५ | श | कुम्भः | अः | जया | अं | तुला | र | १४ |
| २४ | ग | ऐ | मकरः | धनुः | बृश्चिकः | ए | त | १५ |
| २३ | ॠ | ख | ज | भ | य | न | ॠ | १६ |
| ई | २२ | ० | २१ | २० | १९ | १८ | १७ | इ |

**सर्व्वतोभद्रः**, पुं, (सर्व्वतो भद्रमस्येति ।) निम्ब-

वृक्षः । इत्यमरः । २ । ४ । ६२ ॥ व्यूहविशेषः । इति
तट्टीका ॥ विष्णुरथः । इति शब्दरत्नावली ॥
वंशः । इति शब्दचन्द्रिका ॥ चित्रकाव्यविशेषः ।
इति मेदिनी ॥

**तदुदाहरणं यथा ।**

| **स** | **का** | **र** | **ना** | **ना** | **र** | **का** | **स** |
|---|---|---|---|---|---|---|---|
| का | य | सा | द | द | सा | य | का |
| र | सा | ह | वा | वा | ह | सा | र |
| ना | द | वा | द | द | वा | द | ना |

इति सर्व्वतोभद्रः । इति माघे । १९ । २७ ॥
अस्यार्थः । “सकारेति । पुनः कीदृशी ।
‘कारो वधे निश्चये च बले यत्ने रतावपि ।’
इति विश्वः ॥
सकाराः सयत्नाः सोत्साहाः नाना नाना-
विधाश्चये ये आराः अरीणां समूहाः । भिक्षादि-

भ्योऽण् । तेषां कासा गतिभेदाः काया विग्र-
हाश्च तेषां सादं ददतीति साददाः नाश-
कारकाः सायका यस्यां सा तथोक्ता । रसेन
रागेणाहवो यस्याः सा रसाहना रणरागिणी-
त्यर्थः । वाहसाराणां वाहश्रेष्ठानां ये नादा
हेषादिघोषास्तेषां वादं कलहं ददतीति वाद-
दानि । तैः सह कलहायमानानि वादनानि
वाद्यानि यस्यां सा वाहसारनादवाददवादना
तूर्य्यवादघोषेत्यर्थः । अतएव तेषां तुल्यतोक्ते-
रतिशयोक्तिः । सर्व्वतो भ्रमणात् सर्व्वतो-
भद्राख्यश्चित्रबन्धः । अत एव दण्डी ।
'तदिदं सर्व्वतोभद्रं भ्रमणं यदि सर्व्वतः ।' इति ।

उद्धारस्तु । चतुःकोष्ठे चतुरङ्गबन्धे पुंक्तिचतुष्टये पादचतुष्कं विलिख्यानन्तरं पङ्क्तिचतुष्टये-ऽप्यधःक्रमेण पादचतुष्टयलेखने प्रथमासु चतसृषु प्रथमपादः सर्व्वतो वाच्यते । एवं द्वितीयादिषु द्वितीय इत्यादि ।” इति तट्टीकायां मल्लिनाथः ॥ (वटिकौषधविशेषः । यथा, --
“विशुद्धं गगनं ग्राह्यं द्विकर्षं शुद्धगन्धकम् ।
तोलकं तोलकार्द्धञ्च हिङ्गुलोत्थरसन्तथा ॥
कर्पूरं केशरं मांसी तेजपत्रं लवङ्गकम् ।
जातीकोषफलञ्चैव सूक्ष्मैलाकरिपिप्पली ॥
कुष्ठं तालीशपत्रञ्च धातकी चोचमुस्तकम् ।
हरितकी मरिचञ्च शृङ्गवेरविभीतकम् ॥
पिप्पल्यामलकञ्चैव शाणभागं विचूर्णितम् ।
सर्व्वमेकीकृतं पिष्ट्वा वटीङ्कुर्य्याद्द्विगुञ्जिकाम् ॥
भक्षयेत् पर्णखण्डेन मधुना सितयापि वा ।
रोगं ज्ञात्वानुपानञ्च प्रातः कुर्य्याद्विचक्षणः ॥
हन्ति मन्दानलान् सर्व्वानामदोषं विसूचिकाम् ।
पित्तश्लेष्मभवं रोगं वातश्लेष्मभवन्तथा ॥
आनाहं मूत्रकृच्छ्रञ्च संग्रहग्रहणीं वमिम् ।
अम्लपित्तं शीतपित्तं रक्तपित्तं विशेषतः ।
चिरज्वरं पित्तभवं घातुस्थं विषमज्वरम् ॥
कासं पञ्चविधं हन्ति कामलां पाण्डुमेव च ।
सर्व्वलोकहितार्थाय शिवेन भाषितः पुरा ।
सर्व्वतोभद्रनामायं रसः साक्षान्महेश्वरः ॥”
इति वैद्यकरसेन्द्रसारसंग्रहे ज्वराधिकारे ॥
“सूतं गन्धं तपनगगनं कान्तलौहस्य चूर्णं
कृत्वैकस्मिन् दृशदि पिषितं शृङ्गवेरस्य वारा ।
युञ्ज्याद्रोगे यकृतिगुदजे प्लीह्नि सर्व्वज्वरेषु
शोथे पाण्डौ कृमिकृतगदे सर्व्वतः कामलायाम् ।
कासे श्वासे प्रमिहजठरे सर्व्वदोषप्रभूते
ख्यातो योगः सुरमणिकृतः सर्व्वरोगैकहन्ता ॥”
इति च रसेन्द्रसारसंग्रहे प्लीहाधिकारे ॥)

**सर्व्वतोभद्रा**, स्त्री, (सर्व्वतो भद्रं मङ्गलमस्या इति ।) गम्भारी । नटयोषित् । इति मेदिनी ॥

**सर्व्वतोमुखं**, क्ली, (सर्व्वतो मुखमस्येति ।) जलम् । इत्यमरः । १ । १० । ४ ॥ आकाशम् । इति मेदिनी ॥
(समन्ततोमुखविशिष्टे, त्रि । यथा, महाभारते । १ । २११ । १२ ।
“एवं सर्व्वान् समादिश्य पूर्ब्बतीरे महोदधेः ।
क्रूरां मतिं समास्थाय जग्मतुः सर्व्वतोमुखौ ॥”)

**सर्व्वतोमुखः**, पुं, (सर्व्वतः मुखमस्येति ।) शिवः ॥ (यथा, महाभारते । १३ । १७ । ६६ ।
“सर्व्वकामवरश्चैव सर्व्वदः सर्व्वतोमुखः ॥”)
ब्रह्मा । (यथा, कुमारे । २ । ३ ।
“अथ सर्व्वस्य धातारं ते सर्व्वे सर्व्वतोमुखम् ।
वागीशं वाग् भिरर्थ्याभिः प्रणिपत्योपतस्थिरे ॥”)
आत्मा । इति मेदिनी ॥ (विष्णुः । यथा, महाभारते । १३ । १४९ । १०० ।
“अमृताशोऽमृतवपुः सर्व्वज्ञः सर्व्वतोमुखः ॥”)
ब्राह्मणः । इति शब्दरत्नावली ॥ स्वर्गः । इति शब्दमाला ॥ अग्निः । यथा, --
“सर्व्वतः पाणिपादान्तः सर्व्वतोऽक्षिशिरोमुखः ।
विश्वरूपा महानग्निः प्रणीतः सर्व्वकर्म्मसु ॥”
इति तिथ्यादितत्त्वधृताग्निप्रणयनमन्त्रः॥

**सर्व्वत्र**, व्य, (सर्व्वस्मिन्निति । सर्व्व + “सप्तम्यास्त्रल् ।” ५ । ३ । १० । इति त्रल् ।) सर्व्वदिग्देशकाले । इति शब्दरत्नावली ॥ (यथा, रघुः । ३ । ६२ ।
“तुतोष वीर्य्यातिशयेन वृत्रहा
पदं हि सर्व्वत्र गुणैर्निधीयते ॥”)

**सर्व्वत्रगः**, पुं, (सर्व्वत्र गच्छतीति । गम + “डप्रक-रणे सर्व्वत्रपन्नयोरुपसंख्यानम् ।” ३ । २ । ४८ । इत्यस्य वार्त्तिकोक्त्या डः ।) वायुः । सर्व्वत्रं-गामिनि, त्रि । इति वक्ष्यमानशब्ददर्शनात् ॥ (यथा, गीतायाम् । ९ । ६ ।

"यथाकाशस्थितो नित्यं वायुः सर्व्वत्रगो महान् ।
तथा सर्व्वाणि भूतानि मत्स्थानीत्युपधारय ॥")

**सर्व्वत्रगामी**, [न्] पुं, (सर्व्वत्र गच्छतीति । गम + णिनिः ।) वायुः । इति शब्दचन्द्रिका ॥ सर्व्वदिग्-
देशकाले गमनकर्त्तरि, त्रि ॥

**सर्व्वथा**, व्य, (सर्व्वेण प्रकारेण । सर्व्व + "प्रकार-वचने थाल् ।" ५ । ३ । २३ । इति थाल् ।) सर्व्वप्रकारम् । इति व्याकरणम् ॥ (यथा, मनुः । २ । १५ ।
"उदितेऽनुदिते चैव समयाध्युषिते तथा ।
सर्व्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः ॥")
प्रतिज्ञा । भृशम् । हेतुः । इति शब्दरत्नावली ॥

**सर्व्वदमनः**, पुं, (सर्व्वान् दमयतीति । दम + ल्युः ।) भरतराजः । स तु शकुन्तलापुत्त्रः । इति त्रिकाण्डशेषः ॥ (अस्य नामनिरुक्तिर्यथा, महा-
भारते । १ । ७४ । ५ -- ७ ।
"षड्वर्ष एव बालः स कण्वाश्रमपदं प्रति ।
सिंहान् व्याघ्रान् वराहांश्च महिषांश्च गजां-स्तथा ॥
बबन्ध वृक्षे बलवानाश्रमस्य समीपतः ।
आरोहन् दमयंश्चैव क्रीडंश्च परिधावति ॥
ततोऽस्य नाम चक्रुस्ते कण्वाश्रमनिवासिनः ।
अस्त्वयं सर्व्वदमनः सर्व्वान् हि दमयत्यसौ ॥
स सर्व्वदमनो नाम कुमारः समपद्यत ॥" * ॥
सर्व्वदमनकर्त्तरि, त्रि । इति व्याकरणम् ॥)

**सर्व्वदर्शी**, [न्] पुं, (सर्व्वं पश्यतीति । दृश् + णिनिः ।) बुद्धः । इति शब्दरत्नावली ॥ सकल-
दर्शनकर्त्तरि, त्रि ॥ (यथा, रामायणे । २ । १०६ । ६ ।
"सर्व्वज्ञः सर्व्वदर्शी च बुद्धिमांश्चासि राघव ! ॥")

**सर्व्वदा**, व्य, (सर्व्व + "सर्व्वैकान्यकिंयत्तदः काले दा ।" ५ । ३ । १५ । इति दा ।) सर्व्वस्मिन् सर्व्वधुराया वहः ।) सकलभारवाहकः । रथ-लाङ्गलादीनां भारवाहकगवादिः । इत्यमरः ॥

**सर्व्वधुरीणः**, पुं, (सर्व्वधुरां वहतीति । "खः सर्व्व-धुरात् ।" ४ । ४ । ७८ । इति खः ।) सकल-भारवाहकः । रथलाङ्गलादीनां भारवाहक-गवादिः । इत्यमरः । २ । ९ । ६६ ॥

**सर्व्वन्दमः**, पुं, (सर्व्वं दमयतीति । दम + अच् । द्वितीयाया अलुक् ।) भरतराजः । स तु शकु-न्तलापुत्त्रः । इति हेमचन्द्रः ॥

**सर्व्वपा**, स्त्री, (सर्व्वं पातीति । पा + कः । टाप् ।) बलिराजपत्नी । इति केचित् ॥ सर्व्वरक्षण-कर्त्तरि सर्व्वपानकर्त्तरि च त्रि ॥

**सर्व्वपूर्णत्वं**, क्ली, (सर्व्वैर्द्रव्यैः पूर्णत्वम् ।) सम्भारः । इति त्रिकाण्डशेषः ॥

**सर्व्वप्रियः**, त्रि, सर्व्वेषां जनानां प्रियः । सकलजन-वल्लभः ॥ सर्व्वस्य शिवस्य प्रियः । सर्व्वः प्रियो यस्येति वा । शिवभक्तः ॥

**सर्व्वभक्षा**, स्त्री, (सर्व्वान् भक्षयतीति । भक्ष + अण् ।) छागी । इति हेमचन्द्रः ॥ सर्व्वभक्षणकर्त्तरि, त्रि ॥ (यथा, महाभारते । १ । ६ । १४ ।
"इति श्रुत्वा पुलीमाया भृगुः परममन्युमान् ।
सशापाग्निमतिक्रुद्धः सर्व्वभक्षो भविष्यसि ॥")

**सर्व्वमङ्गला**, स्त्री, (सर्व्वाणि मङ्गलानि अस्याः ।) दुर्गा । इत्यमरः ॥ अस्या व्युत्पत्तिर्यथा, --
"मङ्गलं मोक्षवचनं चाशब्दो दातृवाचकः ।
सर्व्वान्मोक्षान् या ददाति सा एव सर्व्वमङ्गला ॥
हर्षे सम्पदि कल्याणे मङ्गलं परिकीर्त्तितम् ।
तान् ददाति च या देवी सा एव सर्व्वमङ्गला ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५४ अध्यायः ॥ अपि च ।
"सर्व्वमङ्गलशब्दश्च सम्पूर्णाश्चर्य्यवाचकः ।
आकारो दातृवचनस्तस्मात् सा सर्व्वमङ्गला ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे सर्व्वमङ्गला-स्तोत्रं २७ अध्यायः ॥ अन्यच्च ।
"सर्व्वाणि हृदयस्थानि मङ्गलानि शुभानि च ।
ददाति चेप्सितान् लोके तेन सा सर्व्वमङ्गला ॥"
हव्यकव्यामृतान्नानां जिह्वा सर्व्वरसस्य च ॥"
सर्व्वरसविशिष्टे, त्रि । मथा, छान्दोग्योप निषदि । ३ । १४ । २ ।
"सर्व्वकामः सर्व्वगन्धः सर्व्वरसः इति ॥"

**सर्व्वरसोत्तमः**, पुं, (सर्व्वरसेषु उत्तमः ।) लवण-रसः । इति हेमचन्द्रः ॥

**सर्व्वरात्रः**, पुं, (सर्व्वा रात्रिः । "अहःसर्व्वैक-देशसंख्यातपुण्याच्च रात्रेः ।" ५ । ४ । ८७ । इति अच् ।) समस्तरजनी । इति सिद्धान्त-कौमुदी ॥

**सर्व्वरी**, स्त्री, शर्व्वरी । रात्रिः । इति वक्ष्यमाण-शब्ददर्शनात् ॥

**सर्व्वरीकरः**, पुं, (सर्व्वर्य्याः करः ।) चन्द्रः । इति धरणिः ॥

**सर्व्वर्त्तुपरिवर्त्तः**, पुं, (सर्व्वर्त्तूनां परिवर्त्तो यत्र ।) वत्सरः । इति जटाधरः ॥

**सर्व्वर्त्तुफलं**, क्ली, (सर्व्वर्त्तुजातं फलम् ।) सकलर्त्तु जातफलम् । यथा, --
"सर्व्वर्त्तुकुसुमाकीर्णे सर्व्वर्त्तुफलशोभिते ।
स्थिरच्छायद्रुमाकीर्णे सन्तानकवेनावृते ॥"
इति भविष्यपुराणे शिवरात्रिव्रतकथा ॥

**सर्व्वरक्षणकवचं**, क्ली, (सर्व्वरक्षणं सर्व्वरक्षाकरं कवचम् ।) कवचविशेषः । यथा, --
"शिशोः स्वस्त्ययनं चक्रुस्तूर्णं ब्राह्मणपुङ्गवाः ।
हस्तं दत्त्वा शिशोर्गात्रे पपाठ कवचं द्विजः ॥
वदामि तत्ते विप्रेन्द्र कवचं सर्व्वरक्षणम् ।
तद्दत्तं मायया पूर्व्वं ब्रह्मणे नाभिपङ्कजे ॥
निद्रिते जगतां नाथे जले च जलशायिनि ।
भीताय स्तुतिकर्त्रे च मधुकैटभयोर्भयात् ॥
योगनिद्रोवाच ।
दूरीभूतं कुरु भयं भयं किन्ते मयि स्थिते ।
स्थितायां मयि च ब्रह्मन् सुखी तिष्ठ जगत्पते ॥ *
श्रीहरिः पातु ते वक्त्रं मस्तकं मधुसूदनः ।
श्रीकृष्णश्चक्षुषी पातु नासिकां राधिकापतिः ॥
कर्णयुग्मञ्च कण्ठञ्च कपालं पातु माधवः ।
कपोलं पातु गोविन्दः केशांश्च केशवः स्वयम् ॥

काले । इत्यमरः । ३ । ४२२ ॥ (यथा, नरसिंह-
पुराणे । १२ । ५६ ।
“त्वत्पादपद्मे देवेश भक्तिं मे देहि सर्व्वदा ।
यदि तुष्टो ममाद्य त्वमन्यदेकं वृणोम्यहम् ॥”)

**सर्व्वदुःखक्षयः**, पुं, (सर्व्वेषां दुःखानां क्षयो यत्र ।)
मोक्षः । इति हेमचन्द्रः ॥ सकलपीडानाशश्च ॥

**सर्व्वदेवमुखः**, पुं, (सर्व्वेषां देवानां मुखं यत्र ।)
अग्निः । इति जटाधरः ॥

**सर्व्वद्र्यङ्**, [ञ्च] त्रि, सर्व्वस्य पूजकः । सर्व्वानञ्चति
इत्यर्थे क्विप्प्रत्ययेन निष्पन्नः । इति व्याकरणम् ॥

**सर्व्वधारी**, [न्] पुं, (सर्व्वं धरतीति । धृ + णिनिः ।)
कालचक्रस्य द्वाविंशवर्षः । इति केचित् ॥
(यथा, बृहत्संहितायाम् । ८ । २७ ।
“त्वाष्ट्रे युगे सर्व्वजिदाद्य उक्तः
संवत्सरोऽन्यः खलु सर्व्वधारी ।
तस्मात् विरोधी विकृतः खरश्च ।
शस्तो द्वितीयोऽत्र भवाय शेषाः ॥” * ॥
सर्व्वधारके, त्रि ॥)

**सर्व्वधुरावहः**, पुं, (सर्व्वा चासौ धूश्चेति । सर्व्व-
धुरा । ऋक्पूरित्यः । वहतीति । वह + अच् ।
इति देवीपुराणे ४५ अध्यायः ॥

**सर्व्वमयः**, त्रि, सर्व्वात्मकः । सर्व्वशब्दात् मयट्-
प्रत्ययेन निष्पन्नः ॥ (यथा, मार्कण्डेये । ९९ । ३३ ।
“आप्यायन्ते च ते यज्ञास्त्वदाधारा हुताशन ।
अतः सर्व्वस्य योनिस्त्वं वह्ने सर्व्वमयस्तथा ॥”)

**सर्व्वमूल्यं**, क्ली, (सर्व्वस्य मूल्यम् ।) कपर्द्दकम् ।
इति त्रिकाण्डशेषः ॥

**सर्व्वमूषकः**, पुं, (सर्व्वान् मुष्णातीति । मुष + ण्वुल् ।
पृषोदरादित्वात् साधुः ।) कालः । इति हेम-
चन्द्रः ॥

**सर्व्वरसः**, पुं, (सर्व्वो रसो यत्र ।) सूरी ।
पण्डितः । इति शब्दरत्नावली ॥ धूनकः । इत्य-
मरः ॥ वाद्यभाण्डम् । तत्तु बीणाभेदः । इति
मेदिनी ॥ लरणरसः । इति हेमचन्द्रः ॥ (मधु-
रादिरसः । यथा, भागवते । २ । ६ । १ ।
“वाचां वह्नेर्मुखं क्षेत्रं छन्दसां सप्त धातवः ।
अधरौष्ठं हृषीकेशो दन्तपंक्तिं गदाग्रजः ।
रासेश्वरश्च रसनां तालुकं वामनो विभुः ॥
वक्षः पातु मुकुन्दस्ते जठरं पातु दैत्यहा ।
जनार्द्दनः पातु नाभिं पातु विष्णुश्च ते हनुम् ॥
नितम्बयुग्मं गुह्यञ्च पातु ते पुत्तषोत्तमः ।
जानुयुग्मं जानकीशः पातु ते सर्व्वदा विभुः ॥
हस्तयुग्मं नृसिंहश्च पातु सर्व्वत्र सङ्कटे ।
पादयुग्मं वराहश्च पातु ते कमलोद्भव ॥
ऊद्ध्वे नारायणः पातु अधस्तात् कमलापतिः ।
पातु पूर्व्वे च गोपालः पातु वह्नौ दशास्यहा ॥
वनमाली पातु याम्यां वैकुण्ठः पातु नैरृते ।
वारुणे वासुदेवश्च पातु ते जलजासन ! ॥
पातु ते सन्ततमजो वायव्यां विष्टरश्रवाः ।
उत्तरे च सदा पातु सोऽनन्तोऽनन्तकः स्वयम् ॥
ऐशान्यामीश्वरः पातु सर्व्वत्र पातु शत्रुजित् ।
जले स्थले चान्तरीक्षे निद्रायां पातु माधवः ॥
*

इत्येवं कथितं ब्रह्मन् ! कवचं परमाद्भुतम् ।
कृष्णेन कृपया दत्तं स्मृतेनैव पुरा मया ॥
शुम्भेन सह संग्रामे निर्लक्षे घोरदारुणे ।
गगनस्थितो यः सद्यः प्राप्तिमात्रेण शक्तितः ॥
कवचस्य प्रसादेन धरण्यां पतितो मृतः ।
पूर्व्वं वर्षगतं खे च कृत्वा युद्धं भयावहम् ॥
मृते शुम्भे च गोविन्दः कृपालुर्गगने स्थितः ।
माल्यञ्च कवचं दत्त्वा गोलोकं स जगाम ह ॥
कल्पान्तरस्प वृत्तान्तं कृपया कथितं मुने ।
आभ्यां तव भयं नास्ति कवचस्य प्रभावतः ॥
कोटिशः कोटिशो नष्टा मया दृष्टाश्च सर्व्वशः ।
अहञ्च हरिणा सार्द्धं कल्पे कल्पे स्थिरा सदा ॥
इत्युक्त्रा कवचं दत्त्वा सान्तर्द्धानं चकार ह ।
निःशङ्को नाभिकमले तस्थौ स कमलोद्भवः ॥ * ॥
सुवर्णगुटिकायान्तु कृत्वेदं कवचं परम् ।
कण्ठे वा दक्षिणे बाहौ बध्नीयात् यः सुधीः सदा ॥
विषाग्निजलशत्रुभ्यो भयं तस्य न विद्यते ।
जले स्थले चान्तरीक्षे निद्रायां रक्षतीश्वरः ॥
संग्रामे वज्रपाते च विपत्तौ प्राणसङ्कटे ।
कवचस्मरणाद्वै सद्यो निःशङ्कतां व्रजेत् ॥
बद्ध्वेदं कवचं कण्ठे शङ्करस्त्रिपुरं पुरा ।
जघान लीलामात्रेण दुरन्तमसुरेश्वरम् ॥
बद्ध्वेदं कवचं काली रक्तबीजं चखाद सा ।
सहस्रशीर्षा धृत्वेदं विश्वं धत्ते तिलं यथा ॥
आवां सनत्कुमारश्च धर्म्मः साक्षी च कर्म्मणाम् ।
कवचस्य प्रसादेन सर्व्वत्र जयिनो वयम् ॥
न्यस्य नन्दशिशोः कण्ठे जगाम कवचं द्विजः ।
आत्मनः कवचं कण्ठे दधार च हरिः स्वयम् ॥
प्रभावं कथितं सर्व्वं कवचस्य हरेस्तथा ।
अनन्तस्याच्युतस्यैव प्रभावमतुलं मुने ! ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १२ अध्यायः ॥

**सर्व्वला**, स्त्री, (सर्व्वं लातीति । ला + कः । टाप् ।)

**सर्व्ववल्लभा**, स्त्री, (सर्व्वेषां वल्लभा ।) असती नारी । इति धरणिः । इति केचित् ॥ सकलप्रिये, त्रि ॥

**सर्व्ववित्**, पुं, (सर्व्वं वेत्तीति । विद् + क्विप् ।) परमेश्वरः । यथा, --
"यः सर्व्वज्ञः सर्व्वविच्च यस्य ज्ञानमयं तपः ।
तस्मादेतत् ब्रह्मनाम रूपमन्नञ्च जायते ॥"
इति मुण्डकोपनिषत् । १ । १ । ९ ॥
सर्व्वज्ञे, त्रि ॥)

**सर्व्ववेदः**, पुं, (सर्व्ववेदानधीते इति । "क्रतूक्थादिसूत्रान्तात् ठक् ।" ४ । २ । ६० । इति ठक् ।
"सर्व्वादेः सादेश्च लुग्वक्तव्यः ।" इति लुक् ।)
सर्व्ववेदाध्येता ब्राह्मणः । इति केचित् ॥ सर्व्वज्ञे, त्रि, ॥

**सर्व्ववेदाः**, [स्] पुं, (सर्व्वं धनं वेदयति निवेदयति ऋत्विग्भ्य इति । विद् + णिच् + असुन् ।)
सर्व्वस्वदक्षिणयागो येनेष्टः सः । इत्यमरः ॥
सर्व्वस्वं दक्षिणा यत्र स सर्व्वस्वदक्षिणो विश्वजिन्नामयागः स येनेष्टः सम्पादितः स सर्व्ववेदा उच्यते । सर्व्वं स्वं वेदयति लम्भयति ऋत्विजे
इति सर्व्ववेदाः विद लृ लाभे ञ्यन्तात् त्रासुसिति अस् । इति भरतः ॥

**सर्व्ववेशी**, [न्] पुं, (सर्व्वेषां वेशोऽस्यास्तीति । इनिः ।) नटः । इति हेमचन्द्रः ॥ सकलवेशधारिणि, त्रि ॥

**सर्व्वशान्तिकृत्**, पुं, (सर्व्वशान्तिं करोतीति । कृ + क्विप् ।) भरतराजः । स तु शकुन्तलापुत्त्रः ।
इति शब्दरत्नावली ॥ सकलशमकारके, त्रि ॥

**सर्व्वसङ्गतः**, पुं, (सर्व्वं सङ्गतमस्येति ।) षष्टिका-

**सर्व्वस्वी**, [न्] पुं, वर्णसङ्करविशेषः । स तु गोपकन्यायां नापिताज्जातः । इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १० अध्यायः ॥ (सकलधनविशिष्टे, त्रि ॥

**सर्व्वहितं**, क्ली, (सर्व्वस्मिन् हितम् ।) मरिचम् । इति राजनिर्घण्टः ॥ सकलहितकारके, त्रि ॥

**सर्व्वाङ्गं**, क्ली, (सर्व्वं अङ्गम् ।) सकलावयवः ।
यथा, --
"पादौ रक्षतु मे केतुः सर्व्वाङ्गं मे नवग्रहाः ।
आपादमस्तकञ्चैव सर्व्वविघ्नविनाशकाः ॥"
इति उन्मीलातन्त्रे नवग्रहकवचम् ॥
(पुं, महादेवः । इति महाभारतम् । १३ । १७ । ३१ ॥)

**सर्व्वाङ्गसुन्दररसः**, पुं, (सर्व्वस्मिन् अङ्गे सुन्दरः । स एव रसः ।) औषधविशेषः । यथा, --
"रसगन्धकतुल्यांशोद्वौ भागौ टङ्गणस्य च ।
मौक्तिकं विद्रुमं शङ्खमवनीय समांशतः ॥
हेमभस्मार्द्धभागञ्च सर्व्वं खल्ले निधापयेत् ।
निम्बुद्रवस्य योगेन पिष्टिकां कारयेद्भिषक् ॥
पश्चात् गजपुटं दद्यात् शीतलञ्च समुद्धरेत् ।
हेमभस्मसमं तीक्ष्णं तीक्ष्णार्द्धो दरदो मतः ॥
एकीकृत्य समस्तानि सूक्ष्मचूर्णानि कारयेत् ।
ततः पूजां प्रकुर्व्वीत भक्षयेत् दिवसे शुभे ॥
सर्व्वाङ्गसुन्दरो ह्येष रोगराजनिकृन्तनः ।
वातपित्तज्वरे घोरे सन्निपाते सुदारुणे ॥
अर्शस्सु ग्रहणीरोगे मेगे गुल्मे भगन्दरे ।
निहन्ति वातजान्रोगान् श्लैष्मिकांश्च विशेषतः ॥
पिप्पलीमधुसंयुक्तं घृतयुक्तमथापि वा ।
भक्षयेत् पर्णखण्डेन सितया चार्द्रकेण वा ॥
गुडूचीसत्त्वसहितं प्रमेहे च विशेषतः ।
रसरत्नाकरप्रोक्तः सिद्धयोगो रसोत्तमः ।
राजिकाहिङ्गुतैलाम्लं लवणाढ्यं विवर्ज्जयेत् ॥"
सर्व्वाङ्गसुन्दररसः । इति भैषज्यरत्नावली ॥
(यथा च ।
"रसगन्धकयोः कर्षं ग्राह्यमेकं सुशोधितम् ।
ततः कज्जलिकां कृत्वा मृदुपाकेन साधयेत् ॥
जातीफलं तथा कोषं लवङ्गारिष्टपत्रके ।
सिन्धुवारदलञ्चैव एलाबीजं तथैव च ॥
एषाञ्च कर्षमात्रेण तोयेनाथ विमर्द्दयेत् ।
मुक्तागृहे पुनः स्थाप्यं पुटपाकेन साधयेत् ॥

तोमरः । इत्यमरः । २ । ८ । ९३ ॥

**सर्व्वलिङ्गी**, [न्] पुं, (सर्व्वेषां वर्णाश्रमाणां लिङ्गं

चिह्नमस्त्यस्येति । इनिः ।) पाषण्डः । इत्य-
मरः ॥ द्वेवेदविरुद्धाचारेषु सर्व्ववर्णचिह्नधारिषु
बौद्धक्षपणकादिषु । पापं संवन्ति ददति
पापण्डाः मनीषादित्वात् साधुत्वं मूर्द्धन्यमध्यो-
ऽयम् । सर्व्वेषां वर्णाश्रमाणां किञ्चित् किञ्चित्
लिङ्गमस्त्येषामिति । इन् । इति भरतः ॥
सकलचिह्नधारिणि, त्रि ॥

**सर्व्वली**, स्त्री, (सर्व्वं लातीति । ला + कः । गौरा-

दित्वात् ङीष् ।) तोमरः । इति शब्दरत्ना-
वली ॥

**सर्व्वलोहः**, पुं, (सर्व्वो लोहो यस्य ।) लौहमय-

बाणः । यथा, --
"प्रक्ष्वेडनः सर्व्वलाहो नाराच एषणश्च सः ।"
इति हेमचन्द्रः ॥
मकलधातुश्च ॥

**सर्व्ववर्णिका**, स्त्री, (सर्व्वं वर्णयतीति । वर्ण + ण्वुल् ।

टापि अत इत्वम् ।) गम्भारीवृक्षः । इति
जटाधरः ॥

धान्यम् । इति शब्दचन्द्रिका ॥
सकलसङ्गति-
युक्ते, त्रि ॥

**सर्व्वसंसर्गलवनं**, क्ली, (सर्व्वसंसर्गेण जातं लव-

णम् ।) औषरकम् । इति राजनिर्घण्टः ॥

**सर्व्वसन्नहनार्थकः**, पुं, (सर्व्वेषां सन्नहनस्य अर्थो

यत्र ।) चतुरङ्गसैन्यसन्नाहः । तत्पर्य्यायः ।
सर्व्वाभिसारः २ सर्व्वौघः ३ । इत्यमरः ॥ सर्व्व-
सन्नहनं अर्थोऽभिधेयमस्य । सर्व्वैरभिस्रियते-
ऽभिमुखं गम्यतेऽनेन सर्व्वाभिसारः करणे घञ् ।
सर्व्वेषां ओधो वृन्दमत्र सर्व्वौघः । इति
भरतः ॥

**सर्व्वसन्नाहः**, पुं, (सर्व्वेषां सन्नाहो यत्र ।) सर्व्वात्मा ।

इति हलायुधः ॥ सर्व्वसन्नहनञ्च ॥

**सर्व्वसहः**, पुं, (सर्व्वं सहते इति । सह + अच् ।)

गुग्गुलुः । इति रत्नमाला ॥ सकलसहिष्णौ,
त्रि ॥ (यथा, भागवते । ९ । ५ । ९ ।
"स त्वं जगत्त्राणखलप्रहाणये
निरूपितः सर्व्वसहो गदाभृता ॥")

**सर्व्वसिद्धिः**, पुं, (सर्व्वेषां सिद्धिरस्मात् ।) श्रीफलः ।

इति शब्दचन्द्रिका ॥ सकलसाधनञ्च ॥

**सर्व्वस्वं**, क्ली, (सर्व्वं स्वम् ।) समुदायधनम् । यथा,

"गुरवे दक्षिणां दद्यात् प्रत्यक्षाय शिवात्मने ।
सर्व्वस्वं वा तदर्द्धं वा तदर्द्धं वा तदाज्ञया ॥"
इति तन्त्रसारः ॥

घनपङ्के बहिर्लिप्त्वा पुटमध्ये निधापयेत् ।
गुञ्जाष्टकप्रमाणेन प्रत्यहं भक्षयेन्नरः ॥
एतत् प्रोक्तं कुमाराणां रक्षणाय महौषधम् ।
ज्वरघ्नं दीपनञ्चैव बलवर्णप्रसाधनम् ॥
दुर्व्वारं ग्रहणीरोगं जयत्येव प्रवाहिकाम् ।
सूतिकाञ्च जयेदेतद्रक्तार्शो रक्तसम्भवम् ॥
पिशाचा दानवा दैत्या बालानां विघ्नकारकाः ।
यत्रौषधवरस्तिष्ठेत् तत्र सीमां न यान्ति ते ॥
बालानां गदयुक्तानां स्त्रीणाञ्चैव विशेषतः ।
महागन्धकमेतद्धि सर्व्वव्याधिनिसूदनम् ॥
विना पाकेन सर्व्वाङ्गसुन्दरोऽयं प्रकीर्त्तितः ॥"
इति वैद्यकरसेन्द्रसारसंग्रहेऽतिसाराधिकारे ॥)

**सर्व्वाङ्गीणः**, त्रि, (सर्व्वाङ्गं व्याप्नोतीति । “तत्-
सर्व्वादेः पथ्यङ्गकर्म्मपत्रपात्रं व्याप्नोति ।” ५ ।
२ । ७ । इति खः ।) सर्व्वावयवसम्बन्धयुक्तः ।
सर्व्वावयवव्याप्तः । यथा, भट्टौ । ४ । १० ।
“वसानस्तन्तकनिभे सर्व्वाङ्गीणे तरुत्वचौ ।
काण्डीरः स्वाङ्गिकः शार्ङ्गी रक्षन् विप्रांस्तनु-
त्रवान् ॥”

**सर्व्वाणी**, स्त्री, (सर्व्वस्य पत्नी । सर्व्व + “इन्द्रवरुण-
भवसर्व्वेति ।” ४ । १ । ४९ । इति ङीष् ।
आनुगाग-
मश्च ।) दुर्गा । इत्यमरः । १ । १ । ३९ ॥
अस्या व्युत्-
त्पत्तिर्यथा, ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५४
अध्याये ।
“सर्व्वान्मोक्षं प्रापयति जन्ममृत्युजरादिकम् ।
चराचरांश्च विश्वस्थान् सर्व्वाणी तेन कीर्त्तिता
॥”

**सर्व्वानुकारिणी**, स्त्री, (सर्व्वमनुकरोतीति । कृ +
णिनिः । ङीष् ।) शालपर्णी । इति राजनिर्घण्टः
॥

**सर्व्वानुभूतिः**, स्त्री, (सर्व्वेषामनुभूतिर्यत्र ।) श्वेत-
त्रिवृता । इत्यमरः । २ । ४ । १०८ ॥ (अस्याः
पर्य्यायो
यथा, भावप्रकाशस्य पूर्ब्बखण्डे प्रथमभागे ।
“श्वेता त्रिवृत्ता भण्डी स्यात्त्रिवृता त्रिपुटापि च
।
सर्व्वानुभूतिः सरला निशोत्रा रेचनीति च ॥”)
चतुर्व्विंशतिभूतार्ह्दन्तर्गतार्हद्भेदः । चतुर्व्विं-
शतिभाव्यर्ह्दन्तर्गतार्हद्भेदश्च । इति हेमचन्द्रः
॥

**सर्व्वान्नभक्षकः**, त्रि, (भक्षयतीति । भक्ष + ण्वुल् ।
सर्व्वेषामन्नं सर्व्वान्नम् । तस्य भक्षकः ।) सक-
लान्नभोजी । तत्पर्य्यायः । उदरपिशाचः २
सर्व्वान्नीनः ३ । इति हेमचन्द्रः ॥

**सर्व्वान्नभोजी**, [न्] त्रि, सर्व्वेषां चतुर्णां वर्णानामे-
वान्नं भुङ्क्ते सर्व्वान्नभोजी । इति भरतः ॥
(भुज
+ णिनिः ।) सर्व्वेषामन्नभक्षकः । इत्यमरः । ३
।

**सर्व्वार्थसिद्धः**, पुं, (सर्व्वेषु अर्थेषु सिद्धः ।) बुद्धः ।
इत्यमरः । १ । १ । ११५ ॥
सकलप्रयोजनसिद्धि-
युक्ते, त्रि ॥

**सर्व्वावसरः**, पुं, (सर्व्वेषामवसरो यत्र ।) अर्द्ध-
रात्रः । इति त्रिकाण्डशेषः ॥

**सर्व्वास्त्रा**, स्त्री, (सर्व्वाणि अस्त्राणि यस्याः ।)
षोडशविद्यादेव्यन्तर्गतदेवीविशेषः । इति हेम-
चन्द्रः ॥ सकलास्त्रयुक्ता च ॥

**सर्व्वाह्णः**, पुं, (सर्व्वमहः । “राजाहःसखिभ्यष्टच् ।”
५ । ४ । ९१ । इति टच् । “अह्नोह्न एतेभ्यः ।” ५
।
४ । ८८ । इति अह्नादेशः । णत्वञ्च ।) समस्त-
दिनम् । इति व्याकरणम् ॥

**सर्व्वीयः**, त्रि, (सर्व्वस्मै हितः । सर्व्व + “सर्व्वाण्णस्य
वा वचनम् ।” ५ । १ । १० । इत्यस्य वार्त्ति-
कोक्त्या पक्षे छः ।) सर्व्वसम्बन्धी । सर्व्वशब्दात्
णीयप्रत्ययेन निष्पन्नः । इति व्याकरणम् ॥

**सर्व्वेश्वरः**, पुं, (सर्व्वेषामीश्वरः ।) शिवः । इति
केचित् ॥ सार्व्वभौमश्च । (निखिलप्रभौ, त्रि ।
यथा, भागवते । ६ । ९ । ३३ ।
“केवलजगदाधार लोकैकनाथ सर्व्वेश्वर लक्ष्मी-
नाथ इति ॥”)

**सर्व्वौघः**, पुं, (सर्व्वेषामोघो यत्र ।) चतुरङ्गसैन्य-
सन्नाहः । इत्यमरः ॥ गुरुवेगः । इति मेदिनी ॥

**सर्व्वौषधिः**, पुं, (सर्व्वा ओषधयो यत्र ।) ओषधि-
वर्गविशेषः । यथा, --
“कुष्ठमांसीहरिद्राभिर्व्वाशैलेयचन्दनैः ।
मुराचन्दनकर्पूरैः मुस्तः सर्व्वौषधिः स्मृतः ॥”
अत्र द्वितीयचन्दनपदं रक्तचन्दनपरम् ॥ इति
राजनिर्घण्टः ॥ (क्वचित् स्त्रीलिङ्गेऽपि दृश्यते ॥)

**सर्व्वौषधिगणः**, पुं, (सर्व्वौषधीनां गणः ।) मुराद्यो-
षधिसमूहः । यथा, --
“मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम् ।
शटी चम्पकमुस्तञ्च सर्व्वौषधिगणः स्मृतः ॥”
इति शब्दचन्द्रिका ॥
अन्यच्च ।

**सर्षपः**, पुं, (सरतीति । सृ गतौ + “सर्त्तेरपः षुक्
च ।” उणा० ३ । १४१ । इति अपः षुगा-
गमश्च ।) शस्यविशेषः । सरिषा इति भाषा
॥
तत्पर्य्यायः । तन्तुभः १ कदम्बकः ३ ।
इत्यमरः ।
२ । ९ । १७ ॥ सरिषपः ४ । इति भरतः
॥ तन्तुकः
५ । इति रमानाथः ॥ कटुस्नेहः ६ । इति
जटाधरः ॥ शर्षपः ७ । इति शब्दरत्नावली
॥
राजक्षवकः ८ । इति राजनिर्घण्टः ॥
(यथा,
छान्दोग्योपनिषदि । ३ । १४ । ३ ।
“एष म आत्मान्तर्हृदयेऽणीयान् व्रीहेर्वा
यवाद्वा सर्षपाद्वा श्यामाकाद्वा इति ॥”)
अस्य गुणाः । कफवातघ्नत्वम् ।
तीक्ष्णत्वम् ॥
उष्णत्वम् । रक्तपित्तकारित्वम् । कटुत्वम् ।
क्रमिकुष्ठनाशित्वञ्च । सिद्धार्थश्चापि
तद्गुणः ।
इति राजवल्लभः ॥ * ॥ अपरञ्च ।
“आसुरी राजिका राजी रक्तिका रक्तसर्षपः
।
तीक्ष्णगन्धा मधुरिका क्षवकः क्षतकः क्षवः
॥
आसुरी कटुतिक्तोष्णा
वातप्लीहार्त्तिशूलनुत् ।
दाहपित्तप्रदा हन्ति कफगुल्मकृमिव्रणान् ॥
* ॥
सर्षपो राजक्षवकः कृष्णा तीक्ष्णफला
राजिका ।
राज्ञी सा कृष्णा सर्षपाख्या विज्ञेया
राजसर्ष-
पाख्या च ॥
राजसर्षपकस्तिक्तः कटूष्णो वातशूलनुत् ।
पित्तदाहप्रदो गुल्मकण्डूकुष्ठव्रणापहः ॥”
इति कालेयसरिषपः ॥ * ॥
“सर्षपस्त्वनघो गौरः सिद्धार्थो भूतनाशनः
।
कटुस्नेहो ग्रहघ्नश्च कण्डूघ्नो
राजिकाफलः ॥

१ । २२ ॥ सर्व्वप्रकारान्नभक्षकः । इति केचित् ॥

**सर्व्वान्नीनः**, त्रि, (सर्व्वान्नानि भक्षयतीति । सर्व्वान्न + “अनुपदसर्व्वान्नायानयमिति ।” ५ । २ । ९ । इति खः ।) सर्व्वान्नभोजी । इत्यमरः ॥

**सर्व्वाभिसन्धी**, [न्] पुं, (सर्व्वस्मिन् विषये अभि-सन्धास्त्यस्येति । इनिः ।) वैडालव्रतिकः । छद्मतापसः । इति त्रिकाण्डशेषः ॥ सकलाभि-सन्धानविशिष्टे, त्रि ॥

**सर्व्वाभिसारः**, पुं, (सर्व्वेषामभिसारो यत्र ।) चतुरङ्गसैन्यसन्नाहः । इत्यमरः । २ । ८ । ९४ ॥
अस्य पर्य्यायः सर्व्वसन्नहनशब्दे द्रष्टव्यः ॥

**सर्व्वार्थसाधिका**, स्त्री, (सर्व्वान् अर्थान् साधय-तीति । साधि + ण्वुल् । टापि अत इत्वम् ।) दुर्गा । यथा, मार्कण्डेये देवीमाहात्म्ये ।
“सर्व्वमङ्गलमङ्गल्ये शिवे सर्व्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥”
सकलप्रयोजनसाधके, त्रि ॥

**सर्व्वार्थानुसाधिनी**, स्त्री, (सर्व्वानर्थाननुसाधय-तीति । अनु + साधि + णिनिः । ङीप् ।) दुर्गा । यथा, देवीपुराणे ४५ अध्याये ।
“धर्म्मादीन् चिन्तितान् यस्मात् सर्व्वलोकेषु यच्छति ।
ततो देवी समाख्याता सा सर्व्वार्थानुसाधिनी ॥”

“हरिद्रा चन्दनं दार्व्वी मुस्तकं देवताडकम् ।
धन्याकं जीरकं मेथी धात्रीफलमुषीरकम् ॥
त्रिसुगन्धिः शटी गन्धमाद्री कर्पूरकं वचा ।
नखी मरुवकं कुष्ठं देवदारु विडङ्गकम् ॥
सरलं पद्मकाष्ठञ्च बालकं भद्रमुस्तकम् ।
ग्रन्थिकञ्च जटामांसी पलाशः शैलजं शमी ॥
अर्कच्चोगरुकं दूर्व्वा मुरा मांसी च कुङ्कुमम् ।
अपामार्गो मधुरिका विकासा खदिरः कुशा ॥
चातुर्ज्जातकसत्त्वोऽथोऽष्टवर्गोयज्ञडुम्बरः ।
नागेश्वरश्च कस्तूरी त्रिफला पक्वकेशरम् ॥
कक्कोलं धातकीपुष्पं त्रिकटु रेणुकं यवः ।
तिलाः कुन्दुरु ललुकं भार्गी गोरोचना वकः ॥
शुण्ठी पुष्पञ्च नहुनी श्रीफलं वंशलोचना ।
इन्दीवरं बहुसुता वकुलं मालतीदलम् ॥
इन्द्रबीजं कोकनदं जयन्ती गजपिप्पली ।
श्वेतापराजितापुष्पं सर्व्वौषधिगणः स्मृतः ॥”
इति पाद्मोतरखण्डे १०७ अध्यायः ॥

तीक्ष्णकश्च दुराधर्षो रक्षोघ्नः कुष्ठनाशनः ।
सिद्धप्रयोजनः सिद्धः साधनः सितसर्षपः ॥
सिद्धार्थः कटुकोष्णश्च वातरक्तग्रहापहः ।
त्वग्दोषशमनो रुच्यो विषभूतव्रणापहः ॥”
इति सर्षपः ॥ * ॥
तत्तैलगुणाः ।
“सर्षपतैलं तिक्तं कटुकं
वातकफविकारघ्नम् ।
पित्तास्रदोषदं कृमिकुष्ठघ्नं
तिलजवच्चक्षुष्यम् ॥”
तत्पत्रशाकगुणाः ।
“सार्षपं पत्रमत्युष्णं रक्तपित्तप्रकोपणम् ।
विदाहि कटुकं स्वादु शुक्रहृत् रुचिदायकम् ॥”
इति राजनिर्घण्टः ॥ * ॥
अन्यच्च ।
“सर्षपः कटुकस्नेहस्तन्तुभश्च कदम्बकः ।
गौरस्तु सर्षपः प्राज्ञैः सिद्धार्थ इति कथ्यते ॥
सर्षपस्तु रसे पाके कटुर्हृद्यः सतिक्तकः ।
तीक्ष्णोष्णः कफवातघ्नो रक्तपित्ताग्निवर्द्धनः ॥
रक्षोहरो जयेत् कण्डूकुष्ठकोठकृमिग्रहान् ।
यथा रक्तस्तथा गौरः किन्तु गौरो वरो मतः ॥”
अथ राइ । कृष्ण राइ ।
“राजी तु राजिका तीक्ष्णगन्धा क्षुज्जनिका सुरी ।
क्षवः क्षुतामिजनकः कृमिकः कृष्णसर्षपः ॥
राजिका कफवातघ्नी तीक्ष्णोष्णा रक्तपित्तकृत् ।

किञ्चिद्रूक्षाग्निदा कण्डूकुष्ठकोठकृमीन् हरेत् ॥
अतितीक्ष्णा विशेषेण तद्वत् कृष्णापि राजिका ॥"
तत्तैलगुणाः ।
"दीपनं सार्षपं तैलं कटुपाकरसं लघु ।
लेखनं स्पर्शवीर्य्योष्णं तीक्ष्णं पित्तास्रदूषकम् ॥
कफमेदोऽनिलार्शोघ्नं शिरःकर्णामयापहम् ।
कण्डूकोठकृमिश्वित्रकुष्ठदुष्टव्रणप्रणुत् ॥
तद्वत् राजिकयोस्तैलं विशेषान्मूत्रकृच्छ्रकृत् ॥"
राजिकयोः कृष्ण राइ । आरक्त राइ ।
तयोः ॥ * ॥ तच्छाकगुणाः ।
"कटुकं सार्षपं शाकं बहुमूत्रमलं गुरुः ।
अम्लपाकं विदाहि स्यादुष्णं रूक्षं त्रिदोषकृत् ॥
सक्षारं लवणं तीक्ष्णं स्वादुशाकेषु निन्दितम् ।
तीक्ष्णोष्णं सार्षपं नालं वातश्लेष्मव्रणापहम् ।
कण्डूकृमिहरं दद्रुकुष्ठघ्नं रुचिकारकम् ॥"
इति भावप्रकाशः ॥ * ॥
स्थावरविषभेदः । इति हेमचन्द्रः ॥
षड्लिख्या-
परिमाणम् । यथा, --
"जालान्तरगते भानौ यच्चाणुर्दृश्यते रजः ।
तैश्चतुर्भिर्भवेल्लिख्या लिख्याषड्भिश्च सर्षपः ॥"
इति शब्दचन्द्रिका ॥

**सर्षपतैलं**, क्ली, (सर्षपोद्भवं तैलम् ।) सर्षपजात-
स्नेहः । यथा, --
"सर्षपतैलं तिक्तं कटुकं वातकफविकारघ्नम् ।
पित्तास्रदोषदं कृमिकुष्ठघ्नं तिलजवच्चक्षुष्यम् ॥"
इति राजनिर्घण्टः ॥

**सर्षपी**, स्त्री, (सृ गतौ + अपः षुगागमश्च । ततो
ङीष् ।) खञ्जनिका । इति त्रिकाण्डशेषः ॥
(पिडकाविशेषः । यथा, सुश्रुते । २ । ६ ।
"गौरसर्षपसंस्थाना तत्प्रमाणा तु सर्षपी ॥")

**सलं**, क्ली, (सरतीति । सृ गतौ + अच् । रस्य
लः । सल गतौ + अच् वा ।) जलम् । इत्यमर-
टीकायां भरतः ॥

**सलिलं**, क्ली, (सलति गच्छतीति । सल गतौ +
"सलिकल्यनीति ।" उणा० १ । ५५ । इति

शरान् संपूजयेद्भक्त्या वैणवञ्च धनुस्तथा ॥"
तत्र प्रथमतो वरुणं पूजयेत् । यथा नारदः ।
"गन्धमाल्यैः सुरभिभिर्मधुक्षीरघृतादिभिः ।
वरुणाय प्रकुर्व्वीत पूजामादौ समाहितः ॥"
ततो धर्म्मावाहनादिसकलदेवतापूजाहोमसम-
न्त्रकप्रतिज्ञापत्रशिरोनिवेशान्तं कर्म्म कुर्य्यात् ।
कात्यायनः ।
"शरांस्त्वनायसाग्रांस्तु प्रकुर्व्वीत विशुद्धये ।
वेणुकाष्ठमयाश्चैव क्षेप्ता च सुदृढं क्षिपेत् ॥"
पितामहः ।
"क्षेप्ता च क्षत्त्रियः कार्य्यः तद्वृत्तिर्ब्राह्मणोऽथवा ।
अक्रूरहृदयः शान्तः सोपवासस्तथा शुचिः ॥
इषून्न प्रक्षिपेद्धीमान् मारुते वाति वा भृशम् ।
विषमे भूप्रदेशे च वृक्षस्थाणुसमाकुले ॥"
नारदः ।
"क्रूरं धनुः सप्तशतं मध्यमं षट्शतं मतम् ।
मन्दं पञ्चशतं प्रोक्तमेष ज्ञेयो धनुर्व्विधिः ॥"
अङ्गुलीनां सप्ताधिकं शतं यस्य धनुषः परिमाणं
तत् सप्तशतं एवं षट्शतादिकम् । पिता-
महः ।
"मध्यमेन तु चापेन प्रक्षिपेत्तु शरत्रयम् ।
हस्तानाञ्च शते सार्द्धे लक्ष्यं कृत्वा विचक्षणः ॥
तेषाञ्च प्रेषितानान्तु शराणां शास्त्रदेशनात् ।
मध्यमस्तु शरो ग्राह्यः पुरुषेण बलीयसा ॥
शराणां पतनं ग्राह्यं सर्पणं परिवर्ज्जयेत् ।
सर्पन् सर्पन् शरो याति दूराद्दूरतरं यतः ॥"
पतनं ग्राह्यमिति शरपतनस्थानपर्य्यन्तं गच्छे-
दित्यर्थः । तेन प्रसरणपक्षेऽपि पतनस्थानकशर-
ग्रहणम् । ततश्च प्रथमतः पुरुषान्तरेण तत्स्थाने
शर आनेतव्यः । नारदः ।
"नदीषु नातिवेगासु तडागेषु सरःसु च ।
ह्रदेषु स्थिरतोयेषु कुर्य्यात् पुंसां निमज्जनम् ॥"
नातिवेगासु स्थितिविरोधिवेगशून्यासु । विष्णुः ।
पङ्कशैवालदुष्टग्राहमत्स्यजलौकादिवर्ज्जिते तस्य
नाभिमात्रजले मग्नस्यारागद्वेषिणः पुरुषस्यान्य-
स्योरू गृहीत्वाभिमन्त्रिताम्भः प्रविशेत् । तत्-
समकालञ्च नातिक्रूरमृदुना धनुषा पुरुषोऽपरः
शरमोक्षं कुर्य्यादिति । तस्य शोध्यस्येत्यर्थः ।
अन्यथा तस्येति व्यर्थं स्यात् ॥ * ॥ अन्यपुरुषस्य
स्तम्भधारणमाह स्मृतिः ।
"उदके प्राङ्मुखस्तिष्ठेद्धर्म्मस्थूणां प्रगृह्य च ॥"
प्राड्विवाककर्त्तृकजलाभिमन्त्रणमाहपिता-

यथा, नारदः ।
"गत्वा तु तज्जलस्थानं तटे
तोरणमुच्छ्रितम् ।
कुर्व्वीत कर्णमात्रन्तु भूमिभागे समे शुचौ ॥"
शरमोक्षे विशेषमाहतुर्नारदबृहस्पती ।
"शरप्रक्षेपणस्थानाद्युवा जवसमन्वितः ।
गच्छेत् परमया शक्त्या यत्रासौ मध्यमः
शरः ॥
मध्यमं शरमादाय पुरुषोऽन्यस्तथाविधः ।
प्रत्यागच्छेत् तु वेगेन यतः स पुरुषो गतः ॥
आगतस्तु शरग्राही न पश्यति यदा जले ।
अन्तर्ज्जलगतं सम्यक् तदा शुद्धिं
विनिर्द्दिशेत् ॥
अन्यथा न विशुद्धः स्यादेकाङ्गस्यापि
दर्शनात् ।
स्थानाद्वान्यत्र गमनाद्यस्मिन् पूर्ब्बं
निवेशयेत् ॥"
जविनौ विशेषयति नारदः ।
"पञ्चाशतो धावकानां यौ स्यातामधिकौ
जवे ।
तौ च तत्र नियोक्तव्यौ शरानयनकर्म्मणि ॥"
एकाङ्गस्य दर्शनादिति कर्णाद्यभिप्रायेण ।
"शिरोमात्रन्तु दृश्येत न कर्णौ नापि नासिके
।
अप्सु प्रवेशने यस्य शुद्धं तमपि निर्द्दिशेत्
॥"
इति विशेषाभिधानात् ॥
कात्यायनः ।
"निमज्ज्योत्प्लवते यस्तु दष्टश्चेत् प्राणिना
नरः ।
पुनस्तत्र निमज्जेत दंशचिह्नविचारितः ॥"
जलान्तर्गतमत्स्यजलौकादिना दष्टः
समुत्प्लवते
यदि तदा दष्टे दृष्टे पुनर्निमज्जनीय इत्यर्थः
॥ * ॥
पितामहः ।
"गन्तुश्चापि च कर्त्तुश्च समं गमनमज्जनम्
।
गच्छेत्तोरणमूलात्तु शरस्थानं जवी नरः ॥
तस्मिन् गते द्बितीयोऽपि वेगादादाय शाय-
कम् ।
गच्छेत्तोरणमूलन्तु यतः स पुरुषो गतः ॥

इलच् ।) जलम् । इत्यमरः । १ । १० । ३ ॥
तत्र
विण्मूत्रत्यागनिषेधो यथा, मनुः ।
"न मूत्रं पथि कुर्व्वीत न भस्मनि न गोव्रजे ।
व फालकृष्णे न जले न चित्यां न च पर्व्वते ॥
न जीर्णदेवायतने न वल्मीके कदाचन ।
न ससत्त्वेषु गर्त्तेषु न गच्छन्नापि संस्थितः ॥
न नदीतीरमासाद्य न च पर्व्वतमस्तके ।
वाय्वग्निविप्रानादित्यमपः पश्यंस्तथैव च ।
न कदाचन कुर्व्वीत विण्मूत्रस्य विसर्ज्जनम् ॥"
इत्याह्निकतत्त्वम् ॥
अपि च ।
"मूत्रश्लेष्मपुरीषाणि यैरुत्सृष्टानि वारिणि ।
ते पात्यन्ते च विण्मू त्रे दुर्गन्धे पूयपूरिते ॥"
इति वामनपुराणे कर्म्मविपाको नाम १२
अध्यायः ॥ * ॥ अथ सलिलपरीक्षा ।
पितामहः ।
"तोयस्याथ प्रवक्ष्यामि विधिं धर्म्म्यं सनातनम्
।
मण्डलं पुष्पधूपाभ्यां कारयेत् सुविचक्षणः ॥

महः ।
"तोय त्वं प्राणिनां प्राणः सृष्टेराद्यन्तु निर्म्मितम् ।
शुद्धेश्च कारणं प्रोक्तं द्रव्याणां देहिनान्तथा ।
अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे ॥" * ॥
शोध्यकर्त्तृकाभिमन्त्रणमाहयाज्ञवल्क्यः ।
"सत्येन माभिरक्षस्व वरुणेत्यभिशाप्य कम् ।
नाभिमात्रोदकस्थस्य गृहीत्वोरू जलं विशेत् ॥"
मा मामभिशाप्य शपथं कारयित्वा कं जलं
विशेत् निमज्जेत् । तोरणञ्च निमज्जनसमीपे
समे स्थाने शोध्यकर्णप्रमाणोच्छ्रितं कार्य्यम् ।

आगतस्तु शरग्राही न पश्यति यदा जले ।
अन्तर्ज्जलगतं सम्यक् ततः शुद्धिं
विनिर्द्दिशेत् ॥"
अत्र मज्जनसमकालं गमनाभिधानात् शर-
मोक्षसमकालं गमनं शूलपाण्युक्तमयुक्तम् ।
मज्जनसमकालक्षिप्तं मध्यमं
शरमादायेत्यपर-
मुक्तमपि प्रमाणशून्यम् । ततश्च त्रिषु शरेषु
मुक्तेषु एको वेगवान् मध्यमशरपतनस्थानं
गत्वा तमादाय तत्रैव तिष्ठति अन्यस्तु
पुरुषो
वेगवान् शरमोक्षस्थाने तोरणमूले तिष्ठति
एवं स्थितयोस्तृतीयायां करतालिकायां
प्राड्-
विवाकदत्तायां शोध्यो निमज्जति
तत्समकाल-
मेव तोरणमूलस्थितोऽपि द्रुततरं
मध्यमशर-
पतनस्थानं गच्छति शरग्राही च तस्मिन्
प्राप्ते
द्रुततरं तोरणमूलं प्राप्यान्तर्ज्जलगतं यदि
न
पश्यति तदा शुद्धो भवतीति वर्त्तुलार्थः ॥ *
॥
तत्र प्रयोगः । उक्तलक्षणजलाशयनिकटे
तथा
तोरणं विधाय उक्तदेशे लक्ष्यं कृत्वा तोरण-
समीपे सशरं धनुः संपूज्य जलाशये वरुण-
मावाह्य पूजयित्वा तत्तीरे धर्म्मादींश्च देवान्
हवनान्तमिष्ट्वा दक्षिणां कृत्वा शोध्यस्य
शिरसि
प्रतिज्ञापत्रं बद्ध्वा प्राड्विवाको जलमभि-
मन्त्रयेत् ।

"ॐ तोय त्वं प्राणिनां प्राणः सृष्टेराद्यन्तु निर्म्मितम् ।
शुद्धेश्च कारणं प्रोक्तं द्रव्याणां देहिनां तथा ।
अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे ॥"
इति मन्त्रेण ॥
शोध्यस्तु ॐ सत्येन माभिरक्षस्व वरुणेत्यनेन जलमभिमन्त्र्य गृहीतस्थूणस्य शोध्यनाभिमात्रो-
दकावस्थितस्य बलीयसः प्राङ्मुखस्य पुरुषस्य
समीपं जलमध्ये गच्छेत् । ततः शरेषु त्रिषु मुक्तेषु मध्यमशरपतनस्थाने मध्यमशरं गृहीत्वा
जविन्येकस्मिन् पुरुषे स्थिते अन्यस्मिंश्च तोरण-
मूले स्थिते प्राड्विवाकेन तालत्रये दत्ते शोध्यो गृहीतस्थूणप्राङ्मुखपुरुषस्योरू गृहीत्वा निम-
ज्जति । तत्समकालमेव तोरणमूलस्थोऽपि मध्यमशरस्थानं द्रुतं गच्छति । ततः शरग्राही च
तस्मिन् प्राप्ते द्रुतं तोरणमूलं प्राप्य जलान्तःस्थं
यदि न पश्यति तदा शुद्धः । कर्णाद्यङ्गं विना शिरोमात्रदर्शनेऽपि शुद्धः मज्जनस्थानादन्यत्र गमनेऽप्यशुद्धः । दक्षिणादिकं दद्यात् । इति दिव्यतत्त्वम् ॥

**सलिलकुन्तलः**, पुं, (सलिलस्य कुन्तल इव ।)

शैवालः । इति त्रिकाण्डशेषः ॥

**सलिलजं**, क्ली, (सलिले जायते इति । जन + डः ।)

पद्मम् । इति राजनिर्घण्टः ॥ जलजाते, त्रि ॥ (यथा, महाभारते । ७ । १२५ । २१ ।
"एष वृष्णिप्रवीरेण ध्मातः सलिलजो भृशम् ।
पृथिवीञ्चान्तरीक्षञ्च निनादयति शङ्खराट् ॥")

**सलिलाशयः**, पुं, (सलिलानामाशयः ।) जला-

शयः । तस्य वैकृत्ये दोषो यथा, --
गर्ग उवाच ।
"नगरादपसर्फन्ते समीपमुपयान्ति च ।
नद्यो ह्रदाः प्रस्रवणाः विरसाश्च भवन्ति ते ।
विवर्णं कलुषं तप्तं फेनवज्जन्तुसङ्कुलम् ।
क्षीरं स्नेहं सुरां रक्तं वहन्ते चाकुलोदकाः ॥

सुराङ्गणाभवल्लवीकरप्रपञ्चचामर-
स्फुरत्समीरवीजितं सदाच्युतं भजामि तम् ॥"
इति छन्दोमञ्जरी ॥

**सल्लकी**, स्त्री, (सत्कृत्य लक्यते स्वाद्यते गजैरिति ।

सत् + लक + क्वुन् । गौरादित्वात् ङीष् ।) स्वनाम-
ख्यातवृक्षः । तत्पर्य्यायः । गजभक्ष्या २ सुवहा ३ सुरभी ४ रसा ५ महेरणा ६ कुन्दुरुकी ७ ह्लादिनी ८ । इत्यमरः । २ । ४ । १२४ ॥ गजभक्षा ९
सुरभिः १० सुरभीरसा ११ महेरुणा १२ शल्लकी १३ सिल्लकी १४ शिल्लकी १५ ह्लादिनी १६ । इति तट्टीका ॥ शल्यते श्लाघ्यते गजैः शल्लकी । शल क ङ श्लाघे चुरादिः ञेर-
भावपक्षे नाम्नीति लकट् । श्वाविद्द्रुभेदौ शल्लक्यौ शङ्का त्रासवितर्कयोरिति तालव्यादौ रभसः । सलति गच्छति सलगतौ दन्त्यादिः णकः भौवादिः निपातनात् लस्य द्वित्वम् । सत्कृत्य लक्यते स्वाद्यते गजैरिति वा सल्लकी दन्त्यादिरित्यन्ये । सिल्लकी चेत्येके । देशी-
प्रायेयम् । सल्लकी सिल्लकी ह्लदेति रुद्रः । इति स्वामी । इत्यमरटीकायां भरतः ॥

**संव(म्ब)रं**, क्ली, (संव्रियते इति । सं + वृ + अप् ।)

संयमः । इति त्रिकाण्डशेषः ॥ बौद्धव्रतविशेषः । इति मेदिनी ॥ जलम् । इत्यमरः । १ । १० । ४ ॥
"सम्बति सम्बरम् । सम्ब सर्पणे पूर्व्वेण अर सम्बरं दन्त्यादि । शम्ब गतावित्यस्मादेरे ताल-
व्यादि च ।
'क्लीवन्तु सम्बरं नीरबौद्धव्रतविशेषयोः ।
विशेषे पुंसि दैत्यस्य मत्स्यस्य हरिणस्य च ॥'
इति दन्त्यादौ रभसः ॥
'शम्बरो हरिणे दैत्ये मत्स्ये च सलिले स्मृतः ॥'
इति तालव्यादावजयः ।" इति भरतः ॥

**संव(म्ब)रः**, पुं, (संवृणोति आवृणोति जलमिति ।

सं + वृ + अच् ।) सेतुः । यथा । सेतौ पल्यालि-
संवराः । इति हेमचन्द्रः ॥ दैत्यविशेषः । हरिणविशेषः । मत्स्यविशेषः । शैलविशेषः । जिनविशेषः । इति मेदिनी ॥ स तु भाव्यर्हन् । इति हेमचन्द्रः ॥

**संवरणं**, क्ली, (सं + वृ + ल्युट् ।) आवरणम् ।

विशेषे पुंसि दैत्यस्य मत्स्यस्य हरिणस्य च ॥'
इति दन्त्यादौ रभसः । संवरणं संवरः भावेऽल् ।
इन्द्रियसंयमः संवरस्तस्यारिरिति वा । तदुक्तं
साहित्यकल्पतरुणा । रुद्रस्य सम्बरारिश्च पुष्प-
वतीनां कुसुमधन्वेति । तदयं संवरारिरिह तालव्यादिर्दन्त्यादिश्च ॥" इति भरतः ॥

**संवरी**, स्त्री, शतावरी । इति शब्दचन्द्रिका ॥

मूषिकपर्णी । इत्यमरः । २ । ४ । ८८ ॥ इन्दुर-
काणी इति ख्यातायां थुलकुडी इति ख्याता-
यामिति केचित् । शं कल्याणं वृणोति शंवरी पूर्ब्बवदन् ईप् तालव्यशादिः दन्त्यसादिश्चेति
स्वामी । इति भरतः ॥

**संवलं**, क्ली, (संवृणोतीति । सं + वृ + अच् । रस्य

लः ।) जलम् । इति शब्दरत्नावली ॥

**संवलः**, पुं, क्ली, पाथेयम् । तालव्यादिर्दन्त्यादिश्च ।

इत्यमरभरतौ ॥

**सवं**, क्ली, (सूते रसानिति । सू + अच् ।) जलम् ।

इति जटाधरः ॥ पुष्परसः । इति केचित् ॥

**सवः**, पुं, (सूयते सोमोऽत्रेति । सू + अप् ।)

यज्ञः । इत्यमरः । २ । ७ । १३ ॥ (यथा, महा-
भारते । १ । ९४ । २५ ।
"राजसूयाश्वमेधाद्यैः सोऽयजत् बहुभिः सवैः ॥")
सन्तानः । इति मेदिनी ॥ सूर्य्यः । चन्द्रः । इति
केचित् ॥ (अज्ञे, त्रि । यथा, वाजसनेयसंहि-
तायाम् । ९ । ३९ ।
"सविता त्वा सवानां सुवताम् ।"
"सविता सवानां प्रसवानामज्ञानामाधिपत्ये हे
यजमान त्वा त्वां सुवतां प्रेरयतु ।" इति

षण्मासाभ्यन्तरे तत्र परचक्रभयं भवेत् ।
जलाशया नदन्ते वा प्रज्वलन्ति कथञ्चन ॥
विमुञ्चन्ति तथा ब्रह्मन् ज्वालाधूमरजांसि च ।
अखाते वा जलोत्पत्तिः ससत्त्वा वा जलाशयाः ॥
संगीतशब्दा दृश्यन्ते जले मारभयं वदेत् ।
दिव्यमम्भोभयं सर्पिर्मधुना त्ववसेचनम् ।
जप्तव्या वारुणा मन्त्रास्तैश्च होमो जले भवेत् ॥
मध्वाज्ययुक्तं परमान्नमत्र
देयं द्विजानां द्विजभोजनार्थम् ।
गावश्च देयाः सितवस्त्रयुक्ता-
स्तथोदकुम्भाः सलिलाघशान्त्यै ॥"
इति मात्स्ये २०८ अध्यायः ॥

**सलिलेन्धनः**, पुं, (सलिलं इन्धनं यस्य ।) वाड-
वानलः । इति त्रिकाण्डशेषः ॥

**सलीलः**, त्रि, लीलया सह वर्त्तमानः । लीला-
विशिष्टः । यथा, --
"सुरद्रुमूलमण्डपे विचित्ररत्ननिर्म्मिते
लसद्वितानभूषिते सलीलविभ्रमालसम् ।
(यथा, महाभारते । १ । १४१ । ७१ ।
"मन्त्रसंवरणे यत्नः सदा कार्य्योऽनसूयता ॥")
इन्द्रियसंयमः । इति संवरादिशब्दटीकायां
भरतः ॥ (प्राकारः । यथा, रामायणे । २ ।
८८ । २४ ।
"शून्यसंवरणारक्षामयन्त्रितहयद्विपाम् ।
अनावृतपुरद्वारां राजधानीमरक्षिताम् ॥"
"शून्यसंवरणारक्षां संवरणानां प्राकाराणामा-
समन्तात् रक्षया शून्याम् ।" इति तट्टीका ॥ * ॥
पुं, अजमीढपुत्त्रः । स च कुरोः पिता । इति
महाभारतम् । १ । ९५ । ३७ ॥)

**संवरारिः**, पुं, (संवरस्य अरिः ।) कामदेवः । इत्य-
मरः । १ । १ । २३ ॥ "संवरस्य दैत्यविशेषस्य
अरिः ।
'क्लीवन्तु संवरं नीरबौद्धव्रतविशेषयोः ।
तद्भाष्यम् ॥)

**सवनं**, क्ली, (सु ञ् अभिषवे + ल्युट् ।) यज्ञ-
स्नानम् । (यथा, किराते । १२ । १० ।
"प्रविवेश गामिव कृशस्य
नियमसवनाय गच्छतः ।
तस्य पदविनमितो हिमवान्
गुरुतां नयन्ति हि गुणा न संहतिः ॥")
तत्पर्य्यायः । सूत्या २ अभिषवः ३ ।
इत्यमरः ।
२ । ७ । ४७ ॥ सोमसन्धानम् ४ । इति
जटाधरः ॥
सोमपानम् । इति भरतः ॥ अध्वरम् ।
(यथा,
रघुः । ८ । ७५ ।
"अथ तं सवनाय दीक्षितः
प्रणिधानात् गुरुराश्रमस्थितः ।
अभिषङ्गजडं विजज्ञिवान्
इति शिष्येण किलान्वबोधयत् ॥")
सोमनिर्द्दलनम् । इति मेदिनी ॥ प्रसवः ।
इति
केचित् ॥ (सु + युच् । चन्द्रे, पुं, ।
इत्युणादिवृत्तौ
उज्ज्वलदत्तः । २ । ७४ ॥ वनेन सह
वर्त्तमानमिति
विग्रहे वनविशिष्टे, त्रि । यथा, महाभारते ।
१ । १८ । ८ ।
"अथ पर्व्वतराजानं तमनन्तो महाबलः ।
उज्जहार बलाद्ब्रह्मन् सवनं सवनौकसम् ॥")

**सवयाः**, [स्] स्त्री, (समानं वयोम्याः । "ज्योति-
र्जनपदेति ।" ६ । ३ । ८५ । इति समानस्य
मः ।)

समवयस्का । तत्पर्य्यायः । आलिः २ वयस्या ३
सखी ४ सहचरी ५ । इति जटाधरः ॥

**सवयाः**, [स्] पुं, (समानं वयो यस्य ।) वयस्यः ।

इत्यमरः । २ । ८ । १२ ॥ समानवयस्के, त्रि ॥
(यथा रघुः । ५ । ६५ ।
“सूतात्मजाः सवयसः प्रथितप्रबोधं
प्राबोधयन्नुषसि वाग्भिरुदारवाचः ॥”)

**सवरः**, पुं, सलिलम् । शिवः । इति त्रिकाण्डशेषः ॥

**सवर्णः**, त्रि, (समानो वर्णोऽस्य । “ज्योतिर्जन-

पदेति ।” ६ । ३ । ८५ । इति समानस्य सः ।)
सदृशः । इति हेमचन्द्रः ॥ (यथा, रघुः । ९ । ५१ ।
“ग्रथितमौलिरसौ वनमालया
तरुपलाशसवर्णतनुच्छदः ॥”)
समानवर्णः । (यथा, महाभारते । ७ । २२ । ४३ ।
“इन्द्रायुधसवर्णैस्तु कुन्तिभोजो हयोत्तमैः ।
आयात् सदश्वैः पुरुजित् मातुलःसव्यसाचिनः ॥”)
तुल्यजातिः । यथा, मनुः ।
“पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते ।
असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्म्मणि ॥”
इत्युद्वाहतत्त्वम् ॥
एकस्थानोत्पन्नवर्णः । यथा । सर्व्वर्णेनाकदीर्घः ।
इति संक्षिप्तसारव्याकरणम् ॥

**सवर्णा**, स्त्री, (समानो वर्णो यस्याः ।) सूर्य्यपत्नी

छाया । इति शब्दरत्नावली ॥ (समानवर्णा
स्त्री । यथा, मनुः । ३ । ४ ।
“उद्वहेत द्विजो भार्य्यां सवर्णां लक्षणान्वि-
ताम् ॥”)

**सवहा**, स्त्री, त्रिवृता । इत्यमरटीकायां भरतः ॥

**सविकाशः**, त्रि, विकशितः । प्रफुल्लः । विकाशेन

सह वर्त्तमानः ॥

**सविता**, [ऋ] पुं, (सूते लोकादीनिति । सू +

तृच् ।) सूर्य्यः । इत्यमरः । १ । ३ । ३१ ॥
(यथा,

**सवित्री**, स्त्री, (सूते या । सू + तृच् । ङीप् ।)

माता । इति हेमचन्द्रः ॥ (यथा, कुमारे । १ । २४ ।
“तया दुहित्रा सुतरां सावित्री
स्फुरत्प्रभामण्डलया चकाशे ॥”)
गौः । इति केचित् ॥

**सविधः**, त्रि, (समाना विधास्येति ।) निकटम् ।

इत्यमरः । ३ । १ । ६७ ॥ (यथा,
कथासरित्-
सागरे । ५३ । ३० ।
“अग्रे सविधमागत्य राज्ञस्तस्योपविष्टवान् ॥”)
समानप्रकारश्च ॥ (यथा, भागवते । ३ । ३ । ८ ।
“आसां मुहूर्त्त एकस्मिन् नानागारेषु योषिताम् ।
सविधं जगृहे पाणीननुरूपः स्वमायया ॥”)

**सविस्मयः**, त्रि, (विस्मयेन सह वर्त्तमानः ।)

विस्मयापन्नः । तत्पर्य्यायः । वीक्षापन्नः २ ।
इति हारावली ॥

**सवेशः**, त्रि, (वेशेन सह वर्त्तमानः ।) वेशान्वितः ।

इति धरणिः ॥ निकटम् । इत्यमरः । ३ । १ । ६७ ॥

**सव्यः**, त्रि, (सू प्रेरणे + “माच्छाससिसूभ्यो यः ।”

उणा० ४ । १०९ । इति यः ।) वामः । इत्य-
मरः । ३ । १ । ८५ ॥ (यथा, मनुः । २ । ६३ ।
“उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः ।
सव्ये प्राचीन आवीती निवीती कण्ठसज्जने ॥”)
दक्षिणः । (यथा, अनर्घराघवे । ६ । ७० ।
“एकेन सव्यपाणिना विशिखमुत्खाय किमाह
रावणः । साधु रे मनुष्यडिम्भ साधु ।”
“सव्यपाणिना दक्षिणहस्तेन ।” इति तट्टीका ॥)
प्रतिकूलः । इति हेमचन्द्रः ॥

**सव्यः**, पुं, (सूते विश्वमिति । सू प्रसवे + “माच्छा-

ससिसूभ्यो यः ।” उणा० ४ । १०९ । इति
यः ।)

**ससत्त्वा**, स्त्री, (सत्त्वेन सह वर्त्तमाना ।) गर्भिणी ।

इति शब्दरत्नावली ॥ (यथा, रघुः । ३ । ९ ।
“नदीमिवान्तःसलिलां सरस्वतीं
नृपः ससत्त्वां महिषीममन्यत ॥”)
प्राणियुक्ते, त्रि । यथा, “मनुः । ४ । ४७ ।
‘न मूत्रं पथि कुर्व्वीत न भस्मनि न गोव्रजे ॥’
‘न ससत्त्वेषु गर्त्तेषु न गच्छन्नापि संस्थितः ॥’
ससत्त्वेषु प्राणिमत्सु ।” इत्याह्निकतत्त्वम् ॥

**ससनं**, क्ली, (सस नाशे + ल्युट् ।) यज्ञार्थपशु-

हननम् । इत्यमरटीका । २ । ७ । २६ ॥ तस्य
रुपान्तरं शमनं शसनञ्च ॥

**सस्मितः**, त्रि, (स्मितेन सह वर्त्तमानः ।) ईष-

द्धास्ययुक्तः । यथा, --
“सस्मिताननसरोजमङ्गने
रिङ्गमाणमतिलोलकुन्तलम् ।
रोचनोल्लसितभालमस्तु मे
कैशवं मनसि शैशवं वपुः ॥”
इत्यनुमितौ जगदीशः ॥

**सस्यं**, क्ली, (सस स्वप्ने + “माच्छाससिसूभ्यो यः ।”

उणा० ४ । १०९ । इति यः ।) वृक्षादीनां
फलम् । यथा, --
“स्रंसनं सीसकं सस्यं स्रस्तं सास्ना च साध्व-
सम् ॥”
इत्युष्मविवेकात् । इत्यमरटीकायां भरतः ॥
धान्यम् । यथा, हेमचन्द्रः ।
“धान्यन्तु सस्यं सीत्यञ्च व्रीहिस्तम्बकरिश्च
तत् ।”
शस्त्रम् । गुणः । इति विश्वः ॥ तस्य प्रशंसा
यथा,
“जीर्णमन्नं प्रशंसीयात् भार्य्याञ्च गतयौवनाम् ।
रणात् प्रत्यागतं शूरं सस्यञ्च गृहमागतम् ॥”
इति चाणक्यशतकम् ॥
अन्यत् शस्यशब्दे द्रष्टव्यम् ॥

**सस्यकः**, पुं, (सस्येन गुणेन परिजातः सम्बद्धः ।

सस्य + “सस्येन परिजातः ।” ५ । २ । ६८ ।
इति कन् ।) मणिभेदः । (यथा, बृहत्संहि-
तायाम् । ७ । २० ।
“हेमकान्तिरथवा शुकवर्णः
सस्यकेन मणिना सदृशो वा ॥”)
असिः । इति मेदिनी ॥

कुमारे । ५ । २० ।
"विजित्य नेत्रप्रतिघातिनीं प्रभा-
मनन्यदृष्टिः सवितारमैक्षत ॥")
तस्य व्युत्पत्तिर्यथा, --
"धीशब्दवाच्यो ब्रह्माणं प्रचोदयति सर्व्वदा ।
सृष्ट्यर्थं भगवान् विष्णुः सविता स तु
कीर्त्तितः ॥
सर्व्वलोकप्रसवनात् सविता स तु कीर्त्त्यते ।
यतस्तद्देवता देवी सावित्रीत्युच्यते ततः ॥"
इति वह्निपुराणे गायत्रीकल्पो नामाध्यायः ॥
अर्कवृक्षः । इति चामरः । २ । ४ । ८० ॥

**सवितृदैवतः**, पुं, (सविता दैवतं यस्य ।) हस्त-

नक्षत्रम् । इति हेमचन्द्रः ॥

**सवितृलः**, त्रि, सवितृसम्बन्धी । सवितृशब्दात् लप्र-

त्ययेन निष्पन्नः ॥

**सवित्रं**, क्ली, (सूयतेऽनेनेति । सू प्रसवे + "अर्त्ति-

लूधूसूखनसहचर इत्रः ।" ३ । २ । १८४ ।
इति
करणे इत्रः ।) प्रसवकरणम् । इति मुग्धबोध-
व्याकरणम् ॥

**सवित्रियः**, त्रि, (सवितुरयमिति । सवितृ + घः ।)

सूर्य्यसम्बन्धीयः । इति सिद्धान्तकौमुदी ॥

विष्णुः । इति शब्दमाला ॥

**सव्यसाची**, [न्] पुं, (सव्येन वामेन हस्तेनापि

सचति सन्दधाति बाणमिति । सच सन्धाने +
णिनिः ।) अर्ज्जुनः । इति हेमचन्द्रः ॥ (यथा,
महाभारते । ४ । १२ । १९ ।
"उभौ मे दक्षिणौ पाणी गाण्डीवस्य विकर्षणे ।
तेन देवमनुष्येषु सव्यसाचीति मां विदुः ॥")

**सव्येष्ठः**, पुं, (सव्ये तिष्ठतीति । स्था + कः ।

"स्थास्थिन्स्थृणाम् ।" ८ । ३ । ९७ ।
इत्यस्य
वार्त्तिकोक्त्या षत्वम् । हलदन्तादित्यलुक् ।)
सारथिः । इति हलायुधः ॥

**सव्येष्ठा**, [ऋ] पुं, (सव्ये तिष्ठतीति । स्था +

"सव्ये स्थश्छन्दसि ।" उणा० २ । १०२ ।
इति
छन्दसि ऋः । स च डित् ।
"स्थास्थिन्स्थृणाम् ।"
८ । ३ । ९७ । इति षत्वम् । सप्तम्या अलुक्
।)
सारथिः । इत्यमरः । २ । ८ । ६० ॥

**सशस्या**, स्त्री, (शस्येन सह वर्त्तमाना ।) नाग-

दन्ती । इति रत्नमाला ॥ शस्ययुक्तभूम्यादौ,
त्रि ॥

**सशूकः**, पुं, (शूकेन दयया सह वर्त्तमानः ।)

आस्तिकः । इति केचित् ॥

**सश्मश्रुः**, स्त्री, (श्मश्रुणा सह वर्त्तमाना ।) श्मश्रु-

युक्तस्त्री । तत्पर्य्यायः । नरमालिनी २ । इति
हेमचन्द्रः ॥ (श्मश्रुविशिष्टे, त्रि ॥)

"सस्यको नालिकेरान्तः सस्याभमणिखड्गयोः
॥"
इति हेमचन्द्रः ॥
(शालिः । साधुः । इति काशिका ॥)

**सस्यमारी**, [न्] पुं, (सस्यं मारयतीति । मृ +

णिच् + णिनिः ।) महामूषकः । इति राज-
निर्घण्टः ॥ सस्यनाशके, त्रि ॥

**सस्यसंवरः**, पुं, (सस्यैः संव्रियते इति । सं + वृ +

"ग्रहवृदृनिश्चिगमश्च ।" ३ । ३ । ५८ । इति
अप् ।)
सालवृक्षः । इत्यमरः । २ । ४ । ४४ ॥

**सस्यसंवरणः**, पुं, (सस्यैः संवरणमस्येति ।) अश्व-

कर्णवृक्षः । इति राजनिर्घण्टः ॥

**सस्वेदा**, स्त्री, (स्वेदेन सह वर्त्तमाना ।) दूषिता

कन्या । इति शब्दरत्नावली ॥ (घर्म्मविशिष्टे,
त्रि ॥)

**सह**, व्य, सहितम् । तत्पर्य्यायः । साकम् २ सार्द्धम् ३
सत्रम् ४ समम् ५ । इत्यमरः । ३ । ४ । ४ ॥
सजुः ६ । इति जटाधरः ॥ (यथा, मनुः ।
१० । ६१ ।
“यत्र त्वेते परिध्वंसा जायन्ते वर्णदूषकाः ।
राष्ट्रिकः सह तद्राष्ट्रं क्षिप्रमेव विनश्यति ॥”)
साकल्यम् । विद्यमानम् । सादृश्यम् । यौगपद्यम्
।
समृद्धिः । सम्बन्धः । इति मेदिनी ॥ सामर्थ्यम्
।
इति शब्दरत्नावली ॥

**सहं**, क्ली, (सहते इति । सह + अच् ।) पांशव-
लवणम् । इति राजनिर्घण्टः ॥

**सहः**, पुं, (सहते इति । सह + पचाद्यच् ।)
अग्रहायणमासः । (यथा, वाजसनेयसंहि-
तायाम् । १४ । २७ ।
“सहश्च सहस्यश्च हैमन्तिकावृतू ॥” * ॥
महादेवः । इति महाभारतम् । १३ । १७ ।
१२६ ॥) क्षमे, त्रि । इति हेमचन्द्रः ॥ (यथा,
महाभारते । १६ । ८ । १० ।
“गदापरिघशक्तीनां सहाः परिघबाहवः ।
त एरकाभिर्निहताः पश्य कालस्य पर्य्ययम् ॥”)

**सहः**, पुं, क्ली, (सहते इति । सह + अच् ।)
बलम् । इति मेदिनी ॥

**सहः**, [स्] क्ली, (सहते इति । सह + “सर्व्व-
धातुभ्योऽसुन् ।” उणा० ४ । १८८ । इति
असुन् ।)
ज्योतिः । बलम् । इति शब्दरत्नावली ॥ (यथा,
रघुः । ८ । ७ ।
“सदयं बुभुजे महाभुजः
सहसोद्वेगमियं व्रजेदिति ।
अचिरोपनतां स मेदिनीं
नवपाणिग्रहणां बधूमिव ॥”)

**सहकारः**, पुं, (सह युगपत् कारयति विक्षेपयति
सौगन्धमिति । कृ + णिच् + अच् ।) अति-
सौरभाम्रः । इत्यमरः । २ । ४ । ३३ ॥ (यथा,
रघुः । ४ । ९ ।
“मन्दोत्कण्ठाः कृतास्तेन गुणाधिकतया गुरौ ।
फलेन सहकारस्य पुष्पोद्गम इव प्रजाः ॥”)

“सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः
शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्धा ॥”)

**सहचरी**, स्त्री, (सह चरति या । चर + अच् ।
पचादिषु चरतेष्टित्करणात् ङीष् ।) पीत-
झिण्टी । इत्यमरः । २ । ४ । ७५ ॥ सखी ।
इति जटाधरः ॥ पत्नी । इति हेमचन्द्रः ॥
(यथा, रघुः । ९ । ५७
“लक्ष्यीकृतस्य हरिणस्य हरिप्रभावः
प्रेक्ष्य स्थितां सहचरीं व्यवधाय देहम् ।
आकर्णकृष्टमपि कामितया स धन्वी
बाणं कृपामृदुमनाः प्रतिसञ्जहार ॥”)

**सहजः**, पुं, (सह जायते इति । जन + डः ।)
सहोदरः । इत्यमरः । २ । ६ । ३४ ॥ निसर्गः ।
सहोत्थे, त्रि । इति मेदिनी ॥ (यथा, रघुः ।
८ । ४३ ।
“विललाप स वाष्पगद्गदं
सजहामप्यपहाय धीरताम् ।
अभितप्तमयोऽपि मार्द्दवं
भजते कैव कथा शरीरिषु ॥”)
जन्मलग्नात् तृतीयस्थानम् । यथा, --
“सुतमदननवान्त्ये पूर्णदृष्टिः सुरारि-
र्युगलदशमराशौ दृष्टिपादत्रयार्हः ।
सहजरिपुचतुर्थेष्वष्टमे चार्द्धदृष्टिः
स्थितिभवनमुपान्त्यं नैव दृश्यं हि राहोः ॥”
इति ज्योतिस्तत्त्वम् ॥

**सहजमित्रं**, क्ली, (सहजं मित्रम् ।) स्वाभाविक-
सुहृत् । यथा, --
“अरिर्मित्रमुदासीनोऽनन्तरस्तत्परःपरः ।
क्रमशो मण्डलं चिन्त्यं सामादिभिरुपक्रमैः ॥”
अरिः शत्रुः । मित्रं सुहृत् । उभयविलक्षण
उदासीनः । ते च त्रयस्त्रिविधाः । सहजाः
कृत्रिमाः प्राकृताश्चेति । सहजं मित्रं भागि-
नेयपैतृस्वस्रीयमातृस्वस्रीयादिः । इति मिता-
क्षरायामाचाराध्याये १ अध्यायः ॥

**सहजातः**, त्रि, (सह जातः उत्पन्नः ।) सहो-
दरः । यमजः । इति केचित् ॥ (सहोत्थे, त्रि ।
यथा, कथासरित्सागरे । ११३ । २२ ।
“तारावलोकनामा च क्रमाद्वृद्धिं जगाम सः ।
दानधर्म्मविवेकाद्यैः सहजातैर्गुणैः सह ॥”)

**सहजारिः**, पुं, (सहजः स्वाभाविकः अरिः ।)

**सहदेवः**, पुं, (पाण्डवविशेषः । इति मेदिनी ॥
स च पाण्डुराजस्य पञ्चमपुत्त्रः । माद्रीगर्भे
अश्विनीकुमाराभ्यां जातः ॥ जरासन्धसुतः
।
स युधिष्ठिरसमकालीनो मगधेषु राजासीत् ।
इति श्रीभागवतम् ॥ (हर्य्यश्वनसुतः । यथा,
हरिवंशे । २९ । ३ ।
“हर्य्यश्वनसुतो राजा सहदेवः प्रतापवान् ।
सहदेवस्य धर्म्मात्मा नदीन इति विश्रुतः ॥”
सोमदत्तपुत्त्रः । यथा, तत्रैव । ३२ । ८० ।
“सोमदत्तस्य दायादः सहदेवो महायशाः ।
सहदेवसुतश्चापि सोमको नाम पार्थिवः ॥”
देवैः सह वर्त्तमाने, त्रि । यथा, भागवते ।
४ । २ । ८ ।
“श्रूयतां ब्रह्मर्षयो मे सहदेवाः सहाग्नयः ।
साधूनां ब्रुवतो वृत्तं नाज्ञानान्नच मत्सरात्
॥”)

**सहदेवा**, स्त्री, (सह दीव्यतीति । दिव + अच् ।
टाप् ।) बला । दण्डोत्पलः । शारिवौषधिः ।
इति मेदिनी ॥ अर्हन्माता । इति हेमचन्द्रः ॥
(देवककन्यान्यतमा । सा तु वसुदेवपत्नी ।
यथा,
भागवते । ९ । २४ । २३ ।
“शान्तिदेवोपदेवा च श्रीदेवा देवरक्षिता ।
सहदेवा देवकी च वसुदेव उवाह ताः ॥”)

**सहदेवी**, स्त्री, सर्पाक्षी । इति मेदिनी ॥ पीत-
दण्डोत्पला । इति रत्नमाला ॥ बलाप्रभेदः
।
तत्पर्य्यायः । महाबला २ ज्यष्ठबला ३ कट-
म्भरा ४ केशारुहा ५ केसरिका ६ मृगादनी
७
वर्षपुष्पा ८ केशवर्द्धिनी ९ पुरासिनी १०
देव-
बला ११ सारिणी १२ पीतपुष्पी १३
देवार्हा
१४ गन्धवल्लरी १५ मृगा १६ मृगरसा १७ ।
अस्या गुणाः । हृद्रोगवातार्शःशोफहारित्वम्
।
शुक्रवृद्धिकारित्वम् । बल्यत्वम् ।
विषमज्वर-
नाशित्वञ्च । इति राजनिर्घण्टः ॥ सहदेव-

**सहकारी**, [न्] पुं, (सह करोतीति । कृ +

णिनिः ।) प्रत्ययः । यथा, --
“अथ हेतुरुपादानं प्रत्ययाः सहकारिणः ॥”
इति त्रिकाण्डशेषः ॥
न्यायमते तद्भिन्नत्वे सति तज्जन्यजनकत्वं
सह-
कारित्वम् ॥ (मिलित्वा करणशीले, त्रि ॥)

**सहचरः**, पुं, स्त्री, (सह चरतीति । चर + अच् ।)

पीतझिण्टी । नीलझिण्टी । इति रत्नमाला ॥
(यथा, सुश्रुते । १ । ३८ ।
“वीततरुसहचरद्वयदर्भवृक्षादनीति ॥”)

**सहचरः**, पुं, (सह चरतीति । चर + अच् ।)

झिण्टी । वयस्यः । (यथा, कथासरित्सागरे ।
२४ । १३२ ।
“ततः सहचरैः साकं तस्यैवाशिश्रयद्गृहम् ॥”)
प्रतिबन्धकः । इति हेमचन्द्रः ॥ अनुचरे, त्रि ।
इति मेदिनी ॥ (यथा, कुमारे । २ । ६४ ।

स्वाभाविकशत्रुः । यथा । “सहजारिः सापत्न्य-
पितृव्यतत्पुत्रादिः ।” इति मिताक्षराया-
माचाराध्यायः ॥

**सहजोदासीनः**, पुं, (सहज उदासीनः ।) स्वाभा-

विकपरतरः । यथा । “सहजकृत्रिममित्रशत्रु-
लक्षणरहितौ सहजकृत्रिमोदासीनौ ।” इति
मिताक्षरायामाचाराध्यायः ॥

**सहण्डुकं**, क्ली, मांसव्यञ्जनविशेषः । यथा, --

“छागादेर्म्मांसमूद्धदिः कुट्टितं खण्डितं पुनः ।
शुद्धमांसविधानेन पचेदेतत् सहण्डुकम् ।
सहण्डुकं गुणग्रन्थे शुद्धमांसगुणं स्मृतम् ॥”
इति भावप्रकाशः ॥

पत्नी च ॥

**सहदेवीगणः**, पुं, (सहदेवीनां गणः ।) प्रति-

ष्ठायां देवस्नानार्थमोषधिसमूहः । यथा, --
“पञ्चगव्यैः स्नापयेच्च सहदेव्यादिभिस्ततः
।
सहदेवी बला चैव शतमूली शतावरी ॥
कुमारी च गुडूची च सिंही व्याघ्री तथैव च ।
या ओषधीति मन्त्रेण स्नानमोषध्निमङ्गलैः
॥”
इति गारुडे ४८ अध्यायः ॥

**सहधर्म्मिणी**, स्त्री, (सह धर्म्मोऽस्त्यस्या इति ।

इनिः । ङीप् ।) वेदविधानेनोढा । इत्यमरः ।
२ । ६ । ५ ॥

**सहनं**, क्ली, (सह + ल्युट् ।) क्षान्तिः । तत्पर्य्यायः ।

तितिक्षा २ क्षमा ३ । इति हेमचन्द्रः ॥
(यथा,
साहित्यदर्पणे । ६ । ३९० ।
“कार्य्यसंग्रह आदानं तदाहुश्छादनं पुनः ।
कार्य्यार्थमपमानादेः सहनं खलु यद्भवेत् ॥”)

**सहनः**, त्रि, (सहते इति । सह + ल्युः ।) सहन-

शीलः । इत्यमरः । ३ । १ । ३१ ॥
तत्पर्य्यायः ।
सहिष्णुः २ क्षमिता ३ क्षमी ४ तितिक्षुः ५
क्षन्ता ६ । इति हेमचन्द्रः ॥

**सहनर्त्तनं**, क्ली, (सह मिलित्वा नर्त्तनम् ।) एकत्र
मण्डलाकारनृत्यकरणम् । इति केचित् ॥

**सहपांशुकिलः**, पुं, (सह पांशुना रजसा किलति
क्रीडतीति । किल क्रीडने + कः ।) वयस्यः
।
इति त्रिकाण्डशेषः ॥

**सहपानं**, क्ली, (सह मिलित्वा पानम् ।) एकत्र
मद्यभक्षणम् । तत्पर्य्यायः । सपीतिः २ ।
इति
हेमचन्द्रः ॥ तुल्यपानम् ३ । इत्यमरः । २ ।
९ । ५५ ॥
सहपीतिः ४ । इति शब्दरत्नावली ॥

**सहपूर्व्वाह्णं**, क्ली, (पूर्व्वाह्णस्य सदृशम् । "अव्ययी-
भावे चाकाले । ६ । ३ । ८१ । इत्यत्र
अकाले इति
कथनात् न सादेशः ।) पूर्व्वाह्णसदृशम् ।
इति
मुग्धबोधव्याकरणे अव्ययीभावसमासः ॥

**सहभावी**, [न्] त्रि, (सह भवतीति । भू +
णिनिः ।) सहायः । इति त्रिकाण्डशेषः ॥

**सहभोजनं**, क्ली, (सह मिलित्वा भोजनम् ।)
एकत्र भक्षणम् । तत्पर्य्यायः । सग्धिः २ ।
इत्य-
मरः । २ । ९ । ५५ ॥ (सहभोगकरणम् ।
यथा,
महाभारते । १ । १९६ । २४ ।
"एष नः समयो राजन् रत्नस्य सहभोजनम्
।
न च तं हातुमिच्छामः समयं राजसत्तम
॥")

**सहमरणं**, क्ली, (सह पत्या मरणम् ।) मृत-
स्वामिसहितज्वलच्चितारोहण-
पूर्ब्बकमरणम् ।
यथा । "अथ सहानुगमनम् । अङ्गिराः ।
'मृते भर्त्तरि या नारी समारोहेद्धुताशनम् ।
सारुन्धतीसमाचारा स्वर्गलोके महीयते ॥
तिस्रः कोट्योऽर्द्धकोटी च यानि लोमानि
मानवे ।
तैलमल्पं यदाङ्गेषु न च स्याद्बाहुतर्पणम् ।
सा मार्ष्टिः पृथगभ्यङ्गो मस्तकादौ प्रकी-
र्त्तितः ॥'
स्मृतिः ।
'एकाहारः सदा कार्य्यो न द्वितीयः कदाचन ।
पर्य्यङ्कशायिनी नारी विधवा पातयेत् पतिम् ॥
गन्धद्रव्यस्य सम्भोगो नैव कार्य्यस्तया पुनः ।
तर्पणं प्रत्यहं कार्य्यं भर्त्तुस्तिलकुशोदकैः ।
तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्ब्बकम् ॥'
एतत् तु तर्पणं पुत्त्रपौत्राद्यभावविषयमिति
मदनपारिजातः ॥
'वैशाखे कार्त्तिके माघे विशेषनियमञ्चरेत् ।
स्नानं दानं तीर्थयात्रां विष्णोर्नामग्रहं मुहुः ॥'
अत्र साध्वीत्वमाह ।
'आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा ।
मृते म्रियेत या पत्यौ साध्वी ज्ञेया पतिव्रता ॥'
छन्दोगपरिशिष्टीयमिति कल्पतरुः ॥ साध्वी-
प्रसादेन लोकधारणमप्याह ॥ मत्स्यपुराणम् ।
'तस्मात् साध्व्यः स्त्रियः पूज्याः सततं देव-
वज्जनैः ।
तासां राज्ञा प्रसादेन धार्य्यते च जगत्त्रयम् ॥'
महाभारते ।
'अवमत्य च याः पूर्व्वं पतिं दुष्टेन चेतसा ।
वर्त्तन्ते याश्च सततं भर्त्तॄणां प्रतिकूलतः ॥
भर्त्रनुमरणं काले याः कुर्व्वन्ति तथाविधाः ।
कामात् क्रोधात् भयान्मोहात् सर्व्वाः पूता
भवन्ति ताः ॥'
अत्र ऐहिकब्रह्मघ्नपतेर्द्दाहनिषेधात् जन्मान्त-
रीयतत्पापवत एव सहमरणेनोद्धारः । ब्रह्म-
पुराणे ।
'देशान्तरमृते पत्यौ साध्वी तत्पादुकाद्वयम् ।
निधायोरसि संशुद्धा प्रविशेज्जातवेदसम् ॥
ऋग्वेदवादात् साध्वी स्त्री न भवेदात्मघातिनी ।
त्र्यहाशौचे निवृत्ते तु श्राद्धं प्राप्नोति शास्त्र-
वत् ॥'
ऋग्वेदवादात् इमा नारीरविधवा इत्यादि-
मन्त्रात् । एवञ्च अङ्गिरोब्रह्मपुराणवचनपर्य्या-
लोचनया ब्राह्मण्यादिसकलभार्य्याणांस्वगत-
भर्त्तृगतफलविशेषार्थिनीनां गर्भवतीबालापत्या-
दिव्यतिरिक्तानां सहमरणानुमरणयोरधिकार
इति । विवादकल्पतरुरत्नाकरौ । तत्र ब्राह्मण्या-
द्यनुमरणाधिकारोऽसङ्गतस्तस्यास्तन्निषेधात् ।
'पृथक्चितिं समारुह्य न विप्रा गन्तुमर्हति ।
अन्यासामेव नारीणां स्त्रीधर्म्मोऽयं परः स्मृतः
॥'
मदनपारिजातोऽप्येवम् । शिष्टाचारोऽपि तथा
।
कृत्यतत्त्वार्णवे बृहन्नारदीयम् ।
'बालापत्याश्च गर्भिण्यो ह्यदृष्टऋतवस्तथा ।
रजस्वला राजसुते ! नारोहन्ति चितां शुभे
॥'
राजसुते इति सगरमातुः सम्बोधनम् । बृह-
स्पतिः ।
'बालसम्बर्द्धनं त्यक्त्वा बालापत्या न
गच्छति ।
रजस्वला सूतिका च रक्षेद्गर्भञ्च गर्भिणी ॥'
एवमन्यतश्चेद्बालस्य संवर्द्धनं स्यात् तदा
तस्या
अप्यधिकारः । व्यासः ।
'दिनैकगम्यदेशस्था साध्वी चेत् कृतनिर्णया
।
न दहेत् स्वामिनं तस्या यावदागमनं भवेत् ॥'
भविष्यपुराणे ।
'तृतीयेऽह्नि उदक्याया मृते भर्त्तरि वै द्विजाः ।
तस्यानुमरणार्थाय स्थापयेदेकरात्रकम् ॥'
तस्य भर्त्तुः । तथा, --
'एकां चितां समासाद्य भर्त्तारं यानुगच्छति ।
तद्भर्त्तुर्यः क्रियाकर्त्ता स तस्याश्च क्रियाञ्चरेत्
॥'
एतच्च पिण्डदानपर्य्यन्तम् ।
'यच्चाग्निदाता प्रेतस्य पिण्डान्दद्यात् स एव
हि ।'
इति वायुपुराणैकवाक्यत्वात् ॥
ब्रह्मपुराणे ।
'श्रावयेद्भर्त्तृजायान्तु स्वभर्त्तृकुलपामिमाम् ।
चितामारोपयन् प्राज्ञः प्रमृते धर्म्ममुत्तमम् ॥
इमाः पतिव्रताः पुण्याः स्त्रियो या याः सुशो-
भनाः ।
सह भर्त्तृशरीरेण संविशन्तु विभावसुम् ॥
एवं श्रुत्वा ततो नारी श्रद्धाभक्तिसमन्विता ।
पितृमेधेन यज्ञेन इष्ट्वा स्वर्गमवाप्नुयात् ॥'
प्रमृते भर्त्तरीति शेषः । पितृमेधेन यज्ञेन
चितारोहणरूपेण । पादुकाद्वयग्रहणपूर्व्वका
नुमरणेऽपि सह भर्त्तृशरीरेण इत्यनूहः

तावन्त्यब्दानि सा स्वर्गे भर्त्तारं यानुगच्छति ॥
व्यालग्राही यथा व्यालं बलादुद्धरते विलात् ।
तद्वद्भर्त्तारमादाय तेनैव सह मोदते ॥
मातृकं पैतृकञ्चैव यत्र कन्या प्रदीयते ।
पुनाति त्रिकुलं नारी भर्त्तारं यानुगच्छति ॥
तत्र सा भर्त्तृपरमा परा परमलालसा ।
क्रीडते पतिना सार्द्धं यावदिन्द्राश्चतुर्द्दश ॥'
भर्त्तृपरमा भर्त्ता परमो यस्याः सा तथा । परा परमलालसेत्यत्र स्तूयमानाप्सरोगणैरिति व्यासेन पठितम् ।
'ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वापि यो नरः ।
तं वै पुनाति सा नारी इत्याङ्गिरसभाषितम् ॥
साध्वीनामेव नारीणामग्निप्रपतनादृते ।
नान्यो धर्म्मो हि विज्ञेयो मृते भर्त्तरि कर्हिचित् ॥'
या नारीत्युपादानात् सहमरणाभावपक्षोऽपि सूचितः । नान्यो धर्म्म इति तु सहमरणस्तुत्य-
र्थम् । तथा च विष्णुः । मृते भर्त्तरि ब्रह्मचर्य्यं तदन्वारोहणं वा इति । ब्रह्मचर्य्य मैथुनवर्ज्जनं ताम्बूलादिवर्ज्जनञ्च । यथा प्रचेताः ।
'ताम्बूलाभ्यञ्जनञ्चैव कांस्यपात्रे च भोजनम् ।
यतिश्च ब्रह्मचारी च विधवा च विवर्ज्जयेत् ॥'
अभ्यञ्जनमायुर्व्वदोक्तं पारिभाषिकम् । यथा, --
'मूर्द्धि्न दत्तं यदा तैलं भवेत् सर्व्वाङ्गसङ्गतम् ।
स्रोताभिस्तर्पयेद्बाहू अभ्यङ्गः स उदाहृतः ॥
तथा च मिताक्षरायां देवबोधकृतयाज्ञवल्क्य-टीकायाञ्च गौतमः ।
'पृथक्चितिं समारुह्य न विप्रा गन्तुमर्हति ।
इतरासान्तु नारीणां स्त्रीधर्म्मोऽयं परः स्मृतः ॥'
तस्माद्ब्राह्मण्याः सहमरणमेव इतरासान्तु उभयमिति । कल्पतरुरत्नाकरशुद्धिचिन्ता-मणिषु पादुकाद्वयमिति दर्शनात् पादुकादिक-मित्यपपाठः किन्तु पादुकाद्वयमित्युपलक्षणम् । उशनमा विप्रेतरासां द्रव्यविशेषमनुपादाय पृथक्चित्यारोहणमात्रोक्तेः । यथोशनाः ।
प्रयोज्यः । देशान्तरमृते पत्यावित्यादिना शरीर-प्रतिनिधित्वेन तदीयद्रव्यविधानात् । प्रतिनिधौ च यथाश्रुतमन्त्रपाठमाहकात्यायनः । शब्दे-ऽविप्रतिपत्तिः इत्येतत् विवृतमेकादशीतत्त्व ॥ * ॥
न च अग्निजलप्रविष्टानां भृगुसंग्रामदेशान्तर-मृतानां गर्भाणां जातदन्तानां मरणे त्रिरात्रेण शुद्धिः । इति काश्यपवचनात् सहमृताया अप्यग्निप्रवेशेन त्रिरात्राशौचं तत्रैव तस्याः पिण्डदानमिति वाच्यम् । प्रागुक्तब्रह्मपुराणे पृथक्चितिसमारोहणमात्रेत्र्यहाशौचविधा-नात् अन्यत्र भर्त्तृतुल्याशौचप्रतीतेः । सहमरणे काश्यपोक्तत्रिरात्राशौचाङ्गीकारेऽपि तस्या-शौचस्य वृद्ध्या पत्यशौचकालावधिस्थायित्वम् ॥
'अन्तर्द्दशाहे स्याताञ्चेत् पुनर्म्मरणजन्मनी ।
तावत्स्यादशुचिर्विप्रो यावत्तत् स्यादनिर्द्दशम् ॥'
इति मनूक्ताशौचसङ्करे पराशौचस्य पूर्व्वा-शौचकालाबधिस्थायित्वप्रतीतेः । ततश्च यथा अशौचकालसङ्कोचे तन्मध्य एव सङ्कलय्य पिण्ड-

दानं तथाशौचकालवृद्धावपियावदशौचं यथा-
क्रमं दश पिण्डा देया इति । अतएव जिक-
नीयान्त्येष्टिविध्यनुमरणविवेकयोर्व्यासः ।
‘संस्थितं पतिमालिङ्ग्य प्रविशेद्या हुताशनम् ।
तस्याः पिण्डादिकं देयं क्रमशः पतिपिण्डवत् ॥’
विष्णुः ।
‘अन्विता पिण्डदानन्तु यथा भर्त्तुर्द्दिने दिने ।
तदन्वारोहिणी यस्मात्तस्मात् सा नात्मघातिनी ॥’
अत्रानुः सहार्थः ।
पतिमालिङ्ग्येत्यनेनैकवाक्यत्-
त्वात् । स्वाम्यशौचाभ्यन्तरे पृथक्चितामृताया-
स्त्र्यहेण पिण्डदानं स्वाम्यशौचापगमे तु श्राद्धम् ।
‘अन्वितायाः प्रदातव्या दशपिण्डास्त्र्यहेण तु ।
स्वाम्यशौचव्यतीते तु तस्याः श्राद्धं विधीयते ॥’
इति जिकनधृतपैठीनसिवचनात् ॥
अग्निपुराणस्येदमिति शूलपाणिः । अत्रानुः
पश्चादर्थः । अतीते तु भर्त्रशौचे पादुकाद्वयमु-
पादाय ज्वलदग्निप्रवेशे त्र्यहाशौचव्यवस्थया
पिण्डदानंचतुर्थदिने श्राद्धं पूर्व्वोक्तब्रह्मपुराणवच-
नात् । तत्र तु भर्त्तुः संग्रामहतत्वादिना सद्यः-
शौचं तत्र पृथक् चितामृताशौचस्य पूर्व्वोक्त-
ब्रह्मपुराणवचनात् त्रिरात्रत्वन बहुकालव्यापि-
त्वेनाघवृद्धिमत्त्वात् तेनैव पूर्ब्बाशौचस्य व्यपग-
मात् तत्र भर्त्तुरपि त्र्यहेण पिण्डदानम् । तत्रा-
प्येकचितारोहणे भर्त्त्रशौचव्यपगमात् शुद्धिः ।
संस्थितं पतिमालिङ्ग्य इति अन्वितापिण्डदान-
मिति पूर्व्वोक्तवचनाभ्यां अग्निप्रवेशे सुमन्तुना
सद्यःशौचविधानाच्च । यथा ।
भृग्वग्निजलसंग्राम-
देशान्तरस्थसन्न्यास्यनशनाशनिमहाध्वनिकानां
उदकक्रिया कार्य्या सद्यःशौचं भवति इति ।
भृगुरुच्चदेशः । महाध्वनिकः पुण्यार्थं हिमा-
लयावधिकमहापथगमनेन सम्पादितमरणः । न
चैतत् सद्यःशौचं नित्यबेदाध्यापकैरग्निहोतृ-
भिश्च एकाहाशौचिभिश्च कर्त्तव्यमिति हार-
लतादत्तविषयत्वेन नैतद्विषयकमिति वाच्यम् ।
तन्मात्रविषयकत्वे प्रमाणाभावात् । सामान्य-
मुखप्रवृत्ततया वचनान्तरसंवादितया चैत-
द्विषयकमिति । अन्यथा कश्यपोक्तत्रिरात्रा-
शौचमपि अग्निजलसंग्रामप्रविष्टानां प्रमादा-
देव मरण इति हारलतादर्शनात् अनुमरण-
समारोहति शीघ्राग्नौ तस्याः सिद्धिं निबोधत ॥’
इति व्यासवचनादिना सहमरणानुमरणयो-
र्निरवकाशनैमित्तिककाम्यत्वेन मलमासादावपि
कर्त्तव्यता ।
‘नैमित्तिकानि काम्यानि निपतन्ति यथा यथा ।
तथा तथैव कार्य्याणि न कालस्तु विधीयते ॥’
इति दक्षवचनात् ॥ * ॥
तदयं प्रयोगः । पुत्त्रादिना स्वगृह्योक्तविधिना
अग्नौ दत्ते ज्वलितायां भर्त्तृचितायां सहगन्त्री
साध्वी स्नाता परिहितधौतवासोयुग्मा कुश-
हस्ता प्राङ्मुखी वा दैवतीर्थेनाचान्ता तिल-
जलकुशत्रयमादाय ॐ तत् सदिति ब्राह्मणै-
रुच्चारिते नारायणं संस्मृत्य नमोऽद्यामुके मासि
अमुके पक्षे अमुकतिथौ अमुकगोत्रा श्रीमती
असुकीदेवी अरुन्धतीसमाचारत्वपूर्ब्बकस्वर्ग-
लोकमहीयमानत्वमानवाधिकरणकलोमसमसं-
ख्याब्दावच्छिन्नस्वर्गवासभर्त्तृसहित-मोदमानत्व-
मातृ-पितृ-श्वशुर-कुलत्रय-पूतत्व-चतुर्द्दशेन्द्राव-
च्छिन्नकालाधिकरणकाप्सरोगणस्तूयमानत्वपति
सहितक्रीडमानत्वब्रह्मघ्नपतिपूतत्वकामाभर्त्तृ-
ज्वलच्चितारोहणमहं करिष्ये इति । अनुमरणे
तु भर्त्तृज्वलच्चितारोहणमित्यत्रज्वलच्चिता-
प्रवेशेन भर्त्रनुमरणमिति सङ्कल्प्य अष्टौ लोक-
पाला आदित्यचन्द्रानिलाग्न्याकाशभूमिजल-
हृदयावस्थितान्तर्यामिपुरुषयमदिनरात्रिसन्ध्याः
धर्म्मा यूयं साक्षिणो भवत ज्वलच्चितारोहणेन
मर्त्तृशरीरानुगमनमहं करोमि इति । अनु-
मरणे तु भर्त्तृशरीरानुगमनमित्यत्रभर्त्रनुमरण-
मित्युच्चार्य्य ज्वलच्चिताग्निं त्रिः प्रदक्षिणीकृत्य ।
‘ॐ इमा नारीरविधवाः सपत्नी-
राञ्जनेन सर्पिषा संविशन्तु ।
अनश्रवो अनमीवाः सुरत्ना
आरोहन्तु जनयोयोनिमग्रे ॥’
इति ऋग्वेदोक्तमन्त्रे । १० । १८ । ७ ॥
‘ॐइमाः पतिव्रताः पुण्याः स्त्रियो या याः
सुशोभनाः ।
सह भर्त्तृशरीरेण संविशन्तु विभावसुम् ॥’
इति पौराणीके मन्त्रे च ब्राह्मणेन पठिते नमो
नम इत्युच्चार्य्य ज्वलच्चितां समारोहेत् ॥ * ॥
आपस्तम्बः ।
‘चितिभ्रष्टा तु या नारी मोहाद्विचलिता
भवेत् ।
तिथ्यन्तरमृतायान्तु पृथक् श्राद्धं न विद्यते ॥”
इति
चतुर्भुजभट्टाचार्य्यधृतयमवचनाद्भिन्नतिथि-
मृताया अपि पत्युर्म्मृततिथौ श्राद्धमिति
हरि-
दासतर्काचार्य्याः । तन्न अस्य
वचनस्यामूलत्वात्
समूलत्वेऽपि श्राद्धपदं पिण्डपरम् ।
एकोद्दिष्टं
मृताहनीति यमवचनविरोधात् ।” इति
शुद्धि-
तत्त्वम् ॥ * ॥ अन्यत् ब्रह्मवैवर्त्ते
गणपतिखण्डे
२८ अध्याये । मार्कण्डेयपुराणे
दमचरिताध्याये ।
विष्णुपुराणे ५ अंशे ३८ अध्याये ।
कल्किपुराणे
३३ अध्याये च द्रष्टव्यम् ॥

**सहयायी**, [न्] त्रि, (सह यातीति । या +
णिनिः ।) मिलितगामी । यथा, --
“न नदीषु नदीं ब्रूयात् पर्व्वतेषु च पर्व्वतान् ।
आवासे भोजने वापि न त्यजेत् सहयायिनम् ॥”
इति कूर्म्मपुराणे उपविभागे । १५ । ५८ ॥

**सहरसा**, स्त्री, (सह रसो यस्याः ।) मुद्गपर्णी ।
इति शब्दरत्नावली ॥

**सहरि**, व्य, हरेः सदृशम् । इति मुग्धबोधव्याक-
रणम् ॥ सूर्य्ये वृषे च, पुं । इति केचित् ॥

**सहर्षः**, पुं, (सह हर्षो यत्र ।) स्पर्द्धनम् । हर्षः ।
इति त्रिकाण्डशेषः ॥ (हर्षेण सह वर्त्तमानः ।)
हर्षयुक्ते, त्रि ॥ (यथा, कथासरित्सागरे । २ । २३ ।
“एतच्छ्रुत्वा वचः शम्भोः सहर्षोऽहमिहा-
गतः ॥”)

**सहसा**, व्य, हठात् । तत्पर्य्यायः । अतर्कितः २ ।

विषयकं न स्यात् तस्मात् काश्यपवचनं ब्रह्म-
पुराणसमानविषयकं इति । सुमन्तुवचनं संग्राम-
हतभर्त्तृसहगमनविषयकमपीति॥ * ॥ एवञ्च
समाधिना त्यक्तदेहस्य मुक्तस्य धृतराष्ट्रस्य
पर्णोटजाग्निना देहदाहकाले तत्पत्न्या
गान्धार्य्या अग्निप्रवेशदर्शनादिदानीं काश्यादि-
मृतस्य मुक्तस्यापि पत्युस्तत्पत्न्याः सहमरणं
सङ्गच्छते । श्रीभागवते तदुक्तम् ।
‘दह्यमानेऽग्निभिर्द्देहे पत्युः पत्नी सहोटजे ।
बहिःस्थिता पतिं साध्वी तमग्निमनुवेक्ष्यति ॥’
अनुवेक्ष्यति अग्निप्रवेशनं करिष्यति इति
युधिष्ठिराय नारदस्य भविष्यत्कथनम् ।
‘दयितं यान्यदेशस्थं मृतं श्रुत्वा पतिव्रता ।
प्राजापत्येन शुध्येत्तु तस्माद्धि पापकर्म्मणः ॥’
पाश्चात्यनिर्णयामृते स्मृतिः ।
‘एकचित्यां समारूढौ दम्पती निधनं गतौ ।
पृथक् श्राद्धं तयोः कुर्य्यादोदनन्तु पृथक् पृथक्
॥’
विद्याकरधृता स्मृतिः ।
‘एकाहेन मृतानान्तु बहूनामथवा द्वयोः ।
तन्त्रेण श्रपणं कृत्वा पृथक् श्राद्धं प्रवर्त्तयेत् ॥’
यत्तु ।
‘यदा नारी विशेदग्निं स्वेच्छया पतिना सह ।
अशौचमुदकं तस्याः सह भर्त्रेति निश्चितम् ।’
इत्यमरः । ३ । ४ । ७ ॥ अकस्मात् ३ ।
इति
शब्दरत्नावली ॥ सहसा कर्म्मकरणनिषेधो
यथा, किरातार्ज्जुनीये । २ । ३० ।
“सहसा विदधीत न क्रिया-
मविवेकः परमापदां पदम् ।
वृणते हि विमृष्यकारिणं
गुणलुब्धाः स्वयमेव सम्पदः ॥”
हास्ययुक्ते, त्रि । यथा, --
“प्रियतमेन यया सरुषा स्थितं
न सहसा सहसा परिरभ्य तम् ।
श्लथयितुं क्षणमक्षमतां गता
न सहसा सहसा कृतवेपथुः ॥”
इति माघे । ६ । ५७ ॥

**सहसादृष्टः**, त्रि, हठात् दृष्टः । दत्तकपुत्त्रे, पुं, ।

इति केचित् ॥

**सहसानः**, पुं, (सहते इति । सह + “ऋञ्जिवृधि-

मन्दिसहिभ्यः कित् ।” उणा० २ । ८७ ।
इति
असानच् ।) मयूरः । यज्ञः । क्षमायुक्ते, त्रि
।
इत्युणादिकोषः ॥ (शत्रूणामभिभवितरि
त्रि ।
इति सायणः ॥ यथा, ऋग्वेदे । १ । १८९
। ८ ।
“मानस्य सूनुः सहसाने अग्नौ ॥”)

**सहस्यः**, पुं, (सहसि बले साधुः । तत्र साधुरिति

यत् ।) पौषमासः । इत्यमरः । १ । ४ ।
१५ ॥
(यथा, कुमारे । ५ । २६ ।
“निनाय सात्यन्तहिमोत्किरानिलाः
सहस्यरात्रीरुदवासतत्पराः ॥”)

**सहस्रं**, क्ली, (सहो बलमस्त्यस्मिन्निति । सहस् +
रः । "सहो बलनामसु व्याख्यातम् । रो मत्व-
र्थीयः । अल्पापि भाविनी शक्तिरस्मिन्नस्ति
।"
इति निघण्टुटीकायां देवराजयज्वा । ३ । १
।)
दशशतसंख्या । इति हेमचन्द्रः ॥ हाजार
इति
पारस्यभाषा । (यथा, मनुः । ३ । १७७ ।
"पापरोगी सहस्रस्य दातुर्नाशयते फलम् ॥")
तद्वाचकानि यथा । जाह्नवीवक्त्रम् १ शेष-
शीर्षम् २ पद्मच्छदः ३ रविकरः ४ अर्ज्जुन-
बाणः ५ वेदशाखा ६ इन्द्रदृष्टिः ७ । इति
कविकल्पलता ॥ (बहु । इति निघण्टुः । ३ ।
१ ॥
यथा, --
"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।"
इति पुरुषसूक्तम् ॥)

**सहस्रकाण्डा**, स्त्री, (सहस्रं काण्डानि यस्याः ।)
श्वेतदूर्व्वा । इति राजनिर्घण्टः ॥

**सहस्रकिरणः**, पुं, (सहस्रं किरणानि यस्य ।)
सूर्य्यः । इति हलायुधः ॥ (यथा, बृहत्संहि-
तायाम् । ४२ । १३ ।
"राशौ राशौ यस्मिन्
शिशिरमयूखः सहस्रकिरणो वा ॥")

**सहस्रदंष्ट्रः**, पुं, (सहस्रं दंष्ट्रा यस्य ।) पाठीन-
मत्स्यः । इत्यमरः । १ । १० । १८ ॥
(यथा,
सुश्रुते । १ । ४६ । "रोहितपाठीनपाटला-
राजीववर्म्मिगोमत्स्य-कृष्णमत्स्य-
वागुञ्जारमुरल-
सहस्रदंष्ट्रप्रभृतयो नादेयाः ॥")

**सहस्रदंष्ट्री**, [न्] पुं, (सहस्रदंष्ट्राः सन्त्यस्येति ।
इनिः ।) वोदालमत्स्यः । इति शब्दरत्नावली
॥

**सहस्रदोः**, [स्] पुं, (सहस्रं दोषो बाहवो यस्य ।)
कार्त्तवीर्य्यार्ज्जुनः । इति जटाधरः ॥

**सहस्रधारः**, पुं, (सहस्रं धारा यस्य ।) विष्णु-
वाच्यलिङ्गेऽपि दृश्यते । यथा, महाभारते ।
१ । २१२ । २७ ।
"एवं चतुर्म्मुखः स्थाणुर्महादेवोऽभवत्पुरा ।
तथा सहस्रनेत्रश्च बभूव बलसूदनः ॥")
विष्णुः । इति श्रीभागवतम् ॥

**सहस्रपत्रं**, क्ली, (सहस्राणि पत्राणि यस्य ।)
पद्मम् । इत्यमरः । १ । १० । ४३ ॥ (यथा,
रघुः । ७ । ११ ।
"तासां मुखैरासवगन्धगर्भै-
र्व्याप्तान्तराः सान्द्रकुतूहलानाम् ।
विलोलनेत्रभ्रमरैर्गवाक्षाः
सहस्रपत्राभरणा इवासन् ॥")

**सहस्रपात्**, [द्] पुं, (सहस्रं पादा यस्य । संख्या-
सुपूर्व्वस्येति पादस्यान्तलोपः ।) विष्णुः ।
यथा,
"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥"
इति पुरुषसूक्तम् ॥
(तथाच महाभारते । १३ । १४९ । ३७ ।
"सहस्रमूर्द्धा विश्वात्मा सहस्राक्षः सहस्रपात्
॥"
महादेवः । यथा, तत्रैव । १३ । १७ । १३०
।
"हर्य्यक्षः ककुभो वज्री शतजिह्वः सहस्रपात्
॥"
ऋषिविशेषः । यथा, तत्रैव । १ । १० । ७ ।
"अहं पुरा रुरो ! नाम्ना ऋषिरासं सहस्रपात्
।
सोऽहं शापेन विप्रस्य भुजङ्गत्वमुपागतः ॥")

**सहस्रपादः**, पुं, (सहस्रं पादा यस्य ।) कारण्ड-
पक्षी । सूर्य्यः । विष्णुः । इति मेदिनी ॥

**सहस्रबाहुः**, पुं, (सहस्रं बाहवो यस्य ।) बाण-
राजः । यथा, --
"बाणः पुत्त्रशतज्येष्ठो बलेरासीन्महात्मनः ।
सहस्रबाहुर्वाद्येन ताण्डवे तोषयन्मृडम् ॥"
इति श्रीभागवते । १० । ६२ । २ ॥
(कार्त्तवीर्य्यार्ज्जुनः । शिवः । यथा, महा-
भारते । १३ । १७ । १३१ ।
"सहस्रबाहुः सर्व्वाङ्गः शरण्यः सर्व्वलोककृत्
॥"
चक्रं त्रिशूलं परशुं शङ्खघण्टे च पाशकम् ।
शक्तिं दण्डं चर्म्म चापं पानपात्रं कमण्डलुम् ॥
अलङ्कृतभुजा त्वेभिरायुधैः परमेश्वरी ।
स्मर्त्तव्या स्तुतिकालादौ महिषासुरमर्द्दिनी ॥
इत्येषा राजसी मूर्त्तिः सर्व्वदेवमयी मता ।
यां ध्यात्वा मानवो नित्यं लभते हितमात्मनः ॥"
इति मार्कण्डेयपुराणीयदेवीमाहात्स्यपाठक्रमः ॥

**सहस्रमूर्द्धा**, [न्] पुं, (सहस्रं मूर्द्धानो यस्य ।)
विष्णुः । अस्य प्रमाणं सहस्रभुजशब्दे द्रष्टव्यम् ॥
(तथाच महाभारते । १३ । १४९ । ३७ ।
"सहस्रमूर्द्धा विश्वात्मा सहस्राक्षः सहस्रपात् ॥"
शिवः । यथा, महाभारते । १३ । १७ । १३० ।
"सहस्रमूर्द्धा देवेन्द्रः सर्व्वदेवयमो गुरुः ॥")

**सहस्रमूली**, स्त्री, (सहस्रं मूलानि यस्याः । ङीष् ।)
द्रवन्ती । इति राजनिर्घण्टः ॥

**सहस्रमौलिः**, पुं, (सहस्रं मौलयो यस्य ।) विष्णुः ।
अस्य प्रमाणं सहस्रभुजशब्दे द्रष्टव्यम् ॥ (अनन्त-
देवः । यथा, देवीभागवते । १ । २ । ७ ।
"विष्णुस्तु शेषशयने स्वपितीति काले
तन्नाभिपद्ममुकुले खलु तस्य जन्म ।
आधारतां किल गतोऽत्र सहस्रमौलिः
सम्बोध्यतां स भगवान् हि कथं मुरारिः ॥")

**सहस्ररश्मिः**, पुं, (सहस्रं रश्मयो यस्य ।) सूर्य्यः ।
इति सहस्रकिरणशब्ददर्शनात् ॥ (यथा, माघे ।
१ । ५३ ।
"अशक्नुवन् सोढुमधीरलोचनः
सहस्ररश्मेरिव यस्य दर्शनम् ॥")

**सहस्रवदनः**, पुं, (सहस्रं वदनानि यस्य ।) विष्णुः ।
इति शब्दरत्नावली ॥

**सहस्रवीर्य्या**, स्त्री, (सहस्रं वीर्य्याण्यस्याः ।)
दूर्व्वा । इत्यमरः । २ । ४ । १५८ ॥ महाशता-
वरी । इति राजनिर्घण्टः ॥ (यथा, सुश्रुते ।
१ । १९ ।
"शतवीर्य्यां सहस्रवीर्य्यां सिद्धार्थाश्च शिरसा
धारयेत् ॥" * ॥ प्रभूतवीर्य्यशालिनि, त्रि । यथा,
वाजसनेयसंहितायाम् । १३ । २६ ।
"सहस्रवीर्य्यासि सा मा जिन्व ॥")

**सहस्रवेधं**, क्ली, (सहस्रं वेधा यस्य ।) चुक्रम् ।

चक्रम् । इति केचित् ॥

**सहस्रधारा**, स्त्री, (सहस्रं बहवो धारा जल-

प्रपाता यत्र ।)
देवतास्नानार्थसहस्रच्छिद्रयुक्त-
पात्रगलितजलधारा । यथा, --
"सहस्रधारया देवीं स्नापयामि सुरेश्वरीम् ॥"
इति दुर्गोत्सवपद्धतिः ॥

**सहस्रनयनः**, पुं, (सहस्रं नयनानि यस्य ।) इन्द्रः ।

इति हलायुधः ॥ (यथा, कथासरित्सागरे ।
१०१ । २२७ ।
"केयं सहस्रनयनप्रेक्षणीया किमप्सराः ।
वनश्रीरथवा पुष्पलग्नाग्रकरपल्लवा ॥"
वाच्यलिङ्गेऽपि दृश्यते । यथा, महाभारते ।
१३ । १४ । २०४ ।
"किञ्चात्र बहुभिः सूक्तैर्हेतुवादैः पुरन्दर ।
महस्रनयनं दृष्ट्वा त्वामेव सुरसत्तम ॥")

**सहस्रनेत्रः**, पुं, (सहस्रं नेत्राणि यस्य ।) इन्द्रः ।

इति हेमचन्द्रः ॥ (यथा, रघुः । ६ । २३ ।
"क्रियाप्रबन्धादयमध्वराणा-
मजस्रमाहूतसहस्रनेत्रः ।
शच्याश्लिरं पाण्डुकपोललम्बान्
मन्दारशून्यानलकांश्चकार ॥"

बहुबाहुविशिष्टे, त्रि । यथा, भागवते । ४ । ५
। ३ ।
"ततोऽतिकायस्तनुवा स्पृशन् दिवं
सहस्रबाहुर्घनरुक् त्रिसूर्य्यदृक् ॥")

**सहस्रभुजः**, पुं, (सहस्रं भुजा यस्य ।) विष्णुः ।

यथा, --
"पश्यन्त्यदोरूपमदभ्रचक्षुषा
सहस्रपादोरुभुजाननाद्भुतम् ।
सहस्रमूर्द्धश्रवणाक्षिनासिकं
सहस्रमौल्यम्बरकुण्डलोल्लसत् ॥"
इति श्रीभागवते । १ । ३ । ४ ॥
कार्त्तवीर्य्यार्ज्जुनः ॥ (बाणराजश्च ॥)

**सहस्रभुजा**, स्त्री, (सहसं भुजा यस्याः ।) महा-

लक्ष्मीः । सा च महिषासुरमर्द्दिनी । यथा, --
"श्वेतानना नीलभुजा सुश्वेतस्तनमण्डला ।
रक्तमध्या रक्तदेहा नीलजङ्घोरुतालुका ॥
चित्रानुलेपना कान्ता सर्व्वसौभाग्यदायिनी ।
अष्टादशभुजा पूज्या सा सहस्रभुजा रणे ॥
आयुधान्यत्र रक्षन्ति दक्षिणाधःकरक्रमात् ।
अक्षमाला च मुषलं बाणासिकुलिशं गदाम् ॥

काञ्जिकविशेषः । इति राजनिर्घण्टः ॥

**सहस्रवेधि**, [न्] क्ली, (सहस्रं विधतीति । विध

छिद्रीकरणे + णिनिः ।) हिङ्गु । इति मेदिनी-
राजनिर्घण्टौ ॥

**सहस्रवेधी**, [न्] पुं, (सहस्रं वेधितुं शीलमस्य ।

विध छिद्रीकरणे + णिनिः ।) अम्बुवेतसः ।
इति मेदिनी ॥ कस्तूरी । इति राजनिर्घण्टः ॥
सहस्रवेधकर्त्तरि, त्रि ॥

**सहस्रशिखरः**, पुं, (सहस्रं शिखराणि यस्य ।)

विन्ध्यपर्व्वतः । इति केचित् ॥ (यथा, मार्कण्डेये ।
५५ । १० ।
"सहस्रशिखरश्चाद्रिः पारिपात्रः सशृङ्गवान् ॥")

**सहस्रश्रवणः**, पुं, (सहस्रं श्रवणानि यस्यं ।)

विष्णः । अस्य प्रमाणं सहस्रभुजशब्दे द्रष्टव्यम् ॥

**सहस्रहर्य्याश्वः**, पुं, इन्द्ररथः । इति केचित् ॥

**सहस्रा**, स्त्री, (सहस्रं वीर्य्याणि सन्त्यस्यामिति । अच् । टाप् ।) अम्बष्ठा । इति भावप्रकाशः ॥

**सहस्रांशुः**, पुं, (सहस्रं अंशवो यस्य ।) सूर्य्यः । इत्यमरः । १ । ३ । २१ ॥ (यथा, मनुः । १ । ९ ।
"तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्व्वलोकपितामहः ॥")

**सहस्राक्षः**, पुं, (सहस्रमक्षीण्यस्येति । "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् ।" ५ । ४ । ११३ । इति षच् ।) इन्द्रः । इत्यमरः । १ । १ । ४३ ॥ (यथा, महाभारते । १ । २५ । ८ ।
"नमुचिघ्न नमस्तेऽस्तु सहस्राक्ष शचीपते ! ॥")
विष्णुः । यथा, --
"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।"
इति पुरुषसूक्तम् ॥
(पीठस्थानविशेषः । यथा, देवीभागवते । ७ । ३० । ६५ ।
"उत्पलाक्षी सहस्राक्षे हिरण्याक्षे महोत्पला ॥")

**सहस्राननः**, पुं, (सहस्रं आननानि यस्य ।) विष्णुः । अस्य प्रमाणं सहस्रभुजशब्दे द्रष्टव्यम् ॥

**सहस्रानीकः**, पुं, शतानीकराजपुत्त्रः । यथा, --
"शतानीकोऽभवत् पूर्व्वं पुराकल्पे महीपतिः ।
इन्द्राय सुबहून् यज्ञान् श्रद्धापूतेन चेतसा ॥
यज्ञे यज्ञे सहस्राणि गजाश्वरथदन्तिनाम् ।
ब्राह्मणेभ्योऽददद्राजन् श्यामानाञ्च शतं शतम् ॥
द्विजस्तुष्टो ददौ पुत्त्रं कौषिको भूभृते तथा ।
पत्न्यास्तस्य स जातोऽपि कालात् कालं व्यवर्द्धत ॥
वेदवेदाङ्गतत्त्वज्ञो धर्म्मज्ञो नियतव्रतः ।
कान्त्या चन्द्रमसस्तुल्यः प्रतापात् सूर्य्यवत् प्रभुः ॥
समये धर्म्मराजेव क्षमया पृथिवीसमः ।
पर्य्यायः । साहस्रः २ । इत्यमरः । २ । ८ । ६२ ॥ द्वे हाजरा इति ख्याते । ये सहस्रेण सहस्रसंख्येन गजादिना बलिनः सैन्यवन्तः ते । सहस्रं बलानि सन्त्येषामिति अस्त्यर्थे विकारसंघेत्यादिना ष्णेनैकाजादिति इनि च रूपद्वयम् । इति भरतः ॥ (सहस्रविशिष्टे, त्रि । यथा, मनुः । ८ । ३७६ ।
"ब्राह्मणीं यद्यगुप्ताञ्च गच्छेतां वैश्यपार्थिवौ ।
वैश्यं पञ्चशतं कुर्य्यात् क्षत्त्रियन्तु सहस्रिणम् ॥"
तथाच भागवते । १ । ९ । ३० ।
"तदोपसंहृत्य गिरः सहस्रिणी-
र्विमुक्तसङ्गं मन आदिपुरुषे ॥"
"सहस्रिणीः सहस्रार्थवतीः ।" इति तट्टीका ॥)

**सहा**, स्त्री, (सहत इति । सह + अच् । टाप् ।) घृतकुमारी । मुद्गपर्णी । इत्यमरः । २ । ४ । ७३ ; २ । ४ । ११३ ॥ नखभेषजम् । दण्डोत्पला । पृथिवी । इति मेदिनी ॥ शुक्लझिण्टी । सर्पकङ्काली । इति शब्दचन्द्रिका ॥ रास्ना । स्वर्णक्षीरी । पीतदण्डोत्पला । इति रत्नमाला ॥ तरणीपुष्पम् । इति राजनिर्घण्टः ॥

**सहाः**, [स्] पुं, (सहते इति । सह + असुन् ।) अग्रहायणमासः । इत्यमरः ॥ (यथा, भागवते । १२ । ११ । ४१ ॥
"अथांशुः कश्यपस्तार्क्ष ऋतसेनस्तथोर्व्वशी ।
विद्युच्छत्त्रुर्महाशङ्खः सहोमासं नयन्त्यमी ॥")
हेमन्तकालः । इति मेदिनी ॥

**सहाचरः**, पुं, (सह आचरतीति । आ + चर + अच् ।) पीतझिण्टी । इति शब्दरत्नावली ॥ (अस्य पर्य्यायो यथा, --
"सैरेयकः श्वेतपुष्पः सैरेयः कटसारिका ।
सहाचरः सहचरः स च भिन्द्यपि कथ्यते ॥"
इति भावप्रकाश्य पूर्व्वखण्डे प्रथमे भागे ॥
यथा, सुश्रुते चिकित्सितस्थाने । ३७ ।
"सहाचरवरीविश्वाकाकनाशाविदारिभिः॥"
यथाच ।
"वासानिम्बपटोलकेतकीबलाकुष्माण्डकेन्दीवरी-
वर्षाभूकुटजाश्वगन्धसहिते द्वे पूतिगन्धामृते ॥
मांसं नागबलासहाचरपुरैर्हिङ्ग्वार्द्रकं नित्यशो
ग्राह्यास्तत्क्षणमेव न द्विगुणिता ये चेक्षुजाता घनाः ॥"

**सहायता**, स्त्री, (सहाय + "ग्रामजनबन्धुसहायेभ्यस्तल् ।" ४ । २ । ४३ । इति तल् ।) सहायानां समूहः । इत्यमरः । ३ । ३ । ४१ ॥ (सहायस्य भावः कर्म्म वा । तल् ।) साहाय्यञ्च ॥ (यथा, रघुः । ९ । १९ ।
"स किल संयुगमूर्द्ध्नि सहायतां
मघवतः प्रतिपद्य महारथः ।
स्वभुजवीर्य्यमगापयदुच्छ्रितं
सुरबधूरवधूतभयाः शरैः ॥")

**सहायत्वं**, क्ली, सहायता । सहायस्य भावः । सहायशब्दाद्भावे त्वप्रत्ययेन निष्पन्नम् ॥ (यथा, कथासरित्सागरे । ३० । ८७ ।
"अङ्गीचक्रे सहायत्वं राजा तस्यारिमर्द्दने ॥")

**सहारः**, पुं, (सहते इति । सह + "तुषारादयश्च ।" उणा० ३ । १३९ । इत्यारन् ।) आम्रवृक्षः । इत्युणादिकोषः ॥ महाप्रलयः । इति हलायुधः ॥

**सहारोग्यः**, त्रि, (आरोग्येण सह वर्त्तमानः ।) नीरुक् । इति हेमचन्द्रः ॥

**सहार्द्दः**, त्रि, हार्द्देन सह वर्त्तमानः ॥ सप्नेमः । स्नेहयुक्तः ॥

**सहितः**, त्रि, (सं + धा + क्तः । "समो वा हिततयोः ।" ६ । १ । १४४ । इत्यस्य वार्त्तिकोक्त्या मलोपः ।) सहशब्दात् इतच्प्रत्ययेन च निष्पन्नः । इति सिद्धान्तकौमुदी ॥ समभिव्याहृतः । संयुक्तः । (मिलितः । यथा, मनुः । ९ । २१२ ।
"सोदर्य्या विभजेरंस्तं समेत्य सहिताः समम् ।

एतद्गुणवतो ज्ञात्वा सुतं राज्ञो द्विजातयः ।
सहस्रानीकनामानं चक्रुस्तस्य सुहर्षिताः ॥”
इति वह्निपुराणे पापनाशनवृषदानाध्यायः ॥
(तथा च भागवते । ९ । २२ । ३८ -- ३९ ।
“तस्य पुत्त्रः शतानीको याज्ञवल्क्यात् त्रयीं पठन् ।
अस्त्रज्ञानं क्रियाज्ञानं शौनकात् परमेष्यति ॥
सहस्रानीकस्तत्पुत्त्रस्ततश्चैवाश्वमेधजः ॥”)

**सहस्रारः**, पुं, क्ली, (सहस्रं आराणि कोणा यस्य ।)

शिरोऽवस्थिताधोमुखसहस्रदलकमलम्। यथा,
“सहस्रारे हिमनिभे सर्व्ववर्णविभूषिते ।
अ-क-थादित्रिरेखात्म-ह-ल-क्ष-त्रयभूषिते ॥
तन्मध्ये परबिन्दुञ्च सृष्टिस्थितिलयात्मकम्।
एवं समाहितमना ध्यायेन्न्यासोऽयमान्तरः ॥”
इति तन्त्रसारोक्तान्तर्म्मातृकान्यासः॥
(सहस्रं अराणि यस्येति । बहुचक्राङ्गविशिष्टे, त्रि । यथा, देवीभागवते । ६ । ५ । १८ ।
“चक्रं सुमोच वेगेन सहस्रारं सुदर्शनम् ॥”)

**सहस्री**, [न्] पुं, (सहस्रं बलमस्त्यस्येति ।

सहस्र + “तपःसहस्राभ्यां विनीनी ।” ५ । २ । १०२ । इति इनिः ।) सहस्रेण यो बली । तत्-
इति वैद्यकपरिभाषायाम् ॥)
सहचरश्च ॥

**सहायः**, पुं, (सह अयते इति । अय + अच् ।)

अनुकूलः । तत्पर्य्यायः । अनुप्लवः २ अनुचरः ३ अभिसरः ४ । इत्यमरः । २ । ८ । ७१ ॥ (यथा, मनुः । ६ । ४९ ।
“अध्यात्मरतिरासीनो निरपेक्षो निरामिषः ।
आत्मनैव सहायेन सुखार्थी विचरेदिह ॥”)
राज्ञां सहाया यथा, मात्स्ये । २१५ । ७४ ।
“सद्वृत्ताश्च तथा पुष्टाः सततं प्रतिमानिताः ।
राज्ञा सहायाः कर्त्तव्याः पृथिवीं जेतु-मिच्छता ॥”
भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः ॥”)
संहितः । सम्यघितः । इति मुग्धबोधव्याक-रणम् ॥ हितेन सह वर्त्तमानश्च ॥

**सहिता**, [ऋ] त्रि, (सहते इति । सह + तृच् ।

“तीषसहेति ।” ७ । २ । ४८ । इति पक्षे इट् ।)
सहनशीलः । सोढा । इति सिद्धान्तकौमुदी ॥

**सहित्रं**, क्ली, (सह्यते अनेनेति । सह + “अर्त्ति-

लूधूसूखनसहचर इत्रः ।” ३ । २ । १८४ । इति इत्रः ।) सहनकरणम् । इति व्याकरणम् ॥

**सहिष्णुः**, त्रि, (सहते इति । सह + “अलंकृञ्-

निराकृञिति ।” ३ । २ । १३६ । इति इष्णुच् ।)
सहनशीलः । तत्पर्य्यायः । सहनः २ क्षन्ता ३ तितिक्षुः ४ क्षमिता ५ क्षमी ६ । इत्यमरः । ३ । १ । ३१ ॥ (यथा, किराते । २ । ५० ।
“अपरागसमीरणेरितः क्रमशीर्णाकुलमूलसन्ततिः ।
सुकरस्तरुवत्सहिष्णुना रिपुरुन्मूलयितुं महानपि ॥”)

**सहिष्णुता**, स्त्री, (सहिष्णोर्भावः । सहिष्णु +

तल् ।) सहिष्णोर्भावः । तत्पर्य्यायः । तितिक्षा २ क्षमा ३ क्षान्तिः ४ । इति जटाधरः ॥ (यथा, सुश्रुते । ४ । २४ ।
“श्रमक्लमपिपासोष्णशीतादीनां सहिष्णुता ॥”)

**सहुरिः**, पुं, (सहते इति । सह + “जसिसहो-

रुरिन् ।” उणा० २ । ७३ । इति उरिन् ।)
सूर्य्यः । इत्युणादिकोषः ॥

**सहुरिः**, स्त्री, (सह सहने + उरिन् ।) पृथिवी ।

इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**सहृदयः**, त्रि, (हृदयेन अन्तःकरणेन सह वर्त्त-

मानः ।) प्रशस्तमनाः । इत्यमरटीकायां भरतः ।
३ । १ । ३ ॥ (यथा, रामायणे । २ । १३ । २२ ।
"कुरु साधुप्रदासं मे बाले सहृदया ह्यसि ॥")

**सहृल्लेखं**, क्ली, (हृल्लेखेन सह वर्त्तमानम् ।)

विचिकित्सितान्नम् । यथा, --
"विचिकितसा तु हृदये अन्ने यस्मिन् प्रजा-
यते ।
सहृल्लेखन्तु विज्ञेयं पुरीषन्तु स्वभावतः ॥"
इति प्रायश्चित्तविवेकः ॥

**सहोक्तिः**, स्त्री, (सह उक्तिः ।) अलङ्कारविशेषः ।

यथा, --
"सहोक्तिः सहभावश्चेत् भासते जनरञ्जनः ।
दिगन्तमगमत्तस्य कीर्त्तिः प्रत्यर्थिभिः सह ॥"
इति चन्द्रालोकः ॥
(अस्य लक्षणोदाहरणानि यथा, साहित्य-
दर्पणे । १० । ७०१ ।
"सहार्थस्य बलादेकं यत्र स्याद्वाचकं द्वयोः ।
सा सहोक्तिर्मूलभूतातिशयोक्तिर्यदा भवेत् ॥"
अतिशयोक्तिरप्यत्राभेदाध्यवसायमूला कार्य्य-
कारणपौर्वापर्य्यविपर्य्ययरूपा च । अभेदाध्यव-
सायमूलापि श्लेषभित्तिका अन्यथा च । क्रमे-
णोदाहरणम् ।
"सहाधरदलेनास्या यौवने रागभाक् प्रियः ॥"
अत्र रागपदे श्लेषः ।
"सह कुमुदकदम्बैः काममुल्लासयन्तः
सह घनतिमिरौघैर्धैर्य्यमुत्सारयन्तः ।
सह सरसिजषण्डैः स्वान्तमामीलयन्तः
प्रतिदिशममृतांशोरंशवः सञ्चरन्ति ॥"
इदं मम । अत्रोल्लासादीनां सम्बन्धिभेदादेव
भेदो न तु श्लिष्टतया ।
"सममेव नराधिपेन सा
गुरुसम्मोहविलुप्तचेतना ।
अगमत्सह तैलबिन्दुना
तनुदीपार्च्चिरिव क्षितेस्तलम् ॥"
इयञ्च मालयापि सम्भवति । तथोदाहृते सह
कुमुदकदम्बैरित्यादौ ।
"लक्ष्मणेन समं रामः काननं गहनं ययौ ।"

या गर्भवती अज्ञातगर्भा ज्ञातगर्भा वा परि-
णीयते स गर्भस्तस्यां जातः परिणेतुः पुत्त्रो
भवति सहोढ इति व्यपदिश्यते । इति
कुल्लूक-
भट्टः ॥ (होढेन हृतद्रव्येण सह वर्त्तमाने, त्रि
।
यथा, मनुः । ९ । २७० ।
"न होढेन विना चौरं घातयेद्धार्म्मिको नृपः
।
सहोढं सोपकरणं घातयेदविचारयन् ॥")

**सहोदरः**, पुं, (उदरेण सह वर्त्तते इति । सह

समानं उदरं यस्येति वा ।) एकमातृगर्भ-
जातभ्राता । तत्पर्य्यायः । सहजः २
सोदरः ३
भ्राता ४ सगर्भः ५ समानोदर्य्यः ६
सोदर्य्यः ७ ।
इति जटाधरः ॥ (यथा, मनुः । ९ । १९२
।
"जनन्यां संस्थितायान्तु समं सर्व्वे
सहोदराः ।
भजेरन् मातृकं रिक्थं भगिन्यश्च सनाभयः
॥")

**सहोबलं**, क्ली, (सहसा तेजसा सह बलमत्रेति ।)

दौरात्म्यम् । इति केचित् ॥

**सहोरः**, त्रि, (सहते सर्व्वमिति । सह + "किशो-

रादयश्च ।" उणा० १ । ६६ । इति ओरन्
।)
साधुः । इत्युणादिकोषः ॥

**सह्यं**, क्ली, (सह्यते इति । सह + यत् ।) आरोग्यम् ।

साम्यम् । सुमधुरम् । इति शब्दरत्नावली ॥
(प्रियम् । यथा, महाभारते । ३ । २७७ ।
१० ।
"ततस्तं प्रत्युवाचाथ मारीचो राक्षसेश्वरम्
।
किन्ते सह्यं मया कार्य्यं करिष्याम्यवशोऽपि
तत् ॥")

**सह्यः**, पुं, पर्व्वतविशेषः । इति मेदिनी ॥ (यथा,

रघुः । ४ । ५२ ।
"असह्यविक्रमः सह्यं दूरात् मुक्तमुदन्वता ।

अपि च मात्स्ये । ३ । २९ ।
"सांख्यं संख्यात्मकत्वाच्च
कपिलादिभिरुच्यते ॥"
अथ सांख्यैराख्यायते परिणामवादे परिपन्थिनि
जागरूके कथंकारं विवर्त्तवाद आदरणीयो
भवेदेष हि तेषामाघोषः । संक्षेपेण हि सांख्य-
शास्त्रे चतस्रो विधाः संभाव्यन्ते ।
कश्चिद्विकृति-
रेव कश्चिद्विकृतिः प्रकृतिश्च । कश्चिदनुभव
इति । तत्र केवला प्रकृतिः । प्रधानपदेन वेद-
नीया मूलप्रकृतिः । नासावन्यस्य कस्यचिद्वि-
कृतिः । प्रकरोतीति प्रकृतिरिति व्युत्पत्त्या
सत्त्वरजस्तमोगुणानां साम्यावस्थाया अभि-
धानात् । तदुक्तम् । मूलप्रकृतिरविकृतिरिति ।
मूलञ्चासौ प्रकृतिश्चेति मूलप्रकृतिः । महदादेः
कार्य्यकलापस्यासौ मूलं न त्वस्य प्रधानस्य
मूलान्तरमस्ति अनवस्थापातात् । नच बीजा-
ङ्कुरवदनवस्थादोषो न भवति इति वाच्यम् ।
प्रमाणाभावादिति भावः । प्रकृतयश्च महद-
हङ्कारतन्मात्रापि । तदप्युक्तम् । महदाद्याः
प्रकृतिविकृतयः सप्तेति । अस्यार्थः ।
प्रकृतयश्च
ता विकृतयश्चेति प्रकृतिविकृतयः सप्त महदा-
दीनि तत्त्वानि । तत्रान्तः करणादिपदेनेयं मह-
त्तत्त्वमहङ्कारप्रकृतिः मूलप्रकृतेस्तु विकृतिः ।
एवमहङ्कारतत्त्वं अभिमानापरनामधेयमहतो
विकृतिः । प्रकृतिश्च तदेवाहङ्कारतत्त्वं तामसं
सत् पञ्चतन्मात्राणां सूक्ष्माभिधानम् । तदेव
सात्त्विकं सत् प्रकृतिरेकादशेन्द्रियाणां बुद्धी-
न्द्रियाणां चक्षुःश्रोत्रघ्राणरसनात्वगाख्यानां
कर्म्मेन्द्रियाणां वाक्पाणिपादपायूपस्थाख्याना-
मुभयात्मकस्य मनसश्च रजसस्तूभयत्र
क्रियोत्-
पादनद्वारेण कारणमस्तीति न वैयर्थ्यम् ।
तदुक्तमीश्वरकृष्णेन ।
"अभिमानोऽहङ्कारस्तस्मात्द्विविधः प्रवर्त्तते
सर्गः ।
एकादशकश्च गणस्तन्मात्रा पञ्चकञ्चैव ॥
सात्त्विकमेकादशकः प्रवर्त्तते वैकृतादहङ्कारात् ।
भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् ॥
बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनात्वगाख्यानि
।

इत्यादौ चातिशयोक्तिमूलत्वाभावान्नायमलङ्कारः ॥ * ॥)

**सहोटजः**, पुं, (उटजेन सह वर्त्तमानः ।) मुनीनां पर्णशाला । यथा, --
"मुनीनाञ्च चिताकुट्यां पर्णोटजसहोटजौ ।"
इति हारावली ॥

**सहोढः**, पुं, (ऊढया सह वर्त्तमानः ।) द्वादशविधपुत्रान्तर्गतपुत्रविशेषः । इति जटाधरः ॥
"या गर्भिणी संस्क्रियते ज्ञाताज्ञातापि वा सती ।
वोढुः स गर्भो भवति सहोढ इति चोच्यते ॥"
इति मानवे ८ अध्यायः ॥

नितम्बमिव मेदिन्याः स्रस्तांशुकमलङ्घयत् ॥")
स तु पुनाख्यदेशस्य उत्तरपश्चिमदिशि वर्त्तते ॥

**सह्यः**, त्रि, (सोढुं शक्यः । सह + "शकिसहोश्च ।" ३ । १ । ९९ । इति यत् ।) सोढव्यः ।
सहनीयः । इति मेदिनी ॥ (यथा, मार्कण्डेये । १०६ । ५६ ।
"सह्यं भवतु ते तेजो भूनानां भूतभावन ! ॥")

**सा**, स्त्री, गौरी । लक्ष्मीः । इति शब्दरत्नावली ॥ पूर्व्वोक्तपरामर्शविषयीभूता । प्रसिद्धा ।
इति स्त्रीलिङ्गतच्छब्दस्य प्रथमैकवचननिष्पन्ना ।
इति व्याकरणम् ॥ (यथा, साहित्यदर्पणे ।
"सङ्गमविरहविकल्पे वरमिह विरहो न सङ्गमस्तस्याः ।
सङ्गे सैव तथैका त्रिभुवनमपि तन्मयं विरहे ॥")

**सांख्यं**, क्ली, (संख्या सम्यग्ज्ञानं सा अस्त्यत्रेति । संख्या + अण् ।) सम्यक् ख्यायते प्रकाश्यते
वस्तुतत्त्वमनयेति संख्या सम्यक् ज्ञानं तस्यां
प्रकाशमानमात्मतत्त्वं सांख्यम् । इति श्रीभगवद्
गीताटीकायां श्रीधरस्वामी ॥ षड्दर्शनान्तर्गतदर्शनशास्त्रविशेषः । तत्पर्य्यायः । कापिलम् २ ।
इति हेमचन्द्रः ॥ यथा, --
"पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम् ।
प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम् ॥"
इति श्रीभागवते । १ । ३ । १० ॥

वाक्पादपाणिपायूपस्थाख्यानि कर्म्मेन्द्रियाण्याहुः ॥"
उभयात्मकमत्र मनःसङ्कल्पविकल्पात्मकमिन्द्रियञ्चेति । विवृतञ्च तत्त्वकौमुद्यामाचार्य्यवाचस्पतिभिः । किमबला विकृतयस्तु वियदादीनि पञ्चभूतानि । एकादशेन्द्रियाणि च । तदुक्तं षोडशकस्तु विकार इति षोडशसंख्यावच्छिन्नो गणषोडशको विकार एव न प्रकृतिरित्यर्थः । यद्यपि पृथिव्यादयो गोघटादीनां प्रकृतिस्तथापि न ते पृथिव्यादिभ्यस्तत्त्वान्तरमिति न प्रकृतिः । तत्त्वान्तरोपादानत्वञ्चेह प्रकृतित्वमभिमतं गोघटादीनां स्थूलत्वेन्द्रियग्राह्यत्वयोः समानत्वेन तत्त्वान्तरत्वाभावः । तत्र
शब्दस्पर्शरूपरसगन्धतन्मात्रेभ्यः
पूर्ब्बपूर्ब्बसूक्ष्मभूतसहितेभ्यः पञ्च महाभूतानि

वियदादीनि क्रमेणैकद्वित्रिचतुःपञ्चगुणानि जायन्ते । इन्द्रियसृष्टिस्तु प्रागेवोक्ता । उक्तञ्च ।
प्रकृतेर्महान् ततोऽहङ्कारः तस्माद्गणश्च षोडशकः तस्मादपि षोडशकात् पञ्चभ्यः पञ्चभूता-
नीति । अनुभवात्मकः पुरुषः । तदुक्तम् । न प्रकृतिर्न विकृतिः पुरुष इति । पुरुषस्तु कूटस्थो
नित्यः परिणामो न कस्यचित् । प्रकृतिर्नापि विकृतिः कस्यचिदित्यर्थः । एतत्पञ्चविंशति-तत्त्वसाधकत्वेन प्रमाणत्रयमभिमतम् । तद-प्युक्तम् । दृष्टमनुमानमाप्तवचनं सर्व्वप्रमाण-सिद्धत्वात् त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धीति । इह कार्य्यकारणभावे चतुर्द्धा विप्रतिपत्तिः प्रसरति । असतः सज्जायत इति
सौगताः सङ्गिरन्ते । नैयायिकादयः सतो ऽसज्जायते इति । वेदान्तिनः सतो विवर्त्तः कार्य्यजातं न वस्तु सदिति । सांख्याः पुनः सतः
सज्जायत इति । तत्रासतः सज्जायत इति न प्रामाणिकः पक्षः । असतो निरूपाख्यस्य शशविषाणवत् कारणत्वानुपपत्तेः तुच्छातु-च्छयोस्तादात्म्यानुपपत्तेश्च। नापि सतोऽस-ज्जायते कारकव्यापारात् प्रागसतः शशविषाण-
वत् सता सम्बन्धलक्षणोत्पत्तेः । न हि नीलं निपुणतमेनापि पीतं कर्त्तुं पार्य्यते । ननु सत्त्वा-सत्त्वे घटस्य धर्म्माविति चेत्तदचारु । असति धर्म्मिणि तद्धर्म्म इति व्यपदेशानुपपत्त्या धर्म्मिणः
सत्त्वापत्तेः । तस्मात् कारकव्यापारात् प्रागपि कार्य्यम् । सदेव सतश्चाभिव्यक्तिरुपपद्यते। यथा पीडेनेन तिलेषु तैलस्य दोहनेन सौर-भेयीषु पयसः । असतः कारणे किमपि निदर्शनं
दृश्यते । किञ्च कार्य्येण कारणं सम्बद्धं तज्जनकं
असम्बद्धं वा प्रथमे कार्य्यस्य सत्त्वमायातं सतो-
सतां वा विनाशः । यथोक्तं भगवद्गीतायाम् । नासतो विद्यते भावो नाभावो विद्यते सतः । इति । ततश्च कार्य्यानुमानात्तत्प्रधानसिद्धिः। तदुक्तम् । असदकारणत्वादुपादानं ग्रहणात् सर्व्वसम्भवात् । शक्तस्य शक्यकरणात् कारणा-
भावाच्च सत्कार्य्यमिति । नापि सतो ब्रह्मतत्त्वस्य
विवर्त्तः प्रपञ्चः वाधानुपलम्भात् । अधिष्ठाना-रोप्ययोः चिज्जडयोः कलधौतरौप्यादिवत् सारूप्याभेदेनापि संभवाच्च । तस्मात् सुखदुःख-
मोहात्मकस्य तथाविधकारणमवधारणीयम्। तथा च प्रयोगः । विमतं भावजातं सुखदुःख-मोहात्मककारकं तदन्वितत्वात् यत् येनान्वीयते
तत्तत्कारणकं यथा रुचकादिकं सुवर्णान्वितं सुवर्णकारणकं तथा चेदं तस्मात्तथेति । तत्र जगत्कारणे येयं सुखात्मकता तत् सत्त्वम् । या दुःखात्मकता तद्रजः । या च मोहात्मकता तत्तम इति त्रिगुणात्मककारणसिद्धिः । यथा हि प्रत्येकं भावात्त्रैगुण्यवन्तोऽनुभूयन्तोयथा मैत्र-दारेषु सत्यवती मैत्रस्य सुखमाविरस्ति तं प्रति सत्त्वगुणप्रादुर्भावात्तत्सपत्नीनां दुःखं ताः प्रति-रजोगुणप्रादुर्भावात् तामलभमानस्य चैत्रस्य मोहो भवति तं प्रति तमोगुणसद्भावात् । एवमन्यदपि घठादिकं लभ्यमानं सुखं करोति परैरपि ह्रियमाणं दुःखाकरोति उदासीन-स्योपेक्षाविषयत्वेनोपतिष्ठते उपेक्षाविषयत्वं नामोहः मुह वैचित्त्ये इत्यस्माद्धातोर्मोहशब्द-निष्पत्तेः उपेक्षणीयेषु चित्तवृत्त्यनुदयात्तस्मात् सर्व्वं भावजातं सुखदुःखमोहात्मकं त्रिगुण-प्रधानकारणकमवगम्यते। तथा च श्वेताश्वत-रोपनिषदि श्रूयते ।
“अजामेकां लोहितशुक्लकृष्णां
बह्वीं प्रजां जनयन्तीं सरूपाम् ।
अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोगामजोऽन्यः ॥” इति ॥
अत्र लोहितशुक्लकृष्णशब्दा रञ्जकत्वप्रकाशक-
त्वावरकत्वसाधर्म्यात् रजःसत्त्वतमोगुणत्व-प्रतिपादनपराः । नन्वचेतनं प्रधानं चेतनानधि-
करुणया सृष्टिः सृष्ट्या कारुण्यमिति तस्माद-चेतनस्यापि चेतनानधिष्ठितस्य प्रधानस्य मह-दादिरूपेण परिणामः पुरुषार्थप्रयुक्तप्रधान-पुरुषसंयोगनिमित्तः । यथा । निर्व्व्यापारस्या-व्यायस्कसन्निधानेन लोहितस्य व्यापारः । तथा
निर्व्व्यापारस्य पुरुषस्य सन्निधानेन प्रधानव्या-पारो युज्यते । प्रकृतिपुरुषसम्बन्धश्च पङ्ग्वन्धवत्
परस्परापेक्षानिबन्धनः । प्रकृतिर्हि भोग्यतया भोक्तारं पुरुषमपेक्षते । पुरुषोऽपि भेदाग्रहा-द्बुद्धिच्छाया पत्न्या तद्गतं दुःखत्रयं वारयमाणः कैवल्यमपेक्षते ।
तत्प्रकृतिपुरुषविवेकनिबन्धनः ।
न च तदन्तरेण युक्तमिति कैवल्यार्थं पुरुषः प्रधानमपेक्षते । यथा स्वलु कौचित् पङ्ग्वन्धौ पथि सार्थेन गच्छन्तौ देवकृतादुपप्लवात् परि-त्यक्तसार्थौ मन्दमन्दमितस्ततः परिभ्रमन्तौ भयाकुलौ दैववशात् संयोगमुपगच्छेताम् । तत्र चान्धेन पङ्गुः स्कन्धमारोपितः पङ्गुदर्शितेन मार्गेणान्धः समीहितं स्थानं प्राप्नोति पङ्गुरपि स्कन्धाधिरूढः तथा परस्परापेक्षप्रधानपुरुष-निबन्धनः सङ्गः पुरुषस्य दर्शनार्थं कैवल्यार्थतया
प्रधानस्य पङ्ग्वन्धवत् उभयोरपि सम्बन्धस्तत्कृतः
सर्गः इति । ननु पुरुषार्थनिबन्धना भवतु प्रकृतेः
प्रवृत्तिः निवृत्तिस्तु कथमुपपद्यत इति चेदुच्यते यथा भर्त्रा दृष्टदोषा स्वैरिणी पुनर्भर्त्तारं नापैति यथा वा कृतप्रयोजना नर्त्तकी नर्त्तने तथा प्रकृतिरपि यथोक्तं रङ्गस्य दर्शयित्वा निवर्त्तते नर्त्तकी यथा नृत्यात् पुरुषस्य तथानन्दं प्रकाश्य
निवर्त्तते प्रकृतिरिति । तदर्थं निरीश्वरसांख्य-शास्त्रप्रवर्त्तककपिलानुसारिणांमतमुपन्यस्तम् ।
इति माधवाचार्य्यकृतसर्व्वदर्शनसंग्रहे सांख्य-दर्शनम् ॥ अस्य चत्वारः अध्यायाः । तत्र प्रकृतिपुरुषयोरुभयोः सृष्टिकर्त्तृत्वं अन्धपङ्गु-न्यायेन स्थापितम् । तत्त्वानां संख्यानञ्च कृतम् ।

रेव सम्बन्ध इति नियमात् । चरमे सर्व्वं कार्य्य-
जातं सर्व्वस्माज्जायेत असम्बद्धत्वाविशेषात् ।
तदाख्यायि सांख्याचार्य्यैः ।
"असत्त्वान्नास्ति सम्बन्धः कारणैः सत्त्वसङ्गिभिः ।
असम्बद्धस्य चोत्तिमिच्छतो न व्यवस्थितिः ॥"
अथैवमनुष्ठेयसम्बद्धमपि तदेव जनयति यत्र यच्छक्तं शक्तिश्च कार्य्यदर्शनोन्नेयेति तत्र संग-च्छते । तिलेषु तैलजननशक्तिरित्यत्र तैलस्या-
सत्त्वे सम्बद्धत्वासम्बद्धत्वविकल्पेन तच्छक्तिरिति
निरूपणायोगात् कार्य्यकारणयोरभेदाच्च । कार्य्यस्य सत्त्वं कारणात् पृथक् न भवति पट-स्तन्तुभ्यो न भिद्यते तद्धर्म्मत्वान्न यदेवं न तदेवं
यथा गौरश्वः । तद्धर्म्मश्च पटः तस्मान्नार्थान्तरं
तर्हि प्रत्येकं त एव प्रावरणकार्य्यं कुर्य्युरिति चेन्न । संस्थाभेदेनाविर्भूतपटभावानां प्रावर-णार्थक्रियाकारित्वोपपत्तेः । यथा हि । कूर्म्म-स्याङ्गानि कूर्म्मशरीरे निविशमानानि तिरो-भवन्ति निःसरन्ति चाविर्भवन्ति एवं कारण-तन्त्वादेः पटादयो विशेषा निःसरन्त आविर्भ-वन्त उत्पद्यन्त इत्युच्यन्ते निविशमानास्तिरो-
भवन्तो विनश्यन्तीत्युच्यन्ते न पुनरसतामुत्पन्नः
ष्ठितं महदादिकार्य्ये न व्याप्रियते अतः केन-चित् चेतनाधिष्ठात्रा भवितव्यम् । तथा च सर्व्वार्थदर्शे । परमेश्वरः स्वीकर्त्तव्यः स्यादिति चेत् । तदसङ्गती अचेतनस्य । यथा वत्सविवृ-द्ध्यर्थमचेतनं क्षीरं प्रवर्त्तते । यथा च जलम-चेतनं लोकोपकाराय प्रवर्त्तते । तथा च प्रकृतिरचेतनापि पुरुषविमोक्षाय प्रवर्त्स्यति । तदुक्तम् । वत्सविवृद्ध्यर्थं क्षीरस्य यथा प्रवृत्तिरे-
तस्याः पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधा-नस्येति । यस्तु परमेश्वरः करुणया प्रवर्त्तक इति परमेश्वरास्तित्ववादिनां डिण्डिमः स प्रायेण गतः विकल्पानुपपत्तेः । स किं सृष्टेः प्राक् प्रवर्त्तते सृष्ट्युत्तरकालं वा । आद्ये शरी-राद्यभावेन दुःखानुपपत्तौ जीवानां दुःखप्रहा-णेच्छानुपपत्तिः । द्वितीये परस्पराश्रयप्रसङ्गः ।
इति केचित् ॥

**सांघातिकः**, त्रि, (संघाते साधुः । संघात + "गुडादिभ्यष्ठञ् ।" ४ । ४ । १०३ । इति ठञ् ।) सम्यक्प्रकारेण हननकारकः । मारात्मकः ॥ जन्मनक्षत्रावधिकषोडशनक्षत्रम् । यथा, --
"जन्माद्यं कर्म्म ततोऽपि दशमं सांघातिकं षोडशभम् ॥"
तत्फलम् ।
"देहद्रविणबन्धूनां हानिः सांघातिके तथा ।"
इति ज्योतिस्तत्त्वम् ॥

**सांदृष्टिकं**, क्ली, (संदृष्टौ प्रत्यक्षे भवम् । संदृष्टि + ठञ् ।) सद्यःफलम् । इत्यमरः ॥ दृष्टिपरिक-ल्पनान्यायः । यथा । दौहित्रान्तस्वसन्ताना-भावे पितुरधिकारवत् दौहित्रान्तपितृसन्ताना-भावे पितामहाधिकारस्य सांदृष्टिकन्यायसिद्ध-त्वाच्च । यथा पित्रभावे माता तथा पितामहा-भावे पितामहीति सांदृष्टिकन्यायेन पितामह्य-धिकारस्य सिद्धत्वाच्च । इति श्रीकृष्णतर्कालङ्कार-कृतक्रमसंग्रहः ॥

**सांयात्रिकः**, पुं, (संयात्रा द्वीपान्तरगमनम् ।
सा प्रयोजनमस्येति । संयात्रा + “तदस्य प्रयो-
जनम् ।” इति ठञ् ।) पोतबणिक् । इत्यमरः ।
१ । १० । १२ ॥ द्वे वहित्रगामिनि बणिग्जने ।
संपूर्व्वो यातिर्द्वीपान्तरगमनवृत्तिस्ततस्त्रासु
सिति त्रः स्त्रियामाप् संयात्रा द्वीपान्तरगमनं
तदस्य प्रयोजनमिति विकारसंघेति ष्णिकः ।
सम्यक् यात्रा संयात्रा तया व्यवहरतीति ढघे
कादिति ष्णिको वा । इति भरतः ॥ (यथा,
हरिवंशे । ५८ । १४ ।
“सिद्धिः सांयात्रिकाणान्तु वेला त्वं साग-
रस्य च ॥”)

**सांयुगीनः**, त्रि, (संयुगे साधुः । संयुग + “प्रति-
जनादिभ्यः खञ् ।” ४ । ४ । ९९ । इति
खञ् ।) युद्धकुशलः । रणे साधुः । इत्यमरः ।
२ । ८ । ७७ ॥ (यथा, रघुः । ११ । ३० ।
“इत्यपास्तमखविघ्नयोस्तयोः
सांयुगीनमभिनन्द्य विक्रमम् ।
ऋत्त्विजः कुलपतेर्यथाक्रमं
वाग्यतस्य निरवर्त्तयन् क्रियाः ॥”)

**सांराविणं**, क्ली, (सं + रुल ध्वनौ + “अभिविधौ
भावे इनुण् ।” ३ । ३ । ४४ । इति इनुण् ।
अणिनुणः ।” ५ । ४ । १५ । इति स्वार्थे अण् ।)
हट्टस्य सम्यक् शब्दः । इति मुग्धबोधव्याक-
रणम् ॥ संपूर्व्व रुल ध्वनौ भावे णिनि णित्वा-
द्वृद्धौ संराविण इति स्थिते ततः स्वार्थे ष्णे
णित्त्वे व्रिराद्यच इति वृद्धौ ययोर्लोप इत्यकार-
लोपे सांराविणं हट्टस्य सम्यक् शब्दो व्याप्त
इत्यर्थः । इति तट्टीकायां दुर्गादासः ॥ (यथा,
अनर्घराघवे । ७ । ५७ ।
“यं दोर्मात्रपरिच्छदो युधि मुदोत्क्षिप्य प्रती-
च्छन्मुहुः
संतेने दशभिर्निजैरपि मुखैः सांराविणं
रावणः ॥”)

**सांवत्सरः**, पुं, (संवत्सरं तज्ज्ञानोपयोगि शास्त्रं
वेत्ति अधीते वा । संवत्सर + अण् ।) गणकः ।
त्सरं व्याप्य भूतः । प्रतिवर्षकर्त्तव्यश्राद्धम् । यथा
अथ सांवत्सरिकश्राद्धम् । तत्र गोभिलः । अत
ऊर्द्ध्वं संवत्सरे संवत्सरे प्रेतायान्नं दद्यात् यस्मिन्न-
हनि प्रेतः स्यात् इति । अत ऊर्द्ध्वं सपिण्डी-
करणान्तश्राद्धनिमित्तादाद्यसंवत्सरादूर्द्ध्वं संवत्-
सरे संवत्सरे प्रतिवर्षं यस्मिन्नहनि मृतस्तस्मिन्न-
हनि मृताय दद्यात् । व्याघ्रः । प्रतिसंवत्सरञ्चैव-
मेकोद्दिष्टं मृताहनि । एतेन सपिण्डीकरणाप-
कर्षे आद्यसंवत्सरेऽपि मृताहे श्राद्धान्तरं
कर्त्तव्यमिति मैथिलोक्तं हेयम् । व्यक्तमाह
हेमाद्रिधृतं वचनम् ।
“पूर्णे संवत्सरे श्राद्धं षोडशं परिकीर्त्तितम् ।
तेनैव च सपिण्डत्वं तेनैवाब्दिकमिष्यते ॥”
अत्र पूर्णसंवत्सरक्रियमाणश्राद्धाद्यथोभयनिर्व्वा
हस्तथापकृष्टसपिण्डीकरणश्राद्धादप्युभयनिर्व्वाहो
न पूर्णसंवत्सरे आब्दिकान्तरम् । एवं पञ्चदश-
श्राद्धेऽप्यन्नयम् । मत्स्यपुराणम् ।
“ततः प्रभृति संक्रान्तावुपरागादिपर्व्वसु ।
त्रिपिण्डमाचरेत् श्राद्धमेकोद्दिष्टं मृताहनि ॥”
ततः प्रेतत्वपरीहारात् त्रिपिण्डं त्रैपुरुषम् ।
निरुपपदमृताहशब्दः मृतसम्बन्धिमासपक्षतिथि-
विशेषपरः । उपपदात्तु क्वचित्तिथिविशेषमात्र-
परः । यथा मृताहे प्रतिमासं कुर्य्यादित्यादौ ।
शङ्खः ।
“सपिण्डीकरणादूर्द्ध्वं यत्र यत्र प्रदीयते ।
तत्र तत्र त्रयं कुर्य्यात् वर्ज्जयित्वा मृताहनि ॥
अमावास्यां क्षयो यस्य प्रेतपक्षेऽथवा पुनः ।
सपिण्डीकरणादूर्द्ध्वं तस्योक्तः पार्व्वणो विधिः ॥”
त्रयं सम्प्रदानानां त्रयं कुर्य्यात् त्रिभ्यो दद्यात्
इत्यर्थः । मृताहपर्य्युदस्तत्रिदैवतत्त्वस्य प्रति
प्रसवमाह । अमावास्यामिति । प्रेतपक्षोऽत्र
पितृपक्षः अश्वयुक्कृष्णपक्ष इति यावत् । न
तु कृष्णपक्षमात्रं कृष्णपक्षसामान्यपरत्वे अमा-
वास्यापदवैयर्थ्यापत्तेः ॥ * ॥ पितृपक्षं विशेष-
यति हेमाद्रिमाधवाचार्य्यधृतं नागरखण्डम् ।
“नभो वाथ नभस्यो वा मलमासो यदा भवेत् ।
सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः ॥”
अत्र श्रावणभाद्रयोरन्यतरस्यमलमासत्वे
आषाढ्यपेक्षया सप्तमपक्षस्य पितृपक्षत्वात् ।
अत्र मृतस्यैव प्रेतपक्षमृतत्वं न तु मलमास
भाद्रकृष्णपक्षमृतस्य । ततश्च तत्र मृतस्य वर्षा-
न्तरे अश्वयुक्कृष्णपक्षेऽपि तच्छ्राद्धकरणे न
रेकेण षट्संख्यानियमात् ॥ * ॥ एवममा-
वास्यादिमरणनिमित्तेन मातुरपि प्रत्याब्दिकं
पार्व्वणविधिनैव ।
“अपुत्त्रा ये मृताः केचित् स्त्रियो वा पुरुषाश्च ये ।
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्व्वणम् ॥”
इत्यापस्तम्बवचने अपुत्त्रा इति विशेषणो-
पादानान् सपुत्त्राणां पार्व्वणाभ्यनुज्ञानात् ।
एतच्च मात्रादित्रितयदैवतं कार्य्यम् । मात्रे
पितामह्यै प्रपितामह्यै च पूर्व्ववत् ब्राह्मणान्
भोजयित्वा इत्यन्नष्टकायां तथा दर्शनात् । अव-
सानदिननिमित्तेन पार्व्वणविधिना छन्दोगैरपि
मात्रादित्रिकाणां श्राद्धं कर्त्तव्यम् । न योषिद्‌भ्यः
पृथग्दद्यादवसानादिनादृते। इति छन्दोगपरि-
शिष्टवचने विशेषतः प्रतिप्रसवात् । एवं सपिण्डी-
करणेऽपि । एतच्च मृताहपार्व्वणं मातापित्रो-
रेव । तथा च हेमाद्रिधृतं कात्यायनवचनम् ।
“सपिण्डीकरणादूर्द्ध्वं पित्रोरेव हि पार्व्वणम् ।
पितृव्यभ्रातृमातॄणामेकोद्दिष्टं सदैव तु ॥”
मातृपदं सपत्नीमातृपरम् । सपत्नीमात्रित्यत्र
मातृपदस्य राजदन्तादित्वात् परनिपातः ।
ततश्च वाक्ये मातृसपत्नीति न प्रयोज्यं किन्तु
सपत्नीमातरित्यादिकम् ॥ * ॥ एवं साग्निकौरस-

इत्यमरः । २ । ८ । १४ ॥ (यथा,
बृहत्संहिता-
याम् । २ । १० -- ११ ।
“मुहूर्त्तं तिथिनक्षत्रमृतवश्चायने तथा ।
सर्व्वाण्येवाकुलानि स्युर्न स्यात् सांवत्सरो यदि ॥
तस्माद्राज्ञाभिगन्तव्यो विद्वान् सांवत्सरो-ऽग्रणीः ।
जयं यशःश्रियं भोगान् श्रेयश्च समभीप्सता ॥”
अस्य लक्षणादिकं तत्रैव २ अध्याये विशेषतो द्रष्टव्यम् ॥ * ॥ फले, पर्व्वणि च क्ली । इति पाणिनिः । ४ । ३ । १६ ॥
संवत्सरस्येदमिति ।
अण् ।) संवत्सरसम्बन्धिनि, त्रि ॥ (यथा, हरिवंशे । १४० । ३ ।
“स सांवत्सरदीक्षायां दीक्षितः षट्पुरालये ।
आवर्त्ताया शुभे तीरे सुनद्या मुनिजुष्टया ॥”)

**सांवत्सरिकः**, त्रि, (संवत्सर + “कालात् ठञ् ।”
४ । ३ । ११ । इति ठञ् ।) संवत्सरे भवः । संव-

पार्व्वणम् । किन्त्वेकोद्दिष्टमिति । अत्र पार्व्वणो विधिः पार्व्वणेतिकर्त्तव्यताकैकोद्दिष्टविधिरिति नव्यवर्द्धमानप्रभृतयः । तन्नपूर्व्ववचनोक्तत्रैपुरुषिकस्य मृताहे पर्य्युदस्तस्य पार्व्वणो विधिरित्यनेन प्रतिप्रसवात् । तस्मादत्र सदैवतैकोद्दिष्टं न युक्तं किन्तु त्रैपुरुषिकं न तु षाट्पुरुषिकम् ।
“कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोडशम् ।
प्रत्याब्दिकञ्च शेषेषु पिण्डाः स्युः षडिति स्थितिः ॥”
इति छन्दोगपरिशिष्टवचनेन प्रत्याब्दिकव्यति-

क्षेत्रजाभ्यां मृताहे पार्व्वणं कर्त्तव्यम् ।
“औरसक्षेत्रजौ पुत्त्रौ विधिना पार्व्वणेन तु ।
प्रत्यब्दमितरे कर्य्युरेकोद्दिष्टं सुता दश ॥”
इति जावालवचनस्य ।
“यत्र यत्र प्रदातव्यं सपिण्डीकरणात् परम् ।
पार्व्वणेन विधानेन देयमग्निमता सदा ॥”
इति मत्स्यपुराणवचनस्य चैकवाक्यत्वात् ।
उशनाश्च ।
“प्रत्यब्दं दर्शवच्छ्राद्धं साग्निः कुर्व्वीत वै द्विजः ।
एकोद्दिष्टं सदा कुर्य्यान्निरग्निः श्राद्धदः सुतः ॥”
अत्र प्रागुक्तयुक्त्या प्रेतश्राद्धस्य एकोद्दिष्टत्वा-
भिधानात् सांवत्सरिकश्राद्धे यदेकोद्दिष्टपदमुक्तं तत् प्रेतश्राद्धधर्म्मग्राहित्वार्थम् । ततश्च योग्य-
त्वादेकार्घ्यादिलाभः । न तु यथा प्रेतश्राद्धे पितृशब्दस्थाने प्रेतपदोहः तथा अत्रापीति वाच्यं सांवत्सरिके प्रेतत्वाभावात्तथाविधानानु-
पपत्तेः । एवं प्रतिसांवत्सरिकश्राद्धे सम्बन्धार्थ-
पदं आशीःप्रार्थनं शेषभोजनञ्च कर्त्तव्यम् ॥ * ॥
रजस्वलायां विशेषयति गोतमः ।
“अपुत्त्रा तु यदा भार्य्या सम्प्राप्ते भर्त्तुराब्दिके ।
रजस्वला भवेत् सा तु कुर्य्यात् तत्पञ्चमे दिने ॥”
कुर्य्याच्छ्राद्धमिति शेषः । यत्तु श्राद्धचिन्तामणौ ।
एकोद्दिष्टं त्रैवर्णिकेन सिद्धान्नेन कर्त्तव्यम् ।
“एकोद्दिष्टन्तु कर्त्तव्यं पाकेनैव सदा स्वयम् ।
अभावे पाकपात्राणां तदहः समुपोषणम् ॥”

| | | |
|---|---|---|
| | | इति लघुहारीतवचनात् ॥ पाकपात्राभावः पाकसामग्र्यभावोपलक्षकः । तदापि नामश्राद्धं किन्तूपोषणमेव श्राद्धस्थानीय-मित्यर्थः । स्वयमित्यभिधानात् अपाटवादिनापि |

नान्यद्वारा कारयितव्यम् । अतएव उपवासेनैव श्राद्धस्थानीयेन तदकरणप्रायश्चित्तेन वा कृत-कृत्यतया श्राद्धविघ्ने इत्यादिवचनादपि नैका-दश्यामनुष्ठानमिति तन्न । पितृतृप्तेरजातत्वे-नैकादश्यां तदनुष्ठानस्य युक्तत्वात् । अन्यथा षोडशश्राद्धाधिकारिणः कदाचित्तथात्वे ।
"यस्यैतानि न दीयन्ते प्रेतश्राद्धानि षोडश ।
पिशाचत्वं ध्रुवं तस्य दत्तैः श्राद्धशतैरपि ॥"
इति यमवचनेन षोडशश्राद्धाभावे प्रेतत्वपरी-हारो न स्यात् । तस्मादुपवासो स श्राद्धार्थः किन्तु तदानीन्तनाकरणप्रायश्चित्तार्थः । यथा स्वकालाकृतसंस्कारे प्रायश्चित्तं कृत्वा काला-न्तरे तत्करणं तथात्रापि तद्दिने उपवासं कृत्वा एकादश्यां श्राद्धं कर्त्तव्यमिति । एकोद्दिष्टं नान्यद्वारा कार्य्यमित्यत्रापि गोत्रजेतरत्वेन विशेषणीयम् ।
"न कदाचित् सगोत्राय श्राद्धं कार्य्यमगोत्रजैः ।"
इति प्रेतश्राद्धे ब्रह्मपुराणात् ।
अत्र हि नागोत्रजस्य साक्षात्कर्त्तृत्वं निषिध्यते सगोत्रायेत्यसम्बन्धापत्तेः । तस्मात्
अगोत्रजैर्द्वार-
भूतैः सगोत्राय श्राद्धं न कार्य्यमित्यर्थः । तथा च पर्य्युदासपक्षे गोत्रजद्वारा कारयितव्यमिति सुव्यक्तमेव । प्रसज्यपक्षे तु अगोत्रजविशेषण-स्वरसात् गोत्रजलाभः । प्रेतश्राद्धधर्म्मग्राहित्वात् सांवत्सरिकमपि तथेति श्राद्धविवेकः । कल्प-तरुरत्नाकरयोस्तु स्वगोत्रायेति पठितं स्वमा-त्मीयं गोत्रं यस्य स स्वगोत्रः विद्यमानगोत्र इत्यर्थः । यस्मै श्राद्धं कर्त्तव्यं तस्य स्वगोत्रजे विद्यमानेऽन्यगोत्रजेन संघातान्तर्गतेन राज्ञा श्राद्धं न कारयितव्यमिति व्याख्यातञ्च ।
एतन्मते-
ऽप्यूढदुहित्रादीनामसगोत्रत्वेऽपि न निषेधः । वस्तुतस्तु तत्पाठेऽपि कर्म्मधारयापेक्षया बहु-व्रीहेर्जघन्यत्वात् स्वमात्मीयञ्च तत् गोत्रञ्चेति तस्मै अन्यगोत्रजद्वारा श्राद्धं न कार्य्यमित्यर्थः । अतो लघुहारीतवचने स्वयं पदं स्वगोत्रपरम् । अन्यथा ब्रह्मपुराणोक्तागोत्रजपदवैयर्थ्यापत्तेः ॥ * एवञ्च भविष्यपुराणप्रभासखण्डयोः।
"मृताहनि पितुर्य्यस्तु न कुर्य्यात् श्राद्धमादरात् ।
मातुश्चैव वरारोहे वत्सरान्ते मृताहनि ।
नाहन्तस्य महादेवि ! पूजां गृह्णामिनो हरिः ॥"
दश्यां क्रियते ॥ * ॥ न च पाकस्याङ्गत्वेन प्रधानतिथिकर्त्तव्यतानियमइति वाच्यम् ।
"व्रतोपवासनियमे घटिकैका यदा भवेत् ।
सा तिथिः सकला ज्ञेया पित्रर्थे चापराह्णिकी ॥"
इति वचनेन मुहूर्त्तमात्रलाभेऽपि कर्त्तव्यतोप-देशात् तदानीं पाके तदसम्भवात् । एवमुदी-च्याङ्गशेषभोजनेऽपि न तन्नियमः । इति श्राद्ध-तत्त्वम् ॥ (गणके, पुं, । यथा, बृहत्संहितायाम् । २ । १२ ।
"नासांवत्सरिके देशे वस्तव्यं भूतिमिच्छता ।
चक्षुर्भूतो हि यत्रैष पापं तत्र न विद्यते ॥")

**सांवादिकः**, पुं, (सम्यक् वादाय प्रभवतीति ।
संवाद + ठञ् ।) नैयायिकः । यथा, --
"नैयायिकः साक्षपादः स्यात्सांवादिक आहितः ॥"
इति जटाधरः ॥
संवाददातरि, त्रि ॥

**सांशयिकः**, त्रि, (संशयमापन्नः । संशय +
"संशयमापन्नः ।" ५ । १ । ७३ । इति ठञ् ।) संशययुक्तः । तत्पर्य्यायः । संशयापन्नमानसः २ ।
इत्यमरः । ३ । १ । ५ ॥ सन्दिहानः ३ । इति जटाधरः ॥ द्वे संशयविषये स्थाण्वादौ । संशय-मापन्नः सांशयिकः ष्णिकः संशयमापन्नं मानसं यत्र स्थाण्वादौ स तथा । संशयमापन्नं मानसं यस्य स तथेति षष्ठ्यन्तपदार्थत्वे संशयितरि पुरुषादावप्येतच्छब्दद्वयप्रवृत्तिः स्यादिति भरतः ॥ (संशयविषयकः । यथा, मार्कण्डेये । १० । ४५ ।
"तद्ब्रूहि त्वं महाभाग यत् ते सांशयिकं हृदि ॥")

**सांस्थानिकः**, त्रि, (संस्थाने व्यवहरतीति । संस्थान
+ "कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति ।" ४ ।
४ । ७२ । इति ठक् ।) समानदेशीयः । इति सिद्धान्तकौमुदी ॥ संस्थानयुक्तश्च ॥

**सांस्राविणं**, क्ली, वृक्षस्य वृक्षं व्याप्य सम्यक् स्रावः ।
इति संक्षिप्तसारोणादिवृत्तिः ॥

**साकं**, व्य, सहार्थम् । इत्यमरः । ३ । ४ । ४ ॥
रुण्डः ७ । अस्य गुणाः । कषायत्वम् ।
रुचि-
कारित्वम् । दीपनत्वम् । सारकत्वम् ।
श्लेष्मवात-
नाशित्वम् । वस्त्ररञ्जनकत्वम् । लघुत्वञ्च ।
इति
राजनिर्घण्टः ॥

**साकेतं**, क्ली, अयोध्यानगरम् । इति शब्दरत्ना-
वली ॥ (यथा, रघुः । ५ । ३१ ।
"जनस्य साकेतनिवासिनस्तौ
द्वावप्यभूतामभिवन्द्यसत्त्वौ ॥")

**सात्कुकः**, पुं, (सक्तुषु साधुः । सक्तु + "गुडादिभ्य-
ष्ठञ् ।" ४ । ४ । १०३ । इति ठञ् ।) यवः । इति सिद्धान्तकौमुदी ॥ (सक्तूनां समूहः । सक्तु + "अचित्तहस्तिधेनोष्ठक् ।" ४ । २ । ४७ ।
इति ठक् ।) सक्तुसमूहे, क्ली ।
सक्तुसम्बन्धिनि,
त्रि ॥ (सक्तवे प्रभवतीति । "तस्मै प्रभवति संतापादिभ्यः ।" ५ । १ । १०१ । इति ठञ् ।
सक्तुसमर्थे च त्रि ॥)

**साक्षरं**, त्रि, अक्षरयुक्तम् । अक्षरेण सह वर्त्त
मानम् । इति बहुव्रीहिसमासनिष्पन्नम्॥

**साक्षात्**, व्य, प्रत्यक्षम् । (यथा, कुमारे । ६ । २२ ।
"साक्षात् दृष्टोऽसि न पुनर्विद्मस्त्वां वयमञ्जसा ।
प्रसीद कथयात्मानं न धियां पथि वर्त्तसे ॥")
तुल्यम् । इत्यमरः । ३ । ३ । २४ ॥

**साक्षी**, [न्] त्रि, (अक्षेण दर्शनेन्द्रियेण सह
वर्त्तमानं यत् तत् साक्षं प्रत्यक्षज्ञानम् । तद-स्यास्तीति । साक्ष + इनिः ।) वृत्तज्ञः । इति हेमचन्द्रः ॥ तत्पर्य्यायः । प्रत्यक्षदर्शनः २ ।
इति
शब्दमाला ॥ तस्य मिथ्याकथने अकथने च दोषो यथा, महाभारते आदिपर्व्वणि ।
"पृष्टो हि साक्षी यः साक्ष्यं जानन्नप्यन्यथा वदेत् ।

मरीचिः ।
"पण्डिता ज्ञानिनो मूर्खाः स्त्रियोऽथ ब्रह्म-
चारिणः ।
मृताहं समतिक्रम्य चाण्डालेष्वभिजायते ॥"
इत्याभ्यां कालमाधवीयधृताभ्यांवचनाभ्यां
सांवत्सरिकश्राद्धस्य मृताहकर्त्तव्यत्वेनावश्यक-
त्वात भविष्यन्मृताहे स्वयं कर्त्तव्यत्वसम्भावना-
रहितेन मृतातात् पूर्व्वकालेऽपि प्रतिनिधीयते ।
"प्रक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा ।
प्रवसेत् कार्य्यवान् विप्रो वृथैव न चिरं क्वचित्
॥"
इति छन्दोगपरिशिष्टोक्तसायंप्रातर्होमप्रति-
निधिवत् । एवं सति प्रतिनिध्यकरण एव एका-

(यथा, कथासरित्सागरे । ४ । १३६ ।
"अहं जनन्या गुरुभिश्च साक-
मासाद्य लक्ष्मीमवसं चिराय ॥")

**साकल्यं**, क्ली, (सकल + भावे ष्यञ् ।) समुदायः ।

सकलस्य भावः । (यथा, मनुः । १२ । २५ ।
"यो यदैषां गुणो देहे साकल्येनातिरिच्यते ।
स तदा तद्गुणप्रायं तं करोति शरीरिणम् ॥")

**साकारः**, त्रि, (आकारेण सह वर्त्तमानः ।)

आकारविशिष्टः । यथा, --
"साकारञ्च निराकारं सगुणं निर्गुणं प्रभुम् ।
सर्व्वाधारञ्च सर्व्वञ्च स्वेच्छारूपं नमाम्यहम् ॥"
इति ब्रह्मवैवर्त्ते गणपतिखण्डे । ३२ । ३१ ॥

**साकुरुण्डः**, पुं, (सकुरुण्ड एव । स्वार्थे अण् ।)

वृक्षविशेषः । सकुरुण्डर इति गुर्ज्जरदेशीय-
भाषा । तत्पर्य्यायः । ग्रन्थिफलः २ विकटः ३
वस्त्रभूषणः ४ कुरुण्डः ५ कर्व्वूरफलः ६ सकु-

स पूर्व्वानात्मनः सप्त कुले हन्यात्तथापरान्
॥
यश्च कार्य्यार्थतत्त्वज्ञो जानन्नपि न भाषते ।
सोऽपि तेनैव पापेन लिप्यते नात्र संशयः ॥"
अपि च ।
"ब्रह्मस्वस्थाप्यहारी च
मिथ्यासाक्ष्यप्रदापकः ।
मित्रद्रोही कृतघ्नश्च वृषवाहकसूपकृत् ॥
एते महापातकिनस्त्रिषु लोकेषु निन्दिताः ।
कालसूत्रे च नरके पतन्ति ब्रह्मणः शतम् ॥"
इति ब्रह्मवैवर्त्ते गणपतिखण्डे । ४४ । ५० ;
५४ ॥
अपरञ्च ।
"मिथ्यासाक्ष्यं यो ददाति कामात्
क्रोधात्तथा
भयात् ।
सभायां पाक्षिकं वक्ति स कृतघ्न इति स्मृतः
॥
मिथ्यासाक्ष्यं पाक्षिकं वा भारते वक्ति यो नृप
।
यावदिन्द्रसहस्रञ्च सर्पकुण्डे वसेदध्रुवम् ॥
सन्ततं वेष्टितैः सर्पैर्भीतश्च भक्षितस्तथा ।
भुङ्क्ते च सर्पविण्मूत्रं यमदूतेन ताडितः ॥
कृकलासो भवेत्तत्र भारते सप्तजन्मसु ।
सप्तजन्मसु मण्डूकः पितृभिः सप्तभिः सह ॥
ततो भवेच्च वृक्षश्च महारण्ये च शाल्मलिः ।
ततो भवेन्नरो मूकस्ततः शूद्रस्ततः शुचिः
॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ४९ अध्यायः ॥
* ॥

सर्व्वशरीरेषु श्रीकृष्णस्य साक्षिरूपत्वं यथा, --
"स्थूलात् स्थूलतरं प्राप्तमतिसूक्ष्ममदर्शनम् ।
स्थितं सर्व्वशरीरेषु साक्षिरूपमदृश्यकम्।
शरीरवन्तं सगुणमशरीरं गुणोत्करम् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । ७ ।
९४-९५ ॥
(पुं, विष्णुः । इति महाभारतम् । १३ । १४९ ।
१५ ॥)

**साक्ष्यं**, क्ली, (साक्षिणो भावः कर्म्म वा ।
साक्षिन् + ष्यञ् । यद्वा, साक्षिणि भवम् ।
साक्षिन् + "दिगादिभ्यो यत् ।" ४ । ३ । ५४ ।
इति यत् ।) साक्षिकर्म्म । यथा । मनुः ।
"समक्षदर्शनात् साक्ष्यं श्रवणाच्चैव सिध्यति ।"
एतत् प्रमाणमात्रोपलक्षणम्।
"अनुभावी च यः कश्चित् कुर्य्यात् साक्ष्यं विवा-
दिनाम् ।"
इति तद्वचनान्तरात् ॥
अतएवाकृतमपि साक्षिणमाह । मनुः ।
"यत्रानिरुद्धो वीक्ष्येत शृणुयाद्वापि किञ्चन ।
पृष्टस्तत्रापि तद्ब्रूयात् यथादृष्टं यथाश्रुतम् ॥"
अनिरुद्धस्तत्र साक्षित्वेनानियुक्तः । परम्परयापि
श्रवणमाह विष्णुः ।
"उद्दिष्टसाक्षिणि मृते देशान्तरगतेऽपि वा ।
तदभिहितश्रोतारः प्रमाणं नात्र संशयः ॥"
अस्योत्तरसंज्ञामाह नारदः ।
"साक्षिणामपि यत् साक्ष्यं स्वपक्षं परिभाषताम्।
श्रवणात् श्रावणाद्वापि स साक्ष्युत्तमसंज्ञकः ॥"
म्वपक्षसम्बन्धिसाक्ष्यं परिभाषतां साक्षिणां यः
स्वयं शृणोति अर्थिना श्राव्यते वा स श्रवणात्
श्रावणादुत्तरसाक्षीत्यर्थः । एवं योऽर्थिना गूढ-
तया प्रत्यर्थिवचनं श्रावितः स गूढसाक्षीत्याह
स एव ।
"अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम् ।
यः श्राव्यते तदा गूढो गूढसाक्षी स उच्यते ॥"
तेनान्यतरवाद्यभिहितार्थविषयकदृष्टकारणजं
विज्ञापनं साक्ष्यमिति स्थितम् । तत्र नारदः ।
"तषामपि न बालः स्यान्नैको न स्त्री न दुष्ट-
कृत् ।
न बान्धवो न चारतिब्रूयुस्ते कार्य्यमन्यथा ॥"
कार्य्यं सदपि अन्यथा तद्विरुद्धत्वेन । एवञ्च
यदि परमधार्म्मिकत्वेन बान्धवादीनामपि सत्य-
वादित्वं निश्चीयते तदा तेऽपि साक्षिणो भवितु-

"उभयानुमतः साक्षी भवेदेकोऽपि
धर्म्मवित् ।"
उभयानुमतत्वं धर्म्मवित्त्वञ्च नियतं तन्त्रम्
।
तदाह विष्णुः ।
अभिमतगुणसम्पन्नस्तूभयानु
मतस्त्वेकोऽपि इति । अतएव
श्रोत्रियमप्येकं
निषेधयति बृहस्पतिः ।
"नव सप्त पञ्च वा स्युश्चत्वारस्त्रय एव वा
।
उभौ तु श्रोत्रियौ ग्राह्यौ नैकं पृच्छेत्
कदाचन ॥"
एको मिलितगुणसम्पन्नः प्रधानकल्पः ।
तदभावे
उभयानुमतमात्रोऽपिग्राह्यस्तदाह नारदः
।
"उभयानुमतो यः स्याद्द्वयोर्व्विवदमानयोः
।
भवत्येकोऽपि साक्षित्वे प्रष्टव्यः स्यात् स
संसदि ॥"
उभयानुमत एकोऽलुब्धत्वादिना
सर्व्वजनप्रसिद्ध-
श्चेत्तदा साक्षित्वे संसदि बहुजनसन्निधौ
प्रष्टव्यः । तथात्वे
स्नेहवैरादिसत्त्वेऽप्यकीर्त्ति-
भयात् सत्याभिधानसम्भवादित्याशयः।
विचा-
रस्य तत्त्वनिर्णयार्थत्वात् । तदाह मनुः ।
"एकोऽप्यलुब्धः साक्षी स्यात् बह्व्यः
शुच्योऽपि
न स्त्रियः ।
स्त्रीबुद्धेरस्थिरत्वात्तु दोषैश्चान्येऽपि ये
वृताः ॥"
एकोऽलुब्धस्तु साक्षी स्यादिति
कुल्लूकभट्टधृत-
पाठः । एको लुब्धस्त्वसाक्षी स्यादिति
जीमूत-
वाहनधृतपाठस्तु न युक्तः । लुब्धाश्चेद्
बहवो-
ऽप्यसाक्षिणो भवितुमर्हन्तीति ।
एकपदस्य

मित्रारिभावादिनिरूपणेनैवोपपत्त्यनुपपत्तिभ्या-
मालोचनीयं न तु वाक्यमात्रादिति व्यवहार-
मातृका ॥ अतएव कात्यायनः ।
"ऋणादिषु परीक्षेत साक्षिणः स्थिरकर्म्मसु ।
साहसात्ययिके नैव परीक्षा कुत्रचित् स्मृता ॥"
इति ॥ * ॥ श्रोत्रियादीनामसाक्ष्यमाहनारदः ।
"श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजिता नराः ।
वचनात्तेष्वसाक्षित्वं नात्र हेतुरुदाहृतः ॥"
वचनादिति श्रोत्रियत्वादिरूपाभिधानात्न च
तत्रान्यो हेतुरित्यर्थः । तथा च स्वीयवैदिककर्म्म-
करणव्यग्रतया परकीयकार्य्ये विस्मरणसम्भवात्
साक्षित्वरूपलधुकार्य्यनियोगे तच्छापभयेन व्यव-
हारद्रष्टारोऽपि तान्न पृच्छन्तीति तत्साक्ष्य-
करणानर्थक्याच्च न ते साक्षिणः कर्त्तव्याः ।
किन्त्व-
कृताः स्वयं साक्षिणो भवन्त्येव । उभौ तु श्रोत्रियौ
स्यातामिति स्मृतेः । वृद्धस्यासाक्षित्वं वृद्धत्वादेव
म्लानेन्द्रियत्वादित्यर्थः ॥ * ॥ मनुः ।
"स्त्रीणां साक्ष्यं स्त्रियः कुर्य्युर्द्विजानां सदृशा
द्विजाः ।
शूद्राश्च सन्तः शूद्राणामन्त्यानामन्त्ययोनयः॥
अन्तर्वेश्मन्यरण्ये वा शरीरस्यात्ययेऽपि च ।
स्त्रियाप्यसम्भवे कार्य्यं बालेन स्थविरेण वा ।
शिष्येण बन्धुना वापि दासेन भृतकेन वा ॥ * ॥
देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं द्विजान् ।
उदङ्मुखान् प्राङ्मुखान् वा पूर्व्वाह्णे वै शुचिः
शुचीन् ॥
ब्रूहीति ब्राह्मणं पृच्छेत् सत्यं ब्रूहीति पार्थिवम् ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्व्वैस्तु पातकैः ॥"
गोबीजकाञ्चनापहारे यत् पापं तत्त्वानृताभि-
धाने स्यादिति वैश्यम् । एतत् साक्ष्यानृताभि-
धाने भवान् सर्व्वैः पातकैः सम्बध्यते इत्युक्त्वा
शूद्रञ्च पृच्छेत् ।
"ब्रह्मघ्ना ये स्मृता लोके ये च स्त्रीबालघातिनः ।
मित्रद्रुहः कृतघ्नाश्च ते ते स्युर्व्वदतो मृषा ॥"
इति मनूक्तं दूषणम् ॥ सत्फलञ्च ।
"अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते ॥"
इति मनुनारदोक्तं श्रावयेत् ॥ * ॥ याज्ञवल्क्यः ।
"न ददाति हि यः साक्ष्यं जानन्नपि नराधमः ।
स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि ॥"
कात्यायनः ।

मर्हन्तीति। तेषां साक्ष्यविधायकं वक्ष्यमाण-
मनुवचनमपि एतादृग्विषयम्॥ * ॥ याज्ञवल्क्यः
।
"त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्त्तक्रिया-
रताः ।
यथाजाति यथावर्णं सर्व्वे सर्व्वेष वा स्मृताः ॥"
त्रयोऽवरा निकृष्टा येषां ते त्र्यवराः त्रिभ्यो
अन्यूना भवन्तीत्यर्थः । यथेति यो यज्जातीय-
स्तस्य तज्जातीयः साक्षी । स्त्रीणां स्त्रियोऽन्त्य-
जानामन्त्यजाः । यथावर्णं ब्राह्मणानां ब्राह्मणाः
क्षत्त्रियादीनां क्षत्त्रियादयः । अभावे तु तत्त-
द्भेदं विना सर्व्व एव ॥ * ॥ त्र्यवरा इत्यस्याप-
वादमाह स एव ।

व्यर्थतापत्तेः । भवतु वा तत्पाठः
तथाप्येक
इत्यनुरोधात्
तन्निषेधमुखेनालुब्धस्यैकस्य अनु-
मतिसत्त्वे धर्म्मवित्त्वमन्तरेण साक्षित्वं
बोध्यम् ।
इत्यर्थतो न विरोधः । अतएव
विश्वरूपप्रभृ-
तीनां उभयानुमत एक एव साक्षीति
व्याख्याने
धर्म्मविदिति नोक्तम् । दोषैः स्तेयादिभिः
। तथा
च नारदः ।
"स्तेनाः साहसिका धूर्त्ताः कितवा
योधकाश्च
ये ।
असाक्षिणस्तु ते दुष्टास्तषु सत्यं न विद्यते
॥"
कितवा द्यतकराः ॥ * ॥ अपवादमाह
उशनाः ।
"दासोऽन्धो वधिरः कुष्ठी स्त्री बालः
स्थविरादयः ।
एतेऽप्यनभिसम्बन्धाः साहसे साक्षिणो
मताः ॥"
स्थविरो ग्लानेन्द्रियग्रामः । आदिशब्दात्
कितवादयः । उभयानुमताभावे
शुचिक्रियत्वादि-
गुणयुक्तश्चैको ग्राह्यः । तथा च व्यासः ।
"शुचिक्रियश्च धर्म्मज्ञो
योऽन्यत्राप्यनभूतवाक् ।
प्रमाणमेकोऽपि भवेत् साहसेषु विशेषतः
॥"
अनुभूतवाक् स्थानान्तरे सत्यत्वेनेति ।
भवदेव-
भट्टीऽप्येवम् । कात्यायनः ।
"अभ्यन्तरस्तु निःक्षेपे साक्ष्यमेकोऽपि
दापयेत् ।
अर्थिना प्रहितः साक्षी भवेदेकोऽपि
याचिते ॥
संस्कृतं येन यत् पण्यं तत्तनैव विभावयेत्
।
एक एव प्रमाणं स विवादे परिकीर्त्तितः ॥"
संस्कृतं गठितम् । पण्यं कुण्डलादि ।
विष्णुः ।

"अवीचिनरके वर्षं वसेयुः कूटसाक्षिणः ।"
याज्ञवल्क्यः ।
"सत्यां प्रतिज्ञां यस्योचुः साक्षिणः स जयी भवेत्
।
अन्यथा वादिनो यस्य ध्रुवस्तस्य पराजयः ॥
वर्णानां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् ।
तत्पावनाय निर्व्वाप्यश्चरुः सारस्वतो द्विजैः ॥"
गौतमः । नानृतवचने दोषो जीवनञ्चेत्तदधीनम् ।
न तु पापीयसो जीवनम् । इति ।
"द्वैधे बहूनां वचनं समेषु गुणिनां तथा ।
गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तराः ॥"
तेषामिति शेषः ॥ * ॥ यत्तु ।

| | | |
|---|---|---|
| | स्तेयसाहसवाग्दण्डपारुष्यसंग्रहणेषु साक्षिणो न परीक्षा इति । स्तेयपरदारगमनादिकार्य्याणां निह्नवेनैव क्रियमाणत्वात् दैवादेव परं साक्षिणो भवन्तीति न परीक्षा इत्युक्तम् । तेषां वाक्यन्तु | |

"साक्षिणां लिखितानाञ्च निर्द्दिष्टानाञ्च वादि-
नाम् ।
तेषामेकोऽन्यथावादी भेदात् सर्व्वेऽप्यसाक्षिणः
॥"
इति कात्यायनवचनं तत् त्रयाणां तुल्यरूपाणां
साक्षिणां मध्ये एकस्याप्यन्यथावादे अपरस्य
तत्तुल्यस्य सत्प्रतिपक्षतया तृतीयस्य किञ्चिद्वा-
दित्वे तत्र भेदात् परस्परविरुद्धार्थाभिधाने
भेदात् साक्षिभ्यो न निर्णयः इति परम् ॥ * ॥
बृहस्पतिः । साक्षिद्वैधे कर्म्मनिष्ठानां ग्रहण-
माह । गुणिद्वैधे क्रियावतामित्यन्येन । तथा ।
"साक्षिणोऽर्थिसमुद्दिष्टान् सत्सु दोषेषु दोषयेत् ।
अदुष्टं दूययन् वादी तत्समं दण्डमर्हति ॥" इति ।
तत्समं विवादसमम् । सभासदादिविदित-
साक्षिदूषणमेव ग्राह्यं न तु त्र्यवरादिसाक्षिभिः
प्रतिपाद्यम् । अनवस्थापातात् । इत्याह नारदः ।
"सभासदां प्रसिद्धं यल्लोकसिद्धमथापि वा ।
साक्षिणां दूषणं ग्राह्यमसाध्यं दोषवर्ज्जनात् ॥
अन्यैश्च साक्षिभिः साध्ये दूषणे पूर्व्वसाक्षिणाम् ।
अनवस्था भवेद्दोषस्तेषामप्यन्यसम्भवात् ॥"
असाध्यं साधनानर्हम् । सिद्धत्वाद्दोषवर्जनात् ।
अनवस्थाविरहात् । तस्मात् प्रसिद्धदूषणमेव
ग्राह्यम् ॥ * ॥ दूषणमाह कात्यायनः ।
"बालोऽज्ञानादसत्यात् स्त्री पापाभ्यासाच्च कूट-
कृत् ।
विब्रूयात् वान्धवः स्नेहात् वैरनिर्यातनादरिः ॥
यः साक्षी नैव निर्द्दिष्टो नाभूतो नैव दर्शितः ।
ब्रूयान्मिथ्येति तथ्यं वा दण्ड्यः सोऽपि नराधमः
॥"
कात्यायनः ।
"क्रिया न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु ।
लेख्ये च सति वादेषु न दिव्यं न च साक्षिणः ॥
समत्वं साक्षिणां यत्र दिव्यैस्तत्र विशोधयेत् ॥"
एतत् संशयानुच्छेदे बोध्यम् । याज्ञवल्क्यः ।
"निह्नुते लिखितानेकमेकदेशे विभावितः ।
दाप्यः सर्व्वान्नृपेणार्थान्न ग्राह्यस्त्वनिवेदितः ॥"
यो लिखितानेकं सुवर्णादिकं अपलपति स एक-
द्रव्ये साक्ष्यादिभिर्व्विभावितः सन् सर्व्वान्
दद्यात् ।
कात्यायनः ।
"यद्येकदेशप्राप्तापि क्रिया विद्येत मानुषी ।
सा ग्राह्या न तु पूर्णापि दैविकी वदतां नृणाम् ॥"
जानामीति उत्तरवादिना साक्ष्यादिभिर्याविद्धनं
प्रतिपादयति तावदेव पुत्त्रेण दातव्यम् । एवमेव
विश्वरूपजीमूतवाहनप्रभृतयः॥ * ॥ कात्यायनः
।
"अनुमानाद्वरः साक्षी साक्षिभ्यो लिखितं गुरु ।
अनिरुद्धा त्रिपुरुषी भक्तिस्तेभ्यो गरीयसी ॥"
अनुमानं प्रत्यासङ्कलितम् । तदाह मनुः ।
"बाह्यैर्व्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम् ।
स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च ॥"
स्वरो गद्गदादिः । वर्णोऽस्वाभाविकः । इङ्गितं
स्वेदवेपथुरोमाञ्चादि । आकारो विकृतः ।
चक्षुषा कातरेण । चेष्टितेन स्थानत्यागादिना ।
एषाञ्चान्यथासिद्धेर्द्दुर्निरूप्यत्वादेभ्यः साक्षी बल-
वान् इत्यर्थः । सुखनिरूप्यत्वे तु याज्ञवल्क्यः ।
"देशाद्देशान्तरं याति सृक्कणी परिलेढि च ।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥
परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते ।
वाक् चक्षुः पूजयति नो तथौष्ठौ निर्भु जत्यपि ॥
स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्म्मभिः ।
अभियोगे च साक्ष्ये च स दुष्टः परिकीर्त्तितः ॥"
न परोक्तां वाचं प्रतिवचनेन पूजयति । तथौष्ठौ
चक्षुश्च परकीयवीक्षणेन निर्भुजति कुटिली-
करोति यदा मनोवाक्कायकर्म्मभिः स्वभावात्
पूर्व्वोक्तां यथायोग्यां विकृतिं गच्छेत्तदा स दुष्ट
इत्यर्थः । अतएव श्रीरामायणे ।
"आकारश्छाद्यमानोऽपिन शक्योऽसौ निगूहि-
तुम् ।
बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम् ॥"
आकारो देहधर्म्मः मुखाप्रसादवैवर्ण्यरूपः ॥
नारदः ।
"सुदीर्घेणापि कालेन लिखितं सिद्धिमाप्नुयात् ।
संजानन्नात्मनो लेख्यमजानंस्तत्तु लेखयेत् ॥"
सुदीर्घेणेति संस्कारोद्बोधकलिखनसत्त्वादयं
चिरेणापि साक्ष्यं दातुं शक्नोति इत्यर्थः ॥ * ॥
लिपिज्ञं स्वहस्तेन लेखयेत् तदज्ञं परहस्तेनेत्याह
व्यासः ।
"अलिपिज्ञो ऋणी यः स्यात् लेखयेत् स्वमतन्तु
सः ।
साक्षी वा साक्षिणान्येन सर्व्वसाक्षिसमीपगः ॥"
बृहस्पतिः ।
"मूषितं घातितं यच्च सीमायाश्च समन्ततः ।
अकृतोऽपि भवेत् साक्षी ग्रामस्तत्र न संशयः ॥"
प्रक्रान्ते साहसे वापि पारुष्ये दण्डवाचिके
।
बलोद्भवेषु कार्य्येषु साक्षिणो दिव्यमेव च ॥"
बृहस्पतिः ।
"लेख्यं वा साक्षिणो वापि विवादे यस्य
दूषिताः ।
तस्य कार्य्यं न सिध्येत यावत्तन्न
विशोधयेत् ॥"
तल्लेख्यसाक्षिरूपप्रमाणम्॥ * ॥
लेख्यशोधन-
माह । कात्यायनः ।
"सहस्तलेख्यसन्देहे जीवतो वा मृतस्य च
।
तत् स्वहस्तकृतैरन्यैः पत्रैस्तल्लेख्यनिर्ण्णयः
॥"
तथा ।
"समवेतैश्च यद्दृष्टं वक्तव्यं तत्तथैव च ।
विभिन्नेनैव कार्य्ये तु तद्वक्तव्यं पृथक् पृथक्
॥
नापृष्टैरनियुक्तैर्वा समं सत्यं प्रयत्नतः ।
वक्तव्यं साक्षिभिः साक्ष्यं
विवादस्थानमागतैः ॥
अनुद्विग्नेन चित्तेन दृष्टं सम्यग्विदा तु यत् ।
प्रत्यक्षं तत स्मृतं कार्य्यं साक्ष्यं साक्षी तु
तद्व-
देत् ॥"
नारदः ।
"यः परार्थेऽपहरति स्वां वाचं पुरुषाधमः ।
आत्मार्थे किं न कुर्य्यात् स पापी
नरकनिर्भयः ॥
अथर्वि वाचि नियता वाङ्मूला वाग्विनिःसृता
।
यस्तु तांस्तेनयेद्वाचं स सर्व्वस्तेयकृन्नरः
॥"
बौधायनः ।
"पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥
हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं
वदन् ।
सर्व्वं भूम्यनृते हन्ति साक्ष्ये साक्षी मृषा
वदन् ॥"
बृहस्पतिः ।

वदतां विवदतामित्यविशेषेण दर्शयति । पूर्णापि दैविकी समग्रविषयिकापि न ग्राह्या । तेनैक-देशप्रतिपादिकया मानुष्या क्रियया समस्तसा-ध्यसिद्धिरिति ।
“साध्यार्थांशे निगदिते साक्षिभिः सफलं भवेत् ।
स्त्रीसङ्गे साहसे चौर्य्ये यत् साध्यं परिकल्पि-तम् ॥”
इति कात्यायनवचनं तत्विषयप्रदर्शकम् । ऋण-निक्षेपाद्यपह्नवेऽपि योज्यमिति ॥ * ॥ यत्तु ।
“अनेकार्थाभियोगे तु यावत् संशोधयेद्धनी ।
साक्षिभिस्तावद्वेवासौ लभते साधितं धनम् ॥”
तदृणाद्यनभिज्ञपुत्रादिविषयकम्। तथा हि ।
नानाविधपित्रर्णाद्यभियुक्तेनाजानता नाहं अकृता अपि साक्षिणो भवन्तीत्याहतुर्म्मनु-कात्यायनौ ।
“अन्ये पुनरनिर्द्दिष्टाः साक्षिणः समुदाहृताः ।
ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् ॥
कार्य्येष्वभ्यन्तरो यः स्यादर्थिना प्रहितश्च यः ।
कुल्याः कुलविवादेषु भवेयुस्तेऽपि साक्षिणः ॥”
स्मृतिः ।
“दत्तादत्तेऽथ भृत्यानां स्वामिनां निर्गमे सति ।
विक्रीयादानसम्बन्धे क्रीत्वा धनमनिच्छति ॥
द्यूते समाह्वये चैव विवादे समुपस्थिते ।
साक्षिणः साधनं प्रोक्तं न दिव्यं न च लेख्यकम् ॥
“यस्याशेषं प्रतिज्ञातं साक्षिभिः प्रतिपादितम् ।
स जयी स्यादन्यथा तु साध्यार्थं न समाप्नुयात् ॥”
याज्ञवल्क्यः ।
“उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तराः ।
द्विगुणा वान्यथा ब्रुयुः कूटाः स्युः पूर्व्व-साक्षिणः ॥”
अन्यथा पूर्व्वविपरीतार्थप्रकारेण । कूटा अना-देयवचनाः । तथा, --
“यः साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तमसावृतः ।
स दाप्योऽष्टगुणं दण्डंब्राह्मणञ्च विवासयेत् ॥”
त्वमन्येभ्यः साक्ष्यं श्रावयेति वादिना प्रयुक्तो यः श्रावितः कारितद्वयात् पदसिद्धिः । एवम्भूतो-ऽपि सभायां निगदकाले साक्ष्यं निह्नुते यस्तस्याष्ट-गुणो दण्डः । इति व्यवहारतत्त्वम् ॥ (त्रि, दृश्यः इति श्रीधरस्वामी ॥ यथा, भागवते । ५ ११ । ७ ।
“तावानयं व्यवहारः सदाविः क्षेत्रज्ञसाक्ष्यो भवति स्थूलसूक्ष्मः ॥”)

**साखेयः**, त्रि, (सख्युरिदम् । सखि + “बुञ्छण्-कटजिति ।” ४ । २ । ८० । इति ढञ् ।) सखि-सम्बन्धी । इति सिद्धान्तकौमुदी ॥

**साख्यं**, क्ली, (सख्युर्भावः कर्म्म वा । सखि + ष्यञ् ।) सख्यम् । इति धनञ्जयकोषः ॥

**सागरः**, पुं, (सगरस्य राज्ञोऽयमिति । सगर +

अण् ।) समुद्रः । इत्यमरः । १ । १०
। १ ॥
सगरेणावतारितत्वात् तस्यायमिति
ष्णे सागरो
दन्त्यादिः । क्षीरोदादिष्वप्युपमया
सागरव्यप-
देशः इति भट्टाः । इति भरतः ॥ स तु
सप्त-
विधः । यथा, --
"लवणः क्षीरसंज्ञश्च घृतोदो
दधिसंज्ञकः ।
सुरोदेक्षुरसोदौ च स्वादूदः सप्तमो
भवेत् ॥
चत्वारः सागराः ख्याताः
पुष्करिण्यश्च ताः
स्मृताः ॥"
इत्याद्य वह्निपुराणे गणभेदनामाध्यायः
॥ * ॥
(सगरस्यापत्यं पुमानिति । सगर +
अण् ।
सगरपुत्त्रः । यथा, महाभारते । ३ ।
१०७ । ७ ।
"वध्यमानास्ततो लोकाः
सागरैर्मन्दबुद्धिभिः ।
ब्रह्माणं शरणं जग्मुः सहिताः
सर्व्वदैवतैः ॥")
मृगविशेषः । इति शब्दचन्द्रिका ॥
दशपद्म-
संख्या । यथा, --
"विन्दः खर्व्वो निखर्व्वश्च शङ्खपद्मौ च
सागरः ॥"
इति ब्रह्माण्डपुराणम् ॥
(सागरस्येदमिति । सागरसम्बन्धिनि,
त्रि ।
यथा, हरिवंशे । ५३ । ३८ ।
"आधत्स्व सरितां नाथ त्यक्त्वेमां
सागरीं
तनुम् ॥")

**साङ्कृतिः**, पुं, मुनिविशेषः । स तु वैयाघ्रपद्यगोत्रस्य

प्रवरः । यथा, --
"वैयाघ्रपद्यगोत्राय साङ्कृतिप्रवराय च ।
अपुत्त्राय ददाम्येतत् सलिलं
भीष्मवर्म्मणे ॥"
इति तिथ्यादितत्त्वम् ॥

**साङ्क्षेपिकः**, त्रि, (सङ्क्षेपाय हितः । सङ्क्षेप + ठञ् ।)

संक्षिप्तः । इति सिद्धान्तकौमुदी ॥
(यथा,
मनुटीकायां कुल्लूकः । १२ । ३४ ।
"इदं वक्ष्यमाणं साङ्क्षेपिकं क्रमेण लक्षणं
ज्ञात-
व्यम् ॥") संक्षेपकारकः । संक्षेपशब्दात्
ष्णिक-
प्रत्ययनिष्पन्नः ॥

**साङ्ख्यः**, पुं, कपिलमुनिकृतदर्शनशास्त्रविशेषः ।

तत्पर्य्यायः । कापिलः २ । इति
हेमचन्द्रः ॥
तथा च ।
"साङ्ख्यं कपिलमुनिना प्रोक्तं
संसारविमुक्तिकारणं हि ।
यत्रैताः सप्ततिरार्य्या
भाष्यं चात्र गौडपादकृतम् ॥
एतत् पवित्रमग्र्यं
मुनिरासुरयेऽनुकम्पया प्रददौ ।
आसुरिरपि पञ्चशिखाय
तेन च बहुधा कृतं तन्त्रम् ॥
शिष्यपरम्परयागतमीश्वरकृष्णेन
चैतदार्य्याभिः ।
संक्षिप्तमार्य्यमतिना सम्यग्विज्ञाय
सिद्धान्तम् ॥
सप्तत्यां किल येऽर्था-
स्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य ।
आख्यायिका विरहिताः
परवादविवर्ज्जिताश्चापि ॥"
इति साङ्ख्यप्रवचनभाष्यम् ॥

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥
न जायते म्रियते वा कदाचि-
न्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥
वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ ! कं घातयति हन्ति कम् ॥
वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥
नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्व्वगतः स्थाणुरचलोऽयं सनातनः ॥
अव्यक्तोऽयमचिन्त्योऽयमविकार्य्योऽयमुच्यते।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥
अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो ! नैनं शोचितुमर्हसि ॥
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्य्येऽर्थे न त्वं शोचितुमर्हसि ॥"
इत्यादि श्रीभगवद्गीतायां साङ्ख्ययोगे । २ ।
११ -- ३० ॥ * ॥

**साङ्गमः**, पुं, (सङ्गम एव । स्वार्थे अण् ।) सङ्गमः ।

इत्यमरटीकायां भरतः । ३ । २ । १९ ॥

**साङ्ग्रामिकः**, पुं, (संग्रामे साधुः । संग्राम +

"गुडादिभ्यष्ठञ् ।" ४ । ४ । १०३ । इति
ठञ् ।) सेनापतिः । सङ्ग्रामकुशले, त्रि । इति
सिद्धान्तकौमुदी ॥ (सङ्ग्रामसम्बन्धिनि च त्रि ।
यथा, महाभारते । १ । २ । २३२ ।
"ते तस्य वचनं श्रुत्वा मन्त्रयित्वा च यद्धितम् ।
साङ्ग्रामिकं ततः सर्व्वं सज्जं चक्रुः परन्तपाः
॥")

**साङ्गुखी**, स्त्री, (सङ्गुखाय हिता सङ्गुख +

अण् । ङीप् ।) सायाह्नव्यापिनी तिथिः ।
यथा, --

**सागरगामिनी**, स्त्री, (सागरं गच्छतीति । गम + णिनिः । ङीप् ।) नदी । इति त्रिकाण्डशेषः ॥ (वाच्यलिङ्गेऽपि दृश्यते । यथा, रघुः । ६ । ५२ ।
"नृपं तमावर्त्तमनोज्ञनाभिः
सा व्यत्यगादन्यबधूर्भवित्री ।
महीधरं मार्गवशादुपेतं
स्रोतोवहा सागरगामिनीव ॥")
सूक्ष्मैला । इति राजनिर्घण्टः ॥

**सागरनेमिः**, स्त्री, (सागरः नेमिरिव यस्याः ।) पृथिवी । इति हेमचन्द्रः ॥

**सागरमेखला**, स्त्री, (सागरः मेखलेव यस्याः ।) पृथिवी । इति हेमचन्द्रः ॥ (वाच्यलिङ्गेऽपि दृश्यते । यथा, महाभारते । ३ । १०७ । ६४ ।
"अंशुमानपि धर्म्मात्मा महीं
सागरमेखलाम् ।
प्रशशास महाराज ! यथैवास्य
पितामहः ॥")

**सागराम्बरा**, स्त्री, (सागरः अम्बरं वस्त्रमिव यस्याः ।) पृथिवी । इति हेमचन्द्रः ॥ (यथा, रघुः । ३ । ९ ।
"निधानगर्भामिव सागराम्बरां
शमीमिवाभ्यन्तरलीनपावकाम्।
नदीमिवान्तःसलिलां सरस्वतीं
नृपः ससत्त्वां महिषीममन्यत ॥")

**सागरालयः**, पुं, (सागरः आलयो यस्य ।) वरुणः । इति शब्दमाला ॥

**सागरोत्थं**, क्ली, (सागरादुत्तिष्ठतीति । उत् + स्था + कः ।) समुद्रलवणम् । इति राजनिर्घण्टः ॥

**साङ्कलं**, त्रि, (सङ्कल + "सङ्कलादिभ्यश्च ।" ४ ।

**साङ्ख्ययोगः**, पुं, (साङ्ख्योक्तो योगः ।) ज्ञानयोगः । स च ब्रह्मविद्या । यथा, --
"द्वितीये शोकसन्तप्तमर्ज्जुनं ब्रह्मविद्यया ।
प्रतिबोध्य हरिश्चक्रे स्थितप्रज्ञस्य लक्षणम् ॥"
इति गीताटीकायां श्रीधरस्वामी । २ । १ ॥
तद्योगो यथा, --
श्रीभगवानुवाच ।
"अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥
न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्व्वे वयमतः परम् ॥
देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥
मात्रास्पर्शास्तु कौन्तेय !
शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्यास्तांतितिक्षस्व भारत ॥
यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥
नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि
दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ।
अविनाशि तु तद्विद्धि येन सर्व्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित् कर्त्तुमर्हति ॥
अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्मात् युद्धस्व भारत ॥

"पञ्चमी सप्तमी चैव दशमी च त्रयोदशी ।
प्रतिपन्नवमी चैव कर्त्तव्या साङ्कुखी तिथिः ॥
इति पैठीनसिवचनस्य तु ।
'साङ्कुख्यं नाम सायाह्नव्यापिनी दृश्यते यदा ।'
इति स्कन्दपुराणेन सायाह्नव्यापितिथेः साङ्कुख्य-विधानेन पूजादावनवकाशात्उपवासपरत्वम् ।
सायाह्नव्यापित्वमपि मुहूर्त्तान्यूनत्वेन ज्ञेयम् ।"
इति तिथ्यादितत्त्वम् ॥

**साचि**, व्य, (सच + इण् ।) तिर्य्यगर्थः । तत्पर्य्यायः । तिरः २ । इत्यमरः । ३ । ४ । ६ ॥ (यथा, किराते । १० । ५७ ।
"सविनयमपराभिसृत्य साचि
स्मितसुभगैकलसत्कपोललक्ष्मीः ॥")

**साचिव्यं**, क्ली, (सचिव + ष्यञ् ।) सचिवस्य भावः । सचिवशब्दात् भावे ष्ण्यप्रत्ययेन निष्पन्नम् ॥ (यथा, रामायणे । ५ । ५ । १ ।

| २ । ७५ । इति अञ् ।) सङ्कलेन निर्वृत्तम् । सङ्कलनाज्जातम् । इति सिद्धान्तकौमुदी ॥ | | |
|---|---|---|

"चन्द्रोऽपि साचिव्यमिवास्य कुर्व्वं-
स्तारागणैर्मध्यगतो विराजन् ।
ज्योत्स्नावितानेन निपत्य लोका-
नुत्तिष्ठतेऽनेकसहस्ररश्मिः ॥")

**साचिवाटिका**, स्त्री, (साचि यथा तथा वटति

वेष्टयतीति । वट वेष्टने + ण्वुल् । टापि
अत
इत्वम् ।) श्वेतपुनर्नवा । इति रत्नमाला ॥

**साचीकृतं**, त्रि, (असाचि साचि कृतम् । अभूत-

तद्भावे च्विः ।) वक्रीकृतम् । इति
सिद्धान्त-
कौमुदी ॥ (यथा, रघुः । ६ । १४ ।
"प्रालम्बमुत्कृष्य यथावकाशं
निनाय साचीकृतचारुवक्त्रः ॥")

**साञ्जनः**, पुं, (अञ्जनेन तद्वच्छरीरेण सह वर्त्त-

मानः ।) कृकलासः । इति शब्दचन्द्रिका
॥
(अञ्जनविशिष्टे, त्रि ॥)

**साट**, त् क प्रकाशने । इति कविकल्पद्रुमः ॥

(अदन्तचुरा०-पर०-अक०-सेट् ।)
द्वितीय-
स्वरयुक्तसकारादिरयम् । अससाटत् ।
इति
दुर्गादासः ॥

**सात्**, क्ली, (सात सुखे + क्विप् ।) ब्रह्म । इति

केचित् ॥

**सात**, क सुखे । इति कविकल्पद्रुमः ॥ (चुरा०-

पर०-अक०-सेट् ।) दन्त्यादिः । सातयः
।
सौत्रधातुरयम् । इति दुर्गादासः ॥

**सातं**, क्ली, (सात सुखे + अच् ।) सुखम् । इत्य-

मरटीकायां भरतः ॥ दत्तम् । नष्टम् । षण-
धातोः षोधातोश्च क्तप्रत्ययेन निष्पन्नम् ॥

**सातयः**, त्रि, (सातयतीति । सात सुखे + "अनुप-

क्तिन् । "ऊति-यूति-जूति-सातीति ।" ३
। ३ । ९७ ।
इति इत्वाभावो निपात्यते ।) अवसानम् ।
दानम् । तीव्रवेदना । इत्यमरभरतौ ॥
(संभज-
नम् । इति ऋग्भाष्ये सायणः ॥ यथा,
ऋग्वेदे ।
१० । १४३ । ५ ।
"यातमच्छा पतत्रिभिर्नासत्या सातये
कृतम् ॥")

**सातिसारः**, त्रि, (अतिसारेण सह वर्त्तमानः ।)

अतिसाररोगयुक्तः । तत्पर्य्यायः । अति-
सारकी २ । इत्यमरः । २ । ४ । ५९ ॥

**सातीलकः**, पुं, (सतीलक एव । स्वार्थे अण् ।)

सतीलकः । इत्यमरटीकायां रायमुकुटः ।
२ ।
९ । १६ ॥

**सात्त्व(त्व)तः**, पुं, (सात्त्वतस्यापत्यं पुमानिति । सात्त्वत

+ अञ् ।) बलदेवः । इति हेमचन्द्रः ॥
(कृष्णः ।
यथा, महाभारते । १ । २१९ । १२ ।
"ततस्तत्र महाबाहुः शयानः शयने शुभे ।
आपगानां वनानाञ्च कथयामास सात्त्वते
॥"
यादवमात्रे । यथा, तत्रैव । १ । २२२ । ३
।
"अर्थलुब्धान् न वः पार्थो मन्यते
सात्त्वतान्
सदा ।
स्वयंवरमनाधृष्यं मन्यते चापि पाण्डवः
॥" * ॥
सत्त्वमेव सात्त्वं तत् तनोतीति । तन + डः
।)
विष्णुः । इति त्रिकाण्डशेषः ॥ (सच्छब्देन
सत्त्वमूर्त्तिर्भगवान् । स उपास्यतया विद्यते
ऽस्येति । मतुप् । ततः स्वार्थे अण् ।)
विष्णु-

"वैश्यात्तु जायते व्रात्यात् सुधन्वाचार्य्य
एवच ।
कारूषश्च विजन्मा च मैत्रः सात्त्वत एवच
॥")

**सात्त्व(त्व)ताः**, पुं, भूम्नि, देशभेदः । यथा, --

"यदवस्तु दशार्हाः स्युः सात्त्वताः
कुकुराश्च ते ।"
इति त्रिकाण्डशेषः ॥

**सात्त्व(त्व)ती**, स्त्री, नाटकवृत्तिविशेषः । यथा, --

"अभिनेयप्रकाराः स्युर्भाषाः षट् संस्कृता-
दिकाः ।
भारती सात्त्वती कैशिक्यारभट्यौ च
वृत्तयः ॥"
इति हेमचन्द्रः ॥
(यथा, शृङ्गारतिलके । ३ । ४२ -- ४३ ।
"हर्षप्रधानाधिकसत्त्ववृत्ति-
स्त्यागोत्तरोदारवचोमनोज्ञा।
आश्चर्य्यसम्पत्सुभगा च या स्या-
त्सा सात्त्वती नाम मतात्र वृत्तिः ॥
नातिगूढार्थसम्पत्तिः श्रव्यशब्दमनोरमा।
वीरे रौद्रेऽद्भुते शान्ते वृत्तिरेषा मता यथा ॥
लक्ष्म्यास्त्वं जनको निधिश्च पयसां
निःशेष-
रत्नाकरो
मर्यादानिरतस्त्वमेव जलधे ! ब्रूतेऽत्र
कोऽन्या-
दृशम् ।
किं त्वेकस्य गृहं गतस्य बडवावह्नेः सदा
तृष्णया
क्लान्तस्योदरपूरणेऽपि न सहो
यत्तन्मनाङ्गध्य-
मम् ॥
स्फारितोत्कटकठोरतारका-
कीर्णवह्निकणसंततिः क्रुधा ।
दुर्निमित्ततडिदाकृतिर्बभौ
दृष्टिरिष्टसमरांशुमालिनः॥
अत्यद्भुतं नराधिप तव
कीर्तिर्धवलयन्त्यऽपि

सर्गात् लिम्पविन्देति ।” ३ । १ । १३८ । इति
शः ।) सुखजनकः । सात क सुखे इत्यस्मात्
ञौ शप्रत्ययेन निष्पन्नः । इति मुग्धबोध-
टीकायां दुर्गादासः ॥

**सातला**, स्त्री, (सातं सर्पविषादिनाशं लातीति ।
ला + कः ।) चर्म्मकषा । इत्यमरः । २ । ४ । १४३ ॥
क्षुपविशेषः । स तु सेहुण्डभेदः । तत्पर्य्यायः ।
सप्तला २ सारी ३ बिन्दुला ४ विमला ५
अमला ६ बहुफेना ७ चर्म्मकषा ८ फेना ९
दीप्ता १० विषाणिका ११ स्वर्णपुष्पी १२
पत्रघना १३ । अस्या गुणाः । कफपित्तघ्नत्वम् ।
लघुत्वम् । तिक्तत्वम् । कषायत्वम् । विसर्पविष-
विस्फोटव्रणशोफनाशित्वञ्च । इति राजनि-
र्घण्टः ॥

**सातवाहनः**, पुं, (सातः वाहनो यस्य ।) शालि-
वाहनराजः । इति हेमचन्द्रः ॥ (सातनाम-
केन गुह्यकेनोढत्वादस्य तथा नाम । यथा,
कथासरित्सागरे । ६ । १०७ -- १०८ ।
“इत्युक्त्वान्तर्हिते तस्मिन् सातनामनि गुह्यके ।
स राजा तं समादाय बालं प्रत्याययौ गृहम् ॥
सातेन यस्मादूढोऽभूत्तस्मात्तं सातवाहनम् ।
नाम्ना चकार कालेन राज्ये चैनं न्यवेशयत् ॥”)

**सातिः**, स्त्री, (सन + क्तिन् । “जनसनखनामिति ।”
६ । ४ । ४२ । इति आत्वम् । यद्वा, सनु दाने +
भक्तविशेषः । यथा, --
“सत्त्वं सत्त्वाश्रयं सत्त्वगुणं सेवेत केशवम् ।
योऽनन्यत्वेन मनसा सात्त्वतः समुदाहृतः ॥
विहाय काम्यकर्म्मादीन् भजेदेकाकिनं हरिम् ।
सत्यं सत्त्वगुणोपेतो भक्त्या तं सात्त्वतं विदुः ॥
मुकुन्दपादसेवायां तन्नामश्रवणेऽपि च ।
कीर्त्तने च रतो भक्तो नाम्नः स्यात् स्मरणे हरेः ॥
वन्दनार्च्चनयोर्भक्तिरनिशं दास्यसख्ययोः ।
रतिरात्मार्पणे यस्य दृढानन्तस्य सात्त्वतः ॥”
इति पाद्मोत्तरखण्डे ९९ अध्यायः ॥ * ॥
यदुवंशीयसत्त्वतराजपुत्त्रः । यथा, --
“अनोस्तु पुरुकुत्सोऽभूदंशुस्तस्य तु रिक्-
थभाक् ।
अथांशोः सत्त्वतो नाम विष्णुभक्तः प्रतापवान् ॥
महात्मा दाननिरतो धनुर्व्वेदविदां वरः ।
स नारदस्य वचनाद्वासुदेवार्च्चनान्वितः ॥
शास्त्रं प्रवर्त्तयामास कुण्डगोलादिभिः श्रुतम् ।
तस्य नाम्ना तु विख्यातं सात्त्वतं नाम शोभनम् ॥
प्रवर्त्तते महाशास्त्रं कुण्डादीनां हितावहम् ।
सात्त्वतस्तस्य पुत्त्रोऽभूत् सर्व्वशास्त्रविशारदः ॥
पुण्यश्लोको महाराजस्तेन चैतत् प्रकीर्त्तितम् ।
सात्त्वतः सत्त्वसम्पन्नः कौशल्यान् सुषुवे सुतात् ॥
अन्धकं वैमहं भोजं विष्णुं देवावृधं नृपम् ॥”
इति कौर्म्मे पूर्व्वभागे यदुवंशानुकीर्त्तने । २४ ।
३१ -- ३६ ॥ (सङ्करजातिविशेषः । यथा, मनुः ।
जगन्ति ।
रक्तान् करोति सुहृदो मलिनयति च वैरि-
वदनानि ॥
निवृत्तविषयासङ्गमधुना सुचिराय मे ।
आत्मन्येव समाधानं मनः केवलमिच्छति ॥” * ॥
सात्त्वतस्यापत्यं स्त्री । सात्त्वत + अञ् । ङीप् ।)
शिशुपालमाता । इति केचित् ॥ (यथा, महा-
भारते । २ । ४५ । ६ ।
“एष नः शत्रुरत्यन्तं पार्थिवाः सात्त्वतीसुतः ।
सात्त्वतानां नृशंशात्मा न हितोऽनपकारि-
णाम् ॥”
सुभद्रा । यथा, महाभारते । १ । २२२ । ६६ ॥
“स सात्त्वत्यामधिरथः सम्बभूव धनञ्जयात् ।
मखे निर्मथनेनेव शमीगर्भाद्धुताशनः ॥”)

**सात्त्विकः**, पुं, (सत्त्वात् सत्त्वगुणप्रधाणात् विष्णो-
र्भूतः । सत्त्व + ठञ् ।) ब्रह्मा । (सात्त्वं सत्त्व-
गुणोऽस्यास्तीति । ठन् । विष्णुः । इति महा-
भारतम् । १३ । १४९ । १०६ ॥) त्रिविध-
भावान्तर्गतभावविशेषः । इति हेमचन्द्रः ॥
तस्य लक्षणं यथा, --
“सत्त्वोत्कटे मनसि ये प्रभवन्ति भावा-
स्ते सात्त्विका इति विदुर्म्मुनिपुङ्गवास्ते ।”
इति सर्व्वानन्दः ॥

ते च यथा, --
"स्वेदः स्तम्भोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः
।
वैवर्णमश्रुप्रलय इत्यष्टौ सात्त्विका मताः ॥"
प्रलयो मूर्च्छा । इति भरतः ॥

**सात्त्विकः**, त्रि, (सत्त्वेन निर्वृत्तः । तेन निर्वृत्त-

मिति ठञ् ।) सत्त्वगुणनिष्पादितः । इत्यमरः ।
१ । ७ । १६ ॥ सत्त्वं मनोगुण आशयो वा तेन
निष्पादितः सात्त्विकः स्वेदादिः । सत्त्वशब्दात्
ढघे कादिति ष्णिकः । इति भरतः ॥ * ॥ सत्त्व-
गुणयुक्तः । तद्विवरणं यथा, गीतायाम् । १७ । ४
।
"यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।
प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥"
सात्त्विकयज्ञो यथा, गीतायाम् । १७ । ११ ।
"अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥"
सात्त्विकतपो यथा, तत्रैव । १७ । १७ ।
"श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥"
सात्त्विकदानं यथा, तत्रैव । १७ । २० ।
"दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥"
सात्त्विकयोगो यथा, तत्रैव । १८ । ९ ।
"कार्य्यमित्येव यत् कर्म्म नियतं क्रियतेऽर्ज्जुन ।
सङ्गं त्यक्त्वा फलञ्चैव स त्यागः सात्त्विको मतः
॥"
सात्त्विकज्ञानं यथा, तत्रैव । १८ । २० ।
"सर्व्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्वि-
कम् ॥"
सात्त्विककर्म्म यथा, तत्रैव । १८ । २३ ।
"नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म्म यत्तत् सात्त्विकमुच्यते ॥"
सात्त्विकबुद्धिर्यथा, तत्रैव । १८ । ३० ।
"प्रवृत्तिञ्च निवृत्तिञ्च कार्य्याकार्य्ये भयाभये ।
बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी
॥"
सात्त्विकी धृतिर्यथा, तत्रैव । १८ । ३३ ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः
सात्त्विकप्रियाः ॥"
इति श्रीभगवद्गीतायाम् । १७ । ८ ॥
सात्त्विककर्त्ता कर्त्तृशब्दे सात्त्विकाहार
आहार-
शब्दे च द्रष्टव्यः ॥

**सात्त्विकी**, स्त्री, (सात्त्वं सत्त्वगुणोऽस्त्यस्या इति ।

सात्त्व + ठन् । ङीप् ।) दुर्गा । इति
शब्दरत्ना-
वली ॥ पूजाविशेषः । यथा, --
"शारदी चण्डिकापूजा त्रिविधा
परिगीयते ।
सात्त्विकी राजसी चैव तामसी चेति तत्
शृणु ॥"
सात्त्विकी जपयज्ञाद्यैर्नैवेद्यैश्च निरामिषैः
।
महात्म्यं भगवत्याश्च पुराणादिषु
कीर्त्तितम् ।
पाठस्तस्य जपः प्रोक्तः
पठेद्देवीमनास्तथा ॥"
इति दुर्गोत्सवतत्त्वम् ॥

**सात्म्यं**, त्रि, सुखजनकम् । आत्मनो हितं कर्म्म

आत्म्यं आत्म्येन सह वर्त्तमानं सात्म्यम्
। इति
भैषज्यरत्नावली ॥ (यथा, सुश्रुते । १ ।
४५ ।
"सर्व्वप्राणभृतां तस्मात् सात्म्यं
क्षीरमिहो-
च्यते ॥"
"सात्म्यं नाम तद्यत्
सातत्येनोपसेव्यमानमुप-
शेते । तत्र ये
धृतक्षीरतैलमांसरससात्म्याः सर्व्व-
रससात्म्याश्च ते बलवन्तः क्लेशसहाः
चिर-
जीविनश्च भवन्ति । रूक्षनित्याः
पुनरेक-

**सादः**, पुं, (सद + घञ् ।) विषादः । (यथ,

रघुः । ३ । २ ।
"शरीरसादादसमग्रभूषणा
मुखेनं सालक्ष्यत लोध्रपाण्डुना ॥")
शरणम् । गतिः । (यथा,
बृहत्संहितायाम् ।
४६ । ६० ।
"यानं वाहवियुक्तं यदि गच्छेन्न व्रजेच्च
वाहन-
युतम् ।
राष्ट्रभयं भवति तदा चक्राणां सादभङ्गे
च ॥")

**सादनं**, क्ली, (सद् + स्वार्थे णिच् + ल्युट् ।)

सदनम् । इत्यमरटीकायां भरतः ॥
(यथा,
महाभारते । १ । १५४ । २८ ।
"अहमेको नयिष्यामि त्वामद्य
यमसादनम् ॥")

**सादनी**, स्त्री, (साद्यन्ते रोगा अनया । सद +

णिच् + करणे ल्युट् । ङीप् ।) कटुकी
। इति
राजनिर्घण्टः ॥

**सादिः**, पुं, (सद गतौ + "वसिवपियजीति ।"

उणा० ४ । १२४ । इति इञ् ।)
सारथिः ।
इति हेमचन्द्रः ॥ योद्धा ।
इत्युणादिकोषः ॥
अवसन्नः । वायुः । इति
संक्षिप्तसारोणादि-
वृत्तिः ॥

**सादितः**, त्रि, (सद + णिच् + क्तः ।) विषादितः
।

(यथा, रघुः । ७ । ४४ ।
"यैः सादिता लक्षितपूर्ब्बकेतून्
तानेव सामर्षतया निजघ्नुः ॥")
शरणप्रापितः । गमितः । इति
ज्यन्तसदधातोः

"धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ !
सात्त्विकी ॥"
सात्त्विकसुखं यथा, तत्रैव । १८ । ३७ ।
"यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत् सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥"
सात्त्विकपुराणानि यथा, --
"वैष्णवं नारदीयञ्च तथा भागवतं शुभम् ।
गारुडञ्च तथा पाद्मं वाराहं शुभदर्शने ।
सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै ॥"
सात्त्विकस्मृतयो यथा, --
"वाशिष्ठञ्चैव हारीतं व्यासं पाराशरं तथा ।
भारद्वाजं काश्यपञ्च सात्त्विका मुक्तिदाः
शुभाः ॥"
इति पाद्मोत्तरखण्डे ४३ अध्यायः ॥
सात्त्विकप्रियाहारा यथा, --
"आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्द्धनाः।

रससात्म्याश्च ये ते
प्रायेणाल्पबलाश्चाक्लेशा-
सहाः अल्पायुषोऽल्पसाधनाश्च ।" इति
चरके
विमानस्थानेऽष्टमेऽध्याये ॥
"यो रसः कल्पते यस्य सुखायैव
निषेवितः ।
व्यायामजातमन्यद्वा तत्सात्म्यमिति
निर्द्दिशेत् ॥"
इति सुश्रुते सूत्रस्थाने ३६ अध्याये ॥
क्ली, देवत्वम् । यथा, भागवते । ६ ।
१८ । २०
"इन्द्रेण प्रापिताः सात्म्यं किं तत् साधु
कृतं हि तैः ॥"
सारूप्यम् । यथा, तत्रैव । ७ । १० ।
४० ।
"नृपाश्चैद्यादयः सात्म्यं हरेस्तच्चिन्तया
ययुः ॥")

**सात्यकिः**, पुं, (सत्यकस्यापत्यं पुमानिति । इञ् ।)

वृष्णिवंशीयसत्यकपुत्त्रः । स तु
श्रीकृष्णस्य
सारथिः । तत्पर्य्यायः । शैनेयः २
शिनेर्नप्ता ३
युयुधानः ४ । इति त्रिकाण्डशेषः ॥
योधः ५ ।
इति जटाधरः ॥ (अयं हि अर्ज्जुनस्य
शिष्य
आसीत् भारतयुद्धे युधिष्ठिरपक्षमाश्रित्य
तुमुलं
युद्धं विधाय च हतेऽपि निखिलबले
वासुदेवेन
पाण्डवैश्च सह जीवित आसीत् ।
तथाहि महा-
भारते अश्वत्थामवाक्ये । १० । ९ ।
४७ ।
"सप्त पाण्डवतः शेषा धार्त्तराष्ट्रास्त्रयो
वयम् ।
ते चैव भ्रातरः पञ्च वासुदेवोऽथ
सात्यकिः ।

क्तप्रत्ययेन निष्पन्नः ॥

**सादी**, [न्] पुं, (सद गतौ + णिनिः ।) अश्वारूटः ।

इत्यमरः । २ । ८ । ६० ॥ (यथा,
रघुः । ७ । ४७ ।
"पूर्व्वं प्रहर्त्ता न जघान भूयः
प्रतिप्रहाराक्षममश्वसादी ॥")
गजारोहः । रथारोहः । इति मेदिनी ॥

**सादृश्यं**, क्ली, (सदृशस्य भावः । सदृश + ष्यञ् ।)

सदृशत्वम् । तद्भिन्नत्वे सति
तद्गतभूयोधर्म्मवत्त्वम् ।
यथा चन्द्रभिन्नत्वे सति
चन्द्रगताह्लादकत्वादि-
मत्त्वं मुखे चन्द्रसादृश्यम् । इति
सिद्धान्तमुक्ता-
वली ॥ * ॥ अथ सादृश्यानि । वेण्याः
सर्पः १
भ्रमरश्रेणिः २ । केशपाशस्य चामरः १
मयूर-
पुच्छः २ । धम्मिल्लस्य विधुन्तुदः १
अन्धकारः २ ।
सीमन्तस्य मेघः १ पन्थाः २ दण्डः ३
। लला-
टस्य अष्टमीचन्द्रः १ फलकम् २ ।
कपोलस्य
चन्द्रः १ मुकुरस्थलम् २ । भ्रुवोः
खड्गः १
धनुर्यष्टिः २ रेखा ३ पल्लवः ४ वल्लिः
५ । दृशोः
चकोरचक्षुः १ हरिणचक्षुः २ मदिरा ३
खञ्जनः ४ अञ्जनम् ५ कुमुदम् ६
नीलपद्मम् ७
प्रोष्ठीमत्स्यः ८ । कर्णस्य दोला १
पाशः २ ।
नासायाः वंशः १ केतकीपुष्पकण्टकः
२ अधो-
मुखतूणीरः ३ चञ्चुः ४ तिलपुष्पम् ५
दण्डः ६ ।
अधरस्य नवपल्लवम् १ विम्बफलम् २
प्रबालः ३ ।

| | | |
|---|---|---|
| | अहञ्च कृतवर्म्मा च कृपः शारद्वतस्तथा ॥”)<br>**सात्यवतः**, पुं, (सत्यवत्यां भवः । अण् ।) वेदव्यासः ।<br>इति त्रिकाण्डशेषः ॥<br>**सात्यवतेयः**, पुं, (सत्यवत्या अपत्यं पुमान् । सत्य-<br>वती + ढक् ।) सत्यवतीसुतः ।<br>वेदव्यासः । इति<br>हलायुधः ॥ | दन्तानाम् मुक्ताश्रेणिः १ कुन्दपुष्पम् २ दाडिम-<br>बीजम् ३ हीरकम् ४ । स्मितस्य<br>ज्योत्स्ना १<br>पुष्पम् २ पीयूषम् ३ । श्वासस्य<br>पद्मगन्धः १ |

मुक्ताशीतलम् २ । जिह्वायाः जवापुष्पम् १
चञ्चलवस्तु २ । वाण्याः कोकिलशब्दः १
भ्रमरगुञ्जनम् २ सुधा ३ मधु ४
बीणावाद्यम् ५ ।
मुखस्य चन्द्रः १ पद्मम् २ दर्पणम् ३ । कण्ठस्य
शङ्खः १ । चिवुकस्य दर्पणवृन्तम् १ । अंसस्य
कुम्भः १ । बाह्वोः वल्लरी १ मृणालम् २ तरङ्गः ३
शाखा ४ पाशः ५ । हस्तस्य
मृणालादयः १ ।
अङ्गुल्याः पल्लवम् १ पद्मदलम् २
चम्पकपुष्पम् ३
नवदलम् ४ दीपः ५ । नखानां रत्नम् १ ताराः २
पुष्पम् ३ चन्द्रः ४ । स्तनयोः
पद्ममुकुलम् १ घटः २
हस्तिकुम्भः ३ गिरिः ४ चक्रवाकः ५ विल्व-
युग्मम् ६ । मध्यस्य वरटकमध्यम् १ सिंहमध्यम् २
वज्रमध्यम् ३ क्षीणद्रव्यम् ४ ।
लोमश्रेण्याः रेखा १
नीलकान्तमणिशिखा २ शैवाललता ३ धूम-
लता ४ हस्तिशुण्डः ५ । नाभेः आवर्त्तः १ पद्मम् २
ह्रदः ३ विवरम् ४ कूपः ५ । त्रिवल्याः तरङ्गः १
सोपानम् २ निश्रेणी ३ । जघनस्य पुलिनम् १
पीठः २ फलकम् ३ । नितम्बस्य
स्थलम् १ पर्व्वतः २
पृथिवी ३ स्थूलोपलम् ४ महद्वस्तु ५ । ऊर्व्वोः
अमृतस्य कामिन्यधरादिः १ सत्काव्यम् २ ब्रह्म-
साक्षात्कारः ३ । विषस्य साध्वीस्त्रीविरहः १
पापम् २ मलिनवस्तु ३ दुःखदवस्तु ४
ग्रीष्माग्निः ५
शीतकालीनशीतोदकम् ६ व्यभिचारिणी
भार्य्या ७ ।
विरहस्य अग्निः १ आधिः २ यातना ३ समुद्रः
४ तप्तवस्तु ५ दुःखदवस्तूनि ६ । पुष्पाणां
चन्द्रादिः १ कामिनी २ कर्पूरम् ३ यशः ४ ।
चन्द्रस्य प्रमदामुखम् १ अतिशुभ्रवस्तु २ यशः-
पुण्यादिः ३ । सूर्य्यस्य शिवनेत्राग्निः १ जवा-
पुष्पम् २ वसन्तकालीनपलाशवृक्षः ३ काञ्चन-
वृक्षः ४ वाडवाग्निः ५ । पद्मस्य पाटलपुष्पम् १
कामिनीमुखादिः २ रक्तवर्णद्रव्यम् ३ । इन्दी-
वरस्य नीलकान्तमणिः १ कस्तूरी २ कामिनी-
नेत्रम् ३ । कैरवस्य चन्द्रः १ कुन्दादिशुक्ल-
वर्णवस्तु २ । राज्ञः इन्द्रः १ कुबेरः २ चन्द्रः ३
सूर्य्यः ४
मान्धातृभगीरथप्रभृतिप्रसिद्धचक्रवर्त्तिनः
५ । मेघस्य कृष्णः १ काली २ नीलपद्मसमूहः ३
भ्रमरश्रेणिः ४ इन्दीवरवनम् ५ दातृव्यक्तिः ६
कृष्णवर्णवस्तु ७ । शरन्मेघस्य
चन्द्रप्रभृतिशुक्ल-
वर्णपदार्थाः १ । कन्दर्पस्य चन्द्रः १ पुरूरवाः २
अश्विनीकुमारः ३ नलः ४ । प्रदीपस्य चम्पक-
पुष्पम् १ प्रतापः २ शास्त्रम् ३ ऋषिः ४ । वायोः
शीघ्रगपदार्थः १ । अश्वस्य वायुः १ हरिणः २
मनः ३ । हस्तिनः पर्व्वतः १ मेघः १ तमाल-
वृक्षः ३ अन्धकारः ४ । सौधस्य कैलासः १
ऐरावतः २ उच्चैःश्रवाः ३ चन्द्रः ४ । शिवस्य
ऋतोः मलयवायुः १ मद्यम् २
उन्मादरोगः ३ ।
विरहिणं प्रति यमः १ अग्निः २ विषम् ३
सर्पः ४ ।
ग्रीष्मऋतोः अग्निः १ विरहः २ विरहिणी-
निश्वासः ३ सर्पनिश्वासः ४ ।
वर्षाऋतोः रात्रिः १
समुद्रः २ गगनम् ३ नारायणः ४ ।
शरदृतोः
काशपुष्पादिरूपचामरैरावतगजाः १
चन्द्रः २ ।
शीतऋतोः अपस्मारिव्यक्तिः १
राज्यशून्यराजा
२ । शिशिरऋतोः राजागमनकालः १ ।
गुणिनः समुद्रः १ पर्व्वतः २ पृथिवी ३
मदनः ४
अश्विनौ ५ । सचिवस्य बृहस्पतिः १ ।
वाक्यस्य
कोकिलशब्दः १ भ्रमरगुञ्जनम् २ वीणा-
वाद्यम् ३ । इति कविकल्पलतायाम् ४
स्तवके ४
कुसुमम् ॥

**साध**, य न औ सिद्धौ । इति कविकल्पद्रुमः ॥

(दिवा०-स्वा० च-पर०-अक०-निष्पादने सक०-
अनिट् ।) य, साध्यति । न, साध्नोति । औ,
सिषात्सति । सिद्धिर्निष्पत्तिः । साध्यति घटो
निष्पन्नः स्यादित्यर्थः ।
सिद्धिर्निष्पादनेति गोविन्द-
भट्टः । साध्नोति साध्यति घटं कुलालः निष्पा-
दयतीत्यर्थः । इति दुर्गादासः ॥

**साधकः**, पुं, (साध्यति निष्पादयति कार्य्यमिति ।

साध + ण्वुल् ।) साधनकर्त्ता ।
निष्पादकः ।
तस्य लक्षणं यथा, --

कदलीकाण्डः १ करिकरः २ । जङ्घयोः
स्तम्भः
१ । पादस्य पद्मम् १ नवपल्लवम् २ ।
गतेः हंस-
गमनम् १ हस्तिगमनम् २ खञ्जनगमनम्
३ ॥
पुरुषस्त्रियोरौचित्येन सादृश्यं वर्णनीयम्
।
पुरुषरूपे कोऽपि कुत्रचिद् विशेषो
लिख्यते ।
स्कन्धस्य वृषस्कन्धः १ वज्रम् २
अश्वस्कन्धः ३ ।
बाह्वोः बृहत्सर्पः १ हस्तिशुण्डः २
स्तम्भः ३
अर्गलदण्डः । वक्षसः शिला १ कवाटम्
२ ।
गतेः प्रमत्तानुड्वगतिः १ । यशसः
चन्द्रकुन्द-
यूथिकाप्रभृतिशुक्लवर्णपदार्थाः १ ।
प्रतापस्य
अग्निः १ बाडवाग्निः २ रविः ३
रविकिर-
णादिः ४ जवापद्मप्रभृतिरक्तवर्णपदार्थाः
५ ।
पुण्यस्य संस्कारः १ गौः २ वृक्षबीजम्
३
अङ्कुरः ४ शुक्लवर्णपदार्थाः ५ ।
सामर्थ्यस्य
महद्वस्तु १ सिंहविक्रमादिः २ । नीतेः
साध्वी
स्त्री १ प्रदीपज्वाला २ लतादिः ३ ।
आज्ञायाः
वेदवाक्यम् १ गुरूपदेशः २
उत्कटेच्छादिः ३ ।
शासनस्य प्रारब्धकर्म्म १ स्थिरवस्तूनि
२ ।
पापस्य कर्द्दमः १ कलङ्कः २ अकीर्त्तिः
३
कृष्णवर्णकेशमसीप्रभृतिवस्तूनि ४
अन्धकारः ५ ।

पूर्व्वोक्तानि ४ । श्रीकृष्णस्य सजलजलदः १
तमाल-
वृक्षः २ नीलमणिः ३ भ्रमरश्रेणिः ४ इन्दीवरम्
५
नीलपद्मम् ६ आकाशः ७ । श्रीरामस्य पूर्व्व-
कथिताः पदार्थाः ७ दूर्व्वादलम् ८ वृक्षपल्प-
वम् ९ । लक्ष्म्याः पार्व्वती १ चन्द्रकान्तिः २
रतिः ३ सीता ४ द्रौपदी ५ पद्मकान्तिः ६ ।
सरस्वत्याः चन्द्रकला १ कैलासकान्तिः २
शुक्ल-
वर्णपदार्थः ३ । विपणेः समुद्रः १ पण्डित-
मनः २ नारायणोदरम् ३ ब्रह्माण्डम् ४ । समु-
द्रस्य मेघादिकृष्णवर्णवस्तु १ विदूरभूमिः २
महाभारतम् ३ अपस्मारी ४ । पुरस्य स्वर्गः १
कैलासः २ मनोरमबृहद्वस्तु ३ । रथस्य पुष्प-
कम् १ वैकुण्ठः २ पुरी ३ पोतः ४ पृथ्वी ५ ।
कामिनीमुखस्य चन्द्रः १ पद्मम् २ दर्पणः ३ ।
कामिन्याः तडित् १ तारा २ स्वर्णलता ३
स्वर्णवर्णा केतकी ४ । नायकस्य चन्द्रः १
कन्दर्पः
२ ऐलः ३ अश्विनीकुमारः ४ । सभायाः
सूर्य्य-
मण्डलम् १ सुधर्म्मा २ गण्डकीपर्व्वतः ३
सुमेरुः ४
गङ्गा ५ । पण्डितस्य बृहस्पतिः १ शुक्रः २
ऋषिः ३ सरस्वती ४ । विरहिणः श्रीरामः १
श्रीशिवः २ अजः ३ दुःखिव्यक्तिः ४ उन्मत्त-
व्यक्तिः ५ चन्दनतरुः ६ शिवशिरश्चन्द्रः ७
वाडवाग्नियुक्तसमुद्रः ८ वल्मीकः ९
चन्द्रशेखर-
पर्व्वतः १० । दातुः कर्णः १ उषीनरः २
कल्प-
वृक्षः ३ कामधेनुः ४ रोहणः ५ समुद्रः ६ मेघः
७
बलिः ८ जैमिनिः ९ युधिष्ठिरः १० । वसन्त-

“अतः परं प्रवक्ष्यामि साधकानान्तु
लक्षणम् ।
धर्म्मशीलास्तपोयुक्ताः
सत्यवादिजितेन्द्रियाः ।
मात्स्यर्य्येण परित्यक्ताः सर्व्वसत्त्वहिते
रताः ॥
कर्म्मशीलास्तथोत्साहा
मर्त्यलोकेऽजुगुप्सकाः ।
परस्परसुसन्तुष्टानुकूलाः साधकस्य तु ।
ईदृशैः साधनं कुर्य्यात् सुसहायैः सहैव तु
॥”
इति देवीपुराणे
नन्दामाहात्म्यसमाप्ताध्यायः॥
अपि च ।
“चतुर्धा साधको ज्ञेयो
मृदुर्मध्याधिमात्रकः ।
अधिमात्रतमः श्रेष्ठो भवाब्धौ लङ्घनक्षमः
॥
मन्दोत्साही सुसंमूढो व्याधिस्थो
गुरुदूषकः ।
लोभी पापमतिश्चैव बह्वाशी वनिताश्रयः
॥
चपलः कातरो रोगी पराधीनोऽतिनिष्ठुरः
।
मन्दाचारो मन्दवीर्य्यो ज्ञातव्यो मृदुना
नरः ॥
द्वादशाब्दे भवेत् सिद्धिरेतस्य यत्नतः
परम् ।
मन्त्रयोगाधिकारी स ज्ञातव्यो गुरुणा
ध्रुवम् ॥ १
समबुद्धिः क्षमायुक्तः पुण्यकाङ्क्षी प्रियंवदः
।
मध्यस्थः सर्व्वकार्य्येषु सामान्यः स्यान्न
संशयः ।
एतज्ज्ञात्वैव गुरुभिर्दीयते युक्तितो लयः
॥ २ ॥
स्थिरबुद्धिर्लये युक्तः स्वाधीनो
वीर्य्यवानपि ।
महाशयो दयायुक्तः क्षमावान् वीर्य्यवानपि
॥

| | | |
|---|---|---|
| अकीर्त्तेः मालिन्यम् १ कृष्णवर्णवस्तूनि २ अन्ध-<br>कारः ३ । कस्तूरिकायाः मेघः १ भ्रमरः २<br>नीलकान्तमणिः ३ कज्जलम् ४ सुगन्धिद्रव्यदाह-<br>जन्यधूमः ५ कृष्णवर्णपुष्पप्रभृतिः ६ स्थलविशेषे<br>कन्दर्पायशः ७ कामुकायशः ८ कामिन्ययशश्च ९ ।<br>कज्जलस्य पूर्व्वोक्तमेघादीनि ९ ।<br>कर्पूरस्य चन्द्रः १<br>चन्द्रकिरणः २ कुन्दयूथिकादिपुष्पम् ३ हिण्डीर-<br>पिण्डः ४ विरहिगण्डप्रभृतिः ५ । मनोरथस्य<br>फलपुष्पादियुक्तवृक्षः १ कविबुद्धिरचना २ ।<br>आनन्दस्य सुधासमुद्रः १<br>ब्रह्मसाक्षात्कारादिः २ । कामिन्यवलोकनस्य<br>नित्यसुखसाक्षात्कारः १<br>अमृतरसः २ पूर्णचन्द्रादिसाक्षात्कारः ३ अति-<br>प्रियतमवस्तुप्राप्तिः ४ ब्रह्मसाक्षात्कारः ५ । | | शूरो लयश्च श्रद्धावान् गुरुपादाब्जपूजकः ।<br>योगाभ्यासरतश्चैव ज्ञातव्यश्चाधिमात्रकः ॥<br>एतस्य सिद्धिः षड्वर्षैर्भवेदभ्यासयोगतः ।<br>एतस्मै दीयते धीरैर्हठयोगस्य साधकः ॥ ३ ॥<br>महावीर्य्यान्वितोत्साही मनोज्ञः शौर्य्यवानपि ।<br>शास्त्रज्ञोऽभ्यासशीलश्च निर्म्ममश्च निराकुलः ॥<br>नवयौवनसम्पन्नो मिताहारी जितेन्द्रियः ।<br>निर्भयश्च शुचिर्दक्षो दाता सर्व्वजनाश्रयः ॥ |

अधिकारी स्थिरो धीमान्
यथेच्छावस्थितः
क्षमी ।
सुशीलो धर्म्मचारी च गुप्तचेष्टः प्रियंवदः ॥
शास्त्रविश्वाससम्पन्नो देवतागुरुपूजकः ।
जनसङ्गविरक्तश्च महाव्याधिविवर्ज्जितः
॥
अणिमाव्रतयोग्यश्च सर्व्वयोगस्य साधकः
।
त्रिभिः संवत्सरैः सिद्धिरेतस्य स्यान्न
संशयः ।
सर्व्वयोगाधिकारी च नात्र कार्य्या विचा-
रणा ॥” ४ ॥
इति शिवसंहिता ॥

**साधका**, स्त्री, दुर्गा । यथा, --

“साधनात् सिद्धिरित्युक्ता साधका वाथ
ईश्वरी ।
स्वामित्वाद्दानसिद्धित्वात् सिद्धीश्वर्य्या
प्रकी-
र्त्तिता ॥”
इति देवीपुराणे ४५ देवीनिरुक्ताध्यायः ॥

**साधनं**, क्ली, (साध + ल्युट् ।) करणकारक-

विशेषः । तत्र तृतीया स्यात् । इति
व्याकर-
रणम् ॥ साध्यते कर्म्म निष्पाद्यतेऽनेनेति
साध-
नम् । इति दुर्गादासः ॥ (कारणम् । हेतुः ।
यथा, मनुः । ११ । २३८ ।
“औषधान्यगदो विद्या दैवी च विविधा
स्थितिः ।
तपसव प्रसिध्यन्ति तपस्तेषां हि साधनम्
॥”)
मारणम् । (यथा, किराते । १४ । १७ ।
“अथो शरस्तेन मदर्थमुज्झितः
फलञ्च तस्य प्रतिकायसाधनम् ।
अविक्षते तत्र मयात्मसात् कृतेः
कृतार्थता नन्वधिका चमूपतेः ॥”)

मोहनम् । जवः । इत्यजयः ॥ साधना । साधा
इति भाषा । यथा, --
ब्रह्मोवाच ।
“शशाप पार्व्वती रुष्टा स्त्रीस्वभावाच्च
चापलात् ।
सर्व्वेषां साधनेनैव क्षन्तुमर्हन्ति साधवः ॥”
इति ब्रह्मवैवर्त्ते गणेशखण्डे । १२ । ५१ ॥
मन्त्रसिद्धिकरणम् । यथा, --
“मत्स्यं मांसञ्च मद्यञ्च मुद्रा मैथुनमेव च ।
दिव्यानाञ्चैव वीराणां साधनं भवसाधनम् ॥”
इति मुण्डमालातन्त्रम् ॥
ब्रह्मज्ञानसाधनन्तु
नित्यानित्यवस्तुविवेकेहामुत्र-
फलभोगविरागशमदमादिसम्पन्मुमुक्षुत्वम् ।
इति
वेदान्तसारः ॥

**साधना**, स्त्री, (साध + णिच् + युच् + टाप् ।)

सिद्धिः । निष्पादना । इति साधधात्वर्थदर्श-
नात् ॥ आराधना ।
ण्यन्तसाधधातोरनप्रत्यय-
निष्पन्ना ॥

**साधन्तः**, त्रि, (साध्यति भिक्षामिति । साध +

“तृभूवहिवसिभासिसाधीति । “उणा० ३ ।
१२८ ।
इति झच् । सच षित् ।) भिक्षुकः । इत्युणादि-
कोषः ॥

**साधयन्ती**, स्त्री, (साधयतीति । साध + णिच् +

शतृ । ङीप् ।) उपासनाकर्त्री । यथा, --
“सखि मत्प्राणनाथन्तु साधयन्ती निरन्तरम् ।
अतिश्रान्तासि सद्भावस्नेहयोरियमौचिती ॥”
इति काव्यचन्द्रिका ॥

**साधारणः**, त्रि, (आधारणं अविशेषेण कार्य्यादि-

भारधारणं तेन सह वर्त्तते इति ।) समानः ।
सदृशः । इत्यमरः । २ । १० । ३७ ॥ (यथा,
कुमारे । १ । ४२ ।
“कण्ठस्य तस्याः स्तनबन्धुरस्य
मुक्ताकलापस्य च निस्तलस्य ।

(देशविशेषः । क्ली, उदकविशेषश्च ।
यथा, --
“मिश्रचिह्नस्तु यो देशः स हि साधारणः
स्मृतः ।
तस्मिन् देशे यदुदकं तत्तु साधारणं
स्मृतम् ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये
भागे ॥
“उभयगुणसमेतं नातिरुक्षं न स्निग्धं
न च खरबहुलञ्च स्नेहनं कण्टकाढ्यम्
।
भवति च जलमल्पं नातिशीतं नचोष्णं
समप्रकृतिसमेतं विद्धि साधारणञ्च ॥”
इति हारीते प्रथमस्थाने चतुर्थेऽध्याये
॥
“जाङ्गलं वातभूयिष्ठमनूपन्तु
कफोल्वणम् ।
साधारणं सममलं त्रिधा भूदेशमादिशेत्
॥”
इति वाभटे सूत्रस्थाने प्रथमेऽध्याये ॥)

**साधारणदेशः**, पुं, (साधारणो देशः ।) जाङ्ग-

लानूपलक्षणसम्पन्नस्थानम् ।
तद्वारिगुणाः ।
वृष्यत्वम् । दीपनत्वम् । मधुरत्वम् ।
लघुत्वञ्च ।
इति राजवल्लभः ॥

**साधारणधर्म्मः**, पुं, (साधारणो धर्म्मः ।) चतुर्वर्ण-

कर्त्तव्यकर्म्म । यथा, मानवे ९ अध्याये
।
“प्रजनार्थं स्त्रियः सृष्टाः सन्तानार्थञ्च
मानवाः ।
तस्मात्साधारणो धर्म्मः श्रुतौ पत्न्या
सहोदितः ॥”
अपि च ।
“अहिंसा सत्यमस्तेयं
शौचमिन्द्रियसंयमः ।
दमः क्षमार्ज्जवं दानं सर्व्वेषां
धर्म्मसाधनम् ॥”

मृतसंस्कारः । अग्निदानम् । गतिः ।
गमनम् ।
द्रव्यम् । धनम् । अर्थदापनम् । अर्थस्य धन-
भूम्यादेर्द्दापनम् । निर्व्वर्त्तनम् । निष्पादनम् ।
(यथा, रघुः । ४ । १६ ।
"वार्षिकं सञ्जहारेन्द्रः धनुर्जैत्रं रघुर्दधौ ।
प्रजार्थसाधने तौ हि पर्य्यायोद्यतकार्म्मुकौ ॥")
उपकरणम् । सामग्री । यथा युद्धोपकरणं
हस्त्यश्वादिः । (यथा, ऋतुसंहारे । ६ ।
३४ ।
"रम्यः प्रदोषसमयः स्फुटचन्द्रभासः
पुंस्कोकिलुस्य विरुतं पवनः सुगन्धिः ।
मत्तालियूथविरुतं निशि शीधुपानं
सर्व्वं हि साधनमिदं कुसुमायुधस्य ॥")
अनुव्रज्या । अनुगमनम् । इत्यमरभरतौ । ३ ।
३ । ११९ ॥ सैन्यम् । सिद्धौषधिः । उपायः ।
इति मेदिनी ॥ यथा, --
"तपोभिः प्राप्यतेऽभीष्टं नासाध्यं हि तपस्यतः ।
दुर्भगत्वं वृथा लोको वहते सति साधने ॥"
इति तिथ्यादितत्त्वधृतमत्स्यपुराणवचनम् ॥
मेढ्रः । इति च मेदिनी ॥ मैत्रम् । उधः ।
सिद्धिः । इति धरणिः ॥ कारकः । प्रमाणम् ।
इति हेमचन्द्रः ॥ व्याप्यम् । यथा, --
"अनुमा त्वनुमानं स्यात् व्याप्यं लिङ्गञ्च
साधनम् ।"
इति त्रिकाण्डशेषः ॥

अन्योन्यशोभाजननात्बभूव
साधारणो भूषणभूष्यभावः ॥")
सामान्यम् । अनेकसम्बन्ध्येकवस्तु । इति चामरः ।
३ । १ । ८२ ॥ यथा, --
"साधारणं समाश्रित्य यत्किञ्चिद्वाहनायुधम् ।
शौर्य्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः ॥"
इति दायभागः ॥
तद्वैदिकपर्य्यायः । स्वः १ पृश्निः २ नाकः ३
गौः ४ विष्टप् ५ नभः ६ । इति षट् साधा-
रणनामानि । इति वेदनिघण्टौ । १ । ४ ॥ * ॥
पुं, न्यायमते हेत्वाभासविशेषः । यथा, --
"अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः ।
कालात्ययापदिष्टश्च हेत्वाभासस्तु पञ्चधा ॥
आद्यः साधारणस्तु स्यात् स्यादसाधारणो-
ऽपरः ।
तथैवानुपसंहारी त्रिधानैकान्तिको भवेत् ॥
यः सपक्षे विपक्षे च स तु साधारणो मतः ।
यस्तूभयस्माद्व्यावृत्तः स त्वसाधारणो मतः ॥
तथैवानुपसंहारी केवलान्वयिपक्षकः ॥"
इति भाषापरिच्छेदः ॥

इति गारुडे । ९६ । ३० ॥

**साधारणस्त्री**, स्त्री, (साधारणा सामान्या अनेक-
सम्बन्धिनी स्त्री ।) वेश्या । इति
हेमचन्द्रः ॥

**साधारणी**, स्त्री, (साधारणस्येयमिति । अण् ।
स्त्रियां ङीष् ।) कुञ्चिका । इति
हेमचन्द्रः ॥

**साधारण्यं**, क्ली, (साधारस्येदमिति । ष्यञ् ।)
कुञ्चिका । इति हेमचन्द्रः ॥
साधारणस्य
भावश्च ॥ (यथा, साहित्यदर्पणे १
परिच्छेदे ।
"कीटानुविद्धरत्नादिसाधारण्येन
काव्यता ।
दुष्टेष्वपि मता यत्र रसाद्यनुगमः स्फुटः ॥")

**साधिका**, स्त्री, (साधयतीति । साध + णिच् +
ण्वुल् । टापि अत इत्वम् ।) सुषुप्तिः । इति
हेमचन्द्रः ॥ साधनकर्त्री । अधिकेन सह वर्त्त-
माने, त्रि ॥ (यथा, भागवते । ३ । ११ ।
२४ ।
"स्वं स्वं कामं मनुर्भुङ्क्ते साधिकां
ह्येकसप्ततिम् ॥"
यथा च तत्रैव । ५ । २१ । १० ।
"सार्द्धद्वादशलक्षाणि साधिकानि
चोपयाति ॥")

**साधितः**, त्रि, (साध + णिच् + क्तः ।) दापितः ।
इत्यमरः । ३ । १ । ४० ॥ द्वे धनादिकं
दापिते
धुती इति ख्यातं यस्मै दत्तं तत्रेति
रमानाथः ।
दण्डिते इति विद्याविनोदः ।
शोधितद्रव्ये इति
नयनानन्दः । ददातेर्ण्यन्तात् क्तः ह्री
व्ली रीति

| | | |
|---|---|---|
| | | पन् दैपो रूपमिति नयनानन्दः ।<br>दायित इति<br>पाठ इति कलिङ्गपुरुषोत्तमौ । तत्र ञि<br>दय ङ<br>ग्रहणे गतौ वधे दाने इत्यस्मात्<br>ञ्यन्तात् क्तः ।<br>साधेर्ण्यन्तात् क्ते साधितः । इति<br>भरतः ॥<br>“दायितो दापितोऽपि स्यात् साधितः<br>शोधितो-<br>ऽपि च ।”<br>इति शब्दरत्नावली ॥ |

**साधिष्ठ**, त्रि, (अयमेषामतिशयेन वाढः । वाढ +
“अतिशायने तमबिष्ठनौ ।” ५ । ३ । ५५ ।
इति इष्ठन् । “अन्तिकवाढयोर्न्नेदसाधौ ।”
५ । ३ । ६३ । इति साधादेशः ।) अतिशय-
वाढः । दृढतमः । इत्यमरः । ३ । १ । ११२
॥
न्याय्यः । इति हेमचन्द्रः ॥ अत्यार्य्यः । इति
मेदिनी ॥ (यथा, छान्द्योग्ये । ४ । ९ । ३ ।
“श्रुतं ह्येव मे भगवद्दृशेभ्य आचार्य्याद्धैव
विद्या विदिता साधिष्ठं प्रापतीति ॥”)

**साधीयान्** [स्] त्रि, (अयमनयोरतिशयेन वाढः ।
इति । वाढ + “द्विवचनविभज्योपपदे तरबी-
यसुनी ।” ५ । ३ । ५७ । इति ईयसुन् ।
“अन्ति-
कवाढयोरिति ।” ५ । ३ । ६० । इति
साधा-
देशः ।) अतिशयवाढः । अतिशयसाधुः ।
इत्य-
मरः । ३ । ३ । २३४ ॥ (यथा,
साहित्यदर्पणे १
परिच्छेदे ।
“कटुकौषधोपशमनीयस्य रोगस्य सितश
र्करो-
पशमनीयत्वे कस्य वा रोगिणः सितशर्करा-
प्रवृत्तिः साधीयसी न स्यादिति ॥”)

**साधुः**, पुं, (साध्यति निष्पादयति धर्म्मादिकार्य्य
मिति । साध + “कृवापाजीति ।” उणा० १
१ । इति उण् ।) उत्तमकुलोद्भवः ।
तत्पर्य्यायः ॥
महाकुलः २ कुलीनः ३ आर्य्यः ४ सभ्यः ५
सज्जनः ६ । इत्यमरः । २ । ७ । ३ ॥
कुलजः ७
साधुजः ८ कुलकः ९ कुलिकः १० । इति
शब्द-
रत्नावली ॥ कुल्यः ११ कौलेयकः १२
इति
भरतः ॥ जिनः । मुनिः । इति हेमचन्द्रः ॥ *
॥
परदुःखातुरा नित्यं स्वसुखानि महान्त्यपि
।
नापेक्षन्ते महात्मानः सर्व्वभूतहिते रताः ॥
परार्थमुद्यताः सन्तः सन्तः किं किं न
कुर्व्वते ।
तादृगप्यम्बुधेर्व्वारि जलदैस्तत् प्रपीयते ॥
एक एव सतां मार्गो यदङ्गीकृतपालनम् ।
दहन्तमकरोत् क्रोडे पावकं यदपां पतिः ॥
आत्मानं पीडयित्वापि साधुः सुखयते परम्
।
ह्लादयन्नाश्रितान् वृक्षोदुःखञ्च सहते स्वयम्
॥”
इति वह्निपुराणे
दानावस्थानिर्णयनामाध्यायः ॥
(तथा, महानिर्व्वाणतन्त्रे । १ । २२ ।
“देवायतनगा मर्त्त्या देवकल्पा दृढव्रताः ।
सत्यधर्म्मपराः सर्व्वे साधवः सत्यवादिनः
॥”)
तस्य प्रशंसा यथा, --
यत्पूजायां भवेत् पूज्यो दृष्ट्या न
यमदर्शनम् ।
पापसंघः स्पर्शनाच्च किमहो साधुसङ्गमः
॥
साधूनां हृदयं धर्म्मो वाचो वो नः सनातनाः
।
कर्म्मक्षयाणि कर्म्माणि यतः साधुर्हरिः
स्वयम् ॥”
इति कल्किपुराणे ३० अध्यायः ॥ * ॥
(एतदाचारस्तु
चतुर्व्विधधर्म्मप्रमाणान्यतमः ।
यथा, मनुः । २ । ६ ।
“वेदोऽखिलो धर्म्ममूलं स्मृतिशीले च
तद्विदाम्
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च
॥”)
कलिशूद्रस्त्रीणां साधुत्वं तत्कारणञ्च यथा ।
“कलिः साध्विति यत् प्रोक्तं शूद्रः
साध्विति
योषितः ।
तस्यार्जने महान् क्लेशः पालने च
द्विजोत्तमाः ।
तथा सद्विनियोगाय विज्ञेथं गहनं नृणाम्
॥
एभिरन्यै स्तथा क्लेशैः पुरुषा
द्विजसत्तमाः ।
निजान् जयन्ति वै लोकान्
प्राजापत्यादिकान्
क्रमात् ॥
योषित्शुश्रूषणं भर्त्तुः कर्म्मणा मनसा
गिरा ।
कुर्व्वती समवाप्नोति तत्सालोक्यं ततो
द्विजाः ॥
नातिक्ले शेन महता तानेव पुरुषो यथा
।
तृतीयं व्याहृतं तेन मया साध्विति
योषिताम् ॥”
इति विष्णुपुराणे । ६ । २ । १२ -- २९
॥

**साधुः**, त्रि, (साध्यति कार्य्यमिति । साध + उण्
।)
वार्द्धुषिकः । चारुः । (यथा, महाभारते ।
१ ।
१०७ । ८ ।
“न किञ्चिद्वचनं राजन्नब्रवीत् साध्वसाधु
वा ॥”)
सज्जनः । इति मेदिनी ॥

**साधुजः**, त्रि, (साधौ सत्कुले जायते इति ।
जन + डः ।) उत्तमकुलोद्भवः । इति
शब्द-
रत्नावली ॥

**साधुधीः**, स्त्री, (साधुर्धीर्य्यस्याः ।) श्वश्रूः । इति
हारावली । २०१ ॥ (साधुर्धी ।)
सुन्दरबुद्धिः ।
तद्युक्ते, त्रि ॥

**साधुपुष्पं**, क्ली, (साधु चारु पुष्पं यस्य ।) स्थल-

साधुलक्षणं यथा, --

"यथालब्धोऽरिसन्तुष्टः समचित्तो जितेन्द्रियः ।
हरिपादाश्रयो लोके विप्रः साधुरनिन्दकः ॥ १ ॥
निर्वैरः सदयः शान्तो दम्भाहङ्कारवर्ज्जितः ।
निरपेक्षो मुनिर्व्वीतरागः साधुरिहोच्यते ॥ २ ॥
लोभमोहमदक्रोधकामादिरहितःसुखो ।
कृष्णाङ्घ्रिशरणः साधुः सहिष्णुः समदर्शनः ॥ ३ ॥
समचित्तो मुनिः पूतो गोविन्दचरणाश्रयः ।
सर्व्वभूतदयः कार्ष्णो विवेकी साधुरुत्तमः ॥ ४ ॥
कृष्णार्पितप्राणशरीरबुद्धिः
शान्तेन्द्रियस्त्रीसुतसम्पदादिः ।
आसक्तचित्तः श्रवणादिभक्ति-
र्यस्येह साधुः सततं हरेर्यः ॥ ५ ॥
कृष्णाश्रयः कृष्णकथानुरक्तः
कृष्णेष्टमन्त्रस्मृतिपूजनीयः ।
कृष्णानिशं ध्यानमनास्त्वनन्यो
यो वै स साधुर्म्मुनिवर्य्यकार्ष्णः ॥" ६ ॥
इति पाद्मोत्तरखण्डे ९९ अध्यायः ॥ * ॥
अन्यच्च ।
"न प्रहृष्यति सम्माने नावमानेन कुप्यति ।
न क्नुद्धः परुषं ब्रूयादेतत् साधोस्तु लक्षणम् ॥"
इति गारुडे । ११३ । ४२ ॥ * ॥
तस्य स्वभावो यथा, --
"त्यक्तात्मसुखभोगेच्छाः
सर्व्वसत्त्वसुखैषिणः ।
भवन्ति परदुःखेन साधवो नित्यदुःखिताः ॥
यच्चाह भगवान् साधुर्धन्याश्चेति पुनः पुनः ॥
तत् सर्व्वं श्रोतुमिच्छामो न चेत् गुह्यं महामुने
इत्युक्तो मुनिभिर्व्यासः प्रहस्येदमथाब्रवीत् ॥
श्रूयतां भो मुनिगणा यदुक्तं साधु साध्विति
यत् कृते दशभिर्व्वर्षैस्त्रेतायां हायनेन तत् ॥
द्वापरे तच्च मासेन अहोरात्रेण तत् कलौ ।
तपसो ब्रह्मचर्य्यस्य जपादेश्च फलं द्विजाः ॥
प्राप्नोति पुरुषस्तेन कलिः साध्विति भाषितम्
ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्च्चयन् ॥
यदाप्नोति तदाप्नोति कलौ संकीर्त्त्य केशवम् ।
धर्म्मोत्कर्षमतीवात्र प्राप्नोति पुरुषः कलौ ॥
स्वल्पायासेन धर्म्मज्ञास्तेन तुष्टोऽस्म्यहं कलेः ॥ *
व्रतचर्य्यापरैर्ग्राह्या वेदाः पूर्व्वं द्विजातिभिः ।
ततस्तु धर्म्मसंप्राप्तैर्यष्टव्यं विधिवद्धनैः ॥
वृथाकथा वृथाभोज्यं वृथेज्या च द्विजन्मनाम् ।
पतनाय तथा भाव्यं तैस्तु संयमिभिः सदा ॥
असम्यक्करणे दोषास्तेषां सर्व्वेषु वस्तुषु ।
भक्ष्यपेयादिकं चैषां नेच्छाप्राप्तिकरं द्विजाः ॥
पारतन्त्रं समस्तेषु तेषां कार्य्येषु वै यतः ।
जयन्ति ते निजान् लोकान् क्लेशेन महता द्विजाः ॥
द्विजशुश्रूषयैवैष पाकयज्ञाधिकारवान् ।
निजं जयति वै लोकं शुद्रो धन्यतरस्ततः ॥
भक्ष्याभक्ष्येषु नास्यास्ति पेयापेयेषु वा यतः ।
नियमो मुनिशार्द्दूलास्ते नासौ साध्वितीरितम् ॥
स्वधर्म्मस्याविरोधेन नरैर्लब्धं धनं सदा ।
पद्मम् । इति शब्दमाला ॥ उत्तमकुसुमञ्च ॥

**साधुवाहः**, पुं, (साधुरुत्तमो वाहः ।) विनीताश्वः । इति हेमचन्द्रः ॥ सुन्दरवाहनश्च ॥

**साधुवाही**, [न्] पुं, (साधु उत्तमं वहतीति । वह + णिनिः ।) शोभनवहनशीलघोटकः । सुशिक्षिताश्वः । तत्पर्य्यायः । विनीतः २ । इत्यमरः । २ । ८ । ४४ ॥ सुष्ठुवाहनशीलकः ३ । इति शब्दरत्नावली ॥ सुन्दरघोटकविशिष्टे, त्रि ॥ (साधुवहनशीले, त्रि । यथा, महा-भारते । ६ । ४६ । ३६ ।
"तस्य क्रु द्धः स नागेन्द्रो वहतः साधुवाहिनः ।
पदा युगमधिष्ठाय जघान चतुरो हयान् ॥")

**साधुवृक्षः**, पुं, (साधुर्वृक्षः ।) कदम्बतरुः । इति शब्दचन्द्रिका ॥ वरुणवृक्षः । इति राज-निर्घण्टः ॥ शोभनतरुश्च ॥

**साधुवृत्तिः**, स्त्री, उत्तमजीविका । सद्विवरणम् । सुन्दरवर्त्तनम् । साध्वी चासौ वृत्तिश्चेति कर्म्म-धारयसमासनिष्पन्ना । साधोर्वृत्तिरिति षष्ठी-तद्पुरुषसमासनिष्पन्नावा ॥

**साधृतं**, क्ली, मयूरसमूहः । पण्यवीथी । आत-पत्रम् । इत्यजयपालः ॥

**साध्यः**, पुं, (साध्यमस्त्यस्येति । अर्शआदित्वादच् ।) गणदेवताविशेषः । इत्यमरः । १ । १ । १० ॥ स तु द्वादशसंख्यकः । यथा, भरतः ।
"साध्या द्वादशविख्याता रुद्राश्चैकादश स्मृताः ॥"

| | | |
|---|---|---|
| | प्रतिपाद्यञ्च पात्रेषु यष्टव्यञ्च यथाविधि ॥ | तेषां नामानि यथा, --<br>“मनो मन्ता तथा प्राणो नरोऽपानश्च वीर्य्यवान् ।<br>विनिर्भयो नयश्चैव दसो नारायणो वृषः ।<br>प्रभुश्चेति समाख्याताः साध्या द्वादश पौर्व्विकाः ॥”<br>इति वह्निपुराणे गणभेदनामाध्यायः ॥ * ॥ |

देवः । विष्कम्भादिसप्तविंशतियोगान्तर्गतैकविंश-
योगः । इति मेदिनी ॥ तत्र जातफलम् ।
“असाध्यसाध्यः किल साध्यजातः
शूरोऽतिधीरो विजितारिपक्षः ।
बुद्ध्या ह्युपायैः परिसाधितार्थः
परं कृतार्थः सुतरां विनीतः ॥”
इति कोष्ठीप्रदीपः ॥

**साध्यः**, त्रि, (साध + ण्यत् ।) साधनीयः । इति
मेदिनी ॥ यथा, --
“ऋणादिषु विवादेषु स्थिरप्रायेषु निश्चितम् ।
ऊने वाप्यधिके चार्थे प्रोक्ते साध्यं न सिध्यति ॥”
इति मिताक्षराधृतकात्यायनवचनम्॥
साधनार्हाभिमतः । स तु पक्षः । यथा, --
“प्रतिज्ञादोषनिर्म्मुक्तं साध्यं सत्कारणान्वितम् ।
निश्चितं लोकसिद्धञ्च पक्षं पक्षविदो विदुः ॥”
साध्यं साधनार्हाभिमतं पक्षं विदुः । यद्यप्यन्नत्र
साध्यं ज्ञाप्यं तद्विशिष्टधर्म्मी पक्ष इति भेद-
स्तथाप्यत्र वाक्प्रत्याय्यर्णादिधर्म्मविशेषविशि-
ष्टस्य पक्षतया धर्म्मिणोऽधमर्णपदैरेव साध्यत्वात्
साध्यपक्षयोरभेदाभिधानम् । इति व्यवहार-
तत्त्वम् ॥ * ॥ अनुमितिविधेयः । यथा ।
साध्यता-
वच्छेदकमिति अनुमितिविधेयतावच्छेदक-
मित्यर्थः । इति सिद्धान्तलक्षणजागदीशीटीका॥
मन्त्रविशेषः । यथा, --
“नामाद्यक्षरमारभ्य यावन्मन्त्रादिमाक्षरम् ।
चतुर्भिः कोष्ठैरेकैकमिति कोष्ठचतुष्टयम् ॥
पुनः कोष्ठगकोष्ठेषु सव्यतो नाम्न आदितः ।
सिद्धः साध्यः सुसिद्धोऽरिः क्रमाज्ज्ञेया मनी-
षिभिः ॥
सिद्धः सिध्यति कालेन साध्यस्तु जपहोमतः ।
सुसिद्धो ग्रहणमात्रेण अरिर्मूलं निकृन्तति ॥”
इति तन्त्रसारः ॥

**साध्यतावच्छेदकं**, क्ली, (साध्यतामवच्छिनत्तीति ।
अव + छिद + ण्वुल् ।) अनुमितिविधेयांशे
भासमानो धर्म्मः । यथा साध्यतावच्छेदकमिति
अनुमितिविधेयतावच्छेदकमित्यर्थः । तथा
चोक्तव्याप्तिज्ञानाद्दण्ड्यंशेदण्डत्वप्रकारिकादण्ड-

**साध्वसं**, क्ली, (साध्रूनस्यतीति । साधु + अस +
अक् ।) भयम् । इत्यमरः । १ । ७ ।
२१ ॥
(यथा, भागवते । २ । १ । १५ ।
“अन्तकालेऽपि पुरुष आगते
गतसाध्वसः ।
छिन्द्यादसङ्गशस्त्रेण स्पृहां देहेऽनु ये
च तम् ॥”
स्यति नाशयतीति । सो +
“स्यतेर्धुक् ।” इति
असच् धुक् च । प्रतिभा ।
इत्युणादिटीकायां
उज्ज्वतः । ३ । ११७ ॥
भाणिकाङ्कविशेषः ।
इति साहित्यदर्पणम् । ६ । ५५६ ॥)

**साध्वी**, स्त्री, (साधु + ङीष् ।) मेदा । इति राज-
निर्घण्टः ॥ पतिव्रता । इत्यमरः । २
। ६ । ६ ॥
तल्लक्षणमाह हारीतः ।
“आर्त्तार्त्ते मुदिता हृष्टे प्रोषिता
मलिना कृशा
मृते म्रियेत या पत्यौ साध्वी ज्ञेया
पतिव्रता ॥”
(“सा स्त्री ज्ञेया पतिव्रता ।” इत्यपि
क्वचित्
पाठः ॥ * ॥) तद्धर्म्मा यथा ।
अङ्गिराः ।
“साध्वीनामेव
नारीणामग्निप्रपतनादृते।
नान्यो धर्म्मो हि विज्ञेयो मृते भर्त्तरि
कर्हि-
चित् ॥”
इति शुद्धितत्त्वम् ॥
तत्प्रशंसा यथा, --
“साध्वी स्त्री मातृतुल्या च सर्व्वथा
हित-
कारिणी ।
यथा जारे पुंश्चलीनां साध्वीनान्तु तथा
प्रिये ।
शोकं निमग्नमन्येषां कालेन पानभोजनात्
।
विपरीतं कान्तशोको वर्द्धते भक्षणादहो
॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । १७
।
८७, ९०, ९७ ॥ * ॥ किञ्च ।
“आकाशोऽसौ दिशः सर्व्वा यदिनश्यन्ति
वायवः
तथापि साध्वीशापस्तु न नश्यति
कदाचन ॥”
इति तत्रैव । ४२ । ३४ ॥

**सानन्दः**, पुं, (आनन्देन सह वर्त्तते इति ।)
षोडशध्रुवकान्तर्गतध्रुवकभेदः । यथा, --
“अष्टादशाक्षरैर्युक्तो यशोहर्षप्रदो ध्रुवः ।
कहस्कसंज्ञके ताले सानन्दो वीरके रसे
॥”
इति सङ्गीतदामोदरः ॥
गुच्छकरञ्जः । इति राजनिर्घण्टः ॥
आह्लाद-
युक्ते, त्रि । यथा, --
“रामं नमयति सानन्दं धर्म्मानभिनिविश्य
सन् ॥”
इति मुग्धबोधव्याकरणम् ॥

**सानन्दूरः**, पुं, तीर्थविशेषः । यथा, --
धरण्युवाच ।
“द्वारकातः परं श्रेष्ठं अस्ति गुह्यं परं
क्वचित्
ततो महीवचः श्रुत्वा विष्णुः
कमललोचनः ।
वाराहरूपी भगवान् प्रत्युवाच वसुन्धराम्
॥
वराह उवाच ।
सानन्दूरेति विख्यातं भूमे ! गुह्यं परं मम ।
उत्तरे तु समुद्रस्य मलयस्य च दक्षिणे ।
तत्र तिष्ठामि वसुधे उदीचीदिशमाश्रितः ॥

त्ववत्त्वानित्येकानुमितिर्न तु दण्डिमान् इत्याकारा दण्डप्रकारिकापि तस्य व्यापकतावच्छेदकत्वेनाग्रहात् कारणवाधेन तदसम्भवादिति भावः । इति । सिद्धान्तलक्षणस्य जागदीशी टीका ॥

**साध्यसिद्धिपादः**, पुं, (साध्यस्य सिद्धिर्यत्र । तादृशः पादः ।) व्यवहारस्य चतुर्थपादः । स च निर्णयपादः । यथा । प्रत्यर्थिनोऽग्रतो लेख्यमिति भाषापादः प्रथमः । श्रुतार्थस्योत्तरं लेख्यमित्युत्तरपादो द्वितोयः । ततोऽर्थो लेखयेत् सद्य इति क्रियापादस्तृतीयः । तत्सिद्धौ सिद्धिमाप्नोति इति साध्यसिद्धिपादश्चतुर्थः । यथा, --
"भाषोत्तरक्रियासाध्यसिद्धिभिः क्रमवृत्तिभिः ।
आक्षिप्तचतुरंशस्तु चतुष्पादभिधीयते ॥"
इति मिताक्षरा ॥

असाध्वी वैरतुल्या च शश्वत्
सन्तापदायिका ॥"
इति ब्रह्मवैवर्त्ते गणपतिखण्डे । २ । २५ ॥ * ॥
साध्वीस्त्रीणां पतिः प्रेम्णा
शतपुत्राधिकः ।
यथा, --
"शतपुत्राधिकः प्रेम्णा सतीनाञ्च
पतिर्नृप ! ।
निरूपितो भगवता वेदेषु हरिणा
स्वयम् ॥"
इति तत्रैव । ३४ । ६२ ॥ * ॥
"कामिनीं कुलजाताञ्च रहस्ये
कामिनीं
सतीम् ।
न पृच्छति कुले जात एवमेव श्रुतौ
श्रुतम् ॥
श्रुतौ पुराणे यासाञ्च
चरित्रमनिरूपितम् ।
तासु को विश्वसेत् प्राज्ञो अप्रज्ञाञ्च
दुराशयाम्
तासां को वा रिपुर्म्मित्रं प्रार्थयन्ती
नवं नवम्
दृष्ट्वा सुवेशं पुरुषमिच्छन्ति हृदये
सदा ॥
वाह्ये स्वात्मसतीत्वञ्च प्रापयन्ती
प्रयत्नतः ।
सत्त्वप्रधानं यद्रूपं तत् शुद्धञ्च
स्वभावतः ।
तदुत्तमञ्च विश्वेषु साध्वीरूपं
प्रशंसितम् ॥
स्थानाभावावात् क्षणभावात्
मध्यवृत्तेरभावतः
देहक्लेशेन रोगेण सत्संसर्गेण
सुन्दरि ! ॥
बहुगोष्ठीवृतेनैव रिपुराजभयेन च ।
रजोरूपस्य साध्वीत्वमेतेनैव
प्रजायते ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे १४
अध्यायः ॥ * ॥
अन्यच्च ।
प्रतिमा वै मदीयास्ति नात्युच्चा
नातिनीचका ।
आयसीं तां वदन्त्येके अन्येताम्रसयीं
तथा ॥
कांस्यीं रीतिमयीमन्ये केवित्
सीसकनिर्म्मिताम्
शिलामयीमित्यपरे महदाश्चर्य्यरूपिणीम्
।
तत्र स्थानानि मे भूमे कथ्यमानं मया शृणु
॥
मनुजा यत्र मुच्यन्ते गताः संसारसागरम्
।
तत्राश्चर्य्यं प्रवक्ष्यामि सानन्दूरे
यशस्विनि ! ॥
सौवर्णं दृश्यते पद्मं मध्याह्ने तु दिवाकरे ।
यत्र रामगृहं नाम मम गुह्यं यशस्विनि ॥
तत्रापि शृणु चाश्चर्य्यं यच्चापि परिवर्त्तते
।
एवं तत्र लता वृक्षमुच्चस्थूलमहाद्रुमम् ।
समुद्रमध्ये तिष्ठन्तं सोऽपि तत्र न पश्यति
॥ * ॥
अन्यच्च ते प्रवक्ष्यामि महाश्चर्य्यं शृणुष्व
मे ।
मम भक्तांश्च पश्यन्ति तिष्ठन्तो हि
स्वकर्म्मणा ॥
बहुमत्स्यसहस्राणि कोट्यो ह्यर्व्वुदमेव च
।
क्षिप्तः पिण्डश्च तन्मध्ये येन केन
विकर्म्मिणा ॥
एकस्तत्र स्थूलमत्स्यो भूमिचक्रेण
चाङ्कितः ।
तावत् कश्चिन्न गृह्णाति यावत्तेन न
भक्षितः ॥
तत्र रामसरं नाम तस्मिन् क्षेत्रे परं मम ।
अगाधञ्चाप्यपारञ्च रक्तपद्मविभूषितम् ॥
तत्र स्नानन्तु कुर्व्वीत एकरात्रोषितो नरः
।
बुधस्य भवनं गत्वा मोदते नात्र संशयः ॥
अथ प्राणान् प्रमुच्येत रम्ये रामसरे तथा
।

|  | “सुते स्तनान्धे यः स्ने हो याकाङ्क्षान्वेतिक्षोभिते<br>पतिस्ने हस्य साध्वीनां कलां नार्हन्ति षोडशीम्<br>स्तनान्धे स्तनदानान्तं मिष्टान्ने भोजनावधि ।<br>कान्ते चित्तं सतीनाञ्च स्वप्ने ज्ञाने च सन्ततम् ॥<br>नान्ने तृष्णा जले तृष्णा साध्वीनां स्वामिना<br>विना । | बुधस्य भवनं त्यक्त्वा मम लोकञ्च गच्छति ॥<br>तत्र रामसरे भूमे महाश्चर्य्यं शृणुष्व मे ।<br>मनुजास्तत्र पश्यन्ति मम कर्म्मपरायणाः<br>॥ |
| --- | --- | --- |

सत्सरः क्रोशविस्तारं बहुगुल्मलताकुलम् ।
मनोज्ञं रमणीयञ्च जलजैश्चापि संवृतम् ॥
तत्र मूढालिपद्मानि द्योतयन्ति दिशो दश ।
एकन्तु दृश्यते श्वेतमेकं रुक्ममयं तथा ॥
तत्र ब्रह्मसरं नाम गुह्यं क्षेत्रे परं मम ।
उत्तरेण तु पार्श्वेन मम क्षेत्रस्य सुन्दरि ॥
तत्र कुण्डं महाभागे पर्व्वते च समाश्रितम् ।
धारा यत्र पतेच्चैव स्थूला मुषलसन्निभा ॥
तत्र स्नानञ्च कुर्व्वीत षष्ठकालोषितो नरः ।
ब्रह्मलोकं समासाद्य मोदते नात्र संशयः ॥
अथ प्राणान् प्रमुच्येत तत्र ब्रह्मसरे मम ।
ब्रह्मणा समनुज्ञातो मम लोकञ्च गच्छति ॥
तत्राश्चर्य्यं महाभागे रम्ये ब्रह्मसरे शृणु ।
मद्भक्ता यानि पश्यन्ति घोरं संसारमोक्षणम्
॥
चतुर्व्विंशतिद्वादश्यां सा धारा पृथलेक्षणे ।
मध्याह्ने पतते भूमे यावत् सूर्य्यः स तिष्ठति
॥
परावृत्ते तु मध्याह्ने सा धारा न पतेद्भुवि ।
एवं तत्र महाश्चर्य्यं पुण्ये ब्रह्मसरे मम ॥”
इति वाराहे सानन्दूरमाहात्म्यनामाध्यायः
॥

**सानसिः**, पुं, (सन्यते दीयते दक्षिणाद्यर्थमिति ।

षणु दाने + “सानसिवर्णसीति ।” उणा० ४
।
१०७ । इति असिप्रत्ययेन साधुः ।)
सुवर्णः ।
इत्युणादिकोषः ॥ (संभजनीये, त्रि । यथा,
ऋग्वेदे । १० । १४० । ४ ।
“पृणक्षि सानसिं क्रतुम् ॥”
“सानसिं संभजनीयं क्रतुं कर्म्म पृणक्षि
अस्माभिः संपर्चयसि फलेन वा
संयोजयसि ॥”
इति तद्भाष्ये सायणः ॥)

**सानिका**, स्त्री, (सनति सुस्वरमिति । षणुदाने +

ण्वुल् । टापि अत इत्वम् ।) वंशी । इति
शब्द-
रत्नावली ॥

वाच्यलिङ्गेऽपि दृश्यते । यथा, रामायणे
। २ ।
४८ । १० ।
“आपगाश्च महानूपाः सानुमन्तश्च
पर्व्वताः ॥”)

**सानेयिका**, स्त्री, (सानेयी + स्वार्थे कन् ।) वंशी
।

इति शब्दरत्नावली ॥

**सानेयी**, स्त्री, वंशी । इति शब्दरत्नावली ॥

**सान्तपनं**, क्ली, (सन्तपतीति । सम् + तप +
ल्युः ।

ततः स्वार्थे अण् ।) व्रतविशेषः ।
इत्यमरः । २ ।
७ । ५२ ॥ यथा, --
“गोमूत्रं गोमयं क्षिरं दधि सर्पिः
कुशोदकम् ॥
एकरात्रोपवासश्च कृच्छ्रं सान्तपनं
स्मृतम् ॥”
इति मानवे ११ अध्यायः ॥
गोमूत्रामति । गोमूत्रादि एकीकृत्य
एकस्मिन्न-
हनि भक्षयेत् नान्यत् किञ्चिदद्यात्
अपरदिने
चोपवासः । इत्येतत् सान्तपनं कृच्छ्रं
स्मृतम् ।
यदा तु गोमूत्रादिषट् प्रत्येकं
षड्दिनान्युप-
भुज्यते सप्तमे दिने चोपवासः तदा
महासान्त-
पनं भवति । तथा च याज्ञवल्क्यः ।
“कुशोदकञ्च गोक्षीरं दधि मूत्रं शकृद्
घृतम्
जग्ध्वा परेऽह्न्युपवसेत् कृच्छ्रं
सान्तपनञ्चरन् ॥
पृथक्सान्तपनद्रव्यैः
षडहःसोपवासिकः ।
सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनं
स्मृतम् ॥”
इति कुल्लूकभट्टः ॥

“कानि सान्त्वानि गोविन्दः सूतपुत्त्रे प्रयुक्त-
वान् ॥”)
साम । तच्च प्रियवादार्थप्रदानसम्बन्धादिभिः
क्रोधोपशमनम् । इत्यमरभरतौ ॥ (यथा,
माघे । २ । ५४ ।
“चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया ।
स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति
॥”
दाक्षिण्यम् । इति मेदिनी ॥

**सान्त्वनं**, क्ली, (सान्त्व + ल्युट् ।) सामोपायः ।

इति हेमचन्द्रः ॥ प्रियकरणम् । इति सान्त्व-
धातुटीकायां दुर्गादासः ॥ (यथा, महाभा-
रते । २ । ३८ । ६ ।
“नास्मै देयो ह्यनुनयो नायमर्हति सान्त्वनम् ।
लोकवृद्धतमे कृष्णे योऽर्हनां नाभिमन्यते ॥”)

**सान्त्वना**, स्त्री, क्ली, सान्त्व + युच् । टाप् । क्लीपक्षे

ल्युट् ।) सान्त्वनम् । प्रणयः । यथा ।
“प्रणयः
सान्त्वना न ना ।” इति जटाधरः ॥

**सान्त्ववादः**, त्रि, (सान्त्वस्य सामस्य वादः

कथनम् ।) सान्त्वनावाक्यम् । इति केचित् ॥

**सान्दीपनिः**, पुं, (सन्दीपनस्यापत्यमिति । सन्दी-

पन + इञ् ।) मुनिविशेषः । यथा, ब्रह्मवैवर्त्ते
श्रीकृष्णजन्मखण्डे । ९९ । ३० ।
“विश्वामित्रः सतानन्दो
जाजलिस्तैतिलिस्तथा
सान्दीपनिश्च ब्रह्मांशो योगिनां ज्ञानिनां गुरुः
॥”
अपि च ।
“विदिताखिलविज्ञानौ तत्त्वज्ञानमयावपि ।
शिष्याचार्य्यक्रमं वीरौ ख्यातयन्तौ यदूत्तमौ
॥
ततः सान्दीपनिं काश्यमवन्तिपुरवासिनम् ।
अस्त्रार्थं जग्मतुर्व्वीरौ बलदेवजनार्द्दनौ ॥”
काश्यं काश्यां जातम् ।
“तस्य शिष्यत्वमभ्ये त्य गुरुवृत्तिपरौ हि तौ ।
दर्शयाञ्चक्रतुर्व्वीरावाचारमखिलेजने ॥

**सानुः**, पुं, क्ली, (सन्यते सेव्यते मुनिप्रभृतिभिरिति

सन सेवायाम् + "दृसनिजनीति ।" उणा० १ ।
३ । इति ञुण् ।) पर्व्वतसमभूभागः । तत्पर्य्यायः ।
स्नुः २ प्रस्थः ३ । इत्यमरः । २ । ३ । ५ ॥ (यथा,
रामायणे । २ । ३१ । २७ ।
"भवास्तु सह वैदेह्या गिरिसानुषु रंस्यते ।
अहं सर्व्वं करिष्यामि जाग्रतः स्वपतश्च ते ॥")
वनम् । वात्या । मार्गः । अप्रम् । कोविदः ।
इति मेदिनी ॥ अर्कः । पल्लवः । इति जटाधरः ॥

**सानुजं**, क्ली, (सानौ जायते इति । जन् + डः ।)

प्रपौण्डरीकम् । इति राजनिर्घण्टः ॥

**सानुजः**, पुं, (सानौ पर्व्वतप्रस्थे जायते इति ।

जन + डः ।) तुम्बुरुवृक्षः । इति राजनिर्घण्टः ॥
अनुजेन सह वर्त्तमाने सानुजाते च त्रि ॥

**सानुमान्**, [त्] पुं, (सानुर्विद्यतेऽस्येति । सानु +

मतुप् ।) पव्वतः । इत्रि हेमचन्द्रः ॥ (यथा,
रघुः । ८ । ९० ।
"न पृथग्जनवच्छुचो वशं
वशिनामुत्तम ! गन्तुमर्हसि ।
द्रुमसानुमतां किमन्तरं
यदि वायौ द्वितयेऽपि ते चलाः ॥"
गारुडे १०५ अध्यायेऽप्येवम् ॥
(सन्तापके,
त्रि ॥ यथा, ऋग्वेदे । ७ । ५९ । ९ ।
"सान्तपना इदं हविर्मरुतस्तज्जुजुष्टन ॥"
"सान्तपनाः शत्रूणां संतापका हे मरुतः ॥"
इति तद्भाष्ये सायणः ॥ सन्तपनस्य सूर्य्यस्येद-
मिति । अण् । सूर्य्यसम्बन्धिनि च त्रि । यथा,
वाजसनेयसंहितायाम् । १७ । ८५ ।
"स्वतवाँश्च प्रघासी च सान्तपनश्च गृहमेधी च ।"
'सन्तपनः सूर्य्यस्ततसम्बन्धी सान्तपनः ।' इति
तद्भाष्यम् ॥)

**सान्तरं**, त्रि, विरलम् । इति जटाधरः ॥ (यथा,

बृहत्संहितायाभ् । २२ । ३ ।
"यदि ताः स्युरेकरूपाः
शुभास्ततः सान्तरास्तु न शिवाय ॥")
अन्तरेण सह वर्त्तमानञ्च ॥
(सावकाशम् ।
यथा, महाभारते । ७ । ११ । १८ ।
"तस्य जिह्मभिप्रायं ज्ञात्वा द्रोणोऽथ तत्त्व-
वित् ।
तं वरं सान्तरं तस्मै ददौ संचिन्त्य बुद्धिमान् ॥")

**सान्त्व**, क सामयोगे । इति कविकल्पद्रुमः ॥ (चुरा०

पर०-सक०-सेट् ।) क, सान्त्वयति शीतार्त्तं
दयालुः । इति दुर्गादासः ॥

**सान्त्व**, त् क सान्त्वने । इति कविकल्पद्रुमः ॥

(अदन्तचुरा०-पर०-सक०-सेट् ।) दन्त्यादि-
स्तमध्यः वकारोपधः । सान्त्वनं प्रियकरणम् ।
सरहस्यं धनुर्व्वेदं ससंग्रहमधीयताम् ।
अहोरात्रै श्चतुःषष्ट्या तदद्भुतमभूद्द्विज ॥
सान्दीपनिरसंभाव्यं तयोः कर्म्मातिमानुषम् ।
विचिन्त्य तौ तदा मेने प्राप्तौ चन्द्रदिवाकरौ ॥
अस्त्रग्राममशेषञ्च प्रोक्तमात्रमवाप्य तौ ।
ऊचतुर्व्रियतां या ते दातव्या गुरुदक्षिणा ॥
सोऽप्यतीन्द्रियमालोक्य तयोः कर्म्म महामातिः
अयाचत मृतं पुत्त्रं प्रभाते लवणार्णवे ॥"
अतीन्द्रियं अन्यत्रादृष्टपूर्व्वम् ।
"गृहीतास्त्रौ ततस्तौ तु सार्घपात्रो महोदधिः
उवाच न मया पुत्त्रो हृतः सान्दीपनेरिति ॥
दैत्यः पञ्चजनो नाम शङ्खरूपः स बालकम् ।
जग्राह सोऽस्ति सलिले ममैवारिनिसूदन ॥
इत्युक्तेऽन्तर्जलं गत्वा हत्वा पञ्चजनञ्च तम् ।
कृष्णो जग्राह तस्यास्थिप्रभवं शङ्खमुत्तमम् ॥
तं पाञ्चजन्यमापूर्य्य गत्वा यमपुरीं हरिः ।
बलदेवश्च बलवान् जित्वा वैवस्वतं यमम् ॥
तं बालं यातनासंस्थं यथापूर्व्वशरीरिणम् ।
पित्रे प्रदत्तवान् कृष्णो बलश्च बलिवां वरः ॥"
इति विष्णुपुराणे । ५ । २१ । १८ । ३० ।

| | | |
|---|---|---|
| | सान्त्वयति सान्त्वापयति । इति दुर्गादासः ॥<br>**सान्त्वं**, क्ली, (सान्त्व सान्त्वने + घञ् ।) अत्यर्थ-<br>मधुरम् । तत्तु कर्णमनःप्रीतिजनकं वाक्यम् ।<br>(यथा, महाभारते । ५ । १४० । २ । | |

**सान्दृष्टिकं**, क्ली, (सन्दृष्टौ प्रत्यक्षे भवम् । सन्दृष्टि + ठञ् ।) सद्यःफलम् । इत्यमरः । २ । ८ । २९ ॥
दृष्टपरिकल्पनान्यायः । यथा पितामहदौहित्राभावे प्रपितामहप्रपितामह्योः क्रमेणाधिकारः प्रपितामहपिण्डस्य धनिभोग्यत्वात् पूर्व्वोक्तसांदृष्टिकन्यायसिद्धत्वाच्च। इति दाय-
क्रमसंग्रहः ॥

**सान्द्रं**, क्ली, (अदि बन्धने + बाहुलकात् रक् । अन्द्रेण सह वर्त्तते इति ।) वनम् । इति मेदिनी ॥

**सान्द्रः**, त्रि, (अन्द्रेण निविडबन्धनेन सह वर्त्तते इति ।) घनः । इत्यमरः । ३ । १ । ६६ ॥ (यथा,
माघे । ४ । २८ ।
"उच्चैर्महारजतराजिविराजितासौ
दुर्व्वर्णभित्तिरिह सान्द्रसुधासवर्णा ॥")
मृदुः । इति मेदिनी ॥ स्निग्धः । मनोज्ञः । इति शब्दरत्नावली ॥

**सान्द्रपुष्पः**, (सान्द्रं पुष्पमस्य ।) विभीतकवृक्षः । इति शब्दचन्द्रिका ॥

**सान्द्रस्निग्धः**, त्रि, (सान्द्रः स्निग्धश्च ।) निविडस्निग्धः । तत्पर्य्यायः । मेदुरः २ । इति शब्द-
रत्नावली ॥

**सान्धिकः**, पुं, (सन्धा मद्यसज्जीकरणं शिल्पमस्य सन्धा + ठक् ।) शौण्डिकः । इति शब्दमाला ॥
(सन्धिं करोतीति । ठक् ।) सन्धिकर्त्ता च ॥

**सान्धिवेलं**, त्रि, (सन्धिवेला + "सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ।" ४ । ३ । १६ । इति अण् ।)
सन्धिवेलायां भवम् । इति सिद्धान्तकौमुदी ॥

**सान्निपातिकः**, त्रि, (सन्निपातस्य शमनं कोपनं वा । "सन्निपाताच्च ।" ५ । १ । ३८ । इत्यस्य
वार्त्तिकोक्त्या स्वार्थे ष्यञ् ।)
सन्निपातजरोगः ।
इति राजनिर्घण्डः ॥ यथा, कुमारे । २ । ४८ ।
"तस्मिन्नुपायाः सर्व्वे नः क्रूरे प्रतिहतक्रियाः ।
वीर्य्यवन्त्यौषधानीव विकारे सान्निपातिके ॥")
तद्विवरणं सन्निपातशब्दे द्रष्टव्यम् ॥

**सान्न्यासिकः**, पुं, (संन्यासः प्रयोजनमस्येति । ठक् ।) सन्न्यासी । तत्पर्य्यायः । भिक्षुः २ यतिः ३
कर्म्मन्दी ४ रक्तवसनः ५ परिव्राजकः ६ तापसः
७ पाराशरी ८ पारिकाङ्क्षी ९ मस्करी १०
पारिरक्षकः ११ । इति हेमचन्द्रः ॥

**सापत्न्यः**, पुं, (सपन्त एव । स्वार्थे ष्यञ्) शत्रुः । इत्यमरटीकायां रमानाथः । २ । ८ । १० ॥
(सपत्न्या अपत्यमिति । सपन्ती + ष्यञ् ।)
सपत्नीपुत्त्रः । यथा, बहस्पतिः ।
"पित्रा सह विभक्ता ये सापत्न्या वा सहोदराः
जघन्यजाश्च ये तेषां पितृभागहरास्तु ते ॥"
इति दायतत्त्वम् ॥
(सपत्न्या भावः । सपन्ती + ब्राह्मणादित्वात्
व्यञ् ।) सपत्नीभावे, क्ली ॥ (यथा, माघे ।
८ । १५ ।
"गित्याया निजवसतेर्निरासिरे य-
द्रागेण श्रियमरविन्दतः कराग्रैः ।
"जिह्वे श्रीकृष्णमन्त्रं जप जप सततं जन्म-
साफल्यमन्त्रम् ॥")

**साब्दी**, स्त्री, द्राक्षाविशेषः । इति केचित् ॥

**साम**, क सान्त्वे । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-सक०-सेट् ।) दन्त्यादिर्द्वितीयस्वरी । सान्त्वः
प्रियकरणम् । क, सामयति दीनं दानेन दाता ।
इति दुर्गादासः ॥

**साम**, त् क सान्त्वने । इति कविकल्पद्रुमः ॥ (अदन्तचुरा०-पर०-सक०-सेट् ।) सान्त्वनं प्रिय-
करणम् । अससामत् दीनं दानेन दाता ।
इति दुर्गादासः ॥

**साम**, [न्] क्ली, (स्यति छिनति दुःखं गेयत्वात् स्यति दुःखयति दुरध्ये यत्वादिति वा । सो
+ "सातिभ्यां मनिन्मनिणौ ।" उणा० ४ । १५२ ।
इति मनिन् ।) वेदविशेषः । इत्यमरः । १ । ६ । ३ ॥
स्यति पापं साम षो य नाशे त्रासुसिति मन् ।
इति भरतः ॥ तल्लक्षणमाह जैमिनिः । गीतेषु
सामाख्या इति । गीयमानेषु मन्त्रेषु सामसंज्ञे-
त्यर्थः । इति तिथ्यादितत्त्वम् ॥ तच्चु चतुर्व्वेदान्त-
र्गततृतीयवेदः । तस्य सहस्रशाखा तस्वोपनिषत्
छान्दोग्यादिः । विवरणन्तु वेदशब्दे द्रष्टव्यम् ॥ *
सामध्वनिश्रवणानन्तरं वेदपाठनिषेधस्तदधि-
ष्ठातृदेवताकथनञ्च यथा, --
"सामध्वनावृग्यजुषी नाधीयीत कदाचन ।

**सान्ध्यः**, त्रि, (सन्ध्यायां भवः । सन्ध्या + सन्धिवेला-

दित्वात् अण् ।) सन्ध्यासम्बन्धीयः । (यथा,
रघुः । २ । २३ ।
“गुरोः सदारस्य निपीड्य पादौ
समाप्य सान्ध्यञ्च विधिं दिलीपः ।
दोहावसाने पुनरेव दोग्ध्रीं
भेजे भुजोच्छिन्नरिपुर्न्निषण्णाम् ॥”

**सान्ध्यकुसुमा**, स्त्री, सान्ध्यं सन्धिकालोद्भवं कुसुमं

यस्याः ।) त्रिसन्धिपुष्पवृक्षः । इति राज-
निघण्टः ॥

**सान्नहनिकः**, त्रि, (सन्नहनं प्रयोजनमस्येति ।

सन्नहन + तदस्य प्रयोजनमिति ठक् ।) सन्नाह-
विशिष्टः । इति सिद्धान्तकौमुदी ॥

**सान्नाय्यं**, क्ली, (सम्यक् नीयते होमार्थमिति ।

सं + नो + “पाय्यसान्नाय्येति ।” ३ । १ । १२९ ।
इतिण्यतायादेशः समो दीर्घत्वञ्चनिपात्यते
हविः । इत्यमरः । ३ । ७ । २७ ॥

**सान्निध्यं**, क्ली, (सन्निधिरेव । सन्निधि + “चातु-

र्व्वर्ण्यादीनां स्वार्थ उपसंख्यानम् ।” ५ । १ ।
१२४ । इत्यस्य वार्त्तिकोक्त्या स्वार्थे व्यञ् ।)
निकटम् । यथा, --
“अर्च्चकस्य तपोयोगात्
अर्च्चनस्यातिशायनात् ।
आभिरूप्याच्च विम्बानां देवः सान्निध्य-
मृच्छति ॥”
इति तिथ्यादितत्त्वम् ॥

व्यक्तव्यं नियतमनेन निन्युरस्याः
सापत्न्यं क्षितिसुतविद्विषो महिष्यः ॥”)

**सापिण्ड्यं**, क्ली, (सपिण्डस्य भावः । सपिण्ड +

ष्यञ् ।) सपिण्डतां । सा तु पुं सां सप्तमपुरुष-
पर्य्यन्तं अनूढकन्यानां त्रिपुरुषपर्य्यन्तञ्च स्था-
यिनी । यथा, --
“लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्
इति मत्स्यपुराणम् ॥
अप्रत्तानां त्रिपौरुषम् । इति वशिष्ठः ॥ अपि च
“पित्रादिषड्भिः सापिण्ड्यं तत्तत्सन्ततिसप्तकैः
गोत्रैक्ये सति तत्तु स्यात् षड्भिः पुत्रादिभि-
स्तथा ।
अप्रत्तानान्तु कन्यानां त्रिभिः पित्रादिभिः
स्मृतम् ॥”
इति कारिका ॥
अन्यत् सपिण्डशब्दे द्रष्टव्यम् ॥

**साप्तपदीनं**, क्ली, (सप्तभिः पदैरवाप्यते इति ।

“साप्तपदीनं सख्यम् ।” ५ । २ । २२ । इति
खञ् प्रत्ययेन साधुः ।) सख्यम् । इत्यमरः । २ ।
८ । १२ ॥ (यथा, कुमारे । ५ । ३९ ।
“प्रयुक्तसत्कारविशेषमात्मना
न मां परं सम्प्रतिपत्तुमहसि ।
यतः सतां सन्नतगात्रि ! सङ्गतं
मनीषिभिः साप्तपदीनमुच्यते ॥”)
सप्तपदसम्बन्धिनि, त्रि ॥

**साफल्यं**, क्ली, (सफलस्य भावः । सफल + ष्यञ् ।)

सफलता । (यथा, मुकुन्दमालायाम् । २९ ।

वेदस्याधीत्य वाप्यन्तमारण्यकमधीत्यच ॥
ऋग्वेदो देवदैवत्यो यजुर्व्वेदस्तु मानुषः ।
सामवेदः स्मृतः पित्र्यस्तस्मात्तस्याशुचिर्ध्वनिः ॥”
इति मानवे । ४ । १२३ ॥ * ॥
(वेदोऽयं गजोत्पत्तिकारणम् । तथा च रघुवंश-
टीकायां मल्लिनाथधृतपालकाव्ये । १६ । ३ ।
“सूर्य्यास्याण्डकपाले द्वे समानीय प्रजापतिः ।
हस्ताभ्यां परिगृह्याथ सप्तसामान्यगायत ।
गायतो ब्रह्मणस्तस्मात् समुत्पेतुर्मतङ्गजाः ॥”)
शत्रुवशीकरणोपायविशेषः । इत्यमरः । २ । ८ । २० ॥
प्रियवादार्थप्रदानसम्बन्धादिभिः क्रोधोपशमनं
साम । स्यति विरोधमिति षोऽन्तकर्म्मणीत्यस्मत्
त्रासुसिति मन् । सान्त्व साम त् क सान्त्वने
इत्यस्मात् नाम्नीति अन् वा । साम दन्त्यादि ।
शमयति विरोधमिति शाम नान्तं तालष्यादि
इति केचित् । इति भरतः ॥ * ॥ अपि च ।
मनुरुवाच ।
“उपायांस्त्वं समाचक्ष्व सामपूर्व्वान्महाद्युते ।
लक्षणञ्च तथा तेषां प्रयोगञ्च सुरोत्तम ॥
मत्स्य उवाच ।
सामभेदस्तथा दानं दण्डश्च मनुजोत्तम ।
उपेक्षा च तथा माया इन्द्रजालश्च पार्थिव ॥
प्रयोगाः कथिताः सप्त तन्मे निगदतः शृणु ।
द्विविधं कथितं साम तथ्यञ्चातथ्यमेव च ॥
तत्राप्यतथ्यं साधूनां आक्रोशायैव जायते ।
तथ्यं साधुप्रियञ्चैव सामसाध्या नरा मताः ॥

| | | |
|---|---|---|
| | | महाकुलीना ऋजवो धर्म्मनिष्ठा जितेन्दियाः ।<br>सामसाध्या नरास्तथ्यं तेषु साम प्रयोजयेत् ॥ |

तथ्यञ्च साम कर्त्तव्यं
कुलशीलादिवर्त्तिना ।
तथा सदुपचाराणां
कृतानाञ्चानुवर्णनम् ॥
अनयैव तथा युक्त्या कृतज्ञाख्यापनं
स्वकम् ।
एवं सान्त्वेन कर्त्तव्या वशगा
धर्म्मतत्पराः ॥
साम्ना यद्यपि रक्षांसि गृह्णन्तीति परा
श्रुतिः ।
तथाप्येतदसाधूनां प्रयुक्तं
नोपकारकम् ।
अतिशान्तिकमित्येवं पुरुषं
सामवादिनम् ।
असाधवोऽवजानन्ति तस्मात् तेषु
विवर्ज्जयेत् ॥
ये शुद्धवंशा ऋजवः प्रतीता
धर्म्मे स्थिताः सत्यपरा विनीताः ।
ते साम साध्याः पुरुषाः प्रदिष्टा
मानोन्नता ये सततञ्च राजन् ॥”
इति मात्स्ये राजधर्म्मे सामविधिः ।
२२२ । १-१० ॥
(प्रियवाक्यादिना सान्त्वनम् । यथा,
देवीभाग-
वते । १ । १७ । ३१ ।
“सामपूर्व्वमुवाचासौ तं क्षत्ता संस्थितं
मुनिम् ।
गच्छतां यत्र ते कार्य्यं यथेष्टं
द्विजसत्तम ! ॥”)

**सामकं**, क्ली, (सममेव सामम् । अण् । ततः
स्वार्थे कन् ।) मूलमृणम् । (यथा,
मिता-
क्षरायाम् । २ । ६४ ।
“वृद्धिमात्रापाकरणार्थन्तु बन्धकं
सामकं दत्त्वा-
प्नुयादृणी समं मूल्यं सममेव सामकम्
॥”)

**सामकः**, पुं, (समतीति । सम अवैकल्ये +

**सामजः**, पुं, (साम्नो वेदभेदात् जायते इति ।
जन + डः ।) हस्ती । सासोत्थे, त्रि । इति
मेदिनी ॥ (उभयार्थे प्रमाणम् । यथा, माघे
।
१२ । ११ ।
“नानाविधाविष्कृतसामजस्वरः
सहस्रवर्त्मा चपलैर्दुरध्ययः ।
गान्धर्व्वभूयिष्ठतया समानतां
स सामवेदस्य दधौ बलोदधिः ॥”)

**सामञ्जस्यं**, क्ली, (समञ्जसस्य भावः । समञ्जस +
ष्यञ् ।) औचित्यम् ॥

**सामनी**, स्त्री, पशुबन्धनरज्जुः । इति दामशब्द-
टीकायां सारसुन्दरी ॥

**सामन्तः**, पुं, (समन्तायाः संलग्नैकदेशाया भूमे-
रयमिति । समन्ता + तस्येदमिति अन् ।
सम-
न्तात् भवः । तत्र भव इति अण् वा ।)
स्ववि-
षयानन्तरराजा । सम् संलग्नोऽन्त एकदेशो
यस्याः सा समन्ता स्वविषयानन्तरा भूमिः
तस्या
ईश्वरा इति ष्णे सामन्ताः ।
इत्यमरटीकायां
भरतः ॥ (यथा, रघुः । ५ । २८ ।
“सामन्तसम्भवनयैव धीरः
कैलासनाथं तरसा जिगीषुः ॥”
सीमान्तरभवे, त्रि । यथा, मनुः । ८ ।
२५८ ।
“साक्ष्यभावे तु चत्वारो ग्रामाः
सामन्तवासिनः
सीमाविनिर्णयं कुर्य्युः प्रयता राजसन्निधौ
॥”
“ग्रामसामन्ताः सीमान्तरवासिनः प्रष्टव्याः
।”
इति मेधातिथिः ॥ “समन्तभवाः
सामन्तास्त-

“अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः
।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम्
॥”)

**सामवायिकः**, पुं, (समवायान् समवैति । सम-
वाय + “समवायान् समवैति ।” ४ । ४ । ४३
।
इति ठक् ।) मन्त्री । इति हेमचन्द्रः ॥ सम-
वायसम्बन्धिनि, त्रि ॥

**सामाजिकः**, पुं, (समाजं समवतीति । समाज +
“समवायान् समवेति ।” ४ । ४ । ४३ । इति
ठक् ।
यद्वा, समाजं रक्षतीति । “रक्षति ।” ४ । ४ ।
३३ । इति ठक् ।) सभ्यः । इत्यमरः । २ । ७
।
१६ ॥ (यथा, साहित्यदर्पणे । ३ । २२९ ।
“सामाजिकैस्ततो हास्यरसोऽयमनुभूयते ॥”)
समाजसम्बन्धिनि सभासम्बन्धिनि च त्रि ॥
(यथा,
साहित्यदर्पणे । ३ । ३९ ।
“ननु कथं रामादिरत्याद्युद्बोधकारणैः सीता-
दिभिः सामाजिकरत्याद्युद्बोध इत्युच्यते ॥”)

**सामान्यं**, क्ली, (समान एव । स्वार्थे ष्यञ् ।)
जातिः । यथा, --
“जातिर्जातञ्च सामान्यं व्यक्तिस्तु
पृथगात्मिका”
इत्यमरः । १ । ४ । ३० ॥
तद्द्विविधं यथा, भाषापरिच्छेदे ।
“सामान्यं द्विविधं प्रोक्तं परञ्चापरमेव च ।
द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ॥
परभिन्ना च या जातिः सैवापरतयोच्यते ।
व्यापकत्वात् परापि स्यात् व्याप्यत्वादपरापि
च
द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥”
तल्लक्षणं यथा । नित्यत्वे सत्यनेकसमवेतत्वम्
।
अनेकसमवेतत्वं संयोगादीनामप्यस्ति अतः

ण्वुल् ।) तर्कुशाणः । इति
त्रिकाण्डशेषः ॥
(साम अधीते वेद वा । सामन् +
“क्रमादिभ्यो
वुन् ।” ४ । २६१ । इति वुन् ।
सामाभिज्ञे, त्रि ॥)

**सामगः**, पुं, (साम गायतीति । गै शब्दे + टक् ।
सामवेदी ब्राह्मणः । इति जटाधरः ॥
(विष्णुः ।
इति महाभारतम् । १३ । १४९ ।
७५ ॥ * ॥
सामवेदज्ञे, त्रि । यथा, भागवते । १ ।
४ । २१ ।
“तत्रर्ग्वेदधरः पैलः सामगो जैमिनिः
कविः ।
वैशम्पायन एवैको निष्णातो यजुषामुत
॥”)

**सामगर्भः**, पुं, (साम गर्भे यस्य ।) विष्णुः । इति
शब्दरत्नावली ॥

**सामगी**, स्त्री, (साम गायतीति । गै + टक् ।
ङीप् ।) सामगब्राह्मणपत्नी । इति
केचित् ॥

**सामग्री**, स्त्री, (समग्रस्य भावः ष्यञ् । अभि-
धानात् स्त्रीत्वम् । ङीष् । यलोपः)
कारण-
समूहः । यथा, --
“सामग्री चेन्न फलविरहो व्याप्तिरेवेति
तत्त्वम्”
इति पदाङ्कदूतः ॥
द्रव्यम् । यथा, --
“एकोद्दिष्टन्तु कर्त्तव्यं पाकेनैव सदा
स्वयम् ।
अभावे पाकपात्राणां तदहः
समुपोषणम् ॥”
इति लघुहारीतवचनात्
पाकपात्राभावः पाक-
सामग्र्यभावोपलक्षणम् । इति
श्राद्धतत्त्वम् ॥

द्वासिनश्चत्वारो ग्रामवासिनः ।” इति
तट्टी-
कायां कुल्लू कः ॥)

**सामन्यः**, पुं, (सामसु साधुः । सामन् + “तत्र
साधुः ।” ४ । ४ । ९८ । इति यत् ।)
सामसेदज्ञ-
ब्राह्मणः । (यथा, भट्टिः । ४ । ९ ।
“ऋग्यजुषमधीयानान् सामन्यांश्च
समर्च्चयन् ।
बुभुजे देवसात्कृत्वा शूल्यमुख्यञ्च होमवान्
।”

**सामयिकः**, त्रि, (समयः प्राप्तोऽस्य । समय +
“समयस्तदस्य प्राप्तम् ।” ५ । १ । १०४ ।
इति ठञ्)
समयोचितः । (यथा, याज्ञवल्क्ये । २ ।
१८९ ।
“निजधर्म्माविरोधेन यस्तु सामयिको भवेत्
।
सोऽपि यत्नेन संरक्ष्यो धर्म्मो राजकृतश्च
यः ॥”

**सामयोनिः**, पुं, (साम्नः योनिः कारणम् ।) ब्रह्मा
(साम वेदभेदः योनिः कारणं यस्य ।)
हस्ती ।
सामोत्थवस्तुनि, त्रि । इति मेदिनी ॥
(यथा,
रघुः । १६ । ३ ।
“चतुर्भुजांशप्रभवः स तेषां
दानप्रवृत्तेरनुपारतानाम् ।
सुरद्विपानामिव सामयोनि-
र्भिन्नोऽष्टधा विप्रससार वंशः ॥”)

**सामर्थ्यं**, क्ली, (समर्थस्य भावः । समर्थ + व्यञ् ।)
योग्यता । (यथा, रामायणे । २ । ४३ ।
२० ।
“न हि मे जीविते किञ्चित् सामर्थ्यमिह
कल्पते
अपश्यन्त्याः प्रियं पुत्रं लक्ष्मणञ्च महाबलम्
॥”)
शक्तिः । इति मेदिनी ॥ (यथा, गीतायाम् ।
२ । ३६ ।

सत्यन्तं नित्यत्वे सति
समवेतत्वंगगनपरिमाणा
दीनामप्यस्ति अत उक्तं अनेकेति नित्यत्वे
सति
अनेकवृत्तित्वमत्यन्ताभावस्याप्यस्ति
अतोवृत्ति-
सामान्यमुपेक्ष्य समवेतत्वमुक्तम् । एकव्यक्ति-
वृत्तिस्तु न जातिः । तथा चोक्तम् ।
“व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः ।
रूपहानिरसम्बन्धो जातिवाधकसंग्रहः ॥”
एकव्यक्तिकत्वात् आकाशत्वं न जातिः ।
तुल्य-
वृत्तिकत्वात् घटत्वं कलसत्वं न जातिद्वयम् ।
संकीर्णत्वात् भूतत्वं मूर्त्तत्वं न जातिः । अन-
वस्थाभयात् सामान्यत्वं न जातिः । विशेषस्य
व्यावृत्तस्वभावस्य रूपहानिः स्यादतो
विशेषत्वं
न जातिः । समवायसम्बन्धाभावात् समवायो
न जातिः । द्रव्यादित्रिकवृत्तिरिति परत्वं
अधिकदेशवृत्तित्वं अपरत्वमल्पदेशवृत्तित्वम् ।
सकलजात्यपेक्षया अधिकदेशवृत्तित्वात्
सत्तायाः
परत्वम् । एतद्बोधनाय द्रव्यादीति । तदपेक्षया
चान्यासां जातीनां अपरत्वम् । परभिन्ना सत्ता-
भिन्ना । व्यापकत्वात् परापि स्यात्
व्याप्यत्वाद-
परापि च । पृथिवीत्वाद्यपेक्षया व्यापकत्वात्
अधिकदेशवृत्तित्वात् द्रव्यत्वस्य परत्वम् ।
सत्तापे
क्षया अल्पदेशवृत्तित्वाद्द्रव्यत्वस्य अपरत्वञ्च
।
तथा च धर्म्मद्वयसमावेशात् उभयमविरुद्धम् ।
इति सिद्धान्तमुक्तावली ॥ (सादृश्यम् । समा-

| | | |
|---|---|---|
| **साम्ग्र्यं**, क्ली, (समग्रस्य भावः । समग्र + व्यञ् ।)<br><br>समुदायत्वम् । (यथा, कुमारे । ३ ।<br>२८ ।<br>“वर्णप्रकर्षे सति कर्णिकारं<br>दुनोति निर्गन्धतया स्म चेतः ।<br>प्रायेण साम्ग्र्यविधौ गुणानां<br>पराङ्मुखी विश्वसृजः प्रवृत्तिः ॥”) | | |

नत्वम् । यथा, महाभारते । १२ । २२८ । ४ ।
"सामान्यमृषिभिर्गत्वा ब्रह्मलोकनिवासिभिः ।
ब्रह्मेवामितदीप्तौजाः शान्तपाप्मा महातपाः ।
विचचार यथाकामं त्रिषु लोकेषु नारदः ॥")

**सामान्यं**, त्रि, (समानस्य भावः । समान + ष्यञ् ।) अनेकसम्बन्ध्येकवस्तु । साधारणम् ।
इत्यमरः । ३ । १ । ८२ ॥ यथा, देवलः ।
"सामान्यं पुत्त्रकन्यानां मृतायां स्त्रीधनं विदुः ।
अप्रजायां हरेद्भर्त्ता माता भ्राता पितापि वा ॥"
इति दायतत्त्वम् ॥
(यथा च कुमारे । ७ । ४४ ।
"एकैव मूर्त्तिर्बिभिदे त्रिधा सा
सामान्यमेषां प्रथमावरत्वम् ।
विष्णोर्हरस्तस्य हरिः कदाचित्
वेधास्तयोस्तावपि धातुराद्यौ ॥")

**सामान्यलक्षणा**, स्त्री, (सामान्यं साधारणधर्म्मः लक्षणं यस्याः ।)
अलौकिकसन्निकर्षविशेषः ।
स तु आश्रयज्ञापकसामान्यज्ञानम् । यथा ।
एकघटदर्शने सकलघटज्ञानं भवति ईदृशघट-त्वादिज्ञानम् । तत्समाणं यथा, भाषापरि-च्छेदे ।
"अलौकिकः सन्निकर्षस्त्रिविधः परिकीर्त्तितः ।
सामान्यलक्षणा ज्ञानलक्षणा योगजस्तथा ॥
आसत्तिराश्रयाणान्तु सामान्यज्ञानमिष्यते ।
तदिन्द्रियजतद्धर्म्मबोधसामग्र्यपेक्षते ॥"

**सामान्यशासनं**, क्ली, (सामान्यं शासनम् ।)
सामान्याधिकारः । यथा, --
पण्ड्र को वातरोगपण्ड्रादिः । छन्नं प्रच्छन्नं ये कामयन्ते ते छन्नकामाः । तत्र रागहीना यथा नटकमेलकादौ मदनमञ्जर्य्यादिः । रक्ता यथा मृच्छकटिकादौ वसन्तसेनादिः । पुनश्च ।
"अवस्थाभिर्भवन्त्यष्टावेताः षोडशभेदिताः ॥
स्वाधीनभर्त्तृका तद्वत् खण्डिताथाभिसारिका
कलहान्तरिता विप्रलब्धा प्रोषितभर्त्तृका ।
अन्या वासकसज्जा स्याद्विरहोत्कण्ठिता तथा ॥"
एतासां लक्षणाणि तु तत्तच्छयब्दे विशेषतो द्रष्टव्यानि ॥)

**सामि**, व्य, अर्द्धम् । निन्दा । इत्यमरः । ३ । ३ । २४८ ॥

**सामिकृतः**, त्रि, अर्द्धीकृतः । सामिशब्दात् कृधातोः क्तप्रत्ययेन निष्पन्नः ॥

**सामिधेनी**, स्त्री, (समिधां आधानी । समिध् + "सामिधामाधाने षेण्यण् ।" ४ । ३ । १२० । इत्यस्य वार्त्तिकोक्त्या षेण्यण् । षित्वात् ङीष् ।)
अग्निसमिन्धना ऋक् । अग्नेर्ज्वालने या ऋक् पठ्यते । तत्पर्य्यायः । धाय्या २ । इत्यमरः । २ । ७ । २२ ॥ (यथा, महाभारते । ३ । १३४ । १६ ।
"नवैवोक्ताः सामधेन्यः पितॄणां
तथा प्राहुर्नवयोगं विसर्गम् ॥"
समित् । इति मेदिनी ॥

**सामिपीतः**, त्रि, अर्द्धपानकृतः । सामिशब्दात् पाधातोः क्तप्रत्ययेन निष्पन्नः ॥

**सामिभुक्तः**, त्रि, अर्द्धभुक्तः । सामिशब्दात् भुज-धातोः क्तप्रत्ययेन निष्पन्नः ॥ (यथा, रघुः । १९ । १६ ।
"वल्लभाभिरुपसृत्य चक्रिरे
सामिभुक्तविषया समागमाः ॥")

**सामीची**, स्त्री, वन्दना । इति हारावली ॥

**सामीप्यं**, क्ली, (समीपस्य भावः । समीप् + चतु-वर्णादित्वात् ष्यञ् ।) समीपत्वम् । नैकट्यम् ।
यथा, --
"वः कसामीप्यसादृश्यसाकल्यानुक्रमर्द्धिषु ॥"
इति मुग्धबोधव्याकरणम् ॥
इति केचित् ॥) समुद्रजाते, त्रि । इति च मेदिनी ॥ (पुं, समुद्रगामी बणिक् । यथा,
याज्ञवल्क्ये । २ । ३८ ।
"कान्तारगास्तु दशकं सामुद्रा विंशकं शतम् ।
दद्युर्व्वा स्वकृतां वृद्धिं सर्व्वे सर्व्वासु जातिषु ॥"
मशकविशेषः । यथा, सुश्रुते । ५ । ८ ।
"मशकाः सामुद्रः परिमण्डलो हस्तिमशकः
कृष्णः पार्व्वतीय इति पञ्च तैर्दष्टस्य तीव्रकण्डू-
र्दंशः शोफश्च । पार्व्वतीयस्तु कीटैः प्राणहरैः-
स्तुल्यलक्षणः ॥" * ॥
देशविशेषः । यथा, मार्क-ण्डेये । ५८ । १३ ।
"प्राग्ज्योतिषाः सलौहित्याः सामुद्राः पुरुषा-दंकाः ।

- * * *

वर्द्धमानाः कोशलाश्च मुखे
कूर्म्मस्य संस्थिताः ॥")

**सामुद्रकं**, क्ली, (सामुद्रमेव । स्वार्थे कन् ।) समुद्र-लवणम् । इति राजनिर्घण्टः ॥
समुद्रोक्तस्त्रीपुं-लक्षणग्रन्थः । तद्विवरणं यथा, --
श्रीकृष्ण उवाच ।
"कीदृशः पुरुषो वन्द्योऽवन्द्यो वा कीदृशो भवेत्
कन्या वा कीदृशी शस्या गर्हिता वापि कीदृशी ॥
महेश उवाच ।

"मन्त्रेन्द्रकोषौ स्याद्ब्रह्मशासनं धर्म्मकीलकः ।
सामान्यशासनं सौरं मुकुतिः शूद्रशासनम् ॥"
इति पुरवर्गे शब्दरत्नावली ॥

**सामान्या**, स्त्री, (सामान्य + टाप् ।) साधारणी नायिका । अस्या लक्षणम् । धनमात्रलाभार्थ-सकलपुरुषाभिलासा ॥ सा त्रिधा । अन्यसम्भोग-दुःखिता । वक्रोक्तिगर्व्विता । मानवती । वक्रोक्तिगर्व्वितापि द्विविधा । प्रेमगर्व्विता सौन्दर्य्यगर्व्विता च । एता नायिका अवस्थाभेदेन प्रत्येकं अष्टप्रकारा भवन्ति । यथा ! प्रोषित-भर्त्तृका १ खण्डिता २ कलहान्तरिता ३ विप्र-लब्धा ४ उत्कण्ठिता ५ वासकसज्जा ६ स्वाधीन-पतिका ७ अभिसारिका ८ । इति रस-मञ्जरी ॥ (यथा च साहित्यदर्षणे । ३ । १११ -- ११२ ।
"धीरा कलाप्रगल्भा स्याद्वेश्या सामान्य-नायिका ।
निर्गुणानपि न द्वेष्टि न रज्यति गुणिष्वपि ।
वित्तमात्रं समालोक्य सा रागं दर्शयेद् बहिः ॥
काममङ्गीकृतमपि परिक्षीणधनं नरम् ।
मात्रा निष्क्रामयेदेषा पुनः सन्धानकाङ्क्षया ॥
तस्कराः पण्डूका मूर्खाः सुखप्राप्तधनास्तथा ।
लिङ्गिनश्छन्नकामाद्या आसां प्रायेण वल्लभाः ॥
एषापि मदनासक्ता क्वापि सत्यानुरागिणी ।
रक्तायां वा विरक्तायां रतमस्यां सुदुर्लभम् ॥"
अधिकरणविशेषः । आधारभेदः । यथा, --
"सामीप्याश्लेषविषयैर्व्याप्त्याधारश्चतुर्व्विधः ।"
इति कारके मुग्धबोधव्याकरणम् ॥

**सामुद्रं**, क्ली, (समुद्रे भवम् । अण् ।) समुद्र-लवणम् । इति हेमचन्द्रः ॥ करकच् इति भाषा । तत्पर्य्यायः ।
"सामुद्रं यत्तु लवणं त्रिकुटं कडकञ्च तत् ॥"
इति रत्नमाला ॥
अस्य गुणाः ।
"सामुद्रं लवणं पाके नात्युष्णमविदाहि च ।
भेदनं मधुरं स्निग्धं शूलघ्नं नातिपित्तलम् ॥"
इति राजवल्लभः ॥
अन्यत् समुद्रलवणशब्दे द्रष्टव्यम् ॥ * ॥
समुद्रफेनम् । इति राजनिर्घण्टः ॥ (समुद्रेण ऋषिणा प्रोक्तमिति । अण् ।) देहचिह्नम् । इति मेदिनी ॥ (तल्लक्षणान्वितग्रन्थविशेषः ।
शृणु कृष्ण प्रवक्ष्यामि समुद्रवचनं यथा ।
लक्षणन्तु मनुष्याणां एकैकेन वदाम्यहम् ॥
वामभागे तु नारीणां दक्षिणे पुरुषस्य च ।
निर्द्दिष्टं लक्षणं तेषां समुद्रेण यथोदितम् ॥
पूर्व्वमायुः परीक्षेत पश्चाल्लक्षणमेव च ।
आयुर्हीनं नराणाञ्चेत् लक्षणैः किं प्रयो-जनम् ॥"
अथ पुरुषलक्षणम् ।
"पञ्चदीर्घं चतुर्ह्रस्वं पञ्चसूक्ष्मं षडुन्नतम् ।
सप्तरक्तं त्रिगम्भीरं त्रिविशालं प्रशस्यते ॥
बाहुनेत्रद्वयं कुक्षी द्वौ तु नासा तथैव च ।
स्तनयोरन्तरञ्चैव पञ्चदीर्घं प्रशस्यते ॥
ग्रीवाथ कर्णौ पृष्ठ ह्रस्वे जङ्घे सुपूजिते ।
चत्वारि यस्य ह्रस्वानि पूजां प्राप्नोति नित्यशः ॥
सूक्ष्माण्यङ्गलिपर्व्वाणि दन्तकेशनखत्वचः ।
पञ्च सूक्ष्माणि येषां हि ते नरा दीर्घजीविनः ॥
नासा नेत्रञ्च दन्ताश्च ललाटञ्च शिरस्तथा ।
हृदयञ्चैव विज्ञेयमुन्नतं षट् प्रशस्यते ॥
पाणिपादतलौ रक्तौ नेत्रान्तरनखानि च ।
तालुकोऽधरजिह्वा च सप्तरक्तं प्रशस्यते ॥
स्वरो बुद्धिश्च नाभिश्च त्रिगम्भीरमुदाहृतम् ।

| | | |
|---|---|---|
| | | उरः शिरो ललाटञ्च त्रिविस्तीर्णं प्रशस्यते ॥<br>कटिर्बिशाला बहुपुत्त्रभागी विशालहस्तो नरपुङ्गवः स्यात् ।<br>उरो विशालं धनधान्यभागी शिरो विशालं नरपूजितः स्यात् ॥<br>न श्रीस्त्यजति रक्ताङ्गं नार्थः कनकपिङ्गलम् ।<br>दीर्घबाहुं न चैश्वर्य्यं न मांसोपचितांसकम् ।<br>कदादिद्दन्तुरो मूर्खः कदाचित् लोमशः सुखी । |

कदाचित् तुन्दिलो दुःखी कदाचित् चञ्चला
सती ॥
नेत्रस्नेहेन सौभाग्यं दन्तस्नेहेन भोजनम् ।
हस्तस्नेहेन चैश्वर्य्यं पादस्नेहेन वाहनम् ॥
अकर्म्मकठिनौ हस्तौ पादावध्वनि कोमलौ ।
यस्य पाणितलौ रक्तौ तस्य राज्यं विनिर्द्दिशेत् ॥
दीर्घलिङ्गेन दारिद्रं स्थूललिङ्गेन निर्धनः ।
कृशलिङ्गेन सौभाग्यं ह्रस्वलिङ्गेन भूपतिः ॥
रेखाभिर्ब्बहुभिर्दुःखं स्वल्पाभिर्धनहीनता ।
रक्ताभिः श्रियमाप्नोति कृष्णाभिः प्रेष्यतां व्रजेत्
अङ्गुष्ठोदरभध्ये तु यवो यस्य विराजितः ।
उन्नतं भोजनं तस्य शतं जीवति मानवः ॥
अङ्कुशं कुलिशं छत्रं यस्य पाणितले भवेत् ।
तस्यैश्वर्य्यं विनिर्द्दिष्टं अशीत्यायुर्भवेद्ध्रुवम् ॥
धनुर्यस्य भवेत् पाणौ पङ्कजं वाथ तोरणम् ।
तस्यैश्वर्य्यञ्च राज्यञ्च अशीत्यायुर्भवेद्ध्रुवम् ॥
कनिष्ठातर्जनीं यावद्रे खा भवति चाक्षता ।
विंशत्यब्दाधिकशतं नरो जीवत्यनामयः ॥
कनिष्ठामध्यमां यावद्रेखा भवति चाक्षता ।
शताब्दं वाथ वाशीतिं नरो जीवेन्न संशयः ॥

कृशलिङ्गेन सूक्ष्मेण रक्तवर्णेन भूपतिः ।
बहुस्त्रीरमणो नित्यं नारीणां वल्लभो भवेत् ॥
यस्य पादतले पद्मं चक्रं वाप्यथ तोरणम् ।
अङ्कुशं कुलिशं वापि स राजा भवति ध्रुवम् ॥
कृशातिलोमशा ये स्युः केकराक्षाः कुचेलकाः ।
कातरं व्यालजिह्वाश्च ते दरिद्रा न संशयः ॥
कपिला मलिनाङ्गाश्च ह्रस्वाश्चैव बृहन्नखाः ।
कृशातिदीर्घा मनुजास्ते दरिद्रा न संशयः ॥
चिवुके श्मश्रुशून्या ये निर्लोमहृदयाश्च ये ।
ते धूर्त्ता नैव सन्देहः समुद्रवचनं यथा ॥
सूचीमुखा भग्नपृष्ठाः कृष्णदन्ता कुचेलकाः ।
वक्रनासा वज्रनासास्ते नरा दुष्टमानसाः ॥
दयालवश्च दातारो रूपवन्तो जितेन्द्रियाः ।
परोपकारिणश्चैव तेऽपूर्व्वा मानवाः स्मृताः ॥”
इति पुरुषलक्षणम् ॥ * ॥
अथ स्त्रीलक्षणम् ।
“यस्याः पादतले रेखा सा भवेत् क्षितिपाङ्गना
भवेदखण्डभोगा च या मध्याङ्गलिसङ्गता ॥
उन्नतो मांसलोऽङ्गुष्ठो वर्त्तुलोऽतुलभोगदः ।
वक्रो ह्रस्वश्च चिपिटः सुखसौभाग्यभञ्जकः ॥
दीर्घाङ्गुलीभिः कुलटा कृशाभिरतिनिर्धना ।

वामोन्नतकुक्षा सूते कन्यां सौभाग्यसुन्दरीम् ॥
मूले स्थूलौ क्रमकृशावग्रे तीक्ष्णौ पयोधरौ ।
सुखदौ बाल्यकाले तु पश्चादत्यन्तदुःखदौ ॥
अम्भोजमुकुलाकारमङ्गुष्ठाङ्गुलिसम्मुखम् ।
हस्तद्वयं मृगाक्षीणां बहुभोगाय जायते ॥
मृदुमध्योन्नतं रक्तं तलं पाण्योररन्ध्रकम् ।
प्रशस्तं शस्तरेखाढ्यमल्परेखं शुभप्रदम् ॥
विधवा बहुरेखेण विरेखेण दरिद्रिणी ।
भिक्षुकी सुशिराढ्येन नारी करतलेन वै ॥
मत्स्येन सुभगा नारी स्वस्तिकेन च सुप्रजा ।
पद्मेन भूपतेः पत्नी जनयेत् भूपतिं सुतम् ॥
चक्रवर्त्तिस्त्रियाः पाणौ नन्द्यावर्त्तप्रदक्षिणः ।
शङ्खातपत्रकमठा राजमातृत्वसूचकाः ॥
कृशीबलस्य पत्नी स्याच्छकटेन युगेन वा ।
चामराङ्कुशकोदण्डैः राजपत्नी भवेद् ध्रुवम् ॥
अङ्गुष्ठमूलान्निर्गत्य रेखा याति कनिष्ठिकाम् ।
यदि स्यात् पतिहन्त्री सा दूरतस्तां त्यजेत् सुधीः ॥
त्रिशूलासिगदाशक्तिकुन्दुभ्याकृतिरेखया ।
नितम्बिनी कीर्त्तिमती करेण पृथिवीतले ॥
पाटलो वर्त्तुलः स्निग्धो रेखाभूषितमध्यभूः ।
सीमन्तिनीनामधरो राज्ञां चैव प्रियो भवेत् ॥
श्यामः स्थूलोऽधरोष्ठः स्यात् वैधव्यकलहप्रदः ।
मसृणो मत्तकाशिन्याश्चोत्तरोष्ठःसुभोगदः ॥
पीताः श्यामाश्च दशनाः स्थूला दीर्घा द्विपङ्क्तयः ।
शुक्त्याकाराश्च विरला दुःखदौर्भाग्यकारणम् ।
अधस्तादधिकैर्द्दन्तै मातरं भक्षयेत् स्फुटम् ॥
पतिहीना च विकटैः कुलटा विरलैर्भवेत् ।
समवृत्तपुटा नासा लघुच्छिद्रा शुभावहा ॥
स्थूलाग्रा मध्यनम्रा च न प्रशस्ता समुन्नता ।
ललना लोचने शस्ते रक्तान्ते कृष्णतारके ॥
गोक्षीरवर्णविशदे सुस्निग्धे कृष्णपक्ष्मिणी ।
उन्नताक्षी न दीर्घायुः वृत्ताक्षी कुलटा भवेत् ॥
मेषाक्षी महिषाक्षी च केकराक्षी न शोभना ।
कामगृहीता नितरां गोपिङ्गाक्षी सुदुर्म्मदा ॥
पारावताक्षी दु शीला रक्ताक्षी भर्त्तृघातिनी ।
कोटरानयना दुष्टा गजनेत्रा न शोभना ॥
पुंश्चली वामकाणाक्षी वन्ध्या दक्षिणकाणिका ।

कनिष्ठानामिकायाश्चेत् रेखा भवति चाक्षता ।
षष्टिं पञ्चाशदब्दं वा नरा जीवन्त्यसंशयम् ॥
रेखया भिद्यते रेखा स्वल्पायुश्च भवेन्नरः ।
कनिष्ठाधःस्थिता रेखाः संख्या यावतिकाः
स्मृताः ।
तावती पुरुषाणान्तु नारी भवति निश्चितम् ॥
करमध्यगता रेखा ध्रुवा ऊर्द्ध्वम्भवेद् यदि ।
नृपो वा नृपतुल्यो वा ख्यातोऽर्थवान् भवेत् ॥
मत्स्यपुच्छप्रकीर्णेन विद्यावित्तसमन्वितः ।
पितामहस्य वा किञ्चिद्धनञ्च लभते ध्रुवम् ॥
मध्यमायां यदि यवा दृश्यन्तेऽत्यन्तशोभनाः ।
तदान्यसञ्चितं वित्तं प्राप्नोत्यङ्गुष्ठके यवे ॥
यस्याथ चक्रमङ्गुष्ठे यवः पूर्णश्च दृश्यते ।
तदा पितामहादीनामर्ज्जितं धनमाप्नुयात् ॥
तर्जन्यामथ चक्रञ्च मित्रद्वारा धनम्भवेत् ।
तेनैव विपरीतन्तु व्ययो भवति निश्चितम् ॥
मध्यमायां स्थिते चक्रे देवद्वारा धनं लभेत् ।
तेनैव विपरीतन्तु व्ययो भवति निश्चितम् ॥
अनामिकायां भवेच्चक्रं सर्व्वद्वारा भवेद्धनम् ।
तेनैव विपरीतन्तु व्ययो भवति निश्चितम् ॥
कनिष्ठायां भवेच्चक्रं बाणिज्येन धनं भवेत् ।

ह्रस्वाभिः स्याच्च ह्रस्वायुः भग्नाभिर्भुग्नवर्त्तिनी ॥
चिपिटाभिर्भवेद्दासी विरलाभिर्दरिद्रिणी ।
परस्परं समारूढा यदाङ्गुल्यो भवन्ति हि
॥
हत्वा बहूनपि पतीन् परप्रेष्या तदा भवेत्
।
स्निग्धा समुन्नतास्ताम्रा वृत्ताः पादनखाः शुभाः ॥
राज्ञीत्वसूचकं स्त्रीणां पादपृष्टं समुन्नतम् ।
समपार्ष्णी शुभा नारी पृथुपार्ष्णी सुदुर्भगा
॥
कुलटोन्नतपार्ष्णी स्यात् दीर्घपार्ष्णी च दुःख-
भाक् ।
रोमहीने समे स्निग्धे जङ्घे च क्रमवर्त्तुले ॥
सा राजपत्नी भवति विशिरे सुमनोहरे ।
वृत्तं पिशितसंलग्नं जानुयुग्मं प्रशस्यते ॥
निर्म्मांसं स्वैरचारिण्या दरिद्रायाश्च विश्लथम् ।
विशिरैः करभाकारैरूरुभिर्मसृणैर्घनैः ।
सुवृत्तै रोमरहितैर्भवेयुर्भूपवल्लभाः ॥
चतुर्भिरङ्गु लैः शस्ता कटिर्विं शतिसंयुतैः
।
समुन्नतनितम्बाढ्या चतुरस्रा मृगीदृशाम्
॥
नितम्बविम्बो नारीणां उन्नतो मांसलः पृथुः ।
महाभोगाय संप्रोक्तः तदन्योऽशर्म्मणाय च ॥
गम्भीरा दक्षिणावर्त्ता नाभिः स्यात् सुखसम्पदे
वामावर्त्ता समुत्ताना व्यक्तग्रन्थी न शोभना ॥
उदरेणाभितुच्छेन विशिरेण मृदुत्वचा ।
योषित् भवति भोगाढ्या नित्यमिष्टान्नसेविनी ॥
कुम्भाकारं दरिद्राया जठरञ्च मृदङ्गवत् ।
कुष्माण्डाभं यवाभञ्च दुष्पूरं जायते स्त्रियाः ॥

मधुपिङ्गाक्षी रमणी धनधान्यसमृद्धिभाक् ।
प्रलम्बमलिकं यस्या देवरं हन्ति सा ध्रुवम् ॥
रोमशेन शिरालेन प्रांशुना रोगिणी मता ॥
स्थूलमूर्द्धा च विधवा दीर्घशीर्षा च बन्धकी ।
विशालेनापि शिरसा भवेद्दौर्भाग्यभाजनम् ॥
केशा अलिकुलच्छायाः स्निग्धाः सूक्ष्माः सुको-
मलाः ।
किञ्चिदाकुञ्चिताग्राश्च कुटिलाश्चातिशोभनाः ॥
भ्रु वोरन्तो ललाटे वा मशको राज्यसूचकः ।
वामे कपोले मशकः शोणो मिष्टान्नदः शुभः ॥
तिलकं लाञ्छनं वापि हृदि सौभाग्यकारणम् ।
यस्या दक्षिणवक्षोजे भवेत् तिलकलाञ्छनम् ॥
कन्याचतुष्टयं सूते सूते सा च सुतद्वयम् ।

| | | |
|---|---|---|
| तेनैव विपरीतन्तु व्ययो भवति निश्चितम् ॥<br>ललाटे दृश्यते यस्य चक्ररेखाचतुष्टयम् ।<br>अशीत्यायुः समाप्नोति पञ्चरेखाः शतं समाः ॥<br>यस्योन्नतं ललाटञ्च ताम्रवर्णञ्च दृश्यते ।<br>रेखाहीनश्च कक्षश्च स चोन्मत्तो महीं भ्रमेत् ॥<br>यस्य जिह्वा भवेद्दीर्घा नासाग्रं लेढि सर्व्वदा ।<br>योगी भवति निर्व्वाणः पृथ्वीं भ्रमति सर्व्वदा ॥<br>दन्ताश्च विरला यस्य गण्डे कूपोऽपि जायते ।<br>परस्त्रीरमणो नित्यं परवित्तेन वित्तवान् ॥<br>कर्कशैः कठिनैर्लिङ्गैः प्रमाणान्निर्गतैः सदा ।<br>रमते च सदा दासीं निर्धनो भवति ध्रुवम् ॥ | निर्लोम हृदयं यस्याः समं निम्नत्ववर्जितम् ।<br>ऐश्वर्य्यं चाप्यवैधव्यं प्रियप्रेमा च सा भवेत् ।<br>घनौ वृत्तौ दृढौ पीनौ समौ शस्तौ पयोधरौ ।<br>स्थूलाग्रौ विरलौ सूक्ष्मौ वामोरूणां न शर्म्मदौ ॥<br>दक्षिणोन्नतवक्षोजा पुत्रिणीष्वग्रणीर्म्मता । | |

तिलकं लाञ्छनं शोणं यस्या वामकुचे भवेत् ॥
एकं पुत्त्रं प्रसूयादौ अन्ते च विधवा भवेत् ।
गुह्यस्य दक्षिणे भागे तिलकं यदि योषितः ॥
तदा क्षितिपतेः पत्नी सूते च क्षितिपं सुतम् ।
नासाग्रे मशकः शोणो महिष्या एव जायते ॥
कृष्णः स एव भर्त्तृघ्न्याः पुंश्चल्या वा प्रकी-
र्त्तितः ।
नाभेरधस्तात् तिलकं मशको लाञ्छनं शुभम् ॥
मशकस्तिलकं चिह्नं गुल्फदेशे दरिद्रकृत् ॥
सुलक्षणापि दुःशीला कुलक्षणशिरोमणिः ॥
कुलक्षणापि या साध्वी सर्व्वलक्षणभूस्तु सा ।
कृष्णा कपिलकेशी च मिलितभ्रूकुटिस्तथा ।
गमनं सत्वरञ्चैव त्यक्तव्या स्यात् सदा बुधैः ॥
यस्या गमनमात्रेण भूमौ कम्पः प्रजायते ।
बह्वाशिनीं प्रलोभाञ्च तां नारीं परिवर्जयेत् ॥
विरला दशना यस्याः कृष्णोष्ठी कृष्णजिह्विका
भर्त्तारं प्रथमं हन्ति द्बितीयञ्चैव विन्दति ॥
अङ्गुली विरला यस्याः सलीमा गात्रकर्कशा ।
भेका भेकस्तनी क्षुद्रा दूरतः परिवर्जयेत् ॥
त्रीणि यस्याः प्रलम्बानि ललाटं उदरं भगम् ।

काले हितम् । सम्पराय + ठक् ।) पार-
लौकिके, त्रि । यथा, --
"प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते ।
न साम्परायिकं तस्य दुर्म्मतेर्व्विद्यते फलम् ॥"
इति मनुः । ११ । ३० ।
(सम्परायं युद्धमर्हतीति । तदर्हतीति ठक् ।
युद्धार्हे, त्रि । यथा, रघुः । १७ । ६२ ।
"पित्रा संवर्द्धितो नित्यं कृतास्त्रः साम्परायिकः
तस्य दण्डवतो दण्डः स्वदेहान्न व्यशिष्यत ॥")

**साम्प्रतं**, व्य, (सम् च प्रति च द्वयोः समाहारः ।
ततः प्रज्ञाद्यण् ।) युक्तम् । (यथा, कुमारे । २ । ५५ ।
"इतः स दैत्यः प्राप्नश्रीर्नेत एवाहति क्षयम् ।
विषवृक्षोऽपि संवद्‌र्ध्य स्वयं छेत्तुमसाम्प्रतम् ॥")
इदानीम् । इत्यमरः । ३ । ४ । ११ । २३ ॥
(यथा, ऋतुसंहारे । १ । ७ ।
"समुद्‌गतस्वे दचिताङ्गसन्धयो
विमुच्य वासांसि गुरूणि साम्प्रतम् ।
स्तनेषु तन्वं शुकमुन्नतस्तना
निवेशयन्ते प्रमदाः सयौवनाः ॥" * ॥
सम्प्रति भवं साम्प्रतम् । अण् । इदानीन्तने,
त्रि । यथा, हरिवंशे । ६ । १६ ।
"वैवस्वतेऽन्तरे चास्मिन् साम्प्रते समुपस्थिते ।
वैण्यात् प्रभृति राजेन्द्र सर्व्वस्यैतस्य सम्भवः ॥"
तथाच तत्रैव । ७ । ३७ ।
"मनोर्वैवस्वतस्यैते वर्त्तन्ते साम्प्रतेऽन्तरे ।
इक्षाकुप्रमुखाश्चैव दशपुत्त्रा महात्मनः ॥"
तथाच तत्रैव । ८ । ४३ ।
"तस्य ते कीर्त्तयिष्यामि मनोर्वैवस्वतस्य ह ।
विसर्गं भरतश्रेष्ठ साम्प्रतस्य महाद्युतेः ॥")

**साम्ब**, क सम्बन्धे । इति कविकल्पद्रुमः ॥ (चुरा०
पर०-सक०-सेट् ।) ओष्ठ्यवर्गशेषोपधः ।

पतत्यज्ञानतो विप्रो ज्ञानात् साम्यन्तु गच्छति ॥"
इति प्रायश्चित्ततत्त्वम् ॥
साम्यन्त्वेकस्थानत्वम् । इति मुग्धबोधव्याक-
रणम् ॥ (साम्यावस्थापन्ने, त्रि । यथा, भाग-
वते । ८ । ३ । १२ ।
"नमः शान्ताय घोराय मूढाय गुणधर्म्मिणे ।
निर्व्विशेषाय साम्याय नमो ज्ञानघनाय च ॥"

**साम्राज्यं**, क्ली, (सम्राजो भावः । ष्यञ् ।)
समस्तराज्यम् । (यथा, रघुः । ४ । ५ ।
"छायामण्डललक्ष्येण तमदृश्या किल स्वयम् ।
पद्मा पद्मातपत्रेण भेजे साम्राज्यदौक्षितम् ॥"
दशलक्षाधिपत्यम् । यथा, --
"लक्षाधिपत्यं राज्यं स्यात् साम्राज्यं दश-
लक्षके ।
शतलक्षे महेशानि महासाम्राज्यमुच्यते ॥"
इति वरदातन्त्रे २ पटलः ॥

**साम्राणिकर्द्दमं**, क्ली, जवादिनामकगन्ध-
द्रव्यम् । इति राजनिर्घण्टः ॥

**साम्राणिजं**, क्ली, महापारेवतम् । इति राज-
निर्घण्टः ॥

**सायं**, व्य, (स्यति समापयति दिनमिति । सो +
बाहुलकात् णम् । युगागमाश्च ।) सायाह्नः ।
इत्यमरः । ३ । ४ । १९ । सन्ध्या । इति राज-
निर्घण्टः ॥ तथा, --
"दिनान्ते पुंसि सायः स्यात् सायाह्ने साय-
मव्ययम् ।"
इति शब्दार्णवः ॥
(यथा, रघुः । १ । ४८ ।
"सदुष्प्रापयशाः प्रापदाश्रमं श्रान्तवाहनः ।
सायं संयमिनस्तस्य महर्षेर्महिषीसखः ॥")

त्रीणि सा भक्षयेन्नारी श्वशुरं देवरं पतिम्
॥
ललाटे श्वशुरं हन्यात् जठरे देवरं तथा
।
भगञ्च हन्याद्भर्त्तारं महादोषास्त्रयः
स्मृताः ॥
यस्या अत्युत्कटं नार्य्या वक्षश्च
विस्तृतं भवेत् ।
उत्तरोष्ठे च लोमानि शीघ्रं सा भक्षयेत्
पतिम् ॥
चरणानामिका यस्याः क्षितिं न स्पृ शते
यदि ।
द्वितीया वा तृतीया वा सा कन्या सुख-
वर्ज्जिता ॥
नासाग्रे दृश्यते यस्याः तिलकं
मशकोऽपि च ।
कृष्णदन्ता कृष्णजिह्वा दशाहेन पतिं
हरेत् ॥
सूक्ष्मकेशा तु या कन्या गौरवर्णा च या
भवेत्
अष्टौ जनयते पुत्त्रान् प्राप्नोति विपुलं
सुखम् ॥"
इति सामुद्रके स्त्रीलक्षणं समाप्तम् ॥
(समुद्रसम्बन्धिनि, त्रि । यथा,
महाभारते ।
५ । ३५ । ४४ ।
"सामुद्रकं बाणिजकञ्च चौरं
शलाकवृत्तिञ्च चिकित्सकञ्च ।
अरिञ्च मित्रञ्च कुशीलवञ्च
नैतान् साक्ष्ये त्वधीकुर्व्वीत सप्त ॥")

**सामुद्रिकः**, त्रि, (समुद्रेण प्रोक्तं शास्त्रमधीते
वेत्तीति वा । ठञ् ।) स्त्रीपंसचिह्नवेत्ता ।
इति
हारावली ॥ समुद्रसम्बन्धी च ॥ (यथा,
महा-
भारते । १२ । १६९ । २ ।
"सामुद्रिकान् स बणिजस्ततोऽपश्यत्
स्थितान्
पथि ।
स तेन सह सार्थेन प्रययौ सागरं प्रति
॥")

द्वितीयस्वरौ । क, साम्बयति धनं लोकः
संब-
ध्नाति इत्यर्थः । इति दुर्गादासः ॥

**साम्बरं**, क्ली, (सम्बरदेशे भवम् । अण् । गड-
लवणम् । यथा, --
"गडादिलवणं शुभ्रं पृथ्वीजं गडदेजम् ।
गडोथ्यञ्च महारम्भं साम्बरं सम्बरोद्भवम् ॥"
इति राजनिर्घण्टः ॥

**साम्बरी**, स्त्री, (सम्बरेण कृता । सम्बर + अण् +
ङीष् ।) माया । यथा, --
"शाम्बरी साम्बरी माया मायाकृद्भिक्षुके नटे"
इति शब्दरत्नावली ॥

**साम्भवी**, स्त्री, रक्तलोध्रः । इति शब्दचन्द्रिका ॥

**साम्मातुरः**, पुं, (सम्मातुरपत्यं पुमान् । सम्मातृ +
"मातुरुत्संख्यासंभद्रपूर्व्वायाः ।" ४ । १ ।
११५ । इति
अण् । उकारश्च ।) सतीतनयः । तत्पर्य्यायः
।
भाद्रमातुरः २ । इति हेमचन्द्रः । ३ । २२०
॥

**साम्यं**, क्ली, (समस्य भावः । सम + ष्यञ् ।)
समता । तुल्यत्वम् । यथा, --
"चाण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रति-
गृह्य च ।

**सायंकालः**, पुं, (सायं सायाह्नः कालः ।)
सायाह्नः । सायंसन्ध्यासमयः । यथा, स्मृ
ति-
सागरधृतमत्स्यसूक्तम् ।
"ज्येष्ठा वाप्यथवा षष्ठी सायंकाले न
चेद्भवेत् ॥
सायमेव तथापि स्याद्बिल्वशाखाभिमन्त्रणम्
॥
इति तिथ्यादितत्त्वम् ॥

**सायंसन्ध्या**, स्त्री, (सायं सायाह्ने या सन्ध्या ।)
सायंकालोपास्या देवता ।
सायंकालकर्त्तव्यो-
पासना । सायंसन्ध्योपासनाकालश्च ।
तत्प्रमाणं
सन्ध्याशब्दे द्रष्टव्यम् । पश्चिमा सन्ध्या ।
तस्या
उत्पत्तिर्यथा, --
मार्कण्डेय उवाच ।
"नारायणः स्वयं सन्ध्यां
पस्पर्शाथाग्रपाणिना ।
ततः पुरोडाशमयं तच्छरीरमभूत् क्षणात् ॥
महामुनेर्म्महायज्ञे तस्मिन् विश्वोपकारिणि ।
नाग्निः क्रव्यादतां यातीत्येतदथ तथा कृतम्
॥
एवं कृत्वा जगन्नाथस्तत्रैवान्तरधीयत ।
सन्ध्याप्यगच्छद्यत्रेजे तत्र मेधातिथिर्मुनिः
॥
अथ विष्णोः प्रसादेन केनाप्यनुपलक्षिता ।
प्रविवेश तदा यज्ञं सन्ध्या मेधातिथेर्मनेः ॥
वशिष्ठे न पुरा या तु वर्णीभूता तु सा सुता ।
उपदिष्टा तपश्चर्त्तुं वचनात् परमेष्ठिनः ॥

**साम्नी**, स्त्री, वैदिकच्छन्दोविशेषः । इति केचित् ॥

**साम्परायिकं**, क्ली, (संपरायाय विपदे प्रभव-

तीति । संपराय + "तस्मै प्रभवति

सन्तापा-

दिभ्यः ।" ५ । १ । १०१ । इति ठञ्

।) युद्धम् ।

इत्यमरः । २ । ८ । १०४ ॥

(सम्पराय उत्तर-

तमेव कृत्वा मनसि तपश्चर्य्योपदेशकम्
।
पतित्वेन तदा सन्ध्या ब्राह्मणं
ब्रह्मचारिणम् ॥
समिद्धेऽग्नौ महायज्ञे मुनिभिर्नोपलक्षिता
।
तदा विष्णोः प्रसादेन सा विवेश विधेः
सुता ॥
तस्याः पुरोडाशमयं शरीरं
तत्क्षणात्ततः ।
दग्धं पुरोडाशगन्धं व्यस्तारयदलक्षितम्
॥
वह्निस्तस्याः शरीरं तद्दग्ध्वा सूर्य्यस्य
मण्डले ।
शुद्धं प्रवेशयामास विष्णोरेवाज्ञया पुनः
॥
सूर्य्यो द्विधा विभज्याथ तत्शरीरं तदा
रथे ।
स्वके संस्थापयामास प्रीतये
पितृदेवयोः ॥
यदूर्द्धभागं तस्यास्तु शरीरस्य
द्विजोत्तमाः ।
प्रातःसन्ध्याभवत् सा तु
अहोरात्रादिमध्यगा ॥
यच्छेषभागस्तस्यास्तु
अहोरात्रान्तमध्यगा ।
सा सायमभवत् सन्ध्या पितृप्रीतिप्रदा
सदा ॥
सूर्य्योदयाच्च प्रथमं यदा
स्यादरुणोदयः ।
प्रातःसन्ध्या तदोदेति देवानां
प्रीतिकारिणी ॥
अस्तं गते ततः सूर्य्ये शोणपद्मनिभा
सदा ।
उदेति सायंसन्ध्या सा पितॄणां
मोदकारिणी ॥"
इति श्रीकालिकापुराणे
अरुन्धतीजन्मकथने
२२ अध्यायः ॥

विभक्तदिनपञ्चमांशः । दिवसस्य शेषमूहूर्त्त-
त्रयम् । यथा, --
"प्रातःकालो मुहूर्त्तांस्त्रीन् सङ्गवस्तावदेव तु ।
मध्याह्नस्त्रिमुहूर्त्तं स्यादपराह्णस्ततः परम् ॥
सायाह्नस्त्रिमुहूर्त्तं स्यात् श्राद्धं तत्र न कारयेत्
राक्षसी नाम सा वेला गर्हिता सर्व्वकर्म्मसु ॥"
इति तिथ्यादितत्त्वम् ॥
तत्पर्य्यायः ।
"सायो दिनान्तः सायाह्नो विकालः सायमेव च"
इति शब्दरत्नावली ॥

**सायिका**, स्त्री, क्रमस्थितिः । इति शब्दरत्नावली ॥

**सायी**, [न्] पुं, (सायति नाशयति गतिक्लेश-
मिति । सै क्षये + णिनिः ।) अश्वारोहः ।
इति केचित् ॥

**सायुज्यं**, क्ली, (सयुजो सहयोगस्य भावः ।
ब्राह्मणादित्वात् ष्यञ् ।) सहयोगः । एकत्वम् ।
तत्तु पञ्चधामुक्त्यन्तर्गतमुक्तिविशेषः । यथा, --
"सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥"
इति श्रीभागवते । ३ । २९ । १३ ॥
"भक्तानां निष्कामतां कैमुतिकन्यायेनाह ।
सालोक्यं मया सह एकस्मिन् लोके वासम् ।
सार्ष्टिं समानैश्वर्य्यम् । सामीप्यं निकटवर्त्ति-
त्वम् । सारूप्यं समानरूपताम् । एकत्वं
सायुज्यम् । उत अपि दीयमानमपि न गृह्णन्ति
कुतस्तत्कामना इत्यर्थः ।" इति श्रीधरस्वामी ॥
"एकत्वं भगवत्सायुज्यं ब्रह्म सायुज्यञ्च ।
अनयो-
स्तल्लीलात्मकत्वेन तत्सेवनार्थत्वाभावात् ग्रह-
णावश्यकत्वमेवेति भावः ।" इति क्रमसन्दर्भः ॥

**साये**, व्य, दिनान्ते । सायंकाले । इति केचित् ॥

**सार**, त् क दौर्व्बल्ये । इति कविकल्पद्रुमः ॥
(अदन्तचुरा०-पर०-अक०-सेट् ।) रेफोपधः ।
अससारत् । इति दुर्गादासः ॥

**सारं**, क्ली, पुं, (सार त् क दौर्ब्बल्ये + अच् । सृ गतो
+ घञ् इति वा ।) जलम् । धनम् । (यथा,

तथैवेह सुखं ताभिः सह राज्यं नृपोत्तम
॥"
इति वह्निपुराणे दासीदानाध्यायः ॥
अपि च ।
"असारे खलु संसारे सारमेतच्चतुष्टयम्
।
काश्यां वासः सतां सङ्गो गङ्गाम्भः
शम्बु-
सेवनम् ॥"
इति कवितारत्नाकरधृतपुराणवचनम् ॥

**सारः**, पुं, (सृ + "सृ स्थिरे ।" ३ । ३ । १७ ।
इति
घञ् ।) बलम् । (यथा, महाभारते । १ ।
१५५ ।
२३ ।
"तरस्व भीम मा क्रीड जहि रक्षो
विभीषणम् ।
पुरा विकुरुते मायां भुजयोः सारमर्पय
॥")
स्थिरांशः । इत्यमरः । ३ । ३ । १७०
॥ (यथा,
रघुः । १० । १० ।
"प्रभानुलिप्तश्रीवत्सं
लक्ष्मीविभ्रमदर्पणम् ।
कौस्तुभाख्यमपां सारं बिभ्राणं
बृहतोरसा ॥")
मज्जा । इत्यमरः । २ । ४ । १२ ॥
वज्रक्षारम् ।
इति राजनिर्घण्ठः ॥ वायुः । इति
जटाधरः ॥
रोगः । इति धरणिः ॥ पाशकः । इति
शब्द-
रत्नावली ॥ दध्युत्तरम् । इति
शब्दचन्द्रिका ॥
(अर्थालङ्कारविशेषः । यथा,
साहित्यदर्पणे ।
१० । ७३१ ।
"उत्तरोत्तरमुत्कर्षो वस्तुनः सार उच्यते
॥"

**सायंसन्ध्यादेवता**, स्त्री, (सायंसन्ध्याया देवता ।)

सरस्वती । इति कविकल्पलता ॥

**सायः**, पुं, (स्यति समापयति दिनमिति । सो + श्याद्व्यधेति णः । ततो युगागमः ।) दिनान्तः । इत्यमरः । १ । ४ । ३ ॥ बाणः । इति मेदिनी ॥ सायोत्मवौ विकालके । इति त्रिकाण्डशेषः ॥

**सा(शा)यकः**, पुं, (स्यति छिनत्तीति । सो + ण्वुल् + युक् ।) बाणः । (यथा, रामायणे । २ । ३१ । ३० !
"अभेद्ये कवचे दिव्ये तूणौ चाक्षय्यसायकौ ॥")
खड्गः । इत्यमरः । ३ । ३ । २ ॥ (यथा, महाभारते । ४ । ४० । १४ ।
"कस्य पाञ्चनखे कोषे सायको हेमविग्रहः ।
प्रमाणरूपसम्पन्नः पीत आकाशसन्निभः ॥"
पञ्चमसंख्या । यथा, साहित्यदर्पणे । ४ । २६४ ।
"सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया ।
वेदखाग्निशराः शुद्धैरिषुबाणाग्निसायकाः ॥")

**सायकपुङ्खा**, स्त्री, (सायकस्य पुङ्ख इव पुङ्खो यस्याः ।) शरपुङ्खा । इति राजनिर्घण्टः ॥ (सायकस्य पुङ्खे, पुं, । यथा, रघुः । २ । ३१ ।
"सक्ताङ्गुलिः सायकपुङ्ख एव चित्रार्पितारम्भ इवावतस्थे ॥")

**सायन्तनः**, त्रि, (सायं भवः । सायम् + "सायंचिरंप्राह्णेप्रागव्ययेभ्यष्ट्युट्युलौ तुट् च ।" ४ । ३ । रघुः । ४ । ७९ ।
"परस्परेण विज्ञातस्तेषूपायनपाणिषु ।
राज्ञा हिमवतः सारो राज्ञः सारो हिमाद्रिणा ॥")
न्याय्यम् । इति मेदिनी ॥ (सरात् जातम् । सर + अण् ।) नवनीतम् । इति राजनिर्घण्टः ॥ (यथा, सुश्रुते उत्तरतन्त्रे । २६ ।
"क्षीरशेषञ्च तन्मथ्यं शीतं सारमुपाहरेत् ॥"
अमृतम् । यथा, भागवते । ७ । ६ । २५ ।
"धर्म्मादयः किमगुणेन च काङ्क्षितेन सारंजुषां चरणयोरुपगायतां नः ॥")
लौहम् । इति भावप्रकाशः । विपिनम् । इति शब्दरत्नावली ॥ * ॥ सारवस्तूनि यथा, --
"सारं रसानान्तु घृतं घृतसारं हुतञ्च यत् ।
हुतस्य सारं स्वर्गञ्च स्वर्गात् सारन्तु योषितः ॥
अतो राजन् प्रदेयाः स्युः स्त्रियः स्वर्गमभीप्सतः । यथा, --
"राज्ये सारं वसुधा वसुधायामपि पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनासर्व्वस्वम् ॥")

**सारः**, त्रि, (सृ + घञ् ।) अतिदृढः । इति शब्दरत्नावली ॥ वरः । श्रेष्ठः । इत्यमरमेदिनीकरौ ॥ यथा, --
"सर्व्वसारो यथा कृष्णो व्रतानां पुण्यकं तथा ॥"
इति ब्रह्मवैवर्त्ते गणपतिखण्डे । ३ । ३० ॥
अपि च ।
श्रीमार्कण्डेय उवाच ।
"जगत् सर्व्वन्तु निःसारमनित्यं दुःखभाजनम् ।
उत्पद्यते क्षणादेतत् क्षणादेतत् विपद्यते ॥
यथैवोत्पद्यते सारान्निःसारं जगदञ्जसा ।
पुनस्तस्मिन्निलीयन्ते महाप्रलयसङ्गमे ॥
उत्पत्तिप्रलयाभ्यान्तु जगन्निसारतां हरिः ।
शम्भवे दर्शयामास भावेन जगतां पतिः ॥
एकं शिवं शान्तमनन्तमच्युतं परात्परं ज्ञानमयं विशेषम् ।
अद्वैतमव्यग्रमचिन्त्यरूपं सारन्त्वेकं नास्ति सारं त्वदन्यत् ॥
यस्मादेतज्जायते विश्वमग्र्यं यस्माल्लीनं स्यात् तत्पश्चात् स्थितञ्च ।
आकाशवन्मेघजालस्य धृत्या यद्विश्वं वै ध्रियते तच्च सारम् ॥
अष्टाङ्गयोगैर्यदापु मिच्छन् योगी युनक्त्यात्मरूपं सदैव ।
निवर्त्तते प्राप्य यन्नेह लोके तद्वै सारं सारमन्यन्न चास्ति ॥

| | | |
|---|---|---|
| २३ । इति ढ्युल् तुट् च ।)<br>सायंकालभवः ।<br>यथा, --<br>“सन्ध्यां सायन्तनीं कुर्य्यात्<br>द्वादश्यादिष्वपि<br>प्रिये ।<br>अकुर्व्वन्निरयं याति यतो<br>नित्यागमक्रिया ॥”<br>इति बृहन्नीलतन्त्रे प्रथमपटलः ॥<br>**सायाह्नः**, पुं, (सायमह्नः । “संख्याविसायेति ।”<br>६ । ३ । ११० । ज्ञापकात् समासः ।)<br>पञ्चधा- | | |

सारो द्वितीयो धर्म्मस्तु यो नित्यप्राप्तये भवेत् ।
यो वै निवर्त्तको नाम तत्रासारः प्रवर्त्तकः ॥
सर्व्वं क्षरति लोकेऽस्मिन् धर्म्मो नैव च्युतो भवेत्
स्वधर्म्माद्यो न चलति स एवाक्षर उच्यते ॥
एतद्वः कथितं सारं निःसारञ्च यथा जगत् ।
यथा स्वयं ददर्शाशु शम्भुर्ज्ञानिन स्वेऽन्तरे ॥
एतद्वै दर्शयामास स विष्णुर्जगतां पतिः ।
स्वयं जग्राह मनसा ध्यानेनात्मनि शङ्करः ॥
सारं तत्त्वं परमं निष्कलं य-
म्मूर्त्या दीनं मूर्त्तिमान् धर्म्म एषः ।
सारोऽन्योऽसौ सारहीनं तदन्यत्
ज्ञात्वैवेथ्यं याति नित्यं महाधीः ॥"
इति श्रीकालिकापुराणे २७ अध्यायः ॥

**सारकः**, पुं, (सारयति मलमिति । सृ + णिच् + ण्वुल् ।) जयपालः । इति राजनिर्घण्टः ॥ विरे-
चके, त्रि । इति वैद्यकम् ॥

**सारखदिरः**, पुं, (सारः अतिदृढः खदिरः ।) दुःखदिरः । इति राजनिर्घण्टः ॥

**सारगन्धः**, पुं, (सारो गन्धो यस्य ।) चन्दनम् । इति शब्दचन्द्रिका ॥

**सारग्राही**, [न्] त्रि, (सारं गृह्णातीति । ग्रह + णिनिः ।) सारग्रहणकर्त्ता ॥

**सारघं**, क्ली, (सरघाभिर्म्मधुमक्षिकाभिः कृतमिति सरघा + अण् ।) मधु । इति जटाधरः ॥ (यथा, भागवते । १० । १६ । ४३ ।
"पीत्वा मुकुन्दमुखसारघमक्षिभृङ्गै-
स्तापं जहुर्व्विरहजं व्रजयोषितोऽह्नि ॥")

**सारङ्गः**, पुं, (सरतीति । सृ गतौ + "सृवृञो-

स्वर्णम् । आभरणम् । पद्मम् । शङ्खः । चन्दनम् ।
कर्पूरम् । पुष्पम् । कोकिलः । मेघः । पृथिवी ।
रात्रिः । दीप्तिः । सिंहः । इत्यनेकार्थकोषः ॥ * ॥
सारङ्गहरिणमांसगुणाः ।
"सारङ्गं जाङ्गलं स्निग्धं मधुरं लघु वृष्यदम् ।"
इति राजनिर्घण्टः ॥

**सारङ्गः**, त्रि, (सृ + अङ्गच् ।) शवलः । इत्य-
मरः । ३ । ३ । २३ ॥ "शारङ्गश्चातके ख्यातः
शवले हरिणेऽपि च । इति तालव्यादावजयः ।
अतएव सारङ्गो दन्त्यादिस्तालव्यादिश्च ।" इति
भरतः ॥

**सारङ्गिकः**, पुं, (सारङ्गं हन्तीति । सारङ्ग + "पक्षि-
मत्स्यमृगान् हन्ति ।" ४ । ४ । ३५ । इति ठक् ।)
व्याधः । इति सिद्धान्तकौमुदी ॥

**सारङ्गी**, स्त्री, वाद्यविशेषः । इति केचित् ॥

**सारजं**, क्ली, (सारात् जायते इति । जन + डः ।) नवनीतम् । इति शब्दचन्द्रिका ॥

**सारणं**, क्ली, (सारयतीति । सृ + णिच् + ल्युः ।) गन्धभेदः । इति धरणिः ॥

**सारणः**, पुं, (सृ + णिच् + ल्युः ।) अतीसाररोगः ।
रावणमन्त्री । इति हेमचन्द्रः ॥ भद्रवला । इति
धरणिः ॥ आम्रातकः । इति शब्दचन्द्रिका ॥

**सारणिः**, स्त्री, (सृ + णिच् + अनिः । इत्युणादि-
वृत्तौ उज्ज्वलः । २ । १०३ ।) क्षुद्रनदी । प्रसा-

सरथोऽश्वः तं प्रेरयति ढघे कादिति ष्णिर्व्वा ।
सारयति अश्वान् इति ञ्यन्तात् सृ गतावि-
त्यस्मात् नाम्नीति अथिप्रत्ययो वा । इत्यमर-
टीकायां भरतः ॥ तल्लक्षणं यथा, मात्स्ये ।
२१५ । २० -- २१ ।
"निमित्तशकुनज्ञानो हयशिक्षाविशारदः ।
हयायुर्व्वेदतत्त्वज्ञो भूरिभागविशेषवित् ॥
स्वामिभक्तो महोत्साहः सर्व्वेषाञ्च प्रियंवदः ।
शूरश्च कृतविद्यश्च सारथिः परिकीर्त्तितः ॥"
समुद्रः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**सारदा**, स्त्री, (सारं ददातीति । दा + कः ।)
सरस्वती । इति शब्दरत्नावली ॥ दुर्गा । यथा ।
शरत्कालबोधनीयत्वेन शारदापदव्युत्पत्ते-
स्तत्पदं तालव्यादि सारं ददातीति व्युत्पत्ति-
स्तुकाल्पनिकी । इति तिथ्यादितत्त्वम् ॥ सार-
दातरि, त्रि ॥

**सारद्रुमः**, पुं, (सारः अतिदृढः द्रुमः ।) खदिरः
इति राजनिर्घण्टः ॥ (यथा, बृहत्संहितायाम् ।
४३ । ५८ ।
"उत्थापयेत् लक्ष्म सहस्रचक्षुषः
सारद्रुमाभग्नकुमारिकान्वितम् ॥")

**सारपादपः**, पुं, (सारः अतिदृढः पादपः ।)
धामनिवृक्षः । इति रत्नमाला ॥

**सारभाण्डं**, क्ली, (सारस्य भाण्डमिव ।) अकृत्रिम-
पात्रम् । यथा मृगनाभ्यादि ॥ (यथा, याज्ञ-
वल्क्यः । २ । २५० ।
"समुद्रपरिवर्त्तञ्च सारभाण्डञ्च कृत्रिमम् ।
आधानं विक्रयं वापि नयतो दण्डकल्पना ॥")

वृद्धिश्च ।” उणा० १ । १२१ । इति अङ्गच् ।
वृद्धिश्च ।) चातकपक्षी । इत्यमरः । २ । ५ । १७ ॥
(यथा, रामायणे । २ । ६३ । १६ ।
“उष्णमन्तर्द्दधे सद्यः स्निग्धा ददृशिरे घनाः ।
ततो जहृषिरे सर्व्वे भेकसारङ्गवर्हिणः ॥”)
हरिणः । (यथा, भट्टिः । ३ । २६ ।
“गोमायुसारङ्गगणाश्च सम्यक्
नायासिषुर्भीममरासिषुश्च ॥”)
मातङ्गजः । इति मेदिनी ॥ पक्षिभेदः । भृङ्गः ।
इति विश्वः ॥ यथा, --
“नानुद्वेष्टि कलिं सम्राट् सारङ्ग इव सारभुक्
कुशलान्याशु सिध्यन्ति नेतराणि कृतानि यत् ॥”
इति श्रीभागवते । १ । १८ । ७ ॥
“ननु अधर्म्महेतुं कलिं सर्व्वथा किं न हत्वान्
तत्राह नानुद्वेष्टीति । सारङ्गो भ्रमर इव सार-
ग्राही । सारमाह यत् यस्मिन् कुशलानि
पुण्यानि आशु संकल्पमात्रेण फलन्ति इतराणि
पापानि आशु न सिध्यन्ति यतस्तानि कृतान्येव
सिध्यन्ति न तु संकल्पितमात्राणीति ।” इति
श्रीधरस्वामी ॥ * ॥ छत्रम् । राजहंसः । चित्र-
मृगः । (यथा, महाभारते । ७ । २२ । २१ ।
“आक्रीडन्तो वहन्ति स्म सारङ्गशवला हयाः ॥”)
वाद्यभेदः । अंशुकम् । इति शब्दरत्नावली ॥
नानावर्णः । मयूरः । कामदेवः । धनुः । केशः ।
रणी । इत्युणादिकोषः ॥

**सारणिकः**, त्रि, पथिकः । सरणिशब्दात् ष्णिक-
प्रत्ययेन निष्पन्नः ॥ (यथा, महाभरते । १२ ।
९१ । ३६ ।
“यदा सारणिकान् राजा पुत्रवत् परिरक्षति ।
भिनत्ति च न मर्य्यादां स राज्ञो धर्म्म उच्यते ॥”)

**सारणिकघ्नः**, पुं, (सारणिकान् पथिकान् हन्तीति
हन + टक् ।) दस्युः । इति केचित् ॥

**सारणी**, स्त्री, (सारणि + वा ङीष् ।) प्रसारणी ।
स्वल्पनदी । इति मेदिनी ॥ (यथा, अनर्घ-
राघवे । २ । २५ ।
“आलवालवलयेषु भूरुहां
मांसलस्तिमितमन्तरान्तरा।
केरलीचिकुरभङ्गिभङ्गुरं
सारणीषु पुनरम्बु दृश्यते ॥”)

**सारण्डः**, पुं, सर्पाण्डः । इति जटाधरः ॥

**सारतरुः**, पुं, (सारं जलं तत्प्रधानस्तरुः ।)
कदलीवृक्षः । इति धनञ्जयः ॥

**सारथिः**, पुं, (सरत्यश्वानिति । सृ + अन्तर्भावि-
ण्यर्थः + “सर्त्तेर्णिच्च ।” उणा० ४ । ८९ । इति
घथिन् ।) रथादिघोटकनियोगकर्त्ता। तत्-
पर्य्यायः । नियन्ता २ प्राजिता ३ यन्ता ४
सूतः ५ क्षत्ता ६ सव्येष्टा ७ दक्षिणस्थः ८ रथ-
कुटुम्बी ९ । इत्यमरः । २ । ८ । ५९-६० ॥ सादी १०
सव्येष्ठः ११ नियामकः १२ चातुरिकः १३ ।
इति जटाधरः ॥ प्रवेता १४ रथनागरः १५ ।
इति शब्दरत्नावली ॥ सरथस्यापत्यं सारथिः
बाह्वाद्यत इति ष्णिः । सह रथेन वर्त्तते योऽसौ

**सारमितिः**, पुं, वेदः । इति हेमचन्द्रः ॥ सारं
यथार्थं मीयते ज्ञायते अनेन सारमितिः ।
सारोपपदात् माधातोर्नाम्नीति तिः ॥

**सारमूषिका**, स्त्री, (सारे मुषिकेव) देवदाली ।
इति राजनिर्घण्टः ॥

**सारमेयः**, पुं, (सरमाया अपत्यं पुमानिति । ढक् ।)
कुक्कुरः । इत्यमरः । २ । १० । ३१ ॥ (यथा,
महाभारते । ६ । ९ । ७३ ।
“अन्योन्यस्यावलुम्पन्ति सारर्मेया इवामिषम् ।
राजानो भरतश्रेष्ठ भोक्तुकामा वसुन्धराम् ॥”)

**सारमेयी**, स्त्री, (सरमाया अपत्यं स्त्री । ढक् ।
ङीष् ।) कुक्कुरी । इति शब्दरत्नावली ॥

**सारलोहं**, क्ली, (सारं श्रेष्ठं लोहम् ।) लोह-
सारः । इति भूरिप्रयोगः ॥ इष्पात इति भाषा ॥

**सारवः**, त्रि, (सरय्वां भवः । अण् । “दाण्डि-
नायनहास्तिनायनेति ।” ६ । ४ । १७४ । इति
निपातनात् साधुः ।) सरयुनदीसमुत्पन्नः ।
इत्यमरः । १ । १० । ३६ ॥।

**सारवर्ज्जितः**, त्रि, स्थिरांशरहितः । असारवस्तु ।
सारेण वर्ज्जित इति तृतीयातत्पुरुषसमास-
निष्पन्नः ॥

**सारसं**, क्ली, (सरसि भवम् । सरस् + अण् ।)
पद्मम् । इत्यमरः । १ । १० । ४० ॥ स्त्रीकट्या-
भरणम् । इति केचित् ॥

**सारसं**, त्रि, (सरसि भवम् । सरस् + अण् ।)

सरोवरोद्भवजलादि । तज्जलगुणाः । तथा, --
"नद्याः शैलवराच्चाम्भो यत्र संस्रुत्य तिष्ठति ।
तत् सरोजजलं छन्नं तदद्भः सारसं स्मृतम् ॥
सारसं सलिलं बल्यं तृष्णाघ्नं मधुरं लघु ।
रोचनं तुवरं रूक्षं बद्धमूत्रमलं सितम् ॥"
इति भावप्रकाशः ॥
(यथा च ।
"क्षारं घनं वातकफानुकारि
त्वग्दोषकृत् तत् कटु दीपनञ्च ।
प्रोक्तं विपाके भ्रमशोषकारि
स्यात् सारसं नो सुखकारि वारि ॥"
इति हारीते प्रथमस्थाने सप्तमेऽध्याये ॥)

**सारसः**, पुं, चन्द्रः । इति मेदिनी ॥

**सारसः**, पुं, स्त्री, (सरसि भवः । अण् ।) स्वनाम-

ख्यातपक्षी । तत्पर्य्यायः । पुष्कराह्वः २ ।
इत्यमरः । २ । ५ । २२ ॥ गोनर्द्दः ३
नाङ्कुरः ४
लक्ष्मणः ५ लक्षणः ६ सरसीकः ७
सरोत्सवः ८
इति शब्दरत्नावली ॥ रसिकः ९ कामी १० ।
तन्मांसगुणाः । मधुरत्वम् । अम्लत्वम् । कषाय-
त्वम् । महातिसारपित्तग्रहण्यर्शोनाशित्वञ्च।
इति राजनिर्घण्टः ॥ * ॥ तस्य शकुनं यथा, --
"इष्टार्थसिद्धिः सकलासु दिक्षु
स्यात् सारसद्वन्द्वविलोकनेन ।
श्रुत्वास्य पृष्ठे निनदं न गच्छेत्
सिध्यत्यभीष्टं गृह एव यस्मात् ॥
वामेन योषित्कुललाभकारी
शब्दस्तथाग्रे नृपतोऽर्थलब्ध्यै ।
यः सारसाभ्यां युगपद्विरावः
कृतोऽचिरेण क्रमतोऽपि वामः ।
स वेदितव्यः कथितार्थकारी

**सारस्वतः**, पुं, सरस्वती देवतास्येति । अण् ।)

विल्वदण्डः । (सरस्वत्या अयमिति । तस्येद-
मित्यण् ।) देशविशेषः । स तु हस्तिनापुरस्य
उत्तरपश्चिमभागे प्रसिद्धः । इति हेमचन्द्रः ॥
यथा । कूर्म्माङ्गस्थदेशानाह ।
"मध्ये सारस्वता मत्स्याः शूरसेनाः समाथुराः
पाञ्चालशाल्वमाण्डव्यकुरुक्षेत्रगजाह्वयाः ॥"
इति ज्योतिस्तत्त्वम् ॥
सरस्वतीनदीपुत्त्रमुनिविशेषः । सारस्वतदेशो-
द्भवब्राह्मणः । यथा, --
"सारस्वताः कान्यकुब्जा गौडमैथिलकोत्कलाः ।
पञ्च गौडा इति ख्याता विन्ध्यस्योत्तरवासिनः ॥"
इति पुराणम् ॥
कल्पविशेषः ॥ यथा, --
"सारस्वतस्य कल्पस्य मध्ये ये स्युर्न्नरामराः ।
तद्वृत्तान्तोद्भवं लोके तद्भागवतमुच्यते ॥"
इति मात्स्ये ५० अध्यायः ॥
व्याकरणविशेषः । (नवमद्वापरयुगस्य व्यासः ।
यथा, देवीभागवते । १ । ३ । २८ ।
"सारस्वतस्तु नवमे त्रिधामा दशमे तथा ॥"
घृतविशेषे, क्ली । यथा, --
"समूलपत्रामादाय ब्रह्मीं प्रक्षाल्य वारिणा ।
उदूखले क्षोदयित्वा रसं वस्त्रेण गालयेत् ॥
रसे चतुर्गुणे तस्मिन् घृतप्रस्थं विपाचयेत् ।
औषधानि तु पेष्याणि तानीमानि प्रदापयेत् ॥
हरिद्रा मालती कुष्ठं त्रिवृती सहरीतकी ।
एतेषां पलिकान्भागान् शेषाणिकार्षिकाणि तु
पिप्पल्योऽथ विडङ्गानि सैन्धवं शर्करा वचा ।
सर्व्वमेतत् समालोड्य शनैर्मृ द्वग्निना पचेत् ॥
एतत्प्राशितमात्रेण वाग्विशुद्धिश्च जायते ।
सप्तरात्रप्रयोगेण किन्नरैः सह गीयते ॥
अर्द्धमासप्रयोगेण सोमराजीवपुर्भ्भवेत् ।
मासमात्रप्रयोगेन श्रुतमात्रन्तु धारयेत् ॥
हन्त्यष्टादशकुष्ठानि अर्शांसि विविधानि च ।
पञ्चगुल्मान् प्रमेहांश्च कासं पञ्चविधं जयेत् ॥
बन्ध्यानाञ्चैव नारीणां नराणामल्परेतसाम् ।
घृतं सारस्वतं नाम बलवर्णाग्निवर्द्ध नन् ॥"

सर्व्वशास्त्रप्रकाशश्च सर्व्वज्ञो
जायतेऽचिरात् ।
अभ्यासाच्च भवेद्यस्य वाचश्चित्रा
भवन्ति हि ॥
अवापुस्त्रिदशा व्याप्तं वागीशत्वं
बृहस्पतिः ।
द्वैपायनोऽपि यां ज्ञात्वा
वेदव्यासोऽभवन्मुनिः ॥
मन्त्रोद्धारं प्रवक्ष्यामि
साङ्गावरणपूजनैः ।
अनन्तं बिन्दुना युक्तं
वामगण्डान्तभूषितम् ॥
जपेत् द्वादशलक्षन्तु मूकोऽपि
वाक्पतिर्भ्भवेत्
नाभौ शुभ्रारविन्दञ्च ध्यायेद्दशदलं
सुधीः ॥
तन्मध्ये भावयेम्मन्त्री मण्डलानां
त्रयं चिरम् ।
रत्नसिंहासनं तत्र वर्णज्योत्स्नामयं
पुनः ॥
तस्योपरि पुनर्ध्यायेद्देवीं वागीश्वरीं
ततः ।
मुक्ताकान्तिनिभां देवीं
ज्योत्स्नाजाल-
विकाशिनीम् ॥
मुक्ताहारयुतां शुभ्रां
शशिखण्डविमण्डिताम् ।
बिभ्रतीं दक्षहस्ताभ्यां व्याख्यां
वर्णस्य मालि-
काम् ॥
अमृतेन तथा पूर्णं घटं दिव्यञ्च
पुस्तकम् ।
दधतीं वामहस्ताभ्यां
पीनस्तनभरान्विताम् ॥
मध्ये क्षीणां तथा स्वच्छां
नानारत्नविभूषिताम्
आत्माभेदेन ध्यात्वैवं ततः
संपूजयेत् क्रमात् ॥

क्रौञ्चद्वयस्याप्ययमेव वर्गः ॥"

इति वसन्तराजशाकुने सारसवर्गः ॥

**सारसनं**, क्ली, (सारं सनोति ददातीति । षणु

दाने + अच् ।) काञ्ची । स्त्रीकट्याभरणम् ।
इत्यमरः । २ । ६ । १०९ ॥ अस्य पर्य्यायः
काञ्ची
शब्दे द्रष्टव्यः ॥ कञ्चुकदाढर्य्यार्थं
मध्यकायनिबद्ध-
पट्टिकादि । तत्पर्य्यायः । अधिकाङ्गम् २ ।
इत्यमरः । २ । ८ । ६३ ॥ द्वे
कञ्चुकदाढर्य्यार्थं
मध्यकाये निबद्धे पट्टिकादौ । सकञ्चु काः
सस-
न्नाहाः मध्ये दाढर्य्यार्थं यद्बध्नन्ति तत्
सारसनं
अधिकाङ्गञ्चोच्यते । इति भरतः ॥ (यथा,
किराते । १८ । ३२ ॥
"तवोत्तरीयं करिचर्म्म साङ्गजं
ज्वलन्मनिः सारसनं महानहिः ।
सगास्यपंक्तिः शवभस्म चन्दनं
कला हिंमाशोश्च समञ्चकासत ॥")

**सारसी**, स्त्री, (सारस + जातौ ङीष् ।) सारस-

पत्नी । इति हेमचन्द्रः ॥ (यथा, महाभारते ।
११ । १८ । १४ ।
"हंसगद्गदभाषिण्यो दुःखशोकप्रमोहिताः ।
सारस्य इव रासन्त्यः पतिताः पश्य माधव !
॥")

इति वैद्यकचक्रपाणिसंग्रहे रसायनाधिकारे ॥
इदमेव ब्रह्मीघृतमित्याख्ययापिप्रसिद्धम् ॥ * ॥
त्रि, सरस्वतीसम्बन्धी । (यथा, याज्ञवल्क्ये ।
२ । ८३ ।
"वर्णिनां हि वधो यत्र यत्र साक्ष्यनृतं वदेत् ।
तत्पावनाय निर्व्वाप्यश्चरुः सारस्वतो द्विजैः
॥")
सारस्वतदेशसम्बन्धी ॥
(सरस्वतीनदीसम्बन्धी ।
यथा, मेघदूते । ५१ ।
"कृत्वा तासामभिगममपां सौम्य सारस्वतीना-
मन्तः शुद्धस्त्वमपि भविता वर्णमात्रेण कृष्णः
॥")

**सारस्वतकल्पः**, पुं, (सारस्वतः कल्पः ।) सरस्व-

त्युपासनाप्रकरणम् । यथा, --
ब्रह्मोवाच ।
"शृणु ब्रह्मन् परं गुह्यं कल्पं सारस्वतं मम ।
यस्य विज्ञानमात्रेण जाड्यापहरणं भवेत् ॥
आद्येन दीर्घयुक्तेन कुर्य्यादङ्गानि
हस्तयोः ।
हृदयादौ तथा कुर्य्याद्वीजेनाङ्गक्रिया
पुनः ॥
भ्रुवोर्म्मध्ये तथा नाभौ गुह्ये च
देशिकस्तथा ।
न्यसेद्वीजं पुनर्वस्तौ व्यापकं
विन्यसेत्ततः ॥
पीठन्यासं तनी कुर्य्यात्
देवताभावशुद्धये ।
मांतृकायान्तु यत् प्रोक्तं
पीठमभ्यर्च्च्य यत्नतः ॥
बर्णाब्जेनासनं दद्यात् मूर्त्तिं मूलेन
कल्पयेत ।
आवाह्य पूजयेत्तस्यां देवीं वागीश्वरीं
ततः ॥
अङ्गैः प्रथमा वृत्तिः स्यात् द्वितीया
शक्ति-
भिस्ततः ।
दलाग्रेषु समभ्यर्च्च्य ब्रह्माण्याद्या
यथाविधि ॥
लोकपाला बहिः
पूज्यास्तेषामस्त्राणि तद्ध्वहिः ।
एवं सम्पूजयेन्मन्त्री
जपहोमरतस्तदा ॥
कवित्वं लभते वाग्मी
लक्षैर्द्वादिभिर्ध्रुवम् ।
प्रातर्जप्त्वा सहस्रन्तु पिबेद्ब्राह्मीं
वचान्विताम्
न विस्मरति मेधावी श्रुतान्
वेदागमानपि ।
कण्ठमात्रोदके स्थित्वा
ध्यायेन्मार्त्तण्डमण्डले ॥
ज्योतिःपुञ्जनिभां देवीं
परिवारसमन्विताम् ।
वराभययुतां हस्ते
मुद्रापुस्तकधारिणीम् ॥
जपन् सहस्रमाणेन षण्मासं
विजितेन्द्रियः ।
भीमां सम्प्राप्य वाक्सिद्धिं
कवीनामग्रणीर्भवेत्

| | | |
|---|---|---|
| | | अथ योगं प्रवक्ष्यामि जाड्यनाशकरं परम् ।<br>रात्रिशेषे समुत्थाय शुचिर्भूत्वा समाहितः ॥<br>शुद्धभावेन चात्मानं गुरुञ्च परिकल्पयेत् ।<br>तत्प्रभापटलव्याप्तं जगत् सर्व्वं विचिन्तयेत् ॥<br>मूलाधारे स्थितां देवीं कुण्डलीं परदेवताम् ।<br>सुप्तां प्रोत्थाप्य तां शक्त्या क्रमाच्चक्राणि भेदयेत्<br>ततः परशिवे नीत्वा सौधीञ्च प्रापयेत्ततः ।<br>ऊर्द्धग्रन्थिं विनिर्भिद्य जिह्वां दीपस्वरूपिणीम्<br>बीजरूपस्वशक्त्या तु प्रोल्लसन्तीं परात्मिकाम् ।<br>शब्दब्रह्मस्वरूपाञ्च निश्चलां चिन्तयेत् पुनः ॥<br>तत्प्रभापटलव्याप्तं शरीरं चिन्तयेत्ततः ॥ |

नित्यं सहस्रमाणेन जपेत् संबत्सरं यदि ।
ततः संजायते मन्त्री वाचस्पतिरिवापरः ॥
छन्दोऽलङ्कारतर्कादिनानाशास्त्रार्थविद्भवेत् ।
कवित्वं ज्ञानशक्त्या तु पाण्डित्यमधिकं भवेत्
॥ *
अथापरं प्रवक्ष्यामि योगं भुवि सुदुर्ल्लभम् ।
नाभिचक्रस्थितां सौम्यां रक्ताकारां विचि-
न्तयेत् ॥
क्षौमाबद्धनितम्बाञ्च रक्ताभरणभूषिताम् ।
पाशाङ्कुशधरां दिव्यां वराभययुतां पुनः ॥
दृष्ट्या चामृतवर्षिण्या पूरयन्तीं मनोरथान् ।
एवं ध्यात्वा जपेल्लक्षं मनुजो विहितं ततः ॥
होमं कुर्य्यात् त्रिमध्वक्तं रक्तोत्पलयुतैर्द्विजः ।
ततः सन्तर्पयेद्देवीं दुग्धयुक्तेन सर्पिषा ॥
पायसेन बलिं दद्यात् दधिपिष्टमधुप्लुतैः ।
एवं कृत्वा विधानन्तु साक्षाद्वै श्रवणो भवेत् ॥
सिद्धार्थैस्त्रिमधुरोपेतैर्हु त्वा जगद्वशं नयेत् ।
पद्मदानेन महतीं प्राप्नुयात् श्रियमूर्जिताम् ॥
देवीहृदयविद्याया नास्ति किञ्चित् सुदुर्ल्लभम्
स्नेहभावेन सम्प्रोक्तं न देयं यस्य कस्यचित् ॥
एतत्ते कथितं दिव्यं विद्योत्पत्तेश्च कारणम् ।
विष्णुना दत्तमस्मभ्यं मया तुभ्यं द्विजोत्तम ॥
सिद्धमन्त्री यदा मन्त्री वालिशस्यापि मूर्द्धनि ।
हस्तं दत्त्वा जपेत् सोऽपि सौधीं वाचमन-
र्गलाम् ॥”
इति स्वायम्भुवमातृकातन्त्रे सारस्वतः पटलः ।
इति तन्त्रसारः ॥

**सारस्वतव्रतः**, पुं, (सारस्वतः सरस्वतीदेवताकः व्रतः ।) सरस्वत्या व्रतविशेषः । यथा, --
मनुरुवाच ।
“मधुरा भारती केन व्रतेन मधुसूदन ।
तथैव जनसौभाग्यमतिविद्यासुकौशलम्॥
अभेदश्चापि दम्पत्योस्तथा बन्धुधनेन च ।
आयुश्च विपुलं पुंसां तन्मे कथय माधव ॥
मत्स्य उवाच ।
सम्यक् पृष्टं त्वया राजन् शृणु सारस्वतं व्रतम्
यस्य सङ्कोर्त्तनादेव तुष्यतीह सरस्वती ॥
यो यद्भक्तः पुमान् कुर्य्यादितद्व्र तमनुत्तमम् ।
तद्वासरादौ संपूज्य विप्रानेतत् समारभेत् ॥
तथैव तण्डुलप्रथ्यं घृतपात्रेण
संयुतम् ।
क्षीरं दद्याद्धिरण्यञ्च गायत्री
प्रीयतामिति ॥
सन्ध्यायाञ्च तथा मौनमेतत्
कुर्व्वन् समाचरेत् ।
नान्तराभोजनं कुर्य्यात्
यावन्मासास्त्रयोदश ॥
समाप्ते तु व्रते दद्यात् भोजनं
शुक्लतण्डुलैः ।
सुवर्णं वस्त्रयुग्मञ्च गाञ्च विप्राय
शोभनाम ।
देव्या वितानं घण्टाञ्च
सितनेत्रपटावृताम् ।
चन्दनं वस्त्रयुग्मञ्च दध्यन्नं शिखरं
पुनः ।
तथोपदेष्टारमपि भक्त्या
सम्पूजयेद्गुरुम् ॥
वित्तशाठ्येन रहितो
वस्त्रमाल्यानुलेपनैः ।
अनेन विधिना यस्तु कुर्य्यात्
सारस्वतं व्रतम् ।
विद्यावानर्थयुक्तश्च व्यक्तकण्टश्च
जायते ॥
सरस्वत्याः प्रसादेन ब्रह्मलोके
महीयते ।
नारी वा कुरुते या तु सापि
तत्फलभागिनी
ब्रह्मलोके वसेद्राजन् यावत्
कल्पायुतत्रयम् ।
सारस्वतं व्रतं यस्तु शृणुयादथवा
पठेत् ।
विद्याधरपुरे सोऽपि
वसेदब्दायुतत्रयम् ॥”
इति मत्स्यपुराणे । ६६ । १ --
२४ ॥

**सारस्वताः**, पुं, भूम्नि, (सारस्वते भवाः । अण् ।)

**सारिणी**, स्त्री, (सरतीति । सृ + णिनि । ङीप् ।)
सहदेवी । कार्पासी । दुरालभा । कपिल-
शिंशपा । प्रसारिणी । रक्तपुनर्णवा । इति
राजनिर्घण्टः ॥

**सारिवा**, स्त्री, लताविशेषः । अनन्तमूल इति
ख्याता । गोरिया साउ इति हिन्दी भाषा ।
सा तु जम्बु वत्पत्रा दुग्धगर्भा व्रततिर्भवति ।
तत्पर्य्यायः । शारदा २ गोपी ३ गोपकन्या ४
गोपवल्ली ५ प्रतानिका ६ लता ७ आस्फोता
८
काष्ठसारिवा ९ । इति राजनिर्घण्टः ॥ गोपा
१० उत्पलसारिवा ११ अनन्ता १२ शारिवा
१३ श्यामा १४ । इति शब्दरत्नावली ॥
अस्या
गुणाः । मधुरत्वम् । स्निग्धत्वम् । वृष्यत्वम् ।
पित्तप्रणाशित्वञ्च । इति राजनिर्घण्टः ॥ * ॥
कृष्णसारिवा । सा तु इन्द्रजम्बु वत्पत्रा
सुगन्धा
कलघण्टेति प्रसिद्धा । करिया साउ इति
हिन्दी भाषा । श्यामालता इति वङ्गभाषा ।
तत्पर्य्यायः । कृष्णमूली २ कृष्णा ३ चन्दन-
सारिवा ४ भद्रा ५ चन्द्रनगोपा ६ चन्दना ७
कृष्णवल्ली ८ । अस्या गुणाः । त्रिदोषशमन-
त्वम् । तिक्तत्वम् । कटुरसत्वञ्च । इति राज-
निर्घण्टः ॥ अपि च ।
“सारिवाद्वौ तु मधुरौ हिमौ भूतनिकृन्तनौ ।
कुष्ठकण्डुज्वरहरौ देहदुर्गन्धिनाशनौ ॥”
इति राजनिर्घण्टः ॥
किञ्च ।
“सारिवायुगलं स्वादु स्निग्धं शुक्रकरं गुरु ।
अग्निमाद्यरुचिश्वासकासामविषनाशनम्।
दोषत्रयाश्रप्रदरज्वरातिसारनाशनम्॥”
इति भावप्रकाशः ॥

**सारि**, स्त्री, (सारि + वा ङीष् ।) सारिका-
पक्षिणी । पाशकः । इति शब्दरत्नावली ॥
सप्तला । इति राजनिर्घण्टः ॥ (सप्तलाशब्दे-
ऽस्या गुणादयो ज्ञातव्याः ॥)

**सारोष्ट्रिकः**, पुं, (सारोष्ट्रे देशे भवः । सारोष्ट्र +

अथवादित्यवारेण ग्रहताराबलेन वा ।
पायसं भोजयेद्विद्वान् कृत्वा ब्राह्मणवाचनम् ॥
शुक्लवस्त्राणि दत्त्वा च सहिरण्यानि शक्तितः ।
गायत्त्रीं पूजयेद्भक्त्या शुक्लमाल्यानुलेपणैः ॥
यथा न देवो भगवान् ब्रह्मा लोकपितामहः ।
त्वां परित्यज्य सन्तिष्ठे त्तथा भव वरप्रदा ॥
वेदाः शास्त्राणि सर्व्वाणि नृत्यगीतादिकञ्च यत्
न विहीनं त्वया देवि तथा मे सन्तु सिद्धयः ॥
लक्ष्मीर्म्मेधा धरा पुष्टिर्गौरीतुष्टिः प्रभामतिः ।
एताभिः पाहि तनुभिरष्टाभिर्म्मां सरस्वति ॥
एवं सम्पूज्य गायत्त्रीं वीणाक्षमाल्यधारिणीम् ।
शुक्लपुष्पाक्षतैर्भक्त्या सकमण्डलुपुष्पकम् ॥
मौनव्रतेन भुञ्जीत सायं प्रातश्च धर्म्मवित् ।
पञ्चम्यां प्रतिपक्षञ्च पूजयेत् शब्दवासिनाम् ॥

सारस्वतदेशजातमनुष्यः । यथा,
हेमचन्द्रे ।
"काश्मीरास्तु माधुमताः
सारस्वतास्तु विक-
र्णिकाः ॥"

**सारस्वतोत्सवः**, पुं, (सारस्वतः सरस्वतीसम्बन्धी

उत्सवः ।) सरस्वत्या उत्सवः ।
इति तिथ्यादि-
तत्त्वम् ॥ अस्य प्रमाणादिकं
सरस्वतीशब्दे
द्रष्टव्यम् ॥

**सारा**, स्त्री, (सारयतीति । सृ + णिच् + अच् ।

टाप् ।) कृष्णत्रिवृता । इति
शब्दरत्नावली ॥
दूर्व्वा । इति शब्दचन्द्रिका ॥
(सेहुण्डभेदः ॥
शालता अनेन नाम्ना प्रसिद्धा ॥
यथा, --
"सालता सप्तला सारा विमला
विदुला च सा
तथा निगदिता भूरिफेना
चर्म्मकषेत्यपि ॥"
इति भावप्रकाशस्य पूर्व्व खण्डे
प्रथमे भागे ॥)

**सारालः**, पुं, (सारेण सरणेन अलति पर्य्याप्तो-

तीति । अल अच् ।) तिलः । इति
शब्द-
चन्द्रिका ॥

**सारिः**, पुं, स्त्री, (सरतीति । सृ + इण् ।)

पाशकः । इति शब्दरत्नावली ॥

**सारिका**, स्त्री, (सरति गच्छतीति ॥ सृ + ण्वुल्

टाप् ।) पक्षिविशेषः । इत्यमरः । ३
। ५ । ८ ॥
शालिक इति भाषा ॥ (यथा,
रामायणे ।
२ । ५३ । २२ ।

ठञ् ।) विषभेदः । सारोष्ट्रो देशभेदस्तत्र भवः
सारोष्ट्रिकः ढघे कादिति ष्णिकः दन्त्यादिः ।
सुराष्ट्रशब्दात् सौराष्ट्रिकः । इति स्वामी ।
इत्यमरभरतौ । १ । ८ । १० ॥

**सार्थः**, पुं, (सरतीति । सृ + "सर्त्तेर्णिच्च ।" उणा०

२ । ५ । इति थन् । सच णित् ।) जन्तुसंघः ।
इत्यमरः । २ । ६ । ४१ ॥ बणिक्समूहः ।
(यथा,
रघुः । १७ । ६४ ।
"वापीष्विव स्रवन्तीषु वनेषूपवनेष्विव ।
सार्थाः स्वैरं स्वकीयेषु चेरुर्वेश्मस्विवाद्रिषु
॥")
समूहमात्रम् । इति मेदिनी ॥ (यथा, बृहत्-
संहितायाम् । ८६ । ४९ ।
"पश्चिमे शर्व्वरीभागे नोप्तृकोलूकपिङ्गलाः ।
सर्व्व एव विपर्य्यस्ता ग्राह्याः सार्थेषु योषि-
ताम् ॥")

**सार्थः**, त्रि, अर्थेन सह वर्त्तमानः । अर्थयुक्तः ।

इति हेमचन्द्रः ॥ यथा, वनपर्व्वणि ।

|  | "मन्ये प्रीतिविशिष्टा सा मत्तो<br>लक्षण !<br>सारिका ।<br>यत्तस्याः श्रूयते वाक्यं शुक<br>पादमरेद्दश ॥")<br>तत्पर्य्यायः । पीतपादा २ गोराटी<br>३ गो-<br>किराटीका ४ । इति हेमचन्द्रः ॥<br>शारिका ५<br>सारी ६ शारी ७ चित्रलोचना ८ ।<br>इति<br>शब्दरत्नावलौ ॥ मधुरालापा ९<br>पूती १० मेधा-<br>विनी ११ गोराण्टिका १२<br>गोकिराटी १३<br>गोरिका १४ कलहप्रिया १५ ।<br>इति राज-<br>निघण्टः ॥ |  |
|---|---|---|

"सार्थः प्रसवतो मित्रं भार्य्या मित्रं गृहे सतः ।
आतुरस्य भिषङ्मित्र' दानंमित्रं मरिष्यतः ॥"
इति शुद्धितत्त्वम् ॥

**सार्थकः**, त्रि, (सार्थ + कन् ।) अर्थेन सह वर्त्त-
मानः । यथा, --
"शब्दान्तरमपेक्ष्यैव सार्थकः सार्थबोधकृत् ।
प्रकृतिः प्रत्ययश्चैव निपातश्चेति स त्रिधा ॥"
इति शब्दशक्तिप्रकाशिका ॥
(सफलः । यथा, भागवते । १० । ४१ । ४५ ।
"प्राह नः सार्थकं जन्म पावितञ्च कुलं प्रभो ।
पितृदेवर्षयो मह्यं तुष्टा ह्यागमनेन वाम् ॥"

**सार्थवाहः**, पुं, (सार्थं वहतीति । वह + अण् ।)
वर्णिक् । इत्यमरः । २ । ९ । ७८ ॥ (यथा,
कलाविलासे । १ । ११ ।
"भुक्तोत्तरं सहृदयरास्थानीसंस्थितं कदा-
चित्तम् ।
अभ्येत्य सार्थवाहो दत्तमहार्होपहारमणि-
कनकः ॥")

**सार्द्रं**, त्रि, (आर्द्रेण सह वर्त्तमानम् ।) आर्द्रम् ।
इत्यमरः । ३ । १ । १०५ ॥ आर्द्रयुक्ते, त्रि ।
"अङ्गुष्ठमात्रं स्थौल्येन बाहुमात्रः प्रमाणतः ।
सार्द्रश्च सपलाशश्च दण्ड इत्यभिधीयते ॥"
इति प्रायश्चित्ततत्त्वधृताङ्गिरोवचनम्॥

**सार्द्धं**, व्य, सहितम् । इत्यमरः । ३ । ४ । ४ ॥ (यथा,
महाभारते । ७ । २७ । २ ।

**सार्व्वः**, पुं, (सर्व्वस्मै हितः । सर्व्व + "सर्व्वसर्व्व-
पुरुषाभ्यां णढञौ ।" ५ । १ । १० । इति णः ।
बुद्धः । जिनः । इति हेमचन्द्रः ॥ सर्व्वसम्ब-
न्धिनि, त्रि ॥

**सार्व्वजनिकः**, त्रि, (सर्व्वजनाय हितः । "सर्व्व-
जनात् ठञ्खश्च ।" ५ । १ । ९ । इत्यस्य वार्त्ति-
कोक्त्या ठञ् ।) सकलजनहितः । सर्व्वजन-
शब्दात् ष्णिकप्रत्ययेन निष्पन्नः ॥

**सार्व्वजनीनः**, त्रि, (सर्व्वजनाय हितः । सर्व्वजन
+ खः ।) सार्व्वजनिकः । सर्व्वजनशब्दात्
णीनप्रत्ययेन निष्पन्नः ॥

**सार्व्वभौमः**, पुं, (सर्व्वभूमौ विदितः । "तत्र विदितः
इति च ।" ५ । १ । ४३ । इत्यण् ।) उत्तरदिग्-
गजः । इत्यमरः । १ । ३ । ४ ॥ सर्व्वभूमीश्वरः ।
तत्पर्य्यायः । चक्रवर्त्ती २ एकजन्मा ३ नृपा-
ग्रणीः ४ । इति शब्दरत्नावली ॥ (यथा,
महाभारते । ३ । ९३ । ९ ।
"भरतस्य च वीरस्य सार्व्वभौमस्य पार्थिव ! ।
ध्रुवं प्राप्स्यति दुष्प्रापान् लोकांस्तीर्थपरि-
प्लु तः ॥")
विदूरथपुत्त्रः । यथा, --
"परिक्षिरनपत्योऽभूत् सुरथो नाम जाह्नवः ।
ततो विदूरथस्तस्मात् सार्व्वभौमस्ततोऽभवत् ॥"
इति श्रीभागवते ९ स्कन्धे २२ अध्यायः ॥

वल्लीवृक्षः ६ चौरपर्णः ७ रालकार्य्यः ८ पुस्तका-
न्तरे रालः कर्य्यश्चेति शब्दद्वयम् । अजकर्णकः
९ वस्तकर्णः १० कषायी ११ ललनः १२ गन्ध-
वृक्षकः १३ वंशः १४ रालनिर्यासः १५ दिव्य-
सारः १६ सुरेष्टकः १७ शूरः १८ अग्निवल्लभः
१९ यक्षधूपः २० सिद्धिकः २१ । अस्य गुणाः ।
कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । हिमत्वम् ।
स्निग्धत्वम् । अतिसारपित्तास्रदोषकुष्ठकण्डूवि-
स्फोटवातनाशित्वञ्च । इति राजनिर्घण्टः ॥
अपि च ।
"सालस्तु सर्ज्जकार्य्याश्वकर्णकाः शस्यसम्बरः ।
अश्वकर्णः कषायः स्याद्व्रणस्वेदकफक्रिमीन् ॥
व्रध्नविद्रधिवाधिर्य्ययोनिकर्णगदान् हरेत् ॥"
अथ सालप्रभेदाः ।
"सर्ज्जकोऽन्योऽजकर्णः स्याच्छालो मरिचपत्रकः
अजकर्णः कटुस्तिक्तः कषायोष्णो व्यपोहति ।
कफपाण्डश्रतिगदान्मेहकुष्ठविषव्रणान् ॥"
इति भावप्रकाशः ॥

**सालङ्गः**, पुं, रागस्य प्रकारविशेषः । यो रागो
रागान्तरामिश्रितः सन् रागान्तराभासयुक्तः ।
इति सङ्गीतशास्त्रम् ॥

**सालनः**, पुं, (सालः कारणत्वेनास्त्यस्येति । पमादि-
त्वात् नः ।) सर्ज्जरसः । इति रत्नमाला ॥

**सालनिर्यासः**, पुं, (सालस्य निर्य्यासः ।) सर्ज्जरसः ।
इति रत्नमाला ॥

"सुशर्म्मा भ्रातृभिः सार्द्धं युद्धार्थी पृष्ठतोऽन्व-
यात् ॥")

**सार्द्धं**, त्रि, अर्द्धेन सह वर्त्तमानम् । अर्द्धयुक्तम् ।

यथा, --
"मुनिभिर्द्दिरशनं प्रोक्तं विप्राणां मर्त्यवासिनां
नित्यम् ।
अहनि च तथा तमस्विन्यां सार्द्धप्रहरया-
मान्तः ॥"
इति तिथ्यादितत्त्वम् ॥
अपि च ।
"गतेऽब्दे द्वितये सार्द्धे पङ्कपक्षे दिनद्वये ।
दिवसस्याष्टमे भागे पतत्येकोऽधिमासकः
॥"
इति भलमासतत्त्वम् ॥

**सार्पिषः**, त्रि, (सर्पिषः अयं सर्पिषा संस्कृतो

वा । सर्पिष् + अण् ।) सर्पिःसम्बन्धी । सर्पिः-
संस्कृतवस्तु । सर्पिःशब्दात् ष्णप्रत्ययेन
निष्पन्नः ॥

**सार्पिष्कं**, त्रि, (सर्पिष् + "तेन संस्कृतम् ॥" इति

ठक् ।) सर्पिषा संस्कृतम् । यथा, --
"सार्पिष्कं दाधिकं सपिर्दधिभ्यां संस्कृतं
क्रमात् ।"
इति हेमचन्द्रः ॥

**सार्प्यः**, पुं, (सर्पो देवता यस्य । ष्यञ् ।) अश्लेषा-

नक्षत्रम् । इति हेमचन्द्रः ॥ (यथा, रामायणे ।
१ । १८ । १५ ।
"पुष्पे जातस्तु भरतो मीनलग्ने प्रसन्नधीः ।
सार्प्ये जातौ तु सौमित्री कुलीरेऽभ्युदिते
रवौ
सर्पस्यायमिति ।) सर्पसम्बन्धिनि, त्रि ॥

(पुरुवंशीयाहंयातिनृपस्य पुत्त्रः । यथा, महा-
भारते । १ । ९५ । १५ -- १६ ।
"अहंयातिः
खलु कृतवीर्य्यदुहितरमुपयेमे भानुमतीं नाम ।
तस्यामस्य यज्ञे सार्व्वभौमः ।
सार्व्वभौमः खलु
जित्वा जहार कैकेयीं सुनन्दां नाम तामुप-
येमे ॥" * ॥) सकलभूमिसम्बन्धिनि, त्रि
॥

**सार्व्वलौकिकः**, त्रि, (सर्व्वलोके विदितः । "लोक-

सर्व्वलोकात् ठञ् ।" ५ । १ । ४४ ।
इति ठञ् ।)
सर्व्वजनविदितः । यथा, --
"भवन्तं कार्त्तवीर्य्यो यो
हीनसन्धिमचीकरत् ।
जिगाय तस्य हन्तारं स रामः
सार्व्वलौकिकः ॥"
इति भट्टिकाव्ये ५ सर्गः ॥
सार्व्वलौकिकः सर्व्वलोकविदितः । इति
तट्टीका

**सार्व्ववेद्यः**, पुं, (सर्व्ववेदं वेत्तीति । सर्व्ववेद +

ष्यञ् ।) सकलवेदज्ञब्राह्मणः ।
सर्व्ववेदशब्दात्
ष्ण्यप्रत्ययेन निष्पन्नः ॥

**सार्षपः**, त्रि, (सर्षपस्यायमिति । सर्षप + अण् ।)

सर्षपसम्बन्धीयशाकतैलादिः । यथा, --
"घृतञ्च सार्षपं तैलं यत्तैलं पुष्पवासितम्
।
अदुष्टं पक्वतैलञ्च स्नानाभ्यङ्गेषु नित्यशः
॥"
इति तिथ्यादितत्त्वम् ॥

**सालः**, पुं, (शल्यते इति । शल गतौ + घञ् ।)

शालमत्स्यः । इत्यमरटीकायां भरतः ॥ वृक्ष-
मात्रम् । प्राकारः । इति मेदिनी ॥ रालः ।

**सालपर्णी**, स्त्री, (सालस्य पर्णमिव पर्णमस्याः ।

ङीष् ।) शालपर्णी । इत्यमरः । २ । ४ ।
११५ ॥
शालपानि इति भाषा । यथा, --
"शालपर्णी सालपर्णी स्थिरा चांशुमती ध्रुवा
॥"
इति शब्दरत्नावली ॥
"अभावे पृश्निपर्ण्याश्च शालपर्णीं नियोजयेत्
।"
इति वैद्यशास्त्रम् ॥

**सालपुष्पं**, क्ली, सालस्येव पुष्पमस्य ।) स्थलपद्मम् ।

इति शब्दरत्नावली ॥

**सालभञ्जिका**, स्त्री, (सारं भनक्तीति । भन्ज +

ण्वुल् । टापि अत इत्वम् । रस्य लः ।) पुत्त-
लिका । यथा, --
"पाञ्चालिका तु पाञ्चाली पुत्त्रिका
सालभञ्जिका ।"
इति जटाधरः ।
वेश्या । यथा, --
"वेश्या तु गणिका क्षुद्रा वारस्त्री
सालभञ्जिका"
इति च जटाधरः ॥

**सालरसः**, पुं, (सालस्य रसः ।) रालः । इति

राजनिर्घण्टः ॥

**सालवाहनः**, पुं, (सालः तन्नामा यक्षो वाहन

यस्य ।) शालिवाहनराजः । इति केचित् ॥
(अस्य विवरणं सातवाहनशब्दे द्रष्टव्यम् ॥)

**सालवेष्टः**, पुं, (सालस्य वेष्टः निर्य्यासः ।) धूनकः ।

इति भूरिप्रयोगः ॥

**सालशृङ्गं**, क्ली, (सालस्य शृङ्गमिव ।) प्राची-

राग्रम् । इति केचित् ॥

| | इति राजनिर्घण्टः ॥ (सारोऽस्त्यत्रेति । अच् । रस्य लः ।) स्वनामख्यातवृक्षः । इत्यमरः । २ । २ । ३ ॥ सखुया इति हिन्दी भाषा । तत्पर्य्यायः । सर्ज्जः २ सर्ज्जरसः ३ कलः ४ कललजोद्भवः ५ | |
|---|---|---|

**साला**, स्त्री, (सालः प्रकारोऽस्त्यस्या इति । अच् ।
टाप् ।) गृहम् । इत्यमरटीकायां भरतः ॥

**सालाकारी**, स्त्री, युद्धे पराजितनारी । इति केचित् ॥

**सालातुरीयः**, पुं, पाणिनिमुनिः । इति हेमचन्द्रः ॥
तालव्यशकारादिः साधुपाठः । यथा, --
"शालातुरीयशालङ्किदाक्षिपुत्त्राश्च पाणिनौ ।"
इति शब्दरत्नावली ॥

**सालारं**, क्ली, (सालां रातीति । रा + कः ।)
द्रव्यरक्षणार्थभित्तिस्यकीलकः । डाण्डा इति
भाषा । इति केचित् ॥

**सालावृकः**, पुं, (सालाया वृक इव ।) कुक्कुरः ।
शृगालः । तरक्षुः । इति केचित् ॥ तालव्यशका-
रादिश्चायम् ॥

**सालूरः**, पुं, मण्डूकः । इति शब्दरत्नावली ॥
तालव्यशकारादिश्च ॥

**सालेयः**, पुं, मधुरिका । इत्यमरटीका ॥ तालव्य-
शकारादिश्च ॥

**साल्वः**, पुं, विष्णुवध्यराजविशेषः । इति हेमचन्द्रः
स तु सोभदेशाधिपतिः । इति महाभारते
कर्णपर्व्व ॥ देशविशेषः । तद्देशस्थे, पुं भूम्नि ।
तद्दे शसम्बन्धिनि, त्रि ॥ तालव्यशादिश्च ॥

**साल्वहा**, [न्] पुं, (साल्वं हन्तीति । हन् +

अपि च । ब्रह्मसिद्धान्ते ।
"चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः ।
एकराशौ रविर्यावत् कालं मासः स भास्करः ।
सर्व्वर्क्षपरिवर्त्तैश्च नाक्षत्र इति चोच्यते ॥"
विष्णुधर्म्मोत्तरे च ।
"सन्निकर्षादथारभ्य सन्निकर्षमथापरम् ।
चन्द्रार्कयोर्बुधैर्म्मासश्चान्द्र इत्यभिधीयते ।
सावने च तथा मासि त्रिंशत्सूर्य्योदयाः स्मृताः ॥
आदित्यराशिभोगेन सौरो मासः प्रकीर्त्तितः ।
सर्व्वर्क्षपरिवर्त्तैश्च नाक्षत्र इति चोच्यते ॥" * ॥
सावनमासकर्त्तव्यकर्म्मादियथा, --
"सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा ।
मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तित् ॥
पितामहः ।
"आब्दिके पितृकृत्ये च मासश्चान्द्रमसः स्मृतः ।
विवाहादौ स्मृतः सौरो यज्ञादौ सावनो मतः ॥"
अत्र आदिपदेन सत्रभृतिवृद्धिप्रायच्चित्तायुर्द्धाया-
शौच-गर्भाधान-पुंसवन-सीमन्तोन्नयन-नामकर-
णान्नप्राशन-निष्क्रमण-चूडादिग्रहणम् । तथा च
विष्णुधर्म्मीत्तरम् ।
"अध्वायनञ्च ग्रहचारकर्म्म सौरेण मानेन सदाध्यवस्येत् ।
सत्राण्युपास्यान्यथ सावनेन लौक्यञ्च यत् स्याद्व्यवहारकर्म्म ॥"
इति मलमासतत्त्वम् ॥ * ॥
वर्षविशेषः । यथा, --
"सौरेणाब्दस्तु मानेन यदा भवति भार्गव ।
सावनेन च मानेन दिनषट्कं प्रपूर्य्यते ॥"

सतानन्दः कश्यपश्च रासश्च ऋषयः स्मृताः ।
धृतिर्व्वरीयान् यवसः सुवर्णो वृष्टिरेव च ॥
चरिष्णुरीड्यः सुमतिः वसुः सुभ्रुश्च वीर्य्यवान् ।
भविष्या दशसावर्णा मनोः पुत्त्राः प्रकीर्त्तिताः ॥"

**सावर्णलक्ष्यं**, क्ली, (सावर्णस्य समानवर्णस्य पूर्व्वा-
कृतेरिति यावद् लक्ष्यं तस्मात् ।) चर्म्म । इति
शब्दरत्नावली ॥

**सावर्णिः**, पुं, (सवर्णाया अपत्यमिति । इञ् ।)
अष्टममनुः । स च सूर्य्यपुत्त्रः । यथा, --
"विवस्वतश्च द्वे जाये विश्वकर्म्मसुते उभे ।
संज्ञा छाया च राजेन्द्र ये प्रागभिहिते तव ॥
तृतीयां वडवामेके तासां संज्ञासुतास्त्रयः ।
यमो यमी श्राद्धदेवश्छायायाश्च सुतान् शृणु ॥
सावर्णिस्तपती कन्या भार्य्या संवरणस्य या ।
शनैश्चरस्तृतीयोऽभूदश्विनौबडवात्मजौ ॥
अष्टमेऽन्तर आयाते सावर्णिर्भविता मनुः ।
निर्म्मोकविरजस्काद्याः सावर्णितनया नृप ॥
तत्र देवाः सुतपसो विरजा अमृतप्रभाः ।
तेषां विरोचनसुतो वलिरिन्द्रो भविष्यति ॥
दत्त्वेमां याचमानाय विष्णवे यः पदत्रयम् ।
राद्धमिन्द्रपदं हित्वा ततः सिद्धिमवाप्स्यति ॥
योऽसौ भमवता बद्धः प्रीतेन सुतले पुनः ।
निवेशितोऽधिके स्वर्गादधुनास्ते स्वराडिव
गालवो दीप्तिमान्रामो द्रोणपुत्त्रः कृपस्तथा ।
ऋष्यशृङ्गः पितास्माकं भगवान् वादरायणः ।
इमे सप्तर्षयस्तत्र भविष्यन्ति स्वयोगतः ॥
इदानीमासते राजन् स्वे स्वे आश्रममण्डले ।
देवगुह्यात् सरस्वत्यां सार्व्वभौम इति प्रभुः ।
स्थानं पुरन्दराद्धृत्वा वलये दास्यतीश्वरः ॥"
इति श्रीभागवते । ८ । १३ । ८ -- १७ ॥
(अस्य विशेषविवरणन्तु मार्कण्डेपुराणे देवी-
माहात्म्ये द्रष्टव्यम् ॥) गोत्रविशेषः । यथा ।
वात्स्यसावर्णिगोत्रयोरौर्व्वच्यवनभार्गवजामद-
ग्न्याप्नुवत्प्रवराः । इत्युद्वाहतत्त्वम् ॥

**सावित्रं**, क्ली, (सविता देवता अस्येति । अण् ।)

क्विप् ।) विष्णुः । इति हेमचन्द्रः ॥

**साल्विकः**, पुं, पक्षिविशेषः । सालिक इति भाषा

यथा, --

“शवमल्लः क्षुद्रचुडो गूथलक्तश्च

साल्विकः ।”

इति शब्दचन्द्रिका ॥

**सावकः**, त्रि, शिशुः । इति केचित् ॥ तालव्य-

शकारादिः साधुपाठः ॥

**सावधानः**, त्रि, (अवधानेन सह वर्त्तमानः ।)

सचेतनः । सतर्कः । यथा, श्राद्धतत्त्वे

।

“आगच्छन्तु महाभामा विश्वेदेवा

वरप्रदाः ।

ये चात्र विहिताः श्राद्धे सावधाना

भवन्तु ते ॥”

**सावनं**, क्ली, (सवनं सोमयज्ञस्नानं तस्येदमित्यण्)

सवनसम्बन्धिदिनम् । यथा ।

सोमयागे सवन-

त्रयस्याहोरात्रसाध्यत्वात्तत्सम्बन्धि

दिनं

सावनम् । इति माधवाचार्य्यः ॥ अपि

च ।

ब्रह्मसिद्धान्ते । सावनं दण्डाः

षष्टिरहःस्वलग्न-

स्वगुणांशाढ्यास्तक्र्नं भवेत् । इति

मलमास-

तत्त्वम् ॥ (यथाच सूर्य्यसिद्धान्ते ।

“उदायादुदयं भानोः सावनं तत्

प्रकीर्त्तितम् ।

सावनानि स्युरेतेन यज्ञकालविधिस्तु

तैः ॥”)

**सावनः**, पुं, (सवनस्यायमिति । अण्) यज्ञ-

कर्म्मान्तः । यजमानः । वरुणः ।

इति मेदिनी ॥

दिवसविशेषः । यथा, --

“तिथिनैकेन दिवसश्चान्द्रमाने

प्रकीर्त्तितः ।

सौरसंवत्सरे दिनषट्काधिकः सावनः

संवत्-

सरो भवतीति । इति मलमासतत्त्वम् ॥

**सावरः**, पुं, (सवराणामयमिति । अण् ।) लोध्रः ।

इत्यमरटीका शब्दरत्नावली च ॥ (यथा,

सुश्रुते । ४ । २२ ।

“शारिवोत्पलषष्ट्याह्वसावरागुरुचन्दनै

॥”)

पापम् । अपराधः । इति विश्वः ॥

(मृगविशेष-

मांसे, क्ली । तस्य गुणा यथा, --

“सावरं पललं सिग्धं शीतलं गुरु च स्मृतम्

।

रसे पाके च मधुरं कफदं रक्तपित्तहृत् ॥”

इति भावप्रकाशस्य पूर्व्वस्वण्डे द्वितीये

भागे ॥)

तालव्यशकारादिरप्ययम् ॥

**सावर्णः**, पुं, (सवर्ण एव । स्वार्थे अण् । सवर्णायाः

छायाया अपत्यमिति अण् वा ।) अष्टममनुः

।

यथा, --

“छायासंज्ञासुतो योऽसौ द्वितीयः कथितो

मनुः

पूर्व्वजस्य सवर्णोऽसौ सावर्णस्तेन कथ्यते

॥”

इति देवीभागवतम् ॥

(तथाच हरिवंशे । ९ । १९ ।

“पूर्व्वजस्य मनोस्तात सदृशोऽयमिति

प्रभुः ।

मनुरेवाभवन्नाम्ना सावणं इति चोच्यते ॥”)

यथाच मात्स्ते । ९ । ३१ -- ३३ ।

“सावर्णस्य प्रवक्ष्यामि मनोर्भावि

तथान्तरम् ।

अश्वत्थामा शरद्वांश्च कौशिको

गालवस्तथा ॥

यज्ञोपवीतम् । इति शब्दरत्नावली ॥ (तत्-

सम्बन्धिनि, त्रि । यथा, भागबते । ४ । ३१ ।

१० ।

“किं जन्मभिस्त्रिभिर्व्वेह शौक्रसावित्रयाज्ञिकैः ।

कर्म्मभिर्वा त्रयीप्रोक्तैः पुंसोऽपि बिबुधायुसा ॥”

**सावित्रः**, पुं, (सविता देवता अस्येति । अण् ।)

ब्राह्मणः । इति हेमचन्द्रः ॥ शङ्करः । वसुः ।

इति मेदिनी ॥ (स्वार्थे अण् ।) सूर्य्यः । गर्भः ।

इति शब्दरत्नावली ॥ (सवितुरपत्यं पुमान् ।

अण् । कर्णः । यथा, महाभारते । १ । १३७ ।

८ ।

“सोऽव्रवीत् मेघगम्भीरस्वरेण वदतां वरः ।

भ्राता भ्रातरमज्ञातं सावित्रः पाकशासनिम् ॥”

सूर्य्यवंशीये, त्रि । यथा, उत्तरचरिते १ अङ्के ।

“यत् सावित्रैर्दीपितं भूमिपालै-

र्लोकश्रेष्ठैः साधु शुद्धं चरित्रम् ।

मत्सम्बन्धात् कश्मला किंवदन्ती

स्याच्चेदस्मिन् हन्त धिक् मामधन्यम् ॥”

| | | |
|---|---|---|
| अहोरात्रेण चैकेन सावनो दिवसः स्मृतः ॥”<br>इति मलमासतत्त्वम् ॥<br>मासभेदः । स च त्रिंशदहोरात्रात्मकः । यथा,<br>“त्रिंशता सौरदिवसैः सावनः परिकीर्त्तितः ।”<br>इति शब्दरत्नावली ॥ | | |

सवितृसम्बन्धिनि च त्रि । यथा, मनुः । ४
।
१५० ।
“सावित्रान् शान्तिहोमांश्च कुर्य्यात् पर्व्वसु
नित्यशः ॥”)

**सावित्री**, स्त्री, शाल्वदेशीयसत्यवद्राजपत्नी । सा

तु मद्रदेशीयाश्वपतिराजकन्या ॥ (अस्या
विशेष-
विवरणन्तु महाभारते वनपर्व्वणि २९२
अध्याय-
मारभ्य द्रष्टव्यम् ॥ * ॥) उमा । इति
मेदिनी ॥
तन्नामकरणं यथा, --
“त्रिदशैरर्च्चिता देवी वेदयोगेषु पूजिता ।
भावशुद्धस्वरूपा तु सावित्री तेन सा स्मृता
॥”
इति देवीपुराणे ४४ अध्यायः ॥
अपि च ।
“सर्व्वलोकप्रसवनात् सविता स तु
कीर्त्त्यते ।
यतस्तद्देवता देवी सावित्रीत्युच्यते ततः ।
वेदप्रसवनाच्चापि सावित्री प्रोच्यते बुधैः
॥”
इति वह्निपुराणे ब्राह्मणप्रशंसानामाध्यायः
॥
गायत्त्री । इति त्रिकाण्डशेषः ॥ * ॥ (उप-
नयनकर्म्म । यथा, मनुः । २ । ३८ ।
“आ षोडशात् ब्राह्मणस्य सावित्री
नातिवर्त्तते ।
आ द्वाविंशात् क्षत्रबन्धोरा
चतुर्व्विंशतेर्व्विशः ॥”
“सावित्रीशब्देन
तदनुवचनसाधनमुपनयनाख्यं
कर्म्म लक्ष्यते ।” इति मेधातिथिः ॥)
ब्रह्मपत्नी ।
सा तु सवितुः पृश्न्यां पत्न्यां जाता ।
अस्या
उत्पत्तिनामान्तराणि यथा, --

शिवचण्डे शुभा चण्डा नन्दिनी
देविकातटे ।
रुक्मिणी द्वारवत्यान्तु राधा वृन्दावने
वने ॥
देवकी मथुरायान्तु पाताले परमेश्वरी
।
सीता बिन्ध्ये तथा रौद्री कालिन्द्यां
बिन्ध्य-
वासिनी ॥
सह्याद्रावेकवीरा तु हरिश्चन्द्रे तु
चन्द्रिका ।
रमणा रामतीर्थे तु यमुनायां मृगावती
॥
करवीरे महालक्ष्मीरुमा देवी विनायके
।
अरोगे तु रोगहन्त्री महाकाले महेश्वरी
॥
अभयेत्युष्णतीर्थे तु असूता
बिन्ध्यकन्दरे ।
माण्डव्ये माद्रवी देवी महागौरी
महेश्वरी ॥
गणेशे च प्रचण्डा तु
चण्डिकामरकण्टके ।
सोमेश्वरी वराहे तु प्रभासे पुष्करावती
॥
देवी माता सरस्वत्यां पारावारतटे
स्थिता ।
महालये महापद्मा पयोष्ण्यां
पिङ्गलेश्वरी ।
सिंहिका कृतसौरे च कार्त्तिक्ये तु
शङ्करी ।
उत्पलावर्त्तके काला मुभद्रा
सिन्धुसङ्गमे ॥
माता सिन्धुवने लक्ष्मीस्तरङ्गा
भरताश्रमे ।
जालन्धरे विश्वमुखी तारका
बिन्ध्यपर्व्वते ॥
देवदारुवने पुष्टिर्मेधा काश्मीरमण्डले ।

तत्पश्चात् पूजयामासर्व्वर्णाश्चत्वार एव च ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे । २३ । १ -- ४ ॥

**सावित्रीव्रतं**, क्ली, (सावित्र्या व्रतम् ।) ज्यैष्ठ-

कृष्णचतुर्द्दश्यां स्त्रीकर्त्तव्यनियमविशेषः ।
तद्वि-
वरणं यथा, । पराशरः ।
“मेषे वा वृषभे वापि सावित्रीं तां विनिर्द्दिशेत्
॥”
तां चतुर्द्दशीम् ।
“ज्यै ष्ठकृष्णचतुर्द्दश्यां सावित्रीमर्च्चयन्ति याः
।
वटमूले सोपवासा न ता वैधव्यमाप्नु युः ॥”
राजमार्त्तण्डकृत्यचिन्तामण्योः ।
“ज्यैष्ठे मासि चतुर्द्दश्यां सावित्रीव्रतमुत्तमम् ।
अवैधव्याय कुर्व्वन्ति स्त्रियः श्रद्धासमन्विताः
॥”
व्रतमात्रे तु अनन्तचतुर्द्दशीव्रतोक्तमाचरन्ति ।
दृष्टपरिकल्पनान्यायात् । तदुक्तं मत्स्यपुराणे ।
“गर्भिणी सूतिका नक्तं कुमारी च रजस्वला ।
यदाशुद्धा तदान्येन कारयेत् क्रियते सदा ॥”
उपवासाशक्तौ नक्तं भोजनं कुर्य्यात् ।
“उपवासेष्वशक्तानां नक्तं भोजनमिष्यते ।”
इति तद्धृतवचनान्तरात् । अशुद्धा चेत् पूजां
कारयेत् । कायिकञ्चोपवासादिकं सदा शुद्धया
अशुद्धया च स्वयं क्रियते । एवं स्मृ तिपरि-
भाषायां वर्द्धमानोपाध्यायाः । नारदः ।
“दिवाभागे त्रयोदश्यां यदा चतुर्द्दशी भवेत् ।
तत्र पूज्या महासाध्वी देवी सत्यवता सह ॥”
दिवाभागे दण्डद्वयमात्रसत्त्वेऽपि अतएव प्रदोषे
व्रतमाचरन्ति । पूर्व्वहि तद्विधत्वेऽपि पराहे
त्रिसन्ध्यव्यापित्वे पराह एव त्रिसन्ध्यव्यानीति
वचनात् । यदा तु पूर्व्वापरयोर्न तथाविधा ।
तदापि पराह एव । यथा । ज्योतिषे ।
“चतुर्द्दश्याममावास्या यदा भवति नारद ! ।
उपोष्य पूजनीया सा चतुर्द्दश्यां विधानतः ॥”
सा सावित्री । ततश्चामावास्यायां सावित्रीव्रत-
विधानं शिवा घोरा तथा प्रेतेति वचनञ्चैतत्-
परम् । पराशरः ।
“सावित्रीमर्च्चयित्वा तु फलाहारा परेऽहनि ।

"ततः संजपतस्तस्य भित्त्वा
देहमकल्मषम् ।
स्त्रीरूपमर्द्धमकरोदर्द्धं पुरुषरूपवत् ॥
शतरूपा च सा ख्याता सावित्री च
निगद्यते ।
सरस्वत्यथ गायत्री ब्रह्माणी च परन्तप
॥"
इति मात्स्ये । ३ । ३० -- ३२ ॥ * ॥
तस्या शतनामानि यथा, --
विष्णुरुवाच ।
"सावित्री पुष्करे नाम तीर्थानां प्रवरे शुभे ।
वाराणस्यां विशालाक्षी नैमिषे लिङ्गधारिणी
।
मयागे ललिता देवी कामुका गन्धमादने ।
मानसे कुमुदा नाम विश्वकाया तथाम्बरे ॥
गोमते गोमती नाम मन्दारे कामचारिणी ।
मदोत्कटी चैत्ररथे जयन्ती हस्तिनापुरे ॥
कान्यकुब्जे तथा गौरी रम्भा मलयपर्व्वते ।
एकाम्रके कीर्त्तिमती विश्वा विश्वेश्वरे तथा
॥
जवा वराहशैले तु कमला कमलालये ।
रुद्रकोट्यान्तु रुद्राणी काली कालञ्जरे
गिरौ ॥
महालिङ्गे तु कपिला कर्क्कोटे मुकुटेश्वरी
।
शालग्रामे महादेवी शिवलिङ्गे जनप्रिया ॥
नीलोत्पला मायापुर्य्यां सन्दन्ती ललिते
तथा ।
उत्पलाक्षी साहस्राक्षे हिरण्याक्षी महोत्पले
॥
गङ्गायां मङ्गला नाम विमला पुरुषोत्तमे ।
विशालायाममोघाक्षी पाण्डला पाण्डुपर्व्वते
॥
नारायणी सुपार्श्वे तु त्रिकूटे रुद्रसुन्दरी ।
विपुले विपुला नाम कल्याणी मलयाचले
॥
कोटरी कोटरीतीर्थे सगन्धा गन्धमादने ।
कुजाम्रके त्रिसन्ध्या तु गङ्गाद्वारे हरिप्रिया
॥
भीमा देवी हिमाद्रौ तु सेतुर्व्वक्रेश्वरे
तथा ॥
कपालमोचने शुद्धा माता कायावरोहणे
।
शङ्खोद्धारे ध्वनिर्न्नाम धृतिः पिण्डारके
वने ॥
काली तु चन्द्रभागायामक्षोदे
सिद्धिदायिनी ।
नरनारायणे देवी वदर्य्यामुर्व्वशी तथा
॥
ओषधीशोत्तरकुले कुशद्वीपे कुशोदका
।
मन्मथा हेमकूटे तु कुमुदे सत्यवादिनी
॥
अश्वत्थवन्धनीका तु विविक्ते
श्रमणालये ।
मायत्री वेदशालायां सावित्री
ब्रह्मसन्निधौ ॥
सूर्य्यविम्बे प्रभा नाम मातृणां वैष्णवी
मता ।
अरुन्धती सतीनान्तु रामासु च
तिलोत्तमा ॥
व्रजे ब्रह्मकला नाम शक्तिः
सर्व्वशरीरिणाम् ।
एतदुद्देशतः प्रोक्तं नामाष्टशतमुत्तमम् ॥
अष्टोत्तरञ्च तीर्थानां शतमेतदुदाहृतम् ।
यो जपेत् शृणुयाद्वापि सर्व्वपापैः
प्रमुच्यते ॥
एषु तीर्थेषु यत् कृत्वा स्नात्वा
पश्येन्नरो हिः यः
सर्व्वपापविनिर्म्मुक्तः कल्पं ब्रह्मपुरे
वसेत् ॥
नामाष्टशतकं यस्तु
श्रावयेद्ब्रह्मसन्निधौ ।
पौर्णमास्याममावस्यां बहुपुत्रो
भवेन्नरः ॥
गोदाने श्राद्धदाने च अहन्यहनि वा
पुनः ।
देवार्च्चनविधौ विद्वान् परं
ब्रह्माधिगच्छति ॥"
ततश्चाविधवा नारी वित्तभोगान् लभेत सा ॥"
इति तिथ्यादितत्त्वम् ॥
अन्यत् वनपर्व्वीयसावित्रीव्रतकथायांद्रष्टव्यम्
।

**सावित्रीसूत्रं**, क्ली, (सावित्रीदीक्षाकालिक-
सूत्रम् ।) यज्ञोपवीतम् । इति शब्दरत्नावली ॥

**साशयन्दकः**, पुं, ज्यैष्ठी । इति केचित् ॥

**साशूकः**, पुं, कम्बलः । इति हारावली । १५६ ॥

**साश्रुधीः**, स्त्री, श्वश्रूः । इति त्रिकाण्डशेषः ॥

**सास्थिताम्रार्द्धं**, क्ली, (सास्थि अस्थिसहितं
ताम्रार्द्धं यत्र ।) कांस्यम् । इति त्रिकाण्ड-
शेषः ॥

**सास्ना**, स्त्री, (षस स्वप्ने + "रास्नासास्नास्नूणा-
वीणाः" उणा० ३ । १५ । इति नप्रत्ययेन
साधुः । गलकम्बलः । इत्यमरः । २ । ९ ।
६३ ॥
(यथा, माघे । ५ । ६२ ।
"रोमन्थमन्थरचलद्गुरुसास्नमासा-
ञ्चक्रे निमीलदलसेक्षणमौक्षकेण ॥")

| | | |
|---|---|---|
| | इति पद्मपुराणे सृष्टिखण्डे १७ अध्यायः ॥ * ॥<br>अपि च ।<br>नारद उवाच ।<br>"तुलस्युपाख्यानमिदं श्रुतमीश सुधोपमम् ।<br>तत्तु सावित्र्युपाख्यानं तन्मे व्याख्यातुमर्हसि ॥<br>पुरा येन समुद्भूता सा श्रुता च श्रुतिप्रसूः ।<br>केन वा पूजिता देवी प्रथमे कैश्च वा परे ॥<br>नारायण उवाच ।<br>ब्रह्मणा वेदजननी पूजिता प्रथमे मुने ।<br>द्वितीये च वेदगणैस्तत्पश्चाद्विदुषां गणैः ॥<br>तदा चाश्वपतिः पूर्व्वं पूजयामास भारते । | |

**साहचर्य्यं**, क्ली, (सहचरस्य भावः कर्म्म वा ।
सहचर + ष्यञ् ।) सहचरस्य भावः । (यथा, कुमारे । ३ । ११ ।
"मधुश्च ते मन्मथ ! साहचर्य्या-
दसावनुक्तोऽपि सहाय एव
समीरणो नोदयिता भवेति
व्यादिश्यते केन हुतासनस्य ॥")
सहगमनम् । सहचरशब्दात् ष्ण्यप्रत्ययेन निष्प-
न्नम् ॥ सहचारः । सामानाधिकरण्यम् ।
एकाधिकरणवृत्तित्वम् । यथा, --
"प्रायशो रूपभेदेन साहचर्य्याच्च कुत्रचित् ।"
इत्यमरः ॥
(सहधर्म्माचरणम् । इति मल्लिनाथः ॥ यथा, रघुः । १६ । ८७ ।
"तस्याः स्पृष्टे मनुजपतिना साहचर्य्याय हस्ते
माङ्गल्योर्णावलयिनि पुरः पावकस्योच्छिखस्य ॥")

**साहयः**, त्रि, (साहयतीति । साहि + "अनुप-
सर्गात् लिम्पविन्देति ।" ३ । १ । १३८ । इति
शः ।) सहनकारयिता । इति व्याकरणम् ॥

**साहसं**, क्ली, (सहसा बलेन निर्वृत्तम् । सहस् +
"तेन निर्वृ त्तम् ।" ४ । २ । ६८ । इति अण् ।)
दण्डः । इत्यमरः । २ । ८ । २१ ॥ स च त्रिविधः ।
यथा, याज्ञवल्क्यः ।
"साशीतिपणसाहस्रो दण्ड उत्तमसाहसः ।
तदूर्द्ध्वं मध्यमः प्रोक्तस्तदर्द्धमधमः स्मृतः ॥"
इति प्रायश्चित्ततत्त्वम् ॥
बलात्कारकृतकार्य्यम् । इति मेदिनी ॥ (यथा,
"वेगरोधात् क्षयाच्चैव साहसाद्विषमाशनात् ।
त्रिदोषो जायते यक्ष्मा गदो हेतुचतुष्टयात् ॥"
(तद्युक्ते, त्रि । यथा, हरिवंशे भविष्यपर्व्वणि ।
३९ । ३७ ।
"न जाने इति यद्ब्रूषे किमतः साहसं वचः ॥")

**साहसः**, पुं, (सहसे बलाय हितः । सहस् +
अण् ।) अग्निविशेषः । यथा, --
"प्रायश्चित्ते विधुश्चैव पाकयज्ञे तु साहसः ।
लक्षहोमे च वह्निः स्यात् कोटिहोमे हुता-
शनः ॥"
इति तिथ्यादितत्त्वम् ॥

**साहसाङ्कः**, पुं, (साहसः एव अङ्कश्चिह्नं यस्य ।)
विक्रमादित्यराजः । इति जटाधरः ॥

**साहसिकः**, त्रि, (सहसा बलेन वर्त्तते इति ।
सहस् + "ओजःसहोम्भसा वर्त्तते ।" ४ । ४ ।
२७ । इति ठक् ।) मनुष्यमारकः । चौरः ।
पारदारिकः । परुषवादी । अनृतवादी । इति
साहसशब्दार्थदर्शनात् । एते असाक्षिणः ।
यथा नारदः ।
"स्तेनाः साहसिका धूर्त्ताः कितवा योधकाश्च
ये ।
असाक्षिणस्तु ते दुष्टास्तेषु सत्यं न विद्यते ॥"
इति व्यवहारतत्त्वम् ॥
(हठकारी । यथा । "केचित् साहसिका-
स्त्रिलोचनमिति पेठुः ।" इति कुमारटीकायां
मल्लिनाथः । ३ । ४४ ॥)

**साहस्रं**, क्ली, (सहस्राणां समूहः । सहस्र +
"भिक्षादिभ्योऽण् ।" ४ । २ । ३८ । इति
अण् ।)
पाक्षिको वुञ् ।) साहाय्यम् । सहायस्य भाव
इत्यर्थे कण्प्रत्ययेन निष्पन्नम् ॥ (यथा, रघुः ।
१७ । ५ ।
"स कुलोचितमिन्द्रस्य साहायकमुपेयिवान् ।
जघान समरे दैत्यं दुर्जयं तेन चावधि ॥")

**साहाय्यं**, क्ली, (सहायस्य भावः कर्म्म वा । सहाय
+ पक्षे ब्राह्मणादित्वात् ष्यञ् ।) सहायता ।
सहायशब्दात् ष्ण्यप्रत्ययेन निष्पन्नम् ॥ (यथा,
महाभारते । १ । १५५ । १९ ।
"साहाय्येऽस्मि स्थितः पार्थ ! पातयिष्यामि
राक्षसम् ॥")

**साहित्यं**, क्ली, स्त्री, (सहित + ष्यञ् ।) मेलनम् ।
सहितस्य भावः इत्यर्थे ष्ण्यप्रत्ययेन निर्ष्पन्नम् ॥
परस्परसापेक्षाणां तुल्यरूपाणां युगपदेक-
क्रियान्वयित्वं साहित्यम् । इति श्राद्धविवेकः ॥
तुल्यवदेकक्रियान्वयित्वम् । बुद्धिविशेषविशेषत्वं
वा । इति शब्दशक्तिप्रकाशिका ॥ साहित्यं
एकक्रियान्वयित्वम् । तद्यथा । धवखदिर-
पलाशांश्छिन्धि इत्यत्र धवखदिरपलाशप्रति-
योगिकं यत् साहित्यं तन्निरूपितं यद्द्वयव-
विभागरूपफलं तज्जनिका या छिदिक्रिया
तदनुकूलकृतिमांस्त्वम् । इति सारमञ्जरी ॥
मनुष्यकृतश्लोकमयग्रन्थविशेषः । स तु भट्टि-रघु-
कुमारसम्भव-माघ-भारवि-मेघदूत-विदग्धमुख-
मण्डनशान्तिशतकप्रभृतयः ॥

**साह्यं**, क्ली, (सहस्य भावः । सह + ष्यञ् ।)

इति माधवकरसंगृहीतरुग्विनिश्चये यक्ष्माधि-
कारे ॥ “साहसादिति साहसो बलवद्विग्रहादि-
रूपः क्षोभहेतुत्वेन कारणत्वम् ॥” इति तट्टी-
कायां विजयरक्षितः ॥ * ॥ दुष्कृतकर्म्म । अवि-
मृष्यकृतिः । (यथा, महाभारते । १ । ४२ । १ ।
“यद्येतत् साहसं तात ! यदि वा दुष्कृतं कृतम्
प्रियं वाप्यप्रियं वा ते वागुक्ता न मृषा भवेत् ॥”)
द्वेषः । इति हेमचन्द्रः ॥ प्रश्चाद्दोषमनालोच्य
करणम् । तत्तु चौर्य्यपरदारगमनादि । इति
मुग्धबोधटीकायां दुर्गादासः ॥ * ॥ साहसमाह
नारदः
मनुष्यमारणं स्तेयं परदाराभिमर्षणम् ।
पारुष्यमनृतञ्चैव साहसं पञ्चधा स्मृतम् ॥”
अत्र सद्य एवोत्तरदापनम् । यथा, --
साहसस्तेयपारुष्यगोऽभिशापात्यये स्त्रियाम् ।
विवादयेत् सद्य एव कालोऽन्यत्रेच्छया स्मृतः ॥”
विवादयेत् सद्य एवोत्तरं दापयेत् । इति शूल-
पाणिः ॥ तत्र दासादयोऽपि साक्षिणो भवन्ति
यथा, उशना ।
“दासोऽन्धो वधिरः कुष्ठी स्त्रीबालस्थविरा-
दयः ।
एतेऽप्यनभिसम्बन्धाः साहसे साक्षिणो मताः ॥”
इति व्यवहारतत्त्वम् ॥

सहस्रसमूहः इत्यमरः । ३ । २ । ४५ ॥ (यथा,
महाभारते । २ । ५८ । १३ ।
“एतावन्ति च दासानां साहस्राण्युत
सन्ति मे ॥”
सहस्रमेव । स्वार्थे अण् ।) सहस्रमात्रम् ।
यथा, --
“हरिस्ते साहस्रं कमलबलिमाधाय पदयो-
र्यदेकोने तस्मिन्निजमुदहरन्नेत्रकमलम् ।
गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषा
त्रायाणां रक्षायै त्रिपुरहर जागर्त्ति जगताम् ॥
इति महिम्नस्तवः ॥
(सहस्रेण क्रीतमिति ।
“शतमानविंशतिक-
सहस्रवसनादण् ।” ५ । १ । २७ । इति अण् ।)
सहस्रेण क्रीते, त्रि ॥ (सहस्रस्येदमिति । अण् ।)
सहस्रसम्बन्धिनि च त्रि ॥ (यथा, विष्णुपादादि-
केशान्तवर्णनस्तोत्रे । १४ ।
“साहस्री वापि संख्या प्रकटमभिहिता सर्व्व-
वेदेषु येषाम् ॥”)

**साहस्रः**, पुं, (सहस्रमस्यास्तीति । सहस्र + “अण्
च ।” ५ । २ । १०३ । अण् ।) सहस्रसङ्ख्यक-
गजादिना बली । इत्यमरः । २ । ८ । ६२ ॥
(सहस्रविशिष्टे, त्रि । यथा, मनुः । ८ । ३८३ ।
“सहस्रं ब्राह्मणो दण्डं दाप्यो गुप्ते तु ते व्रजन्
शूद्रायां क्षत्त्रियविशोः साहस्रो वै भवेद्दमः ॥”)

**साहायकं**, क्ली, (सहायस्य भावः कर्म्म वा ।
मेलनम् । सहितत्त्वम् । इति धरणिः ॥ (साहा-
य्यम् । यथा, महाभारते । ५ । ७ । ११ ।
“ततो दुर्य्योधनः कृष्णमुवाच प्रहसन्निव ।
विग्रहेऽस्मिन् भवान् साह्यं मम दातुमिहा-
र्हति ॥”)

**साह्यकृत्**, पुं, (साह्यं करोतीति । कृ + क्विप् ।)
समभिव्याहारी ॥

**साह्वयः**, पुं, (आह्वयेन सह वर्त्तमानः ।) मेषादि-
प्राणिद्यूतम् । पशुयुद्धम् । यथा, --
“मेषादिप्राणिद्यूते स्यात् साह्वयश्च समाह्वयः ।”
इति शब्दरत्नावली ॥
(नामयुक्ते, त्रि । यथा, भागवते । १ । ४ । ६ ।
“कथमालक्षितः पौरैः स प्राप्तः कुरुजाङ्गलम् ।
उन्मत्तमूकजडवत् विचरन् गजसाह्वये ॥”)

**सिंहः**, पुं, (सिञ्चति तेजः पशुषु इति । सिच +
“सिचेः सञ्ज्ञायां हनुमौ कश्च ।” उणा० ५ !
६२ । इति कः । अन्त्यादेशो हकारः । नुम् च ।
पृषोदरादित्वात् अन्तविपर्य्यये हिनस्तीति
सिंह इत्यपि भवति ।) स्वनामख्यातपशुः ।
(यथाह कश्चित् ।
“सिंहो बली द्विरदकुञ्जरमांसभोजी
संवत्सरेण कुरुते रतिमेकवारम् ।
पारावतः खलु शिलाकणमात्रभोजी
कामी भवेदनुदिनं वद कोऽत्र हेतुः ॥”)
तत्पर्य्यायः । मृगेन्द्रः २ पञ्चास्यः ३ हर्य्यक्षः ४
केशरी ५ हरिः ६ । इत्यमरः । २ । ५ । १ ॥

|  | सहाम + "योपधात् गुरूपोत्तमात् वुञ् ।"<br>५ । १ । १३२ । इत्यत्र सहायाद्वेति वक्तव्यम् इत्युक्तेः |  |
| --- | --- | --- |

पारीन्द्रः ७ श्वेतपिङ्गलः ८ कण्ठीरवः ९ पञ्च-
शिखः १० शैलाटः ११ भीमविक्रमः १२
सटाङ्कः १३ मृगराट् १४ मृगराजः १५ मरुत्-
प्लवः १६ केशी १७ लग्नौकाः १८
करिदारकः १९ ।
इति शब्दरत्नावली ॥ महावीरः २०
श्वेतपिङ्गः २१
गजमोचनः २२ मृगारिः २३ । इति जटाधरः
॥
इभारिः २४ नखरायुधः २५ महानादः २६
मृगपतिः २७ । इति हेमचन्द्रः ॥ पञ्चमुखः २८
नखी २९ मानी ३० क्रव्यादः ३१ मृगाधिपः
३२
शूरः ३३ विक्रान्तः ३४ द्विरदान्तकः ३५
बहु-
बलः ३६ दीप्तः ३७ बली ३८ विक्रमी ३९
दीप्त-
पिङ्गलः ४० । तन्मांसगुणाः ।
अर्शःप्रमेहजठरा-
मयजाड्यनाशित्वम् । इति राजनिर्घण्टः ॥
अपि च ।
“सिंहव्याघ्रवृका ऋक्षतरक्षुद्वीपिनस्तथा ।
वभ्रु जम्बु कमार्जारा इत्याद्यास्तु गुहाशयाः ॥
गुहाशया वातहरा गुरूष्णमधुराश्च ते ।
स्निग्धा बल्या हिता नित्यं नेत्रगुह्यविकारि-
णाम् ॥”
इति भावप्रकाशः ॥ * ॥
पदान्ते श्रेष्ठार्थवाचकः । इत्यमरः । ३ । १ ।
५९ ॥
(यथा, रामायणे । २ । ७३ । ७ ।
“क्व यास्यसि महाराज ! हित्वेमं दुःस्वितं
जनम् ।
हीनं पुरुषसिंहेन रामेणाक्लिष्टकर्म्मणा ॥”)
अर्हतां ध्वजः । इति हेमचन्द्रः ॥ रक्तशिग्रुः ।
इति राजनिर्घण्टः ॥ (यथा, सुश्रुते । ४ । ९ ।
“तुत्थालकटुकाव्योषसिंहार्कहयमारकाः ॥”)
मेषादिद्वादशराश्यन्तर्गतपञ्चमराशिः । तत्-
पर्य्यायः । लेयः २ । इति सत्कृत्यमुक्तावली ॥
तस्याधिष्ठात्री देवता सिंहः । स च मघा-

**सिंहतुण्डः**, पुं, (सिंहस्य तुण्डमिव पुष्पमस्य ।)
सेहुण्डवृक्षः । इति राजनिर्घण्टः ॥
(अस्य
पर्य्यायो यथा, --
“सेहुण्डः सिंहतुण्डः स्यात् वज्री
वज्रद्रुमोऽपि च
सुधासमन्तदुग्धा च स्नुक् स्त्रियां
स्यात्
स्नुही गुडा ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे
प्रथमे भागे ॥
सिंहस्य तुण्डमिव तुण्डमस्य ।
मत्स्यविशेषः ।
यथा, मनुः । ५ । १६ ।
“पाठीनरोहितावाद्यौ नियुक्तौ
हव्यकव्ययोः ।
राजीवान् सिंहतुण्डांश्च
सशल्कांश्चैव सर्व्वशः ॥”
सिंहमुखे, क्ली ॥)

**सिंहद्वारं**, क्ली, (सिंहचिह्नितं द्वारमिति मध्य-
पदलोपिकर्म्मधारयः ।) प्रवेशद्वारम्
। तत्-
पर्य्यायः । प्रवेशनम् २ । इति
हेमचन्द्रः ॥
(यथा, कथासरित्सागरे । ४३ ।
१७५ ।
“सिंहद्वारे युवा देवि
दृष्टोऽस्माभिर्म्महाब्रती ।
सद्वितीयोऽपि यो धत्ते
सौन्दर्य्येणाद्वितीयताम् ॥”)

**सिंहध्वनिः**, पुं, (सिंहस्य ध्वनिः ।) सिंहशब्दः ।
सिंहनादसदृशशब्दः । यथा, --
“तुषारसंघातशिलाः क्षुराग्रैः
समुल्लिखन् दर्पकलः ककुद्वान् ।
दृष्टः कथञ्चिद्गवयैर्विविग्नै-
रसोढसिंहध्वनिरुन्ननाद ॥”

**सिंहपुष्पी**, स्त्री, (सिंहस्य पुच्छ इव पुष्पमस्याः ।
ङीष् ।) पृश्निपर्णी । इति राजनिर्घण्टः ॥

**सिंहमुखी**, स्त्री, (सिंहस्य मुखमिव पुष्पमस्याः ।
ङीष् ।) वासकः । इति राजनिर्घण्टः ॥

**सिंहयाना**, स्त्री, (सिंहो यानं वाहनं यस्याः ।)
दुर्गा । इति हेमचन्द्रः ॥

**सिंहरथा**, स्त्री, (सिंह एव रथो यस्याः ।) दुर्गा ।
इति शब्दरत्नावली ॥ (यथा, हरिवंशे । १७६
।
१७ ।
“वराङ्गनां सिंहरथां बहुरूपां वृषध्वजाम् ॥”)

**सिंहलं**, क्ली, (सिंहलो देशः प्रभवत्वेनास्त्यस्येति ।
अच् ।) रङ्गम् । इति हेमचन्द्रः ॥ रीतिः ।
त्वचम् । इति राजनिर्घण्टः ॥

**सिंहलः**, पुं, स्त्री, (सिंहं लाति प्राप्नोतीति ।
ला + कः ।) देशविशेषः । शिलोन इति
ख्यातः । यथा, --
“दक्षिणेऽवन्तिमाहेन्द्रमलया ऋष्यमूककाः ।
चित्रकूटमहारण्यकाञ्चीसिंहलकोङ्कणाः ॥”
इति ज्योतिस्तत्त्वम् ॥
(अयञ्च जम्बुद्वीपस्य अष्टप्रमिद्धद्वीपानामन्य-
तमः । यथा, भागवते । ५ । १९ । २९ --
३० ।
“जम्बुर्द्वपस्य च राजन् उपद्वीपानष्टौ हैक
उपदिशन्ति सागरात्मजैरश्वान्वेषण इमां महीं
परितो निखनद्भिरुपकल्पितान् । तद्यथा
स्वर्णप्रस्थश्चन्द्रशुक्ल आवर्त्तनो रमणको
मन्द-
हरिणः पाञ्चजन्यः सिंहलो लङ्केति ॥” * ॥
तद्देशवासिनि, पुं, भूम्नि । यथा, महाभारते ।
१ । १७६ । ३५ ।
“पौण्ड्रान् किरातान् यवनान् सिंहलान्
वर्व्वरान् खशान् ।
ससर्ज्जफेनतः सा गौर्म्लेच्छान् बहुविधानपि
॥”)

**सिंहलस्था**, स्त्री, (सिंहले तिष्ठति या । स्था +

पूर्व्वफल्गुनी-समुदायोत्तरफल्गुनी-प्रथमपादेन भवति । अग्निराशिः । पीतवर्णः । रूक्षः । एवं धूम्रवर्णः । पित्तप्रकृतिः । पूर्व्वदिक्स्वामी । पर्व्वतचारी । क्षत्त्रियवर्णः । क्रूरः । महाशब्दः ।
अल्पसन्तानः । अल्पस्त्रीसङ्गश्च । तत्र जात-फलम् । क्रोधी । शीघ्रगतिः । हास्यबाणिः । अतिवक्ता । चञ्चलः । शीतलः । मत्स्यप्रियश्च ।
इति बृहज्जातकादयः ॥ * ॥ मेषादिद्वादश-लग्नान्तर्गतपञ्चमलग्नम् । तत्र जातफलम् ।
“सिंहलग्ने समुद्भूतो भोगी शत्रुविमर्द्दनः ।
स्वल्पोदरोऽल्पपुत्त्रश्च सोत्साही गजविक्रमः ॥”
इति कोष्ठीप्रदीपः ॥

**सिंहकेलिः**, पुं, (सिंहस्येव केलिर्य्यस्य ।) मञ्जु-

घोषः । जिनविशेषः । इति त्रिकाण्डशेषः ॥

**सिंहकेशरः**, पुं, (सिंहस्येव केशरो यस्य ।)

वकुलः । इति त्रिकाण्डशेषः ॥ सिंहस्य जटा च ॥

**सिंहतलः**, पुं, (सिंहस्येव तलमत्र । यद्वा, सिंह-

तलः । पृषोदरादित्वात् साधुः ।) कृताञ्जलिः । करद्वययोजनम् । इत्यमरटीकायां रामाश्रमः । २ । ६ । ८५ ॥

इति कुमारसम्भवम् ॥

**सिंहनादः**, पुं, (सिंहस्येव नादः ।) योधानां

रणोत्साहजरवः । तत्पर्य्यायः । क्ष्वेड्वा २ । इत्य-
मरः । २ । ८ । १०७ ॥
गजयूथदर्शनात् तद्भ-
ङ्गाय यथा सिंहस्य नादस्तथा परबलभङ्गाय
स्वोत्साहविवृद्धये च यो रावः सः । सिंहस्येव
नादः सिंहनादः । इति भरतः ॥ (यथा आर्य्या-
सप्तशत्याम् । ७०० ।
“कविसमरसिहनादः स्वरानुनादः सुधैक-
संवादः ।
विद्वद्विनोदकन्दः सन्दर्भोऽयं मया सृष्टः ॥”
महादेवः । इति महाभारतम् । १३ । १७ ।
११० ॥ * ॥ सिंहस्य नादः ।)
सिंहशब्दश्च ॥

**सिंहनादकः**, पुं, (सिंह इव नदतीति नद +

ण्वुल् ।) वुक्कारः । इति हारावली । १९४ ॥
सिङ्गा इति भाषा ॥

**सिंहनादिका**, स्त्री, सिंहमपि नादयतीति । नद

+ णिच् + ण्वुल् । टापि अत इत्वम् ।) दुरा-
लभा । इति शब्दचन्द्रिका ॥

**सिंहपर्णी**, स्त्री, सिंहस्य शिग्रोः पर्णमिव पर्ण-

मस्याः । ङीष् ।) वासकः । इति जठाधरः ॥

**सिंहपुच्छिका**, स्त्री, (सिंहपुच्छी + स्वार्थे कन् ।)

चित्रपर्णिका । इति रत्नमाला ॥
क्षुद्रचाकुलिया
इति भाषा ॥

कः ।) सैंहली । इति राजनिर्घण्टः ॥ सिंहल-देशवासिनी च ॥

**सिंहलास्थानः**, पुं, (सिंहल आस्थानं यस्य ।)

तालवृक्षसदृशवृक्षविशेषः । यथा, --
“प्रोत्फलः सिंहलास्थानश्छडी पिञ्जा छटापि च ॥”
इति शब्दमाला ॥

**सिंहलीलः**, पुं, (सिंहस्य लीलेव लीला यत्र ।)

रतिबन्धविशेषः । तस्य लक्षणं यथा, --
“लिङ्गोपरिस्थिता नारी भूमौ दत्त्वा पदद्वयम् ।
हृदये दत्तहस्ता च सिंहलीलः प्रकीर्त्तितः ॥
लिङ्गोपरिस्थिता नारी कान्तोरुस्थपदद्वया ।
हृदये दत्तहस्ता च सिंहलीलोऽप्यसावपि ॥”
इति रतिमञ्जरी ॥

**सिंहवाहिनी**, स्त्री, सिंहरूपो वाहो वाहन-

मस्त्यस्या इति । इनि ।) दुर्गा । यथा, --
“सिंहमारुह्य कल्पान्ते निहतो महिषो यतः ।
महिषघ्नी ततो देवी कथ्यते सिंहवाहिनी ॥”
इति देवीपराणे ४५ अध्यायः ॥

| | | |
|---|---|---|
| | **सिंहपुच्छी**, स्त्री, (सिंहस्य पुच्छ इव पुष्पमस्याः । ङीष् ।) चित्रपर्णिका । पृश्निपर्णी । इत्यमरः । २ । ४ । ९३ ॥ माषपर्णी । इति रत्न- माला ॥ | |

**सिंहविक्रान्तः**, पुं, (सिंह इव विक्रान्तः ।) अश्वः ।

इति हारावली । ५२ । शब्दमाला च ॥
सिंह-
तुल्यविक्रमविशिष्टे, त्रि ॥

**सिंहविन्ना**, स्त्री, (सिंह इव विन्ना विज्ञाता ।)

मासपर्णी । इति राजनिर्घण्टः ॥

**सिंहसंहननः**, त्रि, (सिंहस्येव संहननं अवयवो

यस्य ।) वराङ्गरूपोपेतः । इत्यमरः । ३ ।
१ । १२ ॥
प्रत्येकमवयवशुद्ध्या सुन्दरः ।
सिंहसंहननः स
स्याद्यो हि सर्व्वाङ्गसुन्दरः । इति
कोषान्तरम् ॥
सिंहस्येव संहननं देहोऽस्य सिंहसंहननः
।
रूढिशब्दोऽयं यथाकथञ्चिदन्वयः । इति
भरतः ॥
(सिंहस्य संहननम् ।) सिंहनाशने, क्ली
॥

**सिंहा**, स्त्री, (सिञ्चतीति । सिञ्च + कः । अन्त्या-

देशो हकारः । नुम् च । टाप् ।) नाडी ।
इति
राजनिर्गण्टः ॥

**सिंहाणं**, क्ली, लौहमलम् । इत्यमरटीका । २ ।

१ । ९८ ॥

**सिंहानं**, क्ली, लौहमलम् । इत्यमरः । २ । १ ।
९८ ॥

तस्य रूपान्तराणि यथा । शिंघाणम् २
सिंहाणम्
३ सिंघाणम् ४ । इति तट्टीका ॥
नासिकामलम्
सिक्नी इति भाषा । तत्पर्य्यायः ।
सिंहाणकम् ।
२ सिंघाणम् ३ सिंघणम् ४ । इति
शब्दरत्ना-

राजासनं चतस्रश्च एवं द्वादशपुत्त्रिकाः ।
रत्नैश्च नवभिः कार्य्यं निर्म्माणं चान्तरान्तरा
॥
रक्तवस्त्रावृतं ह्येतत् पद्मसिंहासनं मतम् ।
अत्रोषित्वा नरपतिः प्रतापमतिविन्दति ॥ १
॥
भद्रेन्द्रकाष्ठघटितः शङ्खमालोपशोभितः ।
शुद्धस्फटिकचित्राङ्गः शुद्धरूप्योपशोभितः ॥
चरणाग्रे शङ्खनाभिः पुत्त्रिकाः सप्तविंशतिः ।
स्थाने स्थाने विधातव्याः
शुद्धस्फटिकसस्कृताः ।
शुक्लपट्टावृतं ह्येतत् शङ्खसिंहासनं मतम् ॥ २
॥
पनसेनोपघटितो गजमालोपशोभितः ।
विद्रुमैरपि वैदूर्य्यैः काञ्चनेनापि शोभितः ॥
चरणाग्रे गजशिरः पुच्छादेकैकपुत्त्रिका ।
माणिक्यरचिता रक्तवस्त्रादिकविभूषणम् ।
गजसिंहासनं नाम साम्राज्यफलदायकम् ॥ ३
॥
शालकाष्ठेन घटितो हंसमालोपशोभितः ।
पुष्परागैः काञ्चनेन कुरुविन्दैश्च चित्रितः ॥
चरणाग्रे हंसरूपं पुत्त्रिकास्त्वे कविंशतिः ।
गोमेदकोपघटितापीतवस्त्रविभूषणम् ।
हंससिंहासनं नाम सर्व्वानिष्टविनाशनम् ॥ ४
॥
चन्दनेनोपघटितः सिंहमालोपभूषितः ।
शुद्धहीरकचित्राङ्गः शुद्धकाञ्चननिर्म्मितः ॥
चरणानां सिंहलेखः पुत्त्रिकाश्चैकविंशतिः ।
मुक्ताशुक्तिभिरन्यैश्च निर्म्मलैरेव भूषणम् ॥
शुद्धशुण्डावृतं ह्येतत् सिंहसिंहासनं मतम् ।
अत्रोषित्वा नरपतिः कृत्स्नां साधयति
क्षितिम् ॥ ५ ॥
भृङ्गमालोपसहितं शुद्धचम्पककल्पितम् ।
शुद्धैर्म्मरकतैर्युक्तं पादाग्रे पद्मकोषिकाः ॥
द्वाविंशतिः पुत्त्रिकास्तु नीलवस्त्रादिभूषणम् ।
भृङ्गसिंहासनं नाम शत्रुक्षयजयप्रदम् ॥ ६ ॥
निम्बकाष्ठेन घटनामृगमालोपशोभितम् ।
इन्द्रनीलैर्म्महानीलैः काञ्चनेनापि चित्रितम् ॥
चरणाग्रे मृगशिरश्चत्वारिंशिश्च पुत्त्रिकाः ।

राजा च नृपतिं हत्वा कुर्य्यात् सिंहासनं
यदा
द्विगुणं वाहयेत् पण्यमन्यथैकगुणं भवेत्
॥
मित्रसिंहासनं पार्थ यदा रोहति भूपतिः ।
तदा सिंहासनं नाम सर्व्वं नयति तद्बलम्
॥
यदा सिंहासनं कर्त्तुं राजा षष्ठपदाश्रितः
।
तदा घातेन हन्तव्यो बलेनापि सुरक्षितः
॥" * ॥
योगासनविशेषः । यथा, हठप्रदीपे ।
"गुल्फौ च वृषणस्याधः सीवन्धाः
पार्श्वयोः
क्षिपेत् ।
दक्षिणे सव्यगुल्फन्तु दक्षगुल्फन्तु
सव्यके ॥
हस्तौ च जान्वोः संस्थाप्य स्वाङ्गु लीः
संप्रसार्य्यच
व्यात्तवक्त्रो निरीक्षेत नासाग्रं
सुसमाहितः ॥
सिंहासनं भवेदेतत् पूजितं योगिभिः
सदा ।
बन्धत्रयस्य सन्धानं कुरुते
चासनोत्तमम् ॥"

**सिंहासनः**, पुं, (सिंहस्य आसनं उववेशनमिव

आसनं यत्र ।)
षोडशरतिबन्धान्तर्गतचतुर्द्दश-
बन्धः । तस्य लक्षणं यथा, --
"स्वजङ्घाद्वयबाहू च कृत्वा योषापदद्वयम्
।
स्तनौ धृत्वा रमेत् कामी बन्धः
सिंहासनो मतः ॥"
इति रतिमञ्जरी ॥

**सिंहासनचक्रं**, क्ली, (सिंहासनमिव चक्रम् ।)

सप्तविंशति-नक्षत्राङ्कित-नराकार-चक्र-
त्रयम् ।
यथा, --

वली ॥ कफः ५ श्लेष्मा ६ खेटः ७ । इति जटा-
धरः ॥

**सिंहासनं**, क्ली, (सिंहचिह्नितमासनम् ।) स्वर्ण-
मयराजासनम् । इत्यमरः । २ । ८ । ३२ ॥ अथ
सिंहासनयुक्तिः ।
“राज्ञो वरासनं नाम श्रीसिंहासनमुच्यते ॥
शुभे मुहूर्त्ते शुभमासवर्षे
सुवारवेलातिथिचन्द्रयोगे ।
काले निरुत्पातनिरीतिभावे
सिंहासनावस्थविधिं वदन्ति ॥
स्थिरराशिस्थिते भानौ चन्द्रे च स्थिरभोदिते ।
आसनारम्भमिच्छन्ति गृहारम्भोऽपि येषु च ॥”
एतेन गृहारम्भसिंहासनयोरारम्भः । तत्र क्रमः ।
“बाणवेदाग्निपक्षाणि सोपानानि युगैः क्रमात्
चत्वारिंशत्तथा त्रिंशत् विंशतिः षोडशैव च ॥
सिंहान्वितानि ज्ञे यानि चरणानि युगः क्रमात्
पद्मः शङ्खो गजो हंसः सिंहो भृङ्गो मृगो हयः ॥
अष्टौ सिंहासनानीति नीतिशास्त्रविदो विदुः ।
आदित्यादिदशाजानां भूपतीनां यथाक्रमम् ॥
राज्ञः स्वहस्तैरष्टाभिरायामपरिणाहयोः ।
राजपात्रमिदं नाम सोपानं पुरुषोन्नतम् ॥
तदर्द्धमानं तन्मध्ये राजासनमुदाहृतम् ।
अर्द्धोन्नतमिदं रम्यं प्रोक्तं कलिमहीभुजाम् ।
दिगष्टदृर्ध्यब्धिकोणः स्याद्ब्रह्मादीनां यथा-
यथम् ॥”
अथाष्टानां लक्षणानि ।
नीलवस्त्रादियुक्तन्तु मृगसिंहासनं मतम् ।
लक्ष्मीविजयसम्पत्तिर्नॄज्यपदमुत्तमम् ॥ ७ ॥
केशरेणोपघटितं हयमालोपशोभितम् ।
समस्तवस्त्रैर्भूषाश्च पुत्त्रिकाः पञ्चसप्ततिः ॥
चरणाग्रे हयशिरश्चित्रवस्त्रादिभूषणम् ।
हयसिंहासनं नाम लक्ष्मीविजयवर्द्धनम् ॥ ८ ॥
इत्येतत् कथितं सारं महासिंहासनाष्टकम् ।
यथा भोजेन लिखितं यथा चान्यै श्च पण्डितैः ॥
एतस्यातिक्रमं दम्भाद्यः कुर्य्यात् पृथिवोपतिः
अचिरादेव कुरुते तस्य मृत्युरतिक्रमम् ॥
परासनस्थो यो राजा यो राजा च निरासनः ।
स परैर्हन्यते सिंहैरिव मत्तगजाधिपः ॥
स्वलग्नमित्रासनमध्यसंस्थिति-
र्न दुष्यतीति प्रवदन्ति तज्ज्ञाः ॥”
इति युक्तिकल्पतरुः ॥ * ॥
चतूराजीक्रीडायः जयविशेषः । यथा, तिथ्यादि-
तत्त्वे ।
“अन्यद्राजपदं राजा यदा यातो युधिष्ठिर ।
तदा सिंहासनं तस्य भण्यते नृपसत्तम ॥
“अथातः संप्रवक्ष्यामि चक्रं सिंहासनत्रयम् ।
सप्तविंशतिनक्षत्रैरेकैकञ्च नवात्मकम् ॥
अश्विनीमघमूलाद्यं पञ्चनाडीविभेदतः ।
अश्विन्याद्युत्तरे भागे मघाद्यं पूर्व्वतः स्थितम् ।
मूलाद्यं दक्षिणे भागे ज्ञातव्यं नृपतित्रयम् ।
इतरेषु च राज्येषु नृपनामर्क्षतो वदेत् ॥
शुभाशुभमिदं सर्व्वं यत्र यस्य शनिः स्थितः ।
नाडिकापञ्चवेधेन एकैकस्यासनं भवेत् ॥
आधारमासनं पट्टं सिहं सिंहासनं तथा ।
ग्रहैर्व्वेधवशाज्ज्ञेयं सौम्यः क्रूरैः शुभाशुभम् ॥
ऋक्ष आधारगे राजा अभिषिक्तो य आसने ।
पराधीनगतं राज्यं कुरुते नात्र संशयः ॥
आसनस्थेन ऋक्षेण नीतियुक्तो भवेन्नृपः ।
प्रधानपुरुषो देवः प्रजाशान्तिकरो भवेत् ॥
पट्ट ऋक्षे यदा राजा उपविष्टो नृपासने ।
पूर्व्वराजस्थितेस्तुल्यश्चिरं पालयते महीम् ॥
सिंहरूपी भवेद्राजा सिंहर्क्षेणासने स्थितः ।
संग्रामस्य प्रियो नित्यमसाध्यो मन्त्रिमण्डलैः ॥
सिंहासनगते धिष्ण्ये तेजस्वी भीषणाकृतिः ।
चलच्चित्तो महाक्रोधी प्रजापीडाकरो नृपः ॥
तत्कालेन्दुगते ऋक्षे क्रूरनिर्व्वेधनाडिके ।
शुभावस्था शुभे लग्ने संस्थाप्यो नृप आसने ॥
ईदृशे च समायोगे उपविष्टो य आसने ।
उच्छाद्य शत्रुसंघातमेकच्छत्रं करोति सः ॥
क्रू रग्रहगतां नाडीमुपविष्टो य आसने ।

| | | |
|---|---|---|
| “गम्भारीकाष्ठघटितः पद्ममालोपचित्रितः ।<br>पद्मरागविचित्राङ्गः शुद्धः काञ्चनसंवृतः ॥<br>चरणाग्रे पद्मकापात् पद्मरागविचित्रिताः ।<br>दिक्ष्वष्टौ पुत्त्रिका<br>राजद्वादशाङ्गलिसम्मिताः॥ | | बन्धनं भूमिनाशश्च तथा मृत्युः प्रजायते ॥<br>आधार ऋक्षगः सौरिरनावृष्टं करोति च ।<br>दुर्मिक्षं रौरवं तत्र प्रजापीडा च जायते ॥<br>आसने च यदा सौरिर्युद्धे भङ्गप्रदो भवेत् ।) |

अथवा व्याधिपीडा च मनोदुःखं
प्रजायते ॥
पट्ट ऋक्षे यदा सौरिः पट्टराज्ञी
विनश्यति ।
प्रियो वाथ कुमारो वा
मन्त्रिबन्धुक्षयोऽपि वा ॥
सिंहे सिंहासने वापि यदा तिष्ठति
सूर्य्यजः ।
तदा मृत्युर्न सन्देहो यदि शक्रसमो
नृपः ॥
शनिराह्वर्कमाहेया यदा चन्द्रेण
संयुताः ।
यस्यासनगता एते तस्य राज्ञो
भयङ्कराः ॥
क्रूरयुक्तोऽथ वक्रस्तु
क्रूरनाडीगतोऽपि वा ॥
आसने चन्द्रयोगेन कालरूपी
शनैश्चरः ॥
एवं शुभफलं दद्याद्दे वमन्त्री न
संशयः ।
करोति विपुलं राज्यं यस्यासनगतो
गुरुः ॥”
इति ज्योतिस्तत्त्वम् ॥

**सिंहास्यः**, पुं, (सिंहस्य आस्यमिव पुष्पमस्य ।)
वासकः । इत्यमरः । २ । ४ ।
१०३ ॥ सिंह-
तुल्यमुखे, त्रि ॥

**सिंहिका**, स्त्री, कश्यपपत्नी । राहुमाता । यथा,
“कश्यपस्य गृहिणी तु सिंहिका
राहुवास्तुतनयावजीजनत् ।
पूर्व्वजो हरिनिकृत्तकन्धरो
दैवतैरवरजो निपातितः ॥”
इति वास्तुयागतत्त्वम् ॥
(पीठस्था देवीविशेषः । यथा,
देवीभागवते ।
७ । ३० । ७५ ।

**सिकतावान्**, [न्] त्रि, (सिकताः सन्त्यत्रेति ।
मतुप् । मस्य वः ।) वालुकाबहुलदेशः । तत्-
पर्य्यायः । सिकता २ सिकतिलः ३ सैकतः ४
।
इत्यमरभरतौ । २ । १ । ११ ॥।

**सिकतिलः**, त्रि, (सिकताः सन्त्यत्रेति । सिकता +
“देशे लुबिलचौ च ।” ५ । २ । १०५ । इति
इलच् ।) सिकतावान् । इत्यमरटीकायां
भरतः । २ । १ । ११ ॥

**सिक्**, [च्] स्त्री, (सिच्यते इति । सिच् + क्विप् ।)
वस्त्रम् । इति हेमचन्द्रः ॥ (जालम् । यथा,
भागवते । ६ । १२ । ८ ।
“लोकाः सपाला यस्येमे श्वसन्ति विवशा वशे
।
द्विजा इव सिचाबद्धाः स काल इह कारणम्
॥”)

**सिक्तः**, त्रि, (सिच् + क्तः ।) सेकाश्रयः कृत-
सेचनः । यथा, वायुपुराणे गयापद्धतौ ।
“आम्राश्च सिक्ताः पितरश्च तृप्ता
एका क्रिया द्व्यर्थकरी प्रसिद्धा ॥”

**सिक्थं**, क्ली, (सिञ्चति क्षरतीति । सिच क्षरणे +
“पातृतुदिवचीति ।” उणा० २ । ७ । इति
थक् ।) मधूच्छिष्टम् । इति मेदिनी ॥ मोम
इति भाषा ॥ (यथा, --
“तिक्तासिक्थनिशायष्टीनक्ताह्वफलपत्रैक ।
पटोलमालतीनिम्बपत्रैर्व्रण्यंघृतं स्मृतम् ॥”
इति तिक्ताद्यघृतम् ॥
इति वैद्यकचक्रपाणिसंग्रहे व्रणशोथाधिकारे ॥)
नीली । इति हेमचन्त्रः ॥

**सिक्थः**, पुं, (सिच + थक् ।) भक्तपुलाकः ।
(सिटी इति भाषा ॥ यथा, --
“ -- पेया सिक्थसमन्विता ॥”
इति वैद्यकचक्रपाणिसंग्रहे ज्वराधिकारे ॥)
ग्रासः । इति मेदिनी ॥ (यथा, कथासरित्सागरे
।
१०८ । ७७ ।

**सिङ्घिनी**, स्त्री, नासिका । इति हलायुधः ॥

**सिचयः**, पुं, (सिचं सिञ्चनमेति प्राप्नोतीति ।
इन् + अच् ।) वस्त्रम् । इति हेमचन्द्रः ॥
(यथा, राजतरङ्गिण्याम् । १ । १ ।
“भूषाभोगिफणारत्नरोचिःसिचयचारवे ।
नमः प्रलीनमुक्ताय हरकल्पमहीरुहे ॥”)
जीर्णवस्त्रम् ॥ इति त्रिकाण्डशेषः ॥

**सिञ्चन्**, [त्] त्रि, (सिञ्चतीति । सिच् + शतृ ।)
सेचनकर्त्ता ॥

**सिञ्चिता**, स्त्री, (सिञ्च + णिच् + क्तः । टाप् ।)
पिप्पली । इति शब्दचन्द्रिका ॥

**सिञ्जा**, स्त्री, अलङ्कारध्वनिः । इति केचित् ॥
तालव्यशकारादिः साधुपाठः ॥

**सितं**, क्ली, (सितः शुक्लवर्णोऽस्यास्तीति । अच् ।)
रौप्यम् । मूलकम् । इति राजनिर्घण्टः ॥
चन्दनम् । इति रत्नमाला ॥ (तत्तु
शुक्लचन्द-
नम् । यथा, --
“सितं मलयजं शीतं गोशीर्षसितचन्दनम् ॥”
इति गारुडे २०८ अध्याये ॥)

**सितः**, पुं, (सिनोतीति । सि बन्धने + “अञ्जिधृ-
सिभ्यः क्तः ।” उणा० ३ । ८९ । इति क्तः ।)
शुक्लवर्णः । इत्यमरः । ३ । ३ । ८० ॥
शुक्रा-
चार्य्यः । इति शब्दरचावली ॥ शरः । इति
नानार्थध्वनिमञ्जरी ॥

**सितः**, त्रि, (सितः शुक्लवर्णोऽस्यास्तीति । अच् ।)
शुक्लवर्णयुक्तः । इत्यमरः । ३ । ३ । ७९ ॥
(यथा,
माघे । १ । २५ ।
सितं सितिम्ना सुतरां मुनेर्वपु-
र्विसारिभिः सौधमिवाथ लम्भयन् ॥” * ॥
सो + क्तः ।) समाप्तः । निबद्धः । ज्ञातः ।
इति
विश्वः ॥

"सिंहिका कृतशौचे तु कार्त्तिके त्वतिशाङ्करी ॥"

**सिंहिकासूनुः**, पुं, (सिंहिकायाः सूनुः पुत्त्रः ।

राहुः । इति शब्दरत्नावली ।
वास्तुपुरुषः ।
इति वास्तुयागतत्त्वम् ॥

**सिंही**, स्त्री, (सिंह + ङीष् ।) सिंहपत्नी ।

(यथा, कथासरित्सागरे । ६ ।
१०२ ।
"अयं स वर्द्धि तोऽन्यासां सिंहीनां पयसा
मया ॥")
वार्त्ताकी । इत्यमरः । २ । ४ ।
११४ ॥ कण्ट-
कारी । वासकः । इति मेदिनी ॥
बृहती ।
राहुमाता । इति विश्वः ॥ मुद्गपर्णी । इति
राजनिर्घण्टः ॥

**सिंहीलता**, स्त्री, (सिंह्याः लता ।) बृहती । इति

भावप्रकाशः ॥

**सिक**, सेचने । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०

सक०-सेट् ।) दन्त्यादिः । सिकता । इति
दुर्गादासः ॥ सौत्रधातुरयम् ॥

**सिकता**, स्त्री, (सिक सेचने + बाहुलकात् अतच् ।

सिकतिलः । वालुकायुक्तभूमिः ।
इति मेदिनी ॥
ते, १६९ ॥ वालुका । इति
राजनिर्घण्टः ॥

**सिकताः**, स्त्री, भूम्नि, (सिक + अतच् ।) वालुका ।

इति मेदिनी । ते, १६९ ॥ अमरश्च
। ३ । ३ । ७३ ॥
(यथा, महाभारते । २ । ७६ । १६
।

"भक्तसिक्थद्वयं प्राप्य पाकभाण्डादभक्षयम्
॥")

**सिक्थकं**, क्ली, (सिक्थमेव । स्वार्थे कन् ।)

मधूच्छिष्टम् । इत्यमरः । २ । ९ । १०७ ॥ (पुं,
भक्तपुलाकः । सिटी इति भाषा । यथा, --
"सिक्थकैरहितो मण्डः पेया सिक्थसमन्विता
यवागूबहुसिक्था स्याद्विलेपी विरलद्रवा ॥"
इति वैद्यकचक्रपाणिसंग्रहे ज्वराधिकारे ॥
यथा च बृहत्सं हितायाम् । २६ । ८ ।
"दन्तैर्नागा गोहयाद्यश्च लोम्ना
हेम्ना भूपाः सिक्थकेन द्विजाद्याः ।
तद्वद्देशा वर्षमासा दिशश्च
शेषद्रव्याण्यात्मरूपस्थितानि ॥")

**सिक्ष्यः**, पुं, स्फटिकः । इति केचित् ॥

**सिङ्घणं**, क्ली, नासिकामलम् । इति शब्दरत्ना-

वली ॥ सिक्नी इति भाषा ॥

**सिङ्घाणं**, क्ली, नासिकामलम् । इति शब्दरत्ना-

वली ॥

**सिङ्घाणकं**, क्ली, नासिकामलम् । इति शब्दारत्ना-

वली ॥ (यथा, वाभटे उत्तरस्थाने २९ अध्याये
।
"अजस्रं पिच्छिलं पीतं पक्वं सिङ्घाणकं घनम्
॥"

**सितकण्टा**, स्त्री, (सितः शुक्लः कण्टो यस्याः ।)

श्वेतकण्टकारी । इति राजनिर्घण्टः ॥

**सितकण्टारिका**, स्त्री, श्वेतकण्टकारी । इति

राजनिर्घण्टः ॥

**सितकण्ठः**, पुं, (सितः कण्ठो यस्य ।) दात्यूह-

पक्षी । इति शब्दरत्नावली । श्वेतकण्ठयुक्ते,
त्रि ॥

**सितकरः**, पुं, (सितः शुक्लः करो यस्य ।) कर्पूरः ।

इति राजनिर्घण्टः ॥ चन्द्रश्च ॥

**सितकर्णी**, स्त्री, (सितः कर्ण इव पुष्पमस्याः ।

ङीष् ।) वासकः । इति राजनिर्घण्टः ।
(सित-
पर्णी इति क्वचित् पाठः ॥ गुणादयोऽस्या
वासकशब्दे ज्ञातव्याः ॥)

**सितकुञ्जरः**, पुं, (सितः कुञ्जरो यस्य ।) इन्द्रः ।

(सितः शुक्लः कुञ्जरः । इन्द्रहस्ती । इति
केचित् ॥

**सितगुञ्जा**, स्त्री, सिता गुञ्जा ।) श्वेतगुञ्जा ।

इति राजनिर्घण्टः ॥

**सितचिह्नः**, पुं, (सितानि चिह्नानि यत्र ।) वालुका-

गडः । इति हारावली ॥ वेलिया मत्स्य इति
भाषा ॥

| | | |
|---|---|---|
| “सिकता वपन् सव्यसाचो राजानमनुगच्छति<br>असक्ताः सिकतास्तस्य यथा संप्रति भारत ।<br>असक्तं शरवर्षाणि तथा मोक्ष्यति शत्रुषु ॥”)<br><br>**सिकतामयं**, क्ली, (सिकतात्मकम् । मयट् ।)<br><br>वालुकामयतटम् । तत्पर्य्यायः । सैकतम् २ । इत्यमरः । १ । १० । ९ ॥ | | |

**सितच्छत्रं**, क्ली, (सितं छत्रम् ।) राजच्छत्रम् ।

इति भूरिप्रयोगः ॥

**सितच्छत्रा**, स्त्री, (सितं छत्रमिव पुष्पमस्याः ।)

शतपुष्पा । इत्यमरः । २ । ४ । १५२ ॥
(विवृति-
रस्याः शतपुष्पाशब्दे द्रष्टव्या ॥)

**सितच्छत्रितः**, पुं, (सितच्छत्रं जातमस्येति ।

इतच् ।) श्वेतच्छत्रयुक्तः । यथा, नैषधे ।
१ । १ ।
"निपीय यस्य क्षितिरक्षिणः कथां
तथाद्रियन्ते न बुधाः सुधामपि ।
नलः सितच्छत्रितकीर्त्तिमण्डलः
स राशिरासीन्महसां महोज्ज्वलः ॥"

**सितच्छदः**, पुं, (सितौ छदौ पक्षौ यस्य ।) हंसः ।

इति हेमचन्द्रः ॥

**सितच्छदा**, स्त्री, (सितश्छदो यस्याः ।) श्वेत-

दूर्व्वा । इति राजनिर्घण्टः ॥

**सितदर्भः**, पुं, (सितो दर्भः ।) श्वेतकुशः । इति

राजनिर्घण्टः ॥

**सितदीधितिः**, पुं, चन्द्रः । सिता शुक्ला दीधितिः

किरणो यस्य इति बहुव्रीहिसमासनिष्पन्नः ॥

**सितदीप्यः**, पुं, (सितं दीप्यं दौप्तिर्यस्य ।) श्वेत-

जीरकः । इति राजनिर्घण्ठः ॥

**सितदूर्व्वा**, स्त्री, (सिता दूर्व्वा ।) श्वेतदूर्व्वा ।

इति रत्नमाला ।

**सितद्रुः**, पुं, (सितः द्रुर्वृक्षो यस्य ।) मोरट-

विशेषः । ईति रत्नमाला ॥ (सितो द्रुरिति ।)
शुकवर्णवृक्षश्च ॥

**सितधातुः**, पुं, (सित + शुक्लो धातुः ।) कठिनी ।

इति राजनिर्घण्टः ॥ शुस्ववर्णधातुमात्रञ्च ॥

**सितपक्षः**, पुं, (सितौ पक्षौ यस्य ।) हंसः । इति

**सितपुष्पा**, स्त्री, (सितं पुष्पं यस्याः ।) मल्लिका ।

इति शब्दरत्नावली ॥

**सितपुष्पी**, स्त्री, (सितं पुष्पं यस्याः । ङीष् ।)

श्वेतापराजिता । इति राजनिर्घण्टः ॥
अस्याः
पर्य्यायो यथा, वैद्यकरत्नमालायाम् ।
"गवाक्ष्यश्वखुरी श्वेता
श्वेतभण्डापराजिता ।
द्विविधा सा सिता नीला गिरिकर्णी
गवादनी ॥"

**सितमरिचं**, क्ली, (सितं मरिचम् ।) श्वेतमरि-

चम् । तत्पर्य्यायः । सिताख्यम् २
सितवल्लीजम् ३
वालुकम् ४ बहुलम् ५ धवलम् ६
चन्द्रकम् ७ ।
अस्य गुणाः । कटुत्वम् । उष्णत्वम् ।
विषभूत-
दृष्टिरोगनाशित्वम् । अवृष्यत्वम् ।
युक्त्या रसा-
यनत्वञ्च । इति राजनिर्घण्टः ॥

**सितमाषः**, पुं, (सितो माषः ।) राजमाषः ।

इति हारावली ॥

**सितरञ्जनः**, पुं, (सितं रञ्जयतीति । रञ्ज + ल्युः
।)

पीतवर्णः । इति हेमचन्द्रः ॥

**सितरश्मिः**, पुं, चन्द्रः । सितः शुक्लो रश्मिः

किरणो यस्य सः ॥

**सितवर्षाभूः**, पुं, (सितो वर्षाभूः ।) पुनर्नवा ।

इति राजनिर्घण्टः ॥

**सितशायका**, स्त्री, (सिता शायका ।) श्वेतशर-

पुङ्खा । इति राजनिर्घण्टः ॥

**सितशिम्बिकः**, पुं, (सिता शिम्बिर्यस्य । कप् ।)

गोधूमः । इति हेमचन्द्रः ॥
शितिशिम्बिकोऽपि

**सितसिंही**, स्त्री, (सिता सिंहीव ।) श्वेतकण्ट-

कारी । इति राजनिर्घण्टः ॥

**सितसिन्धुः**, स्त्री, (सिता शुक्लजला सिन्धुः ।) गङ्गा
।

इति शब्दरत्नावली ॥

**सिता**, स्त्री, (सित + टाप् ।) शर्करा । इत्यमरः ।

२ । ९ । ४३ ॥ अस्या गुणाः ।
"खण्डन्तु सिकतारूपं सुश्वेतं शर्करा सिता
।
सिता सुमधुरा रुच्या वातपित्तास्रदाह-
हृत् ।
मूर्च्छाच्छर्द्दिज्वरान् हन्ति सुशीता शुक्रका-
रिणी ॥"
इति राजनिर्घण्टः ॥
(यथा, महानिर्व्वाणतन्त्रे । ९ । ७८ ।
"ततो दुग्धं सिताञ्चैव दत्त्वा पाकविधानतः ।
सुपचेत् संस्कृते वह्नौ सावधानेन सुव्रते ॥")
मल्लिका । इति शब्दरत्नावली ॥ श्वेतकण्ट-
कारी । वाकुची । विदारी । श्वेतदूर्व्वा ।
चन्द्रिका । कुटुम्बिनी । मद्यम् । पिङ्गा ।
त्राय-
माणा । तेजनी । इति राजनिर्घण्टः । पर्व्वत-
जातापराजिता । इति रत्नमाला ॥

**सितांशुः**, पुं, (सिता अंशवो यस्य ।) चन्द्रः ।

(यथा, नैषधे । १ । १२ ।
"सितांशुवर्णैर्वयति स्म तद्गुणै-
र्म्महासिवेम्नः सहकृत्त्वरी बहुम् ।
दिगङ्गनाङ्गाभरणं रणाङ्गने
यशः पटं तद्भटचातुरीतुरी ॥")
कर्पूरः । इति शुभ्रांशुशब्ददर्शनात् ॥

**सितांशुतैलं**, क्ली, (सितांशुजातं कर्पूरसम्भवं

तैलम् ।) कर्पूरतैलम् । इति राजनिर्घण्टः ॥

**सिताखण्डः**, पुं, (सितायाः खण्डो यत्र ।)

मधुजातशर्करा । तत्पर्य्यायः । खण्डकः २
सितजा ३ शर्करजा ४ माधवी ५ मधुशर्करा
६ माक्षीकशर्करा ७ । अस्य गुणाः । अति-

शब्दरत्नावली ॥ (सितः पक्षः ।) शुक्लपक्षः ।
यथा, बृहत्संहितायाम् । ६० । २० ।
"उदगयने सितपक्षे
शिशिरगभस्तौ च जीववर्गस्थे ॥")

**सितपर्णी**, स्त्री, (सितं पर्णमस्याः । ङीष् ।)
अर्कपुष्पिकावृक्षः । इति रत्नमाला ॥

**सितपाटलिका**, स्त्री, (सिता पाटलिका ।)
शुक्लपाटलावृक्षः । श्वेतपाडरि इति हिन्दी भाषा । तत्पर्य्यायः । सितकुम्भी २ फलेरुहा ३
सितामोघा ४ कुबेराक्षी ५ श्वेताह्वा ६ काष्ठ-
पाटला ७ धवलपाटली ८ । अस्या गुणाः ।
तिक्तत्त्वम् । गुरुत्वम् । उष्णत्वम् । वातदोष-
वमिहिक्काकफश्रमशोफनाशित्वञ्च । इति राज-
निर्घण्टः ॥

**सितपुङ्खा**, स्त्री, (मितः पुङ्खो यस्याः ।) श्वेतशर-
पुङ्खा । इति राजनिर्घण्टः ॥

**सितपुष्पं**, क्ली, (सितं पुष्पमस्य ।) कैवर्त्ती-
मुस्तकम् । इति जटाधरः ॥ तालव्यशकारादि-
रपि पाठः ॥

**सितपुष्पः**, पुं, (सितं पुष्पमस्य ।) तगरवृक्षः ।
इति शब्दरत्नावली ॥ श्वेतरोहितः । काशः ।
इति राजनिर्घण्टः ॥

पाठः ॥

**सितशिवं**, क्ली, (सितं शुक्लं शिवं मङ्गलजनकञ्च ।)
सैन्धवलवणम् । तस्य रूपान्तराणि । शित-
शिवम् । सितसिवम् । शीतशिवम् । शीत-
सिवम् । इत्यमरटीका । २ । ९ । ४२ ॥

**सितशिंशपा**, स्त्री, (सिता शिंशपा ।) श्वेत-
शिंशपावृक्षः । इति राजनिर्घण्टः ॥

**सितशूकः**, पुं, (सितः शूको यस्य ।) यवः । इत्य-
मरटीकायां भरतः ॥ (यवशब्देऽस्य विवरणं
ज्ञातव्यम् ॥)

**सितशूरणः**, पुं, (सितः शूरणः ।) वनशूरणः ।
इति राजनिर्घण्टः ॥

**सितसप्तिः**, पुं, (सिता सप्तयो घोटका यस्य ।)
अर्ज्जुनः । इति केचित् ॥ (यथा, किराते । १३ । १९
"स भवस्य भवक्षयैकहेतोः
सितसप्तेश्च विधास्यतोः सहार्थम् ।
रिपुराप पराभवाय मध्यं
प्रकृतिप्रत्यययोरिवानुबन्धः ॥" * ॥
सितः सप्तिः ।) श्वेताश्वश्च ॥

**सितसर्षपः**, पुं, (सितः सषपः ।) गौरसर्षपः ।
इति राजनिर्घण्टः ॥

**सितसारः**, पुं, (सितः सारो निर्य्यासो यस्य ।)
शालिञ्चशाकः । इति राजनिर्घण्टः ॥

**सितसारकः**, पुं, (सितसार एव । स्वार्थे कन् ।)
शालिञ्चशाकः । इति राजनिर्घण्टः ॥ (अस्य
पर्य्यायो यथा, वैद्यकरत्नमालायाम् ।
"शालिञ्चः सितसारश्च पत्तुरो लोहमारकः ॥)

मधुरत्वम् । चक्षुष्यत्वम् । छर्द्दिकुष्ठव्रणकफ-
श्वासहिक्कापित्तास्रदोषनाशित्वञ्च । इति राज-
निर्घण्टः ॥

**सिताग्रः**, पुं, (सितः अग्रो यस्य ।) कण्टकम् ।
इति हारावली ॥

**सिताङ्कः**, पुं, (सितः अङ्को यत्र ।) वालुका-
गडमत्स्यः । इति हारावली । १९० ॥ (सिताङ्ग
इति पाठः साधुः ॥

**सिताङ्गः**, पुं, (सितमङ्गं यस्य ।) श्वेतरोहितः ।
इति राजनिर्घण्टः ॥ (वालुकागडमत्स्यः । इति
हारावली । १९० ॥)

**सिताजाजी**, स्त्री, श्वेतजीरकः । इति राजनिर्घण्टः ॥
(गुणादयोऽस्याः श्वेतजीरकशब्दे ज्ञेयाः ॥)

**सितादिः**, पुं, (सितायाः आदिः कारणम् ।)
गुडः । इति राजनिर्घण्टः ॥

**सिताननः**, पुं, (सितमाननं यस्य ।) गरुडः ।
इति केचित् ॥ शुक्लमुखयुक्ते, त्रि ॥

**सितापाङ्गः**, पुं, (सितौ अपाङ्गौ यस्य ।) मयूरः ।
इति त्रिकाण्डशेषः ॥

**सिताब्जं**, क्ली, (सितमब्जम् ।) श्वेतकमलम् ।
इति राजनिर्घण्टः ॥ (यथा,
सरस्वतीध्याने ।
“कुचभरनमिताङ्गी सन्निसन्ना सिताब्जे
॥”)

**सिताभः**, पुं, (सिता शुक्ला आभा यस्य ।) कर्पूरः ।
इत्यमरटीकायां रायमुकुटः ॥

**सिताभा**, स्त्री, (सिता आभा यस्याः ।) तक्राह्वा ।
इति राजनिर्घण्टः ॥

**सिताभ्रः**, पुं, (सितं शुक्लमभ्रति प्राप्नोतीति । अभ्र
गतौ + अण् ।) कर्पूरः । इत्यमरः । २ ।
६ । १३० ॥
(अस्य पर्य्यायो यथा, --
“पुं सि क्लीवे च कर्पूरः सिताभ्रो
हिमवालुकः
घनसारश्चन्द्रसंज्ञो हिमनामापि स
स्मृतः ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे
भागे ॥)

**सिताभ्रकं**, क्ली, (सितं शुभ्रमभ्रति प्राप्नोतीति ।
अभ्र + ण्वुल् ।) कर्पूरम् । इति
रत्नमाला ॥

**सिताम्बरः**, पुं, (सितमम्बरं यस्य ।) श्वेतवस्त्र-
परिहितव्रती । इति हलायुधः ॥
शुक्लवस्त्र-
परिधायिनि, त्रि ॥

**सिताम्भोजं**, क्ली, (सितं अम्भोजम् ।) श्वेतपद्मम् ।
इत्यमरः । १ । ९ । ४१ ॥

**सितार्ज्जकः**, पुं, (सितमर्ज्जयतीति । अर्ज्ज +
ण्वुल् ।) श्वेततुलसी । श्वेताजवला
इति हिन्दी
भाषा । तत्पर्य्यायः । वैकुण्ठः २
वटपत्रः ३

**सितासितः**, पुं, (वर्णेन सितः वस्त्रेण असितः ।)
बलदेवः । इति हेमचन्द्रः ॥
शुक्रसहितशनिः ।
यथा । ज्योतिस्तत्त्वे ।
“सितासितौ चन्द्रमसो न कश्चित्
बुधः शशी सौम्यसितौ रवीन्दू ।
रवीन्दुभौमा रवितस्त्वमित्रा
मित्रारिशेषश्च समः प्रदिष्टः ॥”
शुक्लसहितकृष्णश्च ॥ (यथा, महाभारते
। ७ ।
१३० । २९ ।
“ते हया बह्वशोभन्त मिश्रिता वातरंहसः ।
सितासिता महाराज यथा व्योम्नि
वलाहकाः ॥”

**सिताह्वयः**, पुं, (सित आह्वयो यस्य ।) श्वेत-
शिग्रुः । श्वेतरोहितः । इति राजनिर्घण्टः
॥

**सितिः**, त्रि, शुक्लः । कृष्णः । इत्यमरटीकायां
रमानाथः ॥

**सितिकण्ठः**, पुं, (सितिः कृष्णः कण्ठो यस्य ।)
शितिकण्ठः । शिवः । इत्यमरटीकायां
सिति-
शब्दस्य दन्त्यादित्वदर्शनात् ॥

**सितिमा**, [न्] पुं, (सितस्य सितेर्वा भावः । इम-
निच् । शुक्लता । (यथा, माघे । १ ।
२५ !
“सितं सितिम्ना सुतरां मुनेर्वपु-
र्विसारिभिः सौधमिवाथ लम्भयन् ॥”)
कृष्णता । इति सितिशब्दादिमन्प्रत्ययेन
निष्पन्नः

**सितिवारः**, पुं, (सितिं वृणोतीति । वृ + अण्)
सुनिषण्णकः । इति भावप्रकाशः ॥

**सितिवासाः**, [स्] पुं, (सिति नीलं वासो यस्य ।)
बलदेवः । इति नीलाम्बरशब्ददर्शनात् ॥
(यथा,

**सितोपलं**, क्ली, (सितमुपलमिव ।) कठिनी । इति
त्रिकाण्डशेषः ॥

**सितोपलः**, पुं, (सितः उपलः ।) स्फटिकः । इति
राजनिर्घण्टः ॥

**सितोपला**, स्त्री, (सित उपल इव आकृतिर्यस्याः
स्त्रियां टाप् ।) शर्करा । इति हेमचन्द्रः ॥
(यथा, --
“सितासितोपला चैव मत्स्यण्डीशर्करा
स्मृता”
इति गारुडे २०८ अध्यायः ॥
अस्या गुणा यथा, --
“सितोपला सरा लघ्वी वातपित्तहरी हिमा ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे द्वितीये भागे
॥)

**सिद्धं**, क्ली, (सिध + क्तः ।) सैन्धवलवणम् । इति
राजनिर्घण्टः ॥

**सिद्धः**, पुं, (सिध + क्तः) देवयोनिविशेषः ।
इत्यमरः । १ । १ । ११ ॥ स तु
अणिमादिगुणो-
पेतो विश्वावसुप्रभृतिः । इति भरतः ॥ (यथा,
कुमारे । १ । ५ ।
“उद्वेजिता वृष्टिभिराश्रयन्ते
शृङ्गाणि यस्यातपवन्ति सिद्धाः ॥”)
व्यासादिः ।
विस्कम्भादिसप्तविंशतियोगान्तर्गतै-
कविंशयोगः । इति मेदिनी ॥ तत्र जातफलम्
।
“जितेन्द्रियः सर्व्वकलानिधानो
गौरोऽतिशूरो मधुरो विनीतः ।
सत्योपपन्नः कृतभूरिभोगो
यस्य प्रसूतौ किल सिद्धयोगः ॥”
इति कोष्ठीप्रदीपः ॥
व्यवहारः । इति शब्दरत्नावली ॥ कृष्ण-
धुस्तूरः । गुडः । इति राजनिर्घण्टः ॥

**सिद्धः**, त्रि, (सिध + क्तः ।) प्रसिद्धः । (यथा,
भागवते । १० । १८ । १६ ।

कुठेरकः ४ जम्बीरः ५ गन्धवहलः ६ सुमुखः ७
कटुपत्रकः ८ । अस्य गुणाः । कटुत्वम् । उष्ण-
त्वम् । कफवातनेत्रामयनाशित्वम् । रुच्यत्वम् ।
सुखप्रसवकारकत्वञ्च । इति राजनिर्घण्टः ॥

**सितालकः**, पुं, (आलयति भूषयतीति । अल +
णिच् + ण्वुल् । सितः आलकः ।) श्वेतमन्दा-
रकः । इति राजनिर्घण्टः ॥

**सितालता**, स्त्री, (सिता लता ।) श्वेतदूर्व्वा ।
इति रत्नमाला ॥ (श्वेतदूर्व्वाशब्देऽस्या विषयो
ज्ञातव्यः ॥)

**सितालिकटभी**, स्त्री, श्वेतकिणिहीवृक्षः । इति
राजनिर्घण्टः ॥

**सितावरः**, पुं, (सितमावृणोतीति । आ + वृ
+ अच् ।) शाकविशेषः । सुसुनी इति भाषा ।
तत्पर्य्यायः । सूच्याह्वः २ सूचीपत्रकः ३ श्रीवा-
रकः ४ शिखीः ५ वभ्रुः ६ स्वस्तिकः ७ सुनि-
षण्णकः ८ कुरुटः ९ कुकुटः १० सूचीदलः ११
श्वेतावरः १२ मेधाकृत् १३ ग्राहकः १४ । अस्य
गुणाः । संग्राहित्वम् । कषायत्वम् । उष्णत्वम् ।
त्रिदोषनाशित्वम् । मेधारुचिप्रदत्वम् । दाह-
ज्वरहारित्वम् । रसायनत्वञ्च । इति राज-
निघण्टः ॥ निद्राकारित्वम् । इति लोकप्रसिद्धम् ॥
तस्य लक्षणं यथा, --
"चाङ्गेरीसदृशः पत्रैश्चतुर्द्दल इतीरितः ।
माघे । १ । ६ ।
"पिशङ्गमौञ्जीयुजमर्ज्जूनच्छविं
वसानमेनाजिनमञ्जनद्युति ।
सुवर्णसूत्राकलिताधराम्बरां
विडम्बयन्तं सितिवाससस्तनुम् ॥")

**सितेक्षुः**, पुं, (सितः इक्षुः ।) श्वेतेक्षुः । इति
राजनिर्घण्टः ॥

**सितेतरः**, पुं, (सितादितरः ।) श्यामशालिः ।
कुलत्थः । इति राजनिर्घण्टः ॥
शुक्लेतरवर्णश्च ॥
(यथा, कुमारे । ३८ ।
"नीविमतिक्रम्य सितेतरस्य
तन्मेखलामध्यमणेरिवार्च्चिः ॥"
सितश्च इतरश्च इति विग्रहे । कृष्णशुक्लौ ।
अत्र द्विवचनप्रयोगः स्यात् । यथा, भागवते ।
१० । ४१ । ४१ ।
"नानालक्षणवेषाभ्यां कृष्णरामौ विरेजतुः ।
स्वलङ्कृतौ बालगजौ पर्व्वणीव सितेरतौ ॥")

**सितेतरगतिः**, पुं, (सितेतरा कृष्णा गतिरस्य ।)
अग्निः । इति हलायुधः ॥

**सितोदरः**, पुं, (सितमुदरं यस्य ।) कुबेरः । इति
हेमचन्द्रः ॥ शुक्लकुक्षियुक्ते, त्रि ॥ (सितमुदर-
मिति ।) शुक्लकुक्षौ, क्ली ॥

**सितोद्भवं**, क्ली, (सित उद्भवो यस्य ।) श्वेत-
चन्दनम् । इति केचित् ॥ (सिताया उद्भवो
यस्य ।) शर्कराजाते, त्रि ॥

"एवं तौ लोकसिद्धाभिः क्रीडाभिश्चेरतुर्वने ॥")
नित्यः । निष्पन्नः । इति शब्दरत्नावली ॥ (यथा,
रामायणे । २ । ९८ । ८ ।
"सिद्धार्थः खलु सौमित्रिर्य्यश्चन्द्रविमलोपमम् ।
मुखं पश्यति रामस्य राजीवाक्षं महाद्युतिम् ॥")
मुक्तः । इति हेमचन्द्रः ॥ (यथा, भागवते । ६ ।
१२ । १९ ।
"अहो दानव सिद्धोऽसि यस्य ते मतिरीदृशी ॥")
पक्वम् । यथा, सुमन्तुः ।
"पर्य्युसितं पुनःसिद्धमभोज्यमन्यत्रहिरण्यो-
दकस्पर्शात् ।" इति श्राद्धतत्त्वम् ॥ मन्त्रसिद्धि-
विशिष्टः । यथा, --
अथ मन्त्रसिद्धेरुपायाः । गौतमीये ।
"सम्यगनुष्ठितो मन्त्रो यदि सिद्धिर्न जायते ।
पुनस्तेनैव कर्त्तव्यं ततः सिद्धो भवेद्ध्रु वम् ॥
पुनरनुष्ठितो मन्त्रो यदि सिद्धिर्न जायते ।
पुनस्तेनैव कर्त्तव्यं ततः सिद्धो न संशयः ॥
पुनः सोऽनुष्ठितो मन्त्रो यदि सिद्धिर्न जायते ।
उपायास्तत्र कर्त्तव्याः सप्त शङ्करभाषिताः ।
भ्रामणं रोधनं वश्यं पीडनं पोषशोषणम् ।
दहनान्तं क्रमात् कुर्य्यात् ततः सिद्धो भवेन्मनुः ॥

| | | |
|---|---|---|
| शाको जलान्विते देशे चतुष्पत्रीति चोच्यते ॥”<br>इति भावप्रकाशः ॥<br>**सितावरी**, स्त्री, (सितमावृणोतीति । आ + वृ + अच् । ङीष् ।) वाकुची । इति राज-निर्घण्टः ॥ | | |

भ्रामणं वायुवीजेन यथानुक्रमयोगतः ।
तम्मन्त्रं यन्त्र आलिख्य
सिद्धकर्पूरकुङ्कुमैः ।
उशीरचन्दनाभ्यान्तु मन्त्रं संग्रथितं
लिखेत् ।
क्षीराज्यमधुतोयानां मध्ये तल्लिखितं
भवेत् ॥
पूजनाज्जपनाद्धोमात् भ्रामितः सिद्धिदो
भवेत्
भ्रमितो यदि न सिद्धः स्याद्रोधनं तस्य
कारयेत्
सारस्वतेन बीजेन संपुटीकृत्य संजपेत् ।
एवं रुद्धे भवेत् सिद्धो न चेदेतद्वशीकुरु ॥
अलक्तचन्दनं कुष्ठं हरिद्रा मादनं शिला ।
एतैस्तु मन्त्रमालिख्य भूर्ज्जपत्रे सुशोभने
।
धार्य्यकण्टे भवेत् सिद्धः पीडनं वास्य
कारयेत् ॥
अधरोत्तरयोगेन पदानि परिजप्य वै ।
ध्यायेच्च देवतां तद्वत्
अधरोत्तररूपिणीम् ॥
विद्यामादित्यदुग्धे न लिखित्वाक्रम्य
चाङ्घ्रिणा
तथाभूतेन मन्त्रेण होमः कार्य्यो दिने दिने
॥
पीडितो लज्जयाविष्टः सिद्धः स्यादथ
पोषयेत् ।
बालायान्त्रितयं बीजं आद्यन्ते तस्य
योजयेत् ॥
गोक्षीरमधुनालिख्य विद्यां पाणौ
विभावयेत् ।
पोष्रितोऽयं भवेत् सिद्धो न चेत् कुर्व्वीत
शोषणम् ॥
द्वाभ्यान्तु वायुबीजाभ्यां मन्त्रं
कुर्य्याद्विदर्भिणम्
एषा विद्या गले धार्य्या लिखित्वा
वरभस्मना ॥
शोषितोऽपि न सिद्धः स्यात्
दहनीयोऽग्नि-

**सिद्धकामेश्वरी**, स्त्री, (सिद्धा कामेश्वरी ।) कामा-
ख्यायाः पञ्चमूर्त्यन्तर्गतप्रथममूर्त्तिः ।
तस्या
रूपं यथा, कालिकापुराणे ६१ अध्याये
।
“रविशशियुतकर्णा कुङ्कुमापीतवर्णा
मणिकनकविचित्रा लोलकर्णा त्रिनेत्रा ।
अभयवरदहस्ता साक्षसूत्रप्रशस्ता
प्रणतसुरवरेशा सिद्धकामेश्वरी सा ॥
अरुणकमलसंस्था रक्तपद्मासनाख्या
नवतरुणशरीरा मुक्तकेशी सुहारा ।
शवहृदि पृथुतुङ्गस्तन्ययुग्मा मनोज्ञा
शिशुरविसमवस्त्रा सिद्धकामेश्वरी सा ॥
विपुलविभवदात्री स्मेरवक्त्रा सुकेशी
दलितकरकदन्ता सासिचन्द्रावनम्रा ।
मनसिजदृशदिस्था योनिमुद्रालसन्ती
पवनचलनशक्ता संश्रुतस्थानभागा ॥”

**सिद्धगङ्गा**, स्त्री, (सिद्धा गङ्गा । ‘क्वचित् सिद्धजना-
कीर्णां पश्य मन्दाकिनीं नदीम् ।’ रामा०
२ ।
९५ । ९ । इत्युक्तेः सिद्धसेविता गङ्गा
इति वा ।)
मन्दाकिनी । इति जटाधरः ॥

**सिद्धजलं**, क्ली, (सिद्धं पक्वं जलं यत्र ।) काञ्जि-
कम् । इति हारावली ॥ (सिद्धं
जलमिति ।)
पक्ववारि च ॥

**सिद्धदेवः**, पुं, (सिद्धो देवः ।) शिवः । इति शब्द-
रत्नावली ॥

**सिद्धधातुः**, पुं, (सिद्धो धातुः ।) पारदः । इति
त्रिकाण्डशेषः ॥

**सिद्धपीठः**, पुं, (सिद्धः पीठः ।) सिद्धस्थानम् ।
यथा, --
“जातो लक्षवलिर्यत्र होमो वा
कोटिसंख्यकः ।
अनेन योगिनः सिद्धा मुनिन्द्राश्च सुरास्तथा ।
शतलक्षजपेनैव मन्त्रसिद्धिर्भवेत् सताम् ॥”

**सिद्धमोदकः**, पुं, (सिद्धान् मोदयतीति । मुद +
णिच् + ण्वुल् ।) तवराजोद्भवखण्डः । इति
राजनिर्घण्टः ॥

**सिद्धयोगिनी**, स्त्री, (सिद्धा योगिनी ।) योगिनी-
विशेषः । इत्यपराजितास्तोत्रम् ॥ (यथा,
कथासरित्सागरे । ३७ । १६१ ।
“इत्युक्त्वैव गतायाञ्च तस्यां सा सिद्धयोगिनी ।
तत्प्रतीघातहेतोर्मामवोचद्बन्धमोचिनी ॥”)

**सिद्धरसः**, पुं, (सिद्धो रसः ।) पारदः । रससिद्धः ।
इत्यजयपालः ॥

**सिद्धरसः**, त्रि, (सिद्धो रसो यस्य ।) धातुप्रभृतिः ।
इति मेदिनी ॥

**सिद्धविद्या**, स्त्री, (सिद्धा विद्या ।) महाविद्या-
विशेषः । यथा, --
“काली तारा महाविद्या षोडशी भुवनेश्वरी ।
भैरवी छिन्नमस्ता च विद्या धूमावती तथा ॥
वगलामुखी सिद्धविद्या मातङ्गी कमलात्मिका
एता दश महाविद्याः सिद्धविद्याः प्रकीर्त्तिताः”
इति तन्त्रसारः ॥

**सिद्धसलिलं**, क्ली, (सिद्धं पक्वं सलिलं यत्र ।)
काञ्जिकम् । इति त्रिकाण्डशेषः ॥

**सिद्धसाधनं**, क्ली, (सिद्धस्य साधनम् ।) सिद्धस्य
वस्तुनः साधनम् ।
साध्यवत्त्वानिश्चयसत्त्वेऽप्यनु-
मानम् । यथा, --
“अतएव न स्वरूपासिद्धिः सिद्धसाधनं वा ।”
इति सिद्धान्तलक्षणे जगदीशः ॥

**सिद्धसाधनः**, पुं, (सिद्धानां साधनमस्मादिति ।)
गौरसर्षपः । इति राजनिर्घण्टः ॥

**सिद्धसाध्यः**, पुं, (सिद्धात् साध्यः ।) मन्त्रविशेषः ।
यथा, --

बीजतः ।
आग्नेयेन तु बीजेन मन्त्रस्यैकैकमक्षरम् ॥
आद्यन्तमध ऊर्द्ध्वञ्च योजयेद्वाहकर्म्मणि ।
ब्रह्मवृक्षस्य तैलेन मन्त्रमालिख्य धारयेत्
॥
कण्ठदेशे ततो मन्त्रः सिद्धः
स्याच्छङ्करोदितम् ।
इत्येतत् कथितं सम्यक् केवलं तव
भक्तितः ॥
एकेनेव कृतार्थः स्याद्बहुभिः किमु सुव्रते
॥”
इति तन्त्रसारः ॥ * ॥
सिद्धिविशिष्टः । स च चतुस्त्रिंशद्विधः ।
यथा, --
“चतुस्त्रिंशद्विधः सिद्धः
सर्व्वकर्म्मोपकारकः ।
तमुपैति स्वयं सिद्धं भक्तस्तं नैव
वाञ्छति ॥
द्वात्रिंशद्विधं सिद्धं सर्व्वसाधनकारणम् ।
मन्मुखात् श्रूयतां नन्द सिद्धमन्त्रं गृहाण
च ॥
अणिमा लघिमा प्राप्तिः प्राकाम्य महिमा
तथा
ईशित्वञ्च वशित्वञ्च तथा कामावसायिता
॥
दूरश्रवणमेवेति परकायप्रवेशनम् ।
मनोवायित्वमेवेति सर्व्वज्ञत्वमभीप्सितम्
॥
वह्निस्तम्भं जलस्तम्भं चिरजीवित्वमेव
वा ।
वायुस्तम्भं क्षुत्पिपासानिद्रास्तम्भनमेव
च ॥
कायव्यूहञ्च वाक्सिद्धं
मृतानयनमीप्सितम् ।
सृष्टीनां कारणञ्चैव प्राणाकर्षणमेव च ॥
प्राणानाञ्च प्रदानञ्च लोभादीनाञ्च
स्तम्भनम् ।
इन्द्रियाणां स्तम्भनञ्च बुद्धिस्तम्भनमेव
च ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । ७८
। २०-२९
महाविद्याजपः कोटिः सिद्धपीठः
प्रकीर्त्तितः ॥”
इति तन्त्रम् ॥

**सिद्धपुरं**, क्ली, (सिद्धं पुरम् ।) भूगोलस्याधो-
देशविशेषः । यथा, --
“लङ्का कुमध्ये यमकोटिरस्याः
प्राक्पश्चिमे रोमकपत्तनञ्च ।
अधस्ततः सिद्धपुरं सुमेरुः
सौम्येऽथ याम्ये वडवानलश्च ॥
कुवृत्तपादान्तरितानि तानि
स्थानानि षड् गोलविदो वदन्ति ॥”
इति सिद्धान्तशिरोमणिः ॥

**सिद्धपुष्पः**, पुं, (सिद्धप्रियं यन्त्रसिद्धं वा पुष्पमस्य)
करवीरवृक्षः । इति राजनिर्घण्टः ॥

**सिद्धप्रयोजनः**, पुं, (सिद्धानां प्रयोजनं यत्र ।)
गौरसर्षपः । इति राजनिर्घण्टः ॥

**सिद्धमन्त्रः**, पुं, (सिद्धो मन्त्रः ।) सिद्धप्राप्तमन्त्रः ।
यथा, ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ।
७८ । २१ ;
२७ -- २८ ।
“द्वात्रिंशद्विधं सिद्धं सर्व्वसाधनकारणम्
।
मन्मुखात् श्रूयतां नन्द सिद्धमन्त्रं गृहाण
च ॥”
“ओम् सर्व्वेश्वराय सर्व्वविघ्नविनाशिने
मधुसूद-
नाय स्वाहेत्येवं मन्त्रश्च सर्व्वेषां
कल्पपादपः ।
सामवेदे च कथितः सिद्धानां
सर्व्वसिद्धिदः ॥
“सिद्धसिद्धो यथोक्तेन द्विगुणात् सिद्धसाध्यकः
।
सिद्धसुसिद्धोऽर्द्धजपात् सिद्धारिर्हन्ति
बान्धवान् ॥”
इति तन्त्रसारः ॥

**सिद्धसिद्धः**, पु, (सिद्धात् सिद्धः ।) मन्त्रविशेषः ।
यथा, --
“सिद्धसिद्धो यथोक्तेन द्विगुणात् सिद्धसाध्यकः
।
सिद्धसुसिद्धोऽर्द्धजपात् सिद्धारिर्हन्तिबान्धवान्
॥”
इति तन्त्रसारः ॥

**सिद्धसिन्धुः**, स्त्री, (सिद्धसेविता सिन्धुः ।) गङ्गा ।
इति त्रिकाण्डशेषः ॥

**सिद्धसुसिद्धः**, पुं, (सिद्धात् सुसिद्धः ।) मन्त्र-
विशेषः । अस्य प्रमाणं सिद्धसाध्यशब्दे
द्रष्टव्यम् ।

**सिद्धसेनः**, पुं, (सिद्धा सेना यस्य ।) कार्त्तिकेयः ।
इति शब्दरत्नावली ॥

**सिद्धसेवितः**, पुं, (सिद्धैः सेवितः ।) वटुक-
भैरवः । इति तस्याष्टोत्तरशतनामस्तोत्रम् ॥
सिद्धजनोपासिते, त्रि ॥

**सिद्धा**, स्त्री, (सिध + क्तः । टाप् ।) ऋद्धिः । इति
राजनिर्घण्टः ॥ योगिनीविशेषः । यथा,
जातकं-
दीपिकायाम् ।

| | | |
|---|---|---|
| **सिद्धकः**, पुं, (सिद्ध इव । इवार्थे कन् ।) सिन्धु-<br>वारः । शालः । इति राजनिर्घण्टः ॥<br>(यथा,<br>सुश्रुते । ५ । ३ ।<br>“धवाश्वकर्णासनपारिभद्रां<br>सपाटलाः सिद्धकमोक्षकौ च ॥”) | | |

"मङ्गला पिङ्गला धन्या भ्रामरी भद्रिका तथा ।
उल्का सिद्धा सङ्कटा च योगिन्योऽष्टौ प्रकी-
र्त्तिताः ॥"

**सिद्धान्तः**, पुं, (सिद्धः अन्तो यस्मात् ।) पूर्व्व-

पक्षं निरस्य सिद्धपक्षस्थापनम् । इति भरतः ॥
(यथा, महाभारते । १ । ७० । ४३ ।
"स्थापनाक्षेपसिद्धान्तपरमार्थज्ञतां गतैः ॥")
तत्पर्य्यायः । राद्धान्तः २ । इत्यमरः । १ । ५ ।
४ ॥
नवविधज्योतिर्ग्रन्याः । यथा । ब्रह्मसिद्धान्तः १
सूर्य्यसिद्धान्तः २ सोमसिद्धान्तः ३ बृहस्पति-
सिद्धान्तः ४ गर्गसिद्धान्तः ५ नारदसिद्धान्तः ६
परागरसिद्धान्तः ७ पुलस्त्यसिद्धान्तः ८ वशिष्ठ-
सिद्धान्तश्च ९ ॥ तन्त्राधिकरणाभ्यु
पगमसंस्थितिः
सिद्धान्तः । स च चतुर्विधः । सर्व्वतन्त्रप्रति-
तन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात्
सर्व्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्व्वतन्त्र-
सिद्धान्तः ॥ १ ॥ समानतन्त्रसिद्धः
परतन्त्रासिद्धः
प्रतितन्त्रसिद्धान्तः ॥ २ ॥
यत्सिद्धावन्यप्रकरणसिद्धिः
सोऽधिकरणसिद्धान्तः ॥ ३ ॥ अपरीक्षिताभ्यु प-
गमात् तद्विशेषपरीक्षणमभ्यु पगमसिद्धान्तः ॥ ४
॥
इति गोतमसूत्रम् ॥ (तथास्य विवृतिर्यथा, --
"अथ सिद्धान्तः । सिद्धान्तो नाम यः परीक्षकै-
र्बहुविधं परीक्ष्य हेतुभिः साधयित्वा स्थाप्यते
निर्णयः स सिद्धान्तः । स चोक्तश्चतुर्विधः ।
सर्व्व-
तन्त्रसिद्धान्तः, प्रतितन्त्रसिद्धान्तः, अधिकरण-
सिद्धान्तः, अभ्युपगमसिद्धान्त इति ।
तत्र सर्व्वतन्त्रसिद्धान्तो नाम सन्ति निदानानि,
सन्ति व्याधयः, सन्ति सिद्ध्युपायाः
साध्यानामिति
प्रतितन्त्रसिद्धान्तो नाम तस्मिंस्तस्मिंस्तन्त्रे
तत्तत्
प्रसिद्धं यथान्यत्राष्टौ रसाः षडन्यत्र । पञ्चेन्द्रि-
याणि यथान्यत्र षडिन्द्रियाणि । वाताधिकृताः

**सिद्धापगा**, स्त्री, सिद्धसेविता आपगा ।) गङ्गा ।

इति हेमचन्द्रः ॥

**सिद्धायिका**, स्त्री, चतुर्व्विंशतिबुद्धशासनदेव-

तान्तर्यतदेवीविशेषः । इति हेमचन्द्रः ॥

**सिद्धारिः**, पुं, मन्त्रविशेषः । एतत्प्रमाणं सिद्ध-

साध्यशब्दे द्रष्टव्यम् ॥

**सिद्धार्थः**, पुं, (सिद्धोऽर्थो यस्य ।) वृत्तार्हत्पिता ।

इति हेमचन्द्रः ॥ शाक्यसिंहः । इति मेदिनी
॥
(सिद्धोऽर्थो यस्मात् ।) श्वेतसर्षपः ।
इत्यमरः ।
२ । ९ । १८ ॥ (यथा, भागवते । ४ । ९ ।
५८ ।
"ध्रुवाय पथि दृष्टाय तुत्र तत्र पुरस्त्रियः ।
सिद्धार्थाक्षतदध्यम्बुपूर्व्वापुष्पफलानिच ।
उपजह्रुः प्रयुञ्जाना व्यात्सल्यादाशिषः
सतीः ॥")
अस्य पर्य्यायगुणाः गौरसर्षपशब्दे द्रष्टव्याः
॥
वटीवृक्षः । इति राजनिर्घण्टः ॥ प्रसिद्धार्थः
।
यथा, --
"सिद्धार्थं सिद्धसम्बन्धं श्रेतुं श्रोता प्रवर्त्तते
।
ग्रन्थादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः
॥"
इति व्याकरणटीका ॥

**सिद्धार्था**, स्त्री, (सिद्धोऽर्थो यस्याः ।) चतुर्थ-

जिनमाता । इति हेमचन्द्रः ॥

**सिद्धिः**, स्त्री, (सिध + क्तिन् ।) दुर्गा । यथा, --

साधनात् सिद्धिरित्युक्ता साधका वाथ
ईश्वरी ॥"
इति देवीपुराणे ४५ अध्यायः ॥
ऋद्धिनामौषधम् । इत्यमरः । २ । ४ ।
११२ ॥

वाक्सिद्धिः कल्पवृक्षत्वं
स्रष्टुंसंहर्त्तुमीशता ।
अमरत्वञ्च सर्व्वाङ्गं सिद्धयोऽष्टादश
स्मृताः ॥")
भावनासिद्धिर्यथा, --
"तीर्थे कान्तेऽभीष्टदेवे गुरौ मन्त्रे
भवौषधे ।
आस्था च यादृशी यासां
सिद्धिस्तासाञ्च
तादृशी ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे
३९ अध्यायः ॥
ज्ञानात् सिद्धिर्यथा, --
"तस्मात् त्वमपि भूपाल देहि
न्यायार्ज्जितं
धनम् ।
दानात् ज्ञानं ततः प्राप्य ज्ञानात्
सिद्धिमवा-
प्स्यसि ॥"
इति वह्निपुराणे
शिवेरुपाख्याननामाध्यायः ॥

**सिद्धिदः**, पुं, (सिद्धिं ददातीति । दा + कः ।)

वटुकभैरवः । इति तस्य स्तोत्रम् ॥
सिद्धिदातरि,
त्रि । (यथा, देवीभागवते । ६ । २ ।
५१ ।
"तं कुन्ती वचनं प्राह मम
मन्त्रोऽस्ति कामदः
दत्तो दुर्व्वाससा पूर्व्वं सिद्धिदः
सर्व्वथा प्रभो ॥")
यथा च ।
"मधुमासे तु संप्राप्ते शुक्लपक्षे
चतुर्द्दशी ।
प्रोक्ता मदनभञ्जीति सिद्धिदा तु
महोत्सवे ॥"
इति तिथ्यादितत्त्वम् ॥

**सिद्धियोगः**, पुं, (सिद्धेर्योगो यत्र ।) तिथिवार-

सर्व्वविकारा यथान्यत्र वातादिकृता भूतकृताश्च प्रसिद्धाः ।

अधिकरणसिद्धान्तो नाम यस्मिन्नधिकरणे संस्तूयमाने सिद्धान्यन्यान्यपि अधिकरणानि भवन्ति । न मुक्तः कर्म्मानुबन्धिकं कुरुते निस्पृ-हत्वादिति प्रस्तुते सिद्धाः कर्म्मफलमोक्षपुरुष-प्रेत्यभावा भवन्ति ।

अभ्युपगमसिद्धान्तः । अभ्युपगमसिद्धान्तो नाम यमर्थमसिद्धमपरीक्षितमनुपदिष्टमहेतुकं वा वादकालेऽभ्यु पगच्छन्ति भिषजः । तद्यथा द्रव्यं न प्रधानमिति कृत्वा वक्ष्यामः । गुणाः प्रधाना इति कृत्वा वक्ष्यामः । इत्येवमादिश्चतुर्व्विधः सिद्धान्तः ।” इति चरके विमानस्थाने ८ अध्यायः ॥)

**सिद्धान्ताचारः**, पुं, (सिद्धोऽन्तो यस्य । तादृश आचारः ।) तान्त्रिकाचारविशेषः । यथा, --
“आत्मानं देवतां मत्वा यजेद्देवीञ्च मानसैः ।
सदा शुद्धः सदा शान्तः सिद्धान्ताचार उच्यते ॥”
इत्याचारभेदतन्त्रम् ॥

**सिद्धान्ती**, [न्] पुं, (सिद्धान्तोऽस्यास्तीति । इन् ।) मीमांसकः । इति भूरिप्रयोगः ॥

योगविशेषः । निष्पत्तिः । यथा, मनुः । २ । ९७ ।
“वेदास्त्यागश्च यज्ञाश्च नियमाश्च तपांसि च ।
न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित् ॥”)
पादुका । अन्तर्द्धिः । वृद्धिः । इति मेदिनी ॥
मोक्षः । इति हेमचन्द्रः ॥ (यथा, मनुः । १२ । ११ ।
“कामक्रोधौ तु संयम्य ततः सिद्धिं नियच्छति ॥”)
सम्पत्तिः । इति धरणिः ॥ बुद्धिः । इति शब्द-रत्नावली ॥ * ॥ अष्टसिद्धिनामलक्षणानि यथा,
“अणिमा महिमा चैव लघिमा प्राप्तिरेव च ।
प्राकाम्यञ्च तथेशित्वं वशित्वञ्च तथापरम् ॥
यत्र कामावसायित्वं गुणानेतानथैश्वरान् ।
प्राप्नोत्यष्टौ नरव्याघ्र परनिर्व्वाणसूचकान् ॥
सूक्ष्मात् सूक्ष्मतरोऽणीयान् शीघ्रत्वाल्लघिमा गुणः ।
महिंमाशेषपूज्यत्वात् प्राप्तिर्नाप्राप्यमस्य यत् ॥
प्राकाम्यमस्य व्यापित्वात् ईशित्वं चेश्वरो यतः ।
वशित्वात् वशिता नाम योगिणः सप्तमो गुणः ॥
यत्रेच्छास्थानमप्युक्तं यत्र कामावसायिता ।
ऐश्वर्य्यं कारणैरेभिर्योगिनः प्रोक्तमष्टधा ॥”
इति मार्कण्डेये दत्तात्रेयालकसंवादे योगवल्लभ-नामाध्यायः ॥ * ॥ (अष्टादशसिद्धिनामानि यथा, ब्रह्मवैवर्त्ते । १ । ६ । १८ -- १९ ।
“अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा ।
ईशित्वञ्च वशित्वञ्च सर्व्वकामावसायिता ॥
सर्व्वज्ञदूरश्रवणं परकायप्रवेशनम् ।

घटितशुभयोगविशेषः । यथा, --
“शुक्रे नन्दा बुधे भद्रा शनौ रिक्ता कुजे जया
गुरौ पूर्णा च संयुक्ता सिद्धियोगः प्रकीर्त्तितः ॥
इति ज्योतिःसागरः ॥

**सिद्धियोगिनी**, स्त्री, (सिद्धिप्रिया योगिनी ।) योगिनीभेदः । यथा, --
“प्रणवाद्याश्च या विद्याः शूद्रादौ न समीरिताः
अस्याञ्चैव विशेषो यत् योषिच्चेत् समुपासयेत् ॥
डाकिनी सा भवत्येव डाकिनीभिः प्रजायते ।
पतिहीना पुत्त्रहीना यथा स्यात् सिद्धियोगिनी”
इति तन्त्रसारः ॥ * ॥
दक्षस्य पञ्चाशत् कन्याः । तथा, --
“सती ज्योतिः स्मृतिः स्वाहा ह्यनसूया स्वधा तथा ।
प्रीतिः क्षमा च संभूतिः सन्नतिश्च अरुन्धती ॥
कीर्त्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः
बुद्धिर्लज्जा वपुःशान्तिस्तुष्टिः सिद्धिस्तथा रतिः ॥
अरुन्धती वसुर्यामी लम्बा भानुर्मरुन्धती ।
सङ्कल्पा च मुहूर्त्ता च साध्या विश्वा च नामतः
अदितिश्च दितिश्चैव दनुः कालादनायुषा ।
सिंहिका सुरसा कद्रुर्विनता सुरभिः श्वसा ॥
क्रोधा इरा च प्राधा च दक्षकन्याः प्रकीर्त्तिताः
पञ्चाशत् सिद्धियोगिन्यः सर्व्वलोकस्य मातरः ॥”
इति वह्निपुराणे गणभेदनामाध्यायः ॥

**सिद्धिली**, स्त्री, (सिद्धिं लातीति । ला + कः ।

ङीष् ।) क्षुद्रपिपीलिका । इति

केचित् ॥

**सिद्धिस्थानं**, क्ली, (सिद्धेः स्थानम् ।) पुण्यस्थान-

विशेषः । यथा, --

“अतः परं प्रवक्ष्यामि

सिद्धिस्थानानि यानि तु

यस्मिन्नाराधिता देवी क्षिप्रं भवति सिद्धिदा ॥
तुङ्गारं शतशृङ्गञ्च त्रिकूटं पर्व्वतं तथा ।
विन्ध्या गङ्गा सरिद्यत्र रेवातीरमथापि वा ॥
पयोष्णी असुराख्या तु अथवा मण्डलेश्वरे ।
शङ्करेश्वररामेशे अथवा अमरेश्वरे ॥
वेत्रवत्यास्तटे रम्ये हरिश्चन्द्रे तथा प्रिये ।
सरस्वतीतटे पुण्ये सुगन्धायतनेऽपि वा ।
स्थानेष्वेषु जपं कुर्य्यात् नन्दाहे कृतमानसः ।
भैरवं शूलभेदञ्च चण्डीशं त्रिपुरान्तकम् ॥
अष्टचक्रं चक्रोच्छासं कपालाक्षाग्रनामकम्।
अजाविकं खरोष्ट्राख्यं स्थानान्येतानि वर्जयेत् ॥”
इति देवीपुराणे कुण्डप्रवेशनामाध्यायः ॥

**सिद्धेश्वरी**, स्त्री, (सिद्धा ईश्वरी ।) देवीविशेषः ।

यथा, --
“सिद्धां सिद्धेश्वरीं सिद्धविद्याधरगणैर्युताम् ।
मन्त्रसिद्धिप्रदां योनिसिद्धिदां लिङ्गशोभिताम् ॥
इति मुण्डमालातन्त्रे ११ पटले महाविद्या-
स्तोत्रम् ॥ अपि च ।
“कृष्णेन बलभद्रेण गोपैः कंसजिघांसुभिः ।
सङ्के तकं कृतं तत्र मन्त्रनिश्चयकारकम् ॥
तदा सङ्के तकैः सा च सिद्धा देवी प्रतिष्ठिता ।

**सिध्म**, [न्] क्ली, (सिध + मन् । स च कित् ।)

किलासरोगः । इत्यमरः । २ । ६ । ५३ ॥ (यथा,
सुश्रुते । २ । ५ ।
“क्षुद्रकुष्ठान्यपि स्थूलारुष्कं महाकुष्ठमेककुष्ठ-
ञ्चर्म्मदलं विसर्पः परिसर्पः सिध्म विचर्च्चिका
किटिमं पामा रकसा चेति ॥”)

**सिध्मं**, क्ली, (सिध + बाहुलकात् मक् ।) किलास-

रोगः । इति हेमचन्द्रः ॥ सप्तमहाकुष्ठान्तर्गत-
कुष्ठरोगविशेषः । तल्लक्षणं यथा, --
“श्वेतं ताम्रं तनु च यद्रजो घृष्टं विमुञ्चति ।
प्रायश्चोरसि तत् सिध्ममलावुकुसुमोपमम् ॥”
इति माधवकरः ॥
त्वङ्गात्रगता सिध्मपुष्पिका इति अलावुपुष्पवत्
श्वेतं सिध्मं सिध्मपुष्पिका । महाकुष्ठन्तु सिध्मं
धातुप्रविष्टं सिध्मपुष्पिकेत्तरं श्वेतलोहितवर्णम्
एतेन सिध्मस्य द्वैविध्यं सूचितम् । इति विजय-
रक्षितादयः ॥

**सिध्मपुष्पिका**, स्त्री, (सिध्मस्य किलासस्य पुष्पं

विद्यते यस्याः । सिध्मपुष्प + ठन् ।) कुष्ठव्याधि-
भेदः । सा च त्वङ्गात्रगता अलावुपुष्पवत्श्वेता
इति रुग्विनिश्चयटीकायां विजयरक्षितादयः ॥

**सिध्मलः**, त्रि, (सिध्मं अस्यास्तीति । सिध्म +

“सिध्मादिभ्यश्च ।” ५ । २ । ९७ । इति लच् ।)
किलासी । इत्यमरः । २ । ६ । ६१ ॥ (यथा,
वाजसनेयसंहितायाम् । ३० । १७ ।
“विश्वेभ्यो भूतेभ्यः सिध्मलं भूत्यै जागरण-
मभूत्यै इति ॥”)

**सिध्मला**, स्त्री, (सिध्ममस्या अस्तीति । लच् + टाप् ।)

मत्स्यविकृतिः । इति मेदिनी ॥ (औषधविशेषः ।
तद्यथा, --
“त्वगादिहीनाः संशुद्धाः प्रत्यग्राः शकुलादयः ।
श्लक्ष्णचूर्णीकृत्तं तेषां शीते पलशतत्रयम् ॥

**सिध्रः**, पुं, साधुः । वृक्षः । इत्यु नादिकोषः ॥

**सिध्रका**, स्त्री, (सिध्र + स्वार्थे कन् । अभिधानात्

स्त्रीत्वम् ।) वृक्षविशेषः । इत्यमरः । ३ । ५ । ८ ॥
सेधति रोगहन्तृत्वमिति सिध्रमा । सीध इति
ख्यातो वृक्षः । षिधु गत्यां नाम्नीति रक् ततः
स्वार्थे कः संज्ञाविधेरनित्यत्वात् न इत् । इति
भरतः ॥

**सिध्रकावणं**, क्ली, (सिध्रकाणां वनमिति । णत्वम् ।)

देवोद्यानम् । इति त्रिकाण्डशेषः ॥

**सिनं**, क्ली, (सिनोति बध्नाति आत्मानमिति । षिञ्

बन्धने + “इण्षिञ्जीति ।” उणा० ३ । २ ।
इति नक् ।) शरीरम् । इति संक्षिप्तसारो-
णादिवृत्तिः ॥ (अन्नम् । इति निघण्टुः । २ । ७ ॥

**सिनः**, पुं, (सिनोतीति । षिञ् बन्धने + “इण्

सिञ्जीति ।” उणा० ३ । २ । इति नक् ।)
ग्रासः । इति मुग्धबोधव्याकरणम् ॥ काणः ।
इति केचित् ॥ शुक्लगुणविशिष्टे, त्रि ॥

**सिनी**, स्त्री, शुक्लगुणविशिष्टा । यथा । श्वेता सिता

सिनी श्येनी । इति व्याडिः । इति सिनीवाली-
शब्दटीकायां भरतः ॥

**सिनी(वा)वाली**, स्त्री, (सिनी शुक्ला बाला चन्द्र-

कला अस्यामिति । यद्वा, सिन्या शुक्लया चन्द्र-
कलया वल्यते मिश्र्यते या । वल मिश्रणे +
घञ् । ततो ङीष् ।) दृष्टेन्दुकलामावास्या ।
इत्यमरः । १ । ४ । ९ ॥ सा चतुर्द्दशीयुक्ता-

सिद्धिप्रदा भोगदा च तेन सिद्धेश्वरी
स्मृता ।
सङ्केतकेश्वरीञ्चैव दृष्ट्वा
सिद्धिमवाप्नुयात् ॥”
इति वाराहे
मथुरापरिक्रमप्रादुर्भावनामा-
ध्यायः ॥

**सिद्धौघः**, पुं, (सिद्धानामोघः ।) गुरुक्रमविशेषः ।

यथा, तन्त्रे ।
“अथ तारागुरून् वक्ष्ये
दृष्टादृष्टफलप्रदान् ।
ऊद्‌र्ध्वकेशो व्योमकेशो नीलकण्ठो
वृषध्वजः ॥
दिव्यौघाः सिद्धिदा वत्स सिद्धौघान्
शृणु
यत्नतः ।
वशिष्ठः कूर्म्मनाथश्च मीननाथो
महेश्वरः ॥
हरिनाथो मानवौघान् शृणु वक्ष्यामि
तद्‌गु-
रून् ।
तारावती भानुमती जयाविद्या
महोदरी ॥
सुखानन्दः परानन्दः पारिजातः
कुलेश्वरः ।
विरूपाख्यः फेरवी च कथितं
तारिणीकुलम् ।
आनन्दनाथशब्दान्ता गुरवः
सर्व्वसिद्धिदाः ।
स्त्रियोऽपि गुरुरूपाश्च अम्बान्ताः
परि-
कीर्त्तिताः ॥”
इति तन्त्रसारः ॥
अन्यच्च ।
“ब्रह्मानन्दः
पूर्णदेवश्चलचित्तश्चलाचलः ।
कुमारः क्रोधनश्चैव तथा च
स्वरदीपनः ॥
माया मायावती चैव मानवीघान् शृणु
प्रिये ।

शतेन कटुतैलेऽस्य व्योषरामठधान्यकैः ।
क्रिमिघ्नदीप्यकनिशाचबिकाग्रन्थिकार्द्रकैः ॥
जीरकद्वयवृश्चीरसुरसार्ज्जकसिग्रुकैः ।
दशमूलात्मगुप्ताभ्यां मार्कवैर्लवणैस्त्रिभिः ॥
चूर्णितैः पलिकैः सार्द्धं मारणालपरिप्लुतैः ॥
विन्यसेत् स्नेहपात्रे तु धान्यराशौ पुनर्न्यसेत् ।
सप्तरात्रात् समुद्धृत्य पानभक्षणभोजनैः ।
सिध्मलेयं प्रयोक्तव्या सामे वायौ विशेषतः ॥
भग्नरुग्नाश्चू तहताः कम्पिनः पीठसर्पिणः ।
गृध्रसीमग्निसादञ्च शूलगुल्मोदराणि च ।
वलीपलितखालित्यं हत्वास्युरमलोन्द्रियाः ॥”
इति वैद्यकचक्रपाणिसंग्रहे आमवाताधिकारे)

**सिध्मवान्**, [त्] त्रि, (सिध्ममस्त्यस्येति । सिध्म +

पक्षे मतुप् । मस्य वः ।) किलासरोगविशिष्टः
इति सिध्मशब्दादस्त्यर्थे वतुप्रत्ययेन निष्पन्नः
॥

**सिध्मा**, स्त्री, किलासरोगः । इति हेमचन्द्रः ॥

**सिध्यः**, पुं, (सिध्यन्त्यस्मिन्नर्था इति । सिध +

“पुष्पसिध्यौ नक्षत्रे ।” ३ । १ । ११६ । इति
क्यप्प्रत्ययेन निपातितः ।) पुष्यनक्षत्रम् । इत्य-
मरः । १ । ३ । २२ ॥

मावस्या । सिनी श्वेता वाला
चन्द्रकलास्यां
सिनीवाली नदादित्वादीप् । इति
तट्टीकायां
भरतः ॥ (यथा, भागवते । ४ । १२ । ४८
।
“पौर्णमास्यां सिनीवाल्यां द्वादश्यां श्रवणे-
ऽथवा ॥”)
दुर्गा । इति मेदिनी ॥

**सिन्दुकः**, पुं, सिन्दुवारवृक्षः । इत्यमरः । २ । ४ । ६८ ॥

(तथास्य पर्य्यायगुणाश्च ।
“सिन्दुवारः श्वेतपुष्पः सिन्दुकः
सिन्दुवारकः ॥
नीलपुष्पी तु निर्गुण्डी शेफाली सुवहा च
सा ।
सिन्दुकः स्मृतिदस्तिक्तः कषायः कटुको
लघुः ॥
केश्यो नेत्रहितो हन्ति
शूलशोथाममारुतान् ।
कृमिकुष्ठारुचिश्लेष्मज्वरान्नीलापि तद्विधा
।
सिन्दुवारदलं जन्तु वातश्लेष्महरं लघु ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे
॥)

**सिन्दु(न्धु)वारः**, पुं, सिन्धुं गजमदं वारयति तिक्त-

त्वात् । वृ + अण् । पाक्षिको धस्य दः ।)
वृक्ष-
विशेषः । निसिन्दा इति भाषा । इनछुर
इति
च क्वचित् । तत्पर्य्यायः । सिन्दुकः २
इन्द्र-
सुरिसः ३ निर्गुण्डी ४ इन्द्राणिका ५ ।
इत्यमरः ।
२ । ४ । ६८ ॥ सिन्धुकः ६ सिन्धुवारकः
७ इन्द्राणी
८ पौलोमी ९ शक्राणी १० कासनाशिनी
११ ।
इति रत्नकोषः ॥ श्वेतपुष्पः १२
सिन्दुवारकः

| | | |
|---|---|---|
| वशिष्ठः कूर्म्मनाथश्च मीननाथो महेश्वरः ।<br>हरिनाथो मानवौघानथ वक्ष्यामि सद्गुरून् ॥”<br>इति शक्तिरत्नाकरतन्त्रम् ॥<br>तथा ।<br>“नारदः काश्यपः शम्भुर्भार्गवः कुलकौशिकः ।<br>एते पञ्च महादेव सिद्धौघाः परिकीर्त्तिताः ॥”<br>इति तन्त्रम् ॥ | | २३ स्थिरसाधनकः १४ अनन्तः १५ सिद्धकः<br>१६ अर्थसिद्धकः १७ । अस्य गुणाः ।<br>कटुत्वम् ।<br>तिक्तत्वम् ।<br>कफवातक्षयकुष्ठकण्डूतिशूलना-<br>शित्वम् । कायसिद्धिदत्वञ्च । इति राजनिर्घण्टः ॥ |

अपि च ।
"सिन्धुकः स्मृतिदस्तिक्तः कषायः
कटुको लघुः
केश्यो नेत्रहितो हन्ति
शूलशोथाममारुतान् ॥
कृमिकुष्टारुचिश्लेष्मव्रणान् नीलापि
तद्विधा ।
सिन्धुवारदलं तत्तु वातश्ले ष्महरं लघु
॥"
इति भावप्रकाशः ॥ * ॥
"स्यन्दं वारयति सिन्दुवारः षण्
निपातनात् जिः
अत उच्च । सिन्दुकसिन्दुवारौ
दन्त्यसादी तवर्ग-
तृतीयवन्ताविति बहवः । केचित्तु सिन्धुं
समुद्र-
मपि वारयति शोषयति तीक्ष्णरसत्वेन
कफघ्न-
त्वात् सिन्धुवारः सिन्धुकसिन्धु वारौ
तवर्गचतुर्थ-
वन्तावित्याहुः ।" इति भरतः ॥

**सिन्दूरं**, क्ली, (स्यन्दते इति स्यन्दू ङ क्षरणे +

"स्यन्देः सम्प्रसारणञ्च ।" उणा० १ ।
६९ ।
इति ऊरन् । सम्प्रसारणञ्च ।)
रक्तवर्णचूर्ण-
विशेषः । सिँदूर इति भाषा । तत्पर्य्यायः
।
नागसम्भवम् २ । इत्यमरः । २ । ९ ।
१०५ ॥
नागरेणुः ३ रक्तम् ४ सीमन्तकम् ५
नागजम् ६
नागगर्भम् ७ शोणम् ८ वीररजः ९
गणेश-
भूषणम् १० सन्ध्यारागम् ११
शृङ्गारकम् १२
सौगाग्यम् १३ अरुणम् १४ मङ्गल्यम्
१५ ।

तत्पर्य्यायः । सिन्दूरी २ वोरपुष्पी ३
तृणपुष्पी ४
करच्छदा ५ शोणपुष्पी ६ । अस्या गुणाः ।
कटुत्वम् । तिक्तत्वम् । कषायत्वम् ।
श्लेष्मवात-
शिरोऽर्त्तिभूतनाशित्वम् । चण्डीप्रियत्वञ्च ।
इति राजनिर्घण्टः ॥

**सिन्दूरी**, स्त्री, (सिन्दूरं तद्वद्वर्णोऽस्या अस्तीति ।

अच् । गौरादित्वात् ङीष् ।) रोचनी । रक्त-
चेलिका । धातकी । इति मेदिनी ॥

**सिन्धुः**, पुं, (स्यन्दते इति । स्यन्दू प्रस्रवणे +

"स्यन्देः सम्प्रसारणं धश्च ।" उणा० १ ।
१२ ।
इतिः उः । धकारादेशः सम्प्रसारणञ्च ।)
समुद्रः । इत्यमरः । १ । १० । १ ॥ यथा,
भागवते । ३ । ११ । ३१ ।
तावत्त्रिभुवनं सद्यः कल्पान्तै धितसिन्धवः ।
प्लावयन्त्युत्कटाटोपचण्डवातेरितोर्म्मयः
॥")
वमथुः । देशविशेषः । (यथा, रघुः । १५ ।
८७ ।
"युधाजितश्च सन्देशात् स देशं
सिन्धुनामकम् ।
ददौ दत्तप्रभावाय भरताय भृतप्रजः ॥")
नदविशेषः । इति मेदिनी ॥ इन्दस् इति
ख्यातः । (यथा, रघुः । ४ । ६७ ।
"विनीताध्वश्रमास्तस्य सिन्धु तीरविचेष्टनैः ।
दुधुवुर्वाजिनः स्कन्धान् लग्नकुङ्कुमकेशरान्
॥")
गजमदः । इति हेमचन्द्रः ॥ सिन्धु वारवृक्षः ।
इति शब्दचन्द्रिका ॥ श्वेतटङ्कणम् । इति
राज-
निर्घण्टः ॥ रागविशेषः । स च मालकौशराग-
पुत्रः । यथा, --
"माधवः शोभनः सिन्धु र्म्मारुमेवाडुकुन्तलाः
।
कलिङ्गः सोमसंयुक्तः कौशिकस्य सुता इमे
॥"

**सिन्धुखेलः**, पुं, (सिन्धौ तत्समीपे खेलतीति ।

खेल + कः ।) सिन्धुदेशः । इति
शब्दरत्ना-
वली ॥

**सिन्धुजं**, क्ली, (सिन्धोर्जायते इति । जन + डः ।)

सैन्धवलवणम् । इत्यमरः । २ । ९ । ४२
॥
(यथा, सुश्रुते । ४ । ३७ ।
"वचापुष्करकुष्ठैलामदनामरसिन्धुजैः ॥")
समुद्रजाते, त्रि ॥ (यथा, महाभारते । ३ ।
७१ । १४ ।
"शुद्धान् दशभिरावर्त्तैः सिन्धुजान्
वातरंहसः ॥)

**सिन्धुजन्म**, [न्] क्ली, (सिन्धोर्जन्म उत्पत्तिर्यस्य ।)

सैन्धवलवणम् । इति रत्नमाला ॥

**सिन्धुजन्मा**, [न्] पुं, (सिन्धोः क्षीरसमुद्रात्

जन्म यस्य ।) चन्द्रः । इति जटाधरः ॥

**सिन्धुजा**, स्त्री, (सिन्धोर्जायते इति । जन + डः ।)

लक्ष्मीः । इति जटाधरः ॥

**सिन्धुडा**, स्त्री, मालवरागभार्य्या । यथा, --

"धामुषी मालसी रामकिरी च सिन्धुडा
तथा ।
अश्ववारी भैरवी च मालवस्य प्रिया इमाः
॥
इति सङ्गीतदामोदरः ॥

**सिन्धुनन्दनः**, पुं, (सिन्धोः क्षीरोदस्य नन्दनः ।)

चन्द्रः । इति त्रिकाण्डशेषः ॥

**सिन्धुनाथः**, पुं, (सिन्धुनां नदीनां नाथः ।)

समुद्रः । इति केचित् ॥ (यथा, माघे ।
१४ । ६८ ।
"मत्कुणाविव पुरा परिप्लवौ
सिन्धु नाथशयने निषेदुषः ।
गच्छतः स्म मधुकैटभौ विभो-
र्यस्य नैद्रसुखविघ्नतां क्षणम् ॥")

अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् ।
व्रणविरोपणत्वम् ।
कुष्ठास्रभ्रमकण्डूतिविसर्पशम-
नत्वञ्च । इति राजनिर्घण्टः ॥ * ॥ अपि च ।
"सिन्दूरं रक्तरेणुञ्च नागगर्भञ्च सीसजम् ।
सीसोपधातुः सिन्दूरं गुणैस्तत् सीसवन्मतम् ॥
संयोगजप्रभावेण तस्याप्यन्ये गुणाः स्मृताः ।
सिन्दूरमुष्णं वीसर्पकुष्ठकण्डविषापहम् ।
भग्नसन्धानजननं व्रणशोधनरोहणम् ॥" * ॥
सिन्दूरस्य शोधनमाह ।
"दुग्धाम्लयोगतस्तस्य विशुद्धिर्गदिता बुधैः ।"
इति भावप्रकाशः ॥ * ॥
सिन्दूरदानमन्त्रो यथा, --
"सिन्दूरञ्च वरं रम्यं भाले शोभाविवर्द्धनम् ।
पूरणं भूषणानाञ्च सिन्दूरं प्रतिगृह्यताम् ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २१ अध्यायः ॥ * ॥
तस्य धारणात् पत्युरायुर्व्वृद्धिर्भवति । यथा, --
"हरिद्रां कुङ्कु मञ्चैव सिन्दूरं कज्जलं तथा ।
कार्पासकञ्च ताम्बूलं माङ्गल्याभारणं शुभम् ॥
केशसंस्कारकवरीकरकर्णविभूषणम् ।
भर्त्तुरायुष्यमिच्छन्ती दूरयेन्न पतिव्रता ॥"
इति काशीखण्डे ४ अध्यायः ॥

**सिन्दूरः**, पुं, (स्यन्दते इति । ऊरन् ।) वृक्ष-
विशेषः । इति मेदिनी ॥

**सिन्दूरकारणं**, क्ली, (सिन्दूरस्य कारणमिति ।)
सीसकम् । इति हेमचन्द्रः ॥

इति सङ्गीतसिन्धुः ॥

**सिन्धुः**, स्त्री, (स्यन्दते इति । स्यन्द + उः । सम्प्र-
सारणम् । दस्य धश्च ।) नदी । इति मेदिनी ॥
(यथा, मुण्डकोपनिषदि । २ । १ । ९ ।
"अतः समुद्रा गिरयश्च सर्व्वे-
ऽस्मात् स्यन्दन्ते सिन्धवः सर्व्वरूपाः ।
अतश्च सर्व्वा ओषधयो रसश्च
येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥")
नदीविशेषः । तज्जलगुणाः । यथा, --
"शतद्रोर्विपाशायुजः सिन्धुनद्याः
सुशीतं लघु स्वादु सर्व्वामयघ्नम् ।
जलं निर्म्मलं दीपनं पाचनञ्च
प्रदत्ते बलं बुद्धिमेधायुषञ्च ॥"
इति राजनिर्घण्टः ॥

**सिन्धुकः**, पुं, (सिन्धुरेव । स्वार्थे कन् ।) सिन्धु-
वारवृक्षः । इति शब्दचन्द्रिका ॥ (यथा, बृहत्-
संहितायाम् । ५९ । ६ ।
"वैश्यानां जीवकखदिर-
सिन्धुकस्पन्दनाश्च शुभफलदाः ॥")

**सिन्धुकफः**, पुं, (सिन्धोः कफ इव ।) समुद्रफेनः ।
इति शब्दरत्नावली ॥

**सिन्धुकरं**, क्ली, (सिन्धौ सिन्धुदेशे कीर्य्यते इति
कॄ + अप् ।) श्वेतटङ्कणम् । इति राजनिर्घण्टः ॥

**सिन्धुपुत्त्रः**, पुं, (सिन्धोः पुत्त्रः ।) मर्कटेन्दुः । इति ।
शब्दचन्द्रिका ॥ चन्द्रश्च ॥

**सिन्धुपुष्पः**, पुं, (सिन्धौ पुष्प्यति प्रकाशते इति ।
पुष्प फुल्लने + अच् ।) शङ्खः । इति शब्द-
चन्द्रिका ॥

**सिन्धुमन्थजं**, क्ली, (सिन्धु मन्थात् जायते इति ।
जन + डः ।) सैन्धवलवणम् । इति रत्नमाला ॥

**सिन्धुरः**, पुं, (सिन्धुं मदं राति ददातीति । रा +
कः ।) हस्ती । इति हेमचन्द्रः ॥ (यथा,
आर्य्यासप्तशत्याम् । १९८ ।
"गतिगञ्जितवरयुवतिः करी कपोलौ करोतु
मदमलिनौ ।
मुखबन्धमात्रसिन्धुर लम्बोदर किं मदं वहसि ॥"

**सिन्धुरद्वेषी**, [न्] पुं, (सिन्धुरं हस्तिनं द्वेष्टीति ।
द्विष + णिनिः ।) सिंहः ॥

**सिन्धुलवणं**, क्ली, (सिन्धु जातं लवणम् ।) सैन्ध-
वम् । इति रत्नमाला ॥

**सिन्धु** वारः, पुं, (सिन्धु मपि वृणोति गत्येति ॥
वृ + अण् ।) हयोत्तमः । इति त्रिकाण्डशेषः ॥
(सिन्धुं मदजलमपि वारयति तिरस्करोति तिक्तरसेन । वृ + णिच् + अण् ।) सिन्धुवार-
वृक्षः । इत्यमरः । २ । ४ । ६८ ॥ यथा, --
"विसुन्धकः सिन्धु वारः सिन्धुकं सुरसोऽपि च ।
तथेन्द्रसुरसस्त्विन्द्रसुरिसः सिन्धु वारितः ।

**सिन्दूरतिलकः**, पुं, (सिन्दूरस्येव तिलको यस्य ।)

हस्ती । इति मेदिनी ॥

**सिन्दूरतिलका**, स्त्री, (सिन्दूरस्य तिलको यस्याः ।)

साधवा नारी । इति मोदनी ॥

**सिन्दूरपुष्पी**, स्त्री, (सिन्दूरवत् रक्तवर्णं पुष्पं

यस्याः । पाककर्णेत्रि ङीष् ।)

पुष्पवृक्षविशेषः ।

निर्गुण्डीन्द्राणिकेन्द्राणी सुरसा सिन्धुवारकः ॥”
इति शब्दरत्नावली ॥
अस्य गुणाः ।
“सिन्धुवारो विषश्लेष्मव्रणकुष्ठक्षयापहः ।”
इति राजवल्लभः ॥

**सिन्धुवारकः**, पुं, (सिन्धुवार एव । स्वार्थे कन् ।)
सिन्धुवारवृक्षः । इति शब्दरत्नावली ॥

**सिन्धुवारितः**, पुं, (सिन्धुर्मदजलं वारितो येन ।)
सिन्धु वारवृक्षः । इति शब्दरत्नावली ॥

**सिन्धुवेषणः**, पुं, गम्भारीवृक्षः । इति शब्द-
चन्द्रिका ॥

**सिन्धुशयनः**, पुं, (सिन्धुः क्षीरोदः शयनं यस्य ।)
विष्णुः । क्षीरोदशायित्वात् ॥

**सिन्धुसङ्गमः**, पुं, (सिन्धूनां सङ्गमो यत्र ।) नदी-
नदसमुद्राणां परस्परमेलकः ।
तत्पर्य्यायः ।
सम्भेदः २ । इत्यमरः । १ । १० । ३५ ॥ सिन्ध्वो-
र्नद्योः सङ्गमो मेलकः सम्भेदः । सम्भिदन्ति
मिलन्ति अस्मिन्निति सम्भेदः घञ् । सिन्धु-
शब्देन नदी नदः समुद्रश्चोच्यते तेन नद्योर्नदयो-
र्नदीसमुद्रयोश्च मेलकः सम्भेदः । इति वैकुण्ठा-
दयः । इति भरतः ॥

**सिन्धूद्भवं**, क्ली, (सिन्धोरुद्भवो यस्य ।) सैन्धव-

हेमाद्रेः कन्दरे सानौ सरस्याञ्च पृथक् पृयक् ।
तत्तोयं पतितं सिप्रे देवभोग्ये सरोवरे ।
तेन सिप्रा नदी जाता विष्णुना प्रेरिता क्षितिम् ॥”

**सिमः**, पुं, (षि ञ् बन्धने + “अविसिविसिशुषिभ्यः
कित् ।” उणा० १ । १४३ । इति मन् । सच
कित् ।) समुदायः । सिमः सर्व्वः । इति सिद्धा-
न्तकौमुदी ॥ (यथा, ऋग्वेदे । १ । ११५ । ४ ।
रात्री वासस्तनुते सिमस्मै ॥”)

**सिम्बा**, स्त्री, (षम वैक्लव्ये + उल्वादयश्चेति
साधुः ।) शमी । यथा, --
“शमी समी शिम्बिशिम्बसिम्बासिम्बिरपीष्यते
इति द्विरूपकोषः ॥
द्व छिमिडा इति ख्याते शुँठी इति ख्याते ।
शाम्यति वृद्धिरनया शमी शमभिर्य शमे
नाम्नीति इः पाच्छोणादीति ईपि शमी ताल-
व्यादिः शमेः पूर्व्वेण वे निपातनादकारस्य इत्वे
शिम्बापि तालव्यादिः । सिम्बा दन्त्यादिरिति
पुरुषोत्तमादयः । सिम्बिशब्दौऽप्यत्र शिम्बिरपि
तालव्यादिर्द्दन्त्यादिश्च । इति भरतः ॥

**सिम्बिः**, स्त्री, शिम्बा । इति द्विरूपकोषः ॥
नखीनामगन्धद्रव्यम् । इति राजनिर्घण्टः ॥

**सिम्बिजा**, स्त्री, शमीधान्यम् । इति भावप्रकाशः ॥
तालव्यशकारादिरपि ॥

**सिम्बी**, स्त्री, (सिम्बि + पक्षे ङीष् ।) निष्पावी ।
इति राजनिर्घण्टः ॥ अपि च ।

सिराभिरावृता नाभिश्चक्रनाभिरिवारकैः ॥
तासां मूलसिराश्चत्वारिंशित्तासां वातबाहिन्यो
दश पित्तवाहिन्यो दश कफवाहिन्यो दश दश
रक्तवाहिन्यः । तासान्तु वातवाहिनीनां वात-
स्थानगतानां पञ्चसप्ततिशतं भवति तावत्य एव
पित्तवाहिन्यः पित्तस्थाने कफवाहिन्यश्च कफ-
स्थाने रक्तवाहिन्यश्च यकृत्प्ली ह्नोरेवमेतानि सप्त
सिराशतानि ।
तत्र वातवाहिन्यः सिरा एकस्मिन् सक्थ्निपञ्च-
विंशतिः एतेनेतरसक्थिबाहू च व्याख्यातौ ।
विशेषतस्तु कोष्ठे चतुस्त्रिंशत्तासां गुदमेढ्राश्रिताः
श्रोण्यामष्टौ द्वे द्वे पार्श्वयोः षट् पृष्ठे तावत्य एव
चोदरे दश वक्षसि । एकचत्वारिंशिज्जत्रुण ऊर्द्ध्वं
तासां चतुर्द्दश ग्रीवायां कर्णयोश्चतस्रः । नव
जिह्वायाम् । षट्नासिकायाम् । अष्टौ नेत्रयोः ।
एवमेतत् पञ्चसप्तत्यधिकशतं वातवहानां
सिराणां व्याख्यातम् । एष एव विभागः शेषा-
णामपि । विशेषतस्तु पित्तवाहिन्यो नेत्रयोर्द्दश
कर्णयोर्द्दे । एवं रक्तवहाः कफवहाश्च । एव-
मेतानि सप्त सिराशतानि सविभागानि व्याख्या-
तानि । भवन्ति चात्र ।
क्रियाणामप्रतीघातममोहंबुद्धिकर्म्मणाम् ।
करोत्यन्यान् गुणांश्चापि स्वाः सिराः पवन-
श्चरन् ॥
यदा तु कुपितो वायुः स्वाः सिराः प्रतिपद्यते ।
तदास्य विविधा रोमा जायन्ते वातसम्भवाः ॥
भ्राजिष्णुतामन्नरुचिमग्निदीप्तिमरोगताम्।
संसर्पत् स्वाः सिराः पित्तं कुर्य्याच्चान्यान्
गुणानपि ॥
यदा प्रकुपितं पित्तं सेवते स्ववहाः सिराः ।
तदास्य विविधा रोगा जायन्ते पित्तसम्भवाः ॥
स्नेहमङ्गेषु सन्धीनां स्थैर्य्यं बलमुदीर्णताम् ।
करोत्यन्यान् गुणांश्चापि बलासः स्वाः सिरा-
श्चरन् ॥
यदा तु कुपितः श्लेष्मा स्वाः सिराः प्रतिपद्यते

लवणम् । इति रत्नमाला ॥ (यथा, सुश्रुते ।
१ । ४४ ।
"षिडङ्गसारो मरिचं सदारु-
योगः स सिन्धू द्रवमूत्रयुक्तः ॥")

**सिन्धूपलं**, क्ली, (सिन्धोः समुद्रस्य उपलमिव ।)
सैन्धवलवणम् । इति हारावली । ५५ ॥

**सिप्रं**, क्ली, (सिच् + क्विप् । सिचं क्षरणं रातीति ।
रा + कः । पृषोदरादित्वात् चस्य पः ।) सरो-
वरविशेषः । यथा, कालिकापुराणे ४१ अध्याये ।
"एतस्मिन्नन्तरे शम्भुः सिप्रं त्यक्त्वा तदा सरः ।
गङ्गावतारमगमत् हिमवत्प्रस्थमुत्तमम् ॥"

**सिप्रः**, पुं, (सिच् क्षरणे + क्विप् । तं रातीति ।
रा + कः । पृषोदरादित्वात् साधुः ।) चन्द्रः ।
इति त्रिकाण्डशेषः ॥ निदाघसलिलम् । घर्म्मः ।
इति मेदिनी ॥

**सिप्रा**, स्त्री, (सिप्र + स्त्रियां टाप् ।) नदीमेदः ।
इति मेदिनी ॥ सा तु उज्जयनीदेशसमीपे
वर्त्तते । (यथा, रघुः । ६ । ३५ ।
"अनेन यूना सह पार्थिवेन
रम्भोरु ! कच्चित् मनसो रुचिस्ते ।
सिप्रातरङ्गानिलकम्पितासु
विहर्त्तुमुद्यानपरम्परासु ॥")
तस्या उत्पत्तिर्यथा कालिकापुराणे २३ अ-
ध्याये ।
"एवं विवाह्य विधिबत् सौवर्णे मानसाचले ।
"सिम्बा सिम्बी पुस्तसिम्बिस्तथा पुस्तकसिम्बिका
शिम्बिद्वयञ्च मधुरं रसे पाके हिमं गुरु ।
बल्यं दाहकरं प्रोक्तं श्लेष्मलं वातपित्तजित् ॥"
इति भावप्रकाशः ॥

**सिरः**, पुं, पिप्पलीमूलम् । इति हेमचन्द्रः ॥ (पिप्प-
लीमूलशब्देऽस्य विषयो ज्ञेयः ॥)

**सिरा**, स्त्री, (सिनोतीति । षिञ् बन्धने + रक् ।
इत्युणादौ उज्ज्वलः । २ । १३ ।) नाडी । (यथा,
सुश्रुते । ३ । ७ ।
"व्याप्नुवन्त्यभितो देहं नाभितः प्रसृताः सिराः
प्रतानाः पद्मिनीकन्दाद्बिसादीनांयथा जलम् ॥"
यथा च ।
"ध्मानाद्धमन्यः स्रवणात् स्रोतांसि सरणात्
सिराः ॥"
इति चरके सूत्रस्थाने त्रिंशेऽध्याये ॥
तथा च ।
"सप्त सिराशतानि भवन्ति । याभिरिदं शरीर-
माराम इव जलहारिणीभिः केदार इव च
कुल्याभिरुपस्निह्यतेऽनुगृह्यते चाकुञ्चनप्रसा-
रणादिभिर्विशेषैः । द्रुमपत्रसेवनीनामिव च
तासां प्रतानास्तासां नाभिर्मूलं ततश्च प्रस-
रन्त्यूद्र्ध्वमधस्तिर्य्यक् च ॥ भवतश्चात्र ॥
यावत्यस्तु सिरा काये सम्भवन्ति शरीरिणाम् ।
नाभ्यां सर्व्वा निबद्धास्ताः प्रतन्वन्ति समन्ततः ॥
नाभिस्थाः प्राणिनां प्राणाः प्राणान्नाभिर्व्युपा-
श्रिता ।
तदास्य विविधा रोगा जायन्ते श्लेष्मसम्भवाः ॥
धातूनां पूरणं वर्णं स्पर्शज्ञानमसंशयम् ।
स्वाः सिराः सञ्चरद्रक्तं कुर्य्याच्चान्यान् गुणानपि
यदा तु कुपितं रक्तं सेवते स्ववहाः सिराः ।
तदास्य विविधा रोगा जायन्ते रक्तसम्भवाः ॥
नहि वातं सिराः काश्चिन्न पित्तं केवलन्तथा ।
श्लेष्माणं वा वहन्त्येता अतः सर्व्ववहा स्मृताः ॥
प्रदुष्टानां हि दोषाणा मुच्छ्रितानां प्रधाबताम्
ध्रुवमुन्मार्गगमनमतः सर्व्ववहाः स्मृताः ॥
तत्रारुणा वातवहाः पूर्य्यन्ते वायुना सिराः ।
पित्तादुष्णाश्च नीलाश्च शीता गौर्य्यः स्थिराः कफात् ॥
असृग्वहास्तु रोहिण्यः सिरा नात्युष्णशीतलाः
अत ऊद्र्ध्वं प्रवक्ष्यामि न विध्येद्याः सिरा भिषक् ॥
वैकल्यं मरणञ्चापि व्यधात्तासां ध्रु वं भवेत् ।
सिराशतानि चत्वारि विद्याच्छाखासु बुद्धिमान्

| | | |
|---|---|---|
| अरुन्धतीं वशिष्ठस्तु मोदमाप तया सह ॥<br>तत्र यत् पतितं तोयं मानसाचलकन्दरे ।<br>विवाहावभृतार्थाय शान्त्यर्थं च पुरा कृतम् ॥<br>ब्रह्मविष्णुमहादेवपाणिभिः समुदीरितम् ।<br>तत्तोयं सूप्तधा भूत्वा पतितं मानसाचलात् ॥ | | |

षट्त्रिंशच्च शतं कोष्ठे चतुःषष्टिञ्च मूर्द्धनि
।
शाखासु षोडश सिराः कोष्ठे द्वात्रिंशदेव
तु ॥
पञ्चाशज्जत्रुणश्चोर्द्ध्वमवेध्याः
परिकीर्त्तिताः ॥”
इति सुश्रुते शारीरस्थाने सप्तमेऽध्याये
॥)
अम्बु, वाहिनी । इति हेमन्द्रः ॥

**सिल्लकी**, स्त्री, शल्लकीवृक्षः । इत्यमरटीकायां
भरतः । २ । ४ । १२४ ॥

**सिवरः**, पु, हस्ती । इति जटाधरः ॥

**सिषाधयिषा**, स्त्री, (साधयितुमिच्छा । साध +
सन् + अः । स्त्रियां टाप् ।) साधनेच्छा ।
यथा,
भाषापरिच्छेदे । ७० ।
“सिषाधयिषया शून्या सिद्धिर्यत्र न
विद्यते ।
स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत्
॥”

**सिहुण्डः**, पुं, स्नुहीवृक्षः । इति शब्दरत्नावली ॥
(स्नु हीशब्दऽस्य विवृतिर्विज्ञेया ॥)

**सिह्लः**, पुं, (स्निह्यति मनो यत्र । स्निह + घञ् ।
पृषोदरादित्वात् साधुः ।)
गन्धद्रव्यविशेषः ।
सिह्ला इति ख्यातः । तत्पर्य्यायः ।
तुरुष्कः २
पिण्डकः ३ यावनः ४ । इत्यमरः । २ ।
४ । १२८ ॥
सिह्लकः ५ पिण्याकः ६ कपिचञ्चलः ७
तैलाख्यः
८ यावः ९ यावलः १० । इति
शब्दरत्नावली ॥
सल्लकीद्रवः ११ पिष्टकः १२ तैलपर्णी
१३ वृक-

**सीता**, स्त्री, (सिनोतीति । सिञ्न बन्धे + बाहु-
लकात् क्तः । दीर्घश्च । इत्युणादौ
उज्ज्वलः । ३ ।
९० ।) लाङ्गलपद्धतिः । इत्यमरः । २ ।
९ । १४ ॥
“द्वे लाङ्गलरेखायां सिनोति खनति भूमिं
सीता
षि न ग ञ बन्धे नाम्नीति तः
निपातनाद्दीर्घः ।
सीता दन्त्यसादिः । शेते भुवि इति शीता
तालव्यशादिश्च ।” इति भरतः ॥ (यथा,
कुमारे । ५ । ६१ ।
“न वेद्मि स प्रार्थितदुर्लभः कदा
सखीभिरस्रोत्तरमीक्षितामिमाम्।
तपःकृशामभ्युपपत्स्यते सखीं
वृषेव सीतां तदवग्रहक्षताम् ॥”)
जनकराजनन्दिनी । सा तु श्रीरामपत्नी ।
तत्-
पर्य्यायः । वैदेही २ मैथिली ३ जानकी ४
धरणीसुता ५ । इति हेमचन्द्रः ॥
भूमिसम्भवा ६
इति जटाधरः ॥ अस्या उत्पत्तिर्यथा,
वाल्मी-
कीये रामायणे । ६६ । १३ -- १४ ।
“अथ मे कृषतः क्षेत्रं लाङ्गलादुत्थिता ततः
।
क्षेत्रं शोधयता लब्धा नाम्ना सीतेति
विश्रुता ॥
भूतलादुत्थिता सा तु व्यवर्द्धत ममात्मजा
।
वीर्य्यशुल्केति मे कन्या
स्थापितेयमयोनिजा ॥”
अपि च तट्टीकाधृतपद्मपुराणम्।
“अथ लोकेश्वरी लक्ष्मीर्जनकस्य पुरे
स्वतः ।
शुभक्षेत्रे हलोत्खाते तारे चोत्तरफल्गुने ॥
अयोनिजा पद्मकरा बालार्कशतसन्निभा ।
सीतामुखे समुत्पन्ना बालभावेन सुन्दरी ॥

कुर्य्यान्निदं व्रतं तस्यां कृतञ्चेल्ल्युनता भवेत्
॥
मध्याह्नव्यापिनी ग्राह्या ब्रतेऽस्मिन्नवमी
तिथिः
दिनद्वयगतायान्तु तस्यां कार्य्या परा नरैः ॥
एतैर्योगैर्विनापि स्यात् तद्दिनं पापनाशनम्।
व्रतानां नित्यमाम्नातं कर्त्तव्यं व्रतमुत्तमम् ॥
* ॥
यस्तु नो कुरुते मोहात् जानकीजन्मसम्भवम्
।
व्रतं स पच्यते घोरे नरके नात्र संशयः ॥
तस्मिन्नहनि मूढात्मा भुक्त्वाप्यन्नन्तु यो नरः
।
मुने स कृमिसङ्घातं सपूयं खादति स्फुटम् ॥
न करोति हि यः श्रुत्वा व्रतानामुत्तमं व्रतम् ।
स महापातकी ज्ञेयः सर्व्वधर्म्मबहिष्कृतः ॥
* ॥
कुरुते यो व्रतं सोऽपि पृथ्वीदानफलं लभेत् ।
महाषोडशदानानां यज्ञानां मुनिपुङ्गव ! ॥
प्राप्नोति सर्व्वतीर्थानां प्राप्नुयात् सकलं
फलम्
सर्व्वभूतदयां कृत्वा फलमाप्नोति यज्जनः ।
तत्प्राप्नोति व्रतादस्मात् नात्र कार्य्या
विचारणा
अष्टम्यां प्रातरुत्थाय कृत्वा शौचमतन्द्रितः ।
महानद्यां तडागे वा कूपे वाप्यन्तिकेऽपि वा ॥
स्नात्वा कुर्य्यान्नित्यकर्म्म
प्रातःसन्ध्यादिवन्दनम्
देवान् पितॄंश्च संतर्प्य हविष्याशी च संयतः
॥
एकभुक् ब्रह्मचारी स्याद्भू मिशायी च गोतम ॥
नवम्यां प्रातरुत्थाय दान्तो भूत्वा समाहितः
॥
तीर्थादौ विधिवत् स्नात्वा कृतनित्यक्रियो
नरः
कुर्व्वीत मण्डपं रम्यं षोडशस्तम्भमण्डितम्
॥
अष्टस्तम्भयुतं वापि चतुःस्तम्भमथापि वा ।
तोरणैः सहितं कुर्य्याद्वितानवरशोभितम्॥

धूपः १४ कृत्तधूपः १५ । इति जटाधरः ॥

**सिह्लकः**, पुं, (सिह्ल एव । स्वार्थे कन् ।) सिह्लः ।

इति शब्दरत्नावली ॥ (शिलारसः । अस्य
पर्य्यायो यथा, --
"कपिनामा कपितैलं कृत्रिमं कपिलश्चलः ।
तुरुस्को मुक्तिमुक्तश्च पिण्डातः सिह्लको रसः ॥"
इति वैद्यकरत्नमालायाम् ॥
"सिह्लकस्तु तुरुष्कः स्याद्यतो यवनदेशजः ।
कपितैलञ्च सङ्ख्यातस्तथाच कपिनामकः ॥"
अस्य गुणा यथा, --
"सिह्लकः कटुकः खादुः स्निग्धोष्णः शुक्र-
कान्तिकृत् ।
वृष्यः कण्ठ्यः स्येदकुष्ठज्वरदाहग्रहापहः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**सिह्लकी**, स्त्री, सल्लकी । इति शब्दरत्नावली ॥

**सिह्लभूमिका**, स्त्री, सल्लकी । इति शब्दरत्ना-

वली ॥

**सीक**, ऋ ङ सेके । इति कविक्ल्पद्रुमः ॥ (भ्वा०-

आत्म०-सक०-सेट् ।) ऋ, असिसीकत् । ङ,
सेकते । इति दुर्गादासः ॥

**सीक**, कि आमृशि । इति कविकल्पद्रुमः ॥ (चुरा०-

पक्षे भ्वा०-पर०-सक०-सेट् ।) कि, सीकयति
सीकति । आमृशि स्थर्शे । प्रमाणं तालव्यादौ
दृश्यम् । इति दुर्गादासः ॥

**सीकरः**, पुं, शीकरः । इत्यमरटीकायां भरतः ।

सीतामुखोद्भवात् सीता इत्यस्यै नाम चाकरोत्
ततोऽभूदौरसी तस्य उर्म्मिला नाम कन्यका ॥"
तज्जन्मव्रतादि गौतमं प्रति शिवेनोक्तं यथा, --
"वैशाखशुक्लपक्षे त्वष्टम्यां संयमनं कुरु ।
परेद्युर्व्विकुरुष्वै तज्जानकीजन्मनो व्रतम् ॥
सन्तुष्टा जानकी तेन भविष्यति न संशयः ।
एतद् व्रतं ममाप्यस्ति कर्त्तव्यं श्वो द्विजोत्तमः ॥
माहात्म्यं तस्य गदितुं नास्ति मे निश्चलं मनः ।
अहं तद्रसलीनोऽस्मि शक्तस्तद्गदितुं न हि ॥
तस्मादेकं वदामि त्वां मार्कण्डेयाश्रमेऽधुना ।
गत्वा मुनीन्द्रः सकलं मार्कण्डेयोऽनुपृच्छ्यताम्
सर्व्वं निवेदितं तस्मै व्रतमाहात्म्यमुत्तमम् ।
विधानञ्च फलं तस्य स मुनिस्त्वां वदिष्यति ॥
मार्कण्डेयोपदिष्टेन विधिनाचर तद्व्रतम् ।
यथाशक्त्यपि कुर्व्वाणो व्रतस्योत्सवमादरात् ॥
लप्स्यसे सकलान् कामान्नात्र कार्य्या विचा-
रणा ॥"
इत्यादि गौतमप्रश्नानन्तरं श्रीमार्कण्डेय उवाच
"त्रेतायुगे उत्तराशां गते कमलिनीपतौ ।
सर्व्वर्त्तुनिकरश्रेष्ठ ऋतौ तु कुसुमाकरे ॥
मासि पुण्यतमे विप्र माधवे माधवप्रिये ।
नवम्यां शुक्लपक्षे च वासरे मङ्गले शुभे ॥
सार्प्य ऋक्षे च मध्याह्ने जानकी जनकालये ।
आविर्भूता स्वयं देवी योगेषु गतिरुत्तमा ॥
एतद्योगे कृतञ्चैतद्व्रतं प्रोक्तमनन्तकम् ॥

द्वारेषु शङ्खचक्रादिपताकाभिर्ध्वजैस्तथा ।
अलङ्कुर्य्यात् प्रतिस्तम्भं स्थापयेत् कलसान् शुभान् ॥
शुद्धतण्डुलराशीषु पूर्णपात्रैरलङ्कृतान् ।
मध्ये तु चत्वरं कुर्य्यात् चतुर्हस्तप्रमाणतः ॥
हस्तमात्रोच्छ्रितं रम्यं चतुरस्रं मृदा मुने । * ।
पलद्वयमितां कुर्य्यात् जानकीप्रतिमां शुभाम्
काञ्चनीमथवा शक्त्या कुर्य्यादिकपलोन्मिताम् ।
तदर्द्धेन तदर्द्धेन कुर्य्याच्छक्त्या चतुर्भुजाम् ॥
वित्तशाठ्यमकृत्वैवं राजतीमपि कारयेत् ।
औडुम्बरीं पैत्तलीं वा मृण्मयीं वृक्षजामुत ॥
कुड्ये पटेऽथ वा लेख्या वर्णकैः प्रतिमां वराम् ।
लेख्यञ्च सूतिकागारं सर्व्वतश्च पटावृतम् ॥
पर्य्यङ्कशयने सुप्ता तत्र राज्ञी महामतिः ।
तस्याः समीपतः सुप्ता मैथिली स्तनपायिनी ॥
जातकर्म्मकरो लेख्यो जनकश्च महीपतिः ।
शतानन्दः पुरोधाश्च लेखनीयः प्रयत्नतः ॥
इत्यादि चरितं लेख्यं जानकीजन्मसम्भवम् ।
यथाशक्ति हलं कुर्य्यात् काञ्चनं किल गौतम ॥
राजतं क्षेत्रममलं स्वर्णसिंहासनं तथा ।
कुर्य्यात्ताम्रमयं कुम्भं पूर्णपात्रावृतं मुखे ॥
तन्मध्ये पञ्चरत्नादि तीर्थाम्बु निक्षिपेन्मुने ॥
आचार्य्यं शास्त्रकुशलं वेदाध्ययनकोविदम् ।
वृणुयाद्विमलाचारमवतंसाङ्गदासनैः ॥
अन्तरीयोत्तरीयैश्च पञ्चपात्रादिभिर्व्रती ।
श्रीफलादिभिरभ्यर्च्च्य गन्धमाल्यानुलेपनैः ॥

| | | |
|---|---|---|
| १ । ३ । ११ ॥ (यथा, रघुः । ५ । ४२ ।<br>“स नर्म्मदा रोधसि सीकरार्द्रै-<br>र्मरुद्भिरानर्त्तितनक्तमाले।<br>निवेशयामास विलङ्घिताध्वा<br>क्लान्तं रजोधूसरकेतु सैन्यम् ॥”) | अष्टम्यां यदि विद्धा स्यान्नवमी माधवे सिते । | |

वृणुयाद्वै विधानेन ततः षोडश ऋत्विजः ॥
विद्यावतः सदाचारानष्टौ वा भक्तिसंयुतः ।
मध्ये वेदी समालेख्या विचित्रैर्व्वर्णकैस्ततः ॥
पद्ममष्टदलं तत्र स्थापयेत् कलसं ततः ।
रत्नसिंहासनं रम्यं संस्थाप्य विजितेन्द्रियः ॥
तत्राधिवासनं कुर्य्यादग्न्युत्तारणपूर्व्वकम् ।
प्रतिमायां विधानेन देवीमावाहयेत्ततः ॥ * ॥
प्राणानायम्य मूलेन त्रिरेकाग्रेण चेतसा ।
मूलमन्त्रस्य जनकं मुनिं विन्यस्य मूर्द्धनि ॥
मुखे छन्दश्च गायत्री सीतादेवीं हृदि न्यसेत् ।
नाभौ तु विन्यसेद्ब्रह्मन् लक्ष्मीबीजं सबिन्दुकम्
पादयोश्च नमः शक्त्यै ततो विन्यस्य मन्त्रवित् ।
श्रीँ श्रीमित्यादिभिर्ब्बीजैर्द्दीर्घषट्स्वरसंयुतैः ।
कृत्वा करषडङ्गेषु न्यासं ध्यायेत्ततो व्रती ॥ * ॥
चतुर्भुजां सुवर्णाभां रामालोकनतत्पराम् ।
श्रीराघवान्वितां सीतां चिन्तयेद्धृदि सर्व्वदा ॥
इति ध्यात्वा समुच्चार्य्य मूलमन्त्र कृताञ्जलिः ।
सविन्दुकमलाबीजं पूर्व्वमुच्चार्य्य गौतम ॥
सीताय इति पश्चात्तु नमशब्दं वदेत् किल ।
संपूज्य प्रतिमां रात्रौ कृत्वैवमधिवासनम् ।
ब्रह्मचारी भूमिशायी तस्यां रात्रौ भवेद्व्रती ॥
तस्यां नवस्यां विधिवत् कृत्वा शौचमतन्द्रितः ।
नद्यादौ विमले स्नात्वा नित्यकर्म्म विधाय च ॥
ततस्तु प्रथमे यामे नित्यपूजाविधिं व्रती ।
कृत्वा द्वितीयप्रहरे गीतवाद्यपुरःसरम् ॥
मध्याह्नसमये भक्त्या कुर्य्यादेकाग्रचेतसा ।
आसने उपविश्यादौ मूलं विन्यस्य पूर्व्ववत् ॥
चतुरस्रञ्च षट्कोणं त्रिकोणञ्च पुरस्ततः ।
कृत्वा मण्डलमाधारं तत्र संपूज्य मन्त्रवित् ॥
मूलेन शङ्खं संस्थाप्य जलमासिच्य निर्म्मलम् ।
चिन्मयं तत्र संचिन्त्य तीर्थमङ्कुशमुद्रया ॥
आकृष्य मूलमन्त्रेण सप्तवाराभिमन्त्रितैः ।
मधुना मधुवातेति त्र्यृचया सितया मुने ॥
स्वादुयवस्वमन्त्रेण ततस्तीर्थाम्बुभिः क्रमात् ।
उपैतु मामिति प्रोक्तः सीतायाः स्नपने मनुः ॥
स्वर्णसिंहासने रम्ये प्रतिमां स्थापयेद्व्रती ।
वासोभिः क्षुत्पिपासेति पूजयेद्विमलोत्तमैः ॥
गन्धद्वारामिति भवेद्दाने गन्धादिकस्य तु ।
मनसः काममित्याहुर्म्मन्त्रमाभरणादिके ॥
मधुपर्क्कं ततो दद्यात् सीतादेव्यै विधानतः ।
कस्तूरीकुसुमोपेतैः कर्पूरागुरुचन्दनैः ॥
प्रतिमां पूजयेद्भक्त्या यतः पुष्पैः स्वकालिकैः ।
सुगन्धैः कर्द्दमेनेति मन्त्रेण किल गौतम ॥
अर्च्चयेत्तुलसीपत्रैः कोमलैर्म्मञ्जरीयुतैः ।
प्रतिमां मूलमन्त्रेण शतमष्टोत्तरं जपेत् ।
ततः संपूजयेद्विद्वान् राजानं जनकं व्रती ॥”
जनकपूजामन्त्रः ।
“देवी पद्मालया साक्षादवतीर्णा यदालये ।
मिथिलापतये तस्मै जनकाय नमो नमः ॥”
महामतिपूजामन्त्रः ।
“श्रीसीताजननी मातर्महिषी जनकस्य च ।
पूजां गृहाण मद्दत्तां महामति नमोऽस्तु ते ॥”
शतानन्दपूजनमन्त्रः ।
“निधानं सर्व्वविद्यानां विद्वत्कुलविभूषणः ।
जनकस्य पुरोधास्त्वं शतानन्दाय ते नमः ॥”
हलपूजनमन्त्रः ।
“जीवयस्यखिलं विश्वं चालयन् वसुधातलम् ।
ततः सीतापदाम्भोजद्वयं संस्पृश्य मङ्गलम् ॥
कराञ्जलिपुटं बद्ध्वा प्रार्थयेद्रामवल्लभाम् ।
भक्त्या परमया ब्रह्मन् ताभिः कोमलशक्तिभिः
दुरन्तसंसारसमुद्रमग्नं
सीते शरण्यां शरणागतं त्वाम् ।
उद्धारयस्वाशु कृतं भयैत-
द्व्रतं ततो देवि मयि प्रसीद ॥
संप्रार्थ्य जानकीमेवं दण्डवत् प्रणमेत् पुनः ।
पुष्पाञ्जलिं पुनर्द्द त्त्वा स्तुवीत परमेश्वरीम् ॥
नीलनीरजदलायतेक्षणां
कौशलेशभुजसावलम्बनाम् ।
सानुरागहरिमेवमीक्षतीं
भावये मनसि रामवल्लभाम् ॥
मन्दहंसगतिगाञ्च कृशाङ्गीं
कामकान्तिपरिभूतचन्द्रिकाम् ।
ताडकारिसहप्रेमविमग्नां
भावये मनसि रामवल्लभाम् ॥
कुन्तलालककपोलमाननां
राहुवक्त्रगसुधासमद्युतिम् ।
वाससा पिदधतीं हियाकुलां
भावये मनसि रामवल्लभाम् ॥
कायवाङ्मनसगीः पतिर्व्यधात्
स्वप्नजाग्रतिषु राघवेश्वरः ।
शिवविरिञ्चिभिरङ्घ्रिवन्दितां
भावये मनसि रामवल्लभाम् ॥
भक्तैकगम्यां प्रकृतेः पराञ्च
चित्ते भृशं लोकनमस्कृताञ्च ।
भूवायुवह्निवननाकसस्थितां
विभावये चेतसि रामवल्लभाम् ॥
इन्द्ररुद्रधनदानुपालकैः
सद्विमानगणमास्थितैर्द्दिवि ।
पुष्पवर्षमनुसंस्तुतशीलां
भावये मनसि रामवल्लभाम् ॥
ध्ये यमानममरैश्च स्वरूपां

जलैः संप्रोक्षयेद्विद्वान् सामग्रीं पूजनीचिताम् ॥
पात्राणि ताम्रहेमादिनिर्म्मितानि ततो मुने ।
पाद्यार्घप्रदानार्थञ्च मधुपक्कार्थमेव च ॥
तथैवाचमनीयार्थमेवमासादयेत् क्रमात् ।
एकस्मिन्नथवा पात्रे पाद्यादीनि प्रकल्पयेत् ॥
पात्राणीत्थं समासाद्य ततोऽन्तर्यागमाचरेत् ।
पुष्पाञ्जलिं समादाय ध्यायेद्वै प्रतिमागताम् ॥
शङ्खचक्रगदापद्मान्याश्रयन्तींचतुर्भुजैः ।
महामतेस्तथा प्राज्ञो जनकस्य महात्मनः ॥
हलचालनतः साक्षादाविर्भूतां स्वतः श्रियम् ।
सीतां देवीं हृदि ध्यात्वा मूलमन्त्रेण मन्त्रवित्
पुष्पाञ्जलित्रय देवी प्रतिमामूर्द्धनि क्षिपेत् ।
हिरण्यवर्णां मन्त्रेण देवीमावाहयेत्ततः ॥
आवाहनादिमुद्राणामष्टकं संप्रदर्शयेत् ।
तामावाहय इत्युक्तो मन्त्रो देव्यासने मुने ॥
अश्वपूर्णामर्घदाने पाद्यं कासोऽस्मि मन्त्रतः ।
चन्द्रप्रभेति मन्त्रेण दद्यादाचमनीयकम् ॥
आदित्यवर्ण इत्युक्तो मन्त्रः पञ्चामृते भवेत् ।
अप्यायस्वेति मन्त्रण पयसा स्नापयेत्ततः ॥
दधिक्राव्नस्ततो दध्ना घृतेन घृतवत्युत ।

प्रादुर्भावयसे सीतां सीर तुभ्यं नमोऽस्तु वै
॥” *
सुभगापूजनमन्त्रः ।
“त्वयैवोत्पादितं सर्व्वं जगदेतच्चराचरम् ।
त्वमेवासि महामाया मुनीनामपि मोहिनी
॥
त्वयायत्ता इमे लोकाः श्रीसीतावल्लभा
परा ।
वन्दनीयासि देवानां सुभगे त्वां नमाम्यहम्
॥ * ॥
ततोऽष्टदलमध्यस्थजयाद्याभक्तितः
क्रमात् ।
संपूजयेद्विशुद्धात्मा गन्धपुष्पाक्षतादिभिः
॥
बहिर्म्मण्डलवर्त्तिन्यः षोडशाद्यास्तु
देवताः ।
अणिमाद्यभिधाः पूज्या वहिः सर्व्वा
ऋचस्ततः ॥
संपूज्यावरणाण्येवं मुख्यदेव्यास्ततो व्रती
।
दशाङ्गैर्गुग्गुलैर्द्द द्याद्धू पमापः स्रतंविभिः ॥
दीपन्तु साज्यवर्त्तीभिरार्द्रपुष्करिणामिति
।
नैवेद्यं घृतपक्वान्नैर्नानाव्यञ्जनसंयुतैः ॥
प्रदद्यात् पायसाद्यैरप्यार्द्रापः करिणामिति
।
राज्यै च गुडलड्डू कान् महामत्यै निवेदयेत्
॥
ताम्बूलञ्च ततो दद्यात् कर्पूराद्यैः
सुसंयुतम् ।
साङ्गतासिद्धये देया यथाशक्ति च दक्षिणा
॥
नीराजयेत्ततो देवीं प्रणमेत्तदनन्तरम् ।
तामाहूय च मन्त्रेण पुष्पाञ्जलिमथार्पयेत् ॥
* ॥
मूलेन हावयेत् विप्रैरष्टोत्तरसहस्रकम् ।
अष्टोत्तरशतं वापि पायसं शर्क्करायुतम् ॥
आहुतीनां ततः पश्चान्मुने कुर्य्यात्
प्रदक्षिणाम्
पुनः पुष्पाञ्जलिं दद्यात् सीतामूर्द्धनि
भक्तितः

वामधामतनुनिर्ज्जितहेमाम् ।
फुल्लनीरजविभावराननां
भावये मनसि रामवल्लभाम् ॥
सञ्चयैर्द्दि विसदां विमानगै-
र्व्विस्मयाकुलमनोभिरीक्षिताम् ।
तेजसापि दधतीं सदा दिशं
भावये मनसि रामवल्लभाम् ॥
एतदष्टकमनिष्टहानिकृद्
यः पठेदथ शृणोत्यहर्म्मुखे ।
अन्तरापरहिता तु मैथिली
तस्य भक्तिमतुलां प्रयच्छति ॥
स्तुत्वेत्थं जानकीदेवीं
गीतबाद्यादिभिर्व्रती ।
रात्रौ जागरणैः सर्व्वां तां रात्रिमपवाहयेत्
॥
ततः प्रातर्द्दशम्याञ्च पूर्व्वोक्तविधिना
द्विज ।
प्रतिमां पूजयित्वादा वा चार्य्यं
पूजयेत्ततः ॥
तस्मै सोपस्करां दद्यात् सवत्सां गां
पयस्विनीम्
दक्षिणाञ्च यथाशक्ति ततः पूर्णाहुतिं
चरेत् ॥
पूर्णाहुतिविधानेन कृत्वा च
प्रतिमादिकम् ।

|  | आदाय तुलसीपत्रं पुष्पं यत्किञ्चिदेव वा ।<br>सीताङ्घ्रिपङ्कजाद्भक्त्यांतदाकारं विभावयन् ॥<br>इति नम्रशिरा भूत्वा रोपयेत्तत् स्वमूर्द्धनि । |  |
|---|---|---|

सीतायाः प्रीतये दद्यात् मण्डपादि
विसृज्य च ॥
सोताप्रीतिं वाचयीत
ब्राह्मणाचार्य्यभाषितैः ।
अन्येभ्योऽपि यथाशक्त्या भूयसीं दक्षिणां
ददेत् ॥
अतिथिभ्योऽन्नदानञ्च कर्त्तव्यं तद्दिने
किल ।
सन्तोष्य सकलान् लोकान्
कुटुम्बसहितो व्रती ॥
विधिना पारणं कुर्य्यात् भूमिशायी च
मानवः ।
तस्योपरि सदा प्रीता सीता स्यान्नात्र
संशयः ॥ *
यद्गृहे नित्यपूज्या स्यात् प्रतिमा तत्र
गौतम ।
तस्यामेवोत्सवं कुर्य्याज्जानक्याः
पूजनादिकम् ॥
नित्यपूज्या त यस्य स्यात् सीतायाः
प्रतिमा यदा
शालग्रामशिलायां स कुर्य्यात् सीतोत्सवं
वुधः ॥
लक्ष्मीनारायणौ यस्मात्तस्यां संवसतः
सदा ।
पूर्व्वोक्तविधिना सीतानवम्या उत्सवं द्विज
॥
पूजां कुर्व्वीत वै तस्याः सर्व्वां
पञ्चामृतादिभिः ।
तुष्येत तेन वै तस्मिन् जानकीरघुनन्दनौ
॥ * ॥
इत्थं निगदितं सर्व्वं जानकीजन्मनो व्रतम्
।
कुव्वन्तीन्द्रादयः सर्व्वे व्रतमेतदनुत्तमम् ॥
गन्धर्व्वाः किन्नरा यक्षा गुह्यकाः
सिद्धचारणाः ।
नागाश्च मुनयश्चापि प्रकुर्व्वन्ति व्रतं द्विज
॥
यः कुर्य्याद्व्र तमेतद्धि
जानकीजन्मसम्भवम् ।

लक्ष्मीः । उमा । शस्याधिदेवता । इति
नानार्थ-
ध्वनिमञ्जरी ॥ मदिरा । इति राजनिर्घण्टः ॥
गङ्गास्रोतः । यथा, --
"गङ्गायान्तु भद्रसोमा महाभद्राथ पाटला ।
तस्याः स्रोतसि सीता च वङ्क्षुर्भद्रा च कीर्त्तिता
तद्भेदेऽलकनन्दापि शारिणी त्वल्पनिम्नगा ॥"
इति शब्दमाला ॥
(नदीविशेषः । इति केचित् ॥ यथा, महा-
भारते । ३ । १८८ । १०० ।
"गाङ्गं शतद्रुं सीताञ्च यमुनामथ कौशिकीम् ।

▪
▪
▪
▪

एताश्चान्याश्च सरितः पृथिव्यां या नरोत्तम ।
परिक्रामन् प्रपश्यामि तस्य कुक्षौ महात्मनः
॥")

**सीतापतिः**, पुं, (सीतायाः पति ।) श्रीरामचन्द्रः ।
इति शब्दरत्नावली ॥

**सीतायाःपतिः**, पुं, (सीतायाः पतिः । अलुक्
समासः ।) श्रीरामचन्द्रः । इति शब्दरत्ना-
वली ॥ (यथा, रामायणटीकाकृतो मङ्गला-
चरणे ।
"रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाःपतये नमः ॥")

**सीतीलकः**, पुं, सतीलकः । इत्यमरटीकायां
रायमुकुटः ॥

**सीत्कारः**, पुं, (सीत् + कृ + भावे घञ् ।) मनु-
ष्याणां गुणानुरागजशब्दः । (यथा, आर्य्या-
सप्तशत्याम् । २१६ ।
"गेहिण्या चिकुरग्रहसमयसीत्कारमीलित-
दृशापि ।
बाला कपोलपुलकं विलोक्य निहतोऽस्मि
शिरसि पदा ॥")

**सीत्कृतं**, क्ली, (सीत् + कृ + भावे क्तः ।) मनु-

तस्मादल्पगुणः शीतरसः संलेखनः
स्मृतः ॥"
इति राजनिर्घण्टः ॥
(यथा च ।
"सीधुः कषायाम्लकमाधुरो वा
सन्दीपनो भेदमलापहा च ।
आमातिसारानिलपित्तशूल-
श्लेष्मामयार्शोग्रहणीगदघ्नः ॥"
इति हारीते प्रथमे स्थाने ११ अध्यायः
॥)

**सीधुगन्धः**, पुं, (सीधोरिव गन्धो यस्य ।) वकुलः
।
इति शब्दरत्नावली ॥

**सीधुपुष्पः**, पुं, (सिधुवत् गन्धयुक्तं पुष्पं यस्य ।)
कदम्बः । वकुलः । इति राजनिर्घण्टः
॥

**सीधुपुष्पी**, स्त्री, (सीधुवत् गन्धयुक्तं पुष्पं यस्याः
।
ङीष् ।) धातकी । इति राजनिर्घण्टः ॥
(धातकीशब्देऽस्या विवरणं ज्ञातव्यम्
॥)

**सीधुरसः**, पुं, (सीधोरिव रसो यत्र ।) आम्र-
वृक्षः । इति राजनिर्घण्टः ॥

**सीधुसंज्ञः**, पुं, (सीधोः संज्ञा संज्ञा यस्य ।)
वकुलवृक्षः । इति राजनिर्घण्टः ॥

**सीध्रं**, क्ली, अपानम् । इति केचित् ॥

**सीपः**, पुं, तर्पणाद्यर्थजलपात्रम् । कोषा इति
भाषा । यथा, --
"वस्तुतस्तु अत्रानुद्धृतस्य
क्षेपासम्भवात् उद्धृत-
पदं हस्तादन्येन सीपादिनोद्धृतपरम् ।
तेन
सीपादियुक्तकरतर्पणे तत्रैव जले तिलान्
मिश्रयेत् ।" इति
गोपालन्यायपञ्चाननकृत-
विचारतिर्णयः ॥

स लभेत् सकलं ब्रह्मन् पृथ्वीयात्राफलं
किल ॥
तथा षोडशदानानां फलं प्राप्नोति मानवः
।
अश्वमेधादियज्ञानां तीर्थानामपि गौतम ॥
अत्युग्रतपसां वापि वेदोक्तायुश्च विन्दति
।
गौतमेदं व्रतं तस्मादवश्यं कुरु भक्तितः ॥
नेदं वक्तुं समर्थास्ते फणीन्द्रचतुराननाः ।
कृताद्व्रतोत्तमादस्माद्दीर्घायुः प्राप्तवानहम्
।
व्रतानां नित्यमाम्रातं भक्तिदं कुर्व्वतां
सताम् ॥
सूत उवाच ।
मुनये गौतमायेत्थं जानकीजम्मसम्भवम्
।
व्रतञ्च व्रतमाहात्म्यं विधानं श्रुतिचोदितम्
।
जगाद सकलं व्यक्तं मार्कण्डेयो मुनीश्वरः
॥"
इत्यादि श्रीभविष्यपुराणे
श्रीसीतानवमीव्रत-
माहात्मां समाप्तम् ॥ * ॥ स्वर्गगङ्गा । इति
मेदिनी ॥ सा तु भद्राश्ववर्षगङ्गा । यथा,
श्रीभाग-
वते ५ स्कन्धे । "सीता तु ब्रह्मसदनात्
केशवा-
चलादिगिरिशिखरेभ्योऽधोऽधः प्रस्रवन्ती
गन्ध-
मादनसूर्द्धसु पतित्वान्तरेण भद्राश्वं वर्षं
प्राच्यां
दिशि क्षारसमुद्रमभिप्रविशति ॥" अपि च
।
मार्कण्डेय उवाच ।
"यत्र देवसभा भूता सानौ तस्य महागिरेः
।
तत्र जाता देवनदी सीताख्या वचनाद्विधेः
॥
स्नापयित्वा यथा चन्द्रं सीतातोयैर्मनोहरैः
।

ष्याणां गुणानुराजगशब्दः । यथा, --
"शब्दो गुणानुरागोत्थः प्रणादः सीत्कृतं
नृणाम् ॥"
इति हेमचन्द्रः ॥

**सीत्यं**, क्ली, (सीतया निर्वृत्तमिति । सीता + यत्)

धान्यम् । इति हेमचन्द्रः ॥

**सीत्यं**, त्रि, (सीतया समितम् । सीता + "नौ-

वयोधर्म्मेति ।" ४ । ४ । ९१ । इति यत् ।)
कृष्टक्षेत्रादि । इत्यमरः । २ । ९ । ८ ॥

**सीद्यं**, क्ली, आलस्यम् । इति भूरिप्रयोगः ॥

**सीधुः**, पुं, (शोधुः । पृषोदरादित्वात् शस्य सः ।)

मद्यम् । इति शब्दरत्नावली ॥ (यथा, देवी-
भागवते । ५ । २४ । ६० ।
"अशोकं कुरुराजानं पादघातविकाशितम् ।
वकुलं सीधुसेकेन तथा कुरुवकं कुरु ॥")
मद्यभेदः । इत्यमरः । २ । १० । ४२ ॥ यथा,
--
"इक्षोः पक्वै रसः सिद्धः सीधुः पक्वरसश्च
सः ।
आमैस्तैरेव यः सोधुः स च शीतरसः स्मृतः ॥
सीधुः पक्वरसः श्रेष्ठः स्वराग्निबलवणकृत् ।
वातपित्तकरा हृद्यः स्नेहनो रोचनो हरेत् ॥
विबन्धभेदशोफार्शः शोफोदरकफामयान् ।

**सीमन्तः**, पुं, (सीम्नोऽन्तः । शकन्ध्वादित्वात्

साधुः ।) केशेषु बर्त्म । इति हेमचन्द्रः ॥
सिंति इति भाषा ॥ (यथा महाभारते ।
१ । ४४ । २
"अपश्यन्त तथा यान्तमाकाशे
नागमुत्तमम् ।
सीमन्तमिव कुर्व्वाणं नभसः
पद्मवर्च्चसम् ॥")
सीमन्तोन्नयनसंस्कारः । यथा,
याज्ञवल्क्यः ।
१ । ११ ।
"गर्भाधानमृतौ पुंसःसवनं स्पन्दनात्
पुरा ।
षष्ठेऽष्टमे वा सीमन्तः प्रसवे जातकर्म्म
च ॥"
(प्रत्यङ्गविशेषः । यथा, सुश्रुते । ३ । ५
।
"चतुर्द्दशैव सीमन्ताः । ते
चास्थिसघातवद्गण-
नीया यतस्तैर्युक्ता अस्थिसंघाताः । ये
ह्युक्ताः
संघातास्तु खल्वष्टादशैकेषाम् ॥")

**सीमन्तकं**, क्ली, (सीमन्ते कायति शोभते इति ।

कै + कः ।) सिन्दूरम् । इति
राजनिर्घण्टः ॥

**सीमन्तकः**, पुं, नरकावासः । यथा, --

"लक्ष पञ्चव नरकावासा सीमन्तकादयः
॥"
इति हेमचन्द्रः ॥

**सीमन्तिनी**, स्त्री, (सीमन्तोऽस्या अस्तीति ।

इनिः । ङीप् ।) नारी । इत्यमरः । २ ।
६ । २ ॥
(यथा, रामायणे । २ । ३५ । २१ ।
"मास्म सीमन्तिनी काचित् जनयेत्
पुत्त्रमी-
दृशम् ।
सौमित्रे ! योऽहमम्बाया दद्मि
शोकमनन्त-
कम् ॥")

| चन्द्र पपुब्र ह्यवाक्यात् सर्व्वे ते त्रिदिवौकसः ॥<br>तदा सीताजलं चन्द्रस्नानयोगाच्च सामृतम् ।<br>भूत्वा निपतितं तस्मिन् वृहल्लोहितसंज्ञके ॥<br>तद्विवृद्धं तदा तोयं तस्मिन् सरसि निर्म्मलम् ।<br>तद्ददर्श स्वयं ब्रह्मा विवृद्धं साधु तज्जलम् ॥<br>तद्दर्शनाज्जलात्तस्माद्दुत्थिता कनकोत्तमा ।<br>नन्द्रभागेति तन्नाम विधिश्चक्रे स्वयं ततः ।<br>भार्य्यार्थे सागरस्तान्तु जग्राह ब्रह्मसम्मते ॥"<br>इति कालिकापुराणे २२ अध्यायः ॥ | | |
| --- | --- | --- |

**सीमन्तोन्नयनं**, क्ली, (सीमन्तस्य उन्नयनं उत्तो-
लनं यत्र ।) संस्कारविशेषः । इति
जटाधरः ॥
तद्विधानञ्च यथा, --
अथ सीमन्तोन्नयनम् ।
"यदि पुंसवनं न कृतं तदा तस्मिन्नेव
दिने
प्रायश्चित्तात्मकमहाव्याहृतिहोमंकृत्वा
पुंस-
वनञ्च कृत्वा सीमन्तोन्नयनं कार्य्यम् ।
तथा च
नारदः ।
'येषान्तु न कृताः पित्रा संस्कारविधयः
क्रमात् ।
कर्त्तव्या भ्रातृभिस्तेषां पैतृकादेव
तद्धनात् ॥
अविद्यमाने पित्रर्थे स्वांशादुद्धृत्य वा
पुनः ।
अवश्यकार्य्याः संस्कारा भ्रातृभिः
पूर्व्वसंस्कृतैः ॥
क्रमात् भ्रातृणां संस्काराणाञ्च
पौर्व्वापर्य्यक्रमात्
भ्रातृक्रमस्तु सोदरविषय एव । विवाहे
तथा
दर्शनात् । छन्दोगपरिशिष्टम् ।
देवतानां विपर्य्यासे जुहोतिषु कथं भवेत्
।
सर्व्वं प्रायश्चित्तं कृत्वा क्रमेण जुहुयात्
पुनः ॥
संस्कारा अतिपत्येरन् स्वकालाच्चेत्
कथञ्चन ।
हुत्वैतदेव कुर्व्वीत ये तूपनयनादधः ॥'
एतदित्यनेन सर्व्वं प्रायश्चित्तमनुकृष्टं
तच्च प्रागेव
विवृतम् । उभयकरणे तन्त्रेणैव मातृका-
पूजादि ।
'गणशः क्रियमाणे तु मातृभ्यः पूजनं
सकृत् ।

टुग्रथ्ने नीलस्तवके स युगमान् तं
मतुवन्तम् ।
तथा च भट्टनारायणधृतं
छन्दोगपरिशिष्टम् ।
'शलाटु नीलमित्युक्तं ग्रथ्नस्तवक
उच्यते ।
कपुष्णिकाभितः केशा मूद्‌र्ध्नि पश्चात्
कपुच्छलः
एतद्वचनं नारायणोपाध्यायेन धृतम् ।
उडु-
म्बरभवमौडम्बरम् । अयमूर्ज्जावतो
वृक्ष इति
मन्त्रेण भार्य्यायाः कण्ठे बध्नाति ॥ *
॥ अथ
सीमन्तमूर्द्ध्वं नयति भूरिति
दर्भपिञ्जलीभिरेव
प्रथमं भुव इति द्वितीयं स्वरिति
तृतीयम् ।
अथानन्तरं यत्र सिन्दूरं स्त्री ददाति तं
सीमन्तं
ललाटोद्‌र्ध्वं नयति भूरिति मन्त्रेण
दर्भपिञ्जली-
भिस्तिसृभिः ।
एकवारकरणाद्यावन्त्युन्नयनानि
तावतीभिरेव तिसृभिरित्यर्थः ।
प्रथमादिपदानि
तु व्याहृतीनां पिञ्जलीनाञ्च
पृथङ्‌नियोगार्थम्
पिञ्जली पवित्रम् । तथा च
छन्दोगपरिशिष्टम्
'अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च
।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ।
एतदेव हि पिञ्जल्या लक्षणं समुदाहृतम्
॥'
गोभिलः । अथ वीरतरेण
येनादितेरित्येतयर्च्चा
बीरास्तरन्त्यनेन युद्धमिति वीरतरः
शरः ॥

इति मनिन्प्रत्ययेन साधुः । "डावुभाभ्याम-
न्यतरस्याम् ।" ४ । १ । १३ । इति पाक्षिको
डाप् ।)
ग्रामादीनामवधारितान्तभागः । सीमाना इति
भाषा । तत्पर्य्यायः । मर्य्यादा २ अवधिः ३
आघाटः ४ । इति जटाधरः ॥ (यथा, मनुः ।
८ । २५३ -- २५४ ।
इति मनिन्प्रत्ययेन साधुः । "डावुभाभ्याम-
न्यतरस्याम् ।" ४ । १ । १३ । इति पाक्षिको
डाप् ।)
ग्रामादीनामवधारितान्तभागः । सीमाना इति
भाषा । तत्पर्य्यायः । मर्य्यादा २ अवधिः ३
आघाटः ४ । इति जटाधरः ॥ (यथा, मनुः ।
८ । २५३ -- २५४ ।
"यदि संशय एव स्यात् लिङ्गानामपि दर्शने ।
साक्षिप्रत्यय एव स्यात् सीमावादविनिर्णयः ॥
ग्रामीयककुलानाञ्च समक्षं सीम्नि साक्षिणः ।
प्रष्टव्याः सीमलिङ्गानितयोश्चैव विवादिनोः ॥")
स्थितिः । (यथा, माघे । ३ । ५७ ।
"यस्यामजिह्मा महतीमपङ्काः
सिमानमत्यायतयोऽत्यजन्तः ।
जनैरजातस्खलनैर्ण जातु
द्वयेऽप्यमुच्यन्त विनीतमार्गाः ॥")
क्षेत्रम् । अण्डकोषः । इति मेदिनी ॥ (यथा, --
"केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥"
इति सिद्धान्तकौमुदी । २ । ३ । ३६ ॥)
वेला । इति विश्वः ॥

**सीमाविवादः**, पुं, (सीमायाः विवादः ।) ग्रामा-
दीनां सीमाविषयककलहः । यथा । अधुना
सीमाविवादनिर्णय उच्यते ।
"सीम्नो विवादे क्षेत्रस्य सामन्ताः स्थविरादयः
गोपाः सीमाकृषाणा ये सर्व्वे च वनगोचराः ॥
नयेयुरेते सीमानं स्थलाङ्गारतुषद्रुमैः ।
सेतुवल्मीकनिम्नास्थिचैत्याद्यैरुपलक्षिताम् ॥"
ग्रामद्वयसम्बन्धिनः क्षेत्रस्य सीम्नी विवादेतथैक-
ग्रामान्तर्व्वर्त्तिक्षेत्रमर्य्यादाविवादे च सामन्ता-
दयः स्थलाङ्गारादिभिः पूर्व्वकृतैः सीमालक्षणै-
रुपलक्षितां चिह्नितां सीमां नयेयुः निश्चिनियुः
सीमा क्षेत्रादिमर्य्यादा सा चतुर्व्विधा । जन-

सकृदेव भवेत् श्राद्धमादौ न पृथगादिषु
॥'
इति छन्दोगपरिशिष्टात् ॥ * ॥
गोभिलः । अथ सीमन्तोन्नयनं प्रथमे
गर्भे चतुर्थे
मासि षष्ठे ऽष्टमे वा । अथ
पुंसवनानन्तरम् ।
सीमन्तः केशरचनाविशेषः ।
वाशब्देक्यान्न चतु-
र्थादिमासानां तुल्यवद्विकल्पः । किन्तु
पूर्व्वपूर्व्व-
कालः प्रशस्तः । समर्थस्य क्षेपायोगात्
इति
न्यायात् ततश्च नवममासादौ
प्रायश्चित्तं कृत्वैव
कर्त्तव्यम् । प्रथमगर्भ इत्युपादानात् ।
यदि
कथञ्चिदकृत एतस्मिन् संस्कारे
गभनाशे पुन-
र्गर्भोत्पत्तौ अयं कालनियमो न किन्तु
गर्भस्पन्दने
सीमन्तोन्नयणं यावन्न वालप्रसबः । इति
शङ्ख-
लिखितोक्तकालो ग्राह्यः ।
वृहद्राजमार्त्तण्डे ।
'या नार्य्यकृतसीमन्ता प्रसूते च
कथञ्चन ।
अङ्के विधाय तं बालं पुनः संस्कारमर्हति
॥ * ॥
षष्ठे मासेऽष्टमेऽह्नीज्यकुजदिनकृतां
नन्दभद्रे
तिथौ चे
मैत्रेमूले मृगाङ्के
करपितृपवनेपौष्णविष्णुत्रियुग्म
पुष्याश्वादित्यरौद्रे युवतिहरिझसे
वृश्चिके वापि
लग्ने ।
चन्द्रे तारानुकूले शुभमपि नियतं
स्याच्च
सीमन्तकर्म्म ॥
मृगाजरहिते लग्ने नवांशे पुंग्रहस्य च ।

तथा च छन्दोगपरिशिष्टम् ।
'श्वाविच्छलाका शलली तथा वीरतरः
शरः ।
तिलतण्डुलसम्पाकः कृषरः
सोऽभिधीयते ॥'
ततश्च शरेण येनादितेरिति मन्त्रेण
सीमन्तमूद्र्ध्वं
नयति इति पूर्व्वसूत्रादनुवर्त्तते ॥ * ॥
अथ
पूर्णेन सूत्रचात्रेण वाकामहमित्येतयर्च्चा
। चात्रं
तर्कुः । तेन सूत्रपूर्णेन वाकामहमिति
मन्त्रेण
सीमन्तमूद्र्ध्वं नयतीति शेषः । त्रिः
श्वेतया
शलल्या यास्ते वाके सुमतय इति
स्थानत्रितये
शुक्लेन शेजाजन्तुकण्टकेन यास्ते
इति मन्त्रेण
सीमन्तमूद्र्ध्वं नयतीति शेषः । कृषरः
स्थाली-
पाक उत्तरघृतस्तमवेक्षयेत् । कृषर
उक्तः ।
स्थालीपाकश्चरुः स उपरि दत्तघृतस्तं
बध्वाः
प्रदर्शयेत् । स्थालीपाकपदं
चरुस्थाल्यां कृष-
रस्य श्रपणार्थम् । मनुष्यार्थत्वात्
द्विःप्रक्षालनम्
ततश्च यः कश्चिन्महानसे श्रपयित्वा
स्थापयेत् ।
किम्पश्यसीत्युक्त्वा प्रजामिति
वाचयेत् किं पश्य-
सीति पतिरुक्त्वा प्रजामित्यादि मन्त्रं
गभिणीं
वाचयेत् । तं सा स्वयं भुञ्जीत ।
तमेवेक्षितं
कृषरम् । वीरसूर्जीवसूर्ज्जीवपत्नीति
ब्राह्मण्यो
मङ्गल्यादिभिर्व्वाग्भिरुपासीरन्। बीरान्
विक्रा-

पदसीमा १ ग्रामसीमा २ क्षेत्रसीमा ३ गृह-
सीमा ४ चेति । सा च यथासम्भवं पञ्चलक्षणा
तदुक्तं नारदेन ।
"ध्वजिनी मत्सिनी चैव नैधानी भयवर्ज्जिता ।
राजशासननीता च सीमा पञ्चविधा स्मृता ॥"
ध्वजिनी वृक्षादिलक्षिता । वृक्षादीनां प्रकाश-
कत्वेन ध्वजतुल्यत्वात् । मत्सिनी सलिलवती
मत्स्यशब्दस्य स्वधारजललक्षणत्वात्। नैधानी
निखाततुषाङ्गारादिमती। तेषां निखाततत्वेन
निधानतुल्यत्वात्। भयवर्जिता अर्थिप्रत्यर्थि-
परस्परसम्प्रतिपत्तिनिर्म्मिता । राजशासन-
नीता । ज्ञातृचिह्नाभावे राजेच्छया निर्म्मिता
एवम्भूतायां षोढा विवादः संभवति । यथाह
कात्यायनः ।
"आधिक्यं न्यूनता चांशे अस्तिनास्तित्वमेव च
अभोगभुक्तिः सीमा च षड्भूवादस्य हेतवः ॥"
इति । तथा हि । ममात्र पञ्चनिवर्त्तनाया भूमे-
रधिका भूरस्तीति केनचिदुक्ते पञ्चनिवर्त्तनैव
नाधिकेत्याधिक्ये विवादः । पञ्चनिवर्त्तना मदीयां
भूरित्युक्तेन ततो न्यूनैवेति न्यूनतायाम् । पञ्च-
निवर्त्तनो ममांश इत्युक्तेऽंश एव नास्तीत्यस्ति-

केचिद्वदन्ति सीमन्तं तथा रिक्तेतरे
तिथौ ॥
गोभिलः । प्रातः सशिरस्काप्लुतोदगग्रेषु
दर्भेषु
पश्चादग्नेः प्राच्युपविशति उक्तार्थमेतत् ।
पश्चात्
पतिरवस्थाय युगमन्तमौडम्बरं
शलाटुग्रथ्नमाव-
ध्नाति अयमूर्ज्जावतो वृक्ष इति । अग्नेः
पश्चात्
पतिः स्थित्वा । युगानि फलानि यस्मिन्
शला-

न्तान् पुत्त्रान् सूत इति वीरसूस्त्वं
भवेति वाक्य-
शेषः प्रतिपदं स्यात् । जीवतो
दीर्घायुषः
पुत्तान् सूत इति जीवसूः जीवतः पत्नी
जीव-
पत्री अविधवेत्यर्थः । एवं
प्रकाराभिर्व्वाग्भि-
रनुनयेयुः । क्रमश्च
महाव्याहृतिभिर्हुत्वा
औडुम्बरफलस्तवकं कण्ठे बद्ध्वा
प्रजामिति
वाचयेदित्यन्तं तन्त्रं कृत्वा
व्याहृतिभिर्होमादि-
तन्त्रं समापयेत् ततो ब्राह्मस्य
उपासीरन् ।”
इति संस्कारतत्त्वम् ॥

**सीमा**, [न्] स्त्री, (सीयते इति । सि + “नामन्-

सीमन्व्योमन्निति ।” उणा० ४ । १५०
।

**सीमा**, [न्] स्त्री, (सीयते इति । सि + “नामन्-

सीमन्व्योमन्निति ।” उणा० ४ । १५०
।

नास्तित्वविवादः सम्भवति । मदीया भूः प्राग-
विद्यमानभोगैव भुज्यत इत्युक्तेन सन्तता चिर-
न्तन्येव मे भुक्तिरित्यभोगभुक्तौ विवादः । इयं
मर्य्यादियञ्चेति सीमाविवाद इति षट्प्रकार एव
विवादः सम्भवति । षट्प्रकारेऽपि भूविवादे श्रुत्यर्थाभ्यां सीमाया अपि
निर्णीयमानत्वात्
सीमानिर्णयप्रकरणे तस्यान्तर्भावः । समन्ता-
द्भवाः सामन्ताः । चतसृषु दिक्ष्वनन्तरा ग्रामा-
दयस्त च प्रतिसीमं व्यवस्थिताः ।
"ग्रामो ग्रामेषु सामन्तः क्षेत्रं क्षेत्रस्य कीर्त्ति-
तम् ।
गृहं गृहस्य निर्द्दिष्टं समन्तात् परिरभ्य हि ॥"
इति कात्यायनवचनात् । ग्रामादिशब्देन तत्-
स्थाः पुरुषा लक्ष्यन्त । ग्रामः पलायत इति
यथा । सामन्तग्रहणञ्च तत्संसक्ताद्युपलक्षणा-
र्थम् । उक्तञ्च कात्यायनेन ।
"संसक्तकास्तु सामन्तास्तत्संसक्तास्तथोत्तराः ।
संसक्तसक्तसंसक्ताः पद्माकाराः प्रकीर्त्तिताः ॥"
इति । स्थविरा वृद्धाः । आदिग्रहणेन मौलोद्ध-
तयोर्ग्र हणम् । वृद्धादिलक्षणञ्च तेनैवोक्तम् ।
"निष्पाद्यमानं यैर्दृष्टं तत् कार्य्यं तद्गुणा-
न्वितैः ।
वृद्धा वा यदि वावृद्धास्ते च वृद्धाः प्रकीत्तिताः ॥
ये तत्र पूर्व्वं सामन्ताः पश्चाद्देशान्तरं गताः ।
अश्मनोऽस्थीनि गोबालांस्तुषान भस्मकपा-
लिकाः ।
करीषमिष्टकाङ्गारशर्क्करावालुकास्तथा ॥
यानि चैवं प्रकाराणि कालाद्भूमिर्न भक्षयेत् ।
तानि सन्धिषु सोमाया अप्रकाशानि कारयेत् ॥
एतैर्लिङ्गैर्नयेत् सीमां राजा विवदमानयोः ॥"
प्रच्छन्नलिङ्गानि एतैः
प्रकाशाप्रकाशरूपैर्लिङ्गैः
सामन्तादिप्रदर्शितैः सोमां प्रति
विवदमानयोः
सीमानिर्णयं कुर्य्याद्राजा ॥ * ॥ यदा पुनश्चि-
ह्नानि न सन्ति विद्यमानानि वा लिङ्गालिङ्ग-
तया सन्दिग्धानि तदा निर्णयोपायमाह ।
"सामन्ता वा समग्रामाश्चत्वारोऽष्टौ दशापि वा
रक्तस्रग्वसनाः सीमां नयेयुः क्षितिधारिणः ॥"
सामन्ताः पूर्व्वोक्तलक्षणाः । समग्रामाश्चत्वा-
रोऽष्टौ दशापि वा इत्येवं समसंख्याः प्रत्यासन्न-
ग्रामीणाः । रक्तस्रग्विणो रक्ताम्बरधराः मूर्द्धा-
रोपितक्षितिखण्डाः सीमानं नयेयुः प्रदर्शयेयुः
सामन्ता वेति विकल्पाभिधानं स्मृत्युत्तरोक्त-
साक्ष्यभिप्रायम् । यथाह मनुः ।
"साक्षिप्रत्यय एव स्यात् सीमावादविनिर्णयः ।"
तत्र च साक्षिणां निर्णेतृत्वं मुख्यं तदभावे
सामन्तानाम् । तदुक्तम् ।
"साक्ष्यभावे तु चत्वारो ग्रामाः सीमन्तवासिनः
सीमाविनिणयं कुर्य्युः प्रयता राजसन्निधौ ॥"
तदभावे तत्संसक्तादीनां निर्णेतृत्वम् । यथाह
कात्यायनः ।
"स्वार्थसिद्धौ प्रदुष्टेषु सामन्ते ष्वर्थगौरवात् ।
तत्संसक्तैस्तु कत्तव्य उद्धारो नात्र संशयः ॥
संसक्तसक्तदाषे तु तत्संसक्ताः प्रकीर्त्तिताः ।
स्थलादिचिह्नाभावेऽपि
साक्षिसामन्तादीनां
सीमाज्ञान उपायविशेषो नारदेनोक्तः ।
"निम्नगापहृतोथृष्टनष्टचिह्नासुभूमिषु ।
तत्प्रदेशानुमानाच्च प्रमाणाद्भोगदर्शनात् ॥"
निम्नगाया नद्या अपहृतेनापहरणेनोत्सृ-
ष्टानि स्वस्थानात् प्रच्युतानि नष्टानि वा
लिङ्गानि यासु मर्य्यादाभूमिषु तत्र तत्प्रदेशा-
नुमानात् उत्सृष्टनष्टचिह्नानां प्राचीनप्रदेशा-
नुमानाद् ग्रामादारभ्य सहस्रदण्डपरिमितं
क्षेत्रमस्य ग्रामस्य पश्चिमे भाग इत्येवं विधानातु
प्रमाणाद्वा प्रत्यर्थिसमक्षमविप्रतिपन्नायाः
स्मार्त्तकालोपलक्षितैर्भुक्तैर्व्वा निश्चिनुयुः । बृह-
स्पतिना चात्र विशेषो दर्शितः ।
"आगमञ्च प्रमाणञ्च भोगं कालञ्च नाम च ।
भूभागलक्षणञ्चैव ये विदुस्तऽत्र साक्षिणः ॥"
एते च साक्षिसामन्तादयः शपथैः शापिताः
सन्तः कुलादिसमक्षं राज्ञा प्रष्टव्याः । यथाह
मनुः ।
"ग्रामेयककुलानान्तु समक्षं सीम्नि साक्षिणः ।
प्रष्टव्याः सीमलिङ्गानि तयोश्चैव विवादिनोः ॥
ते पृष्टाः साक्ष्यादयः समस्ता ऐकमत्येन सीम्नि
निणयं कुर्य्युः । तैर्निर्णीतां सीमां तत्प्रदर्शित-

तन्मूलत्वात्तु ते मौला ऋषिभिः परिकीर्त्तिताः ॥
उपश्र वणसम्भोगकार्य्याख्यानोपचिह्निताः ।
उद्धरन्ति पुनर्यस्मादुद्धतास्ते ततः स्मृताः ॥"
गोपा गोचारकाः ।
"सीमाकृषाणाः सीमासंनिहितक्षेत्रकर्षकाः ।"
सर्व्वे च वनगोचरा वनचारिणो व्याधादयस्ते च मनुनोक्ताः ।
"व्याधान् शाकुनिकान् गोपान् कैवर्त्तान् मूलखातकान् ।
व्यालग्राहानुञ्छवृत्तीनन्यांश्चवनगोचरान् ॥"
स्वलमुन्नतो भूप्रदेशः । अङ्गारोऽग्ने रुच्छिष्टम् ।
तुषा धान्यत्वचः । द्रुमा न्यग्रोधादयः । सेतु-
र्जलप्रवाहबन्धः । चैत्यं पाषाणादिबन्धः ।
आद्यशब्देन वेणुवालुकादीनां ग्रहणम् । एतानि
च प्रकाशाप्रकाशभेदेन द्विःप्रकाराणि । तथा च मनुः ।
"सीमावृक्षांस्तु कुर्व्वीत न्यग्रोधाश्वत्थकिंशुकान्
शाल्मलीन् शालतालांश्च क्षीरिणश्चैव पाद-
पान् ॥
गुल्मान् वेणूंश्च विविधान् शमी वल्ली स्थलानि
च ।
शरान् कुब्जकगुल्मांश्च तथा सीमा न नश्यति ॥
तडागानुदपानानि वाप्यः प्रस्रवणानि च ।
सोमासन्धिषु कार्य्याणि देवतायतनानि च ॥"
इति प्रकाशरूपाणि ॥
"उपच्छन्नानि चान्यानि सीमालिङ्गानि कारयेत् ।
कर्त्तव्या न प्रदुष्टास्तु राज्ञा धर्म्मं विजानता ॥"
सामन्ताद्यभावे मौलादयो ग्राह्याः । तेषाम-
भावे सामन्ता मौलवृद्धोद्धृतादयः । स्थावरे
षट्प्रकारेऽपि कार्य्या नात्र विचारणेति कात्या-
यनेन क्रमविधानात् । एते च सामन्तादयः
संख्यागुणातिरेकेन संभवन्ति ।
"सामन्ताः साधनं पूर्व्वंनिर्दोषाः स्युर्गुणा-
न्विताः ॥"
द्विगुणास्तूत्तरा ज्ञेयास्ततोऽन्ये त्रिगुणा मताः
इति स्मरणात् ॥ * ॥
ते च साक्षिणः सामन्तादयश्च स्वैः स्वैः शपथैः
शापिताः सन्तः सीमां नयेयुः ।
"शिरोभिस्ते गृहीत्वोर्व्वीं स्रग्विणो रक्तवाससः
सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समञ्जसम् ॥
इति स्मरणात् ॥
नयेयुरिति बहुवचनं द्वयोर्निरासार्थं नैकस्य ।
"एकश्चेदुन्नयेत् सोमां सोपवासः समुन्नयेत् ।
रक्तमाल्याम्बरधरो भूमिमादाय मूर्द्धनि ॥"
इति नारदेनेकस्याभ्यनुज्ञानात् । यस्तु ।
"नैकः समुन्नयेत् सोमां नरः प्रत्ययवानपि ।
गुरुत्वादस्य कार्य्यस्य त्रियेषा बहुषु स्थिता ॥"
इत्येकस्य निषेधः । स उभयानुमतधर्म्मविद्व्यति-
रिक्तविषय इत्यविरोधः ॥ * ॥
सकललिङ्गयुक्तां साक्ष्यादिनामान्विताञ्चाविस्म-
रणार्थं पत्रे समारोपयेत् । उक्तञ्च मनुना ।
"ते पृष्टास्तु यथा ब्रूयुः सामन्ताः सीम्नि निर्णयम् ।
निबध्नीयात्तथा सीमां सर्व्वांस्तांश्चैव नामतः ॥
एतेषां साक्षिसामन्तप्रभृतीनां सोमाचंक्रमण-
दिनादारभ्य यावत् त्रिपक्षं राजदैविकं व्यसनं
चेन्नोपपद्यते तदा तत्प्रदशनात् सोमानिर्णयः ।
अयञ्च राजदैविकव्यसनावधिः कात्यायनोक्तः ।
"सीमाचंक्रमणे कोषे पादस्पर्शे तथैव च ।
त्रिपक्षपक्षसप्ताहं दैवराजिकमिष्यते ॥"
इति ॥
यदा त्वमीषां उक्तसाक्ष्यवचसां त्रिपक्षाभ्यन्तरे
रोगादिर्दृश्यते । अथवा प्रतिवादिनिर्द्दिष्टाभ्य-
धिकसंख्यागुण-साक्ष्यन्तरविरुद्धवचनतातदा
ते मृषाभाषितया दण्डनीयाः । तदाह ।
"अनृते तु पृथग्दण्ड्या राज्ञा मध्यमसाहसम् ॥
अनृते मिथ्यावदने निमित्तभूते सति सर्व्वेसा-
मन्ताः प्रत्येकं मध्यमसाहसेन चत्वारिंशदधि-
केन पणपञ्चशतेन दण्डनीयाः । सामन्तविष-
यता चास्य साक्ष्यमौलादोनां स्मृत्यन्तरे
दण्डान्तरविधानादवगम्यते। तथा च मनुः ।
"यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः ।

| | | |
|---|---|---|
| सीमाज्ञाने नृणां वीक्ष्यनित्यं लोके विपर्य्ययम् ॥ | | विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतं दमम् ॥”<br>नारदोऽपि ।<br>“अथ चदनृतं ब्रूयुः सामन्ताः सीम्नि निर्णये ।<br>सर्व्वे पृथक् पृथक् दण्ड्या राज्ञा मध्यमसाह-<br>सम् ॥”<br>सामन्तानां मध्यमसाहसं दण्डमभिधाय ।<br>“शेषाश्चेदनृतं ब्रूयुर्नियुक्ता भूमिकर्म्माणि ।<br>प्रत्येकन्तु जघन्यास्ते विनेयाः पूर्व्वसाहसम् ॥” |

तत्संयुक्तादिषु प्रथमं साहसमुक्तवान् । मौला-
दीनामपि तमेव दण्डमाह ।
“मौलवृद्धादयस्त्वन्ये दण्डगत्या पृथक् पृथक्
।
विनेयाः प्रथमेनैव साहसेनानृते स्थिताः ॥”
इति ।
आदिग्रहणेन गोपशाकुनिकव्याधवनगोचराणां
ग्रहणम् ॥ * ॥ यदपि शाकुनिकादीनां पाप-
रतत्वाल्लिङ्गदर्शन एवोपयोगो न साक्षात्सीमा-
निर्णये तथापि लिङ्गदर्शन एव मृषाभाषित्व-
सम्भवात् दण्डविधानमुपपद्यत एव । अनृते
तु
पृथग्दण्ड्या इत्यतद्दण्डविधानमज्ञानविषयम्
।
“बहूनान्तु ग्रहीतॄणां न सर्व्वे निर्णयं यदि ।
कुर्य्युर्भयाद्वा लोभाद्वा दण्ड्यास्तूत्तमसाहसम्
॥”
इति ज्ञानविषये साक्ष्यादीनां कात्यायनेन
दण्डान्तरविधानात् ॥ * ॥ तथा साक्षिवचन-
भेदेऽप्ययमेव दण्डस्तेनैवोक्तः । कीर्त्तिते यदि
भेदः स्याद्दण्ड्यास्तूत्तम-साहसमिति । एव-
मज्ञानादिना अनृतवदने साक्ष्यादीन् दण्ड-
यित्वा पुनः सीमाविचारः प्रवर्त्तयितव्यः ।
अज्ञा-
नोक्तौ दण्डयित्वा पुनः सीमां
विचारयेदित्युक्त्वा
“त्यक्त्वा दुष्टांस्तु सामन्तानन्यान्
भौलादिभिः
सह ।
संमिश्रः कारयेत् सीमामेवं धर्म्मविदो विदुः
॥”
इति निर्णयप्रकारस्ते नैवोक्तः ॥ * ॥ यदा
पुनः
सामन्तप्रभृतयो ज्ञातारश्चिह्नानि च न सन्ति
तदा कथं निर्णय इत्यत आह ।
“अभावे ज्ञातृचिह्नानां राजा सीम्नः प्रवर्त्तिता
॥
ज्ञातॄणां सामन्तादीनां लिङ्गादीनाञ्च । वृक्षा-
दीनामभावे राजैव सीम्नः प्रवर्त्तिता प्रवर्त्त-

तथा च कात्यायनः ।
“क्षेत्रकूपतडागानां केदारारामयोरपि ।
गृहप्रसादावसथनृपदेवगृहेषु च ॥” इति ॥ *
॥
सीमानिर्णयमुक्त्वा तत्प्रसङ्गेन
मर्य्यादाप्रभेद-
नादौ दण्डमाह ।
“मर्य्यादायाः प्रभेदे तु सीमातिक्रमणे तथा
।
क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः ॥”
अनेकक्षेत्रव्यवच्छेदिका साधारणी
भूमर्य्यादा
तस्याः प्रकर्षेण भेदनेसीमातिक्रमणे
सीमामति-
लङ्घ्य कर्षणे क्षेत्रस्य च भयादिप्रदर्शनेन
हरणे
यथाक्रमेणाधमोत्तममध्यमदण्डावेदितव्याः
।
क्षेत्रग्रहणञ्च गृहारामाद्युपलक्षणार्थम् । यदा
पुनः स्वीयभ्रान्त्या क्षेत्रादिकमपहरति तदा
द्विशतो दमो वेदितव्यः ॥ यथाह मनुः ।
“गृहं तडागमारामं क्षेत्रं वा भीषया हरन् ।
शतानि पञ्च दण्ड्यः स्यादज्ञानाद्द्विशतो
दमः ॥”
इति ॥
अपह्रियमाणक्षेत्रादि भूयस्त्वपर्य्यालोचनया
कदाचिदुत्तमोऽपि दण्डः प्रयोक्तव्यः । अत
एवाह ।
“वधः सर्व्वस्वहरणं पूरान्निर्वासनाङ्कने ।
तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसः ॥”
इति ॥ * ॥
यः पुनः परक्षेत्रे सेतुकूपादिकं प्रार्थनया
अर्थ-
दानेन वा लब्धानुज्ञो निर्मातुमिच्छति तं
निषे-
धतः क्षेत्रस्वामिन एव दण्ड इत्यत आह ।
“न निषेध्योऽल्पवाधस्तु सेतुः
कल्याणकारकः ।
परभूमिं हरन् कूपः स्वल्पक्षेत्रो बहूदकः ॥”

उत्पन्ने स्वामिनो भोगस्तदभावे
महीपतेः ॥”
क्षेत्रस्वामिनमनभ्युपगम्य तदभावे
राजानं वा
यः परक्षेत्रे सेतुं प्रवर्त्तयत्यसौ न
फलभाग्भव-
त्यपि तु तदुत्पन्ने फले क्षेत्रस्वामिनो
भोग-
स्तदभावे राज्ञः । तस्मात्
प्रार्थनयार्थदानेन वा
क्षेत्रस्वामिनं तदभावे राजानं
वाप्यनुज्ञाप्यैव
परक्षेत्रे सेतुः प्रवर्त्तनीय इति
तात्पर्य्यार्थः ॥ * ॥
क्षेत्रस्वामिना सेतुर्न प्रतिषेध्य
इत्यक्तमिदानीं
तस्यैव प्रसक्तानुप्रसक्त्या
क्वचिद्विध्यन्तरमाह ।
“फालाहतमपि क्षेत्रं न कुर्य्याद्यो न
कारयेत्
स प्रदाप्यः कृष्टफलं क्षेत्रमन्येन
कारयेत् ॥”
यः पुनः क्षेत्रस्वामिनः पार्श्वेऽहमिदं क्षेत्रं
कृषामि इत्यङ्गीकृत्य पश्चादुत्सृजति न
चान्येन
कर्षयति तच्च क्षेत्रं यद्यपि
फलाहतमीषद्बलेन
विदारितं न सम्यग्वीजवापार्हं तथापि
तस्या-
कृष्टस्यफलंयावत्तत्रोत्पत्त्यर्हं
सामन्तादिकल्पितं
तावदसौ कर्षको दापनीयः । तच्च क्षेत्रं
पूर्वकर्ष
कादुच्छिद्यान्ये न कारयेत् । इति
सीमाविवाद
प्रकरणम् । इति मिताक्षरा ॥ * ॥ अपि
च ।
“सीमां प्रति समुत्पन्ने विवादे
ग्रामयोर्द्वयोः ।

यिता । अन्तर्भावितोऽत्र ण्यर्थः । ग्रामद्वय-
मध्यवर्त्तिनीं विवादास्पदीभूतां भुवं समं
प्रविभज्यास्येयं भूरस्येयमित्युभयो समर्प्य
तन्मध्ये सीमालिङ्गानि कुर्य्यात् । यदा तस्यां
भूमावन्यतरस्योपकारातिशयोदृश्यते तदा
तस्यैव ग्रामस्य सकला भूः समर्पणीया ।
यथाह
मनुः ।
"सीमायामविषह्यायां स्वयं राजैव धर्म्मवित् ।
प्रदिशेद्भू मिमेकेषामुपकारादिभिः स्थितिः ॥"
*
असत्यामप्यतद्भावाशङ्कायामस्याः
स्मृतेर्न्याय-
मूलतां द्योतयितुमतिदेशमाह ।
"आरामायतनग्रामनिपानोद्यानवेश्मसु ।
एष एव विधिर्ज्ञेयो बर्षाम्बुप्रवहादिषु ॥"
आरामः पुष्पफलोपचयहेतुः भूभागः ।
आयतनं
निवेशनं पलालकूटाद्यर्थं विभक्तो प्रदेशः
ग्रामः
प्रसिद्धः । ग्रामग्रहणञ्च नगराद्युपलक्षणम् ।
निपानं पानीयस्थानं कूपवापीप्रभृतिकम् ।
उद्यानं क्रीडार्थाभूमिः । वेश्म गृहम् । एतेष्वा-
रामादिष्वयमेव सामन्तसाक्ष्यादिलक्षणो
विधि
र्ज्ञातव्यः । तथा प्रवषणोद्भूतेषु जलप्रवाहेषु
अनयोर्गृहयोर्मध्ये न जलौघः प्रवहत्यनयो-
र्वेत्येवं प्रकारे विवादे आदिग्रहणात् प्रासा-
दादिष्वपि प्राचोन एव विधिर्ज्ञेयः वेदितव्यः ।

परकीयां भूमिमपहरन्नाशयन्नपि सेतुर्जल-
प्रवाहबन्धः क्षेत्रस्वामिना न प्रतिषेध्यः स
चेदीषत्पीडाकरो बहूपकारकश्च भवति ।
कूपश्चाल्पक्षेत्रव्यापित्वेनाल्पवाधो
बहूदकत्वेन
बहूपकारको नैव निवारणीयः । कूपग्रहणञ्च
वापीपुष्करिण्याद्युपलक्षणार्थम् । यदा पुन-
रसौ सर्व्वक्षेत्रवर्त्तितया बहुवाधो
नद्यादिसमीप
क्षेत्रवर्त्तितया वा अल्पोपकारकस्तदासौ
निषध्य
इत्यर्थादुक्तम्भवति ॥ * ॥ सेतोश्च
द्वैविध्यमुक्तं
नारदेन ।
"सेतुश्च द्विविधो ज्ञेयः खेयो बन्ध्यस्तथैव
च ।
तोयपवर्त्तनात् खेयो बन्ध्यः
स्यात्तन्निवर्त्तनात् ॥
इति ॥
यदा त्वन्यनिर्म्मितं सेतुं भेदनादिना नष्टं
स्वयं
संस्करोति तदा पूर्व्वस्वामिनं तद्वं श्यनृपं
वा
स्पृष्ट्वैव संस्कुर्य्यात् । यथाह नारदः ।
"पूर्व्वप्रवृत्तमुत्सन्नमपृष्ट्वा स्वामिनन्तु यः ।
सेतुं प्रवर्त्तयेत् कश्चित् न स तत्फलभाक्
भवेत्
मृते तु स्वामिनि पुनस्तद्वं श्ये वापि मानवे ।
राजानमामन्त्र्य ततः कुर्य्यात् सेतुप्रवर्त्तनम्
॥"
इति ॥ * ॥
क्षेत्रस्वामिनं प्रति उपदिष्टमिदानीं सेतोः
प्रवर्त्त यितारं प्रति आह ।
"स्वामिने योऽनिवेद्यैव क्षेत्रे सेतुं प्रवर्त्तयेत् ।

ज्येष्ठे मासि नयेत् सीमां सुप्रकाशेषु
सेतुषु ॥
सीमावृक्षांश्च कुर्व्वीत
न्यग्रोधाश्वत्थकिंशुकान् ।
शाल्मलीन् शालतालांश्च क्षीरिणश्चैव
पादपान् ॥
गुल्मान् वेणूंश्च विविधान् शमीवल्ली
स्थलानि च
शरान् कुब्जकगुल्मांश्च तथा सीमा न
नश्यति ॥
तडागान्युदपानानि वाप्यः प्रस्रवणानि
च ।
सोमासन्धिषु कार्य्याणि देवतायतनानि
च ॥
उपच्छन्नानि चान्यानि सीमालिङ्गानि
कारयेत्
सीमाज्ञाने नृणां वीक्ष्य नित्यं लोके
विपर्य्ययम्
अश्मनोऽस्थीनि गोबालान् तुषान्
भस्म कपा-
लिकाः ।
करीषमिष्टकाङ्गारान् शर्करा
वालुकास्तथा ॥
यानि चैवं प्रकाराणि कालाद्भूमिर्न
भक्षयेत् ।
तानि सन्धिषु सीमायामप्रकाशानि
कारयेत् ॥
एतैर्लिङ्गैर्नयेत् सीमां राजा
विवदमानयोः ।
पूर्व्वभुक्त्या च सततमुदकस्यागमेन च
॥
यदि संशय एव स्यात् लिङ्गानामपि
दर्शने ।
साक्षिप्रत्यय एव स्यात्
सीमावादविनिर्णयः ॥
ग्रामीयककुलानाञ्च समक्षं सीम्नि
साक्षिणः ।
प्रष्टव्याः सीमलिङ्गानि तयोश्चैव
विवादिनोः ॥
ते पृष्टास्तु तथा ब्रूयुः समन्ताः सीम्नि
निश्चयम्

| | | |
|---|---|---|
| | | निबध्नीयात्तथा सीमां सर्व्वांस्तांश्चैव नामतः ॥ शिरोभिस्त गृहीत्वोर्व्वीं स्रग्विणो रक्तवाससः सुकृतैः शापिताः स्वैः स्वै र्नयेयुस्ते समञ्जसम् ॥ यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः । विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतं दमम् ॥ साक्ष्यभावे तु चत्वारो ग्रामाः सामन्तवा- सिनः । सीमाविनिर्ण्यं कुर्य्युः प्रयता राजसन्निधौ ॥ सामन्तानामभावे तु मौलानां सीम्नि साक्षि- णाम् ॥ इमानप्यनुयुञ्जीत पुरुषान् वनगोचरान् ॥ |

व्याधान् शाकुनीकान् गोपान् कैवर्त्तान्
मूल-
खानकान् ।
व्यालग्राहानुञ्छवृत्तीनन्यांश्चवनचारिणः
॥
ते पृष्टास्तु यथा ब्रूयुः सीमासन्धिषु लक्षणम्
।
तत्तथा स्थापयेद्राजा धर्म्मेण ग्रामयोर्द्वयोः
॥
क्षेत्रकूपतडागानामारामस्य गृहस्य च ।
सामन्तप्रत्ययो ज्ञेयः सीमासेतुविनिर्णयः ॥
सामन्ताश्चेन्मृषा ब्रूयुः सेतौ विवदतां
नृणाम् ।
सर्व्वे पृथक् पृथक् दण्ड्या राज्ञा
मध्यमसाहसम्
गृहं तडागमारामं क्षेत्रं वा भीषया हरन् ।
शतानि पञ्च दण्ड्यः स्यादज्ञानाद्द्विशतो
दमः ॥
सीमायामविषह्यायां स्वयं राजैव धर्म्मवित्
।
प्रदिशेत् भूमिमेतेषामुपकारादिति स्थितिः
॥”
इति मानवे ८ अध्यायः ॥

**सीमिकः**, पुं, (स्यमति शब्दायते इति । स्यमु
शब्दे + “स्यमेः संप्रसारणञ्च ।” उणा० २
।
४३ । इति किकन् धातोः सम्प्रसारणं
दीर्घश्च ।)
वृक्षभेदः । वल्मीकः । सूक्ष्मकृमिजातिः ।
इति
संक्षिप्तसारोणादिवृत्तिः ॥

**सी(शी)रः**, पुं, (सिनोति सीयते इति वा । सि बन्धे
+ “शुसिचिमिञ्रां दीर्घश्च ।” उणा० २ ।
२५ ।
इति क्रन् । दीर्घश्च ।) सूर्य्यः । इति मेदिनी
॥
अर्कवृक्षः । हलः । इत्यमरः । २ । ९ । १४
॥

तितः ।) तन्तुसन्तानम् । सूचीकर्म्म ।
सेयानी
इति सेलायी इति च भाषा । तत्पर्य्यायः ।
सेवनम् २ स्यूतिः ३ । इत्यमरः । ३ । २
। ५ ॥
ऊतिः ४ व्यूतिः ५ । इति शब्दरत्नावली
॥
(यथा, सुश्रुते । ४ । १ ।
“यथोक्तं सीवनं तेषु कार्य्यं सन्धानमेव च
॥”)

**सीवनी**, स्त्री, (सिव + ल्युट् । स्त्रियां ङीप् ।)
लिङ्गमण्यधःसूत्रम् । लिङ्गाग्रात्
गुह्यपर्य्यन्त-
सीवनम् । इति हेमचन्द्रः ॥

**सीसं**, क्ली, सीसकम् । इति हेमचन्द्रः ॥ (यथा,
महाभारते । ५ । ४९ । ७९ ।
“सुवर्णस्य मलं रुप्यं रूप्यस्यापि मलं त्रपु
।
ज्ञेयं त्रपु मलं सीसं सीसस्यापि मलं मलम्
॥”
अथ सीसस्योत्पत्तिर्नामगुणाश्च।
“दृष्ट्वा भोगीसुतां रम्यां वासुकिस्तु मुमोच
यत् ।
वीर्य्यं जातस्ततो नागः सर्व्वरोगापहो
नृणाम् ।
सीसं वध्रञ्च वप्रञ्च योगेष्टं नागनामकम् ॥
नागनामकं नागः भुजङ्ग इत्यादि ।
सीसं रङ्गगुणं ज्ञेयं विशेषात् मेहनाशनम्
॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे
॥)

**सीसकं**, क्ली, (सीसमेव । स्वार्थे कन् ।) धातु-
विशेषः । सीसा इति भाषा । तत्पर्य्यायः ।
नागम् २ योगेष्टम् ३ वप्रम् ४ । इत्यमरः ।
२ । ९ ।
१०५ ॥ सीसम् ५ सीसपत्रकम् ६
गण्डूपदभवम् ७

पाण्डुप्रमेहानिलसादसोथ-
भगन्दरादीन् कुरुतः प्रयुक्तौ ॥” * ॥
अथ सीसकस्य शोधनम् ।
“तस्य साहजिका दोषा वङ्गस्येव
निदर्शिताः ।
शोधनञ्चापि तस्यैव भिषग्भिर्गदितं पुरा ॥”
* ॥
अथ सीसकस्य मारणविधिः ।
“ताम्बू लरससंपिष्टशिलालेपात् पुनः पुनः
।
द्वात्रिंशद्भिः पुटैर्नाशो निरुत्थं भस्म जायते
॥”
शिला मनःशिला । अन्यच्च ।
अश्वत्थचिञ्चात्वक्चूर्णं चतुर्थांशेन
निःक्षिपेत् ।
मृत्पात्रे विद्रुतो नागो लोहदर्व्या प्रचालितः
॥
यामैकेन भवेद्भस्म तत्तुल्या
स्यान्मनःशिला ।
काञ्जिकेन द्वयं पिष्ट्वा पचेद्दृढपुटेन च ॥
स्वाङ्गशीतं पुनः पिष्ट्वा शिलया काञ्जिकेन
च ।
पुनः पचेत् शरावाभ्यामेवं षष्टिपुटैर्मृतिः
॥”
इति भावप्रकाशः ॥
मारितस्यास्य गुणाः पूर्व्ववत् ॥ * ॥ अपि
च ।
“तैले तक्रे गवां मूत्रे काञ्जिके च कुलत्थके
।
त्रिधा त्रिधा विशुद्धिः स्यात् स्वर्णादीनां
समासतः ॥”
अथ सीसकस्य मारणम् ।
“कुडवं नागपत्राणां कुनट्याः स्यात्
पलार्द्ध-
कम् ।
तण्डु लीयरसैर्य्यामं यामं वासारसैस्तथा
॥
संमर्द्य च क्रियां कृत्वा घर्म्मे संशोष्य तं
पुनः ।

(यथा, मेघदूते । १६ ।
"सद्यः सीरोत्कर्षणसुरभि क्षेत्रमारुह्य मालं
किञ्चित्पश्चात् व्रज लघुगतिः
किञ्चिदेवोत्तरेण ॥")

**सी(शी)रकः**, पुं, (सीर + संज्ञायां कन् ।) शिशु-

मारः । इति शब्दमाला ॥ (सीर + स्वार्थे
कन् ।) सीरशब्दार्थोऽप्यत्र ॥

**सी(शी)रध्वजः**, पुं, (सीरः ध्वजे यस्य ।) चन्द्र-

वंशीयराजविशेषः । स तु
ह्रस्वरोमराजपुत्त्रः ।
यस्य पुत्त्रार्थं यजनभुवं कृषतः सीरे सीता
दुहिता समुत्पन्ना तस्य पुत्त्रो भानुमान् ।
इति
विष्णुपुराणे । ४ । ५ । १२ ॥
(भागवतमतेऽस्य
पुत्त्रः कुशध्वजः । यथा, तत्रैव । ९ । १३ ।
१८ ।
"ततः सीरध्वजो जज्ञे यज्ञार्थं कर्षतो महीम्
।
सीता सीराग्रतो जाता तस्मात् सीरध्वजः
स्मृतः ॥
कुशध्वजस्तस्य पुत्त्रस्ततो धर्म्मध्वजो
नृपः ॥")

**सीरपाणिः**, पुं, (सीरः पाणौ यस्य ।) बलदेवः ।

इत्यमरः । १ । १ । २५ ॥

**सीरी**, [न्] पुं, (सीरोऽस्यास्तीति । इनिः ।)

बलदेवः । इति हलायुधः भूरिप्रयोगश्च ॥

**सीलन्धः**, पुं, मत्स्यभेदः । सिलिन्दा इति भाषा ।

तस्य गुणाः ।
"सीलन्धः श्लेष्मलो वृष्यो विपाके मधुरो
गुरुः ।
वातपित्तहरो हृद्य आमवातकरश्च सः ॥"
इति भावप्रकाशः ॥

**सीवनं**, क्ली, (सिव्यु तन्तुसन्ताने + ल्युट् । ष्ठिवु

सिव्योर्ल्युटि वा दीर्घः इति स्वामी ।
मुग्धबोध-
मते "ष्ठीवनसीवने वा ।" इति सूत्रात् निपा-

सिन्दूरकारणम् ८ वर्द्धम् ९ स्वर्णारि १०
यवनेष्टम् ११ सुवर्णकम् १२ । इति
हेमचन्द्रः ॥
वध्रम् १३ पिच्चटम् १४ सुवर्णारि १५
त्रपु १६
त्रपुः १७ । इति शब्दरत्नावली ॥ वध्रकम्
१८
महावलम् १९ यवनेष्टकम् २० । इति
जटाधरः ॥ बहुमलम् २१ चीनम् २२
पिष्टम् २३ । इति रत्नमाला ॥ जडम् २४
भुजङ्गमम् २५ उरगम् २६ कुरङ्गम् २७
परि-
पिष्टकम् २८ मृदुकृष्णायसम् २९ पद्मम्
३० तार-
शुद्धिकरम् ३१ शिरावृत्तम् ३२ वयोवङ्गम्
३३
चीनपिष्टम् ३४ । अस्य गुणाः ।
"सीसन्तु वङ्गसाम्यं
सादृसवीर्य्यविपाकतः ।
उष्णञ्च कफवातघ्नमर्शोघ्नं गुरु लेखनम्
॥
वर्णे नीलं मृदु स्निग्धं निर्म्मलञ्च सुगौरवम्
।
रौप्यसंशोधने क्षिप्रं सीसकञ्च तदुत्तमम्
॥"
इति राजनिर्घण्टः ॥ * ॥
अथ सीसस्योत्पत्तिनामगुणाः ।
"दृष्ट्वा भोगिसुतां रम्यां वासुकिस्तु मुमोच
यत् ।
वीर्य्यं जातस्ततो नागः सर्व्वरोगापहो
नृणाम् ।
सीसं वध्रञ्च वप्रञ्च योगेष्टं नागनामकम् ।
नागः भुजङ्ग इत्यादि ।
सीसं वङ्गगुणं ज्ञेयं विशेषान्मेहनाशनम् ॥
नागस्तु नागशततुल्यबलं ददादि
व्याधिं विनाशयति जीवनमातनोति ।
वह्निं प्रदीपयति कामबलं करोति
मृत्युञ्च नाशयति सन्ततसेवितः सः ॥
पाकेन हीनौ किल रङ्गनागौ
कुष्ठानि गुल्मांश्च तथा निकृष्टान् ।

सरावसंपुटे कृत्वा पचेद्वन्योपलैर्भिषक् ॥
एवं सप्तपुटैर्नागो भस्मीभवति निश्चितम् ।
द्विगुञ्जोऽयं ध्रुवं हन्यात् प्रमेहानखिलानपि
॥"
इति वैद्यदर्पणः ॥

**सीसपत्रकं**, क्ली, सीसकम् । इति हेमचन्द्रः ॥

**सीहुण्डः**, पुं, सेहुण्डवृक्षः । स्नुही । इत्यमरः । २ ।

४ । १०५ ॥

**सु**, गतौ । ऐश्वर्य्ये । प्रसवे । इति कविकल्पद्रुमः ॥

(भ्वा०-पर०-सक०-अनिट् ।) सवति ।
इति
दुर्गादासः ॥

**सु**, ञ गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-उभ०-

सक०-अनिट् ।) ञ, सुसाव सुषुवे । इति
दुर्गा-
दासः ॥

**सु**, व्य, निर्भरम् । इत्यमरः । ३ । ४ । २ ॥ (यथा,

महाभारते । १ । १५८ । १६ ।
"विदित्वा व्यवसिष्यामि यद्यपि स्यात्
सुदु-
ष्करम् ॥")
पूजा । इत्यमरः । ३ । ४ । ५ ॥ (शोभनम्
। यथा,
मनुः । ७ । ३१ ।
"प्रणेतुं शक्यते दण्डः सुसहायेन धीमता
॥")
अनुमतिः । कृच्छ्रम् । समृद्धिः । इति
मेदिनी ॥
अनायासः । इति भरतैकार्थसंग्रहः ॥ उप-
सर्गविशेषः । यथा ।
सुपूजानायासातिशयेषु ।
इति मुग्धबोधटीकायां दुर्गादासः ॥
सप्तम्या
वहुवचनविभक्तिः । इति व्याकरणम् ॥

**सुकण्टका**, क्ली, (सुष्ठुकण्टकोऽस्याः ।)

घृतकुमारी । इति राजनिर्घण्टः ॥

**सुकण्डुः**, पुं, (सु शोभना कण्डुर्यत्र ।)

**सुकन्दः**, पुं, (सु सुन्दरः कन्दो यस्य ।) कशेरुः ।

इति राजनिर्घण्टः ॥

**सुकन्दकः**, पुं, (सु सुन्दरः कन्दो यस्य । कप् ।)

पलाण्डः । इत्यमरः । २ । ४ । १४७ ॥
वाराहोकन्दः ।
वरणीकन्दः । इति राजनिर्घण्टः ॥

**सुकन्दी**, [न्] पुं, (सुकन्दोऽस्यास्तीति । इनिः ।)

शूरणः । इति राजनिर्घण्टः ॥

**सुकन्यकः**, त्रि, शोभना कन्या यस्य । इति मुग्ध--

बोधव्याकरणम् ॥

**सुकन्या**, स्त्री, (सु शोभना कन्या ।) शर्य्यातिराज

कन्या । सा तु च्यवनर्षिपत्नी । यथा, श्रीभागवते
९ । ३ । अध्याये ।
"शर्य्यातिर्मानवो राजा ब्रह्मिष्ठः संबभूव ह ।
सुकन्या नाम तस्यासीत् कन्या कमललोचना ॥
सुकन्या च्यवनं प्राप्य पतिं परमकोपनम् ।
प्रीणयामास चित्तज्ञा अप्रमत्तानुवृत्तिभिः ॥"
शोभना कन्या च ॥

**सुकन्याकः**, त्रि, (शोभना कन्या यस्य ।) सुक-

न्यकः । इति मुग्धबोधव्याकरणम् ॥

**सुकरः**, त्रि, (सुखेन क्रियते इति । सु + कृ +

"ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ।" ३ । ३ ।)
१२३ । इति खल् ।) सुखकरः । अक्लेशसाध्यः ।
यथा, --
"क्रियमाणन्तु यत् कर्म्म स्वयमेव प्रसिध्यति ।
सुकरैः स्वैर्गणैः कर्त्तुः कर्म्मकर्त्तेति तद्विदुः ॥"
इति मुग्धबोधव्याकरणम् ॥

**सुकरा**, स्त्री, (सु सुखं करोतीति । कृ + अच् ।)

सुशीला गौः । इत्यमरः । २ । ९ । ७० ॥

**सुकर्णकः**, पुं, (सुन्दरः कर्ण इव कन्दो यस्य ।)

हस्तिकन्दः । इति राजनिर्घण्टः ॥ सुन्दरकर्ण-
युक्ते, त्रि ॥

**सुकर्णिका**, स्त्री, (सुन्दरः कर्ण इव पर्णमस्याः ।

य एक एव दत्ते भुङ्क्ते च तत्र ।
विख्या-
तत्वात् सुष्ठु अतिशयेन वा कल्यते
शब्द्यते वा
असौ सुकलः । इति भरतः ॥

**सुकाण्डः** पुं, (सु शोभनः काण्डो यस्य ।) कार-

वेल्लः । इति राजनिर्घण्टः ॥
सुन्दरकाण्डयुक्त-
वृक्षादिश्च ॥

**सुकाण्डिका**, स्त्री, (सुन्दरः काण्डो यस्याः । कन् ।

टापि अत इत्वम् ।) काण्डीरलता ।
इति राज
निर्घण्टः ॥

**सुकाण्डी**, [न्] पुं, (सुन्दराः काण्डा इव चर-

णानि सन्त्यस्येति । इनिः ।) भ्रमरः ।
इति
राजनिर्घण्टः ॥ सुन्दरकाण्डयुक्तश्च
॥

**सुकामा**, स्त्री, (सुष्ठु काम्यतेऽसौ । सु + कम् +

कर्म्मणि घञ् ।) त्रायमाणा । इति
राज-
निर्घण्टः ॥ (सुष्ठु कामो यस्याः ।)
शोभन-
कामयुक्ता च ॥

**सुकालुका**, स्त्री, डोडीक्षुपः । इति राज-

निर्घण्टः ॥

**सुकाष्ठकं**, क्ली, (सु शोभनं काष्ठमस्येति । कन् ।)

देवकाष्ठम् । इति राजनिर्घण्टः ॥
सुन्दर-
दारु च ॥

**सुकाष्ठा**, स्त्री, (सु शोभनं काष्ठमस्याः ।) कट्वी ।

काष्ठकदली । इति राजनिर्घण्टः ॥

**सुकुमारी**, स्त्री, (सुकुमार + ङीष् ।) नव-

मालिका । इति राजनिर्घण्टः ॥
(शङ्खिनी ।
तत्पर्य्यायो यथा, --
"शङ्खिनी सुकुमारी च ।"
इति गारुडे २०८ अध्यायः ॥
कोमलाङ्गी स्त्री । यथा, रामायणे । २
। ३८ । ४ ।
"सुकुमारी च बाला च सततञ्च
सुखोचिता ।
नेयं वनस्य योग्येति सत्यमाह गुरुर्मम
॥")

**सुकृत्**, त्रि, (सुष्ठु करोतीति । कृ + "सुकर्म्मपाप-

मन्त्रपुण्येषु कृञः ।" ३ । २ । ८९ ।
इति
क्विप् ।) पुण्यवान् । इति जटाधरः ॥
धार्म्मिकः
इति त्रिकाण्डशेषः ॥ (यथा, रघुः ।
११ । ५० ।
"सद्य एव सुकृतां हि पच्यते
कल्पवृक्षफलधर्म्मि काङ्क्षितम् ॥")

**सुकृतं**, क्ली, (सु + कृ + क्तः ।) पुण्यम् । इत्य-

मरः । १ । ४ । २४ ॥ (यथा, कुमारे
। ६ ।
४७ ।
"अथ ते मुनयो दिव्याः प्रेक्ष्य हैमवतं
पुरम् ।
स्वर्गाभिसन्धिसुकृतं वञ्चनामिव
मेनिरे ॥")
शुभम् । सुविहिते, त्रि । इति मेदिनी ॥
(यथा,
भागवते । ८ । २३ । ३१ ।
"क्रियमाणे कर्म्मणीदं दैवे पित्र्येऽथ
मानुषे ।
यत्र यत्रानुकीर्त्त्येत तत् तेषां सुकृतं
विदुः ॥")

कापि अत इत्वम् ।) मूषीकर्णी । इति शब्द-
रत्नावली ॥

**सुकर्णी**, स्त्री, (शोभनः कर्ण इव पत्रमस्याः ।

ङीष् ।) इन्द्रवारुणी । इति राजनिर्घण्टः ॥

**सुकर्म्मा**, [न्] पुं, (सु शोभनं कर्म्म यस्मात् ।)

विस्कम्भादिसप्तविंशतियोगान्तर्गतसप्तमयोगः ।
तत्र जातफलम् ।
"परोपकारी कुशलः कलासु
हर्षेण युक्तो नितरां यशस्वी ।
प्रसूतिकाले यदि चेत् सुकर्म्मा
नरः सुकर्म्मा भवति प्रसिद्धः ॥"
इति कोष्ठीप्रदीपः ॥
विश्वकर्म्मा । इति मेदिनी ॥

**सुकर्म्मा**, [न्] त्रि, (सु शोभनं कर्म्म यस्य ।)

शाभनकर्म्मशालः । सत्क्रियः । इति हेम-
चन्द्रः ॥

**सुकलः**, त्रि (सुष्टु कल्यते इति । सु + कल +

खल् ।) दतृभोक्तृव्यक्तिः । इत्यमरः । ३ । १ । ८ ॥

**सुकुन्दकः**, पुं, पलाण्डुः । इति शब्दरत्नावली ॥

**सुकुन्दनः**, पुं, वर्व्वरः । इति राजनिर्घण्टः ॥

**सुकुमारः**, त्रि, (सुष्ठु कुमारयत्यनेनेति । सु +

कुमारत् क केलौ + घञ् ।) कोमलः । इत्य-
मरः । ३ । १ । ७८ ॥ (यथा, महाभारते ।
१ । १५४ । १४ ।
"सुभ्रूनासाक्षिकेशान्तं
सुकुमारनखत्वचम् ॥")
पुं, उत्तमबालकश्च ॥

**सुकुमारः**, पुं, (सु + कुमारत् क केलौ + अच् ।

घञ् वा ।) पुण्ड्रेक्षुः । इति मेदिनी ॥ वन-
चम्पकः । क्षवः । श्यामाकः । इति राज-
निघण्टः ॥ दैत्यविशेषः । इति केचित् ॥ (मोदकौ-
षधविशेषः । यथा, --
"त्रिवृदर्द्धं पलं चूर्णं सिताक्षौद्रं पलं पलम् ।
एलात्वङ्गरिचानाञ्च निष्कं प्रति विमिश्रयेत् ॥
किञ्चिन्मृद्वग्निना तप्तं कर्षद्वयञ्च भक्षयेत् ।
विरेकः सुकुमाराणां
रक्तपित्तनिलापहः ॥"
इति सुकुमारमोदकः ।
इति वैद्यकपत्रीसंग्रहः ॥)

**सुकुमारक**, क्ली, (सुकुमारमिव । कन् ।) तमाल-

पत्रम् । इति राजनिर्घण्टः ॥

**सुकुमारकः**, पुं, (सुकुमार एव । स्वार्थे कन् ।)

शालिः । इति राजनिर्घण्टः ॥
सुन्दरबालकः ।
यथा हरिवंशे । ३८ । ३६ ।
"सिंहप्रसेनमवधात् सिंहो जाम्बवता हतः ।
सुकृतन्तु मनुष्यैः सह गच्छति ।
यथा, --
"सुकृतं दुष्कृतं लोके
गच्छन्तमनुगच्छति ।
तस्माद्वित्तं समासाद्य दैवाद्वा
पौरुषादथ ।
दद्यात् सम्यक् द्विजातिभ्यः
कीर्त्तनानि च
कारयेत् ॥"
इति वह्निपुराणे वैष्णवक्रियायोगे यमानुशा-
सनोनामाध्यायः ॥

**सुकृतिः**, स्त्री, (सु + कृ + क्तिन् ।) पुण्यम् ।

मङ्गलम् । सत् कर्म्म ॥

**सुकृती**, [न्] त्रि, (सुकृतमस्यास्तीति । इनिः ।)

पुण्यवान् । इत्यमरः । ३ । १ । ३ ॥
शुभयुक्तः ।
इति मेदिन्यां सुकृतशब्दार्थदर्शनात् ॥ (यथा,
गोतायाम् । ७ । १६ ।
"चतुव्विधा भजन्ते मां जना
सुकृतिनोऽर्ज्जुन ।
आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च
भरतर्षभ ॥")

**सुकेशरः**, पुं, (सुन्दरः केशरो यस्य ।) बीजपूरः ।

इति राजनिर्घण्टः ॥

**सुकेशा**, स्त्री, (शोभनः केशो यस्याः ।) सुन्दर-

केशयुक्ता । यथा । "सुकेशी सुकेशा रथ्या ।"
इति मुग्धबोधव्याकरणम् ॥

**सुकेशी**, स्त्री, (शोभनः केशो यस्याः । ङीष् ।)

स्वर्गवेश्याभेदः । इति पुराणम् ॥ (यथा, महा-
भारते । १३ । १९ । ४५ ॥
"मनोहरा सुकेशी च सुमुखी हासिनी
प्रभा ।

| | | |
|---|---|---|
| | सुकुमारक ! मा रोदीस्तव ह्येष स्यमन्तकः ॥”<br>**सुकुमारा**, स्त्री, (सुकुमार + टाप् ।) जाती ।<br>नवमालिका । कदली । पृक्वा । मालती । इति राजनिर्घण्टः ॥ | एताश्चान्याश्च वै बह्व्यः प्रनृत्ताप्सरसः शुभाः ॥”)<br>शोभनकेशयुक्ते, त्रि ॥ (यथा, महाभारते । ३ । ६४ । ६४ ।<br>“शुभ्रूः सुकेशी सुश्रोणी सुकुचा सुद्विजानना ।<br>सा विवेशाश्रमपद वीरसेनसुतप्रिया ॥”) |

**सुकोली**, स्त्री, (सुशोभना कोली ।) क्षीरकाकोली ।
इति रत्नमाला ॥ शोभनवदरी च ॥

**सुकोशकः**, पुं, (सु शोभनः कोशो यस्य ।) कोषाम्रः ।
इति राजनिर्घण्टः ॥

**सुख**, त् क तत्कृतौ । इति कविकल्पद्रुमः ॥
(अदन्तचुरा० पर०-सक०-सेट् ।) तत्कृतिः सुखक्रिया । श्रीजयदेवकवेरिति गीतं सुखयतु केशवपदमुपनीतम् । इति दुर्गादासः ॥

**सुखं**, क्ली, (सुखयतीति । सुख + अच् ।) आत्म-
वृत्तिगुणविशेषः । इति नैयायिकाः ॥ मनसो धर्म्मः । इति वैदान्तिकाः ॥ तत्पर्य्यायः । मुत् २ प्रीतिः ३ प्रमदः ४ हर्षः ५ प्रमोदः ६ आमीदः ७ संमदः ८ आनन्दथुः ९ आनन्दः १० शर्म्म ११ शातम् १२ । इत्यमरः । १ । ४ । २५ ॥ मदः १३ भोगः १४ रभसः १५ निर्वृतिः १६ धृतिः १७ वीचिः १८ । इति जटाधरः ॥ संमेदः १९ मोदः २० नन्दथुः २१ नन्दः २२ मुदा २३ सौख्यम् २४ उपजोषम् २५ आनन्दम् २६ जोषम् २७ । इति शब्दरत्नावली ॥ न्यायमते जगतां काम्यं धर्म्मजन्यमिदम् । यथा, --
"सुखन्तु जगतामेव काम्यं धर्म्मेण जन्यते ।
अधर्म्मजन्यं दुःखं स्यात्प्रतिकूलं सचेतसाम् ॥ *
तस्य मनोगोचरत्वं यथा, --
"मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः ॥"
इति भाषापरिच्छेदः ॥ * ॥
"सुखं चतुर्व्विंशतिगुणान्तर्गतगुणविशेषः । तच्चु नित्यं जन्यञ्च । नित्यं परमात्मनो विशेषगुणान्त र्व्वर्त्ति । जन्यसुखं जीवात्मनो विशेषगुणान्त- र्व्वर्त्ति । तच्च शुभादृष्टजन्यं धनमित्रलाभारोग्य- मिष्टान्नपानपुरीषोत्सर्गपुत्रादिजन्मतत्पाण्डित्य कान्तासम्भोगादिजन्यञ्चतस्य द्विक्षणस्थायित्वं स्वोत्तरोत्पन्नानुभवनाश्यत्वात् । सुखाद्यपरागे- णैवात्मनो मानसबोधः । सुखं तदुपायश्चेष्टः । बालस्य स्तन्यपानप्रवृत्तौ सुखसाधनत्वज्ञानं हेतुः तत्र सुखस्यैवेष्टत्वम् । दुःखजनकगमनादि- प्रवृत्तौ सुखोपायो धनं तदेवेष्टं तत्साधनत्वज्ञान-
हतान्ये तानि सर्व्वाणि हते बीजे महेश्वर ॥
सुदिनं दुर्द्दिनञ्चैव सर्व्वं कर्म्मोद्भवं भव ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । ४३ । ४८-५१
तस्य कारणान्तरं लक्षणञ्च यथा, --
"रागद्वे षादियुक्तानां न सुखं कुत्रचित् द्विज ।
विचार्य्य खलु पश्यामि तत्सुखं यत्र निर्वृतिः ॥
यत्र स्नेहो भयं तत्र स्नेहो दुःखस्य भाजनम् ।
स्ने हमूलानि दुःखानि तस्मिं स्त्यक्ते महत् सुखम् ॥
शरीरमेवायतनं दुःखस्य च सुखस्य च ।
जीवितञ्च शरीरञ्च जात्यैव सह जायते ॥
सर्व्वं परवशं दुःखं सर्व्वमात्मवशं सुखम् ।
एतद्विद्यात् समासेन लक्षणं सुखदुःखयोः ॥
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
सुखं दुःखं मनुष्याणां चक्रवत् परिवर्त्तते ॥"
इति गारुडे ११३ अध्यायः ॥ * ॥
सर्व्वभूतसुखकर्त्तव्यत्वं यथा, देवीपुराणे देवी- संवत्सरवलिहरणाध्याये ।
"कृमिकीटपतङ्गेषु भूमौ दध्योदनं क्षिपेत् ।
सर्व्वदा सर्व्वभूतानां सुखं कार्य्यं सुखार्थिनाम् ॥"
सुख-दुःख-साधनानामस्थिरत्वं सुखस्य मनो- विलासमात्ररूपत्वञ्च यथा, --
राजनिर्घण्टः ॥ जलम् । इति केचित् ॥ सुख- विशिष्टे, त्रि । यथा, --
"शस्तञ्चाथ त्रिषु द्रव्ये पापंपुण्यं सुखादि च ।"
इत्यमरः । १ । ४ । २६ ॥
"पापपुण्यशब्दौ सुखादयः शस्तान्ताश्च गुणे यथोक्तलिङ्गाः उपचारात्तद्वति द्रव्ये विशेष्ये वर्त्तमाना वाच्यलिङ्गाः । यथा, --
"पापा ऋतुमती कन्या पापो राजाप्यरक्षकः
पापं व्याधकुलं हिंस्रं पापो विप्रश्च सेवकः ॥"
पुण्यं तीर्थं पुण्या नदी पुण्य आश्रमः । सुखा भूतिः सुखो वासः सुखं कामिकुलम् ।" इति भरतः ॥

**सुखकरः**, त्रि, (सुखं कर्त्तुं शीलमस्येति । सुख + कृ + टः ।) सुकरः । यथा । कर्त्तुः सुकरैः सुखकरैरित्यर्थः । इति मुग्धबोधटीकायां दुर्गादासः ॥

**सुखगः**, त्रि, (सुखेन गच्छतीति । गम् + डः ।)
सुखेन गमनकर्त्ता ॥

**सुखङ्करी**, स्त्री, (सुखं करोतीति । कृ + खच् ।
मुम् । ङीप् ।) जीवन्तीवृक्षः । इति राज- निर्घण्टः ॥ सुखकरी च ॥

**सुखङ्घुणः**, पुं, शिवखट्वाङ्गः । इति त्रिकाण्डशेषः ।

**सुखचरः**, त्रि, सुखगामी । सुखेन चरति इत्यर्थे
टप्रत्ययेन निष्पन्नः । ग्रामविशेषे, पुं, । सुखेन

मेव हेतुः । यागादिप्रवृत्तावपि पारलौकिक-
सुखसाधनत्वज्ञानं कारणं सुखोपायस्वर्गादिरूपे-
ष्टसाधनत्वज्ञानमपि कारणम् । सुखस्य काला-
वच्छेद्यत्वं शरीरावच्छेद्यत्वञ्चातोऽव्याप्यवृत्तित्वं
शरीरकदेशावच्छेदेन दुःखसम्भवेऽप्यन्यदेशा-
वच्छेदेन सुखसम्भवात् एकक्षणावच्छेदेन
जीवस्य दुःखसम्भवेऽपि क्षणान्तरावच्छेदेन
सुखसम्भवाच्च तत्तु विस्फोटकवतो मिष्टान्न-
भोजनादौ द्रष्टव्यम् । इति तार्किकाः ॥ * ॥
तत्कारणं यथा, --
"सुदिनं दुर्द्दिनं शश्वद्भ्रमत्येव भवे भव ।
सर्व्वेषां प्राकृतानाञ्च द्वे बीजे सुखदुःखयोः ॥
सुखाद्भवति हर्षश्च दर्पः शौर्य्यं प्रमत्तता ।
राग ऐश्वर्य्यकामौ च विद्वेषश्च परस्परम् ॥
दुःखात् शोकात् समुद्वेगाद्भयं नित्यं प्रवर्त्तते ।
"वस्त्वे कमेव दुःखाय
सुखायेर्ष्योद्भवाय च ।
कोपाय च यतस्तस्माद्वस्तु
वस्त्वात्मकं कुतः ।
तदेव प्रोतये भूत्वा पुनर्दुः खाय
जायते ।
तदेव कोपाय ततः प्रसादाय च
जायते ॥
तस्माद्दुःखात्मकं नास्ति न च
किञ्चित् सुखा-
त्मकम् ।
मनसः परिणामोऽयं
सुखदुःखोपलक्षणः ॥"
इति विष्णुपुराणे । २ । ६ । ४३-४५
॥
"सुखं हि दुःखान्यनुभूय शोभते
घनान्धकारेष्विव दीपदर्शनम् ।
सुखात्तु यो याति नरो दरिद्रतां
धृतः शरीरेण मृतः स जीवति ॥"
इति मृच्छकटिकम् ॥ * ॥
तद्वैदिकपर्य्यायः । शिम्बाता १
शतरा २
शातपन्ता ३ शिल्गुः ४ स्यूमकम् ५
शेवृधम् ६
मयः ७ सुग्म्यम् ८ सुदिनम् ९ शूषम्
१०
शुनम् ११ शग्मम् १२ भेषजम् १३
जलाशम् १४
स्योनम् १५ सुम्नम् १६ शेवम् १७
शिवम् १८
शम् १९ कम् २० । इति विंशतिः
सुखनामानि ॥
इति वेदनिघण्टौ । ३ । ६ ॥ * ॥
त्रिविधसुखं
यथा, --
"अभ्यासाद्रमते यत्र दुःखान्तञ्च
नियच्छति ।
यत्तदग्रे विषमिव परिणामेऽमृतोपमम्
॥
तत् सुखं सात्त्विकं
प्रोक्तमात्मबुद्धिप्रसादजम् ॥ १
चरति अत्र इत्यर्थे अल्प्रत्ययेन
निष्पन्नः ॥

**सुखचारः**, पुं, (सुखेन चरत्यनेनेति । चर + घञ्)

उत्कृष्टाश्वः । इति शब्दमाला ॥

**सुखजातः**, त्रि, (सुखेन जातः । यद्वा, जातं

सुखमस्येति ।) जातसुखः । यथा
भट्टौ ५ । ३८ ।
"सुखजातः सुरापीतो नृजग्धो
माल्यधारयः ॥"
(सुखस्य जनने, क्ली, यथा,
गीतगोविन्दे । १० । ३
"घटय भुजबन्धनं जनय रदखण्डनं
येन वा भवति सुखजातम् ॥")

**सुखदं**, क्ली, (सुखं ददातीति । दा + कः ।)

विष्णोः स्थानम् । विष्णोरासनम् ।
इति केचित्

**सुखदः**, पुं, (सुखं ददातीति । दा + कः ।) विष्णुः

यथा । सुखदोऽनैकदोऽग्रजः । इति
तस्य
सहस्रनामस्तोत्रम् ॥ तालभेदः ।
यथा, --
"विंशत्यक्षरसंयुक्तो ध्रुवः
सुखदसंज्ञकः ।
शृङ्गारवीरयोर्ज्ञेयो गुरुणैकेन मण्डितः
॥"
इति संगीतदामोदरः ॥
सुखदातरि, त्रि ॥ (यथा,
वृहत्संहितायाम् ।
१०४ । ३८ ।
"हरिणप्लुतशावविचित्रितं
रिपुगते मनसः सुखदं गुरौ ॥"

**सुखदा**, स्त्री, (सुखं ददाति या । दा + कः ।

टाप् ।) सुखदात्री । गङ्गा । यथा, --
"सद्यःपातकसंहन्त्री
सद्योदुःखविनाशिनी ।
सुखदा मोक्षदा गङ्गा गङ्गैव परमा गतिः
॥"

| | | |
|---|---|---|
| | विषयेन्द्रियसंयागात्<br>यत्तदग्रेऽमृतोपमम्।<br>परिणामे विषमिव तत् सुखं राजसं<br>स्मृतम्। २<br>यदग्रे चानुबन्धे च सुखं<br>मोहनमात्मनः।<br>निद्रालस्य प्रमादोत्थं<br>तत्तामसमुदाहृतम्॥” ३ ॥<br>इति श्रीभगवद्गीतायाम् १८<br>अध्यायः ॥<br>स्वर्गः। इति मेदिनी ॥<br>वृद्धिनामौषधम्। इति | इति गङ्गाप्रणाममन्त्रः॥<br>स्वर्गवेश्या। इति शब्दरत्नावली॥<br>शमीवृक्षः।<br>इति राजनिर्घण्टः॥ |

**सुखदोह्या**, स्त्री, (सुखेन दोह्या दोहनयोग्या ।)

सुखसंदोह्या गौः । इति हेमचन्द्रः ॥

**सुखभाक्**, [ज्] त्रि, सुखी । सुखं भजते इति ।

ठाद्भजवहसहो विण् । इत्यनेन
सुखशब्दपूर्व्वक-
भजधातोर्विण्प्रत्ययेन निष्पन्नः । इति मुग्ध-
बोधव्याकरणम् ॥ (यथा, वृहत्संहितायाम् ।
४७ । ५ ।
"निर्व्वैराः क्षितिपाः सुखभाजः
संहृष्टाश्च जना गतरोगाः ॥)
इष्टपरिष्वङ्गः । इति महाभारते मोक्षधर्म्मः ॥

**सुखमोदा**, स्त्री, (सुखकरो मोदो यस्याः ।) सल्ल-

कीवृक्षः । इति राजनिर्घण्टः ॥

**सुखरात्रिः**, स्त्री, (सुखकरी रात्रिर्य्यस्या-

मिति । पक्षे कप् ।) दीपा-
न्वितामावास्यारात्रिः । तद्विधानं यथा,
ज्योतिषे ।

**सुखरात्रिका**, स्त्री, (सुखकरी रात्रिर्य्यस्या-

मिति । पक्षे कप् ।) दीपा-
न्वितामावास्यारात्रिः । तद्विधानं यथा,
ज्योतिषे ।
"तुलाराशिगते भानौ अमावास्यां नराधिपः
।
स्नात्वा देवान् पितॄन् भक्त्या संपूज्याथ
प्रणम्य च
कृत्वा तु पार्व्वणश्राद्धं दधिक्षीरगुडादिभिः ।
ततोऽपराह्णसमये घोषयेन्नगरे नृपः ।
लक्ष्मीः संपूज्यतां लोका उल्काभिश्चापि
वेष्ट्यताम् ॥" * ॥
दर्शद्वैधे प्रदोषव्याप्त्या निर्णयः ।
"तुलासंस्थे सहस्रांशौ प्रदोषे भूतदर्सयोः ।
उल्काहस्ता नराः कुर्य्युः पितॄणां
मार्गदर्शनम् ॥"
इति ज्योतिषात् ॥
उभयतः प्रदोषप्राप्तौ परदिन एव युग्मात् ।
ब्रह्मपुराणम् ।
"अमावास्यां यदा देवाः कार्त्तिकेमासि
केशवात्
अभयं प्राप्य सुप्ताश्च क्षीरोदार्णवसानुषु ॥
लक्ष्मीर्दैत्यभयान्मुक्ता सुण्वं सुप्ताम्बु जोदरे ।
चतुर्युगसहस्रान्ते ब्रह्मा स्वपिति पङ्कजे ॥
अतोऽत्र विधिवत् कार्य्या मनुष्यैः
सुखरात्रिका
दिवा तत्र न भोक्तव्यमृते बालातुराज्जनात् ॥
प्रदोषसमये लक्ष्मीं पूजयित्वा यथाक्रमम् ।
दीपवृक्षास्तथा कार्य्या भक्त्या देवगृहेष्वपि
॥
चतुष्पथश्मशानेषु नदीपर्व्वतसानुषु ।
वृक्षमूलेषु गोष्ठेषु चत्वरेषु गृहेषु च ॥
बस्त्रैः पुष्पैः शोभितव्याः क्रयविक्रयभूमयः ।
दीपमालापरिक्षिप्ते प्रदोषे तदनन्तरम् ॥
ब्राह्मणान् भोजयित्वादौ विभोज्य च बुभुक्षि-
तान् ।
अलङ्कृतेन भोक्तव्यं नववस्त्रोपशोभिना ।
स्निग्धैर्म्मुग्धैर्व्विदग्धैश्च बान्धवैर्भृतकैः सह
॥"
मुग्धैः सुन्दरैः । मुग्धः सुन्दरमूढयोरिति
विश्वः ॥ * ॥ अत्र लक्ष्मीपूजायां
पुष्पदानकाले ।
"नमस्ते सर्व्वदेवानां वरदासि हरिप्रिये ।
या गतिस्त्वत्प्रपन्नानां सा मे भूयात्
तदर्च्चनात्"
लक्ष्म्यै नमः । इत्यनेन वारत्रयं पूजयेत् ।
"सुखरात्र्यां प्रदोषे तु कुवेरं पूजयन्ति ये ॥"
इति रुद्रधरधृतात् कुबेरमपि पूजयन्ति ।
"धनदाय नमस्तुभ्यं निधिपद्माधिपाय च ।
भवन्तु त्वत्प्रसादान्मे धनधान्यादिसम्पदः
॥"
इति पठित्वा कुबेराय नमः । इति त्रिः पूज-
येत् । ततो देवगृहादिषु दीपान् दद्यात् । तत्र
मन्त्रः ।
"अग्निज्योती रविज्योतिश्चन्द्रज्योतिस्तथैव
च ।

**सुखवर्च्चाः**, [स्] पुं, (सुखं वर्च्चयतीति । वर्च्च

+ असुन् ।) सर्जिकाक्षारः । इति राज-
निर्घण्टः ॥

**सुखवासः**, पुं, (सुखकरो वासो यस्य ।) फल-

विशेषः । तरमूज इति भाषा ।
तत्पर्य्यायः ।
शीर्णवन्तः २ । इति रत्नमाला ॥

**सुखवासनः**, पुं, (सुखं वासयतीति । वस + णिच्

+ ल्युः ।) सुखवासनगन्धद्रव्यम् ।
यथा, --
"मुखवासकरो गन्ध आमोदी
मुखवासनः ।
सुखवासन इत्येके शुभवासन इत्यपि
॥"
इति शब्दरत्नावली ॥

**सुखसन्दुह्या**, स्त्री, सुशीला गौः ।
इत्यमरटीकायां

भरतः । २ । ९ । ७१ ॥

**सुखसन्दोह्या**, स्त्री, (सुखेन सन्दोह्या ।) सुशीला

गौः । तत्पर्य्यायः । सुव्रता २ ।
इत्यमरः । २ ।
९ । ७१ ॥ सुखदोह्या ३ । इति
हेमचन्द्रः ॥
सुखदुह्या ४ । इति भरतः ॥

**सुखा**, स्त्री, (सुखमस्त्यस्यामिति । अच् । टाप्
।)

वरुणपुरी । इति मेदिनी ॥

**सुखाधारः**, पुं, (सुखानामाधारः ।) स्वर्गः ।

इति शब्दरत्नावली ॥ सुखस्याधारे, त्रि
॥

**सुखायतः**, पुं, (सुखेन आयम्यते इति । आ +

यम + क्तः ।) सुशिक्षिताश्वः । यथा, --
"सुखायतः शुद्धमुखः सुखचारः
सुखायनः ।"
इति शब्दमाला ॥

"दण्डैकरजनीयोगो दर्शस्य स्यात् परेऽहनि
।
तदा विहाय पूर्व्वेद्युः परेऽह्नि सुखरात्रिका
॥"
इति ज्योतिर्व्वचनाच्च ॥
उभयत्र प्रदोषाव्याप्तावपि उल्कादानं
परदिने
पूर्व्वोक्तपार्व्वणानुरोधात् ।
"भूताहे ये प्रकुर्व्वन्ति उल्काग्रहमचेतसः ।
निराशाः पितरो यान्ति शापं दत्त्वा
सुदारुणम् ॥"
इति ज्योतिर्व्वचनाच्च ॥ * ॥
अत्रैव लक्ष्मीः पूर्व्वहि रात्रौ पूज्या ।
"अमावास्या यदा रात्रौ दिवाभागे चतुर्द्दशी ।
पूजनीया तदा लक्ष्मीर्व्विज्ञेया सुखरात्रिका
॥"
इति ज्योतिव्वचनात् ॥ * ॥
उल्काग्रहणादिपितृकृत्यत्वात्
प्राचीनावीतिना
दक्षिणामुखेन कर्त्तव्यम् । तथा च मनुः ।
"प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा ।
पित्र्यमानिधनात् कार्य्यं विधिवद्दर्भपाणिना
॥"
तत्र ग्रहणमन्त्रः ।
"शस्त्राशस्त्रहतानाञ्च भूतानां भूतदर्शयोः ।
उज्ज्वलज्योतिषा देहं दहेयं व्योमवह्निना ॥"
दानमन्त्रश्च ।
"अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले
मम
उज्ज्वलज्योतिषा दग्धास्तेयान्तु परमा
गतिम् ॥"
विसर्ज्जनमन्त्रः ।
"यमलोकं परित्यज्य आगता ये महालये ।
उज्ज्वलज्योतिषा वर्त्म प्रपश्यन्तो व्रजन्तु ते
॥" *

उत्तमः सर्व्वज्योतीनां दीपोऽयं प्रतिगृह्यताम्
॥"
ततो ब्राह्मणान् बन्धूंश्च भोजयित्वा स्वयं
भुक्ता
सुखं सुप्त्वा प्रत्यूषे भविष्योक्तं कर्म्म कुर्य्यात्
।
यथा, --
"सुखरात्रेरुषःकाले प्रदीपोज्ज्वलितालये ।
बन्धुर्बन्धूनबन्धूश्च वाचा कुशलयार्च्चयेत् ॥
प्रदीपवन्दनं कार्य्यं लक्ष्मीमङ्गलहेतवे ।
गोरोचनाक्षतञ्चैव दद्यादङ्गेषु सर्व्वतः ॥"
लक्ष्मीपूजामन्त्रः ।
"विश्वरूपस्य भार्य्यासि पद्मे पद्मालये शुभे ।
महालक्ष्मि नमस्तुभ्यं सुखरात्रिं कुरुष्व मे ॥
वर्षाकाले महाघोरे यन्मया दुष्कृतं कृतम् ।
सुखरात्रिप्रभातेऽद्य तन्मे लक्ष्मीव्यपोहतु ॥
या रात्रिः सर्व्वभूतानां या च देवेष्ववस्थिता ।
संवत्सरप्रिया या च सा ममास्तु सुमङ्गला ॥
माता त्वं सर्व्वभूतानां देवानां सृष्टिसम्भवा ।
आख्याता भूतले देवि सुखरात्रि नमोऽस्तु ते
॥"
लक्ष्म्यै नमः । इति त्रिः पूजयेत् । इति
तिथ्यादि
तत्त्वम् ॥

**सुखवर्च्चकः**, पुं, (सुखं वर्च्चयति उद्दीपयतीति ।
वर्च्च + णिच् + ण्वुल् ) सर्जिकाक्षारः ।
इत्य-
मरः । २ । ९ । १०९ ॥

**सुखायनः**, पुं, (सुखेन अयति गच्छति अनेनेति
अय + ल्युट् ।) सुशिक्षिताश्वः । यथा,
--
"सुखायतः शुद्ध मुख सुखचारः
सुखायनः ।"
इति शब्दमाला ॥

**सुखावतीश्वरः**, पुं, (सुखावत्या ईश्वरः ।) बुद्ध-
भेदः । हेमचन्द्रः ॥

**सुखावहः**, त्रि, (आवहतीति । आ + वह +
अच् सु । खस्य आवहः ।) सुखदाता ।
यथा,
"सर्व्वपापहरं पुण्यं सर्व्वापद्विनिवारकम्
।
सर्व्वकामार्थदं देवि ! साधकानां
सुखावहम् ॥"
इति वटुकभैरवस्तोत्रम् ॥

**सुखाशः**, पुं, (सुखा सुखयुक्ता आशा यस्य ।
यद्वा
सुखायां पुर्य्यां शेते इति । शी + डः ।)
वरुणः ।
(सुखेन अश्यते इति । अश + घञ् ।)
राज-
तिनिशः । (अश भोजने + भावे घञ् ।
सुखेन
आशः ।) सुखभोजनम् । इति मेदिनी ॥

**सुखाशकः**, पुं, (सुखाश एव । स्वार्थे कन् ।)
राजतिनिशः । इति शब्दमाला ॥

**सुखी**, (न्) त्रि, (सुखमस्यास्तीति । सुख +
इन् ।) सुखविशिष्टः । यथा, रामकवचम्
।
"स चिरायुः सुखी पुत्री विनयी विजयी
भवेत् ॥"
"स्वजनं हि कथं हत्वा सुखिनः
स्याममाधव ।"
इति भगवद्गीता ॥
"सा श्रीर्या न मदं कुर्य्यात् स सुखी
तृष्णयोज्-
झितः ।

**सुखोत्सवः**, पुं, (सुखकरः उत्सवो यस्मात् ।) पतिः । इति त्रिकाण्डशेषः ॥ (सुखजनक उत्सवः ।) आनन्दोत्सवश्च ॥

**सुखोदकं**, क्ली, (सुखजनकमुदकम् ।) सुखजनक- तप्तजलम् । तत्पर्य्यायः । सुखोष्णम् २ । इति रत्नमाला ॥

**सुखोर्ज्जिकः**, पुं, सर्ज्जिकाक्षारः । इति राज- निर्घण्टः ॥

**सुगं**, क्ली, (सुखेन गच्छति निर्य्यातीति । गम + डः ।) विष्ठा । इति शब्दचन्द्रिका ॥ (सुखेन गच्छत्यस्मिन्निति । "सुदुरोरधिकरणे ।" ३ । २ । ४८ । इत्यस्य वार्त्तिकोक्त्या डः । सुख- गन्तव्यो देशादिः ॥) सुन्दरगामिनि, त्रि ॥ (सुन्दरं गायतीति । गै + कः । शोभनगीत- शालिनि च त्रि ॥ यथा, भागवते । १० । १२ । ३४ । "गीतैः सुगा वाद्यधराश्च वाद्यकैः स्तवैश्च विप्रा जयनिस्वनैर्गणाः ॥")

**सुगण्**, त्रि, (सुगणयतीति । सु + गण + क्विप् ।) सुन्दरगणकः । इति सिद्धान्तकौमुदी ॥

**सुगतः**, पुं, (सु शोभनं गतं गमनं ज्ञानं वा अस्येति ।) बुद्धः । इत्यमरः । १ । १ । ११ ॥ (तद्धर्म्मा- वलम्बी । यथा, कथासरित्सागरे । २९ । ४० । "तेनाभिपूज्य सुगतान् भासयामास तत्र सा ॥") सुन्दरगमनविशिष्टे, त्रि ॥

**सुगतिः**, पुं, (शोभना गतिर्यस्य ।) अतीतकल्पी- यार्हद्भेदः । इति हेमचन्द्रः ॥ ग्रन्थकर्त्तृविशेषः । कुन्दुरुः । सुगन्धद्रव्यशल्लकीनिर्य्यासः । तत्- पर्य्यायो यथा, -- "कुन्दुरुस्तु मुकुन्दः स्यात् सुगन्धः कुन्द इत्यपि ॥" इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ क्रिमिभेदः । यथा, -- "अन्त्रादा उदरावेष्टा हृदयादा महागुदाः । चुरवो दर्भकुसुमाः सुगन्धास्ते च कुर्व्वते ॥" इति वैद्यकरुग्विनिश्चयसंग्रहे क्रिम्यधिकारे ॥) समवायातिरिक्तसम्बन्धेन सद्गन्धविशिष्टे, त्रि ॥ (यथा, भट्टिः । २ सर्गे । "आघ्रायिवान गन्धवहः सुगन्धः ॥")

**सुगन्धकः**, पुं, (शोभनो गन्धो यस्य । ततः कन् ।) रक्ततुलसी । गन्धकः । इति रत्नमाला ॥ नाग- रङ्गकः । इति त्रिकाण्डशेषः ॥ कर्क्कोटकः । इति हेमचन्द्रः ॥ (शालिधान्यम् । यथा, -- "रक्तशालिः मकलमः पाण्डुकः शकुनाहृतः । सुगन्धकः कर्द्दमको महाशालिश्च दूषकः ॥ पुष्पाण्डकः पुण्डरीकस्तथा महिषमस्तकः । दीर्घशूकः काञ्चनको हायनो लोध्रपुष्पकः ॥ इत्याद्याः शालयः सन्ति बहवो बहुदेशजाः ॥" इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**सुगन्धतैलनिर्य्यासं**, क्ली, (सुगन्धः तैलस्य निर्यासो धृतवेदः ॥ सहकारः । इति शब्दचन्द्रिका ॥ सुगन्धयुक्ते, त्रि, । इति मेदिनी ॥ (यथा, कुमारे । ३ । ५६ । सुगन्धिनिश्वासविवृद्धतृष्ण विम्बाधरासन्नचरं द्विरेफम् । प्रतिक्षणं संभ्रमलोलदृष्टि- र्लीलारविन्देन निवारयन्ती ॥")

**सुगन्धि**, क्ली, (शोभनो गन्धो यस्य । इत् ।) एल- वालुकम् । इत्यमरः । २ । ४ । १२१ ॥ (अथ एलवालुकं कक्कोलसदृशं कुष्ठगन्धि । "एलवालुकमैलेयं सुगन्धि हरिवालुकम् । ऐलवालुकमेलालुकपित्थं पत्रमीरितम् ॥" इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥) मुस्ता । कशेरु । गन्धतृणम् । धान्यकम् । पिप्पलीमूलम् । इति राजनिर्घण्टः ॥

**सुगन्धिकं**, क्ली, (शोभनो गन्धो यस्य । इत् । ततः स्वार्थे कन् ।) कह्लारम् । इति शब्दरत्नावली ॥ पुष्करमूलम् । गौरसुवर्णम् । सुरपर्णम् । उशीरम् । इति राजनिर्घण्टः ॥

**सुगन्धिकः**, पुं, (सु शोभनो गन्धो यस्य । इत् । ततः कन् ।) महाशालिः । इति हेमचन्द्रः ॥ तुरुष्कः । इति राजनिर्घण्टः ॥ गन्धकः । इत्य- मरटीकायां रायमुकुटः ॥

**सुगन्धिकुसुमः**, पुं, (सुगन्धि कुसुमं यस्य ।) पीत- करवीरः । इति राजनिर्घण्टः ॥ सुगन्धिपुष्पे, क्ली ॥

**सुगन्धिकुसुमा**, स्त्री, (सुगन्धि कुसुमं यस्याः ।) पृक्का । इति जटाधरः ॥

**सुगन्धिता**, स्त्री, (सुगन्धेर्भावः । तल् । टाप् ।)

यथा, सुगतिसोपानप्रभृतयोऽप्येवमिति स्मार्त्त-
लिखनम् ॥ (गयस्य पुत्त्रविशेषः । यथा, भाग-
वते । ५ । १५ । १४ ।
"गयात् गायन्त्यां चित्ररथः सुगतिरविरोधन
इति त्रयः पुत्त्रा बभूवुः ।" शोभना गतिर्य्य-
स्येति । शोभनगतिशीले, त्रि । यथा, बृहत्-
संहितायाम् । ९ । ४५ ।
"सुगतिरविकृतो जयान्वितः
कृतयुगरूपकरः सिताह्वयः ॥"
स्त्री, सद्गतिः । यथा, महाभारते । १ । २ ।
३३५ ।
यत्र धर्म्मं समाश्रित्य विदुरः सुगतिं गतः ॥")

**सुगन्धं**, क्ली, (शोभनो गन्धो यस्य ।) क्षुद्र-
जीरकम् । गन्धतृणम् । इति रत्नमाला ॥
(भूतृणम् । तत्पर्य्यायो यथा, --
"गुह्यबीजन्तु भूतीकं सुगन्धं जम्बुरुप्रियम् ।
भूतृणन्तु भवेच्छत्रा मालातृणकमित्यपि ॥"
इति भावप्रकाशस्य पूव्वखण्डे प्रथमे भागे ॥)
नीलोत्पलम् । चन्दनम् । इति राजनिर्घण्टः ॥
ग्रन्थिपर्णम् । इति भावप्रकाशः ॥

**सुगन्धः**, पुं, (शोभनो गन्धो यस्य ।) रक्तशिग्रुः ।
गन्धकः । चणकः । भूतृणम् । इति राज-
निर्घण्टः ॥ (भूपलाशः । तत्पर्य्यायो यथा, --
"आस्फातकः सुगन्धश्च भूपलाशो विशल्यकृत् ॥"
इति वैद्यकरत्नमालायाम् ॥
यत्र ।) जवादिनामगन्धद्रव्यम् । इति राज-
निर्घण्टः ॥

**सुगन्धपत्रा**, स्त्री, (सुगन्धानि पत्राणि यस्याः ।)
रुद्रजटा । इति राजनिर्घण्टः ॥

**सुगन्धभूतृणं**, क्ली, (सुगन्धो भूतृणम् ।) गन्ध-
तृणम् । इति राजनिर्घण्टः ॥

**सुगन्धमूला**, स्त्री, (सुगन्धं मूलं यस्याः ।) स्थल-
पद्मिनी । रास्ना । इति राजनिर्घण्टः ॥
(लवली । तत्पर्य्यायो यथा, --
"सुगन्धमूला लवली पाण्डुः कोमलवल्कला ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**सुगन्धा**, स्त्री, (शोभनो गन्धो यस्याः ।) रास्ना ।
इत्यमरः । २ । ४ । ११४ ॥ शटी । इति शब्द-
रत्नावली ॥ बन्ध्याकर्क्कोटकी । रुद्रजटा । शत-
पुष्पा । नाकुली । नवमालिका । स्वर्णयूथिका ।
पृक्का । गङ्गापत्री । सल्लकी । माधवी । इति
राजनिर्घण्टः ॥ अनन्ता । मातुलुङ्गा । तुलसी ।
इति रत्नमाला ॥
(पीठस्थानस्थदेवीविशेषः ।
यथा, देवीभागवते । ७ । ३० । ६८ ।
"कोटवी कोटतीर्थे तु सुगन्धा माधवे वने ॥")

**सुगन्धामलकं**, क्ली, (सुगन्धमामलकम् ।) मिलि-
तौषधविशेषः । यथा, --
"सर्व्वौषधिसमायुक्ताः
शुष्कास्त्वामलकत्वचः ।
यदा तदायं योगः स्यात्
सुगन्धामलकाभिधः ॥"
इति राजनिर्घण्टः ॥

**सुगन्धिः**, पुं, (शोभनो गन्धो यस्य । "गन्धस्ये-
सौगन्धिः । सौरभम् । इति हलायुधः ॥ (यथा,
माघे । ३ । ५४ ।
सुगन्धितामप्रतियत्नपूर्व्वां
बिभ्रन्ति यत्र प्रमदाय पुंसाम् ।
मधूनि वक्त्राणि च कामिनीना-
मामोदकर्म्मव्यतिहारमीयुः ॥")

**सुगन्धित्रिफला**, स्त्री, (सुगन्धि त्रिफलं त्रिशिराकं
फलं यस्याः ।) जातीफलम् । पूगफलम् ।
लवङ्गकलिकाफलम् । इति राजनिर्घण्टः ॥

**सुगन्धिनी**, स्त्री, (सुगन्धोऽस्त्यस्या इति । इनिः ।
ङीप् ।) आरामशीतला । इति राज-
निर्घण्टः ॥ (सुवर्णकेतकी । अस्याः पर्य्यायो यथा,
"केतकः सूचिकापुष्पो जम्बूकः क्रकचच्छदः ।
सुवर्णकेतकी त्वन्या लघुपुष्पा सुगन्धिनी ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**सुगन्धिमूलं**, क्ली, (सुगन्धि मूलमस्य ।) उशीरम् ॥
इति राजनिर्घण्टः ॥

**सुगन्धिमूषिका**, स्त्री, (सुगन्धिर्गन्धविशिष्टा
मूषिका ।) छच्छुन्दरी । इति राजनिर्घण्टः ॥

**सुगमः**, त्रि, (सु + गम + खल् ।) सुखेन गम्यते
प्राप्यते यः । यथा, पक्षे सुगमम् । इति मुग्ध-
बोधीयादादिप्रकरणलिखणम् ॥ (यथा, भाग-
वते । १० । ८४ । ३६ ।

| | | |
|---|---|---|
| | दुत्पूतिसुरभिभ्यः ।” ५ । ४ । १३५ । इति इत् ।) सद्गन्धः । तत्पर्य्यायः । इष्टगन्धः २ सुरभिः ३ । घ्राणतर्पणः ४ । इत्यमरः । १ । ५ । ११ ॥ परमात्मा । इति मोक्षधर्म्मटीकायां नीलकण्ठ- | |

"चित्तस्योपशमोऽयं वै कविभिः
शास्त्रचक्षुषा ।
दर्शितः सुगमो योगो
धर्म्मश्चात्ममुदावहः ॥")

**सुगहनः**, त्रि, (सुन्दरो गहनः ।) निविडः ।
इत्यमरटीकायां रामाश्रमः ॥

**सुगहना**, स्त्री, कुम्बा । सुगहनेतिविशेषणमिति
केचित् । नाम इत्यन्ये ।
इत्यमरटीकायां रमा-
नाथः ॥

**सुगहनावृतिः**, स्त्री, कुम्बा । इत्यमरः ॥ यज्ञस्थाने
अस्पृश्यादिदर्शनवारणाय या
सुगहना निरव-
काशा वृतिर्वेष्टनं सा कुम्बा । इति
भरतः ॥

**सुगृहः**, पुं, (सुन्दरं गृहं यस्य ।) चञ्चसूचिक-
पक्षी । इति हेमचन्द्रः ॥ (सुन्दरं
गृहम् ।)
सुन्दरालये, क्ली ॥

**सुगृहीतः**, त्रि, (सु + ग्रह + क्तः ।) सुन्दररूपेण
कृतग्रहणः ॥

**सुगृहीतनामा**, [न्] पुं, (सुगृहीतं नाम यस्य ।)
शुभकाम्यया प्रातः स्मर्य्यते यः । स
च युधिष्ठि-
रादिः । इति त्रिकाण्डशेषः ॥

**सुग्रन्थिः**, पुं, (शोभना ग्रन्थयो यत्र ।) चोरकः ।
इति राजनिर्घण्टः ॥
सुन्दरग्रन्थियुक्ते, त्रि ॥

**सुग्रीवः**, पुं, (शोभना ग्रीवा यस्य । विष्णोरश्वः ।
(यथा, महाभारते । २ । २ । १४ ।

**सुचक्षुः**, [स्] पुं, (शोभनं चक्षुरिव फलं यस्य ।)
उडुम्बरः । इति जटाधरः ॥ शोभनलोचने,
क्ली ॥ तद्युक्ते, त्रि ॥

**सुचञ्चुका**, स्त्री, (सुष्ठु चञ्चुरिव शिखा यस्याः ।
कप् ।) महाचञ्चुशाकः । इति राजनिर्घण्टः ॥

**सुचरित्रा**, स्त्री, (शोभनं चरित्रं यस्याः ।)
साध्वी । इत्यमरः । २ । ६ । ६ ॥
शोभनचरित्र-
युक्ते, त्रि ॥

**सुचर्म्मा**, [न्] पुं, (शोभनं चर्म्म यस्य ।) भूर्ज-
वृक्षः । इति राजनिर्घण्टः ॥
शोभनचर्म्मविशिष्टे,
त्रि ॥

**सुचारुः**, त्रि, (शोभनश्चारुश्च ।) मनोहरः ।
यथा, कालिकापुराणोक्तदशभुजावुर्गाध्याने ।
"सुचारुदशनां तद्वत् पीनोन्नतपयोधराम् ॥"

**सुचित्रकः**, पुं, (सुन्दराणि चित्राणि यत्र ।) मत्-
स्यरङ्कः । चित्रसर्पः । इति शब्दरत्नावली ॥
सुन्दरचित्रयुक्ते, त्रि ॥

**सुचित्रबीजा**, स्त्री, सुचित्रं बीजं यस्याः ।)
बिडङ्गा । इति राजनिर्घण्टः ॥

**सुचित्रा**, स्त्री, (शोभनानि चित्राणि यस्याः ।)
चिर्भिटा । इति राजनिर्घण्टः ॥

**सुचिरायुः**, [स्] पुं, (सुचिरं आयुर्यस्य ।) देवता ।
इति शब्दरत्नावली ॥

**सुचुटी**, स्त्री, अग्न्याद्युद्धरणार्थलौहादियन्त्रविशेषः
चिम्टा इति भाषा । इति केचित् ॥

**सुचेलकः**, पुं, (शोभनश्चे लकः ।) शोभनवस्त्रम् ।
सरु कापड इति भाषा । तत्पर्य्यायः । पटः
२ ।
इत्यमरः । २ । ६ । ११६ ॥ पटिः ३ पटी
४ ।

**सुजाता**, स्त्री, (सु + जन + क्तः ।) तुवरी । इति
राजनिर्घण्टः ॥

**सुजीवन्ती**, स्त्री, (सुजीवतीति । सु + जीव +
शतृ । ङीप् ।) स्वर्णजीवन्ती । इति राज-
निर्घण्टः ॥

**सुट्ट**, क तौच्छ्ये । अनादरे । इति कविकल्पद्रुमः
(चुरा०-पर०-सक०-सेट् ।) पञ्चमस्तरी टद्व-
यान्तः । क, सुट्टयति । दन्त्यादिरयमिति
भीमः ।
तौच्छ्यमल्पीभावः । इति दुर्गादासः ॥

**सुतः**, पुं, (सूयते स्मेति । सु + क्तः ।) पुत्त्रः ।
इत्यमरः । २ । ६ । २७ ॥ "सूयते सुतः
कर्म्मणि
क्तः । पुतो नरकभेदात् त्रायते इति पुत्त्रः ।
'पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः ।
तस्मात् पुत्त्र इति ख्यातः स्वयमेव स्वयम्भुवा
॥'
इति स्मृतिः ॥
किंवा पुनाति मातापितराविति त्रासुसिति
त्रे निपातात् ह्रस्वत्वे पुत्त्रः । पुत्त्रो द्वितकारः
एकतकारश्च ।" इत्यमरटीकायां भरतः ॥ *
॥
मातृपितृस्वभाववत्स्वभावेसुतकन्ये भवतः ।
यथा, --
"शीलं संभजते पुत्रो मातुस्तातस्य वै सुता ।
यथाशीला भवेन्माता तथाशीलो भवेत् सुतः
॥
यद्वर्णा वै भवेद्भू मिस्तद्वर्णं सलिलं भवेत् ॥
मातॄणां शीलदोषेण पितृशीलगुणेन च ।
विभिन्नास्तु प्रजाः सर्व्वा भवन्ति भवशीलि-
नाम् ॥"
इति वह्निपुराणे काश्यपीयवंशः ॥
पार्थिवः । इति मेदिनी ॥ * ॥ (उत्पन्ने, त्रि ॥)

**सुतजीवकः**, पुं, (सुतं जीवयतीति । जीव + ण्वुल्
पुत्त्रजीवकवृक्षः । इति राजनिर्घण्टः ॥

**सुतनुः**, स्त्री, (शोभना तनुर्यस्याः ।) नारी ।

"प्रययौ पुण्डरीकाक्षः
शैव्यसुग्रीववाहनः ॥")
शाखामृगेश्वरः । इति मेदिनी ॥ स
तु सूर्य्य-
पुत्त्रः किष्किन्धाधिपतिः
श्रीरामचन्द्रस्य सखा
यथा, वल्मीकीये रामायणे
बालकाण्डे १७
सर्गे ।
"वानरेन्द्रं महेन्द्राभमिन्द्रो
बालिनमात्मजम् ।
सुग्रीवं जनयामास तपनस्तपतां वरः
॥"
किञ्च तत्रैव किष्किन्धाकाण्डे ५ सर्गे
।
"दीप्यमानं ततो वह्निं पुष्पैरभ्यर्च्च्य
सत्कृतम् ।
तयोर्मध्ये तु सुप्रीतो निदधौ
सुसमाहितः ॥
ततोऽग्निं दीप्यमानं तौ चक्रतुश्च
प्रदक्षिणम् ।
सुग्रीवो राघवश्चैव वयस्यत्वमुपागतौ
॥" * ॥
अर्हत्पिता । स च
वर्त्तमानयुगीयनवमजिन-
पिता । इति हेमचन्द्रः ॥ शिवः ।
इन्द्रः ।
राजहंसः । असुरः । पर्व्वतविशेषः ।
अस्त्र-
विशेषः । नागभेदः । इति केचित् ॥
शोभन-
ग्रीवायुक्ते, त्रि । इति विश्वः ॥

**सुग्रीवी**, स्त्री, (शोभना ग्रीवा यस्याः । ङीप् ।)
ताम्राग्रगर्भजाता कश्यपदुहिता । यथा,
--
"षट्सुतास्तु महासत्त्वास्ताम्रायाः
परि-
कीर्त्तिताः ।
शुकी श्येणी च भासी च सुग्रीवी
शुचिगृध्रिका
इति तट्टीका ॥ सुन्दरवस्त्रयुक्ते, त्रि ॥

**सुच्छत्री**, स्त्री, शतद्रुनदी । इति शब्दरत्नावली ॥
शतलज् इति ख्याता ॥

**सुजनः**, पुं, (सु सुन्दरो जनः । साधुः । सज्जनः ।
यथा, --
"दुर्ज्जनस्य हि सङ्गेन सुजनोऽपि विनश्यति
।
प्रसन्नं जलमित्याहुः कर्द्दमैः कलुषीकृतम् ॥"
इति गारुडे १५ अध्यायः ॥

**सुजनता**, स्त्री, (सुजनस्य भावः । तल् । टाप् ।)
सौजन्यम् । यथा, --
"धिगस्त्वेतां विद्यां धिगपि कवितां
धिक्सुजनतां
वयो रूपं वा धिक् धिगपि च यशो निर्धन-
वताम् ।
असौ जीयादेकः सकलगुणहीनोऽपि धनवान्
बहिर्यस्य द्वारे तृणलवसमाः सन्ति गुणिनः
॥"
इत्युद्भटः ॥

**सुजलं**, क्ली, (शोभनं जलं यस्मात् । कमलम् ।
इति राजनिर्घण्टः ॥ सुन्दरसलिलञ्च ॥
सुन्दर-
जलसम्बन्धिनि, त्रि ॥

**सुजल्पः**, पुं, (सुन्दरो जल्पः कथनम् ।) वाक्य-
विशेषः । यथा, --
"यत्रार्ज्ज वात् सगाम्भीर्य्यं सदैन्यं
सहचापलम्
सोत्कण्ठञ्च हरिः स्पृष्टः स सुजल्पो निगद्यते
॥"
इत्युज्ज्वलनीलमणिः ॥
इति राजनिर्घण्टः ॥ (शोभना तनुः शरीरम् ।)
शोभनशरीरम् ॥ तद्युक्ते, त्रि ॥ (यथा, उत्तर-
चरिते १ अङ्के ।
"स्मरसि सुतनु ! तस्मिन् पर्व्वते लक्ष्मणेन
प्रतिविहितसपर्य्यासुस्थयोस्तान्यहानि॥")

**सुतपाः**, [स्] पुं, (सुष्ठु तपतीति । सु + तप् +
"गतिकारकरोःपूर्व्वपदप्रकृतिस्वरत्वम् ।"
उणा०
४ । २२६ । इति असिः ।) सूर्य्यः । इति
सिद्धान्त-
कौमुदी ॥ शोभनं तपो यस्य । मुनिः ॥ (रौच्य-
मनुपुत्त्रविशेषः । इति मार्कण्डे यपुराणम् ।
९४ ।
२५ ॥ विष्णुः । इति महाभारतम् । १३ ।
१४९ । ३४ ॥ उग्रतपस्यायुक्ते, त्रि । यथा,
कथासरित्सागरे । ११२ । १४१ ।
"स एव जातः संकल्पदोषाद्दाशकुले द्विजः ।
भार्य्यास्य सा च सुतपा जातैषा ते सुता नृप
॥")

**सुतपादिका**, स्त्री, (सुताः समकालीनमुत्पन्नाः
पादा मूलानि यस्याः । कप् । टापि अत इत्वम्
।)
हंसपदी । इति राजनिर्घण्टः ॥

**सुतरां**, व्य, (सु + द्विवचनविभज्येत्यादिना तरप् ।)
अवधारितार्थप्रतिपादकम् । यथा । क्रियैव
काल इति मते तु सुतरां नाधिकरणता । इति

शुकी शुकानजनयत् उलूकी

प्रत्युलूककान् ।

शुच्यौदकान् पक्षिगणान् सुग्रीवी तु

व्यजायत ॥”

इति गारुडे ६ अध्यायः ॥

**सुग्रीवेशः**, पुं, (सुग्रोवस्य ईशः ।) श्रीरामचन्द्रः ।

इति शब्दरत्नावली ॥

**सुग्लः**, त्रि, (सुग्लायतीति । सु + ग्लै + “आत-

श्चोपसर्गे ।” ३ । १ । १३६ । इति

कः ।) अत्यन्त-

हर्षक्षयविशिष्टः । इति

सिद्धान्तकौमुदी ॥

सपिण्डीकरणसमाख्यासिद्ध्यर्थं
सुतरां तत्रतथा-
चरणम् । इति च तिथ्यादितत्त्वम् ॥
अपि च ।
"अपुत्रा जन्मिनः पापात् प्राणिनः
समव-
स्थिताः ।
मनुजास्तत्र सुतरां भवन्ति गृहकर्म्मिणः
॥"
इति पाद्मे सृष्टिखण्डे ४३ अध्यायः ॥
"शृणु द्विज महाबुद्धे दम्भेनापि स्मृतो
हरिः ।
ददाति मोक्षं सुतरां किं
पुनर्द्दम्भवर्ज्जनात् ॥"
इति तत्रैव पातालखण्डम् ॥

**सुतर्कारी**, स्त्री, देवदालीलता । इति राज-
निर्घण्टः ॥

**सुतर्द्दनः**, पं, (सुष्ठु तर्द्दति पीडयति विरहिनमिति
तर्द्द अर्द्दने + ल्युः ।) कोकिलः । इति
त्रिकाण्ड-
शेषः ॥

**सुतलः**, पुं, (शोभनं तलं यत्र ।) अट्टालिका-
बन्धः । नागलोकप्रभेदः । इति मेदिनी
॥ स तु
पातालषष्ठखण्डः । तद्विवरणं यथा, --
"ततोऽधस्तात् सुतल उदारश्रवाः
पुण्यश्लोको
विरोचनात्मजो बलिर्भगवता महेन्द्रस्य
प्रियं
चिकीर्षमाणेनादितेर्लब्धकायो भूत्वा
वटुवामन-
रूपेण पराक्षिप्तलोकत्रयो
भगवदनुकम्पयैवपुनः
प्रवेशित इन्द्रादिष्वविद्यमानया
सुसमृद्धया श्रि-
याभिजुष्टः स्वधर्मेणाराधयंस्तमेव
भगवन्तमारा-

गुणाः । चक्षुष्यत्यम् । कटुत्वम् ।
आखुविषव्रण-
दोषनेत्रामयनाशित्वञ्च । इति राजनिर्घण्टः ॥
पुस्तकान्तरे श्रुतश्रेणीति च पाठः ॥

**सुतहिवुकयोगः**, पुं, विवाहोक्तयोगविशेषः ।
यथा, ज्योतिःसारसंग्रहे ।
"सुतहिवुकवियद्विलग्नधर्म्मे-
ष्वमरगुरुर्यदि दानवार्च्चितो वा ।
यदशुभमुपयाति तच्छुभं स्यात्
शुभमतिवृद्धिमुपैति तत्प्रभावात् ॥"
अपि च ज्योतिस्तत्त्वे ।
"लग्ने तत्पञ्चमे तूर्य्ये नवमे दशमे तथा ।
गुरुर्भृ गुर्व्वा दोषघ्नो विवाहे वर्द्धते शुभम् ॥"
अयमेव सुतहिवुकयोगः ॥

**सुता**, स्त्री, (सूयते स्म या । सु + क्तः । टाप् ।)
स्त्यपत्यम् । कन्या । इति मेदिनी ॥ यथा, --
"आत्मजस्तनयः सूनुः सुतः पुत्त्रः स्त्रियां
त्वमी ।
आहुर्दहितरं सर्व्वे -- ॥"
इत्यमरः । २ । ६ । २७-२८ ॥
"अमी आत्मजाद्याः स्त्रियां वर्त्तमाना दुहितर-
माहुः । यथा । आत्मजा । तनया । सूनोः
प्रत्ययान्तराभावात् स्त्रियामपि सूनुरेव । सुता
पुत्त्रा । स्वार्थे के केऽकस्व इति ह्रस्वत्वे
द्वैषसूत-
पुत्त्रेत्यादिना विभाषया अत इति पुत्त्रिका
पुत्त्रका च । शोनादिपाठात् पुत्त्री च । मा
भैषीः पुत्त्रि सीतेति महानाटकम् ।" इति
तट्टीकायां भरतः ॥ (यथा, भट्टिः । २ । ४७
।
"हिरण्मयी शाललतेव जङ्गमा
च्युतादिव स्थास्नुरिवाचिरप्रभा ।
शशाङ्ककान्तेरधिदेवताकृतिः
सुता ददे तस्य सुताय मैथिली ॥")
दुरालभा । इति शब्दचन्द्रिका ॥

**सुतात्मजः**, पुं, (सुतस्य सुताया वा आत्मजः ।)
पौत्त्रः । दौहित्रः । इति सुतात्मजाशब्ददर्श-

तेनाम्बा यदि सुतिनी
वद बन्ध्या कीदृशी भवति ॥"

**सुतीक्ष्णः**, पुं, (सुष्ठु तीक्ष्णः ।) शोभाञ्जनः । इति
जटाधरः ॥ श्वेतशिग्रुः । इति राजनिर्घण्टः
॥
मुनिविशेषः । यथा, भट्टौ ४ सर्गे ।
"पुरो रामस्य जुहवाञ्चकार ज्वलने वपुः ।
शरभङ्गः प्रदिश्यारात् सुतीक्ष्णमुनिकेतनम्
॥"
अतिशयखरे, त्रि ॥ (यथा, ऋतुसंहारे । ६ ।
२८
"समदमधुकराणां कोकिलानानाञ्च नादैः
कुसुमितसहकारैः कर्णिकारैश्च रम्यैः ।
इषुभिरिव सुतीक्ष्णै र्मानसं मानिनीनां
तुदति कुसुमबाणो मन्मथोद्दीपनाय ॥")

**सुतुङ्गः**, पुं, (सुष्ठु तुङ्गः ।) नारिकेलवृक्षः । इति
हारावली । १०० ॥ ग्रहाणां उच्चांशविशेषः
।
तस्य नामान्तरं अन्त्यतुङ्गः । यथा,
सत्कृत्य-
मुक्तावल्याम् ।
"सूर्य्याद्युच्चान्
क्रियवृषमृगस्त्रीकुलीरान्त्ययूके
दिग्वह्नीन्द्रद्वयतिथिशरान् सप्तविंशांश्च
विंशान्
अंशानेतान् वदति जवनश्चान्त्यतुङ्गान्
सुतुङ्गान्
तानेवांशान् मदनभवनेष्वाह नीचान् सुनी-
चान् ॥"
अतिशयोच्चे, त्रि ॥

**सुतेजनः**, पुं, (सुतेजयतीति । सु + तिज + ल्युः ।)
धन्वन्वृक्षः । इति भावप्रकाशः ॥ (तथास्य
गुणाः ।
"धन्वङ्गः कफपित्तास्रकासहृत्तुवरोलघुः ।
वृंहणो बलकृद्रूक्षः सन्धिकृद्व्रणरोपणः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे
॥)

धनोयमपगतसाध्वसआस्ते अधुनापि
।”
इति श्रीभागवते। ५। २४। १८॥
(तथाच
देवीभागवते। ८। १९। १३ -- ३२।
“ततोविलाधस्तात्प्रोक्तं सुतलाख्यं
विलेश्वरम्
पुण्यश्लोको बलिर्नाम आस्ते
वैरोचनिर्मुने ! ॥
महेन्द्रस्य च देवस्य चिकिर्षुः
प्रियमुत्तमम्।
त्रिविक्रमोऽपि भगवान् सुतले
बलिमानयत्॥
त्रैलोक्यलक्ष्मीमाक्षिप्यस्थापितः किल
दैत्य-
राट्।
इन्द्रादिष्वप्यलब्धा या सा
स्त्रीस्तमनुवर्त्तते॥
तमेव देवदेवेशमाराधयति भक्तितः।
व्यपेतसाध्वसोऽद्यापि वर्त्तते
सुतलाधिपः॥

▪
▪
▪
▪

एवं दैत्यपतिः सोऽयं बलिः
परमपूजितः।
सुतले वर्त्तते यस्य द्वारपालो हरिः
स्वयम्॥
एकदा दिग्जये राजा रावणो
लोकरावणः।
प्रविशन् सुतले येन भक्तानुग्रहकारिणा
॥
पादाङ्गुष्ठेन प्रक्षिप्तो योजनायुतमत्र हि॥
एवम्भूतानुभावोऽयं बलिः
सर्व्वसुखैकभुक्।
आस्त सुतलराज्यस्थो
देवदेवप्रसादतः॥”)

**सुतवस्करा**, स्त्री, (सुताः वस्कराः पक्षिण इव
बहुत्वात् यस्याः।) सप्तपुत्त्रप्रसूः।
इति
नात्॥

**सुतात्मजा**, स्त्री, (सुतस्य सुताया वा आत्मजा)
पौत्त्री। दौहित्त्री। इत्यमरः। २। ६। २९
॥

**सुतारका**, स्त्री, (शोभने तारके यस्याः।) चतु-
र्व्विंशतिबुद्धशासनदेवतान्तर्गतदेवताविशेषः
।
इति हेमचन्द्रः॥ शोभनतारकायुक्ते, त्रि॥

**सुतिक्तः**, पुं, (सुष्ठु तिक्तः।) पर्प्पटः। इति
राजनिर्घण्टः॥

**सुतिक्तकः**, पुं, (सुष्ठु तिक्तः। ततः कन्।) पारि-
भद्रः। इति जटाधरः॥ भूनिम्बः। इति
शब्द-
रत्नावली॥

**सुतिक्ता**, स्त्री, (सुष्ठु तिक्ता।) कोषातकी।
इति राजनिर्घण्टः॥
सुतीः, त्रि, पुत्त्रेच्छुः। पुत्त्रवदाचरणकर्त्ता।
इति मुग्धबोधव्याकरणम्॥

**सुती**, [न्] त्रि, (सुतमस्यास्तौति। इनिः।) सुत-
विशिष्टः। यथा, हितोपदेशे।
“गुणिगणगणनारम्भे
न पतति कठिनी ससम्भ्रमात् यस्य।

**सुतेजाः**, [स्] पुं, (सुष्ठुतेजो यस्य। यद्वा, सुतेजय-
तीति। सु + तिज + “गतिकारकयोरिति
।”
उणा० ४। २२६। इति असिः।) अतीत-
कल्पीयार्हद्भेदः। इति हेमचन्द्रः। आदित्य-
भक्ता। इति राजनिर्घण्टः॥
शोभनतेजोयुक्ते,
त्रि॥ (यथा, छान्दोग्योपनिषदि। ५। १२
। १।
“एष वैसुतेजा आत्मा वैश्वानरो यं
त्वमात्मान-
मुपास्ते॥”)

**सुतैला**, स्त्री, (सुष्ठु तैलमस्यामिति।) महा-
ज्योतिष्मती। इति राजनिर्घण्टः॥

**सुत्रामा**, [न्] पुं, (सु + त्रै + मनिन्।) इन्द्रः। इत्य
मरः। १। १। ४५॥ सुष्ठु त्रायते भुवनं
सुत्रामा
त्रासुसिति मन् सोः पक्षे दीर्घत्वं सूत्रामा च।
इति रुद्रः। इति भरतः॥ (यथा, अम्बाष्टके
। ३।
“यत्राशयो लगति तत्रागजा बसतु कुत्रापि
निस्तुलशुका
सुत्रामकालमुखसत्राशनप्रकरसुत्राणकारि
चरणा॥”
वाच्यलिङ्गेऽपि दृश्यते। यथा,
वाजसनेयसंहि-
तायाम्। १०। ३१।
“इन्द्राय सुत्राम्णे पच्यस्व।”
“सुष्ठु त्रायते इति सुत्रामा तस्मै सुत्राम्णे
शोभनत्राणकर्त्रे सुत्रातव्याय वा इन्द्राय
पच्यस्व”
इति तद्भाष्यम्॥)

| | | |
|---|---|---|
| त्रिकाण्डशेषः ॥<br>**सुतश्रेणी**, स्त्री, (सुता उत्पन्ना श्रेण्यो यस्याः ।<br>एकत्र बहुजातत्वात् तथात्वम् । मूषिक-<br>पर्णो । इत्यमरः । २ । ४ । ८८ ॥<br>उन्दुरविलोया<br>इति हिन्दी भाषा । तत्पर्य्यायः ।<br>द्रवन्ती २<br>न्यग्रोधी ३ मूपिकाह्वया ४ चित्रा ५<br>मूषक-<br>मारी ६ प्रत्यक्श्रेणी ७ शम्बरी ८ ।<br>अस्या | | |

**सुत्वा**, [न्] पुं, (सु + "सुयजोङ्वनिप् ।" ३ । २ ।
१०३ । इति ङ्वनिप् ।) अभिषवे कृती । इत्य-
मरः । २ । ७ । ४७ ॥ अभिषवः स्नानमात्रं
इह तु प्रस्तावात् यज्ञाङ्गस्नानं तत् कृतवान् यः
स सुत्वा कथ्यते । सुञः क्वनिप् तन् सुत्वा
कृतीति अधीतिवत् । कृते इति पाठे सप्तमी ।
इति भरतः ॥

**सुद**, इ शोभे । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-अक०-सेट् ।) सुन्दरम् । इति दुर्गा-
दासः ॥ सौत्रधातुरयम् ॥

**सुदग्धिका**, स्त्री, (सुष्ठुदग्धं दाहोऽस्त्यस्या इति
सुदग्ध + ठन् ।) दग्धानामवृक्षः । इति राज-
निर्घण्टः ॥

**सुदण्डः**, पुं, (शोभनो दण्डो यस्मात् ।) वेत्रः ।
इति राजनिर्घण्टः ॥

**सुदण्डिका**, स्त्री, गोरक्षी । इति राजनिर्घण्टः ॥

**सुदन्**, [त्] त्रि, (शोभना दन्ता यस्य । "वयसि
दन्तस्य दतृ ।" ५ । ४ । १४१ । इति दतृ ।)
शोभनदन्तविशिष्टः । (स्त्रियां ङीप् । यथा,
रघुः । ६ । ३७ ।
"विधाय सृष्टिं ललितां विधातु-
र्जगाद भूयः सुदतीं सुनन्दा ॥"
शोभनो दत् दन्तः इति विग्रहे सुदत् इत्येव
स्यात् । शोभनदन्तः । यथा, भागवते । ३ ।
२३ । ३२ ।

ईश्वर उवाच ।
"नायमेभिर्म्महातेजाः शस्त्रास्त्रैर्वध्यते मया ।
देवाश्च स्वस्वतेजांसि शस्त्रार्थं दीयतां मम ॥
नारद उवाच ।
अथ विष्णुमुखा देवाः स्वतेजांसि ददुस्तथा ।
तान्यैक्यं वै गतानीशो दृष्ट्वा स्वञ्चामुचन्महः ॥
तेनाकरोन्महादेवः सहसा शस्त्रमुत्तमम् ।
चक्रं सुदर्शनं नाम ज्वालामालातिभीषणम् ।
तेजःशेषेण च तथा वज्रञ्च कृतवान् हरः ॥"
तच्च शिवेन विष्णवे दत्तम् । यथा, --
"ततः प्रीतः प्रभु प्रादात् विष्णवे प्रवरं वरम् ।
प्रत्यक्षं तैजसं श्रीमान् दिव्यं चक्रं सुदर्शनम् ॥
तद्दत्त्वा देवदेवाय सर्व्वभूतभयप्रदम् ।
कालचक्रनिभं चक्रं शङ्करो विष्णुमब्रवीत् ॥
वरायुधोऽयं देवेश सर्व्वायुधनिवर्हणः ।
सुदर्शनो द्वादशारो यो मनःसदृशो जवी ॥
आरात् स्थिता अमी चात्र देवा मासाश्च राशयः ।
शिष्टानां रक्षणार्थाय संस्थिता ऋतवस्तु षट् ॥
अग्निः सोमस्तथा मित्रो वरुणश्च प्रजापतिः ।
इन्द्राग्नी चाप्यथो विश्वे प्रजापतय एव च ॥
हनूमांश्चाथ बलवान् देवो धन्वन्तरिस्तथा ।

तथा सौदर्शनं मन्त्रं मनस्तत्त्वं निवेशयेत् ॥
मनोऽनुरूपेणास्यैव सजीवकरणं स्मृतम् ।
आरेषु मूर्त्तयो न्यस्याः केशवाद्याः सुरोत्तमाः ॥
नाभ्यक्षप्रतिनेमीषु न्यसेत्तत्त्वानि देशिकः ।
नारसिंहं विश्वरूपमक्षमध्ये निवेशयेत् ॥
सकलं विन्यसेद्दण्डे सूत्रात्मानं सजीवकम् ।
निष्कलं परमात्मानं ध्वजे ध्यायन् न्यसेद्धरिम् ॥
तच्छक्तिं व्यापिनीं ध्वायेत् ध्वजरूपाञ्चला-
ननाम् ।
ततो मण्डपमध्येतु स्नाप्य पुज्य यथाविधि ॥
पूर्व्वोक्ते न विधानेन होमं कुण्डेषु कारयेत् ॥
ततः प्रभातसमये मूर्त्तिपैः सह देशिकः ।
मूर्त्तिपः आचार्य्यः ।
कलसे स्वर्णशकलं न्यस्त्वा रत्नानि पञ्च च ।
स्थापयेच्चक्रमन्त्रेण स्वर्णचक्रमधस्ततः ॥
पारदेन तु संप्लाव्य नेत्रपट्टेन स्थापयेत् ।
ततो निवेशयेच्चक्रं द्वादशारं सुदर्शनम् ॥
दुर्निरीक्ष्यं सुरैर्द्दैत्यैर्भ्रमद्वह्निस्फुलिङ्गकम् ।
तन्मध्ये चिन्तयेद्देवं नृसिंहं दैत्यनिर्द्दलम् ॥
स्फुरत्सौदामिनीजिह्वं ज्वलज्ज्वलनकेशरम् ।
दीप्तार्कनयनं चन्द्रकोटिभास्वरदंष्ट्रिणम् ॥
तप्तस्य तपनीयस्य सदृशं परुषाननम् ।
सर्व्वदुष्टहरं देवं दुष्प्रेक्ष्यं देवदानवैः ॥
सर्व्ववर्णान्तबीजेन चतुर्द्दशयुतेन च ।
बिन्दुनालङ्कृतेनादौ प्रणवेन प्लुतेन च ।
अन्ते प्रणतियुक्तेन स्थापयेद्दुष्टनाशनम् ॥"
इति श्रीहरिभक्तिविलासे १९ विलासः ॥ * ॥
चक्रमन्त्रो यथा । ॐ नमो भगवते सुदर्शनाय
निर्णाशितसकलरिपुध्वजायभगवन्नारायण-
कराम्भोरुहस्पर्शदुर्ल्ललिताय ।
"एह्येहि त्वं सहस्रार चक्रराज सुदर्शन ।
यज्ञभागं प्रगृह्यस्व पूजाञ्चैव नमो नमः ॥"
इति च तत्रैव १५ विलासः ॥
सुमेरुः । जम्बूवृक्षः । इति मेदिनी ॥ (यथा,
मात्स्ये । ११३ । ७४ -- ७५ ।
"सुदर्शनो नाम महान् जम्बूवृक्षः सनातनः ।
नित्यपुष्पफलोपेतः सिद्धचारणसेवितः ॥
तस्य नाम्ना समाख्यातो जम्बूद्वीपो वनस्पतेः ।
योजनानां सहस्रञ्च शतधा च महान् पुनः ॥

"सुभ्रुवा सुदता श्लक्ष्णस्निग्धापाङ्गेन चक्षुषा ।
पद्मकोशस्पृधा नीलैरलकैश्च लसन्मुखम् ॥")

**सुदन्तः**, पुं, (शोभनो दन्तो यस्य । वयोगम्यमानाभावात् न दत्रादेशः ।) नटः । इति केचित् । शोभनदन्तश्च ॥

**सुदन्ती**, स्त्री, (शोभनो दन्तो यस्याः । ङीप् । वयोगम्यमानाभावात् न दत्रादेशः ।) दिक्करिणीविशेषः । शुभदन्तीशब्ददर्शनादिति केचित् ॥

**सुदर्भा**, स्त्री, (सुष्ठु दर्भो यत्र !) इक्षुदर्भा । इति राजनिर्घण्टः ॥ शोभनकुशयुक्ते, त्रि ॥

**सुदर्शनं**, क्ली, (सुष्ठु दृश्यते इति । सु + दृश् + ल्युट् । शोभनं दर्शनमस्येति वा ।) इन्द्रनगरम् । इति मेदिनी ॥

**सुदर्शनः**, पुं, क्ली, (शोभनं दर्शनमस्येति ।) विष्णुचक्रम् । इत्यमरः । १ । १ । २९ । तस्योत्पत्तिर्यथा, --
"तस्मात् प्रसादं कुरु मे यद्यनुग्रहभागहम् ।
अपनेष्यामि ते तेजः कृत्वा यन्त्रे दिवाकर ॥
रूपं तव करिष्यामि लोकानन्दकरं प्रभो ।
तथेत्युक्तः स रविणा भ्रमौ कृत्वा दिवाकरम् ॥
पृथक् चकार तत्तेजश्चक्रं विष्णोरकल्पयत् ।
त्रिशूलञ्चापि रुद्रस्य वज्रमिन्द्रस्य चाधिकम् ।
तपांस्येव तापसश्च द्वादशैते प्रतिष्ठिताः ॥
चैत्राद्याः फाल्गुनान्ताश्च मासास्तत्र प्रतिष्ठिताः ॥
त्वमेवमादाय विभो वरायुधं
शत्रुं सुराणां जहि मा विशङ्किथाः ।
अमोघ एषोऽमरराजपूजितो
धृतो मया देहगतस्तपोबलात् ॥"
इति वामने ७९ अध्यायः ॥ * ॥
वैष्णवाङ्गे तच्चिह्नधारणविधिः यथा । ब्रह्माण्डे ।
"कृत्वा धातुमयीं मुद्रां तापयित्वा स्वकां तनुम् ।
चक्रादिचिह्नितां भूप धारयेद्वैष्णवो नरः ॥"
नारदीयपञ्चरात्रे ।
"द्वादशारन्तु षट्कोणं वलयत्रयसंयुतम् ।
हरेः सुदर्शनं तप्तं धारयेत्तद्विचक्षणः ॥"
इति श्रीहरिभक्तिविलासे १५ विलासः ॥
अन्यत् मुदाशब्दे द्रष्टव्यम् ॥ * ॥ श्रीमन्दिरोपरि देयतच्चक्रप्रमाणं यथा, --
विम्बार्द्धमानं चक्रन्तु त्रिभागेणाथ कारयेत् ।
द्वात्रिंशदङ्गुलं ज्येष्ठं कनिष्ठं त्वष्टहानितः ॥
प्रतिमातूर्य्यभागेन कारयेद्वा सुदर्शनम् !
लोहजं शैलजं वापि कारयेच्चिह्नपूर्व्वकम् ॥
अष्टारं द्वादशारं वा मध्ये मूर्त्तिसमन्वितम् ।
नारसिंहेन रौद्रेण विश्वरूपेण वा पुनः ॥"
इत्यादि ॥ * ॥
उत्सेधो वृक्षराजस्य दिवमावृत्य तिष्ठति ॥")
वृत्तार्हत्पिता । जिनानां बलदेवः । इति हेमचन्द्रः ॥ (मत्स्यः । तत्पर्य्यायो यथा, --
"मत्स्यो मीनो विसारश्च झषो वैसारिणोऽण्डजः
शकुली पृथुरोमा च स सुदर्शन इत्यपि ।
रोहिताद्यास्तु ये जीवास्तेमत्स्याःपरिकीर्त्तिताः ॥"
इति भावप्रकाशस्य पूर्वखण्डे द्वितीये भागे ॥)

**सुदशनः**, त्रि, सुदृश्यः । सुखेन दृश्यते असौ इति सुपूर्व्वकदृशधातोः कर्म्मण्यनप्रत्ययेन निष्पन्नः । इति मुग्धबोधटीकायां दुर्गादासः ॥ (शोभनं दर्शनं यस्येति वा । यथा, भागवते । ४ । २४ । ५१
"श्यामश्रोण्यधिरोचिष्णुदुकूलस्वर्णमेखलम् ।
समचार्व्वङ्घ्रिजङ्घोरु निम्नजानुसुदर्शनम् ॥"

| | | |
|---|---|---|
| दैत्यदानवसंहर्त्तुः सहस्रकिरणात्मकम् ॥”<br>इति मात्स्ये । ११ । २७-३० ॥ * ॥<br>अपि च पाद्मोत्तरखण्डे १४५ अध्याये । | “अधिवास्य विधानेन चक्रं दण्डं ध्वजं तथा ।<br>देववत् सकलं कृत्वा मण्डपस्नपनादिकम् ॥<br>नेत्रोन्मीलनकं कृत्वा पूर्व्वोक्तं सर्व्वमाचरेत् ।<br>अधिवासयेत विधिना शय्यायां प्राप्य देशिकः ॥<br>ततः सहस्रशीर्षेति सूक्तं चक्रे न्यसेद्बुधः । | |

**सुदर्शनचूर्णं**, क्ली, (सुदर्शनं सुदृश्यं चूर्णं यस्य ।)
ज्वररोगस्य औषधविशेषः । यथा, --
“त्रिफला रजनीयुग्मं कण्टकारीयुगं शटी ।
त्रिकटु ग्रन्थिकं मूर्व्वा गुडुची धन्वयासकः ॥
कटुका पर्पटो मुस्तं त्रायमाणा च वालु-
कम् ।
निम्बं पुष्करमूलञ्च मधुयष्टी च वत्सकः ॥
यवानीन्द्रयवो भार्गो शिग्रुबीजं सुराष्ट्रजा ।
वचा त्वक् पद्मकोशीरश्चन्दनातिविषाबलाः ॥
शालिपर्णी पृश्निपर्णी विडङ्गं तगरं तथा ।
चित्रकं देवकाष्ठञ्च चव्यं पत्रं पटोलजम् ॥
जीवकर्षभकौ चैव लवङ्गं वंशलोचना ।
पुण्डरीकञ्च काकोलिपत्रकं जातिपत्रकम् ॥
तालीशपत्रमेतानि समभागानि चूर्णयेत् ।
अर्द्धांशं सर्व्वचूर्णस्य किरातं प्रक्षिपेत् सुधीः ॥
एतत् सुदर्शनं नाम चूर्णं दोषत्रयापहम् ।
ज्वरांश्च निखिलान् हन्यान्नात्र कार्य्या विचा-
रणा ॥
पृथग्द्वन्द्वागन्तुजांश्च धातुस्थान् विषमज्वरान् ।
सन्निपातोद्भवांश्चापि मानसानपि नाशयेत् ॥
शीतादीनपि दाहादीन् मोहं तन्द्रां भ्रमं तृषाम् ।
कासं श्वासञ्च पाण्डु ञ्च हृद्रोगं कामलापि च ॥
त्रिकपृष्ठकटीजानुपार्श्वशूलञ्च नाशयेत् ।
शीत्यम्बुना पिवेदेतत् सर्व्वज्वरनिवृत्तये ॥
मुदर्शनं यथा चक्रं दानवानां विनाशनम् ।
तद्वज्जराणां सर्व्वेषां चूर्णमेतत् प्रणाशनम् ॥” *
पुष्करमूलाभावे कुष्ठमपि दद्यात् । भार्ग्य भावे
कण्टकारीमूलम् । सौराष्ट्र्यभावे स्फुटिकां दद्यात् । तगरालाभे कुष्ठं देयम् । जीवकर्ष-

**सुदला**, स्त्री, (सुष्ठु दलान्यस्याः ।) शालपर्णी ।
तरुणी । इति राजनिर्घण्टः ॥

**सुदान्तः**, पुं, (सुष्ठु दान्तः ।) शाक्यमुनिशिष्य-
विशेषः । इति त्रिकाण्डशेषः ॥ (अतिशय-
शान्ते, त्रि । यथा, महाभारते । १ । ३८ । १२ ।
“सुदान्तानपि चैवाहं दद्यामष्टादशापरान् ॥”)

**सुदामा**, [न्] पुं, (सुष्ठु ददातीति । दा +
“आतो मनिन्क्वनिपवनिपश्च ।” ३ । २ । ७४
इति मनिन् ।) मेघः । पर्व्वतः । इति मेदिनी ॥
गोपभेदः । समुद्रः । इति शब्दरत्नावली ॥
ऐरावतः । इति त्रिकाण्डशेषः ॥ श्रीकृष्ण-
शरणागत-विप्रविशेषः । यथा, ब्रह्मवैवर्त्ते
श्रीकृष्णजन्मखण्डे ११२ अध्याये ।
“सद्यो जहार दारिद्र्यं सुदाम्नो ब्राह्मणस्य च ।
समागतस्य स्वगृहात् द्वारकां शरणार्थिनः ॥”

**सुदामा**, [न्] त्रि, (सु + दा + मनिन् ।) सुदाता
सुष्ठु ददातीत्यर्थे मन्प्रत्ययेन निष्पन्नः । इति
मुग्धबोधव्याकरणम् ॥

**सुदामा**, स्त्री, नदीविशेषः । यथा, वाल्मीकीये
रामायणे अयोध्याकाण्डे ७० सर्गे ।
“स प्राङ्मुखो राजगृहादभिनिर्याय वीर्य्यवान्
ततः सुदामां द्युतिमान् सन्तीर्य्यावेक्ष्य तां
नदीम् ॥”

अन्त्यार्थः पुण्यशब्दमाह । पुण्यै काभ्यामित्येव
सूत्रयितुमुचितम् । पुण्याहम् । सुदिनाहम् ।
सुदिनशब्दः प्रशस्तवाची । इति सिद्धान्त-
कौमुदी ॥

**सुदीर्घः**, त्रि, (सुष्ठु दीर्घः ।) अतिविस्तारः ।
यथा, --
“विवाह्य श्रोत्रियैर्भुक्तं राज्ञामात्यैस्तथैव च ।
सुदीर्घेणापि कालेन तेषां तत्तु न सिध्यति ॥”
इति व्यवहारतत्त्वम् ॥

**सुदीर्घघर्म्मा**, स्त्री, (सुदीर्घः अतिशयः घर्म्मो
यस्याः ।) असनपर्णी । इति शब्दचन्द्रिका ॥

**सुदीर्घफलिका**, स्त्री, (सुदीर्घं फलं यस्याः । कप् ।
टापि अत इत्वम् ।) वार्त्ताकुविशेषः । इति
रत्नमाला ॥ शिङ्गा वेगुन इति भाषा ॥

**सुदीर्घा**, स्त्री, (सुष्ठु दीर्घा ।) चीनाकर्क्कटी ।
इति राजनिर्घण्टः ॥

**सुदुःखितः**, त्रि, (सुष्ठु दुःखितः ।) अतिशय-
व्यथितः । यथा । ज्योतिस्तत्त्वे भीमपराक्रम-
वचनम् ।
“विष्णुभाद्ये त्रिके चित्रे ज्येष्ठायां ज्वलने यमे ।
एभिर्व्विवाहिता कन्या भवत्येव सुदुःखिता ॥”

**सुदुर्ल्लभः**, त्रि, (सु + दुर् + लभ + खल् ।) अति-
दुष्प्राप्यः । यथा, --
“ब्रह्मत्वादपि देवत्वादिन्द्रत्वादमरादपि ।
अमृतात् सिद्धिलाभाच्च हरिदास्यं सुदुर्ल्लभम् ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ९७
अध्यायः ॥

**सुदुश्चरः**, त्रि, (सु + दुर् + चर + खल् ।) अति-
शयदुःखेनाचरणीयः । यथा, श्रीभागवते ११ ।
२९ । १ ।
“सुदुश्चरामिमां मन्ये योगचर्य्यामनात्मनः ।
यथाञ्जसा पुमान् सिध्येत् तन्मे ब्रूह्यञ्जसाच्युत ॥”

भयोरभावे विदारीकन्दस्य भागद्वयं दद्यात् ।
पुण्डरीकं श्वेतकमलम् । काकोल्यभावे अश्व-
गन्धामूलं दद्यात् । तालीशपत्रकाभावे स्वर्ण-
ताली प्रदीयते इति । अथवा कण्टकारीजटा
देया । इति भावप्रकाशः ॥

**सुदर्शनद्वीपं**, क्ली, (सुदर्शनस्य तन्नाम्ना प्रसिद्धस्य
जम्बूवृक्षस्य द्वीपम् ।) जम्बूद्वीपम् । इति पुरा-
णम् ॥

**सुदर्शना**, स्त्री, (सुखेन दृश्यतेऽसौ । सु + दृश +
माषायां शासियुधीति युच् । टाप् ।) सुदर्शन-
वृक्षः । सुदर्शनगुलञ्च इति पद्मगुलञ्च इति च
ख्यातः । तत्पर्य्यायः । चक्राङ्गा २ वृषकर्णी ३
दध्यानी ४ । इति रत्नमाला ॥ सोमवल्ली ५
मधुपणिका ६ चक्राह्वा ७ । अस्या गुणाः ।
स्वादुत्वम् । उष्णत्वम् । कफशोफास्रवातनाशि-
त्वञ्च । इति भावप्रकाशः ॥ विषनाशित्वम् ।
इति राजवल्लभः ॥ आज्ञा । ओषधिविशेषः ।
इति विश्वमेदिन्यौ ॥

**सुदर्शनी**, स्त्री, (सुष्ठु दर्शनं यस्याः । ङीप् ।)
अमरावती । इति विश्वः ॥

**सुदलः**, पुं, (सुष्ठु दलमस्य ।) क्षीरमोरटा । इति
रत्नमाला ॥

**सुदायः**, पुं, (सुष्ठु दीयते इति । सु + दा + घञ्
युगागमः ।) देययौतकादि । इत्यमरः । २ ।
८ । २८ ॥ यथा । यौतक आदिना उपनयन-
भिक्षाप्रसादादि च यत् देयं तत् दायहरण-
पदवाच्यम् । कन्यादानकाले जामात्रादिभ्यो
व्रतभिक्षादौ ब्राह्मणादिभ्यश्च यद्द्रव्यं दीयते तत्र
दायादिद्वयमित्यर्थः । युतकं योनिसम्बन्धः तत्र
भवमिति ष्णे यीतकम् । युतयोर्व्वधूवरयोरिद-
मिति वा कणि यौतुकम् । यौतुकमुकारमध्य-
मपि । यौतकं यौतुकञ्च तत् । इति वाचस्पतिः
दीयते दायः कर्म्मणि घञ् सुष्ठुदीयते सुदाय
इति पाठ इत्यन्ये । इति भरतः ॥ पितृमातृ-
भर्त्तृकुलसम्बन्धी । यथा, --
"सुदायेभ्यःपितृमातृभर्त्तृ
कुलसम्बन्धिभ्यो लब्धं
सौदायिकम् ।" इति दायतत्त्वम् ॥

**सुदारुः**, पुं, (सुष्ठु दारु यत्र ।) पारिपात्रपर्व्वतः
तत्पर्य्यायः । पारिपात्रिकः २ । इति हेम-
चन्द्रः ॥

**सुदि**, व्य, शुक्लपक्षः । इति पश्चिमदेशे प्रसिद्धः ॥

**सुदिनं**, क्ली, (छसु दिनम् ।) शुभदिवसः । यथा,
ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । ४३ । ४८ । ५१ ।
"सुदिनं दुर्द्दिनं शश्वत् भ्रमत्येव भवे भव ।
सर्व्वेषां प्राकृतानाञ्च द्वे बीजे सुखदुःखयोः ॥
(कार्त्तिकेये, पुं, । यथा, महाभारते । ३ ।
२३१ । ७ ।
"प्रभुर्नेता विशाखश्च नैगमेयः सुदुश्चरः ॥")

**सुदुष्करः**, त्रि, (सु + दुर् + कृ + खल् ।) अत्यन्त-
क्लेशकरः । यथा, श्रीभागवते । ४ । ८ । ६९ ।
"सुदुष्करं कर्म्म कृत्वा लोकपालैरपि प्रभुः ।
एष्यत्यचिरतो राजन् यशो विपुलयंस्तव ॥"

**सुदुस्तरः**, त्रि, (सु + दुर् + स्तृ + खल् ।) अति-
दुःखेन तरणीयः । यथा, श्रीभागवते । १० ।
२ । ३१ ।
"स्वयं समुत्तीर्य्य सुदुस्तरं द्युमन्
भवार्णवं भीममदभ्रसौहृदाः ।
भवत्पदाम्भोरुहनावमत्रते
निधाय याताः सदनुग्रहो भवान् ॥"

**सुदुस्त्यजः**, त्रि, (सु + दुर् + त्यज + खल् ।)
अतिदुःखेन त्याज्यः । यथा, --
"त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं
धर्म्मिष्ठ आर्य्यवचसा यदगादरण्यम् ।
मायामृगं दयितयेप्सितमन्वधाव-
द्वन्दे महापुरुष ते चरणारविन्दम् ॥"
इत्याह्निकतत्वधृतश्रीभागवतवचनम्॥

| | सुदिनं दुर्द्दिनञ्चैव सर्व्वं कर्म्मोद्भवं भव ।<br>तत्कर्म्म तपसा साध्यं कर्म्मणाञ्च<br>शुभाशुभम् ॥”<br>**सुदिनाहं**, क्ली, (सुदिनेषु शुभदिनेषु अहः शुभ-<br>दिनम् । यद्वा, सुदिनं प्रशस्तमहः ।<br>टच्<br>समासे ।) प्रशस्तदिनम् । यथा ।<br>उत्तमैका-<br>भ्याञ्च । आभ्यामह्नादेशो न ।<br>उत्तमशब्दः | |
|---|---|---|

दूरः, त्रि, (सुष्ठु दूरः ।) अतिदूरतरः । तत्-
पर्य्यायः । दवीयान् २ दविष्ठः ३ । इत्यमरः ।
३ । १ । ६९ ॥

**सुदूरपराहतः**, त्रि, (सुदूरे पराहतः निरा-
कृतः ।) अतिदूरनिराकृतः । चिरध्वस्तः ।
यथा । "अननुगमेन तत्तज्जातिघटितलक्षणा-
सम्भवात् लक्षणानुपपत्तिरूपयुक्तेः सुदूरपरा-
हतत्वात् इति भाववर्णनं अनुपादेयमेव ।" इत्य-
वयवग्रन्थगादाधरी ॥

**सुदृक्**, [श्] त्रि, (सुष्ठु दृक् नेत्रं यस्य ।) सुन्दर-
चक्षुर्युक्तः । यथा, श्रीभागवते । १० । ३० । २७ ।
"भीता सुदृक् पिधायास्यं भेजे भीतिविड-
म्बनम् ॥"
"सुदृक् सुनयनं आस्यं पिधाय । सुदृक् वरा-
क्षीति वा । भीतिविडम्बनं भयानुकरणम् ।"
इति श्रीधरस्वामी ॥ शोभनचक्षुषि, क्ली ॥

**सुदृढं**, क्ली, (सुष्ठु दृढम् ।) गाढम । तद्वति,
त्रि । इति शब्दरत्नावली ॥

**सुद्युम्नः**, पुं, वैवस्वतमनुपुत्त्रः । स तु इडराजः ।
यथा, वह्निपुराणे सागरोपाख्याननामाध्याये।
"जलक्रीडागतो यत्र पार्व्वत्या सहितो हरः ।
स्त्रीरूपधारिभिर्व्वालस्ततःस हिमवद्गिरौ ॥
ततोऽविशदिडस्तत्र मृगयाकृष्टचेतनः ।

**सुधर्म्मा**, स्त्री, (शोभनो धर्म्मोऽस्यामिति ।
अनिच् । ततः "डाबुभाभ्यामन्यतरस्याम् ।" ४ ।
१ । १३ । इति पक्षे डाप् ।) देवसभा । इत्य-
मरः । १ । १ । ५१ ॥ (यथा, रघुः । १७ । २७ ।
"स राजककुदव्यग्रपाणिभिः पार्श्ववर्त्तिभिः ।
ययावुदीरितालोकः सुधर्म्मानवमां सभाम् ॥"
"सुधर्म्माया देवसभाया अनवमां अन्यूनाम् ।"
इति तट्टीकायां मल्लिनाथः ॥)

**सुधर्म्मा**, [न्] पुं, (सुष्ठु धर्म्मो यत्र । "धर्मादनिच्
केवलात् ।" ५ । ४ । १२४ । इति अनिच् ।)
देवसभा । कुटुम्बी । इत्युणादिकोषः । २ । १८७ ॥
(देवसभार्थे स्त्रीलिङ्गोऽपि भवति ॥ * ॥ सु + धृ +
"मिथुने मनिः ।" उणा० ४ । १५१ । इति मनिः
क्षत्त्रियः । इत्युज्ज्वलदत्तः ॥ सद्धर्म्मविशिष्टे, त्रि
यथा, हरिवंशे । ११५ । ७५ ।
"सुधर्म्मणे सुधर्म्मां तां कृष्णायाक्लिष्टकारिणे।
देवो देवसभां दत्त्वा वायुरन्तरधीयत ॥")

**सुधर्म्मी**, स्त्री, देवसभा । इत्यमरटीका । १ । १ । ५१

**सुधा**, स्त्री, (सुखेन धीयते पीयते इति । धेट
पाने + "आतश्चोपसर्गे ।" ३ । ३ । १०६ । इत्यङ् ।
टाप् ।) अमृतम् । इत्यमरः । १ । १ । ५१ ॥
(यथा, रामायणे । २ । ६१ । १३ ।

"उल्लसिति लाञ्छनोऽयं ज्योत्स्नावर्षी सुधाकरः
स्फू रति ।
आसक्तकृष्णचरणः शकट इव प्रकटितक्षीरः ॥"

**सुधाङ्गः**, पुं, (सुधामयं अमृतात्मकमङ्गमस्य ।
सुधेव शुक्लमङ्गमस्येति वा ।) चन्द्रः । इति
त्रिकाण्डशेषः ॥

**सुधाजीवी**, [न्] पुं, (सुधा + जीव + णिनिः ।)
सुधया लेपनेन जीवति यः । राज इतिभाषा ।
तत्पर्य्यायः । पलगण्डः २ लेपकः ३ । इति
त्रिकाण्डशेषः ॥

**सुधाधारः**, पुं, (सुधाया आधारः ।) चन्द्रः ।
इति शब्दरत्नावली ॥ अमृतपात्रञ्च ॥

**सुधानिधिः**, पुं, (सुधाया निधिः ।) चन्द्रः । इति
शब्दरत्नावली ॥

**सुधापयः**, [स्] क्ली, सुधेवशुक्लं पयः निर्य्यासः ।
स्नुहीक्षीरम् । इति केचित् ॥

**सुधापाणिः**, पुं, (सुधा पाणो यस्य ।) धन्वन्तरिः ।
इति केचित् ॥

**सुधाभुक्**, [ज्] पुं, (सुधां भुङ्क्ते इति । भुज् +
क्विप् ।) देवः । इति हेमचन्द्रः ॥

**सुधाभृतिः**, पुं, (सुधाया भृतिर्यस्मात् ।) चन्द्रः ।
यज्ञः । इति मुद्राङ्कितमेदिनी ॥ हस्ताक्षर-
मेदिन्यां सुधासूतिरिति पाठः ॥

**सुधामयः**, पुं, (सुधात्मकः इति । सुधा + मयट् ।)
भूपालभवनम् । इति शब्दरत्नावली ॥ अमृता-
त्मके, त्रि । यथा, श्रीजयदेवः ।

वभूव नृपतिः सद्यः सानुयात्रबलान्वितः
॥
इदं स्त्रीलिङ्गमापन्नः प्रतिभ्रमति कानने ।
ततो बुधाश्रमं प्रायादिडारूपाश्रया सती ॥
बुधेनान्तरमासाद्य मैथुनायोपमन्त्रिता ।
सोमपुत्त्राद्बुधाद्राजन् तस्या जज्ञे पुरूरवाः
॥
जनयित्वा पुनः सा तं पुनः सुद्युम्नतां
गता ।
प्रसादात् शङ्करस्यापि बुधेनाराधितस्य च
॥
सुद्युम्नस्य तु दायादः स्रवः
परमधार्म्मिकः ॥”

**सुधन्वा**, [न्] त्रि, (सुष्ठु धनुर्यस्य । धनुषश्चेत्य-

नङ् ।) प्रीडधानुष्कः । इति मेदिनी ॥
(यथा,
वाजसनेयसोहतायाम् । १६ । ३६ ।
“नमस्तीक्ष्णेषवे चायुधिने च नमः
स्वायुधायच
सुधन्वने ॥”)

**सुधन्वा**, [न्] पुं, (सुष्ठु धनुर्यस्य ।) विश्वकर्म्मा ।

इति मेदिना ॥ राजविशेषः । इति पुराणम्
॥
(यथा, हरिवंशे । १२ । १० ।
“सम्भूतस्य च दायादः सुधन्वा रिपुमर्द्दनः
।
सुधन्वनः सुतश्चासीत् त्रिधन्वा नाम
पार्थिवः ॥”
विदुरः । यथा, भागवते । ३ । २१ । ३५
।
“तास्मन् सुधन्वन्नहनि भगवान् यत्
समा-
दिशत् ।
उपादायाश्रमपदं मुनेः शान्तव्रतस्य तत्
॥”)

**सुधन्वाचार्य्यः**, पुं, व्रात्यवंश्यात् सवर्णायां जातो-

जातिविशेषः । यथा, --
“वश्यात्तु जायते व्रात्यात् सुधन्वाचार्य्य
एव च
“न पश्चात्तेऽपि मन्यन्तेसुधामपि सुरोपमाः
॥”
लेपनम् । (यथा, माघे । १२ । ६२ ।
“सेनासुधाक्षालितसौधसम्पदां
पुरां बहूनां परभागमाप सा ॥”)
मूर्व्वी । स्नुंही । (यथा, --
“सेहुण्डः सिंहतुण्डः स्याद्वज्री वज्रद्रुमोऽपि
च
सुधा समन्तदुग्धा च स्नु क्स्त्रियां स्यात्
स्नुही
गुडा ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे
॥)
गङ्गा । इष्टका । इति मेदिनी ॥ विद्युत् । रसः
तोयम् । (यथा, --
“रसायनमिवर्षीणां देवनामामृतं यथा ।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥”
इति सुश्रुते सूत्रस्थाने ४३ अध्यायः ॥)
धात्री । इति नानार्थध्वनिमञ्जरी ॥ हरितकी
मधु । इति शब्दचन्द्रिका ॥ शालपर्णी । इति
राजनिर्घण्टः ॥

**सुधांशुः**, पुं, (सुधायुक्ताः अशवो यस्य ।) चन्द्रः ।

इत्यमरः । १ । ३ । १४ ॥ (यथा,
कथासरि-
त्सागरे । १०१ । १२८ ।
“दीप्रदावानलशिखाः सुधांशोरपि रश्मयः ।
तस्याः सुन्दरसेनोत्कचेतसो वत जज्ञिरे ॥”
कर्पूरः । चन्द्रसंज्ञत्वात् ॥)

**सुधांशुतैलं**, क्ली, (सुधांशोः कर्पूरस्य तैलम् ।)

कर्पूरतैलम् । इति राजनिर्घण्टः ॥

**सुधांशुरत्नं**, क्ली, (सुधांशुप्रिय रत्नम् ।) मोक्ति-

कम् । इति राजनिर्घण्टः ॥

**सुधाकरः**, पुं, (सुधायुक्ताः करा यस्य ।) चन्द्रः ।

इति शब्दरत्नावली ॥ (यथा,
आर्य्यासप्तशत्याम्
११९ ।
“रासोल्लासभरेण
विभ्रमभृतामाभीरवामभ्रवा-
मभ्यर्णे परिरभ्य निर्भरमुरः प्रेमान्धया
राधया
साधु त्वद्वदनं सधामयमिति व्याहृत्य
गीत-
स्तुति-
व्याजादुद्भटचुम्बितः स्मितमनोहारी हरिः
पातु वः ॥”

**सुधामोदकः**, पुं, (सुधेव मोदयतीति । मुद +

णिच् + ण्वुल् ।) यवासशर्करा । इति
राज-
निर्घण्टः ॥

**सुधामोदकजः**, पुं, (सुधामोदात् जायते इति ।

जन + डः ।) तवराजोद्भवखण्डः । इति
राज-
निर्घण्टः ॥

**सुधावर्षी**, [न्] पुं, (सुधां वर्षतीति । वृष +

णिनि ।) ब्रह्मा । इति शब्दरत्नावली ॥
बुद्ध-
भेदः । इति त्रिकाण्डशेषः ॥

**सुधावासः**, पुं, (सुधाया आवासः ।) चन्द्रः । यथा,

“ज्योत्स्नायाः पतये तुभ्यं ज्योतिषां
पतये नमः
नमस्ते रोहिणीकान्त सुधावास
नमोऽस्तुते ॥”
इति तिथ्यादितत्त्वम् ॥
(त्रपुसम् । तत्पर्य्यायो यथा, --
“त्रपुसं कण्टकिफलं सुधावासः
सुशीतलम् ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे
॥)

**सुधावासा**, स्त्री, (सुधाया वासो यत्र ।) त्रपुषी ।

इति राजनिर्घण्टः ॥

**सुधासिन्धुः**, पुं, (सुधायाः सिन्धुः ।) अमृत-

समुद्रः । यथा, --

| | | |
|---|---|---|
| कारुषश्च विजन्मा च भैत्रः सात्वत् एव च ॥"<br>इति मानवे १० अध्यायः ॥<br>**सुधर्म्मः**, पुं, जिनगणाविपविशेषः । इति हेम-चन्द्रः ॥ | | |

"सुधासिन्धोर्म्मध्ये
सुरविटपिवाटीपरिवृते
मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे ।
शिवाकारे मञ्चे परमशिवपर्य्यङ्कनिलयां
भजन्ति त्वा धन्याः कतिचन
चिदानन्दलह-
रीम् ॥"
इत्यानन्दलहरी ॥

**सुधासूतिः**, पु, (सुधायाः सूतिरुत्पत्तिर्यत्र ।)
यज्ञः । चन्द्रः । पद्मम् । इति
शब्दरत्नावली ॥

**सुधास्रवा**, स्त्री, (स्रवतीति । स्रु + अच् । टाप् ।
सुधायाः स्रवा ।) प्रतिजिह्वा ।
अलिजिह्विका ।
इति त्रिकाण्डशेषः ॥ रुदन्तीवृक्षः । इति
राजनिर्घण्टः ॥

**सुधाहरः**, पुं, (सुधां हरतीति । हृ + अच् ।
सुधाया हर इति वा ।) गरुडः । इति
शब्द-
रत्नावली ॥

**सुधाहृत्**, पुं, (सुधां हरतीति । हृ + क्विप् ।)
गरुडः । इति हेमचन्द्रः ॥

**सुधितिः**, पुं, स्त्री, स्वधितिः । इत्यमरटीकायां
रायमुकुटः ॥

**सुधीः**, पुं, (सु शोभना धीर्यस्य ।) पण्डितः ।
इत्यमरः । २ । ७ । ५ ॥

**सुधीः**, स्त्री, (शोभना धीः ।) सुन्दरबुद्धिः ।
सुष्ठुधीः । इति मुग्धबोधव्याकरणम् ॥
शोभना
धीर्यस्य ।) शोभनबुद्धियुक्ते, त्रि ॥ (यथा,
भट्टिः । १२ । ६ ।
"मात्रातिमात्रं शुभयैव बुद्ध्या
चिरं सुधीरभ्यधिकं समाधात् ॥")

**सुधूम्यः**, पुं, स्वादुनामगन्धद्रव्यम् । इति राज-

अस्याधिदेवता भौमो रक्षतीदं वसुन्धरा
।
द्वाराणि विंशतिश्चास्य रक्तचित्रावृतानि
च ॥
रक्तपट्टावृतो गेहः सकलार्थप्रसाधकः ।
अत्र स्थित्वा महीपालः सचिरं पाति
मेदि-
नीम् ॥"
दीर्घः ५१ प्रस्थः ४० । इति सुनन्दः ॥
सुन्दरः
इति च पाठः । इति युक्तिकल्पतरुः ॥

**सुनन्दा**, स्त्री, (सुष्ठु नन्दयति या । नन्द + अच् ।
टाप् ।) उमा । गोरोचना । इति मेदिनी
॥
नारी । इति विश्वः ॥ उमासखीभेदः ।
इति
शब्दमाला ॥ (अजपत्न्या इन्दुमत्याः
सखी
द्वारपालिका । यथा, रघुः । ६ । २० ।
"ततो नृपाणां श्रुतवृत्तवंशा
पुंवत्प्रगल्भा प्रतिहाररक्षी ।
प्राक् सन्निकर्षं मगधेश्वरस्य
नीत्वा कुमारीमवदत् सुनन्दा ॥")
अर्कपत्रीवृक्षः । इति रत्नमाला ॥
इषेरमूल
इति भाषा ॥
(पुरुवंशीयसार्व्वभौमनृपतेः
पत्नी । यथा, महाभारते । १ । ९५ ।
१६ ।
"सार्व्वभौमः खलु जित्वा जहार कैकेयीं
सुनन्दां
नाम तामुपयेमे । तस्यामस्य जज्ञे
जयत्सेनो
नाम ॥" * ॥ दुष्मन्तपुत्त्रभरतस्य पत्नी
। यथा,
तत्रैव । १ । ९५ । ३२ ।
"भरतः खलु काशेयीमुपयेमे सार्व्वसेनीं
सुनन्दां

**सुनामद्वादशी**, स्त्री, (सुनामा द्वादशी । यद्वा,
सुनामप्रिया द्वादशी ।) द्वादशमासीयद्वादश-
कर्त्तव्यव्रतविशेषः । यथा, --
अम्बरीष उवाच ।
"कथं सुनामभिर्द्देवो द्वादश्यां मुनिसत्तम् ।
पूज्यते केशवो मर्त्यैर्भुक्तिकामफलार्थिभिः ॥
वशिष्ठ उवाच ।
शृणुष्वैकमना भूयः सुनामद्वादशीं शुभाम् ।
सर्व्वपापहरां स्वर्ग्यां भुक्तिमुक्तिप्रदायिकाम् ॥
मनसापि चिकीर्षन्ति ये द्वादशीं नरोत्तमाः ।
तेऽपि घोरं न पश्यन्ति पुनः संसारसागरम् ॥
आद्यं सर्व्वव्रतानान्तु वैष्णवानां नृपोत्तम ।
नरैः स्त्रीभिश्च कर्त्तव्यं विष्णोस्तुष्टिकरं परम् ॥
*
मार्गशीर्षे शुभे मासि शुक्लपक्षे यतव्रतः ।
प्रथमं चैव गृह्णोयात् द्वादशों विधिवन्नरः ॥
मनोवाक्कायचेष्टाभिः स विशुद्धो जितेन्द्रियः ।
दशम्यां नियतः स्नात्वा प्रणिपत्य जनार्द्दनम् ॥
हविष्यान्नकृताहारः शुचिर्भूत्वा भवेद्व्रती ।
उपलिप्ते शुचौ देशे भक्षयेत् दन्तधावनम् ॥
उपोष्यैकादशीं सम्यक् पूजयित्वा जनार्द्दनम् ।
सुनामद्वादशीं देव अहं भोक्ष्ये परेऽहनि ॥
एवं सङ्कल्प्य नियमं प्रणम्य गरुडध्वजम् ।
दशम्यामेकभक्ताशी संयतः संवसेन्निशाम् ॥
एकादश्यां ततः कुर्य्यादिकचित्तः समाहितः ।
पूर्व्वं प्रपूजयेत् सूर्य्यं ततोदेवं प्रपूजयेत् ॥
नमस्ते देवदेवेश नमस्ते भक्तवत्सल ।
भास्कराय नमस्तुभ्यं रवये कार्य्यभानवे ॥
नमः सूर्य्याय देवाय नमस्ते सप्तसप्तये ।
एकस्मै हि नमस्तुभ्यमेकचक्ररथाय च ॥
ज्योतिषां पतये नित्यं सव्वतेजोहराय च ।
दिवाकर नमस्तेऽस्तु प्रभाकर नमोऽस्तु ते ॥
एवं संपूज्य विधिवत् पुष्पधूपानुलेपनैः ।
दीपैर्व्वस्त्रैः सुनैवेद्यैस्ततो विष्णुगृहं व्रजेत् ॥
ततोऽनु स्नापयेद्देवं दधिक्षीरघृतादिभिः ।
सर्व्वौषधिजलैः पुण्यैस्तथा चन्दनवारिभिः ॥
कुङ्कमोशीरकपूरैश्चन्दनेन विलेपयेत् ।
अच्युतं चार्च्चयेद्भक्त्या मालतीकुसुमैर्भृशम् ॥
गुग्गुलुं घृतसंयुक्तं धूपं दद्यादहर्निशम् ।

निर्घण्टः ॥

**सुधोद्भवः**, पुं, (सुधया सह उद्भवो यस्य ।)

धन्वन्तरिः । इति त्रिकाण्डशेषः ॥

**सुधोद्भवा**, स्त्री, (सुधाया उद्भवो यस्याः ।)

हरीतकी । इति त्रिकाण्डशेषः ॥
(हरीतकी-
शब्देऽस्य विवरणं ज्ञेयम् ॥)

**सुनन्दं**, क्ली, (सुष्ठु नन्दयतीति । नन्द + अच् ।)

बलभद्रस्य मुषलम् । इति शब्दमाला ॥
(कुजृम्भ-
दैत्यस्य मुषलम् । यथा, मार्कण्डेये ।
११६ । १८
"सुनन्दं नाम मुषलं त्वष्ट्रा यन्निर्म्मितं पुरा
।
तज्जहार स दुष्टात्मा तेन हन्ति रणे
रिपून् ॥)
सुन्दरानन्दजनके, त्रि ॥

**सुनन्दः**, पुं, (सुष्ठु नन्दयतीति । नन्द + अच् ।)

श्रीकृष्णस्य पार्षदविशेषः । यथा,
श्रीभागवते
१० । ८९ । ५६ ।
"सुनन्दनन्दप्रमुखैः स्वपार्षदैः
चक्रादिभिर्मूर्त्तिधरैर्निजायुधैः ।
पुष्ट्या श्रिया कीर्त्त्यजयाखिलर्द्धिभि-
र्निषेव्यमाणं परमेष्ठिनां पतिम् ॥"
द्वादशविध-राजगृहान्तर्गतगृहविशेषः ।
यथा,
"यद्यत्रवोच्यते मानं तस्य तेनैव कल्पना
।
राज्ञः स्वहस्तमेकन्तु दीर्घे सर्व्वत्र
निःक्षिपेत् ॥
आयामेन सुनन्दः स्याद्राजहस्तैश्च
पञ्चभिः ।
परिणाहे चतुर्भिश्च राजहस्तैः प्रतिष्ठितः
॥

नाम । तस्यामस्य जज्ञे भुमन्युः ॥" *
॥ चेदि-
राजकन्या । यथा, तत्रैव । ३ । ६५ ।
५० ।
"एवमुक्त्या ततो भैमीं राजमाता
विशांपते ।
उवाचेदं दुहितरं सुनन्दां नाम भारत
॥")

**सुनयनः**, पुं, (शोभने नयने यस्य ।) मृगः । इति

शब्दचन्द्रिका ॥ शोभनचक्षुर्युक्ते, त्रि ॥
(यथा,
रघुः । ९ । ५२ ।
"ददृशुरध्वनि तं वनदेवताः
सुनयनं नयनन्दितकोशलम् ॥")

**सुनयना**, स्त्री, (सु शोभने नयने यस्याः ।) नारी ।

इति राजनिर्घण्टः ॥

**सुनाकृतः**, पुं, कर्पूरकः । इति शब्दचन्द्रिका ।

**सुनाभः**, पुं, (सुष्ठु नाभिरस्य । अच् समासे ।)

मैनाकपर्व्वतः । इति त्रिकाण्डशेषः ॥
(यथा,
महाभारते । ३ । १० । ३० ।
"इन्द्रकीलः सुनाभश्च तथा दिव्यौ च
पर्व्वतौ ॥"
धृतराष्ट्रपुत्त्रविशेषः । यथा, तत्रैव । १ ।
११७ । ५ ।
"उर्णनाभः सुनाभश्च
तथानन्दोपनन्दकौ ॥"
सुष्ठु नाभिश्चक्रमध्यमस्येति ।
सुदर्शनचक्रे, क्ली
यथा, भागवते । ३ । ३ । ६ ।
"सुतं मृधे खं वपुषा ग्रसन्त
दृष्ट्वा सुनाभोन्मथितं धरित्र्या ।
आमन्त्रितस्तत्तनयाय शेषं
दत्त्वा तदन्तःपुरमाविवेश ॥"
वाच्यलिङ्गेऽपि दृश्यते । यथा,
महाभारते ।
३ । ३ । ४८ ।
"तत्तेजसा कृतं चक्रं सुनाभं
विश्वकर्म्मणा ।

पायसापूपसंयावकरम्भाज्यकदम्बकैः ॥
नैवेद्यं हरये दद्यात् फलमोदकंयान्वितैः ।
गीतवाद्यैर्हरेर्ह्योष प्रणमेच्च मुहुर्मुहुः ॥
एवं पूजां हरेः कृत्वा द्विजं ज्ञानप्रदायकम् ।
पूजयेदन्तरं नास्ति विप्रकेशवयोरपि ॥
ततोऽव्रणं समालभ्य चन्दनेन नवं घटम् ।
स्रग्विणं तोयसम्पूर्णं न्यसेद्देवस्य सन्निधौ ॥
सहेममौक्तिकाक्षन्तु वज्ररत्नसुवर्णकम् ।
न्यस्य गर्भे सवस्त्रन्तु पूजयेत्तत्र केशवम् ॥
यस्य रोम्नि स्थिता मेघाः सर्व्वसन्धिषु पन्नगाः
॥
सागराः कुक्षिदेशस्थाः सोऽत्रायातु जगत्पति ।
वनस्पतिरसो दिव्यः सर्व्वगन्धेषु चोत्तमः ।
घृतेन सहसोन्मिश्रो धूपोऽयं प्रतिगृह्यताम् ॥
केशवः केशिहा केशिकंसारिष्टनिसूदनः ।

सर्व्वकामप्रदो देवः स मे पापं व्यपोहतु ॥
एवमभ्यर्च्च्य देवेशं प्रणिपत्य क्षमापयेत् ।
द्वादश्यां तत्र तोयेन स्नापयेत्तेन मानवः ॥
सर्व्वपापविनिर्मुक्तो वैष्णवीं लभते तनुम् ।
कृताभिषेकः पुण्यात्मा सम्यगभ्यर्च्च्य केशवम् ॥
नवनीतकृतां धेनुं व्राह्मणायोपपादयेत् ।
कशवः प्रीयतां देवः केशिहन्ता महाच्युतः ।
स मे भवेत्तु सुप्रीतः इष्टान् कामान् प्रयच्छतु ।
एवं प्रदक्षिणं कृत्वा शृणु तस्यापि यत् फलम् ॥
त्रिंशदब्दकृत्त पापं हित्वा स त्रिविधं नरः ।
षष्टिं वर्षसहस्राणि स्वर्गे मोदति देववत् ॥
यदा कालादिहायाति सधर्म्मो धनवान् भवेत्
अभावादथ धेनूनां तत् पात्रं कल्पयेत्ततः ॥
तत्फलं हि विनिर्द्दिष्टं यथाशक्त्या तु दक्षिणा ।
भक्त्या फलं समाप्नोति भक्तिरेवात्र कारणम् ॥ *
पौषस्यैव तु मासस्य योऽप्येवं क्षपयेन्नरः ।
समाहितमना भूप रसधेनुप्रदायकः ॥
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं वर्त्मनी तस्मात् नारायण इति स्मृतः ॥
नारायणः प्रीयतां मे देवो नरप्रियः सदा ।
स्नापयित्वामृतेनैव पञ्चानां गन्धसंयुतैः ॥
अद्भिः पश्चात् प्रपूज्यैवं गन्धधूपविलेपनैः ।
पुष्पैर्व्वासोभिरेवं हि मन्त्रेणानेन बुद्धिमान् ॥
प्रवेशने यथाशीलो जगतां रक्षणाय च ।
दुर्वृत्तानां विनिर्जेतुमसि विष्णुरतो हरे ॥
विष्णुर्भवतु मे प्रीतो विष्णुर्देवः सनातनः ।
सर्व्वपापविनाशाय विणुर्मे प्रीयतामिति ॥
मधुधेनुमभावाच्च शक्तितः पात्रमेव च ।
दत्त्वा यत् फलमाप्नोति तदिहैकमनाः शृणु ॥
पूर्व्वजम्मनि यत् पापमिह जन्मनि साम्प्रतम् ।
वर्त्तते सकलं हत्वा स्वर्गलोके महीयते ॥ * ॥
वैशाखस्य तु मासस्य पूजयेन्मधुसूदनम् ।
पूर्व्वोक्तविधिना राजन् सौवर्णं मधुसूदनम् ॥
जलकुम्भे तु संस्थाप्य मन्त्रेणानेन पूजयेत् ।
एकार्णवे जले धातुर्हृता वेदाः पुरा हरे ॥
मधुना ते हतः सोऽपि तेनासि मधुसूदनः ।
स मे भवतु सुप्रीतो देवदेवः सनातनः ॥
सर्व्वपापविनाशाय प्रीयतां मधुसूदनः ।
घृतधेनुमथो दत्त्वा व्राह्मणान् भोजयेत्ततः ॥
ततः प्रदक्षिणं कुर्य्यात् दत्त्वा देयान् यथोपगान्
एवन्तु क्षपमाणस्य तस्य पुण्यफलं शृणु ॥
कपिलानां सहस्रस्य सम्यग्दत्तस्य पुष्करे ।
सकलं लभते मर्त्यो भक्तियुक्तो न संशयः ।
स्वर्गेषु विपुलान् भोगान् भुनक्ति सुरराडिव ॥ * ॥
तेनैव विधिना राजन् मासे भाद्रपदे ततः ।
समुपोष्य ततो भक्त्या हृषीकेशं प्रपूजयेत् ॥
मुक्ताधेनुमथो दद्यात् यथाविभवविस्तरात् ।
हृशीकाणीन्द्रियाण्याहुस्तेषामीशो जगत्पतिः ॥
करोति कर्त्तृभूतोऽसौ हृषीकेशो भतानतः ।
देवदेवं हृषीकेशं भूतेषु प्रभवाव्ययम् ॥
प्रीणयामि सुसंप्रीतो मम पापं व्यपोहतु ।
एवं प्रदक्षिणं कृत्वा विष्णुलोके महीयते ॥ * ॥
द्वादश्यां समुपोष्यैव पद्मनाभं तथाश्विने !
पूजयेद्विधिवद्भक्त्या गन्धधूपविलेपनैः ।
गन्धधेनुं ततो दद्यात् कर्पूरागुरुचन्दनैः ।
कुङ्कुमेन हि राजेन्द्र वित्तशाठ्यं विवर्ज्जयेत् ॥
एकार्णवगते तोये स्वपतो यस्य वेधसः ।
निवासाय भवन्नाभ्यां पद्मनाभोऽसि इत्युत ॥
प्रीयतां पद्मनाभो मे दुस्कृतं चोपशाम्यतु ।
इत्युक्त्वा तं समभ्यर्च्च्य दद्यात् धेनुं द्विजायते ॥
इत्येवं क्षपमाणस्य तस्य पुण्यमतः शृणु ।
सप्तजन्मकृतं पापं स्वल्पं वा यदि वा बहु ।
दग्ध्वा तत् सकलं भूप विष्णुलोकं स गच्छति ॥ * ॥
कार्त्तिकस्य तु मासस्य एकादश्यामुपोषितः ।
प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः ॥
नृत्यैर्गीतैस्तथा वाद्यैरृग्यजुःसाममङ्गलैः ।
बीणापणवशब्दैश्च पुराणश्रवणेन च ॥
वासुदेवकथाभिश्च स्तोत्रैरन्यैश्च वाहवैः ।
सुभाषितैरिन्द्रजालैर्भूमिशोभाभिरेव च ॥
पुष्पैर्धूपैश्च नैवेद्यैर्दीपवृक्षैश्च शोभनैः ।
होमैर्भक्ष्यैरपूपैश्च फलैः शाकैश्च पायसैः ।
इक्षोर्विकारैर्मधुना द्राक्षाखोडैः सदाडिमैः ।
कुठेरकस्य मञ्जर्य्या सर्ज्जिकालवणेन च ॥
हृद्याभ्यां श्वेतरक्ताभ्यां चन्दनाभ्याञ्च सर्व्वदा ।
कुङ्कु मालक्तकाभ्याञ्च रक्तसूत्रैः सकङ्कणैः ॥
तथा नानाविधैः पुष्पैर्द्रव्यैर्वीचिक्रियाघनैः ।
तस्याम् रात्र्यां व्यतीतायां द्वादश्यामरुणोदये ।
स्नात्वा नदीजलैः पुण्यैः प्रतिमां स्नापयेत्ततः ॥

इष्टकामप्रदो नित्यं स मे पापं व्यपोहतु ॥
ततः प्रदक्षिणं कृत्वा ब्राह्मणान् भोजयेत्ततः ।
एवं हि पौषमासस्य तस्य पुण्यफलं शृणु ॥
षष्ट्या वाब्दैः कृतं पापं स्वल्पं वा यदि वा बहु
हत्वा स्वर्गं समाप्नोति वर्षाणामयुतायुतम् ॥ * ॥
माघस्यैव तु मासस्य द्वादशीं शुक्लपक्षतः ।
यः क्षिपेद्धि शुचिर्भूत्वा एकचित्तः समाहितः ॥
स्नापने पूजने नित्यं ब्राह्मणानाञ्च तर्पणे ।
प्रदाने नृपशार्द्दूल इमं मन्त्रमुदीरयेत् ॥
मा लक्ष्मीश्च पुरात्रेयी भगिनी शशिनोऽनुजा ।
भर्त्ता त्वमपि तस्याश्च सर्व्वकामद माधव ॥
प्रीयतां माधवो देवो मधुकैटभसूदनः ।
वासुदेवो जगन्नाथो मम पापं व्यपोहतु ॥
एवं यः कुरुते सद्यस्तस्य पुण्यफलं शृणु ।
यावज्जन्मकृतं पापं हत्वा सर्व्वमशेषतः ॥
दिव्यवर्षसहस्राणि स्वर्गे वसति षोडश ।
गुडधेनुप्रदो माघे इहायातः सदा सुखी ॥
भवेद्राजन् निरातङ्कः पुत्रैश्वर्य्यसमन्वितः ।
तत्र विष्णुपरो भूत्वा क्रमान्मोक्षमवाप्नुयात् ॥ * ॥
फाल्गुनामलपक्षस्य द्वादश्यां नियतः शुचिः ।
पूजयित्वा विधानेन देवदेवं स्वशक्तितः ॥
मन्त्रेणानेन राजेन्द्र गोविन्दः प्रोयतामिति ।
तत्फलं समवाप्नोति भक्तियुक्तोऽप्यसंशयः ।
यावदिन्द्रो वसेत् स्वर्गे तावदेव स तिष्ठति ॥ * ॥
ज्यैष्ठस्यैव तु मासस्य श्रुक्लपक्षे तु द्वादशीम् ।
पूजयेद्विधिवद्भक्त्या समुपोष्य त्रिविंक्रमम् ॥
जलधेनुमथो दद्याद्विप्राय नियतः शुचिः ।
यज्ञभागभुजो दैत्यान् सन्निहत्य क्रमैस्त्रिभिः ॥
त्रैलोक्यमाहृतं तस्मात् तेनासि त्वं त्रिविक्रमः
त्रिविक्रमं त्रिलोकेशं प्रीणयामि त्रिविक्रमम् ॥
ततः प्रदक्षिणं कृत्वा ब्राह्मणेभ्यश्च दक्षिणाम् ।
वत्त्वा तु भोजयेत्तांस्तु शृणु तस्यापि यत् फलम्
वाजपेयस्य यज्ञस्य सम्यगिष्टस्य पार्थिव ।
तत्फलं लभते मर्त्त्यः परत्रेह सुखी भवेत् ॥ * ॥
वामनस्तु तथाषाढे समुपोष्य प्रयत्नतः ।
द्वादशीनियताहारो वामनं तत्र पूजयेत् ॥
हिताय सर्व्वदेवानां आदित्यः कामदो यथा ।
तथा त्वं भव मे देव वामनो वलिबन्धनः ॥
तिलधेनुं ततो दद्यात् वामनः प्रीयतामिति ।
तदभावात्तथा पात्रं यथाशक्त्या च दक्षिणाम् ॥
पूर्व्वजन्मकृतं पापमिहजन्मकृतञ्च यत् ।
तत् सर्व्वं विनिहत्याशु परत्र च शुभां गतिम् ॥ * ॥
श्रावणस्य तु मासस्य द्वादश्यां शुक्लपक्षतः ।
उत्थितां त्वपरै रम्यां ताम्रां रौप्यां सुवर्णजाम् ।
वैष्णवी प्रतिमा यत्र चित्रे सुप्ता क्वचित् भवेत् ।
तत्र स्नानादिपूजा च वेद्यां कार्य्या च विष्णवे ॥
आदौ घृतेन तैलेन मधुना तदनन्तरम् ।
दध्ना क्षीरेण च ततः पञ्चगव्येन शास्त्रवित् ॥
उद्वर्त्तनं माषचूर्णं मसूरामलकानि च ।
रौध्रं कालीयकञ्चैव नागरं वर्णकं तथा ॥
सर्षपाश्च प्रियङ्गुश्च मातुलुङ्गरसैस्तथा ।
सर्व्वौषध्यः सर्व्वगन्धाः सर्व्वबीजानि काञ्चनम् ॥
माङ्गल्यानि यथालाभं रत्नानि च कुशोदकम् ।
हस्तिदन्तोद्धृता मृच्च वृषशृङ्गोद्धृता तथा ॥
नदीतोराद्गवां स्थानात् वल्मीकात् सङ्गमात् ह्रदात् ।
द्वन्द्वस्थानाच्च सरसस्तथा पर्व्वतमस्तकात् ॥
एताभिः स्नाप्य देवेश दद्यात् गोरोचनां शुभाम्
ततस्तु कलसा देया यथाप्राप्तं स्वलङ्कृताः ॥

| | | |
|---|---|---|
| गवा भक्तोऽसि गोस्वामो गोवासो गोकृतालयः<br>सर्व्वकामप्रदो नित्यं स मे पापं व्यपोहतु ।<br>स्तुत्ववं शर्कराधेनुं भक्त्या दद्यात् द्विजातये ॥<br>ततः प्रदक्षिणं कृत्वा शृणु पुण्यं यथातथम् ।<br>वलोवर्द्दसहस्राणां दशानां धूर्विवाहिनाम् ॥<br>न तंस्तत् फंलमाप्नोति द्वादश्या यद्भवेन्नृप ।<br>दिव्यवषसहस्राणि स्वर्गे तिष्ठति स्वर्गिवत् ॥ * ॥<br>चैत्रस्य द्वादशीं शुक्लां समुपोष्य नृपोत्तम ।<br>स्नात्वा प्रपूजयेद्विष्णुं जगतोऽन्तरचारिणम् ॥<br>पूर्व्वाक्तविधिवत् स्नात्वा गोमूत्रैर्गोमयेन च । | यः क्षिपेन्नियतो भूत्वा समुपोष्य जनार्द्दनम् ॥<br>समर्च्चयेत् यथाशक्त्या पूर्व्वोक्तविधिना ततः ।<br>धेनुं सर्व्वगुणोपेतां ब्राह्मणाय निवेदयेत् ॥<br>मन्त्रेणानेन राजेन्द्र पौराणविहितेन च ।<br>समादाय ततो लक्ष्मीं लोकेभ्यः क्षीरसागरे ।<br>स्वपिषि श्रावणे मासि श्रीधरोऽसि जगत्पते ! ॥<br>श्रावणे श्रीधरो देवः श्रीवत्सः श्रोनिकेतनः ।<br>प्रीयतां हि श्रियः कान्तो गतिमिष्टां ददातु मे<br>गवां दशसहस्रेण पात्रदत्तेन यत् फलम् । | |

जातीपल्लवसंयुक्ताः सफलाश्च सकाञ्चनाः ।
पुण्याहवेदशब्देन वीणावेणुरवेण च ॥
शब्देन मधुरेणैव सूतमागधवन्दिनाम् ।
एवं संस्थाप्य गोविन्दं स्वनुलिप्तं स्वलङ्कृतम् ॥
सुवासं पूजयेत्तन्तु सुमनोभिश्च कुङ्कुमैः ।
दीपैर्धूपैर्मनोज्ञैश्च पायसेन तु भूरिणा ॥
नानारत्नप्रदानैश्च होमैः पुण्यैः सदक्षिणैः ।
वासोभिर्भूषणैर्हृद्यैर्गीभिरश्वैर्गजैरपि ॥
ब्राह्मणाः पूजनीयाश्च विष्णोराद्याः सुमूर्त्तयः ।
विष्णो रात्रौ प्रसुप्तस्य दामोदरगतं यतः ॥
ब्रह्माण्डस्य च तेनासि दामोदर इति स्मृतः ।
दामोदर इमां धेनुं गृह्णातु स्वयमेव हि ॥
द्विजरूपेण ते विष्णो प्रकृत्येषा सनातनी ।
इत्येवं पृथिवीदानात् फलं प्राप्नोति मानवः ॥
सुवर्णस्य महाधेनुं दत्त्वा नृपवरोत्तमः ।
हत्वा पापान्यशेषाणि शतजन्मान्तराणि वै ॥
वैष्णवं लोकमाप्नोति यावदिन्द्राश्चतुर्द्दश ।
सम्यगत्र व्रते चीर्णे सप्तजन्मानुगं फलम् ॥
ददाति भगवान् विष्णुः कामान् मोक्षं नरेश्वर ।
ब्राह्मणान् भोजयेद्भक्त्या भक्षैरुच्चावचैरपि ॥
ततः प्रदक्षिणं कृत्वा यथाशक्त्या च दक्षिणाम् ।
कलसान् द्वादशैवैवं ब्राह्मणेभ्यः प्रदापयेत् ॥
वस्त्रेणावेष्टितग्रीवान् हेमगर्भोपशोभितान् ।
दधिक्षीरयुतांश्चै व सगुडान् नृप भूरिशः ।
शक्तिर्यथा तथा दद्यात् भक्तिरेवात्र कारणम् ॥
प्रसङ्गेनापि यो राजन् सुनामद्वादशीं नरः ।
करोति पुण्यभागी स यथा दैत्योद्भवो बलिः ॥
एवं यः कुरुते राजन् सुनामद्वादशीं नरः ।
राजसूयस्य यज्ञस्य फलं समधिकं भवेत् ॥
नासिका ।) शोभननासा । तद्युक्ते, त्रि ॥ (यथा, भागवते । ४ । २४ । ४६ ।
"पद्मकोषपलाशाक्षं सुन्दरभ्रु सुनासिकम् ॥")

**सुनासीरः**, पुं, (सुष्ठु नासीरं अग्रगामिसैन्यं यस्य ।) इन्द्रः । इत्यमरः । १ । १ । ४४ ॥ (देवः ।
यथा, भागवते । ४ । ७ । ७ ।
"ततो मीढ्वांसमामन्त्र्य सुनासीराः सहर्षिभिः ।
भूयस्तद्देवयजनं समीढ्वद्वे धसो ययुः ॥")
सुनाशीरश्च ॥

**सुनिर्य्यासा**, स्त्रीं, (शोभनो निर्य्यासो यस्याः ।) जिङ्गिनीवृक्षः । इति भावप्रकाशः ॥

**सुनिश्चितः**, पुं, (सुष्ठु निश्चितं निश्चयो यस्य ।) बुद्धविशेषः । इति त्रिकाण्डशेषः ॥

**सुनिश्चितः**, त्रि, (सुष्ठु निश्चितः ।) सुन्दरनिश्चय-विषयीभूतः । इति हलायुधः ॥

**सुनिषण्णं**, क्ली, (सुष्ठु निषण्णं निद्रा यस्मात् ।) सुनिषण्णकशाकम् । इति त्रिकाण्डशेषः ॥
(यथा, सुश्रुते । ६ । ४५ ।
"पटोलशेलूसुनिषण्णयूथिका
वटातिमुक्ताङ्कु रमिन्द्रवारजम् ।
हितञ्च शाकं घृतसंस्कृतं सदा
तथैव धात्रीफलदाडिमान्वितम् ॥"
क्वचित् पुंलिङ्गेऽपि दृश्यते । यथा, --
सुनिषण्णो हिमो ग्राहो मोहदोषत्रयापहः ।
अविदाही लघुः स्वादुः कषायो रूक्षदीपनः ।
वृष्यो रुच्यो ज्वरश्वासमेहकुष्ठभ्रमप्रणुत् ॥"
णादिवृत्तिः ॥ (चन्द्रवंशीयालर्कराजपौत्रः । यथा, भागवते । ९ । १७ । ८ ।
"अलर्कात् सन्ततिस्तस्मात् मुनीथोऽथ निके-
तनः ॥")

**सुनीलं**, क्ली, सुष्ठु नीलम् ।) लामज्जकम् । इति राजनिर्घण्टः ॥

**सुनीलः**, पुं, (अतिशयो नीलः ।) दाडिमः । इति राजनिर्घण्टः ॥ सुन्दरनीलवणश्च ॥

**सुनीलकः**, पुं, (सुनील एव । स्वार्थे कन् ।) नील-भृङ्गराजः । नीलासनः । नीलरत्नम् । इति राजनिर्घण्टः ॥

**सुनीला**, स्त्री, (अतिशयनीला) अतसी । विष्णुक्रान्ता । जरतीतृणम् । इति राजनिर्घण्टः ॥

**सुनु**, [नौ] क्ली, जलम् । शोभना नौर्यत्र तत् सुनु जलम् । इति मुग्धबोधटीकायां दुर्गादासः ॥

**सुनौः**, त्रि, शोभननौकाविशिष्टः । शोभना नौर्यत्र यस्य वा इति बहुव्रीहिसमासनिष्पन्नः । शोभन-
नौकायाम्, स्त्री ॥

**सुन्दः**, पु, वानरविशेषः । यथा, --
"जाम्बुवान् ऋषभः सुन्दो वम्भः शतवलिः पृथुः ।
व्यूढानीकाश्च यत्ताश्च द्रुमानादाय सर्व्वतः ॥"
इति वाल्मीकीये रामायणे युद्धकाण्डे ४७ सर्गः ॥
राक्षसविशेषः । यथा, --
"अथ कालोपमौ युद्धे सुतौ सुन्दोपसुन्दयोः ।
यज्ञविघ्नकरौ तौ ते नैव दास्यामि पुत्रकम् ॥"
इति रामायणे बालकाण्डे २० सर्गः ॥
(संह्रादपुत्रः । यथा, हरिवंशे । ३ । ७२ ।

सर्व्वदानेषु यत् पुण्यं यच्च पुण्यं तपोवने ।
सर्व्वतीर्थेषु यत् पुण्यं तत् पुण्यं समुदाहृतम् ॥
गावो द्वादश दातव्या वस्त्रयुग्मानि काञ्चनम् ।
अलाभे चैव गामेकां पात्रं वा स्वर्णसंयुतम् ॥
मासे मासेऽथवाप्येवं चञ्चलं जीवितं यतः ।
बहुविघ्ना हि धर्म्मस्य कर्त्तुश्छिद्रं न जायते ॥
एतज्ज्ञात्वा सुमेधावी न तत्र ग्लपयेन्मनः ।
न तस्य वित्तलाभोऽस्ति भक्तिग्राह्यो हि केशवः ॥
अनेन विधिना यस्तु द्वादशीं प्रतिवत्सरम् ।
कृत्वा नरः परं याति विष्णुलोकमनामयम् ॥
सुनामद्वादशी चैव व्रतानामुत्तमा नृप ।
आद्या नरैस्तु कर्त्तव्या तोषयद्भिर्जनार्द्दनम् ॥
यश्चैनां कीर्त्तयेत् पुण्यां शृणुयात् द्वादशीं नरः ॥
तावुभौ गच्छतः स्वर्गं कर्त्ता विष्णुपुरं व्रजेत् ॥”
इति वह्निपुराणे सुनामद्वादशीनामाध्यायः ॥

**सुनारः**, पुं, (सुष्ठु नालमस्य । लस्य रः ।)
शुनीस्तन्यम् । सर्पाण्डः । कलविङ्कः । इति मेदिन्मे ॥

**सुनालकः**, पुं, (सुष्ठु नालमस्य । कप् ।) वक-
पुष्पवृक्षः । इति शब्दचन्द्रिका ॥
सुन्दरनाल-
युक्ते, त्रि ॥

**सुनासिका**, स्त्री, (सुष्ठु नासिका यस्याः ।)
काकनासा । इति राजनिर्घण्टः ॥ (शोभना

इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**सुनिषण्णकं**, क्ली, पुं, (सुनिषण्णमेव । स्वार्थे कन् ।)
शाकविशेषः । सुषुणी इतिभाषा ।
तत्पर्य्यायः ।
वितुन्नम् २ । इत्यमरः । २ । ४ । १४९ ॥ सुनि-
षणम् ३ चुचूः ४ । इति त्रिकाण्डशेषः ॥ (यथा,
“शितिवारः शितिवरः स्वस्तिकः सुनिषण्णकः ।
श्रीवारकः सूचिपत्रः पर्णकः कुक्कुटः शिखी ॥
चाङ्गेरीसदृशं पत्रं चतुर्द्दल इतीरितः ।
शाको जलान्विते देशे चतुःपत्रीति चोच्यते ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
अस्य गुणाः । यथा, --
“अविदाही त्रिदोषघ्नः संग्राही सुनिषण्णकः ।”
इति राजवल्लभः ॥
अन्यत् सितावरशब्दे द्रष्टव्यम् ॥

**सुनिष्टप्तः**, त्रि, अत्यत्तप्तः । सुपूर्व्वनिर्पूर्व्वतप-
धातोः क्तप्रत्ययेन निष्पन्नः ॥

**सुनीतिः**, स्त्री, (शोभना नीतिः ।) शोभनतनयः ।
ध्रुवमाता । इति मेदिनी ॥ सा तुउत्तानपादस्य
राज्ञोऽप्रेयसी पत्नी । यथा, भागवते । ४ । ८ । ८ ।
“जाये उत्तानपादस्य सुनीतिः सुरुचिस्तयोः ।
सुरुचिः प्रेयसी पत्युर्नेतरा यत्सुतो ध्रुवः ॥”)
शोभननीतिविशिष्टे, त्रि ॥

**सुनीथः**, त्रि, (सुष्ठु नयति धर्म्ममिति । सु + नी
+ “हनिकुषिनीरमिकाशिभ्यः कथन् ।” उणा०

“संह्लादपुत्रौ सुन्दश्च निसुन्दश्चैव तावुभौ ॥”
विष्णुः । इति महाभारतम् । १३ । १४९ । ९८ ॥)

**सुन्दरं**, त्रि, (सुष्ठ उनत्ति आर्द्रीकरोति चित्त-
मिति । सु + उन्द क्लेदने + अरः । शकन्ध्वा-
दित्वात् साधुः ।) मनोहरम् । तत्पर्य्यायः ॥
रुचिरम् २ चारु ३ सुषमम् ४ साधु ५ शोभ-
नम् ६ कान्तम् ७ मनोरमम् ८ रुच्यम् ९
मनोज्ञम् १० मञ्जु ११ मञ्जुलम् १२ । इत्य-
मरः । ३ । १ । ५१ ॥ मनोहारि १३ सौम्यम्
१४ भद्रकम् १५ रमणीयम् १६ रामणीयकम्
१७ । इति तट्टीका ॥ बन्धूरम् १८ बन्धुरम् १९
पेशलम् २० पेसलम् २१ वामम् २२ रामम् २३
अभिरामम् २४ नन्दितम् २५ सुमनम् २६ ॥
इति शब्दरत्नावली ॥ वल्गु २७ हारि २८
स्वरूपम् २९ अभिरूपम् ३० दिव्यम् ३१ । इति
जटाधरः ॥

**सुन्दरः**, पुं, (सु + उन्द + अरः ।) कामदेवः ॥
इति केचित् ॥ वृक्षविशेषः । सुँद्री इति
भाषा ॥ यथा, --
“जम्बुवव्वोलखदिरसिन्धुवाराश्चसुन्दरः ।
एषामन्यतमाङ्गारं निर्म्मलाम्बुनि भावयेत् ॥”
इति सुखबोधः ।

**सुन्दरी**, स्त्री, (सुन्दर + गौरादित्वात् ङीष् ।)
नारीभेदः । इत्यमरः । २ । ६ । ४ ॥ सुष्ठु
उनत्ति

आर्द्रयति मनः इति सुन्दरी । उन्द धी
क्लेदे
सुपूर्व्वः नाम्नीति अरः निपातनाद्बलोपः
नदा-
दित्वादीप् । रूपलावण्यसम्पन्ना सुन्दरी
। इति
तट्टीकायां भरतः ॥ तरुभेदः । इति
मेदिनी ॥
हरिद्रा । इति शब्दचन्द्रिका ॥
त्रिपुरसुन्दरी ।
यथा, --
"अङ्गुष्ठानामिकायोगात् वामहस्तस्य
पार्व्वति ।
तर्पयेत् सुन्दरीं देवीं समुद्राञ्च सवाहनाम्
॥"
इति तन्त्रसारे श्रीविद्याप्रकरणम् ॥
योगिनीविशेषः । यथा, --
"तावन्मन्त्रं जपेद्विद्वान् यावदायाति
सुन्दरी ।
ज्ञात्वा दृढं साधकेन्द्रं निशीथे याति
निश्चितम् ॥"
इति तत्रैव योगिनीसाधनप्रकरणम् ॥

**सुन्भ**, द्युतौ । हिंसे । इति कविकल्पद्रुमः ॥

(भ्वा०-पर०-अक०-हिंसे सक०-सेट् ।)
सुम्भते ।
इति दुर्गादासः ॥

**सुन्वन्,** [त्] त्रि, यज्ञकर्त्ता । "सुञो यज्ञसंयोगे ।"

३ । २ । १३२ । इति सुनोतेः
शतृप्रत्ययः ॥
सर्व्वे सुन्वन्तः । सर्व्वे यजमानाः
सत्रिणः । इति
सिद्धान्तकौमुदी ॥
सुपक्कः, पुं, (सु + पच् + क्तः ।)
सुगन्ध्याम्रः ।
इति शब्दचन्द्रिका ॥ शोभनपरिणते, त्रि
॥
(यथा, भागवते । १ । ८ । ४० ।

उणादिवृत्ती रचिता च धातुकौमुदी ॥"
इति तदीयपरिभाषावृत्तिः ॥
(पुं, क्ली, । शोभनं पद्मम् ।)
शोभनपद्मञ्च ।
शोभनपद्मविशिष्टे, त्रि ॥

**सुपद्मा**, स्त्री, वचा । इति शब्दचन्द्रिका ॥

**सुपर्णः**, पुं, (सुष्ठु पर्णं पक्षो यस्य ।) गरुडः ।

इत्यमरः । १ । १ । ३१ ॥ (यथा,
रघुः ! १० । ६१ ।
"उह्यन्ते स्म सुपर्णेन वेगाकृष्टपयोमुचा
॥")
स्वर्णचूडपक्षी । कृतमालकवृक्षः । इति
मेदिनी
(पक्षिमात्रम् । यथा, मनुः । १ । ३७ ।
"नागान् सर्पान् सुपर्णांश्च पितॄऋणाञ्च
पृथग्-
गणान् ॥"
विष्णुः । इति महाभारतम् । १३ ।
१४९ ।
३४ ॥) शोभनपर्णविशिष्टे, त्रि ॥

**सुपर्णकः**, पुं, (सु शोभनानि पर्णानि यस्य । कन्
।)

आरग्वधवृक्षः । इति रत्नमाला ॥
सप्तच्छद-
वृक्षः । इति जटाधरः ॥ गरुडः । इति
हेम-
चन्द्रः ॥

**सुपर्णकेतुः**, पुं, (सुपर्णः केतौ यस्य ।) विष्णुः ।

इति हलायुधः

**सुपर्णा**, स्त्री, (सु शोभनानि पर्णानि पत्राणि

यस्याः ।) पद्मिनी । इति शब्दमाला

**सुपर्णास्यः**, पुं, (सुपर्ण इति आख्या यस्य ।)

नागकेशरः । इति त्रिकाण्डशेषः ॥
(अस्य
पर्य्यायो यथा, वैद्यकरत्नमालायाम् ।

तत्र दानविधिर्यथा, --
"तस्मात्सर्व्वात्मना पात्रे दद्यात्कनकदक्षिणाम्
इति ।
सर्व्वेषामेव पात्राणां परं पात्रं महेश्वरः ।
पतन्तं त्रायते यस्मादतीव नरकार्णवादिति ॥
पात्र्याण्याध्यात्मिका मुख्या विशुद्धाश्चाग्नि-
होत्रिणः ।
देवताश्च तथा मुख्या गोदानं ह्येतदुत्तममिति ॥
सर्व्वत्र गुणवद्दानं श्वपाकादिष्वपि स्मृ तम् ।
देशे काले विधानेन पात्रे दत्तं विशेषतः ॥"
पात्रे विद्यातपस्यादिगुणयुक्ते । इति च प्राय-
श्चित्ततत्त्वम् ॥ अपि च ।
"तस्मात् सर्व्वात्मना पात्रे दद्यात् कनकमुत्तमम्
।
अपात्रे पातयेद्दत्तं सुवर्णं नरकार्णवे ॥"
इति शुद्धितत्त्वम् ॥ * ॥
शोभनभाजनम् । शोभनञ्च तत्पात्रञ्चेति कर्म्म-
धारयसमासनिष्पन्नम् । उत्तमपात्रयुक्ते, त्रि ॥

**सुपानः**, त्रि, (सुखेन पीयते इति । सु + पा +

"आतो युच् ।" ३ । ३ । १२८ । इति युच् ।)
पानयोग्यः । सुखेन पीयतेऽसौ । आतोऽनोऽद-
रिद्र इत्यनेन कर्म्मणि अनप्रत्ययेन निष्पन्नः ।
इति मुग्धबोधव्याकरणम् ॥

**सुपार्श्वः**, पुं, (सुष्ठु पार्श्वोऽस्य ।) चतुर्व्विंशति-

वृत्तार्हदन्तर्गतवृत्तार्हद्विशेषः । इति हेमचन्द्रः ॥
प्लक्षवृक्षः । इति राजनिर्घण्टः ॥ पक्षिविशेषः ।
स तु सम्पातिपुत्त्रः । यथा, --
"निर्दग्धपक्षं सम्पातिं वानराः सुमहौजसः ।"
इत्युपक्रम्य ।
"क्व सीता केन वा दृष्टा को वा हरति
मैथिलीम् ।
तदाख्यातु भवान् सर्व्वं गतिर्भव वनौकसाम् ॥
सहरीन् प्रतिसंमुक्तान् सीताश्रुतिसमाहितान्
पुनराश्वासयन् प्रीत इदं वचनमब्रवीत् ॥
अहमस्मिन् गिरौ दुर्गे बहुयोजनमायते ।
चिरान्निपतितो वृद्धः क्षीणप्राणपराक्रमः ॥
तं मामेवं गतः पुत्त्रः सुपार्श्वो नाम नामतः ।
आहारेण यथाकालं विभर्त्ति पततां वरः ॥"

"इमे जनपदाः स्वृद्धाः
सुपक्वौषधिवीरुधः।
वनाद्रिनद्युदन्वन्तो ह्येधन्ते तव वीक्षिताः
॥")

**सुपत्रं**, क्ली, (शोभनं पत्रमस्य ।) तेजपत्रम् ।

इति शब्दचन्द्रिका ॥

**सुपत्रः**, पुं, (शोभनं पत्रमस्येति ।) आदित्यपत्रः ।

पल्लिवाहतृणम् । इति राजनिर्घण्टः ॥

**सुपत्रकः**, पुं, (शोभनं पत्रमस्य । कप् ।) शिग्रुः ।

इति राजनिर्घण्टः ॥ (शिग्रुशब्देऽस्य
विशेषो
ज्ञातव्यः ॥)

**सुपत्रा**, स्त्री, (शोभनं पत्रमस्याः ।) रुद्रजटा ।

शतावरी । पालक्यम् । शमी । शालपर्णी
।
इति राजनिर्घण्टः ॥

**सुपत्रिका**, स्त्री, जतुका । इति राजनिर्घण्टः ॥

**सुपथः**, पुं, (सु शोभनः पन्थाः । अः समासे ।)

सन्मार्गः । यथा, --
"सत्पथस्त्वतिपन्थाश्च सुपन्थाः
सुपथोऽपि च ।"
इति शब्दरत्नावली ॥
(यथा, कथासरित्सागरे । २० । १९२ ।
"विषयाकृष्यमाणा हि तिष्ठन्ति
सुपथेकथम् ॥"
शोभनपथयुक्ते, त्रि ॥

**सुपथ्या**, स्त्री, (सुष्ठु पथ्यं यस्याः ।) श्वेतचिल्ली ।

इति राजनिघण्टः ॥ सत्खाद्ये, त्रि ॥

**सुपन्थाः**, पुं, (शोभनः पन्थाः ।) सत्पथः । इति

शब्दरत्नावली ॥

**सुपद्मः**, पुं, पद्मनाभदत्त-कृतव्याकरणविशेषः ।

यथा, --
"धैर्य्याविधेयं धीराः
श्रीपद्मनाभनिवेदितम् ।
उक्तो व्याकरणादर्शः सुपद्मस्तस्य
पञ्जिका ॥

"दीपः सर्पः सुपर्णाख्यश्चाम्पेयो
नागकेशरः ॥")

**सुपर्णिका**, स्त्री, (शोभनानि पर्णानि यस्याः ।

कप् । टापि अत इत्वम् ।)
स्वर्णजीवन्ती ।
पलाशी । शालपर्णी । रेष्णुका ।
वाकुची । इति
राजनिर्घण्टः ॥ (अस्याः पर्य्यायो
यथा, --
"अवल्गुजो वाकुची स्यात् सोमराजी
सुपर्णिका
शशिलेखा कृष्णफला सोमा
पूतिफलीति च ।
सोमवल्ली कालमेधी कुष्ठघ्नी च
प्रकीर्त्तिता ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे
भागे ॥)

**सुपर्णी**, स्त्री, (सुष्ठु पर्णान्यस्याः । गौरादित्वात्

ङीष् ।) कमलिनी । गरुडमाता । इति
मेदिनी ॥ (पक्षिणीमात्रे च । यथा,
महाभारते ।
३ । २२४ । १० ।
"सुपर्णी सा तदा भूत्वा निर्जगाम
महावनात्")

**सुपर्णीतनयः**, पुं, (सुपर्ण्यास्तनयः ।) गरुडः ।

इति हलायुधः ॥

**सुपर्व्वा**, [न्] पुं, (सुष्ठु पर्व्व यस्य ।) देवताः ।

इत्यमरः । १ । १ । ७ ॥ बाणः । वंशः
। पर्व्व ।
धूमः । इति मेदिनी ॥

**सुपर्व्वा**, स्त्री, (शोभनं पर्व्व यस्याः ।) श्वेतदूर्व्वा

इति राजनिर्घण्टः ॥ सुन्दरपर्व्वविशिष्टा
च ॥
सुपाक्यं, क्ली, (सुपाकाय हितम् ।
सुपाक + यत् ।
विड्लवणम् । इति राजनिर्घण्टः ॥

**सुपात्रं**, क्ली, (सुष्ठु पात्रम् ।) योग्यव्यक्तिः ।

इति बाल्मीकीये रामायणे किष्किन्धाकाण्डे
५९ सर्गः ॥ (पीठस्थानविशेषः । यथा, देवी-
भागवते । ७ । ३० । ६६ ।
"नारायणी सुपार्श्वे तु त्रिकूटे रुद्रसुन्दरी ॥"
इलावृतवर्षस्य पर्व्वतविशेषः । यथा, विष्णु-
पुराणे । २ । २ । १७
"विपुलः पश्चिमे पार्श्वेसुपार्श्वश्चोत्तरे स्मृतः ॥)

**सुपार्श्वकः**, पुं, (सुष्ठु पार्श्वो यस्य । कन् ।)

चतुर्व्विंशतिभाव्यर्हद्दन्तर्गतार्हद्विशेषः । इति
हेमचन्द्रः ॥ गर्द्दभाण्डवृक्षः । इत्यमरः । २ ।
४ । ४३ ॥ (अथ पिष्पलभेदः । गजहुण्डसहीरा
इति लोके ।
"पारोषोऽन्यः पलाशश्च कपिचूतः कमण्डलुः ।
गर्द्दभाण्डष्कन्दरालः कपोतनः सुपार्श्वकः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

| | | |
|---|---|---|
| ततो हि बालबोधाय प्रयोगाणाञ्च दीपिका । | (यथा, भागवते । ७ । १४ । ४१ ।<br>“पुरुषेष्वपि राजेन्द्र सुपात्रं ब्राह्मणं विदुः ।<br>तपसा विद्यया तुष्ट्या धत्ते वेदं हरेस्तनुम् ॥”) | |

**सुपिङ्गला**, स्त्री, (सुष्ठु पिङ्गला ।) जीवन्ती ।
ज्योतिष्मती । इति राजनिर्घण्टः ॥

**सुपीडन**, क्ली, (सु + पीड + ल्युट् ।) सुष्ठु-
मर्द्दनम् इति केचित् ॥ गाचापा इति
भाषा ॥

**सुपीतं**, क्ली, (सु + पा + क्तः ।) गर्ज्जरम् । इति
राजनिर्घण्टः ॥

**सुपीवा**, [न्] त्रि, (सुष्ठु पिबतीति । सु + पा +
"आतो मनिन्क्वनिप्वनिपश्च ।" ३ । २
। ७४ ।
इति क्वनिप् ।) शोभनपानकर्त्ता । इति
मुग्ध-
बोधटीकायां दुर्गादासः ॥

**सुपुटः**, पुं, (सुष्ठ पुटमस्य ।) कोलकन्दः । विष्णु-
कन्दः । इति राजनिर्घण्टः ॥

**सुपुत्त्रिका**, स्त्री, (शोभना पुत्त्रिकेव ।) जतुका ।
इति राजनिर्घण्टः ॥

**सुपुष्करा**, स्त्री, स्थलपद्मिनी । इति राजनिर्घण्टः
॥

**सुपुष्पं**, स्त्री, (शोभनं पुष्पमस्य ।) लवङ्गम् । इति
शब्दचन्द्रिका ॥ आहुल्यम् ।
प्रपौण्डरीकम् ।
तूलम् । इति राजनिर्घण्टः ॥ स्त्रीणां
रजः ।
यथा, --
"सुपुष्पै राकीर्णं कुसुमधनुषो मन्दिरमहो
पुरो ध्यायन् ध्यायन् यदि जपति
भक्तस्तव
मनुम् ।"
इति तन्त्रसारः ॥

**सुपुष्पः**, पुं, (शोभनानि पुष्पाणि यस्य ।) रक्त-
पुष्पकः । इति शब्दचन्द्रिका ॥
पालितामादार
इति भाषा ॥ शिरीषः । हरिद्रुः ।
राजतरुणी ।
मक्षिका भ्रमरी सर्पो राजा वै बालकस्तथा ।
परश्वापि च मूर्खश्च सप्त सुप्तान्न बोधयेत्
॥"
(स्वकार्य्याक्षमः । यथा, --
"त्वग्रूक्षा स्फुटिता सुप्ता कृशा कृष्णा च
तुद्यते
आतन्यते सरागा च पर्व्वरुक्त्वग्गतेऽनिले
॥"
इति माधवकरसंगृहीतरुग्विनिश्चये वात-
व्याध्यधिकारे । ६ ॥)

**सुप्तघातकः**, त्रि, (सुप्तमपि हन्तीति । हन +
ण्वुल् ।) हिंस्रः । तत्पर्य्यायः । दशेरः २ ।
इति
त्रिकाण्डशेषः ॥

**सुप्तजनः**, पुं, (सुप्ता जना यत्र ।) अर्द्धरात्रः ।
इति जटाधरः ॥ (सुप्तो जनः ।)
निद्रितलोकश्च ॥

**सुप्तज्ञानं**, क्ली, (सुप्ते निद्रावस्थायां ज्ञानम् ।)
स्वप्नः । इति जटाधरः ॥

**सुप्तविज्ञानं**, क्ली, (सुप्ते निद्रावस्थायां विज्ञा-
नम् ।) स्वप्नः । इति जटाधरः ॥

**सुप्तिः**, स्त्री, (स्वप् + क्तिन् । स्पर्शता । निद्रा ।
(यथा, भागवते । ४ । २९ । ७१ ।
"सुप्तिमूर्च्छोपतापेषु प्राणायनविघाततः ।
नेहतेऽहमिति ज्ञानं मृत्युप्रज्वारयोरपि ॥")
विश्रम्भः । शयनम् । इति मेदिनी ॥

**सुप्रतिभा**, स्त्री, (सुष्ठु प्रतिभा यस्याः ।) मदिरा ।
इति राजनिर्घण्टः ॥

**सुप्रतिष्ठा**, स्त्री, (सुष्ठु प्रतिष्ठा यस्याः ।) पञ्चा-
क्षरावृत्तिच्छन्दः । स तु द्विविधः । पङ्क्तिः
।
प्रिया च यथा, --
"उक्थात्युक्था तथा मध्या प्रतिष्ठा सा
सुपूर्व्विका ।
शिवः । कामदेवः । इति केचित् ॥ (साधुः ।
इति श्रीधरस्वामी ॥ यथा, भागवते । १० ।
८ । ३१ ।
"एवं धार्ष्टान्यु शति कुरुते मेहनादीनि
वास्ती
स्तेयोपायैर्विरचितकृतिः सुप्रतीको यथास्ते
॥"
शोभनः प्रतीकः ।) शोभनाङ्गम् । तद्युक्ते, त्रि
॥
(यथा, भागवते । ५ । ३ । २ ।
"भगवान् भागवतवात्सल्यतया सुप्रतीक
आत्मानमपराजितं
निजजनाभिप्रेतार्थविधि-
त्सया गृहीतहृदय इति ॥")

**सुप्रभः**, पुं, (सुष्ठु प्रभा यस्य ।) शुक्लबलः । इति
हेमचन्द्रः ॥ सुन्दरप्रभायुक्ते, त्रि ॥ (यथा,
मार्कण्डेये । ९० । २७ ।
"ववुः पुण्यास्तथा वाताः सुप्रभोऽभूद्दिवा-
करः ॥")

**सुप्रभा**, स्त्री, (सुष्ठु प्रभा यस्याः ।) वाकुची । इति
राजनिर्घण्टः ॥ अग्निजिह्वाविशेषः । यथा, -
-
"सुप्रभा पद्मरागाभा वारुण्यां दिशि
संस्थिता ॥"
इति तन्त्रसारः ॥
शोभनदीप्तिश्च ॥

**सुप्रभातं**, क्ली, (सुष्ठुप्रभातम् ।) शुभसूचक-
प्रातःकालः । (यथा, भ्रमराष्टके । ८ ।
"रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पद्मजालम् ।
इत्थं विचिन्तयति कोषगते द्विरेफे
हा हन्त हन्त नलिनीं गज उज्जहार ॥")
प्राभातिकपाठ्यमङ्गलवाक्यम् । यथा, --
सुकेशिरुवाच ।
"किं तदुक्तं सुप्रभातं शङ्करेण महात्मना ।
प्रभाते यत् पठन्मर्त्यो मुच्यते पापबन्धनात्
॥
ऋषय ऊचुः ।

इति राजनिर्घण्टः ॥

**सुपुष्पिका**, स्त्री, (शोभनानि पुष्पाणि यस्याः । ङीष् । ततः कन् ।) पाटला । इति राजनिर्घण्टः ॥ (गुणादयोऽस्याः पाटलाशब्दे ज्ञातव्याः ॥)

**सुपुष्पी**, स्त्री, (सुष्ठु पुष्पं यस्याः । ङीष् ।) श्वेतापराजिता । जीणफञ्जी । शतपुष्पी । मिश्रेया । द्रोणपुष्पी । इति राजनिर्घण्टः ॥ कदली । इति शब्दचन्द्रिका ॥

**सुपूरः**, पुं, बीजपूरः । इति राजनिर्घण्टः ॥

**सुपूरकः**, पुं, (सुष्ठु पूरयतीति । पूर + ण्वुल् ।) वकपुष्पवृक्षः । इति रत्नमाला ॥

**सुप्**, क्ली, लिङ्गोत्तरप्रयुज्यमानप्रत्ययविशेषः । स तु सप्तमीविभक्तेर्ब्बहुवचनम् । इति मुग्धबोधव्याकरणम् ॥ सुपद्मादिव्याकरणमते एकविंशतिविभक्तीनां संज्ञा ॥ (यथा, “सुप्तिङन्तचयो वाक्यम् ।” इति व्याकरणटीकायां वाक्यलक्षणम् ॥

**सुप्तं**, क्ली, (स्वप् + क्तः ।) सुषुप्तिः । तत्पर्य्यायः । साधिका २ । इति हेमचन्द्रः ॥

**सुप्तः**, त्रि, (स्वप् + क्तः ।) निद्रितः । तत्पर्य्यायः । निद्राणः २ शयितः ३ । इति हेमचन्द्रः ॥ तस्य बोधने विधिनिषेधौ यथा, --

“क्षुधितस्तृषितः कामी विद्यार्थी कृषिकारकः ।
भाण्डारी च प्रवासी च सप्त सुप्तान् प्रबोधयेत् ॥

गायत्री च ततश्चोष्णिगनुष्टुप् बृहती तथा ॥”

पङ्क्तेरुदाहरणं तच्छब्दे द्रष्टव्यम् । प्रियाया यथा । स-ल-गैः प्रिया ।

“व्रजसुभ्रुवो विलसत्कलाः ।
अभवन् प्रिया सुरवैरिणः ॥”

इति छन्दोमञ्जरी ॥ (शोभना प्रतिष्ठा ।) सुन्दरप्रशंसा च । (शोभनप्रतिष्ठाविशिष्टे, त्रि । यथा, महाभारते । ३ । ६४ । ६४ ।

“सुभ्रूः सुकेशी सुश्रोणी सुकुचा सुद्विजानना ।
वर्च्चस्विनी सुप्रतिष्ठा स्वसितायतलोचना ।
सा विवेशाश्रमपदं वीरसेनसुतप्रिया ॥”)

**सुप्रतिष्ठितः**, पुं, (सुष्ठु, प्रतिष्ठितः ।) उडुम्बरवृक्षः । इति राजनिर्घण्टः ॥ सुन्दरप्रतिष्ठायुक्ते, त्रि ॥ (यथा, महाभारते । २ । ५८ । ४ ।

“अयं सहस्रसमितो वैयाघ्रः सुप्रतिष्ठितः ॥”

तथाच ।

“अश्मापि याति देवत्वं महद्भिः सुप्रतिष्ठितः ॥”

इत्युद्भटः ॥)

**सुप्रतीकः**, पुं, (शोभनाः प्रतीका अङ्गानि यस्य । ईशानदिग्गजः । इत्यमरः । १ । ३ । ४ ॥ (यथा, रघुः । ५ ७५ ।

“मदपटुनिनदद्भिर्बोधितो राजहंसैः
सुरगज इव गाङ्गं सैकतं सुप्रतीकः ॥”)

श्रूयतां राक्षसश्रेष्ठ सुप्रभातं हरोदितम् ।
श्रुत्वा स्मृत्वा पठित्वा च सर्व्वपापैः प्रमुच्यते ॥
ब्रह्मा मुरारिस्त्रिपुरान्तकारी
भानुः शशी भूमिसुतो बुधश्च ।
गुरुः सशुक्रः सह भानुजेन
कुव्वन्तु सर्व्वे मम सुप्रभातम् ॥
भृगुर्व्वशिष्ठः क्रतुरङ्गिराश्च
मनुः पुलस्त्यः पुलहः सगोतमः ।
रैभ्यो मरीचिश्च्यवनोऽमलोरुः
कुर्व्वन्तु सर्व्वे मम सुप्रभातम् ॥
सनत्कुमारः सनकः सनन्दनः
सनातनोऽप्यासुरिपिङ्गलौच ।
सप्तस्वरः सप्तरसातलाश्च
कुर्व्वन्तु सर्व्वे मम सुप्रभातम् ॥
पृथ्वी सगन्धा सरसास्तथापः
सस्पर्शवायुर्ज्वलितञ्च तेजः ।
नभः सशब्दं महता सहैव
कुर्व्वन्तु सर्व्वे मम सुप्रभातम् ॥
सप्तार्णवाः सप्त कुलाचलाश्च
सप्तर्षयो द्वीपवराश्च सप्त ।
भूरादि कृत्वा भुवनानि सप्त
कुर्व्वन्तु सर्व्वे मम सुप्रभातम् ॥

इत्थं प्रभाते परमं पवित्रं
यः संस्मरेद्वा शृणुयाच्च भक्त्या ।
दुःस्वप्ननाशो ननु सुप्रभाते
भवेच्च सत्यं भगवत्प्रसादात् ॥”
इति वामनपुराणे १४ अध्यायः ॥

**सुप्रभाता**, स्त्री, नदीविशेषः । यथा । अरुणा
नृमणा आङ्गिरसी सावित्री सुप्रभाता ऋत-
म्भरा सत्यम्भरेति महानद्यः । इति श्रीभागवते
५ । २० । ४ ॥ शोभनप्रभातयुता रात्रिश्च ॥

**सुप्रयुक्तः**, त्रि, (सु + प्र + युज + क्तः ।) शोभन-
प्रयोगविशिष्टः । (यथा, साहित्यदर्पणे । १ परि-
च्छेदे ।
एकः शब्दः सुप्रयुक्तः सम्यक् ज्ञातः स्वर्गे लोके
च कामधुग् भवति ॥”)

**सुप्रयुक्तशरः**, पुं, (सुप्रयुक्तः शरो येन ।) कृत-
हस्तः । इति हेमचन्द्रः ॥

**सुप्रयोगविशिखः**, पुं, सुशिक्षितबाणमोक्षकः ।
साध्यसाधनक्षमत्वात्शोभनः प्रयोगो निक्षेपो
यस्य स सुप्रयोगः तादृशो विशिखो बाणो यस्य
स तथा । कृतहस्तः सुप्रयोगविशिखः कृत-
पुङ्खवत् । इत्यमरभरतौ । २ । ८ । ६८ ॥

**सुप्रलम्भः**, पुं, (सु + प्र + लभ + खल् । “उप-
सर्गात् खल्घञोः ।” ७ । १ । ६७ । इति नुम् ।)
सुखलभ्यः । इति सिद्धान्तकौमुदी ॥

**सुप्रलापः**, पुं, (सु + प्र + लप + घञ् ।) सुवचनम्
विग्रहे शोभनफलाविशिष्टे, त्रि । यथा, महा-
भारते । ४ । ४० । १२ ।
“मुफलश्चित्रकोषश्च किङ्किणीशायको महान् ।
कस्य हेमत्सरुर्द्दिव्यः खड्गः परमनिर्म्मलः ॥”)

**सुफला**, स्त्री, (सुष्ठु फलं यस्याः ।) इन्द्रवारुणी ।
कुष्माण्डी । काश्मरी । कदली । कपिलद्राक्षा
इति राजनिर्घण्टः ॥

**सुफेनः**, पुं, (सुष्ठु फेनः ।) समुद्रफेनः । इति
राजनिर्घण्टः ॥ (क्वचित् क्लीवलिङ्गोऽपि
दृश्यते ॥)

**सुबन्धः**, पुं, (सुष्ठु बन्धो यस्य ।) तिलः । इति
शब्दचन्द्रिका ॥

**सुब्रह्मण्यः**, पुं, कार्त्तिकेयः । इति केचित् ॥

**सुब्रह्मवासुदेवः**, पुं, ब्रह्मरूपवसुदेवसुतः । यथा,
“सुब्रह्मवासुदेवाय गोब्राह्मणहिताय च ।
शान्तिरस्तु शिवञ्चास्तु इत्युक्त्वा तान् विसर्ज्जयेत्
इति तिथ्यादितत्त्वे जन्माष्टमीप्रकरणम् ॥

**सुभगः**, पुं, (सुष्ठ भगं माहात्म्यं श्रीर्वा यस्य ।)
टङ्कणः । चम्पकः । रक्ताम्लानः । अशोकः ।
इति राजनिर्घण्टः ॥

**सुभगः**, त्रि, (सुष्ठु भगं श्रीर्यस्य ।) सुदृश्यः ।
तत्पर्य्यायः । चक्षुष्यः २ । इति हेमचन्द्रः ॥
(यथा, रघुः । ११ । ८० ।
“केवलोऽपि सुभगो नवाम्बुदः
किं पुनस्त्रिदशचापलाञ्छितः॥”)
शोभनैश्वर्य्यादियुक्तश्च ॥

**सुभगा**, स्त्री, (सुष्ठु भगं यस्याः ।) कैवर्त्तो ।
शालपर्णो । हरिद्रा । नीलदूर्व्वा । तुलसी ।

**सुभद्रा**, स्त्री, (शोभनं भद्रमस्याः ।) श्यामालता ।
इति शब्दमाला ॥ (अस्याः पर्य्यायो यथा, --
“कालपेषी महाश्यामा सुभद्रोत्पलशारिवा ।
दीर्घमूला च पालिन्दी मसूरविदला च सा ॥”
इति वैद्यकरत्नमालायाम् ॥)
घृतमण्डा । इति शब्दचन्द्रिका ॥ काश्मरी ।
इति राजनिर्घण्टः ॥ श्रीकृष्णभगिनी । सा च
अर्ज्जुनभार्य्या । यथा, --
श्रीकृष्ण उवाच ।
“ममैषा भगिनी पार्थ सारणस्थ सहोदरा ।
सुभद्रा नाम भद्रं ते पितुर्मे दयिता सुता ।
यदि ते वर्त्तते बुद्धिर्व्वक्ष्यामि पितरं स्वयम् ॥
अर्ज्जुन उवाच ।
दुहिता वसुदेवस्य वासुदेवस्य च स्वसा ।
रूपेण चैषा सम्पन्ना कमिवैषा न मोहयेत् ॥
निवृत्तश्चार्ज्जुनस्तत्र विवाहं कृतवान् प्रभुः ।
पूर्णे तु द्वादशे वर्षे खाण्डवप्रस्थमागतः ॥”
इति महाभारते आदिपर्व्वणि २२१ अध्यायः
(पीठस्थानस्थदेवीविशेषः । यथा, देवीभाग-
वते । ७ । ३० । ७५ ।
“उत्पलावर्त्तके लोला सुभद्रा शोणसङ्गमे ॥”)

**सुभद्राणी**, स्त्री, त्रायन्ती । इति रत्नमाला ॥
बहुला इति ख्याता ॥

**सुभद्रेशः**, पुं, (सुभद्राया ईशः ।) अर्ज्जुनः । इति
हेमचन्द्रः ॥

**सुभाञ्जनः**, पुं, (सु शोभनं अञ्जनं यस्मात् ।)
शोभाञ्जनवृक्षः । इति भरतद्विरूपकोषः ॥

**सुभाषितः**, पुं, (सुष्ठु भाषितं यस्य ।) बुद्धभेदः ।
यथा, --
“कोमाभो द्वादशास्यश्च वीतरागः सुभाषितः ॥”
इति त्रिकाण्डशेषः ॥

इत्यमरः । १ । ६ । ३८ ॥

**सुप्रसन्नः**, पुं, (सुष्ठु प्रसन्नः ।) कुबेरः । इति

शब्दमाला ॥ सुप्रसादयुक्ते, त्रि ॥ (यथा, मार्क-
ण्डेये । १०५ । ७ ।
"तथानुकम्पां पुत्त्राणां सुप्रसन्नो रवे मम ।
कुरु प्रसन्नार्त्तिं हर स्थितिकर्त्ता त्वमुच्यते ॥"

**सुप्रसन्नकः**, पुं, (सुप्रसन्न + संज्ञायां कन् ।) कृष्णा-

र्जकः । इति राजनिर्घण्टः ॥

**सुप्रसरा**, स्त्री, (सुप्रसरतीति । सु + प्र + सृ +

अच् । टाप् ।) प्रसारिणी लता । इति राज-
निर्घण्टः ॥

**सुप्रसादः**, पुं, (सुष्ठु प्रसादो यस्य ।) शिवः । इति

त्रिकाण्डशेषः ॥ (विष्णुः । इति महाभारतम् ।
१३ । १४९ । ३९ ॥ सु + प्र + सद् + घञ् ।)
सुप्रसन्नता च । (प्रसन्नतायुक्ते, त्रि । यथा,
महाभारते । १२ । ५७ । ३१ ।
"क्षिप्रकारी जितक्रोधः सुप्रसादो महामनाः ॥"

**सुप्रिया**, क्ली, (सुष्ठु प्रिया ।) सुन्दरहृद्या ।

अस्याः प्रमाणं सुभगाशब्दे द्रष्टव्यम् ॥ (अप्सरो-
विशेषः । यथा, महाभारते । १ । १२३ । ६० ।
"असिता च सुबाहुश्च सुप्रिया सुवपुस्तथा ॥")
सुफलः, पुं, (सुष्ठु, फलं यस्य ।) कर्णिकारः ।
दाडिमः । वदरः । मुद्गः । इति राजनिर्घण्टः ॥
प्रियङ्गुः । कस्तूरी । सुवर्णकदली । इति राज-
निर्घण्टः ॥ वनमल्ली । इति शब्दरत्नावली ॥
पतिप्रिया । यथा, माण्डव्यः ।
"मघा ऋक्षं परित्यज्य यदा सिंहे गुरुर्भवेत् ।
तत्राब्द कन्यका चोढा सुभगा सुप्रिया भवेत् ॥"
इति मलमासतत्त्वम् ॥

**सुभगासुतः**, पुं, (सुभगायाः सुतः ।) सौभागि-

नेयः । इत्यमरः । २ । ६ । २४ ॥

**सुभङ्गः**, पुं, (सुखेन भज्यते इति । सु + भञ्ज +

घञ् ।) नारिकेलवृक्षः । इति जटाधरः ॥

**सुभद्रः**, पुं, (सुष्ठु भद्रं यस्मात् ।) विष्णुः । इति

शब्दमाला ॥ राजभेदः । इति हेमचन्द्रः ॥
(पौवरीगर्भसम्भूतो वसुदेवस्य पुत्त्रविशेषः ।
यथा, भागवते । ९ । २४ । ४७ ।
"सुभद्रो भद्रबाहुश्च दुर्म्मदो भद्र एव च ।
पोवव्यास्तनयो ह्येते भूताद्या द्वादशाभवन् ॥)
शाभनमङ्गलयुक्ते, त्रि ॥ (यथा, महाभारते ।
१ । २३३ । १७ ।
"त्वत्त एताः पुनः शुक्र वीरुधो हरितच्छदाः ।
जायन्ते पुष्करिण्यश्च सुभद्रश्च महोदधिः ॥")

**सुभद्रकः**, पुं, (सुष्ठु भद्रमस्मात् । ततः कन् ।)

देवरथः । यथा, शब्दरत्नावल्याम् ।
"व्योमयानं दिव्यरथो विमानोऽस्त्री सुभद्रकः ॥
विल्ववृक्षः । इति शब्दचन्द्रिका ॥
सुन्दरकथिते, त्रि ॥ (सुन्दरवाक्यविशिष्टे च
त्रि । यथा, महाभारते । ३ । ६० । ४ ।
"नलञ्च हृतसर्व्वस्वमुपलभ्येदमब्रवीत् ।
बृहत्सेनामतियशां तां धात्रीं परिचारिकाम् ।
हितां सर्व्वार्थकुशलामनुरक्तां सुभाषिताम् ॥ *
मुष्ठु भाषितम् । सुवाक्ये, क्ली, ॥ यथा, हितो-
पदेशे ।
"विषादप्यमृतं ग्राह्यममे ध्यादपि काञ्चनम् ।
नीचादप्युत्तमां विद्यां बालादपि सुभाषितम् ॥"

**सुभिक्षः**, त्रि, (सुखेन लभ्या भिक्षा यत्र ।) सुलभ-

भैक्षद्रव्यम् । सुलभभैक्षयुक्तकालादिश्च ।
यथा, --
"द्वाविमौ पुरुषौ लोके सूर्य्यमण्डलमेदिनौ ।
दातान्नस्य तु दुर्भिक्षे सुभिक्षे वस्त्रहेमदः ॥"
इति वह्निपुराणे आह्निकतपोनामाध्यायः ॥
किञ्च ।
"श्वेते क्षेमसुभिक्षं ब्राह्मणपीडांश्च निर्दिशे-
द्राहौ ॥"
इति तिथ्यादितत्त्वम् ॥

**सुभिक्षा**, स्त्री, (सुष्ठु भिक्ष्यतेऽसौ । सु + भिक्ष +

घञ् ।) धातृपुष्पिका । इत्यमरः । २ । ४ । १२४ ।
(अस्याः पर्य्यायो यथा, --

| | | |
|---|---|---|
| कपित्थः । इति शब्दचन्द्रिका ॥ शोभनफल-युक्ते, त्रि । (यथा, मार्कण्डेये । १२० । १६ । "सुफलानि च शस्यानि रसवन्ति फलानि च ॥" शोभनफले, क्ली ॥ * ॥ सुष्ठु फला यस्येति | | |

"धातकी धातुपुष्पी च ताम्रपुष्पी च कुञ्जरा ।
सुभिक्षा बहुपुष्पी च वह्निज्वाला च सा स्मृता ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**सुभीरकः**, पुं, पलाशवृक्षः । इति हारावली ॥

**सुभूः**, त्रि, (शोभना भूरुत्पत्तिर्यस्य ।) सुजन्मा ।

इति मुग्धबोधव्याकरणम् ॥ (शोभना भूर्भूमिः ।)
उत्कृष्टभूमौ, स्त्री । तत्सम्बन्धिनि, त्रि ॥

**सुभूतिकः**, पुं, (सुष्ठुभूतिर्यत्र । कप् ।) विल्ववृक्षः ।

इति राजनिर्घण्टः ॥

**सुभूमः**, पुं, कार्त्तवीर्य्यः । स तु जिनानां अष्टम-

चक्रवर्त्ती । इति हेमचन्द्रः ॥

**सुभृशं**, क्ली, (सुष्ठु भृशम् ।) वाढम् । अतिशयम् ।

इति शब्दरत्नावली ॥ (यथा, देवीभागवते ।
२ । ६ । २६ ।
"शप्स्यामि तं द्विजञ्चाद्य यन मन्त्रः समर्पितः ।
त्वाञ्चापि सुभृशं कुन्ति ! नो चेत् मां त्वं
भजिष्यसि ॥")
तद्वति, त्रि ॥

**सुभ्रुः**, स्त्री, (सुष्ठु भ्रुर्यस्याः । वा ऊङ् ।)

नारी । इति जटाधरः ॥ (शोभना
भ्रूः । यथा, भागवते । ३ । २३ । ३२ ।

**सुभ्रूः** स्त्री, (सुष्ठु भ्रू र्यस्याः । वा ऊङ् ।)

नारी । इति जटाधरः ॥ (शोभना
भ्रूः । यथा, भागवते । ३ । २३ । ३२ ।
"सुभ्रुवा सुदता श्लक्षणस्निग्धापाङ्गेन चक्षुषा ।
पद्मकोषस्पृधा नीलैरलकैश्च लसन्मुखम् ॥")
सुन्दरभ्रुयुक्ते, त्रि ॥ (यथा, भागवते । ४ । ८ ।
४५ ।
"सुनसं सुभ्रुवं चारु कपोलं सुरसुन्दरम् ॥")

**सुमं**, क्ली, (सुष्ठु मातीति । मा + कः ।) पुष्पम् ।

इत्यमरटीकायां भरतः ॥ (यथा, राजेन्द्र-
कर्णपूरे । ७४ ।
"किं हारैः किमु कङ्कणैः किमु सुमैः किं
कर्णपूरैरलं
"त्वं वै समस्तपुरुषार्थमयः फलात्मा
यद्वाञ्छया सुमतयो विसृजन्ति कृत्स्नम्
।
तेषां विभो समुचितो भवतः समाजः
पुंसः स्त्रियाश्च रतयोः सुखदुःखिनोर्न
॥" * ॥
शोभना मतिः ।) शोभगमतौ, स्त्री ॥

**सुमतिः**, स्त्री, (शोभना मतिर्यस्याः ।) विष्णु-

यशसः पत्नी । सा कल्किमाता । यथा,
--
"सम्भले विष्णुयशसो गृहे
प्रादुर्भवाम्यहम् ।
सुमत्यां मातरि विभोः कन्यायां
तन्निदेशतः ।
चतुर्भिर्भ्रातृभिर्देव करिष्यामि कलिक्षयम्
॥"
इति कल्किपुराणे २ अध्यायः ॥
अपि च । तत्रैव ।
"सुमत्यां विष्णुयशसा गर्भमाधत्त
वैष्णवम् ॥"
"सुमतिस्तं सुतं लब्ध्ना विष्णुं जिष्णुं
जगत्पतिम्
पूर्णकामा विप्रमुख्यानाहूयादाद्गवां
शतम् ॥"

**सुमदनः**, पुं, (सुष्ठुमदयति कोकिलादीनिति ।

सु + मद + णिच् + ल्यः ।) आम्रवृक्षः ।
इति
राजनिर्घण्टः ॥

**सुमदात्मजा**, स्त्री, (सुमदः आत्मज इव यस्याः ।

सुमदस्य आत्मजेव इति वा ।)
अप्सरसः । इति
त्रिकाण्डशेषः ॥

**सुमधुरं**, क्ली, (सुष्ठु मधुरम् ।) अत्यर्थमधुर-

वाक्यम् । तत्पर्य्यायः । सान्त्वम् २ ।
इति हेम-
चन्द्रः ॥ अतिशयमधुररसयुक्ते, त्रि ॥
(यथा,

**सुमनसः**, स्त्री, भूम्नि, पुष्पम् । इत्यमरः । २ ।
४ । १७ ॥

सुप्रीतं मन आभिरिति सुमनसः
नित्यबहुवच-
नान्तत्वात् बहुवचननिर्देशः । भूम्नि
स्त्रियः
सुमनसः । इति रत्नकोषः ॥ बहवश्च
समा-
सिकता अप् सुमनसोऽप्सरस इति
भूम्नि वाम-
नोऽपि । भूम्नि भूरिप्रयोगः । एकत्वञ्च
दृश्यते ।
सुमनाः पुष्पमालत्योः स्त्रियां ना
धीरदेवयो-
रिति मेदिनी । वेश्या श्मशानसुमना
इव वर्ज्ज-
नीया इति शूद्रकप्रयोगश्च । सुमनसः
क्लीवत्व-
मपि पुष्पं सुमनः कुसुममिति
नाममालादिदर्श-
नात् । अप्रत्याख्येये दधिसुमनसीति
क्लीवत्वं
छान्दसमित्येके । इति भरतः ॥
(यथा, महा-
भारते । १३ । ९८ । २० -- २२ ।
"मनो ह्लादयते यस्मात् श्रियञ्चापि
ददाति च ।
तस्मात् समनसः प्रोक्ता नरैः
सुकृतकर्म्मभिः ॥
देवताभ्यः सुमनसो यो ददाति नरः
शुचिः ।
तस्य तुष्यन्ति वै देवास्तुष्टाः पुष्टिं
ददत्यपि ॥
यं यमुद्दिश्य दीयेरन् देवं सुमनसः
प्रभो ।
मङ्गलार्थं स तेनास्य प्रीतो भवति
दैत्यप ! ॥")

**सुमना**, स्त्री, जातीपुष्पवृक्षः । इति शब्दरत्ना-

वली ॥ (यथा, भरतधृतसुश्रुतः ।

केयूरैर्मणिकुण्डलैरलमलं साडम्बरैरम्बरैः ।
पुंसामेकमखण्डनं पुनरिदं शम्भोर्मते मण्डनं
यन्निष्पीडितपार्व्वणेन्द्रशकलस्यन्दोपमाः
सूक्तयः ॥”)

**सुमः**, पुं, (सुष्ठु माति सौन्दर्य्यमिति । मा + कः ।)
चन्द्रः । नभः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**सुमङ्गला**, स्त्री, (सुष्ठु मङ्गलं यस्याः ।) वाय-
सोली । इति रत्नमाला ॥ माकडहाता इति
माकडिया इति च भाषा ॥ अर्हतां माता ।
इति हेमचन्द्रः ॥ कामाख्यादेशीयनदीविशेषः ।
यथा, कालिकापुराणे ८१ अध्याये ।
“नदी सुमङ्गला नाम हिमपर्व्वतनिर्गता ।
पूर्व्वस्यां मणिकूटस्य सदा स्रवति शोभना ॥
मणिकूटं समारुह्य यस्तां पश्यति वै नदीम् ।
स गङ्गास्नानजं पुण्यमवाप्य त्रिदिवं ब्रजेत् ॥”
अतिशयक्षेमयुक्ते, त्रि ॥

**सुमतः**, त्रि, सुन्दरज्ञानविषयः । सुशब्दपूर्व्वक-
मनधातोः क्तप्रत्ययेन निष्पन्नः ॥

**सुमतिः**, पुं, (शोभना मतिर्यस्य ।) वर्त्तमानकल्पी-
यार्हद्भेदः । भूतकल्पीयार्हद्भेदः । इति हेम-
चन्द्रः ॥ सुन्दरमतियुक्ते, त्रि । (यथा, भाग-
वते । १० । ६० । ३८ ।
महाभारते । १३ । ५४ । १५ ।
“गीतध्वनिं सुमधुरं
तथैवाध्यापनध्वनिम् ।
हंसान् सुमधुरांश्चापि तत्र शुश्राव
पार्थिवः ॥”)
सुमधुरः, पुं, (सुष्ठुसुधुरो रसो यत्र ।)
जीव-
शाकः । इति राजनिर्घण्टः ॥

**सुमनः**, पुं, (सुष्ठु मन्यते इति । सु + मन + अच् ।
गोधूमः । इत्यमरः । २ । ९ । १८ ॥
(अस्य
पर्य्यायो यथा, --
“गोधूमः सुमनोऽपि स्यात्त्रिविधः स च
कीर्त्तितः ।
महागोधूम इत्याख्यः पश्चाद्देशात्
समागतः ॥
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे
भागे ॥)
धुस्तूरः । इति शब्दमाला ॥ मनोहरे, त्रि
।
इति शब्दरत्नाबली ॥

**सुमनः**, [स्] क्ली, (शोभनं मना यस्मात् ।)
पुष्पम् ।
इत्यमरः ॥ (यथा, भागवते । ४ । १५ ।
७ ।
“प्रशंसन्ति स्म तं विप्रा गन्धव्वप्रवरा
जगुः ।
सुमुचुः सुमनोधाराः सिद्धा नृत्यन्ति
स्वःस्त्रियः ॥”)
उत्तममनश्च । शोभनमनोयुक्ते, त्रि ॥
(यथा,
महाभारते । १ । ४९ । १० ।
“ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव
स्वकर्म्मसु ।
स्थिताः सुमनसो राजंस्तेन राज्ञा
स्वधि-
ष्ठिताः ॥”)

**सुमनःपत्रिका**, स्त्री, (सुमनसो जात्याः पत्रिका ।)
जातीपत्रिका । इति राजनिर्घण्टः ॥

**सुमनःफलं**, क्ली, (सुमनसो जात्याः फलम् ।)
“सुमनायाश्च पत्राणि
पटोलारिष्टयोस्तथा ॥”)

**सुमनाः**, [स्] पुं, (शोभनं मनो यस्य ।) देवता ।
इत्यमरः । १ । १ । ७ ॥ सुष्ठुमन्यते
सुमना-
अस् । शोभनं मनोऽस्य इति वा । इति
भरतः ॥
पण्डितः । इति मेदिनी ॥ पूतिकरञ्जः
। इति
शब्दमाला ॥ निम्बः । महाकरञ्जः ।
गोधूमः ।
इति राजनिर्घण्टः ॥ (शोभनचित्ते, त्रि
। यथा,
महाभारते । ३ । २६ । २१ ।
“ततस्ते ब्राह्मणाः सर्व्वेवकं
दाल्भ्यमपूजयन् ॥
युधिष्ठिरे स्तूयमाने भूयः
सुमनसोऽभवन् ॥”)

**सुमनाः**, [स्] स्त्री, (सुष्ठु, मनो यस्याः ।) पुष्पम्
।
मालती । इति मेदिनी ॥ जाती ।
शतपत्री ।
इति राजनिर्घण्टः ॥ “सुष्ठु मन्यते
जनैर्मनोज्ञ-
त्वात् शोभनं मनोऽस्यामिति वा
सुमनाः सान्ता
स्त्रीलिङ्गा च ।
‘स्त्रियां सुमनसो भूम्नि पुष्पे जातौ च
भेदतः ।
विदुष्यति यदा दृष्टस्तदा भेदेन
शिव्यते ॥’
इति व्याडिः ।
‘सुमनाः पुष्पमालत्योः स्त्रियां
नाधीरदेवयोः ।’
इति सान्तेषु मेदिनी । आवन्तापि
सुमनास्ति ।
‘सुमनायाश्च पत्राणि
पटोलारिष्टयोस्तथा ।’
इति सुश्रुतः ।” इत्यमरटीकायां
भरतः ॥

जातीफलम् । इति राजनिर्घण्टः ॥

**सुमनःफलः**, पुं, (सुष्ठु मनोयस्मात् तादृशं फलं यस्य ।) कपित्थवृक्षः । इति शब्दचन्द्रिका ॥

**सुमनोरजः**, [स्] क्ली, (सुमनसां रजः ।) परागः । इत्यमरः । २ । ४ । १७ ॥

**सुमन्तुः**, पुं, मुनिविशेषः । स चाथर्व्ववेदशाखा-प्रचारकः । वज्रवारकश्च । यथा, --
"तत्रर्ग्वेदधरः पैलः सामगो जैमिनिः कविः ।
वैशम्पायन एवैको निष्णातो यजुषामुत ॥
अथर्व्वाङ्गिरसामासीत् सुमन्तुर्दारुणो मुनिः ।
इतिहासपुराणानां पिता मे रोमहर्षणः ॥"
इति श्रीभागवते । १ । ४ । २० -- २२ ॥

"जैमिनिश्च सुमन्तुश्च वैशम्पायन एव च ।
पुलस्त्यः पुलहश्चैव पञ्चैते वज्रवारकाः ॥"
इति पुराणम् ॥
(सुष्ठु मन्तुरपराधो यस्य ।)
अत्यपराधिनि, त्रि ॥

**सुमन्त्रः**, पुं, कल्किदेवस्य ज्येष्ठभ्राता । यथा, --
"कल्केर्ज्येष्ठास्त्रयः शूराः कविप्राज्ञसुमन्त्रकाः
तातमातृप्रियकरा गुरुविप्रप्रतिष्ठताः ॥"
इति कल्किपुराणे २ अध्यायः ॥
अपि च ।
"विशाखयूपभूपालः प्रायात् साधुजनप्रियः ।
कल्किं द्रष्टुं हरेरंशमाविर्भूतञ्च सम्भले ॥
कविं प्राज्ञं सुमन्त्रञ्च पुरस्कृत्य महाप्रभम् ।
गार्ग्य भार्ग्यविशालैश्च ज्ञातिभिः परिवारितम् ॥"
इति तत्रैव ३ अध्यायः ॥
दशरथराजस्य सारथिः मन्त्री च । यथा, --
"तद्गच्छ त्वरितं सूत राजपुत्त्रं यशस्विनम् ।
राममानय भद्रं ते नात्र कार्य्या विचारणा ॥
अश्रुत्वा राजवचनं कथं गच्छामि भामिनि ।
तच्छ्रुत्वा मन्त्रिणो वाक्यं राजा मन्त्रिणमब्रवीत्
सुमन्त्र रामं द्रक्ष्यामि शीघ्रमानय सुन्दरम् ॥"
इति वाल्मीकीये रामायणे अयोध्याकाण्डे १४ सर्गः ॥

**सुमित्रः**, पुं, चतुर्व्विंशतिवर्त्तमानार्हत्पित्रन्तर्गत-

**सुमुखसूः**, पुं, (सुमुखस्य सूरुत्पत्तिर्यस्मात् ।)
गरुडः । इति त्रिकाण्डशेषः ॥
उत्तमाननपुत्त्र-पिता च ॥

**सुमुखा**, स्त्री, (शोभनं मुखं यस्याः । टाप् ।)
सुन्दरी नारी । सुन्दरानना । इति भरत-द्विरूपकोषः ॥ सुमुखा शाला । इति मुग्ध-बोधव्याकरणम् । दर्पणः । इति केचित् ॥

**सुमुखी**, स्त्री, (सुष्ठु मुखं यस्याः । "स्वाङ्गा-च्चोपसर्जनादसंयोगोपधात् ।" ४ । १ । ५४ ।
इति ङीष् ।) सुन्दरी नारी । सुन्दरानना । (यथा, कुमारे । १ । २६ ।
"उ मेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम ॥")

**सुमुष्टिः**, पुं, (मुष वञ्चने + क्तिन् । शोभना मुष्टि-र्यस्मात् ।) विषमुष्टिक्षुपः । इति राजनिर्घण्टः ॥

**सुमूलः**, पुं, (सुष्ठुमूलं यस्य ।) श्वेतशिग्रुः ।
इति राजनिर्घण्टः ॥

**सुमूलकं**, क्ली, (शोभनं मूलं यस्य । कप् ।)
गर्ज्जरम् । इति राजनिर्घण्टः ॥

**सुमूला**, स्त्री, (शोभनं मूलं यस्याः ।) शालपर्णी
पृश्निपर्णी । इति राजनिर्घण्टः ॥
सुन्दरमुल-युक्ते, त्रि ॥

**सुमेखलः**, पुं, (शोभना मेखला यस्मात् ।) मुञ्जः ।
इति राजनिर्घण्टः ॥ (अस्य पर्य्यायो यथा, --
"मुञ्जो मुञ्जातको बाणः स्थूलदर्भः सुमेखलः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
शोभनमेखलायुक्ते, त्रि ॥

ह्रदाश्चत्वारः पयोमध्विक्षुरसमृष्टजलाः यदुपस्पर्शिन उपदेवगणा योगैश्वर्य्याणि स्वाभा-विकानि भारतर्षभ धारयन्ति ॥ १३ ॥
देवोद्यानानि च भवन्ति चत्वारि नन्दनं चैत्ररथं वैभ्राजकं सर्व्वतोभद्रमिति ॥" १४ ॥
"मेरोर्मूर्द्धनि भगवत आत्मयोनेर्मध्यत उप-क्लृप्तां पुरीमयुतयोजनसाहस्रीं समचतुरस्रां शातकौम्भीं वदन्ति ॥ २८ ॥
तामनुपरितो लोकपालानामष्टानां यथादिशं सथारूपं तुरीयमानेन पुरोऽष्टावुपक्लृप्ताः ।" २९ ॥
इति श्रीभागवते ५ स्कन्धे १६ अध्यायः ॥
"अस्मिन्नैन्द्रीं पुरीं पूर्व्वस्यां मेरोर्देवधानीं नाम दक्षिणतो याम्यां संयमनीं नाम पश्चा-द्वारुणीं निम्नोचनीं नाम उत्तरतः सौम्यां विभावरीं नाम ।" इति च तत्रैव । ५ । २१ । ७ ॥ * ॥
अपि त्र ।
"परिमण्डलस्तयोर्म्मध्ये मेरुः कनकपर्व्वतः ।
चातुर्व्वर्णः स सौवर्णश्चतुरस्रः समुच्छ्रितः ॥
नानावर्णः स पार्श्वे तु पूर्व्वान्ते श्वेत उच्यते ।
पीतन्तु दक्षिणं तत्र भृङ्गपत्रनिभं परम् ॥
उत्तरं तस्य रक्तं वै इति वर्णसमन्वितः ।
मेरुस्तु शुशुभे दिव्यो राजवत् समधिष्ठितः ॥
आदित्यतरुणाभासो विधूम इव पावकः ।
योजनानां सहस्राणि चतुरशीतिरुच्छ्रितः ॥
प्रविष्टः षोडशाधस्तादष्टाविंशतिविंशतिः ।
विस्तारात्त्रिगुणस्तस्य परिणाहः समन्ततः ॥
स पर्व्वतो महादिव्यो दिव्यौषधिसमन्वितः ।
भुवनैरावृतः सर्व्वैर्जातरूपपरिष्कृतैः ॥
तत्र देवगणाः सर्व्वे गन्धर्व्वोरगराक्षसाः ।
शैलराजे प्रमोदन्ते सर्व्वतोऽप्सरसस्तथा ॥
स तु मेरुः परिवृतो भुवनैर्भूतभावनैः ।
यस्येमे चतुरो देशा नानापार्श्वेषु संस्थिताः ॥
भद्राश्वो भारतश्चैव केतुमालश्च पश्चिमे ।
उत्तराश्चैव कुरवः कृतपुण्यप्रतिश्रयाः ॥
विष्कम्भपर्व्वतास्तद्वन्मन्दरो गन्धमादनः ।
विपुलश्च सुपार्श्वश्च सर्व्वरत्नविभूषितः ॥"

विंशार्हत्पिता । इति हेमचन्द्रः ॥
इक्ष्वाकु-
वंशीयबृहद्बलान्वयः सुरथराजपुत्त्रः ।
इति
विष्णुपुराणे ४ अंशे २२ अध्यायः ॥

**सुमित्रभूः**, पुं, सगरः । स तु जिनानां चक्रवर्त्ति-

मेदः । इति हेमचन्द्रः ॥

**सुमित्रा**, स्त्री, दशरथराजपत्नी । सा तु लक्ष्मण-

शत्रुघ्नमाता । यथा, भट्टौ २ सर्गे ।
"प्रासोष्ट शत्रुघ्नसुदारचेष्ट-
मेका सुमित्रा सह लक्ष्मणेन ॥"
तत्पर्य्यायः । लक्ष्मणप्रसूः २ । इति
शब्दरत्ना-
वली ॥

**सुमुखं**, क्ली, नखक्षतविशेषः । इति शब्दरत्ना-

वली ॥ (शोभनं सुखमिति ।)
उत्तमास्यञ्च ॥

**सुमुखः**, पुं, (शोभनं मुखं यस्य ।) गरुडपुत्त्रः ।

(यथा, महाभारते । ५ । १०१ । २ ।
"वैनतेयसुतैः सूत षड्भिस्ततमिदं
कुलम् ।
सुमुखेन सुनाम्ना च सुनेत्रेण सुवर्च्चसा
।
सुरुचा पक्षिराजेन सुबलेन च मातले !
॥")
गणेशः । शाकभेदः । नागभेदः । इति
शब्द-
रत्नावली ॥ (यथा, महाभारते । १ ।
३५ । १४ ।
"हस्तपिण्डः पिठरकः सुमुखः
कौणपाशनः ।
कुठरः कुञ्जरश्चैव तथा नागः प्रभाकरः
॥")
पण्डितः । इति विश्वः ॥ सिताज्र्जकः ।
वन-
वर्व्वरिका । वर्व्वरः । इति राजनिर्घण्टः
॥

**सुमुखः**, त्रि, (सुष्ठु सुखं यस्य ।) मनोज्ञः ।

**सुमेधाः**, [स्] स्त्री, (सुष्ठु मेधा अस्याः ।

"नित्यमसिच प्रजामेधयोः ।" ५ । ४ ।
१२२ ।
इति असिच् ।) ज्योतिष्मती । (सुष्ठुमेधा
यस्य ।) सुबुद्धौ, त्रि । इति मेदिनी ॥
(यथा,
भागवते । ९ । ४ । ३ ।
"इमे अङ्गिरसः सत्रमासतेऽद्य सुमेधसः
॥")

**सुमेरुः**, पुं, (सुष्ठुमिनोति क्षिपति ज्योतींषि इति

सु + मि + "मिपीभ्यां रुः ।" उणा० ४ ।
१०१ ।
रुः ।) पर्व्वतविशेषः । तत्पर्य्यायः । मेरुः
२
हेमाद्रिः ३ रत्नसानुः ४ सुरालयः ५ ।
इत्य-
मरः । १ । १ । ५२ ॥ अमराद्रिः ६
भूस्वर्गः ७ ।
इति जटाधरः ॥ तद्विवरणं यथा, --
"एषां मध्ये इलावृतं नामाभ्यन्तरवर्षं यस्य
नाभ्यामवस्थितः सर्व्वतः सौवर्णः
कुलगिरि-
राजो मेरुर्द्वीपायामसमुन्नाहः कर्णिकाभूतः
कुवलयकमलस्य मूर्द्धनि
द्वात्रिंशत्सहस्रयोजन-
विततो मूले षोडशसहस्रं तावतान्तर्भूम्यां
प्रविष्टः ॥" ७ ॥
"मन्दरो मेरुमन्दरः सुपार्श्वः कुमुद
इत्ययुत-
योजनविस्तारोन्नाहा
मेरोश्चतुर्द्दिशमवष्टम्भ-
गिरय उपकॢप्ताः ॥ ११ ॥
चतुर्षु एतेषु चूतजम्बूकदम्बन्यग्राधाः
चत्वारः
पादपप्रवराः पर्व्वतकेतव
इवाधिसहस्रयोजनो-
न्नाहास्तावद्विटपविततयः शतयोजनपरि-
णाहाः ॥ १२ ॥

इति मात्स्ये ९५ अध्यायः ॥ * ॥
किञ्च ।
"मध्ये पृथिव्यामद्रीन्द्रो भास्वान्
मेरुर्हिरण्मयः
योजननां सहस्राणि चतुरशीतिः समुच्छ्रितः
॥
प्रविष्टः षोडशाधस्ताद्धरण्यां धरणीधरः ।
तावत्प्रमाणा पृथिवी पर्व्वतश्च समन्ततः ॥
तस्य शृङ्गत्रयं मूर्द्ध्नि स्वर्गो यत्र प्रतिष्ठितः ।
नानाद्रुमलताकीर्णं नानारत्नोपशोभितम् ॥
मध्यगं पश्चिमं पूर्व्वं मेरोः शृङ्गाणि त्रीणि वै ।
प्रयुतोच्छ्रितमात्राणि द्वे शृङ्गे तस्य मध्यतः ॥
मध्यस्थं स्फाटिकं शृङ्गं वैदूर्य्यकरकामयम् ।
इन्द्रनीलमयं पूर्व्वं माणिक्यं पश्चिमं स्मृतम् ॥
योजनानां सहस्राणि नियुतानि चतुर्दश ।
उच्छ्रितं मध्यगं शृङ्गं स्वर्गो यत्र प्रतिष्ठितः ॥
प्रयुतान्तरितं शृङ्गं मूर्द्ध्नि च्छत्राकृति स्थितम्
।
पूर्व्वमध्यमशृङ्गाणां सकलं मध्यमस्य च ॥

| | | |
|---|---|---|
| सुन्दराननः । इति शब्दरत्नावली ॥ (यथा, भागवते । ४ । २१ । १५ । "सुनासः सुमुखः सौम्यः पीनांसः सुद्विज- स्मितः ॥") | | |

त्रिपृष्टो नाकपृष्ठो वा
अप्सरःशान्तिनिर्वृती ।
आनन्दोऽथ प्रमोदश्च स्वर्गाः शृङ्गे च
मध्यमे ॥
श्वेतश्च पौष्टिकश्चैव उपशोभनमन्मथौ
।
आह्लादः स्वर्गराजश्च स्वर्गाः शृङ्गे तु
पश्चिमे ॥
निर्म्ममो निरहङ्कारः
सौभाग्यश्चातिनिर्म्मलः ।
स्वर्गाश्चैते द्विजश्रेष्ठ पूर्व्वशृङ्गे
समर्थिताः ॥
एकविंशत्यमी स्वर्गा निविष्टा मेरुमूर्द्धनि
॥ * ॥
अहिंसादानकर्त्ता च यज्ञानां तपसां
तथा ।
तेषु तेषु वसन्ति स्म जनाः
क्रोधविवर्ज्जिताः ।
जलप्रवेशी चानन्दं प्रमोदं वह्निसाहसः
॥
भृगुप्रपाते सौम्यस्तु रणे चैवास्य
निर्म्मलः ॥
अनशने तु संवासे मृतो
गच्छेत्त्रिपिष्टपम् ।
क्रतुयाजी नाकपृष्ठमग्निहोत्री च
निर्वृतिम् ॥
तडागकूपकर्त्ता च लभते पौष्टिकं द्विज
।
सौवर्णदायी सौभाग्यं लभेत् स्वर्गं
महातपाः ॥
शीतकाले महावह्निं प्रज्वालयति यो
नरः ।
सर्व्वसत्त्वहितार्थाय स्वर्गं चाप्सरसं
लभेत् ॥
हिरण्यगोप्रदानेन निरहङ्कारमाप्नु यात्
।
भूमिदानेन शुद्धेन लभते शान्तिकं
पदम् ॥

"शीघ्रं गच्छाम भद्रं ते न नो विद्यात् सुयो-
धनः ॥")

**सुर**, श भैश्ययोः । इति कविकल्पद्रुमः ॥ (तुदा०-
पर०-अक०-सेट् ।) दन्त्यादिः । श,
सुरति
सोरिता सुषोर सुसोर । भा, दीप्तिः । ऐश्र्यं
ऐश्वर्य्यम् । इति दुर्गादासः ॥

**सुरः**, पुं, (सुष्ठु राति ददात्यभीष्टमिति । रा +
कः । यद्वा, सुरति शोभते इति । सुर +
इगुपधेति
कः । यद्वा, सुनोतीति । षुञ् अभिषवे +
"सुसूधाञ् गृधिभ्यः क्रन् ।" उणा० २ ।
२४ । क्रन् ।)
देवः । इत्यमरः । १ । १ । ७ ॥ (यथा,
रघुः । ३ । ५६ ।
"चुकोप तस्मै स भृशं सुरश्रियः
प्रसह्य केशव्यपरोपणादिव ॥"
सूर्य्यः । पण्डितः । इति केचित् ॥ (स्वरः
।
यथा, महाभारते । १३ । ८५ । ९१ ।
"लक्षणानि सुरास्तोमा निरुक्तं
सुरपङ्क्तयः ॥")

**सुरकरीन्द्रदर्पापहा**, स्त्री, (सुरकरीन्द्रस्य ऐरा-
वतस्य दर्पं हन्तीति । हन + डः । टाप् ।)
गङ्गा । यथा, --
"भगीरथपथानुगा सुरकरीन्द्रदर्पापहा
महेशमुकुटप्रभा गिरिशिरःपताका सिता ।
सुरासुरनरोरगैरजभवाच्युतैः संस्तुता
विमुक्तिफलदायिनी भगवती स्वयं राजते
॥"
इति कल्किपुराणे ३४ अध्यायः ॥

**सुरकारुः**, पुं, विश्वकर्म्मा । सुराणां कारुः
शिल्पीति बहुव्रीहिसमासनिष्पन्नः ॥

**सुरकृता**, स्त्री, (सुरेण कृता ।) गुडची । इति
राजनिर्घण्टः ॥

**सुरक्तः**, त्रि, (सु + रञ्ज + क्तः ।) शोभनराग-

**सुरङ्गदं**, क्ली, (सुष्ठुरङ्गं ददातीति । दा + कः ।)
पत्तङ्गम् । इति राजनिर्घण्टः ॥

**सुरङ्गधातुः**, पुं, (सुष्ठु रङ्गो यस्मात् तादृशो
धातुः ।) गैरिकम् । इति राजनिर्घण्टः ॥

**सुरङ्गयुक्**, [ज्] पुं, (सुरङ्गं युनक्तीति । युज् +
क्विप् ।) सुरङ्गं कृत्वा अपहरति यः । यथा, --
"कुजम्भिलः सुरङ्गाहिरधश्चीरः सुरङ्गयुक् ॥"
इति शब्दरत्नावली ।)

**सुरङ्गा**, स्त्री, सन्धिः । सीँध इति भाषा । इति
हलायुधः ॥ कैवर्त्तिका । इति राजनिर्घण्टः ॥

**सुरङ्गिका**, स्त्री, मूर्व्वा । इति राजनिर्घण्टः ॥

**सुरङ्गी**, स्त्री, (सुष्ठु रङ्गो यस्याः । ङीष् ।) काक-
नाशा । इति राजनिर्घण्टः ॥ रक्तशाभाञ्जनः ।
इति रत्नमाला ॥

**सुरजःफलः**, पुं, (सुष्ठुरजो यत्र तादृशं फलं
यस्य ।) पनसवृक्षः । इति भूरिप्रयोगः ॥

**सुरजनी**, स्त्री, (सुशोभना रजनी ।) रात्रिः ।
इति शब्दचन्द्रिका ॥

**सुरज्येष्ठः**, पुं, (सुरेषु ज्येष्ठः । ब्रह्मा । इत्यमरः ।
१ । १ । १६ ॥

**सुरञ्जनः**, पुं, (सुष्ठु रञ्जयतीति । रञ्ज + णिच् +
ल्युः ।) गुवाकवृक्षः । इति त्रिकाण्डशेषः ॥

**सुरतं**, क्ली, (सुष्ठु रतं रमणं यत्र ।) निधुवनम् ।
इति मेदिनी ॥ (यथा, कुमारे । १ । १० ।
"भवन्ति यत्रौषधयो रजन्या-
मतैलपूराः सुरतप्रदीपाः ॥")
सुरते वर्णनीयानि । यथा, --
सुरते सात्त्विका भावाः शीत्काराः कुट्टम-
लाक्षता ।
काञ्चीकङ्कणसञ्जीररवाधरनखक्षतिः॥"
इति कविकल्पलतायाम् १ स्तवके ३ कुसुमम्
॥
दयालौ, त्रि । इत्यमरटीका सारसुन्दरी । ३ ।

रौप्यदानेन शुद्धेन स्वर्गं गच्छति निर्म्मलम् ।
अश्वदानेन पुण्याहं कन्यादानेन मङ्गलम् ॥
द्विजेभ्यस्तर्पणं कृत्वा दत्त्वा वस्त्राणि भक्तितः ।
श्वेतन्तु लभते स्वर्गं यत्र गत्वा न शोचति ॥
कपिलागोप्रदानेन परार्द्ध ञ्चानुभूयते ।
गोवृषस्य प्रदानेन स्वर्गं मन्मथमश्नुते ॥
स पुमान् स सरित्स्नायी तिलधेनुप्रदस्तथा ।
छत्रोपानहदाता च स्वर्गं तत्फलशोभनम् ॥
देवायतनकर्त्तारो शुश्रू षणपरस्तथा ।
तीर्थयात्रापरश्चैव स्वर्गराजे महीयते ॥
एकान्नभोजी यो मर्त्यो नक्तभोजी च नित्यशः
उपवासी त्रिरात्राद्यैः शान्तस्वर्गं शुभं लभेत् ॥
सरित्स्नायी जितक्रोधो ब्रह्मचारी दृढव्रतः ।
निर्म्मलं स्वर्गमाप्नोति तथा भूतहिते रतः ।
विद्यादानेन मेधावी निरहङ्कारमाप्नुयात् ॥
येन येन हि भावेन यद्यद्दानं प्रयच्छति ।
तत्तत् स्वर्गमवाप्नोति यद्यदिच्छति मानवः ॥
यस्तु सर्व्वाणि दानानि ब्राह्मणेभ्यः प्रयच्छति ।
संप्राप्य न निवर्त्तेत दिवं शान्तमनामयम् ॥
शृङ्गन्तु पश्चिमं यच्च ब्रह्मा तत्र स्थितः स्वयम् ।
पूर्व्वशृङ्गे स्वयं विष्णुर्मध्ये चैव शिवः स्थितः ॥”
इति नारसिंहे । ३० । १४ -- ४५ ॥
अन्यत् कौर्म्मे ४२ । ४३ अध्याययोः वाराहे-
युक्तः । अतिशयरक्तविशिष्टः ।
अत्यनुरक्तः ।
इति केचित् ॥

**सुरक्तकः**, पुं, (सुरक्त + संज्ञायां स्वार्थे वा कन् ।) कोष म्रः । स्वर्णगैरिकम् । इति राजनिर्घण्टः ।

**सुरखण्डनिका**, स्त्री, बीणाभेदः । इति शब्दरत्नावली ॥ सुरमण्डलिका इति पाठान्तरम् ॥

**सुरगण्डः**, पुं, रोगविशेषः । इति भूरिप्रयोगः ॥ राजगाँड इति भाषा ॥

**सुरगुरुः**, पुं, (सुराणां गुरुः ।) बृहस्पतिः । इति त्रिकाण्डशेषः ॥ (यथा, कथासरित्सागरे । ११५ । ७२ ।
“ततो मुक्त्वा रणं देवसैन्ये ऽपीन्द्रमनुद्रुते ।
निनाय ब्रह्मभवनं भीतः सुरगुरुः शचीम् ॥”
देवपूज्ये, त्रि । यथा, महाभारते । १ । १ । ३२ ।
“यस्मात् पितामहो जज्ञे प्रभुरेकः प्रजापतिः ।
ब्रह्मा सुरगुरुः स्थाणुर्म्मनुः कः परमेष्ठ्यथ ॥”)

**सुरग्रामणीः**, पुं, (सुराणां ग्रामणीर्नेता ।) इन्द्रः । इति त्रिकाण्डशेषः ॥

**सुरङ्गं**, क्ली, (सुष्ठु रङ्गो यस्मात् ।) हिङ्गुलम् । पत्तङ्गम् । इति राजनिर्घण्टः ॥

**सुरङ्गः**, पुं, (सुष्ठु रङ्गो यस्मात् ।) नागरङ्गः । इति राजनिर्घण्टः ॥ गर्त्तविशेषः । इति सुरङ्गयुक्-
शब्ददर्शनात् ॥
१ । १५ ॥ अत्रार्थे सूरतः इति पाठः साधुः ॥ क्रीडायुक्तः । इति उणादिवृत्तौ उज्जलदत्तः । ५ । १४ ॥)

**सुरतताली**, स्त्री, (सुरतं तालयतीति । तल + णिच् + अण् । गौरादित्वात् ङीष् ।) दूती । शिरस्रक् । इति मेदिनी ॥

**सुरता**, स्त्री, (सुराणां भावः समूहो वा । सुर + तल् ।) देवत्वम् । इति मेदिनी ॥ (यथा, महाभारते । ५ । ९८ । १४ ।
“भवनं पश्य वारुण्यं यदेतत् सर्व्वकाञ्चनम् ।
यत् प्राप्य सुरतां प्राप्ताः सुराः सुरपतेः सखे ॥”)
सुरसमूहः । इति व्याकरणम् ॥ (सुष्ठु रता । अप्सरोविशेषः । यथा, महाभारते । १ । ६५ । ५१ ।
“केशिनी च सुवाहुश्च सुरता सुरजा तथा ॥”)

**सुरतोषकः**, पुं, (सुरान् तोषयतीति । तुष् + णिच् + ण्वुल् ।) कौस्तुभमणिः । इति शब्दरत्नावली ॥ देवप्रीतिकारके, त्रि ॥

**सुरथः**, पुं, चन्द्रवंशीयचैत्रराजपुत्त्रः । यथा, --
श्रीनारायण उवाच ।
“अत्रिश्च ब्रह्मणः पुत्त्रस्तस्य पुत्त्रो निशाकरः ।

रुद्रगीतासु च द्रष्टव्यम् ।

**सुम्पलुण्ठः**, पुं, कर्पूरकः । इति शब्दचान्द्रका ॥

**सुम्भः**, पुं, देशविशेषः । इति शब्दरत्नावली ॥

**सुयामुनः**, पुं, (शोभनं अतिप्रियं यामुनं यमुना-

सम्बन्धि जलं यस्य ।) विष्णुः ।
वत्सराजः ।
प्रासादः । अद्रिविशेषः । इति हेमचन्द्रः ॥
मेघविशेषः । इति मेदिनी ॥

**सुयोधनः**, पुं, (सुखेन युध्यतेऽसौ । सु + युव +

युच् ।) दुर्य्योधनराजः । इति त्रिकाण्डशेषः ॥
यथा, महाभारते । १ । १५५ । ३५ ।

स च कृत्वा राजसूयं द्विजराजो बभूव ह ॥
गुरुपत्न्याञ्च तारायां तद्बु भूव बुधः सुतः ।
बुधपुत्त्रश्च चैत्रश्च तत्पुत्त्रः सुरथश्च सः ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे । ५८ । ४ -- ५ ॥
सच स्वारोचिषमन्वन्तरे कोलापुर्य्यधिपतिः ।
तेनादौ पृथिव्यां दुर्गापूजा कृता । तत्प्रसादेन
च असौ सावर्णिर्नाम मनुर्जातः । यथा, --
“कालान्तरे पूजिता सा सुरथेन महात्मना ।
राज्ञा मेधसशिष्येण मृण्मय्याञ्च सरित्तटे ॥
मेषादिभिश्च महिषैः कृष्णसारैश्च गण्डकैः ।
छागैर्मोनैश्च कुष्माण्डैः पक्षिभिर्बलिभिर्म्भुने ॥
वेदोक्तानि च दत्त्वैव उपचाराणि षोडश ।
धृत्वा च कवचं ध्यात्वा संपूज्य च विधानतः ॥
राजा कृत्वा परीहारं वरं प्राप यथेप्सितम् ।
मुक्तिं संप्राप वैश्यश्च संपूज्य च सरित्तटे ॥
तुष्टाव राजा वैश्यश्च साश्रुनेत्रः पुटाञ्जलिः ।
विससर्ज मृण्मयीं तां गभीरे निर्म्मले जले ॥
तृण्मयीं मृण्मयीं दृष्ट्वा जलधौतां नराधिपः ।
रुरोद तत्र वैश्यश्च ततः स्थानान्तरं ययौ ॥

देवद्वेषकः ॥ (यथा, भागवते । १ । ३ । २४ ।
“ततः कलौ संप्रवृत्ते संमोहाय सुरद्विषाम् ।
बुद्धो नामाञ्जनसुतः कीकटेषु भविष्यति ॥”)

**सुरद्विपः**, पुं, (सुराणां द्विपः ।) देवहस्ती । इति केचित् ॥ (ऐरावतः । यथा, रघुः । ३ । ५५ ।
“हरेः कुमारोऽपि कुमारविक्रमः
सुरद्विपास्फालनकर्क्कशाङ्गुलौ ।
भुजे शचीपत्रविशेषकाङ्किते
स्वनामचिह्नं निचखान सायकम् ॥”)

**सुरधनुः**, [स्] क्ली, (सुरस्य धनुः ।) इन्द्रधनुः । इति जटाधरः ॥ (यथा, किराते । ७ । १६ ।
“यातस्य ग्रथिततरङ्गसैकताभे
विच्छेदं विपयसि वारिवाहजाले ।
आतेनुस्त्रिदशबधूजनाङ्गभाजां
सन्धानं सुरधनुषः प्रभामणीनाम् ॥”)

**सुरधूपः**, पुं, (सुरप्रियो धूपः ।) रालः । इति राजनिर्घण्टः ॥

**सुरनदी**, स्त्री, (सुराणां नदी ।) गङ्गा । इति भूरिप्रयोगः ॥ (यथा, महाभारते । ६ । ८० । ५ ।
“गङ्गायाः सुरनद्या वै स्वादुभूतं यथोदकम् ।
महोदधिगुणाभ्यासात् लवणत्वं नियच्छति ॥”)

**सुरनन्दा**, स्त्री, (सुरान् नन्दयतीति । नन्द + णिच् + अण् । टाप् ।) नदीविशेषः । इति शब्दरत्नावली ॥

**सुरनालः**, पुं, (सुरप्रियं नालमस्य ।) देवनलः । इति राजनिर्घण्टः ॥

**सुरनिम्नगा**, स्त्री, सुराणां निम्नगा ।) गङ्गा । इत्यमरः । १ । १० । ३१ ॥ (यथा, कथा-सरित्सागरे । ५२ । ३४२ ।
“त्यक्त्वा सर्व्वं तनुं त्यक्ष्यंस्तपसा सुरनिम्नगाम् ॥”)

**सुरनिर्गन्धं**, क्ली, पत्रकम् । इति राजनिर्घण्टः ॥

**सुरपुन्नागः**, पुं, (सुरप्रियः पुन्नागः । पुन्नाग-वृक्षविशेषः । तत्पर्य्यायः । नमेरुः २ सुरेष्टः ३ सुरपर्णिकः ४ सुरताङ्गः ५ । अस्य गुणाः पुन्नागवत् । इति राजनिर्घण्टः ॥

**सुरपुरी**, स्त्री, (सुरस्य पुरी ।) अमरावती । इति त्रिकाण्डशेषः ॥

**सुरप्रियः**, पुं, (सुराणां प्रियः । अगस्त्यपुष्प-वृक्षः । इति राजनिर्घण्टः ॥ इन्द्रः । बृहस्पतिः ।
इति केचित् ॥ देवहृद्ये, त्रि ॥

**सुरप्रिया**, स्त्री, (सुराणां प्रिया ।) जाती । स्वर्ण-रम्भा । इति राजनिर्घण्टः ॥ (अप्सराः । यथा, भागवते । ८ । १५ । १९ ।
“हेमजालाक्षनिर्गच्छद्धूमेनागुरुगन्धिना ।
पाण्डरेण प्रतिच्छन्नमार्गे यान्ति सुरप्रियाः ॥”)

**सुरभि**, क्ली, (सुष्ठु रभतेऽनेनेति । सु + रभ + इन् ।) स्वर्णम् । गन्धाश्म । इति शब्दरत्ना-वली ॥ सुन्दरः । साधुगन्धः । इति धरणिः ॥

**सुरभिः**, पुं, (सु + रभ + इन् ।) सुगन्धिः । इत्य-मरः । १ । ५ । ११ ॥ चम्पकः । वसन्तर्त्तुः । जातीफलवृक्षः । इति मेदिनी ॥ शमीवृक्षः । कदम्बवृक्षः । कणगुग्गुलुः । गन्धतृणम् । वकुलवृक्षः । रालः । इति राजनिर्घण्टः ॥ चैत्रमासः । धीरः । इति धरणिः ॥ गन्धफलः ।
इति शब्दरत्नावली ॥

**सुरभिः**, स्त्री, (सुर + रभ + इन् ।) शल्लकी । मातृभेदः । मुरा । गीः । इति मेदिनी ॥ पुस्त-कान्तरे मुरास्थाने सुरा इति पाठः । रुद्रजष्टा । वनमालिका । तुलसी । पाची । इति राज-निर्घण्टः ॥ पृथिवी । इति धरणिः ॥ गोमाता । (यथा, रघुः । १ । ८१ ।
“सुतां तदीयां सुरभेः कृत्वा प्रतिनिधिं शुचिः ।
आराधय सपत्नीकः प्रीता कामदुघा हि सा ॥”

त्यक्त्वा देहञ्च वैश्यश्च पुष्करे
दुष्करं तपः ।
कृत्वा जगाम गोलोकं दुर्गादेवीवरेण
च ॥
राजा ययौ स्वराज्यञ्च पूज्यो
निष्कण्टकं बली
भोगञ्च बुभुजे भूपः
षष्टिवर्षसहस्रकम् ॥
भार्य्यां स्वराज्यं संन्यस्य पुत्रे स
कालयोगतः ।
मनुर्बभूव सावर्णिस्तप्त्वा च पुष्करे
तपः ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५४
अध्यायः ॥ * ॥
विस्तारस्तु दुर्गाशब्दे द्रष्टव्यः ॥

**सुरदारु**, क्ली, (सुरप्रियं दारु ।) देवदारु । इति
रत्नमाला ॥ (यथा, भागवते । ८ ।
२ । १३ ।
"पिचुमर्द्दैः कोविदारैः सरलैः
सुरदारुभिः ॥")

**सुरदीर्घिका**, स्त्री, (सुराणां दीर्घिका ।) स्वर्ग-
गङ्गा । इत्यमरः । १ । १ । ५२ ॥

**सुरदुन्दुभी**, स्त्री, (सुराणां दुन्दुभीव आह्लाद-
कत्वात् ।) तुलसी । इति
राजनिर्घण्टः ॥

**सुरद्रुमः**, पुं, (सुराणां द्रुमः ।) देवनलः । इति
राजनिर्घण्टः ॥ देवदारु च ॥
(कल्पवृक्षादिः ।
यथा, भागवते । १० । ३८ । २२ ।
"न तस्य कश्चिद्दयितः सुहृत्तमो
न चाप्रियो द्वेष्य उपेक्ष्य एव वा ।
तथापि भक्तान् भजते यथा तथा
सुरद्रुमो यद्वदुपाश्रितोऽर्थदः ॥")

**सुरद्विट्**, [ष्] पुं, सुरान् द्वेष्टीति । द्विष् +
क्विप् ।) असुरः । इत्यमरः । १ ।
१ । १२ ॥
(यथा, रघुः । १० । १५ ।

**सुरपतिः**, पुं, (सुराणां पतिः ।) इन्द्रः । इत्यमरः
१ । १ । ४६ ॥ (यथा, महाभारते । ७ ।
१०१ । १८ ।
"पुनर्द्ददौ सुरपतिर्मह्यं वर्म्म सुसंग्रहम् ॥")

**सुरपथं**, क्ली, (सुराणां पन्थाः । समासे अः ।)
आकाशम् । इति हेमचन्द्रः ॥

**सुरपर्णं**, क्ली, (सुरप्रियं पर्णमस्य ।) ओषधि-
विशेषः । माचीपत्री इति ख्यातः ।
तत्पर्य्यायः ।
देवपर्णम् २ वीरपर्णम् ३ सुगन्धिकम् ४
माची-
पत्रम् ५ सूक्ष्मपत्रम् ६ देवार्हम् ७ गन्धपत्र-
कम् ८ । अस्य गुणाः । कटुत्वम् । उष्णत्वम्
।
कृमिश्वासवलासकफकासनाशित्वम्।
दीपनत्वम्
वर्ण्यत्वम् । बालहितत्वञ्च । इति
राजनिर्घण्टः ॥

**सुरपर्णिकः**, पुं, (सुरप्रियं पर्णमस्त्यस्येति ।
ठन् ।) सुरपुन्नागः । इति राजनिर्घण्टः ॥

**सुरपर्णिका**, स्त्री, (सुरपर्णी । संज्ञायां कन् ।)
पुन्नागः । इति हेमचन्द्रः ॥

**सुरपर्णी**, स्त्री, (सुरप्रियं पर्णमस्याः । ङीष् ।)
पलाशी । इति राजनिर्घण्टः ।

**सुरपादपः**, पुं, (सुराणां पादपः ।) कल्पवृक्षः । देव-
तरुशब्दस्वरसात् ॥ (यथा, भागवते । ८ । ५
। १७ ।
"वेत्रकीचकवेणुनां गुल्मानि सुरपादपान् ॥")

तस्या उत्पत्त्यादिर्यथा, --
नारद उवाच ।
"सा का वा सुरभी देवी गोलोकादागता च या
तज्जन्मचरितं ब्रह्मन् श्रोतुमिच्छामि तत्त्वतः ॥
श्रीनारायण उवाच ।
गवामधिष्ठातृदेवी गवामाद्या गवां प्रसूः ।
गवां प्रधाना सुरभी गोलोके सा समुद्भवा ॥
सर्व्वादिसृष्टिकथनं कथयामि निशामय ।
बभूव येन तज्जन्म पुरा वृन्दावने वने ॥
एकदा राधिकानाथो राधया सह कौतुकात् ।
गोपाङ्गनापरिवृतः पुण्यं वृन्दावनं ययौ ॥
सहसा तत्र रहसि विजहार च कौतुकात् ।
बभूव क्षीरपानेच्छा तदा स्वेच्छामयस्य च ॥
ससृजे सुरभिं देवो लीलया वामपार्श्वतः ।
वत्सयुक्तां दुग्धवतीं वत्सो नाम्ना मनोरथः ॥
दृष्ट्वा सवत्सां मुदामा रत्नभाण्डे दुदोह च ।
क्षीरं सधातिरिक्तञ्च जन्ममृत्युजरापहम् ॥
तदुष्णञ्च पयः स्वादु पपौ गोपीपतिः स्वयम् ।
सरो बभूव पयसा भाण्डविस्रं शनेन च ॥
दैर्घे च विस्तृते चैव परितः शतयोजनम् ।

| | | |
|---|---|---|
| “प्रणिपत्य सुरास्तस्मै शमयित्रे सुरद्विषाम् ।<br>अथैनं तुष्टुवुः स्तुत्यमवाङ्मनसगोचरम् ॥”<br>राहुः । यथा, तत्रैव । २ । ३९ ।<br>“उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव ॥”<br>तथाच बृहत्संहितायाम् । ९७ । २ ।<br>“पड्भिः सितस्य मासैरब्दन शनेः सुरद्विषो-<br>ऽब्दार्द्धात् ॥”) | | |

गोलोके सुप्रसिद्धश्च स च क्षीरसरोवरः ॥
गोपिकानाञ्च राधायाः क्रीडावापी बभूव सा ।
रत्नेन खचिता तूर्णं भूता वापीश्वरेच्छया ॥
बभूवुः कामधेनूनां सहसा लक्षकोटयः ।
तावन्तो हि च वत्माश्च सुरभीलोमकूपतः ।
तासां पुत्त्राः प्रपौत्त्राश्च सम्बभूवुरसंख्यकाः ।
कथिता च गवां सृष्टिस्तया च पूजितं जगत् ॥
पूजाञ्चकार भगवान् सुरभ्याश्च पुरा मुने ।
ततो बभूव तत्पूजा त्रिषु लोकेषु दुर्लभा ॥
दीपान्वितापरदिने श्रीकृष्णस्याज्ञया हरेः ।
बभूव सुरभीपूजा धर्म्मवक्त्रादिति श्रुतम् ॥
ध्यानं स्तोत्रं मूलमन्त्रं यद्यत् पूजाविधिक्रमम् ।
वेदोक्तञ्च महाभाग निबोध कथयामि ते ॥
ॐ सुरभ्यै नम इति मन्त्रस्तस्याः षडक्षरः ।
सिद्धो लक्षजपेनैव भक्तानां कल्पपादपः ॥
ध्यानं यजुर्व्वेदोक्तं तत् पूज्यञ्च सर्व्वसम्मतम् ।
ऋद्धिदं वृद्धिदञ्चैव मुक्तिदं सर्व्वकामदम् ॥
लक्ष्मीस्वरूपां परमां राधासहचरीं पराम् ।
गवामधिष्ठातृदेवीं गवामाद्यां गवां प्रसूम् ॥

**सुरभिः**, त्रि, (सु + रभ + इन् ।) सुगन्धिः ।
(यथा, मनुः । ३ । २०९ ।
"उपवेश्य तु तान् विप्रानासनेष्वजुगुप्सितान् ।
गन्धमाल्यैः सुरभिभिरर्च्चयेद्देवपूर्व्वकम् ॥")
कान्तम् । इति मेदिनी ॥ (यथा, रघुः । २ । २ ।
"निवर्त्त्य राजा दयितां दयालु-
स्तां सौरभेयीं सुरभिर्यशोभिः ।
पयोधरीभूतचतुःसमुद्रां
जुगोप गोरूपधरामिवोर्व्वीम् ॥")
धीरः । विख्यातः । इति धरणिः ॥

**सुरभिका**, स्त्री, (सुरभि + स्वार्थे कन ।) स्वर्ण-कदली । इति राजनिर्घण्टः ॥

**सुरभिगन्धिः**, त्रि, (सुरभिर्गन्धो यस्य । "गन्धस्ये-दुत्पूतिसुसुरभिभ्यः ।" ५ । ४ । १३५ । इति इकारः ।) शोभनगन्धयुक्तः । इति केचित् ॥

**सुरभित्रिफला**, स्त्री, (सुरभिः सुगन्धिस्त्रिफला ।) सुगन्धत्रिफला । इति राजनिर्घण्टः ॥

**सुरभित्वक्**, [च्] स्त्री, (सुरभिः त्वक् यस्याः ।) वृहदेला । इति राजनिर्घण्टः ॥

**सुरभिदारुः**, पुं, (सुरभि सुगन्धि दारु यस्य । सरलवृक्षः । इति राजनिर्घण्टः ॥

**सुरभिपत्रा**, स्त्री, (सुरभि पत्रं यस्याः ।) जम्बू-वृक्षः । राजजम्बूः । इति राजनिर्घण्टः ॥

**सुरभिबाणः**, पुं, (सुरभिः साधुगन्धः बकुलादि-पुष्पं वा बाणो यस्य ।) कामदेवः । इति केचित् ॥

**सुरभिवल्कलं**, क्ली, (सुरभि सुगन्धि वल्कलं यस्य ।) गुडत्वक् । इति शब्दरत्नावली ॥

**सुरभिस्रवा**, स्त्री, (सुरभिः सुगन्धिः स्रवो निर्य्यासो यस्याः ।) सल्लकी । इति राजनिर्घण्टः ॥

**सुरभी**, स्त्री, (सुरभि + वा ङीष् ।) सुगन्धिः ।

**सुरभूरुहः**, पुं, (सुराणां भूरुहः ।) देवदारुः । इति भावप्रकाशः ॥ (कल्पवृक्षादिश्च ॥)

**सुरमृत्तिका**, स्त्री, (सुरप्रिया मृत्तिका ।) तुवरी । इति राजनिर्घण्टः ॥

**सुरमेदा**, स्त्री, (सुरप्रियो मेदो यस्याः ।) महा-मेदा । इति राजनिर्घण्टः ॥ (महामेदाशब्दे-ऽस्या विशेषो ज्ञातव्यः ॥)

**सुरर्षिः**, पुं, (सुरश्चासौ ऋषिश्चेति ।) देवर्षिः ।
इत्यमरः । १ । १ । ५१ ॥ स तु नारदतुम्बुरु-
कोलाहलादिः । यथा । ब्रह्मर्षिदेवर्षिराजर्षि-
महर्षिपरमर्षिकाण्डर्षिश्रुतिभेदात् सप्तप्रकार-
ऋषयस्तत्र नारदाद्याः सुरर्षय उक्ता इति
भरतः ॥ (यथा, भागवते । ४ । २४ । ६३ ।
"महानहं खं मरुदग्निवार्धराः
सुरर्षयो भूतगणा इदं यतः ॥"
तथाच महारते । १ । १ । २२७ ।
"इति राज्ञां चतुर्व्विंशन्नारदेन सुरर्षिणा ।
पुत्त्रशोकाभितप्ताय पुरा शैव्याय कीर्त्तितम् ॥")

**सुरलता**, स्त्री, (सुरप्रिया लता ।) महाज्योति-ष्मती । इति राजनिर्घण्टः ॥

**सुरला**, स्त्री, (सुरान् लातीति । ला + कः ।) गङ्गा । इति हारावली ॥ नदीविशेषः । इति शब्दचन्द्रिका ॥

**सुरलासिका**, स्त्री, (सुरानपि लासयति आह्ला-दयतीति । लस् + णिच् + ण्युल् । टापि अत इत्त्वम् ।) वंशीवाद्यम् । यथा, --
"सालेयिका च सालेयी सालिका सुरलासिका ॥"
इति शब्दरत्नावलीति केचित् ॥

**सुरलोकः**, पुं, (सुराणां लोकः ।) स्वर्गः । इत्य-मरः । १ । १ । ६ ॥ (यथा, भागवते । ७ । १० । १३ ।

पवित्ररूप्रां पूज्याञ्च भक्तानां
सर्व्वकामदाम् ।
यथा पूतं सर्व्वविश्वं तां देवीं सुरभीं
भजे ॥
घटे वा धेनुशिरसि बद्धस्तम्भे
गवामपि ।
शालग्रमे जले वाग्नौ सुरभों
पूजयेद्द्विजः ।
दीपान्वितापरदिने पूर्व्वाह्णे
भक्तिसंयुतः ।
यः पूजयेच्च सुरभिं स च पूज्यो
भवेद्भुवि ॥
एकदा त्रिषु लोकेषु वाराहे
विष्णुमायया ।
क्षीरं जहार सहसा चिन्तिताश्च
सुरादयः ॥
ते गत्वा ब्रह्मलोकञ्च ब्रह्माणं
तुष्टुवुस्तदा ।
तदाज्ञया च सुरसीं तुष्टाव
पाकशासनः ॥
महेन्द्र उवाच ।
नमो देव्यै महादेव्यै सुरभ्यै च नमो
नमः ।
गवां वीजस्वरूपायै नमस्ते
जगदम्बिके ॥
नमो राधाप्रियायै च पद्मेशायै नमो
नमः ।
नमः कृष्णप्रियायै च गवां मात्रे नमो
नमः ॥
कल्पवृक्षस्वरूपायै सर्व्वेषां सन्ततं
परम् ।
श्रीदामधनदायै च वृद्धिदायै नमो
नमः ।
यशोदायै कीर्त्तिदायै धर्म्मदायै नमो
नमः ॥
स्तोत्रश्रवणमात्रेण तुष्टा हृष्टा
जगत्प्रसूः ।
आविर्ब्बभूव तत्रैव ब्रह्मलोके सनातनी
॥
महेन्द्राय वरं दत्त्वा
वाञ्छितञ्चातिदुर्लभम् ।

इत्यमरटीकायां भरतः । २ । ४ । १२३ ॥
शल्लकी । इति शब्दचन्द्रिका ॥ (यथा, --
“शल्लकी गजभक्ष्या च सुवहा सुरभी रसा ।
महेरुणा कुन्दरुकी वल्लकी च बहुस्रवा ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
ह्रस्वेकारान्तसुरभिशब्दार्थोऽप्यत्र॥ गोमाता ।
यथा, --
“सा का वा सुरभी देवी गोलोकादागता च या
।
तज्जन्मचरितं ब्रह्मन् श्रोतुमिच्छामि तत्त्वतः
॥”
इति ब्रह्मबैवर्त्ते प्रकृतिखण्डे ४७ अध्यायः ॥
(ह्रस्वेकारान्तसुरभिशब्देऽस्याः विशेषविवरणं
ज्ञेयम् ॥) अथ गोयात्राप्रवेशविक्रयदिनम् ।
तत्र तिथय अमावस्याष्टमीचतुर्द्दशीविष्टिभिन्नाः
तत्र नक्षत्राणि रोहिणी पूर्व्वफल्गुनी पूर्व्वा-
षाढा पूर्व्वभाद्रपद् उत्तरफल्गुनी उत्तराषाढा
उत्तरभाद्रपत् श्रवणा भरणी चित्रा एतद्व्यति-
रिक्तानि । योगाः व्यतोपातवैधृतिभिन्नाः ।
तत्र वाराः क्रूरग्रहभिन्नाः । इति ज्योतिष-
तत्त्वम् ॥

**सुरभीरसा**, स्त्री, शल्लकीवृक्षः । इत्यमरटीकायां
मथुरेशः । २ । ४ । १२३ ॥

“कीर्त्तिं विशुद्धां सुरलोकगीतां
विहाय मामेष्यति मुक्तबन्धः ॥”)

**सुरवर्त्म**, [न्] क्ली, (सुराणां वर्त्म ।) आकाशम् ।
इत्यमरः । १ । २ । १ ॥

**सुरवल्लभा**, स्त्री, (सुराणां वल्लभा ।) श्वेतदूर्व्वा ।
इति राजनिर्घण्टः ॥

**सुरवल्ली**, स्त्री, (सुराणां वल्ली ।) तुलसी । इति
राजनिर्घण्टः ॥

**सुरवैरी**, [न्] पुं, (सुराणां वैरी ।) असुरः ॥
इति शब्दरत्नावली ॥

**सुरशत्रुः**, पुं, (सुराणां शत्रुः ।) असुरः । इति हलायुधः
॥

**सुरशाखी**, [न्] पुं, (सुराणां शाखी ।) कल्पवृक्षः ।
इति जटाधरः ॥

**सुरश्रेष्ठा**, स्त्री, (सुरेषु श्रेष्ठा ।) ब्राह्मी । इति
राजनिर्घण्टः ॥

**सुरसं**, क्ली, (शोभनो रसो यस्य ।) वोलम् ।
त्वचम् । गन्धतृणम् इति राजनिर्घण्टः ॥
तुलसी । इति मेदिनी ॥

**सुरसः**, पुं, (शोभनो रसो यस्य ।) सिन्धुवारः ।
इति शब्दरत्नावली ॥ (अस्य पर्य्यायो यथा,
--
“इन्द्राणी चेन्द्रः सुरसो निगुण्डी श्वेतवारकः
॥”
इति वैद्यकरत्नमालायाम् ॥)

| | | |
|---|---|---|
| जगाम सा च गोलोकं ययुर्देवादयो गृहम् ॥<br>बभूव विश्वं सहसा दुग्धपूर्णञ्च नारद ।<br>दुग्धाद्घृतं ततो यज्ञस्ततः प्रीतिः सुरस्य च ॥<br>इदं स्तोत्रं महापुण्यं भक्तियुक्तश्च यः पठेत् ।<br>स गोमान् धनवांश्चैव कीर्त्तिमान् पुण्यवान्<br>भवेत् ॥<br>स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षितः ।<br>इह लोके सुखं भुक्ता यात्यन्ते कृष्णमन्दिरम् ॥<br>सुचिरं निवसेत्तत्र करोति कृष्णसेवनम् ।<br>न पुनर्भवनं तस्य ब्रह्मपुत्त्र भवे भवेत् ॥”<br>इति श्रीब्रह्मवैवर्त्ते प्रकृतिखण्डे सुरभ्युपाख्यानं<br>नाम ४७ अध्यायः ॥ | | |

मोचरसः । इति राजनिर्घण्टः ॥ (पीतशालः ।
अस्य पर्य्यायो यथा, --
“सुरसो बीजकश्चैव पीतशालोऽभिधीयते ॥”
इति गारुडे २०८ अध्यायः ॥
तुलसीविशेषः । अस्य गुणा यथा, --
“हिक्काकासविषश्वासपार्श्वशूलविनाशनः ।
पित्तकृत्कफवातघ्नः सुरसः पूतिगन्धनुत् ॥”
इति चरके सूत्रस्थाने । २७ अध्यायः ॥
“कफानिलविषश्वासकासदौर्गन्ध्यनाशनः ।
पित्तकृत् पार्श्वशूलघ्नः सुरसः समुदाहृतः ॥”
इति सुश्रुते सूत्रस्थाने ४६ अध्यायः ॥)

**सुरसः**, त्रि, (शोभनो रसो यस्य ।) स्वादुः । इति
मेदिनी ॥ सुन्दररसयुक्तश्च । (यथा, बृहत्-
संहितायाम् । ५४ । १०३ ।
“तस्यां प्रभूतं सुरसञ्च तोयं
कृष्णाथवा यत्र च रक्तमृत् वा ॥”)

**सुरसद्म**, [न्] क्ली, (सुराणां सद्म ।) स्वर्गः । इति
हलायुधः ॥ (देवगृहम् । यथा, कथासरित्-
सागरे । ९३ । ८३ ।
“एत मोक्षं प्रयातेति वदन्त्यामिव दूरतः ।
वाताक्षिप्तसमुत्क्षिप्तैः सुरसद्मध्वजांशुकैः ॥”)

**सुरसम्भवा**, स्त्री, (सुरप्रियः सम्भवो यस्याः ।)
आदित्यभक्ता । इति राजनिर्घण्टः ॥

**सुरसरित्**, स्त्री, (सुराणां सरित् ।) गङ्गा । इति
हलायुधः ॥ (यथा, रघुः । २ । ७५ ।
“सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम् ॥”)

**सुरसर्षपकः**, पुं, (सुरप्रियः सर्षपः । ततः कम् ।)
देवसर्षपः । इति राजनिर्घण्टः ॥

**सुरसा**, स्त्री, (शोभनो रसो यस्याः ।) तुलसी ।
यथा । सुरसा स्त्री तु पर्णासे । इति शब्दरत्ना-
वली ॥ पर्णासे तु नपुंसकम् । इति मुद्राङ्कित-
मेदिनी ॥ पर्णासे पुंनपुंसकम् । इति हस्ताक्षर-
मेदिनी ॥ सुरसस्तु त्रिषु स्वादौ पर्णासे न नपुं-
सकम् । इति च कस्याञ्चिन्मेदिन्यां पाठः ॥ * ॥
रास्ना । इत्यमरः । २ । ४ । ११४ ॥ मिश्रेया ।
राक्षसीविशेषः । तद्विषयको मन्त्रो
यथा, --
“हिमवदुत्तरे कूले सुरसा नाम राक्षसी
।
तस्या नूपुरशब्देन विशल्या गुर्व्विणी
भवेत् ॥”
इति हारीते चिकित्सितस्फाने ५१
अध्याये ॥)

**सुरसाष्टः**, पुं, वृक्षगणविशेषः । यथा, --
“निर्गुण्डी तुलसी ब्राह्मी बृहती
कण्टकारिका
पुननवेति मनिभिः सुरसाष्टः
प्रकीर्त्तितः ॥”
इति शब्दचन्द्रिका ॥

**सुरसिन्धुः**, पुं, (सुराणां सिन्धुः ।) गङ्गा । इति
केचित् ॥ (यथा, कथासरित्सागरे ।
१८ । ६२ ।
“निवसन्ति च देशेऽपि
सुरसिन्धुसमाश्रिते ॥”)

**सुरसुन्दरी**, स्त्री, (सुराणां सुन्दरी रमणी सुरेषु
सुन्दरी इति वा ।) अप्सरसः । दुर्गा ।
इति
केचित् ॥ योगिनीविशेषः । तद्विवरणं
योगिनी-
शब्दे द्रष्टव्यम् ॥ (सुरस्त्री । यथा,
किराते । ५ । २८ ।
“अस्मिन् रतिश्रमनुदश्च
सरोजवाताः
स्मर्त्तुं दिशन्ति न दिवः
सुरसुन्दरीभ्यः ॥”)

**सुरा**, स्त्री, (सु अभिषवे + क्रन् । स्त्रियां टाप् ।
इत्युणादिवृत्तौ उज्ज्वलः । २ । २४ ।
यद्वा, सुष्ठु
रायन्त्यनयेति । सु + रै शब्दे +
“आतश्चोप-
सर्गे । ३ । ३ । ११६ । इत्यङ् । टाप्
।)
“सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां
पिबेत् ।
तथा स्वकाये निर्दग्धे मुच्यते
किल्विषात्ततः ॥
गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा ।
पयो घृतं वा मरणाद्गोसकृद्रसमेव वा ॥
कणान् वा भक्षयेदब्दं पिण्याकं वा
सकृन्निशि ।
सुरापानापनुत्त्यर्थं बालवासा जटी
ध्वजी ॥
सुरा वै मलमन्नानां पाप्मा च मलमुच्यते
।
तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां
पिबेत् ॥
गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा
सुरा ।
यथैवैका तथा सर्व्वा न पातव्या
द्विजोत्तमैः ॥
यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम्
।
तद्ब्राह्मणेन नात्तव्यं देवानामश्नता
हविः ॥
अमेध्ये वा पतेन्मत्तो वैदिकं
वाप्युदाहरेत् ।
अकार्य्यमन्यत् कुर्य्याद्वा ब्राह्मणो
मदमोहितः ॥
यस्य कायगतं ब्रह्म मद्येनाप्लाव्यते
सकृत् ।
तस्य व्यपैति ब्राह्मण्यं शूद्रत्वञ्च स
गच्छति ॥
एषा विचित्राभिहिता सुरापानस्य
निष्कृतिः ॥
इति मानवे ११ । ९१ -- ९९ ॥
सौत्रामणियज्ञेऽपि तत्पाननिषेधो यथा,
--
“यद्घ्राणमक्षो विहितः सुराया-
स्तथा पशोरालभनं न हिंसा ।
एवं व्यवायः प्रजया न रत्यै
इमं विशुद्धं न विदुः स्वधर्म्मम् ॥”

इति शब्दचन्द्रिका ॥ ब्राह्मी । इति रत्नमाला ॥
महाशतावरी । इति राजनिर्घण्टः ॥ दुर्गा ।
इति केचित् ॥ नागमाता । इति मेदिनी ॥
यथा, --
“ततो देवाः सगन्धर्व्वाः सिद्धाश्च परमर्षयः ।
अब्रुवन् सूर्य्यसङ्काशां सुरसां नागमातरम् ॥
अयं वातात्मजः श्रीमान् प्लवते सागरोपरि ।
हनूमान्नाम तस्य त्वं मुहूर्त्तं विघ्नमाचर ॥
राक्षसं रूपमास्थाय सुघोरं पर्व्वतोपमम् ।
दृष्ट्वा करालं पिङ्गाक्षं वक्त्रं कृत्वा नभस्पृशम् ॥
वलमिच्छामहे ज्ञातुं भूयश्चास्य पराक्रमम् ।
त्वां विजेष्यत्युपायेन विषादं वा गमिष्यति ॥”
इति वाल्मोकीये रामायणे सुन्दराकाण्डे १ सर्गः ॥
नदीभेदः । इति श्रीभागवते ५ स्कन्धे १९
अध्यायः ॥ (अप्सरोविशेषः । यथा, महा-
भारते । १ । १२३ । ६० ।
“पुण्डरीका सगन्धा च सुरसा च प्रमाथिनी ॥”

चषकम् । मद्यम् । इति मेदिनी ॥
अस्याः
पर्य्यायगुणादि मदिराशब्दे मद्यशब्द
च
द्रष्टव्यम् । सुराया विशेषगुणा यथा, --
“कृशानां सक्तमूत्राणां
ग्रहण्यर्शोविकारिणाम्
सुरा प्रशस्ता वातघ्नी
स्तन्यरक्तक्षयेषु च ॥”
इति राजवल्लभः ॥
तत्पानप्रायश्चित्तं यथा, --
“ब्रह्मघ्नश्च सुरापश्च स्तेयी च
गुरुतल्पगः ।
सेतु दृष्ट्वा विशुध्यन्ते तत्संयोगी च
पञ्चमः ।
ततो धेनुशतं दद्यात् ब्राह्मणानान्तु
भोजनम् ॥”
इति गारुडे २२६ अध्यायः ॥ * ॥
तत्पाने शुक्राचार्य्यशापो यथा, --
“सुरापानाद्वञ्चनां प्रापयित्वा
संज्ञानाशं चैनमस्यातिघोरम् ।
दृष्ट्वा कचञ्चापि तथापि रूपं
पीत तथा सुरया मोहितेन ॥
समन्युरुत्थाय महानुभाव-
स्तदोशना विप्रहितं चिकीर्षुः ।
काव्यः स्वयं वाक्यमिदं जगाद
सुरापानं प्रति वै जातशङ्कः ॥
यो ब्राह्मणोऽद्यप्रभृतीह कश्चित्
मोहात् सुरां पास्यति मन्दबुद्धिः ।
अपेतधर्म्मा ब्रह्महा चैव स स्यात्
अस्मिन् लोके गर्हितः स्यात् परे च ॥
मया चेमां विप्रधर्म्मोक्तसीमां
मर्य्यादां वै स्थापितां सर्व्वलोके ।
सन्तो विप्राः शुश्रुवांसो गुरूणां
देवा दैत्याश्चोपशृण्वन्तु सर्व्वे ॥”
इति महाभारते । १ । ७६ । ५९ --
६२ ॥
ब्राह्मणक्षत्त्रियवैश्यानां
त्रिविधसुरापानप्राय-
श्चित्तादि यथा, --

इति श्रीभागवते । ११ । ५ । १३ ॥ *
॥
“यस्मात् सुराया घ्राणभक्षः अवघ्राणं स
एव
विहितः न पानं तथा पशोरपि
आलभनमेव
विहितं न तु हिंसा । अतो न
यथेष्टभक्षणाभ्य-
नुज्ञेत्यर्थः । व्यवायोऽपि प्रजया
निमित्तभूतया न
रत्यै । अतो मनोरथवादिन इमं विशुद्धं
स्वधर्म्मं
न विदुरिति ।” इति तट्टीकायां
श्रीधरस्वामी ॥
अन्यत् प्रायश्चित्तशब्दे द्रष्टव्यम् ॥ * ॥
सुरापाने
वर्णनीयानि यथा, --
सुरापाने विकलता स्खलनं वचने गतौ
।
लज्जा मानच्यु तिः प्रेमाधिक्यं
रक्ताक्षता भ्रमः ॥”
इति कविकल्पतायां १ स्तवके ३
कुसुमम् ॥

**सुराः**, [रै] पुं स्त्री, धनवान् । सु शोभनो रा धनं
यस्येति बहुव्रीहौ कृते रैशब्दस्य रादेशेन
निष्पन्नः ॥

**सुराकरः**, पुं, (सुराया आकरः ।) नारिकेल-
वृक्षः । इति केचित् । मद्योत्पत्तिस्थानम्
। यथा ।
“आकराः शुचयः सर्व्वे वर्जयित्वा
सुराकरम् ।”
इति शुद्धितत्त्वे बौधायनवचनम् ॥

**सुराङ्गना**, स्त्री, (सुराणामङ्गना ।) देवपत्नी
अप्सरसः ॥ इति केचित् । यथा, --
“सुरद्रुमूलमण्डपे विचित्ररत्ननिर्म्मिते
लसद्वितानभूषिते सलील-विभ्रमालसम्
।
सुराङ्गनाभवल्लवीकरप्रपञ्चचामर-

| | | स्फुरत्स्मीर-वीजितं सदाच्युतं भजामि तम् ॥”<br>इति छन्दोमञ्जर्य्याम् २ स्तवकः ॥<br>**सुराचार्य्यः**, पुं, (सुराणामाचार्य्यः ।) बृहस्पतिः । इत्यमरः । १ । २ । २४ ॥<br>**सुराजकः**, पुं, सुष्ठु राजते इति । राज + ण्वल् ।) भृङ्गराजः । इति शब्दमाला ॥ |
|---|---|---|

**सुराजा**, [न्] पुं, (सुष्ठु पूजितो राजा । "न

पूजनात् ।" ५ । ४ । ६९ । इति न टच् ।) शोभनो
राजा । इति मुग्धबोधव्याकरणम् ॥ (सुष्ठु-
राजा यस्य । सुन्दरनृपतियुक्ते देशादौ, त्रि ।
यथा, --
"सुराज्ञि देशे राजन्वान् स्यात्ततोऽन्यत्र
राजवान् ॥"
इत्यमरः । २ । १३ ॥)

**सुराजीवी**, [न्] पुं, सुरया जीवतीति । जीव +

णिनिः ।) शौण्डिकः । यथा, --
"कल्पपालः सुराजीवी शौण्डिको मण्डहारकः
वारिवासः पानबणिक् ध्वजो ध्वज्यासुतीबलः ॥
इति हेमचन्द्रः ॥
(यथा याज्ञवल्क्यः । १ । १६४ ।
"चैलधावसुराजीविसहोपपतिवेश्मनाम् ॥")

**सुरापः**, (त्रि, सुरां पिबतीति । पा + कः ।)

सुरापानकर्त्ता । यथा, --
"ब्रह्महा जायते यक्ष्मी सुरापः श्यावदन्तकः ।
सुवर्णहारी कुनखी दुश्चर्म्मा गुरुतल्पगः ॥"
इति प्रायश्चित्तविवेकः ॥

**सुरापगा**, स्त्री, (सुराणां आपगा ।) गङ्गा ।

इति जटाधरः ॥ (यथा, किराते । ५ । ४० ।
"इह सनियमयोः सुरापगाया-
मुषसि सयावकसव्यपादलेखा ।
कथयति शिवयोः शरीरयोगं
विषमपदा पदवी विवर्त्तनेषु ॥")

**सुरापाणाः**, पुं, भूम्नि, (सुरा पानं येषाम् । "पानं

देशे ।" ८ । ४ । ९ इति णत्वम् ।) पूर्व्वदेशस्थाः ।
यथा । सुरापाणाः प्राच्याः । इति संक्षिप्तसार-
टीकायां गोयीचन्द्रः

**सुरापा(णं)नं**, क्ली, (सुरायाः पानम् । "वा भाव-

करणयोः ।" ८ । ४ । १० । इति विभाषया

**सुरारिहन्ता**, [ऋ] पुं, (सुरारीणां हन्ता ।)

विष्णुः । यथा, --
मैत्राद्यपादे स्वपितीह विष्णु-
र्व्वैष्णव्यमध्ये परिवर्त्तते च ।
पौष्णावसाने च सुरारिहन्ता
प्रबुध्यते मासचतुष्टयेन ॥"
इति तिथ्यादितत्त्वम् ।

**सुरार्हं**, क्ली, (सुरान् अर्हतीति । अर्ह + अण् ।)

हरिचन्दनम् । इति राजनिर्घण्टः ॥ स्वर्णम् ।
इति कचित् ॥

**सुरालयः**, पुं, (सुराणां आलयः ।) सुमेरुः । इत्य-

मरः । १ । १ । ५२ ॥ स्वर्गः । यथा गारुडे ।
"गङ्गां येऽत्रावगाहन्ते विधिना च नराधिप ।
चतुर्युगसहस्रं ते न पतन्ति सुरालयात् ॥"
इति तिथ्यादितत्त्वम् ॥
(देवमन्दिरम् । यथा, भागवते । ७ । १५ ।
४९ ।
"पूर्त्तं सुरालयारामकूपाजीव्यादिलक्षणम् ॥"
सुराया आलयः ।) सुरानिलयश्च ॥

**सुराष्ट्रः**, पुं, (शोभनं राष्ट्रं यस्य ।) देशवि-

शेषः । सुरत् इति ख्यातः । स तु भारतवर्षस्य
प्रतोच्यां दिशि वर्त्तते । इति सौराष्ट्रिकशब्द-
टीकायां भरतः ॥ (यथा महाभारते । ३ ।
८८ । १९ ।
"सुराष्ट्रे ष्वपि वक्ष्यामि पुण्यान्यायतनानि च ॥"
श्रीरामचन्द्रस्य परिवारविशेषः । स तु श्रीराम-
यन्त्रे पद्मदलमध्यतः पूज्यः । यथा, अगस्त्य-
संहितायाम् ।
"धूम्रं जयन्तं विजयं सुराष्ट्रं राष्ट्रवर्द्धनम् ।

**सुरुङ्गा**, स्त्री, सुरङ्गा । सीँध इति सुरङ्ग इति च

भाषा । तत्पर्य्यायः । सन्धिला २ सन्धिः ३ ।
इति जटाधरः ॥ (यथा, महाभारते । १ ।
१४९ । ११ ।
"ज्ञात्वा तु तद्गृहं सर्व्वमादीप्तं पाण्डुनन्दनाः ।
सुरुङ्गां विविशुस्तूर्णं मात्रा सार्द्धमरिन्दमाः ॥"

**सुरुङ्गाहिः**, पुं, (सुरुङ्गायामहिरिव ।) चौर-

विशेषः । यथा, --
"कुजम्भिलः सुरङ्गाहिरधश्चौरः सुरङ्गयुक् ।"
इति शब्दरत्नावली ॥

**सुरूपं**, क्ली, (सु शोभनं रूपमस्य ।) तूलम् । इति

राजनिर्घण्टः ॥

**सुरूपः**, त्रि, (सु सुन्दरं रूपमस्य ।) शोभनरूप-

विशिष्टः । यथा, --
"सुन्दरं रुचिरं चारु मनोज्ञं मञ्जु मञ्जुलम् ।
कान्तं मनोरमं रुच्यं सुषमं साधु शोभनम् ॥
वल्गु हारि सुरूपाभिरूपदिव्यमनोहरम् ॥"
इति जटाधरः ॥
(यथा, बृहत्संहितायाम् । ५८ । ४० ।
"शाम्बश्च गदाहस्तः प्रद्युम्नश्चापभृत् सुरूपश्च ॥"
विद्वान् । यथा, --
"विद्वान् विपश्चिद्दोषज्ञः सन् सुधीः कोविदो बुधः
व्यक्तो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः
कविः ॥

णत्वम् ।) मद्यपानम् । यथा, --
"व्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः ।
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह
॥"
इति प्रायश्चित्तविवेकः ॥
अवदंशः । इति शब्दरत्नावली ॥

**सुराभागः**, पुं, (सुराया भागः ।) सुराया अग्र-

भागः । इति शब्दचन्द्रिका ॥

**सुरामण्डः**, पुं, (सुराया मण्डः ।) सुराया अग्र-

भागः । तत्पर्य्यायः । कारोत्तरः २ । इत्य-
मरः । २ । १० । ४३ ॥ कारोत्तमः ३ । इति
तट्टीका ॥ कालोत्तरः ४ सुराभागः ५ । इति
शब्दचन्द्रिका ॥

**सुरारिः**, पुं, (सुराणां अरिः ।) असुरः । इति

शब्दरत्नावली ॥ (यथा, कुमारे । ३ । ९ ।
"प्रसीद विश्राम्यतु वीर वज्रं
शरैर्म्मदीयैः कतमः सुरारिः ।
विभेतु मोघीकृतबाहुवीर्य्यः
स्त्रीभ्योऽपि कोपस्फुरिताधराभ्यः ॥")

अकोपं धूम्रपालाख्यं सुमन्त्रं दलमध्यतः
॥"
इति तिथ्यादितत्त्वम् ॥

**सुराष्ट्रजं**, क्ली, (सुराष्ट्रे जायते इति । जन् + डः ।

तुवरिका । इत्यमरः । २ । ४ । १३१ ॥
अस्य पर्य्यायो
यथा, --
"सौराष्ट्री तुवरी काङ्क्षी मृतालकसुराष्ट्रजे ।
आढकी चापि साख्याता मृत्स्ना च सुर-
मृत्तिका ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे
॥)

**सुराष्ट्रजः**, पुं, (सुराष्ट्रे जायते इति । जन् +

डः ।) कृष्णमुद्गः । इति राजनिर्घण्टः ॥
विष-
भेदः । इति शब्दचन्द्रिका ॥ तद्देशजाते,
त्रि ॥

**सुराष्ट्रजा**, स्त्री, (सुराष्ट्रे जायते इति । जन् +

डः । टाप् ।) तुवरी । इति राजनिर्घण्टः ॥
(तुवरीशब्देऽस्या विशेषो विज्ञेयः ॥)

**सुराह्वः**, पुं, (सुरस्य आह्वा आह्वा यस्य ।) देव-

दारु । इति शब्दरत्नावली ॥ (क्वचित्
क्ली ।
अस्य पर्य्यायो यथा, --
"सुरदारु द्रुकिलिमं सुराह्वं भद्रदारु च ।
देवकाष्ठं पोतदारु देवदारु च दारु च ॥"
इति वैद्यकरत्नमालायाम् ॥)
हरिद्रुवृक्षः । मरुवकः । इति राजनिर्घण्टः
॥

**सुरि**, [रै] त्रि, (सु शोभनं रा धनं यस्य ।)

शोभनधनवत् । इति मुग्धबोधव्याकरणम्
॥

**सुरुङ्गः**, पुं, शोभाञ्जनः । इति शब्दमाला ॥

धीमान् शूरिः कृतिः कृष्टिलब्धवर्णो
विचक्षणः
प्राप्तरूपसुरूपाभिरूपकूदृशाः समाः
॥"
इति जटाधरः ॥
सुरूपा यथा । नकुलः १ पुरूरवाः २
अश्विनी-
कुमारौ ३ नलकूवरौ ४ कन्दर्पः ५
शाम्बः ६ ।
इति कविकल्पलता ॥

**सुरूपा**, स्त्री, (सु शोभनं रूपं यस्याः ।) शालपर्णो

भार्गी । इति राजनिर्घण्टः ॥

**सुरूहकः**, पुं, गर्द्दभाश्वः । इति हेमचन्द्रः ॥

**सुरेज्यः**, पुं, (सुराणां इज्यः ।) बृहस्पतिः ।

इति केचित् ॥ (यथा, बृहत्संहितायाम् ।
८ । २३ ।
"विष्णुः सुरेज्यो बलभिद्धुताश-
स्त्वष्टोत्तरप्रोष्ठपदाधिपश्च ॥")

**सुरेज्या**, स्त्री, (सुराणामिज्या ।) तुलसी । इति

राजनिर्घण्टः ॥

**सुरेन्द्रः**, पुं, (सुरेषु इन्द्रः ऐश्वर्य्यशाली ।) इन्द्रः ।

इति केचित् ॥ (यथा, भागवते । ८ । ७
। ३१ ।
"न ते गिरित्राखिललोकपाल-
विरिञ्चवैकुण्ठसुरेन्द्रगम्यम् ॥"
लोकपालः । इति मल्लिनाथः ॥ यथा,
रघुः ।
३ । ११ ।
"सुरेन्द्रमात्राश्रितगर्भगौरवात्
प्रयत्नमुक्तासनया गृहागतः ॥"
तथाच मनुः । ७ । ५ ।
"यस्मादेषां सुरेन्द्राणां मात्राभ्यो
निर्म्मितो
नृपः ।
तम्मादभिभवत्येष सर्व्वभूतानि नेजसा
॥")

**सुरेन्द्रजित्**, पुं, (सुरेन्द्रं देवराजं जितवानिति । जि + क्विप् । तुगागमश्च ।) गरुडः । इति हलायुधः ॥ इन्द्रजिच्च ॥

**सुरेभं**, क्ली, (सु + रेभ + अच् ।) रङ्गम् । इति त्रिकाण्डशेषः ॥

**सुरेवटः**, पुं, रामपूगः । इति त्रिकाण्डशेषः ॥

**सुरेश्वरः**, पुं, (सुराणामीश्वरः ।) रुद्रः । इति जटाधरः ॥ (यथा, मात्स्ये । ५ । २९ -- ३० ।
"अजैकपादहिव्रध्नो विरूपाक्षोऽथ रैवतः ।
हरश्च बहुरूपश्च त्र्यम्बकञ्च सुरेश्वरः ॥
सावित्रश्च जयन्तश्च पिनाकी चापराजितः ।
एते रुद्राः समाख्याता एकादश गणेश्वराः ॥"
इन्द्रः । यथा, रघुः । ३ । ६४ ।
"नरेन्द्रसूनुः प्रतिसंहरन्निषुं
प्रियंवदः प्रत्यवदत् सुरेश्वरम् ॥"
देवश्रेष्ठे, त्रि । यथा, भागवते । ४ । १५ । ९ ।
"ब्रह्मा जगद्गुरुर्देवैः सहासृत्य सुरेश्वरैः ।
वैण्यस्य दक्षिणे हस्ते दृष्ट्वा चिह्नं गदाभृतः
पादयोररविन्दञ्च तं वै मेने हरेः कलाम् ॥"
सुरेश्वराचार्य्यः । यथा, पञ्चदशी । ६ । १९० ।
"अन्योन्याध्यासमत्रापि जीवकूटस्थयोरिव ।
ईश्वरब्रह्मणोः सिद्धं कृत्वा ब्रूते सुरेश्वरः ॥")

**सुरेश्वरी**, स्त्री, (सुराणामीश्वरी ।) स्वर्गगङ्गा । इति शब्दरत्नावली ॥ दुर्गा च ॥

**सुरेष्टः**, पुं, (सुराणामिष्टः ।) शिवमल्ली । शालः । सुरपुन्नागः । इति राजनिर्घ ण्टः ॥

**सुरेष्टा**, स्त्री, (सुराणामिष्टा ।) ब्राह्मी । इति राजनिर्घण्टः ॥

**सुलभा**, स्त्री, (सुखेन लभ्यते इति । लभ + खल् । टाप् ।) माषपर्णो । धूम्रपत्रा । इति राज-निर्घण्टः ॥

**सुलोचनः**, पुं, (शोभने लोचने यस्य ।) हरिणः । इति राजनिर्घण्टः ॥ दुर्य्योधनः । इति केचित् ॥
(धृतराष्ट्रपुत्राणामन्यतमः । यथा, महाभारते १ । ६७ । ९४ ।
"विविंशतिर्विकर्णश्च जलसन्धः सुलोचनः ॥")
सुन्दरचक्षुर्युक्ते, त्रि ॥ (वथा, महाभारते । ३ । ५५ । १३ ।
"अतीवसुकुमाराङ्गीं तनुमध्यां सुलोचनाम् ।
आक्षिपन्तीमिव च भाः शशिनः स्वेन तेजसा ॥"

**सुलोचना**, स्त्री, (शोभने लोचने यस्याः ।) माधव-राजपत्नी । यथा, --
माधव उवाच ।
"श्रीमद्विक्रमभूभर्त्तुः पुत्रोऽहं माधवाह्वयः ।
सर्व्वभावैर्भविष्यामि वशगस्तव सुन्दरि ! ॥
चन्द्रकलोवाच
समुद्रपारे तरुणपुरन्दरपुरोपमा ।
प्लक्षद्वीपेऽस्ति विख्याता दीव्यन्ती सञ्ज्ञया पुरी ॥
गुणाकराह्वयस्तत्र राजा श्रेष्ठो महायशाः ।
सुशीला नाम तद्भार्य्या सर्व्वलक्षणसंयुता ॥
सुलोचनाह्वया कन्या वीर तत्कुक्षिसम्भवा ।
गृहाण तां विवाहेन स्वर्गभोगं यदीच्छसि ॥"
इत्युपक्रम्य ।
"ततः शुभे क्षणे तस्मिन् पृष्ठमारुह्य वाजिनः ।
प्रचेष्टाख्येन भृत्येन विलङ्घ्य जलधिं ययौ ॥
ततो गन्धर्व्वविधिना स राजतनयः सुधीः ।
चक्रे विवाहं तां कन्यां तत्रैव प्राप्तकौतुकः ॥"
इति पाद्मे क्रियायोगसारे ५ अध्यायः ॥
"म्लानस्य जीवकुसुमस्य विकाशनानि
सन्तर्पणानि सकलेन्द्रियमोहनानि
एतानि ते सुवचनानि सरोरुहाक्षि
कर्णामृतानि मनसश्च रसायनानि ॥")

**सुवचनी**, स्त्री, (सुष्ठु वचनं यस्याः । टित्त्वात् ङीप् । एतदाराधनया आराधयितुर्वाक्य-साफल्यात्तथात्वम् ।) देवीविशेषः । विपदि
स्त्रियो यस्याः पूजां मन्वते कुर्व्वन्ति च ।
आचारमार्त्तण्डे शुभसूचनीति वर्त्तते ॥

**सुवचाः**, [स्] त्रि, (सुष्ठु वचो यस्य ।) वाग्मी । इति जटाधरः ॥

**सुवनः**, पुं, (सूते विश्वमिति । सू + "भूसूधूभ्रस्-जिभ्यश्छन्दसि ।" उणा० २ । ८० । इति क्युन् ।)
सूर्य्यः । अग्निः । इत्यणादिकोषः ॥ चन्द्रः । इति केचित् ॥

**सुवर्च्चकः**, पुं, स्वर्जिकाक्षारः । इति जटाधरः ॥

**सुवर्च्चला**, स्त्री, सूर्य्यपत्नी । इति त्रिकाण्डशेष ॥
अतसी । इति रत्नमाला ॥
सूर्य्यमुखीपुष्पम् ।
इति केचित् । आदित्यभक्ता । (अस्याः पर्य्यायो गुणाश्च यथा, --
"सुवर्च्चला सूर्य्यभक्ता वरदावदरापि च ।
सूर्य्यावर्त्ता रविप्रीतापरा ब्रह्मसुदुर्लभा ॥
सुवर्च्चला हिमा रूक्षा स्वादुपाका सरा गुरुः ।
अपित्तला कटुः क्षारा विष्टम्भकफवातजित् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
ब्राह्मी । इति राजनिर्घण्टः ॥ देशविशेषे, पुं, ॥

**सुवर्च्चाः**, [स्] त्रि, शोभनतेजोविशिष्टः । शोभनं

**सुरोत्तमः**, पुं, (सुरेषु उत्तमः ।) सूर्य्यः । इति

केचित् ॥ देवश्रेष्ठश्च ॥ (यथा, महाभारते । ३ ।
५६ । ७ ।
“विप्रियं ह्याचरन् मर्त्यो देवानां मृत्युमृच्छति
त्राहि मामनवद्याङ्गि ! वरयस्व सुरोत्तमान् ॥”

**सुरोत्तरः**, पुं, (सुरेषु तत्पूजनेषु उत्तरः श्रेष्ठः ।)

चन्दनम् । इति शब्दचन्द्रिका ॥

**सुरोदः**, पुं, (सुरा उदकं यस्य । उत्तरपदस्येत्यु-

दकस्योदादेशः ।) सुरासमुद्रः । इति जटाधरः ॥
(यथा, भागवते । ५ । १ । ३३ ।
“क्षारोदेक्षुरसोद-सुरोद-घृतोद-क्षीरोद-दधि-
मण्डीद-शुद्धोदाः सप्त जलधयः ॥”)

**सुलक्षणा**, स्त्री, (सुशोभनं लक्षणं यस्याः ।) उमा-

सखीविशेषः । इति शब्दमाला ॥ सुन्दरलक्षण-
युक्ते, त्रि ॥ (यथा, कथासरित्सागरे । १५ । ६८ ।
“तच्छ्रुत्वा व्यसृजत् राजा सोऽथ प्रत्ययितान्
द्विजान् ।
गत्वा सुलक्षणा सा वा न वेत्यालोच्यतामिति ॥

**सुलभः**, त्रि, सुखेन लभ्यते इति । सु + लभ + खल्

“न सुदुर्भ्यां केवलाभ्याम् ।” ७ । १ । ६८ । इति
नुमागमो न ।) सुखलभ्यः । अनायासप्राप्यः ।
यथा, आह्निकतत्त्वे ।
“सुलभं सकलं पुण्यं यज्ञदानादिजं फलम् ।
गङ्गातोयैश्च सतिलैर्द्दुर्लभं पितृतर्पणम् ॥”

**सुलोमशा**, स्त्री, (शोभना लोमशा ।) काकजङ्घा ।

इति राजनिर्घण्टः ॥ शीभनलोमयुते, त्रि ॥

**सुलोमा**, स्त्री, (सुष्ठु लोमान्यस्याः । डाप् ।)

ताम्नवल्ली । मांसच्छदा । इति राजनिर्घण्टः ॥

**सुलोहकं**, क्ली, (सुष्ठु लोहमिव । कन् ।) पित्तलम्

इति हेमचन्द्रः ॥

**सुलोहिता**, स्त्री, (सुष्ठु लोहिता ।) अग्निजिह्वा-

विशेषः । इति शब्दमाला ॥ (यथा, मुण्डकोप-
निषदि । १ । २ । ४ ।
“काली कराली च मनोजवा च
सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरूपी च देवी
लोलायमाना इति सप्त जिह्वाः ॥”
सुन्दररक्तवर्णे, पुं, ॥ तद्वति, त्रि ॥

**सुवक्त्रः**, पुं, (सुष्ठु वक्त्रं यस्मात् ।) वनवर्व्वरी ।

इति राजनिर्घण्टः ॥ सुन्दरानने, त्रि ॥ (यथा,
महाभारते । १४ । ८ । १६ ।
“उष्णीषिणे सुवक्त्राय सहस्राक्षाय मीढुषे ॥”)

**सुवचनं**, क्ली, (सुष्ठु वचनम् ॥) शोभनोक्तिः ।

तत्पर्य्यायः । सुप्रलापः २ । इत्यमरः । १ । ६ । १७ ॥
(यथा, उत्तरचरिते । १ अङ्के ।

वर्च्चो यस्येति बहुब्रीहिसमासनिष्पन्नः ॥ (यथा,
महाभारते । ३ । ५३ । ७ ।
“तं स भीमः प्रजाकामस्तोषयामास धर्म्मवित्
महिष्या सह राजेन्द्र सत्कारेण सुवर्च्चसम् ॥” *
पुं, धृतराष्ट्रपुत्त्रविशेषः । १ । ६७ । १०१ ।
“दृढहस्तः सुहस्तश्च वातवेगसुवर्च्चसौ ॥”)

**सुवर्च्चिकः**, पुं, स्वर्जिकाक्षारः । इति राजनि-

र्घण्टः ॥ (यथा, --
“कथितः स्वर्ज्जिकाभेदो विशेषज्ञैः सुवर्च्चिकः ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**सुवर्च्चिका**, स्त्री, जतुका । इति राजनिर्घण्टः ॥

(स्वर्ज्जिकाक्षारः । अस्याः पर्य्यायो यथा, --
“कापोतं स्वर्ज्जिका स्वर्ज्जिः स्वर्ज्जका च सुव-
र्च्चिका ॥”
इति वैद्यकरत्नमालायाम् ॥
तथास्या गुणाः ।
“सुवर्च्चिका स्वर्ज्जिकावत् बोद्धव्या गुणतो जनैः ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**सुवर्च्ची**, [न्] पुं, स्वर्ज्जिकाक्षारः इति राज-

निर्घण्टः ॥

**सुवर्णं**, क्ली, (शोभना वर्णो यस्य ।) धातुविशेषः ।

सोना इति भाषा । तत्पर्य्यायः । स्वर्णम् २ कन-
कम् ३ हिरण्यम् ४ हेम ५ हाटकम् ६ तपनी-
यम् ७ शातकुम्भम् ८ गाङ्गेयम् ९ भर्म्म १०

महारजतम् १४ काञ्चनम् १५ रुक्मम्
१६
कार्त्तस्वरम् १७ जाम्बूनदम् १८
अष्टापदम् १९ ।
इत्यमरः । २ । ९ । ९४ ॥ शातकौम्भम्
२०
भर्म्मम् २१ कर्व्वूरम् २२ कर्च्चुरम् २३
रुग्मम् २४ ।
इति तट्टीका ॥ भद्रम् २५ भूरि २६
पिञ्जरम्
२७ द्रविणम् २८ गैरिकम् २९ चाम्पेयम्
३०
भरुः ३१ चन्द्रः ३२ कलधौतम् ३३ ।
इति जटा-
धरः ॥ अभ्रकम् ३४ अग्निबीजम् ३५
लोहवरम्
३६ उद्धसारुकम् ३७ स्पर्शमणिप्रभवम्
३८
मुख्यधातु ३९ । इति शब्दरत्नावली ॥
उज्ज्वलम्
४० कल्याणम् ४१ मनोहरम् ४२
अग्निवीर्य्यम्
४३ अग्नि ४४ भास्करम् ४५ पिञ्जानम्
४६
अपिञ्जरम् ४७ तेजः ४८ दीप्तम् ४९
अग्निभम्
५० दीप्तकम् ५१ मङ्गल्यम् ५२
सौमञ्जकम् ५३
भृङ्गारम् ५४ जाम्बवम् ५५ आग्नेयम् ५६
निष्कम् ५७ अग्निशिखम् ५८ । अस्य
गुणाः ।
स्निग्धत्वम् । कषायत्वम् । तिक्तत्वम् ।
मधुरत्वम् ।
दोषत्रयध्वंसनत्वम् । शीतत्वम् ।
स्वादुत्वम् ।
रसायनत्वम् । रुचिकारित्वम् ।
चक्षुष्यत्वम् ।
आयुष्यदत्वम् ।
प्रज्ञावीर्य्यबलस्मृतिकरत्वञ्च ।

"सुवर्णं शीतलं वृष्यं बल्यं गुरु रसायनम् ।
स्वादु तिक्तञ्च तुवरं पाके च स्वादु पिच्छिलम्
॥
पवित्रं बृंहणं नेत्र्यं मेधास्म तिमतिप्रदम् ।
हृद्यमायुष्करं कान्तिवाग्विशुद्धिस्थिरत्वकृत् ।
विषद्वयक्षयोन्मादत्रिदोषज्वरशोषजित्॥
बलं सवीर्य्यं हरते नराणां
रोगव्रजं पोषयतीह काये ।
असौख्यकार्य्येव सदा सुवर्ण-
मशुद्धमेतन्मरणञ्च कुर्य्यात् ॥
असम्यङ्मारितं स्वर्णं बलं वीर्य्यञ्च नाशयेत् ।
करोति रोगान्मृत्युञ्च तद्धन्याद्यत्नतस्ततः ॥"
इति भावप्रकाशः ॥ * ॥
अथ सुवर्णकरणम् ।
"मध्वाज्यं गुडताम्रञ्च करेणामाक्षिकं रसम् ।
धमनाच्च भवेद्रौप्यं सुवर्णकरणं शृणु ॥
पीतं धुस्तूरपुष्पञ्च सीसकञ्च पलं मतम्
पाठा लाङ्गलशाखा च मूलमावर्त्तनाद्भवेत् ॥"
इति गारुडे १८८ अध्यायः ॥ * ॥
अपि च ।
श्रीशङ्कर उवाच ।
"आनीय पारदं देवि स्थापयेत् प्रस्तरोपरि ।
तस्योपरि जपेन्मन्त्रं सर्व्वबन्धमयात्मकम् ॥
साष्टसहस्रं देवेशि प्रजपेत् साधकाग्रणीः ।
स्वयम्भुपुष्पसंयुक्ते वस्त्रे चारुणसन्निभे ॥
संस्थाप्य पारदं देवि मृत्पात्रे युगले शिवे ।
पुष्पयुक्ते न सूत्रेण बध्नीयात् बहुयत्नतः ॥
मृत्तिकया रजेनैव धान्यस्य परमेश्वरि ।
लेपयेद्बहुयत्नेन रौद्रे शुष्काणि कारयेत् ॥
पुनश्च लेपयेद्धीमान् ततो वह्नौ विनिःक्षिपेत् ॥
अष्टमीनवमीरात्रौ क्षिपेन्नैव सुरेश्वरि ॥
अथवा परमेशानि मृत्पात्रे स्थापयेद्रसम् ।
वल्लीरसेन तद्द व्यं शोधयेद्बहुयत्नतः ॥
घृतनारीरसेनैव तथैव शोधनं चरेत् ।
एवं कृते तु गुटिकां यदि स्यात् दृढबन्धनम् ॥
धुस्तूरञ्च समानीय मध्ये शून्यञ्च कारयेत् ।
कृष्णाख्यातुलसीयोगे तथा घृतकुमारिका ॥
एवं कृते वह्नियोगे भस्मसात् जायते किल ।
भस्मयोगे भवेत् स्वर्णं धनदायाः प्रसादतः ।

इति शुद्धितत्त्वम् ॥ * ॥ तद्दानफलं
यथा, --
अम्बरीष उवाच ।
"न सुवर्णं विना दानं तिलैर्व्वा
मुनिसत्तम ।
कस्मात् पवित्रमित्युक्तं भवानेतत्
ब्रवीतु मे ॥
वशिष्ठ उवाच ।
अत्र ते कथायिष्यामि इतिहासं
पुरातनम् ।
जामदग्न्यस्य रामस्य मुनिभिः सह
पार्थिव ॥
त्रिःसप्तकृत्वः पृथिवीं मुनीन् पप्रच्छ
पार्थिव ।
कृत्वा तु कृपयाविष्टो निःक्षत्रां भार्गवः
पुरा ॥
राम उवाच ।
क्रोधादिदं कृतं कर्म्म मया
मुनिवरोत्तमाः ।
कथं कस्माद्विमुच्येऽहं पापात्
क्षत्त्रवधादतः ॥
इत्युक्ता धर्म्मतत्त्वज्ञाः पापानां पावनं
परम् ।
दानञ्चेह सुवर्णस्य ते तमूचुर्म्महर्षयः ॥
एतत् पवित्रमतुलं सम्भूतमिह शुश्रुम ।
शम्भोर्वीर्य्यात् परं तेजो ह्यपत्यं
जातवेदसः ॥
सहजं कार्त्तिकेयस्य रुद्रशुक्रसमुद्भवम्
।
पवित्रं यत् सुरैः सर्व्वैर्धार्य्यन्ते
मुकुटादिभिः
अग्निस्तु देवताः सर्व्वाः प्रीयन्ते
सर्व्वदेवताः ।
तस्मात् सुवर्णं ददतां सुवर्णञ्च
तदात्मकम् ॥
दश पूर्व्वापरांश्चैव प्रोवाचेदं बृहस्पतिः
।
सुवर्णं ये प्रयच्छन्ति नरकात्तारयन्ति
ते ॥

तद्धारणस्य गुणाः ।
कान्तिदुरितक्षयश्रीकारि-
त्वम् ॥ * ॥ तत्परीक्षादि यथा, --
“दाहेऽतिरक्तमथ यच्च सितं छिदायां
काश्मीरकान्ति च विभाति निकाषपट्टैः ।
स्निग्धञ्च गौरवमुपैति च यत्तुलायां
जानीत देवकनकं मृदु रक्तपीतम् ॥
तत्रैकं रसवेधजं तदपरं जातं स्वयं भूमिजं
किञ्चान्यद्वहु लोहसङ्करभवं चेति त्रिधा
काञ्चनम् ।
तत्राद्यं कलपीतरक्तमपरं रक्तं
ततोऽन्यद्यथा
गौराभ्रं तदिति क्रमेण गदितं स्यात् पूर्व्व-
पूर्व्वोत्तमम् ॥”
इति राजनिर्घण्टः ॥ * ॥
अपिच सुवर्णस्योत्पत्तिनामलक्षणगुणाः ।
“पुरा निजाश्रमस्थानां सप्तर्षीणां जिता-
त्मनाम् ।
पत्नीर्विलोक्य
लावण्यलक्ष्मीसम्पन्नयौवनाः ॥
कन्दपेदर्पविध्वस्तचेतसो जातयेदसः ।
पतितं तद्धरापृष्ठे रेतस्तु हेमतामगात् ॥
कृत्रिमं चापि भवति तद्रसेन्द्रस्य वेधतः ।
स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् ॥
तपनीयं कलधौतं गाङ्गेयं भर्म्म काञ्चनम् ।
चामीकरं शातकुम्भं तथा कार्त्तस्वरञ्च तत्
॥
जाम्बूनदं जातरूपं महारजतमित्यपि ।
दाहे रक्तं सितं छेदे निषेके कुङ्कुमप्रभम् ॥
तारशुल्वोऽभिहतं स्निग्धं कोमलं गुरु हम
सत् ॥”
सत् उत्तमम् ।
“तच्छनेतं कठिनं रूक्षं विवर्णं समलं
दलम् ।
दाहे छेदेऽसितं श्वेतं कषे त्याज्यं
लघुस्फुटम् ॥”
दलं दोषत इति लोके । स्फुटं यद्घनाहतं
स्फुटति ॥

विवर्णं जायते द्रव्यं यदि पूजां न चाचरेत् ॥”
इति मातृकाभेदतन्त्रे ५ पटलः ॥ * ॥
अस्य धार्य्यत्वं सर्व्वदेवतात्मकत्वञ्च यथा,
रामायणे
महाभारते च परशुरामं प्रति वशिष्ठवाक्यम् ।
“सर्व्वरत्नानि निर्मथ्य तेजाराशि समुत्थितम् ।
सुवर्णमेभ्यो विप्रे न्द्र रत्नं परमनुत्तमम् ॥
एतस्म्यत कारणाद्देवगन्धर्व्वोरगराक्षसाः ।
मनुष्याश्च पिशाचाश्च प्रयता धारयन्ति तत्
॥”
तथा ।
“तस्मात् सर्व्वपवित्रेभ्यः पवित्रं परमं स्मृतम्
॥”
तथा ।
“अग्निर्व्वै सकला देवाः सुवर्णञ्च तदात्मकम् ।
तस्मात् सुवर्णं ददता दत्ताः स्युः सर्व्वदेवताः
॥”
तस्मात्तत् पदादौ न धार्य्यं देवतात्मकत्वात् ।

सर्व्वान कामान् प्रयान्त्येते
पितामहसुतोऽब्र-
वीत ।
मरीचिर्भगवान् पूर्व्वं ये प्रयच्छन्ति
काञ्चनम् ॥
यः सुवर्णं नरो नित्यं ब्राह्मणेम्यः
प्रयच्छति ।
स चिरं विरजा विद्वान् देववद्दिवि मोदते
॥
सर्व्वेषामेव दानानामेकजन्मानुगं फलम्
।
हाटकक्षितिगौरीणां सप्तजन्मानुगं
फलम् ॥
विद्यमानं सुवर्णं तु यो लोभान्न
प्रयच्छति ।
स सदा जनपापैस्तु वेष्टितो नरकं
व्रजेत् ॥
कृत्वापि सुमहत् पापं जातरूपं ददाति
यः ।
स सद्यस्तेन पापेन मुच्यते नात्र संशयः
॥
एवं ज्ञात्वा तु श्रुत्यर्थं सुवर्णं देहि भार्गव
।
तुलामारुह्य कायस्य
समानमात्मनस्तथा ॥
इत्युक्तो मुनिभिर्दिव्यै रामो
धर्म्मभृतांवरः ।
प्रादात् सुवर्णं विप्रेभ्यः ततः
पापादमुच्यत ॥
तस्मात्त्वमपि राजेन्द्र द्विजेभ्यो देहि
काञ्चनम्
विष्वक्सेनं समुद्दिश्य यदीच्छेः
शाश्वतीं गतिम् ॥”
इति वह्निपुराणे
तुलापुरुषदाननामाध्यायः ॥ * ॥
अपि च ।
“सुवर्णदानं गोदानं भूमिदानं तथैव च
।
नाशयन्त्याशु पापानि
महापातकजान्यपि ॥”
इति प्रायश्चित्ततत्त्वम् ॥ * ॥

| | | |
|---|---|---|
| | | उत्सृष्टस्वर्णस्य गृहे चिरस्थापननिषेधो यथा,<br>"न चिरं स्थापयेद्गेहे हेम संप्रोक्षितं बुधः ।<br>तिष्ठत् भयावहं यस्मात् शोकव्याधिकरं नृणाम् ॥<br>शीघ्रं परस्वीकरणात् श्रेयः प्राप्नोति पुष्कलम् ॥"<br>संप्रोक्षितं पात्रमुद्दिश्य त्यक्तम् । अतएव विष्णु-<br>पुराणे ।<br>"तस्मात् सर्व्वात्मना पात्रे दद्यात् कनकमुत्तमम्<br>अपात्रे पातयेद्दत्तं सुवर्णं नरकार्णवे ॥ |

प्रमादतस्तु तन्नष्टं तावन्मात्रं नियोजयेत् ।
अन्यथा स्तेययुक्तः स्यात् हेम्न्यदत्ते विनाशिनि”
तद्धेम त्राह्मणायोत्सृष्टं ब्राह्मणसादकृतं यदि चौरादिना अपह्रियते तदा तावदेव पुनरुत्-सृज्य देयमिति दानसागरः ॥ * ॥ तत्तु अग्नि-दैवतम् । यथा, --
“आग्नेयं कनकं प्रोक्तं सर्व्वलौहानि वाप्यथा”
इति शुद्धितत्त्वम् ॥
(अथास्य मारणविधिः ।
“गलितस्य सुवर्णस्य षोडशांशेन सीसकम् ।
योजयित्वा समुद्धृत्य निम्बुनीरेण मर्द्दयेत् ॥
गोलं कृत्वा गन्धचूर्णं समं दद्यात्तदुपरि ।
शरावसंपुटे कृत्वा पुटेत्त्रिंशद्वनोपलैः ।
एवं मुनिपुटैर्हेम नोत्थानं लभते पुनः ॥”
अस्य गुणाः ।
“कषायं तिक्तमधुरं सुवर्णं गुरु लेखनम् ।
हृद्यं रसायनं बल्यं चक्षुष्यं कान्तिदं शुचि ॥
आयुर्म्मेधावयःस्थैर्य्यवाग्विशुद्धिस्मृतिप्रदम् ।
क्षयोन्मादगराणाञ्च कुष्ठानां नाशनं परम् ॥”
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणा-धिकारे ॥ * ॥) हरिचन्दनम् । इति मेदिनी ॥ स्वर्णगैरिकम् । इति रत्नमाला ॥ धनम् । इति हेमचन्द्रः ॥ नागकेशरम् । इति राजनिर्घण्टः ॥

**सुवर्णः**, पुं, क्ली, (सुष्ठु वर्णोऽस्य ।) हेम्नोऽक्षः ।
स अशीतिरत्तिकापरिमितस्वर्णम् । तत्पर्य्यायः
विस्तः २ । इत्यमरः । २ । ९ । ८६ ॥ कर्षं सुवर्णस्य सुवर्णसंज्ञम् । इति लीलावती ॥ कर्ष-परिमाणम् । इति वैद्यकपरिभाषा ॥ (यथा, --
“विद्यात्कर्षं तथा चापि सुवर्णं कवलग्रहम् ॥”
इति गारुडे २०८ अध्यायः ॥)

**सुवर्णः**, पुं, (शोभनो वर्णो यस्य ।) स्वर्णकर्षः ।
यज्ञविशेषः । इति मेदिनी ॥ धुस्तूरः । इत्य-मरः ॥ कणगुग्गुलुः । इति राजनिर्घण्टः ॥ सुष्ठुवर्णे, त्रि । इति शब्दरत्नावली ॥ (यथा,
हिमत्वम् । स्वल्पाशने दीपनकारित्वम् । तृष्णा-दाहनाशित्वम् । कफावहत्वम् । वृष्यकारित्वम् ।
गुरुत्वञ्च । इति राजनिर्घण्टः ॥

**सुवर्णकारः**, पुं, (सुवर्णं स्वर्णभूषणादिकं करो-
तीति । कृ + अण् ।) स्वर्णकारः । इति हला-युधः ॥ सेकरा इति भाषा ॥ (यथा, मनुः ।
४ । २१८ ।
“राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्च्चसम् ।
आयुः सुवर्णकारान्नं यशश्चर्म्मावकर्त्तिनः ॥”)

**सुवर्णगैरिकं**, क्ली, (सुवर्णं सुन्दरवर्णं गैरिकम् ।)
गैरिकभेदः । वर्णकमाटि इति वङ्गभाषा ।
पीत गेरु इति हिन्दी भाषा । तत्पर्य्यायः ।
स्वर्णधातुः २ सुरक्तकः ३ सन्ध्याभ्रम् ४ वभ्रु-धातुः ५ शिलाधातुः ६ । अस्य गुणाः ।
गैरिकं मधुरं शीतं कषायं व्रणरोपणम् ।
विस्फोटार्शोऽग्निदाहघ्नं वरं स्वर्णादिगं शुभम् ॥”
इति राजनिर्घण्टः ॥
(तथाच ।
“गैरिकं रक्तधातुश्च गैरेयं गिरिजन्तथा ।
सुवर्णगैरिकं, त्वन्यत्ततो रक्त्रतरं हि तत् ॥
गैरिकद्वितयं स्निग्धं मधुरन्तुवरं हिमम् ।
चक्षुष्यं दाहपित्तास्रकफहिक्काविषापहम् ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**सुवर्णनकुली**, स्त्री, (सुवर्णा नकुली ।) महा-

**सुवर्णबिन्दुः**, पुं, (सुवर्णवत् बिन्दुर्यत्र ।) विष्णुः ।
इति हेमचन्द्रः ॥

**सुवर्णयूथी**, स्त्री, (सुवर्णवत् पीता यूथी ।) पीत-
वर्णयूथिका । स्वर्णयूइ इति भाषा । तत्पर्य्यायः
सुगन्धा २ हेमयूथिका ३ युवतीष्टा ४ रक्तगन्धा ५
शिखण्डी ६ नागपुष्पिका ७ हरिणी ८ पीत-यथी ९ पीतिका १० कनकप्रभा ११ मनोहरा
१२ गन्धाढ्या १३ । अस्या गुणाः ।
स्वादुत्वम् ।
शिशिरत्वम् ।
शर्करार्त्तिपित्तदाहतृषानाना-त्वग्दोषनाशित्वञ्च । इति राजनिर्घण्टः ॥
अपि च ।
“यूथिका गणिकाम्बष्ठा सा पीता हेमपुष्पिका
यूथीयुगं हिमं तिक्तं कट्पाकं सरं लघु ॥
मधुरं तुवरं हृद्यं पित्तघ्नं कफवातलम् ।
व्रणास्रमुखदन्ताक्षिशिरोरोगविषापहम् ॥”
इति भावप्रकाशः ॥

**सुवर्णवर्णः**, पुं, (सुवर्णवत् वर्णो यस्य ।) विष्णुः ।
यथा, --
“सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ।”
इति तस्य सहस्रनामस्तोत्रम् ॥

**सुवर्णवर्णा**, स्त्री, (सुवर्णवत् वर्णो यस्याः ।) हरिद्रा ।
इति शब्दचन्द्रिका ॥ स्वर्णवर्णयुक्ते, त्रि ॥

**सुवर्णा**, स्त्री, (सुष्ठु वर्णो यस्याः ।) कृष्णागुरु ।
इति मेदिनी ॥ वाट्यालकः । इति शब्दचन्द्रिका ॥
स्वर्णक्षीरी । हरिद्रा । इति राजनिर्घण्टः ॥
(हास्तिनापुरकर्त्तुर्हस्तिनो माता । यथा, महा-

महाभारते । १३ । ६८ । ३३ ।
"वाससां सम्प्रदानेन स्वदारनिरतो नरः ।
सुवर्णश्च सुवेशश्च भवतीत्यनुशुश्रुमः ॥")

**सुवर्णकं**, क्ली, (सुवणमिव । इवार्थे कन् ।)

पित्तलम् । इति हेमचन्द्रः ॥ (स्वार्थे कन् ।
सुवर्णम् । यथा, महाभारते । ३ । ८२ । ७५ ।
"तत्र स्नात्वा नरश्रेष्ठ लभेत् बहु सुवर्णकम् ॥"
सुष्ठु, वर्णो यस्य । कन् ।) सुन्दरवर्णयुक्ते, त्रि
॥

**सुवर्णकः**, पुं, (सुष्ठु वर्णो यस्य । कन् ।) आर-

स्वधवृक्षः । इत्यमरः । २ । ४ । २४ ॥

**सुपणकदली**, स्त्री, (सुवर्णा सुवर्णवर्णा सुन्दर-

वर्णा वा कदली ।) कदलीविशेषः । चाँपा
कला इति भाषा । तत्पर्य्यायः । सुवर्णरम्भा २
कनकमोचा ३ पोता ४ सुवर्णमोचा ५ चम्पक-
रम्भा ६ सुरभिका ७ सुभगा ८ हेमफला ९
स्वणेफला १० कनकरम्भा ११ पीतरम्भा
१२
गौरी १३ गौररम्भा १४ काञ्चनकदली १५
सुरप्रिया १६ । अस्या गुणाः । मधुरत्वम् ।

ज्योतिष्मती । इति राजनिर्घण्टः ॥

**सुवर्णपुष्पः**, पुं, (सुवर्णवत् पुष्पं यस्य ।) राज-

तरुणी । इति राजनिर्घण्टः ॥ (यथा,
बृहत्-
संहितायाम् । २९ । १० ।
"श्रेष्ठी सुवर्णपुष्पैः
पद्मैर्विप्राः पुरोहिताः कुमुदैः ॥")

**सुवर्णप्रसरं**, क्ली, (सुवर्णस्य प्रसर इव यत्र ।)

एलवालुकम् । इति वैद्यकम् ॥

**सुवर्णबणिक्**, पुं, (सुवर्णस्य बणिक् क्रयविक्रयादि-

कर्त्ता ।) जातिविशेषः । सोनार वेणिया
इति
भाषा । स तु अम्बष्ठाद्वैश्यायां जातः
मध्यम-
वर्णसङ्करः । इति केचित् ॥ तस्य
पातित्यकारणं
यथा, ब्रह्मववर्त्ते ब्रह्मखण्डे । १० । ९५
।
"कश्चिद्वणिग्विशेषश्च संसर्गात्
स्वर्णकारिणः ।
स्वर्णचौर्य्यादिदोषेण पतितो ब्रह्मशापतः
॥"
अपि च ।
"गान्धिकः शाङ्खिकश्चैव कांस्यको
मणिकारकः ।
सुवर्णजीविकश्चैव पञ्चंते बणिजः
स्मृताः ॥
अम्बष्ठाद्रजपुत्र्यान्तु जायते गान्धिको
बणिक् ।
गन्धचन्दनधूपादिक्रयविक्रयकारकः॥
गान्धिक्यां रजपुत्राच्च संजातः
शाङ्खिको बणिक् ।
शङ्खं दत्त्वा मुनेः प्रत्न्यै शङ्खजीवी
प्रकीत्तितः ॥
शाङ्खिक्यां
गान्धिकाज्जातस्ताम्रकांस्योप
जीविकः ।
शाङ्खिकात् कांस्यकन्यायां मणिकारः
प्रजायते ।

भारते । १ । ९५ । ३४ । "सुहोत्रः खलु
इक्ष्वाकु-
कन्यामुपयेमे सुवर्णां नाम तस्यामस्य
जज्ञे
हस्ती य इदं हास्तिनपुरं स्थापयामास
एत-
दस्य हास्तिनपुरत्वम् ॥"

**सुवर्णाख्यः**, पुं, (सुवर्णस्य आख्या आख्या यस्य ।)

नागकेशरः । इति रत्नमाला ॥
धुस्तूरवृक्षः ।
इति कनकाह्वयशब्ददर्शनात् ॥
(तीर्थविशेषे,
क्ली । इति महाभारतम् । ३ । ८४ ।
१७ ॥)

**सुवर्णी**, स्त्री, (सुष्ठु वर्णो यस्याः । गौरादित्वात्

ङीष् ।) आखुपर्णी । इति राजनिर्घण्टः ॥
(विवृतिरस्या आखुपर्णोशब्दे ज्ञातव्या ॥)

**सुवयाः**, [स्] स्त्री, (सुष्ठु वयो यस्याः ।) प्रौढा

स्त्री । इति राजतिर्घण्टः ॥

**सुवल्लिः**, स्त्री, (शोभना वल्लिः ।) सोमराजी ।

इत्यमरः । २ । ४ । ९५ ॥

**सुवल्ली**, स्त्री, (सुवल्लि + पक्षे ङीष् ।) सोमराजी ।

इत्यमरटीकायां भरतः ॥

**सुवसन्तः**, पुं, (शोभनो वसन्तो यत्र ।) चैत्रावली

इति त्रिकाण्डशेषः ॥ सुन्दरवसन्तकालः
सुजा-
तीयवसन्तरोगश्च ॥

**सुवसन्तकः**, पुं, (शोभनो वसन्तो यत्र । कप् ।)

वासन्ती । मदनोत्सवः । इति मेदिनी ॥

**सुवहः**, त्रि, (सुखेन उह्यते इति । सु + वह +

खल् ।) सुखवाह्यः । इति मेदिनी ॥ (सुष्ठु
वहतीति । वह + अच् । सम्यग्वहः । इति
हेमचन्द्रः ॥

| | | |
|---|---|---|
| | कांस्यकाराच्च माणिक्यां<br>सुवर्णजीविकोऽभवत् ॥”<br>इति पराशरपद्धतौ<br>भार्गवरामकृतवर्णसङ्कर-<br>जातिमाला ॥ | |

**सुवहा**, स्त्री, (सुष्ठु, वहति सौगन्धमिति । सु + वह + अच् ।) शेफालिका । रास्ना । (अस्याः पर्य्यायो यथा, --
"रास्ना युक्तरसा रस्या सुवहा रसना रसा ।
एलापर्णी च सुरसा सुगन्धा प्रेयसी तथा ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
गोधापदी । फलापर्णी । इत्यमरः । २ । ४ । ७० ॥
शल्लकी । (अस्याः पर्य्यायो यथा, भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।
"शल्लकी गजभक्ष्या च सुवहा सुरभीरसा ।
महेरुणा कुन्दरुकी वल्लकी च बहुस्रवा ॥")
बीणा । इति मेदिनी ॥ त्रिवृता । इति शब्द-चन्द्रिका भरतश्च ॥ रुद्रजटा । हंसपदी ।
गन्धनाकुली । मुशली । नीलसिन्धुवारः । इति राजनिर्घण्टः ॥ (अस्याः पर्य्यायो यथा, --
"सिन्धुवारः श्वेतपुष्पः सिन्दुकः सिन्दुवारकः ।
नीलपुष्पी तु निर्गुण्डी शेफाली सुवहा च सा ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**सुवासः**, पुं, (शोभनो वासः ।) शोभनगन्धः । उत्तमनिवासः । इति केचित् ॥ (महादेवः । इति महाभारतम् । १३ । १७ । ११५ ॥)

**सुवासिनी**, स्त्री, (सुखेन वसतीति । सु + वस +

**सुवीरकं**, क्ली, (सु + वीर शौर्य्ये + ण्वुल् ।) सौवी-राञ्जनम् । इति शब्दचन्द्रिका । (पर्य्यायोऽस्य यथा, --
"सुवीरकं पार्व्वतेयं सौवीरं नीलमञ्जनम् ॥"
इति वैद्यकरत्नमालायाम् ॥)

**सुवीराम्लं**, क्ली, (सुवीरं अतिशयतेजःशालि अम्लं यस्य ।) काञ्जिकम् । इति जटाधरः ॥

**सुवीर्य्यं**, क्ली, (सुष्ठु वीर्य्यं यस्य ।) वदरीफलम् । इति जटाघरः ॥ उत्तमवीर्य्यञ्च ॥

**सुवीर्य्या**, स्त्री, (सुष्ठु वीर्य्यं यस्याः ।) वनका-र्पासी । इति शब्दरत्नावली ॥ (वनकार्पासी-शब्देऽस्या विशेषो ज्ञेयः ॥)

**सुवृत्तः**, पुं, (शोभनो वृत्तः ।) शूरणः । इति राजनिर्घण्टः ॥ त्रि, सुन्दरवर्त्तुलः ॥ (यथा, भारते । १ । १५४ । ९ ।
"पश्य बाहू सुवृत्तौ मे हस्तिहस्तनिभाविमौ ॥"
सुष्ठु वृत्तं चरित्रं यस्येति । सच्चरित्रः । यथा, रघुः । ८ । ७७ ।
"मयि तस्य सुवृत्त ! वर्त्तते
लघुसन्देशपदा सरस्वती ।
शृणु विश्रुतसत्त्वसार ! तां
हृदि चैनामुपधातुमर्हसि ॥")

**सुवृत्ता**, स्त्री, (सुष्ठुवृत्ता ।) पतपत्री । काकली-द्राक्षा । इति राजनिर्घण्टः ॥

**सुवेगा**, स्त्री, (सुष्ठु वेगो यस्याः ।) महा-ज्योतिष्मती । इति राजनिर्घण्टः ॥

**सुवेलः**, पुं, (सुगता वेला समुद्रकूलं येन । यद्वा,

इति मेदिनी ॥ वर्त्तमानकल्पीयपञ्चदशजिन-माता । इति हेमचन्द्रः ॥ (शठी । तत्पर्य्यायो यथा, --
"शठी पलाशी षड्ग्रन्था सव्रता गन्धमूलिका ।
गन्धारिका गन्धवधूर्व्वधूः पृथुपलाशिका ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**सुशर्म्मा**, [न्] पुं, राजविशेषः । इति पुराणम् ॥ निन्दितब्राह्मणविशेषः । यथा, --
"सुशर्म्मा नाम को देव किं जातीयः किमात्मकः
कुतस्तस्य च वै मुक्तिः केन वा यत्र हेतुना ॥
श्रीभागवानुवाच ।
सुशर्म्मा नाम दुर्म्मेधाः सीमा पापात्मनामभूत् ।
अनाम्नायविदां वंशे विप्राणां क्रूरकर्म्मणाम् ॥"
इति पाद्मोत्तरखण्डे ८० अध्यायः ॥
सु + शॄ गि हिंसे + "अन्येभ्योऽपि दृश्यन्ते ।"
३ । २ । ७५ । इति मनिन् ।) सुशृणाति यः ।
इति मुग्धबोधटीकायां दुर्गादासः ॥ शोभनसुख-विशिष्टे, त्रि ॥

**सुशल्यः**, पुं, (सुष्ठु, दृढं शल्यं कण्टकं यस्य ।) खदिरः । इति राजनिर्घण्टः ॥ (खदिरशब्देऽस्य विवरणं ज्ञातव्यम् ॥)

**सुशवी**, स्त्री, कारवेल्लः । कृष्णजीरकः । इत्यमर-टीकायां भरतः । २ । ४ । १५५ ॥

**सुशाकं**, क्ली, (सुष्ठु शाको यस्मात् ।) आर्द्रकम् । इति राजनिर्घण्टः ॥

**सुशाकः**, पुं, (सुष्ठु शाको यस्य ।) चक्षुः । भिण्डा । तण्डुलीयः । इति राजनिर्घण्टः ॥

**सुशान्ता**, स्त्री, शशिध्वजराजपत्नी । यथा,

णिनिः ।) चिरिण्टी । इत्यमरः । २ । ६ । ९ ॥
सुखेन वयतीति सुवासिनीति द्राविडाः । पितृ-
कुलस्नेहात् चिरमेटति गच्छति चिरिण्टी ।
इट गतौ अन् मनीषादिः । सुवासिन्यां चिरिण्टी
स्यात् द्वितौयवयसि स्त्रियामिति रुद्रः । चर-
ण्टीत्येके । इति तट्टीकायां भरतः ॥

**सुविद्**, पुं, (सुष्ठु वेत्तीति । विद् + क्विप् ।) पण्डितः । गुणयुक्तनार्य्याम्, स्त्री । इत्यमरे सौविदल्लशब्दटीकायां रामाश्रमः ॥

**सुविदः**, पुं, (सुष्ठु वेत्तीति । सु + विद् + कः ।) सौविदः । इत्यमरटीकायां रायमुकुटः ॥ राजा । इति भरतः ॥

**सुविदत्**, पुं, (सुष्ठु वेत्तीति । विद् + क्विप् । तमत तीति । अत् + क्विप् ।) राजा । इत्यमरे सौविदल्लशब्दटीकायां रायमुकुटः ॥

**सुविदत्र**, त्रि, (सुष्ठुवेत्तीति । सु + विद् + "सुविदेः कत्रन् ।" उणा० ३ । १०८ । इति कत्रन् ।) कुटुम्बः । इत्युणादिकोषः ॥

**सुविदल्लं**, क्ली, अन्तःपुरम् । इत्यमरटीकायां राय-मुकुटः ॥

**सुविदल्ला**, स्त्री, ऊढा नारी । इत्यमरे सौविदल्ल-शब्दटीकायां रायमुकुटः ॥

**सुविधिः**, पुं, (सु शोभनो विधिर्यस्य ।) अर्हद्वि-शेषः । इति हेमचन्द्रः ॥ उत्तमविधाञ्च ॥

**सुविनीता**, स्त्री, (सुष्ठुविनीता ।) सुकरा गौः । इति शब्दरत्नाबली ॥ अतिशयविनयविशिष्टे ति ॥

**सुबीजः**, पुं, (सु शोभनं बीजं यस्य ।) खस्खसः सुष्ठु वेला स्थितिर्य्यस्य ।) त्रिकूटपर्व्वतः । इति
हेमचन्द्रः ॥ यथा, अनर्घराघवे । ६ । १७ ।
"श्रुत्वा दाशरथी सुवेलकटके साटीपमर्धेधनु-
ष्टङ्कारैः परिपूरयन्ति ककुभः प्रोच्छन्ति कौक्षे-
यकान् ॥")

**सुवेलः**, त्रि, (शोभना वेला मर्य्यादा स्थितिर्यस्य ।) प्रणतः । शान्तः । इति मेदिनी ॥

**सुवे(ष)शः**, पुं, (शोभनो वेशो यस्य ।) श्वेतेक्षुः । इति राजनिर्घण्टः ॥ सुन्दरवेशयुक्ते, त्रि । यथा,
"सुवेशं पुरुषं दृष्ट्वा भ्रातरं यदि वा सुतम् ।
योनिः क्लिद्यति नारीणां सत्यं सत्यं हि नारद ॥"
इति महाभारतम् ॥

**सुवेशी**, [न्] त्रि, (सुवेशोऽस्यास्तीति । इनिः ।) सुन्दरवेशयुक्तः ॥

**सुव्रतः**, पुं, (सुष्ठु व्रतं यस्य ।) भाविकल्पीयार्ह-द्विशेषः ॥ वर्त्तमानकल्पीयाहद्विशेषः । इति हेमचन्द्रः ॥ (कार्त्तिकेयः । यथा, महाभारते ।
३ । २३१ । ७ ।
"मुव्रतो ललितश्चैव बालक्रीडनकप्रियः ॥")
शोभनव्रतयुक्ते, त्रि ॥ (यथा, महाभारते । १ । २३४ । २७ ।
"सुव्रता चापि कल्पाणी सर्व्वभूतेषु विश्रुता ।
अरुन्धती महात्मानं वशिष्ठमृषिसत्तमम् ॥")

**सुव्रता**, स्त्री, (सुष्ठु व्रतं यस्याः ।) सुखसंदोह्या गौः । इत्यमरः । २ । ९ । ७१ ॥ शोभनव्रता । कल्किपुराणे २२ अध्याये ।
"शशिध्वजो महातेजा गजायुतबलः सुधीः ।
तस्य पत्नी महादेवी विष्णुव्रतपरायणा ॥
सुशान्ता स्वामिनं प्राह कल्किना योद्धुमुद्यतम्
नाथ कान्तं जगन्नाथं सर्व्वान्तर्यामिनं प्रभुम् ।
कल्किं नारायणं साक्षात् कथं त्वं प्रहरिष्यसि ॥"

**सुशिखः**, पुं, (शोभना शिखा यस्य ।) अग्निः । इति जटाधरः ॥ उत्तमशिखायुक्ते, त्रि ॥

**सुशिखा**, स्त्री, (शोभना शिखा ।) मयूरशिखा । इति राजनिर्घण्टः ॥ (सुन्दरकेशः । यथा, भागवते । ३ । २० । ३६ ।
"मध्यं विषीदति बृहत्स्तनभारभीत
श्रान्तेव दृष्टिरमला सुशिखासमूहः ॥")

**सुशीतं**, क्ली, (शोभनं शीतम् ।) पीतचन्दनम् । इति शब्दचन्द्रिका ॥ अतिशयशीतञ्च । तद्वति, त्रि ॥

**सुशीतः**, पुं, (सुष्ठु शीतः ।) ह्रस्वप्लक्षः । इति राजनिर्घण्टः ॥

**सुशीतलं**, क्ली, (सुष्ठु, शीतलम् ।) गन्धतृणम् । इति रत्नमाला ॥ (गन्धतृणशब्देऽस्य विशेषो ज्ञेयः ॥) अतिशीतगुणविशिष्टे, त्रि ॥ (यथा, महाभारते । ३ । ६५ । ४ ।
"निर्म्मलस्वादु शलिलं मनोहारि सुशीतलम् ॥")
सुपरिश्रान्तवाहास्ते निवेशाय मनो दधुः ॥")

| | | |
|---|---|---|
| इति राजनिर्घण्टः ॥ (महादेवः । इति<br>महा-<br>भारतम् । १३ । १७ । ३९ ॥)<br>सुन्दरबीजे,<br>क्ली । तद्वति, त्रि ॥ | | |

**सुशीता**, स्त्री, (सुष्ठु शीता ।) शतपत्री । इति

राजनिर्घण्टः ॥

**सुशीविका**, स्त्री, कन्दविशेषः । वाराहीकन्दः ।

इति शब्दचन्द्रिका ॥

**सुशीमः**, पुं, शीतगुणः । इत्यमरटीकायां स्वामा ॥

तद्वति, त्नि ॥

**सुशीलः**, पुं, (सु शोभनं शीलमस्य ।) चोलराजः ।

यथा, --
"यो विष्णुदासः स तु पुण्यशीलो
यश्चोलभूपः स सुशीलनामा ।
आवामुभौ तत्समरूपभाजौ
द्वाःस्थौ कृतौ तेन रमाप्रियेण ॥"
इति पाद्मे उत्तरखण्डे ५४ अध्यायः ॥
शोभनशीलविशिष्टे, त्रि ॥ (यथा, भागवते ।
६ । १ । १७ ।
"सध्रीचीनो ह्ययं लोके पन्थाः
क्षेमोऽकुतोभयः ।
सुशीलाः साधवो यत्र नारायणपरायणाः ॥"
शोभनं शीलमिति । सच्चिरित्रे, क्ली ।
यथा,
महाभारते । ३ । २९७ । ४३ ।
"त्वया सुशीलव्रतपुण्ययुक्तया
समद्धृतं साध्वि पुनः कुलीनया ॥")

**सुशीलता**, स्त्री, (सुशीलस्य भावः । तल् ।

टाप् । सत्स्वभावः । सुशीलत्वम् ॥

**सुशीला**, स्त्री, (शोभनं शीलं यस्याः । टाप् । (श्रीकृ-

ष्णस्याष्टमहिष्यन्तर्गतमहिषीविशेषः । यथा,
--
"अष्टौ महिष्यस्ताः सर्व्वा रुक्मिण्याद्या
महात्मनः ।
रुक्मिणी सत्यभामा च कालिन्दी च
शुचिस्मिता ॥
मित्रविन्दा जाम्बवती नाग्नजिती सुलक्षणा ।
सुशीला नाम तन्वङ्गी महिष्यश्चाष्टमाः
स्मृताः ॥"
इति पाद्मोत्तरखण्डे ६८ अध्यायः ॥

पितुर्व्वचनमाकर्ण्य सुश्रुतः काशिकां
गतः ।
तेन सार्द्धं समध्येतुं मुनिसूनुशतं ययौ
॥
अथ धन्वन्तरिं सर्व्ववानप्रस्थाश्रमे
स्थितम् ।
भगवन्तं सुरश्रेष्ठं मुनिभिर्बहुभिः स्तुतम्
॥
काशिराजं दिवोदासं तेऽपश्यन्
विनयान्विताः ।
स्वागतं व इति स्माह दिवोदासो
यशोधनः ॥
कुशलं परिपप्रच्छ तथागमनकारणम् ।
ततस्ते सश्रुतद्वारा कथयामासुरुत्तरम्
॥
भगवन् मानवान् दृष्ट्वा व्याधिभिः
परिपीडितान् ।
क्रन्दतो म्रियमाणांश्च जातास्माकं हृदि
व्यथा ॥
आमयानां शमोपायं विज्ञातुं
वयमागताः ।
आयुर्व्वेदं भवानस्मानध्यापयतु
यत्नतः ॥
अङ्गीकृत्य वचस्तेषां
नृपतिस्तानुपादिशत् ।
व्याख्यातं तेन ते यत्नात् जगृहुर्मुनयो
मुदा ॥
काशिराजं जयाशीर्भिरभिनन्द्य
मुदान्विताः ।
सुश्रुताद्याः सुसिद्धार्था जग्मुर्गेहं स्वकं
स्वकम् ॥
प्रथमं सुश्रुतस्तेषु स्वं तन्त्रं कृतवान्
स्फुटम् ।
सुश्रुतस्य सखायोऽपि पृथक् तन्त्राणि
तेनिरे ॥
सुश्रुतेन कृतं तन्त्रं सुश्रुतं बहुभिर्यतः ।
तस्मात्तत् सुश्रुतंनाम्ना विख्यातं
क्षितिमण्डले ॥"
इति भावप्रकाशः ॥

**सुषीमः**, त्रि, शीतगुणयुक्तः । इत्यमरः । १ । ३ । १९
॥

मनोज्ञः । इति मेदिनी ॥

**सुषुप्तं**, क्ली, (सु + स्वप + क्तः ॥

यथा, --
"यो जागरे बहिरनुक्षणधर्म्मिणोऽर्थान्
भुङ्क्ते समस्तकरणैर्हृदि तत्सदृक्षान् ।
स्वप्ने सुषुप्त उपसंहरते स एकः
स्मृत्यन्वयात्त्रिगुणवृत्तिदृगिन्द्रियेशः ॥"
इति श्रीभागवते । ११ । १३ । ३२ ।
सुषुप्तियुक्ते, त्रि ॥ (यथा, भागवते । ६ । १६
।
५३ ।
"यथा सुषुप्तः पुरुषो विश्वं पश्यति चात्मनि ।
आत्मानमेकदेशस्थं मन्यते स्वप्न उत्थितः
॥")

**सुषुप्तिः**, स्त्री, (सु + स्वप् + क्तिन् ।) सत्त्वप्रधानं

अज्ञानम् । तस्य नामान्तरम् । कारणशरीरम्
।
आनन्दमयकोषश्च । इति वेदान्तसारः ।
सर्व्वस्य
स्थूलसूक्ष्मोपाधेः कारणोपाधौ लीनत्वं
सुषुप्ति-
त्वम् । इति तट्टीका ॥ अवस्थाविशेषः ।
यथा,
"स्वप्नावस्था परीक्षिता सुषुप्तावस्थेदानीं
परी-
क्ष्यते । तत्रैताः सुषुप्तविषयाः श्रुतयो भवन्ति
यद्यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न
विजानात्यासु नाडीषु सृप्तो भवतीति । नाडी-
रनुक्रम्य श्रूयते । ताभिः प्रत्यवसृप्य पुरीतति
शेत इति । विकल्पमानेषु तु सुषुप्तिस्थानेषु
कदाचिन्नाडीभ्यः प्रतिबुध्यते कदाचित्
पुरीततः
कदाचिदात्मन इत्यशासिष्यत् ।
तस्मादप्यात्मैव
तु सुप्तिस्थानमिति ।" इति शारीरिकभाष्ये ३

यमभार्य्या । इति केचित् ॥

**सुश्रीका**, स्त्री, (शोभना श्रीः शोभा यस्याः ।

कप् ।) सल्लकी । इति राजनिर्घण्टः ॥ सुन्दर-
श्रीयुक्ते, त्रि ॥ (यथा, हरिवंशे । १८३ । ११३ ।
"द्वारोपशोभितां कृत्वा सर्व्वां द्वारवतीं पुरीम् ।
संमृष्टरथ्यां सुश्रीकां बहुरत्नोपशोभिताम् ॥")
सुश्रुतः, पुं, विश्वामित्रमुनिपुत्त्रः । स तु चिकित्सा-
शास्त्रकर्त्ता । यथा, --
"तथा धन्वन्तरिवंशे जातः क्षीराब्धिमन्थने ।
देवादौनां जीवनाय आयुर्व्वेदमुवाच ह ।
विश्वामित्रसुताय्रैव सुश्रुताय महात्मने ॥"
इति गारुडे १५० अध्यायः ॥
अथ सुश्रुतप्रादुर्भावः ।
"अथ ज्ञानदृशा विश्वामित्रप्रभृतयोऽवदन् ।
अयं धन्वन्तरिः काश्यां काशिराजोऽयमुच्यते ॥
विश्वामित्रो मुनिस्तेषु पुत्त्रं सुश्रुतमुक्तवान् ।
वत्स वाराणसों गच्छ त्वं विश्वेश्वरवल्लभाम् ॥
तत्र नाम्ना दिवोदामः काशिराजोऽस्ति बाहुजः
स हि धन्वन्तरिः साक्षादायुर्व्वेदविदां वरः ॥
आयुर्व्वेदं ततोऽधीत्य लोकोपकृतिहेतवे ।
सर्व्वप्राणि दया तीर्थमुपकारो महामखः ॥

(क्ली, गोष्ठीश्राद्धे तृप्तिप्रश्नः । यथा, मनुः ।
३ । २५४ ।
"पित्र्ये स्वदितमित्येव वाच्यं गोष्ठेतु सुश्रुतम् ।
सम्पन्नमित्यभ्यु दये दैवे रुचितमित्यपि ॥")

**सुषमः**, त्रि, (सुष्ठु समं सर्व्वं यस्मात् । "सुविनिर्दुर्भ्यः

सुपिसूतिसमाः ।" ८ । ३ । ८८ । इति षत्वम् ।)
शोभनम् । इत्यमरः । ३ । १ । ५२ ॥ समः ।
इति मेदिनी ॥

**सुषमा**, स्त्री, (सु शोभनं समं सर्व्वं यथा ।) परमा

शोभा । इत्यमरः । १ । ३ । १७ ॥ (यथा,
नैषधे । १९ । २ ।
"जयजय महाराज प्राभातिकीं सुषमामिमां
सफलयतमां दानादक्षणोर्द्दरालसपक्ष्मणोः ॥")
निजानां कालभेदः । इति हेमचन्द्रः ॥

**सुषवी**, स्त्री, (सुष्ठु सूते फलानीति । सु + सू + अच्

गौरादित्वात् ङीष् ।) कारवेल्लः । इत्यमरः ।
२ । ४ । ११५ । कृष्णजीरकः । जीरकः । इति
मेदिनी ॥ क्षुद्रकारवेल्लः । इति राजनिर्घण्टः ॥

**सुषिः**, स्त्री, (सुष्ठुं स्यतीति । सु + सो + बाहु-

लकात् किः ।) शुषिः । इत्यमरः । १ । ८ । १ ॥

**सुषिरं**, क्ली, (श्रुष शोषणे + "इषिमदीति ।" उणा०

१ । ५२ । इति किरच् । पृषोदरादित्वात् शस्य

अध्याये २ पादः ॥ किञ्च । "यत्र सुप्तो न कञ्चन
कामं कामयते न कञ्चन स्वप्नं पश्यति तत्
सुषुप्तम् ।" इति माण्डुक्योपनिषत् ॥ सुनिद्रा च ॥

**सुषुम्ना**, स्त्री, (सुषु इत्यव्यक्तशब्दं म्नायतीति ।

म्ना + कः ।) मेरुदण्डवाह्ये इडापिङ्गलानाडी-
मध्यस्थनाडीविशेषः । यथा, --
"मेरोर्व्वाह्यप्रदेशे शशिमिहिरशिरे सव्यदक्षे निषण्णे
मध्ये नाडी सुषुस्ना त्रितयगुणमयी चन्द्र-
सूर्य्याग्निरूपा ।"
इति षट्चक्रभेदः ॥ * ॥
तस्या अशुभलक्षण यथा, --
"क्षणं वामे क्षणं दक्षे यदा बहति मारुतः ।
सुषुम्ना सा च विज्ञेया सर्व्वकार्य्यहराशुभा ॥
तस्यां नाड्यां स्थितो वह्निर्ज्वलन्तकालरूपिणः
विषमं तं विजानीयात् सर्व्वकार्य्यविनाशनम् ॥
यदानुक्रममुल्लङ्घ्य तस्यां नाड्यां द्वयं वहेत् ।
तदा तस्य विजानीयादशुभं समुपस्थितम् ॥"
इति ब्रह्मयामलम् ॥
"मेरुवाह्ये इडा नाडी पिङ्गलया समन्विता ।
सुषुम्ना भानुमार्गेण ब्रह्मद्वारावधिस्थिता ॥"
इति योगस्वरोदयः ॥

**सुषेणः**, पुं, करमर्द्दकः । इत्यमरः । २ । ४ । ६७ ॥

विष्णुः । (यथा, महाभारते । १३ । १४९ । ७१ ।

| | | |
|---|---|---|
| | सः । यद्वा, सुषिरस्यास्तीति । सुषि + "ऊषसुषि<br>सुष्कमधो रः ।" ५ । २ । १०७ ।<br>इति रः ।)<br>शुषिरम् । इत्यमरटीकायां भरतः । १<br>। ८ । १ ॥<br>(काष्ठम् । इति काशिका ॥ छिद्रयुक्ते,<br>त्रि ।<br>यथा, बृहत्संहितायाम् । ५३ । ८८ ।<br>"शस्तौषधिद्रुमलतामधुरासुगन्धिः<br>स्निग्धा समा न सुषिरा च मही<br>नराणाम् ॥)<br>**सुषीमः**, पुं, सर्पविशेषः । इति मेदिनी ॥ चन्द्र-<br>कान्तमणिः । इति जटाधरः ॥ | |

"महावराहो गोविन्दः सुषेणः कनकाङ्गदी ॥"
"शोभना सेना स्वगणात्मिका यस्य ।" इति तत्र
शाङ्करभाष्यम् ॥ वानरराजसुग्रीववैद्यः । इति
मेदिनी ॥ वेतसः । इति राजनिर्घण्टः (वसु-
देवपुत्त्रविशेषः । यथा, भागवते । ९ । २४ ।
५३ -- ५४ ।
"वसुदेवस्तु देवक्यामष्टपुत्त्रानजीजनत् ।
कीर्त्तिमन्तं सुषेणञ्च भद्रसेनमुदारधीः ॥
ऋजुं समर्द्दनं भद्रं सङ्कर्षणमहीश्वरम् ।
अष्टमस्तु तयोरासीत् स्वयमेव हरिः किल ॥"
नागविशेषः । इति महाभारतम् । १ । ५७ । १६ ॥
नृपविशेषः । स च शूरसेनाधिपतिः । यथा,
रघुः । ६ । ४५ ।
"सा शूरसेनाधिपतिं सुषेण-
मुद्दिश्य लोकान्तरगीतकीर्त्तिम् ।
आचारशुद्धोभयवंशदीपं
शुद्धान्तरक्ष्या जगदे कुमारी ॥")

**सुषेणिका**, स्त्री, कृष्णत्रिवृता । इत्यमरः । २ ।
४ । १०८ ॥

**सुषेणी**, स्त्री, त्रिवृत् । इति राजनिर्घण्टः ॥

**सुषोमा**, स्त्री, नदीभेदः । इति श्रीभागवते । ५ ।
१९ । १७ ।

**सुष्ठु**, व्य, (सुतिष्ठतीति । सु + स्था + "अपदुःसुषु
स्थः ।" उणा० १ । २६ । इति कुः । सुषमा-
दित्वात् षत्वम् । प्रशंसा । अतिशयम् । इत्य-
मरः । ३ । ४ । १ ॥ सत्यम् । इति संक्षिप्त-
सारोणोदादिवृत्तिः ॥ (यथा, भागवते । ४ ।
२२ । १७

**सुसम्पत्** (सुष्ठु सम्पत् । प्रादिसमासः ।)
सौभाग्यम् । तत्पर्य्यायः । परभागः ३
इति त्रिकाण्डशेषः ॥

**सुसम्पद्** (सुष्ठु सम्पत् । प्रादिसमासः ।)
सौभाग्यम् । तत्पर्य्यायः । परभागः ३
इति त्रिकाण्डशेषः ॥

**सुसहः**, त्रि, सुखसह्यः ॥ दुःसहभिन्नः । सुखेन
सह्यतेऽसाविति सहधातोः कर्म्मण्यल्प्रत्ययेन
निष्पन्नः ॥

**सुसारः**, पुं, (सुष्ठु सारो यस्य ।) रक्तखदिरः ।
इति राजनिर्घण्टः ॥
अतिशयसारविशिष्टे, त्रि ॥

**सुसारवत्**, क्ली, (सुसारोऽस्त्यस्येति । मतुप् ।
मस्य वः ।) स्फाटिकम् । इति त्रिकाण्ड-
शेषः ॥

**सुसिकता**, स्त्री, (सुष्ठु सिकतेव ।) शर्करा । इति
राजनिर्घण्टः ॥ उत्तमवालुका च ॥

**सुसीमा**, स्त्री, वृत्तार्हन्माता । सा तु षष्ठजिन-
जननी । इति हेमचन्द्रः ॥ (शोभना सीमा ।)
उत्तमसीमा च ॥

**सुस्थः**, त्रि, (सु + स्था + कः ।) सुखेन तिष्ठति यः ।
अरोगी । यथा, श्रीभागवते । १० । ३ । २७ ।
"मर्त्यो मृत्युव्यालभीतः पलायन्
सर्व्वान् लोकान् निर्भयं नाध्यगच्छत् ।
त्वत्पादाब्जं प्राप्य यदृच्छयाद्य
सुस्थः शेते मृत्युरस्मादपैति ॥"

**सुस्थता**, स्त्री, (सुस्थस्य भावः । तल् ।) आरो-
ग्यम् । इति शब्दचन्द्रिका ॥

**सुस्थिरः**, त्रि, (सुष्ठुस्थिरः ।) स्थिरतरः । यथा,

**सुहृत्** पुं, (सु शोभनं हृत् हृदयं यस्य ।)
मित्रम् । सखा । इत्यमरः । २ । ८ । १२ ॥
(यथा, हितोपदेशे ।

**सुहृद्** पुं, (सु शोभनं हृत् हृदयं यस्य ।)
मित्रम् । सखा । इत्यमरः । २ । ८ । १२ ॥
(यथा, हितोपदेशे ।
"सुहृदां हितकामानां यः शृणोति न भाषि-
तम् ।
विपत्सन्निहिता तस्य स नरः शत्रुनन्दनः ॥")
एकस्माल्लग्नात्तच्चतुर्थलग्नम् । यथा, --
"पातालं हिवुकञ्चैव सुहृदम्भश्चतुर्थकम् ।"
इति ज्योतिस्तत्त्वम् ॥
"शशिजः सुहृद्गृहगतः करोति चातुर्य्यहास्य-
धनवन्तं वचसामधिपः ।"
इत्यादिकोष्ठीप्रदीपः ॥
(महादेवः । इति महाभारतम् । १३ । १७ ।
९९ ॥)

**सुहृदयः**, त्रि, (सुष्ठु हृदयमन्तःकरणं यस्य ।)
प्रशस्तमनाः । तत्पर्य्यायः । हृदयालुः २ । इत्य-
मरः । ३ । १ । ३ ॥ सहृदयः ३ । इति शब्द-
रत्नावली ॥

**सुहोत्रः**, पुं, चन्द्रवंशीयबृहदिषुराजपुत्त्रः । यथा,
"बृहदिषोश्च दायादः सुहोत्रो नाम धार्म्मिकः
सुहोत्रस्यापि दायादो हस्ती नाम बभूव ह ॥"
इति महाभारते हरिवंशे पितृकल्पे २० अः ॥
(सहदेवपुत्त्रः । यथा, महाभारते । १ । ९५ । ८० ।
"सहदेवोऽपि माद्रीमेव स्वयंवरे विजयां नामो
पयेमे मद्रराजस्य द्युतिमतो दुहितरं तस्यां

"पृथोस्तत्सूक्तमाकर्ण्य सारं सुष्ठु मितं मधु
।
स्मयमान इव प्रीत्या कुमारः प्रत्युवाच ह
॥"
"सुष्ठु गम्भीरार्थम् ।" इति तट्टीका ॥)

**सुष्मं**, क्ली, रज्जुः । इत्यमरटीकायां स्वामी ॥

**सुसंयतः**, त्रि, । सु + सम् + यम + क्तः ।) यथा-

विधिसंयमविशिष्टः । यथा, बह्मपुराणम् ।
"यो यः कश्चित्तीर्थयात्रान्तु गच्छेत्
सुसंयतः स च पूर्व्वं गृहे स्वे ।
कृतोपवास शुचिरप्रमत्तः
संपूजयेत् भक्तिनम्रो गणेशम् ॥"
इति प्रायश्चित्ततत्त्वम् ॥

**सुसंस्कृतं**, त्रि, (सुष्ठु संस्क्रियते इति । सु + सं +

कृ + क्तः ।) घृतादिनानाद्रव्येण
प्रयत्नसंस्कृत-
व्यञ्जनादि । तत्पर्य्यायः । प्रयस्तम् २
इत्यमरः ॥
"तैलपाकसुसंस्कारे प्रयस्तमुपसंस्कृतम्
॥"
इति शब्दरत्नावली ॥
उत्तमसंस्कारविशिष्टश्च ॥

**सुसत्या**, स्त्री, जनकराजभार्य्या । यथा, --

"जानामि पितरं चाहं विदेहाधिपतिं नृपम् ।
तस्य भार्य्यां सुसत्याख्यामहं जानामि
मातरम् ॥
भ्रातरस्तत्सुताः सर्व्वे सीता मे भगिनी
शुभा ।
सुसत्या मम मातेति लोको जानाति
सन्ततम् ॥"
इति कालिकापुराणे ३७ अध्यायः ॥

**सुसवी**, स्त्री, सुषवी । इत्यमरटीकामां राय-

मृकुटः । २ । ४ । १५५ ॥

श्रीभागवते । ११ । ९ । ३१ ।
"न ह्येकस्माद्‌गुरोर्ज्ञानं सुस्थिरं स्यात्
सुपु-
ष्कलम् ।
ब्रह्मैतदद्वितीयं वै गीयते बहुधर्षिभिः ॥"

**सुस्नाः**, पुं, (सुष्ठु स्नात्यनेन रुक्षत्वात् । सु + स्नै

+ क्विप् ।) शमीधान्यभेदः । खेसारी
इति
भाषा । अस्य गुणाः ।
"सुस्ना दुर्व्वातलो रुक्षः कषायो विशदो
गुरुः ।"
इति राजनिर्घण्टः ॥

**सुस्नातः**, पुं, (सुष्ठु + स्नातः ।) यज्ञान्तस्नानकृत्
।

इति शब्दावली ॥ सुन्दररूपकृतस्नाने,
त्रि ।
यथा, --
"अघाहःसु निवृत्तेषु सुस्नाताः
कृतमङ्गलाः ।
आशुच्याद्विप्रमुच्यन्ते ब्राह्मणान्
स्वस्तिवाच्य च ॥"
इति शुद्धितत्त्वम् ॥

**सुस्मिता**, स्त्री, (सुष्ठु स्मितं यस्याः ।) स्त्रीभेदः ।

इति हेमचन्द्रः ॥ सुन्दरेषद्धास्ययुक्ते त्रि
॥

**सुहस्ती**, [न्] पुं, बौद्धभेदः । यथा, --

"महागिरिसुहस्त्यद्या वज्रान्ता
दशपूर्व्विणः ।"
इति हेमचन्द्रः । ३४ ॥

**सुहितः**, त्रि, (सु + धा + क्तः ।) विहितः । तृप्तः ।

इति विश्वः ॥ (यथा, बृहत्संहितायाम् ।
५१ । २९ ।
"अतिबहु तदा भुक्त्वान्नं संस्थितः
सुहितो
वदेत् ॥")

**सुहिता**, स्त्री, (सु + धा + क्तः । टाप् ।) अग्नि-

जिह्वाविशेषः । इति जटाधरः ॥

पुत्त्रमजनयत् सुहोत्रं नाम ॥" * ॥
भरतवंशी-
यस्य भुमन्योः पुत्त्रविशेषः । यथा, तत्रैव ।
१ ।
९४ । २४ ।
"सुहोत्रश्च सुहोता च सुहविः सुयजुस्तथा
।
पुष्करिण्यामृचीकश्च भुमन्योरभवन् सुताः
॥")

**सूः**, स्त्री, सूतिः । क्षेपः । सूधातोः क्विप्प्रत्ययेन

निष्पन्नमिति केचित् ॥

**सूकः**, पुं, बाणः । वातः । उत्पलम् । इति मेदिनी ॥

**सूकरः**, पुं, (सूइत्यव्यक्तशब्दं कर्त्तुं शीलमस्य ।

कृ + टः ।) वराहः । इत्यमरः । २ । ५ । २
॥
(यथा, वैराग्यशतके । १६ ।
"कामिजनपरमभोम्ये कामसुखे धारयन्ति
वीभत्सम् ।
सन्तः शमसुखरसिकाः सुधाशनाः सूकरान्न
इव ॥" * ॥
सुष्ठु कर्त्तुं शीलमस्य । सु + कृ + टः । पक्षे
उपसर्गस्य दीर्घत्वम् ।) कुम्भकारः । इति
शब्दरत्नावली ॥ मृगभेदः । इति जटाधरः
॥

**सूकरी**, स्त्री, (सूकर + जातौ ङीष् ।) सूकर-

भार्य्या ॥ (यथा, याज्ञवल्क्ये । ३ । २५६ ।
"पतिलोकं न सा याति ब्राह्मणी या सुरां
पिबेत् ।
इहैव सा शुनी गृध्री सूकरी चोपजायते ॥")
वराहक्रान्ता । इति शब्दमाला ॥

**सूक्तं**, त्रि, (सुष्ठु उक्तम् ।) शोभनोक्तिविशिष्टम् ।

वेदोक्तस्तोत्रमन्त्रादि । यथा । ऋग्वेदस्य
अग्नि-
मीले, इत्यादि अग्निसूक्तम् । १ । १ । १ ॥
* ॥
सहस्रशीर्षेत्यादि पुरुषसूक्तम् । १० । ९० ।
१ ॥ * ॥
अहं रुद्रेभिरित्यादि देवीसूक्तम् । १० ।
१२५ । १ ॥ *

हिरण्यवर्णामित्यादि श्रीसूक्तम् ॥ * ॥ रात्री व्यख्य-
दायतीत्यादि रात्रिसूक्तम् । १० । १२७ । १ ॥ * ॥
आतून इन्द्र क्षुमन्तमित्यादि गणेशसूक्तम् । ८ ।
७० । १ ॥ * ॥ इयमददाद्रभसम् इत्यादि सरस्वती-
सूक्तम् । ६ । ६१ । १ ॥ * ॥ अतो देवा अवन्तु न
इत्यादि विष्णुसूक्तम् । १ । २२ । १६ ॥ * ॥ मेदिनी
देवीत्यादि भूसूक्तम् ॥ * ॥ आदित्यानामित्यादि-
आदित्यसूक्तम् । ७ । ५ । १ । १ ॥ * ॥ त्वं सोम इत्यादि
सोमसूक्तम् । १ । ९१ । १ ॥ इत्यादि ऋग्वेदस्य सूक्त-
सहस्रम् । यथा । सहस्रमेकं सूक्तानामित्यादि
चरणव्यूहः ॥ यजुर्व्वेदस्य विशमैशमित्यादि
कुमारसूक्तम् । सोमाय पितृमते इत्यादि पितृ-
सूक्तम् । पवमान स्वर्ज्जन इत्यादि पावमानी-
सूक्तम् । इत्यादि वेदप्रसिद्धम् ॥ तथा, --
"जप्यानि सूक्तानि तथैव चैषा-
मनुक्रमेणापि यथास्वरूपम् ।"
इति मलमासतत्त्वम् ॥
अपि च ।
"सन्दर्शनार्थमम्बाया नदीपुलिनसंस्थितः ।
स च वैश्यस्तपस्तेपे देवीसूक्तं परं जपन् ॥"
इति माकण्डेयपुराणे देवीमाहात्म्यम् ॥

**सूक्ता**, स्त्री, (सुष्ठु उक्तं कथनं यस्याः ।) शारिका ।
यथा, त्रिकाण्डशेषे ।
"सूक्ता मदनशलाका चित्राक्षी शारिकाव-
चण्डा च ॥"

**सूक्ष्मं**, क्ली, (सूच्यते इति । सूच पैशुन्ये +
"सूचेः स्मन् ।" उणा० ४ । १७६ । इति

**सूक्ष्मदर्शी**, [न्] त्रि, (सूक्ष्मं पश्यतीति । दृश +
णिनिः ।) अतिशयबुद्धिमान् । तत्पर्य्यायः ।
कुशाग्रीयमतिः २ तत्कालधीः ३ प्रत्युत्पन्नमतिः
४ । इति हेमचन्द्रः ॥ (यथा, महाभारते ।
१३ । १४ । २३ ।
"न विदुर्यस्य भवनमादित्याः सूक्ष्मदर्शिनः ।
स कथं नरमात्रेण शक्यो ज्ञातुं सतां गतिः ॥")

**सूक्ष्मदारु**, क्ली, (सूक्ष्मं दारु ।) तनुकाष्ठम् । तत्प-
र्य्यायः । कलिङ्गः ३ । इति त्रिकाण्डशेषः ॥

**सूक्ष्मपत्रः**, पुं, (सूक्ष्माणि पत्राणि यस्य ।) धान्य-
कम् । वनजीरकः । देवसर्षपः । लघुवदरः ।
सूरपर्णम् । वनवर्व्वरी । लोहितेक्षुः । कुक्कु-
टद्रुः । इति राजनिर्घण्टः । यथा, --
"वावलः स्वर्णपुष्पश्च सूक्ष्मपत्रश्च कण्टलः ॥"
इति शब्दचन्द्रिका ॥

**सूक्ष्मपत्रिका**, स्त्री, (सूक्ष्माणि पत्राणि यस्याः ।
ततः कन् । टापि अत इत्त्वम् ।) शतपुष्पा ।
शतावरी । लघुब्राह्मी । क्षुद्रोपोदकी । दुरा-
लभा । आकाशमांसो । इति राजनिर्घण्टः ॥

**सूक्ष्मपर्णा**, स्त्री, (सूक्ष्मं पर्णमस्याः ।) जीर्ण-
फञ्जी । डोडी । इति राजनिर्घण्टः ॥

**सूक्ष्मपर्णी**, स्त्री, (सूक्ष्मं पर्णमस्याः । ङीष् ।)
रामदूतीवृक्षः । यथा, --
"रामदूती पर्व्वपुष्पी विशल्या नागदन्तिका ।
काण्डली सूक्ष्मपर्णी च भरण्याह्वा फणिज्-
बुद्धिमनसी चेति सप्तदशावयवानि । इति
वेदान्तसारः ॥

**सूक्ष्मशर्करा**, स्त्री, (सूक्ष्मा शर्करेव ।) बालुका ।
इति राजनिर्घण्टः ॥

**सूक्ष्मशाखः**, पुं, (सूक्ष्मा शाखा यस्य ।) जाल-
वर्व्वूरः । इति राजनिर्घण्टः ॥

**सूक्ष्मशालिः**, पुं, (सूक्ष्मः शालिः ।) अणुधान्य-
विशेषः । तत्पर्य्यायः । सूचिशालिः २ पाव-
शालिः ३ सूचकः ४ । अस्य गुणाः । सूमधुर-
त्वम् । लघुत्वम् । पित्तास्रदहिनाशित्वञ्च ।
इति राजनिर्घण्टः ॥

**सूक्ष्मषट्चरणः**, पुं, (सूक्ष्माणि षट्चरणानि
यस्य ।) पक्ष्मयूकः । इति राजनिर्घण्टः ॥

**सूक्ष्मा**, स्त्री, (सूक्ष्म + टाप् ।) यूथिका । इति
शब्दचन्द्रिका ॥ क्षुद्रैला । करुणी । वालुका ।
इति राजनिर्घण्टः ॥

**सूक्ष्मैला**, स्त्री, (सूक्ष्मा एला ।) क्षुद्रैला । गुजु-
राटी एलाचि इति भाषा । तत्पर्य्यायः ।
वयस्था २ तीक्ष्णगन्धा ३ त्रपुटी ४ त्रुटिः ५ ।
इति रत्नमाला ॥

**सूच**, त् क पैशुन्ये । इति कविकल्पद्रुमः ॥ (अदन्त
चुरा०-पर०-सक०-सेट् ।) दीर्घी । असु-
सूचत् कथां लोकः कथितवान् इत्यर्थः । इति
रमानाथः । पैशुन्यमन्तर्द्रोह इत्येके । इति
दुर्गादासः ॥

**सूचः**, पुं, (सीव्यति चरणौ इति । सिव + "सिवेष्टे-

स्मन् ।) कैतवम् । अध्यात्मम् । इति मेदिनी ॥
(यथा, भागवते । ३ । ८ । १४ ।
“तस्यार्थसूक्ष्माभिनिविष्टदृष्टे-
रन्तर्गतोऽर्थो रजसा तनीयान् ॥”)
अलङ्कारविशेषः । यथा, --
“सूक्ष्मं पराशयाभिज्ञे त्वरसाकूतचेष्टितम् ।
मयि पश्यति सा केशैः सीमन्तमणिमावृणोत् ॥
इति चन्द्रालोकः ॥

**सूक्ष्मः**, पुं, (सूच् + स्मन् ।) कतकवृक्षः ।
इति शब्दरत्नावली ॥ अणुः । अल्पे, त्रि ।
इति मेदिनी ॥ (यथा, महाभारते । १ ।
२१३ । १५ ।
“न तस्याः सूक्ष्ममप्यस्ति यद्गात्रे
रूपसम्पदा ।
नियुक्ता यत्र वा दृष्टिर्न सज्जति निरीक्षताम् ॥”)
तत्पर्य्यायः ।
“अल्पे स्तोके क्षुल्लसूक्ष्मं क्षुल्लकञ्च कृशं तनु ।
दभ्रं खुल्ल खुल्लकञ्च स्त्रियां मात्रा त्रुटी कणा ।
पुमानणुर्लवो लेशः कणोऽपि च निगद्यते ॥”
इति शब्दरत्नावली ॥

**सूक्ष्मकृष्णफला**, स्त्री, सूक्ष्मं कृष्णञ्च फलं यस्याः ।)
मध्यमजम्बुवृक्षः । इति रत्नमाला ॥

**सूक्ष्मतण्डुलः**, पुं, (सूक्ष्मं तण्डुलं बीजं यस्य ।)
खस्खसः । इति राजनिर्घण्टः ॥

**सूक्ष्मतण्डुला**, स्त्री, (सूक्ष्मं तण्डुलं बीजं यस्याः ।)
पिप्पली । इति राजनिर्घण्टः ॥
झका ॥”
इति शब्दचन्द्रिका ॥

**सूक्ष्मपिप्पली**, स्त्री, (सूक्ष्मा पिप्पली ।) वन-
पिप्पली । इति राजनिर्घण्टः ॥
सूक्ष्मपुष्पी, स्त्री, यवतिक्ता । इति
राजनिर्घण्टः ॥

**सूक्ष्मफलः**, पुं, (सूक्ष्मं फलमस्य ।) भूकर्व्वुदारः ।
इति राजनिर्घण्टः ॥

**सूक्ष्मफला**, स्त्री, (सूक्ष्मं फलमस्याः ।) भूम्याम-
लकी । इति रत्नमाला ॥

**सूक्ष्मबदरी**, स्त्री, (सूक्ष्मा बदरी ।) भूबदरी ।
इति राजनिर्घण्टः ॥

**सूक्ष्मबीजः**, पुं, (सूक्ष्मं बीजं यस्य ।) खस्खसः ।
इति राजनिर्घण्टः ॥

**सूक्ष्मभूतं**, क्ली, (सूक्ष्मं भूतम् ।) अपञ्चीकृता-
काशादिभूतम् । इति वेदान्तसारः ॥

**सूक्ष्ममक्षिकः**, पुं, (सूक्ष्मा मक्षिका तद्वदाकृति-
रस्त्यस्येति । अच् ।) मशकः । इति राज-
निर्घण्टः ॥

**सूक्ष्ममूला**, स्त्री, (सूक्ष्मं मूलं यस्याः ।) जयन्ती ।
इति राजनिर्घण्टः ॥

**सूक्ष्मवल्ली**, स्त्री, (सूक्ष्मा वल्ली ।) ताम्रवल्ली ।
जतुका । इति राजनिर्घण्टः ॥

**सूक्ष्मवस्त्रं**, क्ली, (सूक्ष्मं वस्त्रम् ।) श्लक्ष्णवसनम् ।
सरु कापड इति भाषा । यथा ।
उपभोगोऽपि
न सूक्ष्मवस्त्रपरिधानादिना । इति
दायभागः ॥

**सूक्ष्मशरीराणि**, क्ली, (सूक्ष्माणि शरीराणि ।)
ज्ञानेन्द्रियपञ्चकं कर्म्मेन्द्रियपञ्चकं
वायुपञ्चकं
रू च ।” उणा० ४ । ९३ । इति चट् ।
टेरू-
त्वञ्च ।) कुशाङ्कुरः । इति केचित् ॥

**सूचकः**, त्रि, (सूचयतीति । सूचपैशुन्ये + ण्वुल् ।)
पिशुनः । इत्यमरः । ३ । १ । ४७ ॥
(यथा, मनुः ।
४ । ७१ ।
“लोष्टमर्द्दी तृणच्छेदी नखखादी च यो
नरः ।
स विनाशं व्रजत्याशु सूचकोऽशुचिरेव च ॥”)
अस्य विवरणं कर्णेजपशब्दे द्रष्टव्यम् ॥
(सूचन-
कर्त्ता । यथा महाभारते । १ । १३६ ।
२७ ।
“द्वारदेशात् समुद्भूतो माहात्मबलसूचकः ।
वज्रनिष्पेषसदृशः शुश्रुवे भुजनिस्वनः ॥”)

**सूचकः**, पुं, (सीव्यत्यनेनेति । सिव + “सिवेष्टे-
रू च ।” उणा० ४ । ९३ । इति चट् ।
टेरूत्वञ्च ।
ततः स्वार्थे कन् ।) सीवनद्रव्यम् ।
(सूचय-
तीति । सूच + ण्वुल् ।) बोधकः ।
कुक्कुरः ।
विडालः । काकः । इति मेदिनी । के,
१६८ ॥
पिशुनः । बुद्धः । सिद्धः । पिशाचः । इति
शब्दरत्नावली ॥ सूत्रधारः । कथकः ।
इति
हेमचन्द्रः ॥ सूक्ष्मशालिः । इति
राजनिर्घण्टः ॥

**सूचनं**, क्ली, (सूच + ल्युट् ।) गन्धनम् । इत्यमरः ।
३ । ३ । ११४ ॥ ज्ञापनम् । इति
त्रिकाण्डशेषः ॥
(यथा, कथासरित्सागरे । १५ । १४८ ।
“भङ्गिसूचनविधौ विशारदो
नारदो मुनिरदर्शनं ययौ ॥

| | | **सूचना**, स्त्री, (सूच + णिच् + युच् । टाप् ।)<br>व्यधनम् । दृष्टिः । मन्धनम् । अभिनयः इति । |
|---|---|---|

विश्वमेदिन्यौ ॥ (ज्ञापनम् । यथा,
साहित्य-
दर्पणे । ६ । ३१२ ।
"यत्र स्यादङ्क एकस्मिन्नङ्कानां
सूचनाखिला ।
तदङ्कमुखमित्याहुर्बीजार्थख्यापकञ्च तत्
॥")

**सूचिः**, स्त्री, (सूच्यतेऽनयेति । सूच + णिच् +
"अच इः ।" उणा० ४ । १३८ । इति इः
।)
व्यधनी । इत्यसरः । ३ । ५ । ७ ॥ (यथा,
कथा-
सरित्सागरे । १०४ । ७५ ।
"चन्द्रोऽग्निर्विषमाहारो गीतानि श्रुतिसूचयः
उद्यानं बन्धनं पौष्पी माला दिग्धा
शरावली ॥"
"विव्यथ भरतोऽतीव व्रणे तुद्येव सूचिना
।"
इति रामायणे । २ । ७५ । १७ । इत्यत्र तु
महाकविप्रयोगवशात् साधुत्वम् ॥)
नृत्यप्रभेदः ।
शिखा । यथा, --
"सूचिर्नृत्यप्रभेदे च व्यधनीशिखयोरपि ।"
इति रत्नकोषः ॥
(यथा, कुमारे । ५ । ४३ ।
"अलभ्यशोकाभिभवेयमाकृति-
र्विमानना सुभ्रु कुतः पितुर्गृहे ।
पराभिमर्शो न तवान्ति कः करं
प्रसारयेत् पन्नगरत्नसूचये ॥" * ॥
केतकीपुष्पम् । इति सूचिपुष्पशब्दर्शनात्
॥
यथा, ऋतुसंहारे । २ । २३ ।
"मुदित इव कदम्बैर्जातपुष्पैः समन्तात्
पवनचलितशाखैः शाखिभिर्नृत्यतीव ।
हसितमिव विधत्ते सूचिभिः केतकीनां
नवसलिलनिषेकात् शान्ततापो वनान्तः
॥"
व्यूहविशेषः । यथा, मनुः । ७ । १९१ ।
"संहतान् योधयेदल्पान् कामं विस्तार-

रक्तभेषजसम्पर्कात् मूर्च्छितोऽपि हि जीवति ।
तथैव सर्पदष्टोऽपि मृतावस्थोऽपि जीवति ।
यदा तापो भवेत्तस्य मधुरं तत्र दीयते ॥"
इति सूचिकाभरणो रसः ॥
इति भैषज्यरत्नावली ॥ * ॥ अपि च ।
"विषं पलं रस शाणं तच्चूर्णं काचलेपिते ।
मृत्संपटे च संरुध्य चल्ल्यां संस्थाप्य पाच-
येत् ॥
शनैर्य्यामिद्वयं पक्त्वा तं समुद्धास्य शीतलम् ।
ऊर्द्धपात्रगतं धूमं गृहीत्वा स्पृष्टमारुतम् ॥
यावत् सूच्या मुखे लग्नं कूप्या आयाति भेषजम्
क्षुरेण प्रक्षते शीर्षे तत्राङ्गुल्या च घर्षयेत् ॥
त्रिदोषे मूर्च्छितो जीवो रक्तभेषजसङ्गमात् ।
सर्पदष्टो मृतावस्थः सोऽपि जीवति तत्क्षणात्
दद्याच्च मधुरं तोयं सूचिकाभरणे रसे ॥"
इति सूचिकाभरणरसः सन्निपाते ॥
इति रसप्रदीपः ॥ * ॥ (अपि च ।
"रसगन्धकनागञ्च विषं स्थावरजङ्गमम् ।
मात्स्यवाराहमायूरच्छागपित्तैर्विभावयेत् ॥
सूचिकाभरणो नाम भैरवेण प्रकीर्त्तितः ।
सूचिकाग्रेण दातव्यः सन्निपातनिवर्हणः ॥"
इति सूचिकाभरणो रसः ॥
इति वैद्यकरसेन्द्रसारसंग्रहे ज्वराधिकारे ॥)

**सूचिकामुखं**, क्ली, (सूचिकेव क्रमसूक्ष्मं मुखं यस्य)
शङ्खः । इति हारावली । ११० ॥ सूच्यास्ये,
त्रि ॥

**सूचितः**, त्रि, (सूच + क्तः ।) कथितः । बोधितः ।
(यथा, साहित्यदर्पणे । ६ । ३११ ।
"अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः ।
यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः ॥")

**सूचिपत्रकः**, पुं, (सूचिवत् सूक्ष्माणि पत्राणिं
यस्य । कप् ।) सितावरशाकः । इति राज-
निर्घण्टः ॥

**सूचिपुष्पः**, पुं, (सूच्याकारं पुष्पमस्य । सूचिरिति
नाम्ना ख्यातं पुष्पमस्येति वा ।) केतकवृक्षः ।
इति जटाधरः ॥

वैद्यकोक्तकार्य्यमस्या यथा, --
"एषण्यागतिमन्विष्य
क्षारसूत्रानुसारिणीम् ।
सूचीं विदद्याद्गन्त्यन्ते चोन्नम्याशुच
निर्हरेत् ॥
सूत्रस्यान्तं समानीय
गाढबन्धनमाचरेत् ।
ततः क्षारबलं वीक्ष्य सूत्रमन्यत्
प्रवेशयेत् ॥
क्षाराक्तं मतिमान् वैद्यो यावन्न छिद्यते
गतिः
भगन्दरेऽप्येष विधिः कार्य्यो वैद्येन
जानता ॥
अर्व्वुदादिषु चोत्क्षिप्य मूले सूत्रं न
धापयेत् ।
सूचीभिर्यववक्राभिराचितं वासमन्ततः
।
मूले सूत्रेण बध्नीयाच्छिन्ने
चोपचरेद्व्रणम् ॥"
इति वैद्यकचक्रपाणिग्रहे
नाडीव्रणाधिकारे ॥)
आङ्गिकाभिनयविशेषः । अङ्गद्वाराचेष्टा
। इति
मेदिनी ॥ करणम् । इति हेमचन्द्रः ॥
दृष्टिः ।
इति केचित् ॥ (केतकीपूष्पम् । इति
सूचिशब्द-
दर्शनात् ॥ व्यूहविशेषः । यथा, मनुः ।
७ । १८७ ।
"वराहमकराभ्यां वा सूच्या वा गरुडेन
वा ॥")

**सूची**, [न्] त्रि, (सूचयतीति । सूच + णिनिः ।)
सूचकः । (पिशुनः । यथा, महाभारते ।
५ । ३५ । ४६ ।
"पर्व्वकारी च सूची च मित्रध्रुक् पारदा-
रिकः ॥")

**सूचीदलः**, पुं, (सूचीवत् दलानि यस्य ।) सिता-
वरः । इति राजनिर्घण्टः ॥

येद्बहून् ।
सूच्या वज्रेण चैवैतान् व्यूहेन व्यूह्य योधयेत् ॥”)

**सूचिकः**, पुं, सूच्या जीवति यः । दरजी इति

भाषा । तत्पर्य्यायः । सौचिकः २ सौचिः ३
तुन्नवायः ४ सूत्रभित् ५ । इति शब्दरत्नावली ॥ (यथा, बृहत्संहितायाम् । १० । ९ ।
“हस्ते नापितचाक्रिकचौरभिषक्सूचिक द्विपग्राहाः ॥”)

**सूचिका**, स्त्री, (सूचिरेव स्वार्थे कन् ।) सूचिः ।

हस्तिशुण्डः । इति केचित् ॥

**सूचिकाधरः**, पुं, (सूचिकायाः शुण्डस्य धरः ।)

हस्ती । इति शब्दमाला ॥

**सूचिकाभरणः**, पुं, औषधविशेषः । यथा, --

“विषं पलमितं सूतः शाणकश्चूर्णयेद्‌द्वयम् ।
तच्चूर्णं संपुटे कृत्वा काचलिप्तशरावयोः ॥
मुद्रां कृत्वाथ संशोष्य ततश्चुल्ल्यां निवेशयेत् ।
वह्निं शनैः शनैः कुर्य्यात् प्रहरद्वयसङ्ख्यया ॥
ततः उद्घाट्य तन्मुद्रामुपरिस्थशरावकात् ।
सलग्नी यो भवेद्धूमस्तं गृह्णीयाच्छनैः शनैः ॥
वायुस्पर्शी यथा न स्यात्ततः कूप्यां निवेशयेत् ।
यावत् सूच्या मुखे लग्नं कूप्या निर्याति भेषजम्
तावन्मात्रो रसो देयो मूर्च्छिते सतिपातिनि ॥
क्षुरेण पक्षते मूद्‌र्ध्नि तत्राङ्गुल्या च घर्षयेत् ॥

**सूचिरोमा**, [न्] पुं, (सूचिवत् रोमाणि यस्य ।)

वराहः । इति हारावली ॥

**सूचिवदनः**, पुं, (सूचिवत् सूक्ष्मं वदनं यस्य ।)

नकुलः । मसकः । इति राजनिर्घण्टः ॥

**सूचिवान्**, [त्] पुं, (सूचिस्तदाकारचञ्चुरस्त्य-

स्येति । मतुप् । मस्य वः ।) गरुडः । इति शब्दरत्नावली

**सूचिशालिः**, पुं, (सूचिवत् सूक्ष्मः शालिः ।)

इति राजनिर्घण्टः ॥

**सूची**, स्त्री, (सीव्यतेऽनया । सिव + “सिवेष्टेरू च

उणा० ४ । ९३ । इति चट् । टेरूत्वञ्च । टित्वात् ङीप् । गौरादित्वात् ङीष् इति केचित् सूच + इः । कृदिकारादिति ङीष् वा ।) सीवन-
द्रव्यम् । सूँच इति भाषा ॥ (यथा, महा-
भारते । ५ । ५८ । १८ ।
“यावद्धि सूच्यास्तीक्ष्णाया विध्येदग्रेण मारिष
तावदप्यपरित्याज्यं भूमेर्नः पाण्डवान् प्रति ॥”

**सूचीपत्रा**, स्त्री, (सूचीवत् पत्राणि यस्याः ।)

गण्डदूर्व्वा । इति राजनिर्घण्टः ॥

**सूचीपुष्पः**, पुं, (सूचीवत् सूक्ष्मं पुष्पमस्य ।

सूचीति नाम्ना प्रसिद्धं पुष्पमस्येति वा ।)
केतकी । इति रत्नमाला ॥

**सूचीमुखं**, क्ली, (सूचीवत् सूक्ष्मं मुखं यस्य ।)

होरकम् । इति हेमचन्द्रः ॥ (यथा, साहित्य-
दर्तणे । ८ । ६१२ ।
“सूचीमुखेन सकृदेव कृतव्रणस्त्वं मुक्ताकलाप लुठसि स्तनयोः प्रियायाः ।
बाणैः स्मरस्य शतशो विनिकृत्तमर्म्मा स्वप्नेऽपि तां कथमहो न विलोकयामि ॥” * ॥
नरकविशेषः । यथा, भागवते । ५ । २६ । ७ ।
“पर्य्यावर्त्तनः सूचीमुखमित्यष्टाविंशतिर्नरका विविधयातनाभूमयः ॥” * ॥ सूच्या मुखम् । यथा,
कादम्बरी । “तमसि सूचीमुखाग्रसंभेद्ये इति ॥”
सूचास्ये, त्रि । (यथा, महाभारते । ६ । १८ । ५ ।
“सूचीमुखमनीकं स्यादल्पानां बहुभिः सह ॥”
तथा, मार्कण्डेये । १४ । ५५ ।
“दुष्टास्ते पूयनिर्य्यासभुजः सूचौमुखास्तु ते ॥”)

**सूचीमुखः**, पुं, (सूचीवत् सूक्ष्मं मुखं यस्य ।)

सितकुशः । इति राजनिर्घण्टः ॥

**सूचीरोमा**, [न्] पुं, (सूचीवत् रोमाणि यस्य ।)

शूकरः । इति त्रिकाण्डशेषः ॥
सूचातुल्य-
लोमविशिष्टे, त्रि ॥

**सूच्यग्रस्थूलकः**, पुं, (सूच्या अग्रैव स्थूलः । ततः

|  |  |  |
| --- | --- | --- |
|  |  | कन् ।) तृणविशेषः । उलु इति भाषा ।<br>यथा-<br>“सूच्यग्रस्थूलको दर्भो जूर्णाख्यथ खरच्छदः ॥”<br>इति रत्नमाला ॥ |

**सूच्यास्यः**, पुं, (सूचीवत् आस्यं मुखं यस्य ।)

मूषिकः । इति हेमचन्द्रः ॥ सूचीमुखे, त्रि ॥

**सूच्याह्वः**, पुं, (सूच्या आह्वा आह्वा यस्य ।)

सितावरः । इति राजनिर्घण्टः ॥

**सूतः**, पुं, (सूप्रेरणे ऐश्वर्य्ये प्रसवे च + क्तः ।)

सारथिः । (यथा, रघुः । ३ । ४२ ।
"स पूर्व्वतः पर्व्वतपक्षशातनं
ददर्श देवं नरदेवसम्भवः ।
पुनः पुनः सूतनिषिद्धचापलं
हरन्तमश्वं रथरश्मिसंयतम् ॥")
त्वष्टा । इत्यमरः । ३ । ४ । ६१ ॥
क्षत्त्रियात्
ब्राह्मणीसुतः । (यथा, मनुः । १० । ११ ।
"क्षत्त्रियात् विप्रकन्यायां सूतो भवति
जातितः
अश्वसारथ्यमेवैतेषां जीविका । यथा, तत्रैव
।
१० । ४७ ।
"सूतानामश्वसारथ्यमम्बष्ठानांचिकित्सितम्
॥
वन्दी । (यथा, रघुः । ५ । ६५ ।
"सूतात्मजाः सवयसः प्रथितप्रबोधं
प्राबोधयन्नुषसि वाग्भिरुदारवाचः ॥")
पारदः । इति मेदिनी ॥ (यथा, वैद्यकरसेन्द्र-
सारसंग्रहे जारणमारणाधिकारे।
"हतो हन्ति जराव्याधिं
मूर्च्छितोव्याधिघातकः
बद्धः खेचरतां धत्ते कोऽन्यः सूतात्
कृपाकरः ॥
सूर्य्यः । इत्यनेकार्थकोषः ॥ पूराणवक्ता ।
यथा,
"सवान्ते सूतमनघं नैमिषीया महर्षयः ।
पुराणसंहितां पुण्यां पप्रच्छ लोमहर्षणम् ॥
त्वया सूत महाबुद्धे भगवान् ब्रह्मवित्तमः ।
इतिहासपुराणार्थं व्यासः सम्यगुपासितः ॥
अस्य ते सर्व्वरोमाणि वचसा हृषितानि यत् ।
द्वैपायनस्य भगवांस्ततो वै रोमहर्षणः ॥
भवन्तमेव भगवान् व्याजहार स्वयं प्रभुः ।
अन्यच्च ।
"हस्ते तु दक्षिणे चक्रं दृष्ट्वा तस्य
पितामहः ।
विष्णोरंशं पृथुं मत्वा परितोषं परं ययौ ॥
४४ ॥
तस्य वै जातमात्रस्य यज्ञे पैतामहे शुभे ।
सूतः सूत्यां समुत्पन्नः सौत्येऽहनि महामते
॥ ५०
तस्मिन्नेव महायज्ञे जज्ञे प्राज्ञोऽथ मागधः ।
प्रोक्तौ तदा मुनिवरैस्तावुभौ सूतमागधौ ॥
५१
स्तूयतामेव नृपतिः पृथुर्वैण्यः प्रतापवान्
॥" ५२
इति विष्णुपुराणे । १ । १३ अध्यायः ॥ *
॥
यून एव पृथोर्जातत्वात् जातमात्रस्य यज्ञ
इत्यु-
च्यते । पृथुरेवाभवत् यस्मात्ततः
पृथुरजायत
इति मात्स्योक्तेः । पैतामहे पितामहदैवत्ये
पृथोरेव यज्ञे न तु पितामहकर्त्तृके । यथाह
वायुः । वैण्यस्य हि पृथोर्यज्ञे वर्त्तमाने
महा-
त्मनः । सूतः सूत्यां समुत्पन्न इति ।
सूत्यामिति
सूतिरभिषूतिः अभिषूयते कण्ड्यते
सोमोऽस्या-
मिति सूतिः सीमाभिषवभूमिस्तस्याम्।
सौत्ये-
ऽहनि तस्मिन्नेव दिने । इति तट्टीका ॥ *
॥
किञ्च ।
"एतस्मिन्नेव काले तु यज्ञे पैतामहे शुभे ।
सूतः सूत्यां समुत्पन्नः सौत्येऽहनि
पुराणवित् ॥
तेषां यज्ञे पुनस्त्वेवमुत्पन्नौ सूतमागधौ ।
पृथोः स्तवार्थं तौ तत्र समाहूतौ महर्षिभिः
॥
ते ऊचुरृषयः सर्व्वे स्तूयतामेष पार्थिवः ।
प्रतिबन्धकम् । यथा, --
"व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्च्चने जपे ।
आरब्धे सूतकं न स्यादनारब्धे नु
सूतकम् ॥"
इति तिथ्यादितत्त्वम् ॥
(उपरागः । ग्रहणम् । यथा, मनुः । ४ ।
११० ।
"प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य
केतनम् ।
त्र्यहं न कीर्त्तयेद्ब्रह्म राज्ञो राहोश्च
सूतके ॥"
"राजा चन्द्रमास्तस्य सूतकं राहुं
प्रत्यमृत-
स्रवणं चशब्दात् सूर्य्यस्य च । अथवा
जनपदे-
श्वरस्य राज्ञः सूतकं पुत्त्रजन्मोत्मवः ।
राहोः
सूतकं चन्द्रसूर्य्ययोरुपरागः ग्रहणमिति
प्रसि-
द्धम् ॥" इति तत्र मेधातिथिः ॥)

**सूतकः**, पुं, क्ली, (सूत एव । स्वार्थे कन् ।) पारदः ।

इति मेदिनी ॥ (पर्य्यायोऽस्य यथा, --
"रसेन्द्रः पारदः सूतः सूतराजश्च
सूतकः ।
शिवतेजो रसः सप्त नामान्येवं रसस्य तु
॥"
ईति वैद्यकरसेन्द्रसारसंग्रहे
जारणमारणा-
धिकारे ॥)

**सूतका**, स्त्री, सूतिका । इति सूतकागृहशब्द-

दर्शनात् ॥

**सूतकागृह**, क्ली, (सूतकायाः गृहम् ।) सूतिका-

गृहम् । इत्यमरटीकायां भरतः । ३ । २ ।
८ ॥

**सूततनयः**, पुं, (सूतस्य अधिरथस्य सूर्य्यस्य वा

मुनीनां संहितां वक्तुं व्यासः पौराणिकों पुरा
त्वं हि स्वायम्भुवे यज्ञे सत्यादौ वितते सति
।
संभूतः संहितां वक्तुं स्वांशेन पुरुषोत्तम ॥”
इति कौर्म्मे । १ । ३ -- ६ ॥ * ॥
अपि च ।
“नियोगाद्ब्रह्मणः सार्द्धं देवेन्द्रेण महौजसः ।
वेणपुत्त्रस्य वितते पुरा पैतामहे मखे ॥
सूतः पौराणिको जज्ञे मायारूपः स्वयं हरिः
।
प्रवक्ता सर्व्वशास्त्राणां धर्म्मज्ञो गुणवत्सलः ॥
तं मां वित्त मुनिश्रेष्ठाः पूर्व्वोद्भूतं सनातनम् ।
एतस्मिन्नन्तरे व्यासः कृष्णद्वैपायनः स्वयम्
॥
श्रावयामास याः प्रीत्या पुराणपुरुषो हरिः ।
मदन्वये च ये सूताः संभूता वेदवर्ज्जिताः ।
तेषां पुराणवक्तृत्वं वृत्तिरासीदजाज्ञया ॥”
इति कौर्म्मे १२ अध्यायः ॥ * ॥
किञ्च ।
“ब्रह्मणः पौष्करे यज्ञे सूत्याहे वितते सति ।
पृषदाज्यात् समुत्पन्नः सूतः पीराणिको
द्विजः ॥
वक्ता वेदादिशास्त्राणां त्रिकालामलतत्त्ववित्
।
तीर्थयात्राप्रसङ्गेन नैमिषारण्यमागमत् ॥”
इति वह्निपुराणे १ अध्यायः ॥ * ॥

तैर्नियुक्तौ सुकर्म्माणि पृथोर्यानि महात्मनः
॥
तुष्टुवुस्तानि सर्व्वाणि आशीर्व्वादांस्ततः
परान्
तयोः स्तवान्ते सुपीतः पृथुः प्रादात्
जनेज्वरः ॥
अनूपंदेशं सूताय मागधान् मागधाय च ।
तं दृष्ट्वा परमपीताः प्रजाः प्राहुर्महर्षयः ॥
वृत्तीनामेष वो दाता भविष्यति नरेश्वरः
॥”
इति वह्निपुराणे पृथोरुपाख्याननामाध्यायः
॥

**सूतः**, पुं, क्ली, (सू + क्तः ।) पारदः । इत्यमरः ॥

(यथा, --
“रसोनखरसैः सूतो नागवल्लीदलोत्थितैः ।
त्रिफलायास्तथा क्वाथै रसो मर्द्दः
प्रयत्नतः ॥
ततस्तेभ्यः पृथक्कृत्वा सूतं प्रक्षाल्य
काञ्जिकैः ।
सर्व्वदोषविनिर्म्मुक्तं योजयेद्रसकर्म्मसु ॥
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणा-
धिकारे ॥)

**सूतः**, त्रि, (सू + क्तः ।) प्रसूतः । प्रेरितः । इति

मेदिनी ॥

**सूतकं**, क्ली, (सू + भावे क्तः । ततः स्वार्थे कन् ।

जन्म । इति मेदिनी ॥ (सूतकं जन्म
कारण-
त्वेनास्त्यस्येति । अच् ।) जननाशौचम् ।
यथा,
“मृतेन सूतकं गच्छेन्नेतरत् सूतकेन तु ।”
इति ।
वृद्धमनुरपि ।
“शावस्योपरि शावे तु सूतकोपरि सूतके ।
शेषाहोभिर्व्विशुद्धिः स्यादुदक्यां सूतिकां
विना ॥”
मरणाशौचम् । यथा, --
“सर्व्वं गोत्रमसंस्पृश्यं तत्र स्यात् सूतके
सति ।

तनयः ।) कर्णः । इति हेमचन्द्रः ॥
(सौतिः ।
इति महाभारतम् ॥)

**सूतपुत्त्रः**, (सूतस्य अधिरथस्य सूर्य्यस्य वा

पुत्त्रः । कर्णः । इति शब्दरत्नावली ॥
(यथा,
महाभारते । १ । १३५ । ११ ।
“स्पर्द्धमानस्तु पार्थेन
सूतपुत्त्रोऽत्यमर्षणः ।
दुर्य्योधनं समाश्रित्य सोऽवमन्यत
पाण्डवान् ॥”
सौतिः । यथा, तत्रैव । १ । ५ । ११ ।
“सूतपुत्त्र ! यथा तस्य भार्गवस्य
महात्मनः ।
च्यवनत्वं परिख्यातं तन्ममाचक्ष्व
पृच्छतः ॥”)

**सूतपुत्त्रकः**, पुं, (सूतपुत्त्र एव । स्वार्थे कन् ।)

कर्णः । इति त्रिकाण्डशेषः ॥ (सौतिः ।
इति
महाभारतम् ॥)

**सूतराट्**, [ज्] पुं, (सूतः सन् राजते इति ।

राज् + क्विप् ।) पारदः । इति
राजनिर्घण्टः ॥

**सूतिः**, स्त्री, (सू + क्तिन् ।) सोमाभिषवभूमिः ।

यथा । “अभिषूयते कण्ड्यते
सोमोऽस्यामिति
सूतिः सोमाभिषवभूमिः ।” इति सूतशब्दे
विष्णुपुराणटीका ॥ जननम् । (यथा,
भाग-
वते । १ । १६ । १ ।
“यथा हि सूत्यामभिजातकोविदाः
समादिशन् विप्र महद्गुणस्तथा ॥”)
सन्तानः । सीवनम् । इति केचित् ॥

**सूतिका**, स्त्री, (सू + क्तः । टाप् । ततः स्वार्थे

कन् । यद्वा, सूतं प्रसवोऽस्त्यस्यामिति ।
ठन् ।)
नवप्रसूता । यथा, --

|  | मध्येऽपि सूतके दद्यात् पिण्डान् प्रेतस्य तृप्तये ॥”<br>इति शुद्धितत्त्वम् ॥ | “शावस्योपरि शावे तु सूतकोपरि सूतके ।<br>शेषाहोभिर्व्विशुद्धिः स्यादुदक्यां सूतिकां विना ॥”<br>इति शुद्धितत्त्वम् ॥ * ॥ |
| --- | --- | --- |

तदन्नभोजनप्रायश्चित्तंयथा । शङ्खः ।
“चाण्डालान्नं
मूमिपान्नमजजीविश्वजीविनाम्
शौण्डिकान्नं सूतिकान्नं भुक्त्वा मासं व्रती
भवेत् ॥”
इति प्रायश्चित्ततत्त्वम् ॥ * ॥
तदवलोकनतदालपनतत्संस्पर्शनिषेधो
यथा --
“नालपेत् जनविद्बिष्टान् वीरहीनां तथा
स्त्रियम् ।
देवता-पितृसच्छास्त्रयज्ञसत्रादिनिन्दकैः ॥
कृत्वा तु स्पर्शनालापं
शुध्येतार्कावलोकनात् ।
अवलोक्य तथादक्यामन्त्यजं पतितं शवम्
॥
विधर्म्मिसूतिकाषण्डविवस्त्रान्तावसायिनः
।
मृतनिर्यातकांश्चैव परदाररतांश्च ये ।
एतदेव हि कर्त्तव्यं प्राज्ञैः शोधनमात्मनः
॥”
पारिभाषिकसूतिकालक्षणंयथा, --
“अभोज्यसूतिकाषण्ढमार्जाराखूंश्च
कुक्कुटान् ।
पतितापविद्धचाण्डालमृतहारांश्चधर्म्मवित्
॥
संस्पृश्य शुध्यते स्नानात्
उदक्याग्रामसूकरौ ।
तद्वच्च सूतिकाशौचदूषितौ पुरुषावपि ॥
अलर्क उवाच ।
भवत्या कीर्त्तिता भोज्या य एते
सूतिकादयः ।
अमीषां श्रोतुमिच्छामि तत्त्वतो लक्षणानि ह
॥
मदालसोवाच ।
ब्राह्मणी ब्राह्मणश्चैव यावत्शेषत्वमागतौ ।
तावुभौ सूतिकेत्युक्तौ तयोरन्नं विगर्हितम्
॥”
इति मार्कण्डेयपुराणे सदाचाराध्यायः ॥
वामनपुराणे १४ अध्याये च द्रष्टव्यम् ॥

“एष मानुष्यको यत्नो मानुषैरेव
साध्यते ।
श्रूयतां येन दैवं हि मद्विधैः प्रतिहन्यते
॥
मन्त्रग्रामैः सुविहितैरौषधैश्चैव योजितैः
।
यत्नेन चानुकूलेन दैवमप्यनुलोम्यते ॥”
इत्यनुचरान् प्रति कंसवाक्यम् । इति
ज्योति-
स्तत्त्वम् ॥

**सूतिकागेहं**, क्ली, (सूतिकाया गेहम् ।) प्रसव-
गृहम् । यथा, --
“जगाम सूतिकागेहं नारीरूपं विधाय
भूः ।
जयशब्दः शङ्खशब्दो हरिशब्दो बभूव ह
॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ४
अध्यायः ॥

**सूतिकाभवनं**, क्ली, (सूतिकाया भवनम् ।) प्रसव-
गृहम् । इति हलायुधः ॥

**सूतिकावासः**, पुं, (सूतिकाया आवासः ।) प्रसव-
गृहम् । यथा, --
“सूतिकावासनिलया जन्मदा नाम
देवताः ।
तासां यागनिमित्तन्तु शुद्धिर्ज्जन्मनि
कीर्त्तिता ।
षष्ठेऽह्नि रात्रियागन्तु जन्मदानान्तु
कारयेत् ॥”
इति शुद्धितत्त्वम् ॥

**सूतिकारोगः**, पुं, (सूतिकाया रोगः ।) नव-
प्रसूताया व्याधिभेदः । तन्निदानादि
यथा, --
“मिथ्योपचारात् संक्लेशात्
विशमाजीर्णभोज-
नात् ।

समभागान्वितैरेतैः सिन्धुरामठसंयुतैः ।
क्वाथमष्टावशेषन्तु प्रसूतां पाययेत् स्त्रियम् ॥
शूलकासज्वरश्वासमूर्च्छाकम्पशिरोऽर्त्तिभिः
।
युक्तं प्रलापतृड्दाहतन्द्रातीसारवान्तिभिः॥
निहन्ति सूतिकारोगं वातपित्तकफोद्भवम् ।
कषायो देवदार्व्वादिः सूतायाः परमौषधम् ॥”
इति देवदार्व्वादिक्वाथः ॥ * ॥
“जीरकः स्थूलजीरश्च शतपुष्पाद्वयन्तथा ।
यवानी चाजमोदा च धान्यकं मेथिकापि च ॥
शुण्ठी कृष्णा कणामूलं चित्रकं हपुषापि च ।
वदरीफलचूर्णञ्च कुष्ठं कम्पिल्लकं तथा ॥
एतानि पलमात्राणि गुडं शतपलं मतम् ।
क्षीरं प्रस्थद्वयं दद्यात् सर्पिषः कुडवन्तथा ॥
पञ्चजीरकपाकोऽयं प्रसूतानां प्रशान्तये ।
युज्यते सूतिकारोगे योनिरोगे ज्वरे क्षये ।
कासे श्वासे पाण्डुरोगे कार्श्ये वातामयेषु च
॥”
इति पञ्चजीरकपाकः ॥ * ॥
“आज्यस्याञ्जलियुग्ममत्र
पयसःप्रस्थद्वयंखण्डत
पञ्चाशत्पलमत्र चूर्णितमथ प्रक्षिप्यते नागरम्
।
प्रस्थार्द्धं गुडवद्विपाच्य विधिना मुष्टित्रयं
धान्यकात्
मिश्याः पञ्चपलं पलं कृमिरिपोः साजाजि-
जीरादपि ॥
व्योषाम्भोददलोरगेन्द्र-सुमनस्तत्द्राविडीनां
पल
पक्वं नागरखण्डसंज्ञकमिदं सौभाग्यदं योषि-
ताम् ।
तृट्श्वासज्वरदाहशोषशमनं
सश्वासकासापहं
प्लीहव्याधिविनाशनं कृमिहरं मन्दाग्निसन्दी-
पनम् ॥”
दलं पत्रकम् । उरगेन्द्रसुमुखनागकेशरम् ।
द्राविडी सूक्ष्मैला । सौभाग्यशुण्ठीपाकः ।
इति
भावप्रकाशः ॥

**सूतिकागारं**, क्ली, (सूतिकाया आगारम् ।)

प्रसवगृहम् । इति जटाधरः ॥ (यथा, हरि-

वंशे । १६३ । ४७ ।

"आहृत्य शम्बरेण त्वमिहानीतोऽसि मानद

।

सप्तरात्रे त्वसम्पूर्णे सूतिकागारमध्यतः ॥")

**सूतिकागृहं**, क्ली, (सूतिकाया गृहम् ।) प्रसवा-

लयः । तत्पर्य्यायः । अरिष्टम् २ । इत्यमरः

।

१ । २ । ८ ॥ सूतकागृहम् ३ । इति

तट्टीका ॥

सूतीगृहम् ४ सूतिगृहम् ५ । इति जटाधरः

॥

तस्याकृतिर्यथा, --

"अष्टहस्तायतं चारु चतुर्हस्तविशालकम् ।

प्राचीद्वारमुदग्द्वारं विदध्यात् सूतिकागृहम्

॥"

इति भावप्रकाशः ॥

तत्र पिशाचानां वासो यथा, --

"सर्व्वत्रगानप्रतिघान् सूतिकागृहसेविनः ।

पृष्ठतः पाणिपादांश्च पृष्ठग्रीवान् सुरंहसः ॥

एवविधान् पिशाचांश्च दृष्ट्वा ब्रह्मानुकम्पया

।

अन्तर्धानं वरं प्रादात् कामशायित्वमेव च

॥"

इति वह्निपुराणे प्रजापतिसर्गनामाध्यायः ॥

प्रसवात् पूर्व्वं तत्संस्कारमाह

साङ्ख्यायनगृह्यम्

काकादन्या मेचकधातक्या बृहत्याः

कोषतक्या

कालक्लीतकस्य मूलानि पेषयित्वा

उपलेपयेद्देशं

यस्मिन् प्रजायते रक्षसामपहत्यै इति ।

काका-

दनी काकजङ्घा ।

मेचकधातकीकाकमोचिका

कोषातकी घोषकम् । कालक्लीतकः

यष्टिमधु-

केति कल्पतरुः ॥ अतएव हरिवंशे ।

सूतिकायास्तु ये रोगा जायन्ते

दारुणाश्च ते ॥"

मिथ्योपचारात् अनुचिताचरणात् ।

प्रवातादि-

सेवनात् । संक्लेशात् संक्लिश्यन्ते

दोषा अनेन

इति संक्लेशः दोषजनकमन्नं तस्मात् ।

दारुणाः

कष्टसाध्याः । के ते व्याधय

इत्याकाङ्क्षायामाह ।

"अङ्गमर्द्दो ज्वरः कासः पिपासा

गुरुमात्रता ।

शोथः शूलातिसारौ च

सूतिकारोगलक्षणम् ॥"

एतेऽङ्गमर्द्दादयः प्रायेण सूतिकाया

भवन्तः

सूतिकारोगत्वेन लक्ष्यन्ते ॥ * ॥

ज्वरादीनां

रोगविशेषाणां निदानविशेषमाह ।

"ज्वरातीसारशोथाश्च

शूलानाहबलक्षयाः ।

तन्द्रारुचिप्रसेकाद्या

वातश्लेष्मसमुद्भवाः ॥

कृच्छ्रसाध्या हि ते रोगाः

क्षीणमांसबलाश्रिताः

ते सर्व्वे सूतिका नाम्ना रोगास्ते

चाप्युपद्रवाः ॥"

सूतिकाभवत्वेन सूतिकानाम्ना ते रोगाः

।

आश्रयाश्रितयोरभेदोपचारात् । ते

चाप्युपद्रवा

इति । त एव ज्वरादय उक्तानां

रोगाणामन्य-

तमं प्रधानीकृत्योपद्रवाश्च ॥ * ॥

अथ सूतिकारोगचिकित्सा ।

"सूतिकारोगशान्त्यर्थं कुर्य्यात् वातहरीं

क्रियाम् ।

दशमूलकृतं क्वाथं कोष्णं दद्यात्

घृतान्वितम् ॥

अमृतानागरसहचरभद्रोत्कटपञ्चमूलकं

जल-

**सूतिकाषष्ठी**, स्त्री, (सूतिकायाः षष्ठी । सूतिका-

गृहपूज्या षष्ठीति मध्यपदलोपी कर्म्मधारयो

वा ।) सूतिकागारे जातबालकस्य षष्ठदिने

पूज्यदेवीविशेषः । अथ सूतिकाषष्ठी-पूजा ।

विष्णुधर्म्मोत्तरे ।

"सूतिकावासनिलया जन्मदा नाम देवताः ।

तासां यागनिमित्तार्थं शुद्धिर्जन्मनि-कीर्त्तिता

॥

षष्ठेऽह्नि रात्रियागन्तु जन्मदानाञ्च कारयेत् ।

रक्षणीया सदा षष्ठी निशां तत्र विशेषतः ॥

राम ! जागरणं कार्य्यं जन्मदानां तथा वलिः

॥"

रामेति सम्बोधनम् ॥ * ॥

तत्राशौचान्तरदोषो-

ऽपि नास्ति ।

"अशौचे तु समुत्पन्ने पुत्त्रजन्म यदा भवेत् ।

कर्त्तुस्तात्कालिकी शुद्धिः पूर्व्वाशौचाद्विशु-

ध्यति ॥"

इति प्रजापतिवचनात् । पुत्त्रजन्मेति

श्रवणात्

पितुरेवाशौचाभावः न तु मातुः कर्त्तुरिति

पुंलिङ्गनिर्द्देशाच्च । कारयेदिति

अन्यगोत्रजाभि-

प्रायेण ॥ * ॥ तत्रादौ

विनयकादिसहितषोडश-

मातृकापूजनम । तथा च कृत्यचिन्तामणौ ।

|  | दम् ।<br>शृतशीतं मधुयुक्तं शमयत्यचिरेण सूतिकातङ्कम् ॥<br>देवदारु वचा कुष्ठं पिप्पली विश्वभेषजम् ।<br>भूनिम्बकट्फलं मुस्तं तिक्ताधान्यं हरीतकी ॥<br>गजकृष्णा सदुःस्पर्शा गोक्षुरं धन्वयासकः ।<br>बृहत्यतिविषा च्छिन्ना कर्क्कटः कृष्णजीरकः ॥ |  |
|---|---|---|

"छागजागरणं कार्य्यं खड्गो धार्य्यः समी-
पतः ।
आवाह्य पूजयेद्देवीं गणेशं मातरं गिरिम् ॥"
देवीं षष्ठीम् । गिरिं मन्थानदण्डम् ॥ * ॥
मातृ-
नामान्याह । बह्वृचगृह्यपरिशिष्टम् ।
"गौरी पद्मा शची मेधा सावित्री विजया जया
देवसेना स्वधा स्वाहा मातरो सोकमारतः
॥
शान्तिः पुष्टिर्धृतिस्तुष्टिरात्मदेवतया सह ।
आदौ विनायकः पूज्यो अन्ते च कुलदेवताः
॥"
ताश्चाभिधाय भविष्ये ।
"पूज्याश्चित्रेऽथवा कार्य्या वरदाभयपाणयः
।"
मातरः इति सर्व्वासां विशेषणम् । अतएव
गौर्य्यै
मात्रे नमः । इत्यादिप्रयोगः । एता मातरो
लोकमातरो ज्ञेयाः अतएव तयोर्ब्बहुत्वेन
निर्द्देशः ॥ * ॥ गणेशपूजायां प्रार्थनामन्त्रो
यथा,
"सर्व्वविघ्नहरो देव एकदन्तो गजाननः ।
षष्ठीगृहेऽर्च्चितः प्रीत्या शिशुं दीर्घायुषं कुरु
॥"
ततः ।
"आयाहि वरदे देवि महाषष्ठीति विश्रुता ।
शक्तिरूपेण मे पुत्रं रक्ष जागरवासरे ॥"
इति षष्ठ्या आवाहनम् । ततः षष्ठों पूजयेत्
।
"गौर्य्याः पुत्त्रो यथा स्कन्दः सदा
संरक्षितस्त्वया
तथा ममाप्ययं बालो रक्ष्यतां षष्ठि ते नमः
॥"
इति त्रिः पूजयेदिति । भोजराजः ।
"गणेशश्चैव नन्दा च पूतना मुखमण्डिका ।
विवानिका शकुनिका शुष्कनन्दा च
जम्भिका ॥
आचार्य्यका रेवती च पिलिपिञ्जा ततः परम्
।

तस्मात् संरक्षणं कार्य्यं यत्नतः सूतिकागृहे
॥"
यूपो बद्धच्छागस्तम्भः । पशुः छागः ।
छाग-
जागरणं कार्य्यमित्येकवाक्यत्वात् ॥ * ॥
पाद्मे ।
"पायसं सर्पिषा मिश्रं द्विजेभ्यो यः
प्रयच्छति ।
गृहं तस्य न रक्षांसि धर्षयन्ति कदाचन ॥"
इति ज्योतिस्तत्त्वम् ॥
अन्यत् षष्ठीशब्दे द्रष्टव्यम् ॥

**सूतिगृहं**, क्ली, (सूत्याः प्रसवस्य गृहम् ।) प्रसव-
गृहम् । इति शब्दरत्नावली ॥

**सूतिमासः**, पुं, (सूतेः प्रसवस्य मासः ।) प्रसव-
मासः । तत्पर्य्यायः । वैजननः २ ।
इत्यमरः ।
२ । ६ । ३९ ।
"सूतिमासो वैजननो नवमो दशमोऽपि च
।"
इति जटाघरः ॥

**सूतीगृहं**, क्ली, (सूत्याः गृहम् ।) प्रसवागारः ।
इति शब्दरत्नावली ॥ (यथा, भागंवते ।
१० ।
८५ । २० ।
सूतीगृहे ननु जगाद भवानजो नो
संजज्ञ इत्यनुयुगं निजधर्म्मगुप्त्यै ॥")

**सूत्कारः**, पुं, (सूत् इति शब्दस्य कारः करणम् ।)
अनुकरणशब्दविशेषः । सूत् इति शब्दं
करोति । यथा, सीत्कारादिः ॥

**सूत्थानः**, त्रि, (सुष्ठु, उत्थानं उद्योगो यस्य ।)
चतुरः । इत्यमरः ॥ सुन्दरोत्थाने, क्ली ॥

**सूत्परं**, क्ली, सुरासन्धानम् । इति शब्दचन्द्रिका ॥

**सूत्या**, स्त्री, (सू + क्यप् । निपातनात् साधुः ।)
यज्ञस्नानम् । तत्पर्य्यायः । अभिषवः २

"स्वल्पाक्षरमसन्दिग्धं
सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः ॥"
इति मुग्धबोधटीकायां दुर्गादासः ॥
(कारणम् । निमित्तम् । यथा, भागवते । ४
।
६ । ४३ ।
त्वमेव धर्म्मार्थदुघाभिपत्तये
दक्षेण सूत्रेण ससर्ज्जिथाध्वरम् ॥")

**सूत्रकण्ठः**, पुं, (सूत्रं कण्ठे यस्य ।) विप्रः ।
खञ्जरीटः । कपोतः । इति मेदिनी ॥

**सूत्रकोणः**, पुं, (सूत्रबद्धः कोणो र्यस्य ।) डमरुः ।
इति हारावली ॥

**सूत्रकोणकः**, पुं, (सूत्रकोण एव । स्वार्थे कन् ।)
डमरुः । इति त्रिकाण्डशेषः ॥

**सूत्रगण्डिका**, स्त्री, (सूत्रं गण्डयतीति । गण्ड +
ण्वुल् ।) तन्त्रवायोपकरणविशेषः ।
तत्पर्य्यायः ।
एषणी २ । इति शब्दरत्नमाला ॥

**सूत्रतन्तुः**, पुं, (सूत्रमेव तन्तुः ।) सूत्रम् । इति
हारावली ॥

**सूत्रतर्कुटी**, स्त्री, (सूत्रस्य तर्कुटी ।) तर्कुटी ।
इति जटाधरः ॥ टेको इति भाषा ॥

**सूत्रधरः**, पुं, (धरतीति । धृ + अच् । सूत्रस्य
धरः ।) सूत्रधारः । इति केचित् ॥

**सूत्रधारः**, पुं, (सूत्रं धरति धारयति वा । धृ +
णिच् वा + अण् ।) शचीपतिः । इन्द्रः ।
नान्द्य-
न्तरसञ्चारी । स तु रङ्गभूमिं परिक्रम्य
नाट-
कीयकथासूत्रसूचकः । (यथा,
साहित्यदर्पणे ।
६ । २८३ ।
"पूर्व्वरङ्गं विधायैव सूत्रधारो निवर्त्तते ।

स्कन्दा च द्वादशैतेऽच्चर्याः रक्षार्थं मातृका-
ग्रहाः ॥”
कृत्यचिन्तामणौ स्तुतिः ।
“जय देवि जगन्मातर्जगदानन्दकारिणि ।
प्रसीद मम कल्याणि नमोऽस्तु षष्ठि देवि ते
॥”
वरप्रार्थनम् ।
“रूपं देहि यशो देहि भाग्यं भगवति देहि मे ।
पुत्रान्देहि धनं देहि सर्व्वान् कामांश्च देहि
मे ॥
धात्री त्वं कार्त्तिकेयस्य महाषष्ठीति विश्रुता
।
त्वत्प्रसादादविघ्नेन चिरं जीवतु बालकः ॥
देवतानामृषीणाञ्च सर्व्वेषां हितकारिणि ।
समर्पितं रक्ष पुत्रं महाषष्ठि नमोऽस्तु ते ॥
इत्यनेन बालं व्यजनस्थं कृत्वा समर्पयेत्
॥”
मन्थानदण्डं पूजयेत् ।
“मन्थानमन्दरोऽसि त्वं मथितः
सागरस्त्वया ।
तथा ममापि पुत्रस्य मन्थ विघ्नं
नमोऽस्तुते ॥”
ततः षट्कृत्तिकाः पूजयेत् । ताश्च ।
“शिवा सम्भूतिनाम्नी च कीर्त्तिः सन्ततिरेव
च ।
अनसूया क्षमा चैव षडेताः कृत्तिकाः
स्मृताः ॥”
मार्कण्डयपुराणम् ।
“अग्न्यम्बुपशुशून्ये च निर्यूपे सूतिकागृहे ।
अदीपशस्त्रमूषले भूतिसर्षपवर्ज्जिते ।
अनुप्रविश्य या जातमपहृत्यात्मसम्भवम् ।
क्षणप्रसविनी बालं तत्रैवोत्सृज्यते द्विज ॥
मा जातहारिणी नाम सुघोरा पिशिताशना ।
सवनम् ३ । इत्यमरः ॥
सोमलतारसपानम् ।
इति भरतः ॥

**सूत्याशौचं**, क्ली, (सूतिनिमित्तकमाशौचम् ।)

जननाशौचम् । यथा, --
“दशाहाभ्यन्तरे बाले प्रमीते तस्य
बान्धवैः ।
शावाशौचं न कर्त्तव्यं सूत्याशौचं विधीयते
॥”
इति शुद्धितत्त्वम् ॥

**सूत्र**, त् क ग्रन्थने । इति कविकल्पद्रुमः ॥ (अदन्त

चुरा०-पर०-सक०-सेट् ।) दीर्घी
दन्त्यवर्गाद्य-
मध्यः । वेष्टने इत्यन्ये । सूत्रयति
सूत्रापयति
सूत्रेण हस्तं लोकः । इति दुर्गादासः ॥

**सूत्रं**, क्ली, (सूत्र्यतेऽनेनेति । सूत्रत् क ग्रन्थने +

णिच् + “एरच् ।” इत्यच् । यद्वा षिव्यु
तन्तु-
सन्ताने + “सिविमुच्योष्टेरू च ।” उणा०
४ ।
१६२ । इति ष्ट्रन् । टेरू च ।)
वस्त्रारम्भकम् ।
सूता इति भाषा । तत्पर्य्यायः । तन्तुः २ ।
इत्यमरजटाधरौ ॥ सूत्रतन्तुः ३ । इति
भरत-
धृतहारावली ॥ (यथा, रघुः । १ । ४ ।
“अथवा कृतवाग्दारे वंशेऽस्मित् पूर्व्व-
सूरिभिः ।
मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः
॥”
यज्ञसूत्रम् । यथा, महानिर्व्वाणे । १ । ४८
।
“ब्राह्मण्यचिह्नमेतावत् केवलं सूत्रधारणम्
॥”)
व्यवस्था । शास्त्रादिसूचनाग्रन्थः । इति
मेदिनी ॥
सूत्रलक्षणं यथा, --
प्रविश्य स्थापकस्तद्वत्
काव्यमास्थापयेत्ततः ॥”)
शिल्पिप्रभेदः । छुतार इति भाषा । इति
मेदिनी ॥ स च शूद्रागर्भे विश्वकर्म्मण
औरसेन
जातः । इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १०
अध्यायः ॥

**सूत्रपुष्पः**, पुं, (सूत्रार्थं पुष्पमस्य ।) कार्पासः ।

इति त्रिकाण्डशेषः ॥

**सूत्रबीणा**, स्त्री, (सूत्रबद्धा बीणा ।) बीणा-

भेदः । तत्पर्य्यायः । लावुकी २ । इति
हारा-
वली ॥

**सूत्रभित्**, पुं, (सूत्रं भिनत्तीति । भिद् + क्विप् ।)

सौचिकः । इति शब्दरत्नावली ॥

**सूत्रभिद्**, पुं, (सूत्रं भिनत्तीति । भिद् + क्विप् ।)

सौचिकः । इति शब्दरत्नावली ॥

**सूत्रमध्यभूः**, पुं, (सूत्रमध्यवत् भूरुत्पत्तिर्य्यस्य ।)

यक्षधूपः । इति शब्दचन्द्रिका ॥

**सूत्रयन्त्रं**, क्ली, (सूत्रस्य यन्त्रम् ।) सूत्रवेष्टनकाष्ठम्
।

ताँत इति भाषा । यथा, --
“आवापनं सूत्रयन्त्रं यत्सूत्रैरभिवेष्टते ॥”
इति शब्दमाला ॥

**सूत्रला**, स्त्री, (सूत्रं लातीति । ला + कः ।)

तर्कुटी । इति हारावली ॥

**सूत्रवेष्टनं**, क्ली, (वेष्ट्यतेऽनेनेति । वेष्ट + करणे

ल्युट् । सूत्रस्य वेष्टनम् ।
तन्त्रवायोपकरणम् ।
तासनी इति भाषा । तत्पर्य्यायः । त्रसरः
२ ।
इत्यमरः । ३ । २ । २४ ॥ तसरः ३ ।
इति
भरतः ॥

**सूत्रामा**, [न्] पुं, सुष्ठु त्रायते इति । सु + त्रै +
"सर्व्वधातुभ्यो मनिन् ।" उणा० ४ । १४४ ।
इति मनिन् । पक्षे उपसर्गस्य दीर्घत्वम् ।)
इन्द्रः । इत्यमरः । १ । १ । ४५ ॥

**सूत्राली**, स्त्री, (सूत्रस्य आली श्रेणिर्यत्र ।) गल-
सूत्रम् । तत्पर्य्यायः । गलमेखला २ । इति
हारावली ॥

**सूत्री**, [न्] पुं, (सूत्रमस्यास्तीति । सूत्र + इनिः ।
काकः । इति त्रिकाण्डशेषः ॥
सूत्रविशिष्टे, त्रि ॥

**सूदः**, पुं, (सूदयति रसानिति । सूद क्षरणे + णिच्
+ अच् ।) सूपकारः । (यथा, महाभारते । १ । १३४ । २१ ।
"तं दृष्ट्वानित्यमुद्युक्तमिष्वस्त्रंप्रति फाल्गुनम्
आहूय वचनं द्रोणो रहः सूदमभाषत ॥")
व्यञ्जनम् । इत्यमरः । ३ । ३ । ९० ॥ (यथा,
महाभारते । १ । १२८ । ३४ ।
"भक्ष्यं भोज्यञ्च पेयञ्च चोष्यं लेह्यमथापि वा ।
उपाकृतं नरैस्तत्र कुशलैः सूदकर्म्मणि ॥")
सूपः । इति विश्वः ॥ सारथ्यम् । अपराधः ।
लोध्रः । पापम् । इत्यजयपालः ॥

**सूदनं**, क्ली, (सूद् + ल्युट् ।) अङ्गीकरणम् ।
हननम् । (यथा, हरिवंशे । १६३ । ४२ ।
"वैष्णवास्त्रं प्रयच्छास्मै वधार्थं शम्बरस्य च ।
अभेद्यं कवचं तस्य प्रयच्छासुरसूदने ॥")
निःक्षेपणम् । षूदधातोरनट्प्रत्ययेन
निष्पन्नम् ॥

(यथा, भागवते । १ । १७ । ३८ ।
"अभ्यर्थितस्तदा तस्मै स्थानानि कलये ददौ ।
द्यूतं पानं स्त्रियः सूना यत्राधर्म्मश्चतुर्व्विधः ॥")
जाता । इति सूनशब्दार्थदर्शनात् । सूनाप्रका-
राणि तत्पापापनाशकानि च पञ्चसूनाशब्दे
द्रष्टव्यानि ॥

**सूनी**, [न्] पुं, (सूना अस्त्यस्येति । इनिः ।) व्याधः ।
मांसविक्रयी । (यथा, याज्ञवल्क्ये । १ । १४१ ।
"प्रतिग्रहे सूनिचक्रिध्वजिवेश्यानराधिपाः ।
दुष्टा दशगुणं पूर्व्वात् पूर्व्वादिते यथाक्रमम् ॥")

**सूनुः**, पुं, (सूयते इति । सू + "सुवः कित् ।"
उणा० ३ । ३५ । इति नुः । स च कित् ।)
पुत्त्रः । (यथा, रघुः । १ । ९५ ।
"सूनुः सुनृतवाक् स्रष्टुः विससर्ज्जोदितश्रियम् ॥")
अनुजः । सूर्य्यः । इति मेदिनी ॥ अर्कवृक्षः ।
इत्यमरः ॥

**सूनुः**, स्त्री, (सू + नुः । वा ऊङ् ।) कन्या ।
इति हेमचन्द्रः ॥

**सूनूः**, स्त्री, (सू + नुः । वा ऊङ् ।) कन्या ।
इति हेमचन्द्रः ॥

**सूनृतं**, क्ली, (सुनृत्यत्यनेनेति । सु + नृत् + घञर्थकः
उपसर्गस्य दीर्घः ।) सत्यप्रियवाक्यम् । इत्यमरः ।
१ । ६ । १९ ॥ (यथा, साहित्यदर्पणे । ३ । १५५ ।
"भाषते सूनृतं स्निग्धमनुरक्ता नितम्बिनी ॥")

शूद्रपाकोपजीवी । यथा, ब्रह्मवैवर्त्ते प्रकृतिखण्डे
२७ अध्याये ।
"देवोपजीवाजीवी यः देवलश्च प्रकीर्त्तितः ।
शूद्रपाकोपजीवी यः सूपकारः प्रकीर्त्तितः ॥
सन्ध्यापूजाविहीनश्च प्रमत्तः पतितः स्मृतः ।
उक्तपूर्व्वप्रकारेण लक्षणं वृषलीपतेः ॥
एते महापातकिनः कुम्भीपाकं प्रयान्ति ते ।
कुण्डान्यन्यानि ते यान्ति निबोध कथयामि तान् ॥"

**सूपधूपनं**, क्ली, (सूपस्य धूपनमस्मादिति ।) हिङ्गु ।
इति त्रिकाण्डशेषः ॥

**सूपपर्णी**, स्त्री, (सूपकरं सूपस्य स्वादुताकरं पर्ण-
मस्याः । ङीष् ।) मुद्गपर्णी । इति
रत्नमाला ॥

**सूपश्रेष्ठः**, पुं, (सूपेषु तत्साधनेषु श्रेष्ठः ।) मुद्गः ।
इति राजनिर्घण्टः ॥

**सूपाङ्गं**, क्ली, (सूपस्य अङ्गम् । तत्साधनत्वात् ॥
हिङ्ग । इति राजनिर्घण्टः ॥

**सूमं**, क्ली, (सू + "इषियुधीति ।" उणा० १ । १४४ ।
इति मक् ।) क्षीरम् । आकाशम् । इति
मेदिनी ॥ जलम् । इति शब्दरत्नावली ॥

**सूरः**, पुं, (सूते जगदिति । सू + "सुसूधाञ्-
गृधिभ्यः क्रन् ।" उण० २ । २४ । इति क्रन् ।)
सूर्य्यः । (यथा, ऋग्वेदे । १ । १६३ । २ ।
"सूरादश्वं वसवो निरतष्ट ॥")
अर्कवृक्षः । इत्यमरः । १ । ३ । २८; २ । ४ । ८० ॥ वृत्ता-
र्हत्पितृविशेषः । इति हेमचन्द्रः ॥ पण्डितः ।
इति केचित् ॥

**सूरणः**, पुं, शूरणः । इति शब्दरत्नावली ॥

तद्वति, त्रि । (यथा, महाभारते । १ । १९ । २० ।
"तत्र दिव्यं धनुर्द्दृष्ट्वा नरस्य भगवानपि ।
चिन्तयामास तच्चक्रं विष्णुर्दानवसूदनम् ॥")

**सूदशाला**, स्त्री, (सूदस्य शाला ।) पाकशाला ।
तथा, --
"सूदशाला रसवती पाकस्थानं महानसम् ॥"
इति हेमचन्द्रः ॥

**सूदाध्यक्षः**, पुं, (सूदानां सूपकाराणामध्यक्षः ।)
पाकशालाध्यक्षः । तत्पर्य्यायः । पौरोगरः १ ।
इति हेमचन्द्रः ॥ पुरोगमः ३ । इति शब्द-
रत्नावली ॥ तल्लक्षणं यथा, --
"अनाहार्य्यः शुचिर्द्दक्षश्चिकित्सितविदांवरः ।
सूदशास्त्रविशेषज्ञः सूदाध्यक्षः प्रशस्यते ॥"
इति मात्स्ये १८९ अध्यायः ॥

**सूनं**, क्ली, (सू ओ ङ य सूतौ + क्तः ।) प्रसवः ।
पुष्यम् । विकसिते, त्रि । इति विश्वमेदिन्यौ ॥

**सूनः**, त्रि, (सू + क्तः । "ओदितश्च ।" ८ । २ । ४५ ।
इति निष्ठातस्य नः ।) जातः । इति मुग्धवोध-
व्याकरणम् ॥

**सूनवान्**, [त्] त्रि, (सू + क्तवतु ।) जातः । इति
मुग्धबोधव्याकरणम् ॥

**सूना**, स्त्री, (सूयते स्मेति । सू + क्तः । टाप् ।)
पुत्त्री । (मुञ्न पीडने + "मुजो दीर्घश्च ।"
उणा० ३ । १३ । इति नः । दीर्घश्च धातोः ।)
वधस्थानम् । गलशुण्डिका । इति मेदिनी ।
ने, २४ ॥ मृगादिमांसविक्रयः । मृगपक्षिवध-
मङ्गलम् । इत्यजयः ॥ तद्वति, त्रि । (यथा,
भागवते । १ । १९ । ३१ ।
"प्रणम्य मूद्‌र्ध्नावहितः कृताञ्जलि-
र्नत्वा गिरा सूनृतयान्वपृच्छत् ॥")

**सून्मदः**, त्रि, (सुष्ठु उन्मदः ।) उन्मत्तः । उन्म-
दिष्णुः । इत्यमरे उन्मदशब्दटीकायां भरतः ।
३ । १ । २० ॥

**सून्मादः**, त्रि, (सुष्ठु उन्भादः ।) उन्मादरोग-
विशिष्टः । इत्यमरे उन्मदशब्दटीकायां रमा-
नायः ॥

**सूपः**, पुं, (सौतिरसानिति । सु + "षुशॄभ्यां निच्च ।"
उणा० ३ । २६ । इति पः । चकारात् कित्
दीर्घत्वञ्च ।) व्यञ्जनविशेषः । डाल इति भाषा ।
सूदः । इति मेदिनी ॥ भाण्डम् । शायकम् ।
इति शब्दरत्नावली ॥ * ॥ अथ दाली ।
"दलितन्तु शमीधान्यं दालिर्द्दाली स्त्रियामुभे ।
दाली तु सलिले सिद्धा लबणार्द्रकहिङ्गुभिः ।
संयुक्ता सूपनाम्नी स्यात् कथ्यते तद्‌गुणा अथ ॥
सूपो विष्टम्भको रूक्षः शीतन्तु स विशेषतः ।
निस्तुषो भृष्टसिद्धः स लाघवं सुतरां व्रजेत् ॥"
इति भावप्रकाशः ॥

**सूपकारः**, पुं, (सूपं करोतीति । कृ + अण् ।)
पाककर्त्ता । तत्पर्य्यायः । वल्लवः २ आरा-
लिकः ३ आन्धसिकः ४ सूदः ५ औदनिकः ६
गुणः ७ । इत्यमरः । २ । ९ । २८ ॥ पाचकः
कार्त्तिकमासे तस्य भक्षणनिषेधो यथा, कर्म्म-
लोचने ।
"मकरे मूलकञ्चैव सिंहे चालावुकं तथा ।
कार्त्तिकि शूरणञ्चैव सद्यो गोमांसभक्षणम् ॥"

**सूरतः**, त्रि, (सुष्ठु रमते इति । सु + रम + "सौ
रमतेः क्तो दमे पूर्व्वपदस्य च दीर्घः ।" उणा०
५ । १४ । इति क्तः सुशब्दस्य च दीर्घः ।)
कृपालुः । इत्यमरः । ३ । १ । १५ ॥

**सूरसूतः**, पुं, (सूरस्य सूर्य्यस्य सूतः सारथिः ।)
अरुणः । स सूर्य्यसारथिः । इत्यमरः । १ ।
३ । ३२ ॥

**सूरिः**, पुं, (सूते सद्वाक्यानीति । सू + "सूङः
क्रिः ।" उणा० ४ । ६४ । इति क्रिः ।)
पण्डितः । इत्यमरः । २ । ७ । ६ ॥ (यथा,
भागवते । १ । १ । १ ।
"जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट् ॥
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत् सूरयः ॥")
यादवः । सूर्य्यः । इत्युणादिकोषः ॥

**सूरी**, [न्] पुं, (सूरः सूर्य्य उपास्यतया अस्त्य-
स्येति । सूर + इनिः ।) पण्डितः । इति शब्द-
रत्नावली ॥

**सूरी**, स्त्री, (सू + क्रिः । ङीष् ।) राजसर्षपः ।
इति रत्नमाला ॥ (विद्षी । इत्युणादिवृत्तौ

| | | |
|---|---|---|
| स्थानम् । इति संक्षिप्तसारोणादिवृत्तिः ॥ | ८ । इति शब्दरत्नावली ॥ पाकुकः ९ । इत्यु-<br>णादिकोषः ॥ भक्ष्यङ्कारः १० । इति हेमचन्द्रः ॥<br>तस्य लक्षणं यथा, चाणक्यम् ।<br>“इङ्गिताकारतत्त्वज्ञो बलवान् मिष्टपाचकः ।<br>शूरश्च कठिनश्चैव सूपकारः स उच्यते ॥” | |

उज्ज्वलः । ४ । ६४ ॥ * ॥ सूर्य्यस्य स्त्री ।
"पयोगादाख्यायाम् ।" ४ । १ । ४८ । इति ङीष् ।
सूर्य्यतिष्यागस्त्येति यलोपः । कुन्ती । इति
व्याकरणम् ॥)

**सूर्क्ष**, नारदे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) रेफयुक्तः षष्ठस्वरी दन्त्यादिः ।
सूर्क्षति दुष्टं लोकः । सुसूर्क्ष । इति दुर्गादासः ॥

**सूर्क्षणं**, क्ली, (सूर्क्ष + ल्युट् ।) अनादरः । इति
शब्दरत्नावली ॥

**सूर्क्ष्य**, अनादरे । ईर्षे । इति कविकल्पद्रुमः ॥
(भ्वा०-पर०-सक०-सेट् ।) दन्त्यादिर्दीर्घी रेफ-
मध्यः । सूर्क्ष्यति सुसूर्क्ष्य । इति दुर्गादासः ॥

**सूर्क्ष्यः**, पुं, (सूर्क्ष्यते अनाद्रियते इति । सूर्क्ष्य +
घञ् ।) माषः । इति शब्दरत्नावली ॥

**सूर्पः**, पुं, क्ली, शूर्पः । इति शब्दरत्नावली ॥
कुम्भपरिमाणम् । द्विद्रोणपरिमाणम् । इति
वैद्यकपरिभाषा ॥

**सूर्म्मी**, स्त्री, शूर्म्मी । इति केचित् ॥

**सूर्य्यः**, पुं, (सरति आकाशे सुवति कर्म्मणि लोकं
प्रेरयति वा । सृ गतौ सूप्रेरणेवा + "राजसूय-
सूर्य्यमृषोद्येति ।" ३ । १ । ११४ । इति क्यप्प्रत्ययेन
माधुः ।) ग्रहविशेषः । अर्कपर्णः । इति
मेदिनी ॥ बलिपुत्त्रः । इति केचित् ॥ (यथा,

तमोनुदः ६७ रसाधारः ६८ प्रतिदिवा ६९
ज्योतिःपीथः ७० इनः ७१ । इति शब्दरत्ना-
वली ॥ कर्म्मसाक्षी ७२ जगच्चक्षुः ७३ त्रयी-
तपः ७४ प्रद्योतनः ७५ खद्योतः ७६ लोक-
बान्धवः ७७ पद्मिनीकान्तः ७८ अंशुहस्तः ७९
पद्मपाणिः ८० हिरण्यरेताः ८१ पीतः ८२
अद्रिः ८३ अगः ८४ हरिवाहनः ८५ अम्ब-
रीषः ८६ धामनिधिः ८७ हिमारातिः ८८
गोपतिः ८९ कुञ्जारः ९० प्लवगः ९१ सूनुः ९२
तमोपहः ९३ गभस्तिः ९४ । इति जटाधरः ॥ * ॥
अस्य वणः रक्तश्याममिश्रितः । स च पूर्व्वदिक्-
पुरुष-क्षत्त्रियजाति-सत्त्वगुण-कटुरससिंहराशी
नामधिपतिः । धान्यादिसुवर्णद्रव्यचतुष्पदगो-
भूमिस्वामी । चतुष्कोणाकृतिः । मध्याह्नकाले
प्रबलः । वृद्धः । रणचारी । तिक्तरसप्रियश्च ।
इति बृहज्जातकादयः ॥ * ॥ ग्रहयज्ञे तु ।
वर्त्तुलाकारः । मण्डलमध्यस्थः । अस्य जन्मभूमिः
कलिङ्गदेशः । गोत्रः काश्यपः । वर्णः रक्तः ।
पूर्व्वमुखः । जातिः ब्राह्मणः । बलिर्गुडौदनम् ।
धूपो गुग्गुलुः । गन्धो रक्तचन्दनम । समित्
अर्कः । अस्य ध्यानम् ।
"क्षत्त्रियं कांश्यपं रक्तं कालिङ्गं द्वादशाङ्गुलम् ।
पद्महस्तद्वयं पूर्व्वाननं सप्ताश्ववाहनम् ।
शिवाधिदैवतं ध्यायेद्वह्निप्रत्यधिदैवतम् ॥"
अस्य मन्त्रः ।
"आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं
मर्त्यञ्च हिरण्ययेन सविता रथेन देवो याति
भुवनानि पश्यन् ॥" दक्षिणा धेनुः । इति ग्रह-
यागसंस्कारतत्त्वे ॥ * ॥ तस्योत्पत्त्यादिर्य्यथा, --
"अथान्तरीक्षादाभाष्य कश्यपं मुनिसत्तमम् ।
सतोयमेघगम्भीरा वागुवाचाशरीरिणी ॥
मारितञ्च यतः प्रोक्तमेतदण्डं त्वयादितिम् ।
तस्मान्मुने सुतस्तेऽयं मार्त्तण्डाख्यो भविष्यति ॥
सूर्य्याधिकारञ्च विभुर्ज्जगत्येष करिष्यति ।
हनिष्यत्यसुरांश्चायं यज्ञभागहरानरीन् ॥
देवा निशस्येति वचो गगनात् समुपागतम् ।
प्रहर्षमतुलं याता दानवाश्च हतौजसः ॥

प्रसाद्य प्रणतो भूत्वा विश्वकर्म्मा प्रजापतिः ॥
विवस्वतस्तु संभूतौ मनू द्वौ चरितं तयोः ।
पूर्व्वमेव तवाख्यातं मयैतदखिलं द्विज ॥
त्रीण्यपत्यान्यसौ तस्यां जनयामास गोपतिः ।
द्वौ पुत्त्रौ सुमहाभागौ कन्याञ्च यमुनां नदीम् ॥
मनुर्व्वैवस्वतो ज्येष्ठः श्राद्धदेवः प्रजापतिः ।
तेषां यमो यमी चैव यमलौ संबभूवतुः ॥
तत्तेजोऽभ्यधिकं चैव मार्त्तण्डस्य विवस्वतः ।
असहन्ती तु तच्चेजः स्वां छायां वीक्ष्य साब्रवीत्
संज्ञोवाच ।
अहं यास्यासि भद्रं ते स्वकञ्च भवनं पितुः ।
निर्व्विकारं त्वयाप्यत्र स्थेयं मच्छासनात् शुभे ॥
इमौ च बालकौ मह्यं कन्या च वरवर्णिनी ।
संभाव्या नैव चाख्येयमिमं भगवते त्वया ॥
छायोवाच ।
आकेशग्रहणाद्देवि आशापान्नैव कर्हिचित् ।
आख्यास्यामि मतं तुभ्यं गम्यतां यत्र वाञ्छितम्
इत्युक्ता छायया संज्ञा जगास पितृमन्दिरम् ।
तत्रावसत् पितृगृहे कञ्चित् कालं शुभेक्षणा ॥
भर्त्तुः समीपं याहीति पित्रोक्ता सा पुनः पुनः ।

हरिवंशे । ३ । ७४ ।
"बलेः पुत्त्रशतञ्चासीत् बाणज्येष्ठं नराधिप ।
धृतराष्ट्रश्च सूर्य्यश्च चन्द्रमाश्चेन्द्रतापनः ॥")
दानवविशेषः । यथा, --
"अभवन् दनुपुत्त्राश्च वंशे ख्याता महासुराः ।
विप्रचित्तिप्रधानास्ते शतं तीव्रपराक्रमाः ॥
स्वर्भानुर्वृषपर्व्वा च कुहदश्च महासुरः ।
धृतराष्ट्रश्च सूर्य्यश्च दनुमानिन्द्रतापनः ॥"
इति वह्निपुराणे काश्यपीयवंशः ॥
ग्रहविशेषस्य पर्य्यायो यथा । सूरः २ अर्य्यमा ३
आदित्यः ४ द्वादशात्मा ५ दिवाकरः ६ भास्करः
७ अहस्करः ८ व्रध्नः ९ प्रभाकरः १० विभा-
करः ११ भास्वान् १२ विवस्वान् १३ सप्ताश्वः १४
हरिदश्वः १५ उष्णरश्मिः १६ विवर्त्तनः १७
अर्कः १८ मार्त्तण्डः १९ मिहिरः २० अरुणः २१
पूषा २२ द्युमणिः २३ तरुणिः २४ मित्रः २५
चित्रभानुः २६ विरोचनः २७ विभावसुः २८
ग्रहपतिः २९ त्विषाम्पतिः ३० अहःपतिः ३१
भानुः ३२ हंसः ३३ सहस्रांशुः ३४ तपनः ३५
सविता ३६ रविः ३७ । इत्यमरः । १ । ३ । २८ -- ३१ ॥
शृरः ३८ भगः ३९ वृध्नः ४० पद्मिनीवल्लभः ४१
हरिः ४२ दिनमणिः ४३ चण्डांशुः ४४ सप्त-

ततो युद्धाय दैतेयानाजुहाव शतक्रतुः ।
सह देवैर्मुदा युक्तो दानवाश्च तमभ्ययुः ॥
तेषां युद्धसभूद्धोरं देवानामसुरैः सह ।
शस्त्रास्त्रदीप्तिसंदीप्तसमस्तभुवनान्तरम् ॥
तस्मिन् युद्धे भगवता मार्त्तण्डेन निरीक्षिताः ।
तेजसा दह्यमानास्तु भस्मीभूता महासुराः ॥
ततः प्रहर्षमतुलं प्रापुः सर्व्वे दिवौकसः ।
तुष्टुवुस्तेजसो योनिं मार्त्तण्डमदितिं तथा ॥
स्वाधिकारं ततः प्रापुयज्ञभागाश्च पूर्व्ववत् ।
भगवानपि मार्त्तण्डः स्वाधिकारमथाकरोत् ॥
कदम्बपुष्पवद्भास्वानधश्चोर्द्धञ्चरश्मिभिः ।
वृत्तोऽग्निपिण्डमदृशो दध्र नातिस्फुटं वपुः ॥"
इति मार्कण्डयपुराणे मार्त्तण्डोत्पत्तिः ॥ * ॥
मार्कण्डेय उवाच ।
"अथ तस्मै ददौ कन्यां संज्ञां नाम विवस्वते ।

अगच्छद्वडवा भूत्वा कुरून् विप्रोत्तरांस्ततः ॥
तत्र तेपे तपः साध्वी निराहारा महामुने ।
पितुः समीपं यातायाः संज्ञाया वाक्यतत्परा ॥
तद्रूपधारिणी च्छाया भास्करं समुपस्थिता ।
तस्याञ्च भगवान् सूर्य्यः संज्ञेयमिति चिन्तयन् ॥
तथैव जनयामास पुत्त्रौ द्वौ कन्यकां तथा ।
पूर्व्वजस्य मनोस्तुल्यः सावर्णिस्तेन सोऽभवत् ॥
यस्तयोः प्रथमं जातः पुत्त्रयोर्द्विजसत्तम ।
द्वितीयो योऽभवच्चान्यः स ग्रहोऽभूत् शनैश्चरः ॥
कन्याभूत्तपती या तां वव्रे संवरणो नृपः ।
संज्ञा तु पार्थिवी तेषामात्मजानां यथाकरोत् ॥
स्नेहं न पूर्व्वं जातानां तथा कृतवती सती ।
मनुस्तत् क्षन्तवांस्तस्या यमश्चास्या न चक्षमे ॥
बहुशः पीड्यमानस्तु पितुः पत्न्या सुदुःखितः ।
स वै कोपाच्च बाल्याच्च भाविनोऽर्थस्य वै बलात्
पदा संतर्जयामास च्छायां संज्ञासुतो यमः ।
तं शशाप ततः क्रुद्धा संज्ञा सां पार्पिवी भृशम् ॥
छायोवाच ।
पदा तर्जयसे यन्मां पितृभार्य्यां गरीयसीम् ।
तस्मात्तवैष चरणः पतिष्यति न संशयः ॥
यमस्तु तेन शापेन भृशं पीडितमानसः ।

| | | |
|---|---|---|
| मप्तिः ४५ गभस्तिमान् ४६ अंशुमाली ४७<br>काश्यपेयः ४८ खगः ४९ भानुमान् ५० लोक-<br>लोचनः ५१ पद्मबन्धुः ५२<br>ज्योतिष्मान् ५३<br>अव्यथः ५४ तापनः ५५ चित्ररथः ५६<br>खमणिः ५७ दिवामणिः ५८<br>गभस्तिहस्तः ५९<br>हेलिः ६० पतङ्गः ६१ अर्च्चिः ६२<br>दिनप्रणीः ६३<br>षेदोद्यः ६४ कालकृतः ६५ ग्रहराजः ६६ | | मनुना सह धर्म्मात्मा सर्व्वं पित्रे न्यवेदयत् ॥<br>यम उवाच ।<br>स्नेहेन तुल्यमस्मासु माता देव न वर्त्तते ।<br>विसृज्य ज्यायसोऽप्यस्मान् कनीयांसो बुभूषति<br>तस्या मयोद्यतः पादो न तु देहे निपातितः ।<br>बाल्याद्वा यदि वा मोहात् तद्भवान् क्षन्तुमर्हसि<br>शप्तोऽहं तात कोपेन जनन्या तनयो यतः ।<br>ततो न मन्ये जननी ममैषा तपतां वर ॥<br>निर्गुणेष्वपि पुत्त्रेषु न माता निर्गुणा भवेत् ।<br>पादस्ते पततां पुत्त्र कथमेतत्तयोदितम् ॥<br>तव प्रसादाच्चरणौ न पतेत् भगवन् यथा । |

मातृशापादयं मेऽद्य तथा चिन्तय गोपते ॥
रविरुवाच ।
असंशयमिदं पुत्र भविष्यत्यत्र कारणम् ।
येन त्वामाविशत् क्रोधो धर्म्मज्ञं सत्यवादिनम् ॥
सर्व्वेषामेव शापानां प्रतिघातो हि विद्यते ।
न तु मात्राभिशप्तानां क्वचिच्छापनिवर्त्तनम् ॥
न शक्यमेतन्मिथ्या तु कर्त्तुं मातुर्व्वचस्तव ।
किं चित्ते संविधास्यामि पुत्रस्नेहादनुग्रहम् ।
कृमयो मांसमादाय प्रयास्यन्ति महीतलम् ।
कृतं तस्या वचः सत्यं त्वञ्च त्राता भविष्यसि ॥
मार्कण्डेय उवाच ।
आदित्यस्त्वब्रवीच्छायां किमर्थं तनयेषु वै ।
तुल्येष्वप्यधिकस्नेह एकत्र क्रियते त्वया ॥
नूनं न चैषां जननी संज्ञा क्वापि त्वमागता ।
विगुणेष्वप्यपत्येषु माता शापं न दास्यति ॥
सा तत् परिहरन्तीव नाचचक्षे विवस्वतः ।
स चात्मानं समाधाय युक्तस्तत्त्वमवैक्षत ॥
तं शप्तुमुद्यतं दृष्ट्वा छायासंज्ञा दिनाधिपम् ।
भयेन कम्पिता ब्रह्मन् यथावृत्तं न्यवेदयत् ॥
विवस्वांस्तु तदा क्रुद्धः श्रुत्वा श्वशुरमभ्यगात् ।

ततश्च नासिकायोगात् तयोस्तत्र समेतयोः ।
नासत्यदस्रौ तनयावश्ववक्त्राद्विनिर्गतौ ॥
रेतरसोऽन्ते च रेवन्तः स्वङ्गी धन्वी तनुत्रधृक्
अश्वारूढः समुत्पन्नो बाणतूणसमन्वितः ॥
ततः स्वरूपमतुलं दर्शयामास भानुमान् ।
तस्याथ सा समालोक्य स्वरूपं मुदमाददौ ॥
स्वरूपधारिणीं चैनामानिनाय निजालयम् ।
संज्ञां भार्य्यां प्रीतिमतीं भास्करो वारितस्करः ॥
ततः पूर्व्वसुतो योऽस्याः सोऽभूद्वैवस्वतो मनुः ।
द्वितीयश्च यमः शापात् पापदर्शनतत्परः ॥
कृमयो मांसमादाय पादतस्ते महीतलम् ।
पतिष्यन्तीति शापान्तं तस्य चक्रे पिता स्वयम्
धर्म्मदृष्टिर्यतश्चासौ समो मित्रे तथाहिते ।
ततो नियोगे तं याम्ये चकारतिमिरापहः ॥
यमुनाञ्च नदीञ्चक्रे कलिन्दान्तरवाहिनीम् ।
अश्विनौ देवभिषजौ कृतौ पित्रा महात्मना ॥
गुह्यकाधिपतित्वे च रेवन्तो विनियोजितः ॥
रेवन्तमप्याह ततो भगवान् लोकभावनः ।
त्वमप्यशेषलोकस्य पूज्यो वत्स भविष्यसि ॥
अरण्येऽग्नौ महादावे वैरिदस्युभयेषु च ।

अतोऽसौ भास्करः प्रोक्तः प्राकर्षाच्च प्रभाकरः ।
दिवा दिवस इत्युक्तस्तत्कारित्वाद्दिवाकरः ।
सर्व्वस्य जगतस्त्वादिरादित्यस्तेन उच्यते ॥
एतस्य द्वादशादित्याः संभूतास्तेजसा पृथक् ।
प्रधान एक एवायं जगत्सु परिवर्त्तते ॥
तं दृष्ट्वा जगतो व्याप्तिं कुर्व्वाणं परमेश्वरम् ।
तस्यैवान्तःस्थिता देवा विनिष्क्रम्य स्तुतिं जगुः ॥”
इति वाराहे आदित्योत्पत्तिनामाध्यायः ॥ * ॥
उत्तरायणदक्षिणायनयोरनुलोमप्रतिलोमंगन्तव्यानि मण्डलानि प्रतिमासं सूर्य्यभ्रमणाधिकारिगणाश्च यथा, --
“अशीतिमण्डलशतं काष्ठयोरन्तरं द्वयोः ।
आरोहणावरोहाभ्यां भानोरब्देन या गतिः ॥
स रथोऽधिष्ठितो देवैरादित्यैरृषिभिस्तथा ।
गन्धर्व्वैरप्सरोभिश्च ग्रामणीसर्पराक्षसैः ॥
धाता कृतस्थला चैव पुलस्त्यो वासुकिस्तथा ।
रथकृद्ग्रामणीर्हेतिस्तुम्बुरुश्चैव सप्तमः ॥
एते वसन्ति वै चैत्रे मधुमासे सदैव हि ।
मैत्रेय स्यन्दने भानोः सप्त मासाधिकारिणः ॥
अर्य्यमा पुलहश्चैव रथौजाः पुञ्जिकस्थला ।
प्रहेतिः कच्छनीरश्च नारदश्च रथे रवेः ।
माधवे निवसन्त्येते शुचिसंज्ञे निबोध मे ॥
मित्रोऽत्रिस्तक्षको रक्षः पौरुषेयोऽथ मेनका ॥
हाहा रथस्वनश्चैव मैत्रेयैते वसन्ति वै ॥
वशिष्ठो वरुणो रम्भा सहजन्यो हुहूर्व्वधः ।
रथचित्रस्तथा शुक्रे वसन्त्याषाढसंज्ञिते ॥
इन्द्रो विश्वावसुः स्रोत एलापत्रस्तथाङ्गिराः ॥
प्रम्लोचा च नभस्येते सर्पश्चार्के वसन्ति हि ॥
विवस्वानुग्रसेनश्च भृगुरायूरणस्तथा ।
प्रम्लोचा शङ्खपालश्च व्याघ्रो भाद्रपदे तथा ॥
पूषा च सुरविर्व्वातो गौतमोऽथ धनञ्जयः ।
सुषेणोन्यो घृताची च वसन्त्याश्वयुजे रवौ ॥
विश्वावसुर्भरद्वाजः पर्जन्यैरावतौ तथा ।
विश्वाचीसेनजित्संज्ञौ कार्त्तिके चाधिकारिणः
अंशुकश्यपतार्क्षास्तु महापद्मस्तथोर्व्वशी ।
चित्रसेनस्तथा विद्युत् मार्गशीर्षाधिकारिणः ॥
ऋतुर्भगस्तथोर्णायुस्फूर्जः कर्कोटकस्तथा ।
अरिष्टनेमिश्चैवान्या पूर्व्वचित्तिर्व्वराप्सराः ।

स चापि तं यथान्यायमर्च्चयित्वा
दिवाकरम् ।
निर्दग्धुकामं रोषेण शान्तयामास
सुव्रतः ॥
विश्वकर्म्मा उवाच ।
तवातितेजसा व्याप्तमिदं रूपं
सुदुःसहम् ।
असहन्ती ततः संज्ञा वने चरति वै
तपः ॥
द्रक्ष्यते तां भवानद्य स्वां भार्य्यां
शुभचारिणीम्
रूपार्थं भवतोऽरण्ये चरन्ती सुमहत्तपः
॥
मतं मे ब्रह्मणो वाक्यात् यदि ते देव
रोचते ।
रूपं निवर्त्तयाम्यद्य तव कान्तं
दिवस्पते ॥
मार्कण्डेय उवाच ।
यतो हि भास्वतो रूपं प्रागासीत् परि-
मण्डलम् ।
ततस्तथेति तं प्राह त्वष्टारं भगवान्
रविः ॥
विश्वकर्म्मा त्वनुज्ञातः शाकद्वीपे
विवस्वतः ।
भ्रमिमारोप्य तत्तेजः शातनायोपचक्रमे
॥
देवाश्च ब्रह्मणा सार्द्धं
भास्वन्तमभितुष्टुवः ।
लिख्यमानं सहस्रांशुं प्रणेमुः
सर्व्वदेवताः ॥
ततः कोलाहले तस्मिन्
सव्वदेवसमागमे ।
तेजसः शातनं चक्रे विश्वकर्म्मा शनैः
शनैः ॥”
इति मार्कण्डेयपुराणे
सूर्य्यतेजःशातनम् ॥ * ॥
“शातितं चास्य यत्तेजस्तेन चक्रं
विनिर्मितम्
विष्णोः शूलञ्च सर्व्वस्य शिविका
धनदस्य च ॥

त्वां स्मरिष्यन्ति ये मर्त्या मोक्षन्ते ते
महापदः ॥
क्षेमं वृद्धिं सुखं राज्यमारोग्यं
कीर्त्तिमुन्नतिम् ।
नराणां परितुष्टस्त्वं पूजितः
संप्रदास्यसि ॥
छायासंज्ञासुतश्चापि सावर्णः
सुमहायशाः ।
भाव्यः सोऽनागते काले मनुः
सावर्णिकोऽष्टमः ॥
मेरुपृष्ठे तपो घोरमद्यापि चरति प्रभुः ।
भ्राता शनैश्चरस्तस्य
ग्रहोऽभूच्छासनाद्रवेः ॥
यवीयसी च या कन्या तस्य
चासीद्द्विजोत्तम ।
अभवत् सा सरिच्छ्रेष्ठा तपसी
लोकपावनी ॥
यस्तु ज्येष्ठो महाभाग सर्गो तस्येह
साम्प्रतम् ।
विस्तरं तस्य वक्ष्यामि मनोर्वैवस्वतस्य
ह ॥
य इदं जन्म देवानां शृणुयाद्वा पठेत्तथा ।
विवस्वतस्तु जातानां रवेर्माहात्म्यमेव
च ।
आपदं प्राप्य मुच्येत प्राप्नुयाच्च
महद्यशः ॥
अहोरात्रकृतं पापमेतत् शमयति श्रुतम् ।
माहात्म्यमादिदेवस्य मार्त्तण्डस्य
महात्मनः ॥”
इति मार्कण्डेयपुराणे
मार्त्तण्डमात्म्यनामा-
ध्यायः ॥ अपि च ।
प्रजापाल उवाच ।
“शरीरस्य कथं मूर्त्तिग्रहणं ज्योतिषो
द्विज ।
एतन्मे संशयं छिन्धि प्रणतस्य
द्विजोत्तम ॥
महातपा उवाच ।
योऽसावात्मा ज्ञानशक्तिरेक एव
सनातनः ।

पौषमासे वसन्त्येते सप्त भास्करमण्डले ॥
लोकप्रकाशनार्थाय विप्रवर्य्याधिकारिणः ।
त्वष्टा च जमदग्निश्च कम्बलोऽथ तिलोत्तमा ॥
ब्रह्मापेतोऽथ ऋतजित् धृतराष्ट्रश्च सप्तमः ।
माघमासे वसन्त्येते सप्त मैत्रेय भास्करे ॥
श्रूयतां चापर सूर्य्ये फाल्गुने निवसन्ति ये ।
विष्णुरश्वतरो रम्भा सूर्य्यवर्च्चाश्च सत्यजित् ॥
विश्वामित्रस्तथा रक्षो यक्षापेतो महामुने ।
मासेष्वेतेषु मैत्रेय वसन्त्येतेषु सप्तकाः ॥
सवितुर्मण्डले ब्रह्मन् विष्णुशक्त्युपबृंहिताः ।
स्तुवन्ति मुनयः सूर्य्यं गन्धर्व्वैर्गीयते पुरः ॥
नृत्यन्त्यप्सरसो यान्ति सूर्य्यस्यानु निशाचराः ॥
वहन्ति पन्नगा यक्षः क्रियतेऽभीषु संग्रहः ॥
बालखिल्यास्तथैवैनं परिवार्य्य समासते ।

| | | |
|---|---|---|
| दण्डः प्रेतपतेः शक्तिर्देवसेनापतेस्तया ।<br>अन्येषाञ्चैव देवानामायुधानि स विश्वकृत् ।<br>चकार तेजसा भानोर्भासुराण्यरिशान्तये॥<br>इति शातिततेजाः स श्वशुरेणातिशोभनम् ।<br>वपुर्दधार मार्त्तण्डः पुष्पचापमनोरमम् ॥<br>स ददर्श समाधिस्थां स्वां भार्य्यां बडवाकृतिम्<br>अपापां सर्व्वभूतानां तपसा नियमेन च ॥<br>ततो जगाम भास्वान् वै संज्ञा यत्र व्यवस्थिता ॥<br>सा च दृष्ट्वा तमायान्तं परपुंसो विशङ्कया ।<br>जगाम संमुखं तस्य पृष्ठरक्षणतत्परा ॥ | स द्वितीयं यदा चैच्छत् तदा तेजः समुत्थितम् ॥<br>तत् सूर्य्य इति भास्वांस्तु अन्योन्येन महात्मनः<br>लोलीभूतानि तेजांसि भासयन्ति जगत्त्रयम् ॥<br>तस्मिम् सर्व्वे सुराः सिद्धा गणाः सर्व्वे मह-<br>षिभिः ।<br>स्वयं भूता इति विभो तस्मात् सूर्य्यस्तु सोऽभवत्<br>लोलीभूतस्य तस्याशु तेजसोऽभूच्छरीरकम् ।<br>पृथक्त्वेन रविः सोऽथ कीर्त्त्यते वेदवादिभिः ॥<br>भासयन् सर्व्वलोकांस्तु यतोऽसावुत्थितो दिवि । | |

सोऽयं सप्तगणः सूर्य्यमण्डले मुनिसत्तम ।
हिमोष्णवारिवृष्टीनां हेतुत्वं समुपागतः ॥”
इति विष्णुपुराणे २ अंशे १० अध्यायः ॥ *
॥
सूत उवाच ।
“एवमेष महादेवो देवदेवः पितामहः ।
करोति नियतं कालं कालात्मा ह्यैश्वरी तनुः
॥
तस्य ये रश्मयो विप्राः सर्व्वलोकप्रदीपकाः
।
तेषां श्रेष्ठाः पुनः सप्त रश्मयो ग्रहयोनयः ॥
सुसुम्नो हरिकेशश्च विश्वकर्म्मा तथैव च ।
विश्वव्यचाः पुनश्चान्यः सम्पद्वसुरतः परः
।
अर्वाग्वसुरिति ख्यातः स्वराडन्यः
प्रकीर्त्तितः ॥
सुसुम्नः सूर्य्यरश्मिस्तु पुष्णाति
शिशिरद्युतिम् ।
तिर्य्यगूर्द्ध्वप्रचारोऽसौ सुसुम्नः परिगीयते ॥
हरिकेशस्तु यः प्रोक्तो रश्मिर्नक्षत्रपोषकः ।
विश्वकर्म्मा तथा रश्मिर्बुधं पुष्णाति सर्व्वदा
॥
विश्वव्यचास्तु यो रश्मिः शुक्रं पुष्णाति
नित्यदा
सम्पद्वसुरिति ख्यातः स पुष्णाति च
लोहितम् ॥
बृहस्पतिं प्रपुष्णाति रश्मिरर्व्वाग्वसुः प्रभोः
।
शनैश्चरं प्रपुष्णाति सप्तमश्च स्वराट् तथा
॥
एवं सूर्य्यप्रभावेण सर्व्वा नक्षत्रतारकाः ।
वर्द्धन्ते वर्द्धिता नित्यं नित्यमप्याययन्ति च
॥
दिव्यानां पार्थिवानाञ्च नैशानाञ्चेव सर्व्वशः ।
आदानान्नित्यमादित्यस्तेजसा तमसां प्रभुः
।
आदात्ते स तु नाडीनां सहस्रेण समन्ततः ॥
नादेयांश्चैव सामुद्रान् कूपांश्चैव सहस्रशः ।

अर्य्यमा दशभिः पाति पर्य्यन्यो
नवभिस्तपेत् ।
षड्भी रश्मिसहस्रैस्तु
मित्रस्तपतिविश्वधृक् ॥
वसन्ते कपिलः सूर्य्यो ग्रीष्मे
काञ्चनसप्रभः ।
श्वेतो वर्षासु वर्णेन पाण्डरः शरदि प्रभुः
॥
हेमन्तेताम्रवर्णः स्यात् शिशिरे लोहितो
रविः
ओषधीषु बलं धत्ते स्वधामपि पितृष्वथ
॥
सूर्य्योऽमरत्वममृतत्रयं त्रिषु नियच्छति ।
अन्ये चाष्टौ ग्रहा ज्ञेयाः सूर्य्ये चाधिष्ठिता
द्विजाः ॥
चन्द्रमाः सोमपुत्त्रश्च शुक्रश्चैव
बृहस्पतिः ।
भीमो भानुस्तथा राहुः केतुमानपि
चाष्टमः ॥
सर्व्वे ध्रुवे विरुद्धा यैर्ग्रहास्ते
वातरश्मिभिः ।
भ्राम्यमाणा यथायोगं भ्रमन्त्यनु
दिवाकरम् ॥
अलातचक्रवद्यान्ति वातचक्रेरिता
द्विजाः ।
यस्माद्वहति तान् वायुः प्रवहस्तेन वै
स्मृतः । *
रथस्त्रिचक्रः सोमस्य कुन्दाभास्तस्य
वाजिनः ।
वामदक्षिणतो युक्ता दश तेन निशाकरः
॥
वीथ्याश्रयाणि चरति नक्षत्राणि रविर्यथा
।
ह्रासवृद्धी च विप्रेन्द्रा ध्रुवाधाराणि
सर्व्वदा ॥
स सोमः शुक्लपक्षे तु भास्करे
परतस्थिते ।
आपूर्य्यन्ते परोऽस्यान्तः सततं
दिवसक्रमात् ॥

पर्य्यासपारिमाण्यैस्तु बुधैस्तुल्यं दिनं स्मृतम्
।
अवतीमांस्त्रयो लोकान् यस्मात् सूर्य्यः परि-
भ्रमात् ॥
अचिरात्तु प्रकाशे तु अवनात् स रविः स्मृतः
॥
तयोर्भूयः प्रवक्ष्यामि प्रमाणं चन्द्रसूर्य्ययोः ॥
महितत्वान्महीशब्दो यस्मिन्नर्थे निपात्यते ।
अस्य भारतवर्षस्य विष्कम्भात्तुल्यविस्ततम्
॥
मण्डलं भास्करस्याथ योजनैस्तन्निबोधत ।
नवयोजनसाहस्रो विस्तारो मण्डलस्य तु ॥
विस्तारात्त्रिगुणश्चापि परिणाहोऽत्र मण्डले ।
विष्कम्भमण्डलाच्चैव भास्करात् द्विगुणः
शशी ॥”
तस्य गतिनिरूपणं यथा, --
“मानसस्योत्तरे पृष्ठे लोकपालाश्चतुर्द्दिशम् ।
स्थिता धर्म्मव्यवस्थार्थं लोकसंरक्षणाय च ॥
लोकपालोपरिष्टात्तु सर्व्वतो दक्षिणायने ।
काष्ठागतस्य सूर्य्यस्य गतिन्तस्य निबोधत
॥
दक्षिणोपक्रमः सूर्य्यः क्षिप्तेषुरिव सर्पति ।
ज्योतिषां चक्रमादाय सततं परिगच्छति ॥
मध्यतश्चामरावत्यां यदा भवति भास्करः ।
वैवस्वते संयमने ऊर्द्ध्वं तत्र प्रदृश्यते ॥
सुखायामर्द्धरात्रन्तु विभावर्य्यस्तमेति च ।
वैवस्वते संयमने मध्याह्ने तु रविर्यदा ॥
सुखायामथ वारुण्यामुत्तिष्ठन् स तु दृश्यते ।
विभावर्य्यामर्द्धरात्रं माहेन्द्र्यामस्तमेति च ।
सुखायामथ वारुण्यां मध्याह्ने चार्य्यमा यदा
।
विभावर्य्यां सोमपुर्य्यां उत्तिष्ठति विभावसुः ॥
रात्र्यर्द्धं चामरावत्यामस्तमेति यमस्य च ।
सोमपुर्य्यां विभावर्य्यां मध्याह्ने चार्य्यमा यदा
॥
अमरावत्यां महेन्द्रस्य तद्गच्छति दिवाकरः
।
अर्द्धरात्रं संयमने वारुण्यामस्तमेति च ॥
सुशीघ्रमेव पर्य्येति भास्करोऽलातचक्रवत् ।

स्थावरान् जङ्गमांश्चैव यच्च कुल्यादिकं पयः ॥
तस्य रश्मिसहस्रन्तु शीतवर्षोष्णनिस्वरम् ।
तासां चतुःशतं नाड्यो वर्षन्ते चित्रमूर्त्तयः ॥
छन्दनाश्चैव याह्याश्च कोतना हकनास्तथा ।
अमृता नाम ताः सर्व्वा रश्मयो वृष्टिसर्ज्जनाः ॥
हिमोद्वहाश्च तामस्यो रश्मयस्त्रिशतं पुनः ।
रश्म्यो मेष्यश्च पैष्यश्च ह्रादिन्यो हिमसर्ज्जनाः ॥
चन्द्रास्ता नामतः सर्व्वाः पीताभाः स्युर्गभस्तयः
शुक्राश्च ककुभश्चैव गावो विश्वभृतस्तथा ॥
शुक्रास्ता नामतः सर्व्वास्त्रिविधा घर्म्मसर्ज्जनाः
समं विभर्त्ति ताभिः स मनुष्यपितृदेवताः ॥
मनुष्यानौषधेनेह स्वधया च पितृनपि ।
अमृतेन सुरान् सर्व्वान् तिस्रस्त्रींस्तर्पयत्यसौ ॥
वसन्ते ग्रैष्मिके चैव शतः सन्तपति त्रिभिः ।
शरद्यपि च वर्षासु चतुर्भिः सम्प्रवर्षति ।
हेमन्ते शिशिरे चैव हिममुत्सृजति त्रिभिः ॥
वरुणो माघमासे तु सूर्य्यः पूषा तु फाल्गुने ।
चैत्रे मासि भवेदीशो पाता वैशाखतापनः ॥
ज्यैष्ठमूले भवेदिन्द्र आषाढे सविता रविः ।
विवस्वान् श्रावणे मासि प्रोष्ठपद्यां भगः स्मृतः ॥
पर्य्यन्योऽश्वयुजि त्वष्टा कार्त्तिके मासि भास्करः
मागशीर्षे भवेन्मित्रः पौषे विष्णुः सनातनः ॥
पञ्चरश्मिसहस्राणि वरुणस्यार्कर्कम्मणि ।
षड्भिः सहस्रैः पूषा तु देवोऽंशुसप्तभिस्तथा ॥
धाताष्टभिः सहस्रैस्तु नवभिस्तु शतक्रतुः ।
विवस्वान् दशभिः पाति पात्यकादशभिर्भगः ॥
सप्तभिस्तपते मित्रस्त्वष्टा चैवाष्टभिस्तपेत् ।
क्षीणेऽपि तं सुरैः सोममाप्याययति नित्यदा ।
एकेन रश्मिना विप्राः सुसुम्नाख्येन भास्करः ॥
एषा सूर्य्यस्य वीर्य्येण सोमस्याप्यायिता तनुः ।
पौर्णमास्यां स दृश्येत संपूर्णो दिवसक्रमात् ॥
संपूर्णमर्द्ध मासेन तं सोमसमृतात्मकम् ।
पिबन्ति देवता विप्रा यतस्तेऽमृतभोजनाः ॥
ततः पञ्चदशे भागे किञ्चिच्छिष्टे कलात्मके ।
अपराह्णे पितृणां स जघन्यां पर्य्युपासते ॥
पिबन्ति हि फलं कालं शिष्टा तस्य कला तु या ।
स्वधामृतमयीं पुण्यां तामिन्दोरमृतात्मिकाम्॥
निःसृतं तदमावास्यां गभस्तिभ्यः स्वधामृतम् ।
मासतृप्तिमवाप्याग्रां पितरः सन्ति निर्वृताः ॥
न सोमस्य विनाशः स्यात् मुधा देवैस्तु पीयते ।
एवं सूर्य्यनिमित्तोऽस्य क्षयो वृद्धिश्च सत्तमाः ॥”
इति कौर्म्मे ४० अध्यायः ॥ * ॥
अस्य भार्य्यापत्यानि यथा ।
सूत उवाच ।
“अदितिः सुषुवे पुत्त्रमादित्यं कश्यपात् प्रभुम् ।
तस्यादित्यस्य चैवासीद्भार्य्याणान्तु चतुष्टयम् ॥
संज्ञा राज्ञी प्रभां च्छाया पुत्त्रांस्तासां निबोधत
संज्ञा त्वाष्ट्री तु सुषुवे सूर्य्यान्मनुमनूत्तमम् ।
यमञ्च यमुनाञ्चैव राज्ञी रेवन्तमेव च ॥
भ्रमन् वै भ्रममाणानि ऋक्षाणि चरते रविः ॥
ऐवं चतुर्षु पार्श्वेषु दक्षिणान्तेषु सर्पति ।
उदयास्तमये चासावुत्तिष्ठति पुनः पुनः ॥
पूर्व्वाह्णे चापराह्णे तु द्वौ द्वौ देवालयौ तु सः ।
तपत्येकञ्च मध्याह्ने ताभिरेव च रश्मिभिः ॥
उदितो वर्द्धमानाभिर्म्मध्याह्ने तपते रविः ।
अतः परं ह्रसन्तीभिर्गोभिरस्तन्नियच्छति॥
उदयास्तमयाभ्याञ्च स्मृते पूर्व्वापरे तु वै ।
यावत् पुरस्तात्तपति तावत् पृष्ठेऽथ पार्श्वयोः ॥
यैरर्को यत्र दृश्येत तेषां स उदयः स्मृतः ।
प्रणाशं गच्छते यत्र तेषामस्तः स उच्यते ॥
सर्व्वेषामुत्तरे मेरुर्लोकालोकश्च दक्षिणे ।
विदूरभावादर्कस्य भूमेर्लेखागतस्य च ॥
ध्रियन्ते रश्मयो यस्मात्तेन रात्रौ न दृश्यते ।
ऊद्ध्वं शतसहस्रन्तु स्थितस्तत्र प्रदृश्यते ॥
एवं पुष्करमध्येन यदा भवति भाष्करः ।
त्रिं शद्भागन्तु मेदिन्या मुहूर्त्तेन स गच्छति ॥
योजनाद्यां मुहूर्त्तस्य इमां संख्यां निबोधत ।
पूर्णे शतसहस्राणामेकत्रिं शत्तु ताः स्मृताः ॥
पञ्चाशच्च सहस्राणि तथान्यान्यधिकानि च ।
मौहूर्त्तिकी गतिर्ह्येषा सूर्य्यस्य तु विधीयते ॥

| | | |
|---|---|---|
| | प्रभा प्रभातमादित्याच्छाया सावर्णिमात्मजम्<br>शनिञ्चैव तपतीञ्च विष्टिञ्चैव यथाक्रमम् ॥”<br>इति कौर्म्मे २० अध्यायः ॥ * ॥<br>तस्य मण्डलपरिमाणं यथा, --<br>सूत उवाच ।<br>“सूर्य्याचन्द्रमसावेतौ भ्रमतो यावदेव तु ।<br>सप्तानाञ्च समुद्राणां द्वीप्रानाम्भाति विस्तरः ॥<br>विस्ताराद्धं पृथिव्यास्तु भवेदन्यत्र वाह्यतः ।<br>पर्य्यासपारिमाण्यात्त चन्द्रादित्यी प्रकाशतः ॥ | |

एतेन गतियोगेन यदा काष्ठान्तु दक्षिणाम्।
पर्य्यागच्छत् पतङ्गोऽसौ वामकोष्ठेऽन्तरेऽहनि
॥
मध्येन पुष्करस्याथ भ्रमते दक्षिणायने।
मानसोत्तरमेरोस्तु अन्तरं त्रिगुणन्तु तत् ॥ *
॥
सर्पतो दक्षिणायान्तु काष्ठायान्तु निबोधत।
नवकोट्यैः प्रसंख्याता योजनैः परिमण्डलम्
॥
तथा शतसहस्राणि चत्वारिंशच्च पञ्च च।
अहोरात्रा पतङ्गस्य गतिरेषा विधीयते ॥
दक्षिणाद्विनिवृत्तोऽसौ विषुवस्थो यदा रविः।
क्षीरोदस्य समुद्रस्य उत्तरातो दिशश्चरन्।
मण्डलं विषुवश्चापि योजनैस्तन्निबोधत ॥
तिस्रः कोट्यस्तु संपूर्णं विषुवस्याथ
मण्डलम्।
तथा शतसहस्राणां विंशत्येकाधिका पुनः ॥
* ॥
श्रावणे चोत्तरां काष्ठां चित्रभानुर्यदा भवेत्।
गोमेदकस्य द्वीपस्य उत्तरास्तु दिशश्चरन् ॥
उत्तरायाः प्रमाणन्तु काष्ठाया मण्डलस्य तु।
दक्षिणोत्तरमध्यानि तानि विद्याद् यथाक्रमम्
॥
स्थानं जरद्गवं मन्ये तथैरावतमुत्तमम्।
वैश्वानरं दक्षिणतो निर्द्दिष्टमिह तत्त्वतः ॥
नागवीथ्युत्तरा वीथी अजवीथ्याश्च दक्षिणे।
उभे आषाढमूलन्तु अजवीथ्युदयास्त्रयः ॥
अभिजित् पूर्व्वतः स्वाती
नागवीथ्युत्तरास्त्रयः।
अश्विनी कृत्तिका याम्या नागवीथ्युत्तरा
स्मृता ॥
रोहिण्यार्द्रा मृगशिरो नागवीथीरिति स्मृता।
पुष्याश्लेषा पुनर्व्वस्वोर्वीथीरैरावती स्मृता ॥
तिस्रस्तु वीथयो ह्येता उत्तरो मार्ग उच्यते।
पूर्व्वा उत्तरफल्गुन्योर्म्मघा चैवार्षभी भवेत् ॥
पूर्व्वोत्तरे प्रोष्ठपदे गोवीथी रेवती स्मृता।
श्रवणा तु धनिष्ठा च वारुणञ्च जरद्गवम्।
एताश्च वाथतस्तिस्रो मध्यमो गार्ग उच्यते ॥
हस्ता चित्रा तथा स्वाती नागवीथीरिति

अहस्तु चरते नाभिं सूर्य्यो वै
मण्डलक्रमात् ॥
कुलालचक्रपर्य्यन्तं यथा ररिः शशी
तथा।
दक्षिणे चक्रवत् सूर्य्यस्तथा शीघ्रं
निवर्त्तते ॥
तस्मात् प्रकृष्टां भूमिन्तु कालेनाल्पेन
गच्छति।
सूर्य्यो द्वादशभिः शीघ्रं मुहूर्त्तैर्द्दक्षिणायने
॥
त्रयोदशार्द्धमृक्षाणां मध्ये
चान्तरमण्डलम्।
मुहूर्त्तैस्तानि ऋक्षाणि नक्तमष्टादशैश्चरन्
॥
कुलालचक्रमध्यस्थो यथामन्दं प्रसर्पति
।
उदगयने तथा सूर्य्यः स सर्पेत्
मन्दविक्रमः ॥
तस्मात् दीर्घेण कालेन भूमिं सोऽल्पां
प्रसर्पति
सूर्य्योऽष्टादशभिर्ब्बद्धो मुहूर्त्तैरुदगायने ॥
त्रयोदशानां मध्ये तु ऋक्षाणां चरते रविः
।
मुहूर्त्तैस्तानि ऋक्षाणि रात्रौ
द्वादशभिश्चिरम् ॥
ततो मन्दतरं ताभ्यां चक्रन्तु भ्रमतां
पुनः।
मृत्पिण्ड इश मध्यस्थो भ्रमतेऽसौ
ध्रुवस्तथा ॥
मुहूर्त्तैस्तावत् त्रिंशद्भिरहोरात्रं घ्रुवं भ्रमन्
।
उभयोः काष्ठयोर्म्मध्ये भ्रमते मण्डलानि
तु ॥
उत्तरे प्रक्रमेऽर्कस्य दिवा मन्दगतिः
स्मृता।
तस्यैव तु पुनर्नक्तं शीघ्रा सूर्य्यस्य वै
गतिः ॥
दक्षिणे क्रमणे चापि दिवा शीघ्रं विधीयते
।

उवाच सूर्य्यं रक्तास्यः
कोपलज्जासमन्वितः ॥
रेणुका लज्जिता तत्र विधाय वाससी सती
॥
यमदग्निरुवाच।
अद्य मे निर्ज्जनस्थाने रसभङ्गस्त्वया
कृतः।
मम शापात् पापदृश्यो राहुग्रस्तो भविष्यति
॥
द्रष्टुं त्वां मेघगणाः सर्व्वे दूरीभूता भवन्ति ते
।
त्वामाच्छन्नं करिष्यन्ति वायुना
प्रेरितास्तथा ॥
स्वतेजसा भवान् गर्व्वी हततेजा भविष्यति
।
मेघाच्छन्नः स्वल्पतेजा राहुग्रस्तो भवान्
भव ॥
ब्राह्मणस्य वचः श्रुत्वा भगवान् भास्करः
स्वयम्
त्रस्तः पुटाञ्जलिर्भूत्वा तुष्टाव मुनिपुङ्गवम् ॥
सूर्य्य उवाच।
अहमेव त्वया शप्तो मया शप्तो भवान् भव।
अन्यथा मां वदन्त्येवं सूर्य्यं निस्तेजसं
जनाः ॥
पराभूतः क्षत्त्रियेण भविष्यसि द्विजेश्वरः।
मरणं क्षत्त्रियास्त्रेण भवतश्च भविष्यति ॥
सूर्य्यस्य वचनं श्रुत्वा चुकोप ब्राष्णणः पुनः
।
तं शशापातिरक्तास्यः शम्भुना च जितो
भवान् ॥
उभयोः कलहं ज्ञात्वा कश्यपेन सह व्रज।
आजगाम स्वयं ब्रह्मा विधाता जगतामपि ॥
आगत्य ब्रह्मा संत्रस्तं बोधयामास
भास्करम्।
मुनिश्रेष्ठञ्च धर्म्मज्ञं धर्म्मज्ञानां गुरोर्गुरुः ॥
ब्रह्मोवाच।
क्षमस्व भास्कर त्वञ्च साक्षान्नारायणो
भवान्।

स्मृता ।
विशाखमित्रफैत्रश्च नागवीथीरिहोच्यते ॥
मूलपूर्व्वोत्तराषाढा विथीर्व्वैश्वानरी तथा ।
स्मृ तास्तिस्रस्तु वीथ्यस्ता मार्गे वै दक्षिणे बुधैः ॥
काष्ठयोरन्तरं त्वेता वक्ष्यन्ते योजनैः पुनः ।
एतच्छतसहस्राणामेकत्रिंशत्तु वै स्मृतम् ॥
शतानि त्रीणि चान्यानि त्रयस्त्रिंशच्च योजनैः
काष्ठयोरन्तरं ह्येवं योजनाग्रात् प्रकीर्त्तितम् ॥
काष्ठयोर्लेखयोश्चैव अयने दक्षिणोत्तरे ।
ते वक्ष्यामि प्रसंख्याय योजनैस्तु निबोधत ॥
एकैकमन्तरन्तद्वै युक्तान्येतानि सप्ततिः ।
सहस्रैरतिरिक्ता च ततोऽन्या पञ्चविंशतिः ॥
लेखयोः काष्ठयोश्चैव वाह्याभ्यन्तरयोश्चरन् ।
अभ्यन्तरं स पर्य्येति मण्डलान्युत्तरायणम् ॥
वाह्यतो दक्षिणेनैव सततं सूर्य्यमण्डलम् ।
चरत्यसौ प्रतीच्यान्तु त्र्यशीतिमण्डलं शतम् ॥
तरणिर्द्दक्षिणे तावत् क्रमते मण्डलानि तु ।
प्रमाणं मण्डलस्यापि योजनाग्रान्निबोधत ॥
योजनानां सहस्राणि दश चाष्टौ ततः स्मृतः ।
अधिकान्यष्टपञ्चाशत्योजनानि च वै पुनः ॥
विष्कम्भो मण्डलस्यैतत्तिर्य्यक् स तु विधीयते ।
गतिः सूर्य्यस्य वै नक्तं मन्दा चापि पुनः स्मृता ॥
एवं गतिविशेषेण विभजेद्रात्र्यहानि तु ।
अजवीथ्या दक्षिणं यल्लोकालोकस्य चोत्तरम् ॥
लोकसन्तानको ह्येष वैश्वानरपथाद्बहिः ।
व्युष्टा यावत् प्रभा सौरी पुष्करात् संप्रकाशते ।
पार्श्वेभ्यो बाह्यतस्तावत् लोकालोकस्तु पर्व्वतः ॥
योजनानां सहस्राणि दशोर्द्धं चोच्छ्रितो गिरिः ।
प्रकाशश्चाप्रकाशश्च सर्व्वतः परिमण्डलः ॥
नक्षत्रचन्द्रसूर्य्याश्च ग्रहास्तारागणैः सह ।
अभ्यन्तरे प्रकाशन्ते लोकालोकस्य वै गिरेः ॥
इति मात्स्ये १०१ अध्यायः ॥
अस्य राहुग्रस्तादिकारणं यथा, --
नन्द उवाच ।
“राहुग्रस्तः कथं सूर्य्यश्चन्द्रो वापि जगत्प्रभो ॥
नष्टश्चन्द्रः कथं भाद्रे चतुर्थ्याञ्च सितासिते ।
वेदानां जनकस्त्वञ्च कं पृच्छामि त्वया विना ॥
श्रीभगवान् उवाच ।
शृणु नन्द प्रवक्ष्यामि कथामेतां पुरातनीम् ।
यां श्रुत्वा निष्कलङ्कश्च तीर्थस्नायी भवेन्नरः ॥
एकदा यमदग्निश्च महाकौतूहलान्वितः ।
रेणुकासहितस्तुष्टो जगाम नर्म्मदातटम् ।
निर्ज्जने नर्म्मदातीरे विजहार तया सह ॥
चन्दनोक्षितसर्व्वाङ्गं वस्त्रमाल्यधरं मुनिम् ।
युष्माकं परिपालश्चाप्यवध्यो ब्राह्मणः सदा ॥
अहं करोमि भवतो विप्रशापान्तमुल्वणम् ।
शान्तो भव सुरश्रेष्ठ साक्षी त्वं सर्व्वकर्म्मणाम् ॥
कुत्रचिद्दिवसे ब्रह्मन्नृतौ त्वं कुत्रचित् क्षणम् ।
भविष्यसि घनाच्छन्नः सद्यो मुक्तो भविष्यसि ॥
न्यूनातिरिक्ते वर्षे वा राहुग्रस्तो भविष्यसि ।
तत्रादृश्यश्च केषाञ्चित् पुण्यदृश्यो हि कस्यचित् ॥
अन्यथा सर्व्वकाले नापुण्यदृश्यो भवान् भुवि ।
त्वां दृष्ट्वा च नमस्कृत्य सर्व्वे निष्पापिणो जनाः ॥
जन्मसप्ताष्टरिप्फाङ्कचतुर्थदशमे विधौ ।
जन्मर्क्षे निधने नृणां अदृश्यस्त्वं भविष्यसि ॥
अस्तकाले घनाच्छन्ने मध्याह्नस्थे जलेऽपि वा
अर्द्धोदिते च काले च पापदृश्यो भविष्यसि ॥
भार्य्यादुःखनिमित्तेन भार्य्यया हेतुभूतया ।
श्वशुरेण श्यालकेन हततेजा भविष्यसि ॥
अन्यथा तव तेजश्च संज्ञा सहितुमक्षमा ।
मालिसुमालियुद्धे च शम्भुना त्वं पराजितः ॥
इत्येवमुक्त्वा सूर्य्यञ्च बोधयामास ब्राह्मणम् ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । ७९ । १-५० ॥
ब्रह्माण्डपुराणे ५९ अध्यायेऽप्येमेव ॥
अथ सूर्य्यमन्त्राः ।
“तारो घृणिर्भृगुः पश्चाद्वामकर्णविभूषितः ।
वह्नासनो मरुत् शेषः सनेत्रोऽदिस्त्यपश्चिमः ।
अष्टाक्षरो मनुः प्रोक्तो भानोरभिमतः परः ॥”
ॐ घृणि सूर्य्य आदित्य । अस्य पूजा ।
प्रातः

|  |  |  |
|---|---|---|
|  | महारासरसाढ्यं तमुवाच भास्करः स्वयम् ॥<br>वेदकर्त्तुः प्रपौत्रस्त्वं ब्रह्मणश्च जगत्पतेः ।<br>चतुर्व्वेदविधेयेषु सुनिष्णातः सदा शुचिः ॥<br>वेदप्रणिहितो धर्म्मो ह्यधर्म्मस्तद्विर्य्ययः ।<br>धर्म्मं त्यजति धर्म्मज्ञो अधर्म्मेण रतः कथम् ॥<br>दिवामैथुनदोषञ्च वक्ति वेदो विशेषतः ।<br>अहञ्च कर्म्मणां साक्षी तेन त्वां कथयामि ते ॥<br>सूर्य्यस्य वचनं श्रुत्वा तत्याज मैथुणं द्विजः ।<br>दृष्ट्वा पुगो विप्ररूपं सूर्य्यं तेजस्विनं सुरम् । | कृत्यादिप्राणायामान्तं विधाय पीठन्यासं कुर्य्यात्<br>तत्र विशेषः । हृदयस्य पूर्व्वादिदिक्षु मध्य च । |

प्रभूतं विमलं सारं समाराध्यं परमसुखं
विन्यस्य
आधारशक्त्यादि अं सूर्य्यमण्डलाय
द्वादशकला-
त्मने नमः इत्यन्तं विन्यसेत् । तथा च
निबन्धे ।
“पीठे कॢप्ते च प्रथमं दिक्षु मध्ये च संयजेत् ।
प्रभूतं विमलं मारं समाराध्यमनन्तरम् ॥
परमादि सुखं पीठं स्वविम्बान्तं प्रकल्पयेत्
॥”
ततः केशरेषु मध्ये च वां दीप्तायै नमः ॥
एवं वीं सूक्ष्मायै वूं जयायै वें भद्रायै वैं
विभूत्यै वों विमलायै वौं अमोघायै वं विद्यु-
तायै वः सर्व्वतोमुख्यै । तथा च निबन्धे ।
“दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला पुनः
अमोघा विद्युता सर्व्वतोमुखी पीठशक्तयः ॥
दीप्तदीपशिखाकारान् बीजन्यासान् विदुः
क्रमात् ।
अक्लीवहृस्वत्रितयस्वरान् बिन्द्वग्निसंयुतान्
॥”
तदुपरि ब्रह्मविष्णुशिवात्मकाय सौराय योग-
पीठाय नमः । यथा च शारदायाम् ।
“वदेत् पदं चतुर्थ्यन्तं ब्रह्मविष्णुशिवात्मकम् ।
सौराय योगपीठाय नमःपदमनन्तरम् ॥
पीठमन्त्रोऽयमाख्यातो दिनेशस्य जगत्पतेः
॥”
तत ऋष्यादिन्यासः । शिरसि देवभागऋषये
नमः । मुखे गायत्रीच्छन्दसे नमः । हृदि
आदित्याय देवतायै नमः । निबन्धे ।
“देवभागो मुनिः प्रोक्तो गायत्रीच्छन्द ईरितम्
आदित्यो देवता प्रोक्तो दृष्टादृष्टफलप्रदः ॥”
ततः कराङ्गन्यासौ । सत्याय तेजोज्वालामणे
हुँ फट् स्वाहा अङ्गुष्ठाभ्यां नमः । एवं ब्रह्मणे
१० तर्ज्जनीभ्यां स्वाहा । विष्णवे १०
मध्यमाभ्यां
वषट् । रुद्राय १० अनामिकाभ्यां हूम् । अग्नये
१० कनिष्ठाभ्यां वौषट् । सर्व्वाय १०
करतल-
पृष्ठाभ्यां फट् । एवं हृदयादिषु । तथा च

“रक्ताब्जयुग्माभयदानहस्तं
केयूरहाराङ्गदकुण्डलाढ्यम् ।
माणिक्यमौलिं दीननाथमीडे
बन्धूककान्तिं विलसत्त्रिनेत्रम् ॥”
एवं ध्यात्वा मानसैः संपूज्य
अर्घस्थापनं कृत्वा
गुरुपंक्तिं संपूज्य पीठपूजां कुर्य्यात् ।
ततः स्वं
खसोल्काय नमः । इति मन्त्रेण मूर्त्तिं
संकल्प्य
पुनर्ध्यात्वा
आवाहनादिपञ्चपुष्पाञ्जलिदान-
पर्य्यन्तं विधायावरणपूजामारभेत् ।
तथा च
निबन्धे ।
“तारादि खं खंसोल्काय मनुना
मूर्त्तिकल्पना
साक्षिणं सर्व्वलोकानां
तस्यामावामाह्य पूजयेत्”
केशरेष्वग्न्यादिकोणेषु मध्ये दिक्षु च
सत्याय
तेजोज्वालामणे हूँ फट् स्वाहा
हृदयाय नमः ।
एवं ब्रह्मणे शिरसे स्वाहा । विष्णवे
शिखायै
वषट् । रुद्राय कवचाय हूम् । अग्नये
नेत्रत्रयाय
वौषट् । सर्व्वाय अस्त्राय फट् ।
दिक्पत्रेषु
पूर्व्वादि ॐ आदित्याय नमः । एवं एं
रवये
ऊँ भानवे ईं भास्कराय । विदिक्पत्रेषु
अग्न्यादि उं उषायै पं प्रज्ञायै पं
प्रभायै सं
सन्ध्यायै । तथा च ।
“अङ्गानि पूजयेदादौ
दिक्पत्रेष्वर्कमूर्त्तयः ।
आदित्याद्याश्चतस्रोऽच्च्यार्ः शक्तयः
कोण-

वौषट् । ह्रः करतलपृष्ठाभ्यां फट् । एवं
हृदया-
दिषु । तथा च निबन्धे ।
“षड्दीर्घभाजा मध्येन बीजेनाङ्गानि
कल्पयेत् ॥”
ततो ध्यानम् ।
“रक्ताम्बुजासनमशेषगुणैकसिन्धुं
भानुं समस्तजगतामधिपं भजामि ।
पद्मद्वयाभयवरान् दधतं कराब्जै-
र्माणिक्यमोलिमरुणाङ्गरुचिं त्रिनेत्रम् ॥”
एवं ध्यात्वा मानसैः संपूज्य अर्घ्यस्थापनं
कृत्वा
पूर्व्वोक्तक्रमेण पीठपूजां विधाय मूर्त्तिमन्त्रेण
मूर्त्तिं सङ्कल्प्य पुनर्ध्यात्वावाहनादिपञ्चपुष्पा-
ञ्जलिदानपर्य्यन्तं विधायावरणपूजामारभेत् ।
अग्निनिरृतिवाय्वीशानेषु मध्ये दिक्षु च ह्राँ
हृदयाय नमः इत्यादिना पूजयेत् । पत्रेषु
चन्द्रा-
दीन् पूजयेत् । तत इन्द्रादीन् वज्रादींश्च
पूजयेत्
ततो धूपादिविसर्ज्जनान्तं कर्म्म समापयेत् ।
अस्य पुरश्चरणं द्वादशलक्षजपः । तथा च ।
“भानुलक्षं जपेन्मन्त्रमाज्येन च दशांशतः ।
तिलैर्व्वा मधुरासिक्तैर्जुहुयाद्विजितेन्द्रियः ॥”
मन्त्रान्तरम् ।
“आकाशमग्निपवनसत्यान्तार्घीशबिन्दुमत् ।
मार्त्तण्डभैरवं नाम बीजमेतदुदाहृतम् ॥
पुटितं विम्बबीजेन सर्व्वकामफलप्रदम् ॥”
विम्बबीजमाह ।
“टान्तं दहननेत्रे न्दुसहितं तदुदाहृतम् ॥”
ठ्रिं ह्र्यौडं ठ्रिम् । अस्य पूजाप्रयोगः । प्रातः-
कृत्यादि पूर्व्ववत् एतन्मन्त्रोक्तपीठन्यासान्तं
कर्म्म
विधाय ऋष्यादिन्यासं कुर्य्यात् । ततो मूर्त्ति-
न्यासः । ठ्रंसूर्य्याय नमोऽङ्गुष्ठयोः । ठ्रिं
भास्क-
राय नमस्तर्ज्जन्योः । ठुं भानवे नमः मध्य-
मयोः । ठें रवये नमोऽनामिकयोः । ठ्रों
दिवाकराय नमः कनिष्ठयोः । ततः शिरसि

शारदायाम् ।
"सत्याय हृदयं प्राक्तं ब्रह्मण शिर इरितम् ।
विष्णवे स्याच्छिखावर्म्म रुद्राय परिकीर्त्तितम्
॥
अग्नये नेत्रमाख्यातं सर्व्वायास्त्रमुदीरितम् ।
तेजोज्वालामणे हूँ फट् द्विठान्ताः परिकी-
र्त्तिताः ॥"
ततो मूर्त्तिन्यासः । यथा शिरसि ॐ आदि-
त्याय नमः । मुखे एं रवये । हृदये ऊं भानवे ।
गुह्ये ईं भास्कराय । चरणयोः अं सूर्य्याय ।
तथा च निबन्धे ।
"आदित्यं विन्यसेन्मूद्ध्र्नि रविं मुखगतं
न्यसेत् ।
हृदये भानुनामानं भास्करं गुह्यदेशतः ।
सूर्य्यं चरणयोर्न्यस्येद्वर्णैः सत्यादिपञ्चभिः ॥"
ततो मन्त्रन्यासः । शिरशि ॐ ॐ नमः । मुखे
ॐ घृ नमः । कण्ठे ॐ णि नमः । हृदि ॐ सू
नमः । कुक्षौ ॐ र्य्य नमः । नाभौ ॐ आ
नमः । लिङ्गे ॐ दि नमः । पादयोः ॐ त्य
नमः । तथा च ।
"मूर्द्धास्यकण्ठहृदयकुक्षिनाभिध्वजाङ्घ्रिषु ।
मन्त्रवर्णान्न्यसेदष्टौ प्रत्येकं प्रणवादिकान् ॥"
* ॥
ततो ध्यानम् ।

पत्रगाः ॥
स्वस्वनामादिवर्णाः स्युस्तासां
बीजान्यनुक्रमात्
उषा प्रज्ञा प्रभा सन्ध्या शक्तयः
परिकीर्त्तिताः ॥"
ततः पत्राग्रेषु ब्राह्म्याद्याः संपूज्य
पुरतोऽरुण-
मर्च्चयेत् । तथा च शारदायाम् ।
"पत्राग्रसंस्था ब्राह्म्याद्याः
पुरतोऽरुणमर्च्चयेत् ।"
तद्वाह्ये चन्द्रादीन् पूजयेत् । यथा
चन्द्राय नमः
एवं मङ्गलाय बुधाय बृहस्पतये
शुक्राय शनैश्च-
राय राहवे केतवे । तथा च
शारदायाम् ।
"चन्द्रादीन्पूजयेत्पश्चात्ग्रहानष्टौ
ततो वहिः ॥"
ततः इन्द्रादीन् वज्रादींश्च सम्पूज्य
धूपादि
विसर्ज्जनान्तंकर्म्म समापयेत् ।
अस्य पुरश्चरण-
मष्टलक्षजपः । तथा च ।
"वसुलक्षं जपेन्मन्त्रं समिद्भिः
क्षीरशाखिनाम् ।
तत्सहस्रं प्रजुहुयात्
क्षीराक्ताभिर्ज्जितेन्द्रियः ॥"
वाचनिक एवाष्टसहस्रहोमः ॥ * ॥
मन्त्रान्तरं यथा
"आकाशमग्निदीर्घेन्दुसंयुतं
भुवनेश्वरी ।
सर्गान्वितो भृगुर्भानोस्त्र्यक्षरोऽयं
समीरितः ॥"
ह्राँ ह्रीँ सः । अस्य पूजाप्रयोगः ।
प्रातः-
कृत्यादिपूर्व्वमन्त्रोक्तपीठन्यासं
विधाय पूर्व्वोक्तं
ऋष्यादिन्यासं कुर्य्यात् । ततो
मन्त्रन्यासः ।
यथा आधारादिपादपर्य्यन्तं ह्राँ नमः
। कण्ठा-

वदने हृदये गुह्ये पाददेशेषु तास्तत्तद्बीजा-
दिका न्यसेत् । तथा च निबन्धे ।
"पञ्चह्रस्वाढ्यबीजेन पञ्चमूर्त्तिः प्रविन्यसेत् ।
अङ्गुष्ठादिकनिष्ठान्तं अङ्गुलिषु क्रमादिमाः ॥
सूर्य्यस्तु भास्करो भानुस्ततो रविदिवाकरौ ।
शिरोवदनहृद्गुह्यपादेशेषु ताः क्रमात् ॥"
ततः कराङ्गन्यासौ । ठ्रां अङ्गुष्ठाभ्यां नमः ।
ठ्रीं
तर्ज्जनीभ्यां स्वाहा । ठ्रूं मध्यमाभ्यां वषट् ।
ठ्रैं अनामिकाभ्यां हूम् । ठ्रौँ कनिष्ठाभ्यां
वौषट् । एवं हृदयादिषु । ठ्रां हृदयाय नमः
इत्यादि । तथा च निबन्धे ।
"दीर्घयुक्तेन बीजेन नेत्रान्ताङ्गानि विन्यसेत्
।"
ततो मूलबीजेन व्यापकं कृत्वा ध्यायेत् ।
तथा
च ।
"व्यापकं मूलबीजेन कुर्व्वीत तदनन्तरम् ।"
ध्यानम् ।
हेमाम्भोजप्रबालप्रतिमनिजरुचिंचारु-
स्वट्टाङ्गपद्मौ
चक्रं शक्तिं सपाशं शृणिमतिरुचिरामक्ष-
मालां कपालम् ।

|  | दाधारपर्य्यन्तं ह्रीँ नमः ।<br>मूर्द्धादिकण्ठपर्य्यन्तं<br>सः नमः । शारदायाम् ।<br>“आधारादिपदाग्रान्तं<br>कण्ठादाधारकावधि ।<br>मूर्द्धादिकण्ठपर्य्यन्तं क्रमाद्बीजत्रयं<br>न्यसेत् ॥”<br>ततः कराङ्गन्यासौ । ह्राँ अङ्गुष्ठाभ्यां<br>नमः ।<br>ह्रीँ तर्ज्जनीभ्यां स्वाहा । हूँ<br>मध्यमाभ्यां वषट्<br>ह्रैँ अनामिकाभ्यां हूँ । ह्रीँ कनिष्ठाभ्यां |  |
|---|---|---|

हस्ताम्भोजैर्दधानं त्रिनयनविलसद्वे
दवक्त्वाभिरामं
मार्त्तण्डं वल्लभार्द्धं मणिमयमुकुटं
हारदीप्तं
भजामः ॥"
एवं ध्यात्वा मानसैः सम्पूज्यार्घस्थापनं
कुर्य्यात्
ततः पूर्व्वोक्तक्रमेण पीठं संपूज्य
पूर्व्वादिदिक्षु
कर्णिकायाम् । उं उषायै नमः । एवं पं
प्रभायै
पं प्रज्ञायै सं सन्ध्यायै इति संपूज्य मूर्त्तिं
मूलेन
कल्पयेत् । ततः पूर्व्वादिदिक्षु सूर्य्यं
भास्करं भानुं
रविञ्च पूजयेत् । कोणेषु दिवाकरम् ।
ततः
पूर्व्वदक्षिणपश्चिमोदीच्येषु दिक्षु ट्रां
हृदयाय
नमः । इत्यादिना पूज्ययेत् । ईशाने ट्रौं
नेत्र-
त्रयाय वौषट् । शारदायाम् ।
"सूर्य्यादीन् चतुरो दिक्षु विदिक्ष्वन्यं
समर्च्चयेत
अङ्गपूजा यथापूर्व्वा नेत्रमीशानदिग्गतम्
॥"
ततः पूर्व्ववच्चन्द्रादिग्रहान् पूजयेत् ।
ततो
लोकपालान् पूजयेत् । तथा च निबन्धे
।
"ग्रन्थानष्टौ तथा बाह्ये
लोकपालांस्ततःपरम् ॥"
ततो धूपादिविसर्ज्जनान्तं कर्म्म
समापयेत् ।
अस्य पुरश्चरणजपो लक्षत्रयसंख्यः ।
त्रिमधुरो-
पेतैः कमलैर्द्दशांशहोमः । तथा च ।
"लक्षत्रयं जपेन्मन्त्री बीजं
विम्बपुटीकृतम् ।

"सूर्य्यकान्तिस्ताम्रवर्णा ओड्रपर्य्याय इत्यपि ॥"
इति शब्दचन्द्रिका ॥
सूर्य्यस्य दीप्तिश्च ॥

**सूर्य्यकालः**, पुं, (सूर्य्योपलक्षितः कालः ।) दिवसः ।

इति शब्दचन्द्रिका

**सूर्य्यकालानलचक्रं**, क्ली, नरणा शुभाशुभज्ञानार्थं

नक्षत्रघटितचक्रविशेषः । यथा, --
"ऊर्द्ध्वगास्त्रिस्त्रिशूल्यग्रास्तिस्रस्तिर्य्यव्यवस्थिताः
द्वे द्वे नाड्यौ स्थिते कोणे शृङ्गयुग्मं तथैकया ॥
मध्यत्रिशूलदण्डादौ भानुभाद्यं भमण्डलम् ।
साभिजित्तत्र दातव्यं सव्यमार्गेण सर्व्वदा ॥
नाम ऋक्षं स्थितं यत्र ज्ञेयं तत्र श्रुभाशुभम् ।
अधोगतैस्त्रिनक्षत्रैरुद्वेगो वधबन्धनम् ॥
रेखाष्टके जयो लाभ ऋक्षषट्के तथा पुनः ।
शृङ्गयुग्मे रुजाभङ्गो मृत्युः शूलत्रये स्फुटम् ॥
विवादे व्यसने युद्धे रोगार्त्ते गमने तथा ।
सूर्य्यकालानलं चक्रं ज्ञातव्यन्तु प्रयत्नतः ॥"
इति स्वरोदयः ॥

**सूर्य्यग्रहः**, पुं, (सूर्य्यरूपो ग्रहः ।) नवग्रहाणां

प्रथमग्रहः । (सूर्य्यस्य ग्रहः ग्रहणम् ।)
सूर्य्योपरागः । यथा, गारुडे ।
"सूर्य्यग्रहः सूर्य्यवारे सोमे सोमग्रहो भवेत् ।
चूडामणिरयं योगस्तत्रानन्तफलं स्मृतम् ॥"
इति तिथ्यादितत्त्वम् ॥

**सूर्य्यग्रहणं**, क्ली, (सूर्य्यस्य ग्रहणम् ।) सूर्य्योप-

रागः । तत्कारणं यथा, वह्निपुराणे गणभेद-
नामाध्याये ।
"सूर्य्येन्दोरुपरागस्तु गोलकच्छायाया भवेत् ।
अन्योन्ययोस्तयोर्ख व्यापयोरेव कारणात् ॥
ग्रासमोक्षौ तु जायेते तत्रातः पूर्व्वपश्चिमौ ।
तत्र पुण्यफलाद्भागः कृतो राहोस्तु विष्णुना ॥"
अन्यत् ग्रहणशब्दे द्रष्टव्यम् ॥

**सूर्य्यजः**, पुं, (सूर्य्यात् जायते इति । जन + डः ।)

सुग्रीववानरः । इति जटाधरः ॥ शनिग्रहः ।
(यथा, बृहत्संहितायाम् । १०४ । ४४ ।
"गच्छत्यध्वानं सप्तमे चाष्टमे च

**सूर्य्यतनया**, स्त्री, (सूर्य्यस्य तनया ।) यमुना नदी ।

इत्यमरः । १ । १० । ३२ ॥

**सूर्य्यपत्रः**, पुं, (सूर्य्य इव तीक्ष्णं पत्रमस्य ।)

आदित्यपत्रः । इति राजनिर्घण्टः
॥

**सूर्य्यपुत्त्रः**, पुं, सूर्य्यस्य पुत्त्रः ।) वरुणः । शनिः ।

इति केचित् ॥ (यथा, महाभारते ।
६ । ३ । १३ ।
"मघास्वङ्गारको वक्रः श्रवणे च
बृहस्पतिः ।
भाग्यं नक्षत्रमाक्रम्य सूर्य्यपुत्त्रेण
पीड्यते ॥")
यमः । यथा, --
"धर्म्मराज नमस्तुभ्यं नमस्ते
यमुनाग्रज ।
पाहि मां किङ्करैः सार्द्धं सूर्य्यपुत्त्र
नमोऽस्तु ते ॥"
इति तिथ्यादितत्त्वम् ॥
(अश्विनीकुमारौ । यथा,
महाभारते । १३ ।
१५७ । १९ ।
"पिबेतामश्विनौ सोमं भवद्भिः
सहितावुभौ ।
उभावेतावपि सुरौ सूर्य्यपुत्त्रौ
सुरेश्वर ! ॥")
अन्यत् सूर्य्यतनयशब्दे द्रष्टव्यम्
॥

**सूर्य्यपुत्त्री**, स्त्री, (सूर्य्यस्य पुत्त्री ।) यमुना । यथा,

महाभारते ।
"यमस्वसर्नमस्तेऽस्तु यमुने
लोकपूजिते ।
वरदा भव मे नित्यं सूर्य्यपुत्त्रि
नमोऽस्तु ते ॥"
इति तिथ्यादितत्त्वम् ॥
विद्युत् । इति केचित् ॥

दशांशं कमलैः फुल्लैर्जुहुयान्मधुरोक्षितैः ॥
इमं मन्त्रं जपन्मर्त्यः कान्तिं पुत्त्रान् धनं द्युतिम्
वाक्सिद्धिममितां लक्ष्मीं सौभाग्यमपि साधयेत्
इति तन्त्रसारः ॥ * ॥
अस्य प्रकारान्तरमन्त्रध्यानपूजादिकं गरुड-
पुराणे ३९ अध्याये द्रष्टव्यम् ॥ * ॥ सूर्य्ये वर्ण-
नीयानि यथा । अरुणता १ रविमणिप्रकाशः २
चक्रवाकप्रीतिः ३ पद्मप्रकाशः ४ पश्रिकप्रौतिः ५
लोचनप्रीतिः ६ तारार्त्तिः ७ चन्द्राप्रकाशः ८
दीपाप्रकाशः ९ ओषध्यप्रकाशः १० पेच-
कार्त्तिः ११ तमोऽभावः १२ चैरार्त्तिः १३ कुमु-
दार्त्तिः १४ कुलटार्त्तिः १५ । इति कविकल्प-
लता ॥

**सूर्य्यकान्तः**, पुं, (सूर्य्यः कान्तो यस्य । सूर्य्यस्य
कान्तः प्रियो वा ।) स्फटिकः । इति हला-
युधः ॥ मणिविशेषः (यथा, रघुवंशे । ११ ।
२१ ।
“ज्योतिरिन्धननिपाति भास्करात्
सूर्य्यकान्त इव ताडकान्तकः ॥”)
तत्पर्य्यायः । सूर्य्यमणिः २ सूर्य्याश्मा ३ दहनो-
पमः ४ । इति हेमचन्द्रः ॥ तपनमणिः ५ तापनः ६
रविकान्तः ७ दीप्तोपलः ८ अग्निगर्भः ९ ज्वल-
नाश्मा १० अर्कोपलः ११ । अस्य गुणाः ।
हीनः स्त्रीपुत्त्रैः सूर्य्यजे दीनचेष्टः ॥”
यमः । मनुः । रेवन्तः । कर्णश्च ॥)

**सूर्य्यजा**, स्त्री, (सूर्य्यात् जायते इति । जन + डः ।
टाप् ।) यमुना नदी । इति हेमचन्द्रः ॥

**सूर्य्यतनयः**, पुं, (सूर्य्यस्य तनयः ।) शनैश्चरग्रहः ।
यमः । (सावर्णिमनुः । रेवन्तः ।) यथा, --
“तस्य पत्नीत्रयन्तद्वत् संज्ञा राज्ञी प्रभा तथा ।
रेवतस्य सुता राज्ञी रेवन्तं सुषुवे सुतम् । २ ।
प्रभा प्रभातं सुषुवे त्वाष्ट्री संज्ञा तथा मनुम् ।
यमश्च यमुना चैव यमलौ तु बभूवतुः ॥ ३ ॥
जनयामास तस्यान्तु पुत्त्रञ्च मनुरूपिणम् ।
सवर्णत्वाच्च सावर्णिर्मनोर्वैवस्वतस्य च ॥ ८ ॥
ततः शनिञ्च तपतीं विष्टिञ्चैव क्रमेण तु ।
छायायां जनयामास संज्ञे यमिति भास्करः ॥” ९
इति मात्स्ये ११ अध्यायः ॥
(वानरराजः सुग्रीवः । कर्णश्च ॥)

**सूर्य्यफणिचक्रं**, क्ली, सर्व्वकार्य्यशुभाशुभज्ञापक-
चक्रविशेषः । यथा, --
“सप्तविंशतिभान्यत्र पङ्क्तियुक्त्या क्रमेण तु ।
त्र्यन्तारत्र्यन्तरे वेधः फणिचक्रं त्रिनाडिकम् ॥
यत्र ऋक्षे स्थितो भानुर्भेदादौ गणयेद्बुधः ।
नाम ऋक्षं स्थितं यत्र ज्ञेयं तत्र शुभाशुभम् ॥
कुर्य्यान्मृत्युञ्च रोगञ्च नाडीवेधगतं नृणाम् ।
वर्ज्जयेत् सर्व्वकार्य्येषु युद्धकाले विशेषतः ॥
निर्व्वेधऋक्षमध्यस्थं यस्य नाम प्रजायते ।
सिध्यन्ति सर्व्वकार्य्याणि संग्रामे च जयो भवेत् ॥”
इति स्वरोदयः ॥

**सूर्य्यभक्तः**, पुं, (सूर्य्यस्य भक्तः प्रियः ।) बन्धूक-
पुष्पवृक्षः । सूर्य्यपूजके, त्रि । इति मेदिनी ॥

**सूर्य्यभक्तकः**, पुं, (सूर्य्यभक्त एव । स्वार्थे कन् ।)
बन्धूकपुष्पवृक्षः । इति शब्दमाला ॥ सूर्य्य-
पूजके, त्रि ॥

**सूर्य्यमणिः**, पुं, (सूर्य्यप्रियो मणिः ।) सूर्य्यकान्त-
मणिः । इति हेमचन्द्रः ॥ पुष्पवृक्षविशेषः ।
यथा, शब्दचन्द्रिकायाम् ।
“सूर्य्यकान्तः सूर्य्यमणिः पुष्परक्तः पचत्पटः ॥”

**सूर्य्यमण्डलं**, क्ली, (सूर्य्यस्य मण्डलम् ।) सूर्य्य-
सन्निधिवेष्टनम् । तत्पर्य्यायः । परिवेशः २ परिधिः

| | | |
|---|---|---|
| उष्णत्वम् । निर्म्मलत्वम् । रसायनत्वम् । वात-<br>श्लेष्महरत्वम् । मेध्यत्वम् ।<br>पूजनाद्रवितुष्टिदत्वञ्च<br>इति राजनिर्घण्टः ॥ पुष्पवृक्षविशेषः । तत्-<br>पर्य्यायः । सूर्य्यमणिः २ पुष्परक्तः ३<br>पचत्पुटः ४ ।<br>इति शब्दचन्द्रिका ॥<br>**सूर्य्यकान्तिः**, स्त्री, (सूर्य्यस्येव कान्तिर्यस्याः ।)<br>युष्पविशेषः । यथा, -- | | ३ उपसूर्य्यकम् ४ मण्डलम् ५ ।<br>इत्यमरः । १ ।<br>३ । ३२ ॥ यथा, --<br>"सायाह्ने शिवरूपाञ्च वृद्धां<br>वृषभवाहिनीम् ।<br>सूर्य्यमण्डलमध्यस्थां<br>सामवेदसमायुताम् ॥"<br>इत्याह्निकतत्त्वम् ॥ |

**सूर्य्यलता**, स्त्री, (सूर्य्यप्रिया लता ।)

आदित्यभक्ता । इति राजनिर्घण्टः ॥

**सूर्य्यलोकः**, पुं, (सूर्य्यस्य लोकः ।) सौरभुवनम् ।

यथा, --
"विनौषधैर्व्विना वैद्यैर्व्विना पथ्यपरिग्रहैः ।
कालेन निधनं प्राप्य सूर्य्य लोके महीयते ॥"
इति काशीखण्डे सूर्य्यार्घ्य दानफलम् ॥
अपि च ।
"सौरं लोकमथावाप्य क्षणेन स विमानगः ।
यथा कदम्बकुसुमं किञ्जल्कैः सर्व्वतोवृतम् ॥
देदीप्यमानं हि तथा समन्ताद्भानुभानुभिः ।
दूराद्रविं स विज्ञाय धृतताम्रसद्वयम् ॥
नवभिर्य्योजनानाञ्च सहस्रैः सम्मितेन च ।
विचित्रेणैकचक्रे ण सप्तसप्तियुतेन च ॥
अनूरुणाधिष्ठितेन सर्व्वतो धृतरश्मिना ।
अप्सरोमुनिगन्धर्व्वसर्पग्रामणिनैरृतैः ॥
स्यन्दनेनातिजविना प्रणनाम कृताञ्जलिः ।
तस्य प्रणामं देवोऽपि भ्रूभङ्गेनानुमन्य च ।
अतिदूरं नभोवर्त्म प्रतिचक्राम स क्षणात् ॥
प्रक्रान्ते द्युमणौ दूरं शिवशर्म्मातिशर्म्मवान् ।
प्रोवाच भगवद्भृत्यौ कथं लभ्यं रवेः पदम् ॥"
इति स्कन्दपुराणे काशीखण्डे सूर्य्यलोकवर्णनं नाम ९ अध्यायः ॥

**सूर्य्यवंशः**, पुं, (सूर्य्यस्य वंशः ।) सूर्य्यस्य सन्तानः ।

तद्विवरणं यथा । परमेश्वरात् ब्रह्मा जातः ।
तस्य पुत्त्रो मरीचिः । तस्य कश्यपः । तस्य
सूर्य्यः । तस्य वैवस्वतो मनुः । सत्ययुगे मनु-
रेव राजासीत् । त्रेतायुगे तस्य पुत्त्रः इक्ष्वाकुः

ॐ खं खसोल्काय शान्ताय कारणत्रयहेतवे ।
निवेदयामि चात्मानं नमस्ते ज्ञानरूपिणे ॥
क्वचित् पुस्तके खखोल्कायेति च पाठः ।
नमस्ते घृणिने तुभ्यं सूर्य्याय ब्रह्मरूपिणे ।
त्वमेव ब्रह्म परममापो ज्योती रसोऽमृतम् ॥
भूर्भुवः स्वस्त्वमोङ्कारः सर्व्वे रुद्राः सनातनाः ।
पुरुषः सम्महोऽतस्त्वां प्रणमामि कपर्द्दिनम् ॥
त्वमेव विश्वं बहुधा जातं वै जायते च न ।
नमो रुद्राय सूर्य्याय त्वामहं शरणं गतः ॥
प्रचेतसे नमस्तुभ्यमुमायाः पतये नमः ।
नमो नमस्ते रुद्राय त्वामहं शरणं गतः ॥
हिरण्यबाहवे तुभ्यं हिरण्यपतये नमः ।
अम्बिकापतये तुभ्यमुमायाः पतये नमः ॥
नमस्ते नीलकण्ठाय नमस्तुभ्यं पिनाकिने ।
विलोहिताय भर्गाय सहस्राक्षाय ते नमः ॥
नमो हंसाय ते नित्यं आदित्याय नमोऽस्तु ते ।
प्रपद्ये त्वां विरूपाक्ष महतं परमेश्वरम् ॥
हिरण्मये गृहे गुप्तमात्मानं सर्व्वदेहिनाम् ।
नमस्यामि परं ज्योतिर्ब्रह्माणं त्वां परामृतम् ॥
विश्वं पशुपतिं भीमं नरनारीशरीरिणम् ।
नमः सूर्य्याय रुद्राय भास्वते परमेष्ठिने ॥
उग्राय सर्व्वभक्षाय त्वां प्रपद्ये सदैव हि ॥
एतद्वै सूर्य्यहृदयं जप्त्वा स्तवमनुत्तमम् ।
प्रातःकालेऽथ मध्याह्ने नमस्कुर्य्याद्दिवाकरम् ॥
इदं पुत्त्राय शिष्याय धार्म्मिकाय द्विजातये ।
प्रदेयं सूर्य्य हृदयं ब्रह्मणा तु प्रदर्शितम् ॥
सर्व्वपापप्रशमनं वेदसारं समुद्धृतम् ।
ब्राह्मणानां हितं पुण्यं ऋषिसङ्घैर्निषेवितम् ॥
यस्तु नित्यं पठेद्धीमान् प्रेक्षन्नादित्यमण्डलम् ।
महापातकयुक्तोऽपि पूयते नात्र संशयः ॥
क्षयापस्मारकुष्ठाद्यै र्व्याधिभिः पीडितोऽपि सन्

"नमः सवित्रे जगदेकचक्षुषे
जगत्प्रसूतिस्थितिनाशहेतवे ।
त्रयीमयाय त्रिगुणात्मधारिणे
विरिञ्चिनारायणशङ्करात्मने॥
नमोऽस्तु सूर्य्याय सहस्ररश्मये
सहस्रशाखान्वितसम्भवात्मने।
सहस्रयोगोद्भवभावभागिने
सहस्रसङ्ख्यायुगधारिणे नमः ॥
आदित्यस्य नमस्कारं ये कुर्व्वन्ति दिने दिने ।
जन्मान्तरसहस्रेषु दारिद्र्यं नोपजायते ॥
इति नमस्काराः ॥
शतानिक उवाच ।
"कथमादित्यमुद्यन्तमुपतिष्ठेद्द्विजोत्तमः ।
एतन्मे ब्रूहि विप्रे न्द्र प्रपद्ये शरणं तव ॥
सुमन्तुरुवाच ।
इदमेव पुरा पृष्टः शंखचक्रगदाधरः ।
प्रणम्य शिरसा देवमर्ज्जुनेन महात्मना ॥
कुरुक्षेत्रे महाराज निवृत्ते भारते रणे ।
कृष्णनाथं समासाद्य प्रार्थयित्वाब्रवीदिदम् ॥
अर्ज्जुन उवाच ।
ज्ञानञ्च धर्म्मशास्त्राणां गुह्याद्गुह्यतरं तथा ।
मया कृष्ण परिज्ञातं वाङ्मयं सचरावरम् ॥
सूर्य्यस्तुतिमयं न्यासं वक्तुमर्हसि माधव ।
भक्त्या पृच्छामि देवेश कथयस्व प्रसादतः ॥
सूर्य्यभक्तिं करिष्यामि कथं सूर्य्यं प्रपूजयेत् ॥
तदहं श्रोतुमिच्छामि त्वत्प्रसादेन यादव ॥
श्रीभगवानुवाच ।
रुद्रादिदैवतैः सर्वैः पृष्टेन कथितं मया ।
वक्ष्येऽहं सूर्य्यविन्यासं शृणु पाण्डव यत्नतः ॥
अस्माकं यत्त्वया पृष्टमेकचित्तो भवार्ज्जुन ।

अयोध्यायां राजासीत् । अस्मिन् युगे अति-
दीर्घायुषो राजानो बहुकालं राज्यं कृतवन्तः ।
त्रेताद्वापरयोः सन्धौ श्रीरामचन्द्रो दशरथसुत-
रूपेण अवतीर्णः । द्वापरयुगस्य प्रथमे तस्य
पुत्त्रः कुशो जातः । तद्वंशः सुमित्रान्तः कलेः
सहस्रवर्षपर्य्यन्तं राज्यं कृतवन्तः एतत्पर्य्यन्तं
सूर्य्यवंशविश्रान्तिः । पुनः सत्ययुगे मरुः नष्टं
सूर्य्यवशं भावयिष्यति । यः योगसिद्धः सन्
कलापग्रामे आस्ते । इति श्रीभागवतमतम् ॥
वंशवर्णनविस्तारस्तु मत्स्यपुराणे ११ अध्या-
यादौ गरुडपुराणे १४३ अध्याये च द्रष्टव्यः ॥

**सूर्य्यवल्ली**, स्त्री, (सूर्य्यप्रिया वल्ली ।) अर्कपुष्पि-
कावृक्षः । इति रत्नमाला ॥

**सूर्य्यसंज्ञं**, क्ली, (सूर्य्यस्य संज्ञा संज्ञा यस्य ।)
कुङ्कुमम् । इति त्रिकाण्डशेषः ॥ (पुं, अर्कवृक्षः ।
इत्यमरे अर्काह्व इति दर्शनात् । २ । ४ । ८० ।)

**सूर्य्यसारथिः**, पुं, (सूर्य्यस्य सारथिः ।) अरुणः । इति
शब्दरत्नावली ॥ (यदुक्तं महाभारते । १ । १६ । २३ ।
“अरुणो दृश्यते ब्रह्मन् प्रभातसमये सदा ।
आदित्यरथमध्यास्ते सारथ्यं समकल्पयत् ॥”)

**सूर्य्यहृदयं**, क्ली, (सूर्य्यस्य हृदयमिव ।) सूर्य्यस्य
स्तवविशेषः । यथा, --
“अथोपतिष्ठे दादित्यमुदयन्तं समाहितः ।
जप्त्वा शतगुणं स्तोत्रं स श्लाघ्यो भवति द्रुतम् ॥
भूतग्रहपिशाचातिबीजव्यसनकर्षिभिः ।
स्तुवन् ध्यात्वा हरिं विप्रो मुच्यते महतो भयात् ॥
इति कूर्म्मपुराणे उपविभागे १७ अध्यायः ॥
गारुडे ५० अध्याये चैतद्द्रष्टव्यम् ॥ (भविष्यो-
त्तरोक्तसूर्य्यहृदयन्तु बहुभिः समाद्रियते पठ्यते
च अतस्तत् सप्रक्रियमुच्यते । अथ आदित्यहृदय-
प्रारम्भः । आचम्य देशकालौ संकीर्त्य ममा-
रोग्यावाप्तये श्रीसवितासूर्य्यनारायणप्रीत्यर्थं
द्वादशनमस्काराख्यं कर्म्म करिष्ये । अथ ध्यानम्
“ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृ तशङ्खचक्रः ॥
एकचक्रो रथो यस्य दिव्यः कनकभूषितः ।
स मे भवतु सुप्रीतः पद्महस्तो दिवाकरः ॥”
मित्राय नमः । रवये नमः । सूर्याय नमः ।
भानवे नमः । खगाय नमः । पूष्णे नमः ।
हिरण्यगर्भाय नमः । मरीचये नमः आदि-
त्याय नमः । सवित्रे नमः । अर्काय नमः ।
भास्कराय नमः ।
तदहं सम्प्रवक्ष्यामि आदिमध्यावसानकम् ॥
अर्ज्जुन उवाच ।
नारायण सुरश्रेष्ठ पृच्छामि त्वां महायशाः ।
कथमादित्यमुद्यन्तमुपतिष्ठेत्सनातनम् ॥
श्रीभगवानुवाच ।
साधु पार्थ महाबाहो बुद्धिमानसि पाण्डव ।
यन्मां पृच्छस्युपस्थानं तत् पवित्रं विभावसोः ॥
सर्व्वमङ्गलमाङ्गल्यं सर्व्वपापप्रणाशनम् ।
सर्व्वरोगप्रशमनमायुर्व्वर्द्धनमुत्तमम् ॥
अमित्रदमनं पार्थ संग्रामे जयवर्द्धनम् ।
वर्द्धनं धनपुत्त्राणामादित्यहृदयं शृणु ॥
यच्छ्रुत्वा सर्व्वपापेभ्यो मुच्यते नात्र संशयः ।
त्रिषु लोकेषु विख्यातं निःश्रेयसकरं परम् ॥
देवदेवं नमस्कृत्य प्रातरुत्थाय चार्ज्जुन ।
विघ्नान्यनेकरूपाणि नश्यन्ति स्मरणादपि ॥
तस्मात् सर्व्वप्रयत्ने न सूर्य्य मावाहयेत् सदा ।
आदित्यहृदयं नित्यं जाप्यं तच्छृणु पाण्डव ॥
यज्जपान्मुच्यते जन्तुर्दारिद्र्यादाशु दुस्तरात् ।
लभते च महासिद्धिं कुष्ठव्याधिविनाशिनीम् ॥
अस्मिन् मन्त्रे ऋषिच्छन्दोद्वेताशक्तिरेव च ।
सर्व्वमेव महावाहो कथयामि तवाग्रतः ॥
मया ते गोपितं न्यासं सर्व्वशास्त्रप्रबोधितम् ।

| | | |
|---|---|---|
| मन्त्रैस्तु विविधैः सौरैरृग्यजुःसामसम्भवैः ॥<br>उपस्थाय महायोगं देवदेवं दिवाकरम् ।<br>कुर्व्वीत प्रणति भूमौ मूर्ध्ना नित्यञ्च मन्त्रतः ॥ | | |

अथ ते कथयिष्यामि उत्तमं मन्त्रमेव च ॥"
ॐअस्य आदित्यहृदयस्तोत्रमन्त्रस्य।
श्रीकृष्ण
ऋषिः श्रीसूर्य्यात्मा त्रिभुवनेश्वरो देवता ।
अनुष्टुप् छन्दः । हरितहयरथं दिवाकरं
घृणिरिति बीजम् । ॐ नमो भगवते जित-
वैश्वानरजातवेदसे इति शक्तिः । ॐ नमो
भगवते आदित्याय नम इति कीलकम् ॥
ॐ अग्निगर्भदेवता इति मन्त्रः ॥ ॐ नमो
भगवते तुभ्यमादित्याय नमो नमः । श्रीसूर्य्य-
नारायणप्रीत्यर्थं जपे विनियोगः । अथ
न्यासः ।
ॐ ह्रां अङ्गुष्ठाभ्यां नमः । ॐ ह्रीं तर्ज्जनीभ्यां
नमः । ॐ ह्रूं मध्यमाभ्यां नमः । ॐ ह्रैंअना-
मिकाभ्यां नमः । ॐ ह्रौं कनिष्ठिकाभ्यां नमः
।
ॐ ह्रः करतलकरपृष्ठाभ्यांनमः । ॐ ह्रां
हृदयाय नमः । ॐ ह्रीं शिरसे स्वाहा । ॐह्रूं
शिखायै वषट् । ॐ ह्रैं कवचाय हुम् । ॐह्रौं
नेत्रत्रयाय वौषट् । ॐ ह्रः अस्त्राय फट् ।
ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः । इति दिग्बन्धः ॥
अथ ध्यानम् ।
"भास्वद्रत्नाढ्यमौलिं स्फुरदधररुचा रञ्जितं
चारुकेशं
भास्वन्तं दिव्यतेजः करकमलयुतं स्वर्णवर्ण-
प्रभाभिः ।
विश्वाकाशावकाशग्रहपतिशिखरेभाति
यश्चोदयाद्रौ
सर्व्वानन्दप्रदाता हरिहरनमितः पातु मां
विश्वचक्षुः ॥
पूर्व्वमष्टदलं पद्मं प्रणवादिप्रतिष्ठितम्।
मायाबीजं दलाष्टाग्रे यन्त्रमुद्धारयेदिति ॥
आदित्यं भास्करं भानुं रविं सूर्य्यं दिवाकरम्
।
मार्त्तण्डं तपनं चेति दलेष्वष्टसु योजयेत् ॥
दीप्ता सूक्ष्मा जया भद्रा विभूतिर्व्विमला तथा
।
अमोघा विद्युता चेति मध्ये श्रीः
सर्व्वतोमुस्ती ॥

जान्वोस्तु गोपतिं न्यस्य सवितारन्तु
जङ्घयोः ।
पादयोश्च विवस्वन्तं गुल्फयोश्च
दिवाकरम् ॥
बाह्यतस्तु तमोध्वंसं भगमभ्यन्तरे न्यसेत्
।
सर्व्वाङ्गेषु सहस्रांशु दिग्विदिक्षु भगं न्यसेत्
॥"
इति दिग्बन्धः ॥
"एष आदित्यविन्यासो देवानामपि दुर्लभः
।
इमं भक्त्या न्यसेत् पार्थ स याति परमां
गतिम्
कामक्रोधकृतात् पापात् मुच्यते नात्र
संशयः ।
सर्पादपि भयं नैव संग्रामेषु पथिष्वपि ॥
रिपुसंघट्टकालेषु तथा चोरसमागमे ।
त्रिसन्ध्यं जपतो न्यासं महापातकनाशनम्
॥
विस्फोटकसमुत्पन्नं तीव्रज्वरसमुद्भवम्।
शिरोरोगं नेत्ररोगं सर्व्वव्याधिविनाशनम् ॥
कुष्ठव्याधिस्तथा दद्रुरोगाश्च विविधाश्च ये
।
जपमानस्य नश्यन्ति शृणु भक्त्या तदर्जुन
॥
आदित्यो गन्त्रसंयुक्त आदित्यो भुवनेश्वरः
॥
आदित्यान्नापरो देवो ह्यादित्यः परमेश्वरः
॥
आदित्यमर्च्चयेद् ब्रह्मा शिव
आदित्यमर्च्चयेत् ।
यदादित्यमयं तेजो मम तेजस्तदर्जुन ॥
आदित्यं मन्त्रसंयुक्तमादित्यं भुवनेश्वरम् ।
आदित्यं ये प्रपश्यन्ति मां पश्यन्ति न
संशयः ॥
त्रिसन्ध्यमर्च्चयेत् सूर्य्यं स्मरेद्भक्त्या तु यो
नरः
न स पश्यति दारिद्र्यं जन्मजन्मनि चार्जुन
॥

भानुमान् भानुरूपस्त्वं
स्वर्भानुर्भानुदीप्तिमान् ॥
धूमकेतुर्म्महाकेतुः सर्व्वकेतुरनुत्तमः ।
तिमिरावरणः शम्भुः स्रष्टा मार्त्तण्ड एव
त ॥
नमः पूर्व्वाय गिरये पश्चिमाय नमो नमः
।
नमोत्तराय गिरये दक्षिणाय नमो नमः ॥
नमो नमः सहस्रांशो ह्यादित्याय नमो
नमः ।
नमः पद्मप्रबोधाय नमस्ते द्वादशात्मने ॥
नमो विश्वप्रबोधाय नमो
भ्राजिष्णुजिष्णवे ।
ज्योतिषे च नमस्तुभ्यं ज्ञानार्काय नमो
नमः ॥
प्रदीप्ताय प्रगल्भाय युगान्ताय नमो नमः
।
नमस्ते होतृपतये पृथिवीपतये नमः ॥
नमोङ्कार वषट्कार सर्व्वयज्ञ नमोऽस्तु
ते ।
ऋगवेदादि यजुर्वेद सामवेद नमोऽस्तु ते
॥
नमो हाटकवर्णाय भास्कराय नमो नमः
।
जयाय जयभद्राय हरिदश्वाय ते नमः ॥
दिव्याय दिव्यरूपाय ग्रहाणां पतये नमः
।
नमस्ते शुचये नित्यं नमः कुरु
कुलात्मने ॥
नमस्त्रैलोक्यनाथाय भूतानां पतये नमः
।
नमः कैवल्यनाथाय नमस्ते दिव्यचक्षुषे
॥
त्वं ज्योतिस्त्वं द्युतिर्ब्रह्मा त्वंविष्णुस्त्व
प्रजापतिः
त्वमेव रुद्रो रुद्रात्मा वायुरग्निस्त्वमेव च
॥
योजनानां सहस्रे द्वे द्वे शते द्वे च योजने
।

सर्व्वज्ञः सर्व्वगश्चैव सर्व्वकारणदेवता ।
सर्व्वेशं सर्व्वहृदयं नमामि सर्व्वसाक्षिणम् ॥
सर्व्वात्मा सर्व्वकर्त्ता च सृष्टिजीवनपालकः ।
हितः स्वर्गापवर्गश्च भास्करेश नमोऽस्तु ते ॥"
इति प्रार्थना ॥
"नमो नमस्तेऽस्तु सदा विभावसो
सर्व्वात्मने सप्तहयाय भानवे ।
अनन्तशक्तिर्मणिभूषणेन
ददस्व भुक्तिं मम मुक्तिमव्ययाम् ॥
अर्कन्तु मूर्ध्नि विन्यस्य ललाटे तु रविं न्यसेत् ।
विन्यसेन्नेत्रयोः सूर्य्यं कर्णयोश्च दिवाकरम् ॥
नासिकायां न्यसेद्भानुं मुखे वै भास्करं न्यसेत् ।
पर्ज्जन्यमोष्ठयोश्चैव तीक्ष्णं जिह्वान्तरं न्यसेत् ॥
सुवर्णरेतसं कण्ठे स्कन्धयोस्तिग्मतेजसम् ।
बाह्वोस्तु पूषणश्चै व मित्रं वै पृष्ठतो न्यसेत् ॥
वरुणं दक्षिणे हस्ते त्वष्टारं वामतः करे ।
हस्तावुष्णकरः पातु हृदयं पातु भानुमान् ॥
उदरे तु यमं विन्द्यादादित्यं नाभिमण्डले ।
कठ्यां तु विन्यसेद्ध्वंसं रुद्रमूर्व्वोस्तु विन्यसेत् ॥

एतत्ते कथितं पार्थ आदित्यहृदयं मया ॥
शृण्वन्मुक्त्वा च पापेभ्यः सूर्य्यलोके महीयते ।
ॐनमो भगवते तुभ्यमादित्याय नमो नमः ।
आदित्यः सविता सूर्य्यः खगः पुषा गभस्तिमान्
सुवर्णः स्फटिको भानुः स्फुरितो विश्वतापनः ।
रविर्व्विश्वो महातेजाः सुवर्णः सुप्रबोधकः ॥
हिरण्यगर्भस्त्रिशिरास्तपनो भास्करो रविः ।
मार्त्त ण्डो गोपतिः श्रीमान् कृतज्ञश्च प्रतापवान्
तमिस्रहा भगो हंसो नासत्यश्च तमोनुदः ।
शुद्धो विरोचनः केशो सहस्रांशुर्महाप्रभुः ॥
विवस्वान् पूषणो मृत्युर्मिहिरो जामदग्न्यजित्
धर्म्मरश्मिः पतङ्गश्च शरण्योऽमित्रहा तपः ॥
दुर्व्विज्ञेयगतिः शूरस्तेजो राशिर्म्महायशाः ।
शम्भुश्चित्राङ्गदः सौम्यो हव्यकव्यप्रदायकः ॥
अंशुमानुत्तमो देव ऋग्यजुः साम एव च ।
हरिदश्वस्तमोदारः सप्तसप्तिर्मरीचिमान् ॥
अग्निगर्भोऽदितेः पुत्रः शम्भुस्तिमिरनाशनः ।
पूषा विश्वम्भरो मित्रः सुवर्णः सुप्रतापवान् ॥
आतपी मण्डली भास्वान् तपनः सर्व्वतापनः ।
कृतविश्वो महातेजाः सर्व्वरत्नमयोद्भवः ॥
अक्षरश्च क्षरश्चैव प्रभाकरविभाकरौ ।
चन्द्रश्चन्द्राङ्गदः सौम्यो हव्यकव्य प्रदायकः ॥
अङ्गारकोऽङ्गदोऽगस्तोरक्ताङ्गश्चाङ्गवर्द्धनः ।
बुद्धो बुद्धासनो बुद्धिर्बुद्धात्मा बुद्धिवर्द्धनः ॥
बृहद्भानुर्बृहद्भासो बृहद्धामा बृहस्पतिः ।

एकेन निमिषार्द्धेन क्रममाण नमोऽस्तु ते ॥
नवयोजनलक्षाणि सहस्रद्विशतानि च ।
यावद्घटौप्रमाणेन क्रममाण नमोऽस्तु ते ॥
अग्रतश्च नमस्तुभ्यं पृष्ठतश्च सदा नमः ।
पार्श्वतश्च नमस्तुभ्यं नमस्ते चास्तु सर्व्वदा ॥
नमः सुरारिहन्त्रे च सोमसूर्य्याग्निचक्षुषे ।
नमो दिव्याय व्योमाय सर्व्वतन्त्रमयाय च ॥
नमो वेदान्तवेद्याय सर्व्वकर्म्मादिसाक्षिणे ।
नमो हरितवर्णाय सुवर्णाय नमो नमः ॥
अरुणो माघमासे तु सूर्य्यो वै फाल्गुने तथा ।
चैत्रमासे तु वेदाङ्गो भानुर्वैशाखतापनः ॥
ज्यैष्ठमासे तपेदिन्द्र आषाढे तपते रविः ॥
गभस्तिः श्रावणे मासि यमो भाद्रपदे तथा ॥
इषे सुवर्णरेताश्च कार्त्तिके च दिवाकरः ॥
मार्गशीर्षे तपेन्मित्रः पौषे विष्णुः सनातनः ॥
पुरुषस्त्वधिके मासे मासाधिक्ये तु कल्पयेत् ।
इत्येते द्वादशादित्याः काश्यपेयाः प्रकीर्त्तिताः ॥
उग्ररूपा महात्मानस्तपन्ते विष्णुरूपिणः ।
धर्म्मार्थकाममोक्षाणां प्रस्फुटा हेतवो नृप ॥
सर्व्वपापहरश्चैवमादित्यं संप्रपूजयेत् ।
रुकधा दशधा चैव शतधा च सहस्रधा ॥
तपन्ते विश्वरूपेण सृजन्ति संहरन्ति च ।
एष विष्णुः शिवश्चैव ब्रह्मा चैव प्रजापतिः ॥

|  |  |  |
| --- | --- | --- |
|  | शुक्लस्त्वं शुक्लरेतास्त्वं शुक्लाङ्गः शुक्लभूषणः ॥<br>शनिमान् शनिरूपस्त्वं शनैर्गच्छसि सर्व्वदा ।<br>अनादिरादिरादित्यस्तेजोराशिर्म्महातपाः ॥<br>अनादिरादिरूपस्त्वमादित्यो दिक्पतिर्य्यमः । | महेन्द्रश्चैव कालश्च यमो वरुण एव च ।<br>नक्षत्रग्रहताराणामधिपो विश्वतापनः ॥<br>वायुरग्निर्धनाध्यक्षो भूतकर्त्ता स्वयं प्रभुः ।<br>एष देवो हि देवानां सर्व्वमाप्यायते जगत् ॥<br>एष कर्त्ता हि भूतानां संहर्त्ता रक्षकस्तथा ।<br>एष लोकानुलोकश्च सप्तद्वीपाश्च सागराः ॥<br>एष पातालम्नप्तस्थो दैत्यदानवराक्षसाः । |

एष धाता विधाता च बीजं क्षेवं प्रजापतिः ॥
एष एव प्रजा नित्यं संवर्द्धयति रश्मिभिः ।
एष यज्ञः स्वधा स्वाहा ह्रीः श्रीश्च पुरुषोत्तमः
एष भूतात्मको देवः सूक्ष्मो व्यक्तः सनातनः ।
ईश्वरः सर्व्वभूतानां परमेष्ठी प्रजापतिः ॥
कालात्मा सर्व्वभूतात्मा वेदात्मा विश्वतोमुखः
जन्ममृत्युजराव्याधिसंसारभयनाशनः ॥
दारिद्र्यव्यसनध्वंसी श्रीमान् देवो दिवाकरः ।
विकर्त्तनो विवस्वांश्च मार्त्तण्डो भास्करो रविः
लोकप्रकाशकः श्रीमाँल्लोकचक्षुर्ग्रहेश्वरः ।
लोकसाक्षी त्रिलोकेशः कर्त्ता हर्त्ता तमिस्रहा ॥
तपनस्तापनश्चैव शुचिः सप्ताश्ववाहनः ।
गभस्तिहस्तो ब्रह्मण्यः सर्व्वदेवनमस्कृतः ॥
आयुरारोग्यमैश्वर्यं नरा नार्य्यश्च मन्दिरे ।
यस्य प्रसादात् सन्तुष्टिरादित्यहृदयं जपेत् ॥
इत्येतैर्नामभिः पार्थ आदित्यं स्तौति नित्यशः
।
प्रातरुत्थाय कौन्तेय तस्य रोगभयं न हि ॥
पातकान्मुच्यते पार्थ व्याधिभ्यश्च न संशयः ।
एकसन्ध्यं द्विसन्ध्यं वा सर्व्वपापैः प्रमुच्यते ॥
त्रिसन्ध्यं जपमानस्तु पश्येच्च परमं पदम् ॥
यदहः कुरुते पापं तदहः प्रतिमुच्यते ॥
यद्रात्र्याः कुरुते पापं तद्रात्र्याः प्रतिमुच्यते ।
दद्रुस्फोटककुष्ठानि मण्डलानि विषूचिका ॥
सर्व्वव्याधिमहारोगभूतवाधास्तथैव च ॥
डाकिनी शाकिनी चैव महारोगभयं कुतः ॥
ये चान्ये दुष्टरोगाश्च ज्वरातीसारकादयः ।
जपमानस्य नश्यन्ति जीवेच्च शरदां शतम् ॥
संवत्सरेण मरणं यदा तस्य ध्रुवं भवेत् ।
आशीर्षां पश्यति छायामहोरात्रं धनञ्जय ॥
यस्त्विदं पठते भक्त्या भानुवारे महात्मनः ।
प्रातःस्नाने कृते पार्थ एकाग्रकृतमानसः ॥
सुवर्णचक्षुर्भवति न चान्धस्तु प्रजायते ।
पुत्रवान् धनसम्पन्नो जायते चारुजः सुखी ॥
सर्व्वसिद्धिमवाप्नोति सर्व्वत्र विजयी भवेत् ।
आदित्यहृदयं पुण्यं सूर्य्यनामविभूषितम् ॥
श्रुत्वा च निखिलं पार्थ सर्व्वपापैः प्रमुच्यते ।
अतःपरतरं नास्ति सिद्धिकामस्य पाण्डव ॥
एतज्जपस्व कौन्तेय येन श्रेयो ह्यवाप्स्यसि ।

आक्रम्य वामपादेन आदित्यहृदयं जपेत्
॥
एतन्मन्त्रं समाहूय सर्व्वसिद्धिकरं परम्
॥”
ॐ ह्रों हिमालीढं स्वाहा । ॐ ह्रों
निलीढं
स्वाहा । ॐ ह्रीं मालीढं स्वाहा । इति
मन्त्रः ।
“त्रिभिश्च रोगी भवति ज्वरी भवति
पञ्चभिः ।
जपैस्तु सप्तभिः पार्थ राक्षसीं
तनुमाविशेत् ॥
राक्षसेनाभिभूतस्य विकारान् शृणु
पाण्डव ।
गीयते नृत्यते नग्न आस्फोटयति धावति
॥
शिवारुतञ्च कुरुते हसते क्रन्दते पुनः ।
एवं संपीड्यते पार्थ यद्यपि
स्यान्महेश्वरः ॥
किं पुनर्मानुषः
कश्चिच्छौचाचारविवर्जितः ।
पीडितस्य न संदेहो ज्वरो भवति
दारुणः ॥
यदा चानुग्रहं तस्य
कर्त्तुमिच्छेच्छुभङ्करम् ।
तदा सलिलमादाय जपेन्मन्त्रमिमम्बु धः
॥
नमो भगवते तुभ्यमादित्याय नमो नमः
।
जयाय जयभद्राय हरिदश्वाय ते नमः ॥
स्नापयेत्तेन मन्त्रेण शुभं भवति नान्यथा
॥
अन्यथा च भवेद्दोषो नश्यते नात्र संशयः
॥
अतस्ते निखिलः प्रोक्तः पूजाञ्चैव
निबोध मे ।
उपलिप्ते शुचौ देशे नियता वाग्यतः
शुचिः ॥

नमो भगवते तुभ्यं नमस्ते जातवेदसे ॥
ममेदमर्घ्यं गृह्ण त्वं देवदेव नमोऽस्तु ते ॥
सर्व्वदेवाय देवाय आधिव्याधिविनाशिने
।
इदं गृहाण मे देव सर्व्वव्याधिर्विनश्यतु ॥
नमः सूर्य्याय शान्ताय सर्व्वरोगविनाशिने
।
ममेप्सितं फलं दत्त्वा प्रसीद परमेश्वर ॥”
ॐ नमो भगवते सूर्य्याय स्वाहा । ॐ
शिवाय
स्वाहा । ॐ सर्व्वात्मने सूर्य्याय नमः
खाहा ।
ॐ अक्षय्यतेजसे नमः स्वाहा ।
“सर्व्वसंकष्टदारिद्रं शत्रुं नाशय नाशय ।
सर्व्वलोकेषु विश्वात्मा सर्व्वात्मा
सर्व्वदर्शकः ॥
नमो भगवते सूर्य्य कुष्ठरोगान् विखण्डय
।
आयुरारोग्यमैश्वर्य्यं देहि देव नमोऽस्तु ते
॥
नमो भगवते तुभ्यमादित्याय नमो नमः
॥”
ॐ अक्षय्यतेजसे नमः । ॐ सूर्य्याय
नमः ।
ॐ विश्वमूर्त्तये नमः ।
“आदित्यञ्च शिवं
विन्द्याच्छिवमादित्यरूपिणम्
उभयोरन्तरं नास्ति आदित्यस्य शिवस्य
च ॥
एतदिच्छाम्यहं श्रोतुं पुरुषो वै दिवाकरः ।
उदये ब्रह्मणो रूपं मध्याह्ने तु महेश्वरः ॥
अस्तमाने स्वयं विष्णुस्त्रिमूर्त्तिश्च
दिवाकरः ।
नमो भगवते तुभ्यं विष्णवे प्रभविष्णवे ॥
ममेदमर्घ्यं प्रतिगृह्ण देव
देवाधिदेवाय नमो नमस्ते ॥”
श्रीसूर्य्याय साङ्गाय मपरिवाराय
श्रीसूर्य्य-
नारायणायेदमर्घ्यम् ।

आदित्यहृदयं नित्यं यः पठेत् सुसमाहितः ॥
भ्रूणहा मुच्यते पापात् कृतघ्नं ब्रह्मघातकः ।
गाघ्नः सुरापो दुर्भोगी दुष्प्रतिग्रहकारकः ॥
पातकानि च सर्व्वाणि दहत्यव न संशयः ।
य इदं शृणुयान्नित्यं जपेद्वापि समाहितः ॥
सर्व्वपापविशुद्धात्मा सूर्य्यलोके महीयते ।
अपुत्रा लभते पुत्रान् निर्धनो धनमाप्नुयात् ॥
कुरोगी मुच्यते रोगाद्भक्त्या यः पठते सदा ।
यस्त्वादित्यदिने पार्थ नाभिमात्रजले स्थितः ॥
उदयाचलमारूढं भाम्करं प्रणतः स्थितः ।
जपते मानवा भक्त्या शृणुयाद्वापि भक्तितः ॥
स याति परमं स्थानं यत्र देवो दिवाकरः ।
अमित्रदमनं पार्थं यदा कर्त्तुं समारभेत् ॥
तदा प्रतिकृतिं कृत्वा शत्रोश्च रणपांशुभिः ।

वृत्तं वा चतुरस्रं वा लिप्तभूमौ
लिखेच्छुचिः ।
त्रिधा तत्र लिखेत् पद्ममष्टपत्रं
सकर्णिक्रम् ॥
अष्टपत्रं लिखेत् पद्मं लिप्तगोमयमण्डले ।
पूर्व्वपत्रे लिखेत् सूर्य्यमाग्नेय्यान्तु रविं
न्यसेत्
याम्यायाञ्च विवस्वन्तं नैरृ त्यान्तु भगं
न्यसेत् ।
प्रतीच्यां वरुणं विन्द्याद्वायव्यां मित्रमेव
च ॥
आदित्यमुत्तरे पत्रे ईशान्यां विष्णुमेव च
।
मध्ये तु भास्करं विन्द्यात् क्रमेणैव
समर्च्चयेत् ॥
अतः परतरं नास्ति सिद्धिकामस्य
पाण्डव ।
महातेजःसमुद्यन्तं प्रणमेत् सकृताञ्जलिः
॥
सकेसराणि पद्मानि करवीराणि चार्ज्जुन
।
तिलतण्डुलसंयुक्तं कुशगन्धोदकेन च ॥
रक्तचन्दनमिश्राणि कृत्वा वै ताम्रभाजने
।
धृत्वा शिरसि तत्पात्रं जानुभ्यां धरणीं
स्पृशेत् ॥
मन्त्रपूतं गुडाकेशं चार्घ्यं दद्याद्गभस्तये
।
सायुधं सरथञ्चव सूर्य्यमावाहयाम्यहम्
॥”
स्वागतो भव । सुप्रतिष्ठो भव । सन्निधो
भव ।
सन्निहितो भव । सम्मुखो भव । इति
पञ्चमुद्राः
स्फुटयित्वाह्वयेत् सूर्य्यं भुक्तिं मुक्तिं
लभेन्नरः ॥
ॐ श्रीं विद्यां किलिकिलि
कटकेष्टसर्व्वार्थसा-
धनाय स्वाहा । ॐ श्रीं ह्रां ह्रीं हः हंसः
सूर्य्याय
नमः स्वाहा । ॐ श्रीं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं हः

“हिमघ्नाय तमोघ्नाय रक्षोघ्नाय च ते
नमः ।
कृतघ्नघ्नाय सत्याय तस्मै सत्यात्मने
नमः ॥
जयो जयश्च विजयो जितप्राणो
जितश्रमः ।
मनोजवो जितक्रोधो वाजिनः सप्त
कीर्त्तिताः ॥
हरितहयरथं दिवाकरं
कनकमयाम्बुजरेणुपिञ्जरम् ।
प्रतिदिनमुदयं नवं नवं
शरणमुपेमि हिरण्यरेतसम् ॥
न तं व्यालाः प्रवाधन्ते न व्याधिभ्यो भयं
भवेत्
न नागेभ्यो भयञ्चैव न च भूतभयं क्वचित्
॥
अग्निशत्रुभयं नास्ति पार्थिवेभ्यस्तथैव च
।
दुर्गतिं तरते घोरां प्रजाञ्च लभते पशून् ॥
सिद्धिकामो लभेत् सिद्धिं कन्याकामस्तु
कन्यकाम् ।
एतत्पठेत्स कौन्तेय भक्तियुक्तेन चेतसा
॥
अश्वमेधसहस्रस्य वाजपेयशतस्य च ।
कन्याकोटिसहस्रस्य दत्तस्य
फलमाप्नुयात् ॥
इदमादित्यहृदयं योऽधीते सततं नरः ।
सर्व्वपापविशुद्धात्मा सूर्य्यलोके महीयते
॥
नास्त्यादित्यसमो देवो नास्त्यादित्यसमा
गतिः
प्रत्यक्षो भगवान् विष्णुर्येन विश्वं
प्रतिष्ठितम् ॥
नवतिर्योजनं लक्षं सहस्राणि शतानि च ।
यावद्धटीप्रमाणेन तावच्चरति भास्करः ॥
गवां शतसहस्रस्य सम्यग् दत्तस्य यत्
फलम् ।
तत् फलं लभते विद्वान् शान्तात्मा
स्तौति यो
रविम् ॥

|  |  |  |
| --- | --- | --- |
|  | सूर्य्यमूर्त्तये स्वाहा । ॐ श्रीं ह्रीं खं खः लोकाय<br>सर्व्वमूत्तये स्वाहा । ॐ हूं मार्त्तण्डाय स्वाहा ।<br>"नमोऽस्तु सूर्य्याय सहस्रभानवे<br>नमोऽस्तु वैश्वानर जातवेदसे ।<br>त्वमव चाघ्यं प्रतिगृह्ण देव<br>देवाधिदेवाय नमो नमस्ते ॥<br>नमो भगंवते तुभ्यं नमस्त जातवेदसे ।<br>दत्तमर्ध्यं मया भानो त्वं गृहाण नमोऽस्तु ते<br>एहि सूर्य्य सहस्रांशो तेजोराशे जगत्पते ।<br>अनकम्पय मां देव गृहाणार्ध्यं नमोऽस्तु ते ॥ |  |

योऽधीते सूर्य्यहृदयं सकलं सफलं भवेत् ।
अष्टानां ब्राह्मणानाञ्च लेखयित्वा समर्पयेत्
॥
ब्रह्मलोकऋषीणाञ्च जायते मानुषोऽपि वा ।
जातिस्मरत्वमाप्नोति शुद्धात्मा नात्र
संशयः ॥
अजाय लोकत्रयपावनाय
भूतात्मने गोपतये वृषाय ।
सूर्य्याय सर्व्वप्रलयान्तकाय
नमो महाकारुणिकोत्तमाय ॥
विवस्वते ज्ञानभृतान्तरात्मने
जगत्प्रदीपाय जगद्धितैषिणे ।
स्वयम्भुवे दीप्तसहस्रचक्षुषे
सुरोत्तमायामिततेजसे नमः ॥
सुरैरनेकैः परिसेविताय
हिरण्यगर्भाय हिरण्मयाय ।
महात्मने मोक्षपदाय नित्यं
नमोऽस्तु ते वासरकारणाय ॥
आदित्यश्चार्च्चितो देव आदित्यः परमं
पदम् ।
आदित्यो मातृको भूत्वा आदित्यो वाङ्मयं
जगत्
आदित्यं पश्यते भक्त्या मां पश्यति ध्रुवं
नरः ।
नादित्यं पश्यते भक्त्या न स पश्यति मां
नरः ॥
त्रिगुणञ्च त्रितत्त्वञ्च त्रयो वेदास्त्रयोऽग्नयः ।
त्रयाणाञ्च त्रिमूर्त्तिस्त्वं तुरीयस्त्वं नमोऽस्तु
ते ॥
नमः सवित्रे जगदेकचक्षुषे
जगत्प्रसूतिस्थितिनाशहेतवे ।
त्रयीमयाय त्रिगुणात्मधारिणे
विरिञ्चिनारायणशङ्करात्मने ॥
यस्योदये नेह जगत्प्रबुद्ध्यते
प्रवर्त्तते चाखिलकर्म्मसिद्धये ।
ब्रह्मेन्द्रनारायणरुद्रवन्दितः
स नः सदा यच्छतु मङ्गलं रविः ॥
नमोऽस्तु सूर्य्याय सहस्ररश्मये
सहस्रशाखान्वितसम्भवात्मने ।

प्रकाशितं येन च भूर्भुवः स्वः
पुनातु मां तत्सवितुर्वरेण्यम् ॥
यन्मण्डलं वेदविदो वदन्ति
गायन्ति यच्चारणसिद्धसङ्घाः ।
यद्योगिनो योगजुषाञ्च सङ्घाः
पुनातु मां तत्सवितुर्वरेण्यम् ॥
यन्मण्डलं सर्व्वजनेषु पूजितं
ज्योतिश्च कुर्य्यादिह मर्त्यलोके ।
यत्कालकालादिमनादिरूपं
पुनातु मां तत्सवितुर्वरेण्यम् ॥
यन्मण्डलं विष्णुचतुर्मुखाख्यं
यदक्षरं पापहरं जनानाम् ।
यत्कालकल्पक्षयकारणञ्च
पुनातु मां तत्सवितुर्वरेण्यम् ॥
यन्मण्डलं विश्वसृजं प्रसिद्ध-
मुत्पत्तिरक्षाप्रलयप्रगल्भम् ।
यस्मिन् जगत् संहरतेऽखिलञ्च
पुनातु मां तत्सवितुर्वरेण्यम् ॥
यन्मण्डलं सर्व्वगतस्य विष्णो-
रात्मा परं धाम विशुद्धतत्त्वम् ।
सूक्ष्मान्तरैर्योगपथानुगम्यं
पुनातु मां तत्सवितुर्वरेण्यम् ॥
यन्मण्डलं ब्रह्मविदो वदन्ति
गायन्ति यच्चारणसिद्धसङ्घाः ।
यन्मण्डलं वेदविदः स्मरन्ति
पुनातु मां तत्सवितुर्वरेण्यम् ॥
यन्मण्डलं वेदविदोपगीतं
यद्योगिनां योगपथानुगम्यम् ।
तत् सर्व्ववेदं प्रणमामि सूर्य्यं
पुनातु मां तत्सवितुर्वरेण्यम् ॥
मङ्गलाष्टमिदं पुण्यं यः पठेत् सततं नरः ।
सर्व्वपापविशुद्धात्मा सूर्य्यलोके महीयते ॥
ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरिटी
हारी हिरण्मयवपुर्धृ तशङ्खचक्रः ॥
सशङ्खचक्रं रविमण्डले स्थितं
कुशेशयाक्रान्तमनन्तमच्युतम् ॥
भजामि बुद्ध्या तपनीयमूर्त्तिं

द्वादशादित्यनामानि प्रातःकाले पठेन्नरः ।
दुःस्वप्ननाशनञ्चैव सर्व्वदुःखञ्च नश्यति ॥
दद्रुकुष्ठहरञ्चैव दारिद्र्यं हरते ध्रुवम् ।
सर्व्वतीर्थप्रदञ्चैव सर्व्वकामप्रवर्द्धनम् ॥
यः पठेत् प्रातरुत्थाय भक्त्या नित्यमिदं
नरः ।
सौख्यमायुस्तथारोग्यं लभते मोक्षमेव च ॥
अग्निमीले नमस्तुभ्यमिषेत्वोर्जेस्वरूपिणे ।
अग्न आयाहि वीतस्त्वं नमस्ते ज्योतिषां
पते ।
शन्नोदेवी नमस्तुभ्यं जगच्चक्षुर्नमोऽस्तु ते ।
पञ्चमायोपवेदाय नमस्तुभ्यं नमो नमः ॥
पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः ।
सप्ताश्वरथसंयुक्तो द्विभुजः स्यात् सदा
रविः ॥
आदित्यस्य नमस्कारं ये कुर्व्वन्ति दिने
दिने ।
जन्मान्तरसहस्रेषु दारिद्र्यं नोपजायते ॥
उदयगिरिमुपेतं भास्करं पद्महस्तं
निखिलभुवननेत्रं भक्तरत्नोपमेयम् ।
तिमिरकरिमृगेन्द्रं बोधकं पद्मिनीनां
सुरवरमभिवन्दे सुन्दरं विश्ववन्द्यम् ॥”
इति श्रीभविष्योत्तरपुराणे
श्रीकृष्णार्ज्जुनसंवादे
आदित्यहृदयस्तोत्रं संपूर्णम् ॥ * ॥)

**सूर्य्या**, स्त्री, (सूर्य्यस्य भार्य्या । टाप् ।) सूर्य्यभार्य्या
संज्ञा । इति शब्दरत्नावली ॥ इन्द्रवारुणी
।
इति राजनिर्घण्टः । नवोढा । इति
शब्दरत्ना-
वली ॥ यथा, श्रीभागवते । १० । १ । २९
।
“तस्यां हि कर्हिचिच्छौरिर्व्वसुदेवः
कृतोद्वहः ।
देवक्या सूर्य्यया सार्द्धं प्रयाणे रथमारुहत्
॥”
(वाक् । इति निघण्टुः । १ । ११ । “सर्त्ते-
र्गत्यर्थात् सुवतेर्व्वा प्रेरणार्थात् राजसूय-
सूर्य्येत्यादिना निपातनात् क्यपि सर्त्तेरुत्वं

सहस्रयोगोद्भवभावभागिने
सहस्रसंख्यायुगधारिणे नमः ॥
यन्मण्डलं दीप्तिकरं विशालं
रत्नप्रभं तीव्रमनादिरूपम्।
दारिद्र्यदुःखक्षयकारणञ्च
पुनातु मां तत्सवितुर्व्वरेण्यम् ॥
यन्मण्डलं देवगणैः सुपूजितं
विप्रैः स्तुतं भावनमुक्तिकोविदम्।
तं देवदेवं प्रणमामि सूर्य्यं
पुनातु मां तत्सवितुर्व्वरेण्यम् ॥
यन्मण्डलं ज्ञानघनं त्वगम्यं
त्रै लोक्यपूज्यं त्रिगुणात्सरूपम्।
समस्ततेजोमयदिव्यरूपं
पुनातु मां तत्सवितुर्व्वरेण्यम् ॥
यन्मण्डलं गूढमतिप्रबोधं
धर्म्मस्य वृद्धिं कुरुते जनानाम्।
तत् सर्व्वपापक्षयकारणञ्च
पुनातु मां तत्सवितुर्व्वरेण्यम् ॥
यन्मण्डलं व्याधिविनाशदक्षं
ऋग्यजुःसामसु सम्प्रगीतम्।

सुरोत्तमं चित्रविभूषणोज्ज्वलम्॥
एवं ब्रह्मादयो देवा ऋषयश्च तपोधनाः।
कीर्त्तयन्ति सुरश्रेष्ठं देवं नारायणं विभुम्।
वेदवेदाङ्गशारीरं दिव्यदीप्तिकरं परम्।
रक्षोघ्नं रक्तवर्णञ्च सृष्टिसंहारकारकम्॥
एकचक्रो रथो यस्य दिव्यः कनकभूषितः।
स मे भवतु सुप्रीतः पद्महस्तो दिवाकरः ॥
आदित्यः प्रथमं नाम द्वितीयन्तु दिवाकरः
।
तृतीयं भास्करः प्रोक्तं चतुर्थन्तु प्रभाकरः
॥
पञ्चमन्तु सहस्रांशुः षष्ठञ्चैव त्रिलोचनः।
सप्तमं हरिदश्वश्च अष्टमञ्च विभावसुः ॥
नवमं दिनकृत् प्रोक्तं दशमं द्वादशात्मकः।
एकादशं त्रयीमूर्त्ति र्द्वादशं सूर्य्य एव च ॥

सुवतेर्व्वा रुडागमः। सरति गच्छति
स्तोतॄन्
प्रति, कर्णशष्कुलिं वा सुवति प्रे रयति
चोदना-
रूपा पुरुषादीनिदं कुर्व्विति। यद्वा,
सुपूर्व्वा-
दीरतेः कृत्यल्युटो बहुलम्। इति कर्म्मणि
क्यपि
निपातनाद्रूपसिद्धिः। सुष्ठु ईर्य्यते
उच्चार्य्यते इति
सूर्य्या। यद्वा, षु प्रेरणेसुसूधीगृधिभ्यः
क्रनिति
क्रन्-प्रत्ययः। प्रेर्य्यते उच्चारणकाले
प्राणेन सूरा
छन्दसि स्वाथ इति यत्प्रत्ययः सूर्य्या।
यद्वा,
सूरयो मेधाविनः तानर्हति छन्दसि च, इति
यत्
प्रत्ययः। यद्वा, सूरिषु साधुः। तत्र साधुः
इति
यत्।" इति तट्टीकायां देवराजयज्वा ॥)

**सूर्य्यार्घ्यं**, क्ली, (सूर्य्याय देयमर्घ्यम्।) सूर्य्यसम्प्र-
दानकार्घ्यम्। शक्तिपूजायां
अच्छिद्रावधार-
णार्थं सूर्य्यार्घ्यदानम्। यथा, --
"ततो भास्करबीजेन सहितेनामुना पुनः।
मन्त्रेण भास्करायार्घ्यमच्छिद्रार्थं निवेदयेत्
॥
नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे
।
जगत्सवित्रे शुचये सवित्रे कर्म्मदायिने ॥
ततः कृताञ्जलिर्भूत्वा पठित्वा मन्त्रमीरितम्
।
एकाग्रमनसा वाग्भिरच्छिद्रमवधारयेत् ॥
यज्ञाच्छिद्रं तपश्छिद्रं यच्छिद्रं पूजने मम।
सर्व्वं तदच्छिद्रमस्तु भास्करस्य प्रसादतः
॥"
इति कालिकापुराणे ५६ अध्यायः ॥ * ॥

रोगादिशान्त्यर्थं सूर्य्य स्य
हंसादिसप्ततिनामभिः
सप्ततिधार्घ्यप्रदानप्रमाणं यथा, --
"हंसो भानुः सहस्रांशुस्तपनस्तापनोरविः
।
विकर्त्तनो विवस्वांश्च विश्वकर्म्मा
विभावसुः ॥
विश्वरूपो विश्वकर्त्ता मार्त्त ण्डो
मिहिरोऽंशु-
मान् ।
आदित्यश्चोष्णगुः सूर्य्योऽर्य्यमा व्रध्नो
दिवा-
करः ॥
द्वादशात्मा सप्तहयो भास्करोऽहस्करः
खगः ।
सूरः प्रभाकरः श्रीमान् लोकचक्षुर्ग्रहेश्वरः
॥
त्रिलोकेशो लोकसाक्षी तमोऽरिः शाश्वतः
शुचिः ।
गभस्तिहस्तस्तीव्रांशुस्तरणिःसुमहोरणिः
॥
द्युमणिर्हरिदश्वोऽर्को भानुमान् भयनाशनः
।
छन्दोऽश्वो वेदवेद्यश्च भास्वान् पूषा
वृषाकपिः ॥
एकच रिथो मित्रो मन्देहारिस्तमिस्रहा ।
दैत्यह पापहर्त्ता च धर्म्माधर्म्मप्रकाशकः ॥
हेलिकश्चित्रभानुश्च
कलिघ्नस्तार्क्ष्यवाहनः ।
दिक्पतिः पद्मिनीनाथः कुशेशयकरो हरिः
॥
धर्म्मरश्मिर्दु र्निरीक्षश्चण्डांशुः
कश्यपात्मजः ।
एभिः सप्ततिसंख्याकैः पुण्यैः सूर्य्यस्य
नामभिः ॥
प्रणवादिचतुर्थ्यन्तैर्न्न मस्कारसमन्वितैः ।
प्रत्येकमुच्चरन्नाम दृष्ट्वा दृष्ट्वा दिवाकरम् ॥
विगृह्य पाणियुग्मेन ताम्रपात्रं सुनिर्म्मलम् ।
जानुभ्यामवनीं गत्वा परिपूर्य्य जलेन च ॥

**सूर्य्याश्मा**, [न्] पुं, (सूर्य्यप्रियोऽश्मा प्रस्तरः ।)

सूर्य्यकान्तमणिः । इति हेमचन्द्रः ॥

**सूर्य्याश्वः**, पुं, (सूर्य्यस्य अश्वः ।) सूर्य्यघोटकः ।

तत्पर्य्यायः । वाताटः २ हरितः ३ । इति त्रिकाण्डशेषः ॥

**सूर्य्यास्तं**, क्ली, (सूर्य्यस्य अस्तम् ।) सूर्य्यस्यास्ता-

चलगमनम् । यथा, --
"निशीथादध इत्यनेन
अर्द्धरात्रपूर्व्वकालत्वेन
सूर्य्यास्तमयकालस्यापिलाभात् ॥" इति
तिथ्यादितत्त्वम् ॥

**सूर्य्याह्वं**, क्ली, (सूर्य्यस्य आह्वा आह्वा यस्य ।)

ताम्रम् । इति त्रिकाण्डशेषः ॥ सूर्य्य
नामके,
त्रि ॥

**सूर्य्याह्वः**, पुं, (सूर्य्यस्य आह्वा आह्वा यस्य ।)

अर्कवृक्षः । इति राजनिर्घण्टः ॥

**सूर्य्येन्दुसङ्गमः**, पुं, (सूर्य्येण सह इन्दोः सङ्गम

एकराश्यवस्थानरूपमेलनं यत्र ।)
अमावास्या ।
इत्यमरः । १ । ४ । ८ ॥
सूर्य्यचन्द्रमेलनञ्च ॥

**सूर्य्योढः**, पुं, (सूर्य्य ऊढोऽस्तगतो यत्र ।) सूर्य्या-

स्तकालप्राप्तोऽतिथिः । यथा, --
"सूर्य्योढस्तु स सम्प्राप्तो यः सूर्य्येऽस्तं
गते-
ऽतिथिः ॥"
इति हेमचन्द्रः ॥
यथा, विष्णुपुराणम् ।
"दिवातिथौ तु विमुखे गते यत् पातकं
भवेत्
तदेवाष्टगुणं विद्यात् सूर्य्योढे विमुखे गते ॥"
इत्याह्निकाचारतत्त्वम् ॥

**सूर्य्योदयः**, पुं, (सूर्य्यस्य उदयः ।) सूर्य्यस्य प्रकाशः
।

**सृ**, र लि गतौ । इति कविकल्पद्रुमः ॥ (ह्वा०-

पर०-सक०-अनिट् ।) र, वैदिकः । लि,
ससर्त्ति । इति दुर्गादासः ॥

**सृक्**, [ज्] पुं, (सृजतीति । सृज् + क्विप् ।)

सृष्टिकर्त्ता । तस्य रूपान्तराणि । सृग् ।
सृट् ।
सृड् । इति सिद्धान्तकौमुदी ॥

**सृकः**, पुं, (सरतीति । सृ गतौ + "सृवृभूशुषि-

मुषिभ्यः कक् ।" उणा० ३ । ४१ । इति
कक् ।
कैरवः । बाणः । इत्युनादिकोषः ॥ पद्मम् ।
वायुः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः
॥
(वज्रः । इति निघण्टुः । २ । २० ॥
सरणशीले,
त्रि । यथा, ऋग्वेदे । १० । १८० । २ ।
"सृकं संशाय पविमिन्द्रतिग्मम् ॥"
"सृकं सरणशीलम् ।" इति तद्भाष्यम् ॥)

**सृकण्डुः**, स्त्री, कण्डूरोगः । इति शब्दरत्नावली ॥

**सृकालः**, पुं, सृगालः । इति शब्दचन्द्रिका ॥

**सृक्क**, [न्] क्ली, (सृजति लालादीनिति । सृज् +

बाहुलकात् कनिन् ।) सृक्कणी । इति
सुभूतिः ॥
इत्यमरटीकायां भरतः ॥ (यथा,
महाभारते ।
३ । १२५ । २ ।
"भयात्संस्तम्भितभुजः सृक्वणी
लेलिहन्मुहुः ॥")

**सृक्कं**, क्ली, सृक्वणी । इत्यमरटीकायां भरतः ॥

(यथा, सुश्रुते । २ । १६ ।
"जन्तवश्चात्र मूर्च्छन्ति
सृक्कस्योभयतोमुखात् ॥")

**सृक्कणी**, स्त्री, ओष्ठयोः प्रान्तभावः । इति

पाणिनिः । इत्यमरटीकायां भरतः ॥
(यथा,

करवीरादिकुसुमै रक्तचन्द्रनमिश्रितैः ।
दूर्व्वाङ्कुरैरक्षतैश्च निःक्षिप्तैः पात्रमध्यतः ॥
दद्यादर्घ्यमनर्घ्याय सवित्रे ध्यानपूर्व्वकम् ।
उपमौलिसमानीय तत्पात्रं नान्यदृङ्नाः ॥
प्रतिमन्त्रं नमस्कुर्य्यादुदयास्तमये रविम् ।
अनया नाम सप्तत्या महामन्त्ररहस्यया ॥
॥
एवं कुर्व्वन्नरो जातु न दरिद्रो न दुःखभाक्
।
व्याधिभिर्म्मुच्यते धोरैरपि
जन्मान्तरार्ज्जितैः ॥
विनौषधैर्व्विना वैद्यैर्व्विना पथ्यपरिग्रहैः ।
कालेन निधनं प्राप्य सूर्य्य लोके महीयते
॥”
इति स्कन्दपुराणै काशीखण्डे ९ अध्यायः
॥

**सूर्य्यालोकः**, पुं, (सूर्य्यस्य आलोकः ।) आतपः ।

इति राजनिर्घण्टः ॥

**सूर्य्यावर्त्तः**, पुं, (सूर्य्य इव आवर्त्तते इति । आ +

वृत् + अच् ।) क्षुपविशेषः । हुडहुडिया
इति
भाषा । अस्य गुणः । सूर्य्यावर्त्तो
विबन्धघ्नः ।
इति राजवल्लभः ॥ शाकविशेषः ।
सुलचिया
इति भाषा । तत्पर्य्यायः ।
“पार्व्वतेयश्च करभो वशिरः कपिपिप्पली
।
जामातासौ क्वचित् प्रोक्तः सूर्य्यावर्त्तः
सितो-
ऽपरः ॥”
इति रत्नमाला ॥
“वराहकाली कथितः सूर्य्यावर्त्तस्तु
शाब्दिकैः ॥”
इति हारावली ॥

**सूर्य्यावर्त्ता**, स्त्री, (सूर्य्य इव आवर्त्तते या । आ +

वृत् + अच् । टाप् ।) आदित्यभक्ता । इति
राजनिर्घण्टः ॥

यथा, विष्णुधर्म्मोत्तरे ।
“सावने च तथा मासि त्रिंशत्सूर्य्योदयाः
स्मृताः
आदित्यराशिभोगेन सौरो मासः
प्रकीर्त्तितः ॥”
इति मलमासतत्त्वम् ॥
तत्र शयननिषेधो यथा, --
“सूर्य्योदये चास्तमिते च शायिनं
विमुञ्चति श्रीरपि चक्रपाणिनम् ॥”
इति लक्ष्मीचरितम् ॥ * ॥
तत्काले स्नानादेः कत्त व्यता यथा, --
“सूर्य्योदयं विना नैव स्नानदानादिकाः
क्रियाः
इति प्रायश्चित्ततत्त्वम् ॥

**सूष**, प्रसवे । इति कविकल्पद्रुमः ॥ (भ्वा० पर०-

सक०-सेट् ।) षष्ठस्वरी । सूषति । इति
दुर्गा-
दासः ॥

**सृ**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर-

सक०-अनिट् ।) सरति । नालानं करिणा
सस्रे इति रघौ कर्म्मकर्त्तृत्वादिति
रमानाथः ।
तच्चिन्त्यं कर्त्तृस्थभावधातूनां तन्निषेधात्
।
वस्तुतस्तु गणकृतानित्यत्वादात्मनेपदम् ।
ना-
लानैरिति वा पाठ्यं तंत्र कर्म्माविक्षायां
भावे
प्रत्ययः । इति दुर्गादासः ॥

**सृ**, क गतौ । स्तृतौ । इति कविकल्पद्रुमः ॥

(चुरा०-पर०-सक०-सेट् ।) क, सारयति
।
इति दुर्गादासः ॥

सुश्रुते । ६ । ६० ।
“भूमौ यः प्रसरति सर्पवत् कदाचित्
सृक्कण्यौ विलिहति जिह्वया प्रसक्तम् ॥”)

**सृक्कि**, क्ली, सृक्कणी । इत्यरुणः ।
इत्यमरटीकायां

भरतः ॥

**सृक्व**, [न्] क्ली, (सृजति लालादीनिति । सृज +

वनिप् ।) ओष्ठप्रान्तभागः । यथा, --
“ -- प्रान्तावोष्ठस्य सृक्वणी ।”
इत्यमरः ॥
“ओष्ठयोर्व्वामदक्षिणौ प्रान्तौ सृक्वणी
उच्येते
ओष्ठस्येति जातावेकत्वम् । सृजतो
लालादि
सृक्वणी त्रासुसिति क्वनिप् निपातनात्
कङ् ।
सृक्वणा कणेतिप्रयोगात् वसंयोगः ।
अन्यथा
टायां सदानोऽल्लोप इत्यल्लोपः स्यात् ।
‘महासृक्काय शोभितो नृसिंहनखराग्रवत्
।’
इति श्लेषात् ककारद्वयसंयोगोऽपि । सृक्व
नान्तं
क्लीवं सृक्वणी क्लीवे इति सुभूतिः ।
प्रान्तावोष्ठस्य
सृक्वणी क्लीवकाण्डे ऽमरदत्तश्च ।
ईबन्तापि
सृक्वणी । सृक्वण्यौ विलिहति जिह्वया
तथैवेति
रुग्विनिश्चयः ।
‘स सृक्वणीप्रान्तमसृक्प्रदिग्धं
प्रलेलिहानो हरिणा विरुच्चैः ।”
इति पाणिनिः ॥
सृक्वि क्लीवमिदन्तञ्च सक्थ्यस्थिनी
दधि ससृक्विं
तथा वारिः स्यादित्यरुणः । सृक्वं
क्लीवमदन्तञ्च
‘सृक्वे द्वे चैव विज्ञेये चत्वारिंशच्च
वक्त्रजाः ।”

इत्युक्तेः । वामं लिहन्
सृक्वमरण्यघूर्ण इति
वसन्तराजप्रयोगाच्च ।” इति भरतः
॥

**सृक्वं**, क्ली, ओष्ठप्रान्तभागः । इति वसन्तराज-
प्रयोगः । इत्यमरटीकायां भरतः ॥

**सृक्वणी**, स्त्री, ओष्ठप्रान्तभागः । कस इति भासा ।
इति पाणिनिः । इत्यमरटीकायां
भरतः । २ ।
६ । ९१ ॥

**सृक्वि**, क्ली, ओष्ठयोः प्रान्तभागः । इत्यरुणः ।
इत्यमरटीकायां भरतः । २ । ६ ।
९१ ॥

**सृक्विणी**, स्त्री, ओष्ठयोरन्तरम् । इति राज-
निर्घण्टः ॥

**सृगः**, पुं, (सरतीति । सृ + बाहुलकात् गक् ।)
भिन्दिपालः । इत्यमरः । २ । ८ ।
९१ ॥

**सृगालः**, पुं, (सृजति मायामिति । सृज् + बाहु-
लकात् कालन् । न्यङ्क्वादित्वात्
कुत्वम् ।) जम्बुकः ।
इति शब्दरत्नावली ॥ दैत्यविशेषः ।
इति केचित् ॥

**सृङ्का**, स्त्री, शब्दवती रत्नमयी माला । यथा, --
“तमब्रवीत् प्रीयमाणो महात्मा
वरं तवेहाद्य ददामि भूयः ।
तवैव नाम्ना भवितायमग्निः
सृङ्कां चेमामनेकरूपां गृहाण ॥”
इति कठोपनिषदि प्रथमा वल्ली ॥
“सृङ्कां शब्दवतीं रत्नमयीं मालां
इमामनेक-
रूपां विचित्रां गृहाण स्वीकुरु । सृङ्कां
वाकुत्-

**सृणीका**, स्त्री, लाला । इत्यमरटीकायां रामा-
श्रमः । २ । ६ । ६७ ॥

**सृतः**, त्रि, (सृ + क्तः ।) गतः । (यथा, महा-
भारते । ९ । २३ । २९ ।
“गान्धारराजस्तु पुनर्वाक्यमाह तता
बली ।
निवर्त्तध्वमधर्म्मज्ञा युध्यध्वं किं
सृतेन वः ॥”)

**सृतिः**, स्त्री, (सृ + क्तिन् ।) गमनम् । मार्गः ।
इति मेदिनी ॥ (यथा, गीतायाम् । ८
। २७ ।
“नैते सृती पार्थ जानन् योगी मुह्यति
कश्चन ।
तस्मात् सर्व्वेषु कालेषु योगयुक्तो
भवार्ज्जुन ॥” *
जन्म । इति स्वामी ॥ यथा, भागवते
। १० ।
६० । ४३ ।
“स्यान्मे तवाङ्घ्रिवरणं
सृतिभिर्भ्रमन्त्या
यो वै भजन्तमुपयात्यनृतापवर्गः ॥”
निर्म्माणम् । यथा, भागवते । ३ । २
। १३ ।
“कात्स्न्र्येन चाद्येह गतं विधातु-
रर्व्वाक्सृतौ कौशलमित्यमन्यत ॥”
“अर्व्वाक्सृतौ
अर्व्वाचीनसंसारनिर्म्माणे मनुष्य-
निर्म्माणे वा ।” इति तट्टीका ॥)

**सृत्वरः**, त्रि, (सरति तच्छीलः । सृ गतौ + “इन्-
नश्जिसर्त्तिभ्यः करप् ।” ३ । २ ।
१६३ । इति
क्वरप् ।) गमनकर्त्ता । सृधातोः
क्ष्वरप्प्रत्यये
तनागमेन निष्पन्नः । इति
मुग्धबोधव्याकरणम् ॥

**सृत्वरी**, स्त्री, (सृ + क्वरप् । सृ + क्वनिप् । ङीप् ।)

**सृप्रः**, पुं, (सृप गतौ + “स्फायितञ्चिवञ्चीति ।”
उणा ० २ । १३ । इति रक् ।) चन्द्रः । इत्य-
णादिकोषः ॥

**सृफ**, उ हिंसे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर-
सक०-सेट् । क्वावेट् ।) सप्तमस्वरी । उ,
सर्भित्वा सृब्ध्वा । इति दुर्गादासः ॥

**सृमरः**, पुं, (सरति तच्छीलः । सृ गतौ + “सृच-
स्यदः क्मरच् ।” ३ । २ । १६० । इति क्मरच् ।)
पशुविशेषः । इत्यमरः । २ । ५ । ११ ॥ बाल-
मृगः । इति केचित् ॥ (यथा, रामायणे । ३ ।
१०३ । ४२ ।
“वराहमृगसिंहाश्च महिषाः सृमरास्तथा ।
व्याघ्रगोकर्णगवया वित्रेसुः पृषतैः सह ॥”

**सृष्टं**, त्रि, (सृज् + क्तः ।) निर्म्मितम् । युक्तम् ।
निश्चितम् । बहुलम् । इति मेदिनी ॥ भूषितम् ।
इत्यजयः ॥ त्यक्तम् । (यथा, रामायणे । २ ।
३५ । १५ ।
“महाब्रह्मर्षिसृष्टा वा ज्वलन्तो भीमदर्शनाः ।
धिक्वाग्दण्डा न हिंसन्ति रामप्रव्राजने
स्थिताम् ॥”)

**सृष्टिः** स्त्री, (सृज् + क्तिन् ।) निर्म्मितिः । स्वभावः ।
इति मेदिनी ॥ निर्गुणः इति शब्दरत्रावली ॥ *
ब्रह्माण्डसृष्टिर्यथा । सृष्टेः पूर्व्वं मनश्चक्षुराद्य-
गोचरो भगवान् एक एवासीत् । यदा स
स्वेच्छया द्रष्टा सन् दृश्यं नापश्यत् तदा
त्रिगुणमयीं मायां प्रकाशयामास । ततो भग-
वान् स्वांशेन पुरुषरूपं कृत्वा तस्यां मायायां
स्ववीर्य्यं चैतन्यं आधत्त । सा समष्टिजीवरूपं
महत्तत्त्वं जनयमास । तस्यात् त्रिविधोऽह-
ङ्कारो जातः तत्र सात्त्विकाहङ्कारात् मनैन्द्रि-
याधिष्ठातृद्देवताश्च जाताः । राजसाहङ्कारात्
दशेन्द्रियाणि जातानि । तामसाहङ्कारात् पञ्च
महाभूतानि तेषां पञ्च गुणाश्च जाताः । एवं
प्रकृत्यादिभिस्तैश्चतुर्विंशतितत्त्वैर्ब्रह्माण्डंनिर्म्माय
भगवान् तस्मिन्नेकेनांशेन प्रविश्य गर्भोदकसंज्ञकं
जलं ससर्ज । तज्जलमध्ये योगनिद्रया सहस्र-

सितां गतिं कर्म्ममयीं गृहाण ।
अन्यदपि
कर्म्मविज्ञानमनेकहेतुत्वात्
स्वीकुर्व्वित्यर्थः ।”
इत्यादिशाङ्करभाष्यम् ॥

**सृज**, औ श विसर्गे । इति कविकल्पद्रुमः ॥ (तुद०
पर०-सक०-अनिट् ।) औ,
अस्राक्षीत् । श,
सृजति । इति दुर्गादासः ॥

**सृज**, य ङ औ विसर्गे । इति कविकल्पद्रुमः ॥
(दिवा०-आत्म०-सक०-अनिट् ।) य
ङ, सृज्यते ।
औ, स्रष्टा । सरीसृज्यते ।
विसर्गस्त्यागः ।
त्यागो व्युद्भ्यां पर एव अन्यत्र
करोतीत्यर्थः ।
यथा । उपासनामेत्य पितुः स्म
सृज्यते इति
नैषधम् ॥ संपूर्व्वोऽयमकर्म्मकः ।
यथा । संसृ-
ज्यते सरसिजैररुणांशुभिन्नैः
निशापरिणाम-
वायुरिति रघुः । इति दुर्गादासः ॥

**सृजकाक्षारः**, पुं, सर्ज्जिकाक्षारः । इत्यमर-
टीकायां रमानाथः ॥

**सृणिः**, पुं, (सरतीति । सृ + “सृविषिभ्यां कित् ।”
उणा ० ४ । ४९ । इति निः । सच
कित् ।
णत्वञ्च ।) शत्रुः । इति शब्दमाला ॥

**सृणिः**, स्त्री, (सृ + निः । णत्वञ्च ।) अङ्कुशः ।
इत्यमरः । २ । ८ । ४१ ॥
(सृणिद्वयोरित्यणादि-
वृत्तौ उज्ज्वलदत्तः ॥ तथा च
शिशुपालवधे ।
५ । ५ ।
“आरक्षमग्नमवमत्य सृणिं सिताग्र-
माता । इति संक्षिप्तसारोणादिवृत्तिः
॥ गमन-
कर्त्त्री । इति मुग्धबोधव्याकरणम् ॥

**सृत्वा**, [न्] पुं, (सृ गतौ + “शीङ्क्रुशीरुहीति ।”
उणा० ४ । ११३ । इति क्वनिप् ।)
विसर्पः ।
वृद्धिः । प्रजापतिः । इति
संक्षिप्तसारोणादि-
वृत्तिः ॥

**सृदरः**, पुं, (दॄ विदारणे + “कृदरादयश्च ।”
उणा० ५ । ४१ । इति अच्प्रत्ययेन
निपा-
तनात् साधुः ।) सर्पः । इति
सिद्धास्तकौमुद्या-
मुणादिवृत्तिः ॥

**सृदाकुः**, पुं, (सरतीति । सृ + “सर्त्तेर्दुक् च ।”
उणा० ३ । ७८ । इति
काकुर्दुगागमश्च ।)
वायुः । वज्रम् । अग्निः । प्रतिसूर्य्यकः
। इति
मेदिनी ॥ मृगः । इति
संक्षिप्तसारोणादिवृत्तिः ॥

**सृदाकुः**, स्त्री, (सरतीति । सृ गतौ + काकुर्दुगा-
गमश्च ।) नदी । इत्युणादिकोषः ॥

**सृप**, सृ औ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-अनिट् ।) ऌ, असृपत् ।
अस्य ऌ-
दित्वेऽपि कृषमृशस्पृश इति
विशेषविधानात्
पक्षे ट्यां सिः तेन असार्प्सीत्
अस्राप्सीत्
इत्यपि । औ, सर्प्ता । इति दुर्गादासः
॥

**सृपाटः**, पुं, सृपाटी । इति स्त्रीपुंलिङ्गसंग्रह-
टीकायां भरतः । ३ । ५ । ३८ ॥

युगमितं कालं स्थितवान् । तदन्ते उत्थाय स्वय-
मंशेन ब्रह्मा भूत्वा सर्व्वान् सृष्ट्वा नानावता-
रान् कृत्वा पालयति । कल्पान्ते रुद्ररूपेण
संहरति च । इति श्रीभागवतमते संक्षेप-
सृष्टिः ॥ * ॥ अपि च ।
“स्थावरान्ताः सुराद्यास्तु प्रजा ब्रह्मंश्चतु-
र्व्विधाः ।
ब्रह्मणः कुर्व्वतः सृष्टिं जज्ञिरे मानसीस्तु ताः ॥
ततो देवासुरपितॄऋन् मनुष्यांश्च चतुष्टयम् ।
सिसृक्षुरम्भांस्येतानि स्वमात्मानमयूयुजत् ॥
युक्तात्मनस्तमोमात्रा उद्रिक्ताभूत् प्रजापतेः ।
सिसृक्षोर्जवनात् पूर्व्वममुरा जज्ञिरे ततः ॥
उत्मसर्ज ततस्तान्तु तमोमात्रात्मिकां तनुम् ।
सा तु त्यक्ता तनुस्तेन मैत्रे याभूद्विभावरी ॥
सिसृक्षुरन्यदेहस्थः प्रीतिमाप ततः सुराः ।
सत्त्वोद्रिक्ताः समुद्भूता मुखतो प्रह्मणो द्विज ॥

मेकः पलायत जवेन कृतार्त्तनादः

॥”)

**सृणिका**, स्त्री, लाला । इत्यमरः । २ । ६ । ६७ ॥

**सृणी**, स्त्री, (सृणि + कृदिकारादिति ङीष् ।)

अङ्कुशः । इत्यमरः । २ । ८ । ४१ ॥

**सृपाटिका**, स्त्री, चञ्चुः । इति हेमचन्द्रः ॥

**सृपाटी**, स्त्री, (सृपाट + गौरादित्वात् ङीष् ।)

परिमाणभेदः । इति

स्त्रीपुंलिङ्गसंग्रहटीकायां

भरतः । ३ । ५ । ३८ ॥ रक्तधारा ।

इति तत्रैव

गोवर्द्धनः ॥

त्यक्ता सापि तनुस्तेन सत्त्वप्रायमभूद्दिनम्
।
ततो हि बलिनो रात्रावसुरा देवता दिवा
॥
मत्त्वमात्रात्मिकाम्वेव ततोऽन्यां जगृहे
तनुम् ।
पितृवन्मन्यमानस्य पितरस्तस्य जज्ञिरे
॥
उत्ससर्ज्ज ततस्तान्तु पितॄन् सृष्ट्वापि स
प्रभुः ।
सा चोत्सृष्टाभवत्
सन्ध्यादिननक्तान्तरस्थितिः॥
रजोमात्रात्मिकामन्यां जगृहे स तनुं ततः
।
रजोमात्रोत्कटा जाता मनुष्या द्विजसत्तम
॥
तामप्याशु स तत्याज तनुमाद्यः
प्रजापतिः ।
ज्योत्स्ना समभवत् सापि प्राक्सन्ध्या
याभिधी-
यते ॥
ज्योस्नोद्गमे तु बलिनो मनुष्याः
पितरस्तथा ।
मैत्रैय सन्ध्यासमये तस्मादेते भवन्ति वै
॥
ज्योत्स्ना रात्र्यहनी सन्ध्या
चत्वार्य्येतानि वै
प्रभोः ।
ब्रह्मणस्तु शरीराणि त्रिगुणोपाश्रयाणि तु
॥
रजोमात्रात्मिकाम्वेव ततोऽन्यां जगृहे
तनुम् ।
ततः क्षुद्ब्रह्मणो जाता जज्ञे कोपस्तया
ततः ॥
क्षुत्क्षामानन्धकारेऽथ
सोऽसृजद्भगवांस्ततः।
विरूपाः श्मश्रुला जातास्तेऽभ्यधावन्त तं
प्रभुम् ॥
मैवं भो रक्षतामेष यैरुक्तं राक्षसास्तु ते ।

उच्चावचानि भूतानि गात्रे भ्यस्तस्य
जज्ञिरे ।
देवासुरपितॄन् सृष्ट्वा मनुष्यांश्च प्रजापतिः
॥
ततः पुनः ससर्ज्जादौ सङ्कल्पात् स
पितामहः ।
यक्षान् पिशाचान् गन्धर्व्वान् तथैवाप्सरसां
गणान् ॥
नरकिन्नररक्षांसि वयःपशुमृगोरगान् ।
अव्ययञ्च व्ययञ्चैव यदिदं स्थाणुजङ्गमम् ।
तत् ससर्ज तदा ब्रह्मा भगवानादिकृत् प्रभुः
॥
तेषां ये यानि कर्म्माणि प्राक्सृष्ट्यां
प्रतिपेदिरे
तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनः पुनः
॥
हिंस्राहिंस्रे मृदुक्रूरे धर्म्माधर्म्मावृतानृते ।
तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते
॥
इन्द्रियार्थेषु भूतेषु शरीरेषु च स प्रभुः ।
नानात्वं विनियोगञ्च धातैव व्यसृजत्
स्वयम् ॥
नाम रूपञ्च भूतानां कृत्यानाञ्च प्रपञ्चनम् ।
वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥
ऋषीणां नामधेयानि यथा वेदश्रुतानि वै ।
तथा नियोगयोग्यानि अन्येषामपि
सोऽकरोत् ॥
यथार्त्तावृतुलिङ्गानि नानारूपाणि पर्य्यये ।
दृश्यन्ते तानि तान्ये व तथा भावा युगादिषु
॥
करोत्येवंविधां सृष्टिं कल्पादौ स पुनः पुनः
।
सिसृक्षाशक्तियुक्तोऽसौ
सृज्यशक्तिप्रचोदितः ॥”
इति विष्णुपुराणे । १ । ५ । २७ -- ६५ ॥

**सृष्टिप्रदा**, स्त्री, (सृष्टिं तद्धेतुभूतगर्भं प्रददातीति
प्र + दा + कः ।) गर्भदात्रीक्षुपः । इति
राज-
निर्घण्टः ॥

**सेक्ता**, [ऋ] पुं, (सिञ्चति रेतः । सिच् + तृच् ।)
भर्त्ता । इति हेमचन्द्रः ॥ सेचनकर्त्तरि, त्रि ॥
(यथा, ऋग्वेदे । ३ । ३२ । १५ ।
“सेक्तेव कोशं सिसिचे पिबध्यै ॥”)

**सेक्त्रं**, क्ली, (सिञ्चत्यनेनेति । सिच् + “दाम्नीशसयु
युजेति ।” ३ । २ । १८२ । इति करणे ष्ट्रन्
।)
सेकपात्रम् । इति सिद्धान्तकौमुदी ॥

**सेचकः**, पुं, (सिञ्चतीति । सिच् + ण्वुल् ।) मेघः ।
सेककर्त्तरि, त्रि । इति मेदिनी ॥

**सेचनं**, क्ली, (सिच क्षरणे + ल्युट् ।) क्षरणम् ।
सेकः । (यथा, मार्कण्डेये । ३१ । १३ ।
“भुक्त्वा चाचामतां यच्च जलं
यच्चाङ्घ्रिसेचने ।
ब्राह्मणानां तथैवान्ये तेन तृप्तिं प्रयान्ति वै
॥”)
नौकायाः सेकभाजनम् । इति मेदिनी ॥
(अभिषेकः । यथा, महानिर्व्वाणे । २ ।
११५ ।
“तद्दशांशेन हवनं तर्पणं तद्दशांशतः ।
सेचनं तद्दशांशेन तद्दशांशेन सुन्दरि ! ॥”)

**सेटुः**, पुं, फलविशेषः । तरमुज् इति भाषा । तत्-
पर्य्यायः । चेलानः २ चित्रफलम् ३
सुखाशः ४
राजतेमिषः ५ लतापनसः ६ नाटाम्रः ७ ।
इति त्रिकाण्डशेषः जटाधरश्च ॥

**सेतिका**, स्त्री, अयोध्या । इति भूतशुद्धितन्त्रम् ॥

**सेतुः**, पुं, (सिनोति बध्नाति जलमिति । सि ञ
बन्धने + “सितनिगमिमसीति ।” उणा ० १
।
७० । इति तुन् । क्षेत्रादेरालिः । इत्यमरः ।
२ । १ । १४ ॥ तत्पर्य्यायः । आली २ ।
इति
भरतः ॥ पूरणः ३ पिण्डलः ४ । इति हारा-
वली ॥ पङ्कारः ५ जङ्गालः ६ सञ्चरः ७ ।
इति

ऊचुः खादाम इत्यन्ये ये ते यक्षास्तु
यक्षणात ॥
अप्रियेणाथ तान् दृष्ट्वा केशाः शीर्य्यन्त
वेधसः ।
हीनाश्च शिरसो भूयः समारोहन्त ते
शिरः ॥
सर्पणात्त्व भवन् सर्पा हीनत्वादहयः
स्मृताः ।
ततः क्रुद्धो जगत्स्रष्टा क्रोधात्मानो
विनिर्म्ममे ॥
वर्णेन कपिशेनोग्राः भूतास्ते
पिशिताशनाः ।
धयन्तो गां समुत्पन्ना गन्धर्व्वास्तस्य
तत्क्षणात्
पिबन्तो जज्ञिरे वाचं गन्धर्व्वास्तेन ते
द्विज ।
एतानि सृष्ट्वा भगवान् ब्रह्मा
तच्छक्तिचोदितः ॥
ततः स्वच्छन्दतोऽन्यानि वयांसि
वयसोऽसृजत्
अवयो वक्षसश्चक्रे मुखतोऽजाः स
सृष्टवान् ॥
सृष्टवानुदराद्गाश्च पार्श्वाभ्याञ्च
प्रजापतिः ।
पद्भ्यां चाश्वान् समातङ्गान् रासभान्
गवयान्
मृगान् ॥
उष्ट्रानश्वतरांश्चैव न्यङ्कूनन्यांश्च जातयः
।
ओषध्यः फलमूलानि रोमभ्यस्तस्य
जज्ञिरे ॥
त्रेतायुगमुखे ब्रह्मा कल्पस्यादौ द्विजोत्तम
।
सृष्ट्या पश्वौषधीः सम्यक् युयोज स
तदाध्वरे ॥
गौरजो पौरुषो मेषो अश्वाश्वतरगर्द्दभाः ।
एतान् ग्राम्यपशूनाहुरारण्यांश्च निबोध मे
॥
श्वापदो द्विखुरो हस्ती वानरः पक्षिपञ्चमः
।

**सॄ**, गि हिंसे । इति कविकल्पद्रुमः ॥ (क्र्या०-
पर०-सक०-अनिट् ।)
दन्त्यादिर्ब्वकारोपधः
तद्रहितोऽपीति केचित् । गि, सृणाति ।
सीर्णः
सीर्णिः । इति दुर्गादासः ॥

**सेक**, ऋ ङ गत्याम् । इति कविकल्पद्रुमः ॥
(भ्वा०-आत्म०-सक०-सेट् ।) ऋ,
असिसेकत् ।
ङ, सेकते । इति दुर्गादासः ॥

**सेकः**, पुं, (सिच् + घञ् ।) सेत्तनम् । तत्-
पर्य्यायः । घारः २ । इति हेमचन्द्रः ॥
(यथा,
रघुः । १ । ५१ ।
“सेकान्ते
मुनिकन्याभिस्तत्क्षणोज्झितवृक्ष
कम् ।
विश्वासाय
विहङ्गानामालबालाम्बुपायिनाम्॥
तथास्य गुणाः ।
“सेकः श्रमघ्नोऽनिलहृद्भग्नसन्धिप्रसाधकः
।
क्षताग्निदग्धाभिहतविघृष्टानांरुजापहः ॥
जलसिक्तस्य वर्द्धन्ते यथा मूलेऽङ्कु रास्तरो
तथा धातुविवृद्धिर्हि स्नेहसिक्तस्य जायते
॥”
इति सुश्रुते चिकित्सास्थाने २४ अध्याये
॥)

**सेकपात्रं**, क्ली, (सेकाय पात्रम्) जलसेचना-
धारः । सिँउनी इति भाषा । तत्पर्य्यायः ।
सेचनम् ३ । इत्यमरः । १ । १० । १३ ॥

**सेकिमं**, क्ली, (सेकेन निर्वृत्तमिति । सेक + “भाव
प्रत्ययान्तादिमप् वक्तव्यः ।” ४ । ४ । २०
। इत्यस्य
वार्त्तिकोक्त्या इमप् ।) मूलकम् । इति
हेम-
चन्द्रः ॥ (सेकनिर्वृत्ते, त्रि ॥)

जटाधरः ॥ पिण्डिलः ८ । इति
शब्दरत्नावली ॥
धरणः ९ । इति त्रिकाण्डशेषः ॥ * ॥
तद्दानादि-
फलं यथा, --
“सेतुप्रदानादिन्द्रस्य लोकमाप्नोति मानवः
।
प्रपाप्रदानाद्वरुणलो कमाप्नोत्यसंशयम् ॥
संक्रमाणान्तु यः कर्त्ता स स्वर्गं तरते नरः ।
खर्गलोके च निवसेदिष्टकासेतुकृत् सदा ॥”
इति मठादिप्रतिष्ठातत्त्वम् ॥ * ॥
वरुणवृक्षः । इति मेदिनी राजनिर्घण्टश्च ॥
(अस्य पर्य्यायो गुणाश्च यथा, --
“वरुणो वराणः सेतुस्तिक्तशाकोऽग्निदीपनः
।
वरुणः पित्तलो भेदो
श्लेष्मकृच्छ्राश्ममारुतान् ॥
निहन्ति
गुल्भवातास्रक्रिमींश्चोष्णोऽग्निदीपनः।
कषायो मधुरस्तिक्तः कटुको रूक्षको लघुः
॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे
॥)
प्रणवः । इति तन्त्रसारः ॥ अपि च ।
“मन्त्राणां प्रणवः सेतुस्तत्सेतुः प्रणवः
स्मृतः ।
स्रवत्यनोंकृतं पूर्व्वं परस्ताच्च विशीर्य्यते ॥
नमस्कारो महामन्त्रो देव इत्युच्यते सुरैः ।
द्विजातीनामयं मन्त्रः शूद्राणां सर्व्वकर्म्मणि
॥
अकारञ्चाप्युकारञ्च मकारञ्च प्रजापतिः ।
वेदत्रयात् समुद्धृत्य प्रणवं निर्म्ममे पुरा ॥
स उदात्तो द्विजातीनां राज्ञां स्यादनुदात्तकः
।
स्वरितश्चोरुजातानांमनसापि तथा स्मरेत्
॥

| | | |
|---|---|---|
| औदकाः पशवः षष्ठाः सप्तमास्तु सरीसृपाः ॥<br>गायत्रञ्च ऋचश्चैव त्रिवृत्सामरथन्तरम्।<br>अग्निष्टोमञ्च यज्ञानां निर्म्ममे प्रथमान्मुखात्॥<br>यजूंपि त्रैष्णुभं छन्दः स्तोमं पञ्चदशं तथा ।<br>बृहत्साम तथोक्थञ्च दक्षिणादसृजन्मुखात्॥<br>सामानि जगती च्छन्दः स्तोमं सप्तदशं तथा ।<br>वेरूपमतिरात्रञ्च पश्चिमादसृजन्मुखात्॥<br>एकविंशमथर्व्वाणमाप्तोयामाणमेव च ।<br>अनुष्टुभं स वैराजमुत्तरादसृजन्मुखात्॥ | | |

चतुर्द्दशस्वरो योऽसी सेतुरौकारसंज्ञकः ।
स चानुस्वारचन्द्राभ्यां शूद्राणां सेतुरुच्यते ॥
निःसेतुञ्च यथा तोयं क्षणान्निम्नं प्रसर्पति ।
मन्त्रस्तथैव निःसेतुः क्षणात् क्षरति यज्वनाम् ॥
तस्मात् सर्व्वेषु मन्त्रेषु चतुर्व्वर्णा द्विजादयः ।
पार्श्वयोः सेतुमादाय जपकर्म्म समारभेत् ॥
शूद्राणामादिसेतुर्व्वा द्विसेतुर्व्वा यथेच्छतः ।
द्वे सेतू वः समाख्याताः सर्व्वदैव द्विजातयः ॥"
इति कालिकापुराणे ५५ अध्यायः ॥

**सेतुकः**, पुं, (सेतुरेव । स्वार्थे कन् ।) वरुणवृक्षः ।
इति शब्दरत्नावली ॥

**सेतुबन्धः**, पुं, (सेतोर्बन्धः ।) लङ्कागमनार्थश्रीराम-
कृतसमुद्रबन्धनसेतुः । तत्पर्य्यायः ।
समुद्रारुः २ ।
इति जटाधरः ॥ तद्विवरणं यथा, --
"ततोऽब्रवीद्रघुश्रेष्ठं सागरो विनयान्वितः ।
नलः सेतुं करोत्वस्मिन् जले मे विश्वकर्म्मणः ॥
सुतो धीमान् समर्थोऽस्मिन् कार्य्ये लब्धवरो हरिः ।
कीर्त्तिं गायन्तु ते लोकाः सर्व्वलोकमलापहाम् ॥
इत्युक्त्वा राघवं नत्वा ययौ सिन्धुरदृश्यताम् ।
ततोरामस्तु सुग्रीवलक्ष्मणाभ्यां समन्वितः ।
नलमाज्ञापयच्छीघ्रं वानरैः सेतुबन्धने ॥
ततोऽतिहृष्टः प्लवगेन्द्रयूथपै-
र्महानगेन्द्रप्रतिमैर्युतो नलः ।

**सेत्रं**, क्ली, (सीयतेऽनेनेति । षिञ् बन्धने +
"दाम्नीशसयुयुजेति ।" ३ । २ । १८२ । इति
ष्ट्रन् ।) निगडः । इति सिद्धान्तकौमुदी ॥ वेडी
इति भाषा ॥

**सेना**, स्त्री, चतुर्व्विंशतिवृत्तार्हन्मातृणां तृतीया
माता । इति हेमचन्द्रः ॥ इनेन प्रभुणा सह
वर्त्तते या । (यद्वा, सिनोति शत्रुमिति । षिञ्
बन्धने + "कृवृजृषीति ।" उणा० ३ । १० ।
इति नः । स च नित् । टाप् ।) चतुरङ्गबलम् ।
फौज इति पारस्यभाषा । (यथा, रघुः । १ । १९ ।
"सेनापरिच्छदस्तस्य द्वयमेवार्थसाधनम् ।
शास्त्रेष्वकुण्ठिता बुद्धिर्मौर्व्वी घनुषि चातता ॥")
तत्पर्य्यायः । ध्वजिनी २ वाहिनी ३ पृतना ४
अनीकिनी ५ चमूः ६ वरूथिनी ७ बलम् ८
सैन्यम् ९ चक्रम् १० अनीकम् ११ । इत्य-
मरः । २ । ८ । ७८ ॥ वाहना १२ पूतना १३
गुल्मिनी १४ वरचक्षुः १५ । इति शब्दरत्नावली ॥
केचित्तु ध्वजिन्यादि सप्तकं सेनायाम् । बलादि
चतुष्कं सेनाङ्गे इत्याहुः । अतएव ध्वजिन्यादि
सप्तकंसामान्येन सेनायाम् । बलादि चतुष्कन्तु
सामान्ये न सेनायां सेनाङ्गे च इति मतम् ॥
इति भरतः ॥

**सेनाङ्गं**, क्ली, (सेनाया अङ्गम् ।) हस्त्यश्वरथ-
पदातीनां समूहः । यथा, --
"हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चचष्टयम् ॥"
इत्यमरः । २ । ८ । ३३ ॥
"कुलीनः शीलसम्पन्नो धनुर्व्वेदविशारदः ।
हस्तिशिक्षाश्वशिक्षासुकुशलः श्लक्ष्णभाषणः ॥
निमित्ते शकुनज्ञाने वेत्ता चैव चिकित्सिते ।
कृतज्ञः कर्म्मणां शूरस्तथा क्लेशसहो ऋजुः ॥
व्यूहतत्त्वविधानज्ञः फल्गुसारविशेषवित् ।
राज्ञा सेनापपिः कार्य्यो ब्राह्मणः क्षत्त्रियो-
ऽथवा ॥"
इति मात्स्ये राजधर्म्मे । २१५ । ८ -- १० ॥
सेनापतौ वर्णनीयानि यथा, --
"सेनापतिर्ज्जितावासः स्वामिभक्तः सुधीरभीः ।
अभ्यासी वाहने शस्त्रे शास्त्रे च विजयी रणे ॥"
इति कविकल्पलतायाम् १ स्तवके वर्ण्यस्थिति-
र्नाम ३ कुसुमम् ॥

**सेनामुखं**, क्ली, (सेनाया मुखम् ।) पत्तित्रयः । स तु
सेनासङ्ख्याविशेषः । तद्यथा । हस्ती ३ रथः ३
अश्वः ९ पदातिः १५ समुदायेन त्रिंशत् ३० ।
इत्यमरः । २ । ८ । ८१ ॥ (यथा च महा-
भारते । १ । २ । १९ ।
"एको रथो गजश्चैको नराः पञ्च पदातयः ।
त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥
पत्तिन्तु त्रिगुणामेतामाहुः सेनामुखं बुधाः ॥")
पुरद्वारसंमुखवृत्तिपथः । इति केचित् ॥

**सेनारक्षः**, पुं, (सेनां रक्षतीति । रक्ष + अण् ।)

बबन्ध सेतुं शतयोजनायतं
सुविस्तरं पर्व्वतपादपैर्दृढम् ॥”
इति श्रीमदध्यात्मरामायणे लङ्काकाण्डे ३ अः ॥
“सेतुमारभ्यमाणस्तु तत्र रामेश्वरं शिवम् ।
सङ्कल्पनियतो गत्वा पुरीं वाराणसीं नरः ॥
आनीय गङ्गासलिलं रामेशमभिषिष्य च ।
क्षिप्त्वा समुद्रे तद्वारि ब्रह्म प्राप्नोत्यसंशयः ॥
कृतानि प्रथमेनाह्ना योजननां चतुर्द्दश ।
द्वितीयेन तथा चाह्ना योजनानाञ्च विंशतिः ॥
तृतीयेन तथा चाह्ना योजनान्ये कविंशतिः ।
चतुथन तथा चाह्ना द्वाविंशति तथा कृतम् ॥
पञ्चमेन त्रयोविंशयोजननां समन्ततः ।
बबन्ध सागरे सेतुं नलो वानरसत्तमः ॥
तेनैव जग्मुः कपयो योजनानां शतं द्रुतम् ।
असंख्याताः सुवेलाद्रिं रुरुहुः प्लवगोत्तमाः ॥
आरुह्य मारुतिं रामो लक्ष्मणाऽप्यङ्गदं तथा ।
दिदृक्षू राघवो लङ्कां नानाचित्रध्वजाकुलाम् ॥”
इति तत्रैव ४ अध्यायः ॥
(क्षेत्रादेरालिबन्धनम् । यथा, महाभारते । ७ । ८४ । २ ।
“गतोदके सेतुबन्धो यादृक् तादृगयं तव ।
विलापो निष्फलो राजन् मा शुची भरतर्षभ ॥”

**सेतुभेदी**, [न्] पुं, (सेतुं भिनत्तीति । भिद् + णिनिः ।) दन्तीवृक्षः । इति शब्दचन्द्रिका ॥

**सेतुवृक्षः**, पुं, (सेतुनामको वृक्षः ।) वरुणवृक्षः । इति शब्दमाला राजनिर्घण्टश्च ॥ (अस्य पर्य्यायो यथा, वैद्यकरत्नमालायाम् ।
(यथा, बृहत्संहितायाम् । ११ । ४२ ।
“सेनाङ्गेषु नृपाणां गृहतरुशैलेषु चापि देशानाम् ॥”)

**सेनाचरः**, त्रि, (सेनायां चरतीति । चर + “भिक्षासेनादायेषु ।” ३ । २ । १७ । इति टः ।) सैन्यानुगामी । सेनया सह गन्ता । इति केक्षित् ॥ (यथा, महाभारते । १ । १३० । १४ ।
“मृगयाञ्चरतो राज्ञः शान्तनोश्च यदृच्छया ।
कश्चित् सेनाचरोऽरण्ये मिथुनं तदपश्यत ॥”)

**सेनानीः**, पुं, (सेनां नयतीति । नी + “सत्सूद्विषेति ।” ३ । २ । ६१ । इति क्विप् ।) कार्त्तिकेयः । इत्यमरः । १ । १ । ४२ ॥ (यथा, रघुः । २ । ३७ ।
“अथैनमद्रे स्तनया शुशोच
सेनान्यमालीढमिवासुरास्त्रैः ॥”)
वाहिनीपतिः । इति चामरः । २ । ८ । ६२ ॥
(यथा, महाभारते । ४ । २ । ६ ।
“स तु कामाग्निसंतप्तः सुदेष्णामभिगम्य वै ।
प्रहसन्निव सेनानीरिदं वचनमब्रबीत् ॥”)

**सेनापतिः**, पुं, (सेनायाः पतिः ।) कार्त्तिकेयः । (क्वचित् वाच्यलिङ्गेऽपि दृश्यते । यथा, महानिर्व्वाणतन्त्रे १ । १४ ।
“किमुच्यते महाप्राज्ञे कथ्यतां प्राणवल्लभे ।
यदकथ्यं गणेशेऽपि स्कन्दे सेनापतावपि ॥”)
अनीकाधिपतिः । इति मेदिनी ॥ अस्य पर्य्यायः । सेनानीः २ वाहिनीपतिः ३ । इत्यमरः । २ । ८ । ६२ ॥ सेनापतिलक्षणं यथा, --
सेनारक्षकप्रहरिकादिः । तत्पर्य्यायः । मैनिकः २
इत्यमरः । २ । ८ । ६१ ॥

**सेफः**, पुं, शेफः । इति जटाधरः ॥

**सेमन्ती**, स्त्री, पुष्पविशेषः । से उती इति भाषा । यथा, नारसिंहे ५२ अध्याये ।
“चम्पकानां पुष्पशतादशोकं पुष्पमुत्तमम् ।
अशोकानां सहस्राद्धि सेमन्ती पुष्पमुत्तमम् ॥”

**सेराहः**, पुं, पीयूषवर्णाश्वः । स तु दुग्धवच्छ्वेतवर्णः इति हेमचन्द्रः ॥

**सेरुः**, त्रि, (षि ञ् बन्धने + “दाधेट्सिशदसदो रुः ।” ३ । २ । १५९ । इति रुः ।) बन्धनकर्त्ता । इति मुग्धबोधव्याकरणम् ॥

**सेल**, ऋ चालगत्योः । इति कविकल्पद्रुमः ॥ (भ्वा० पर०-सक० सेट् ।) ऋ, असिसेलत् । इति दुर्गादासः ॥

**सेलुः** पुं, शेलुवृक्षः । स तु श्लेष्मातकः । इति भरतद्विरूपकोषः ॥

**सेव**, ञ ङ ऋ सेवने । इति कविकल्पद्रुमः ॥ (भ्वा०-उभ०-आत्म०-च-सक०-सेट् ।) ञ, सेवति सेवते । ङ, सेवते । ऋ, असिसेवत् । सेवनं आराधनं उपभोगः आश्रयणञ्च । विष्णुं सेवते । सुखं सेवते । तीर्थं सेवते साधुः । अन्ये त्वस्मात् परस्मैपदममन्यमानाः । नीचं समृद्धमपि सेवति नीच एव । स्वाधीने विभवेऽप्यहो नरपतिं सेवन्ति किं मानिनः ॥ इत्यादौ गणकृतानित्य-

| “वरुणस्तिक्तशाकश्च सेतुवृक्षोऽम्भसां प्रतिः ॥”) | | त्वमाहुः । इति दुर्गादासः ॥<br>**सेवं**, क्ली, (सेव्यते यदिति । सेव + घञ् ।) सेवि-<br>फलम् । इति राजनिर्घण्टः ॥ (अस्य पर्य्यायो<br>गुणाश्च यथा -- |
|---|---|---|

"मुष्टिप्रमाणं वदरं सेवं सिवितिकाफलम्
।
सेवं समीरपित्तघ्नं वृंहणं कफकृद्गुरुः ।
रसे पाके च मधुरं शिशिरं रुचिशुक्रकृत्
॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे
भागे ॥)

**सेवकः**, पुं, (सेवते इति । सेव + ण्वुल् ।) प्रसे-
वकः । इति मेदिनी ॥

**सेवकः**, त्रि, (सेवते इति । सेवृ सेवने + ण्वुल् ।)
अनुजीवी । भृत्यः । इति मेदिनी
शब्दरत्नावल्यौ ॥
(यथा, बृहत्संहितायाम् । ५ । ३४ ।
"पूर्व्वेण सलिलपूर्णां करोति वसुधां
समागतो
दैत्यः ।
पश्चात् कर्षकसेवकबीजविनाशाय
निर्द्दिष्टः ॥")
तस्य प्रभुसन्निधौ प्रश्नकरणक्षमत्वं यथा,
--
"किङ्करः किङ्करी वापि सर्व्वथा
प्रष्टुमीश्वरः ।
यो यस्य सेवानिरतः स कं पृच्छति तं
विना ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १३
अध्यायः ॥
(आश्रयिता । यथा, भागवते । ४ । १६
। १६ ।
"दृढव्रतः सत्यसन्धो ब्रह्मण्यो
वृद्धसेवकः ।
शरण्यः सर्व्वभूतानां मानदो दीनवत्सलः
॥")

**सेवकालुः**, पुं, निशाभङ्गावृक्षः । दुग्धपेया इति
ख्यातः । इति शब्दचन्द्रिका ॥

**सेवती**, स्त्री, पुष्पविशेषः । सेँउती इति भाषा ।
तत्पर्य्यायगुणाः ।

एका शेफसि जिह्वायामेको विद्धेन्न ताः क्वचित्
॥"
इति भावप्रकाशः ॥
(यथा च माधवकरसंगृहीतरुग्विनिश्चयेऽश्वर्य्य-
धिकारे ।
"सामान्यलिङ्गं रुङ्नाभिसेवनीवस्तिमूर्द्धमु ॥")

**सेवा**, स्त्री, (सेवृ सेवने + "गुरोश्च हलः ।" ३ ।
३ । १०३ । इत्यः । टाप् ।) सेवनम् । तत्प-
र्य्यायः । श्ववृत्तिः २ । इत्यमरः । २ । ९ । २ ॥
(यथा, मनुः । ४ । ६ ।
"सत्यानृतञ्च बाणिज्यं तेन चैवापि जीव्यते ।
सेवाश्ववृत्तिराख्याता तस्मात् तां परिवर्ज्जयेत्
॥")
आराधना । उपभोगः । आश्रयणम् ॥ इति
सेवधात्वर्थदर्शनात् ॥ (यथा, मनुः । १२ । ८७
।
"वेधाभ्यासस्तपो ज्ञानमिन्द्रियाणाञ्च संयमः ।
अहिंसा गुरुसेवा च निःश्रेयसकरं परम् ॥")
अथ माघादिद्वादशमासेषु विष्णुसेवाविधिस्तत्-
फलञ्च । यथा, --
व्यास उवाच ।
"विप्र द्वादशमासेषु माघादिषु सनातनः ।
पूजितव्यो विधानैश्च शृणु तानि वदाम्यहम् ॥
माघे मासि समायाते सर्व्वमासोत्तमे शुभे ।
आमिषं मैथुनञ्चैव वर्ज्जयेद्वैष्णवो जनः ॥
प्रातःस्नायी भवेन्नित्यं तैलान्यपि च वर्ज्जयेत् ।
द्विर्भोजनं परान्नञ्च माघे मासि परित्यजेत् ॥
प्रातः शुक्लाम्बरधरः कृतपञ्चमहाध्वरः ।
सपर्य्यामारभेद्विष्णोः स्थिरवृत्तो हि वैष्णवः ॥
ईषदुष्णजलैर्द्दिव्यैः स्नापयेद्विष्णुमव्ययम् ।
अतिश्लक्ष्णै श्चन्दनैश्च विष्णोरङ्गञ्च लेपयेत् ॥
पूजायै जगदीशस्य देवदेवस्य चक्रिणः ।
प्रक्षालितानि पात्राणि जलहीनानि कारयेत् ॥
स्नापयित्वा जगन्नाथमीषदुष्णजलैस्ततः ।
प्रोञ्छितव्य तच्छरीरं दिव्यवस्त्रेण यत्नतः ॥
सलिलैरीषदुष्णैश्च यः स्नापयति केशवम् ।
माघे मासि द्विजश्रेष्ठ फलं तस्य मयोच्यते ॥
विमुक्तः पातकैः सर्व्वैर्ज्जन्मजन्मान्तरार्ज्जितैः ।
इह भुक्त्वा सुखं सर्व्वं शेषे याति हरेर्गृ हम् ॥

स्थापयेन्निशि निर्व्वाते देशे च वैष्णवो
जनः ॥
न प्राप्नोति यथा शीतं देवदेवो
जगद्गुरुः ।
शुक्लैः पवित्रैर्द्दिव्यैस्तं वस्त्रै
राच्छादयेद्व धः ॥
आत्मनः कुरुते मर्त्यो यथा
शीतनिबारणम् ।
तथा शीतक्षयं कुर्य्याद्दे वदेवस्य
चक्रिणः ॥
क्षीरेण स्नापयेद्यस्तु माघे मासि
जनार्द्दनम् ।
तस्मै देवोत्तमो विष्णुः सन्तुष्टो न
ददाति किम् ॥
यः पूजयेत् सकृन्माघे स्नापयित्वा
जनार्द्दनम् ।
नारिकेलोदकैर्द्दुग्धैः फलं तस्य
वदाम्यहम् ॥
नरकाब्धौ मज्जमानान् दुस्तरे स्वेन
कर्म्मणा ।
उद्धृत्य कोटिपुरुषान् मन्दिरं याति
चक्रिणः ॥
माघे मासि च शुक्लायां पञ्चम्यां
द्विजसत्तम ।
एकादश्याञ्च सप्तम्यां हरिः पूज्यो
विशेषतः ॥
दातव्यो देवदेवाय सपद्माय मुरारये ।
पायसोऽपूपसहितो माघे मासि दिने
दिने ॥
अपूपं पायसं यस्तु माघे यच्छति
चक्रिणे ।
तस्य पुण्यमहं वच्मि शृणु वेष्णव
जैमिने ॥
अन्ते विष्णुपुरं गत्वा
मन्वन्तरचतुष्टयम् ।
भुङ्क्ते मनोरथान् भोगान्
प्रसादाच्चक्रयाणिनः ॥
पुनरागत्य धरणीं चक्रवर्त्ती नृपो भबेत्
।

"शतपत्री तरुण्युक्ता कर्णिका चारुकेसरा ।
महाकुमारी गन्धाढ्या लक्षपुष्पातिमञ्जुला ॥
शतपत्री हिमा हृद्या ग्राहिणी शुक्रला लघुः ।
दोषत्रयास्रजिद्वर्ण्या तिक्ता कट्वी च पाचनी ॥"
इति भावप्रकाशः ॥

**सेवधिः**, पुं, (सेवः सेवनं धीयतेऽस्मिन्निति । सेवां विना निधिलाभाभावादित्यर्थः । धा + किः ।) निधिः । इत्यमरटीकायां भरतः ॥ तालव्य-शकारादिरप्ययम् ॥

**सेवनं**, क्ली, (सिव तन्तुसन्ताने + ल्युट् ।) सूच्या-दिना वस्त्रादिसीवनम् । सेलाइ इति सेयासी इति च भाषा । तत्पर्य्यायः । सीवनम् २ सूतिः ३ । इत्यमरः । ३ । २ । ५ ॥ ऊतिः ४ व्यूतिः ५ । इति शब्दरत्नावली ॥ (यथा, सुश्रुते । १ । ८ ।
"सूच्यः सेवने । इत्यष्टविधे कर्म्मण्युपयोगः शस्त्राणां व्याख्यातः ॥" * ॥ सेवृ सेवने + ल्युट् ।) उपास्तिः । उपासना । इति मेदिनी ॥ (यथा, भागवते । ४ । १९ । १६ ।
"तमन्वीयुर्भागवता ये च तत्सेवनोत्सुकाः ॥"
आश्रयः । यथा, भागवते । ७ । १२ । २० ।
"सत्यानृतञ्च बाणिज्यं श्ववृत्तिर्नीचसेवनम् ।
वर्ज्जयेत् तां मदा विप्रो राजन्यश्च जुगुप्सिताम् ॥"

यत्नात् प्रक्षाल्य पात्राणि कृत्वा हीनानि वारिभिः ।
यः पूजयेज्जगन्नाथं तस्य पुण्यं निशामय ॥
इह भुक्त्वा वरान् भोगान् रोगशोकविवर्ज्जितः ।
अन्ते युगसहस्राणि तिष्ठेत् केशवमन्दिरे ॥
प्रभातेऽपि च सन्ध्यायां पुरतश्चक्रपाणिनः ।
ज्वलन्तं स्थापयेद्वह्निं निर्धूमं वैष्णवो जनः ॥
शीतस्यावरणार्थाय प्रातः सायञ्च यो जनः ।
माघे विष्ण्वग्रतो वह्निं ज्वालयेत्तत्फलं शृणु ॥
इह भुक्त्वाखिलान् भोगान् पुत्त्रपौत्त्रसमन्वितः ।
अन्ते विष्णुपुरं याति दैवतैरपि दुर्लभम् ॥
यथैवात्मा तथा विष्णुः सन्देहो नात्र विद्यते ।
तस्मादात्मानुमानेन विष्णुसेवा विधीयते ॥
प्रभाते रौद्रदेशे च पवित्रे स्थापयेद्धरिम् ।
न भुनक्ति द्विजश्रेष्ठ यावत् शीतं सुदुःसहम् ॥
स्वपन्तं देवदेवेशं पर्य्यङ्कोपरि केशवम् ।
भुङ्क्ते भोगञ्च सुचिरं मृतो याति हरेर्गृहम् ॥
पञ्चम्याञ्चैव सप्तम्यामेकादश्याञ्च जैमिने ।
अशक्त्या वैष्णवो दद्यात् परमान्नं मुरारये ॥
कृष्णपक्षाद्द्विजश्रेष्ठ शुक्लपक्षो विशिष्यते ।
शुक्लपक्षं तिथिष्वासु दद्यादन्नं मुरारये ॥
एकाहमपि यो माघे विष्णवे दैत्यजिष्णवे ।
सापूपं पायसं दद्यान्न तस्य दुर्ल्लभो हरिः ॥
यत्किञ्चित् विष्णुतृप्त्यर्थं माघे मासि प्रदीयते ।
तदक्षय भवेत् सर्व्वं कोऽपि नास्त्यत्र संशयः ॥
माघे मासि कृतं कर्म्म शुभं वाशुभमेव च ।
तस्य नास्ति क्षयं विप्र मन्वन्तरशतैरपि ॥
माघे चम्पकपुष्पेण योऽर्च्चयेत् कमलापतिम् ।
स गच्छेत् परमं धाम विमुक्तः सर्व्वपातकैः ॥
यावन्ति स्वर्णपुष्पाणि दीयन्ते चक्रपाणये ।
तावत् युगसहस्राणि स्थीयते विष्णुमन्दिरे ॥
मेरुतुल्यसुवर्णानि दत्त्वा भवति यत् फलम् ।
एकेन स्वणपुष्पेण दत्त्वा भवति तत् फलम् ॥
सुवर्णपुष्पं विप्रेन्द्र सर्व्वदा केशवप्रियम् ।
माघं मासि विशेषेण पवित्रे केशवोपमे ॥
सुवर्णकुसुमैर्द्दिव्यैर्येन नाराधितो हरिः ।

उपभोगः । यथा, मनुः । ११ । १७९ ।
“यत् करोत्येकरात्रेण वृषलीसेवनात् द्विजः ।
तद्भ क्ष्यभुग्जपन्नित्यं त्रिभिर्व्वर्षैर्व्यपोहति ॥”)

**सेवनी**, स्त्री, (सीव्यत्यनयेति । सिव + ल्युट् । ङीप् ।) सूची । इति हेमचन्द्रः ॥ शरीरा-वयवमयोगविशेषः । यथा, --
“मेषन्यः सप्त तासान्तु भवेयुः पञ्च मस्तके ।

रत्नैर्हीनः सुवर्णाद्यैः स भवेज्जन्मजन्मनि ॥”
इति पाद्मे क्रियायोगसारे ९ । १० अध्यायौ ॥ * ॥
व्यास उवाच ।
“फाल्गुने ब्राह्मणश्रेष्ठ श्रीकृष्णं सुरवन्दितम् ।
पूजयेद्भक्तिभावेन प्रत्यहं वैष्णवो जनः ॥
फाल्गुने स्नापयेद्यस्तु सर्पिषा देवकौसुतम् ।
फलं तस्य प्रवक्ष्यामि मत्तः सम्यक् निशामय ॥
सर्व्वयज्ञफलं प्राप्य सर्व्वदानफलं तथा ।
अन्ते याति हरेः स्थानं सर्व्वपापविवर्ज्जितः ॥
युगकोटिसहस्राणि भुक्त्वा भोगं हरेर्गृहे ।
तत्रैव मोक्षमाप्नोति संप्राप्य ज्ञानमुत्तमम् ॥
यस्तु यच्छति कृष्णाय शिशिरे गोपमूर्त्तये ।

तिलानां मोदकं दिव्यं स गच्छेद्धरिमन्दिरम् ॥
यो दुग्धलड्डुकं दद्यात् केशवाय महात्मने ।
स पिबेदमृतं स्नात्वा मन्वन्तरशतावधि ॥
हरये ललितं खण्डं यस्तु यच्छति जैमिने ।
तस्य विष्णुः प्रसन्नात्मा छिन्नत्ति भवबन्धनम्
॥
विचित्रफाणितं यस्तु दद्याद्भगवते द्विज ।
अन्ते शक्रपुरं गत्वा स भवेत् सुरवन्दितः ॥
निर्म्मलां शर्करां यच्छेद्यस्तु कृष्णाय
भक्तिमान्
स किं न लभये विप्र वासुदेवप्रसादतः ॥
सुपक्वं फाल्गुने मासि मधुरं बरदीफलम् ।
यस्तु यच्छति कृष्णाय फलं तस्य मयोच्यते
॥
इह भुङ्क्ते सुखं सव्वं पुत्रपौत्रसमन्वितः ।
अन्ते हरेर्गृहं याति रथमारुहा शोभनम् ॥
न दद्याद्गुडसंयुक्तं हरये बदरीफलम् ।
अज्ञानाद्ब्राह्मणश्रेष्ठ दद्याच्चेन्नारकी भवेत् ॥
फाल्गुने मासि यो दद्याद्धरये दाडिमीफलम् ।
सुपक्वं तत्फलंविप्र वदतो मे निशामय ॥
तत्र यावन्ति बीजानि तिष्ठन्ति दाडिमीफले ।
तावन्मन्वन्तरं विष्णोर्गृहे तिष्ठति वैष्णवः ॥
फाल्गुने मासि यो दद्याद्धरये गुडपिष्टकम् ।
सविज्ञेयो द्विजश्रेष्ठ वाजिमेधसहस्रकृत् ॥ *
॥
चैत्रे मासि द्विजश्रेष्ठ मधुना मधुसूदनम् ।
स्नापयेल्लभते मर्त्यस्तद्विष्णोः परमं पदम् ॥
मधुना स्नापयेत् यस्तु नारायणमनामयम् ।
न चर्च्चा क्रियते तस्य कदाचिद्रविसूनुना ॥
चैत्रे किंशुकपुष्पेण योऽर्च्चयेत् कमलापतिम् ।
तन्नाम चित्रगुप्तेन पञ्जिकायां न लिख्यते ॥
चैत्रिके जगतामीशं कृष्णं तिलकपुष्पकैः ।
यजतो नास्ति वै जन्म पुनरस्मिन् महीतले ॥
कृष्णं वञ्जुलपुष्पेण सर्व्वदेवशिरोमणिम् ।
पूजयेन्मनुजो विप्र लभते नापदं क्वचित् ॥
वासन्तीभिः सुगन्धाभिर्व्वसन्ते यस्तु पूजयेत्
।
भगवन्तं परात्मानं स देवैरपि पूज्यते ॥
जयाकिशलयैर्द्दिव्यैरखण्डैर्योऽर्च्चयेद्धरिम् ।

न किं ददातिःविप्रर्षे प्रसन्नः
परमेश्वरः ॥
वैशाखे मासि यो दद्यात् यवान्नं
चक्रपाणये ।
तस्य पुण्यानि संख्यातुं कः
समर्थोऽस्ति पण्डितः
यत्किञ्चिन्माधवे मासि
माधवप्रीतिहेतवे ।
दीयते मानवैर्व्विप्र तत् सर्व्वमक्षयं
भवेत् ।
यदन्यत् सुकृतं कर्म्म क्रियते मासि
माधवे ।
माधवप्रीतये विप्र क्षयं तस्य न
विद्यते ॥
वैशाखो दुर्ल्ल भो मासः
सर्व्वकामफलप्रदः ।
पूजितव्यो हरिस्तत्र हित्वा
कार्य्यशतान्यपि ॥
एकाहमपि यः पूजां वैशाखे कुरुते
हरेः ।
शतवर्षं हरिं यष्ट्वा यत् फलं लभते
स तत् ॥
वैशाखे मासि यः कुर्य्यात् प्रपां
माधवतुष्टये ।
दिने दिनेऽश्वमेधस्य फलं प्राप्नोति
मानवः ॥
वैशाखे सिञ्चयेन्नित्यं
विष्णुमश्वत्थरूपिणम् ।
चतुर्व्वर्गफलावाप्तिहेतवे वैष्णवो
जनः ॥
गण्डूषमात्रतोयेन
कुर्य्याद्योऽश्वत्थसेचनम् ।
सोऽपि याति परं स्थानं विमुक्तः
पाप-
कोटिभिः ॥
व्यास उवाच ।
साक्षाद्देवः स्वयं
विष्णुरश्वत्थोऽखिलविश्वराट् ।

तावद्विष्णुपुरे तिष्ठे न्मणिमालाविभूषितः ॥
सुवर्णाभरणैर्यस्तु रजताभरणेस्तथा ।
कृष्णं मण्डयति ग्रीष्मे सोऽपि
तत्फलमाप्नुयात्
विचित्रं यस्तु पर्य्यङ्कं सगण्डूकं प्रयच्छति ।
हरये देवदेवाय न स्याद्दुःखी कदापि सः ॥
ग्रीष्मकाले न देयानि गुरूणि वसनानि च ।
हरये ब्राह्मणश्रेष्ठ देयं तन्वंशूकं शूचि ॥
यस्तु चूतफलैर्दिव्यैः सुपक्वैः पूजयेद्धरिम् ।
अन्ते शक्रपुरं गत्वा स पिबेदमृतं मुदा ॥
पियालानां फलैः पक्कैर्योऽर्च्चयेत्
कमलापतिम्
सोऽपि तत्फलमाप्नोति किमन्यैर्ब्बहुभाषितैः
॥
निदाघे हरये दद्याद्यवागूमतिशीतलाम् ।
नानाव्यञ्जनसंयुक्तां श्रद्धया वैष्णवो जनः ॥ *
॥
आषाढे मासि विप्रेन्द्र देवदेवं जगत्पतिम् ।
दधिभिः स्नापयित्वा तु पूजयेद्भक्तितो बुधः ॥
दधिभिः स्नापयेद्यस्तु भगवन्तं जनार्द्दनम् ।
मातुः पयोधरपयः पुनस्तेन न पीयते ॥
घनागमे घनश्यामं कदम्बकुसुमैर्हरिम् ।
आराध्य यान्ति विप्रर्षे पापिनोऽपि परां
गतिम् ॥
कदम्बपुष्पमालाभिर्म्मण्डयत्यब्जलोचनम् ।
यस्तस्य ब्राह्मणश्रेष्ठ पुण्यं वच्मि निशामय ॥
तस्यां यावन्ति मालायां तिष्ठन्ति कुसुमानि वै
।
प्रतिपुष्पे द्विजश्रेष्ठ वाजिमेधफलं लभेत् ॥
सुगन्धैः केतकीपुष्पैः पूजितः कमलेक्षणः ।
सर्व्वं दुःखं हरत्येष मानवानां द्विजोत्तम ॥
पनसानां फलैर्दिव्यैः सुपक्वैर्घृतमिश्रितैः ।
पूजितो भगवान् विष्णुर्द्द दात्यैश्वर्य्यमुत्तमम् ॥
आषाढे मासि दध्यन्नं हरये प्रतिवासरम् ।
श्रद्धया वैष्णवो दद्यान्मुक्तिमिच्छुर्द्विजोत्तम ॥
कृष्णाय नवनीतं यो ददाति वैष्णवो जनः ।
तस्य पुण्यं न संख्यातुं शक्नोम्यब्दशतैरपि ॥
हैयङ्गवीनं यो दद्याद्गोपालाय महात्मने ।
आमिक्षां सगुडाञ्चैव स महात्मा हरेः प्रियः ॥

तं वदन्ते समुत्थाय स्वयं पीठाद्यमोऽपि च ॥
धात्रीपत्रैर्नवीनैश्च कोमलैर्हरिमर्च्चयन् ।
अचिरेणैव लभते सकलं वाच्छितं जनः ॥
शाण्डिल्याखण्डपत्रैश्च धुस्तूरैश्चार्कपुष्पकैः
।
योऽर्च्चयेद्विष्णुमीशञ्च स संसाराब्धिपारगः ॥
यो दद्याद्विष्णवे विप्र कदलीफलमुत्तमम् ।
शक्राद्यास्त्रिदशाः सर्व्वे वदन्ते तमहर्न्निशम् ।
यो दद्याच्चैत्रिके मासि भक्त्या गोपालरूपिणे
।
गोधूमपिष्टकं विप्र सर्व्वपापैः प्रमुच्यते ॥ * ॥
आयाते माधवे मासि पवित्रे माधवप्रिये ।
आमिषं मैथुनं तैलं विष्णुभक्तः परित्यजेत् ॥
प्रातः समाचरेत् स्नानं माधवे मासि वैष्णवः ।
परित्यजेत् परान्नञ्च न च कुर्य्यात् द्विभोजनम्
॥
प्रभाते पूजयेद्विष्णुं पूर्व्वोक्तविधिना द्विजः ।
वैशाखे स्नापयेद्विष्णुं पुष्पवासितवारिणा ॥
स्नापयेत् शीततोयेन सन्ध्यापर्य्यन्तमच्युतम्
।
त्रिसन्ध्यं पूजयेद्भक्त्या नैविद्यैर्व्विविधैः प्रभुम्
॥
वैशाखे चामलस्रग्भिर्लक्ष्मीपतिरलङ्कृतः ।
तद्भक्तिं कुर्व्वतः पुंसो विद्यते नाशुभं
क्वचित् ॥
अश्वत्थं सेवते यस्तु विष्णुबुद्ध्या
नरोत्तमः ।
तस्य प्रसन्नो भगवान् ददाति परमं
पदम् ॥”
इति पाद्मे क्रियायोगसारे ११
अध्यायः ॥ * ॥
व्यास उवाच ।
“ज्यैष्ठे मासि द्विजश्रेष्ठ भगवन्तं
जनार्द्दनम् ।
पूजयेद्भक्तिभावेन जलैः संस्थाप्य
शीतलैः ॥
उद्वर्त्तनञ्च दातव्यं सुगन्धामलकीं
तथा ।
तैलं सुगन्धं हरये ग्रीष्मकाले दिने
दिने ॥
सुवासिते शीतले च
मन्दिरेऽतिमनाहरे ।
प्रत्यहं कमलाकान्तं स्थापयेत्
जलमण्डपे ॥
न रौद्रदेशे विप्रे न्द्र सधूमे
रन्धनालये ।
न सूतिकागृहे चैव स्थापयेत्
कमलापतिम् ॥
चामरैर्व्वीजितः श्वेतैः सुदीर्घैः
कमलापतिः ।
ज्यैष्ठे मासि द्विजश्रेष्ठ सुप्रीतः किं न
यच्छति ॥
मयूरपुच्छव्यजनैर्न्निदाघे पूजितो
हरिः ।
ददात्यभिमतं सर्व्वं अचिरेणैव
सत्तम ॥
तालवृन्तकवातेन पवित्राम्बरवायुना
।
यैर्ग्रीष्मे वीज्यते विष्णु स्ते सर्व्वे
स्वर्गगामिनः ॥
यो गात्रलेपनं कुर्य्यात्
सुवन्धैर्यक्षकर्द्दमैः ।
ग्रीष्मे हरेश्चन्दनेश्च स विशेन्माधवों
तनुम् ॥
सशर्कराणि दुग्धानि कृष्णाय यस्तु यच्छति ।
तस्य प्रसन्नो भगवान् ददात्यभिमतं फलम् ॥
* ॥
श्रावणे मासि विप्रेन्द्र दैवकीनन्दनं प्रभुम् ।
स्नापयेन्निर्म्मलैस्तोयैः शुद्धैः कलुषवर्ज्जितैः
॥
मल्लिकाकुसुमैर्विष्णुं योऽर्च्चयेद् वैष्णवो जनः ।
विमुक्तः सकलैः पापैर्ब्रह्मलोकं स गच्छति ॥
शेफालिकाप्रसूनैश्च यूथिकाकुसुमैस्तथा ।
अर्च्चयन् कमलाकान्तं मनुजो नावसीदति ॥
सुगन्धैस्तगरैः पुष्पैः सप्तलाकुसुमैस्तथा ।
योऽर्च्चयेत् कमलाकान्तं तस्य वश्यं
जगत्त्रयम् ॥
प्रफुल्लैर्म्मालतीपुष्पैः सुगन्धैर्योऽर्च्चयेद्धरिम् ।
तत्पुण्यं नास्ति तत्तुल्यो येन स्याद्भुवि
मानवः ॥
कुन्दपुष्पै श्च बन्धूकैर्ज्जगद्बन्धुं जनार्द्दनम् ।
अर्च्चयन् सकलं काममाप्नोति भुवि मानवः ॥
महासहाप्रसूनैश्च तथा कुरुवकैर्हरिम् ।
कुरुण्टकैः पूजयेद्यस्तस्य तुष्टः सदा हरिः ॥
शैरीषकुसुमैर्विष्णुं प्रस्थपुष्पैश्च योऽर्च्चयेत् ।

| | | |
|---|---|---|
| | गन्धैर्म्मृगमदाद्यैश्च यो लिम्पेन्माधवों तनुम् ।<br>उष्मागमे द्विजश्रे ष्ठ स मुक्तो नात्र संशयः ॥<br>प्रफुल्लकुमुदोद्याने तुलसीकानने तथा ।<br>सन्ध्यायां स्थापयेद्विष्णुं देशे धीरसमीरणे ॥<br>स्रग्भिः पाटलिपुष्पाणां येन विष्णु रलङ्कृतः ।<br>ज्यैष्ठे मासि स विज्ञेयो वाजिमेधसहस्रकृत् ॥<br>यस्तु मुक्तावलीं दद्यात् ग्रीष्मे श्रीपतये जनः ।<br>भूपालत्वं हरिस्तस्मै यच्छेज्जन्मनि जन्मनि ॥<br>यस्तु मण्डयति ग्रीष्मे श्रीकृष्णं मणिमालया ।<br>तस्य पुण्यफलं विप्र वदतो मे निशामय ॥<br>यावद्ब्रह्मा सृजत्येतत् जैमिने सकलं जगत् । | |

करवीरप्रसूनैश्च स याति हरिसन्निधिम् ॥
श्रावणे मासि यो दद्यात् लाजान् घृतसम-
न्वितान् ।
हरये तस्य विप्रर्षे न विपत्तिर्गृहे भवेत् ॥
श्रावणे पिष्टकं यस्तु हरये मुद्गपूरकम् ।
ददाति तस्य विप्रर्षे गृहे श्रीर्निश्चला भवेत् ॥ * ॥
भाद्रे मासि द्विजश्रेष्ठ नारायणमनामयम् ।
श्रद्धया पूजयेत् प्राज्ञश्चतुर्व्वर्गफलप्रदम् ॥
निवीडे नूतनागारे सर्व्वोपद्रववर्ज्जिते ।
स्थापयेत् पुण्डरीकाक्षं भगवन्तं जनार्द्दनम् ॥
दंशैश्च मसकैश्चैव प्रकीर्णैर्म्मक्षिकादिभिः ।
हरिं पुरातनागारे स्थापयेन्न हि भक्तिमान् ॥
सकर्दमे पतद्वारि गलद्भित्तौ गृहे तथा ।
हरिं न स्थापयेत् प्राज्ञो वर्षासु परमेश्वरम् ॥
विष्ण्वालये द्विजश्रेष्ठ बध्नीयाद्यस्तु भानवः ।
चन्द्रातपं विचित्रञ्च चन्द्रलोकं स गच्छति ॥,
रात्रौ नानाविधैर्धूपैर्म्मन्दिरे जगतीपतेः ।
दंशांश्च मशकांश्चैव वर्षाकाले निवारयेत् ॥
मसारिकाभिः प्रावृत्य मञ्चशायिनमच्युतम् ।
प्रावृषि स्थापयेद्विष्णुं निशायां दिव्यमन्दिरे ॥
कह्लारपत्रर्द्देवेशं सुगन्धैर्नूतनैस्तथा ।
मुमुक्षुः पूजयेन्मर्त्यो भाद्रेमासि दिने दिने ॥
न भाद्रे केतकीपुष्पैः पूजितव्यो जनार्दनः ।
यतो भाद्रपदे मासि केतकी स्यात् सुरासमा ॥
पक्वस्तालफलैर्द्दिव्यैर्योऽर्च्चयेद्यदुनन्दनम् ।
गर्भवाममहादुःखं स भूयो लभते न हि ॥
संयुक्तं घृतदुग्धाभ्यां पक्वतालं मुरारये ।
या दद्यात् श्रद्धया मर्त्यः स गच्छेन्मन्दिरं हरेः ॥
भाद्रे मासि द्विजश्रे ष्ठ हरये तालपिष्टकम् ।
सघृतं वैष्णवो दद्यात् कैवल्यप्राप्तिहेतवे ॥
मासि भाद्रपदे विप्र न कुर्य्याच्छाकभक्षणम् ।
न रात्रौ भोजनं कुर्य्यान्मुमुक्षुर्वैष्णवो जनः ॥ * ॥
आश्विने मासि विप्रेन्द्र केशवं क्लेशनाशनम् ।
पूजयेद्भक्तिभावेन पूर्व्वोक्तविधिना जनः ॥
पूर्व्वाह्णे पूजयेद्यस्तु भक्त्या लक्ष्मौपतिं हरिम् ।
विष्णुपूजाफलं विप्र सम्पूर्णं तेन लभ्यते ॥
यत्तोयं दीयते विप्र पूर्व्वाह्णे हरये जनैः ।
पीयूषमिव तत्तोयं गृह्णाति कमलापतिः ॥
मध्याह्ने दीयते यच्च सलिलं चक्रपाणये ।
स्नानं देवार्च्चनञ्चैव दानञ्च पितृतर्पणम् ।
तिलकेन विना विप्र न च कुर्य्याद्विचक्षणः
॥
तिलकान्न गृहोत्वा यत् पुण्यकर्म्म
विधीयते ।
भस्मीभवति तत् सर्व्वं कर्त्ता च नारकी
भवेत्
शङ्खचक्रगदापद्मैरङ्कितं यस्य दृश्यते ।
शरीरं ब्राह्मणश्रेष्ठ विज्ञेयः सोऽच्य तः
स्वयम् ॥”
इत्यादि ॥
“त्रिपत्रीकृतदूर्व्वाभिराश्विने
योऽर्च्चयेद्धरिम् ।
दूर्व्वेव सन्ततिस्तस्य अविच्छिन्ना
प्रवर्त्तते ॥
आश्विने मासि यो दद्याद्धरये
कर्क्कटीफलम् ।
शोको न जायते तस्य कदाचिद्धृदये द्विज
॥ * ॥
कार्त्तिके तु समायाते सर्व्वमासोत्तमे शुभे
।
दामोदरं देवदेवं भक्त्या प्राज्ञः प्रपूजयेत्
॥
कार्त्तिके मासि विप्रेन्द्र विष्णुप्रीणनहेतवे
।
यथोक्तविधिना प्राज्ञः प्रातःस्नानं
समाचरेत् ॥
आमिषं मैथुनञ्चैव कार्त्तिके मासि
यस्त्यजेत् ।
जन्मान्तरार्ज्जितैः पापैर्म्मुक्तो याति परां
गतिम् ॥
तुलाराशिगते सूर्य्ये प्रातःस्नानं
द्विजोत्तम ।
हविष्यं ब्रह्मचर्य्यञ्च महापातकनाशनम् ॥
आमिषं मैथुनञ्चैव कार्त्तिके यस्तु न
त्यजेत् ।
जन्मजन्मनि विप्रेन्द्र स भवेत्
ग्राम्यशूकरः ॥
द्विर्भोजनं परान्नञ्च तैलञ्च वैष्णवो जनः ।
न दत्तं तेन किं विप्र विष्णवे
दैत्यजिष्णवे ॥
एकमेवाम्बुजं यस्तु ददाति कैटभारये
।
तस्मै किं भगवान् विष्णुर्न ददाति
श्रियः पतिः ॥
कमलैः कार्त्तिके मासि येन
नाराधितो हरिः ।
जन्मजन्मनि तद्गेहे कमला न हि
तिष्ठति ॥
पद्मबीजानि यो दद्यात् केशवाय
महात्मने ।
स जायते विप्रकुले शुद्धे च
प्रतिजन्मनि ॥
ब्राह्मणस्य कुले जातः स
चतुर्व्वेदविद्भवेत् ।
धनवान् बहुपुत्रश्च कुटुम्बानाञ्च
पोषकः ॥
नास्ति पद्मसमं पुष्पं जैमिने
सत्यमुच्यते ।
येन संपूज्य गोविन्दं पापात्मापि च
मोक्षभाक् ॥
सत्यं सत्यं पुनः सत्यं सत्यमेव
मयोच्यते ।
कमलैर्हरिमभ्यर्च्च्य लभते परमं
पदम् ॥
एकमेवारविन्दं यः प्रददाति मुरारये ।
तस्य नास्ति पुनजन्म ससारेऽस्मिन्
सुभैरवे ॥”
इति पाद्मे क्रियायोगसारे १२
अध्यायः ॥ * ॥
व्यास उवाच ।
“मार्गशीर्षे द्विजश्रे ष्ठ महालक्ष्म्या
समन्वितम्
पूजयेदव्ययं विष्णं भक्तिभावेन
वैष्णवः ॥
उच्छिष्टदेशे विप्रेन्द्र तथेव
पतितालये ।

तोयं तोयमिव स्वामी तद्गृह्णाति द्विजोत्तम ॥
अपराह्णे तु यत्तोयं गोविन्दाय प्रदीयते ।
ततोयं रक्ततुल्यं स्यान्न गृह्णाति यतो हरिः ॥
अतएव द्विजश्रेष्ठ पूर्व्वाह्णे हरिमर्च्चयेत् ।
मकलं लभते कामं केशवस्यानुकम्पया ॥
एकवस्त्रेण विप्रेन्द्र न कुर्य्यात् पूजनं हरेः ।
कुर्य्याद्वापि तदा पूजां तां न गृह्णाति केशवः ॥
अधौतेन च वस्त्रेण या पूजा कमलापतेः ।
विफला मा च पूजा स्यान्न च विष्णः प्रसोदति
यस्त्ववद्धशिखः पूजां चक्रिणः कुरुते जनः ।
पूजाफलं न चाप्नोति अनिर्ग्राह्या च सा भवेत् ॥
असंस्कृतगृहे पूजा क्रियते या जगत्पतेः ।
सा पूजा ब्राह्मणश्रेष्ठ अनिर्ग्राह्या भवेत् खलु ॥

आयाते कार्त्तिके मासि यत्नादपि
परित्यजेत् ॥
दामोदराय नभसि प्रदीपं यस्तु यच्छति ।
फलं तस्य प्रवक्ष्यामि समासेन शृणु द्विज
॥
ब्रह्महत्यादिभिः पापैर्व्विमुक्तः
क्लेशदायकैः ।
दामोदरपुरं गत्वा तिष्ठेत् कोटियुगावधि ॥
दीपं ज्वलन्तं नभसि त्रिदशा वासवादयः
।
विलोक्य हर्षिताः सर्व्वे वदन्तीति
परस्परम् ॥
असौ पुण्यात्मनां श्रेष्ठः
केशवार्च्चनतत्परः ।
प्रदीपं कार्त्तिके मासि यतो यच्छति
चक्रिणे ॥
आगमिष्यति पुण्यात्मा कदायं त्रिदिवं
प्रति ।
करिष्यामि कदा सख्यमनेन हरिसेविना
॥
मुहूर्त्तमपि यो दद्याद्दीपं नभसि चक्रिणे ।
कात्तिके मासि विप्रे न्द्र तस्य तुष्टः सदा
हरिः ॥
दद्यादक्षयदीपं यः कार्त्तिके हरिमन्दिरे ।
दिने दिनेऽश्वमेधस्य फलं प्राप्नोति
मानवः ॥
तुलसीदललक्षैर्यः कार्त्तिके पूजयेद्धरिम् ।
लक्षैकवाजिमेधस्य मानवो लभते फलम्
॥
विल्वच्छदनलक्षेण योऽर्च्चयेत्
विष्णुमव्ययम
कार्त्तिके शङ्करं वापि लभते सोऽपि तत्
फलम्
कार्त्तिके वकपुष्पेण हरिपूजनकृन्नरः ।
परम मोक्षमाप्नोति प्रसादाज्जगतीपतेः
॥
यत्किञ्चित् कार्त्तिके मासि विष्णुमुद्दिश्य
दीयते
तदक्षयं भवेत् सर्व्वं सत्यमेतन्मयोच्यते
॥

दुर्गन्धैश्च परिव्याप्ते स्थाने विष्णुं न
पूजयेत् ॥
पाषण्डानां समीपे तु महापातकिनां
तथा ।
असत्यभाषिणाञ्चैव न
कुर्य्याद्विष्णुपूजनम् ॥
तस्मादेकमना भूत्वा
भक्तिश्रद्धासमन्वितः ।
पूजयेत् कमलाकान्तं
चतुर्व्वर्गफलाप्तये ॥
शाल्यन्नं सघृतञ्चैव
मुद्गपूपसमन्वितम् ।
सवास्तूकादिशाकञ्च दद्यात् सदधि
विष्णवे ॥
नागरङ्गफलं दिव्यं सुपक्वं यस्तु
यच्छति ।
केशवाय द्विजश्रे ष्ठ सोऽस्माभिरपि
पूज्यते ॥
यद्यन्यं नूतनं वस्तु प्रियं भगवतो हरेः
।
तदेवाग्रहायणे मासि भक्त्या
दद्यान्मुरारये ॥ * ॥
पौषे मासि समायाते श्रीकृष्णं वरदं
प्रभुम् ।
नित्यमिक्षुरसैर्द्दिव्यैः स्नापयेद्वैष्णवो
जनः ॥
यः स्नापयति विप्रेन्द्र विष्णुमिक्षुरसैः
प्रभुम् ।
इह भुङ्क्ते सुखं सर्व्वं मृतो
यातीक्षुसागरम् ॥
यो दद्यादिक्षुनैवेद्यं देवदेवाय विष्णवे
।
सोऽपि तत्फलमाप्नोति
किमन्यैर्बहुभाषितैः ॥
सदुग्धं पृथुकं पौषे दधिभिर्व्वा
समन्वितम् ।
दत्त्वा मुरारये मर्त्यः सर्व्वान्
कामानवाप्नु यात्
सर्व्वं पुरातनं वस्त्रं दूरीकृत्य मुरारये
।

| | | |
|---|---|---|
| | घृताक्तं शूरणान्नं यः कार्त्तिके विष्णवे नरः ।<br>दद्याद्दिने दिने विप्र तस्य विष्णुपुरे स्थितिः ॥<br>प्रफुल्लपद्मपुष्पेण सितेनाप्यसितेन वा ।<br>योऽर्च्चयेत् कमलाकान्तंतस्य किं भुवि दुर्लभम्<br>कमलैः कार्त्तिके मासि सितैर्व्वा लोहितैस्तथा ।<br>संपूज्य पद्मिनं मर्त्यो लभते परमं पदम् ॥<br>प्रदत्तं कार्त्तिके मासि हरये येन पङ्कजम् । | शीतस्य वारणार्थाय दद्याद्वस्त्रञ्च नूतनम् ॥<br>पौषे संक्रमणे विप्र सलक्ष्मीकाय विष्णवे ।<br>दद्यान्मुमुक्षुर्म्मनुजो दशवर्णञ्च पिष्टकम् ॥<br>यस्तु शङ्खध्वनिं कुर्य्यात् संपूज्य कमलापतिम् ।<br>तस्य पुण्यफलं वच्मि शृणु वत्स समाहितः ॥<br>अगम्यागमनाच्चैव विमुक्तः सर्व्वपातकैः ।<br>शेषे विष्णुपुरं गत्वा विष्णुना सह मोदते ॥<br>वैनतेयाञ्चितां घण्टां यस्तु वादयते हरेः ।<br>पूजाकाले द्विजश्रेष्ठ तस्य पुण्यं वदाम्यहम् ॥<br>अभक्षभक्षणाच्चैव मुक्तः पापैः सुदारुणैः ।<br>प्रयाति मन्दिरं विष्णो रथमारुह्य शोभनम् ॥<br>तत्र भुक्त्वाखिलं भोगं कल्पकोटिशतावधि । |

पुनरागत्य धरणीं चतुर्व्वेदी द्विजो भवेत् ॥
तत्र भुक्त्वा सुखं सर्व्वं
शोकदुःखविवर्ज्जितः ।
पुनर्व्विष्णुपुरं गत्वा मोक्षं प्राप्नोत्यनुत्तमम्
॥
बीणां वादयते यस्तु पूजाकाले जगत्पतेः ।
पण्डितानामग्रणीः स्यात् प्रतिजन्मनि
जन्मनि ॥
मृदङ्गवाद्यकृद्यस्तु पूजायां कैटभद्विषः ।
तस्य प्रसन्नो देवेशो ददात्यभिमतं फलम्
॥
डमुरुं डिण्डिमञ्चव झर्झरीं मधुरीं तथा ।
पटहं दुन्दुभिञ्चैव काहलं सिन्धुवादनम् ॥
कांस्यञ्च करतालञ्च वेणुं वादयते च यः ।
पूजाकाले महाविष्णोस्तस्य पुण्यं
निशामय ॥
स्तेयाद्यैः पातकैर्म्मुक्तो मन्दिरं याति
चक्रिणः ।
परमं स्थानमासाद्य तत्रैव परिमुच्यते ॥
करशब्दञ्च यः कुर्य्यात् पूजाकाले
जगद्गुरोः ।
मुखवाद्यञ्च विप्रेन्द्र तस्य पुण्यं मयोच्यते
॥
कोटिकोटिकुलैर्युक्तः प्रयाति हरिमन्दिरम्
।
ज्ञानमासाद्य तत्रैव मोक्षमक्षयमाप्नुयात् ॥
विष्णोरायतने यस्तु भक्तियुक्तः प्रनृत्यति
।
स याति ब्राह्मणश्रे ष्ठ तद्विष्णोः परमं पदम्
॥
यस्तु गायति गीतानि भक्त्या
नारायणाग्रतः ।
स नर्त्तकत्वमाप्नोति गन्धर्व्वाणां पुरेषु च
॥
स्तौति स्तोत्रं जगन्नाथं यो भक्त्या वैष्णवो
जनः ।
तस्य प्रसन्नो भगवान् सर्व्वान् कामान्
प्रयच्छति
मासे मासे हरिं यस्तु विधिनानेन पूजयेत् ।

गत्वास्नात्वा विष्णूपसर्पणम् २३
पिण्याकं भुक्त्वा
विष्णोरुपसर्पणम् २४ विष्णवे
वराहमांस-
निवेदनम् २५ मद्यमादाय पीत्वा वा
स्पृष्ट्वा
विष्णुगृहप्रवेशनम् २६
परकीयेणाशुचिना
वस्त्रेण परिहितेन विष्णुकर्म्माचरणम्
२७
विष्णवे नवान्नमप्रदाय तद्भोजनम् २८
गन्ध-
पुष्पेऽप्रदाय धूपदीपदानम् २९
उपानहावारुह्य
विष्णुस्थानप्रवेशनम् ३० भेरीशब्देन
विना विष्णु-
प्रबोधनम् ३१ अजीर्णे सति
विष्णुस्पर्शनम् ३२ ।
एतदुपलक्षणम् । इत्याह्निकाचारतत्त्वम्
॥ * ॥
अपि च ।
धरण्युवाच ।
“तवापराधात् देवेश वर्ज्यान् यान्
वैष्णवेन च ।
निरापराधो मनुजः सापराधश्च जायते
॥
कर्म्मणाचरणे येन करणेन जुगुप्सितम् ।
तच्च पूजाफलं सर्व्वं जायते तद्वदस्व मे
॥
वराह उवाच ।
कर्म्मणा मनसा वाचा ये पापरुचयो
जनाः ।
भक्षणं दन्तकाष्ठस्य राजान्नस्य तु
भोजनम् ॥
मैथुनं शवसंस्पर्शं पुरीषोत्सगमेव च ।
सूतक्युदक्याः क्षपणं स्पर्शनं मेहनं तथा
॥
अभाष्यभाषणं कोपं पिण्याकस्य च
भक्षणम् ।

मुच्यते त्वपराधैस्तु तथा विष्णोः स्तवं पठन्
।
एतत्ते कथितं गुह्यं किमन्यत् श्रोतमिच्छमि ॥
धरण्युवाच ।
अस्ति कश्चिदुपायोऽत्र येन त्वं नृषु तुष्यमि ।
पूजितः सफलश्चासि अपराधविशोधनः ॥
वराह उवाच ।
संवत्सरस्य मध्ये तु तीर्थे सौकरवे मम ।
कृतोपवासः स्नानेन गङ्गायां शुद्धिमाप्नु यात्
।
मथुरायां तथाप्येवं सापराधः शुचिर्भवेत् ॥
अनयोस्तीर्थयोरेव यः सेवेत सकृन्नरः ।
सहस्रजन्मजनि तानपराधान् जहाति सः ।
स्नानात् पानात् तथा ध्यानात् कीर्त्तनाद्धा
रणात्तथा ।
श्रवणान्मननाच्चैव दर्शनाद् याति पातकम् ॥
इति वाराहपुराणे अपराधप्रायश्चित्तनामा-
ध्यायः ॥

**सेवि**, क्ली, (सेव्यते लोकैरिति । सेव + इन् ।)
फलविशेषः । सेओ इति हिन्दी भाषा । तत्प-
र्य्यायः । वदरम् २ सिञ्चितिकाफलम् ३
मुष्टि-
प्रमाणम् ४ सेवितम् ५ सेवम् ६ । अस्य
गुणाः । वातपित्तहरत्वम् । गुरुत्वम् । बृंह-
णत्वम् । कफकरत्वम् । वृष्यत्वम् । पाके
स्वादु-
रसत्वम् । हितत्यञ्च । इति राजनिर्घण्टः ॥

**सेविका**, स्त्री, मिष्टान्नविशेषः । सेओयाञि इति
भाषा । यथा, --
“समितावर्त्तिकाः कृत्वा सुसूक्ष्मा
यवसन्निभाः ।
शुष्काः क्षीरेण संसाध्या भोज्या घृतसिता-
न्विताः ॥”
अस्या गुणाः ।
“सेविका तर्पणी बल्या गुर्व्वी पित्तानिलापहा
ग्राहिणी सन्धिकृद्रुच्या तां
खादेन्नातिमात्रयया”
इति भावप्रकाशः ॥

अचिरेणैव विप्रर्षे प्रसादयति सोऽच्युतम् ॥
जगदुदधिमिमं ये तर्त्तुमिच्छन्ति मर्त्याः
प्रचुरतरगभीरं सर्व्वदुःखप्रदञ्च ।
परमपुरुपपादाम्भोजयुग्मं मनोज्ञं
त्रिदशनिवहसेव्यं ते तु सर्व्वे यजन्तु ॥”
इति पाद्मे क्रियायोगसारे १३ अध्यायः ॥
* ॥
अथ द्वात्रिंशत् सेवापराधाः । भगवद्भक्तानां
क्षत्त्रियसिद्धान्नभोजनम् १ अनिषिद्धदिने
दन्त-
धावनमकृत्वा विष्णोरुपसर्पणम् २ मैथुनं
कृत्वास्नात्वा विष्णोरुपसर्पणम् ३ मृतं नरं
स्पृष्ट्वास्नात्वा विष्णुकर्म्मकरणम् ४
रजस्वलां
स्पृष्ट्वा विष्णुगृहप्रवेशनम् ५ मानवं शवं
स्पृष्ट्वा-
स्नात्वा विष्णुंसन्निधावस्थानम् ६ विष्णुं
स्पृशतः
पायुवायुप्रयोगः ७ विष्णोः कर्म्म कुर्व्वतः
पुरीष-
त्यागः ८ विष्णुशास्त्रमनादृत्य शास्त्रान्तर-
प्रशंसा ९ अतिमलिनं वासः परिधाय
विष्णु-
कर्म्माचरणम् १० अविधानेनाचम्य
विष्णोरुप-
सपणम् ११ विष्णोरपराधं कृत्वा
विष्णोरुप्र-
सर्पणम् १२ क्रुद्धस्य विष्णवस्पर्शनम् १३
निषिद्ध-
पुष्पेण विष्णवर्च्चनम् १४ रक्तं वासः
परिधाय
विष्णोरुपसर्पणम् १५ अन्धकारे दीपेन
विना
विष्णोश्च स्पर्शनम् १६ कृष्णवस्त्रं
परिधाय विष्णोः
कर्म्माचरणम् १७ वायसोद्धृतवासः
परिधाय
विष्णोः कर्म्माचरणम् १८ विष्णवे
कुक्कुरोच्छिष्ट-
दानम् १९ वराहमांसं भुक्त्वा विष्णोरुप-
रक्तपारक्यमलिनं वस्त्रधारित्वनीलिजम्
॥
गुरोश्चालीकनिर्ब्बन्धं पतितान्नस्य
भक्षणम् ।
अभक्ष्यभक्षणञ्चैव तण्डुलीयविभीतकम्
॥
अदानं तु वरान्नस्य जालपादवराकयोः ।
भक्षणं देवतागारे सोपानत्कोपसर्पणम् ॥
तथैव देवपूजाजां निषिद्धकुसुमार्च्चनम् ।
अनुत्तार्य्य च निर्म्माल्यं पूजा
जीर्णान्धिकारयोः ॥
पानं सुराया देवस्य अन्धकारे प्रबोधनम्
।
वातकर्म्मार्च्चने विष्णोरनमस्करणं तथा
॥
अपराधास्त्रयस्त्रिंशत् समाख्याता मया
धरे ।
एभिर्युक्तस्तु पुरुषो विष्णुं नैव प्रपश्यति
॥
दूरस्थो न नमस्कारं कुर्य्यात् पूजा तु
राक्षसी ॥”
तत्प्रायश्चित्तं यथा, --
“एकरात्रं द्विरात्रं वा त्रिरात्रं स्नानमेव च ।
स्रवासाः पञ्चगव्याशी मलवस्त्रान्तिकं
क्रमात् ॥
नीलीरङ्गापनोदार्थं गोमयेन प्रघर्षणम् ।
प्राजापत्येन शुद्धिः स्यात् नीलीवस्त्रस्य
धार-
णात् ।
चान्द्रायणद्वयं कुर्य्यात् गुरोः
क्षमितमुत्तमम् ।
चान्द्रायणं पराकञ्च पतितान्नस्य
भक्षणात् ॥
चान्द्रायणं पराकञ्च प्राजापत्यं तथैव च ।
गोप्रदानञ्च भोज्यञ्च अभक्ष्यस्य च
भक्षणे ॥
उपवासस्तु पञ्चाहं पञ्चगव्येन शुध्यति ।
सोपानत्कश्चरेत् पादं कृच्छ्रस्य
द्विरभोजनम् ॥
पुष्पाभावेऽर्च्चनं स्नानं देवस्पर्शञ्च
कारयेत् ।
(दासी । भुजिष्या । इति केचित् ॥)

**सेवितः**, त्रि, (सेव + क्तः ।) समुपासितगुर्व्वादिः ।

तत्पर्य्यायः । वरिवसितः २ वरिवस्यितः ३
उपासितः ४ उपचरितः ५ । इति शब्दरत्ना-
वली ॥ आराधितः । उपभुक्तः । आश्रितः ।
इति सेवधात्वर्थदर्शनात् ॥ (यथा, महाभारते
।
१ । १७ । ६ ।
“काञ्चनाभरणं चित्रं देवगन्धर्व्वसेवितम् ॥”)

**सेविफले**, क्ली, । इति राजनिर्घण्टः ॥

**सेव्यं**, क्ली, (सेव्यते इति । सेव + ण्यत् ।) वीरण-

मूलम् । इत्यमरः । २ । ४ । १६४ ॥ (अस्य
पर्य्यायो यथा, --
“वीरणस्य तु मूलं स्यादुशीरं नलदञ्च तत् ।
अमृणालञ्च सेव्यञ्च समगन्धिकमित्यपि ॥”
इति भावप्रकाशे पूर्व्वखण्डे १ भागे ॥
लामज्जकम् । उशीरवत्पीतच्छवितृणविशेषः
।
तत्पर्य्यायो यथा, --
“लामज्जकं सुनालं स्यादमृणालं लयं लघुः
।
इष्टकापथकं सेव्यं नलदञ्चावदातकम् ॥
इति च भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे
॥

| | | |
|---|---|---|
| सर्पणम् २० हंसजालपदसरारिमांसं भुक्त्वा<br>विष्णोरुपसर्पणम् २१ दीपं स्पृष्ट्वा हस्तमप्रक्षाल्य<br>विष्णोः स्पर्शनं कर्म्मकरणं वा २२ श्मशानं | अनिर्म्माल्ये नमस्कारं स्नानं पञ्चामृतेन तु ॥<br>सुरापाने द्विजातीनां चान्द्रायणचतुष्टयम् ।<br>तथैव द्वादशाष्टौ तु प्राजापत्यत्रयं चरेत् ॥<br>ब्रह्मकूर्च्चेन शुद्धिः स्यात् गोप्रदानत्रयेण च ।<br>त्रयाणामेकरात्रेण पञ्चामृतनिषेवणात् ॥ | |

"स्यादुशोरं मृणालञ्च सेव्यं
लामज्जकन्तथा ।"
इति गारुडे २०८ अध्यायः ॥)

**सेव्यः**, पुं, (सेव्यते इति । सेव + ण्यत् ।) अश्वत्थ-

वृक्षः । इति राजनिर्घण्टः ॥ हिज्जलवृक्षः ।
इति शब्दरत्नावली ॥

**सेव्यः**, त्रि, (सेवृ सेवने + ण्यत् ।) सेवार्हः ।

इति मेदिनी ॥ (यथा, कथासरित्सागरे ।
५२ ।
१३७ ।
"अहं तं सेव्यमन्येषां करिष्यामीश्वरं क्षणात्
।
तत्तं वृणीष्व भर्त्तारं यदि ते पुत्त्रि रोचते
॥")

**सेव्या**, स्त्री, (सेव + ण्यत् । टाप् ।) वन्दावृक्षः ।

इति शब्दरत्नावली ॥

**सै**, क्षित्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-पर-

अक०-अनिट् ।) सायति । क्षितिः क्षयः ।
इति
दुर्गादासः ॥

**सैंहः**, त्रि, (सिंहस्यायमिति । सिंह + अण् ।)

सिंहसम्बन्धी । सिंहतुल्यः । इति
सिद्धान्त-
कौमुदी ॥ (स्त्रियां ङीप् । यथा, माघे । १ ।
४७ ।
"सटाच्छटाभिन्नघनेन विभ्रता
नृसिंह सैंहीमतनुं तनुं त्वया ।
स मुग्धकान्तास्तनसङ्गभङ्गुरै-
रुरोविदारं प्रतिचस्करे नखैः ॥

**सैंहली**, स्त्री, (सिंहले देशे भवा । सिंहल +

अण् । ङीप् ।) सिंहपिप्पली । तत्पर्य्यायः ।
सर्प-
दण्डा २ सर्पाङ्गी ३ ब्रह्मभूमिजा ४ पार्व्वती
५

"शैली दारुमयी लौही लेप्या लेख्या च
सैकती ।
मनोमयी मणिमयी प्रतिमाष्टविधा स्मृता
॥")

**सैकतिकं**, क्ली, मातृयात्रा । मङ्गलसूत्रकम् ।

इति मेदिनी ॥

**सैकतिकः**, पुं, (सैकतं पुलिनं प्रियत्वेनास्त्यस्येति
।

सैकय + ठन् ।) संन्यस्तः । क्षपणकः ।
सन्देह-
जीविनि, त्रि । इति मेदिनी ॥

**सैकतेष्टं**, क्ली, (सैकतं स्थानमिष्टमस्य ।)
आर्द्रकम् ।

इति राजनिर्घण्टः ॥ वालुकामयप्रिये, त्रि
॥

**सैतवाहिनी**, स्त्री, बाहुदानदी । इत्यमरः । १ ।

१० । ३३ ।

**सैद्धान्तिकः**, त्रि, (सिद्धान्तं वेत्तीति । सिद्धान्त +

ठक् ।) सिद्धान्तज्ञः । इति हेमचन्द्रः
कौमुदी
च ॥

**सैनापत्यं**, क्ली, (सेनापतेर्भावः कर्म्म वा ।
सेनापति

+ "पत्यन्तपुरोहितादिभ्योयक् ।" ५ ।
१ । १२८ ।
इति यक् ।) सेनापतेर्भावः । तत्कर्म्म च
।
इति सिद्धान्तकौमुदी ॥ (यथा, मनुः ।
१२ । १०० ।
"सैनापत्यञ्च राज्यञ्च दण्डनेतृत्वमेव च
।
सर्व्वलोकाधिपत्यञ्च वेदशास्त्रविदर्हति
॥"
सेनापतेरिदमिति । "दित्यदित्यादित्येति
।" ४ ।

पूतं स्वादु त्रिदोषघ्नं व्रणदोषविबन्धजित् ॥
सैन्धवं द्विविधं ज्ञेयं सितं रक्तमिति क्रमात्
॥
रसवीर्य्यविपाकेषु गुणाढ्यं कथितं सितम्
॥"
इति राजनिर्घण्टः ॥
अपि च ।
"सैन्धवं लवणं स्वादु दीपनं पाचनं तघु ।
स्निग्धं रुच्यं हिमं वृष्यं सूक्ष्मनेत्रं त्रिदोषहृत्
॥"
इति भावप्रकाशः ॥
किञ्च ।
"सैन्धवं दोषजिद्वृष्यं चक्षुष्यमविदाहि च ।
अग्निसन्दीपनं स्निग्धं रोचनं मधुरं लघु ॥"
इति राजवल्लभः ॥
तत्तु हविष्यान्नम् । यथा, स्मृतिः ।
"लवणे सेन्धवसामुद्रे गव्ये च दधिसर्पिषी
।"
इति हविष्यान्नगणने तिथ्यादितत्त्वम् ॥

**सैन्धवः**, पुं, (सिन्धुरभिजनोऽस्येति । सिन्धु +

"सिन्धुतक्षशिलादिभ्योऽणञौ।" ४ । ३ ।
९३ । इति
अण् ।) घोटकः । स तु सिन्धोरदूरभवः ।
विकारसंघेति अदूरभवार्थे ष्णः । इत्यमर-
भरतौ । २ । ८ । ४४ । (यथा, भागवते । ९
। १ । २३ ।
"स एकदा महाराज ! विचरन् मृगयां वने ।
वृतः कतिपयामात्यैरश्वमारुह्य सैन्धवम् ॥"
सिन्धुदेशाधिपतिः । जयद्रथः । यथा, महा-
भारते । १ । १ । १९६ ।
"यदा द्रोणः कृतवर्म्मा कृपश्च
कर्णो द्रौणिर्भद्रराजश्च शूरः ।
अमर्षयन् सैन्धवं वध्यमानं
तदा नाशंसे विजयाय सञ्जय ॥"
सिन्धुदेशोत्पन्नमात्रे । यथा, तत्रैव । ३ ।
५१ ।
२४
"हारहूनांश्च चीनांश्च तुखारान्
सैन्धवांस्तथा ॥")

शैलजा ६ ताम्रा ७ लम्बबीजा ८ उत्कटा ९
अद्रिजा १० सिंहलस्था ११ लम्बदन्ता १२
जीवला १३ जीवाला १४ जीवनेत्री १५
कुरुम्बी १६ । अस्या गुणाः । कटुत्वम् । उष्ण-
त्वम् । जन्तुनाशित्वम् । दीपनत्वम् । कफश्वास-
समीरात्तिशमनत्वम् । कोष्ठशोधनत्वञ्च ।
इति राजनिर्घण्टः ॥ सिंहलद्वीपभवे, त्रि ॥

**सैंहिकः**, पुं, (सिंहिकायां भवः । अण् ।) राहुः ।
इति शब्दरत्नावली ॥

**सहिकेयः**, पुं, (सिंहिकाया अपत्यं पुमानिति ।
सिंहिका + ढक् ।) राहुः । इत्यमरः ॥ (यथा,
माघे । २ । ३५ ।
"ध्रियते यावदेवकोऽपि रिपुस्तावत् कुतः सुखम्
पुरः क्लिश्नाति सोमं हि सैंहिकेयोऽसुर-
द्विषाम् ॥")

**सेकतं**, क्ली, (सिकताः सन्त्यत्रेति । अण् ।)
वालुकामयतटम् । इत्यमरः । १ । ३ । २६ ॥
(यथा, कुमारे । १ । २९ ।
"मन्दाकिनीसैकतवेदिकाभिः
सा कन्दुकैः कृत्रिमपुत्त्रकैश्च ।
रेमे मुहुर्मध्यगता सखीनां
क्रीडारसं निर्विशतीव बाल्ये ॥"

**सैकतः**, त्रि, (सिकताः सन्त्यत्रेति । सिकता +
"सिकताशर्कराभ्याञ्च ।" ५ । २ । १०४ । इति
अण् ।) सिकतामयः । इत्यमरः । १ । १० । ९ ॥
तत्पर्य्यायः । सिकतिलः २ सिकतावान् ३ । इति
राजनिर्घण्टः ॥ (यथा, भागवते । ११ ।
२८ । १२ ।
१ । ८५ । इति ण्यः ।)
सेनापतिसम्बन्धिनि,
त्रि ॥

**सैनिकः**, पुं, (सेनां समवैतीति । सेना + "सेनाया
वा ।" ४ । ४ । ४५ । इति पक्षे ठक् ।) सेनायां
समवेतः । इत्यमरः । २ । ९ । ६१ ॥ मिलित-
हंस्त्यश्वरथपादातं सेना तत्र ये समवेताः एक-
देशीभूतास्ते सैन्याः सैनिकाश्च । इति भरतः ॥
(यथा, रघुः । ३ । ६१ ।
"निमेषमात्रादवधूय तद्व्यथां
सहोत्थितः सैनिकहर्षनिस्वनैः ॥")
सैन्यरक्षकः । इति मेदिनी अमरश्च ॥ प्राणि-
वधनियुक्तः । यथा, श्रीभागवते पञ्चमस्कन्ध-
गद्यम् । ये त्विह वै पुरुषाः पुरुषमेधेन यजन्ते
याश्च स्त्रियो नृपशून् खादन्ति तांश्च ताश्च ते
पशव इह निहता यमसदने यातयन्तो रक्षो-
गणाः सैनिका इव स्वधितिना अवदायासृक्
पिबन्तीति । सैनिकाः प्राणिवधनियुक्ताः । इति
तिथ्यादितत्त्वम् ॥ सेनासम्बन्धिनि, त्रि ॥ (यथा,
महाभारते । ७ । १९० । ४१ ।
"एवं तं निहतं संख्ये ददृशे सैनिको जनः ॥")

**सैन्धवं**, क्ली, पुं, (सिन्दौ समुद्रतीरे सिन्धुदेशे वा
भवम् । सिन्धु + "अणञौ च ।" ४ । ३ । ३३ । इति
अण् ।) लवणविशेषः । स तु सिन्धुनद्युपलक्षित-

**सैन्धी**, स्त्री, तालादिरसनिर्य्यासः । तत्पर्य्यायः ।
हाला २ । अस्या गुणाः । शीतत्वम् । कषाय-
त्वम् । अम्लत्वम् । पित्तदाहनाशित्वम् । वात-
दत्वञ्च । इति राजनिर्घण्टः ॥

**सैन्यं**, क्ली, (सेना एव । चतुवर्णादित्वात् ष्यञ् ।)
सेना इत्यमरः । २ । ८ । ७८ ॥ (यथा,
मार्कण्डेये । ८७ । २१ ।
"हतशेषं ततः सैन्यं दृष्ट्वा चण्डं निपातितम् ।
मुण्डञ्च सुमहावीर्य्यं दिशो भेजे भयातुरम् ॥")

**सैन्यः**, पुं, (सेनां समवैतीति । सेना + "सेनाया
वा ।" ४ । ४ । ४५ । इति ण्यः ।) सेनासमवेतः ।
इत्यमरः । २ । ८ । ६१ । "मिलितहत्स्यश्वरथ-
पादातं सेना तत्र ये समवेता एकदेशीभूतास्ते
सैन्याः सैनिकाश्च ।" इति भरतः ॥ किञ्च ।
"सैन्यं क्लीवं बलेऽंशे ना समवेते तु वाच्यवत् ॥"
इति मेदिनी ॥

**सैन्यपृष्ठं**, क्ली, (सैन्यस्य पृष्ठम् ।) सैन्यस्य पश्चा-
द्भागः । यत्र स्थिते राजा स्वसैन्यं प्रतिगृह्णाति ।
तत्पर्य्यायः । प्रतिग्रहः २ । इत्यमरः ॥ परि-
ग्रहः ३ । इति भरतः ॥ पतद्ग्रहः ४ । इति
टीकान्तरम् ॥

| | | |
|---|---|---|
| | देशोद्भवः । तत्पर्य्यायः । शीतशिवम् २ माणि-<br>मन्थम् ३ सिन्धुजम् ४ । इत्यमरः । २ । ९ । ४२ ॥<br>वशिरम् ५ सिन्धुदेशजम् ६ माणिबन्धम् ७ ।<br>इति जटाधरः ॥ शितशिवम् ८ । इति शब्द-<br>रत्नावली ॥ नादेयम् ९ शिवम् १० सिद्धम् ११<br>शिवात्मजम् १२ पथ्यम् १३ । अस्य गुणाः ।<br>"सैन्धवं लवणं वृष्यं चक्षुष्यं दीपनं रुचि । | |

**सैमन्तिकं**, क्ली, सिन्दूरम् । इति केचित् ॥ सीमन्त-
शब्दात् ष्णिकप्रत्ययेन निष्पन्नम् ॥

**सैरन्ध्री**, स्त्री, (स्वैरं स्वाच्छन्द्यं धरतीति । धृ +
मूलविभुजादित्वात् कः । पृषोदरादित्वात्
साधुः ।) अन्यवेश्मस्था स्वतन्त्रा
शिल्पजीविनी ।
इत्यमरः । २ । ६ । १८ । (यथा,
महाभारते ।
३ । ६५ । ५१ ।
"सैरन्ध्रीमभिजानीष्व सुनन्दे देवरूपिणीम्
।
वयसा तुल्यतां प्राप्ता सखी तव भवत्वियम्
॥")
द्रौपदी । इति हेमचन्द्रः ॥
(वर्णसङ्करसम्भूत-
स्त्री । यथा, महाभारते । १३ । ४८ । १९
।
"अगम्यागमनाच्चैव जायते वर्णसङ्करः ।
बाह्यानामनुजायन्ते सैरन्ध्र्यां मागधेषु च ।
प्रसाधनोपचारज्ञमदासन्दासजीवनम्॥")

**सैरिकः**, पुं, (सीर + ठक् ।) सीरेण लाङ्गलेन
खनति यः । कृषान् इति भाषा ॥ (सीरं
वह-
तीति । सीर + "हलसीरात् ठक् ।" ४ । ४
।
८१ । इति ठक् ।) सीरस्य वोढा । हेलेगरु-
इति भाषा ॥ (सीरस्येदमिति । "हलसीरात्
ठक् ।" ४ । ३ । १२४ । इति ठक् ।)
सीर-
सम्बन्धिनि, त्रि । तेषां पर्य्यायः । हालिकः
२
लाङ्गलिकः ३ । इत्यमरः । २ । ९ । ६४
॥

**सैरिन्ध्री**, स्त्री, (स्वैरं स्वातन्त्र्यं धरतीति । धृ +
मूलविभुजादित्वात् कः । पृषोदरादित्वात्
साधुः । गौरादित्वात् ङीष् ।) परवेश्मस्था
अथास्य गुणाः ।
"सैरेयः कुष्ठवातास्रकफकण्डूविषापहः ।
तिक्तोष्णो मधुरोऽनम्लः सुस्निग्धः
केशरञ्जनः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे
॥)

**सैरेयकः**, पुं, (सैरेय एव । स्वार्थे कन् ।) झिण्टी ।
इति राजनिर्घण्टो भरतश्च ॥ (अस्य
पर्य्यायो
यथा, भावप्रकाशस्य पूर्व्वखण्डे प्रथमे
भागे ।
"सैरेयकः श्वेतपुष्पः सैरेयः कटसारिका ।
सहाचरः सहचरः स च भिन्द्यपि कथ्यते
॥")

**सैवालं**, क्ली, शैवालम् । यथा, --
"या पांशुपाण्डरवपुर्व्विरसा पुरासीत्
सैवालकाङ्कुरलतामधुना विभर्त्ति ।
वक्रं प्रसर्पति तनोर्वितनोति लक्ष्मीं
प्रायः पयोधरसमुन्नतिरत्र हेतुः ॥"
इति प्रसिद्धश्लेषकाव्यम् ॥

**सोः**, स्त्री, पार्व्वती । इति केचित् ॥ षोधातोः
क्विप्प्रत्ययेन निष्पन्ना ॥

**सोढः**, त्रि, (सह मर्षणे + क्तः । "सहिवहोरोद-
वर्णस्य ।" ६ । ३ । ११२ । इति
अवर्णस्य
ओत् ।) क्षान्तः । इत्यमरः । ३ । १ । ९७
॥
दुःखादिसहनशीलः । इति तट्टीकायां
नील-
कण्टः ॥

**सोढा**, [ऋ] त्रि, (सहते इति । सह + तृच् ।)
क्षमायुक्तः । शक्तः । इति मेदिनी ॥ (यथा,
महाभारते । ७ । २६ । ६ ।
"सोढा शस्त्रनिपातानामग्निस्पशस्यचानघ
।

**सोदरा**, स्त्री, सहोदरा भगिनी । इति सोदर-
शब्दादाप्प्रत्ययेन निष्पन्ना ॥

**सोदर्य्यः**, पुं, (समानोदरे शयितः । सोदर +
"सोदरात् यः ।" ४ । ४ । १०९ । इति
यः ।) सहो-
दरः । इत्यमरः । २ । ६ । ३४ ॥ (यथा,
रघुः । १५ । २६ ।
"स हत्वा लवणं वीरस्तदा मेने महौजसम्
।
भ्रातुः सोदर्य्यमात्मानमिन्द्रजिद्वधशोभिनः
॥")

**सोनहः**, पुं, लसुनम् । इति शब्दरत्नावली ॥

**सोन्मादः**, त्रि, (उन्मादेन सह वर्त्तमानः ।)
उन्मदः । उन्मदिष्णुः । तस्य रूपान्तराणि
यथा ! उन्मादः । सून्मादः । सून्मदः ।
इत्य-
मरटीकायां भरतः । ३ । १ । २३ ॥

**सोपकरणं**, त्रि, उपकरणेन सह वर्त्तमानम् ।
उपकरणविशिष्टम् । यथा, --
"एवञ्च अमुककाम इति सोपकरणं
वत्सतरी-
चतुष्टययुक्तं वृषमिति चाभिलप्य उत्सर्गः
सङ्ग-
च्छते ।" इति वृषोत्सर्गतत्त्वम् ॥ इदं सोप-
करणमामान्नैवेद्यममुकदेवतायै नमः ।
इति
च पूजापद्धतिः ॥

**सोपकारः**, त्रि, उपकारविशिष्टः । उपकारेण
सह वर्त्तमान इति बहुव्रीहिसमासे कृते
सह-
शब्दस्य सादेशेन निष्पन्नः ॥

**सोपधं**, त्रि, (उपधया सह वर्त्तमानमिति ।)
सच्छद्मदानादि । यथा हारीतः ।
अथासद्द्रव्य-
दानमस्वर्ग्यं यच्च दत्त्वा परितप्यते ।
तद्यदान-

स्ववशा शिल्पकारिका । इत्यमरः । २ । ६
।
१८ ॥ तत्पर्य्यायः । सैरन्ध्री २ सैरिन्ध्रिः
३ । इति
तट्टीका ॥ (यथा, महाभारते । ४ । ८ । २
।
"वासश्च परिधायैकं कृष्णं सुमलिनं महत्
।
कृत्वा वेशं हि सैरिन्ध्र्याः कृष्णा च व्यचरत्
तदा ॥")
वर्णसङ्करसम्भूतस्त्री । महल्लिका । इति
मेदिनी ।
द्रौपदी । इति धरणिः ॥ (यथा, महाभारते ।
४ । २३ । ५ ।
"यथा सैरिन्ध्रीदोषेण न ते राजन्निदं पुरम् ।
विनाशमेति वै क्षिप्रं तथा नीतिर्विधीयताम्
॥"

**सैरिभः**, पुं, (सीरे लाङ्गलवहने इभ इव । शक-

न्धादित्वात् साधुः । ततः स्वार्थे अण् ।)
महिषः ।
इत्यमरः । २ । ५ । ४ ॥ स्वर्गः । इति
त्रिकाण्ड-
शेषः ॥

**सैरीयः**, पुं, (सीरे भवः । अण् । सैरः कर्षस्तत्र

भवः । वृद्धात् छः ।) झिण्टी । इति शब्द-
रत्नावली ॥

**सैरीयकः**, पुं, (सैरीय एव । स्वार्थे संज्ञायां वा

कन् ।) झिण्टी । इत्यमरः । २ । ४ । ७५
॥
अस्य गुणः । कफवातनाशित्वम् । इति
राज-
वल्लभः ॥

**सैरेयः**, पुं, (सैरे कर्षे भवः । सैर + "नद्यादिभ्यो

ढक् ।" ४ । २ । ९७ । इति ढक् ।) झिण्टी
। इति
शब्दमाला भरतश्च ॥ (अस्य पर्य्यायो
यथा, --
"सैरेयकः श्वेतपुष्पः सैरेयः कटसारिका ।
स पाण्डवबलं सर्व्वमद्यैको नाशयिष्यति
॥")

**सोत्कण्टः**, त्रि, (उत्कण्टया सह वर्त्तमानः ।)

उत्कण्टायुक्तः । तत्पर्य्यायः । उत्कः २
उन्मनाः
३ । इति जटाधरः ॥ (यथा, कथासरित्-
सागरे । ३१ । ४५ ।
"तत्रोद्यानगत सा तं वत्सेशं सख्युदीरितम्
।
ददर्श दूरात् सोत्कण्ठा चकीरीवामृतत्वि-
षम् ॥")

**सोत्प्रासं**, क्ली, (उत्प्रासेन सह वर्त्तमानम् ।)

प्रियावाक्यम् । यथा, शब्दरत्नावल्याम् ।
"सोल्लुण्टनन्तु सोत्प्रासं चटु चाटु
प्रियोदितम् ॥"

**सोत्प्रासः**, पुं, (उत्प्रासेन आधिक्येन सह वर्त्त-

मानः ।) सशब्दहास्यम् । यथा, --
"सोत्प्रास आच्छुरितकमवच्छुरितकं तथा
।
अट्टहासो महाहासो हासः प्रहास इत्यपि
॥"
इति शब्दरत्नावली ॥

**सोदयं**, त्रि, उदयेन सह वर्त्तमानम् । वृद्धियुक्तम् ।

सुद् समेत् इति भाषा । यथा, --
"दत्तां कन्यां हरन् दण्ड्यो व्ययं दद्याच्च
सोदयम्
मृतायां वर आदद्यात् परिशोध्योभयव्ययम्
॥"
इत्युद्वाहतत्त्वधृतयाज्ञवल्क्यवचनम्॥

**सोदरः**, पुं, (सह समानं उदरं यस्य । सहस्य

सः ।) सहोदरः । इति शब्दरत्नावली ॥
(यथा, मनुः । ८ । २९९ ।
"भार्य्या पुत्त्रश्च दासश्च शिष्यो भ्राता च
सोदरः ।
प्राप्तापराधास्ताड्याः स्यूरज्वा वेणुदलेन
वा ॥")
मफलं यच्चोपकारिणे ददाति तन्मात्रं परि-
क्लिष्टं यच्च सोपधं ददाति
अन्यश्रावितमल्पं
यच्चापात्राय ददाति अनिष्टदानं स्रवति
यच्च
दत्त्वा प्रकीर्त्तति स्मयदानं यच्चाश्रद्धया
ददाति
क्रोधाद्राक्षसं यच्चाक्रुश्य ददाति दत्त्वा
वाक्रो-
शति असत्कृतं पैशाचं यच्चावज्ञातं ददाति
दत्त्वा वावजानीते मुमूर्षोस्तामसं
यच्चाप्रकृतो
ददाति । एते दानोपसर्गा यैरुपसृष्टं दान-
मप्रसिद्धमस्वर्ग्य मयशस्यमध्रुवफलं
भवत्यल्पफलं
वेति । तर्हि त्यागानन्तरकाले
हस्तार्पणसम्भवे-
ऽपि अदानमसमर्पणम् । उपकारिणे
व्यसनो-
पकारिणे । तन्मात्रं यथोक्तोपकरणरहितम्
।
सोपधं सच्छद्म । अन्यश्रावितं
लोकसम्भाव-
नार्थं प्रकाशितम् । अनिष्टदानं शत्रवे दानम्
।
स्मयो मानभङ्गः । अप्रकृतो भयादिमान् ।
इति
शुद्धितत्त्वम् ॥

**सोपप्लवः**, पुं, (उपप्लवेन सह वत्तमानः ।) राहु-

ग्रस्तः चन्द्रः सूर्य्यश्च । इत्यमरः । १ । ४
। १० ॥

**सोपवासः**, त्रि, (उपवासेन सह वर्त्तमानः ।)

उपवासविशिष्टः । यथा, --
"मत्स्यांस्तु कामतो जग्ध्वा
सोपवासस्त्र्यहं वसेत् ॥"
इति तिथ्यादितत्त्वे याज्ञवल्क्यवचनम् ॥

**सोपाकः**, पुं, श्वपाकः । इति केचित् ॥ (चण्डालात्

पुक्कस्यां समुत्पन्नोऽन्त्यजजातिविशेषः ।
यथा,

| | | |
|---|---|---|
| सहाचरः सहचरः स च भिन्द्यपि कथ्यते ॥" | | मनुः । १० । ३८ ।<br>"चण्डालेन तु सोपाको मूलव्यसनवृत्तिमान्।<br>पुक्कस्यां जायते पापः सदा सज्जनगर्हितः ॥") |

**सोपाधिः**, त्रि, (उपाधिना सह्व वर्त्तमानः ।)

उपाधियुक्तः । प्रतिलाभेच्छादिना दानादिः ।
यथा नारदः ।
“अदत्तन्तु भयक्रोधकामशोकरुगन्वितैः ।
बालमूढास्वतन्त्रार्त्तमत्तोन्मत्तापवर्जितैः ॥
कर्त्ता ममेदं कर्म्मेति प्रतिलाभेच्छया च यत्
॥”
प्रतिलाभेच्छया
सोपाधिदत्तमुपाध्यसिद्धावसिद्ध
मिति विवादचिन्तामणिः । इति शुद्धितत्त्वम्
॥

**सोपानं**, क्ली, (उपानमुपरिगमनं तेन सह विद्य-

मानम् ।) आरोहणम् । इत्यमरः । २ । २ ।
१८ ॥
इष्टकादिरचिते पयिठा इति ख्याते । देशान्तरे
खडखडीति यत् प्रसिद्धम् । आरुह्यते अनेन
आरोहणं अनट् । उपपूर्व्वादनितेर्भावे अल्
अनेकार्थत्वादुपानं ऊर्द्धगमनं तेन सह वर्त्तते
सोपानम् । सोपानसिद्धसाध्याः संवाधसमूढ-
सत्राणीति दन्त्यादावुष्मविवेकः । इति भरतः
॥
किञ्च ।
“आरोहणञ्च सोपानं पैठा इति समाह्वये ।
सोपाने काष्ठघटिते निःश्रेणिस्त्वधिरोहिणी ॥
निःश्रेणी स्यान्निःश्रयणी तथा निःश्रेयिणी-
त्यपि ॥”
इति शब्दरत्नावली ॥
(यथा, कुमारे । १ । २९ ।
“मध्ये न सा वेदिविलग्नमध्वा
बलित्रयं चारु बभार बाला ।
आरोहणार्थं नवयौवनेन
कामस्य सोपानमिव प्रयुक्तम् ॥”

**सोभाञ्जनः**, पुं, शोभाञ्जनः । इत्यमरटीकायां

भरतः । २ । ४ । २१ ॥

**सोमं**, क्ली, (सुप्रसवैश्वर्य्ययोः + मन् ।) काञ्जिकम् ।

स्वर्गः । इति केचित् ॥

**सोमः**, पुं, (सौति अमृतमिति । सु प्रसवे +

गायत्र्यस्त्रैष्टुभः पाङ्क्तो जागतः
शाङ्करस्तथा ।
अग्निष्टोमो रैवतश्च यथोक्त इति संज्ञितः ॥
गायत्र्या त्रिपदा युक्तो यश्चोडु पतिरुच्यते
।
एते सोमाः समाख्याता वेदोक्तैर्नामभिः
शुभैः ॥
सर्व्वेषामव चैतेषामेको विधिरुपासने ।
सर्व्वे तुल्यगुणाश्चैव विधानं तेषु वक्ष्यते ॥
अतोऽन्यतमं सोममुपयुयुक्षुः
सर्व्वोपकरणपरि-
चारकोपेतः प्रशस्तदेशे त्रिवृतमागा कार-
यित्वा हृतदोषः प्रतिसंसृष्टभक्तः प्रशस्तेषु
तिथिकरणमुहूर्त्तनक्षत्रेषु अंशुमन्तमादाय-
ध्वरकल्पेनाहृतमभियुतमभिहुतं
चान्तरागारे
कृतमङ्गलः सोमकन्दं सुवर्णसूच्या
विदार्य्य पयो
गृह्णीयात् सौवर्णे पात्रेऽञ्जलिमात्रं ततः
सकृ-
देवोपयुञ्जीत नास्वादयंस्तत उपस्पृश्य
शेषम-
प्स्ववसाद्य यमनियमाभ्यामात्मानं
संयोज्य वाग्-
यतोऽभ्यन्तरतः सुहृद्भिरुपास्यमानो
विहरेत् ॥
रसायनं पीतवांस्तु निवाते तन्मनाः शुचिः
।
आसीत तिष्ठेत् क्रामेच्च न कथञ्चन
संविशेत् ॥
सायं वा भुक्तवान् श्रुतशान्तिः
कुशशय्यायां
कृष्णाजिनोत्तरायां सुहृद्भिरुपास्यमानः
शयीत
तृषितो वा शीतोदकमात्रां पिबेत्ततः प्रात-
रुत्थायोपश्रुतशान्तिः कृतमङ्गलो गां
स्पृष्ट्वा
तथैवासीत । तस्य जीर्णे सोमे
छर्दिरुपपद्यते

ततोऽस्य नखा जायन्ते
विद्रुमेन्द्रगोपकतरुणा-
दित्यप्रकाशाः स्थिराः स्निग्धा
लक्षणसम्पन्नाः
केशाश्च जायन्ते त्वक् च
नीलोत्पलातसीपुष्पवै-
दूर्य्यप्रकाशा । ऊर्द्धञ्च सामान् केशान्
वाप-
येत् वापयित्वा
चोशीरचन्दनकृष्णतिलकल्कैः
शिरः प्रदिह्यात् पयसा वा स्नापयेत् ॥

ततोऽस्यानन्तरं सप्तरात्रात्
केशा जायन्ते

भ्रमराञ्जननिभाः कुञ्चिताः
स्निग्धास्ततस्त्रिरा-
त्रात् प्रथमपरिसरान्निष्क्रम्य मुहूर्त्तं
स्थित्वा पुन-
रेवान्तः प्रविशेत् । ततोऽस्य
षलातैलमभ्यङ्गा-
र्थेऽवचार्य्यम् । यवपिष्टमुद्वर्त्तनार्थे ।
सुखोष्णञ्च
पयः परिषेकार्थे ।
अजकर्णकषायमुत्मादनार्थे ।
सोशीरं कूपोदकं स्नानार्थे ।
चन्दनमनुलेपनार्थे ।
आमलकरस-विमिश्राश्चास्य
यूषसूपविकल्पाः ।
क्षीरमधुकसिद्धञ्च कृष्णतिलमवचारणार्थे
। एवं
दशरात्रं ततोऽन्यद्दशरात्रं द्वितीये परिसरे
वर्त्तेत । ततस्तृतीये परिसरे
स्थिरीकुर्व्वन्नात्मान-
मन्यदशरात्रमासीत ।
किञ्चिदातपपवनान् वा
सेवेत पुनश्चान्तः प्रविशेत् । न
चात्मानमादर्शेषु
वा निरीक्षेत रूपशालित्वात्
ततोऽन्यद्दशरात्रं

"अर्त्तिस्तुसुहुस्रिति ।" उणा० १ । १३९ । इति
मन् ।) चन्द्रः । इत्यमरः । १ । ३ । १४ ॥ (यथा,
हरिवंशे । ४ । २ ।
"द्विजानां वीरुधाञ्चैव नक्षत्रग्रहयोस्तथा ।
यज्ञानां तपसाञ्चैव सोमं राज्येऽभ्यषेचयत् ॥")
कर्पूरः । इति चामरः । २ । ६ । १३० ॥ वानरः ।
कुबेरः । यमः । वायुः । वसुभेदः । (यथा,
मात्स्ये । ५ । २१ ।
"आपो ध्रुवश्च सोमश्च धरश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः ॥")
जलम् । सोमलतौषविः । इति मेदिनी ॥ (अस्य
विवरणं यथा, --
"ब्रह्मादयोऽसृजन् पूर्व्वममृतं सोमसंज्ञितम् ।
जरामृत्युविनाशाय विधानं तस्य वक्ष्यते ॥
एक एव खलु भगवान् सोमः स्थाननामाकृति-
वीर्य्यविशेषैश्चतुर्व्विंशतिधा भिद्यते । तद्यथा,
अंशुमान् भूञ्जवांश्चैव चन्द्रमा रजतप्रभः ।
दूर्व्वासोमः कनीयांश्च श्वेताक्षः कनकप्रभः ॥
प्रतानवांस्तालवृन्तः करवीरोऽंशवानपि ।
स्वयम्प्रभो महासोमो यश्चापि गरुडाहृतः ॥

ततः शोणिताक्तं कृमिव्यामिश्रं छर्द्दितवतः सायं
श्टतशीतं क्षीरं वितरेत् । ततस्तृतीयेऽहनि
कृमिव्यामिश्रमतिसार्य्यते स तेनानिष्टप्रतिग्रह-
भुक्तप्रभृतिभिर्व्विशेषैर्मुक्तः शुद्धतनुर्भवति ततः
सायं स्नातस्य पूर्व्ववदेव क्षीरं वितरेत् । क्षौम-
वस्त्रास्तृतायां चैनं शय्यायां शाययेत ततश्चतुर्थ-
ऽहनि तस्य श्वयथुरुत्पद्यते । ततः सर्व्वाङ्गेभ्यः
कृमयो निष्क्रामन्ति तदहश्च शय्यायां पांशुभिर-
वकीर्य्यमाणः शयीत । ततः सायं पूर्व्ववदेव
क्षीरं वितरेत् । एवं पञ्चमषष्ठयोर्द्दिवसयो-
र्व्वर्त्तेत केवलसुभयकालमस्मै क्षीरं वितरेत्ततः
सप्तमेऽहनि निर्म्मांसस्त्वगस्थिभूतः केवलं सोम-
परिग्रहादेवोच्छसिति । तदहश्च क्षीरेण सुखो
ष्णेन परिषिच्य तिलमधुकचन्दनानुलिप्तदेहं
पयः पाययेत् । ततोऽष्टमेऽहनि प्रातरेव क्षीर-
परिषिक्तं चन्दप्रदिग्धगात्रं पयः पाययित्वा
पांशुशय्यां समुत्सृज्य क्षौमास्तृतायां शायये-
त्ततो मांसमाप्याय्यते त्वक्चावदलति । दन्त-
नखरोमाणि चास्य पतन्ति । तस्य नवमदिव-
सात् प्रभृत्यणुतैलाभ्यङ्गः सोमवल्ककषायपरि-
षेकः । ततो दशमेऽहन्येतदेव वितरेत्ततोऽस्य
त्वक्स्थिरतामुपैति ।
एवमेकादसद्वाशयोर्व्व-

क्रोधादीन् परिहरेदेवं सर्व्वेषामुपयोगः ।
विशेषतस्तु वल्लीप्रतानक्षुपादयः सोमा भक्ष-
यितव्याः । तेषान्तु प्रमाणमर्द्धचतुर्थमुष्टयः ।

अंशवन्तं सौवर्णे
पात्रेऽभिषुणुयात् । चन्द्र-

मसं राजते चोपज्याष्टगुणमैश्वर्य्यमवाप्येशा-
नन्देवमनुप्रविशति । शेषांस्तु ताम्रमये मृण्मये
वा रोहिते वा चर्म्मणि वितते शूद्रवर्ज्जं त्रिभि-
र्व्वर्णैः सोमा उपयोक्तव्याः । ततश्चतुर्थे मासे
पौर्णमास्यां शुचौ देशे ब्राह्मणानर्च्चयित्वा कृत-
मङ्गलो निःक्रम्य यथोक्तं व्रजेदिति ॥
ओषधीनाम्पतिं सोममुपयुज्य विचक्षणः ।
दशवर्षसहस्राणि नवान् धारयते तनुम् ॥
नाग्निर्न तोयं न विषं न शस्त्रं नास्त्रमेव च ।
तस्यालमायुःक्षपणे समर्थाश्च भवन्ति हि ॥
भद्राणां षष्टिवर्षाणां प्रसुतानामनेकधा ।
कुञ्जराणां सहस्रस्य बलं समधिगच्छति ॥
क्षीरोदं शक्रसदनमुत्तरांश्च कुरूनपि ।
यत्रेच्छति स गन्तुं वा तत्राप्रतिहता गतिः ॥
कन्दर्प इव रूपेण कान्त्या चन्द्र इवापरः ।
प्रह्लादयति भूतानां मनांसि स महाद्युतिः ॥
साङ्गोपाङ्गांश्च निखिलान् वेदान्बिन्दति तत्त्वतः
चरत्यमोघसङ्कल्पो देववच्चाखिलं जगत् ॥
सर्व्वेषामेव सोमानां पत्राणि दश पञ्च च ।

| | | |
|---|---|---|
| | र्त्तेत । तत्र त्रयोदशात् प्रभृति सोमवल्ककषाय- परिषेकः । एवमाषोडशाद्वर्त्तेत ततः सप्तदशा- ष्टादशयोर्द्दिवसयोर्द्दशना जायन्ते शिखरिणः स्निग्धवज्रवैदूर्य्यस्फटिकनिकाशाः समाः स्थिराः सहिष्णवः । तदा प्रभृति चानवैः शालितण्डुलैः क्षीरयवागूमुपसेवेत यावत् पञ्चविंशतिरिति । ततोऽस्मै दद्याच्छाल्योदनं मृदूभयकालं पयसा | तानि शुक्ले च कृष्णे च जायन्ते निपतन्ति च ॥<br>एकैकं जायते पत्रं सोमस्याहरहस्तदा ।<br>शुक्लस्य पौर्णमास्यान्तु भवेत् पञ्चदशच्छदः ॥<br>शीर्य्यते पत्रमेकैकं दिवसे दिवसे पुनः ।<br>कृष्णपक्षक्षये चापि लता भवति केवला ॥<br>अंशुमानाज्यगन्धस्तु कन्दवानजतप्रभः ।<br>कदल्याकारकन्दस्तु मुञ्जवांल्लशुनच्छदः ॥<br>चन्द्रमाः कनकाभासो जले चरति सर्व्वदा ।<br>गरुडाहृतनामा च श्वेताक्षश्चापि पाण्डुरौ ॥ |

सर्पनिर्म्मोकसदृशौ तौ वृक्षाग्रावलम्बिनौ ।
तथान्यैर्मण्डलैश्चित्रैश्चित्रिता इव भान्ति ते ॥
सर्व्व एव तु विज्ञेयाः सोमाः पञ्चदशच्छदाः ।
क्षीरकन्दलतावन्तं पत्रै र्नानाविधैः स्मृताः ॥
हिमवत्यर्व्वुदे सह्ये महेन्द्रे मलये तथा ।
श्रीपर्व्वते देवगिरौ गिरौ देवसहे तथा ॥
पारिपात्रे च विन्ध्ये च देवसुन्दे ह्रदे तथा ।
उत्तरेण वितस्तायाः प्रवृद्धा ये महीधराः ॥
पञ्च तेषामधो मध्ये सिन्धुनामा महानदः ।
हठवत् प्लवते तत्र चन्द्रमाः सोमसत्तमः ॥
तस्योद्देशेषु वाप्यस्ति मुञ्जवानंशुमानपि ।
काश्मीरेषु सरो दिव्यं नाम्ना क्षुद्रकमानसम् ॥
गायत्र्यस्त्रैष्टुभः पाङ्क्ती जागतः शाङ्करस्तथा ।
अत्र सन्त्यपरे चापि सोमाः सोमसमप्रभाः ॥
न तान् पश्यन्त्यधर्म्मिष्ठाः कृतघ्नाश्चापि मानवाः
भेषजद्वेषिणश्चापि ब्राह्मणद्वेषिणस्तथा ॥”
इति सुश्रुते चिकित्सितस्थाने एकोनत्रिं शत्तमोऽध्यायः ॥ * ॥ “सोमनामौषधिराजः पञ्चदश-पर्णः स सोम इव हीयते वर्द्धते च ।” इति चरके चिकित्सास्थाने प्रथमेऽध्याये ॥ * ॥ * ॥)
शिवः । दीधितिः । इत्युणादिकोषः । दिव्यौषधिः ।
सोमलतारसः । इति हेमचन्द्रः ॥ (यथा, मनुः । ३ । २५७ ।
“मुन्यन्नानि पयः सोमो मांसं यच्चानुपस्कृतम् ।
अक्षारलवणञ्चैव प्रकृत्या हविरुच्यते ॥”)
अमृतम् । पर्व्वतविशेषः । इति केचित् ॥ * ॥
चन्द्रस्य विवरणं तथा । स च वायुकोणस्त्री-वैश्यजातिसत्त्वगुणलवणरसमृगशिरोनक्षत्रसमुद्राणामधिपतिः । इति बृहज्जातकादयः ॥
एकहस्तप्रमाणशरीरः । श्वेतवस्त्रपरिधानः । शुक्लवर्णः । दक्षिणहस्तवरदः । गदायुक्तवाम-हस्तः । दशाश्वः । श्वेतपद्मस्थः । उमाधि-दैवतः । जलप्रत्यधिदैवतः । सूर्य्याभिमुखः । यथा, --
“सामुद्रं वैश्यमात्रेयं हस्तमात्रं सिताम्बरम् ।
श्वेतं द्विबाहुं वरदं दक्षिणं सगदेतरम् ॥
दशाश्वं श्वेतपद्मस्थं विचिन्त्योमाधिदैवतम् ।

अथ सुस्राव नेत्राभ्यां धाम तच्चाक्षुषं क्षये ।
दीपयन् विश्वमखिलं ज्योत्स्नया सचराचरम् ॥
तद्दिशो जगृहुर्द्धाम स्त्रीरूपेण सुतेच्छया ।
गर्भो भूत्वोदरे तासामास्थितोऽब्दशतत्रयम् ॥
तास्तमूचुर्व्वयं गर्भमशक्ता धारणे ततः ।
समादायाथ तद्गर्भमेकीकृत्य चतुर्म्मुखः ॥
युवानमकरोद्ब्रह्मा सर्व्वायुधधरं वरम् ।
स्यन्दनेऽथ सहस्राश्वे वेदशक्तिमये प्रभुः ॥
आरोप्य लोकमनयदात्मीयं स पितामहः ।
ततो ब्रह्मर्षिभिः प्रोक्तमस्मत्स्वामी भवत्वयम् ॥
ऋषिभिर्देवगन्धर्व्वैरोषधीभिस्तथैव च ।
तुष्टुबुः सोमदैवत्यैर्ब्रह्माद्या मन्त्रसंग्रहैः ॥
स्तूयमानस्य तस्याभूदधिको महसाञ्चयः ।
तेजोवितानादभवद्भुवि दिव्यौषधीगणः ॥
तद्दीप्तिरधिका तस्माद्रात्रौ भवति सर्व्वदा ।
तेनौषधीशः सोमोऽभूत् द्विजेशश्चाभिगद्यते ॥
वेदधामा रसश्चापि यदिदं चन्द्रमण्डलम् ।
क्षीयते वर्द्धते चैव शुक्ले कृष्णे च सर्व्वदा ॥
ततो विंशत्तथा सप्त दक्षः प्राचेतसो ददौ ।
रूपलावण्यसंयुक्तास्तस्मै कन्याः सुवर्च्चसः ॥”
इति मात्स्ये । २३ । १ -- १५ ॥ * ॥
अपि च ।
महातपा उवाच ।

तदात्मिका भवन्त्यापो विश्वमूर्त्तिरसौ स्मृतः ॥
तस्य ब्रह्मा ददौ प्रीतः पौर्णमासीतिथिं प्रभुः ।
तस्यामुपोषयेद्राजन् तमर्थं प्रतिपादयेत् ॥
स चान्नाहारश्च भवेत् तस्य ज्ञानं प्रयच्छति ।
कान्तिं पुष्टिञ्च राजेन्द्र धनं धान्यञ्च केवलम् ॥”
इति वाराहे सोमोत्पत्तिरहस्यनामाध्यायः ॥ * ॥
तस्य क्षयवृद्धिकारणं यथा, --
ब्रह्मोवाच ।
“राका चानुमती चैव द्विविधा पूर्णिमा मता ।
सिनीवाली कुहूश्चैव अमावास्या द्विधैव तु ॥
अमा नाम रवे रश्मिश्चन्द्रलोके प्रतिष्ठिता ।
यस्मात् सोमो वसत्यस्याममावासी ततः स्मृता ॥
पूर्व्वोदितकलाभिन्नपौर्णमास्या निशाकरे ।
पूर्णिमानुमती ज्ञेया पश्चात् स्तमितभास्करे ॥
यस्मात्तामतुमन्यन्ते देवताः पितृभिः सह ।
तस्मादनुमती नाम पूर्णिमा प्रथमा स्मृता ॥
यदा चास्तमिते सूर्य्ये पूर्णचन्द्रस्य चोद्गमः ।
युगपत् सोत्तरारागस्तदानुमतिपूर्णिमा ॥
राकां तामनुमन्यन्ते देवताः पितृभिः सह ।
रञ्जनाच्चैव चन्द्रस्य राकेति कवयोऽब्रुवन् ॥

जलप्रत्यधिदैवञ्च सूर्य्यास्यमाह्वयेत्तथा ॥"
इति ग्रहयागतत्त्वम् ॥ * ॥
तस्योत्पत्त्यादिर्य्यथा, --
ऋषय ऊचुः ।
"सोमः पितृणामधिपः कथं शास्त्रविशारद ।
तद्वंशे के तु राजानो बभूवुः कीर्त्तिवर्द्धनाः ॥
सूत उवाच ।
आदिष्टो ब्रह्मणा पूर्व्वमत्रिः सर्गविधौ पुरा ।
अनुत्तमं नाम तपः सृष्ट्यर्थं तप्तवान् प्रभुः ॥
सदानन्दकरं ब्रह्म जगतः क्लेशनाशनम् ।
ब्रह्मविष्ण्वर्करुद्राणामभ्यन्तरमतीन्द्रियम्॥
शान्तिकृच्छान्तमनसस्तदन्तर्न्नयने स्थितम् ।
माहात्म्यात्तपसो विप्राः परमानन्दकारकम् ॥
यस्मादुमापतिः सार्द्धमुमया तमधिष्ठितः ।
तद्दृष्ट्वा अष्टमांशेन तस्मात् सोमोऽभवद्विधुः ॥

"ब्रह्मणो मानसः पुत्त्रः अत्रिर्नाम
महातपाः ।
तस्य पुत्त्रोऽभवत् सोमो दक्षजामातृतां
गतः ॥
सप्तविंशतिर्याः कन्या दाक्षायण्यः
प्रकीर्त्तिताः ।
सोमपत्न्योऽपि मान्यास्तास्तासां श्रेष्ठा
तु
रोहिणी ॥
तामेव रमते सोमः नेतरा इति शुश्रुम ।
इतराः प्रोचुरागत्य चन्द्रस्यासमतां
पितुः ॥
दक्षोऽप्यसकृदागत्य तमुवाच स
नाकरोत् ।
समतां सोऽपि तं दक्षः शशापान्तर्हितो
भव ॥
एवमुक्तः क्षयं सोमो अगमद्दक्षशापतः ॥
देवा मनुष्याः पशवो नष्टे सोमे सवीरुधः
।
क्षीणाभवंस्तदा सर्व्वा ओषध्यश्च
विशेषतः ॥
क्षयं गच्छद्भिरत्यर्थमोषधीभिः सुरर्षभाः
।
मूलेषु वीरुधां सोमः स्थित
इत्यूचुरातुराः ॥
तेषां चिन्ताभवत्तीव्रा विष्णुञ्च शरणं
ययुः ।
भगवानाह तान् सर्व्वान् ब्रूत किं क्रियते
मया
ते चाहुर्देव दक्षेण शप्तः सोमो विनाशितः
।
तानुवाच तदा देवो मथ्यतां
कलसोदधिः ॥
ओषध्यः सर्व्वतो देवाः प्रक्षिप्याम्बुषु
संयतैः ।
एवमुक्त्वा ततो देवान् दध्यौ रुद्रं हरिः
स्वयम् ॥
ब्रह्माणञ्च तथा दध्यौ वासुकिं
नेत्रकारणात् ।
ते सर्व्वे तत्र सहिता ममन्थुर्वरुणालयम्
॥

सिनीवाली प्रमाणन्तु क्षीणशेषो
निशाकरः ।
अमावास्यां विशत्यर्कं सिनीवाली ततः
स्मृता ॥
कुहेति कोकिलेनोक्तो यः कालस्तु
समाप्यते ।
तत्कालसंज्ञा त्वेषा वै अमावस्या कुहूः
स्मृता ॥
अनुमत्याः सराकायाः सिनीवाल्याः
कुहूंविना
एतासां विरलः कालः कुमात्रेति कुहूः
स्मृता ॥"
विरलस्थाने द्विलवेति च पाठः ।
"कलाः षोडश सोमस्य शुक्ले वर्द्धयते
रविः ।
अमृतेनामृतं कृष्णे पीयते दैवतैः क्रमात्
॥
प्रथमां पिबते वह्निर्द्वितीयां पवनः
कलाम् ।
विश्वेदेवास्तृतीयान्तु चतुर्थीन्तु
प्रजापतिः ॥
पञ्चमीं वरुणश्चापि षष्ठीं पिबति वासवः
।
सप्तमीमृषयो दिव्या वसवोऽष्टौ
तथाष्टमीम् ॥
नवमीं कृष्णपक्षस्य पिबतीन्द्रः
कलामपि ।
दशमीं मरुतश्चापि रुद्रा एकादशीं
कलाम् ॥
द्वादशीन्तु कलां विष्णुर्धनदश्च
त्नयोदशीम् ।
चतुर्द्दशीं पशुपतिः कलां पिबति
नित्यशः ॥
ततः पञ्चदशीञ्चैव पिबन्ति पितरः
कलाम् ।
कलावशिष्टो निष्पीतः प्रविष्टः
सूर्य्यमण्डलम् ॥
अमायां विशते रश्मौ अमावासी ततः
स्मृता ॥
पूर्व्वाह्णे विशते चार्कं मध्याह्ने तु
वनस्पतिम् ।

| | | |
|---|---|---|
| | तस्मिंस्तु मथिते जातः पुनः सोमो महीपते ।<br>योऽसौ क्षेत्रज्ञसंज्ञो वै देहेऽस्मिन् पुरुषः परः ॥<br>स एव सोमो मन्तव्यो देहिनां जीवसंज्ञकः ।<br>परेच्छया स मूर्त्तिन्तु पृथक् सौम्यां प्रपेदिवान्<br>तमेव देवमनुजाः षोडशेमाश्च देवताः ॥<br>उपजीवन्ति वृक्षाश्च तथैवौषधयः प्रभुम् ॥<br>रुद्रस्तमेव सकलं दधार शिरसा तदा । | अपराह्ने विशत्यप्सु स्वयोनिं वारिसम्भवः ॥<br>आपः प्रविष्टः सोमश्च शेषया कलयैकया ।<br>तृणगुल्मलतावृक्षान्निष्पादयतिचौषधीः ॥<br>तमोषधिं स्थितं गावश्चरन्त्यापः पिबन्ति च ।<br>तदङ्गानुगतं गोभ्यः क्षीरत्वमुपगच्छति ॥<br>तत् क्षीरममृतं भूत्वा मन्त्रभूतं द्विजातयः ।<br>स्वाहाकारवषट्कारैर्जुह्वत्याहुतयः क्रमात् ।<br>हुतमग्निषु देवाय पुनः सोमं विवर्द्धयेत् ॥<br>एवं संक्षीयते सोमः क्षीणश्चाप्याय्यते पुनः ।<br>तस्मात् सूर्य्यः शशाङ्कस्य क्षयवृद्धिविधिर्विभुः ॥”<br>इत्याद्ये देवीपुराणे चन्द्रक्षयवृद्धिनामाध्यायः ॥ * |

तस्य राहुग्रासकारणं यथा, --
ब्रह्मोवाच ।
“यदयं वदते लीको वालिशत्वान्महामते
।
तदहं संप्रवक्ष्यामि चन्द्रसूर्य्योपरागिकम्
॥
यदि सत्यमयं ग्रस्तस्तेजोराशिर्द्दिवाकरः
।
तत् कथं नोदरस्थेन राहुर्न भस्मसात्
कृतः ॥
अथवा राहुणाक्रम्य शत्रुवक्त्रं प्रवेशितः ।
तत् कथं दशनैस्तीक्ष्णैः शतधा न
विखण्डितः ॥
विभुक्तश्च पुनर्द्दृष्टस्तथवाखण्डमण्डलः
।
न चास्यापहृतं तेजो न
स्थानादपसारितः ॥
यदि वा ह्येष निष्पीतः कथं
दीप्ततरोऽभवत् ।
तस्मान्न तेजसां राशी राहोर्व्वक्त्रं
गमिष्यति ॥
भक्ष्यार्थं सर्व्वदेवानां सोमः सृष्टः
स्वयम्भुवा ।
तत्रस्थममृतञ्चापि सम्भूतं सूर्य्यतेजसा ॥
पिबन्त्यम्बुमयं देवाः पितरश्च
स्वधामृतम् ।
त्रयञ्च त्रिंशतञ्चैव त्रयत्रिंशत्तथैव च ।
त्रयश्च त्रिसहस्राश्च देवाः सोमं पिबन्ति
ये ॥
राहोरप्यमृतं भागं पुरा सृष्टं स्वयम्भुवा ।
तस्मात्तद्राहुरागत्य पातुमिच्छति पर्व्वसु
॥
उद्धृत्य पार्थिवों छायामभ्राकारां तमोमयः
।
पातुमिच्छन् ततश्चे न्द्रमाच्छादयति
छायया ॥
शुक्ले च चन्द्रमभ्येति कृष्णे पर्व्वणि
भास्करम् ।
अतश्छादयते राहुरभ्रवच्छशिभास्करौ ।
राहुरभ्रकसंस्थानः सोममाच्छाद्य
तिष्ठति ॥
उद्धृत्य पार्थिवीं छायां धूममेघ
इवोत्थितः ।
चन्द्रस्य यदवष्टब्धं राहुणा भास्करस्य च
॥
तन्नावखण्डितं तस्य केवलं
श्यामलीकृतम् ।
कर्द्दमेन यथा वस्त्रं शुक्लमप्युपहन्यते ॥
एकदेशेऽथ सर्व्वं वा राहुणा
चन्द्रमास्तथा ।
प्रक्षालितं तदेवेह पुनः शुक्लतरं भवेत् ॥
राहुयुक्तं भवेत्तद्वत् निर्म्मलं
चन्द्रमण्डलम् ।
राहुणाच्छादितौ वापि दृष्ट्वा
चन्द्रदिवाकरौ ॥
विप्राः शान्तिपरा भूत्वा पुनराप्याययन्ति
तम् ।
एवं न गृह्यते सूर्य्यश्चन्द्रमास्तत्र गृह्यते
॥
अबुधास्तं न पश्यन्ति मानुषा
मांसचक्षुषः ।
जगत्सम्मोहनञ्चैतत् ग्रहणं चन्द्रसूर्य्ययोः
॥”
इति देवीपुराणे ग्रहणविवेकनामाध्यायः
॥

**सोमक्षयः**, पुं, (सोमस्य चन्द्रस्य क्षयो यत्र ।)
अमावस्या । इति महाभारते दानधर्म्मः
॥

**सोमगर्भः**, पुं, (सोमः अमृतं तद्वद्मोक्षो गर्भे
यस्य ।) विष्णुः । इति त्रिकाण्डशेषः ॥

**सोमजं**, क्ली, (सोमवत् जायते इति । जन + डः
।)
दुग्धम् । इति हेमचन्द्रः ॥ चन्द्रजाते, त्रि
॥

**सोमतीर्थं**, क्ली, (सोमेन कृतं तीर्थम् ।) प्रभास-
मम क्षेत्रप्रभावेण शृगाली मानुषी भवेत् ।
रूपवती गुणवती चतुःषष्टिकलान्विता ॥”
इति वाराहे सौकरवतीर्थमाहात्म्यनामाध्यायः
॥

**सोमधारा**, स्त्री, (सोमस्य धारेव ।) आकाशम् ।
इति त्रिकाण्डशेषः ॥

**सोमपः**, पुं, (सोमं पिबतीति । पा + कः ।) यागे
पीतसोमलतारसः । तत्पर्य्यायः । सोमपीती
२ ।
इत्यमरः । २ । ७ । ८ ॥ सोमपाः ३ । इति
तट्टीका ॥ (यथा, गीतायाम् । ९ । २० ।
“त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ॥”)

**सोमपत्रः**, पुं, (सोमस्य पत्रमिव पत्रमस्यं ।)
तृणविशेषः । उलु खड इति भाषा । यथा, --
“दर्भः पुरश्छदः शप्तः सोमपत्रः परात्प्रियः ॥”
इति शब्दचन्द्रिका ॥
दर्भशब्देऽस्य गुणादयो ज्ञातव्याः ॥

**सोमपाः**, पुं, (सोमं पिबतीति । पा + क्विप् ।)
यज्ञे सोमलतारसपानकर्त्ता । इत्यमरटीकायां
रामाश्रमः । २ । ७ । ८ ॥ (सोमरसपानशीले,
त्रि । यथा, भागवते । ३ । ३२ । ३ ।
“तत्श्रद्धयाक्रान्तमतिः पितृदेवव्रतः पुमान् ।
गत्वा चान्द्रमसं लोकं सोमपाः पुनरेष्यति ॥”)

**सोमपीती**, [न्] पुं, (सोमस्य पीतं पानमस्या-
स्तीति । इनिः ।) सोमपः । इत्यमरः । २ ।
७ । ९ ॥ (वाच्यलिङ्गेऽपि दृश्यते । यथा,
महाभारते । १ । १ । १६४ ।
“सीकन्यमपि चाख्यानं च्यवनो यत्र भार्गवः ।
शर्य्यातियज्ञे नासत्यौ कृतवान् सोमपीतिनौ
॥”
तस्य रूपान्तरं सोमपीथी । सोमपीवी । इति
केचित् ॥

**सोमबन्धुः**, पुं, (सोमो बन्धुर्य्यस्य ।) कुमुदः ।
इति शब्दारत्नावली ॥ सूर्य्यः । बुधः । यथा, -
-

सूर्य्यमण्डलसंस्थस्तु चन्द्रमेव जिघांसति ॥
तस्मात् पिबति तं राहुस्तनुमस्याविनाशयन्।
अविहिंसन् यथा पद्मं पिबति भ्रमरो मधु ।
चन्दस्थममृतं तद्वदभेदाद्राहुरश्नुते ॥
चन्द्रकान्तो मणिर्यद्वत्तुहिनं क्षरते क्षणात् ।
क्षरन्नपि न हीयेत तेजसा नैव मुच्यते ॥
यथा सूर्य्यमणिः सूर्य्यादुत्पाट्य पावकं शुभम् ।
न भवत्यङ्गहीनोऽपि तेजसा नैव मुच्यते ॥
एवं चन्द्रश्च सूर्य्यश्च छादितावपि राहुणा ।
स्वतेजसा न मुच्येते नाङ्गहीनौ बभूवतुः ॥
पर्व्वस्वथ च चन्द्रस्य माणिक्यकनकाकृतिः ।
सोमो दैवतसंयोगात् छायायोगाच्च पार्थिवात्
राहोश्च वरलब्धाद्वै प्रक्षरेदमृतं शशी ॥
स्वदीहकाले सम्प्राप्ते वत्सं दृष्ट्वा च गौर्यथा ।
स्वाङ्गादेव क्षरेत् क्षीरं तथेन्दोः क्षरतेऽमृतम् ॥
पितेव सूर्य्यो देवानां सोमो मातेव लक्ष्यते ।
यथा मातुः स्तनं पीत्वा जीवन्ते सर्व्वजन्तवः ।
पीत्वामृतं तथा सोमात् तृप्यन्ते सर्व्वदेवताः ॥
सम्भृतं सर्व्वयागेषु तथा यं क्षरते शशी ।
तं क्षरन्तं यथामागमुपजीवन्ति देवताः ॥
तस्मिन् काले समभ्येति राहुरप्यवकर्षति ।
सर्व्वमर्द्धं त्रिभागञ्च पादं पादार्द्धमेव च ॥
आक्रम्य पार्थिवीच्छायां यावन्तं चन्द्रमण्डलम्
स्मृतः स भागो राहोस्तु देवभागास्तु शेषकाः ॥

तीर्थम् । इति त्रिकाण्डशेषः ॥ (यथा, महा-
भारते । ३ । ८३ । १९ ।
"ततो जयन्त्यां राजेन्द्र सोमतीर्थं समाविशेत् ।
स्नात्वा फलमवाप्नोति राजसूयस्य मानवः ॥")
तस्य विवरणं यथा, --
"यत्र तप्तं तपस्तेन सोमेन सुमहात्मना ।
पञ्चवर्षसहस्राणि एकपादेन तिष्ठति ॥
पञ्चवर्षसहस्राणि तथैवोर्द्धमुखः स्थितः ।
एवम्भूतः पुनः पञ्चपञ्चमौनब्रतस्तथा ॥
तथैवैकेन पादेन दश पञ्च च तिष्ठति ।
एवमुग्रं तपः कृत्वा कान्तिमानभवच्च सः ॥
ममापराधान्मुक्तश्च ब्राह्मणानां पतिस्तथा ।
प्राप्नोति यन्महाभागे सोमतोर्थे कृतोदकः ॥
त्रिंशद्वर्षसहस्राणि त्रिंशद्वर्षशतानि च ।
जायते ब्राह्मणः सुभ्रु वेदवेदान्तपारगः ॥
द्रव्यवान् गुणवांश्चैव संविभागी यशस्विनि ।
मद्भक्तश्चैव जायेत अपराधविवर्जितः ॥
स एष ब्राह्मणो भूत्वा संसाराद्विप्रमुच्यते ।
तस्य किञ्चित् प्रवक्ष्यामि सोमतीर्थस्य सुन्दरि ॥
तत्तीर्थं येन विज्ञेयं मम मार्गानुसारिणा ।
वैशाखस्य तु मासस्य शुक्लपक्षस्य द्वादशीम् ॥
प्रवृत्ते चान्धकारे तु यत्र कश्चिन्न दृश्यते ।
सोमेन च विना भूमे दृश्यते चन्द्रमःप्रभा ॥
आलोकश्चैव दृश्येते सोमस्तत्र न दृश्यते ।
एवं त्वां वच्मि हे भद्रे एष वै विस्मयः पुरः ॥
एतच्चित्रं महाभागे पुण्ये सौकरवे मम ।

"मित्राणि सूर्य्याच्छशिभौमजीवाः
सूर्य्येन्दुजौ सूर्य्यशशाङ्कजीवाः ।
आदित्यशुक्रौ रविचन्द्रभौमा
बुधार्कजौ चन्द्रजभार्गवौ च ॥"
इति ज्योतिस्तत्त्वम् ।

**सोमभूः**, पुं, (सोमात् भूरुत्पत्तिर्यस्य ।) जिन-
राजभेदः । इति हेमचन्द्रः ॥ बुधग्रहः । सोम-
पुत्त्रत्वात् । सोमवंशोद्भवे, त्रि ॥

**सोमयागः**, पुं, (सोमात्मको यागः ।) सोमलता-
रसपानाङ्गकत्रैवार्षिकयज्ञविशेषः । यथा, --
नारद उवाच ।
"सोमयागविधानञ्च ब्रूहि मां मुनिसत्तम ।
कथं तं कारयामास गुरुश्च किं फलं परम् ॥
नारायण उवाच ।
ब्रह्महत्याप्रशमनं सोमयागफलं मुने ।
वर्षं सोमलतापानं यतमानः करोति च ॥
वर्षमेकं फलं भुङ्क्ते वर्षमेकं जलं मुदा ।
त्रैवार्षिकमिदं यागं सर्व्वपापप्रणाशनम् ॥
यस्य त्रैवार्षिकं धान्यं निहितं भूतिवृद्धये ।
अधिकं वापि विद्येत स सोमं पातुमर्हति ॥

| | | |
|---|---|---|
| तृप्तिं विधाय देवानां राहोः पर्व्वगतस्य च ।<br>चन्द्रो न क्षयमायाति तेजसा नैव मुच्यते ॥<br>तिथिभागाश्च यावन्तः पुनन्त्यर्कं प्रमाणतः ।<br>सर्व्वच्छायास्थितः कालस्तावानेव प्रकीर्त्तितः ॥<br>अतो राहुभुजः सोमः सोमाद्वृद्धिं दिवाकरः ।<br>पर्व्वकाले स्थितिस्त्वेवं विपरीता पुनः पुनः ॥ | सोमतीर्थं विशालाक्षि येन मुच्यन्ति जन्तवः ॥<br>अन्यच्च ते प्रवक्ष्यामि तच्छृष्णुष्व वसुन्धरे ।<br>प्रभावमस्य क्षेत्रस्य विस्मयं परमं महत् ॥<br>अकामा तु मृता तीर्थे आत्मनः कर्म्मनिश्चयात् | |

महाराजश्च देवो वा यागं कर्त्तुमलं मुने ।
न सर्व्वसाध्यो यज्ञोऽयं बह्वन्नो बहुदक्षिणः ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । ६० । ५४-५८ ॥

**सोमयाजी**, [न्] पुं, (सोमेन यजते इति । यज + णिनिः ।) सोमयागकर्त्ता ॥

**सोमयोनि**, क्ली, (सोमो योनिर्यस्य ।) चन्दन-विशेषः । यथा, --
“सुशीतलं चन्दनं यत् तैलपर्णिकमुच्यते ।
उभौ तु तस्य पर्य्यायौ सोमयोनि शिलोद्भवम् ॥”
इति शब्दचन्द्रिका ॥

**सोमराजिका**, स्त्री, (सोमराजी एव । स्वार्थे कन् ।) सोमराजी । इतिशब्दरत्नावली ॥

**सोमराजी**, [न्] पुं, सोमेनं सोमवद्वा राजते इति । राज + णिनिः ।) ओषधिविशेषः । सोमराज इति हाकुच इति च भाषा । तत्प-य्यार्यः । अवल्गुजः २ सुवल्लिः ३ सोमवल्लिका ४ कालमेषी ५ कृष्णफला ६ वाकुची ७ पूति-फली ८ । इत्यमरः । २ । ४ । ९६ ॥ सोमराजी ९ सुवल्ली १० सोमवल्लिः ११ कालमेशी १२ । इति भरतः ॥ सोमवल्ली १३ वागुजी १४ वाकुजी १५ कालमेषिका १६ सोमराजिका १७ । इति शब्दरत्नावली ॥ अन्यच्च ।
“वागुजी चन्द्रलेखा स्यात् सोमराजी त्ववल्-गुजा ।
कृष्णा पूतिफला कुष्ठनाशिनी सा सिता परा ॥”
इति रत्नमाला ॥

**सोमरोगः**, पुं, स्त्रीरोगविशेषः । यथा, --
अथ सोमरोगाधिकारः ।
तत्र सोमरोगस्य निदानपूर्व्विकां सम्प्राप्तिमाह ।
“स्त्रीणामतिप्रसङ्गेन शोकाच्चापि श्रमादपि ।
अतिसारकयोगाद्वा गरयोगात्तथैव च ॥
आपः सर्व्वशरीरस्थाः क्षुभ्यन्ति प्रस्रवन्ति च ।
तस्यास्ताः प्रच्युताः स्थानान्मूत्रमार्गं व्रजन्ति हि ॥”
अथ तस्य लक्षणमाह ।
“प्रसन्ना विमला शीता निर्गन्धा नीरुजः सिताः ।
स्रवन्ति चातिमात्रं ताः सा न शक्नोति दुर्ब्बला ॥
वेगं धारयितुं तासां न विन्दति मुखं क्वचित् ।
शिरःशिथिलता तस्या मुखं तालु च शुष्यति ॥
मूर्च्छा जृम्भा प्रलापश्च त्वग्रूक्षा चातिमात्रतः ॥
भक्ष्यैर्भोज्यैश्च पेयैश्च न तृप्तिं लभते सदा ॥
सन्धारणाच्छरीरस्य ता आपः सोमसंज्ञिताः ।
ततः सोमक्षयात् स्त्रीणां सोमरोगे इति स्मृताः”
अथ सोमरोगस्य चिकित्सा ।
“कदलीनां फलं पक्वं धात्रीफलरसं मधु ।
शर्क्करासहितं खादेत् सोमधारणमुत्तमम् ॥ १ ॥
माषचूर्णं समधुकं विदारीं मधुशर्क्कराम् ।
पयसा पाययेत् प्रातः सोमधारणमुत्तमम् ॥ २ ॥ ॥
सोमवल्ली त्रिदोषघ्नी कटुस्तिक्ता रसायनी ॥”
इति भावप्रकाशः ॥
अपि च ।
“सोमवल्ली महागुल्मा यज्ञश्रेष्ठा धनुर्लता ।
सोमार्हा गुल्मवल्ली च यज्ञवल्ली द्विजप्रिया ।
सोमक्षीरा च सोमा च यज्ञाङ्गा रुद्रसंख्यया ॥
सोमवल्ली कटुः शीता मधुरा पित्तदाहहृत् ।
कृष्णा विशोषशमनी पावनी यज्ञसाधनी ॥”
इति राजनिर्घण्टः ॥

**सोमलतिका**, स्त्री, (सोमलतेव । इवार्थे कन् ।) गुडूची । इति राजनिर्घण्टः ॥

**सोमवंशः**, पुं, (सोमस्य वंश उत्पत्तिस्थानत्वेना-स्त्यस्य ।) युधिष्ठिरराजः । इति धरणिः ॥ (सोमस्य वंशः ।) चन्द्रसन्तानः । तद्विवरणं यथा,
हरिरुवाच ।
“सूर्य्यस्य कथितो वंशः सोमवंशं शृणुष्व मे ।
नारायणसुतो ब्रह्मा ब्रह्मणोऽत्रिसमुद्भवः ॥
अत्रेः सोमस्तस्य भार्य्या तारा सुरगुरोः प्रिया ।
सोमात्तस्यां बुधो जज्ञे बुधपुत्त्रः पुरूरवाः ॥
बुधपुत्त्रादथोर्व्वश्यां षट् पुत्त्रास्तु श्रुतायुषः ।
विश्वावसुः शतायुश्च आयुर्द्धीमानमावसुः ॥
अमावसोरभूद्भीमो भीमपुत्त्रश्च काञ्चनः ।
काञ्चनस्य सुहोत्रोऽभूत् जह्नुश्चाभूत् सुहोत्रतः ॥
जह्नोः सुमन्तुरभवत् सुमन्तो रूपराजकः ।”
रूपराजकस्थाने अपजापकोऽपि पाठः ।
“बलाकाश्वोऽस्य पुत्त्रोऽभूत् बलाकाश्वात् कुशः स्मृतः ॥
कुशाश्वः कुशनाभश्चामूर्त्तरयो वसुः कुशात् ।
गाधिः कुशाश्वात् संजज्ञे विश्वामित्रस्तदात्मजः
कन्या सत्यवती दत्ता ऋचीकाय द्विजाय सा ।
ऋचीकाद्यमदग्निश्च रामस्तस्याभवत् सुतः ॥
विश्वामित्राद्देवरातमधुच्छन्दादयःसुताः ।
आयुषो नहुषः पुत्त्रस्त्वनेनाराजिरम्भकौ ॥
क्षत्त्रवृद्धः क्षत्त्रवृद्धात् सुहोत्रश्चाभवन्नृपः ।
काश्यकाशगृत्समदाः सुहोत्रादभवंस्त्रयः ॥
गृत्समदाच्छौनकोऽभूत् काश्याद्दीर्घतमस्तथा ।

अस्य गुणाः ।
वातकफकुष्ठत्वग्दोषनाशित्वम् ।
इति राजवल्लभः ॥ अपि च ।
"अवलगुजो वाकुची स्यात् सोमराजी सुप-
र्णिका ।
शशिलेख्या कृष्णफला सोमा पूतिफलीति च ॥
सोमवल्ली कालमेषी कुष्ठघ्नी च प्रकीर्त्तिता ।
वाकुची मधुरा तिक्ता कटुपाका रसायनी ॥
विष्टम्भहृद्धिमा रुच्या सरा श्लेष्मास्रपित्तनुत् ।
रूक्षा हृद्या श्वासकुष्ठमेहज्वरकृमिप्रणुत् ॥
तत्फलं पित्तलं कुष्ठकफानिलहरं कटु ।
केश्यं त्वच्यं कृमिश्वासकासशोथामपाण्डुहृत् ॥"
इति भावप्रकाशः ॥
राजनिर्घण्टोक्तगुणपर्य्यायौ वाकुचीशब्दे द्रष्टव्यौ

**सोमराजी**, स्त्री, (सोमेन राजते इति । राज-
दीप्तौ + अच् । गौरादित्वात् ङीष् ।) वाकुची ।
इत्यमरटीकायां भरतः । २ । ४ । ९६ ॥ (यथा,
बृहत्संहितायाम् । ४४ । १० ।
"श्वेतां सपूर्णकोशां कटम्भरात्रायमाणसहदेवीः ।
नागकुसुमं स्वगुप्तां शतावरीं सोमराजीञ्च ॥")
षडक्षरच्छन्दोविशेषः । यथा, --
"हरे सोमराजीसमा ते यशः श्रीः ।
जगन्मण्डलस्य च्छिनत्त्यन्धकारम् ॥
इति छन्दोमञ्जरी ॥
चन्द्रश्रेणी च ॥

स एव सरुजः सोमः स्रवेन्मूत्रेण चेन्मुहुः ।
तत्रै लापत्रचूर्णेन पाययेत्तरुणीं सुराम् ॥ ३ ॥
जलेनामलकीबीजकल्कं समधुशर्क्करम् ।
पिबेद्दिनत्रयेणैव श्वेतप्रदरनाशनम् ॥ ४ ॥
तक्रोदनाहाररता संपिबेन्नागकेशरम् ।
त्र्यहं तक्रेण संपिष्टं श्वे तप्रदरनाशनम् ॥" * ॥
तत्रैव मूत्रातीसारस्य लक्षणं चिकित्साञ्चाह ।
"सोमरोगे चिरं जाते यदा मूत्रमतिस्रवेत् ।
मूत्रातिसारं तं प्राहुर्बलविध्वंसनं परम् ॥
तालकन्दञ्च खर्ज्जूरं मधुकञ्च विदारिकाम् ।
सितामधुयुतां खादेत् मूत्रातीसारनाशनम् ॥ १
चक्रमर्द्द कमूलन्तु संपिष्टं तण्डुलाम्बुना ।
प्रभातसमये पीतं जलप्रदरनाशनम् ॥" २ ॥
इति सोमरोगे मूत्रातिसाराधिकारः । इति
भावप्रकाशः ॥ (तथाचास्य चिकित्सोपयोगि-
वटिकौषधं यथा, --
"कर्षं जारितलौहञ्च तदर्द्धं रसगन्धकम् ।
एलापत्रं निशायुग्मं जम्बुवीरणगोक्षुरम् ॥
विडङ्गं जीरकं पाठा धात्रीदाडिमटङ्कणम् ।
चन्दनं गुग्गुलुं लोध्रशालार्ज्जुनरसाञ्जनम् ॥
छागीदुग्धेन वटिकां कारयेद्दशरक्तिकाम् ।

वैद्यो धन्वन्तरिस्तस्मात् केतुमांश्च तदात्मजः ॥"
वैद्यस्थाने रेभ्य इत्यपि पाठः ।
भीमरथः केतुमतो दिवोदासस्तदात्मजः ।
दिवोदासात् प्रतर्द्दनोऽभूच्छत्रुजित् सोऽत्र विश्रुतः ॥
ऋतध्वजस्तस्य पुत्त्रो ह्यलर्कश्च ऋतध्वजात् ।
अलर्कात् सन्नतिर्जज्ञे सुनीथः सन्नतेः सुतः ॥
सत्यकेतुः सुनीथस्य स्नत्यकेतोर्व्विभुः सुतः ।
विभोस्तु सुविभुः पुत्त्रः सुविभोः स्वर्गमारकः ॥
स्वर्गमारकस्थाने सुकुमारकोऽपि पाठः ।
"स्वर्गमाराद्धृष्टकेतुर्व्वीतिहोत्रस्तदात्मजः ।
वीतिहोत्रस्य भार्गोऽभूत् भार्गभूमिस्तदात्मजः ॥
भार्गभूमिस्थाने भासभूमिरिति च पाठः ।
"वैष्णवाः सुमहात्मान इत्यनेकाशयो नृपाः ॥"
पञ्चपुत्त्रशतान्यासन्नजेः शक्रेण संहृताः ।
प्रतिक्षत्त्रः क्षत्त्रवृद्धात् सञ्जयश्च तदात्मजः ॥

| | | |
|---|---|---|
| | निर्म्मितो नित्यनाथेन सोमनाथरसस्त्वयम् ॥ सोमरोगं बहुविधं प्रदरं हन्ति दुर्ज्जयम् । योनिशूलं मेढ्रशूलं सर्व्वजं चिरकालजम् । बहुमूत्रं विशेषेण दुर्ज्जयं हन्त्यसंशयः ॥” इति सोमनाथरसः ॥ इति वैद्यकरसेन्द्रसारसंग्रहे सोमरोगाधिकारे ॥)<br>**सोमलता**, स्त्री, (सोम एव लता ।) स्वनाम-ख्याता लता । तत्पर्य्यायगुणाः । “सोमवल्ली सोमलता सोमा क्षीरी द्विजप्रिया । | |

विजयः सञ्जयस्यापि विजयस्य कृतः सुतः ।
कृताद्धर्षवर्द्धनश्च सहदेवस्तदात्मजः ॥”
हर्षवर्द्धनस्थाने वृणहल इति च पाठः ।
“सहदेवाददीनोऽभूत् जयत्सेनोऽप्यदीनतः ॥
जयत्सेनात् संकृतिश्च क्षत्त्रधर्म्मा च संकृतैः ।
यतिर्ययातिः संयातिरायातिर्व्यितिः कृतिः ।
नहुषस्य सुताः ख्याता ययातेर्नृपतेस्तथा ।
यदुश्च तुर्व्वसुश्चै व देवयानी व्यजायत ॥
द्रुह्यु श्चानुश्च पूरुश्च शर्म्मिष्ठा वार्षपर्व्वणी ।
सहस्रजित् क्रोष्टुतमा रघुश्चैव यदोः सुतः ॥
सहस्रजितः शतजित्तस्माद्वेणुहयहैहयौ ।
सुद्यो वेणुहयपुत्त्रो धर्म्मो हैहयतोऽभवत् ॥
धर्म्मस्य धर्म्मनेत्रोऽभूत् कुन्तिर्व्वै धर्म्मनेत्रतः ।
कुन्तेर्बभूव सानृञ्जिर्म्महिष्वांश्च तदात्मजः ॥”
सानृञ्जिस्थाने साहञ्जिरिति च पाठः ।
“भद्रश्रेण्यस्तस्य पुत्त्रो भद्रश्रेण्यस्य दुर्म्मदः ॥”
दुर्म्मदस्थाने दुर्द्द म इति च पाठः ।
“चनको दुर्म्मदाच्चैव कृतवीर्य्यश्च धानकिः ।
कृताग्निः कृतकर्म्मा च कृतभोग्यः सुमहाबलः ॥”
कृतभोग्यस्थाने कृतौजा इति च पाठः ।
“कृतवीर्य्यादज्जुनोऽभूत् अर्ज्जुनाच्छूरसेनकः ।
निमिवृणी भजमानादश्मभाजित्तथैव च ।”
अश्मभाजित्स्थाने अयुताजित् इति च पाठः ।
“शतजिच्च सहस्राजित् वभ्र र्देवो बृहस्पतिः ॥
महाभोजात्तु भोजोऽभूत् वृष्णेश्चैव सुमित्रकः ।
सुधाजित् संज्ञकस्तस्मादनमित्रशिनी तथा ॥
अनमित्रस्य निम्नोऽभूत् निम्नात् सत्राजितो-ऽभवत् ।
प्रसेनश्चापरः ख्यातो ह्यनमित्राच्छिनिस्तथा ॥
शिनेस्तु सत्यकः पुत्त्रः सत्यकात् सात्यकिस्तथा
सात्यकेः सञ्जयः पुत्त्रः कुणिश्चैव तदात्मजः ॥
कुणेर्युगन्धरः पुत्त्रस्ते शैनेयाः प्रकीर्त्तिताः ॥”
कुणिस्थाने कुलिरिति च पाठः । * ।
“अनमित्रान्वयो वृष्णिः श्वफल्कश्चित्रकस्तथा ॥”
चित्रकस्थाने चित्रकृत् इति च पाठः ।
“श्वफल्काच्चै व गान्दिन्यामक्रूरो वैष्णवोऽभवत्
उपमद्गुरथाक्रूरान्मृदवाद्यास्ततः स्मृताः ॥
देववानुपदेवश्च अक्रूरस्य सुतौ स्मृतौ ।
पृथुर्विपृथुश्चित्रस्य चान्धकस्य शुचिः स्मृतः ॥
कुकुरो भजमानस्तु तथा कम्बलवर्हिषः ।
धृष्णस्तु कुकुराज्जज्ञे तस्मात् कापोतरोमकः ॥
तदात्मजो विलोमा च विलोम्नस्तुम्बुरुः स्मृतः ।
तस्माच्च दुन्दुभिर्ज्जज्ञे पुनर्व्वसुरतः सुतः ॥
तस्याहुकश्चाहुकी च कन्या चैवाहुकस्य च ।
देवकश्चोग्रसेनश्च देवकात् दैवकी त्वभूत् ॥
वृकदेवोपदेवा च सहदेवा सुरक्षिता ।
षोडश स्त्रीसहस्राणि भार्य्याणाञ्चाभवन् हरेः ।
रुक्मिणी सत्यभासा च लक्ष्मणा चारुहासिनी ॥
श्रेष्ठा जाम्बवती चाष्टौ जज्ञिरे तान् बहून् सुतान् ।
प्रद्युम्नश्चारुदेष्णश्च प्रधानाः शाम्ब एव च ॥
प्रद्युम्नादनिरुद्धोऽभून्मनस्विन्यांमहाबलः ।”
मनस्विन्यां स्थाने ककुद्मिन्यामिति पाठः ।
“अनिरुद्धात् सुभद्रायां वज्रो नाम सुतोऽभवत् ॥
प्रतिबाहुर्व्वज्रसुतश्चारुस्तस्य सुतोऽभवत् ।
वह्निश्चारोः सुतो जज्ञे वह्नेर्भर्गोऽभवत् सुतः ॥”
इत्यत्र वह्निस्तु तुर्व्वसोर्वंशः इत्याद्यपादे पाठः ।
“भर्गाद्भानुरभूत् पुत्रो भानोः पुत्त्रः करन्धमः ।
करन्धमस्य मरुतो द्रुह्योर्व्वंशं निबोध मे ॥ * ॥
द्रुह्योस्तु तनयः सेतुराबद्धश्च तदात्मजः ।
आबद्धस्यैव गान्धारो धर्म्मो गान्धारतोऽभवत् ॥”
आबद्धस्थाने आरब्ध इति आवर इति च पाठः
“घृतस्तु धर्म्मोपुत्त्रोऽभूदुर्द्धमश्च घृतस्य तु ।
प्रचेता दुर्द्दमस्यैव अनोर्व्वंशं शृणुष्व मे ॥ * ॥
अनोः सभानवः पुत्त्रस्तात् का २ ञयोऽभवत् ।”
सभानवस्थाने स्वभावन इति सुतारण इति च
कालञ्जयस्थाने कालानल इत्यपि पाठः ।
“कालञ्जयात् सृञ्जयोऽभूत् सृञ्जयाच्चु पुरञ्जयः

जयध्वजो मधुः शूरो वृषणः पञ्चसुव्रताः ॥
जयध्वजात्तालजङ्घो भरतस्तालजङ्घतः ।
वृषणस्य मधुः पुत्त्रो मधोर्वृष्ण्यादिवंशकः ॥
क्रोष्टोर्वृ जिनवान् पुत्त्र आहिस्तस्य महात्मनः ।”
प्राहिस्था ने स्नाहिरिति च पाठः ।
“आहेरुशङ्कुः संजज्ञे तस्य चित्ररथः सुतः ॥
शशबिन्दुश्चित्ररथात् पत्न्यो लक्षञ्च तस्य ह ।
दशलक्षञ्च पुत्त्राणां पृथुकीर्त्त्यादयो वराः ॥
पृथुकीर्त्तिः पृथुजयः पृथुदानः पृथुश्रवाः ।
पृथुश्रवसोऽभूत्तम उशना तमसोऽभवत् ॥
तत्पुत्त्रः शितयुर्नाम श्रीरुक्मकवचस्ततः ।”
शितयुर्नामस्थाने श्वेतऊर्णायुरिति च पाठः ।
“रुक्मेषुः पृथुरुक्मश्च ज्यामघः पालितो हरिः ।
श्रीरुक्मकवचस्यैते विदर्भो ज्यामघात्तथा ।
भार्य्यायाञ्चैव सैव्यायां विदर्भात् क्रथकौशिकौ ॥
रोगपादो रोगपादाद्बभ्रु र्व्वभ्रोर्धृतिस्तथा ।
कौशिकस्य चिदिः पुत्त्रस्ततश्चैद्यो नृपः किलः ॥
कुन्तिः किलस्य पुत्त्रोऽभूत् कुन्तेर्वृष्णिः सुतः स्मृतः ।
वृष्णेश्च निर्वृतिः पुत्त्रो दशार्हो निर्वृतेस्तथा ॥
दशार्हस्य सुतो व्योमो जीमूतश्च तदात्मजः ।”
व्योमस्थाने व्योमा इति च पाठः ।

श्रीदेवी शान्तिदेवी च वसुदेव उवाह ताः ॥
देवश्चानुपदेवश्च सहदेवासुतौ स्मृतौ ।
उग्रसेनस्य कंसोऽभूत् सुनामा च वटादयः ॥
विदूरथो भजमानाच्छूरश्चाभूद्विदूरथात् ।”
शूरस्थाने शिव इति च पाठः ।
“विदूरथसुतस्याथ शूरस्यापि शमी सुतः ॥
प्रतिक्षत्त्रस्तु शमिनः स्वयम्भोजस्तदात्मजः ।
हृदिकश्च स्वयम्भोजात् कृतवर्म्मा तदात्मजः ॥
देवः शतधनुश्चै व शूराद्वै देवमीढुषः ।
दशपुत्त्रा मारिषायां वसुदेवादयोऽभवन् ॥
पृथा च श्रुतदेवी च श्रुतकीर्त्तिः श्रुतश्रवाः ।
राजाधिदेवी शूराच्च पृथां कुन्तेः सुतामदात् ॥
सा दत्ता कुन्तिना पाण्डोस्तस्यां धर्म्मा-निलेन्द्रकैः ।
युधिष्ठिरो भीमपार्थौ नकुलः सहदेवकः ॥
माद्र्यां नासत्यदस्राभ्यां कुन्त्यां कर्णः पुराभवत् ।
श्रुतदेव्यां दन्तवक्रं जज्ञे वै वृद्धशर्म्मणः ॥
सन्तद्दनादयः पञ्च श्रुतकीर्त्त्याञ्च कैकयात् ।
राजाधिदेव्यां विन्दश्च अनुविन्दश्च जज्ञिरे ॥
श्रुतश्रवा दमघोषात् प्रजज्ञे शिशुपग्लकः ।
पौरवी रोहिणी भार्य्या मदिरानकदुन्दुभेः ॥
देवकीप्रमुखा भद्रा रोहिण्यां बलभद्रकः ।
सारणाढ्याः शठश्चैव रेवत्यां बलभद्रतः ॥
निशठश्चोन्मुको जातो देवक्यां षट्च जज्ञिरे ।
कीर्त्तिमांश्च सुषेणश्च उदार्य्यो भद्रसेनकः ॥
ऋतुदासो भद्रदेवः कंस एवावधीच्च तान् ।
सङ्कर्षणः सप्तमोऽभूदष्टमः कृष्ण एव च ॥

जनमेजयस्ततश्चाभूत् महाशालस्तदात्मजः ।
महामना महाशालादुशीनर इति स्मृतः ॥
उशीनराच्छिविर्जज्ञे वृषदर्भः शिवेः सुतः ।
महामनो जातिभिक्षोः पुत्त्रोऽभूत्तु जयद्रथः ॥
हेमो जयद्रथाज्जज्ञे सुतपा हेमतोऽभवत् ।”
जयद्रथस्थाने रुषद्रथ इति च पाठः ।
“बलिः सुतपसो जज्ञे अङ्गवङ्गकलिङ्गकाः ॥
शुक्षपौण्ड्राश्च बालेया अनपानस्तथाङ्गतः ।
अनपानाद्विविरथस्तमो धर्म्मरथोऽभवत् ॥
रोमपादो धर्म्मरथाच्चतुरङ्गस्तदात्मजः ।
पृथुलाक्षः सुतस्तस्य चम्पोऽभूत् पृथुलाक्षतः ॥
चम्पपुत्त्रस्तु हर्य्यङ्गस्तस्य भद्ररथः सुतः ।
बृहत्कर्म्मा सुतस्तस्य बृहद्भानुस्ततोऽभवत् ॥
बृहन्मना बृहद्भानोस्तस्य पुत्त्रो जयद्रथः ।
जयद्रथस्य विजयो विजयस्य धृतिः सुतः ॥
धृतेर्धृ तव्रतः पुत्त्रः सत्यकर्म्मा धृतब्रतात् ।
तस्य पुत्त्रस्त्वधिरथः कर्णस्तस्य सुतोऽभवत् ॥
वृषसेनस्तु कर्णस्य पूरुवंशं शृणुष्व मे ॥”
इत्यादि गारुडे १४३ अध्यायः ॥ * ॥
हरिरुवाच ।
“जनमेजयश्च पूरोश्च मनस्युर्जनमेजयात् ।
तस्य पुत्त्रश्चाभयदः सुद्युश्चाभूत्तदात्मजः ॥”
सुद्युस्थाने स्वसूरिति च पाठः ।
“सुद्योर्बहुगतः पुत्त्रः संयातिस्तस्य चात्मजः ।
वत्सजातिश्च संयाते रौद्राश्वश्च तदात्मजः ॥”
वत्सजातिस्थाने वर्गजातिरिति च पाठः ।
“ऋतेयुः स्थण्डिलेयुश्च कक्षेयुश्च कृतेयुकः ।
जलेयुः संहतयुश्च रौद्राश्वस्य सुता वराः ॥
रतिनावः कृतेयोश्च तस्य प्रतिरथः सुतः ।
तस्य मेधातिथिः पुत्त्रस्तुर्वसोरैनिलः सुतः ॥

| | | |
|---|---|---|
| “जीमूताद्विकृतिर्जज्ञे ततो भीमरथोऽभवत्।<br>ततो मधुरतो जज्ञे शकुनिस्तस्य चात्मजः।<br>करम्भिः शकुनेः पुत्रस्तस्य देवमतः सुतः॥<br>देवक्षत्रो देवमताद्दे वक्षत्रान्मधुः स्मृतः।<br>कुरुवंशो मधोः पुत्रो ह्यनुश्च कुरुवंशतः॥<br>पुरुहोत्रो ह्यनोः पुत्रः अंशुश्च पुरुहोत्रतः।<br>मत्वश्रुतः सुतश्चांशोरेते वै सात्वता नृपाः॥ * ॥<br>भजिनो भजमानश्च मात्वतादन्धकः सुतः।<br>महाभोजो वृष्णिदेष्यामन्यो देवावृधोऽभवत्॥ | | |

ऐनिलस्य तु दुष्मन्तो भरतस्तस्य चात्मजः ।
शकुन्तलायां संजज्ञे वितथो भरतादभूत् ॥
वितथस्य मन्युः पुत्त्रो मन्योश्चैव नरः सुतः ।
नरस्य संकृतिः पुत्त्रः सुसन्धिः संकृतेः सुतः ॥”
सुसन्धिस्थाने गर्गश्च इति पाठः ।
“गर्गादमन्युपुत्त्रो वै शिनिस्तस्य व्यजायत ।”
अमन्युस्थाने भुमन्युरिति च पाठः ।
“अमन्योश्च महावीर्य्यादुरुक्षयः सुतोऽभवत् ॥
उरुक्षयात् त्रय्यारुणिबृहत्क्षत्त्राच्च मन्युजात्
सुहोत्रस्तस्य हस्ती च अजमीढद्विमीढकौ ॥
हस्तिनः पुरुमीढश्च कण्वोऽभूदजमीढतः ।
कण्वान्मेधातिथिर्जज्ञे यतः काण्वायना द्विजाः ॥
अजमीढाद्बृहदिसुस्तत्पुत्त्रश्च बृहद्धनुः ।
बृहत्कर्म्मा तस्य पुत्त्रस्तस्य पुत्त्रो जयद्रथः ॥
जयद्रथाद्विश्वजिच्च सेनजिच्च तदात्मजः ।
रुचिराश्वः सेनजितः पृथुसेनस्तदात्मजः ॥
पारस्तु पृथुसेनस्य पारान्नीपोऽभवन्नृपः ।
नीपस्य समरः पुत्त्रः सुकृतिस्तु ततोऽभवत् ॥
विभ्राजः सुकृतेः पुत्त्रो विभ्राजादनुहोऽभवत् ।
कृत्यां तस्माद्ब्रह्मदत्तो विश्वक्सेनस्तदात्मजः ॥
सत्यहितात् सुधन्वाभूज्जह्नुश्चैव सुधन्वतः ॥”
जह्नुस्थाने जन्तुरिति च पाठः ।
“बृहद्रथाज्जरासन्धः सहदेवस्तदात्मजः
सहदेवाच्च सोमापिः सोमापेः श्रुतवान् सुतः ॥
भीमसेनप्रसेनौ च श्रुतसेनोऽपराजितः ।”
प्रसेनस्थाने उग्रसेन इति च पाठः ।
“जनमेजयश्चान्योऽभूज्जह्नोस्तु सुरथोऽभवत् ।
विदूरथस्तु सुरथात् सार्व्वभौमो विदूरथात् ॥
जयत्सेनः सार्व्वभौमादराधीतस्तदात्मजः ।
अयुतायुस्तस्य पुत्त्रस्तस्य चाक्रोधनः सुतः ॥
अक्रोधनस्यातिथिश्च ऋक्षोऽभूदतिथेः सुतः ।
ऋक्षाच्च भीमसेनोऽभूद्दिलीपो भीमसेनतः ॥
प्रतीपोऽभूद्दिलीपात्तु देवापिस्तु प्रतीपतः ।
शान्तनुश्चैव वाह्लीकस्त्रयस्ते भ्रातरो नृपाः ।
वाह्लीकात् सोमदत्तोऽभूत् भूरिभूरिश्रवास्ततः ॥
शलश्च शान्तनोर्भीष्मो गङ्गायां धार्म्मिको महान् ।
चित्राङ्गदविचित्रौ तु सत्यवत्यान्तु शान्तनोः ॥
विचित्रवीर्य्यभार्य्ये तु अम्बिकाम्बालिका तयोः
धृतराष्ट्रञ्च पाण्डुञ्च तद्दास्यां विदुरन्तथा ॥
व्यास उत्पादयामास गान्धार्य्यां धृतराष्ट्रतः ।
लोपः णित्त्वे व्रिरिति वृद्धिः षित्वादीप् अनित-श्चेत्युक्तेर्णित्त्वाभावविवक्षया वृद्ध्यभावे ब्रह्मी च “ब्राह्मी वयःस्था मत्स्याक्षी ब्रह्मी च सोम-वल्लरी ।”
इति वाचस्पतिः ॥
लोपः णित्त्वे व्रिरिति वृद्धिः षित्वादीप् अनित-श्चेत्युक्तेर्णित्त्वाभावविवक्षया वृद्ध्यभावे ब्रह्मी च “ब्राह्मी वयःस्था मत्स्याक्षी ब्रह्मी च सोम-वल्लरी ।”
इति वाचस्पतिः ॥
मत्स्याक्षितुल्यपुष्पत्वात्मत्स्याक्षी । वयो यौवनं तिष्ठत्यनया वयःस्था भिदादित्वात् ङः मध्य-विसर्गा मनीषादित्वात् विसर्गलोपे निर्व्विसर्गा च । सोमेन यागार्थमुपात्तेति सोमवल्लरी अर्थ-परत्वात् इन्दुवल्लरी चन्द्रवल्लरी इत्याद्यपि । वल्लर्य्या लतार्थपरत्वात् सोमवल्ली सोमलता सोमवल्लिका इत्याद्यपि पाठः । इति भरतः ॥

**सोमवल्लिका**, स्त्री, (सोमवल्लीव । इवार्थे कन् ।) सोमराजी । इत्यमरः । २ । ४ । ९५ ॥ (सोमस्य वल्लिका ।) सोमलता । इति भरतः ॥

**सोमवल्ली**, स्त्री, (सोमस्य वल्लीव ।) गुडूची । इत्यमरः । २ । ४ । ४३ ॥ सोमलता इति तट्टी-कायां भरतः ॥ सोमराजी । इति शब्दरत्ना-वली ॥ पातालगरुडी । ब्राह्मी । सुदर्शना । इति राजनिर्घण्टः ॥ (यथा, वृहत्संहितायाम् । ५४ । १०८ ।
“या सोमवल्ल्याश्च समानरूपा
साप्याशु तोयं कुरुतेऽक्षयञ्च ॥”)

**सोमवारः**, पुं, (सोमस्य वारः ।) सोमस्य भोग्य-दिनम् । चन्द्रवासरम् । यथा, --
“सोमवारेऽप्यमावास्या आदित्याहे च सप्तमी
चतुर्थी भौमवारे च अक्षयादपि चाक्षया ॥”
इति तिथ्यादितत्त्वम् ॥ * ॥
तद्दिवसीयवारवेला यथा, --
“रवौ वर्ज्यं चतुः पञ्च सोमे सप्त द्वयं तथा ।”
इति ज्योतिःसागरसारः ॥
तद्रात्रौ कालवेला यथा, --

यवीनरो द्विमीढस्य धृतिमांश्च
यवीनरात् ।
धृतिमतः
सत्यधृतिर्दृढनेमिस्तदात्मजः ॥
दृढनेमेः सुपार्श्वोऽभूत् सुपार्श्वात्
सन्नतिस्तथा ।
कृतस्तु सन्नतेः पुत्त्रः
कृतादुग्रायुधोऽभवत् ॥
उग्रायुधाच्च
क्षेम्योऽभूदम्बरीषस्तदात्मजः।
पुरञ्जयस्त्वम्बरीषात् तस्य पुत्त्रो
विदूरथः ॥”
अम्बरीषस्थाने सुवीर इति च पाठः
।
“अजमीढान्नलिन्याञ्च नीलो नाम
सुतोऽभवत्
नीलाच्छान्तिरभूत् पुत्त्रः
सुशान्तिस्तस्य
चात्मजः ॥
सुशान्तश्च पुरुर्जातो ह्यर्कस्तस्य
सुतोऽभवत् ।
अर्कस्य चैव हर्य्यश्वो
हर्य्यश्वान्मुद्गलोऽभवत् ॥
यवीनरो बृहदिषुः कम्पिल्यः
सृञ्जयस्तथा ।
पाञ्चालान्मुद्गलाज्जज्ञे शरद्वांस्तस्य
चात्मजः ॥”
तस्य चात्मजस्थाने वैष्णवो महान
इति च पाठः
“दिवोदासो द्वितीयश्च अहल्यायां
शरद्वतः ।
शतानन्दोऽभवत् पुत्त्रस्तस्य
सत्यधृतिः सुतः ॥
कृपः कृपी सत्यधृतेरुर्व्वश्यां
वीर्य्यहानितः ।
द्रोणपत्नी कृपी जज्ञे
अश्वत्थामानमुत्तमम् ॥
दिवोदासान्मित्रयुश्च
मित्रयोश्च्यवनोऽभवत् ।
सुदासश्च्यवनाज्जज्ञे सौदासस्तस्य
चात्मजः ॥
शतं पुत्त्रं दुर्य्योधनाद्यं पाण्डोः पञ्च
प्रजज्ञिरे ॥
प्रतिबिन्ध्यः सुतः सोमः श्रुतकीर्त्तिस्तु
चार्ज्जुनात्
शतानीकः श्रुतकर्म्मा द्रौपद्यां पञ्च वै
क्रमात् ॥
यौधेयी च हिडिम्बा च काशी चैव
शुभद्रिका
विजया वै वेणुमती पञ्चभ्यस्तु सुताः
क्रमात् ॥
देवको घटत्कचश्च अभिमन्युश्च
सर्व्वशः ।
सुहोत्रो निरमित्रश्च परिक्षिदभिमन्युजः
॥”
अत्र अहोत्रो निरपत्रश्चेति तृतीयचरणे
पाठः ।
“जनमेजयश्च ततो भविष्यांश्च
नृपाञ्छृणु ॥”
इति गारुडे १४४ अध्यायः ॥

**सोमवल्कः**, पुं, (सोमस्येव वल्को यस्य ।) श्वेत-

खदिरः । इत्यमरः । २ । ४ । ५० ॥
(अस्य पर्य्यायो
यथा, --
“सोमवल्को ब्रह्मशल्यः कदरः
खदिरोपमः ॥”
इति वैद्यकरत्नमालायाम् ॥)
कट्फलः । इति मेदिनी ॥ (अस्य
पर्य्यायो यथा,
“कट्फलः सोमवल्कश्च कैटर्य्यः
कुम्भिकापि च
श्रीपर्णिका कुमुदिका भद्रा भद्रवतीति
च ॥”
इति भावप्रकाशे पूर्व्वखण्डे प्रथमे भागे
॥)
करञ्जः । इति जटाधरः ॥ (अस्य
पर्य्यायो यथा,
“स चोक्तः पूतिकरञ्जः सोमवल्कश्च स
स्मृतः ।”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे
भागे ॥)
“रवौ षष्ठं विधौ वेदं कुजवारे द्वितीयकम् ।
बुधे सप्त गुरौ पञ्च भृगुवारे तृतीयकम् ।
शनावाद्यं तथा चान्तं रात्रौ कालं विवर्ज्जयेत् ॥”
इति ज्योतिःसारः ॥

**सोमवारव्रतं**, क्ली, (सोमवारकर्त्तव्यं व्रतम् ।)

प्रतिसोमवारोपवासपूर्व्वकसायंकालकर्त्तव्यशिव-
दुर्गापूजारूपव्रतविशेषः । तद्विवरणं यथा, --
“सोमवारे विशेषेण प्रदोषादिगुणैर्य्युते ।
केवलं वापि ये कुर्य्युः सोमवारे शिवार्च्चनम् ।
न तेषां विद्यते किञ्चिदिहामुत्र च दुर्लभम् ॥
उपोषितः शुचिर्भूत्वा सोमवारे जितेन्द्रियः ।
वैदिकैर्लौकिकैर्व्वापि विधिवत्पूजयेच्छिवम् ॥
ब्रह्मचारी गृहस्थो वा कन्या वापि सभर्त्तृका ।
विभर्त्तृका वा संपूज्य लभते वरमीप्सितम् ॥ * ॥
तत्राहं कथयिष्यामि कथां श्रोत्रमनोरमाम् ।
श्रुत्वा श्रुतधियः शम्भोर्भक्तिं कुर्व्वन्तु निश्चलाम्
आर्य्यावर्त्ते नृपः कश्चिदासीद्धर्म्मभृतां वरः ।
चित्रवर्म्मेति विख्यातो धर्म्मराजो दुरात्मनाम् ॥
सोऽनुकूलः स्वपत्नीषु पुत्त्रमेकं न लब्धवान् ।
चिरेण प्रार्थितां लेभे कन्यामेकां मनोहराम् ॥

सहदेवस्तस्य पुत्त्रः सहदेवात्तु सोमकः ।
जन्तुस्तु सोमकाज्जज्ञे पृषतश्चापरो महान् ॥
पृषतात् द्रुपदो जज्ञे धृष्टद्युम्नस्ततोऽभवत् ।
धृष्टद्युस्नात् धृष्टकेतुरृक्षोऽभूदजमीढतः ॥
ऋक्षात् संवरणो जज्ञे कुरुः संवरणादभूत् ।
सुधन्वश्च परिक्षित्तु जह्नुश्चैव कुरोः सुताः ॥
सुधनुषः सुहोत्रोऽभूत् च्यवनोऽभूत सुहोत्रतः ।
च्यवनात् कृतको जज्ञे अथोपरिचरो वसुः ॥
बृहद्रथश्च प्रत्यग्रः सत्याद्याश्च वसोः सुताः ।
बृहद्रथात् कुशाग्रश्च कुशाग्रात् ऋषभोऽभवत् ॥
ऋषभात् पुष्पवांस्तस्माज्जज्ञे सत्यहितो नृपः ।

रीठाकरञ्जः । इति राजनिर्घण्टः ॥

**सोमवल्लरिः**, स्त्री, (सोमस्य वल्लरिः । वा ङीष् ।) सोमलता । तत्पर्य्यायः । ब्राह्मी २ मत्स्याक्षी ३ वयःस्था ४ । इत्यमरः । २ । ४ । १३७ ॥ चत्वारि सोमलतायाम् । ब्राह्मीशाक इति केचित् । अतिपवित्रत्वेन ब्रह्मणः प्रियत्वात् ब्रह्मणो ब्राह्मणस्य वा इयं ब्राह्मी ष्णः नञा निर्द्दिष्टं व्यभिचरतीति मन- वर्ज्जानिति निषेधाभावे नोर्लोपौ ताविति नस्य

**सोमवल्लरी**, स्त्री, (सोमस्य वल्लरिः । वा ङीष् ।) सोमलता । तत्पर्य्यायः । ब्राह्मी २ मत्स्याक्षी ३ वयःस्था ४ । इत्यमरः । २ । ४ । १३७ ॥ चत्वारि सोमलतायाम् । ब्राह्मीशाक इति केचित् । अतिपवित्रत्वेन ब्रह्मणः प्रियत्वात् ब्रह्मणो ब्राह्मणस्य वा इयं ब्राह्मी ष्णः नञा निर्द्दिष्टं व्यभिचरतीति मन- वर्ज्जानिति निषेधाभावे नोर्लोपौ ताविति नस्य

स एकदा जातकलक्षणज्ञा-
नाहूय सर्व्वान् द्विजमुख्यवर्गान्
कुतूहलेनापि निविष्टचेताः
पप्रच्छ तस्या जनने विचारम् ॥ * ॥
अथ तं प्रावदत् कोऽपि बहुज्ञो
द्विजसत्तमः ।
एका सीमन्तिनी मान्या कन्या तव
महीपते ॥
अथान्योऽपि द्विजः प्राह
धैर्य्यवानविशङ्कितः ।
एषा चतुर्द्दशे वर्षे वैधव्यं
प्रतिपत्स्यति ॥
इत्याकर्ण्य वचस्तस्य
वज्रनिर्घातनिष्ठुरम् ।
मुहूर्त्तमभवद्राजा
चिन्ताव्याकुलमानसः ॥
सापि सिमन्तिनी बाला क्रमेण
गतशैशवा ।
वैधव्यमात्मनो भावि सा शुश्राव
सखीमुखात् ॥
परं निर्व्वेदमापन्ना तदाकर्ण्य
शुचिस्मिता ।
याज्ञवल्क्यमुनेः पत्नों मैत्रेयीं
पर्य्यपृच्छत ॥
मातस्त्वच्चरणाम्भोजंप्रपन्नाहं
भयाकुला ।
सौभाग्यवर्द्धनं कर्म्म मम
संशितुमर्हसि ॥ * ॥
इति प्रपन्नां नृपतेः कन्यामाह मुनेः
सती ।
शरणं व्रज तन्वङ्गि पार्व्वतीं
शिवसंयुताम् ॥
सोमवारे शिवं गौरीं पूजयस्व
समाहिता ।
उपोषिता वा सुस्नाता
विरजाम्बरधारिणी ॥
यतवाङ्निश्चलमतिः पूजां कृत्वा
यथोचिताम् ।

**सोमसंज्ञं**, क्ली, (सोमस्य चन्द्रस्य संज्ञा सञ्ज्ञा यस्य कर्पूरम् । इति रत्नमाला ॥

**सोमसारः**, पुं, (सोमस्येव शुक्लः सारो यस्य ।) श्वेतखदिरः । इति राजनिर्घण्टः ॥

**सोमसिद्धान्तः**, पुं, बुद्धभेदः । इति जटाधरः ॥ ज्योतिर्ग्रन्थविशेषश्च ॥ कापालिकवेशधारी । यथा,
“ततः प्रविशति कापालिकवेशधारी खड्गहस्तः सोमसिद्धान्तः ।” इति श्रीकृष्णमिश्रकृतप्रबोध-चन्दोदयनाटके ३ अङ्कः ॥ सोमसिद्धान्त इति उमया सह वर्त्तमानः सोमो महादेवस्तद्भाषित-सिद्धान्त आगमशास्त्रम् । इति श्रीयुक्तहरिहर-तक्कालङ्कारतनूजश्रीरुद्रविनिर्म्मिततट्टीका ॥

**सोमसिद्धान्ती**, [न्] पुं, सोमसिद्धान्तवेत्ता । सोम-सिद्धान्तशब्दादिन्प्रत्ययेन निष्पन्नः ॥

**सोमसिन्धुः**, पुं, (सोमस्यामृतस्य तद्वत्मोक्षस्य वा सिन्धुरिव ।) विष्णुः । इति त्रिकाण्ड-शेषः ॥

**सोमसुत्**, त्रि, (सोमं सुनोतीति । सोम + सु ञ् मन्थने + “सोमे सुञः ।” ३ । २ । ९० । इति क्विप् ।) यागे सोमलतारसक्षेपकर्त्ता । इति सिद्धान्तकौमुदी ॥ (यथा, रघुः । १८ । २७ ।
“तस्यौरसः सोमसुतः सुतोऽभूत्
नेत्रोत्सवः सोम इव द्वितीयः ॥”)

**सोमसुता**, स्त्री, (सोमस्य सुता ।) नर्म्मदानदी । इति राजनिर्घण्टः ॥ वुधे, पुं, ॥ (यथा मार्क-ण्डेये । १२३ । ११ ।
“अवैक्षतैनं देवानां गुरुः सोमसुतो बुधः ।
नावैक्षतैनमादित्यो नार्कसुनुर्न भूमिजः ॥”)

**सोमसूत्रं**, क्ली, (सोमस्य जलस्य सूत्रं निर्गम-प्रणालीव ।) प्रणालम् । तत्तु शिवलिङ्गस्थ-गौरीपट्टजलनिर्गमस्थानम् । यथा, --
“शिवप्रदक्षिणे मन्त्री अर्द्धचन्द्रक्रमेण तु ।
सव्यासव्यक्रमेणंव सीमसूत्रं न लङ्घयेत् ॥”
इति वाराहे
सोमेश्वरादिलिङ्गमहिमावमुक्ति-
क्षेत्रत्रिवेण्यादिमहिमनामाध्यायः ॥ (पीठ-स्थानविशेषः । यथा, देवीभागवते । ७ । ३० । ७३ ।
“सोमेश्वरे वरारोहा प्रभासे पुष्करावती ॥”)

**सोमोद्भवा**, स्त्री, (सोमादुद्भवो यस्याः ।) नर्म्मदा-नदी । इत्यमरः । १ । १० । ३२ ॥ (यथा, रघुः ५ । ५९ ।
तथेत्युपस्पृश्य पयः पवित्र
सोमोद्भवायाः सरितो नृसोमः ।
उदङ्मुखः सोऽस्त्रविदस्त्रमन्त्रं
जग्राह तस्मान्निगृहीतशापात् ॥”)
सोमजाते, त्रि ॥

**सोल्लुण्ठः**, पुं, (उल्लुण्ठेन सह वर्त्तमानः ।) सोल्लु-ण्ठनम् । इति हलायुधः ॥ (वाच्यलिङ्गोऽयमिति केचित् ॥)

**सोल्लुण्ठनं**, क्ली, (उल्लुण्ठेन सह वर्त्तमानम् ।) स्तुतिपूर्व्वकदुर्व्वादः । यथा, --
“दुर्व्वादः स्यादुपालम्भस्तत्र यः
स्तुतिपूर्व्वकः ।
सोल्लुण्ठनं सनिन्दस्तु यस्तत्र परिभाषणम् ॥”
इति जटाधरः ॥
(वाच्यलिङ्गेऽप्ययमिति केचित् ॥)

**सोल्लुण्ठोक्तिः**, स्त्री, (सोल्लुण्ठा उक्तिः ।) सव्यङ्गोक्तिः
यथा । उपनायकमानेतुं प्रेषितां
तदुपभोग-
लुप्तचन्दनादीन् वापीस्नानव्याजेन
गोपयन्तीं
दूतीं प्रति सोल्लुण्ठोक्तिरियमिति
निःशेषच्युत-

ब्राह्मणान् भोजयित्वा च शिवं सम्यक् प्रसादय
पापक्षयोऽभिषेकेण साम्राज्यं पीठपूजनात् ।
सौभाग्यमखिलं सौख्यं गन्धमाल्याक्षतार्च्चनात्
धूपदानेन सौगन्ध्यं कान्तिर्द्दीपप्रदानतः ।
नैवेद्येन महाभोगी लक्ष्मीस्ताम्बूलदानतः ॥
धर्म्मार्थकाममोक्षाणां नमस्कारः प्रसाधनम् ।
अष्टैश्वर्य्यादिसिद्धीनां जप एव हि साधनम् ॥
होमेन सर्व्वकामानां समृद्धिरपि जायते ।
सर्व्वेषामेव देवानां तुष्टिर्ब्राह्मणभोजनात् ॥
इत्थमाराधय शिवं सोमवारे शिवामपि ।
प्राप्ता विपद्भिर्बहुभिर्दुःखैर्व्वा न विहन्यसे ॥
घोरात् घोरं प्रपन्नापि महाक्लेशं भयानकम् ।
शिवपूजाप्रभावेण तरिष्यति महद्भयम् ॥ * ॥
इत्थं सीमन्तिनी सम्यक् तन्निशम्य सतीमुखात्
ययौ सापि वरारोहा राजपुत्री तथापि च ॥
इत्यादि स्कन्दपुराणे ब्रह्मोत्तरखण्डे सोमवार-
वतमाहात्म्यम् ८ अध्यायः ॥

**सोमविक्रयी**, [न्] पुं, (सोमं विक्रीणातीति । वि + क्री + णिनिः ।) सोमलतारसविक्रयकर्त्ता। यथा, "पापो हि सोमविक्रयी ।" इति मलमास-
तत्त्वे आश्वलायनब्राह्मणम् ॥ (एतत्सम्प्रदाना-
सोमसूत्रं जलनिःसरणस्थानम् । इति तन्त्रसारे सामान्यपूजापद्धतिः ॥

**सोमाख्यं**, क्ली, (सोमं सोमलतां आख्याति वर्णे-नेति । आ + ख्या + कः ।) रक्तकैरवम् । इति रत्नमाला ॥

**सोमाभा**, स्त्री, (सोमस्य आभा इव आभा यस्याः ।) चन्द्रावली । इति भक्तिरसामृतसिन्धुः ॥

**सोमालः**, त्रि, (सोमाय अलति पर्य्याप्नोतीति । अल् + अच् ।) कोमलः । इति हेमचन्द्रः ॥

**सोमाहः**, पुं, (सोमस्य अहः । समासे टच् ।) सोमवारः । इति ज्योतिषम् ॥

**सोमेश्वरः**, पुं, (सोमस्य ईश्वरः ।) काश्यां सोम-कर्त्तृकप्रतिष्ठितशिवः । यथा, --
"शिवरूपाधिष्ठितस्तु शिवरूपो गिरिः स्मृतः ।
सोमेन तत्र संस्थाप्य स्वनाम्ना लिङ्गमुत्तमम् ॥
वर्षाणान्तु सहस्रं वै स्वशापस्य निवृत्तये ।
ततः क्षयाद्विनिर्म्मुक्तस्तेजसा च परिप्लुतः ॥
स्वकं तेजोबलंप्राप्य तुष्टाव गिरिजापतिम् ।
सोमेश्वराच्च वरदमाविर्भूतं त्रियम्बकम् ॥"
चन्दनं इति श्लोकव्याख्याने काव्यप्रकाशटीकायां महेश्वरन्यायालङ्कारः ॥

**सौकरः**, त्रि, (सूकरस्यायमिति । सूकर + अण् ।) सूकरसम्बन्धी । (यथा, किराते । १२ । ५३ ।
"स तमाससाद घननील-
मभिमुखमुपस्थितं मुनेः ।
पोत्रनिकषणविभिन्नभुवं
दनुजं दधानमथ सौकरं वपुः ॥")

**सौकरिकः**, पुं, (सूकरं हन्तीति । सूकर + ठञ् ।) व्याधः । सिकारी इति भाषा । इति केचित् ॥
(यथा, बृहत्संहितायाम् । १५ । २२ ।
"वरुणेशे पाशिकमत्स्यबन्ध-
जलजानि जलचराजीवाः ।
सौकरिकरजकशौण्डिक-
शाकुनिकाश्चापि वर्गेऽस्मिन् ॥")

**सौकर्य्यं**, क्ली, (सुकरस्य भावः कर्म्म वा । सुकर + ष्यञ् ।) अनायासः । (यथा, साहित्यदर्पणे । १० । ९८ ।
"सौकर्य्येण च कार्य्यस्य विरुद्धं क्रियते यदि ॥" *
सूकरस्य भावः कर्म्म वा । सूकर + ष्यञ् ।) सूकरस्य क्रिया । इति विश्वः ॥

**सौक्ष्म्यं**, क्ली, सूक्ष्मता । सूक्ष्मस्य भावः इत्यर्थे ष्ण्य (ष्यञ्) प्रत्ययेन निष्पन्नम् ॥

**सौखसुप्तिकः**, त्रि, (सुखसुप्तिं सुखेन शयनं पृच्छ-तीति । सुखसुप्ति + ठञ् ।) वैतालिकः । यथा,
"वैतालिका बोधकरा अर्थिकाः सौखसुप्तिकाः ।"
इति हेमचन्द्रः ॥

देव दातुः प्रत्यवायो भवति । यथा,
मनुः ।
३ । १८० ।
“सोमविक्रयिणे विष्ठा भिषजे
पूयशोणितम् ।
नष्टं देवलके दत्तमप्रतिष्ठन्तु वार्द्धुषौ
॥”

**सोमवृक्षः**, पुं, (सोमस्येव वृक्षो यस्य ।) कट्फल-
वृक्षः । इति रत्नमाला ॥
श्वेतखदिरः । इति
राजनिर्घण्टः ॥

**सोमशकला**, स्त्री, (सोमस्य शकलमिव यत्र ।)
शशाण्डुली । इति राजनिर्घण्टः ।
चन्द्रखण्ड-
विशिष्टा च ॥

**सौखिकः**, त्रि, (सुखेन जीवतीति । सुख + “वेत-
नादिभ्यो जीवति ।” ४ । ४ । १२ । इति ठक् ।)
सुखार्थी । सौखीन इति भाषा ॥ (यथा, महा
भारते । १२ । १८ । २३ ।
“श्रिया विहीनैरधनै त्स्यक्तमित्रैरकिञ्चनैः ।
सौखिकैः सम्भृतानर्थान् यः सन्त्यजति किन्नु
तत् ॥”)

**सौख्यं**, क्ली, (सुखमेव । स्वार्थे ष्यञ् ।) सुखम् । इति
हेमचन्द्रः ॥ यथा, उत्तररामचरिते २ अङ्के ।
“अकिञ्चिदपि कुर्व्वाणः
सौख्यैर्दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं योहि यस्य प्रियो
जनः ॥”
सुखस्य भावः कर्म्म वा । सुख + ष्यञ् ।) सुख-
त्वम् । सुखस्यभावः इत्यर्थे ष्ण्यप्रत्ययेन
निष्पन्नम् ॥

**सौगतः**, पुं, (सुगत एव । स्वार्थे अण् ।) बुद्ध-
विशेषः । तत्पर्य्यायः । शून्यवादी २ । इति
हेमचन्द्रः ॥ (यथा, माघे । २ । २८ ।
“सर्व्वकार्य्यशरीरेषु
मूक्त्वाङ्गस्कन्धपञ्चकम् ।
सौगतानामिवात्मान्योनास्ति मन्त्रो मही-
भृताम् ॥”
सुगतसम्बन्धिनि, सुगतमताध्यायिनि च
त्रि ॥)

**सौगतिकः**, पुं, (सौगतं मतं वेत्तीति । ठक् ।)
वुद्धविशेषः । इति केचित् ॥

**सौगन्धं**, क्ली, (सुष्ठु गन्धो यस्य । ततः स्वार्थे
अण् ।) कत्तृणम् । यथा, --
अन्त्रादा उदरादा हृदयादाश्चुरवो
दर्भपुष्पाः
सौगन्धिका महागुदाश्च इति ॥”)

**सौगन्ध्यं**, क्ली, सुगन्धत्वम् । सुगन्धस्य भाव इत्यर्थे
सुगन्धशब्दात् ष्ण्य (ष्यञ्) प्रत्ययेन
निष्पन्नम् ॥
(यथा, महाभारते । १ । ६३ । ७९ ।
“एवमुक्त्वा वरं वव्रे गात्रसौगन्ध्यमुत्तमम्
॥”)

**सौचिः**, पुं, सौचिकः । इति शब्दरत्नावली ॥

**सौचिकः**, पुं, (सूच्या जीवतीति । सूची + ठक् ।)
सूचीकर्म्मोपजीवी । दर्जी इति भाषा । तत्-
पर्य्यायः । तुन्नवायः २ । इत्यमरः । २ ।
१० । ६ ॥
सूचिकः ३ सौचिः ४ सूत्रभित् ५ । इति शब्द-
रत्नावली ॥

**सौजन्यं**, क्ली, (सुजनस्य भावः कर्म्म वा । सुजन
+ ष्यञ् ।) सुजनता । यथा, --
“सौजन्यं वरवंशजन्म विभवो
दीर्घायुरारोग्यता
विज्ञत्वं विनयित्वमिन्द्रियवशः
सत्पात्रदाने
रुचिः ।
सन्मन्त्री सुसुतः प्रिया प्रियतमा भक्तिश्च
नारायणे
सत्पुण्येन विना त्रयोदश गुणाः संसारिणां
दुर्लभा ॥”
इट्युद्भटः ॥

**सौण्डी**, स्त्री, पिप्पली । इति शब्दचन्द्रिका ॥
(पिप्पलीशब्देऽस्या विशेषो विज्ञेयः ॥)

**सौत्रः**, पुं, (सूत्रं यज्ञसूत्रमर्हतीति । सूत्र +
अण् ।) ब्राह्मणः । इति हेमचन्द्रः ॥ (सूत्रे
(सुदामा ऐरावतस्तस्य स्त्री सौदामनी
पत्न्या-
मीप् वृद्धिश्च मनीषादित्वात् । श्वेतद्विपः
सुदामा चेति ऐरावतपर्य्यायि त्रिकाण्डशेषः ॥
“खेऽभ्रं जगाम काञ्चन-
सरसमसौदामनीलताधामास्तम् ।
कुवलयमयमिव सरजः
सरसमसौदामनीलताधामास्तम् ॥”
इति हरिप्रबोधयमकात् सौदामिनीत्यपपाठ
इति मुकुटः । इति भरतः ॥ * ॥ यथा, महा-
भारते । १ । १७२ । ४२ ।
“ततो लालप्यमानस्य पार्थिवस्यायतेक्षणा ।
सौनामनीव चाभ्रेषु तत्रैवान्तरधीयत ॥”)
अप्सरोभेदः । विद्युद्भेदः । इति मेदिनी ।
(यथा, भागवते । १ । ६ । २८ ।
“एवं कष्णमतेर्ब्रह्मन्नासक्तस्यामलात्मनः ।
कालः प्रादुरभूत् कार्लेतडित् सौदामनी यथा
॥”
सुदामा माला तत्र भवा सौदामनी माला-
कारा इत्यर्थः । सुदामा पर्व्वतः तेनैकदिगिति
सूत्रेण अण्
स्फटिकमयपर्व्वतप्रान्तभागभवा हि
विद्युदतिस्फुटा भवति । इतितट्टीकायां श्रीधर-
स्वामी ॥)

**सौदामिनी**, स्त्री, विद्युत् । इत्यमरटीका । १ । ३ । ९
(यथा, ऋतुसंहारे । ३ । १२ ।
“नष्टं धनुर्बलभिदो जलदोदरेषु
सौदामिनी स्फुरति नाद्य वियत्पताका ॥
तडिद्भेदः । (यथा, महाभारते । ३ । ५३ ।
१२ ।
“तत्र स्म राजते भैमी सर्व्वाभरणभूषिता ।
सखीमध्येऽनवद्याङ्गी विद्युत् सौदामिनी यथा
॥
अप्सरोभेदः । इति हेमचन्द्रः ॥ देशविशेषः ।
इत्यजयः ॥

**सौदाम्नी**, स्त्री, सौदामनी । इति शब्दरत्नावली ॥

**सौदायिकं**, त्रि, (सुदायेभ्यः पितृमातृभर्त्तृकुल-

"सौगन्धिकञ्च सौगन्धं रामकर्पूरके तृणे
॥"
इति शब्दरत्नावली ॥
(पुं, सङ्करजातिविशेषः । यथा, महाभारते
।
१३ । ४८ । २२ ।
"चतुरो मागधी सूते क्रूरान्मायोपजीविनः
।
मांसं स्वादुकरं क्षौद्रं सौगन्धमिति
विश्रुतम् ॥"
शोभनगन्धयुक्ते, त्रि ॥

**सौगन्धिकं**, क्ली, (सुगन्धोऽस्त्यस्येति । सुगन्ध +

ठन् । ततः स्वार्थे अण् ।) कत्तृणम् ।
(अस्य
पर्य्यायो यथा, --
"कत्तृणं रौहिषं देवजग्धं सौगन्धिकन्तथा
।
भूतिकं व्यामपौरञ्च श्यामकं धूमगन्धिकम्
॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे
॥)
कह्लारम् । इत्यमरः । १ । १० । ३६ ॥
पद्म-
रागमणिः । इति मेदिनी ॥ नीलोत्पलम् ।
इति
राजनिर्घण्टः ॥ (अस्य पर्य्यायो यथा, --
"इन्दीवरं कुवलयं पद्मं नीलोत्पलं स्मृतम्
।
सौगन्धिकं शतदलमब्जं कमलमुच्यते ॥"
इति गारुडे २०८ अध्यायः ॥
यथा, महाभारते । ३ । १५४ । २ ।
अपश्यत्तत्र पाञ्चाली सौगन्धिकमनुत्तमम्
।
अनिलोढमितो नूनं सा बहूनि परीप्सति
॥")

**सौगन्धिकः**, पुं, (सौगन्धोऽस्यास्तीति । ठन् ।)

गन्धकः । इत्यमरः । २ । ९ । १०२ ॥
सुगन्ध-
व्यवहोरी । इति मेदिनी ॥ गन्धीति हिन्दी
पठितः पाणिन्यादिभिः कर्म्मविशेषायेति
।
अण् ।) नियतप्रयोगाभावधातुविशेषः ।
यथा, --
"धातूनामिह सौत्राणां
द्विचत्वारिंशिदीरिताः ॥
इति कविकल्पद्रुमः ॥
(सूत्रस्येदमित्यण् ।) सूत्रसम्बन्धिनि, त्रि
॥

**सौत्रामणी**, स्त्री, (सुत्रामा इन्द्रो देवता अस्याः ।

सुत्रामन् + अण् । बहुलवचनात् न
टिलोपः ।
ततः स्त्रियां ङीप् ।) यागविशेषः । यथा ।
अथ सौत्रामणी त्रिभिरध्यायैः प्रक्रियते ।
स
एतं महाक्रतुमपश्यत् सौत्रामणीमिति
श्रुतेः ।
तत्र सुरां सन्धीयते । तत्र मन्त्रः ।
स्वाद्वीन्त्वा
स्वादुना तीव्रां तीव्रेणामृताममृतेन ।
मधुमती
मधुमता सृजामि सँ सोमेन
सोमोऽस्यश्विभ्यां
पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सूत्राम्णे
पच्यस्व ॥
सौत्रामण्याः ऋषिः प्रजापतिः । सुरा
देवता ।
अनुष्टुप् छन्दः । इति यजुर्व्वेदस्य काण्व-
शाखायाम् २१ अध्यायः ॥ विस्तारस्तु
तत्रैव २१ । २२ । २३ । अध्यायेषु
द्रष्टव्यः ।
योगक्रमस्तु कात्यायनसूत्रभाष्ये द्रष्टव्यः
॥ (अत्र
सुरां पित्वा ब्राह्मणः पतितो न भतति ।
यदुक्तम्
"सौत्रामण्यां कुलाचारे ब्राह्मणः प्रपिबेत्
सुराम् ।
अन्यत्र कामतः पीत्वा पतितस्तु द्विजो
भवेत् ॥"

**सौदामनी**, स्त्री, (सुदामा मेघः पर्व्वतो वा । तेन
सम्बन्धिभ्य आगतमिति । सुदाय + ठञ् ।)
पितृ-
मातृभर्त्तृकुललब्धस्त्रीधनम् । यथा,
कात्यायनः ।
"ऊढया कन्यया वापि पत्युः पितृगृहेऽथवा ।
भर्त्तुः सकाशात् पित्रोर्व्वा लब्धं सौदायिकं
स्मृतम् ॥
सौदायिकं धनं प्राप्य स्त्रीणां
स्वातन्त्र्यमिष्यते
यस्मात् तदानृशंस्यार्थं तैर्दत्तं तत्प्रजीवनम् ॥
सौदायिके सदा स्त्रीणां स्वातन्त्र्यं
परिकीर्त्तितम्
विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥"
सुदायेभ्यः पितृमातृभर्त्तृकुलसम्बन्धिभ्यो
लब्धं
सौदायिकम् । आनृशंस्यमनैष्ठुर्य्यम् । इति
दायतत्त्वम् ॥

**सौदासः**, पुं, इक्ष्वाकुवंशीयः अयोध्याधिपतिः ।

अस्य नामान्तरम् । कल्माषपादः १ मित्र-
सहः २ । इति पुराणम् ॥ (यथा,
महाभारते । १ । १२२ । २१ ।
"सौदासेन च रम्भोरु नियुक्ता पुत्रजन्मनि ।
मदयन्ती जगामर्षिं वशिष्ठमिति नः श्रुतम् ॥"
अस्य विशेषविवरणन्तु कल्माषपादशब्दे
द्रष्टव्यम् ॥)

**सौधः**, पुं, क्ली, (सुधालेपोऽस्यास्तीति । ज्योत्स्नादि-
त्वादण् । (राजसदनम् । इत्यमरः । २ ।
२ । १० ॥
(यथा, रघुः । ८ । ९३ ।
"तस्य प्रसह्य हृदयं किल शोकशङ्कुः
प्लक्षप्ररोह इव सौधतलं विभेद ॥")
रौप्यम् । इति राजनिर्घण्टः ॥
सुधासम्बन्धिनि,
त्रि ॥ (यथा, रामायणे । २ । ८० । १९ ।
"प्रसादमालासंयुक्ताः
सौधप्राकारसंवृताः ॥"
तथाच सुश्रुते । १ । ४४ ।
"विरेचनानां तीक्ष्णानां पयः सौधं परं
मतम् ॥")

**सौधः**, पुं, दुग्धपाषाणः । इति राजनिर्घण्टः ॥

**सौधारः**, पुं, नाटकस्य चतुर्द्दशभागैकभागः । इति
केचित् ॥

**सौधालं**, क्ली, (सौधवत् अलति पर्य्याप्नोतीति ।
अल + अच् ।) शिवमन्दिरम् । इति
केचित् ॥

**सौनन्दं**, क्ली, (सुनन्दमेव । स्वार्थे अण् ।) बल-
देवमुषलम् । इति हेमचन्द्रः ॥ (यथा,
हरि-
वंशे । ९ । ६३ ।
"सौनन्दञ्च ततः श्रीमान्निरानन्दकरं
द्विषाम् ।
सव्येन सात्त्वतां श्रेष्ठो जग्राह भुषलोत्तमम्
॥")

**सौनन्दी**, [न्] पुं, (सौनन्दं मुषलमस्यास्तीति ।
इनिः ।) बलदेवः । इति त्रिकाण्डशेषः ॥

**सौनिकः**, पुं, (सूनया पश्वादिवधस्थानेन चरतीति
सूना + ठक् ।) पशुपक्षिमांसविक्रयकर्त्ता
। तत्
पर्य्यायः । वैतंसिकः २ मांसिकः ३
कौटिकः ४ ।
"छाद्यमानस्तु नागैः स ध्यात्वा
राक्षसपुङ्गवः ।
सौपर्णं रूपमास्थाय भक्षयामास पन्नगान्
॥")

**सौपर्णी**, स्त्री, पातालगरुडी लता । इति राज-
निर्घण्टः ॥

**सौपर्णेयः**, पुं, (सुपर्ण्या अपत्यं पुमानिति । "स्त्रीभ्यो
ढक् ।" ४ । १ । १२० । इति ढक् ।)
गरुडः ।
इति हेमचन्द्रः ॥ गायत्र्यादिच्छन्दांसि ।
यथा,
"विनतायास्तु पुत्त्रौ द्वावरुणो
गरुडस्तथा ।
प्रभावत्यः स्वसारश्च यवीयस्यस्तयोः
स्मृताः ॥
गायत्र्यादीनि च्छन्दांसि सौपर्णेयानि
पक्षिणः ।
हव्यवाहानि सर्व्वाणि दिक्षु संनियतानिच
॥"
इति वह्निपुराणे
काश्यपीयवंशकथननामा-
ध्यायः ॥

**सौप्तिकं**, क्ली, (सुप्तौ सुप्तिकाले भवम् । सुप्ति +
ठञ् ।) रात्रियुद्धम् । तत्पर्य्यायः । निशा-
रणम् २ । इति जटाधरः ॥ रात्रिमारणम्
३ ।
इति त्रिकाण्डशेषः ॥ (यथा, महाभारते ।
१० ।
४ । ३३ ।
"अहन्तु कदनं कृत्वा शत्रूणामद्य सौप्तिके
।
ततो विश्रमिता चैव स्वप्ता च विगतज्वरः
॥")
महाभारतीयपर्व्वविशेषः । यथा, --
"आदिः सभावनविराटमथोद्यमश्च
भीष्मो गुरू रविजमद्रवसौप्तिकञ्च ।
स्त्रीपर्व्व शान्तिरनुशासनमश्वमेध-
ढक् ।) अभिमन्युः । सुभद्राया अपत्यत्वात् ॥
विभीतकवृक्षः । इति शब्दचन्द्रिका ॥

**सौभरिः**, पुं, मुनिविशेषः । यथा, --
"मीनान् सुदुःखितान् दृष्ट्वा दीनान् मीनपतौ
हृते ।
कृपया सौभरिः प्राह तत्रत्यक्षेममाचरन् ॥"
इति श्रीभागवते । १० । १७ । १० ।
(अस्य विशेषविवरणन्तु विष्णुपुराणे ४
अंशस्य
२ अध्यायमारभ्य द्रष्टव्यम् ॥)

**सौभागिनेयः**, पुं, (सुभगाया अपत्थ पुमानिति ।
सुभगा + "कल्याण्यादीनामिनङ्" । ४ । १ ।
१२६ ।
इति ढक् इनङादेशश्च ।
"हृद्भगसिन्ध्वन्तेपूर्व्व-
पदस्य च ।" ७ । ३ । १९ । इति उभयपद-
वृद्धिः ।) सुभगापुत्त्रः । तत्पर्य्यायः । सुभगा-
सुतः २ । इत्यमरः । २ । ६ । २४ ॥
सुभागिनेय-
सम्बन्धिनि, त्रि, ॥

**सौभाग्यं**, क्ली, (सुभगायै हितम् । सुभगा + ष्यञ्
"हृद्भगेति ।" ७ । ३ । १९ । इत्युभयपदवृद्धिः
।)
सिन्दूरम् । टङ्कणः । इति राजनिर्घण्टः ॥
(अस्य पर्य्यायो यथा, --
"सौभाग्यं टङ्कणं क्षारो धातुद्रावकमुच्यते ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥
सुभगायाः मुभगस्य वा भावः । ष्यञ् ।) सुभ-
गत्वम् । (यथा, कुमारे । ५ । १ ।
"तथा समक्षं दहता मनोभवं
पिनाकिना भग्नमनोरथा सती ।
निनिन्द रूपं हृदयेन पार्व्वती
प्रियेषु सौभाग्यफला हि चारुता ॥")
योगभेदः । इति मेदिनी ॥ स च विष्कम्भादि-
सप्तविंशतियोगान्तर्गतचतुर्थयोगः । तत्र जात-
फलम् ।
"सौभाग्यजन्मा सुभगो मनुष्यः

इति हेमचन्द्रः ॥ (यथा, मनुः । ४ । ८६ ।
"दश सूनासहस्राणि यो वाहयति सौनिकः ।
तेन तुल्यः स्मृतो राजा घोरस्तस्य प्रतिग्रहः ॥")
तालव्यशकारादिरपि ॥

**सौन्दर्य्यं**, क्ली, (सुन्दरस्य भावः । सुन्दर + ष्यञ् ।)
सुन्दरत्वम् । सुन्दरस्य भावः । तस्य लक्षणं यथा,
"अङ्गप्रत्यङ्गकानां यः सन्निवेशो यथोचितम् ।
सुश्लिष्टः सन्धिबन्धः स्यात् तत् सौन्दर्य्यमुदा-
हृतम् ॥
इत्युज्ज्वलनीलमणिः ॥
(यथा, कुमारे । १ । ४९ ।
सर्व्वोपमाद्रव्यसमुच्चयेन यथाप्रदेशं विनिवेशितेन ।
सा निर्म्मिता विश्वसृजा प्रयत्ना-
देकस्थसौन्दर्य्यदिदृक्षयेव ॥")

**सौपर्णं**, क्ली, (सुपर्णं गरुडं तद्वर्णमित्यर्थः अर्ह-
तीति । सुपण + अण् ।) मरकतम् । शुण्ठी ।
इति राजनिर्घण्टः ॥ (गरुडपुराणम् । यथा,
भागवते । १२ । १३ । ८ ।
"एकोनविंशं सौपर्णं ब्रह्माण्डं द्वादशैवतु ॥"
गारुत्मतास्त्रम् । यथा, रघुः । १६ । ८० ।
"विभूषणप्रत्युपहारहस्त-
मुपस्थितं वीक्ष्य विशाम्पतिस्तम् ।
सौपर्णमस्त्रं प्रतिसञ्जहार
प्रह्वेष्वनिर्बन्धरुषो हि सन्तः ॥")
सुपर्णसम्बन्धिनि, त्रि ॥ (यथा, महाभारते ।
६ । ८७ । ६९ ।
व्यासाश्रमो मुषलयानदिवावरोहः ॥"
इति महाभारतटीका ॥
सुप्तसम्बन्धिनि, त्रि ॥

**सौभं**, क्ली, हरिश्चन्द्रपुरम् । इति त्रिकाण्डशेषः ॥
तत्पर्य्यायः । कामचारिपुरम् २ । इति जटा-
धरः ॥ (शाल्वराजपुरम् । यथा, महाभारते ।
३ । १२ । ३३ ।
"हतः सौभपतिः शाल्वस्त्वया सौभश्च पाति-
तम् ।"
अस्य विशेषविवरणन्तु तत्रैव १४ अध्यायमारभ्य
विस्तरशो द्रष्टव्यम् ॥)

**सौभद्रः**, पुं, (सुभद्राया अपत्यं पुमानिति । सुभद्रा
अण् ।) सुभद्रापुत्त्रः । स चाभिमन्युः । यथा, --
"सौभद्रो द्रौपदेयाश्च सर्व्व एव महारथाः ॥"
इति भगवद्गीतायां १ अध्यायः ॥
(सुभद्रा प्रयोजनमस्य । "संग्रामे प्रयोजन-
योद्धृभ्यः ।" ४ । ३ । ५६ । इति अण् । संग्राम-
विशेषः । सुभद्रामधिकृत्य कृतो ग्रन्थः । "अधि-
कृत्यकृते ग्रन्थे ।" ४ । ४ । ८७ । इत्यण् । ग्रन्थ-
विशेषः । इति काशिका ॥ * ॥ तीर्थविशेषे,
क्ली । यथा महाभारते । १ । २१७ । ३ -- ४ ।
"अगस्त्यतीर्थं सौभद्रं पौलोमञ्च सुपावनम् ।
कारन्धमं प्रसन्नञ्च हयमेधफलञ्च तत् ॥
भारद्वाजस्य तीर्थन्तु पापप्रशमनं महत् ।
एतानि पञ्चतीर्थानि ददर्श कुरुसत्तमः ॥")
सुभद्रासम्बन्धिनि, त्रि ॥

श्लाघ्यो जनानां धनवान् गुणज्ञः ।
उदारचित्तो बलवान् विवेकी
महाभिमानी प्रियभाषणश्च ॥"
इति कोष्ठीप्रदीपः ॥ * ॥
व्रतविशेषः । यथा, --
अगस्त्य उवाच ।
"अतः परं महाराज सौभाग्यकरणं व्रतम् ।
शृणु येनाशु सौभाम्यं स्त्रीपुं सोरुपजायते ॥
फाल्गुनस्य तु मासस्य तृतीया शुक्लपक्षगा ।
उपासितव्या नक्तेन शुचिना सत्यवादिना ॥
सश्रीकञ्च हरिं पूज्य रुद्रं वा चोमया सह ।
या श्रीः सा गिरिजा प्रोक्ता यो हरिः स त्रिलोचनः ॥
एवं सर्व्वेषु शास्त्रे षु पुराणेषु च पठ्यते ।
एतस्मादन्यथा यस्तु ब्रूते शास्त्रं पृथक्तया ॥
रुद्रो जनानां मर्त्यानां वाच्यं शास्त्रं न तद्भवेत् ।
विष्णुं रुद्रकृतं ब्रूयात् श्रीगौरीति निगद्यते ॥
एतयोरन्तरं यश्च ब्रूयात् सोऽधम उच्यते ।
तं नास्तिकं विजानीयात् सर्व्वधर्म्मबहिष्कृतम् ॥
एवं ज्ञात्वा सलक्ष्मीकं हरिं संपूज्य भक्तितः ।

|  | **सौभद्रेयः**, पुं, (सुभद्रायाः अपत्यं पुमानिति ।<br>सुभद्रा + "स्त्रीभ्यो ढक् ।" ४ । १ ।<br>१२० । इति |  |
|---|---|---|

मन्त्रेणानेन राजेन्द्र ततस्तं परमेश्वरम् ॥
गम्भीरायेति पादौ तु सुभगायेति वै कटिम् ।
उदरं देवदेवाय त्रिनेत्रायेति वै मुखम् ॥
वाचस्पतये च शिरो रुद्रायेति च सर्व्वतः ।
एवमभ्यर्च्च्य मेधावी विष्णुं लक्ष्म्या
समन्वितम् ॥
हरं वा गौरीसंयुक्तं गन्धपुष्पादिभिः क्रमात् ।
ततस्तस्याग्रतो होमं कारयेत् मधुसर्पिषा ॥
तिलैः सह महाराज सौभाग्यपतयेति च ।
ततस्त्वक्षारविरसं निस्नेहं धरणीतले ॥
गोधूमान्नन्तु भुञ्जीत कृष्णेऽप्येवं विधिः स्मृतः
।
आषाढादिद्वितीये तु पारणं तत्र भोजयेत् ॥
यवान्नन्तु ततः पश्चात् कार्त्तिकादिषु पार्थिव
।
श्यामाकं तत्र भुञ्जीत त्रीन् मासान् नियतः ॥
शुचिः ॥
ततो माघे सिते पक्षे तृतीयायां नराधिप ।
सौवर्णां कारयेद्गौरीं रुद्रं चैकत्र बुद्धिमान् ॥
सलक्ष्मीकं हरिञ्चापि यथाशक्त्या प्रसन्नधीः ।
ततस्तां ब्राह्मणे दद्यात् पात्रभूते विचक्षणे ॥
अन्नेन हीने वेदानां पारगे साधुवर्त्तिनि ।
सदाचारेऽथवा दद्यात् विष्णुभक्ते विशेषतः ॥
षड्भिः पात्रैरुपेतन्तु ब्राह्मणाय निवेदयेत् ।
एकं मधुमयं पात्रं द्वितीयं घृतपूरितम् ॥
तृतीयं तीलतैलस्य चतुर्थं गुडसंयुतम् ।
पञ्चमं लवणः पूर्णं षष्ठं गोक्षीरसंयुतम् ॥
एतानि दत्त्वा पात्राणि सप्तजन्मान्तरं भवेत् ।
सुभगो दर्शनीयश्च नारी वा पुरुषोऽपि वा ॥”
इति वाराहे सौभाग्यव्रतनामाध्यायः ॥

**सौभाग्यचिन्तामणिः**, पुं, (सौभाग्याय चिन्ता-
मणिरिव ।) औषधविशेषः । यथा, --
“सौभाग्यामृतजीरपञ्चलवणव्योषाभयाक्षानला
निश्चन्द्राभ्रकशुद्धगन्धकरसान्क्रीकृतान्
भाव-
येत् ।
निर्गुण्डीयुगभृङ्गराजकवृषापामार्गपत्रोल्लसत्
प्रत्येकं स्वरसेन सिद्धवटिका घ्नन्ति त्रिदोषो-
दयम् ॥

**सौमनस्यं**, क्ली, (सुमनसो भावः । ष्यञ् ।) श्राद्धे
पिण्डदानानन्तरब्राह्मणहस्तेपुष्पदानमन्त्रः
।
यथा शातातपः ।
“पिण्डनिर्व्वापरहितं यत्तु श्राद्धं विधीयते ।
स्वधावाचनलोपोऽत्र विकिरस्तु न लुप्यते ॥
अक्षय्यदक्षिणास्वस्तिसौमनस्यमथास्त्विति
॥”
छन्दोगपरिशिष्टम् ।
“अथाग्रभूमिमासिञ्चेत् सुसुप्रोक्षितमस्त्विति
।
शिवा आपः सन्त्विति च युग्मानेवोदकेन च
॥
सौमनस्यमस्त्विति च पुष्पदानमनन्तरम् ।
अक्षतञ्चारिष्टञ्चास्त्विति च अक्षतानपि दाप-
येत् ॥”
अथ प्रकृतब्राह्मणाचमनान्तरम् । ब्राह्मणाग्र-
भूमिं सुसुप्रोक्षितमस्त्विति प्रोक्षयेत् । शिवा
आप इत्यादिना उदकेन हस्ते सिञ्चेत् ॥
सौम-
नस्यमस्त्वित्यनेन हस्ते पुष्पदानं कुर्य्यात् ।
इति
श्राद्धतत्त्वम् ॥ सुमनसो भावः सौमनस्यं
तदत्र
श्राद्धे दत्तं पुष्पं सौमनस्यं मनसः
प्रसादजनकं
भवतु । इति गुणविष्णुः ॥ (सन्तुष्टचित्तता ।
यथा माघे । ७ । २८ ।
“रथचरणवराङ्गनाकराब्ज-
व्यतिकरसम्पदुपात्तसौमनस्याः ॥”
प्रसन्नचित्तार्हे, त्रि । यथा, भागवते । ४ ।
१२ । ४४ ।
“धन्यं यशस्यमायुष्यं पुण्यं स्वस्त्ययनं
महत् ।
स्वर्ग्यं ध्रौव्यं सौमनस्यं प्रशस्यमघमर्षणम्
॥”)

**सौमनस्यायनी**, स्त्री, (अयति प्राप्नोत्यनयेति ।
सोम इव सोम्यः । ततः प्रज्ञाद्यण् ।)
विप्रः ।
इति शब्दमाला ॥ उडुम्बरवृक्षः । इति
राज-
निर्घण्टः ॥
वृषकर्क्कटकन्यावृश्चिकमकरमीन-
राशयः । यथा, --
“क्रूरोऽथ सौम्यः पुरषोऽङ्गना च
ओजोऽथ युग्मं विषमः समश्च ।
चरस्थिरद्व्यात्मकनामधेया
मेषादयोऽमी क्रमशः प्रदिष्टाः ॥”
इति ज्योतिस्तत्त्वम् ॥
भूखण्डविशेषः । यथा, --
“गन्धर्व्वो वरुणः सौम्यो बहवः कङ्क
एव च ।
कुमुदश्च कसेरुश्च नागो
भद्रारकस्तथा ॥
चन्द्रेन्द्रमलयाशङ्खयवाङ्कगभस्तिमान्
।
ताम्राकुश्च कुमारी च तत्र
द्वीपदशाष्टभिः ॥”
इति शब्दमाला ॥
सौम्यकृच्छ्रव्रतम् । यथा, --
“प्राजापत्यः सान्तपनः शिशुकृच्छ्रः
पराककः ।
अतिकृच्छ्रः पर्णकृच्छ्रः सौम्यः
कृच्छ्रातिकृ-
च्छ्रकः ॥”
सौम्यः सौम्यकृच्छ्रः । इति
प्रायश्चित्ततत्त्वम् ॥
(पितृगणविशेषः । यथा, मनुः । ३ ।
१९९ ।
“अग्निदग्धानग्निदग्धान् काव्यान्
वर्हिषदस्तथा
अग्निष्वात्तांश्च सौम्यांश्च विप्राणामेव
निर्द्दिशेत् ॥

**सौम्यः**, त्रि, (सोमो देवतास्य । सोम + “सोमात्
ट्यण् ।” ४ । २ । ३० । इति ट्यण्
।) सोम-

येषां शीतमतीव देहमखिलं स्वेदद्रवाद्रीकृतं
निद्रा घोरतरा समस्तकरणव्यामोहमूढ्मनः ।
शूलश्वासबलाशकाससहितंमूर्च्छारुचिं तृट्
ज्वरं
तेषां वै परिहृत्य जीवितमसौ गृह्णाति मृत्यो-
र्मुखात् ॥”
इति सारकौमुदी ॥

**सौभाग्यतृतीया**, स्त्री, (सौभाग्याय तृतीया ।)

भाद्रशुक्लतृतीया । सा च मन्वन्तरा । इति
स्मृतिः ॥

**सौभाञ्जनः**, पुं, (सोभाञ्जन एव । स्वार्थे अण् ।)

शोभाञ्जनवृक्षः । इत्यमरटीका । २ । ४ । ३१
॥

**सौभिकः**, पुं, (सौभं कामचारिपुरादिनिर्म्माणं

शिल्पमस्य । ठक् ।) इन्द्रजालिकः । इति
हारावली ।

**सौमनसा**, स्त्री, जातीपत्री । इति राज-

निघण्टः ॥

अय + ल्युट् । ङीप् । सौमनस्यस्य
प्रसन्नचित्त-
ताया अयनी ।) मालतीपुष्पकलिका । इति
त्रिकाण्डशेषः ॥ (यथा । “सुमनाः
सौमनस्यायि-
नीहरिद्रादारुहरिद्रावृश्चीरपुनर्न्नामहासहा-
क्षुद्रसहाकषायैश्च ।” इति चरके
विमानस्थाने
अष्टमेऽध्याये ॥)

**सौमिकी**, स्त्री, (सोमस्तद्दीक्षा प्रयोजनमस्याः ।

ठक् ।) दीक्षणीयेष्टिः । इति हेमचन्द्रः ॥

**सौमित्रः**, पुं, (सुमित्रायां भवः । सुमित्रा + अण् ।)

लक्ष्मणः । इति शब्दरत्नावली ॥

**सौमित्रिः**, पुं, (सुमित्राया अपत्यं पुमानिति ।

बाह्वादित्वात् । इञ् ।) लक्ष्मणः । इति
शब्द-
रत्नावली ॥ (यथा, रामगीतायाम् । २ ।
“सौमित्रिणा पृष्ट उदारबुद्धिना
रामः कथाः प्राह पुरातनीः शुभाः ॥”)

**सौमेधिकः**, पुं, (सुमेधया निर्वृत्तः । सुमेधा + ठक्

सिद्धः । इति हारावली ॥
शोभनमेधासम्बन्धिनि,
त्रि ॥

**सौमेरुकं**, क्ली, सुवर्णम् । इति राजनिर्घण्टः ॥

सुमेरुसम्बन्धिनि, त्रि ॥ (क्वचित्
सीमेरबमिति
पाठो दृश्यते ॥)

**सौम्यः**, पुं, (सोमस्यापत्यं पुमान् । सोम +

ष्यञ् । बुधग्रहः । इत्यमरः । १ । ३ । २६
॥
(यथा, बृहत्संहितायाम् । ५ । ६० ।
“पश्यन् ग्रस्तं सौम्यो घृतमधुतैलक्षयाय
राज्ञाञ्च ॥”

दैवतः । अनुग्रः । मनोज्ञः । इति
मेदिनी ॥
(यथा रघुः । १२ । ३६ ।
“संरम्भं मैथिलीहासः क्षणसौम्यां
निनाय
ताम् ।
निवातस्तिमितां वेलां चन्द्रोदय
इवोदधेः ॥”
भक्तः । यथा, भागवते । २ । ४ । २३
।
“नमस्तस्मै भगवते वासुदेवाय वेधसे
।
पपुर्ज्ञानमयं सौम्या यन्मु
खाम्बुरुहासवम् ॥”)
भास्वरः । इति धरणिः ॥

**सौम्यकृच्छः**, पुं, (सौम्यः अनुग्रः कृच्छ्रः ।) व्रत-

विशेषः । यथा, गारुडे । १०५ । ६८
।
“पिण्याकाचामतक्राम्बुशक्तूनां
प्रतिवासरम् ।
एकैकमुपवासश्च कृच्छ्रः
सौम्योऽयमुच्यते ॥”

**सौम्यगन्धी**, स्त्री, (सौम्यो गन्धो यस्याः । ङीष्
।)

शतपत्री । इति राजनिर्घण्टः ॥

**सौम्यग्रहः**, पुं, (सौम्यो ग्रहः ।) शुभग्रहः । स च

पूर्णचन्द्रः पापग्रहायुक्तबुधः बृहस्पतिः
शुक्रश्च ।
यथा, ज्योतिस्तत्त्वे ।
“अर्द्धोनेन्द्वर्कशौराराः पापाः
सौम्यास्तथापरे ।
पापयुक्तो बुधः पापो राहुकेतू च पापदौ
॥”

**सौम्यधातुः**, स्त्री, (सौम्यो धातुः ।) कफः । इति

राजनिर्घण्टः ॥

**सौम्या**, स्त्री, (सोम इव सौम्यः । शाखादित्वात्

|  |  |  |
|---|---|---|
|  |  | यः । ततः प्रज्ञाद्यण् । स्त्रियां टाप् ।)<br>दुर्गा ।<br>यथा, --<br>“सौम्या सौम्यतराशेषसौम्ये<br>भ्यस्त्वतिसुन्दरी ॥”<br>इति देवीमाहात्म्यम् ॥ |

महेन्द्रवारुणी । रुद्रजटा ।
महाज्योतिष्मती ।
महिषवल्ली । गुञ्जा । शालपर्णो । ब्राह्मी ।
शटी मल्लिका । इति राजनिर्घण्टः ॥

**सौम्याः**, स्त्री, (सोमो देवता यासाम् । सोम +
ठ्यण् ।) इल्वलाः । तास्तु मृगशिरोनक्षत्र-
शिरःस्थाः पञ्च ताराः । इति
विश्वहेमचन्द्रौ ॥

**सौरः**, पुं, (सूरस्य सूर्य्यस्यायमिति । सूर + अण् ।
शनैश्चरः । इत्यमरटीकायां भरतः । १ ।
३ ।
२६ ॥ (यथा, बृहत्संहितायाम् । १० । ४
।
“बहुलास्थे पीड्यन्ते सौरेऽम्न्युपजीविन-
श्चमूपाश्च ॥”)
तुम्बुरुवृक्षः । इति राजनिर्घण्टः ॥
सूर्य्यैक-
राशिभोगावच्छिन्नमासादिः । यथा, विष्णु-
धर्म्मोत्तरम् ।
“आदित्यराशिभोगेन सौरो मासः
प्रकीर्त्तितः ॥
विवाहादिकर्म्मसु सौरमासस्योत्तेखः
कर्त्तव्यः ।
यथा, पितामहः ।
“आब्दिके पितृकृत्ये च मासश्चन्द्रमसः
स्मृतः ।
विवाहादौ स्मृतः सौरो यज्ञादौ सावनो
मतः ॥”
विवाहादावित्यत्रादिपदं यात्राग्रहचारपरम् ।
यत्कर्म्म सूर्य्यभोग्यराश्युल्लेखेन विहितं
यच्च
विशेष्योदगयनादिविहितं तत्परञ्च ।
अयनस्य
सौरमासघटितत्वेन वक्ष्यमाणत्वात् ।
तच्च
चूडोपनयनादि । विष्णुधर्म्मोत्तरम् ।
“अध्वायनञ्च ग्रहचारकर्म्म
सौरेण मानेन सदाध्यवस्येत् ।

**सौरदिवसः**, पुं, (सौरो दिवमः ।) सूर्य्यसम्बन्धि-
दिनम् । तत्तु रविभुक्तांशाधिकषष्टिदण्डैर्भवति
।
यथा, “सावनं दण्डाः षष्टिरहः
स्वलग्नस्वगुणां-
शाट्यास्तदैनं भवेत् ॥” इति मलमासतत्त्वम्
॥
“त्रिंशता सौरदिवसैः सावनः परिकीर्त्तितः ॥”
इति शब्दरत्नावली ॥

**सौरनक्तं**, क्ली, व्रतविशेषः । यथा, --
“हस्तयुक्ते अर्कदिने सौरनक्तं समाचरेत् ।
स्नात्वा चार्कं समभ्यर्च्च्य नीरोगी चिरजीवति
॥
आत्मनो द्विगुणच्छायं यदा सन्तिष्ठते रविः ।
सौरनक्तं विजानीयात् नक्तञ्च निशिभोजनम् ॥
इति नारसिंहे ६४ अध्यायः ॥

**सौरभं**, क्ली, (सौरभमस्यास्तीति । अच् ।)
कुङ्कुमम् । इति त्रिकाण्डशेषः ॥ वोलम् । इति
राजनिर्घण्टः ॥ सद्गन्धः । सुरभेर्भाव इत्यर्थे
ष्ण(अण्) प्रत्ययेन निष्पन्नम् ॥ (यथा, नैषधे ।
२ । ९२ ।
“सममेणमदैर्यदापणे
तुलयन् सौरभलोभनिश्चलम् ।
पणिता न जनारवैरवै-
दपि गुञ्जन्तमलिं मलीमसम् ॥”
तद्विशिष्टे, त्रि । यथा, भागवते । ८ । २ । ८ ।
“सरित्सरोभिरच्छोदैः पुलिनैर्मणिबालुकैः ।
देवस्त्रीमज्जनामोदसौरभाम्ब्रनिलैर्युतः ॥”)

**सौरभेयः**, पुं, (सुरभेरपत्यमिति । सुरभि + ढक्
वृषः । इत्यमरः । २ । ९ । ६० ॥ (यथा,
भाग-
वते । १ । १७ । ९ ।
“मा सौरभेयात्र शुचौ व्येतु ते वृषलात् भयम्
॥”
सुरभिसम्बन्धिनि त्रि ॥

**सौरभेयी**, स्त्री, (सुरभेरपत्यं स्त्री । सुरभि +

अपि च ।
“अथ षड्भिः सौरमासैरयनं
परिकीर्त्तितम् ॥”
इति शब्दरत्नावली ॥
अस्यान्यद्विवरण सौरशब्दे द्रष्टव्यम् ॥

**सौरसंवत्सरः**, पुं, (सौरः संवत्सरः ।) सूर्य्यस्य
द्वादशराशिभोगावच्छिन्नकालः । यथा,
--
“सौरसंवत्सरस्यान्ते मानेन शशिजेन तु
।
एकादशातिरिच्यन्ते दिनानि भृगुनन्दन
॥”
अपि च ।
“सौरेनाब्दस्तु मानेन यदा भवति भार्गव
।
सावनेन तथा मासि दिनषट्कं प्रपूर्य्यते
॥”
इति मलमासतत्त्वम् ॥

**सौरसेयः**, पुं, स्कन्दः । इति शब्दमाला ॥ सुर-
साया अपत्यञ्च ॥ (सुरसमर्हतीति ।
सुरस +
“वुञ्छण्कटजिति ।” ४ । २ । ८० ।
इति
सख्यादित्वात् ढञ् । सुरसार्हे, त्रि ॥)

**सौरसैन्धवः**, त्रि, (सुरसिन्धोरयम् । सुरसिन्धु +
अण् ।) गङ्गासम्बन्धीयः । स च
भीष्मादिः ।
(सौरः सूर्य्यसम्बन्धी सैन्धवः घोटकः
।) सूर्य्य-
घोटके, पुं, ॥

**सौराष्ट्रः**, पुं, (सुराष्ट्र एव । अण् ।) देश विशेषः ।
इति जटाधरः ॥ सुरट् इति भाषा ॥
कुन्दुरुकः ।
इति राजनिर्घण्टः ॥ कांस्ये, क्ली ।
इति केचित् ।

**सौराष्ट्रकं**, क्ली, (सुराष्ट्रे भवम् । अण् । ततः

सत्रास्त्यपास्यान्यथ सावनेन
लौक्यञ्च यत् स्याद्व्यवहारकर्म्म ॥"
अध्वायनं अध्वगमनं यात्रति यावत् । इति
ज्योतिस्तत्त्वम् ॥ * ॥ सूर्य्योपासकः ।
(यथा,
महानिर्व्वाणतन्त्रे । ३ । १४२ ।
"शाक्ताः शैवा वैष्णवाश्च सौरा
गाणपतास्तथा ।
विश विप्रेतराश्चैव सर्व्वेऽप्यत्राधिकारिणः
॥")
गुरुविशेषः । यथा, --
"गौडाः शाल्वोद्भवाः सौरा मागधाः
केरला-
स्तथा ।
कोशलाश्च दशार्णाश्च गुरवः सप्त मध्यमाः
॥"
इति तन्त्रसारे १ परिच्छेदः ॥
(उपपुराणविशेषे, क्ली । यथा,
देवीभागवते ।
१ । ३ । १५ ।
"सौरं पराशरप्रोक्तमादित्यञ्चातिविस्तरम्
॥"
सूर्य्यसम्बन्धिनि, त्रि । यथा, --
"शैवानि गाणपत्यानि शाक्तानि वैष्णवानि
च ।
साधनानि च सौराणि चान्यानि यानि
कानि च
श्रुतानि तानि देवेश तद्वक्त्रान्निःसृतानि च
॥"
इति तन्त्रसारे ३ परिच्छेदः ॥ * ॥
यथा च हरिवंशे भविष्यपर्व्वणि । ४९ ।
५२ ।
"यदा सौरं वपुरिति स्मर्त्ता स्यां जगतीपते
।
तदा तद्भावनायोगात् सूर्य्य एव विराजसे
॥")

**सौरजः**, पुं, (सौरात् तेजसः जायते इति ।

जन + डः ।) तुम्ब, रुवृक्षः । राजनिर्घण्टः
॥
सौरजाते, त्रि ॥

ढक् । ङीप् ।) नौः । इत्यमरः । २ । ९ । ॥ ३
॥
(यथा, रघुः । २ । ३ ।
"निवर्त्त्य राजा दयितां दयालु-
स्तां सोरभेयीं सुरभिर्यशोभिः ।
पयोधरीभूतचतुःसमुद्रां
जुगोप् गोरूपधरामिवोर्व्वीम् ॥"
अप्सरोविशेषः । यथा, महाभारते । २ । १०
। ११ ।
"विश्वाची सहजन्या च प्रम्लोचा उर्व्वशी इरा
वर्गा च सौरभेयी च समीची वुद्बुदा लता ॥")

**सौरभ्यं**, क्ली, (सुरभेर्भावः । सुरभि + व्यञ् ।)

मनोज्ञत्वम् । सौगन्धम् । (यथा, आर्य्यासप्त-
शत्याम् । २१३ ।
"गुणविधृता सखि तिष्टसि तथैव देहेन किन्तु
हृदयं ने ।
हृतममुना मालायाः समीरणेनेव सौरभ्यम्
॥")
गुणगौरवम् । इति मेदिनी ॥

**सौरभ्यः**, पुं, (सौरभ्यं गुणगौरवमस्यास्तीति ।

अच् ।) कुबेरः । इति शब्दरत्नावली ॥

**सौरमासः**, पुं, (सौरो मासः ।) सूर्य्यैकराशि-

भोगावच्छिन्नकालः । यथा, ब्रह्मसिद्धान्ते ।
"एकराशौ रविर्यावत्कालं मासः स भास्करः
॥"
इति मलमासतत्त्वम् ॥

कन् ।) पञ्चलोहम् । इति हेमचन्द्रः ॥

**सौराष्ट्रा**, स्त्री, (सुराष्ट्रे भवा । अण् ।) तुवरी ।

इति राजनिर्घण्टः ॥

**सौराष्ट्रिकं**, क्ली, (सुराष्ट्रे देशे भवम् । अध्या-

त्मादित्वात् ढञ् ।) विषभेदः । इति
शब्दरत्ना-
वलो भरतश्च ॥ (अस्य पर्य्यायो
लक्षणञ्च ।
यथा, --
"विषन्तु गरलं क्ष्वेडस्तस्य भेदानूदाहरे
।
वत्सनाभः स हारिद्रः सक्तकश्च
प्रदीपनः ॥
सीराष्ट्रिकः शृङ्गिकश्च कालकूटस्तथैव
च ।
हलाहलो ब्रह्मपुत्त्रो विषभेदा अमी नव
॥"
"सुराष्ट्रविषये यः स्यात् स सौराष्ट्रिक
उच्यते ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे
भागे ॥)
सौराष्ट्रदेशसम्बन्धिनि, त्रि ॥

**सौराष्ट्री**, स्त्री, (सुराष्ट्रे भवा । अण् । ङीष् ।)

सौराष्ट्रदेशीयसुगन्धिमृत्तिका ।
तत्पर्य्यायः ।
पार्व्वती २ काशी ३ मृत्स्ना ४ काक्षी ५
पर्पटी ६ । इति रत्नमाला ॥ कालिका
७
सती ८ । इति हेमचन्द्रः ॥ अस्या गुणाः
।
कफपित्तवीसर्पव्रणनाशित्वम् । इति
राजवल्लभः ॥
राजनिर्घण्टोक्तगुणपर्य्यायौ तुवरीशब्दे
द्रष्टव्यौ ॥

**सौरिः**, पुं, (सुरस्यापत्यमिति । सूर + इञ् ।)

शनिः । इत्यमरः । १ । ३ । २६ ॥
यथा,
बृहत्संहितायाम् । १०४ । १४७ ।

|  |  |  |
| --- | --- | --- |
|  |  | “कृष्णद्रव्यैः सौरिः सौम्यो मणिरजततिलक-<br>कुसुमैर्गुरुः परिपीतकैः ॥”)<br>असनवृक्षः । आदित्यभक्ता । इति राज-निर्घण्टः ॥ |

**सौरिकः**, पुं, (सुरेभ्यो हितः । सुर + ठक् ।)
स्वर्गः । इतिशब्दरत्नावली ॥ (सुरया चर-
तीति । सुरा + ठक् ।) सुराविक्रयकर्त्ता ।
इति केचित् ॥ स्वार्थे कप्रत्यये शनैश्चरः ॥
(सुराया अयमिति । सुरासम्बन्धिनि, त्रि ।
यथा, मनुः । ८ । १५९ ।
"प्रातिभाव्यं वृथादानमाक्षिकं सौरिकञ्च यत् ।
दण्डशुक्लावशेषञ्च ने पुत्त्रो दातुमर्हति ॥")

**सौरिरत्नं**, क्ली, (सौरेः शनैश्चरस्य रत्नम् ।) नील-
मणिः । इति राजनिर्घण्टः ॥

**सौरी**, स्त्री, (सूर्य्य + अण् । ङीप् । "सूर्य्यतिष्येति ।"
६ । ४ । १४९ । इति यलोपः ।) सूर्य्यस्यापत्यं
स्त्री । इति मुग्धबोधव्याकरणम् ॥

**सौरीयं**, त्रि, (सूर्य्य + छः । "सूर्य्यागस्त्ययोश्छे च
ङ्याञ्च ।" ६ । ४ । १४९ । इत्यस्य वार्त्तिकोक्त्या
यलोपः ।) सूर्य्याय हितम् । इति मुग्धबोध-
व्याकरणम् ॥ सौर्य्ये भवः । यथा । सूर्य्यस्येदं
इत्यर्थे ष्णः सौर्य्यं तेजः पुनः सौर्य्ये भव इत्यर्थे
ईयप्रत्यये अनेन यलोपे सौरीयः । इति मुग्ध-
बोधटीकायां दुर्गादासः ॥

**सौरेयः**, पुं, शुक्लझिण्टीवृक्षः । यथा, --
"सौरेयकः श्वेतपुष्पः सौरेयः कटसारिका ।
रुच्यम् ७ कौद्रविकम् ८ । इति राजनिर्घण्टः ॥
अस्य गुणाः । रुचिकारित्वम् । उष्णवीर्य्यत्वम् ।
निर्म्मलत्वम् । कटुत्वम् । गुल्मशूलविबन्धना-
शित्वम् । किञ्चित्पित्तकरत्वम् । लघुत्वञ्च । इति
राजवल्लभः ॥ अपि च ।
"सौवर्च्चलं लघु क्षारं कटूष्णं गुल्मशूलनुत् ।
ऊर्द्ध्ववातामशूलार्त्तिविबन्धारोचकान्जयेत् ॥"
इति राजनिर्घण्टः ॥
अन्यच्च ।
"सौवर्च्चलं स्याद्रुचकमक्ष्यं पाक्यञ्च तन्मतम् ।
रुचकं रोचनं भेदि दीपनं पाचनं परम् ॥
सस्नेहवातनुन्नातिपित्तलं विशदं लघु ।
उद्गारशुद्धिदं सूक्ष्मं विबन्धानाहशूलहृत् ॥"
इति भावप्रकाशः ॥
सर्ज्जिकाक्षारः । इत्यमरः । २ । ९ । १०९ ॥
सुवर्च्चलासम्बन्धिनि, त्रि ॥

**सौवर्णं**, त्रि, (सुवर्णस्येदम् । सुवर्ण + अण् ।)
सुवर्णसम्बन्धि । कर्षमितहेमसम्बन्धि । यथा,
मत्स्यपुराणम् ।
"सौवर्णी राजती वापि ताम्री रत्नमयी तथा ।"
इत्युपक्रम्य ॥
"शुभदारुमयी वापि देवतार्च्चा प्रशस्यते ॥"
इति देवप्रतिष्ठातत्त्वम् ॥

**सौवर्णभेदिनी**, स्त्री, (सौवर्णमिव वर्णं भिनत्ति प्रका-
शयतीति । भिद् + णिनिः । ङीप् ।) प्रियङ्गुः ।
इति शब्दमाला ॥

**सौवस्तिकः**, पुं, (स्वस्ति तत् करणे साधुः । स्वस्ति +
ठक् ।) पुरोहितः । इति हेमचन्द्रः ॥ स्वस्ति-
सम्बन्धिनि, त्रि । इति व्याकरणम् ॥

**सौवास्तवः**, त्रि, (सुवास्तोरिदम् । सुवास्तु +
सुवास्त्वादिभ्योऽण् ।" ४ । २ । ७७ । इत्यण् ।)
लस्तोरिति लः तत्र नियुक्ता इति ढघे कादिति
ष्णे सौविदल्लाः । इति भरतः ॥

**सौविदल्लकः**, पुं, (सौविदल्ल एव । स्वार्थे कन् ।)
सौविदल्लः । इति शब्दरत्नावली ॥

**सौवीरं**, क्ली, बदरम् । काञ्जिकम् । स्रोतोञ्जनम् ।
इत्यमरः । २ । ४ । ३७ । २ । ९ । ३९ । २ ।
९ । १०० ॥ एतेषां विशेषा यथा, --
" -- सौवीरं बदरं महत् ।"
इति रत्नमाला ॥
"सौवीरन्तु यवैरामैः पक्वैर्वा निस्तुषैः कृतम् ।
गोधूमैरपि सौवीरमाचार्य्यैः कैश्चिदूचिरे ॥
सौवीरन्तु ग्रहण्यर्शःकफघ्नं भेदि दीपनम् ।
उदावर्त्ताङ्गमर्दास्थिशूलानाह्रेषु शस्यते ॥"
इति भावप्रकाशः ॥
सौवीराञ्जनम् । यथा, --
"सुवीरकं पार्व्वतेयं सौवीरं नीलमञ्जनम् ।"
इति रत्नमाला ॥

**सौवीरः**, पुं, (सुष्ठु वीरा यत्र । ततः स्वार्थे अण् ।)
देशविशेषः । इति भेदिनी ॥ (यथा, हरिवंशे ।
९० । १९ ।
"सौवीरराजः शैव्यश्च पाण्ड्यश्च बलिनां
वरः ॥")

**सौवीरकं**, क्ली, (सौवीरमेव । स्वार्थे कन् ।)
काञ्जिकविशेषः । तत्पर्य्यायः । सुरीराम्लम् २
गोधूमसम्भवम् ३ यवाम्लजम् ३ यवोत्थम् ५

सहाचरः सहचरः स च विन्घ्यपि कथ्यते ॥
कुरण्टकोऽत्र पीते स्याद्रक्तः कुरवकः स्मृतः ।
नीलो वाणो द्वयोरुक्तो दास आर्त्तगलश्च सः ॥
सौरेयः कुष्ठवातास्रकफकण्डूविषापहः ।
तिक्तोष्णो मधुरो दन्त्यः सुस्निग्धः केशरञ्जनः ॥”
इति भावप्रकाशः ॥

**सौरेयकः** पुं, शुक्लझिण्टीवृक्षः । यथा, --

“सौरेयकः श्वेतपुष्पः सौरेयः कटसारिका ।
सहाचरः सहचरः स च विन्घ्यपि कथ्यते ॥
कुरण्टकोऽत्र पीते स्याद्रक्तः कुरवकः स्मृतः ।
नीलो वाणो द्वयोरुक्तो दास आर्त्तगलश्च सः ॥
सौरेयः कुष्ठवातास्रकफकण्डूविषापहः ।
तिक्तोष्णो मधुरो दन्त्यः सुस्निग्धः केशरञ्जनः ॥”
इति भावप्रकाशः ॥

**सौल्वकः**, पुं, (सुल्वं ताम्रपात्रादिनिर्म्माणं शिल्पमस्य । सुल्व + ठक् ।) ताम्रकुट्टकः । इत्यमरटीका ॥

**सौवं**, त्रि, स्वस्य इदम् । (स्व + अण् ।) स्वसम्बन्धि ।

स्वर्गे भवम् । इति मुग्धबोधव्याकरणम् ॥ (स्वःस्वम्बन्धि । तथा, वाजसनेयसंहितायाम् । १३ । ५७ ।
“तस्य श्रोत्रं सौवम् ॥”
“तस्य स्वर्गस्य सम्बन्धि श्रोत्रं कीदृशं सौवं स्वः इदं सौवं तस्ये दमिति अण् । द्वारादित्वादै- जागमः । अव्ययानां भमात्रे टिलोपः ।” इति सुन्दरवास्तुसम्बन्धी । सुशब्दपूर्व्वकवास्तुशब्दात् ष्णप्रत्ययेन निष्पन्नः ॥ (सुवास्तोरदूरभवः । इति काशिका ॥)

**सौविदः**, पुं, (सुष्ठु वेत्तीति । सु + विद + कः ।

ततः प्रज्ञाद्यण् ।) अन्तःपुररक्षकः । इत्यमरः । २ । ८ । ८ ।

**सौविदल्लः**, पुं, (सुष्ठु विदन्तं विज्ञमपि लाति वश-

वर्त्तिनं करोतीति । सुविदत् + ला + कः । ततः स्वार्थे अण् ।) अन्तपुररक्षकः । (यथा, कथा- सरित्सागते । ३९ । २८ ।
“तदन्यस्य न लाभोऽस्ति सौविदल्लाभिरक्षिते ।
अन्तःपुरेऽत्र पुंसो यदतोऽसौ तेन संगता ॥”)
तत्पर्य्यायः । कञ्चुकी २ स्थापत्यः ३ सौविदः ४ । इत्यमरः । २ । ८ । ८ ॥ स्थपतिः ५ सुविदः ६ । इति तट्टीका ॥ चत्वारि महल्लरक्षके । बहिः सञ्चरन्तीनां पुरस्त्रीणां प्रेक्षकपुरुषान्तरवार- णाय राज्ञा स्त्र्यगारे ये वेत्रधरा नियुक्तास्ते बहिर्महल्लकाः सौविदल्लादिशब्दवाच्याः । शोभनं विदन्ति सुविदः पण्डिताः क्विप् तान् अतति सत्येन गच्छति सुविदत् भूपालः तं लाति सुविदल्लं अन्तःपुरं हनजनाति डः ले तुषोत्थम् ६ तुषोदकम् ७ । अस्य गुणाः ।
अम्लरसत्वम् । केश्यत्वम् । मस्तकदोषजरा- शैथिल्यनाशित्वम् । बलकारित्वम् । सन्तर्पण- त्वञ्च । इति राजनिर्घण्टः ॥

**सौवीरकः**, पुं, (सौवीर + संज्ञायां कन् ।) बदर-

वृक्षः । इति राजनिर्घण्टः ॥

**सौवीरसारं**, क्ली, स्रोतोञ्जनम् । इति राज-

निर्घण्टः ॥

**सौवीराञ्जनं**, क्ली, (सौवीरनामकमञ्जनम् ।)

अञ्जनप्रभेदः । तत्पर्य्यायः । अञ्जनम् २ यामु- नम् ३ कृष्णम् ४ नादेयम् ५ मेचकम् ६ स्रोतोजम् ७ दुष्प्रदम् ८ नीलम् ९ सुवीरजम् १० नीलाञ्जनम् ११ चक्षुष्यम् १२ वारिसम्भवम् १३ कपोतकम् १४ कापोतम् १५ । अस्य गुणाः ।
शीतत्वम् । कटुत्वम् । तिक्तत्वम् । कषायत्वम् । चक्षुष्यत्वम् । कफवातविषनाशित्वम् । रसायन- त्वञ्च । इति राजनिर्घण्टः ॥

**सौष्ठवं**, क्ली, (सुष्ठु भावः । सुष्ठु + “प्राणभृज्जाति-

वयोवचनोद्गात्रादिभ्योऽञ् ।” ५ । १ । १२९ ।
इत्यञ् ।) आतिशय्यम् । (यथा, महाभारते । १ । १३४ । १४ ।
“तुलेष्वस्त्रप्रयोगेषु लाघवे सौष्ठवेषु च ।
सर्व्वेषामेव शिष्याणां बभूवाभ्यधिकोऽर्ज्जुनः ॥”)
प्रशंसनत्वम् । इति सुष्ठुशब्दार्थदर्शनात् ॥ (यथा हरिवंशे । ४० । ३४ ।

तद्भाष्यम् ॥) शासनम् । इति केचित् ॥

**सौवग्रामिकं**, त्रि, (स्वग्रामे भवम् । स्वग्राम + ठक्

स्वग्रामभववस्तु । इति
मुग्धबोधव्याकरणम् ॥

**सौवरं**, त्रि, (स्वरस्ये दमिति । स्वर + अण् ।

“द्वारादीनाञ्च ।” ७ । ३ । ४ । इति
ऐजागमः ।)
स्वरसम्बन्धि । स्वरशब्दात् ष्णप्रत्यये
उमागमेन
निष्पन्नम् । इति मुग्धबोधव्याकरणम् ॥

**सौवर्च्चलं**, क्ली, (सुवर्च्चले देशे भवम् ।
सुवर्च्चल +

अण् ।) सुवर्च्चलदेशभवलवणम् ।
सच्लवण
इति भाषा । तत्पर्य्यायः । अक्षम् २
रुचकम् ३ ।
इत्यमरः । २ । ९ । ४२ ॥ कृष्णलवणम्
४ ।
इति रत्नमाला ॥ तिलकम् ५
हृद्यगन्धकम् ६

“आयुःक्षेत्राण्युपचयो लक्षणं रूपसौष्ठवम्
॥”)
नाटकाङ्गविशषः । इति केचित् ॥

**सौहार्द्दं**, क्ली, (सुहृदः सुहृदयस्य वा भावः कर्म्म वा । सुहृत् सुहृदय वा + "हायनान्तयुवा-दिभ्योऽण् ।" ५ । १ । १३० । इत्यण् । हृदयस्य हृदादेशः । "हृद्भगसिन्ध्वन्ते पूर्व्वपदस्य च ।" ७ । ३ । १९ । इति उभयपदवृद्धिः ।) सुहृदो भावः । तत्पर्य्यायः । सख्यम् २ सौहृदम् ३ साप्तपदीनम् ४ मैत्री ५ अजर्य्यम् ६ सङ्गतम् ७ इति हेमचन्द्रः ॥ (यथा, महाभारते । १ । ७७ । ११ ।
"सौहार्द्दे चानुरागे च वेत्थ मे भक्तिमुत्तमाम् ।
न मामर्हसि धर्म्मज्ञ त्यक्तुं भक्तामनागसम् ॥")

**सौहार्द्दिः**, पुं, (सुहृदोऽपत्यमिति । सुहृद् + अण् । सुहृत्पुत्त्रः । इति केचित् ॥

**सौहार्द्द्यं**, क्ली, (सुहृदयस्य भावः । सुहृदय + ष्यञ् । "वा शोकष्यञ् रोगेषु ।" ६ । ३ । ५१ । इति हृदयस्य हृदादेशः ।) सौहार्द्दम् । इति सिद्धान्तकौमुदी ॥

**सौहित्यं**, क्ली, (सुहितस्य भावः कर्म्म वा । सुहित + "पत्यन्तपुरोहितादिभ्योयक् ।" ५ । १ । १२८ । इति यक् ।) तृप्तिः । इत्यमरः । २ । ९ । ५६ ॥ (यथा, महाभारते । १२ । २४४ । १३ ।
"अहेरिव गणाद्भीतः सौहित्यान्नरकादिव ।
कुणपादिव च स्त्रीभ्यस्तं देवा ब्राह्मणं विदुः ॥

**सौहृदं**, क्ली, (सुहृदः कर्म्म भावो वा । सुहृत् + अण् ।) सख्यम् । सौहार्द्दम् । इति हेमचन्द्रः ॥ तस्य प्राशस्त्यं यथा, --
"तद्भुज्यते यद्द्विजभुक्तशषं
स बुद्धिमान् यो न करोति पापम् ।
तत् सौहृदं यत् क्रियते परोक्षे
दम्भैर्विना यः क्रियते स धर्म्मः ॥"
इति गारुडे ११५ अध्यायः ॥
स्कद, द ङ आप्लवे । उद्धृतौ । उत्प्लुत्य गत्याम् इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-सक० च-सेट् ।) आद्यस्वरी । इ, स्कन्द्यते । ङ, स्कन्दते चिस्कन्दिषते । पञ्चभस्वरीति धातु-

नारद उवाच ।
"किमर्थमेषकः क्रौञ्चो भिन्नः स्कन्देन सुव्रत ।
एतन्मे विस्तराद्ब्रह्मन् कथयस्वामितद्युते ॥
पुलस्त्य उवाच ।
एतां ते कथयिष्यामि कथां पुण्यां पुरातनीम् ।
यशोवृद्धिं कुमारस्य कार्त्तिकेयस्य नारद ॥
यत् पीतं वीतिहोत्रेण वीर्य्यं त्यक्तं पिनाकिनः ।
तेनाक्रान्तोऽभवद्ब्रह्मन्मन्दतेजा हुताशनः ॥
ततो जगाम देवानां सकाशममितद्युतिः ।
दैवतैः प्रहितस्तूर्णं ब्रह्मलोकं जगाम ह ॥
स गच्छन् कुटिलां देवीं ददर्श पथि पावकः ।
तां दृष्ट्वा प्राह चाधत्स्व तेजो यन्मम दुर्द्धरम् ॥
महेश्वरेण सन्त्यक्तं निर्दहेत् भुवनान्यपि ।
तद्धारणाच्च कुटिले पुत्त्रो धन्यो भविष्यति ॥
इत्यग्निना सा कुटिला श्रुत्वा सुतमनुत्तमम् ।
प्रक्षिप्तमात्रं जग्राह तेज ऐशं महापगा ॥
ततस्त्वधारयद्देवी शार्व्वं तेजः स्वपूपुषत् ।
हुताशनोऽपि च भयात् यत्र तत्र परिभ्रमन् ॥
पञ्चवर्षसहस्राणि ह्यध्यास्ते हव्यभुक् ततः ।
मांसमस्थीनि रक्तानि मेदोमज्जस्त्वचस्तथा ॥
रोमाणि चाक्षिकेशाद्याः सर्व्वे जाता हिर-

भ्रियमाणः सतीभिस्तु बालो वृद्धिमगान्मुने ।
कार्त्तिकेय इति ख्यातो जातः स बलिनांवरः ॥
एतस्मिन्नन्तरे ब्रह्मन् पावकं प्राह पद्मभूः ।
कियत्प्रमाणः पुत्त्रस्ते वर्त्तते साम्प्रतं गुहः ॥
स तद्वचनमाकर्ण्य अजानन् तं हरात्मजम् ।
प्रोवाच पुत्त्रं देवेश न वेद्मि कतमो गुहः ॥
तं प्राह भगवान् युक्तं तेजः पीतं पुरा त्वया ।
त्रैयम्बकं त्रिलोकेशं जातः शरवणे शिशुः ॥
श्रुत्वा पितामहवचः पावकस्त्वरितोऽभ्यगात् ।
उदयाद्रिञ्च कुटिला तं ददर्श हिते रता ॥
पप्रच्छ कुटिला देवी क्व शीघ्रं व्रजसे कवे ।
सोऽब्रवीत् पुत्त्रदृष्ट्यर्थं जातं शरवणे शिशुम् ॥
साब्रवीत्तनयो मह्यं ममेत्याह च पावकः ।
विवदन्तो ददर्शाथ स्वे च्छाचारी जनार्द्दनः ॥
ती पप्रच्छ किमर्थं वा विवादमिह चक्रतुः ।
तमूचतुः पुत्त्रहेतो रुद्रशुक्रोद्भवादिति ॥
तावुवाच हरिर्देवो गच्छतं त्रिपुरान्तकम् ।
स यद्वक्ष्यति देवेशः कुरुतं तदसंशयम् ॥
इत्युक्तौ वासुदेवेन कुटिलाग्नी हरान्तिकम् ।
समभ्येत्योचतुस्तथ्यं कस्य पुत्त्रो भवेद्गुहः ॥

प्रदीपरामौ । स्कन्दते स्कुन्दते चापि षडाप्लवन-
वाचिनः । इति भट्टमल्लोऽपि । चुस्कुन्दिषते ।
इति दुर्गादासः ॥

**स्कन्द**, इर् और शोषणे । गत्याम् । इति कविकल्प-
द्रुमः ॥ (भ्वा०-पर०-सक०-अनिट् ।) इर्,
अस्कदत् । अस्कांत्सीत् । औ, स्कन्ता चस्कन्द ।
इति दुर्गादासः ॥

**स्कन्द**, त क समाहृतौ । इति कविकल्पद्रुमः ॥
(अनन्तचुरा०-पर०-सक०-सेट् ।) दस्त्यवर्ग-
तृतोयोपधोऽयम् । तच्चतुर्थोपध इति केचित् ।
स्कन्दयति स्कन्दापयति अचस्कन्दत् । इति
दुर्गादासः ॥

**स्कन्दः**, पुं, (स्कन्दते उत्प्लुत्य गच्छति स्कन्दति
शोषयति दैत्यान् वा । स्कन्द + अच् ।) कार्त्ति-
केयः । इत्यमरः । १ । १ । ४२ ॥ तस्य
उत्पत्तिषडा-
ननपञ्चनामचतुर्म्मूर्त्यभिषेकगणवाहनास्त्रादि
यथा, --

ण्मयाः ।
हिरण्यरेता लोकेऽस्मिन् विख्यातः
पावकस्तदा
पञ्चवर्षसहस्राणि कुटिला
ज्वलनोपमम् ।
धारयन्ती तदा गर्भं ब्रह्मणः
स्थानमागता ॥
पितामहस्तां क्षीणाङ्गीं सन्तप्यन्तीं
महापगाम्
दृष्ट्वा पप्रच्छ केनायं तव गर्भः
समाहितः ॥
सा चाह शाङ्करं तेजः पावकेन
समर्पितम् ।
अप्यशक्तेन तेनाद्य निक्षिप्तं मयि
सत्तम ॥
पञ्चवर्षसहस्राणि धारयन्त्याः
पितामह ।
अन्नपानादिकमपि न मेऽपच्यत
कर्हिचित् ॥
तच्छ्रुत्वा भगवानाह गच्छ त्वमुदयं
गिरिम् ।
तत्रास्ति योजनशतं विस्तीर्णं
सुरसेवितम् ॥
तमनुप्राप्य सुश्रोणि विस्तीर्णे
गिरिसानुनि ।
दशवर्षसहस्रान्ते ततो बालो
भविष्यति ॥
ब्रह्मणो वचनं श्रुत्वा कुटिला
गिरिमागता ।
आगत्य गर्भं तत्याज
मुखेनैवाद्रिनन्दिनी ॥
सा तु संत्यज्य तं बालं ब्रह्माणं
सहसागमत् ।
आपोमयी मन्त्रवशात् संयता कुटिला
सती ॥
तेजसा चापि शार्व्वेण रौक्मः
शरवणोऽभवत् ।
तन्निवासवतश्चाग्रे पादपा मृगपक्षिणः
॥
ततो दशसु पूर्णेषु शरद्दशशतेष्वथ ।

रुद्रस्तद्वाक्यमाकर्ण्य हर्षनिर्भरमानसः
।
दिष्ट्या दिष्ट्येति गिरिजां
प्रोद्भूतपुलकोऽब्रवीत्
ततोऽम्बिका प्राह हरं देव गच्छाव तं
शिशुम् ।
दृष्ट्वा समागमेद्यां स तस्याः पुत्त्रो
भविष्यति ॥
वाढमित्येव भगवान् समुत्तस्थौ
वृषध्वजः ।
सहोमया कुटिलया पावकेन च धीमता
॥
सम्प्राप्तास्ते शरवणं हरोमाकुटिलाग्नयः
।
ददृशुः शिशुकं तत्र
कृत्तिकोत्सङ्गशायिनम् ॥
ततः स बालकस्तेषां मत्वा
चिन्तितमादरात्
योगी चतुर्म्मूर्त्तिरमूत् षण्मुखः स शिशुः
पितुः ॥
कुमारः शङ्करमगात् विशाखो
गिरिजामगात्
कुटिलामगमच्छाखो
नैगमेयोऽग्निमभ्यगात ॥
ततः प्रीतियुतो रुद्रः उवाच कुटिला
तथा ।
पावकश्चापि देवेशः परां मुदमवाप च ॥
ततोऽब्रुवन् कृत्तिकास्ताः षण्मुखः किं
हरा
त्मजः ।
ता अब्रवीत् हरः प्रीत्या विवेश वचनं
मुने ॥
नाम्ना तु कार्त्तिकेयेति पुष्माकञ्च
भवत्वसौ ।
कुटिलायाः कुमारेति पुत्त्रोऽयं
भविताव्ययः ॥
स्कन्द इत्येव विख्यातो गौरीपुत्त्रो
भवत्वसौ ।
गुह इत्येव नाम्ना च ममासौ तनयः
स्मृतः ॥

| | | |
|---|---|---|
| | बालार्कदीप्तिः संजातो बालः कमललोचनः ॥<br>उत्तानशायी भगवान् दिव्ये शरवणे स्थितः ।<br>मुखेऽङ्गुष्ठं समाक्षिप्य रुरोद घनराडिव ॥<br>एतस्मिन्नन्तरे देव्यः कृत्तिकाः षट् सुतेजसः ।<br>ददृशुः स्वेच्छया यान्त्यो बालं शरवणे स्थितम् ॥<br>कृपायुक्ताः समाजग्मुर्यत्र स्कन्दः स्थितोऽभवत्<br>अहं पूर्व्वमहं पूर्व्वं तस्मै स्तन्ये हि चुक्रुशुः ॥<br>विवदन्तीः स ता दृष्ट्वा षण्मुखः समजायत ।<br>अवीभरन्तस्ताः सर्व्वाः शिशुं स्नेहाच्च<br>कृत्तिकाः ॥ | महासेन इति ख्यातो हुताशस्यास्तु पुत्रकः ।<br>सारस्वत इति ख्यातः सुतः शरवणस्य च ॥<br>एवमेष महायोगी पृथिव्यां ख्यातिमेष्यति ।<br>षडास्यत्वान्महाबाहुः षण्मुखो नाम गीयते ॥<br>इत्येवमुक्ता भगवान् शूलपाणिः पितामहम् ।<br>सस्मार दैवतैः सार्द्धं तेऽप्याजग्मुस्त्वरान्विताः ॥<br>प्रणिपत्य च कामारिं उमाञ्च गिरिनन्दिनीम् ।<br>दृष्ट्वा हुताशनं प्रीत्या कुटिलां कृक्षिकास्तथा ॥<br>ददृशुर्बालमत्युग्रं षण्मुखं सूर्य्यसन्निभम् ।<br>मुष्णन्तमिव चक्षूंषि देवानां स्वेन तेजसा ॥<br>कौतुकाभिवृताः सर्व्वे एवमूचः सुरोत्तमाः । |

देवकार्य्यं त्वया देव कृतं देव्याग्निना तथा ॥
तदुत्तिष्ठ व्रजामोऽद्य तीर्थमौजसमव्ययम् ।
कुरुक्षेत्रे सरस्वत्यामभिषिञ्चाम षण्मुखम् ॥
सेनायाः पतिरस्त्वेष देवगन्धर्व्वकिन्नराः ।
महिसं घातयत्वे ष तारकञ्च सुदारुणम् ॥
वाढमिप्यब्रवीच्छर्व्वः समुत्तस्थुः सुरास्ततः ।
कुमारसहिता जग्मुः कुरुक्षेत्रं महाफलम् ॥
तत्रैव देवताः सेन्द्रा रुद्रब्रह्मजनार्द्दनाः ।
यत्नमस्याभिषेकार्थं चक्रुर्म्मुनिगणैः सह ॥
ततोऽम्बुना सप्तसमुद्रवाहिनी-
नदीजलेनापि महाफलेन ।
वनौषधीभिश्च सहस्रमूर्त्तिभि-
स्तदाभ्यषिञ्चन्त हराच्युताद्याः ॥
अभिषिञ्चति सेनान्यां कुमारे दिव्यरूपिणि ।
जगुर्गन्धर्व्वपतयो ननृतुश्चाप्सरोगणाः ॥
अभिषिक्तं कुमारञ्च गिरिपुत्री निरीक्ष्य हि ।
स्नेहात्तत्सङ्गमं स्कन्दं मूद्ध्यर्जिघ्रन्मुहुर्म्मुहुः ॥
जिघ्रती कार्त्तिकेयस्य अभिषेकार्द्रमाननम् ।
भात्यद्रिजा यथेन्द्रस्य देवमातादितिः पुरा ॥
तदाभिषिक्तं तनयं दृष्ट्वा शर्व्वो मुदं ययौ ।
पावकः कृत्तिकाश्चैव कुटिला च यशस्विनी ॥
ततोऽभिषिक्तस्य हरः सैनापत्ये गुहस्य तु ।
प्रथमांश्चतुरः प्रादाच्छक्रतुल्यपराक्रमान् ॥
घण्टाकर्णं लोहिताक्षं नन्दिषेणं शुदारुणम् ।
चतुर्थं बलिनां मुख्यं ख्यातं कुमुदमालिनम् ॥
हरदत्तान् गणान् दृष्ट्वा देवाः स्कन्दस्य नारद ।
प्रददुः प्रमथानन्यान् सर्व्वे ब्रह्मपुरोगमाः ॥
गणाः पञ्चदशैते वै यक्षैर्दत्त्वा गुहस्य च ।
कालिन्द्याः कलकन्दश्च नर्म्मदाया रणोत्कटः ।
गोदावर्य्याः सिद्धपात्रस्तमसायास्तु पङ्कजः ॥
सहस्रबाहुः सीताया वञ्जुलायाः स्मितोदरः ।
मन्दाकिन्याः सुबाहुश्च विपद्यायाः प्रियङ्करः ॥
ऐरावत्याश्चतुर्दंष्ट्रः षोडशाक्षोऽपरस्तथा ।
मार्जारं कौशिकी प्रादात् क्रथक्रौञ्चौ च गोतमी ॥
बाहुदा शतशीर्षञ्च बाहा गोनन्दनन्दिनौ ।
भीमं भीमरथी प्रादात् दुर्गारिं सरयूर्ददौ ॥
अष्टबाहुं ददौ काशी सुबाहुमपि गण्डकी ।
महानन्दी चित्रदेवं चित्रा चित्ररथं ददौ ॥
कुहुः कुवलयं प्रादात् मधुवर्णं मधूदका ।
जम्बूकं धूतपापा च वेण्वा पेटाननं ददौ ॥
स्तुता प्रथमपर्णञ्च रेवा सागरवेगिनम् ।
प्रभावा पाशजं प्रादात् काञ्चना कनकप्रभम् ॥
धृतपत्रञ्च विमला चारुवक्त्रं मनोहरा ॥
अपापा च महारामं वेण्वा विद्रुमसुप्रभम् ॥
सुप्रसादं सुवेण्वा च जिष्णु मोघवती ददौ ।
यज्ञबाहु विशाला च सरस्वत्या ददुर्गणान् ॥
कुटिलातनयस्यादात् दशशक्रबलाद्गणान् ।
करालं शितकेशञ्चं कृष्णकेशं जटाधरम् ॥
मेघनादं चतुर्दंष्ट्रं विद्युजिह्वं दशाननम् ।
सोमाप्यायनमेवोग्रं देवयाजिनमेव च ॥
हंसास्यं कुण्डजठरं बहुग्रीवं हयाननम् ।
कूर्म्मग्रीवञ्च पञ्चैतान् ददुः पुत्राय कृत्तिकाः ॥
प्रादाद्वै कार्त्तिकेयाय सर्व्वपापविमोचनः ॥
सान्तानिकां विकलिकां क्रमुकां खरवासिनी
जलेश्वरी कुक्कुटिका सुदामा लोहमेखला ॥
वपुष्मत्युन्मुकाक्षी च केकनामा महाशनी ।
रौद्रा भूभुविका तुण्डा श्वेततीर्थो ददौ त्विमाः ॥
एतानि भूतानि गणाश्च मातरो
दृष्ट्वा महात्मा विनतातनूजः ।
ददौ मयूरं स्वसुतं महाजवं
तथारुणश्चाद्भुतरत्नमुत्तमम् ॥
शक्तिं हुताशोऽद्रिसुता तु वस्त्रं
दण्डं गुरुः सा कुटिला कमण्डलुम् ।
मालां हरिः शूलधरः पताकां
कण्ठे च हारं मघनानुरस्तः ॥
गणैर्वृतो मातृभिरन्वितश्च
मयूरसंस्थो वरशक्तिपाणिः ।
सैन्याधिपत्ये स वृतो भवेन
रराज सूर्य्येव महावपुष्मान् ॥”
इति वामनपुराणे कार्त्तिकेयोत्पत्तौ ५४ अध्यायः ॥
देव्या द्वारपालविशेषः । तस्य बलिर्यथा --
“महानवम्यां शरदि रात्रौ स्कन्दविशाखयोः ।
यवचूर्णमयं कृत्वा रिपुं मृण्मयमेव वा ॥
शिरश्छित्त्वा बलिं दद्यात् कृत्वा तस्य तु मन्त्रतः
अनेनैव तु मन्त्रेण खड्गमामन्त्र्य यत्नतः ॥
रक्तं किलकिली घोरघोरा धारविहिंसकः ।
ब्रह्मशिख्याम्बिकाशिख्यममुकंचारिसत्तमम् ॥
तान्तो विसर्गसहितः स च बिन्दुयुतोऽपरः ।
ब्रह्माग्नियोगश्चन्द्रेण बिन्दुना च समन्वितः ॥
शिरश्छित्त्वा बलिं दद्यात् कृत्वा तस्य तु मन्त्रतः ।
अनेनैव तु मन्त्रेण बिन्दुना च समन्वितः ॥
फडन्ते बलिषु प्रोक्तः खड्गे स्कन्दविशाखयोः ॥
रक्तद्रव्यैः सेचयित्वा कृत्तिमं तं रिपुं बलिम् ॥
कुचन्दनस्य तिलकं ललाटेऽभिनिवेशयेत् ।
रक्तमाल्यधरं कृत्वा रक्तवस्त्रधरं तथा ॥

स्याणुर्ब्रह्मा गणं प्रादाद्विष्णुः प्रादात् गणत्रयम्
संक्रमं विक्रमञ्चैव तृतीयञ्च पराक्रमम् ॥
उक्षेशं पंङ्कजं शक्रो रविर्दण्डकपिङ्गलौ ।
चन्द्रो मणिं वसुमणिं अश्विनौ नन्दिनन्दिनौ ॥
ज्योतिर्हुताशनः प्रादात् ज्वालाजिह्वं तथा-परम् ।
कुन्दनिष्कुन्दकुमुदान् धाता चानुचरान् ददौ ॥
चक्रानुचक्रौ त्वष्टा च वेधातिस्थिरदुस्थिरौ ।
पाणित्यजं कालकञ्च प्रादात् पूषा महाबलौ ॥
स्वर्णमालं धनार्कञ्च हिमवान् प्रमथोत्तमौ ।
प्रादाद्वे वोच्छ्रितो बिन्ध्यस्तुतिशृङ्गञ्च पार्षदम् ॥
सुवर्च्चसञ्च वरुणः प्रददौ चातिवर्च्चसम् ।
सग्रहं विग्रहञ्चैव नागाभिजयसंजयौ ॥
उन्मादं शङ्कुकर्णञ्च पुष्पदन्तं तथाम्बिका ।
दुर्गञ्चातिबलञ्चैव श्रेष्ठौ चानुचरावुभौ ॥
परिघं चटकं भीमं दाहाभिदहनौ तथा ।
प्रददावंशुमाल्यञ्च प्रमथान् षण्मुखाय हि ॥
यमः प्रमाथमुन्माथं कालसेनमजामुखम् ।
तालशक्रं नाडिजञ्च षडेवानुचरान् ददौ ॥
सुप्रभं शुभकर्म्माणं विधृतो दानवेश्वरौ ।
सुप्रसुत्यं सन्नमित्र सुप्रजञ्च द्विजोत्तम ॥
अनन्तः शङ्कुपीठञ्च निकुम्भकुमुदावजः ।
एकाक्षं कुलटीचक्रः किचीटः कलसोदरः ॥”
किचीटस्थाने किरीटः इति च पाठः ।
“सूचीवक्त्रः कोकनदः प्रदासः सिद्धकोऽव्ययः ।
स्थूलजङ्घं कुण्डवक्त्रं लोहजङ्घं महाननम् ।
पिण्डारकञ्च पञ्चैतान् ददुः स्कन्दाय चर्षयः ॥
नागजिह्वं चन्द्रभासं पाणिकूर्म्मं शशिष्करम् ।
वासवक्त्रं सजम्बूकं ददौ तीर्थः पृथूदकः ॥
चक्रतीर्थं सुचक्राख्यं मकराक्षं गयाशिरः ।
गणं पञ्चशिखं नाम ददौ कनखलः स्वयम् ॥
बन्धुदत्तं वालिशिरो वालुसारञ्च पुष्करम् ।
सर्व्वौजसं माहिषकं मानसं पिङ्गलं तथा ॥
रुद्रमौशनसः प्रादात् ततोऽन्या मातरो ददुः ।
वसुदामां शोणतीर्थः प्रभासो नन्दिनीमपि ॥
इन्द्रतीर्थं विशोकाञ्च उदपानं घनस्वनाम् ।
सप्तसारस्वतः प्रादात् मातरश्चतुरोऽद्भुताः ॥
जितप्रियां माधवीञ्च तीर्थनेमिं मितानानाम् ।
एकलूतां नागतीर्थः कुरुक्षेत्रं पलाशदाम् ॥
ब्रह्मात्मनिः खण्डशिलां भद्रकालीं त्रिपिष्टपः ।
पैण्डी भैण्डी योषभैण्डी प्रादादुरदरपावनः ॥
सोपानीयां महान्प्रादाच्छालिकां मानसोह्रदः
शतपुण्ड्रां शतानन्दां तथोलूखलमेखलाम् ॥
पद्मावतीं माधवीञ्च ददौ बदरिकाश्रमः ।
सुखसामेकचूलाञ्च देवों धर्म्मधरां तथा ॥
उकाथनीं वेदमित्रां केदारो मातरो ददौ ।
सुनक्षत्राञ्च करणां सुप्रभावां सुमङ्गलीम् ॥
कण्ठे बद्ध्वा रक्तसूत्रैर्नाभौ माल्यञ्च कृत्रिमम् ।
दत्त्वोत्तरशिरःस्कन्धं कृत्वा खड्गेन च्छेदयेत् ॥
शिरस्तस्य ततो दद्यात् स्कन्दाय तेन मन्त्रतः ।
चतुर्द्दशस्वराग्निभ्यां संयुक्तः स परः समम् ॥
परतः परतः पूर्व्वं चन्द्रबिन्दुसमन्वितः ।
स्कन्दस्य मूलमन्त्रोऽयं तेन तस्मै बलिं सृजेत् ॥
चतुर्द्द शस्वराग्निभ्यां पतृतीयन्तु पूर्व्ववत् ।
प्रोक्तो विशाखमन्त्रोऽयं तेन तस्मै बलिं सृजेत् ॥
कुटिलाक्षौ कृष्णपिङ्गवर्णौ रक्तांशुधारिणौ ।
त्रिशूलं करबालञ्च पाणिभ्यां दक्षिणे तथा ॥
बिभ्रतौ नृकपालञ्च कर्त्तृकञ्चापि वामतः ।
त्रिनेत्रौ नरमुण्डानां मालामुरसि बिभ्रतौ ॥
विकटौ दशनैर्भीमैर्गणेशौ द्वारपालकौ ।
ध्यानेन चिन्तयेद्देव्याः पुरतः संस्थितौ सदा ॥”
इति कालिकापुराणे ६६ अध्यायः ॥ * ॥
(महादेवः । इति महाभारतम् । १३ । १७ । १०३ ॥
नृपतिः । इति जटाधरः ॥ शरीरम् । इति त्रिकाण्डशेषः ॥ पारदः । इति राजनिर्घण्टः ॥

| | | |
|---|---|---|
| | वेदमित्रां चित्रसेनां ददौ रुद्रो महाबलः ।<br>कोटराक्षी संयताक्षामसतीं बहुपुत्त्रिकाम् ।<br>पलितां कमलाक्षीञ्च प्रयासां मानसो ददौ ॥<br>सुपलीं मधुकुम्भाञ्च ख्यातिं दहदहां पराम् । | |

नदीतटम् । पण्डितः । इति केचित् ॥
बालकस्य
ग्रहविशेषः । (यथा, --
"स्कन्दो विशाखो मेषाख्यः श्वग्रहः पितृ-
संज्ञितः ।
शकुनिः पूतना शीतपूतना दृष्टिपूतना ॥
मुखमण्डलिका तद्वद्रेवती शुष्करेवती ।
तेषां ग्रहीष्यतां रूपं प्रततं रोदनं ज्वरः ॥
सामान्यं रूपमुत्त्रासजृम्भाभ्रूक्षेपदीनताः ।
फेनस्रावोद्र्ध्वदृष्टोष्ठदन्तदंशप्रजागराः ॥
रोदनं कूजनं स्तन्यविद्वेषस्वरवैकृतम् ।
नखैरकस्मात् परितः स्वधात्र्यङ्गविलेखनम् ॥
तत्रैकनयनस्रावी शिरो विक्षिपते मुहुः ।
हतैकपक्षः स्तब्धाङ्गः सस्वेदो नतकन्धरः ॥
दन्तखादी स्तनद्वेषी त्रस्यन् रोदिति विस्वरः ।
वक्रवक्त्रे वमेल्लालां भृशमूर्द्धं निरीक्षते ॥
वसासृग्गन्धिरुद्विग्नो बद्धमुष्टिशकृच्छिशुः ।
चलितैकाक्षिगण्डभ्रूः संरक्तो भयलोचनः ॥
स्कन्दार्त्तस्तेन वैकल्यं मरणं वा भवेद्ध्रुवम् ॥"
इत्युत्तरस्थाने तृतीयेऽध्याये वाभटेनोक्तम् ॥)
तस्य चिकित्सा बालग्रहशब्दे द्रष्टव्या ॥

**स्कन्दनं**, क्ली, (स्कन्द + ल्युट् ।) रेचनम् । इति
त्रिकाण्डशेषः ॥ (यथा, सुश्रुते । १ । १४ ।
"चतुर्व्विधं यदेतद्धि रुधिरस्य निवारणम् ।
सन्धानं स्कन्दनञ्चैव पाचनं दहनन्तथा ॥")
गमनम् । शोषणम् ॥ इति स्कन्दधात्वर्थ-
दर्शनात् ॥

**स्कन्दषष्ठी**, स्त्री, (स्कन्दप्रिया षष्ठी ।) चैत्र-
मासीयशुक्लषष्ठी । तत्प्रमाणादि षष्ठीशब्दे
द्रष्टव्यम् ॥ अन्यच्च ।
"अमावस्यासमुत्पन्नः स्कन्दः पूर्व्वं हुताशनात्
।
ततः षष्ठ्यान्तु शुक्लायां मासे तु चैत्रनामनि ।
सैनापत्येऽभिषिक्तस्तु देवानां ब्रह्मणा स्वयम् ॥
इति संवत्सरकौमुदीधृतब्रह्मपुराणवचनम्॥

**स्कन्दांशकः**, पुं, (स्कन्दस्य अंश इव अंशो यत्र ।
शिववीर्य्योद्भवत्वात् । ततः कन् ।) पारदः ।
तरोर्मूलादिशाखापर्य्यन्तम् । गुँडी इतिभाषा
तत्पर्य्यायः । प्रकाण्डः २ । इत्यमरः ॥
काण्डम् ३
इति शब्दरत्नावली ॥ दण्डः ४ । इति जटा-
धरः ॥ (यथा, रघुः । ४ । ५७ ।
"खर्ज्जूरीस्कन्धनद्धानां मदोद्गारसुगन्धिषु
।
कटेषु करिणां पेतुः पुन्नागेभ्यः शिलीमुखाः
॥")
नृपतिः । सम्परायः । समूहः । कायः ।
(यथा,
महाभारते । १२ । १५ । २६ ।
"सूक्ष्मयोनीनि भूतानि तर्कगम्यानि
कानिचित्
पक्ष्मणोऽपि निपातेन येषां स्यात्
स्कन्धपर्य्ययः ॥"
भद्रादिः । छन्दोभेदः । इति मेदिनी ॥
विज्ञा-
नादिपञ्च । (यथा, शिशुपालवधे । २ । २८
।
"सर्व्वकार्य्यशरीरेषु मुक्ताङ्गस्कन्धपञ्चकम् ।
सौत्रतानामिवात्मान्यो नास्ति मन्त्रो मही-
भृताम् ॥"
"रूपवेदनाविज्ञानसंज्ञासंस्काराः पञ्च
स्कन्धाः
तत्र विषयप्रपञ्चो रूपस्कन्धः ।
तज्ज्ञानप्रपञ्चो
वेदनास्कन्धः । आलयविज्ञानसन्तानो
विज्ञान
स्कन्धः । नामप्रपञ्चः संज्ञास्कन्धः ।
वासना-
प्रपञ्चः संस्कारस्कन्धः । एवं पञ्चधा
परिवर्त्त-
मानो ज्ञानसन्तान एवात्मा इति बौद्धाः ।"
इति तट्टीकायां मल्लिनाथः ॥) व्यूहः । इति
हेमचन्द्रः ॥ (यथा, रघुः । ४ । ३० ।
"प्रतापोऽग्रे ततः शब्दः परागस्तदनन्तरम् ।
ययौ पश्चाद्रथादीति चतुस्कन्धेव सा चमूः
॥")

**स्कन्धफलः**, पुं, (स्कन्धे फलमस्य ।) नारिकेलवृक्षः ।
इति राजनिर्घण्टः ॥ उडुम्बरवृक्षः ।
इति शब्द-
चन्द्रिका ॥

**स्कन्धवन्दना**, स्त्री, (स्कन्धे वन्दनमिवास्याः ।)
मधुरिका । इति शब्दचन्द्रिका ॥

**स्कन्धमल्लकः**, पुं, (स्कन्धेन मल्ल इव । कन् ।)
कङ्कपक्षी । इति हेमचन्द्रः ॥

**स्कन्धरुहः** पुं, (स्कन्धात् रोहतीति । रुह + कः ।)
वटवृक्षः । इति राजनिर्घण्टः ॥

**स्कन्धवाहः**, पुं, (स्कन्धे न वाहयतीति । वह
+
णिच् + अच् ।) शकटादिवाहकवृषः
। यथा,
"स्कन्धवाहस्तु शङ्कश्च शृङ्गी
गौरक्षधूर्त्तिलः ॥"
इति हारावली ॥

**स्कन्धवाहकः**, पुं, (स्कन्धेन वहतीति । वह +
ण्वुल् ।) शकटादिवाहकवृषः
तत्पर्य्यायः ।
स्कन्धिकः २ । इति हेमचन्द्रः ॥
स्कन्धेन वहन-
कर्त्तरि, त्रि ॥

**स्कन्धशाखा**, स्त्री, (स्कन्धस्य शाखा ।) वृक्षस्य
मुख्यशाखा । तत्पर्य्यायः । शाला २
। इत्यमरः ।
२ । ४ । ११ ॥ (यथा, भागवते । ८
। ५ । ४९ ।
"यथा हि स्कन्धशाखानां
तरोर्मूलावसेचनम् ।
एवमाराधनं विष्णोः
सर्व्वेषामात्मनश्च हि ॥")

इति राजनिर्घण्टः ॥

**स्कन्धः**, [स्] क्ली, (स्कन्दते इति । स्कन्द + "स्कन्देश्च

खाङ्गे ।" उणा० ४ । २०६ । इति असुन्
धश्चान्तादेशः ।) अंसः । प्रकाण्डः । यथा,
"स्कन्धः सान्तं नपुंसकमिति केचित् ।" इत्यमर-
टीकायां भरतः ॥ (यथा, ऋग्वेदे । १ । ३२ । ५ ।
"स्कन्धांसीव कुलिशेनाविवृक्णा ॥")

**स्कन्धः**, पुं, (स्कन्द्यतेऽसौ इति । स्कन्द + घञ् ।

पृषादरादित्वात् साधुः । स्कन्द + असुन् । धश्चा-
न्तादेशः । सर्व्वे सान्ता अदन्ताश्च इति न्यायात्
अकारान्तो वा ।) अवयवविशेषः । काँध इति
भापा ॥ तत्पर्य्यायः । भुजशिरः २ अंसः ३ ।
इत्यमरः । २ । ६ । ७८ ॥ स्कन्धः ४ । इति
शब्दरत्नावली ॥ दोःशिखरम् ५ । इति राज-
निर्घण्टः ॥ (यथा, भागवते । ४ । २९ । ३३ ।
"यथा हि पुरुषो भारं शिरसा गुरुमुद्वहन् ।
तं स्कन्धेन स आधत्ते तथा सर्व्वाः प्रतिक्रियाः ॥")
पन्थाः । इति शब्दरत्नावली ॥ (यथा महा-
भारते । ३ । २३० । ५५
"तथाब्रवीत् महासेनं महादेवो बृहद्वचः ।
सप्तमं मारुतस्कन्धं रक्ष नित्यमतन्द्रितः ॥")
ग्रन्थपरिच्छेदः । यथा --
श्रीपार्व्वत्युवाच ।
स्कन्धै र्द्वादशभिः प्रोक्तं श्रीमद्भागवतं प्रभो ।
शुकस्तच्छ्रावयामास महाराजं परीक्षितम् ॥"
इति पाद्मे पातालखण्डे ७१ अध्यायः ॥

**स्कन्धचापः**, पुं, (स्कन्धे चाप इव ।) वंशादि-

निर्म्मितशिक्याधानम् । तत्पर्य्यायः । विह-
ङ्गिका २ । इति हारावली ॥

**स्कन्धजः**, पुं, (स्कन्धात् जायते इति । जन + डः ।)

शल्लक्यादिः । यथा, हेमचन्द्रे ।
"पर्व्वयोनय इक्ष्वाट्या स्कन्धजाः शल्लकीमुखाः ॥"
मुद्राङ्कितहेमचन्द्रे कन्दज इति पाठः ॥ (वटः
अस्य पर्य्यायो यथा, --
"वटो रक्तफलः शृङ्गी न्यग्रोधः स्कन्धजो ध्रुवः ।
क्षीरी वैश्रवणावासो बहुपादो वनष्पतिः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**स्कन्धतरुः**, पुं, (स्कन्धप्रधानस्तरुः ।) नारिकेल-

वृक्षः । इति राजनिर्घण्टः ॥

**स्कन्धदेशः**, पुं, (स्कन्धस्य देशः ।) गजस्य स्कन्धः ।

यत्र हस्तिपक उपविशति । तत्पर्य्यायः । आस-
नम् २ । इत्यमरः ॥ स्कन्धमात्रम् । यथा, --
"त्रिपुरारिः स्कन्धदेशे कण्ठे कामाङ्गनाशनः ॥"
इति भृग्भरतसंवादे माहेश्वरकवचम् ॥

**स्कन्धशृङ्गः**, पुं, (स्कन्धपर्य्यन्तं शृङ्गमस्य ।)

महिषः । इति केचित् ॥

**स्कन्धा**, स्त्री, शास्वा । लता । इति केचित् ॥

**स्कन्धाग्निः**, पुं, (स्कन्धस्य काण्डस्य अग्निरिव ।)

बृहत्काष्ठाग्निः । इति त्रिकाण्डशेषः ॥

**स्कन्धानलः**, पुं, (स्कन्धस्य काण्डस्य अनल इव ।)

बृहत्काष्ठाग्निः । तत्पर्य्यायः ।
स्थूलकाष्ठधक् २ ।
इति जटाधरः ॥

**स्कन्धावारः**, पुं, (स्कन्धेनसैन्यसमूहेन व्यूहेन नृप-

तिना वा आव्रियते इति । आ + वृ +
घञ् ।)
सैन्यस्थितिः । (यथा, रामायणे । ६ । ४२ । २२ ।
"एतस्मिन्नन्तरे चक्रुः स्कन्धावारनिवेशनम् ॥")
राजधानी । इति हेमचन्द्रः ॥ (यथा, महा-
भारते । १ । १८५ । ६ ।
"ते तु दृष्ट्वा परं तच्च स्कन्धावारञ्च पाण्डवाः ।
कुम्भकारस्य शालायां निवासं चक्रिरे तदा ॥")
कटकः । इति भूरिप्रयोगः ॥

**स्कन्धिकः**, पुं, (स्कन्धेन वहतीति । स्कन्ध + ठक् ।)

स्कन्धवाहकवृषः । इति हेमचन्द्रः ॥

**स्कन्धी**, [न्] पुं, (स्कन्धोऽस्यास्तीति । इनिः ।

वृक्षः । इति रत्नमाला ॥ स्कन्धयुक्ते, त्रि ॥
(काण्डविशिष्टे, च त्रि । यथा, महाभारते ।
१२ । १५४ । ५ ।
"हिमवन्तं समासाद्य महानासीद्वनस्पतिः ।

| | | |
|---|---|---|
| | | वर्षपूगाभिसंवृद्धः शाखी स्कन्धी पलाशवान् ॥”)<br><br>**स्कन्नं**, त्रि, (स्कन्द + क्तः ।) च्युतम् । इत्यमरः ।<br><br>३ । १ । १०४ ॥ (यथा, महाभारते । १ । ६३ । ४९ ।<br>स्कन्नमात्रञ्च तद्रेतो वृक्षपत्रेण भूमिपः ।<br>प्रतिजग्राह मिथ्या मे न पतेद्रे त इत्युत ॥”)<br>शुष्कम् । गतम् । इति स्कन्दधात्वर्थदर्शनात् ॥ |

**स्कभ**, इ ङ स्तम्भे । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-सक०-सेट् ।) स्तम्भ इह
रुद्धीकरणम् ।
इ, स्कम्भ्यते । ङ, स्कम्भते
कबाटेन द्वारं
लोकः । चस्कम्भे । इति
दुर्गादासः ॥

**स्कान्दं**, क्ली, (स्कन्दस्येदमिति । स्कन्द + अण् ।)

स्कन्दपुराणम् । यथा, --
"वाराहञ्च तथा स्कान्दं वामनं
कूर्म्मसंज्ञकम् ।"
इत्यादि नारदीयपुराणम् ॥
अस्य विवरणं पुराणशब्दे द्रष्टव्यम्
॥
स्कु, ग न ञ उद्धृतौ । आप्लावने
। इति कवि-
कल्पद्रुमः ॥ (क्र्या०-स्वा० च-
उभ०-सक०-सेट् ।)
ग ञ, स्कुनाति स्कुनीते । न ञ,
स्कुनोति
स्कुनुते । चुस्काव ।
उद्धृतिरुद्धरणम् । आप्ल-
वने । इति प्राञ्चः ।
"स्कुनाति च स्कुनीते च
स्कुनोत्याप्लवनऽपि च ।
स्कन्दते स्कुन्दते चापि
षडाप्लवनवाचिनः ॥"
इति भट्टमल्लः ।
आवरणे इति पाणिनीयाः ।
स्कुनाति शत्रुं
बाणेन भटः आच्छादयतीत्यर्थः ।
इति रमा-
नाथः । इति दुर्गादासः ॥

**स्कुद**, इ ङ आप्लवे । उद्धृतौ । उत्प्लुत्य गत्याम् ।

इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-अक०

**स्खल**, मि चये । चले ॥ इति कविकल्पद्रुमः ॥

(म्वा०-पर-सक०-चले अक०-सेट् ।) मि,
स्खलयति वचनं ते सर्व्वथा सुभ्रु खेदमिति
मालत्याम् । स्खालयति चस्खाल । चयः सञ्चयः
स्खलति पुष्पं मालिकः सञ्चिनोतीत्यर्थः । चलः
स्खलनम् । स्खलति पत्रं वृक्षस्य ।
"दृढः प्रेमा भग्नः सदसिरिव सन्धिं न लभते ।
लभेतापि प्रायः सवलति खलु यत्नैरपि धृतः ।"
इति दुर्गादासः ॥

**स्खलनं**, क्ली, (स्खल + ल्युट् ।) पतनम् । तत्-

पर्य्यायः । रिङ्गणम् २ । इत्यमरः । १ । ७ । ३६
॥
रिङ्खणम् ३ । इति हेमचन्द्रः ॥ (यथा, सुश्रुते ।
४ । २४ ।
"श्रमस्खलनदोषघ्नं स्थविरे च प्रशस्यते ।
सत्त्वोत्साहबलस्थैर्य्यधैर्य्यवीर्य्यविवर्द्धनम् ॥"
अभिघातः । इति मल्लिनाथः ॥ यथा, माघे ।
९ । ५२ ।
"निजपाणिपल्लवतलस्खलना-
दभिनासिकाविवरमुत्पतितैः ।
अपरा परीक्ष्य शनकैर्म्मुमुदे
मुखवासमास्य कमलश्वसनैः ॥"
उच्चारणम् । यथा, साहित्यदर्पणे । ३ । २१९ ।
"उत्स्वप्नायितभोगाङ्कगोत्रस्खलनसम्भवा॥"
तथाच भागवते । ५ । ३ । १२ ।
"अथ कथञ्चित्
स्खलनक्षुत्पतनजृम्भनदुरवस्था-
नादिषु विवशानां नः स्मरणाय ज्वरमरण-
दशायामपि सकलकश्मलनिरसनानितव गुण-
कृतनामधेयानि वचनगोचराणि भवन्तु ॥")

**स्खलितं**, क्ली, (स्खल + क्तः ।) कूटयुद्धादिना

युद्धमर्य्यादायाः स्खलनम् । तत्पर्य्यायः । छलम्
।
२ । इत्यमरः । २ । ८ । १०८ ॥ भ्रंशः । त्रि,
चलितम् । इति मेदिनी । ते, १६४ ॥ (यथा,
आर्य्यासप्तशत्याम् । ६७२ ।
"सौधगवाक्षगतापि हि दृष्टिस्तं स्थितिकृत-
प्रयत्नमपि ।

चूचुकम् । इति शब्दरत्नावली । तस्य शुभ-
लक्षणं यथा, गारुडे । ५६ । ९५ ।
"अरोमशौ स्तनौ पीनौ घनावविषमौ
शुभौ ।
कठिनावरोममुरो मृदुग्रीवा च कम्बुभा ॥"
तस्य मनोहरत्वकारकौषधं यथा, तत्रैव ।
१९४ । ४ ।
"कुष्ठनागबलाचूर्णं नवनीतसमन्वितम् ।
तल्लेपो युवतीनाञ्च कुर्य्यान्मनोहरं स्तनम्
॥"
अधस्तनरोगस्य संप्राप्तिमाह ।
"सक्षीरौ वाप्यदुग्धौ वा दोषः प्राप्य स्तनौ
स्त्रियः
रक्तं मांसञ्च संदूष्य स्तनरोगाय कल्प्यते ॥"
अदुग्धावपि स्तनौ प्रसूताया गर्भिण्याश्च
स्त्रिया बोद्धव्यौ । यत आह सुश्रुतः
"धमन्यः संवृतद्वाराः कन्यानां
स्तनसंश्रिताः ।
दोषाविसरणास्तासां न भवन्ति स्तनामयाः
॥"
दोषाविसरणाः संवृतद्वारत्वेन दोषाणाम-
विसरणमसञ्चारो यासु ताः ।
"तासामेव प्रसूतानां गर्भिणीनाञ्च ताः पुनः ।
स्वभावादेव विवृता जायन्ते सम्भवन्त्यतः
॥" * ॥
स्तनरोगाणामतिदेशेन लक्षणान्याह ।
"पञ्चानामपि तेषान्तु हित्वा शोणितविद्रधिम्
।
लक्षणानि समानानि बाह्यविद्रधिलक्षणैः ॥"
पञ्चानां वातपित्तकफसन्निपातागन्तुजानाम्
।
आगन्तुजस्तनरोगाभिघातेन शल्येन च
बोद्धव्यः ॥
रक्तजस्यासम्भवः । स्वभावात् ॥ * ॥
अथ स्तनरोगस्य चिकित्सा ।
"शोथं स्तनोत्थितमवेक्ष्य भिषग्विदध्यात्
यद्विद्रधावभिहितं बहुधा विधानम् ।
आमे विदाहिनि तथैव च तस्य पाके
तस्याः स्तनौ सततमेव च निर्गृहीतौ ॥

च-सेट् । "पञ्चमस्वरीति
धातुप्रदीपरामौ ।
"स्कन्दते स्कुन्दते चापि
षडाप्लवनवाचिनः ।
इति भट्टमल्लोऽपि ।
चुस्कुन्दिषते ॥" इति दुर्गादासः ॥

**स्कुन्भ**, ग न उ रोधने । इति कविकल्पद्रुमः ॥

(क्र्या०-स्वा० च-पर०-सक०-
सेट् । क्त्वावेट् ।)
दन्त्यादि पञ्चमस्वरी । ग,
स्कुभ्नाति । न,
स्कुभोति । उ स्कुम्भित्वा
स्कुब्ध्वा । रोधन-
मावरणम् । इति दुर्गादासः ॥
सौत्रधातुरयम् ॥

**स्कोटिका** स्त्री, पक्षिविशेषः । यथा, --

अथ सर्षपी ।
हामुक्तिका खञ्जनिका
तुलिकास्कोटिके समे ॥"
इति त्रिकाण्डशेषः ॥

**स्खद**, म ष ङ विदारे । इति कविकल्पद्रुमः ॥

(भ्वा०-आत्म०-सक०-सेट् ।) म
स्खदयति ।
उपसर्गात् परस्य तु वा शम यम
फण इत्या-
दिना वा ह्रस्वः । प्रस्खदति
प्रस्खादयति । अव
परिवर्ज्जादुपसर्गात् परस्य
घटादित्व नास्ति
इति कातन्त्नाद्याः । तत्रैव
अवस्थाने अप इति
भीमः प्रस्खादयति अवस्खादयति
परिस्खद-
यति । अपपरिभ्यां परस्य
घटादित्वं नास्तीति
जीमराद्याः । अपस्खादयांत
परिस्खादयति

द्विमगिरिशिखरस्खलितागङ्गेवैरावतं
हरति ॥")

**स्तक**, म प्रतीघाते । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) म, तिष्टकयिषति तिस्त-
कयिषति । इति दुर्गादासः ॥

**स्तन**, त् क अभ्रशब्दे । इति कविकल्पद्रुमः ॥

(अदन्तचुरा०-पर०-अक०-सेट् ।) स्तनयति
मेघः । इति दुर्गादासः ॥

**स्तन**, मि शब्दे । इति कविकल्कद्रुमः ॥ (म्वा०-

पर०-सक०-सेट् ।) मि स्तनयति स्तानयति ।
अतिस्तनत् । इति दुर्गादासः ॥

**स्तनः**, पुं, (स्तन्यते शब्द्यते कामुकैः स्तनयति

कथयति वक्षःशोभामिति वा । स्तन शब्दे +
घञ् ।) अवयवविशेषः । माइ इति चूँची इति
च भाषा ॥ तत्पर्य्यायः । कुचः २ । इत्यमरः ।
२ । ६ । ७७ ॥ कूचः ३ उरोजः ४ वक्षोजः ५
पयोधरः ६ वक्षोरुहः ७ उरसिजः ८ । तस्याग्रं

पित्तघ्नानि तु शीतातित द्रव्याण्यत्र प्रयोजयेत्
।
जलौकाभिर्हरेद्रक्तं न स्तनावुपनाहयेत् ॥"
उपनाहयेत् स्वेदयेत् ।
"लेपो विशालामूलेन हन्ति पीडां स्तनो-
त्थिताम् ।
निशाकनककल्काभ्यांलेपः प्रोक्तः स्तना-
र्क्षिहा ॥"
विशाला इन्द्रवारुणी । कनकस्य धत्तूरस्य
पत्रं
ग्राह्यम् ।
"लेपान्निहन्ति मूलं स्तनरोगं
वन्ध्यकर्कोट्याः ।
निर्वाप्य तप्तलोहं सलिले तद्वा पिबेत्तत्र ॥"
इति भावप्रकाशः ॥

**स्तननं**, क्ली, (स्तन शब्दे + ल्युट् ।) ध्वनिमात्रम् ।

मेघशब्दः । कुन्थितम् । इति मेदिनी ॥

**स्तनन्धयः**, पुं, स्त्री, (स्तनं धयति पिबतीति स्तन

+ धेट् पाने + "नासिकास्तनयोर्ध्मधेटोः ।"
३ ।
२ । २९ । इति खश् । अरुर्द्विषदिति मुम् ।
अतिशिशुः । तत्पर्य्यायः । उत्तानशयः २
उत्ता-
नशया ३ डिम्भः ४ डिम्भा ५ स्तनपः ६
स्तनपा
७ स्तनन्धयी ८ स्तनन्धया ९ ।
इत्यमरभरतौ ॥
(यथा, रघः । १४ । ७८ ।

| | | |
|---|---|---|
| प्रस्खदयति । स्खद स्खदने इति प्राञ्चः । स्खदनं स्थैर्य्यमिति विलोचनरामौ । पाटनमिति गो- विन्दः । क्लेशोत्पादनमिति गोयीचन्द्रः । हिंसेति रमानाथः । इति दुर्गादासः ॥<br><br>**स्खदनं**, क्ली, (स्खद + ल्युट् ।) विदारणम् । इति स्खदधात्वर्थदर्शनात् ॥ स्थैर्य्यम् । पाटनम् । क्लेशोत्पादनम् । हिंसा । इति कविकल्पद्रुम- टीकायां दुर्गादासः ॥ | | |

"पयोधरैराश्रमबालवृक्षकान्
संवर्द्धयन्ती स्वबलानुरूपैः ।
असंशयं प्राक् तनयोपपत्तेः
स्तनन्धयप्रीतिमवाप्स्यसित्वम् ॥")
स्तनन्धया, स्त्री, (स्तनन्धय + टाप् ।) अति-
बालिका । इत्यमरटीकायां भरतः । २ । ६ । ४१ ॥

**स्तनन्धयी**, स्त्री, (स्तनन्धय + टित्त्वात् ङीप् ।) अतिबालिका । इत्यमरः । २ । ६ । ४१ ॥

**स्तनपः**, पुं, स्तनं पिबतीति । पा + कः ।) अति- शिशुः । इति भरतः ॥ स्तनपानकर्त्तरि, त्रि ॥

**स्तनपा**, स्त्री, (स्तनं पिबति या । पा + कः । टाप् ।) अतिबालिका । इत्यमरः । २ । ६ । ४१ ॥

**स्तनपायिका**, स्त्री, अतिबालिका । दुग्धपोष्या । स्तनशब्दपूर्व्वकपाधातोर्ण्क्(ण्वुल्) प्रत्यये आप्-
प्रत्ययेन निष्पन्नम् ॥

**स्तनभरः**, पुं, (स्तनयोर्भरः ।) स्थूलस्तनभारः । तत्पर्य्यायः । स्तनभोगः २ । इति त्रिकाण्ड-
शेषः ॥

**स्तनभवः**, पुं, (स्तनाभ्यां भव उत्पत्तिर्यस्य । रति- बन्धविशेषः । यथा, --
"स्वजङ्घाद्वयमध्ये तु कृत्वा योषित्पदद्वयम् ।
स्तनौ धृत्वा रसेत् कामी बन्धः स्तनभवः स्मृतः ॥"
इति स्मरदीपिका ॥
स्तनजाते, त्रि ॥

**स्तनमुखः**, पुं, (स्तनयोर्मुखम् । अभिधानात्

**स्तनितं**, क्ली, (स्तन + क्तः ।) मेघनिर्घोषः । इत्य- मरः । १ । ३ । ८ ॥ (यथा, मनुः । ४ । १०३ ।
"विद्युत्स्तनितवर्षेषु महोल्कानाञ्च संप्लवे ।
आकालिकमनध्यायमेतेषु मनुरब्रवीत् ॥")
करतालिशब्दः । इति केचित् ॥ (शब्दमात्रम् ।
यथा, हरिवंशे । ९९ । ४८ ।
"आर्त्तस्तनितसंनादे रुधिराम्बुह्रदाकुले ॥")
शब्दिते, त्रि ॥

**स्तनितफलः**, पुं, (स्तनितानि फलानि यस्य ।) विकण्ठकवृक्षः । इति राजनिर्घण्टः ॥

**स्तन्यं**, क्ली, (स्तने भवम् । स्तन + "शरीरावय- वाच्च ।" ४ । ३ । ५५ । इति यत् ।) दुग्धम् ।
इति हेमचन्द्रः ॥ (यथा, रघुः । २ । ६९ ।
"स नन्दिनीस्तन्यमनिन्दितात्मां
सद्वत्सलो वत्सहुतावशेषम् ।
पपौ वशिष्ठेन कृताभ्यनुज्ञः
शुभ्रं यशो मूर्त्तमिवातितृष्णः ॥"
स्तनाय हितमिति । "शरीरावयात् यत् ।" ५ ।
१ । ६ । इति यत् स्तनहिते, त्रि ॥)

**स्तब्धः**, त्रि, स्तम्भितः । जडीकृतः । स्तभधातोः क्तप्रत्ययेनं निष्पन्नः ॥ (यथा, कथासरित्- सागरे । २० । ९६ ।
"स्वयमुत्क्षिप्तकलसस्तब्धबाहुर्भूत्तदा ॥")

**स्तब्धरोमा**, [न्] पुं, (स्तब्धानि रोमाणि यस्य ।) शूकरः । इत्यमरः । २ । ५ । २ ॥ स्तम्भित-
लोमयुक्ते त्रि ॥ (यथा, आर्य्यासप्तशत्याम् । ५३२ ।
"विमुखे चतुर्मुखेऽपि श्रितवति चानीशभाव- मीशेऽपि ।
मग्नमहीनिस्तारे हरिः परं स्तब्धरोमाभूत् ॥")

**स्तम्बकारः**, त्रि, (स्तम्बं करोतीति । कृ + अण् ।) गुच्छकारकः । स्तम्बशब्दात् कृञधातोः षण्-
प्रत्ययेन निष्पन्नः ॥

**स्तम्बघनः**, त्रि, (स्तम्बः हन्यतेऽनेनेति । स्तम्ब + हन् + "स्तम्बे क च ।" ३ । ३ । ८३ । इति चकारात्
अप् घनादेशश्च ।) तृणाद्यन्मूलनकारिखनि-
त्रादिः । तत्पर्य्यायः । स्तम्बघ्नः २ इत्यमरः ।
३ । २ । ३५ ॥ स्तम्बहनन ३ । इति सारसुन्दरी ॥
स्तम्बघ्नः, त्रि, (स्तम्बो हन्यते येनेति । स्तम्ब +
हन् + "स्तम्बे क च ।" ३ । ३ । ८३ इति कः ।)
स्तम्बघनः । इत्यमरः । ३ । २ । ३५ ॥

**स्तम्बपूः**, [र्] स्त्री, (स्तम्बानां पूरिव ।) पुरीभेदः । तत्पर्य्यायः ।
"तामलिप्तं दामलिप्तं तामांलप्ती तमालिनी ।
स्तम्बपूर्व्विष्णुगृहञ्च स्याद्विदर्भा तु कुण्डिनम् ॥"
इति हेमचन्द्रः ॥

**स्तम्बहननः**, त्रि, (स्तम्बो हन्यतेऽनेनेति । हन + करणे ल्युट् ।) स्तम्बघनः । इत्यमरटीकासार-
सुन्दरी । ३ । २ । ३५ ॥

**स्तम्बेरमः**, पुं, (स्तम्बे रमते इति । स्तम्ब + रम + "स्तम्बकर्णयो रमिजपोः ।" ३ । २ । १३ । इत्यच् ।
"तत्पुरुषे कृति बहुलम् ।" ६ । ३ । १४ । इति
सप्तम्या अलुक् ।) हस्ती । इत्यमरः । २ । ८ । ३५ ॥

पुंस्त्वम् ।) स्तनाग्रभागः । यथा ।
चूचुकन्तु स्तना-
द्वन्तशिखामुखाः । इति हेमचन्द्रः । ३ । २६७ ॥

**स्तनयित्नुः**, पुं, (स्तनयतीति । स्तन त्काभ्रशब्दे + "स्तनिहृषिपुषीति ।" उणा० ३ । २९ । इति इत्नुच् । "अयमन्तेति ।" ६ । ४ । ५५ । इति अयादेशः ।) मेधः । इत्यमरः । १ । ३ । ६ ॥
(यथा, उत्तररामचरिते ३ अङ्के ।
"किमव्यक्तेऽसि निनदे कुतस्त्येऽपि त्वमीदृशी ।
स्तनयित्नोर्म्मयूरीव चकितोत्कण्ठिता स्थिता ॥")
मुस्तकः । इति चामरः । २ । ४ । १५९ ॥ मेघध्वनिः ।
इति मेदिनी ॥ विद्युत् । इति शब्दरत्नावली ॥
मृत्युः । रोगः । इति हेमचन्द्रः ॥

**स्तनवृन्तः**, पुं, (स्तनयोर्वृन्तम् । अभिधानात् पुंस्त्वम् ।) स्तनमुखम् । इति हेमचन्द्रः । ३ । २६७ ॥
स्तनेर बोँटा इति भाषा ॥

**स्तनशिखा**, स्त्री, (स्तनयोः शिखा ।) स्तनवृन्तः । इति हेमचन्द्रः । ३ । २६७ ॥

**स्तनाग्रं**, क्ली, (स्तनयोरग्रम् ।) स्तनवृन्तम् । इति राजनिर्घण्टः ॥

**स्तनान्तरं**, क्ली, (स्तनयोरन्तरम् ।) हृदयम् । इति हेमचन्द्रः ॥ (यथा, रघुः । १० । ६२ ।
"बिभ्रत्या कौस्तुभन्यामं
स्तनान्तरविलम्बिनम्
पर्य्युपाम्यन्त लक्ष्म्या च
पद्मव्यजनहस्तया ॥")
स्त्रीवैधष्यलक्षणविशेषः । इति केचित् ॥

**स्तनाभोगः**, पुं, (स्तनयोराभोसः ।) स्तनभरः ।

**स्तभ**, इ ङ स्तम्भे । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-सक०-च सेट् ।) दन्त्यादिः । इ,
स्तम्भ्यते । ङ, स्तम्भते । तिष्टम्भयिषति । तिस्त-
म्भयिषति । स्तम्भो जडीभावस्तत्करणञ्च । स्तम्भः स्थूणाजडीभावावित्यमरोक्तेः । शीते-
नावस्तब्धो जडीकृतः इत्यर्थ इति क्रमदीश्वरो-
क्तेश्च । स्तम्भ इह क्रियानिरोधः इति भीमः ।
दोषवृद्धिरिति गोविन्दभट्टः । स्तम्भो रुद्धीकर-
णञ्च । स्तम्भते कबाटेन द्वारं लोकः । इति दुर्गादासः ॥

**स्तभः**, पुं, छागः । इति शब्दरत्नावली ॥

**स्तम्बः**, पुं, (तिष्ठतीति । स्था + "स्थः स्तोऽम्बज-वकौ ।" उणा० ४ । ९६ । इति अम्बच् । स्तादे-
शश्च ।) प्रकाण्डरहितवृक्षः । स तु झिण्टि-कादिः । तत्पर्य्यायः । गुल्मः २ । इत्यमरः । २ ।
४ । ९ ॥ तृणादिः । तत्पर्य्यायः । गुच्छः २ ।
इति चामरः ॥ गुत्सः ३ । इति तट्टीका ॥
विटपः ४ । इति जटाधरः ॥

**स्तम्बकरिः**, पुं, (स्तम्बं करोतीति । स्तम्ब + कृ + "स्तम्बशकृतोरिन् ।" ३ । २ । २४ । इति इन् ।)
धान्यम् । इत्यमरः । २ । ९ । २१ ॥ अपि च ।
"पुंसि स्तम्बकरिर्धान्यं व्रीहिर्ना धान्यमात्रके ।"
इति शब्दरत्नावली ॥

(यथा, रघुः । ५ । ७२ ।
"शय्यां जहात्युभयपक्षविनीतनिद्राः
स्तम्बेरमा मुखरशृङ्खलकर्षिणस्ते ॥")

**स्तम्भ**, ग न उ रोधने । इति कविकल्पद्रुमः ॥ (क्र्या० स्वा० च०-पर०-सक० सेट् । क्त्वावेट् ।)
ग, स्तभ्नाति । न, स्तभ्नोति । उ, स्तम्भित्वा
स्तब्ध्वा । रोधनमावरणम् । इति दुर्गादासः ।
सौत्रधातुरयम् ॥

**स्तम्भः**, पुं, (स्तभ्नातीति । स्तम्भ + पचाद्यच् ।)
स्थूणा । थाम इति खुँटी इति च भाषा ।
जडीभावः । स तु निष्प्रतिभता । इत्यमर-
भरतौ । ३ । ३ । १३४ ॥ (यथा, माघः, । ५ । ४८ ।
"स्तम्भं महान्तमुचितं सहसा मुमोच
दानं ददावतितरां सहसाग्रहस्तः ।
बद्धापराणि परितो निगडान्यलावीत्
स्वातन्त्र्यमुज्वलमवापकरेणुराजः ॥"
"महान्तं स्तम्भं आलानं जाड्यञ्च सहसा
मुमोच । स्तम्भः स्थूणाजडत्वहोरिति
विश्वः ।"
इति तट्टीका ॥ काण्डम् । यथा, रघुः । ५ । १५ ।
"आरन्यकोपात्तफलप्रसूतिः
स्तम्बेन नीवार इवावविष्टः ॥")

**स्तम्भकरः**, पुं, (करोतीति । कृ + अच् । स्तम्बस्य करः ।) वेष्टनम् । इति केचित् ॥
स्थूणाकारके
जाड्यकारके च त्रि ॥

**स्तम्भकी**, [न्] पुं, वाद्यविशेषः । इति केचित् ॥

**स्तम्भनं**, क्ली, (स्तम्भ + ल्युट् ।) जडीकरणम् ।
यथा, वगलामुखीस्तोत्रे ।
"दुष्टस्तम्भनमुग्रविघ्नशमनं
दारिद्रविद्रावणम् ॥"
षट्कर्म्मान्तर्गताभिचारकर्म्मविशेषः ।
यथा, --

"उलूककाकयोः पक्षौ गृहीत्वा मन्त्रवित्तमः ।
आलिख्य वै शरावे निशायाञ्च साध्याक्षर-
संपुटितम् ॥
मन्त्रं स्थापितपवनं सहस्रजप्तं चतुस्पथे
निखनेत्
स्तम्भनमेतदवश्यं भविता जगताञ्च नात्र
सन्देहः ॥"
स्थापितपवनं कृतप्राणप्रतिष्ठम् ।
"कृत्वा प्रतिकृतिमथवा
श्मशानाङ्गारकेशशववसनजाम् ।
सम्यगधिष्ठितपवनां
हृद्गतनाम्नीं समन्त्रललाटाम् ॥
वसनाधिष्ठितपवनां
सहस्रजप्तां तदुल्कया वसनाम् ।
दग्धां कृत्वा निखनेत्
श्मशानदेशे सपदि वाक्स्तम्भः ॥
आलिण्य चेष्टकायुगले मन्त्रं सनामपुटितम् ।
निशया निशीथकाले सहस्रजप्तं प्रतिष्ठित-
प्राणम् ॥
बन्धनभतितीक्ष्णतरं स्तम्भनमतितीक्ष्णाम्बु-
निःक्षिप्तम् ।
लिखितमन्त्रचितामयकीलकं
सहितकर्म्म सनाम समारुतम् ॥
कृतजपं त्रिसहस्रकसंख्यया
पथि खनेदथ याननिवारणम् ।
विहितनिम्बतरौ रिपुनामयुतं
मनुमिमं निशया कृतनामकम् ।
नवसहस्रजपादिसुसाधितं
पथि खनेदथ सैन्यनिरोधनम् ॥"
इति स्तम्भनम् ॥
इति फेत्कारिणीतन्त्रे ५ पटलः ॥ * ॥
अथाग्निस्तम्भनम् ।
"मालूरस्य रसं गृह्य जलौकां तत्र पेषयेत् ।
हस्तौ तु लेपयेत्तेन अग्निस्तम्भनमुत्तमम् ॥
शाल्मलीरसमादाय खरमूत्रे निधाय तम् ।
अग्न्यागारे क्षिपेत्तेन अग्निस्तम्भनमुत्तमम् ॥
वायसी उदरं गृह्य मण्डूकवसया सह ।
गुडिकां कारयेत्तेन ततोऽग्नौ प्रक्षिपेद्वशी ॥
एवमेतत्पयोगेन अग्निस्तम्भनमुत्तमम् ॥
"उन्मादनः शोषणश्च
तापनस्तम्भनस्तथा ।
सम्मोहनश्च पञ्चैते विख्याताः
कामशायकाः ॥"
इति जटाधरः ॥
(स्तम्भके, त्रि । यथा, सुश्रुते । १ । ४२
।
"कषायः संग्राहको रोपणः स्तम्भनः
शोधनो
लेखनः शोषणः पीडनः
क्लेदोपशोषणश्चेति ॥")

**स्तम्भितः**, त्रि, जडीभूतः । जडीकृतः । इति स्तम्भ-
शब्दात् इतोऽस्य जाते इतप्रत्ययेन
स्तम्भधातोः
क्तप्रत्ययेन वा निष्पन्नः ॥

**स्तरिमा**, [न्] पुं, (स्तृणोति आच्छादयतीति ।
स्तृ + "हृभृधृसृस्तृभ्य इमणिच् ।"
उणा० ४ ।
१४१ । इति इमनिच् ।) तल्पम् ।
इत्युणादि-
कोषः ॥

**स्तरी**, स्त्री, (स्तृणोति आच्छादयतीति । स्तृ +
"अवितृस्तृतन्द्रिभ्य ईः ।" उणा० ७ ।
१५८ ।
इति ईः ।) धूमः । इति हेमचन्द्रः ॥

**स्तवः**, पुं, (स्तूयतेऽनेनेति । स्तु + अप् ।) प्रशंसा ।
तत्पर्य्यायः । स्तोत्रम् २ नुतिः ३
स्तुतिः ४ ।
इत्यमरः । १ । ६ । ११ ॥ स्तवनम् ५
। इति
शब्दरत्नावली ॥ वर्णः ६ । इति
जटाधरः ॥
(यथा, हरिवंशे । १२९ । २८ ।
"तुष्टाव च तमीशानं मारीचः
कश्यपस्तदा ।

**स्तावकः**, त्रि, (स्तौतीति । स्तु + ण्वुल् ।) स्तव-
कर्त्ता । स्तुधातोर्णकप्रत्ययेन निष्पन्नः ॥
(यथा,
भागवते । ४ । १५ । २१ ।
"स्तावकान् तानभिप्रेत्य पृथुर्वैण्यः
प्रतापवान् ।
मेघनिह्रादया वाचा प्रहसन्निदमब्रवीत् ॥")

**स्तिमितः**, त्रि, (स्तिम + क्तः ।) अचञ्चलः । (यथा,
रघुः । १३ । ४८ ।
"एषा प्रसन्नस्तिमितप्रवाहा
सरिद्विदूरान्तरभावतन्वी ।
मन्दाकिनी भाति नगोपकण्ठे
मुक्तावली कण्ठगतेव भूमेः ॥"
आर्द्रः । यथा, "स्तिमितोऽचञ्चलार्द्रयोः ।"
इति मेदिनी ॥

**स्तिम्भिः**, पुं, (स्तभ्नातीति । स्तम्भ + "क्रमित
मिशतिस्तम्भामत इच्च ।" उणा० ४ ।
१२१ ।
इति इन् अत इच्च ।) समुद्रः । वाधा ।
इत्यु-
णादिकोषः ॥

**स्तीर्व्विः**, पुं, (स्तृणातीति । स्तृ + "स्तृञ्शॄ-
स्तृ जागृभ्यः क्विन् ।" उणा० ४ । ५४ ।
इति
क्विन् ।) नभः । रुधिरम् । तृणजातिः ।
अध्वर्य्युः ।
पयः । शक्रः । इति संक्षिप्तसारोणादिवृत्तिः
॥

**स्तुतः**, त्रि, (स्तु + क्तः ।) स्तुतिविषयः । तत्-
पर्य्यायः । ईलितः २ शस्तः ३ पणायितः
४
पनायितः ५ प्रणुतः ६ पणितः ७ पनितः
८
अपिगीर्णः ९ वर्णितः १० अभिष्टुतः ११ ।
इत्य-

रक्तपाटलमूलन्तु अवष्टब्धञ्च मूलकैः ।
दिव्यं स्तम्भयते क्षिप्रं पयः पिण्डं
जलान्तकम् ॥
मुण्डीतकवचाकुष्ठं मरीचं नागरं तथा ।
चर्व्वित्वा च इमं सद्यो जिह्वया ज्वलनं लिहेत्
गोरोचनां भृङ्गराजं चूर्णीकृत्य घृतं समम् ।
दिव्यस्तम्भश्च पीत्वा स्यात् मन्त्रे णानेन वै
तथा
ॐ ह्यं अग्निस्तम्भनं कुरु ॥ ॐ नमो भगवते
जलं स्तम्भय स्तम्भय सं समं सके कके
कचर ।
जलस्तम्भनमन्त्रोऽयं जलं स्तम्भयते शिव
॥"
इति गारुडे पूर्व्वखण्डे । १८६ । ११ -- १८
॥
प्रकारान्तरं षट्कर्म्मशब्दे द्रष्टव्यम् ॥

**स्तम्भनः**, पुं, (स्तम्भयतीति । स्तम्भ + णिच् + ल्युः ।)
कामदेवस्य पञ्चवाणान्तर्गत-वाण-विशेषः ।
यथा, --
वेदोक्तैः स्वकृतैश्चैव स्तवै स्तुत्यं
जगद्गुरुम् ॥")

**स्तवकः**, पुं, (तिष्ठतीति । स्था + "स्थः स्तोऽम्ब-
जवकौ ।" उणा० ४ । ९६ । इति
अवकः
धातोश्च स्तादेशः ।) गुच्छकः ।
इत्यमरः ।
२ । ४ । १६ ॥ "द्वे स्तवके थलो इति
ख्याते
बहुभिः पुष्पैः फलैर्व्वा संवाधः
पल्लवग्रन्थिः
गुच्छः । गूयते ध्वन्यते भ्रमरैरत्र गुच्छः
। गु
घु ङ ङ ध्वनौ नाम्नीति छक् ।
'पुष्पादिस्तवके गुच्छो
मुक्ताहारकलापयोः ।'
इति चवर्गान्तेषु रन्तिदेवः ॥
'स्यात् गुच्छः स्तवके स्तम्बे
हारभेदकलापयोः ॥'
इति चवर्गद्वितीयान्ते मेदिनी ॥
स्वार्थेके गुच्छकः गुत्सकः इति च
पठन्ति । तदा
वुध्यति वेष्टते इति गोधन्ते क्रीडन्ति
भ्रमरा
अत्रेति वा गुत्सः । गुध्य वेष्टे गुथ ङ
क्रीडे
इत्यस्माद्वा नाम्नीति सः । स्वार्थे कः
गुत्सकः ।
'स्तवके हारभेदे च गुत्सः स्तम्बे च
कीर्त्तितः ॥'
इति दन्त्यान्तेषु रुद्रः ।
'गुत्सः स्यात् स्तवके स्तम्बे
हारभिद्ग्रन्थि-
पर्णयोः ।'
इति दन्त्यसान्तेषु मेदिनी ।
'मुकुरः कुट्मलश्चापि स्तवको
गुत्सकाविति ॥'
इति हडडः ।
स्तूयते इति स्तवकः । ष्टु ञ ल स्तुतौ
अल् स्तवः
मरः । ३ । २ । ११० ॥ गीर्णः १२ ईडितः
१३ । इति
शब्दरत्नावली ॥ नुतः १४ । इति
जटाधरः ॥
(यथा, महाभारते । १२ । २८४ । १८ ।
"नमः स्तुताय स्तुत्याय स्तूयमानाय वै
नमः ॥")

**स्तुतिः**, स्त्री, (स्तु + क्तिन् ।) स्तवः । इत्यमरः ।
१ । ६ । ११ ॥ (यथा, नैषधे । ३ । ११६
।
"इतः स्तुतिः का खलु चन्द्रिकाया
यदब्धिमप्युत्तरलीकरोति ॥")
दुर्गा । यथा, --
"स्तुतिः सिद्धिरिति ख्याता श्रियाः
संश्रयणाच्च
सा ।
लक्ष्मीर्वा ललना वापि क्रमात् सा
कान्तिरुच्यते"
इति देवीपुराणे ४५ अध्यायः ॥

**स्तुतिपाठकः**, पुं, (स्तुतिं पठतीति । पठ + ण्वुल् ।)
राजादेर्यात्रादौ वौर्य्यस्तुतिकर्त्ता ।
तत्पर्य्यायः ।
वन्दी २ । इत्यमरः । २ । ८ । ९७ ॥ लग्नः
३
स्तुतिव्रतः ४ सूतः ५ मागधः ६ मधुकः ७
।
इति जटाधरः ॥ प्रातर्गेयः ८ । इति
त्रिकाण्ड-
शेषः ॥

**स्तुतिव्रतः**, पुं, (स्तुतिरेव व्रतं यस्य ।) स्तुति-
पाठकः । इति जटाधरः ॥

**स्तुत्यः**, त्रि, स्तवनीयः । स्तुधातोः क्यप्प्रत्ययेन
निष्पन्नः । इति मुग्धबोधव्याकरणम् ॥
(यथा,
रघुः । ४ । ६ ।
"परिकल्पितसान्निध्या काले काले च
बन्दिषु ।
स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वती
॥")

| | | |
|---|---|---|
| | स्वार्थे अभिधानात् नित्यकः । इति भरतः ॥ * स्तुतिः । इतिविश्वः ॥ ग्रन्थपरिच्छेदः । समूहः । इति केचित् ॥ स्तवकारके, त्रि ॥<br>**स्तवरकः**, पुं, आवरकः । इति केचित् ॥<br>**स्तावः**, पुं, स्तवः । स्तुधातोभवि घञ् प्रत्ययेन निष्पन्नः ॥ | **स्तुनकः**, पुं, छागः । इति शब्दचन्द्रिका ॥ |

**स्तुन्भ**, ग न उ रोधने । सौत्रधातुरयम् । इति
कविकल्पद्रुमः ॥ (क्र्या०-स्वा० च०-पर०-सक०-
सेट् । क्त्वावेट् ।) दन्त्यादिः । पञ्चमस्वरी । ग,
स्तुभ्नाति । न, स्तुभ्नोति । उ,
स्तुम्भित्वा स्तुब्धा ।
रोधनमावरणम् । इति दुर्गादासः ॥

**स्तुभः**, पुं, छागः । इत्यमरटीकायां भरतः २ ।
९ । ७६ ॥ (अग्निविशेषः । यथा,
महाभारते ।
२ । २२० । १४ ।
"चातुर्म्मास्ये षु नित्यानां हविषां
योनिरग्रहः ।
चतुर्भिः सहितः पुत्त्रैर्भानोरेखान्वयः
स्तुभः ॥")

**स्तुवेय्यः**, पुं, (स्तूयते इति । स्तु + "स्तुवः केय्य-
श्छन्दसि ।" उणा० ३ । ९९ । इति
केय्यः ।
कित्त्वाद्गुणाभावे सत्युवङादेशः ।) इन्द्रः
।
इत्युणादिकोषः ॥

**स्तुषेय्यः**, त्रि, श्रेष्ठः । उत्तमः । वैदिकशब्दोऽयम् ।
ष्टुधातोरौणादिकसेय्यप्रत्ययेन निष्पन्नम् ।
इति
सिद्धान्तकौमद्यामुणादिवृत्तिः॥

**स्तूप**, क उच्छ्राये । इति कविकल्पद्रुमः ॥ (चुरा०
पर०-सक०-सेट् ।) षष्ठस्वरी । उच्छ्रायो
राशी-
वरणम् । स्तूपयति धान्यं कृषकः ।
तुष्टूपयि-
षति । इति दुर्गादासः ॥

**स्तूप**, य इर उच्छ्राये । इति कविकल्पद्रुमः ॥
(दिवा०-पर०-सक०-सेट् ।) षष्ठस्वरी ।
य,

**स्तेन**, त् क चौर्य्ये । इति कविकल्पद्रुमः ॥
(अदन्त
चुरा०-पर०-सक०-सेट् ।)
अतिस्तेनत् धनं
चौरः । इति दुर्गादासः ॥

**स्तेनं**, क्ली, (स्तेनत् क चौर्य्ये + भावे अच् ।)
स्तेयम् । इत्यमरटीकायां भरतः । २ ।
१० । २४ ॥

**स्तेनः**, पुं, (स्तेनयतीति । स्तेन + पचाद्यच् ।)
चौरः । इत्यमरः । २ । १० । २४ ॥
तस्य दण्ड-
निर्णयो यथा, --
"स्तेनस्यातः प्रवक्ष्यामि विधिं
दण्डविनिर्णये ।
परमं यत्नमातिष्ठेत् स्तेनानां निग्रहे
नृपः ।
स्तेनानां निग्रहादस्य यशो राष्ट्रञ्च
वर्द्धते ॥
अन्नादे भ्रूणहा मार्ष्टि पत्यौ
भार्य्यापचारिणी ।
गुरौ शिष्यश्च याज्यश्च स्तेनो राजनि
किल्विषम् ॥
यस्तु तान्यु पकॢप्तानि द्रव्याणि
स्तेनयेन्नरः ।
तमाद्यं दण्डयेद्राजा यश्चाग्निं
चौरयेद्गृहात् ॥
येन येन यथाङ्गेन स्तेनो नृषु विचेष्टते ।
तत्तदेव हरेत्तस्य प्रत्यादेशाय पार्थिवः
॥"
इति मानवे ८ अध्यायः ॥
तद्वैदिकपर्य्यायः । तृपुः १ तक्का २
रिभ्वा ३
रिपुः ४ रिक्वा ५ रिहायाः ६ तायुः ७
तस्करः ८ वनर्गुः ९ हुरश्चित् १०
मुषीवान् ११
मलिम्लुचः १२ अघशंसः १३ वृकः
१४ । इति

पुष्पे शाकोदके काष्ठे तथा मूले फले तृणे ।
अदत्तादानमस्तेयं मनुराह प्रजापतिः ॥
ग्रहीतव्यानि पुष्पाणि देवार्च्चनविधौ द्विजैः ।
नैकस्मादेव नियतमननुज्ञाय केवलम् ॥
तृणं काष्ठं फलं पुष्पं प्रकाशं वै हरेद्बुधः ।
धर्म्मार्थं केवलं ग्राह्यमन्यथा पतितो भवेत् ॥
तिलमुद्गयवादीनां मुष्टिर्ग्राह्या पथि स्थितैः ।
क्षुधार्त्तैर्नान्यथा विप्र विधिविद्भिरितिस्थितिः
॥"
इति कौर्म्मे उपविभागे । १६ । १ -- १० ॥
स्ते यप्रायश्चित्तं यथा, --
"एतैर्व्रतैरपोह्यं स्यादेनो हिंसासमुद्भवम् ।
स्तेयदोषापहर्त्तॄणां व्रतानां श्रूयतां विधिः ॥
धान्यान्यधनचौर्य्याणि कृत्वा कामात् द्विजो-
त्तम ।
स्वजातीयगृहादेव कृच्छार्द्धेन विशुध्यति ॥
मनुष्याणान्तु हरणे स्त्रीणां क्षेत्रगृहस्य च ।
कूपवापीजलानाञ्च शुद्धिश्चान्द्रायणं स्मृतम् ॥
द्रव्याणामप्लसाराणां स्तेयं कृत्वान्यवेश्मनः ।
चरेत् सान्तपनं कृच्छ्रं तत्पापपरिशुद्धये ॥
भक्षभोज्यापहरणे यानशय्यासनस्य तु ।
पुष्पमूलफलानाञ्च पञ्चगव्यं विशोधनम् ॥
तृणकाष्ठद्रुमाणान्तु पक्वान्नस्य गुडस्य तु ।
तैलचर्म्मामिषाणान्तु त्रिरात्रं स्यादभोजनम् ॥
मणिमुक्ताप्रबालानां ताम्रस्य रजतस्य तु ।
अयस्कांस्योपलानाञ्च द्वादशाहं कणान्नभुक् ॥
कार्पासकीटकोर्णानां द्विशफैकशफस्य च ।
पक्षिगन्धौषधानाञ्च रज्वाश्चैव त्र्यहं पयः ॥
एतैर्व्रतैर्व्यपोहेत पापं स्तेयकृतं बुधः ॥"
इति मात्स्ये २०१ अध्यायः ॥ * ॥
स्तेयस्य दण्डविधिर्दण्डशब्दे द्रष्टव्यः । सुवर्ण-
स्तेयप्रायश्चित्तं प्रायश्चित्तशब्दे द्रष्टव्यम् ॥

**स्तेयी**, [न्] पुं, (स्तेयमस्यास्तीति । इनिः ।
चौरः । यथा । सुमन्तुः । सुवर्णस्तेयी मासं
सावित्र्यष्टसहस्रं आज्याहुतीर्जुहुयात् त्रिरात्र-
मुपवसेत् तप्तकृच्छ्रेण वा पूतो भवति । इति
प्रायश्चित्तविवेकः ॥ स्वर्णकारः । इति केचित्
॥

स्तूप्यति । इर्, अस्तूपत् अस्तूपीत् । अस्मात्
पुषादित्वान्नित्यं ङ इत्यन्ये । अतुस्तूपत् । इति
दुर्गादासः ॥

**स्तूपः**, पुं, (स्तूयते इति । स्तु + "स्तुवोदीर्घश्च ।"
उणा० ३ । २५ । इति पः दीर्घश्च ।) मृदादि-
कूटः । राशीकृतमृत्तिकादिः । इति पुंलिङ्ग-
संग्रहे अमरः । ३ । ५ । १९ ॥ संघातः ।
निष्प्रयोजनम् । बलम् । इति संक्षिप्तसारोणादि-
वृत्तिः ॥

**स्तृ**, न प्रीतिरक्षाप्राणने । इति कविकल्पद्रुमः ॥
(स्वा०-पर०-सक०-अक०-च-अनिट् ।) न,
स्तृणोति । इति दुर्गादासः ॥

**स्तृ**, न ञ स्तृतौ । इति कविकल्पद्रुमः ॥ (स्वा०
उभ०-सक०-अनिट् ।) न ञ, स्तृणोति स्तृणुते
स्तृतिराच्छादनम् । इति दुर्गादासः ॥

**स्तृक्ष**, गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।) सप्तमंस्वरयुक्ततमध्यः ।
स्तृक्षति । तरीस्तृक्षते । इति द्रुर्गादासः ॥

**स्तृह**, ऊ श वधे । इति कविकल्पद्रुमः ॥ (तुदा०
पर०-सक०-वेट् ।) ऊ, अस्तर्हीत् अस्तृक्षत् ।
श, स्तृहति । तिस्तर्हयिषति । इति दुर्गा-
दासः ॥

**स्तॄ** ञ गि छादने । इति कविकल्पद्रुमः ॥ (क्र्या
उभ०-सक०-अनिट् ।)ञ गि, स्तृणाति स्तृणीते
स्तार्णः स्तीर्णिः । इति दुर्गादासः ॥

**स्तृह**, ऊ श वधे । इति कविकल्पद्रुमः ॥ (तुदा०
चतुर्द्दशैव स्तेननामानि । इति वेदनिघण्टौ ।
३ । २४ ॥ * ॥
देवायानिवेद्यान्नादिभोक्ता ।
यथा, श्रीभगवदगीतायाम् । ३ । १२ ।
"इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञ-
भाविताः ।
तैर्द्दत्तानप्रदायैभ्यो यो भुङ्क्त्वे स्तेन एव सः ॥"
स्तेप, क क्षेपे । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-सक०-सेट् ।) एकादशस्वरी । क, स्तेप-
यति । तिस्तेपयिषति । इति दुर्गादासः ॥

**स्तेमः**, पुं, (स्तिम आर्द्रे + घञ् ।) आर्द्रीभावः ।
इत्यमरः । ३ । २ । २९ ॥

**स्तेयं**, क्ली, (स्तेनस्य भावः कर्म्म वा । स्तेन +
"स्तेनाद्यन्नलोपश्च ।" ५ । १ । १२५ । इति
यत् । नलोपश्च) चौर्य्यम् । तत्तु चौरस्य भावः
तस्य कर्म्म च इत्यमरभरतौ । २ । १० । २५ ॥
तस्य लक्षणं यथा, प्रायश्चित्तविवेके ।
"प्रत्यक्षं वा परोक्षं वा रात्रौ वा यदि वा दिवा
यत् परद्रव्यहरणं स्तेयं तत् परिकीर्त्तितम् ॥"
तत्करणे नरकं प्रतिप्रसवञ्च यथा, --व्यासोवाच ।
"न हिंस्यात् सर्व्वभूतानि नानृतञ्च वदेत् क्वचित्
नाहितं नाप्रियं वाक्यं न स्तेनः स्यात् कदाचन
तृणं वा यदि वा शाकं मृदं वा जलमेव वा ।
परस्यापहरन् जन्तुर्नरकं प्रतिपद्यते ॥
न राज्ञां प्रतीगृह्णीयान्न शूद्रपतितादपि ।

**स्तैनं**, क्ली, (स्तैनस्य चौरस्य भावः कर्म्म वा)
स्तेन + अण् ।) चौर्य्यम् । इत्यमरटीकायां
भरतः । २ । १० । २५ ॥

**स्तैन्यं**, क्ली, (स्तेनस्य भावः कर्म्म वा । स्तेन +
ष्यञ् ।) चौर्य्यम् । इत्यमरभरतौ । २ । १० ।
२५ ॥
(यथा, महाभारते । ३ । २७२ । ७ ।
"इमां हि पत्नीमस्माकं धर्म्मज्ञां धस्मचारिणीम्
संस्पृशेदीदृशो भावः शुचिं स्तैन्यमिवामृतम् ॥")

**स्तैन्यः**, पुं, (स्तेन एव । स्वार्थे ष्यञ् ।) चौरः ।
इति शब्दरत्नावली ॥

**स्तैमित्यं**, क्ली, (स्तिमितस्य भावः । स्तिमत +
ष्यञ् ।) जडता । इति राजनिर्घण्टः ॥
(आर्द्रत्वम् । यथा, "स्तैमित्यं स्तिमितो वेगः ।"
इति वैद्यमाधवकरसंगृहीतरुग्विनिश्चयस्य
ज्वराधिकारे ॥
"स्तैमित्यमङ्गस्यार्द्रपटावगुण्ठि-
तत्वमिव ॥" इत्यस्य व्याख्याने विजयेनोक्तम् ॥)

| | | |
|---|---|---|
| पर०-सक०-वेट् ।) ऊ, अस्तृहीत् अस्तृक्षत् ।<br>ग, स्तृहती स्तृहन्ती । तिस्तृहयिषति । इति<br>दुर्गादासः ॥ | न चान्यस्मादशक्तश्च निन्दितान् वर्जयेद्बुधः ॥<br>नित्यं याचनको न स्यान्न पुनस्तत् प्रयाचयेत् ॥<br>न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ।<br>देवस्वञ्चापि यत्नेन सदा परिहरेत्ततः ॥ | |

**स्तोकः**, पुं, (स्तुच्यते इति । स्तुच प्रसादे + घञ् ।)

चातकः । इति मेदिनी ॥ बिन्दुः । कणा । इति केचित् ॥ (यथा, मार्कण्डेये । ४९ । ५९ ।

"वृष्ट्यावरुद्धैरभवत् स्रोतः खातानि निम्नगाः ।

ये पुरस्तादपां स्तोका आपन्नाः पृथिवीतले ॥")

तथा च भागवते । ९ । ६ । ४८ ।

"एवं गृहेष्वभिरतो विषयान् विविधैः सुखैः ।

सेवमानो न चातुष्पादाज्यस्तोकैरिवानलः ॥")

**स्तोकः**, त्रि, (स्तुच् + घञ् ।) अप्लः । इत्यमरः । ३ । १६१ ॥ (यथा, महाभारते । १ । १ । २१८ ।

"सञ्जयैर्वगते प्राणांस्त्यक्तुमिच्छामि मारिचम् ।

स्तोकं ह्यपि न पश्यामि फलं जीवितधारणे ॥")

**स्तोककः**, पुं, (स्तोक एव । स्वार्थे कन् ।) चातकपक्षी । इत्यमरः ॥ (यथा, मनुः । १२ । ६७ ।

"रक्तानि हृत्वा वांसांसि जायते जीवजीवकः ।

वृको मृगेभं व्याघ्रोऽश्वं फलमूलन्तु मर्कटः ।

स्त्रीमृक्षस्तोमको वारि यानान्युष्ट्रः पशूनजः ॥"

**स्तोता**, [ऋ] त्रि, (स्तौतीति । स्तु + ण्वुल् ।)

स्तवकर्त्ता । ष्टुधातोस्तृणप्रत्ययेन निष्पन्नः ॥

(यथा, ऋग्वेदे । ८ । ४४ । १८ ।

"स्तोता स्यां तव शर्म्मणि ॥")

तद्वैदिकपर्य्यायः । रेभः १ जरिता २ कारुः ३

विषयाण्युपासनान्तराणि संहतान्युपदिश्यन्ते । अनन्तरं सामावयवसम्बन्धत्वाविशेषादयंवावाय मेव लोको हाउकारः स्तोभो रथन्तरे साम्नि प्रसिद्ध इयं वै रथन्तरमित्यस्मात् सम्बन्ध-सामान्याद्धाउकारः स्तोभोऽयं लोक इत्येव-मुपासीत । १ ।

वायुर्हाईकारो वामदेव्ये सामनि हाइकारः प्रसिद्धो वाय्वप्सम्बन्धश्च वामदेव्यस्य साम्नो योनि-रित्यस्मात् सामान्याद्धाइकारं वायुदृष्ट्यौ-पासीत । २ ।

चन्द्रमा अथकारः चन्द्रदृष्ट्या अथकारमुपा-सोत अन्ने हीदं स्थितमन्नात्मा चन्द्रः थकारा-कारसामान्याच्च । ३ ।

आत्मा इह कार इहेति स्तोभः प्रत्यक्षो ह्यात्मा इहेति व्यपदिश्वते इहेति च स्तोभः । ४ ।

तत्सामान्यादग्निरीकारइति । इ निधा-नानि चाग्नेयानि सर्व्वाणि सामानीत्यतः । ५ ।

तत्सामान्यादादित्य ऊकारः । उच्चैरूर्द्ध्वं

सन्तं आदित्यं गायत्र्युकारश्चायं स्तोभआदित्य दैवत्ये साम्नि स्तोभ इत्यादित्य ऊकारः । ६ ।

निहव इत्याह्वानमेकारस्तोभः एहोति चाह्वय-न्तीति । ७ ।

तत्सामान्याद्विश्वेदेवा औहोइकारो वैश्व-देव्ये साम्नि स्ताभस्य दर्शनात् । ८ ।

प्रजापतिर्हिंकार अनिरुक्ताद्धिंकारस्य चाव्यक्तत्वात् । ९ ।

प्राणः स्वरः स्वर इति स्तोभः प्राणस्य च स्वरहेतुत्वसामान्यात् । १० ।

अन्नं या या इति स्तोभोऽन्नं अन्नेन हीदं यातीत्यतः । ११ ।

तत्सामान्यात् वागिति स्तोभो विराडन्नं देवताविशेषो वा वैराजे साम्नि स्तोभदर्शनात् अनिरुक्तोऽव्यक्तत्वात् इदञ्चेदञ्चेति निर्व्वक्तुं न शक्यत इत्यतः । १२ ।

सञ्चरो विकल्पमानस्वरूप इत्यर्थः कोऽसावि-त्याह हुंकारीऽव्यक्तो ह्ययतोऽनिरुक्तविशेष

हासेन कृतम् । स्तोभं गीतालापपूरणार्थे कृतम् । हेलनं किं विष्णुनेति सावज्ञमपि च वैकुण्ठनामोच्चारणम् ।" इति तट्टीकायां श्रीधर-स्वामी ॥

**स्तोम**, त् क श्लाघने । इति कविकल्पद्रुमः ॥ अदन्त

चुरा०-पर०-सक०-सेट् ।) अतुस्तोमत् । इति दुर्गादासः ॥

**स्तोभं**, क्ली, (स्तूयते इति । स्तु + "अर्त्तिस्तुसुहु-स्रिति ।" उणा ० १ । १३९ । इति मन् ।)

मस्तकम् । धनम् । शस्यम् । लोहाग्रदण्डः । वक्त्रे, त्रि । इति केचित् ॥

**स्तोमः**, पुं, (स्तु + मन् ।) समूहः । इत्यमरः । २ । ५ । ३९ ॥ (यथा, उत्तररामचरिते । १ अङ्के

"ऋषोणामुग्रतपसां यमुनातीरवासिनाम् ।

लवणत्रासितः स्तोमस्त्रातारं त्वामुपस्थितः ॥")

यज्ञः इति हेमचन्द्रः ॥ स्तवः । इति चाभरः । ३ । ३ । २४१ ॥

**स्तौपिकं**, क्ली, बुद्धद्रव्यविशेषः । इति त्रिकाण्ड-शेषः ॥ ओघा इति हिन्दी भाषा ॥

**स्त्यानं**, क्ली, (स्त्यै + क्तः ।) स्निग्धम् । प्रति-ध्वानम् । घनत्वम् । (यथा, उत्तररामचरिते । २ अङ्के ।

नदः ४ स्तामुः ५ कीरिः ६ गौः ७ सूरिः ८
नादः ९ छन्दः १० स्तुप् ११ रुद्रः १२
कृपण्युः १३ । इति त्रयोदश स्तोतृनामानि ।
इति वेदनिर्घण्टौ । ३ । १६ ॥ (विष्णुः । इति
महाभारतम् । १३ । १४९ । ८६ ॥)

**स्तोत्रं**, क्ली, (स्तूयतेऽनेनेति । स्तु + "दाम्नीशस-
युयुजेति ।" ३ । २ । १८२ । इति ष्ट्रन् ।)
स्तवः । इत्यमरः । १ । ६ । ११ ॥ तच्चतुर्व्विधं
यथा मात्स्ये १२१ अध्याये ।
"अत्र वो वर्णयिष्यामि विधिं मन्वन्तरस्य तु ।
ऋचो यजूंषि सामानि तथावत् प्रति दैवतम् ।
विधिहोत्रं तथा स्तोत्रं पूर्व्ववत् संप्रवर्त्तते ॥
द्रव्यस्तोत्रं कर्म्मस्तोत्रं विधिस्तोत्रं तथैव च ।
तथैवाभिजनस्तोत्रं स्तोत्रमेतच्चतुष्टयम् ॥
मन्वन्तरेषु सर्व्वेषु यथा भेदाद्भवन्ति ये ।
प्रवर्त्तयन्ति तेषां वै ब्रह्मस्तोत्रं पुनः पुनः ॥"

**स्तोभः**, पुं, (स्तुभ + घञ् ।) सामावयवविशेषः । स
तु गीतालापपूरणाक्षरः । स च त्रयोदशविधो
यथा । अयं वावलोको हाउकारो १ वायुर्हा-
इकार २ श्चन्द्रमाअथकारः ३ । आत्मेहकारो ४
ऽग्निरीकारः ५ आदित्य ऊकारः ६ । निहव
एकारो ७ विश्वेदेवा औहोइकारः ८ प्रजा-
पतिर्हिंकारः ९ । प्राणः स्वरी १० ऽन्नं या ११
वाग्विराड्निरुक्त १२ स्त्रयोदशः स्तोभः सञ्चरो
हुंकारः १३ । दुग्धेऽस्मै वाग्दोहं यो वाचो
एवोपास्य इत्यभिप्रायः ॥ १३ ॥

स्तोभाक्षरोपासनाफलमाह । दुग्धेऽस्मै वाग्

दोहमित्याद्युक्तार्थं य एतामेवं यथोक्तलक्षणं
साम्नां सामावयवस्तोभाक्षरविषयामुपनिषदं
दर्शनं वेद तस्यैतत् यथोक्तं फलमित्यर्थः । द्विर-
भ्यासोऽध्यायपरिसमाप्त्यर्थः सामावयवविषयो
पासनाशेषः परिसमाप्त्यर्थो वेति ॥ * ॥ इति
श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यस्यपरम-
हंसपरिव्राजकाचार्य्यस्य श्रीमच्छङ्करभगवत्-
पादस्य कृतौ छान्दोग्योपनिषद्विवरणे प्रथमः
प्रपाठकः समाप्तः ॥ * ॥ * ॥ हेलनम् । स्तम्भ-
नम् । इति हेमचन्द्रः ॥ अपि च ।
साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा ।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥"
इति श्रीभागवते । ६ । २ । १४ ॥
"साङ्केत्यं पुत्त्रादौ साङ्केतितम् । पारिहास्यं परि-
"दधति कुहरभाजामत्र भल्लूकयूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि ॥")
आलस्यम् । इति विश्वमेदिन्यौ ॥

**स्त्यानः**, त्रि, संहतिकर्त्ता । ध्वनिकर्त्ता । इति
स्त्यैधातोः कर्त्तरि क्तप्रत्ययेन निष्पन्नः । इति
मुग्धबोधव्याकरणम् ॥

**स्त्येनः**, पुं, (स्त्यायतीति । स्त्ये + "श्यास्त्याह्वञ
विभ्यैनच् ।" उणा ० २ । ४६ । इति इनच् ।)
चौरः । अमृतम् । इत्युणादिकोषः ॥

**स्त्यै** संहतौ । ध्वनौ । इति कविकल्पद्रुमः ॥ (भ्वा-
पर०-अक०-अनिट् ।) दन्त्यादिरन्तः स्थाद्य-
युक्तमध्यः । स्त्यायति तिस्त्यासति । इति दुर्गा-
दासः ॥

**स्त्री**, स्त्री, (स्त्यायति गर्भो यस्यामिति । स्त्यै +
"स्त्यायतेः ड्रट् ।" उणा० ४ । १६५ । ड्रट् ।
डित्त्वात् टिलोपः । टित्त्वात् ङीप् ।) स्तन-
योन्यादिमती । तत्पर्य्यायः । योषित् २ अवला ३
योषा ४ नारी ५ सीमन्तिनी ६ बधूः ७ प्रतीप-
दर्शिनी ८ वामा ९ वनिता १० महिला ११
इत्यमरः । २ । ६ । २ ॥ प्रिया १२ रामा १३
जनिः १४ जनी १५ योषिता १६ जोषित् १७
जोषा १८ जोविता १९ वनिका २० महे-
लिका २१ महेला २२ । इति शब्दरत्नावली ॥

| | | |
|---|---|---|
| दोहोऽन्नवानन्नादो भवति य एतामेवँ साम्ना-<br>मुपनिषदं वेदोपनिषद्वेद । इति छान्दोग्योप-<br>निषद्ब्राह्मणे प्रथमप्रपाठकः समाप्तः ॥ * ॥<br>अस्य भाष्यम् । भक्तिविषयोपासनं सामा-<br>वयवसम्बन्धमित्यतः सामावयवान्तरस्तोभाक्षर- | | शर्व्वरी २३ सिन्दूरतिलका २४ सुभ्रूः २५ । इति<br>जटाधरः ॥ सुनयना २६ वामदृक् २७ अङ्गना २८<br>ललना २९ कान्ता ३० पुरन्ध्री ३१ वरवर्णिनी ३२<br>सुतनुः ३३ तन्वी ३४ तनुः ३५ कामिनी ३६<br>तन्वङ्गी ३७ रमणी ३८ कुरङ्गनयना ३९<br>भीरुः ४० भाविनी ४१ विलासिनी ४२ नित-<br>म्बिनी ४३ मत्तकासिनी ४४ सुनेत्रा ४५ प्रमदा |

४६ सुन्दरी ४७ अञ्चितभ्रूः ४८
ललिता ४९
वासिता ५० भामिनी ५१ वरारोहा
५२
नताङ्गी ५३ त्रिनता ५४ वरा ५५
श्यामा ५६
चारुवर्द्धना ५७ । इति राजनिर्घण्टः
॥ * ॥
सा चतुर्व्विधा । पद्मिनी १ चित्रिणी २
शङ्खिनी
३ हस्तिनी ४ । तासां लक्षणानि
यथा, --
“भवति कमलनेत्रा नासिकाक्षुद्ररन्ध्रा
अविरलकुचयुग्मा दीर्घकेशी कृशाङ्गी
।
मृदुवचनसुशीला नृत्यगीतानुरक्ता
सकलतनुसुवेशा पद्मिनी पद्मगन्धा ॥
१ ॥
भवति रतिरसज्ञा नातिदीर्घा न खर्व्वा
तिलकुसुमसुनासा
स्निग्धदेहोत्पलाक्षी ।
कठिनघनकुचाढ्या सुन्दरी सा
सुशीला
सकलगुणविचित्रा चित्रिणी चित्रवक्त्रा
॥ २ ॥
दीर्घा सुदीर्घनयना वरसुन्दरी या
कामोपभोगरसिका गुणशीलयुक्ता ।
रेखात्रयेण च विभूषितकण्ठदेशा
सम्भोगकेलिरसिका किल शङ्खिनी
सा ॥ ३ ॥
स्थूलाधरा स्थूलनितम्बभागा
स्थूलाङ्गुली स्थूलकुचा सुशीला ।
कामोत्सुका गाढरतिप्रिया च
नितम्बखर्व्वा खलु हस्तिनी सा ॥ ४
॥
पद्मिनी पद्मगन्धा च मीनगन्धा च
चित्रिणी ।
शङ्खिनी क्षारगन्धा च मदगन्धा च
हस्तिनी ॥

भर्त्ता च म्रियते तस्या नियतं दुःखभागिनी
॥
पूर्णचन्द्रमुखी कन्या बालसूर्य्यसमप्रभा ।
विशालनेत्रा विम्बौष्ठी सा कन्या लभते
सुखम ॥
रेखाभिर्ब्ब हुभिः क्लेशं
स्वल्पाभिर्धनहीनताम् ।
रक्ताभिः सुखमाप्नोति कृष्णाभिः प्रेष्यतां
व्रजेत् ॥
कार्य्येऽपि मन्त्री पत्नी स्यात् सखी स्यात्
करणेषु च ।
स्नेहेषु भाय्या माता स्यात् वेश्या च शयने
शुभा ॥
अङ्कुशं कुण्डलं चक्रं यस्याः पाणितले
भवेत् ।”
पुस्तकान्तरे चक्रं स्थाने छत्रमिति च पाठः
।
“पुत्रं प्रसूयते नारी नरेन्द्रं लभते पतिम् ॥
यस्यास्तु रोमशौ पार्श्वौ रोमशौ च पयोधरौ
।
उन्नतौ चाधरौष्ठौ च क्षिप्रं मारयते पतिम् ॥
यस्याः पाणितले रेखा प्राकारं तोरणं भवेत्
।
अपि दासकुले जाता राज्ञीत्वमुपगच्छति ॥
उद्वृत्तकपिला यस्या रोमराजी निरन्तरम् ।
अपि राजकुले जाता दासीत्वमुपजायते ॥
यस्या अनामिकाङ्गुष्ठौ पृथिव्यां नैव तिष्ठतः
।
पतिं मारयते क्षिप्रं स्वातन्त्र्येणैव वर्त्तते ॥
यस्या गमनंमात्रेण भूमिकम्पः प्रजायते ।
पतिं मारयते क्षिप्रं म्ले च्छाचारेण वर्त्तते ॥
चक्षुःस्नेहेन सौभाग्यं दन्तस्नेहेन भोजनम्
।
त्वचः स्नेहेन शय्याञ्च पादस्नेहेन वाहनम्
॥
स्निग्धोन्नतौ ताम्रनखौ नार्य्याश्च चरणौ
शुभौ ।
मत्स्याङ्कुशाब्जचिह्नौ च चक्रलाङ्गललक्षितौ
॥

कलहं कुर्व्वतीं शश्वत् तेन सार्द्धं सुकोपनाम् ॥
चर्च्चया भक्षयन्तीं तं कीनाश इव गोजरम् ।
दुःसाहसस्वरूपाञ्च सर्व्वदोषाश्रयां सदा ॥
शश्वत् कपटरूपाञ्च दुःसाध्यमप्रतीतकाम् ।
ब्रह्मविष्णुशिवादीनां दुस्त्याज्यां मोहकारि-
णीम् ॥
तपोमार्गार्गलां शश्वत् मुक्तिमार्गकपाटिकाम् ।
हरेर्भक्तिव्यवहितां सर्व्वमायाकरण्डिकाम् ॥
संसारकारागारे च शश्वन्निगडरूपिणीम् ।
इन्द्रजालस्वरूपाञ्च मिथ्यातिस्वप्नरूपिणीम्
॥
बिभ्रतीं बाह्यसौन्दर्य्यमधोऽङ्गमतिकुत्सितम् ।
लालाविण्मूत्रपूयानामाधारंमलसंयुतम् ।
दुर्गन्धिदोषसंयुक्तं रक्ताक्तकमसंस्कृतम् ॥
मायारूपां मायिनाञ्च विधिना निर्म्मितां पुरा
विषरूपां मुमुक्षूणामदृश्यामप्यवाञ्छिताम्॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे १६ अध्यायः ॥ *
॥
तस्या निन्दा यथा, --
“दुर्निवार्य्यश्च सर्व्वेषां स्त्रीस्वभावश्च चापलः ।
दुस्त्याज्यं योगिभिः सिद्धै रस्माभिश्च
तपस्विभिः ॥
जितेन्द्रियैर्जितक्रोधैः स्त्रीरूपं मोहकारणम् ।
सर्व्वमायाकरण्डञ्च कामवर्द्धनकारणम् ॥
ब्रह्मास्त्रं कामदेवस्य दुर्भेद्यं जयकारणम् ।
सुनिर्म्मितञ्च विधिना सर्व्वाद्यं ब्रह्मपूर्व्वजम् ॥
मोक्षद्वारकवाटञ्च हरिभक्तिविरोधनम् ।
संसारबन्धनस्तम्भरज्जुरूपमकृन्तनम् ॥
वैराग्यनाशबीजञ्च शश्वद्रागविवर्द्धनम् ।
पत्तनं साहसानाञ्च दोषाणामालयं सदा ॥
अप्रत्ययानां क्षेत्रञ्च स्वयं कपटमूर्त्तिमत् ।
अहङ्काराश्रयं शश्वद्विषकुम्भं सुधामुखम् ॥
सर्व्वैरसाध्यमानञ्च दुराराध्यञ्च सर्व्वदा ।
स्वकार्य्यसाध्यं चाराध्यं कलहाङ्कुरकारणम् ॥”
इति ब्रह्मवैवर्त्ते गणपतिखण्डे । ६ । ५५ -- ६१
॥
स्त्रीससर्गयुक्तपुंदर्शननिषेधो यथा, --
“रहःस्थलनियुक्तश्च न दृश्यः स्त्रीयुतः पुमान् ।
स्त्रीसंसक्तञ्च पुरुषं य पश्यति नराधमः ॥

शशके पद्मिनी तुष्टा मृगे तुष्टा च चित्रिणी ।
वृषभे शङ्खिनी तुष्टा हये तुष्टा च हस्तिनी ॥
पद्मिनी शशयोर्योनिमेढ्रकौ चतुरङ्गुलौ ।
चित्रिणीमृगयोर्योनिमेढ्रकौ च तथाविधौ ॥
शङ्खिनीवृषयोरष्टाङ्गुलौ तावेव सम्मतौ ।
हस्तिनीवाजिनोरेख तावेव द्वादशाङ्गुलौ ॥” ॥
तस्या अवस्था यथा, --
“आ षोडशात् भवेद्बाला तरुणी त्रिंशता मता ।
पञ्चपञ्चाशतं यावत् प्रौढा वृद्धा ततः परम् ॥”
इति रसमञ्जरी ॥ * ॥
“बाला तु प्राणदा प्रोक्ता युवती प्राणधारिणी
प्रौढा करोति वृद्धत्वं वृद्धा मरणमादिशेत् ॥
निदाघशरदोर्ब्बाला प्रौढा वर्षावसन्तयोः ।
हेमन्ते शिशिरे योग्या न वृद्धा क्वापि शस्यते ॥
नार्त्तवे षोडशाद्वर्षात् सप्तत्याः परतो न च ।
आयुःकामो नरः स्त्रीभिः संयोगं कर्त्तुमर्हति ॥
त्रिभिस्त्रिभिरहोभिश्च सेवेत प्रमदां नरः ।
सर्व्वेष्वृतुषु ग्रीष्मेषु पक्षान्मासाद्व्रजेद्बुधः ॥
पञ्चपञ्चाशतो नारी सप्तसप्ततितः पुमान् ।
द्वावेतौ न प्रसूयेते प्रसूयेते विपर्य्ययात् ॥”
इति राजवल्लभे रात्रिकृत्यम् ॥ * ॥
स्त्रियाः शुभाशुभलक्षणानि यथा, --
श्रीहरिरुवाच ।
अस्वेदिनौ मृदुतलौ प्रशस्तौ चरणौ स्त्रियाः ।
शुभे जङ्घे विरोमे च उरू हस्तिकरोपमौ ॥
अश्वत्थपत्रसदृशं विपुलं गुह्यमुत्तमम् ।
नाभिः प्रशस्ता गम्भीरा दक्षिणावर्त्तिका शुभा
अरोमा त्रिवली नार्य्या हृत्स्तनौ रोमवर्जितौ ॥
इति गारुडे नरस्त्रोलक्षणम् ६४ अध्यायः ॥
तस्याश्चरित्रं यथा, --
“विषकुम्भाकाररूपाममृतास्याञ्चसन्ततम् ।
हृदये क्षुरधाराभां शश्वन्मधुरभाषिणीम् ॥
स्वकार्य्यपरिनिष्पन्नतत्परां सततं सदा ।
स्वान्तर्मलिनरूपाञ्च प्रसन्नवदनेक्षणाम् ॥
श्रुतौ पुराणे यासाञ्च चरित्रमनिरूपितम् ।
तासु को विश्वसेत् प्राज्ञः अप्राज्ञाञ्च दुराशयाम् ॥
तासां को वा रिपुर्म्मित्रं प्रार्थयन्ती नवं नवम्”
दृष्ट्वा सुवेशं पुरुषमिच्छन्ती हृदये सदा ॥
बाह्ये स्वात्मसतीत्वञ्च पापयन्ती प्रयत्नतः ।
शश्वत्कामाञ्च वामाञ्च कामाधारां मनोहराम् ॥
बाह्ये भावं छादयन्तीं स्वान्तर्म्मैथुनमानसाम् ।
कान्तं ग्रसन्तीं रहसि वाह्येऽतीव सुलज्जिताम् ॥
मानिनीं मैथुनाभावे कोपनां कलहाङ्कुराम् ।
सुप्रीतां भूरिसंयोगात् स्वल्पमैथुनदुःखिताम् ॥
सुमिष्टान्नात् शौततोयादाकाङ्क्षन्तीञ्च मानसः ।
सुन्दरं रसिकं कान्तं युवानं गुणिनं सदा ॥
सुतात् परमपि स्नेहं कुर्व्वतीं रतिकर्त्तरि ।
प्राणाधिकं प्रियतमं सम्भोगकुशलं प्रियम् ।
पश्यन्तीं रिपुतुल्यञ्च वृद्धं वा मैथुनाक्षमम् ।
करोति रसभङ्गं वा कालसूत्रं व्रजेत् ध्रुवम् ।
तत्र तिष्ठति पापीयान् यावच्चन्द्रदिवाकरौ ॥
विशेषतश्च पितरं गुरुं वा भूमिपं द्बिज ।
रहःसु रतिसंसक्तं न हि पश्येद्विचक्षणः ॥
कामतः कोपतो वापि यः पश्येत्सुरतोन्मुखम् ।
स्त्रीविच्छेदो भवेत्तस्य ध्रवं सप्तसु जन्मसु ॥
श्रीणीं वक्षःस्थलं वक्त्रं यः पश्यति परस्त्रियाः ।
कामतो वापि मूढश्च पण्डो भवति निश्चितम् ॥”
इति ब्रह्मवैवर्त्ते गणपतिखण्डे । ४२ । १० -- १४ ॥
सा च त्रिभी रक्षितव्या यथा, --
“स्त्रीजातिरवला शश्वद्रक्षणीया स्वबन्धुभिः ।
जनकस्वामिपुत्रैश्च गर्हितान्यैश्च निश्चितम् ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । ४ । १९ ॥ * ॥
अपि च ।
“पिता रक्षति कौमारे भर्त्ता रक्षति यौवने ।
पुत्रश्च स्याविरे रक्षेत् न स्त्री स्वातन्त्र्यमर्हति ॥”
इति दायतत्त्वम् ॥ * ॥

| “यस्यास्तु कुञ्चिताः केशा मुखञ्च परिमण्डलम्<br>नाभिश्च दक्षिणावर्त्ता मा कन्या कुलवर्द्धिनी ॥<br>या च काञ्चनवर्णाभा रक्तहस्तसरोरुहा ।<br>सहस्राणान्तु नारीणां भवेत् सापि पतिव्रता ॥<br>वक्रकेशा च या कन्या मण्डलाक्षिई च या भवेत् | | |
|---|---|---|

अन्यच्च ।
"कौमारे रक्षिता तातो दत्त्वा पात्राय सत्कृती
सर्व्वदा रक्षिता कान्तस्तदभावे च तत्सुतः
॥
त्रिष्ववस्थासु नारीणां रक्षितारस्त्रयः सदा ।
याः स्वतन्त्राश्च ता नष्टाः
सर्व्वधर्म्मबहिस्कृताः ॥
असत्कुलप्रसूतास्ताः कुलटा दुष्टमानसाः ।
शतजन्मकृतं पुण्यं तासां नश्यति पद्मज !
॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । १७ ।
८२-८४
अपरञ्च ।
"रक्षेत् कन्यां पिता बाल्ये यौवने पतिरेव
ताम् ।
वार्द्धके रक्षते पुत्त्रो ह्यनाथां ज्ञातयस्तथा ॥
पतिं विना न तिष्ठेत दिवा वा यदि वा निशि
॥"
इति गारुडे । ९५ । ३१ -- ३२ ॥ * ॥
सा सूर्य्यैरपि अदृश्या कर्त्तव्या । यथा, --
"परस्पृष्टा च या नारी या स्पृहां कुरुते परम्
।
सापि दुष्टा परित्याज्या चेत्याह कमलोद्भवः
॥
तस्मान्नारी परैर्यत्नाददृष्टा कृतिभिः कृता ।
असूर्य्यम्पश्या या रामाः शद्धास्ताश्च
पतिव्रताः ॥
स्वच्छन्दगामिनी या च स्वतन्त्रः
शूकरीसमा ।
अन्तर्दुष्टा सदा सैव निश्चितं परगामिनी ॥
स्वामिसाध्या च या नारीकुलधर्म्मभिया
स्थित ॥
कान्तेन सार्द्धं सा कान्ता वैकुण्ठं याति
निश्चितम् ॥"
इतिब्रह्मवैवर्त्तेश्रीकृष्णजन्मखण्डे १८ ।
११६-११९
तस्यामानावमानयोर्गुणदोषौ यथा, --
"पदे पदे शुभं तस्य यः स्त्रीमानञ्च रक्षति ।
अवमन्य स्त्रियं मूढो यो याति पुरुषाधमः ।
तस्मात्ता न हि पश्यन्ति सन्तो हि धर्म्मभीरवः
॥
को धर्म्मः किं यशस्तेषां का प्रतिष्ठा च किन्तपः
।
किं बुद्धिर्विद्या ज्ञानञ्च परस्त्रीषु च यन्मनः ॥
इहाप्यपयशो दुःखं नरकेषु परत्र च ।
वासः प्रहारस्तेषाञ्च ताडनैः कृमिभक्षणैः ॥
दुःखबीजं सुखं मत्वा मूढाश्च दैवदोषतः ।
परस्त्रीसेवणं प्रीत्या कुर्व्वन्ति सततं मुदा ॥
उत्तमा मत्पदाम्भोजं मत्कर्म्म मध्यमाः सदा ।
स्मरन्ति शश्वदधमाः परस्त्रोसेवनं मुदा ॥
विपत्तिः सन्ततं तस्य परवस्तुषु यम्मनः ।
विशेषतः परस्त्रोषु सुवर्णेषु च भूमिषु ॥
दैवाल् परस्त्रियं दृष्ट्वा विरमेद्यो हरिं स्मरन् ।
स्पृष्ट्वा परसुवर्णञ्च हस्तप्रक्षालनाच्छुचिः ॥
सन्ततं नातिसंसक्ताः सन्तः स्त्रीषु च कामन्तः
।
यक्ष्मव्याधिज्ञानहानिलोकनिन्दाभयेन च ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखन्दे । ३५ ।
७८-८९ ॥
सभर्त्तृकायास्तु व्रतोपवासादिः पृथङ्निषिद्धो
मनुना यथा, --
"नास्ति स्त्रीणां पृथक् यज्ञो न व्रतं
नाप्युपोषणम्
पतिं शुश्रूषते यत्तु तेन स्वर्गे महीयते ॥"
विष्णुनापि भर्त्तुः समानव्रतचारित्वमित्युक्तम् ।
समानव्रतचारित्वं भर्त्तृव्रताचरणे तदानुकूल्य-
कारित्वम् । यत्र तु सावित्रीव्रतादौ विशेषविधि
स्तत्र भर्त्रनुज्ञया पृथगपि । यथा शङ्खः ।
कामं भर्त्तुरनुज्ञया व्रतोपवासनियमेज्यादी-
नामभ्यासः स्त्रीधर्म्म इति । यत्तु ।
"पत्यौ जीवति या नारी उपोष्य व्रतमाचरेत् ।
आयुः संहरते पत्युः सा नारी नरकं व्रजेत् ॥
इति विष्णूक्तं तदनुज्ञातविषयम् । इत्येकादशी
तत्त्वम् ॥ * ॥ स्त्रीधर्म्मादि यथा, --
"या स्त्री भर्त्तुरसौभाग्या सा सौभाग्या च
सर्व्वतः ।
शयने भोजने तस्या न सुखं जीवनं वृथा ॥
यस्या नास्ति प्रियप्रेम तस्या जन्म निरर्थकम् ।
पतिदोषे महासाध्वी पतिं न निष्ठुरं
वदेत् ।
यदि सोढुमशक्ता च पाणां स्त्यजति
धर्म्मतः ॥
पतिसेवा व्रतं स्त्रीणां पतिसेवा परं
तपः ॥
पतिसेवा परो धर्म्मः पतिसेवा
सुरार्च्चनम् ।
पतिसेवा परं सत्यं
दानतीर्थानुतीर्थकम् ॥
सर्व्वदेवमयः स्वामी सर्व्वदेवमयः
शुचिः ।
सर्व्वपुण्यस्वरूपश्च पतिरूपी
जनार्द्दनः ॥
या सती भर्त्तुरुच्छिष्टं भुङ्क्ते
पादोदकं सदा ।
तस्या दर्शमुपस्पर्शं नित्यं वाञ्छन्ति
देवताः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ।
४७ । ७-२० ॥
अपिच ।
"भर्त्ता हि दैवतं स्त्रीणां भर्त्ता च
गतिरुच्यते ।
जीवपत्याः स्त्रियो भर्त्ता दैवतं प्रभुरेव
च ॥
या धर्म्मचारिणी नारी पतिव्रता
परायणा ।
नानुवर्त्तति भर्त्तारं सा सद्भिर्न
प्रशस्यते ॥
पतिव्रता भर्त्तृपरा नारी भर्त्तृपरायणा
।
इह कीर्त्तिं परां प्राप्य प्रेत्य स्वर्गे
महीयते ॥
भर्त्तुश्चितानुगामिन्या
देवाराधनशीलया ।
गार्हस्थ्यधर्म्मरतया भर्त्ता
सेव्यस्त्विह त्वया ॥"
इति वह्निपुराणम् ॥ * ॥
गृहिणीधर्म्मा यथा, --

पदे पदे तदशुभं करोति पार्व्वती सती ॥”
इति ब्रह्मवैवर्त्तेश्रीकृष्णजन्मखण्डे ३२ अध्यायः ॥
उपयाचिकास्त्रीत्यागे दोषो यथा, --
मोहिन्युवाच ।
“इङ्गितेनैव नारीणां सद्यो मत्तो भवेत् पुमान्
करोत्याकृष्य सम्भोग यः स एवोत्तमो विभो ॥
ज्ञात्वा स्फुटमभिप्रायं नार्य्या संप्रेरितो हि यः
पश्चात् करोति शृङ्गारं पुरुषः स च मध्यमः ॥
पुनः पुनः प्रेरितश्च स्त्रिया कामार्त्तया च यः ॥
तया न लिप्तो रहसि स क्लीवो न पुमानहो ॥
गृही तपस्वी कामी वा त्यजेत् स्त्रियमुपस्थिताम्
व्रजेत् षरत्र नरकमपूज्यश्च भवेदिह ॥
भ्रष्टश्रीर्भ्रष्टरूपश्च भ्रष्टदर्पो भवेद्ध्रुवम् ।
स सद्यः क्लीवतां याति व्रह्मन् शापेन योषितः ॥
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । ३३ । ३-७ ॥
परस्त्रीसङ्गदोषो यथा, --
“सदापकीर्त्ति र्व्वसति परस्त्रीषु च वस्तुषु ।
तस्मात्ते नैव गृह्णन्ति सन्तः स्वक्लेशकारणे ॥
स्मर मामन्तरे बाह्ये मदीयं विषयं कुरु ।
अतस्तेन मनो लोलं भविता परवस्तुषु ॥
योषिद्रुपा च मे माया सर्व्वेषां मोहकारिणी ।
लोलया कुरुते मोहं स्वात्मारामस्य सन्ततम् ॥
नृणां मूत्राश्रये देशे रागिणां सन्ततं रतिः ।
स्तनाभिधे मांसपिण्डेऽधरे लालालयेऽशुचौ ॥
मोणी वक्त्रं स्तनं तासां क्रामदेवालयं सदा ।
तत् किं पुत्रं धने रूपे सम्पत्तौ यौवनेऽथवा ॥
यद्भक्तिर्नास्ति कान्ते च सर्व्वप्रियतमे परे ।
साशुचिर्धर्म्महीना च सर्व्वकर्म्मविवर्ज्जिता ॥
पतिर्बन्धुर्गतिर्भर्त्ता दैवतं गुरुरेव च ।
सर्व्वस्माच्च गुरुः स्वामी न गुरुः स्वामिनः परः ॥
पिता माता सुतो भ्राता क्लिष्टो दातुमिदं धनम्
सर्व्वस्वदाता स्वामी च सूढानां योषितां सुराः
काचिदेव हि जानाति महासाध्वी च स्वामिनम् ।
अतिसद्वंशजाता च सुशीला कुलपालिका ॥
असद्वंशप्रसूता या दुःशीला धर्म्मवर्ज्जिता ।
मुखदुष्टा योनिदुष्टा पतिं निन्दति कोपतः ॥
या स्त्री द्वेष्टि सर्व्वपरं पतिं विष्णुसमं गुरुम् ।
कुम्भीपाके पतति सा यावदिन्द्राश्चतुर्द्दश ॥
व्रतं चानशनं दानं सत्यं पुण्यं तपश्चिरम् ।
पतिभक्तिविहीनाया भस्मीभूतं निरर्थकम् ॥
अतः किञ्चिन्न वक्ष्यामि निष्ठुरं पतिमीश्वरम् ।
भृत्वापराधैर्दैवेन प्राणांस्त्यक्ष्यामि निश्चितम् ॥
“गृहिणीनां सदाचारं श्रूयतां यत् श्रुतौ श्रुतम् ।
गृहिणी पतिभक्ता च देवब्राह्मणपूजिता ॥
सा शुद्धा प्रातरुत्थाय नमस्कृत्य पतिं सुरम् ।
प्राङ्गणे मण्डलं दद्यात् गोमयेन जलेन च ॥
गृहकृत्यञ्च कृत्वा च स्नात्वागत्य गृहं सती ।
सुरं विप्रं पतिं नत्वा पूजयेत् गृहदेवताम् ॥
गृहकृत्यं सुनिव्वृत्य भोजयित्वा पतिं सती ।
अतिथिं पूजयित्वा च स्वयं भुङ्क्ते सुखं सती ॥”
इतिब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । ८४ । १३-१६ ॥
स्त्रीणां त्रैविध्यं यथा, --
“उत्तमा पतिभक्ता सा किञ्चिद्धर्म्मसमन्विता ।
प्राणान्तेऽपि न कुरुते तं जारमयशस्करम् ॥
पूजयेत् सा यथा कान्तं तथा देवद्विजातिथिम् ।
व्रतानि चोपवासांश्च कुरुते सर्व्वपूजनम् ॥
गुरुणा रक्षिता यत्नात् जारञ्च न भजेत् भयात्
सा कृत्तिमा मध्यमा च यथाकिञ्चितपतिं व्रजेत्
स्थानं नास्ति क्षणं नास्ति नास्ति प्रार्थयिता नरः
तेन हे नन्द तासाञ्च सतीत्वमुपजायते ॥
अधमा परमा दुष्टात्यन्तासद्वंशजा तथा ॥
अधर्म्मशीला दुःशीला दुर्म्मुखा कलहप्रिया ॥
पतिं भर्त्सयते नित्यं जारञ्च सेवयेत् सदा ।

| | | दुःखं ददाति कान्ताय विषतुल्यञ्च पश्यति ॥<br>जारद्वारमुपायेन हन्ति कान्त मनोहरम् ॥”<br>जारद्वारं स्थाने आयद्वारमिति पाठः ।<br>“ददाति भर्त्रे नाहारं विषोक्तिं वक्ति सन्ततम् ।<br>धर्म्मिष्ठञ्च वरिष्ठञ्च गरिष्ठञ्च महीतले ॥<br>कामदेवसमञ्चापि जारं पश्यति कामतः ।<br>शुभदृष्ट्या कटाक्षेण शश्वत्पापीयसी मुदा ॥<br>सुवेशं पुरुषं दृष्ट्वा युवानं रतिशूरकम् ।<br>योनिः क्लिद्यति नारीणां कामुकीनां निरन्तरम्<br>अधर्म्मं चिन्तयेत् शश्वत् जारञ्च परमं मदा ॥ |
|---|---|---|

गुरुभिर्भर्त्सिता सा च रक्षिता च शतेन च ।
तथापि जारं कुरुते नापि साध्या नृपैरपि ॥
नास्ति तस्याः प्रियं किञ्चित् सर्व्व कार्य्यवशेन च
गावस्तृणमिवारण्ये प्रार्थयन्ती नबं नवम् ॥
विद्युद्भासा जले रेखा तस्याः प्रीतिस्तथैव च ।
अधर्म्मयुक्ता सततं कपटं वक्ति निश्चितम् ॥
व्रते तपसि धर्म्भे च न मनो गृहकर्म्मणि ।
न गुरौ न च देवेषु जारे म्निग्धञ्च चञ्चलम् ॥
स्त्रीजातित्रिविधानाञ्च कथा च कथिता मया ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । ८४ । २६-४०
स्त्रीसंसर्गे दोषो यथा, --
सनत्कुमार उवाच ।
“अयि भ्रातः किं करोषि कुशलं युवतीपते ।
स्त्रीपुंसोर्व्वर्द्धते प्रेम नित्यं तन्नित्यनूतनम् ॥
अर्गलं ज्ञानमार्गस्य भक्तिद्वारकपाटकम् ।
मोक्षमार्गव्यवहितं चिरं वन्धनकारणम् ॥
गर्भ वासस्य बीजञ्च परं नरककारणम् ।
पीयूषबुद्ध्या गरलं भुङ्क्ते पापी नराधमः ॥”
इति च तत्रैव । १३० । ३१ -- ३३ ॥ * ॥
स्त्रीणां स्वभावा यथा, --
“स्त्रीस्वभावं चरित्रञ्च आश्चर्य्यं पापकारकम् ॥
क्षणं नास्ति रहो नास्ति नास्ति कृत्ये विभावना
नदी पातयते कूलं नारी पातयते कुलम् ।
नारीनाञ्च नदीनाञ्च स्वच्छन्दललिता गतिः ॥
नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्व्वभूतानां न पुंसां वामलोचना ॥
मनोऽनुकूलाः प्रमदा रूपवत्यः स्वलङ्कृताः ।
वासः प्रासादपृष्ठेषु स्वर्गः स्याच्छुभकर्म्मणः ॥
न दानेन न मानेन नार्ज्जवेन न सेवया ।
न शस्त्रेण न शास्त्रेण सर्व्वदा विषमाः स्त्रियः ॥
इति गारुडे १०९ अध्यायः ॥ * ॥
स्त्रीवधनिषेधो यथा, --
“अवध्याञ्च स्त्रियं प्राहुस्तिर्य्यग्योनिगतेष्वपि ।
स त्वं सुपृथिवोपाल न धर्म्मं त्यक्तुमर्हसि ॥”
इति वह्निपुराणे पृथोरुपाख्याननामाध्यायः॥
स्त्रीणामात्मदाने अस्वातन्त्र्य यथा, --
“ततोऽब्रवीच्चाप्यवजा नाहंत्वां पार्थिवात्मज ।
दातुं शक्ता तथात्मानं स्वतन्त्रा न हि योषितः ॥”
इत्युपक्रम्य ॥
“विश्वकर्म्मसुता माध्वी नाम्ना चित्राङ्गदाभवत् ।
सा कदाचिन्महारण्यं सखीभिः परिवारिता ।
जगाम नैमिषं नाम स्नातुं कमललोचना ।
सा स्नातुमवतीर्णा च अथाभ्यागान्नरेश्वरः ॥
सुदेवतनयो धीमान् सुरथो नाम नामतः ।
तां ददर्श च तन्वङ्गीं शुभाङ्गीं मदनातुरः ॥
स्त्रीणां मेध्यत्वं त्याज्यत्वञ्च यथा,
“सोमः शौचं ददौ तासां गन्धर्व्वाश्च शुभां गिंरम् ।
पावकः सर्व्वभक्षित्वं मेध्या वै योषितो ह्यतः ॥
व्यभिचारादृतौ शुद्धिर्गर्भे त्यागो विधीयते ।
गर्भभर्त्तृवधे तासां तथा महति पातके ॥
सुरापी व्याधिता द्वेष्ट्री विहर्त्तव्या ग्रियंवदा ।
भर्त्तव्या चान्यथा ह्येन ऋषयो हि भवेन्महत् ॥”
तस्याः प्रशंसा यथा; --
“यत्राविरुद्धं दम्पत्योस्त्र्यिर्गस्तत्र वर्द्धते ।
मृते जीवति वा पत्यौ या नान्यमुपगच्छति ॥
सेह कीर्त्तिमवाप्नोति मोदते चोमया सह ।
शुभां त्यजंस्तृतीयांशं दाप्यो ह्याभरणं स्त्रियाः ।
स्त्रीभिर्भर्त्तृवचः कार्य्यं एष धर्म्मः परः स्त्रियाः ॥”
स्त्रीगमनार्हकालो यथा, --
षोडशर्त्तुर्निशाः स्त्रीणां तासु युग्मासु संविशेत् ।
ब्रह्मचार्य्येव पर्व्वण्याद्याश्चतस्रस्तु वर्ज्जयेत् ॥
एवं गच्छेत् स्त्रियं क्षामां मघां मूलञ्च वर्ज्जयेत्
लक्षण्यं जनयेदेव पुत्त्रं रोगविवर्ज्जितम् ॥
यदा कामी भवेद्वापि स्त्रीणाम्बरमनुस्मरन् ।
स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतस्ततः ॥” * ॥
भूषणादिना भर्त्रादिभिः स्त्रियः पूज्या यथा, --
“भर्त्तृभ्रातृपितृज्ञातिश्वश्रूश्वशुरदेवरैः ।
बन्धुभिश्च स्त्रियः पूज्या भूषणाच्छादनाशनैः ॥
स्त्रीभिः श्वश्रूश्वशुरयोः पादवन्दनं सदा कार्य्यम्
यथा, --
“संयतोपस्करा दक्षा हृष्टा व्ययपराङ्मुखी ।
श्वश्रूश्वशुरयोः कुर्य्यात् पादयोर्वन्दनं सदा ॥”
प्रोषितभर्त्तृ कया क्रीडादिकं वर्ज्जनीयं यथा, --
“क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् ।
हास्यं परगृहे यानं त्यजेत् प्रोषितभर्त्तृका ॥”
ज्येष्ठया स्त्रिया सह धर्म्मकर्म्मानुष्ठानं कर्त्तव्यम् ।
यथा, --
“ज्येष्ठां धर्म्मविधौ कुर्य्यान्न कनिष्ठां कदाचन ।

तेन नारद नारीणां सतीत्वमुपजायते ॥
एकवासा तथा गौरी श्यामा वा
वरवर्णिनी ।
मध्यगण्डा प्रगलभा च वयोऽतीतास्तथा
स्त्रियः
सुरूपं पुरुषं दृष्ट्वा क्षरन्ति भुनिसत्तम ।
स्वभाव एष नारीणां शाम्बस्य शृणु
कारणम् ॥”
इति वाराहे सूर्य्यप्रतिष्ठाननामाध्यायः ॥
* ॥
अपि च ।
“विद्याघातो ह्यनभ्यासः स्त्रीणां घातः
कुचेलता
व्याधीनां भोजनं जीर्णं शत्रोर्घातः
प्रगल्भता
तस्करस्य वधो दण्डः
कुमित्रस्याल्पभाषणम् ।
पृथक् शय्या तु नारीणां
ब्राह्मणस्यानिमन्त्रिता
दुर्ज्जनाः शिल्पिनो दासा दुष्टाश्च
पटहाः
स्त्रियः ।
ताडिता मार्दवं यान्ति न ते
सत्कारभाजनाः ॥
जानीयात् प्रेषणे भृत्यान्
बान्धवान्व्यसनागमे ।
मित्रञ्चापदि काले च भार्य्याञ्च विभवक्षये
॥
स्त्रीणां द्विगुणमाहारः प्रज्ञा चैव चतुर्गुणा
।
षड्गुणो व्यवसायश्च कामाश्चाष्टगुणाः
स्मृताः ॥
न स्वप्ने न जयेन्निद्रां न कामेन स्त्रियं
जयेत् ।
न चेन्धनैर्ज्जयेद्वह्निं न मद्येन तृषां जयेत्
।
समांसभोजनैः स्निग्धैर्म्मद्यैः
सीधुसुरासवैः ।
वस्त्रैर्म्मनोहरैर्म्माल्यैः कामः स्त्रीषु
विजृम्भते ॥

संवृत्तः सा सखीं प्राह वचनं सत्त्वसंयुता
।
असौ नराधिपसुतो मदनेन कदर्थ्यते ।
मदर्थञ्च क्षमं मेऽस्य स्वप्रदानं सुरूपिणः
॥
सख्यस्तामब्रुवन् बाले न प्रगल्भासि
सुन्दरि ।
न स्वातन्त्र्यं तवास्तीह प्रदाने
स्वात्मनोऽनघे ॥
पिता तवास्ति धर्म्मिष्ठः
सर्व्वशिल्पविशारदः ।
न ते युक्तमिहात्मानं दातुं नरपते स्वयम्
॥”
इति वामनपुराणे ६० अध्यायः ॥ * ॥
स्त्रीणां मध्य गुरवो यथा, --
“मातामही मातुलानी तथा मातुश्च
सहोदरा ।
श्वश्रूः पितामही ज्येष्ठा धात्री च गुरवः
स्त्रीषु ॥
इत्युक्तो गुरुवर्गोऽयं मातृतः पितृतो
द्विजाः ।
अनुवर्त्तनमेतासां मनोवाक्कायकर्म्मभिः
॥”
इत्यादि ॥
“गुरूणामपि सर्व्वेषां पूज्याः पञ्च
विशेषतः ।
तेषामाद्यास्त्रयः श्रेष्ठास्तेषां माता
सुपूजिता ॥
यावत् पिता च माता च द्वावेतौ निर्व्वि-
कारिणौ ।
तावत् सर्व्वं परित्यज्य पुत्त्रः
स्यात्तत्परायणः ॥
माता पिता च सुप्रीतौ स्यातां
पुत्त्रगुणैर्यदि ।
स पुत्त्रः सकलं धर्म्मं प्राप्नुयात्तेन
कर्म्मणा ॥
नास्ति मातृसमं देवः नास्ति मातृसमं
गुरुः ।
तयोः प्रत्युपकारोऽपि न कथञ्चन विद्यते
॥

दाहयित्वाग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः ॥
आहरेद्विधिवद्दारानग्निञ्चैवाविलम्बितः ।
हिता भर्त्तुर्द्दिवं गच्छेदिह कीर्त्तिमवाप्य च ॥”
इति गारुडे । ९५ । ३२ -- ३३ ॥
चञ्चलस्त्रीणां कुलनाशकत्वं यथा, --
“लवणजलान्ता नद्यः स्त्रीभेदान्तञ्च मैथ्वनम् ।
पैशुन्यं जनवार्त्तान्तं वित्तं दुःखत्रयान्तकम् ॥
राज्यश्रीर्ब्रह्मशापान्तं हालान्तं ब्रह्मवर्च्चसम् ।
आचारं घोषवासान्तं कुलस्यान्तं स्त्रियश्चलाः
॥
सर्व्वे क्षयान्ता निचयाः पतनान्ताः समु-
च्छ्रिताः ॥”
स्त्रीनायके वासनिषेधादि यथा, --
अनायके न वस्तव्यं वस्तव्यं बहुनायके ।
स्त्रीनायके न वस्तव्यं वस्तव्यं बालनायके ॥
त्यजेद्वन्ध्यामष्टमाब्दे नवमे तु गृतप्रजाम् ।
एकादशे स्त्रीजननीं सद्यश्चाप्रियवादिनीम् ॥
अनर्थित्वान्मनुष्याणां भिया परिजनस्य च ।

| | | |
|---|---|---|
| ब्रह्मचार्य्येव वक्तव्यः प्राप्तं मन्मयचेष्टितम् ।<br>हृद्यं हि पुरुषं दृष्ट्वा योनिः प्रहृष्यते स्त्रियाः ॥<br>सुवेशं पुरुषं दृष्ट्वा भ्रातरं यदि वा सुतम् ।<br>मुरुं वा भिक्षुकं वाढ्यमिच्छन्ति सततं स्त्रियः ॥<br>नद्यश्च नार्य्यश्च समस्वभावाः<br>स्वतन्त्रता वेगबलाधिकञ्च ।<br>तोयैश्च दोषेश्च निपातयन्ति<br>नद्यो हि कूलानि कुलानि नार्य्यः ॥ | तयोर्न्नित्यं प्रियं कुर्य्यात् कर्म्मणा मनसा गिरा ।<br>न ताभ्यामननुज्ञातो धर्म्ममन्यं समाश्रयेत् ॥”<br>इति कौर्म्मे उपविभागे । ११ । २७, ३१, ३४-३७ ॥<br>व्यभिचारिण्याः स्त्रिया निर्व्वास्यत्वं यथा, --<br>“हृताधिकारां मलिनां<br>पिण्डमात्रोपसेविनीम्<br>परिभूतामधःशय्यां<br>वासयेद्व्यभिचारिणीम् ॥” | |

अर्थादपेतमर्य्यादाः स्त्रियस्तिष्ठन्ति भर्त्तृषु
॥”
इति गारुडे । ११५ । ५८ -- ५९; ६२ --
६५ ॥
स्त्रियो धन्या यथा, --
“योषितः साधु धन्यास्तास्ताभ्यो
धन्यतरोऽस्ति
कः ॥”
इत्युपक्रम्य ।
“कलिः साध्विति यत् प्रोक्तं शूद्रः
साध्विति
योषितः ।
तच्चाह भगवान् साधुर्धन्याश्चेति पुनः
पुनः ॥
तत् सर्व्वं श्रोतुमिच्छामो न चेद्गुह्यं
महामुने
इत्युक्तो मुनिभिर्व्यासः प्रहस्येदमथाब्रवीत्
॥
योषिच्छुश्रूषणं भर्त्तुः कर्म्मणा मनसा गिरा
।
कुर्व्वती समवाप्नोति तत्सालोक्यं ततो
द्विजाः ॥
नातिक्लेशेन महता तानेव पुरुषो यथा ।
तृतीयं व्याहृतं तेन मया साध्विति
योषिताम् ॥”
इति विष्णुपुराणे । ६ । २ । ८२ -- ८३ ॥
वेश्यास्त्रीणां धर्म्मा यथा, --
श्रीकृष्णमहिष्य ऊचुः ।
वेश्यानामपि यो धर्म्मस्तन्नो ब्रूहि तपोधन
।
दाल्भ्य उवाच ।
यः कश्चित् शुल्कमादाय गृहमेष्यति वः
सदा ।
निश्छद्मनैवोपचर्य्यः स तदान्यत्र
दाम्भिकात् ॥
देवतानां पितॄणाञ्च पुण्याहे समुपस्थिते ।
गोभूहिरण्यदानानि प्रदेयानि च शक्तितः ॥
ब्राह्मणेभ्यो वरारोहाः कार्य्याणि वचनानि
च ।
रत्यर्थं कामदेवोऽयमिति चित्तेन धार्य्यताम् ॥
यद्यदिच्छति विप्रेन्द्रस्तत्तत् कुर्य्यात् विलासिनी
एवमादित्यवारेण सदा तद्व्रतमाचरेत् ।
तण्डुलप्रस्थदानञ्च यावन्मासांस्त्रयोदश ॥
ततस्त्रयोदशे मासि सम्प्राप्ते तस्य भाविनी ।
विप्रस्योपकर्य्युक्तां शय्यां दद्याविलक्षणाम् ।
सोपधानकविश्रामां स्वास्तरावरणां शुभाम् ॥
दीपिकोपानहच्छत्रं पादुकासनसंयुताम् ।
सपत्नीकमलङ्कृत्य हेमसूत्राङ्गुलीयकैः ॥
सूक्ष्मवस्त्रैः सकटकैर्धूपमाल्यानुलेपनैः ।
कामदेवं संपत्नीकं गुडकुम्भोपरिस्थितम् ॥
ताम्रपात्रासनगतं हैमं नेत्रपटावृतम् ।
सकांस्यभाजनोपेतमिक्षुदण्डसमन्वितम् ।
दद्यादेतेन मन्त्रेण तथैकां गां पयस्विनीम् ॥
यथान्तरं न पश्यामि कामकेशवयोः सदा ।
तथैव सर्व्वकामाप्तिरस्तु विष्णो सदा मम ॥
यथा न कामिनी देहात् प्रयाति तव केशव ।
तथा ममापि देवेश शरीरे त्वं कुरु प्रभो ॥
तथा च काञ्चनं देवं प्रतिगृह्य द्विजोत्तमः ।
कोऽदात् कस्मा अदादिति वैदिकं मन्त्रमी-
रयेत् ॥
ततः प्रदक्षिणीकृत्य विसर्ज्य द्विजसत्तमम् ।
शय्यासनादिकं सर्व्वं ब्राह्मणस्य गृहं नयेत् ॥
ततः प्रभृति योऽन्योऽपि रत्यर्थं गेहमागतः ।
सामान्यं सूर्य्यवारे च स संपूज्यो भवेत्तदा ॥
एवं त्रयोदशं यावत् मासमेकं द्विजोत्तमम् ।
तर्पयीत यथाकालं प्रोषितेऽन्यं समाचरेत् ॥
तदनुज्ञारूपवन्तं यावदस्यागमो भवेत् ।
आत्मनोऽपि तथा विघ्नं गर्भसूतकराजसम् ॥
दैवं वा मानुषं वा स्यादुपरागेण वा ततः ।
साचारानिष्टयशसो यथाशक्त्या समाचरेत् ॥
एतद्वः कथितं सम्यग्भवतीनां विशेषतः ।
स्वधर्म्मोऽयं यतो भाव्यो वेश्यानामिह सर्व्वदा ॥
पुरहूतेन यत् प्रोक्तं दानवीषु पुरा मया ।
तदिदं साम्प्रतं सर्व्वं भवतीष्वपि युज्यते ॥
सर्व्वपापप्रशमनमनन्तफलदायकम् ।
कल्याणिनीनां कथितं कुरुध्वञ्च वरानना ॥
करोति याशेषमखण्डमेतत्
कल्याणिनी माधवलोकसस्था ।
सप्ताहं दुग्धपीतं स्यात् स्त्रीणां
बहुपयस्करम् ॥
रुद्रेन्द्रवारुणीमूललेपात् स्त्री
स्तनवेदना ।
नस्येत् घृतविपक्वा च
कार्य्यावल्यन्तु पालिका ।
भक्षिता सा महेशान योनिशूलं
विनाशयेत् ॥
प्रलेपिता कारवेल्लमूलेनैव विनिर्गता ।
योनिः प्रवेशमायाति नात्र कार्य्या
विचारणा ॥
नीलीपटोलमूलानि साज्यानि
तिलवारिणा ।
पिष्टांन्येषां प्रलेपो वै
ज्वालागर्भगरोगनुत् ॥
पाठामूलं रुद्रपीतं पिष्टं तण्डुलवारिणा
।
पापरोगहरं स्याच्च कुष्ठपानन्तथैव च
॥
वाप्योदकञ्च समधु पीतमन्तर्गतस्य वै
।
पापरोगस्य सन्तापनिवृत्तिं कुरुते
शिव ॥
कदलीलिकुच्चं पीतं पिष्ट्वा
तण्डुलवारिणा ।
स्त्रीणाञ्चै व महादेव रक्तस्रावं हि
वारयेत् ॥
घृततुल्या रुद्र लाक्षा पीता क्षीरेण वै
सह ।
प्रदरं हरते रोगं नात्र कार्य्या विचारणा
॥
द्विजयष्टीत्रिकटुकं चूर्णं पीतं हरेच्छिव
।
तिलक्वाधेन संयुक्तं रक्तगुल्मं स्त्रिया
हर ॥
कुसुमस्य निवद्धञ्च तरुणीनां महेश्वर
।
रक्तोत्पलस्य वै कन्दं
शर्करातिलसंयुतम् ॥

यच्चाप्यन्यद्व्रतं सम्यगुपदेक्ष्यामि तत्त्वतः
॥
अविचारेण सर्व्वाभिरनुष्ठेयन्तु तत् पुनः ।
संसारोत्तारणायालमेतद्वे दविदो विदुः ॥
यदा सूर्य्यदिने हस्तः पुष्यो वाय पुनर्व्वसुः
।
भवेत् सर्व्वौषधिस्नानं सम्यङ्नारी
समाचरेत् ।
तदा पञ्चशरस्याथ सन्निधातृत्वमिष्यते ॥
अर्च्चयेत् पुण्डरीकाक्षमनङ्गस्यानुकीर्त्तनैः
।
कामाय पादौ संपूज्य जङ्घे वै मोहकारिणे
॥
मेढ्रं कन्दर्पनिधये कटिं प्रीतिमते नमः ।
नाभिं सौख्यसमुद्राय रामाय च तथोदरम्
॥
हृदयं हृदयेशाय स्तनावाह्लादकारिणे ।
उत्कण्ठायेति वै कण्ठमास्यमानन्दकारिणे
॥
वामांसं पुष्पचापाय पुष्पबाणाय दक्षिणम् ।
नमोऽनङ्गाय वै मौलिं विलोलायेति च
ध्वजम्
सर्व्वात्मने शिरस्तद्वद्देवदेवस्य पूजयेत् ।
नमः शिवाय शान्ताय पाशाङ्कुशधराय च ॥
गदिने पीतवस्त्राय शङ्खचक्रधराय च ॥
नमो नारायणायेति कामदेवात्मने नमः
नमः शान्त्यै नमः प्रीत्यै नमो रत्यै श्रिये
नमः ।
नमः पुष्टै नमस्तुष्टै नमः सर्व्वार्थसम्पदे ॥
एवं संपूज्य गोविन्दमनङ्गात्मानमीश्वरम्।
गन्धैर्म्माल्यैस्तथा धूपैर्नैवेद्येन च भामिनी
॥
तत आहूय धर्म्मज्ञं ब्राह्मणं वेदपारगम् ।
अव्यङ्गावयववं पूज्य गन्धधूपार्च्चनादिभिः
॥
शालेयतण्डुलप्रस्थं घृतपात्रण संयुतम् ।
तस्मै विप्राय सा दद्यान्माधव प्रीयतामिति
॥
यथेष्टाहारयुक्तं वै तमेव द्विजसत्तमम् ।

सा पूजिता देवगणैरशेषै-
रानन्दकृत् स्थानमुपैति विष्णोः ॥
तपोधनः सोऽप्यभिधाय चैत-
दनङ्गदानव्रतमङ्गनानाम्।
स्वस्थानमेष्यत्यनु ताः समस्त-
मित्थं करिष्यन्ति च वेदयोने ॥”
इति मत्स्यपुराणेऽनङ्गदानव्रतम्। ७० । ३० --
६४
स्त्रीरोगनाशकाद्यौषधं यथा, --
ह्वरिरुवाच ।
“एकं पुनर्नवामूलं अपामार्गस्य वा शिव ।
सरसं योनिविक्षिप्तं वराङ्गस्य व्यथां हरेत् ॥
प्रसूतिवेदनाञ्चै व तरुणीनां व्यथां हरेत् ॥
भूमिकुष्माण्डमूलं वै शालितण्डुलवारिणा ।

पीतं सशर्करं स्त्रीणां धारयेत्
गर्भपातनम् ।
रक्तस्रावस्य नाशः स्यात्
शीतोदकनिषेवणात् ॥
पीतन्तु काञ्जिकं रुद्र क्वथितं
शरपुङ्खया ।
हिङ्गु सैन्धवसंयुक्तं शीघ्रं स्त्रीणां
प्रसूतिकृत् ॥
मातुलुङ्गस्य वै मूलं कटिबद्धं
प्रसूतिकृत् ।
अपामार्गस्य वै मूलं योनिस्थञ्च
प्रसूतिकृत् ॥
अपामार्गस्य वै मूले गर्भवत्यास्तु
नामतः ।
उत्पाट्यमाने सकले पुत्त्रः
स्यादन्यथा सुता ॥
अपामार्गस्य वै मूले नारीणां शिरसि
स्थिते ।
गर्भशूलं विनश्येत नात्रं कार्य्या
विचारणा ॥
कर्पूरमदनफलं मधुकैः पूरितः शिव ।
योनिः शुभः स्याद्वृद्धाया युवत्याः किं
पुन-
र्हर ॥
माषस्य विदलान्येव वितुषाणि
महेश्वर ।
घृतभावितशुष्काणि पयसा
साधितानि वै ॥
समध्वाज्यपयोभिश्च भक्षयित्वा च
कामयेत् ।
स्त्रीणां शतं महादेव तत्क्षणान्नात्र
संशयः ॥
रसश्चै रण्डतैलेन गन्धकेन शुभो
भवेत् ।
त्रिफलोदकसंघृष्टो बलकृद्भक्षणाद्भवेत्
॥
दुग्धं वितुषमाषैश्च शिम्बीवीजैश्च
साधितम् ।
अपामार्गस्य तैलेन पीतं
स्त्रीशतकामकृत् ॥”
इति गारुडे १९६ अध्यायः ॥

| | | |
|---|---|---|
| | | (स्त्रीसम्भूतेः कारणं यथा, --<br>“स्त्रीरेतसोऽधिकत्वेन<br>हीनशुक्रेन्द्रियादपि ।<br>रजसोऽप्यधिकत्वेन स्त्रीसम्भूतिः<br>प्रजायते ॥<br>सप्तधातुबलेनापि प्रकृत्या विकृतेः<br>समे ।<br>ऋतुव्याप्तरजःस्त्रीणांया या भवति<br>भावना ॥<br>सात्त्विकी राजसी वापि तामसी वापि<br>सत्तम ।<br>तादृशं जनयेद्बालं गुणैर्वा तादृशैरपि<br>॥”<br>इति हारीते शारौरस्थाने<br>प्रथमेऽध्याये ॥<br>द्व्यक्षरच्छन्दोविशेषः । यथा,<br>छन्दोमञ्जर्य्याम् ।<br>“गौ स्त्री । गोपस्त्रीभिः कृष्णो रेमे ॥”) |

**स्त्रीगवी**, स्त्री, (स्त्री चासौ गौश्चेति । समासे
षच् । स्त्रीयां ङीप् ।) धेनुः । गाइ इति
भाषा । तत्पर्य्यायः । तुम्बा २ निलिम्पा ३
रोहिणी ४ । इति त्रिकाण्डशेषः ॥ (यथा,
काशिकायाम् । ३ । ३ । ७१ ।
"स्त्रीगवीषु पुङ्गवानां यर्भाधानाय
प्रथममुपसरणमुच्यते ॥")

**स्त्रीगुरुः**, पुं, (स्त्री चासौ गुरुश्चेति ।) दीक्षा-
कर्त्री । मन्त्रमात्रोपदेष्ट्री । तल्लक्षणं यथा, --
"साध्वी चैव सदाचारा गुरुभक्ता जितेन्द्रिया ।
सर्व्वमन्त्रार्थतत्त्वज्ञा सुशीला पूजने रता ॥
सर्व्वलक्षणसम्पदा रूपिका पद्मलोचना ।
रत्नालङ्कारसंयुक्ता स्वर्णाभरणभूषिता ॥
शान्ता कुलोना कुलजा चन्द्रास्या सर्व्व-
वृद्धिगा ।
अनन्तगुणसम्पन्ना रुद्रत्वदायिनी प्रिया ॥
युरुरूपा शक्तिदात्री शिवज्ञानविरूपिणी ।
गुरुयोग्या भवेत् सा हि विधवा परिवर्ज्जिता ॥ *
स्त्रियो दीक्षा शुभा प्रोक्ता मातुश्चाष्टगुणा
स्मृता ।
पुत्त्रिणी विधवा ग्राह्या केवलानन्दकारिणी ॥
सिद्धमन्तं यदि तदा गृह्णीयाद्विधवामुखे ।

**स्त्रीजितः**, पुं, (स्त्रिया जितः ।) स्त्रीवशीभूतः ।
यथा, ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । ४२ । १५ ।
स्त्रीजितस्पर्शमात्रेण सर्व्वं पुण्य प्रणश्यति ।
न भूमौ पातकी पापात् पापिनां स्त्रीजितात्
परः ॥"

**स्त्रीता**, स्त्री, स्त्रीत्वम् । स्त्रिया भावः इत्यर्थे तल्-
प्रत्ययटाप्प्रत्ययाभ्यां निष्पन्नम् ॥

**स्त्रीधनं**, क्ली, (स्त्रिया धनम् ।) स्त्रीस्वत्त्वास्पदी-
भूतधनम् । तत् षड्विधम् । यथा, --
"अध्यग्न्यध्यावाहनिकं भर्त्तृदायं तथैव च ।
भ्रातृदत्तं पितृभ्याञ्च षड्विधं स्त्रीधनं स्मृतम् ॥"
इति दायभागधृतनारदवचनम् ॥ * ॥
अथ स्त्रीधनम् । तत्र कात्यायनः ।
"प्राप्तं शिल्पैस्तु यद्वित्तं प्रीत्या चैव यदन्यतः ।
भर्त्तुः स्वाम्यं भवेत्तत्र शेषन्तु स्त्रीधनं स्मृतम् ॥"
अन्यतः पितृमातृभर्त्तृकुलव्यतिरिक्ताद्यल्लब्धं
शिल्पेन वा यदर्ज्जितं तत्र भर्त्तुः स्वातन्त्र्यं तेन
स्त्रिया अपि धनं न स्त्रीधनं अस्वातन्त्र्यात्
एतद्द्वयातिरिक्तधने स्वत्वं स्त्रिया एव दानाद्य-
धिकारात् । मनुविष्णू ।
"पत्यौ जीवति यः कश्चिदलङ्कारो धृतो भवेत्
न तं भजेरन् दायादा भजमानाः पतन्ति ते ॥"
पत्युरदत्तेऽपि तदनुज्ञया परिहितोऽलङ्कार-
स्तावता एव भार्य्यायाः स्वीयो भवतीति मेधा-
तिथिः ॥ कात्यायनः ।
"ऊढया कन्यया वापि पत्युः पितृगृहेऽथवा ।
भर्त्तुः सकाशात् पित्रोर्व्वा लब्धं सौदायिकं
स्मृतम् ॥

अत्र द्वन्द्वनिर्द्देशात् पुत्त्रकन्ययोस्तुल्याधिकारः ।
अन्यतराभावे अन्यतरस्य तद्धनम् । पतयो-
रभावे ऊढाया दुहितुः पुत्त्रवत्याः सम्भावित-
पुत्त्रायाश्च तुल्याधिकारः । स्वपुत्त्रद्वारेण
पार्व्वणे ।
"सपिण्डीकरणादूर्ध्वं यत् पितृभ्यः प्रदीयते ।
सर्व्वेष्वं शहरा माता इति धर्म्मेषु निश्चयः ॥"
इति शातातपोक्ततद्भोम्यपतिपिण्डदानसम्भ
वात् । तथा च नारदः ।
"पुत्त्राभावे तु दुहिता तुल्यसन्तानदर्शनात् ॥"
अतएव एतादृशदुहित्रभावे पौत्त्राधिकारः ।
तदभावे दौहित्राधिकारः ।
"दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति पौत्त्रवत् ॥"
इति मनुवचने दौहित्रे पौत्त्रधर्म्मातिदेशात् ।
पुत्त्रेण परिणीतदुतितुर्व्वाधाद्बाधकपुत्त्रेणवाध्य-
दुहितृपुत्त्रवाधस्य न्याय्यत्वात् । एवं तदभावे
प्रपौत्त्रः तद्भोग्यपिण्डदातृत्वात् । तदभावे बन्ध्या-
विधवयोर्म्मातृधनाधिकारःतयोरपि तत्प्रजा-
त्वात् । तदभावे तु भर्त्ता । तच्च न पितृमातृ-
दत्तधनविषयं तत्र भ्रातुरधिकारात् । तथा च
वृद्धकात्यायनः ।
"पितृभ्याञ्चैव यद्दत्तं दुहितुः स्थावरं धनम् ।
अप्रजायामतीतातां भ्रातृगामि तु सर्व्वदा ॥"
मातुः परिणयनकाललब्धन्तुपुत्त्रसत्त्वेऽपि क्रमे-
णानूढोढदुतित्रोरेवाधिकारः । मातुः पारि-
णाय्यं स्त्रियो भजेरन्निति वशिष्ठोक्तेः । स्त्रीधनं
दुहितॄणामप्रत्तानामप्रतिष्ठितानाञ्चेतिगोतम-
वचनेन प्रथममप्रत्तानामवाग्दत्तानांतदभावे
त्वप्रतिष्ठितानां वाग्दत्तानां ईषदर्थे नञ् तद-
भावे चकारसमुच्चितानामूढानांस्त्रीधनं दुहि-
तॄणामिति सामान्यतः प्रागुक्तत्वात् अप्रत्ता-
नामित्यादेस्तु क्रमार्थत्वेनोपसंहारार्थत्वात् ।
व्यक्तमाह मनुः ।
"मातुश्च यौतुकं यत् स्यात् कुमारीभाग एव सः ॥"
यौतुकपदं यु मिश्रणे इत्यस्मात् सिद्धं मिश्रता च
स्त्रीपुंसयोर्व्विवाहाद्भवति । यदेतत् हृदयन्तव

केवलं सुफलं तत्र मातुरष्टगुणं
स्मृतम् ॥
स्वयं वा स्वप्नविलये ददाति यदि
मन्मनुम् ।
तत्राष्टगुणमाप्नोति यदि सा
पुत्रिणी सती ॥
यदि माता स्वीयमन्त्रं ददाति
तनुजाय च ।
तदाष्टसिद्धिमाप्नोति भक्तिमार्गे न
सशयः ॥
तदेव दुर्ल्लभं देव यदि मात्रा प्रदीयते
॥
आदौ भक्तिं ततो मुक्तिं सम्प्राप्य
कामरूप-
धृक् ।
सहस्रकोटिविद्यार्थं जानाति नात्र
संशयः ॥
स्वप्ने वा यदि वा माता ददाति च
समन्त्रकम् ॥
पुनर्द्दीक्षां सोऽपि कृत्वा
दानवत्यमवाप्नुयात् ॥
यदि भाग्यवशेनैव
जननीच्छानुवर्त्तिनी ।
तदा सिद्धिमवाप्नोति तत्र मन्त्रं
विचारयेत् ॥
स्वीयमन्त्रोपदेशेन न
कुर्य्याद्गुरुचिन्तनम् ॥"
इति स्त्रीगुरुकथनम् ॥
इति रुद्रयामले उत्तरखण्डे २
पटलः पूर्व्वखण्डे
१५ पटलश्च ॥ * ॥ तद्ध्यानं
गुप्तसाधनतन्त्रे
२ पटले तत्पूजनं बृहन्नीलतन्त्रे २
पटले तत्-
स्तोत्र कवत्तञ्च मातृकाभेदतन्त्रे ७
पटले द्रष्ट-
व्यम् । तद्गीता च
कङ्कालमालिनीतन्त्रे २
पटत वेदितव्या ॥

**स्त्रीघोषः**, पुं, (स्त्रीणां घोषो यत्र ।) प्रत्यूषः ।
इति केचित् ॥

सौदायिकं धनं प्राप्य स्त्रीणां
स्वातन्त्र्यमिष्यते
यस्मात्तदानृशंस्यार्थं तैर्द्दत्तं तत् प्रजीवनम् ॥
सौदायिके सदा स्त्रीणां स्वातन्त्र्यं
परिकीर्त्तितम्
विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥"
सुदायेभ्यः पितृमातृभर्त्तृकुलसम्बन्धिभ्यो
लब्धं
सौदायिकम् । आनृशंस्यमनैष्ठुर्य्यम् । नारदः
।
"भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन् मृतेऽपि
तत्
सा यथाकाममश्नीयाद्दद्याद्वास्थावरादृते ॥"
भर्त्तृदत्तविशेषणात् भर्त्तृदत्तस्थावरादृतेऽन्य-
स्थावरं देयमेव । अन्यथा यथेष्टं स्थावरेष्वपि
इति कात्यायनोक्तं विरुध्यते ।
कल्पतरुरत्ना-
करयोः कात्यायनः ।
अपकारक्रियायुक्ता निर्लज्जा चार्थनाशिनी ।
व्यभिचाररता या च स्त्रीधनं न च सार्हति ॥"
याज्ञवल्क्यः ।
"दुर्भिक्षे धर्म्मकार्य्ये वा व्याधौ संप्रतिरोधके ।
गृहीतं स्त्रीधनं भर्त्ता नाकामो दातुमर्हति ॥"
संप्रतिरोधके भोजनाद्यवरोधकारिण्युत्तमर्णा-
दिके । अन्यत्र तु कात्यायनः ।
"न भर्त्ता नैव च सुतो न पिता भ्रातरो न च ।
आदाने वा विसर्गे वा स्त्रोधने प्रभविष्णवः ॥"
*
अथ स्तीधनाधिकारिणः । देवलः ।
"सामान्यं पुत्त्रकन्यानां मृतायां स्त्रीधनं विदुः
॥
अप्रजायां हरद्भर्त्ता माता भ्राता पितापिवा" ।

तदस्तु हृदयं मम यदिदं हृदयं मम तदस्तु
हृदयं तव इति मन्त्रलिङ्गात् । यौतुकं तदिति
वाचस्पतिमिश्ररायमुकुटधृतात् यौतुकं यौतक
मपि साधु । परिणयनकालः परिणयनपूर्व्वा-
परीभूतकालः स च
वृद्ध्यारम्भपत्यभिवादनान्तो-
विवाहतत्त्वे विवृतः । यत्तु मनुवचनम् ।
"स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं कथञ्चन ।
ब्राह्मणी तद्धरेत् कन्या तदपत्यस्य वा भवेत् ॥"
इति तत् पित्रा दत्तमिति विशेषणाद्विवाह-
समयादन्यदपि पितृदत्तं कन्यायां एवेत्येत-
दर्थम् । ब्राह्मणीपदन्तु कन्यामात्रपरम् । यद्वा
क्षत्त्रियादिस्त्रीणामनपत्यानांपितृदत्तं धनं
सपत्नीदुहिता ब्राह्मणीकन्या हरेत् न पुनरप्र-
जस्त्रीधनं भर्त्तुरिति वचनावकाशः । इति वच-
नार्थः । तभावे पुत्त्राधिकारः ।

**स्त्रीचित्तहारी**, [न्] पुं, (स्त्रीणां चित्तं हरतीति । हृ + णिनिः ।) शोभाञ्जनः । इति त्रिकाण्डशेषा ॥ नारीमनोहारिणि, त्रि ॥

**स्त्रीचिह्नं**, क्ली, (स्त्रियश्चिह्नम् ।) योनिः । इति जटाधरः ॥ नारीलक्षणञ्च ॥

**स्त्रीचौरः**, पुं, (स्त्रियाश्चौरः ।) कामुकः । तत्पर्य्यायः । रतहिण्डकः २ । इति त्रिकाण्डशेषः ॥ नारीहर्त्तरि, त्रि ॥

"दुहितॄणामभावे तु रिक्थं पुत्त्रेषु
तद्भवेत् ॥"
इति मनुवचनात् ॥
एवं पुत्त्राधिकारात् प्राक्
दुहित्रधिकारविधा-
यकवचनान्तराण्येतद्विषयकाणि ।
पुत्त्राद्यभावे
तु ब्राह्म्यादिपञ्चकविवाहकालीनं
स्त्रीधनं
भर्त्तुः । आसुरादित्रयविवाहकालीनन्तु
मातुः
तदभावे पितुः । यथा मनुः ।
"ब्राह्म्यदैवार्षगान्धर्व्वप्राजापत्येषु
यद्धनम् ।
अतीतायामप्रजायां भर्त्तुरेव तदिष्यते ॥
यत्तस्याः स्यात् धनं दत्तं
विवाहेष्वासुरादिषु ।
अतीतायामप्रजायां
मातापित्रोस्तदिष्यते ॥"
कन्याधनाधिकारे क्रममाह बौधायनः ।
"रिक्थं मृतायाः कन्याया गृह्णीयुः
सोदराः
स्वयम् ।
तदभावे भवेन्मातुस्तदभावे भवेत् पितुः
॥
अत्रक्रमदर्शनात् पूर्व्ववचने
मातापित्रोरित्यत्र
पाठक्रमेणाधिकारो न तु द्वन्द्वनिर्द्देशात्
समु-
च्चितेन । बृहस्पतिः ।
"मातृस्वसा मातुलानी पितृव्यस्त्री
पितृस्वसा
श्वश्रूः पूर्व्वजपत्नी च मातृतुल्या
प्रकीर्त्तिताः ॥
यदासामौरसो न स्यात् सुतो दौहित्र
एव वा ।
तत्सुतो वा धनं तासां स्वस्रीयाद्याः
समा-
प्नुयुः ॥"
पिण्डदोऽंशहर इति याज्ञवल्क्यीयात् । मातृ-
तुल्याः प्रकीर्त्तिता इत्यनेन स्वस्रीयादीनां पुत्त्र-
त्वज्ञापनेन एकप्रयोजनकत्वात् ।
"मातुलो भागिनेयस्य स्वस्रीयो मातुलस्य च ।
श्वशुरस्य गुरोश्चैव सख्युर्मातामहस्य च ॥
एतेषाञ्चैव भार्य्याभ्यः स्वसुर्मातुः पितुस्तथा ।
पिण्डदानन्तु कर्त्तव्यमिति वेदविदां स्थितिः ।
इति शातातपवनात् ।
पिण्डदानविशेषेणैव षण्णामेषामधिकारक्रमः
प्रतिपत्तव्यः । पाठक्रमादर्थक्रमस्य बलवत्त्वात् ।
अन्यथा सर्व्वशेषे देवराधिकारे महाजनविरोधः
स्यात् । तत्र प्रथमं देवरः तत्पिण्डतद्भर्त्तृपिण्ड-
तद्भर्त्तृदेयपुरुष-त्रय-पिण्डदत्वात् सपिण्डत्वाच्च-
भ्रातृस्त्रीधने अधिकारी । तदभावे भ्रातृश्वशुर-
देवरयोः सुतौ तत्पिण्डतद्भर्त्तृपिण्डतद्भर्त्तृदेय-
पुरुषद्वयपिण्डदत्वात् सपिण्डत्वाच्च । तयोरभावे
त्वसपिण्डोऽपि भगिनीपुत्त्रः तत्पिण्डतत्पुत्त्रदेय-
तत्पित्रादित्रयपिण्डदत्वात् । तदभावे भर्त्तृभा-
गिनेयः पुत्त्राद्भर्त्तुर्दुर्बलत्वेन तत्स्थानपातिनो-
रपि भगिनीपुत्त्रभर्त्तृभागिनेयोस्तथैव बला-
बलस्य न्याय्यत्वेन तद्भर्त्तृदेयपुरुषत्रयपिण्डद-
त्वात् तत्पिण्डदत्वात् तद्भर्त्तृपिण्डदत्वाच्च मातु-
लानीधने अधिकारी । तदभावे भ्रातृपुत्त्रः
तत्पिण्डतत्पुत्त्रदेयतत्पित्रादिपिण्डद्वयदत्वात्
पितृस्वसुर्धने अधिकारी । तदभावे श्वशुरयोः
पिण्डदानात् जामाता श्वश्रूधने अधिकारीति
क्रमः । स्वस्रीयाद्या इति अधिकारिमात्रपरं न
पाथिकक्रमपरं एषां षण्णां प्रातिस्विकोक्ताना-
मभावे सपिण्डानान्तर्य्येण श्वशुरादिवदधिकारी
न च सपिण्डाभावे मातृस्वसेति वचनं वाच्यं
अस्मिन्नधिकारिगणने देवरतत्सुतभ्रातृश्वशुर-
सुतानांअधिकारज्ञापनादासन्नतरश्वशुरभ्रातृश्व
शुरादेः परित्यागादिति । इति दायतत्त्वम् ॥

**स्त्रीधर्म्मः**, पुं, (स्त्रिया धर्म्मः ।) ऋतुः । तत्प-
र्य्यायः । पुष्पम् २ आर्त्तवम् ३ रजः ४ । इति
हेमचन्द्रः ॥ (मैथुनम् । यथा हरिवंशे । ८४ ।
६१ ।
"शृण्वती कामजननीर्व्वाचः श्रोत्रसुखावहाः ।
बर्हिणाञ्चैव विरुतं खगानाञ्च विकूजितम् ॥

**स्त्रीपण्योपजीवी**, [न्] पुं, (स्त्रीपण्येन उपजीव-
तीति । उप + जीव + णिनिः ।)
सम्भोगार्थ-
मन्यस्मै स्त्रियं दत्त्वा तद्धनोपजीवी ।
इति
महाभारते दानधर्म्मः ॥

**स्त्रीपुंधर्म्मः**, पुं, (स्त्री च पुमांश्च स्त्रीपुंसौ । तयो-
र्धर्म्मः ।) स्त्रीपुंसयोर्व्यवहारः । स च
अष्टा-
दशविवादपदान्तर्गतविवादविशेषः ।
यथा, --
"स्त्रीपुंधर्म्मो विभागश्च द्यूतमाह्वयमेव
च ।
पदान्यष्टादशैतानि व्यवहारस्थिताविह
॥"
इति मानवे ८ अध्यायः ॥
तद्विवरणं यथा, --
"पुरुषस्य स्त्रियाश्चैव धर्म्मे वर्त्मनि
तिष्ठतोः ।
संयोगे विप्रयोगे च धर्म्मान् वक्ष्यामि
शाश्वतान्
अस्वतन्त्राः स्त्रियः कार्य्याः पुरुषैः
स्वैर्दिवानिशम् ॥
विषयेषु च सज्जन्त्यः संस्थाप्या
आत्मनो वशे ॥
पिता रक्षति कौमारे भर्त्ता रक्षति यौवने
।
रक्षन्ति स्थविरे पुत्त्रा न स्त्री
स्वातन्त्र्यमर्हति ॥
कालेऽदाता पिता वाच्यो
वाच्यश्चानुपयन् पतिः
मृते भर्त्तरि पुत्त्रस्तु वाच्यो
मातुररक्षिता ॥
सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या
विशेषतः
द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः
॥

औरसपदं कन्यापुत्त्रोभयपरम्। सुत इति
सपत्नीपुत्त्रपरम्।
“सर्व्वासामेकपत्नीनामेका चेत् पुत्त्रिणी भवेत्
सर्व्वास्तास्तेन पुत्त्रेण प्राह पुत्त्रवतीर्म्मनुः ॥”
इति मनुस्मृतेः ।
एकपत्नीनामिति एकः पतिर्यासां ताः । न तु
सुतपदमौरसविशेषणं वैयर्थ्यात् । सपत्नीपुत्त्र-
सद्भावे स्वस्त्रीयाद्यधिकारापत्तेश्च। तत्सुत इति
पौत्त्रः सपत्नीपौत्त्रपरं न तु दौहित्रपुत्त्रपरं तस्य
स्वभोग्यभर्त्तृपिण्डदानानधिकारात्। अत्र प्रागु-
क्तानुसारात् दौहित्रपर्य्यन्तानन्तरमेव सपत्नी-
पुत्त्रतत्पुत्त्रयोरधिकारः। न तु प्रागुक्तभर्त्रादि-
पितृपर्य्यन्ताभावेऽपीति वाच्यं भर्त्रादीनां धनि-
भोग्यपार्व्वणपिण्डदानानधिकारात्। तस्मादे-
तेषां सपत्नीपौत्त्रान्तानां तत्सुतो वेति
बाशब्दसमुच्चितानाम्।
“मामान्यं पुत्त्रकन्यानां मृतायां स्त्रीधनं विदुः ।
अप्रजायां हरत् भर्त्ता माता भ्राता पितापि-
वा ॥”
इति देवलोक्तानां भर्त्रादिपितृपर्य्यन्तानाञ्चा-
भाव एव सत्स्वपि श्वशुरभ्रातृश्वशुरादिषु
स्वस्रायाद्या इत्यनेन भगिनीसुतभर्त्तृभागिनेय-
भर्त्तृ ज्येष्ठकनिष्ठोभयरूपभ्रातृसुत-स्वभ्रातृपुत्त्र-

अभीक्ष्णमभिशृण्वन्ती स्त्रीधर्म्मं सा व्यरोचयत् ॥”
स्त्रीणां शुभकर्म्मादिः । यथा, मनुः । १ । ११४ ।
“स्त्रीधर्म्मयोगं तापस्यं मोक्षं सन्न्यासमेव च ॥”)

**स्त्रीधर्म्मिणी**, स्त्री, (स्त्रीधर्म्मोऽस्या अस्तीति ।
इनिः । ङीप् ।) ऋतुमती । इत्यमरः । २ ।
६ । २० ॥ (यथा, महाभारते । २ । ७७ । १४ ।
“स्त्रीधर्म्मिणी वरारोहा शोणितेन परिप्लुता ।
एकवस्त्राथ पाञ्चाली पाण्डवानभ्यवैक्षत ॥”)
अस्य विवरणं रजस्वलाशब्दे द्रष्टव्यम् ॥

**स्त्रीधवः**, पुं, (स्त्रीणां धवः प्रियः ।) पुरुषः । इति
जटाधरः ॥

**स्त्रीपरः**, पुं, (स्त्रीषु परः निरतः ।) षिङ्गः ।
कामुकः । इति कचित् ॥

इमं हि सर्व्ववर्णानां पश्यन्तो धर्म्ममुत्तमम् ।
यतन्ते रक्षितुं भार्य्यां भर्त्तारो दुर्ब्बला अपि ॥
स्वां प्रसूतिं चरित्रञ्च कुलमात्मानमेव च ।
स्वञ्च धर्म्मं प्रयत्नेन जायां रक्षन् हि रक्षति ॥
पतिर्भार्य्यां संप्रविश्य गर्भो भूत्वेह जायते ।
जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ॥
यादृशं भजते हि स्त्री सुतं सूते तथाविधम् ।
तस्मात् प्रजाविशुद्ध्यर्थं स्त्रियं रक्षेत् प्रयत्नतः ॥
न कश्चित् योषितः शक्तः प्रसह्य परिरक्षितुम् ।
एतैरुपाययोगैस्तु शक्यास्ताः परिरक्षितुम् ॥
अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत् ।
शौचे धर्म्मेऽन्नपक्त्याञ्च पारिणाह्यस्य वेक्षणे ॥
अरक्षिता गृहे रुद्धाः पुरुषैराप्तकारिभिः ।
आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिताः ॥
पानं दुर्ज्जनसंसर्गः पत्या च विरहोऽटनम् ।
स्वप्नोऽन्यगेहवासश्च नारीसंदूषणानि षट् ॥
नैता रूपं परीक्षन्ते नासां वयसि संस्थितिः ।
सुरूपं वा विरूपं वा पुमानित्येव भुञ्जते ॥
पौंश्चल्याच्चलचित्ताच्च नैस्नेह्याच्च स्वभावतः ।
रक्षिता यत्नतोऽपीह भर्त्तृष्वे ता विकुर्व्वते ॥

| | | |
|---|---|---|
| जामातृ-देवराणां मातृस्वस्रादिधने अधिकारः ।<br>अनन्यगतेर्व्वचनात् । अत्र ।<br>“त्रयाणामुदकं कार्य्यं त्रिपु पिण्डः प्रवर्त्तते ।<br>चतुर्थः सम्प्रदातैषां पञ्चमो नोपपद्यते ॥”<br>इति दायभागप्रकणीयमनुस्मृतेः । | | एवं स्वभावं ज्ञात्वासां प्रजापतिनिसर्गजम् ।<br>परमं यत्नमातिष्ठेत् पुरुषो रक्षणं प्रति ॥<br>शय्यासनामलङ्कारं कामं क्रोधमनार्ज्जवम् ।<br>द्रोहभावं कुचर्य्याञ्च स्त्रीभ्यो मनुरकल्पयत् ॥<br>नास्ति स्त्रीणां क्रिया मन्त्रैरिति धर्म्मो व्यवस्थितः<br>निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः<br>तथा च श्रुतयो बह्व्यो निगीता निगमेष्वपि ।<br>स्वालक्षण्यपरीक्षार्थं तासां शृणुत निष्कृतीः ॥<br>यन्मे माता प्रलुलुभे विचरन्त्यपतिव्रता ।<br>तन्मे रेतः पिता वृक्तामित्यस्यैतन्निदर्शनम् ॥<br>ध्यायत्यनिष्टं यत्किञ्चित् पाणिग्राहस्य चेतसा |

तस्यैव व्यभिचारस्य निह्नवः सम्यगुच्यते
॥
यादृग्गुणेन भर्त्रा स्त्री संयुज्येत यथाविधि ।
तादृग्गुणा सा भवति समुद्रेणेव निम्नगा ॥
अक्षमाला वशिष्ठेन संयुक्ताधमयोनिजा ।
शारङ्गी मन्दपालेन जगामाभ्यर्हणीयताम् ॥
एताश्चान्याश्च लोकेऽस्मिन्नपकृष्टप्रसूतयः
।
उत्कर्षं योषितः प्राप्ताः स्वैः स्वैर्भर्त्तृगुणैः
शुभैः ॥
एषोदिता लोकयात्रा नित्यं स्त्रीपुंसयोः
शुभाः
प्रेत्येह च मुखोदर्कान् प्रजाधर्म्मान्निबोधत
॥ * ॥
प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः ।
स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति
कश्चन ॥
उत्पादनमपत्यस्य जातस्य परिपालनम् ।
प्रत्यहं लोकयात्रायाः प्रत्यक्षं
स्त्रीनिबन्धनम् ॥
अपत्यं धर्म्मकार्य्याणि शुश्रूषा रतिरुत्तमा ।
दाराधीनस्तथा स्वर्गः पितृणामात्मनश्च ह
॥
पतिं या नाभिचरति मनोवाग्देहसंयताः ।
सा भर्त्तृलोकानाप्नोति सद्भिः साध्वीति
चोच्यते ॥
व्यभिचारात्तु भर्त्तुः स्त्री लोके प्राप्नोति
निन्द्य-
ताम् ।
शृगालयोनिञ्चाप्नोति पापरोगैश्च पीड्यते
॥
पुत्त्रं प्रत्युदितं सद्भिः पूर्व्वजैश्च महर्षिभिः
।
विश्वजन्यमिमं पुण्यमुपन्यासं निबोधत ॥
भर्त्तुः पुत्त्रं विजानन्ति श्रुतिद्वैधन्तु भर्त्तरि
।
आहुरुत्पादकं केचिदपरे क्षेत्रिणं विदुः ॥
क्षेत्रभूता स्मृता नारी बीजभूतः स्मृतः
पुमान्

सकृदंशो निपतति सकृत् कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सतां सकृत्
॥
यथा गोऽश्वोष्ट्रदासीषु महिष्यजाविकासु च
।
नोत्पादकः प्रजाभागी तथैवान्याङ्गनास्वपि
॥
ये क्षेत्रिणो बीजवन्तः परक्षेत्रप्रवापिणः ।
ते वै शस्यस्य जातस्य न लभन्ते फलं
क्वचित् ॥
यदन्यगोषु वृषभो वत्सानां जनयेच्छतम् ।
गोमिनामेव ते वत्सा मोघं स्कन्दितमार्षभम्
॥
तथैवाक्षेत्रिणो बीजं परक्षेत्रप्रवापिणः ।
कुर्व्वन्ति क्षेत्रिणामर्थं न बीजी लभते फलम्
॥
फलन्त्वनभिसन्धाय क्षेत्रिणां बीजिनां तथा
।
प्रत्यक्षं क्षेत्रिणामर्थो बीजाद्योनिर्गरीयसी ॥
क्रियाभ्युपगमात्त्वेतद्बीजार्थं यत् प्रदीयते ।
तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च ॥
ओघवाताहृतं बीजं यस्य क्षेत्रे प्ररोहति ।
क्षेत्रिकस्यैव तद्बीजं न वप्ता लभते फलम् ॥
एष धर्म्मो गवाश्वस्य दास्युष्ट्राजाविकस्य
च ।
विहङ्गमहिषीणाञ्च विज्ञेयः प्रसवं प्रति ॥
एतद्वः सारफल्गुत्वं बीजयोन्योः
प्रकीर्त्तितम् ।
अतः परं प्रवक्ष्यामि योषितां धर्म्ममापदि ॥
* ॥
भ्रातुर्ज्येष्ठस्य भार्य्या या गुरुपत्न्यनुजस्य
सा ।
यवीयसस्तु या भार्य्या स्नुषा ज्येष्ठस्य सा
स्मृता
ज्येष्ठो यवीयसो भार्य्यां यवीयान्
वाग्रजस्त्रियम्
पतितौ भवतो गत्वा नियुक्तावप्यनापदि ॥
देवराद्वा सपिण्डाद्वा स्त्रिया
सम्यङ्नियुक्तया ।

व्याधितां विप्रदुष्टां वा छद्मना
चोपपादिताम् ॥
यस्तु दोषवतीं कन्यामनाख्यायोपपादयेत्
।
तस्य तद्वितथं कुर्य्यात्
कन्यादातुर्दुरात्मनः ॥
विधाय वृत्तिं भार्य्यायाः प्रवसेत्
कार्य्यवान्नरः ।
अवृत्तिकर्षिता हि स्त्री प्रदुष्येत्
स्थितिमत्यपि ॥
विधाय प्रोषिते वृत्तिं जीवेन्नियममास्थिता
।
प्रोषिते त्वविधायैव जीवेच्छिल्पैरगर्हितैः ॥
प्रोषितो धर्म्मकार्य्यार्थं प्रतीक्ष्योऽष्टौ नरः
समाः ॥
विद्यार्थं षट् यशोऽर्थं वा कामार्थं त्रींस्तु
वत्सरान् ॥
संवत्सरं प्रतीक्षेत द्विषन्तीं योषितं पतिः ।
ऊर्द्ध्वं संवत्सरात्त्वेनां दायं हृत्वा न
संवसेत् ॥
अतिक्रामेत् प्रमत्तं या मत्तं रोगार्त्तमेव वा ।
सा त्रीन् मासान् परित्याज्याविभूषणपरि-
च्छदा ॥
उन्मत्तं पतितं क्लीवमबीजं पापरोगिणम् ॥
न त्यागोऽस्ति द्विषन्त्याश्च न च
दायापवर्त्तनम् ॥
मद्यपासाधुवृत्ता च प्रतिकूला च या भवेत् ।
व्याधिता साधिवेत्तव्या हिंसार्थघ्नी च
सर्व्वदा ॥
बन्ध्याष्टमेऽधिवेद्याब्दे दशमे तु मृतप्रजा ।
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥
या रोगिणीस्यात्तु हिता सम्पन्ना चैव
शीलतः ।
सानुज्ञाप्याधिवेत्तव्या नावमान्या च
कर्हिचित्
अधिविन्ना तु या नारी निर्गच्छेद्रुषिता
गृहात्
सा सद्यः सन्निरोद्धव्या त्याज्या वा
कुलसन्निधौ ॥

क्षेत्रबीजसमायोगात् सम्भवः सर्व्वदेहिनाम्
॥
विशिष्टं कुत्रचिद्बीजं स्त्रीयोनिस्त्वेव
कुत्रचित् ।
उभयन्तु समं यत्र सा प्रसूतिः प्रशस्यते ।
बीजस्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते
।
सर्व्वभूतप्रसूतिर्हि बीजलक्षणलक्षिता ॥
यादृशं तूप्यते बीजं क्षेत्रे कालोपपादिते ।
तादृग्रोहति तत्तस्मिन् बीजं
स्वैर्व्यञ्जितंगुणैः ॥
इयं भूमिर्हि भूतानां शाश्वती योनिरुच्यते ।
न च योनिगुणान् कांश्चिद्बीजं पुष्यति
पुष्टिषु ॥
भूमावप्येककेदारे कालोप्तानि कृषीबलैः ।
नानारूपाणि जायन्ते बीजानीह स्वभावतः
॥
ब्राहयः शालयो मुद्गास्तिला माषास्तथा
यवाः ।
यथाबीजं प्ररोहन्ति लशुनानीक्षवस्तथा ॥
अन्यदुप्तं जातमन्यदित्येतन्नोपपद्यते ।
उप्यते यद्धि यद्बीजं तत्तदेव प्ररोहति ॥
तत् प्राज्ञेन विनीतेन ज्ञानविज्ञानवेदिना ।
आयुष्कामेन वप्तव्यं न जातु परयोषिति ॥
अत्र गाथा वायुगीताः कीर्त्तयन्ति पुराविदः
।
यया बीजं न वप्तव्यं पुंसा परपरिग्रहे ॥
नश्यतोषुर्य्यथा विद्धः खे विद्धमनुविध्यतः ।
तथा नश्यति वै क्षिप्रं बीजं परपरिग्रहे ॥
पृथोरपोमां पृथिवीं भार्य्यां पूर्व्वविदो विदुः
।
स्थाणुच्छेदस्य केदारमाहुः शल्यवतो
मृगम् ॥
एतावनेन पुरुपो यज्जायात्मा प्रजेति ह ।
विप्राः प्राहस्तथा चैतद्यो भर्त्ता सा
स्मृताङ्गना
न निष्क्रयविमर्गाभ्यां भर्त्तृभार्य्या विमुच्यते
।
एवं धर्म्मं विजानीमः प्राक
प्रजापतिनिर्म्मितम् ॥

प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये
॥
विधवायां नियुक्तस्तु घृताक्तो वाग्यतो
निशि ।
एवमुत्पादयेत् पुत्त्रं न द्वितीयं कथञ्चन ॥
द्वितीयमेके प्रजनं मन्यन्ते स्त्रीषु तद्विदः ।
अनिवृत्तं नियोगार्थं पश्यन्तो धर्म्मतस्तयोः
॥
विधवायां नियोगार्थे निर्वृत्ते तु यथाविधि ।
गुरुवच्च स्नुषावच्च वर्त्तेयातां परस्परम् ॥
नियुक्तौ यौ विधिं हित्वा वर्त्तेयातान्तु
कामतः
तावुभौ पतितौ स्यातां स्नुषागगुरुतल्पगौ
॥
नान्यस्मिन् विधवा नारी नियोक्तव्या
द्विजा-
तिभिः ।
अन्यस्मिन् हि नियुञ्जाना धर्म्मंहन्युः
सनातनम्
नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्त्यते
क्वचित् ।
न विवाहविधावुक्तं विधवा वेदनं पुनः ॥
अयं द्विजैर्हि विद्वद्भिः पशुधर्म्मो विगर्हितः ।
मनुष्याणामपि प्रोक्तो वेणे राज्यं प्रशासति
स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा ।
वर्णानां सङ्करं चक्रे कामोपहतचेतनः ॥
ततः प्रभृति यो मोहात् प्रमीतपतिकां
स्त्रियम् ।
नियोजत्यपत्यर्थं तं विगर्हिन्ति साधवः ॥
यस्या म्रियेत कन्याया वाचा सत्ये कृते
पतिः ।
तामनेन विधानेन निजो विन्देत देवरः ॥
यथाविध्यभिगम्यैनां शुक्लवस्त्रां
शुचिव्रताम् ।
मिथो भजेदाप्रसवात् सकृत् सकृदृतावृतौ
॥
न दत्त्वा कस्यचित् कन्यां पुनर्दद्यात्
विचक्षणः
दत्त्वा पुनः प्रयच्छन् हि प्राप्नोति
पुरुषानृतम्

प्रतिषिद्धा पिबेद्या तु मद्यमभ्युदयेष्वपि ।
प्रेक्षासभाजं गच्छेद्वा सा दण्ड्या
कृष्णलानि
षट् ॥
यदि स्वाश्चापराश्चै व विन्देरन् योषितो
द्विजाः
तासां वर्णक्रमेणैव ज्यैष्ठं पूजा च वेश्म च ॥
भर्त्तुः शरीरशुश्रूषां धर्म्मकार्य्यञ्च नैत्यिकम्
।
स्वा चैव कुर्य्यात् सर्व्वेषां नान्यजातिः
कथञ्चन ॥
यस्तु तत् कारयेन्मोहात् स्वजात्या
स्थितया-
न्यया ।
यथा ब्राह्मणचाण्डालः पूर्व्वदृष्टस्तथैव सः
॥
उत्कृष्टायाभिरूपाय वराय सदृशाय च ।
अप्राप्तामपि तां तस्मै कन्यां
दद्याद्यथाविधि ॥
काममामरणात्तिष्ठे द्गृहे कन्यर्त्तुमत्यपि ।
न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥
त्रीणि वर्षाण्युदीक्षेत कुमार्य्यृतुमती सती ।
ऊर्द्ध्वन्तु कालादेतस्माद्विन्देत सदृशं
पतिम् ॥
अदीयमाना भर्त्तारमधिगच्छेद्यदि स्वयम् ।
नैनः किञ्चिदवाप्नोति न च यं
साधिगच्छति ॥
अलङ्कारं नाददीत पित्र्यं कन्या स्वयंवरा ।
मातृकं भ्रातृदत्तं वा स्तेना स्यात् यदि तं
हरेत् ॥
पित्रे न दद्याच्छुल्कन्तु कन्यामृतुमतीं हरन्
।
स हि स्वाम्यामतिक्रामेदृतूनां प्रतिरोधनात्
॥
त्रिंशद्वर्षो वहेत् कन्यां हृद्यां द्वादशवार्षिकीम्
।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्म्मे सीदति सत्वरः ॥
देवदत्तां पतिर्भार्य्यां विन्दते नेच्छयात्मनः
।
तां साध्वीं विभृयान्नित्यं देवानां
प्रियमाचरन् ॥

प्रजनार्थं स्त्रियः सृष्टाः सन्तानार्थञ्च मानवाः ।
तस्मात् साधारणो धर्म्मः श्रुतौ पत्न्या सहोदितः ॥
कन्यायां दत्तशुल्कायां म्रियेत यदि शुल्कदः ।
देवराय प्रदातव्या यदि कन्यानुमन्यते ॥
आददीत न शूद्रोऽपि शुल्कं दुहितरं ददत् ।
शुल्कं हि गृह्णन् कुरुते छन्नं दुहितृविक्रयम् ॥
एतत्तु न परे चक्रुर्न्नापरे जातु साधवः ।
यदन्यस्य प्रतिज्ञाय पुनरन्यस्य दीयते ॥
नानुशुश्रुम जात्वेतत् पूर्व्वेष्वपि हि जन्मसु ।
शुल्कसंज्ञं न मूल्येन छन्नं दुहितृविक्रयम् ॥
अन्योन्यस्याव्यभिचारो भवेदामरणान्तिकः ।
एष धर्म्मः समासेन ज्ञेयः स्त्रीपुंसयोः परः ॥
तथा नित्यं यतेयातां स्त्रीपुंसौ तु कृतक्रियौ ।
यथा नाभिचरेतां तौ वियुक्तावितरेतरम् ॥
एष स्त्रीपुंसयोरुक्तो धर्म्मो वो रतिसंहितः ।
आपद्यपत्यप्राप्तिश्च दायभागं निबोधत ॥"
इति मानवे ९ अध्यायः ॥

**स्त्रीपुंसलक्षणा**, स्त्री, स्त्रीपुंसयोर्लक्षणं चिह्नं स्तन-
श्मश्वादिरूपं यस्यां सा । इति भरतः ॥ तत्-
पर्य्यायः । पोटा २ । इत्यमरः ॥

**स्त्रीपुंसौ**, पुं, (स्त्री च पुमांश्च । "अचतुरविचतु-
रेति ।" ५ । ४ । ७७ । इति अच्प्रत्ययेन
साधुः ।) स्त्रीपुंसयोर्युग्मम् । तत्पर्य्यायः ।
मिथुनम् २ द्वन्द्वम् ३ । इत्यमरः । २ । ५ ।
३८ ।
द्विवचनान्तोऽयम् ॥ (यथा, मनुः । ९ । २५ ।
"एषोदिता लोकयात्रा नित्यं स्त्रीपुंसयोः शुभा ॥"

**स्त्रीपूर्व्वः**, पुं, (स्त्री पूर्व्वे प्रधानतया सर्व्वकार्य्येषु
अग्रगामिनीव यस्य ।) स्त्रीजितः । इति महा-
भारते दानधर्म्मः ॥

**स्त्रीप्रियः**, पुं, (स्त्रियाः प्रियः ।) आम्रवृक्षः ।
इति त्रिकाण्डशेषः ॥ नारीप्रियद्रव्ये, त्रि ॥

**स्त्रीमुखपः**, पुं, (स्त्रीमुखं पातीति । पा + कः ।)
यदा भवेदित्यत्र रजो हरेदिति च पाठः ।
"सदुग्धा लक्ष्मणा पीता न स्याद्वा पुत्त्रदा ह्यतौ
दुग्धस्याढ्वाढकं चाक्षमश्वगन्धा च पुत्त्रदा ।
बन्ध्या पुत्त्रं लभेत् पीत्वा घृतेन व्योषकेशरम् ॥
कुशकाशोरुवूकाणां मूलैर्गोक्षुरकस्य च ।
दुग्धञ्चैव सितायुक्तं गर्भिण्याः शूलनुत्परम् ॥
पाठालाङ्गलिसिंहास्यमयूरकुटजैः पृथक् ।
नाभिवस्तिभगालेपात् सुखं नारी प्रसूयते ॥
सूताया हृच्छिरोवस्तिशूलं वै मन्दसंज्ञितम् ।
यवक्षारं पिबेत्तत्र मस्तुनोष्णोदकेन वा ॥
कुशमूलीकृतः क्वाथः साज्यः सूतिरुजापहः ।
शालितण्डुलचूर्णन्तु सदुग्धं दुग्धकृद्भवेत् ॥
विदारिकुसुमरसं मूलं कार्पासजं तथा ।
धात्री स्तन्यविशुद्ध्यर्थं मुद्गयूषरसायनी ॥
कुष्ठा वचाभया ब्राह्मी मधुरी क्षौद्रसर्पिषी ।
वर्णायुःकान्तिजननं लेहं बाले प्रदापयेत् ॥
स्तन्याभावे पयश्छाग्यं गव्यं वा तद्गुणं भवेत्
मुस्तशुण्ठीविषा बाला कुटजा चातिसारनुत् ॥
व्योषं मधु मातुलुङ्गं हिक्काच्छर्द्दिनिवारणम् ।
कुष्ठेन्द्रयवसिद्धार्थनिशा दूर्व्वा च कुष्ठजित् ॥
सप्तच्छदामयनिशाचन्दनैश्चानुलेपनम् ।
शङ्खाब्जबीजरुद्राक्षवचालोहादिधारणम् ॥"
इति गारुडे । १७६ । १ -- १९ ॥

**स्त्रीसभ**, क्ली, (स्त्रीणां सभा । अशालाचेति नपुं-
सकत्वम् ।) नारीणां सभा । इति केचित् ॥

**स्त्रीस्वभावः**, पुं, (स्त्रीणां स्वभाव इव स्वभावो
यस्य ।) महल्लकः । इति शब्दमाला ॥ नारीणां
शीलञ्च ॥ (यथा, महाभारते । ३ । ७१ । ६ ।
"स्त्रीस्वभावश्चलो लोके मम दोषश्च दारुणः ।
स्यादेवमपि कुर्य्यात् सा विवशा गतसौहृदा ॥")

**स्थः**, त्रि, (तिष्ठत्यस्मिन्निति स्था + घञर्थे कः ।)
स्थलम् । यथा, --
"स्थली दैवकर्त्तृकेऽन्यत् स्थलं क्लीवे स्थ इत्यपि ।"
इति शब्दरत्नावली ॥
(सुबन्तोपपदे तु "सुपि स्थः ।" ३ । २ । ४ ।
इति कप्रत्ययः । स्थितिशीलः ।
यथा, रघुः ।
१२ । १५ ।
"चित्रकूटवनस्थञ्च कथितस्वर्गतिर्गुरोः ।
लक्ष्म्या निमन्त्रयाञ्चक्रे तमनुच्छिष्टसम्पदा ॥"

**स्थग**, म ए संवृतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।)
दन्त्यादिस्थमध्यः । म,
सिस्थगयिषति । ए, अस्थगीत् । इति
दुर्गादासः ।

**स्थगः**, त्रि, (स्थगति संवृणोति आत्मानमिति ।
स्थग + अच् ।) धूर्त्तः । यथा, --
"धूर्त्ते स्थगश्च निर्लज्जः पटुः पाटविकोऽपि च ॥"
इति शब्दरत्नावली त्रिकाण्डशेषश्च ॥

**स्थगनं**, क्ली, (स्थग + ल्युट् ।) अपवारणम् ।
यथा, --
"व्यवधानं तिरोधानमन्तर्द्धि स्त्वपवारणम् ।
छदनं व्यवधान्तर्द्धापिधानस्थगनानि च ॥"
इति हेमचन्द्रः ॥

**स्थगितं**, त्रि, (स्थग + क्तः ।) तिरोहितम् ।
तत्पर्य्यायः । संवीतम् २ रुद्धम् ३
आवृतम् ४

दोहलः । इति राजनिर्घण्टः ॥

**स्त्रीरञ्जनं**, क्ली, (स्त्रियमपि रञ्जयति रागे-

णेति । रञ्ज + ल्युः ।) ताम्बूलम् । इति
केचित् ॥

**स्त्रीरोगः**, पुं, (स्त्रिया रोगः ।) नारीणामामयः ।

तस्य चिकित्सा यथा, --
धन्वन्तरिरुवाच ।
“स्त्रीरोगादिचिकित्सान्तु वक्ष्ये सुश्रुत तां शृणु
यौनिव्यापत्सु भूयिष्ठं शस्यते कर्म्म वातजित्
॥
वचोपकुञ्चिकाजातीकृष्णावृषकसैन्धवम् ।
अजमोदा यवक्षारं चित्रकं शर्करान्वितम् ॥
पिष्ट्वालोड्य जलाद्यैश्च खादयेद्धृतभर्ज्जितम्
।
योनिपार्श्वार्त्ति हृद्रोगगुल्मार्शोविनिवृत्तये ॥
बदरीपत्रसंलेपात् योनिर्भिन्ना प्रशाम्यति ।
लोध्रं तुम्बीफलालेपो योनिदार्ढ्यं करोति च
॥
पञ्चपल्लवशट्यकमालतीकुसुमैर्घृतम् ।
रविपक्वमसृग्धारा योनिगन्धविनाशनम् ॥”
असृग्धारास्थाने असृग्वाधा इति च पाठः ।
“सकाञ्जिकं जवापुष्पं प्लुष्टं
ज्योतीष्मतीदलम्
दूर्व्वापिष्टञ्च संप्राश्य वनिता नार्त्तवं लभेत् ॥
धात्र्यञ्जनाभयाचूर्णं तोयपीतं यदा भवेत् ।”

**स्त्रैणं**, क्ली, (स्त्रिया इदम् । स्त्री + नञ् ।) स्त्री-

स्वभावः । यथा, भट्टिः ।
“कर्णेजपैराहितराज्यलोभा
स्त्रेणेन नीता विकृतिं लघिम्ना ।
रामप्रवासे व्यमृषन्न दोषं
जनापवादं सनरेन्द्रमृत्युम् ॥”
(यथा, च भागवते । ४ । ४ । ३ ।
“पित्रोरगात् स्त्रैणविमूढधीर्गृहान्
प्रेम्णात्मनो योऽर्द्धमदात् सतां प्रियः ॥”
स्त्रीणां समूहः । स्त्री + नञ् । स्त्रीसमूहः ।
इति काशिका । ४ । १ । ८७ ॥ यथा,
शान्तिशतके ।
“तृणे वा स्त्रैणे वा मम समदृशो यान्तु
दिवसाः
क्वचित् पुण्येऽरण्येशिव शिव शिवेति
प्रलपतः ॥)

**स्त्रैणः**, त्रि, (स्त्रीषु भवः । स्त्रीभ्य आगतः । स्त्रीभ्यो

हितो वा । स्त्री + “स्त्रीपुंसाभ्यां नञ् स्नञौ
भवनात् ।” ४ । १ । ८७ । इति नञ् ।) स्त्री-
सम्बन्धी । इति मुग्धबोधव्याकरणम् ॥
स्त्रिया
अपत्यं स्त्रैणः । स्त्रिया इदं स्त्रीणां समूहो वा
स्त्रैणम् । इति तट्टीकायां दुर्गादासः ॥ (रमणी
रतः । यथा, भागवते । १ । ११ । ४० ।
“तं मेनिरेऽबलामौढ्यात् स्त्रैणं चानुव्रतं रहः ।
अप्रमाणविदो भर्त्तुरीश्वरं मतयो यथा ॥”)

संवृतम् ५ पिहितम् ६ छन्नम् ७
अपवारितम् ८
अन्तर्हितम् ९ तिरोधानम् १० । इति
हेम-
चन्द्रः ॥ (यथा, किराते । १४ । ३१
।
“उदूढवक्षः स्थगितैकदिङ्मुखो
विकृष्टविस्फारितचापमण्डलः ॥”)

**स्थगी**, स्त्री, (स्थग्यतेऽनयेति । स्थग + घञर्थे
कः ।

गौरादित्वात् ङीष । ताम्बूलपात्रम् ।
पानेर
वाटा इति भाषा । तत्पर्य्यायः ।
ताम्बूलकरङ्क
२ । इति हेमचन्द्रः ॥

**स्थगु**, क्ली, गड्डुः । कुज् इति भाषा । यथा, --

“हृदये ते निविष्टास्ता भूयश्चान्याः
सहस्रशः ।
तदेव स्थगु यद्दीर्घं रथघोणमिवायतम्
॥
लब्धार्था च प्रतीता च लेपयिष्यामि ते
स्थगु ।
मुखे च तिलकं चित्रं जातरूपमयं
शुभम् ॥”
इति रामायणे अयोध्याकाण्डे ९ सर्गः
॥

**स्थण्डिलं**, क्ली, (तिष्ठत्यस्मिन्निति । स्था +
मिथिला-

दयश्चेति इलचप्रत्ययेन निपातनात्
साधु ।)
चत्वरम् । इत्यमरः । २ । ७ । १८ ॥
द्वे वेदी-
रभितोऽन्यत्र वा यज्ञार्थं
परिष्कृतायामनिम्नो-
न्नतायां विस्तृतायां भूमौ । असंवाधेन
तिष्ठ-
न्त्यत्र स्थण्डिलं नाम्नीति डण्डिलः
चत्यते निवा-
साय याच्यते चत्वरं चते ञ याचे
पूर्व्वेण वरः ।

|  |  | इति भरतः ॥ यथा च ।<br>“यज्ञे परिष्कृतस्थाने स्यातां स्थण्डिलचत्वरे ।”<br>इति शब्दरत्नावली ॥ * ॥<br>होमनिमित्ताग्निस्थापनार्थं स्थण्डिलविधिर्य्यथा, वशिष्ठसंहितायाम् ।<br>“तस्मात् सम्यक् परीक्ष्यैवं कर्त्तव्यं शुभवेदिकम् ।<br>हस्तमात्रं स्थण्डिलं वा संक्षिप्ते होमकर्म्मणि ॥” |
|---|---|---|

क्रियासारेऽपि ।
"कुण्डमेवंविधं न स्यात् स्थण्डिलं वा
समा-
श्रयेत् ॥"
शारदातिलकेऽपि ।
"नित्यं नैमित्तिकं काम्यं स्थण्डिले वा
समाचरेत्
हस्तमात्रन्तु तत् कुर्य्यात् चतुरस्रं
समन्ततः ॥"
इति तिथ्यादितत्त्वम् ॥ * ॥
अपि च । गोभिलः । अनुगुप्ता अप
आहृत्य
प्रागुदक्प्लवनं देशं समं वा परिसमूह्य
उप-
लिप्य मध्यतः प्राचीं रेखामुल्लिख्य
उदीचीञ्च
संहतां पश्चान्मध्ये प्राचीस्तिस्र
उल्लिख्याभ्यु-
क्षयेत् लक्षणावृदेशा सर्व्वत्रेति । अनुगुप्ता
आच्छादिताः । पतितादिभिरदृष्टा इति
यावत् ॥
प्राङ्नीचादिफलमाह गुह्यासंग्रहे गोभिल-
पुत्त्रः ।
"प्राङ्नीचं ब्रह्मवर्च्चस्यमुदङ्नीचं
यशोत्तमम् ।
पित्र्यं दक्षिणतो नीचं प्रतिष्ठालम्भकं
समम् ॥"
यशोत्तममित्यत्र सान्ता अप्यदन्ता
इत्यक्तेर-
दन्तोऽपि यशशब्दः गयाशिरः इतिवत् ।
परि-
समूह्य सर्व्वतः कुशैः पांश्वादिकमपसार्य्य
उत्त-
रस्यां दिशि सार्द्धहस्तोपरि क्षिपेत् । परि-
ससूह्य वितस्तित्रये उत्तरत उत्करं
करोतीति
हरिशर्म्मधृतवचनात् । तत उपलेपनम् ॥
* ॥
तत्र कारणमाह गृह्यासंग्रहः ।
कुशेन इति सर्व्वत्राभिसम्बध्यते ।
एवकारेण
शाखान्तरोक्तस्य व्यावृत्तिः ॥ * ॥
रेखाणां
देवता वर्णांश्चाह स्मृतिः ।
"प्राग्गता पार्थिवी ज्ञेया चाग्नेयी
चाप्युद-
ग्गता ।
प्राजापत्या तथा चैन्द्री सौमी च
प्राक्कृता
स्मृता ॥
पार्थिवी पीतवर्णा स्यादाग्नेयी
लोहिता भवेत्
प्राजापत्या भवेत् कृष्णा नीला चैन्द्री
प्रकी-
र्त्तिता ॥
श्वेतवर्णेन सौमी स्यात् रेखाणां
वर्णलक्षणम् ॥"
अग्निस्थापनपर्य्यन्तं
सव्यहस्तप्रादेशस्य विधान
माह । गृह्यासंग्रहः ।
"सव्यं भूमौ प्रतिष्ठाप्य
प्रोल्लिखेद्दक्षिणेन तु ।
तावन्नोत्थापयेत् पाणिं यावदग्निं
निधापयेत् ॥"
मानकर्त्तारमाह छन्दोगपरिशिष्टे
कात्यायनः ।
"मानक्रियायामुक्तायामनुक्त्वे
मानकर्त्तरि ।
मानकृद्यजमानः स्याद्विदुषामेष
निश्चयः ॥"
अङ्गुष्ठाङ्गुलिमानमाह स एव ।
"अङ्गुष्ठाङ्गुलिमानन्तु यत्र
यत्रोपदिश्यते ।
तत्र तत्र बृहत्पर्व्वग्रन्थिभिर्म्मिनुयात्
सदा ॥"
यजमानासन्निधौ होमे तु
साधारणाङ्गुलि-
मानम् । यथा कपिलपञ्चरात्रम् ।
याजिनि कुञ्चुकिनि च । इति भरतः ॥ * ॥ तस्य
लक्षणं यथा, --
"वास्तुविद्याविधानज्ञो लघुहस्तो जितश्रमः
दीर्घदर्शी च शूरश्च स्थपतिः परिकीर्त्तितः ॥"
इति मात्स्ये । २१५ । ३९ ॥
कञ्चुकी । इति मेदिनी ॥ कुबेरः । इत्यजय-
पालः ॥ अधीशः । इति हेमचन्द्रः ॥ (यथा,
रामायणे । २ । ५२ । ५ ।
"स तु रामस्य वचनं निशम्य प्रतिगृह्य च ।
स्थपतिस्तूर्णमाहूय सचिवानिदमब्रवीत् ॥")

**स्थपतिः**, त्रि, (तिष्ठन्ति स्वधर्म्मे इति स्थाः सन्त-
स्तेषां पतिः ।) सत्तमः । इति मेदिनी ॥

**स्थपुटः**, त्रि, विषमसञ्चारजीवी । इति त्रिकाण्ड-
शेषः ॥ विषमोन्नतम् । इति हेमचन्द्रः ॥

**स्थल**, जस्थाने । इति कविकल्पद्रुमः ॥ (भ्वा० पर०
अक०-सेट् ।) ज, स्थालः स्थलः । तिस्थाल-
यिषति । अयं नास्तीति केचित् । इति दुर्गा-
दासः ॥

**स्थलं**, क्ली, स्त्री, (स्थल + अच् ।) जलशून्या-
कृत्रिमभूभागः । तत्पर्य्यायः । स्थली २ । इत्य-
मरः । २ । १ । ५ । स्थल्यते स्थीयतेऽत्र स्थलं
स्थलज स्थाने अल् । एवं स्थली नारी सखी
इत्यादिना अकृत्रिमत्वे ईपि स्थली निपात्यते
कृत्रिमत्वे तु आबेव स्थला । कृत्रिमाकृत्रिम-
सामान्ये तु स्थलं प्रयुज्यते । इति वृद्धाः । स्थल-
शब्दः स्त्रीनपुंसकलिङ्गः । इति भरतः ॥ (यथा,
मनुः । ७ । १९२ ।
"स्यन्दनाश्वैः समे युध्येदनूपे नौद्विपैस्तथा ।
वृक्षगुल्मावृते चापैरसिचर्म्मायुधैः स्थले ॥"
यथा च तैत्तिरीयसंहितायाम् । १ । ६ । १० । ५
।
"यज्ञो यजमानाय वर्षति स्थलयोदकं परि-
गृह्णन्ति ॥")

**स्थलं**, क्ली, (स्थल + अच् ।) जलशून्यकृत्रिमा
कृचिमभूभागः । इत्यमरटीकायां भरतः । २ ।
१ । ५ । (स्थानमात्रम् । यथा, रघुः । ५ । ५२ ।

"इन्द्रेण वज्राभिहतः पुरा वृत्रो महासुरः ।
मेदसा तस्य संक्लिन्नातदर्थमुपलेपयेत्
॥" इति ।
मध्यतः स्थण्डिलाभ्यन्तरे दक्षिणांशे न
तु
मध्यांशे
उदग्गतैकविंशत्यङ्गुलरेखानुरोधात् ।
अन्यथा ॥
"कुशैः संमार्ज्जयेद्भूमिं शुद्धामादौ
शुचिस्ततः ।
हस्तमात्रां चतुरस्रां गोमयेनोपलेपयेत् ॥"
इति भारद्वाजीयहस्तप्रमाणस्थण्डिले
तदनुप-
पत्तेः । प्राचीं प्राग्गताम् । उदीचीञ्च संहतां
पश्चादिति । प्राग्गतायाः पश्चिमे भागे
संलग्ना-
मुदगग्राम् । मध्ये उदग्गतायाः प्राचीः
प्राग-
ग्रास्तिस्रो रेखा उल्लिख्याभ्युक्षयेदिति ।
रेखाभ्य
उद्धृतमृत्तिकोद्धरणपूर्व्वकमभ्युक्षयेत् ।
उल्लिख्य
उद्धृत्याभ्युक्षयेदिति कात्यायनसूत्रात् ॥
* ॥
उत्करप्रक्षेपदेशमाह गृह्यासंग्रहः ।
"उत्करं गृह्य रेखाभ्योऽरत्निमात्रे
निधापयेत् ।
द्वारमेतत् पदार्थानां प्रागुदीच्यां दिशि
स्मृतम्
इति ॥
परिममूहनादिपरिषेकान्तं कर्म्म
लक्षणसंज्ञकं
तस्य लुक्षणस्यावृत प्रक्रिया सर्व्वत्र यत्र
यत्राग्नि-
प्रणयनं तत्र बोध्या ॥ * ॥ रेखाप्रमाणमाह
छन्दोगपरिशिष्टे कात्यायनः ।
"दक्षिणे प्राग्गतायास्तु प्रमाणं
द्वादशाङ्गुलम्
तन्मूललग्ना योदीची तस्या एवं नवोत्तरम्
॥
"अष्टभिस्तैर्भवेज्ज्यैष्ठं मध्यमं
सप्तभिर्यवैः ।
कन्यसं षड्भिरुद्दिष्टमङ्गुलं
मुनिसत्तमैः ॥"
तैः प्रक्रम्यमाणयवैः । कन्यसं
कनिष्ठम् । मानन्तु
पार्श्वेन । षड्यवाः पार्श्वसंमिताः ।
इति कात्य-
यनवचनात् । इति संस्कारतत्त्वम् ॥

**स्थण्डिलशायी**, [न्] पुं, (स्थण्डिले शेते इति ।

शी + "व्रते ।" ३ । २ । ८० । इति
इनिः ।)
यो व्रतवशात् स्थण्डिले शेते सः ।
तत्पर्य्यायः ।
स्थाण्डिलः २ । इत्यमरः । २ । ७ ।
४४ ॥ स्थण्डि-
लेशयः ३ । इति शब्दरत्नावली ॥
(वाच्यलिङ्गे-
ऽपि वर्त्तते । यथा, भट्टिः । ३ । ४१
।
"वाचंयमान् स्थण्डिलशायिनञ्च
युयुक्षमाणाननिशं मुमुक्षून् ।
अध्यापयन्तं विनयात् प्रणेमुः
पद्गा भरद्वाजमुनिं सशिष्यम् ॥")

**स्थण्डिलसितकं**, क्ली, (स्थण्डिले सिकता यत्र ।)

वेदिः । इति हारावली ॥

**स्थण्डिलेशयः**, पुं, (स्थण्डिले शेते इति । शी

+ अच् । अलुक्समासः ।)
स्थण्डिलशायी ।
इति शब्दरत्नावली ॥
(वाच्यलिङ्गोऽप्ययमिति
केचित् ॥ यथा, भागवते । ४ । २३
। ६ ।
"आकण्ठमग्नः शिशिरे उदके
स्थण्डिलेशयः ॥")

**स्थपतिः**, पुं, (तिष्ठन्त्यस्मिन्निति । स्था + कः । स्थः

उवाच वाग्मी दशनप्रभाभिः
सवर्द्धितोरःस्थलतारहारः ॥")
वस्त्रगृहम् । यथा, --
"पटवासः पटमयं दूष्यं बस्त्रगृहं स्थलम् ॥"
इति त्रिकाण्डशेषः ॥

**स्थलकन्दः**, पुं, (स्थलजातकन्दः ।) अग्राम्य

कन्दः । इति रत्नमाला ॥ वनओल इति
भाषा ॥

**स्थलकमलं**, क्ली, (स्थलस्य कमलम् ।) स्थल-

पद्मम् । (यथा, गीतगोविन्दे । १० । ७ ।
"स्थलकमलगञ्जनं मम हृदयरञ्जनं
जनितरतिरङ्गपरभागम् ॥")
तत्पर्य्यायः । पद्मचारिणी २ अतिचरा ३
व्यथा ४ पद्मा ५ चारटी ६ । अस्य गुणाः ।
अनुष्णत्वम् । कटुत्वं । तिक्तत्वम् । कषायत्वम्
।
कफवातमूत्रकृच्छ्राश्मशूलश्वासकासविषापह-
त्वम् । इति भावप्रकाशः ॥

| उदग्गतायाः संलग्नाः शेषाः प्रादेशमात्रिकाः । सप्तसप्ताङ्ग लांस्त्यक्त्वा कुशेनैव समल्लिखेत् ॥” नवोत्तरं नवाधिकं द्वदिशाङ्गुलमेकविंशत्यङ्गुल-मित्यर्थः । शेषाः उक्तरेखयोरवशिष्टास्तिस्रः । | स्थानम् । तं पातीति । पा + बाहुलकात् अतिः इत्युणादिवृत्तौ उज्ज्वलः । ४ । ५९ ।) गीष्पतीष्टिय-ज्वा । बृहस्पतिसवननामकयागकर्त्ता। कारु-भेदः । राज् इति भाषा । इत्यमरः । ३ । ३ । ६० ॥ कारुः शिल्पी तद्भेदे थै इति ख्याते । स्थपतिः कारुभेदो मुख्यतक्षेति स्वामी । बृहस्पतियाग- | |
|---|---|---|

**स्थलकुमुदः**, पुं, (स्थलस्य कुमुदः ।) करवीरः ।
इति राजनिर्घण्टः ॥

**स्थलपद्मं**, क्ली, (स्थलस्य पद्मम् ।) स्वनामख्यात-
पुष्पविशेषः । (यथा, भट्टिः । २ । ३ ।
"विम्बागतैस्तीरवनैः समृद्धिं
निजां विलोक्यापहृतां पयोभिः ।
कूलानि सामर्षतयेव तेनुः
सरोजलक्ष्मीं स्थलपद्महासैः ॥")
तत्पर्य्यायः । छत्रपत्रम् २ तमालकम् ३ ।
इति
त्रिकाण्डशेषः ॥ तच्चतुर्व्विधं यथा, --
"चतुर्था स्थलपद्मानि सेवन्ती गुलदावदी ।
नैपाली च गुलावश्च वकुलश्च कदम्बकः
॥"
इति रावणकृतार्कप्रकाशः ॥

**स्थलपद्मः**, पुं, (स्थलजातः पद्म इव ।) मानकः ।
इति रत्नमाला ॥ मानकचु इति भाषा ॥
(यथा, --
"स्थलपद्ममयं कल्कं पयसा लोड्य
पाययेत् ।
प्लीहामयहरञ्चैव सर्व्वाङ्गैकाङ्गशोथजित् ॥"
इति वैद्यकचक्रपाणिसंग्रहे शोथाधिकारे ॥)

**स्थलपद्मिनी**, स्त्री, (स्थलस्य पद्मिनी ।) स्थल-
पद्मम् । वेटतामर इति हिन्दी भाषा । तत्-
पर्य्यायः । पद्माह्वा २ चारटी ३ पद्मचारिणी
४
सुगन्धमूला ५ अम्बुरुहा ६ लक्ष्मीः ७ श्रेष्ठा
८
सुपुष्करा ९ रम्या १० पद्मावती ११ अति-
चरा १२ स्थलरुहा १३ पुष्करिणी १४
पुष्कर-
पर्णिका १५ पुष्करनाडी १६ । अस्या
गुणाः ।
गौल्यत्वम् तिक्तत्वम् । शीतत्वम् ।
वान्तिरक्त-
पित्तमेहभूतातीसारनाशित्वञ्च । इति राज-
निर्घण्टः ॥

**स्थलेशयः**, पुं, (स्थले शेते इति । इति शी + अच्
।
क्रोडरुरुकुरङ्गादयः । इति राजनिर्घण्टः
॥
स्थलशायिनि, त्रि ॥

**स्थविः**, पुं, (तिष्ठतीति । स्था + "कृविघृष्वीति ।"
उणा० ४ । ५६ । इति क्विन्प्रत्ययेन
साधुः ।)
तन्त्रवायः । स्वर्गः । जङ्गमः । इति
संक्षिप्त-
सारोणादिवृत्तिः ॥

**स्थविरं**, क्ली, (स्था + "अजिरशिशिरेति ।" उणा
०
१ । ५४ । किरच्प्रत्ययेन साधुः ।)
शैलेयम् ।
इति राजनिर्घण्टः ॥

**स्थविरः**, पुं, (स्था + किरच् ।) ब्रह्मा । इति
हेमचन्द्रः ॥

**स्थविरः**, त्रि, (तिष्ठतीति । स्था + "अजिर-
शिशिरेति ।" उणा० १ । ५४ । इति
किरच्-
प्रत्ययेन साधुः ।) वृद्धः । इत्यमरः । २ ।
६ ।
४२ ॥ (यथा, मनुः । २ । १२० ।
"ऊद्‌र्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर
आयति
प्रत्युत्थानाभिवादाभ्यां पुनस्तान्
प्रतिपद्यते ॥"
भिक्षुः । इत्युणादिवृत्तौ उज्ज्वलदत्तः ॥ १
। ४५ ॥)
अचलः । इत्युणादिकोषः ॥

**स्थविरा**, स्त्री, (स्था + किरच् । टाप् ।) महा-
श्रावणी । इति राजनिर्घण्टः ॥ वृद्धा च ॥

**स्थविष्ठः**, त्रि, (अयमेषामतिशयेन स्थूलः । स्थूल
+ इष्ठन् । "स्थूलदूरेति ।" ६ । ४ ।
१५६ ।

ध्यानं कृत्वा तथैकान्ते स्थितः
स्थाणुरिवा-
चलः ॥")
तत्पर्य्यायः । ध्रुवः २ शङ्कुः ३ । इत्यमरः ।
२ । ४ । ८ ॥
अशाखवृक्षः ४ । इति जटाधरः ॥
अस्त्रभेदः ।
इति नीलकण्ठः ॥

**स्थाणुः**, त्रि, (स्था + णुः ।) स्थिरः । इति धरणिः ॥
(यथा, विष्णुपुराणे । १ । ५ । ५८ ।
"अव्ययञ्च व्ययञ्चैव यदिदं स्थाणुजङ्गमम् ।
तत् ससर्ज्ज तदा ब्रह्मा भगवानादिकृत्
विभुः ॥"

**स्थाणुतीर्थं**, क्ली, (स्थानोस्तीर्थम् ।) तीर्थविशेषः ।
यथा, वामने ४३ अध्याये ।
"स प्रोवाच महादेवो ब्रह्माणं प्रणतस्थितम्
।
पुण्यप्रदं नृणाञ्चैव तीर्थमाहात्म्यमुत्तमम् ॥
एतत् सन्निहितं प्रोक्तं सरः पुण्यप्रदं महत् ।
स्थाणुलिङ्गस्य माहात्म्यं ब्रह्मन् मेऽवहितः
शृणु ॥
अचेतनः सचेता वा अज्ञो वा प्राज्ञ एव वा ।
लिङ्गस्य दर्शनादेव मुच्यते सर्व्वपातकैः ॥
पुष्करादीनि तीर्थानि समुद्रचरणानि च ।
स्थाणुतीर्थे समेष्यन्ति मध्यं प्राप्ते दिवाकरे
॥
तत्र स्थास्यति यो ब्रह्मन् माञ्च स्तोष्यति
भक्तितः ।
तस्याहं सुलभो नित्यं भविष्यामि न
संशयः ॥
इत्येवमुक्त्वा वचनं देवदेवो गतः प्रभुः ।
देवाश्च ऋषयः सर्व्वे स्वानि स्थानानि
भेजिरे ॥
ततः प्रभृति लोकेऽस्मिन् स्थाणुतीर्थं
वदन्ति
हि ॥"

**स्थाण्डिलः**, पुं, (स्थण्डिले शयितुं व्रतमस्य ।

**स्थलमञ्जरी**, स्त्री, (स्थलस्य मञ्जरी ।) अपामार्गः ।
इति रत्नमाला ॥

**स्थलशृङ्गाटः**, पुं, (स्थलजातः शृङ्गाटः ।) गोक्षर-
वृक्षः । इति रत्नमाला ॥

**स्थलशृङ्गाटकः**, पुं, (स्थलशृङ्गाट एव । स्वार्थे
कन् ।) गोक्षुरकः । इति राजनिर्घण्टः ॥

**स्थलसीमा**, [न्] पुं, (स्थलस्य सीमा ।) स्थण्डिलः ।
इति भूरिप्रयागः ॥

**स्थला**, स्त्री, (स्थल + टाप् ।) जलशून्याकृत्रिम-
भूमिः । इत्यमरटीकायां भरतः । २ । १ ।
५ ॥
(अस्याः प्रमाणं स्थलशब्दे द्रष्टव्यम् ॥)

**स्थली**, स्त्री, (स्थल + ङीष् ।) जलशून्याकृत्रिमा
भूमिः । इत्यमरटीकायां भरतः । २ । १ ।
५ ।
(यथा, साहित्यदर्पणे ।
“सैषा स्थली यत्र बिचिन्वता त्वां
भ्रष्टं मया नुपूरमेकमूर्व्व्याम् ।
अदृश्यत त्वच्चरणारविन्द-
विश्लषदुःखादिव बद्धमौनम् ॥”)

**स्थलीदेवता**, स्त्री, (स्थल्या देवता ।) ग्राम्यदेवता ।
इति केचित् ॥

**स्थलेरुहा**, स्त्री, (स्थले रोहतीति । रुह + कः ।)
गृहकुमारी । दग्धावृक्षः । इति राजनिर्घण्टः
॥
स्थलजाते, त्रि ॥

इति साधुः ।) अतिशयस्थूलः । इत्यमरः
। ३ ।
२ । १११ ॥ (यथा, भागवते । २ । १ ।
२४ ।
“विशेषस्तस्य देहोऽयं स्थविष्ठश्च
स्थवीयसाम् ॥”

**स्थाणुः**, पुं, (तिष्ठतीति । स्था + “स्थोणुः ।” उणा
०
३ । ३७ । इति णुः ।) शिवः । इत्यमरः ।
१ ।
१ । ३६ ॥ (यथा, रघुः । ११ । १३ ।
“स्थाणुदग्धवपुषस्तपोवनं
प्राप्य दाशरथिरात्तकार्म्मुकः ।
विग्रहेण मदनस्य चारुणा
सोऽभवत् प्रतिनिधिर्न कर्म्मणा ॥”)
तन्नामकारणं यथा, --
“समुत्तिष्ठन् जलात्तस्मात् प्रजास्ताः
सृष्टवानहम्
ततोऽहं ताः प्रजा दृष्ट्वा रहिता एव
तेजसा ॥
क्रोधेन महता युक्तो लिङ्गमुत्पाट्य
चाक्षिपम् ।
उत्क्षिप्तं सरसो मध्ये ऊर्द्ध्वमेव यदा
स्थितम् ।
तदा प्रभृति लोकेषु स्थाणुरित्येव विश्रुतम्
॥”
इति वामने ४६ अध्यायः ॥
(ब्रह्मा । यथा, महाभारते । १ । १ । ३२
।
“यस्मात् पितामहो जज्ञे प्रभुरेकः
प्रजापतिः ।
ब्रह्मा सुरगुरुः स्थाणुर्म्मनुः कः
परमेष्ठ्यथ ॥”)
कीलः । इति मेदिनी ॥ जीवकगन्धद्रव्यम्
। यथा,
“जीवके जीवनो जीवो निधिः स्थाणुः
प्रकी-
र्त्तितः ॥”
इति शब्दचन्द्रिका ॥

**स्थाणुः**, पुं, क्ली, (स्था + णुः ।) निःशाखवृक्षः ।

स्थण्डिल + “स्थण्डिलात् शयितरि व्रते
।” ४ ॥
२ । १५ । इति अण् ।) स्थण्डिलशायी ।
इत्य-
मरः । २ । ७ । ४५ ॥
(वाच्यलिङ्गोऽयमिति केचित् ॥)

**स्थाण्वीश्वरः**, पुं, (स्थाणुरीश्वरश्च ।) शिवलिङ्ग-
विशेषः । यथा, --
“स्थाणुर्नाम्ना हि लोकेषु पूजनीयो
दिवौकसाम्
स्थाणुरीश्वरः स्थितो यस्मात्
स्थाण्वीश्वरस्ततः
स्मृतः ॥
ये स्मरन्ति सदा स्थाणुं ते मुक्ताः सर्व्व-
किल्विषैः ।
भविष्यन्ति शुद्धदेहा दर्शनान्मोक्षगामिनः ॥
इत्येवमुक्त्वा देवेन ऋषयो ब्रह्मणा सह ।
तस्माद्दारुवणं लिङ्गं नेतुं समुपचक्रमुः ॥”
इति वामने ४२ अध्यायः ॥

**स्थातव्यं**, त्रि, (स्था + तव्य ।) स्थेयम् । स्थानीयम्
।
यथा, कालिदासकृतशृङ्गारतिलके ।
“बाणिज्येन गतः स मे गृहपतिवार्त्तापि न
श्रूयते
प्रातस्तज्जननो प्रसूततनया जामातृगेहं
गता ।
बालाहं नवयौवना निशि कथं
स्थातव्यमस्मद्गृहे
सायं सम्पति वर्त्तते पथिक हे स्थानान्तरे
गम्यताम् ॥”

**स्थानं**, क्ली, (स्था + ल्युट् ।) नीतिवेदिनां त्रिव-
गर्न्तर्गतवर्गविशेषः । इत्यमरः । २ । ८ ।
१९ ॥

|  | मुडा गाछ इति भाषा ॥ (यथा, देवीभाग-<br>वते । १ । १७ । ५३ ।<br>“छायायामातपे चेव समदर्शी महातपाः । |  |
| --- | --- | --- |

नीतिवेदिनां नीतिशास्त्रज्ञानां
क्षयादिभि-
स्त्रिवर्गः । अन्येषान्तु धर्म्मकामार्थैः
पूर्व्वमुक्तः ।
अष्टवर्गस्यापचयः क्षयः । तस्यैवोपचयो
वृद्धिः ।
तस्य नोपचयो नाप्यपचयः स्थानम् ।
अष्टवर्गो
यथा, --
“कृषिर्ब्बणिक्पथो दुर्गं
सेतुकुञ्जरबन्धनम् ।
कन्याकरवलादानं सैन्यानाञ्च
निवेशनम् ॥
अष्टवर्गः स्मृतो राज्ञामिति -- ॥”
इति भरतः ॥ * ॥
सादृश्यम् । अवकाशः । स्थितिः । इति
मेदिनी ।
(यथा, मनुः । ६ । २२ ।
“स्थानासनाभ्यां विहरेत्
सवनेषूपयन्नपः ॥”)
सन्निवेशः । इति हेमचन्द्रः ॥ वसतिः ।
इति
चतुर्थकाण्डे हेमचन्द्रः ॥ यथाह
कश्चित् ।
“स्थानं प्रधानं न बलं प्रधानं
स्थानस्थितः कापुरुषोऽपि सिंहः ॥”)
ग्रन्थसन्धिः । इति त्रिकाण्डशेषः ॥
भाजनम् ।
इति हलायुधः ॥ निकटम् । यथा, --
“त्वमत्र कृत्तिकास्थाने
कथयामासुरीश्वर ।
सर्व्वे धर्म्मादयो देवा धर्म्माधर्म्मस्य
साक्षिणः ॥”
इति ब्रह्मवैवर्त्ते गणपतिखण्डे । १५ ।
१६ ॥
अपि च ।
“एते ह्यपत्यास्तस्यर्षे धारयन्ति
चराचरम् ।

**स्थानचञ्चला**, स्त्री, (स्थाने चञ्चला ।) वर्व्वरीवृक्षः
इति शब्दचन्द्रिका ॥

**स्थानच्युतः**, त्रि, (स्थानात् चुतः ।) स्थानभ्रष्टः ।
यथा, गारुडे ११ । ७१ ।
“स्थानस्थितस्य पद्मस्य मित्रौ
वरुणभास्करौ ।
स्थानच्युतस्य तस्यैव क्लेदशोषणकारकौ
॥”

**स्थानपालः**, पुं, स्थानं पालयति यः । (स्थान +
पालि + अण् ।) स्थानरक्षकः । (यथा,
याज्ञ-
वल्क्ये । २ । १७६ ।
“शौल्विकैः स्थानपालैर्व्वा
नष्टापहृतमाहृतम्
अर्व्वाक् संवत्सरात् स्वामी हरेत परतो
नृपः ॥”

**स्थानभ्रष्टः**, त्रि, (स्थानात् भ्रष्टः ।) पदच्युतः ।
यथा, --
“स्थानस्थितानि पूज्यन्ते पूज्यन्ते च
पदस्थिताः
स्थानभ्रष्टा न पूज्यन्ते केशा दन्ता नखा
नराः ॥
इति गारुडे । ११५ । ७३ ।

**स्थानाध्यक्षः**, पुं, (स्थानस्य अध्यक्षः ।) स्थान-
रक्षकः । तत्पर्य्यायः । स्थानिकः २ । इति
हेमचन्द्रः ॥

**स्थानिकः**, पुं, (स्थानमस्येति । ठन् ।) स्थाना-
ध्यक्षः । इति हेमचन्द्रः ॥

**स्थानी**, [न्] त्रि, स्थानविशिष्टः । स्थानं विद्यते-
ऽस्य इत्यर्थे इन्प्रत्ययेन निष्पन्नः । यथा,
स्थानिवदादेशः । इति मुग्धबोधव्याकरणम्
॥

**स्थानीयं**, क्ली, (स्थानाय हितमिति । स्थान + छः)

ज्ञातं स्थापयिष्यति यथा नित्यः पुरुष इति
प्रतिज्ञा हेतुरकृतकत्वात् इति । दृष्टान्तः
यथा,
अकृतकमाकाशं तच्च नित्यम् । उपनयो
यथा,
चाकृतकमाकाशन्तथा पुरुषः ।
निगमनन्तस्मा-
न्नित्यैति ।” इति चरके विमानस्थाने ८
अध्याये ॥

**स्थापनी**, स्त्री, (स्थाप्यतेऽनयेति । स्था + णिच् +
ल्युट् । ङीप् ।) पाठा । इति मेदिनी अमरश्च
।
२ । ४ । ८४ ॥

**स्थापितं**, त्रि, (स्था + णिच् + क्तः ।) निश्चितम् ।
न्यस्तम् । इति मेदिनी ॥ (यथा, देवीभागवते
।
२ । ९ । ४३ ।
“मणिमन्त्रधराः शूराः स्थापितास्तत्र रक्षणे
॥”)

**स्थाम**, [न्] क्ली, (तिष्ठत्यनेनेति । स्था + सर्व्व-
धातुभ्यो मनिन् ।” उणा ० ४ । १४४ । इति
मनिन् ।) सामर्थ्यम् । इत्यमरः । २ । ८ ।
१०२ ॥
(नादः । यथा, महाभारते । १ । १३१ । २४
।
“अश्वस्येवास्य यत् स्थाम नदतः प्रदिशो
गतम् ।
अश्वत्थामैव बालोऽयं तस्मान्नाम्ना
भविष्यति ॥”

**स्थायिभावः**, पुं, (स्थायी भावः !) रसस्य त्रिधा-
भावान्तर्गतभावविशेषः । यथा, --
“सञ्चारिणः प्रधानानि देवादिविषया रतिः ।
उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते ॥
न भावहीनोऽस्ति रसो न भावो रसवर्ज्जितः
।
परस्परकृता सिद्धिरनयो रसभावयोः ॥”
इत्युक्तदिशा परमालोचनया परमविश्रान्ति-

पुरा मङ्कनकः सिद्धस्तत्स्थाने इति मे श्रुतम् ॥”
इति वामने ३७ अध्यायः ॥ * ॥
स्वधर्म्मानुष्ठायिनां असम्यग्वर्त्तिनाञ्च स्थान-
विशेषप्राप्तिर्यथा, --
“वर्णानामाश्रमाणाञ्च
सम्यग्धर्म्मानुपालिनाम्
असम्यग्वर्त्तिनां लोकान् ब्रह्मा चक्रे यथा च यत्
प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम्
क्षत्त्रियाणां तथा चैन्द्रं संग्रामेष्वनुवर्त्तिनाम् ॥
वैश्यानां मारुतं स्थानं
स्वधर्म्ममनुवर्त्तिनाम् ।
गान्धर्व्वं शूद्रजातीनां
परिचर्य्यानुकारिणाम् ॥
अष्टाशीतिसहस्राणां
यतीनामूर्द्ध्वरेतसाम् ।
स्मृतं तेषान्तु यत् स्थानं तदेव
गुरुवासिनाम् ॥
सप्तर्षीणाञ्च यत् स्थाणं स्मृतं तद्वत् वनौ-
कसाम् ।
प्राजापत्यं गृहस्थानां
गृहधर्म्मानुवर्त्तिनाम् ॥
न्यासिनान्तु परं ब्रह्म योगिनाममृतं
स्मृतम् ।
एकान्तवासिनां ब्रह्मध्यायिनां परमं
पदम् ॥
तामिस्रमन्धतामिस्रं महारौरवरौरवम् ।
असिपत्रवनं घोरं कालपत्रमवीचिमत् ॥
वेदस्य निन्दकानान्तु
यज्ञव्याघातकारिणाम् ।
स्थानमेतत्समाख्यातं
स्वधर्म्मविनिवर्त्तिनाम् ॥”
इति वह्निपुराणे सर्गकथननामाध्यायः ॥

**स्थानकं**, क्ली, स्थानामिव । कन् । स्थाने कं जलं
नगरम् । इत्यमरः । २ । २ । १ ॥
स्थानसम्ब-
न्धिनि, त्रि ॥

**स्थाने**, व्य, योग्यम् । (यथा, रघुः । ५ । १६ ।

“स्थाने भवानेकनराधिपः स-
नकिञ्चनत्वं मखजं व्यनक्ति ॥”)
कारणार्थः । सादृश्यम् । सत्यम् । इति शब्द-
रत्नावली ॥

**स्थापकः**, त्रि, (स्थापयतीति । स्था + णिच् +

ण्वुल् ।) स्थापनकर्त्ता ।
ञ्यन्तस्थाधातोर्ण्वक्प्रत्य-
येन निष्पन्नः ॥

**स्थापत्यः**, पुं, (स्थपतिरेव । स्थपति + ष्यञ् ।)

अन्तःपुररक्षकः । इत्यमरः । २ । ८ । ८ ॥
स्थपते-
र्भवि, क्ली ॥

**स्थापनं** क्ली, (स्था + णिच् + ल्युट् ।) रोपणम् ।

पुंसवनम् । इति मेदिनी ॥ समाधिः । इति
विश्वः ॥ (पादादिपिण्डीकरणम् । इति श्रीधर-
स्वामी ॥ यथा, भागवते । १० । ४४ । ५ ।
“उत्थापनैरुन्नयनैश्चालनैः स्थापनैरपि ।
परस्परं जिगीषन्तावपचक्रतुरात्सनः ॥”

**स्थापना**, स्त्री, (स्था + णिच् + युच् + टाप् ।)

स्थापनम् निवेशनम् । (यथा, महाभारते ।
१२ । २८१ । २४ ।
“स्थापना वै सुमहती त्वया देव प्रवर्त्तिता ॥”
विचाराङ्गविशेषः । तद्यथा, --
“अथ स्थापना । स्थापना नाम तस्या एव
प्रतिज्ञाया हेतुभिर्दृष्टान्तोपनयनिगमैः स्थापना
पूर्व्वं हि प्रतिज्ञा पश्चात् स्थापना किंह्यप्रति-
स्थानेन रसेन सहैव वर्त्तमाना अपि राजा-
नुगतविहारप्रवृत्तभृत्यवत्आपाततो यत्र
प्राधान्येनाभिव्यक्ता व्यभिचारिणः देवमुनिगुरु-
नृपादिविषया रतिः उद्बुद्धमात्राविभवादिभि-
रपरिपुष्टतया रसतामनापाद्यमानाश्च स्थायिनो
भावा भावशब्दवाच्याः ।
उद्बुद्धमात्रस्थायीभावो
यथा, --
“हरस्तु किञ्चित् परिहृत्य धैर्य्यं
चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे विम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि ॥”
अत्र पार्व्वतीविषया भगवतो रतिः । इति
साहित्यदर्पणे रसभावादिनिरूपणो नाम ३
परिच्छेदः ॥

**स्थायी**, [न्] पुं, (तिष्ठतीति । स्था + णिनिः ।)

भावभेदः । यथा, --
“स्थायिसात्त्विकसञ्चारिप्रभेदैः स्याद्रतिः पुनः ॥”
इति हेमचन्द्रः ॥
(यथा, साहित्यदर्पणे । ३ । २०५ -- २०७ ।
“अविरुद्धा विरुद्धा वा यं तिरोधातुमक्षमाः ।
आस्वादाङ्कुरकन्दोऽसौ भावःस्थायीति
सम्मतः ॥
यदुक्तम् ।
स्रक्सूत्रवृत्त्या भावानामन्येषामनुगामुकः ।
न तिरोधीयते स्थायी तैरसौ पुष्यते परम् ॥
तद्भेदानाह ।
रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेत्थमष्टौ प्रोक्ताः शमोऽपि
च ॥

| | | |
|---|---|---|
| यत्रेति वा ।) आलवालम् । इति हेमचन्द्रः ॥<br>नगरम् । फेनम् । इति केचित् ॥<br>(स्थानमेव ।<br>स्वार्थे कन् । स्थानशब्दार्थोऽप्यत्र । यथा, महा-<br>भारते । १३ । २६ । ९४ ।<br>तत् स्थानकं ब्राह्म्यमभीप्समानै-<br>र्गङ्गा सदैवात्मवशैरुपास्या ॥”) | | |

तत्र
रतिर्मनोऽकूलेऽर्थे मनसः प्रवणायितम् ।
वागादिवैकृच्चेतोविकासो हास इष्यते
॥
इष्टनाशादिभिश्चेतो वैक्लव्यं
शोकशब्दभाक् ।
प्रतिकूलेषु तैक्ष्ण्यस्यावबोधः क्रोध
इष्यते ॥
कार्य्यारम्भेषु संरम्भः स्थेयानुत्साह
उच्यते ।
रौद्रशक्या तु जनितं चित्तवैक्लव्यदं
भयम् ॥
दोषेक्षणादिभिर्गर्हा जुगुप्सा विषयोद्भवा ।
विविधेषु पदार्थेषु लोकसीमातिवर्त्तिषु ॥
विस्फारश्चेतसो यस्तु स विस्मय
उदाहृतः ।
शमो निरीहावस्थायामात्मविश्रामजं
सुखम् ॥
यथा मालतीमाधवे रतिः । नटकमेलके
हासः ।
रामायणे शोकः । महाभारते शमः ।
एवमन्ये
ऽपि । एते हि एतेष्वन्तरा
उत्पद्यमानैस्तैस्तै-
र्विरुद्धैरविरुद्धैश्च भावैरनुच्छिन्नाः
प्रत्युत परि-
पुष्टा एव स्वहृदयानुभवसिद्धाः ॥” * ॥)
स्थिति-
विशिष्टे, त्रि ॥ (तथा, महाभारते । ६ ।
३ । २६ ।
“संवत्सरस्थायिनौ च ग्रहौ
प्रज्वलितावुभौ ॥”)

**स्थायुकः**, पुं, (स्थातुं शीलमस्य । स्था + “लस-
पतपदेति ।” ३ । २ । १५४ । इति
उकञ् ।) एक-
ग्रामाधिकृतः एकस्मिन् ग्रामे नियोजितः
। इत्य-
मरः । २ । ८ । ७ ॥ (स्थितिशीले, त्रि
। यथा,

**स्थालीपाकः**, त्रि, (स्थाल्यां पाको यस्य ।) भाजन-
पक्वान्नादिः । यथा, चातुर्म्मास्यव्रते
मात्स्ये ।
“लभते सन्ततिं दीर्घां
स्थालीपाकमभक्षयन् ॥”
इति तिथ्यादितत्त्वम् ॥
(स्थाल्यां पच्यते इति । पच् + घञ् ।
स्थाली-
कृतपाकविशेषे, चरुविशेषे च पुं । यथा,
महाभारते । ३ । २३२ । ३२ ।
“ये च धर्म्माः कुटुम्बेषु श्वश्वा मे कथिताः
पुरा ।
भिक्षाबलिश्राद्धमिति स्थालीपाकाश्च
पर्व्वसु ॥
मान्यानां मांनसत्कारा ये चान्ये विदिता
मम
तान् सर्व्वाननुवर्त्तामि दिवारात्रमतन्द्रिता
॥”)
मांसाष्टकाश्राद्धे स्थालीपाकस्य मांसप्रति-
निधित्वं यथा, “पश्वभावे स्थालीपाकेन
यथा
गोभिलः । ‘अपि वा स्थालीपाकं कुर्व्वीत
इति ।’ तद्विधानन्तु ।
“स्थालीपाकं पशुस्थाने
कुर्य्याद्यद्यानुकल्पिकम्
श्रपयेत्तं सवत्सायास्तरुण्या गोः पयस्यनु
॥”
इति छन्दोगपरिशिष्टोक्तं ग्राह्यम् । अन्विति
ओदनचरोः पश्चात् ।” इति
तिथ्यादितत्त्वम् ॥
(वैद्यकोक्तस्थालीपाकविधिर्य्यथा, --
अथ स्थालीपाकविधिः ।
“इत्थमादित्यपाकान्ते स्थाल्यां
पाकमुपाचरेत् ।
स्थालीपाके फलग्राह्यमयसस्त्रिगुणीकृतम्
॥
तस्य षोडशिकं तोयमष्टभागावशेषितम् ।
मृदुमध्यकठोराणामन्येषामयसा समम् ॥
क्वथनीयं समादाय चतुरष्टौ च षोडश ।

**स्थालीवृक्षः**, पुं, (स्थालीवत् वृक्षः ।) तरुप्रभेदः ।
वेलियापीपर इति हिन्दी भाषा । तत्पर्य्यायः ।
नन्दीवृक्षः २ अश्वत्थभेदः ३ प्ररोही: ४ गज-
पादपः ५ क्षयतरुः ६ क्षीरी ७ वनस्पतिः ८ ।
अस्य गुणाः । लघुत्वम् । स्वादुत्वम् । तिक्त-
त्वम् । तुवरत्वत् । उष्णत्वम् ।
कटुपाकरसत्वम् ।
ग्राहित्वम् । विषपित्तकफास्रनाशित्वञ्च । इति
भावप्रकाशः ॥

**स्थावरं**, क्ली, (तिष्ठति धनुषीति स्था + वरच् ।)
धनुर्गुणः । इति त्रिकाण्डशेषः ॥

**स्थावरः**, पुं, (तिष्ठतीति । स्था + वरच् । पर्व्वतः ।
इति शब्दरत्नावली त्रिकाण्डशेषश्च ॥

**स्थावरः**, त्रि, (तिष्ठतीति । स्था + “स्थेशभास-
पिसकसो वरच् ।” ३ । २ । १७५ । इति
वरच् ।) जङ्गमेतरः । अचलवस्तु । इत्यमरः ।
३ । १ । ७३ ॥ जङ्गमा गोमक्षिष्यादयः ततो-
ऽन्यो वृक्षादिः स्थावरः । इति भरतः ॥ * ॥
स च ब्रह्मणः सप्तमः सर्गः षड्विधश्च । यथा,
--
“सप्तमो मुख्यसर्गस्तु षड्विधस्तस्थुषाञ्च यः
।
वनस्पत्योषधिलता त्वक्सारो वीरुधो द्रुमाः
॥”
तेषां लक्षणं यथा, --
“उत्स्रोतसस्तमःप्राया अन्तःस्पर्शा विशेषिणः
॥”
इति श्रीभागवतम् ॥
“ये पुष्पं विना फलन्ति ते वनष्पतयः ।
ओषधयः
फलपाकान्ताः । लता आरोहणापेक्षाः ।
त्वक्सारो वेण्वादयः । लता एव काठिन्येन
आरोहणानपेक्षा वीरुधः । ये पुष्पैः फलन्ति ते
द्रुमाः । ऊर्द्ध्वं स्रोत आहारसञ्चारो येषां ते ।
तमःप्रायाः अव्यक्तचैतन्याः । अन्तःस्पर्शाः
स्पर्श-
मेव जानन्ति नान्यत्तदापि अन्तरेव न बहिः ।

भट्टिः । २ । २२ ।
"आयोधने स्थायुकमस्त्रजात-
ममोघमभ्यर्णमहाहवाय ।
ददौ वधाय क्षणदाचराणां
तस्मै मुनिः श्रेयसि जागरूकः ॥")

**स्थालं**, क्ली, (तिष्ठत्यस्मिन् अन्नादिकमिति स्था +
"स्थाचतिमृजेरिति ।" उणा ० १ । ११५ । इति
आलच् ।) हेमादिकृतभोजनपात्रम् । थाल
इति भाषा । इत्यमरः । ३ । ५ । ३२ ॥ स्थलति
तिष्ठति अन्नादिकमत्र स्थालं स्थल ज स्थाने
घञ् । इति भरतः ॥ (अस्थिविशेषः । यथा,
याज्ञवल्क्यः । ३ । ८५ ।
"स्थालैः सह चतुःषष्टिर्द्दण्डा वै विंशतिर्न्नखाः ॥"
"स्थालानि दन्तमूलप्रदेशस्थान्यस्थीनि ।" इति
तत्र मिताक्षरा ॥)

**स्थाली**, स्त्री, (तिष्ठन्त्यत्रान्नादीनीति । स्था +
आलच् । गौरादित्वात् ङीष् । इत्युणादिवृत्तौ
उज्ज्वलः । १ । ११५ ।) पाकपात्रविशेषः ।
हाँडी इति थाली इति च भाषा । तत्पर्य्यायः ।
पिठरः २ उखा ३ कुण्डम् ४ । इत्यमरः । २ ।
९ । ३१ ॥ पिठरी ५ स्थालम् ६ उषा ७ कुण्डी
८ । इति तट्टीका ॥ कुण्डा ९ कुण्ड्यका १० ।
इति शब्दरत्नावली ॥ वाकः ११ पातिली १२ ।
इति जटाधरः ॥ (यथा, हरिवंशे । २६ । ४० ।
गुणानां स्थाप्यते तोयं शेषयेदयसा समम् ॥
स्वरसस्यापि लौहेन स्थालीपाके समानता ।
स्थाल्यां क्वाथादिकं दत्त्वा यथाविधिविनिर्म्मितम्
पाकेन क्षीयते यस्मात् स्थालीपाक इति स्मृतः
हस्तिकर्णपलाशस्य मूलञ्च शतमूलिका ॥
भृङ्गराजाख्यराजानाम्प्रां निजरसैः सह ।
मिलित्वा वा विधातव्यं स्थालीपाके फलादनु ।
यथा दोषौषधेनापि स्थालीपाको विधीयते ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणाधि-
कारे ॥)

**स्थालीपुलाकः**, पुं, (स्थालीस्थः पुलाको भक्त-
गुलिका यत्र ।) न्यायविशेषः । यथा, --
"स्थालीस्थास्तण्डुला एते सर्व्वेविक्लित्तिभागिनः
समकालाग्निसंयोगभागित्वात् प्रतिपन्नवत् ॥"
इति स्थालीपुलाकन्यायेन वैदिकलिङत्वाव-
च्छेदेनापूर्व्वे शक्तिकल्पनात् । प्रतिपन्नं हस्त-
मर्दनादिना स्फुटितत्वेन ज्ञातम् । इति मल-
मासतत्त्वम् ॥

**स्थालीबिलं**, क्ली, (स्थाल्या बिलम् ।) पाकपात्र-
स्याभ्यन्तरम् । स्थाल्याः शून्यभागः । इति
सिद्धान्तकौमुदी ॥

**स्थालीबिलीयः**, त्रि, (स्थालबिलमर्ह्तीति ।
"स्थालीबिलात् ।" ५ । १ । ७० ।
इति छः यच्च ।) पाकयोग्यतण्डुलादिः । यथा,
विशेषिणः अव्यवस्थितपरिणामाद्यनेकभेदवन्तः"
इति तट्टीकायां श्रीधरस्वामी ॥ * ॥ स्थावरधनं
सान्निध्ये तरेभ्यो न विक्रे तव्यम् । यथा, --
"स्थावरं धनमन्यस्मै स्थिते सान्निध्यवर्त्तिनि ।
योग्ये क्रेतरि विक्रेतुं न शक्तः स्थावराधिपः ॥
सान्निध्यवर्त्तिनां ज्ञातिः सवर्णो वा विशिष्यते ।
तयोरभावे सुहृदो विक्रेतिच्छा गरीयसी ।
निर्णीतमूल्ये पण्येन स्थावरस्य क्रयोद्यमे ।
तन्मूल्यञ्चेत् समीपस्थो राति क्रेता न चापरः ॥
मूल्यं दातुमशक्तश्चेत् सम्मतो विक्रयेऽपि वा ।
सन्निधिस्थस्तदान्यस्मैगृही शक्नोति विक्रये ॥
क्रीतञ्चेत् स्थावरं देवि ! परोक्षे प्रतिवासिनः ।
श्रवणादेव तन्मूल्यं दत्त्वासौ प्राप्नुमर्हति ॥
क्रेता तत्र गृहारामान् विनिर्म्माति भुनक्ति वा
मूल्यं दत्त्वापि नाप्नोति स्थावरं सन्निधिस्थितः ॥
इति महानिर्व्वाणतन्त्रे द्वादशोल्लासः ॥
स्थावरे विशेषो यथा, याज्ञवल्क्यः ।
"मणिमुक्ताप्रबालानां सर्व्वस्यैव पिता प्रभुः ।
स्थावरस्य तु सर्व्वस्य न पिता न पितामहः ॥"
अपि च ।
"स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्ज्जितम् ।
असम्भूय सूतान् सर्व्वान् न दानं न च विकयः ॥"

"पूरयित्वाग्निना स्थालीं गन्धर्व्वाश्च तमब्रुवन् ।
अनेनेष्ट्वा च लोकान्नः प्राप्स्यसि त्वं नराधिप ॥")
पाटलावृक्षः । इत्यमरटीका । २ । ४ । ५४ ॥
मेदिनी च ॥

**स्थालीपक्वं** त्रि, (स्थाल्यां पक्वम् ।) स्थाल्यां पक्वान्नादि ॥

स्थालीबिलीयास्तण्डुलाः ।
स्थालीबिल्याः पाक
योग्या इत्यर्थः । इति सिद्धान्तकौमुदी ॥

**स्थालीबिल्यः**, त्रि, (स्थालबिलमर्हतीति ।
"स्थालीबिलात् ।" ५ । १ । ७० ।
इति छः यच्च ।) पाकयोग्यतण्डुलादिः ।
यथा,
स्थालीबिलीयास्तण्डुलाः ।
स्थालीबिल्याः पाक
योग्या इत्यर्थः । इति सिद्धान्तकौमुदी ॥

किञ्च ।
"पितुः प्रसादात् भुज्यन्ते वस्त्राण्याभरणानि च
स्थावरन्तु न भुञ्जीत प्रसादे सति पैतृके ॥"
इति मिताक्षराधृतवचनमपि पितामहधन-
परम् । पित्रा च स्वोपार्जितं स्थावरं दत्तं
भुज्यत एव इति ॥
"स्थावरे विक्रयो नास्ति कुर्य्यादाधिमनुज्ञया ॥"
इति स्थावरस्य केवलविक्रयप्रतिषेधात् विक्रये-
ऽपि कर्त्तव्ये सहिरण्यमुदकं दत्त्वा दानरूपेण
स्थावरविक्रय इतिविज्ञानेश्वरः । वस्तुतस्तु
स्थाव-
रविक्रयनिषेधोऽविभक्तस्थावरविषयः ॥ * ॥
पूर्व्व-
पुरुषार्जितनष्टोद्धारे विशेषयति मिताक्षरायाम् ।
"स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्जितम् ।
असम्भूय सुतान् सर्व्वान् न दानं न च विक्रयः ॥"
अस्याप्यपवादमाह ।
"एकोऽपि स्थावरे कुर्य्यात् दानाधमनविक्रयम्
आपत्काले कुटुम्बार्थे धर्म्मार्थे च विशेषतः ॥"
अनुपभोगे तु सर्व्वस्य क्रीतादेर्हानिर्यथा बृह-
स्पतिः ।
"संविभागक्रयप्राप्तं पित्र्यं लब्धञ्च राजतः ।
स्थावरं सिद्धिमाप्नोति भुक्त्या हानिरुपेक्षया ॥ *
सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकल्पितम्
विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥"
नारदः ।
"भर्त्रा प्रीतेन यद्दत्तंस्त्रियै तस्मिन् मृतेऽपि तत्
सा यथा काममश्नीयात् दद्याद्वा स्थावरादृते ॥"
यमः ।
"अविभक्तं स्थावरं यत् सर्व्वेषामेव तद्भवेत् ।
विभक्तं स्थावरं प्राप्तं नान्योदर्य्यैः कदाचन ॥"
सर्व्वेषां सोदरासोदराणाम् । स्थावरातिरिक्तन्तु
विभक्ताविभक्तसोदराणाम्मेवेत्यर्थतः सिद्धम् ।
तेषां तत्पिण्डदातृत्वेन तन्मातृभोग्यपार्व्वणपि-
ण्डदातृत्वेन चाधिकारात् । इति दायतत्त्वम् ॥ *
(अथातः स्थावरविषविज्ञानीयमध्यापंव्याख्या-
स्यामः ।
"स्थावरञ्जङ्गमञ्चैव द्विविधं विषमुच्यते ।
दशाधिष्ठानमाद्यन्तु द्वितीयं षोडशाश्रयम् ॥

प्रपौण्डरिकमूलकहलाहलमहाविषकर्क्कटका-
नीति त्रयोदश कन्दविषाणि । इत्येवं पञ्च-
पञ्चाशत् स्थावरविषाणि भवन्ति ॥
चत्वारि वत्सनाभानि मुस्तके द्वे प्रकीर्त्तिते ।
षट् चैव सर्षपाण्याहुः शेषाण्येकैकमेव तु ॥
उद्वेष्टनं मूलविषैः प्रलापो मोह एव च ।
जृम्भाङ्गोद्वेष्टनश्वासा ज्ञेयाः पत्रविषेण तु ॥
मुष्कशोफः फलविषैर्द्दाहोऽन्नद्वेष एव च ।
भवेत् पुष्पविषैश्छर्द्दिराध्मानं मोह एव च ॥
त्वक्सारनिर्य्यासविषैरुपयुक्तैर्भवन्ति हि ।
आस्यदौर्गन्ध्यपारुष्यशिरोरुक्कफसंस्रवाः ॥
फेणागमः क्षीरविषे विड्भेदो जिम्भजिह्वता ।
हृत्पीडनं धातुविषैर्म्मूर्च्छा दाहश्च तालुनि ॥
प्रायेण कालघातीनि विषाण्ये तानि निर्द्दिशेत्
कन्दजानि तु तीक्ष्णानि तेषां वक्ष्यामि
विस्तरम्
स्पर्शाज्ञानं कालकूटे वेपथुः स्तम्भ एव च ।
ग्रीवास्तम्भो वत्सनाभे पीतविण्मूत्रनेत्रता ॥
सर्षपे वातवैगुण्यमानाहो ग्रन्थिजन्म च ।
ग्रीवा दौर्व्वल्यवाक्सङ्गौ पलकेऽनुमताविह ॥
प्रसेकः कर्द्दमाख्ये तु विड्भेदो नेत्रपीतता ।
वैराटकेनाङ्गदुःखं शिरोरोगश्च जायते ॥
गात्रस्तम्भो वेपथुश्च जायते मुस्तकेन तु ।
शृङ्गीविषेणाङ्गसाददाहोदरविवृद्धयः ॥
पुण्डरीकेण रक्तत्वमक्ष्णोर्वृद्धिस्तथोदरे ।
वैवर्ण्यं मूलकैश्चर्द्दिहिक्काशोफप्रमूढताः ॥
चिरेणोच्छसिति श्यावो नरो हालाहलेन वै ।
महाविषेण हृदये ग्रन्थिशूलोद्गमौ भृशम् ॥
कर्क्कटैर्नोत्पतत्यूद्र्ध्वं हसन् दन्तान्
दशत्यपि ।
कन्द जान्युग्रवीर्य्याणि प्रयुक्तानि त्रयोदश ॥
सर्व्वाणि कुशलैर्ज्ञेयान्येतानि दशभिर्गुणैः ।
रूक्षमुष्णं तथा तीक्ष्णं सूक्ष्ममाशु व्यवायि च
॥
विकाशि विशदञ्चैव लब्धपाकि च तत स्मृतम्
तद्रौक्ष्यात् कोपयेद्वायुमौष्ण्यात् पित्तं
सशोणि-
तम् ॥
मानसं मोहयेत्तैक्ष्ण्यादङ्गबन्धान् छिनत्त्यपि ।

मूर्च्छन् वमन् गद्गदवाग्विषण्णो
भवेच्च दूष्योदरलिङ्गजुष्टः ॥
आमाशयस्थे कफवातरोगी
पित्ताशयस्थेऽनिलपित्तरोगी ।
भवेन्नरो ध्वस्तशिरोरुहाङ्गो
विलूनपक्षस्तु यथा विहङ्गः ॥
स्थितं रसादिष्वथ वा यथोक्तान्
करोति धातुप्रभवान् विकारान् ।
कोपञ्च शीतानीलदुर्द्दिनेषु
यात्याशु पूर्व्वं शृणु तत्र रूपम् ॥
निद्रा गुरुत्वञ्च विजृम्भणञ्च
विश्लेषहर्षावथवाङ्गमर्द्दः ।
ततः करोत्यन्नमदाविपाका-
वरोचकं मण्डलकोठमोहान् ॥
धातुक्षयं पादकरास्यशोफं
दकोदरं छर्द्दिमथातिसारम् ।
ववर्ण्यमूर्च्छाविषमज्वरान् वा
कुर्य्यात् प्रवृद्धां प्रबलां तृषां वा ।
उन्मादमन्यज्जनयेत्तथाऽन्य-
दानाहमन्यत् क्षपयेच्च शुक्रम् ।
गाद्गद्यमन्यज्जनयेच्च कुष्ठं
तांस्तान् विकारांश्च बहुप्रकारान्
॥
दूषितं देशकालान्नदिवास्वप्नै
रभिक्ष्णशः ।
यस्माद्दूषयते धातून्
तस्माद्दूषीविषं स्मृतम् ॥
स्थावरस्योपयुक्तस्य वेगे तु
प्रथमें नृणाम् ।
श्यावा जिह्वा भवेत् स्तब्धा
मूर्च्छाश्वासश्च जाय
द्वितीये वेपथुः स्वेदो दाहः
कण्डूरुजस्तथा ।
विषमामाशयप्राप्तं कूरुते हृदि
वेदनान् ॥
तालुशोषं तृतीये तु शूलं
चामाशये भृशम् ।
दुर्व्वर्णे हरिते शूने जायेते चास्य
लोचने ॥

मूलं पत्रं फलं पुष्पं त्वक् क्षीरं सार एव च ।
निर्य्यासो धातवश्चैव कन्दश्च दशमः स्मृतः ॥
तत्र क्लीतकाश्वमारगुञ्जासुबन्धगर्गरककरघाट-
विद्युच्छिखाविजयानीत्यष्टौमूलविषाणि । विष-
पत्रिका-लम्बावरदारुककरम्भ-महाकरम्भाणि
पञ्च पत्रविषाणि । कुमुद्वतीवेणुकाकरम्भकहा-
करम्भककर्क्कोटकरेणुकखद्योतकचर्म्मरीभगन्धा-
सर्पधातिनन्दनसारपाकानीतिद्वादश फल-
विषाणि । वेत्रकादम्बवल्लीजकरम्भमहाकर-
म्भाणि पञ्च पुष्पविषाणि । अन्त्रपाचककर्त्तरीय-
सौरीयककरघाटकरम्भनन्दनवराटकानिसप्त-
त्वक्सारनिर्य्यासविषाणिकुमुदघ्नोस्नु हीजाल-
क्षीर्य्याणि त्रीणि क्षीरविषाणि । फेणाश्मभस्म-
हरितालञ्च द्वे धातुविषे । कालकूटवत्सनाभ-
सर्षपकपालककद्दर्मकवैराटकमुस्तकशृङ्गीविष-

शरीरावयवान् सौक्ष्म्यात् प्रविशेद्विकरोति च
॥
आशुत्वादाशु तद्धन्ति व्यवायात् प्रकृतिं
भजेत् ।
क्षपयेच्च विकाशित्वाद्दोषान् धातुमलानपि ॥
वैशद्यादतिरिच्येत दुश्चिकित्स्यञ्च लाघवात्
।
दुर्ज्ज रञ्चाविपाकित्वात्तस्मात्क्लेशयते
चिरम् ॥
स्थावरं जङ्गमं यच्च कृत्रिमं चापि यद्धितम् ।
सद्यो व्यापादयेत्तत्तु ज्ञेयं दशगुणान्वितम् ॥
यत् स्थावरं जङ्गमकृत्रिमं वा
देहादशेषं यदनिर्गतं तत् ।
जीर्णं विषघ्नौषधिभिर्हतं वा
दावाग्निवातातपशोषितं वा ॥
स्वभावतो वा गुणविप्रहीनं
विषं हि दूषीविषतामुपैति ।
वीर्य्याल्पभावान्न निपातयेत्तत्
कफावृतं वर्षगणानुबन्धि ॥
तेनार्द्दितो भिन्नपुराषवर्णो
विगन्धवैरस्यमुखः पिपासी ।

पक्वाशयगते तोदो
हिक्काकासोऽन्त्रकूजनम् ।
चतुर्थे जायते वेगे
शिरसश्चातिगौरवम् ॥
कफप्रसेको वैवर्ण्यं पर्व्वभेदश्च
पञ्चमे ।
सर्व्वदोषप्रकोपश्च पक्वाधाने च
वेदना ॥
षष्ठे प्रज्ञाप्रणाशश्च भृशं
वाप्यतिसार्य्यते ।
स्कन्धपृष्ठकटीभङ्गः
सन्निरोधश्च सप्तमे ॥
प्रथमे विषवेगे तु वान्तं
शीताम्बुसेवितम् ।
अगदं मधुसर्पिर्भ्यां पाययेत
समायुतम् ॥
द्वितीये पूर्व्ववद्वान्तं पाययेत्तु
विरेचनम् ।
तृतीयेऽगदपानन्तु हितं नस्ये
तथाञ्जनम् ॥
चतुर्थे स्नेहसंमिश्रं पाययेतागदं
भिषक् ।
पञ्चमे क्षौद्रमधुकक्वाथयुक्तं
प्रदापयेत् ॥
षष्ठेऽतिसारवत्सिद्धिरवपीडश्च
सप्तमे ।
मूर्द्ध्नि काकपदं कृत्वा
सासृग्वापि शितं क्षिपेत्
वेगान्तरे त्वन्यतमे कृते कर्म्माणि
शीतलाम् ।
यवागूं सघृतक्षौद्रमिमां
दद्याद्विचक्षणः ॥
कोषातक्योऽग्निकः
पाठासूर्य्यवल्ल्यमृताभयाः ।
शिरीषः किणिहीशेलुगिर्य्याह्वा
रजनीद्वयम् ॥
पुनर्णवे हरेणुश्च त्रिकटुः सारिवे
बला ।
एषां यवागूर्निक्वाथे कृता हन्ति
विषद्वयम् ॥

|  |  | मधूकं तगरं कुष्ठं भद्रदारु हरेणवः ।<br>पुन्नागलैलबालूनि नागपुष्पोत्पललं सिता । |
|---|---|---|

विडङ्गं चन्दनं पत्रं प्रियङ्गु ध्यामकं तथा ।
हरिद्रे द्वे बृहत्यौ च सारिवे च स्थिरासहा ॥
कल्कैरेषां घृतं सिद्धमजेयमिति विश्रुतम् ।
विषाणि हन्ति सर्व्वाणि शीघ्रमेवाजितं क्वचित् ॥
दूषीविषार्त्तं सुखिन्नमूर्द्धञ्चाधमश्च शोधितम् ।
पाययेतागदं नित्यमिमं दूषीविषापहम् ॥
पिप्पल्यो ध्यामकं मांसी सावरः परिपेलवम् ।
सुवर्च्चिका ससूक्ष्मैला तोयं कनकगैरिकम् ॥
क्षौद्रयुक्तोऽगदो ह्येष दूषीविषमपोहति ।
एष नाम्ना विषारिस्तु न चान्यत्रापि वार्य्यते ॥
ज्वरे दाहे च हिक्कायामानाहे शुक्रसंक्षये ।
शोफेऽतिसारे मूर्च्छायां हृद्रोगे जठरेऽपि वा ॥
उन्मादे वेपथौ चैव ये चान्ये स्युरुपद्रवाः ।
यथास्वं तेषु कुर्व्वीत विषघ्नै रौषधैः क्रियाम् ॥
साध्यमात्मवतः सद्यो याप्यं संवत्सरोत्थितम् ।
दूषीविषमसाध्यन्तु क्षीणस्याहितसेविनः ॥”
इति सुश्रुते कल्पस्थाने २ अध्यायः ॥)

**स्थावरादि**, क्ली, (स्थावरं आदिः कारणं यस्य ।) वत्सनाभविषम् । इति राजनिर्घण्टः ॥

**स्थाविरं**, क्ली, (स्थविरस्य भावः कर्म्म वा । स्थविर + “हायनान्तयुवादिभ्योऽण् ।” ५ । १ । १३० । इत्यण् ।) स्थविरत्वम् । वृद्धत्वम् । इत्यमरः । २ । ३ । ४० ॥ (यथा, महाभारते । २ । १९९ । ३ ।

**स्थितः**, त्रि, (स्था + क्तः ।) प्रतिज्ञातवान् । (यथा, हरिवंशे । २५५ । ९५ ।
“पक्षीन्द्रवचनं श्रुत्वा दानवेन्द्रोऽब्रवीदिदम् ।
स्थितोऽस्मि समये तस्य अनन्तस्य महात्मनः ॥”)
ऊर्द्ध्वः । निश्चलः । इति मेदिनी ॥ (वर्त्तमानः । गतिनिवृत्तिविशिष्टः । यथा, रघुः । २ । ६ ।
“स्थितः स्थितामुच्चलितः प्रयातां
निषेदुषीमासनबन्धधीरः ।
जलाभिलाषी जलमादधानां
छायेव तां भूपतिरन्वगच्छत् ॥” * ॥
क्ली, स्था + भावे क्तः । अवस्थानम् । कुल-मर्य्यादा । यथा, रामायणे । २ । ३९ । २४ ।
“साध्वीनान्तु स्थितानान्तु शीले सत्ये श्रुते स्थिते
स्त्रीणां पवित्रं परमं पतिरेको विशिष्यते ॥”)

**स्थितप्रज्ञः**, त्रि, (स्थिता प्रतिष्ठिता आत्मा-नात्मविवेकजा प्रज्ञा यस्य ।) मनोगतसर्व्व-वासनारहितः । यथा, श्रीभगवद्गीतायाम् २ । ५५ -- ५६ ।
“प्रजहाति यदा कामान् सर्व्वान् पार्थ ! मनो-गतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥
दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्म्मुनिरुच्यते ॥”

**स्थितप्रेमा**, [न्] पुं, (स्थितं प्रेम यस्य ।) स्थिर-तरबन्धुः । इति केचित् ॥

धववृक्षः । इति भावप्रकाशः ॥ वृषसिंहवृश्चिक-कुम्भराशयः । यथा, --
“क्रूरोऽथ सौम्यः पुरुषोऽङ्गना च
ओजोऽथ युग्मं विषमः समश्च ।
चरस्थिरद्व्यात्मकनामधेया
मेषादयोऽमी क्रमशः प्रदिष्टाः ॥”
इति ज्योतिस्तत्त्वम् ॥ तत्र जातफलं यथा,
“अस्थिरविभूतिमित्रं चलमटनं स्खलितनियम-मपि चरभे
स्थिरभे तद्विपरीतं क्षेमान्वितं दीर्घसूत्रञ्च ॥
द्विशरीरे त्यागयुक्तं कृतज्ञमुत्साहिनं विविध-चेष्टम् ॥”
इति दीपिका ॥ * ॥ स्थिरवस्तूनि यथा । युद्धे प्रधानभटः १ साध्वी २ धर्म्मः ३ अधर्म्मः ४ सन्मनः ५ । अस्थिरवस्तूनि यथा । अबला १ दोला २ अपाङ्गः ३ यौवनम् ४ दुर्जनः ५ स्वामिप्रसादः ६ हस्तिकर्णः ७ स्वर्णम् ८ मत्स्यः ९ कपिः १० श्रीः ११ । इति कविकल्पलता ॥

**स्थिरः**, त्रि, (स्था + किरच् । कठिनः । निश्चलः । इति धरणिः ॥ यथा, --
“अभ्रच्छाया खलैः प्रीतिः परनारीषु सङ्गतिः ॥
पञ्चैते अस्थिरा भावा यौवनानि धनानि च ॥
अस्थीरं जीवितं लोके अस्थिरं धनयौवनम् ।
अस्थिरं पुत्त्रदाराद्यं धर्म्मः कीर्त्तिर्यशः स्थिरम् ॥”
इति गारुडे । ११५ । २५ -- २६ ॥

**स्थिरगन्धः**, पुं, (स्थिरो गन्धो यस्य ।) चम्पकवृक्षः ।

"गार्हस्थेऽथवा बाल्ये यौवने स्थाविरेऽपि वा ।
यथाफलं समश्नाति तथा त्वं कथयस्व मे ॥")
तत्तु सप्ततिवर्षात् परम् यथा, --
"आ षोडशाद्भवेद्बालस्तरुणस्तत उच्यते ।
वृद्धः स्यात् सप्ततेरूर्द्ध्वं वर्षीयान् नवतेः परम् ॥"
इति भरतधृतस्मृतिवचनम् ॥

**स्थासकः**, पुं, चार्च्चिक्यम् । इत्यमरः । २ । ६ । १२२ ॥
जलादेर्व्बुद्बुदम् । इति मेदिनी ॥

**स्थासु**, क्ली, शारीरबलम् । ष्ठाधातोः सुप्रत्ययेन निष्पन्नम् । इति केचित् ॥

**स्थास्नुः**, त्रि, (तिष्ठतीति । स्था + "ग्लाजिस्थश्च क्स्नुः ।" ३ । २ । १३९ । इति स्नुः ।) स्थिरतरः ।
इत्यमरः । ३ । १ । ७३ ॥ (यथा, भट्टिः । २ । ४७ ।
"हिरण्मयी शाललतेव जङ्गमा
च्युता दिवः स्थास्नु रिवाचिरप्रभा ।
शशाङ्ककान्तेरधिदेवताकृतिः
सुता ददे तस्य सुताय मैथिली ॥")
शाश्वतः । इति भरतः ॥ (यथा किराते । २ । १९ ।
"अभिमानधनस्य गत्वरै-
रसुभिः स्थास्नु यशश्चिचीषतः ।
अचिरांशुविलासचञ्चला
ननु लक्ष्मीः फलमानुसङ्गिकम् ॥"
स्थावरः । इति श्रीभागवतटीकायां श्रीधर-
स्वामी । २ । ६ । ४० ॥ (यथा, मनुः । १ । ५६ ।
"यदाणुमात्रिको भूत्वा बीजं स्थास्नु चरिष्णु च ।
समाविशति संसृष्टस्तदा मूर्त्तिं विमुञ्चति ॥"

**स्थिकः**, पुं, कटिप्रोथः । यथा, शब्दरत्नावल्याम् ।

**स्थितिः**, स्त्री, (स्था + क्तिन् ।) न्याय्यपथस्थितिः ।
तत्पर्य्यायः । संस्था २ मर्य्यादा ३ धारणा ४ ।
इति क्षत्त्रियवर्गे अमरः । २ । ८ । २६ ॥
संस्थितिः ५ । इति शब्दरत्नावली ॥ (यथा,
कुमारे । १ । १८ ।
"स मानसों मेरुसखः पितॄणां
कन्यां कुलस्य स्थितये स्थितिज्ञः
मेनां मुनीनामपि माननीया-
मात्मानुरूपां विधिनोपयेमे ॥")
अवस्थानम् । तत्पर्य्यायः । आस्या २ आसना ३ ।
इति सङ्कीर्णवर्गे अमरः । ३ । २ । २१ ॥
(यथा, रघुः । १ । ८९ ।
"प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थिति-
माचरेः ॥")
सीमा । इति मेदिनी ॥ * ॥ (नियमः । यथा,
महाभारते । ३ । १३१ । २० ।
"श्येनः कपोतानत्तीति स्थितिरेषा सनातनी ।
मा राजन् सारमज्ञात्वा
कदलीस्कन्धमासजः ॥")
द्रव्यविशेषे स्थितिनिषेधो यथा, --
"नास्थिभस्मकपालानि न केशान् वा कथञ्चन ।
तुषाङ्गारकविष्ठानामधितिष्ठेत्कदाचन ॥
इति कौर्म्मे उपविभागे । १६ । ७९ ॥

**स्थिरः**, पुं, (तिष्ठतीति । स्था + "अजिरशिशि-
रेति । उणा ० १ । ५४ । इति किरच्प्रत्ययेन
साधुः ।) देवः । पर्व्वतः । कार्त्तिक्यः । वृक्षः ।
इति शब्दरत्नावली ॥ शनिः । मोक्षः । इति
मेदिनी ॥ अनड्वान् । इति राजनिर्घण्टः ॥
इति राजनिर्घण्टः ॥ चिरस्थायिसौरभयुक्ते, त्रि ॥

**स्थिरगन्धा**, स्त्री, (स्थिरो गन्धो यस्याः ।) पाटला ।
केतकी । इति राजनिर्घण्टः ॥

**स्थिरचक्रः**, पुं, (स्थिरं चक्रं यस्य ।) जिनविशेषः ।
तत्पर्य्यायः । मञ्जुश्रीः २ ज्ञानदर्पणः ३ मञ्जु-
भद्रः ४ मञ्जुघोषः ५ कुमारः ६ अष्टारचक्रवान् ७
वज्रधरः ८ प्रज्ञाकायः ९ वादिराट् १० नीलो-
त्पली ११ महाराजः १२ नीलः १३ शार्द्दूल-
वाहनः १४ धियाम्पतिः १५ पूर्व्वजिनः १६
खड्गी १७ दण्डी १८ विभूषणः १९ बाल-
व्रतः २० पञ्चचीरः २१ सिंहकेलिः २२ शिखा-
धरः २३ वागीश्वरः २४ । इति त्रिकाण्डशेषः ॥

**स्थिरच्छदः**, पुं, (स्थिराश्छदा यस्य ।) भूर्ज्जपत्रः ।
इति रत्नमाला ॥

**स्थिरच्छायः**, पुं, (स्थिरा निश्चला च्छाया यस्य ।)
वृक्षमात्रम् । इति शब्दमाला ॥ छायातरुः ।
इति त्रिकाण्डशेषः ॥ (निश्चलच्छायायुक्ते, त्रि ।
यथा, महानिर्व्वाणे । १ । ३ ।
"स्थिरच्छायद्रुमच्छायाच्छादिते
स्निग्धमञ्जुले ॥")

**स्थिरजिह्वः**, पुं, (स्थिरा जिह्वा यस्य ।) मत्स्यः ।
इति हेमचन्द्रः ॥

**स्थिरजीविता**, स्त्री, (स्थिरं बहुकालस्थायि जीवितं
यस्याः ।) शाल्मलिवृक्षः । इति शब्दमाला ॥

| “कटिप्रोथः कटिप्रौथः पुलः स्थिकः<br>स्त्रियां<br>स्फिचा ॥” | | |
|---|---|---|

**स्थिरतरः**, त्रि, (अयमनयोरतिशयेन स्थिरः । स्थिर + तरप् ।) अतिशयस्थिरः । तत्पर्य्यायः । स्थास्नुः २ स्थेयान् ३ । इत्यमरः । ३ । १ । ७३ ॥ दृढतरः ४ । इति शब्दरत्नावली ॥ स्थेयः ५ । अतिस्थिरः ६ स्थेष्ठः ७ । इति हेमचन्द्रः ॥

**स्थिरदंष्ट्रः**, पुं, (स्थिरा दंष्ट्रा यस्य ।) भुजङ्गः । वराहाकृतिविष्णुः इति मेदिनी ॥ ध्वनिः । इत्यजयः ॥

**स्थिरपत्रः**, पुं, (स्थिराणि पत्राणि यस्य ।) हिन्तालः । इति राजनिर्घण्टः ॥

**स्थिरपुष्पः**, पुं, (स्थिराणि पुष्पाणि यस्य ।) चम्पक- वृक्षः । वकुलः । इति राजनिर्घण्टः ॥

**स्थिरपुष्पी**, [न्] पुं, (स्थिरपुष्पमस्यास्तीति । इनिः ।) तिलकवृक्षः । इति राजनिर्घण्टः ॥

**स्थिरफला**, स्त्री, (स्थिरं फलं यस्याः ।) कुष्माण्डी । इति केचित् ॥

**स्थिरमतिः**, स्त्री, (स्थिरा मतिः ।) निश्चला बुद्धिः । यथा, --
"स्थिरमतिं सुमतिं कमनीयतां
कुशलतां हि नृणामुपभोगिताम् ।
वृषगतो हिमगुर्भृशमादिशेत्
सुकृतिनः कृतिनश्च सुखान्यपि ॥"
इति कोष्ठीप्रदीपः ॥
तद्युक्ते, त्रि । स्थिरा मतिर्यस्येति बहुव्रीहि- समासः ॥

**स्थिरयोनिः**, पुं, (स्थिरा योनिरुत्पत्तिर्य्यस्य ।) छायातरुः । इति भूरिप्रयोगः ॥

**स्थिरयौवनः**, पुं, (स्थिरं यौवनं यस्य ।) विद्या-

काकोली । इति जटाधरः ॥ शाल्मलिवृक्षः । इति शब्दचन्द्रिका ॥ स्थैर्य्ययुक्ता स्त्री च ॥

**स्थिराङ्घ्रिपः**, पुं, (स्थिरः अङ्घ्रिपः वृक्षः ।) हिन्तालवृक्षः । इति राजनिर्घण्टः ॥

**स्थिरायुः**, [स्] पुं, (स्थिरं आयुर्यस्य ।) शाल्मलि- वृक्षः । इत्यमरः । २ । ४ । ४६ ॥ चिरजीविनि, त्रि ॥

**स्थुड**, शि वृत्याम् । इति कविकल्पद्रुमः ॥ (तुदा०-कुटा०-पर०-सक० सेट् ।) दन्त्यादिः । शि, स्थुडति अस्थुडीत् तुस्थोड । वृत्यां वरणे । इति दुर्गादासः ॥

**स्थुरी**, [न्] पुं, स्थौरी । इत्यमरटीकायां राय- मुकुटः ॥

**स्थूणा**, स्त्री, (तिष्ठतीति । स्था + "रास्नासास्ना- स्थूणाबीणाः ।" उणा० ३ । १५ । इति नप्रत्य- येन साधुः ।) गृहस्तम्भः । खुँटी इति भाषा ॥ (यथा, साहित्यदर्पणे । ३ । १७२ ।
"वृद्धोऽन्धः पतिरेष मञ्चकगतः स्थूणावशेषं गृहं
कालोऽभ्यर्णजलागमः कुशलिनी वत्सस्य वार्त्तापि नो ।
यत्नात् सञ्चिततैलबिन्दुघटिका भग्नेति पर्य्याकुला
दृष्ट्वा गर्भभरालसां निजबधूं श्वश्रूश्चिरं रोदिति ॥")
शूर्म्मो । लौहप्रतिमा । इत्यमरः । ३ । ३ । ५० ॥

**स्थूमः**, पुं, दीप्तिः । चन्द्रः । इति केचित् ॥

**स्थूरः**, पुं, (तिष्ठतीति । स्था + "स्थः किच्च ।"

**स्थूलं**, क्ली, (स्थूल + अच् ।) कूटम् । समूहः । इति मेदिनी ॥

**स्थूलः**, पुं, (स्थूलत् क ङ वृंहणे + अच् ।) पनसः । इति राजनिर्घण्टः ॥ (विष्णुः । इति महा- भारतम् । १३ । १४९ । १०३ ॥ कन्दविशेषः । रक्तलशुनः । इति केचित् ॥ यथा, सुश्रुते । १ । ४६ । "स्थूलशूरणमाणकप्रभृतयः कन्दा
ईषत्कषायाः कटुका रूक्षा विष्टम्भिनो गुरवः कफवातलाः पित्तहराश्च ।
माणकं स्वादु शीतञ्च गुरु चापि प्रकीर्त्तितम् ।
स्थूलकन्दस्तु नात्युष्णः शूरणो गुदकीलहा ॥")

**स्थूलकः**, पुं, (स्थूल एव । कन् ।) तृणविशेषः । उलु इति भाषा । यथा, रत्नमालायाम् ।
"सूच्यग्रः स्थूलको दर्भो जूर्णाख्यश्च स्वरच्छदः ॥"

**स्थूलकः**, त्रि, (स्थूल + स्वार्थे कन् । यद्वा, स्थूल- प्रकार इति । "स्थूलादिभ्यः प्रकारवचने कन् ।" ५ । ४ । ३ । इति कन् ।) स्थूलः । स्थूलशब्दात् स्वार्थे कप्रत्ययेन निष्पनः ॥

**स्थूलकङ्गुः**, पुं, (स्थूलः कङ्गुः ।) वरकधान्यम् । इति राजनिर्घण्टः ॥

**स्थूलकणा**, स्त्री, (स्थूला कणा यस्याः ।) स्थूल- जीरकः । इति राजनिर्घण्टः ॥

**स्थूलकण्टकः**, पुं, (स्थूलाः कण्टका यस्य ।) जाल- वर्व्वूरः । इति राजनिर्घण्टः ॥

**स्थूलकण्टकिका**, स्त्री, (स्थूलाः कण्टका यस्याः । ततः कापि अत इत्वम् ।) शाल्मलिवृक्षः । इति शब्दचन्द्रिका ॥

धरः । इति त्रिकाण्डशेषः ॥ (स्थिरं यौवन-
मिति । निश्चलयौवने, क्ली । यथा, मार्कण्डेये ।
६० । ३ ।
"तस्य ते वै फलरसं पिबन्तः पुरुषाः सदा ।
स्थिरयौवनसम्पन्नाः स्त्रियश्चोत्पलगन्धिकाः ॥")
चिरस्थायितरुणावस्थे, त्रि ॥ (यथा, विष्णु-
पुराणे । १२१ । ६२ ।
"सत्यभामोत्तमा स्त्रीणां सुभगा स्थिरयौवना ।
जरां न यास्यति बधूर्यावत्त्वं कृष्ण मानुषः ॥")

**स्थिररङ्गा**, स्त्री, (स्थिरो रङ्गो रागो यस्याः ।)

नीली । इति राजनिर्घण्टः ॥

**स्थिररागा**, स्त्री, (स्थिरो रागो यस्याः ।) दारु-

हरिद्रा । इति राजनिर्घण्टः ॥

**स्थिरश्रीः**, त्रि, स्थिरा श्रीर्लक्ष्मीर्यस्य । स्थिर-

लक्ष्मीकः । यथा, तिथ्यादितत्त्वे मत्स्यपुराणम् ।
"स्थिरोपायो हि पुरुषः स्थिरश्रीरेव जायते ।
रक्षितुं नैव शक्नोति चपलश्चपलां श्रियम् ॥"

**स्थिरसाधनकः**, पुं, (स्थिरं साधयतीति । साधि +

ल्यः । ततः कन् ।) सिन्दुवारवृक्षः । इति राजनिर्घण्टः ॥

**स्थिरसारः**, पुं, (स्थिरः सारो यस्य ।) शाक-

वृक्षः । इति राजनिर्घण्टः ॥

**स्थिरा**, स्त्री, (स्था + किरच् । टाप् ।) पृथिवी ।

शालपर्णी । इत्यमरः । २ । १ । २ । २ । ४ । ११५ ॥

उणा० ५ । ४ । इति उरन् ।) वृषः । इति
संक्षिप्तसारोणादिवृत्तिः । मनुष्यः । इति
सिद्धान्तकौमुदी ॥

**स्थूरी**, [न्] पुं, सादृश्येन स्थूरो वृषोऽस्यास्तीति ।

इनिः ।) खरवृषभवत् पृष्ठेन भारवाहकोऽश्वः ।
पृष्ठेन वहति पृष्ठस्थमपि बाह्यमुपचारात् पृष्ठं
तद्वहति वा पृष्ठ्यः ढघे कादिति यः स्थूल्यते
संव्रियते पृष्ठमनया स्थुरा । स्थूल त् क ङ
वृंहणे सेमक्तात् सरोरिति अः निपातनात्
लस्य रत्वं स्थूरा पर्य्ययणं तस्या इदमिति ष्णे
स्थौरं पृष्ठारोपितभारादिकं तदस्त्यस्येति इनि
स्थौरी स्थूरी च स्थौरीति स्वामी । इत्यमर-
टीकायां भरतः ॥

**स्थूल**, त् क ङ वृंहणे । इति कविकल्पद्रुमः ॥

(अदन्तचुरा०-आत्म० अक०-सेट् ।) दीर्घी
ङ, अतुस्थूलत् । वृंहणं वृद्धिः । इति दुर्गादासः

**स्थूलं**, त्रि, (स्थूलयतीति । स्थूल + अच् ।) उप-

चितावयवम् । मोटा इति भाषा । तत्पर्य्यायः ।
पीनम् २ पीवम् ३ पीवरम् ४ । यथा, कुमारे ।
२ । ११ ।
"द्रवः सङ्घातकठिनः स्थूलः सूक्ष्मो लघुर्गुरुः ।
व्यक्तो व्यक्ते तरश्चासि प्राकाम्यं ते विभूतिषु ॥")
जडः । इत्यमरः । ३ । ३ । २०३ ॥ (यथा,
महाभारते । १२ । ३०५ । १६ ।
न यः संसत्सु कथयेत् ग्रन्थार्थं स्थूलबुद्धिमान् ।

**स्थूलकण्टा**, स्त्री, (स्थूलः कण्टो यस्याः ।) बहती ।

इति राजनिर्घण्टः ॥

**स्थूलकन्दः**, पुं, स्थूलः कन्दः ।) रक्तलशुनः ।

(यथा, सुश्रुते । १ । ४६ ।
"स्थूलकन्दस्तु नात्युष्णः शूरणो गुदकीलहा ॥")
शूरणः । हस्तिकन्दः । माणकन्दः । इति राज-
निर्घण्टः ॥

**स्थूलकाष्ठधक्**, [ह्] पुं (स्थूलकाष्ठं दहतीति ।

दह + क्विप् । स्थूलकाष्ठस्य धक् इति वा ।)
बृहत्काष्ठाग्निः । तत्पर्य्यायः । स्कन्धानलः २ ।
इति जटाधरः ॥

**स्थूलकाष्ठाग्निः**, पुं, (स्थूलकाष्ठस्य अग्निः ।) बृहत्-

काष्ठानलः । तत्पर्य्यायः । स्कन्धाग्निः २ । इति
हारावली ॥

**स्थूलक्षेडः**, पुं, । (स्थूलः क्षेडः ।) बाणः । इति

त्रिकाण्डशेषः ॥

**स्थूलचञ्चुः**, पुं, (स्थूला चञ्चुरिव शिखा यस्य ।)

महाचञ्चुशाकः । इति राजनिर्घण्टः ॥

**स्थूलचापः**, पुं, (स्थूलश्चापः ।) तूलपरिष्कारार्थ-

धनुः । इति शब्दरत्नावली ॥ तूलचाप इति साधुपाठः ॥

**स्थूलजीरकः**, पुं, (स्थूलो जीरकः ।) जीरकभेदः ।

कालजिरा इति वङ्गभाषा । मगरेला इति
कलौञ्जी इति च हिन्दीभाषा । तत्पर्य्यायः ।
दिव्या २ उपकुञ्चिका ३ काला ४ पृथ्वी ५

स्थूलकणा ६ पृथुः ७ मनोज्ञा ८ जारणी ९
जीर्णा १० तरुणः ११ सुषुवी १२ कारवी १३
पृथ्वीका १४ । अस्य गुणाः । कटुत्वम् । तिक्त-
त्वम् । उष्णत्वम् । बातगुल्मामदोषश्लेष्माध्मान-
जन्तुनाशित्वम् । जीर्णत्वम् । दीपनत्वञ्च । इति
राजनिर्घण्टः ॥ * ॥
त्रिविधजीरकनामगुणाः ।
"जीरको जरणोऽजाजी कणा स्याद्दीघजीरकः
कृष्णजीरः सुगन्धश्च तथैवाहारशोधनः ॥
कणाजाजी तु सुषवो कालिका चोपकालिका
पृध्वीका कारवी पृध्वी पृथुः कृष्णोपकुञ्चिका ।
उपकुञ्ची च कुञ्ची च बृहज्जीरक इत्यपि ॥
जीरकत्रितयं रूक्षं कटुकं दीपनं लघु ।
संग्राहि पित्तलं मेध्यं गर्भाशयविशुद्धिकृत् ॥
ज्वरघ्नं पाचनं बल्यं वृष्यं रुच्यं कफापहम् ।
चक्षष्यं पवनाध्मानगुल्मच्छर्द्यतिसारहृत् ॥"
इति भावप्रकाशः ॥

**स्थूलतालः**, पुं, (स्थूलस्तालः ।) हिन्तालः ।
इति राजनिर्घण्टः ॥

**स्थूलत्वचा**, स्त्री, (स्थूला त्वक् यस्याः ।) काश्मरी ।
इति राजनिर्घण्टः ॥

**स्थूलदण्डः**, पुं, (स्थूलो दण्डो यस्य ।) देवनलः ।
इति राजनिर्घण्टः ॥

**स्थूलदर्भः**, पुं, (स्थूलो दर्भो यस्य । मुञ्जः । इति
राजनिर्घण्टः ॥

**स्थूलपुष्पी**, स्त्री, (स्थूलं पुष्पं यस्याः । ङीष् ।)
यवतिक्ता । इति राजनिर्घण्टः ॥

**स्थूलफलः**, (स्थूलं फलं यस्य ।) शाल्मलिवृक्षः ।
इति राजनिर्घण्टः ॥

**स्थूलफला**, स्त्री, (स्थूलं फलं यस्याः ।) शण-
पुष्पी । इति राजनिर्घण्टः ॥

**स्थूलभद्रः**, पुं, (स्थूलं प्रचुरमित्यर्थः भद्रं शुभं यस्य ।)
श्रुतकेवलिनामजैनभेदः । इति हेमचन्द्रः ॥

**स्थूलभूतं**, क्ली, (स्थूलं भूतम् ।) पञ्चीकृताकाशा-
दिभूतम् । इति वेदान्तसारः ॥

**स्थूलमरिचं**, क्ली, (स्थूलं मरिचम् ।) कक्कोलम् ।
इति राजनिर्घण्टः ॥

**स्थूलमूलं**, क्ली, (स्थूलं मूलमस्य ।) चाणक्यमूलम् ।
इति राजनिर्घण्टः ॥

**स्थूललक्षः**, त्रि, (स्थूलं प्रचुरं लक्षयति दानार्थ-
मिति । लक्ष + अण् ।) बहुप्रदः । इत्यमर-
टीकायां रायमुकुटः । ३ । १ । ६ ॥ (यथा,
याज्ञवल्क्यः । १ । ३०८ ।
"महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेवकः ।
विनीतः सत्त्वसम्पन्नः कुलीनः सत्यवाक्
शुचिः ॥")

**स्थूललक्ष्यः**, त्रि, (स्थूलं प्रचुरं वस्तु लक्ष्यमस्य ।)

**स्थूलशालिः**, पुं, (स्थूलः शालिः ।) शालिधान्य-
भेदः । तत्पर्य्यायः । महाशालिः २ स्थूलाङ्गः ३
स्थूलतण्डुलः ४ । अस्य गुणाः । स्वादुत्वम् ।
मधुरत्वम् । शिशिरत्वम् । पित्तशमनत्वम् ।
जीर्णज्वर-दाह-जठररुजा-शीघ्र-शमनत्वम् ।
शिशूनां यूनां जरतां च हितकरत्वम् । सदा
सेवनेनानलबलवीर्य्यकारित्वञ्च । इति राज-
निर्घण्टः ॥

**स्थूलशिरः**, [स्] क्ली, (स्थूलं शिरः ।) बृहन्म-
स्तकम् । (स्थूलं शिरो यस्य । मुनिविशेषः ॥
यथा, महाभारते । २ । ४ । ११ ।
"वको दाल्भ्यः स्थूलशिराः कृष्णद्वैपायनः
शुकः ॥")
स्थूलमस्तकयुक्ते, त्रि । इति केचित् ॥

**स्थूलशीर्षिका**, स्त्री, शरीरापेक्षया स्थूलं शीर्ष-
मस्याः स्थूलशीर्षा स्वार्थे के स्थूलशीर्षिका ॥
क्षुद्रपिपीलिका । इति हेमचन्द्रः ॥ बृहन्मस्तके,
त्रि ॥

**स्थूलषट्पदः**, पुं, (स्थूलः षट्पदः ।) वरेलः ।
इति भूरिप्रयोगः ॥ वोलता इति भाषा ॥

**स्थूलस्कन्धः**, पुं, (स्थूलः स्कन्धो यस्य ।) लकुचः ।
इति राजनिर्घण्टः ॥

**स्थूलहस्तः**, पुं, (स्थूलो हस्तः ।) हस्तिशुण्डम् ।
इति त्रिकाण्डशेषः ॥ (यथा, मेघदूते । १४ ।
"स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुखः स्व
दिङ्नागानां पथि परिहरन् स्थूलहस्ताव-
लेपान् ॥"
स्थूलौ हस्तौ यस्येति ।) पीनभुजे, त्रि ॥

**स्थूला**, स्त्री, (स्थूल + टाप् ।) गजपिप्पली । इति
शब्दचन्द्रिका ॥ एर्व्वारुः । इति राजनिर्घण्टः ॥
बृहदेला । इति रत्नमाला ॥

**स्थूलांशा**, स्त्री, (स्थूलोऽंशो यस्याः ।) गन्धपत्रा ।
इति राजनिर्घण्टः ॥

**स्थूलाम्रः**, पुं, (स्थूलः आम्रः ।) महाराजचूतः ।

**स्थूलदला**, स्त्री, (स्थूलं दलं यस्याः ।) गृह-

कन्या । इति राजनिर्घण्टः ॥

**स्थूलनालः**, पुं, (स्थूलो नालः देवनलः । इति

राजनिर्घण्टः ॥

**स्थूलनासः**, पुं, (स्थूला नासा यस्य ।) सूकरः ।

इति हेमचन्द्रः ॥

**स्थूलनासिकः**, पुं, (स्थूला नासिका यस्य । "अञ्ना-

सिकायाः संज्ञायां नसं चास्थूलात् ।" ५ । ४ ।
११८ । इत्यत्र स्थूलवर्ज्जनात् न नसादेशः ।)
शूकरः । इति त्रिकाण्डशेषः ॥ पीननासायुक्ते,
त्रि ॥

**स्थूलपटः**, त्रि, (स्थूलः पटो यस्य । पीवरवस्त्र-

युक्तः । यथा, --
"ह्रस्वगृहाः स्थूलपटा यवगोधूमशालिनः ।
प्रलयेऽपि न सीदन्ति यदि कन्या न विद्यते ॥"
इति पुराणम् ॥
(स्थूलवस्त्रे, पुं क्ली ॥)

**स्थूलपट्टः**, पुं, स्थूलः पट्टः कौषेय इव ।) कार्पासः ।

इति शब्दरत्नावली ॥

**स्थूलपट्टाकः**, (पुं, स्थूलपट्टं कार्पासं अकति

प्राप्नोति कारणत्वेनेति । अक गतौ + अण् ।)
स्थूलवस्त्रम् । इति शब्दरत्नावली ॥

**स्थूलपादः**, पुं, (स्थूलः पादो यस्य ।) हस्ती । इति

शब्दमाला ॥ श्लीपदी च ॥

**स्थूलपुष्पः**, पुं, (स्थूलं पुष्पमस्य ।) वकवृक्षः । इति

रत्नमाला ॥ झण्टुक्षुपः । इति
राजनिर्घण्ठः ॥

**स्थूलपुष्पा**, स्त्री, (स्थूलं पुष्पं यस्याः ।) पर्व्वत-

जातापराजिता । इति रत्नमाला ॥

बहुप्रदः । इत्यमरः । ३ । १ । ६ ॥ (यथा,
महाभारते । ३ । ४५ । ११ ।
"अकत्थनो मानयिता स्थूललक्ष्यः प्रियंवदः ।
सुहृदश्चान्नपानेन विविधेनाभिवर्षति ॥")

**स्थूलवर्त्मकृत्**, पुं, (स्थूलस्य वर्त्मनः कृत् कारकः ।)

ब्राह्मणयष्टिका । इति शब्दचन्द्रिका ॥

**स्थूलवल्कलः**, पुं, (स्थूलं वल्कलं यस्य ।) रक्त-

लोध्रः । इति जटाधरः ॥

**स्थूलवृक्षफलः**, पुं, (स्थूलं वृक्षफलं यस्य ।) स्निग्ध-

पिण्डीतकः । इति राजनिर्घण्टः ॥

**स्थूलवैदेही**, स्त्री, (स्थूला वैदेही विदेहभवा

च ।) गजपिप्पली । इति
राजनिर्घण्टः ॥

**स्थूलशरः**, पुं, (स्थूलः शरः ।) शरविशेषः ।

मोटा शर इति भाषा । तत्पर्य्यायः । महा-
शरः २ स्थूलशायकः ३ इक्षुरकः ४ क्षुरपत्रः ५
बहुमूलः ६ दीर्घमूलकः ७ । अस्य गुणाः ।
मधुरत्वम् । सुतिक्तत्वम् । कोष्णत्वम् । कफ-
भ्रान्तिमदापहरत्वम् । बलवीर्य्यकारित्वम् ।
नित्यं सेवितश्चेत् किञ्चिद्वातकरत्वञ्च । इति
राजनिर्घण्टः ॥

**स्थूलशाटकः**, पुं, (स्थूलः शाटकः ।) पीनवस्त्रम् ।

माटा कापड इति भाषा । तत्पर्य्यायः ।

इति राजनिर्घण्टः ॥

**स्थूलास्यः**, पुं, (स्थूलं आस्यं यस्य ।) सर्पः । इति

शब्दचन्द्रिका ॥ बृहन्मुखे, त्रि ॥

**स्थूली**, [न्] पुं, (स्थूलं शरीरमस्यास्तीति ।

इनिः ।) उष्ट्रः । इति केचित् ॥

**स्थूलैरण्डः**, पुं, (स्थूल एरण्डः ।) बृहदेरण्डवृक्षः ।

तत्पर्य्यायः । महैरण्डः २ महापञ्चाङ्गलः ३ ।
अस्य गुणाः ।
"स्थूलैरण्डो गुणाढ्यः स्याद्रसवीर्य्यविपक्तिषु ॥"
इति राजनिर्घण्टः ॥

**स्थूलैला**, स्त्री, (स्थूला एला ।) एलाविशेषः ।

वड एलाचि इति भाषा । तत्पर्य्यायः । बृह-
देला २ त्रिपुटा ३ त्रिदिवोद्भवाः ४ सुरभी-
त्वक् ५ महैला ६ पृथ्वी ७ कन्या ८ कुमारिका ९
कायस्था १० गोपुटा ११ भद्रैला १२ कान्ता १३
घृताचीगर्भसम्भवा १४ इन्द्राणी १५ दिव्य-
गन्धा १६ ऐन्द्री १७ । एलाद्वयगुणाः । शीतल-
त्वम् । तिक्तत्वम् । उष्णत्वम् । सुगन्धित्वम् ।

वराशिः २ । इत्यमरः । २ । ६ ।

११६ ॥

वरासिः ३ । इति जटाधरः ॥

**स्थूलशाटका**, स्त्री, स्थूलवस्त्रम् । इत्यमरटीका ।

२ । ६ । ११६ ॥

**स्थूलशाटिका**, स्त्री, (स्थूला शाटिका ।) स्थूल-

वस्त्रम् । इत्यमरटीका । २ । ६ ।

११६ ॥

**स्थूलशाटिः**, पुं, (स्थूलः शाटिः ।) वराशिः । इति

हेमचन्द्रः ॥

पित्तार्त्तिकफापहत्वम् । हृद्रोगमलार्त्तिवस्ति-
कारित्वम् । पुंस्त्वनाशित्वम् । अत्र स्थविराया
गुणाढ्यत्वञ्च ॥ स्थूलैलागुणाः । रोचनत्वम् ।
तीक्ष्णत्वम् । लघुत्वम् । उष्णत्वम् । कफपित्त-
हृल्लासविषवस्त्यास्यशिरोरुग्वमिकासनाशि
त्वञ्च । इति राजनिर्घण्टः ॥

**स्थूलोच्चयः**, पुं, (स्थूलानामुच्चयो यत्र ।) गण्डो-
पलः । गजानां मध्यमगतिः । (यथा, माघे ।
१२ । १६ ।
स्थूलोच्चयेनागमदन्तिकागतां
गजोऽग्रयाताग्रकरः करेणुकाम् ॥”)
असाकल्यम् । वरण्डः । इति मेदिनी ॥ हस्ति-
दन्तरन्ध्रम् । इति शब्दमाला ॥

**स्थेयः**, पुं, (तिष्ठति विवादनिर्णयार्थमस्मिन्निति ।
स्था + यत् ।) विवादपक्षस्य निर्णेता । (यथा,
राजतरङ्गिण्याम् । ६ । १३ ।
“कार्त्तान्तिको भिषक् सभ्यो गुरुर्मन्त्री
पुरोहितः
दूतः स्थेयो लेखको वा न तदाभूदपण्डितः
॥”)
पुरोहितः । इति मेदिनी ॥ स्थिरतरे, त्रि । इति
हेमचन्द्रः ॥ (क्ली, स्था + भावे यत् । स्थात-
व्यम् । यथा, हरिवंशे । ९५ । ७ ।
“बलिनः सन्निकर्षे तु न स्थेयं पण्डितेन वै ।
अपक्रामेद्धि कालज्ञः समर्थो युद्धमावहेत् ॥”)

**स्थेयान्** [स्] त्रि, (अयमनयोरतिशयेन स्थिरः ।
स्थिर + इयसुन् । “प्रियस्थिरेति ।” ६ । ४ ।
१५७ । इति स्थादेशः ।) स्थिरतरः । इत्यमरः
।
३ । १ । ७३ ॥ (यथा, महागणपतिस्तोत्रे ।
१५ ।
“श्रेयः स्थेयः स देयान मम विमलदृशो बन्धुरं
सिन्धुरास्यः ॥”)
शाश्वतः । इति भरतः ॥

**स्थेष्ठः**, त्रि, (अयमेषामतिशयेन स्थिरः । स्थिर +
इष्ठन् । प्रियस्थिरेति । ६ । ४ । १५७ । इति
स्थादेशः ।) अतिस्थिरः । इति हेमचन्द्रः ॥

स्थौणेयकं कटु स्वादु तिक्तं स्निग्धं त्रिदोषनुत्
मेधाशुक्रकरं त्वच्यं रक्षोऽश्रीज्वरजन्तुजित् ॥
हन्ति कुष्ठास्रतृड्दाहदौर्गन्ध्यतिलकालकान्
॥”
अथ ग्रन्थिपर्णस्यैव भेदो भण्डिउर इति
नेपाल-
देशे भवति ।
“निशाचरो धनहरः कितवो गणहासकः ।
रोचको मधुरस्तिक्तः कटुः पाके कटुर्लघुः ॥
तीक्ष्णो हृद्यो हिमो हन्ति कुष्ठकण्डूकफा-
निलान् ।
रक्षोऽश्रीस्वेदमेदोऽस्रज्वरगन्धविषव्रणान् ॥”
इति भावप्रकाशः ॥

**स्थौणेयकं**, क्ली, (स्थौणेयमेव । स्वार्थे कन् ।)
सुगन्धद्रव्यभेदः । थुनिरा इति हिन्दी भाषा ।
तत्पर्य्यायः । बर्हिशिखम् २ शुकच्छदम् ३
मयूरचूडम् ४ शुकपुच्छकम् ५ विकीर्णरोम ६
कीरवणकम् ७ विकीर्णसंज्ञम् ८ हरितम् ९ ।
अस्य गुणाः । कफवातनाशित्वम् । सुगन्धि-
त्वम् । कटुत्वम् । तिक्तत्वम् । पित्तप्रकोपशम-
नत्वम् । बलपुष्टिविवर्द्धनत्वञ्च । इति राज-
निर्घण्टः । भावप्रकाशोक्तगुणपर्य्यायौ
पूर्व्वोक्त-
शब्दे द्रष्टव्यौ ॥

**स्थौरी**, [न्] पुं, खरवृषभवत् पृष्ठेन भारवाहको-
ऽश्वः । तत्पर्य्यायः । पृष्ठ्यः २ । इत्यमरः २
। ८ ।
४६ ॥ द्वे खरवृषभवत् पृष्ठेन भारवाहकेऽश्वे ।
पृष्ठेन वहति पृष्ठस्थमपि बाह्यमुपचारात् तद्व-
हति वा पृष्ठ्यः ढघे कादिति यः । स्थूल्यते
संव्रियते पृष्ठमनया स्थूरा स्थूलत् क ङ बृंहणे-
सेमक्तात् सरोरिति अः निपातनात् लस्य रत्वं
स्थूरा पर्य्ययणं तस्या इदमितिष्णे स्थौरं पृष्ठा
रोपितभारादिकं तदस्त्यस्येति इनि स्थौरी
स्थूरी च स्थौरीति स्वामी । इति भरतः ॥

**स्थौलशीर्षं**, त्रि, (स्थूलशिरस इदमिति । स्थूल-

अस्नातस्य क्रियाः सर्व्वा भवन्ति
हि यतोऽफलाः
प्रातः समाचरेत् स्नानमतो
नित्यमतन्द्रितः ॥”
इति प्रायश्चित्ततत्त्वम् ॥

**स्नातकः**, पुं, (स्नात एव । स्ना +
“यावादिभ्यः
कन् ।” ५ । ४ । २९ । इति स्वार्थे
कन् ।)
आप्लुतव्रती । इत्यमरः । २ । ७ ।
४३ ॥ द्वे
समाप्तवेदाध्ययने स्नानशीले
स्नातं स्नानं शील-
मस्य । स्नातकः विकारसंघेति कः
। आप्लुतं
स्नानं तत्र व्रती नित्यस्नायी । स्ना
प्लुत्यां भावे
क्तः आप्लवव्रतीति क्वचित् पाठः
। ब्रह्मचर्य्यं
त्यक्त्वा यो गृहाश्रमं गतः स
स्नातकः । समाप्त-
वेदाध्ययनो यः स्नानशीलः
आश्रमान्तरं न गतः
सोऽपि स्नातकः ।
स्नातकस्त्रिविधः । ब्रह्मचर्य्या-
चरणस्य यः शास्त्रबोधितोऽवधिः ।
तावद्वेद-
मुपास्यासमाप्तवेद एवाश्रमान्तरं
गतो यः स
व्रतस्नातकः ।
वेदमधीत्यगुरुसन्निधौ वेदाभ्यासं
यः करोति स विद्यास्नातकः ।
पालितसम्यग्-
व्रतः प्राप्तवेदो यो द्वितीयाश्रमं गतः
स उभय-
स्नातकः । इति टीकान्तरे । इति
भरतः ॥

**स्नानं**, क्ली, (स्ना + ल्युट् ।) मज्जनम् ।
अव-

**स्थैर्य्यं**, क्ली, (स्थिरस्य भावः । स्थिर + ष्यञ् ।)

स्थिरत्वम् । गर्भस्थस्याङ्गानां स्थैर्य्यं चतुर्थे मासि
भवति । इति सुखबोधः ॥ (यथा, याज्ञवल्क्यः ।
३ । ८० ।
“स्थैर्य्यं चतुर्थे त्वङ्गानां पञ्चमे शोणितोद्भवः ।
षष्ठे बलस्य वर्णस्य नखरोम्नाञ्च सम्भवः ॥” * ॥
दृढता । यथा, महाभारते । ६ । १३ । ८ ।
“महेन्द्रसदृशः शौर्य्ये स्थैर्य्ये च हिमवानिव ।
समुद्र इव गाम्भीर्य्ये सहिष्णुत्वे धरासमः ॥”)

**स्थौरी**, [न्] पुं, भारवाहकाश्वः । इति भरत-

द्विरूपकोषः ॥

**स्थौणेयं**, क्ली, (स्थूणायां भवम् । स्थूणा + ढक् ।)

ग्रन्थिपर्णनामकगन्धद्रव्यम् । इत्यमरः । २ । ४ ।
१३२ ॥ गाँठियाला इति भाषा ॥ अथ ग्रन्थि-
पर्णस्यैव भेदः । इषतसुगन्धि स्थौणेयं थुनेर
इति लोके ।
“स्थौणेयकं बर्हिबर्हं शुकबर्हञ्च कुक्कुरम् ।
शीर्णं रोम शुकं चापि शुकपुष्पं शुकच्छदम् ॥

शिरस् + अण् । “अचि शीर्षः ।” ६ । १ । ६२ ।
इति शीर्षदिशः ।) बृहन्मस्तकसम्बन्धि । इति
काशिका ॥

**स्थौल्यं**, त्रि, (स्थूलस्य भावः । स्थूल + ष्यञ् ।)

स्थूलता । (यथा, भागवते । ३ । ११ । ३ ।
“एवं कालोऽप्यनुमितः सौक्ष्म्ये स्थौल्ये च
सत्तम ॥”)

**स्नपनं**, क्ली, (स्ना + णिच् + ल्युट् ।) स्नानम् ।

यथा, दुर्गोत्सवप्रकरणे तिथ्यादितत्त्वे ।
“पूजनात् स्नपनं श्रेष्ठं स्नपनात्तर्पणं स्मृतम् ।
तपंणान्मांसदानन्तु महिषाजनिपातनम् ॥”

**स्नपितः**, त्रि, (स्ना + णिच् + क्तः ।) कृतस्नानः ।

(यथा, गीतगोविन्दे । १२ । १ ।
“गतवति सखीवृन्दे मन्दत्रपाभरनिर्भर-
स्मरशरवशाकूतस्फीतस्मितस्नपिताधराम्
॥”)

**स्नवः**, पुं, (स्नुप्रस्रवणे + “ऋदोरप् ।” इत्यप् ।)

स्रवणम् । क्षरणम् । इत्यमरः । ३ । २ । ९ ॥

**स्नसा**, स्त्री, स्नायुः । इति हेमचन्द्रः ॥

**स्नातः**, त्रि, (स्ना + क्तः ।) कृतस्नानः । यथा, --

म्नातोऽधिकारी भवति दैवे पैत्रे च कर्म्मणि

गाहनम् । तत्पर्य्यायिः । आप्लावः
२ आप्लवः ३ ।
इत्यमरः । २ । ६ । १२१ ॥
अभिषेकः ४ इति
शब्दरत्नावली ॥ उपस्पर्शनम् ५
सवनम् ६ सर्ज-
नम् ७ । इति जटाधरः ॥
तदनुकल्पः सप्त-
विधः । मान्त्रम् १ भौमम् २
आग्नेयम् ३ वाय-
व्यम् ४ दिव्यम् ५ वारुणम् ६
मानसम् ७ ।
एतेषां विवरणं पश्चात्
स्फुटीभविष्यति ॥ * ॥
अस्य गुणाः ।
“स्नानं पवित्रमायुष्यं
श्रमस्वेदमलापहम् ।
शरीरबलसन्धानं केश्यमोजस्करं
परम् ॥
उष्णाम्बुनाधःकायस्य परिषेको
बलावहः ।
तेनैव तूत्तमाङ्गस्य बलकृत्
केशचक्षुषोः ॥
विनिहन्ति शिरः स्नानं
तृष्णाताल्वास्यशोष-
णम् ।
मलोष्णपीडकाकण्डं शिरोरोगांश्च
पैत्तिकान् ॥
मधुकामलकैः स्नानं पित्तघ्नं
तिमिरापहम् ।
स्नानं वचाघनैरिष्टं श्लेष्मघ्नं
तिमिरापहम् ॥
स्नानं कृष्णतिलैश्चापि
चक्षुष्यमनिलापहम् ।
अस्नातस्य शरीरस्य उष्मा
सर्व्वाङ्गगोचरः ॥
स्नानेनैकत्वमायाति तेन दीप्यति
पावकः ।
स्नानमर्द्दि
तनेत्रास्यकर्णरोगातिसारिषु ॥

| | | |
|---|---|---|
| | | आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितम् ।<br>दौर्गन्ध्यं गौरवं कण्डूं कच्छुं मलमरोचकम् ।<br>स्वेदं वीभत्सतां हन्ति शरीरपरिमार्ज्जनम् ॥"<br>इति राजवल्लभः ॥ * ॥<br>अथ स्नानविधिः । दक्षः ।<br>"चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत् ।<br>तिलपुष्पकुशादीनि स्नानञ्चाकृत्रिमे जले ॥"<br>कुर्य्यादिति शेषः । तथा च ।<br>"अस्नात्वा चाप्यहुत्वा च भुङ्क्तेऽदत्त्वा च यो नरः ।<br>देवादीनामृणी भूत्वा नरकं प्रतिपद्यते ॥" * ॥ |

अथ स्नानम् । दक्षः ।
"अस्नात्वा नाचरेत् कर्म्म
जपहोमादि किञ्चन ।
लालास्वेदसमाकीर्णः
शयनादुत्थितः पुमान् ॥
अत्यन्तमलिनः कायो
नवच्छिद्रसमन्वितः ।
स्रवत्येव दिवारात्रौ प्रातःस्नानं
विशोधनम् ॥
प्रातःस्नानं प्रशंसन्ति
दृष्टादृष्टफलं हि तत् ।
सर्व्वमर्हति पूतात्मा
प्रातःस्नायी जपादिकम् ॥
अज्ञानात् यदि वा मोहात् रात्रौ
दुश्चरितं
कृतम् ।
प्रातःस्नानेन तत् सर्व्वं
शोधयन्ति द्विजातयः ॥"
दृष्टं मलापकर्षादि अदृष्टं
प्रत्यवायपरीहारादि ॥
प्रातः सूर्य्योदयात् प्राक्कालः ।
प्रातःस्नाय्यरुण-
किरणग्रस्तां प्राचीमवलोक्य
स्नायात् । इति
विष्णूक्तेः ॥ * ॥ प्रातःस्नाने
मध्याह्नस्नान-
धर्म्मातिदेशमाह कात्यायनः ।
"यथाहनि तथा प्रातर्नित्यं
स्नायादनातुरः ।
दन्तान् प्रक्षल्य नद्यादौ गेहे
चेत्तदमन्त्रवत् ॥"
यथा तथेतिकर्त्तव्यतया । सा
च ।
"आचरेदुषसि स्नानं तर्पयेत्
देवमानुषान् ।"
इति जावाल्युक्ता ॥
वैदिके कर्म्मणि वामहस्ते
बहुतरकुशान् दक्षि-
विधानात् स्नाने द्विवासस एवाधिकारः प्रतीयते ॥ * ॥ एकवस्त्रस्नाने दोषमाह समुद्रकरकृतभाष्ये गोतमः ।
"एकवस्त्रेण यत् स्नानं सूच्या विद्धेन चैव हि ।
स्नातस्तु न भवेत् शुद्धः श्रिया च परिहीयते ॥"
अतएव ।
"स्नानं तर्पणपर्य्यन्तं कुर्य्यादेकेन वाससा ।"
इति ॥
यदि समूलं तदा प्रेततर्पणपरमिति । अत्रैकवस्त्रा ज्ञातय इत्यादिना एकवस्त्रत्वविधानात् ।
एकेन एकजातीयेन इति वाचस्पतिमिश्रः ॥
येन वाससा स्नानं कृतं जलस्थस्य तेनैव
तर्पणम् । इति कृत्यतत्त्वार्णवः ॥ न च ।
"स्नानशाट्यान्तु दातव्या मृदस्तिस्रो विशुद्धये ।
जलमध्ये तु यः कश्चित् द्विजातिर्ज्ञानदुर्ब्बलः ।
निष्पीडयति तद्वस्त्रं स्नानं तस्य वृथा भवेत् ॥"
स्नानशाठ्यामिति तद्वस्त्रमिति एकवचननिर्द्देशेन च स्नानेऽप्येकवस्त्रत्वमिति वाच्यं अत्र
विशुद्धये इत्यभिधानेनाधोधृतवस्त्रस्यैव मृत्रयेण
प्रक्षालनं न तूत्तरीयस्य एतदर्थमेकवचनम् ।
अत एव मृत्त्रयेणाधरीयवस्त्रं प्रक्षाल्य इत्याह्निकचिन्तामणिः ॥ वशिष्ठवचनस्यैकवाक्यतया
स्नातो नाङ्गानि निर्मज्यात् स्नानशाट्या न
पाणिना । इति विष्णुपुराणीयेनाधरीयवस्त्रेणैव
गात्रमार्जनं निषिध्यते । एतेन निष्पीड्य स्नानवस्त्रमिति कात्यायनवचने एकत्वमविवक्षितमिति निरस्तम् । अतएव सर्व्वत्रैकत्वनिर्देशः ।
शिष्टानामाचारोऽपि तथेति ॥ * ॥ नाजस्रमिति पुनः पुनः स्नाननिषेधः रागप्राप्तस्नानविषयो दृष्टार्थकत्वात् । एवञ्चैकस्मिन् दिने
नानातीर्थादिनिमित्तप्राप्तस्नानावृत्तिर्भवत्येव
वैधत्वात् । अत्रापि तन्त्रप्रसङ्गयोः सत्त्वे सकृदेवेति ॥ * ॥ आतुरं प्रति जावालः ।
"अशिरस्कं भवेत् स्नानं स्नानाशक्तौ तु
कर्म्मिणाम् ।
आर्द्रेण वाससा वापि दैहिकं मार्जनं स्मृतम् ॥"
कर्म्मिणाम् ।
"शिरस्नातस्तु कुर्ब्बीत दैवं पैत्रमथापि वा ।"
इति मार्कण्डेयपुराणोक्तकर्म्मचिकीर्षूणां मार्जन-
कालदोषादसामर्थ्यात् न शक्नोति यदाम्भसि ।
तदा ज्ञात्वा तु ऋषिभिर्मन्त्रैर्जुष्टन्तु मार्जनम् ॥
शन्न आपस्तु द्रुपदा आपोहिष्ठाघमर्षणम् ।
एभिश्चतुर्भिरृङ्मात्रैर्मन्त्रस्नानमुदाहृतम् ॥"
इति योगियाज्ञवल्क्यीयं यन्मन्त्रस्नानान्तरं तत्
प्राधान्यख्यापनाय अतएव पितृदयितायां
सन्ध्यातः पूर्व्वं तल्लिखितम् । मृदालम्बस्तु
गङ्गादिमृत्तिकातिलकरूपः । भस्मना संस्कृतभस्मना इति छन्दोगाह्निकः । अवगाह्यं
मन्त्राद्यङ्गशून्यावगाहनमात्रंविवक्षितं अतो
मुख्यावगाहनरूपस्नानानुकल्पत्वमप्युक्तम् ।
कालदोषोऽतिवृष्ट्यादिः । असामर्थ्यं शरीरापाटवहेतुः । जलस्य स्वल्पत्वे न सम्पूर्णवारुणस्नानविधिकालायोग्यत्वंवेति । एतन्मूलकं
गेहे चेत्तदमन्त्रवदिति छन्दोगपरिशिष्टीयं
पूर्व्वोक्तं अन्यथा मूलभूतश्रुत्यन्तरकल्पनापत्तेः
॥
सामर्थ्ये तूद्धृतजलेनापि ससन्त्रकस्नानमाह
पराशरभाष्ये व्यासः ।
"शीतास्त्वपो निषेव्योष्णा
मन्त्रसम्भारसंस्कृताः
गेहेऽपि शस्यते स्नानं तद्धीनमफलं स्मृतम् ॥"
पद्मपुराणम् ।
"नैर्मल्यं भावशुद्धिश्च विना स्नानं न जायते ।
तस्मान्मनोविशुद्ध्यर्थं स्नानमादौ विधीयते ।
अनुद्धृतैरुद्धृतैर्व्वा जलैः स्नानं सदाचरेत् ।
तीर्थं प्रकल्पयेद्विद्वान् मूलमन्त्रेण मन्त्रवित् ॥
नमो नारायणायेति मूलमन्त्र उदाहृतः ।
दर्भपाणिस्तु विधिना आचान्तः प्रयतः शुचिः ॥
चतुर्हस्तसमायुक्तं चतुरस्रं समन्ततः ।
प्रकल्प्यावाहयेद्गङ्गां एभिर्मन्त्रैर्विचक्षणः ॥
विष्णोः पादप्रसूतासि वैष्णवी विष्णुपूजिता ।
पाहि नस्त्वे नसस्तस्मादाजन्ममरणान्तिकात्
॥
तिस्नः कोट्योऽर्द्धकोटी च तीर्थानां वायुरब्रवीत्
दिवि भुव्यन्तरीक्षे च तानि ते सन्ति जाह्नवि ॥
नन्दिनीत्येव ते नाम देवेषु नलिनीति च ।
वृन्दा पृथ्वी च सुभगा विश्वकायांशिवा सिता ॥
विद्याधरी सुप्रसन्ना तथा लोकप्रसादिनी ।

णेन पवित्रं धारयेत् ।
मार्कण्डेयः ।
“सर्व्वकालं तिलैः स्नानं पुण्यं व्यासोऽब्रबीन्मुनिः
श्रीकामः सर्व्वदा स्नानं कुर्व्वीतामलकैर्न्नरः ।
सप्तमों नवमीञ्चैव पर्व्वकालञ्च वर्ज्जयेत् ॥” * ॥
विष्णुधर्म्मोत्तरे ।
“त्वराक्रोधौ तथा वर्ज्जौ देवकर्म्मणि पण्डितैः ।
इक्षुरापः पयश्चैव ताम्बूलं फलमौषधम् ।
भक्षयित्वा तु कर्त्तव्याः स्नानदानादिकाः क्रियाः ॥”
भविष्योत्तरे ।
“स्नातुस्तु वरुणस्तेजो जुह्वतोऽग्निः श्रियं हरेत्
भुञ्जानस्य यमस्त्वायुस्तस्मान्न व्याहरेत्त्रिषु ॥”
स्नातुः स्नानं कुर्व्वतः । न व्याहरेत् न कथयेत् ॥
अशुचेरवगाहनानन्तरं स्नानमाह योगियाज्ञ-वल्क्यः ।
“तूष्णीमेवावगाहेत यदा स्यादशुचिर्न्नरः ।
आचम्य तु ततः पश्चात् स्नानं विधिवदाचरेत् ॥”
वामनपुराणम् ।
“नाभिमात्रजले गत्वा कृत्वा केशान् द्विधा द्विजः ।
निरुध्य कर्णौ नासाञ्च त्रिकृत्वो मज्जनं ततः ॥”
तत्रैव वृद्धयाज्ञवल्क्यः ।
“स्रोतसां संमुखो मज्जेत् यत्रापः प्रवहन्ति वै ।
स्थावरेषु गृहे चैव सूर्य्यसंमुख आप्लवेत् ॥”

मिह प्रोञ्छनम् । योगियाज्ञवल्क्यः ।
“असामर्थ्याच्छरीरस्य कालशक्त्याद्यपेक्षया ।
मन्त्रस्नानादितः सप्त केचिदिच्छन्ति सूरयः ॥
मान्त्रं भौमं तथाग्नेयं वायव्यं दिव्यमेव च ।
वारुणं मानसञ्चैव सुप्तस्नानं प्रकीर्त्तितम् ॥
आपोहिष्ठेति वै मान्त्रं मृदालम्भस्तु पार्थिवम्
आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम् ॥
यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते ।
वारुणञ्चावगाह्यञ्च मानसं विष्णुचिन्तनम् ॥
समस्तं स्नानमुद्दिष्टं मन्त्रस्नानक्रमेण तु ।
कालदोषादसामर्थ्यात् सर्व्वं तस्य फलं स्मृतम् ॥”
आपोहिष्ठेति आपोहिष्ठादि ऋक्त्रयमत्र विव-क्षितम् । एवञ्च ।

क्षमा च जाह्नवी चैव शान्ता शान्तिप्रदायिनी ॥
एतानि पुण्यनामानि स्नानकाले प्रकीर्त्तयेत् ।
भवेत् सन्निहिता तत्र गङ्गा त्रिपथगामिनी ॥
सप्तवाराभिजप्ते न करसंपुटयोजितम् ।
मूर्द्धिर्न्न दद्यात् जलं भूयस्त्रिश्चतुः पञ्च सप्त वा ।
स्नानं कुर्य्यान्मृदा तद्वत् आमन्त्र्यच विचक्षणः ॥
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ।
मृत्तिके हर मे पापं यम्मया दुष्कृतं कृतम् ॥
उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥
आरुह्य मम गात्राणि सर्व्वं पापं प्रमोचय ।
नमस्ते सर्व्वभूतानां प्रभवारिणि सुव्रते ॥” * ॥
नमो नारायणाय इत्यष्टाक्षररूपमूलमन्त्रेण चतुरस्रं चतुष्कोणरूपं समन्ततः सर्व्वदिक्षु चतुर्हस्तं जलं प्रतिदिक्षु हस्तमात्रेण व्यवच्छिद्य तीर्थंप्रकल्पयेत् । वितते नद्यादिजले स्नानस्थानं
परिच्छिन्द्यात् । तत्र विष्णोः पाद इत्यादिना

| हारीतः । नातुरो न भुक्त्वा न जीर्णवासा न बहुवासा न नम्नो नाश्नन् नावसक्थिको नाल-ङ्कृतो नाजस्रं नाज्ञाते जले नाकुले नाशुचौ न प्रभूतजले न नाभेरप्लजले न चत्वरे नोपद्वारे नो सन्ध्यायां न निशायां स्नायादिति । चत्वरे काकादिवलिस्थले इति श्रीदत्तः ॥ उपद्वारे द्वार-समोपे । अत्रैकेन मुनिना नग्नबहुबाससोर्निषेध- | | |
|---|---|---|

शान्तिप्रदायिनीत्यन्तेन मन्त्रेण गङ्गामावाह्येत्
सप्तवाराभिजप्तेनेति सप्तवाराभिजप्तेन नमो
नारायणायेति मन्त्रेणाभिमन्त्र्येति शेषः । एक-
वचननिर्देशात् तस्य मूलमन्त्रतोक्त्या च अत्रापि
विनियोगोऽवगम्यते । ततश्च सप्तवारपठितनारा-
यणमन्त्रेण जलमभिमन्त्र्य करयुगेन त्रिवारादि
मूर्द्ध्निर्क्षिपेत् । ततश्चाश्वक्रान्त इति मन्त्राभ्यां
तद्वदिति जप्ताभ्याम् ।
"मृत्तिकाः सप्त न ग्राह्या वल्मीके मूषिकोत्करे
अन्तर्जले श्मशाने च वृक्षमूले सुरालये ।
परस्नानावशिष्टे च श्रेयस्कामैः सदा नरैः ॥"
इति दक्षप्रतिषिद्धेतरां मृदमामन्त्र्य तया मृदा
शिरःप्रभृत्यालभ्यानुद्धृतैर्व्वा जलैः शिरः प्रभृत्यङ्ग-
क्षालनमवगाहनरूपप्रधानंवारुणस्नानं समा-
चरेदिति पूर्व्वोक्तेनान्वयः । मृद्ग्रलणमन्त्रे प्रभ
वारिणि इति प्रभवमुत्पत्तिमर्त्तुं प्रापयितुं
शीलमस्यास्तत्सम्बोधनमिदम्। अवगाहनन्तु
चक्षुःकर्णनासिकामङ्गुलीभिराच्छाद्य कुर्य्यात् ।
"अङ्गुलीभिः पिधायैवं श्रोत्रदृङ्नासिकामुखम्
निमज्जेत प्रतिस्रोतस्त्रिः पठेदघमर्षणम् ॥"
इति समुद्रकरधृतात् ।
अत्रानुद्धृते वारत्रयमेवावगाहनं प्रागुक्तवामन-
पुराणात् । एष विधिः पौराणिकत्वात् सर्व्व-
शाखिसाधारणः । वेदमन्त्ररहितत्वादनधीत-
वेदानामपि सर्व्वथादरणीयः ॥ * ॥ मत्स्यपुरा-
णम् ।
"नद्यां प्रत्येकशः स्नाने भवेद्गोदानजं जलम् ।
गोप्रदानैश्च दशभिस्तासां पुण्यन्तु सङ्गमे ॥"
वशिष्ठः ।
"योऽनेन विधिना स्नाति यत्र तत्राम्भसि द्विज ।
स तीर्थफलमाप्नोति तीर्थे तु द्विगुणं फलम् ॥"
अनेन तीर्थावाहनादिना । अतो गङ्गायामप्या-
वाहनं कुर्व्वन्ति शिष्टाः । अत्र च । माघसप्तम्या-
दिनिमित्तकतीर्थविशेषनिमित्तकमन्त्रपाठस्तु-
मृदालम्भनानन्तरं कार्य्यः । आगन्तुकानामन्ते
ऽभिनिवेश इति न्यायात् । एवं गङ्गायां विशेष-
मन्त्रानन्तरमेव दशहरादिमन्त्राः पाठ्याः । तत्र
गङ्गायां विशेषमन्त्रौ विद्याकरधृतौ ।
"विष्णुपादार्घ्य सम्भूते गङ्गे त्रिपथगामिनि ।

करतोयास्नानमन्त्रः ॥
"करतोये सदानीरे सरित्श्रेष्ठे सुविश्रुते
।
पौण्ड्रान् प्लावयसे नित्यं पापं हर
करोद्भवे ॥" * ॥
विष्णुः । स्नातः शिरो नावधुनेत्
नाङ्गेभ्यस्तोय-
मुद्धरेत् । न तैलं वा संस्पृशेत्
नाप्रोक्षितं पूर्व्व-
धृतं वासो विभृयात् । स्नात एव
सोष्णीषो धौते
वाससी विभृयात् न
म्लेच्छान्त्यजपतितैः सह
सम्भाषणं कुर्य्यात् इति ।
नाङ्गेभ्यस्तोयमुद्धरे-
दिति स्नानशाटीपाटिभ्यां पूरणीयम् ।
"स्नातो नाङ्गानि निर्मृज्यात्
स्नानशाढ्या न
पाणिना ॥"
इति विष्णुवचनात् ।
अत्र वासोऽन्तरधारणात्
प्राक्कृततैलस्पर्श-
निषेधः प्रतीयते ।
"शिरःस्नातस्तु तैलेन नाङ्गं
किञ्चिदुपस्पृशेत् ॥"
इति मनुवचनमेतत्परम् ॥ * ॥
याज्ञवल्क्यः ।
"ब्रह्मक्षत्रविशामेव मन्त्रवत्
स्नानमिष्यते ।
तूष्णीमेव हि शूद्रस्य सनमस्कारकं
मतम् ॥
अगम्यागमनात् स्तेयात् पापिभ्यश्च
प्रतिग्रहात्
रहस्याचरितात् पापात् मुच्यते
स्नानमाचरन् ॥
प्रकर्त्तुमसमर्थश्चेत् जुहोति यजति
क्रियाः ।
स्नानध्यानजपैर्द्दानैरात्मानं
शोधयेद्बुधः ॥"

"अनुद्धृत्य तु यः स्नायात्
परकीयजलाशये ।
वृथा तस्य भवेत् स्नानं कर्त्तुः पापेन
लिप्यते ॥
स्नानं दानं तपो ध्यानं पितृदेवार्च्चनं
तथा ।
पावनानि मनुष्याणां दुष्कृतस्येह
कर्म्मणः ॥"
छन्दोगपरिशिष्टम् ।
"यव्यद्वयं श्रावणादि सर्व्वा नद्यो
रजस्वलाः ।
तासु स्नानं प्रकुर्व्वीत वर्ज्जयित्वा
समुद्रगाः ॥
उपाकर्म्मणि चोत्सर्गे प्रेतस्नाने तथैव
च ।
चन्द्रसूर्य्यग्रहे चैव रजोदोषो न विद्यते
॥"
निगमः । न दुष्येत्तीरवासिनाम् ।
व्याघ्रपादः ।
अभावे कूपवापीनामन्येनापि समुद्धृते ।
रजोदुष्टेऽपि पयसि ग्रामभोगो न दुष्यति
॥"
अन्येन कुम्भादिना ।
"अन्त्यैरपि कृते कूपे सेतौ वाप्यादिके
तथा ।
तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं
समाचरेत् ॥"
तथा ।
"प्रभूते विद्यमाने तु उदके सूमनोहरे ।
नाल्पोदके द्विजः स्नायात्
नदीञ्चोत्सृज्य
कृत्रिमे ॥"
इति बहुभिर्धृतम् ॥
ब्रह्मपुराणे ।
"नित्यं नैमित्तिकं काम्यं त्रिविधं
स्नानमिष्यते ।
तर्पणन्तु भवेत्तस्य अङ्गत्वेन
व्यवस्थितम् ॥

धर्म्मद्रवीति विख्याते पापं मे हर जाह्नवि ॥
श्रद्धया भक्तिसम्पन्ने श्रीमातर्द्देदि जाह्नवि ।
अमृतेनाम्बुना देवि भागीरथिपुनीहि माम् ॥"
गोविन्दद्वादश्यां स्नाने गङ्गायां पद्मपुराणीयो
मन्त्रः ।
"महापातकमंज्ञानि यानि पापानि सन्ति मे ।
गोविन्दद्वादशीं प्राप्य तानि मे हर जाह्नवि ॥"
गङ्गासागरसङ्गमे मन्त्रः ।
"त्वं देव सरितां नाथ त्वं देवि सरितांवरे ।
उभयोः सङ्गमे स्नात्वा मुञ्चामि दुरितानि वै ॥"
लौहित्यस्नाने तु मन्त्रः ।
"ब्रह्मपुत्त्र महाभाग शान्तनोः कुलनन्दन ।
अमोघागर्भसंभूत प्राप्तं लौहित्य मे हर ॥" * ॥

ब्रह्मपुराणम् ।
"नद्यां प्रत्येकशः स्नाने भवेत्
गोदानजं फलम्
गोप्रदानैस्तु दशभिस्तासां पुण्यन्तु
सङ्गमे ॥" *
मनुः ।
"न स्नानमाचरेत् भुक्त्वा नातुरो न
महानिशि ।
न वासोभिः सहाजस्रं नाविज्ञाते
जलाशये ॥"
न स्नानमाचरेद्भुक्त्वेति
रागप्राप्तस्नाननिषेधः ।
नित्यस्याप्राप्तत्वात् । नैमित्तिकस्य च
निषेद्धुम-
शक्यत्वात् । आतुरः
स्नानसम्बर्द्धकरोगवान् ।
"महानिशा तु विज्ञेया मध्यमं
प्रहरंद्वयम् ।
तस्यां स्नानं न कत्तव्यं
काम्यनैमित्तिकादृते ॥"
न वासोभिः सह इत्यनेन
बहुवासोनिषेधात्
स्नाने द्विवासस्त्वं प्रतीयते । अजस्रं
पुनः पुनः ।
तेन वारुण्यादिसंक्रान्त्यादि-
निमित्तभेद-प्राप्त-
मेकदा नानास्नानं निषिध्यते । किन्तु
तन्त्रेण
प्रसङ्गेन चैकं स्नानम् । तथा च
निगमः ।
"नावर्त्तयेत् पुनः कर्म्म
तर्पणादिकमन्वहम् ।
काम्यनैमित्तिके हित्वा एकं ह्येकत्र
वासरे ॥
विषुवद्दिशसे प्राप्ते पञ्चतीर्थो विधांनतः
।
स्नात्वा सङ्कर्षणं कृष्णं दृष्ट्वा भद्राञ्च
भो द्विजाः ।
नरः समस्तयज्ञानां फलं प्राप्नोति
दुर्लभम् ॥"

श्मश्रुकर्म्माश्रुपातञ्च मैथुनं छर्दनं तथा
।
अस्पृश्यस्पर्शनं कृत्वा स्नायाद्वर्ज्या
जलक्रिया ॥"
यत्र तु रोगादिना स्नानं न कृतं तत्रापि
गात्रमार्जनादिनाशौचमुत्पाद्य
पितृयज्ञसिद्धये
तर्पयेत् । तदाह शातातपः ।
"तर्पणन्तु शुचिः कुर्य्यात् प्रत्यहं
स्नातको द्विजः ।
देवेभ्यश्च ऋषिभ्यश्च पिभ्यतृश्च
यथाक्रमम् ॥ * ॥
पुष्ये वा जन्मनक्षत्रे व्यतीपाते च वैधृतौ
।
अमावास्यां नदीस्नानं
दहत्याजन्मदुष्कतम् ॥"
वराहपुराणम् ।
"दक्षिणावर्त्तशङ्खे च पात्रेऽप्यौड्म्बरे
स्थितम् ।
उदकं यः प्रतीच्छेत शिरसा हृष्टमानसः
।
तस्य जन्मकृतं पापं तत्क्षणादेव
नश्यति ॥
अच्छिन्नपद्म पत्रेण सर्व्वरत्नोदकेन च ।
स्रोतसा वै नरः स्नात्वा सर्व्वपापैः
प्रमुच्यते ॥"
विष्णु धर्मोत्तरे ।
"तथा दर्भोदकैः स्नानं
सर्व्वपापप्रणाशनम् ।
गोमूत्रेण च यत् स्नानं
सर्व्वाघविनिसूदनम् ॥
तथा पुष्पोदकस्नानं
भवेदारोम्यकारकम् ।
केवलैर्व्वा तिलैः स्नानं अथवा
गौरसर्षपैः ।
स्नानं प्रियङ्गुणा प्रोक्तं तथा
सौभाग्यवर्द्धनम् ॥
आयुष्यञ्च यशस्यञ्च धर्म्मं
मेधाविवर्द्धनम् ।
स्नानं पवित्रं माङ्गल्यं तथा
काञ्चनवारिणा ॥"

| | | |
|---|---|---|
| | इति ब्रह्मपुराणोक्तमार्कण्डेयह्रदे प्रद्युम्नसरोवरे समुद्ररूपादितीर्थादौ तन्त्रप्रसङ्गयोरभावात्पुनः पुनरेकदिनेऽपि नानास्नानमिति ॥ * ॥<br>"परकीयनिपानेषु स्नायान्नैव कदाचन ।<br>निपानकर्त्तुः स्नात्वा हि दुष्कृतांशेन लिप्यते ॥"<br>निपानं जलाधारमात्रम् । तथा च याज्ञवल्क्यः ।<br>"पञ्च पिण्डाननुद्धृत्य न स्नायात् परवारिणि ॥"<br>योगियाज्ञवल्क्यः । | शङ्खः ।<br>"स्नातस्य वह्नितोयेन तथा च परवारिणा ।<br>कायशुद्धिं विजानीयात् न तु स्नानफलं लभेत्"<br>स्नानफलं वैधम् । आयुर्वेदीयन्तु भवत्येव यमः<br>"नित्यं नैमित्तिकञ्चैव क्रियाङ्गमलकर्षणम् ।<br>तीर्थाभावे च कर्त्तव्यमुष्णोदकपरोदकैः ॥" |

विष्णुपुराणम् ।
“स्नानार्द्रां धरणीञ्चैव दूरतः परिवर्जयेत्
।”
इत्याह्निकतत्त्वम् ॥ * ॥
तान्त्रिकस्नानविधिर्य्था । तत्र नद्यादौ
वैदिक-
स्नानं कृत्वा तान्त्रिकस्नानमाचरेत् ।
तथा च
गौतमीये ।
“अथ स्नानं तथा कुर्य्यात् यथाशास्त्र-
विधानवित् ।
मलप्रक्षालनं स्नानं स्वशाखोक्तं
समाचरन् ।
मन्त्रस्नानं ततः कुर्य्यात् कर्म्मणां
सिद्धिहेतवे ॥”
तद्यथा । अद्येत्यादि अमुकदेवताप्रीतये
मन्त्र-
स्नानमहं करिष्ये इति सङ्कल्पं कुर्य्यात् ।
तथा च कुलचूडामणौ ।
“ताम्रपात्रं सदूर्व्वञ्च सतिलं सजलं ततः
।
गृहीत्वामुकदेवस्य प्रीतये स्नानमाचरेत्
॥”
ततः षडङ्गन्यासप्राणायामौ कृत्वा गङ्गेच
इत्यने-
नाङ्कुशमुद्रया सूर्य्यमण्डलात्तीर्थमावाह्य
वमिति
धेनुमुद्रयामृतीकृत्य
कवचेनावगुण्ठ्यास्त्रेण
संरक्ष्य मूलेन एकादशधाभिमन्त्र्य
सूर्य्याभि-
मुखं द्वादशधारा विनिःक्षिप्य
तस्मिन्निष्टदेव-
ताचरणारविन्दनिःसृतजलेनिमज्य
देवतां
ध्यायन् मूलमन्त्रं ययाशक्ति जपन्
उन्मज्य उद-
केन त्रिवारजप्तेन कलसमुद्रया
त्रिवारमात्मा-

स्नानं समाचरेद्यस्तु क्रियाङ्गं तत्
प्रकीर्त्तितम्
मलापकर्षणं नाम्ना स्नानमभ्यङ्गपूर्व्वकम्
।
मलापकर्षणार्थाय प्रवृत्तिस्तत्र नान्यथा ॥
सर्व्वेषु देवखातेषु तीर्थेषु च नदीषु च ।
स्नानमेव क्रिया यस्मात् क्रियास्नानमतः
स्मृतम्
इति गारुडे १०५ अध्यायः ॥ * ॥
कुशहस्तस्य वैष्णवविशेषस्य
स्नानादिनिषेधो
मानसस्नानप्रशंसा च यथा, --
“सर्व्वकर्म्मफलत्यागी हरेः
संकल्पवर्ज्जितः ।
नो द्विजः कुशहस्तः स्यात्
स्नानपूजाजपादिषु ॥
कदाचिद्दर्भस्तो न त्यक्तकामस्तु वैष्णवः
।
स्नानादिषु च कृत्येषु
गोविन्दस्यार्च्चनादिषु ॥
मृदासनः कुशकरो वैष्णवो न भवेद्द्विज ।
हरेः कुर्य्यात् प्रयत्नेन सर्व्वसेवाजपादिषु
॥
अस्नातो न जपेन्मन्त्रं गोविन्दस्य
महात्मनः ।
कदाचिदशुचिर्भूत्वाप्यस्नातोऽपि च
मानवः ॥
मानसस्नातको लोको
मुकुन्दस्यार्च्चनादिषु ।
पूतात्मा यदि मन्त्रस्य शुद्धो भवति
जापकः ॥
भवेत्तु मानसस्नायी यो बाह्याभ्यन्तरः
शुचिः ।
जपाधिकारी स भवेत् कृष्णमन्त्रस्य
मानवः ॥
ऐन्द्रस्नानाद्वरं काम्यं काम्यादाग्नेयमेव च
।
आग्नेयादाशुचं श्रेष्ठं वारुणञ्चाशुचादपि ॥
अवगाहं वारुणात्तु वैदिकञ्चावगाहनात् ।

तदा सर्व्ववपुश्च स्यादवगाहनमुच्यते ।
गोविन्दद्वादशीमाघीवारुण्यर्द्धोदयादिषु।
स्नानं यत्तच्च नैमित्तं ग्रहणे चन्द्रसूर्य्ययोः ॥
मैथुने वमने रेतःस्खलने मृतके तथा ।
विण्मूत्रादिशवस्पर्शे शवानुगमनेऽपि च ॥
निद्रान्ते जातकेनृणामस्पृश्यस्पर्शनादिषु ।
रजस्वलाचतुर्थहि यत् स्नानं स्यात्तदाशुचम्
॥
गङ्गादिसर्व्वतीर्थेषु विष्णुपादोदकैस्तथा ।
यत् स्नानमभिषेकञ्च पुण्यं तत् परिकीर्त्तितम्
हेलया श्रद्धया नृणां भक्त्या यत्नेन नारद ।
गङ्गाम्भोयष्टिवत्स्नानं महापापादिनाशनम् ॥
गङ्गास्नानं मनुष्याणां सर्व्वकल्मषनाशनम् ।
स्तम्बवच्चापि काष्ठस्य भवेन्मूषलवत् यदि ॥
स्नानं स्यात् सर्व्वतीर्थेषु नानायज्ञफलप्रदम् ।
शालग्रामशिलावारि योऽभिषेकं समाचरेत् ॥
अकालमृत्युहरणं सर्व्वव्याधिविनाशनम् ।
विष्णोः पादोदकं पीत्वा शिरसा धारयेद्यदि
यदि सर्व्वमनुष्याणां बाह्यान्तर्मलशोधनम् ।
तदेव नैर्मलस्नानं शरीराणां भवेत् ध्रुवम् ॥
स्वेदाश्रुमज्जाविण्मूत्रचिकुराः क्षतजा वसा ।
दूषिका कर्णविट् श्लेष्मा नृणां बाह्यमलाः
स्मृताः
मलैस्तु मलिनो देहो नवच्छिद्रैश्च छिद्रितः ।
स्रवत्यविरतं पूर्णो दिवारात्रौ मलानतः ॥
अद्भिश्च गोमयैश्चापि मलानामपमार्जनम् ।
सर्व्वत्र क्षालनं कृत्वा सर्व्वात्मप्रयतो मुनिः ॥
अष्टाङ्गयोगाभ्यासैश्च देहप्रक्षालनं ततः ।
नरोऽम्बुमज्जनं कुर्व्वन् स्नानं भवति नैर्म्मलम्
॥”
इति पाद्मे उत्तरखण्डे ११३ अध्यायः ॥ * ॥
किञ्च ।
“तुलामकरमेषेषु प्रातःस्नानं विधीयते ।
हविष्यं ब्रह्मचर्य्यञ्च महापातकनाशनम् ॥
अमास्नानं गयाश्राद्धं दक्षिणामुखभोजनम् ।
न जीवत्पितृकः कुर्य्यात् कृते च पितृहाभवेत्
करेण मार्ज्ज येद्गात्रं स्नानवस्त्रेण वा यदि ।
शुनास्पृष्टं भवेद्गात्रं पुनः स्नानेन शुध्यति ॥

नमभिषिच्य वैदिकसन्ध्यादिकं कृत्वा सूर्य्यार्घ्यं
दत्त्वा तान्त्रिकाघमर्षणादिवारिधारान्तं कर्म्म
कुर्य्यात् । इति तन्त्रसारः ॥ * ॥
अन्यच्च ।
“जन्मान्तरसहस्रेण यत् पापं कुरुते नरः ।
मुच्यते सर्व्वपापेभ्यः स्नात्वा क्षारार्णवे सकृत् ॥
याम्यं हि यातनादुःखं नित्यस्नायी न पश्यति
स्नानं मध्यं दिने कुर्य्यात् जीर्णेऽन्नेतु निरामयः
नद्यामस्तमिते स्नानं न कुर्व्वीत सदा बुधः ।
नद्यां स्नात्वा नदीं चान्यां न प्रशंसेत पण्डितः ॥
अप्रशस्तं निशि स्नानं राहोरन्यत्र दर्शनात् ।
स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने ।
आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्ज्जयेत् ।
नदीदेवनिखातेषु तडागेषु सरःसु च ।
स्नानं समाचरेन्नित्यं गत्तप्रस्रवणेषु च ॥
निपातनादुद्धृतं पुण्यं ततः प्रस्रवणादिकम् ।
ततोऽपि सारसं पुण्यं ततो नादेयमुच्यते ।
तीर्थतोयं ततः पुण्यं गङ्गातोयं ततोऽधिकम् ॥”
इति वह्निपुराणे आह्निकतपोनामाध्यायः ॥
किञ्च ।
नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम्
क्रियाम्नानं तथा षष्ठं षोढास्नानं प्रकीर्त्तितम् ॥
अस्नातस्तु पुमान्नार्हो जप्यादिहवनादिषु ।
वैदिकादपि नैमित्तं तस्माद्वै माज्जर्नं वरम् ॥
मार्ज्जनान्मान्त्रिकं श्रेष्ठं भौमं स्यान्मान्त्रिका-
धिकम् ।
भौमस्नानाद्वरं ब्राह्म्यं ब्राह्म्यतः पौण्यमेव च ॥
पौण्यतो नैर्मलं स्नानं वायव्यञ्च ततोऽधिकम् ।
वायव्यान्मानसञ्चेह सर्व्वस्नानात् परं वरम् ॥
मर्त्यश्चेत् मानसस्नातः सर्व्वत्र विजयी भवेत् ।
गोविन्दसर्व्वसेवासु चार्हतामेति धारणा ॥
स जापको वैष्णवः स्यात् हरेर्भजनतत्त्ववित् ।
मानसस्नानवान् यो वा भक्तश्चात्र सदा सुखी ॥”
इति पाद्मोत्तरखण्डे १०८ अध्यायः ॥ * ॥
अन्यच्च ।
“मानसं वैदिकं चैव मान्त्रिकं मार्ज्जनं तथा ।
अवगाहनञ्च नैमित्तमाशुचं पुण्यमेव च ॥
नैर्म्मलं वारुणं ब्राह्म्यं मैत्रं काम्यञ्च नारद ।
वायव्यं भौममाग्नेयं षोडशस्नानमीरितम् ॥
गोविन्दमन्त्रग्रहणं दीक्षया तु गुरोर्नृणाम् ।
यदाभिषिक्तं चित्तं स्यात्तत्स्नानं मानसं शुभम्
मर्त्यस्य नामग्रहणं यदा कार्ष्णाध्वरे गुरोः ।
स्नानदेहेन्द्रियमनस्तत् स्नानं मानसं भवेत् ॥
नामसंकीर्त्तनं विष्णोर्नरः कुर्य्यादकैतवात् ।
सदैव चेन्महास्नानं शरीरसुखकारणम् ॥
कया कस्त्वा स्वस्ति नश्चेत् यदि वेदैश्च वैदिकम्
अप्रक्षाल्य तु पादौ यः स्नात्वा गच्छति मन्दिरम्
संवत्सरकृतं पुण्यं तत्क्षणादेव नश्यति ॥
स्नानं रजकतीर्थेषु भोजनं गणिकालये ।
शयनं पूर्व्वपादे च ब्रह्महत्या दिने दिने ॥”
इति कर्म्मलोचनः ॥
अन्यत् मत्स्यसूक्ततन्त्रे ३९ पटले द्रष्टव्यम् ॥

**स्नानतृणं**, क्ली, (स्नानाय तृणम् ।) कुशः । इति शब्दमाला ॥

**स्नानयात्रा**, स्त्री, (स्नानस्य यात्रा उत्सवः ।)
ज्यैष्ठपौर्णमास्यां श्रीविष्णोर्म्महास्नानरूपोत्सवः
यथा, ब्रह्मपुराणम् ।
“मासि ज्यैष्ठे तु संप्राप्ते नक्षत्रे शक्रदैवते ।
पौर्णमास्यां तदा स्नानं सर्व्वपापं हरेद्द्विजाः ॥
तस्मिन् काले तु ये मर्त्याः पश्यन्ति पुरुषोत्तमम्
बलभद्रं सुभद्राञ्च ते यान्ति पदमव्ययम् ॥”
स्कन्दपुराणविष्णुधर्म्मोत्तरयोः ।
“ज्यैष्ठ्यामहञ्चावतीर्णस्तत्पुण्यं जन्मवासरम्

| | | |
|---|---|---|
| प्रातःस्नानं तदर्थन्तु नित्यस्नानं प्रकीर्त्तितम् ॥<br>चाण्डालशवविष्ठादेः पृष्ट्वा स्नानं रजस्वलाम् ।<br>स्नानार्हश्च यदा स्नाति स्नानं नैमित्तिकं हि<br>तत् ॥<br>पुष्पस्नानादिकं स्नानं दैवज्ञविधिचोदितम् ।<br>तद्धि काम्यं समुद्दिष्टं नाकामस्तत् प्रयोजयेत्<br>जप्तुकामः पवित्राणि अर्च्चिष्यन् देवतांतिथीन् । | दर्भशान्त्युदकैः स्नानं यज्ञान्ते अभिषेचनम् ॥<br>सहस्रशीर्षा तद्विष्णोरिति मन्त्रादिभिर्द्विज<br>।<br>चेत् पयोऽभ्युक्षणं स्नानं मान्त्रिकं समुदाहृतम्<br>ॐ शन्न आपोहिष्ठेति ऋतञ्चेत्यादिभिर्यदि<br>।<br>पाठे कुर्य्यात् कुशस्नानं मार्ज्जनं द्विज ईरितम्<br>जलेषु मज्जतां नृणां मज्जनन्तु यदा शिरः । | |

तस्यां मे स्नापनं कुर्य्यान्महास्नानविधानतः ॥
ज्यैष्ठ्यां प्रातःस्नानकाले ब्रह्मणा सहितञ्च माम्
रामं सुभद्रां संसाप्य मम लोकमवाप्नुयात् ॥”
इति तिथ्यादितत्त्वम् ॥
अन्यत् यात्राशब्दे द्रष्टव्यम् ॥

**स्नानीयं**, त्रि, (स्नात्यनेनेति । स्ना + करणे अनी-
यर् । यद्वा, स्नानाय हितम् । स्नान + छः ।) स्नानयोग्यम् । स्नानसम्पादकद्रव्यम् । यथा, --
“गङ्गादीनाञ्च तीर्थानां वारि कुम्भप्रपूरितम् ।
स्नानीयं ते प्रयच्छामि स्नानं कुरु त्रिलोचने ॥”
इति दुर्गोत्सवपद्धतिः ॥

**स्नायी**, [न्] त्रि, (स्नातीति । स्ना + णिनिः ।)
स्नानकर्त्ता । यथा, तिथ्यादितत्त्वे ।
“प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुणौ ॥”

**स्नायुः**, स्त्री, (सा + बाहुलकात् उण् । “आतो-
युक् चिण्कृतोः ।” ७ । ३ । ३३ । इति युक् ।
इत्युणादिवृत्तौ उज्ज्वलः । १ । १ ।) वायुवाहिनी
नाडी । महुर इति ख्याता । इति भरतः ॥
तत्पर्य्यायः । वस्नसा २ इत्यमरः । २ । ६ । ६६ ॥
स्नसा ३ नसा ४ । इति राजनिर्घण्टः ॥ स तु
गर्भस्थस्य सप्तभिर्मासैर्भवति । इति मुग्धबोधः ॥
(यथा, याज्ञवल्क्यः । ३ । १०० ।
“शिराः शतानि सप्तैव नवस्नायुशतानि च ॥”
“नवस्नायुशतानि तासां शाखासु षट्शतानि ।

**स्नावा**, [न्] पुं, (स्ना + “स्नामदिपदीति ।” उणा ०
४ । ११२ । इति वनिप् ।) स्नायुः । इति
केचित् ॥ (यथा, वाजसनेयसंहितायाम् ३९ । १०
“मांसेभ्यः स्वाहा स्नावभ्यः स्वाहा ॥”
“स्नवभ्यः स्नावानः स्नायवो नसाः ।” इति
तद्भाष्यम् ॥ * ॥ त्रि, रसिकः । इत्युणादिवृत्तौ
उज्ज्वलदत्तः ॥)

**स्निग्धं**, क्ली, (स्निह + क्तः ।) शिक्थकम् । इति
राजनिर्घण्टः ॥

**स्निग्धः**, पुं, (स्निह्यति स्मेति । स्निह + अकर्म्मक-
त्वात् कर्त्तरि क्तः ।) वयस्यः । इत्यमरः । २ ।
८ । १२ ॥ रक्तैरण्डः । सरलवृक्षः । इति राज-
निर्घण्टः ॥

**स्निग्धः**, त्रि, (स्निह + क्तः ।) स्नेहयुक्तः । अरूक्षः ।
(यथा, महाभारते । १ । १५३ । ९ ।
“अष्टौ दंष्ट्राः सुतीक्ष्णाग्राश्चिरस्यापातदुःसहाः
देहेषु मज्जयिष्यामि स्निग्धेषु पिशितेषु च ॥”)
तत्पर्य्यायः । चिक्कणम् २ मसृणम् ३ । इत्य-
मरः । २ । ९ । ४६ ॥ आमृष्टम् ४ चिक्वम् ५
चक्वणम् ६ । इति वैश्यवर्गे शब्दरत्नावली ॥
“स्निग्धन्तु वत्सलो वत्सः स्नेहयुक्तजने भवेत् ।”
इति च विशेष्यनिघ्नवर्गे शब्दरत्नावली ॥

**स्निग्धतण्डुलः**, पुं, (स्निग्धस्तण्डुलः ।) षष्टिशालिः ।
इति राजनिर्घण्टः ॥

**स्निग्धता**, स्त्री, (स्निग्धस्य भावः । तल् ।) प्रियता ।

**स्नुः**, पुं, (स्नुप्रस्रवणे + मितद्र्वादित्वात् डुः ।)
सानुः । पर्व्वतस्य समभूभागः । इत्यमरः । २ ।
३ । ५ ॥

**स्नुः**, स्त्री, (स्नु + डुः ।) स्नायुः । यथा, --
“त्रिष्टुप् मांसात् स्नुतोऽनुष्टुप् जगत्यस्नः प्रजा-
पतेः ।
तस्योष्णिगासील्लोमभ्योगायत्री च त्वचोविभोः ॥”
इति श्रीभागवते । ३ ॥ १२ । २९ ॥

**स्नुक्**, [ह्] स्त्री, (स्नुह + क्विप् ।) स्नुहीवृक्षः ।
इत्यमरः । २ । ४ । ५ ॥

**स्नुक्छदः**, पुं, क्षीरकञ्चुकीवृक्षः । इति रत्नमाला ॥

**स्नुतः**, त्रि, (स्नु + क्तः ।) क्षरितजलादिः । इत्य-
मरः । ३ । १ । ९२ ॥ (सिक्तः । यथा, भाग-
वते । १ । ११ । ३० ।
“ताः पुत्त्रमङ्कमारोस्य स्नेहस्नुतपयोधराः ।
हर्षविह्वलितात्मानः सिसिचुर्नेत्रजैर्जलैः ॥”)

**स्नुषा**, स्त्री, (स्नौति मनो यस्यामिति । स्नु प्रस्र-
वने + “स्नुव्रश्चिकृत्यिभ्यः कित् ।” उणा० ३ ।
६६ । इति सः । स च कित् ।) पुत्त्रबधूः ।
इत्यमरः । २ । ६ । ९ ॥ (यथा, रघुः । ८ । १४ ॥
“स किलाश्रमन्त्यमाश्रितो निवसन्नावसथे पुराद्बहिः ।
समुपास्यत पुत्त्रभोग्यया स्नुषयेवाविकृतेन्द्रियः श्रिया ॥”)
श्वश्वा सह तस्या विरोधकारणं श्वश्रूशब्दे

द्वे शते त्रिंशच्च कोष्ठे । ग्रीवां प्रत्यूर्द्ध्वं सप्ततिः ॥
एकैकस्यान्तु पादाङ्गुल्यां षट्निचितास्तास्त्रिंशत्
तावत्य एव तलकूर्च्चगुल्फेषु । तावत्य एव जङ्घायाम् । दशजानुनि । चत्वारिंशदूरौ । दश वङ्क्षणे । शतमध्यद्‌र्ध्वमेवमेकस्मिन् सक्थ्नि
भवन्ति । एतेनेतरसक्थि बाहू च व्याख्यातौ ।
षष्टिः कट्याम् । अशीतिः पृष्ठे । पार्श्वयोः षष्टिः । उरसि त्रिंशत् ॥ षट्त्रिंशद्ग्रीवायाम् मूर्द्ध्नि चतुस्त्रिंशत् । एवं नव स्नायुशतानि व्याख्यातानि । भवन्ति चात्र ।
स्नायुश्चतुर्व्विधा विद्यात्तास्तु सर्व्वा निबोध मे ।
प्रतानवत्यो वृत्ताश्च पृथ्व्यश्च सुषिरास्तथा ॥
प्रतानवत्यः शाखासु सर्व्वसन्धिषु चाप्यथ ।
वृत्तास्तु कण्डराः सर्व्वा विज्ञेया कुशलैरिह ॥
आमपक्वाशयान्तेषु वस्तौ च शुषिराः खलु ।
पार्श्वोरसि तथा पृष्ठे पृथुलाश्च शिरस्यथ ॥
नौर्य्यथा फलकास्तीर्णा बन्धनैर्बहुभिर्युता ।
भारक्षमा भवेदप्सु नृयुक्ता सुसमाहिता ।
एवमेव शरीरेऽस्मिन् यावन्तः सन्धयः स्मृताः ॥
स्नायुभिर्व्वहुभिर्बद्धास्तेनभारसहा नराः
नह्यस्थीनि न वा पेश्यो न सिरा न च सन्धयः ॥
व्यापादितास्तथा हन्युर्यथा स्नायुः शरीरिणम् ।
यः स्नायुः प्रविजानाति बाह्याश्चाभ्यन्तरास्तथा
गूढं स शल्यमाहर्त्तुं देहाच्छक्नोति देहिनाम् ॥”
इति सुश्रुते शरीरस्थाने पञ्चमेऽध्याये ॥)

**स्नाय्वर्म**, [न्] क्ली, नेत्ररोगप्रभेदः । तस्य लक्षणं यथा

यथा, --
“हार्दं प्रियत्वं प्रियता स्निग्धतायां निगद्यते ।”
इति शब्दरत्नावली ॥
स्नेहः । इति राजनिर्घण्टः ॥

**स्निग्धदारुः**, पुं, (स्निग्धं चिक्कणं दारु काष्ठं यस्य ।)
सरलवृक्षः । इति जटाधरः । देवदारुः । इति राजनिर्घण्टः ॥

**स्निग्धपत्रकः**, पुं, (स्निग्धानि पत्रानि यस्य । कप् ।) गजरतृणम् । घृतकरञ्जः । गुच्छकरञ्जः । इति राजनिर्घण्टः ॥

**स्निग्धपत्रा**, स्त्री, पुं, (स्निग्धं पत्रं यस्याः ।) बदरी ॥ इति जटाधरः ॥ पालक्यम् । काश्मरी । इति राजनिर्घण्टः ॥

**स्निग्धपिण्डीतकः**, पुं, (स्निग्धः पिण्डीतकः ।)
मदनवृक्षविशेषः । यथा, --
“वाराहोऽन्यः कृष्णवर्णो महापिण्डीतको महान्
स्निग्धपिण्डीतकश्चान्यः स्थूलवृक्षफलस्तथा ॥
अन्यौ च मदनौ श्रेष्ठौ कटुतिक्तरसान्वितौ ।
छर्द्दनौ कफहृद्रोगपक्वामाशयशोधनौ ॥”
इति राजनिर्घण्टः ॥

**स्निग्धफला**, स्त्री, (स्निग्धं फलं यस्याः । नाकुली । इति राजनिर्घण्टः ॥

**स्निग्धा**, स्त्री, (स्निग्ध + टाप् ।) मेदा । इति राजनिर्घण्टः ॥

**स्निट**, क स्नेहे । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-अक०-सेट् ।) क, स्नेटयति । इति दुर्गा-दासः ॥

द्रष्टव्यम् ॥ स्नुहीवृक्षः । इति शब्दचन्द्रिका ॥

**स्नुहा**, स्त्री, (स्नुह + भागुरिमते टाप् । स्नुही-वृक्षः इत्यमरटीकायां भरतः । २ । ४ । १०५ ॥

**स्नुहिः**, स्त्री, (स्नुह + इन् ।) स्नुही । इत्यमर-टीका । २ । ४ । १०५ ॥

**स्नुही**, स्त्री, (स्नुहि + कृदिकारादिति ङीष् ।)
वृक्षविशेषः । मनसासिज इति भाषा । तत्-पर्य्यायः । सीहुण्डः २ व्रजद्रुः ३ स्नुक् ४ गुडा ५ समन्तदुग्धा ६ । इत्यमरः । २ । ४ । १०५ ॥ सिहुण्डः ७ शीहुण्डः ८ वज्रः ९ स्नुहा १० स्नुहिः ११ गुडी १२ गुडः १३ । इति तट्टीका ॥ वज्री १४ । इति शब्दरत्नावली ॥ सुधा १५ वज्रकण्टकः १६ कृष्णसारः १७ । इति जटाधरः ॥ अस्या दुग्ध-गुणाः ।
“बहुदोषे प्रयोक्तव्यमग्नितुल्यं सुधापयः ।”
इति राजवल्लभः ॥
राजनिर्घण्टोक्तपर्य्यायगुणौ सेहुण्डशब्दे द्रष्टव्यौ ॥
तत्र मनसा पूज्या । यथा,
“सुप्ते जनार्द्दने कृष्णे पञ्चम्यां भवनाङ्गने ।
पूजयेन्मनसादेवीं स्नुहीविटपसंस्थिताम् ॥
पद्मनाभे गते शय्यां देवैः सर्व्वैरनन्तरम् ।
पञ्चभ्यामसिते पक्षे समुत्तिष्ठति पन्नगी ॥”
इति तिथ्यादितत्त्वे देवीपुराणम् ॥

**स्नेहः**, पुं, (स्निह + घञ् ।) प्रेम । इत्यमरः । १ ।

| | | |
|---|---|---|
| “स्थिरं प्रस्तारि मांसाढ्यं शुष्कं स्नाय्वर्मपञ्चमम् ॥”<br>इतिमाधवकरः ॥ अन्यत् नेत्ररोगशब्दे द्रष्टव्यम् | | ७ । २७ ॥ (तल्लक्षणं यथा, --<br>“दर्शने स्पर्शने वापि श्रवणे भाषणेऽपि वा ।<br>यत्र द्रवत्यन्तरङ्गं स स्नेह इति कथ्यते ॥”) |

स्नेहस्य दुःखमूलत्वम् । यथा --
“यत्र स्नेहो भयं तत्र स्नेहो दुःखस्य भाजनम् ।
स्नेहमूलानि दुःखानि तस्मिंस्त्यक्ते महत् सुखम् ॥”
इति गारुडे । ११३ । ५९ ॥
तैलादिरसभेदः । इति मेदिनी ॥ (यथा, माघः ।
२ । ८५ ।
“मृदुव्यवहितं तेजो भोक्तुमर्थान् प्रकल्पते ।
प्रदीपः स्नेहमादत्ते दशयाभ्यन्तरस्थया ॥”
यथा च मनुः । ५ । २४ ।
“यत्किञ्चित् स्नेहसंयुक्तं भोक्ष्यं भोज्यमगर्हितम् ।
तत् पर्य्युषितमप्याद्यं हविःशेषञ्च यद्भवेत् ॥”)
न्यायमते गुणविशेषः । जलीयपरभाणावयं नित्यः । अन्यत्र त्वनित्यः । तैलादावस्य प्रकर्षो
वर्त्तते अतस्तेषां दाहो भवति यथा, --
“स्नेहो जलेऽणौ नित्योऽयमनित्योऽवयविन्यसौ।
तैलान्तरे तत्प्रकर्षात् दहनस्यानुकूलता ॥”
इति भाषापरिच्छेदः ॥

**स्नेहनं**, क्ली, (स्निह्यत्यनेनेति । स्निह + ल्युट् ।)
तैलमर्द्दनम् । तत्पर्य्यायः । स्नेहः २ स्निग्धता ३
म्रक्षणम् ४ म्रक्षः ५ अभ्यङ्गः ६ अभ्यञ्जनम् ७ ।
इति राजनिर्घण्टः ॥ (स्नेहयतीति । स्निह +
णिच् + ल्युः । स्निग्धकारिणि, त्रि । यथा, सुश्रुते । १ । ४५ ।
“घृतं सौम्यं शीतवीर्य्यं मृदुमधुरमल्पाभिष्यन्दि स्नेहनमिति ॥”)

**स्नेहप्रियः**, पुं, (स्नेहः प्रियो यस्य ।) प्रदीपः ।
इति हेमचन्द्रः ॥ तैलादिप्रिये, त्रि ॥

प्रत्ययेन साधुः ।) रोगविशेषः ।
इत्युणादि-
कोषः ॥ बन्धुः । चन्द्रः । इति
सिद्धान्तकौमुद्या-
मुणादिवृत्तिः ॥

**स्नेहाशः**, पुं, (स्नेहमश्नातीति । अश भोजने +
अण् ।) प्रदीपः । इति त्रिकाण्डशेषः ॥

**स्नेहितः**, पुं, (स्नेहोऽस्य जातः । स्नेह + इतच् ।)
बन्धुः । स्नेहयुक्ते, त्रि ॥

**स्नेही**, [न्] पुं, (स्नेहोऽस्यास्तीति । इनिः ।)
वयस्यः । इति त्रिकाण्डशेषः ॥
चित्रकरः । इति
केचित् ॥ स्नेहयुक्ते, त्रि ॥

**स्नेहुः**, पुं, (स्निह्यतीति । स्निह + “शृस्वृस्निहीति ।”
उणा० १ । ११ । इति उः ।) रोगभेदः ।
इत्युणादिकोषः ॥ चन्द्रः । इति सिद्धान्त-
कौमुद्यामुणादिवृत्तिः ॥

**स्पद**, इ ङ ईषत्कम्पे । इति कविकल्पद्रुमः ॥
(भ्वा०-आत्म०-अक०-सेट् ।) इ, स्पन्द्यवे ।
ङ, स्पन्दते चक्षुः । पस्पन्दे । काशे स्पन्द कुशे
स्पन्द स्पन्दत्वं शत्रुमस्तके । इत्यादौ गणकृता-
नित्यत्वमिति रमानाथः । वस्तुतस्तु स्पन्दते
स्पन्दः पचादित्वादन् ततः स्पन्द इवाचरति
इति क्वौ सिद्धिः । इति दुर्गादासः ॥

**स्पन्दः**, पुं, (स्पन्द + घञ् ।) प्रस्फुरणम् । ईषत्-
कम्पनम् । यथा, --
उत्तमं स्थानमाप्नोति पद्भ्यां प्रस्फुरणान्नृप ! ।
सलाभञ्चाध्वगमनं भवेत् पदतले नृप ! ॥
लाञ्छनं पिटकञ्चैव ज्ञेयं प्रस्फुरणं तथा ।
विपर्य्ययेन विहितं सर्वं स्त्रीणां विपर्य्ययम् ॥
दक्षिणेऽपि प्रशस्तेऽङ्गे प्रशस्तं स्याद्विशेषतः ।
अप्रशस्त तथा वामे त्वप्रशस्तं विशेषतः ॥
अतोऽन्यथासिद्धिरजल्पनात्तु
फलस्य शस्तस्य च निन्दितस्य ।
अनिष्टचिह्नोपगमे द्विजानां
कार्य्यं सुवर्णेन च तर्पणं स्यात् ॥”
इति मात्स्ये यात्रानिमित्तदेहस्पन्दनं नाम
२४१ । ३ -- १४ ॥

**स्पन्दनं**, क्ली, (स्पन्द + ल्युट् ।) प्रस्फुरणम् । ईषत्
कम्पनम् । (यथा, याज्ञवल्क्यः । १ । ११ ।
“गर्भाधानमृतौ पुंसःसवनं स्पन्दनात् पुरा ।
षष्ठेऽष्टमे वा सौमन्तो मास्यते जातकर्म्म च ॥”)

**स्परिता**, [ऋ] त्रि, दुःखकारणम् । तच्च शत्रु-
दुर्जनरोगादि । इति केचित् ॥

**स्परिशः**, पुं, स्पर्शः । इति केचित् ॥

**स्पर्द्ध**, ङ संहर्षे । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) संहर्षः परिभवेच्छा ।
इति वोपदेवः ॥ ङ, स्पर्द्धते बलिनं बली ।
पस्पर्द्धे । इति दुर्गादासः ॥

**स्पर्द्धा**, स्त्री, (स्पर्द्ध + भिदादित्वादङ् । टाप् ।)
संहर्षः । (यथा, महाभारते । १ । २१ । १७ ।
“महानदीभिर्बह्वीभिः स्पर्द्धयेव सहस्रशः ।
अभिसार्य्यमाणमनिशं ददृशाते महार्णवम् ॥”)
क्रमसमुन्नतिः । साम्यम् । इति मेदिनी ॥

**स्पर्श**, क ङ ग्रहणे । श्लेषे । इति कविकल्पद्रुमः ॥

**स्नेहबीजः**, पुं, (स्नेहयुक्तानि बीजानि यस्य ।)

पियालवृक्षः । इति राजनिर्घण्टः ॥ स्मेह-
कारणे, क्ली ॥

**स्नेहभूः**, पुं, (स्नेहात् भूरुत्पत्तिर्यस्य ।) श्लेष्मा ।

इति हेमचन्द्रः ॥ (स्नेहा भूरिति ।)
स्निग्धभूमौ,
स्त्री ॥ (स्नेहान्विता भूर्यस्येति स्निग्धभूमि-
विशिष्टे, त्रि ॥)

**स्नेहरङ्गः**, पुं, (स्नेहेनं रज्यते इति । रञ्ज + घञ् ।)

तिलः । इति शब्दरत्नावली ॥

**स्नेहवती**, स्त्री, (स्नेहोऽस्या अस्तीति । स्नेह +

मतुप् । मस्य वः । ङीप् ।) मेदा । इति राज-
निर्घण्टः ॥ (तैलादिरसविशिष्टे प्रीतिविशिष्टे
च त्रि । यथा, मार्कण्डेये । २३ । ७७ ।
"एवमुक्तौ ततस्तेन पित्रा स्नेहवता तु तौ ।
गत्वा तस्य पुरं सख्यू रेमाते तेन धीमता
॥")

**स्नेहवस्तिः**, स्त्री, (स्नेहस्य वस्तिः ।) अनुवासन-

विस्तः । तैलपिच्किरी इति भाषा । यथा, --
"वस्तिर्द्विवानुवासाख्यो निरूहश्च ततः परः
।
यः स्नेहैर्दीयते स स्यादनुवासननामकः ॥"
इति भावप्रकाशः ॥
एतद्विवरणं वस्तिशब्दे द्रष्टव्यम् ॥

**स्नेहविद्धं**, क्ली, (स्नेहेन विद्धम् ।) देवदारु ।

इति जटाधरः ॥

**स्नेहा**, [न्] पुं, (स्निह्यतीति । स्निह + "श्वन्नुक्षन्

पूषन्निति ।" उणा० १ । १५८ । इति
कनिन्-

"चक्षुःस्पन्दं भुजस्पन्दं तथा
दुःस्वप्नदर्शनम् ।
शत्रूणाञ्च समुत्थानमश्वत्थ शमयाशु मे
।
अश्वत्थरूपो भगवान् प्रीयतां मे
जनार्द्दनः ॥"
इति मलमासतत्त्वम् ॥ * ॥
अङ्गविस्फुरणे शुभाशुभफलं यथा, --
मनुरुवाच ।
"ब्रूहि मे त्वं निमित्तानि अशुभानि
शुभानि च ।
सर्व्वधर्म्मभृतां श्रेष्ठ ! त्वं हि
धर्म्मविदुच्यसे ॥
मत्स्य उवाच ।
अङ्गदक्षिणभागे तु शस्तं प्रस्फुरणं भवेत्
।
अप्रशस्तं यथा वामे पृष्ठस्य हृदयस्य च
॥
मनुरुवाच ।
अङ्गानां स्पन्दनञ्चैव शुभाशुभविचेष्टितम्
।
तन्मे विस्तरतो ब्रूहि येन स्युस्तद्विदो
भुवि ॥
मत्स्य उवाच ।
पृथ्वीलाभो भवेत् मूर्द्ध्नि ललाटे
रविनन्दन ! ।
स्थानं विवृद्धिमायाति भ्रूनसोः
प्रियसङ्गमः ॥
भृत्यलब्धिश्चाक्षिदेशे दृगुपान्ते
धनागमः ।
उत्कण्ठोपगमो मध्ये दृष्टं राजन् !
विचक्षणैः ॥
दृग्बन्धने सङ्गरे च जयं शीघ्रमवाप्नुयात्
।
योषिल्लाभोऽपाङ्गदेशे श्रवणान्ते प्रिया
श्रुतिः ॥
नासिकायां प्रीतिसौख्यं
प्रियाप्तिरधरोष्ठयोः ।
कण्ठे तु भोगलाभः स्यात्
भोगवृद्धिरथांसयोः ॥

(चुरा०-आत्म०-सक०-सेट् ।) क ङ,
स्पर्शयते ।
इति दुर्गादासः ॥

**स्पर्शः**, पुं, (स्पृश स्पर्शने, स्पर्श ग्रहणे वा + घञ् ।)

रुजा । दानम् । स्पर्शनम् । (यथा, उत्तर-
रामचरिते । १ अङ्के ।
"विनिश्चेतुं शक्यो न सुखमिति वा दुःख-
मिति वा
प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः
।
तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो
विकारश्चैतन्यं भ्रमयति च संमीलयति च
॥")
स्पर्शकः । सम्परायः । प्रणिधिः । इति
मेदिनी ॥
उपतप्ता । इत्यमरः । ३ । २ । १४ ॥
वर्गाक्षरम् ।
इति हेमचन्द्रः ॥ (यथा, भागवते । २ । ९ ।
६ ।
"स चिन्तयन् द्व्यक्षरमेकदाम्भ-
स्युपाश्रृणोत् द्विर्गदितं वचो विभुः ।
स्पर्शेषु यत् षोडशमेकविंशं
निष्किञ्चनानां नृप ! यद्धनं विदुः ॥")
वायुः । इति केचित् ॥ कामिनां बन्धभेदः ।
इति
शब्दरत्नावली ॥ कादिवर्गपञ्चकम् । यथा, -
-
"स्पर्शस्तस्याभवज्जीवः स्वरो देह
उदाहृतः ॥"
इति श्रीभागवते ३ स्कन्धे १२ अध्यायः ॥
स्पर्शः कादिवर्गपञ्चकम् । इति तट्टीकायां
श्रीधरस्यामी ॥ न्यायमते
त्वगिन्द्रियग्राह्यगुण-

|  |  |  |
| --- | --- | --- |
|  | सुहृत्स्नेहश्च बाहुभ्यां हस्ते चैव धनरगमः ।<br>पृष्ठे पराजयो योधे जयो वक्षःस्थले भवेत् ॥<br>कुक्षिभ्यां प्रीतिरुद्दिष्टा स्त्रियाः प्रजननं स्तने ।<br>स्थानभ्रंशो नाभिदेशे अन्त्रे चैव धनागमः ॥<br>जानुसन्धौ परैः सन्धिर्बलवद्भिर्भवेन्नृप ! ।<br>दिशैकदेशनाशोऽथ जङ्घाभ्यां रविनन्दन ! ॥ |  |

विशेषः । त्वगुपकारकः । स च त्रिविधः
।
उष्णः । शीतः । अनुष्णाशीतः ।
पृथिव्याः
स्पर्शः काठिन्यादिः पाकजः ।
जलपरमाणुस्पर्शः
नित्यः । अन्यत्रानित्यः । वैशेषिकमते
पार्थिव-
परमाणुमात्रस्य पाकजस्पर्शः ।
नैयायिकमते तु
द्व्यणुकादिस्पर्शोऽपि पाकजः । यथा, -
-
"स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः
स्यादुपकारकः ।
अनुष्णाशीतशीतोष्णभेदात् स त्रिविधो
मतः ॥
काठिन्यादिः क्षितावेव नित्यतादि च
पूर्ब्बवत् ।
एतेषां पाकजत्वन्तु क्षितौ नान्यत्र
कुत्रचित् ॥
तत्रापि परमाणौ स्यात् पाको वैशेषिके
नये ।
नैयायिकानान्तु नये
द्व्यणुकादावपीष्यति ॥"
इति भाषापरिच्छेदः ॥
स्पर्शं निरूपयति । स्पर्श इति ।
उपकारक इति
स्पर्शनप्रत्यक्षे स्पर्शः कारणमित्यर्थः ।
अनु-
ष्णाशीतेति । पृथिव्या वायोः
स्पर्शोऽनुष्णा-
शीतः जलस्य शीतः । तेजस उष्णः ।
काठि-
न्येति । कठिनसुकुमारस्पर्शः पृथिव्या
एव
इत्यर्थः । कठिनत्वादिकन्तु न
संयोगनिष्ठो
जातिविशेषः चक्षुर्ग्राह्यतापत्तेः । पूर्ब्बवत्
जल-

प्राजापत्यं ज्ञाने । अर्द्धोच्छिष्टो येन आद्यग्रासः
आस्ये निःक्षिप्तः न तु निगीर्णः । दक्षः ।
"पाने मैथुनसंसर्गे तथा मूत्रपुरीषयोः ।
स्पर्शनं यदि गच्छेत्तु शवोदक्यान्त्यजैः सह ॥
दिनमेकं चरेन्मूत्रे पुरीषे तु दिनद्वयम् ।
दिनत्रयं मैथुने स्यात् पाने स्याच्च चतुष्टयम् ॥"
काश्यपः ।
"श्वशूकरान्त्यचाण्डालमद्यभाण्डरजस्वलाः।
यद्युच्छिष्टः स्पृशेत् तत्र कृच्छ्रं सान्तपनं चरेत्
॥"
एतज्ज्ञानाभ्यासे । सान्तपने धेनुद्वयम् । ब्रह्म-
पुराणे ।
"उच्छिष्टेन तु शूद्रेण विप्रः स्पृष्टस्तु तादृशः ।
उपवासेन शुद्धिः स्यात् शुना संस्पृष्ट एव वा ॥
उच्छिष्टेन तु विप्रेण विप्रः स्पृष्टस्तु तादृशः ।
उभौ स्नानं प्रकुरुतः सद्य एव समाहितौ ॥"
अनुच्छिष्टब्राह्मणस्य नक्तमिति प्रायश्चित्त-
विवेकः ॥ * ॥ अथ रजस्वलास्पर्शप्रायश्चित्तम्
।
काश्यपः ।
"रजस्वला तु संस्पृष्टा ब्राह्मण्या ब्राह्मणी यदि ।
एकरात्रं निराहारा पञ्चगव्येन शुध्यति ॥
रजस्वला तु संस्पृष्टा राजन्या ब्राह्मणी तु या ।
त्रिरात्रेण विशुद्धिः स्यात् व्याघ्रस्य वचनं यथा
॥
रजस्वला तु संस्पृष्टा वैश्यया ब्राह्मणी च या ।
पञ्चरात्रनिराहारा पञ्चगव्येन शुध्यति ॥
रजस्वला तु संस्पृष्टा शूद्रया ब्राह्मणी यदि ।
षड्रात्रेण विशुध्येत्तु ब्राह्मणी कामचारतः ॥
अकामतश्चरेदर्द्धं ब्राह्मणी सर्व्वजातिषु ॥"
एतेन रजस्वलाया ब्राह्मण्याः सवर्णरजस्वला-
स्पर्शे एकरात्रोपवासः पञ्चगव्यपानं कामतः ।
अकामतस्त्वदर्द्धं नक्तव्रतम् ।
असवर्णरजस्वला-
स्पर्शे त्रिरात्रपञ्चरात्रषड्रात्रोपवासाः । अका-
मतस्त्वदर्द्धं एतच्चतुर्थाहानन्तरं कर्त्तव्यम् ।
"चाण्डालेन श्वपाकेन संस्पृष्टा चेद्रजस्वला ।
अतिक्रम्य तान्यहानि प्रायश्चित्तं समाचरेत् ॥
त्रिरात्रमुपवासः स्यात् पञ्चगव्येन शुध्यति ।

"अहोरात्रोषितो भूत्वा पौर्णमास्यां
विशेषतः ।
पञ्चगव्यं पिबेत् प्रातः ब्रह्मकूर्च्चविधिः
स्मृतः ॥"
तदशक्तौ पुराणैकं दातव्यम् ।
उच्छिष्टशूद्रादि-
स्पर्शे बृहस्पतिः ।
"शुना चोच्छिष्टया शूद्र्या संस्पृष्टा
द्व्यहमाच-
रेत् ।
अहोरात्रं तृतीयेऽह्नि परतो नक्तमाचरेत्
॥"
परतश्चतुर्थदिने स्नानात् पूर्वमिति
ज्ञेयम् ।
इति प्रायश्चित्ततत्त्वम् ॥
मत्स्यसूक्तोक्तास्पृश्य-
स्पर्शनप्रायश्चित्तं स्नानशब्दे द्रष्टव्यम् ॥
(त्रि,
स्पर्शकः । आनन्दजनकः । यथा,
मागवबे ।
३ । २१ । ९ ।
"श्वेतोत्पलक्रीडनकं
मनःस्पर्शस्मितेक्षणम् ॥")

**स्पर्शकः**, त्रि, (स्पृशतीति । स्पृश + ण्वुल् ।) स्पर्शन-
कर्त्ता । स्पृशधातोः कर्त्तरि णकप्रत्ययेन
निष्पन्नः ॥

**स्पर्शनं**, क्ली, (स्पृश + ल्युट् ।) दानम् । स्पर्शः ।
इति मेदिनी ॥ (यथा, भागवते । १ ।
१० । १२ ।
"तस्मिन्नस्तधियः पार्थाः सहेरन् विरहं
कथम् ।
दर्शनस्पर्शनालापशयनासनभोजनैः ॥"
सम्बन्धः । इति मल्लिनाथः ॥ यथा,
रघुवंशे ।
२ । ५० ।
"तद्रक्ष कल्याणपरम्पराणां
भोक्तारमूर्जस्वलमात्मदेहम् ।

तेजोवायुपरमाणुस्पर्शा नित्याः इत्यर्थः
। तद्भिन्नाः
स्पार्शास्त्वनित्या इत्यर्थः । एतेषां
रूपरसगन्ध-
स्पर्शानाम् । नान्यत्रेति । पृथिव्या हि
रूपरस-
गन्धस्पर्शपरावृत्तिः
पाकरससंयोगादुपलभ्यते ।
न हि शतधापि ध्मायमाने जलादौ
रूपादिकं
परावर्त्तते नीरे सौकरमौष्णञ्च
नयव्यतिरेका-
भ्यामुपाधेरेवेति निलीयते पवनपृथिव्योः
शीत-
स्पर्शादिवत् पृथिवीष्वपि मध्ये
परमाणावेव
रूपादीनां पाकः इति वैशेषिका वदन्ति ।
नैयायिकानामिति नैयायिकानां मते
द्व्यणु-
कादौ अवयविन्यपि पाको भवति । इति
सिद्धान्तमुक्तावली ॥ * ॥
पुराणमते एकादशविधस्पर्शो यथा ।
उष्णः १
शीतः २ सुखः ३ दुःखः ४ स्निग्धः ५
विशदः ६
खरः ७ मृदुः ८ श्लक्ष्णः ९ लघुः १०
गुरुः ११ ।
इति महाभारते मोक्षधर्म्मः ॥ कठिनः ।
इति
तत्रैव आश्वमेधिकपर्व्व ॥
आचमनाङ्गस्पर्शनं
आचमनशब्दे द्रष्टव्यम् ॥ * ॥
उच्छिष्टस्य स्पर्श-
निषेधो यथा, --
“न स्पृशेत् पाणिनोच्छिष्टो
विप्रगोब्राह्मणा-
नलान् ।
न चानलं पदा वापि न देवप्रतिमां
स्पृशेत् ॥”
इति कौर्म्मे उपविभागे । १६ । ३५ ॥

तां निशान्तु व्यतिक्रम्य स्वजात्युक्तन्तु कारयेत्
॥”
इति वचनान्तरदर्शनात् ॥
एतत् कामतः । अत्र दिनभेदोऽपि नास्ति ।
अज्ञाने बृहस्पतिः ।
“पतितान्त्यश्वपाकैस्तु संस्पृष्टा स्त्री रजस्वला
।
तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत् ॥
प्रथमेऽह्नि त्रिरात्रन्तु द्वितीये द्व्यहमाचरेत् ।
अहोरात्रं तृतीयेऽह्नि चतुर्थे नक्तमाचरेत् ॥”
चतुर्थेऽह्नीति शुद्धिस्नानात् पूर्ब्बम् । व्याघ्रः ।
“रजस्वला यदा स्पृष्टा श्वजम्बुकखरैः क्वचित्
।
निराहारा भवेत्तावत् यावत् स्नानेन शुध्यति
॥”
अत्रापि बृहस्पत्युक्तदिनभेदव्यवस्था । वृद्ध-
शातातपः ।
“रजस्वले तु ये नार्य्यावन्योऽन्यं स्पृशतो यदि ।
सवर्णे पञ्चगव्यन्तु ब्रह्मकूर्च्चमतः परम् ॥”
पञ्चगव्यपानं व्रतरूतं तेनोपवासः । ब्रह्मकूर्च्च-
माह जाबालः ।

महीतलस्पर्शनमात्रभिन्न-
मृद्धं हि राज्यं पदमैन्द्रमाहुः ॥”)

**स्पर्शनः**, पुं, (स्पृशतीति । स्पृश + ल्युः ।) वायुः ।
इत्यमरः । १ । १ । ६४ ॥

**स्पर्शमणिः**, पुं, (स्पर्शप्रधानो मणिः । स्पर्शेन
स्वर्णोत्पादकत्वात् तथात्वम् ।)
स्पर्शमात्रेण
स्वर्णजनकप्रस्तरविशेषः । परशपातर
इति
भाषा । इति वक्ष्यमाणशब्ददर्शनात् ॥

**स्पर्शमणिप्रभवं**, क्ली, (स्पर्शमणिः प्रभवो यस्य ।)
स्वर्णम् । इति शब्दरत्नावली ॥

**स्पर्शलज्जा**, स्त्री, (स्पर्शात् लज्जा संकोचनरूप-
त्रपा यस्याः ।) लज्जालुवृक्षः । इति
शब्द-
चन्द्रिका ॥

**स्पर्शशुद्धा**, स्त्री, (स्पर्शे शुद्धा ।) शतमूली । इति
शब्दचन्द्रिका ॥

**स्पर्शस्यन्दः**, पुं, (स्पर्शेन स्यन्दते मूत्रयतीति ।
स्यन्द + अच् ।) भेकः । इति केचित् ॥

**स्पर्शा**, स्त्री, (स्पृशति परपुरुषमिति । स्पृश +
अच् । टाप् ।) कुलटा । इति धरणिः ॥

**स्पर्शानन्दाः**, स्त्री, (स्पर्शेन आनन्दो यासाम् ।)
अप्सरसः । इति त्रिकाण्डशेषः ॥

**स्पर्ष्टा**, [ऋ] त्रि, (स्पृशतीति । स्पृश + तृच् ।)
उपतापकमात्रम् । रोगः । इत्येके ।
इत्यमर-
टीकायां भरतः । ३ । २ । १४ ॥

**स्पश**, ञ ग्रन्थवाधयोः । इति कविकल्पद्रुमः ॥
(भ्वा०-उभ०-सक०-सेट् ।) ञ,
स्पशति स्पशते ।
पस्पाश । ग्रन्थस्थाने स्पर्शनं पठन्ति
केचित् ।

| | | |
|---|---|---|
| अथ उच्छिष्टस्य चाण्डालादिस्पर्शप्रायश्चित्तम् ।<br>आपस्तम्बः ।<br>“भुक्तोच्छिष्टस्त्वनाचान्तश्चाण्डालैः श्वपचेन वा ।<br>प्रमादात् स्पर्शनं गच्छेत् तत्र कुर्य्याद्विशोधनम् ॥<br>गायत्र्यष्टसहस्रन्तु द्रुपदां वा शतं जपेत् ।<br>त्रिरात्रोप्रोषिता भूत्वा पञ्चगव्येन शुध्यति ॥<br>भुक्तोच्छिष्टोऽन्त्यजैः स्पृष्टः प्राजापत्यं समाचरेत् ।<br>अर्द्धोच्छिष्टे स्मृतः पादः पाद आमाशने तथा ॥” | | इति दुर्गादासः ॥ |

**स्पशः**, पुं, (स्पशतीति । स्पश + पचाद्यच् ।)

चरः । (यथा, महाभारते । १ । १४७ । २५ ।
“वयन्तु यदि दाहस्य बिभ्यतः पद्रवेमहि ।
स्पशैर्नो घातयेत् सर्व्वान् राज्यलुब्धः सुयोधनः ॥”)
अभिसरः । इत्यमरः । ३ । ३ । २१३ ॥ चरो
गूढपुरुषः । अभिसरो युद्धम् । प्राणनिरपेक्षो
यो द्रव्यार्थं व्याडं हस्तिनं वा योधयति सोऽभि-
सरः । इत्येके । इमौ द्वौ स्पशौ । इति भरतः ॥

**स्पष्टं**, त्रि, स्पश्यते स्मेति । स्पश + णिच् + क्तः ।

“वा दान्तशान्तेति ।” ७ । २ । २७ । इति
साधुः ।) व्यक्तम् । तत्पर्य्यायः । स्फुटम् २
प्रव्यक्तम् ३ उल्वणम् ४ । इत्यमरः । ७ । १ । ८१ ॥
उद्रिक्तम् ५ प्रकटम् ६ । इति जटाधरः ॥
(यथा, श्रीमद्भागवते । ४ । १५ । २२ ।
“भोः सूत हे मागध सौम्य वन्दिन्
लोकेऽधुना स्पष्टगुणस्य मे स्यात् ।
किमाश्रयो मे स्तव एष योज्यतां
मा मय्यभूवन् वितथा गिरो वः ॥”)

**स्पष्टीकृतं**, त्रि, व्यक्तीकृतम् । कृधातौ परे स्पष्ट-

शब्दादभूततद्भावे च्विप्रत्ययेन निष्पन्नम् ॥

**स्पृ**, न प्रीतिरक्षापालने । इति कविकल्पद्रुमः ॥

(स्वा०-पर०-सक०-सेट् ।) न, स्पृणोति । इति
दुर्गादासः ॥

**स्पृक्का**, स्त्री, पृक्का । स्पृश्यते सौगन्ध्यात् स्पृश संस्पर्शे

स्नात्वाचम्य हरिं स्मृत्वा प्राणायामेन शुध्यति ॥
शूद्रस्तु त्रिविधो ज्ञेयो व्रतस्थश्चोत्तमः स्मृतः ।
कायस्थः पावको मध्यो भिन्नाचारोऽधमो मतः ॥
उत्तमैर्ब्राह्मणः स्पृष्ट उपस्पृश्य द्विजः शुचिः ।
अधमः सूर्य्यगामग्निं स्पृष्टः शुध्यति ब्राह्मणः ॥”
इति मत्स्यसूक्ते ३९ पटलः ॥

**स्पृष्टास्पृष्टि**, व्य, (स्पृष्टेन स्पृष्टेन यत् भवति । “इच्

कर्म्मव्यतिहारे ।” ५ । ४ । १२७ । इति इच् ।
“अन्येषामपि दृश्यते ।” ६ । ४ । १३७ । इति
दीर्घः ।) परस्परस्पर्शनम् । छोयाछुँयि इति
भाषा । यथा, रत्नाकरे बृहस्पतिः ।
“तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे ।
नगरग्रामदाहे च स्पृष्टास्पृष्टि न दुष्यति ॥
आपद्यपि च कष्टायां रुग्भये पीडिते तथा ।
मातामित्रोर्गुरोश्चैव निदेशे वर्त्तनात्तथा ॥”
स्पृष्टास्पृष्टि इत्यव्ययं क्रियाव्यतीहारे । तथेति
न दुष्यतीत्यर्थः । इति प्रायश्चित्ततत्त्वम् ॥ मत्स्य-
सक्ते ३८ पटलेऽप्यन्यत् द्रष्टव्यम् ॥

**स्पृष्टिः**, स्त्री, (पृश + क्तिन् ।) स्पर्शः । तत्प-

र्य्यायः । पृक्तिः २ । इत्यमरः । ३ । २ । ९ ॥
स्पर्शनम् ३ । इति शब्दरत्नावली ॥

**स्पृह**, त् क ईप्से । इति कविकल्पद्रुमः ॥ (अदन्त

**स्प्रष्टा**, [ऋ] त्रि, (स्पृशतीति । स्पृश + तृच् ।)

उपतापकमात्रम् । इत्यमरः । ३ । २ । १४ ॥
रोगः । इत्येके । इति भरतः ॥ (स्पर्शकः ।
यथा, महाभारते । १४ । २० । २१ ।
“घ्राता भक्षयिता द्रष्टा स्प्रष्टा श्रोता च पञ्चमः ।
मन्ता बोद्धा च सप्तैते भवन्ति परमर्त्विजः ॥”)

**स्फट** इ शीर्णौ । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-अक०-सेट् ।) द्वावाद्यस्वरिणा-
वोष्ठ्यवर्गद्वितीययुक्तौ । पञ्चमस्वरिणाविति भ्रमो
हेयः । तथात्वे सजातीयतया स्फुटक् भिदीत्या-
दीनां सन्निधावेवापठिष्यत् । एवं संख्यापि न
संमच्छते । स्फुटिर्विशरणे इत्यनेनैवेष्टसिद्धे
शेषधातोश्च वैयर्थ्यं स्यात् । अतएव रमा-
नाथोऽपि स्फुटिर्विशरणे इत्यत्र उकारशून्यः
स्फट इति केचित् पठन्ति । पचादित्वादनि
स्फटा फणा इति सुभूतिरित्यन्तमाह । इ,
स्फण्ट्यते । स्फटति गात्रे बाणः । पस्फट पस्फाट
स्फटिकम् । इति दुर्गादासः ॥

**स्फट** शीर्णौ । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-अक०-सेट् ।) द्वावाद्यस्वरिणा-
वोष्ठ्यवर्गद्वितीययुक्तौ । पञ्चमस्वरिणाविति भ्रमो
हेयः । तथात्वे सजातीयतया स्फुटक् भिदीत्या-
दीनां सन्निधावेवापठिष्यत् । एवं संख्यापि न
संमच्छते । स्फुटिर्विशरणे इत्यनेनैवेष्टसिद्धे
शेषधातोश्च वैयर्थ्यं स्यात् । अतएव रमा-
नाथोऽपि स्फुटिर्विशरणे इत्यत्र उकारशून्यः
स्फट इति केचित् पठन्ति । पचादित्वादनि
स्फटा फणा इति सुभूतिरित्यन्तमाह । इ,
स्फण्ट्यते । स्फटति गात्रे बाणः । पस्फट पस्फाट
स्फटिकम् । इति दुर्गादासः ॥

**स्फटः**, पुं, (स्फटतीति । स्फट + अच् ।) फणा ।

बाहुल्यात् कः पृषोदरादित्वात् शस्य कः स्पृक्का
दन्त्यादिरिति केचित् । इत्यमरटीकायां भरतः ।
२ । ४ । १३३ ॥ (यथा, बृहत्संहितायाम् । ७७ । ५ ।
"त्वक्कुष्ठरेणुनलिका-
स्पृक्कारसतगरबालकैस्तुल्यैः ।
केसरपत्रविमिश्रै-
र्नरपतियोग्यं शिरःस्नानम् ॥")

**स्पृश**, श औ स्पृशि । इति कविकल्पद्रुमः ॥

(तुदा०-पर०-सक०-अनिट् ।) श, स्पृशति । औ,
अस्पार्क्षीत् अस्पृक्षत् । हस्तेन पस्पर्श तदङ्ग-
मिन्द्रः । इति कुमारः । इति दुर्गादासः ॥

**स्पृशा**, स्त्री, (स्पृशतीति । स्पृश + कः । टाप् ।)

भुजङ्गघातिनीवृक्षः । कङ्कालिका इति ख्याता ।
इति शब्दचन्द्रिका ॥

**स्पृशी**, स्त्री, कण्टकारी । इत्यमरः । २ । ४ । ९३ ॥

**स्पृष्टः**, त्रि, (स्पृश + क्तः ।) कृतस्पर्शः । यथा,

प्रायश्चित्ततत्त्वधृतब्रह्मपुराणवचनम् ।
"उच्छिष्टेन तु शूद्रेण विप्रः स्पृष्टस्तु तादृशः ।
उपवासेन शुद्धिः स्यात् शुना संस्पृष्ट एव वा ॥"

**स्पृष्टास्पृष्टं**, क्ली, (स्पृष्टेन आ सम्यक् स्पृष्टम् ।)

परस्परस्पर्शनम् । यथा, --
"अथ जातिगुणान् वक्ष्ये स्पृष्टास्पृष्टं महेश्वरि ! ।
अधमैः शिष्टसंस्पर्शे प्रायश्चित्तं यथाविधि ॥
ब्राह्मणरय शवाङ्गञ्च क्षत्त्रियाद्यैः कदाचन ।
स्पृष्ट्वाचम्य हरिं स्मृत्वा उपवासेन क्षत्त्रियः ॥
व्रतस्थशूद्रस्पर्शेऽपि हरिसंस्मरणे शुचिः ।

चुरा०-पर०-सक०-सेट् ।) ईप्स आप्तुमिच्छा ।
स्पृहयति । इति दुर्गादासः ।

**स्पृहणीयं**, त्रि, (स्पृह + अनीयर् ।) वाञ्छनीयम् ।

यथा, ऋतुसंहारे । १ । १ ।
"प्रचण्डसूर्य्यः स्पृहणीयचन्द्रमाः
सदापगाहक्षतवारिसञ्चयः ।
दिनान्तरम्योऽभ्युपशान्तमन्मथो
निदाघकालः समुपागतः प्रिये ॥"

**स्पृहयालुः**, त्रि, (स्पृहयति तच्छीलः । स्पृह +

"स्पृहिगृहिपतीति । ३ । २ । १५८ । इति
आलुच् ।) स्पृहाशीलः । लोभी । इति मुग्ध-
बोधव्याकरणम् ॥ (यथा, रघुः । १४ । ४५ ।
"प्रजावती दोहदशंसिनी ते
तपोवनेषु स्पृहयालुरेव ॥")

**स्पृहा**, स्त्री, (स्पृह + अङ् । टाप् ।) इच्छा ।

इत्यमरः । १ । ७ । २७ ॥ तस्याः निन्दाप्रशंसे
यथा, ब्रह्मवैवर्त्ते गणपतिखण्डे । ३५ । ७३ -- ७५;
८४ -- ८५ ।
"तपो धनं ब्राह्मणानां तपः कल्पतरुस्तथा ।
तपस्या कामधेनुश्च सन्ततं तपसि स्पृहा ॥
ऐश्वर्य्यं क्षत्त्रियाणाञ्च बाणिज्ये च तथा विशाम् ।
शूद्राणां विप्रसेवायां स्पृहा वेदेष्वनिन्दिता ॥
क्षत्त्रियाणाञ्च तपसि स्पृहातीवप्रशंसिता ।
ब्राह्मणानां विवादेषु स्पृहातीव विनिन्दिता ॥
क्षत्त्रियाणां रणो धर्म्मो रणे मृत्युर्न गर्हितः ।

इत्यमरः । १ । ८ । ९ ॥

**स्फटा**, स्त्री, (स्फट + अच् । टाप् ।) फणा ।

इत्यमरः । १ । ८ । ९ ॥

**स्फटिकः**, पुं, (स्फट शीर्णौ + बाहुलकात् इकन् ।)

सूर्य्यकान्तमणिः । इति हलायुधः ॥ स्वनाम-
ख्यातमणिः । फटिक् इति भाषा । तत्पर्य्यायः ।
स्फाटिकम् २ स्फाटकम् ३ । इति शब्दरत्ना-
वली ॥ भासुरः ४ स्फाटिकोपलः ५ शालि-
पिष्टम् ६ धौतशिलम् ७ । इति त्रिकाण्डशेषः ॥
सितोपलः ८ विमलमणिः ९ निर्म्मलोपलः १०
स्वच्छः ११ स्वच्छमणिः १२ अमररत्नम् १३
निस्तुषरत्नम् १४ शिवप्रियः १५ । अस्य गुणादि
यथा, --
"स्फटिकः समवीर्य्यश्च पित्तदाहार्त्तिदोषनुत् ।
तस्याक्षमालां जपता दत्ते कोटिगुणं फलम् ॥"
तत्परीक्षा यथा, --
"यद्गङ्गातोयविन्दुच्छविविमलतमं निस्तुषं नेत्र-
हृद्यं
स्निग्धं शुद्धान्तरालं मधुरमतिहिमं पित्त-
दाहास्रहारि ।
पाषाणे यन्निघृष्टं स्फुटितमपि निजां स्वच्छतां नैव जह्यात
तज्जात्यं जातु लभ्यं शुभमुपचिनुते शैवरत्नञ्च रत्नम् ॥"
बिन्दुस्थाने विद्युदिति च पाठः । इति राज-
निर्घण्टः ॥ अपि च ।
"मुक्ताविद्रुमवज्रेन्द्रवैदूर्य्यस्फटिकादिकम् ।
मणिरत्नं सरं शीतं कषायं स्वादुलेखनम् ।
चक्षुष्यं धारणात्तच्च पापालक्ष्मीविनाशनम् ॥"
इति राजवल्लभः ॥ * ॥
तस्य उत्पत्तिपरीक्षे यथा, --
"कावेरबिन्ध्ययवनचीननेपालभूमिषु ।
लाङ्गली व्यकिरन्मेदो दानवस्य प्रयत्नतः ॥

| | | |
|---|---|---|
| सेवयोपस्पृशेद् यस्तु प्रायश्चित्तं न विद्यते ॥<br>ब्राह्मणो यस्तु शूद्रस्य सेवयोपस्पृशेत् क्वचित् । | रणे स्पृहा ब्राह्मणानां लोके वेदे विडम्बना ॥<br>तपोधनानां विप्राणां वाग्बलानां युगे युगे ।<br>शान्तिस्वस्त्ययनं कर्म्म विप्रधर्म्मो न सङ्गरः ॥"<br>**स्पृह्यः**, पुं, (स्पृह्यते इति । स्पृह + यत् ।) मातु-<br>लुङ्गकः । इति शब्दचन्द्रिका ॥<br>वाञ्छनीये, त्रि ॥ | |

आकाशशुद्धं तैलाख्यमुत्पन्नं स्फटिकं ततः ।
मृणालशङ्खधवलं किञ्चिद्वर्णान्तरान्वितम् ॥
न तत्तुल्यं हि रत्नानामथवा पापनाशनम् ।
संस्कृतं शिल्पिना सद्यो मूल्यं किञ्चिल्लभेत्ततः ॥"
इति गारुडे पूर्ब्बविभागे । ७९ । १ -- ३ ॥ * ॥
तथा ।
"हिमालये सिंहले च बिन्ध्याटवितटे तथा ।
स्फटिकं जायते चैव नानारूपं समप्रभम् ॥
हिमाद्रौ चन्द्रसङ्काशं स्फटिकं तत् द्विधा भवेत् ।
सूर्य्यकान्तञ्च तत्रैकं चन्द्रकान्तं तथा परम् ॥
सूर्य्यांशुस्पर्शमात्रेण वह्निं वमति यत् क्षणात् ।
सूर्य्यकान्तं तदाख्यातं स्फटिकं रत्नवेदिभिः ॥
पूर्णेन्दुकरसंस्पर्शादमृतं स्रवति क्षणात् ।
चन्द्रकान्तं तदाख्यातं दुर्ल्लभं तत् कली युगे ॥
अशोकपल्लवच्छायं दाडिमीतीजसन्निभम् ।
बिन्ध्याटवितटे देशे जायते मन्दकान्तिकम् ॥
सिंहले जायते कृष्णमाकरे गन्धनीलके ।
पद्मरागभवे स्थाने विविधं स्फटिकं भवेत् ॥
अत्यन्तनिर्म्मलं स्वच्छं स्रवतीव जलं शुचि ।
ज्योतिर्ज्वलनमाश्लिष्टं मुक्ताज्योतीरसं द्विज ॥
तदेव लोहिताकारं राजावर्त्तमुदाहृतम् ।
दोषनाशित्वम् । दृढरङ्गदातृत्वञ्च । इति राज-
निर्घण्टः ॥ अपि च ।
"स्फटिका तु कषायोष्णा वातपित्तकफव्रणान् ।
निहन्ति श्वित्रवोसर्पान् योनिसङ्कोचकारिणी ॥"
इति भावप्रकाशः ॥

**स्फड**, इ क नर्म्मणि । (चुरा०-पर०-सक०-सेट् ।)
यथा । स्फुडि क नर्म्मणि इत्यत्र नर्म्म इह परो-
हासः । आद्यस्वरीति कातन्त्राद्याः । इति
दुर्गादासः ॥

**स्फर**, श स्फूर्त्तौ । चले । इति कविकल्पद्रुमः ॥
(तुदा०-पर०-अक०-सेट् ।) श, स्फरती
स्फरन्ती । पस्फार । स्फरणं स्फुरणमित्यमरः ।
इति दुर्गादामः ॥

**स्फरणं**, क्ली, (स्फर + ल्युट् ।) स्फुरणम् । इत्य-
मरः । ३ । २ । १० ॥

**स्फल**, श चाले । स्फूर्त्तौ । इति कविकल्पद्रुमः ॥
(तुदा०-पर०-अक०-सेट् ।) श, स्फलती
स्फलन्ती । पस्फाल । सुरद्विपास्फालनकर्क्कशा-
ङ्गुलाविति रघुः । चालश्चलनम् । इति दुर्गा-
दासः ॥

**स्फाटकं**, क्ली, स्फटिकम् । इति काचित् शब्द-
रत्नावली ॥ जलविन्दौ, पुं, । इति केचित् ॥

इति एच आत्वम् ।) विकटः । कनकादेर्ब्वद्-
वुदः । इति मेदिनी ॥ विपुले, त्रि । इति हेम-
चन्द्रः ॥ (यथा साहित्यदर्पणे । ३ । १०१ ।
"असकृदसकृत् स्फारस्फारैरपाङ्गविलोकितै-
स्त्रिभुवनजये सा पञ्चेषोः करोति सहायताम् ॥")

**स्फारणं**, क्ली, (स्फर + णिच् + ल्युट् ।) स्फुर-
णम् । इत्यमरटीकायां रमानाथः । २ । ३ । १० ॥

**स्फालः**, पुं, (स्फल चलने + घञ् । "स्फुरति-
स्फुलत्योर्घञि ।" ६ । १ । ४७ । इति एच
आत्वम् ।) स्फूर्त्तिः ।

**स्फिक्**, [च्] स्त्री, (स्फाय वृद्धौ + बाहुलकात्
डिच् ।) कटिप्रोथः । इत्यमरः । २ । ६ । ७५ ॥
(यथा, मनुः । ८ । २८१ ।
"सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः ।
कट्यां कृताङ्को निर्व्वास्यः स्फिचं वास्यावकर्त्त-
येत् ॥")

**स्फिक्घातनकः**, पुं, (स्फिचं घातयतीति । स्फिच्
+ हन् + णिच् + ल्युः । ततः स्वार्थे कन् ।)
कट्फलः । इति शब्दचन्द्रिका ॥

**स्फिट**, क वृत्याम् । हिसे । अनादरे । इति कवि-
कल्पद्रुमः ॥ (चुरा०-पर०-सक०-सेट् ।) क,
स्फेटयति । वृतिरन्यैर्न मन्यते । इति दुर्गादासः ॥

**स्फिरं**, त्रि, (स्फाय वृद्धौ + "अजिरशिशिरशिथि-
लेति ।" उणा ० १ । ५४ । इति किरच्प्रत्ययेन
साधुः ।) प्रचुरम् । इत्यमरः । ३ । १ । ६३ ॥

**स्फीतः**, त्रि, (स्फाय + क्तः । "स्फायः स्फी निष्ठा-
याम् ।" ६ । १ । २२ । इति धातोः स्फी ।)
वर्द्धितः । यथा, --
"स्फीतान् जनपदांस्तत्र पुरग्रामव्रजाकरान् ।
खेटखर्व्वटवाटीश्च वनान्युपवनानि च ॥"
इति श्रीभागवते । १ । ६ । ११ ॥

आनीलं तत्तु पाषाणं प्रोक्तं राजमयं शुभम् ॥
ब्रह्मसूत्रमयं यत्तु प्रोक्तं ब्रह्ममयं द्विज ॥”
इति स्फटिकपरीक्षा । इति भोजराजकृतयुक्तिकल्पतरुः ॥

**स्फटिका**, स्त्री, स्फटिकारिः । इति भावप्रकाशः ॥

**स्फटिकाचलः**, पुं, (स्फटिकवत् शुभ्रोऽचलः । स्फटिकस्य अचलो वा ।) कैलासपर्व्वतः । इति हेमचन्द्रः ॥

**स्फटिकात्मा**, [न्] पुं, (स्फटिक एव आत्मा स्वरूपं यस्य ।) स्फटिकः । इति शब्दरत्नावली ॥

**स्फटिकाद्रिभिदः**, पुं, (स्फटिकाद्रिं कलासपर्वतमपि भिनन्ति वर्णेनेति । भिद + “इगुपधज्ञेति ।” ३ । १ । १३५ । इति कः ।) कर्पूरः । इति केचित् ॥

**स्फटिकाभ्रः**, पुं, (स्फटिकवत् शुभ्रो यो अभ्रः स इव शुक्लत्वात् ।) कर्पूरः । इति राजनिर्घण्टः ॥

**स्फटिकारिः**, स्त्री, (स्फटिकस्य अरिः ।) श्वेतवर्णवणिग्द्रव्यविशेषः । फट्किरी इति भाषा ॥
यथा, --
“नवसारयवक्षारस्फटिकारितएव काचवकयन्त्रैः ।
बहुशः पात्यं सत्वं तद्धि महाद्रावकं नाम ॥”
इति रत्नावली ॥
तद्रूपान्तराणि । स्फटिकारी । स्फटिकारिका । फट्करी । इति महाद्रावकप्रकरणे भैषज्यरत्नावली ॥

**स्फटी**, स्त्री, (स्फटतीति । स्फट + अच् । ङीष् ।)

**स्फाटिकं**, क्ली, (स्फटिकमेव । स्वार्थे अण् ।) स्फटिकम् । इति शब्दारत्नावली ॥ (यथा, महाभारते । २ । ५५ । १७ ।
“सहस्रस्तम्भां हेमवैदूर्य्यचित्रां
शतद्वारां तोरणस्फाटिकाख्याम् ।
सभामग्र्यां क्रोशमात्रायतां मे
तद्विस्तारामाशु कुर्व्वन्तु युक्ताः ॥”
स्फटिकस्येदमिति । स्फटिक + अण् । स्फटिकसम्बन्धिनि, त्रि । यथा, महाभारते । १ । ६३ । १३ ।
“देवोपभोग्यं दिव्यञ्च आकाशे स्फाटिकं महत् ।
आकाशगं त्वां मद्दत्तं विमानमुपपत्स्यते ॥”)

**स्फाटिकोपलः**, पुं, (स्फाटिक उपलः) स्फाटिकम् । इति त्रिकाण्डशेषः ॥

**स्फाटीकं**, क्ली, स्फटिकम् । इति शब्दरत्नावली ॥

**स्फातः**, त्रि, वृद्धियुक्तः । स्फायधातोः क्तप्रत्ययेन निष्पन्नः । इति व्याकरणम् ॥

**स्फातिः**, स्त्री, (स्फाय + क्तिन् ।) वृद्धिः । इत्यमरः । ३ । २ । ९ ॥

**स्फाय**, ई ङ वृद्धौ । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-सेट् । निष्ठायामनिट् ।) ई, स्फीतः स्फातः । ङ, स्फायते पस्फाये । स्फायन्निर्मोकसन्धीति गणकृतानित्यत्वात् । इति रमानाथः । वस्तुतस्तु स्फायते स्फायः पचादित्वादन् ततः स इवाचरतीति क्वौ शत्रन्तम् । इति दुर्गादासः ॥

**स्फारं**, क्ली, (स्फायते इति । स्फाय + “स्फायि-

“स्फीतान् समृद्धान् देशान् । तत्र तस्यां दिशि । पुरग्रामव्रजाकरान् तत्र पुराणि राजधान्यः । ग्रामा भृगुप्रोक्ताः ।
‘विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति ते ।
स तु ग्राम इति प्रोक्तः शूद्राणां वास एव चेति ॥’
व्रजा गोकुलानि । आकरा रत्नाद्युत्पत्तिस्थानानि । तान् । खेटाः कर्षकग्रामाः । खर्व्वठाः गिरितटग्रामाः । भृगुप्रोक्ता वा ।
‘एकतो यत्र तु ग्रामो नगरं चैकतः स्थितम् ।
मिश्रन्तु खर्व्वटं नाम नदीगिरिसमाश्रयमिति ॥’
वाट्यः पूगपुष्पवाद्यस्ताः । वनानि स्वतः सिद्धवृक्षाणां समूहाः । उपवनानि रोपितवृक्षाणां समूहाः तानि च ।” इति तट्टीकायां श्रीधरस्वामी ॥

**स्फुट**, इ क नर्म्मणि । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-सक०-सेट् ।) नर्म्मेह परीहासः । इ क, स्फुण्टयति सखायं लोकः । अयमन्यैर्न मन्यते । इति दुर्गादासः ॥

**स्फुट**, इर् विश(स)रणे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-भेदने सक०-सेट् ।) इर, अस्फुटत् अस्फोटीत् । विशरणं भेदनम् ।

| | | |
|---|---|---|
| स्फटिकारिः । तत्पर्य्यायः । स्फटिकी २ श्वेता ३ शुभ्रा ४ रङ्गदा ५ रङ्गदृढा ६ दृढरङ्गा ७ रङ्गाङ्गा ८ । अस्या गुणाः । कटुत्वम् । स्निग्ध- त्वत्त । कवायत्वम् । प्रदरमेहकृच्छ्रवमिशोष- | क्तञ्चीति ।" उणा० २ । १२ । इति रक् ।) प्रचु- रम् । इत्यमरः । ३ । १ । ६३ ॥<br>**स्फारः**, पुं, (स्फाय + रक् । यद्वा, स्फुर चलने + घञ् । "स्फुरतिस्फुलत्योर्घञि ।" ६ । १ । ४७ । | |

स्फोटयति गात्रं बाणः । विसरण इति दन्त्य-
मध्यपाठे विकसन इत्यर्थः ।
स्फोटति मल्लिका-
कलिका ॥

**स्फुट**, क भिदि । इति कविकल्पद्रुमः । (चुरा०-
पर०-सक०-सेट् ।) क, स्फोटयति कण्टकः
पदम् । इति दुर्गादासः ॥

**स्फुट**, ङ विसरणे । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-अक०-सेट् ।) ङ,
स्फोटन्ते नवकुड्म-
लानि कुटजप्रायेषु वृक्षेष्विति
हलायुधः । इति
दुर्गादासः ॥

**स्फुट**, त् क विसरणे । इति कविकल्पद्रुमः ॥
(अदन्तचुरा०-पर०-अक०-सेट् ।) विसरणं
विकमनम् । स्फुटयति
चम्पककलिका । अपु-
स्फुटत् । इति दुर्गादासः ॥

**स्फुट**, शि विकासे । इति कविकल्पद्रुमः । (तुदा०-
पर०-अक०-सेट् ।) विकास इति कस ज
गताविति दन्त्यान्तस्य घञि रूपं विपूर्ब्बेणार्था-
न्तरवाचितया विकसनमित्यर्थः ।
शि, स्फुटति
केतकीकोरकः । अस्फुटीत् पुष्फोट । इति
दुर्गादासः ॥

**स्फुट**, क हिंसे । आङ्पूर्ब्बोऽयम् । इति कविकल्प-

**स्फुटितः**, त्रि, (स्फुट + क्तः ।) विकसितः । इति
हेमचन्द्रः ॥ भिन्नः । (यथा, मृच्छकटिके
३ अङ्के ।
"असदृशजनसंप्रयोगभीरो-
र्हृदयमिव स्फुटितं महागृहस्य ॥")
परिहसितः । इति
स्फुटधात्वर्थदर्शनात् ।
व्यक्तोकृतः । इति
स्फुटशब्दार्थदर्शनात् ॥

**स्फुटी**, स्त्री, (स्फुटि + कृदिकारादिति ङीष् ।)
पादस्फोटरोगः । कर्कटीफलम् । फुटी इति
भाषा । इति शब्दरत्नावली ॥

**स्फुट्ट**, क अनादरे । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-सक०-सेट् ।) क, स्फुट्टयति । इति दुर्गा-
दासः ॥

**स्फुड**, इ क नर्म्मणि । इति कविकल्पद्रुमः ॥ (चरा०-
पर०-सक०-सेट् ।) नर्म्म इह परीहासः ।
इ क, स्फुण्डयति सखायं लोकः ।
पुष्फुण्डयिषति ।
आद्यस्वरीति कातन्त्राद्याः ।
पञ्चमस्वरयुक्तो
नर्म्मे । इति गोविन्दभट्टः । इति
दुर्गादासः ॥

**स्फुड**, इ ङ फुल्ले । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-अक०-सेट् ।) फुल्लं
विकसनम् । इ,
स्फुण्ड्यते । ङ, स्फुण्डते
कुन्दकोरकः । पुस्फुण्डे ।
इति दुर्गादासः ॥

दृगन्तमध्यस्फुरणेऽर्थलाभोत्-
कण्ठौ क्रमाद्विस्फुरिते दृगादौ ।
जयो दृशाधः स्फुरणे रणः स्यात्
प्रियश्रुतिः स्यात् स्फुरिते च कर्णे ॥
योषित्समृद्धिः स्फुरिते च गण्डे
घ्राणे तु सौमुख्यमुदौ भवेताम् ।
भोज्येष्टसङ्गावधरोद्र्ध्वयोश्च
स्कन्धे गले भोगविवृद्धिलाभौ ॥
स्पन्दो भुजस्येष्टसमागमाय
स्पन्दः करस्य द्रविणाप्तहेतुः ।
स्पन्दश्च पृष्ठस्य पराजयाय
स्पन्दो जयायोरसि मानवानाम् ॥
पार्श्वप्रकम्पे विषयस्य लाभः
कटिप्रकम्पे तु बलप्रमोदौ ।
नाभिप्रकम्पे निजदेशलाभः
धनर्द्धिबन्धुश्च भ्रुवि प्रकम्पे ॥
दुःखं धनान्तं हृदयस्य कम्पे
स्फिक्पायुकम्पेऽपि च वाहनाप्तिः ।
वराङ्गकम्पे वरयोषिदाप्ति-
र्मष्के सकम्पे तनयस्य जन्म ॥
वस्तौ सकम्पे युवतिप्रवृत्तिः
दोषश्च कम्पे पुनरूरुपृष्ठे ।
उरः पुनः स्यात् सुसहायलाभः
स्याज्जानुकम्पे त्वचिरेण सिद्धिः ॥
जङ्घाप्रकम्पे निजदेशनाशः
स्थानाप्तिरुष्ट्रश्चरणस्य कम्पे ।
यात्रा सलाभाङ्घ्रितलप्रकम्पे
पुंसां सदा दक्षिणदेहभागे ॥
स्त्रीणाञ्च वामावयवे प्रजातः
स्पन्दः फलानि प्रदिशत्यवश्यम् ॥"
इति वसन्तराजशाकुने नरेङ्गितेऽङ्गस्फुरण-
प्रकरणं चतुर्थम् ॥

**स्फुरणा**, स्त्री, (स्फुर + णिच् + युच् । टाप् ।)
स्फुरणम् । इत्यमरटीका । ३ । २ । १० ॥

**स्फुरन्**, [त्] त्रि, (स्फुर + शतृ ।) कम्पनयुक्तः ।
स्फूर्त्तिविशिष्टः । यथा, --
"गङ्गोत्तुङ्गतरङ्गसङ्गतजटाजूटाग्रजाग्रत्फणि
स्फुर्जत्स्फुत्कृतिभीतिसम्भृतचमत्कारस्फुरत्-

द्रुमः ॥ (चुरा०-पर०-सक०-सेट् ।) आङ् उप-
सर्गः । क, आस्फोटयति । इति दुर्गादासः ॥

**स्फुटः**, त्रि, (स्फुटति प्रकाशते इति । स्फुट् + कः ।)
व्यक्तः । यथा, रघुः । ३ । ६३ ।
"अवेहि मां प्रीतमृते तुरङ्गमात्
किमिच्छसीति स्फुटमाह वासवः ॥")
प्रफुल्लः । इति मेदिनी ॥ शुक्लः । इत्यजयः ॥
भिन्नः । इति स्फुटधात्वर्थदर्शनात् ॥ * ॥ स्फुट-
ग्रहा यथा, --
"स्यात् संस्कृतो मध्यफलेन मध्यो
मन्दस्फुटः स्यात् चलकेन्द्रमुक्तम् ।
विधाय शैघ्र्येण चलेन चैवं
खेटस्फुटः स्यादसकृत् फलाभ्याम् ॥"
कुजस्य विशेषमाह ।
"दलीकृताभ्यां प्रथमं फलाभ्यां
ततोऽखिलाभ्यामसकृत् कुजस्तु ।
स्फुटौ रवीन्दू मृदुनैव वेद्यौ
शीघ्राख्यतुङ्गस्य तयोरभावात् ॥"
इति सिद्धान्तशिरोभणिः ॥

**स्फुटनं**, क्ली, (स्फुट् + ल्युट् । कुटादित्वात् न गुणः ।)
विदरणम् । इत्यमरः । ३ । २ । ५ ॥ विक
सनम् । इति स्फुटधात्वर्थदर्शनात् ॥

**स्फुटबन्धनी**, स्त्री, (स्फुटं बन्धनं यस्याः । ङीष् ।)
पारावतपदी । नफट्की इति भाषा । इति
रत्नमाला ॥ स्फुटबल्कलीति केचित् ॥

**स्फुटा**, स्त्री, (स्फुटति विकाशते इति । स्फुट +

**स्फुड**, शि वृत्याम् । इति कतिकल्पद्रुमः ॥ (तुदा०-
पर०-सक०-सेट् ।) शि, स्फुडति । अस्फुडीत् ।
पुष्फोड । वृत्यां वरणे । इति दुर्गादासः ॥

**स्फुत्करः**, पुं, (करोतीति । कृ + अच् । स्फुदित्य-
व्यक्तशब्दस्य करः ।) अग्निः । इति शब्द-
चन्द्रिका ॥

**स्फुत्कारः**, पुं, फुत्कारः । स्फुदिति क्रियते
इति स्फुत्शब्दपूर्ब्बकृधातोर्भावे घञ्प्रत्ययेन
निष्पन्नः ॥

**स्फुर**, शि स्फुर्त्तौ । चले । इति कविकल्पद्रुमः ॥
(तुदा०-चुरा०-पर०-अक०-सेट् ।) स्फुर्त्तिः
प्रकाशः । चलश्चलनम् । शि, स्फुरति चामरम् ।
अस्फुरीत् । पुस्फोर । इति दुर्गादासः ॥

**स्फुरः**, पुं, (स्फुरतीति । स्फुर + कः ।) फलकम् ।
इति हेमचन्द्रः ॥ (स्फुर + भावे घञ् ।)
स्फुरणम् । इत्यमरटीका । ३ । २ । ९ ॥

**स्फुरणं**, क्ली, (स्फुर + ल्युट् ।) किञ्चिच्चलनम् ।
इति भरतः ॥ तत्पर्य्यायः । स्फरणम् २ । इत्य-
मरः । ३ । २ । ९ ॥ स्फुलनम् ३ स्फोरणम् ४
स्फुरः ५ स्फुरणा ६ स्फारणम् ७ । इति तट्टीका ॥
स्फूर्त्तिः । इति शब्दरत्नावली ॥ * ॥ अङ्ग-
स्फुरणस्य शुभाशुभफलं यथा, --
"ब्रूमौऽधुनाङ्गस्फुरितस्य सम्यक्
सम्भ्रमा ।
आनन्दामृतवापिकां विदधती चित्तं गिरीश-प्रभो-
स्त्वां पायान्नवसङ्गमे भगवती लज्जावती पार्व्वती ॥"
इति काव्यचन्द्रिका ॥

**स्फुरितं**, क्ली, (स्फुर + क्तः ।) स्फुरणम् । स्फुरण-
विशिष्टे, त्रि । यथा । ब्रूमोऽधुनाङ्गस्फुरिते च
सम्यक् इति । प्रिया श्रुतिः स्यात् स्फुरिते च ।
कर्णे इति च । वसन्तराजशाकुनम् ॥

**स्फुर्च्छ**, आ विस्मृतौ । इति कविकल्पद्रुमः ॥
(भ्वा०-पर०-सक०-सेट् ।) क्विपि राह्वोर्लोपे
स्फूः स्फुरौ स्फुरः । आ स्फूर्च्छितं स्फूर्णं तेन ।
स्फूर्च्छति कथां मद्यपः । इति दुर्गादासः ॥

| | | |
|---|---|---|
| कः । टाप् ।) फटा । फणा ।<br>इत्यमरटीकायां<br>रामाश्रमः । ३ । २ । ५ ॥<br>**स्फुटिः**, स्त्री, (स्फुटतीति । स्फुट + इन् ।) पाद-<br>स्फोटरोगः । निर्भिन्नकर्कटीफलम् ।<br>इति<br>भेदिनी ॥ | प्रत्येकमव्यक्तफलप्रभावम् ।<br>सर्व्वत्र यत्रावनते स्वदेहा-<br>दुत्पद्यते कर्म्मविपाकसंवित् ॥<br>मूर्द्ध्नि स्फुरत्याशु पृथिव्यवाप्तिः<br>स्थानप्रवृद्धिश्च ललाटदेशे ।<br>भ्रूघ्राणमध्ये प्रियसङ्गमः स्यात्<br>नासाक्षिमध्ये च सहायलाभः ॥ | |

**स्फु(स्फू)र्ज**, टु ओ आ वज्रनिर्षोषे ॥ (भ्वा०-सर०-
अक०-सेट् ।) टु, स्फुर्जथुः । ओ, स्फूर्णः । आ,
स्फूजितं स्फूणे तेन । वज्रनिर्घोषो वज्रकर्त्तृक-
शब्दः । स्थूर्जति वज्रम् । इति दुर्गादासः ॥

**स्फुर्ज्जकः**, पुं, (स्फुर्ज्जतीति । स्फुर्ज्ज + ण्वुल् ।)
स्फुर्जकवृक्षः । इत्यमरटीकायां रायमुकुटः ॥

**स्फुर्जथुः**, पुं, (स्फुर्ज्ज + अथुच् ।) वज्रपतनजनित-
शब्दः । इत्यमरटीकायां भरतः ॥

**स्फुल**, शि स्फूर्त्तौ । चले । चये । इति कविकल्प-
द्रुमः ॥ (तुदा०-कुटा०-पर०-अक०-सेट् ।)
शि, स्फुलति अस्फुलीत् पुस्फौल । स्फूर्त्तिः
प्रकाशः । चलः स्खलनम् । चयः सञ्चयः ।
इति दुर्गादासः ॥

**स्फुलं**, क्ली, (स्फलतीति । स्फुल स्फुर्त्तौ चले +
कः ।) वस्त्रवेश्म । इति शब्दरत्नावली ॥ ताँवु
इति भाषा ॥

**स्फुलनं** क्ली, (स्फुल + ल्युट् ।) स्फुरणम् । इत्य-
मरटीकायां नीलकण्ठः ॥

**स्फुलिङ्गः**, त्रि, (स्फुल + इङ्गच् । यद्वा, स्फुत्-
कारेण लिङ्गतीति । लिङ्ग + अच् ।) अग्नि-
कणः । इत्यमरः । १ । १ । ६० ॥ फिनकी इति

**स्फूर्त्तिमान्**, [त्] त्रि, (स्फुर्त्तिरस्यास्तीति ।
स्फुर्त्ति + मतुप् ।) पाशुपतः । यथा, --
"पाञ्चार्थिकः पाशुपतश्चिद्रूपः स्फूर्त्तिमान् मतः ॥"
इति त्रिकाण्डशेषः ॥
स्फूर्त्तिविशिष्टे, त्रि ॥

**स्फेयान्**, [स्] त्रि, (इदमनयोरतिशयेन स्फिरः ।
स्फिर + ईयसुन् । "प्रियस्थिरस्फिरेति ।" ६ ।
४ । १५७ । इति स्फादेशः ।) अतिशयः । इति
व्याकरणम् ॥

**स्फेष्ठः**, त्रि, (अयमेषातिशयेन स्फिरः । स्फिर +
इष्ठन् । "प्रियस्थिरेति ।" ६ । ४ । १५७ । इति
स्फादेशः ।) अतिशयः । इत्यमरः । ३ । १ । ११२ ॥

**स्फोटः**, पुं, (स्फुटतीति । स्फुट + अच् ।)
स्फोटकः । इति राजनिर्घण्टः ॥ (यथा, सुश्रुते ।
१ । १२ ।
"स्फोटाः शीघ्रं प्रजायन्ते ज्वरस्तृष्णा च वर्द्धते ॥" * ॥
स्फुट + भावे घञ् । विदारणम् । यथा, महा-
भारते । ३ । ११ । ५८ ।
"तयोर्भुजविनिष्पेषादुभयोर्बलिनोस्तदा ।
शब्दः समभवत् घोरो वेणुस्फोटसमो युधि ॥"
स्फुटते व्यज्यते वर्णरिति स्फुटत्यर्थो यस्मादिति
वा । स्फुट विकसने + घञ् । शब्दव्यापार-
विशेषः । तथा चोक्तम् । "वर्णानां वाचकत्वा-
नुपपत्तौ यद्बलादर्थप्रतिपत्तिः स स्फोट इति
वर्णातिरिक्तो वर्णाभिव्यङ्ग्योऽर्थप्रत्यायको नित्यः
शब्दः स्फोटः ॥" यथा, हरिवंशे भविष्यपर्व्वणि ।
१६ । ५२ ।
आस्फोटनी स्फोटनी च तत्र लास्फोटनी मता ॥"
इति भरतद्विरूपकोषः ॥
किञ्च ।
"लास्फोटन्यां वेधनी च स्फोटनी वृषदंशिका ।"
इति भरतधृतवाचस्पतिः ॥

**स्फोटबीजकः**, पुं, (स्फोटकारकं बीजं यस्य ।
ततः कन् ।) भल्लातकः । इति राजनिर्घण्टः ॥

**स्फोटा**, स्त्री, सर्पफणा । इति केचित् ॥

**स्फोटायनः**, पुं, (स्फोट एव अयनं परायणं
यस्य ।) मुनिविशेषः । तत्पर्य्यायः । कक्षीवान्
२ । इति हेमचन्द्रः ॥

**स्फोटिका**, स्त्री, (स्फुटतीति । स्फुट + ण्वुल् ।
टापि अत इत्वम् ।) हापुत्रिका । इति
त्रिकाण्डशेषः ॥ ग्रन्थान्तरे फोटिका इति पाठः ॥

**स्फ्यं**, क्ली, खड्गाकारकाष्ठम् । यथा । स्फ्याश्लि-
ष्टेज्याधिकरणञ्च । स्फ्यस्य खड्गाकारकाष्ठस्य
भक्ताश्लेषनिमित्तकेज्यायामिष्टित्वेन प्रकृतिवद्-
विकृतिरित्यतिदेशेन दर्शात्मकप्रकृतिधर्म्माणां
प्राप्तौ पूर्ब्बदिनप्रातःकालीनं हवनीयदेवता-
वाहनमपि प्राप्तं तच्च तदानीं न विधीयते
नैमित्तिके निमित्तनिश्चय वतोऽधिकारितया
प्रकृते श्वोभाविभक्ताश्लेषरूपनिमित्तसंशयेन
प्रधानानधिकारिणोऽङ्गानधिकारात्तदुत्तर-
दिने च निमित्तनिश्चय तदधिकारसिद्धावपि
नावाहनानुष्ठानं आवाहनस्य पूर्ब्बदिनप्रातः-
कालनैयत्यादितीज्याया आवाहनं विनैवानु-
ष्ठानमिति । इति तिथ्यादितत्त्वम् ॥

**स्म**, व्य, श्लोकपादपूरणम् । इत्यमरः । ३ । ४ । ५ ।

फिन्कुटी इति च भाषा ॥ द्वे अग्निचूर्णे । स्फुत्-
कारेण लिङ्गति गच्छति स्फलिङ्गः । इति तट्टी-
कायां भरतः ॥ (यथा, महाभारते । ५ । ४८ ।
५४ ।
"वलाहकादुच्चरतः सुभीमान्
विद्युत् स्फुलिङ्गानिव घोररूपान् ॥")

**स्फुलिङ्गिनी**, स्त्री, (स्फुलिङ्गोऽस्या अस्तीति ।
इनिः । ङीप् ।) अग्निसप्तजिह्वान्तर्गतजिह्वा-
विशेषः । इति जटाधरः ॥ (यथा, मुण्डकोप-
निषदि । १ । २ । ४ ।
"काली कराली च मनोजवा च
सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गनी विश्वरूपी च देवी
लोलायमाना इति सप्त जिह्वाः ॥")

**स्फूर्जकः**, पुं, (स्फूर्जति अग्नौ क्षिप्तः सन्निति ।
स्फूर्ज + ण्वुल् ।) तिन्दुकवृक्षः । इत्यमरः । २ ।
४ । ३८ ॥ स्फूर्जति वह्नौ क्षिप्तः स्फूर्जकः ।
ट्वा स्फूर्जावज्रनिर्घोषे णकः । स्फुर्जेर्वा दोर्घः
सर्व्वत्र इति परवाक्यात् स्फूर्ज्जकः स्फुर्जकश्च
स्फुर्जो वज्रः स इव दृढसारत्वात् स्फुर्जक
इत्यन्ये । इति भरतः ॥

**स्फूर्जथुः**, पुं, (स्फूर्जतीति । स्फूर्ज वज्रनिर्घोषे +
अथुच् ।) वज्रपातजनितशब्दः । तत्पर्य्यायः ।
वज्रनिप्पेषः २ । इत्यमरः । १ । ३ । १० ॥ स्फुर्जथुः ३
"अक्षराणामकारस्त्वं स्फोटस्त्वं वर्णसंश्रयः ॥")

**स्फोटकः**, पुं, (स्फुटतीति । स्फुट + ण्वुल् ।) राग-
विशेषः । फाडा । इति भाषा । तत्पर्य्यायः ।
पिडकः २ गण्डः ३ । इति हेमचन्द्रः ॥ स्फाटः
४ विस्फोटः ५ । इति राजनिघण्टः ॥ अस्य
विवरणं विस्फोटशब्दे द्रष्टव्यम् । भेदकपरी-
हासकयोस्त्रि ॥

**स्फोटनं**, क्ली, (स्फुट + ल्युट् ।) विदारणम् ।
इत्यमरटीकायां भरतः । ३ । २ । ५ ॥ (यथा, --
सुश्रुते । ६ । ४२ ।
"शङ्कुस्फोटनवत्तस्य यस्मात्तीव्राश्च वेदनाः ।
शूलासक्तस्य लक्ष्यन्ते तस्मात् शूलमिहोच्यते ॥")
प्रकाशनम् । इति स्फुटधात्वर्थदर्शनात् ॥
(शब्दः । यथा, साहित्यदर्पणे । ३ । २३२ ।
"भ्रूविभङ्गोष्ठनिर्द्दंशबाहुस्फोटनतर्ज्जनाः ॥"
स्फोटयतीति । स्फुट + णिच् + ल्युः । भेदके,
त्रि ॥ यथा, हरिवंशे । २४७ । १२ ।
"शतपर्व्वमहारौद्रं स्फोटनं सर्व्वतोमुखम् ।
प्रगृह्य रुचिरं वज्रं दीप्त रौद्राट्टहासिनम् ।
दैत्यानयोधयत् सर्व्वान् महेन्द्रः पाकशासनः ॥")

**स्फोटनी**, स्त्री, मणिशङ्खवेधोपकरणम् । भोङरी
इति ख्याता । यथा, --
(यथा, रामायणे । २ । ६४ । २२ ।
"यद्येतदशुभं कर्म्म न स्म मे कथयेः स्वयम् ।
फलेन् मूर्द्धा स्म ते राजन् सद्यः शतसहस्रधा ॥")
तद्योगे अतीतकाले कीविभक्तिर्भवति । यथा,
"हन्ति स्म रावणं रामः ।"
इति मुग्धबोधव्याकरणम् ॥

**स्मयः**, पुं, (स्मयनमिति । स्मि + अच् ।) अद्भुतः ।
गर्व्वः । इति मेदिनी ॥ (यथा, रघुः । ५ ।
१९ ॥
"ततो यथावद् विहिताध्वराय
तस्मै स्मयावेशविवर्जिताय ।
वर्णाश्रमाणां गुरवे स वर्णी
विचक्षणः प्रस्तुतमाचचक्षे ॥")

**स्मरः**, पुं, (स्मरयति उत्कण्ठयतीति । स्मृ + णिच्
+ अच् । कामदेवः । इत्यमरः । १ । १ । २६ ॥
(यथा, कुमारे । ४ । ८ ।
"स्मरसि स्मर मेखलागुणै-
रुत गोत्रस्खलितेषु बन्धनम् ।
च्युतकेशरदूषितेक्षणा-
न्यवतंसोत्पलताडनानि वा ॥" * ॥
स्मृ + अप् ।) स्मरणञ्च ॥

**स्मरकूपकः**, पुं, (स्मरस्य कूप इव कन् ।) भगम् ।
इति त्रिकाण्डशेषः ॥

| | | |
|---|---|---|
| विस्फूर्जथुः ४ विस्फुर्जथुः ५<br>वज्रनिर्घोषः ६ ।<br>इति तट्टीका ॥<br><br>**स्फूर्त्तिः**, स्त्री, (स्फूर् + क्तिन् ।) स्फूरणम् । इत्य-<br><br>मरटीकायां रमानाथः । ३ । २ ।<br>१० ॥ (यथा,<br>पञ्चदश्याम् । ८ । ३२ ।<br>“ममङ्गत्वविकाराभ्यां<br>विम्बलक्षणहीनता ।<br>स्फूत्तिरूपत्वमेतस्य विम्बवद्<br>भासनं विदुः ॥”) | | |

**स्मरकूपिका**, स्त्री, योनिः । स्मरकूपकशब्दादाप्-

पत्ययेन निष्पन्ना ॥

**स्मरगुरुः**, पुं, (स्मरस्य गुरुः पिता । कृष्णावतारे

प्रद्युम्नजनकत्वात् तथात्वम् ।) विष्णुः । इति
केचित् ॥

**स्मरगृहं**, क्ली, (स्मरस्य गृहम् ।) योनिः । इति

जटाधरः ॥

**स्मरचक्रः**, पुं, (स्मरस्य चक्रमिव आकृतिर्यस्य ।)

रतिबन्धविशेषः । यथा, स्मरदीपिकायाम् ।
"धृत्वा वामकरेणोरुं
स्वपादस्योपरिस्थितम्।
दृढञ्च रमते कामी स्मरचक्रप्रकीर्त्तितः ॥"

**स्मरच्छत्रं**, क्ली, (स्मरस्य च्छत्रमिव ।) योनिः ।

इति केचित् ॥

**स्मरणं**, क्ली, (स्मृ + ल्युट् ।) स्मृतिः । तत्पर्य्यायः ।

आध्यानम् २ स्मृतिः ३ । इति हेमचन्द्रः ॥
चिन्ता ४ चर्च्चा ५ । इति जटाधरः ॥ (यथा,
कुमारे । ६ । १९ ।
"सत्यमर्काच्च सोमाच्च परमध्यास्महे पदम् ।
अद्य तूच्चैस्तरं ताभ्यां स्मरणानुग्रहात् तव ॥"
अलङ्कारविशेषः । यथा, साहित्यदर्पणे । १० । ६६८ ॥
"सदृशानुभवाद्वस्तुस्मृतिःस्मरणमुच्यते ।"
यथा, --
"अरबिन्दमिदं वीक्ष्य खेलत्खञ्जनमञ्जुलम् ।
स्मरामि वदनं तस्याश्चारु चञ्चललोचनम् ॥"

**स्मरमन्दिरं**, क्ली, (स्मरस्य मन्दिरम् ।) योनिः ।

इति हेमचन्द्रः ॥

**स्मरलेखनी**, स्त्री, (स्मरस्य लेखनीव ।) शारिका-

पक्षी । इति शब्दरत्नावली ॥

**स्मरवल्लभः**, पुं, (स्मरस्य प्रद्युम्नस्य वल्लभः ।)

अनिरुद्धः । इति केचित् ॥

**स्मरवीथिका**, स्त्री, (स्मरस्य वीथिका ।) वेश्या ।

इति राजनिर्घण्टः ॥

**स्मरवृद्धिसंज्ञः**, पुं, (स्मरस्य वृद्धिर्यस्मात् स स्मर-

वृद्धिः । स एव संज्ञा यस्य ।)
कामवृद्धिक्षुपः ।
इति राजनिर्घण्टः ॥

**स्मरसखः**, पुं, (स्मरस्य सखा । समासे टच् ।)

चन्द्रः । इति केचित् ॥ (स्मरस्य उद्दीपके,
त्रि । यथा, रघुः । ९ । ३६ ।
"पतिषु निर्व्विविशुर्मधुमङ्गनाः
स्मरसखं रसखण्डनवर्ज्जितम् ॥")

**स्मरस्तम्भः**, पुं, (स्मरस्य स्तम्भ इव ।) उपस्थः ।

इति शब्दरत्नावली ॥

**स्मरस्मर्य्यः**, पुं, (स्मरः स्मर्य्यो यस्य ।) गर्द्दभः ।

इति त्रिकाण्डशेषः ॥

**स्मरहरः**, पुं, (स्मरं हरति नाशयतीति । हृ +

हरतेरनुद्यमने अच् ।) शिवः । इत्यमरः ।
१ । १ । ३५ ॥

**स्मरागारं**, क्ली, (स्मरस्य आगारम् ।) भगम् ।

इति शब्दरत्नावली ॥

**स्मि**, क ङ अनादरे । इति कविकल्पद्रुमः ॥

(चुरा०-आत्म०-सक०-अनिट् ।) दन्त्यादिः ।
क ङ, स्माययते । इति दुर्गादासः ॥

**स्मिट**, क अनादरे । स्नेहे । इति कविवल्पद्रुमः ॥

(चुरा०-पर०-सक०-सेट् ।) ओष्ठ्यावर्गशेष-
युक्तः । क, स्मेटयति । इति दुर्गादासः ॥

**स्मितं**, क्ली, (स्मि ङ ईषद्धसनम् + क्तः ।) ईष-

द्धास्यम् । इत्यमरः । १ । ७ । ३४ ॥ (यथा,
महाभारते । १ । १५३ । २२ ।
"विलज्जमानेव नता दिव्याभरणभूषिता।
स्मितपूर्व्वमिदं वाव्यं भीमसेनमथाब्रवीत् ॥"
विकसिते, त्रि । इति त्रिकाण्डशेषः ॥ (यथा,
माघे । ६ । ५४ ।
"स्मितसरोरुहनेत्रसरोजला-
मतिसिताङ्गविहङ्गहसद्दिवम् ॥")

**स्मील**, निमेषणे । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-अक०-सेट् ।) ओष्ठ्यावर्गशेषयुक्तः ।
स्मीलति चक्षुः पक्ष्मभिरावृतं स्यादित्यर्थः ।
इति दुर्गादासः ॥

**स्मृ**, स्मृतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

सक०-अनिट् ।) स्मरति । स्मृतिर्ज्ञानविशेषः ।
तथा च ।
"सम्बिद्भगवती द्वेधा स्मृत्यनुभवभेदिका ॥"
इति तार्किकाः ॥
तेन ञौ अञ्यन्तकर्त्तुः कर्म्मत्वम् । गुरुः शिष्यं
शास्त्रं स्मारयति । इति दुर्गादासः ॥

**स्मृ**, म औत्क्ये । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-अक०-सक० इति केचित्-अनिट् ।) म,
स्मरयति । उत्कः उत्कण्ठितः तस्य भावः
औक्यमुत्कण्ठा । आध्याने इति प्राञ्चः । आ
समन्तात् ध्यानमाध्यानं इति कश्चित् । उत्-
कण्ठिका इति काशिकावृत्तिवोपदेवौ । उत्-
कण्टापूर्ब्बकं स्मरणमिति वृद्धाः । मुहुरनुस्मर-
यन्तमनुक्षपं त्रिपुरदाहमिति किराते । इति
दुर्गादासः ॥

**स्मृतः**, त्रि, (स्मृ + क्तः ।) स्मृतिविषयः । कृत-

"मयि सकपटमित्यादौ च" स्मृतेः सादृश्यानु-
भवं विनोत्थापितत्वान्नायमलङ्कारः। राघवा-
नन्दमहापात्रास्तु वैसादृश्यात् स्मृतिमपि स्मर-
णालङ्कारमिच्छन्ति। तत्रोदादरणं तेषामेव यथा, --
"शिरीषमृद्वी गिरिपु प्रपेदे
यदा यदा दुःखशतानि सीता ।
तदा तदास्याः सदनेषु मौख्य-
लक्षाणि दध्यौ गलदश्रु रामः ॥"

**स्मरणापत्यतर्पकः**, पुं, (स्मरणेन अपत्यं तर्पय-
तीति । तृप + ण्वल् ।) कच्छपः । इति केचित् ॥

**स्मरदशा**, स्त्री, (स्मरस्य दशा ।) कामावस्था ।
तद्दशविधा यथा, उज्ज्वलनीलमणिः ।
"नयनप्रीतिः प्रथमं चिन्तासङ्गस्ततोऽथ सङ्कल्पः ।
निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ।
उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव
स्युरित्याचक्षते ॥"

**स्मरध्वजं**, क्ली, (स्मरस्य ध्वजमिव ।) योनिः । इति
शब्दरत्नावली ॥

**स्मरध्वजः**, पुं, (स्मरस्य ध्वज इव ।) वाद्यम् ।
इति हेमचन्द्रः ॥ लिङ्गम् । इति केचित् ॥

**स्मरध्वजा**, स्त्री, (स्मरस्य ध्वजो गर्व्वो यया)
ज्योत्स्नारात्रिः । इति केचित् ॥

**स्मरप्रिया**, स्त्री, (स्मरस्य प्रिया ।) रतिः । इति
जटाधरः ॥

**स्मराङ्कुशः**, पुं, (स्मरस्य अङ्कुश इव ।) नखम् ।
इति शब्दरत्नावली ॥

**स्मराम्रः**, पुं, (स्मरोद्दीपक आम्रः ।) राजाम्रः ।
इति राजनिर्घण्टः ॥

**स्मरासवः**, पुं, (स्मरस्य आसवः इव ।) लाला ।
यथा, --
"स्मरासवो मुखसुरं । पारि स्यात् पानभाज-
नम् ।"
इति त्रिकाण्डशेषः ॥
मद्यभेदः । इति केचित् ॥

**स्मार्त्तं**, क्ली, (स्मृतेरिदम् । स्मृति + अण् ।)
स्मृतिशास्त्रोक्तकर्म्म । यथा, --
"श्रौतं कर्म्म स्वयं कुर्य्यादन्योऽपि स्मार्त्तमाच-
रेत् ।
अशक्तौ श्रौतमप्यन्यः कुर्य्यादाचारमन्ततः ॥"
इति तिथ्यादितत्त्वम् ॥
अपि च ।
"श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी ।
अविरोधे सदा कार्य्यं स्मार्त्तं वैदिकवत् सता ॥"
इति श्राद्धतत्त्वम् ॥

**स्मार्त्तः**, त्रि, (स्मृतेरिदमिति । अण् ।) स्मृति-
सम्बन्धीयः । (यथा, मनुः । १ । १०८ ।
"आचारः परमो धर्म्मः श्रुत्युक्तः स्मार्त्त एव च ।
तस्मादस्मिन् सदा युक्तो नित्यं स्यादात्मवान्
द्विजः ॥")
स्मृतिशास्त्रव्यवसायी ।
स्मृतिशब्दात् ष्णप्रत्ययेन निष्पन्नः ॥
स्मरणः । यथा, --
"आब्दिके पितृकृत्ये च मासश्चान्द्रमसः स्मृतः ।
विवाहादौ स्मृतः सौरो यज्ञादौ सावनो मतः ॥"
इति मलमासतत्त्वम् ॥

**स्मृतिः**, स्त्री, (स्मृ + क्तिन् ।) अनुभूतविषय-
ज्ञानम् । इति चण्डीटीकायां नागोजीभट्टः ॥
स्वाम्याश्रितक्रियाजन्यसंस्कारजन्यज्ञानम् । इति
रसमञ्जरी ॥ अनुभव-संस्कार-जन्य-ज्ञानम् ।
यथा, --
"सम्बिद्भगवती द्वेधा स्मृत्यनुभवभेदिका ॥"
इति कविकल्पद्रुमटीकायां दुर्गादासः ॥
किञ्च ।
"विभुर्ब्बुद्ध्यादिगुणवान् बुद्धिस्तु द्विविधा मता ।
अनुभूति स्मृतिश्च स्यादनुभूतिश्चतुर्व्विधा ॥"
इति भाषापरिच्छेदः ॥

अन्यच्च ।
"अनुभूतं प्रियादिनामर्थानां चिन्तनं स्मृतिः ।
तत्र कम्पाङ्गवैवश्यबास्पनिश्वसितादयः ॥"
इत्युज्ज्वलनीलमणिः ॥
तत्पर्य्यायः । चिन्ता २ आध्यानम् ३ । इत्य-
मरः । १ । ७ । २९ ॥ चिन्तिया ४ । इति भरतधृतरभसः ॥ चिन्तः ५ । इति क्षोरस्वामी ॥
आध्या ६ । इति रामाश्रभः ॥ चिन्तितिः ७
ध्यानम् ८ । इति शब्दरत्नावली ॥ स्मरणम् ९
चर्च्चा १० । इति जटाधरः ॥ सा तु गर्भस्थस्य
अष्टभिर्म्मासैर्भवति । इति सुखबोधः ॥ * ॥
स्मृतिकारकौषधं यथा, --
"शङ्खपुष्पी वचा सोमा ब्राह्मी ब्रह्मसुवर्च्चला ।
अभया च गुडूची च अटरूषकवाकुची ॥
एतैरक्षसमैभर्गैर्घृतं प्रस्थं विपाचयेत् ।
कण्टकार्य्या रसं प्रस्थं वृहत्या च समन्वितम् ॥
एतद्‌ब्राह्मीघृतं नाभ स्मृतिमेधाकरं परम् ॥"
इति गारुडे १९८ अध्यायः ॥ * ॥
मन्वादिमुनिप्रणीतशास्त्रविशेषः । स्मरन्ति वेद-
मनया स्मृतिः । महर्षिभिर्वेदार्थचिन्तनं स्मृतिः । तद्योगात् ग्रन्थोऽपि स्मृतिरिति मुकुटः । स्मृतिकर्त्तॄणां नामानि धर्म्मशास्त्र-
शब्दे द्रष्टव्यानि । तत्र मनोः स्मृतेः प्राधा-
न्यम् । यथा, --
"वेदार्थोपनिबन्धृत्वात् प्राधान्यं हि मनोः स्मृतम् ।

**स्मृतिमान्,** [त्] त्रि, (स्मृतिर्व्विद्यतेऽस्येति ।
स्मृति + मतुप् ।) स्मृतिविशिष्टः । चिन्तावान् ।
(यथा, मनुः । ७ । ३४ ।
"अनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालवित् ।
वपुष्मान् वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते ॥")

**स्मृतिविरुद्धः,** त्रि, (स्मृतेर्व्विरुद्धः ।) धर्म्मशास्त्र-
विपरीतः । यथा, कूर्म्मपुराणे हिमालयं प्रति
देवीवाक्यम् ।
"यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विवि-
धानि च ।
श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां हि तामसी ॥
करालभैरवञ्चैव यामलं नाम यत् कृतम् ।
एवमादीनि चान्यानि मोहनार्थानि तानि वै ॥
मया सृष्टानि चान्यानि मोहायैषां भवार्णवे ॥"
इति मलमासतत्त्वम् ॥

**स्मृतिशास्त्रं,** क्ली, (स्मृतिरेव शास्त्रम् ।) धर्म्म-
संहिता । यथा,
एकादशीतत्त्वधृतभविष्य-
पुराणवचनम् ॥
"स्मृतिशास्त्रे विकल्पस्तु आकाङ्क्षापूराणे सति ॥"

**स्मृतिहेतुः,** पुं, (स्मृतेर्हेतुः ।) स्मरणकारणम् ।
तत्पर्य्यायः । वासना २ संस्कारः ३ भावना ४ ।
इति जटाधरः ॥

**स्मृत्यपेतः,** त्रि, (स्मृतेरपेतः ।) स्मृतिबिरुद्धः ।
इति केचित् ॥

**स्मेरः,** त्रि, (स्मि ङ ईषद्धसने + "नमिकम्पि-
"तदमन्दमजस्यन्दसुन्दरेथं निपीयताम् ।
श्रोत्रशुक्तिपुटैः स्पष्टसङ्गराजतरङ्गिणी ॥"
रोगविशेषः । यथा, सुश्रुते । २ । ४६ ।
"स्यन्दाग्निसादच्छद्‌र्द्यादीनामयान् जनयेद्बहून्
स्वेदोद्‌गमः । इति श्रीधरस्वामी ॥ यथा, भाग-
वते । ५ । ११ । ९ ।
"यत्रोदिते तस्य समानसूत्रनिपाते निम्लोचति
यत्र क्वचन स्यन्देनाभितपतीति ॥")

**स्यन्दनं,** क्ली, (स्यन्द + ल्युट् ।) क्षरणम् । (स्यन्दते
इति । स्यन्द + "बहुलमन्यत्रापि ।" उणा० २ ।
७८ । इति युच् ।) जलम् । इति मेदिनी ॥ गमनञ्च ॥

**स्यन्दनः,** पुं, (स्यन्दते चलतीति । स्यन्द + युच् ।)
चक्रयुक्तयुद्धप्रयोजनयानम् । रथ इति ख्यातम् ।
(यथा, रघुः । १ । ३६ ।
"स्निग्धगम्भीरनिर्घोषमेकं स्यन्दनमास्थितौ ।
प्रावृषेण्यं पयोवाहं विद्युदैरावताविव ॥")
तिनिशवृक्षः । इत्यमरः । २ । ४ । २६ ॥ वृत्तार्ह-
द्विशेषः । इति हेमचन्द्रः ॥ वायुः । इति
केचित् ॥ शीघ्रे, त्रि ॥ (स्यन्दके, च त्रि ॥
यथा, कथासरित्सामरे। १०३ । ६२ ।
"ग्रहैः परिवृतं चन्द्रमवतीर्णमिवाम्बरात् ।
रूपोपमानमन्येषाममृतस्यन्दनं दृशोः ॥")

**स्यन्दनद्रुमः,** पुं, (स्यन्दन एव दुमः ।) तिनिश-
वृक्षः । इति शब्दरत्नावली ॥

**स्यन्दनारोहः,** पुं, (स्यन्दनमारोहतीति। आ +
रुह + अण् ।) रथस्थितयोद्धा । रथी । इत्य-
मरः । २ । ८ । ६० ॥

**स्यन्दनिः,** पुं, तिनिशवृक्षः । इति रत्नमाला ॥

**स्यन्दनी,** स्त्री, (स्यन्दते इति । स्यन्द + ल्युः ।

मन्वर्थविपरीता तु या स्मृतिः सा न
शस्यते ॥”
इतिकुल्लूकभट्टधृतबृहस्पतिवचनम् ॥
तत्पर्य्यायः । धर्म्मसंहिता २ । इत्यमरः ।
१ ।
६ । ६ ॥ धर्म्मशास्त्रम् ३ । इति जटाधरः
॥
संहिता ४ श्रुतिजीविका ५ । इति शब्द-
रत्नावली ॥ स च
सात्त्विकराजसतामसभेदेन
त्रिविधः । यथा, --
“तथैव स्मृतयः प्रोक्ता
ऋषिभिस्त्रिगुणान्विताः ।
सात्त्विका राजसाश्चैव तामसाः शुभदर्शने
॥
वाशिष्ठं चैव हारीत्रं व्यासं पाराशरं तथा ।
भारद्वाजं काश्यपञ्च सात्त्विका मुक्तिदाः
शुभाः ॥
आवनं याज्ञवल्क्यञ्च आत्रेयं दाक्षमेव च ।
कात्यायनं वैष्णवञ्च राजसाः स्वर्गदा
मताः ॥
गौतभं बार्हस्पत्यञ्च संवर्त्तञ्च यमं स्मृतम् ।
मांख्यं चौशनसं देवि तामसा निरयप्रदाः
॥
किमत्र बहुनोक्तेन पुराणेषु स्मृतिष्वपि ।
तामसा नरकायैव वर्जयेत्तान् विचक्षणः ॥
अतो हि राजमं कर्म्म तामसञ्च वरानने ।
प्राणान्ते नैव कुर्य्याद्वै विवेकी तत्त्वविन्नरः
॥
विना तु सात्त्विकं कर्म्म यत्रासाधारणं हरेः
।
कदाचिद्राजसं कार्य्यं मानमैस्तामसं न तु
॥
श्रुतिस्मृतिपुराणोपुराणेष्वागमेषु च ।
संहितातन्त्रशास्त्रेषु गिरिजे यामलादिषु ।
प्रञ्चरात्रादिष्वपीह मारो यः सात्त्विको
सुतः ॥”
इति पाद्मोत्तरखण्डे ४३ अध्यायः ॥

स्म्यजसकमहिंसदीपो रः ।” ३ । २ ।
१६७ ।
इति रः ।) विकशितः । इति हेमचन्द्रः ॥
(यथा, साहित्यदर्पणे । ३ । १०० ।
“कान्तिः काञ्चनचम्पकप्रतिनिधिर्व्वाणी
सुधा-
स्पर्द्धिनी ॥
स्मेरेन्दीवरदामसोदरवपुस्तस्याः
कटाक्षच्छटा ॥”)
ईषद्धसशनीलः । इति
संक्षिप्तसारोणादिवृत्तिः ॥
(यथा, कुमारे । ५ । ७० ।
“इयञ्च तेऽन्या पुरतो विडम्बना
यदूढया वारणराजहार्य्यया ।
शिलोक्य वृद्धोक्षमधिष्ठितं त्वया
महाजनः स्मेरमुखो भविष्यति ॥”)

**स्मेरविष्किरः**, पुं, (स्मेरः प्रफुल्लः विष्किरः पक्षी ।)

मयूरः । इति केचित् ॥

**स्यदः**, पुं, (स्यन्द + घञ् । “स्यदो जबे ।” ६ ।

४ । १८ । इति निपातनात् साधुः ।)
वेगः ।
इत्यमरः । १ । १ । ६७ ॥

**स्यन्द**, ऊ ङ व ऌ स्रुतौ । इति कविकल्पद्रुमः ॥

(भ्वा०-आ०-सक०-वेट् ।)
अन्तःस्थाद्ययुक्तः ।
ऊ, अस्यन्दिष्ट अस्यन्त । ङ, स्यन्दते ।
व,
स्यनत्स्यति स्यन्दिष्यति । ऌ, अस्यदत्
। लुतिः
क्षरणम् ।
प्रस्यन्दन्मदगन्धलुब्धमधुपेत्यत्र गण
कृतानित्यत्वमिति रमानाथः ।
वस्तुतस्तु प्रस्य-
न्दने प्रस्यन्दः पचादित्वादन् ततः
प्रस्यन्द
इवाचरतीति क्वौ शत्रन्तम् । इति
दुर्गादासः ॥

**स्यन्दः**, पुं, स्यन्दनम् । स्यन्दधातोर्घञ् प्रत्ययेन्न

ङीप् ।) लाला । इति राजनिर्घण्टः ॥ मूत्र-
नाडीति केचित् ॥

**स्यन्दिनी**, स्त्री, (स्यन्दते इति । स्यन्द + णिनिः ।

ङीप् ।) लाला । इत्यमरः । २ । ६ । ६७ ॥

**स्यन्दी**, [न्] त्रि, स्रवति यः । स्रावकः । स्यन्द-

धातोर्णिन्प्रत्ययेन निष्पन्नः । इत्यमरटीकायां
रामाश्रमः ॥ (यथा, उत्तररामचरिते १ अङ्के ।
“जीवयन्निव ससाध्वसश्रम-
स्वेदबिन्दुरधिकण्ठमर्प्यताम् ।
बाहुरैन्दवमयूखचुम्बित-
स्यन्दिचन्द्रमणिहारविभ्रमः ॥”)

**स्यन्नः**, त्रि, (स्यन्द + क्तः । स्रुतः । इत्यमरः ।

३ । १ । ९२ ॥ (यथा, भट्टिः । ५ । ८३ ।
“अथायास्यन् कषायाक्षः
स्वन्नस्वेदकणोल्वणः ।
सन्दर्शितान्तराकूतस्तामवादीद्दशाननः ॥”)

**स्यन्नबीणः**, त्रि, (स्यन्ना बीणा यत्र ।) स्तुतः ।

इति हेमचन्द्रः ॥

**स्यम**, उ ण श ध्वनने । इति कविकल्पद्रुमः ॥

(तुदा०-पर०-सक०-सेट् क्त्वावेट् ।) अन्तः-
स्थादियुक्तः । उ, स्यमित्वा स्यान्त्वा । ण,
स्येमतुः सस्यमतुः । श, स्यमती स्यमन्ती ।
इति
दुर्गादासः ॥
स्यम, ञ क वितर्के । इति कविकल्पद्रुमः ॥
(चुरा०-
उभ०-सक०-सेट् ।) अन्तःस्थादियुक्तः ।
अस्य
स्वार्थे ञौ ह्रस्वो न स्यात् प्रेरणे ञौ तु स्यादे-
वेति प्राञ्चः । स्वमते मनीषादित्वात् सिद्धिः ।
ञ क, स्यामयति स्यामयते लोकः पुरुषं
स्थाणु-
त्वेन । इति दुर्गादासः ॥

**स्यम**, त् क ध्वाने । इति कविकल्पद्रुमः ॥ (अदन्त-

चुरा०-पर०-सक०-सेट् ।) अन्तःस्थादियुक्तः
।
स्यमयति । इति दुर्गादासः ॥

**स्यमन्तकः**, पुं, श्रीकृष्णस्य हस्तमणिः । यथा, --

"मणिः स्यमन्तको हस्ते भुजमध्ये तु
कौस्तुभः ।"
इति हेमचन्द्रः ॥ * ॥
अथ स्यमन्तकोपाख्यानम् ।
श्रीशुक उवाच ।
"आसीत् सत्राजितः सूर्य्यो भक्तस्य परमः
सखा ।
प्रीतस्तस्मै मणिं प्रादात् स च तुष्टः
स्यमन्तकम् ॥
स तं बिभ्रन्मणिं कण्ठे भ्राजमानो यथा रविः ।
प्रविष्टो द्वारकां राजंस्तेजसा नोपलक्षितः ॥
तं विलोक्य जना दूरात्तेजसा मुष्णदृष्टयः ।
दीव्यतेऽक्षैर्भगवते शशंसुः सूर्य्यशङ्किताः ॥
नारायण नमस्तेऽस्तु शङ्खचक्रगदाधर ।
दामोदरारविन्दाक्ष गोविन्द यदुनन्दन ॥
एष आयाति सविता त्वां दिदृक्षुर्जमत्पते ।
मुष्णन् गभस्तिचक्रेण नृणां चक्षुंषि तिग्मगुः ॥

तमपूब्ब नरं दृष्ट्वा धात्री चुक्रोश भीतवत् ।
तत् श्रुत्वाभ्यद्रवत् क्रुद्धो जाम्बवान् बलिनां
वरः ॥
स वै भगवता तेन युयुधे स्वामिनात्मनः ।
आसीत्तदष्टविंशाहमितरेतरमुष्टिभिः ॥
क्षीणसत्त्वः स्विन्नगात्रस्तमाहातीवविस्मितः।
जाने त्वां सर्व्वभूतानां प्राण ओजः सहो बलम्
।
विष्णुं पुराणपुरुषं प्रभविष्णुमधीश्वरम् ॥
इति विज्ञातविज्ञानमृक्षराजानमच्युतः ।
व्याजहार महाराज भगवान् देवकीसुतः ॥
मणिहेतोरिह प्राप्ता वयमृक्षपते विलम् ।
भिथ्याभिशापं प्रमृजन्नात्मनो मणिनामुना ॥
इत्युक्तः स्वां दुहितरं कन्यां जाम्बवतीं मुदा
अर्हणार्थं स मणिना कृष्णायोपजहार सः ॥
सत्राजितं समाहूय सभायां राजसन्निधौ ।
प्राप्तिञ्चाख्याय भगवान् मणिं तस्मैन्यवेदयत्
॥
सोऽनुध्यायंस्तदेवाघं बलवद्विग्रहाकुलः ।
कथं मृजाम्यात्मरजः प्रसीदेद्वाच्युतः कथम् ॥
एवं व्यवसितो बुद्ध्या सत्राजित् स्वसुतां
शुभाम् ।
मणिञ्च स्वयमुद्यम्य कृष्णायोपजहार सः ॥
भगवानाह न मणिं प्रतीच्छामो वयं नृप ।
तवास्तु देवभक्तस्य वयञ्च फलभागिनः ॥"
इति भागवते १० स्कन्धे ५६ अध्यायः ॥
सौरभाद्रीयचतुर्थ्यां चन्द्रदर्शने
तदुपाख्यानश्रवण-
विधिर्यथा, ब्रह्मपुराणे सिंहार्काधिकारे ।
"नारायणोऽभिशप्तस्तु निशाकरमरीचिषु ।
स्थितश्चतुर्थ्यामद्यापि मनुष्यायापतेच्च सः
॥
अतश्चतुर्थ्यां चन्द्रन्तु प्रमादाद्वीक्ष्य मानवः ।
पठेद्धात्रेयिकावाक्यं प्राङ्मुखो वाप्युदङ्मुखः
॥"
अभिशप्तः परीवादविषयीभूतः । सोऽभिशापः
।
धात्रेयिकावाक्यं विष्णुपुराणे ।
"सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः ।

**स्यूतः**, पुं, (सिव + क्तः ।) सूत्ररचितभाण्डम्
।

धोक्डा इति ख्यातम् । तत्पर्य्यायः
। प्रसेवः २ ।
इत्यमरः । २ । ९ । २६ । स्यूनः
३ स्योनः ४
धौतकटः ५ स्योतः ६ । इति
भरतः ॥

**स्यूतिः**, स्त्री, (सिव + क्तिन् । ऊट् ।)
सूच्यादिना

वस्त्रादिसीवनम् । सीयनी इति
सेलाइ इति च
भाषा । तत्पर्य्यायः । सेवनम् २
सीवनम् ३ ।
इत्यमरः । ३ । २ । ५ ॥ ऊतिः ४
व्यूतिः ५ ।
इति शब्दरत्नावली ॥

**स्यूनः**, पुं, (सीव्यते इव येनेति । सिव +
"सिवेष्टे-

र्यूच ।" उणा ० ३ । ९ । इति नः ।
टेर्यू च ।)
किरणः । सूर्य्यः । इति मेदिनी ॥
स्यूतः ।
धुक्डी इति भाषा ।
इत्यमरटीकायां भरतः ।
२ । ९ । २६ ॥ शब्दरत्नावली च
॥

**स्यूमं**, क्ली, (सिव + "अविसिविसिशुषिभ्यः

कित् ।" उणा ० १ । १४३ । इति
मन् । ज्वरत्व-
रेत्यूट् ।) जलम् । रश्मिः । इति
संक्षिप्तसारो-
णादिवृत्तिः ॥

**स्यूमः**, पुं, (सिव + मन् । ऊट् ।) किरणः ।

इत्युणादिकोषः ॥

**स्योतः**, पुं, स्यूतः । इत्यमरटीकायां भरतः ।
२ ।

नन्वन्विच्छन्ति ते मार्गं त्रिलोक्यां विबुधर्षभाः ।
ज्ञात्वाद्य गूढं यदुषु द्रष्टुं त्वां यात्यजः प्रभो ॥
श्रीशुक उवाच ।
निशम्य बालवचनं प्रहस्याम्बजलोचनः ।
प्राह नासा रविर्देवः सत्राजिन्मणिना ज्वलन् ॥
सत्राजित् स्वगृहं श्रीमत् कृतकौतुकमङ्गलम् ।
प्रविश्य देवसदने मणिं विप्रैर्न्यवेशयत् ॥
दिने दिने स्वर्णभारानष्टौ स सृजति प्रभो ।
दुर्भिक्षमार्य्यरिष्टानि सर्पाधिव्याधयोऽशुभाः ॥
न सन्ति मायिनस्तत्र यत्रास्तेऽभ्यर्च्चितो मणिः ।
स याचितो मणिं क्वापि यदुराजाय शौरिणा ।
नैवार्थकामुकः प्रादात् याच्ञाभङ्गमतर्कयन् ॥
तमेकदा मणिं कण्ठे प्रतिमुच्य महाप्रभम् ।
प्रसेनो हयमारुह्य मृगयां व्यचरद् वने ॥
प्रसेनं सहयं हत्वा मणिमाच्छिद्य केशरी ।
गिरिं विशन् जाम्बवता निहतो मणिमिच्छता ॥
सोऽपि चक्रे कुमारस्य मणिं क्रीडनकं गले ।
अपश्यन् भ्रातरं भ्राता सत्राजित् पर्य्यतप्यत ॥
प्रायः कृष्णेन निहतो मणिग्रीवो वनं गतः ।
भ्राता ममेति तत् श्रुत्वा कर्णे कर्णेऽजपन् जनाः ॥
भगवांस्तदुपश्रुत्य दुर्यशो लिप्तमात्मनि ।
मार्ष्टुं प्रसेनपदवीमन्वपद्यत नागरैः ॥
हतं प्रसेनमश्वञ्च वीक्ष्य केशरिणा वने ।
तञ्चाद्रिपृष्ठे निहतमृक्षेण ददृशुर्जनाः ॥
ऋक्षराजविलं भीममन्धेन तमसावृतम् ।
एको विवेश भगवानवस्थाप्य बहिः प्रजाः ॥
तत्र दृष्ट्वा मणिश्रेष्ठं बालक्रीडनकं कृतम् ।
हर्त्तुं कृतमतिस्तस्मिन्नवतस्थेऽर्भकान्तिके ॥
सुकुमारक मारोदीस्तव ह्येष स्यमन्तकः ॥”
अनेन मन्त्रेणाभिमन्त्रितं जलं पेयम् ।
आचारात्
स्यमन्तकोपाख्यानञ्च श्रोतव्यम् । इति तिथ्यादि-
तत्त्वम् ॥

**स्यमीकः**, पुं, (स्यमतीति । स्यमु शब्दे + “स्यमे-
रीट् च ।” उणा० ३ । ४६ । इति कन् । ईट् च ।)
वल्मीकम् । वृक्षविशेषः । इति मेदिनी ॥
कालः । मेघः । इति केचित् ॥

**स्यमीका**, स्त्री, नीलिका । इति मेदिनी ॥

**स्यालः**, पुं, श्यालकः । इत्यमरटोकायां स्वामी ।
२ । ६ । ३२ ॥ (यथा कथासरित्सागरे । ४ । ९६ ।
“अतः स्यालः स ते किञ्चित् त्वद्गुणैः सम-
वाप्यते ॥”)

**स्युत्नं**, क्ली, आह्लादः । इति केचित् ॥

**स्यूतः**, त्रि, (षिव्यु तन्तुसन्ताने + क्तः । च्छोरि-
त्यूट् ।) सूत्रितः । तन्तुसन्ततम् । वोना इति
भाषा ॥ तत्पर्य्यायः । ऊतम् २ उतम् ३ । इत्य-
मरः ॥ (यथा, महाभारते । ३ । १५७ । ४२ ।
“वडिशोऽयं त्वया ग्रस्तः कालसूत्रेण लम्बितः ।
मत्स्योऽम्भसीव स्यूतास्यः कथमद्य भविष्यसि ॥”)
९ । २६ ॥

**स्योनः**, पुं, (सिव + बाहुलकात् केवलोऽपि नः
ऊडादेशो गुणश्च । इत्युणादिवृत्तौ उज्ज्वलः ।
३ । ९ ।) धौतकटः । धुक्डी इति भाषा ॥
इत्यमरटीकायां भरतः । २ । ९ । २६ ॥ सूर्य्यः ।
किरणः । इति मेदिनी ॥ आनन्दे, क्ली । इति
केचित् ॥

**स्रंसनं**, क्ली, (स्रंस + ल्युट् ।) ऊर्द्ध्वगतदोषस्याधो-
नयनम् । इति सुश्रुतट्टीका ॥ (यथा, सुश्रुते ।
६ । १० ।
“पित्तस्यन्दे पैत्तिके चाधिमन्थे
रक्तास्रावः स्रंसनञ्चापि कार्य्यम् ॥”
अधःपतनम् । भ्रंशः । इति स्रंसधात्वर्थदर्श-
नात् ॥ * ॥ स्रंसयतीति । स्रंस + णिच् + ल्युः ।
अधःपतनकारके, त्रि । यथा, सुश्रुते । १ । ४६ ।
“स्रंसनं कटुकं पाके लघुवातकफापहम् ॥”)

**स्रंसिनीफलः**, पुं, शिरीषवृक्षः । इति शब्दमाला ॥

**स्रंसी**, [न्] पुं, (स्रंसते इति । स्रंस + णिनिः ।)
पीलुवृक्षः । इत्यमरः । २ । ४ । २८ ॥ अधः-
पतनशीले, त्रि ॥

**स्रक**, इ ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) इ, स्रङ्क्यते । ङ, स्रङ्कते ।
इति दुर्गादासः ॥

**स्रक्**, [ज्] स्त्री, (सृजति शोभामिति सृज्यते

| | | |
|---|---|---|
| | | इति वा । सृज + ऋत्विगादिना कर्त्तरि कर्म्मणि वा क्विन् ।)<br>माल्यम् । मूद्ध्नि न्यस्तपुष्पदाम । इत्यमरः । २ । ६ । १३५ ॥<br>(यथा, मनुः । ४ । ६६ ।<br>“उपानहौ च वासश्च धृतमन्यैर्न धारयेत् ।<br>उपवीतमलङ्कारं स्रजं करकमेव च ॥”)<br>अस्याः पर्य्यायादि मालाशब्दे द्रष्टव्यम् ॥<br><br>**स्रग्,** [ज्] स्त्री, (सृजति शोभामिति सृज्यते इति वा । सृज + ऋत्विगादिना कर्त्तरि कर्म्मणि वा क्विन् ।)<br>माल्यम् । मूद्ध्नि न्यस्तपुष्पदाम । इत्यमरः । २ । ६ । १३५ ॥<br>(यथा, मनुः । ४ । ६६ ।<br>“उपानहौ च वासश्च धृतमन्यैर्न धारयेत् ।<br>उपवीतमलङ्कारं स्रजं करकमेव च ॥”)<br>अस्याः पर्य्यायादि मालाशब्दे द्रष्टव्यम् ॥ |

**स्रग्वान्,** [त्] त्रि, (स्रक् विद्यतेऽस्येति । स्रज् +
मतुप् । मस्य वः ।) माल्यविशिष्टः । इति
व्याकरणम् ॥

**स्रग्वी**, [न्] त्रि, (स्रगस्त्यस्येति । स्रज् + “अस्-
मायामेधास्रजो विनिः ।” ५ । २ । १२१ । इति
विनिः ।) माल्यविशिष्टः । इति व्याकरणम् ॥
(यथा, रघुः । १७ । २५ ।
“आमुक्ताभरणः स्रग्वी हंसचिह्नदुकूलवान् ।
आसीदतिशयप्रेक्ष्यः स राजश्रीबघूवरः ॥”)

**स्रजिष्ठः**, त्रि, (अयमेषामतिशयेन स्रग्वी । स्रग्विन्
+ इष्ठ । “विन्मतोर्लुक् ।” ५ । ३ । ६५ । इति
विनो लुक् ।) माल्यविशिष्टः ॥

**स्रजीयान्,** [स्] त्रि, (अयमनयोरतिशयेन स्रग्वी ।
स्रग्विन् + ईयसुन् । “विन्मतोर्लुक् ।” ५ । ३ । ६५ ।
इति विनो लुक् ।) माल्यविशिष्टः ।

**स्रज्वा**, स्त्री, प्रजापतिः । रज्जुः । तन्तुपटसंघातः ।
इति संक्षिप्तसारोणादिवृत्तिः ॥

**स्रद्धूः**, स्त्री, वातकर्म्म । इति केचित् ॥ शृधधातो-
रूपत्यये न निष्पन्नः । तालव्यशकारादिः साधु-
पाठः ॥

**स्रन्भ**, उ ङ प्रमादे । इति कविकल्पद्रुमः ॥ भ्वा०-
आत्म०-अक०-सेट् । क्त्वावेट् ।) प्रमादोऽनव-

**स्रवद्रङ्गः**, पुं, (स्रवन् रङ्गो यत्र ।) पणग्रन्थिः ।
वाजार इति पारस्यभाषा ॥ इति हारावली ॥

**स्रवन्ती**, स्त्री, (स्रु + शतृ । ङीप् ।) नदी । इत्य-
मरः । १ । १० । ३० ॥ (यथा, मनुः । ११ । १३३ ।
“उपस्तृशेत् स्रवन्त्यां वा सूक्तं वाब्दैवतं जपेत् ॥)
गुल्मस्थानम् । ओषधिभेदः । इति मेदिनी ॥
क्षरणविशिष्टे, त्रि । यथा । स्रवन् । स्रवन्ती ।
स्रवत् ॥

**स्रवा**, स्त्री, (स्रवतीति । स्रु + अच् । टाप् ।)
मूर्व्वा । इत्यमरटीकायां रायमुकुटः । २ । ४ । ८३ ॥

**स्रष्टा**, [ऋ] पुं, (सृजतीति । सृज + तृच् ।)
ब्रह्मा । इत्यमरः । १ । १ । १७ ॥ (यथा,
महानिर्व्वाणतन्त्रे । ३ । ४० ।
“कारणं सर्व्वभूतानां स एकः परमेश्वरः ।
लोकेषु सृष्टिकरणात् स्रष्टा ब्रह्मेति गीयते ॥”)
शिवः । इति हलायुधः ॥ (विष्णुः । इति
महाभारतम् । १३ । १४९ । ११९ ॥) सृष्टि-
कर्त्तरि, त्रि । इति सृजधात्वर्थदर्शनात् ॥ (यथा,
महाभारते । ७ । ७८ । ४५ ।
“स्रष्टारं वारिधाराणां भुवश्च प्रकृतिं पराम् ।
देवदानवयक्षाणां मानवानाञ्च साधनम् ॥”)

**स्रस्तं**, त्रि, (स्रन्स + क्तः ।) च्युतम् । इत्यमरः ।
३ । १ । १०४ ॥ (यथा, माघे । ५ । १७ ।
“स्रस्तावगुण्ठनपटाः क्षणलक्ष्यमाण-
वक्तश्रियः सभयकौतुकमीक्षते स्म” ॥)

**स्रस्तरः**, पुं, आसनम् । यथा । अघस्रस्तरे त्र्यह-
मनश्नन्त आसीरन् इति । अघस्रस्तरे उपवेश-
नादौ पीठादिनिषेधात् अघनिमित्तेन कटादि-
विधानात् अघस्रस्तरः कटादिः । इति शुद्धि-

**स्रावकं**, क्ली, (स्रावयतीति । स्रु + णिच् + ण्वुल् ।)
मरीचम् । इति शब्दचन्द्रिका ॥ क्षरके, त्रि ॥

**स्रावणी**, स्त्री, ऋद्धिवृक्षः । इति केचित् ॥

**स्रिन्भ**, उ हिंसे । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् । क्त्वावेट् ।) रेफयुक्तादिः ।
तृतीयस्वरी । उ, स्रिम्भिता स्रिब्ध्वा । इति
दुर्गादासः ॥

**स्रिभ**, उ हिंसे । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् । क्त्वावेट् ।) रेफयुक्तादिः ।
तृतीयस्वरी । उ, स्रेभित्वा स्रिब्ध्वा । इति
दुर्गादासः ॥

**स्रिव**, य उ शोषे । गतौ । इति कविकल्पद्रुमः ॥
(दिवा०-पर०-सक०-सेट् । क्त्वावेट् ।) रेफ-
युक्तः । सकारादिः । तृतीयस्वरी । य, स्रीव्यति
उ, स्रेवित्वा । स्रित्वा । सिस्रेव । इति
दुर्गादासः ॥

**स्रु**, स्रुतौ । गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-स्रुतौ अक०-गतौ सक०-अनिट् ।)
स्रवति । इति दुर्गादासः ॥

**स्रुक्** [च्] स्त्री, (स्रवति घृतादिकमस्या
इति । स्रु श्रुतौ + “चिक्च ।”
उणा ० २ । ६२ । इति चिक् ।) यज्ञपात्र-
विशेषः । यथा, --

**स्रुग्**, स्त्री, (स्रवति घृतादिकमस्या
इति । स्रु श्रुतौ + “चिक्च ।”
उणा ० २ । ६२ । इति चिक् ।) यज्ञपात्र-
विशेषः । यथा, --
“ध्रुवोपभृज्जुहूर्ना तु स्रुवो भेदाः स्रुचः स्त्रियः ॥”
इत्यमरः । २ । ७ । २५ ॥
ध्रुवा वटपत्राकृतिः । उपभृच्चक्राकारा । जुहूः
अर्द्धचन्द्राकृतिः ।
“वैकङ्कती ध्रुवा प्रोक्ता आश्वत्थी चोपभृन्मता
।

धानता । उ, स्रम्भिता स्रब्ध्वा । ङ, स्रम्भते
धर्म्मे नीचः । इति दुर्गादासः ॥

**स्रन्भ**, ऌ उ ङ विश्वासे । इति कविकल्पद्रुमः ॥

(भ्वा०-आत्म०-अक०-सेट् ।
क्त्वावेट् ।) विश्वासः
शङ्कारहितीभावः । ऌ, अस्रभत् । उ, स्रम्भित्वा
स्रब्ध्वा । ङ, स्रम्भते पुत्त्रो मातरि । तालव्यादि-
रयमित्येके । इति दुर्गादासः ॥

**स्रन्स**, ऌ उ ङ भ्रंशे । इति कविकल्पद्रुमः ॥

(भ्वा०-आत्म०-अक०-सेट् ।
क्त्वावेट् ।) रेफ-
युक्तः दन्त्यादिः । ऌ, अस्रसत् । उ, स्रंसित्वा
स्रस्त्वा । ङ, स्रंसते । भ्रंशः
अधःपतनम् । इति
दुर्गादासः ॥

**स्रन्स**, ङ उ प्रसादे । इति कविकल्पद्रुमः ॥

(भ्वा०-आत्म०-अक०-सेट् ।
क्त्वावेट् ।) ङ,
स्रंसते । उ, स्रंसित्वा स्रस्त्वा ।
प्रसादः प्रसन्नी-
भावः । इति दुर्गादासः ॥

**स्रवः**, पुं, (स्रु + अप् ।) स्रवणम् । तत्पर्य्यायः ।

स्रावः २ । इत्यमरः । ३ । २ । ९ ॥
श्रवः ३ ।
इति तट्टीका ॥ प्रस्रावः ४ स्रुवः ५ ।
इति
शब्दरत्नावलो ॥ निर्झरः ।
तत्पर्य्यायः । सरः २
सरिः ३ उत्सः ४ प्रस्रवणम् ५ ।
इति हेम-
चन्द्रः ॥ (यथा, महाभारते । १ ।
१५३ । ८ ।
तत्त्वम् ॥

**स्राक्**, व्य, द्रुतम् । इत्यमरः । ३ । ४ । २ ॥

**स्रावः**, पुं, (स्रु + घञ् ।) स्रवः । इत्यमरटीकायां

भरतः । ३ । २ । ९ ॥ (यथा, महाभारते ।
९ । १७ । ७९ ।
"ततो मुहूर्त्तात् तेऽपश्यन् रजो भौमं समु-
त्थितम् ।
विविधैः शोणितस्रावैः प्रशान्तं पुरुषर्षभ ॥"
नेत्ररोगान्तर्गतसन्धिगतरोगविशेषो यथा, --
"गत्वा सन्धीनस्रुमार्गेण दोषाः
कुर्य्युः स्रावान् रुग्विहीनान् स्वलिङ्गान् ।
तान् वै स्रावान् नेत्रनाडी मथैके
तस्या लिङ्गं कीर्त्तयिष्ये चतुर्धा ॥
पाकः सन्धौ संस्रवेद्यश्च पूयं
पूयास्रावो नैकरूपः प्रदिष्टः ।
श्वेतं सान्द्रं पिच्छिलं यः स्रवेच्च
श्लेष्मास्रावो नीरुजः स प्रदिष्टः ॥
रक्तास्रावः शौणितोत्थः सरक्तं
कोष्णं नाल्पं संस्रवेन्नातिसान्द्रम् ।
पीताभासं नीलमुष्णं जलाभं
पित्तस्रावं संस्रवेत्सन्धिमध्यात् ॥"
इत्युत्तरतन्त्रे द्वितीयेऽध्याये सुश्रुतेनोक्तम् ॥)
जुहूः पलाशकाष्ठस्य खदिरस्य स्रुवो मतः ॥"
इति भरतः ॥
"स्रुवादिकन्तु यज्ञादौ पात्रमित्यभिधीयते ।
स्रुवः पुमानेकहस्तो बाहुमात्रा स्रुगीरिता ।
तद्विशेषाः शरावाग्राः स्त्री जुहूरुपभृत् ध्रुवा ॥"
इति शब्दरत्नावली ॥

**स्रुग्दारु**, क्ली, (स्रुचो द्रारु ।) व्याघ्रपाद्वृक्षः ।

इति जटाधरः ॥

**स्रुघ्नी**, स्त्री, स्वर्जिकाक्षारः । यथा, हेमचन्द्रः ।

"समास्तु स्वर्जिकाक्षारकापोतसुखवर्च्चिकाः ।
सर्जिस्तु सर्जिका स्रुघ्नी योगवाही सुवर्च्चिका ॥"

**स्रुतं**, त्रि, (स्रु + क्तः ।) क्षरितजलादि । तत्-

पर्य्यायः । स्यन्नम् २ रीणम् ३ च्युतम् ४ ।
इत्य-
मरः । ३ । १ । ९२ ॥ (यथा, मनौ । ४ ।
१२२ ।
"अतिथिञ्चाननुज्ञाप्य मारुते वाति वा भृशम् ।
रुधिरे च स्रुते गात्राच्छस्त्रेण च परिक्षते ॥")
स्रुतम् । इति जटाधरः ॥

**स्रुता**, स्त्री, (स्रु + क्तः । टाप् ।) हिङ्गुलीपत्री ।

इति शब्दचन्द्रिका ॥

**स्रुवः**, पुं, स्त्री, (स्रवति घृतादिकमस्मादिति ।

स्रु + "स्रुवः कः ।" उणा ० २ । ६१ । इति
कः ।) यज्ञपात्रविशेषः । इति मेदिनी ॥ (यथा,
मनुः । ५ । ११७ ।
"चरूणां स्रुक्स्रुवाणाञ्च शुद्धिरुष्णेन वारिणा ॥")
तद्विवरणं स्रुक्शब्दे द्रष्टव्यम् ॥

| | | |
|---|---|---|
| "उपपन्नश्चिरस्याद्य भक्षोऽयं मम सुप्रियः ।<br>स्नेहस्रवान् प्रस्रवति जिह्वा पर्य्येति मे सुखम् ॥")<br><br>**स्रवणं**, क्ली, (स्रु + ल्युट् ।) मूत्रम् । इति राज-<br>निर्घण्टः ॥ घर्म्मः । इति शब्दरत्नावली ॥ क्षर-<br>णम् । इति स्रुधात्वर्थदर्शनात् ॥<br><br>**स्रवद्गर्भा**, स्त्री, (स्रवन् गर्भो यस्याः ।) दैववशात्<br>पतितगर्भा गौः । तत्पर्य्यायः ।<br>अवतोका २ ।<br>इत्यमरः । २ । ९ । ६९ ॥<br>पतितगर्भामात्रञ्च ॥ | | |

**स्रुवा**, स्त्री, (स्रु + कः । टाप् ।) शल्लकी ।
मूर्व्वा । इति मेदिनी ॥ (स्रुक् । इति च
मेदिनी ॥ अस्याः पर्य्यायो यथा, --
"मूर्व्वा मधुरसा देवी मोरटा तेजनी स्रुवा ।
मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि
॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे
॥)

**स्रुवावृक्षः**, पुं, (स्रु वायाः वृक्षः ।) विकङ्कत-
वृक्षः । इत्यमरः । २ । ४ । ३७ ॥
(अथास्य पर्य्यायाः
यथा, भावप्रकाशस्य पूर्व्वखण्डे प्रथमे मागे
।
"विकङ्कतः स्रुवावृक्षो ग्रन्थिलः
स्वादुकण्टकः ।
स एव यज्ञवृक्षश्च कण्टकी व्याघ्रपादपि"
॥)

**स्रुः**, स्त्री, (स्रु स्रुतौ + "क्विप् वचिप्रच्छीति ।"
उणा० २ । ५७ । इति क्विप् दीर्घश्च ।)
यज्ञ-
पात्रविशेषः । स्रवति घृतादिकमस्याः ।
इत्यमर-
टीकायां भरतः । २ । ७ । २५ ॥ निर्झरः
। यथा,
"स्रूः स्रवे निर्झरेऽपि च ।" इति हेमचन्द्रः
॥

**स्रै**, पचि । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-अनिट् ।) रेफयुक्तः । स्रायति ।
पचि
पाके । इति दुर्गादासः ॥

**स्रोतं**, क्ली, स्रोतः । इत्यमरटीकायां भरतः ॥
(यथा, महाभारते । ३ । ६८ । १३ ।
"पतिशोकाकुलां दीनां शुष्कस्रोतां
नदीमिव ॥"
पुंलिङ्गान्तोऽयमिति उणादिटीकायां
उज्ज्वल-
सर्व्वगतत्वात् सर्व्वसरत्वाच्च
दोषप्रकोपप्रशमा-
नानां नत्वेतदेवं यस्य सहि स्रोतांसि यच्च
वहन्ति
यच्चावहन्ति यत्र चावस्थितानि सर्व्वं तदन्य-
त्तेभ्यः । अतिबहुत्वात्तु खलु
केचिदपरिसङ्ख्ये-
यानि आचक्षन्ते स्रोतांसि परिसङ्ख्येयानि
पुन-
रन्ये तेषां स्रोतसां यथास्थलं कतिचित्
प्रकारान्
मूलतश्च प्रकोपपरिज्ञानतश्चानुव्याख्यास्यामः
ये भविष्यन्त्यलमनुक्तार्थज्ञानवते विज्ञानाय
चाज्ञानाय तद्यथा प्राणोदकान्नरसरुधिर-
मांसमेदोऽस्थि-मज्जाशुक्र-मूत्रपुरीषस्वेदवहानि
वातपित्तश्लेष्मणां पुनः सर्व्वशरीरचराणां सर्व्व-
स्रोतांसि अयनभूतानि । तद्वदतीन्द्रियाणां
पुनः सत्त्वादीनां केवलं चेतनावत् शरीरमयन-
भूतमधिष्ठावभूतञ्च तदेतत् स्रोतसां प्रकृति-
भूतत्वात् न विकारैरुपसृज्यते शरीरम् ।" इति
चरके विमानस्थाने पञ्चमाध्याये ॥)

**स्रोतईशः**, पुं, (स्रोतसामीशः ।) समुद्रः । इति
हेमचन्द्रः ॥

**स्रोतस्यः**, पुं, शिवः । चौरः । स्रोतःशब्दात् यत्-
प्रत्ययेन निष्पन्नः । इति केचित् ॥ (स्रोतसि
भवः ।
स्रोतस् + "स्रोतसो विभाषाड्यड्ड्यौ ।" ४ ।
४ ।
११३ । इति ड्यः । स्रोतोभवे, त्रि । इति
काशिका ॥)

**स्रोतस्वती**, स्त्री, (स्रोतोऽस्त्यस्यामिति । मतुप् ।
मस्य वः । उगितश्चेति ङीप् ।) नदी । इत्य-
मरः । १ । १० । ३० ॥

**स्रोतस्विनी**, स्त्री, (स्रोतोऽस्त्यस्यामिति । स्रोतस् +
"अस्मायावेधास्रजो विनिः ।" ५ । २ । १२१
।
इति विनिः ।) नदी । इत्यमरटीकायां भरतः ।
घृष्टे च गैरिकावर्णं श्रेष्ठं स्रोतोञ्जनञ्च
तत् ॥"
इति राजनिर्घण्टः ॥
अपि च ।
"स्रोतोञ्जनं मतं श्रेष्ठं विशुद्धं
सिन्धुसम्भवम् ।
दृष्टे कण्डूमलहरं दाहक्लेदरुजापहम्
॥
अक्ष्णो रूपावहञ्चैव सहते मारुतातपौ
।
नेत्ररोगा न जायन्ते
तस्मादञ्जनमाचरेत् ॥"
स्रोतोऽञ्जनं कृष्ण सुरमा इति । शोधनं
विनापि
सिन्धुनामपर्व्वतस्तत्र भवम् । इति ।
अथ सुरमा सौवीर ।
"अञ्जनं यामुनञ्चापि
कापोताञ्जनमित्यपि ।
तत्र स्रोतोञ्जनं कृष्णं सौवीरं
श्वेतमीरितम् ॥
स्रोतोञ्जनसमं ज्ञेयं सौवीरं तत्तु
पाण्डुरम् ।
स्रोतोञ्जनं स्मृतं स्वादु चक्षुष्यं
कफपित्तनुत् ॥
कषायं लेखनं स्निग्धं ग्राहि
छर्द्दिविषापहम् ।
सिध्मक्षयास्रहृच्छीतं सेवनीयं सदा
बुधैः ॥
स्रोतोञ्जनगुणाः सर्व्वे सौवीरेऽपि मता
बुधैः ।
किन्तु द्वयोरञ्जनयोः श्रेष्ठं स्रोतोञ्जनं
स्मृतम् ॥"
इति च भावप्रकाशः ॥

**स्रोतावहा**, स्त्री, (वहतीति । वह + अच् । टाप्
।
स्रोतसो वहा ।) नदी । इति जटाधरः
॥ (यथा,
रघुः । ६ । ५२ ।
"नृपं तमावर्त्तमनोज्ञनाभिः

दत्तः । ४ । २०१ ॥)

**स्रोतः**, [स्] क्ली, (स्रवतीति । स्रु गतौ + “स्रुरीभ्यां तुट् च ।” उणा० ४ । २०१ । इति असुन् । तुट् च ।) स्वतोऽम्बुसरणम् । इत्यमरः । १ । १० । ११ ॥ वेगेन जलवहनं स्रोतः । स्वतः स्वयमम्बुनः सरणं गमनं स्रोतः इत्यन्वयः । स्वत इत्यात्महेतुकं न परहेतुकम् । तस् क्तेरिति तृतीयायास्तस् स्रवति स्रोतः स्रुद्रुवत् त्रासुसिति अस् निपातनात्तन् स्रोतः सान्तम् । स्रोतः सद्यः सकलसलिलं सिंहकं सक्वमूलम् । इति दन्त्या-दावुष्मभेदः । स्रोतमदन्तञ्च । स्रोतः स्रोतं महा-नदः स्रवः पैञ्चषमस्त्रियाम् । इति हडडचन्द्रः । इत्यमरटीकायां भरतः ॥ (यथा, आर्य्या-सप्तशत्याम् । ४९१ ।
“रुद्धस्वरसप्रसरस्यालिभिरग्रेनतं प्रियं प्रति मे ।
स्रोतस इव निम्नं प्रतिरागस्य द्विगुण आवेगः”)
नदी । यथा, गीतायाम् । १० । ३१ ।
“झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥”
शरीरस्थनवच्छिद्राणि । (मनःप्राणान्नपाणी-यादिव हशरीरस्थासंख्यमार्गविशेषः । इति भाव-प्रकाशादयः ॥) यथा, --
“स्रोतांसि खानि छिद्राणि कालखण्डं यकृन्मतम् ॥”
इति राजनिर्घण्टः ॥
(“यावन्तः पुरुषे मूर्त्तिमन्तो भावविशेषास्तावन्त-
१ । १० । ३० ॥

**स्रोतोञ्जनं**, क्ली, (स्रोतोभवमञ्जनम्) यमुना-स्रोतोभवाञ्जनम् । तत्पर्य्यायः । सौवीरम् २ कापोताञ्जनम् ३ यामुनम् ४ इत्यमरः । २ । ९ । १०० ॥ अञ्ज्यते नयनमनेन चक्षुष्यत्वादञ्जनं अनट् । यमुनायाः स्रोतोभवत्वात् स्रोतसो-ऽञ्जनं स्रोतोञ्जनम् । सुवीरदेशे भवं सौवीरं ष्णः । स्रोतोञ्जनाद्विलक्षणं सौवीरमिति ख्यातम् । अदूरभवत्वाद्भेदेऽपि एकत्वोपनिबन्धनमिति सुभूतिः । कपोतस्यायं कापोतो वर्णः तद्युक्त-मञ्जनं कापोताञ्जनम् । कापोतवर्णमञ्जनं कापोताञ्जनमिति स्वामी । यमुनायां भवं यामुनं ष्णः । इति तट्टीकायां भरतः ॥ * ॥ अपरञ्च ।
“स्रोतोञ्जनं नदीजञ्च कृष्णं श्वेतञ्च लोहितम् ॥”
इति रत्नमाला ॥
तत्पर्य्यायान्तरं यथा । वारिभवम् ५ स्रोतोभवम् ६ स्रोतनदीभवम् ७ सौवीरसारम् ८ कपोत-सारम् ९ वल्मीकशीर्षम् १० । अस्य गुणाः । शीतत्वम् । कटुत्वम् । कषायत्वम् । क्रमिनाशि-त्वम् । रसायनत्वम् । रसे योग्यत्वम् । स्तनवृद्धि-करत्वञ्च । तस्य लक्षणं यथा, --
“बल्मीकशिखराकारं भिन्नं नीलाञ्जनप्रभम् ।
सा व्यत्ययादन्यबधूर्भवित्री ।
महीधरं मार्गवशादुपेतं
स्रोतोवहा सागरगामिनीव ॥”)

**स्वं**, पुं, क्ली, (स्वन शब्दे + अन्येभ्योपीति डः ।) धनम् । इत्यमरः । ३ । ३ । २१० ॥ (यथा, मनुः । ८ । ४१७ ।
“विस्रब्धं ब्राह्मणः शूद्रात् द्रव्योपादनमाचरेत् ।
नहि तस्यास्ति किञ्चित् स्वं भर्त्तृहार्य्यधनो हि सः ॥”

**स्वं**, त्रि, आत्मीयम् । इत्यमरः । ३ । २१० ॥ (यथा, कथासरित्सागरे । २६ । १०५ ।
“मया त्वद्य प्रवेष्टव्या स्वा तनुश्च पुरी च सा ॥”)

**स्वः**, पुं, ज्ञातिः (यथा, मनुः । ५ । १०४ ।
“न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण नाययेत् ।
अस्वर्ग्या ह्याहुतिः सा स्यात् शूद्रसंस्पर्श-दूषिता ॥”)
आत्मा । इत्यमरः । ३ । ३ । २१० ॥ (यथा, रघुः । २ । ५५ ।
“सेयं स्वदेहार्पणनिष्क्रयेण न्याय्या मय मोचयितुं भवत्तः ॥”
विष्णुः । इति महाभारतम् । १३ । १४९ । ११७ ॥)

**स्वकं** त्रि, (स्वमेव । कन् ।) स्वीयम् । आत्मीयम् ।
यथा, --
“नार्ष्टिकश्चैव कुरुते तद्धनं ज्ञातृभिः स्वकम् ।
अदत्तत्यक्तविक्रीतं कृत्बा स्वं लभते धनी ॥”

| | | |
|---|---|---|
| एवास्मिन् स्रोतसां प्रकारविशेषा सर्व्वभावा हि पुरुषेणान्तरेण स्रोतांस्यभिनिर्व्वर्त्तन्ते क्षयं वा न गच्छन्ति । स्रोतांसि खलु परिणाममापद्य-मानानां धातूनामभिवाहीनि भवन्ति अयनार्थे-नांपि चैके स्रोतसामेव समुदायं पुरुषमिच्छन्ति | | इति प्रायश्चित्ततत्त्वम् ॥ **स्वकम्पनः**, पुं, (स्वेनैव कम्पते इति । कम्प + ल्युः) वायुः । इति शब्दरत्नावली ॥ |

**स्वकर्म्म**, [न्] क्ली, (स्वस्य कर्म्म ।) आत्मकृत-
कार्य्यम् । यथा, --
कुन्त्युवाच ।
"स्वकर्म्मफलनिर्द्दिष्टां यां यां योनिं व्रजाम्यहम् ।
तस्यां तस्यां हृषीकेश त्वयि भक्तिर्दृढास्तु मे ॥"
इति पाण्डवगीता ॥

**स्वकर्म्मकृत्**, त्रि, निजकार्य्यकारी । इति स्वकर्म्म-
शब्द-पूर्ब्बक-कृधातोः कर्त्तरि क्विप्-प्रत्ययेन
निष्पन्नः ॥

**स्वकीयः**, त्रि, (स्वस्यायमिति । गहादिषु स्वस्य
वेति छः कुगागमश्च ।) स्वीयः । तत्पर्य्यायः ।
निजः २ आत्मीयः ३ स्वः ४ । इति हेमचन्द्रः ॥

**स्वकुलक्षयः**, पुं, (स्वकुलस्य क्षयो यस्मात् ।)
मत्स्यः । इति हेमचन्द्रः ॥ निजवंशनाशश्च ।
तत्कर्त्तरि तद्विशिष्टे च त्रि ॥

**स्वग**, इ सर्पणे । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।) वकारमध्यः । इ, स्वङ्ग्यते ।
इति दुर्गादासः ॥

**स्वगतं**, क्ली, (स्वगतम् ।) मनोगतम् । (तत्तु
नाट्योक्तीनामन्यतमम् । तल्लक्षणःयथा, साहित्य-
दर्पणे । ६ । ४२५ ।
"अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम् ॥")
यथा । अहम् । स्वगतम् । दम्भग्राह्योऽयं देशः ।
भवत्वस्मिन्नासने उपविशामि । इति प्रबोध-
"बुभुक्षा वा पिपासा वा ग्लानिर्वाप्यथवा जरा ।
देववद्धारयन्त्यास्ते स्वच्छन्दो न भविष्यति ॥")

**स्वच्छपत्रं**, क्ली (स्वच्छं पत्रं यस्य ।) अभ्रकम् ।
इति हेमचन्द्रः ॥

**स्वच्छमणिः**, पुं, (स्वच्छो मणिः ।) स्फटिकः । इति
राजनिर्घण्टः ॥

**स्वच्छवालुकं**, क्ली, (स्वच्छं वालुकम् ।) विमलो-
परसः । इति राजनिर्घण्टः ॥

**स्वच्छा**, स्त्री, (सुष्ठु अच्छा ।) श्वेतदूर्व्वा । इति
राजनिर्घण्टः ॥

**स्वजं**, क्ली, (स्वस्मात् जायते इति । जन + डः ।)
रक्तम् । इति मेदिनी ॥

**स्वजः**, पुं, (स्वस्मात् जायते इति । जन + डः ।)
पुत्त्रः । स्वेदः । इति मेदिनी ॥ त्रि, आत्मजातः ॥
(स्वाभाविकः । यथा, रामायणे । २ । ११२ । १६ ।
"आगता त्वामियं बुद्धिः स्वजा वैनयिकी च या ।
भृशमुत्सहसे तात रक्षितुं पृथिवीमपि ॥")

**स्वजनः**, पुं, (स्वस्य जनः ।) ज्ञातिः । इत्यमरः ।
२ । ६ । ३४ ॥ आत्मीयलोकश्च ॥ (यथा, कुमारे । ४ । २६ ।
"स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते ॥")

**स्वजा**, स्त्री, (स्वस्मात् जायते या । जन + डः ।
टाप् ।) कन्या । इति शब्दरत्नावली ॥

**स्वठ**, क गत्यसंस्कृतसंस्कृतेषु । इति कविकल्पद्रुमः ॥
(चुरा०-पर०-सक०-सेट्) । क, स्वाठयति ।
इति दुर्गादासः ॥
अस्वतन्त्राः प्रजाः । सर्व्वाः स्वतन्त्रः पृथिवीपतिः ॥
अस्वतन्त्रः स्मृतः शिष्य आचार्य्यस्य स्वतन्त्रता ।
अस्वतन्त्राः स्त्रियः सर्व्वाः पुत्त्रा दासाः परिग्रहाः ॥"
परिग्रहा अनुजीविप्रभृतयः ।
"स्वतन्त्रस्तत्र तु गृही यस्य तत् स्यात् क्रमागतम् ।
गर्भस्यैः सदृशो ज्ञेयो अष्टमाद्वत्सरात् शिशुः ॥
वाल आषोडशाद्वर्षात् पौगण्डोऽपि निगद्यते ।
परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते ॥
जीवतोर्न स्वतन्त्रः स्यात् जरयापि समन्वितः ।
तयोरपि पिता श्रेयान् बीजप्राधान्यदर्शनात् ॥
अभावे बीजिनो माता तदभावे च पूर्व्वजः । * ।
स्वतन्त्रोऽपि हि यत् कार्य्यं कुर्य्यादप्रकृतिं गतः ।
तदप्यकृतमेव स्यादस्वातन्त्र्यस्य हेतुतः ॥"
इति व्यवहारतत्त्वम् ॥

**स्वत्रः**, पुं, अन्धः । इति केचित् ॥

**स्वत्वं**, क्ली, (स्वस्य भावः । स्व + त्व ।) शास्त्र-
सम्मतयथेष्टविनियोगार्हत्वम् । सप्तपदार्थाति-
रिक्तपदार्थः । निरूपकतासम्बन्धेन स्वामित्वम् ।
यथा । स्वत्वञ्च यथेष्टविनियोगार्हत्वेन शास्त्र-
बोधितत्वमिति प्राञ्चः ॥ अतिरिक्तपदार्थ इति
शिरोमणिः ॥ स्वामित्वञ्च तन्निरूपकत्वम् ।
निरूपकतया तदेव वा । तच्च द्रव्यगतं गुण-
गतञ्च द्रव्यस्य दानादिश्रुतेः । नीलं बा वृषमुत्-
सृजेदित्यादौ लौहित्यादिगुणविशिष्टपारिमा-
षिकनीलवृषोत्सर्गश्रुतेश्च । वस्तुतस्तु आत्म-
समवेतं स्वामित्वमेवातिरिक्तपदार्थः । विक्रय-
दानादीनां तन्नाशकत्वे क्रयप्रतिग्रदादीनाञ्च
तद्धेतुत्वे सम्बन्धलाघवसम्भवात् तदेव निरूप-

चन्द्रोदयनाटके २ अङ्कः ॥ आत्मप्राप्ते तस्मा-
द्गते च त्रि ॥

**स्वगुप्ता**, स्त्री, (स्वेन गुप्ता ।) शूकशिम्बी । इति
शब्दरत्नावली ॥ लज्जालुः । इति राजनिर्घण्टः ॥

**स्वगृहः**, पुं, (स्वकृतं गृहं यस्य ।) कलिकारपक्षी
इति जटाधरः ॥ निजालये, पुं, क्ली ॥

**स्वङ्गः**, त्रि, (सु शोभनानि अङ्गानि यस्य ।)
सुन्दराङ्गविशिष्टः । तत्पर्य्यायः ।
सिंहसंहननः २ ।
इति हेमचन्द्रः ॥ (सु शोभनमङ्गमिति ।)
शोभनावयवे, क्ली ॥

**स्वच्छं**, क्ली, (सुष्ठु अच्छम् ।) विमलोपरसः ।
मुक्ता । इति राजनिर्घण्टः ॥

**स्वच्छः**, त्रि, (सुष्ठु अच्छः ।) रोगविमुक्तः । इति
शब्दरत्नावली ॥ शुक्लः । निर्म्मलः । इति
केचित् ॥ (यथा, महानिर्व्वाणतन्त्रे । ८ । ९१ ।
"असनं वसनं पात्रं शय्या यानं निकेतनम् ।
गृह्यकं वस्तुजातञ्च स्वच्छात् स्वच्छं प्रशस्यते ॥"
कपटतादिदोषशून्यः । यथा, तत्रैव । ८ । ५२ ।
"स्वच्छो नम्रः शुचिर्द्दक्षो युक्तः स्यात् सर्व्व-
कर्म्मसु ॥")

**स्वच्छः**, पुं, (सुष्ठ अच्छः निर्म्मलः ।) स्फटिकः ।
इति राजनिर्घण्टः ॥

**स्वच्छन्दः**, त्रि, (स्वस्य छन्दोऽभिप्रायो यत्र ।)
स्वाधीनः । स्वतन्त्रः । इत्यमरः । ३ । १ । १५ ॥

**स्वतः** [स्] व्य, (स्व + तसिल् ।) आत्मनः । आपन
हैते इति भाषा । यथा । स्रोतोऽम्बुसरणं
स्वतः । इत्यमरः । १ । १० । ११ ॥ (यथा,
रघुः । ३ । ५८ ।
"अतिप्रबन्धप्रहितास्त्रवृष्टिभि-
स्तमाश्रयं दुष्प्रसहस्य तेजसः ।
शशाक निर्वापयितुं न वासवः
स्वतश्च्युतं वह्निमिवाद्भिरम्बुदः ॥"
धनात् । यथा, मनुः । ८ । १६६ ।
"ग्रहीता यदि नष्टः स्यात् कुटुम्बार्थे कृतोऽव्ययः ।
दातव्यं बान्धवैस्तत् स्यात् प्रविभक्तैरपि स्वतः ॥")
अस्य अव्ययत्वप्रमाणं यथा ।
तद्धितश्चासर्व्व-
विभक्तिः । यस्मात् सर्व्वा विभक्तिर्नोत्पद्यते स
तद्धितान्तोऽव्ययं स्यात् । परिगणनं कर्त्तव्यम् ।
तसिलादयः प्राक् पाशपः । इति सिद्धान्त-
कौमुदी ।

**स्वतन्त्रः**, त्रि, (स्वस्य तन्त्रं प्राधान्यं यत्र ।)
स्वाधीनः । तत्पर्य्यायः । अपावृतः २ स्वैरी ३
स्वच्छन्दः ४ निरवग्रहः ५ । इत्यमरः । ३ ।
१ । १५ ॥ निर्यन्त्रिणः ६ यथाकामी ७ निर-
र्गलः ८ निरङ्कुशः ९ । इति जटाधरः ॥
स्वरुचिः १० । इति हेमचन्द्रः ॥
स्वतन्त्रास्वतन्त्र-
व्यक्तयो यथा, नारदः ।
स्वातन्त्रन्तु स्मृतं ज्येष्ठे ज्यैष्ठं गुणवयःकृतम् ।
कतया स्वत्वव्यवहारहेतुः । अतएव निबन्धादौ
भाविन्यपि स्वत्वमिति । अन्यथा प्रतिमासं प्रति-
वर्षंवा देयत्वेन प्रतिश्रुतधाम्यादिरूपस्य भावित्वे
तत्र तदुत्पत्त्यनुपपत्तेरिति चूडामणिसम्मतो
लीलावतीरहस्यपन्थाः सम्नीचीनः । तत्र स्वत्व-
धारावारणाय सजातीयस्वत्वं प्रतिस्वत्वं विरोधि
सजातीयमिति करणात् पराजितनृपतिराज्या-
न्तर्व्वर्त्तितत्तत्पुरुषीयक्रमागतस्थावरादौ जया-
दिना जेतुर्नृपतेः करग्रहणोपयोगिस्वत्वोत्पादे
तथा क्रीते अतिगृहीतराज्यान्तर्व्वर्त्तिनि तादृश-
स्थावरादौ च क्रेत्रादेः क्रयाद्यधीनस्वत्वोत्-
पादेऽपि न व्यभिचार इति संक्षेपः । इति
दायभागटीकायां श्रीकृष्णतर्कालङ्कारः ॥

**स्वदनं**, क्ली, (स्वद + ल्युट् ।) भक्षणम् । इति
हेमचन्द्रः ॥ लेहः । इति राजनिर्घण्टः ।

**स्वदाराः**, पुं, (स्वस्य दाराः ।) स्वस्त्री । यथा,
आह्निकतत्त्वधृतविष्णुपुराणवचनम् ।
"मृतो नरकमभ्येति हीयेतात्रापि चायुषः ।
परदाररतिः पुंसामुभयत्रापि भीतिदा ॥
इति मत्वा स्वदारेषु ऋतुमत्सु बुधो व्रजेत् ।
यथोक्तदोषहीनेषु सकामेष्वनृतावपि ॥"

| | | |
|---|---|---|
| (यथा, कथासरित्सागरे । ३३ । १८४ ।<br>“स्वच्छन्दासौ न ते राजन पाणिस्पर्शमिहा-<br>र्हति ॥”<br>खस्य अभिप्रये, पुं । यथा, हरिवंशे । १२२ । २८ । | | |

**स्वधर्म्मः**, पुं, क्ली, (स्वस्य धर्म्मः ।) स्वजात्युक्ताचारः ।

यथा, --

"श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितात्
।
स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावहः ॥"
इति श्रीभगवद्गीतायां ३ अध्यायः ॥ * ॥
अपि च ।
"यो यस्य विहितो धर्म्मः स तज्जातिः प्रकी-
र्त्तितः ।
तस्मात् स्वधर्म्मं कुर्व्वीत द्विजो नित्यमनापदि ॥
चत्वारो वर्णा राजेन्द्र चरेयुश्चापि वाश्रमाः ।
ऋते स्वधर्म्मं विपुलं न ते यान्ति परां गतिम् ॥
स्वधर्म्मेण यथा नृणां नरसिंहः प्रतुष्यति ।
न तुष्यति तथान्येन वेदवाक्येन कर्म्मणा ॥"
इति श्रीनारसिंहपुराणम् ॥ * ॥
स्वधर्म्मत्यागी कृतघ्नः । यथा, --
सनातन उवाच ।
"स्वधर्म्मं हन्ति यो विप्रः सन्ध्यात्रयविवर्ज्जितः
।
अतर्पणञ्च यत् स्नानं विष्णुनैवेद्यवञ्चितः ॥
विष्णुमन्त्रविष्णुपूजाविष्णुभक्तिविहीनकः ।
एकादशीविहीनश्च श्रीकृष्णजन्मवासरे ॥
शिवरात्रौ च यो भुङ्क्ते श्रीरामनवमीदिने ।
पितृकृत्यं देवकृत्यं स कृतघ्न इति स्मृतम् ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे । ५१ । ४५ -- ४७
॥

**स्वधा**, व्य, (स्वद्यतेऽनेनेति । स्वद आस्वादने +

आ । "स्वदेर्धश्च ।" इति दस्य धः । इत्युणादि-
वृत्तौ उज्ज्वलदत्तः ।) देवहविर्दानमन्त्रः । यथा,
"स्वाहा देवहविर्दाने श्रौषट् वौषट् वषट्
स्वधा ॥"
इत्यमरः । ३ । ४ । ८ ॥
"स्वाहा श्रौषट् वौषट् वषट् स्वधा एते पञ्च-
शब्दा देवहविर्दाने वह्निमुखहुतौ वर्त्तन्ते
देवाय हविषो दानं देवहविर्दानं तत्र देवा
इन्द्रादयः । अत्र पितरो देवताः इति स्मृतेस्ते-
ऽपि देवाः । हविर्दान इत्यनेन एते मन्त्रा इति
सूचितम् ।
सिद्धौ पृथग्ग्रहणं मन्त्रान्तर्गतानामपि
प्राप्त्यर्थं
तेन शिखायै वषट् शिरसे स्वाहा पितृभ्यः
स्वधोच्यताम् । हृदयाय नमः । इत्यादि
सिद्धम्
इति तट्टीकायां दुर्गादासः ॥ पितृणामन्नम्
।
यथा, --
"भुङ्क्ते त्वं यथा वै स्वधाख्या
तद्वत् स्वाहा हव्यभोक्ता स्वयं देवि ।"
इति ऋग्वेदे देवीसूक्तम् ॥
स्वधा वै पितृणामन्नम् । इति स्मृतिश्च ॥

**स्वधा**, स्त्री, (स्वान् दधातीति । धा + क्विप् ।)

दक्षकन्या । सा तु पितृणां पत्नी । तस्या
द्वे
कन्ये । यमुना धारिणी च ।
एतयोस्तपस्विन्योः
सन्ततिर्नास्ति । इति श्रीभागवतमतम् ॥
सा च
ब्रह्मणो मानसी कन्या । यथा, --
श्रीनारायण उवाच ।
"शृणु नारद वक्ष्यामि
स्वधोपाख्यानमुत्तमम् ।
पितृणाञ्च तृप्तिकरं श्राद्धानां फलवर्द्धनम्
॥
सृष्टेरादौ पितृगणान् ससर्ज्ज जगतां
विधिः ।
चतुरश्चतुर्म्मूर्त्तिमतस्त्रींश्च
तेजःस्वरूपिणः ॥
दृष्ट्वा सप्त पितृगणान्
सिद्धरूपान्मनोहरान् ।
आहारं संसृजे तेषां श्राद्धं तर्पणपूर्ब्बकम्
॥
स्नानं तर्पणपर्य्यन्तं श्राद्धान्तं देवपूजनम्
।
आह्निकञ्च त्रिसन्ध्यान्तं विप्राणाञ्च श्रुतौ
श्रुतम् ॥
नित्यं न कुर्य्याद्यो विप्रस्त्रिसन्ध्यं
श्राद्धतर्पणम् ।
नारद उवाच ।
स्वधापूजाविधानञ्च ध्यानं स्तोत्रं
तथा मुने ।
श्रोतुमिच्छामि यत्नेन वद वेदविदांवर
॥
श्रीनारायण उवाच ।
तद्ध्यानं स्तवनं ब्रह्मन् वेदोक्तं
सर्व्वसम्मतम् ।
सर्व्वं जानासि च कथं ज्ञातुमिच्छसि
वृद्धये ॥
शरत्कृष्णत्रयोदश्यां मघायां
श्राद्धवासरे ।
स्वधां संपूज्य यत्नेन ततः श्राद्धं
समाचरेत् ॥
स्वधां नाभ्यर्च्च्य यो विप्रः श्राद्धं
कुर्य्यादहम्मतिः ।
न भवेत् फलभाक् सत्यं श्राद्धस्य
तर्पणस्य च ॥
ब्रह्मणो मानसीं कन्यां शश्वत्
सुस्थिरयौवनाम् ।
पूज्यां पितृणां देवानां श्राद्धानां
फलदां भजे ॥
इति ध्यात्वा शालग्रामेऽप्यथवा
मङ्गले घटे ।
दद्यात् पाद्यादिकं तस्यै मूलेनेति
श्रुतौ श्रुतम् ॥
ॐ ह्रीँ श्रीँ क्लीँ स्वधादेव्यै स्वाहेति
च महा-
मनुम् ।
ससुच्चार्य्य च संपूज्य स्तुत्वा तां
प्रणमेद्द्विजः ॥ * ॥
स्तोत्रं शृणु मुनिश्रेष्ठ ब्रह्मपुत्र
विशारद ।
सर्व्ववाञ्छाप्रदं नृणां ब्रह्मणा यत् कृतं
पुरा ॥
ब्रह्मोवाच ।
"स्वधोच्चारणमात्रेण तीर्थस्नायी
भवेन्नरः ।

'अमन्त्रत्वे स्वाहयेव हविर्भुजम् ।' इति रघुः ।
स्वाहाव्ययं मन्त्रभेदे स्त्रियां स्वाहाग्नियोषि-
तीति कोषान्तरम् । स्वाहा दन्त्यादिः । श्रौषट्
तालव्यादिमूर्द्धन्यमध्यम् । वौषट् वषट्द्वयं
मूर्द्धन्यमध्यम् । स्वधा दन्त्यादि । इन्द्राय
स्वाहा इत्यादिप्रयोगः ।" इति भरतः ॥ * ॥
पितृसम्प्रदानमन्त्रः । यथा, --
"दैत्येभ्योऽलं हरिः पूष्णे वषट् सद्‌भ्यो हितं
सुखम् ।
स्वाहाग्नये स्वधा पित्रे स्वस्ति धात्रे नमः सते ॥"
इति मुग्धबोधव्याकरणम् ॥
हरिर्दैत्येभ्योऽलं समर्थः पूष्णे वषट् सद्‌भ्यो हितं
सद्‌भ्यः सुखं अग्नये स्वाहा पित्रे स्वधा धात्रे
स्वस्ति एतानि स्पष्टानि । नमः सते इति सते
नित्याय विष्णवे नमः इत्यर्थः । सर्व्वत्र भवते-
र्गम्यमानत्वादकर्म्मकाद्वाक्यसमाप्तिः । वषट्-
स्वाहास्वधानमसां त्यागार्थतया सम्प्रदानत्वैनैवेष्ट

बलिं वेदध्वनिं सोऽपि विषहीनो यथोरगः
॥
हरिसेवाविहीनश्च श्रीहरेरनैवेद्यभुक् ।
भस्मान्तं सूतकं तस्य न कर्म्मार्हः स
नारद ॥
ब्रह्मा श्राद्धादिकं सृष्ट्वा जगाम पितृहेतवे ।
न प्राप्नुवन्ति पितरो ददति ब्राह्मणादयः
॥
सर्व्वे प्रजग्मुः क्षुभिता विषण्णा ब्रह्मणः
सभाम् ।
सर्व्वं निवेदनं चक्रुस्तमेव जगतां विधिम्
॥
ब्रह्मा च मानसीं कन्यां ससृजे तां
मनोहराम् ।
रूपयौवनसम्पन्नां शतचन्द्रसमप्रभाम् ॥
विद्यावतीं गुणवतीमतिरूपवतीं सतीम् ।
श्वेतचम्पकवर्णाभां रत्नभूषणभूषिताम् ॥
विशुद्धां प्रकृतेरंशां सम्मितां वरदां शुभाम्
।
स्वधाभिधानां सुदतीं
लक्ष्मीलक्षणसंयुताम् ॥
शतपद्मदलन्यस्तपादपद्मञ्चबिभ्रतीम् ।
पत्नीं पितॄणां पद्मास्यां पद्मजां
पद्मलोचनाम् ॥
पितृभ्यस्तां ददौ ब्रह्मा
तुष्टेभ्यस्तुष्टिरूपिणीम् ।
ब्राह्मणांश्चोपदेशञ्च चकार गोपनीयकम् ॥
स्वधान्तं मन्त्रमुच्चार्य्य पितृभ्यो देहि
चेति च ।
क्रमेण तेन विप्राश्च पित्रे दानं ददुः पुरा ॥
स्वाहा शस्ता देवदाने पितृदाने स्वधा
परा ।
सर्व्वत्र दक्षिणा शस्ता हतयज्ञमदक्षिणम्
॥
पितरो देवता विप्रा मुनयो मनवस्तथा ।
पूजां चक्रुः स्वधां शान्तां तुष्टाव
परमादरम् ॥
देवादयश्च सन्तुष्टाः परिपूर्णमनोरथाः ।
विप्रादयश्च पितरः स्वधादेवीवरेण च ॥
इत्येवं कथितं सर्व्वं
स्वधोपाख्यानमुत्तमम् ।

मुच्यते सर्व्वपापेभ्यो वाजपेयफलं
लभेत् ॥
स्वधा स्वधा स्वधेत्येवं यदि वारत्रयं
स्मरेत् ।
श्राद्धस्य फलमाप्नोति वलेश्च
तर्पणस्य च ॥
श्राद्धकाले स्वधास्तोत्रं यः शृणोति
समाहितः ।
लभेत् श्राद्धशतानाञ्च पुण्यमेव न
संशयः ॥
स्वधा स्वधा स्वधेत्येवं त्रिसन्ध्यं यः
पठेन्नरः ।
प्रियां विनीतां स लभेत् साध्वीं पुत्त्रं
गुणान्वि-
तम् ॥
पितॄणां प्राणतुल्या त्वं
द्विजजीवनरूपिणी ।
श्राद्धाधिष्ठातृद्बेवी च श्राद्धादीनां
फलप्रदा ॥
वहिर्गच्छ मन्मनसः पितॄणां तुष्टिहेतवे
।
संप्रीतये द्विजातीनां गृहिणां
वृद्धिहेतवे ॥
नित्या त्वं नित्यरूपासि पुण्यरूपासि
सुव्रते ।
आविर्भावतिरोभावी सृष्टौ च प्रलये
तव ॥
ॐ स्वस्ति च नमः स्वाहा स्वधा त्वं
दक्षिणा
तथा ।
निरूपिताश्चतुर्व्वेदे षट् प्रशस्ताश्च
कर्म्मणाम् ॥
पुरासीस्त्वं स्वधा गोपी गोलोके
राधिकासखी ।
धृतोरसि स्वमात्मानं कृष्णत्वेन
स्वधा स्मृता ॥
ध्वस्ता त्वंराधिकाशापात्
गोलोकाद्विश्वमागता ।
कृष्णश्लिष्टा तया दृष्टा पुरा वृन्दावने
वने ॥

| | | |
|---|---|---|
| | सर्व्वेषाञ्च तुष्टिकरं किं भूयः श्रोतुमिच्छसि ॥ * ॥ | कृष्णालिङ्गनपुण्येन भूता मे मानसी सुता ।<br>अतृप्ता सुरतौ तेन चतुर्णां स्वामिनां प्रिया ॥<br>स्वाहा च सुन्दरी गोपी पुरासीद्राधिकासखी ।<br>स्वं कृष्णमाह रतये तेन स्वाहा प्रकीर्त्तिता ॥<br>कृष्णेन सार्द्धं सुचिरं रमते रासमण्डले ।<br>प्रमत्ता सुरतौ श्लिष्टा दृष्टा सा राधया पुरा ॥<br>तस्याः शापेन प्रध्वस्ता गोलोकाद्विश्वमागता ।<br>कृष्णालिङ्गनपुण्येन बभूव वह्निकामिनी ॥<br>पवित्ररूपा परमा देवानां वन्दिता नृणाम् ।<br>यन्नामोच्चारणेनैव नरो मुच्येत पातकात् ॥ |

सा सुशीलाभिधागोपी
पुरासोद्राधिकासखी।
उवास दक्षिणे क्रोडे कृष्णस्य
राधिकाग्रतः ॥
प्रध्बस्ता सा च तत्शापात्
गोलोकाद्बिश्वमा-
गता।
कृष्णालिङ्गनपुण्येन सा बभूव च
दक्षिणा ॥
प्रेयसी सुरतौ दक्षा प्रशस्ता
सव्वकर्म्मसु।
उवास दक्षिणे भर्त्तुर्द्दक्षिणा तेन
कीर्त्तिता ॥
बभूवुस्तिस्रो गोप्यश्च स्वधा च
दक्षिणा तथा।
कर्म्मिणां कर्म्मपूर्णार्थं पुरा
चैवेश्वरेच्छया ॥
इत्येवमुक्त्वा स ब्रह्मा ब्रह्मलोके
स्वसंसदि।
तस्थौ च सहसामात्यः स्वधा
साविर्ब्बभूव ह ॥
तदा पितृभ्यः प्रददौ तामेव
कमलालयाम्।
तां संप्राप्य यतस्ते च पितरश्च
सहर्षिताः ॥
स्वधास्तोत्रमिदं पुण्यं यः शृणोति
समाहितः।
स स्नातः सर्व्वतोर्थेषु
वेदपाठफलं लभेत् ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ४१
अध्यायः ॥

**स्वधाप्रियः**, पुं, (स्वधायाः प्रियः ।) कृष्णतिलः।

इति शब्दरत्नावली ॥ अग्निश्च ॥

**स्वधाभुक्**, [ज्] पुं, (स्वधां भुङ्क्ते इति । भुज् +

क्विप् ।) पितृगणः । इति
त्रिकाण्डशेषः ॥
(यथा, रघुः । ८ । ३० ।

**स्वनचक्रः**, पुं, रतिबन्धविशेषः । तस्य लक्षणं

यथा, --
“धृत्वा बाहू तथा कण्ठं पादतोऽपि शिरः
स्थितः ।
पूढञ्च कामयेत् कामी स्वनचक्रः प्रकीर्त्तितः ॥”
इति रतिमञ्जरी ॥

**स्वनिः**, पुं, (स्वन + इन् ।) शब्दः । इत्नि हेम-

चन्द्रः ॥

**स्वनितं**, क्ली, (खम + क्तः । गर्ज्जितम् । मेघ-

शब्दः । इति हेमचन्द्रः ॥ ध्वनिते, त्रि । इत्य-
मरः । ३ । १ । ९४ ॥

**स्वनिताह्वयः**, पुं, (स्वनितम् आह्वयते इति । आ +

ह्वे + अच् ।) तण्डुलीयः । इति राजनिर्घण्टः ॥

**स्वनोत्साहः**, पुं, (स्वनेन उत्साहो यस्य ।)

गण्डकः । इति रत्नावली ॥ पुस्तकान्तरे शनोत्-
साह इति च पाठः ॥

**स्वपनं**, क्ली, (स्वप + ल्युट् ।) निद्रा । इति शब्द-

रत्नावली ॥ (यथा, सुश्रुते । ३ । ४ ।
“बालवृद्धस्त्रीकर्षितक्षतक्षीणमद्यनित्ययानवाह-
नाध्वकर्म्मप्रतिश्रान्तानामभुक्तवतांमेदःस्वेदकफ-
रसरक्तक्षीणानामजीर्णिनाञ्च मुहूर्त्तं दिवा-
स्वपनमप्रतिषिद्धम् ॥”)

**स्वपिण्डा**, स्त्री, पिण्डखर्ज्जरौ । इति राज-

निर्घण्टः ॥

**स्वपितिकर्म्मा**, [न्] पुं, (स्वपिति इति कर्म्म

यस्य ।) शयनकर्त्ता । तद्वैदिकपर्य्यायौ ।
स्वपिति १ स्वस्ति २ । इति द्वौ स्वपितिकर्म्माणौ
इति वेदनिधण्टौ ३ अध्यायः ॥

**स्वप्नः**, पुं, (स्वप + “स्वपो नन् ।” ३ । ३ । ९१ ।

इति नन् । यद्वा “कृवृजृषिद्रुपनीति ।” उणा०
३ । १० । इति नन् ।) निद्रा । इत्यमरः । १ ।
७ । ३६ ॥ यथा, --
“तस्मान्न जागृयाद्रात्रौ दिवास्वप्नश्च वर्ज्जयेत् ।
ज्ञात्वा दोषकरावेतौ बुधः स्वप्नं मितञ्चरेत् ॥”)

स्वप्नस्तु प्रथमे यामे संवत्सरफलप्रदः ।
द्वितीये चाष्टभिर्म्मासैस्त्रिभिर्म्मासैस्तृतीयके
॥
चतुर्थे चार्द्धमासेन स्वप्नः स्बात्तु फलप्रदः
।
दशाहे फलदः स्वप्नोऽप्यरुणोदयदर्शने ॥
प्रातः स्वप्नश्च फलदस्तत्क्षणं यदि
बोधितः ।
दिने मनसि यद्दृष्टं तत् सर्व्वञ्च लभेद्ध्रुवम्
॥
चिन्ताव्याधिसमायुक्तो नरः स्वप्नञ्च
पश्यति ।
तत् सर्व्वं निष्फलं तात प्रयात्येव न
संशयः ॥
जडो मूत्रपुरीषेण पीडितश्च भयाकुलः ।
दिगम्बरो मुक्तकेशो न लभेत् स्वप्नजं
फलम् ॥
दृष्ठ्वा स्वप्नञ्च निद्रालुर्यदि निद्रां प्रयाति च
।
विमूढो वक्ति चेद्रात्रौ न लभेत् स्वप्नजं
फलम् ॥
उक्ता काश्यपगोत्रे च विपत्तिं लभते ध्रुवम् ।
दुर्गते दुर्गतिं याति नीचे व्याधिं प्रयाति च ॥
शत्री भयञ्च लभते मूर्खे च कलहो भवेत् ।
कामिन्यां धनहानिः स्याद्रात्रौ चौरभयं
भवेत् ॥
निद्रायां लभते शोकं पण्डिते वाञ्छितं
फलम् ।
न प्रकाश्यश्च सुस्वप्नः पण्डितैः काश्यपे
व्रज ॥ * ॥
गवाञ्च कुञ्जराणाञ्च हयानाञ्च व्रजेश्वर ।
प्रासादानाञ्च शैलानां वृक्षाणाञ्च तथैव च ॥
आरोहणञ्च धनदं भोजनं रोदनं तथा ।
प्रतिगृह्य तथा वीणां शस्याढ्यां
भूमिमालभेत् ॥
शस्त्रास्त्रेण यदा विहो व्रणेन कृमिणा तथा ।
विष्ठया रुधिरेणैव संयुक्तोऽप्यर्थमालभेत् ।
स्वप्नेऽप्यगम्यागमनं भार्य्यालाभं करोति
च ।

"ऋषिदेवगणस्वधाभुजां
श्रुतयागप्रसवैः स पार्थिवः ।
अनृतत्वमुपेयिवान् बभौ
परिधेर्म्मुक्त इवोष्णदीधितिः ॥"
देवता । इति हेमचन्द्रः ॥

**स्वधितिः**, पुं, स्त्री, (स्वं धियति दधातीति । धि +
क्तिच् ।) कुठारः । इत्यमरः । २ । ८ । ९२ ॥
तालव्यशादिश्च ॥ (यथा, भागवते । १० । ५५ । ५ ।
"सूदा महानसं नीत्वावद्यन् स्वधितिनाद्भुतम् ॥"
वज्रः । इति निघण्टुः । २ । २० ॥)

**स्वधितिहेतिकः**, पुं, (स्वधितिर्हेतिर्यस्य । कन् ।)
परशुधारियोद्धा । इति केचित् ॥

**स्वन**, ण शब्दे । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-अक०-सेट् ।) वकारयुक्तः । स्वेनतुः
सस्वनतुः । अत्र स्वन ण स्वन च इत्युभयपाठो
लेखकप्रमादकृतः । इति दुर्गादासः ॥

**स्वन**, त् क ध्वाने । इति कविकल्पद्रुमः ॥ (अदन्त
चुरा०-पर०-अक०-सेट् ।) वकारयुक्तः । स्वन-
यति । इति दुर्गादासः ॥

**स्वन**, मि तंसने । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-अक०-सेट् ।) वकारयुक्तः । शब्दे इत्यनु-
वर्त्तते । तंसने भूषणे कर्त्तरि शब्देऽर्थेऽयमि-
त्यर्थः । स्वेनतुः सस्वनतुर्नूपुरौ । मि, स्वनयति

प्रसुप्तस्य विज्ञानम् । यथा, --
"पूर्ब्बदेहानुभूतांस्तु भूतात्मा स्वपतः प्रभुः ।
रजोयुक्तेन मनसा गृह्णात्यर्थान् शुभाशुभान् ॥
करणानान्तु वैकस्ये तमसाभिप्रवर्द्धिते ।
अस्वपन्नपि भूतात्मा प्रसुप्त इव चोच्यते ॥"
इति सुश्रुते शारीरस्थाने चतुर्थेऽध्याये ॥)
दर्शनम् । इति मेदिनी ॥ * ॥ सुस्वप्ना यथा, --
नन्द उवाच ।
"केन स्वप्नेन किं पुण्यं केन पुंसां भवेत् सुखम् ।
कोऽपि कोऽपि च सुस्वप्नस्तत् सर्व्वं कथय प्रभो ! ॥"
श्रीभगवानुवाच ।
"वेदेषु सामवेदश्च प्रशस्तः सर्व्वकर्म्मसु ।
तत्रैव काण्वशाखायां पुण्यकाण्डे मनोहरे ॥
सुष्यक्तो यश्च सुस्वप्नः शश्वत् पुण्यफलप्रदः ।
तत् सर्व्वं लिखितं तात ! कथयामि निशामय ॥
स्वप्नाध्यायं प्रवक्ष्यामि बहुपुण्यफलप्रदम् ।
स्वप्नाध्यायं नरः श्रुत्वा गङ्गास्नानफलं लभेत् ॥

मूत्रसिक्तं पिबेत् शुक्रं नरकञ्च विशत्यपि ॥
नगरं प्रविशेद्रक्तं समुद्रं वा सुधां पिबेत् ।
शुभवार्त्तामवाप्नोति विपुलञ्चार्थमालभेत् ॥"
रक्तं स्थाने नक्तं समुद्रं स्थाने समूत्रं सुधां स्थाने
सुरां इति च पाठः ।
"गजं नृपं सुवर्णञ्च वृषभं धनुमेव च ।
दीपमन्नं फलं पुष्पं कन्यां छत्रं रथं ध्वजम् ॥
कुटुम्बं लभते दृष्ट्वा कीर्त्तिञ्च विपुलां श्रियम् ।
पूर्णकुम्भं द्विजं वह्निं पुष्पं ताम्बूलमन्दिरम् ॥
शुक्लधान्यं नटं वेश्यां दृष्ट्वा श्रियमवाप्नुयात् ।
गोक्षीरञ्च घृतं दृष्ट्वा चार्थं पुण्यं धनं लभेत् ॥
पायसं पद्मपत्रे च दधि दुग्धं घृतं मधु ।
मिष्टान्नं स्वस्तिकं भुक्त्वा ध्रुवं राजा भविष्यति ॥
पक्षिणां मानुषाणाञ्च भुङ्क्ते मांसं नरो यदि ।
बह्वर्थं शुभवार्त्ताञ्च लभते वाञ्छितं फलम् ॥
छत्रं वा पादुकाम्वापि लब्ध्वाध्वानञ्च गच्छति ।
असिञ्च निर्म्मलं तीक्ष्णं तत्तथैव भविष्यति ॥
भेलया सन्तरेद्यो हि स प्रधानं भविष्यति ।
दृष्ट्वा च फलिनं वृक्षं धनमाप्नोति निश्चितम् ॥
यस्य श्वेतेन सर्पेण दश्यते दक्षिणे भुजे ।
सोऽचिराल्लभते भार्य्यां विनीतां प्रियवादिनीम् ॥
सर्पेण भक्षितो यो हि अर्थलाभश्च तद्भवेत् ।
स्वप्ने सूर्य्यं विधुं दृष्ट्वा मुच्यते व्याधिबन्धनात् ॥
वडवां कुक्कुटीं क्रौञ्चीं दृष्ट्वा भार्य्यां लभेद्-

| | | |
|---|---|---|
| स्वानयति कङ्कणं बधूः । अन्यत्र स्वानयति घण्टां जनः । इति दुर्गादासः ॥<br>**स्वनः**, पुं, (स्वननमिति । स्वन शब्दे + "स्वनह-सोर्व्वा ।" ३ । ३ । ६२ । इति अप् ।) शब्दः । इत्यमरः । १ । ७ । २२ ॥ (यथा, महाभारते । १ । १२३ । ४६ । "श्राकाशे दुन्दुभीनाञ्च बभूव तुमुलः स्वनः ॥") | | ध्रुतम् ।<br>स्वप्ने यो निगडैर्बद्धः प्रतिष्ठामुत्तमां लमेत् ॥<br>उत्तमां स्थाने पुत्रमिति वा पाठः । |

दध्यन्नं पायसं भुङ्क्ते तडागे वा नदीतटे ।
विशीर्णे पन्नपत्रे च सोऽपि राजा भविष्यति ॥
तडागे वा स्थाने पद्मपत्रे इति वा पाठः ।
जलौकसं वृश्चिकञ्च मर्पञ्च यदि पश्यति ।
धनं पुत्रञ्च विजयं प्रतिष्ठाञ्च लभेदिति ॥
शृङ्गिभिर्दंष्ट्रिभिः कौलैर्वानरैः पीडितो यदि ।
निश्चितञ्च भवेद्राजा धनञ्च विपुलं लभेत् ॥
मत्स्यं मांसं मौक्तिकञ्च शङ्खचन्दनहौरकम्।
यस्तु पश्यति स्वपान्ते विपुलं धनमालभेत् ॥
सुराञ्च रुधिरं स्वर्णं भुक्त्वा विष्ठां धनं लभेत् ।
प्रतिमां शिबलिङ्गञ्च लभेद्दृष्ट्वा जयं धनम् ॥
फलितं पुष्पितं विल्वमाम्रं दृष्ट्वा लभेत् धनम् ।
दृष्ट्वा च ज्वलदग्निञ्च धनं बुद्धिं श्रियं लभेत् ॥
आमलकं धात्रीफलं उत्पलञ्च धनागमम् ।
देवताश्च द्विजा गावः पितरो लिङ्गिनस्तथा।
उत्पलं स्थाने तत्पत्रमिति वा पाठः ।
यद्ददाति मिथः स्वप्ने तत्तथैव भविष्यति ॥
शुक्लाम्बरधरां नारीं शुक्लमाल्यानुलेपनाम् ।
समाश्लिष्यति यः स्वप्ने तस्य श्रीः सर्व्वतः सुखम् ॥
पोताम्बरधरां नारीं पीतमाल्यानुलेपनाम् ।
उपगृह्णाति यः स्वप्ने कल्याणं तस्य जायते ॥

पुत्त्रलाभो भवेत्तस्य सम्पत्तिं वा समालभेत् ॥
हस्ते कृत्वा तु कुडवं आढकं वापि सुन्दरी ।
यस्य मन्दिरमायाति स लक्ष्मीं लभते ध्रुवम् ॥
दिव्या स्त्री यद्गृहं गत्वा पुरीषं विसृजेद्द्विज ।
अर्थलाभो भवेत्तस्य दारिद्रञ्च प्रयाति च ॥
यस्य गेहं समायाति भार्य्यया सह ब्राह्मणः ।
पार्व्वत्या सह शम्भुर्व्वा लक्ष्मोर्नारायणोऽथवा।
ब्राह्मणो ब्राह्मणो वापि स्वप्ने यस्मे ददाति वा ।
धान्यं पुष्पाञ्जलिं वापि तस्य श्रीः सर्व्वतोमुखी ॥
सर्व्वतोमुखीत्यत्र सर्व्वतः सुखीति च पाठः ।
मुक्ताहारं पुष्पमाल्यं चन्दनञ्च शुभं व्रज ।
शुभं व्रज स्थाने लभेद्द्विज इति वा पाठः ।
स्वप्ने ददाति विप्रश्च तस्य श्रीः सर्व्वतः सुखी ॥
गोरोचनां पताकां वा हरिद्रामिक्षुदण्डकम्।
स्निग्धान्नञ्च लभेत् स्वप्ने तस्य श्रोः सर्व्वतः सुखी ॥
स्निग्धान्नस्थाने सिद्धान्नमिति वा पाठः ।
ब्राह्मणो ब्राह्मणी वापि ददाति यस्य मस्तके ।
छत्रं वा शुक्लधान्यं वा स च राजा भविष्यति ॥
स्वप्ने रथस्थः पुरुषः शुक्लमाल्यानुलेपनः ।

स्वप्ने विप्रो वदति यं मम दासो भवेति च ।
हरिदासस्य तद्भक्तिं लब्ध्वा स वैष्णवो भवेत् ॥
स्वप्ने विप्रो हरिः शम्भुर्ब्राह्मणी कमला शिवा ।
शुक्ला स्त्री वेदमाता वा जाह्नवी वा सरस्वती ॥
गोपालिकावेशधरा बालिका राधिका मम ।
बालश्च बालगोपालः स्वप्नविद्भिः प्रकाशितः ॥
एष ते कथितो नन्द सुस्वप्नः पुण्यहेतुकः ।
श्रोतुमिच्छसि किं वा त्वं किं भूयः कथयामि ते ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे सुस्वप्नदर्शनं ७७ अध्यायः ॥ * ॥
अक्रूरदृष्टसुस्वप्ना यथा, --
“अथाक्रूरः स्वभवनं गत्वा कंसेन प्रेरितः ।
चकार शयनं तल्पे भुक्त्वा मिष्टान्नमुत्तमम् ॥
सकर्पूरश्च ताम्बूलं चखाद वासितं जलम् ।
जगाम निद्रां सुखतः सुखसम्भोगमात्रतः ॥
ततो ददर्श सुस्वप्नं पुराणश्रुतिसम्मतम्।
निशावशेषसमये वाय्वादिपरिवर्जितः ॥
अरोगो बद्धकेशश्च वस्त्रयुग्मसमन्वितः ।
सुतल्पशायी सुस्निग्धश्चिन्ताशोकविवर्जितः ॥
किशोरवयसं श्यामं द्विभुजं मुरलीधरम् ।
पीतवस्त्रपरीधानं वनमालाविभूषितम् ॥
चन्दनोक्षितसर्व्वाङ्गं मालतीमाल्यशोभितम्
भूषितं भूषितार्हञ्च सद्रत्नमणिभूषणैः ॥
मयूरपुच्छचूडञ्च सस्मितं पद्मलोचनम् ।
एवम्भूतं द्विजशिशुं ददर्श प्रथमे मुने ॥
ततो ददर्श रुचिरां पतिपुत्त्रवतीं सतीम् ।
पोतवस्त्रपरीधानां रत्नभूषणभूषिताम् ॥
ज्वलत्प्रदीपहस्ताञ्च शुक्लमाल्यकरां वराम् ।
शरच्चन्द्रनिभास्याञ्च सस्मितां वरदां शुभाम् ॥
ततो ददर्श विप्रञ्च कुर्व्वन्तञ्च शुभाशिषम् ।
श्वेतपद्मगतं हंसं तुरगञ्च सरोवरम् ॥
ददर्श चित्रितं चारु फलितं पुष्पितं शुभम् ।
पाम्रनिम्बनारिकेलगुवाककदलीतरुम् ॥
दशन्तं श्वेतसर्पञ्च स्वात्मानं पर्व्वतस्थितम् ।
वृक्षस्थञ्च गजस्थञ्च तरिस्थं तुरगस्थितम् ॥
वीणां वादितवन्तञ्च भुक्तवन्तञ्च पायसम् ।
दधिक्षीरयुतान्नञ्च पद्मपत्रस्थमीप्सितम् ॥
कृमिविट्सहिताङ्गञ्च रुदन्तं मोहितं तथा ।

सर्व्वाणि शुक्लानि प्रशंसितानि
भस्मास्थि कार्पासविवर्ज्जितानि ।
सर्व्वाणि कृष्णानि विनिन्दितानि
गोहस्तिदेवद्विजवर्जितानि ॥
दिव्या स्त्री सस्मिता विप्रा
रत्नभूषणभूषिता ।
यस्य मन्दिरमायाति स प्रियं लभते ध्रुवम्
॥
स्वप्ने च ब्राह्मणो देवो ब्राह्मणी
देवकन्यका ।
कुमारी चाष्टवर्षीया रत्नभूषणभूषिता ।
यस्य तुष्टा भवेत् स्वप्ने तस्य तुष्टा च
पार्व्वती ॥
इत्यत्र स भवेत् कविपण्डितः इति च
पाठः ।
ब्राह्मणो ब्राह्मणी वापि सन्तुष्टः सस्मिता
सती ।
फल ददाति यस्मै च तस्य पुत्रो
भविष्यति ॥
यं स्वप्ने ब्राह्मणो नन्द ! करोति च शुभा-
शिषम् ।
यद्वदति भवेत्तस्य तस्यैश्वर्य्यं भवेद्ध्रुवम्
॥
परितुष्टो द्विजश्रेष्ठश्चायाति यस्य
मन्दिरम् ।
नारायणः शिवो ब्रह्मा प्रविशेत्तु तदाश्रमम्
॥
सम्पत्तिस्तस्य भवति यशश्च विपुलं
शुभम् ।
पदे पदे सुखं तस्य सम्मानं गौरवं लभेत्
॥
अकस्मादपि स्वप्ने तु लभते सुरभीं यदि
।
भूमिलाभो भवेत्तस्य भार्य्या चापि
पतिव्रता ॥
करेण कृत्वा हस्ती यं मस्तके
स्थापयेद्यदि ।
राज्यलाभो भवेत्तस्य निश्चितञ्च श्रुतौ
श्रुतम् ॥
स्वप्ने तु ब्राह्मणस्तुष्टः समाश्लिष्यति यं
व्रज ।
तत्रस्थो दधि भुङ्क्ते च पायसं वा नृपो
भवेत् ॥
स्वप्ने ददाति विप्रश्च ब्राह्मणी वा सुधां
दधि ।
प्रशस्तपात्रं तस्मै वा सोऽपि राजा
भवेद्ध्रुवम् ॥
ददाति पुस्तकं स्वप्ने यस्मै पुण्यवते
द्विजः ।
स भवेद्विश्वविख्यातः कवीन्द्रः
पण्डितेश्वरः ॥
यं पाठयति स्वप्ने या मातेव च सुतं
यथा ।
सरस्वतीसुतः सोऽपि तत्परो नास्ति
पण्डितः ॥
ब्राह्मणः पाठयेद्यञ्च पितेव
यत्नपूर्ब्बकम् ।
ददाति पुस्तकं प्रीत्या स च तत्सदृशो
भवेत् ॥
प्राप्नोति पुस्तकं स्वप्ने पथि वा यत्र
तत्र वा ।
स पण्डिता यशस्वी च विख्यातश्च
महीतले ॥
स्बप्ने यस्मै महामन्त्रं विप्रो विप्रा
ददाति चेत् ।
स भवेत् पुरुषः प्राज्ञो धनवान् गुणवान्
सुधीः ॥
स्वप्ने ददाति मन्त्रं वा प्रतिमां वा
शिलामयीम् ।
यस्मै ददाति विप्रश्च मन्त्रसिद्धिश्च
तद्भवेत् ॥
विप्रा विप्रसमूहञ्च दृष्ट्वा नत्वाशिषं
लभेत् ।
राजेन्द्रः स भवेद्वापि किम्वा च
कविपण्डितः ॥
शुक्लधान्ययुतां भूमिं यस्मै विप्रः
समुत्सृजेत् ।
स्वप्ने च परितुष्टश्च स भवेत्
पृथिवीपतिः ॥
स्वप्ने विप्रो रथे कृत्वा नानास्वर्गं
प्रदर्शयेत् ।
शुक्लधान्यपुष्पधरं क्षणं चन्दनचर्च्चितम् ॥
समुद्रस्थं प्रासादस्थमात्मानञ्च सलोहितम् ।
छिन्नभिन्नक्षताङ्गञ्च मेदःपूयसमन्वितम् ॥
ततो ददर्श रजतं मणिशुभ्रञ्च काञ्चनम् ।
मुक्तामाणिक्यरत्नञ्च पूर्णकुम्भं घनं जलम् ॥
सुरभिञ्च सवत्साञ्च वृषभेन्द्रं मयूरकम् ।
शुक्लञ्च सारसं शङ्खं छिन्नं खञ्जनमेव च ॥
ताम्बूलं पुष्पमाल्यञ्च ज्वलदग्निं सुरार्च्चनम् ।
पार्व्वतीप्रतिमां कृष्णप्रतिमां शिवलिङ्गकम् ॥
विप्रबालाश्च बालञ्च सुपक्वफलितं कृषिम् ।
देवस्थलीञ्च राजेन्द्रं सिंह व्याघ्रं गुरुं सुरम् ॥
दृष्ट्वा स्वप्नं समुत्तस्थौ चकाराह्निकमीप्सितम् ।
उद्धवं कथयामास सर्व्ववृत्तान्तमेव च ॥”

| | | |
|---|---|---|
| तीर्थस्नायी भवेत् सोऽपि निश्चितश्च श्रिया-<br>न्वितः ।<br>स्वप्ने ददाति पुष्पञ्च यस्मै पुण्यवते द्विजः ।<br>जययुक्तो भवेत् सोऽपि यशस्वी च धनी सुखी ॥<br>स्वप्ने दृष्ट्वा च तीर्थानि सौधरत्नगृहाणि च ।<br>जययुक्तश्च धनवां स्तीर्थस्नायी भवेन्नरः ॥<br>स्वप्ने तु पूर्णकलसं कश्चित् कस्मै ददाति वा । | चिरजीवी भवेदायुर्धनवृद्धिर्भवेद् ध्रुवम् ॥<br>विप्रा विप्रश्च सन्तुष्टो यस्मै कन्यां ददाति च ।<br>स्वप्ने च स भवेन्नित्यं धनाढ्यो भूपतिः स्वयम् ॥<br>स्वप्ने सरोवरं दृष्ट्वा समुद्रं वा नदीं नदम् ।<br>शुक्लाहिं शुक्लशैलञ्च दृष्ट्वा प्रियमवाप्नुयात् ॥”<br>प्रियं स्थाने श्रियमिति च पाठः ।<br>यः पश्यति मृतं स्वप्ने स भवेच्चिरजीवनः ।<br>अरोगोऽरोगिणं दृष्ट्वा सुखिनञ्च सुखी भवेत् ॥<br>दिव्या स्त्री यं प्रवदति मम स्वामी भवान् भव ।<br>स्वप्ने दृष्ट्वा च जागर्त्ति स च राजा भवेद्ध्रुवम् ॥<br>स्वप्ने च बालिकां धृष्ट्वा लब्ध्वा स्फाटिक-<br>मालिकाम् ।<br>इन्द्रचापं शुक्लघनं स प्रतिष्ठां लभेद् ध्रुवम् ॥ | |

इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ७० ।
१-१८ ॥
दुःस्वप्ना यथा, --
नन्द उवाच ।
“श्रुतं सर्व्वं महाभाग दुःस्वप्नं कथय
प्रभो ।
उवाच तञ्च भगवान् श्रूयतामिति तद्वचः
॥”
श्रीभगवानुवाच ।
“स्वप्ने हसति यो हर्षाद्विवाहं यदि
पश्यति ।
नर्त्तनं गीतमिष्टञ्च विपत्तिस्तस्य
निश्चितम् ॥
दन्ता यस्य विपीड्यन्ते विचरन्तञ्च
पश्यति ॥
धनहानिभवेत्तस्य पीडा चापि शरीरजा ॥
अभ्यङ्गितस्तु तैलेन यो गच्छेद्दक्षिणां
दिशम् ।
खरोष्ट्रमहिषारूढो मृत्युस्तस्य न संशयः
॥
स्वप्ने चूर्णं जवापुष्पमशोकं करवीरकम् ।
विपत्तिस्तस्य तैलञ्च लवणं यदि पश्यति
॥
नग्नां कृष्णां छिन्ननासां शूद्रस्य विधवां
तथा ।
कपर्द्दकं तालफलं दृष्ट्वा शोकमवाप्नुयात्
॥
स्वप्ने रुष्टं ब्राह्मणञ्च ब्राह्मणीं
कोपसंयुताम् ।
विपत्तिश्च भवेत्तस्य लक्ष्मीर्याति
गृहाद्ध्रुवम् ॥
वनपुष्पं रक्तपुष्पं पलाशञ्च सुपुष्पितम् ।
कार्पासं शुक्लवस्त्रञ्च दृष्ट्वा
दुःखमवाप्नुयात् ॥
गायन्तीञ्च हसन्तीञ्च कृष्णाम्बरधरां
स्त्रियम् ।
दृष्ट्वा कृष्णाञ्च विधवां नरो
मृत्यमवाप्नुयात् ॥

विदायं कुरुते कोपात् दृष्ट्वा दुःखमवाप्नुयात्
॥
कृष्णपुष्पञ्च तन्माल्यं शल्यशस्त्रास्त्रधारिणम्
।
म्लेच्छाञ्च विकृताकारां दृष्ट्वा सृत्युं लभेत्
ध्रुवम् ॥
वाट्याञ्च नर्त्तनं गीतं गायनं रक्तवाससम् ।
मृदङ्गवाद्यमानन्दं दृष्ट्वा दुःखं लभेद्ध्रुवम् ॥
वाट्यां स्थाने वाद्यमिति वा पाठः ।
आनन्दं स्थाने आनद्धमिति बुक्तम् ।
मत्स्यादि धारयेद्यो हि तद्भ्रातुर्म्मरणं ध्रुवम् ॥
छिन्नं वापि कबन्धं वा विकृतं वा मुक्तकेशिनम्
।
क्षिप्तं नृत्यञ्च कुर्व्वन्तं दृष्ट्वा मृत्युं लभेन्नरः ॥
मृतो वापि मृता वापि कृष्णा म्लेच्छा भया-
नका ।
उपगूहति यं स्वप्ने तस्य मृत्युर्व्विनिश्चितः ॥
येषां दन्ताश्च भग्नाश्च केशाश्चापि पतन्ति च
।
धनहानिर्भ्तेषां पीडा वा तच्छरीरजा ॥
उपद्रवन्ति यं स्वप्ने शृङ्गिणो दंष्ट्रिणोऽपि वा ।
बालका मानवाश्चैव तस्य राजकुलाद्भयम् ॥
छिन्नं वृक्षं पतन्तञ्च शिलावृष्टिं तुषं क्षुरम् ।
रक्ताङ्गारं भस्मवृष्टं दृष्ट्वा दुःखमवाप्नुयात् ॥
गृहं पतन्तं शैलं वा धूमकेतुं भयानकम् ।
भग्नस्कन्धं तरोर्व्वापि दृष्ट्वा दुःखमवाप्नुयात्
॥
रथगेहशैलवृक्षगोहस्तितुरगात् खरात् ।
पतन्ति भूमौ ये स्वप्ने विपत्तिस्तस्य सङ्कुला
॥
उच्चैः पतन्ति गर्त्तेषु भस्माङ्गारचितासु च ।
क्षारकुण्डेषु चूर्णेषु मृत्युस्तेषां न संशयः ॥
बलाद्गृह्णाति दुष्टश्च छत्रञ्च यस्य मस्तकात् ।
पितुर्नाशो भवेत्तस्य गुरोर्व्वापि नृपस्य वा ॥
सुरभी यस्य गेहाच्च याति त्रस्ता सवत्सिका
।
प्रयाति पापिनस्तस्य लक्ष्मीरपि वसुन्धरा ॥
पाशेन कृत्वा बद्धञ्च यं गृहीत्वा प्रयान्ति च ।

भक्त्या चतानि भद्राणि दश नामानि यो
जपेत् ।
शतकृत्वो भक्तियुक्तो जप्त्वा रोगी च
रोगतः ॥
लक्षधा हि जपेद्यो हि बन्धनान्मुच्यते
ध्रुवम् ।
जप्त्वा च दशलक्षञ्च महाबन्ध्या प्रसूयते
॥
हविष्याशी यतः शुद्धो दरिद्रो धनवान्
भवेत् ।
शतलक्षञ्च जप्त्वा च जीवन्मुक्तो भनेन्नरः
॥
ॐ शिवं दुर्गां गणपतिं कार्त्तिकेयं
दिनेश्वरम् ।
धर्म्मं गङ्गाञ्च तुलसीं राधां लक्ष्मीं
सरस्वतोम् ॥
नामान्येतानि भद्राणि जले स्नात्वा च
योजपेत् ।
वाञ्छितञ्च लभेत् सोऽपि दुस्वप्नः
सुस्वप्नो भवेत् ॥
ॐ ह्रीँ श्रीँ क्लीँ पूर्ब्बं दुर्गतिनाशिन्यै महा-
मायायै स्वाहा ।
कल्पवृक्षो हि लोकानां मन्त्रः
सप्तदशाक्षरः ।
शुचिश्च दशधा जप्ता दुःस्वप्नः सुस्वप्नो
भवेत् ॥
शतलक्षजपेनैव मन्त्रसिद्धिर्भवेन्नृणाम् ।
सिद्धमन्त्रश्च लभते सर्व्वसिद्धिञ्च
वाञ्छितम् ॥
ॐनमो मृत्यञ्जयायेति स्वाहान्तं लक्षधा
जपेत् ।
दृष्ट्वा च मरणं स्वप्ने शतायुश्च भवेन्नरः
॥
पूर्ब्बोत्तरमुखो भूत्वा स्वप्नं प्राज्ञे
प्रकाशयेत् ॥
काश्यपे दुर्गते नोचे देवब्राह्मणनिन्दके ।
मूर्खे चैवानभिज्ञे च न च स्वप्नं
प्रकाशयेत् ॥
अश्वत्थे गणके विप्रे पितृदेवार्च्चनेषु च ।

देवता यत्र नृत्यन्ति गायन्ति च हसन्ति च ।
आस्फोटयन्ति धावन्ति तस्य देशो विनश्यति ॥
वान्तं मूत्रं पुरीषं वा वैद्यं रौप्यं सुवर्णकम् ।
प्रत्यक्षमथवा स्वप्ने जीवितं दशमासिकम् ॥
कृष्णाम्बरधरां नारीं कृष्णमाल्यानुलेपनाम् ।
उपगूहति यः स्वप्ने तस्य मृत्युर्भविष्यति ॥
मृतं वत्सञ्च मुण्डञ्च मृगस्य च नरस्य वा ।
यः प्राप्नोत्यस्थिमालाञ्च विपत्तिस्तस्य निश्चितम् ।
अभ्यङ्गितस्तु हविषा क्षीरेण मधुनापि वा ।
तक्रेणापि गुडेनैव पीडा तस्य विनिश्चितम् ॥
रथं खरोष्ट्रसंयुक्तं एकाकी योऽधिरोहयेत् ।
तत्रस्थोऽपि च जागर्त्ति मृत्युरेव न संशयः ॥
रक्ताम्बरधरां नारीं रक्तमाल्यानुलेपनाम् ।
उपगूहति यः स्वप्ने व्याधिस्तस्य विनिश्चितम् ।
पतितं नखकेशञ्च निर्व्वाणाङ्गारमेव च ।
भस्मपूर्णां चितां दृष्ट्वा लभते मृप्युमेव च ॥
श्मशानं शुष्ककाष्ठञ्च तृणानि लौहमेव च ।
मसीञ्च किञ्चित् कृष्णां वा दृष्ट्वा दुःखं लभेत्
ध्रुवम् ॥
पादुकां फलकं रक्तपुष्पमाल्यं भयानकम् ।
माषं मसूरं मुद्गं वा दृष्ट्वा सद्यो व्रणं लभेत् ॥
कण्टकं सरलं काकं भल्लूकं वानरं खरम् ।
यमदूताश्च ये म्लेच्छास्तस्य मृत्युर्न संशयः ॥
गणका ब्राह्मणो वापि ब्राह्मणी वा गुरुस्तथा ।
परिरुष्टः शपति यं विपत्तिस्तस्य निश्चितम् ॥
विरोधिनश्च काकाश्च कुक्कुरा भल्लुकास्तथा ।
पतन्त्यागत्य यद् गात्रे तस्य मृत्युर्न संशयः ॥
महिषा भल्लुका उष्ट्राः शूकरा गर्द्दभास्तथा ।
रुष्टा धावन्ति यं स्वप्ने सरोगी निश्चितं भवेत् ॥”
तेषां शान्तिर्यथा, --
“रक्तचन्दनकाष्ठानि घृताक्तानि च यो जुहेत् ।
गायत्र्याश्च सहस्रेण तेन शान्तिर्व्विधीयते ॥
सहस्रधा जपेद्यो हि भक्त्या तं मधुसूदनम् ।
निष्पापोऽपि भवेत् सोऽपि दुःस्वप्नः सुस्वप्नो भवेत् ॥
अच्युतं केशव विष्णुं हरिं सत्यं जनार्द्दनम् ।
हंसं नारायणञ्चंव एत्न्नामाष्टकं शुभम् ॥
शुचिः पूर्व्वमुखः प्राज्ञा दशकृत्वश्चं यो जपेत् ।
निष्पापो हि भवेत् सोऽपि दुःस्वप्नः सुस्वप्नोभवेत् ॥
विष्णुं नारायणं कृष्णं माधवं मधुसूदनम् ।
हरिं नरहरिं रामं गोविन्दं दधिवामनम् ॥
शुचिः पूर्व्वमुखो भूत्वा भक्तिश्रद्धायुतो जपेत् ।
निष्पापो हि भवेत् सोऽपि दुःखप्नः सुस्वप्नो भवेत् ॥
आचार्य्ये वैष्णवे मित्रे दिवास्वप्नं प्रकाशयेत् ॥
इति ते पुण्यमाख्यानं कथितं पापनाशनम् ।
धन्यं यशस्यमायुष्यं किं भूयः श्रोतुमिच्छसि ॥
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे दुःस्वप्नदर्शनम्
८२ अध्यायः ॥ * ॥ कंसदृष्टदुःस्वप्ना यथा, --
नारायण उवाच ।
“अथ कंसो विचिन्त्यैवं दृष्ट्वा दुःस्वप्नमेव च ।
समुद्विग्नो महाभीतो निराहारो निरुत्सवः ॥
पात्रं मित्रं बुधगणं बान्धवञ्च पुरोहितम् ।
समानीय सभामध्ये तानुववाच सुदुःखितः ॥
कंस उवाच ।
मया दृष्टो निशाशेषे यो दुःस्वप्नो भयप्रदः ।
तं निबोध बुधाः सर्व्वे बान्धवाश्च पुरोहित ॥
बिभ्रती चोड्रपुष्पाणां मालां सरक्तचन्दनाम् ।
रक्ताम्बरं खङ्गतीक्ष्णं खर्परञ्च भयङ्करम् ॥
प्रकृत्याट्टाट्टहासञ्च लोलजिह्वा भयङ्करी ।
अतीववृद्धा कृष्णाङ्गी नगरे मम नृत्यति ॥
मुक्तकेशो छिन्ननासा कृष्णा कृष्णाम्बरापि सा ।
विधवा सा महाशूद्री मामालिङ्गितुमिच्छति ॥
मलिनं चेलखण्डञ्च बिभ्रतो रुक्षमूर्द्धजाम् ।
ददाति चूर्णतिलकं कपाले मम वक्षसि ॥
कृष्णवर्णानि पक्वानि छिन्नभग्नानि सत्यक ।
पतन्ति कृत्वा शब्दांश्च शश्वत्तालफलानि च ॥
कुचेलो बिकृताकारो म्लेच्छो हि रुक्षमूर्द्धजः ।

| | | |
|---|---|---|
| पूयं गात्रमलं स्वप्ने केवलं व्याधिकारणम् ॥<br>भग्नभाण्डं क्षतं शूद्रं गलत्कुष्ठञ्च रोगिणम् ।<br>रक्ताम्बरञ्च जटिलं शूकरं महिषं खरम् ॥<br>अन्धकारं महाघोरं सृतजीवं भयानकम् ।<br>दृष्ट्वा स्वप्ने योनिलिङ्गं विपत्तिं लभते ध्रुवम् ॥<br>कुवेशरूपं म्लेच्छञ्च यमदूतं भयङ्करम् ।<br>पाशहस्तं पाशशस्त्रं दृष्ट्वा मृत्यं लभेन्नरः ॥<br>ब्राह्मणो ब्राह्मणी बाला बालको बा सुतः सुता । | | ददाति मह्यमूषायां छिन्नभग्नकपर्द्दकान् ॥<br>महारुष्टा च दिव्या स्त्री पतिपुत्त्रवती सती ।<br>बभञ्ज पूर्णकुम्भञ्च अभिशप्य पुनः पुनः ॥<br>अम्लानामोडमालाञ्च रक्तचन्दनचर्च्चिताम् ।<br>ददाति मह्यं विप्रश्च महारुष्टोऽभिशप्य च ॥<br>क्षणमङ्गारवृष्टिश्च भस्मवृष्टिः क्षणं क्षणम् । |

क्षणं क्षणं रक्तवृष्टिर्भवेच्च नगरे मम ॥
वानरं वायसं श्वानं भल्लुकं शूकरं खरम् ।
पश्यामि विकृताकारं शब्दं कुर्व्वन्तमुल्वणम् ॥
पश्यामि शुष्ककाष्ठानां राशिमम्लानकज्जलम् ।
अरुणादयवेलायां कर्पं छिन्ननखानि च ॥
पीतवस्त्रपरीधाना शुक्लचन्दनचर्च्चिता ।
बिभ्रती मालतीमाला रत्नभूषणभूषिता ॥
क्रीडाकमलहस्ता सा सिन्दूरबिन्दुशोभिता ।
कृत्वाभिशापं मां रुष्टा याति मन्मन्दिरात् सती ॥
पाशहस्तांश्च पुरुषान् मुक्तकेशान् भयङ्कर्यन् ।
अतिरूक्षांश्च पश्यामि विशतो नगरं मम ॥
नग्ना नारीर्म्मुक्तकेशीर्नृत्यन्तीश्च गृहे गृहे ।
अतीव विकृताकाराः पश्यामि सस्मिताः सदा ॥
छिन्ननासा च विधवा महाशूद्री दिगम्बरी ।
सा तैलाभ्यङ्गितं माञ्च करोत्यतिभयङ्करी ॥
निर्व्वाणाङ्गारसंयुक्ता भस्मपूर्णा भयङ्कराः ।
अतिप्रभातसमये चिताः पश्यामि सस्मितः ॥
पश्यामि च विवाहञ्च नृत्यगीतमहोत्सवम् ।
रक्तवस्त्रपरीधानान् पुरुषान् मुक्तमूर्द्धजान् ॥
रक्तं वमन्तं पुरुषं नृत्यन्तं नग्नमुल्वणम् ।
धावन्तञ्च शयानञ्च पश्यामि सस्मितं सदा ॥
राहुग्रस्तञ्च गगने मण्डलं चन्द्रसूर्य्ययोः ।
एककाले च पश्यामि सर्व्वग्रासञ्च बान्धवाः ॥
उल्कापातं धूमकेतुं भूकम्पराष्ट्रविप्लवम् ।
झञ्झावातं महोत्पातं पश्यामि च पुरोहित ॥
वायुना घूर्णमानांश्च छिन्नस्कन्धान् महीरुहान् ।
पतितान् पर्व्वतांश्चैव पश्यामि पृथिवीतले ॥
पुरुषं छिन्नशिरसं नृत्यन्तं नग्नमुत्सृतम् ।
यस्य तस्याशु गुल्मेन यस्य बह्निमनर्च्चिषम् ।
जुह्वतो घृतसिक्तस्य नग्नस्योरसि जायते ॥
मद्यं स नश्येत् कुष्ठेन चण्डालैः सह यः पिबेत् ।
स्नेहं बहुविधं स्वप्ने स प्रमेहेन नश्यति ॥
उन्मादेन जले मज्जेद्यो नृत्यन् राक्षसैः सह ।
अपस्मारेण यो मर्त्त्यो नृत्यन् प्रेतेन नीयते ॥
यानं खरोष्ट्रमार्ज्जारकपिशार्द्दलशूकरैः ।
यस्य प्रेतैः शृगालैर्वा स मृत्वोर्व्वर्त्तते मुखे ॥
अपूपशष्कुलीर्जग्ध्वा बिबुद्धस्तद्विधं वमन् ।
न जीवत्यक्षिरोगाय सूर्य्येन्दुग्रहणेक्षणम् ॥
सूर्य्याचन्द्रमसोः पातदर्शनं दृग्विनाशनम् ।
मूर्द्ध्नि वंशलतादीनां सम्भवो वयसां तथा ॥
निलयो मुण्डताकाकगृध्राद्यैः परिवारणम् ।
तथा प्रेतपिशाचस्त्रीद्रविडान्ध्रगवाशनैः ॥
सङ्गो वेत्रलतावंशतृणकण्टकसङ्कटे ।
श्वभ्रश्मशानशयनं पतनं पांशुभस्मनोः ॥
मज्जनं जलपङ्कादौ शीघ्रेण स्रोतसाहृतिः ।
नृत्यवादित्रगीतानि रक्तस्रग्वस्त्रधारणम् ॥
वयोऽङ्गवृद्धिरभ्यङ्गो विवाहः श्मश्रुकर्म्म च ।
पक्वान्नस्नेहमद्याशः प्रच्छर्द्दनविरेचने ॥
हिरण्यलोहयोर्लाभः कलिर्बन्धपराजयौ ।
उपानद्युगनाशश्च प्रपातः पादचर्म्मणोः ॥
हर्षो भृशं प्रकुपितैः पितृभिश्चावभर्त्सनम् ।
प्रदीपग्रहनक्षत्रदन्तदैवतचक्षुषां ॥
पतनं वा विनाशो वा भेदनं पर्व्वतस्य च ।
कानने रक्तकुसुमे पापकर्म्मनिवेशने ॥
शुक्लाः सुमनसो वस्त्रममेध्यालेपनं फलम् ॥
शैलप्रासादसफलवृक्षसिंहनरद्विपान् ।
आरोहेद्गोऽश्वयानञ्च तरेन्नदह्रदोदधीन् ॥
पूर्ब्बोत्तरेण गमनमगम्यागमनं मृतम् ।
सम्बाधान्निःसृतिर्द्देवैः पितृभिश्चाभिनन्दनम् ।
रोदनं पतितोत्थानं द्विषताञ्चावमर्द्दनम् ।
यस्य स्यादायुरारोग्यं वित्तं बहु च सोऽश्नुते ॥”
इति वाभटे शारोरस्थाने षष्ठेऽध्याये ॥)

**स्वप्नकृत्,** क्ली, (स्वप्नं निद्रां करोतीतीति । कृ + क्विप् । तुगागमश्च ।) सुनिषण्णकम् । सुषुणी शाक इति भाषा । इति शब्दचन्द्रिका ॥ स्वप्नकारके, त्रि ॥

**स्वस्नक्,** [ज्] त्रि, (स्वपिति तच्छोलः इति । स्वप + “स्वपितृषार्नजिङ् ।” ३ । २ । १७२ । इति नजिङ् ।) निदाशीलः । इत्यमरः । ३ । १ । ३३ ॥) यथा, भट्टिः । ७ । २५ । “अहं स्वप्नक् पसादेन तव वन्दारुभिः सह ॥”)

**स्वप्नदोषः,** पुं, (स्वप्नस्य दोषः ।) निद्रावस्थायां रेतःस्खलनम् । इति लोकप्रसिद्धम् ॥ (अस्यी-षधं यथा, --
“वटाङ्कुरस्य निर्यामान् माक्षिकेण समन्वितान् ।
सायं प्रयोज्य मतिमान् स्वप्नदोषं निवारयेत् ॥”
इति वैद्यकम् ॥)

**स्वप्नविचारी,** [न्] त्रि, स्वप्नविचारकर्त्ता । शुभा-शुभस्वप्नव्याख्याकर्त्ता । स्वप्नं विचारयतीत्यर्थे

मुण्डमालाधरं घोरं पश्यामि च गृहे गृहे ॥
दग्धं सर्व्वाश्रमं भस्मपूर्णमङ्गारसङ्कुलम् ।
हाहाकारञ्च कुर्व्वन्तं सर्व्वं पश्यामि सर्व्वतः
॥
इत्येवमुक्त्वा राजा स विरराम सभातले ।
श्रुत्वा स्वप्नं बान्धवाश्च नतवक्त्रा
निशश्वसुः ॥
जहार चेतनं सद्यः सत्यकश्च पुरोहितः ।
मत्वा विनाशं कंसस्यं यजमानस्य नारद ॥
रुरोद नारीवर्गश्च पिता माता च शोकतः ।
मेनिरे नाशकालञ्च सद्यः स्वयमुपस्थितम्
॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ६३
अध्यायः ॥
परशुरामदृष्टदुःस्वप्नाः ब्रह्मवैवर्त्ते
गणेशखण्डे
३३ अध्याये
कार्त्तवीर्य्यार्ज्जुनदृष्टदुःस्वप्नास्तत्रैव
३४ अध्याये घोरासुरदृष्टदुःस्वप्ना
देवीपुराणे
२२ अध्याये कालिकापुराणे पुष्याभिषेके
८७
अध्याये मत्स्यपुराणे
यात्रानिमित्तस्वप्नाध्याय-
कथने २४२ अध्याये च ते द्रष्टव्याः ॥
(वैद्य-
कोक्तस्वप्नशकुनं यथा, --
“इत्युक्तं दूतशकुनं स्वप्नानूर्द्ध्वं प्रचक्षते ।
स्वप्ने मद्यं सह प्रेतैर्यः पिबन् कष्यते शुना ।
स मर्त्त्यो मृत्युना शीघ्रं ज्वररूपेण नीयते ॥
रक्तमाल्यवपुर्वस्त्रो यो हसन् ह्रियते स्त्रिया ।
सोऽस्रपित्तेन महिषखवराहोष्ट्रार्द्दभैः ॥
यः प्रयाति दिशं याम्यां मरणं तस्य यक्ष्मणा ।
लताकण्टकिनी वंशस्ताली वा हृदि जायते
॥
चिन्तान्धकारसम्बाधे जनन्याञ्च
प्रवेशनम् ।
पातः प्रासादशैलादेर्मत्स्येन ग्रसनन्तथा
॥
काषायिणामसौम्यानां नग्नानां
दण्डधारिणाम् ।
रक्ताक्षाणां च कृष्णानां दर्शनं जातु नेष्यते
॥
कृष्णा पापा ह्यनाचारा
दीर्घकेशनखस्तनी ।
विरागा चाप्यवसना स्वप्नकालनिशा
मता ॥
मनोवहानां पूर्णत्वात् स्रोतमां प्रबलैर्मलैः
।
दृश्यन्ते दारुणाः स्वप्ना रोगो यैर्याति
पञ्चताम् ॥
अरोगः संशयं प्राप्य कश्चिदेव विमुच्यते
।
दृष्टः श्रुतोऽनुभूतश्च प्रार्थितः
कल्पितस्तथा ॥
भाविको दोषजश्चेति स्वप्नः सप्तविधो
मतः ।
तेष्वद्या निष्फलाः पञ्च यथा
स्वप्रकृतिर्दिवा ॥
विस्मृतो दीर्घह्रस्वोऽति पूर्ब्बरात्रे चिरात्
फलम् ॥
दृष्टः करोति तुच्छञ्च गोसर्गे तदहर्महत् ॥
निद्रया चानुपहतः प्रतीपैर्व्वचनैस्तथा ॥
याति पापोऽल्पफलतां
दानहोमजपादिभिः ॥
अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव यः
पुनः ।
पश्येत् सौम्यं शुभं तस्य शुभमेव फलं
भवेत् ॥
देवान् द्विजान् गोवृषभान् जीवतः सुहृदो-
नृपान् ।
साधून् यशस्विनो वह्निमिद्धं स्वच्छान्
जलाश-
यान् ॥
कन्यां कुमारकान् गौरान् शुक्लवस्त्रान्
सुते-
णिन्प्रत्ययेन निष्पन्नः ॥

**स्वभाजनं**, क्ली, (स्वस्य भाजनम् ।) आनन्दनम् ।

इत्यमरटीकायां रायमुकुटः । ३ । २ । ७ ॥

**स्वभावः**, पुं, (स्वस्य भावः ।) स्वकीयभावः ।

तत्पर्य्यायः । संसिद्धिः २ प्रकृतिः ३
स्वरूपम् ४
निसर्गः ५ । इत्यमरः । १ । ७ । ३८ ॥
भावः ६ ।
इति शब्दरत्नावली ॥ सर्गः ७ । इति जटा-
धरः ॥ स्वत एव आविर्भावः । यथा, --
“बहिर्हेत्वनपेक्षी तु स्वभावोऽथ प्रकीर्त्तितः
।
निसर्गश्च स्वरूपञ्चेत्येषोऽपि भवति द्विधा
॥
निसर्गः सुदृढाभ्यासजन्यः संस्कार उच्यते
।
अजन्यस्तु स्वतः सिद्धः स्वरूपं भाव
इष्यते ॥”
इत्युज्ज्वलनीलमणिः ॥
“वचनेषु च बुद्धौ च स्वभावे च चरित्रतः ।
आचारे व्यवहारे च ज्ञायते हृदयं नृणाम् ॥
* ॥
लोकाः कर्म्मवशीभूतास्तत् कर्म्म यत् कृतं
पुरा ।
स्वकर्म्मणां फलं भुङ्क्ते जन्तुर्जन्मनि
जन्मनि ॥
केचिद्वदन्तीति भवेत् स्वकृतेन च कर्म्मणा
।
केचिद्वदन्ति दैवेन स्वभावेनेति केचन ॥
त्रिविधाश्च मता वेदे वेदवेदाङ्गपारगाः ॥
स्वयञ्च कर्म्मजनकस्तत् कर्म्म दैवकारणम्
।
स्वभावो जायते नृणामात्मनः पूर्ब्बकर्म्मणा
॥ * ॥
स एवात्मा सर्व्वसेव्यः सर्व्वेषाञ्च फलप्रदः
।
स च सृजति दैवञ्च स्वभावं कर्म्म एव च ॥
* ॥
अहो श्रीकृष्णदासानां कः स्वभावः
सुनिर्म्मलः ।

| | | |
|---|---|---|
| | जसः ।<br>नराशनं दीप्ततनुं समन्ताद्रुधिरोक्षितः ॥<br>यः पश्येल्लभते यो वा छत्रादर्शविषामिषम् । | हृतभार्य्यमुच्छितञ्च न शशाप रिपुं गुरुः ॥”<br>इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे । ५७ । २१ -- २८ ।<br>२१ । ४१ ॥ अपि च । |

"सुदिनं दुर्द्दिनञ्चैव सर्व्वं कर्म्मोद्भवे भव ।
तत् कर्म्म तपसां साध्यं कर्म्मणाञ्च शुभाशुभम् ॥
तपः स्वभावसाध्यञ्च स्वभावोऽभ्यासतो भवेत् ।
संसर्ग साध्योऽभ्यासश्च संसर्गः पुण्यतो भवेत् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ४३ । ५१ -- ५२ ॥
अन्यच्च । चाणक्यवाक्यम् ।
"स्वभावो यादृशो यस्य न यहाति कदाचन ।
अङ्गारः शतधौतेन मलिनत्वं न मुञ्चति ॥"
"सर्व्वस्य हि परीक्ष्यन्ते स्वभावा नेतरे गुणाः ।
अतीत्य हि गुणान् सर्व्वान् स्वभावो मूद्र्ध्नि वर्त्तते ॥"
इति हितोपदेशे मित्रलाभनामप्रथमकथा-संग्रहः ॥

**स्वभूः**, पुं, (स्वेनैव भवतीति । भू + क्विप् । विष्णुः ।

इत्यमरः । १ । १ । १८ ॥ ब्रह्मा । इति मेदिनी ॥
(यथा, भागवते । ३ । १२ । ५ ।
"तान् बभाषे स्वभूः पुत्त्रान् प्रजाः सृजत पुत्त्रकाः ॥")
शिवश्च ॥

**स्वमेकः**, पुं, संवत्सरः । यथा, --

"स्वमेकमेकं वरदा तृप्ता भवति चण्डिका ।
रुधिरेणोरणस्येह तर्पिता विधिवन्नृप ॥"

समृद्धिमृद्धिमद्द्रव्यादपहन्तिच कन्यका ।
सा स्वयंहारिकेत्युक्ता सदान्तर्द्धानतत्परा ॥
महानसादर्द्धसिद्धमन्नागारस्थितम्तथा ।
परिवेश्यमानञ्च सदा सार्द्धम् भुङ्क्ते च भुञ्जता ॥
उच्छिष्टानां मनुष्याणां हरत्यन्नञ्च दुर्द्धरा ।
कर्म्मान्ताङ्गारशालाभ्यः सिद्ध्युद्धिं हरति द्विज ॥
गोस्त्रीस्तनेभ्यश्च पयः क्षोरहारी सदैव सा ।
दध्ना घृतं तिलात्तैलं सुरागारात्तथा सुराम् ॥
रङ्गं कुसुम्भकादिभ्यः कार्पासात् सूत्रमेव च ।
सा स्वयंहारिका नाम हरत्यविरतं द्विज ॥"
तच्छान्तिर्य्यथा, --
"कुर्य्यात शिखण्डिकोद्वन्द्वां रक्षार्थं कृत्रिम-स्त्रियम् ।
रक्षा चैव गृहे लेख्या वर्ज्या चोच्छिष्टता तथा ॥"
शिखण्डिकोद्वन्द्वाम् स्थाने शिखण्डिनोद्वन्द्वमिति च पाठः ।
"होमाग्निदेवताधूपभस्मना च परिक्रिया ।
कार्य्या क्षीरादिभाण्डानाम्वं तद्रक्षणं स्मृतम् ॥"
इति मार्कण्डेयपुराणे दुःसहवंशोत्पत्तिनामा-ध्यायः ॥

**स्वयंकृतः**, स्त्री, (स्वयमात्नना कृतः ।) आत्मकृतः ।

यथा, --
"ऋत्विक् च त्रिविधो दृष्टः पूर्व्वैर्ज्जुष्टः स्वयंकृतः ।
यदृच्छया च यः कुर्य्यादार्त्विज्यं प्रीति-पूर्ब्ब कम् ॥"
इति तिथ्यादितत्त्वम् ॥

**स्वयंगुप्ता**, स्त्री, (स्वयमात्मना गुप्ता) शूकशिम्बिका ।

वैकुण्ठं तदधिष्टान विकुण्ठञ्च स्वयंप्रभम् ॥"
रसायनाधिकारोक्तसोमसंज्ञकौषधिविशेषः ।
स्वयंप्रभो महासोमो यश्चापि गरुडाहृतः ॥"
इति सुश्रुते चिकित्सितस्थाने १९ अध्याये ॥
स्त्री, अप्सरोविशेषः । यथा, महाभारते । ३ । ४३ । २९ ॥
"घृताची मेनका रम्भा पूर्ब्बचित्तिः स्वयंप्रभा ॥")

**स्वयम्भुः**, पुं, (स्वयम्भवतीति । स्वयं + भू + डुः ।)

ब्रह्मा । इति रूपकोषः ॥

**स्वयम्भुवः**, पुं, (स्वयम्भवतीति । भू + कः ।) आदि-

मनुः । ब्रह्मा । इति केचित् ॥ स्वयमुत्पन्न, त्रि । यथा, महाभारते । १२ । ३३४ । ८ ।
"कृते युगे महाराज पुरा स्वायम्भुवेऽन्तरे ।
नरो नारायणश्चैव हरिः कृष्णः स्वयम्भुवः ॥")

**स्वयंभुवा**, स्त्री, (स्वयम्भवतीति । भू + कः ।

टाप् ।) धूम्रपत्रा । इति राजनिर्घण्टः ॥

**स्वयंभूः**, पुं, (स्वयम्भवतीति । भू + क्विप् ।)

ब्रह्मा । इत्यमरः । १ । १ । १६ ॥ जिनचक्र-वर्त्तिविशेषः । तत्पर्य्यायः । रुद्रतनयः २ इति हेमचन्द्रः ॥ कालः । इति शब्दरत्ना-बली ॥ कामदेवः । विष्णुः । शिवः । इति केचित् ॥ माषपर्णी । लिङ्गिनी । इति राजनिर्घण्टः ॥ (स्वयमुत्पन्ने, अपौरषेये च त्रि ॥ यथा मनुः । १ । ३ ।
"त्वमेकोऽह्यस्य सर्व्वस्य विधानस्य स्वयंभुवः ।
अचिन्तस्याप्रमेयस्य कार्य्यतत्त्वार्थवित् प्रभो ॥")

**स्वर**, त् क आक्षेपे । इति कविकल्पद्रुमः ॥

(अदन्त-चुरा०-पर०-सक०-सेट् ।) वकारयुक्तः रेफोपधः । स्वरयत्यतिरुष्टोऽपि न कञ्चन परि-ग्रहम् । इति हलायुधः । पञ्चमस्वरयुक्तः । इति चतुर्भुजः । स्वरयति । इति दुर्गादासः ॥

**स्वर्**, व्य, स्वर्गः । (यथा, रामायणे । २ । ७६ । ८ ।

"त्वयि प्रयाते स्वस्तात रामे च वनमाश्रिते ।

स्वमेकं संवत्सरम् । स्वमेकः
संवत्सरः यव्यो
मासः । इति श्रुतेः । उरणस्य मेषस्य
। इति
तिथ्यादितत्त्वम् ॥

**स्वयं**, [म्] व्य, आत्मना । आपनि इति भाषा
।

इत्यमरः । ३ । ४ । १६ ॥
आत्मनेत्यर्थे स्वयं
तृतीयान्तम् । यथा । स्वयम्भूः ।
इति भरतः ॥
(यथा, रघुः । १ । ७० ।
"तया हीनं विधातर्म्मां कथं पश्यन्न
दूयसे ।
सिक्तं स्वयमिव स्नेहाद्
बन्ध्यमाश्रमपादपम् ॥")

**स्वयंवरा**, स्त्री, (स्वय + वृ + अच् । टाप् ।)

स्वयं वृणोते पतिं या । स्वेच्छया
पत्यन्वेषिणी ।
तत्पर्य्यायः । पतिंवरा २ वर्य्या ३ ।
इत्यमरः ।
२ । ६ । ७ ॥ स्वयंवरे वर्णनायानि
यथा ।
शचीरक्षा १ मञ्चसज्जता २
मण्डपसज्जता ३
राजपुत्राः सन्निधौ
राजसौन्दर्य्यादिवंशचेष्टा-
वर्णनन् ४ । इति कविकल्पलतायां
१ स्तवके २
कुसुमम् ॥

**स्वयंहारिका**, स्त्री, स्त्रीविशेषः । सा च ब्रह्म-

मानससृष्टदुःसहस्य निर्माष्ट्यां
पत्न्यां जाता ।
यथा, --
"दुःसहस्याभवत् भार्य्या
निर्माष्टिर्नाम नामतः ।
जाता कलेस्तु पाप्मायां ऋतौ
चाण्डालदर्शनात् ॥
तयोरपत्यान्यभवन् जगद्व्यापीनि
षोडश ।

इति शब्दरत्नावली, (गुणादायोऽस्याः
शूकशि-
म्बिकाशब्दे ज्ञातव्याः ॥)

**स्वयंदत्तः**, पुं, (स्वयमात्मना दत्तः) द्वादशविध-

पुत्रान्तर्गतपुत्रविशेषः । इति जटाधरः ॥
तल्लक्षणम् यथा । दत्तात्मा तु स्वयंदत्तः ।
इति याज्ञवल्क्यवचनम् ॥ दत्तात्मा तु पुत्रो
मातापितृविहीनस्ताभ्यांमुक्तो वा तवाहं
पुत्रो
भवामीति स्वयंदत्त उपनतः । इति मिता-
क्षरा ॥

**स्वयमुपस्थितः**, त्रि, (स्वयमात्मना उपस्थितः ।)

स्वयमागतः । यथा, --
"यदि त्यजसि मां मूढ कामात् स्वयमुप-
स्थिताम् ।
युवयोश्च विपत्तिश्च भविष्यति न संशयः
॥
कामातुरां यौवनास्थां भार्य्यां
स्वयमुपस्थिताम् ।
न त्यजेद्धर्म्मभीरुश्च श्रुतं मध्यन्दिने पुरा
॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ६२ ।
४० ।
४५ । अध्यायः ॥ (तथा च भागवते । १ ।
१३ । १० ॥
"नन्वप्रियं दुर्विसहं नृणां स्वयमुपस्थितम्
।
नावेदयत् सकरुणो दुःखितान् द्रष्टुमक्षमः
॥")

**स्वयंप्रभः**, पुं, (स्वयं प्रभा यस्य ।) चतुर्व्विंशतिभा-

ष्यर्हदन्तर्गतचतुर्थार्हन् । इति हेमचन्द्रः ॥
(स्वयंप्रकाशे, त्रि । यथा, भागवते । ३ ।
१६ । २७ ॥
"अथ ये मुनयो दृष्ट्वा नयनानन्दभाजनम्
।

विधवा पृथिवी राजंस्त्वया हीना न राजते ॥")
परलोकः । इत्यमरः । १ । १ । ५ । ३ । ४ ।
२५३ ॥
आकाशम् । शोभनम् । इति शब्दरत्नावली ॥
(व्याहृतिविशेषः । यथा, मनुः । २ । ७६ ।
"अकारञ्चाप्युकारञ्च मकारञ्च प्रजापतिः ।
वेदत्रयान्निरदुहद्भूर्भुवःस्वरितीति च ॥")

**स्वरः**, पुं, (स्वर + अच्) उदात्तादित्रयः । इत्य-

मरः । १ । ६ । ४ ॥ उदात्तानुदात्तस्वरितास्त्रयः
स्वरशब्दवाच्याः । स्वरन्ति शब्दायन्ते स्वराः
स्वृ
ऊ शब्दोपतापयोः अन् उच्चैरादीयते उच्चा-
र्य्यते उदात्तः उदाङ्पूर्व्वाद्दाञः कर्म्मणि क्तः ।
तद्विपरीतोऽनुदात्तः । समाहृतः स्वरितः स्वरः
सञ्जातोऽत्रेति इतोऽस्य जाते इति इतः ।
यदाहुः । उच्चैरुच्चारणादुदात्तः । नीचैरनुदात्तः
।
समाहारः स्वरितः । इति । छान्दसत्वात्
नोक्तः । तदुक्तं उदात्तश्चानुदात्तश्च स्वरितश्च
प्रचितस्वरो त्रयः स्वराः । चतुर्थः प्रचितो
नोक्तो यतोऽसौ छान्दसः स्मृतः ॥ इति
भरतः ॥ (यथा, माघे । २ । ९५ ।

| | | |
|---|---|---|
| अष्टौ कुमाराः कन्याश्च तथाष्टावतिभोषणाः ॥<br>नियाजिका वै प्रथमा तथैवान्या विराधिना ।<br>स्वयंहारकरी चैव भ्रामणी ऋतुहारिका ॥<br>स्मृतिबीजहरे चान्य तयोः कन्ये सुदारुणे ।<br>अष्टमी द्वेषणी नाम कन्या चातिभयावहा ॥<br>एतासां कर्म्म वक्ष्यामि दोषप्रशमनञ्च यत् ।<br>धान्यम्खलाद्गृहाद्गोष्ठात्पयः सर्पिस्तयापरा ॥ | | |

“तदोशितारं चेदीनां भवांस्तमवमंस्त मा ।
निहन्त्यरीनेकपदे य उदात्तः स्वरानिव ॥”)
तन्त्रोकण्ठोत्थितनिषादादिसप्तध्वनिः। सुर
इति
भाषा । यथा, --
“निषादर्षभगान्धारषड्जमध्यमधैवताः ।
पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः
॥”
इत्यमरः । १ । ७ । १ ॥
निषादादयः सप्त तन्त्रोसमुत्थाः
कण्ठसमुत्थाश्च
स्वराः स्वरशब्दवाच्याः ।
निषादादिकदम्बादि
यथाक्रममिति स्थितमिति । नारदोऽप्याह ।
“षड्जं रौति मयूरो हि गावो नर्द्दन्ति चर्षभम् ।
अजा विरौति गान्धारं क्रौञ्चो नदति मध्यमम्
।
पुष्पसाधारणे काले कोकिलो रौति पञ्चमम् ।
अश्वश्च धैवतं रौति निषादं रौति कुञ्जरः ॥”
इति ।
अन्योऽप्याह ।
“स स्वरो यः श्रुतिस्थाने स्वनन्
हृदयरञ्लकः ॥”
“षड्जर्षभगान्धारो मध्यमः पञ्चमस्तथा ।
धैवतश्च निषादश्च स्वराः सप्त प्रकीर्त्तिताः ॥
मयूरवृषभश्छागक्रौञ्चकोकिलवाजिनः।
मातङ्गश्च क्रमेणाहुः स्वरानेतान् सुदुर्गमान्
॥”
इति ॥
एते च समदाः पञ्चमं गायन्ती । तथा च
विशाखिनः ।
“अश्वस्तु धैवतं सोऽपि मत्तः पञ्चमसंज्ञकम् ।
निषादन्तु गजो गर्ज्जत्युन्मदोऽसौ सपञ्चम-
मिति ॥”
भरतोऽप्याह ।
“षड्जञ्च पञ्चमञ्चेति मयूरो नदति द्विधा ।
अश्वाद्या धैव तादींश्च प्राहुर्म्मत्ताश्च पञ्चम-
मिति ॥”
निषीदन्ति स्वरा अस्मिन्निति निषादः सदेरा-

“तद्वदेवोत्थितो वायुरुरःकण्ठसमाहृतः ।
नाभिप्राप्तो महानादो मध्यमस्तेन स स्मृतः
॥”
इति ।
धीमद्भिर्गीयते इति धैवतः ढघेकादिति ष्णः
मनीषादित्वात् मस्य वः । धीयतेऽयमिति
विकारसंघेति ष्णो वा । स्वरान् धयतीति वा
।
धेट पाने नाम्नीति धैवतः ।
“अभिसन्धयते यस्मात् स्वरांस्तेनैष धैवतः
।
स तु तावत्प्रधानत्वात् ललाटे व्यवतिष्ठते
॥”
इति पञ्चानां स्वराणां पूरणः पञ्चम् । नो
सङ्ख्यादेर्म्मडिति मट् ।
वायुः समुद्गतो नाभेरूरौ हृत्कण्ठमूद्ध्‌र्ध्वसु ।
विचरन् पञ्चमस्थानप्राप्त्या पञ्चम उच्यते ॥”
इति ।
स्वरन्ति शब्दायन्ते स्वराः स्वृ ऊ शब्दोप-
तापयोः पचादित्वादन् । इति भरतः ॥ * ॥
अपि च ।
“स स्वरो यः श्रुतिस्थाने स्वरन् हृदयरञ्जकः
॥
षड्जऋषभगान्धारा मध्यमः पञ्चमस्तथा ।
धैवतश्च निषादश्च स्वराः सप्त प्रकीर्त्तिताः
॥
मयूरवृषभच्छागीक्रोष्टुकोकिलवाजिनः ।
मतङ्गाश्च क्रमेणाहुः स्वरानेतान् सुदुर्गमान् ॥
ऋषभं चातको वक्ति धैवतञ्चापि दर्द्दरः ।”
इति केचित् ॥
“वायुः संमूर्च्छितो नाभेर्नाड्याश्च हृदयस्य
च ।
पार्श्वयोर्म्मस्तकस्यापि षण्णां षड्जः
प्रजायते ।
नाभिभूलाद्यदा वर्ण उत्थितः कुरुते ध्वनिम्
।
वृषभस्येव निर्याति हेलया ऋषभः स्मृतः ॥
नाभेः समुद्गतो वायुर्गन्धं श्रोत्रे च चालयन् ।
सशब्दस्तेन निर्याति गान्धारस्तेन कथ्यते ॥

“कंसारेर्व्वंशिकावाद्ये स्वराः सप्त
चकाशिरे ।”
इति शुभङ्करकृतसङ्गीतदामोदरः ॥”
* ॥ * ॥
अकारादिवर्णाः । इति मेदिनी ॥
तस्य नामा-
न्तरं अच् २ । इति वोपदेवः ॥ मात्रा
३ ।
इति स्वरोदयः ॥ ते च
ह्रस्वदीर्घप्लुता भवन्ति
यथा, --
“एकमात्रो भवेत् ह्रस्वो द्विमात्रो दीर्घ
उच्यते ।
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं
चार्द्धमात्रकम् ॥”
इति मुग्धबोधटीकायां दुर्गादासः ॥
स्वरवर्णा यथा । अ आ इ ई उ ऊ ऋ
ॠ
ऌ ॡ ए ऐ ओ औ अं अः । एतेषां
उत्पत्ति-
स्थानानि यथा । अत्रयं ए-ह-क-ख-
ग-घ-ङाः
कण्ठ्याः । इत्रयं च-छ-ज-झ-ञ-शा
ए-ऐ
यास्तालव्याः । ऋत्रयं ट-ठ-ड-ढ-ण-
र षा
मूर्द्धन्याः । ऌत्रयं त-थ-द-ध-न-ल-
सा वो
दन्त्याः । उत्रयं प-फ-ब-भ-म-वा
ओ-औ
ओष्ठ्याः । इति मुग्धबोधव्याकरणम्
॥ ए-ह-
क-ख-ग-घ-ङा इत्येकपदोक्त्या एषां
उत्पत्ति-
स्थानं कण्ठमुक्त्वा पश्चात् ए ऐ
इत्युभयं तालव्य-
कार्य्यार्थंतालव्यमध्येऽपि ए-ऐ-या
इति भिन्नपदे

धारे घञ् गीक इति षत्वम् । तथा च ।
“निषीदन्ति स्वरा अस्मिन्निषादस्तेन हेतुना ।
अशेषसन्धिविषयं स हि व्याप्यावतिष्ठते ॥
ऋषति ऋतुं ऋषभः ऋषी श गतौ नाम्नीति
कभः ।
“वायुः समुद्गतो नामः कण्ठशीर्षसमुद्गतः ।
नदत्यृषभवद्यस्मात्तेनैष ऋषभः स्मृतः ॥”
इति ।
गन्धानां समूहो गान्धं ष्णः स्वरान्तस्य गान्धं
इयर्त्ति गान्धारः ऋर्लि गत्यां ढात् षणिति
षण् ।
“वायुः समुद्गतो नाभेः कण्ठशीर्षसमाहतः ।
नानागन्धवहः पुण्यो गान्धारस्तेन हेतुना ॥”
इति ।
नान्धारोऽभिजनोऽस्येति गान्धार इत्यन्ये ।
षड्भ्यो जायते षड्जः हनजनादिति डः ।
“नासां कण्ठमुरस्तालु जिह्वां दन्तांश्च संश्रितः
।
षड्भ्यः संजायते यस्मात्तस्मात् षड्ज इति
स्मृतः ॥” इति ।
मध्ये नाभिदेशे भवो मध्यमः । तत्राद्यचिर-
दक्षिणेत्यादिना मः ।

मध्यमो मध्यमस्थानात् शरीरस्योपजायते ।
नाभिमूलाच्च गम्भीरः किञ्चित्तारः स्वभावतः
॥
प्राणोऽपानः समानश्च उदानो व्यान एव च ।
एतेषां समवायेन जायते पञ्चमः स्वरः ॥
गत्वा नाभेरधोभागं वस्ति प्राप्योर्द्ध्वगः पुनः
।
धावन्निव च यो याति कण्ठदेशं स धैवतः ॥
षड्जादयः षडेतेऽत्र स्वराः सर्व्वे मनोहराः ।
निषीदन्ति यतो लोके निषादस्तेन कथ्यते ॥
* ॥
चतस्रः पञ्चमे षडजे मध्यमे श्रतयो मताः ।
ऋषभे धैवते तिस्रो द्वे गान्धारनिषादके ॥” *
॥
संपूर्णस्वराः । ष ऋ ग म प ध नि । षाडवाः
निषादोज्झिताः । ष ऋ ग म प ध । ओडव-
स्वराः ऋ-प-वर्ज्जिताः । ष ग म ध नि ।
संपूर्णरागाः सप्तभिः स्वरैर्यथा
नाटवसन्तादयः ।
षाडवरागाः षड्भिः स्वरैर्यथा मल्लारादयः ।
अधुना स्वरप्रस्तारः ।
“क्रमेणैव स्वराः स्थाप्याः पूर्ब्बपूर्ब्बपरादधः
।
मूलक्रमः क्रमात् पृष्ठे पुरस्थपरिवर्त्तिनः ॥
स चेदुपरि तत्पूर्ब्ब इत्थं प्रस्तारणक्रमः ॥” *
॥
अथ स्वरप्रस्तारे
पिङ्गलवन्नष्टोद्दिष्टमेरुपताका-
सूचीसप्तसागरप्रभृतयः सन्ति ग्रन्थविस्तार-
भयान्नोक्ताः ।

पठितवान् । ओ औ
इत्युभयमोष्ठकार्य्यार्थं-
मोष्ठ्यमध्येऽपि ओ औ ओष्ठ्या
इति भिन्नपदे
पठितवान् । तालव्यकार्य्यञ्च
इवर्णस्य समत्वात्
गुण एकारः वृद्धिरैकारः । उकारस्य
गुण
ओकारः वृद्धिरौकारः । ननु ए ऐ ओ
औ
चतुर्णां स्वभावात् कण्ठजातानामपि
ताल-
व्यौष्ठ्यकार्य्यकारित्वं कथमिति चेन्न
यतः कुन्त्या
प्रसूतस्य कर्णस्य राधाप्रतिपालनात्
राधेयत्वं
संगच्छते । इति तट्टीकायां दुर्गादासः
॥ * ॥
अन्यच्च ।
“मातृकायां स्वराः प्रोक्ताः स्वराः
षोडश-
सङ्ख्यया ।
तेषां द्वावन्तिमौ त्याज्यौ चत्वारश्च
नपुंसकाः ॥
शेषा दश स्वरास्तेषु स्थादेकैको द्विके
द्विके ।
ज्ञेया अतोऽस्वराद्याश्च ह्रस्वाः पञ्च
स्वरोदये ॥
स्वरा हि मातृकोच्चारा मात्राव्याप्तं
जगत्त्रयम् ।
तस्मात् स्वरोद्भवं सर्व्वं त्रैलोक्यं
सचराचरम् ॥
अकारादिस्वराः पञ्च ब्रह्माद्याः
पञ्चदेवताः ।
निवृत्त्याद्याः कलाः पञ्च इच्छाद्यं
शक्तिपञ्चकम् ॥
मयाद्याश्चक्रभेदाश्च धराद्यं
भूतपञ्चकम् ।
गन्धाद्या विषयास्ते च कामबाणा
इतीरिताः ।

| | | |
|---|---|---|
| | | पिण्डं पदं तथा रूपं रूपातीतं<br>निरञ्जनम् ।<br>स्वरभेदे स्थितं ज्ञानं ज्ञायते गुरुतः<br>सदा ॥<br>अकारादिस्वराः पञ्च तेषामष्टौ<br>भिदास्त्वमूः ।<br>मात्रावर्णो ग्रहो जीवो राशिर्भं<br>पिण्डयोगकौ<br>प्रसुप्तो भाषते येन येनागच्छति<br>शब्दितः ।<br>तत्र नाम्न्याद्यवर्णे या मात्रा<br>मात्रास्वरः सहि ॥”<br>इति मात्रास्वरचक्रम् ॥ *<br>“कादिहान्तान् लिखेद्वर्णान् स्वराधो<br>ङ ञ-<br>णोज्झितान् ।<br>तिर्य्यक् पङ्क्तिकमेणैव पञ्चत्रिंशत्<br>प्रकोष्ठके ॥<br>नरनामादिमो वर्णो यस्मात् स्वरादधः<br>स्थितः । |

स स्वरस्तस्य वर्णस्य वर्णस्वर
इहोच्यते ॥
स प्रोक्ता ङ-ञ-णा वर्णा नामादौ सन्ति
ते न
हि ।
वेद्भवन्ति तदा ज्ञेया ग-ज डास्ते
यथाक्रमम् ॥
यदि नाम्नि भवेद्वर्णः संयुक्ताक्षरलक्षणः
।
ग्राह्यस्तस्यादिमो वर्ण इत्युक्तं
ब्रह्मयामले ॥”
इति वर्णस्वरचक्रम् ॥ * ॥
अस्वरे मेषसिंहालिः
कन्यायुग्मककर्क्कटाः ।
उस्वरे च धनुर्म्मीनौ एस्वरे च तुलावृषौ
॥
ओस्वरे मृगकुम्भौ च
राशिसम्भूग्रहस्वराः ।
स्वराधः स्थापयेत् खेटं राशेर्यो यस्य
नायकः ॥
मेषवृश्चिकयोर्भौमः शुक्रा
वृषतुलाभृतोः ।
बुधः कन्याभियुनयोः कर्क्कटस्य च
चन्द्रमाः ॥
स्यान्मीनधनुषोर्जीवः
शनिर्मकरकुम्भयोः ।
सिंहास्याधिपतिः सूर्य्यः कथितो
गणकोत्तमैः ॥”
इति ग्रहस्वरचक्रम् ॥ * ॥
“षोडशाक्षरोऽवर्गः स्यात् कादिवर्गास्तु
पञ्चकाः ।
चतुरर्णौ य{??} वर्गौ सङ्ख्या वर्गेषु
कीर्त्तिताः ॥
नाम्नो वर्णाः स्वरा ग्राह्या वर्गाणां
वर्णसंख्यया ।
पिण्डिताः पञ्चभिर्भक्ताः शेषं जीवस्वरं
विदुः ॥”
इति जीवस्वरचक्रम् ॥ * ॥

राजाभिषेचनं दीक्षा कर्त्तव्यं राशिके स्वरे ॥ * ॥
शान्तिकं पौष्टिकञ्चैव प्रवेशो वीजवापनम् ।
स्त्रीविवाहस्तथा यात्रा कर्त्तव्या भस्वरोदये ॥ *
॥
शत्रूणां देशभङ्गश्च कौटयुद्धञ्च वेष्टनम् ।
सेनाध्यक्षस्तथा मन्त्रो कर्त्तव्यः पिण्डकोदये ॥
* ॥
योगेन साधयेद् योगं देहस्थं ज्ञानसम्भवम् ।
आणवं शाम्भवञ्चैव शाक्तेयञ्च तृतीयकम् ॥ * ॥
तिथिवारौ च नक्षत्रं पृथक् पृथक् प्रभाषि-
तम् ।
यत् तदेकत्र सन्मिल्य कुर्य्याद्वर्णस्वरोदये ।
यस्य नामादिको वर्णस्तिथिवारर्क्षजं मृतम् ।
तद्दिनं वर्जयेत्तस्य हानिमृत्युकरं यतः ॥
अनेन स्वरयोगेन शत्रूणां मारणादिकम् ।
मन्त्रयन्त्रक्रियां मोहं साधयेत्तद्दिने बुधः ॥”
इत्यादि नरपतिजयचर्य्यास्वरोदयधृतब्रह्मयाम
लम् ॥ * ॥ नासावायुः । इति मेदिनी ॥ तत्र
अजपाजप्रमाणं यथा, --
“हंस हंसेति यन्मन्त्रं जीवो जपति सर्व्वदा ।
शतैः षड्भिश्च युक्तानि सहस्राण्येकविंशतिः ॥
अजपा नाम गायत्री योगिनां मोक्षसाधनम् ।
अस्याः सङ्कल्पमात्रेण सर्व्वपापैः प्रमुच्यते ॥”
इति महाभारते आश्वमेधिकपर्व्वणि उत्तर-
गीता ॥ * ॥ अपि च ।
“इडा च पिङ्गला चैव नासिकाद्वारगामिनी ।
आमूलाद्ब्रह्मद्वारान्तं सुषुम्ना मध्यगामिनी ॥
वहत्यूद्र्ध्वमुखेनैव प्राणवायुश्च सर्व्वदा ।
पानं करोत्यपानश्च अधोवक्त्रेण चैव हि ॥
शक्तिरूपः स्थितश्चन्द्रो वामनासाप्रवाहकः ।
शिवरूपधरः सूर्य्यो दक्षनासापुटे तथा ॥
हकारे निःसरेद्वायुः सकारश्च प्रवेशने ।
अजपानामगायत्रीं जीवो जपत्यहर्निशम् ॥ * ॥
मुक्तिमोपानेऽप्युक्तम् ।
षट्शतानि दिवारात्रौ सहस्राण्येकविंशतिः ।
एतत्सङ्ख्यं महामन्त्र जीवो जपति सर्व्वदा ॥
ब्राह्म्ये मुहूर्त्ते योगीन्द्रो जपमेवं समर्पयेत् ।
समर्पणक्रमश्चैव उच्यते गुरुतस्ततः ॥
मूलाधारे गणेशाय षट्शतञ्च समर्पयेत् ।

लाभदश्चिलि चिलीति निनादः
शूकि शूलि निनदोऽपि तथैव ।
कुचि कुचि निनदोऽपि जलार्थे
व्याहतः कूचि कूचि स्वरयुक्तैः ॥
कीरु कीरु इति यो मधुरोऽसौ
कामतस्तु निनदाः स्खलिताख्याः ।
स्याद्भयाय नियमेन च ची चि-
र्निस्वनो ह्यसुकुनाद इहार्थः ॥
कष्टदश्चिरि चिरीति तिराव-
श्चीकुचीकुरिति चान्यविरावी ।
एवमीदृशफला दश नादाः
प्रस्फुटा निगदिता भगवत्या ॥
प्रत्येकमाख्यातफलं नराणां
यस्मिन् दशानां शकुनस्वराणाम् ।
जानात्यवश्यं पुरुषो विशेषं
प्रयोजनं भावि स वेत्त्यशेषम् ॥ * ॥
वामो निनादः फलदः प्रवासे
स्याद्दक्षिणेऽनर्थफलाप्तिहेतुः ।
पृष्ठस्थितानां फलकृच्च पृष्ठे
निषेधकारी पुनरग्रभागे ॥
युद्धप्रवेशेऽथ गृहप्रवेशे
श्रेयः प्रदद्यान्निनदोऽपसव्यः ।
वामः पुनः पाण्डवयुद्धवत्या
भवत्यभीष्टप्रतिकूलवर्त्ती ॥ * ॥
पार्थिवश्चिलिचिलिस्वर उक्तः
शूलि शूलिरिति यः स तथैव ।
कूचि कूचि कुचि कुचीति च शब्दं
द्वाविमौ निगदितौ पुनराप्यौ ॥
कीरु कौरुरिति तैजससंज्ञ-
स्तैजसाश्च निनदाः स्खलिताख्याः ।
मारुतावपि चिलिस्वनवीचि-
निस्वनौ निगदितौ मुनिमुख्यैः ॥
अम्बरश्चिरि चिरीति निनाद-
श्चीकु चोकुरिति तादृश एव ।
पञ्च चैव निनदा दश नादा
भूतपञ्चकनिवासभवेन ॥
क्रमादमी पार्थिवनादपूर्ब्बाः
पञ्चापि शब्दाः शकुनैकदेव्याः ।
भवन्ति चैतन्नियतं भवन्ति

"मेषवृषावकारे च मिथुनाद्याः
षडंशकाः ।
मिथुनांशास्त्रयश्चैव इकारे
सिंहकर्क्कटौ ।
कन्या तुला उकारे च वृश्चिकस्य
त्रयोऽंशकाः ।
एकारे वृष्टिकस्यान्त्याः कार्म्मुकः
षड्मृगा-
दिमाः ॥
अंशास्त्रयो मृगास्यान्त्याः कुम्भमीनौ
तथा
स्वरे ।
एवं राशिस्वरः प्रोक्तो नवांशप्रक्रमोदयः
॥"
इति राशिस्वरचक्रम् ॥ * ॥
"अकारे सप्त ऋक्षाणि रेवत्यादिक्रमेण
च ।
पञ्च पञ्च इकारादावेवमृक्षस्वरोदयः ॥"
इति नक्षत्रस्वरचक्रम् ॥ * ॥
"मात्रा वर्णस्वरात् सङ्क्या सङ्ख्या
जीवस्वरा-
त्तथा ।
पिण्डीकृते स्वरैः शेषः पिण्डस्वर
इहोच्यते ॥"
इति पिण्डस्वरचक्रम् ॥ * ॥
"मात्रादिवर्णभेदेन स्वरानुत्पाद्य नामतः
।
योगे शरहृते तत्र शेषो दोगस्वरो मतः
॥"
इति योगस्वरचक्रम् ॥
"प्रोक्ता नैसर्गिकाश्चाष्टौ मात्राद्या
नामजाः
स्वरा ॥" * ॥
मात्रादिस्वरचक्रबलेन कर्त्तव्यकर्म्माणि
यथा, --
"साधनं मन्त्रयन्त्रस्य यन्त्रयोगञ्च
सर्व्वदा ।
अधोमुखानि कर्म्माणि मात्रास्वरबले
कुरु ॥ * ॥
वर्णस्वरबले सर्व्वं कर्त्तव्यञ्च शुभाशुभम्
।

तत्रैवः ब्रह्मणे नित्यं षट्सहस्रं निवेदयेत् ॥
स्वाधिष्ठाने च हरये षट्सहस्रं निवेदयेत् ।
षट्सहस्रं मणिपूरे हराय च समर्पयेत् ॥
जीवात्मने सहस्रञ्च तत्रैव परिकल्पयेत् ।
परमात्मने सहस्रन्तु अनाहते निवेदयेत् ॥
सहस्रन्तु परमशिवे सहस्रारे समर्पयेत् ।
एवं समर्पयेद्यस्तु पापैः पुण्यैर्न लिप्यते ॥"
इति श्रोपूर्णानन्दतिरचितश्रीतत्त्वचिन्तामणौ
तत्त्वसारपरिच्छेदे षट्चक्रकथनम् ॥ * ॥
अन्यत्
स्वरोदयशब्दे द्रष्टव्यम् ॥ * ॥ * ॥
अथ पक्षिस्वरज्ञानम् ।
"पोतकीरुतविचारमिदानीं
कूर्म्महे यमधिगम्य मनुष्यः ।
भाविकर्म्मफलपाकपरीक्षा-
स्ततक्षमो भवति योगिसदृक्षः ॥

फलानि पूर्णान्यचिरेण पुंसाम् ॥
क्रमेण पृथ्वीजलपावकानां
भवन्ति शब्दा यदि कृष्णिकायाः ।
मनोरथेभ्योऽभ्यधिकानि तूर्णं
तदा फलानि ध्रुवमुद्वहन्ति ॥
अनन्तरं पार्थिवनादतश्चेद्-
वह्निस्बरस्तत्फलमक्षतं स्यात् ।
वायव्यशब्दौ यदि नाभसौ वा
भूत्वा फलं नश्यति तत् समस्तम् ॥
शान्तौ निनादौ पृथिवीजलाख्यौ
दीप्तौ समीराम्बरनामधेयौ ।
तेजःप्रधानो विजयावलम्बी
भवेत् समं येन फलेन तादृक्

| | | |
|---|---|---|
| सिद्धिदः सर्व्वकार्य्येषु युद्धकाले विशेषतः ॥ * ॥<br>मारणं मोहनं स्तम्भं विद्वेषोच्चाटने वशम् ।<br>विवादं विग्रहं वातं कुर्य्याद्ग्रहस्वरोदये ॥ * ॥<br>यानपानादिकं सर्व्वं वस्त्रालङ्कारभूषणम् ।<br>विद्यारम्भांविवाहञ्च कुर्य्यात् जीवस्वरोदये ॥ * ॥<br>प्रासादारामहर्म्म्याणि देवतास्थापनानि च । | | |

शुभेषु कार्य्येष्वशुभाय शान्तौ
दीप्तौ भयादौ भयनाशनाय ।
विपर्य्यये द्वावपि न प्रशस्ता-
वस्तित्वना स्तित्वफलौ यतस्तौ ॥”
इति वसन्तराजशाकुने स्वरप्रकरणम् ॥

**स्वरपत्तनं**, क्ली, (स्वराणां षड्जादीनां पत्तन-
माश्रयस्थानम् ।) सामवेदः । इति त्रिकाण्ड-
शेषः ॥

**स्वरभङ्गः**, पुं, (स्वरस्य भङ्गो यस्मात् ।) गल-
रोगविशेषः । अस्य विवरणं स्वरभेदशब्दे
द्रष्टव्यम् ॥

**स्वरभङ्गी**, [न्] पुं, (स्वरस्य भङ्गोऽस्यास्तीति ।
इनिः ।) पक्षिविशेषः । यथा, --
“स्वरभङ्गी नवो दृङ्क्षुविरुट्शकुनभेदकाः ॥”
इति शब्दचन्द्रिका ॥

**स्वरभेदः**, पुं, (स्वरस्य भेदो यस्मात् ।) स्वरभङ्ग-
रोगः । यथा । अथ स्वरभेदाधिकारः । तत्र
स्वरभेदस्य निदानसम्प्राप्तिपूर्ब्बकं
लक्षणमाह ।
“अत्युच्चभाषणविषाध्ययनाभिघातै
सन्दूषणैः प्रकुपिताः पवनादयस्तु ।
स्रोतःसु ते स्वरवहेषु नताः प्रतिष्ठां
हन्युः स्वरं भवति चापि हि षड्विधः सः ॥
अध्ययनमुच्चैर्व्वेदादिपाठः । अभिघातः
कण्ठादि-
देशे लगुडादिभिः ।
एतैरत्युच्चभाषणादिभिः-
श्चतुर्भिः संदूषणैरन्यैरपि । निजैर्दुष्टहेतुभिः ।
स्रोतःसु सुश्रुतोक्तेषु चतुर्षु । प्रतिष्ठाम्
स्थितिम् ।
हन्युः स्वरमिति लक्षणम् । स्वरभेदः
षड्विधः ।
वातपित्तकफसन्निपातक्षयमेदोभवभेदैः ॥ *
॥
तत्र वातिकस्वरभेदिनो लक्षणमाह ।
“वातेन कृष्णनयनाननमूत्रवर्च्चा
भिन्नं शनैर्वदति गर्द्दभवत् स्वरञ्च ।” * ।

“क्षीणस्य वृद्धस्य कृशस्य चापि
चिरोत्थितो यश्च सहोपजातः ।
मेदस्विनः सर्व्वसमुद्भवश्च
स्वरामयो यो न स सिद्धिमेति ॥”
क्षीणस्य क्षयरोगिणः । कृशस्य अपुष्टस्य
॥ * ॥
अथ स्वरभेदस्य चिकित्सा ।
“वातादिजनितश्वासकासघ्नाये
प्रकीर्त्तिताः ।
योगास्तानत्र युञ्जीत यथादोषं
चिकित्सकः ॥
वाते सलवणं तैलं पित्ते सर्पिः
समाक्षिकम् ।
कफे सक्षारकटुकक्षौद्रः कवल इष्यते ॥
गले तालुनि जिह्वायां दन्तमूलेषु
चाश्रितः ।
तेन निष्कृष्यते श्लेष्मा स्वरश्चाशु
प्रसीदति ॥
आद्ये कोष्णं जलं पेयं भुक्त्वा
घृतगुडौदनम् ।
क्षीरानुपानं पित्तोत्थे पिबेत्
सर्पिरतन्द्रितः ।
पिप्पलीं पिप्पलीमूलं मरिचं
विश्वभेषजम् ।
पिबेन्मूत्रेण मतिमान् कफजे स्वरसंक्षये
॥
निदिग्धिका तुला ग्राह्या तदर्द्धं
ग्रन्थिकस्य तु ।
तदर्द्धं चित्रकस्यापि दशमूलञ्च तत्समम्
॥
जलद्रोणद्वये क्वाथ्यं गृह्णीयादाढकं
ततः ।
पूते पिबेत्तदर्द्धन्तु पुराणस्य गुडस्य च ॥
सर्व्वमेकत्र कृत्वा तु लेहवत् साधु
साधयेत् ।
अष्टौपलानि पिप्पल्यास्त्रिजातकपलं
तथा ॥
मरिचस्य पलं चैकं सर्व्वमेकत्र चूर्णितम्
।

द्राक्षा पथ्या मातुलुङ्गं लशुनं लवणार्द्रकम् ।
ताम्बूलं मरिचं सर्पिः पथ्यानि स्वरभेदिनाम्
॥”
अपथ्यानि यथा, --
“आमं कपित्थं वकुलं शालूकं जम्बवानि च
।
तिन्दुकानि कषायाणि वमिं स्वप्नं
प्रजल्पनम् ॥
अनुपानञ्च यत्नेन स्वरभेदी विवर्ज्जयेत् ॥”
इति वैद्यकपथ्यापथ्यविधिः ॥)

**स्वरमण्डलिका**, स्त्री, (स्वराणां मण्डलमस्त्यत्रेति ।
स्वरमण्डल + ठन् ।) वीणाविशेषः । इति
शब्दरत्नावली ॥ क्वचित् पुस्तके
सुरखण्डलिका
इति पाठः ॥

**स्वरलासिका**, स्त्री, (स्वरैर्लसतीति । लस + ण्वल् ।
टापि अत इत्वम् ।) वंशी इति
शब्दरत्नावली ॥

**स्वरसः**, पुं, (स्वस्य रसः । स्व आत्मीयो रसो वा ।)
शिलापिष्टकल्कः । यथा, --
“स्वो रसः स्वरसः प्रोक्तः कल्को दृशदि
पेषितः ॥”
इति शब्दचन्द्रिका ॥ * ॥
कषायविशेषः । यथा, --
“सद्यः
क्षुण्णादार्द्रद्रव्याद्वस्त्रयन्त्रादिपीडनात्।
यो रसस्त्वभिनिर्यातिस्वरसः सः
प्रकीर्त्तितः ॥”
इति वैद्यकम् ॥
अन्यच्च ।
“पिष्टः कल्को विनीयश्च स्वरसः पीडितो
रसः ।
क्वाथः कषायो निर्यूहो निर्यासो
वेष्ठकस्तथा ॥”
इति रत्नमाला ॥
(“यन्त्रप्रपीडनाद्द्रव्याद्रसःस्वास उच्यते
॥”

पित्तेनाह ।
“पित्तेन पीतनयनाननमूत्रवर्च्चा
ब्रूयाद्गलेन स च दाहसमन्वितेन ॥”
नलदाहोऽत्र वचनसमय एव बोद्धव्यः ॥ * ॥
कफेनाह ।
“ब्रूयात् कफेन सततं कफरुद्धकण्ठः ।
खल्पं शनैर्व्वदति चापि दिवाविशेषात् ॥”
दिवा सूर्य्यरश्मिभिः कफस्याल्पीभावात् ॥ * ॥
सन्निपातेनाहः
सर्व्वात्मके भवति सर्व्वविकारसम्प-
त्तच्चाप्यसाध्यमृषयः स्वरभेदमाहुः ॥” * ॥
अयजमाह ।
“धूप्येत बाक्क्षयकृते क्षयमाप्नुयाच्च
स्वादेषु चापि हतवाक् परिवर्ज्जनीयः ॥”
न्नाक् धूप्येत सधूमेव निःसरति
क्षयञ्चाप्नुयात्
वागेव ॥ * ॥ मेदोभवमाह ।
“अन्तर्गलं स्वरमलक्ष्यपदं चिरेण
मेदोऽन्वयाद्वदति दिग्धगलस्तृषार्त्तः ॥”
अन्तर्गलं गलमध्ये एव स्वरं वदति ।
दिग्धगलः
मेदसा श्लेष्मणाबलिप्तगलः । तृषार्त्तः
मेदसोष्म-
मार्गावरोधात् ॥ * ॥ असाध्यमाह ।

मधुनः कुडवं दत्त्वा तदश्नीयाद्यथानलम् ॥
निदिग्धिकावलेहोऽयं
भिषग्भिर्मुनिभिर्म्मतः ।
स्वरभेदहरो मुख्यः प्रतिश्याय हरस्तथा ॥
काशश्वामाग्निमान्द्यादीन्
गुल्ममेहगलामयान् ।
आनाहं मूत्रकृच्छ्राणि
हन्याद्ग्रन्थ्यर्व्वुदानि
च ॥”
इति निदिग्धिकावलेहः ॥ * ॥
“मृगनाभिः
सुसूक्ष्मैलालवङ्गकुसुमान्वितैः ।
त्वक्क्षीरी चेति लेहोऽयं
मर्पिर्मधुसमायुतः ॥
ब्राह्मी वचाभया वासा पिप्पली
मधुसंयुता ।
अस्य प्रयोगात् सप्ताहात् किन्नरैः सह
गायति ॥”
इति स्वरभेदाधिकारः ॥ इति
भावप्रकाशः ॥ * ॥
अन्यच्च ।
“विभीतकस्य वै चूर्णं पिप्पलीमैन्धवस्य
च ।
पीतं सकाञ्जिकं हन्ति स्वरभेदं महेश्वर ॥”
इति गारुडे । १९४ । २८ ॥
(तथास्य चिकित्सान्तरं यथा, --
“भृङ्गराजामृतावल्ली
वासकदशमूलकासमर्द्द
रसैः ।
सर्पिः सपिप्पलीकं सिद्धं
स्वरभेदकासजिन्म-
धुना ॥”
इति भृङ्गराजाद्यं घृतम् ॥
इति वैद्यकचक्रपाणिसंग्रहे
स्वरभेदाधिकारे ॥
तथात्र पथ्यापथ्यनियमो यथा, --
“स्वेदो वस्तिर्धूमपानं विरेकः
कवलग्रहः ।

इति चरके सूत्रस्थाने चतुर्थेऽध्याये ॥
“शुष्कद्रव्यमुपादाय स्वरसानामसम्भवे ।
वारिण्यष्टगुणे साध्यं ग्राह्यं पादावशेषितम् ॥”
इति वैद्यकचक्रपाणिसंग्रहे स्वरभेदाधिकारे ॥)

**स्वरा**, स्त्री, ब्रह्मणो ज्येष्ठपत्नी । गायत्रीसपत्नी ।

यथा, --
“चाक्षुषस्यान्तरे पूर्ब्बं मनोर्देवः पितामहः ।
सह्याद्रिशिखरे रम्ये यजनायोद्यतोऽभवत् ॥
स कृत्वा यज्ञसम्भारान् सर्व्वदेवगणैर्व्वृतः ।
युक्तो हरिहराभ्यां हि तद्गिरेः शिखरं ययौ ॥
भृग्वादयो मुनिगणा मुहूर्त्ते ब्रह्मदैवते ।
तस्य दीक्षाविधानाय समाजं चक्रुरादृताः ॥
अथ ज्येष्ठां स्वरां पत्नीमाह्वयाञ्चक्रुरीश्वराः ।
सा शनैराययौ तावत् भृगुर्व्विष्णुमुवाच ह ॥ * ॥
भृगुरुवाच ।
विष्णो स्वरा त्वयाहूता साप्यायाति नहि त्वरम् ।
मुहूर्त्तातिक्रमे चैव कार्य्यो दीक्षाविधिः कथम् ॥
विष्णुरुवाच ।
नायाति चेत् स्वरा शीघ्रं गायत्र्यत्र विधी-
यताम् ।
एषापि न भेवेदस्य भार्य्या किं पुण्यकर्म्मणि ॥
नारद उवाचः
एवमेव हि रुद्रोऽपि विष्णुवाक्यममन्यत ।
तच्छ्रुत्वा स भृगुर्व्वाक्यं गायत्रीं ब्रह्मणस्तदा ॥

|  |  |  |
| --- | --- | --- |
|  | नस्यं भाले सिरावेधो यवा लोहितशालयः ॥ हंसाटवीताम्रचूडकेकिमांसरसाः सुरा । गोकण्टकः काकमाची जीवन्ती वालमूलकम् । |  |

निवेश्य दक्षिणे भागे दीक्षाविधिमथाकरोत् ॥
यावद्दीक्षाविधिं तस्य विधेश्चक्रुर्मुनीश्वराः ।
तावदभ्याययौ तत्र स्वरा यज्ञस्थले नृप ॥
ततस्तां दीक्षितां दृष्ट्वा गायत्त्रीं ब्रह्मणा सह ।
सपत्नीर्षापरा क्रोधात् स्वधा वचनमब्रवीत् ॥
स्वरोवाच ।
अपूज्या यत्र पूज्यन्ते पूज्यानाञ्च व्यतिक्रमः ।
त्रीणि तत्र भविष्यन्ति दुर्भिक्षं मरणं भयम् ॥
मदासने कनिष्ठेयं भवद्भिः सन्निवेशिता ।
तस्मात् सर्व्वे जडीभूता नदीरूपा हि निश्चितम् ॥
इयञ्च दक्षिणे भागे ह्युपविष्टा मदासने ।
तस्माल्लोके सदादृश्या तनुरूपास्तु निम्नगा ॥
नारद उवाच ।
अतस्तत् शापमाकर्ण्य गायत्री कम्पिताधरा ।
समुत्थायाशपद्देवैर्व्वार्य्यमाणापि तां स्वराम् ॥
गायत्र्युवाच ।
तव भर्त्ता यथा ब्रह्मा ममाप्येष तथा खलु ।
वृथा शपसि यस्मान्मां भव त्वमपि निम्नगा ॥”
इति पाद्मोत्तरखण्डे कार्त्तिकमाहात्म्ये १५६ अध्यायः ॥

**स्वरांशः**, पुं, (स्वरस्य अंशः ।) संगीते स्वरस्यार्द्धं पादं वा । इति केचित् ॥

**स्वराट्**, [ज्] पुं, (स्वेन राजते इति । राज + “सत्सूद्विषेति ।” ३ । २ । ६१ । इति क्विप् ।) वेदस्य छन्दोविशेषः । यस्य प्रत्येकद्विपादे ११ । इति उः । स च नित् ।) वज्रम् । इत्यमरः । १ । १ । ५० ॥ यूपखण्डम् । (यथा, ऋग्वेदे । ७ । ३५ । ७ । “शं नः स्वरूणां मितयो भवन्तु ॥”) यज्ञः । शरः । इति मेदिनी ॥ सूर्य्यरश्मिः । वृश्चिकभेदः । इति केचित् ॥

**स्वरुचिः**, त्रि, (स्वस्य रुचिर्यस्य ।) स्वतन्त्रः । इति हेमचन्द्रः ॥ (स्वस्य रुचिः ।) स्वेच्छायां, स्त्री । यथा, --
“स्वरुच्या क्रियमाणे तु यत्रावश्यं क्रिया क्वचित् ।
चोद्यते नियमः सोऽत्र ऋतावभिगमो यथा ॥”
इति प्रायश्चित्ततत्त्वम् ॥

**स्वरूपं**, क्ली, (स्वस्य रूपं यस्मात् ।) स्वभावः । इत्यमरः । १ । ७ । ३८ ॥ निजरूपञ्च ॥ (यथा, महाभारते । ३ । ६६ । १३ ।
“स दृष्ट्वा विस्मितस्तस्थावात्मानं विकृतं नलः ।
स्वरूपधारिणं नागं ददर्श स महीपतिः ॥”)

**स्वरूपः**, त्रि, (स्वेनैव रूपं यस्य ।) पण्डितः । मनोज्ञः । तयोः पर्य्यायः । प्राप्तरूपः २ अभिरूपः ३ । इत्यमरः । ३ । ३ । १३१ ॥

**स्वरेणुः**, स्त्रीं, सूर्य्यपत्नीविशेषः । सा तु संज्ञा । इति त्रिकाण्डशेषः ॥

**स्वरोदयः**, पुं, (स्वराणामुदयो यत्र । स्वरज्ञापक- ग्रन्थविशेषः । यथा, --
मैथुने चैव संग्रामे भोजने सिद्धिदायिका ॥
शोभनेषु च कार्य्येषु यात्रायां विषकर्म्मणि ।
शान्तिमुक्त्यर्थमिद्ध्यै च इडा योज्या नराधिपैः ॥
द्वाभ्याञ्चैव प्रवाहे च क्रूरसौम्यविवर्ज्जने ।
विषुवं तन्तु जानीयात् संस्मरेत्तु विचक्षणः ॥
सौम्यादि शुभकार्य्येषु लाभादिजयजीविते ।
गमनागमने चैव वामा सर्व्वत्र पूजिता ॥
युद्धादिभोजने घाते स्त्रीणाञ्चैव तु सङ्गमे ।
प्रशस्ता दक्षिणा नाडी प्रवेशे क्षुद्रकर्म्मणि ॥
शुभाशुभानि कार्य्याणि लाभालाभौ जयाजयी ।
जीवो जीवाय यत्पृच्छेत् न सिध्यति च मध्यमा ॥
वामाचारेऽथवा दक्षे प्रत्यये यत्र नायकः ।
तनुस्थः पृच्छते यस्तु तत्र सिद्धिर्न संशयः ।
वैच्छन्दो वामदेवस्तु यदा वहति चात्मनि ।
तत्र भागे स्थितः पृच्छेत् सिद्धिर्भवति निष्फला ॥
वामे वा दक्षिणे वापि यत्र संक्रमते शिवा ।
घोरे घोराणि कार्य्याणि सौम्येवै मध्यमानि च ॥
प्रस्थिते भागतो हंसे द्वाभ्यां वै सर्व्ववाहिनि ।
तदा मृत्युं विजानीयाद्योगी योगविशारदः ॥
यत्र यत्र स्थितः पृच्छेद्वामदक्षिणसंमुखः ।
तत्र तत्र समं दिश्याद्वातस्थोदयनं सदा ॥
अग्रतो वामिका श्रेष्ठा पृष्ठतो दक्षिणा शुभा ।
वामेन वामिका प्रोक्ता दक्षिणे दक्षिणा शुभा ॥
जीवी जीवति जीवेन यच्छून्यं तत् स्वरो भवेत् ॥
यत्किञ्चित् कार्य्यमुद्दिष्टं जयादिशुभलक्षणम् ।
तत् सर्वं पूर्णनाड्यान्तु जायते निर्व्विकल्पतः ॥
अन्यनाड्यादिपर्य्यन्तपक्षत्रयमुदाहृतम् ।
यावत् षष्ठीन्तु पृच्छायां पूर्णायां प्रथमो जयेत् ॥
रिक्तायान्तु द्वितीयान्तु कथयेत्तदशङ्कितः ।
वामाचारसमा वायुर्जायते कर्म्मसिद्धिदः ॥
प्रवृत्ते दक्षिणे मार्गे विषमे विषमाक्षरम् ।
अन्यत्र वामवाहे तु नाम वै विषमाक्षरम् ॥
तदासौ जयमाप्नोति योधः संग्राममध्यतः ।
दक्षवातप्रवाहे तु यदि नाम समाक्षरम् ॥
जायते नात्र सन्देहो नाडीमध्ये तु लक्षयेत् ।

अष्टाक्षरः एकपादे दशाक्षरः । इति केचित् ॥

(स्वतो भासमाने, त्रि । यथा, महाभारते । १२ । ४३ । १११ ।

"सम्राट् विराट् स्वराट् चैव सुरराजो भवोद्भवः ॥"

ब्रह्मा । इति विष्णुपुराणटीकायां श्रीधरस्वामी । १ । १२ । ५९ ॥)

**स्वरापगा**, स्त्री, (स्वः स्वर्गस्य आपगा ।) स्वर्गङ्गा ।

इति हेमचन्द्रः ॥

**स्वरालुः**, पुं, वचा । इति शब्दचन्द्रिका ॥

**स्वरितः**, पुं, (स्वर + जातार्थे इतच् ।) स्वर-

विशेषः । यथा, --

"उदात्तश्चानुदात्तश्च स्वरितोऽमी त्रयः स्वराः ॥"

इति जटाधरः ॥

स्वरः संजातोऽत्रेति इतोऽस्य जाते इति इतः ।

यदाहुः । उश्चैरुच्चारणादुदात्तः नीचैरनुदात्तः

समाहारः स्वरितः इति । छान्दसत्वात् प्रचित-

स्यरो नोक्तः । तदुक्तम् ।

"उदात्तश्चानुदात्तश्च स्वरितश्च त्रयः स्वराः ।

चतुर्थः प्रचितो नोक्तो यतोऽसौ छान्दसः स्मृतः ॥"

इति भरतः ॥

स्वरयुक्ते, त्रि ॥

**स्वरुः**, [म्] पुं, वज्रम् । इत्यमरटीकायां नील-

कण्ठः ॥

**स्वरुः**, पुं, (स्वर्य्यन्ते प्राणिनोऽनेनेति । स्वृशब्दोप-

तापयाः + "शॄस्वृस्निहित्रपीति ।" उणा० १ ।

सूत उवाच ।

"हरेः श्रुत्वा हरो गौरीं देहस्थं ज्ञानमब्रवीत् ।

कुजो वह्नी रविः पृथ्वी सौरिरापः प्रकीर्त्तितः ॥

वायुसंस्थः स्थितो राहुर्दक्षरन्ध्रावभासकः ।

गुरुः शुक्रस्तथा सौम्यश्चन्द्रश्चैव चतुर्थकः ॥

वामनाड्यान्तु मध्यस्थान् कारयेदात्मनस्तथा ।

यदा चार इडायुक्तस्तदा कर्म्म समाचरेत् ॥

स्थानसेवां तथा ध्यानं बाणिज्यं राजदर्शनम् ।

अन्यानि शुभकर्म्माणि कारयेत प्रयत्नतः ॥

दक्षनाडीप्रवाहे तु शनिर्भौमश्च सैंहिकः ।

इनश्चैव तथाप्येव पापानामुदयो भवेत् ॥

शुभाशुभविवेको हि ज्ञायते तु स्वरोदयात् ।

देहमध्ये स्थिता नाड्यौ बहुरूपाः सुविस्तराः ॥

नाभेरधस्ताद् यः कन्दो अङ्कुरास्तत्र निर्गताः ।

द्वासप्ततिसहस्राणि नाभिमध्ये व्यवस्थिताः ॥

चक्रवच्च स्थितास्तास्तु सर्व्वाः प्राणहराः स्मृताः ।

तासां मध्ये त्रयः श्रेष्ठा वामदक्षिणमध्यमाः ॥

वामा सोमात्मिका प्रोक्ता दक्षिणा रविसन्निभा ।

मध्यमा च भवेदग्निः फलतां कालरूपिणी ॥

वामा ह्यमृतरूपा च जगदाप्यायने स्थिता ।

दक्षिणा रौद्रभागेन जगच्छोषयते सदा ॥

पिङ्गलान्तर्गते प्राणे शमनीयाहवञ्जयेत् ॥

यावन्नाड्योदयं चारस्तां दिशं यावदापयेत् ।

न दातुं जायते सोऽपि नात्र कार्य्या विचा-

रणा ॥

अथ संग्राममध्ये तु यत्र नाडी सदा वहेत् ।

सा दिशा जयमाप्नोति शून्ये भङ्गं विनिर्द्दिशेत् ॥

जातचारे जयं विद्यान्मृतके मृतमादिशेत् ।

जयं पराजयं चैव यो जानाति स पण्डितः ॥

वामे वा दक्षिणे वापि यत्र सञ्चरते शिवम् ।

कृत्वा तत्पदमाप्नोति यात्रा सन्ततिशोमना ॥

शशिसूर्य्यप्रवाहे तु सति युद्धं समाचरेत् ।

तत्रस्थः पृच्छते यस्तु स साधु जायते ध्रुवम् ॥

यां दिशं वहते वायुस्तां दिशं यावदाजयेत् ।

जयते नात्र सन्देह इन्द्रो यद्यग्रतः स्थितः ॥

मेषाद्या दश या नाड्यो दक्षिणा वामसंस्थिता ।

चरस्थिरद्विमार्गे तास्तादृशे तादृशः क्रमात् ॥

निगमे निर्गमं याति संग्रहे संग्रहं विदुः ।

| | | |
|---|---|---|
| | द्वयोर्ब्बहि तु मृत्युः स्यात्<br>सर्व्वकार्य्यविनाशिनी ।<br>निगमे च भवेद्वामा प्रवेशे दक्षिणा<br>स्मृता ॥<br>कारयेत् क्रूरकर्म्माणि प्राणे<br>पिङ्गलसंस्थिते ।<br>इडाचारे तथा सौम्यं<br>चन्द्रसूर्य्यगतस्तथा ॥<br>यात्रायां सर्व्व कार्य्येषु विषापहरणे<br>इडा ।<br>भोजने मैथुने युद्धे पिङ्गला<br>सिद्धिदायिका ॥<br>उच्चाटमारणाद्येषु कर्म्मस्वेतेषु<br>पिङ्गला । | |

पृच्छकस्य वचः श्रुत्वा
घण्टाकारेण लक्षयेत् ॥
वामे वा दक्षिणे वापि
पञ्चतत्त्वस्थितः शिवे ।
ऊर्द्ध्वेऽग्निरध आपश्च
तिर्य्यक्संस्थः प्रभञ्जनः ॥
मध्ये तु पृथिवी ज्ञेया लाभः सर्व्वत्र
सर्व्वदा ।
ऊर्द्ध्वे मृत्युरधः शान्तिस्तिर्य्यक्
चोच्चाटयेत्
सधीः ।
मध्ये स्तम्भं विजानीयान्मोक्षः
सर्व्वत्र सर्व्वगे ॥"
इति गारुडे पवनविजयादिः ६७
अध्यायः ॥ * ॥
अन्यच्च ।
श्रीपार्व्वत्युवाच ।
"देवदेव महादेव तत्त्वज्ञ परमेश्वर ।
कथयस्व प्रभो ज्ञानं कृपां कृत्वा
ममोपरि ॥
कथं ब्रह्माण्डमुत्पन्नं कथं वा
परिवर्त्तते ।
कथं विलीयते देव वद
ब्रह्माण्डनिर्णयम् ॥
श्रीमहादेव उवाच ।
तत्त्वाद्ब्रह्माण्डमुत्पन्नं तत्त्वेन
परिवर्त्तते ।
तत्त्वेन लीयते देवि
तत्त्वाद्ब्रह्माण्डनिर्णयः ॥
देव्युवाच ।
तत्त्वमेव परं मूलं निश्चितं
तत्त्ववेदिभिः ।
तत्त्वस्वरूपं किं देव तत्त्वमेव
प्रकाशय ॥
ईश्वर उवाच ।
निरञ्जनो निराकार एकदेवो
महेश्वरः ।
तस्मादाकाशमुत्पन्नं
आकाशाद्वायुसम्भवः ॥

स्वरज्ञानात् परं गुह्यं न वा दृष्टं न वा श्रुतम् ॥
शत्रुं हन्यात् स्वरबलैस्तथा मित्रसमागमः ।
लक्ष्मीप्राप्तिः स्वरबलैः कीर्त्तिः
स्वरबलैस्तथा ॥
कन्याप्राप्तिः स्वरबलैः स्वरबलै राजदर्शनन्
।
स्वरबलैर्देवतासिद्धिः स्वरबलैः क्षितिपो
वशः ॥
स्वरबलैर्गम्यते देशे भोज्यं स्वरबलैस्तथा ।
लघु दीर्घं स्वरबलैर्मलञ्चैव निवारयेत् ॥
सर्व्वशास्त्रपुराणादिस्मृतिवेदाङ्गपूर्ब्बकम् ।
स्वरज्ञानात् परं मित्रं नास्ति किञ्चिद्वरानने ॥
नामरूपादिकाः सर्व्वे मिथ्या सर्व्वे कविभ्रमाः
।
अज्ञानमोहिता मूढा यावत्तत्त्वं न विद्यते ॥
इदं स्वरोदयं शास्त्रं सर्व्वशास्त्रोत्तमोत्तमम् ।
आत्मघटप्रकाशार्थं प्रदीपकलिकोपमम् ॥
यस्मै कस्मै परस्मै वा न प्रोक्तं प्रश्नहेतवे ।
तस्मादेतत् स्वयं ज्ञेयमात्मनैवात्मनात्मनि ॥
न तिथिर्न च नक्षत्रं न वारग्रहदेवताः ।
न विष्टिर्न व्यतीपातो विरुद्धाद्यास्तथैव च ॥
कुयोगा नैव देवेशि प्रभवन्ति कदाचन ।
प्राप्ते स्वरबले सिद्धिं सर्व्वमेव फलं शुभम् ॥
* ॥
देहमध्ये स्थिता नाड्यो बहुरूपाः
सविस्तराः ।
ज्ञातव्याश्च बुधैर्नित्यं स्वदेहे ज्ञानहेतवे ॥
नाभिस्थानककन्दोर्द्ध्वमङ्कुरादेव निर्म्मिताः
।
द्विसप्ततिसहस्राणि देहमध्ये व्यवस्थिताः ।
नाडीस्था कुण्डली शक्तिर्भुजङ्गाकारशायिनी
।
ततो दशोर्द्ध्वगा नाड्यो दशैवाधः
प्रतिष्ठिताः ॥
देहे तिर्य्यग्गता नाड्यश्चतुर्व्विंशतिसंख्यया ।
प्रधाना दश नाड्यस्तु दश वायुप्रवाहकाः ॥
तिर्य्यगूर्द्ध्वमधस्ताद्वा वायुर्देहे समन्वितः ।
चक्रवत्तु स्थिता देहे सर्व्वाः प्राणसमाश्रिताः
॥

कृकरः क्षुत्कृतो ज्ञेयो देवदत्तो विजृम्भणे ।
न जहाति मृते क्वापि सर्व्वव्यापी धनञ्जयः ।
एते नाडीषु सर्व्वासु भ्रमन्ते जीवरूपिणः ॥
प्रकटप्राणसञ्चारं लक्षयेत् देहमध्यतः ।
इडापिङ्गलासुषुम्नाभिर्नाडीभिस्तिसृभिर्बुधः ॥
इडा वामे च विज्ञेया पिङ्गला दक्षिणे स्मृता ।
इडानाडीस्थिता वामा ततो व्यस्ता च
पिङ्गला ॥
इडायां संस्थितश्चन्द्रः पिङ्गलायाञ्च भास्करः ।
सुषुम्ना शम्भुरूपेण शम्भुर्हंसस्वरूपकः ॥
हंकारो निर्गमे प्रोक्तः सकारस्तु प्रवेशने ।
हंकारः शिवरूपेण सकारः शक्तिरुच्यते ॥
शक्तिरूपः स्थितश्चन्द्रो वामनाडीप्रवाहकः ।
दक्षनाडीप्रवाहश्च शुम्भुरूपी दिवाकरः ॥
श्वासे सकारसंस्थे तु यद्दानं दीयते बुधैः ।
तद्दानं जीवलोकेऽस्मिन् कोटिकोटिगुणं भवेत् ॥
अनेन लक्षयेद् योगी चैकचित्तः समाहितः ।
सर्व्वमेव विजानीयान्मार्गं तच्चन्द्रसूर्य्ययोः ॥
ध्यायेत्तत्त्वं स्थिरे जीवे अस्थिरे न कदाचन ।
इष्टसिद्धिर्भवेत्तस्य महालाभो जयस्तथा ॥
चन्द्रसूर्य्यौ यदाभ्यासौ ये कुर्व्वन्ति सदा नराः ।
अतीतानागतज्ञानं तेषां हस्तगतं सदा ॥
वामे चामृतरूपस्था जगदाप्यायिनी परा ।
दक्षिणा चरमे भागे जगदुत्पादयेत् सदा ॥
मध्यमा भवति क्रूरा दुष्टा सर्व्वत्र कर्म्मसु ।
सर्व्वत्र शुभकार्य्येषु वामा भवति पुष्टिदा ॥
निर्गमे च शुभा वामा प्रवेशे दक्षिणा शुभा ।
शुभकार्य्ये शुभा वामा दक्षिणा क्रूरकर्म्मसु ।
चन्द्रः समस्तु विज्ञेयो रविस्तु विषमः सदा ।
चन्द्रः स्त्री पुरुषः सूर्य्यश्चन्द्रो गौरो रविः
सितः ॥
इडा पिङ्गला सुषुम्ना च तिस्रो नाड्यः प्रकी-
र्त्तिताः ।
इडायाश्च प्रवाहेण सौम्यकर्म्माणि कारयेत् ॥
पिङ्गलायाः प्रवाहेण रौद्रकर्म्माणि कारयेत् ।
सुषुम्नाया प्रवाहेण सिद्धिमुक्तिफलानि च ॥ * ॥
आदौ चन्द्रः सिते पक्षे भास्करस्तु सितेतरे ।
प्रतिपत्तो दिनान्याहुः त्रीणि त्रीणि क्रमोदये ॥
सार्द्धद्विघटिका ज्ञेया शुक्ले कृष्णे शशी रविः ।

वायोस्तेजस्ततश्चापस्ततः
पृथ्वीसमुद्भवः ।
एतानि पञ्चतत्त्वानि विस्तीर्णानि च
पञ्चधा ॥
तेभ्यो ब्रह्माण्डमुत्पन्नं तैरेव
परिवर्त्तते ।
विलीयते च तत्रैव तत्रैव रमते पुनः
॥ * ॥
पञ्चतत्त्वमये देहे पञ्चतत्त्वानि
सुन्दरि ।
सूक्ष्मरूपेण वर्त्तन्ते ज्ञायते
तत्त्वयोगिभिः ॥
अत एव प्रवक्ष्यामि शरीरस्थं
स्वरोदयम् ।
हंसचारस्वरूपेण भवेद् ज्ञानं
त्रिकालगम् ॥
गुह्याद्गुह्यतरं
सारमुपकारप्रकाशकम् ।
इदं स्वरोदयं ज्ञानं ज्ञानिनां मस्तके
मणिः ॥
सूक्ष्मात् सूक्ष्मतरं ज्ञानं सुबोधं
सत्यप्रत्ययम् ।
आश्चर्य्यं नास्तिके लोके
आधारस्त्वास्तिके जने ॥
शान्ते शुद्धे सदाचारे
गुरुभक्तैकमानसे ।
दृढचित्ते कृतज्ञे च देयञ्चैव
स्वरोदयम् ॥
शठे च दुर्ज्जने शूद्रे अशान्ते
गुरुलोपके ।
हीनसत्त्वे दुराचारे स्वरज्ञानं न
दीयते ॥ * ॥
शृणु त्वं कथितं देवि देहस्य
ज्ञानमुत्तमम् ।
येन विज्ञानमात्रेण सर्व्वज्ञत्वं
प्रजायते ॥
स्वरे वेदाश्च शास्त्राणि स्वरे
गान्धर्व्वमुत्तमम् ।
स्वरे सर्व्वञ्च त्रैलोक्यं स्वरे
आत्मस्वरूपकः ॥

तासां मध्ये दश श्रेष्ठा दशानां तिस्र उत्तमाः ।
इडा च पिङ्गला चैव सुषुम्ना च तृतीयिका ॥
गान्धारी हस्तिजिह्वा च पूषा चैव यशस्विनी
।
अलम्बुषा कुहूश्चैव शङ्खिनी दशमी तथा ॥
इडा वासे स्थिता भागे दक्षिणे पिङ्गला तथा ।
सुषुम्ना मध्यदेशे तु गान्धारी वामचक्षुषि ॥
दक्षिणे हस्तिजिह्वा च पूषा कर्णे च दक्षिणे ।
यशस्विनी वामकर्णे आनने चाप्यलम्बुषा ॥
कुहूश्च लिङ्गदेशे तु मूलस्थाने च शङ्खिनी ।
एवं द्वारं समाश्रित्य तिष्ठन्ति दशनाडिकाः ॥
इडा पिङ्गला सुषुम्ना च प्राणमार्गे समा-
श्रिताः ।
एता हि दश नाड्यस्तु देहमध्ये व्यवस्थिताः
।
नामानि नाडिकानान्तु वातानां प्रवदाम्यहम्
।
प्राणोऽपानः समानश्चोदानो व्यानस्तथैव च
॥
नागः कूर्म्मश्च कृकरो देवदत्तो धनञ्जयः ।
हृदि प्राणो वहेन्नित्यमपानो गुदमण्डले ॥
समानो नाभिदेशे तु उदानः कण्ठमध्यगः ।
व्यानो व्यापो शरीरेषु प्रधानाः पञ्च वायवः ॥
प्राणाद्याः पञ्च विख्याता नागाद्याः पञ्च
वायवः ।
तेषामपि च पञ्चानां स्थानानि च वदाम्यहम्
॥
उद्गारे नाग आख्यातः कूर्म्म उन्मीलने
स्मृतः ।

वहत्येकदिनेनैव यथाषष्टिघटीक्रमात् ॥
वहेत्तावद्घटीमध्ये पञ्चतत्त्वानि निर्द्दिशेत् ।
प्रतिपत्तो दिनान्याहुर्विपरीते विपर्य्ययः ॥
शुक्लपक्षे वहेद्वामा कृष्णपक्षे च दक्षिणा ।
जानीयात् प्रतिपत्पूर्ब्बं योगी तद्गतमानसः ॥
उदयश्चन्द्रमार्गेण सूर्य्येणास्तं गतो यदि ।
ददाति गुणसंघातं विपरीते विपर्य्ययम् ॥
शशाङ्कं वारयेद्रात्रौ दिवा कार्य्यो दिवाकरः ।
इत्यभ्यासरतो योगी स योगी नात्र संशयः ॥
सूर्य्येण बध्यते सूर्य्यश्चन्द्रश्चन्द्रेण बध्यते ।
यो जानाति क्रियामेतां त्रैलोक्यं वशयेत्
क्षणात् ॥ * ॥
गुरुशुक्रबुधेन्दूनां वासरे वामनाडिका ।

| | | |
|---|---|---|
| स्वरहीनोऽथ दैवज्ञो नाथहीनं यथा गृहम् ।<br>शास्त्रहीनो यथा वक्ता शिरोहीनञ्च यद्वपुः ॥<br>नाडीभेदं यथा प्राणं तत्त्वभेदं तथैव च ।<br>सुषुम्नामिश्रभेदञ्च यो जानाति स मुक्तिगः ॥<br>साकारे वा निराकारे शुभवायुबले कृते ।<br>कथयन्ति शुभं केचित् स्वरज्ञानं वरानने ॥<br>ब्रह्माण्डखण्डपिण्डाद्यं स्वरेणैव हि निर्म्मितम् ।<br>सृष्टिसंहारकर्त्ता च स्वरः साक्षान्महेश्वरः ॥<br>स्वरज्ञानात् परं मित्र स्वरज्ञानात् परं धनम् । | | |

सिद्धिदा सर्व्वकार्य्येषु शुक्लपक्षे विशेषतः ।
अर्काङ्गारकसौरीणांवासरे दक्षनाडिका ।
स्मर्त्तव्या चरकार्य्येषु कृष्णपक्षे विशेषतः ॥
एकैकस्य घटीपञ्चक्रमेणैवोदयन्ति च ।
क्रमादेकैकनाड्यान्तु तत्त्वानां पृथगुद्भवः ॥
अहोरात्रस्य मध्ये तु ज्ञेया द्वादश संक्रमाः ।
वृषकर्क्कटकन्यालिमृगमीने निशाकरः ॥
मेषे सिंहे च धनुषि तुलायां मिथुने घटे ।
उदयो दक्षिणे ज्ञेयः शुभाशुभविनिर्णयः ॥ * ॥
तिष्ठेत् पूर्व्वोत्तरे चन्द्रः सूर्य्यो दक्षिणपश्चिमे ।
वामाचारप्रवाहेण न गच्छेत् पूर्ब्ब उत्तरे ॥
दक्षनाडीप्रवाहे तु न गच्छेत् याम्यपश्चिमे ।
परिपन्थिभयं यस्य गतोऽसौ न निवर्त्तते ॥
तस्मात्तत्र न गन्तव्यं बुधैः सर्व्वहितेप्सुभिः ।
तदा तत्र तु संघातमृत्युरेव न संशयः ॥
सूर्य्योदये यदा सूर्य्यश्चन्द्रश्चन्द्रोदये यदा ।
सिध्यन्ति सर्व्वकार्य्याणि दिवारात्रिगतान्यपि ॥
शुक्लपक्षे द्वितीयायामर्के वहति चन्द्रमाः ।
दृश्यते लाभदः पुंसां सोमे सौख्यं प्रजायये ॥
चन्द्रकाले यदा सूर्य्यः सूर्य्यश्चन्द्रोदये भवेत् ।
उद्वेगः कलहो हानिः शुभं सर्व्वं निवारयेत् ॥ * ॥
विपरीतलक्षणम् ।
यदा प्रत्यूषकाले तु विपरीतोदयो भवेत् ।
चन्द्रस्थाने वहत्वर्को रविस्थाने च चन्द्रमाः ॥
प्रथमे मानसीद्वेगं धनहानिं द्वितीयके ॥

यत्किञ्चित् पूर्ब्बमुद्दिष्टं लाभादिसमरागमः ।
तत् सर्व्वं पूर्णनाडीषु जायते निर्व्विकल्पकम् ॥
शून्यनाड्यां रिपुं जेतुं यत् पूर्ब्बं प्रतिपादितम् ।
जायते नान्यथा चैव यथा सर्व्वज्ञभाषितम् ॥
रिपुं जेतुमित्यत्र विपर्य्यस्तमिति च पाठः ।
व्यवहारे खलोच्चाटे द्वेषिविद्यादिवञ्चकाः ।
कुपितस्वामिचौराद्याः पूर्णस्था स्युर्भयङ्कराः ॥
दूराध्वनि शुभश्चन्द्रो निर्व्विघ्नमिष्टसिद्धिदः ।
प्रवेशकार्य्यहेतुः स्यात् सूर्य्यः शीघ्रं प्रशस्यते ॥
अग्रतो वामिका श्रेष्ठा पृष्ठतो दक्षिणा शुभा ।
वामे च वामिका प्रोक्ता दक्षिणे दक्षिणा स्मृता ॥
चन्द्रचारे विषं हन्ति सूर्य्यो बालावशं नयेत् ।
सुषुम्नायां भवेन्मोक्ष एक एव त्रिधा स्मृतः ॥
अयोग्ये योग्यता नाडी योग्यस्थानेऽप्ययोग्यता ।
कार्य्यानुबन्धतो जीवः कथं रुद्र समाचरेत् ॥
शुभाशुभानि कार्य्याणि क्रियन्तेऽहर्निशं यदा ।
तदा कार्य्यानुबन्धेन कार्य्यं नाडीप्रचालनम् ॥ * ॥
अथ इडा ।
स्थिरकर्म्मण्यलङ्कारे दूराध्यगमने तथा ।
आश्रमे हर्म्यप्रासादे वस्तूनां संग्रहेपि च ॥
वापीकूपतडागादिप्रतिष्ठा स्तम्भदेवयोः ।
यात्रादाने विवाहे च वस्त्रालङ्कारभूषणे ॥
शान्तिकं पौष्टिकं चैव दिव्यौषधिरसायने ।
स्वस्वामिदर्शने मैत्रे बाणिज्ये धनसंग्रहे ॥
गृहप्रवेशे सेवायां कृष्यां बीजादिवापने ।
शुभकर्म्मणि सन्धौ च निर्गमे च शुभः शशी ॥
विद्यारम्भादिकार्य्येषु बान्धवानाञ्च दर्शने ।
जलमोक्षेषु धर्म्मेषु दीक्षायां मन्त्रसाधने ॥
कालविज्ञानमूत्रेण चतुष्पादगृहागमे
कलाव्याधिचिकित्सायांस्वामिसम्बोधने तथा ॥
गजाश्वारोहणे धन्वी गजाश्वानाञ्च बन्धने ।
परोपकरणे चैव निधीनां स्थापने तथा ॥
गीतवाद्येऽपि नृत्ये च गीतशास्त्रविचारणे ।
पुरग्रामप्रवेशे च तिलके सूत्रधारणे ॥
पुत्त्रशोके विषादे च ज्वरिते मूर्च्छितेऽपि वा ।

व्यायामे मारणोच्चाटे षट्कर्म्मादिकसाधने ।
नदीजलौघतरणे भेषजे लिपिलेखने ॥
मारणं मोहनं स्तम्भं विद्वेषोच्चाटनं वशम् ।
प्रेरणाकर्षणे क्षोभे दाने च क्रयविक्रये ॥
खड्गहस्ते वैरियुद्धे भोगे वा राजदर्शने ।
भोज्ये स्नाने व्यवहारे क्रूरे दीप्ते रविः शुभः ॥
भुक्तमात्रेण मन्दाम्नौ स्त्रीणां वश्यादिकर्म्मणि ।
शयनं सूर्य्यवाहेन कर्त्तव्यन्तु सदा बुधैः ॥
क्रूराणि यानि कर्म्माणि चराणि विविधानि च ।
तानि सिध्यन्ति सूर्य्येण नात्र कार्य्या विचा-
रणा ॥ * ॥
अथ सुषुम्ना ।
क्षणं वामे क्षण दक्षे यदा वहति मारुतः ।
सुषुम्ना सा च विज्ञेया सर्व्वकार्य्यहरा स्मृता ॥
तस्यां नाड्यां स्थितो वह्निर्ज्वलन्तं कालरूपि-
णम् ।
विषुवन्तं विजानीयात् सर्व्वकार्य्यविनाशनम् ॥
यदानुक्रममुल्लङ्घ्य यस्य नाडीद्वयं वहेत् ।
तदा तस्य विजानीयादशुभं समुपस्थितम् ॥
क्षणं वामे क्षणं दक्षे विषमं भावमादिशेत् ।
विपरीतफलं ज्ञेयं ज्ञातव्यञ्च वरानने ॥
उभयोरेव सञ्चारे विषुवन्तं समादिशेत् ।

तृतीये गमनं प्रोक्तमिष्टनाशं चतुर्थके ॥
पञ्चमे राज्यविध्वंसं षष्ठे सर्व्वार्थनाशनम् ।
सप्तये न्याधिदुःखानि अष्टमे मृत्युमादिशेत्
॥
कालत्रये दिनान्यष्टौ विपरीतं यदा भवेत् ।
तदा दुष्टफलं प्रोक्तं किञ्चिन्न्यूने तु
शोभनम् ॥
प्रातर्म्मध्याह्नयोश्चन्द्रः सायंकाले
दिवाकरः ।
तदा नित्यं जयं लाभं विपरीतन्तु दुःखदम्
॥
दक्षिणे यदि वा वामे यत्र संक्रमते शिवः ।
तत्पादमग्रतः कृत्वा निःसरेत् निजमन्दिरे
॥
चन्द्रः समपदः कार्य्यो रविस्तु विषमः
सदा ।
पूर्णपादं पुरस्कृत्य यात्रा भवति सिद्धिदा
॥
चन्द्रचारे चतुष्पादं पञ्चपादाश्च भास्करे ।
पवन्तु गमनं श्रेष्ठं साधयेद्भुवनत्रयम् ॥
यत्राङ्गे चरते वायुस्तदङ्गस्य करस्थलम् ।
सुप्तोत्थितो मुखं स्पृष्ट्वा लभते वाच्छितं
फलम् ॥
परदत्ते तथा ग्राह्ये गृहान्निर्गमनेऽपि च ।
यदङ्गे बहते नाडी ग्राह्यं गतिकराङ्घ्रिणा ॥
न हानिः कलहो नैव कण्टकैर्नापि भिद्यते
।
निवर्त्तते सुस्त्रेनैव सर्व्वापद्भिर्व्विवर्जितः ॥
गुरुबन्धुनृपामात्या अन्येऽपीप्सितदायिनः
।
पूर्णाङ्गे खलु कर्त्तव्या
कार्य्यमिद्धिमभीप्सता ।
आमने शयने वापि पूर्णाङ्गविनिवेशिताः ।
वशीभवन्ति कामिन्यो न कर्म्म
नियमान्तरम् ॥
अरिचौराधमाद्याश्च अन्ये उत्पातविग्रहाः
।
कर्त्तव्याः खलु रिक्ताङ्गे
जयलाभसुखार्थिभिः ॥
दूरदेशे विधातव्यं गमनं तुहिनव्युतौ ।
अभ्यर्णदेशे दीप्ते तु तरणाविदति केचन ॥

स्वजनस्वामिसम्बन्धे धान्यादिदारुसंग्रहे ॥
स्त्रीणां दन्तादिभूषायां कृषेरागमने तथा ।
गुरुपूजा विषादीनां चाननञ्च वरानने ॥
इडायां सिद्धिदं प्रोक्तं योगाभ्यासादिकर्म्म च ।
तत्रापि वर्ज्जयेद्वायुं स्तेज आकाशमेव च ॥
सर्व्वमार्य्याणि सिध्यन्ति दिवारात्रिगतान्यपि ।
सर्व्वेषु शुभकार्य्येषु चन्द्रचारः प्रशस्थते ॥ * ॥
अथ पिङ्गला ।
कटिनक्रूरविद्यानां पठने पाठने तथा ।
स्त्रीसङ्गवेश्यागमने महानौकाधिरोहणे ॥
नष्टकार्य्ये सुरापाने वीरमन्त्राद्युपासने ।
बहलध्वंसदेशादिविषदानादिवैरिणि ॥
शस्त्राभ्यासे च गमने मृगयापशुविक्रये ।
इष्टकाकाष्ठपाषाणरबधर्षणदारणे ॥
गत्यभ्यामे यन्त्रतन्त्रे दुर्गपर्व्वतरोहणे ।
द्यते चौर्य्ये गजाश्वादिरथसाधनवाहने ॥

न कुर्य्यात् क्रूरसौम्यानि तत्सर्व्वं
निष्फलं भवेत् ॥
जीविते मरणे प्रश्ने लाभालाभौ
जयाजयौ ।
विषुवे वैपरीत्यं स्यात्
संस्मरेज्जगदीश्वरम् ॥
ईश्वरस्मरणं कार्य्यं
योगाभ्यासादिकर्म्मसु ।
अन्यत्तत्र न कर्त्तव्यं
जयलाभसुखार्थिभिः ॥
सूर्य्येण वहमानायां सुषुम्नायां
मुहुर्म्मुहुः
शापं दद्यात् वरं दद्यात् सर्व्वथा च
तदन्यथा ॥
नाडीसंक्रमणे काले तत्त्वसंक्रमणे तथा
।
शुभं किञ्चिन्न कर्त्तव्यं पुण्यदानादि
कोटिधा ॥
विषमस्योदये यात्रां मनसापि न
चिन्तयेत् ।
यात्रा हानिकरी तस्य मृत्युः क्लेशो न
संशयः ॥
पुरो वामोद्‌र्ध्वतश्चन्द्रो दक्षाधः पृष्ठतो
रविः ।
पूर्णरिक्तविवेकोऽयं ज्ञातव्यो देशिकैः
सदा ॥
ऊद्‌र्ध्ववामाग्रतो दूतो ज्ञेयो वामपथि
स्थितः ।
पृष्ठे दक्षे तथाधस्तात् सूर्य्यवाहगतः
शुभः ॥
अनादिविषमं सन्धिं निराधारं
निराकुलम् ।
परे सूक्ष्मे विलीयेत सा सन्ध्या
सन्धिरुच्यते ॥
न सन्ध्यां सन्धिमित्याहुः सन्ध्या
सन्धिर्निगद्यते ।
विषुवत् सन्धिगः प्राणः सा सन्ध्या
सन्धिरुच्यत्रे ॥
न वेदं वेदमित्याहुर्व्वेदे वेदो न विद्यते ।
परात्मा विद्यते येन स वेदो वेद उच्यते
॥”

| | | |
|---|---|---|
| | | इति नाडीभेदः समाप्तः ॥ * ॥<br>अथ तत्त्वनिर्णयः ।<br>देव्युवाच ।<br>“देवदेव महादेव संसारार्णवतारक ।<br>स्थितं त्वदीयहृदये रहस्यं वद मे प्रभो ॥<br>ईश्वर उवाच ।<br>स्वरज्ञानं रहस्यं तु न किञ्चिदिष्टदेवता ।<br>स्वरज्ञानरतो योगी स योगी परमो मतः ॥<br>एञ्चतत्त्वात भवेत् सृष्टिस्तत्त्वे तत्त्वं विलीयते । |

पञ्चतत्त्वं परं तत्त्वं तत्त्वातीतं निरञ्जनम् ॥
तत्त्वानां नाम विज्ञेयं सिद्धियोगेन योगिनाम् ।
भूतानां दुष्टचिह्नानि जानन्ति हि स्वरोत्तमाः ॥
पृथिव्यापस्तथा तेजो वायुराकाशमेव च ।
पञ्चभूतात्मकं सर्व्वं यो जानाति स पूजितः ॥
सर्व्वलोकेषु जीवानां न देहे भिन्नतत्त्वकम् ।
भूर्लोकात् सत्यपर्य्यन्तं नाडीभेदः पृथक् पृथक् ॥
वामे वा दक्षिणे वापि उदयाः पञ्च कीर्त्तिताः ।
अष्टधा तत्त्वविज्ञानं शृणु वक्ष्यामि सुन्दरि ।
प्रथमे तत्त्वसंख्यायां द्वितीये श्वाससन्धिषु ।
तृतीये स्वरचिह्नानि चतुर्थे स्थानमेव च ॥
पञ्चमे तस्य वर्णश्च षष्ठे तु प्राणमेव च ।
सप्तमे स्वादुसंयुक्तमष्टमे गतिलक्षणम् ॥
एवमष्टविधं प्राणं विषुवन्तं चराचरम् ।
स्वरात् परतरं देवि नान्यथा त्वम्वुजासने ।
निरीक्षितव्यं यत्नेन यदा प्रत्यूषकालतः ।
कालस्य वञ्चनार्थाय कर्म्म कुर्व्वन्ति योगिनः ॥
श्रुत्योरङ्गुष्ठकौ मध्याङ्गुल्यौ नासापुष्टद्वये ।
वदनप्रान्तयोरन्ते तर्ज्जन्यौ तु दृगन्तयोः ॥
अस्यान्तरं पार्थिवादितत्त्वज्ञानं भरेत् क्रमात् ।
पीतश्वेतारुणश्यामैर्बिन्दूभिर्निरुपाधि खन् ॥
दर्पणेन ममालोक्य श्वामं तत्र विनिक्षिपेत् ।
आकारैस्तु विजानीयात् तत्त्वभेदं विचक्षणः ॥
चतुरस्रं चार्द्धचन्द्रं त्रिकोणं वर्त्तुलं स्मृतम् ।
बिन्दूभिस्तु नभो ज्ञेयमाकारैस्तत्त्वलक्षणम् ॥
मध्ये पृथ्वी ह्यवश्चापश्चार्धं वहति चानलः ।
तिर्य्यग् वाय्प्रचारश्च नभा वहति संकमे ॥ * ॥
माहेयं मधुरं स्वादु कपायं जलमेव च ।
तिक्तं तेजश्च वायुम्लं आकाश कटुकं तथा ॥
अष्टाङ्गुलं वहेद्वायुरनलश्चतुरङ्गुलम् ।
द्वादशाङ्गुलमाहेयं षोडशाङ्गुलवारुणम् ॥

ऊद्ध्र्ववाही तु यः क्रूरः कर्म्मकारी स तैजसः ॥
उष्णशीतः कृष्णवर्णस्तिर्य्यग्गामी षडङ्गुलः ।
वायुः पवनसंज्ञो यः चरकर्म्मसु सिद्धिदः ॥
यः समीरः समरसः सर्व्वतत्त्वगुणावहः ।
अम्वरं तं विजानीयात् योगिनां योगदायकम् ।
षीतञ्चैव चतुष्कोणं मधुरं मध्यमाश्रयम् ।
भोगदं पार्थिवं तत्त्वं प्रवाहे द्वादशाङ्गुलम् ॥
श्वेतमर्द्धेन्दुसङ्काशं स्वादु काषायमादकम् ।
लाभकृद्वारुणं तत्त्वं प्रवाहे षोडशाङ्गुलम् ॥
रक्तं त्रिकोणं तिक्तं स्यात् ऊद्ध्र्वमार्गप्रवाहकम् ।
दीप्तञ्च तैजसं तत्त्वं प्रवाहे चतुरङ्गुलम् ॥
नीलवत्तलसङ्काशं स्वाद्वम्लं तिर्य्यगाश्रितम् ।
चपलं मारुतं तत्त्वं प्रवाहेऽष्टाङ्गुलं स्मृतम् ॥
वर्णाकारं स्वादुवाहं अव्यक्तं मर्व्वगामि च ।
मोक्षदं व्योमतत्त्वं हि सर्व्वकार्य्येषु निष्फलम् ॥
पृथ्वीजले शुभे तत्त्वे तेजोमिश्रफलोदये ।
हानिमृत्युकरौ पुंसामशुभौ व्योममारुतौ ॥
अप्पूर्बा पश्चिसे पृथ्वी तेजश्च दक्षिणे तथा ।
वायुरुत्तरदिग्भागे मध्यकोणे गतं नभः ॥

अस्थि मांसं त्वचा नाडी रोम चैव तु पञ्चमम् ।
पृथ्वी पञ्चगुणोपेता ब्रह्मज्ञानेन भाषितम् ॥
शुक्रशोणितमज्जा च लालामूत्रञ्च पञ्चमम् ।
आपः पञ्चगुणाः प्रोक्ता ब्रह्मज्ञानेन भाषितम् ॥
क्षुधा तृष्णा तथा निद्रा श्रान्तिरालस्यम्वे च ।
तेजःपञ्चगुणाः प्रोक्ता ब्रह्मज्ञानेन भाषितम् ॥
धारणं चालनं गन्धं सङ्कोचनप्रसारणे ।
वायोः पञ्चगुणाः प्रोक्ता ब्रह्मज्ञानेन भाषिताः ॥
रागद्वेषौ तथा लज्जा भयं मोहश्च पञ्चमः ।
नभःपञ्चगुणाः प्रोक्ता ब्रह्मज्ञानेन भाषितम् ॥ * ॥
पृथिवीपलपञ्चाशत् चत्वारिशदपस्तथा ।
तेजस्त्रिंशद्विजानीयाद्वायोर्बिशतिर्द्दिर्नभः ॥
पार्थिवे चिरकालेन लाभश्चापे क्षणात् भवेत् ।
जायते पवनात् स्वल्पः सिद्धोऽप्यग्नौ विनश्यति ॥
वह्निवायुकृते प्रश्न लाभालाभं वदेद्बुधः ।
परतो वारुणे लाभः स्थिरेण च पुरन्दरे ॥
ज्ञातव्यं जीवने शून्यं सिद्धो व्योम्नि विनश्यति ॥
वृथ्वी पञ्च अपां वेदाः गुणास्तेजो द्विवायुतः ।
नभ एकगुणञ्चैव तत्त्वज्ञानमिदं भवेत् ॥
फुत्कारकृत् प्रस्फुटिता विदीर्णा पतिता धरा ।
ददाति सर्व्वकार्य्येषु अवस्थासदृशं फलम् ॥ * ॥
भरणी कृत्तिका पुष्या मघा पूर्ब्बा च फल्गुनी ।
पूर्ब्बभाद्रपदः स्वातिः तेजस्तत्त्वमिति प्रिये ॥
विशाखोत्तरफल्गुन्यौ हस्ता चित्रा पुनर्व्वसः ।
अश्विनी मृनशीर्षा च वायुतत्त्वमुदाहृतम् ॥
पूर्व्वाषाढा तथाश्लेषा मूलमार्द्रा च रोहिणी ।
उत्तरभाद्रप्रदा तोयतत्त्वं शतभिषा प्रिये ॥
धनिष्ठा रोहिणी ज्येष्ठानुराधा श्रवणा तथा ।
अभिजि{??}त्तरापाढा पृथ्वीतत्त्वमुदाहृतम् ॥
वहन्नाडीस्यितो दूती यत् पृच्छति शुभाशुभम् ।
तत् सर्व्वं मद्धिमायाति शून्ये शून्यं न संशयः ॥
तत्त्व रामो अयं प्राप्तः मुतत्त्वे च धनञ्जयः ।
कौरवा निहताः सर्व्वे युद्धे तत्त्वविपर्य्यये ॥

आपः श्वेताः क्षितिः पीता रक्तवर्णो हुताशनः
॥
मारुतो नीलजीमूत आकाशं भूमिवर्णकम् ॥
* ॥
स्कन्धदेशे स्थितो वह्निः नाभिमूले प्रभञ्जनः
।
जानुदेशे महीतोयं पादान्ते मस्तके नभः ॥
ऊद्र्ध्वं मृत्युरधः शान्तिस्तिर्य्यगुच्चाटनं
तथा ।
मध्ये स्तम्भं विजानीयात् नभः सर्व्वत्र
मध्यगम् ॥
पृथिव्यां स्थिरकर्म्माणि चरकर्म्माणि वारुणे
।
तेजसा समकार्य्याणि मारणोच्चाटनेऽनिले ॥
ष्योम्नि किञ्चिन्न कर्त्तव्यमभ्यसेत् योगसेवया
।
शून्यता सर्व्वकार्य्येषु नात्र कार्य्या विचारणा
॥ *
पृथ्वीजलाभ्यां सिद्धिः स्यात् मृत्युर्व्वह्नौ
क्षयो-
ऽनिले ।
नभसि निप्फलं सर्व्वं ज्ञातव्यं तत्त्ववेदिभिः
॥
चिरलाभः क्षितौ ज्ञेयस्तत्क्षणात्तोयतत्त्वतः।
हानिः स्याद्वह्निवाताभ्यां नभसो निष्फलं
भवेत् ॥
पीतः शनैर्मध्यवाही शृणुयाच्च गुरुध्वनिम् ।
कवीष्णः पार्थिवो वायुः
स्थिरकार्य्यप्रसाधकः ॥
अधोवाहो गुरुध्वानः शीघ्रगः शीतलः शितः
।
वः षोडशाङ्गुलो वायुः स प्रायः शुभकर्म्मकृत्
॥
आवर्त्तगश्चात्युष्णश्च शोणाभश्चतुरङ्गुलः ।

चिरलाभः क्षितौ
ज्ञेयस्तत्क्षणात्तोयतत्त्वतः।
हानिः स्याद्वह्निवाताभ्यां
नभस्यालिङ्गनंलभेत् ।
चन्द्रे पृथ्वीजले स्यातां
सूर्य्येचाग्निर्यदा भवेत् ।
तदा सिद्धिर्न मन्देहः सौम्यामौम्यपु
कर्म्मसु ॥
लाभः पृथ्वीकृतो वह्निर्निशायां
लाभकृज्जलम् ।
वह्नौ मृत्युः क्षतिर्यायौ नभःस्थानं
दहेत् क्वचित् ॥
जावितष्ये जये लाभे कृप्याञ्च
धनकर्पणे ।
मन्त्रार्थे युद्धपश्ने च गमनागमने तथा
॥
आयाति वारुणे तत्त्वे तत्रस्थोऽपि
शुभं क्षितौ ।
प्रयाति वायुतोऽन्यत्र
हानिर्म्मृत्युर्नभेऽनले ॥ * ॥
पृथिव्यां मूलचिन्ता स्यात् जीवस्य
जलवातयोः ।
तेजमा धातुचिन्तां स्यात्
शून्यमाकाशतो वदेत् ॥
पृथिव्यां बहुपादाः
स्युर्द्विपदास्तोयवायुतः ।
तेजमा च चतुष्पादा नभमा
पादवर्ज्जिताः ॥
कुजो वह्नी रविः पृथ्वी मौरिरापः
प्रकीर्त्तिताः ।
वायुस्थानस्थितो
राहुर्दक्षरन्ध्रप्रवाहकः ॥
जलं चन्द्री वुधः पृथ्वी गुरुर्वातः
सितोऽनलः ।
वामनाड्यां स्थिताः सर्व्वे
सर्व्वकार्य्येषु निश्चिताः ॥
प्रवासिपश्नः ।
“चन्द्रादित्यौ परित्यज्य यदा
राहुगतोऽनिलः ।
तदासौ चलितो ज्ञेयः
स्थानान्तरमपेक्षते ॥

जन्मान्तरीयसंस्कारात् प्रसादादथवा गुरोः ।
केपाञ्चिज्जायते तत्त्वे वासना विमलात्मनाम्
॥”
अथ पञ्चतत्त्वध्यानम् ।
“लं वीजं धरणीं ध्यायत् चतुरस्रा सुपीतभाम् ।
सुगन्धं स्वर्णवर्णत्वमारोग्यं देहलाघवम् ॥
व बीज वारुणं ध्यायेदर्द्धचन्द्रं शशिप्रभम् ।
क्षुत्पिपामासहिष्णुत्वं जलमध्येषु मज्जनम् ॥
रं बीजं शिखिनं ध्यायेत् त्रिकोणमहणप्रभम् ।
वह्वन्नपानभोक्तृत्वमातपाग्निसहिष्णुता ॥
यं बीज पवनं ध्यायेद्वर्त्तुलं श्यागलप्रभम् ।
आकाशगमनाद्यञ्च पक्षिवद्गमनं तथा ॥
हं बीजं गगनं ध्यायेत् निराकारं बहुप्रभम् ।
ज्ञानं त्रिकालविषयमैश्वर्य्यमणिमादिकम् ॥
स्वरज्ञानी नरो यत्र धनं नास्ति ततः परम् ।
स्वरज्ञानेन गमयेत् अनायासफलं भवेत् ॥
सर्व्वञ्च घनमधनं सर्व्वाधिकारसंयुतम् ।
लक्षैकेन न सिध्यन्ति तत्त्वहीना यदा नराः ॥

| | | | |
|---|---|---|---|
| | | आयाति वारुणे तत्त्वे तत्रैवास्ति शुभं क्षितौ ।<br>प्रवामी पवनेऽन्यत्र मृत्युरेवानले वदेत् ॥<br>पृथ्वोतो मूलविज्ञानं जीवज्ञानं जले तथा ।<br>आग्नेय्यां धातुविज्ञानं व्योम्निशून्यं विनिर्द्दिशेत् ।<br>तुष्टिपुष्टिरतिक्रोडा जयो हास्यं धरातले ।<br>तेजो बायुश्च सुप्ताक्षः ज्वरकम्पप्रवासिनः ॥<br>गतायुर्म्मृत्युराकाशे चन्द्रावस्थाः प्रकीर्त्तिताः ।<br>द्वादशैता प्रयत्नेन ज्ञातव्या देशिकोत्तमैः ॥<br>पूर्ब्बायां पश्चिमे याम्ये उत्तरायां यथाक्रमम् ।<br>पृथिव्यादीनि भूतानि बलिष्ठानि विनिर्द्दिशेत् ॥ *<br>पृथिव्यापस्तथा तेजो वायुराकाशमेव च ।<br>पञ्चभूतात्मकं देहं ज्ञातव्यञ्च वरानने ॥ | |

स्नातं तेन समस्ततोर्थसलिलैः
स्वर्व्यापिशक्रावनि-
र्यज्ञानाञ्च कृतं हि कार्य्यमखिलं देवाश्च
सन्तर्पिताः ।
संसाराच्च समुद्धृताः स्वपितरः त्रैलक्यः
पूज्योऽप्यसौ
यस्य ब्रह्मविचारणे क्षणमपि स्थैर्य्यं मनः
प्राप्नुयात्"
इति तत्त्वज्ञानं संपूर्णम् ॥
अथ युद्धप्रकरणम् ।
देव्युवाच ।
"देवदेव महादेव महाज्ञानं स्वरोदयम् ।
त्रिकालविषयज्ञानं कथं भवति शङ्करः ॥
ईश्वर उवाच ।
अर्थकाण्डं जयप्रश्नं शुभाशुभमिति त्रिधा ।
पतत् त्रिकालविज्ञानं नान्यद्भवति सुन्दरि
॥
तत्त्वे शुभाशुभं कार्य्यं तत्त्वे जयपराजयौ ।
तत्त्वे समर्घमाहार्घ्यं तत्त्वे त्रिपदमुच्यते ॥
श्रीदेव्युवाच ।
देवदेव महादेव मर्व्वसंमारतारक ।
किं नराणां परं मित्रं सर्व्व कार्य्यार्थसाधकम्
॥
शिव उवाच ।
पाण एव परं मित्रं प्राण एव परः सखा ।
प्राणतुल्यः परो बन्धुर्नास्त्रि नास्ति वरानने
॥
देव्युवाच ।
कथं प्राणस्थितो वायुर्देहे किं प्राणरूपकम्
।
तत्त्वेषु सञ्चरेत् प्राणा ज्ञायते योगिभिः
कथम् ॥
शिव उवाच ।
कायानगरमध्ये तु मारुतः क्षितिपालकः ।
भोजने वञ्चने चैव गतिरष्टादशाङ्गुला ॥
प्रवेशे दशभिः प्रोक्तो निर्गभे द्वादशाङ्गलः ।
प्राणस्थे तु गतिर्देवि स्वभावाद्द्वादशाङ्गुला
॥
गमने च चतुर्व्विंशा नेत्रवेदास्तु धावने ।

स जयति रिपुसैन्यं स्तम्भमात्रस्वरेण
प्रभवति न च विघ्नः केशवस्यापि लोके ॥
जीवलक्षं जीवरक्षां जीवाङ्गे परिधाय च ।
जीवो व्रजति यो युद्धे जीवो जयति
मेदिनीम् ॥
भूमौ जले च कर्त्तव्यं गमनं शान्तिकर्म्मसु
।
वह्नौ वायौ प्रदीप्ते तु खे पुनर्न भवत्यपि ॥
जीवेन शस्त्रं बध्नीयात् जीवेनैव
विकाशयेत् ।
जीवेन प्रक्षिपेत् शस्त्रं युद्धे जयति सर्व्वथा
॥
आक्रम्य प्राणपवनं समारोहेत वाहनम् ।
समुत्तरेत् पदं दत्त्वा सर्व्वकार्य्याणि
साधयेत् ।
अपूर्णशत्रुमामग्रीं पूर्णं वा स्वबलं यदा ।
कुरुते पूर्णतत्त्वस्थो जयत्येको वसुन्धराम्
॥
यन्नाडो वहते चाङ्गे तस्यामेवाधिदेवता ।
सम्मुखापि दिशा तेषां सर्व्वकार्य्यफलप्रदा
॥
आदौ तु क्रियते मुद्रा पश्चाद्युद्धं समाचरेत्
।
सर्व्वा मुद्रा कृता येन तेषां मिर्द्धिर्न संशयः
॥
चन्द्रप्रवाहेऽप्यथ सूर्य्यवाहे
भटाः समायान्ति च युद्धकामाः ।
समोरणस्तत्त्वविदा प्रयातो
या शून्यता सा प्रतिकूलदृष्टा ॥
यद्दिशं वहते वायुर्युद्धं तद्दिशि दापयेत् ।
जयत्येव न सन्देहः शक्रोऽपि यदि वाग्रतः
॥
यत्र नाड्यां वहेद्वायुस्तदन्तः प्राणमेव च ।
आकृष्य गच्छेत् कर्णान्त जयत्येव
पुरन्दरम् ॥
प्रतिपक्षप्रहारेभ्यः पूर्णाङ्गं योऽभिरक्षति ।
न तस्य रिपुभिः शक्तिर्बलिष्ठैरपि हन्यते ॥
अङ्गुष्ठतर्ज्जनीवश्ये पादाङ्गुष्ठस्तथाध्वनि ।

तेनासौ जयमाप्नोति नात्र कार्य्या
विचारणा ॥
यदि संग्रामकाले तु वामनाड्यां सदा वहेत्
।
स्थायिनो विजयं बिन्द्यात्
रिपुवश्यादयोऽपि च ॥
यदि संग्रामकाले तु सूर्य्यस्तु व्यावृतो
वसेत् ।
तदा जयी जयं बिन्द्यात् स
देवासुरमानवात् ॥
रणे हरति शक्रस्थं वामायां प्रविशेन्नरः ।
स्थानं द्विधावचाराभ्यां जयं सूर्य्येण
धावति ॥
योधद्वयकृते प्रश्ने पूर्णस्य प्रथमो जयः ।
रिक्ते चैव द्वितीयस्तु जयी भवात नान्यथा
॥
पूर्णनाडोगतः पृष्ठ शून्याङ्गञ्च तदग्रतः ।
शून्यस्थाने कृतः शत्रुर्म्रियते नात्र संशयः ॥
वामचारे समं नाम यस्य तस्य जयो भवेत्
।
पृच्छको दक्षिणे भागे विजयी विषमाक्षरः ॥
यदा पृच्छति चन्द्रस्थस्तदा
सन्धानमादिशेत् ।
पृच्छेद्यदा च सूर्य्यस्थस्तदा जानीहि
विग्रहम् ॥
पार्थिवे च समं युद्धं सिद्धिर्भवति वारुणे ।
वह्नौ युद्धे जयस्तस्य मृत्युर्वायौ च नाभसे
॥
नैमित्तिकप्रमादाद्वा यदा न ज्ञायतेऽनिलः ।
प्रश्नकाले तदा कुर्य्यात् द्वन्द्वं यत्नेन
बुद्धिमान् ॥
निश्चलां धारणां कृत्वा पुष्पं हस्तात्
निपातयेत् ।
पूर्णाङ्गे पुष्पपतनं शून्ये वा तत्फलं वदेत् ॥
तिष्ठन्नुपविशन् वापि प्राणमाकर्षयेन्निजम् ।
मनीभङ्गमकुर्व्वाणः सर्व्वकार्य्येषु पूजितः ॥
न कालो विविधं घोरं न शस्त्रं न च पन्नगाः
।

मैथुने पञ्चषष्टिश्च शयने च शताङ्गुला ॥
एकाङ्गुलकृते न्यूने प्राणे निष्कामता मता ।
आनन्दस्तु द्वितीये स्यात् कविशक्तिस्तृती-
यके ॥
वाचासिद्धिश्चतुर्थे तु दूरदृष्टिस्तु पञ्चमे ।
षष्ठे त्वाकाशगमनं चण्डवेगश्च सप्तमे ॥
अष्टमे सिद्धयश्चाष्टौ नवमे निधयो नव ।
दशमे दशमूर्त्तिश्च क्षयनाशो दशैकके ॥
द्वादशे हंसचारश्च गङ्गामृतरमं पिबेत् ।
आनखाग्रे प्राणपूर्णे कस्य भक्ष्यञ्च भोजनम्
॥
एवं प्राणविधिः प्रोक्तः सर्व्वकार्य्यफलप्रदः
।
ज्ञायते गुरुवाक्येन न विद्याशास्त्रकोटिभिः
॥ * ॥
प्रातश्चन्द्रो रविः सायं यदि दैवान्न लभ्यते
।
मध्याह्नान्मध्यरात्राद्वा परतस्तु प्रवर्त्तते ॥
दरयुद्धे जयी चन्द्रः समीपे च दिवाकरः ।
वहन्नाड्यां गतः पादे सर्व्वसिद्धिः प्रजायते
॥
यात्रारम्भे विवाहे च प्रयेशे नगरादिके ।
शुभकार्य्येषु सर्व्वेषु चन्द्रचारः प्रशस्यते ॥
अयनतिथिदिनेशः स्वोयतत्त्वेन युक्तो
यदि वहति कथञ्चित् दैवयोगेन पुंसाम् ।

युद्धकाले च कर्त्तव्यं लक्षयोद्धा जयी भवेत्
॥
निशाकरे रवौ चारे मध्ये यस्य समीरणः ।
स्थितो रक्षेत् दिगन्तानि जयाकाङ्क्षी नरः
सदा ॥
श्वासप्रवेशकालेषु दूतो जल्पति
वाञ्छितम् ।
तस्यार्थाः सिद्धिमायान्ति निर्गमे नैव
सुन्दरि ॥
लाभादीन्यपि कार्य्याणि पृष्टानि
कीर्त्तितानि च
जीवे विशति सिध्यन्ति हानिर्निःसरणे
भवेत् ॥
नरि दक्षा स्वकीया च स्त्रियां वामा
प्रशस्यते ।
कुम्भकं युद्धकाले च तिस्रो नाड्यश्च या
गतिः ॥
हकारस्य सकारस्य विना भेदं स्वरः
कथम् ।
सोऽहं हंसपदेनैब जीवो जपति सर्व्वदा ॥
शून्याङ्गं पूरितं कृत्वा जीवाङ्गं गोपयेद् यदि
।
जीवाङ्गे घातमाप्नोति शून्याङ्गं रक्षते सदा
॥
वामे वाप्यथवा दक्षे यदि पृच्छति पृच्छकः
।
तत्र घातो न जायेत शून्ये घातं
विनिर्द्दिशेत् ॥
भूतत्त्वेनोदरे घातः पादस्थानेऽम्बुना भवेत्
।
उरःस्थानेऽग्नितत्त्वेन करस्थाने च वायुना
॥
शिरसि व्योमतत्त्वेन कृत आघातनिर्णयः ।
एवं पञ्चविधो घातः स्वरशास्त्रे प्रकाशितः
॥
युद्धकाले यदा चन्द्रः स्थायी जयति
निश्चितम् ।
यदा सूर्य्यप्रवाहस्तु वादी विजयते तथा ॥
जयमध्ये तु सन्देहो नाडीमध्ये तु लक्षयेत्
।
सषुम्नायां गतः प्राणं समरे शत्रुसङ्कटे ॥

न शत्रुव्याधिचौराद्याः शून्यस्थं नाशितुं
क्षमाः ॥
जीवेन स्थापयेद्वायुं जीवेनारम्भयेत् पुनः ।
जीवेन क्रीडते नित्यं द्यूतं जयति सर्व्वदा ॥
कथञ्चिद्विजयी युद्धे स्वरज्ञानं विना नृपः ।
स्वरज्ञानवलादग्रे निष्फलं कोटिधा भवेत्
।
इह लाके परत्रैव स्वरज्ञानी बली सदा ॥
दशशतायुतं लक्षं देशाधिपबलं क्वचित् ।
शतक्रतुसुरन्द्राणां बलं कोटिगुणं भवेत् ॥
ॐकारः सर्व्ववर्णानां ब्रह्माण्डे भास्करो
यथा ।
मर्त्यलोके तया पूज्यः स्वरज्ञानी पुमानपि
॥
एकाक्षरप्रदातारं नाडीभेदनिवेदकम् ।
पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा चानृणी
भवेत् ॥
देव्युवाच ।
परस्परं मनुष्याणां युद्धे प्रोक्तो जयस्तथा ।
यमयुद्धे समुत्पन्ने मनुष्याणां कथं जयः ॥
ईश्वर उवाच ।
ध्यायेद्देवं स्थिरे जीवे जुहुयात् जीवसङ्गमे
।
इष्टसिद्धिर्भवेत्तस्य महालाभो जयो भवेत्
॥
निराकारात् समुत्पन्नं साकारं सकलं जगत्
।
तत् साकारं निराकारे ज्ञाने भवति तन्मयम्
॥”
इति युद्धप्रकरणम् ॥
श्रीदेव्युवाच ।
“नरयुद्धं यमयुद्धं द्वयं प्रोक्तं महेश्वर ।
इदानीं देवदेवीनां वशीकरणकं वद ॥
ईश्वर उवाच ।
चन्द्रं सूर्य्येण चाकृष्य
स्थापयेज्जीवमण्डले ।
आजन्मवशगा वामा कथितोऽयं तपोधनैः
॥
जीवेन गृह्यते जीवो जीवो जीवस्य दीयते
॥

जीवस्थाने गतो जीवो
वालाजीवान्तवश्यकृत् ।
चन्द्रं पिबति सूर्य्येण सूर्य्यं पिबति
चन्द्रतः ।
अन्योन्यकालभावेन
जीवेदाचन्द्रतारकम् ॥
पतज्जानाति यो योगी एतत् पठति
नित्यशः ।
सर्व्वदुःखविनिर्म्मुक्तो लभते वाञ्छितं
फलम् ॥
सेफोऽङ्गे वहते नाडी तन्नाडीबोधनं
कुरु ।
करे बद्धा स्वमुष्कञ्च जरणं जयते युवा
॥
उभयोः कुम्भकं कत्वा मुखे श्वामं
निपीयते ।
निश्चला च यदा नाडी देवकन्यावशं
कुरु ॥
रात्रौ च यामवेलायां प्रसुप्ते कामिनीजने
।
ब्रह्मबीजं पिबेद् यस्तु बालाजीवहरो
नरः ॥
इति देवीवश्यप्रकरणम् ॥ * ॥
अष्टाक्षरं जपित्वा तु तस्मिन् काले
ऋतौ सति ।
तत्क्षणं दीयते चन्द्रो मोहमायाति
कामिनी ॥
शयने वा प्रसङ्गे वा चुम्बनालिङ्गनेऽपि
वा ।
यः सूर्य्येण पिबेच्चन्द्रं स
भवेन्मकरध्वजः ॥
शिवमालिङ्गते शक्त्या प्रमङ्गे दक्षिणेऽपि
वा ।
तत्क्षणाद्दापयेद्यस्तु मोहयेत्
कामिनीशतम् ॥
सप्तनवत्रयपञ्चवारान् सङ्गांस्तु सूर्य्यगे ।
चन्द्रे द्वितूर्यषट् कृत्वा वश्या भवति
कामिनी ॥

गर्भाधानं मारुते स्याच्च दुःखी
दिशाख्यातो वारुणे सौख्ययुक्तः ।
गर्भस्रावी स्वल्पजीवो च वह्नौ
भोगी भव्यः पार्थिवेनार्थयुक्तः ॥
धनवान् मौख्यसंयुक्तो भोगवान् गर्भसंस्थितः ।
स्यान्नित्यं वारुणे तत्त्वे व्योम्नि गर्भं निहन्यते ॥
माहेयेषु सुतोत्पत्तिर्व्वारुणे दुहिता भवेत् ।
शेषेषु गर्भहानिः स्यात् जातमात्रस्य वा मृतिः ।
रविमध्यगतश्चन्द्रश्चन्द्रमध्यगतोरविः ।
ज्ञातव्यं गुरुतः शोघ्रं न विद्याशास्त्रकोटिभिः ॥
इति गर्भप्रकरणम् ॥ * ॥
अथ संवत्सरप्रकरणम् ।
चैत्रशुक्लप्रतिपदि प्रातस्तत्त्वविभ्दतः ।
पश्येद्विचक्षणो योगी दक्षिणे चोत्तरायणे ॥
चन्द्रस्योदयवेलायां वहमानोऽथ तत्त्वतः ।
पृथिव्यापस्तथा वायुः सुभिक्षं सर्व्वशस्यजम् ॥
तेजो व्योम्नि भय घोरं दुर्भिक्षं कालतत्त्वतः ।
एवं तत्त्वफलं ज्ञेयं वर्षे मासे दिने तथा ॥
पृथिव्यादिकतत्त्वेन दिनमासाब्दजं फलम् ।
शोभनञ्च तथा दुष्टं व्योममारुतवह्निभिः ॥
मध्यमा भवति क्रूरा दुष्टा च सर्व्वकर्म्मसु ।
देशभङ्गमहारागक्लेशकष्टादिदुःखदा ॥
मेषमंक्रान्तिदिवमे स्वग्भेदं विचारयेत् ।
सम्बत्सरफलं ब्रूयात् लोकानां तत्त्वचिन्तकः ॥
सुभिक्षं राष्ट्रवृद्धिः स्यात् बहुशस्या वसुन्धरा ।
बहुवृष्टिस्तथा सौख्यं पृथ्वीतत्त्वं बहेद्यदि ॥
अतिवृष्टिः सुभिक्षं स्यादाबोग्यं सौख्यमेव च ।
बहुशस्या तथा पृथ्वी जलतत्त्वं बहेद्यदि ॥
दुर्भिक्षं राष्ट्रभङ्गः स्याद्रोगोत्पत्तिस्तु दारुणा ।
अल्पादल्पतरा वृष्टिरग्नितत्त्वं वहेद्यदि ॥
उत्पातोपद्रवा भीतिरल्पवृष्टिः स्युरीतयः ।
मेषसंक्रान्तिवेलायां वायुतत्त्वं वहेद्यदि ॥
उद्गारतापज्वरा भीतिरल्पा वृष्टिः क्षितौ
भवेत् ।
मेषसंक्रान्तिवेलायां व्योमतत्त्वं वहेद्यदि ॥
तत्रापि शून्यता ज्ञेया शस्यादीनां सुखस्य च ।
पूर्णे प्रवेशने श्वासे स्वस्वतत्त्वेन सिद्धिदः ॥
सूर्य्ये चन्द्रेऽन्यथाभूते संग्रहः सर्व्वसिद्धिदः ।
विषमे वह्नितत्त्वस्य ज्ञायते केवलं नभः ॥

आदौ शून्यगतं पृच्छेत् पश्चात् पूर्णो
विशेद्
यदि ।
मूर्च्छितोऽपि ध्रुवं जीवेत् यदर्थं
परिपृच्छति ॥
चन्द्रस्थाने स्थितो जीवः सूर्य्यस्थाने च
पृच्छति ।
तदा प्राणविनिर्म्मुक्तो यदि वैद्यशतैर्वृतः ॥
पिङ्गलायां स्थितो जीवो वामे दूतश्च
पृच्छति ।
तदापि म्रियते रोगी यदि त्राता महेश्वरः
॥
दक्षिणेन यदा वायुर्द्दखं रौद्राक्षरं वदेत् ।
तदा जीवति जीवोऽसौ चन्द्रे समफलं
भवेत् ॥
जीवाकारञ्च वा धृत्वा जीवाकारं
विलोकयन् ॥
जीवस्थो जीवितं पृच्छेत्तस्माज्जीवन्ति
ते
ध्रुवम् ॥
प्रश्ने वाधः स्थितो जीवस्तदा जीवो हि
जीवति ।
ऊद्र्ध्वचारगतो जीवो याति जीवो
यमालयम् ॥
विपरीताक्षरं प्रश्ने रिक्तायां पृच्छको यदि
।
विपर्य्ययञ्च विज्ञेयं विषमस्थोदये सति ॥
यस्मिन् भागे चरेत् जीवस्तत्रस्थः
परिपृच्छति ।
तदा जीवति जीवोऽसौ यदि रोगैः
प्रपीडितः ॥
वातोदये वातकरञ्च भक्ष्यं
पित्तोदये पित्तकरञ्च भक्ष्यम् ।
श्लेष्मोदये श्लेष्मकरञ्च भक्ष्यं
पुंसि प्रभुक्ते प्रभवन्ति रोगाः ॥
एकस्य भूतस्य विपर्य्ययेण
रोगाभिभूतिर्भ्भवतीह पुंसाम् ।
तयार्द्वयार्बन्धुसुहृद्विपत्तिः
पक्षत्रये व्यत्ययतो मृतिः स्यात् ॥

मूर्य्यचन्द्रौ समाकृष्य
सर्पाक्रान्त्याधरोष्ठयोः।
महापद्मे मकं स्पृष्टा वारं वारमिदं चरेत्
।
आघाणपेति पद्मस्य यादन्निदावशं गता
।
पश्चाज्जाग्रनि वेलायां चोष्यते
गलचक्षुषो ॥
अनेन विधिना कामी वगयेत्
मर्व्वकामिनीम्।
इदं न वाच्यमन्यस्मिन्नि आज्ञा
परमेश्वरि ॥
इति रतिस्त्रीवश्यप्रकरणम्॥ * ॥
अथ गर्भप्रकरणम्।
ऋतुकालभवा नारी पञ्चमेऽह्नि यदा
भवेत्।
सूर्य्याचन्द्रमसोर्योगे सेवनात्
पुत्रसम्भवः ॥
शङ्खवल्ली गवां दुग्धं पृथ्व्यापी वहते यदा
।
भर्त्ताग्रे वदेद्वाक्यं अर्घ्यं देहि त्रिभिर्व्वचः
॥
ऋतुस्नाता पिबेन्नारी ऋतुदानञ्च
योजयेत्।
रूपनावण्यसम्पन्नो नरसिंहः प्रसूयते ॥
सुषुम्ना सूर्य्यगन्धेन ऋतुदानञ्च
योजयेत्।
अङ्गहीनः पुमान् यस्तु जायते
कृशविग्रहः ॥
विषमाङ्के दिवा रात्री विषमाङ्के
दिनाधिपः।
चन्द्रनेत्राग्नितत्त्वेषु बन्ध्या
पुत्रमवाप्नुयात्॥
रतारम्भे रविः पुंसां सुरतान्ते सुधाकरः
।
अनेन क्रमयोगेन नादत्ते दैवदण्डकः।
रतारम्भे रविः पुंसां स्त्रियाञ्चैव
सुधाकरः।
उभयोः सङ्गमे प्राप्ते बन्ध्या
पुत्रमवाप्नुयात्॥

तत् कुर्य्याद्वस्तु संग्राह्यं द्विमासे च महार्घता।
स्वरज्ञानं शिवः पश्येल्लक्ष्मीपतिस्तथा भवेत्॥
एकत्र शरीरं यस्य सुखं तस्य सदा भवेत्।
नाडीत्रयं विजानाति तत्त्वज्ञानं तथैव च ॥
नैव तेन भवेत्तुल्यं लक्षकोटिरसायनम्।
रवौ संक्रमणे नाडी गलान्ते च प्रवर्त्तते ॥
सलिले वह्नियोगेऽपि रौरवं जगतीतले।
इति संवत्रफलम्॥ * ॥
अथ रोगप्रकरणम्।
महीतत्त्वे स्वरोगञ्च जले च जलमातरः।
रवौ चारे तेजस्तत्त्वे वायुतत्त्वे च शाकिनी ॥
शून्यतत्त्वेन रोगश्च पित्तदोषसमुद्भवः।
दानपुण्यं द्विजातीनां पिण्डश्राद्धं विधीयते ॥

इति रोगज्ञानम्॥ * ॥
अथ कालज्ञानम्।
मासादौ वत्सरादौ च पक्षादौ च
यथाक्रमम्।
क्षयं कालं परीक्षेत वायुचारवशात् सुधीः
॥
पञ्चभूतात्मकं देह शशी स्नेहेन सिञ्चति।
रक्षयेत् सूर्य्यवातेन तेन जीवः स्थिरो
भवेत्॥
मारुतं बन्धयित्वा तु सूर्य्यं बन्धयते यदि
।
अभ्यासाज्जीवते जीवः सूर्य्यकालेऽपि
वञ्चते ॥
गगनादवते चन्द्रः कायापद्मानि सिञ्चति।
कर्म्मयागः सदाभ्यासात् रमते शशिनः
प्लवात्॥
शशाङ्कं वारयेद्रात्रौ दिवा वार्य्यो दिवाकरः
।
इत्यभ्यासरतो योगी स योगी नात्र
संशयः ॥
दिवा न पूजयेत् लिङ्गं रात्रौ देवीं न
पूजयेत्।
रहसि ज्ञानजनकं पञ्चसूत्रे समन्वितम्॥
अहोरात्रं यदैकत्र वहते यस्य मारुतः।
तदा तस्य भवेदायुः संपूर्णं वत्सरद्वयम्॥
अहोरात्रद्वयं यस्य पिङ्गलायां सदागतेः।
तस्य वर्षद्वयं ज्ञेयं जीवितं तत्त्ववेदिभिः ॥
त्रिरात्रं वहते यस्य वायुरेकपुटे स्थितः।
वत्सरं यावदायुः स्यात् प्रवदन्ति
मनीषिणः ॥
रातौ चन्द्रो दिवा सूर्य्यो वहेद्यस्य
निरन्तरम्।
विजानीयात्तस्य मृत्युः षण्मासाभ्यन्तरे
सुधीः ॥
एकादिषोडशाहानि यदि भानुर्निरन्तरम्।
वहेद्यस्य च वै मृत्युः शेषाहेन च मासिकैः
॥
सम्पूर्णं वहते सूर्य्यश्चन्द्रमा नैव दृश्यते।
पक्षेण जायते मृत्युः कालज्ञानेन भाषितम्
॥

| | | |
|---|---|---|
| चन्द्रनाडी वहेत् प्रश्ने गर्भे कन्या तदा भवेत् ।<br>सूर्य्ये भवेत्तदा पुत्त्रो शून्ये गर्भो निहन्यते ॥<br>चन्द्रे स्त्री पुरुषः सूर्य्ये मध्यमार्गे नपुंसकः ।<br>गर्भप्रश्ने यदा दूतः तदा पुत्त्रः प्रजायते ॥<br>पृथ्व्यां पुत्त्री जले पुत्त्रः कन्यका तु प्रभञ्जने ।<br>तेजसा गर्भपातः स्यात् नभस्यपि नपुंसकम् ॥<br>शून्ये शून्यं युगे युग्मं गर्भपातस्तु संक्रमे ।<br>सूर्य्यभागे कृते पुत्त्रश्चन्द्रचारे तु कन्यका ॥<br>विषुवे गर्भपातः स्यात् भावी वाथ नपुंसकः ।<br>तत्त्वे वित्तं विजानाति कथितं तत्र सुन्दरि ॥ | | |

सम्पूर्णं वहते चन्द्रः सूर्य्यो नैव च दृश्यते ।
मासेन दृश्यते मृत्युः कालज्ञानेन भाषितम् ॥
मूत्रं पुरीषं वायुश्च समकालं प्रजायते ।
तदासौ चलितो ज्ञेयो दशाहे म्रियते ध्रुवम् ॥
एवं चन्द्रप्रवाहञ्च सुखलाभजयस्तथा ।
सूर्य्यचन्द्रप्रणाशे तु सद्यो मृत्युर्न संशयः ॥
अरुन्धती ध्रुवश्चैव विष्णोस्त्रीणि पदानि च ।
आयुर्हीना न पश्यन्ति चतुर्थं मातृमण्डलम् ॥
अरुन्धती भवेज्जिह्वा ध्रुवो नामाग्रमुच्यते ।
भ्रुवोर्म्मध्ये विष्णुपदं तारकं मातृमण्डलम् ॥
नवध्रुवः सप्तमो वा पञ्चतारा त्रिनासिका ।
जिह्वामेकदिनं प्रोक्तं म्रियते मानवो ध्रुवम् ।
कोणमक्ष्णोऽङ्गुलीभ्यान्तु किञ्चित् पीड्य निरी-
क्षयेत् ।
यदा न दृश्यते बिन्दुर्द्दशाहेन जनो मृतः ॥
इति कालज्ञानम् ॥ * ॥
इडा गङ्गेति विज्ञेया पिङ्गला यमुना नदी ।
मध्ये सरस्वती विद्यात् प्रयागादि समन्ततः ॥
आदौ साधनमाख्यातं सद्यःप्रत्ययकारकम् ।
बद्धपद्मासनो योगी बन्धयेदुड्डियानकम् ॥
पूरकः कुम्भकश्चैव रेचकश्च तृतीयकः ।
ज्ञातव्यो योगिभिर्नित्यं देहसंसिद्धिहेतवे ॥
पूरकः कुरुते पुष्टीर्धातुमाम्यं तथैव च ।
कुम्भकः स्तम्भनं कुर्य्यात् जीवरक्षाविवर्द्धनम् ॥
रेचको हरते पापं कुर्य्याद्योगपदं व्रजेत् ।
पश्चात् संग्रामवत्तिष्ठेत् पद्मे बन्धे च कारयेत् ॥
कुम्भयेत् सहजं वायुं यथाशक्त्या प्रयत्नतः ।
रेचयेच्चन्द्रमार्गेण सूर्य्येण पूरयेत् सुधीः ॥
चन्द्रं पिबति सूर्य्यश्च सूर्य्यं पिबति चन्द्रमाः ।
अन्योन्यकालभावेन जीवेदाचन्द्रतारकम् ॥
स्वीयाङ्गे वहते नाडी तन्नाडीरोधनं कुरु ।
मुखबन्धममुञ्चन् वै पवनं जायते युवा ॥
मुखनासाक्षिकर्णानामङ्गुलीभिर्निरोधयेत् ।
तत्त्वोदयमिति ज्ञेयं सम्मुखीकरणं प्रिये ॥
तस्य रूपं गतिः स्वादो मण्डलं लक्षणन्त्विदम् ।
यो वेत्ति वा नरो लोके स तु शूद्रोऽपि योग-
वित् ॥
निराशीर्निर्म्मली योगी न किञ्चिदपि चिन्तयेत् ।
वासनामुन्मनां कृत्वा काणं जयति लीलया ॥

सर्व्वदुःखैर्व्विनिर्मुक्तो लभते वाञ्छितं
फलम् ॥
स्वरज्ञानं गिरो यस्य लक्ष्मीः करतले
भवेत् ।
एतत्तु शरीरे यस्य सुखं तस्य सदा
भवेत् ॥
प्रणवः सर्व्ववेदानां ब्रह्माण्डे भास्करो
यथा ।
मर्त्यलोके तथा पूज्यः स्वरज्ञानी
पुमानपि ॥
नाडीत्रयं विजानाति तत्त्वज्ञानं तथैव
च ।
नैव तेन भवेत्तुल्यं
लक्षकोटिरसायनम् ॥
एकाक्षरप्रदातारं नाडीभेदनिवेदकम् ।
पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा
चानृणी भवेत् ॥
स्वरस्तत्त्वं तथा युद्धं देववश्यं
स्त्रियस्तथा ।
गर्भाब्दरोगकालाख्यं
नवप्रकरणान्वितम् ॥
एवं प्रवर्त्तितं लोके सिद्धिदं
सिद्धयोगिभिः ।
आचन्द्रार्कं गृही जीयात् पठनात्
सिद्धि-
दायकम् ॥
सुस्थासने समासीनं
निद्रामाहारमल्पकम् ।
चिन्तयेत् परमात्मानं
यद्वदेत्तद्भविष्यति ॥”
इति शिवगौरीसंवादे
नवप्रकरणान्वितपवन-
विजयं नाम स्वरोदयं ममाप्तम् ॥

**स्वर्गः**, पुं, (स्वरिति गीयते इति । मै + कः ।
यद्वा, सुष्ठु अर्ज्यते इति । अर्ज अर्जने
+ घञ् ।
शङ्कादित्वात् कुत्वम् ।)
देवतानामालयः । तत्-

न चात्र क्रियते भूयः सोऽत्र दोषो महान्
श्रुतः ॥
असन्तोषश्च भवति दृष्ट्वा दीप्तां परश्रियम्
।
संप्राप्ते कर्म्मणामन्त सहसा पतनं तथा ॥
इह यत् क्रियते कर्म्म फलं तत्रैव भुञ्जते ।
कर्म्मभूमिरियं राजन् फलभूमिस्त्वसौ
स्मृता ॥”
इति पाद्मे भूखण्डे ९० अध्यायः ॥
अन्यत् वह्निपुराणे
शिवेरुपाख्याननामाध्याये
मात्स्ये १०३ । १०४ अध्याययोरपि
द्रष्टव्यम् ॥
अपि च ।
सुनन्द उवाच ।
शृणु राजन् प्रवक्ष्यामि विष्णोरद्भुतकर्म्मणः
।
विराडरूपस्य सस्थानमाख्यान
महदद्भुतम् ॥
यावती भू समुद्दिष्टा ससमुद्राद्रिकानना ।
प्रतिभाता महाराज किरणैश्चन्द्रसूर्य्ययोः
॥
वियच्च तावदुपरि विस्तारपरिमण्डलम् ।
पञ्चविंशतिकोट्यस्तु योजनानान्तु
तत्स्मृतम् ॥
नवतीनां महस्राणि योजनानि महीपते ।
भूमेरूर्द्धञ्च लोकानां सिद्धचारणरक्षमाम् ॥
ये च विद्याधरा यक्षरक्षोगन्धर्व्वकिन्नराः ।
भूतप्रेतपिशाचाश्च तेषां तत्
स्थानमीरितम् ॥
ततो राहुर्न्महाबाहो त्रयोदशसहस्रकम् ।
योजनानां पविस्तारं मण्डलं तस्य कथ्यते
॥
स्मरन् वैरं पुरा प्राप्तं यः पर्व्वणि महाग्रहः ।
ग्रामाय धावति कोधात् पुप्पवन्तौ महीपते
॥
तदैव भगवच्चक्रं सहस्नार्कोपमद्युति ।
उपतिष्ठति तद्भीत्या पुनरेव निवर्त्तते ॥
उपरागं वदन्त्येवं पुण्यकालश्च कथ्यते ।

विश्वस्य वेशिका शक्तिर्नेत्राभ्यां परिदृश्यते ।
तत्रस्थं तु मनो यस्य याममात्रं भवेदिह ॥
तस्यायुर्व्वर्द्धते नित्यं घटिका त्रिप्रमाणतः ।
शिवेनोक्तं पुरा तन्त्रं सिद्धस्य गुणगह्वरम् ॥
बद्ध्वा पद्मासनस्थो गुदपवनलयं संनिरुध्योद्ध्वं-
मुच्चैः
प्राणं रन्ध्रेण कुम्भत्रयजितमनिलं प्राणशक्त्या निरुध्य ।
एकीभूतं सुषुम्नाविबरमुखगतं ब्रह्मरन्ध्रे च नीत्वा
निःक्षिप्याकाशमार्गे शिवचरणरता यान्ति ते केऽपि धन्याः ॥ * ॥
एतज्जानाति यो योगी एतत् पठति नित्यशः ।

पर्य्यायः । स्वः २ नाकः ३ त्रिदिवः ४ त्रिदशा-
अयः ५ सुरलोकः ६ द्योः ७ द्यौ ८ त्रिपि-
ष्टपम् ९ । इत्यमरः । १ । १ । ६ ॥ मन्दरः १०
अवरीहः ११ गौः १२ रमतिः १३ फलो-
दयः १४ । इति जटाधरः ॥ देवलोकः १५
स्वर्लोकः १६ ऊद्ध्वलोकः १७ सुखाधारः १८
सौरिकः १९ शक्रभुवनम् २०
दिवानम् २१ ।
इति शब्दरत्नावली ॥ * ॥ तस्य गुणदोषा
यथा, --
सुबाहुरुवाच ।
"स्वर्गस्य मे गुणान् ब्रूहि साम्प्रतं द्विजमत्तम ।
एतत् सर्व्वं द्विजश्रेष्ठ करिष्यामि न संशयः ॥
जैमिनिरुवाच ॥
नन्दनादीनि दिव्यानि रम्याणि विविधानि च ।
तत्रोद्यानानि पुण्यानि सर्व्वकामशुभानि च ॥
सर्व्वकामफलैर्वृक्षैः शोभितानि ममन्ततः ।
विमानानि सुदिव्यानि परितान्यप्सरोगणैः ॥
सर्व्वत्रैष विधित्राणि कामगानि रसानि च ।
तरुणादित्यवर्णानि मुक्ताजालान्तराणि च ॥
चन्द्रमण्डलशुभ्राणि हेमशय्यासनानि च ।
सर्व्वकामसमृद्धाश्च सुखदुःखविवर्जिताः ॥
नराः सुकृतिनस्ते तु विचरन्ति यथासुखम् ।

लक्षयोजनतो भानुर्भूमेरेष व्यवस्थितः ॥
तानोः सकाशादुपरि लक्षे लक्ष्यः क्षपाकरः
नक्षत्रमण्डलं चन्द्राल्लक्षयोजनमुच्छ्रितम् ॥
नक्षत्रमण्डलात् सौम्य उपरिष्टाद्विलक्षतः ।
बुधात् शुक्रो द्विलक्षे तु शुक्राद्भौमो द्विलक्षके ॥
मङ्गलादुपरिष्टाच्च गीष्पतिर्लक्षकद्वये ।
द्विलक्षयोजनोत्मेधः सौरिर्द्देवपुरोहितात् ॥
शतायुतसमुच्छ्रायं सौरेः सप्तर्षिमण्डलम् ।
सप्तर्षिभ्यः सहस्राणां शतादूद्र्ध्वं ध्रुवस्थितिः ॥
पाडगम्यं हि यत्किञ्चिद्वस्त्वस्ति धरणीतले ।
तद्भूर्णोक इति ख्यातं शाकद्वीपादिकाननम् ॥
भूर्लोकाच्च भुवर्लोकः सूर्य्यावधिरुदीरितः ।
आदित्यादाध्रुवं राजन् स्वर्लोकः कथ्यते बुधैः ॥
महर्लोकः क्षितेरूद्ध्वमेककोटिप्रमाणतः ।
कोटिद्वये वर्त्तमानो जनो भूर्लोकतो नृप ॥
उपरिष्टात् जितेरष्टौ कोटवः सत्यमीरितम् ।
सत्यादुपरि वैकुण्ठो योजनानां प्रमाणतः ॥
भूर्णोकात् परिसंख्यातः कोटिरष्टादश प्रभो ।
यत्नास्ते श्रीपतिः साक्षात् सर्व्वेषामभयप्रदः ॥
बैकुण्ठादुत्तरे शैवो लोकः षोडशकोटयः ।
तिर्य्यगेव महाराज कैलासाख्यस्तु पर्व्वतः ॥
पार्व्वत्या सहितः शम्भुर्यत्रास्ते स्वगणैर्वृतः ॥"
इति पाद्मे स्वगखण्डेभूरादिलोकवर्णनं ६ अः ॥
स्वर्गस्वरूपं कर्म्मविशेषेण स्वर्गविशेषगमनञ्च
यथा, --

|  |  |  |
| --- | --- | --- |
|  | न तत्र नास्तिका यान्ति न स्तेया नाजितेन्द्रियाः ॥<br>न नृशंसा न पिशुनाः कतघ्ना न च मानिन ।<br>मत्यास्तपःस्थिताः शूरा दयावन्तः क्षमापराः ॥<br>यन्वानो दानशीलाश्च तत्र गच्छन्ति ते नराः ।<br>न रोगो न जरा मृत्युर्न शोको न हिमादयः ॥<br>न तत्र क्षुत्पिपासा च कस्य ग्लानिर्न दृश्यते ।<br>एते चान्ये च वहवो गुणाः सन्ति च भूपते ॥<br>दोषास्तत्रैव ये सन्ति तान् शृणुष्व च साम्प्रतम् ।<br>शुभस्य कर्म्मणः कृतुस्नं फलं तत्रैव भुज्यते । |  |

सूत उवाच ।
"स्वर्गस्थानं महापुण्यं प्रोच्यमानं निबोध मे ।
भारते कृतपुण्यानां देवानामपि चालयम् ॥
मध्ये पृथिव्यामद्रीन्द्रो भास्वाम् मेरुर्हिरण्मयः ।
योजनानां सहस्राणि चतुरशीतिः समुच्छ्रितः ॥
प्रविष्टः षोडशाधस्ताद्धरण्यां धरणीधरः ।
तावत्प्रमाणा पृथिवी पर्व्वतश्च समन्ततः ॥
तस्य शृङ्गत्रयं मूद्र्ध्नि स्वर्गो यत्र प्रतिष्ठितः
नानाद्रुमलताकीर्णं नानारत्नोपशोभितम् ॥
मध्यगं पश्चिमं पूर्ब्बं मेरोः शृङ्गाणि त्रीणि वै ।
प्रयुतोच्छ्रितमात्राणि द्वे शृङ्गे तस्य मध्यतः ॥
मध्यस्थं स्फाटिकं शृङ्गं वैदूर्य्यकरकामयम् ।
इन्द्रनीलमयं पूर्ब्बं माणिक्यं पश्चिमं स्मृतम् ॥
योजनानां सहस्राणि नियुतानि चतुर्द्दश ।
उच्छ्रितं मध्यगं शृङ्गं स्वर्गो यत्र प्रतिष्ठितः ॥
प्रयुतान्तरितं शृङ्गं मूद्र्ध्नि च्छत्राकृति स्थितम् ।
पूर्ब्बपश्चिमशृङ्गाणां सकलं मध्यमस्य च ॥
त्रिपिष्टपो नाकपृष्ठो अप्सरःशान्तिनिर्व्वृती ।
आनन्दोऽथ प्रमोदश्च स्वर्गाः शृङ्गे च मध्यमे ॥
श्वेतश्च पौष्टिकश्चैव उपशोभनमन्मथौ ।
येन येन हि भावेन यद्यद्दानं प्रयच्छति ।
तत्तत् स्वर्गभवाप्नोति यद्यदिच्छति मानवः ॥
यस्तु सर्व्वाणि दानानि ब्राह्मणेभ्यः प्रयच्छति ।
स प्राप्य न निवर्त्तेत दिवं शान्तमनामयम् ॥
शृङ्गन्तु पश्चिमं यच्च ब्रह्मा तत्र स्थितः स्वयम् ।
पूर्ब्बशृङ्गे स्वयं विष्णुर्भध्ये चैव शिवः स्थितः ॥ * ॥
अतः परन्तु विप्रेन्द्र स्वर्गाध्वानमिमं शृणु ॥
विमलं विपुलं शुद्धमुपर्य्युपरिसंस्थितम् ।
प्रथमे तु कुमारस्तु द्वितीये मातरः स्थिताः ॥
तृतीये सिद्धगन्धर्व्वास्तुर्य्ये विद्याधरा द्विज ।
पञ्चमे नागराजश्च षष्ठे तु विनतासुतः ॥
सप्तमे दिव्यपितरो धर्म्मराजस्तथाष्टमे ।
नवमे तु तथा दक्ष आदित्या दशमे पथि ॥ * ॥
भूर्लोकाच्छतसाहस्रमूद्र्ध्वंचरति भास्करः ।
योजनानां सहस्रे द्वे विष्कम्भेन समन्वितः ॥
त्रिगुणः परिणाहेन सूर्य्यविम्बप्रमाणतः ॥
सोमपुर्य्यां विभावर्य्यां मध्याह्ने चार्य्यमा यदा ।
महेन्द्रस्यामरावत्यां ततस्तिष्ठति भास्करः ॥
मध्याह्ने त्वमरावत्यां यदा भवति भास्करः ।
तदा संयमने याम्ये तदोद्यंस्तु प्रदृश्यते ॥
मेरुं प्रदक्षिणं कुर्व्वन् भात्येवं सविता सदा ।
ततो योजनमानेन द्विगुणो मण्डलेन तु ॥
जनलोकस्थितो विप्र पञ्चमो मुनिसेवितः ।
तस्योपरि तपोलोकश्चतुर्भिः कोटिभिः स्मृतः ॥
सत्यलोकोऽष्टकोटीभिः सर्व्वेषामुपरिस्थितः ।
सर्व्वे छत्राकृतिर्ज्ञेया भुवना भुवनोपरि ॥
ब्रह्मलोकाद्विष्णुलोको द्विगुणेन व्यवस्थितः ।
वाराहे तस्य माहात्म्यं कथितं लोकचिन्तकैः ॥
ततः परं द्विजश्रेष्ठ ततो ह्यण्डकपालकम् ।
ब्रह्माण्डात् परतः साक्षात् निर्लेपः पुरुषः स्थितः ॥
यमुपास्य विमुच्येत तपोज्ञानसमन्विताः ।
इति ते संस्थितिः प्रोक्ता भूगोलस्य मयानघ ॥
यस्तु सम्यगिमां वेत्ति स याति परमां गतिम् ।"
इति नृसिंहपुराणे ३० अध्यायः ॥
पारिभाषिकस्वर्गो यथा, --
"मनोऽनुकूलाः प्रमदा रूपवत्यः स्वलङ्कृताः ।
वासः प्रासादषष्ठेषु स्वर्गः स्याच्छुभकर्म्मणः ॥"
इति गारुडे । १०९ । ४४ ॥
न्यायमते स्वर्गलक्षणं यथा । दुःखासम्भिन्न-त्वादिविशिष्टसुखत्वं स्वर्गत्वं तदेव स्वर्गपदशक्य-तावच्छेदकमिति सिद्धान्तः । आदिपदेन अन-न्तरदुःखग्रस्तभिन्नत्वाभिलाषोपनीतत्वयोःपरि ग्रहः । अतएव ।
"यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं यत् तत् सुखं स्वःपदास्पदम् ॥"
इति स्वरादिपदशक्तिग्राहकार्थवादोऽपि संग-च्छते । इति गदाधरभट्टाचार्य्यकृतवादार्थः ॥ * ॥
किञ्च ।
"मनःप्रीतिकरः स्वर्गो नरकस्तद्विपर्य्ययः ।
नरकस्वर्गसंज्ञेवै पापपुण्ये द्विजोत्तमाः ॥"
इति ब्रह्मपुराणे १९ अध्यायः ॥

**स्वर्गगामी**, [न्] त्रि, (स्वर्गं गच्छत्तीति । गम + णिनिः ।) स्वर्गगमनकर्त्ता । यथा, --
"सर्व्ववृत्तौ विहिंसा ये ये च सर्व्वसहा नराः ।
सर्व्वस्य प्रियभूताश्च ते नराः स्वर्गगामिनः ॥"
इति कर्म्मलोचनः ॥

**स्वर्गङ्गा**, स्त्री, (स्वर्गस्य गङ्गा ।) मन्दाकिनी । इति शब्दरत्नावली ॥

आह्लादः स्वर्गराजश्च स्वर्गाः शृङ्गे तु पश्चिमे ॥
निर्म्मलो निरहङ्कारः सौभाग्यश्चातिनिर्म्मलः ।
सौख्यश्च निर्व्वृतिश्चैव पुण्याहश्च तथा द्विज ॥
स्वर्गाश्चैते द्विजश्रेष्ठ पूर्ब्बशृङ्गे समर्थिताः ।
एकविंशति ये स्वर्गा निविष्टा मेरुमूर्द्धनि ॥
अहिंसादानकर्त्तारो यज्ञानां तपसां तथा ।
तेषु तेषु वसन्ति स्म जनाः क्रोधविवर्जिताः ॥
जलप्रवेशी चानन्दं प्रमोदं वह्निसाहसः ।
भृगुप्रपाते सौख्यस्तु रणे चैवास्य निर्म्मलः ॥
अनशने तु सम्बासे मृतो गच्छेत्त्रिविष्टपम् ।
क्रतुयाजी नाकपृष्ठमग्निहोत्री च निर्व्वृतिम् ॥
तडागकूपकर्त्ता च लभते पौष्टिकं द्विज ।
सौवर्णदायी सौभाग्यं लभेत् स्वर्गं महातपाः ॥
शीतकाले महावह्निं प्रज्वालयति यो नरः ।
सर्व्वसत्त्वहितार्थाय स्वर्गं चाप्सरसं लभेत् ॥
हिरण्यगोप्रदानेन निरहङ्कारमवाप्नुयात् ।
भूमिदानेन शुद्धेन लभते शान्तिकं पदम् ॥
रौप्यदानेन शुद्धेन स्वर्गं गच्छति निर्म्मलम् ।
अश्वदानेन पुण्याहं कन्यादानेन मङ्गलम् ॥
द्विजेभ्यस्तर्पणं कृत्वा दत्त्वा वस्त्राणि भक्तितः ।
ध्रुवाधाररथे तिष्ठन् वालिखिल्यादिभिः स्तुतः ॥
सूर्य्यमण्डलमानात्तु द्विगुणं सोममण्डलम् ।
पूर्णे शतसहस्रे तु तस्मान्नक्षत्रमण्डलम् ॥
द्विलक्षे तु बुधस्यापि स्थानं नक्षत्रमण्डलात् ।
तावत्प्रमाणभागे तु बुधस्याप्युशना स्थितः ॥
अङ्गारकोऽपि शुक्रस्य तावन्माने व्यवस्थितः ।
लक्षद्वये तु भौमस्य स्थितो देवपुरोहितः ॥
शौरिर्बृहस्पतेश्चोद्‌र्ध्वं द्विलक्षे तु व्यवस्थितः ।
तस्मात् शनैश्चरादूद्‌र्ध्वं लक्षे सप्तर्षिमण्डलम् ॥
सप्तर्षिमण्डलादूद्‌र्ध्वमेकलक्षे ध्रुवः स्थितः ।
मेधीभूतः समस्तस्य ज्योतिश्चक्रस्य सत्तम ॥
भास्वांस्तपति विप्रेन्द्र ऊद्‌र्ध्वं किरणरश्मिभिः ।
कालसंख्यां त्रिलोकस्य स करोति युगे युगे ॥
जनस्तपस्तथा सत्यमेताल्लोँकान् द्विजाज्ञया ।
ब्रह्मणो मुनिशार्द्दूल विष्णुशक्तिविदीपितः ॥
ऊद्‌र्ध्वं गतैर्द्विजश्रेष्ठ रश्मिभिस्तपते रविः ।
अधोगतैस्तु भूर्लोकं द्योतते दीप्तदीधितिः ॥
तमःपापहरः सूर्य्यः कर्त्ता त्रिभुवनस्य च ।
छत्रवत् परिदृश्येत मण्डलान्मण्डलं चरन् ॥
द्विगुणेन च विस्तीर्णं भूतलात्तत् प्रतिष्ठितम् ।

**स्वर्गजित्,** त्रि, (स्वर्गं जयतीति । जि + क्विप् तुगागमश्च ।) स्वर्गजेता । (यथा, महाभारते । १२ । ७५ । ३४ ।
“यस्मिन् भयार्द्दितः सम्यक् क्षेमं विन्दत्यपि-क्षणम् ।
स स्वर्गजित्तमोऽस्माकं सत्यमेतत् ब्रवीमि ते ॥”)

**स्वर्गपतिः**, पुं, (स्वर्गस्य पतिः ।) इन्द्रः । इति हेमचन्द्रः ॥

**स्वर्गबधूः**, स्त्री, (स्वर्गस्य स्वर्गस्थितलोकस्य बधूः ।) अप्सरसः । इति हेमचन्द्रः ॥

| श्वेतन्तु लभते स्वर्गं यत्र गत्वा न शोचति ॥<br>कपिलागोप्रदानेन परार्द्धं चानुभूयते ।<br>गोवृषस्य प्रदानेन स्वर्गं मन्मथमश्नुते ॥<br>माघमासे सरित्स्नायी तिलधेनुप्रदस्तथा ।<br>छत्रोपानहदाता च स्वर्गं यात्युपशोभनम् ॥<br>देवायतनकर्त्ता वै श्रुश्रूषणपरस्तथा ।<br>तीर्थयात्रापरश्चैव स्वर्गराज्ये महीयते ॥<br>एकान्नभोजी यो मर्त्यो नक्तभोजी च नित्यशः ।<br>उपवासी त्रिरात्राद्यैः शान्तिस्वर्गं शुभं लभेत् ॥<br>सरित्स्नायी जितक्रोधो ब्रह्मचारी दृढब्रतः ।<br>निर्म्मलं स्वर्गमाप्नोति तथा भूतहिते रतः ॥<br>विद्यादानेन मेधावो निरहङ्कारमाप्नुयात् । | आदित्यमण्डलाधस्तात् भुवो लोकः प्रतिष्ठितः ॥<br>तदधस्तात्तु विप्रेन्द्र भूर्लोकः संप्रतिष्ठितः ।<br>एवमेतत्त्रिभुवनं विष्णुकाये व्यवस्थितम् ॥<br>त्रैलोक्यस्येश्वरत्वञ्च विष्णुदत्तं शतक्रोतोः ।<br>लोकपालैश्च सहितो लोकान् रक्षति धर्म्मतः ।<br>वसन् स्वर्गे महाभाग देवेन्द्रः स तु कीर्त्तितः ॥<br>अतोऽधस्ताद्द्विजश्रेष्ठ पातालन्तु स्वयंप्रभम् ।<br>न तत्र तपते सूर्य्यो न रात्रिर्न निशाकरः ॥<br>दिव्यं रूपं समास्थाय तपन्ते सततं जनाः ।<br>पातालस्थाः द्विजश्रेष्ठ दीप्यामानाः स्वतेजसा ॥<br>स्वर्लोकात्तु महर्लोकः कोटिमाने व्यवस्थितः । | |
|---|---|---|

**स्वर्गलोकेशः**, पुं, (स्वर्गलोकाय ईशः ।
शरीरजन्यकर्म्मणऋते
स्वर्गप्राप्त्यभावात्तथात्वमस्य ।)
शरीरम् । इति जटाधरः ॥
(स्वर्गलोकस्य ईशः ।) इन्द्रश्च ॥

**स्वर्गसरिद्वरा**, स्त्री, (स्वर्गस्य सरिद्वरा ।)
गङ्गा । इति राजनिर्घण्टः ॥

**स्वर्गापगा**, स्त्री, (स्वर्गस्य आपगा ।) गङ्गा ।
इति हेमचन्द्रः ॥

**स्वर्गिगिरिः**, पुं, (स्वर्गस्य पक्षे स्वः गिरिः
पर्व्वतः ।) सुमेरुः । इति हेम-
चन्द्रः ॥

**स्वर्गिरिः**, पुं, (स्वर्गस्य पक्षे स्वः गिरिः
पर्व्वतः ।) सुमेरुः । इति हेम-
चन्द्रः ॥

**स्वर्गिबधूः**, स्त्री, (स्वर्गिणां देवानां बधूः ।) अप्स-
रसः । इति हेमचन्द्रः ॥

**स्वर्गी**, [न्] पुं, (स्वर्गोऽस्त्यस्य भोग्यत्वेनेति । स्वर्ग +
इनिः ।) देवता । इति त्रिकाण्डशेषः ॥
(यथा,
कुमारे । २ । ४५ ।
"भुवनालोकनप्रीतिः स्वर्गिभिर्नानुभूयते ।
खिलीभूते विमानानां तदापातभयात् पथि
॥")
स्वर्गगामिनि, त्रि । तल्लक्षणं यथा, --
"दया भूतेषु संवादो परलोकं प्रतिक्रिया ।
सत्यं परहिता चोक्तिर्व्वेदप्रामाण्यदर्शनम् ॥
गुरुदेवर्षिपूजा च केवलं साधुसङ्गमः ।
सत्क्रियाभ्यसनं मैत्री स्वर्गिणां लक्षणं विदुः
॥"
इति गारुडे २२९ अध्यायः ॥

**स्वर्गौकाः**, [स्] पुं, (स्वर्ग ओको वासस्थानं येषाम्
देवता । इति हलायुधः ॥ (यथा, कुमारे ।
१ + ५८ ।

**स्वर्जिक्षारः**, पुं, (स्वर्जी एव क्षारः ।) सर्ज्जिका-
क्षारः । तत्पर्य्यायः । स्वर्ज्जिकः २ क्षारः
३
स्वर्जी ४ सुखोर्ज्जिकः ५ सुवर्च्चिकः ६
सुवर्चिः ७
सुखवर्च्चाः ८ । अस्य गुणाः । पटुत्वम् ।
कटु-
ष्णत्वम् । तोक्ष्णत्वम् ।
वातकफार्त्तिनाशित्वम् ।
गुल्माध्मानक्रमिव्रणजठरदोषनाशित्वञ्च ।
इति
राजनिर्घण्टः ॥

**स्वर्ज्जी**, [न्] पुं, (सुखेन अर्ज्जयतीति । सु +
अर्ज्ज + णिनिः । स्वर्ज्जिक्षारः । इति
राज-
निर्घण्टः ॥

**स्वर्णं**, क्ली, (सुष्ठु अर्णो वर्णो य स्य ।) सुवर्णम् ।
धुस्तूरः । इत्यमरः । २ । ९ । ९४ ॥
गौरसुवर्ण-
शाकम् । नागकेशरम् । इति राजनिर्घण्टः
॥ * ॥
स्वर्णस्योत्पत्तिर्यथा, --
"एकदा सर्व्वदेवाश्च समूबुः स्वर्गसंसदि ।
तत्र कृत्वा च नृत्यञ्च गायन्त्यप्सरसां
गणाः ॥
विसोक्य रम्भां सुश्रोणीं सकामो वह्निरेव च
।
पपात वीर्य्यं चच्छाद लज्जया वाससा
तथा ॥
उत्तलौ स्वर्णपुञ्जश्च वस्त्रं क्षिप्त्वा
ज्वलत्प्रभः ।
क्षणेन वर्द्धयामास स सुमेरुर्बभूव ह ॥
हिरण्यरेतसं वह्निं प्रवदन्ति मनीषिणः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १३१ ।
३३-३७ ॥
तस्य गुणाः ।
"सुवर्णं तिक्तमधुरं कषायं गुरु लेखनम् ।

रुद्ध्वा सवस्त्रकुष्टितचिक्वणमृत्तिकया ।
वनो-
पलः गोइटा इति लोके । निरुत्थं यत्
पुनर्न
जीवति ॥ * ॥ अथान्यप्रकारः ।
"काञ्चने गलिते नागं षोडशांशेन
निःक्षिपेत् ।
चूर्णयित्वा तथाम्लेन घृष्ट्वा कृत्वा तु
गोलकम् ॥
गोलकेन समं गन्धं दत्त्वा चैवाधरोत्तरम् ।
सरावसंपुटे धृत्वा पुटे त्रिशद्वनोपलैः ॥
एवं सप्तपुटैर्हेम निरुत्थं भस्म जायते ।
अत्रापि पूर्ब्बवद्गन्धः प्रदातव्यः पुनः
पुनः ॥
काञ्चनारिरसैर्घृष्ट्वा समसूतकगन्धयोः ।
कज्जलीहेमपत्राणि लेपयेत् समया तथा
॥
काञ्चनारित्वचः कल्कैर्मूषायुग्मं
प्रकल्पयेत् ।
धृत्वा तत् संपुटे गोलं मृन्मूषासंपुटे च तत्
॥
निधाय सन्धिरोधञ्च कृत्वा संशोष्य
गोलकम् ।
वह्निं खरतरं कुर्य्यादिवं दद्यात् पुटत्रयम् ॥
निरुत्थं जायते भस्म सर्व्वकर्म्मसु
योजयेत् ।
काञ्चनारिप्रकारेण लाङ्गलीं हन्ति
काञ्चनम् ॥
णाङ्गली करिहारी ।
ज्वालामुखी तथा हन्यात्तथा हन्ति
मनःशिला ।
शिलासिन्दूरयोश्चूर्णसमयोरर्कदुग्धकैः ॥
सप्तधा भावनां दद्याच्छोषयेच्च पुनः पुनः
।
ततस्तु गलिते हेम्नि कल्कोऽयं दीयते
समः ॥
पुनर्धमेदतितरां यथा कल्को विलीयते ।
एवं बेलात्रयं दद्यात् कल्कं हेममृतिर्भवेत्
॥

“अनर्घ्यमर्घ्येण तमद्रिनाथः
स्वर्गौकसामर्च्चितमर्च्चयित्वा ।
आराधनायास्य सन्निसमेतां
समादिदेश प्रयतां तनूजाम् ॥”)

**स्वर्ग्यः**, त्रि, (स्वर्गस्य निमित्तं संयोग उत्पातो

वा । स्वर्ग +
“गोद्व्यचोसंख्यापरिमाणाश्वादेर्यत् ।”
५ । १ । ३९ । इति यत् । यद्वा स्वर्गः
प्रयोजन-
मस्य । “स्वर्गादिभ्यो यद्वक्तव्यः ।” ५ । १ ।
१११ ।
इत्यस्य वार्त्तिकोक्त्या यत् ।) स्यर्मीयः ।
स्यर्ग-
शब्दात् ष्ण्यप्रत्ययेन निष्पन्नः ॥ (यथा,
भाग-
वते । ४ । १२ । ४४ ।
“धन्यं यशस्यमायुष्य पुण्यं स्यस्त्ययनं
महत् ।
स्वर्ग्यं ध्रौव्यं सौमनस्यं प्रशस्यमघमर्षणम् ॥
*)

**स्वर्ज्जिकः**, पुं, सर्ज्जिकाक्षारः । इति राजनिर्घण्टः ॥

यवक्षारः । यथा, --
“पाक्यः क्षारो यजक्षारो यावशूको यवाग्रजः
।
स्वर्जिकोऽपि स्मृतः क्षारः कापोतः
सुखवर्च्चकः ॥
कथितः स्वर्जिकाभेदो विशेषज्ञैः सुवर्चिका
।
यवक्षारो लघुः स्निग्धः सुसूक्ष्मो वह्निदीपनः
।
निहन्ति शूलं वातामश्लेष्मश्वासगलामयान्
॥
स्वर्जिकाल्पगुणा तस्मात्
विशेषात्गुल्मशूलहृत् ।
सुवर्च्चिका स्यर्जिकावत् बोद्धव्या गुणतो
जनैः ॥”
इति भावप्रकाशः ॥

**स्वर्ज्जिकाक्षारः**, पुं, स्वर्ज्जिक्षारः । साचिक्षार इति

भाषा । अस्य गुणाः ।
हृद्यं रसायनं बल्यं चक्षुष्यं कान्तिदं शुचि
॥
आयुर्मेधावयःस्थैर्य्यवाग् विशुद्धिद्युतिप्रदम्
।
क्षयोन्मादगदार्त्तानां शमनं परमुच्यते ॥”
इति राजवल्लभः ॥ * ॥
सुवर्णस्य शोधनमारणविधिर्य्यथा ।
मारणाय
योग्यं सुवर्णमाह ।
“दाहे रक्तं सितं छेदे निकषे कुङ्कुमप्रभम् ।
तारशुक्लाग्निभं स्निन्धं कोमलं गुरु हेम
सत् ॥”
सत् उत्तमम् ।
“तच्छेतं कठिनं रूक्षं विवर्णं समलं दलम् ।
दाहे च्छेदेऽसितं श्वेतं कषे स्फुटलघु
त्यजेत् ॥”
अथ शोधनविधिः ।
“पत्तलीकृतपत्राणि हेम्नो वह्नौ प्रतापयेत् ।
निषिञ्चेत्तप्ततप्तानि तैले तक्रे च काञ्जिके ॥
गोमूत्रे च कुलत्थानां कषाये तु त्रिधा त्रिधा
।
एवं हेम्नः परेषाञ्च धातूनां शोधनं भवेत्
॥” * ॥
अथाशुद्धस्य सुवर्णस्य दोषमाह ।
“बलं सवीर्य्यं हरते नराणां
रोगतजं पोषयतीह काये ।
असौख्यकार्य्ये च सदा सुवर्ण-
मशुद्धमेतन्मरणञ्च कुर्य्यात् ॥”
अथ स्वर्णमारणविः ।
“स्वर्णस्य द्विगुणं सूतमम्लेन सह मर्दयेत् ।
तद्गोलकसमं गन्धं निदध्यादधरोत्तरम्
॥”
स्वर्णस्य अतितनूकृतपत्रस्य । गन्धं
गन्धकचूर्णम् ।
“गोलकञ्च ततो रुद्ध्वा सरावदृढसंपुटे ॥
त्रिंशद्वनोपलैर्दद्यात् पुटान्येवं चतुर्द्दश ।
निरुत्थं जायते भस्म गन्धो देयः पुनः
पुनः ॥”
एवं मारितस्य सुवर्णस्य गुणाः ।
सुवर्णं शीतलं वृष्यं बल्यं गुरु रसायनम् ।
स्वादु तिक्तञ्च तुवरं पाके च स्वादु
पिच्छिलम् ।
पवित्रं वृंहणं नेत्र्यं मेघास्मृतिमतिप्रदम् ॥
हृद्यमायुष्करं
कान्तिवाग्विशुद्धिस्थिरत्वकृत् ।
विषद्वयक्षयोन्मादत्रिदोषज्वरशोषजित् ॥”
वृष्यं वृषाय कामुकाय हितम् ॥ * ॥
असम्यङ्मारितं स्वर्णं बलं वीर्य्यञ्च
नाशयेत् ।
करोति रोमान्पृत्युञ्च तद्धन्याद्
यत्नतस्ततः ॥”
इति भावप्रकाशः ॥
अन्यत् सुवर्णशब्दे द्रष्टव्यम् ॥

**स्वर्णकणः**, पुं, (स्वर्श्चवत् पीतः कणो यस्य ।)

कणगुग्गुलुः । इति राजनिर्घण्टः ॥
(स्वर्णस्य
कणः ।) सुवर्णकणा च ॥

**स्वर्णकणिका**, स्त्री, (कर्णस्य कणिका ।) कनक-

कणा यथा, --
“कुर्व्वत्याः सरसि स्नानं पार्व्वत्यास्तु
शरीरजाः ।
निःसृताः स्वर्णकणिकास्ता वहन्ति
जलैरिमाः ॥”
इति कालिकापुराणे ८२ अध्यायः ॥

**स्वर्णकायः**, पुं, (स्वर्णं इव पीतः कायो यस्य ।)

गरुडः । इति हेमचन्द्रः ॥ सुवर्णमयशरीरे,
त्रि ॥

**स्वर्णकारः**, पुं, (स्वर्णं स्वर्णालङ्कारं करोतीति ।

कृ + अण् ।) जातिविशेषः । सेकरा इति
भाषा । तत्पर्य्यायः । नाडीन्धमः २
कलादः ३
रुक्मकारः ४ । इत्यमरः । २ । १० । ८
॥ कणादः
५ । इति तट्टीकासारसुन्दरी ॥ हेमलः ६
।
इति जटाधरः ॥ तस्योत्पत्तिर्य्यथा, --

| | | |
|---|---|---|
| “यवक्षारः जयेदर्शः श्वासान् वातकफामयान्। गुरुमहृद्ग्रहणीपाण्डुप्लीहानाहगलामयान्। तस्मादल्पान्तरगुणः स्वज्जिकाक्षार उच्यते ॥ * इति राजवल्लभः ॥ | | |

"विश्वकर्म्मा च शूद्रायां वीर्य्याधानं चकार सः ।
ततो बभूवुः पुत्राश्च नवैते शिल्पकारिणः ॥
मालाकारः कर्म्मकारः शङ्ककारः कुबिन्दकः ।
कुम्भकारः कंसकारः षडेते शिल्पिनां वराः ॥
सूत्रधारश्चित्रकरः स्वर्णकारस्तथैव च ।
पतितास्ते ब्रह्मशापादयाज्या वर्णसङ्कराः ॥
स्वर्णकारः स्वर्णचौर्य्यात् ब्राह्मणानां द्विजोत्तम ।
बभूव सद्यः पतितो ब्रह्मशापेन कर्म्मणा ॥"
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे । १० । १९ -- २२ ॥
* ॥
तस्य कर्म्मविपाको यथा, --
"तैलचौरस्तैलकीटो मूद्ध्र्नि कीटस्त्रिजन्मकम्
।
ततो भवेत् स्वर्णकारो जन्मैकं दुष्टमानसः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । ८५ ।
१२८ ॥

**स्वर्णकृत्**, पुं, (स्वर्णं सुवर्णालङ्कारं करोतीति ।

कृ + क्विप् । तुक् च ।) स्वर्णकारः । इति शब्द-
माला ॥

**स्वर्णकेतकी**, स्त्री, (स्वर्णवर्णा केतकी ।) हरिद्रा-

वर्णकेतकीपुष्पम् । तत्पर्यायः । हेमकेतकी २
कनकप्रसवा ३ हैमी ४ छिन्नरुहा ५ विष्ठा-
रुहा ६ स्वर्णपुष्पी ७ कामखङ्गदला ८ । अस्या
गुणाः ।
"केतकीकुसुमं वर्ण्यं केशदौर्गन्ध्यनाशनम् ।
हेमाभं मदनोन्मादबाहुल्यं सौख्यकारि च ॥
तस्यास्तनोति शिशिरः कटुः पित्तकफापहः ।
रसायनकरो वर्ण्यो देहदार्ढकरः परः ॥"
इति राजनिर्घण्टः ॥

**स्वर्णक्षीरी**, स्त्री, (स्वर्चवर्णा क्षीरी ।) ओषधि-

विशेषः । तत्पर्य्यायः पटुपर्णी २ हैमवती ३
हिमावती ४ । इत्यमरः । २ । ४ । १३८ ॥
चत्वारि स्वर्णक्षीर्य्याम् । इयं पीतक्षीरा नाग-
जिह्विकाकारा ।
"हेमवर्णं पयस्तस्या हिमवद्भूमिसम्भवा ।
सा नागजिह्विकाकारा तद्मूलं बाणिजौषध-
मिति ॥"
स्वर्णग्रीवेति विख्याता सा गङ्गासदृशी
फले ॥"
इति कालिकापुराणे ८२ अध्यायः ॥

**स्वर्णचूडः**, पुं, (स्वर्णवर्णा चूडा यस्य ।) पक्षि-

विशेषः । यथा, --
"चाषः कीकीदिविः स्वर्णचूडोऽथ
पीतमुण्डकः ॥ *
इति जटाधरः ॥

**स्वर्णजं**, क्ली, (स्वर्णात् जायते इति । जन +
डः)

रङ्गम् । यथा, --
"वङ्गं त्रपुः स्वर्णजनागजीवने
मृदङ्गरङ्गे गुरुपत्रपिच्चटे ।
स्याच्चक्रसंज्ञं तमरञ्च नागजं
कस्तीरमालीनकसिंहले अपि ॥"
इति हेमचन्द्रः ॥

**स्वर्णजीवन्ती**, स्त्री, (स्वर्णवर्णा जीवन्ती ।)
वृक्ष-

विशेषः । तोनाजीवै इति हिन्दी भाषा
।
तत्पर्य्यायः । हेमाहा २ हेमजीवन्ती ३
तृण-
ग्रन्थिः ४ हिमाश्रया ५ स्वर्णपर्णी ६
सुजी-
वन्ती ७ स्वर्णजीवा ८ सुपर्णिका ९
हेमपुष्पा
१० स्वर्णलता ११ हेमवल्ली १२
हेमसता १३ ।
अस्या गुणाः । वृष्पत्वम् मधुरत्वम् ।
चक्षुष-
त्वम् । शिशिरत्त्वम् ।
वातपित्तास्रदाहनाशि-
त्वम् । वलवर्द्धनत्वञ्च । इति
राजनिर्घण्टः ॥

**स्वर्णदी**, स्त्री, (स्वः स्वर्गस्य नदी ।) मन्दाकिनी
।

इत्यमरः । १ । १ । ५२ ॥ बृणिकाली
। इति
स्वर्णपाचकः पठ्यते ॥ तत्पर्य्याया यथा
। टङ्कणः
स्वर्णपाचकः । इति वैद्यकरत्नमालायाम्
॥)

**स्वर्णपारेवतं**, क्ली, (स्वर्णवर्णं पारेवतम् ।) महा-

पारेवतम् । इति राजनिर्घण्टः ॥

**स्वर्णपुष्पः**, पुं, (स्वर्णवर्णं पुष्पमस्य ।) आरग्वधः ।

चम्पकः । इति राजनिर्घण्टः ।
चम्पकपुष्पै-
र्व्विष्णुपूजाफलं यथा, --
"माघे चम्पकपुष्पेण योऽर्च्चयेत्
कमलापतिम् ।
स गच्छेत् परमं धाम विमुक्तः
सर्व्वपातकैः ॥
यावन्ति स्वर्णपुष्पाणि दीयन्ते चक्रपाणये
।
तावद्युगसहस्राणि स्थीयते विष्णुमन्दिरे
॥
मेरुतुल्यसुवर्णानि दत्त्वा भवति यत्
फलम् ।
एकेन स्वर्णपुष्पेण दत्त्वा भवति तत्
फलम् ॥
सुवर्णपुष्पं विप्रेन्द्र सर्व्वदा केशवप्रियम् ।
माघे मासि विशेषेण पवित्रं केशवार्च्चने ॥
सुवर्णकुसुमैर्दिव्यैर्येन नाराधितो हरिः ।
रत्नैर्हीनः सुवर्णाद्यैः स भवेज्जन्मजन्मनि
॥"
इति पाद्मे क्रियायोगसारे ९ अध्यायः ॥
वावस्रवृक्षः । इति शब्दचन्द्रिका ॥

**स्वर्णपुष्पा**, स्त्री, (स्वर्णवत् पुष्पं यस्याः) कलि-

कारिः । स्वर्णुली । सातला । इति राज-
निर्घण्टः ॥ (स्वर्णुलोशब्देऽस्यागुणाः
ज्ञातव्याः ॥)

**स्वर्णपुष्पी**, स्त्री, (स्वर्णवत् पीतं पुष्पं यस्याः ।

ङीष् ।) आरग्वधः । इति शब्दचन्द्रिका ॥
स्वर्णकेतकी । इति राजनिर्घण्टः ॥

पटूनि निश्छिद्राणि पर्णानि अस्याः पटुपर्णी जातेरत इति ईप् । हिमवति जाता हैमवती ष्णः । स्वर्णमिव पीतत्वात् क्षीरमस्याः स्वर्ण-क्षीरी नदादिः । हिमयुक्तोत्पत्तिस्थानयोगात् हिमावती मोङ्गझपाद्वतुरिति वतुः नाम्न्यस्त्यर्थे इति दीर्घः । इति भरतः ॥ * ॥ अपि च ।
"स्वर्णक्षीरी स्वर्णदुग्धा स्वर्णाह्वारुक्मिणी तथा ।
सुवर्णा हेमदुग्धी च हेमक्षीरी च काञ्चनी ॥
स्वर्णक्षीरी हिमा तिक्ता कृमिपित्तकफापहा ।
मूत्रकृच्छ्राश्मरीशोफदाहज्वरहरा परा ॥"
इति राजनिर्घण्टः ॥

**स्वर्णगैरिकं**, क्ली, (स्वर्णवत् पीतं गैरिकम् ।)
सुवर्णगैरिकम् । वर्णक् माटी इति भाषा । इति राजनिर्घण्टः ॥ अस्य विवरणं गैरिक-भेदशब्दे द्रष्टव्यम् ॥

**स्वर्णग्रीवा**, स्त्री, (स्वर्णवर्णा ग्रीवा यस्याः ।)
नाटकशैलपूर्ब्बभागान्निःसृतनदीविशेषः । यथा,
"या निःसृणापूर्ब्बभागात् तस्माद्गिरिवरान्नदी ।
राजनिर्घण्टः ॥ सितगङ्गा । सा तु कामा-
ख्यायाः पूर्व्वभागे दिक्करवासिन्याः प्रान्ते
खिता । यथा, --
"नद्याः स्वर्णश्रिया पूर्व्वं नदी कामाह्वया तथा ।
कामाख्यायाः पूर्ब्बभागे नदी सोमासनाह्वया ।
सोमासनायाः पूर्व्वस्यां नदी नाम्ना वृषोदका ॥
ततः पूर्व्वे कामरूपपीठान्ते जगतां प्रसूः ।
जगन्माया महामाया देवी दिक्करवासिनी ॥
एता या कथिता नद्यः सकला दक्षिणस्रवाः ।
तासु स्नात्वा च पीत्वा च स्वर्गलोकमवाप्नुयात् ॥
प्रान्ते दिक्करवासिन्याः सदा वहति स्वर्णदी ।
सितगङ्गाह्वया लोके साक्षात् गङ्गाफलप्रदा ॥
सा भूमिपीठसंस्था तु देवी दिक्करवासिनी ।
अन्तर्ज्जलैः प्लावयन्ती याति प्रत्यक्षतां सुरैः ॥
सितगङ्गाजले स्नात्वा पृष्ट्वा शम्भुं हरिं विधिम् ।
इष्ट्वा ललितकान्ताख्यां पुनर्योनौ न जायते ॥"
इति कालिकापुराणे ८२ अध्यायः ॥

**स्वर्णदीधितिः**, पुं, (स्वर्णवत् दीधितिः किरणं
यस्य ।) अग्निः इति त्रिकाण्डशेषः ॥

**स्वर्णद्रुः** पुं, स्वर्णवर्णो द्रुः ।) आरग्वधः । इति
राजनिर्घण्टः ॥

**स्वर्णपक्षः**, पुं, (स्वर्णवत् पीतौ पक्षौ यस्य ।)
गरुडः । इति त्रिकाण्डशेषः ॥

**स्वर्णपद्मा**, स्त्री, (स्वर्णस्य पद्मंयस्यामिति ।)

**स्वर्णफला**, स्त्री, (स्वण्वत् पीतं फलं यस्याः ।)
पीतरम्भा । इति राजनिर्घण्टः ॥

**स्वर्णबणिक्**, [ज] पुं, (स्वर्णस्य बणिक्) वर्ण-
सङ्करजातिविशेषः । सोनार बेणे इति भाषा ।
तस्य कर्म्मविपाको यथा, --
"तैसचौरस्तैलकीटो मूद्ध्र्नि कीटस्त्रिजन्मकम् ।
ततो भवेत् स्वर्णकारो जन्मैकं दुष्टमानसः ॥
तमःकुण्डे वर्षशतं स्थित्वा स्वर्णबणिग् भवेत् ।
जन्मैकञ्च दुराचारो जन्मैकं करणो भवेत् ।
विश्वैकलिपिकर्त्ता च भक्षदातुर्द्धनं हरेत् ।
कायस्थेनोदरस्थेन मातुर्म्मांसं न खादितम् ।
तत्र नास्ति कृपा तस्य दन्ताभावेन केवलम् ॥
स्वर्णकारः स्वर्णबणिक् कायस्थश्च व्रजेश्वर ।
नरेषु मध्ये ते धूर्त्ताः कृपाहीना महीतले ॥
हृदयं क्षुरधाराभं तेषाञ्च नास्ति सादरम् ।
शतेषु सज्जनः कोऽपि कायस्थो नेतरौ च तौ ॥"
इति ब्रह्मवैवर्त्तेश्रीकृष्णजन्मखण्डे ८५ । १२८-१३२ ॥

**स्वर्णबिन्दुः**, पुं, (स्वर्णस्य बिन्दुर्यत्र ।) विष्णुः ।
इति त्रिकाण्डशेषः ॥ सुवर्णकणिका च ॥

**स्वर्णभृङ्गारः**, पुं, (स्वर्णवर्णो भृङ्गारः ।) स्वर्ण-
भृङ्गराजः । इति राजनिर्घण्टः ॥ सुवर्णकल-
सश्च ॥

**स्वर्णमहा**, स्त्री, नदीविशेषः । यथा, --
"तत्रोमायाः शरीरात्तु संस्रवन्ति जलैः सह ।
ततः स्वर्णमहा नाम स्वण श्रीः सर्व्वतोऽधिका ॥

| | | |
|---|---|---|
| | स्वर्गङ्गा । इति शब्दरत्नावली ॥<br>**स्वर्णपाटकः**, पुं (स्वर्णं पाटयतीति । पट + णिच्<br>ण्वुल ।) टङ्कणः । इति शब्दमाला ॥<br>(क्वचित् | एतासु चैत्रमासे तु स्नात्वा मर्त्यो नरर्षभ<br>।<br>कृष्णपक्षे चतुर्द्दश्यां त्रिकालं यश्च मानवः<br>॥ |

चिरं शिवगृहे स्थित्वा शेषे ब्रह्मगृहं ब्रजेत् ।
भूमाववभृतः पश्चात् सार्व्वभौमनृपो भवेत्
॥”
इति कालिकापुराणे ८२ अध्यायः ॥

**स्वर्णमाक्षिकं**, क्ली, (स्वर्णवत् पीतं माक्षिकम् ।)

स्वनामख्यात उपधातुः । तस्य नामानि
गुणाश्च ।
“स्वर्णमाक्षिकमाख्यातं तापिञ्जं मधुमाक्षिकम्
।
तीक्ष्णं माक्षिकधातुश्च मधुधातुश्च स स्मृतः
॥
किञ्चित्सुवर्णसाहित्यात् स्वर्णमाक्षिकमीरि-
तम् ।
उपधातुः सुवर्णस्य किञ्चित्स्वर्णगुणान्वितम्
॥
तथा च काञ्चनाभावे दीयते स्वर्णमाक्षिकम् ।
किन्तु तस्यानुकल्पत्वात्
किञ्चिद्धीनगुणास्ततः ॥
न केवलं स्वर्णगुणा वर्त्तन्ते स्वर्णमाक्षिके ।
द्रव्यान्तरस्य संसर्गात् सन्त्यन्येऽपि
गुणास्ततः ॥ *
सुवर्णमाक्षिकं स्वादु तिक्तं वृष्यं रसायनम् ।
चक्षुष्यं वस्तिरुक्कण्ठपाण्डुमेहविषोदरम् ।
अर्शः शोथं विषं कण्डुं त्रिदोषमपि नाश-
येत् ॥” * ॥
अशुद्धस्वर्णमाक्षिकस्य दोषमाह ।
“मन्दानलत्वं बलहानिमुग्रां
विष्टम्भितां नेत्रगदान् सकुष्ठान् ।
मालां तथैव व्रणपूर्बिकाञ्च
कुर्य्यादशुद्धं खलु माक्षिकञ्च ॥” * ॥
तद्दोषशान्त्यर्थं शोधनमाह ।
“माक्षिकस्य त्रयो भागा भागैकं सैन्धवस्य च
।
मातुलुङ्गद्रवैर्व्वाथ जम्बीरस्य द्रवैः पचेत् ॥
चालयेल्लोहजे पात्रे यावत् पात्रं सुलोहितम् ।
भवेत्ततस्तु संशुद्धिं स्वर्णमाक्षिकमृच्छति ॥”
* ॥
तन्मारणं थथा, --

**स्वर्णवल्कलः**, पुं, (स्वर्णवत् वल्कणं यस्या)

श्योणाकवृक्षः । इति शब्दचन्द्रिका ॥

**स्वर्णवल्ली**, स्त्री, (स्वर्णवर्णा वल्ली ।) लताविशेषः ।

तत्पर्य्यायः । रक्तफला २ काकायुः
३ काक-
वल्ली ४ । अस्या गुणाः ।
शिरःपीडात्रिदोष-
नाशित्वम् । दुग्धदातृत्वञ्च । इति
राजनिर्घण्टः ॥
(तथास्याः पर्य्याया गुणाश्च ।
स्वर्णवल्लीरक्तफला काकायुः
काकवल्लरी ।
स्वर्णवल्ली शिरःपीडां त्रिदोषान् हन्ति
दुग्धदा ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**स्वर्णसेफालिका**, स्त्री, स्व र्णवर्णा सेफालिका ।)

आरग्वधः । इति शब्दमाला ॥
पीतसेफालिका
च ॥

**स्वर्णाङ्गः**, पुं, (स्वर्णवत् पीतमङ्गं यस्य ।) आरग्-

वधः । इति राजनिर्घण्टः ॥
(तथास्य पर्य्यायाः ।
“आरग्वधो राजवृक्षः
सम्पाकश्चतुरङ्गुलः ।
आरवेतो व्याधिघातः कृतमालः
सुवर्णकः ॥
कर्णिकारो दीर्घफलः स्वर्णाङ्गः
स्वर्णभूषणः ।”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे
भागे ॥)

**स्वर्णारिः**, पुं, (स्वर्णस्य अरिः ।) गन्धकम् । इति

केचित् ॥

**स्वर्णुली**, स्त्री, क्षुपविशेषः । तत्पर्य्यायः । हेम

“भानुः सुभानुः स्वर्भानुः प्रभानुर्भानुमांस्तथा
चन्द्रभानुर्बृहद्भानुरतिभानुस्तथाष्टमः ।
श्रीभानुः प्रतिभानुश्च सत्यभामात्मजा दश
॥”)

**स्वर्भानुसूदनः**, पुं, (स्वर्भानोः सूदनं यत्र ।)

सूर्य्यः । इति पुराणम् ॥ (यथा, महाभारते ।
३ । ३०१ । १८ ।
“तच्छ्रुत्वा भगवान् देवो भानुः स्वर्भानुसूदनः ।
उवाच तं तथेत्येव कर्णं सूर्य्यः स्मयन्निव ॥”)

**स्वर्यातः**, त्रि, (स्वः स्वर्गं यातः ।) मृतः । यथा,

याज्ञवल्क्यः ।
“पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ।
तत्सुतो गोत्रजो बन्धुः शिष्यः सब्रह्मचारिणः ॥
एषामभावे पूर्व्वस्य धनभागुत्तरोत्तरः ।
स्वर्यातस्य ह्यपुत्तस्य सर्व्ववर्णेष्वयं विधिः ॥”
इति दायभागः ॥

**स्वर्लोकः**, पुं, (स्वरेव लोकः । स्वर्गः । इति

शब्दरत्नावली ॥ (यथा, भागवते २ । ५ । ४२
।
“भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकाऽस्य
नाभितः ।
स्वर्लोकः कल्पितो मूद्र्ध्ना इति वा लोक-
कल्पना ॥”)

**स्वर्व्वधूः**, स्त्री, (स्वः स्वर्गस्थ वधूः ।) अप्सरसः ।

इति हेमचन्द्रः ॥ (यथा, कथासरित्सागरे ।
१७ । १६ ।
“अथाजगाम भूलोकं तामादाय पुरूरवाः ।
स्वर्वधूदर्शनाश्चर्य्यमर्पयन् मर्त्यचक्षुषाम् ॥”)
स्वर्गीयस्त्रीमात्रञ्च ॥

**स्वर्व्वापी**, स्त्री, (स्वः स्वगस्य वापी) गङ्गा ।

इति हेमचन्द्रः ॥

**स्वर्व्वेश्या**, स्त्री, (स्वः स्यर्गस्य वेश्या ।) उर्व्व-

श्याद्यप्सरसः । इत्यमरः । १ । १ । ५५ ॥

**स्वर्व्वैद्यौ**, पुं, (स्वःस्वर्गस्य वैद्यौ ।) अश्विनी-

“कुलत्थस्य कषायेण घृष्ट्वा तैलेन वा पुटेत्
।”
तैलेनैवाजमूत्रेण म्रियते स्वर्णमाक्षिकम् ॥
इति भावप्रकाशः ॥
(तथास्य शोधनं यथा, --
“स्वर्णमाक्षिकचूर्णन्तु वस्ते बद्ध्वा
विपाचयेत् ।
कालमाविषशालिञ्च क्वाथे दौलाविधानतः ।
तदधः पतितं शस्तमेवं शुध्यति माक्षिकम्
॥”
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणाधि-
कारे ॥)

**स्वर्णयूथी**, स्त्री, (स्वर्णवर्णा यूथी ।) पीतवर्ण-

यूथिका । तत्पर्य्यायः । हरिणी २ पीतिका
३
हेमपुष्पिका ४ । इति जटाधरः ॥ हैमा ५ ।
इति शब्दरत्नावली ॥

**स्वर्णन्तता**, स्त्री, (स्वर्णवर्णा लता ।) ज्योतिष्मती ।

इति राजनिर्घण्टः ॥
(ज्योतिष्मतीशब्देऽस्या-
विवरणं ज्ञातव्यम् ॥)

**स्वर्णवर्णा**, स्त्री, (स्वर्णवत् वर्णो यस्याः ।) हरिद्रा ।

इति राजनिर्घण्टः ॥ सुवर्णसदृशबर्णयुक्ते, त्रि
॥
(यथा, भ्रमराष्टके । १ ।
“गन्धाढ्यासौ भुवनयिदिता केतकी
स्वर्णवर्णा
पद्मस्नात्या क्षुधितमधुपा पुष्पमध्ये पपात ।
अन्याभूतः कृसुमरजसा कण्टकैश्छिन्नपक्षः
स्पातुं गन्ते द्वयमपिं सखे नैव शक्तो द्विरेफः
॥”)

पुष्पी २ स्वर्णपुष्पा ३ अध्वजा ४ ।
अस्या
गुणाः । कटुत्वम् शीतत्वम् ।
कषायत्वम् ।
व्रणापहत्वञ्च । इति राजनिर्घण्टः ॥

**स्वर्त्त**, क गत्यातङ्के । इति कविकल्पद्रुमः ॥ (चुरा०-

पर०-गतौ सक०-आतङ्के अक०-
सेट् ।) तङ्को
दुःखेन जीवनम् । क, स्वर्त्तयति जने
गच्छति
दुःखेन जीवति वेत्यर्थः ।
असिस्वर्त्तत् । इति
दुर्गादासः ॥

**स्वर्द**, ङ, प्रीतितिलिहोः । इति कविकल्पद्रुमः ॥

(भ्वा०-आत्म०-सक०-सेट् । प्रीतिः
प्रीति-
करणम् । लिट्रसोपादानम् । ङ,
स्वर्दते
विविधास्वादं स्वादते च
रसायनमिति हला-
युधः । इति दुर्गादासः ॥

**स्वर्नदी**, स्त्री, (स्वः स्वर्गस्य नदी ।) स्वर्गङ्गा ।

इत्यमरः ॥ स्वः स्वर्नस्य नदी
स्वर्णदीष्णुर्ण इति
योगविभागात् णत्वम् । पूर्व्वपदे
संज्ञायां णत्व-
मिति परेषाम् प्रकरणे
गिरिनद्यादीनामुप-
संख्यानमिति वा णत्वम् । इति
मधुमाधवः ॥
स्वर्णदी दन्त्यनकारवतीत्येके । इति
भरतः ॥

**स्वर्भानवः**, पुं, (स्वर्भानोरयं प्रियत्वात् । स्वर्भानु +

अण् ।) गोमेदकमणिः । इति
राजनिर्घण्टः ॥

**स्वर्भानुः**, पुं, (स्वराकाशेभातीति । स्वर् + भा +

कुमारौ । तत्पर्य्यायः । अश्विनीसुतौ २
नासत्यौ
३ अश्विनौ ४ दस्रौ ५ आश्विनेयौ ६ । इत्य-
मरः । १ । १ । ५४ ॥
द्वित्वविशिष्टत्वादेकवचना-
भावः । इति स्वामी । सर्व्व एते नित्यद्विवच-
नान्ता एकत्वविवक्षायां एकवचनान्ता अपि ।
यथा, --
“नासत्यश्चैव दस्रश्च स्मृतौ द्वौ
नामतोऽश्विनौ ॥”
इति मार्कण्डेयपुराणम् ॥ इति भरतः ॥

**स्वलीनः**, पुं, (स्वस्मिन् लीनः ।) दानवविशेषः ।

यथा, --
“तामायान्तीन्तु रोधाय स्वलीनो नाम दानवः
।
पार्व्वतं रूपमास्थाग्र वर्षाणान्तु शतैर्द्विजाः ॥
ततो भगीरथो राजाराधयामास कौशिकम् ॥
स तुष्टः प्रददौ नागं वाहनं तं मगीरथः ।
तमारुह्यागमत्तत्र यत्र रुद्धा भगीरथी ॥
तेन नागेन तं दैत्यं संविदार्य्य न सङ्गतम् ।
शतधा तां समाधाय मूद्दर्ध्वन्यैरावणो गजः ॥
महीतलं समापेदे स यावन्नागसाह्वयम् ।
तस्माद्व्याघटनाद्विप्रा अभून्नागपुरं वरम् ॥”
इति वह्निपुराणे गङ्गावतरणनामाध्यायः ॥

| | “दाभाभ्यांनुः ।” ऊणा० ३ । ३२ । इति नुः ।)<br>राहुः । इत्यमरः । १ । ३२६ ॥<br>(यथा, साघे ।<br>२ । ४९ ।<br>“तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत् ।<br>हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम् ॥”<br>सत्यभामागर्भजातः श्रीकृष्णपुत्त्रविशेषः । यथा, भागवते । १० । ६१ । ११ । | |
|---|---|---|

**स्वल्पः**, त्रि, (सुष्ठु अल्पः ।) अत्यल्पः । यथा, --

"नेहातिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्म्मस्य त्रायते महतो भयात् ॥"
इति भगवद्गीतायाम् । २ । ४० ॥

**स्वल्पकेशरी**, [न्] पुं, (स्वल्पः केशरोऽस्यास्तीति ।

इनिः ।) कोविदारः । इति राजनिर्घण्टः ॥
(पर्य्यायोऽस्य यथा, --
"कोविदारश्चमरिकः कुद्दालो युगपत्रकः ।
कुण्डली ताम्रपुष्पश्च अन्तकः स्वल्पकेशरी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**स्वल्पकेशी**, [न्] पुं, (स्वल्पः केशोऽस्यास्तीति ।

इनिः ।) भूतकेशः । यथा, --
"गोलोमी स्वल्पकेशी च भूतकेशश्च केशधृक् ॥"
इति शब्दचन्द्रिका ॥
अव्यल्पकेशविशिष्टे, त्रि ॥

**स्वल्पपत्रकः**, पुं, (स्वल्पानि पत्राणि यस्य । कप् ।)

गौरशाकः । स तु मधूकभेदः । यथा, --
"गौरशाणो मधुरोऽस्त्रो गिरिजः स्वल्पपत्रकः ॥"
इति रत्नमाला ॥

**स्वल्पफला**, स्त्री, (स्वल्पं फलं यस्याः ।) हपुषा-

भेदः । तत्पर्य्यायः । कच्छूघ्नी २ ध्याङ्क्षनाशिनी ३
पुण्यादि । इत्यमरः । ३ । ३ । २४० ॥
आशी-
राशीर्व्वादः । क्षेमं निरुपद्रवः । पुण्यं पाप-
प्रक्षालनम् । एषु । आदिना मङ्गलादौ च स्वस्ति । स्थस्ति
मङ्गलाशीर्व्वादपापनिर्णेजनादि-
ष्विति भागुरिः । इति भरतः ॥
दानस्वीकार-
मन्त्रः । यथा, "ओमित्युक्त्वा प्रतिगृह्य स्वस्ती-
त्युक्त्वा सावित्रीं पठित्वा कामस्तुतिं पठेत् ॥"
इति शुद्धितत्त्वम ॥ तद्योगे चतुर्थी स्यात् ।
यथा, --
"स्वाहाग्नये स्वधा पित्रे स्वस्ति धात्रे नमः सते ॥"
इति मुग्धबोधव्याकरणत् ॥
(स्त्रीलिङ्गेऽपि दृश्यते । यथा, भागवते । ४ । २४ । ३३ ।
"जितं त आत्मविष्ठ्य्य स्वस्तये स्वस्तिरस्तु मे ।
भवता राधसा राद्धं सर्व्वस्मा आत्मने नमः ॥"
तथा च वाजसनेयसंहितायाम् । १३ । १९ ।
"अम्बिष्ट्वाभिपातु मह्या स्वस्त्था छर्दिषा शन्त-
मेन ॥")

**स्वस्तिकः**, पुं, क्ली, (स्वास्त क्षेमं कायति कथय-

तीति । कै + कः ।) आढ्यानां गृहविशेषः ।
इत्यमरः । २ । २ । १० ॥ तस्य लक्षणं यथा, --
"स्वस्तिकं प्राङ्मुखं यत् स्यादविन्द्यानुगतं भवेत् ।

**स्वस्तिबाचनं**, क्ली, (स्वस्ति मङ्गलस्य वाचनम् ।)

माङ्गल्यकर्म्मारम्भकालीनवक्ष्यमाणमन्त्रोच्चारण पूर्ब्बकतण्डुलविकिरणम् । तन्मन्त्रो यथा । अमुक कर्म्मणि पुण्याहं भवन्तो ब्रुबन्तु । इत्युक्ते पुण्याहमिति ब्राह्मणैस्त्रिरुक्ते अमुककर्म्मणि ऋद्धिं भवन्तो ब्रुवन्तु । ततः ऋद्ध्यतामिति ब्राह्मणास्त्रिर्ब्रूयुः । एवं स्वस्ति भवन्तो ब्रुवन्तु । इत्युक्ते स्वस्ति इति ब्राह्मणास्त्रिर्ब्रूयुः । ततः ॥
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्ताक्ष्योऽरिष्टनेमिः स्वस्ति नो वृहस्पतिर्द्दधातु ॥ इति पठित्वा तण्डुलान् विकिरेत् ॥ * ॥ प्रमाणं यथा, व्यासः ।
"संपूज्य गन्धपुष्पाद्यैर्ब्राह्मणान् स्वस्ति वाचयेत् ।
धर्म्मे कर्म्मणि माङ्गल्ये संग्रामाद्भुतदर्शने ॥"
धर्म्मे कर्म्मणि इति सप्तमीनिर्द्देशात् अमुक-
कर्म्मणि स्वस्ति भवन्तो ब्रुवन्तु इति ब्रूयात् । यमः ।
"पुण्याहवाचनं दैवे ब्राह्मणस्य विधीयते ।
एतदेव निरोङ्कारं कुर्य्यात् क्षत्तियवैश्ययोः ॥
सोङ्कारं ब्राह्मणे ब्रूयात् निरोङ्कारं महीपतौ ।
उपांशु च तथा वैश्ये शूद्रे स्वस्ति प्रयोजयेत् ॥"
इत्युद्वाहतत्त्वम् ॥ * ॥
अपि च ।
नन्द उवाच ।
"अलक्षितोऽस्त्रिन्रहमि मामकैरपि गोव्रजे ।
कुरु द्विजातिसंम्कारं स्वस्तिवाचनपूर्ब्बकम् ॥"
इति श्रीभागवते १० स्कन्धे ८ अध्यायः ॥

**स्वस्थः**, त्रि, (स्वस्मिन् तिष्ठतीति । स्व + स्था + कः ।

सुस्थः । यथा, --
"दुर्गे स्मृता हरसि भीतिमशेषजन्तोः
स्वस्थैः स्मृता मतिमतीव शुभां ददासि ।"
इति देवीमाहात्म्यम् ॥
("स्वस्थस्यापि समधातूनां साम्यानुग्रहार्थमेव कुश{??} रसगुणानाहारविकारांश्चपर्य्ययिले-
च्छन्त्युपयोक्तुम् । सात्मासमाख्यातानेकप्रकार-
भूयिष्ठांश्चोपयुञ्जानास्तद्विपरीतकरणलक्षणसमाख्यातचेष्टया सममिच्छन्ति कर्त्तुम् । देश-
कालान्मगुणविपरीतानांहि कर्म्मणां आहार-
विकाराणाञ्च क्रमेणोपयोगः सम्यक् । सर्व्वाभि-

प्लीहशत्रः ४ विषघी ५ कफघ्नी ६ अपरा-
जिता ७ । अस्या गुणाः हपुषागुणतुल्याः ।
इति राजनिर्घण्टः ॥

**स्ववामिनी**, स्त्री, (स्वस्मिन् पित्रालये वमतीति ।

वम + णिनिः । ङीप् ।) ऊढा अनढा वा पितृ-
गृहस्थिता । तत्पर्य्यायः । चिरिण्टो २ । इत्य-
मरः ॥ "द्वेऊढायामनूढायां वा पितृगृहस्थिता-
याम् । पितृकुलस्नेहात् चिरं एटति गच्छति
चिरिण्टी । इट गतौ अन् मनीषादिः ।
'स्ववासिन्यां चिरिण्टी स्यात् द्वितीयवयसि
स्त्रियाम् ॥'
इति रुद्रः ॥
चिरण्टीत्येके । स्वेषु ज्ञातिषु वसति स्ववासिनी
ग्रहादित्वाण्णिन् । सुखेन वसति सुवासिनीति
द्राविडाः ।" इत्यमरटीकायां भरतः ॥

**स्वबीजः**, पुं, (स्वं एव वीजं यस्य ।) आत्मा । इति

शब्दरत्नावली ॥ निजकारणे स्वीयवीर्य्ये च क्ली ॥

**स्वसा**, [ऋ] स्त्री, (सुष्ठु अस्यते क्षिप्यते इति ।

सु + अस् + "सुञ्यसेरृन् ।" उणा० २ । ९७ ।
इति ऋन् यणादेशश्च । भगिनी । इत्यमरः ।
२ । ६ । २९ ॥ (यथा, मनुः । २ । ५० ।
"मातरं वा स्वसारं वा मातुलां भगिनीं निजाम् ।
तत्पार्श्वानुमतौ चान्यौ तत्पर्य्यन्तगतोऽपरः ॥"
इति भरतधृतमाञ्झः ॥
अन्यद्वास्तुशब्दे द्रष्टव्यम् ॥
सितावरशाकः । इति राजनिर्घण्टः ॥
("शितिवारः शितिवरः स्मस्तिकः जुनिषणक्षः ।
श्रावारकः सूचिपत्रः पर्णकः कुक्कुटः शिखा ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
योगाङ्गासनविशेषः । तस्य त्वचणं आमनशब्दे
द्रष्टव्यम् ॥

**स्वस्तिकः**, पुं, (स्वस्ति क्षेमं खायतीति । कै + कः)

मङ्गलद्रव्यम् । तत्तु तण्डुलचूर्णनिर्म्मितत्रिकोणा-
काराधिवासद्रव्यम् । चतुष्पयः । गृहभेदः ।
इति मेदिनी ॥ पिष्टकविकारः । रततालिकः ।
इति विश्वः ॥ जिनानां चतुर्व्विंशतिचिह्नान्त-
र्गतचिह्नविशेषः । यथा, --
"वृषो गजोऽश्वः प्लवगः क्रौञ्चोऽब्जं स्वस्तिकः
शशी ।
मकरः श्रीवत्सः खड्गी महिषा सूकरस्तथा ॥
श्येनो वज्रं मृगच्छागौ नद्यावर्त्तो घटोऽपि च ।
कूर्म्मो नीलोत्पलं शङ्खः फणी सिंहोऽर्हतां
ध्वजाः ॥"
इति हेमचन्द्रः ॥
रसोनकः । इति त्रिकाण्डशेषः । (सर्पफणा-
स्थितनीलरेखाविशेषः । यथा, रामायणे ।
योगोऽनुदीर्णानां सन्धारणमसन्धारणमुदीर्णा-
नाञ्च गतिमतां साहसानाञ्च वर्ज्जनम् । स्वस्थ-
वृत्तमेतद्धातूनां साम्यानुग्रहार्थमुपदिश्यते ।"
इति चरके शारीरस्थाने षष्ठेऽध्याये ॥ * ॥
"उत्थायोत्थाय सततं स्वस्थेनारोग्यमिच्छता ।
धीमता यदनुष्ठेयं तत् सर्व्वं संप्रचक्ष्यते ॥
तत्रादौ दन्तपवनं द्वादशाङ्गुलमायतम् ।
कनिष्ठिकापरीणाहमृज्वग्रथितमव्रणम्॥"
इत्यादिकं सुश्रुते चिकित्सितस्थाने २४ अः ॥
"समदोषः समाग्निश्च समधातुमलक्रियः ।
प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते ॥"
इति च तत्रोत्तरतन्त्रे ६४ अध्यायः ॥)

**स्वस्रीयः**, पुं, (स्वसुरपत्यं पुमानीति । स्वसृ +

"स्वसुश्छः ।" ४ । १ । १४३ । इति छः ।

भिक्षेत भिक्षां प्रथमं या चैनं

नावमानयेत् ॥”)

**स्वस्क**, ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-सक०-सेट् ।) ङ,

स्वस्कते । इति दुर्गा-

दासः ॥

**स्वस्ति**, व्य, (सु + अस् + “साबसेः ।” उणा ० ४ ।

१८० । इति तिः । बहुलवचनात्

न भूभावः ।)

आशीः । क्षेमम् । (यथा,

महाभारते । ३ ।

१६६ । १३ ।

“स्वस्ति पाप्नुहि कौन्तेय

काम्यकं पुनराश्रमम् ॥”

१ । १९५ ।

“शिरोभिः पृथुभिनीगा

व्यक्तस्वस्तिकलक्षणैः ।

वमन्तः पावकं घोरं ददंशुर्दशनैः शिलाः

॥”)

**स्वस्तिमुखः**, पुं, (स्वस्ति मुखे प्रथमे वदने वा

यस्य ।) लेखः । ब्राह्मणः । वन्दिनि, त्रि

। इति

मेदिनी ॥

भागिनेयः । इत्यमरः । २ । ६ । ३२ ॥ (यथा, मनुः । ३ । १४८ ।
"मातामहं मातुलञ्च स्वस्रीयं श्वशुरं गुरुम् ।
दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत् ॥")

**स्वस्रीया**, स्त्री, (स्वसुरपत्यं स्त्री । स्वसृ + छः ।
टाप् ।) भागिनेयी । (यथा, मनुः । ११ । १७२ ।
"पैतृष्वस्रेयां भगिनीं स्वस्रीयां मातुरेव च ।
भ्रातुश्च भ्रातुस्तनयां गत्वा चान्द्रायणं चरेत् ॥")

**स्वाक्षपादः**, पुं, (अक्षपादः न्यायशास्त्रप्रवर्त्तयिता ।
तस्येदमित्यण् । आक्षपादं न्यायशास्त्रं सुष्ठु आक्ष
पादं अधीते इति अण् ।) नेयायिकः । इति जटाधरः ॥

**स्वाक्षरः**, पुं, (स्वस्य अक्षराणि यत्र ।) स्वीया-
क्षरः । सही इति दस्तस्वत इति च पारस्य-
भाषा ॥

**स्वागतं**, क्ली, (सुखेनागतमिति ।) कुशलप्रश्नः ।
इति हारावली ॥ (यथा, कुमारे । २ । १८ ।
"स्वागतं स्वानधिकारान् प्रभावैरवलम्ब्य वः ।
युगपद्युगबाहुभ्यः प्राप्तेभ्यः प्राज्यविक्रमाः ॥")
सुखेंनागतं स्वेनागतञ्च ॥ (सुष्ठु आगते, त्रि ।
यथा, मनुः । ४ । २२६ ।
श्रद्धयेष्टञ्च पूर्त्तञ्च नित्यं कुर्य्यादतन्द्रितः ।
श्रद्धाकृते ह्यक्षये ते भवतः स्वागतैर्धनैः ॥")

**स्वाङ्गिकः**, पुं, मार्द्दङ्गिकः । इति शब्दरत्नावली ॥

**स्वाच्छन्द्यं**, क्ली, (स्वच्छन्द + व्यञ् ।) स्वच्छन्दस्य
भावः । स्वच्छन्दता । स्वच्छन्दशब्दात् ष्ण्यप्रत्य-
येन निष्पन्नम् ॥ (यथा, मनुः । ३ । ३१ ।
"ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायै चैव शक्तितः ।
कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म्म उच्यते ॥")

शायकाम्बरचराचलाः कला-
श्चञ्चलाक्षि जगदुर्मृगोदयात् ॥"
शायकाम्बरचराचलाः कला-
श्चञ्चलाक्षि जगदुर्मृगोदयात् ॥"
दं ३ । १५ । इति कालिदासकृतरात्रिलग्न-
निरूपकग्रन्थः ॥ तस्य रूपं
विद्रुमप्रबालसदृ-
शम् । इति मुहूर्त्तचिन्तामणिः ॥ * ॥ तत्र जात-
फलम् ।
"कन्दर्परूपप्रभया समेतः
कान्ताजनप्रीतिरतिप्रसन्नः ।
स्वातिः प्रसूतौ यदि नित्यं स्वात्
महामतिः प्रातविभूतियोगः ॥"
इति कोष्ठीप्रदीपः ॥

**स्वाद**, ङप्रीतिलिहोः । इति कविकल्पद्रुमः ॥
(भ्वा०-आत्म०-सक०-सेट् ।) दन्त्यादिः । प्रीतिः
प्रीतिकरणम् । लिट्रसोपादानम् । ङ ।
"अपां हि तृप्ताय न वारिधारा
स्वादुः सुगन्धिः स्वदते तुषारा ।"
इति श्रीहर्षः ।
"स्वर्दते विविधास्वादं स्वादते च
रसायनम् ॥"
इति हलायुधः । इति दुर्गादासः ॥

**स्वादः**, पुं, (स्वाद् + घञ् ।) रसग्रहणम् । (यथा,
कथासरित्सागरे । ६५ । १४१ ।
"सभार्य्यः स तदा भुङ्क्ते
सक्तूँल्लवणवर्ज्जितान् ।
अन्यस्यान्नस्य बुबुधे नैव स्वादं स
जातुचित् ॥"
प्रीतिकरणम् । इति स्वादधातोरल्प्रत्ययेन
निष्पन्नः ॥

**स्वादनं**, क्ली, (स्वाद + ल्युट् ।) प्रीतिकरणम् ।
रसग्रहणम् । स्वादधातोरनट्प्रत्ययेन निष्प-
न्नम् ॥

स्तेषामिन्द्रियनिग्रहो यदि भवेद्
पङ्गुस्तरेत्
सागरम् ॥")

**स्वादुकण्टकः**, पुं, (स्वादूनि कण्टकानि यस्य ।)
विकङ्कतवृक्षः । गोक्षुरकः । इत्यमरः । २ ।
४ । ३७ । २ । ४ । ९९ ॥
विकण्टकवृक्षः । इति
राजनिर्घण्टः ॥ (विकङ्कतार्थे पर्य्यायो
यथा,
"विकङ्कतो स्रुवावृक्षो ग्रन्थिलः
स्वादुकण्टकः ।
स एव यज्ञवृक्षश्च कण्टकी
व्याघ्रपादपि ॥"
गोक्षुरकार्थे पर्य्यायो यथा, --
"गोक्षुरः क्षुरकोऽपि स्यात् त्रिकण्टः स्वादु-
कण्टकः ।
गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि ॥
पलङ्कषा श्वदंष्ट्रा च तथा
स्यादिक्षुगन्धिका ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे
भागे ॥)

**स्वादुकन्दा**, स्त्री, (स्वदुः कन्दो यस्याः ।)
विदारी । इति राजनिर्घण्टः ॥
(यथास्याः
पर्य्यायः ।
"विदारी स्वादुकन्दा च सा तु क्रोष्ट्री
सिता
स्मृता ।
इक्षुगन्धा क्षीरवल्ली क्षीरशुक्ला
पयस्विनी ।
वराहवदना गृष्टिर्वदरेत्यपि कथ्यते ॥"
इति भावप्रकाशण्य पूर्बखण्डे प्रथमे
भागे ॥)

**स्वादुका**, स्त्री, (स्वादुना रसेन कायतीति । कै +

**स्वातन्त्र्यं**, क्ली, (स्वतन्त्रस्य भावः । स्वतन्त्र + ष्यञ् ।)

स्वतन्त्रस्य भावः । यथा, --
“पिता रक्षति कौमारे भर्त्ता रक्षति यौवने ।
पुत्त्रश्च स्थविरे रक्षेत् न स्त्री स्वातन्त्र्यमर्हति ॥”
इत्युद्वाहतत्त्वम् ॥
“सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परि-
कीर्त्तितम् ।”
इति दायतत्त्वञ्च ॥

**स्वातिः**, स्त्री, सूर्य्यपत्नीविशेषः । यथा, --

“संज्ञा तु यमकालिन्दीखन्तमनुदस्रसूः ।
त्रसरेणुर्म्महावीर्य्या स्वातिः सूर्य्या सुवर्च्चला ।
सरेणुर्द्युमयी त्वाष्ट्री प्रिये चैते विवस्वतः ॥”
इति त्रिकाण्डशेषः ॥
खड्गः । इति धरणिः ॥

**स्वातिः**, पुं, स्त्री, (स्वेनैव अततीति । अत +

इम् । वा ङीष् ।) अश्विन्यादिसप्त-
विंशतिनक्षत्रान्तर्गतपञ्चदशनक्षत्रम् । इत्यमरः ।
३ । ५ । ३८ ॥ हस्ता स्वाती श्रवणा अक्लीवे ।
इति तिथ्यादितत्त्वम् ॥ स च कुङ्कुमसदृशारुण-
तरैकतारकः । अस्याधिदेवता पवनः । यथा,
“कुङ्कुमारुणतरैकतारके
वायुभे सुदति मौलिमागते ।

**स्वाती**, पुं, स्त्री, (स्वेनैव अततीति । अत +

इम् । वा ङीष् ।) अश्विन्यादिसप्त-
विंशतिनक्षत्रान्तर्गतपञ्चदशनक्षत्रम् । इत्यमरः ।
३ । ५ । ३८ ॥ हस्ता स्वाती श्रवणा अक्लीवे ।
इति तिथ्यादितत्त्वम् ॥ स च कुङ्कुमसदृशारुण-
तरैकतारकः । अस्याधिदेवता पवनः । यथा,
“कुङ्कुमारुणतरैकतारके
वायुभे सुदति मौलिमागते ।

**स्वादितः**, त्रि, प्रीतः । आस्वादितः । इति स्वाद-

धातोः क्तप्रत्ययेन निष्पन्नः ॥

**स्वादुः**, पुं, (स्वद आस्वादने + “कृवापाजीति ।”

उणा ० १ । १ । इति उण् ।) मधुररसः ।
यथा, --
“मधुरस्तु रसज्येष्ठो गुल्यः
स्वादुर्म्मधूलकः ।”
इति हेमचन्द्रः ॥
गुडः । यथा, --
“गण्डोलं स्यात् गुडः स्वादुः ।”
इति त्रिकाण्डशेषः ।
जावकीषधिः । यथा, --
“ह्रस्वाङ्गो मधुरः स्वादुः प्राणकश्चिर-
जीवकः ।”
इति जटाधरः ॥
सुगन्धिद्रव्यभेदः । तत्पर्य्यायः ।
अगुरुसारः २
सुधूम्पः ३ गन्धधूमजः ४ । अस्य गुणाः । कटु-
त्वम् । कषायत्वम् । उष्णत्वम् ।
सधूमामोदत्वम् ।
वातनाशित्वञ्च । इति राजनिर्घण्टः ॥

**स्वादुः**, स्त्री, (स्वद् + उण् ।) द्राक्षा । इति

स्वाद्वीशब्दटीकायां भरतः । २ । ४ ।
१०७ ॥

**स्वादुः**, त्रि, (स्वद् + उण् ।) इष्टः । मनोज्ञः ।

मधुरः । मिष्टः । इत्यमरमेदिन्यौ । ३ ।
३९४ ॥
(तदुक्तम् । यथा, --
“स्वाद्वन्नं सघृतं पयोदधियुतं ये भुञ्जते
मानवा

कः ।) नागदन्ती । इति राजनिर्घण्टः ॥

**स्वादुखण्डः**, पुं, (स्वादुः स्वण्डो यस्य ।) गुडः ।

इति शरब्दत्नावली ॥ मधुरभागश्च ॥

**स्वादुगन्धा**, स्त्री, (स्वादुर्गन्धो यस्याः । भूमि-

कुष्माण्डः । इति जटाधरः ॥
रक्तशोभाञ्जनः ।
इति रत्नमाला ॥

**स्वादुधन्वा**, [न्] पुं, (स्वादु धनुर्यस्य ।) काम-

देवः । इति केचित् ॥

**स्वादुपर्णी**, स्त्री, (स्वादूनि पर्णानि यस्याः । ङीष् ।)

दुग्धिका । इति राजनिर्घण्टः ॥
(यथास्याः
पर्य्यायः ।
दुग्धिका स्वादुपर्णी स्यात् क्षीरा
विक्षीरिणी
तथा ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**स्वादुपाका**, स्त्री, स्वादुः पाको यस्याः ।) काक-

माची । इति राजनिर्घण्टः ॥
(काकमाची-
शब्देऽस्या विषयो ज्ञातव्यः ॥)

**स्वादुपिण्डा**, स्त्री, (स्वादुः पिण्डो यस्याः ।)

पिण्डखर्ज्जूरी । इति राजनिर्घण्टः ॥

**स्वादुपुष्पः**, पुं, (स्वादूनि पुष्पाणि यस्य ।) कटभी ।

इति राजनिर्घण्टः ॥ (पर्य्यायोऽस्य
यथा, --
“कटभी स्वादुपुष्पश्च मधुरेणुः
कटम्भरः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥”)

**स्वादुफलं**, क्ली, (स्वादूनि फलानि यस्य ।) वदरी-

फलम् । इति शब्दरत्नावली ॥

| | | **स्वादुफला**, स्त्री, (स्वदु फलं यस्याः ।) कोलिः ।<br><br>इति शब्दरत्नावली ॥ (द्राक्षा ।<br>तत्पर्य्यायो<br>यथा,<br>“द्राक्षा स्वादुफला प्रोक्ता तथा<br>मधुरसापि च । |
|---|---|---|

मृद्वीका हारहूरा च गोस्तनी चापि
कीर्त्तिता ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे
॥)

**स्वादुमज्जा**, [न्] पुं, (स्वादु मज्ज यस्य ।) पर्व्वत-
जपीलुः । इति जटाधरः ॥

**स्वादुमांसी**, स्त्री, (स्वादु मांसं अन्तःशस्यं यस्याः ।
ङीप् ।) काकोली । इति राजनिर्घण्टः ॥
(गुणादयोऽस्याः काकोलीशब्देऽभिहिताः
॥)

**स्वादुमूलं**, क्ली, (स्वादु मूलं यस्य ।) गर्ज्जरम् ।
इति राजनिर्घण्टः ॥

**स्वादुरसा**, स्त्री, (स्वादुः रसो यस्याः ।) काकोली ।
इत्यमरः । २ । ४ । १४ ॥
आम्रातकफलम् ।
इति शब्दरत्नावली ॥ मदिरा । इति हेम-
चन्द्रः ॥ शतावरी । इति राजनिर्घण्टः ।
द्राक्षा ।
इति केचित् ॥

**स्वादुलता**, स्त्री, (स्वादुः लता ।) विदारी । इति
राजनिर्घण्टः ॥

**स्वादुशुद्धं**, क्ली, (स्वादु शुद्धञ्चेति ।) सैन्धवलवणं
सामुद्रलवणं वा । इति केचित् ॥

**स्वाद्वम्लः**, पुं, (स्वादुरम्लरसो यत्र ।) दाडिम-
वृक्षः । इति त्रिकाण्डशेषः ॥

**स्वाद्वी**, स्त्री, (स्वादु + “वोतो गुणवचनात् ।”
४ । १ । ४५ । इति ङीष् ।) द्राक्षा ।
इत्यमरः ।
२ । ४ । १०७ ॥

**स्वाधिष्ठानं**, क्ली, (स्वं लिङ्गं तत्र अधिष्ठानं यस्य ।
स्वस्य लिङ्गस्य अधिष्ठानं यस्मात् इति वा
।
स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदु-
नानायुधोद्यतकरैर्ललिताङ्गलक्ष्मी-
र्दिव्याम्बराभरणभूषितमत्तचित्ता॥
स्वाधिष्ठानाख्यमेतत् सरसिजममलं
चिन्तयेद्यो
मुनीन्द्र-
स्तस्याहङ्कारदोषादिकसकलरिपुःक्षीयते
तत्क्षणेन ।
योगीशः सोऽपि मोहाद्भुततिमिरचये भानु-
तुल्यप्रकाशो
गद्यैः पद्यैः प्रबन्धैर्विरचयति
सुधाकाव्यसन्दोह-
लक्ष्मीम् ॥”
इति पूर्णानन्दगिरिकृतषट्चक्रक्रमः ॥

**स्वाधीनः**, त्रि, (स्वस्य अधीनः ।) स्वतन्त्रः ।
अपराधीनः । यथा, --
“स्वाधीनवृत्तेः साफल्यं न पराधीनवृत्तिता
।
ये पराधीनकर्म्माणो जीवन्तोऽपि च ते
मृताः ॥”
इति गारुडे । ११५ । ३७ ॥

**स्वाधीनपतिका**, स्त्री, नायिकाविशेषः । तस्या
लक्षणं यथा । स्वाधीनः पतिर्यस्याः सा
स्वाधीनपतिका । सदाज्ञाकरप्रियतमा ।
अस्या-
श्चेष्टा वनविहारादिमदनोत्सवदर्शनं मदाह-
ङ्कारमनोरथावाप्तिप्रभृतयः । सा पञ्चविधा
।
मुग्धा मध्या प्रौडा परकीया सामान्या चेति
।
मुग्धा स्वाधीनपतिका यथा, --
“मध्ये नो कृशिमा स्तने न गरिमा देहे न
वः
कान्तिमा
श्रोणौ न प्रथिमा गती न जडिमा नेत्रे न वा
वक्रिमा ।
लास्य न द्राढमा न वाचि पटिमा हास्ये न
वा स्फीतिमा
प्राणेशस्य तथापि मज्जति मनो मय्येव किं
भ्राम्यन्तीमपि पल्लवस्य परितो दृष्टिर्न मां
मुञ्चित ॥ ४ ॥
सामान्या स्वाधीनपतिका यथा, --
सन्त्येव प्रतिमन्दिरं मृगदृशो यासां सुधा-
सागर-
स्रोतःस्यूतसरोजसुन्दरचमत्कारादृशो-
र्विभ्रमाः ।
चित्रं किन्तु
विचित्रमन्मथकलावैदग्ध्यहेतोः पुन
र्वित्तं चित्तहरं प्रयच्छति युवा मय्येव किं
कारणम् ॥” ५ ॥
इति रसमञ्जरी ॥

**स्वाधीनभर्त्तृका**, स्त्री, (स्वस्या निजायाः अधीनो
भर्त्ता यस्याः । कप् ।) स्वाधीनपतिका ।
सा च
नायिकाभेदः ॥ यथा, --
“स्र्ण्डितोत्कण्ठिता लब्धा तथा
प्रोषितभर्त्तृका ।
कलहान्तरिता वासकसज्जा
स्वाधीनभर्त्तृका ॥”
इति जटाधरः ॥
(तल्लक्षणं यथा, साहित्यदर्पणे । ३ ।
११३ ।
“कान्तो रतिगुणाकृष्टो न जहाति
यदन्तिकम् ।
विचित्रविभ्रमासक्ता सा स्यात् स्वाधीन-
भर्त्तृका ॥”)

**स्वाध्यायः**, पुं, (ग्रुष्ठु आवृत्य अध्यायः वेदाध्ययन-
मिति ।) आवृत्य वेदाध्ययनम् ।
तत्पर्य्यायः ।
जपः २ । इत्यमरः । २ । ७ । ४७ ॥
जापः ३ ।
इति जटाधरः ॥
“स्वाध्यायो जप इत्युक्तो
वदाध्ययनकर्म्मणि ।”
इति शब्दरत्नावली ॥
द्वे आवृत्य वेदाध्ययने । सु सुकृताय
आवृत्य

रित्युक्तेस्तथात्वम् ।)
षट्चक्रान्तर्गतद्वितीय-
चक्रम् । तत्तु
लिङ्गमूलस्ववादिलान्तवर्णयुक्त-
होरकसमप्रभषड्दलपद्मम् । अत्र शिवाग्नी
वर्त्तेते । यथा, --
“षड्दले वैद्युतनिभे स्वाधिष्ठानेऽनलत्विषि
।
व-भ-मैर्य-र-लैर्युक्ते वर्णैः षड्भिश्च सुव्रत
॥”
अपि च ।
“स्वाधिष्ठानाख्यचक्रे तु सबिन्दुं राकिणीं
तथा ।
वादिलान्तं प्रविन्यस्य नाभौ तु मणिपूरके
॥”
इति तन्त्रसारः ॥
अन्यच्च ।
“सिन्दूरपूररुचिरारुणपद्ममन्यत्
सौषुम्नमध्यघटितं ध्वजमूलदेशे ।
अङ्गच्छदैः परिवृतं तडिताभवर्णै-
र्व्वाद्यैः सबिन्दुलसितैश्च पुरन्दरार्णैः ॥
तस्यान्तरे प्रविलसद्विषदप्रकाश-
मम्भोजमण्डलमथो वरुणस्य तस्य ।
अर्द्धेन्दुरूपलसितं शरदिन्दुशुभ्रं
वङ्कारबीजममलं मकराधिरूढम् ॥
तस्याङ्कदेशलसितो हरिरेव पाया-
न्नीलप्रकाशरुचिरश्रियमादधानः ।
पीताम्बरः प्रथमयौवनगर्व्वधारी
श्रीवत्सकौस्तुभधरो धृतवेदबाहुः ॥
तत्रैव भाति सततं खलु राकिणी सा
नीलाम्बजारुचिमहोदरकान्तिशोभा।
कारणम् ॥ १ ॥
मध्या स्वाधीनतपतिका यथा, --
यदपि रतिमहोत्सवे नकारो
यदपि करेण च नीविधारणानि ।
प्रियसखि पतिरेष पार्श्वदेशं
तदपि न मुञ्चति चेत् किमाचरामि ॥ २ ॥
प्रौढा स्वाधीनपतिका यथा, --
वक्त्रस्याधरपल्लवस्य वचसो हास्यस्य
लास्यस्य
वा
धन्यानामरबिन्दसुन्दरदृशांकान्तस्तनोति
स्तुतिम् ।
स्वप्नेनापि न गच्छति श्रुतिपथं चेतःपथं
दृक्पथं
काप्यन्या दयितस्य मे सखि कथं
तस्यास्तु
भेदग्रहः ॥ ३ ॥
परकीया स्वाधीनपतिका यथा, --
स्वीयाः सन्ति गृहे सरोरुहदृशो यासां
विलास-
क्षणं
काञ्चीकुण्डलहेमकङ्कणझनत्कारो न
विश्रा-
म्यति ।
को हेतुः सखि कानने पुरपथे सौधे सखी-
सन्निधौ
अध्यायोऽधीतिः स्वाध्यायः इङो घञ् ।
जपनं
जपः अल् घञि जापश्च । इति भरतः ॥

**स्वाध्यायवान्**, [त्] पुं, (स्वाध्यायोस्त्यस्येति ।
मतुप् । मस्य वः ।) स्वाध्वायविशिष्टः ।
वेद-
पाठकः । (यथा, महाभारते । १ । ४० ।
१० ।
“स तूद्‌र्ध्वरेतास्तपसि प्रसक्तः
स्वाध्यायवान् वीतभयः कृतात्मा ।
चचार सर्व्वां पृथिवीं महात्मा
न चापि दारान् मनसाप्यकाङ्क्षत ॥”)

**स्वाध्यायी**, [न्] पुं, स्वाध्यायोऽस्यास्तोति ।
इनिः ।) पत्तनबणिक् । इति त्रिकाण्डशेषः
॥
त्रि, वेदपाठकश्च ॥ (यथा, महाभारते । ३
।
२४ । १५ ।
“ब्राह्मणाः साग्निहोत्राश्च तथैव च निरग्नयः
।
स्वाध्यायिनो भिक्षवश्च तथैव वनवासिनः
॥”)

**स्वानः**, पुं, (स्वननमिति । स्वन् शब्दे + “स्वन-
हसोर्वा ।” ३ । ३ । ६२ । इति घञ् ।)
शब्दः ।
इत्यमरः । १ । ७ । २४ ॥ (यथा, माघे ।
४ । ५७ ।
“या बिभर्त्ति कलवल्लकी गुण-
स्वानमानमतिकालिमालया।
नात्र कान्तमुपगीतया तथा
स्वानमानमति कालिमालया ॥”

**स्वान्तं**, क्ली, (स्वन्यते स्मेति । स्वन + क्त ।
“क्षुन्ध
स्वान्तध्वान्तेति ।” ७ । २ । १८ । इति
अनिट

कत्वं निपातितञ्च ।) मनः । इत्यमरः । १ । ४ । ३१ ॥
(यथा, भट्टिः । ६ । २२ ।
“तस्यालिपत शोकाग्निः स्वान्तं काष्ठमिव ज्वलन् ।
अलिप्तेवानिलः शीतो वने तं न त्वजिह्लदत् ॥”)
गह्वरम् । इति मेदिनी ॥ (स्वस्य अन्ते, पुं, क्ली ।
यथा, भागवते । २ । ६ । ३४ ।
“यो ह्यात्ममायाविभवञ्च पर्य्यगाद्
यथा नभः स्वान्तमथापरे कुतः ॥”)
शब्दिते, त्रि ॥

**स्वापः**, पुं, (स्वप + घञ् ।) निद्रा । इत्यमरः । १ । ७ । ३६ ॥ (यथा, भागवते । ३ । २६ । २९ ।
“संशयोऽथ विपर्य्यासो निश्चयः स्मृतिरेव च ।
स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथक् ॥”)
शयनम् । स्पर्शाज्ञता । अज्ञानम् । इति विश्व-
मेदिन्यौ ॥ (विषयोऽस्य यथा, --
“सर्व्वर्त्तुषु दिवास्वापः प्रतिसिद्धोऽन्यत्र ग्रीष्मात् ॥”
इति सुश्रुते शारीरस्थाने चतुर्लेऽध्याये ॥)

**स्वापतेयं**, क्ली, (स्वपतौ धनस्वामिनि साधुः ।
स्वपति + “पथ्यातिथिवसतिस्वपतेर्ढञ् ।” ४ ।
४ । १०४ । इति ढञ् । स्वागतादित्वान्नैजा-
गमः ।) धनम् । इत्यमरः । २ । ९ । ९० ॥
(यथा, माघे । १४ । ९ ।
“स्वापतेयमधिगम्य धर्म्मतः
पर्य्यपायमवीवृधञ्च यत् ।
तीर्थगामि करवै विधानत-
स्तञ्जुषस्व जुहवानि चानले ॥”)

**स्वापदः**, पुं, (श्वापदः । पृषोदरादित्वात् साधुः ।)
नेता ७ प्रभुः ८ परिवृढः ९ अधिपः १० ।
इत्यमरः । ३ । १ । १० ॥ अवमतिः ११ ईशः
१२ आर्य्यः १३ । इति जटाधरः ॥ पालकः १४ ।
इति शब्दरत्नावली ॥

**स्वामी**, [न्] पुं, (स्वमस्यास्तीति । स्व + आमिन् ।)
कार्त्तिकेयः । इति मेदिनी ॥ राजा ।
यथा, --
“स्वाम्यमात्यः सुहृत् कोषो
राष्ट्रदुर्गबलानि च ।
राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च ॥”
इत्यमरः । २ । ८ । १७ ॥
विभुः । हरः । हरिः । इति शब्दरत्नावली ॥
गुरुः । भर्त्ता । इति धरणिः ॥
वात्स्ययनमनिः ।
इति त्रिकाण्डशेषः ॥ गरुडः । इति केचित् ॥
अतीतकल्मीयार्हद्भेदः । इति हेमचन्द्रः ॥ परम-
हंसः । यथा, श्रीधरस्वामिप्रभृतयः ॥ * ॥
स्वाम्यर्थमरणफलं यथा, वह्निपुराणे संग्राम-
प्रशंमानामाध्याये ।
“शृङ्गिभिर्दंष्ट्रिभिर्व्वापि तथा म्लेच्छैश्च तस्करैः ।
स्वाम्यर्थेये हता राजन् तेषांस्वर्गो न संशयः ॥
हते गोस्वामिविप्रार्थे नरमेधफलं हि तत् ॥”
स्वामिप्रशंसा यथा, --
“स्त्रीगर्व्वः पतिसौभाग्याद्वर्द्धते च दिने दिने ।
महिषी आसीत् । अस्मिन्मन्वन्तरे यज्ञोऽवतारः
स एव इन्द्रः । यमादयो देवाः मरीच्यादिसप्त-
र्षयः । स्वायम्भुवो मनुः । प्रियव्रतोत्तानपादौ
मनुपुत्त्रौ । आकूतिः देवहूतिः प्रसूतिः कन्याः ।
इति श्रीभागवतमतम् ॥ * ॥ अपि च ।
“यामा नाम पुरा देवाः आसन् स्वायम्भुवे-ऽन्तरे ।
सप्तैव ऋषयः पूर्ब्बं ये मरीच्यादयः स्मृताः ॥
अग्निध्रश्चाग्निबाहुश्च रिभः सवन एव च ।
ज्योतीष्मान् द्युतिमान् हव्यो मेधा मेधातिषि-
र्व्वसुः ॥
स्वायम्भुवस्यास्य मनोर्द्दशैते वंशवर्द्धनाः ।
प्रतिस्वर्म्ममी कृत्वा जग्मुस्ते परमं पदम् ॥
एतत् स्वायम्भुवं प्रोक्तं स्वारोचिषमतः परम् ॥”
इति मात्स्वे । ९ । ३ -- ६ ॥ * ॥
अपरञ्च ।
“ततो ब्रह्मात्मसंभूतं पूर्ब्बं स्वायम्भुवं प्रभुः ।
आत्मनः सदृशं चक्रे प्रजापाल्ये मनुं तदा ॥
शतरूपाञ्च तां नारीं तपोनिर्धूतकल्मषाम् ।
स्वायम्भुवो मनुर्देवः पत्नीत्वे जगृहे प्रभुः ॥
तस्माच्च पुरुषात् पुत्त्रौ शतरूपा व्यजायत ।
प्रियव्रतोत्तानपादौ प्रख्यातावात्मकर्म्मभिः ॥
कन्ये द्वे च तथाकूतिः प्रसूतिश्च ततः पिता ।
ददौ प्रसूतिं दक्षाय तथाकूतिं रुचेः पुरा ॥
प्रजापतिः स जगृहे तयोर्यज्ञः सदक्षिणः ।
पुत्त्रो जज्ञे महाभानः दम्पत्योर्मिथुनं ततः ॥

श्वापदः । इति हलायुधः ॥

**स्वाभाविकः**, त्रि, (स्वभावे भवः । स्वभाव + ठक् ।

स्वभावसिद्धः । स्वभावत उत्पन्नः । यथा, --
"शैत्यं नाम गुणस्तवैव सहजः स्वभाविकी स्वच्छता
किं ब्रूमः शुचितां भवन्ति शुचयः स्पर्शेन यस्यापरे ।
किञ्चान्यत् कथयामि ते स्तुतिपदं त्वं जीविनां जीवनं
त्वञ्चेन्नीचपथेन गच्छसि पयः कस्त्वां निषेद्धं क्षमः ॥"
इति वल्लाल्लसेनं प्रति लक्ष्मणसेनप्रेरितश्लोकः ॥
(व्याधिप्रकारभेदः । यथा, --
"तद्दुःखसंयोगा व्याधय इत्युच्यन्ते । चतुर्व्विधाः
आगन्तवः शारीरा मानसाः स्वाभाविका श्चेति । स्वाभाविकाः क्षुत्पिपासाजरामृत्यु-
निद्राप्रभृतयः ॥" इति सुश्रुते सूत्रस्थामे प्रथमे-
ऽध्याये ॥)

**स्वामिजङ्घी**, [न्] पुं, परशुरामः । इति शब्द-

माला ॥

**स्वामी**, [न्] त्रि, (स्वमस्वास्तीतिः । स्व + "स्वामि-

न्नैश्वर्य्ये ।" ५ । २ । १२६ । इति आमिन्प्रत्ययेन
तिपातितः ।) अधिपतिः । तत्पर्य्यायः । ईश्वरः
२ एतिः ३ ईशिता ४ अधिभूः ५ नायकः ६
सुस्त्री चेद्विभवो यस्मात्तं भजेद्धर्म्मतः सदा ॥
पतिर्बन्धुः कुलस्त्रीणामधिदेवः सदा पतिः ।
परं मम्पतस्वरूपश्च सुखरूपश्च मूर्त्तिमान् ॥
धर्म्मदः सुखदः शश्वत् प्रीतिदः शान्तिदः
सदा ।
सम्मानदो मानदश्च मान्यश्च मानखण्डनः ॥
सारात्सारतमः स्वामी बन्धूनां बन्धुदर्शनः ।
न च भर्त्तुः समो बन्धुर्बन्धोर्बन्धुषु दृश्यते ॥
भरणादेव भर्त्तारं पालनात् पतिरुच्यते ।
शरीरेशाच्च स स्वामी कामदात् कान्त उच्यते ।
बन्धुश्च सुखबन्धाच्च प्रीतिदानात् प्रियः परः ।
ऐश्वर्य्यदानादीशश्च प्राणेशात् प्राणनाथकः ॥
रतिदानाच्च रमणः प्रियो नास्ति प्रियात् परः ।
पुन्नस्तु स्वामिनः शुक्रात् जायते तेन स प्रियः ॥
शतपुत्त्रात् परः स्वामी कुलजानां प्रियः सदा ।
असत्कुलप्रसूता या कान्तं विज्ञातुमक्षमा ॥
स्नानञ्च सर्व्वतोर्थेषु सर्व्वयज्ञेषु दीक्षणम् ।
प्रादक्षिण्यं पृथिव्याश्च सर्व्वाणि च तपांसि च ॥
सर्व्वाण्येव व्रतानीति महादानानि यानि च ।
उपोषणानि पुण्यानि यान्यन्यानि च विश्वतः ॥
गुरुसेवा विप्रसेवा देवसेवादिकञ्च यत् ।
स्वामिनः पादसेवायाः कलां नार्हन्ति षोड-
यज्ञस्य दक्षिणायास्तु पुत्रो द्वादश जज्ञिरे ॥
यामा इति समाख्याता देवाः स्वायम्भुवेऽन्तरे
तस्य पुत्रास्तु यज्ञस्य दक्षिणायां सुभास्वराः ॥
प्रसूत्याञ्च तथा दक्षश्चतस्रो विंशतिस्तथा ।
ससर्ज कन्यास्तासान्तु सम्यक् नामानि मे शृणु ॥"
इति मार्कण्डेयपुराणे दुःसहशासननामाध्यायः
(तत्सम्बन्धिनि, त्रि । यथा, हरिवंशे । ७ । ९ ।
"यामा नाम तथा देवा आसन् सायम्भुवे-
ऽन्तरे ॥
ब्रह्मसम्बन्धिनि च त्रि । यथा, कुमारे । २ । १ ।
"तस्मिन् विप्रकृताः काले तारकेण दिवौकसः ।
तुरासाह पुरोधाय धाम स्वायम्भुवं ययुः ॥")

**स्वायम्भुवमनुपिता**, [तृ] पुं, (स्वयम्भ वमनोः

पिता ।) ब्रह्मा । इति पुराणम् ॥

**स्वायम्भुवी**,) स्त्री, (स्वयम्भुव इयमिति । अण् ।

ङीष् ।) ब्राह्मी । इति राजनिर्घण्टः ॥

**स्वराट्**, [ज] पुं, (स्वः स्वर्गे राजते इति । राज्

+ क्विप् ।) इन्द्रः । इत्यमरः । १ । १ । ४६ ॥

**स्वारोचिषः**, पुं, (स्वरोचिषोऽप्रत्यमिति । अण् ।)

द्वितीयो मनुः । अस्मिन् मन्वन्तरे विभुरव-
तारः । रोचन इन्द्रः । तुषियादयो देवाः ।
उर्ज्जस्तम्भादयः सप्तर्षयः । अग्निसुतः स्वारो-
चिषो मनुः । द्युमत्सुषेणरोचिष्मत्प्रमुखा मनु-
पुत्राः । इति श्रीभागवतमतम् ॥ अपि च ।
"स्वारोचिषस्य तनयाश्चत्वारो देववर्च्चसः ।

शीम् ॥
गुरुविप्रेष्टदेवेषु सर्व्वेभ्यश्च पतिर्गुरुः ॥
इति व्रह्मवैवर्त्ते प्रकृतिखण्डे । ४२ । २०
-- ३० ॥

**स्वाम्युपकारकः**, पुं, (स्वामिन उपकारकः ।)

अश्वः । इति केचित् ॥ प्रभुहितकारके,
त्रि ॥

**स्वायम्भुवः**, पुं, (स्वयम्भुवोऽपत्यमिति । स्वयम्भू
+

अण् । संज्ञापूर्ब्बकस्य विधेरनित्यत्वात्
न गुणः ।)
प्रथममनुः । स च सृष्टिवृद्धये ब्रह्मणो
दक्षि-
णाङ्गाज्जातः । वामाङ्गात् शतरूपा स्त्री
तस्य

नभोनभस्यप्रसृतिभानवःकीर्त्तिवर्द्धनाः ॥

दत्तोलिश्च्यवनस्तम्बःप्रालः कश्यप एव च ।

और्व्वो वृहस्पतिश्चैव सप्त सप्तर्षयः स्मृताः ॥

देवाश्च तुषिता नाम स्मृताः स्वारोचिषेऽन्तरे ।

हस्तीन्द्रः सुकृतो मूर्त्तिरापज्योतिरयः स्वयः ॥

वशिष्ठस्थ सताः सप्त ये प्रजापतयस्तदा ।

द्वितीयमेतत् कथितं मन्वन्तरमतः परम् ॥”

इति मात्स्ये । ९ । ७ -- १० ॥

**स्वार्थः**, पुं, (स्वस्य अर्थः ।) स्वीयाभिधेयः ।

स्वकीयधनम् । स्वीयवस्तु ।

आत्मप्रयोजनम् ।

(यथा, माघे । २ । ६५ ।

“यजतां पाण्डवः स्वर्गमवत्विन्द्रस्तपत्विनः ।

वयं हनाम द्विषतः सर्व्वः स्वार्थं समीहते ॥”)

स्वनिवृत्तिः । इति अर्थशब्दार्थदर्शनात् ॥ लिङ्गार्थ-

विशेषः । यथा, --

“स्वार्थो द्रव्यञ्च लिङ्गञ्च संख्या कर्म्मादिरेव च ।

अमी पञ्चैव लिङ्गार्थास्त्रयः केषाञ्चिदग्रिमाः ॥

स्वार्थो विशेषणम् । द्रव्यं विशेष्यम् । लिङ्गं

पुंस्त्वादि । संख्या एकत्वादिः ।

कर्म्मादिर्ढादिः ।”

इति मुग्धबोधटीकायां दुर्गादासः ॥

**स्वास्थ्यं**, क्ली, (स्वस्थस्य भावः । स्वस्थ + ष्यञ् ।)

श्रीनारायण उवाच ।

सृष्टेः प्रथमतो देवाश्चाहारार्थं ययुः पुरा ।

ब्रह्मलोके ब्रह्मसभामगम्यां सुमनोहराम् ॥

मत्वा निवेदनञ्चक्रुराहारहेतुकं मुने ।

ब्रह्मा श्रुत्वा प्रतिज्ञाय सिषवे श्रीहरिं परम् ॥

यज्ञरूपो हि भगवान् कलया च बभूव सः ।

यज्ञे यद्यद्धविर्द्दानं दत्तं तेभ्यश्च कर्म्मणा ॥

हविर्द्ददति विप्राश्च भक्त्या च क्षत्त्रियादयः ।

सुरा नैव प्राप्नुवन्ति तद्दानं मुनिपुङ्गव ! ॥

देवा विषण्णास्ते सर्व्वे तत्सभाञ्च ययुः पुनः ।

गत्वा निवेदनं चक्रुराहाराभावहेतुकम् ॥

ब्रह्मा श्रुत्वा तु ध्यानेन श्रीकृष्णशरणं ययौ ।

पूजाञ्चकार प्रकृतेर्ध्याननैव तदाज्ञया ॥

प्रकृतेः कलया चैव सर्व्वशक्तिस्वरूपिणी ।

बभूव दाहिका शक्तिरग्नेः स्वाहा स्वकामिनी ॥

ग्रीष्ममध्याह्नमार्त्तण्डप्रभाच्छादनकारिणी॥

अतीवसुन्दरी रामा रमणीया मनोहरा ।

ईषद्धास्यप्रसन्नास्या भक्तानुग्रहकातरा ॥

उवाचेति विधेरग्रे पद्मयोने ! वरं वृणु ।

विधिस्तद्वचनं श्रुत्वा संभ्रमात् समुवाच ताम् ॥

ब्रह्मोवाच ।

त्वमग्नेर्दाहिका शक्तिर्भव पत्नी च सुन्दरि ! ।

दग्धुं न शक्तस्त्यकृती हुताशश्च त्वया विना ॥

तन्नामोच्चार्य्य मन्त्रान्ते यो दास्यति हविर्नरः ।

सुरेभ्यस्तत् प्राप्नुवन्ति सुराः स्वानन्दपूर्ब्बकम् ॥

अग्नेः सम्पत्स्वरूपा च श्रीरूपा सा गृहेश्वरी ।

देवानां पूजिता शश्वत् नरादीनां भवाम्बिके ॥

ब्रह्मणश्च वचः श्रुत्वा सा विषण्णा बभूव ह ।

तमुवाच ततो देवी स्वाभिप्रायं स्वयम्भुवम् ॥

स्वाहोवाच ।

अहं कृष्णं भजिष्यामि तपसा सुचिरेण च ॥

ब्रह्मंस्तदन्यत् यत्किञ्चित् स्वप्नवद्भ्रम एव च ॥

विधाता जगतां त्वञ्च शम्भुर्मृत्युञ्जयः प्रभो ।

विभर्त्ति शेषो विश्वञ्च धर्म्मः साक्षी च धर्म्मिणाम् ॥

सर्व्वाद्यपूज्यो देवानां गणेषु च गणेश्वरः ।

प्रकृतिः सर्व्वसूः सर्व्वपूजिता यत्प्रसादतः ॥

वह्निस्त्वां भक्तिभावेन संपूज्य च गृहेश्वरोम् ।

रमिष्यते त्वया सार्द्धं रामया रमणोयया ॥

इत्युक्त्वान्तर्द्दधे देवो देवीमाश्वास्य नारद ! ।

तत्राजगाम संत्रस्तो वह्निर्ब्रह्मनिदेशतः ॥

सामवेदोक्तध्यानेन ध्यात्वा तां जगदम्बिकाम् ।

संपूज्य परितुष्टाव पाणिं जग्राह मन्त्रतः ॥

तदा दिव्यवर्षशतं स रेमे रामया सह ।

अतीवनिर्ज्जने रम्ये संभोगसुखदे सदा ॥

बभूव गर्भस्तस्याश्च हुताशस्य च तेजसा ।

तद्दधार च सा देवी दिव्यं द्वादशवत्सरम् ॥

ततः सुषाव पत्राश्च रमणीयान्मनोहरान् ।

दक्षिणाग्निर्गार्हपत्याहवनीयान् क्रमेण च ॥

ऋषयो मुनयश्चैव ब्राह्मणाः क्षत्त्रियादयः ।

स्वाहान्तं मन्त्रमुच्चार्य्य हविर्द्ददति नित्यशः ॥

स्वाहायुक्तञ्च मन्त्रञ्च यो गृह्णाति प्रशस्तकम् ।

सर्व्वसिद्धिर्भवेत्तस्य ब्रह्मन् ग्रहणमात्रतः ॥

विषहीनो यथा सर्पो वेदहीनो यथा द्विजः ।

पतिसेवाविहीना स्त्री विद्याहीनो यथा नरः ॥

फलशाखाविहीनश्च यथा वृक्षो हि निन्दितः ।

स्वाहाहीनस्तथा मन्त्रो न द्रुतं फलदायकः ॥

आरोग्यम् । इति शब्दरत्नावली ॥
(यथा, --
“गतवेगे भवेत् स्वास्थ्यं
सर्व्वेष्वाक्षेपकादिषु ।”
इति माधवकरकृतरुग्विनिश्चयसंग्रहे
वात-
ष्याध्यधिकारे ॥) सन्तोषः । इति
हेमचन्द्रः ॥
(यथा, साहित्यदर्पणे । ३ । २४९ ।
“किं वक्ष्यन्त्यपकल्मषाः कृतधियः
स्वप्नेऽपि
सा दुर्ल्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा
धन्योऽधरं
धास्यति ॥”)

**स्वाहा**, व्य, (सुष्ठु आहूयन्ते देवा अनेनेति ।
सु + आ + ह्वे + डा ।) देवहविर्द्दानमन्त्रः
।
तत्पर्य्यायः । श्वौषट् २ वौषट् ३ वषट्
४
स्वधा ५ । इत्यमरः । ३ । ४ । ८ ॥
अस्य
टीका स्वधाशब्दे द्रष्टव्या ॥ (यथा, देवी-
माहात्म्ये । १ । ५४ ।
“त्वं स्वाहा त्वं स्वघा त्वं हि वषट्कारः
स्वरा-
त्मिका ॥”)

**स्वाहा**, स्त्री, अग्निभार्य्या । सा दक्षकन्या । इति
श्रीभागवतम् ॥ तत्पर्य्यायः । अग्नायी
२ हुत-
भुक्प्रिया ३ । इत्यमरः । २ । ३ । २१
॥ द्विठः ४
अनलप्रिया ५ । इति बीजवर्णाभिधानम्
॥
वह्निबधूः । ६ । इति शब्दरत्नावली ॥ *
॥ मता-
न्तरे तस्या उत्पत्तिर्य्यथा, --
नारद उवाच ।
“स्वाहा देवहविर्द्दाने प्रशस्ता
सर्व्वकर्म्मसु ।
ऋषयो मुनयश्चैव पूजिता यं निषेष्य च ।
तत्पादपद्मं पद्मैकभावेन चिन्तयाम्यहम् ॥
पद्मास्या पाद्ममित्युक्त्वा पद्मनाभानुसारतः ।
जगाम तपसे पाद्मे पद्मादीशस्य पद्मजा ॥
तपस्तेपे लक्षवर्षमेकपादेन पद्मजा ।
तदा ददर्श श्रीकृष्णं निर्गुणं प्रकृतेः परम् ॥
अतीवकमनीयञ्च रूपं दृष्ट्वा च रूपिणी ।
मूर्च्छां संप्राप कामेन कामेशस्य च कामुकी ॥
विज्ञाय तदभिप्रायं सर्व्वेशस्तामुवाच सः ।
समुत्थाप्य च स्वक्रोडे क्षीणाङ्गीं तपसा चिरम् ॥
श्रीकृष्ण उवाच ।
वाराहे च त्वमंशेन मम पत्नी भविष्यसि ।
नाम्ना नाग्नजिती कन्या कान्ते नग्नजितस्य च
॥
अधुनाग्नेर्दाहिका त्वं भव पत्नी च भाविनि ! ।
मन्त्ररूपा च पूता च मत्प्रसादाद्भविष्यसि ॥
परितुष्टाः द्विजाः सर्व्वे देवाः
संप्रापुराहुतिम् ।
स्वाहान्तेनैव मन्त्रेण सफलं सर्व्वकर्म्म
च ॥
इत्येवं कथितं सर्व्वं
स्वाहोपाख्यानमुत्तमम् ।
सुखदं मोक्षदं सारं किं भूयः
श्रोतुमिच्छसि ॥
नारद उवाच ।
स्वाहापूजाविधानश्च ध्यानं स्तोत्रं
मुनीश्वर ।
संपूज्य वह्निस्तुष्टाव येन तां वद मे
प्रभो ! ॥
श्रीनारायण उवाच ।
ध्यानञ्च सामवेदोक्तं स्तोत्रं
पूजाविधानकम् ।
वदामि श्रूयतां ब्रह्मन् सावधानं निशामय
॥
सर्व्वयज्ञारम्भकाले शालग्रामे घटेऽथवा
।
स्वाहां संपूज्य यत्नेन यज्ञं कुर्य्यात्
फलाप्तये ॥
स्वाहां मन्त्राङ्गभूताञ्च
मन्त्रसिद्धिस्वरूपिणीम् ।
सिद्धाञ्च सिद्धिदां नृणां कर्म्मणां फलदां
भजे ॥
इति ध्यात्वा च मूलेन दत्त्वा पाद्यादिकं
नरः ।
सर्व्वसिद्धिं लभेत् स्तुत्वा मूलं स्तोत्रं
मुने शृणु ॥
ॐ ह्रीँ श्रीँ वह्निजायायै देव्यै
स्वाहेत्यनेन च ।
यः पूजयेच्च तां देवीं सर्व्वेष्टं लभते
ध्रुवम् ॥
वह्निरुवाच ।
स्वाहाद्याः प्रकृतेरंशा
मन्त्रान्ताङ्गस्वरूपिणी ।
मन्त्राणां फलदात्री च धात्रौ च जगतां
सती ॥
सिद्धिरूपा च सिद्धा च सिद्धिदा सर्व्वदा
नृणाम् ।

पिण्डदाने स्वधा शस्ता दक्षिणा सर्व्वतो वरा ॥
एतासां चरितं जन्म फलं प्राधान्यमेव च ।
श्रोतुमिच्छामि त्वद्वक्त्राद्वद वेदविदां वर ॥
सौतिरुवाच ।
नारदस्य वचः श्रुत्वा प्रहस्य मुनिपुङ्गवः ।
कथां कथितुमारेभे पुराणोक्तां पुरातनीम् ॥

हुताशदाहिका
शक्तिस्तत्प्राणाधिकरूपिणी ॥
संसारसाररूपा च घोरसंसारतारिणी ।
देवजीवनरूपा च देवपोषणकारिणी ॥
षोडशैतानि नामानि यः पठेद्भक्तिसंयुतः ।
सर्व्वसिद्धिर्भवेत्तस्य सर्व्वकर्म्म सुशोभनम् ।
अपुत्त्रो लभते पुत्त्रमभार्य्यो लभते प्रियाम् ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे स्वाहोपाख्यानं
नाम । ४० । ७ -- ५६ ॥ * ॥
बौद्धशक्तिविशेषः ।
तत्पर्य्यायः । तारा २ महाश्रीः ३ ओङ्कारा ४
श्रीः ५ मनोरमा ६ तारिणी ७ जया ८

अनन्ता ९ शिवा १० लोकेश्वरात्मजा ११ खदूर-
वासिनी १२ भद्रा १३ वैश्या १४ नीलसर-
स्वती १५ शङ्खिनी १६ महातारा १७ वसु-
चारा १८ धनन्ददा १९ त्रिलोचना २० लोच-
नास्या २१ । इति त्रिकाण्डशेषः ॥

**स्वाहापतिः**, पुं, (स्वाहायाः पतिः ।) अग्निः ।

इति धरणिः ॥

**स्वाहाप्रियः**, पुं, (स्वाहायाः प्रियः ।) अग्निः ।

इति हलायुधः ॥

**स्वाहाभुक्**, [ज्] पुं, (स्वाहया भुङ्क्ते इति ।

भुज + क्विप् ।) देवता । इति त्रिकाण्डशेषः ॥

**स्वित्**, व्य, प्रश्नः । (यथा, महाभारते । ५ । ३५ । ८ ।

"किं ब्राह्मणा वै श्रेयांसो दितिजाः सिद्धि-
रोचन ॥")
वितर्कः । इत्यमरः । ३ । ३ । २४१ ॥ (यथा,
मेघदूते । १४ ।
"अद्रेः शृङ्गं हरति पवनः किं स्विदित्युन्मुखीभि-
र्दृष्टोच्छ्रायश्चकितचकितं मुग्धसिद्धाङ्ग-
नाभिः ॥"
पादपूरणम् । इति मेदिनी ॥ प्रश्ने पृच्छायाम् ।
यथां स्विदेकाकी विचरसि । वितर्को नाना-
पक्षावमर्षः । स्वित् प्रश्ने च वितर्के च तथैव
पादपूरणे । इति मेदिनी । इति भरतः ॥

**स्विदितः**, त्रि, स्वेदितः । यथा । विभाषायामादि-

कर्म्मणोः । भावे आदिकर्म्मणि चादितो निष्ठाया
इड् वा स्यात् । प्रस्वेदितश्चैत्रः । प्रेस्वेदितं
तेन । ञि स्विदेति भ्वादिरत्र गृह्यन्ते ञिद्भिः
साहचर्य्यात् । स्विद्यतेस्तु स्विदित इत्येव ।
स्वत्वं सम्प्रदानव्यापारेण ममेदमिति ज्ञानेन
व्यवहारार्हं क्रियत इति
स्वीकारशब्दार्थः ।
इति दायभागः ॥

**स्वीयः**, त्रि, (स्वस्यायमिति । स्व + छः ।) स्वकीयः ।

आत्मीयः । यथा, स्कान्दे शिववाक्यम् ।
"शूद्रः कर्म्माणि यो नित्यं स्वीयानि कुरुते
प्रिये ।
तस्याहमर्च्चां गृह्णामि
चन्द्रखण्डविभूषिते ! ॥"
इति तिथ्यादितत्त्वम् ॥

**स्वीया**, स्त्री, (स्वस्येयमिति । स्व + छः । टाप् ।)

नायिकाभेदः । तस्या लक्षणम् । स्वामिन्ये-
वानुरक्ता पतिव्रता इति यावत् । अस्याश्चेष्टा
स्वामिशुश्रूषा शीलरक्षा सरलता क्षमा च ।
सा च त्रिविधा । मुग्धा मध्या प्रगल्भा च ।
एताः सर्व्वा नायिका अवस्थाभेदेन प्रत्येके
नवविधा । प्रोषितभर्त्तृका खण्डिता कलहा-
न्तरिता विप्रलब्धा उत्कण्ठिता वासकसज्जा
स्वाधीनपतिका अभिसारिका प्रवत्स्यत्पतिका
च । एताः प्रत्येके उत्तममध्यमाधमभेदेन
अष्टाविंशत्युत्तरशतनायिका भवन्ति । एतासां
दिव्यादिव्यगणनाभेदेन चतुरशीत्युत्तरशतत्रय-
कोपे मार्द्दवं नवविभूषणे समीहा च ॥ * ॥
मुग्धा यथा, --
"आज्ञप्तं किल कामदेवधरणीपालेन काले शुभे
वस्तुं वास्तुविधिं विधास्यति तनौ तारुण्य-
मेणीदृशः ।
दृष्ट्या खञ्जनचातुरी मुखरुचा सौधाकरी माधुरी
वाचा किञ्च सुधासमुद्रलहरी लावण्यमाम-
न्त्यते ॥"
अज्ञातयौवना यथा, --
"नीरात्तीरमुपागता श्रवणयोः सीम्नि स्फुर-
न्नेत्रयोः
श्रोत्रे लग्नमिदं किमुत्पलमिति ज्ञातुं करं
न्यस्यति ।
सैवालाङ्कुरशङ्कया शशिमुखी रोमावलीं प्रोञ्छति
श्रान्तास्मीति मुहुः सखीमविदितश्रोणीभरा
पृच्छति ॥"
ज्ञातयौवना यथा, --
"स्वयम्भुः शम्भुरम्भोजलोचने ! तत्पयोधरः ।
नखेन कस्य धन्यस्य चन्द्रचूडो भविष्यति
॥" * ॥
नवोढा यथा, --
"हस्ते धृतापि शयने विनिवेशितापि
क्रोडे कृतापि यतते बहिरेव गन्तुम् ।
जानीमहे नवबधूरथ तस्य वश्या ।
यः पारदं स्थिरयितुं क्षमते करेण ॥"
यथा च ।
"बलान्नीता पार्श्वं सुखमनुमुखं नैव कुरुते
धुनाना मूर्द्धानं क्षिपति वदनं चुम्बनविधौ ।
हृदि न्यस्तं हस्तं क्षिपति गमनारोपितमना
नवोढा वोढारं रमयति च सन्तापयति च ॥" *
विश्रब्धनवोढा यथा, --
"दरमुकुलितनेत्रपाणिनीवी-
नियमितबाहुकृतोरुयुग्मबन्धम् ।
मरकलितकुचस्थलं नवोढा
स्वपिति समीपमुपेत्य कस्य यूनः ॥" * ॥

इति सिद्धान्तकौमुदी ॥

**स्विन्नः**, त्रि, (स्विद् + क्तः ।) घर्म्मयुक्तः । यथा ।

स्विन्नो घर्मोपेतो जनः । इति हलायुधः ॥
(यथा च कुमारे । ७ । ७७ ।
"रोमोद्गमः प्रादुरभूदुमायाः
स्विन्नाङ्गुलिः पुङ्गवकेतुरासीत् ॥"
पक्कम् । यथा, --
"शस्यं क्षेत्रगातं प्राहुः सतुषं धान्यमुच्यते ।
आमं वितुषमित्युक्तं स्विन्नमन्नमुदाहृतम् ॥"
इति श्राद्धतत्त्वधृतवशिष्ठवचनम् ॥

**स्वीकारः**, पुं, (अस्वस्य स्वस्य कारः करणम् ।

स्व + कृ + घञ् । अभूततद्भावे च्वीः) अङ्गी-
कारः । यथा, --
"सम्बिदागूः प्रतिज्ञा च सन्धावाचश्च सङ्गरः
।
अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः ॥
संश्रवोङ्कारनियमोररीकाराश्रवाअपि ॥"
इति जटाधरः ॥
प्रतिज्ञानम् । इति शब्दरत्नावली ॥ अस्वं
स्वं
कुर्व्वन् व्यापारः । यथा । न च स्वीकारात्
स्वत्वं
स्वीकर्त्तुरेव दातृत्वापत्तेः । किञ्च । मनसा
पात्र-
मुद्दिश्य इत्यादि शास्त्रे स्वीकारात् प्रागेव
दान-
पदं दृष्टम् । ननु ग्रहणं स्वीकारोऽभूततद्भावे
च्विप्रत्ययात् अस्वं स्वं कुर्व्वन् व्यापारः
भवति
कथं ततः प्रागेव स्वत्वम् । उच्यते
उतपन्नमपि

प्रकारा भवन्ति । तत्र प्रमाणं यथा ।
नायिका
त्रिविधा । स्वीया परकीया
सामान्यवनिता
चेति । तत्र स्वामिन्येवानुरक्ता स्वीया ।
न च
परिणीतायां परगामिन्यामतिव्याप्तिस्तत्र
पति-
व्रताया एव लक्ष्यत्वात् । तस्या
परगामितया
परकीयत्वमेव समायाति । अस्याश्चेष्टा
। भर्त्तुः
शुश्रूषा । शीलसंरक्षणम् । आर्ज्जवम् ।
क्षमा
च । यथा, --
"गतागतकुतूहलं नयनयोरपाङ्गावधि
स्मितं कुलनतभ्रुवामधर एव विश्राम्यति
।
वचः प्रियतमश्रुतेरतिथिरेव कोपक्रमः
कदाचिदपि चेत्तदा मनसि केवलं
मज्जति ॥"
अपि च ।
"सञ्चारो रतिमन्दिरावधि
सखीकर्णावधि
व्याहृतं
चेतः कान्तसमीहितावधि
पदन्यासावधि
प्रेक्षितम् ।
हास्यञ्चाधरपल्लवावधिमहामानोऽपि
मौनावधि
सर्व्वं स्वावधि नावधिः कुलभुवां प्रेम्णः
परं
केवलम् ॥"
अपि च ।
"पदन्यासो गेहाद्बहिरांहफणारोहणसमः
स्वगेहादन्यत् यद्भवनमपरद्वीपतुलितम्
।
वचो लोकालभ्यं कृपणधनतुल्यं
मृगदृशः
पुमानन्यः कान्ताद्विधुरिव
चतुर्थीसमुदितः ॥"

समानलज्जामदना मध्या । एषव
चातिप्रश्रया-
दतिविश्रब्धनवोढा । अस्याश्चेष्टा सागसि
प्रेयसि
धैर्य्ये वक्रोक्तिरधैर्य्ये परुषवाक् । यथा, --
"स्वापे प्रियाननविलोकनहानिरेव
स्वापच्युतौ प्रियकरग्रहणप्रसङ्गः ।
इत्थं सरीरुहमुखी परिचिन्तयन्ती
स्वापं विधातुमपि हातुमपि प्रपेदे ॥" * ॥
पतिमात्रविषयकेलिकलापकोविदा प्रगल्भा
।
वेश्यायां कुलटायाञ्च पतिमात्रविषयत्वाभा-
वात् न तत्रातिव्याप्तिः । अस्याश्चेष्टा रति-
प्रीतिरानन्दादात्मसंमोहः । प्रथमं यथा, --
"सस्पृश्य स्तनमाकलय्य वदनं संश्लिष्य
कण्ठ-
स्थलं
निष्पीयाधरविम्बमम्बरमपाकृष्य
व्युदस्याल-
काम् ।

|  | स्वीयापि त्रिविधा । मुग्धा मध्या प्रगल्भा च ।<br>तत्राङ्कुरितयौवना मुग्धा । सा च ज्ञातयौवना<br>अज्ञातयौवना च । सैव क्रमशो लज्जाभयपरा-<br>धीनरतिर्नवोढा । सैव क्रमशो जातप्रश्रया<br>विश्रब्धनवोढा । अस्याश्चेष्टा । क्रिया मनोहरा |  |
| --- | --- | --- |

देवस्याम्बुजिनीपतेः समुदयं
जिज्ञासमाने प्रिये
वामाक्षी वसनाञ्चलैः
श्रवणयोर्नीलोत्पलं
निह्नुते ॥” * ॥
यथा च ।
“नखाङ्कितमुरःस्थलेऽधरतले
रदस्य क्षतं
च्युता वकुलमालिका विगलिता
च मुक्तावली ।
रतान्तसमये मया
सकलमेतदालोकितं
स्मृतिः क्व च पतिः क्व च कृ च
तवालि शिक्षा-
विधिः ॥”
अपि च ।
“कान्ते तल्पमुपागते विगलिता
नीवी स्वयं
बन्धनात्
वासश्च श्लथमेखलागुणधृतं
किञ्चित् नितम्बे
स्थितम् ।
एतावत् सखि वेद्मि केवलमहो
तस्याङ्गसङ्गे पुनः
कोऽसौ कास्मि रतञ्च
कीदृशमिति स्वल्पापि मे
न स्मृतिः ॥” * ॥
मध्याप्रगल्भे मानावस्थायां
प्रत्येकं त्रिविधे ।
धीरा अधीरा धीराधीरा चेति ।
व्यङ्ग्यकोप-
प्रकाशा धीरा ।
अव्यङ्ग्यकोपप्रकाशा अधीरा ।
व्यङ्ग्याव्यङ्ग्यकोपप्रकाशा
धीराधीरा । इयांस्तु
विशेषः । मध्यमायाः धीरायाः
कोपव्यञ्जिका
गीः । अधीरायाः परुषवाक् ।
धीराधीराया
दृक्पातं कुरुषे न वा परिजने कोपप्रकाश-
च्छलात् ।
इत्थं केतकगर्भगौरि दयिते कोपस्य संगोपनं
किं स्यादेव न चेत् पुनः सहचरो कुर्व्वीत
साचि स्मितम् ॥” * ॥
प्रगल्भा अधीरा यथा, --
“प्रतिफलमवलोक्य स्वीयमिदोः कलायां
हरशिरसि परस्यावासमाशङ्कमाना ।
गिरिशमचलकन्या तर्ज्जयामास कम्प-
प्रचलवलयवेल्लत्कान्तिभाजा करेण ॥” * ॥
प्रगल्भा धीराधीरा यथा, --
“तल्पोपान्तमुप्रेयुषि प्रियतमे साचीकृतग्रीवया
काकुव्याकुलवाचि
साचिहसितस्फूर्ज्जत्कपोल-
श्रिया ।
हस्तन्यस्तकरे पुनर्म्मृगदृशा लाक्षारसाक्षलित-
प्रौष्ठीपृष्ठमयूखमांसलरुचो विस्फारिता
दृष्टयः ॥” * ॥
एते धीरादिषड्भेदा द्विविधा । धीरा ज्येष्ठा
कनिष्ठा च । अधौरा ज्येष्ठा कनिष्ठा च
धीराधीरा ज्येष्ठा कनिष्ठा च इत्यपि क्वचित्
पाठः एते धीरादित्रयो मेदात् द्विविधा
भवन्ति । ज्येष्ठा कनिष्ठा च । परिणीतत्वे
सति भर्त्तरधिकस्नेहा ज्येष्ठा । परिणीतत्वे
सति भर्त्तुर्न्यूनस्नेहा कनिष्ठा । अधिकस्नेहासु
न्यूनस्नेहासु मामान्यवनितादिषु नातिव्याप्तिः ।
परिणीतत्वपदेन व्यावर्त्तनात् । नापि परकौ-
यायामतिव्याप्तिः । भर्त्तृपदेन तद्व्यावृत्तेः ।
धीरा
ज्येष्ठा कनिष्ठा च यथा, --
“एकस्मिन् शयने सरोरुहदृशोर्व्विज्ञाय निद्रां
तयो-
रेकां पल्लवितावगुण्ठनपटामुत्कन्धरोदृष्टवान्
अन्यस्याः सविधं समेत्य निभृतं
व्यालोलहस्ता-
ङ्गुलि-
व्यापारैर्वसनाञ्चलञ्चपलयन् स्वापच्युतिं कृत
वान् ॥” ॥ * ॥
अधीरा ज्येष्ठा कनिष्ठा यथा, --
युक्तः । क्विपि राछोर्लोपे स्वूः स्वुरौ स्वुरः ।
आ स्वूर्च्छितं स्वूर्णं तेन । स्वर्च्छति कथां
मद्यपः । इति दुर्गादासः ॥

**स्वॄ**, ऊ शब्दोपतापयोः । इति कविकल्पद्रुमः ॥
(भ्वा०-पर०-शब्दे अक०-उपतापे सक०-वेट्
।)
दन्त्यादिर्वकारोपधः । ऊ, अस्वारीत् पिकः ।
अस्वार्षीत् खलं राजा । इति दुर्गादासः ॥

**स्वॄ**, गि हिंसने । इति कविकल्पद्रुमः ॥ (क्र्या०-
पर०-सक०-अनिट् ।) दन्त्यादिर्वकारोपधः ।
तद्रहितोऽपीति केचित् । गि, स्वृणाति स्वूर्णः
स्वूर्णिः । इति दुर्गादासः ॥

**स्वेक**, ऋ, ङ गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) वकारयुक्तः । ऋ, असि-
स्वेकत् । ङ, स्वेकते । इति दुर्गादासः ॥

**स्वेच्छा**, स्त्री, (स्वस्य इच्छा ।) स्वकीयेच्छा ।
तत्पर्य्यायः । यदृच्छा २ स्वैरिता ३ । इति
हेमचन्द्रः ॥ (यथा, कथासरित्सागरे । २५ ।
४८ ।
“स च मत्स्योऽब्धिमध्येन तत्कालं स्वेच्छया
चरन् ।
उत्स्यलद्वीपनिकटं जगाम विधियोगतः ॥”)

**स्वेच्छामृत्युः**, पुं, (स्वेच्छया मृत्युर्यस्य ।) भीष्मः ॥
इति त्रिकाण्डशेषः ॥ स्वेच्छया मरणञ्च । तद्-
युक्ते, त्रि ॥

**स्वेदः**, पुं, (स्विद् + घञ् ।) घर्म्मः इत्यमरः ॥
१ । ७ । ३३ ॥ स्वेदनम् । इति मेदिनी ॥
भावरा
इति भाषा ॥ * ॥ उष्मा । तापः । अथातः
स्वेदाव्यायं व्याख्यास्यामः । इति ह स्माह
भगवानात्रेयः ।
“अथ स्वेदान् प्रवक्ष्यामि यैर्य्यथावत् प्रयोजितैः
स्वेदसाध्याः प्रशाम्यन्ति गदा वातकफात्मकाः
॥
स्नेहपूर्ब्बप्रयुक्तेन स्वेदेनावजितेऽनिले ।

वचनरुदिते प्रकाशिके ।
प्रौढाधीरायास्तु
रतावौदास्यम् ।
अधीरायास्तर्ज्जनताडनादिः ।
धीराधीराया रतावौदास्यं
तर्ज्जनादि च कोप-
प्रकाशकम् । यत्तु धीरादिभेदः
स्वीयाया एव
न परकीयाया इति
प्राचीनलिखनं तदाज्ञा
मात्रं धीरात्वमधीरात्वं तदुभयञ्च
माननियत-
मेव परकीयाया मानश्च नेति
वक्तुमशक्यत्वात्
परकीयाया
मानश्चेत्तेषामप्यावश्यकत्वादिति
भावः ॥ * ॥ मध्या धीरा यथा, --
"लोलालिपुञ्जे व्रजतो निकुञ्जे
स्फारा बभूवुः श्रमवारिधाराः ।
देहे समीहे भवतो विधातुं
धीरं समीरं नलिनीदलेन ॥" * ॥
मध्या अधीरा यथा, --
"जातस्ते निशि जागरो मम
पुनर्नेत्राम्बुजे
शोणिमा
निष्पीतं भवता मधु प्रविततं
व्याघूर्णितं मे
मनः ।
भ्राम्यद्भृङ्गघने निकुञ्जभवने लब्धं
त्वया श्रीफलं
पञ्चेषुः पुनरेष मां बहुतरैः क्रूरैः
शरैः
कृन्तति ॥" * ॥
मध्या धीराधीरा यथा, --
"कान्तानुरागचतुरोऽसि
मनोहरोऽसि
नाथोऽसि किञ्च
नवयौवनभूषितोऽसि ।
इत्थं निगद्य सुदृशा वदने प्रियस्य
निश्वस्य वास्पलुलिता निहिता
दृगन्ताः ॥" * ॥
"अन्तःकोपकषायिते प्रियतमे पश्यन् घने
कानने
पुष्पस्यावचयाय नम्रवदनामेकां समायोजयन् ।
अर्द्धोन्मीलितलोचनाञ्चलचमत्काराभिरामाननां
स्मेरार्द्राधरपल्लवां नवबधूमन्यां समालिङ्गति
॥"
धीराधीरा ज्येष्ठा कनिष्ठा च यथा, --
"धैर्य्याधैर्य्यपरिग्रहग्रहिलयोरेणीदृशोः प्रीतये
रत्नद्वन्द्वमनन्तकान्तिरुचिरंमुष्टिद्वये
न्यस्तवान् ।
एकस्याः कलयन् करे प्रथमतो रत्नं परस्याः
प्रियो
हस्ताहस्तिमियात् स्पृशन् कुचतटीमानन्दमा-
विन्दति ॥"
इति रसमञ्जरी ॥

**स्वूर्च्छ**, आ विस्मृतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।) दन्त्यादिः ह्रस्वी वकार-

पुरीषमूत्ररेतांसि न सज्जन्ति कदाचन ॥
शुष्काण्यपि च काष्ठानि स्नेहस्वेदोपपादनैः ।
नमयन्ति यथान्यायं किं पुनर्ज्जीवतो नरान् ॥
योगर्त्तुव्याधितापेक्षो नात्युष्णोऽतिमृदुर्न च ।
द्रव्यवान् कल्पितो देशे स्वेदः कार्य्यकरो मतः
॥
व्याधौ शीते शरीरे च महान् स्वेदो महाबले ॥
दुर्व्वले दुर्ब्बलः स्वेदो मध्यमे मध्यमो हितः ॥ *
॥
वातश्लेष्मणि वाते वा कफे वा स्वेद इष्यते ।
स्निग्धरूक्षस्तथास्निग्धोऽरूक्षश्चाप्युपकल्पितः
॥
आमाशयपते वाते कफे पक्वाशयाश्रिते ।
रूक्षपूर्ब्बो हितः स्वेदः स्नेहपूर्ब्बस्तथैव च ॥
वृषणौ हृदयं दृष्टी स्वेदयेन्मृदु वा न वा ।
मध्यमं वंक्षणौ शेषमङ्गावयवमिष्टतः ॥
सुशुद्धैलक्तकैः पिण्ड्या गोधूमानामथापि वा ।
पद्मोत्पलपलाशैर्व्वा स्वेदः सम्बृत्य चक्षुषी ॥
मुक्तावलीभिः शीताभिः शीतलैर्भाजनैरपि ।
जलार्द्रैर्जलजैर्हस्तैः खिद्यतो हृदयं स्पृशेत् ॥
शीतशूलव्युपरमे स्तम्भगौरषनिग्रहे ।
संजाते मार्द्दवे स्वेदे स्वेदनाद्विरतिर्म्मता ॥
पिपासा गात्रसदनं मूर्च्छापित्तप्रकोपणम् ।
दाहः स्वेदोऽङ्गदौर्ब्बल्यमतिस्विन्नस्य लक्षणम् ॥

| | | |
|---|---|---|
| प्रौढा धीरा यथा, --<br>“नो तल्पं भजसे न जल्पसि<br>सुधाधारानुकारा<br>गिरो | | |

उक्तस्तस्याशितीये यो ग्रैष्मिकः सर्व्वशो
विधिः ।
सोऽतिस्विन्नस्य कर्त्तव्यो
मधुरस्निग्धशीतलः ॥”
अशितीये अशनाध्याये ॥ * ॥
“कषायमद्यनित्यानां गर्भिण्या
रक्तपित्तिनाम् ।
पित्तिनां सातिसाराणां रूक्षाणां मधुमेहि-
नाम् ॥
विदग्धभृष्टव्रध्नानां विषमद्यविकारिणाम् ।
तान्तानां नष्टसंज्ञानां स्थूलानां पित्तमेहि-
नाम् ॥”
तान्तानां क्लान्तानाम् ।
“तृषतां क्षुत्परीतानां क्रुद्धानां शोचतामपि
।
कामल्युदरिणाञ्चैव
क्षतानामाढ्यरोगिणाम् ॥
दुर्ब्बलातिविशुष्काणामुपक्षीणौजसान्तथा
।
भिषक् तैमिरिकाणाञ्च न स्वेदमवतारयेत्
॥ * ॥
प्रतिश्याये च कासे च
हिक्काश्वासेष्वलाघवे ।
कर्णमण्यां शिरःशूले स्वरभेदे गलग्रहे ॥
अर्द्दितैकाङ्गसर्व्वाङ्गपक्षाघाते विनामके ।
कोष्टानाहविबन्धेषु मूत्राघाते विजृम्भके ॥
पार्श्वपृष्ठकटीकुक्षिसंग्रहे गृध्रसीषु च ।
मूत्रकृच्छ्रे महत्त्वे च मुष्कयोरङ्गमर्द्दके ॥
पादोरुजानुजङ्घार्त्तिसंग्रहे श्वयथावपि ।
खल्वौष्वामे च शीते च वेपथौ
वातकण्टके ॥
सङ्कोचायामशूलेषु स्तम्भगौरवसुप्तिषु ।
सर्व्वेष्वेषु विकारेषु स्वेदनं हितमुच्यते ॥
* ॥
तिलमाषकुलत्थान्नघृततैलामिषौदनैः ।
पायसैः कृशरैर्म्मांसैः पिण्डस्वेदान्
प्रयोजयेत् ॥
गोखराश्ववराहोष्ट्रशकृद्भिः सतुषैर्यवैः ।
सिकतापांशुपाषाणकरीषायसपूटकै ॥

सङ्करः १ प्रस्तरो २ नाडी परिषेको ४ ऽवगाह-
नम् ५ ।
जेन्ताको ६ ऽश्मघनः ७ कर्षुः ८ कुटी ९ भूः
१०
कुम्भिरेव च ११ ॥
कूपो १२ होलाक १३ इत्येते स्वेदयन्ति
त्रयोदश ।
ते यथावत् प्रवक्ष्यन्ते सर्व्व एवानुपूर्ब्बशः ॥”
इति ॥ * ॥
तत्र वस्त्रान्तरितैरवस्त्रान्तरितैर्व्वा पिण्डैर्य्ययोक्तै-
रुपस्वेदनं सङ्करस्वेद इति विद्यात् ॥ १ ॥ शूक-
शमीधान्यपुलाकानां वेशवारपायसकृशरोत्-
कारिकादीनां वाप्रस्तरे कौषेयाविकोत्तरप्रच्छदे
पञ्चाङ्गुलोरुवुकार्कपत्रप्रच्छदे वा स्वभ्यक्तसर्व्व-
गात्रस्य शयानस्योपरि स्वेदनं प्रस्तरस्वेद इति
विद्यात् ॥ २ ॥ स्वेदनद्रव्याणां पुनर्मूलफलपत्र-
भङ्गादीनां मृगशकुनिपिशितशिरःपदादीना-
मुष्णस्वभावानां वा यथार्हमम्ललबणस्नेहोप-
संहितानां मूत्रक्षीरादीनां वा कुम्भ्यां वास्पमनु-
द्वमन्त्यामुत्क्वथितानां नाड्या
शरेषीकावंशदल-
करञ्जार्कपत्रान्यतमकृतया
गजाग्रहस्तसंस्थानया
व्यामदीर्घया व्यामार्द्धदीर्घया वा व्यामचत-
र्भागाष्टभागमूलाग्रपरिणाहस्रोतसासर्व्वतो
वातहरपत्रसंवृतच्छिद्रया द्विस्त्रिर्व्वा विनमितया
वातहरसिद्धस्नेहाभ्यक्तगात्रस्य वास्पमुपहरेत् ।
वास्पो
ह्यनूदर्ध्वगामीविहतचण्डवेगस्त्वचमविदहन्
सुखं स्वेदयतीति नाडीस्वेदः ॥ ३ ॥
वातिकोत्तर-
वातिकानां पुनर्म्मूलादीनामुत्क्वाथैः सुखोष्णैः
कुम्भीर्व्वषूनिकाः प्रनाडीर्व्वा पूरयित्वा यथार्ह-
सिद्धस्नेहाभ्यक्तगात्रं वस्त्राबच्छन्नं परिषेचये
दिति परिषेकः ॥ ४ ॥ वातहरोत्क्वाथक्षीर-
घृततैलपिशितरसोष्णसलिलकोष्ठकावगाहस्तु
यथोक्त एवावगाहः ॥ ५ ॥ अथ जेन्ताकं
चिकीर्ष
भूमिं परीक्षेत । तत्र पूर्ब्बस्यां दिश्युत्तरस्यां वा

कस्याणायारोग्याय चेति । प्रविश्य
चैनां
पिण्डिकामधिरुह्य पार्श्वापरपार्श्वाभ्यां
यथासुखं
शयीथाः । न च त्वया
स्वेदमूर्च्छापरीतेनापि
सता पिण्डिकैषा विमोक्तव्या
आप्राणोच्छासात् ।
भ्रश्यमानो हतः पिण्डिकावकाशात्
द्वार-
मनधिगच्छन् स्वेदमूर्च्छापरीततया
सद्यःप्राणान्
जह्याः । तस्मात् पिण्डिकामेनां न
कथञ्चन
मुञ्चेथाः । त्वं यदा जानीयाः
विगताभिष्यन्द-
मात्मानं सम्यक् प्रस्रुतस्वेदपिच्छं
सर्व्वस्रोतो-
विमुक्तं
लघुभूतमपगतविबद्धस्तम्भसुप्तिवेदना-
गौरवमिति ततस्तां पिण्डिकामनुसरन्
द्वारं
प्रपद्येथाः । निष्क्रम्य च न सहसा
चक्षुषोः
परिपालनार्थं शीतोदकमुपस्पृशेथाः ।
अपगत-
सन्तापक्लमस्तु मुहूर्त्तात् सुखोष्णेन
वारिणा
यथान्यायं परिषिक्तोऽश्नीयाः । इति
क्षेन्ताकः
स्वेदः ॥ ६ ॥
“शयानस्य प्रमाणेन घनामश्ममयीं
शिलाम् ।
तापयित्वा मारुतघ्नैर्द्दारुभिः
संप्रदीपितैः ॥
व्यपोह्य सर्व्वानङ्गारान् प्रोक्ष्य
चैवोष्णवारिणा ।
तां शिलामथ कुर्व्वीत
कौशेयाविकसस्तरात् ॥

श्लैष्मिकान् स्वेदयेत् पूर्व्वैर्व्वातिकान्
समुपाचरेत् ॥
द्रव्याण्येतानि शस्यन्ते यथास्वं
प्रस्तरेष्वपि ॥
भूगृहेषु च जेन्ताकेषूष्णगर्भगृहेषु च ।
विधूमाङ्गारतप्तेष्वभ्यक्तः स्विद्यति ना
मुखम् ॥
ग्राम्यानूपौदकं मांसं पयोवस्तशिरस्तथा
।
वराहमध्यपित्तासृक्स्नेहवत्तिलतण्डुलाः
॥
इत्येतानि समुत्क्वाथ्य नाडीस्वेदं
पयोजयेत् ।
देशकालविभागज्ञो युक्त्यापेक्षी भिषक्तमः
॥ * ॥
वीरणामृतकैरण्डशिग्रुमूलकसर्षपैः ।
वासावंशकरञ्जार्कपत्रैरश्मन्तकस्य च ॥
शोभाञ्जनकशौवीरमालतीसुरसार्ज्जकैः ।
पत्रैरुत्क्वाथ्य सलिलं
नाडीस्वेदंप्रयोजयेत् ॥
भूतीकपञ्चमूलाभ्यां सुरया दधिमस्तुना ।
मूत्रैरम्लैश्च सस्नेहैर्नाडीस्वेदं प्रयोजयेत्
॥ * ॥
एत एव च निर्यहाः प्रयोज्या जलकोष्ठके
।
स्वेदनार्थं घृतक्षीरतैलकोष्ठांश्च कारयेत्
॥
गोधूमशकलैश्चूर्णैर्यवानामम्लसंयुतैः ।
सस्नेहकिण्वलवणैरुपनाहः प्रशस्यते ॥
* ॥
गन्धैः सुरायाः किट्टेन जीवन्त्या
शतपुष्पया ।
उमया कुष्ठतेलाभ्यां युक्तया चोपनाहयेत्
॥ * ॥
चर्म्मभिश्चोपनद्धव्यः सलोमभिरपूतिभिः
।
उष्णवीर्य्यैरलाभे तु कौषेयाविकशाटकैः
॥
रात्रौ बद्धं दिवा मुञ्चेत् मुञ्चेद्रात्रौ
दिबाकृतम् ।

गुणवति प्रशस्ते भूमिभागे कृष्णमृत्तिके सुवर्ण-
वर्णमृत्तिके वा परीवापपुष्करिण्यादीनां जला-
शयानामन्यतमस्य कूले दक्षिणे षश्चिमे वा
सूपतीर्थे समसुविभक्तभूमिभागे सप्ताष्टौ वा
अरत्नीः सुपक्रम्योदकात् प्राङ्मुखमुदङ्मुखं
वा अभिमुस्वतीर्यं कूटानारं कारयेत् । उत्सेध-
विस्तारतः परमरत्नीः षोडश समन्तात् सुवृतं
मृत्कर्म्मसम्पन्नमनेकवातायनम् । अस्य कूटा-
गारस्यान्तः समन्ततो भित्तिमरत्रि विस्तारोत-
सेधां पिण्डिकां कारयेत् आकपाटाट् । मध्ये
चास्य कूटागारस्य चतुष्किष्कुमात्रं पुरुषप्रमाणं
मृण्मयं कन्दूसंस्यानं बहुसूक्ष्मच्छिद्रमङ्गारको-
ष्ठकस्तम्भं सपिधानं कारयेत् । तञ्च खादिरा-
णामाश्वकर्णादीनां वा काष्ठानां पूरयित्वा प्रदी-
पयेत् । स यदा जानीयात् साधु दग्धानि
काष्ठानि गतधूमानि अवतप्तञ्च केवलमग्निना
तदग्निगृहं स्वेदयोग्येन चोष्मणा युक्तमिति तत्रैवं
पुरुषं वातहराभ्यक्तगात्रं वस्त्रावच्छन्नं प्रवे-
शयेत् । प्रवेशयंश्चैनमनुशिष्यात् सौम्य प्रविश-

तस्यां स्वभ्यक्तसर्व्वाङ्गः शयानः
स्विद्यते सुखम् ।
रौरवाजिनकौशेयप्रावाराद्यैः सुसंवृतः
॥
इत्युक्तोऽश्मघनस्वेदः कर्षूस्वेदः
प्रवक्ष्यते ॥ ७ ॥
खानयेत् शयनस्याधः
कर्षूस्थानविभागवित् ।
दीप्तैरधूमैरङ्गारैस्तां कर्षूंपूरयेत्ततः ॥
तस्यामुपरि शय्यायां स्वपन्स्विद्यति
ना सुखम् ॥ ८
अनत्युत्सेधविस्तारां
वृत्ताकारामलोचनाम् ।
घनभित्तिं कुटीं कृत्वा कुष्ठाद्यैः
संप्रलेपयेत् ॥
कुटीमध्येभिषक् शय्यां
स्वास्तीर्णाञ्चोपकल्पयेत्
प्रावाराजिनकौषेयकुथकम्बलगोलकैः
॥
हसन्तिकाभिरङ्गारैः पूर्णाभिस्ताञ्च
सर्व्वशः ।
परिवार्य्यान्तरारोहेदभ्यक्तः स्विद्यति
ना
सुखम् ॥ ९ ॥
य एवाश्मघनस्वेदविधिर्भूमौ स एव तु
॥ १० ॥
प्रशस्तायां निवातायां
समायामुपदिश्यते ।
कुम्भीं बातहरक्वाथपूर्णां भूमौ
निखातयेत् ॥
अर्द्धभागं त्रिभागं वा शयनं तत्र चोपरि ।
स्थापयेदासनं वापि
नातिसान्द्रपरिच्छदम् ॥
अथ कुम्भ्यां सुसन्तप्तान् प्रक्षिपेदयसो
गुडान् ।
पाषाणान् बोष्मणा तेन तत्स्थः
स्विद्यति ना
सुखम् ॥ ११ ॥
सुसंवृताङ्गः स्वभ्यक्तः
स्नेहैरनिलनाशनैः ।

| | | |
|---|---|---|
| विदाहपरिहार्थं स्यात् प्रकर्षस्तु शीतलैः ॥ | | कूपं शयनविस्तारं द्विगुणञ्चापि वेधतः ॥<br>देशे निबाते शस्ते च कुर्य्यादन्तः सुमार्जितम् ।<br>हस्त्यश्वगोखरीष्ट्राणां करीषैर्दग्धपूरिते ॥<br>स्ववच्छन्नः सुसंस्तीर्णेऽभ्यक्तः स्विद्यति ना<br>सुखम् ॥ १२ ॥<br>धीतीकान्तु करीषाणां यथोक्तानां प्रदीपयेत् ॥<br>धीतीकां गुण्डिकाम् ।<br>शयनान्तःप्रमाणेन शस्यामुपरि तत्र च ।<br>सुदग्धायां विधूमायां यथोक्तामुपकल्पयेत् ॥<br>स्ववच्छन्नः सुखं यत्राभ्यक्तः स्विद्यति ना सुखत् । |

होलाफस्वेद इत्येष सुखप्रोक्तो
महर्षिणा ॥ १३ ॥
इति त्रयोदशविधः स्वेदोऽग्निगुणसंश्रयः
॥ * ॥
व्यायाम उष्ममदनं गुरुप्रावरणं क्षुधा ।
बहुपानं भयक्रोधावुपनाहाहवातणाः।
स्वेदयन्ति दशैतानि नरमग्निगुणादृते ॥
इत्युक्तो द्विविधः स्वेदः
संयुक्तोऽग्निगुणैर्न च ।
एकाङ्गसर्व्वाङ्गगतः स्निग्धो रूक्षस्तथैव
च ॥
इत्येतत् द्विविधं द्वन्द्वं स्वेदमुद्दिश्य
कीत्तितम् ।
स्निग्धस्वेदैरुपक्रम्य स्विन्नः पथ्याशनो
भवेत् ।
तदहः स्विन्नमात्रस्तु व्यायामं
वर्जयेन्नरः ॥"
इति ॥ * ॥
तत्र श्लोकाः ।
"स्वेदो यथा कार्य्यकरो हितो येभ्यश्च
यद्विधः ।
यत्र देशे यथायोग्यो देशो रक्ष्यश्च यो
यथा ॥
स्विन्नातिस्विन्नरूपाणि
तथातिस्विन्नभेषजम् ।
अस्वेद्याः स्वेदयोग्याश्च स्वेदद्रव्याणि
कल्पना ॥
त्रयोदशविधः स्वेदो विना
दशविधोऽग्निना ।
संग्रहेण च षट् स्वेदाः स्वेदाध्याये
निदर्शिताः ॥
स्वेदाधिकारे तद्वाच्यमुक्तमेतन्महर्षिणा
।
शिष्यैस्तु प्रतिपत्तव्यमुपदेष्टा पुनर्व्वसुः
॥"
इति चरकीयस्वेदाध्यायः समाप्तः ॥ *
॥
अथ स्वेदविधिः ।

शीतैरार्द्रवस्त्रादिभिः ॥
"अजीर्णो दुर्ब्बलो मेही क्षतक्षीणः पिपासितः ।
अतीमारी रक्तपित्ती पाण्डुरोगी तथोदरी ।
मेदस्वी गर्भिणी चैव न हि स्वेद्या विजानता ॥
स्वेदादेषां यान्ति देहा विनाशं
नो साध्यत्वं यान्ति चैषां विकाराः ॥
एतानपि मृदुस्वेदैः स्वेदसाध्यानुपाचरेत् ।
मृदुस्वेदं प्रयुञ्जीत तथा हृन्मष्कदृष्टिषु ॥
अतिस्वेदात् सन्धिपीडा दाहतृष्णा क्लमो
भ्रमः ।
पित्तासृक्पिडकाकोपस्तत्रशीतैरुपाचरेत् ॥"
तत्र तापस्वेदमाह ।
"तेषु तापाभिधः स्वेदो बालुकावस्त्रपाणिभिः ।
प्रतप्तैरम्लमित्तैश्च कायेऽलक्तकवेष्टिते ॥" * ॥
उष्णस्वेदमाह ।
"अथवा वातनिर्णाशद्रव्यक्वाथरसादिभिः।
उष्णैर्घटं पूरयित्वा पार्श्वे च्छिद्रं विधाय च ॥
विमुद्र्यास्यं त्रिखण्डञ्च धातजां काष्ठजामुत ।
षडङ्गुलास्यां गोपुच्छां नाडीं युञ्ज्यात् द्विह-
स्तिकाम् ॥
सुखोपविष्टं स्वभ्यक्तं गुरुप्रावरणावृतम् ।
हस्तिशुण्डिकया नाद्या स्वेदयेद्वातरोगिणम् ॥"
त्रिखण्डमिति स्वेदसौकर्य्यार्थम् ।
षडङ्गुलास्या-
मिति मूले षडङ्गुलविशालमुखाम् । गोपुच्छमिव
क्रमकृशां तेनाग्रे गोपुच्छाग्रपरिमाणेन कृशां
नाडीं अतः सरन्ध्राम् । द्विहस्तिकां हस्तद्वय-
परिमाणाम् । हस्तिशुण्डिकयेति
हस्तिशुण्डवत्
क्रमकृशत्वात् नाड्या इयं संज्ञा ।
"पुरुषायाममात्रान्तु भूमिं संमार्ज्य खादिरः ।
काष्ठैर्द्दग्ध्वा तथाभ्युक्ष्य क्षीरधान्याम्लवारिभिः
॥
वातघ्नपत्रैराच्छाद्य शयान स्वेदयेन्नरम् ।
एवं माषादिभिः स्विन्नैः शयानः स्वेदमाचरेत्
॥"
उपनाहस्वेदः ।
"तथोपनास्वेदञ्च कुर्य्याद्वातहरौषधैः ।
प्रदिह्य देहं वातार्त्तं क्षीरमांसरसादिभिः ॥

कोष्णैः सूक्ष्मपटस्थितैः । भेषजैः
स्वेदयेत् ।
किंवा स्विन्नैः कोष्णैः पटस्थितैः ॥ * ॥
द्रवस्वेद-
माह ।
"द्रवस्वेदस्तु वातघ्नद्रव्यक्वाथेन पूरिते ।
कटाहे कोष्ठके वापि सूपविष्टोऽवगाहयेत् ॥
सौवर्णं राजतं वापि ताम्रं लौहञ्च दारुजम्
।
कोष्ठकं तत्र कुर्व्वीतोच्छ्राये
षड्विंशदङ्गुलम् ।
आयामे तावदेव स्याच्चतुष्कोणस्तु
चिक्वणम् ॥"
पक्षान्तरमाह ।
"नाभेः षडङ्गुलं यावन्मग्नः क्वाथस्य
धारया ।
कोष्णया स्कन्धयोः सिक्तस्तिष्ठेत्
स्निग्धतनु-
र्नरः ॥"
अयमर्थः । प्रथमतो वातघ्नद्रव्यक्वाथेन
कटाहं
पूरिते कोष्ठके कटाहे वा सूपविष्टस्तिष्ठेत्
अथवा नाभेः षडङ्गुलमूर्द्ध्वं यावत् क्वाथे
मग्न
उपविष्टः । पश्चात् क्वाथस्य धारया
स्कन्धयोः
सिच्यमानस्तिष्ठेत् । तथा च कोष्ठकं
परिपूर्णं
भवतीत्यर्थः । क्वाथपक्षे प्रथमतः
स्नेहाभ्यक्त-
तनुरुपविशेत् ।
"मुहूर्त्तैकं समारभ्य यावत्
स्यात्तच्चतुष्टयम् ।
तावत्तदवगाहेत यावदारोग्यनिश्चयम् ॥
एवं तलेन दुग्धेन सर्पिषा स्वेदयेन्नरम् ।
एकान्तरो द्व्यन्तरो वा युक्तः
स्नेहोऽवगाहने ॥
एतावता क्वाथो दुग्धञ्च नित्यमेव युज्यते
॥"

"स्वेदश्चतुर्व्विधः
प्रोक्तस्तापोष्मस्वेदसंज्ञितः ।
उपनाहो द्रवस्वेदः सर्वे वातार्त्तिहारिणः
॥"
तापस्वेदः उष्मस्वेदश्च ताभ्यां
संज्ञितः । उप-
नाहः उपनाहस्वेदः ।
"स्वेदौ तापोष्णजौ प्रायः श्लेष्मघ्नौ
समदीरितौ ।
उपनाहस्तु वातघ्नः पित्तरोगे द्रवो
हितः ॥"
द्रवो द्रवस्वेदः ।
"महाबले महाव्याधौ शीते स्वेदो महान्
स्मृतः ।
दुर्ब्बले दुर्ब्बलस्वेदो मध्यमे मध्यमो
मतः ॥
वलासे रूक्षणः स्वेदो रूक्षः स्निग्धः
कफा-
निले ॥
रूक्षणः रूक्षयतीतिः रूक्षणः
नन्द्यादित्वात्
अनप्रत्ययः ।
"कफमेदोवृते वाते कोष्णगेहं रवेः
करात् ।
नियुद्धं मार्गगमनं गुरुप्रावरणं ध्रुवम् ॥
चिन्ताव्यायामभारांश्च सेवेतामयमुक्तये
।
येषां नस्यं प्रदातव्यं वस्तिश्चापि हि
देहिनाम् ।
शोधनोयाश्च ये केचित् पूर्ब्बस्वेद्याश्च
ते मताः ।
स्वेद्याः ऊद्‌र्ध्वं त्रयोऽपोह
भगन्दर्य्यर्शसस्तथा ।
अश्मर्य्या चातुरो जन्तुः
शमयेच्छस्त्रकर्म्मणः ॥"
शस्त्रकर्म्मण ऊद्‌र्ध्वं पश्चाच्चति
सुश्रुते ।
"पश्चात् स्वेद्या हृते शल्ये मूढगर्भगदे
तथा ।
काले प्रजातेऽकाले बा पश्चात् स्वेद्या
नितम्बिनी ।
अम्लपिष्टैः सलवणैः सुखोष्णैः स्नेहसंयुतैः ।
ततो ग्राम्यान्पमांसैर्जीवनीयगणेन च ॥
दधिसौवीरकक्षीरैर्वीरतर्व्वादिना तथा ।
कुलत्थमाषगोधूमैरतसीतिलसर्षपैः ॥
शतपुष्पादेवदारुशेफालीस्थूलजीरकैः ।
एरण्डमूलबीजैश्च रास्नामूलकशिग्रुभिः ॥
मिसिकृष्णाकुठेरैश्च लवणैरम्लसंयुतैः ।
प्रसारण्यश्वगन्धाभ्यां बलाभिर्द्दशमूलकैः ॥
गुडूच्या वानरीबीजैर्यथालाभं समाहृतैः ।
क्षणैः स्विन्नैश्च वस्त्रेण बद्धैः संस्वेदयेन्नरम् ॥
महाशाल्वनसंज्ञोऽयं योगः सर्व्वानिलार्त्ति-
हृत् ॥"
अस्यायमर्थः । उपनाहस्वेदञ्च कुर्य्यात् । केन
प्रकारेण इत्याकाङ्क्षायां तत्प्रकारमाह वातहरौ-
षधैः । कथंभूतैः । अम्लपिष्टैः अम्लेन
काञ्जिक-
तक्रादिना पिष्टैः सलवणैः स्नेहयुक्तैः क्षोरमांस-
रसान्वितैः । सुखोष्णैः । वातात्तदेहे प्रदिह्य
प्रलिप्य स्वेदयेदित्यर्थः । अथवास्तेन संप्रिष्टैः
स्नेहस्तु दिनमेकं द्वे वा दिने गमयित्वा
युक्तः ।
अग्निमान्द्यशङ्कयेति भावः ।
"सिरामुखैर्लोमकूपैर्धमनीभिश्च तर्पयन् ।
शरीरे बलमाधत्ते युक्तः स्नेहोऽवगाहने ॥
जलसिक्तस्य वर्द्धन्ते यथा मूलेऽङ्कुरादयः
।
तथव धातुवृद्धिर्हि स्नेहसिक्तस्य जायते ॥
नातः परतरः कश्चिदुपायो वातनाशनः ।
शीतशूलव्युपरमे स्त्रम्भगौरवनिग्रहे ।
दीप्तेऽग्नौ मार्द्दवे जाते स्नेदनाद्विरतिर्मता
॥"
इति भावप्रकाशः ॥

**स्वेदचूषकः**, पुं, (स्वेधं चूषति पिबतीति । चूष +
ण्वुल् ।) शीतलवायुः । इति केचित् ॥

**स्वेदजः**, त्रि, (स्वेदात् जायते इति । जन + डः ।)
स्वेदाज्जातजन्तुः । क्रमिदंशादिः ।
इत्यमरः ।
३ । १ । ५१ ॥ तद्‌गणा यथा, --
"संस्वेदजविकाराश्च यथा येभ्यो भवन्ति
च ।
मानुषस्वेदमलजा मक्षिकाद्या भवन्ति च ॥
नवमेघप्रसिक्तायां पिपालिकगणादयः ।
सस्वेदजापि विज्ञेया वृक्षगोपशुजन्तवः ॥
समिद्‌भ्या माषमुद्‌गेभ्यः फलेभ्यश्चैव
जन्तवः ।
जायन्त क्रिमया विप्राः काष्टभ्यो
घुणकादयः ॥
तथा शुक्रविकारेभ्यः पूतिकाः प्रभवन्ति
च ।
संस्वेदजाश्च जायन्ते वृश्चिकाः
शुष्कगोमयात् ॥
गोभ्यो हि महिषेभ्यश्च मानुषेभ्यश्च
जन्तवः ।
मत्स्यादिध्यश्च विविधा अन्तःकुक्षौ
विशषतः ॥
अथान्यानि च सूक्ष्माणि सूक्ष्मयूकास्तथैव
च ।
गोभ्याऽश्वेभ्यस्तथा चैव
अष्टापदकिनीनकाः ॥

| सर्व्वान् स्वेदान्निवाते च जीर्णेऽन्ने वा विचा-<br>रयेत् ॥<br>स्वेदाद्धातुस्थिता दोषा स्वेहक्लिन्नस्य देहिनः ।<br>द्रवत्वं प्राप्य कोष्ठान्तर्गत्वा यान्ति विरेकिताम् ॥<br>स्नेहाभ्यक्तशरीरस्य शीतेराच्छाद्य चक्षुषी ।<br>खेद्यमानस्य च मुहुर्हृदयं शीतलैः स्पृशेत् ॥ | | मक्षिकाणां विकाराश्च उत्सृष्टोदककर्द्दमैः<br>। |
|---|---|---|

शरावति विकाराश्च करीषेभ्यो भवन्ति हि ॥
एवमादिरसख्यातो गणः संस्वेदजो मया ।
समासान्निहितो ह्येष प्राक्कर्म्मवशजः स्मृतः ॥”
इति वह्निपुराणे काश्यपीयवंशनामाध्यायः ॥

**स्वेदनं**, क्ली, (स्विद् + ल्युट् ।) स्वेदः । इति मेदिनी ॥ स्वेदनयन्त्रं यथा, --
“निबद्धमौषधं सूतं भूर्ज्जे तत्त्रिगुणाम्बरे ।
रसपोटलिकां काष्ठे दृढं बद्ध्वा गुणेन हि ॥
सन्धानपूर्णं कुम्भान्तः स्वावलम्बनसंस्थितम् ।
अधस्ताज्ज्वालयेद्वह्निं तत्तदुक्तक्रमेण हि ।
दोलायन्त्रमिदं प्रोक्तं स्वेदनाख्यं तदेव हि ॥”
सन्धानं काञ्जिकादि ।
“साम्बुस्यालीमुखे बद्धे वस्त्रे स्वेद्यं निधाय च ।
पिधाय पच्यते यत्र तद्यन्त्रं स्वेदनं स्मृतम् ॥”
इति भावप्रकाशः ॥
(स्वेदयतीति । स्विद् + णिच् + ल्युः । स्वेदके, त्रि । यथा, सुश्रुते । ३ । ४ ।
“स्वेदनो दुर्गन्धः पीतशिथिलाङ्गस्ताम्रनख-नयनतालुजिह्वोष्ठपाणिपादतलइत्यादि ॥”

**स्वेदनिका**, स्त्री, (स्वेदनमस्त्यस्या इति । ठन् ।) कन्दुः । इति हेमचन्द्र ॥ भर्ज्जनपात्रम् । भर्ज्जन-शालाच ॥

**स्वेदनी**, स्त्री, (स्विद्यतेऽनयेति । स्विद् + ल्युट् । ङीप् ।) लौहमयपात्रम् । ताओया इति लोहता इति च ख्यातम् । इति भरतः ॥

“पाण्डुस्तु पुनरेवैनां पुत्त्रलोभात् महायशाः ।
वक्तुमैच्छद्धर्म्मपत्नीं कुन्ती त्वेनमथाब्रवीत् ॥
नातश्चतुर्थं प्रमवमापत्स्वपि वदन्त्युत ।
अतः परं स्वैरिणी स्याद्बन्धकी पञ्चमे भवेत् ॥”)

**स्वैरिता**, स्त्री, (स्वैरिणो भाव । तल् । टाप् ।) स्वच्छन्दता । तत्पर्य्यायः । यदृच्छा २ । इत्य-मरः । ३ । २ । २ ॥

**स्वैरिन्ध्नी**, स्त्री, परवेश्मस्था स्ववशा शिल्पकारिणी नारी । इति शब्दरत्नावली ॥ परगृहस्था स्वतन्त्रा प्रसाधनानुलेपनादिशिल्पकारिणीति विशेषणत्रययुक्ता या सा सैरिन्ध्री । स्वैरं स्वाच्छन्द्यं धरतीति स्वैरिन्ध्री निपातनात् । स्वैरिन्ध्री परवेश्मस्था शिल्पकृत् स्ववशा स्त्रियाम् । इति दन्त्यादौ रभसः । इत्यमर-टीकायां भरतः ॥ अस्या रूपान्तरं सैरन्ध्री सैरिन्ध्रिः इति च टीकान्तरम् ॥

**स्वैरी**, [न्] त्रि, स्वेनैव ईरितुं शीलमस्य । ईर गतौ + णिनिः । स्वतन्त्रः । इत्यमरः । ३ । १ । १५ ॥
(यथा, महाभारते । १३ । १४२ । २१ ।
“सिद्धिवादेषु संसिद्धास्तथा वननिवासिनः ।
स्वैरिणो दारसंयुक्तास्तेषां धर्म्मः कथं स्मृतः ॥”

**स्वोपार्ज्जितः**, त्रि, (स्वेनोपार्ज्जितः ।) स्वयम-र्ज्जितः । स्वयमुपात्तः । यथा, पिता चेत् पुत्त्रान् विभजेत् तस्य स्वेच्छा स्वयमुपात्तेऽर्थे पत्तामहे तु पितापुत्त्रयास्तुल्यं स्वामित्वम् । इति विष्णु-सूत्रम् । अपि च । मनुविष्णू ।
“पतृकन्तु पिता द्रव्यमनवाप्तं यदाप्नुयात् ।
न तत् पुत्त्रैर्भजेत् सार्द्धमकामः स्वयमर्जितम् ॥”
वत्त्वाद्वा इति दायभागः ॥ अनुपघाते पिता द्र्व्यंशहरः । अर्जकत्वात् स्वयमपि द्र्व्यंशहरः ।
इतरेषामनंशित्वम् । भ्रातृद्रव्योपघाते तु तेषा-मप्येकांशः । इति द्र्व्यंशाद्ध्यंशयोर्भेदकथनम् ॥ * ॥
साधारणधनार्जितेऽपि विशेषमाह व्यासः ।
“साधारणं समाश्रित्य यत्किञ्चित् वहनायुधम् ।
शौर्य्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः ।
तस्य भागद्वयं देयं शेषास्तु समभागिनः ॥”
अत्र भ्रातर इत्युपलक्षणं पितृव्यादयोऽपि बोद्धव्याः । तस्यार्जकस्य । साधारणोपघाते यस्य यावतोऽंशस्थाल्पस्य महतो वा उपघात-स्तस्य तदनुसारेण भागकल्पना कार्य्या । इति दायभागः ॥ इति च दायतत्त्वम् ॥

**स्वोरसः**, पुं, शिलापिष्टकल्कः । यथा, --
“स्वोरसः स्वरसः प्रोक्तः कल्को दृषदि पेषितः ॥”
इति शब्दचन्द्रिका ॥

तत्पर्य्यायः । कन्दुः २ । इत्यमरः । २ । ९ । ३० स्वेदनिका ३ । इति हेमचन्द्रः ॥

**स्वेदमलोज्झितदेहः**, पुं, (स्वेदमलेन उज्झितः देहो यस्य ।) सर्व्वकल्पीयजिनात्तमः । इति हेमचन्द्रः ॥ स्वेदमलत्यक्तकायश्च । तद्युक्ते, त्रि ॥

**स्वेदविप्रुट्**, [ष्] स्त्री, घर्म्मबिन्दुः । स्वेदस्य विप्रुट् बिन्दुः । इति षष्ठीतत्पुरुषसमासनिष्पन्ना ॥

**स्वैरः**, त्रि, (स्वेन स्वातन्त्र्येण ईर्त्ते इति । ईर गतौ + अच् । "स्वादीरेरिणोः ।" ६ । १ । ८९ । इत्यस्य वार्त्तिकोक्त्या वृद्धिः ।) स्वच्छन्दः ।
(यथा, रघुः । २ । ५ ।
"अव्याहतैः स्वैरगतैः स तस्याः
सम्राट् समाराधनतत्परोऽभूत् ।")
मन्दः । इति मेदिनी ॥ (यथा, महाभारते । ४ । ६६ । ४९ ।
"अथोत्तरः शुभैर्गन्धैर्माल्यैश्च विविधैस्तथा ।
आकीर्य्यमाणः संहृष्टो नगरं स्वैरमागमत् ॥" * ॥
वृथालापः । यथा, तत्रैव । १ । ४२ । २ ।
"नैवान्यथेदं भविता पितरेष ब्रवीमि ते ।
नाहं मृषा ब्रवीम्येव सैरेष्वपि कुतः शपन् ॥")

**स्वैरता**, स्त्री, (स्वैरस्य भावः । स्वैर + तल् ।) स्वैरिता । इत्यमरटीकायां रायमुकुटः । ३ । २ । २ ॥

**स्वैरिणी**, स्त्री, (स्वेनैव ईरयितुं शीलमस्याः । ईर + णिनिः । ङीप् । स्यादीरेरिणारिति वृद्धिः ।) व्यभिचारिणी इत्यमरः । २ । ६ । ११ ॥
सा तु चतुःपुरुषगामिनी (यथा, महाभारते ।

तत् स्वयमर्जितमिति कृत्वा न विभजेदित्यन्वयः ।
एतत्तु स्थावरविषयम् । मण्यादावनुद्धृतेऽपि पितु-रेव स्वाच्छन्द्यम् ।
"स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्जितम् ।
तसम्भूय सुतान् सर्व्वान् न दानं न च विक्रयः ॥
पितुः प्रसादात् भुज्यन्ते वस्त्राण्याभरणानि च ।
स्थावरन्तु न भुज्येत प्रसादे सति पतृके ॥"
इति मिताक्षराधृतवचनमपि पितामहधन परम् । पित्रा च स्वोपार्जितं स्थावरं दत्तं भुज्यत एवेति । अन्यथा मूलभूतश्रुत्यन्तर-कल्पनापत्तः । इति दायतत्त्वम् ॥ * ॥ स्वापा-र्जितं द्विविधम् । पित्रादधनाद्युपधातेन स्वेनो-पार्जितम् । तदनुपघातेन उपार्जितञ्च । तद्धन-विभागविधिर्य्यथा । व्यासः ।
"अनाश्रित्य पितृद्रव्यं स्वशक्त्याप्नोति यद्धनम् ।
दायादभ्यो न तद्दद्यात् विद्यालब्धञ्च यद्भवेत् ॥"
कात्यायनः ।
"द्व्यंशहरोऽर्द्धहरो वा पुत्त्रवित्तार्जनात् पिता ।"
पुत्त्रवित्तार्जनात् । कृद्विहितो भावा द्रव्यवत् प्रकाशते इति न्य्ययात् पुत्त्रार्जितावत्तात् पितु-र्द्व्यंशित्वं पितृधनानुपघातविषयं भ्रातृधनोप-घातविंषयञ्च । अर्जकस्य तु द्व्यंशित्वम् । भ्रातृ-धनोपघाते तु तेषामप्येकांशित्वं वक्ष्यमाणवच-नात् । पितुरर्द्धहरत्वन्तु पितृद्रव्योपघाताद्गुण-

**ह**

**ह**, हकारः । स तु व्यञ्जनत्रयस्त्रिंशवर्णः । अष्टम
वर्गीयचतुर्थवर्णश्च । तस्य उच्चारणस्थानं कण्ठः ।
इति व्याकरणम् ॥ (यथा च शिक्षायाम् । १७ ।
“कण्ठ्या वहाविचुयशास्तालव्या ओष्ठजावुपू ॥ *)
अस्य स्वरूपं यथा, --
“हकारं शृणु चार्व्वङ्गि ! चतुर्व्वर्गप्रदायकम् ।
कुण्डलीद्वयसंयुक्तं रक्तविद्युल्लतोपमम् ।
रजःसत्त्वतमोयुक्तं पञ्चदेवमयं सदा ।
पञ्चप्राणात्मकं वर्णं त्रिशक्तिसहितं सदा ।
त्रिबिन्दुसहितं वर्णं हृदि भावय पार्व्वति ! ॥”
इति कामधेनुतन्त्रम् ॥ * ॥
(वङ्गीयवर्णमालायाम्) अस्य लेखनप्रकारो
यथा, --
“ऊर्द्ध्वादाकुञ्चिता मध्ये कुण्डलीत्वं गता त्वधः ।
ऊर्द्ध्वं गता पुनः सैव तासु ब्रह्मादयः क्रमात् ।
मात्रा च पार्व्वती ज्ञेया ध्यानमस्य प्रचक्ष्यते ॥
करीषभूषिताङ्गीञ्च साट्टहासां दिगम्बराम् ।
अस्थिमाल्यामष्टभुजां वरदामम्बुजेक्षणाम् ॥
नागेन्द्रहारभूषाढ्यां जटामुकुटमण्डिताम् ।
सर्व्वसिद्धिप्रदां नित्यां धर्म्मकामार्थमोक्षदाम् ॥
एवं ध्यात्वा हकारन्तु तन्मन्त्रं दशधा जपेत् ॥”
इति वर्णोद्धारतन्त्रम् ॥ * ॥
अस्य नामानि यथा, --
“हः शिवो गगनं हंसो नागलोकोऽम्बिका-
पतिः ।
नकुलीशो जगत्प्राणः प्राणेशः कपिलामलः ॥
परमात्मात्मजो जीवो यवाकः शान्तिदोऽङ्गनः
मृगा भयोऽरुणा स्थाणुः क्रूटकूपविरावणः ॥
लक्ष्मीर्म्मविहरः शम्भुः प्राणशक्तिर्ल्लाटजः ।
स्वकोपवारणः शूली चैतन्यं पादपूरणः ।
महालक्ष्मीः परं शम्भुः शाखोठः सोममण्डलः ॥”
इति वर्णाभिधानम् ॥ * ॥

अपि च ।
“शुक्रश्चाथ हकारोऽशः प्राणः सान्तः शिवो वियत् ।
अकुलो नकुलीशश्च हसः शून्यञ्च हाकिनी ।
अनन्तो नकुली जीवः परमात्मा ललाटजः ॥”
इति बीजवर्णाभिधानम् ।
अपि च ।
“हकारो नकुलीशोऽपि हंसः प्राणोऽङ्कुशः प्रिये ।
महेशो नकुली चैव वरावो गगनं रविः ।
लिङ्गं शून्यो महाशून्यः प्राणश्च परमेश्वरि ! ॥”
इति श्रीरुद्रयामले ८ पटले मन्त्राभिधानम् ॥

**ह**, व्य, (हन हिंसागत्योः + अन्येभ्योऽपीति डः ।)
पादपूरणम् । इत्यमरः । ३ । ४ । ५ ॥
(यथा,
रामायणे । १ । १ । ५८ ।
“पम्पातीरे हनुमता सङ्गतो वानरेण ह ॥”)
सम्बोधनम् । विनिग्रहः । नियोगः । क्षेपः ।
कुत्सा । इति मेदिनीशब्दरत्नावल्यौ ॥

**हं**, [म्] व्य, रुषोक्तिः । अनुनयः । इति मेदिनी ॥

**हः**, पुं, शिवः । जलम् । शून्यम् । धारणम् ।
मङ्गलम् । गगनम् । नकुलीशः । रक्तम् ।
स्वर्गः ।
इति मेदिनी ॥ पापहरणम् । चन्द्रः । इति
शब्दरत्नावली ॥ सकोपवारणः । शुष्कः ।
इत्येकाक्षरकोषः ॥

**हंसः**, पुं, (हन्ति सुन्दरं गच्छतीति । हन
हिंसागत्योः + “वृतॄवदिहनीति ।” उणा ० ३ ।
६२ । इति सः ।) पक्षिविशेषः । हाँस इति
भाषा । तत्पर्य्यायः । श्वेतगरुत् २ चक्राङ्गः ३
मानसौकाः ४ । इत्यमरः । २ । ५ । २३ ॥ कल-
कण्ठः ५ सितच्छदः ६ । इति जटाधरः ॥
“प्लवाः पित्तहराः स्निग्धा मधुरा गुरवो हिमाः ।
वातश्लेष्मप्रदाश्चापि बलशुक्रकराः सराः ॥”
इति भावप्रकाशः ॥ * ॥
(यथा च ।
“गुरूष्णस्निग्धमधुराः स्वरवर्णबलप्रदाः ।
बृहणाः शुक्रलाश्चोक्ता हंसा
मारुतनाशनाः ॥”
इति चरके सूत्रस्थाने २७ अध्याये ॥)
अस्या डिम्बगुणाः हंसबीजशब्दे द्रष्टव्याः ॥ * ॥
तस्य शकुनं यथा, --
“काष्ठासु सर्व्वास्वपि दर्शनेन
हंसस्य शब्देन तु सर्व्वसिद्धिः ।
नामानि हंसस्य शृणोति यस्तु
प्रयान्ति नाशं दुरितानि तस्य ॥
चौरैः समं दर्शनमाद्यशब्दे
निधिर्द्द्वितीयेऽथ भयं तृतीये ।
युद्धं चतुर्थे नृपतिप्रसादः
स्यात् पञ्चमे हंसरवे नराणाम् ॥”
इति वसन्तराजशाकुने ८ वर्गः ॥
निर्लोभनृपः । विष्णुः । (यथा महाभारते । १२ ।
४३ । ७ ।
“शुचिश्रवा हृषीकेशो घृतार्च्चिर्हंस उच्यसे ॥”)
सूर्य्यः । (यथा, महाभारते । ३ । ३ । ६१ ।
“त्वं हंसः सविता भानुरंशुमाली
वृषाकपिः ॥”)
परमात्मा । मत्सरः । योगिभेदः ।
मन्त्रभेदः ।
शरीरस्थवायुविशेषः । तुरङ्गमप्रभेदः । इति
मेदिनी ॥ (गोविशेषः । यथा,
बृहत्संहिता-
याम् । ६१ । १७ ।
मण्डपे षोडशदलकर्णिकामध्ये जीवात्मने
अकारादि-अःकारान्ते
अजपासहस्रसंख्यजपं
निवेदयामि नमः । आज्ञामण्डपे
श्रीचन्द्रप्रभे
द्विदलपद्मेह-क्ष-वर्णान्विते
मायासहितगुरुमूर्त्तये
एकसहस्रजपं निवेदयामि नमः ।
ब्रह्मरन्ध्रमण्डपे
नानावर्णोज्ज्वले सहस्रपद्मस्थिताय
परमात्मने
अकारादिक्षकारान्तसहिताय
एकसहस्रजपं
निवेदयामि नमः । सहस्रशब्दोऽसंख्यपर इति
बोध्यम् । उक्तञ्च पद्मं कोटिसमन्वितमिति ।
इति जपं समर्प्य
अष्टोत्तरशतसंख्यमजपाजपं
कुर्य्यात् । अकारादिक्षकारान्ता वर्णा हंस इति
शिवशक्तिबिन्दूना ब्रह्म अ इति विसर्गरूप-
बिन्दूभ्यां हरिहरयोरभेदः ।
सोऽहमित्याभेद-
भावनया ब्रह्मरूपतां स्वं स्वं परिभाव्य
उक्तः ।
षट्शताधिकैकविंशतिसहस्रजपेन
परदेवतारूपः
श्रीपरमेश्वरः प्रीयतामित्येकवारं सङ्कल्प्य
ध्यायेत् ॥ * ॥ हंसस्य ध्यानं यथा, --
“आराधयामि मणिसन्निभमात्मलिङ्गं
मायापुरीहृदयपङ्कजसन्निविष्टम् ।
श्रद्धानदीविमलचित्तजलावगाहं
नित्यं समाधिकुसुमैरपुनर्भवाय ॥” * ॥
प्रसङ्गाज्जपरहस्यं लिख्यते । पञ्चाशद्वर्ण-
संपूटत्वेनानुलोम्यप्रातिलौम्येन ब्रह्मरूपं मेरुं
क्षकारं परिकल्प्य तया सह जपं
कुर्य्यादिति

सितपक्षः ७ सरःकाकः ८ पुरुदंशकः ९ ।
इति शब्दरत्नावली ॥ धवलपक्षः १० मान-
सालयः ११ । इति राजनिर्घण्टः ॥ अस्य
मांसगुणाः । वातहरत्वम् । वृष्यत्वम् ।
स्वर्य्य-
त्वम् । मांसबलप्रदत्वञ्च । इति राजवल्लभः
॥ * ॥
अपि च ।
"स्निग्धं हिमं गुरु वृष्यं मांसं जलपक्षिणान्तु
वातघ्नम् ।
तेष्वपि च हंसमांसं वृष्यतमं तिमिरहरञ्च ॥"
इति राजनिर्घण्टः ॥
अपि च ।
"हंससारसकाचाक्षवककौञ्चसरारिकाः।
नन्दीमुखी सकादम्बा बलाकाद्यः प्लवाः
स्मृताः ।
प्लवन्ते सलिले यस्मात् एते तस्मात् प्लवाः
स्मृताः ॥"
काचाक्षः कपर्दिकाक्षो बृहद्बकः । क्रौञ्चः
शरद्विहङ्गः स्यात् । टेक इति लोके ।
शरारिका
सिन्धु इति लोके ।
"स्थूला कठोरा वृत्ता च
यस्याश्चञ्चुर्व्यवस्थिता ।
गुटिकाचञ्चुसदृशी ज्ञेया नन्दीमुखीति सा ॥"
कादम्बः करावा इति लोके । वला बगुली
इति
लोके ।

"सितवर्णः पिङ्गाक्ष-
स्ताम्रविषाणेक्षणो महावक्त्रः ।
हंसो नाम शुभफलो
यूथस्य विवर्द्धनः प्रोक्तः ॥")
गुरुः । पर्व्वतः । इति शब्दरत्नावली ॥
शिवः । इत्यनेकार्थकोषः ॥ अग्रतः
स्थितः ।
श्रेष्ठः । इति हेमचन्द्रः ॥ विशुद्धः ।
इत्यजयः ॥ *
अथ हंसमन्त्रविवरणम् ।
अस्याजपागायत्री-
मन्त्रस्य शिरसि हंसऋषये नमः । मखे
अव्यक्त-
गायत्रीच्छन्दसे नमः । हृदि
परमहंसदेवतायै
नमः । लिङ्गे हं बीजाय नमः । आधारे सः
शक्तये नमः । परमात्मप्रोतये
उच्छासनिश्वा-
साभ्यां षट्शताधिकैकविंशतिसहस्रजपेन
पूर्ब्ब-
भूतेभ्यो निवेदयामि । मूलाधारमण्डपे
स्वर्णवर्णं
चतुर्द्दलपद्मे वादिसान्तचतुर्व्वर्णान्विते
गायत्री-
सहिताय गणनाथाय
षट्शतसंख्यजपमहर्निशं
समर्पयामि नमः । स्वाधिष्ठानमण्डपे
अनेक-
विद्युन्निभे वादिलान्तषड्वर्णान्विते
षड्दलपद्मे
सावित्रीसहिताय ब्रह्मणे
अजपामन्त्रषट्सहस्रं
निवेदयामि नमः । मणिपूरमण्डपे
नीलोत्पल-
मेघनिभे डादिफान्तदशवर्णान्विते
दशदलपद्मे
लक्ष्मीसहिताय विष्णवे षट्सहस्रजपं
समर्पयामि
नमः । अनाहतमण्डपे तरुणरविनिभे
द्वादश-

दोषलेशैर्न वाध्यते । एतेन विश्वमेव
हंसमातृ-
कयोरेकाकारेण कालात्मना लोके
चिदात्म
उच्यते । अजपाविधानं विना
श्रीविद्यादिसकल-
विद्याया अनधिकारी भवेत् । तदुक्तम् ।
"हंसज्ञानविमुग्धेन कृतमप्यकृतं भवेत् ।"
इति ।
"अजपाधारणं देवि ! कथयामि तवानघे !
।
यस्य विज्ञानमात्रेण परं ब्रह्मैव देशिकः ॥
हसः पदं परेशानि प्रत्यहं प्रजपेन्नरः ।
मोहरन्ध्रं न जानाति मोक्षस्तस्य न विद्यते
॥
श्रीगुरोः कृपया देवि ! ज्ञायते जप्यते यदा
।
उच्छासनिश्वासतया तदा बन्धक्षयो
भवेत् ॥
उच्छासे चैव निश्वासे हंस इत्यक्षरद्वयम् ।
तस्मात् प्राणस्तु हंसात्मा आत्माकारेण
संस्थितः ।
नाभेरुच्छासनिश्वासात्
हृदयाग्रेर्व्यवस्थितिः ॥"
इति राघवभट्टधृतदक्षिणामूर्त्तिसंहितायां
७
पटलः ॥ * ॥
अहोरात्रमध्येऽजपाजपसंख्या
यथा, --
"षष्टिश्वासैर्भवेत् प्राणः षट्प्राणा नाडिका
मता ।
षष्टिनाड्या अहोरात्रं जपसंख्याक्रमो मतः
॥
एकविशतिसाहस्रं षट्शताधिकमीश्वरि।
जपते प्रत्यहं प्राणी सान्द्रानन्दमयीं पराम्
।
उत्पत्तिश्च जपारम्भो मृत्युस्तस्य
निवेदनम् ॥"
इति तत्रैव ७ पटलः ॥ * ॥
अजपानामकारणमपि तत्रैव ।

| | | |
|---|---|---|
| | वर्णयुते द्वादशदलपद्मे गौरीसहिताय शिवाय<br>अजपाषट्सहस्रजपं समर्पयामि नमः ।<br>विशुद्ध- | “विना जपेन देवेशि ! जपो भवति मन्त्रिणः ।<br>अजपेयं ततः प्रोक्ता भवपाशनिकृन्तनी ॥<br>एवं जपं महेशानि प्रत्यहं विनिवेदयेत् । |

गणेशब्रह्मविष्णुभ्यो हराय परमेश्वरि ! ॥
जीवात्मने क्रमेणैव तथैव परमात्मने ।
षट्शतानि सहस्राणि सहस्रञ्च तदेव हि ।
पुनः सहस्रं गुरवे क्रमेण च निवेदयेत् ” * ॥
एवं यथास्थानावस्थितेभ्यो
गणेशादिभ्यस्त-
ज्जपसमर्पणमुक्त्वा तत्तत्स्थानानां
तत्तदवस्थित-
मातृकार्णानाञ्च रूपमाह तत्रैव ।
“आधारे स्वर्णवर्णेऽस्मिन् वादिसान्तानि
संस्मरेत् ।
द्रुतसौवर्णवर्णानि वर्णानि परमेश्वरि ! ॥
स्वाधिष्ठाने विद्रुमाभे वादिलान्तानि च
स्मरेत् ।
विद्युत्पुञ्जप्रभाभानि सुनीले मणिपूरके ॥
डफान्त्यनि महानीलप्रभाणि च
विचिन्तयेत् ।
पिङ्गवर्णे महावह्निकलिकाभानि चिन्तयेत् ॥
कादिठान्तानि वर्णानि चतुर्थेऽनाहते प्रिये ।
विशुद्धौ धूम्रवर्णे च रक्तवर्णान् स्वरान् यजेत्
॥
आज्ञायां विद्युदाभायां शुभ्रौ हक्षौ विचि-
न्तयेत् ॥
कर्पूरद्युतिसंराजत्सहस्रदलनीरजे।
नादात्मकं ब्रह्मरन्ध्रं जानीहि परमेश्वरि ।
एतेषु सप्तचक्रेषु स्थितेभ्यः परमेश्वरि ! ॥
जपं निवेदयित्वा तं अहोरात्रभवं प्रिये ।
सहजं परमेशानि न्यासं कुर्य्याद्विचक्षणः ॥
ऋषिर्हंसोऽव्यक्तरूपगायत्री च्छन्द उच्यते
।
देवता परमादिस्तु हंसोऽहं बीजमुच्यते ॥
सः शक्तिः कीलकं सोऽहं प्राणवस्तु त्वमेव
हि ।
नेत्रस्थलं भवेत् श्वेतं वर्णञ्च परमेश्वरि ! ॥
तदा तत्सह इत्येवं मनोरस्य प्रकीर्त्तितः ।
मोक्षार्थे विनियोगः स्यादेवं जानीहि
पार्व्वति ॥
ततः षडङ्गविन्यासं कुर्य्याद्देहस्य सिद्धये ।
सूर्य्यं सोमं महेशानि निरञ्जनमतः परम् ॥

कौशिकं चित्रसेनञ्च तस्मिन् युद्ध
उपस्थिते ॥
ययोस्ते नामनी राजन् ! हंसेति
डिभकेति च ।
पूर्व्वं संकथिते पुंभिर्नृलोके
लोकसत्कृते ॥” * ॥
मेरोरुत्तरस्थपर्व्वतविशेषः । यथा,
विष्णुपुराणे ।
२ । २ । २८ ।
“शङ्खकूटोऽथ ऋषभो हंसो नागस्तथा
परः ।
कालञ्जराद्याश्च तथा उत्तरे
केशराचलाः ॥”)

**हंसकः**, पुं, (हंस इव कायति मधुरध्वनित्वात् ।
कैशब्दे + कः ।) पादकटकः । यथा, --
“पादाङ्गदं तुलाकोटिर्मञ्जीरो
नूपूरोऽस्त्रियाम् ।
हंसकः पादकटकः किङ्किणी
क्षुद्रघण्टिका ॥”
इत्यमरः । २ । ६ । १०९ ॥
“षट् नूपुरे । केचित्तु
पादाङ्गदादिचतुष्कं चरण-
भूषणे नूपुर इति ख्याते । हंसकादिद्वयं
रवशून्ये
हंसाकृतिचरणभूषणे इत्याहुः । हंस
इव
कायति मधुरध्वनित्वात् हंसकः । कै
शब्दे डः ।
हंसाकृतित्वात् हंस इव हंसकः इति
वा ।
इवार्थेविकारसंघ इत्यादिना कः ।”
इति भरतः ॥
(हंस इवेति । इवे प्रतिकृताविति कन्
। स्वार्थे
कन् वा) राजहंसः । इति
शब्दचन्द्रिका ॥
(यथा, माघे । ७ । २३ ।
“सरित इव सविभ्रमप्रवात-

**हंसपदी**, स्त्री, (हंसस्येव पादा मूलाम्यस्याः ।
ङीप् । पादस्य पद्भावः ।) गोधापदी । इति
राजनिर्घण्टः ॥ हंस्रपदीविशेषः । तत्पर्य्यायः
।
मधुस्रवा २ हंसपादी ३ त्रिपदी ४ । इति रत्न-
माला ॥ (अस्याः पर्य्यायो यथा, --
“हंसपादी हंसपदी कीटमाता त्रिपादिका ।”
इति भावप्रकाशस्य पूब्ब खण्डे प्रथमे भागे ॥)

**हंसपादं**, क्ली, (हंसस्य पाद इव वर्णो यस्य ।)
हिङ्गुलम् । इति हलायुधः ॥ पुं, यथा, --
हिङ्गुलन्दरदं म्लेच्छमिङ्गुलञ्चूर्णपारदम् ।
दरदस्त्रिविधः प्रोक्तश्चर्म्मारः शुकतुण्डकः ॥
हंसपादस्तृतीयः स्यात् गुणवानुत्तरोत्तरम् ।
चर्म्मारः शुक्लवर्णः स्यात् सपीतः
शुकतुण्डकः ।
जवाकुसुमसङ्काशो हंसपादो महोत्तमः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
हंसचरणे च पुं ॥

**हंसपादिका**, स्त्री, (हंसपादी एव स्वार्थे कन् ।
टाप् ।) हंसपदी । इति राजनिर्घण्टः ॥

**हंसपादी**, स्त्री, (हंसस्य पादा इव मूलान्यस्याः ।
ङीप् ।) हंसपदीविशेषः । इति रत्नमाला ॥
(अस्याः पर्य्यायो गुणाश्च यथा, --
“हंसपादी हंसपदी कीटमाता त्रिपादिका ।
हंसपादो गुरुः शीता हन्ति रक्तविषव्रणान् ॥
विसर्पदाहातिसारलूताभूताग्निरोहिणीः॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**हंसबीजं**, क्ली, (क्षंसस्य बीजम् ।) हंसडिम्बः ।
तस्य गुणाः यथा, राजनिर्घण्ठे ।
“हसबीजं परं बल्यं वृंहणं वातनाशनम् ।
पाके लघुतरं प्रोक्तं सर्व्वामयविनाशनम् ॥”

**हंसमाला**, स्त्री, (हंसस्य माला ।) कादम्बः ।
इति शब्दचन्द्रिका ॥ हंससमूहः । यथा, --
“तां हंसमालाः शरदीव गङ्गां
महौषधीर्नक्तमिवात्मभासः ।
स्थिरोपदेशामुपदेशकाले

निराभासं चतुर्थ्यन्तं स्वाहान्ते क्रमतो न्यसेत् ।
कवचान्तं प्रविन्यस्य ततोऽनन्तपदं स्मरेत् ॥”
इति च तत्रैव ७ पटलः ॥ {??} ॥
अजपाया द्वैविध्यमुक्तं यथा, --
“हंसेति प्रकृतिर्ज्ञेया ॐकारः प्रकृतेर्गुणः ।
हंकारेण बहिर्याति सकारेण विशेत् पुनः ॥
हंसेति परमं मन्त्रं जीवा जपति सर्व्वदा ।
षट्शतानि दिवारात्री सहस्राण्येकविंशतिः ॥
अजपा नाम गायत्री योगिनां मोक्षदायिनी ।
अजपा द्विविधा देवि ! व्यक्ता गुप्ता क्रमेण च ।
व्यक्ता च द्विविधा प्रोक्ता शब्दज्योतिःस्वरूपिणी ।
ज्योतीरूपा च सा देवी हृदिस्थाने प्रतिष्ठिता ।
ठकाररूपा गुप्ता च शिवशक्तिः प्रकीर्त्तिता ।
चन्द्रबीजं ठकारस्तु वीप्सितः स्वर उच्यते ॥
अजपार्थमयी गुप्ता वह्निजाया प्रकीर्त्तिता ।
अस्याः सङ्कल्पमात्रेण पुरश्चरणमुच्यते ॥”
इति निरुत्तरतन्त्रे ४ पटलः ॥
(जरामन्धनृपतेः सेनापतिविशेषः । यथा, महाभारते । २ । २२ । ३१ -- ३२ ।
“सु तु सेनापतिं राजा सस्मार भरतर्पभ ! ।
प्रणदितहंसकभूषणा विरेजुः ॥”
तालप्रभेदः । यथा, --
“लघुर्गुरुर्लघुर्यत्र स तालो हंसकः स्मृतः ॥”
इति सङ्गीतदामोदरः ॥

**हंसकीलकः**, पुं, (हंस इव कौलतीति । कील बन्धने + ण्वुल् ।) रतिबन्धविशेषः । यथा, --
“नारीपादद्वयं कृत्वा कान्तस्योरुयुगोपरि ।
कटिमान्दोलयेद् यत्नात् बन्धोऽयं हंसकीलकः ॥”
इति स्मरदीपिका ॥

**हंसकूटः**, पुं, ककुत् । इति केचित् ॥ (पर्व्वतविशेषः । यथा, महाभारते । १ । ११९ । ४९ ।
“इन्द्रद्युम्नः सरः प्राप्य हंसकूटमतीत्य च ।
शतशृङ्गे महाराज तापसः समतप्यत ॥”)

**हंसगद्गदा**, स्त्री, (हंस इव गद्गदो यस्याः ।) मधुरभाषिणी । तत्पर्य्यायः । मधुरनिस्वना २ ।
इति त्रिकाण्डशेषः ॥

**हंसगामिनी**, स्त्री, (हंस इव गच्छतीति । गम + णिनिः । ङीप् । हंसगमनमिव गमनं यस्याः सा इति वा ।) नारीविशेषः । (हंसेन गच्छतीति ।) ब्रह्माणी । इति हंसारूढाशब्ददर्शनात् ॥

**हंसदाहनं**, क्ली, (हंसं श्रेष्ठं सुरभित्वात् दाहनं यस्य ।) अगुरु । इति शब्दचन्द्रिका ॥ (गुणादयोऽस्या अगुरुशब्दे ज्ञातव्याः ॥)

**हंसनादिनी**, स्त्री, (हंस इव नदतीति । नद +
प्रपेदिरे प्राक्तनजन्मविद्याः ॥”
इति कुमारसम्भवे । १ । ३० ॥

**हंसमाषा**, स्त्री, हंसः श्रैष्ठो माषो यस्याः ।) माषपर्णी । इति राजनिर्घण्टः ॥

**हंसरथः**, पुं, (हंसो रथो वाहनं यस्य ।) ब्रह्मा । इति त्रिकाण्डशेषः ॥

**हंसलोमशं**, क्ली, (हंस इव लोमशम् ।) कासीसम् । इति राजनिर्घण्टः ॥

**हंसलोहकं**, क्ली, (हंसं श्रेष्ठं लोहमिव । कन्) । पित्तलम् । इति हेमचन्द्रः ॥ (विवरणमस्य पित्तलशब्दे ज्ञातव्यम् ॥)

**हंसवती**, स्त्री, (हंस इव हंसपदाकार इव मूलमस्त्यस्या इति । हंस + मतुप् । ङीप् । मस्य वः ।) हंसपदीलता । इति जटाधरः ॥ हंसयुक्ते, त्रि ॥

**हंसवाहनः**, पुं, (हंसो वाहनं यस्य ।) ब्रह्मा । इति कश्चिदमरः । १ । १ । १७ ॥ (यथा, श्रीमद्भागवते । ७ । ३ । १६ ।

|  | णिनिः । ङीप् । नारीविशेषः । तस्या लक्षणं<br>यथा, शब्दमालायाम् ।<br>“गजेन्द्रगमना तन्वी कोकिलानां रुतान्विता ।<br>नितम्बगुर्व्विणो या सा कथ्यते हंसनादिनी ॥” |  |
| --- | --- | --- |

"तपन्तं तपसा लोकान् यथाब्भ्रापिहितं रविम् ।
विलक्ष्य विस्मितः प्राह हसंस्तं हंसवाहनः ॥")

**हंमाङ्घ्रिः**, पुं, (हंसस्य अङ्घ्रिरिव रक्तववर्णत्वात् ।) हिङ्गुलम् । इति केचित् ॥ हंसपादश्च ॥

**हंसाधिरूढा**, स्त्री, (हंसमधिरूढा ।) सरस्वती । यथा, --
"वाणीं पूर्णनिशाकरोज्ज्वलमुखीं कर्पूरकुन्द-प्रभां
चन्द्रार्द्धाङ्कितमस्तकां निलकरैः मबिभ्रती-मादरात् ।
बीणामक्षगुणं सुधाढ्यकलसं विद्याञ्च तुङ्गस्तनों
दिव्यैराभरणैर्व्विभूषिततनुं हंसाधिरूडां भजे ॥"
इति तन्त्रसारः ॥

**हंसाभिख्यं**, क्ली, (हंसस्येव अभिख्या शोभा यस्य शुक्लवर्णत्वात् ।) रूप्यम् । इति हेमचन्द्रः ॥

**हंसारूढः**, पुं, (हंसमारूढः ।) ब्रह्मा । यथा । रक्तवर्णं चतुर्म्मखं द्विभुजं अक्षसूत्रकमण्डलुकरं हंसारूढं ब्रह्माणम् । इति वैदिकसन्ध्याप्राणा-यामे ब्रह्मध्यानम् ॥ (यथा, बृहत्संहितायाम् । ५ । ५७ ।
"दण्डी यमो महिषगो
हंसारूढश्च पाशभृद्वरुणः ॥")

**हंसारूढा**, स्त्री, (हंसमारूढा ।) ब्रह्माणी । यथा,
"चतुर्मुखीं जगद्धात्रीं हंसारूढां वरप्रदाम् ।
सृष्टिरूपां महाभागां ब्रह्माणीं तां नमा म्यहम् ॥"
इति बृहन्नन्दिकेश्वरपुराणोक्तदुर्गोत्सवपद्धतिः ॥

**हंसिका**, स्त्री, (हंसी एव । स्वार्थे कन् । टाप् ।) हंसी । इति शब्दरत्नावली ॥

**हंसी**, स्त्री, (हंसस्य पत्नी । हंस + ङीप् ।) हंस-भार्य्या । तत्पर्य्यायः । चक्राङ्गी २ वरटा ३ चक्राकी ४ वरटी ५ सरःकाकी ६ हंसिका ७ वारला ८ हंसयोषित् ९ । इति शब्दरत्नावली ॥ यमिन्याञ्च
निविष्टमिन्दकिरणैर्म्मन्दानिलान्दो-लितम् ।
एलाद्यैः परिवासितं श्रमहरं पित्तोष्णदाहे विषे
मूर्च्छारक्तमदात्ययेषु च हितं शंसन्ति हंसो-दकम् ॥"
इति राजनिर्घण्टः ॥

**हंहो**, व्य, सम्बोधनम् । (यथा, महाभारते । १२ । २६७ । ९ ।
"तां गामृषिः स्यूमरश्मिः प्रविश्य यतिमब्रवीत् ।
हंहो वेदा यदि मता धर्म्माः केनापरे मताः ॥")
दर्पः । दम्भः । प्रश्नः । इति शब्दरत्नावली ॥

**हक्कः**, पुं, (हक् इत्यव्यक्तब्देन कायतीति । कै + कः ।) गजसमाह्वानम् । इति जटाधरः ॥

**हक्कारः**, पुं, (हक् इत्यव्यक्तशब्दस्य कारः करणम् ।) आह्वानम् । इति केचित् ॥

**हञ्जा**, व्य, नाट्योक्तौ चेटीसम्बोधनम् । इत्यमर-टीकायां भरतः ॥

**हञ्जिः**, पु, क्षुत् । इति जटाधरः ॥

**हञ्जिका**, स्त्री, भार्गी । इति भावप्रकाशः ॥ (अस्याः पर्य्यायो गुणाश्च । यथा, --
"ब्राह्मण्यङ्गारवल्ली च खरशाका च हञ्जिका ।
अनुष्णा कफपित्तास्रहिक्वाकासज्वरप्रणुत् ॥
व्रणोरःक्षतवीसर्पकृमिकुष्ठगदापहा ।
अलक्तको गुणैस्तद्वत् विशेषाद्व्यङ्गनाशनः ॥")
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

इति शब्दरत्नावली ॥ वन्दीकारः ५ प्रसह्य-चौरः ६ । इति त्रिकाण्डशेषः ॥

**हट्टविलासिनी**, स्त्री, (हट्टे विलसतीति । वि + लस + णिनि । ङीप् ।) गन्धद्रव्यविशेषः । तत्-पर्य्यायः । धमनी २ अञ्जनकेशी ३ हनुः ४ । इत्यमरः । २ । ४ । १३० ॥ अस्याः पर्य्यायो यथा, --
"नखं व्याघ्रनखं व्याघ्रायुधन्तच्चक्रकारकम् ।
नखं स्वल्पनखी प्रोक्ता हनुर्हट्टविलासिनी ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
हरिद्रा । इति भावप्रकाशः ॥ पुस्तकान्तरे हरिविलासिनीति च पाठः ॥ (वाराङ्गना । यथा, आर्य्यासप्तशत्याम् । ४३३ ।
"मृगमदनिदानमटवी कुङ्कुममपि कृषक-वाटिका वहति ।
हट्टविलासिनि भवती परमेका पौरसर्व्व-स्वम् ॥")

**हठ**, कीलबन्धे । बलात्कृतौ । प्लुतौ । इति कवि-कल्पद्रुमः ॥ (भा०-पर०-सक-प्लुतौ अक०-सेट् ।) कीले वन्धः कीलबन्धः । हटति छागं कीले बध्नाति इत्यर्थः । कातन्त्रादौ बलात्कार-मात्रे । हठति परचक्रं बली । इति दुर्गादासः ॥

वरला १० मराली ११ मञ्जुगमना १२ मृदु-
गामिनी १३ । इति राजनिर्घण्टः ॥ द्वाविंश-
त्यक्षरपादच्छन्दोविशेषः । यथा, --
"मौ गौ नाश्चत्वारो गो गो वसुभुवनयतिरिति
भवति हंसी ।
सार्द्धं कान्तेनैकान्तेऽसौ विकचकमलमधुसुरभि
पिबन्ती
कामक्रीडाकूतस्फीतप्रमदसरभसभरमलघु
रवन्ती ।
कालिन्दीये पद्मारण्ये पवनपतनपरितरलपरागे
कंसाराते पश्य स्वेच्छं रसभसगतिरिह विल-
सति हंसी ॥"
इति छन्दोमञ्जर्य्यां २ स्तवकः ॥
हंसस्त्रीजातिः । इति मुग्धबोधव्याकरणम् ॥

**हंसोदकं**, क्ली, (हंसं श्रेष्ठमुदकम् ।) पानीय-

विशेषः । यथा, --
"नादेयं नवमृद्घटेषु निहितं सन्तप्तमर्कांशुभि-

**हञ्जे**, व्य, नाट्योक्तौ चेदीसम्बोधनम् । यथा, --

"हण्डे हञ्जे हलाह्वानं नीचं चेटीं सखीं प्रति ॥"
इत्यमरः । १ । ७ । १५ ॥
"हण्डे नीचसम्बोधनम् । हञ्जे
चेटीसम्बोधनम् ।
हला सखी सम्बोधनम् । त्रयमेवाव्ययम् ।
यथा ।
हण्डे कुम्भिल । अरे हञ्जे काञ्चनमाले ।
हला
सौन्तले इति । त्रयमप्यादन्तमव्ययमस्ति
।
हण्डा हञ्जा हला शब्दास्त्रयः
सम्बोधनवाचकाः ।
इति प्राकृतवृत्तावव्ययपरिच्छेदे
वसन्तराजः ॥
'हञ्जेति चेटिकाह्वानं सख्याह्वानं हलेति च
।
हण्डेति कुतसिताह्वानमार्य्यो मारिष
उच्यते ॥"
इति भागुरिश्च ॥
अनव्ययश्च हलाशब्दः
सखीपर्य्यायोऽस्ति । बाला
वासूः सखी हलेति त्रिकाण्डशेषे
वोपालितः ॥'
अतृप्तोऽहं मरिष्यामि हे हले भाषितस्य
चेति
तडितमिश्रः । त्रयमिदमव्युत्पन्नम् ।" इति
भरतः ॥

**हट**, त्विषि । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

अक०-सेट् ।) त्विषि दीप्तौ ॥ हटति ।
इति
दुर्गादासः ॥

**हटपर्णि**, क्ली, शैवालम् । इति शैब्दरत्नावली ॥

**हट्टः**, पुं, क्रयविक्रयस्यानम् । हाट इति भाषा ।

इत्यमरः । ३ । ५ । ९८ ॥

**हट्टचौरकः**, पुं, (हट्टस्य चौरः । ततः कन् ।)

चौरविशेषः । हाटचोर इति भाषा । तत्प-

**हठः**, पुं, (हठ + पुंसीति घः ।) बलात्कारः ।

इत्यमरः । २ । ८ । १०८ ॥ प्रश्नी ।
इति मेदिनी ॥
(हठयोगः । यथा,
हठयोगप्रद्रीपिकायाम् ।
१ । १० ।
"अशेषतापतप्तानां समाश्रयमठो हठः
।
अशेषयोगयुक्तानामाधारकमठो हठः
॥)

**हठपर्णी**, स्त्री, (हठति प्लवते । इति । हठ +

अच् । तादृशं पर्णमस्याः । ङीष् ।)
शैवालः ।
इति त्रिकाण्डशेषः ॥

**हठयोगः**, पुं, (हठेन योगः ।) योगविशेषः ।

यथा, --
"इदानीं हठयोगस्तु कथ्यते
हठसिद्धिदः ।
कृत्वासनं पवनाशं शरीरे रोगहारकम्
॥
पूरकं कुम्भकञ्चैव रेचकं वायुना भजेत्
।
इत्थं क्रमोत्क्रमं ज्ञात्वा पवनं स्मधयेत्
सदा ॥
धौत्यादिकर्म्मषट्कञ्च
संस्कुर्य्याद्धठसाधकः ।
एतन्नाड्यान्तु देवेशि ! वायुपूर्णं
प्रतिष्ठितम् ॥
ततो मनो निश्चलं स्यात्तत आनन्द
एव हि ।
हठयोगान्न कालः स्यान्मनः शून्ये
भवेद्यदि ॥
इदानीं हठयोगस्य द्वितीयं भेदवत् शृणु
।
आकाशे नासिकाग्रे तु सूर्य्यकोटिसमं
स्मरेत् ॥
श्वेतं रक्तं तथा पीतं
कृष्णमित्यादिरूपतः ।
एवं ध्यात्वा चिरायुः
स्यादङ्गाजननवर्ज्जितः ॥

| | | |
|---|---|---|
| | य्यायः । मल्लीकरः २ माचलः ३ चिल्लाभः ४ । | शिवतुल्यो महात्मासौ<br>हठयोगप्रसादतः ।<br>हठाज्ज्योतिर्म्मयो भूत्वा ह्यन्तरेण शिव<br>भवेत् ।<br>अतोऽयं हठयोगः स्यात् सिद्धिदः<br>सिद्धसेवितः ॥”<br>इति योगस्वरोदयः ॥<br><br>**हठालुः**, स्त्री, (हठे प्लवने अलति पर्य्याप्नोतीति ।<br>अल + उण् ।) कुम्भिका । इति<br>शब्दचन्द्रिका ॥<br><br>**हठी**, स्त्री, वारिपर्णी । इति धरणिः । |

**हडिः**, पुं, काष्ठयन्त्रविशेषः । हाइड इति भाषा ।
यथा, --
“निगडो लोहबन्धेऽस्त्री हडिः काष्ठस्य यन्त्रणे ॥”
इति क्षत्त्रियवर्गे शब्दमाला ॥

**हडिक**, पुं, नीचजातिविशेषः । हाडि इति
भाषा । तत्पर्य्यायः ।
“हडिकस्तु मलाकर्षो हड्डकश्चावपुञ्जिका ॥”
इति शब्दमाला ॥

**हड्डं**, क्ली, अस्थि । हाड इति भाषा । इति
शब्दचन्द्रिका ॥

**हड्डकः**, पुं, नीचजातिविशेषः । इति शब्दमाला ॥
हाडि इति भाषा ॥

**हड्डजं**, क्ली, मज्जा । इति शब्दचन्द्रिका ॥

**हड्डिः**, पुं, हड्डिपजातिः । हाडि इति
भाषा । स तु चाण्डालीगर्भे लेटस्य
औरसेन जातः । यथा, --

**हड्डिकः**, पुं, हड्डिपजातिः । हाडि इति
भाषा । स तु चाण्डालीगर्भे लेटस्य
औरसेन जातः । यथा, --
“सद्यश्चाण्डालकन्यायां लेटवीर्य्येण शौनक ! ।
बभूवतुस्तौ द्वौ पुत्रौ हड्डिकशौण्डिकौ तथा ॥”
हड्डिकशौण्डिकाबित्यत्रदुष्टौ हड्डिडमौ तथेत्यपि ।
पाठः । इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १० अध्यायः ॥

**हड्डिपः**, पुं, मलेग्रहिः । इति मुग्धबोधव्याक-
रणम् ॥ हाडि इति भाषा ॥

**हण्डा**, व्य, नाट्योक्तौ नीचसम्बोधनम् । इत्यमर
टीकायां भरतः ॥ स्त्री, मृत्पात्रभेदः ।
हाँडा

अब्रह्मण्यं हतं क्षेत्रमनाचारं हतं कुलम् ॥
सदम्भश्च हतो धर्म्मः क्रोधेनैव हतं तपः ।
अदृढञ्च हतं ज्ञानं प्रमादेन हतं श्रुतम् ॥
गुर्व्वभक्त्या हता नारी ब्रह्मचारी तथा हतः ।
अदीप्तेऽग्नौ हतो होमो हता त्वजिरमक्षिका ॥
उपजीव्या हता कन्या स्वार्थे पाकक्रिया हता ।
शूद्रभिक्षोर्हतो योगः कृपणस्य हनं धनम् ॥
अनभ्यासहता विद्या हतो राजा विरोधकृत् ।
जीवनार्थं हतं तीर्थं जीवनार्थं हतं व्रतम् ॥
असत्या च हता बाणी तथा पैशुन्यवादिनी ।
सन्दिग्धोपहतो मन्त्रो व्यस्तचित्तो हतो जपः ॥
हतमश्रोत्रिये दानं हतो लोकश्च नास्तिकः ।
अश्रद्धया हतं सर्व्वं यत् कृतं पारलौकिकम् ॥
इह लोको हतो नृणां दरिद्राणां परन्तप ।
मनुष्याणां तथा जन्म माघस्नानंविना हतम् ॥”
इति पाद्मोत्तरखण्डे ४ अध्यायः ॥

**हतकः**, पुं, (हत इव । कन् ।) नीचलोकः ।
इति केचित् ॥ (यथा, साहित्यदर्पणे । ६ । ३९५ ।
“देव अजातशत्रो अद्यापि दुर्य्योधनहतकः ॥”)

**हतमूर्खः**, पुं, (मूर्खः हत इव ।) अतिमूर्खः ।
यथा, --
“क्रूरः खलो हतमूर्खः पापशीलो भवेन्नरः ।
बुधस्यागमने नित्यं जायते स नराधमः ॥”
इति जातरत्नकोष्ठीप्रदीपौ ॥

**हताशः**, त्रि, (हता आशा यस्य ।) निर्द्दयः ।
आशारहितः । पिशुनः । इति मेदिनी ॥
बन्ध्यः । इति शब्दरत्नावली ॥

**हतिः**, स्त्री, (हन + क्तिन् ।) अपकर्षः । यथा ।
मुख्यार्थहतिर्द्दोषः । हतिरपकर्षः । इति काव्य-
प्रकाशे ७ उल्लासः ॥ हत्या च ॥ (यथा,
महाभारते । १२ । ३६० । ९ ।
“आशया ह्यभिपन्नानामकृत्वाश्रुपमार्ज्जनम् ।
राजा वा राजपुत्त्रो वा भ्रूणहत्यैव युज्यते ॥”

**हथः**, पुं, (हन्ति सुखमिति । हन् + “हनि-
कुषोति ।” उणा० २ । २ । इति क्थन् ।)
विषण्णः । इति संक्षिप्तसारोणादिवृत्तिः । उणा-
दिकोषश्च ॥

**हद**, ङ औ ग्वर्थे । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-अक०-अनिट् ।) ग्वर्थः विष्ठोत्सर्गः ।
ङ, हदते जनः । औ, हत्ता । इति
दुर्गादासः ॥

**हदनं**, क्ली, (हद + ल्युट् ।) विष्ठात्यागः । हागा
इति भाषा । यथा । विट्सृजिर्हदनम् । इति
गूधातुटीकायां दुर्गादासः ॥
हदधात्वर्थोऽप्येवम् ॥

**हद्दा**, स्त्री, मेषादिलग्नानां त्रिंशदंशः । तैरं-
शैर्द्वादशलग्नेषु पञ्चानां पञ्चानां ग्रहाणां सङ्ख्या-
विशेषेण भागविशेषो भवति । नराणां वर्ष-
प्रवेशादौ शुभाशुभगणनायामस्य प्रयोजनम् ।
तद्भागविशेषो यथा ।
मेषलग्ने प्रथमं बृहस्पतेः ६ भागाः । ततः
शुक्रस्य ६ अंशाः । ततो बुधस्य ८ भागाः ।
ततो मङ्गलस्य ५ भागाः । ततः शनेरपि ५
अंशाः । समुदायेन त्रिंशदंशाः भवन्ति ॥

वृषलग्ने प्रथमं शुक्रस्य ८ भागाः । ततो

बुधस्य ६ अंशाः । गुरोः ८ भागाः । शनेः ५
अंशाः । मङ्गलस्य ३ अंशाः ॥

इति भाषा । इति बक्ष्यमाणशव्ददर्शनात् ॥

**हण्डिका**, स्त्री, (हण्डा + स्वार्थे कन् । टापि अत इत्वम् ।) मृत्पात्रविशेषः । हाँडी इति भाषा । इति वक्ष्यमाणशब्ददर्शनात् ॥

**हण्डिकासुतः**, पुं, (हण्डिकायाः सुत इव ।) क्षुद्र-हण्डिका । तत्पर्य्यायः । क्वणनः २ । इति त्रिकाण्डशेषः ॥

**हण्डी**, स्त्री, हण्डिका । हाँडी इति भाषा । इति केचित् ॥

**हण्डे**, व्य, नाट्याक्ली नीचबम्बाधनम् । इत्यमरः । १ । ७ । १५ ॥

**हतः**, त्रि, (हन + क्तः ।) आशारहितः । तत्प-र्य्यायः । मनोहतः २ प्रतिहतः ३ प्रतिबद्धः ४ । इत्यमरः । ३ । १ । ४१ ॥ नष्टः तत्पर्य्यायः । प्रमापितः २ निवर्हितः ३ निकारितः ४ निशारितः ५ प्रवासितः ६ परासितः ७ निषूदितः ८ निहिंसितः ९ निर्व्वासितः १० संज्ञपितः ११ निर्ग्रन्थितः १२ अपासितः १३ निस्तर्हितः १४ निहतः १५ क्षणितः १६ परिवर्ज्जितः १७ निर्व्वापितः १८ विशसितः १९ मारितः २० प्रतिघातितः २१ उद्वासितः २२ प्रमथितः २३ क्रथितः २४ उज्जासितः २५ आलम्भितः २६ पिञ्जितः २७ विशरितः २८ घातितः २९ उन्म-स्थितः ३० वधितः ३१ । इत्यमरदशनात् ॥ ताडनम् । यथा, गीतगोविन्दे । १ । १२ ।

“वहसि वपुषि विपदे वसनं जलदाभं
हलहतिभीतिमिलितयमुनाभम् ॥”

विनाशः । यथा, भागवते । १२ । ३ । १८ ।

“कर्म्माण्यारभमाणानां दुःखहत्यै सुखाय च ।
पश्येत् पाकविपर्य्यासं मिथुनीचारिणां नृणाम् ।”

**हत्नुः**, पुं, (हन्ति शरीरमिति । हन + “कृहनिभ्यां क्त्नुः ।” उणा० ३ । ३८ । इति क्त्नुः । “अनुदात्तोपदेशेति ।” ६ । ४ । ३७ । इति अनुनासिकलोपः ।) व्याधिः । शस्त्रम् । इति उणादिकोषः ॥ (हननशीले, त्रि । यथा, ऋग्-वेदे । १ । २५ । २ ।

“मा नो बधाय हत्नवे जिहीडानस्य रीरधः ॥”)

**हत्या**, स्त्री, (हन + भावे क्यप् ।) हननम् । वधः । यथा, --

“ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः ।
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥”

इति प्रायश्चित्तविवेकादिः ॥

मिथुनलग्ने प्रथमं ६ भागाः बुधस्य । ततः शुक्रस्य ६ भागाः । बृहस्पतेः ५ अंशाः । मङ्ग-लस्य ७ अंशाः । शनेः ६ अंशाः ॥

कर्क्कटलग्ने प्रथमं मङ्गलस्य ७ अंशाः । ततः शुक्रस्य ६ भागाः । बुधस्यापि ६ भागाः ॥ बृहस्पतेः ७ अंशाः । शनेः ४ अंशाः ॥

सिंहलग्ने प्रथमं ६ भागाः बृहस्पतेः । शुक्रस्य ५ अंशाः । शनेः ७ भागाः । बुधस्य ६ भागाः । मङ्गलस्यापि ६ भागाः ॥

कन्यालग्ने प्रथमं बुधस्य ७ अंशाः । शुक्रस्य १० अंशाः । गुरोः ४ अंशाः । मङ्गलस्य ७ भागाः । २ भागौ शनैश्चरस्य ॥

तुलालग्ने आदौ ६ अंशाः शनेः । ८ भागाः बुधस्य । गुरोः ७ भागाः । शुक्रस्यापि ७ अंशाः । २ भागौ मङ्गलस्य ॥

वृश्चिकलग्ने आदौ मङ्गलस्य ७ भागाः । शुक्रस्य ४ अंशाः । ८ भागाः बुधस्य । बृह-स्पतेः ५ अंशा । ६ भागाः शनेः ॥

धनुर्लग्ने प्रथमं बृहस्पतेः १२ अंशाः । ततः शुक्रस्य ५ अंशाः । बुधस्य ४ अंशाः । मङ्ग-लस्य ५ भागाः । शनेः ४ अंशाः ॥

पूरिताङ्गः । तत्पर्य्यायः । पिण्डितम् २ गुणि-
तम् । इति त्रिकाण्डशेषः ॥ हनने, क्ली ॥ * ॥
पारिमापिकहता यथा, --
“अवैष्णवो हता विप्रो हतं श्राद्धमभूसुरम् ।

मकरलग्ने आदौ बुधस्य ७ अंशाः । गुरो-

रपि ७ भागाः । ८ अंशाः शुक्रस्य । शनेः ४
अंशाः । मङ्गलस्यापि ४ अंशाः ॥

कुम्भलग्ने प्रथमं बुधस्य ७ भागाः । शव्रस्य ६

भागाः । वृहस्पतेः ७ अंशाः । मङ्गलस्य ५
भागाः । शनेरपि ५ भागाः ॥

मीनलम्ने आदौ १२ अंशाः शुक्रस्य ।

४ भागाः बृहस्पतेः । बुधस्य ३ अंशाः । मङ्ग-
लस्य ९ भागाः । ततः शनेः २ भागौ ॥

एषं प्रमाणानि यथा, --
“मेषेऽङ्गतर्काष्टशरेषुभागा
जीवास्फुजिज्ज्ञारशनैश्चराणाम् १ ।
वृषेऽष्टतर्काष्टशरानलांशाः
शुक्रज्ञजीवार्किकुजेशहद्दाः ॥ २ ॥
युग्मे षडङ्गेषुनगाङ्गभागाः
सौम्यास्फुजिज्जीवकुजाकिहद्दाः ॥ ३ ॥
कर्केऽद्रितर्काङ्गनगाब्धिभागाः
कुजास्फुजिज्ज्ञेज्यशनैश्चराणाम् ॥ ४ ॥
सिंहेऽङ्गभूताद्रिरसाङ्गभागा
देवेज्यशुक्रार्किबुधारहद्दाः । ५ ।
स्त्रियां नगाशाब्धिनगाक्षिभागाः
सौम्योशनोजीवकुजार्किहद्दाः ॥ ६ ॥
तुले रसाष्टाद्रिनगाक्षिभामाः
कालज्ञजीवास्फुजिदारनाथाः । ७ ।
कीटे नगाब्ध्यष्टशराङ्गभागा
भीमास्फुजिज्ज्ञेज्यशनैश्चराणाम् ॥ ८ ॥
चापे रवीष्वम्बुधिपञ्चवेदा
जीवास्फुजिज्ज्ञारशनैश्चराणाम् । ९ ।
मृगे नगाद्ग्रष्ट्युगाश्रुतीनां
सौम्येज्यशुक्रार्किकुजेशहद्दाः ॥ १० ॥
कुम्भे नगाङ्गाद्रिशरेषुभागा
ज्ञशुक्रजीवारशनैश्चराणाम् । ११ ।
मीनेऽर्कवेदानलनन्दपक्षाः
सितेज्यसौम्यारशनैश्चराणाम् ॥” १२ ॥
इति नीलकण्ठीयताजकम् ॥

**हन**, ल औ गतौ । बधे । इति कविकल्पद्रुमः ।
(अदा०-पर०-सक०-अनिट् ।) ल, हन्ति । औ, हन्ता । गणकृतमनित्यमिति न्यायात् शप स्थितौ हनतीत्यपि वररुचिः । तेन सर्व्वा एवाहनत् पृथक् इत्यादि साधुः । इति दुर्गा-दासः ॥

**हन्**, ष्य, रुषोक्तिः । अनुनयः । इति मेदिनी ॥

**हनः**, पुं, हननकर्त्ता । यथा । हन्तर्घत्वञ्च । घत्व-
मभ्यासस्य उत्तरस्य त्वभ्यासाच्चेति कुत्वम् । घनाघनः । पाटेर्णिलुक् च दीर्घश्चाभ्यासस्य पाटुपटः । पक्ष हनः पटः । इति सिद्धान्त-कोमुदी क्विपि हन् । तस्य प्रथमैकवचने हा ॥

इति उः । स च नित् ।)
कपोलद्वयपरमुख-
भागः । चोयालि इति भाषा । इत्यमरः ॥
ताभ्यां कपोलाभ्यां परो मुखभागो
हनुरुच्यते ।
यत्र जम्भाख्या दन्ता जायन्ते इति
सुभूतिः ।
हन्ति कठारमपि द्रव्यं हनु नाम्नीतिः उः
।
तत्परेति पाठे हनोः स्त्रीत्वम् । हनुः
कपोला-
वयवे द्वयोरिति कश्चित् । तन्वादेर्व्वा
इत्यूपि
हन्श्च ॥ पुंस्यपीति स्वामी । पुंयोगे
कर्णहनू
नपुंसके श्मश्रु जानु च गुदञ्चेति वररुचिः
।
इति भरतः ॥

**हनुः**, स्त्री, (हन्ति पुरुषमिति । हन + उः ।
हट्टविलासिनी । इत्यमरः ।) रोगः ।
अस्त्रम् ।
मृत्युः । इति जटाधरः ॥

**हनुमान्**, [त्] पु, (हनुरस्त्यस्येति । हनु +
मतुप् ।) वानरविशेषः । स तु अञ्जनागर्भे
पवनीरसाज्जातः ।
रावणबधार्थश्रीरामदूतश्च ।
तत्पर्य्यायः । मनूमान् २ आञ्जनेयः ३
योग-
चरः ४ अनिली ५ हिडिम्बारमणः ६
राम-
दूतः ७ अर्ज्जुनध्वजः ८ । इति
त्रिकाण्डशेषः ॥
मरुतात्मजः ९ । इति जटाधरः ॥ * ॥
अथ
हनूमत्कल्पः ।
देव्युवाच ।
“शैवानि गाणपत्यानि शाक्तानि वैष्णवानि
च ।

पुष्पाञ्जल्यष्टकं दत्त्वा ध्यात्वा रामं
ससीतकम् ।
ताम्रपात्रे ततः पद्ममष्टपत्रं सकेशरम् ॥
रक्तचन्दनघृष्टेन लिखेत्तस्य शलाकया ।
कर्णिकायां लिखेन्मन्त्रं तत्रावाह्य कपिं
प्रभुम् ॥
कर्णिकायां हनूमन्तं ध्यात्वा पाद्यादिकं
ततः ।
सुग्रीवं लक्ष्मणं चैव अङ्गदं नलनोलकम्
॥
जाम्बवन्तञ्च कुमुदं केशरिणं दले दले ।
पूर्ब्बादिक्रमतो देवि ! पूजयेद्गन्धचन्दनैः
॥
पवनञ्चाञ्जनाञ्चैव पूजयेद्दक्षवामतः ।
दलाग्रे षु कपिभ्योऽपि पुष्पाञ्जल्यष्टकं
ततः ॥
ध्यात्वा तु मन्त्राराजं वै लक्षं यावत्तु
साधकः ।
लक्षान्तदिवसं प्राप्य कुर्य्याच्च पूजनं
महत् ॥
एकाग्रचित्तप्रनसा तस्मिन् पवननन्दने ।
दिवारात्रौ जपं कुर्य्यात् यावत् सन्दर्शनं
भवेत् ॥
सुदृढं साधकं मत्वा निशीथे
पवनात्मजः ।
सुप्रसन्नस्ततो भूत्वा प्रयाति
साधकाग्रतः ॥
यथेप्सितं वरं दत्त्वा साधकाय कपिप्रभुः
।
वरं लब्ध्वा साधकेन्द्री विहरेदात्मगः
सुखैः ॥
एतद्धि साधनं पुण्यं देवानाभाप दुर्लभम्
।
तव स्नेहात् समाख्यातं भक्तासि मयि
पार्व्वति ॥”
इति गावडे हनूमत्साधनमिति
तन्त्रसारः ॥ * ॥
“हनूमतोऽतिगुह्यन्तु लिख्यते
वीरसाधनम् ।

**हननं**, क्ली, (हन + ल्युट् ।) मारणम् । यथा, --

"स्यात् प्राणवियागफलकव्यापारोहननं स्मृतम् ॥"

इति प्रायश्चित्तविवेकः ॥

(यथा, भागवते । ९ । ११ । २० ।

"नेदं यशो रघुपतेः सुरयाच्ञयात्त-

लीलातनोरधिकसाम्यविमुक्तधाम्नः।

रक्षोबधो जलधिबन्धनमस्त्रपूगैः

किं तस्य शत्रुहनने कपयः सहायाः ॥")

पूरणम् । इत्यङ्कशास्त्रम् ॥

**हनीलः**, पुं, केतकी । इति रत्नमाला ॥ हलीनो-

ऽपि पाठः ॥

**हनुः**, पुं, स्त्री, (हन्ति कठिनद्रव्यादिकमिति ।

हन + "शॄस्वृस्निहीति ।" उणा० १ । ११ ।

साधनानि च सौराणि चान्यानि यानि कानि

च ।

श्रुतानि तानि देवेश !

त्वद्वक्त्रान्निःसृतानि च ॥

किञ्चिदन्यत्तु देवानां साधनं यदि

कथ्यताम् ।

शङ्कर उवाच ।

शृणु देवि ! प्रवक्ष्यामि सावधानावधारय ।

हनूमत्साधनं पुण्यं महापातकनाशनम् ॥

एतद्गुह्यतमं लोके शीघ्रसिद्धिकरं परम् ।

जयो यस्य प्रसादेन लोकत्रयजितो भवेत्

॥ * ॥

तत्साधनविधिं वक्ष्ये नृणां सिद्धिकरं

द्रुतम् ॥

वियत् सलवकं हनूमते च तदनन्तरम् ।

रुद्रात्मकाय कवचं फडिति द्वादशाक्षरः

॥

एतन्मन्त्रं समाख्यातं गोपनीयं प्रयत्नतः

।

तव स्नेहेन भक्त्या च दासोऽस्मि तव

सुन्दरि ! ॥

एतन्मन्त्रं अर्ज्जुनाय प्रदत्तं हरिणा पुरा ।

जयेन साधनं कृत्वा जितं सर्व्वं चराचरम्

॥

नदीकूले विष्णुगेहे निर्ज्जने पर्व्वते वने ।

एकाग्रचित्तमाधाय साधयेत् साधनं महत्

॥"

ध्यानमाह ।

"महाशैलं समुत्पाट्य धावन्तं रावणं प्रति

।

तिष्ठ तिष्ट रणे दुष्ट घोररावं समुत्सृजन् ॥

लाक्षारक्तारुणं रौद्रं कालान्तकयमोपमम्

।

ज्वलदग्निसमं नेत्रं सूर्य्यकोटिसमप्रभम् ॥

अङ्गदाद्यैर्महावीरैर्व्वेष्टितं रुद्ररूपिणम् ।

एवंरूपं हनूमन्तं ध्यात्वा यः प्रजपेन्मनुम्

॥

लक्षजपात् प्रसन्नः स्यात् सत्यं ते कयितं

मया ।

ब्राह्म्ये मुहूर्त्ते उत्थाय कृतनित्यक्रियो

द्विजः ॥

गत्वा नदीं ततः स्नात्वा तीर्थमावाह्य

चाष्टधा ।

मूलमन्त्रं ततो जप्त्वा

सिञ्चेदादित्यसंख्यया ॥"

ततो वाससो परिधाय गङ्गातीरे पर्व्वते

वा

उपविश्य हां अङ्गुष्ठाभ्यां नमः

इत्यादिना

कराङ्गन्यासौ कुर्य्यात् । ततः

प्राणायामः ।

अकारादिवर्णानुच्चार्य्य वामनासापुटेन

वायुं

पूरयेत् पञ्चवर्गानुच्चार्य्य वायुं स्तम्भयेत्

।

यकारादिवर्णानुच्चार्य्य

दक्षिणनासापुटेन रेच-

येत् । एवं वारत्रयं कृत्वा

मन्त्रवर्णैरङ्गन्यासं

कृत्वा ध्यायेत् ॥ * ॥

"ध्यायेद्रणे हनूमन्तं

कपिकोटिसमन्वितम्।

धावन्तं रावणं जेतुं दृष्ट्वा

सत्वरमुत्थितम् ॥

लक्ष्मणञ्च महावीरं पतितं रणभूतले ।

गुरुञ्च क्रोधमुत्पाद्य गृहीत्वा गुरुपर्व्वतम्

॥

हाहाकारैः सदर्पैश्च कम्पयन्तं

जगत्त्रयम् ।

आब्रह्माण्डं समाव्याप्य कृत्वा भीमं

कलेवरम् ॥"

इति ध्यात्वा षट्सहस्रं जपेत् ॥

अस्य मन्त्रः ।

"स्वबीजं पूर्ब्बमुच्चार्य्य पवनञ्च ततो

वदेत् ।

नन्दनञ्च ततो देयं ङेऽवसानेऽनलप्रिया

॥

दशार्णोऽयं मनुः प्रोक्तो नराणां

सुरपादपः ॥"

| | | |
|---|---|---|
| | ध्यानैकमात्रतः पुंसां सिद्धिरेव न संशयः ॥<br>प्रातः स्नात्वा नदीतीरे उपविश्य कुशासने ।<br>प्राणायामं षडङ्गञ्च मूलेन सकलं चरेत् ॥ | हां पवननन्दनाय स्वाहा । इतिमन्त्रः । सप्तम-<br>दिवसे दिवारात्रं व्याप्य जपेत् । ततो महाभयं<br>दत्त्वा त्रिभागशेषासु निशासु नियतमागच्छति ।<br>साधको यदि मायां तरति तदेप्सितं वरं प्राप्नोति ।<br>“विद्यां वापि धनं वापि राज्यं वा शत्रुनिग्र-<br>हम् । |

तत्क्षणादेव चाप्नोति सत्यं सत्यं सुनिश्चितम् ॥”
इति च तन्त्रसारः ॥

**हनूः**, स्त्री, (हनु + पक्षे ऊञ् ।) हनुः । इत्य-
मरटीकायां भरतः ॥ (यथा, --
“शाखासु हन्वोः कट्याञ्च चेष्टावन्तस्तु सन्धयः ॥”
इति सुश्रुते शारीरस्थाने पञ्चमेऽध्याये ॥)

**हनूमान्**, [त्] पु, (हनूरस्त्यस्येति । हनू +
मतुप् ।) हनुमान् । इति त्रिकाण्डशेषः ॥
(यथा, महाभारते । ३ । १४७ । २७ ।
“अहं केशरिणः क्षेत्रे वायुना जगदायुना ।
जातः कमलपत्राक्ष हनूमान्नाम वानरः ॥”)

**हनूषः**, पुं, (हन्ति मानुषानिति । हन + “ऋह-
निभ्यामूषन् ।” उणा० ४ । ७३ । इति ऊषन् ।)
राक्षसः । इति त्रिकाण्डशेषः ॥

**हन्त**, व्य, हर्षः । अनुकम्पा । (यथा, गीता-
याम् । १० । १९ ।
“हन्त ते कथयिव्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥”)
वाक्यारम्भः । विषादः । इत्यमरः । ३ । ३ । २४३ ॥
(यथा, भ्रमराष्टके । ८ ।
“रात्रिर्गमिष्यति भविष्यति सुप्रभातं भास्वानुदेष्वति हसिष्यति पद्मजालम् ।
इत्थं विचिन्तयति कोषगते द्विरेफे हा हन्त हन्त नलिनीं गज उज्जहार ॥”)
भोजनं हन्तकारं वा अग्रं भिक्षामथापि वा ।
अदत्त्वा तु न भोक्तव्यं यथाविभवमात्मनः ॥”
इति मार्कण्डेयपुराणे मदालसोपाख्याने । २९ ।
३४ -- ३६ ॥

**हन्ता**, [ऋ] त्रि, (हन्तीति । हन + तृच् ।
हननकर्त्ता । यथा, भट्टौ ५ सर्गे ।
“भवन्तं कार्त्तवीर्य्यो यो हीनसन्धिमचीकरत् ।
जिगाय तस्य हन्तारं स रामः सार्व्व-
लौकिकः ॥”

**हन्तुः**, पुं, मृत्युः । वृषः । हनधातोः तुप्रत्ययेन
निष्पन्नः । इति केचित् ॥ (विनाशः । यथा,
भागवते । ११ । ५ । ५० ।
“भूभारासुरराजन्यद्धन्तवेगुप्तये सताम् ।
अवतीर्णस्य निर्वृत्यै यशो लोके वितन्यते ॥”)

**हन्तोक्तिः**, स्त्री, (हन्त इत्यस्य उक्तिः ।) अनु-
कम्पोक्तिः । इति केचित् ॥

**हन्नः**, त्रि, (हद् + क्तः ।) कृतपुरीषोत्सर्गः । इत्य-
मरः । ३ । १ । ९६ ॥

**हन्यमानः**, त्रि, (हन + कर्म्मणि शानच् ।) वर्त्त-
मानहननीयवस्तु । हनधातोः कर्म्मणि शान-
प्रत्ययेन निष्पन्नः । यथा, --
“हन्यमानं महासैन्यं विलोक्यमर्षमुद्वहन् ।
अभ्यधावन्निशुम्भोऽथमुख्ययासुरसेनया ॥”
इति मार्कण्डेये देवीमाहात्म्यम् ॥

**हपुषा**, स्त्री, वणिग्द्रव्यविशेषः । तत्तु मरीच-
वृन्तवद्दीर्घकृष्णवर्णवस्तु । हबुष् इति ख्यातम् ।
इति वैद्याः ॥ हौहवेर इति हिन्दीभाषा ।
तत् द्विविधम् । तन्मध्ये प्रथमं फलं मत्स्यसदृशं
विस्रगन्धम् । द्वितीयमश्वत्थफलसदृशं मत्स्य-
गन्धम् । तयोर्न्नामानि गुणाश्च ।

**हम्भा**, स्त्री, गोध्वनिः । इति हेमचन्द्रः । त्रिकाण्ड-
शेषश्च ॥

**हम्म**, गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) मद्वयान्तः । हम्मति । इति
दुर्गादासः ॥

**हय**, क्लमे । गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-क्लमे अक०-गतौ सक०-सेट् ।)
हयति ।
क्लमो ग्लानिः । इति दुर्गादासः ॥

**हयः**, पुं, (हयति गच्छतीति । हय + अच् ।
हिनोतीति । हि + अच् वा ।) घोटकः ।
इत्यमरः । २ । ८ । ४४ ॥ अथ हयायुर्व्वेदः ।
धन्वन्तरिरुवाच ।
“हयायुर्व्वेदमाख्यास्ये हयैः सर्व्वार्थरक्षणम् ।
काकुटी कृष्णजिह्वश्च कृष्णाख्यः कृष्णतालुकः ॥
कराली हीनदन्तश्च शृङ्गी चाधिकदन्तकः ।
एकाण्डश्चैव जाताण्डः कञ्चुकी द्विखुरी स्तनी ॥
मार्जारपादो व्याघ्राभः कुष्ठविद्रुधिसन्निभः ।
यमजो वामनश्चैव मार्जारकपिलोचनः ॥
एतद्दोषी हयस्त्याज्य उत्तमोऽश्वश्चतुष्करः ।
एते दोषाश्च कथिता हयहस्त्यादिषूत्तमाः ॥
मध्योऽर्द्धहस्तहीनोऽश्वोमुष्टिहस्तविहीनकः ।
कनीयांश्चार्द्धमानः स्यादर्द्धसप्तस्तु दीर्घतः ॥
षण्मुष्टिहीनः पञ्चोन उत्तमाद्यास्तु दीर्घतः ।
असंहता ये च वाहा ह्रस्वकर्णास्तथैव च ॥
स्वरनेत्रप्रभावेषु न दीनाश्चिरजीविनः ।
रेवन्तपूजनाद्धोमाद्रक्षा स्यात् द्विजभोजनात् ॥
लोहकं निम्बपत्राणि गुग्गुलुसर्षपा घृतम् ।
तिलञ्चैव वचा हिङ्गु वध्नीयाद्वाजिनां गले ॥
आगन्तुकं दोषजन्तु व्रणं द्विविधमीरितम् ।

अर्त्तिः । वादः । संभ्रमः । इति शब्दरत्ना-
वली ॥ खेदः इति मेदिनी ॥ (यथा, रामा-
यणे ।
"काचमूल्येन विक्रीतो हन्त चिन्तामणिर्म्मया ॥"
अन्तकल्पनम् । इत्यजयपालः ॥

**हन्तकारः**, पुं, (हन्त इत्यस्य कारः करणम् ।)

अतिथिदेयतण्डुलम् । इति केचित् ॥ हन्त-
शब्दः । यथा । यत्तु ।
"निवीती हन्तकारेण मनुष्यांस्तर्पयेदथ ।
कुशस्य मध्यदेशेन नृतीर्थेन उदङ्मुखः ॥"
इति लघुविष्णूक्तम् ॥
हन्तप्रयोगेण जलदानमुक्तं तत् सनकादिप्रत्येक-
तर्पणे । यथा । सनकस्तृप्यतां तस्यैतदुदकं हन्त
इत्यादौ । न तु पद्मपुराणीयमिलिततर्पणे ।
इत्याह्निकाचारतत्त्वम् ॥ * ॥ अतिथये दानार्थ-
षोडशग्रासाः । यथा, --
"पूजयेदतिथिं नित्यं नमस्योदर्च्चयेद्विजम् ।
मनोवाक्कर्म्मभिः शान्तमागतं स्वगृहन्ततः ॥
हन्तकारमथाग्रं वा भिक्षां वा शक्तितो द्विजः ।
दद्यादतिथये नित्यं बुद्ध्वा तं परमेश्वरम् ॥
भिक्षामाहुर्ग्रासमात्रमग्रञ्च स्याच्चतुर्गुणम् ।
पुष्कलं हन्तकारञ्च तच्चतुर्गुणमुच्यते ॥"
इति कूर्म्मपुराणे उपविभागे । १८ । ११३-११५ ॥
अपि च ।
"हपुषा वपुषा विस्रा पराश्वत्थफला स्मृता ।
मत्स्यगन्धा प्लीहहन्त्री विषघ्नी ध्वाङ्क्षनाशिनी ॥
हपुषा दीपनी तिक्ता मृदूष्णा तुवरा गुरुः ।
पित्तोदरप्रमेहार्शोग्रहणीगुल्मशूलहृत् ॥
पराप्येतद्गुणा प्रोक्ता रूपभेदो द्वयोरपि ॥"
इति भावमिश्रकृतभावप्रकाशः ॥ * ॥
अपि च ।
"हपुषा हवुषा विस्रा विस्रगन्धा विगन्धिका ।
अन्या चासौ स्वल्पफला कच्छुघ्नी ध्वाङ्क्षनाशिनी ॥
प्लीहशत्रुर्विषघ्नी च कफघ्नी चापराजिता ।
पूर्ब्बा तु पञ्चनाम्नी स्यादपरा सप्तधाभिधा ॥
हपुषा कटुतिक्तोष्णा गुरुश्लेष्मवलासजित् ।
प्रदरोदरविष्टम्भशूलगुल्मार्शसां हरा ॥"
इति श्रीनरहरिपण्डितविरचितराजनिर्घण्टे शताह्वादिवर्गश्चतुर्थः ॥

**हवुषा**, स्त्री, हपुषा । इति राजनिर्घण्टः ॥

**हम्बा**, स्त्री, गोध्वनिः । तत्पर्य्यायः । हम्मा २

रेभणम् ३ । इति जटाधरः ॥ हम्भा ४ रम्भा ५ ।
इति हेमचन्द्रः ॥ (यथा, महाभारते । १ । १६६ । ३१ ।
"क्रोधरक्तेक्षणा सा गौर्हम्बारवघनस्वना ।
विश्वामित्रस्य तत्सैन्यं व्यद्रावयत सर्ब्बशः ॥")

चिरपाकं खरं वातात् पित्तजं क्षिप्रपाकिकम् ॥
कण्डुदाहात्मकं पित्तात् सोन्मादं मन्दवेदनम् ।
घनं कफात् सन्निपातात् सर्व्वरूपं द्विदोषजम् ॥
आगन्तुकन्तु शस्त्राद्यैर्दुष्टव्रणविशोधनम् ।
दन्तीमूलं हरिद्रे द्वे चित्रकं विश्वभेषजम् ॥
रसोनं सैन्धवं वापि तक्रकाञ्जिकपेषितम् ।
तिलशक्तुकपिण्डोका दधियुक्ता ससैन्धवा ॥
निम्बपत्रयुतं पिण्डं तिलैः शोधनरोपणम् ।
करबीरकदल्यर्कस्नुहीकुटजचित्रकैः ॥
भल्लातस्य पचेत्तैलं नाडीव्रणहरं परम् ।
पङ्कवल्कलकल्केन घृतेन च प्रलेपयेत् ॥
द्वे हरिद्रे विडङ्गानि तथा लवणपञ्चकम् ।
पटोलं निम्बपत्रञ्च वचा चित्रक्रमेव च ॥
पिप्पली शृङ्गवेरञ्च चूर्णमेकत्र कारयेत् ।
एतत्पानं कृमिश्लेष्ममदानिलविनाशनम् ॥
निम्बपत्रं पटोलञ्च त्रिफला खदिरं तथा ।
क्वाथयित्वा ततो वाहं शृतरक्तं विचक्षणः ।
त्र्यहमेव प्रदातव्यं पानं कुष्ठोपशान्तये ॥
व्रसणेषु च कुष्ठेषु तैलं सर्षपजं हितम् ।
पञ्चवल्कलतैलं वा दशमूलञ्च शोपनुत् ॥
लशुनादीन् वदे कल्पान् मुक्तिपानान्तलेपतः ।
मातुलुङ्गरसोपेतं मांसलारसकेन वा ॥"
मांसलास्याने मांसानामिति च पाठः ।

| | | |
|---|---|---|
| “भिक्षाञ्च याचतां दद्यात् परिव्राड्ब्रह्मचारि-णाम् ।<br>ग्रामप्रमाणं भिक्षा स्यादग्रं ग्रासचतुष्टयम् ॥<br>अग्रं चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः । | | |

“रसं दद्यादसोनस्य अन्यैर्व्वा तैलसंयुतैः
।
पलद्वय प्रथमेऽह्नि एकैकपलवृद्धितः ॥
यावद्धि शान्तिपूर्णा
स्यात्तन्मात्रेत्युत्तमात्मके
मध्यमे चतुर्द्दश स्युरधमेऽष्टपलानि च ॥
शरन्निदाघयोर्न्नैव देयो नैव तु दापयेत् ।
तैलेन वातिके पित्ते शर्कराज्यपयोऽन्वितैः
॥
कटुतैलैः कफे व्योषैः कफे मुद्गान्
कुलत्थकान् ।
शालिषष्टिकदुग्धाशी
हयोऽखिलजुगुप्सितः ॥
पक्वजम्बूनिभो हेमवर्णः श्रेष्ठश्च गुग्गुलुः ।
ग्रर्द्धप्रहरणे सूर्य्ये गुग्गुलुं पाययेद्धयम् ॥
भोजने पायसं दुग्धं नाडीस्तिस्रस्तनोति
सः ।
विकाले भोजयेदश्वं शाल्यन्नं वातुले ददेत्
॥
मांसानाञ्च रसैः पित्ते मधुमुद्गरसाज्यकैः
।
कफे मुद्गान् कुलत्थान् वा कटुतिक्तान्
शृतान्
हये ॥
व्याधिते व्याधिते श्वासे त्रिदोषादौ तु गुग्-
गुलुम् ।
घामैर्दूर्व्वा सर्व्वरोगे प्रथमेऽह्नि पलं ददेत् ॥
विवर्द्धयेत् ततो वर्षमेकादिपलपञ्चकम् ।
उत्तमे स्याच्च चत्वारि त्रीणि
मध्यजघन्ययोः ॥
पानेन भोजनेनैव अशीतिपलकं वरे ।
मध्ये षष्टिश्चाधमेऽथ चत्वारिंशच्च भोगिषु
॥
व्रणे कुष्ठेषु खञ्जेषु त्रिफलाक्वाथसंयुतम् ।
मन्दाग्नौ शोथरोगे च गवां मूत्रेण योजयेत् ॥
वातपित्तोल्वणे व्याधौ गोक्षीरघृतसंयुतम्
।
देयं कृषाणां पुष्ट्यर्थं माषैर्यक्तञ्च भोजनम्
॥
आयुर्व्वेदो गजाश्वानामुक्तः संक्षेपसारतः
॥”
इति गारुडे हयायुर्व्वेदः २०७ अध्यायः ॥
युक्तिकल्पतरूक्तहयपरीक्षाघोटकशब्दे
द्रष्ट-
व्या ॥ * ॥ हये वर्णनीयानि यथा । वेगः १
औन्नत्यम् २ तेजः ३ सल्लक्षणस्थितिः ४
खुरोत्-
खातरजः ५ रूपम् ६ जातिः ७ गतिविचि-
त्रता ८ । इति कविकल्पलता ॥ * ॥ अथ
हयशकुनः ।
“हेषारवं मुञ्चति वामतो यः
क्षुण्णक्षितिर्दक्षिणपादघातैः ।
कण्डूयते दक्षिणमङ्गभाग
तुङ्गं तुरङ्गः स पदं ददाति ॥”
इति वसन्तराजे हयशकुनः १३ वर्गः ॥

**हयकातरा**, स्त्री, (हयः कातरो यस्याः ।)

अश्वकातरावृक्षः । घोडकाथरा इति हिन्दो
भाषा ॥

**हयकातरिका**, स्त्री, (हयकातरा एव । स्वार्थे

कन् । टाप् अत इत्वम् ।) अश्वकातरावृक्षः
।
घोडकाथरा इति हिन्दी भाषा । यथा, --
“कातरा हयपर्य्यायैः कातरान्तैः
प्रकीर्त्तिताः ।
अश्वकातरिका तिक्ता वातघ्नो दीपनी परा
॥”
इति राजनिर्घण्टः ॥

**हयगन्धं**, क्ली, (हयस्येव गन्धो यस्य ।) काच-

लबणम् । इति राजनिर्घण्टः ॥
(विवरणमस्य
काचलवणशब्दे ज्ञातव्यम् ॥)

**हयगन्धा**, स्त्री, (हयस्येव गन्धो यस्याः ।) अश्व-

गन्धा । इति रत्नमाला ॥ (अस्याः पर्य्यायो
यथा, --
“गन्धान्ता वाजिनामादिरश्वगन्धा हयाह्वया
।
कल्पान्ते ब्रह्माणि प्रसुप्ते वेदं हृतवान् ।
तद्वेदो-
द्धारणार्थं विष्णुना मत्स्यावतारेण स हतः
।
इति केचित् ॥ * ॥ आप च ।
“वृद्धगङ्गाजलस्यान्तन्तीरब्रह्मसुतस्य च ।
विश्वनाथाह्वयो देवः शिवलिङ्गममन्वितः ।
विश्वदेवी महादेवी योनिमण्डलरूपिणी ॥
हयग्रीवेण युयुधे तत्र देवो जगत्पतिः ।
हयग्रीवं यत्र हत्वा मणिकूटं तथागमत् ॥”
इति कालिकापुराणे ८२ अध्यायः ॥

**हयग्रीवहा**, [न्] पुं, (हयग्रीवं हन्तीति । हन् +

क्विप् ।) विष्णुः । इति हेमचन्द्रः ॥

**हयग्रीवा**, स्त्री, दुर्गा । यथा, --

“नारसिंही हयग्रीवा हिरण्याक्षविनाशिनी
।”
इति तस्याः सहस्रनामस्तोत्रम् ॥

**हयङ्कषः**, पुं, (हयं उच्चैःश्रवसं कषतीति । कष +

खच् ।) मातलिः । स तु इन्द्रसारथिः ।
इति
त्रिकाण्डशेषः ॥

**हयनं**, क्ली, (हयति गच्छत्यनेनेति । हय + ल्युट् ।)

कर्णीरथः । इत्यमरः ॥ तस्य रूपान्तरं
डय-
नम् । इति तट्टीकायां भरतः ॥

**हयपुच्छी**, स्त्री, (हयस्य पुच्छमिव आकृतियस्याः ।

ङीष् ।) माषपर्णी । इत्यमरः । २ । ४ ।
१३८ ॥

**हयप्रियः**, पुं, (हयस्य प्रियः ।) यवः । इति हेम-

चन्द्रः ॥ (यवशब्देऽस्य गुणादयो ज्ञेयाः ॥)

**हयप्रिया**, स्त्री, (हयस्य प्रिया ।) अश्वगन्धा ।

खर्ज्जूरी । इति राजनिर्घण्टः ॥

**हयमारः**, पुं, (हयं मारयतीति । मृ + णिच् +

अण् ।) करवीरः । इति राजनिर्घण्टः ॥

सुपिष्टायाः प्रदातव्यं गुडूच्याः पलपञ्चकम्
प्रभाते घृतसंयुक्तं शरद्ग्रीष्मेषु वाजिनाम्
॥
रोगघ्नं पुष्टिदञ्चापि बलतेजोविबर्द्धनम् ।
तदेवाश्वाय दद्याद्वै क्षीरयुक्तमथापि वा ॥
गुडूचीकल्कयोगेन शतावर्य्यश्वगन्धयोः ।
चत्वारि त्रीणि मध्यस्य जघनस्य पलानि हि ॥
अकस्माद्यत्र वाहानामेकरूपं यदा भवेत् ।
म्रियते च तदा क्षिप्रं उपसर्गं तमादिशेत् ॥
होमाद्यैरक्षया विप्रभोजनैर्बलिकर्म्मणा ।
शान्त्योपसर्गशान्तिः
स्याद्धरीतक्यादिकल्पतः ॥
हरीतको सगोमूत्रा तैलेन लवणान्विता ।
आदौ पञ्च ततः पञ्चवृद्ध्या पूर्णा शतावधि ।
उत्तमाश्वे शतं प्रोक्तमशातिः षष्टिरुत्तरे ॥ * ॥
गजायुर्व्वेदमाख्यास्ये उक्ताः कल्पा गजे हिताः ।
गजे चतुर्गुणा मात्रा ताभिर्गजरुगर्द्दनम् ॥
गंजोपसर्गव्याधौनां शमनं शान्तिकर्म्म च ।
पूजयित्वा सुरान् विप्रान् ब्राह्मणे कपिलां ददेत् ॥
दन्तिदन्तद्वये मालां विवध्नीयादुपोषितः ।
मन्त्रणं मन्त्रिता वेद्यो वचासिद्धार्थकामले ॥
सूर्य्याद्याः शिवदुर्शाश्रीर्विष्णुता रक्षसां गणः ।
बलिं दद्याच्च भूतेभ्यः स्नापयेच्च चतुर्घटैः ॥
भोजनं मन्त्रितं दद्यात्
भस्मनोद्धूनयेद्गजम् ।
भूती रक्षा शुभा मेध्या वारुणी रक्षसां सदा ॥
त्रिकला पञ्चकोले च दशमूलं विडङ्गकम् ।
शतावरी गुडूची च निम्बवासककिंशुकाः ॥
गजरोगविनाशाय प्रोक्तः कल्कः कषायकः ।
वराहकर्णो वरदा बलदा कुष्ठगन्धिनी ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥
अजमोदा । इति राजनिर्घण्टः ॥

**हयग्रीवः**, पुं, (हयस्य ग्रीवा इव ग्रीवा यस्य ।)
मधुकटभहृतवेदोद्धारार्थं
विष्णारवतारविशेषः ।
तस्य रूपं यथा, --
“सुनासिकेन कायेन भूत्वा चन्द्रप्रभस्तदा ।
कृत्वा हयशिरः शुभ्रं वेदानामालयं प्रभुः ॥
तस्य मूर्द्धा समभवत् द्यौः सनक्षत्रतारका ।
केशाश्चास्याभवद्दीर्घा रवेरंशुसमप्रभाः ॥
कर्णावाकाशपाताले ललाटं भूतधारिणी ।
गङ्गा सरस्वती श्रोण्यौ भ्रुवावास्तां महोदधी ॥
चक्षुषी सोमसूर्य्यौ ते नासा सन्ध्या पुनः स्मृता ।
प्रणवस्त्वथ संस्कारो विद्युज्जिह्वा च निर्म्मिता ॥
दन्ताश्च पितरो राजन् सोमपा इति विश्रुताः ।
गोलोको ब्रह्मलोकश्च ओष्ठावास्तां महात्मनः ॥
ग्रीवा चास्याभवद्राजन् कालरात्रिर्गुणोत्तरा ।
एतद्धयशिरः कृत्वा नानामूर्त्तिभिरावृतम् ॥”
इति महाभारतम् ॥ * ॥
(हवग्रीवदैत्यवधार्थमेव भगवान् हयग्रीवमूर्त्ति-
रभवत् । इति देवीभागवतमतम् ॥ अस्य विवरणन्तु तत्रैव १ स्कन्धे ५ अध्याये द्रष्टव्यम् ।)
विष्णुवध्यदैत्यविशेषः । इति हेमचन्द्रः ॥ स च

**हयमारकः**, पुं, (हयं मारयतीति । मृ + णिच् ।
ण्वुल् ।) करवीरवृक्षः । इत्यमरः । २ । ४ । ७६ ॥

**हयमारणः**, पुं, (हयं मारयतीति । मृ + णिच् +
ल्युः ।) अश्वत्थवृक्षः । इति शब्दचन्द्रिका ॥

**हयवाहनः**, पुं, (हयो वाहनमस्य ।) रेवन्तः ।
स तु सूर्य्यपुत्त्रः । इति हेमचन्द्रः ॥ कुबेरः ।
इति केचित् ॥

**हयवाहनशङ्करः**, पुं, रक्तकाञ्चनः । इति शब्द-
चन्द्रिका ॥

**हयशाला**, स्त्री, (हयस्य शाला ।) अश्वालयः ।
यथा, मात्स्ये । २१७ । १९ -- २३ ।
“गवां स्थानं तथैवात्र तुरगाणान्तथैव च ।
उत्तराभिमुखा श्रेणी तुरगाणां विधीयते ॥
दक्षिणाभिमुखा वाथ परिशिष्टास्तु गर्हिताः ।
तुरगास्तु तथा धार्य्याः प्रदीपैः सर्व्वरात्रिकैः ॥
कुक्कुटा वानराश्चैव मर्क्कटाश्च नराधिप ! ।
धारयेदश्वशालायां सवत्सां धेनुमेव च ।
अजाश्च धार्य्या यत्नेन तुरगाणां हितैषिणा ॥
गोगजाश्वादिशालासु तत्पुरीषस्य निर्गमम् ।
अस्तं गते न कुर्व्वीत देवदेवे दिवाकरे ॥”

**हयशीर्षः**, पुं, (हयस्य शीर्षं शीर्षं यस्य ।)
विष्णुः । यथा, --
“ततो जगाम हृष्टोऽब्धौ द्रष्टुं वाजिमुखं प्रभुम् ।

तत्र देवह्रदे स्नात्वा तर्पयित्वा पितॄन् सुरान् ।
संपूज्य हयशीर्षञ्च जगाम गजसाह्वयम् ॥”
इति वामनपुराणे ७१ अध्यायः ॥

**हया**, स्त्री, (हयस्तद्गन्धोऽस्त्यस्या । इति । अच् ।

टाप् ।) अश्वगन्धा । इति राजनिर्घण्टः ॥

**हयाध्यक्षः**, पुं, (हयस्य अध्यक्षः ।) अश्वाध्यक्षः ।

तस्य लक्षणं यथा, --
“हयशिक्षाविधानज्ञस्तच्चिकित्सितपारगः।
अश्वाध्यक्षो महीभर्त्तुः स्वासनश्च प्रशस्यते ॥”
इति मात्स्ये । २१५ । ३७ ॥

**हयानन्दः**, पुं, (हयस्य आनन्दो यस्मात् ।)

मुद्गः । इति राजनिर्घण्टः ॥ (गुणादयोऽस्य
मुद्गशब्दे ज्ञातव्याः ॥)

**हयायुर्व्वेदः**, पुं, (हयस्य आयुर्व्वेदा । घोटक-

चिकित्साशास्त्रविशेषः । तच्छास्त्रं हयशब्दे
द्रष्टव्यम् ॥

**हयारिः**, पुं, (हयस्य अरिः ।) करवीरः । इति

रत्नमाला ॥

**हयाशना**, स्त्री, (हयानामशनं यस्याः ।) शल्लकी-

वृक्षः । इति शब्दचन्द्रिका ॥

**हयी**, स्त्री, (हयस्य स्त्री । हय + ङीप् ।)

घोटकी । इति जटाधरः ॥

**हयेष्टः**, पुं, (हयनामिष्टः ।) यवः । इति राज-

निर्घण्टः ॥

**हयोत्तमः**, पुं, (हयेषु उत्तमः । कुलीनाश्वः ।

तत्पर्य्यायः । वाताश्वः २ जात्यः ३ अजानेयः
४ ।
इति त्रिकाण्डशेषः ॥

**हरः**, पुं, (हरति पापानीति । हृ + अच् ।)

शिवः । इत्यमरः । १ । १ । ३१ ॥ (यथा,
रघुः । ४ । ३२ ।
“स सेनां महतीं कर्षन् पूर्ब्बसागरगामिनीम् ।
बभौ हरजटाभ्रष्टां गङ्गामिव भगीरथः ॥”)

तदाहं ते हरिष्यामि शरीरार्द्धं वरानने ! ॥
तवैवार्द्धं तथा नारी अर्द्धं भवतु पूरुषः ।
विद्यते तत्र शक्तिर्मे त्वमनुज्ञातुमर्हसि ॥
श्रीदेव्युवाच ।
“तवेवाहं हारष्यामि शरीरार्द्धं वृषध्वज !
।
किन्त्वहं त्वेकमिच्छामि यच्चेत्त्वं हर
इच्छसि ॥
तथाहमर्द्धं भवतो हृत्वा तिष्ठामि तावता
।
त्यजाम्यहं यदा तेऽर्द्धं सम्पूर्णं स्यात्तदा
द्वयम् ॥
इत्यर्द्धभागहरणं भवेद्यदि यथेप्सितम् ।
तदैवाहं तदा शम्भोः शरीरार्द्धं हराम्यहम्
॥”
ईश्वर उवाच ।
एवमस्तु भवेन्नित्यं यथा त्वं
कर्त्तुमिच्छसि ।
शरीरार्द्धस्य हरणं भूयात्तव यथेप्सितम्
॥
श्रीऔर्व्व उवाच ।
अथ गौरी तदा पूर्ब्बमनुभूतं तपःस्थितौ
।
योगनिद्रास्वरूपं
तदात्मानोऽचिन्तयद्धिया॥
हरं प्रणम्य प्रथमं ब्रह्माणञ्च ततः परम् ।
ततस्त्रिजगतामीशं हरिं नारायणं प्रभुम् ॥
चिन्तयित्वा तथा तेषामेकतां सा
जगन्मयी ।
आत्मानं यागनिद्राञ्च चिन्तयित्वा
मनस्विनी ॥
दक्षिणे स्वशरीरस्य भागार्द्धं शशभृद्भृतः ।
शरीरस्य तथा वाममतिप्रेम्णा निजं हरे
॥
हरोऽपि स्वशरीरार्द्धं गौरीकाये तदा
स्वयम् ।
प्रेम्णानिवेशयत्तस्याश्चिकीर्षुः
प्रियमद्भुतम् ॥
अथ स्थित्वा तदा भर्गः काल्या सह चिरं

एवमर्द्धं तथा जातं यीषिल्लक्षणसंयुतम्
॥
अपरं बलवद्भूरि सुदृढं पुरुषाकृति
एवमर्द्धं स्मररिपार्ज्जहार गिरिजा सती
॥
हिताय सर्व्वजगतां कामाख्या
कालिकोपमा ।
तस्याः शरीरं राजेन्द्र
हरतन्वर्द्धसंयुतम् ।
येनोपमेयं तन्नास्ति मार्गितं भुवनत्रये ॥
सन्तानः पारिजातो वा
एकान्तविषदस्तरुः ।
अमोघया तथा वन्द्यौ तौ चापि
ययतुर्नहि ॥
बहुधा च पृथक्त्वेन तौ रेमाते नरेश्वर
।
अर्द्धनारोश्वरो भूत्वा स तु रम
कदाचन ॥
इति यद्यपि भूतेशः स्वयं शक्नोति
कालिकाम् ।
गौरीं कर्त्तुं तदा सर्व्वभूतकारणकारणः
॥
तथापि तां गिरिसुतां संयोज्य विविधैः
पुरा ।
तपस्ययोजयद्देव क्रियो पायैरनेकशः
॥
तपोनिर्धूतसर्व्वाङ्गीं
पश्चाद्गौरीमथाकरोत् ।
अर्द्धञ्च प्रददौ तस्यं शरीरस्य महेश्वरः
॥
नैवास्य तत्त्वं जानन्ति शक्राद्याः
सकलाः
सुराः ।
शरीरार्द्धप्रदानस्य तपसो योजनस्य च
॥
एतस्य तत्त्वं जानन्ति महात्मानो
महाबलाः ।
नन्दी भृङ्गी महाकालो वेतालो
भैरवस्तथा ।

अग्निः । गर्द्दभः । इति केचित् ॥ हरणम् ।
इत्यङ्कणास्त्रम् ॥ त्रि, हरणकर्त्ता । (यथा,
भागवते । ३ । १८ । ११ ।
"एते वयं न्यासहरा रसौकसां
गतह्रियो गदया द्रावितास्ते ॥")

**हरकः**, पुं, (हर एव । स्वार्थे कन् ।) शिवः ।
चौरः । इति केचित् ॥ हरणकर्त्तरि, त्रि ॥

**हरगौरी**, स्त्री, (हरेण सह गौरी ।) अर्द्ध-
नारोश्वरमूर्त्तिः । यथा, --
देव्युवाच ।
"यथा तवाहं सततं छायेवानुगता हर ।
भवेयं साहचर्य्येण तथा मां कत्तुमर्हसि ॥
मव्वगात्रेण संस्पर्शं नित्यालिङ्गनविभ्रमम् ।
अहमिच्छामि भवतस्तत्त्वं चेत् कर्त्तुमर्हसि ॥
श्रीभगवानुवाच ।
रोचते तन्मह्यमपि यत्त्वमिच्छसि भाविनि ! ।
तत्रोतायमहं वक्ष्ये यदि शक्नोषि तत् कुरु ॥
अद्धं मम शरीरस्य गृहाश त्वं मनोहरे ।
अद्धं भवा मे नारी तथैवार्द्ध पुमानिति ॥
यदि त्वं न हि शक्नोषि हर्त्तुं तत्त्वर्द्धमीदृशम् ।
तदा ।
परित्यज्य शरीरार्द्धं पृथगेव बभौ रुचा ॥
काली भूत्वा स्वर्णगौरी शरीरार्द्धन्तु
शाङ्करम् ।
प्राप्य मोदात्तदात्मानं सन्तुष्टा च
जगम्भयी ॥
एवं यदा शरीरार्द्धमादाय परमेश्वरी ।
हरस्य तिष्ठति तदा राजतेऽतीवशोभना ।
अर्द्धं धम्मिलसंयुक्तं
जटाजूटार्द्धयोजितम् ।
एकस्मिन् श्रवणे भोगी भागे
जाम्बूनदाचितम् ।
कुण्डलं श्रवणेऽन्यस्मिन् शीर्षे तस्या
व्यराजत ॥
अर्द्धं मृगाक्षि चास्यार्द्धं वृषभाक्षि
व्यराजत ।
अर्द्धं स्थूलनसं चारु तिलपुष्पनसं परम्
॥
दोर्घश्मश्रु तथैवार्द्धमर्द्धं
श्मश्रुविवर्ज्जितम् ।
आरक्तचारुदशनं रक्तौघमेकतस्तथा ॥
अपरं शुक्लविपुलदीर्घाकृति रदं परम् ।
अर्द्धं नीलगलञ्चार्द्धमपरं हारसंयुतम् ॥
अर्द्धं कङ्कणकेयूरयुक्तबाहु तथापरम् ।
नागकेयूरसंयुक्तस्थूलबाहु निरूर्म्मिकम्
॥
अर्द्धं विषायतभुजं करिहस्तभुजं परम् ।
एकत्र सोर्म्मिकाः शाखाः करस्यान्यत्र
तां
विना ॥
एकस्तनन्तु हृदयं रोमावल्यद्ध्र्वसंयुतम्
।
रम्भास्तम्भसमानोरु सुपार्ष्णि
मृदुपादकम् ॥
एकं तथापरं स्थूलसंहतोरु पदाम्बुजम् ।
एकञ्चारु मृदु स्थूलजघनं सुमनोहरम् ॥
तथापरं दृढकटि संहतोद्ध्र्वपदाम्बुजम्
।
एकं वैयाघ्रचर्म्मोपयुक्तं भूतिविलेपनम् ॥
अपरं मृदुकौषेयवसनं चन्दनोक्षितम् ।
अङ्गभूता महेशस्य
वीतभीतास्तपोधनाः ॥
ये मानुषशरीरेण प्रापिरे तपसो बलात्
।
गणानामाधिपत्यन्तु ते जानन्ति हरं
परम् ॥
एवं सदा त्वया योज्याः सानुगा
नृपसत्तम ! ।
वनिताः सत्क्रियोपायैस्ततो
भद्रमवाप्स्यसि ॥
य इदं शृणुयान्नित्यमद्भुतं पुण्यदायकम्
।
शिवयोः प्रीतिकरणं शरीरार्द्धं ग्रहं तथा
॥
गौरीत्वापादनञ्चैव कालिकायाः
शुभावहम् ।
न तस्य विघ्ना जायन्ते स च
पुण्यतमो मतः ।
दीर्घायुः स सुखी भूयात्
पुत्त्रपौत्त्रसमन्वितः ॥
सततं परिशृण्वानः शिवयोश्चरितं
महत् ।
शिवलाकमवाप्नोति सुचिरं शिवल्लभः
॥"
इति श्रीकालिकापुराणे ४४ अध्यायः
।

**हरचूडामणिः**, पुं, (हरस्य चूडामणिः शिरो-
भूषणमिव ।) चन्द्रः । इति भूरिप्रयोगः
॥ शिव-
शिरोरत्नञ्च ॥

**हरणं**, क्ली, (ह्रियते इति । हृ + ल्युट् ।) यौत-
कादिदेयद्रव्यम् । (यथा, रघुः । ७ ।
२२ ।
"सत्त्वानुरूपाहरणाकृतश्रीः
प्रास्थापयत् राघवमन्वगाच्च ॥")
तत्पर्य्यायः । दायः २ । इत्यमरः । २
। ८ । २८ ॥
यौतकं आदिना
उपनयनभिक्षाप्रसादादिच

| | | |
|---|---|---|
| | | यत् देयं तत् दायहरणपदवाच्यं कन्यादानकाले जामात्रादभ्यो व्रतभिक्षादो ब्रह्मणादिभ्यश्च यत् द्रव्यं दीयते यत्र दायादिद्वयमित्यर्थः । युतकं यानिसम्बन्धः तत्र भवमिति ष्णेयौतकं युतयो- र्बधूवरयोरिदमिति वा कणि योतकं यौतुक- मुकारमध्यमपि । यौतकं यौतुकञ्च तत् इति वाचस्पतिः । दीयते दायः, कर्म्मणि घञ् सुष्ठु दीयते सुदायः इति पाठः इत्यन्ये । ह्रियते हरणं कर्म्मणि अनट् । इति भरतः ॥ * ॥ |

भुजः । हृतिः । इति मेदिनी ॥ (यथा, भाग-
वते । १० । ५० । ९ ।
“एतदर्थोऽवतारोऽयं भूभारहरणाय मे ।
संरक्षणाय साधूनां कृतोऽन्येषां वधाय च ॥”)
शुक्रम् । स्वर्णम् । कपर्द्दकम् ।
उष्णोदकम् ।
इति केचित् ॥ भाज्याङ्कात् भाजकाङ्कद्वारा-
भागग्रहणम् । इति लोलावती ॥

**हरतेजः**, [स्] क्ली, (हरस्य तेजः ।) पारदम् ।
इति राजनिर्घण्टः ॥ शिववोर्य्यञ्च ॥

**हरनेत्रं**, क्ली, (हरस्य नेत्रम् ।) शिवचक्षुः ।
संख्यात्रयम् । इति ज्जोतिःशास्त्रम् ॥

**हरबीजं**, क्ली, (हरस्य बीजम् ।) पारदम् ।
इति भूरिप्रयोगः ॥

**हररूपः**, पुं, (हरस्य रूपमिव रूपमस्य ।) शिवः ।
इति शब्दरत्नावली ॥

**हरशेखरा**, स्त्री, (हरस्य शेखरं आवासत्वेना-
स्त्यस्या इति । अच् ।) गङ्गा । इति हेमचन्द्रः ॥

**हरहूरा**, स्त्री, हारहूरा । द्राक्षा । इति केचित् ॥

**हराद्रिः**, पुं, (हरस्य अद्रिः ।) कैलासपर्व्वतः ।
इति केचित् ॥ (यथा, कथासरित्सागरे । ११३ ।
९९ ।
“विद्याधराः शृणुत यः कुरुते ममात्र
धर्म्मव्यतिक्रममितः प्रभृति प्रजासु ।
वध्य स मे नियतमित्यभितो हराद्रि-
मुद्घोषणाञ्च स ततो भ्रमयाञ्चकार ॥”)

**हरिः**, पुं, (हरति पापानीति । हृ + “हृपिषि-
रुहीति ।” उणा० ४ । १२८ । इति इन् ।)

गोविन्दः केशवोऽनन्तो वामनो मधुसूदनः ।
दामोदरो हृषीकेशः पद्मनाभस्त्रिविक्रमः ॥
वैकुण्ठश्चाच्युतो रामश्चक्रपाणिरधोक्षजः ।
पीताम्बरो जगन्नाथो नृसिंहो गरुडध्वजः ॥
राधिकापतिरानन्दस्वरूपोविश्वमोहनः ।
यशोदानन्दनः सत्यः श्रीगोपोजनवल्लभः ॥
गदाधरो हयग्रीबो वराहश्च गवीश्वरः ।
गोवर्द्धनधरो विश्वबीजं कमललोचनः ॥
सर्व्वान्तर्य्यामी जगदीशश्चानूरमर्द्दनः प्रभुः ।
विश्वम्भरो यज्ञभोक्ता वनमाली सनातनः ॥
पुराणपुरुषो नन्दात्मजः श्रीवत्सलाञ्छनः ।
देवकीनन्दनः श्यामः श्रीश्यामाप्राणवल्लभः ॥
अनिरुद्धः परं ब्रह्म मुरारिः श्रीधरस्तथा ।
श्रीगोपीमोहनः शार्ङ्गधन्वा तु ब्राह्मणप्रियः ॥
ब्रह्मण्यदेवः क्षेत्रज्ञस्तापत्रयविनाशनः ।
कैटभारिर्गुणातीतो रुक्मिणीरमणो विराट् ॥
सङ्कर्षणः शेषशायी दैत्यारिर्व्वकभित्तथा ॥
सर्व्वशास्त्रप्रणेता च मुकुन्दो भक्तवत्सलः ॥
अघासुरघ्नः प्रद्युम्नो हंसश्च मुरलीधरः ।
कुवलयापीडघाती च पद्मधारी चतुर्भुजः ॥
भक्तलोकैकशरणो गोपालो वैष्णवप्रियः ।
वंशीपाणिर्गुणमयः कोटिकन्दर्पमोहनः ॥
वेणुवाद्यविनोदी च कंसारिर्यादवस्तथा ।
चतुर्व्वेदमयो नित्यः सच्चिदानन्दविग्रहः ।
दीनानाथैकशरणं भक्तानुग्रहकारकः ॥ * ॥
एतदष्टोत्तरशतं कृष्णनाम नृमङ्गलम् ।
प्रत्यहं यः पठेत् प्रातस्त्रिसन्ध्यां वा विशेषतः ॥
द्विजादिश्चेन्नरो भक्त्या शृणोति जपति स्मरेत् ।
दुःस्वप्ननाशनं तस्य मनोमलविनाशनम् ।
सर्व्वापराधशमनं सर्व्वपापक्षयो भवेत् ।
पावनं शान्तिदं पुण्यं तापत्रयविनाशनम् ॥
आयुष्यं सर्व्वसुखदं सर्व्वदुःखापहं मुने ! ।
वतयज्ञतपोदानयागतीर्थफलप्रदम् ॥
पुत्त्रदं चाशु बन्ध्यानां ग्रहपीडादिनाशनम् ।
सर्व्वाभीष्टप्रदं सर्व्वैश्वर्य्यदं विघ्ननाशनम् ॥
सर्व्वोपद्रवदारिद्र्यनाशनंमानवस्य तु ।
सद्बुद्धिविद्याविज्ञानयशोधर्म्मप्रदं तथा ॥

सर्व्वसुखप्रदानीह तव प्रोक्तानि वेधसा ॥
मयापि भुवनेश्वर्य्यै कथितानि प्रयत्नतः ।
पुरासौ तुष्टचित्ताभूत् श्रुत्वा कृष्णसुखप्रदा ॥
दिलीप उवाच ।
कानि कानि च चिह्नानि कृष्णस्य पादयो-
र्म्मने ।
वशिष्ठ ! श्रोतुमिच्छामि कथयस्वानुपूर्ब्बकम् ॥
वशिष्ठ उवाच ।
यदूचिवान् स्वयं ब्रह्मा नारदाय नराधिप ! ।
तत् शृणुष्व महत् पुण्यमतिगोप्यतमं वचः ॥
विधिर्देवर्षिणा पृष्ट उपाख्यानमिदं पुरा ।
महाभागवतं पुण्वमेकदा तमुवाच ह ॥
ब्रह्मोवाच ।
शृणु नारद वक्ष्यामि पादयोश्चिह्नलक्षणम् ।
भगवत्कृष्णरूपस्य ह्यानन्दैकरसस्य च ॥
अवताराः ह्यसंङ्ख्याश्च कथिता ये तवाग्रतः ।
परं सम्यक् प्रवक्ष्यामि कृष्णस्तु भगवान् स्वयम् ॥
देवानां कार्य्यसिद्ध्यर्थमृषीणां वा नृणां तया ।
आविर्भूतस्तु भगवान् स्वानां प्रियचिकीर्षया ॥
केनैव ज्ञायेते देवो भगवान् भक्त्वत्सलः ।
तान्यहं वेद्मि नान्योऽस्ति सत्यमेतन्मयोदितम् ॥
ऊनविंशतिचिह्नानि मया दृष्टानि तत्पदे ।

विष्णुः । (यथा, रघुः । १० । ८६ ।
“हरिरिव युगदीर्घैर्दोर्भिरंशैस्तदीयैः
पतिरवनिपतीनां तैश्चकाशे चतुर्भिः ॥”)
सिंहः । (यथा, रघुः । २ । ५९ ।
“स न्यस्तगस्त्रो हरये स्वदेह-
मुपानयत् पिण्डमिवामिषस्य ।”)
शुकपक्षी । सर्पः । वानरः । भेकः ।
इत्यमरः ॥
चन्द्रः । सूर्य्यः । वायुः । अश्वः । (यथा,
महाभारते । ३ । १६६ । ५ ।
“ततः स हरिभिर्युक्तं
जाम्बनदपरिस्कृतम् ।
मेघनादिनमारुह्य श्रिया परमया ज्वलन्
॥)
यमः । शिवः । ब्रह्मा । किरणः । इन्द्रः ।
(यथा,
रघुः । १२ । १०३ ।
“यन्ता हरेः सपदि संहृतकार्म्मुकज्य-
मापृच्छ्य रावघमनुष्ठितदेवकार्य्यम् ॥”)
वर्षविशेषः । इति मेदिनी ॥ मयरः ।
कोकिलः ।
हंसः । अग्निः । इति शब्दरत्नावली ॥
भर्त्तृ-
हरिः । इति त्रिकाण्डशषः ॥ पिङ्गवर्णः ।
हरिद्वर्णः । इति हेमचन्द्रः ॥ * ॥
हरेरष्टोत्तर-
शतनामानि यथा, --
त्रीसदावि उवाच ।
श्रीकृष्णाष्टोत्तरशतं नाम मङ्गलदायकम् ।
तत्शृणुष्व महाभाग !
सव्वकल्मषनाशनम् ॥
श्रीकृष्णः पुण्डरोकाक्षो वासुदेवी
जनार्द्दनः ।
नारायणो हरिर्व्विष्णुर्म्माधवः पुरुषोत्तमः
॥

सर्व्वभीतिहरं भक्तिमुर्क्तिधान्यधनप्रदम् ।
सर्व्वरोगक्षयकरं बाह्यान्तःशुद्धिदं परम् ॥
फलकामिनो वैष्णवस्य सर्व्वकामफलप्रदम् ।
सर्व्वशत्रुक्षयो याति हरिभक्तिश्च जायते ॥
सरस्वती च वशगा कमलाविरतं भवेत् ।
क्षेत्रतीर्थे च मरणं गङ्गायां वा विशेषतः ॥
मोचनं भवबन्धस्य यमभीतिविनाशनम् ।
निष्कामिनस्त्वनन्यस्य प्रेमभक्तिसुखप्रदम् ।
भवेदहैतुकं ज्ञानं साक्षात् कृष्णः प्रसीदति ॥”
इति पाद्मोत्तरखण्डे १११ अध्यायः ॥ * ॥
श्रीहरिपादचिह्नाणि यथा, --
श्रासदाशिव उवाच ।
“सच्चिदानन्दरूपस्य कृष्णस्याद्भुतकर्म्मणः ।
संस्मरेत् पादचिह्नानि प्रातर्भक्त्या नरोत्तमः ॥
अतिगुह्यानि देवर्षे । यानि भक्तिप्रदानि च ।

दक्षिणे दश चिह्नानि वामे च नव नारद !
॥
ध्वजातपत्रं कमलं वज्राख्यमङ्कुशो यवः
।
स्वस्तिकं चोर्द्धरेखा चाष्टकोणं चक्रमेव
च ॥ * ॥
नवान्यानि प्रवक्ष्यामि साम्प्रतं
वैष्णवोत्तम ! ।
चिह्नानि वामचरणे गोविन्दस्याङ्कतानि च
॥
इन्द्रचापं त्रिकोणञ्च कलसञ्चार्द्धचन्द्रकम्
।
शङ्खोऽम्बरं मत्स्यचिह्नं गोष्पदं जाम्बवं
स्मृतम् ॥
अङ्कान्येतानि भो विप्र ! दृश्यन्ते च यदा
कदा ।
कृष्णाख्यन्तु परं ब्रह्म भुवि जातं न
संशयः ॥
द्वयं वाथ त्रयं वाथ चत्वारः पञ्च एव वा ।
दृश्यन्ते ब्रह्मवित्श्रेष्ठ ह्यवताराः कथञ्चन
॥
मध्ये ध्वजा तु विज्ञेया पद्मं
द्व्यङ्गलमानतः ।
वज्रन्तु दक्षिणे पार्श्वे चाङ्कुशो वै तदग्रतः
॥
यवोऽप्यङ्गुष्ठमूले स्यात् स्वस्तिकं तत्र
कुत्र-
चित् ।
आतपत्रं चोर्द्धरेखा वामे चक्रञ्च दक्षिणे ॥
आद्यमङ्गुलिमारभ्य यावद्वै मध्यमा
स्थिता ।
तावद्वै चोर्द्धरेखा च कथिता पद्मसंज्ञके
॥
अष्टकोणं ततो वत्स ! समानाष्टाङ्गुलैश्च
तत् ।
निर्द्दिष्टं दक्षिणे पादे चेत्याहुर्म्मुनयो हरेः
॥ * ॥
एवं पादस्य चिह्नानि नान्यं वहति
वैष्णवः ।
दक्षिणेतरस्थानानि संवदामीह संस्मृरेत्
॥

| | | |
|---|---|---|
| | | चतुरङ्गुलमानेन द्वयाङ्गुलिसमीपतः ।<br>इन्द्रचापं ततो विद्यादन्यत्र च न ते क्वचित् ॥<br>त्रिकोणं मध्यनिर्द्दिष्टं कलसो यत्र कुत्रचित् ।<br>अष्टाङ्गुलप्रमाणेन तद्धरेरर्द्धचन्द्रकम्<br>अर्द्धचन्द्रसमाकारं कलसो निर्द्दिष्टं तस्य सुव्रत ।<br>इन्द्रं वै यच्च चिह्नन्तु ह्याद्यन्ते वै निरूपितम् ॥<br>त्रिकोणं दक्षिणे भागे त्वम्बरं तदधो यवः ।<br>जम्बूफलं त्रिकोणस्य वामपार्श्वे निरूपितम् ॥ |

मोष्पदं द्विखुरं ज्ञेयं तदा द्व्यङ्गुलमानतः ।
त्रिकोणाधस्तु निर्द्दिष्टमथवा कलसो यथा ॥
श्रीनारद उवाच ।
न श्रुतं न च दृष्टञ्च चिह्नमेतन्ममोदितम् ।
रूपं वै सदृशं ब्रह्मन् वद त्वं माम्प्रतं मम ॥
श्रीब्रह्मोवाच ।
पताका च ध्वजा प्रोक्ता प्रान्ते त्रैलोक्यकालयः ।
पद्मं वै बाह्यपत्रञ्च ज्ञातव्यं श्रुतिनोदितम् ॥
वज्रं खण्ड इति प्रोक्तं दृष्टं वै गोत्रभित्करे ।
सहस्रारं समाख्यातं क्वचिद्वेदविदो विदुः ॥
अङ्कुशो नागशिक्षास्त्रं निर्म्मितं यद्धि पुत्रक ।
तादृशं तद्भवेच्चिह्नं विज्ञेयं वैष्णवैर्नरैः ॥
यवोऽप्यङ्गुष्ठमूलेषु कथितो मुनिभिर्ध्रुवम् ।
आतपत्रं नृपच्छत्राकारं वत्स सुशोभनम् ॥
चक्रं सुदर्शनाकारं यच्चिह्नं तम्मनोहरम् ।
वासुदेवकरे यद्वत् मुनिभिः परिकीर्त्तितम् ॥
विवाहादौ च माङ्गल्ये पुत्रे जाते तथैव च ।
स्त्रीभिश्चैव सदा कार्य्यं स्वस्तिकञ्च तदुच्यते ॥
रेखाश्चतस्रः संख्यातास्तिर्य्यगूद्र्ध्वा यदीक्षिताः ।
पल्लवेन च संयुक्तमष्टकोणं तदुच्यते ॥
दण्डाकारोद्र्ध्वरेखा स्यात् न वक्रा दृश्यते यदा ।
मध्यमाङ्गष्ठमानेन कथिता मुनिभिः किल ॥
दशभिश्चिह्नितैः पादं वन्द्यं पूज्यञ्च सर्व्वदा ।
चिह्नान्येतानि भो विप्र दक्षिणे चरणे विभोः ।
स श्रीकृष्ण इति ज्ञेयो बुद्धिमद्भिर्नरोत्तमैः ॥ * ॥
यद्रूपाणि च चिह्नानि वामपादे च तत् शृणु ॥
इन्द्रचापं घनुर्व्विद्यात् द्व्यङ्गुलञ्च चतुर्गुणम् ।

स्वगात्रे विभृयात्तानि पदचिह्नानि वैष्णवः ।
नाभेरूर्द्धं मुनिः स्नात्वा वत्स वृन्दावनेशयोः ॥
अथवा चिह्नितं पादं कृत्वा भागवतोत्तम ! ।
पूजामारभते तावत् यावज्जीवति नारद ! ॥
पूजितो देवदेवेशः फलं भवति देहिनाम् ।
तथा तच्चिह्नितं पादं अर्च्चनं कुरुते यदि ॥
राजसूयाश्वमेधादिफलं भवति सर्व्वथा ।
तदनन्तगुणं प्रोक्तं यद्येकं पूजयेत् सुधीः ॥”
इति पाद्मोत्तरखण्डे श्रीकृष्णपदचिह्नमाहात्म्यं नाम ११२ अध्यायः ॥ * ॥ तन्नाममाहात्म्यं यथा,
श्रीसदाविव उवाच
“शृणु नारद ! भद्र ते कथयिष्यामि चानघ ।
पार्व्वत्यै यदहं पृष्टः प्रावोचन्तु यथातथम् ॥
वेदस्याध्ययनं यज्ञं तपो योगः शमो दमः ।
कृष्णनामसहस्रांशैर्द्देवर्षे ! नहि तुल्यकम् ॥
ज्ञानं देवार्च्चनं ध्यानं धारणा नियमो यमः ।
प्रत्याहारः समाधिश्च हरिनामसमं न च ॥
गोविन्दनामसदृशं न त्यागो न व्रतं मुने ! ।
न सङ्कल्पो नापि शौचं न पुण्यं न फलं तथा ॥
वानप्रस्थं ब्रह्मचर्य्यं गार्हस्थ्यं कर्म्मन्यासकम् ।
धर्म्म एव सद्राचारो न हरेर्नामतुल्यकः ॥
न हरेर्नामसदृशं कर्म्म किञ्चित् तपस्तथा ।
सर्व्वतीर्थाटनञ्चैव चतुर्द्धा मुक्तिरेव च ॥
कृष्णनाम परा मुक्तिः कृष्णनाम परा गतिः ।
कृष्णनाम परं पुण्यं कृष्णनाम परं फलम् ॥
कृष्णनाम परो धर्म्मः कृष्णनाम परं तपः ।
कृष्णनाम परा शान्तिः कृष्णनाम परा स्तुतिः ॥
कृष्णनाम परा भक्तिः कृष्णनाम परा स्मृतिः ।
कृष्णानाम परं यज्ञं कृष्णनाम परा मतिः ॥
कृष्णनाम परं ज्ञानं कृष्णनाम परा स्थितिः ।
कृष्णनाम परं दानं कृष्णनाम जगत्प्रियम् ॥
कृष्णनाम परं श्राद्धं पितॄणां तर्पणं सदा ।
कृष्णनाम परा प्रीतिः कृष्णनाम परः प्रभुः ॥
कृष्णनाम जगत् सत्यं जन्तूनां कारणं परम् ।

स्तेयान्यनेकानि हरेः प्रियेण गोविन्दनाम्ना निहतानि सद्यः ॥
अनृच्छयापि दहति स्पृष्टो हुतवहो यथा ।
हरिनाम दहेत् पापं तथाज्ञमुखनिर्गतम् ॥
सकृदुच्चारितं येन हरे कृष्णेति निश्चयम् ।
यमाधिकारं नो याति कापट्येन विना मुने ॥
अज्ञानादथवा ज्ञानाद्दस्युभावेन वा पुनः ।
कृष्णनामैव यच्चिन्ता स याति परमं पदम् ॥
ब्रह्महा मद्यपः स्तेयो ह्यज्ञानाद्गुरुतल्पगः ।
भवार्णवं तरेदन्ते कृष्णनामपरायणः ॥
पितृहा नृपहा गोघ्नः स्त्रीहन्ता पापिनोऽपरे ।
गोविन्दनामोच्चारेण पश्चात्ते शुद्धिमाप्नुयुः ॥
यद्भूतं पापमज्ञानाद्वर्त्तमानञ्च नारद ।
यद्भविष्यति तत् सर्व्वं कृष्णनाम दहेद्ध्रुवम् ॥
जीवानान्तु सदा द्रोही चात्महा निन्द्यकर्म्मकृत् ।
स पूतो जायते धन्यो नामकीर्त्तनतो हरेः ॥
क्षेत्रतीर्थतपोदानव्रतार्च्चनं फलं तथा ।
शक्तिश्च सर्व्वयज्ञानां मुक्तेरध्यात्मवस्तुनः ॥
ज्ञानञ्च दैवमहतां सर्व्वसिद्धिप्रदं फलम् ।
नैमित्तिकानां नित्यानां तथा च काम्यकर्म्म-
णाम् ॥
वर्णाश्रमानां योगानां स्थापितं येषु नामसु ।

मौर्व्वीसंयुक्तवक्रं चेत्तदाहुर्मुनयो ध्रुवम् ॥
त्रिकोणन्तु त्रिरेखाख्यं शकटाकारकं यदा ।
तदा वै तत्त्रिकोणाख्यं चिह्नन्तु
मुनिनोदितम् ॥
कलसो वर्त्तुलाकारो ग्रोवया सहितो यदा ।
दृश्यते तादृशं पुत्त्र चिह्नितं सकलाधिकम्
॥
द्वितीयायां यथा चन्द्रो दृश्यते चाम्बरे
क्वचित् ।
तदर्द्धं चन्द्रं विज्ञेयं श्रुतौ च प्रतिपादितम् ॥
अम्बरं बिन्दूरित्येवं द्विरेखासुसमन्वितम् ।
वर्त्तुलञ्च सदा दृष्टं श्रीकृष्णे परमात्मनि ।
भत्स्याकारो भवेद्यत्र तच्चिह्नं
मत्स्यसञ्ज्ञकम् ।
जम्बूफलसमाकारं जम्बूचिह्नं विदुर्बुधाः ॥
एतच्चिह्नं समाख्यातमूनविंशतिमंख्यकम् ।
पादयोरुभयोराह्वः कृष्णस्य मुनयोऽनघाः
॥ ७ ॥
एवं वृन्दावनेश्वर्य्याः पादयार्म्मुनिसत्तम ! ।
ऊनविंगतिचिह्नानि कथयामीह तत् शृणु ॥
दक्षिणे नव चिह्नानि राधाया दश वामतः ।
मेदोऽयं कथिता विप्र
कृष्णस्याद्धाङ्गरूपिणी ॥
पतानि पदचिह्नानि दृष्टानि च श्रुतानि च ।
त्वदग्रे कथितान्येव पुनः किं कथयाम्यहम्
॥
नारद उवाच ।
चिह्नान्येतानि भो ब्रह्मन् किं कर्त्तव्यानि
वैष्णवैः ।
कथयस्व हि सर्व्वज्ञ युगयोः पादयोर्म्मम ॥
ब्रह्मोवाच ।
मीवणं राजतं वापि पाषाणं काष्ठजादिकम्
।
युगलं युगलं पादं कृत्वा चिह्नैश्च चिह्नितम्
॥

जीवनं शरणं कृष्णनामैव विपुलं धनम् ॥
कृष्णनाम जगद्बन्धुर्ज्जगद्वीजं गुणः परः ।
विश्व धारं कृष्णन म जगतां पावनं परम् ॥
कृष्णनाम जगज्जन्म यत् किञ्चित्
सचराचरम् ।
धार्य्यते प ल्यते विखं कृष्णनाम्ना प्रलीयते
॥
यत् किञ्चित् क्रियते कर्म्म कृष्णनाम परायणः
।
तत् कर्म्म कर्म्म एव स्यात् साक्षाद्गृह्णाति
केशवः ॥
श्रीहरेर्नाम ग्रहणं प्रशस्तञ्च युगे युगे ।
कुत्रापि न भवेत् सिद्धिर्हित्वा तन्नाम कर्म्म च
॥
विशेषतः कलियुगे कृष्णनामैव केवलम् ।
त्यक्त्वा नास्त्येव देवर्षे ! लोकस्य
गतिरन्यथा ॥
हरिनामपरः शान्तः क्षमाशीलो जितेन्द्रियः ।
नीत्वा कुलसहस्राणि कृष्णं प्राप्नोति स्वानि
च ॥
श्रीकृष्णहरिगोविन्ददासनामादिकोजनः ।
यः कश्चिद्याति कलुषं सर्व्वं तन्नामकीर्त्तनात्
॥
हत्यायुतं पानसहस्रमुग्रं
गुर्व्वङ्गनाकोटिनिषेवणञ्च ।

आकृष्य सर्व्वाघहरं पुरा कृष्णेन नारद
॥
त्रैलोक्ये यानि पुण्यानि
धर्म्मकर्म्मफलानि च ।
तुल्यतां तानि नो यान्ति
हरिनामानुकीर्त्तने ॥
नाम्नोऽस्य यावती शक्तिः पापनिर्हरणे
हरेः ।
तावत् कर्त्तुं न शक्नोति पातकं पातकी
जनः ।
श्वपचो धृजिनं कर्त्तुं नहि शक्नोति
यत्नतः ॥
तावद्धर्त्तुं मुने यावत्
कृष्णनामानुकीर्त्तनम् ।
मानसं कर्म्मजं वाग्जं लोके तन्नास्ति
कल्मषम् ।
सर्व्वाशुभघ्नं शिवदं यद्धरेर्नामकीत्तनम्
।
चान्द्रायणादिभिः कृच्छ्रैः शुद्धिर्न
स्यात्तथा-
नृणाम् ॥
कीर्त्तनेन हरेर्नाम्नः सकृदेव भवेद्यथा ।
सकृदाख्याततं येन कृष्णनाम
सुमङ्गलम् ।
तज्जिह्वा वष्णवी नान्यं वचो
वक्त्यप्यकारणम् ॥
ऋग्वेदो हि यजुर्व्वेदः
सामवेदोऽप्यथर्व्वणम् ।
अधीतास्तेन येनाक्तं हरिरित्यक्षरद्वयम्
॥
पापिनोऽपि हरेर्नाम कीर्त्तयन्ति यथा
यथा ।
सर्व्वाघं मस्मसात् कृत्वा
कृष्णभक्तिस्तथा तथा ॥
सकृन्नारायणेत्युक्त्वा पुमान्
कल्पशतत्रयम् ।
गङ्गादिसर्व्वतीर्थेषु स्नातो भवति
नारद ! ॥
पुराणशास्त्रागमवेदपाठ-
तीर्थावगाहादिफलं यथेष्टम् ।
गोविन्दानाम्नोऽपि कलाशतांशै-

| | | |
|---|---|---|
| | | स्तुल्यं भवेन्नैव मुने कदाचित् ॥<br>मा ऋचो मा यजुर्व्विप्र न साम पठ किञ्चन ।<br>कृष्णगोविन्दनामादि गेयं गायस्व नित्यशः ॥<br>गोकोटिदाने ग्रहणे खगस्य प्रथागगङ्गाम्बुनि कल्पवासः ।<br>यत्यायुतं मेरुसुवर्णदानं गोविन्दनाम्नो न समं शतांशैः ॥ |

कुरुक्षेत्रेण किं तस्य किं काश्या पुष्करेण च ।
जिह्वाग्रे वर्त्तते यस्य हरिरित्यक्षरद्वयम् ॥
विश्रुतानि बहून्येव तीर्थानि बहुधा न च ।
कोट्यंशेनापि तुल्यानि नामकीर्त्तनतो हरेः ॥
इष्टापूर्त्तानि कर्म्माणि सुबहूनि कृतान्यपि ।
भवहेतूनि तान्येव हरेर्नाम तु मुक्तिदम् ॥
परिहासेऽपि हासाद्यैर्विष्णोर्गृह्णन्ति नाम ये ।
कृतार्थास्तेऽपि मनुजास्तेभ्योऽपीह नमो नमः ॥
स्त्री, शूद्रः पुरुषो वापि ये चान्ये पापयोनयः ।
कीर्त्तयन्ति हरिं भक्त्या तेभ्योऽपीह नमो नमः ॥
न देशनियमस्तत्र न कालनियमस्तथा ।
नोच्छिष्टादौ निषेधश्च नामलुब्धस्य श्रीहरेः ॥
चक्रायुधस्य नामानि सदा सर्व्वत्र कीर्त्तयेत् ।
नाशौचं कीर्त्तने तस्य स पवित्रकरो यतः ॥
न कालशौचनियमा न देशाशौचनिर्णयः ।
हरेः संकीर्त्तनादेव नाम्नो नारद मुच्यते ॥
स्नाने कालोऽस्ति दाने च कालोऽस्ति जप-
यज्ञयोः ।
कृष्णसङ्कीर्त्तने कालो नास्त्यत्र पृथिवीतले ॥
किं सांख्ययोगैः किं यज्ञैस्तपोभिः किं करिष्यति
।
चेन्मुक्तिमिच्छेद्भक्तिञ्च कुर्य्याद्गोविन्दकीर्त्तनम्
॥
परदाररतः पापी परहिंसापकारकः ।
मुक्तिमायाति संशुद्धो हरेर्नामानुकीर्त्तनात् ॥
कृष्णनामधनः कृष्णनामग्राही सदा नरः ।
तत्त्वतः कृष्णमाप्नोति कृष्णनामजनप्रियः ॥
हित्वा गोविन्दनामानि सर्व्वकर्म्म करोति यः ।
बन्धाय तस्य तत् कर्म्म न मोक्षाय तु नारद ! ॥
सर्व्वकर्म्म परित्यज्य हरिनाम स्मरेत् सदा ।
यस्तस्य कर्म्मसिद्धिः स्यात् कृष्णनामप्रसङ्गतः
॥
कामांस्त्यक्त्वा मनोभोगान् विषयांश्च चरन्ति ये
।
तेषां दद्यात् परां भक्तिं हरिनामपरायणः ॥
हरिनामरतो भूत्वा सर्व्वकर्म्म परित्यजेत् ।
स सर्व्वपापान् मुक्तो यः पद्मं हित्वोदकं यथा ।
कृष्णनामैव यच्चित्ते देवर्षे तस्य कर्म्म च ।
स लोकान् सकलान् जित्वा तत्त्वतः कृष्ण-
मात्सर्य्यलोभमोहैश्च कामक्रोधमदैर्युतः ।
सर्व्वापहारी तन्मुक्तः कृष्णनामैब यत्तपः
॥
सर्व्वदोषयुतो विप्र व्याप्तश्चाशेषपातकैः ।
मुक्तः स वृजिनादस्मात् कृष्णनामैव
यत्तपः ॥
स्वधर्म्मवर्ज्जितः पापो जीवद्रोही च
हिंसकः ।
स मुक्तः सर्व्वपापेभ्यः कृष्णनामैव यत्तपः
॥
विप्रक्षत्रियविट्शूद्राः
सङ्करान्त्यजजारजाः ।
कानीना गोलकाश्चैव पितुर्जाताश्च
क्षेत्रजाः ॥
ब्रह्मचारी गृहस्थश्च वानप्रस्थो
यतिस्तथा ।
यद्येते पापिनो विप्र ! महापातकिनोऽपि
वा ॥
उपपातकिनश्चातिपापिनोह्यनुपापिनः ।
भ्रष्टाचाराश्च पाषण्डाः
स्वस्वधर्म्मविवर्ज्जिताः
जीवहत्यारता व्रात्या
निन्दकाश्चाजितेन्द्रिया ।
पश्चाज्ज्ञानसमुत्पन्ना गुरोः
कृष्णप्रसादतः ॥
ततस्तु यावज्जीवन्ति हरिनामपरायणाः
।
शुद्धास्तेऽखिलपापेभ्यः पूर्ब्बजेभ्यो हि
नारद ! ॥
नामादेशं रटन्तस्तु श्रीहरेः स्मृतिपूर्ब्बकम्
।
महद्भयं यमं जित्वा परं गोविन्दमाप्नुयुः ॥
गृहान्धकूपपतिताः सर्व्वदोषैस्तु संप्लुताः
।
संसारवासनालिप्ताः सर्व्वधर्म्मबहिष्कृताः
॥
मुक्तास्ते सर्व्वतस्तस्मादुच्चरन्तो
हरेर्द्विज ।
जन्मना ये न गृह्णन्ति कृष्णदीक्षां सतो
गुरोः
तेषां न दर्शनं कार्य्यं दूरतः परिवर्जयेत्
॥
कदाचित् यो न गृह्णाति कृष्णनाम
भवामृतम् ।
मृतः श्वखरकोलानां स तु योनिषु
जायते ॥
देवर्षे ! हरिनामानि भवनिस्तारहेतुनि
।
न गृह्णीयात्त यो मोहान्मृते
स्यात्तदधोगतिः ॥
गुणकर्म्माणि नामानि न गृह्णाति च यो
हरेः ।
दर्शनस्पर्शने चैव ध्रुवं तस्य विवर्जयेत्
॥
मनुथजम्म संप्राप्य न नामग्रहणं हरेः ।
कुर्य्यात् कदापि स्वप्ने वा ह्यदृश्यः स
नराधमः ॥
ध्यानं सत्ययुगे विष्णोः त्रेतायां
यज्ञसाधनम् ।
अर्च्चनं द्वापरयुगे हरिनाम कलौ मुने ॥
ध्यानं तपः सत्ययुगे त्रेतायां यज्ञकर्म्म
च ।
द्वापरे पूजनं दानं हरेर्नाम कलौ युगे ॥
कलौ भवार्णवोत्तीर्णो मानवो
मुनिपुङ्गव ! ।
वर्त्तते यस्य जिह्वाग्रे हरिरित्यक्षरद्वयम्
॥
सर्व्वलोको जितस्तेन कृष्णः प्राप्तः
सनातनः ।
सकृदुच्चारितं येन हरेर्नाम
चिदात्मकम् ॥
फलं नास्य क्षमो वक्तुं सहस्रवदनो
विधिः ।
जितं तेन जिनं तेन जितं तेनेति
निश्चितम् ।
वर्त्तते यस्य जिह्वाग्रे हरिरित्यक्षरद्वयम्
॥

माप्नुयान् ॥
हरिनाम सदा गीत्वा विचरन्ति महीतले ।
न प्राप्नुवन्ति तद्भाग्यं देवा इन्द्रादयोऽपरे ॥
श्रद्धया हेलया ये तु हरिनाम सुमङ्गलम् ।
गायन्त्येकान्तिनश्चित्तेऽच्युतस्तिष्ठति सन्ततम् ॥
एकान्तिनः कृष्णनामाश्रया ये च हरेः प्रिया ।
यदि स्युरन्त्यजा वेदपारगा न तथा मुने ! ॥
कृणनामानि गायन्ति तस्य सेवादिकर्म्म च ।
सदा कुर्व्वन्ति ये विप ! तेभ्यो नित्यं नमो नमः ॥
स्तेयी गुर्व्वङ्गनागामो ब्रह्मघ्नो मद्यपः खलः ।
तत्पापेभ्यः स मुक्तोऽङ्ग श्रीहरेर्नाम यत्तपः ॥
पूर्ब्बजन्मपरित्यज्यो ह्यासक्तः कृष्णनामसु ।
यथात्मा भौतिकाद्देहात् स मुक्तः सर्व्वपातकात् ॥
हरिनाम व्रतं यस्य हरिनाम च यत्तपः ।
स्वयं भवार्णवात् त्राता गोविन्दो मुनिपुङ्गव ! ॥
श्रद्धयाविरतं कृष्णनामगानरतो जनः ।
कुर्य्यात् सदैव सर्व्वत्र तच्चिन्तां कृपयाच्यतः ॥

मृत्योर्म्महद्भये नाम यान्ति गोविन्दमव्ययम् ॥
हरिनामानि तिष्ठन्ति सन्ति वक्ताणि प्राणिनाम् ।
भवन्ति कर्म्मसम्बद्धा लोका नरकगामिनः ॥
विसृज्य कृष्णनामानि कर्म्ममार्गरता नराः ।
पुनर्जन्म पुनर्मृत्युं भ्रमन्तः स्युस्ततस्ततः ॥
कृष्णनामानि गायन्ति कुर्व्वन्ति तस्य सेवनम् !
ते यान्ति वासुदेवस्य स्थानं परममव्ययम् ॥
वर्णाश्रमस्थिता विप ! हरिनामपरायणाः ।
तेषां वक्तुं न शक्रोमि महिमानमहं यदि ॥
हित्वा गोविन्दनामानि कर्म्माशेषं करोति यः ।
पथमप्राप्य कृष्णस्य भ्रमते कर्म्मवर्त्मनि ॥
मायामोहितचित्तेन पापिष्ठास्ते नराधमाः ।
त्यक्त्वा कृष्णस्य नामानि भ्रमन्ते सर्व्वयोनिषु ॥
यदृच्छयाशया नाम शिक्षया यः स्मरेद्धरेः ।
सर्व्वाघमुक्तो देवर्षे ! सततं कृष्णनामतः ॥
येन तेन प्रकारेण मुकुन्दनामजल्पकः ।
घोराद्भवार्णवात् पूतो मुक्तः स कृष्णानामतः ।
नामाङ्किकं जनं दृष्ट्वा यस्य श्रद्धा भवेद्धरेः ॥
स याति वैष्णवं धाम परमं कृष्णनामतः ॥
दृष्ट्वा प्रमाणं कुर्व्वन्ति हरेर्नामाश्रयं जनम् ।
सकलादंहसो मुक्ता मानवाः साधुवज्जनाः ॥

सत्यं कलियुगे विप्र ! श्रीहरेर्नाम मङ्गलम् ।
परं स्वस्त्ययनं नृणां नास्त्येव गतिरन्यथा ॥”
इति पाद्मोत्तरखण्डे श्रीकृष्णनाममाहात्म्ये ९८ अध्यायः ॥ * ॥ कलौ दशसहस्रवर्षपर्य्यन्तं पृथिव्यां तस्यावस्थितिर्य्यथा, --
“शालग्रामो हरेर्मूर्त्तिर्ज्जगन्नाथश्च भारतम् ।
कलेर्दशसहस्रान्ते ययौ त्यक्त्वा हरेः पदम् ॥
वैष्णवाश्च पुराणानि शङ्खानि श्राद्धतर्पणम् ।
वेदोक्तानि च कर्म्माणि ययुस्तैः सार्द्धमेव च ॥
हरिपूजा हरेर्न्नाम तत्कीर्त्तिगुणकीर्त्तनम् ।
वेदाङ्गानि च शास्त्राणि ययुस्तेः सार्द्धमेव च ॥
सत्त्वञ्च धर्म्मः सत्यञ्च वेदाश्च ग्रामदेवताः ।
व्रतं तपश्चानशनं ययुस्तैः सार्द्धमेव च ॥
वामाचाररताः सर्व्वे मिथ्या कापट्यमेव च ।
तुलसीवर्ज्जिता पूजा भविष्यन्ति ततः परम् ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे । ७ । १२ -- १६ ॥
तस्य स्वरूपं यथा, --
गर्ग उवाच ।
“अये नन्द प्रवक्ष्यामि वचनं ते सुखावहम् ।
प्रस्थापितोऽहं वसुना येन तत् श्रूयतामिति ॥
वसुना सूतिकागारे शिशुः प्रत्यर्पणीकृतः ।
पुत्त्रोऽयं वसुदेवस्य ज्येष्ठस्य तस्य च ध्रुवम् ॥

| | | |
|---|---|---|
| | कृष्णानाम सदा नीत्वा विचरेत् कृष्णसन्निधौ<br>तथ्यं वदामि ते विप्र ! क्रीतस्तस्य जनार्द्दनः ॥<br>नीत्वा करोति नामानि श्रोहरेः करतालिकाम् ।<br>विक्रीतोऽहमृतं तस्य वदामि तव नारद ! ॥<br>एकान्ती नाम नीत्वा तु सन्निधौ नर्त्तयेद्धरेः ।<br>सत्यं तस्य हरिः क्रीतो देवतानाञ्च का कथा ॥<br>ये भावगद्गदा भूत्वा रुदन्त्यच्युतसन्निधौ ।<br>तेषां कृष्णः परिक्रीतो ब्रह्मादीनाञ्च का कथा ॥<br>ये पतन्त्यवनौ गीत्वा हरेर्नामानि गद्गदाः ।<br>भावेन तेषां गोविन्दः क्रीतो नारद ! नान्यथा ॥ | कन्या ते च येन नीता मथुरां कंसभीरुणा ।<br>अस्यान्नप्राशनायाहं नामानुकरणाय च ॥<br>गूढेण प्रेषितस्तेन तस्य यागं कुरु व्रज ॥<br>पूणब्रह्मस्वरूपोऽयं शिशुस्ते मायया महीम् ।<br>आगत्य भारहरणं कर्त्ता धात्रा च सेवितः ॥<br>गोलोकनाथो भगवान् श्रीकृष्णो राधिकापतिः<br>नारायणो यो वैकुण्ठे कमलाकान्त एव च ॥<br>श्वेतद्वीपनिवासो यः पाता विष्णुश्च सोऽप्यजः ।<br>कपिलोऽन्ये तदंशाश्च नरनारायणावृषी ॥ |

एकीभूय च सर्व्वेषां तजसां राशिमूर्त्तिमान्
।
तं वसुं दर्शयित्वा च शिशुरूपो बभूव ह ॥
साम्प्रतं सूतिकागारादाजगाम तवालयम् ।
अपोनिसम्भवश्चायमाविर्भूतो महोतले ॥
वायुपूर्णं मातृगर्भं कृत्वा च मायया हरिः ।
आविर्भूय वसुं मूर्त्तिं दर्शयित्वा जगाम ह ॥
युगे युगे वर्णभेदो नामभेदोऽस्य वल्लव ! ।
शुक्लो रक्तस्तया पीत इदानीं कृष्णतां
गतः ॥
शुक्लवर्णः सत्ययुगे सुतीव्रतेजमा वृतः ।
त्रेतायां रक्तवर्णोऽयं पीतोऽयं द्वापरे विभुः
॥
कृष्णवर्णः कलौ श्रीमांस्तेजसां राशिरेव च
।
परिपूर्णतमं ब्रह्म तेन कृष्ण इति स्मृतः ॥”
* ॥
तस्य कृष्णनाम्नो व्युत्पत्तिर्यथा, --
“ब्रह्मणो वाचकः
कोऽयमृकारोऽनन्तवाचकः।
शिवस्य वाचकः षश्च णकारो धर्म्म एव च
॥
अकारो विष्णोर्व्वचनं श्वेतद्वोपनिवासिनः
।
नरतारायणोऽयंस्य विभर्गा वाचकः स्मृतः
॥
सर्व्वेषां तेजसां राशिः सर्व्वमूर्त्तिस्वरूपकः
।
सर्व्वाधारः सर्व्व बीजस्तेन कृष्ण इति
स्मृतः ॥
कृषिर्निर्व्वाणवचनो णकारो मोक्ष एव च ।
अकारो दातृवचनस्तेन कृष्ण इति स्मृतः
॥
कृषिर्निश्चेष्टवचनो णकारो भक्तिवाचकः ।
अकारो दातृवचनस्तेन कृष्ण इति स्मृतः
॥
कर्म्मनिर्म्मूलवचनः कृषिर्णो दास्यवाचकः
।

यस्तद्ददाति भक्तेभ्यो मुकुन्दस्तेन
कीर्त्तितः ॥ * ॥
सूदनं मधुदैत्यस्य यस्मात् स
मधुसूनः ।
इति सन्ता वदन्तीशं
वेदैर्भिन्नार्थमीप्सितम् ॥
मधु क्लीवञ्च माध्वीके
कृतकर्म्मशुभाशुभे ।
भक्तानां कर्म्मणाञ्चैव सूदनं
मधुसूदनः ॥
परिणामाशूभं कर्म्म भ्रान्तानां मधुरं
मधु ।
करोति सूदनं यो हि स एव
मधुसूदनः ॥ * ॥
कृषिरुत्कृष्टवचनो णश्च
सद्भिक्तिवाचकः ।
अश्चापि दातृवचनः कृष्णं तेन
विदुर्बधाः ॥
कृषिश्च परमानन्दे णश्च
तद्दास्यकर्म्मणि ।
तयोर्द्दाता च यो देवस्तेन कृष्णः
प्रकीर्त्तितः ॥
कोटिजन्मार्ज्जिते पापे कृषिः क्लेशे
च वर्त्तते ।
भक्तानां णश्च निर्व्वाणे तेन कृष्णः
प्रकीर्त्तितः ॥
नाम्नां सहस्रं दिव्यानां त्रिरावृत्त्या तु
यत्
फलम् ।
एकावृत्त्या तु कृष्णस्य तत् फलं
लभते नरः ॥
कृष्णनाम्नः परं नाम न भूतं न
भविष्यति ।
सर्व्वेभ्यश्च परं नाम कृष्णेति वैदिका
विदुः ॥
कृष्ण कृष्णेति हे गोपि यस्तं स्मरति
नित्यशः ।
जलं भित्त्वा यथा पद्मं
नरकादुद्धरत्ययम् ॥

मुरः क्लेशे च सन्तापे कर्म्मभोगे च कर्म्मिणाम् ।
दैत्यभेदेऽप्यरिस्तेषां मुरारिस्तेन कीर्त्तितः ॥ ३
॥
मा च ब्रह्मस्वरूपा या मूलप्रकृतिरीश्वरी ।
नारायणीति विख्याता विष्णुमाया सनातनी ॥
महालक्ष्मीस्वरूपा च वेदमाता सरस्वती ।
राधा वसुन्धरा गङ्गा तासां स्वामी च माधवः ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । १ । १ ।
१९ -- ५२ ; ५५--६० ॥ तस्य
भूषणास्त्रस्वरूपं
यथा, --
श्रीमैत्रेय उवाच ।
“भूषणास्त्रस्वरूपेण यथैतदखिलं जगत् ।
बिभर्त्ति भगवान् विष्णुस्तन्ममाख्यातुमर्हसि ॥
श्रीपराशर उवाच ।
नमस्कृत्याप्रमेयाय विष्णवे प्रभविष्णवे ।
कथयामि यथाख्यातं वशिष्ठेन ममाभवत् ॥
आत्मानमस्य जगतो निर्लेपमगुणामलम् ।
बिभर्त्ति कौस्तुभमणिस्वरूपं भगवान् हरिः ॥
श्रीवत्ससंस्थानधरमनन्ते च समाश्रितम् ।
प्रधानं बुद्धिरप्यास्ते गदारूपेण माधवे ॥
भूतादिमिन्द्रियादींश्च द्विधाहङ्कारमीश्वरः ।
बिभर्त्ति शङ्खरूपेण शार्ङ्गरूपेण च स्थितम् ॥
बलस्वरूपमत्यन्तजवेनान्तरितानिलम् ।
चक्रस्वरूपञ्च मनो धत्ते विष्णुः करस्थितम् ॥
पञ्चरूपा तु या माला वैजयन्ती गदाभृतः ।
सा भूतहेतुसंघातो भूतमाला च वै द्विज ॥
यानीन्द्रियाण्यशेषाणि बुद्धिकर्म्मात्मकानि वै ।
शररूपाण्यशेषाणि तानि धत्ते जनार्द्दनः ॥
बिभर्त्ति यच्चासिरत्नमच्युतोऽत्यन्तनिर्म्मलम् ।
विद्यामयन्तु तज्ज्ञानमविद्याचर्म्मसंस्थितम् ॥
इत्थं पुमान् प्रधानञ्च बुद्ध्यहङ्कारमेव च ।
भूतानि च हृषीकेशे मनः सर्व्वेन्द्रियाणि च ।
विद्याविद्ये च मैत्रेय सर्व्वमेतत् समाश्रितम् ॥
अस्त्रभूषणसंस्थानस्वरूपं रूपवर्ज्जितः ।
बिभर्त्ति मायारूपोऽसौ श्रेयसे प्राणिनां हरिः ॥
सविकारं प्रधानं यत् पुमांश्चैवाखिलं जगत् ।
बिभर्त्ति पुण्डरीकाक्षस्तदेवं परमेश्वरः ॥
या विद्या या तथाविद्या यत् यच्चासदव्य-

अकारः प्राप्तिवचनस्तेन कृष्ण इति स्मृताः ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । १३ । ४५ -- ६२ ॥
तस्य नामान्तराणां व्युत्पत्तिर्यथा, --
“राम नारायणानन्त मुकुन्द मधुसूदन ।
कृष्ण केशव कंसारे हरे वैकुण्ठ वामन ॥
इत्येकादश नामानि पठेद्वा पाठयेद्यदि ।
जन्मकोटिसहस्राणां पातकादवमुच्यते ॥
राशब्दो विश्ववचनो मश्चापीश्वरवाचकः ।
विश्वानामीश्वरो यो हि तेन रामः प्रकीर्त्तितः ॥
रमते रमया सार्द्धं तेन रामं विदुर्बुधाः ।
रमाया रमणस्थानं रामं रामविदो विदुः ॥
रा चेति लक्ष्मीवचनो मश्चापीश्वरवाचकः ।
लक्ष्मीपतिं गतिं रामं प्रवदन्ति मनीषिणः ॥
ताम्नां सहस्रं दिव्यानां स्मरणे यत् फलं भवेत् ॥
तत्फलं लभते नूनं रामोच्चारणमात्रतः ॥
सारूप्यमुक्तिवचनो नारेति च विदुर्बुधाः ।
यो देवोऽप्ययनं तस्य स च नारायणः स्मृतः ॥
नाराश्च कृतपापाश्चाप्ययनं गमनं स्मृतम् ।
यतो हि गमनं तेषां सोऽयं नारायणः स्मृतः ॥
मकृन्नारायणेत्युक्त्वा पुमान् कल्पशतत्रयम् ।
गङ्गादिसर्व्वतीर्थेषु स्नातो भवति निश्चितम् ॥
नारञ्च मोक्षणं पुण्यमयजं ज्ञानमीप्सितम् ।
तयोर्ज्ञानं भवेद्यस्मात् सोऽयं नारायणः प्रभुः ॥
नास्त्यन्तो यस्य वेदेषु पुराणेषु चतुर्षु च ।
शास्त्रेष्वन्येषु योगेषु तेनानन्तं विदुर्बुधाः ॥ * ॥
मुकुमव्ययमान्तञ्च निर्व्वाणमोक्षवाचकम् ।
कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्त्तते ।
भस्मीभवन्ति सद्यस्तु महापातककोटयः ॥
अश्वमेधसहस्रेभ्यः फलं कृष्णजपस्य च ।
वरं तेभ्यः पुनर्ज्जन्म नातो भक्तः पुनर्भवः ॥
सर्व्वेषामपि यज्ञानां लक्षाणि च व्रतानि च ।
तीर्थस्नानानि सर्व्वाणि तपांस्यनशनानि च ॥
वेदपाठसहस्राणि प्रादक्षिण्यं भुवः शतम् ।
कृष्णनामजपस्यास्य कलां नाहन्ति षोडशीम् ॥
तेषां भोगाद्भवेत् स्वर्गफलञ्च सुचिरं नृणाम् ।
स्वर्गादवश्यं पुंसश्च जपकर्त्तुर्हरेः प्रदम् ॥ * ॥
के जले सर्व्वदेहेऽपि शयनं यस्य चात्मनः ।
वदन्ति वैदिकाः सर्व्वे तं देवं केशवं परम् ॥
कंसश्च पातके विघ्ने रोगे शोके च दानवे ।
तेषामरिर्निहर्त्ता यः स कंसारिः प्रकीर्त्तितः ॥
रुद्ररूपेण संहर्त्ता विश्वानामपि नित्यशः ।
भक्तानां पालको यो हि हरिस्तेन प्रकीर्त्तितः ॥
कुण्ठं जडञ्च विश्वौघं विशिष्टञ्च करोति या ।
विकुण्ठां प्रकृतिं वेदाश्चत्वारश्च वदन्ति ताम् ॥
गुणाश्रयेण भगवान् तस्यां जातः स्वसृष्टये ।
परिपूर्णतमं तेन वैकुण्ठश्च विदुर्बुधाः । * ॥
यम् ।
तत् सर्व्वं सर्व्वभूतेशे मैत्रेय मधुसूदने ॥
कलाकाष्ठानिमेषादिदिनर्त्वयनहायनैः ।
कालस्वरूपो भगवानपरो हरिरव्ययः ॥
भूर्लोकोऽथ भुवर्लोकः स्वर्लोको मुनिसत्तम ! ।
महर्जनस्तपः सत्यः सप्त लोका इमे विभुः ॥
लोकात्ममूर्त्तिः सर्व्वेषां पूर्ब्बेषामपि पूर्ब्बजः ।
आधारः सर्व्वविद्यानां स्वयमेव हरिः स्थितः ॥
देवमानुषपश्वादिस्वरूपैर्ब्बहुभिर्विभुः ।
स्थितः सर्वेश्वरोऽनन्तो भूतमूर्त्तिरमूर्त्तिमान् ।
ऋचो यजूंषि सामानि तथैवाथर्व्वणानि च ।
इतिहासोपवेदाश्च वेदान्तेषु तथोक्तयः ॥
वेदाङ्गानि समस्तानि मन्वादिगदितानि च ।
शास्त्राण्यशेषाण्याख्यानान्यनुवादाश्चये क्वचित् ॥

| | | |
|---|---|---|
| तद्ददाति च यो देवो मुकुन्दस्तेन कीर्त्तितः ॥<br>मुकुं भक्तिरसप्रेमवचनं वेदसम्मतम् । | वामो विपत्तौ नश्छेदे साक्षाद्वेदेषु वर्त्तते ।<br>सुराणां विपदां छेत्ता वामनस्तेन कीर्त्तितः ॥<br>एवं नाम्नाञ्च सर्व्वेषां व्युत्पत्तिश्च श्रुतौ श्रुता ।<br>यथागमञ्च कथितं सर्व्वं जानाति माधवः ॥ * ॥<br>यशोदावाच ।<br>वासुदेवश्च गोविन्दो मुरारिर्माघवस्तथा ।<br>नाम्नां चतुर्णां व्युत्पत्तिं वद चान्यच्च तिष्ठतु ॥<br>राधिकोवाच ।<br>वसुः सर्व्वनिवासश्च विश्वानि यस्य लोमसु ।<br>स च देवः परं ब्रह्म वासुदेव इति स्मृतः ॥ १ ॥<br>गाञ्च विश्वसमूहञ्च विन्दते योऽवलीलया ।<br>ज्ञानसिन्धुसमूहञ्च मोविन्दस्तेन कीर्त्ततः ॥ २ ॥ | |

काव्यालापाश्च ये केचित्
गीतकान्यखिलानि च
सर्व्वमूर्त्तिधरस्यैते वपुर्विष्णोर्महात्मनः ॥
यान्यमूर्त्तानि मूर्त्तानि यान्यत्रान्यत्र वा
क्वचित् ।
सन्ति वै वस्तुजातानि तानि सर्व्वाणि
तद्वपुः ॥”
इति विष्णुपुणे १ अंशे २२ अध्यायः ॥
* ॥
हरि सान्निध्यस्थानानि यथा, --
भरद्वाज उवाच ।
“केषु केषु विभो नित्यं स्थानेषु
पुरुषोत्तम ! ।
सान्निध्यं भवतो ब्रूहि ज्ञातुमिच्छामि
तत्त्वतः ॥
वामन उवाच ।
श्रूयतां कथमिष्यामि येषु येषु गुरो ह्यहम्
।
निवसामि सुपुण्येषु स्थानेषु बहुरूपवान्
॥
ममावतारैर्हुर्ब्बधा नभःस्थलं
पातालमम्भोनिचयं दिवञ्च ।
दिशः समस्ता गिरयोऽम्बुदाश्च
व्याप्ता भरद्वाज ममानुरूपैः ॥
ये दिव्या ये च भौमा जलगगनचरा
स्थावरा
येऽत्र विश्वे
सेन्द्राः सार्काः सचन्द्रा यमवसुवरुणाः
साग्नयः
सर्व्वपालाः ।
ब्रह्माद्याः स्थावरान्ता द्विजखगसहिता
मूर्त्ति-
मन्तो ह्यमूर्त्ता-
स्ते सर्व्वे मत्प्रसूता बहुविविधगुणाः
पूरणार्थं
पृथिव्याः ॥
एते हि मुख्याः सुरसिद्धदानवैः
पूज्यास्तथा सन्निहिता महीतले ।
यैर्द्दृष्टमात्रैः सहसैव नाशं

वैकुण्ठमपि सह्याद्रौ पारिपात्रे पराजितम् ।
कशेरुदेशे देवेशं विश्वरूपं तपोधन ! ॥
मलयाद्रौ च सौगन्धिं बिन्ध्यपादे
सदाशिवम् ।
अवन्तिविषये विष्णुं निषेधेष्वमरेश्वरम् ॥
पाञ्चालिकञ्च ब्रह्मर्षे पञ्चालेषु व्यवस्थितम् ।
महोदये हयग्रीवं प्रयागे योगशायिनम् ॥
स्वयम्भुवं मधुवने अयोगन्धिञ्च पुष्करे ।
तथैव विप्रपवर वाराणस्याञ्च केशवम् ॥
अविमुक्तकमत्रैव लोलश्चात्रैव गीयते ।
पक्षायां पद्मकिरणं समुद्रे वडवामुखम् ॥
कुमारवने वाह्लीशं कार्त्तिकेयञ्च बर्हिणम् ।
यज्ञेशं शम्भुमनघं स्थाणुञ्च कुरुजाङ्गले ॥
वनमालिनमाहुर्म्मां किष्किन्धावासिनो
जनाः ।
वीरं कुवलयारूढं शङ्खचक्रगदाधरम् ॥
श्रीवत्साङ्कमुदाराङ्गं नर्म्मदायां श्रियः पतिम्
।
माहिष्मत्यां त्रिनयनं तत्रैव च हुताशनम् ॥
अर्व्वुदेषु त्रिसौपर्णं क्ष्माधरं शूकराचले ।
त्रिणाचिकेतं ब्रह्मर्षे प्रभासेषु कपर्द्दिनम् ॥
तथैवात्रापि विख्यातं तृतीयं शशिशेखरम् ।
उदये शशिनं सूर्य्यं ध्रुवञ्च त्रितयं स्थितम् ॥
मन्दरे यज्ञपुरुषं स्कन्दं शरवणे स्थितम् ।
महालये स्मृतं रुद्रं चत्वरेषु कुरुष्वथ ॥
पद्मनाभं मुनिश्रेष्ठ सर्व्वसौख्यप्रदायकम् ।
सप्तगोदावरे ब्रह्मन् विख्यातं हाटकेश्वरम् ॥
तत्रैव च महावासं प्रयागेऽपि वटेश्वरम् ।
भल्लीवने महायोगं मद्रेषु पुरुषोत्तमम् ॥
प्लक्षावतरणे श्रीमत्श्रीनिवासं द्विजोत्तमम् ।
सूर्पारके चतुर्ब्बाहुं मगधायां सुधापतिम् ॥
गिरिव्रजे पशुपतिं श्रीकण्ठं यमुनातटे ।
वनस्पतिं समाख्यातं दण्डकारण्यवासिना
॥
कालञ्जरे नीलकण्ठं शरय्वां शम्भुमुत्तमम् ।
हंसयुक्तं महाकौश्यां सर्व्वपापप्रणाशनम् ॥
गोकर्णे दक्षिणे सर्व्वं वासुदेवं प्रजामुखे ।
बिन्ध्यशृङ्गे महासौरिं कथायां मधुसूदनम् ॥
त्रिकूटशिखरे ब्रह्मांश्चक्रमाणिनमीश्वरम् ।

पाताले योगिनामीशं स्थितञ्च हरिशङ्करम् ।
धरातले कोकनदं मेदिन्याञ्चक्रपाणिनम् ॥
भुवर्लोके च गरुडं स्वर्लोके विष्णुमव्ययम् ।
मर्त्यलोके तथागस्त्यं कपिलञ्च जले
स्थितम् ॥
तपोलोके स्थितं ब्रह्मन् ! वाङ्मयं
सत्यसंयुतम् ।
ब्रह्माणं ब्रह्मलोके तु सप्तमे वै प्रतिष्ठितम् ॥
सनातनं तथा शैवे परं ब्रह्म च वैष्णवे ।
अप्रतर्क्यं निरालम्बे निराकाशे तपोमयम् ॥
जम्बद्वीपे चतुर्ब्बाहुं कुशद्वीपे कुशेशयम् ।
प्लक्षद्वीपे मुनिश्रेष्ठ ख्यातं गरुडवाहनम् ॥
पद्मनाभं तथा क्रौञ्चे शाल्मले वृषभध्वजम् ।
सहस्रांशुः स्थितः शाके धनराट् पुष्करे
स्थितः ॥
तथा पृथिव्यां ब्रह्मर्षे ! शालग्रामे
स्थितोऽस्म्य-
हम् ।
सजलस्थलपर्य्यन्तं चरेषु स्थावरेषु च ॥
एतानि पुण्यानि ममालयानि
ब्रह्मन् पुराणानि सनातनानि ।
धर्म्मप्रधानानि महौजसानि
संकीर्त्तनीयान्यघनाशनानि ॥
सङ्कीर्त्तनात् स्मरणाद्दर्शनाच्च
संस्पर्शनादेव च देवताद्याः ।
धर्म्मार्थकामान्यपवर्गमेव
लभन्ति दैत्या मनुजाः ससाध्याः ।
एतानि तुभ्यं विनिवेदितानि
ममालयानीह स्वनिष्ठितानि ॥”
इति वामनपुराणे स्वस्थानोक्तिर्न्नाम ८६ अः
॥
हरिहरयोरभेदो यथा, --
“या श्रीः सा गिरिजा प्रोक्ता यो हरिः स
त्रिलोचनः ।
एवं सर्व्वेषु शास्त्रेषु पुराणेषु च पठ्यते ॥
एतस्मादन्यथा यस्तु ब्रूते शास्त्रं पृथक् तया
।
तं नास्तिकं विजानीयात्
सर्व्वधर्म्मबहिष्कृतम् ।

प्रयाति पापं द्विजवर्य्य कीर्त्तितैः ॥”
इति वामने ८५ अध्यायः ॥ * ॥
आप च ।
श्रीभगवानुवाच ।
आद्यं मत्स्यं महद्रूपं संस्थितं मानसे ह्रदे
।
गर्व्वपापक्षयकरं कीर्त्तनस्पर्शनादिभिः ॥
कौर्म्ममन्यत् सन्निधानं कौशिक्यां
पापनाशनम् ।
हयग्रीवञ्च कृष्णाङ्गे गोविन्दं हास्तिने पुरे
॥
त्रिविक्रमञ्च कालिन्द्यां लिङ्गभेदे भवं
विभुम् ।
केदारे माधवं शौचं कुब्जाम्रे
कृष्णमूर्द्धजम् ॥
नारायणं वदर्य्याञ्च वाराहे गरुडासनम् ।
जयेशं रुद्रकर्णे च विपाशायां द्विजप्रियम्
॥
कृतशौचे नृसिंहञ्च गोकर्णे
विश्वकर्म्मिणम् ।
प्राचीने कामपालञ्च पुण्डरीकं महाम्भसि
॥
विशाखये च ह्यजितं हंसं हंसपदे तथा ।
पयोष्ण्याञ्च तमः खण्डं वितस्तायां
स्वरूविलम् ॥
मणिमत्पर्व्वते ब्रह्मन् ! ब्रह्माणञ्च
प्रजापतिम् ।
मधुनद्यां चक्रधरं शूलबाहुं हिमाचले ॥
विद्धि विष्णुं मुनिश्रेष्ठ स्थितमौषधसद्मनि
।
भृगुतुङ्गे सुवर्णाख्यं नैषधे प्रीतवाससम् ॥
गयायां गोपतिं देवं गदापाणिनमोश्वरम् ।
त्रैलोक्यनाथं वरदं गोप्रभावे कुशेशयम् ॥
अर्द्धनारीश्वरं पुण्ये महेन्द्रे दक्षिणे गिरौ ।
गोपालमुत्तरे नित्यं महेन्द्रे सोमपिण्डिनम्
॥

लौहदण्डे हृषीकेशं कौशलायां मनोहरम् ॥
महाबाहुं सुराष्ट्रे च नवराष्ट्रे यशोधरम् ।
भूधरं देविकानद्यां महोदायां कुशप्रियम् ॥
गोमत्यां छादितगदं शङ्खोद्धारे च शङ्खिनम् ।
सुनेत्रं सैन्धवारण्ये शूरं शूरपुरे स्थितम् ॥
भद्राक्षञ्च हिरण्वत्यां वीरभद्रं त्रिपिष्टपे ।
शङ्कुकर्णञ्च भीमायां भीमं शालवने विदुः ।
विश्वामित्रञ्च गदितं कैलासे वृषभध्वजम् ।
महेशं महिलाशैले कामरूपे शशिप्रभम् ॥
वडभ्यामपि गोमित्रं पटहे पङ्कजप्रियम् ।
उपेन्द्रं सिंहलद्वीपे शक्राख्ये कुन्दमालिनम्
॥
रसातले च विख्यातं सहस्रशिरसं मुने ! ।
कालाग्निरुद्रं तत्रैव तथान्यं कीर्त्तिवाससम्
॥
सुतले कूर्म्ममचलं वितले पङ्कजासनम् ।
महातले गुरो ख्यातं देवेशं छागलेश्वरम् ॥
तले सहस्रचरणं सहस्रभुजमीश्वरम् ।
सहस्राक्षं परिख्यातं मुषलाकृष्टदानवम् ॥

इति वाराहे सौभाग्यव्रतनामाध्ययः ॥ * ॥
ब्रह्मविष्णुमहेश्वरणामेकत्वं सत्त्वादिरूपञ्च
यथा, --
महेश्वर उवाच ।
“नारायणः परो देवः सत्त्वरूपो जनार्दनः ।
त्रिधात्मानं स भगवान् ससर्ज परमेश्वरः ॥
रजस्तमोभ्यां युक्तोऽभूद्रजःसत्त्वाधिकं विभुः
।
ससर्ज नाभिकमलात् ब्रह्माणं कमलासनम्
॥
रजसा तमसा युक्तं सोऽपि मां त्वसृजत्
प्रभुः ।
यत् सत्त्वं स हरिर्देवो यो हरिस्तत् परं पदम्
॥
ये सत्त्वरजसी सोऽपि ब्रह्मा कमलसम्भवः ।
यो ब्रह्मा सैव देवस्तु यो देवः स चतुर्म्मुखः
॥
यद्रजस्तमसोपेतं सोऽयं नास्त्यत्र संशयः ।
सत्त्वं रजस्तमश्चैव तृतीयं चैतदुच्यते ॥
सत्त्वेन मुच्यते जन्तुः सत्त्वं नारायणात्मकम्
।
न तस्मात् परतो देवो भविता न भविष्यति
॥
यो विष्णुः स स्वयं ब्रह्मा यो ब्रह्मा सोऽह-
मेव च ।
वेदत्रयेऽपि यज्ञेऽस्मिन् पण्डितेष्वेष निश्चयः
॥
यो भेदं कुरुतेऽस्माकं त्रयाणां द्विजसत्तम ।

स पापकारी दुष्टात्मा दुर्गतिं समवप्नुयात् ॥
इति तत्रेव रुद्रगीतानामाध्यः ॥ * ॥
तद्गुणा यथा, --
"ब्रह्मादयः सुराः सर्व्वेये चान्ये देवदानवाः ।
मनुष्याः पक्षिवृक्षाद्याः सर्व्वे तद्ब्रह्मसंभवा ॥
तत्र योऽसौ परो देवो व्यापदो मुनिमत्तम ।
निर्लक्षो ह्यचलः सूक्ष्मः कारणैः परिवर्जितः ॥
अनौपम्यस्त्वनिर्द्देश्यो ह्यक्षरादक्षरं परम् ।
निष्प्रपञ्चो निरालम्बो विषयातीतगोचरः ॥
सर्व्वज्ञः सर्व्वकर्त्ता च प्रत्यज्ञं सर्व्वदाक्षरम् ।
अनामा नामकोटीनां गीयते तदने कधा ॥
अगम्यमथवा गम्यमदृश्यं दृश्यमेव च ।
अस्वरं स्वरसंयुक्तमघोषं घोषरूपकम् ॥
सकलं निष्कलं चैव निर्म्मलं मलसंयुतम् ।
हरिमेतद्गुणैर्युक्तं मया ते परिकीर्त्तितम् ॥ * ॥
मरीचिरुवाच ।
अक्षयं चाव्ययं चैव यद्ब्रह्मे ते प्रकीर्त्तितम् ।
कथं तस्य विनाशोऽस्ति सर्व्वज्ञः केन हेतुना ॥
अगम्यं कीर्त्तितं वह्ने गम्यं चैव कथं भवेत् ।
अवर्णञ्च समाख्यातं वर्णयुक्तं हि कारणम् ॥
अस्वरं स्वरसंयुक्तं कथं तद्गम्यते हरिः ।
अप्रमाणं त्वया प्रोक्तं प्रमाणञ्च कथं भवेत् ॥
अनादेस्तु कयं चादिर्लभ्यते किं विभावसो ।
कथयस्वविशेषेण येन सम्पद्यते सुखम् ॥ * ॥
वह्निरुवाच ।
स्थावरं जङ्गमञ्चैव अण्डजं स्वेदजं तथा ।
विनश्यन्तीह भूतानि विनाशी तेन कथ्यते ॥
अगम्यमप्रबुद्धानां कामाद्यासक्तचेतसाम् ।
स्वकर्म्मविनिवृत्तानां गम्यं तच्छुभकर्म्मणा ॥
ज्ञानचक्षुर्विहीनानामदृश्यं सर्व्वजन्तुषु ।
ज्ञानचक्षुःसमायुक्ताः ख्यितं पश्यन्ति नित्यशः ॥
अन्धकारे यथा दीपो दर्शयेत् गृहमेधिनाम् ।
विद्याचक्षुस्तथा विप्रो दर्शयेत् परमं पदम् ॥
ये नरा वेद सिद्धान्तैर्ब्बोधिता गुरुणा च ये ।
अनेकरूपसंयुक्तं पश्यन्ति परमेश्वरम् ॥
ये स्वकर्म्मतपोहीनविषयासक्तचेतसः ।
वर्णरूपं न जानन्ति वेदसिद्धान्तवर्जिताः ।

नामाध्याये क्रियायोगनामाध्यायेच द्रष्टव्यम् ।
तस्य यमाष्टकस्तोत्रं नृसिंहपुराणे ९ अध्याये
तत्पूजायां द्रव्यविशेषदानफलञ्च तत्रैव ३२ अध्याये द्रष्टव्यम् ॥ * ॥ शिवस्य हरेराराधन-
प्रमाणं यथा, --
ब्रह्मोवाच ।
"अहं गतोऽद्रिं कैलासमिन्द्राद्यैर्द्दैवतैः सह ।
तत्र दृष्टो महारुद्रो ध्यायमानः परं पदम् ॥
पृष्टो नमस्कृतो देवः किं त्वं ध्यायसि शङ्कर ।
त्वत्तो नान्यं परं देवं जानामि ब्रूहि मां ततः ।
सारात् सारतरं तत्त्वं श्रोतुकामः सुरैः सह ॥
रुद्र उवाच ।
अहं ध्यायामि तं विष्णुं परमात्मानमीश्वरम्।
सर्व्वगं सर्व्वदं सर्व्वं सर्व्वप्राणिहृदि स्थितम् ॥
भस्मोद्धूनितदेहस्तु जटामण्डलमण्डितः ।
विष्णोराराधनार्थं मे व्रतचर्य्या पितामह ॥
तमेव गत्वा पृच्छामः सारं यच्चिन्तयास्यहम्।
विष्णुं जिष्णुं पद्मनाभं हरिं देहविवर्ज्जितम् ॥
शुचिं शुचिपदं हंसं तत्परं परमेश्वरम् ।
युक्त्वा सर्व्वात्मनात्मानं तं देवं चिन्तयाम्यहम् ॥
यस्मिन् विश्वानि भूतानि तिष्ठन्ति च विशन्ति च ।

तद्भक्तिर्यथा, --
सूत उवाच ।
"विष्णुभक्तिं प्रवक्ष्यामि यया सर्व्वमवाप्यते ।
यथा भक्त्या हरिस्तुष्येत्तथा नान्येन केनचित् ॥
महतः श्रेयसो मूलं प्रसवः पुण्यसन्ततेः ।
जीवितस्य फलं स्वादु ददाति स्मरणं हरेः ।
भज इत्येष बै धातुः सेवायां परिकीर्त्तितः ।
तस्मात् सेवा बुधैः प्रोक्ता भक्तिसाधनभूयसी ॥
ते भक्ता लोकनाथस्य नामकर्म्मादिकीर्त्तने ।
मुञ्चन्त्यश्रूणि संहर्षात् ये च हृष्टतनूरुहा ॥
जगद्धातुर्म्महेशस्य दिव्याज्ञाचरणाव्ययाः ।
इह नित्यक्रियाः कुर्य्युः स्निग्धा ये वैष्णवास्तु ते ॥
प्रणामपूर्ब्बकं क्षान्त्या यो वदेत् वैष्णवो हि सः ।
तद्भक्तजनवात्सल्यं पूजायाञ्चानुमोदनम् ॥
तत्कथाश्रवणे प्रीतिः स्वरनेत्राङ्गविक्रिया ।
येन सर्व्वात्मना विष्णौ भक्त्या भावो निवेशितः ॥
विप्रेष्वीश्वरदृष्टिश्च महाभागवतो हि सः ।
विष्णोश्च कारणं नित्यं तदन्नं दम्भवर्ज्जितम् ॥
स्वयमभ्यर्च्चनञ्चैव यो विष्णुं वोपजीवति ।
भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्त्तते ॥
स विप्रेन्द्रो मुनिः श्रीमान् स जातः स च

भ्रान्तिं पश्यन्ति सर्व्वत्र सविकल्पाश्च मानवाः ॥
जीवाख्यं वर्णनिर्मुक्तं शून्यसंज्ञन्तु कथ्य ते ॥
यदा वर्णसमायुक्तस्तदा वर्णस्तु जायते ॥
स्वरं तु गृह्णते यावत्तावद्धोषस्तु कीर्त्त्यते ।
बिन्दुहीनस्तु निर्घोषो निराकारः स एव तु ॥
यदा सृजति भूतानि प्रकृतिस्थो हरिः स्वयम् ।
तावत् कर्त्ता स वै ज्ञेयः कर्त्ता प्रकृतिवर्जितः ॥
नासारन्ध्रेण निर्याति अङ्गुलानि दशद्वयम् ॥
निर्म्मलः स विभुर्ज्ञेयः समलो देहवर्द्धितः ॥
अप्रमाणं भवेत्तावत् यावत् शास्त्रं न विन्दति ।
शास्त्रज्ञानमधीते यः प्रमाणं तस्य लभ्यते ॥
तेन सर्व्वमिदं विश्वं व्यापितं सचराचरम् ।
सूक्ष्मः सर्व्वगतस्तृप्तो लक्षणोपायवर्ज्जितः ॥"
इत्याद्ये वह्निपुराणे सर्गकथननामाध्यायः ॥ * ॥
पूजितविष्णुदर्शनादिफलं वह्निपुराणे शुद्धिव्रत-

गुणभूतानि भूतेशे सूत्रे मणिगणा इव ॥
सहस्राक्षं सहस्राङ्घ्रिं सहस्रोरुकराननम् ।
अणीयसामणीयांसं स्थविरञ्च स्थवीयसाम् ॥
गरीयसां गरिष्ठञ्च श्रेष्ठञ्च श्रेयसामपि ।
यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ॥
गृणन्ति सत्यकर्म्माणं सत्यं सत्येषु साममु ।
पुराणे पुरुषः प्रोक्तो ब्रह्म प्रोक्तो द्विजादिषु ॥
क्षये सङ्कर्षणः प्रोक्तस्तमुपास्यमुपास्महे।
यस्मिन् लोकाः स्फुरन्तीमे जले शकुनयो यथा ॥
ऋतमेकाक्षरं ब्रह्म यत्तत् सदसतः परम् ।
अर्च्चयन्ति च यं देवा यक्षराक्षसकिन्नराः ॥
यस्याग्निरास्यं द्यौर्मूर्द्धा खं नाभिश्चरणौ क्षितिः ।
चन्द्रादित्यौ च नयने तं देवं चिन्तयास्यहम् ॥
यस्य त्रिलोकौ जठरे यस्य काष्ठाः सुबाहवः ।
यस्योच्छासश्च पवनस्तं देवं चिन्तयाम्यहम् ॥
यस्य कुशेषु जीमूता नद्यः सर्व्वाङ्गसन्धिषु ।
कुक्षौ समुद्राश्चत्वारस्तं देवं चिन्तयाम्यहम् ॥
परः कालात् परो यज्ञात् परः सदमदश्च यः ।
अनादिरादिर्विश्वस्य तं देवं चिन्तय म्यहम् ॥
मनसश्चन्द्रमा यस्य चक्षुषश्च दिवाकरः ।
मुखादग्निश्च संजज्ञे तं देवं चिन्तयाम्यहम् ॥
पद्भ्यां यस्य क्षितिर्ज्जाता श्रोत्राभ्याञ्च तथा
दिशः ।

पण्डितः ।
तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा हरिः ॥
स्मृतः संभाषितो वापि पूजितो वा द्विजोत्तमः ।
पुनाति भगवद्भक्तश्चण्डालोऽपि यदृच्छया ॥
प्रणताय प्रपन्नाय तवास्मीति च यो वदेत् ।
अभयं सर्व्वभूतेभ्यो दद्यादेतद्व्रतं हरेः ॥
मन्त्रयाजिसहस्रेभ्यः सर्व्ववेदान्तपारगाः !
सर्व्ववेदान्तवित्कोट्या विष्णुभक्तो विशिष्यते ॥
ऐकान्तिकाश्च पुरुषाः गच्छन्ति परमं पदम् ।
ऐकान्तिना समो विष्णुर्यस्मादेषां परायणः ।
तस्मादेकान्तिनः प्रोक्तास्तद्भागवतचेतसः ।
प्रियाणामपि सर्व्वेषां देवदेवस्य स प्रियः ।
आपत्स्वपि सदा यस्य भक्तिरव्यभिचारिणी ।
या प्रीतिरविवेकानां विषयेष्वनपायिनी ।
विष्णुं संस्मरतः सा मे हृदयान्नोपसर्पतु ॥
अन्तर्गतोऽपि वेदानां सर्व्वशास्त्रार्थवेद्यपि ।
यो न सर्वेश्वरे भक्तस्तं विद्यात् पुरुषाधमम् ॥
नाधीतवेदशास्त्रोऽपि न कृतं चापसव्यवत् ।
यो भक्तिं वहते विष्णौ तेन सर्व्वं कृतं भवेत् ॥
यज्ञानां क्रतुमुख्यानां सर्व्वेषां पारगा अपि ।
न तां यान्ति गतिं भक्त्या यां यान्ति मुनिसत्तम ॥
यः कश्चित् वैष्णवो लोके मिथ्याचारोऽप्यना-

| | | |
|---|---|---|
| | मूर्द्धभागाद्दिवं यस्य तं देवं चिन्तयाम्यहम् ॥<br>सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।<br>वंशानुचरितं यस्मात् तं देवं चिन्तयाम्यहम् ॥<br>यं तं ध्यायाम्यहं यस्माद्व्रजामः सार-मीक्षितुम् ॥”<br>इति गारुडे । २ । ९ -- २७ ॥ | श्रमी ।<br>पुनाति सकलान् लोकान् सहस्रांशुरिवोदितः ॥<br>ये नृ शसा दुरात्मानः पापाचाररतास्तथा ।<br>तेऽपि यान्ति परं स्थानं नारायणपरायणाः ॥<br>दृढा जनार्द्दने भक्तिर्यदैवाव्यभिचारिणी ।<br>तदा कियत् स्वर्गसुखं सैव निर्व्वाणहैतुकी ॥<br>भ्राम्यतां तत्र संसारे नराणां कर्म्मदुगमे ।<br>हस्तावलम्बनो ह्येको भक्तितुष्टो जनार्द्दनः ॥<br>न श‍ृणोति गुणान् दिव्यान् देवदेवस्य चक्रिणः |

स नरो वधिरो ज्ञेयः सर्व्वधर्म्मबहिष्कृतः ॥
नाम्नि संकोर्त्तिते विष्णोर्यस्य पुंसो न जायते ।
शरीरं पुलकोद्भासि तद्भवेत् कुणपोपसम् ॥
यस्मिन् स्मृते द्विजश्रेष्ठ !
मुक्तिरप्यचिराद्भवेत् ।
विष्णौ निविष्टमनसां किं पुनर्वृजिनक्षयः ॥
स्वपुरुषमभिवोक्ष्य पाशहस्तं
वदति यमः किल तस्य कर्णमूले ।
परिहर मधुसूदनप्रपन्नान्
प्रभुरहमन्यनृणां न वैष्णवानाम् ॥
अपि चेत् सुदुराचारो भजते
मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥
क्षिप्रं भवति धर्म्मात्मा शश्वच्छान्तिं
नियच्छति ।
विप्रेन्द्र ! प्रतिजानीहि विष्णुभक्तो न नश्यति ॥
धर्म्मार्थकामैः किन्तस्य मुक्तिस्तस्य करे स्थिता ।
समस्तजगतां मूले यस्य भक्तिः स्थिरा हरौ ॥
दैवी ह्येषा गुणमयी हरेर्म्माया दुरत्यया ।
तमेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥
कियदाराधने पुसां शिष्यते हरिमेधसः ।
भक्त्यैवाराध्यते विष्णुर्नान्यं
तत्रोपकारकम् ॥
न दानैर्व्विविधैर्दत्तैर्न पुष्पैर्नानुलेपनैः ।
तोषमेति महात्मासौ यथा भक्त्या
जनार्द्दनः ॥
संसारविषवृक्षस्य द्वे फले ह्यमृतोपमे ।
कदाचित् केशवे भक्तिस्तद्भक्तैर्व्वा
समागमः ॥
पत्रेषु पुष्पेषु फलेषु सत्सु
तोयेषु लभ्येषु सदैव सत्सु ।

ब्रह्महत्यासहस्राणि ज्ञानाज्ञानकृतानि च ॥
स्वर्णस्तेयसुरापानगुरुतल्पायुतानि च ।
कोटिकोटिसहस्राणि ह्युपपापानि यानि च ॥
सर्व्वाण्यपि प्रणश्यन्ति पौर्णमास्यान्तु वासरे ।
अभिषिञ्चेच्च तन्मूर्द्ध्नि तदेतत्
कलसोदकम् ॥
पुरुषसूक्तेन मन्त्रेण पावमानी ऋचा तथा ।
नारिकेलोदकेनाथ तथा तालफलाम्बुना ॥
रत्नोदकेन गन्धेन तथा पुष्पोदकेन च ।
पञ्चोपचारैराराध्य यथाविभवविस्तरैः ॥
घं घण्टायै नम इति घण्टावाद्यं निवेदयेत् ॥
पादे तस्य महाध्वानं ध्वस्तपातकपञ्चके ।
पाहि मां पापिनं घोरं संसारार्णवपातितम् ॥
य एवं कुरुते विद्वान् ब्राह्मणः श्रोत्रियः शुचिः ।
सर्व्वपापैः प्रमुच्येत विष्णुलोकं स गच्छति ॥ १ ॥
आषाढशुक्लै कादश्यां कुर्य्यात्
स्वापमहोत्सवम् ।
आषाढे च रथं कुर्य्यात् श्रावणे श्रवणा-
विधिम् ॥ २ ॥ ३ ॥
भाद्रे च जन्मदिवसे उपवासपरो भवेत् । ४ ।
प्रसुप्तञ्च पारिवर्त्तमाश्विने मासि कारयेत् ॥
उत्थानञ्च हरेः कुर्य्यादन्यथा विष्णुद्रोहकृत् ।
शुभे चैवाश्विने मासि महामायां प्रपूजयेत् ॥ ५ ॥
कार्त्तिके मासि यत् कृत्यं शृणु देवि वरानने ! ।
सप्तवर्त्याः प्रमाणेन दीपः स्याच्चतुरङ्गुलः ॥
पक्षान्ते च प्रकर्त्तव्या दीपमालावलिः शुभा ॥ ६ ॥
मार्गशीर्षे सिते पक्षे षष्ठ्याञ्च सितवस्त्रकैः ।
पूजयेज्जगदीशञ्च तूलवस्त्रैर्विशेषतः ॥ ७ ॥
पौषे पुण्याभिषेकञ्च वर्ज्जयेच्चन्दनं यथा ॥ ८ ॥
संक्रान्त्यां माघमासे च
साधिवासिततण्डुलान् ।

अन्यैर्व्वा रङ्गरम्यैश्च प्रीणयेत् परमेश्वरम् ॥
एकादश्यां समारभ्य पञ्चम्यन्तं समापयेत् ॥
पञ्चाहानि त्र्यहाणि स्युर्दोलोत्सवो
विधीयते ।
दक्षिणाभिमुखं कृष्णं दोलयानं सकृन्नराः ॥
दृष्ट्वावराधनिचयैर्म्मुक्तास्तु नात्र संशयः ॥ १० ॥
निःक्षिप्य जलमात्रे तु मासे माधवसंज्ञिते ।
सौवर्णपात्रे ताम्रे वा रौप्ये वा मृण्मयेऽपि वा ॥
तोयस्थं योऽर्च्चयेद्देवं शालग्रामसमुद्भवम् ।
प्रत्यहं मां महाभागे तस्य पुण्यं न गण्यते ॥
दमनारोपणं कृत्वा श्रीविष्णौ च समर्पयेत् ।
वैशाख्यां श्रावणे भाद्रे कर्त्तव्यञ्च तदर्पणम् ॥ ११ ॥
वैशाखे च तृतीयायां जलमध्ये विशेषतः ।
अथवा मण्डपे कुर्य्यात् मण्डले वा
वृहद्ध्वुजे ॥
सुगन्धचन्दनेनाङ्गं सुपुष्टाङ्गो दिने दिने ।
यथा प्रयत्नतः कार्य्यः कृशाङ्गो नैव
पूजितः ॥
चन्दनागुरुकस्तूरीकुष्ठं कुङ्कुमरोचना ।
जटामांसी वचा चैव विष्णोर्गन्धाष्टकं तथा ।
एतैर्गन्धयुतैश्चापि अङ्गानि च विलेपयेत् ॥
घृष्टञ्च तुलसीकाष्ठं कर्पूरागुरुयोगतः ।
अथवा केशरैर्योज्यं हरिचन्दनमच्युते ॥
अस्मिन् काले कृष्णभक्त्या ये प्रपश्यन्ति
मानवाः ।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥
सुगन्धिमिश्रितैस्तोयैः स्नापयित्वा जगद्-
गुरुम् ।
अथवा पुष्पमध्यं च स्थापयेज्जगदीश्वरम् ॥
वृन्दावनं तत्र कृत्वा उपस्कृतफलानि च ।
विष्णुभक्तेन योग्येन भोजयेत्तदशेषतः ॥
नारिकेलं फलं नीर कोषञ्चोद्धृत्य दापयेत् ।

भक्त्यै कलभ्ये पुरुषे पुराणे
मुक्त्यै कथं नु क्रियते प्रयत्नः ॥
आस्फोटयन्ति पितरः प्रनृत्यन्ति
पितामहाः ।
वैष्णवोऽस्मत्कुले जातः स नः
सन्तारयिष्यति ।
अज्ञानिनः सुरवरं समधिक्षिपन्ति
ये पापिनोऽपि शिशुपालसुयोधनाद्याः ।
मुक्तिं गताः स्मरणमात्रविधूतपापः
कः संशयः परमभक्तिमतां जनानाम् ॥
शरणं तं प्रपन्ना ये ध्यानयोगविवर्ज्जिताः
।
तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं
पदम् ॥
भवोद्भवक्लेशशताहतस्तथा
परिभ्रमन्निन्द्रियबन्धकैः पथैः ।
नियम्यतां माधव ! मे मनोहय-
स्त्वदङ्घ्रिशङ्कौ दृढभक्तिबन्धने ॥
विष्णुरेव पर ब्रह्म ह्यभेद इह पट्यते ।
वेदसिद्धान्तमार्गेषु तं न जानन्ति
मोहिताः ॥
वसति हृदि सनातने च तस्मिन्
भवति पुमान् जगतोऽस्य सौम्यरूपः ।
क्षितिपसुमतिरम्यमात्मनोऽन्तः
कथयति चारुतयैवमालपते ॥”
इति गारुडे भगवद्भक्तिः २३१ अध्यायः
॥ * ॥
तस्य नमस्कारादिकं तत्रैव २३२ ।
२३३ । २३४
अध्यायेषु द्रष्टव्यम् ॥ * ॥ तस्य
द्वादशमासकृत्यं
यथा, --
“मासकृत्यं प्रवक्ष्यामि विष्णोः प्रीतिकरं
परम् ।
ज्यैष्ठे तु स्नापनं कुर्य्यात् श्रीविष्णोः
स्नानवासरे ॥
दैनन्दिनन्तु दुरितं पक्षमासाहवर्षजम् ।
निवेद्य विष्णवे भक्त्या इमं मन्त्रमुदीरयेत् ॥
जीवनं सर्व्वभूतानां जनकस्त्वं जगद्गुरो ! ।
त्वन्मायालीनतां प्राप्ता त्वयैव जनिता प्रभो !
॥
कर्पूराकृतिद्रव्याणि घृताक्तानि निवेदयेत् ।
ब्राह्मणान् भोजयेद्भक्त्या देवदेवपुरस्थितान्
॥
अभ्यर्{??} भगवद्भक्त्या द्विजांश्च
भगवद्धिया ।
एकस्मिन् भोजिते भक्ते कोटिर्भवति भक्तितः
।
विप्रभोजनमात्रेण व्यङ्गं साङ्गं भवेत् ध्रुवम् ॥
पञ्चम्यां शुक्लपक्षे तु स्नापयित्वा च केशवम्
।
पूजयेद्भगवद्भक्त्या चूतपल्लवसम्मितैः ॥ ९ ॥
फल्गुचूर्णैश्च विविधैर्व्वासितैः पटवासितैः ।
काननं रमणीयञ्च प्रदीप्तदीपदीपितम् ॥
द्राक्षेक्षुरम्भाजम्वीरनागरङ्गकपूगकम् ।
नारिकेलञ्च धात्री च वंशतालहरीतकी ॥
अन्यैश्च वृक्षषण्डैश्च सर्व्वर्त्तुकुसुमाचितम् ।
पुष्पैश्च विविधैश्चैव फलपुष्पसमन्वितम् ॥
वितानैः कुसुमोद्यानैर्व्वारिपूर्णघटैस्तथा ।
चूतशाखोपशाखाभिः शोभितं छत्रचामरैः ॥
विशेषतः कलियुगे दोलोत्सवो विधीयते ।
फाल्गुने च चतुर्द्दश्यामष्टमे यामसंज्ञके ॥
अथवा पौर्णमास्यान्तु प्रतिपत्सन्धिसम्मितौ
।
पूजयेद्विधिवद्भक्त्या फल्गुचूर्णैश्चतुर्व्विधैः ॥
सितरक्तैर्गौरपीतैः कर्पूरादिविमिश्रितैः ।
हरिद्राक्षारयोगाच्च रङ्गरम्यैर्म्मनोहरैः ॥
कण्टाफलञ्च पनसं कोषमुद्धृत्य दीयते ॥
यथा पचेत्तथा दद्याद्यथाशक्तिनियोगतः ।
दध्ना विमिश्रितञ्चान्नं घृतेनाप्लुत्य दापयेत्
॥
पाचितं पिष्टकं धातुरष्टादश घृतेन च ।
तिलैश्च तिलसंमिश्रैः फलं शुद्धञ्च दापयेत्
॥
यद्यदेवात्मनः श्रेयस्तत्तदीशाय कल्पयेत् ।
दत्त्वा नैवेद्यवस्त्रत्तादीन्नाददीत कथञ्चन ॥
त्यक्तव्यं विष्णुमुद्दिश्य तद्भक्तेभ्यो विशेषतः
।
इति ते कथितं किञ्चित् समासेन
महेश्वरि ! ।
गोप्तव्यञ्च प्रयत्नेन स्वयोनिरिव पार्व्वति !
॥ १२ ॥
श्रीकृष्णरूपगुणवर्णनशांस्त्रवर्गे
बोधाधिकार इह चेदलमन्यपारैः ।
तत्प्रेमभावबलभक्तिविलासनाम्-
हासेषु चेद्यदि रतिः किमु कामिनीभिः ॥
तञ्चेतसा विभजतां व्रजबालकेन्द्र
वृन्दावनं क्षितितलं यमुनाजलञ्च ।
तल्लोकनाथपद पङ्कजधूलिभिश्चे-
ल्लिप्तं वपुः किल वृथागुरुचन्दनाद्यैः ॥”
इति पाद्मे पातालखण्डे १२ अध्यायः ॥

**हरिः**, त्रि, (हरति नेत्रदुःखमिति । हृ + इन् ।)
पिङ्गलवर्णः । हरिद्वर्णः । इति मेदिनी ॥
(यथा
रघुः । ३ । ४३ ।
“शतैस्तमक्ष्णामनिमेषवृत्तिभि-
र्हरिं विदित्वा हरिभिश्च वाजिभिः

अवोचदेनं गगनस्पृशा रघुः
स्वरेण धीरेण निवर्त्तयन्निव ॥”)
पीतवर्णः । इत्यनेकार्थकोषः ॥

**हरिकः**, पुं, (हरिरेव । हरि + स्वार्थे संज्ञायां

वा कन् ।) पीतहरितवर्णाश्वः ।
तत्पर्य्यायः ।
हालकः २ । इति हेमचन्द्रः ॥ चौरः ।
अक्ष-
क्रीडकः । इति केचित् ॥

**हरिकेलीयः**, पुं, (हरिकेलिमर्हतीति । हरिकेलि

+ छः ।) वङ्गदेशः । इति हेमचन्द्रः ।
तद्दे-
शस्थे, त्रि ॥

**हरिकेशः**, पुं, (हरिः पिङ्गलः केशो यस्य ।)

शिवः । इति केचित् ॥ (यथा,
महाभारते ।
१३ । १७ । ४४ ।
“दीर्घश्च हरिकेशश्च सुतीर्थः कृष्ण
एव च ॥”
विष्णुः । यथा, महाभारते । ६ । ६२ ।
५० ।
“महोरग वराहाद्य हरिकेश विभो ! जय
॥”)
शिवभक्तयक्षविशेषः । स तु
शिवप्रसादात् दण्ड-
पाणित्वं क्षेत्रपालत्वादिकञ्च प्राप्तवान् ।
यथा,
“एवमुक्त्वा ततो देवः सह देव्या
जगत्पतिः ।
जगाम यक्षो यत्रास्ते कृशो
धमनिसन्ततः ।
तं दृष्ट्वा प्रणतं भक्त्या हरिकेशं
वृषध्वजः ।
दिव्यं चक्षुरदात्तस्मै यैनापश्यत् स
शङ्करम् ॥
सूत उवाच ।

पृथक् नामानीत्यन्ये । तथा च तिलस्येव पर्ण-
मस्य तिलपर्णो वृक्षभेदः ततो जातं तैलपर्णि-
कम् । धवलं सुशीतलं चन्दनं तैलपर्णिकम् ।
गोः शीर्षं गोशीर्षं तदाकारे मलयैकदेशे जातं
गोशीर्षम् । कालताम्रव्यामिश्रवर्णमुत्पलगन्धि
अतिसुरभि शीतलतया सदैव सर्षैर्वेष्टितं गो-
शीर्षम् । कपिलवर्णत्वात् हरि च तच्चन्दन-
ञ्चेति हरिचन्दनम् । हरेरिन्द्रस्य चन्दनं वा ।
हरिर्मण्डूकस्तदाकारे पर्व्वतभागे जातत्वाद्वा
हरिचन्दनम् । इति भरतः ॥ तत्पर्य्यायान्तरं
सुरार्हम् २ हरिगन्धम् ३ इन्द्रचन्दनम् ४
दिव्यम्
५ दिविजम् ६ महागन्धम् ७ नन्दनजम् ८
लोहितजम् ९ । हरिचन्दनं कोकणे प्रसि-
द्धम् । अस्य गुणाः ।
“हरिचन्दनन्तु दिव्यं हिमं तदिह दुर्व्वहं मनुजैः
।
पित्ताटोपविलोपि वमथुभ्रमशोषमान्द्यमेदो-
हृत् ॥”
इति राजनिर्घण्टः ॥ * ॥
(पीतचन्दनम् । कलम्व इति लोके ।
“कालीयकन्तु कालीयं पीताभं हरिचन्दनम् ।
हरिप्रियं कालसारं तथा कालानुसार्य्यकम् ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
पारिभाषिकहरिचन्दनं यथा, --
“घृष्टञ्च तुलसीकाष्ठं कर्पूरागुरुयोगतः ।
अथवा केशरैर्योज्यं हरिचन्दनमुच्यते ॥”
इति पाद्मे पातालखण्डे १२ अध्यायः ॥

**हरिचन्दनं**, क्ली, (हरिचन्दनं तद्वद्वर्णोऽस्त्यस्येति ।

अच् ।) ज्योत्स्ना । कुङ्कुमम् । इति मेदिनी ॥
पद्मकेशरम् । इति हलायुधः ॥ कान्ताङ्गम् ।
इति शब्दरत्नावली ॥

**हरिणः**, पुं, (हरति मनः ह्रियते गीतादिना वा ।

हृ + “श्यास्त्याहृञविभ्य इनच् ।” उणा० २ ।
४६ । इति इन्च ।) स्वनामाख्यातपशुः ।
तत्प-
र्य्यायः । मृगः २ कुरङ्गः ३ वातायुः ४
अजिन-

अन्यच्च ।
“कुरङ्गो वृंहणो बल्यः शीतलः
पित्तहृद्गुरुः ।
मधुरो वातहृद् ग्राही किञ्चित्कफकरो मतः
॥”
इति भावप्रकाशः ॥ * ॥
हरिणस्य पञ्चभेदो यथा, --
“हरिणश्चापि विज्ञेयः पञ्चभेदोऽत्र भैरव ।
ऋष्यः खड्गो रुरुश्चैव पृषतश्च मृगस्तथा
।
एते बलिप्रदानेषु चर्म्मदाने च कीर्त्तिताः ॥”
इति कालिकापुराणे ६६ अध्यायः ॥ * ॥
शुक्लवर्णः । विष्णुः । शिवः । (यथा, महा-
भारते । १३ । १७ । ११९ ।
“आषाढश्च सुषाढश्च ध्रुवोऽथ हरिणो हरः
॥”)
सूर्य्यः । हंसः । इति केचित् ॥ (ऐरावत-
वंशोद्भूतनागविशेषः । यथा, महाभारते । १
।
५७ । ११ ।
“पारावतः पारिजातः पाण्डरो हरिणः
कृशः ।
विहङ्गः शरभो मेदः प्रमोदः संहतापनः ।
ऐरावतकुलादेते प्रविष्टा हव्यवाहनम् ॥”)
पाण्डुवर्णः । तद्युक्ते, त्रि ॥ इत्यमरः । १ ।
५ । १३ ॥
(यथा, महाभारते, । १ । १ । १३५ ।
“स भोगान् विविधान् भुञ्जन् रत्नानि विवि-
धानि च ।
कथितो धृतराष्ट्रस्य विवर्णो हरिणः कृशः
॥”)

**हरिणनर्त्तकः**, पुं, (हरिण इव नृत्यतीति । नृत् +

ण्वुल् ।) किन्नरः । इति शब्दरत्नावली ॥

**हरिणहृदयः**, त्रि, (हरिणस्येव भीतं हृदयं

यस्य ।) भीरुः । इति शब्दरत्नावली ॥

**हरिणाक्षी**, स्त्री, हट्टविलासिनीनामगन्धद्रव्यम् ।

इति शब्दचन्द्रिका ॥ (हरिणस्य अक्षिणीव

अथ यक्षस्तदा तत्र शनैरुम्मील्य चक्षुषी ।
अपश्यत् स शिवं देवं वृषं श्वेतमुपाश्रितम् ॥
देव उवाच ।
जरामरणनिर्म्मुक्तः सर्व्वशोकविवर्ज्जितः ।
भविष्यसि गणाध्यक्षो वरदः सर्व्वपूजितः ॥
अजेयश्चापि लोकानां योगैश्वर्य्यसमन्वितः ।
अन्नदश्चापि लोकेभ्यः क्षेत्रपालो भविष्यसि ॥
महाबलो महासत्त्वो ब्रह्मण्यो मम च प्रियः ।
त्र्यक्षश्च दण्डपाणिश्च महायोगी तथैव च ॥
उद्भ्रमः सम्भ्रमश्चैव गणौ ते परिचारकौ ।
तवाज्ञया करिष्येते लोकस्योद्भ्रमसम्भ्रमौ ॥”
इति मात्स्ये । १० । ८८ -- ९० ९६ -- ९९ ॥

**हरिक्रान्ता** स्त्री, (हरिणा क्रान्ता ।) विष्णुक्रान्ता । इति राजनिर्घण्टः ॥

**हरिर्गृहं**, क्ली, (हरेर्गृहम् ।) हरेरालयः । पुरीविशेषः । तत्पर्य्यायः । एकचक्रम् २ शुम्भपुरी ३ । इति त्रिकाण्डशेषः ॥

**हरिचन्दनं**, पुं, क्ली, (हरेरिन्द्रस्य प्रियं चन्दनम् ।) देवतरुविशेषः यथा, --
“पञ्चैते देवतारवो मन्दारः पारिजातकः ।
सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥”
इति स्वर्गवर्गे अमरः । १ । १ । ५३ ॥
देवभूमावेव सम्भवात् देवतरुः । चन्दयति आह्लादयति चन्दनं चदि आह्लादे दीप्तौ योनिः ५ । इत्यमरः । २ । ५ । ८ ॥ सारङ्गः ६
चलनः ७ पृषत् ८ भीरुहृदयः ९ मयुः १० । इति जटाधरः ॥ चारुलोचनः ११ जिनयोनिः १२ कुरङ्गमः १३ ऋष्यः १४ ऋश्यः १५ रिष्यः
१६ रिश्यः १७ एणः १८ एणकः १९ । इति शब्दरत्नावली ॥ कृष्णतारः २० सुलोचनः २१
पृषतः २२ । अस्थ मांसगुणाः ।
“एणस्य मांसं लघु शीतवृष्यं
त्रिदोषहृत् षड्रसदञ्च रुच्यम् ।
कुरङ्गमांसं मधुरञ्च यद्वत्
कफापहं पित्तहरं मरुत्प्रदम् ॥”
इति राजनिर्घण्टः ॥ * ॥
अपि च ।
“हरिणः शीतलो बद्धबिण्मूत्रो दीपनो लघुः ।
रसे पाके च मधुरः सुगन्धिः मन्निपातहा ॥
एणः कषायो मधुरः पित्तासृक्कफनाशनः ।
संग्राही रोचनो हृद्यो बलकृज्ज्वरनाशनः ॥”
इति राजवल्लभः ॥ * ॥
अक्षिणी यस्याः । समासे षः । ङीप् । मृगलोचना रमणी ॥)

**हरिणाङ्कः**, पुं, (हरिणः अङ्कश्चिह्नं यस्य ।) चन्द्रः । इति शब्दरत्नावली ॥

**हरिणी**, स्त्री, (हरिण + ङीष् ।) मृगी । (यथा, रघुः । २ । ११ ।
“धनुर्भृतोऽप्यस्य दयार्द्रभावमाख्यातमन्तःकरणैर्विशङ्कैः ।
विलोकयन्त्यो वपुरापुरक्ष्णांप्रकामविस्तारफलं हरिण्यः ॥”)
स्वर्णप्रतिमा । इत्यमरः । ३ । ४ । ५० ॥ (हरित +
ङीष् । तस्य नः ।) हरिता । नारीभेदः । वृत्तभेदः । इति मेदिनी ॥ (तल्लक्षणं यथा, --
“नसमरला गः षड्वेदैर्हयैर्हरिणी मता ॥”
विस्तारस्तु छन्दःशब्दे द्रष्टव्यः ॥) मञ्जिष्ठा स्वर्णयूथी । इति राजनिर्घण्टः ॥ तरुणी । वरस्त्री । इति शब्दरत्नावली ॥
(सुराङ्गनाभेदः । यथा, रघुः । ८ । ७९ ।
“चरतः किल दुश्चरं तपस्तृणविन्दोः परिशङ्कितः पुरा ।
प्रजिघाय समाधिभेदिनीं हरिरस्मै हरिणीं सुराङ्गनाम् ॥”)

| | | |
|---|---|---|
| नन्द्यादित्वादनः । हरेरिन्द्रस्य चन्दनं हरि-<br>चन्दनम् । इति तट्टीकायां भरतः ॥ * ॥ चन्दन-<br>विशेषः । तत्पर्य्यायः । तैलपर्णिकम् २ गोशी-<br>र्षम् ३ । इति मनुष्यवर्गे अमरः । २ । ६ । १३१ ॥<br>घौणि हरिचन्दने । चन्दनविशेषाणां पृथक् | | |

**हरित्,** पुं, (हरति नयनमनांसीति । हृ + “हृसृ-
रुहियुषिभ्य इति ।” उणा० १ । ९९ । इति
इतिः ।) नीलपीतमिश्रितवर्णः । सबुजरङ्‌ इति
भाषा ॥ तत्पर्य्यायः । पालाशः २ हरितः ३ ।
इत्यमरः । १ । ५ । १४ ॥ श्यामः ४ । इति
शब्दरत्नावली ॥ अश्वविशेषः । इति मेदिनी ॥
सूर्य्याश्वः । इति त्रिकाण्डशेषः ॥ यथा, कुमारे ।
२ । ४३ ।
“उत्पाट्य मेरुशृङ्गाणि क्षुण्णानि हरितां खुरैः ।
आक्रीडपर्व्वतास्तेन कल्पिताः स्वेषु वेश्मसु ॥”)
मुद्‌गः । इति हेमचन्द्रः ॥ सिंहः । सूर्य्यः ।
विष्णुः । इति केचित् ॥
हरिद्वर्णविशिष्टे, त्रि ॥

**हरित्,** स्त्री, (हृ + इतिः ।) दिक् । इत्यमरः । १ । ३ । १ ॥
(यथा, रघुः । ३ । ३० ।
“ततार विद्याः पवनातिपातिभि-
र्दिशो हरिद्भिर्हरितामिवेश्वरः ॥”)
हरिद्रा । इति राजनिर्घण्टः ॥

**हरित्,** पुं, क्ली, (हृ + इतिः ।) तृणम् । इति
मेदिनी ॥

**हरितं**, क्ली, (हृ + इतन् ।) स्थौणेयकम् । इति
राजनिर्घण्टः ॥

**हरितः**, पुं, (हरति नयनमनांसीति । हृ + “हृश्या-
भ्यामितन् । “उणा० ३ । ९३ । इति
इतन् ।)

पारदं शिववीर्य्यं स्यात् गन्धकं पार्व्वतीरजः ॥”
इति वैद्यकम् ॥
तत्पर्य्यायः । पिञ्जरम् २ पीतकम् ३ तालम् ४
आलम् ५ हरितालकम् ६ । इत्यमरः । २ । ९ ।
१०३ ॥
गोदन्तम् ७ पीतलम् ८ नटमण्डनम् ९ हरि-
बीजम् १० सिद्धधातुः ११ । इति जटाधरः ॥
वर्णकम् १२ नटभूषणम् १३ । इति रत्नमाला ॥
पीतम् १४ गोरोचम् १५ चित्राङ्गम् १५ पिञ्ज-
रकम् १७ वैदलम् १८ तालकम् १९ कनक-
रसः २० काञ्चनकम् २१ विडालकम् २२ चित्र-
गन्धम् २३ पिङ्गम् २४ पिङ्गसारम् २५ नौरी-
ललितम् २६ । अस्य गुणाः । कटुत्वम् । उष्ण-
त्वम् । स्निग्धत्वम् । त्वग्दोषभूतभीतिविषयवात-
रुजानाशित्वञ्च । इति राजनिर्घण्टः ॥ * ॥
अपि च ।
“हरितालं द्विधा प्रोक्तं पत्राख्यं पिण्डसंज्ञकम् ।
तयोराद्यं गुणैः श्रेष्ठं ततो हीनगुणं परम् ॥
स्वर्णवर्णं गुरु स्निग्धं सपत्रं चाभ्रपत्रवत् ।
पत्राख्यं तालकं विद्यात् गुणाढ्यं तद्रसायनम् ॥
निष्पत्रं पिण्डसदृशं स्वल्पसत्त्वं तथा गुरु ।
स्त्रीपुष्पहारकं स्वल्पगुणं तत्पिण्डतालकम् ॥
हरितालं कटु स्निग्धं कषायोष्णं हरेद्विषम् ।
कण्डुकुष्ठास्य रोगास्रकफपित्तकचव्रणान्॥
हरति च हरितालं चारुतां देहजातां
सृजति च बहुतापानङ्गसङ्कोचपीडाः ।
वितरति कफवातौ कुष्ठरोगं विदध्या-
दिदमसितमशुद्धं मारितं चाप्यसम्यक् ॥”
इति भावप्रकाशः ॥ * ॥
अथ तालस्याशुद्धस्य दोषमाह ।
“अशुद्धं तालमायुर्हृत् कफमारुतमेहकृत् ।
तापस्फोटाङ्गसंकोचान् कुरुते तेन शोधयेत् ॥”
अथ तालकस्य शोधनविधिः ।
“तातकं कणशः कृत्वा तच्चूर्णं काञ्जिके क्षिपेत् ।
दोलायन्त्रेण यामैकं ततः कुष्माण्डजे द्रवे ॥
तिलतैले पचेद्यामं यामञ्च त्रिफलारसे ।
दोलायन्त्रे चतुर्यामं पक्वं शुध्यति तालकम् ॥” * ॥
अथ तालकस्य मारणविधिः ।

शोधितं कुरुते कान्तिं वीर्य्यवृद्धिं तथायुषः ॥”
इति च भावप्रकाशः ॥

**हरितालः**, पुं, पीतवर्णपक्षिविशेषः । हरियाल
इति भाषा । तस्य मांसगुणाः ।
“हरितालोऽल्पविट्कः स्यात् कषायो मधुरो
लघुः ।
रक्तपित्तपशमनस्तृषाघ्नोवातकोपनः ॥”
इति राजवल्लभः ॥

**हरितालकं**, क्ली, (हरितालमेव । स्वार्थे कन् ।)
हरितालम् । इत्यमरः । २ । ९ । १०३ ॥

**हरितालिका**, स्त्री, दूर्व्वा । इति त्रिकाण्डशेषः ॥
सौरभाद्रशुक्लचतुर्थी हरितालिका । सौरभाद्र-
कृष्णचतुर्थ्यामुदितचन्द्रस्यनष्टचन्द्र इति संज्ञा ।
इति पञ्जिकायां प्रसिद्धा । तत्र चन्द्रदर्शननिषेधो
यथा । भोजदेवः ।
“शुक्लपक्षे चतुर्थ्यान्तु सिंहे चन्द्रस्य दर्शनम् ।
मिथ्याभिशापं कुरुते न पश्येत्तत्र तन्ततः ॥”
चतुर्थ्यां दर्शननिषेध्यत् तत्रोदितस्य चन्द्रस्य
पञ्चम्यां दर्शने तु न दोषः । अतः ।
“पञ्चाननगते भानौ पक्षयोरुभयोरपि ।
चतुर्थ्यामुदितश्चन्द्रो नेक्षितव्यः कदाचन ॥”
चतुर्थ्यां नेक्षितव्य इति मुनिभिरुदित उक्त
इत्यर्थः । अथवा चतुर्थ्यामित्यस्य प्रधानक्रिया-

हरिद्वर्णः । इत्यमरः । १ । ५ । १४
॥ सिंहः ।
इति केचित् ॥ मन्थानकतृणम् । इति राज-
निर्घण्टः ॥ हारील इति लोके । तदर्थे पर्य्यायो
यथा, --
"हारीतो रक्तपित्तः स्याद्धरितोऽपि स कथ्यते ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे द्वितीये भागे ॥)
हरिद्वर्णयुक्ते, त्रि । इति मेदिनी ॥ (यथा,
किराते । ५ । ३८ ।
"परिसरविषयेषु लीढमुक्ताः
हरिततृणोद्गमशङ्कया मृगोभिः ॥")

**हरितकं**, क्ली, (हरितो वर्णोऽस्त्यस्येति । अच् ।

ततः कन् ।) शाकम् । इत्यमरः । २ । ९ । ३४ ॥
(यथा, माघे । ५ । ५८ ।
"अश्रावि भूमिपतिभिः क्षणवीतनिद्रै-
रश्नन् पुरो हरितकं मुदमादधानः ॥")

**हरितपत्रिका**, स्त्री, (हरितानि पत्राणि यस्याः ।

ततः स्वार्थे कन् । टापि अत इत्वम् ।) पाची ।
इति राजनिर्घण्टः ॥

**हरितशाकः**, पुं, (हरितः हरिद्वर्णः शाकः ।)

शिग्रुः । इति राजनिर्घण्टः ॥ (शिग्रुशब्देऽस्य
गुणादयो ज्ञातव्याः ॥)

**हरिता**, स्त्री, (हरितो वर्णोऽस्त्यस्या इति । अच् ।

टाप् ।) दूर्व्वा । इति मेदिनी ॥ जयन्ती ।
हरिद्रा । कपिलद्राक्षा । पाची । नीलदूर्व्वा ।
इति राजनिर्घण्टः ॥

"सदलं तालकं शुद्धं पौनर्नवरसेन तु ।
खल्ले विमर्द्दयेदेकं दिनं पश्चाद्विशोधयेत् ॥
संशोध्य गोलकं तस्य कुर्य्यात्तच्च विशोधयेत् ।
ततः पुनर्नवाक्षारैः स्थाल्यामर्द्धं प्रपूरयेत् ॥
तत्र तद्गोलकं धृत्वा पुनस्तेनैव पूरयेत् ।
आकण्ठं पिठरं तस्य पिधानं धारयेन्मुखे ॥
स्थालीं चूल्यां समारोप्य क्रमाद्वह्निं विवर्द्धयेत् ।
दिनान्यन्तरशून्यानि पञ्चवह्निं प्रदीपयेत् ॥
एवं तन्म्रियते तालं मात्रा तस्यैकरत्तिका ।
अनुपानान्यनेकानि यथायोग्यं प्रयोजयेत् ॥"
एवं शोधितस्य मारितस्य तालकस्य गुणाः ।
"हरितालं कटु स्निग्धं कषायोष्णं हरेद्विषम् ।
कण्डुकुष्ठास्यरागास्रकफपित्तकचव्रणान् ॥"
अन्यच्च ।
"तालकं हरते रोगान् कुष्ठमृत्युज्वरापहम् ।

न्वयाभ्यर्हितत्वादीक्षितव्य इत्यनेनान्वयोन
तूदित इत्यनेन । तथा च अव्यक्तं प्रधानगामि
इति सूत्रेअव्यक्तस्य शब्दस्य प्रधानेन सह सम्बन्ध
इति भट्टनारायणव्याख्यानं इति । उदितस्त्वर्द्धो-
दितव्यावृत्तिपरः स्वरूपाख्यानपरो वा ।
"ब्राह्मणी तु शुना दष्टा जम्बुकोष्ट्रेण वा गवा ।
उदितं सोमनक्षत्रं दृष्ट्वा सद्यः शुचिर्भवेत् ॥"
इति पराशरोक्तोदित इतिवत् ॥ * ॥
नन्वेकपदस्य कथमनेकार्थता इति चेन्न यावन्तो-
ऽर्थास्तावन्ति पदानीति । तथा चोक्तम् ।
"यावतामेव धातूनां लिङ्गं रूढिगतं भवेत् ।
अर्थश्चैवाभिधेयस्तु तावद्भिर्गुणविग्रहः ॥"
शिङ्गं समार्थम् । रूढिगतं प्रसिद्धम् । न
त्वप्रसिद्धम् । हन हिंसागत्योरित्यादौ गमना-
दिकम् । अभिधेयो वाच्यः । तावद्भिर्धातुभि-
र्गुणविग्रहो गुणैर्गणनाभिर्विग्रहो ग्रहणं यत्रार्थे
स तथा । एतेन धातुसमसंख्यार्थत्वं पदस्य ।
ब्रह्मपुराणे सिंहार्काधिकारे ।
"नारायणोऽभिशप्तस्तु निशाकरमरीचिषु ।
स्थितश्चतुर्थ्यामद्यापि मनुष्याय पतेच्च सः ॥
अतश्चतुर्थ्यां चन्द्रन्तु प्रमादाद्वीक्ष्य मानवः ।
पठेद्धात्रेयिकावाक्यं प्राङ्मुखो नाप्युदङ्मुखः ॥
अभिशप्तः परीवादविषयीभूतः । सोऽभिशापः ।

| | | |
|---|---|---|
| **हरितालं**, क्ली, (हरितं तद्वर्णं आलातीति । आ + ला + कः ।) पीतवर्णधातुविशेषः । स तु हरेर्व्वीर्य्यम् । यथा, -- "हरितालं हरेर्व्वीर्य्यं लक्ष्मीवीर्य्यं मनःशिला । | | धात्रेयिकावाक्यं विष्णुपुराणे । "सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः । सुकुमारक मा रोदीस्तव ह्येष स्यमन्तकः ॥" अनेन मन्त्रेणाभिमन्त्रितं जलं पेयं आचारात् स्यमन्तकोपाख्यानञ्च श्रोतव्यम् । इति तिथ्यादि-तत्त्वम् ॥ |

**हरिताली**, स्त्री, (हरिताल + ङीष् ।) दूर्व्वा ।

आकाशरेखा । इति मेदिनी ॥ खड्गलता ।
इति विश्वः ॥ सौरभाद्रीयनक्षत्रविशेषयुक्त-
चतुर्थी । यथा, --
“भाद्रे मासि सिते पक्षे वसुदैवतसंयुता ।
हरिताली चतुर्थी स्यात् सर्व्वाणीप्रीतिदा
सदा ॥
भाद्रे मासि सिते पक्षे चतुर्थ्याख्याभियोगतः।
ददाति किल्विषं घोरं दृष्टश्चन्द्रो न संशयः ॥
करिचित्रानलर्क्षेषु हरौ सूर्य्ये चतुर्थिका ।
हरिताली समाख्याता रुद्राणीप्रीतिदा सदा ॥”
इति राजमार्त्तण्डः ॥

**हरिताश्म**, [न्] क्ली, (हरितं अश्म ।) तुत्थम् ।

पेरोजम् । इति राजनिर्घण्टः ॥

**हरित्पर्णं**, क्ली, (हरित् पर्णमस्य ।) मूलकम् ।

इति राजनिर्घण्टः ॥ हरिद्वर्णपत्रयुक्ते, त्रि ॥

**हरिदश्वः**, पुं, (हरित् अश्वो यस्य ।) सूर्य्यः ।

(यथा, रघुः । ३ । २२ ।
“पुपोष वृद्धिं हरिदश्वदीधिते-
रनुप्रवेशादिव बालचन्द्रमाः ॥”)
अर्कवृक्षः । इत्यमरः । १ । ३ । २९ ॥

**हरिदेवः**, पुं, (हरिर्देवोऽधिष्ठात्रीदेवता यस्य ।)

श्रवणानक्षत्रम् । इति हेमचन्द्रः ॥ हरिर्देवो
यस्य इति बहुव्रीहौ, त्रि । हरिश्चासौ देव-
श्चेति कर्म्मधारये हरिमात्रबोधकः ॥

**हरिद्गर्भः**, पुं, (हरिद्वर्णो गर्भो यस्य ।) हरिद्वर्ण-

कुशः । हरिदर्भ इति च पाठः । तत्पर्य्यायः ।
खरपत्रः २ बृहच्छदः ३ अत्र पृथुच्छदोऽपि
पाठः । शीरी ४ रूक्षदर्भः ५ दीर्घपत्रः ६
पवित्रकः ७ । अस्य गुणाः ।
“दर्भौ द्वौ च गुणे तुल्यौ तथापि च सिता-
धिकः ।
यदि श्वेतकुशाभावे त्वपरं योजयेद्भिषक् ॥”
इति राजनिर्घण्टः ॥
अपि च ।
“दर्भद्वयं त्रिदोषघ्नं मधुरं तुवरं हिमम् ।

निशा १७ मेहघ्नी १८ बहुला १९ वर्णिनी
२०
रात्रिनामिका २१ । इति रत्नमाला ॥ हरित्
२२ रञ्जनी २३ स्वर्णवर्णा २४ सुवर्णा २५
शिवा २६ दीर्घरागा २७ हलद्दी २८ वराङ्गी
२९ जनेष्टा ३० वरा ३१ वर्णदात्री ३२
पवित्रा
३३ हरिता ३४ विषघ्नी ३५ पिङ्गा ३६
मङ्गल्या
३७ मङ्गला ३८ लक्ष्मीः ३९ भद्रा ४०
शिफा
४१ शोभा ४२ शोभना ४३ सुभगाह्वया
४४
श्यामा ४५ जयन्तिका ४६ । अस्य गुणाः ।
कटुत्वम् । तिक्तत्वम् । उष्णत्वम् ।
कफवातास्र-
कुष्ठमेहकण्डुव्रणनाशित्वम् ।
देहवर्णविधायि-
त्वञ्च । इति राजनिर्घण्टः ॥ * ॥ अन्यच्च ।
“हरिद्रा कफपित्तास्नशोथकण्डुव्रणापहा ।”
इति राजवल्लभः ॥
अपि च ।
“हरिद्रा काञ्चनी पीता निशाख्या वर-
वर्णिनी ।
कृमिघ्ना हलदी योषित्प्रिया हरिविलासिनी
॥
हरिद्रा कटुका तिक्ता रूक्षोष्णा कफपित्तनुत्
।
वर्ण्यात्वग्दोषमेहास्रशोथपाण्डुव्रणापहा ॥”
* ॥
अथ वनहरिद्रा ।
“अरण्यहलदीकन्दः कुष्ठवातास्रनाशनः ।”
* ।
अथ कर्पूरहरिद्रा ।
“दार्व्वी भेदाम्रगन्धा च सुरभिश्चारु दारु च
।
कर्पूरा पद्मपत्रा स्यात् सुरभिः सुरनायिका
॥
आम्रगन्धिहरिद्रा या सा शीता वातला

**हरिद्रारागः**, त्रि, (हरिद्राया राग इव रागो

यस्य । अचिरस्थायित्वाद्वास्य
तथात्वम् ।)
अस्थिरसौहृदः । इति हेमचन्द्रः ॥
तत्पर्य्यायः ।
क्षणमात्रानुरागी २ । हरिद्राराग इव
रागो-
ऽस्येति हरिद्रारागः ।
हरिद्रारागस्याचिर-
स्थायित्वात् तथेति यावत् । यथा, --
“क्षणमात्रानुरागी च हरिद्राराग उच्यते
॥”
इति हलायुधः ॥

**हरिद्रुः**, पुं, (हरिवर्णः द्रुर्वृक्षः ।) वृक्षः । इति

हेमचन्द्रः ॥ दारुहरिद्रा । इत्यमरः ।
२ । ४ । १०१ ॥
तथा चोक्तम् ।
“दार्व्वी दारुहरिद्रा च पर्ज्जन्या
पर्ज्जनीति च ।
कटङ्कटेरी पीता च भवेत् सैव च
पञ्चधा ॥
सैव कालीयकः प्रोक्तस्तथा
कालेयकोऽपि च ।
पीतद्रुश्च हरिद्रुश्च पीतदारु
कपीतकम् ।
दार्व्वी निशागुणा किन्तु नेत्रकर्णस्य
रोगनुत् ॥”
इति भावप्रकाशः ॥ * ॥
वृक्षविशेषः । हलदीवा इति हिन्दी
भाषा ।
तत्पर्य्यायः । पीतदारु ५ पीतकाष्ठः
३ पीतकः ४
कदम्बकः ५ सुपुष्पः ६ सुराह्वः ७
पीतकद्रुमः ८ ।
अस्य गुणाः । शीतलत्वम् ।
तिक्तत्वम् । मङ्ग-
ल्यत्वम् ।
पित्तवातनानात्वग्दोषनाशित्वम्।

मूत्रकृच्छ्राश्मरीतृष्णावस्तिरुक्प्रदरास्रजित्॥”
इति भावप्रकाशः ॥
तन्मूलगुणाः ।
“कुशमूलं हिमं रुच्यं मधुरं पित्तनाशनम् ।
रक्तज्वरतृषाश्वासकामलादोषमोक्षकृत् ॥”
इति राजनिर्घण्टः ॥

**हरिद्रवः**, पुं, (हरिवर्णः पिङ्गलवर्णः द्रव इव ।)

नागकेशरचूर्णम् । इति त्रिकाण्डशेषः ॥

**हरिद्रा**, स्त्री, (हरितं पीतवर्णं रातीति । हरित्

+ रा + कः । टाप् ।) ओषधिविशेषः । हलुद
इति भाषा । तत्पर्य्यायः । निशाह्वा २ काञ्चनी
३ पीता ४ वरवर्णिनी ५ । इत्यमरः । २ । ९ ।
४१ ॥
कावेरी ६ उमा ७ वर्णवती ८ गौरी ९ पीञ्ञा
१० । इति जटाधरः ॥ पीतवालुका ११ हेम-
नाशा १२ भङ्गवासा १३ घर्षिणी १४ । इति
शब्दरत्नावली ॥ पीतिका १५ रजनी १६
मता ।
पित्तहृन्मधुरा तिक्ता सर्व्वकण्डविनाशिनी
॥”
इति भावप्रकाशः ॥

**हरिद्रागणेशः**, पुं, (हरिद्रावर्णो गणेशः ।)

गणेशविशेषः । तन्मन्त्रो यथा, --
अथ हरिद्रागणेशः ।
“पङ्कान्तको धरासंस्थो बिन्दुभूषितमस्तकः
।
एकाक्षरो महामन्त्रः सर्व्वकामफलप्रदः ॥”
अथ वशिष्ठ ऋषिर्गायत्री च्छन्दो
हरिद्रागण-
पतिर्देवता गकारो बीजं लकारः शक्तिर्बीजे-
नैव षडङ्गकम् । ध्यानन्तु ।
“हरिद्राभं चतुर्ब्बाहुं हारिद्रूयवसनं विभुम् ।
पाशाङ्कुशधरं देवं मोदकं दन्तमेव च ॥”
ऐवं ध्यात्वा मानसैः संपूज्य
शङ्खस्थापनादि-
पीठमन्वन्तां पीठपूजां विधाय पुनर्ध्यात्वा
गण-
पतिं पूजयेत् । आवरणपूजाविनियोगादिकं
एकाक्षरगणपतिवत् । अस्य पुरश्चरणं चतु-
र्लक्षजपः । त्रिमधुरयुक्तहरिद्राचूर्णमिश्रितै-
स्तण्डुलैरयुतहोमः । इत्यादि तन्त्रसारः ॥

**हरिद्राङ्गः**, पुं, (हरिद्राया इव अङ्गं यस्य ।)

हरितालपक्षी । इति शब्दचन्द्रिका ॥

**हरिद्राभः**, पुं, (हरिद्राया आभा इव आभा

यस्य ।) पौतशालः । कर्पूरकः । इति शब्द-
चन्द्रिका ॥ पीतवर्णः । तद्युक्ते, त्रि ॥ इत्य-
मरः । १ । ५ । १४ ॥ (यथा, तन्त्रमारे ।
“हरिद्राभं चतुर्ब्बाहुं हारिद्रूयवसनं विभुम्
॥”)
अङ्गकान्तिकरत्वम् । बल्यत्वञ्च ।
इति राज-
निर्घण्टः ॥

**हरिद्वारं**, क्ली, (हरेस्तत्प्राप्तेर्द्वारमिव ।)
स्वनाम-

ख्यातनगरम् । तत्तु तीर्थविशेषः ।
यथा, --
“शृणु देवि महामाये पठेच्चण्डीं
शृणोत्यपि ।
गयायाञ्चैव यत् पुण्यं काश्यां
विश्वेश्वराग्रतः ॥
प्रयागे मुण्डनाच्चैव हरिद्वारे हरेर्गृहे ।
तुल्यं पुण्यं भवेद्देवि सत्यं दुर्गे शिवे
रमे ॥”
इति रुद्रयामले हरगौरीसंवादे
रुद्रचण्डी ॥ * ॥
तत्र गङ्गावतरणात् गङ्गाद्वारमिति
ख्यातम् ।
तत्र स्नानादिफलं यथा, --
“ततो गच्छेत धर्म्मज्ञ नमस्कृत्य
महागिरिम् ।
स्वर्गद्वारेण तत्तुल्यं गङ्गाद्वारं न
संशयः ॥
तत्राभिषेकं कुर्व्वीत कोटितीर्थे
समाहितः ।
लभते पुण्डरीकन्तु कुलञ्चैव
समुद्धरेत् ॥
तत्रैकरात्रिवासेन गोसहस्रफलं लभेत्
॥”
इति पाद्मे भूमिखण्डे १२ अध्यायः ॥
अपिच ।
“सर्व्वत्र सुलभा गङ्गा त्रिषु स्थानेषु
दुर्लभा ।
गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे ॥
सवासवाः सुराः सर्व्वे गङ्गाद्वारं
मनोरमम् ।
समागत्य प्रकुर्व्वन्ति स्नानदानादिकं
मुने ! ॥
दैवयोगान्मुने तत्र ये त्यजन्ति
कलेवरम् ।

| | | मनुष्यपक्षिकीटाद्यास्ते लभन्ते परं पदम् ॥"<br>इति तत्रैव क्रियायोगसारे ३ अध्यायः । * ॥<br>पुस्तकान्तरे गङ्गाद्वारस्थाने हरिद्वारमिति पाठः ॥<br>**हरिनाम**, [न्] क्ली, (हरेर्नाम ।) श्रीहरे-<br>राख्यानम् । तन्माहात्म्यं यथा, --<br>"न कालनियमस्तत्र न देशनियमस्तथा । |
|---|---|---|

नोच्छिष्टादी निषेधोऽस्ति हरेर्नामनि लुब्धक ॥
ज्ञानं देवार्च्चनं ध्यानं धारणा नियमो यमः ।
प्रत्याहारः समाधिश्च हरिनामसमं न च ॥”
इति पाद्मोत्तरखण्डे ९८ अध्यायः ॥
अपि च ।
“हरेर्नाम हरेर्नाम हरेर्नामैव केवलम् ।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥”
इति श्रीहरिभक्तिविलासस्य ११ विलासे बृह-
न्नारदीयपुराणवचनम् ॥ * ॥ वैष्णवानां जप्य-
हरिनामानि यथा, --
“हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे ।
हरे राम हरे राम राम राम हरे हरे ॥”
अस्य प्रमाणादि यथा, --
त्रिपुरोवाच ।
“वासुदेव महाबाहो ! शृणुष्व परमं वचः ।
त्वं हि देव सुरश्रेष्ठः किमर्थं तप्यते तपः ॥
कुलाचारं विना पुत्त्र ! नहि सिद्धिः प्रजायते ।
शक्तिहीनस्य ते सिद्धिः कथं भवति रे सुत ! ॥
ममांशसम्भवां लक्ष्मीं त्यक्त्वा किं तप्यते तपः ।
वृथा श्रमं वृथा पूजां जपञ्च विफलं सुत ! ॥
संयोगं कुरु यत्नेन शक्त्या सह तपोधन ! ।
सुखं विना सुतश्रेष्ठ ! विद्यासिद्धिर्न्न जायते ॥
साधके क्षोभमापन्ने देवता क्षोभमाप्नुयात् ।
तस्य सिद्धिर्भवेद्विद्या अष्टैश्वर्य्यमवाप्नुयात् ॥
रहस्यं हि विना पुत्त्र ! श्रम एव हि केवलम् ।
अतएव सुतश्रेष्ठ ! रहस्यरहितस्तव ।
रहस्यरहितां विद्यां न जपेत्तु कदाचन ॥ * ॥
हकारस्तु सुतश्रेष्ठ ! शिवः साक्षान्न संशयः ।
रेफस्तु चिपुरादेवी मम मूर्त्तिमयी सदा ॥
एकारञ्च भगं विद्यात् साक्षाद्योनिं तपो-
धन ! ।
एकारः शून्यरूपी च रेफो विग्रहधारिणः ।
हरे तु त्रिपुरा साक्षान्मम मूर्त्तिर्न्न संशयः ॥
ककारः कामदा कामरूपिणी स्फुरदव्ययम् ।
ऋकारश्च सुतश्रेष्ठ ! ज्येष्ठा शक्तिरितोरिता ॥
ककारश्च ऋकारश्च कामिनी वैष्णवी कला ॥
षकारश्चन्द्रमा देवः कलाषोडशसंयुतः ॥
णकारश्च सुतवर ! साक्षान्निर्वृत्तिरूपिणी ।
द्वयोरैक्यं तपःश्रेष्ठ ! महामाया जगन्मयी ॥
कृष्ण कृष्ण सुतश्रेष्ठ ! महामाया जगन्मयी ।
हरे हरे ततो देवि ! शिवशक्तिस्वरूपिणी ॥
हरे रामेति च पदं शिवशक्तिमयं सुत ! ।
हरे हरे इति पदं शक्तिद्वयसमन्वितम् ॥
आद्यन्ते प्रणवं दत्त्वा यो जपेद्दशधा द्विजः ।
स भवेत् सुतवर ! श्रेष्ठो महाविद्यासु सुन्दरः ॥
हरिनाम सुतश्रेष्ठ ! ज्येष्ठं तु वैष्णवं मतम् ॥
एवं षोडश नामानि द्वात्रिंशदक्षराणि च ।
आद्यन्ते प्रणवं दत्त्वा चतुस्त्रिं शदनुत्तम ! ॥
हरिनाम विना पुत्त्र ! दीक्षा च विफला सदा ।
कुलदेवमुखाच्छ्रुत्वा हरिनाम पराक्षरम् ॥
ब्राह्मणक्षत्त्रवैश्याश्च शूद्रः श्रुत्वा पराक्षरम् ।
दीक्षां कुर्य्यात् सुतश्रेष्ठ ! महाविद्यासु सुन्दर ! ॥
दीक्षां वापि हरेर्न्नाम यदि शूद्रमुखात् प्रिये ! ।
अज्ञानाद्यदि गृह्णीयात् तस्य पापफलं शृणु ॥
शूद्रः शूद्रमुखात् श्रुत्वा विद्यां वा मन्त्रमुत्तमम् ।
कोटिवंशान् समादाय रौरवं प्रति गच्छति ।

**हरिन्मुद्गः**, पुं, (हरिद्वर्णो मुद्गः ।) शारदमुद्गः । इति राजनिर्घण्टः ॥

**हरिपर्णं**, क्ली, (हरि हरिद्वर्णं पर्णं यस्य ।) मूल-कम् । इति हेमचन्द्रः ॥

**हरिप्रियं**, क्ली, (हरेः प्रियम् ।) कृष्णचन्दनम् । इति शब्दचन्द्रिका ॥ तत्तु कालीयकम् कालिया-
काष्ठमिति ख्यातम् । इति रत्नमाला ॥ (यथा,
“कालोयकन्तु कालीयं पीताभं हरिचन्दनम् ।
हरिप्रियं कालसारं तथाकालानुसार्य्यकम् ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
उशीरम् । इति राजनिर्घण्टः ॥

**हरिप्रियः**, पुं, (हरेः प्रियः ।) कदम्बवृक्षः । इति शब्दचन्द्रिकामरौ । २ । ४ । ४२ ॥ पीतभृङ्ग-
राजः । विष्णुकन्दः । करवोरः । शङ्खः । बन्धूकः । इति राजनिर्घण्टः ॥ शिवः । वातुलः ।
कञ्चुकः । इति केचित् ॥

**हरिप्रिया**, स्त्री, (हरेः प्रिया ।) लक्ष्मीः । इत्य-मरः । १ । १ । २८ ॥ तुलसी । द्वादशीतिथिः ।
पृथिवी । इति केचित् ॥

**हरिबालुकं**, क्ली, (हरिप्रिया बालुका यत्र) एलवालुकम् । इत्यमरः । २ । ४ । १२१ ॥

**हरिभक्तः**, पुं, (हरेर्भक्तः ।) हरिसेवकः । तस्य लक्षणं यथा, --
“सर्व्वजीवेषु यो विष्णुं भावयेत् समताधिया ।

तस्माद्भोगयुतो भूत्वा जपकर्म्म समारभेत्
॥
भोगं विना सुतश्रेष्ठ ! नहि भोक्षः प्रजायते
।
शृणु पुत्र सुतश्रेष्ठ दीक्षाया
आनुपूर्ब्बिकीम् ॥
दशवर्षे तु संप्राप्ते द्वादशाभ्यन्तरे सुत ! ।
शृणुयाद्धरिनामानि षोडशानि पृथक्
पृथक् ।
हरिनाम विना पुत्र ! कर्णशुद्धिर्न्न जायते
॥
श्रीवासुदेव उवाच ।
शृणु मातर्म्महामाये
विश्वबीजस्वरूपिणि ! ।
हरिनाम महामाये क्रमात्तव मतं वद ॥ *
॥
त्रिपुरोवाच ।
हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे ।
हरे राम हरे राम राम राम हरे हरे ॥
द्वात्रिंशदक्षराण्येवं कलानाममृतं सदा ।
शृणु च्छन्दः सुतश्रेष्ठ ! हरिनाम्नस्तु चैव
हि ॥
छन्दो हि परमं गुह्यं महत् पदमनव्ययम् ।
सर्व्वशक्तिमयं तन्त्रं हरिनाम तपोधन !
॥" * ॥
अस्य श्रीहरिनाममन्त्रस्य वासुदेव
ऋषिर्गायत्री
च्छन्दः श्रीत्रिपुरा देवता मम महाविद्या-
सिद्ध्यर्थे विनियोगः ॥ * ॥
"एतन्मन्त्रं सुतश्रेष्ठ ! प्रथमं शृणुयान्नरः ।
श्रुत्वा द्विजमुखात् पुत्र दक्षकर्णे
तपोधन ! ॥
आदौ छन्दस्ततो मन्त्रं श्रुत्वा शुद्धो
भवेन्नरः ।
द्वादशाभ्यन्तरे श्रुत्वा
कर्णशुद्धिमवाप्नुयात् ॥
कर्णशुद्धिं विना पुत्र महाविद्यामुपालभेत्
।
नारी वा पुरुषो वापि तत्क्षणान्नारकी
भवेत् ॥
ततस्तु षोडशे वर्षे संप्राप्ते सुरवन्दित ! ।
अपि दातृगृहीत्रोर्वा द्वयोरपि समं फलम् ॥
ब्रह्महत्यामवाप्नोति अक्षरं अक्षरं प्रति ।
शृणु पुत्र ! वासुदेवप्रसङ्गाद्वचनं मम ॥"
इति श्रीवासुदेवमाहात्म्ये राधातन्त्रे त्रिपुरा-
वासुदेवसंवादे द्वितीयपटलः ॥

**हरिनामा**, [न्] पुं, (हरेर्नाम नाम यस्य ।)

मुद्गः । इति त्रिकाण्डशेषः ॥

**हरिनेत्रं**, क्ली, (हरेर्नेत्रमिव ।) श्वेतपद्मम् ।

इति राजनिर्घण्टः ॥ श्रीहरेर्लोचनम् । यथा, --
"विबोधनार्थाय हरेर्हरिनेत्रकृतालयाम् ।
विंश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीम्
॥"
इति मार्कण्डेयपुराणे देवीमाहात्म्यम् ॥
हरिद्वर्णचक्षुश्च ॥

**हरिनेत्रः**, पुं, (हरेर्मर्कटस्येव नेत्रमस्य) पेचकः ।

इति त्रिकाण्डशेषः ॥

**हरिन्मणिः**, पुं, (हरिद्वर्णो मणिः ।) मरकतमणिः ।

इत्यमरः । २ । ९ । ९२ ॥ (यथा, माघे । ३
। ४९ ।
"हरिन्मणिश्यामतृणाभिरामै-
र्गृहाणि नीध्रैरिव यत्र रेजुः ॥")

हरौ करोति भक्तिश्च हरिभक्तः स च
स्मृतः ॥"
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ३५
अध्यायः ॥

**हरिभद्रं**, क्ली, (हरेर्भद्रं तृप्तिर्यस्मात् ।) हरि-

बालुकम् । इति शब्दचन्द्रिका ॥

**हरिभाविणी**, स्त्री, हरिं भावयितुं शीलं यस्याः

सा । (हरि + भू + णिनि । ङीप् ।) हरि-
भावनाशीला । इति मुग्धबोधव्याकरणम्
॥

**हरिभुक्**, [ज्] पुं, (हरिं भेकं भुङ्क्ते इति । भुज् +

क्विप् ।) सर्पः । इति शब्दरत्नावली ॥

**हरिमन्थः**, पुं, गणिकारिका । इति शब्दरत्ना-

वली ॥ चणकः । इति राजनिर्घण्टः ॥
(अस्य
पर्य्यायो यथा, --
"चणको हरिमन्थः स्यात् सकलप्रिय
इत्यपि ॥"
इति भावप्रकाशश्य पूर्ब्बखण्डे प्रथमे भागे
॥)
देशविशेषः । इति हरिमन्थजशब्दटीकायां
भरतः ॥

**हरिमन्थकः**, पुं, (हरिमन्थ एव । स्वार्थे कन् ।)

चणकः । इत्यमरः । २ । ९ । १८ ॥

**हरिमन्थजः**, पुं, चणकः । इत्यमरः । २ । ९ । १८
॥

हरिमन्थे देशे प्राचुर्य्येण जातवान्
हरिमन्थजः ।
हनजनादिति डः । इति भरतः ॥
(क्लीवेऽपि
दृश्यते । यथा, सुश्रुते सूत्रस्थाने ४६
अध्याये ।
"स्वादुपाकरसं शाकं दुर्ज्जरं हरिमन्थजम्
॥")
कृष्णमुद्गः । इति हेमचन्द्रः ॥

**हरियः**, पुं, (हरिं पीतवर्णं याति प्राप्नोतीति ।

| महाविद्यां ततः शुद्धां नित्यां ब्रह्मस्वरूपिणीम् ।<br>श्रुत्वा कुलमुखाद्विप्रात् साक्षात् ब्रह्ममयो भवेत् ।<br>कुर्य्यादितद्रहस्यं यः शिवोक्तञ्च तपोधन ! । | | या + कः ।) पीतवर्णघोटकः । इति हेमचन्द्रः ॥ |
|---|---|---|

**हरिले**, ष्य, नाट्योक्तौ चेटीसम्वोधनम् । इति केचित् ॥

**हारलोचनः**, पुं, (हरेरिव लोचनमस्य ।) कुलीरः । इति त्रिकाण्डशेषः ॥ पेचकः । इति केचित् ॥ हरिद्वर्णचक्षुर्युक्ते, त्रि ॥

**हरिवर्षं**, क्ली, (हरिप्रियं वर्षम् ।) जम्बुद्वीपस्य नववर्षान्तर्गतवर्षविशेषः । इति त्रिकाण्डशेषः ॥ स तु निषधहेमकूटपर्व्वतयोर्म्मध्ये वर्त्तते । यथा ।
एवं दक्षिणेनेलावृतं निषधो हेमकूटो हिमालय इति प्रागायता यथा नीलादयः । अयुतयोजनोत्सेधा हरिवर्षकिंपुरुषभारतानां यथासंख्यम् । इति श्रीभागवते ५ स्कन्धे १६ अध्यायः ॥
किञ्च । हरिवर्षे चापि भगवान् नरहरिरूपेणास्ते । तद्रूपग्रहणनिमित्तमुत्तरत्राभिधास्ये तद्दयितं रूपं महापुरुषगुणभाजनो महाभागवतो दैत्यदानवकुलतीर्थीकरणशीलाचरितः प्राह्लादोऽव्यवधानानन्यभक्तियोगेन सह तद्वर्षपुरुषैरुपास्ते । इति च तत्रैव १८ अध्यायः ॥

**हरिवंशः**, पुं, (हरेर्वंशः ।) श्रीकृष्णस्य सन्तानः ।
यथा, --
"हरिवंशं प्रवक्ष्यामि कृष्णमाहात्म्यलक्षणम् ।
वसुदेवात्तु देवक्यां वासुदेवो बलोऽभवत् ॥
रुक्मिणीसत्यभामाद्या अष्टौ पत्न्यो हरेः पुरा ।
षोडशस्त्रीसहस्राणि अन्योन्यासन् महात्मनः ॥
तासां पुत्त्राश्च पौत्राद्याः शतशोऽथ सहस्रशः ।
रुक्मिण्याञ्चैव प्रद्युम्नो न्यवधीत् सम्बरञ्च यः ॥
तस्य पुत्रोऽनिरुद्धोऽभूत् उषाबाणसुतापतिः ।
अनिरुद्धादभूद्वज्रः स च राजा गते हरौ ।
सान्दीपनिं गुरुं चक्रे सपुत्त्रं यादवाधिपः ॥"
इति गारुडे १४८ । १ ; ६ -- ८ ; ११ ॥
विस्तारस्तु महाभारतीयहरिवंशपर्व्वणि द्रष्टव्यः ॥

**हरिवल्लभा**, स्त्री, (हरेर्वल्लभा ।) जया । तुलसी ।

अथ हरिवासरे जागरणादिविधिः ।
स्कान्दे
श्रोब्रह्मनारदसंवादे ।
"शृणु नारद ! वक्ष्यामि जागरस्य तु लक्षणम् ।
येन विज्ञातमात्रेण दुर्लभो न जनार्द्दनः ॥
गीतं वाद्यं च नृत्यं च पुराणपठनं तथा ।
धूपं दीपं च नैवेद्यं पुष्पगन्धानुलेपनम् ॥
फलमर्घ्यञ्च श्रद्धा च दानमिन्द्रियनिग्रहः ।
सत्यान्वितं विनिद्रञ्च मुदा युक्तं क्रियान्वितम् ॥
साश्चर्य्यं चैव सोत्साहं पापालस्यादिवर्ज्जितम् ।
प्रदक्षिणाभिसंयुक्तं नमस्कारपुरःसरम् ॥
नोराजनसमायुक्तमनिर्विण्णेन चेतसा ।
यामे यामे महाभाग ! कुर्य्यादारात्रिकं हरेः ।
एतैर्गुणैः समायुक्तं कुर्य्याज्जागरणं हरेः ॥" * ॥
किञ्च ।
"य एवं कुरुते भक्त्या वित्तशाठ्यविवर्ज्जतः ।
जागरं वासरे विष्णोर्लीयते परमात्मनि ॥
धनवान् वित्तशाठ्येन यः करोति प्रजागरम् ।
तेनात्मा हारितो नूनं कितवेन दुरात्मना ॥"
तत्रैव श्रीमदुमामहेश्वरसंवादे ।
"सशास्त्रं जागरं यच्च नृत्यगान्धर्व्वसंयुतम् ।
सवाद्यं तालसंयुक्तं सदीपं साधुभिर्युतम् ॥
उपचारैश्च संयुक्तं यथोक्तैर्भक्तिभावितैः ।
मनसस्तुष्टिजननं समुदं लोकरञ्जनम् ॥
गुणैर्द्वादशभिर्युक्तं जागरं माधवप्रियम् ।
कर्त्तव्यं तत् प्रयत्नेन पक्षयोः शुक्लकृष्णयोः ॥" * ॥
किञ्च ।
"परापवादयुक्तं तु मनः प्रशमवर्ज्जितम् ।
"मूकवत्तिष्ठते यो वै गानं पाठञ्च नाचरेत् ।
सप्त जन्मानि मूकत्वं जायते जागरे हरेः ॥
यो न नृत्यति मूढात्मा पुरतो जागरे हरेः ।
पङ्गुत्वं जायते तस्य सप्त जन्मादि पार्व्वति ! ॥
पाद्मे पक्षवर्द्धनीप्रसङ्गे ।
"स्तुवन्ति न प्रशंसन्ति ये जना जागरं हरे ।
नोत्सवो भवते तेषां गृहे जन्मानि सप्त च ॥
स्तुवन्ति ये प्रशंसन्ति जागरं चक्रपाणिनः ।
नित्योत्सवो भवेत्तेषां जन्मानि दश पञ्च च ॥"
अथ जागरणमाहात्म्यम् ।
स्कान्देब्रह्मनारदसंवादे तथा श्रीप्रह्लादसंहितायाञ्च ।
"न गयापिण्डदानेन न तीर्थैर्बहुभिर्मखैः ।
पूर्व्वजा मुक्तिमायान्ति विना द्वादशीजागरम् ॥
सर्व्वावस्थोऽपि यः कुर्य्याद्द्वादश्यां जागरं हरेः ।
यामेनैकेन दहते पापं जन्मसहस्रजम् ॥ * ॥
यः कुर्य्याद्दीपदानन्तु रात्रौ जागरणे हरेः ॥
निमिषे निमिषे विप्र ! लभते गोशतं फलम् ॥
यः कुर्य्याज्जागरे पूजां द्वादश्यां कुसुमैर्हरेः ।
पुष्पे पुष्पेऽश्वमेधस्य फलमाप्नोति मानवः ॥
यो दहेच्चागुरुं विष्णोः पूजां कृत्वा तु जागरे ।

इति राजनिर्घण्टः ॥ लक्ष्मीश्च ॥

**हरिवान्,** [त्] पुं, (हरिरश्वोऽस्त्यस्येति ।

मतुप् । "छन्दसीरः ।" ८ । २ । १५ । इति
मस्य वः ।
इन्द्रः । इति हलायुधः ॥ हरिविशिष्टे, त्रि ॥
(यथा, वाजसनेयसंहितायाम् । २० । ३९ ।
"जुषाणो बर्हिर्हरिवान्न इन्द्रः
प्राचीनं सीदत्प्रदिशा पृथिव्याः ॥")

**हरिवासरं**, क्ली, (हरेर्वासरम् ।) श्रीहरेर्द्दिनम् ।

तत्तु एकादशीद्वादशीतिथिरूपम् । यथा, --
"एकादशी द्वादशी च प्रोक्ता श्रीचक्रपाणिनः ॥"
"एकादशीमुपोस्यैव द्वादशीं समुपोषयेत् ।
न चात्र विधिलोपः स्यादुभयोर्देवता हरिः ॥"
इति च तिथ्यादितत्त्वम् ॥
अपि च ।
"यानि कानि च पापानि ब्रह्महत्यादिकानि च ।
अन्नमाश्रित्य सर्व्वाणि तिष्ठन्ति हरिवासरे ॥
अघं स केवलं भुङ्क्ते यो भुङ्क्ते हरिवासरे ॥"
इत्येकादशीतत्त्वम् ॥ * ॥
द्वादश्याः प्रथमपादः । यथा । विष्णुधर्म्मोत्तरे ।
"द्वादश्याः प्रथमः पादो हरिवासरसंज्ञकः ।
तमतिक्रम्य कुर्व्वीत पारणं विष्णुतत्परः ॥"
इति तिथ्यादितत्त्वम् ॥ * ॥

शास्त्रहीनमगान्धर्व्वं तथा
दीपविवर्ज्जितम् ॥
शक्त्योपचाररहितमुदासीनंसनिद्रकम् ।
कलियुक्तं विशेषेण जागरं नवधाधमम् ॥"
* ॥
किञ्च । तत्रैव ।
"अभावे वाचकस्याथ गीतं नृत्यञ्च
कारयेत् ।
वाचके सति देवेशि ! पुराणं प्रथमं पठेत्
॥" * ॥
अथ जागरणनित्यत्वम् ।
स्कान्दे ब्रह्मनारदसवादे ।
"अतीतानागतान् वापि पातयिष्यन्ति
पूर्ब्बजान् ।
अकुर्व्वाणाः प्रपत्स्यन्ति
पुत्त्रधर्म्मवसुक्षयम् ।
जायते नरके वासः पितृभिः सह कालशः
॥
न पुरश्चरणात् पापं व्रतैर्दानैः समाधिभिः
।
विलयं याति विप्रेन्द्र ! विना
द्वादशीजागरम् ॥"
तत्रैवोमामहेश्वरसंवादे ।
"संप्राप्ते जागरे विष्णोर्ये न कुर्व्वन्ति
जागरम् ।
भ्रश्यते सुकृतं तेषां वैष्णवानाञ्च निन्दया
॥
मतिर्न जायते यस्य द्वादश्यां जागरं प्रति ।
न हि तस्याधिकारोऽस्ति पूजने केशवस्य
हि ॥"
अतएवोक्तं ब्रह्मणा । तत्रैव ।
"हृदये वर्त्तते यस्य सदा योगेश्वरो हरिः ।
मतिरुत्पद्यते तस्य द्वादशीजागरोपरि ॥ *
॥
सामान्धेन पुरालेखि गीतनृत्यादिनित्यता
।
अधुना लिख्यते सेयं जागरे च विशेषतः
॥"
अथ जागरे गीतादिनित्यत्वम् । स्कान्दे
उमा-
महेश्वरसंवादे ।

निमिषार्द्धेन लभते तिलपात्रशतं फलम्
॥
निमेषञ्च दहेद्धूपं सघृतं गुग्गुलुं हरेः ।
लभते जागरे विप्र ! पुण्यं
माससमुद्भवम् ॥
यो दद्याज्जागरे
विष्णोर्हविष्यान्नसमुद्भवम् ॥
नैवेद्यं लभते पुण्यं शालिशैलसमुद्भवम्
॥
पक्वान्नानि च यो दद्यात् फलानि
विविधानि च ।
जागरे पद्मनाभस्य लभते गोऽयुतं
फलम् ॥
सकर्पूरञ्च ताम्बूलं यो ददाति हि जागरे
।
पद्मनाभप्रसादेन श्वेतद्वीपे वसेच्चिरम्
॥
जागरे पद्मनाभस्य यः कुर्य्यात्
पुष्पमण्डपम् ।
स पुष्पकविमानैस्तु क्रीडते ब्रह्मसद्मनि
॥
जागरे पद्मनाभस्य सकर्पूरं तथागुरुम् ।
दहते दहते पापं जन्मलक्षसमुद्भवम् ॥
स्नानं ददाति कृष्णस्य
दधिक्षीरघृतादिभिः ।
रात्रौ जागरणे विप्रा ! मुक्तिभागी भवेद्धि
सः ॥
दिव्याम्बराणि यो दद्याज्जागरे
समुपस्थिते ।
मन्वन्तराणि वसते तन्तुमंख्यासमानि
वै ॥
दद्यादाभरणं विष्णार्हेमजं रत्नसम्भवम्
।
सप्तकल्पानि वसते सोत्सङ्गे मत्प्रियो
हि सः ॥
श्रीचन्दनं सकर्पूरं सागुरुं तु सकेशरम्
।
युक्तं मृगमदेनापि यच्छते हरिजागरे ॥
एकैकं मुनिशार्दूल ! अश्वमेधाधिकं
फलम् ।

| | | |
|---|---|---|
| | | कलौ भवेन्न सन्देहो वासुदेवप्रसादतः<br>॥<br>घृतेन दीपकं विष्णोर्गव्येन च विशेषतः<br>।<br>ज्वालयेज्जागरे रात्रौ निमेषे गोऽयुतं<br>फलम् ॥<br>जागरे वासुदेवस्य कर्पूरेण च दीपकम् ।<br>यो ज्वालयति कोटीनां कपिलानां<br>लभेत्<br>फलम् ।<br>आरात्रिकं हरेर्यस्तु सकर्पूरन्तु जागरे ।<br>कुरुते मोक्षमाप्नोति<br>कुलायुतसमन्वितः ॥<br>विना हि योऽपि कर्पूरं कुर्य्यादारात्रिकं<br>हरेः ॥ |

निःस्वोऽपि जागरे विष्णोर्दाता भूरिफलं लभेत् ॥
वारिजं वारिणा पूर्णं शिरसि स्नापयेद्धरिम् ।
बिभर्त्ति शिरसा सोऽयं गङ्गास्नानकृतं फलम् ॥
कृत्वा पूजां हरेर्यस्तु जागरे पुरतः शुचिः ।
पठेन्नामसहस्रन्तु गीतां नागविमोक्षणम् ॥
माङ्गल्यस्नपनं पुण्यं स्तवराजमनुस्मृतिम् ।
वैदिकानि व जप्यानि भक्त्या रात्रौ मुहुर्मुहुः ॥
भवेत् प्रत्यक्षरं पुण्यं कपिलागोशतोद्भवम् ।
जागरे यज्ञरूपस्य पुरतः पठतो हरेः ॥
यः पुनः कुरुते गीतं सनृत्यं वाद्यसंयुतम् ।
न तत् क्रतुशतैः पुण्यं व्रतदानशतैरपि ॥
यः पुनः कुरुते गीतं विलज्जो नृत्यते यदि ।
लभते निमिषार्द्धेन चतुराश्रमजं फलम् ॥
जागरे पद्मनाभस्य कुर्य्यात् पुस्तकवाचनम् ।
श्लोकसंख्यां वसेत् स्वर्गे युगानि हरिसन्निधौ ॥
कुर्य्याद्वन्दनमालां यो रम्भास्तम्भैः सुशोभनैः ।
चूतवृक्षोद्भवैः पत्रैर्जागरे चक्रपाणिनः ॥
युगानि पत्रसंख्यानां स्वर्गे तस्योत्सवो भवेत् ।
पूज्यते वासवाद्यैश्च क्रीडते चाप्सरोवृतः ॥
रात्रौ मार्जयते शौरिः पापं तस्य युगा-र्ज्जितम् ॥”
इति श्रीहरिभक्तिविलासे १३ विलासः ॥

**हरिवाहनः**, पुं, (हरेर्वाहनः ।) गरुडः । इति हारावली ॥ (हरिरुच्चैश्रवा वाहनं यस्येति । इन्द्रः । यथा, महाभारते । १ । २६ । १ ।
एवं स्तुतस्तदा कद्रूवा भगवान् हरिवाहनः ।
नीलजीमूतसङ्घातैः सर्व्वमम्वरमावृणोत् ॥”
तथाच तत्रैव । ३ । ४६ । ५२ ।
“तत आनाय्य तनयं विविक्ते हरिवाहनः ।
सान्त्वयित्वा शुभैर्व्वाक्यैः स्मयमानोऽभ्यभा-षत ॥”)

**हरिवीजं**, क्ली, (हरेर्वीजं वीर्य्यम् ।) हरितालम् । इति जटाधरः ॥

**हरिवृषं**, क्ली, हरिवर्षम् । इति भूरिप्रयोगः ॥

**हरिशयनं**, क्ली, (हरेः शयनम् ।) श्रीहरेर्निद्रा । यथा । उपनयने दीपिकायाम् ।
“जीवार्केन्दूडशुद्धौ हरिशयनबहिर्भास्करे चोत्त-रस्थे
स्वाध्याये वेदवर्णाधिप इह श्रुभदे क्षौरभे नादितौ च ।”
इत्यादि ज्योतिस्तत्त्वम् ॥ * ॥
तद्विधिर्यथा । वामनपुराणे ।
“एकादश्यां जगत्स्वामिशयनं परिकल्पयेत् ।
शेषाहिभोगपर्य्यङ्कं कृत्वा संपूज्य केशवम् ॥
अनुज्ञां ब्राह्मणेभ्यश्च द्वादश्यां प्रयतः शुचिः ।
लब्ध्वा पीताम्बरधरं देवं निद्रां समानयेत् ॥”
अनुज्ञां लब्ध्वेत्यन्वयः । एकादशीसमये दिवा शयनं परिकल्पयेत् रात्रौ द्वादशीक्षणे निद्रेति ॥ * ॥ व्यक्तं वाराहे ।
“आषाढशुक्लद्वादश्यां पौर्णमास्यामथापि वा ।
चातुर्म्मास्यव्रतारम्भं कुर्य्यात् कर्क्कटसंक्रमे ॥
अभावे तु तुलार्केऽपि मन्त्रेण नियमं व्रती ।
एवमादिव्रतैः पार्थ ! तुष्टिमायाति केशवः ॥ *
सनत्कुमारः ।
“इदं व्रतं मया देव ! गृहीतं पुरत्नस्तव ।
निर्व्विघ्नां सिद्धिमाप्नोतु प्रसन्ने त्वयि केशव ! ॥
गृहीतेऽस्मिन् व्रते देव ! यद्यपूर्णे त्वहं म्रिये ।
तन्मे भवतु संपूर्णं त्वत्प्रसादाज्जनार्द्दन ! ॥”
समाप्तौ च ।
“इदं व्रतं मया देव ! कृतं प्रीत्यै तव प्रभो ! ।
न्यूनं संपूर्णतां यातु त्वत्प्रसादाज्जनार्द्दन ! ॥” * ॥
अत्रैव यतिमधिकृत्य काठकगृह्यम् ।
“एकरात्रं वसेद् ग्रामे नगरे पञ्चरात्रकम् ।
वर्षाभ्योऽन्यत्र वर्षासु मासांश्च चतुरो वसेत् ॥”
एतदशक्तविषयम् । ऊर्द्ध्वं वार्षिकाभ्यां मासाभ्यां नैकस्थानवासीति शङ्खोक्तेः ॥ * ॥ मात्स्ये ।
“शेते विष्णुः सदाषाढे भाद्रे च परिवर्त्तते ।
कार्त्तिके परिबुध्येत शुक्लपक्षे हरेर्द्दिने ॥”
भविष्यनारदीययोः ।
“मैत्राद्यपादे स्वपितीह विष्णु-
र्वैष्णव्यमध्ये परिवर्त्तते च ।
पौष्णावसाने च सुरारिहन्ता
प्रबुध्यते मासचतुष्टयेन ॥”
मैत्रमनुराधा वैष्णव्यं श्रवणा । पौष्णं रेवती ॥ * ॥
भविष्ये ।
“निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्त-नम् ।
अन्यत्र पादयोगेऽपि द्वादश्यामेव कारयेत् ॥”
अन्यत्र स्वापादिविहितरात्र्यादीतरकालेदश-मीप्रदीपदोश्च ।
“किं तन्मैत्राद्यपादेन दशम्यंशेन यो दिवा ।
पौष्णशेषेण किन्तेन प्रतिपद्यथ यो निशि ॥”
दशम्यंशेन दशम्या अंशो यत्र पादे तेन यः पादो दिवा प्राप्तस्तेन वा किम् । अत्र दशमीप्रतिपदोर्व्वर्ज्जनात् तदितरैकादश्यादि-

नृत्यमानस्य मर्त्यस्य ये केचिन्निरयं गताः ।
विमुक्ता धर्म्मराजेन मुक्तिं यान्ति हरेः पदम् ॥
गीतध्वनिसुसन्तुष्टो जागरे तु रमापतिः ।
वासवस्याधिकं सौख्यं दद्यान्मन्वन्तरं शतम् ॥
नृत्येन मर्त्ये सौख्यं तु स्वर्गे नृत्येन जागरे ।
रसातले तथा सौख्यं मुक्तिर्नृत्यादवाप्यते ॥
प्रेक्षणीयप्रदानेन यत् पुण्यं कथितं बुधैः ।
न तत् कोटिमखैः पुण्यं योगैः सांख्यैरवाप्यते ॥
दीपमालां हरेरग्रे यः करोति प्रजागरे ।
विमानकोटिसंयुक्तः कल्पान्तं वसते दिवि ॥ * ॥
चरितं रामचन्द्रस्यः यः शृणोति हरेर्दिने ।
रात्रौ वाल्मीकिना प्रोक्तं तत्समो न हि वैष्णवः ॥
यः पुनः पठते रात्रौ महाभारतसम्भवाम् ।
कथां जागरणे विष्णोः कुलकोटिं नयेद्दिवम् ॥
औत्तानपादेश्चरितं ध्रुवस्य च महात्मनः ।
कृष्णस्य बालहरितं जागरे पठते हि यः ॥
युमकोटिसहस्रस्य क्षयः पापस्य जायते ।
तस्माज्जागरणं कार्य्यं पक्षयोः शुक्लकृष्णयोः ॥
श्रीमद्भागवतं भक्त्या पठते विष्णुसन्निधौ ।
जागरे तत्पदं याति कुलवृन्दसमन्वितः ॥

कार्त्तिके शुक्लद्वादश्यां विधिवत्तत् समापयेत् ॥
चतुर्धापि हि तच्चीर्णं चातुर्म्मास्यं व्रतं नरः ।
कार्त्तिक्यां शुक्लपक्षे तु द्वादश्यां तत्समापयेत् ॥”
मात्स्ये ।
“चतुरो वर्षिकान् मासान् देवस्योत्थापना-वधि ।
मधुस्वरो भवेन्नित्यं नरो गुडविवर्ज्जिनात् ॥
तैलस्य वर्ज्जनादेव सुन्दराङ्गः प्रजायते ।
कटुतैलपरित्यागात् शत्रुनाशः प्रजायते ॥
लभते सन्ततिं दीर्घां स्थालीपाकमभक्षयन् ।
सदा मुनिः सदा योगी मधुमांसस्य वर्ज्जनात् ॥
निराधिर्नीरुगोजस्वी विष्णुभक्तश्च जायते !
एकान्तरोपवासेन विष्णुलोकमवाप्नुयात् ॥
धारणान्नखलोम्नाञ्च गङ्गास्नानं दिने दिने ।
ताम्बूलवर्ज्जनाद्भोगी रक्तकण्ठश्च जायते ॥
घृतत्यागात् सुलावण्यं सर्व्वं स्निग्धं वपुर्भवेत् ।
फलत्यागात्तु मतिमान् बहुपुत्त्रश्च जायते ॥
नमो नारायणायेति जप्त्वानशनजं फलम् ।
पादामिवन्दनाद्विष्णोर्लभेद्गोदानजं फलम् ।

पञ्चतिथिषु मैत्रादिनक्षत्रपादविशेषलाभे द्वादशीं विनापि शयनादिरिति प्रतीयते ॥ * ॥
वचनान्तरम् ।
“रेवत्यन्तो यदा रात्रौ द्वादश्या च समायुतः ।
तदा विबुध्यते विष्णुर्द्दिनान्ते प्राप्य रेवतीम् ॥”
दिनान्तेत्रिधाविभक्तदिनतृतीयभागेदिवो-त्थानमित्यनुरोधात् । विष्णुधर्म्मोत्तरे ।
“विष्णुर्द्दिवा न स्वपिति न च रात्रौ प्रबुध्यते ।
द्वादश्यामृक्षसंयोगे पादयोगो न कारणम् ॥
अप्राप्ते द्वादशीमृक्षे उत्थानशयने हरेः ।
पादयोगेन कर्त्तव्ये नाहोरात्रं विचिन्तयेत् ॥”
वराहपुराणम् ।
“द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे ।
आ-भा-का-सितपक्षेषु शयनावर्त्तनादिकम् ॥”
आ-भा-कानां आषाढभाद्रकार्त्तिकानाम्॥ * ॥
यतश्च द्वादश्यां निशादौ नक्षत्रमात्रयोगात् ।
द्वादश्यामृक्षाभावे तिथ्यन्तरे निशाद्यनादरेण पादविशेषयोगात् । तद्भावे द्वादश्यां सन्ध्याया-
मेव शयनादिकम् । बोधनन्तु द्वादश्यां रात्र

| | | |
|---|---|---|
| अष्टादश पुराणानि पुराणपुरुषस्य च ।<br>दयितानि सदा विष्णोर्विशेषेण तु जागरे ॥<br>यो गीतां पठते रात्रौ विष्णोर्नामसहस्रकम् ।<br>वेदोक्तानां पुराणानां जागरी पुण्यमाप्नुयात् ॥<br>धेनुदानं तु यः कुर्य्याज्जागरे चक्रपाणिनः ।<br>लभते नात्र सन्देहः सप्तद्वीपावनीफलम् ॥<br>जागरे पद्मनाभस्य यः कुर्य्याच्छुभमण्डपम् ।<br>मण्डले ध्रुवलोकस्य यावत्तिष्ठति पद्मभूः ॥ * ॥<br>सर्व्वेषामेव पुण्यानां महत् पुण्यं महीतले ।<br>द्वादश्यां जागरे विप्र ! प्रसिद्धं भुवनत्रये ॥<br>जागरं ये चिकीर्षन्ति कर्म्मणा मनसा गिरा ।<br>न तेषां पुनरावृत्तिर्विष्णुलोकात् कथञ्चन ॥<br>जागरे नृत्यमानन्तु दृष्ट्वा वै द्वादशीदिने । | | |

रवत्यन्तपादयोगे दिनतृतीयभागे इति
विशेषः ॥
शयने मन्त्रमाह वराहपुराणम् ।
“नमो नारायणायेत्युक्त्वा इमं
मन्त्रमुदीरयेत् ।
पश्यन्तु मेघान्यपि मेघश्यामं
ह्युपागतं सिच्यमानं महीमिमाम् ।
निद्रां भगवान् गृह्णातु लोकनाथ
वर्षास्विमं पश्यतु मेघवृन्दम् ॥
ज्ञात्वा च पश्यैव च देवनाथ
मासाश्चत्वारि वैकुण्ठस्य तु पश्यनाथ !
॥”
ततश्च ।
“सुप्ते त्वयि जगन्नाथे जगत् सुप्तं भवेदिदम्
।
विबुद्धे त्वयि बुध्येत जगत् सर्व्वं चराचरम्
॥”
इत्यनेन पूजयेत् ॥ * ॥ पार्श्वपरिवर्त्तने तु
।
“वासुदेव जगन्नाथ प्राप्तेयं द्वादशी तव ।
पार्श्वेन परिवर्त्तस्व सुखं स्वपिहि माधव !
॥”
इति पठेत् ॥
“त्वयि सुप्ते जगन्नाथे जगत् सुप्तं भवेदिदम्
।
विबुद्धे त्वयि बुध्येत जगत् सर्व्वं चराचरम्
॥”
इत्यनेन पूजयेत् ॥
नैयतकालिककल्पतरौ ब्रह्मपुराणम् ।
कार्त्तिक-
शुक्लपंक्षमधिकृत्य ।
“उपवासः प्रकर्त्तव्य एकादश्यां प्रजागरः ।
द्वादश्यां वासुदेवश्च पूजितव्यः प्रयत्नतः
॥” * ॥
उत्थानमन्त्रस्तु ।
महेन्द्ररुद्रैरभिनूयमानो
भवानृषिर्बन्दितवन्दनीयः ।
प्राप्ता तवेयं किल कौमुदाख्या
जागृष्व जागृष्व च लोकनाथ ! ॥

**हरिषः**, पुं, हर्षः । इति केचित् ॥

**हरिषेणः**, पुं, जिनचक्रवर्त्तिविशेषः । तत्पर्य्यायः
।

हरिसुतः २ । यथा, --
“हरिषेणो हरिसुतो जयो विजयनन्दनः
।
ब्रह्मसूनुर्ब्रह्मदत्तः सर्व्वे चेक्ष्वाकुवंशजाः
॥”
इति हेमचन्द्रः ॥

**हरिसङ्कीर्त्तनं**, क्ली, (हरेः सङ्कीर्त्तनम् ।) श्रीहरे-

र्नामोच्चारणम् । यथा, --
“दानं व्रतं तपो यज्ञः श्राद्धं वा
पितृतर्पणम् ।
सकलं निष्फलं राजन् ! हरिसुङ्कीर्त्तनं
विना ॥”
इति कर्म्मलोचनम् ॥
अपि च ।
“नरके पच्यमानानां नराणां
पापकर्म्मणाम् ।
मुक्तिः संजायते तस्मात्
नामसंकीर्त्तनाद्धरेः ॥”
इति हरिभक्तिविलासधृतं इति
हासोत्तमवच-
नम् ॥

**हरिसुतः**, पुं, (हरेः सुत इव ।) हरिषेणराजा ।

इति हेमचन्द्रः ॥ हरेः पुत्त्रश्च ॥

**हरिहयः**, पुं, (हरिरेव हयो यस्य ।) इन्द्रः ।

इत्यमरः । १ । १ । ४६ ॥ (यथा,
महाभारते ।
१ । ६७ । ५० ।
“द्वितीयस्तु ततोस्तेषां श्रीमान्
हरिहयोपमः ।
अपराजित इत्येव स बभूव नराधिपः
॥”)
सूर्य्यः । कार्त्तिकेयः । गणेशः । इति
केचित् ॥

**हरिहरः**, पुं, (हरिणा सह हरः ।) संयुक्त

कन्दर्पखट्टाङ्गकपालघण्टा-
सशङ्खचक्राब्जधरं महर्षे ! ॥
दृष्ट्वैव देवा हरिशङ्करं तं
नमोऽस्तु ते सर्व्वगताव्ययेति ॥”
इति वामनपुराणे ५९ अध्यायः ॥ * ॥
शिवविष्णोरभेदेनार्च्चकस्य रूपन्त्वेवम् ।
यथा, --
“निरामया नाम गणाः समायाता जगद्-
गुरो ।
सार्द्धद्विनेत्राः पद्माक्षाः श्रीवत्साङ्कितवक्षसः ॥
समायाताः खगारूढा वृषभध्वजिनोऽव्ययाः ।
महापाशुपता नाम शूलचक्रधारास्तथा ।
भैरवो विष्णुना सार्द्धमभेदेनार्च्चितो हि यैः ॥”
इति तत्रैव ६४ अध्यायः ॥
अन्यच्च ।
“अथवा विष्णुरूपेण पूजयेच्चेश्वरं सदा ।
शङ्करं वामभागस्थं सर्व्वकाममवाप्नुयात् ॥”
इति देवीपुराणे १२ अध्यायः ॥

**हरिहरक्षेत्रं**, क्ली, (हरिहरस्य क्षेत्रम् ।) तीर्थ-

विशेषः । स तु पाटलिपुत्रनगरस्थभागीरथ्यु-
त्तरपारे वर्त्तते । तस्य नामान्तरं ददरिक्षेत्रं
तद्देशीया वदन्ति । तत्र गङ्गागण्डकोसङ्गमे
कार्त्तिकपौर्णमास्यां स्नानार्थं जनसमूहमेलनं
भवति । तस्य नामकारणं यथा, --
“ततः स पञ्च रात्राणि स्थित्वा वै
विधिपूर्ब्बकम् ।
गोधनान्यग्रतः कृत्वा हरिक्षेत्रं जगाम ह ।
हरिणाधिष्ठितं क्षेत्रं हरिक्षेत्रं ततः स्मृतम् ॥
सदा नन्दी शूलपाणिर्गोधनैन्न पुरस्कृतः ।
स्थितवांस्तद्दिनाद्ध्वे तत्क्षेत्रं हरिहरात्मकम् ।
देवानामटनाच्चैव देवाट इति संज्ञितम् ॥”
इति वाराहे भगवच्छास्त्रे सोमेश्वरादिलिङ्ग-
महिमाविमुक्तक्षेत्रत्रिवेण्यादिमहिमानामा-
ध्यायः ॥

**हरिहरात्मकः**, पुं, (हरिहरौ आत्मानौ यस्य ।

कप् ।) गरुडः । शिववृषः । इति
शब्दरत्नावली ॥
हरिहरक्षेत्रे, क्ली ॥ (हरिहरात्मरूपे, त्रि ।

मेघा गता निर्म्मलपूर्णचन्द्रः
शारद्यपुष्पाणि च लोकानाथ ! ।
अहं ददानीति च पुण्यहेतो-
र्ज्जागृष्व जागृष्व च लोकानाथ ! ॥”
ततः ।
“उत्तिष्ठोत्तिष्ठ गोविन्द त्यज निद्रां
जगत्पते !
त्वया चोत्थीयमानेन उत्थितं भुवनत्रयम्
॥”
इति पठित्वा पूजयेत् ॥
इति तिथ्यादित्त्वम् ॥

**हरिशरः**, पुं, (हरिः शरो यस्य ।) शिवः । इति

केचित् ॥ त्रिपुरदहनार्थं हरिरेव यतस्तस्य
शरोऽभूत्तस्मात् । यथा, पुष्पदन्तः ।
“रथः क्षौणी यन्ता शतधृतिरगेन्द्रो धनुरथो
रथाङ्गे चन्द्रार्कौ रथचरणपाणिः शर इति ।
निधक्षोस्ते कोऽयं त्रिपुरतृणमाडम्वरविधि-
र्विधेयैः क्रीडन्तो न खलु परतन्त्राः
प्रभुधियः ॥”

**हरिश्चन्द्रः**, पुं, नृपविशेषः । तु त्रेतायुगे सूर्य्य-

वंशीयः अष्टाविंशराजः । तत्पर्य्यायः ।
त्रिश-
ङ्कुजः २ । इति हेमचन्द्रः ॥ अपि च ।
त्रिशङ्की-
र्हरिश्चन्द्रस्तस्माद्रोहिताश्वस्ततश्च
हरितः । इति
विष्णुपुराणे । ४ । ३ । १५ ॥

**हरिश्चन्द्रपुरं**, क्ली, (हरिश्चन्द्रस्य पुरम् ।) हरि-

श्चन्द्राराजनगरम् । तत्पर्य्यायः शौभपुरम्
२ ।
इति त्रिकाण्डशेषः ॥

हरिहरमूर्त्तिः । यथा, --
पुलस्त्य उवाच ।
“विमुक्तपापा देवेशं वासुदेवमथाब्रुवन् ।
क्वासौ वद जगन्नाथ ! शम्भुस्तिष्ठति
केशव ।
यं क्षीराद्यभिषेण स्नापयामो विधानतः
॥
अथोवाच सुरान् विष्णुरेष तिष्ठति
शङ्करः ।
मद्देहे किन्न पश्यध्वं योगप्रायं
प्रतिष्ठितम् ॥
तमूचुर्नैव पश्यामस्त्वत्तो वै
त्रिपुरान्तकम् ।
सत्यं वद सुरेशान ! महेशानः क्व
तिष्ठति ॥
ततोऽव्ययात्मा स हरिः
स्वहृत्पङ्कजशायिनम् ।
दर्शयामास देवानां मुरारिर्लिङ्गमैश्वरम्
॥
ततः सुराः क्रमेणैव
क्षीरादिभिरनन्तरम् ।
स्नापयाञ्चक्रिरे लिङ्गं शाश्वतं
ध्रुवमव्ययम् ॥
गोरोचनया त्वालिप्य चन्दनेन
सुगन्धिना ।
विल्वपत्राम्वुजैर्द्देवं पूजयामासुरञ्जसा ॥
पूजयित्वा गुरुं भक्त्या निवेद्य
परमौषधीः ।
जप्त्वाष्टशतनामानि प्रणामं चक्रिरे
ततः ॥
इत्येवं चिन्तयन्तश्च देवा देवौ
हराच्युतौ ।
कथं योगत्वमापन्नौ संराध्यतममात्मनः
॥
सुराणां चिन्तितं ज्ञात्वा
विश्वमूर्त्तिरभूद्विभुः ।
सर्व्वलक्षणसंयुक्तः
सर्व्वायुधधरोऽव्ययः ॥
सार्द्धं त्रिनेत्रं कमलाहिकुण्डलं
जटामहाभारशिरोजमण्डितम् ।
हरिं हरञ्चैव नगेन्द्रभूषणं

यथा, हरिवंशे । १८१ । ३० ।
“अनादिमध्यनिधनमेतदक्षरमव्ययम् ।
तदेव ते प्रवक्ष्यामि रूपं हरिहरात्मकम् ॥”)

**हरितकी**, स्त्री, (हरि पीतवर्णं फलमिता प्राप्ता

इति हरीता । ततः संज्ञायां कन् गौरादि-
त्वात् ङीष् ।) स्वनामख्यातवृक्षः । हरडा इति
हिन्दी भाषा । तत्पर्य्यायः । अभया २
अव्यथा ३
पथ्या ४ वयःस्था ५ पूतना ६ अमृता ७ हैम-
वती ८ चेतकी ९ श्रेयसी १० शिवा ११ ।
इत्यमरः । २ । ४ । ५९ ॥ सुधा १२
कायस्था १३
कन्या १४ रसायनफला १५ । इति
शब्दरत्ना-
वली ॥ विजया १६ । इति जटाधरः ॥ जया
१७ चेतनकी १८ रोहिणी १९ प्रपथ्या २०
जीवप्रिया २१ जीवनिका २२ भिषग्वरा २३
पुस्तकान्तरे भिषक्प्रिया इति पाठः । जीवन्ती
२४ प्राणदा २५ जीव्या २६ देवी २७ दिव्या
२८ । अस्या गुणाः ।

| | पीताजिनाच्छन्नकटिप्रदेशकम् ॥<br>चक्रासिहस्तं घनुःशार्ङ्गपाणिं<br>पिनाकशूलाजगवान्वितञ्च। | |
|---|---|---|

"हरीतकी पञ्चरसा च रेचनी
कोष्ठामयघ्नी लवणेन वर्ज्जिता ।
रसायनी नेत्ररुजापहारिणी
त्वगामयघ्नी किल योगवाहिनी ॥"
अन्यच्च ।
"वीजास्थितिक्तं मधुरा तदन्त-
स्त्वग्भागतः सा कटुरुष्णवीर्य्या ।
मांसांशतश्चाम्लकषाययुक्ता
हरीतको पञ्चरसा स्मृतेयम् ॥
पथ्यामज्जा तु चक्षुष्यो वातपित्तहरो
गुरुः ॥"
तस्या भेदा यथा, --
"हरीतक्यमृतोत्पन्ना
सप्तभेदैरुदीरिता ।
तस्यां नामानि वर्णांश्च वक्ष्याम्यथ
यथाक्रमात् ॥
विजया रोहिणी चेव पूतना
चामृताभया ।
जीवन्ती चेतकी चेति नाम्ना
सप्तविधा स्मृता ॥
अलावुवृत्ता विजया मुवृत्ता रोहिणी
मता ।
स्वल्पत्वक् पूतना क्षेया
स्थूलमांसामृता स्मृता ॥
पञ्चासा चाभया ज्ञेया जीवन्ती
स्वर्णवर्णभाक् ।
त्र्यस्रा तु चेतक्री विद्यादित्यासां
रूपलक्षणम् ॥
बिन्ध्याद्रौ विजया हिमाचलभवा
स्याच्चेतकी
पूतना
सिन्धौ स्यादथ रोहिणी तु विजया
जाता
प्रतिस्थानके ।
चम्पायाममृताभया च जनिता देशे
सुराष्ट्राह्वये
जीवन्तीति हरीतकी निगदिता सा
सप्तभेदा
बुधैः ॥ * ॥

नामानि कति चोक्तानि कञ्च तासाञ्च लक्षणम् ॥
के च वर्णा गुणाः के च का च कुत्र प्रयुज्यते ।
केन द्रव्येण संयुक्ता कांश्च रोगान् व्यपोहति ॥
पृच्छाम्येतद्यथा पृष्टं भगवन् ! वक्तुमर्हसि ।
अश्विनोर्व्वचनं श्रुत्वा दक्षो वचनमब्रवीत् ॥
पपात बिन्दुर्म्मेदिन्यां शक्रस्य पिबतोऽमृतम् ।
ततो दिव्यात् समुत्पन्ना सप्तजातिर्हरीतकी ॥
हरीतक्यभया पथ्या कायस्था पूतनामृता ।
हैमवत्यव्यथा चापि चेतकी श्रेयसी शिवा ।
वयस्था विजया चापि जीवन्ती रोहिणीति च ।
विजया रोहिणी चैव पूतना चामृताभया ।
जीवन्ती चेतकी चेति पथ्यायाः सप्तजातयः ॥ *
॥
अलावुवृत्ता विजया वृत्ता सा रोहिणी स्मृता ।
पूतनास्थिमती सूक्ष्मा कथिता मांसलामृता ॥
पञ्चरेखाभया प्रोक्ता जीवन्ती स्वर्णवर्णिनी ।
त्रिरेखा चेतकी ज्ञेया सप्तानामियमाकृतिः ॥ * ॥
विजया सर्व्वरोगेषु रोहिणी व्रणरोहिणी ।
प्रलेपे पूतना योज्या शोधनार्थेऽमृता हिता ॥
अक्षिरोगेऽभया शस्ता जीवन्ती सर्व्वरोग-
हृत् ॥
चूर्णार्थे चेतकी शस्ता यथा युक्तं प्रयोजयेत् ॥ *
॥
चेतकी द्विविधा प्रोक्ता श्वेता कृष्णा च वर्णतः ।
षडङ्गुलायता शुक्ला कृष्णा चैकाङ्गुलायता ॥
काचिदास्वादमात्रेण काचिद्गन्धेन भेदयेत् ।
काचित् स्पर्शेन दृष्टान्या चतुर्द्धा भेदयेच्छिवा ।
चेतकीपादपच्छायामुपसर्पन्ति ये नराः ।
भिद्यन्ते तत्क्षणादेव पशुपक्षिमृगादयः ॥
चेतकी तु धृता हस्ते यावत्तिष्ठति देहिनः ।
तावद्भिद्येत वेगैस्तु प्रभावान्नात्र संशयः ॥
नृपादिसुकुमाराणां कृशानां भेषजद्विषाम् ।
चेतकी परमा शस्ता हिता सुखविरेचनी ॥
सप्तानामपि जातीनां प्रधाना विजया स्मृता ।
सुखप्रयोगा सुलभा सर्व्वरोगेषु शस्यते ॥
हरीतकी पञ्चरसालवणा तुवरा परम् ।
रूक्षोष्णा दीपनी मेध्या स्वादुपाका रसायनी ।
चक्षुष्या लघुरायुष्या बृंहणीचानुलोमिनी ।
श्वासकासप्रमेहार्शःकुष्ठशोथोदरक्रिमीन् ॥

नवा स्निग्धा घना वृत्ता गुर्व्वी क्षिप्ता च
याम्भसि ।
निमज्जेत् सा सुप्रशस्ता
कथितातिगुणप्रदा ॥
नवादिगुणयुक्तत्वं तथैकत्र द्विकर्षता ।
हरीतक्याः फले यत्र द्वयं तच्छ्रेष्ठमुच्यते ॥
चर्व्विता वर्द्धयत्यग्निं पेषिता मलशोधिनी ।
स्विन्ना संग्राहिणी पथ्या भृष्टा प्रोक्ता
त्रिदोष-
नुत् ॥
उन्मीलिनी बुद्धिबसेन्द्रियाणां
निर्म्मूलिनी पित्तकफानिलानाम् ।
विस्रंसिनी मूत्रशकृन्मलानां
हरीतकी स्यात् सह भोजनेन ॥
अन्नपानकृतान् दोषान्
वातपित्तकफोद्भवान् ।
हरीतकी हरत्याशु भुक्तस्योपरियोजिता ॥
लवणेन कफं हन्ति पित्तं हन्ति सशर्करा ।
घृतेन वातजान् रोगान् सर्व्वरोगान्
गुडान्विता ।
सिन्धूत्थशर्कराशुण्ठीकणामधुगुडैः क्रमात्
।
वर्षादिष्वभया प्राश्या रसायनगुणैषिणा ॥
अध्वातिखिन्नो बलवर्जितश्च
रूक्षः कृशो लङ्घनकर्षितश्च ।
पित्ताधिको गर्भवती च नारी
विमुक्तरक्तस्त्वभयां न खादेत् ॥"
इति भावप्रकाशः ॥ * ॥
अन्यच्च ।
"जीवन्ती रोहिणी चैव विजया चाभयामृता
।
पूतना कालिका चेति सप्तजातिर्हरीतकी ॥
सुवर्णवर्णा जीवन्ती रोहिणी कपिलद्युतिः
।
अलावुवृत्ता विजया पञ्चांशा चाभया स्मृता
॥"
पञ्चांशा पञ्चशिरा ।
"स्थूलमांसामृता ज्ञेया पूतनास्थिमती
मता ।

सर्व्वप्रयोगे विजयाथ रोहिणी
क्षतेषु लेपेषु च पूतनोदिता ।
विरेचने स्यादमृता गुणाधिका
जीवन्तिका स्यादिह जीर्णरोगजित् ॥
स्याच्चेतकी सर्व्वरूजापहारिका
नेत्रामयघ्नीमभयां वदन्ति ताम् ।
इत्थं यथारोगमियं प्रयोजिता
ज्ञेया गुणाढ्या न कदाचिदन्यथा ॥
चेतकी च धृता हस्ते यावत्तिष्ठति
देहिनः ।
तावद्भिरिच्यते वेगात्तत्प्रभावान्न
संशयः ॥
सप्तानामपि जातीनां प्रधानं विजया
स्मृता ।
सुखप्रयोगसुलभा सर्व्वव्याधिषु
शस्यते ॥
क्षिप्ताप्सु निमज्जति या सा ज्ञेया
गुणवती
भिषग्वरैः ।
यस्या यस्या भूयो निमज्जनं सा
गुणाल्पा
स्यात् ॥
हरते प्रसभं व्याधीन् भूयस्तकति
यद्वपुः ।
हरीतकी तु सा प्रोक्ता
तकतिर्दीप्तवाचिका ॥
हरीतकी तु तृष्णायां हनुस्तम्भे
गलग्रहे ।
शोषे नवज्वरे क्षीणे गुर्व्विण्यां नैव
शस्यते ।”
इति राजनिर्घण्टः ॥ * ॥
अपि च ।
“दक्षं पजापतिं स्वस्थं अश्विनौ
वाक्यमूचतुः ।
कुतो हरीतकी जाता तस्यास्तु कति
जातयः ॥
रसाः कति समाख्याताः कति
चोपरसाः स्मृताः ।

वैस्वर्य्यग्रहणीरोगविबन्धविषमज्वरान्॥
गुल्माध्मानव्रणच्छर्द्दिहिक्वाकण्डूहृदामयान् ॥
व्रणस्थाने तृषा इति क्वचित् पुस्तके पाठः ।
कामलां शूलमानाहं प्लीहानञ्च यकृत्तथा ।
अश्मरीमूत्रकृच्छ्रञ्च मूत्राघातञ्च नाशयेत् ॥
स्वादुतिक्तकषायत्वात् पित्तहृत् कफहृत्तु सा ।
कटुतिक्तकषायत्वादम्लत्वाद्वातहृच्छिवा॥
पित्तकृत् कटुकाम्लत्वात् वातहृन्न कथं शिवा ।
प्रभावाद्दोषहन्तृत्वं सिद्धं यत्तत् प्रकाश्यते ॥
हेतुभिः शिष्यबोधार्थं न पूर्ब्बं क्रियतेऽधुना ।
कर्म्मण्यत्वं गुणैः साम्यं दृष्टमाश्रयभेदतः ।
यतस्ततो नेति चिन्त्यं धात्रीलकुचयोर्यथा ॥
पय्याया मज्जनि स्वादुः स्नायावम्लो व्यव-
स्थितः ।
वृन्ते तिक्तस्त्वचि कटुरस्थिस्थस्तवरो रसः ॥ *
॥

त्र्यंशा च कालिकेत्येवं सप्तजातिर्हरीतकी
॥
स्नेहपानेषु सर्व्वेषु जीवन्ती तु प्रशस्यते ।
रोहिणी क्षतरोगेषु विजया सर्वकर्म्मसु ॥
पूतना लेपने ज्ञेया अमृता तु विरेचने ।
अभया नेत्ररोगेषु गन्धयुक्तौ तु कालिका ॥
हरस्य भवने जाता हरिता च स्वभावतः ।
हरते सर्व्वरोगांश्च तेन नाम्ना हरीतकी ॥
* ॥
पीयूषं पिबतस्त्रिपिष्टपपतेर्य्ये विन्दवो
निर्गता-
स्तेभ्योऽभूदभया दिवाकरकरश्रेणीव
दोषापहा ।
कालिन्दीव बलप्रमोदजननी गीरीव
शूलिप्रिया
वह्निद्योतकरी हुताहुतिरिव क्षौणीव नाना-
रसा ॥
पथ्या पञ्चरसायुष्या चक्षुष्यालवणा सरा ।
मेध्योष्णा दीपनी कुष्ठदोषशोथब्रणाप्रहा
॥” * ॥
पञ्चरसस्य विवरणम् । त्वक् कटुः । मांसं
अम्ल
कषायम् । अस्थि तिक्तम् । तन्मध्ये
माधुर्य्यम् ॥ * ॥
तन्मज्जगणाः ।
“पथ्यामज्जा तु चक्षुष्यो वातपित्तहरो
गुरुः ॥”
इति राजवल्लभः ॥

**हरीषा**, स्त्री, मांसव्यञ्जनविशेषः । आस इति
हिन्दी भाषा । यथा, --
“पाकपात्रे तबहति मांसखण्डानि
निःक्षिपेत् ।

पानीयं प्रचुरं सर्पिः प्रभूतं हिङ्गु
जीरकम् ॥
हरिद्रामाद्रकं शुण्ठी लवणं मरिचानि
च ।
तण्डुलां चापि गोधूमान् जम्बीराणां
रसान्
बहून् ॥
यथा सर्व्वाणि वस्तूनि सुपक्वानि
भवन्ति हि ।
तथा पचेत निपुणो
बहुमण्डस्थितिर्य्यथा ॥
एषा हरीषा बलकृद्वातपित्तापहा गुरुः
।
शीतोष्णा शुक्रदा स्निग्धा सरा
सन्धान-
कारिणी ॥”
इति भावप्रकाशः ॥

**हरेणुः**, स्त्री, (ह्रियते इति । हृ + “कृहृभ्या-
मेणुः ।” उणा० २ । १ । इति एणुः
।) रेणु-
कानामगन्धद्रव्यम् । इत्यमरः । २ ।
४ । १२० ॥
कुलयोषित् । इति मेदिनी ॥

**हरेणुः**, पुं, (ह्रियते इति । हृ + एणुः ।) सतीलः
।
इति मेदिनी ॥ (गुणादयोऽस्य
सतीलशब्दे
ज्ञातव्याः ॥)

**हरेणुकः**, पुं, (हरेणुरिव । कन् ।) कलायः ।
इति राजनिर्घण्टः ॥ (पर्य्यायोऽस्य
यथा, --
“कलायो वर्त्तुलः प्रोक्तः सतीलश्च
हरेणुकः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**हर्त्ता**, [ऋ] पुं, (हरति ध्वान्तमिति । हृ + तृच्
।)

**हर्य्यक्षः**, पुं, (हरि पिङ्गलं अक्षि यस्य । षच् ।)
सिंहः । इत्यमरः । २ । ५ । १ ॥
कुबेरः । इति
जटाधरः ॥ (पिङ्गलनेत्रे, त्रि । यथा,
महा-
भारते । ३ । ३०७ । ५ ।
“तथैवाबद्धकवचं कनकोज्ज्वलकुण्डलम्
।
हर्य्यक्षं वृषभस्कन्धं यथास्य पितरं
तथा ॥”)

**हर्य्यतः**, पुं, (हर्य्यति गच्छतीति । हर्य्य + “भूमृ-
दृशियजीति ।” उणा० ६ । ११० ।
इति
अतच् ।) धोटकः । इति
सिद्धान्तकौमुद्या-
मुणादिवृत्तिः ॥ अश्वमेधीयाश्वः !
इत्युणादि-
कोषः ॥

**हर्य्यश्वः**, पुं, (हरिनामा हरिवर्णो वा अश्वो
यस्य ।) इन्द्रः । इति केचित् ॥ (यथा,
भाग-
वते । ८ । ११ । २१ ।
“हरीन् दशशतान्याजौ हर्य्यश्वस्य बलः
शरैः ।
तावद्भिरर्द्दयामास युगपल्लघुहस्तवान्
॥”
हरिनामा हरिवर्णो वा अश्वः इति
कर्म्मधारयेण
इन्द्राश्वः । यथा, महाभारते । ३ ।
२८९ । १३ ।
“अयं हर्य्यश्वयुग् जैत्रो मघोनः
स्यन्दनोत्तमः ।
अनेन शक्रः काकुस्थः समरे
दैत्यदानवान् ।
शतशः पुरुषव्याघ्र ! रथोदारेण
जघ्निवान् ॥”)

**हर्षः**, पुं, (हृष तुष्टौ + घञ् ।) इष्टश्रवणजन्य-

**हर्षणः**, पुं, (हर्षयतीति । हृष् + णिच् + ल्युः ।)
विष्कम्भादिसप्तविंशतियोगान्तर्गतचतर्द्दशयोगः ।
तत्र जातफलम् ।
“सुचारुगात्रं स्फुटपद्मनत्रं
शास्त्रप्रयत्ने विनयोपपन्नः ।
प्रसूतिकाले यदि हर्षणः स्या-
दमर्षणो नैव जनः कदाचित् ॥”
इति कोष्ठीप्रदीपः ॥ * ॥
चक्षूरोगविशेषः । श्राद्धविशेषः । श्राद्धदेवः ॥
हर्षकारके, त्रि । इति शब्दरत्नावली ॥ (यथा,
महाभारते । ७ । ३१ । ७६ ।
“एवं सुकलिलं युद्धमासीत् क्रव्यादहर्षणम् ।
महद्भिस्तैरभीतानां यमराष्ट्रविवर्द्धनम् ॥”)

**हर्षमाणः**, त्रि, (हर्ष + ताच्छीले शानच् ।)
हर्षयुक्तः । तत्पर्य्यायः । विकुर्व्वाणः २ प्रमनाः ३
हृष्टमानसः ४ इत्यमरः । ३ । १ । ७ ॥ प्रीत-
मानसः ५ । इति शब्दरत्नावली ॥

**हर्षयित्नुः**, पुं, (हर्षयतीति । हृष तुष्टौ + णिच् +
“स्तनिहृषिपुषीति ।” उणा० ३ । २९ । इति
णेरित्नुच् ।) पुत्त्रः । स्वर्णे, क्ली । इति मेदिनी ॥
हर्षणशीले, त्रि ॥

**हर्षस्वनः**, पुं, (हर्षसूचकः स्वनः ।) आनन्द-
ध्वनिः तत्पर्य्यायः । किलकिला २ । इति
त्रिकाण्डशेषः ॥

**हर्षिणी**, स्त्री, हर्षयतीति ॥ हृष् + णिच् +
णिनिः । ङीप्) विजया । इति राजनिर्घण्टः ॥

**हर्षितः**, त्रि, आह्लादितः । हर्षोऽस्य लात इत्य-
नेन इतप्रत्ययेन निष्पन्नः ॥

**हर्षुलः**, पुं, (हृष तुष्टौ + “हृषेरुलच् ।) उणा०
१ । ९८ । इति उलच् ।) मृगः । कामुकः ।
इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥ हर्षण-
शीले, त्रि ॥ (यथा, कथासरित्सागरे। १२२ ।
२६ ।
“प्राभृतं प्रत्युतेदृक्के सिद्धमद्येति हर्षुलः ॥”)

**हल**, झ विलेखे । इति कविकल्पद्रुमः ॥ (भ्वा०-

सूर्य्यः । यथा, --
“लोकसाक्षी त्रिलोकेशः कर्त्ता हर्त्ता तमिस्रहा ।
तपनस्तापनश्चैव शुचिः सप्ताश्ववाहनः ॥”
इति शाम्बपुराणे सूर्य्यस्तवः ॥
हरणकर्त्तरि, त्रि ॥ (यथा, भागवते । ४ । २४ । ५ ।
“अन्तर्धानो नभस्वत्यां हविर्धानमविन्दत ।
य इन्द्रमश्वहर्त्तारं विद्वानपि न जघ्निवान् ॥”)

**हर्म्म**, [न्] क्ली, (हरति ग्लानिमिति । हृ + मनिन् ।) जृम्भणम् । इति शब्दरत्नावली ॥

**हर्म्मितं**, त्रि, (हर्म्म जातमस्येति । इतच् ।) क्षिप्तम् । दग्धम् । इति मेदिनी ॥ जृम्भितम् ।
इति हर्म्मशब्दार्थदर्शनात् ॥

**हर्म्मुटः**, पुं, सूर्य्यः । कच्छपः । इति केचित् ॥

**हर्म्म्यं**, क्ली, (हरति जनमनांसीति । हृ + अघ्ना-दित्वात् यत् मुट् च । धनिनां वासः । इत्य-मरः । २ । २ । ९ ॥ धनिनां व्यवहारिकादीनां वासः काष्ठेष्टकादिना कृतं धवलगृहं हर्म्म्यादि-संज्ञकं स्यात् । हरति मनो हर्म्म्यं नाम्नीति हृञो म्यः इति भरतः । अन्यच्च । हरति मनो हर्म्म्यं अघ्नानित्वात् यत् मुट् च हर्म्म्यम् । आदिशब्देन स्वस्तिकाट्टालिकादेर्ग्रहणम् । धनिनां राजव्यतिरिक्तानां वासो गृहम् । एकं काष्ठेष्टकादिकृतस्य धनिगृहस्य । इत्यमर-

सुखम् । इति महाभारते मोक्षधर्म्मः ॥
आह्लादः । तत्पर्य्यायः । मुत् २ प्रीतिः ३ प्रमदः ४ प्रमोदः ५ आमोदः ६ सम्मदः ७ आनन्दथुः ८ आनन्दः ९ शर्म्म १० शातम् ११ सुखम् १२ इत्यमरः । १ । ४ । २४ ॥ मुदा १३ मुदिता १४ आनन्दिः १५ नन्दिः १६ सातम् १७ सौख्यम् १८ ।
केचिंत्तु मुदादिसप्तकं प्रीतौ आनन्दथ्वादिपञ्चकं सुखे । प्रीतिश्च सुखजो विकारः इत्याहुः ।
इति तट्टीकायां भरतः ॥ तथा च ।
“मुत् प्रीतिः प्रमदामोदसम्मोदमोदसम्मदाः।
प्रमोदो हर्ष इत्येव हर्षपर्य्याय ईरितः ॥
आनन्दो नन्दथुर्नन्दः सुखमानन्दथुर्म्मुदा ।
सौख्यं शर्म्मोपजोषः स्यादानन्दं जोषमित्यपि ॥
मुदादिजोषपर्य्यन्तमेकपर्य्यायः इत्यपि ॥”
इति शब्दरत्नावली ॥ * ॥
हर्षस्य पुत्त्रः कन्दर्पः । यथा, --
पुलस्त्य उवाच ।
“कन्दर्पो हर्षतनयो योऽसौ कामो निगद्यते ।
स शङ्करेण संदग्धो ह्यनङ्गत्वमुपागतः ॥”
इति वामने ५ अध्यायः ॥
(रोमाञ्चः । यथा । “हृष्येते हर्षयुक्तौ भवतः
हर्षश्च रोमाञ्चप्रायः ।” इति रुग्विनिश्चयस्य वातव्याधिव्याख्याने विजयरक्षितः ॥)

**हर्षकः**, पुं, (हर्षयतीति । हृष् + णिच् + ण्वुल् ।) पर्व्वतविशेषः । इति शब्दमाला ॥ हर्षकारके,

पर०-सक०-सेट् ।) झ, हालः हलः । हलति भूमिं कृषकः । इति दुर्गादासः ॥

**हलं**, क्ली, (हलति भूमिमिति । हल + अच् ।) लाङ्गलम् । इत्यमरः । २ । ९ । १३ ॥ तत्पर्य्यायः ।
“हलन्तु लाङ्गलं गोदारणञ्च सीरकुन्तलौ ।”
इति जटाधरः ॥
तत्र गोयोजने दोषादोषौ । हारीतः ।
“अष्टौगवं धर्म्महलं षड्गवं जीवितार्थिनाम् ।
चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनाम् ॥”
इति तृतीययामार्द्धकृत्ये आह्निकतत्त्वम् ॥ * ॥
हलप्रवाहदिनादि यथा । दीपिकायाम् ।
“पूर्ब्बाग्नियाम्यफणिपित्र्यशिवान्यभेषु
रिक्ताष्टमीविगतचन्द्रतिथिविहाय ।
द्व्यङ्गालिगोसमुदये विकुजार्किवारे
शस्तेन्दुयोगकरणेषु हलप्रवाहः ॥ * ॥
हलप्रवाहवद्बीजवपनस्य विधिः स्मृतः ।
चित्रायाञ्च शुभे केन्द्रे स्थिरर्क्षमनजोदये ॥”

टीकायां रायमुकुटः ॥ (यथा, --

“हर्म्म्यञ्चाक्लेदिभूमिर्नभसि च शयनं शीकरोष्ण-

प्रहीणे ॥”

इति वैद्यकपथ्यापथ्यविधौ

वर्षोपचारे ॥)

**हर्य**, क्लमे । गतौ । इति कविकल्पद्रुमः ॥ भ्वा०-

पर०-क्लमे अक०-गतौ सक०-सेट्

।) रेफोपधः ।

हर्यति । क्लमो ग्लानिः । इति

दुर्गादासः ॥

त्रि । इति शब्दरत्नावली ॥

**हर्षणं**, क्ली, (हृष + ल्युट् ।) हर्षः । इति धरणिः ।

(यथा, महाभारते । ७ । १४४ । ११५

।

“तच्छिरः सिन्धुराजस्य

शरैर्बद्धमवाहयत् ।

दुर्हृदामप्रहर्षाय सुहृदां हर्षणाय च ॥”)

भीमपराक्रमे ।
“वामे कृष्णं बलीवर्द्दं दक्षिणे लोहितं न्यसेत् ।
उत्तराभिमुखो भूत्वा कर्षकः कृषिमारभेत् ॥
हले तु योजिते यत्र क्षेत्रे ग्रासं करोति गौः ।
तत्र स्याद्द्विगुणं श्यस्यमवश्यं गर्गभापितम् ॥” * ॥
कृत्यचिन्तामणौ बलभद्रः ।
“सुखदा प्रतिपच्चैव द्वितीया कार्य्यसाधिनी ।
आरोग्यदा तृतीया च चतुर्थी कीटकृत् सदा ॥
पञ्चमी श्रीप्रदा नूनं षष्ठी च कलहप्रिया ॥
सप्तमी स्थानदा भीग्या वृषं हन्ति तथाष्टमी ॥
नवमी शस्यनाशाय दशमी भूतिदा सदा ।
एकादशी तथा कुर्य्याद्धनं धान्यं मनोरथम् ॥
द्वादशी प्राणसन्देहा सर्व्वसिद्धा त्रयोदशी ।
चतुर्द्दशी पतिं हन्ति पञ्चदश्येव निष्फला ॥
अमावस्याष्टमीषष्ठीरिक्ताश्चपरिवर्ज्जयेत् ।
सौरिभीमदिने चैव कृष्यारम्भे धनक्षयः ॥
प्राजेशविष्णुतिष्येयु पितृकरोत्तरेषु च ।
अश्विनीवातपौष्णेषु मूलादितीन्दुभे तथा ॥
वारे भानुजशुक्रे च जीवे शीतकरे तथा ।
लग्ने स्त्रीगोमीनयुग्मे कृष्यारम्भं शुभं विदुः ॥
ऐशान्यां पुष्पनैवेद्यैः क्षेत्रपालञ्च पूजयेत् ।
सालङ्कारो हलधरः स्रग्भिश्च पूजितं हलम् ।
दध्याज्यमधुभिः श्रेष्ठं फलाग्रञ्च प्रलेपितम् ।
कर्षं प्रावर्त्तयेत् पाज्ञो नूतनेन हलेन च ॥ * ॥
हस्ताश्वतिष्यचन्द्रेषु ब्रह्मन्द्रविष्णुवारुणे ।
वायव्येन्द्राग्निभे चैव रोहिण्यामुत्तरासु च ॥
वारे जीवज्ञशुक्रे च सोमे दिनकरे तथा ।
युग्मे युवतिगोमीने शस्तं स्याद्बीजवापनम् ॥”
राजमार्त्तण्डे ।
“प्राजेशश्रवणोत्तरादितिमघामार्त्तण्डतिष्याश्विनी-
पौष्णानुष्णमरीचयः शतभिषा स्वाती विशाखा तथा ।
जीवार्केन्दुसितेन्दुनन्दनदिने वारे स्थिरस्योदये
शस्यानां वपने भवन्ति लवने शस्ते तिथौ रोपणे ॥”
देवलः ।
“गुरुसोमसूर्य्यशुक्राः क्षेम्याः सम्पत्कराः
ततः शुभकरः श्रीमान् कृषिकर्म्म समाचरेत् ॥ *
वर्ज्जयेत् भग्नशृङ्गञ्च क्षुरभङ्गञ्च वर्ज्जयेत् ।
विकलं छिन्नलाङ्गूलं कपिलं वृषभं तथा ॥
हलप्रवाहणं कार्य्यं नीरुग्भिः कृषिकर्म्मकैः ।
हलादिभिर्दृढैः क्षेममदृढैर्न शुभं भवेत् ॥
वृषभा यदि मुह्यन्ति तस्य विघ्नप्रदा भवेत् ॥”
कृषिरिति शेषः ।
“तस्मात् सर्व्वप्रयत्नेन निर्व्विघ्नं क्रारयेत् सदा ॥
एका जयकरी रेखा तृतीया चार्थदायिका ।
पञ्चमी या भवेद्रेखा बहुशस्यफला हि सा ॥
अत ऊर्द्ध्वं न कर्त्तव्यं महादोषस्ततो भवेत् ॥
संपूज्याग्निं द्विजं देवं कुर्य्याद्धलप्रवर्त्तनम् ।
हेमनि घृष्टफालाग्रं छिन्नरेखां न कारयेत् ॥
स्मर्त्तव्या वसवश्चेन्द्रः पृथू रामः सचन्द्रमाः ।
पराशरो बलभद्रः सर्व्वविघ्नोपशान्तये ॥ * ॥
हले प्रवाह्यमाणे तु कूर्म्म उत्पद्यते यदि ।
गृहिणी म्रियते तस्य ततोऽग्नेश्च भयं भवेत् ॥
लाङ्गलं भिद्यते चापि प्रभुस्तत्र विनश्यति ।
ईशाभङ्गो यदा कर्त्तुः संशयो जीवितस्य च ॥
सुतनाशो युगभङ्गे समीने म्रियते सुतः ।”
बलदेवो हलं भूमिर्वृषभो रामलक्ष्मणौ ।
रक्षोघ्नौ जानकी सीता युगं गगनमेव च ॥
सीता लाङ्गलपद्धतिः । युगं युगकाष्ठम् ।
“एते द्वाविंशतिः प्रोक्ताः प्रजानां पतयः शुमाः ।
गोमङ्गले तु संपूज्याः कृष्यारम्भे महोत्सवे ॥
अर्घैः पुप्पैश्च धूपैश्च माल्यै रत्नैः पृथक् पृथक् ।
हलेन वाहयेद्भूमिं स्वयं स्नातः स्वलङ्कृतः ॥”
तथा ।
“उप्त्वा बीजन्तु तत्रैव भोक्तव्यं बान्धवैः सह ॥”
बीजवपनं प्राजापत्यतीर्थेन । यथा, हारीतः ॥
कनिष्ठायाः पश्चात् प्राजापत्यमावपनं होम-तर्पणे प्राजापत्येन कुर्य्यात् । इति ।
होमतर्पणे
लाजहोमसनकादितर्पणे । राजमार्त्तण्डे ।
“नित्यं दशहले लक्ष्मीर्नित्यं पञ्चहले धनम् ।
नित्यञ्च त्रिहले भक्तं नित्यमेकहले ऋणम् ॥” * ॥
कृषिपराशरः ।
“वैशाखे वपनं श्रेष्ठं मध्यमं रोहिणीरवौ ।
अतः परिस्मिन्नधमं न जातु श्रावणे शुभम् ॥”
ज्योतिषे ।
“पूर्ब्बभाद्रपदा मूलं रोहिण्युत्तरफल्गुनी ।
विशाखा शतभिषा वाथ धान्यानां रोपणे वराः ॥
सदोप्त्वा रजनीं नीलीं पुत्त्रवित्तैर्वियुज्यते ।
स्वयं जाते पुनस्ते द्वे पालयन्नैव दुष्यति ॥
आरामे गृहमध्ये वा मोहात् सर्षपमावपन् ।
पराभवं रिपोर्याति ससाधनधनक्षयम् ॥
निशा नीली पलाशश्च चिञ्चा श्वेतापराजिता ।
कोविदारश्च सर्व्वत्र सर्व्वं निघ्नन्ति मङ्गलम् ॥”
निशा हरिद्रा । कोविदारको रक्तकाञ्चनः ॥ *

शुभाः ।
बुधार्किभूमिपुत्राश्च न भवन्ति फलप्रदाः ॥
हन्ति मेषः पशून् सर्व्वान् स्वभावेनाथ वृश्चिकः ।
कर्क्कटेन भवेत् सौख्यं तुलायां न प्ररोहति ॥
केशरी शस्यघाती स्यात् पार्थिवोपद्रवं धनुः ।
मकरे चैव कुम्भे च भयमेव विनिद्दिशेत् ।
गोस्त्रीमन्मथमीनेषु शस्यं सम्पद्यते महत् ॥ * ॥
प्रशस्ते चन्द्रतारे च शुचिः शुकेन वाससा ।
स्नात्वा गन्धैश्च पुष्पैश्च पूजयित्वा विधानतः ॥
पृथ्वीञ्च ग्रहसंयुक्तां पूजयित्वा प्रजापतिम् ।
अग्निं प्रदक्षिणीकृत्य दीयते भूरिदक्षिणा ॥
कृष्णौ वृषौ नियोक्तव्यौ नवनीतैर्घृतेन वा ।
मुखपार्श्वं तयोर्लिप्यात् फालाग्रं कनकैः स्पृशेत् ।
उत्तराभिमुखो भूत्या क्षीरेणार्घ्यं प्रदापयेत् ।
समीने योक्त्रबन्धनकाष्ठद्वये ।
"योक्त्रच्छेदे तु व्यासङ्गः
शस्यहानिश्च जायते ॥
हले प्रवाह्यमाणे तु गौरेकः
प्रपतेद्यदि ।
प्रपतेद्युक्तमात्रस्तु बन्धनं स
प्रपद्यते ।
ज्वरातिसाररोगेण कृषिभङ्गं
विनिर्द्दिशेत् ॥
प्रवहेत् युक्तमात्रस्तु ततो गौः
प्लवते यदि ।
वत्सालीढेन नर्द्दन्ति ततः शस्यं
चतुर्गुणम् ॥ * ॥
हेमवारिविलिप्तस्य बीजस्योन्नयतः
शुचिः ।
इन्द्रं चित्ते विधायाथ स्वयं मुष्टित्रयं
वपेत् ॥
कृत्वा चान्योन्यप्रोत्साहं कर्षको
हृष्टमानसः ।
प्राङ्मुखः कलसं गृह्य इमं
मन्त्रमुदीरयेत् ॥
त्वं वै वसुन्धरे सीते
बहुपुष्पफलप्रदे ।
नमस्ते मे शुभं नित्यं कृषिं मेधां
शुभे कुरु ॥
रोहन्तु सर्व्वशस्यानि काले देवः
प्रवर्षतु ।
कर्षकास्तु भवन्त्यग्रा धान्येन च
धनेन च
स्वाहा ॥" * ॥
कृत्यरत्नाकरे ब्रह्मपुराणम् ।
"चैत्रे च कृष्णपञ्चम्यां काश्मीरा च
रजस्वला ।
नित्यं भवति तस्मात्तां कृत्वा
शैलमयीं स्त्रियम् ॥
अभ्यङ्गवस्त्रनैविद्यैः पूजयेच्च
दिनत्रयम् ।
पुष्पालङ्कारधूपैश्च गोरसं
वर्ज्जयन्ति च ॥"
काश्मीरा पृथ्वा ।
"हेमाम्भसा वृक्षबीजं स्नातो मन्त्रेण रोपयेत्
॥
वसुधेति सुशीलेति पुण्यदेति धरेति च ।
नमस्ते सुभगे न्तियं द्रुमोऽयं वर्द्धतामिति ॥
* ॥
लिखित्वालक्तकेनापि मन्त्रं शस्येषु बन्धयेत्
।
न व्याधिकीटहिंस्राणां भयं तत्र भवेत्
क्वचित् ॥"
सिद्धिः
प्रबलतरतरङ्गतरलितमुक्तारसमीरण-
वनोद्देशे श्रीमद्रामभद्रपादाः कुशलिनः
समुद्र-
तटे नानाशतसहस्रवानराणां मध्ये
खरनखर-
पञ्चोर्द्धलाङ्गूलं पवनसुतं वायुवेगं
परचक्रप्रमथनं
श्रीमद्धनूमन्तमाज्ञापयन्ति
अमुकस्याखण्डक्षेत्रे
वाताभोम्भो गान्धीरुती पाण्डरमुण्डी धूली-
शृङ्गारतल्पा कृषराङ्गता फडिङ्गा एला वानरा
गरुडा इमडूका महिषादिरोगं खण्डयत क्षण-
मपि विलम्बं मा चरत यदि विलम्बं कारयत
तदा युष्मान् शतखण्डं कारयामीति । ॐ घ्राँ
व्रीँ घ्रौँ श्रीरामाय नमः । इति शस्येषु बन्ध-
येत् ॥ * ॥ धान्यच्छेदनम् । दीपिकायाम् ।
"याम्याजपादहिधनानलतोयशक्र
चित्रोत्तरोडुषु कुजार्कजवारवर्जम् ।
शस्तेन्दुयोगकरणषु तिथौ विरिक्ते
धान्यच्छिदिः स्थिरनरस्वमृगोदयेषु ॥"
बलभद्रः ।
"रेवतीहस्तमूलेषु श्रवणे नागयाम्ययोः ।

| | | |
|---|---|---|
| | "अष्टम्याञ्च ततः स्नाप्य ताभिरेव गृहे गृहे ।<br>सुस्नाताभिः<br>प्रहृष्टाभिर्जीवपत्नीभिस्व च ।<br>अनन्तरं द्विजैः स्नाप्या<br>सर्व्वौषधियुतैर्ज्जलैः ।<br>गन्धैर्बीजैस्तथा रत्नैः फलैः<br>सिद्धार्थकैस्तथा ॥<br>स्नापयित्वा च तां देवीं<br>गन्धैर्म्माल्यश्च पूजयेत् ।<br>तन्निवेदितशिष्टञ्च प्राशितव्यं गृहे गृहे ॥<br>अतः परमृतुस्नाता गर्भं गृह्णाति मेदिनी ॥" * ॥<br>तथा ।<br>"ब्रह्मा विष्णुश्च रुद्रश्च काश्यपः सुरभो तथा ।<br>इन्द्रः प्रचेताः पर्ज्जन्यः<br>शेषश्चन्द्राक्कर्यवह्नयः ॥ | |

पितृदेवे तथा सौम्ये धान्यच्छेदं मृगोदये ।”
अथ धान्यच्छेदप्रकारः ।
“सपत्रौ माषमुद्गौ च यवधान्ये सकाण्डके !
छिन्द्यात्तिलञ्च निष्पत्रमेतत् पाराशरं मतम् ॥”
ग्राशरः ।
“न मुष्टिग्रहणं कुर्य्यात् कदाचिद्बटपौषयोः ।
ईशाने लवनं कुर्य्यात् सार्द्धमुष्टिद्वयं शुचिः ॥
पौष्णे पुष्ये शुभाहे वा पूजयित्वेष्टदेवताम् ।
शस्यविघ्नप्रशान्त्यर्थं क्षेत्रे वाहकभोजनम् ॥”
बौधायनः ।
“रथाश्वगजधान्यानां गवां चैव रजः शुभम् ।
अथाशस्तं समूहिन्याः श्वाजाविखरवाय-
साम् ॥”
समूहिनी संमार्ज्जनी ॥ * ॥ कृत्यचिन्तामणौ
मेधिरोपणम् ।
वटश्च सप्तपर्णश्च गम्भारी शाल्मली तथा ।
औडुम्बरी तथा धात्री या चान्या क्षीर-
धारिणी ।
स्त्रीनाम्नी कर्षकैर्नित्यं मेधिः कार्य्या फलप्रदा
॥”
बीजसञ्चयदिनादि तच्छब्दे द्रष्टव्यम् ॥ * ॥ * ॥
अथ प्रयोगः ।
पौर्णमास्यन्तचैत्रीयकृष्णपञ्चम्यां पृथ्वी रजस्वला
तां दिनत्रयमेकस्मिन् पर्व्वताकारे उच्चपदेशे
सधवाः स्त्रियः प्रपूजयेयुरष्टम्यां तां स्नापयित्वा
ताः पूजयेयुः । ततः शुभदिने बीजवपनदिने
वा सर्व्वौषधिगन्धबीजरत्नफलश्वेतसर्षपैः पृथ्वीं
स्नापयित्वा गन्धादिभिः पूजयेत् । नैवेद्यशेषञ्च
पश्चाद्भोक्तव्यम् ॥ * ॥ अथ हलप्रवाहदिने बीज-
षपनदिने च कृतस्नानादिराचान्तो गर्त्तं क्षेवे
कृत्वा जलेनापूर्य्य तत्र प्रजापतिं सूर्य्यादिनव-
ग्रहान् पृथ्वीञ्च पूजयेत् ।
“हिरण्यगर्भे वसुधे शेषस्योपरिशायिनि ।
वसाम्यहं तव पृष्ठे गृहाणार्घ्यं धरित्रि मे ॥”
इति मन्त्रेण क्षीरेणार्घ्यं दद्यात् । ऐशान्यां
पुष्पनैवेद्यैः प्रणवादिनमोऽन्तेन ब्रह्मणे विष्णवे ।
नमस्ते बहुरूपाय विष्णवे परामात्मने स्वाहा ॥
इत्यनेन त्रिः पूजयेत् । रुद्राय कश्यपाय सुरभ्यै
इन्द्राय । तदर्घ्यमन्त्रस्तु ।

तिस्रः पञ्च वा रेखा हलेन कार्य्याः ।
भग्नशृङ्ग-
खुरलाङ्गूलाः कपिलाश्च वृषा न
योक्तव्याः ।
हलप्रवाहकाश्च समर्थाः कर्त्तव्याः ।
हलानि
नवानि दृढानि कर्त्तव्यानि ।
वृषभयुद्धादिकं न
शुभदं वृषभाणां नर्द्दनेन चतुर्गुणं
शस्य मूत्र-
पुरीषोत्सर्गे तथा ॥ * ॥ वीजवपने
त्विदमधि-
कम् । सुवर्णजलसंयुक्तं बीजमुष्टित्रयं
इन्द्रं
ध्यायन् स्वयं प्राजापत्येन तीर्थेन
वपेत् । उभय-
त्रैव प्राङ्मुखः जलपूर्णं कलसं गृहीत्वा
।
“त्वं वै वसुन्धरे सीते
बहुपुष्पफलप्रदे ।
नमस्ते मे शुभं नित्यं कृषिं मेधां शुभे
कुरु ॥
रोहन्तु सर्व्वशस्यानि काले देवः
प्रवर्षतु ।
कर्षकास्तु भवन्त्वग्र्या धान्येन च
धनेन च
स्नाहेति प्रार्थयेदिति ॥”
इति ज्योतिस्तत्त्वम् ॥ * ॥
अपि च ।
“अमावस्यां पितृश्राद्धे
अम्बुवाचीदिने तथा ।
लाङ्गलेन क्षतं क्षेत्रं पृथिवी कम्पते
सदा ॥”
इति कर्म्मलोचनम् ॥ * ॥
स्मृतिसागरसारे गोभिलः ।
“हलैर्व्वा शकटैर्व्वापि वाहयेत् यो
वृषं स्वयम् ।
प्राजापत्यद्वयं कुर्य्यात् द्विगुणं
योषितां गवाम् ॥

**हला**, स्त्री, सखी, । इति जटाधरः ॥ मद्यम् ।
पृथिवी । जलम् । इत्यनेकार्थकोषः ॥

**हलायुधः**, पुं, (हलमायुधं यस्य ।) बलदेवः ।
इत्यमरः । १ । १ । २४ ॥ (यथा,
महाभारते ।
१ । २२१ । २३ ।
“ततस्ते तद्वचः श्रुत्वा ग्राह्यरूपं
हलायुधात् ।
तूर्ष्णीभूतास्ततः सर्व्वे साधु साध्विति
चाब्रुवन् ॥”)

**हलाहः**, पुं, चित्रिताश्वः । इति हेमचन्द्रः ॥

**हलाहलः**, पुं, (हलमिव आ समन्तात् सर्व्वाङ्गेषु
हलति कर्षतीति । आ + हल + अच् ।)
विष-
भेदः । यथा, --
“समौ कञ्चुकनिर्म्मोकौ क्ष्वेडस्तु गरलं
विषम् ।
पुंसि क्लावे च काकोलकालकूटहलाहलाः
॥”
इत्यमरः । १ । ८ । १० ॥
हलमिव आ समन्तात् हलति विलिखति
हलाहलः । हलज विलेखे अन् स्वार्थे ष्णे
हालाहलश्च । निपातनात् ललोपे
हाहलश्च ।
“हालाहलं हालहलं हाहलञ्च हलाहलम्
॥”
इति रुद्रः ॥
एते काकोलादयस्त्रयः पुंसि क्लीवे
चेत्यन्वयः ।
केचित्तु क्ष्वेडभेदा इति पुंस्त्वे
वक्ष्वमाणत्वात्
पुंसि क्लीवे चेत्यस्य विषमित्यनेन
सम्बन्धः ।
इत्याहुः । तन्नातिहृद्यम् ।
“काकोलमुग्रतेजः स्यात् कृष्णच्छवि महा-
विषम् ।”
इति वैद्यकम् ।
“तत् कालकूटं विषमुग्रतेजः

"शक्रः सुरपतिः श्रेष्ठो वज्रहस्तो महाबलः ।
शतयज्ञाधिपो देव तुभ्यमिन्द्राय वै नमः ॥"
प्रचेतमे पर्ज्जन्याय शेषाय चन्द्राय अर्काय वह्नये बलदेवाय हलाय भूमये वृषभाय रमाय लक्ष्मणाय जानक्यै सीतायै युगाय गगनाय इति द्वाविंशतिं पूजयेत् क्षेत्रपालमग्निं द्विजञ्च पूजयेत् । अग्निं प्रदक्षिणीकृत्य ब्राह्मणाय दक्षिणां दद्यात् । आम्रपल्लवौदनदधीनि गर्त्ते निःक्षिप्य मृत्तिकाभिः पूरयेत् । कृष्णौ वृषौ नवनीतैर्घृतेन वा मुखषार्श्वयोर्निलिम्पेत् । हलप्रवाहकान् गन्धादिना भूषयित्वा हलं माल्यादिभिः पूजयित्वा दधिघृतमधुभिः फालाग्रं प्रलिप्य हेम्ना फालाग्रं घर्षयित्वा कर्षयेत् । वस्विन्द्रप्रथरामेन्दुपराशरबलभद्रान् स्मरेत् । एका

वृषभन्तु समुत्सृष्टं कपिलां वापि
कामतः ॥
योजयित्वा हले कुर्य्यात् व्रतं
चान्द्रायणद्वयम् ॥"
इति तिथ्यादितत्त्वम् ॥

**हलद्दी**, स्त्री, हरिद्रा । इति राजनिर्घण्टः ॥

**हलधरः**, पुं, (धरतीति । धृ + अच् । हलस्य
धरः ।) बलदेवः । यथा, --
"नीलाम्बरो हलधरो हलभृद्धालभृत्
बलः ॥"
इति शब्दरत्नावली ॥
(यथा च महाभारते । १ । २२० ।
७ ।
"ततो हलधरः क्षीवो रेवतीसहितः
प्रभुः ।
अनुगम्यमानो गन्धर्व्वैरचरत्तत्र
भारत ! ॥")
हालिकः । यथा, ज्योतिस्तत्त्वे ।
"सालङ्कारो हलधरः स्रग्भिश्च
पूजितं हलम् ॥"

**हलभूतिः**, स्त्री, (हलसाध्या भूतिः ।)
कृषिकर्म्म ।
यथा, --
"अथ सेवा श्ववृत्तिः स्यात् स्त्रियां
कृषिश्च
कर्षणम् ।
कर्षोऽमृतञ्च प्रकृतं
हलभूतिर्म्हाधनम् ॥"
इति शब्दरत्नावली ॥"

**हलभृत्**, पुं, (हलं विभर्त्तीति । भृ + क्विप् ।
हलस्य
भृदिति वा । बलदेवः । इति
त्रिकाण्डशेषः ॥
(यथा, मेघदूते । ६१ ।
"अंसन्यस्ते सति हलभृतो मेचके
वाससीव ॥")

**हलभृतिः**, पुं, (हलेन भृतिर्भरणमस्य ।) मुनि-
विशेषः । तत्पर्य्यायः । उपवर्षः २
कृतकोटिः ३

कण्ठे धृतं पर्व्वतराजकन्ये ॥"
इति व्यासः ॥
हालाहलं विषमिव प्रगुणं तदेव इति वामनः
॥
"मधु तिष्ठति वाचि योषितां हृदये हलाहलं
महद्विषम् ।
अतएव निपीयतेऽधरो हृदयं मुष्टिभिरेव
ताड्यते ॥"
इति कुलचरितेऽश्वघोषः । इति भरतः ॥
(मूलजविषभेदः ।
"सङ्कोचं मर्क्कटं शृङ्गिविष हलाहलन्तया ।
एवमादीनि चान्यानि मूलजानि स्थिराणि
च ॥"
इति चरके चिकित्सास्थाने २५ अध्याये
॥)

**हलाहलः**, पुं, (हलाहलोऽस्यास्तीति ।) अच् ।)
ब्रह्मसर्पः । अञ्जना । इति मेदिनी ॥
बुद्धविशेषः ।
इति त्रिकाण्डशेषः ॥

**हलिः**, पुं, (हलति कर्पति भूमिमिति । हल +
"सर्व्वधातुभ्य इन् ।" उणा० ४ । ११७ ।
इति
इन् बृहद्धलम् । इति शब्दरत्नावली ॥
तत्-
पर्य्यायः । जित्या २ । इति हेमचन्द्रः ॥

**हलिनी**, स्त्री, (हलमिव आकारोऽस्त्यस्या इति ।
इनिः । ङीप् ।) लाङ्गलिकीवृक्षः ।
विषलाङ्गला
इति भाषा इति रत्नमाला ॥ (पर्य्यायोऽस्य
यथा, भावप्रकाशस्य पूर्ब्बखण्डे प्रथमभागे
।
"कलिहारी तु हलिनी लाङ्गली
शक्रपुष्प्यपि ।
विषल्याग्निशिखानन्ता वह्निवक्त्वा च
गर्भनुत ॥"

| | | |
|---|---|---|
| | अयाचितः ४ । इति त्रिकाण्डशेषः ॥<br>(हलस्य<br>हलेन वा भृतिः ।) कृषिकर्म्म च ॥<br>**हलराक्षं**, क्ली, आहुल्यम् । इति राजनिर्घण्टः ॥<br>**हला**, व्य, नाट्योक्तौ सखीं प्रत्याह्वानम् । इत्य-<br>मरः । १ । ७ । १५ ॥ | |

"लाङ्गली हलिनी च स्यात्" इति गारुडे २०८ अध्याये ॥) हलसमूहश्च ॥

**हलिप्रियः**, पुं, (हलिनो बलदेवस्य प्रियः ।)

कदम्बवृक्षः । इत्यमरः । २ । ४ । ४२ ॥ (पर्य्यायो यथा, --
"कदम्बः प्रियको नीपो वृत्तपुष्पो हलिप्रियः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**हलिप्रिया**, स्त्री, (हलिनो बलदेवस्य प्रिया ।)

मदिरा । इति राजनिर्घण्टः । अमरश्च । २ । १० । ३९ ॥ (विवरणमस्या मदिराशब्दे ज्ञातव्यम् ॥)

**हली**, स्त्री, (हल्यते इति । हल + इन् । ङीष् ।)

कलिकारीवृक्षः । इति राजनिर्घण्टः ॥

**हली**, [न्] पुं, (हलमस्यास्तीति । हल + इनि ।)

बलदेवः । इत्यमरः । १ । १ । २४ ॥ (यथा, उपदेशशतके । ६९ ।
"क्रुद्धो हली कुरूणां पुरमुत्थाप्य क्षिपन्नद्याम् ।
अनुनीतस्तदमुञ्चत् क्रोधाविष्टोऽनुनेतव्य ॥")
कृषिकर्म्मकर्त्ता । तत्पर्य्यायः । कुटुम्बी २ कर्षकः ३ क्षेत्री ४ कृषिकः ५ कार्षिकः ६ कृषीवलः ७ । इति हेमचन्द्रः ॥

**हलीनः**, पुं, (हलाय हितः । हल + छः ।)

शाकवृक्षः । इति शब्दचन्द्रिका ॥

**हलीमकः**, पुं, रोगविशेषः । यथा पाण्डुरोगस्यैव

भेदं हलीमकञ्चाह ।
"यदा तु पाण्डोर्व्वर्णः स्याद्धरितश्यावपीतकः ।
बलोत्साहः क्षयस्तन्द्रामन्दाग्नित्वं मृदुज्वरः ॥
स्त्रीष्वहर्षोऽङ्गमर्द्दश्च श्वासतृष्णारुचिभ्रमाः ।
हलीमकं तदा तस्य विद्यादनिलपित्ततः ॥"
पाण्डोः पाण्डुरोगिणः ॥ तस्य चिकित्सा यथा,
"मारितस्यायसश्चूर्णं मुस्ताचूर्णेन संयुतम् ।
खदिरस्य कषायेण पिबेद्धन्तुं हलीमकम् ॥
सिता तिक्ता बला यष्टी त्रिफला रजनीयुगैः ।
लेहं लिह्यात् समध्वाज्यं हलीमकनिवृत्तये ॥
अमृतलतारमकल्कपसाधितंतुरगविद्विषः सर्पिः ।
कुष्टानि जठरं शोथमूरुस्तम्भं
कफामयान् ।
अर्शांसि कामलां मेहं प्लीहानं शमयन्ति
च ॥"
इति त्र्यूषणादिमण्डूरवटकः ॥ २ ॥
"किराततिक्तं सुरदारु दार्व्वी
मुस्ता गुडूची कटुका पटोलम् ।
दुरालभा पर्पटकं सनिम्बं
कटुत्रिकं वह्निफलत्रिकञ्च ॥
फलं विडङ्गस्य समांशकानि
सर्व्वैः समं चूर्णमथायसश्च ।
सर्पिर्मधुभ्यां वटिका विधेया
तक्रानुपानात् भिषजा प्रयोज्या ॥
निहन्ति पाण्डुञ्च हलीमकञ्च
शोथं प्रमेहं ग्रहणारुजञ्च ।
श्वासञ्च कासञ्च सरक्तपित्त-
मर्शांस्यथोरुग्रहमामवातम् ॥
व्रणांश्च गुल्मान् कफविद्रधिञ्च
श्वित्रञ्च कुष्ठञ्च ततः प्रयोगात् ॥"
इति अष्टादशाङ्गलोहम् ॥ ३ ॥
"यवगोधूमशाल्यन्नै रसैर्जाङ्गलजैर्हितैः ।
मुद्गाढकीमसूराद्यैर्षु भोजनमिष्यते ॥"
एषु पाण्डुरोगकामलाहलीमकेषु ॥ ४ ॥
इति भावप्रकाशः ॥

**हलीशा**, स्त्री, (हलस्य ईशा । शकन्ध्वादित्वात्

साधुः ।) लाङ्गलदण्डः । इति
मुग्धबोधव्याक-
रणम् ॥

**हल्यं**, त्रि, (हलेन कृष्टम् । हल + यत् ।) कर्षित-

क्षेत्रम् । इत्यमरः । २ । ९ । ८ ॥ अस्य
पर्य्यायः
कृष्टशब्दे द्रष्टव्यः ॥ (हलस्येदमिति ।)
हल-
सम्बन्धि च ॥ (पुं, हलस्य कर्षः । हल +
"मत-
जनहलात् करणजल्पकर्षेषु ।" ४ । ४ ।
९७ ॥
इति यत् ॥)

एकस्य पुंसो बहुभिः स्त्रीभिः
क्रीडनम् । तत्तु
रासक्रीडा । यथा, --
"गोपीनां मण्डलीनृत्यबन्धे हल्लीषकं
विदुः ॥"
इति कोषात् ॥
तल्लक्षणन्तु ।
"पृथुं सुवृत्तं मसृणं वितस्ति-
मात्रोन्नतं कौ विनिखन्य शङ्कुकम् ।
आक्रम्य पद्भ्यामितरेतरन्तु
हस्तैर्भ्रमोऽयं खलु रासगोष्ठी ॥"
इति हरिवंशटीकायां नीलकण्ठः ॥
हल्लीसकं दन्त्यसकारमध्यमपि ॥

**हवः**, पुं, (हु लि होमे + अप् ।) होमः । आज्ञा
।

(ह्वे + "भावेऽनुपसर्गस्व ।" ३ । ३ ।
७५ । इति
अप् सम्प्रसारणञ्च ।) आह्वानम् ।
अध्वरः ।
इत्यमरः । ३ । २ । ८ ॥

**हव** ङ्गः, पुं, कांस्यपात्रे दधिमिश्रितान्नभक्षणम्
।

इति केचित् ॥

**हवनं**, क्ली, (हु + ल्युट् ।) होमः । इति शब्द-

रत्नावली ॥ (यथा, महाभारते । १ ।
१६८ ।
३४ ।
"याजस्तु हवनस्यान्ते
देवीमाज्ञापयत्तदा ।
प्रैहि मां राज्ञि पृषति ! मिथुणं
त्वामुपस्थितम् ॥)

**हवनायुः**, [स्] पुं, (हवनमेव आयुर्यस्य ।)

अग्निः । इति शब्दरत्नावली ॥

**हवनी**, स्त्री, (हूयतेऽत्रेति । हु + ल्युट् । ङीप्
।)

होमकुण्डम् । इति त्रिकाण्डशेषः ॥

**हवनीयं**, त्रि, होमीयद्रव्यम् । हव्यम् । हुधातो-

क्षीरचतुर्गुणमेतद्वितरेच्च हलीमकार्त्तेभ्यः ॥”
इति अमृताघृतम् ॥ * ॥
“मधुरैरन्नपानेस्तं वातपित्तहरैर्हरेत् ।
कामलापाण्डुरोगोक्तक्रियाञ्चात्रोपयोजयेत् ॥”
अथ सामान्यतः पाण्डुरोगकामलाहलीमक-
चिकित्सा ।
“फलत्रिकामृतावासातिक्तामूनिम्बनिम्बजः।
क्वाथः क्षौद्रयुतो हन्यात् पाण्डुरोगं सकामलम् ॥ १
त्र्यूषणं त्रिफला मुस्तं विडङ्गं चव्यचित्रके ।
दार्व्वी त्वङ्माक्षिको धातुर्ग्रन्थिको देवदारु च ॥
एपां द्विपलिकान् भागवान् कृत्वा चूर्णं पृथक् पृथक् ।
मण्डूरं द्विगुणं चूर्णाच्छुद्धमञ्जनसन्निभम् ॥
मूत्रे चाष्टगुणे पक्त्वा तस्मिंस्तत् प्रक्षिपेत्ततः ।
औडम्बरसमान् कृत्वा वटकांस्तान् यथाग्नि च ।
उपयुञ्जीत तक्रेण जीर्णे सात्म्यञ्च भोजनम् ।
मण्डूरवटका ह्येते प्राणदाः पाण्डुरोगिणाम् ॥

**हल्यं**, क्ली, (हलस्येदमिति । यत् ।) वैरूप्यम् ।
इति केचित् ॥

**हण्या**, स्त्री, (हलस्य समूहः । हल + “पाशा-
दिभ्यो यः ।” ४ । २ ॥ ४९ । इति यः ।)
हलसमूहः । इत्यमरः । ३ । ३ । ४१ ॥

**हल्लकं**, क्ली, रक्तकह्लारम् । हेला इति भाषा ।
तत्पर्य्यायः । रक्तसन्धकम् २ । इत्यमरः । १ ।
१० । ३६ ॥ रक्तसौगन्धिकम् ३ रेचना ४ ।
इति जटाधरः ॥ अल्पगन्धम् ५ सोमाख्यम् ६
रक्तकैरवम् ७ । इति रत्नमाला ॥

**हल्लनं**, त्रि, प्रचलायितम् । इति जटाधरः ॥

**हल्लीषं**, क्ली, स्त्रीणां सह नर्त्तनम् । इति
त्रिकाण्डशेषः ॥ (पुं, उपरूपकविशेषः । तल्ल-
क्षणं यथा, साहित्यदर्पणे । ६ । ५५५ ।
“हल्लीष एव एकाङ्कः सप्ताष्टौ दश वा स्त्रियः ।
वागुदात्तैकपुरुषः कैशिकीवृत्तसङ्कुलः ।
मुखान्तिमौ तथा सन्धी बहुताललयस्थितिः ॥”)

**हल्लीषकं**, क्ली, (हल्लीषमेव । स्वार्थे कन् ।)
स्त्रीणां मण्डलिकानृत्यम् । इति जटाधरः ॥
“मण्डलेन तु यन्नृत्यं स्त्रीणां हल्लीषकन्तु तत् ॥
इति हेमचन्द्रः ॥

रनीयप्रत्ययेन निष्पन्नम् ॥

**हविः**, [स्] क्ली (हूयतेऽनेनेति । हु + “अर्च्चि-
श्रुचिहुसृपीति ।” उणा० २ । १०९ । इति
इसिः ।) हवनीयद्रव्यम् । तत्पर्य्यायः । सान्ना-
य्यम् २ । घृतम् । इत्यमरः । २ । ३ । २७ ॥
(यथा, महाभारते । १ । ८५ । ११ ।
“न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥”)
जलम् । इति केचित् ॥ (विष्णुः । इति महा
भारतम् । १३ । १४९ । ५२ ॥ शिवः । इति च
तत्रैव । १३ । १७ । १०२ ॥)

**हवित्री**, स्त्री, होमकुण्डम् । इति हेमचन्द्रः ॥

**हविरशनः**, पुं, (हविरशनं यस्य ।) अग्निः । इति
हेमचन्द्रः ॥ घृतभोजने, क्ली ॥

**हविर्गन्धा**, स्त्री, (हविषो गन्धो यस्याम् ।) शमी ।
इति राजनिर्घण्टः ॥ शमीशब्देऽस्या गुणा-
दयो ज्ञायव्याः ॥

**हविर्गेहं**, क्ली, (हविषो गेहम् ।) होमगृहम् ।
तत्पर्य्यायः । होत्रीयम् २ । इति हेमचन्द्रः ॥

**हविर्म्मन्थः**, पुं, (हविषो हवनीयाय मथ्यते इति ।
मन्थ + घञ् ।) गणिकारीवृक्षः । इति रत्न-
माला ॥

**हविष्यं**, क्ली, (हविषे हितम् । हविस् + “उग-
वादिभ्यो यत् ।” ५ । १ । २ । इति यत् ।)

"घृतं हविष्यमाज्यञ्च हविराघारसर्पिषी
॥"
इति हेमचन्द्रः ॥
हविष्यान्नम् । यथा, --
"त्रयोदश्यां कृतस्नानो ब्रह्मचारी
समाहितः ।
निरामिषं हविष्यं वा सकृद्भुञ्जीत नान्यथा
॥"
इति शितरात्रिव्रतकथा ॥ * ॥
अन्यच्च ।
"हेमन्ते प्रथमे मासि नन्द व्रजकुमारिकाः
।
चेरुर्हविष्यं भुञ्जानाः
कात्यायन्यर्च्चनव्रतम् ॥"
इति श्रीमद्भागवतम् ॥

**हविष्यान्नं**, क्ली, (हविष्यमन्नम् ।) व्रतादौ भक्ष-

णीयद्रव्यविशेषः । यथा, स्मृतिः ।
"हैमन्तिकं सितास्विन्नं धान्यं
मुद्गास्तिला यवाः ।
कलायकङ्गुनीवारा वास्तूकं हिलमोचिका
॥
षष्टिका कालशाकञ्च मूलकं केमुकेतरत् ।
लवणे सैन्धवसामुद्रे गव्ये च दधिसर्पिषी
॥
पयोऽनुद्धृतसारञ्च पनसाम्रहरीतकी ।
तिन्तिडी जीरकञ्चैव नागरङ्गकपिप्पली ॥
कदली लवली धात्री फलान्यगुडमैक्षवम् ।
अतैलपक्वं मुनये हविष्यान्नं प्रचक्षते ॥"
अत्रास्विन्नमित्युपादानादन्यत्र
स्विन्नधान्यतण्डु-
लेम दोषः । हैमन्ति कमित्यभिधाय
अगस्त्य-
संहितायाम् ।
"नारिकेलफलञ्चैव कदलीं लवलीन्तथा ।
आम्रमामलकञ्चैव पनसञ्च हरीतकीम् ।
व्रतान्तरप्रशस्तञ्च हविष्यं मन्वते बुधाः
॥"
इति तिथ्यादितत्त्वम् ॥

रुदितस्वरी । इति गोवर्द्धनः । यदा तु
कस्य
चिद्दोषादिकमुद्दिश्य तत् स्यात्तदा
सकर्म्मकः ।
हसन्तमन्तर्व्वलमर्व्वतां रवेरिति
श्रीहर्षः ॥
हसन्ति साधवश्चीरम् । इति
दुर्गादासः ॥

**हसः**, पुं, (हसनमिति । हस + "स्वनहसोर्वा
।"

३ । ३ । ६२ । इति अप् ।) हास्यम्
। इत्य-
मरः । १ । ७ । १८ ॥ (यथा,
वाजसनेयसंहि-
तायाम् । ३० । ६
"हमाय कारिमानन्दाय स्त्रीषखमिति
॥")

**हसन्**, [त्] त्रि, हास्यं कुर्व्वन् । हसधातोः
शतृ-

प्रत्ययेन निष्पन्नः ॥ (यथा, हरिवंशे ।
१४६ । २७ ।
"हसन् विहासांश्च जहाति हर्षात्
वाष्पागमं कृष्णविनोदनार्थम् ॥")

**हसनं**, क्ली, (हस + ल्युट् ।) हास्यम् । इति

मेदिनी ॥ (यथा, वृहत्संहितायाम् ।
४६ । २५ ।
"हसने देशभ्रंशं रुदिते च
व्याधिबाहुल्यम् ॥)

**हसनी**, स्त्री, (हसतीति । हस + कृत्यल्युट
इति

ल्युट् । टिड्ढेति ङीप् ।) अङ्गारधानी ।
इति
मेदिनी ॥

**हसनीमणिः**, पुं, अग्निः । इति त्रिकाण्डशेषः ॥

**हसन्तिका**, स्त्री, अङ्गारधानी । इति हेमचन्द्रः
॥

**हसन्ती**, स्त्री, (हसतीति । हस + शतृ । ङीप्
।)

पञ्चशाखः ५ । इत्यमरः ॥ करः ६ भुजः ७ ।
इति जटाधर ॥ कुलिः ८ भुजादलः ९ । इति
शब्दरत्नावली ॥
"हस्तावध्यात्ममित्याहुरध्यात्मविदुषो जनाः ।
अधिभूतञ्च कर्म्माणि शुक्रस्तत्राधिदैवतम् ॥"
इति महाभारते आश्वमेधिकपर्व्व ॥
हस्तस्य शुभाशुभलक्षणं बाहुशब्दे द्रष्टव्यम् ॥ *
॥
विस्तृतकरप्रकोष्ठः । इत्यमरः । २ । ६ । ६८ ॥
स च चतुर्व्विंशत्यङ्गुलपरिमाणम् । इति भरतः ॥
यथा, --
"यवानां तण्डुलैरेकमङ्गलं चाष्टभिर्भवेत् ।
अदीर्घयोजितैर्हस्तश्चतुर्विंशतिभिरङ्गुलैः ॥"
इति तिथ्यादितत्त्वधृतकालिकापुराणम्॥
अपि च ।
"यवोदरैरङ्गुलमष्टसंख्यै-
र्हस्तोऽङ्गुलैः षड्गुणितैश्चतुर्भिः ।
हस्तैश्चतुर्भिर्भवतीह दण्डः
क्रोशः सहस्रद्वितयेन तेषाम् ॥"
इति लीलावती ॥ * ॥
हस्तमात्रदत्तस्नेहादिद्रव्यभक्षणनिषेधो यथा,
"हस्तदत्ताश्च ये स्नेहा लवणं व्यञ्जनानि च ।
दातारं नोपतिष्ठन्ते भोक्ता भुङ्क्ते तु किल्वि-
षम् ॥
तस्मादन्तरितं कृत्वा पर्णेनाथ तृणेन वा ।
प्रदद्यात् न तु हस्तेन नायसेन कदाचन ॥"
इति श्राद्धतत्त्वधृतवशिष्ठवचनम्॥ * ॥
एकहस्तदत्तद्रव्यभोजननिषेधो यथा, --
"एकेन पाणिना दत्तं शूद्रदत्तं न भक्षयेत् ।"
इति तद्धृतादिपुराणवचनम् ॥ * ॥
हस्तिशुण्डः । यथा, रामायणे । २ । २३ । ४ ।
"अग्रहस्तं विधुन्वंस्तु हस्ती हस्तमिवात्मनः ॥")
हस्तानक्षत्रम् । (यथा, मार्कण्डेये । ३३ । ११ ।
"प्रयाति श्रेष्ठतां सत्यं हस्ते श्राद्धप्रदो नरः ॥")
केशात् परे तत्समूहवाचकः । इति मेदिनी ॥

**हस्तज्योडिः**, पुं, करज्योडिवृक्षः । हाताजुडि

इति हिन्दी भाषा । अस्य गुणः । रसबद्धादि-
वश्यकृत् । इति राजनिर्घण्टः ॥

**हव्यं**, क्ली, (हूयते इति । हु + यत् ।) दैवान्नम् ।

इत्यमरः । २ । ७ । २४ ॥ (यथा, मनुः । ३ । ९७ ।
"नश्यन्ति हव्यकव्यानि
नराणामविजानताम् ।
भस्मीभूतेषु विप्रेषु मोहाद्दत्तानि दातृभिः ॥")
हवनीयद्रव्यञ्च ॥

**हव्यपाकः**, पुं, (हव्याय पाको यस्य ।) चरुः ।

इत्यमरः । २ । ७ । २२ ॥

**हव्यवाहः**, पुं, हव्यं वहतीति । वह + अण् ।)

अग्निः । इति रत्नमाला ॥ (यथा, महा-
भारते । १ । २२४ । ५८ ।
"एतच्छ्रुत्वा हुतवहाद्भगवान्
सर्व्वलोकभृत् ।
हव्यवाहमिदं वाक्यमुवाच प्रहसन्निव ॥")

**हव्यवाहनः**, पुं, (हव्यं वाहयतीति । वह + णिच् +

ल्युः ।) अग्निः । इत्यमरः । १ । १ । ५८ ॥
(यथा, महाभारते । १ । २२४ । १३ ।
"न ह्येतत् कारणं ब्रह्मन्नल्पं सस्प्रतिभाति मे ।
यद्ददाह सुसंक्रुद्धः खाण्डवं हव्यवाहनः ॥")

**हव्याशः**, पुं, (हव्यमश्नातीति । हव्य + अश् +

अण् ।) हुताशनः । इति शब्दरत्नावली ॥

**हव्याशनः**, पुं, (हव्यं अशनं यस्य ।) अग्निः ।

इति हेमचन्द्रः ॥

**हस**, ए हासे । इति कविकल्पद्रुमः ॥ (भ्वा०-

पर०-अक०-उपहामे सक०-सेट् ।) ए,
अह-
मात् । हामोऽपूर्ब्बप्रतीत्या कपोलस्य
विकसिती-
करणम् । तत्रैवाकर्म्मकः । हसति शनैः
शुष्क-
अङ्गारधानिका । इत्यमरः । २ । ९ । २९ ॥
मल्लिकाविशेषः । शाकिनीभेदः । इति
मेदिनी ॥
(हास्यं कुर्व्वती । यथा
कथासरित्सागरे । ११ ।
३१ ।
"अस्तीहोज्जयिती नाम नगरी भूषणं
भुवः ।
हसन्तीव सुधाधौतैः
प्रासादैरमरावतीम् ॥")

**हसिकः**, त्रि, (हसो हासोऽस्त्यस्येति । ठन् ।)

हास्यकर्त्ता । इति केचित् ॥
हसशब्दात् ष्णिक-
प्रत्ययेन निष्पन्नः ॥

**हसितं**, क्ली, (हस + क्तः ।) हास्यम् । (यथा,

वृहत्संहितायाम् । ६८ । ७४ ।
"हासतं शुभदमकम्पं
स निमीलितलोचनञ्च पापस्य ।
हृष्टस्य हसितमसकृत्
सोन्मादस्यासकृत् प्रान्ते ॥")
कामदेवधनुः । इति केचित् ॥
(हास्यकरणम् ।
यथा, कथासरित्सागरे । ५९ ।
१५९ ।
"अथ कर्म्मगतिं चित्रां दृष्ट्वास्य
हसितं मया ॥"
परिहासः । यथा, किराते । १३ ।
४७ ।
"कीर्त्तितानि हसितेऽपि तानि यं
व्रीडयन्ति चरितानि मानिनम् ॥")

**हसितः**, त्रि, (हस + क्तः ।) विकसितः । इति

शब्दमाला ॥ कृतहासश्च ॥

**हस्तं**, क्ली, (हस + तन् ।) चर्म्मप्रसेविका ।
इति

केचित् ॥

**हस्तः**, पुं, (हसति विकशतीति । हस +
"हसि-

**हस्तधारणं**, क्ली, (हस्तस्य धारणम् ।) मार-

णोद्यतस्य निवारणम् । इति हस्तवारणशब्द-
टीकायां रामाश्रमः । ३ । २ । ५ ॥ (परि-
त्राणम । यथा, महाभारते । १ । २१४ । १० ।
"ब्राह्मणस्वे हृते चौरैर्धर्म्मार्थे च विलोपिते ।
रोरूयमाणे च मयि क्रियतां हस्तधारणम् ॥")

**हस्तपुच्छं**, क्ली, (हस्तस्य पुच्छम् ।) हस्तावयव-

विशेषः । हातेर पोँछा इति भाषा । तत्प-
र्य्यायः । कल्मषम् २ । इति त्रिकाण्डशेषः ॥

**हस्तबिम्बं**, क्ली, (हस्तस्य बिम्बं यत्र ।) स्थासकः ।

स तु चन्दनादिना देहविलेपनविशेषः । इति
हेमचन्द्रः ॥ करप्रतिबिम्बञ्च ॥

**हस्तवारणं**, क्ली, (हस्तेन वारणम् ।) परित्राणम् ।

तत्तु मारणोद्यतस्य निवारणम् । इत्यमरः । ३ ।
२ । ५ ॥ करेण निषेधनञ्च ॥

| | मृग्रिण्वामीति ।” उणा० ३ । ८६ । इति<br>तन् ।) शरीरावयवविशेषः । स च कर्म्मे-<br>न्द्रियः । हात इति भाषा ।<br>ततपर्य्यायः ।<br>पाणिः २ समः ३ शयः ४ ।<br>इत्यमरमाला ॥ | |
|---|---|---|

**हस्तसिद्धिः**, स्त्री, (हस्तस्य सिद्धिः ।) भृतिः ।

वेतनम् । यथा, --

“प्रतीकारमिमं कृत्वा शीतादेस्ताः प्रजाः पुनः ।

वार्त्तोपायं ततश्चक्रुर्हस्तसिद्धिञ्च कर्म्मजाम् ॥”

इति विष्णुपुराणे १ अंशे ६ अध्यायः ॥

हस्तसिद्धिं हस्ताभ्यां साध्यां सिद्धिं भृतिं तामे-

वाह कर्म्मजां तत्कर्म्मनिमित्ताम् । इति तट्टीका

॥

करेण साधनञ्च ॥

**हस्तसूत्र**, क्ली, (हस्तस्य सूत्रम् ।) वलयम् । यथा,

“कटको वलयं पारिहार्य्यावापौ तु कङ्कणम् ।

हस्तसूत्रं प्रतिसरः ऊर्म्मिका त्वङ्गुलीयकम् ॥”

इति हेमचन्द्रः ॥

(विवाहादिकालीनमङ्गलार्थनिबद्धकरसूत्रम् ।

यथा, कुमारे । ७ । २५ ।

“बबन्ध चास्राकुलदृष्टिरस्याः

स्थानान्तरे कल्पितसन्निवेशम् ।

धात्र्यङ्गुलीभिः प्रतिसार्य्यमाण-

मूर्णामयं कौतुकहस्तसूत्रम् ॥”)

**हस्ता**, पुं, स्त्री, अश्विन्यादिसप्तविंशतिनक्षत्रान्त-

र्गतत्रयोदशनक्षत्रम् । तत्तु हस्ताकृतिपञ्च-

तारात्मकम् । अस्याधिदेवता दिनकृत् । जन्म-

कालीनोऽयं जघन्यगुणदायकः । इति ज्योति-

स्तत्त्वम् ॥ * ॥ तद्दर्शनेन लग्ननिरूपणं यथा, --

“मस्तकोपरि कराकृतौ करे

तिष्ठतीन्दूमुखि ! बाणतारके ।

लिप्तिकाः शरकुपक्षसंज्ञकाः

नायकासनविलग्नतो गताः ॥” दं ३ । ३५ ।

इति कालिदासकृतरात्रिलग्ननिरूपणग्रन्थः ॥ *

॥

तत्र जातफलम् ।

“दाता यशस्वी सुतरां मनस्वी

भूदेवदेवार्च्चनकृन्नयज्ञः ।

प्रसूतिकाले किल यस्य हस्ता

हस्तस्थिता तस्य समस्तसम्पत् ॥”

इति कोष्ठीप्रदीपः ॥

**हस्ताङ्गुलिः**, पुं, (हस्तस्य अङ्गुलिः ॥ करशाखा ।

न ब्रह्मचारी न गृही वनस्थो

भिक्षुर्न चाहं निजबोधरूपः ॥”

एतस्य श्लोकस्य शङ्कराचार्य्येण भाष्यं न

कृतम् ॥

“निमित्तं मनश्चक्षुरादिप्रवृत्तौ

निरस्ताखिलोपाधिराकाशकल्पः ।

रविर्लोकचेष्टानिमित्तं यथा यः

स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १ ॥

यमग्न्युष्णवन्नित्यबोधस्वरूपं

मनश्चक्षुरादीन्यबोधात्मकानि ।

प्रवर्त्तन्त आश्रित्य निष्कम्पमेकं

स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ २ ॥

मुखाभासको दर्पणे दृश्यमानो

मुखत्वात् पृथक्त्वेन नैवास्ति वस्तु ।

चिदाभासको धीषु जीवोऽपि तद्वत्

स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ३ ॥

यथा दर्पणाभाव आभासहानौ

मुखं विद्यते कल्पनाहीनमेकम् ।

तथा धीवियोगे निराभासको यः

स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ४ ॥

मनश्चक्षुरादेर्वियुक्तः स्वयं यो

मनश्चक्षुरादेर्मनश्चक्षुरादिः ।

मनश्चक्षुरादेरगम्यस्वरूपः

स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ५ ॥

य एको विभाति स्वतः शुद्धचेताः

प्रकाशस्वरूपोऽपि नानेव धीषु ।

शरावोदकस्थो यथा भानुरेकः

स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ६ ॥

यथानेकचक्षुः प्रकाशी रविर्न

क्रमेण प्रकाशीकरोति प्रकाश्यम् ।

अनेका धियो यस्तथैकप्रबोधः

स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ७ ॥

विवस्वत्प्रभातं यथा रूपमक्षं

प्रगृह्णाति नाभातमेवं विवस्वान् ।

यथा भात आभासयत्यक्षमेकः

स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ८ ॥

यथा सूर्य्य एकोऽप्स्वनेकश्चलासु

स्थिरास्वप्यनन्वन्विभाव्यस्वरूपः ।

चलासु प्रभिन्नासु धीष्वेक एवं

**हस्तिकं**, क्ली, (हस्तिनां समूहः । कन् ।) हस्ति-

समूहः । तत्पर्य्यायः । नजता २ ।

इति शब्द-

रत्नावली ॥

**हस्तिकक्षः**, पुं, (हस्ती कक्षे यस्य ।) सिंहः ।

व्याघ्रः । इति केचित् ॥

**हस्तिकन्दः**, पुं, (हस्तिनः पद इव कन्दो यस्य ।)

बृहत्कन्दविशेषः । तत्पर्य्यायः ।

हस्तिपत्रः २

स्थूलकन्दः ३ अतिकन्दकः ४

बृहत्पत्रः ५ अति-

पत्रः ६ हस्तिकर्णः ७ सुकर्णकः ८

त्वग्दोषारिः

९ कुष्ठहन्ता १० गिरिवासी ११

नागाश्रयः १२

गजकन्दः १३ नागकन्दः १४ ।

अस्य गुणाः ।

कटुत्वम् । उष्णत्वम् ।

कफवातामयत्वग्दोषश्रम-

कुष्ठविषवैसर्पनाशित्वञ्च । इति

राजनिर्घण्टः ॥

**हस्तिकरञ्जः**, पुं, (हस्तीव महान् करञ्जः ।)

महाकरञ्जः । इति राजनिर्घण्टः ॥

(गुणादयो-

ऽस्य महाकरञ्जशब्दे ज्ञातव्याः ॥)

**हस्तिकर्णः**, पुं, (हस्तिनः कर्णमिव पर्णमस्य ।)

एरण्डः । पलाशभेदः ।

गणदेवताभेदः । इति

मेदिनी ॥ हस्तिकन्दः । रक्तैरण्डः ।

इति राज-

निर्घण्टः ॥ हस्तिकर्णपलाशस्य

गुणाः ।

“हस्तिकर्णः परं वृष्यो

मेधायुर्बलवर्द्धनः ।”

इति राजवल्लभः ॥

यथा, --

"हस्ताङ्गुलय एव स्युरायुर्दा ललिताः शुभाः ।"

इति गारुडे ६६ अध्यायः ॥

अस्य विवरेणं बाहुशब्दे द्रष्टव्यम् ॥

**हस्तामलकं**, क्ली, (हस्तस्थितं आमलकम् ।)

करस्थितामलकीफलम् । (यथा, रामायणे ।
"त्वया दृष्टं जगत्सर्व्वं हस्तामलकवत् सदा ॥")
वेदान्तग्रन्थविशेषः । तल्लिख्यते । श्रीमच्छङ्करा-
चार्य्यस्य दिग्विजयसमये पथिमध्ये कञ्चित्
बालकं प्रति प्रश्नः ।
"कस्त्वं शिशो ! कस्य कुतोऽसि गन्ता
किं नाम ते त्वं कुत आगतोऽसि ।
एतद्वद त्वं मम सुप्रसिद्धं
मत्प्रीतये प्रीतिविवर्द्धनोऽसि ॥"
बालकस्योत्तरम् ।
"नाहं मनुष्यो न च देवयक्षो
न ब्राह्मणक्षत्त्रियवैश्यशूद्राः ।
स नित्योपलब्धिस्वरूपोऽहमात्मा॥ ९ ॥
घनच्छन्नदृष्टिर्घनच्छन्नमर्क
यथा निष्प्रभं मन्यते चातिमूढः ।
तथा बद्धवद्भाति यो मूढदृष्टेः
स नित्योपलब्धिस्वरूपोऽहमात्मा॥ १०
॥
समस्तेषु वस्तुष्वनुस्यूतमेकं
समस्तानि वस्तूनि यन्न स्पृशन्ति ।
वियद्वत् सदा शुद्धमच्छस्वरूपं
स नित्योपलब्धिस्वरूपोऽहमात्मा॥ ११
॥
उपाधौ यथा भेदता सन्मणीनां
तथा भेदता बुद्धिभेदेषु तेषु ।
यथा चन्द्रकाणां जले चञ्चलत्वं
तथा चञ्चलत्वं तवापीह विष्णो ॥" १२ ॥
इति हस्तामलकं समाप्तम् ॥
अपि च ।
श्रीहरिरुवाच ।
"हस्तिकर्णस्य वै मूलं गृहीत्वा
चूर्णयेद्धर ! ।
सर्व्वरोगविनिर्म्मुक्तं चूर्णं पलशतं
शिव ! ॥
सक्षीरं भक्षितं कुर्य्यात् सप्ताहेन
वृषध्वज ! ।
नरं श्रुतिधरं शूरं मृगेन्द्रगतिविक्रमम्
॥
पद्मगौरप्रतीकाशं युक्तं दशशतायुषा
।
षोडशाब्दाकृतिं रुद्र ! सततं
दुग्धभोजितम् ॥
मधुसर्पिःसमायुक्तं जग्धमायुष्करं
भवेत् ।
तज्जग्धं मधुना सार्द्धं
दशवर्षसहस्रिणम् ॥
कुर्य्यान्नरं श्रुतिधरं प्रमदाजनवल्लभम्
।
दध्ना नित्यं भक्षितन्तु वज्रदेहकरं
शिव ! ॥
कृष्णकेशसमायुक्तं नरं
वर्षसहस्रिणम् ।
तच्च काञ्जिकसंयुक्तं नरं कुर्य्याच्च
भक्षितम् ॥
शतवर्षं दिव्यदेहं
बलीपलितवर्ज्जितम् ।
जग्धं त्रिफलया युक्तं चक्षुष्मन्तं
करोति वै ॥
अन्धः पश्येत्तु चूर्णस्य सांज्यस्यैव
तु भक्षणात् ।
महिषक्षीरसंयुक्तं तल्लेपः-
कृष्णकेशकृत् ॥
खल्लीटस्य च वै केशा भवन्ति
वृषभध्वज ! ।
तैलयुक्तेन चूर्णेन
बलीपलितवर्ज्जितम् ॥
तदुद्वर्त्तनमात्रेण सर्व्वरोगैः प्रमुच्यते ।
सच्छागक्षीरचूर्णेन दृष्टिः
षण्मासतोऽञ्जनात् ॥"

| | | इति गारुडे १० अध्यायः ॥<br><br>**हस्तिकर्णकः**, पुं, (हस्तिनः कर्ण इव पर्णमस्य ।<br><br>कप् ।) किंशुकभेदः । इति<br>शब्दरत्नावली ॥<br><br>**हस्तिकर्णदलः**, पुं, (हस्तिनः कर्ण इव दलमस्य ।<br><br>पलाशभेदः । इत्यमरमाला ॥<br><br>**हस्तिकोलिः**, पुं, (हस्तीव कोलिः । (वदरीभेदः ।<br><br>तत्पर्य्यायः । गोपघोण्टा २ घोण्टा<br>३ वदरी-<br>च्छदा ४ । इति रत्नमाला ॥ |
|---|---|---|

**हस्तिगिरिः**, पुं, (हस्तिप्रधानो गिरिर्यत्र ।) काञ्चि-
देशः । इति केचित् ॥

**हस्तिघोषा**, स्त्री, (हस्तीव बृहती घोषा ।)
बृहद्घोषा । वडी तोरै इति हिन्दी भाषा ।
तत्पर्य्यायः । ऐभी २ महत्पुष्पा ३
सपीतिका ४
महाकोशातकी ५ । अस्या गुणाः ।
स्निग्धत्वम् ।
सारकत्वम् । पित्तानिलनाशित्वञ्च । इति
मदन-
विनोदः ॥ (पर्य्यायान्तरं यथा, --
"महाकोषातकी प्रोक्ता हस्तिघोषा
महाफला ।
धामार्गवी घोमकश्च हस्तिपर्णश्च स
स्मृतः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**हस्तिघोषातकी**, स्त्री, (हस्तीव बृहती घोषा-
तकी ।) हस्तिघोषा । इति रत्नमाला ॥
(गुणादिकमस्या हस्तिघोषाशब्दे
ज्ञातव्यम् ॥)

**हस्तिघ्नः**, पुं, (हस्तिनं हन्तुं शक्तः । हस्तिन् +
हन + "शक्तौ हस्तिकपाटयोः ।" ३ । २
। ५४ ।
इति टक् ।) मनुस्यः । इति केचित् ॥
करि-
नाशके, त्रि ॥

**हस्तिचारिणी**, स्त्री, (हस्तीव चरतीति । चर +
णिनिः । ङीप् ।) महाकरञ्जः । इति राज
निर्घण्टः ॥

**हस्तिदन्तं**, क्ली, (हस्तिनो दन्त इव
आकारोऽस्त्य-
स्येति । अच् ।) मूलकम् । इति
राजनिर्घण्टः ॥

**हस्तिदन्तः**, पुं, (हस्तिनो दन्त इव आकारोऽस्य ।

**हस्तिनपुरं**, क्ली, हस्तिनापुरम् । इति हेम-
चन्द्रः ॥

**हस्तिनापुरं**, क्ली, चन्द्रवंशीयहस्तिनामकराज-
निर्म्मितनगरम् । परिक्षितगड़ इति दिल्ली
इति
च ख्यातम् । तत्पर्य्यायः । नागाह्वः २
हस्तिन-
पुरम् ३ हास्तिनम् ४ गजाह्वयम् ५
गजाह्वम् ६
गजसाह्वयम् ७ । इति शब्दरत्नावली ॥
हस्तिनीपुरम् ८ । इति हेमचन्द्रः ।
शतानीका-
दप्यश्वमेधदत्तो भविता ।
तस्मादप्यधिसीमकृष्णः ।
अधिसीमकृष्णात् त्रिचक्षुः । यो गङ्गापहृते
हस्तिनापुरे कौशाम्ब्यां निवत्स्यति । इति
विष्णुपुराणे ४ अंशे २१ । ३ ॥

**हस्तिनी**, स्त्री, (हस्तिनः स्त्री । ङीप् ।) गज-
पत्नी । हातिनी इति भाषा । तत्पर्य्यायः ।
करेणूः २ करेणुः ३ रेणुका ४ करेणुका ५
धेनुका ६ वासिता ७ वासा ८ करिणी ९
विशा १० । इति शब्दरत्नावली ॥
कटम्भरा ११
पुष्करिणी १२ कचा १३ वसा १४
गणिका १५
गजयोषित् १६ । इति जटाधरः ॥ इभी
१७
पद्मिनी १८ मातङ्गी १९ । अस्या
दुग्धगुणाः ।
मधुरत्वम् । वृष्यत्वम् । गुरुत्वम् ।
कषायत्वम् ।
स्निग्धत्वम् । स्थैर्य्यकरत्वम् । शीतत्वम् ।
चक्षु-
ष्यत्वम् । बलवर्द्धनत्वञ्च ॥ तद्दधिगुणाः ।
कषायत्वम् । लघुत्वम् । उष्णत्वम् ।
पक्तिशूल-
शमनत्वम् । रुचिप्रदत्वम् । दीप्तिदत्वम् ।
वलास-

गम्भीरवेदिनि पुरः कवलं करीन्द्रे
मन्दोऽपि नाम न महानवगृह्य साध्यः ॥")

**हस्तिपत्रः**, पुं, (हस्तिनः कर्णः इव पत्रमस्य ।
हस्तिकन्दः । इति राजनिर्घण्टः ॥

**हस्तिपर्णिका**, स्त्री, (हस्तिनः कर्ण इव पर्णमस्याः
कन् । टापि अत इत्वम् ।) राजकोशातकी ।
इति राजनिर्घण्टः ॥

**हस्तिपर्णी**, स्त्री, (हस्तिनः पर्णमिव पर्णमस्याः ।
ङीष् ।) मोरटालता । इति रत्नमाला ॥
कर्क्कटी । इति राजनिर्घण्टः ॥

**हस्तिमदः**, पु, (हस्तिनो मदः ।) करिगण्डक्षरित
मदजलम् । तत्पर्य्यायः । गजमदः २ गज-
दानम् ३ मदः ४ कुम्भिमदः ५ दन्तिमदः ६
दानम् ७ द्विपमदः ८ । अस्य गुणाः ।
स्निग्ध-
त्वम् । तिक्तत्वम् । केश्यत्वम् ।
अपस्मारविष-
कुष्ठकण्डूतिव्रणदद्रुविसर्पनाशित्वञ्च । इति
राज-
निर्घण्टः ॥

**हस्तिमल्लः**, पुं, (हस्तिषु मल्लः ।) गणेशः । शङ्ख-
नागः । ऐरावतः । इति मेदिनी ॥

**हस्तिरोहणकः**, पुं, (हस्तीव राहते इति । रुह +
ल्युः । ततः कन् ।) महाकरञ्जः । इति राज-
निर्घण्टः ॥

**हस्तिलोध्रकः**, पुं, (हस्तीव महान् लोध्रः । ततः
कन् ।) लोध्रः । इति राजनिर्घण्टः ॥

**हस्तिवाहः**, पुं, (हस्तिनं वाहयतीति । वह +
णिच् + अण् ।) अङ्कुशः । इति
शब्दरत्नावली ॥
गजवाहकश्च ॥

**हस्तिविषाणी**, स्त्री, कदली । इति राजनिर्घण्टः ॥
(विवरणमस्याः कदलीशब्दे ज्ञातव्यम् ॥)

अच् ।) मूलकम् । इति शब्दरत्नावली ॥ (हस्तिनो
दन्त इव ।) द्रव्यरक्षार्थभित्तिस्थकीलकः ।
(हस्तिनो दन्तः) गजदशनञ्च ॥ (यथा, --
"हस्तिदन्तमसीं कृत्वा मुख्यञ्चैव रसाञ्जनम् ।
लोमान्यनेन जायन्ते नृणां पाणितलेष्वपि ॥"
इति वैद्यकचक्रपाणिसंग्रहे क्षुद्ररोगाधिकारे ॥)

**हस्तिदन्तकं**, क्ली, (हस्तिदन्तमेव । कन् ।)

मूलकम् । इति शब्दमाला ॥ (मूलकशब्देऽस्य
गुणादयो ज्ञातव्याः ॥)

**हस्तिदन्तफला**, स्त्री, (हस्तिदन्त इव फलमस्याः ।)

एर्व्वारुः । इति राजनिर्घण्टः ॥

**हस्तिद्वयसः**, त्रि, गजपरिमाणम् । हस्तिशब्दात्

द्वयसच्प्रत्ययेल निष्पन्नः । इति
सिद्धान्तकौमुदी ॥

**हस्तिनखः**, पुं, (हस्तिनो नख इव ।) पुर्द्वारि

यत् कूटं तत् । इत्यमरः । २ । २ । १७ ॥ द्वारो-
परि दुर्गार्थं यत् कूटं मृत्तिकाराशिस्तस्मिन्
हस्तिनखो दम्दमा इति ख्यातः । दुर्गद्वारा-
वरणार्थः क्रमनिम्नोन्नतखातोद्धृतमृत्कूटो
हस्तिनख इत्यन्योऽपि । दुर्गपुरद्वारसमीपे
युद्धार्थं यद्वहिरतटमन्तःसोपानयुक्तं मृत्कूटं
यत्र स्थित्वा विपक्षेषु काण्डादिकं क्षिप्यते तत्र
हस्तिनखो वुरुज इति ख्यात इत्यपरे । हस्तिनो
नख इव हस्तिनखः । इति तट्टीकायां भरतः ।
(यथा, माघे । ३ । ६८ ।

गदनाशित्वम् । वीर्य्यवर्द्धनत्वम् । उत्तमवल-
प्रदत्वञ्च ॥ तन्नवनीतगुणाः । कषायत्वम् ।
शीतलत्वम् । लघुत्वम् । तिक्तत्वम् । विष्टम्भि-
जन्तुपित्तकफक्रमिनाशित्वञ्च॥ तद्धृतगुणाः ।
कफपित्तविषक्रमिनाशित्वम्। कषायत्वम् ।
विष्टम्भित्वम् । तिक्तत्वम् । अग्निकरत्वञ्च । इति
राजनिर्घण्टः ॥ * ॥ चतुर्व्विधस्त्रीमध्ये स्त्री-
विशेषः । तल्लक्षणं थथा, --
"स्थूलाधरा स्थूलनितम्बभागा
स्थूलाङ्गुली स्थूलकुचा सुशीला ।
कामोत्सुका गाढरतिप्रिया च
नितम्बखर्व्वा खलु हस्तिनी स्यात् ॥"
इति रतिमञ्जरी ॥
हट्टविलासिनी । इति शब्दचन्द्रिका ॥

**हस्तिनीपुरं**, क्ली, हस्तिनापुरम् । इति हेमचन्द्रः ॥

**हस्तिपः**, पुं, (हस्तिनं पाति रक्षतीति । पा +

कः ।) हस्यारोहः । इति शब्दमाला ॥
(यथा, मार्कण्डेये । ३९ ॥ १८ ॥
"वश्यं मत्तं यथेच्छातो नागं नयति हस्तिपः ।
तथैव योगी स्वच्छन्दः प्राणं नयति साधितम् ॥")

**हस्तिपकः**, पुं, (हस्तिप एव । कन् ।) गजारोहः ।

माहुत इति भाषा । तत्पर्य्यायः । आधोरणः २
हस्त्यारोहः ३ निषादी ४ । इत्यमरः । २ । ८ ।
५९ ॥ आद्यौ पालकौ परौ योद्धाराविति
केचित् । इति भरतः ॥ (यथा, माघे । ५ । ४९ ।
"जज्ञे जनैर्मुकुलिताक्षमनाददाने
संरब्धहस्तिपकनिष्ठरचोदनाभिः ।

**हस्तिशाला**, स्त्री, (हस्तिनः शाला ।) गज-

गृहम् । फीलखाना इति पारस्य भाषा । तत्-
पर्य्यायः । चतुरम् २ । इति हेमचन्द्रः ॥

**हस्तिशुण्डा**, स्त्री, (हस्तिनः शुण्ड इव आकारो-

ऽस्त्यस्येति । अच् । विभाषया
ङीष् ।) क्षुपविशेषः । हातिशुँडा इति भाषा ।
तत्पर्य्यायः । हस्तिनी २ भुरुण्डी ३ जले-
च्छया ४ । इति शब्दचन्द्रिका ॥ नागशुण्डी ५
शुण्डी ६ धूसरपत्रिका ७ । (पर्य्यायान्तरं यथा,
"हस्तिशुण्डी चातिविषा त्र्यूषणं हेममाक्षिकम् ॥
इति वैद्यकरसेन्द्रसारसंप्रहे ज्वराधिकारे ॥)
अस्या गुणाः । कटुत्वम् । उष्णत्वम् । सन्निपात-
ज्वरनाशित्वञ्च । इति राजनिर्घण्टः ॥ करि-
करे, पुं ॥

**हस्तिशुण्डी**, स्त्री, (हस्तिनः शुण्ड इव आकारो-

ऽस्त्यस्येति । अच् । विभाषया
ङीष् ।) क्षुपविशेषः । हातिशुँडा इति भाषा ।
तत्पर्य्यायः । हस्तिनी २ भुरुण्डी ३ जले-
च्छया ४ । इति शब्दचन्द्रिका ॥ नागशुण्डी ५
शुण्डी ६ धूसरपत्रिका ७ । (पर्य्यायान्तरं यथा,
"हस्तिशुण्डी चातिविषा त्र्यूषणं हेममाक्षिकम् ॥
इति वैद्यकरसेन्द्रसारसंग्रहे ज्वराधिकारे ॥)
अस्या गुणाः । कटुत्वम् । उष्णत्वम् । सन्निपात-
ज्वरनाशित्वञ्च । इति राजनिर्घण्टः ॥ करि-
करे, पुं, ॥

**हस्तिश्यामाकः**, पुं, (हस्तीव स्थूलः श्यामाकः ।)

शस्यविशेषः । हातियाशामा इति भाषा ।
अस्य गुणाः । धातुशोषणत्वम् । पित्तश्लेष्म-
नाशित्वम् । वायुवर्द्धनत्वम् । रूक्षत्वञ्च । इति
राजवल्लभः ॥

| | | |
|---|---|---|
| “शनैरनीयन्त रयात् पतन्तो<br>रथाः क्षितिं हस्तिनखादखेदैः ।<br>सयत्रसूतायतरश्मिभुग्न-<br>ग्रीवाग्रसंसक्तयुगैस्तुरङ्गैः ॥”) | | **हस्ती**, [न्] पुं, सुहोत्रराजपुत्त्रः । यथा । बृहत्-<br>क्षत्त्रस्य सुहोत्रः पुत्त्रः सुहोत्राद्धस्ती य इदं हस्तिनापुरं निर्म्मापयामास । इति विष्णु-पुराणे ४ अंशे १८ अध्यायः ॥ अपि च । |

"सुहोत्रस्यापि दायादो हस्तो नाम बभूव ह ।
तेनेदं निर्म्मितं पूर्ब्बं पुरैव हस्तिनापुरम् ॥
हस्तिनश्चैव दायादास्त्रयः परमधार्म्मिकाः ।
अजमीढो द्विमीढश्च पुरुमीढस्तथैव च ॥"
इति हरिवंशे पितृकल्पे २० अध्यायः ॥ * ॥
अजमोदा । इति राजनिर्घण्टः ॥
(हस्तोऽस्त्य-
स्येति । हस्त + इनिः ।) वृहत्पशुविशेषः ।
हाती इति भाषा । तत्पर्य्यायः । दन्ती २ दन्तावलः ३ द्विरदः ४ अनेकपः ५ द्विपः ६
मतङ्गजः ७ गजः ८ नागः ९ कुञ्जरः १० वारणः ११ करी १२ इभः १३ स्तम्बेरमः १४
पद्मी १५ । इत्यमरः । २ । ८ । ३४ ॥ मतङ्गः १६
मातङ्गः १७ पीलुः १८ वराङ्गः १९ पुष्करी २०
जलकङ्कः २१ महामृगः २२ स्तरमः २३ शूर्पकर्णः २४ सिन्धुरः २५ सामजः २६ कटी २७
अन्तःस्वेदः २८ दोर्घमारुतः २९ विलोम-
जिह्वः ३० करटी ३१ पिण्डपादः ३२ महा-
मदः ३३ पेटकी ३४ कटकी ३५ कुम्भी ३६
निर्झरः ३७ । इति शब्दरत्नावली ॥ सिन्दूर-
तिलकः ३८ पञ्चनखः ३९ शृङ्गारी ४० करेणुः ४१ कर्णिकी ४२ लिङ्गी ४३ साम-
योनिः ४४ । इति जटाधरः ॥ राजीवः ४५

"गजे सहस्रयोधित्वमुच्चत्वं कर्णचापलम् ।
अरिव्यूहविभेदित्वं कुम्भमुक्तामलादयः ॥"
इति कविकल्पलतायां १ स्तवके २ कुसुमम् ॥ * ॥
तच्छकुनानि यथा ।
"ऊर्द्ध्वं करं यः कुरुतेऽथवा यो
धत्ते करं दक्षिणदन्तभागे ।
यो वा भवेत् वृंहितपूरिताशः
करी भवेदध्वगपूरिताशः ॥"
इति वसन्तराजशाकुने चतुष्पदशाकुनम् ॥ * ॥
स च प्रजापतिदेवताकः । यथा विष्णुधर्म्मोत्तरे ।
"अभयं सर्व्वदैवत्यं भूमिर्वै विष्णुदेवता ।
कन्या दासस्तया दासी प्राजापत्याः प्रकीर्त्तिताः ।
प्राजापत्यो गजः प्रोक्तस्तुरगो यमदैवतः ॥"
इत्यादि ॥ * ॥
तस्य प्रतिग्रहे आरुह्य ग्राह्यम् । यथा ।
"करे गृह्य तथा कन्यां दासदास्यौ द्विजोत्तमाः ।
करत्तु हृदि विन्यस्य धर्म्यो ज्ञेयः प्रतिग्रहः ।
आरुह्य च गजस्योक्तः कर्णे चाश्वस्य कीर्त्तितः ॥"
इत्यादि ॥ * ॥
प्रतिग्रहाशक्तेन तदग्राह्यम् । यथा, ब्रह्मपुरा-
णम् ।
"ब्राह्मणः प्रतिगृह्णीयाद्वृत्त्यर्थं साधुतस्तथा ।
अव्यश्वमपि मातङ्गतिललौहांश्च वर्ज्जयेत् ॥"
इत्यादि ॥
तद्दानफलम् । यथा नन्दिपुराणम् ।
"योऽश्वं रथं गजं वापि ब्राह्मणे प्रतिपादयेत् ।
स शक्रस्य वसेल्लो के शक्रतुल्यो युगान् दश ।
प्राप्यान्ते चेव मानुष्यं राजा भवति बुद्धिमान् ॥"
इति शुद्धितत्त्वम् ॥ * ॥

अलोमशा अल्पभुजो बलाढ्या
महाप्रमाणा लघुपुष्टलिङ्गाः ॥
क्रुद्धाः समीके मृदवोऽन्यकाले
लघ्वम्बुपाना बहुलोग्रदानाः ।
विस्तीर्णदानास्तनुलोमपुच्छा
ऐरावतस्याभिजनप्रसूताः ॥
तेष्वेव सर्व्वेषु विशुद्धवर्णा
अतीववृत्ताः प्रभवन्ति मुक्ताः ।
नाल्पेन पुण्येन महीपतीनां
स्पृशन्ति भूमण्डलमध्यमेते ।
दन्ता विभग्ना अपि युद्धरङ्गे
पुनः प्ररोहन्ति पुरैव तेषाम् ॥ १ ॥
ये कुञ्जराः कोमलसर्व्वदेहाः
पुच्छा न दण्डाः खरगण्डदेशाः ।
स्रवन्मदाः सन्ततरोषभाजोऽ-
मरप्रियाः सर्व्वभुजो बलाढ्याः ॥
सुतीक्ष्णदन्ता रसना गजानां
ते पुण्डरीकप्रवरप्रसूताः ।
ते पद्मगन्धं विसृजन्ति रेतो
दानञ्च नैषां वमथुः प्रभूता ॥
न तोयपानेऽभ्यधिका स्पृहा च
श्रमेऽपि नैते बलमुत्सृजन्ति ।
अमी तु येषां निवसन्ति राज्ञां
ते वै समस्तक्षितिशासनार्हाः ॥ २ ॥
ये कुञ्जराः कर्कशखर्व्वदेहाः
कदापि माद्यन्ति गलन्मदाश्च ।
आहारयोगाद्बलवीर्य्यभाजो
नात्यम्बुकामा बहुलोमगण्डाः ।
विरूपदन्तास्तनुपुच्छकर्णा
ज्ञेया बधैर्व्वामनवंशजाताः ॥ ३ ॥
ये दीर्घदेहास्तनुदीर्घशुण्डाः
कुदन्तभाजो मलपूर्णदेहाः ।
स्थविष्ठगण्डाः कलहप्रियाश्च
ते कुञ्जराः स्युः कुमुदस्य वंशाः ।
अन्यद्विपान् दर्शनमात्रतस्तु
निघ्नन्ति ते दुर्गमनाश्च पुंसाम् ॥ ४ ॥
ये स्निग्धदेहाः सलिलाभिलाषा
महाप्रमाणास्तनुशुण्डदन्ताः ।
स्थविष्ठदन्ताः श्रमदुःसहाश्च

जलकाङ्क्षः ४६ लतालकः ४७ पेचिलः ४८ ।
इति त्रिकाण्डशेषः ॥ द्विरदनः ४९ करभी ५०
विषाणी ५१ रदनी ५२ महाबलः ५३ भद्रः ५४
द्रुमारिः ५५ षष्टिहायनः ५६ । इति राज-निर्घण्टः ॥ * ॥ स च चतुर्जातिर्यथा, --
"भद्रो मन्द्रो मृगो मिश्रश्चतस्रो गजजातयः ॥"
इति हेमचन्द्रः ॥ * ॥
तद्द्वारा भ्रमणगुणाः । वातकोपनत्वम् । अङ्ग-
स्थैर्य्यबलाग्निकारित्वञ्च । इति राजवल्लभः ॥ * ॥
कामुकोन्मत्तगजारोहणदोषोयथा ।
"नारोहेत् कामुकोन्मत्तं गजं राजा कदाचन ।
आरुह्य कामुकं तन्तु परत्रेह विषीदति ॥"
इति कालिकापुराणे ८९ अध्यायः ॥ * ॥
अथ गजायुर्व्वेदः ।
"गजायुर्व्वेदमाख्यास्ये उक्ताः कल्पा गजे हिताः ।
गजे चतुर्गुणा मात्रा ताभिर्गजरुगर्द्दनम् ॥
गजोपसर्गव्याधीनां शमनं शान्तिकर्म्म च ।
पूजयित्वा सुरान् विप्रान् ब्राह्मणे कपिलां ददेत् ॥
दन्तिदन्तद्वये मालां निबध्नीयादुपोषितः ।
मन्त्रणं मन्त्रिता वैद्यो वचा सिद्धार्थकामले ॥
सूर्य्याद्याः शिवदुर्गा श्रीर्विष्णुना रक्षसाङ्गणः ।
बलिं दद्याच्च भूतेभ्यः स्नापयेच्च चतुर्घटैः ॥
भोजनं मन्त्रितं दद्यात् भस्मनोद्धूनयेद्गजम् ।
भूती रक्षा शुभा मध्या वारुणी रक्षसां सदा ॥
अपि च ।
"गामश्वञ्च महीं हेम मणोनथ गजांस्तिलान् ।
ये प्रयच्छन्ति पापेषु निरताः सर्व्वदा मुने ! ।
न तेषां रौरवः पन्था दत्त्वैषां दानमित्युत ॥"
इति वह्निपुराणे यमशर्म्मिलोपाख्याननामा-ध्यायः ॥ * ॥ अथ गजपरीक्षा । तत्र कालः ।
"ऐन्द्रमित्रवरुणानिलपुष्या-
चन्द्रतोयरविवारिजतारे ।
सूर्य्यशुक्रगुरुसोमजवारे
श्रेयसे भवति कुञ्जरयानम् ॥
लग्ने चरे शुभसमाश्रितवीक्षिते वा
चन्द्रस्य दृष्टिरिभयानविधौ विरुद्धा ।
सौम्ये दिने करनिशाटवसुश्रवण्य-
तोयेशमैत्रमदितिश्च शुभग्रहाहः ॥
स्यात् कुञ्जरक्रयणदर्शनदानकालः
शेषेषु दुःखफलमार्कसुतेऽह्नि चैव ॥
गजानामष्टधा भेदाः संक्षेपेण प्रकाश्यते ।
ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ॥
पुष्पदन्तः सार्व्वभौमः सुप्रतीकश्च दिग्गजाः ।
एषां वंशप्रसूतत्वाद्गजानामष्टजातयः॥
ये कुञ्जराः पाण्डरसर्व्वदेहाः
सुदीर्घदन्ताः सितपुष्पदन्ताः ।
ते कुञ्जराश्चाञ्जनवंशजाताः ॥ ५ ॥
रेतश्च दानञ्च सृजन्ति शश्व-
दानूपदेशे प्रभवन्ति ये तु ।
ते पुष्पदन्ताभिजनप्रसूता
महाजवास्ते तनुपुच्छभागाः ॥ ६ ॥
सुदीर्घदन्ता षहुलोमभाजो
महाप्रमाणाश्च सुकर्क्कशाङ्गाः ।
भ्राम्यन्ति नाध्वभ्रमणाभियोगा-
न्नाहारपानादिषु चातिशक्तिः ॥
मरुप्रदेशे विचरन्ति ते वै
मुक्ताफलानामिह जन्म मध्ये ।
महाशरीरातिसुकर्क्कशाङ्गा
नारिष्टदन्ता मृदुशुक्लदन्ताः ॥

| | | |
|---|---|---|
| त्रिफला पञ्चकोले च दशमूलं विडङ्गकम् ।<br>शतावरी गुडूची च निम्बवासककिंशुकाः<br>॥<br>गजरोगविनाशाय प्रोक्तः कल्कः<br>कषायकः ।<br>आयुर्व्वेदो गजाश्वानामुक्तः संक्षेपसारतः<br>॥”<br>इति गारुडे । २०७ । ३६ -- ४२ ॥ * ॥<br>गजे<br>वर्णनीयानि यथा, -- | | |

महाशनाः क्षीणपुरीषमूत्र-
विस्तीर्णकर्णास्तनुरोमगण्डाः।
ते सार्व्वभौमाभिजनप्रसूता
विशुद्धमुक्ताः प्रभवन्ति चैषु ॥ ७ ॥
ये दीर्घशुण्डाः सुविभक्तदेहा
महाजवाः क्रोधपरीतकाश्च।
विस्तब्धकर्णास्तनुपुच्छदन्ताः
सदाशनश्चैव वशाप्रियाश्च ॥
प्रवृद्धगण्डास्तनुलोमयुक्ताः।
ते सुप्रतीकप्रवरप्रसूताः।
महाप्रमाणामितमौक्तिकानि
भवन्ति चैतन्निजगाद काप्यः ॥ ८ ॥ * ॥
एकजातिसमुत्पन्नो गजः शुद्ध इति स्मृतः।
लक्षणञ्च यथा प्रोक्तं शुद्धञ्चैतत्र दृश्यते ॥
शुद्धद्विजातिसम्भूतस्तल्लक्षणसमन्वितः।
जारजो नाम विख्यातो यथास्वं बलवीर्य्यवान्
॥
द्विजातिद्वयजातो यः स शूर इति कथ्यते।
द्विजातिजारजोत्पन्न उद्दान्त इति कथ्यते ॥
एवं संयोगभेदेन गजजातिरनेकधा।
तां यो जानाति तत्त्वेन स राज्ञः पात्रमर्हति ॥
ब्रह्मादिजातिभेदेन तेषां भेदश्चतुर्विधः।
विशालाङ्गाः पवित्राश्च ब्राह्मणाः स्वल्पभो-
जिनः ॥
शूरा विशाला बह्वाशाः क्रुद्धाः क्षत्त्रिय-
जातयः ॥ * ॥
अथ गुणाः।
"यथा रक्तं यथा खड्गो यथा स्त्री सप्तयो यथा
।
परीक्ष्यन्ते गुणैरेवं गजानामपि निर्णयः ॥
रम्यो भीमो ध्वजोऽधीरो वीरः शूरोऽष्ट-
मङ्गलः।
सुनन्दः सर्व्वतोभद्रः स्थिरो गम्भीरवेद्यपि।
वरारोह इति प्रोक्ता गजा द्वादश सत्तमाः ॥"
तद्यथाह भोजः।
"विभक्तावयवः पुष्टः सुदन्तः सुमहानपि।
तेजस्वी रम्य इत्युक्तो गजः सम्पत्तिवर्द्धकः ॥
१ ॥
अङ्कुशादिप्रहारेण यस्य भीतिर्न जायते।
आयोजनशतं यावदनर्थं कुरुते क्षयम्।
नाल्पपुण्यैरयं प्राप्यो मनुजेन्द्रैः कलौ युगे
॥ ८ ॥
शुभौ दन्तौ शुभः शुण्डः शुभौ कुम्भौ
शुभस्तनुः।
गण्डयोर्गण्डयोर्मध्ये आवर्त्तः शुभलक्षणः
॥
शश्वन्मदस्रुतिपरिप्लुतगण्डदेशा-
स्तीक्ष्णाङ्कुशेन विनिवारयितुं न शक्याः।
ज्ञातिद्विषो नवपयोदरवा गभीराः
पृथ्वीभुजां सकलसौख्यकरा भवन्ति ॥
*" ॥
अथ दोषाः।
"दीनः क्षीणोऽथ विषमो विरूपो विकलः
खरः।
विमदो ध्मापकः काको धूम्रो जटिल
इत्यपि ॥
अजिनी मण्डली श्वित्री हतावर्त्तो
महाभयः।
राष्ट्रहा मुषली भाली निःसत्त्व इति
विंशतिः।
महादोषाः समाख्याता गजानां
भोजभूभुजा ॥"
तद्यथा, --
"अतिक्षीणतरः
क्षीणतनुदन्तोऽतिनिष्प्रभः।
दीनाख्यः कुरुते दीनं भूभुजं नात्र संशयः
॥ १ ॥
खर्व्वशुण्डो महापुच्छो निश्वासो
वेगवर्ज्जितः।
क्षीणोऽयं कुरुते क्षीणं स्वामिनं
धनसम्पदा ॥ २
कुम्भे दन्तेऽक्षिकर्णे च वैषम्यं
पार्श्वयोस्तथा।
यस्यायं विषमो नागो नागवत् कुरुते
क्षयम् ॥ ३ ॥
आस्कन्धात्तु शिरः क्षीणं पश्चाद्भागस्य
पुष्टता।
गच्छतो यस्य गुल्फाभ्यां भवेत् संघर्षणं
मुहुः।
अपि सर्व्वगुणैर्युक्तस्त्याज्यश्च स
महाभयः ॥
राष्ट्रं धनं कुलं सैन्यं मैत्रं दारान् तथा
प्रजाः ॥
क्षपयत्यशुभो नागो दृष्टमात्रो न संशयः ॥
तत्रापम्रियते लोकस्तत्र वज्रभयं भवेत्।
व्याधिवह्निभयं वात्र यत्रास्ते स महाभयः
॥ १६ ॥
भृशं सन्ताड्यमानस्तु पादैकं यो न
गच्छति।
पृष्ठोदरं समावृत्य रेखा रक्तसमा यदि ॥
न्यस्ताग्रिमपदस्थाने पश्चात् पातः पदे
यदि।
अपि सर्व्वगुणैर्युक्तो राष्ट्रहायं गजाधमः ॥
राष्ट्रादपाक्रियतेऽयं भूमुजा श्रियमिच्छता
।
राष्ट्रान्ते रक्षितो मोहात् कुरुते राष्ट्रसंक्ष-
यम् ॥ १७ ॥
पादाश्चात्यन्तविषमा दन्तौ
चान्योन्यवैषमौ।
पञ्जरो दृश्यते भग्न एको वाष्टौ द्वयोऽथवा
॥
दन्तौ वा चलतो यस्य किमु वा न
प्ररोहतः ॥
कुम्भौ वा विषदौ यस्य मुषलीस
गजाधमः।
राष्ट्रदुर्गबलामात्यक्षयकृत्तं परित्यजेत् ॥
१८ ॥
चर्म्मखण्ड इवाभाति भाले
यस्यातिकर्क्कशः।
भाली स कुरुते नागो भर्त्तुः
कुलधनक्षयम् ॥ १९ ॥
पुष्टो विशालः सद्दन्तः सत्कारोऽपि
शुभोऽपि
सन्।
न रणे साहसो यस्य स निःसत्त्वो
गजाधमः ॥

स भीमोऽयं गजः शुद्धो राज्ञः सर्व्वार्थसाधनः ॥ २ ॥
शुण्डाग्रात् पुच्छपर्य्यन्त रेखा यस्यैव दृश्यते ।
ध्वजः शुद्धो गजो नाम साम्राज्यप्राणदा-यकः ॥ ३ ॥
समौ कुम्भौ खराकारौ आवर्त्तौ तत्र चोच्छ्रयौ ।
अधीरोऽयं गजो नाम्ना राज्ञां विप्र विना-शनः ॥ ४ ॥
आवर्त्तः पृष्ठतो यस्य स्वनाभिमभिविन्दति ।
पुष्टाङ्गो बलवान् वीरो राज्ञामभिमतप्रदः ॥ ५ ॥
महाप्रमाणः पुष्टाङ्गः सुदन्तश्चारुगण्डकः ।
भक्षणे भक्षणे श्रान्तः शूरो लक्ष्मीविवर्द्धनः ॥ ६ ॥
सितौ दन्तौ सितः पुच्छः सिता रेखा सिता नखाः ।
रक्तकुम्भाक्षिवीय्यङ्गिर्विज्ञेयः सोऽष्टमङ्गलः ॥
अयं गजेन्द्रो यस्यास्ते तस्य स्यात् सकला मही ।
नारिष्टानीतयस्तत्र यत्रास्तेऽयं गजेश्वरः ॥

विरूप इति नागोऽयं कुरुते भूधनक्षयम् ॥ ४ ॥
नानाभोगैरपि कृतैर्यस्य नो जायते मदः ।
युद्धाय नोपक्रमते विकलं तं विवर्ज्जयेत् ॥ ५ ॥
खरता सहजा यस्य शरीरेऽस्तीति लक्ष्यते ।
तनुदन्तकरो हस्ती खरः कुलविनाशनः ॥ ६ ॥
न जायते मदो यस्य स्वकाले जायतेऽथवा ।
विरूपो विवशो वापि विमदं दूरतस्त्यजेत् ॥ ७ ॥
लघुप्रमाणः क्षीणाङ्गस्तनुशुण्डशिरोदरः ।
अश्रान्तं श्वसिति व्यग्रः पतेद्वै नेत्रयोर्म्मलम् ॥
त्रिके पुच्छाग्रतो वापि आवर्त्तो मण्डलोऽथवा ।
बहिः प्रकुरुते लिङ्गं सर्वथा गतचेष्टवत् ॥
भूभुजा नहि वीक्ष्योऽयं ध्मापकाख्यो गजाधमः
यदीच्छेच्छाश्वतीं भूतिं शरीरारोग्यमेव वा ॥ ८ ॥
शङ्खदेशौ यस्य भग्नौ स्कन्धदेशोऽतिगुच्छकः ।
काकोऽयं कुरुते मृत्युं स्वामिनो नात्र संशयः ॥ ९ ॥
विषमौ शङ्खगौ दन्तौ यस्य शुण्डविरोधिनौ ।
भिद्येते वा विदीर्य्येतां स्वयं शून्यान्तरावुभौ ।
कुरुते व्याधितं नाथं धूम्रनामा गजाधमः ॥ १० ॥
मूर्द्धजाः कर्क्कशा रूक्षा जटारूपानुबन्धिनः ।
यस्यायं जटिलो नागः कुरुते धनसंक्षयम् ॥ ११ ॥
स्कन्धे वा गात्रदेशे वा लग्नं चर्म्मेऽवलक्ष्यते ।
अजिनी नाम नागोऽयं कुरुते भूधनक्षयम् ।

सर्व्वेषां गजदोषाणामुक्त एव महानयम् ।
येनैकेन गुणाः सर्व्वे तृणायन्ते सुनिश्चितम् ॥” २०
पालकाप्यस्तु ।
“क्षीणदन्ताङ्गशुण्डत्वं विषमत्वं रदादिषु ।
शिरः क्षीणमधः पुष्टिरेते दोषा गजे मताः ॥” *
गार्ग्यस्तु ।
“ये कुञ्जरास्तनुरदास्तनुगण्डशुण्डाः
क्षीणाः सुदीनवपुषो गुरुदीघपुच्छाः ।
वश्यादिभिः खलु गुणैरहिता हिताय
ते भूभुजामभिमता नहि वीक्षणीयाः ॥
यो न स्रवेन्मदजलं तनुमूद्धर्ध्वभागो
निर्व्वीर्य्यतामुपगतो बहुभोजनेऽपि ।
नेच्छत्यसावुपगतानपरान्निहन्तुं
भूमीभुजा न हि गजोऽयमवेक्षणीयः ॥
दोषैर्दुष्टान् गजान्राजा न वीक्षेत कदाचन ।
न्यसेद्वा परराष्ट्रेषु नगरात् क्रियते बहिः ॥
दद्यात् द्विजेभ्यः शुद्धेभ्यो गणकायाथवा नृपः ।
दृष्ट्वा यदि गजान् दुष्टान् दद्याच्छृङ्गिशतं द्विजे ।
पुरं नीराजयेद्वापि आत्मानं वाथवा सुतम् ।
देवसूक्तेन जुहुयादयुतं वातितत्परः ॥
तिलान् वा जुहुयादग्नौ तत्प्रतीकारहेतवे ।
ब्रह्मादिजातिभेदेन जातिरुक्ता चतुर्व्विधा ॥
चतुर्व्विधानां भूपानां वाहने ते शुभप्रदाः ।
ये दोषा दोषवत्त्वानां त एव स्युः स्वजातितः ॥
ये व्याधयो नराणां स्युस्ते गजानामपि स्मृताः ।
चिकित्सापि तथा तेषां मात्रा चैव गरीयसी ॥”
इति गजपरीक्षा ॥
इति भाजराजकृतयुक्तिकल्पतरुः ॥

| | | |
|---|---|---|
| | नैनं स्पृशेन्न वीक्षेत यदीच्छेदात्मनः श्रियम् ॥ १२ ॥<br>मण्डलानि प्रदृश्यन्ते एकं द्वे वा बहूनि वा ।<br>विरूपाण्युद्गतानीव मण्डली कुलनाशनः ॥ १३ ॥<br>तानि श्वेतानि यस्य स्युः श्वित्री स धननाशनः ॥ १४<br>हृदये उदरे चैव त्रिके पुच्छस्य मूलतः ।<br>गुदे मेढ्रे पदे चैव आवर्त्तेन हतश्रियम् ।<br>योगिनं कुरुते भूपं प्रवासिनमुपद्रुतम् ॥ १५ ॥ | |

**हस्ते**, व्य, पाणौ । यथा । हस्ते करोति । इति मुग्धबोधव्याकरणम् ॥

**हस्तेकरणं**, क्ली, पाणिग्रहणम् । विवाहः । इति केचित् ॥

**हस्त्यः**, त्रि, (हस्त + "तेन यथाकथाचहस्ताभ्यां णयतौ ।" ५ । १ । ९८ । इति यत् ।) हस्तेन दत्तः । हस्तेन कृतः । इति सिद्धान्तकौमुदी ॥

**हस्त्यध्यक्षः**, पुं, (हस्तिषु अध्यक्षः) गजाध्यक्षः । तल्लक्षणं यथा, --
"हस्तिशिक्षाविधानज्ञो वन्यजातिविशारदः ।
क्लेशक्षमस्तथा राज्ञो गजाध्यक्षः प्रशस्यते ॥"
इति मात्स्ये १८९ अध्यायः ॥

**हस्त्यायुर्व्वेदः**, पुं, (हस्तिन आयुर्व्वेदः ।) गजायुर्व्वेदः । हस्तिचिकित्साशास्त्रम् । तत्प्रमाणं हस्तिशब्दे द्रष्टव्यम् ॥

**हस्त्यारोहः**, पुं, (हस्तिनमारोहतीति । आ + रुह + कः ।) हस्तिपकः । इत्यमरः । २ । ८ । ५९ ॥
तल्लक्षणं यथा, --
"एतैरेव गुणैर्युक्तः स्वासनश्च विशेषतः ।
गजारोहो नरेन्द्रस्य सर्व्वकर्म्मणि शश्यते ॥"
एतैर्हस्त्यध्यक्षगुणैः । इति मात्स्ये १८९ अः ॥

**हस्रः**, त्रि, (हसति निरर्थकमिति । हस + "स्फायितञ्चीति ।" उणा० २ । १३ । इति रक् ।) मूर्खः । इत्युणादिकोषः ॥

**हहलं**, क्ली, हालाहलम् । इति शब्दचन्द्रिका ॥

तपनीयञ्च गाङ्गेयं कलधौतञ्च काञ्चनम् ॥
चामीकरं शातकुम्भं तथा कार्त्तस्वरञ्च तत् ।
जाम्बुनदं जातरूपं महाराजत इत्यपि ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥
हाटकपरिमितः । "जातरूपेभ्यः परिमाणे ।"
४ । ३ । १५३ । इति अण् ॥) धुस्तूरः । इत्यमरः । २ । ९ । ९४ ॥ स्वर्णनिर्म्मिते, त्रि ॥

**हाटकमयं**, त्रि, स्वर्णमयम् । हाटकशब्दात् मयट्प्रत्ययेन निष्पन्नम् ॥

**हाटकेश्वरः**, पुं, (हाटकस्य ईश्वरः ।) गोदावरीतीरस्थशिवः, । यथा, --
"एतस्मिन्नन्तरे प्राप्ताः सर्व्व एवर्षिपार्थिवाः ।
द्रष्टं त्रैलोक्यभर्त्तारं त्र्यम्बकं हाटकेश्वरम् ॥
ततः कपिवरः प्राप्तो घृताच्या सह सुन्दरि ! ।
स्नात्वा गोदावरीतीर्थे दिदृक्षुर्हाटकेश्वरम् ॥"
इति वामने ६२ अध्यायः ॥
(वितलस्थितो महादेवः । यथा, भागवते । ५ । २४ । १७ । "ततोऽधस्ताद्वितले हरो भगवान् हाटकेश्वरः स्वपार्षदभूतगणावृतः प्रजापतिसर्गोपबृंहणाय भवो भवान्या सह मिथुनीभूयास्ते । यतः प्रवृत्ता सरित्प्रवरा हाटकी नाम भवयोर्वीर्य्येण ।
यत्तच्चित्रभानुर्मातरिश्वना समिध्यामान ओजसा पिबति ।
तन्निष्ठ्यूतं हाट

**हाफिका**, स्त्री, जृम्भा । हाइ इति भाषा । तत्पर्य्यायः । उपपुष्पिका २ । इति हारावली ॥

**हायनः**, पुं, क्ली, (जहाति त्यजति जिहीते प्राप्नोति वा भावानिति । हा त्यागे हा गतौ वा + "हश्च ब्रीहिकालयोः ।" ३ । १ । १४८ । इति ण्युट् ।) वत्सरः । इत्यमरः । १ । ४ । २० ॥
(यथा, भागवते । १ । ६ । ८ ।
"अहञ्च तद्ब्रह्मकुले ऊषिवांस्तदपेक्षया ।
दिग्देशकालाव्युत्पन्नो बालकः पञ्चहायनः ॥")

**हायनः**, पुं, (जहात्युदकमिति । हा + "हश्च ब्रीहिकालयोः ।" ३ । १ । १४८ । इति ण्युट् ।) ब्रीहिभेदः । अग्निशिखा । इति मेदिनी ॥

**हारं**, त्रि, (हरेरिदं । हरि + अण् । पक्षे हरतीति । हरं तदेव । हर + स्वार्थे अण् ।) हरिसम्बन्धीयम् । हरणकर्त्तृ । यथा, --
"यच्छृण्वतोऽपैत्यरतिर्व्वितृष्णा
सत्वञ्च शुध्यत्यचिरेण पुंसः ।
भक्तिर्हरौ तत्पुरुषे च सख्यं
तदेव हारं वद मन्यसे चेत् ॥"
इति श्रीभागवते । १० । ७२ ॥
"तदेव हारं हरेश्चरितं मनोहरं वा ॥"
इति तट्टीकायां श्रीधरस्वामी ॥

**हारः**, पुं, ह्रियते मनो येन । हृ + घञ् ।) मुक्तामाला । तत्पर्य्यायः । मुक्तावली २ । इत्यमरः २ । ६ । १०५ ॥ हारा ३ यष्टिः ४ यष्टी ५ लता ६ । इति शब्दरत्नावली ॥ (यथा, कुमारे । ५ । ८ ।
"विमुच्य सा हारमहार्य्यनिश्चया
विलोलयष्टिप्रविलुप्तचन्दनम् ।
बबन्ध बालारुणबभ्रु वल्कलं

**हहाः**, पुं, हाहानामगन्धर्व्वः । इति शब्दमाला ॥

**हा**, ओ लि त्यागे । इति कविकल्पद्रुमः ॥ (ह्वा०-
पर०-सक०-अनिट् ।) ओ हाक त्यागे इति
प्रसिद्धोयम् । यत्र हाक इति ग्रहणं तत्रा-
स्यैव । तेन दामा गै हाक इत्यादि सूत्रेणास्य
हीयते इत्यादि । अन्यस्य हायते इत्यादि ।
ओ हीनः । लि जहाति । अकर्म्मकश्चायम् ।
यथा । स्वार्थाद्धीनः । एवं जहाति अपैति
स्वार्थो यस्यामिति जहत्स्वार्था वृत्तिः । इति
दुर्गादासः ॥

**हा**, ओ ङ लिगतौ । इति कविकल्पद्रुमः ॥ (ह्वा०-
आत्म०-सक०-अनिट् ।) ओ, हानः । ङ लि,
जिहीते । इति दुर्गादासः ॥

**हा**, व्य, विषादः । शोकः । अर्त्तिः । इत्यमरः ।
३ । ४ । २५५ ॥ (यथा, महाभारते । ३ । ६३ । ३ ॥
"हा नाथ ! हा महाराज ! हा स्वामिन् ! किं जहासि माम् ।
हा हतास्मि विनष्टास्मि भीतास्मि विजने वने ॥")
कुत्सा इति मेदिनी ॥

**हाङ्गरः**, पुं, स्वनामख्यातजलजन्तुः । इति शब्द-
चन्द्रिका ॥ तत्पर्य्यायः अवहारकशब्दे
द्रष्टव्यः ॥

**हाटकं**, क्ली, (हटति शोभते इति । हट दीप्तौ +
ण्वुल् ।) स्वर्णम् (यथा, माघे । १३ । ६३ ।
"नवहाटकेष्टकचितं ददर्श सं
क्षितिपस्य वस्त्यमथ तत्र संसदि ॥"
अस्य पर्य्यायो यथा, --
काख्यं सुवर्णं भूषणेनासुरेन्द्रावरोधेषु पुरुषाः
सह पुरुषीभिर्धारयन्ति ॥")

**हातव्यं**, त्रि, (हा + तव्य ।) त्यक्तव्यम् । यथा ।
"हातव्योऽयमसार एवविरसः संसार इत्यादिकम् ।
सर्व्वस्यैव हि वाचि चेतसि पुनः कस्यापि पुण्यात्मनः ।"
इति शान्तिशतकम् ॥

**हात्रं**, क्ली, (हा + ष्ट्रन् ।) वेतनम् । इति सिद्धान्त-
कौमुद्यामुणादिवृत्तिः ॥ प्रमथनम् । मरणम् ।
राक्षसः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**हानं**, क्ली, (हा + क्तः ।) त्यागः । इति जटाधरः ॥

**हानिः**, स्त्री, (हा + "वहिश्रिश्रुयुद्रुग्लेति ।" उणा०
४ । ५ । इति निः । यद्वा, हा + क्तिन् ।
"ग्लाम्लाज्याहाभ्यो निः ।" ३ । ३ । ९४ । इत्यस्य
वार्त्तिकोक्त्या निः ।) क्षतिः । तत्पर्य्यायः ।
अपहारः २ अपचयः ३ । इति जटाधरः ॥
(यथा, महाभारते । ५ । ९९ । ४ ।
"अत्रामृतं सुरैः पीत्वा निहितं निहतारिभिः ।
अतः सोमस्य हानिश्च वृद्धिश्चैव प्रदृश्यते ॥")

**हानुकः**, त्रि, घातुकः । इति केचित् ॥

**हान्द्रं**, क्ली, (हन + "भ्रस्जिगमिनमिहनीति ॥"
उणा० ४ । १५९ । इति ष्ट्रन् वृद्धिश्च ।)
मरणम् । इत्युणादिकोषः ॥

**हापुत्त्रिका**, स्त्री, पक्षिविशेषः । तत्पर्य्यायः ।
सर्षपी २ खञ्जनिका ३ तुलिका ४ स्फोटिका ५ ।
इति त्रिकाण्डशेषः ॥

**हापुत्त्री**, स्त्री, हापुत्त्रिका । यथा, --
"गोभण्डीरः पङ्ककीरो हापुत्त्री राजभट्टिका ॥"

पयोधरोत्सेधविशीर्णसंहति ॥"
ह्रियन्ते प्राणा यत्रेति ।) युद्धम् । इति मेदिनी ॥
(हृ + भावे घञ् । हरणम् । यथा, भाग-
वते । १० । ६३ । १७ ।
"हंस्युन्मर्गान् हिंसया वर्त्तमानान्
जन्मैतत्ते भारहाराय भूमेः ॥")

**हारकः**, पुं, (हरतीति । हृ + ण्वुल् ।) कितवः ।
चौरः । गद्यभेदः ॥ विज्ञानविशेषः । इति
मेदिनी ॥ शाखोटवृक्षः । इति शब्दचन्द्रिका ॥
भाजकाङ्कः । इति लीलावती ॥ हरणकर्त्तरि,
त्रि ॥ (यथा, मनुः । ११ । ५१ ।
"वस्त्रापहारकः श्वेत्रं पङ्गुतामश्वहारकः ॥")

**हारहारा**, स्त्री, कपिलद्राक्षा । इति राज-
निर्घण्टः ॥

**हारहूरः**, पुं, मद्यम् । इति हेमचन्द्रः ॥

**हारहूरा**, स्त्री, द्राक्षा । इति हलायुधः ॥
(पर्य्यायो यथा, --
"द्राक्षा स्वादुफला प्रोक्ता तथा मधुरसापि च ।
मृद्वीका हारहूरा च गोस्तनी चापि कीर्त्तिता ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**हारावली**, स्त्री, पुरुषोत्तमकृतकोषविशेषः । यथा,

“मुक्तामयातिमधुरा मसृणावदात-
च्छायाधिरागतरलामलसद्गुणश्रीः।
साध्वी सतां भजतु कण्ठमसौ प्रियेव
हारावली विरचिता पुरुषोत्तमेन ॥”
इति तद्धृतश्लोकः ॥
(हारस्य आवली ।) हारश्रेणी च ॥
(यथा,
गीतगोविन्दे । ११ । १३ ।
“हारावलीतरलकाञ्चनकाञ्चिदाम-
मञ्जीरकङ्कणमणिद्युतिदीपितश्च॥”)

**हारिः**, स्त्री, (हरतीति । हृ + बाहुलकात् इञ् ।
इत्युणादिवृत्तौ उज्ज्वलदत्तः । ४ । १२४ ।) पथिक-
सन्तानः । द्यूतादिभङ्गः । इति मेदिनी ॥ रुचिरे,
त्रि ॥

**हारिकण्ठः**, पुं, (हारी मनोहरः कण्ठः कण्ठ-
रवो यस्य ।) कोकिलः । (हारी हारयुक्तः
कण्ठो यस्य ।) हारान्वितगले, त्रि । इति
मेदिनी ॥

**हारिणिकः**, पुं, (हरिणं हन्तीति । हरिण +
“पक्षिमत्स्यमृगान् हन्ति । “४ । ४ । ३५ । इति
ठक् ।) व्याधः । हरिणघातकः । इति केचित् ॥

**हारितः**, पुं, पक्षिविशेषः । तत्पर्य्यायः । हरि-
तालुकः २ । इति जटाधरः ॥ हारीतः ३ ।
इति मेदिनी ॥ अस्य मांसगुणाः हारीतकशब्दे
द्रष्टव्याः । हरिद्वर्णश्च ॥ (हरितस्य हरिश्चन्द्र-

“ह्रियते वध्यमानोऽपि नरो हारिभिरिन्द्रियैः ।
विमूढसंज्ञो दुष्टाश्वैरुद्भ्रान्तैरिव सारथिः ॥”
मनोहरः । यथा, शाकुन्तले प्रस्तावनायाम् ।
“तवास्मि गीतरागेण हारिणा प्रसभं हृतः ।
एष राजेव दुष्मन्तः सारङ्गेणातिरंहसा ॥”)

**हारीतः**, पुं, पक्षिभेदः । (अस्य लक्षणं गुणाश्च ।
“हारीतो रक्तपित्तः स्याद्धरितोऽपि स कथ्यते ।”
हारीतो हारील इति लोके ।
“हारीतो रूक्ष उष्णश्च रक्तपित्तकफापहः ।
स्वेदस्वरकरः प्रोक्तः ईषद्वातकरश्च सः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥
आयुर्व्वेद कर्त्तरि च । यथा, --
“अग्निवेशश्च भेलश्च जतूकर्णः पराशरः ।
हारीतः क्षारपाणिश्च जगृहुस्तन्मुर्नेवचः ॥”
इति चरके सूत्रस्थाने प्रथमेऽध्याये ॥)
मुनिभेदः । स च धर्म्मशास्त्रकर्त्ता । (यथा,
याज्ञवल्क्यः । १ । ४ ।
“मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः।
यमापस्तम्बसम्बर्त्ताःकात्यायनबहस्पती ॥
पराशरव्यासशङ्खलिखितादक्षगौतमौ ।
शातातपो वशिष्ठश्च धर्म्मशास्त्रप्रयोजकाः ॥”
अयञ्च पौराणिक आसीत् । यथा, भागवते ।
१२ । ७ । ५ ।
“त्रय्यारुणिः कश्यपश्च सावर्णिरकृतव्रणः ।
वैशम्पायनहारीतौ षड् वै पौराणिका इमे ॥”)
कैतवः । इति मेदिनी ॥

**हारीतकः**, पुं, (हारीत एव । स्वार्थे कन् ।)
हारीतपक्षी । हारिल इति हरिताल इति च
भाषा । तस्य मांसगुणाः । स्वादुत्वम् । कफ-
पित्तास्रदोषनाशित्वञ्च । इति राजनिर्घण्टः ॥

**हार्द्दं**, क्ली, (हृदयस्य भावः कर्म्म वा । हृदय +
“हायनान्तयुवादिभ्योऽण् ।” ५ । १ । १३० ।
इत्यण् । “हृदयस्य हृल्लेखयदणलासेषु ।” ६ ।
३ । ५० । इति हृदादेशः ।) प्रेम । स्नेहः ।
इत्यमरः । १ । ७ । २७ ॥ (यथा, महाभारते ।
१३ । ७१ । ५२ ।

“इयञ्च तेऽन्या पुरतो विडम्बना
यदूढया वारणराजहार्य्यया ।
विलोक्य वृद्धोक्षमधिष्ठितं त्वया
महाजनः स्मेरमुखो भविष्यति ॥”)
हरणीयाङ्कः । तत्पर्य्यायः । भाज्यः २ । इति
लीलावती ॥

**हालः**, पुं, (हलेन क्रीडतीति । अण् । यद्वा,
हलतीति । हल + “ज्वलितिकसन्तेभ्यो णः ।”
३ । १ । १४० । इति णः ।) बलरामः । इति
त्रिकाण्डशेषः ॥ शालिवाहनराजः । इति हेम-
चन्द्रः ॥ हलः । इति मेदिनी ॥

**हालकः**, पुं, पोतहरितवर्णाश्वः । यथा, --
“हरितः पीतहरितच्छायः स एव हालकः ।”
इति हेमचन्द्रः ॥

**हालहलं**, क्ली, विषभेदः । इति शब्दरत्नावली ॥

**हालहालं**, क्ली, विषभेदः । इति शब्दरत्नावली ॥

**हाला**, स्त्री, (हल्यते कृष्यते इव चित्तमनयेति ।
हल + घञ् । टाप् ।) मद्यम् । इत्यमरः ।
२ । १० । ३९ ॥ (पर्य्यायो यथा, --
“मद्यन्तु सीधुमैरेयमिरा च मदिरा सुरा ।
कादम्बरी वारुणी च हालापि बलवल्लभा ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भागे ॥)
तालादिनिर्यासमद्यम् । इति राजनिर्घण्टः ॥
(यथा, माघे १० । २१ ।
“योषिदित्यभिललाष न हालां
दुस्त्यजः खलु सुखादपि मानः ॥”)

**हालाहः**, पुं, चित्रवर्णघोटकः । इति केचित् ॥

**हालाहलं**, क्ली, पुं (हालामपि हलतीति ।

पौत्रस्यापत्यं पुमानिति । हरित + अण् । हरित-
पुत्रः । यथा, हरिवंशे । १३ । २८ ।
“हरितो रोहितस्याथ चञ्चुर्हारित उच्यते ॥”)

**हारितकं**, क्ली, (हरितकमेव । स्वार्थे अण् ।)

शाकम् । इति शब्दरत्नावली ॥

**हारिद्रः**, पुं, कदम्बवृक्षः । (हरिद्रया रक्तम् ।

हरिद्रा + “हरिद्रामहारजनाभ्यामञ् वक्तव्यः ।”
४ । २ । २ । इत्यस्य वार्त्तिकोक्त्या अञ् ।)
हरिद्रारञ्जिते, त्रि । इति मेदिनी ॥ हरिद्रा-
वर्णः । इति हेमचन्द्रः ॥ (यथा, बृहत्संहिता-
याम् । ५ । ५८ ।
“दूर्व्वाकाण्डश्यामे हारिद्रे वापि निर्द्दिशेन्मर-
कम् ॥”)
विषभेदः । यथा, --
“हरिद्रातुख्यमूलो यो हारिद्रः स उदाहृतः ।”
इति भावप्रकाशः ॥

**हारी**, स्त्री, मुक्ता । यथा, --

“मुक्ता मुक्ताफलं शुक्तिबीजं हारी च मौक्ति-
कम् ॥”)
इति शब्दरत्नावली ॥

**हारी**, [न्] त्रि, (हारोऽस्त्यस्येति । इनिः ।)

हारविशिष्टः । यथा, --
“केयूरवान् कनककुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ।”
इति नारायणध्यानम् ।
(हरतीति । हृ + णिनिः ।) हरणकर्त्ता ॥
यथा, महाभारते । ३ । २ । ६५ ।
“गावो लोकांस्तारयन्ति क्षरन्त्यो
गावश्चान्नं संजनयन्ति लोके ।
यस्तज्जानन् न गवां हार्द्दमेति
स वै गन्ता निरयं पापचेताः ॥”
अभिप्रायः । यथा, भागवते । १ । ७ । ५५ ।
“अर्ज्जुनः सहसाज्ञाय हरेर्हार्द्दमथासिना ।
मणिं जहार मूर्द्धन्यं द्विजस्य सह मूर्द्धजम् ॥”

**हार्द्दी**, [न्] त्रि, (हार्द्दमस्यास्तीति । इनिः ।)

स्नेहयुक्तः । यथा, --
“अयञ्च निकृतः पुत्रैर्द्दारैर्भृत्यैस्तथोज्झितः ।
स्वजनेन च सन्त्यक्तस्तेषु हार्द्दी तथाप्यति ॥”
इति देवीमाहात्म्यम् ॥

**हार्य्यः**, पुं, (ह्रियते इति । हृ + “ऋहलोर्ण्यत् ।”

३ । १ । १२४ । इति ण्यत् ।) विभीतकवृक्षः ।
हर्त्तव्ये, त्रि । इति मेदिनी ॥ (यथा, कुमारे । ५ । ७० ।
हल + अच् ।) विषभेदः । तत्पर्य्यायः । हाल-
हलम् २ हाहलम् ३ हलाहलम् ४ हाल-
हलम् ५ हाहालम् ६ । इति शब्दरत्नावली ॥
तस्य स्वरूपं यथा, --
“गोस्तनाभफलो गुच्छस्तालपत्रच्छदस्तथा।
तेजसा यस्य दह्यन्ते समीपस्था द्रुमादयः ॥
असौ हालाहलो क्षेयः किष्किन्ध्यायां हिमा-
लये ॥
दक्षिणाब्धितटे देशे कोङ्कणेऽपि च जायते ॥”
इति भावप्रकाशः ॥
मद्यम् । इति राजनिर्घण्टः ॥ (यथा च वाभटे
उत्तरस्थाने ३५ अध्याये ।
“कालकूटेन्द्रवत्साख्यशृङ्गीहालहलादि
कम् ॥”)

**हालाहलः**, पुं, (हालाहलमस्त्यस्येति । अच् ।)

कीटविशेषः । तत्पर्य्यायः । अञ्जलिका २ कुटिल-
कीटकः ३ । इति राजनिर्घण्टः ॥

**हालाहलधरः**, पुं, (धरतीति । धृ + अच् । हाला-

हलस्य धरः ।) सर्पः । इति शब्दरत्नावली ॥

**हालाहला**, स्त्री, (हालाहलमस्त्यस्या इति ।

अच् । टाप् ।) क्षुद्रमूषिका । यथा, --
“हालाहलास्त्वञ्जलिका गिरिका बाल-
मूषिका ।”
इति जटाधरः ॥

**हालाहली**, स्त्री, मदिरा । इति राजनिर्घण्टः ॥

**हालिकः**, त्रि, हलेन खनति यः । (हलस्यायमिति
वा + हल + “हलसीरात् ठक् ।” ४ । ३ । १२४ ।
इति ठक् ।) हलस्य वोढा ।
हलसम्बन्धी ।
तत्पर्य्यायः । सैरिकः २ । इत्यमरः । २ । ९ । ६४ ॥
(यथा, वक्रोक्तिपञ्चाशिकायाम् । २ ।
“त्वं हालाहलभृत्करोषि मनसो मूर्च्छां ममा-
लिङ्गितो
हालां नैव बिभर्म्मि नैव च हलं मुग्धे ! कथं
हालिकः ।
सत्यं हालिकतैव ते समुचिता शक्तस्य गोवाहने
वक्रोक्त्येति जितो हिमाद्रिसुतया स्मेरो हरः
पातु वः ॥”)

**हालिनी**, स्त्री, स्थूलपल्ली । इति हेमचन्द्रः ॥

**हाली**, स्त्री, कनिष्ठा श्यालिका । इति हेमचन्द्रः ॥

**हालुः**, पुं, (हल्यतेऽनेनेति । हल + उण् । इत्यु-
णादिवृत्तौ उज्ज्वलः । १ । १ ।)
दन्तः । इति
त्रिकाण्डशेषः ॥

**हावः**, पुं, (ह्वे + घञ् ।) आह्वानम् । इति जटा-
धरः ॥ स्त्रीणां शृङ्गारभावजाः
क्रियाः । यथा,
“स्त्रीणां विलासविव्वोकविभ्रमा
ललितं तथा ।
हेला लीलेत्यमी हावाः क्रियाः शृङ्गार-
भावजाः ॥”
विकाशः । यथा, भट्टिः । २ । ३ ।
“विम्बागतैस्तीरवनैः समृद्धिं
निजां विलोक्यापहृतां पयोभिः ।
कूलानि सामर्षतयेव तेनुः
सरोजलक्ष्मीं स्थलपद्महासैः ॥”)

**हासाः**, [स्] पुं, (जहाति शीतकिरणमिति ।
हा + “वहिहाधाञ्भ्यश्छन्दसि ।” उणा० ४ ।
२२० । इति असुन् । तस्य सुट् च ।) चन्द्रः ।
वैदिकशब्दोऽयम् ॥

**हासिका**, स्त्री, हास्यम् । इति हेमचन्द्रः ॥

**हास्तिकं**, क्ली, (हस्तिनां समूहः । हस्तिन् +
“अचित्तहस्तिधेनोष्ठक् ।” ४ । २ । ४७ । इति
ठक् ।) हस्तिसमूहः । इत्यमरः । २ । ८ । ३६ ॥
(यथा, महाभारते । ९ । ४९ । १० ।
“दत्वा च दानं विविधं नानारत्नसमन्वितम् ।
सगोहास्तिकदासीकं साजावि गतवान् वनम् ॥”
हस्तिना चरतीति । “चरति ।” ४ । ४ । ८ ।
इति ठक् ।) हस्त्यारोहे, त्रि ॥

**हास्तिनं** क्ली, (हस्तिना नृपेण निर्वृत्तमिति ।
हस्तिन् + अण् ।) हस्तिनापुरम् । इति
त्रिकाण्डशेषः । (हस्ती प्रमाणमस्य । हस्तिन् +
“पुरुषहस्तिभ्यामण् च ।” ५ । २ । ३८ । इति
अण् ।) गजपरिमाणे हस्तहस्तिसम्बन्धिनि च
त्रि ॥

**हास्तिनपुरं**, क्ली, (हास्तिनं पुरम् ।) हस्तिना-
पुरम् । इति हेमचन्द्रः ॥ (यथा, महाभारते ।
९ । ३५ । ६ ।
“स गत्वा हास्तिनपरं धृतराष्ट्रं समेत्य च ।
उक्तवान् वचनं तथ्यं हितञ्चैव विशेषतः ॥”)

**हास्यं**, क्ली, (हस + ण्यत् ।) रसविशेषः । स च
कौतुकोद्भवम् । तत्पर्य्यायः । हासः २ हसः ३ ।
इत्यमरः । १ । १ । १९ ॥ हसनम् ४ घर्घरः ५
हासिका ६ । इति हेमचन्द्रः ॥ * ॥ अथ हासः ।
“विकृताकारवाग्वेशचेष्टादेः कुतुकाद् भवेत् ।
हास्या हासः स्थायिभावः श्वेतः प्रमथदैवतः ॥
अस्य नाटकमेलकप्रभृतिषु परिपोषो
द्रष्टव्यः ।
अत्र च ।
“यस्य हासः स चेत् क्वापि साक्षान्नैव
निबध्यते ।
तथाप्येष विभावादिसामर्थ्यादुपलभ्यते ॥
अभेदेन विभावादि सावारण्यात् प्रतीयते ।
सामाजिकैस्ततो हास्यरसोऽयमनुभूयते ॥”
एवमन्येष्वपि रसेषु द्रष्टव्यम् । इति
साहित्य-
दर्पणे ३ परिच्छेदः ॥ * ॥ तस्य
शुभाशुभलक्षणं
यथा, --
“अकम्पं हसितं श्रेष्ठं मीलिताक्षमघापहम् ।
असकृद्धसितं दुष्येत् तत् सोन्मादस्य
नैकधा ॥”
इति गारुडे । ६५ । ३५ अध्यायः ॥
(हासयोग्ये, त्रि । यथा रघुः । २ । ४३ ।
संरुद्धचेष्टस्य मृगेन्द्र ! कामं
हास्यं वचस्तद्यदहं विवक्षुः ॥”)

**हाहलं**, क्ली, हलाहलविषम् । इति शब्दरत्ना-
वली ॥

**हाहाः**, [स्] पुं, देवगन्धर्व्वविशेषः । इत्यमर-
टीकायां भरतः ॥

**हाहाः**, पुं, देवगन्धर्व्वविशेषः । यथा, --
“हाहा हूहूश्चैवमाद्या
गन्धर्व्वास्त्रिदिवौकसाम् ॥”
इत्यमरः । १ । १ । ५५ ॥
देवतानां हाहाहूहूविश्वावसुतुम्बुरुचित्ररथ-
प्रभृतयो गन्धर्व्वशब्दवाच्याः ।
उपास्योपासक-
लक्षणसम्बन्धः । अव्युत्पन्नोऽयं हाहाशब्दः ।
हाहति शब्दं जहतीति त्रासुसिति हाको
विच् इत्येवं व्युत्पन्ने तु शसाद्यचि
धोरालोपो-

इत्यमरः । १ । ७ । ३१ ॥
स्त्रीणां विलासादयः शृङ्गारभावजाः क्रियाः
हावशब्देनोच्यन्ते । क्रियाः चेष्टाः । शृङ्गार-
भावो रतिः तत्र जाताः शृङ्गारभावजाः ।
हूयन्ते रागिणोऽत्र हावः हुलि होमेऽदने
आधारे घञ् । हूयन्ते रागिनः कामाग्नावने-
नेति करणे वा घञ् । यदुक्तम् ।
"युवानोऽनेन हूयन्ते नारीभिर्म्मदनानले ।
अतो निरुच्यते हावस्ते विलासादयो मताः ॥"
इति ।
हा कष्टं वयति शोषयतीति वै शोषे इत्यस्मात्
डे वा । यदाह भरतः ।
"अलङ्काराश्च नाट्यज्ञैर्ज्ञेया भावरसाश्रयाः ।
यौवनेष्वधिकः स्त्रीणां विकारा वक्त्रगात्रजाः ॥"
तथा ।
"लीला विलासो विच्छित्तिर्विभ्रमः किल-
किञ्चितम् ।
मोट्टायितं कुट्टमितं विव्वोको ललितं तथा ।
विकृतञ्चेति मन्तव्या दश स्त्रीणां स्वभावजाः ॥"
इत्यमरभरतौ ॥ * ॥
तल्लक्षणं यथा, --
"ग्रीवारेचकसंयुक्तो भ्रूनेत्रादिविकाशकृत् ।
भावादीषत्प्रकाशो यः स हाव इति कथ्यते ॥"
इत्युज्ज्वलनीलमणिः ॥

**हासः**, पुं, (हस + घञ् ।) हास्यम् । इत्यमरः ।
विकृताकारवाक्चेष्टं यदालोक्य हसेज् जनः ।
तदत्रालम्बनं प्राहुः तच्चेष्टोद्दीपनं मतम् ॥
अनुभावोऽक्षिसङ्कोचवदनस्मेरतादिकः !
निद्रालस्यावहित्थाद्या अत्र स्युर्व्यभिचारिणः ॥
ज्येष्ठानां स्मितहसिते मध्यानां विहसिता-
वहसिते च ।
नीचानामपहसितं तथातिहसितञ्च षड्भेदाः ॥
ईषद्विकासि कथनं स्मितं स्यात् स्यन्दिताधरम् ।
किञ्चिल्लक्ष्यद्विजं तत्र हसितं कथितं बुधैः ॥
मधुरस्वरं विहसितं सांसशिरः कम्पमवहसितम् ।
अपहसितं सास्राक्षविक्षिप्ताङ्गं भवत्यतिह-
सितम् ॥"
यथा मम ।
"गुरोर्गिरः पञ्च दिनान्यधीत्य
वेदान्तशास्त्राणि दिनद्वयञ्च ।
अमी समाघ्राय च तर्कपादान्
समागताः कुक्कुटमिश्रपादाः ॥"
ऽच्यघावित्यालोपः सात् । असि प्रत्यये हाहः-
शब्दश्च सान्तोऽपि । गन्धर्व्वो हाहसि प्रोक्तो
गन्धर्व्वो गायनेऽपि च । इति साहसाङ्कः । गन्धर्व्व
पीतिहाहसोरिति वाचस्पतिः । हाहाशब्दोऽपि
दृश्यते । हंहो हाहा हूहू च द्वौ वृषणश्चैव
तुम्बुरुरिति व्याडिप्रभृतयः । इति भरतः ॥ * ॥
विस्मयशब्दे शोकशब्दे च व्य । यथा, --
"ततो हाहा कृतं सर्व्वं दैत्यसैन्यं ननाश तत् ॥
प्रहर्षञ्च परं जग्मुः सकला देवतागणाः ॥"
इति मार्कण्डेयपुराणे देवीमाहात्म्ये । ३ । ४० ॥

**हाहाकारः**, पुं, (हाहा इत्यव्यक्तशब्दस्य कारः करणम् ।) युद्धकलरवः । इति केचित् ॥ (यथा,
महाभारते । १ । १९ । १६ ।
"हाहाकारः समभवत्तत्र सहस्रशः ।
अन्योन्यं छिन्दतां शस्त्रैरादित्ये लोहितायति ॥"
शोकध्वनिः । यथा, --
"उद्वहो विकटो वायुः करालो वात्ययान्वितः ।
देशवृक्षलतानाञ्च हाहाकाराय कल्पते ॥"
इति ज्योतिषे वायुफलम् ॥

**हाहालं**, क्ली, विषम् । इति शब्दरत्नावली ॥

| १ । ७ । १९ ॥ (यथा, रघुः । १२ । ३६ ।<br>"संरम्भं मैथिलीहासः क्षणसौम्यां निनाय-<br>ताम् ।<br>निवातस्तिमितां वेलां चन्द्रोदय इवोदधेः ॥") | | |
|---|---|---|

**हि**, न वर्द्धने । गतौ इति कविकल्पद्रुमः । (भ्वा०-
परं०-सक०-अनिट् ।) गतिरिह अन्तर्भूत-
ण्यर्थत्वात् गतिप्रेरणम् । न, प्रहिणु
स्वसूनु-
मिति भट्टिः । वर्द्धने विरलप्रयोगः । इति
दुर्गा-
दासः ॥

**हि**, व्य, हेतुः । (यथा, शाकुन्तले । १ अङ्के ।
"अशंसयं क्षत्त्रपरिग्रहक्षमा
यदार्य्यमस्यामभिलाषि मे मनः ।
सतां हि सन्देहपदेषु वस्तुषु
प्रमाणमन्तःकरणप्रवृत्तयः ॥")
अवधारणम् । इत्यमरः । ३ । ४ । २५६ ;
३ । ४ । ५ ॥
पादपूरणम् । विशेषः । प्रश्नः । (यथा,
रामा-
यणे । २ । ६४ । ३० ।
"नाभिवादयसे माद्य न च मामभिभाषसे ।
किञ्च शेषे तु भूमौ त्वं वत्स ! किं कुपितो
ह्यसि ॥")
हेत्वपदेशः । सम्भ्रमः । असूया । इति
मेदिनी ॥
शोकः इति शब्दरत्नावली ॥

**हिंसकः**, पुं, (हिनस्ति तच्छीलः । हिंस + ण्वुल् ।)
हिंस्रपशुः । अथर्व्वविद्ब्राह्मणः । शत्रुः ।
इति
शब्दरत्नावली ॥

**हिंसकः**, त्रि, (हिंस + ण्वुल् ।) हिंसाकर्त्ता ।
तत्प्रर्य्यायः । घातुकः २ हिंस्रः ३ शरारुः
४
हन्ता ५ । इति शब्दरत्नावली ॥ स
चाष्टविधः ।
यथा, --
"भोक्तानुमन्ता संस्कर्त्ता
क्रयिविक्रयिहिंसकाः ।
उपहर्त्ता घातयिता हिंसकाश्चाष्टधाधमाः
॥"

सर्व्वाः सर्व्वाणि छन्दसि वेत्यनेन तत् पदं सिद्धम् ।
यदपि नानादर्शनटीकाकृद्भिर्व्वाचस्पतिमिश्रै-
स्तत्त्वकौमुद्यां अभिहितम् । न च मा हिंस्यात्
सर्व्वा भूतानि इति सामान्यशास्त्रं विशेषशास्त्रे-
णाग्नीसोमीयंपशुमालभेत् इत्यनेन बाध्येत इति
वाच्यंविरोधाभावात् विरोधे हि बलीवसा दुब्बलं
वाध्यते । न चास्ति विरोधः भिन्नविषयत्वात् ।
तथा हि मा हिंस्यादिति निषेधेन हिंसाया
अनर्थहेतुभावो ज्ञाप्यतेन पुनरक्रत्वर्थमपि ।
न चानर्थहेतुत्वक्रतूपकारकत्वयोः कश्चिदस्ति
विरोधः । हिंसा हि पुरुषस्य दोषमावक्ष्यति
क्रतोश्च उपकरिष्यतीत्यन्तेन । तदपि सांख्य-
नये । मीमांसकमते तु विरोध एव । तथा हि ।
गुरुनये न खलु सर्व्वभूतहिंसाभावविषयकं
कार्य्यं इति निषेधविध्यर्थस्य वाघं विना अग्नी-
सोमीयपश्वालम्भनविषयकंकार्य्यं इति भाव-
विध्यर्थ उपपद्यते । भट्टनये तु अङ्गे यथा
तथास्तु । न च मुख्यपशुयागे पुरुषार्थे पशु-
हिंसनस्यार्थसाधनत्वमनर्थसाधनत्वञ्चोपपद्यते
विरोधात् वस्तुतस्तु अङ्गेऽपि विरोधोऽस्त्येव
कुतो विधेरेष स्वभावो यः स्वविषयस्य साक्षात्
परम्परया वा पुरुषार्थसाधनत्वमवगमयति
अन्यथा अङ्गानां प्रधानोपकारकत्वमपि नाङ्गी-
क्रियते । अर्थसाधनत्वं बलवदनिष्टाननुबन्धीष्ट-
साधनत्वम् । अनर्थसाधनत्वं वलवदनिष्टासाधन-
त्वम् । न चानयोरेकत्र समावेश इति । अत-
एवोक्तं तस्मात् यज्ञे वधोऽवध इति । नन्वेवं
श्येनेनाभिचरन् यजेत इत्यत्र श्येनस्य शत्रुवध-
रूपेष्टसाधनत्वमवगतं अभिचारो मूलकर्म्म चेति
मनुना उपपातकगणनमध्ये पाठात् अनिष्ट-
साधनत्वमवगतं तदेतत् कथमुपपद्यतामिति
चेन्मैवम् । आततायिनमयान्तं हन्यादेवाविचा-
रयन् इत्येकवाक्यतया आततायिस्थले इष्टसाध-
नत्वम् । अनाततायिस्थले तूपपातकत्वेन बल-
वदनिष्टसाधनत्वम् । इत्यविरोध इति । गुरु-
चरणा अप्येवम् । इति तिथ्यादितत्त्वम् ॥ * ॥
ब्राह्मणस्य हिंसानिषेधो यथा, --
"हिंसा चैव न कर्त्तव्या वैधहिंसा तु राजसी ।
ब्राह्मणैः सा न कर्त्तव्या यतस्ते सात्विका

"हिंसालुकः खादुकः श्वा
योगितोऽलर्क
इष्यते ।"
इति हारावली ॥
हननशीले, त्रि ॥

**हिंसितः**, त्रि, (हिंस + क्तः ।) हिंसाप्राप्तः ।
यथा, --
"यस्तु भागवतान् दृष्ट्वा भूत्वा
भागवतः शुचिः ।
अभ्युत्थानं न कुर्व्वीत अहं तेनापि
हिंसितः ॥
यस्तु कन्यां पिता दत्त्वा न
प्रयच्छति तां पुनः ।
अष्टौ पितृगणास्तेन हिंसिता नात्र
संशयः ॥"
इति वाराहे
ब्राह्मणदाक्षासूत्रनामाध्यायः ॥

**हिंसीरः**, पुं, (हिनस्तीति । हिन्स + "हिंसेरी-
रनीरचौ ।" उणा० ५ । १८ । इति
ईरन् ।)
व्याघ्रः । खले, त्रि । इति
उणादिवृत्तिः ॥

**हिंस्रः**, त्रि, (हिनस्तीति । हिंस + "नमि-
कम्पीति ।" ३ । २ । १६७ । इति
रः ।)
हिंसाशीलः । तत्पर्य्यायः ।
शरारुः २ घातुकः
३ । इत्यमरः । ३ । १ । २८ ॥
हिंसकः ४
हन्ता ५ । इति शब्दरत्नावली ॥
शार्व्वरः ६ ।
इति जटाधरः ॥ * ॥ हिंस्राणां
हिंसने दोषा-
भावो यथा, --
"कृपा कार्य्या सतां शश्वदहिंस्रेषु
च जन्तुषु ।

इति काशीखण्डम् ॥ * ॥
साध्वीभार्य्यादिहिंसने दोषो यथा, --
"भार्य्यां प्रियसखीं यस्तु साध्वीं हिंसति निर्घृणः ।
न तेऽमृतं प्राप्नुवन्ति हिंसका दुष्टयोनिजाः ॥"
इति वाराहे ब्राह्मणदीक्षासूत्रनामाध्यायः॥ * ॥
शरणागतादिहिंसिकस्य अव्यवहार्य्यत्वं यथा, --
"शरणागतबालस्त्रीहिंसिकान् संवसेन्न तु ।
चीर्णव्रतानपि सदा कृतघ्नसहितानिमान् ॥"
इति प्रायश्चित्ततत्त्वधृतयाज्ञवल्क्यवचनम् ॥

**हिंसा**, स्त्री, (हिंसनमिति । हिंस + अः । टाप् ।)
घातः । इति मेदिनी ॥ चौर्य्यादिकर्म्म । यथा ।
हिंसा चौर्य्यादिकर्म्म च । इत्यमरः । ३ । ३ । २१८ ॥
चौरस्य कर्म्म चौर्य्यं आदिना बन्धनताडनवृत्ति-
नाशत्रासादि च चकाराद्वधोऽपि हिंसा । इति
तट्टीकायां भरतः ॥ * ॥ हिंसिते प्रतिहिंसायां
दोषाभावो यथा, --
"कृते प्रतिकृतं कुर्य्यात् हिंसिते प्रतिहिंसितम् ।
न तत्र दोषं पश्यामि दुष्टे दोषं समाचरेत् ॥"
इति गारुडे । ११५ । ४७ ॥
विष्णुभक्तानां ब्राह्मणादीनाञ्च हिंसाकर्त्तुरचि-
रान्नाशो यथा, --
"दुष्टा यदा मे भक्तानां ब्राह्मणानां गवामपि ।
क्रतूनां देवतानाञ्च हिंसां कुर्व्वन्ति निश्चितम् ।
तदाचिरन्ते नश्यन्ति यथा वह्नौ तृणानि च ॥"
मताः ॥"
इति श्राद्धविवेकटीकायां गोविन्दानन्दधृत-
बृहन्मनुवचनम् ॥

**हिंसाकर्म्म**, [न्] क्ली, (हिंसाप्रधानं कर्म्म ।)
अथर्व्ववेदोक्तमन्त्रयन्त्रादिनिष्पादितमारणोच्चा-
टनादि । तत्पर्य्यायः । अभिचारः २ । इत्य-
मरः । ३ । २ । १९ ॥

**हिंसारुः**, पुं, (हिनस्तीति । हिंस + आरुः ।)
व्याघ्रः । इति त्रिकाण्डशेषः ॥

**हिंसालुः**, त्रि, वधशीलः । घातुकः । हिसधातो-
रालुप्रत्ययेन निष्पन्नः ॥

**हिंसालुकः**, पुं, (हिंसालु + स्वार्थे संज्ञायां वा
कन् ।) हिंसाशीलकुक्क रः । यथा, --
हिंसायां न हि दोषश्च हिंस्राणाञ्च व्रजेश्वर ! ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ८५ अध्यायः ।

**हिंस्रः**, पुं, (हिनस्तीति । हिंस + रः ।) घारः ।
भीमसेनः । हरः । इत्युणादिकोषः ॥

**हिंस्रकः**, पुं, (हिंस्र एव । कन् ।) हिंस्रपशुः ।
इति शब्दरत्नावली ॥

**हिंस्रपशुः**, पुं, (हिंस्रः) पशुः ।) हिंसकजन्तुः ।
तत्पर्य्यायः । व्याडः २ हिंस्रकः ३ हिंसकः ४
शिविः ५ । इति शब्दरत्नावली ॥ श्वापदः ६ ।
इति त्रिकाण्डशेषः ॥

**हिंस्रा**, स्त्री, (हिनस्तीति । हिंस + रः । टाप् ।)
एलावली । काकादनी । मांसी । जटामांसी ।
इति मेदिनीकरहेमचन्द्रौ ॥ गवेडुका । गवे-
धुका । नाडी । शिरा । इति शब्दचन्द्रिका ॥

**हिक्क**, ञ कूजे । इति कविकल्पद्रुमः ॥ (भ्वा०-
उभ०-अक०-सेट् ।) कोपधः । ञ, हिक्कति
हिक्कते । कूजोऽव्यक्तशब्दः । हिक्वायामेवाय-
मिति भट्टमल्लः । हिक्वति लोकः । इति दुर्गा-
दासः ॥

**हिक्क**, क ङ हिंसे । इति कविकल्पद्रुमः ॥ (चुरा०-
आत्म०-सक०-सेट् ।) कोपधः । क ङ, हिक्क-
यते । इति दुर्गादासः ॥

इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । ६ ।
६१-६२ ॥
पशुहिसानिषेधो बलिशब्दे द्रष्टव्यः ॥ * ॥
अथ
वेधहिंसाविचारः । मा हिंस्यात् सर्व्वा
भूतानि
इत्यत्र मर्व्वशब्दस्य व्यापकार्थपरतया
एतद्विधि-
मनुल्लङ्घ्य । वायव्यं श्वेतमालमेत ।
इत्यादिविधे-
र्विपयाप्राप्तेरगत्या वैधातिरिक्तविषयत्वम् ।

**हिक्का**, स्त्री, (हिक्क कूजे + गुरोश्चेत्यः । टाप् ।
यद्वा, हिक्क्यतेऽनयेति । हिक्क +
करणे घञ् ।)
रोगोपसर्गविशेषः । हिँच्की इति
भाषा ।
इत्यमरः । ३ । ५ । ८ ॥ हेँकटी
इति ख्यातो
व्याधिविशेषः । हिक्वति
कूजत्यनया हिक्का ।
हिक्क ञ कूजे सेमक्तात् सरोरिति
अः । हिक्क-
यते हिनस्तीति वा । हिक्व क ङ
हिंसे पचा-
हित्यादन् । हिगिति कृत्वा कायति
शब्दायते

इति वा हिक्का कै शब्दे हनजनादिति डः ।
इति भरतः ॥ * ॥ अथ हिक्कारोगनिदानम् ।
धन्वन्तरिरुवाच ।
“हिक्कारोगनिदानञ्च वक्ष्ये सुश्रुत ! तच्छृणु ।
श्वासैकहेतुप्राग्रूपसंख्याप्रकृतिसंश्रया ।
हिक्का भक्तोद्भवा क्षुद्रा यमला महतीति च ।
गम्भीरा च मरुत्तत्र त्वरया भुक्तिसेवितैः ॥
रूक्षतीक्ष्णखराशान्तैरन्नपानैरपीडितः ।
करोति हिक्कामरुजां मन्दशब्दां क्षुधानुगाम् ॥
समं मत्स्यान्नपानेन या प्रायाति च सान्नजा ।
आयासात् पवनः क्रुद्धः क्षुद्रां हिक्कां प्रवर्त्तयेत् ॥
जत्रुमूलप्रविसृतामल्पवेगायुताञ्च सा ।
वृद्धिमायासतो याति भुक्तमात्रे च मार्द्दवम् ॥
चिरेण यमलैर्व्वेगैराहारेऽप्यनुवर्त्तते ।
परिणाममुखे वृद्धिं परिणामे च गच्छति ॥
कम्पयन्ती शिरो ग्रीवामाध्मातस्यातितृप्यतः ।
प्रलापच्छर्द्यतीसारनेत्रविप्लुतजृम्भिता ॥
यमलावेगिनी हिक्वा परिणामवती च सा ।
ध्वस्तभ्रूशङ्खयुग्मस्य श्रुतिविप्लुतचक्षुषः ॥
स्तम्भयन्ती तनुं वाचं स्मृतिं संज्ञाञ्च मुञ्चती ।
तुदन्ती मार्गमन्यस्य कुर्व्वती मर्म्मघट्टनम् ॥
पृष्ठतो नमनं सार्य्य महाहिक्का प्रवर्त्तते ।
महामूला महाशब्दा महावेगा महाबला ॥
पक्काशयाधो नाभेर्व्वा पूर्ब्बवत् सा प्रवर्त्तते ।
तद्रूपा सा महत् कुर्य्याज्जृम्भमङ्गप्रसारणम् ॥
गम्भीरेण निनादेन गम्भीरां तु सुसाधयेत् ।
आद्ये द्वे वर्ज्जयेदन्त्ये सर्व्वलिङ्गाञ्च वेगिनीम् ॥
सर्व्वस्य सञ्चितामस्य स्थविरस्य व्यवायिनः ।
व्याधिभिः क्षीणदेहस्य भक्तच्छेदकृशस्य च ॥
सामान्यलक्षणमाह ।
“मुहुर्म्मुहुर्व्वायुरुदेति सस्वनो
यकृत्प्लिहान्त्राणि मुखादिवाक्षिपन् ।
स दोषवानाशु हिनस्त्यसून् यत-
स्ततस्तु हिक्केत्यभिधीयते बुधैः ॥”
वायुरत्र सोदानः प्राणो बोद्धव्यः ।
उदेति ऊद्ध्र्व्वं
याति । सस्वनो हिगिति शब्दवान् । ऊद्ध्र्व्व-
गमनं विशिनष्टि यकृदित्यादि । प्लिहन्शब्दो-
ऽप्यस्ति दीर्घत्वविकल्पात् । मुखादिति ल्यब्लोपे
पञ्चमी । तेन यकृत्प्लीहान्त्राणि मुखमानीय
आक्षिपन् निःसारयन्निवेत्यर्थः । स वायुः ।
दोषवान् दोषोऽत्र कफः तद्वान् । वायुः कफे-
नानुगतः इति संप्राप्तेः । हिनस्तीति हिक्का
पृषोदरादित्वात् रूपसिद्धिः । हिगिति कायति
शब्दं करोतीति वा ॥ * ॥
पूर्ब्बरूपमाह ।
“कण्ठोरसोर्गुरुत्वञ्च वदनस्य कषायता ।
हिक्कानां पूर्ब्बरूपाणि कुक्षेराटोप एव च ॥”
वदनस्य कषायता वातात् । न तु कफात् माधुर्य्यं
व्याधिप्रभावात् ॥ * ॥ अन्नजाया लक्षणमाह ।
“पानान्नैरतिसंयुक्तैः सहसा पीडितोऽनिलः ।
हिक्कायत्यूद्ध्र्व्वगो भूत्वा तां विद्यादन्नजां भिषक् ॥”
साध्यत्वमाह ।
“अक्षीणश्चाप्यदीनश्च स्थिरधात्विन्द्रियश्च यः
तस्य साधयितुं शक्या यमिका हन्त्यतो-
ऽन्यथा ॥” * ॥ * ॥
अथ हिक्कायाश्चिकित्सा ।
“यत्किञ्चित् कफवातघ्नमुष्णं वातानुलोमनम् ।
भेषजं पानमन्नं वा हिक्वाश्वासेषु तद्धितम् ॥
हिक्काश्वामान्तरे पूर्ब्बं तैलाक्ते स्वेद उच्यते ।
ऊद्ध्र्व्वाधः शोधनं शक्ते दुर्ब्बले शमनं मतम् ॥
प्राणावरोधतर्ज्जनविस्मापनशीतवारिपरिषेकैः ।
चित्रैः कथाप्रयोगैः शमयेद्धिक्कां मनोऽभि-
घातैश्च ॥
हिक्कार्त्तस्य पयश्छागं हितं नागरसाधितम् ।
मधु सौवर्च्चलोपेतं मातुलुङ्गरसं पिबेत् ॥
मधुकं मघुसंयुक्तं पिप्पली शर्क्करान्विता ।
नागरं गुडसंयुक्तं हिक्काघ्नं लावणत्रयम् ॥
कृष्णामलकशुण्डीनां चूर्णं मधु सितायुतम् ।
मुहुर्मुहुः प्रयोक्तव्यं हिक्काश्वासेषु तद्धितम् ॥
चूर्णं कणागैरिकयोः सक्षौद्रं चावलेहयेत् ॥
प्रबालशङ्खत्रिफलाचूर्णं मधुघृतप्लुतम् ।
पिप्पली गैरिकञ्चेति लेहो हिक्कानिवारणः ॥
नैपाल्या गोविषाणाद्वा कुष्ठात् सर्ज्जरसस्य वा ।
धूपं कुशस्य वा साज्यं पिबेद्धिक्कोपशान्तये ॥”
नैपाली मनःशिला ।
“निर्धूमाङ्गारनिःक्षिप्तहिङ्गुमाषं बलोद्भवः ।
हिक्कापञ्चापि हन्त्याशु धूमः पीतो न संशयः ॥
हरेणूनां कणानाञ्च क्वाथो हिङ्गुसमन्वितः ।
हिक्काप्रशमनः श्रेष्ठो धन्वन्तरिवचो यथा ॥
चन्द्रशूरस्य वीजानि क्षिपेदष्टगुणे जले ।
यदा मृदूनि गृह्णीयात्ततो वाससि गालयेत् ॥
हिक्कातिवेगविकलस्तज्जलं पलमात्रया ।
पिबेत् पुनः पुनश्चापि हिक्कावश्यं प्रशाम्यति ॥”
चन्द्रशूररसः ॥ * ॥ इति हिक्वाधिकारः । इति
भावप्रकाशः ॥

**हिङ्कारः**, पुं, (हिं इत्यव्यक्तशब्दं करोतीति । कृ + अण् ।) व्याघ्रः । इति केचित् ॥ (हिं इत्यस्य कारः । करणम् । यथा, वाजसनेयसंहितायाम् । २२ । ७ ।

सर्व्वेऽपि रोगा नाशाय मत्वैवं शीघ्रकारिणः ।
हिक्काश्वासौ तथा तौ हि मृत्युकाले कृता-
लयौ ॥”
इति गारुडे १५५ अध्यायः ॥ * ॥
तदौषधं यथा, --
“कुलत्थः श्वासहिक्कानुत्
कफगुल्मानिलापहः ॥
त्रिदोषघ्नं मधु प्रोक्तं वातलञ्च प्रकीर्त्तितम् ।
हिक्काश्वासकृमिच्छर्दिमेहतृष्णाविषापहम्
॥”
इति च गारुडे । १७३ । ६ ; ५० अध्यायः
॥
“तथा हिक्कां हरेत् पीता सौवर्च्चलयुता
मुरा ॥”
इत्यपि गारुडे १९० अध्यायः ॥ * ॥
अन्यच्च ।
अथ हिक्काधिकारः ।
तत्र हिक्काया विप्रकृष्टनिदानमाह ।
“विदाहिगुरुविष्टम्भिरूक्षातिष्यन्दिभोजनैः ।
शीतपानाशनस्थानरजोधूमैस्तथानिलैः ॥
व्यायामकर्म्मभाराध्ववेगाघातापतर्पणैः ।
हिक्काश्वासश्च कासश्च नृणां समुपजायते
॥”
अपतर्पणमनशादि ॥ * ॥
सम्प्राप्तिमाह ।
“वायु कफेनानुगतः पञ्चहिक्कां करोति हि ।
अन्नजां यमलां क्षुद्रां गम्भीरां महतीं तथा ॥”

अनिलः प्राणो वायुः ॥ * ॥
यमलालिङ्गमाह ।
“चिरेण यमलैर्व्वेगैर्या हिक्का
संप्रवर्त्तते ।
कम्पयन्ती शिरोग्रीवं यमलां तां
विनिर्द्दिशेत् ॥”
क्षुद्रामाह ।
“विकृष्टकालैर्या वेगैर्म्मन्दैः
समभिवर्त्तते ।
क्षुद्रिका नाम सा हिक्का जत्रुमूलात्
प्रधा-
वति ॥”
विकृष्टकालैः चिरेण । जत्रु
कक्षोरसोः सन्धिः ॥
गम्भीरामाह ।
“नाभिप्रवृत्ता या हिक्का घोरा
गम्भीरनादिनी ।
अनेकोपद्रववती गम्भीरा नाम सा
स्मृता ॥”
अनेकोपद्रववती तृष्णाज्वरादियुक्ता
॥ * ॥
महतीमाह ।
“मर्म्माण्यापीडयन्तीव सततं या
प्रवर्त्तते ।
महाहिक्केति सा ज्ञेया
सर्व्वगात्रप्रकम्पनी ॥”
मर्म्माणि वस्तिहृदयशिरःप्रभृतीनि
॥ * ॥ असा-
ध्यत्वमाह ।
“आयम्यते हिक्कते यस्य देहो
दृष्टिश्चोर्द्ध्वं भ्राम्यते नित्यमेव ।
क्षीणोऽन्नद्विट् क्षौति यश्चातिमात्रं
तौ द्वौ चान्त्यौ वर्ज्जयेद्धिक्कमानौ
॥”
आयम्यते विस्तार्य्यत इव । तौ
द्वाविति आय-
म्यत इत्यादिना
मित्यमेवेत्यन्तेनैको हिक्कमानः ।
क्षीण
इत्यादिनातिमात्रमित्यन्तेनापरः ।
तौ

“हिङ्काराय स्वाहा हिङ्कृताय स्वाहेति ॥”)

**हिङ्गु**, क्ली, मूलविशेषनिर्यासः । स तु पारस्य-
खोरासानमूलतानादिदेशे भवति । हिं इति
भाषा । तत्पर्य्यायः । सहस्रवेधि २ जतुकम् ३
वाह्लीकम् ४ रामठम् ५ । इत्यमरः । २९ । ४०
॥
वाह्लिकम् ६ रामठम् ७ । इति भरतः ॥ जन्तु-
घ्नम् ८ । इति रत्नमाला ॥ पिण्याकम् ९ वाह्ली
१० सहस्रवेधी ११ गृहिणो १२ मधुरा १३
सूपधूपनम् १४ जतु १५ । इति शब्दरत्नावलो
॥
केशरम् १६ । इति जटाधरः ॥ उग्रगन्धम् १७
भूतारि १८ जन्तुनाशनम् १९ सूपाङ्गम् २०
रक्षोघ्नम् २१ उग्रवीर्य्यम् २२ अगूढगन्धम् २३
जरणम् २४ भेदनम् २५ दीप्तम् २६ । अस्य
गुणाः । हृद्यत्वम् । कटत्वम् । उष्णत्वम् ।

| | | |
|---|---|---|
| | द्वौ । अन्त्यौ च गम्भीरया महत्या च हिक्क<br>मानौ वर्ज्जयेत् । अपरञ्च ।<br>“अतिसञ्चितदोषस्य<br>भक्तच्छेदकृशस्य च ।<br>व्याधिभिः क्षीणदेहस्य<br>वृद्धस्यातिव्यवायिनः ॥<br>आयासाच्च समुत्पन्ना हिक्का<br>हन्त्याशु जीवि-<br>तम् ।<br>यमिका च<br>प्रलापार्त्तिमोहतृष्णाससन्विता ॥” | |

कृमिवातकफविबन्धाध्मानशूलगुल्मनाशित्वम्।
चक्षुष्यत्वञ्च । इति राजनिर्घण्टः ॥ अपि च ॥
"हिङ्गूष्णं पाचनं रुच्यं तीक्ष्णं वातवलासहृत् ।
रसे पाके च कटुकं स्निग्धञ्च वह्निदीपनम् ।
शूलगुल्मोदरानाहकृमिघ्नं पित्तवर्द्धनम् ॥"
इति भावप्रकाशः ॥ * ॥
अन्यच्च ।
"हिङ्गु तीक्ष्णं कटुरसं शूलाजीर्णविबन्धनुत् ।
लघूष्णं पाचनं स्निग्धं दीपनं कफवातजित् ॥"
इति राजवल्लभः ॥
वंशपत्री । इति भावप्रकाशः ॥ (काकादनी ।
तदर्थे पर्य्यायो यथा, --
"हिङ्गु काकादनी मता ।"
इति गारुडे २०८ अध्याये ॥
क्वचिद्रामठार्थे, पुं । तत्पर्य्यायो यथा, --
"रामठं हिङ्गुरुच्यते ॥"
इति च तत्रैव २०८ अध्याये ॥)

**हिङ्गुनाडिका**, स्त्री, (हिङ्गुनः नाडिरिव नाडि-
र्यस्याः । कप् ।) नाडीहिङ्ग । इति राज-
निर्घण्टः ॥

**हिङ्गुनिर्यासः**, पुं, (हिङ्गुन इव निर्य्यासोऽस्य ।)
निम्बवृक्षः । इत्यमरः । २ । ४ । ६२ ॥
(पर्य्यायो यथा, --
"निम्बः स्यात् पिचुमर्द्दश्च पिचुमदश्च तिक्तकः ।
अरिष्टः पारिभद्रश्च हिङ्गुनिर्यास इत्यपि ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
हिङ्गुरसः । इति मेदिनी ॥

**हिङ्गुपत्रः**, पुं, (हिङ्गुन इव पत्रमस्य ।) इङ्गुदी-
वृक्षः । इति राजनिर्घण्टः ॥ (विवरणमस्ये
ङ्गुदीशब्दे ज्ञातव्यम् ॥)

**हिङ्गुपत्री**, स्त्री, हिङ्गुनः पत्रम् । हिङ्गुपत्रमिव
पत्रमस्याः । इत्यमरटीकायां भरतः ॥ तत्-
पर्य्यायः । कारवी २ पृथुला ३ पृथुः ४
बाष्पीका ५ कवरी ६ पृथ्वी ७ त्वक्पत्री ८
कर्व्वरी ९ । इति जटाधरः ॥ पृथ्वीका १०
वाष्पिका ११ वाष्पका १२ वाष्पा १३ पत्री १४ ।
इति शब्दरत्नावली ॥ दीर्घिका १५ तज्वी १६
इति हेमचन्द्रः ॥ हिङ्गुलिः १०
रक्तपारदः ११ ।
इति जटाधरः ॥ वर्व्वरम् १२ सुरङ्गम्
१३
सुपरम् १४ रञ्जनम् १५ दरदम् १६
म्लेच्छम् १७
चित्राङ्गम् १८ चूर्णपारदम् १९
चर्म्मारिकम् २०
मणिरागम् २१ रसोद्भवम् २२ रञ्जकम्
२३
रसगर्भम् २४ । अस्य गुणाः ।
मधुरत्वम् ।
तिक्तत्वम् । उष्णत्वम् ।
वातकफत्रिदोषद्वन्द्वदोष-
ज्वरनाशित्वञ्च । इति राजनिर्घण्टः ॥
* ॥
अपि च ।
अथ हिङ्गुलस्य नामानि लक्षणानि
गुणाश्च ।
"हिङ्गुलं दरदं म्लेच्छं वित्रास
चूर्णपारदम् ।
दरदस्त्रिविधः प्रोक्तश्चर्म्मारः
शुक्रतुण्डकः ।
हंसपादस्तृतीयः
स्याद्गुणवानुत्तरोत्तरः ॥
चर्म्मारः शुक्लवर्णः स्यात् सपीतः
शुकतुण्डकः ।
जवाकुसुमसङ्काशो हंसपादो महोत्तमः
॥
तिक्तं कषायं कटु हिङ्गुलं स्या-
न्नेत्रामयघ्नं कफपित्तहारि ।
हृल्लासकुष्ठज्वरकामलांश्च
प्लीहामवातौ च गरं निहन्ति ॥
ऊर्द्ध्वपातनयुक्त्या तु
डमरुयन्त्रपाचितम् ।
हिङ्गुलं तस्य सूतं तु शुद्धमेव न
शोधयेत् ॥"
इति ॥ * ॥
तत्र हिङ्गुलस्य शोधनविधिः ।
अन्यच्च ।
"कन्या चोत्स्वेदसंजाता
सासृग्विलिलिहे-
ऽद्भुता ।
ततस्तामाह बालार्कप्रभां
भैरवमूर्त्तिमान् ॥
शङ्करो वरदो लोकश्रेयार्थाय वचो
महत् ।
त्वां पूजयिष्यन्ति सुरा ऋषयः
पितरस्तथा ॥
यक्षविद्याधराश्चैव मानवाश्च
शुभङ्करि ! ।
त्वां स्तोष्यन्ति सदा देवि
बलिपुष्पात्करैः करैः ॥
चर्च्चिकेति शुभं नाम
यस्माद्रुधिरचर्च्चिता ॥
इत्येवमुक्ता वरदेन चर्च्चिका
भूतानुयाता हरिचर्म्मवासिनी ।
महीं समन्ताद्विचचार सुन्दरी
स्थलं गता हैङ्गुलमाद्यमुत्तमम् ॥"
इति वामनपुराणे ६७ अध्यायः ॥

**हिङ्गुलिः**, पुं, (हिङ्गु इव वर्णं लातीति । ला +
किः ।) हिङ्गुलः । इति जटाधरः ॥

**हिङ्गुलिका**, स्त्री, (हिङ्गुल इव वर्णोऽस्या अस्तीति ।
हिङ्गुल + ठन् ।) कण्टकारी । इति
शब्द-
चन्द्रिका ॥ (कण्टकारीशब्देऽस्या
विषयो
ज्ञातव्यः ॥)

**हिङ्गुली**, स्त्री, वार्त्ताकी । इत्यमरः । २ । ४ । ११४ ॥
वृहती । इति भावप्रकाशः ॥

**हिङ्गुलुः**, पुं, क्ली, हिङ्गुलः । इत्यमरः । ३ । ५ । २० ॥
(पर्य्यायोऽस्य यथा, --
"हिङ्गुले हिङ्गुलुर्याति दरदः
शुकतुण्डकः ।

दारुपत्री १७ विल्वी १८ वाष्पी १९ । अस्या गुणाः । कटुत्वम् । तीक्ष्णत्वम् । तिक्तत्वम् । उष्णत्वम् । कफवातामकृमिहरत्वम् । रुच्यत्वम् पथ्यत्वम् । दीपनत्वम् । पाचनत्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
"हिङ्गुपत्री भवेद्रुच्या तीक्ष्णोष्णा पाचनी कटुः ।
हृद्वस्तिरुग्विबन्धार्शःश्लेष्मगुल्मानिलापहा ॥"
इति भावप्रकाशः ॥

**हिङ्गुपर्णी**, स्त्री, (हिङ्गुन इव पर्णमस्याः । ङीष् ।)

वंशपत्री । इति रत्नमाला ॥

**हिङ्गुलः**, पुं, क्ली, (हिङ्गु तद्वर्णं लातीति । ला +

कः ।) रागद्रष्यविशेषः । तत्पर्य्यायः । हिङ्गुलुः २ । इत्यमरभरतौ । ३ । ५ । २० ॥ हिङ्गुलम् ३ रक्तम् ४ मर्क्कटशीर्षम् ५ दरदः ६ रसः ७ । इति रत्नमाला ॥ हंसपादम् ८ कुरुविन्दः ९ ।

"मेषीक्षीरेण दरदमम्लवर्गैश्च भावितम्
।
सप्तवारान् प्रयत्नेन शुद्धिमायाति
निश्चितम् ॥"
एवं शोधितस्य हिङ्गुलस्य गुणाः ।
"तिक्तं कषायं कटु हिङ्गुलं स्या-
न्नेत्रामयघ्नं कफपित्तहारि ।
हृल्लासकुष्ठज्वरकामलांश्च
प्लीहामवातौ च परं निहन्ति ॥" इति
॥ * ॥
(पर्य्यायः शोधनप्रकारान्तरञ्च यथा, --
"हिङ्गले हिङ्गुलुर्याति दरदः
शुकतुण्डकः ।
रसगन्धकसम्भूतो हिङ्गुलो दैत्यरक्तकः
॥
अम्लवर्णद्रवैः पिष्ट्वा दरदो माहिषेण च
।
दुग्धेन सप्तधा पिष्टः शुष्कीभूतो
विशुध्यति ॥"
तथाच प्रकारान्तरम् ।
"आर्द्रकैर्ल्लकुचद्रावैः सप्तधा भावितो
यदि ।
हिङ्गुलः शुद्धतां याति निर्द्दोषो जायते
खलु ॥
विम्ब्याभं हिङ्गुलं दिव्यं
रसगन्धकसम्भवम् ॥
मेहकुष्ठहरं रुच्यं बल्यं मेधाग्निवर्द्धनम्
॥"
इति हिङ्गुलशुद्धिः ॥ * ॥
इति वैद्यकरसेन्द्रसारसंग्रहे
जारणमरणाधि-
कारे ।) अथ हिङ्गुलाद्रसाकर्षणाविधिः
।
"निम्बरसैर्न्निम्बपत्ररसैर्वा याममात्रकम्
।
घृष्ट्वा दरदमूर्द्ध्वं तु पातयेत् सूतयुक्तिवत्
॥
तत्रोद्र्ध्वपिठरीलग्नं गृह्णीयाद्रसमुत्तमम्
।
शुद्धमेव हि तत् सूतं सर्व्वकर्म्मसु
योजयेत् ॥"
रसगन्धकसम्भूतो हिङ्गुलो
दैत्यरक्तकः ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे
जारणमारणाधि-
कारे ॥)

**हिङ्गुशिराटिका**, स्त्री, (हिङ्गुल इव शिरां अट-

तीति । अट् + ण्वुल् । टापि अत इत्वम् ।)
वंशपत्री । इति रत्नमाला ॥

**हिङ्गूलं** क्ली, मधुमूलम् । इति शब्दचन्द्रिका ॥

आलु इति ख्यातम् ॥

**हिज्जः**, पुं, हिज्जलवृक्षः । इति शब्दचन्द्रिका ॥

**हिज्जलः**, पुं, (हिज्ज इति नाम लातीति ।

ला + कः ।) वृक्षविशेषः । हिजल
इति वङ्ग-
भाषा । इजर इति हिन्दी भाषा ।
तत्पर्य्यायः ।
निचुलः २ इज्जलः ३ । इति
हेमचन्द्रः ॥
पिचुलः ४ नदीकान्तः ५ अम्बुजः
६ । इति
जटाधरः ॥ धनदः ७ कान्तः ८
जलजः ९
दीर्घपत्रकः १० नदीलः ११ रक्तः
१२
कार्म्मुकः १३ । अस्य गुणाः ।
कटुत्वम् ।
उष्णत्वम् । पवित्रत्वम् ।
भूतवातामयनानाग्रह-
चारादिदोषनाशित्वञ्च । इति
राजनिर्घण्टः ॥
अपि च ।
"इज्जलो हिज्जलश्चापि
निचुलश्चाम्बुजस्तथा ।
जलवेतसवद्वेद्यो हिज्जलोऽयं
विषापहः ॥"
इति भावप्रकाशः ॥

**हिञ्जीरः**, पुं, हस्तिपादबन्धः । यथा,

इति च भावप्रकाशः ॥

**हिङ्गुला**, स्त्री, देशविशेषः । यथा, --

"ब्रह्मरन्ध्रं हिङ्गुलायां भैरवो
भीमलोचनः ।
कोट्टरी सा महामाया त्रिगुणा या
दिगम्बरी ॥"
इति तन्त्रचूडामणौ पीठमाला ॥ * ॥

"बिन्दूजालं पुनः पद्मं शृङ्खलो
निगडोऽन्दूकः ।
हिञ्जीरश्च पादपाशो वारिस्तु
गजबन्धभूः ॥"
इति हेमचन्द्रः ॥

**हिडं**, इ ङ गतौ अनादरे । इति कविकल्पद्रुमः ॥
(भ्वा०-आत्म०-सक०-सेट् ।) इ, हिण्ड्यते ।
ङ, हिण्डते । इति दुर्गादासः ॥

**हिडिम्बः**, पुं, राक्षसविशेषः । स भीमसेनेन हतः ।
इति महाभारतम् ॥ (एतद्विवरणन्तु तत्रैव
आदिपर्व्वणि १५३ अध्यायादारभ्य द्रष्टव्यम् ॥)
हिडम्ब इति च पाठः ॥

**हिडिम्बजित्**, पुं, (हिडिम्बं जितवानिति । जि +
क्विप् ।) भीमसेनः । इति त्रिकाण्डशेषः ॥

**हिडिम्बनिसूदनः**, पुं, (हिडिम्बं निसूदयतीति ।
नि + सूद + णिच् + ल्युः ।) भीमसेनः । इति
भूरिप्रयोगः ॥

**हिडिम्बभित्**, [द्] पुं, (हिडिम्बं भिनत्तीति ।
भिद् + क्विप् ।) भामसेनः । इति भूरिप्रयोगः ॥

**हिडिम्बा**, स्त्री, हिडिम्बराक्षसभगिनी । यथा, --
"हृष्टो मानुषमांसस्य महाकायो महाबलः ।
आघ्राय मानुषं गन्धं भगिनीमिदमब्रवीत् ॥
उपपन्नश्चिरस्याद्य भक्ष्योऽयं मम सुप्रियः ।
स्नेहस्रवान् प्रस्रवति जिह्वा पर्य्येति मे मुखम् ॥
एवमुक्ता हिडिम्बा तु हिडिम्बेन तदा वने ।
भ्रातुर्व्वचनमाज्ञाय त्वरमाणेव राक्षसी ॥"

**हितं**, त्रि, (हि गतिप्रेरणे धा धारणे पुष्टौ वा +
क्तः ।) पथ्यम् । गतम् । धृतम् । इति मेदिनी ॥
इष्टसाधनम् । इति मुग्धबोधटीकायां दुर्गा-
दासः ॥ मङ्गलम् । यथा, --
"गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतो न यत् ।
सर्व्वसत्त्वहितार्थाय तत् पशोरिव चेष्टितम् ॥
अहितहितविचारशून्यबुद्धेः
श्रुतिसमयैर्बहुभिर्विवर्जितस्य ।
उदरभरणमात्रतुष्टबुद्धेः
पुरुष्लपशोः पशोश्च को विशेषः ॥"
इति गारुडे ११५ अध्यायः ॥
मित्रम् । यथा, --
"हितसमरिपुसंज्ञा ये निसर्गे निरुक्ता
अधिहितहितमध्यास्तेऽपि तत्कालमित्रैः ।"
इति ज्योतिस्तत्त्वम् ॥

**हितकः**, पुं, (हितमर्हतीति । हि + संज्ञायां
कन् ।) शिशुः । इति राजनिर्घण्टः ॥

**हितकारी**, [न्] त्रि, (हितं करोतीति । कृ +
णिनिः ।) मङ्गलकारकः । शुभकारकः ।
यथा, --
"लक्ष्मणेन च धर्म्मात्मन् ! भ्रात्रा तद्धितकारिणा ।
मातृभिर्भ्रातृसहितं पश्यामोऽद्य वयं नृप ! ॥"
इति श्रीरामायणे उत्तरकाण्डे १ सर्गः ॥

**हितप्रणीः**, पुं, (हितं प्रणयतीति । प्र + नी +
क्विप् ।) चारः । इति शब्दरत्नावली ॥

**हितवादी**, [न्] त्रि, हितकथनशीलः । सत्परा-
मर्शी । हितशब्दपूर्व्वकवदधातोर्णिन्प्रत्ययेन
निष्पन्नः ॥

**हिताबली**, स्त्री, (हितानां आवली यत्र ।)
औषधविशेषः । हियावली इति हिन्दी भाषा ।
तत्पर्य्यायः । हृद्गात्री २ कुष्ठघ्नः ३ अङ्गार-
कुष्ठकः ४ अङ्गारग्रन्थिः ५ ग्रन्थिः ६ ग्रन्थिलः
७ । अस्या गुणाः । सारकत्वम् । तिक्तत्वम् ।
प्लीहगुल्मोदरकृमिकुष्ठगदात्युग्रखर्ज्जुकण्डूतिना-
शित्वञ्च । इति राजनिर्घण्टः ॥

**हितैषी**, [न्] त्रि, (हितमिच्छतीति । इष +

"सिद्धिः साध्ये सतामस्तु प्रसादात्तस्य धूर्जटेः ।
जाह्नवीफेनरेखेव यन्मूद्र्ध्नि शशिनः कला ॥
श्रुतो हितोपदेशोऽयं पाटवं संस्कृतोक्तिषु ।
वाचां सर्व्वत्र वैचित्र्यं नीतिविद्यां ददाति च ॥"
इति हितोपदेशप्रथमश्लोकद्वयम् ॥

**हिन्तालः**, पुं, वृक्षविशेषः । हेँताल इति भाषा ।
तस्य फलं उद्वेगम् । इत्यमरः । २ । ४ । १६९ ॥
तत्पर्य्यायः । पूगरोटः २ । तत्फलम् किरिटि ।
इति त्रिकाण्डशेषः ॥ * ॥ तस्य पर्य्यायान्तरं
गुणाश्च ।
"हिन्तालः स्थूलतालश्च बन्धपत्रो बृहद्दलः ।
स्थिरपत्रो द्विधालेख्यः शिरापत्रोऽस्थिराङ्घ्रिकः ॥
गर्भस्रावी नीलतालो भीषणो बहुकण्टकः ।
अम्लसारो बृहत्तालः स्याच्चतुर्द्दशधाभिधः ॥
हिन्तालो मधुराम्लश्च कफकृत् पित्तदाहनुत् ।
श्रमतृष्णापहारी च शिशिरो वातदोषकृत् ॥"
इति राजनिर्घण्टः ॥
(व्यवहारोऽस्य यथा, --
"गुडूचीबालहिन्तालवानरीनीलझिण्टिकाः ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे कुष्ठाधिकारे
माणिक्यरसे ॥) स तु तृणराजविशेषः । यथा,
क्रियाकौमुद्यां वशिष्ठः ।
"गुवाकतालहिन्तालास्तथाताडी च केतकी ।
खर्ज्जूरनारिकेलौ च सप्तैते तृणराजकाः ॥

इति महाभारते आदिपर्व्वणि १५३ अध्यायः ॥
तद्‌गर्भे भीमसेनौरसेन घटोत्कचो जातः । यथा,
“प्रजज्ञे राक्षसी पुत्त्र भीमसेनान्महाबलम् ।
विरूपाक्षं महावक्त्रं शङ्कुकर्णं विभीषणम् ॥
प्रणम्य विकचः पादावगृह्णात् स पितुस्तदा ।
मातुश्च परमेष्वासस्तौ च नामास्य चक्रतुः ॥
घटो हास्वोत्कच इति माता तं प्रत्यभाषत ।
अब्रवीत्तेन नामास्य घटोत्कच इति स्म ह ॥”
इति महाभारते आदिपर्व्वणि १५६ अः ॥

**हिडिम्बापतिः**, पुं, (हिडिम्बायाः पतिः ।) हनू-

मान् । इति शब्दरत्नावली ॥

**हिडिम्बारमणः**, पुं, (हिडिम्बाया रमणः ।) हनू-

मान् । इति त्रिकाण्डशेषः ॥

**हिण्डनं**, क्ली, (हिण्ड + ल्युट् ।) भ्रमणम् । रतम् ।

इति मेदिनी ॥ लेखनम् इति विश्वः ॥

**हिण्डिकः**, पुं, लग्नाचार्य्यः । इति हारावली ॥

**हिण्डिरः**, पुं, हिण्डीरः । इति शब्दरत्नावली ॥

**हिण्डी**, स्त्री, दुर्गा । इति त्रिकाण्डशेषः ॥

**हिण्डीप्रियतमः**, पुं, (हिण्ड्याः दुर्गायाः प्रिय-

तमः ।) शिवः । इति शब्दरत्नावली ॥

**हिण्डीरः**, पुं, (हिण्डते इतस्ततो गच्छतीति ।

हिण्ड + ईरन् । इत्युणादिवृत्तौ उज्ज्वलदत्तः ।

णिनिः ।) हितेच्छाकारी । यथा, बृहद्राज-
मार्त्तण्डे ।
“यात्राविवाहब्रतबन्धवेश्म-
प्रासादचूडाकरणं हितैषी ।
नष्टे भृगौ नोपदिशेन्नराणां
देवप्रतिष्ठामपि कर्णवेधम् ॥”
इति मलमासतत्त्वम् ॥

**हितोक्तिः**, स्त्री, (हितस्य उक्तिः ।) पथ्यवच-

नम् । इति धनञ्जयः ॥

**हितोपदेशः**, पुं, (हितानामुपदेशः ।) सत्परा-

मर्शदानम् । यथा, महाभारते । १ । २ । १०१ ।
“हितोपदेशश्च पथि धर्म्मराजस्य धीमतः ।
विदुरेण कृतो यत्र हितार्थं म्लेच्छभाषया ॥”
हितानामुपदेशो यत्र ।) विष्णुशर्म्मकृतमित्र-
लाभसुहृद्भेदविग्रहसन्धिनामकथाचतुष्टयात्मक
नीतिशास्तम् । यथा, --

तृणराजशिरापत्रैर्यः कुर्य्याद्दन्तधावनम् ।
तावद्भवति चण्डालो यावद्गां नैव पश्यति ॥”
इत्याह्निकाचारतत्त्वम् ॥

**हिन्दुः**, पुं, (हीनं दूषयतीति । दुष + डुः ।

पृषोदरादित्वात् साधुः ।) जातिविशेषः । हिँदु
इति भाषा । यथा, --
“पश्चिमाम्नायमन्त्रास्तु प्रोक्ताः पारस्यभाषया ।
अष्टोत्तरशताशीतिर्य्येषां संसाधनात् कलौ ॥
पञ्च खानाः सप्त मौरा नव शाहा महाबलाः ।
हिन्दुधर्म्मप्रलोप्तारो जायन्ते चक्रवर्त्तिनः ॥
हीनञ्च दूषयत्येव हिन्दुरित्युच्यते प्रिये ! ॥
पूर्ब्बाम्नाये नवशतं षडशीतिः प्रकीर्त्तिताः ।
फिरङ्गभाषया मन्त्रास्तेषां संसाधनात् कलौ ॥
अधिपा मण्डलानाञ्च संग्रामेष्वपराजिताः ।
इंरेजा नव षट् पञ्च लण्ड्रजाश्चापि भाविनः ॥”
इति मेरुतन्त्रे ३३ प्रकाशः ॥

**हिन्दोलः**, पुं, (हिन्दोल + घञ् ।) श्रावणशुक्ल-

पक्षविहितभगवद्यात्राविशेषः । झुलनयात्रा
इति यस्य प्रसिद्धिः । षड्रागान्तर्गतराग-
विशेषः । हिँडोल इति हिन्दी भाषा । यथा,
“भैरवः कौशिकश्चैव हिन्दोलो दीपकस्तथा ।
श्रीरागो मेघरागश्च षडेते पुरुषाह्वयाः ॥”
अस्य स्त्रियः ।
“वेलावती रामकली देशाख्या पटमञ्जरी ।
ललिता सहिता एता हिन्दोलस्य वराङ्गनाः ॥”
अथ हिन्दोलध्यानम् ।
“नितम्बनीमन्दतरङ्गितासु

४ । ३० ।) समुद्रफेनः । इत्यमरः ।
२ । ९ ।
१०५ ॥ (यथा, साहित्यदर्पणे ।
१० । ६८३ ।
“एतद्विभाति चरमाचलचूडचूम्बि
हिण्डीरपिण्डरुचिशीतमरीचिविम्बम्
।
उज्ज्वालितस्य रजनीं मदनानलस्य
धूमं दधत्प्रकटलाच्छनकैतवेन ॥”)
वार्त्ताकुः । पुरुषः । इति मेदिनी ॥
रुचकम् ।
इत्युणादिकोषः ॥ (क्ली, दाडिमम् ।
इत्युज्ज्वल-
धृतहारावली । ४ । ३० ॥)

दोलासु खेलासुखमादधानः ।

खर्व्वः कपोलद्युतिकामयुक्तो
हिन्दोलरागः कथितो मुनीन्द्रैः ॥”
तत्पुत्त्रा यथा, सङ्गीतदर्पणे ।
“आभीरः शुभ्रधवलौ
चन्द्रकासविमोहकाः ।
चन्द्रकान्तः स्नेहवेदः
हिन्दोलात्मजकीर्त्तितः ॥”
तस्य गानसमयो यथा, --
“हिन्दोलः पञ्चमः सिन्धुर्ललितश्च वसन्तकः ।
भखारी भटीयारो च आद्ययामे प्रगीयते ॥”
इति बृहत्सङ्गीतरत्नाकरः ॥ * ॥
हनूमन्मते षड्रागाणां मध्ये द्वितीयरागः ।
ब्रह्मणः शरीरान्निर्गतः । केचिन्मते नाभितः ।
अस्य जातिः औडवः । अर्थात् ष ग म प नि
इति पञ्चस्वरमिलितः । अस्य गृहं षड्जस्वरः ।
वसन्तर्त्तौ दिवाप्रथमभागे गानसमयः । राग-
मालायामस्य रूपम् । अल्पवयःसुन्दरः पीत-
वर्णः उत्तमाङ्गः स्वर्णमयहिन्दोलारूढः सुस-
ज्जितसुन्दरीस्त्रोभिः गीतं गायन्तीभिः हिन्दो-
लाद्योलयन्तीभिश्च सह परमानन्देन हास्य-
कौतुककारी । अस्य पञ्च रागिण्यः । यथा ।
रामकरी १ देशाखी २ ललिता ३ विलावली ४
पटमञ्जरी ५ । अस्य पुत्त्रा अष्टौ यथा । चन्द्र-
विम्बः १ मङ्गलः २ शुभः ३ आनन्दः ४
विनोदः ५ प्रधनः ६ गौरः ७ विभासः ८
॥ * ॥
“अथवा मृदुवस्तु हिंमितुं
मृदुनैवारभते प्रजान्तकः ।
हिमसेकविपत्तिरत्र मे
नलिनी पूर्ब्बनिदर्शनं मता ॥”)
अस्य गुणः । कफवायुवर्द्धकत्वम् । इति राज-
वल्लभः ॥ चन्दनम् । इति मेदिना ॥
पद्मकाष्ठम् ।
रङ्गम् । मौक्तिकम् । इति राजनिर्घण्टः ॥
नवनीतम् । इति शब्दचन्द्रिका ॥ शीतम् । इति
हेमचन्द्रः ॥ (कर्पूरः । पर्य्यायो यथा, --
“पुंसि क्लीवे च कर्पूरः सिताभ्रो हिमबालुकः ।
घनसारश्चन्द्रसंज्ञः हिमनामापि स स्मृतः ॥”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**हिमः**, पुं, (हन + मक् हन्तेर्हि च ।) चन्दनवृक्षः ।
इति हेमचन्द्रः । चन्द्रः । इति शब्दचन्द्रिका ॥
कर्पूरः । इति राजनिर्घण्टः ॥ हेमन्तर्त्तुः ।
स तु अग्रहायणपौषमासात्मकः। यथा, --
“हिमशिशिरवसन्तग्रीष्मवर्षाशरत्सु
स्तनतपनवनाम्भोहर्म्यगोक्षीरपानैः ।
सुखमनुभव राजंस्तद्द्विषो यान्तु नाशं
दिवसकमलल्जाशर्व्वरीरेणुपङ्काः ॥”
इति ऋतुसंहारः ॥
हिमालयपर्व्वतः । इति हिमजादिशब्ददर्श-
नात् ॥

**हिमकः**, पुं, (हिमेन कायतीति । कै + क ।)
विकङ्कतवृक्षः । इति राजनिर्घण्टः ॥

**हिमकरः**, पुं, (हिमः शीतलः करः किरणो यस्य ।)
चन्द्रः । यथा, --
“दृशा द्राघीयस्या दरदरितनीलोत्पलरुचा
दवीयांसं दीनं स्नपय कृपया मामपि शिवे ! ।
अनेनायं धन्यो भवति न च ते हानिरियता
वने वा हर्म्म्ये वा समकरनिपातो हिमकरः ॥”
इत्यानन्दलहरी ॥
कर्पूरः । इति राजनिर्घण्टः ॥

**हिमकूटः**, पुं, (हिमस्य कूटो यत्र ।) शिशरर्त्तुः ।

**हिमजा**, स्त्री, (हिमात् हिमालयात् जायते
इति । जन + डः । टाप् ।) पार्व्वत्नी ।
शटी ।
इति मेदिनी ॥ क्षीरिणी । इति
राजनिर्घण्टः ॥

**हिमज्झटिः**, पुं, (हिमानां कुज्झटिः । पृषो-
दरादित्वात् साधुः ।) कुज्झटिः । इति हारा-
वली ॥ क्वचित् पुस्तके हिमझण्टिरिति
पाठः ॥

**हिमतैलं**, क्ली, (हिमजातं तैलमिति ।) कर्पूर-
तैलम् । इति राजनिर्घण्टः ॥

**हिमदुग्धा**, स्त्री, (हिमवत् शुभ्रं दुग्धमस्याः ।)
क्षीरिणी । इति राजनिर्घण्टः ॥

**हिमदुर्द्दिनं**, क्ली, (हिमेन दुर्द्दिनम् ।) हिम-
समूहपातेन दुःखदायकदिनम् ।
तत्पर्य्यायः ।
पत्रहिमम् २ । इति त्रिकाण्डशेषः

**हिमद्युतिः**, पुं, (हिमा द्युतिर्यस्य ।) चन्द्रः ।
इति शब्दमाला ॥ (यथा, माघे । ९ । १२ ।
“अविभाव्यतारकमदृष्टहिम-
द्युतिविम्बमस्तमितभानुनभः ॥”)

**हिमद्रुमः**, पुं, (हिमो द्रुमः ।) महानिम्बः ।
इति राजनिर्घण्टः ॥

**हिमधातुः**, पुं, (हिमो धातुरिव यत्र ।) हिमा-
लयपर्व्वतः । इति केचित् ॥

**हिमप्रस्थः**, पुं, (हिमप्रधानः प्रस्थो यत्र ।) हिमा-
लयः । इति हेमचन्द्रः ॥

**हिमवत्सुतः**, पुं, (हिमवतः सुतः ।) मैनाक-
पर्व्वतः । इति त्रिकाण्डशेषः ॥

**हिमवत्सुता**, स्त्री, (हिमवतः सुता ।) गङ्गा ।

भरतमते अस्य रागिण्यो यथा ।
रामकली १
मालावती २ आशावरी ३ देवारी ४ गुण-
कली ५ । तन्मते पुत्त्रा यथा । वसन्तः
१
मालवः २ मारुः ३ कुशलः ४
शखारवन्दः ५
लङ्कादाहनः ६ नागधुनः ७ धवलः ८ ।
एषां
भार्य्या यथा । लीलावती १ केरवी २
चयती ३
पूरवी ४ पारावती ५ तिरवणी ६ देवगिरी
७
सुरसती ८ । इति सङ्गीतशास्त्रम् ॥

**हिन्दोलकः**, पुं, (हिन्दोल एव । कन् ।) यान-

विशेषः । तत्पर्य्यायः । प्रेङ्खा २ दोला ३
। इति
जटाधरः ॥ दोलिका ४ हिन्दोला ५ ।
इति
हारावली ॥

**हिन्दोला**, स्त्री, (हिन्दोल + घञ् + टाप् ।)

दोलिका । हैँदला इति भाषा । इति
हारा-
वली ॥

**हिमं**, त्रि, (हन्ति उष्माणमिति । हन + "हने-

र्हि च ।" उणा० १ । १४६ । इति मक्
हि च ।)
शीतगुणविशिष्टः । शीतलवस्तु ।
तत्पर्य्यायः ।
सुषीमः २ शिशिरः ३ जडः ४ तुषारः ५
शीतलः ६ शीतः ७ । इत्यमरः । १ । ३
। १९ ॥
(यथा, सुश्रुते । ४ । २८ । "अपराह्णे
हिमाभि-
रद्भिः परिषिक्तगात्रः शालीनां
षष्टीकानाञ्च
पयसा शर्करामधुरेणौदनमश्नीयात् ॥")

**हिमं**, क्ली, (हन + मक् । हन्तेर्हि च ।) अकाश-

इति राजनिर्घण्टः ॥ (हिमस्य कूट इति ।
हिमालयशृङ्गे, पुं, क्ली ॥ यथा, भागवते । ५ ।
१७ । ९ । "तथैवालकनन्दा दक्षिणेन ब्रह्म-
सदनाद् बहूनि परिकूटान्यतिक्रम्य हेमकूट-
हिमकूटान्यतिरभसतरंह्सा लुण्ठतीति ॥")

**हिमगिरिः**, पुं, (हिमप्रधानो गिरिः ।) हिमा-

लयपर्व्वतः । यथा, --
"धनुः पौष्पं मौर्व्वी मधुकरमयी पञ्च विशिखा
वसन्तः सामन्तो मलयमरुदायोधनरथः ।
तथाप्येकः सर्व्वं हिमगिरिसुते ! कामपि कृपा-
मपाङ्गात्ते लब्ध्वा जगदिदमनङ्गो विजयते ॥"
इत्यानन्दलहरी ॥
(यथा च ।
"आग्नेया बिन्ध्यशैलाद्याः सौम्यो हिमगिरि-
मतः ॥"
इति पूर्ब्बखण्डे द्वितीयेऽध्याये शार्ङ्गधरेणोक्तम्
॥)

**हिमजः**, पुं, (हिमात् हिमालयात् जायते इति ।

जन + डः ।) मैनाकगिरिः । इति मेदिनी ॥

इति धनञ्जयः ॥ (यथा, महाभारते । ३ ।
१० । ९ । ८ ।
"ततः पपात गगनाद गङ्गा सा
हिमवत्सुता ॥")
उमा च ।

**हिमवान्**, [त्] पुं, (हिममस्यास्तीति । हिम +

मतुप् । मस्य वः ।) हिमालयपर्व्वतः ।
इत्य-
मरः । २ । ३ । ३ ॥ तत्कन्या गङ्गा ।
यथा, --
"मङ्गा हिमवतो जज्ञे सर्व्वलोकैकपावनी ।
स्वयोगाग्निबलाद्देवी लेभे पुत्त्रीं महेश्वरीम्
॥"
इति देवीपुराणे १२ अध्यायः ॥
हिमविशिष्टे, त्रि ॥

**हिमवालुकः**, पुं, (हिमस्य वालुका इव ।)

कर्पूरः । इति राजनिर्घण्टः ॥
(पर्य्यायोऽस्य-
यथा भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ।
"पुंसि क्लीवेच कर्पूरः सिताभ्रो
हिमवालुकः ।
घनसारश्चन्द्रसंज्ञः हिमनामापि सः
स्मृतः ॥")

**हिमवालुका**, स्त्री, (हिमस्य वालुकेव ।) कर्पूरः ।

इत्यमरः । २ । ६ । १३० ॥ (यथा, --
"प्रनीरनीरं हिमवालुका च
मित्रं नृणां स्यात् सति मूत्रकृच्छ्रे ॥"
इति वैद्यकपथ्यविधौ मूत्रकृच्छ्राधिकारे
॥)

**हिमशर्करा**, स्त्री, (हिमस्य शर्करेव ।) याव-

नाली । इति राजनिर्घण्टः ॥

**हिमशैलजा**, स्त्री, (हिमशैलात् जायते इति ।

जन + डः ।) दुर्गा । इति शब्दरत्नावली
॥
(हिमालयोद्भवे, त्रि । यथा, याज्ञवल्क्ये ।
२ । १११

| | | |
| --- | --- | --- |
| वाष्पः । तत्पर्य्यायः । अवश्यायः २<br>नीहारः ३<br>तुषारः ४ तुहिनम् ५ प्रालेयम् ६ महिमा ७ ।<br>इत्यमरः । १ । ३ । १८ ॥ इन्द्राग्निधूमः ८<br>खवाष्पः ९ रजनीजलम् १० । इति हारावली ॥<br>यथा, रघुः । ८ । ४५ । | | "एवमुक्त्रा विषं शार्ङ्गं भक्षयेत् हिमशैलजम् ॥") |

**हिमसंहतिः**, स्त्री, (हिमानां संहतिः ।) हिम-
समूहः । वरफ् इति पारस्यमाषा ।
तत्पर्य्यायः ।
हिमानी २ । इत्यमरः । १ । ३ । १८ ॥
मह-
द्धिमम् ३ । इति जटाधरः ॥

**हिमहासकः**, पुं, (हिममपि हसति शीलतत्वात् ।
हस + ण्वुल् । हिन्तालवृक्षः । इति शब्द-
रत्नावली ॥

**हिमा**, स्त्री, (हिम + अर्श आद्यच् । टाप् ।)
सूक्ष्मैला । रेणुका । भद्रमुस्ता ।
नागरमुस्ता ।
पृक्का । चणिका । इति राजनिर्घण्टः ॥

**हिमांशुः**, पुं, (हिमा अंशवो यस्य ।) चन्द्रः ।
इत्यमरः । १ । ३ । १३ ॥ (यथा, रघु ।
५ । १६ ।
"पर्य्यायपीतस्य सुरैर्हिमांशोः
कलाक्षयः श्लाघ्यतरो हि वृद्धेः ॥")
कर्पूरः । इति राजनिर्घण्टः ॥

**हिमांश्वभिख्यं**, क्ली, (हिमांशोरिव अभिख्या
शोभा यस्य ।) रौप्यम् । इति हेमचन्द्रः ॥

**हिमागमः**, पुं, (हिमस्य आगमो यत्र ।)
हेमन्तः । इति राजनिर्घण्टः ॥ (यथा,
महा-
भारते । ५ । ८३ । ७ ।
"कौमुदे मासि रेवत्यां शरदन्ते हिमागमे ।
स्फीतशस्यसुखे काले कल्यः सत्यवतां
वरः ॥")

**हिमाद्रिः**, पुं, (हिमप्रधानोऽद्रिः ।) हिमालय-
पर्व्वतः । इति भूरिप्रयोगः ॥ (यथा, रघुः
।
४ । ७९ ।
"परस्परेण विज्ञातस्तेषूपायनपाणिषु ।
राज्ञा हिमवतः सारो राज्ञः सारो हिमा-
द्रिणा ॥")

वृक्षः । इत्यमरे
वह्निसंज्ञकार्काह्वशब्दयोर्र्शे-
नात् ॥

**हिमालयः**, पुं, (हिमस्य आलय इव शुक्लत्वात् ।)
शुक्लखदिरः । इति शब्दचन्द्रिका ॥
(हिमा-
नामालयः ।) स्वनामख्यातपर्व्वतः ।
तत्पर्य्यायः ।
नगपतिः २ मेनाधवः ३ उमागुरुः ४ । इति
त्रिकाण्डशेषः ॥ हिमाद्रिः ५ नगाधिपः ६ ।
इति जटाधरः ॥ उदगद्रिः ७ अद्रिराट् ८
मेनकाप्राणेशः ९ हिमवान् १० हिमप्रस्थः
११
भवानीगुरुः १२ । इति हेमचन्द्रः ॥ (यथा,
कुमारे । १ । १ ।
"अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराजः ।
पूर्व्वापरौ तोयनिधी वगाह्य
स्थितः पृथिव्या इव मानदण्डः ॥")
स तु लङ्काया उत्तरे वर्त्तते । भारतवर्षस्य
सीमापर्व्वतोऽयम् । अस्य दीर्घे
दशसहस्रयोज-
नानि । प्रस्थे द्विसहस्रयोजनानि । यथा, --
"एवं दक्षिनेनेलावृतं निषधो हेमकूटो हिमा-
लयः इति प्रागायता यथा नीलादयः ।
अयुत-
योजनोत्सेधा हरिवर्षकिंपुरुषभारतानां
यथा-
संख्यम् ।" इति श्रीभागवते ५ स्कन्धे १६
अः ॥

**हिमालयसुता**, स्त्री, (हिमालयस्य सुता ।)
उमा । इति कविकल्पलता ॥

**हिमालया**, स्त्री, (हिमस्य शीतस्य आलयो
यत्र ।) भूम्यामली । इति राजनिर्घण्टः ॥

**हिमावती**, स्त्री, स्वर्णक्षीरी । इत्यमरः । २ । ४ ।
१३८ ॥ (पर्य्यायो यथा, --
"कटुपर्णी हैमवती हेमक्षीरी हिमावती ।

**हिमोत्पन्ना**, स्त्री, (हिमे हिमप्रधाने उत्पन्ना ।)
यावनाली । इति राजनिर्घण्टः ॥

**हिमोद्भवा**, स्त्री, (हिमे हेमन्ते उद्भवो यस्याः ।)
शटी । इति राजनिर्घण्टः ॥

**हिम्यः**, त्रि, हिमभवः । हिमशब्दात् यत्प्रत्ययेन
निष्पन्नः । इति सिद्धान्तकौमुदी । ५ । २ ।
१२० ॥

**हिरङ्गुः**, पुं, राहुः । इति केचित् ॥

**हिरणं**, क्ली, रेतः । स्वर्णम् । वराटकः । इति
मेदिनी ॥

**हिरण्मयं** क्ली, (हिरण्यस्य विकारः । हिरण्य +
मयट् । "दाण्डिनायनहास्तिनायनेति ।" ६
। ४ ।
१७४ । इति निपातितः ।)
भारतवर्षादिनव-
वर्षान्तर्गतवर्षविशेषः । इति त्रिकाण्डशेषः
॥
तद्विवरण यथा । उत्तरोत्तरेणेलावृतं नीलः
श्वेतः शृङ्गवान् इति त्रयो रम्यकहिरण्मय-
कुरूणां वर्षाणां मर्य्यादागिरयः प्रागायता
उभयतः क्षारोदावधयो द्विसहस्रयोजनपृथव
एकैकशः पूर्ब्बस्मात् पूर्ब्बस्मात्तदुत्तरोत्तरो
दशां-
शाधिकांशेन दैर्घ्य एव ह्रसन्ति । इति
श्रीभाग-
वते ५ स्कन्धे १६ अध्यायः ॥

**हिरण्मयः**, पुं, (हिरण्य + मयट् ।) ब्रह्मा ।
सुवर्णमये, त्रि । इति मेदिनी ॥ (यथा, भट्टिः
।
२ । ४७ ।
"हिरण्मयी शाललतेव जङ्गमा
च्युता दिवः स्थास्नुविराचिरप्रभा ॥")

**हिरण्यं**, क्ली, (हर्य्यति दीप्यते इति । हर्य्य गति-
कान्त्योः + "हर्य्यतेः कन्यन् हिर च ।"
उणा ०

**हिमाद्रिजा**, स्त्री, (हिमाद्रौ जायते इति । जन + डः ।) क्षीरिणी । इति राजनिर्घण्टः ॥ पार्व्वती च ॥ (यथा, वक्रोक्तिपञ्चाशिकायाम् । १ ।
"मैवं वक्ष्यसि किं वनं ननु जलं मूद्‌र्ध्ना मयै-
वोह्यते
वक्रोक्त्येति हिमाद्रिजामवचसं कुर्व्वन् हरः
पातु वः ॥")

**हिमाद्रितनया**, स्त्री, (हिमाद्रेस्तनया ।) दुर्गा । इति वक्ष्यमाणशब्ददर्शनात् ॥

**हिमाद्रितनयापतिः**, स्त्री, (हिमाद्रितनयाया दुर्गायाः पतिः) शिवः । इति कविकल्पलता ॥

**हिमानी**, स्त्री, (महद्धिममिति । "हिमारण्ययोर्महत्त्वे ।" ४ । १ । ४९ । इत्यस्य वार्त्तिकोक्त्या ङीष् आनुक् च ।) हिमसंहतिः । इत्यमरः । १३ । १८ ॥ (यथा, राजतरङ्गिण्याम् । १ । १८० ।
"हिमान्यां बौद्धवाधाय पतन्त्यां प्रतिवत्सरम् ।
शीते दार्व्वाभिमारादो षण्मासान् पार्थिवोऽवसत् ॥")
यावनालशर्करा । इति राजनिर्घण्टः ॥

**हिमाब्जं**, क्ली, (हिमे हेगन्ते जातं अब्जम् ।) उत्पलम् । इति राजनिर्घण्टः ॥

**हिमारातिः**, पुं, (हिमस्य अरातिः ।) अग्निः । मूर्य्यः । इति मेदिनी ॥ चित्रकवृक्षः । अर्क-
हेमाह्वा पीतदुग्धा च तन्मूलञ्चोकमुच्यते ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**हिमाह्वः**, पुं, (हिममपि आह्वयते स्पर्द्धते वर्णेनेति । ह्वे + कः ।) कर्पूरः । इति केचित् ॥ (वर्षविशेषः । यथा, मार्कण्डेये । ५३ । ४० ।
"हिमाह्वं दक्षिणं वर्षं तस्य नाम्ना महात्मनः ॥"

**हिमाह्वयः**, पुं, (हिममाह्वयते स्पर्द्धते वर्णेनेति । आ + ह्वे + अच् । हिमस्य आह्वा आह्वा यस्येति वा ।) कर्पूरः । इति त्रिकाण्डशेषः ॥
(वर्षविशेषः । यथा, मार्कण्डेये । ५३ । ३६ ।
"यानि किं पुरुषाख्यानि वर्ज्जयित्वा हिमह्वा
यम् ।
तेषां स्वभावतः सिद्धिः सुखप्राया ह्ययत्नतः ॥")

**हिमाश्रया**, स्त्री, (हिमस्य शीतलस्य आश्रयो यस्याः ।) स्वर्णजीवन्ती । इति राजनिर्घण्टः ॥

**हिमिका**, स्त्री, तृणोपरि पतितहिमम् । इति केचित् ॥

**हिमेलुः**, त्रि, (हिमं न सहते इति । हिम + "तन्न सहते इति हिमाच्चेलुः ।" ५ । २ । १२२ ।
इत्यस्य वार्त्तिकोक्त्या इलुः ।) हिमक्लेशितः । हिमार्त्तः । इति केचित् ॥

**हिमोत्तरा**, स्त्री, (हिमः उत्तरो यस्याः ।) कपिलद्राक्षा । इति राजनिर्घण्टः ॥

५ । ४४ । इति कन्यन् । हिरादेशश्च धातोः ।)
सुवर्णम् । (यथा, मनुः । २ । २४६ ।
"क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमासनम् ।
धान्यं शाकञ्च वासांसि गुरवे प्रीतिमावहेत् ॥")
तद्वैदिकपर्य्यायाः । हेम १ चन्द्रम् २ रुक्मम् ३
अयः ४ हिरण्यम् ५ पेशः ६ कृशनम् ७ लोहम् ८ कनकम् ९ काञ्चनम् १० भर्म्म ११
अमृतम् १२ मरुत् १३ दत्रम् १४ जातरूपम्
१५ । इति पञ्चदश हिरण्यनामानि । इति वेदनिर्घण्टौ १ अध्यायः ॥ धुस्तूरम् । इत्य-
मरः । २ । ९ । ९४ ॥ रेतः । द्रव्यम् । वराटः ।
अक्षयम् । मानभेदः । अकुप्यम् । इति मेदिनी ॥
रजतम् । धनम् । इति शब्दरत्नावली ॥ (पुं, गुग्गुलुविशेषः । तत्प्रकारो यथा, --
"महिषाक्षो महानीलः कुमुदः पद्म इत्यपि ।
हिरण्यः पञ्चमो ज्ञेयो गुग्गुलोः पञ्च जातयः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**हिरण्यकशिपुः**, पुं, दैत्यविशेषः । स तु कश्यपस्य दित्यां पत्न्यां जातः । तस्य सहोदरः हिरण्याक्षः । तस्य भार्य्या कयाधुः । तस्य पुत्राः
संह्रादः १ अनुह्रादः २ ह्रादः ३ प्रह्लादः ४ । कन्या सिंहिका । इति श्रीभागवतम् ॥ अपि च ।
"त्वया यौ निहतौ देव ! दानवौ मधुकैटभौ ।
अवतीर्णौ पुनर्दैत्यौ भूत्वा कश्यपनन्दनी ।
हिरण्यकशिपुश्चैव हिरण्याक्षो महासुरः ॥

सुदुर्जयोद्धतौ तौ तु पुनर्जातौ महाबलौ ।
पुलस्त्यस्य कुले देव ! राक्षसेन्द्रावरौ च तौ ॥
तयोलु पादविन्यासमसहन्ती जनार्दन ! ।
तवान्तिकमनुप्राप्ता दशास्यकुम्भकर्णयोः ॥”
इति वह्निपुराणे वैश्रवणवरप्रदाननामाध्यायः॥
तदुत्पत्त्यादि यथा, --
“दित्याः पुत्त्रद्वयं जज्ञे कश्यपादिति नः श्रुतम् ।
हिरण्याक्षश्च दुर्द्धर्षो हिरण्यकशिपुस्तथा॥
कश्यपस्याश्रमोऽप्यासीत्पुण्ये वै पुष्करे पुरा ।
ऋषिभिर्देवताभिश्च गन्धर्व्वैरुपशोभितः ॥
आसनान्युपकॢप्तानि काञ्चनानि तु पञ्च वै ।
ऋषीणामृत्विजां ते वै उपविष्टा यथाक्रमात् ॥
होतुस्तत्रासनं यत्तु हविस्तत्राथ जुह्वतः ।
अन्तर्व्वत्नी दितिश्चैव पत्नी च समुपागता ॥
दशवर्षसहस्राणि गर्भस्तस्यामवर्त्तत ।
स तु गर्भो विनिःसृत्य मातुर्वै उदरात्तदा ॥
निषसादासने गर्भः कश्यपस्यापि सन्निधौ ।
तं दृष्ट्वा मुनयस्तस्य नामाकुर्व्वन्त तद्धितम् ।
हिरण्यकशिपुस्तस्मात् कर्म्मणानेन स स्मृतः ।
हिरण्याक्षोऽनुजस्तस्य सिंहिका च तथानुजा ।

लोकेशावाहनं तद्वद्धोमकार्य्याधिवासनम्।
तुलापुरुषवत् कार्य्यं कुण्डमण्डपवेदिकम् ॥
स्वल्पेष्वेकाग्निवत् कुर्य्याद्गुरुरेकः समाहिताः ।
काञ्चनस्यातिशुद्धस्य धेनुं वत्सञ्च कारयेत् ॥
उत्तमा पलसाहस्रा तदर्द्धेन तु मध्यमा ।
कनोयसो तदर्द्धेन कामधेनुः प्रकीर्त्तिता ।
शक्तितस्त्रिपलादूर्द्ध्वं अशक्तोऽपीह कारयेत् ॥
वेद्यां कृष्णाजिन न्यस्य गुडपस्थसमन्वितम् ।
न्यसेदुपरि तां धेनुं महारत्नैरलङ्कताम् ॥
कुम्भाष्टकसमोपेतां नानाफलसमन्विताम्।
तथाष्टादशधान्यानि समन्तात् परिकल्पयेत् ॥
इक्षुदण्डाष्टक तद्वत् नासाफलविभूषितम्।
भाजनञ्चासनं तद्वत्ताम्रदोहनकं तथा ॥
कौषेयवस्त्रद्वयमंप्रयुक्तां दीपातपत्राभरणाभिरामाम्।
सचामरां कुण्डलिनीं सघण्टां मणित्रिकां चन्द्रकरौप्यपादाम् ॥
सरैश्च सर्व्वैः पुरतोऽभिजुष्टां हरिद्रया पुष्पफलैरनेकैः ।
अजाजिकुस्तुम्बुरुशर्कराभि-र्व्वितानकञ्चोपरि पञ्चवर्णम् ॥
स्नानं ततो मङ्गलवेदघोषैः प्रदक्षिणीकृत्य स पुष्पहस्तः ।
आवाहयेत् तां गुडधेनुमन्त्रै-र्द्विजाय दद्यादथ दर्भपाणिः ॥
त्वं सर्व्वदेवगणमन्दिरमङ्गभूता विश्वेश्वरत्रिपथगोदधिपर्व्वतानाम् ।
त्वद्दानशस्त्रशकलीकृतपातकौघः प्राप्तोऽस्मि निर्व्वृतिमतीव परां नमामि ॥
लोके यथेप्सितफलार्थविधायिनीं त्वा-मासाद्य को हि भवदुःखमुपैति मर्त्यः ।
संसारदुःखशमनाय यतस्व कामं त्वां कामधेनुमिति वेदविदो वदन्ति ॥
आमन्त्र्य शीलकलरूपगुणान्विताय विप्राय यः कनकधेनुमिमां प्रदद्यात् ।

इति देवीपुराणे देवीनिरुक्ते ४५ अध्यायः ॥ * ॥
षोडशमहादानान्तगतद्वितीयमहादानम्।
यथा,
मत्स्य उवाच ।
“अथातः संप्रवक्ष्यामि महादानमनुत्तमम्।
नाम्ना हिरण्यगर्भाख्यं महापातकनाशनम्॥
पुण्यां तिथिं समासाद्य तुलापुरुषदानवत्।
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम् ॥
कुर्य्यादुपाषितस्तद्वल्लोकेशावाहनं बुधः ।
पुण्याहवाचनं कृत्वा तद्वत् कृत्वा धिवासनम् ।
ब्राह्मणैरानयेत् कुण्डं तपनीयमयं शुभम् ॥
द्वासप्तत्यङ्गुलोच्छ्रायं हेमपङ्कजगर्भवत् ।
त्रिभागहीनं विस्तारमाज्यक्षीराभिपूरितम्॥
दशास्त्राणि सरत्नानि दात्रं सूची तथैव च ।
हेमनालं सपिटकं बहिरादित्यसंयुतम् ॥
तथैवावरणं नाभेरुपवीतञ्च काञ्चनम् ।
पार्श्वतः स्थापयेत्तद्वद्धेमदण्डं कमण्डलुम् ॥
पद्माकारं पिधानं स्यात् समन्तादङ्गुलाधिकम्
मुक्तावलीसमोपेतं पद्मरागदलान्वितम्॥
तिलद्रोणोपरिगतं वेदमध्ये ततोऽर्च्चयेत् ।
ततो मङ्गलशब्देन ब्रह्मघोषरवेण च ॥
सर्व्वोषध्युदकं स्नानं स्नापितो वेदपुङ्गवैः ।
शुक्लमाल्याम्बरधरः सर्व्वाभरणभूषितः ।
इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः ॥
नमो हिरण्यगर्भाय हिरण्यकवचाय च ।
सप्तलोकसुराध्यक्ष जगद्धात्रे नमो नमः ॥
भूर्लोकप्रमुखा लोकास्तव गर्भे व्यवस्थिताः ।
ब्रह्मादयस्तथा देवा नमस्ते विश्वधारिणे ॥
नमस्ते भुवनाधार ! नमस्ते भुतनाश्रय ! ।
नमो हिरण्यगर्भाय गर्भो यस्य पितामहः ॥
यतस्त्वमेव भूतात्मा भूते भूते व्यवस्थितः ।
तस्मान्मामुद्धराशेषदुःखसंसारसागरात् ॥
एवमामन्त्र्य तन्मध्यमाविश्याम्भ उदङ्मुखः ।
मुष्टिभ्यां परिसंगृह्य धर्म्मराजचतुर्मुखौ ।
जानुमध्ये शिरः कृत्वा तिष्ठेत श्वासपञ्चकम् ॥
गर्भाधानं पुंसवनं सीमन्तोन्नयनं तथा ।
कुर्य्युर्हिरण्यगर्भस्य ततस्ते द्विजपुङ्गवः ॥
गीतमङ्गलघोषेण गुरुरुत्थापयेत्ततः ।

राहोः सा जननी देवी विपचित्तेः परिग्रहः ।
हिरण्यकशिपुर्द्दैत्यश्चकार परमं तपः ।
ततो वर्षसहस्राणि निराहारो ह्यधःशिराः ॥
तं ब्रह्मा छन्दयामास दैत्यं तुष्टो वरेण तु ।
सर्व्वामरत्वं वव्रे स शस्त्रास्त्रैर्न दिवा निशि ॥
अहं सर्व्वं विनिर्जित्य सर्व्वदेवत्वमास्थितः ।
अणिमादिगुणैश्वर्य्यमेष मे दीयतां वरः ॥
तेनैवमुक्तो ब्रह्मा तु तस्मै दत्त्वा यथेप्सितम् ।
दत्त्वा चास्य सभां दिव्यां तत्रैवान्तरधीयत ॥
हिरण्यकशिपुर्द्दैत्यः श्लोकैर्गीतः पुरातनः ॥
राजा हिरण्यकशिपुर्द्दैत्यो यां यां निषेवते ।
तस्यां तस्यां नमश्चक्रुर्देवता ऋषिभिः सह ॥
एवं प्रभावो दैत्योऽभूत् हिरण्यकशिपुः पुरा ॥
स्वयमग्निश्च सूर्य्यश्च वायुरिन्द्रो जलं स्वयम् ।
भूत्वा चकार राज्यं स मन्वन्तरचतुर्द्दश ॥
तस्यासीत् नरसिंहस्तु गृत्युर्विष्णुः पुरा किल ।
नखैस्तेन विनिर्भिन्नो नार्द्रशुष्का नखाः
स्मृताः ॥
हिरण्याक्षसुताः पञ्च विक्रान्ताः सुमहाबलाः ।
हिरण्यकशिपोः पुत्त्राश्चत्वारः सुमहाबलाः ॥
प्रह्लादः पूर्ब्बजस्तेषामनुह्लादस्तथैव च ।
प्राप्नोति धाम स पुरन्दरदेहजुष्टं
कन्यागणैः परिवृतः पदमिन्दुमौलेः ॥”
इति मात्स्ये हिरण्यकामधेनुप्रदानिको नाम २५३ अध्यायः ॥

**हिरण्यकोषः**, पुं, (हिरण्यस्य कोष इव ।) कृता-कृतस्वर्णरूप्यम् । इति हेमचन्द्रः ॥

**हिरण्यगर्भः**, (हिरण्यं हेममयाण्डं गर्भ उत्-पत्तिस्थानमस्य ।) ब्रह्मा । इत्यमरः । १ । १ । १६ ॥
हिरण्यं गर्भ उत्पत्तिस्थानमस्य हिरण्यस्य गर्भो
भ्रूण इति वा हिरण्यगर्भः । एतस्याण्डं हिरण्य-
वर्णमभवत् । तथा च स्मृतिः ।
“हिरण्यवर्ण्यवर्णमभवत्तदण्डमुदकेशयम् ।
तत्र जज्ञे स्वयं ब्रह्मा स्वयम्भुरिति विश्रुतः ॥”
इति ।
उपचारात् हिरण्यवर्णमण्डं हिरण्यम् । इति भरतः ॥ अन्यच्च ।
“हिरण्यगर्भोऽभूद्वद्ध्या तेन बुद्धिर्म्मता असौ ।”
जातकर्म्मादिकाः कुर्य्यात् क्रियाः षोडश चापराः
सूच्यादिकञ्च गुरवे दत्त्वा मन्त्रमिमं जपेत् ॥
नमो हिरण्यगर्भाय विश्वगर्भाय वै नमः ।
चराचरस्य जगतो गृहभूताय वै नमः ॥
मात्राहं जनितः पूर्व्वं मर्त्यधर्म्मा सुरोत्तम ।
त्वद्गर्भसम्भवादेष दिव्यदेहो भवाम्यहम् ॥
चतुर्भिः कलसैर्भूयस्ततस्ते द्विजपुङ्गवाः ।
स्नानं कुर्य्युः प्रसन्नाङ्गाः सर्व्वाभरणभूषिताः ॥
देवस्यत्वेति मन्त्रेण स्थितस्य कनकासने ।
अद्य जातस्य तेऽङ्गानि आभिषेक्ष्यामहे वयम् ॥
दिव्येनानेन वपुषा चिरं जीव सुखी भव ।
ततो हिरण्यगर्भस्तु तेभ्यो दद्याद्विचक्षणः ॥
ते पूज्याः सर्व्वभावेन बहुभ्यो वा तदाज्ञया ।
तत्रोपकरणं सर्व्वं गुरवे विनिवेदयेत ॥

संह्लादश्चैव ह्लादश्च ह्लादपुत्त्रान्
शृणुष्व तान् ॥”
इति वह्निपुराणे
कश्यपीयप्रजाम्र्गनामाध्यायः ॥

**हिरण्यकशिपुहा**, [न्] पुं, (हिरण्यकशिपुं हत-

वानिति । हन् + क्विप् ।) विष्णुः ।
इति हेम-
चन्द्रः ॥

**हिरण्यकामधेनुः**, स्त्री, (हिरण्यनिर्म्मिता काम-

धेनुर्यत्र ।)
षाडशमहादानान्तर्गतमहादान-
विशेषः । यथा, --
मत्स्य उवाच ।
“अथातः संप्रवक्ष्यामि कामधेनुविधिं
परम् ।
सर्व्वकामप्रदं नृणां
महापातकनाशनम् ॥

पादुकोपानहं छत्रं चामरासनभोजनम् ।
ग्रामं वा विषयं वापि यदन्यद्दयितं भवेत्
॥
अनेन विधिना यस्तु पुण्येऽह्नि
विनिवेदयेत् ।
हिरण्यगर्भदानं स ब्रह्मलोके महीयते ॥
पुरेषु लोकपालानां प्रतिमन्वन्तरं वसेत्
।
कल्पकोटिशतं यावत् ब्रह्मलोके
महीयते ॥
कलिकलुषविमुक्तः सेवितः सिद्धसंघै-
रमरचमरमालावीज्यमानोऽप्सरोभिः।
पितृशतमथ बन्धून् पुत्त्रपौत्त्रप्रपौत्रा-
नपि नरकनिमग्नांस्तारयेदेक एव ॥
इति पठति य इत्थं यः शृणोतीह
सम्यक्
मधुमुररिपुलोके पूज्यते सोऽपि सिद्धैः
।
मतिमपि च जनानां यो ददाति प्रियार्थं
विबुधपतिजनानां नायकः स्यादमोघम्
॥"
इति मात्स्ये २७५ अध्यायः ॥ * ॥
विष्णुः । इति तस्य सहस्रनामस्तोत्रम्
॥ सूक्ष्म-
शरीरसमष्ट्युपहितचैतन्यम् ।
तत्पर्य्यायः ।
प्राणात्मा २ सूत्रात्मा ३ । इति
वेदान्तसारः ॥

**हिरण्यदः**, पुं, (हिरण्यं ददातीति । दा + कः ।)
समुद्रः । इति केचित् । हिरण्यदातरि,
त्रि ॥
(यथा, मनुः । ४ । २३० ।
"भूमिदो भूमिमाप्नोति
दीर्घमायुर्हिरण्यदः ।
गृहदोऽग्र्याणि वेश्मानि रूप्यदो
रूपमुत्त-
मम् ॥)

**हिरण्यदा**, स्त्री, हिरण्यं ददातीति । दा +
प्रक्षिप्तमात्रं जग्राह तेज ऐशं महापगा ।
ततस्त्वधारयद्देवी शार्व्वं तेजः स्वपूपुषत् ।
हुताशनोऽपि च भयाद्यत्र तत्र परिभ्रमन् ॥
पञ्चवर्षसहस्राणि ह्यध्यास्ते हव्यभुक् ततः ।
मांसमस्थीनि रक्तानि मेदोमज्जत्वचस्तथा
॥
रोमाणि चाक्षिकेशाद्याः सर्व्वे जाता हिर-
ण्मयाः ।
हिरण्यरेता लोकेऽस्मिन् विख्यातः पावक-
स्तदा ॥"
इति वामने ५४ अध्यायः ॥

**हिरण्यवः**, पुं, (हिरण्यानि सन्त्यत्रेति । हिरण्य
+ "वप्रकरणेऽन्येभ्योऽपि दृश्यते इति
वक्तव्यम् ।"
५ । २ । १०९ । इत्यस्य वार्त्तिकोक्त्या वः
।)
दैवधनम् । देवस्वम् । इति केचित् ॥

**हिरण्यवर्णा**, स्त्री, (हिरण्यवत् वर्णो यस्याः ।)
नदी । इति हेमचन्द्रः ॥

**हिरण्यवाहः**, पुं, (हिरण्यं वहतीति । वह +
अण् ।) शोणनदः । इति शब्दरत्नावली भर-
तश्च ॥

**हिरण्याक्षः**, पुं, (हिरण्यवत् पीते अक्षिणी
यस्य । अच् समासे ।) आद्यदैत्यविशेषः ।
स
च दितिगर्भे कश्यपाज्जातः
वराहरूपिविष्णुना
हतः । यथा, --
"दितिस्तु भर्त्तुरादेशादपत्यपरिशङ्किनी।
पूर्णे वर्षशते साध्वी पुत्त्रौ प्रसुषुवे यमौ ॥
प्रजापतिर्नाम तयोरकार्षीत्
यः प्राक् स्वदेहात् यमयोरजायत।
तं वै हिरण्यकशिपुं विदुः प्रजा
यं तं हिरण्याक्षमसूत साग्रतः ॥"
इति श्रीभागवते ३ स्कन्धे १७ । २ ; १८ ॥
"हतो हिरण्यकशिपुर्हरिणा सिंहरूपिणा ।
हिरण्याक्षो धरोद्धारे बिभ्रता शौकरं वपुः ॥"
स्थापयेद्वेदिमध्ये तु कृष्णाजिनतिलोपरि ।
कौशेयवस्त्रसंवीतं कारयेद्धेमवाजिनम् ॥
शक्तितस्त्रिपलादूर्द्ध्वमासहस्रपलाद्बुधः ।
पादुकोपानहच्छत्रचामरासनभाजनैः ॥
पूर्णकुम्भाष्टकोपेतं माल्येक्षुफलसंयुतम् ।
शय्यां सोपस्करां तद्वद्धेममार्त्तण्डसंयुताम् ॥
ततः सर्व्वौषधीस्नातः स्नापितो वेदपुङ्गवैः ।
इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः ॥
नमस्ते सर्व्वदेवेश ! वेदाहरणलम्पट ! ।
वाजिरूपेण मामस्मात् पाहि संसारसागरात्
॥
त्वमेव सप्तधा भूत्वा छायारूपेण भास्करम् ।
यत्नाद्भ्रमयसे लोकानतः पाहि सनातन !
॥
एवमुच्चार्य्य गुरवे तमश्वं विनिवेदयेत् ।
दत्त्वा पापक्षयाद्भानोर्लोकमभ्येति शाश्वतम्
॥
गोभिर्विभवतः सर्व्वानृत्विजश्चापि पूजयेत् ।
सर्व्वधान्योपकरणं गुरवे विनिवेदयेत् ॥
सर्व्वशय्यादिकं दत्त्वा भुञ्जीतातैलमेव हि ।
पुराणश्रवणं तद्वत् कारयेद्भोजनादनु ॥
इमं हिरण्याश्वविधिं करोति यः
पुण्यं समासाद्य दिनं नरेन्द्र ! ।
विमुक्तपापः स पुरं मुरारेः
प्राप्नोति सिद्धैरभिपूजितः सन् ॥
इति पठति य इत्थं हेमवाजिप्रदानं
सकलकलुषमुक्तः सोऽश्वयुक्तेन भूयः ।
कनकमयविमानेनार्कलोकं प्रयाति
त्रिदशपतिबधूभिः पूज्यते योऽथ पश्येत् ॥
यो वा शृणोति पुरुषोऽल्पधनः स्मरेद्वा
हेमाश्वदानमभिनन्दयतीहलोके ।
सोऽपि प्रयाति हतकल्मषशुद्धदेहः
स्थानं पुरन्दरमहेश्वरलोकजुष्टम् ॥"
इति मात्स्ये हिरण्याश्वप्रदानिको नाम
२८०
अध्यायः ॥

**हिरण्याश्वरथः**, पुं, (हिरण्याश्वः सुवर्णघोटकयुक्तः
रथो यत्र ।) षोडशमहादानान्तर्गतमहादान-
विशेषः । यथा, मात्स्ये ।

कः । टाप् ।) पृथिवी । इति केचित् ॥

**हिरण्यनाभः**, पुं, (हिरण्यं नाभौ यस्य ।)

मैनाकपर्व्वतः । इति हेमचन्द्रः ॥
(मुनिविशेषः ।
यथा, भागवते । ६ । १५ । १५ ।
"हिरण्यनाभः कौशल्यः श्रुतदेव
ऋतध्वजः ।
एते परे च सिद्धेशाश्चरन्ति ज्ञानहेतवः
॥")

**हिरण्यबाहुः**, पुं, (हिरण्यवत् बाहुर्यस्य ।)

शोणनदः । इत्यमरः । १ । १० । ३४
॥ शिवः ।
इति केचित् ॥ (यथा, महाभारते । १४
। ८ । १९ ।
"हिरण्यबाहवे राजन्नुग्राय पतये दिशाम्
॥")

**हिरण्यरेताः**, [स्] पुं, (हिरण्यं रेतो यस्य ।)

अग्निः । (यथा, महाभारते । १ । ५५ ।
१० ।
"विभावसुश्चित्रभानुर्म्महात्मा
हिरण्यरेता हुतभुक् कृष्णवर्त्मा ॥")
चित्रकवृक्षः । इत्यमरः । १ । १ । ५८
॥ सूर्य्यः ।
इति मेदिनी ॥ शिवः । इति
शब्दरत्नावली ॥ * ॥
अग्नेस्तन्नामकारणं यथा, --
"यत् पीतं वीतिहोत्रेण वीर्य्यं त्यक्तं
पिना-
किनः ।
तेनाक्रान्तोऽभवद्ब्रह्मन्! मन्दतेजा
हुताशनः ॥
ततो जगाम देवानां सकाशममितद्युतिः
।
दैवतैः प्रहितस्तूर्णं ब्रह्मलोकं जगाम ह
॥
स गच्छन् कुटिलां देवीं ददर्श पथि
पावकः ।
तां दृष्ट्वा प्राह चाधत्स्व तेजो यन्मम
दुर्द्धरम् ॥
इति तत्रैव ७ स्कन्धे १ अध्याये ४०
श्लोकः ॥
अपिच ।
"तेजस्वी नाम वै शक्रो हिरण्याक्षो रिपुः
स्मृतः ।
हतो वराहरूपेण हिरण्याक्षोऽथ विष्णुना ॥"
इति गारुडे । ८७ । ३० ॥
(पीठस्थानविशेषः । यथा, देवीभागवते । ७
।
३० । ६४ ।
"उत्पलाक्षी सहस्राक्षे हिरण्याक्षे महोत्-
पला ॥")

**हिरण्याश्वः**, पुं, (हिरण्यस्य अश्वो यत्र ।)

तुलापुरुषादि-
षोडशमहादानान्तर्गतमहादान-
विशेषः । यथा, --
मत्स्य उवाच ।
"अथातः संप्रवक्ष्यामि हिरण्याश्वविधिं परम्
।
यस्य प्रदानाद्भुवने आनन्त्यफलमश्नुते ॥
पुण्यां तिथिं समासाद्य कृत्वा ब्राह्मणवाचनम्
।
लोकेशावाहनं कुर्य्यात्तुलापुरुषदानवत् ॥
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम्।
स्वल्पेष्वेकाग्निवत् कुर्य्याद्धेमवाजिमखं बुधः
॥
"आद्यन्तु सर्व्वदानानां तुलापुरुषसंज्ञितम् ।
हिरण्यगर्भदानञ्च ब्रह्माण्डं तदनन्तरम् ॥
कल्पपादपदानञ्च गोसहस्रञ्च पञ्चमम् ।
हिरण्यकामधेनुश्च हिरण्याश्वस्तथैव च ॥
पञ्चलाङ्गलकञ्चैव धरादानं तथैव च ।
हिरण्याश्वरथस्तद्वत् हेमहस्तिरथस्तथा ॥
द्वादशं विष्णुचक्रञ्च ततः कल्पलतात्मकम् ।
सप्तसागरदानञ्च रत्नधेनुस्तथैव च ।
महाभूतघटस्तद्वत् षोडशः परिकीर्त्तितः ॥"
इति मलमासतत्त्वम् ॥ * ॥
तद्विधिर्यथा, --
मत्स्य उवाच ।
"अथातः संप्रवक्ष्यामि महादानमनुत्तमम् ।
हिरण्याश्वरथं नाम महापातकनाशनम् ॥
पुण्यन्दिनमथासाद्य कृत्वा ब्राह्मणवाचनम् ।
लोकेशावाहनं कुर्य्यात्तुलापुरुषदानवत् ॥
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम्।

महेश्वरेण संत्युक्तं निर्द्दहेद्भुवनान्यपि ।
तद्धारणाच्च कुटिले ! पुत्रो धन्यो भविष्यति ॥
इत्यग्निना सा कुटिला श्रुत्वा सुतमनुत्तमम् ।

कृष्णाजिने तिलान् कृत्वा काञ्चनं
कारयेद्रथम् ।
सप्ताश्वं चतुरश्वं वा चतुश्चक्रं सकूवरम् ।
ऐन्द्रनीलेन कुम्भेन ध्वजरूपेण संयुतम् ।
लोकपालाष्टकोपेतं पद्मरागदलान्वितम् ॥
चतुरः पूर्णकलसान् धान्यान्यष्टादशैव तु ।
कौषेयवस्त्रसंयुक्तमुपरिष्टाद्वितानकम् ॥
माल्येक्षुफलसंयुक्तं पुरुषेण समन्वितम् ।
यो यद्भक्तः पुनः कुर्य्यात् स
तन्नाम्नाधिवासनम् ॥
छत्रचामरकौषेयवस्त्रोपानहपादुकाः ।
गोभिर्विभवतः सार्द्धं दद्याच्च
शयनादिकम् ॥
अभावात् त्रिपलादूर्द्धं शक्तितः
कारयेच्छुभम् ॥
अश्वाष्टकेन संयुक्तं चतुर्भिरथ वाजिभिः ।
द्वाभ्यामथ युतं दद्यादिम मन्त्रमुदीरयेत् ॥
नमो नमः पापविनाशनाय
विश्वात्मने वेदतुरङ्गमाय ।
धाम्नामधीशाय भवाभवाय
पापौघदावानल देहि शान्तिम् ॥
वस्वष्टकादित्यमरुद्गणानां
त्वमेव धाता परमं विधानम् ।
यतस्ततो मे हृदयं प्रयातु
धर्म्मैकनाम त्वमघौघनाशात् ॥
इति तुरगरथप्रदानमेतत्
भवभयसूदनमत्र यः करोति ।
स कलुषपटलैर्व्विमुक्तदेहः
परममुपैति पदं पिनाकपाणेः ॥
देदीप्यमानवपुषा विजितप्रभाव-
माक्रम्य मण्डलमखण्डलचण्डभानोः ।
सिद्धाङ्गनानयनषट्पदपीयमान-
वक्त्राम्बुजोऽम्बुजभवेन चिरं सहास्ते ॥
इति पठति शृणोति वा य इत्थं
कनकरथतुरगप्रदानमस्मिन् ।
न स नरकपुरं व्रजेत् कदाचित्
नरकरिपोर्भवनं प्रयाति भूप ! ॥”
इति मात्स्ये हिरण्याश्वरथप्रदातिकोनाम
२५५

अपि च ।
“हिलमोची सरा तिक्ता कुष्ठघ्नी कफवातजित् ॥”
श्लेष्मपित्तजित् इति वा पाठः । इति राज-
वल्लभः ॥

**हिलमोची**, स्त्री, (हिलमोचि + कृदिकारादिति
डीष् ।) हिलमोचिका । इति शब्दरत्नावली ॥
(तथास्या गुणाः ।
“हिलमोची सरा तिक्ता कुष्ठघ्नी कफपित्तजित् ॥”
इति वैद्यकराजवल्लभे चतुर्थपरिच्छेदे ॥)

**हिल्लः**, पुं, शरारिपक्षी । इति शब्दचन्द्रिका ॥

**हिल्लोल**, त् क दोलने । इति कविकल्पद्रुमः ॥
(अदन्तचुरा०-पर०-अक०-सेट् ।) अन्तःस्थ-
तृतीयद्वयमध्यस्तवेक्रोपधश्चायम् । अजिहि-
ल्लोलद्वायुर्लताम् । इति दुर्गादासः ॥

**हिल्लोलः**, पुं, (हिल्लोलयति दोलयतीति । हिल्लोलत्
क दोलने + अच् ।) तरङ्गः । ढेउ इति भाषा ।
यथा, --
“श्लाघ्यं नीरसकाष्ठताडनशतं श्लाघ्यः प्रचण्डातपः
क्लेशः श्लाघ्यतरः सुपङ्कनिचयः श्लाघ्योऽति-
दाहानलः ।
यत्कान्ताकुंचकुम्भबाहुलतिकाहिल्लोललीलासुखं
लब्धं कुम्भवर ! त्वया न हि सुखं दुःखैर्व्विना
लभ्यते ॥”
इति कालिदासकृतशृङ्गारतिलकः ॥ * ॥
रतिबन्धविशेषः । स च षोडशबन्धान्तर्गताष्टम-
बन्धः । तस्य लक्षणं यथा, --
‘हृदि कृत्वा स्त्रियाः पादौ कराभ्यां धारयेत्करौ ।
यथेष्टं ताडयेद्योनिं बन्धो हिल्लोलसंज्ञकः ॥”
इति रतिमञ्जरी ॥

**हिल्वला**, स्त्री, मृगशिरोनक्षत्रशिरोदेशस्थाः पञ्च
स्वल्पातारकाः । यथा, --
“मृगशीर्षशिरोदेशे तारका या वसन्ति हि ।
हिल्वला इल्वकास्ताः स्युरिल्वला इति
कुत्रचित् ॥”
इति शब्दरत्नावली ॥

**हिव**, इ प्रीतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-

**हिहि**, व्य, आह्लादजनकानुकरणशब्दः । इति
केचित् ॥ दीर्घान्तद्वयमिति
साधुपाठः ॥

**ही**, व्य, विस्मयः । इत्यमरः । ३ । ४ । ९ ॥ दुःखम् ।
हेतुः । विषादः । इति मेदिनी ॥
शोकः । इति
शब्दरत्नावली ॥ (यथा,
वक्रोक्तिपञ्चाशि-
कायाम् । ३१ ।
“ही नाहं भवतोऽतिवक्रवचसा
दातुं
प्रवीणोत्तरं
का ते सुन्दरि । हीनता ननु नता
सर्व्वा
त्रिलोक्येव ते ॥”)

**हीनः**, त्रि, (ओ हा क लि त्यागे + क्तः । “ओदि-
तश्च ।” ८ । २ । ४५ । इति
नत्त्वम् । “घुमा-
स्थागापाजहातीति ।” ६ । ४ ।
६६ । इति
ईत्वम् ।) ऊनः । (यथा, रघुः ।
१ । ७०
“तया हीनं विधातर्मां कथं पश्यन्न
दूयसे ।
सिक्तं स्वयमिव स्नेहाद्
बन्ध्यमाश्रमपादपम् ॥”)
गर्ह्यः । इत्यमरः । ३ । ३ ।
१२७ ॥ अधमः ।
इति जटाधरः ॥ (यथा, मनौ । ३
। १०७ ।
“आसनावसथौ
शय्यामनुव्रज्यामुपासनम् ।
उत्तमेषूत्तमं कुर्य्यात् हीने हीनं
समे समम् ॥”)
प्रतिवादिविशेषः । स च पञ्चविधः
। यथा,

अध्यायः ॥

**हिरुक्**, व्य, विनार्थः । मध्यार्थः । सामीप्यार्थः ।

इत्यमरभरतौ ॥ अधमार्थः । इति शब्दरत्ना-
वली ॥

**हिल**, श हावकृतौ । इति कविकल्पद्रुमः ॥ (तुदा०-

पर०-अक०-सेट् ।) एकोऽर्थः । श, हिलति
तरुण्या तरुणः । इति दुर्गादासः ॥

**हिलमोचिः**, स्त्री, हिलमोचिका । इति शब्द-

रत्नावली ॥

**हिलमोचिका**, स्त्री, शाकविशेषः । इत्यमरः ।

२ । ४ । १५७ ॥ हिंचा इति हिलञ्चा इति च
वङ्गभाषा । हरहुच् इति हिन्दीभाषा । तत्-
पर्य्यायः । हिलमोचिः २ हिलमोची ३
रोची ४ । इति शब्दरत्नावली ॥ मन्वी ५
विषघ्नी ६ मत्स्याक्षी ७ चक्राङ्गी ८ । इति
रत्नमाला ॥ ब्राह्मी ९ शङ्खधरा १०
आचारी ११ ।
तस्या गुणाः । यथा, भावप्रकाशे ।
"शोथं कुष्ठं कफं पित्तं हरते हिलमोचिका ॥"

पर०-सक०-सेट् ।) इ, हिम्बते । प्रीतिरिह
प्रीतिकरणम् । हिम्बति लोकः पितरम् । इति
दुर्गादासः ॥

**हिवुकं**, क्ली, एकस्माल्लग्नाच्चतुर्थलग्नम् । तत्पर्य्यायः ।

"पातालं हिवुकञ्चैव सुहृद्दम्भश्चतुर्थकम् ।"
अपि च ।
"सपापात् भार्गवात् पापो हिवुके मातृनाश-
कृत् ॥"
इति ज्योतिस्तत्त्वम् ॥

**हिस**, इ ध कि हिंसे । इति कविकल्पद्रुमः ॥

(रुधा०-चुरा०-पक्षे भ्वा०-पर०-सक०-सेट् ।)
इ, हिंस्यते । ध, हिनस्ति । कि, हिंसयति
हिंसति । हन्त्यर्थेनैव पाक्षिकचुरादित्वे सिद्धे
किकरणं भ्वादित्वार्थनम । इति दुर्गादासः ॥

नारदः ।
"अन्यवादी क्रियाद्वेषी
नोपस्थायी निरुत्तरः ।
आहूतप्रपलायी च हीनः
पञ्चविधः स्मृतः ॥"
इति व्यवहारतत्त्वम् ॥

**हीनजातिः**, त्रि, (हीना जातिर्यस्य ।) नीच-

वर्णः । इति केचित् ॥ (यथा, मनुः । ३ । १५ ।
"हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः ।
कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम् ॥")

**हीनवर्णः**, त्रि, (हीनो वर्णो यस्य ।) नीच-

जातिः यथा, --
"हीनवर्णोपभुक्ता या त्याज्या वध्यापि वा
भवेत् ।"
इति प्रायश्चित्ततत्त्वम् ॥

**हीनवादी**, [न्] त्रि, (हीनं वदतीति । वद +

णिनिः ।) वाक्यवर्जितः । वोवा इति भाषा ।
तत्पर्य्यायः । अधरः २ । इति हेमचन्द्रः ॥ विरु-
द्धार्थवादी । यथा, नारदः ।
"पूर्ब्बवादं परित्यज्य योऽन्यमालम्बते पुनः ।
वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः ॥"
इति ।
हीनवादी दण्ड्यो भवति न प्रकृतादर्थाद्धीयते ।
इति च मिताक्षरा ॥

**हीनसख्यं**, क्ली, (हीनेन सह सख्यम् ।) नीचेन

सह मित्रता । इति केचित् ॥

**हीनाङ्गः**, त्रि, (हीनमङ्गं यस्य ।) स्वभावतो

न्यूनावयवविशिष्टः । तत्पर्य्यायः
। पोगण्डः २
विकलाङ्गकः ३ व्यङ्गः ४ अपाङ्गः
५ अपो-
गण्डः ६ । इति जटाधरः । तेन
सह परी-
हासनिषेधो यथा, --
“जातिहीनं वित्तहीनं
रूपहीनमदक्षिणम् ।
हीनाङ्गमतिरिक्ताङ्गं तेन दोषेण
नाक्षिपेत् ॥

इति ब्रह्मा पुरा प्राह
वेदौघार्थविनिश्चयम् ।
तच्चावमन्य भवता परीहासोऽप्यभाष्यत
॥”
इति कालिकापुराणे ४४ अध्यायः ॥

**हीनाङ्गी**, स्त्री, (हीनं क्षुद्रत्वात् अधमं अङ्गं
यस्याः । ङीष् ।) क्षद्रपिपीलिका । इति हेम-
चन्द्रः ॥

**हीन्तालः**, पुं, हिन्तालवृक्षः । इत्यमरटीका ॥

**हीरं**, क्ली, (हरति मार्द्दवमिति । हृ + अच् ।
पृषोदरादित्वात् सुआधुः । यद्वा, ही विस्मयं
रातीति । रा + कः ।) वज्जम् । इति राज-
निर्घण्टः ॥ (यथा, रसेन्द्रसारसंग्रहे ।
“हीरं सुवर्णं सुमृतञ्च तार-
मेषां समं तीक्ष्णरजश्चतुर्णाम् ॥”)

**हीरः**, पुं, (हरति सर्व्वं प्रलये इति । हृ +
अच् । पृषोदरादित्वात् ईत्वम् ।) शिवः ।
वज्रम् । इति मेदिनी ॥ सर्पः । इति हेम-
चन्द्रः ॥ हारः । इति जटाधरः ॥ सिंहः ।
इति केचित् ॥ श्रीहर्षपिता । यथा, --
“श्रीहर्षं
कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहोरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च
यम् ।
द्वैतीयीकतया मितोऽयमगमत् तस्य प्रबन्धे महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गो-
ज्ज्वलः ॥”
इति नैषधे २ सर्गः ॥

**हीरकः**, पुं, (हीर एव । स्वार्थे कन् ।) रत्न-

**हीलं**, क्ली, (ही विस्मयं लातीति । ला + कः ।)
रेतः । इति केचित् ॥

**हीलुकं**, क्ली, गौडीमद्यम् । इति शब्दचन्द्रिका ॥

**हीही**, व्य, विस्मयः । हास्यम् । इति मेदिनी ॥

**हु**, लि होमे । अदने । इति कविकल्पद्रुमः ॥
(जु०-पर०-सक०-अनिट् ।) होमो देवता-
सम्प्रदानकवह्न्यधिकरणकवस्तुत्यागः। लि,
जुहोति घृतमग्नौ कृष्णाय होता । प्रक्षेपे-
ऽप्ययम् ।
“चिराय सन्तर्प्य समिद्भिरग्निं
यो मन्त्रपूतां तनुमप्यहौषीत् ।”
इति रघुः ।
“जटाधरः सन् जुहुधीह पावकम् ।”
इति किराते प्रीणनार्थोऽपि । इति दुर्गादासः ॥

**हुंकृतं** क्ली, (हुं इत्यव्यक्तशब्दस्य कृतं करणम् ।)
हुङ्कारः । इति धरणिः ॥ (यथा, भागवते ।
४ । १४ । ३४ ।
निजघ्नुर्हुङ्कृतैर्वेणं हतमच्युतनिन्दया ॥”)
वन्यवराहशब्दः । इति केचित् ॥ हुँ इति मन्त्रो-
च्चरिते, त्रि ॥ (हुँ इत्यनेन तिरस्कृतः । यथा,
महाभारते । १२ । ११८ । १ ।
“स श्वा प्रकृतिमापन्नः परं दैन्यमुपागतः ।
ऋषिणा हुंकृतः पापस्तपोवनबहिस्कृतः ॥”
हुङ्कृतमस्यास्तीति । अच् । हुङ्कारविशिष्टः ।
यथा बृहत्संहितायां । ४८ । ११ ।
“अचिरप्रसूतहुङ्कृतवल्गितवत्सोत्सवे गोष्ठे ॥”)

**हुड**, इ ङ संहे । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) इ, हुण्ड्यते । ङ, हुण्डते
धनं लोकः । राशीकरोतीत्यर्थः । इति दुर्गा-
दासः ॥

**हुड**, ऋ ङ गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) ऋ, अजुहोडत् । ङ,
होडते । इति दुर्गादासः ॥

**हुड**, शि मग्ने । संहे । इति कविकल्पद्रुमः ॥ (तुदा०-

“कल्प्यन्ते हुडशृङ्गाणि रथस्योपरि सूरिभिः ।
विण्मूत्रस्पर्शशुद्ध्यर्थकरादिस्पर्श उद्यते ॥”
इति ॥
यन्त्राणि आग्नेयौषधबलेन दृषत्पिण्डोत्क्षेपणानि ।
महान्ति कामानसंज्ञानि क्षुद्राणि सीसगुलि-
कोत्क्षेपणानि बन्दुकसंज्ञानि । खनकाः सुरङ्ग-
द्वारा गुप्तमार्गकर्त्तारः । इति तट्टीकायां नील-
कण्ठः ॥

**हुडुक्कः**, पुं, (हुडुक् इति शब्देन कायति शब्दा-
यते इति । कै + कः ।) वाद्यभेदः । दात्यूह-
पक्षी । मदमत्तः । इति मेदिनी ॥ दण्डकः ।
हुड्का इति भाषा । इति शब्दरत्नावली ॥
तत्र हड्डु क इति च पाठः ॥

**हुडत्**, क्ली, वृषशब्दः । इति काशीखण्डमिति
केचित् ॥

**हुडुम्बः**, पुं, भ्रष्टचिपिटः । हुडम् इति भाषा ।
इति शब्दमाला ॥

**हुण्डः**, पुं, व्याघ्रः । ग्राम्यशूकरः । मूर्खः । राक्षसः ।
इति केचित् ॥

**हुतं**, त्रि, (हु + क्तः ।) अग्नौ प्रक्षिप्तं घृतादि ।
तत्पर्य्यायः । वषट्कृतम् २ । इत्यमरः ॥ (यथा,
गीतायाम् । ९ । १६ ।
“अहमग्निरहं हुतम् ॥”
तर्पितम् । यथा, रघुः । २ । ७१ ।
“प्रदक्षिणीकृत्य हुतं हुताश-

विशेषः । अयं श्वेतवर्णः बहुमूल्यः
शुक्र-
देवताकश्च । तत्पर्य्यायः । वज्रः २
हीरः ३
दधीच्यस्थि ४ वज्रकम् ५ । इति
शब्दरत्नावली ॥
सूचीमुखम् ६ वरारकम् ७ रत्नमुख्यम्
८
वज्रपर्य्यायिनाम ९ ।
विराटदेशजहीरकपर्य्यायः ॥
विराटजः १० राजपट्टः ११ राजावर्त्तः
१२ ।
इति हेमचन्द्रः ॥ अस्य गुणाः ।
सारकत्वम् ।
शीतत्वम् । कषायत्वम् । स्वादुत्वम् ।
वान्ति-
कारित्वम् । चक्षुर्हितकारित्वम् । धारणे
पापा-
लक्ष्मीनाशित्वञ्च । इति राजवल्लभः ॥
अन्यत्
वज्रशब्दे द्रष्टव्यम् ॥ (यथास्य
पर्य्यायादि ।
"हीरकः पुंसि वज्रोऽस्त्री चन्द्रो
मणिवरश्च सः ।
स तु श्वेतः स्मृतो विप्रो लोहितः
क्षत्त्रियः
स्मृतः ॥
पीतो वैश्योऽसितः
शूद्रश्चतुर्वर्णात्मकश्च सः ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे
भागे ॥)

**हीरा**, स्त्री, लक्ष्मीः । तैलाम्बुकः इति मेदिनी ॥

पिपीलिका । इति हेमचन्द्रः ॥ काश्मरी
।
इति राजनिर्घण्टः ॥ (पर्य्यायो यथा, --
"गम्भारी भद्रपर्णी च श्रीपर्णी
मधुपर्णिका ।
काश्मोरी काश्मरी हीरा कश्मर्य्यः पीत-
रोहिणी ।
कृष्णवृन्ता मधुरसा महाकुसुमिकापि च
॥"

पर०-मग्ने अक०-संहे सक०-सेट् ।) शि,
हुडति अहुडीत् जुहोड । मग्नमिह मज्जनम् ।
इति दुर्गादासः ॥

**हुडः**, पुं, (हुडतीति । हुड + कः ।) मेषः । इति

हेमचन्द्रः राजनिर्घण्टश्च ॥ चौरादिनिवार-
णार्थभूमिनिहितलौहमयतीक्ष्णशङ्कुविशेषः ॥
तस्य नामान्तरं गुडः । पाँजिकाटा इति
भाषा । लगुडः । इति महाभारतम् ॥ सैन्या-
श्रयस्थानम् । वुरुज् इति भाषा । रथोपरि
विण्मूत्रत्यागशृङ्गम् । यथा, --
"पुरी समन्ताद्विहिता सपताका सतोरणा ।
सचक्रा सहुडा चैव सयन्त्रखनका तथा ॥"
इति महाभारते वनपर्ब्बणि सौभवधे १५
अध्यायः ॥ पताका ध्वजाञ्चलः । तोरणानि
बहिर्द्वाराणि । चक्राणि योधगणाः । हुडा-
स्तदाश्रयस्थानानि । भाषायां वरुज्संज्ञानि ।
अन्ये तु विण्मूत्रोत्सर्ज्जनशृङ्गाणि हुडा
इत्याहुः । उदाहरन्ति च ।

मंनन्तरं भर्तुररुन्धतीञ्च ॥")
होमे, क्ली ॥

**हुतभुक्**, [ज्] पुं, (हुतं भुङ्क्ते इति । भुज् +

क्विप् ।) अग्निः । (यथा, भागवते । ३ ।
१६ । ८ ।
"नाहं तथाद्मि यजमानहविर्व्विताने
श्चोतद्घृतप्लुतमदन् हुतभुङ्मुखेन ॥")
चित्रकवृक्षः । इत्यमरः । १ । १ । ५८ ॥
(यथा,
सुश्रुते । ६ । ५३ ।
"पाठाविडव्योषविडङ्गसिन्धु-
त्रिकण्टरास्नाहुतभुग्बलाभिः ॥"
महादेवः । इति महाभारतम् । १३ । १७
।
८१ ॥ विष्णुः । इति च तत्रैव । १३ ।
१४९ । १०८ ॥)

**हुतभुक्प्रिया**, स्त्री, (हुतभुजो वह्नेः प्रिया ।)

अग्निभार्य्या । स्वाहा इत्यमरः । २ । ७ ।
२१ ॥

**हुतवहः**, पुं, (वहतीति । वह + अच् । हुतस्य

वहः ।) अग्निः । इति हेमचन्द्रः ॥ (यथा,
महाभारते । १ । २२४ । ५८ ।
"एतच्छ्रुत्वा हुतवहात् भगवान्
सर्व्वलोककृत् ।
हव्यवाहमिदं वाक्यमुवाच प्रहसन्निव ॥")

**हुताशः**, पुं, (हुतं अश्नाति इति । अश + अण् ।)

अग्निः । इति शब्दरत्नावली ॥ (यथा,
भाग-
वते । १ । १२ । २१ ।
"धन्विनामग्रणीरेषः
तुल्यश्चार्ज्जुनयोर्द्वयोः ।
हुताशः इव दुर्द्धषः समुद्र इव दुस्तरः
॥")
भयम् । इति व्यवहारसिद्धम् ॥
(मुनिविशेषः ।
स चायुर्व्वेदसंहिताकारः । अग्निवेशमुनिः
।
तद्यथा, --

इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)

**हीराङ्गः**, पुं, (हीरस्येव कठिनं अङ्गं यस्य ।) इन्द्रस्य वज्जम् । इति शब्दमाला ॥

"भग्नं समासाद्विविधं हुताश !
काण्डे च सन्धौ च हि तत्र सन्धौ ॥"
इति वैद्यकरुग्विनिश्चयसंग्रहे भग्नाधिकारे ॥
हुताश इति अग्निवेशसम्बोधनं चरके हुताश-
शब्देनाग्निवेशोऽभिधीयते पदैकदेशे पदप्रवृत्तेः ।
इति तट्टीकायां श्रीकण्ठदत्तः ॥)

**हुताशनः**, पुं, (हुतं आहुतद्रव्यं अशनमस्य ।)

अग्निः । यथा, गोभिलपुत्त्रकृत्तगृह्यासंग्रहे ।
"लक्षहोमे तु वह्निः स्यात् कोटिहोमे हुताशनः ।
पूर्णाहुत्यां मृडो नाम शान्तिके वरदः सदा ॥"
इति तिथ्यादितत्त्वम् ॥
अपि च ।
"आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात् ।
ज्ञानन्तु शङ्करादिच्छेन्मुक्तिमिच्छेज्जनार्द्दनात् ॥"
इति गुणविष्णुधृतमत्स्यपुराणम् ।
शिवः । इति केचित् ॥ (वटिकौषधविशेषः ।)
तद्यथा, --
"एकद्विकद्वादशभागयुक्तं
योज्यं विषं टङ्गणमूषणञ्च ।
हुताशनो नाम हुताशनस्य
करोति वृद्धिं कफजिन्नराणाम् ॥"
इति हुताशनो रसः ॥ * ॥
इति वैद्यकरसेन्द्रसारसंग्रहेऽजीर्णाद्यधिकारे ॥)

**हुतिः**, स्त्री, हवनम् । हुधातोः क्तिप्रत्ययेन

निष्पन्ना ॥

**हुम्**, व्य, (हूयते इति । हु + बाहुलकात् मः ।)

स्मृतिः । अपाकृतिः । अर्थप्रश्नः । अभ्यनुज्ञा ।

**हूँ**, व्य, मन्त्रविशेषः । तदुद्धारपर्य्यायौ यथा, --

"हकारो वामकर्णाठ्यो नादबिन्दुविभूषितः ।
कूर्च्चं क्रोध उग्रदर्पो दीर्घहूङ्कार उच्यते ।
शब्दश्च दीर्घकवचं ताराप्रणव इत्यपि ॥"
किञ्च ।
"शिखावषट् च कवचं क्रोधो वर्म्म हमित्यपि ।
क्रोधाख्यो हूं तनुत्रञ्च शस्त्रादौ रिपुसंज्ञकः ॥"
अपि च ।
"व्योमस्थं तालजङ्घास्थं नादाबन्दुविभूषितम् ।
कूर्च्चं कालो महाकालः क्रोधबीजं निरञ्जनम् ॥"
इति नानातन्त्रम् ॥

**हूङ्कारः**, पुं, (हूम् + कृ + भावे घञ् ।) हूमिति

भयानकध्वनिः । यथा, --
"इत्युक्तः सोऽभ्यधावत्तामसुरो धूम्रलोचनः ।
हूङ्कारेणैव तं भस्म सा चकाराम्बिका ततः ॥"
इति मार्कण्डेये देवीमाहात्म्यम् ॥

**हूड**, ऋ ङ गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-सक०-सेट् ।) ऋ, अजुहूडत् । ङ,
हूडते । इति दुर्गादासः ॥

**हूतं**, त्रि, (ह्वे + क्त ।) आहूतम् । आह्वानी-

कृतम् । ह्वे ञ धातोः क्तप्रत्ययेन निष्पन्नम् ॥

**हूतिः**, स्त्री, (ह्वे + क्तिन् + सम्प्रसारणम् ।)

आह्वानम् । इत्यमरः १ । ६ । ८ ।

**हूनः**, पुं, (ह्वे + नक् सम्प्रसारणञ्च ।) म्लेच्छ-

जातिविशेषः । यथा, --

**हृ**, लि र प्रसह्यकृत्याम् । इति कविकल्पद्रुमः ॥

(जु०-पर०-सक०-अनिट् ।)
प्रसह्यकृतिर्बलात्-
कारः । लि, जहर्त्ति धनं दस्युः । र वैदिकः ।
इति दुर्गादासः ॥

**हृच्छयः**, पुं, (हृदि शेते इति । शी + "अधि-

करणे शेतेः ।" ३ । २ । १५ । इति अच् ।)
कामदेवः । इति हलायुधः ॥ (यथा, महा-
भारते । ३ । ४६ । ४२ ।
"तत् प्रसीद न मामार्त्तां विसर्ज्जयितुमर्हसि ।
हृच्छयेन च सन्तप्तां भक्ताञ्च भज मानद ! ॥")
हृदयशायिनि, त्रि ॥ (यथा, महाभारते । १३ ।
८५ । १७ ।
"जगत्पतिरनिर्द्देश्यः सर्व्वगः सर्व्वभावनः ।
हृच्छयः सर्व्वभूतानां ज्येष्ठो रुद्रादपि प्रभुः ॥"
पुं, कामः । यथा, भागवते । १ । ६ । ७ ।
"सकृद्यद्दर्शितं रूपमेतत् कामाय तेऽनघ ! ।
मत्कामः शनकैः साधुः सर्व्वान् मुञ्चति हृच्छयान् ॥"
"हृच्छयान् कामान् ।" इति तट्टीकायां श्रीधरः ॥)

**हृच्छूलं**, क्ली, (हृदयजातं शूलमिति मध्यलोपी

समासः ।) हृदयजातशूलरोगः । तदौषधं
यथा, गारुडे १८९ अध्याये ।
"क्वथितोदकपानन्तु शम्बूका क्षारकं तथा ।
मृगशृङ्गं ह्यग्निदग्धं गव्याज्येन समन्वितम् ।
पीतं हृत्पृष्ठशूलानां भवेन्नाशकरं शिव ! ॥"
अपि च ।
"विल्वाग्निमन्थश्योनाकपाटलापारिभद्रकम् ।
प्रसारण्यश्वगन्धा च बृहती कण्टकारिका ॥
बलाचातिवला रास्ना श्वदंष्ट्रा च पुनर्नवा ।
एरण्डशारिवा पर्णी गुडूची कपिकच्छुरा ॥
एषां दश पलिकान् भागान् क्वाथयेत् सलिलेऽमले ।
तेन पादावशेषेण तैलं पात्रे विपाचयेत् ॥
आजं वा यदि वा गव्यं क्षीरं दत्त्वा चतुर्गुणम् ।
शतावरीरसञ्चैव तैलतुल्यं प्रदापयेत् ॥
द्रव्याणि यानि पेष्याणि तानि वक्ष्यामि तत्

इति मेदिनी ॥ तर्के वितर्के हूँ शब्दो दीर्घादि-
ह्रस्वादिरपीति केचित् । इत्यमरटीकायां भरतः ॥

**हुर्च्छ**, आ कौटिल्यके । इति कविकल्पद्रुमः ॥

(भ्वा०-पर०-अक०-सेट् ।) ह्रस्वी । क्विपि
राल्लोर्लोपे हूः हुरो हुरः । आ हुर्च्छितं हूर्णं तेन । हुर्च्छति खलः कुटिलः स्यादित्यर्थः ।
हुर्च्छति चौरः अपसरतीत्यर्थः । इति धातु-
प्रदीपः । इति दुर्गादासः ॥

**हुल**, ज, हतिसम्बरणयोः । इति कविकल्पद्रुमः ॥

(भ्वा०-पर०-सक०-सेट् ।) ज, होलः हुलः ।
इति दुर्गादासः ॥

**हुलहुली**, स्त्री, (हुल + क । आभीक्ष्ण्ये द्वित्वं

गौरादित्वात् ङीष् ।) स्त्रीणां मङ्गलजनक-
मुखशब्दः । उलु उलु इति भाषा । तत्पर्य्यायः ।
मुखघण्टा २ । इति त्रिकाण्डशेषः ॥

**हुहुः**, पुं, (आह्वयतीति । ह्वे + निपातनात्

डुः डूश्च ।) गन्धर्व्वविशेषः । यथा, --

**हुहूः**, पुं, (आह्वयतीति । ह्वे + निपातनात्

डुः डूश्च ।) गन्धर्व्वविशेषः । यथा, --
"हूहूर्हुहुश्च द्विविधो हुहुर्हूहुश्च कुत्रचित् ।"
इति शब्दरत्नावली ॥
(यथा, महाभारते । १३ । ८३ । ९ ।
"पर्य्युपासन्त कौरव्य ! कदाचिद वै पितामहम् ।
नारदः पर्व्वतश्चैव विस्वावसुर्हहा हुहुः ॥")

**हू**, व्य, (ह्वे + डूः । निपातनम् ।) आह्वानम् ।

अवज्ञा । अहङ्व्यरः । शोकः । इति केचित् ॥

"स्वपाकश्च तुरुष्कस्तु हूनो यवन इत्यपि ।
लोकवाह्यस्तु यो वाजिगवाश्याचारवर्ज्जितः ।
म्लेच्छः किरातशवरपुलिन्दाद्यास्तु तद्भिदा ॥"
इति जटाधरः ॥
मादराजदेशीयस्वर्णमुद्राविशेषश्च ॥

**हूम्**, व्य, हूयते इति । बाहुलकात् मः । प्रश्नः ।

वितर्कः । इत्यमरः । ३ । ४ । १८ ॥ सन्मतिः ।
क्रोधः । भयम् । निन्दा । अवज्ञा । इत्यमर-
टीकायां नारायणचक्रवर्त्ती ॥ वितर्के हूं चैत्रोऽपि पण्डितः । प्रश्ने हूं को लङ्काधिपतिः ।
अनुमतौ च हूं कृतं हूम् । भये च हूं न गन्तव्यम् । इत्यमरटीकायां भरतः ॥ अन्यत्
हुँशब्दे द्रष्टव्यम् ॥

**हूरवः**, पुं, (हू इति रवोऽस्य ।] शृगालः । इति

हेमचन्द्रः ॥

**हूर्च्छनं**, क्ली, (हूर्च्छ + भावे ल्युट् ।) कौटिल्यम् ।

इति केचित् ॥

**हूहुः**, पुं, (आह्वयतीति । ह्वे स्पर्द्धायाम् ।

क्विप् । सम्प्रसारणम् । आभीक्ष्ण्ये द्वित्वं
निपातनात् ह्रस्वः । पक्षे तु न ।) गन्धर्व्वविशेषः ।
इति शब्दरत्नावली ॥ (यथा, भागवते । ८ । ४ । ३ ।
"योऽसौ ग्राहः स वै सद्यः परमाश्चर्य्यरूपधृक् ।
मुक्तो देवलशापेन हूहूर्गन्धर्व्वसत्तमः ॥")

**हूहूः**, पुं, (आह्वयतीति । ह्वे स्पर्द्धायाम् ।

शृणु ॥
शतपुष्पा देवदारु शालपर्णी वचागुरु ।
कुष्ठं मांसी सैन्धवञ्च पलमेकं पुनर्नवा ।
पाने नस्ये तथाभ्यङ्गे तैलमेतत् प्रदापयेत् ॥
हृच्छूलं पार्श्वशूलञ्च गण्डमालाञ्च नाशयेत् ।
अपस्मारं वातरक्तमायुष्मांश्च पुमान् भवेत् ॥"
इति च गारुडे १९८ अध्यायः ॥

**हृणिया**, स्त्री, (हृणीयते इति । हृणीङ् +

कण्ड्वादित्वात् यक् । ततः अः । निपातनात्
ह्रस्वः ।) हृणीया । इत्यमरटीकायां राय-
मुकुटः । ३ । २ । ३२ ॥

**हृणीया**, स्त्री, (हृणीङ् + कण्ड्वादित्वात् यक् ।

अः ।) निन्दा । इत्यमरः । ३ । २ । ३२ ॥

**हृत्**, [द्] क्ली, (हरति ह्रियते वेति । हृ + "वृह्रोः

षुक् दुक् चेति ।" उणा ०४ । १०० । इतिबाहुल-
कात् केवलादपि दुक ।) हृदयम् । तत्पर्य्यायः ।

क्विप् । सम्प्रसारणम् । आभीक्ष्ण्ये द्वित्वं
निपातनात् ह्रस्वः । पक्षे तु न ।)
गन्धर्व्वविशेषः ।
इति शब्दरत्नावली ॥ (यथा, भागवते । ८ । ४ । ३ ।
"योऽसौ ग्राहः स वै सद्यः
परमाश्चर्य्यरूपधृक् ।
मुक्तो देवलशापेन हूहूर्गन्धर्व्वसत्तमः ॥")

**हृ**, ञ हृत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-
उभ०-द्विक०-अनिट् ।)
हृतिर्देशाद्देशान्तर-
प्रापणा । ञ, हरति हरते गां वनं गोपः ।
इति दुर्गादासः ॥

"चित्तन्तुं चेतो हृदयं स्वान्तं हृन्मानसं मनः
।"
इत्यमरः । १ । ४ । ३१ ॥
(यथा, भावप्रकाशस्य मध्यखण्डे द्वितीये भागे
।
"स्थानान्यामाग्निपक्वानांमूत्रस्य रुधिरस्य च
।
हृदुन्दूकः फुस्फुसश्च कोष्ठ इत्यभिधीयते ॥")

**हृत्कम्पः**, पुं, (हृदयस्य कम्पः । हृदादेशः ।)
हृदयकम्पनम् ॥ यथा, --
"हृत्कम्पो जायते तावत् यावत् तस्य कृपा
न चेत् ॥"
इति समयाचारतन्त्रोक्तं भद्रकालीकवचम् ॥

**हृतं**, त्रि, (हृ + क्तः ।) अपहृतवस्तु । यथा, --
"पुरा शुम्भनिशुम्भाभ्यामसुराभ्यांशचीपतेः ।
त्रैलोक्यं यज्ञभागाश्च हृता मदबलाश्रायात् ॥"
इति देवीमाहात्म्ये ५ अध्यायः ॥

**हृद्**, क्ली, (हृ + बाहुलकात् दुक् ।) हृदयम् ।
मनः । इत्यमरः । २ । ६ । ६४ ॥

**हृदयं**, क्ली, (ह्रियते विषयैरिति । हृ + "वृह्रोः
षुग्दुकौ च । उणा० ४ । १०० । इति कयन्
दुक् च ।) बुक्कम् । वक्षः । मनः । यथा, --
"उरस्यपि च वुक्वायां हृदयं मानसेऽपि च ॥"
इति त्रिकाण्डशेषः ॥
वुक्काग्रमासं हृदयं हृदिति । चत्वारि हृदये ।
केचित्तु वुक्कात् पृथगेव हृदयान्तर्गते मांस-
विशेषे पद्माकारे हृदयादिद्वयमाहुः । धातो-
रनेकार्थत्वात् । इत्यमरटीकायां भरतः । २ ।
६ । ६४ ॥
अत्र अनाहतनामकद्वादशदलपद्ममस्ति।
यथा,
"आधारे लिङ्गनाभौ हृदयसरसिजे तालुमूले
ललाटे
द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्द्धे
चतुष्के ।
वासान्ते वादिलान्ते ड-फ-क-ठसहिते
कण्ठदेशे
प्रतिष्ठार्थं हि भावानामेषां हृदयमिष्यते ।
गोपानसीनामागारकर्णिके वार्थचिन्तकैः ।
तस्यापघातान्मूर्च्छायंभेदान्मरणमिच्छति
॥
यद्धि तत् स्पर्शविज्ञानन्धारितन्तत्र
संश्रितम् ।
तत्परस्यौजसः स्थानन्तत्र चैतन्यसंग्रहः ॥
हृदयं महदर्थश्च तस्मादुक्ताश्चिकित्सकैः ।
तेन मूलेन महता महामूला मता दश ॥"
इति चरके सूत्रस्थाने त्रिंशेऽध्याये ॥
"हृदयमिति कृतवीर्य्यो बुद्धेर्मनसश्च
स्थानत्वात् ॥"
इति सुश्रुते शारीरस्थाने तृतीयेऽध्याये ॥
"शोणितकफप्रसादजं हृदयं तदाश्रया हि
धमन्यः प्राणवहाः । तस्याधो वामतः
प्लीहा
फुस्फुसश्च दक्षिणतो यकृत् क्लोम च ॥
तद्धृदयं विशेषेण
चेतानास्थानमतस्तस्मिंस्तमसा-
वृते सर्व्वप्राणिनः स्वपन्ति । भवति चात्र ।
पुण्डरीकेण सदृशं हृदयं स्यादधोमुखम् ।
जाग्रतस्तद्विकशति स्वपतश्च निमीलति
॥"
इति च सुश्रुते शारीरस्थाने चतुर्थेऽध्याये
॥)

**हृदयग्रन्थिः**, पुं, (हृदयस्य ग्रन्थिरिव अविद्या-
सम्बन्धेन दुर्म्मोच्यत्वात् ।) हृद्बन्धः । यथा,
--
"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः
।
क्षीयन्ते चास्य कर्म्माणि दृष्ट एवात्मनीश्वरे
॥"
इति श्रीभागवते । १ । ३ । २१ ॥

**हृदयङ्गमं**, क्ली, (हृदयं गच्छतीति । गम + खच् ।
मुम् च ।) युक्तियुक्तवाक्यम् । इति भरतः ॥
तत्पर्य्यायः । सङ्गतम् २ । इत्यमरः । १ ।
६ । १८ ॥
(मनोहरे, त्रि । यथा, कुमारे । २ । १६ ।

**हृदयेशः**, पुं, (हृदयस्य ईशः ।) भर्त्ता । इति
त्रिकाण्डशेषः ॥ तत्पर्य्यायः ।
"प्रेयस्याद्याः पुंसि पत्यौ भर्त्ता सेक्ता
पतिर्व्वरः ।
विवोढा रमणो भोक्ता रूच्यो वरयिता
धवः ॥"
इति हेमचन्द्रः ॥

**हृदयेशा**, स्त्री, (हृदयस्य ईशा ।) भार्य्या । यथा,
"प्रेयसी दयिता कान्ता प्राणेशा वल्लभा
प्रिया ।
हृदयेशा प्राणसमा प्रेष्ठा प्रणयिनी च
सा ॥"
इति हेमचन्द्रः ॥

**हृदावर्त्तः**, पुं, (हृदयस्थितः आवर्त्तः ।) अश्व-
हृदयावर्त्तः । तत्पर्य्यायः । श्रीवृक्षकंः
२ । इति
त्रिकाण्डशेषः ॥

**हृदिस्पृक्**, [श्] त्रि, (हृदि हृदये स्पृशतीति ।
स्पृश् + क्विन् । "हृद्द्युभ्यां ङेः ॥" ६
। ३ ।
९ । इत्यस्य वार्त्तिकात् अलुक्समासः
।)
हृद्यः । इति केचित् ॥ (यथा, भागवते
। ६ ।
१४ । ४३ ।
"यो दुस्त्यजान् दारसुतान् सुहृद्राज्यं
हृदि-
स्पृशः ।
जहौ युवैव मलवदुत्तमश्लोकलालसः
॥")
हृदयस्पर्शकर्त्ता च ॥

**हृद्गोलः**, पुं, पर्व्वतविशेषः । इति केचित् ॥

**हृद्गोलीयः**, त्रिः, (हृद्गोलोऽभिजनीऽस्येति ।
छः ।)
हृद्गोलपर्व्वतोद्भवः । इति केचित्

**हृद्ग्रन्थः**, पुं, (हृत् हृदयं ग्रथ्नातीति । ग्रन्थ +

स्वराणां
हक्षौ कोदण्डमध्ये सकलदलगतं वर्णरूपं
नमामि ॥”
इति षट्चक्रभेदः ॥
किञ्च ।
“तस्योद्‌र्ध्वे हृदि पङ्कजं सुललितं
वन्धूककान्त्यु-
ज्ज्वलं
काद्यैर्द्वादशवर्णकैरुपकृतं सिन्दूररागाञ्चितैः ॥
नामानाहतसंज्ञकं सुरतरुं वाञ्छातिरिक्तप्रदं
वायोर्मण्डलमत्र धूमसदृशं षट्कोणशोभान्वि-
तम् ॥”
इति षट्चक्रक्रमः ॥ * ॥
तस्य शुभाशुभलक्षणं यथा, --
“समोन्नतञ्च हृदयमकल्प्यं मांसलं पृथु ।
नृपाणामधमानाञ्च खरलोमशिरालकम् ॥”
इति गारुडे ६६ अध्यायः ॥
(तथास्य विवृतिः ।
“अर्थे दश महामूलः समासक्ता महाफलाः ।
महच्चार्थश्च हृदयं पर्य्यायैरुच्यते बुधैः ॥
षडङ्गमङ्गविज्ञानमिन्द्रियाण्यर्थमञ्चकम् ।
आत्सा च सगुणश्चेतः चिन्त्यञ्च हृदि संश्रितम्
॥

“इति तेभ्यः स्तुस्तीः श्रुत्वा यथार्था
हृदयङ्गमाः ।
प्रसादाभिमुखो वेधाः प्रत्युवाच दिवौकसः
॥”
“हृदयङ्गमाः मनोहराः ।” इति तट्टीकायां
मल्लिनाथः ॥)

**हृदयवान्**, [न्] त्रि, (हृदयमस्यास्तीति मतुप् ।

मस्य वः ।) हृदयालुः । इत्यमरटीकासार-
सुन्दरी ॥

**हृदयस्थानं**, क्ली, (हृदयस्य स्थानम् ।) वक्षः-

स्थलम् । तत्पर्य्यायः । क्रोडम् २ उरः ३
वक्षः ४
वत्सम् ५ भुजान्तरम् ६ । इति हेमचन्द्रः ॥

**हृदयात्मा**, [न्] पुं, हृदयमेव आत्मा प्रधान-

देहभागो यस्य ।) कङ्कपक्षी । इति शब्द-
चन्द्रिका ॥

**हृदयालुः**, त्रि, (प्रशस्तहृदयमस्यास्तीति । हृदय +

५ । २ । १२२ । इत्यत्र
“हृदयाच्चालुरन्यतर-
स्याम् ।” इति काशिकोक्तेः आलुः ।)
प्रशस्त-
मनाः । तत्पर्य्यायः । सुहृदयः २ ।
इत्यमरः ।
३ । १ । ३ ॥ सहृदयः ३ । इति भरतः ॥
हृदयी ४
हृदयिकः ५ हृदयवान् ६ । इति
टीकान्तरम् ॥
चिद्रूपः ७ । इति जटाधरः ॥

**हृदयिकः**, त्रि, (प्रशस्तं हृदयमस्यास्तीति ।

हृदय + ठन् ।) हृदयालुः ।
इत्यमरटीकासार-
सुन्दरी ॥

**हृदयी**, [न्] त्रि, (प्रशस्तं हृदयमस्यातीति ।

इनिः ।) हृदयालुः । इति जटाधरः ॥

अच् ।) हृद्व्रणः । इति राजनिर्घण्टः
॥

**हृद्यं**, क्ली, (हृदयस्य प्रियं मनोज्ञत्वात् । हृदय

+ “हृदयस्य हृल्लेखयदण् लासेषु ।” ६
। ३ । ५० ।
इति यत् हृदादेशश्च ।) गुडत्वक् ।
इति शब्द-
रत्नावली ॥

**हृद्यः**, पुं, (हृदय + यत् । हृदादेशः ।) वशकृद्-

वेदमन्त्रः । इति मेदिनी ॥

**हृद्यः**, त्रि, (हृदयस्य प्रियमिति । हृदय + “हृद-

यस्य हृल्लेखयदण्लासेषु ।” ६ । ३ ।
५० ।
इति यत् हृदादेशश्च ।) मनोहरः ।
इत्यमरः ।
३ । १ । ५३ ॥ अस्य पर्य्यायः
मनोज्ञशब्दे द्रष्टव्यः ॥
हृज्जः । हृद्धितः । हृत्प्रियः । इति
मेदिनी ॥
(यथा, मनौ । ३ । २२७ ।
“भक्ष्यं भोज्यञ्च विविधं मूलानि च
फलानि च ॥
हृद्यानि चैव मांसानि पानानि सुरभीणि
च ॥”)

**हृद्यगन्धं**, क्ली, (हृद्यो गन्धोऽस्य ।)
क्षुद्रजीरकम् ।

इति शब्दचन्द्रिका ॥ सौवर्च्चलम् ।
इति राज-
निर्घण्टः ॥

**हृद्यगन्धः**, पुं, (हृद्यो मनोहरो गन्धोऽस्य ।
विल्व-

वृक्षः । इति जटाधरः ।

**हृद्यगन्धा**, स्त्री, (हृद्यो गन्धोऽस्याः ।) जाती ।

इति राजनिर्घण्टः ॥

**हृद्यगन्धि**, क्ली, (हृद्यो गन्धोऽस्य । इत् समा-

सान्तः ।) क्षुद्रजीरकम् । इति
रत्नमाला ॥

**हृद्या**, स्त्री, (हृद् + यत् । टाप् ।) वृद्धिनामौषधिः ।

इति मेदिनी ॥

**हृद्रोगः**, पुं, कुम्भराशिः । इति शुद्धिदीपिका ॥

(हृदयस्य रोग इव ।) कामः । यथा, --
"हृद्रोगमाश्वपहिनोत्यचिरेण धीरः ।"
इति श्रीभागवतम् ॥
हृदयस्य रोगः ।) हृदयपीडा । तत्र हृद्रो-
गस्य विप्रकृष्टं निदानमाह ।
"अत्युष्णगुर्व्वम्लकषायतिक्त-
श्रमाभिघाताध्ययनप्रसङ्गैः ।
सञ्चिन्तनैर्व्वेगविधारणैश्च
हृदामयः पञ्चविधः प्रदिष्टः ॥"
प्रसङ्गः सततं सेवा । सञ्चिन्तनमतिचिन्ता राज-
भयादिकमिति यावत् । पञ्चविधः वातिकः
पैत्तिकः श्लैष्मिकः सान्निपातिकः क्रिमिज-
श्चेति ॥ * ॥ तस्य संप्राप्तिपूर्व्वकं लक्षणमाह ।
"दूषयित्वा रसं दोषा विगुणा हृदयङ्गताः ।
हृदि वाधां प्रकुर्व्वन्ति हृद्रोगं तं प्रचक्षते ॥"
विगुणाः दुष्टाः । वाधां दोषभेदे नानाविधां
व्यथाम् । भङ्गवत् पीडामिति गयदासः ॥ * ॥
वातिकं हृद्रोगमाह ।
"आयम्यते मारुतजे हृदयं तुद्यते तथा ।
निर्मथ्यते दीर्य्यते च स्फोट्यते पाट्यतेऽपि च ॥"
मारुतजे हृद्रोगे इति शेषः । आयम्यते व्यथया
विस्तार्य्यत इव । तुद्यते सूचीभिरिव । निर्म-
थ्यते मन्थानेनेव । दीर्य्यते करपत्रेण द्विधा
क्रियत इव । स्फोट्यते आरयेव । पाट्यते कुठा-
रेण बहुधा क्रियत इव ॥ * ॥ पैत्तिकमाह ।
"तृष्णोष्मदाहचोषाः स्युः पैत्तिके हृदये क्लमः ।
धूमायनञ्च मूर्च्छाच क्लेदः शोषो मुखस्य च ॥"
उष्मा शीतगात्रस्यैव शीतवाताभिलाषहेतु
किञ्चिदन्तरौष्णम् । दाहः पार्श्वस्थेन वह्निनेव
दुःखहेतुर्गात्रसन्तापः । चोषः चूषणेनेव पीडा ।
हृदये क्लमः हृदयाकुलत्वं ग्लानिरित्यर्थः । धूमा-
यनं कण्ठाद्धूमनिर्गम इव । क्लेदः किञ्चिद्दुर्गन्धः
सटित इव ॥ * ॥ श्लैष्मिकमाह ।
अरुचिः श्यावनेत्रत्वं शोषञ्च कृमिजे भवेत् ॥"
उत्क्लेदः वमनमिवोपस्थितम् । शोषो यक्ष्मा ॥
हृद्रोगस्योपद्रवानाह ।
"क्लोमसादो भ्रमः शोषो
ज्ञेयास्तेषामुपद्रवाः ।
कृमिजे तु कृमीणां ये श्लैष्मिकाणां हि ते मताः ॥"
क्लोम्नः पिपासास्थानस्य सादः शोषः । शोषो
मुखस्य । तेषां हृद्रोगाणाम् । कृमिजे तु हृद्रोगे
श्लैष्मिकाणां कृमीणां ये उपद्रवा हृल्लासात्
प्रस्रवणान्ता विपाकादयस्ते मताः ॥ * ॥ अथ
हृद्रोगस्य विकित्सा ।
"घृतेन दुग्धेन गुडाम्भसा वा
पिबन्ति चूर्णं ककुभत्वचो ये ।
हृद्रोगजीर्णज्वररक्तपित्तं
हत्वा भवेयुश्चिरजीनिनस्ते ॥ १ ॥
हरीतकी वचा रास्ना पिप्पली नागरोद्भवम् ।
षटी पुष्करमूलोत्थं चूर्णं हृद्रोगनाशनम् ॥ २ ॥
पुटदग्धहरिणशृङ्गपिष्टंगव्येन सर्पिषा पिबतः ।
हृत्पृष्ठशूलमचिराद्धैति शान्तिं सुकष्टमपि ॥ ३ ॥
तैलाज्यगुडविपक्वंचूर्णं गोधूमपार्थोत्थम् ।
पिबति पयोमुक् स भवति गतसकलहृदामयः
पुरुषः ॥
पार्थः कौह इति लोके ॥ ४ ॥
गोधूमककुभचूर्णं
पक्वमजाक्षीरगव्यसर्पिर्भ्याम् ।
मधुशर्करासमेतं शमयति हृद्रोगमुल्वणं
पुंसाम् ॥ ५ ॥
पार्थेन कल्केन रसेन सिद्धं
"शुण्ठी सौवर्च्चलं हिङ्गु पीत्वा
हृदयरोगनुत् ।"
इति च गारुडे । १८८ । ४३ ॥

**हृद्रोगवैरी**, [न्] पुं, (हृद्रोगस्य वैरी ।) अर्ज्जुन-
वृक्षः । इति शब्दचन्द्रिका ॥

**हृद्वण्टकः**, पुं, (हृदो वण्टकः ।) जठरम् । इति
शब्दचन्द्रिका ॥

**हृल्लासः**, पुं, (हृदयस्य लासोऽत्र । "हृदयस्य
हृल्लेखयदण्लासेषु । ६ । ३ । ५ । इति
हृदादेशः ।) हिक्का । यथा, --
"हिक्का हेक्का च हृल्लासः
प्रतिस्यायस्तु पीनसः ॥"
इति हेमचन्द्रः ॥
(यथा, सुश्रुते सूत्रस्थाने २६ अध्याये ।
"धमनीस्थे सफेनं रक्तमीरयन्ननिलः सशब्दो
निर्गच्छत्यङ्गमर्द्दः पिपासा हृल्लासश्च ॥") अस्य
निदानादि हिक्काशब्दे द्रष्टव्यम् ॥

**हृल्लेखः**, पुं, (हृदयं लिखतीति अण् । "हृदयस्य
हृल्लेखेति ।" ६ । ३ । ५० । इति
हृदादेशः ।)
ज्ञानम् । इति राजनिर्घण्टः ॥ तर्कः । इति
त्रिकाण्डशेषः ॥

**हृल्लेखा**, स्त्री, (हृल्लेख + अजादित्वात् टाप् ।)
औत्सुक्यम् । इति हलायुधः ॥

**हृष**, उ हृष्टौ । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-अक०-सेट् । क्वावेट् ।)
हृष्टिश्चित्तोत्साहः ।
उ, हर्षित्वा हृष्ट्वा । क्त्वा इमो वेटत्वान्नेम डी-
श्वीत्वादिना इमे निषेधे निष्ठायां हृष्टः

"गौरवं कफसंस्रावोऽरुचिस्तम्भोऽग्निमार्द्दवम्।
माधुर्य्यमपि चास्यस्य वलासा वर्त्तते हृदि ॥"
वलासा वर्त्तते हृदि कुपितकफव्याप्तेः । गौरवं
हृदयस्य । स्तम्भो जडता । मार्दवं जलप्लुत-
मिव । माधुर्य्यं मुखे ॥ * ॥ त्रिदोषजमाह ।
"विद्यात् त्रिदोषमप्येवं सर्व्वलिङ्गं हृदामयम् ॥"
कृमिजमाह । कृमयो जायन्ते अस्मिन्निति
कृमिज इति निरुक्तिः ॥ * ॥ तस्य निदान-
पुर्व्विकां संप्राप्तिमाह ।
"त्रिदोषहेतुहृद्रोगे यो दुरात्मा निषेवते ।
तिलक्षीरगुडादींश्च ग्रन्थिस्तस्योपजायते ॥
मर्म्मैकदेशसंक्लेदं रसश्चाप्युपगच्छति ।
सक्लेदात् कृमयश्चास्य भवन्त्युपहतात्मनः
॥"
मर्म्मैकदेशे हृदयैकदेशे संक्लेदं सटितत्वं रस
उपगच्छति संक्लेदात् । रसस्य सटितत्वात् ।
उपहतात्मनः तिलाद्यहिताहारेण ॥ * ॥ तस्य
लक्षणमाह ।
"उत्क्लेदः ष्ठीवनं तोदः शूलं हृल्लासकस्तमः ।
शस्तं घृतं सर्व्वहृदामयेषु ॥
अर्ज्जुनघृतम् ॥ ६ ॥
घृतं वला नागवलार्ज्जुनानां
क्वाथेन कल्केन च षष्टिकायाः ।
सिद्धं निहन्याद्धृदयामयं हि
सवातरक्तक्षतरक्तपित्तम् ॥"
वलादिघृतम् ॥ ७ ॥ इति हृद्रोगाधिकारः ।
इति भावप्रकाशः ॥ * ॥ अपि च ।
धन्वन्तरिरुवाच ।
"हृद्रोगादिनिदानं ते वक्ष्येऽहं सुश्रुताधुना ।
कृमिहृद्रोगलिङ्गैश्च स्मृताः पञ्च तु
हृद्गदाः ॥
वातेन शूल्यतेऽत्यर्थं तुद्यता रुदतीति च ।
भिद्यते शुष्यते स्तब्धं हृदयं शून्यताद्रवः ॥
अकस्माद्दीनता शोको भयं
शब्दोऽसहिष्णुता ।
वेपथुर्वेपनं मोहः श्वासरोधोऽल्पनिद्रता ॥
पित्तातृष्णा श्रमो दाहः स्वेदोऽम्लः
कफजः
क्रमः ।
छर्दनञ्चाम्लपित्तस्य धूमकम्पितता ज्वरः
॥
श्लेष्मणा हृदयस्तब्धं भावितं
चाश्मगर्भवत् ।
कासास्थिसादनिष्ठेव
निद्रालस्यारुचिर्ज्वरः ॥
सर्व्वलिङ्गं त्रिभिर्दोषैः क्रिमिभिः
श्यामनेत्रता ।
तमःप्रवेशौ हृल्लासः शोफः कण्डुः
कफस्रुतिः ॥
हृदयं प्रततञ्चात्र क्रकचेनेव दार्य्यते ।
चिकित्सेदामयं घोरं तच्छ्रीघ्रं शीघ्रकारणम्
॥"
इति गारुडे । १५८ । १ -- ७ ॥ * ॥
अस्मात् पुषादित्वान्नित्यं ङ इत्यन्ये ।
इति
दुर्गादासः ॥

**हृष**, उ ञि अलीके । इति कविकल्पद्रुमः ॥

(भ्वा०-पर०-सक०-सेट् । क्वावेट् ।)
उ, हर्षित्वा
हृष्ट्वा । ञि, हृष्टोऽस्ति । अलीकं
मिथ्याकरणम् ।
हर्षति कथां नीचः मिथ्या करोति
इत्यर्थः ।
इति दुर्गादासः ॥

**हृष**, य ञि इर् हृष्टौ । इति कविकल्पद्रुमः ॥

(दिवा०-पर०-अक०-सेट् ।) य,
हृष्यति लोकः
सुखात् । ञि, हृष्टोऽस्ति । इर अहृषत्
अह-
र्षीत् । अस्मात् पुषादित्वा न्नित्यं ङ,
इत्यन्ये ।
इति दुर्गादासः ॥

**हृषितं**, त्रि, (हृष् + क्त । वा इट् ।) विस्मृतम् ।

प्रीतम् । प्रहतम् । हृष्टरोम । इति
मेदिनी ॥
प्रणतम् । वर्म्मितम् । इति धरणिः ॥

**हृषी**, पुं, अग्निसोमौ । इति महाभारते मोक्ष-

धर्म्मः ॥

**हृषीकं**, क्ली, (हृष्यत्यनेनेति । हृष +
"अनिहृषिभ्यां

किच्च ।" उणा ० । ४ । १७ । इति
ईकन् ।
स कित् ।) इन्द्रियम् । इत्यमरः । १ ।
५ । ८ ॥
(यथा भागवते । २ । ६ । ३२ ।
"न भारती मेऽङ्गमृषोपलक्ष्यते
न वै क्वचिन्मे मनसो मृषा गतिः ।
न मे हृषिकाणि पतन्त्यसत्पथे
यन्मे हृदोत्कण्ठ्यवता धृतो हरिः ॥")

**हृषीकेशः**, पुं, (हृषीकाणां ईशः ।) विष्णुः ।

मीशो हृषीकेशः क्षेत्रज्ञरूपकत्वात् परमात्म-
त्वाद्वा । इन्द्रियाणि यद्वशे वर्त्तन्ते स पर-
मात्मा । इति शङ्कराचार्य्यः । पौराणिका-
स्त्वाहुः । हृष्टा जगत् प्रीतकराः केशा रश्मयो-
ऽस्य हृषीकेशः । पृषोदरादिः । अयं हि
सूर्य्यरूपश्चन्द्ररूपश्च । तथा च मोक्षधर्म्मे ।
"सूर्य्याचन्द्रमसोः शश्वत् अशुभिः केशसंज्ञितैः ।
बोधयत् खापयच्चैव जगदुद्भिद्यते पृथक् ।
बोधनात् स्वापनाच्चैव जगतो हर्षणं भवेत् ॥
अग्नीसोमकृतैरेव कर्म्मभिः पाण्डुनन्दन ! ।
हृषीकेशोऽहमीशानो वरदो लोकभावनः ॥"
इति भरतः ॥
अपि च ।
"हृषीकाणि नियम्याहं यतः प्रत्यक्षतां गतः ।
हृषीकेश इति ख्यातो नाम्नां तत्रैव संस्थितः ॥"
इति वाराहे रुरुक्षेत्रहृषीकेशमहिमानामा-
ध्यायः ॥ * ॥
"वृथा धर्म्मञ्चरिष्यन्ति कलौ तस्मिन् युगान्तिमे ॥
ये चान्यशापनिर्द्दग्धा गौतमस्य महात्मनः ।
सर्व्वे ते ह भविष्यन्ति ब्राह्मणद्यासु जातिषु ॥
विनिन्दन्ति हृषीकेशं ब्राह्मणान् ब्रह्मवादिनः ।

आह्वानम् । असूयादि । इति मेदिनी ॥ आद्यस्य
पर्य्यायः । प्याट् २ पाट् ३ अङ्ग ४ है ५ भोः ६ ।
इत्यमरः । ३ । ४ । ७ ॥ हंहो ७ हुंहो ८
अरे ९ अये १० अयि ११ । इति भरतः ॥

**हेक्का**, स्त्री, (हेक् इति अव्यक्तं शब्दं कायतीति ।
कै + कः । टाप् ।) हिक्का । इति हेमचन्द्रः ॥

**हेठ**, वाधे । इति कविकल्पद्रुमः ॥ भ्वा०-पर०-
सक०-सेट् । हेठति । वाधो विहतिः । इति
दुर्गादासः ॥

**हेठ**, ऋ ङ वाधे । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) ऋ, अजिहेठत् । ङ,
हेठते मत्सरः साधुम् । इति दुर्गादासः ॥

**हेठ**, श खचे । इति कविकल्पद्रुमः ॥ (तुदा०-
पर०-उत्पत्तौ अक०-पवित्रीकरणे सक०-सेट् ।)
खचो भूतिपूत्योरुत्पत्तिः । श, हेठती हेठन्ती ।
इति दुर्गादासः ॥

**हेठ**, पुं, (हेठ + घञ् ।) वाधा । विहेठः । इति
मेदिनी ॥

**हेड**, ङ ऋ अनादरे । इति कविकल्पद्रुमः ॥
(भ्वा०-आत्म०-सक०-सेट् ।) ङ, हेडते
जिहेडे । ऋ, अजिहेडत् । इति दुर्गादासः ॥

**हेड**, म वेष्टे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) म, हेडयति अहिडि अहीडि
हिडं हिडं हीडं हीडम् । एकारस्य ह्रस्व-
विधाने कण्ठ्यत्वेन समानोऽप्यकारो न स्यात्
एचो युत्स्वमित्युक्तेरिकार एव स्यात् । इका-

**हेतुः**, पुं, (हिनोति व्याप्नोति कार्य्यमिति । हि +
"कमिमनिजनिगाभायाहिभ्यश्च ।" उणा ०१ ।
७३ । इति तुः ।) कारणम् । इत्यमरः । १ । ४ ।
२९ ॥
यथा, मनुः । ८ । ३ ।
"प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः ।
अष्टादशसु मार्गेषु निबद्धानि पृथक् पृथक् ॥")
न्यायमते व्यापकज्ञापकः । व्याप्य इति यावत् ।
तमेव लिङ्गमामनन्ति । तस्य लहणं यथा ।
हेतुत्वञ्च अनुमितिकारणीभूतलिङ्गपरामर्श-
प्रयोजकशाब्दाज्ञानकारणसाध्याविषयकशाब्द
धीजनकहेतुविभक्तिमच्छब्दत्वम् । हेतुत्वप्रति-
पादकविभक्तिमन्न्यायावयवत्वंवा । उदाहरण-
प्रयोजकाकाङ्क्षाजनकशाब्दज्ञानजनकन्यायाव
यवत्वं वा । साध्याविषयकज्ञानजनकहेतुपञ्चम्य-
न्तानुमितिपरशब्दत्वंवा । प्रतिज्ञावाक्यधीजन्य-
कारणाकाङ्क्षानिवर्त्तकज्ञानजनकहेतुविभक्तिम-
द्वाक्यत्वं वा । पञ्चम्यन्तलाक्षणिकपदवदनुमिति-
परवाक्यत्वं वा । इति गङ्गेशोपाध्यायकृतावयत-
चिन्तामणिः ॥ (तथास्य लक्षणम् । "अथ हेतुः ।
हेतुर्नामोपलब्धिकारणम् तत्प्रत्यक्षमनुमान-
मैतिह्यमौपम्यमेभिर्हेतुभिर्यदुपलभ्यते तत्तत्त्वम् ।"
इति चरके विमानस्थाने अष्टमेऽध्याये ॥
तथास्य पर्य्यायः । "इह खलु हेतुर्निमित्तमाय-
तनं कर्त्ता कारणं प्रत्ययः समुत्थानं निदान-
मित्यनर्थान्तरम् ।" इति च चरके निदानस्थाने
प्रथमेऽध्याये ॥ तैजसधातुविशेषः । तत्पर्य्यायो
यथा, --
"यसदं रङ्गसदृशं रीति हेतुश्च तन्मतम् ।"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**हेतुकः**, पुं, कारणम् । हेतुरेव स्वार्थे कः । तत्-
सम्बन्धिनि, त्रि । अत्र बहुव्रीह्यर्थे कप्रत्ययः ।
यथा प्रकृतसाध्यहेतुकानुमितिपरत्वमावश्य-
कम् । इति सामान्यनिरक्तिगादाधरी॥

**हेतुता**, स्त्री, (हेतोर्भावः । हेतु + तल् ।) कार-
णता । हेतुत्वम् । यथा, --
"सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा ।
निर्ब्बाहकैककार्य्यत्वे षोढा सङ्गतिरिष्यते ॥"

वेदवाह्या व्रताचारा दुराचारा
वृथाश्रमाः ॥
मोहयन्ति जनान् सर्व्वान्
दर्शयित्वा फलानि च ।
तमसाविष्टमनसो
वैडालव्रतिकाधमाः ॥
कलौ रुद्रो महादेवो
लोकानामीश्वरः परः ॥
न देवता भवो नृणां देवतानाञ्च
दैवतम् ।
करिष्यत्यवताराणि शङ्करो
नीललोहितः ॥
श्रौतस्मार्त्तप्रतिष्ठार्थं भक्तानां
हितकाम्यया ।
उपदेक्ष्यन्ति तज्ज्ञानं शिष्याणां
ब्रह्मसंहितम् ॥”
इति कौर्म्मे २७ अध्यायः ॥

**हृष्टः**, त्रि, (हृष् + क्त । वा इट् ।) प्रीतः ।
जात-
हर्षः । इत्यमरः । ३ । १ । १०३
॥ अस्य
पर्य्यायः प्रोतशब्दे द्रष्टव्यः ।
रोमाञ्चितः ।
प्रहसितः । विस्मितः । इति
विश्वमेदिन्यौ ॥
प्रतिहतः । इति हेमचन्द्रः ॥

**हृष्टमानसः**, त्रि, (हृष्टं मानसं यस्य । हृष्ट-
चित्तः । तत्पर्य्यायः । हर्षमाणः २
। विकु-
र्व्वाणः ३ प्रमनाः ४ । इत्यमरः ।
३ । १ । ७ ॥
प्रीतमानसः ५ । इति
शब्दरत्नावली ॥

**हृष्टरोमा**, [न्] त्रि, (हृष्टानि रोमाण्यस्य ।)
रोमाञ्चितः । इति त्रिकाण्डशेषः ॥
(यथा,
रुग्विनिश्चये ज्वराधिकारे ॥
“यो हृष्टरोमा रक्ताक्षो हृदि
सङ्घातशूलवान् ।
रस्य दीर्घविधौ ईकार एव एकारस्य
आंशिक-
कण्ठ्यत्वेन विरुद्धत्वात् । केचित्तु दीर्घत्वे
गुणं
विधाय अहिडि अहेडीत्यादि मन्यन्ते ।
इति
दुर्गादासः ॥

**हेडजः**, पुं, (हेडादनारदाराज्जायत इति । जन +
डः ।) क्रोधः । इति केचित् ॥

**हेडावुक्कः**, पुं, अश्वविक्रयकारी । इति त्रिकाण्ड-
शेषः ॥

**हेतिः**, स्त्री, (हन्यतेऽनयेति । हन + “ऊतियूति-
जूतिसातिहेतिकीर्त्तयश्च ।” ३ । ३ । ९७
।
इति क्तिन् । निपातितश्च ।) अस्त्रम् ।
(यथा,
रघुः । १० । १२ ।
“दैत्यस्त्रीगण्डलेखानां मदरागविलोपिभिः
।
हेतिभिश्चेतनावद्भिरुदीरितजयस्वनम् ॥”
हिनोति इति । हि + क्तिन् । निपातितश्च
।)
सूर्य्यकिरणः । अग्निशिखा । इत्यमरः । ३
।
३ । ७० ॥ शिखा । तत्रैव । १ । १ । ६०
॥
तेजोमात्रम् । इति भरतः ॥ साधनम् ।
यथा, --
“सध्रुङ्नियम्य यतयो यमकर्त्तहेतिं
जह्युः स्वराडिव निपानखनित्रमिन्द्रः ॥”
इति श्रीभागवते । २ । ७ । ४७ ॥
कर्त्तो भेदः तन्निरासोऽकर्त्तः तत्र हेतिं
साधनं
जह्युः । इति श्रीधरस्वामी ॥ पुं,
असुरविशेषः ।
यथा, भागवते । ६ । १० । २० ।
“पुनोमा वृषपर्व्वा च प्रहेतिर्हेतिरुत्कलः ।
दैत्येया दानवा यक्षा रक्षांसि च सहस्रशः
॥”)
इत्यनुमितिजागदीशी ॥

**हेतुमान्**, [त्] त्रि, (हेतुरस्यास्तीति । हेतु +
मतुप् ।) कारणवान् । यथा । हेतुहेतुमतो-
र्लिङ् । इति पाणिनिसूत्रम् ॥

**हेतौ**, व्य, हेतुना । हेतोर्द्वारा । इति केचित् ॥

**हेत्वाभासः**, पुं, (हेतुरिव आभासते । आ + भास
+ अच् । हेतोरामासो वेति । आ + भास +
घञ् ।) हेतुदोषः । स तु पञ्चविधः । व्यभि-
चारः १ विरुद्धः २ असिद्धः ३ सत्प्रतिपक्षः ४
वाधः ५ । यथा, --
“अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः ।
कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा ॥
आद्यः साधारणस्तु स्यात् स्यादसाधारणो-
ऽपरः ।
तथैवानुपसंहारी त्रिधानैकान्तिको भवेत् ॥

वक्त्रेण चैवाच्छसिति तं ज्वरो

हन्ति मानवम् ॥”)

**हृष्टिः**, स्त्री, (हृष् + क्तिन् ।) आनन्दः । मानः ।

इति धरणिः ॥

**हे**, व्य, (हिनोतीति । हि + बाहुलकात् डे ।)

सम्बोधनम् । (यथा,

बृहत्संहितायाम् । ७४ । ११ ।

“जाया वा स्याज्जनित्री वा

सम्भवः स्त्रीकृतो

नृणाम् ।

हे कृतघ्नास्तयोर्न्निन्दां कुर्व्वतां वः

कुतः

सुखम् ॥”)

यः सपक्षे विपक्षे च स तु साधारणो मतः ।
यस्तूभयस्माद्‌व्यावृत्तः स त्वसाधारणो मतः ॥
तथैवानुपसंहारी केवलान्वयिपक्षकः ।
यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः ॥
आश्रयासिद्धिराद्या स्यात् स्वरूपासिद्धिरप्यथ ।
व्याप्यत्वासिद्धिरपरा स्यादसिद्धिरतस्त्रिधा ॥
पक्षासिद्धिर्यत्र पक्षो भवेन्मणिमयो गिरिः ।
ह्रदो द्रव्यं धूमवत्त्वादत्रासिद्धिरथापरा ॥
व्याप्यत्वासिद्धिरपरा नीलधूमादिके भवेत् ।
विरुद्धयोः परामर्शो हेत्वोः सत्प्रतिपक्षता ॥
साध्यशून्यो यत्र पक्षस्त्वसौ वाध उदाहृतः ।
उत्पत्तिकालीनघटे गन्धादिर्यत्र साध्यते ॥”
इति भाषापरिच्छेदः ॥ * ॥
तस्य सामान्यलक्षणानि यथा । अनुमिति-कारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वम् । यद्विषयत्वेन लिङ्गज्ञानस्यानुमितिप्रतिबन्धकत्वम् । ज्ञायमानं सत् यदनुमितिप्रतिबन्धकं तत्त्वं वा हेत्वाभासत्वम् ॥ * ॥ तस्य विशेषलक्षणानि यथा । उभयकोट्युपस्थापकतावच्छेदकरूपवत्त्वं तत्त्वम् । विरुद्धान्यपक्षवृत्तित्वे सति अनुमितिविरोधिसम्बन्धाव्याप्तिवृत्तिर्व्वा अनैकान्तिकः । विपक्षवृत्तित्वं साधारणत्वम् । सर्व्वसपक्षव्यावृत्तो हेतुरसाधारणः । व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभावो यत्र स हेत्वभिमतोऽनुपसंहार्य्यः ॥ * ॥ साध्यव्यापकाभावप्रतियोगित्वं विरुद्धत्वम् ॥ * ॥ साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्ध-

स्निग्धमूर्त्तिरलघुश्च हिताय
व्यत्ययेन शुभकृच्छशिपुत्रः ॥”)

**हेमकारः**, पुं, (हेम हेममयं भूषणं करोतीति । कृ + अण् ।) हेमकर्त्ता । स्वर्णकारः । यथा,
“सर्व्वसङ्करपापिष्ठं हेमकारं नराधिपः ।
अन्याये वर्त्तमानञ्च छेदयेत्त्वरसा क्षुरैः ॥”
इति मत्स्यपुराणे । २२७ । १८५ ॥

**हेमकिञ्जल्कं**, क्ली, (हेमवर्णं किञ्जल्कमस्य ।) नागकेशरम् । इति राजनिर्घण्टः ॥ (नागकेशरशब्देऽस्य विषयो ज्ञातव्यः ॥)

**हेमकूटः**, पुं, (हेममयः कूटो यस्य ।) पर्व्वतविशेषः । इत्यमरः । २ । ३ । ३ ॥ स तु किंपुरुषवर्षस्य सीमापर्व्वतः । नवतिसहस्रयोजनदीर्घः । द्विसहस्रयोजनप्रस्थः । द्विसहस्रयोजनविस्तारः । हिमालयादुत्तरेस्थितः । इति श्रीभागवतमतम् ॥ (यथा, महाभारते । ३ । ११० । २ ।
“पर्व्वतं स समासाद्य हेमकूटमनामयम् ।
अचिन्त्यानद्भुतान् भावान् ददर्श सुबहून्नृपः ॥”)

**हेमकेतकी**, स्त्री, (हेमवर्णा केतकी ।) स्वर्णकेतकी । इति राजनिर्घण्टः ॥

**हेमकेलिः**, पुं, (हेमवर्णः केलिः कम्पनादिः यस्य ।) अग्निः । इति शब्दमाला ॥

**हेमकेशः**, पुं, (हेमवर्णः केशोऽस्य । जटाया पीत-

हेमचन्द्रप्रणीताभिधानचिन्तामणिर्म्मणिः ॥”
इति तस्य सूचीकारश्लोकः ॥
स्वर्णमयशशी च । सोणार चाद इति भाषा ॥

**हेमज्वालः**, पुं, (हेमवर्णा ज्वालास्य ।) अग्निः । इति शब्दमाला ॥

**हेमतारं**, क्ली, (हेम तारयति उत्कर्षं नयति । तॄ + णिच् + अच् ।) तुत्थम् । इति हेमचन्द्रः ॥ (तुत्थशब्देऽस्य विवृतिर्ज्ञातव्या ॥)

**हेमदुग्धः**, पुं, (हेमवर्णं दुग्धं निर्य्यासोऽस्य ।) उडुम्बरवृक्षः । इति शब्दरत्नावली ॥

**हेमदुग्धकः**, पुं, (हेमवर्णं दुग्धं निर्य्यासोऽस्य । कप् ।) उडुम्बरवृक्षः । इत्यमरः । १ । ४ । १२ ॥
(पर्य्यायो यथा, --
“उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ।”
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
पीतवर्णक्षीरयुक्ते, त्रि ॥

**हेमदुग्धा**, स्त्री, (हेमवर्णं दुग्धं निर्य्यासोऽस्याः ।) स्वर्णक्षीरी । इति जटाधरः ॥ (गुणादयोऽस्याः स्वर्णक्षीरीशब्दे बोद्धव्याः ॥)

**हेमदुग्धी**, [न्] पुं, (हेमवर्णं दुग्धं निर्य्यासोऽस्यास्तीति । इनिः ।) यज्ञोडुम्बरवृक्षः । इति शब्दरत्नावली ॥

**हेमदुग्धी**, स्त्री, (हेमवर्णं दुग्धं निर्य्यासोऽस्याः । ङीष् ।) स्वर्णक्षीरी । इति राजनिर्घण्टः ॥

**हेमन्तः**, पुं, क्ली, (हन्ति लोकान् शैत्येनेति । हन् + “हन्ते र्मुठि च ।” उणा ०३ । १२९ । इति झच् हन्तेर्हि चेति हिरादेशः मुडागमो गुणश्च ।) ऋतुविशेषः । स तु अग्रहायणपौषमासात्मकः । यथा । षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमादिति वक्ष्यमाणेनान्वयः । ते के इत्याह हेमन्त इत्यादि मार्गपौषाभ्यां

कार्य्यलिङ्गत्वंतत्वं सत्प्रतिपक्षितत्वम् ॥ * ॥ व्याप्ति-
पक्षधर्म्मतानिश्चयविरोधिरूपवत्त्वंअसिद्धिः ।
पक्षनिष्ठ-प्रमाविषयत्व-प्रकारामाव-प्रतियोगि-
साध्यकत्वं वाधः । इति चिन्तामणिः ॥

**हेम**, [न्] क्ली, (हिनोति वर्द्धते स्फुटति वेति ।
हि + मनिन् ।) स्वर्णम् । यथा, रघौ । १ । १० ।
“हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि-
वा ॥”)
धुस्तूरम् । इत्यमरः । १ । ९ । ९४ ; ३ । ५ । २३ ॥
केशरम् । इति राजनिर्घण्टः ॥ हिमः । इति
हेमन्तशब्दटीकायां भरतधृतमाधवी ॥

**हेमं**, क्ली, (हि + मन् ।) सुवर्णम् । इति केचित् ॥

**हेमः**, पुं, (हि + मन् ।) माषकपरिमाणम् । इति
वैद्यकपरिभाषा ॥ कृष्णवर्णाश्वः । बुधः । इति
केचित् ॥ (ययातिवंशजरुषद्रथपुत्त्रः । यथा,
विष्णुपुराणे । ४ । १८ । १ ।
“तितिक्षोरुषद्रथः
पुत्त्रोऽभूत ततो हेमः हेमात् सुतपाः ॥”)

**हेमकन्दलः**, पुं, (हेमवर्णं कन्दलं नवाङ्कुरोऽस्य ।
यद्वा, हेमवर्णं कन्दं लातीति । ला + कः ।)
प्रबालः । इति हेमचन्द्रः ॥

**हेमकान्तिः**, स्त्री, (हेमवत् कान्तिरस्याः ।) दारु-
हरिद्रा । इति राजनिर्घण्टः ॥ स्वर्णद्युतिमति,
त्रि ॥ (यथा, बृहत्महितायाम् । ७ । २० ।
“हेमकान्तिरथवा शुकवर्णः
सस्यकेन मणिना सदृशो वा ।
त्वात् तथात्वम् ।) शिवः । इति
केचित् ॥

**हेमक्षीरी**, स्त्री, (हेमेव पीतवर्णं क्षीरं निर्य्यासो
यस्याः । ङीष् ।) स्वर्णक्षीरी । इति राज-
निर्घण्टः ॥ पर्य्यायोऽस्या यथा, --
“हेमक्षीरी स्मृता प्रीता गौरी च काल-
दुग्धिका ।”
इति गारुडे २०८ अध्यायः ॥
“कटुपर्णी हैमवती हेमक्षीरी हिमावती ।
हेमाह्वा पीतदुग्धा च
तन्मूलञ्चोकमुच्यते ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे
भागे ॥)

**हेमगन्धिनी**, स्त्री, (हेम्नः नागकेशरस्येव गन्धो-
ऽस्ति अस्याः । इनिः ।)
रेणुकाख्यगन्धद्रव्यम् ।
इति रत्नमाला ॥

**हेमगौरः**, पुं, (हेमवत् गौरः ।) किङ्किरातवृक्षः ।
इति राजनिर्घण्टः ॥ (यथास्य
पर्य्यायः ।
“किङ्किरातो हेमगौरः पीतकः
पीतभद्रकः ॥”
इति मावप्रकाशस्य पूर्व्वखण्डे प्रथमे
भागे ॥)
स्वर्णवद्गौरवर्णयुक्ते, त्रि ॥

**हेमगौराङ्गः**, त्रि, (हेमानीव गौराणि अङ्गा-
न्यस्य ।)
स्वर्णतुल्यगौरवर्णाङ्गविशिष्टः । यथा,
“विषेणोत्तिष्ठमानेन
कालानलसमत्विषा ।
निर्द्दग्धहेमगौराङ्गः कृतः कृष्णो
जनार्द्दनः ॥
तं दृष्ट्वा हेमगोराङ्गं कृतं कृष्णं
जनार्द्दनम् ।
ततः सर्व्वे वयं भीतास्त्वामेव शरणं
गताः ॥”
ऋतुर्हेमन्तः । हन्ति सन्तापमिति । हिमो-
ऽन्तोऽस्येति वा मनीषादित्वात् हेमन्तः । अर्द्ध-
र्च्चादिरयमिति केचित् । तेन अस्त्रियामित्य-
स्यानेनापि सम्बन्धः । हेमन्शब्दोऽप्यस्तीति
माधवी । इति भरतः ॥ तत्पर्य्यायः । हैमनः २ ।
इति शब्दरत्नावली ॥ उष्मासहः ३ शरदन्तः ४
हिमागमः ५ । तत्कालोद्भवजलगुणाः ।
“हैमन्तिकं जलं स्निग्धं वृष्यं बल्यं हितं गुरु ।”
इति राजनिर्घण्टः ॥ * ॥
तत्र लोकप्रतपनार्थमग्निप्रदानफलं यथा, --
“हेमन्ते शिशिरे चैव पुण्याग्निं यः प्रयच्छति ।
सर्व्वलोकप्रतापार्थं स पुण्यां गतिमाप्नुयात् ॥”
इति वह्निपुराणे कन्यादाननामाध्यायः ॥
तत्र भगवत्समीपे अग्निप्रज्वालनविधिः सेवा-
शब्दे द्रष्टव्यः ॥ * ॥ तत्र वर्णनीयानि ।
“हेमन्ते दिनलघुता शीतयवस्तम्बमरुवक-
हिमानि ।”
इति कविकल्पलता ॥

**हेमन्तनाथः**, पुं, (हेमन्ते नाथ्यते याच्यते इति ।
नाथ + कर्म्मणि घञ् ।) कपित्थः । इति शब्द-
चन्द्रिका ॥ (कपित्थशब्देऽस्य विषयो
ज्ञातव्यः ॥)

इति स्कान्दे नीलकण्ठस्तोत्रम् ॥

**हेमचन्द्रः**, पुं, अभिधानचिन्तामणिनामकोष

कर्त्ता । यथा, --

“सानेकार्थनाममालात्मकः कोषवरः शुभः ।

**हेमपर्व्वतः**, पुं, (हेममयः पर्व्वतः ।) सुमेरुगिरिः ।

इति हलायुधः ॥

**हेमपुष्पं**, क्ली, (हेमवर्णं पुष्पम् ।) अशोकपुष्पम् ।

जवापुष्पम् । इति मेदिनी ॥

**हेमपुष्पः**, पुं, हेमवर्णं पुष्पं यस्य ।) चम्पकवृक्षः ।

इति शब्दचन्द्रिका ॥ (अस्य पर्य्यायो यथा, --
"चाम्पेयश्चम्पकः प्रोक्तो
हेमपुष्पश्च स स्मृतः ॥"
अशोकः । अस्य पर्य्यायो यथा, --
अशोको हेमपुष्पश्च
बञ्जुलस्ताम्रपल्लवः ।
कङ्केलिः पिण्डपुष्पश्च गन्धपुष्पो
नटस्तथा ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ॥)

**हेमपुष्पकः**, पुं, (हेमवर्णं पुष्पं यस्य । कप् ।)

चम्पकवृक्षः । इत्यमरः । २ । ४ ।
६३ ॥ लोध्रः ।
इति राजनिर्घण्टः ॥

**हेमपुष्पिका**, स्त्री, हेमवर्णं पुष्पं यस्याः । कन्

+ टाप् । अत इत्त्वम् ।)
स्वर्णयूथिका । इत्य-
मरः । २ । ४ । ७१ ॥ (तथास्याः
पर्य्यायः ।
"यूथिका गणिकाम्बष्ठा सा पीता
हेमपुष्पिका ।"
इति भावप्रकाशस्य पूर्ब्बखण्डे
प्रथमे भागे ॥)

**हेमपुष्पी**, स्त्री, (हेमवर्णं पुष्पमस्याः । गौरा-

दित्वात् ङीष् ।) मञ्जिष्ठा । इति
शब्दमाला ॥
स्वर्णजीवन्ती । इन्द्रवारुणी ।
स्वर्णुली । मुषली ।

**हेमशङ्खः**, पुं, (हेमवर्णः शङ्खोऽस्य ।) विष्णुः ।

इति त्रिकाण्डशेषः ॥

**हेमशिखा**, स्त्री, (हेमवर्णा शिखास्याः ।) स्वर्ण

क्षीरी । इति शब्दरत्नावली ॥

**हेमसार**, क्ली, (हेम सारयति निर्म्मलीकरो-

तीति । सृ + णिच् + अण् ।) तुत्थम् । यथा --
"तत्थके तु शिखिग्रीवं हेमसारं मयूरकम् ।"
इति रसचन्द्रिका ॥

**हेमसूत्रकं**, क्ली, (हेम्नः सूत्रमत्र । कप् ।)

हारविशेषः । इति धरणिः ॥

**हेमहस्तिरथः**, पुं, (हेमनिर्म्मतहस्तिविशिष्टो

रथो यत्र । स तु दानार्थं कल्पितः ।) महा-
दानविशेषः । तद्विवरणं यथा, --
"अथातः संप्रवक्ष्यामि हेमहस्तिरथं शुभम् ।
यस्य प्रदानात् भवनं वैष्णवं याति मानवः ॥
पुण्यां तिथिं समासाद्य तुलापुरुषदान-
वत् ।
विप्रवाचनकं कुर्य्यात् लोकेशावाहन बुधः ॥
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम्।
अत्राप्युपोषितस्तद्वत् ब्राह्मणैः सह भोजनम् ॥
कुर्य्यात् पुष्परथाकारं काञ्चनं मणिमण्डि-
तम् ।
वलभीभिर्विचित्राभिश्चतश्चक्रसमन्वितम्॥
लोकपालाष्टकोपेतं ब्रह्मार्कशिवसंयुतम् ।
मध्ये नारायणोपेतं लक्ष्म्या चैव समन्वितम् ॥
कृष्णाजिनतिलद्रोणं कृत्वा संस्थापयेद्रथम् ।
तथाष्टादश धान्यानि भाजनामनचन्दनैः ॥
दीपकोपानहच्छत्रदर्पणं पादुकान्वितम् ।
ध्वजे तु गरुडं कुर्य्यात् कूवराग्रे विनायकम् ॥
नानाफलसमायुक्तमुपरिष्टाद्वितानकम्।
कौषेयपञ्चवस्त्रञ्च अम्लानकुसुमान्वितम् ॥
चतुर्भिः कलसैः मार्द्धं गोभिरष्टाभिरन्वितम्।
चतुर्भिर्हेममातङ्गैर्मुक्तादामविभूषितम्॥
स्वरूपतः करिभ्यान्तु युक्तं कृत्वा निवेदयेत् ।
कुर्य्यात् पञ्चपलादूर्द्ध्वमभावादपि शक्तितः ॥
ततो मङ्गलशब्देन स्नापितो वेदपुङ्गवैः ।

विद्याधरामरमुनीन्द्रगणाभिजुष्टं
प्राप्नोत्यसौ पदमतीन्द्रियमिन्दुमौलेः ॥
कृतदुरितवितानातुल्लसद्वह्निजाल-
व्यतिकरकृतदाहोद्वेगभाजोऽपि बन्धून् ।
नयति च पितृपुत्रान् बान्धवानप्यशेषान्
कृतगजरथदान शाश्वतं सद्म विष्णोः ॥"
इति मत्स्यपुराणे महादानानुकीर्त्तने हेम-
हस्तिरथप्रदानिको नाम २९२ अध्यायः ॥

**हेमा**, [न्] पुं, बुधग्रहः । इति त्रिकाण्डशेषः ॥

**हेमा**, स्त्री, (हेम हेमवर्णमत्स्यस्या इति अच् ।

टाप् ।) अप्सरसः । सुन्दरी स्त्री । इति
केचित् ॥

**हेमाङ्गः**, पुं, (हेमेव पीतवर्णमङ्गं यस्य ।) गरुडः ।

सिंहः । सुमेरुः । ब्रह्मा । इति मेविनी ॥
चम्पक-
वृक्षः । इति शब्दरत्नावली ॥ विष्णुः । इति
तस्य सहस्रनामस्तोत्रम् ॥ हेमवर्णशरीरे,
क्ली ।
तद्युक्ते, त्रि ॥

**हेमाद्रिः**, पुं, (हेममयोऽद्रिः ।) सुमेरुपर्व्वतः ।

इत्यमरः । १ । १ । ५२ ॥
क्षत्त्रियराजविशेषः ॥
स च चिन्तामणिकामधेनुकल्पद्रुमनामक-
स्मृतिसंग्रहकारकः । यथा, --
"तस्यास्ति नाम हेमाद्रिः सर्व्वश्रीकरण-
प्रभु
निजोदारतया यश्च सर्व्वश्रीकरणप्रभुः ॥
अनेन चिन्तामणिकामधेनु-
कल्पद्रुमानर्थिजनाय दत्तान् ।
विलोक्य शङ्के किममुष्य सर्व्व-
गीर्व्वाणनाथोऽपि करप्रदोऽभूत् ॥
अथामुना धर्म्मकथादरिद्रं
त्रैलोक्यमालोक्य कलेर्बलेन ।
तस्योपकारे दधतानुचिन्तां
चिन्तामणिः प्रादुरकारि चारुः ॥
पञ्चखण्डात्मके शास्त्रे व्रतखण्डादनन्तरम् ।
दानखण्डमिदं तत्र द्वितीयमथ कथ्यते ॥"

कण्टकारी । इति राजनिर्घण्टः ॥

**हेमफला**, स्त्री, हेमवर्णानि फलान्यस्याः ।)

स्वर्णकदली । इति राजनिर्घण्टः ॥

**हेममाला**, स्त्री, यमपत्नी । इति केचित् । हेम-

निर्म्मिता माला ।) स्वर्णस्रक् ॥

**हेममाली**, [न्] पुं, (हेमेव किरणानां माला-

स्त्यस्य । इनिः ।) सूर्य्यः । यथा भविष्ये ।
"या शुक्ला कुरुशार्दूल ! वैशाखे मासि वै
तिथिः ।
तृतीया साक्षया लोके गीर्व्वाणैरभिवन्दिता ॥
योऽस्यां ददाति करकान् वारिवाजसमन्वि-
तान् ।
स याति पुरुषो वीर ! लोकान् वै हेम-
मालिनः ॥"
हेममालिनः सूर्य्यस्य । इति तिथ्यादितत्त्वम् ॥
(स्वर्णमालाविशिष्टे, त्रि ॥)

**हेमयूथिका**, स्त्री, (हेमवर्णा यूथिका ।) स्वर्ण-

यूथिका । इति राजनिर्घण्टः ॥

**हेमरागिणी**, स्त्री, (हेम्न इव रागोऽस्या

अस्तीति । इनिः । ङीप् ।) हरिद्रा । इति
त्रिकाण्डशेषः ॥

**हेमलः**, पुं, (हेमतदंशं लाति गृह्णातीति । ला +

कः ।) स्वर्णकारः । कृकलासः । प्रस्तरभेदः ।
स तु कषपाषाणः । इति मेदिनी ॥

**हेमलता**, स्त्री, (हेमवर्णा लता ।) स्वर्णजीवन्ती ।

इति राजनिर्घण्टः ॥
(स्वर्णजीवन्तीशब्देऽस्या
त्रिः प्रदक्षिणमावृत्य गृहीतकुसुमाञ्जलिः ॥
इममुच्चारयन्मन्त्रं ब्राह्मणेभ्यो निवेदयेत् ॥
नमो नमः शङ्करपद्मजार्क-
लोकेशविद्याधरवासुदेवैः ।
त्वं मन्यसे वेद पुराण यज्ञ
तेजोमयस्यन्दन पाहि तस्मात् ॥
यत्तत् पदं परमगुह्यतमं मुरारे-
रानन्दहेतु गुणरूपविमुक्तमन्तः ।
योगैकमानसदृशो मुनयः समाधौ
पश्यन्ति तत्त्वमसि नाथ रथेऽधिरूढः ॥
यस्मात्त्वमेव भवसागरसंप्लुताना-
मानन्दभाण्डभृतमध्वरपानपात्रम् ।
तस्मादघौघशमनेन कुरुप्रसादं
चामीकरेभरथमाधवसंप्रदानात् ॥
इत्थं प्रणम्य कनकेभरथप्रदानं
यः कारयेत् सकलपापविमुक्तदेहः ।
इति तत्कृतचतुर्व्वर्गचिन्तामणौ दानखण्डीय-
श्लोकाः ॥

**हेमाद्रिजगणः**, पुं, (हेमाद्रौ जोर्य्यतीति । जॄ +

ल्युः ।) स्वर्णक्षीरी । इति रत्नमाला ॥ (अस्य
पर्य्यायविवरणादिकं स्वर्णक्षीरीशब्दे ज्ञात-
व्यम् ॥)

**हेमाह्वः**, पुं, (हेम हमवर्णमाह्वयते स्ववर्णेन

स्पर्द्धते इति । आ + ह्वे + कः ।) वनचम्पकः ।
इति राजनिर्घण्टः ॥ (हेम्न आह्वा आह्वा
यस्य ।) धुस्तूरः । कनकाह्वयशब्ददर्शनात् ॥

**हेमाह्वा**, स्त्री, (हेम्न आह्वा आह्वा आख्या

यस्याः ।) स्वर्णजीवन्ती । इति राजनिर्घण्टः ॥

**हेम्ना**, पुं, बुधग्रहः । यथा, --

"हेलिः सूर्य्यश्चन्द्रमाः शीतरश्मि-
र्हेम्ना विज्ञो बोधनश्चेन्द्रपुत्त्रः ।"
इति ज्योतिस्तत्त्वम् ॥

**हेयः**, त्रि, (हा + "अचो यत् ।" ३ । १ । ९७

इति यत् । "ईद्यति ।" । ६ । ४ । ६५ । इति

विषयो ज्ञातव्यः ॥)

**हेमवलं**, क्ली, (हेम्ना वलते शोभते इति ।

वल् + अच् ।) मौक्तिकम् । इति

राजनिर्घण्टः ॥

हिमवलमिति साधुपाठः ॥

आत ईत् । गुणः ।) त्याज्यः । यथा, --
"ऊषरा वालुकाक्लिन्ना" इत्यादुपक्रम्य ।
"वास्तुखण्डे महादोषा हेयास्तस्माद्विचक्षणैः ॥"
इति युक्तिकल्पतरुः ॥

**हेरं**, त्रि, (हि + रन् ।) मुकुटभेदः । हरिद्रा ।
आसुरी माया । इति केचित् ॥

**हेरम्बः**, पुं, (हे रणे शिवसमीपे वा रम्बते इति ।
रवि शब्दे + पचाद्यच् ।) गणेशः । इत्यमरः । १ ।
१ । ४१ ॥ महिषः । शौर्य्यगर्व्वितः । इति मेदिनी
॥
बुद्धविशेषः । तत्पर्य्यायः । हेरुकः २ चक्रसम्बरः
३ देवः ४ वज्रकपाली ५ निशुम्भो ६ शशि-
शेखरः ७ वज्रटीकः ८ । इति त्रिकाण्ड-
शेषः ॥ * ॥ अथ हेरम्बमन्त्रः । स च ऊकार-
युक्तो गकारः सबिन्दुः प्रणवादिनमोऽन्तश्चतु-
रक्षरः । निबन्धे ।
"पञ्चान्तको बिन्दुयुक्तो वामकर्णविभूषितः ।
तारादिहृदयान्तोऽयं हेरम्बमनुरीरितः ।
चतुर्वर्णात्मको नृणां चतुर्वर्गफलप्रदः ॥"
अस्य पूजाप्रयोगः । प्रातःकृत्यादिपीठन्यासान्तं
विधाय गणेशोक्तपीठशक्तीः पीठमनुञ्च विन्यस्य
ऋष्यादिन्यासं कुर्य्यात् । अस्य गणक ऋषि-
र्गायत्री च्छन्दो हेरम्बा देवता गकारो बीजं
विन्दुः शक्तिश्चतुर्व्वर्गसिद्ध्यर्थे विनियोगः ।
शिरसि
गणकऋषये नमः । इत्यादि । ततः कराङ्ग-
न्यासौ । गां गीं गूं गं गौं गः इत्येतैः षडङ्गानि
कुर्य्यात् । तथा च ।
"षड्दीर्घभाजा बीजेन षडङ्गानि प्रकल्पयेत् ॥"
ततो ध्यानम् ।
"मुक्ताकाञ्चननीलकुन्दघुसृणच्छायैस्त्रिनेत्रा-
न्वितै-
र्नागास्यैर्हरिवाहनं शशिधरं हेरम्बमर्क-
प्रभम् ।
दृप्तं दानमभीतिमोदकरदान्टङ्कं शिरोऽक्षा-
त्मिकां
मालां मुद्गरमङ्कुशं त्रिशिखकं दोर्भिर्दधानं
भजे ॥"

अस्य पुरश्चरणं त्रिलक्षजपः । तथा च
।
"त्रिलक्षञ्च जपेन्मन्त्रं दशांशं
जुहुयात्ततः ।"
होमद्रव्यं यथा,
"लक्षत्रयं जपेन्मन्त्रमिक्षुदण्डैर्दशांशतः
।
अपूपैराज्ययुक्तैर्व्वा जुहुयान्मन्त्रसिद्धये
॥" * ॥
मन्त्रान्तरम् । गं क्षिप्रप्रसादनःय हृत् ।
तथा च
निबन्धे ।
"सम्बर्त्तको नेत्रयुतः पार्श्वो वह्न्यासने
स्थितः ।
प्रसादनाय हृन्मन्त्रं स्वबीजाद्यो
दशाक्षरः ॥"
अस्य पूजा प्रातःकृत्यादिपीठन्यासान्तं
कर्म्म
विधाय ऋष्यादिन्यासं कुर्य्यात् ।
शिरसि गणक-
ऋषये नमः । मुखे विराट्छन्दसे नमः ।
हृदि
क्षिप्रप्रसादनाय देवतायै नमः । तथा च
निबन्धे ।
"गणको मुनिराख्यातो विराट् छन्द
उदी-
रितम् ।
क्षिपप्रसादनो विघ्नो देवतास्य
प्रकीर्त्तिता ।
दीर्घयुक्तेन बीजेन षडङ्गानि प्रकल्पयेत्
॥"
एकाक्षरवत् कराङ्गन्यासौ कृत्वा
ध्यायेत् ।
"पाशाङ्कुशौ कल्पलतां विषाणं
दधत्स्वशुण्डाहितबीजपूरः ।
रक्तस्त्रिनेत्रस्तरुणेन्द्रमौलि-
र्हारोज्ज्वलो हस्तिमुखोऽवताद्वः ॥"
इति धात्वा मानसैः संपूज्य
शङ्खस्थापनं कृत्वा

**हेलञ्ची**, स्त्री, (हेलं चिनोतीति । चि + ड ।
ङीष् । पृषोदरात् साधुः ।)
हिलमोचिका ।
हेलञ्चा इति भाषा । इति
शब्दचन्द्रिका ॥
(हिलमोचिकाशब्देऽस्या गुणादयो
ज्ञेयाः ॥

**हेलनं**, क्ली, (हेड + ल्युट् । डलयोरैक्यम् ।)
अवहेला । इति शब्दरत्नावली ॥
(यथा, भाग-
वंते । ६ । २ । १४ ।
"साङ्केत्यं पारिहास्यं वा स्तोभ्यं
हेलनमेव च ।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः
॥")

**हेलाः**, स्त्री, (हिल् + घञ् । टाप् ।) स्त्रीणां
शृङ्गारभावजक्रियाविशेषः । इत्यमरः
। १ । ७ । ३२ ॥
सुरते प्रौढेच्छा हेला । यदाह ।
"प्रौढेच्छा याति रूढानां नारीणां
सुरतोत्सवे ।
शृङ्गारशास्त्रतत्त्वज्ञैर्हेला सा
परिकीर्त्तिता ॥"
इति ।
अन्ये तु ।
"स एव हेला सुव्यक्तः
शृङ्गाररससूचकः ।"
इत्याहुः । अस्यार्थः । हाव एव
स्फुटशृङ्गा-
रानुभावो हेलेति । अन्ये त्वाहुः
विलासादयो
दश स्वाभाविकाः
भावहावहेलास्त्रयोऽङ्गजाः
शोभादयः सप्त प्रयत्नजाः । इति
विंशतिरल-
ङ्काराः । तेषु ।
"देहात्मकं मवेत् सत्त्वं सत्त्वाद्भावः
समुत्थितः ।

एवं ध्यात्वा मानसैः संपूज्य शङ्खस्थापनं कुर्य्यात् । ततो गणेशोक्तपीठपूजान्तं कृत्वा ॐ हुँ हुँ महासिंहाय गां हेरम्बासनाय नम इत्यासनं पूजयेत् । तथा च निबन्धे ।
"प्रणवं कवचद्वन्द्वं महासिंहाय गां ततः ।
हेरम्बेति पदं पश्चात् आसनाय हृदन्ततः ॥
अयमासनमन्त्रः स्यात् प्रदद्यादिमुनासनम् ॥"
इति ॥
पीठन्यासोऽप्येवं मन्त्रः । तत ॐ मं मन्त्रेण मूर्त्तिं संकल्पयेत् । तथा च निबन्धे ।
"तारादिविघ्नबीजेन मूर्त्तिं तस्य प्रकल्पयेत् ।"
पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधाय आवरणपूजामारभेत् । यथा अग्न्यादि-कोणे मध्ये दिक्षु च गां हृदयाय नम इत्या-दिना पूजयेत् । तद्बहिरिन्द्रादीन् वज्रादींश्च सपूज्य धपादिविसर्जनान्तं कर्म्म समापयेत् ।

पीठपूजां विधाय
पुनर्ध्यात्वावाहनादिपञ्चपुष्पा-
ञ्जलिदानपर्य्यन्तं विधाय
आवरणपूजामारभेत् ।
अग्न्यादिषु गां हृदयाय नम इत्यादिना
पूजयेत् ।
तथा च निबन्धे ।
"अङ्गानि पूर्व्वमभ्यर्च्च्य विघ्नानष्टौ
यजेत्ततः ।
पत्राग्रे पूजयेदेता
ब्राह्म्याद्यास्तदनन्तरम् ॥"
पत्रेषु ।
"विघ्नं विनायकं शूरं वीरं वरदसंज्ञकम्
।
इभवक्त्रं चैकरदं लम्बोदरं प्रपूजयेत् ॥"
पत्राग्रेषु ब्राह्म्याद्यास्तद्बहिरिन्द्रादीन्
वज्रा-
दींश्च पूजयेत् । ततो
धूपादिविसर्जनान्तं कर्म्म
समापयेत् । अस्य पुरश्चरणं लक्षजपः
।
तथा च ।
"लक्षं जपेज्जपस्यान्ते जुहुयादयुतं
तिलैः ।
मधुरत्रितयैर्व्वापि द्रव्यैरष्टाभिरीरितैः ॥"
इति कृष्णानन्दकृततन्त्रसारः ॥

**हेरम्बजननी**, स्त्री, हेरम्बस्य जननी ।) दुर्गा ।
इति शब्दरत्नावली ॥

**हेरम्बहट्टः**, पुं, देशविशेषः । स च दक्षिणप्रदेशे
वर्त्तते । इति शब्दरत्नावली ॥

**हेरिकः**, पुं, (हि + इक । रुट् च ।) चरः ।
इति हेमचन्द्रः ॥

**हेरुकः**, पुं, (हि + उक । रुट् च ।) बुद्धभेदः ।
महाकालगणः । इति मेदिनी ॥
शिवलिङ्ग-
विशेषः । यथा, --
"शिवलिङ्गञ्च तत्रास्ति शिलायां
हेरुकाह्वयम् ।

भावात् समुत्थितो हावो हावाद्धेला
समु-
त्थिता ॥"
इति ॥
हिल श हावकृतौ घञ् स्त्रीत्त्वं
लोकाश्रयात् ।
हेलिरपि ।
"हेलिः पुंसि रवौ हेलिर्हेलायामपि
योषिति ।"
इति हड्डः । इति भरतः ॥
अपि च ।
"हाव एव भवेद्धेला व्यक्तः
शृङ्गारसूचकः ।"
इत्युज्ज्वलनीलमणिः ॥ * ॥
अवज्ञा । इति मेदिनी ॥ (यथा,
मार्कण्डेय-
पुराणे । १४ । २९ ।
"स्वल्पं पुण्यं शुभं गन्धं हेलया
सम्प्रयच्छति ।
स्पर्शं वाप्यथवा शब्द रसं रूपमथापि
वा ॥")
ज्योत्स्ना इति केचित् ॥

**हेलावुकः**, पुं, अश्वविक्रयी । इति हारावली ॥

**हेलिः**, पुं, (हिलति । हिल + "सर्व्वधातुभ्य इन्
।"
उणा ०४ । ११७ । इति इन् ।)
सूर्य्यः । इति
त्रिकाण्डशेषः ॥ आलिङ्गनम् । इति
केचित् ॥

**हेलिः**, स्त्री, (हिल श हावकृतौ + इन् ।) हेला ।
इति हड्डः । इत्यमरटीकायां भरतः ॥

**हेष**, ऋ ङ अश्वानां स्वने । इति कविकल्पद्रुमः ॥
(भ्वा०-आत्म० अक०-सेट् ।) ङ,
हेषते घोटकः ।
जिहेषे । ऋ, अजिहेषत् । इति दुर्गा-
दासः ॥

**हेषा**, स्त्री, (हेष + भावे अः ।) अश्वानां निस्वनः ।

नदीदक्षिणपूर्व्वस्यां नायकं तन्तु पूजयेत् ॥”
इति कालिकापुराणे कामाख्यारूपनिर्णये ८१ अध्यायः ॥ गणेशः । इति तत्रैव ॥

(यथा, मार्कण्डेयपुराणे । २२ । २० ।
“कृतार्त्तहेषाशब्दो वै त्रस्तः साश्रुविलोचनः ।
नीतः सोऽश्वश्च तेनैव दानवेन दुरात्मना ॥”)

तत्पर्य्यायः । ह्लेषा २ । इत्यमरः । २ । ७ । ४७ ॥
ह्लेषा ३ । इति तट्टीका ॥

**हेषी**, [न्] पुं (हेषा इति शब्दोऽस्त्यस्य । इनिः ।)
अश्वः । इति त्रिकाण्डशेषः ॥

**हेहै**, व्य, (हे च है च ।) सम्बोधनम् । हूतिः ।
इति मेदिनी ॥

**है**, व्य, (हिनोतोति । हि गतौ बाहुलकात् डै ।)
सम्बोधनम् । आह्वानम् । इति मेदिनी ॥

**हैतुकः**, पुं, (हेतुना चरतीति । हेतु + ठक् ।
सद्युक्तिव्यवंहारी । यथा, मनुः ।
"त्रैविद्यो हैतुकस्तर्की निरुक्तो धर्म्मपाठकः ।
त्रयश्चाश्रमिणः पूर्ब्बे परिषत् स्याद्दशावरा ॥"
त्रैविद्यः त्रिवेदपारगः । हैतुकः सद्युक्तिव्यव-
हारी । इति व्यवहारतत्त्वम् ॥ हेतुद्वारा सत्-
कर्म्मसु सन्देहकर्त्ता । यथा, --
"पाषण्डिनो विकर्म्मस्थान् वैडालव्रतिकान् शठान् ।
हैतुकान् वकवृत्तींश्च वाङ्मात्रेणापि नार्च्चयेत् ॥"
इति विष्णुपुराणे । ३ । १८ । ९९ ॥
पाषण्डादीनां लक्षणम्
"भ्रष्टः स्वधर्म्मात् पाषण्डो विकर्म्मस्थो निषिद्ध-
कृत् ।
यस्य धर्म्मध्वजो नित्यं सुरध्वज इवोच्छ्रितः ।
प्रच्छन्नानि च पापानि वैडालं नाम तद्व्रतम् ॥"
तद्वान् वैडालव्रतिकः ।
"कैलासं मन्दरं हैमं सर्व्वाननुचचार ह ।
तानतीत्य महाशैलान् कैरातं स्थानमुत्तमम् ॥")

**हैमनं**, क्ली, पुं, (हेमन्त एव इति । "सर्व्वत्राण् च
तलोपश्च ।" ४ । ३ । २२ । इति स्वार्थे अण्
तलोपश्च ।) हेमन्त ऋतुः । यथा । हेमन्त-
हैमनावस्त्री । इति शब्दरत्नावली ॥ (हेम्न
इदमित्यण् । न टिलोपः ।) स्वर्णजाते हिम-
जाते च त्रि ॥ (हेमन्तभवे च त्रि । यथा,
किरातार्ज्जुनीये । १७ । १२ ।
"उमापतिं पाण्डुसुतप्रणुन्नाः
शिंलीमुखानव्यथयाम्बभूवुः ।
अभ्युत्थितस्याद्रिपतेर्नितम्ब-
मर्कस्य पादा इव हैमनस्य ॥" ॥)

**हैमनः**, पुं, (हेमन्त एव अण् । तलोपश्च ।)
मार्गशीर्षमासः । इति राजनिर्घण्टः ॥ (हेमन्ते
जातः अण् तलोपश्च ।) हिमकालोद्भवषष्टिक-
धान्यम् । अस्य गुणाः ।
"हैमनास्तु हिमा वृष्या मधुरा बद्धवर्च्चसः ।"
इति राजवल्लभः ॥

**हैमन्तं**, क्ली, पुं, (हेमन्त + "सन्धिवेलाद्यृतुनक्षत्रे-
भ्योऽण् ।" ४ । ३ । १६ । इति अण् ।)
हेमन्त ऋतुः ।
हेमन्तसम्बन्धिनि, त्रि । इति हेमन्तशब्दात्
स्वार्थे ष्णप्रत्ययेन निष्पन्नम् ॥

**हैमन्तिकं**, क्ली, (हेमन्ते भवः । ठञ् ।) शालि-
धान्यम् । आमन धान इति भाषा । यथा, --
"हैमन्तिकं सितास्विन्नं धान्यं मुद्गास्तिला यवाः ॥"
इति हविष्यान्नप्रकरणे तिथ्यादितत्त्वम् ॥
हेमन्तकालजाते, त्रि ॥ (यथा आश्वलायनीय-
श्रौतसूत्रे । ४ । १२ । १ ।
"उमाभिधानां पुरतो देवीं हैमवतीं शिवाम् ॥")
हरीतकी । इत्यमरः । १ । १ । ३८ ; २ । ४ । ५९ ॥
स्वर्णक्षीरी । (अस्याः पर्य्यायो यथा, --
"कटुपर्णी हैमवती हेमक्षीरी हिमावती ।
हेमाह्वा पीतदुग्धा च तन्मलञ्चोकमुच्यते ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥)
श्वेतवचा । इति मेदिनी ॥ (अस्याः पर्य्यायो यथा,
"षड्ग्रन्थ्योग्रा वचा ज्ञेया श्वेता हैमवतीति च ।"
इति गारुडे २०८ अध्याये ॥
हिमवतः प्रभवति प्रकाशते प्रथमं दृश्यते
इति । "प्रभवति ।" ४ । ३ । ८३ । इत्यण् ।)
गङ्गा । इति धरणिः ॥ (यथा, महाभारते । ३ । १०८ । १६ ।
"एवमुक्तः प्रत्युवाच राजा हैमवतीं तदा ।
पितामहा मे वरदे ! कपिलेन महानदि !
अन्वेषमाणास्तुरगं नीता वैवस्वतक्षयम् ॥"
हिमवति भवा इति । अण् ।) रेणुका ।
कपिलद्राक्षा । अतसी । इति राजनिर्घण्टः ॥

**हैमा**, स्त्री, (हेम तद्वर्णोऽस्त्यस्याः इति अण् ।
वा ङीप् ।) पीतयूथिका । इति शब्द-
रत्नावली ॥ (यूथिकाशब्दे अस्या विषयो ज्ञातव्यः ॥

**हैमी**, स्त्री, (हेम तद्वर्णोऽस्त्यस्याः इति अण् ।
वा ङीप् ।) पीतयूथिका । इति शब्द-
रत्नावली ॥ (यूथिकाशब्दे अस्या विषयो ज्ञातव्यः ॥

**हैयङ्गवीनं**, क्ली, (ह्यो गोदोहस्य विकारः इति ।
"हैयङ्गवीनं संज्ञायाम् ।" ५ । २ । २३ । इति
खञ् हियङ्ग्वादेशश्च ।) सद्योगोदोहोद्भवं घृतम् ।
इत्यमरः । २ । ९ । ५२ ॥ नवनीतम् । इति
रत्नमाला राजनिर्घण्टश्च ॥ (यथा, हरिवंशे ।
भविष्यपर्व्वणि । ५८ । १० ।
"हैयङ्गवीनं क्षीराणि दधि वा किमजीजनन् ।

"प्रियं वक्ति पुरोऽन्यत्र विप्रियं कुरुते भृशम् ।
व्यक्तापराधचेष्टश्च शठोऽयं कथितो बुधैः ॥
सन्देहकृत् हेतुभिर्यः सत्कर्म्मसु स हैतुकः ।
अर्व्वाग्दृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः ।
शठो मिथ्याविनीतश्च वकवृत्तिरुदाहृतः ॥"
इति तट्टीका ॥
(फलाभिसन्धानयुक्ते, त्रि ॥)

**हैमं**, क्ली, (हिमे भवम् । अण् ।) प्रातर्हिमोद-
भवजलम् । इति राजनिर्घण्टः ॥ हिमभवे,
त्रि ॥ (यथा, रघौ । १६ । ७ ।
"लब्धान्तरा सावरणेऽपि गेहे
योगप्रभावो न च लक्ष्यते ते ।
बिभर्षि चाकारमनिर्वृतानां
मृणालिनी हैममिवोपरागम् ॥")
हेमजाते च त्रि ॥ इत्यमरः । २ । ८ । ३२ ॥
(यथा, रघौ । ६ । १५ ।
"आकुञ्चिताग्राङ्गुलिना ततोऽन्यः
किञ्चित् समावर्ज्जितनेत्रशोभः ।
तिर्य्यग् विसंसपिनखप्रभेण
पादेन हैमं विलिलेख पीठम् ॥")

**हैमः**, पुं, भूनिम्बः । इति राजनिर्घण्टः ॥ (हेम्नो
विकारः । हेम + अण् ।) हेम्नो विकारः ।
इति मुग्धबोधव्याकरणम् ॥ (शिवः । यथा,
महाभारते । १३ । १७ । ६३ ।
"हैमो हेमकरो यज्ञः सर्व्वधारी धरोत्तमः ॥"
पर्व्वतविशेषः । यथा, महाभारते । १३ ।
१९ । ५४ ।
"बृहस्पतिः पांक्तस्त्रिणवः शाक्वरो
हैमन्तिकः ॥")

**हैममुद्रिकः**, त्रि, स्वर्णमुद्रिकाविशिष्टः । हैमी
मुद्रिका यस्य इति बहुव्रीहिसमासनिष्पन्नः ॥
इति मुग्धबोधव्याकरणम् ॥

**हैमलः**, पुं, क्ली, (हिमल + अण् ।) हेमन्त ऋतुः ।
हिमलशब्दात् ष्णप्रत्ययेन निष्पन्नः । इति
काचित् शब्दरत्नावली ॥ हैमन इति साधु-
पाठः ॥

**हैमवतं**, क्ली, (हिमवतोऽदूरभवो देशः हिमवत
इदं वा । अण् ।) भारतवर्षम् । इति त्रिकाण्ड-
शेषः ॥

**हैमवतः**, पुं, विषभेदः । इति हेमचन्द्रः ॥ (हिमा-
लयसम्बन्धिनि, तज्जाते च त्रि ॥ देशविशेषः ।
यथा, महाभारते । २ । ५० । २० ।
"निषदान् पारसीकांश्च कृष्णान् हैमवतां-
स्तथा ॥")

**हैमवतवर्षं**, क्ली, भारतवर्षम् । यथा, --
"एतद्धैमवतं वर्षं भारती यत्र सन्ततिः ।
हेमकूटं परं यत्र नम्ना किंपुरुषोत्तमः ॥"
इति वाराहे रुद्रगीता ॥

**हैमषती**, स्त्री, (हिमवतोऽपत्यं स्त्री । अण् । ङीप् ।)
पाव्वती । (यथा, देवीभागवते । १२ । ८ । ५७ ।
गोधनं सर्व्वमेवेदं नीरोगं प्रतिपद्यते ॥")
तत्पर्य्यायः । सरजम् २ मन्थजम् ३ कल
म्वुटम् ४ । इति हारावली ॥

**हैरिकः**, पुं, (हिनोतीति । रक् । हेरं आसुरी माया ।
तज्जानाति । ठक् ।) चौरः । इति धरणिः ॥

**हैहयः**, पुं, (हय्या अपत्यम् । "स्त्रीभ्यो ढक् ।"
४ । १ । १२० । इति ढक् । पृषोदरादित्वात् साधुः ।
यद्वा हेशब्देन नामैकदेषग्रहणेन नामग्रहणात्
हेषाशब्देन हेषाशब्दं कुर्व्वन् हयति गच्छ-
तीति हेहयोऽश्वः तस्यायं "शिवादिभ्योऽण् ।"
४ । १ । ११२ । इत्यण् । यद्वा, हे भक्त हे भक्त
इति वदन् हयति गच्छतीति हेहयो विष्णुः ।
तस्यायं हैहयः ।) कार्त्तवीर्य्यः । इति हेम-
चन्द्रः ॥ देशविशेषः । यथा, --
"पश्चिमे हैहयास्ताद्रिम्लेच्छवासशकादयः ॥"
इति ज्योतिस्तत्त्वे कूर्म्मचक्रम् ॥

**हैहयः**, पुं, (हैहयाः तद्देशवासिनः तेषां राजा
अण् ।) कार्त्तवीर्य्यराजः । इति शब्दरत्नावली ॥
(यथा, रघौ । ११ । ७४ ।
"बिभ्रतोऽस्त्रमचलेऽप्यकुण्ठितं
द्वौ रिपू मम मतौ समागसौ ।
धेनुवत्सहरणाच्च हैययः
त्वञ्च कीर्त्तिमपहर्त्तुमुद्यतः ॥")

**हो**, व्य, (ह्वयते अनेनेति । ह्वे + डो । निपा-
तनात् साधुः ।) सम्बोधनम् । आह्वानम् ।
इति मेदिनी ॥ (यथा, किराताज्जुर्नीये ।
१५ । २० ।
"ननु हो मथनाराघो घोरानाथ महोनु न ।
तयदा तवदा भीमा माभीदावत दायत ॥")
विस्मयः । इत्यमरः ॥

**होड**, ऋ ङ गतौ । अनादरे । इति कविकल्प-
द्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट् ।) ऋ,
अजु-
होडत् । ङ, होडते । इति दुर्गादासः ॥

**होडः**, पुं, (होडते गच्छतीति । होड गतौ +
अच् ।) नौकाविशेषः । हुडी इति भाषा ।
तत्प-
र्य्यायः । तरान्धुः २ वहनम् ३ वहित्रम् ४
वार्व्वटः
५ । इति त्रिकाण्डशेषः (होड्यते इति । होड्
अनादरे + कर्म्मणि घञ् ।) दक्षिणराढीय-
मौलिककायस्थानां
द्विसप्ततिपद्धत्यन्तर्गतपद्धति-
विशेषः । इति कुलाचार्य्यग्रन्थः ॥ गौड-
देशीयश्रोत्रियब्राह्मणविशेषाणामुपाधिश्च ।
अस्य
प्रमाणं अन्नदामङ्गलग्रन्थे ध्रुवानन्दमिश्रग्रन्थे
च
द्रष्टव्यम् ॥

**होडा**, [ऋ] पुं, चोरः । इति केचित् ॥

**होता**, [ऋ] पुं, (जुहोतीति । हु + "नप्तृनेष्ट्
त्वष्टहोत्रिति ।" उणा ०२ । ९६ । इति तृन्
निपातितश्च । यद्वा, हु + तृच् ।) ऋग्वेद-
वेत्ता । इत्यमरः । २ । ७ । १७ ॥ होमकर्त्ता
।
यथा । विशिष्टदेशावच्छिन्नप्रक्षेपोपहितहवि-
स्त्यागस्य होमत्वात् प्रक्षेपस्य
तदभिधाननिमि-
त्तमित्यर्थः । तेन
हुधात्वर्थव्यवच्छेदकप्रक्षेपानु-
यामाहुः सर्व्वबीजप्रकृतिरिति यया प्राणिनः
प्राणवन्तः
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु
वस्ताभिरष्टाभि-
रोशः ॥"
इत्यभिज्ञानशकुन्तलाप्रथमश्लोकः ॥

**होत्रीयं**, क्ली, (होत्राय हितम् होतुरिदं वेति । छः ।)
हविर्गेहम् । इति हेमचन्द्रः ॥ होत्रसम्बन्धिनि,
त्रि ॥ (यथा, शतपथब्राह्मणे । ९ । ४ । ३ ।
७ ।
"एकविंशतिं होत्रीय उपदधाति ॥")

**होमः**, पुं, (हवनमिति । हु + "अर्त्तिस्तुमुहु-
स्रिति ।" उणा ०१ । १३९ । इति मन् ।)
पञ्चमहायज्ञान्तर्गतयज्ञविशेषः । इत्यमरः ।
२ ।
७ । १४ ॥ स तु देवयज्ञः । यथा, --
"अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो वलिर्भौतो नृयज्ञोऽतिथिपूजनम्
॥"
इति मनुः ॥
तल्लक्षणं यथा, --
"विशिष्टदेशावच्छिन्नप्रक्षेपोपहितत्यागः ॥"
इति श्रीकृष्णतर्कालङ्कारः ॥ * ॥
अथ नित्यहोमः । तदुक्तं सोमभुजगावल्याम्
।
"नाजप्तः सिद्ध्यते मन्त्रो नाहुतश्च फलप्रदः
।
नानिष्टो यच्छते कामान्
तस्मात्त्रितयमर्च्चयेत् ॥
पूजया लभते पूजां जपात् सिद्धिर्न संशयः ।
विभूतिं चाग्निकार्य्येण सर्व्वसिद्धिञ्च विन्दति
॥"
नीलतन्त्रेऽपि ।
"नित्यहोमं प्रवक्ष्यामि सर्व्वार्थं येन बिन्दति
॥
सपर्य्यां सम्यगापाद्य वलिपूर्व्वं चरेद्विधिम् ॥
ततो होमं तर्पणञ्च चरेत् साधकसत्तमः ।
वलिवैश्वादिकं चैव ब्राह्मणः समुपाचरेत् ॥
नमः एवं क्रमेण पूजयेत् । तथा
ब्रह्मसंहि-
तायां होमकुण्डे ।
"ऐशान्यां वेदिकां
हस्तविस्तारोन्नतिशालि-
नीम् ।
कृत्वास्मिन् स्थापयेत् कुम्भं
यथोक्तक्रमयोगतः ॥
तत्र संपूजयेद्देवं यथाविध्युपचारकैः ।
ततो होमं प्रकुर्व्वीत
देवतासन्निधानतः ॥"
ततः कुण्डमध्ये षट्कोणवृत्तत्रिकोणं
तद्बहि-
रष्टदलपद्मं तद्बहिश्चतुरस्रं
चतुर्द्वारसमेतं
लिखित्वा तदुपरि मूलेन पुष्पाञ्जलीन्
दद्यात् ।
सुन्दरीपक्षे तु बालया । ततः
सर्व्वाणि प्रणवे-
णाभ्युक्ष्य वह्नेर्योगपीठमर्च्चयेत् । तद्
यथा ।
कर्णिकोपर्य्याधारशक्त्यादोन् संपूज्य
अग्न्यादि-
कोणचतुष्केषु ॐ धर्म्माय नमः ॐ
ज्ञानाय
वैराग्याय ऐश्वर्य्याय पूर्ब्बादिदिक्षु
अधर्म्माय
अज्ञानाय अवैराग्याय अनैश्वर्य्याय
मध्ये ॐ
अनन्ताय नमः । एवं पद्माय अं
अर्कमण्डलाय
द्वादशकलात्मने नमः । उं
सोममण्डलाय
षोडशकलात्मने नमः । मं
वह्निमण्डलाय दश-
कलात्मने नमः । ततः केशरेषु
पूर्ब्बादिमध्ये च
ॐ पीताय नमः । एवं श्वेतायै नमः
अरुणायै

कूलव्यापारवति ऋत्विजि होता इत्यादिव्यप-
देशः । इति दायभागटीकायां श्रीकृष्णतर्का-
लङ्कारः ॥

**होतृकारः**, पुं, होतुरृकारः । होतुर्माता । इति
मुग्धबोधव्याकरणम् ॥

**होत्रं**, क्ली, (हूयते इति । हु + “हुयामाश्रुभसि-
भ्यस्त्रन् ।” उणा ०४ । १६७ । इति त्रन् ।)
हविः । इति त्रिकाण्डशेषः ॥ होमः । इति
हेमचन्द्रः ॥

**होत्रा**, स्त्री, (हु + त्रन् + टाप् ।) स्तुतिः ।
इति केचित् ॥ (आहूयमाना देवता । यथा,
ऋग्वेदे । १ । १८ । ८ ।
“आदृध्नोति हविष्कृतिं प्राञ्चं कृणोत्यध्वरम् ।
होत्रा देवेषु गच्छति -- ”
‘होत्रा हूयमाना देवता ।’ इति तद्भाष्ये
सायनः ॥)

**होत्री**, [न्] पुं, होता । होत्रं विद्यतेऽस्य इति
होत्रशब्दात् इन्प्रत्ययेन निष्पन्नः ॥

**होत्री**, स्त्री, (हु + तृच् + ङीप् ।) यजमानरूपा
शिवस्य मूर्त्तिः । यथा, --
“या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या
हविर्या च होत्री
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता
व्याप्य विश्वम् ।

अर्घोदकेन संप्रोक्ष्य तिस्रो रेखाः समालिखेत्
।
विधिवदग्निमानीय क्रव्यादेभ्यो नमस्तथा ॥
मूलमन्त्रं समुच्चार्य्य कुण्डे वा स्थण्डिलेऽपि
वा ।
भूमौ वा संस्तरेद्वह्निं व्याहृतित्रितयेन च ।
स्वाहान्तेन त्रिधा हुत्वा षडङ्गहवनं चरेत् ॥”
तथा ।
“ततो देवीं समावाह्य मूलेन षोडशाहुतिम् ।
हुत्वा स्तुत्वा नमस्कृत्य विसृजेदिन्दुमण्डले
॥”
श्यामादौ विशेषः ।
“भैरवांश्च हुनेदष्टौ आज्यान्वितैस्तिलैः शुभैः
।
पूर्ब्बादिदिक्क्रमेणैव ततो होमं समाचरेत् ॥”
*
अथ संक्षेपहोमप्रयोगः ।
“कुण्डेवास्थण्डिले वापि वीक्षणादिभिः
संस्कृते ।
प्रागग्रा उदगग्राश्च तिस्रो रेखाः समालिखेत्
॥”
तथा च ।
“वीक्षणं मूलमन्त्रेण शरेण ताडनं मतम् ।
तेनैव प्रोक्षणं प्रोक्तं वर्म्मणाभ्युक्षणं मतम् ॥”
ततो मूलमुच्चार्य्य कुण्डाय नमः इति संपूज्य
प्रागग्रा उदगग्रास्तिस्रो रेखाः कर्त्तव्याः ।
प्रागग्रेषु मुकुन्देशपुरन्दरान् प्रादक्षिण्येन
संपूज्य उदगग्रासु ब्रह्मवैवस्वतेन्दून् पूजयेत् ।
सुन्दरीपक्षे तु सर्व्वत्र षट्तारी प्रयोगः
षट्तारी च ऐँ ह्रीँ श्रीं ऐं क्लीं सौः ब्रह्मणे

नमः । कृष्णायै धूम्रायै तीव्रायै
स्फुलिङ्गिन्यै
रुचिरायै ज्वालिन्यै ततो रं
वह्न्यासनाय नमः ।
ततः ।
“वागीश्वरीमृतुस्नातां
नीलेन्दीवरलोचनाम् ।
वागीश्वरेण संयुक्तां
क्रीडाभावसमन्विताम् ॥”
इति ध्यात्वा ॐ ह्रीँ वागीश्वराय नमः
ॐ
वागीश्वर्य्यै नमः । इति मन्त्रेण
पञ्चोपचारैः
संपूज्य सूर्य्यकान्तादिसम्भूतं
श्रोत्रियगेहजं वा
वह्निमानयेत् । सन्दरीपक्षे तु
कामेश्वरं कामे-
श्वरीं पूजयेत् । गौतमीये ।
“पाषाणभववह्निञ्च यदि
वारणिसम्भवम् ।
श्रोत्रियाणां गेहजञ्च वनस्थं वाथवा
हरेत् ॥
यदृच्छालाभसंयुक्तो अयोग्यो
यागकर्म्मणि ।
निरग्निब्राह्मणाल्लब्धो ह्यर्द्धलाभकरो
भवेत् ॥
क्षत्रबन्धोश्चतुर्थांशफलं
दद्याद्धुताशनः ।
वैश्यात् शूद्राच्च विफलं जायते
होमकर्म्मणि ।
तस्मात् सर्व्वप्रयत्नेन वह्निमुक्तं
समाहरेत् ॥”
तन्त्रान्तरे ।
“द्विजातिभवनाद्वापि वह्निमानीय
साधकः ।
वौषडन्तेन मूलेन मन्त्रितं तं
विलोकयेत् ॥
अग्निमावाहयेदस्त्रमन्त्रेण तदनन्तरम्
।
हूँ फडन्तेन मूलेन क्रव्यादांशं
परित्यजेत् ॥”

ततः ॐ वह्नेर्योगपीठाय नमः
चतुर्दिक्षु ॐ
वामायै नमः एवं ज्येष्ठायै रौद्र्यै
अम्बिकायै ।
ततो मूलमुच्चार्य्य
अमुकदेवताकुण्डाय नमः ।
इति कुण्डं संपूज्य तदधो वागीश्वरीं
तत्तद्देवता-
रूपां ऋतुमतीं ध्यात्वा
यथोक्तवह्निमानीय
वीक्षणादिभिः संस्कृत्य रमिति
तस्मात् वह्नि-
मुद्धृत्य मूलमुच्चार्य्य हूं फट्
क्रव्यादेभ्यः स्वाहा
इत्येनेन क्रव्यादाशं परित्यज्य
वह्निमन्त्रेन संरक्ष्यं
हूं इत्यवगुण्ठ्य धेनुमुद्रया
अमृतीकृत्य बाहुभ्यां

समुद्धृत्यं कुण्डोपरि त्रिः परिभ्राम्य
जानुस्पृष्ट-
महीतलः शिवबीजबुद्ध्या
आत्मनोऽभिमुखं
देव्या योनी एन क्षिपेत् । ततो ह्रीं
वह्निमूर्त्तये
नमः इत्यभ्यच्चर्य रं वह्निचैतन्याय
नमः इति
चैतन्यं तत्र संयोज्य ॐ चित् पिङ्गल
हन हन
दह दह पच पच सर्व्वं ज्ञापय ज्ञापय
स्वाहा
इति ज्वालयेत् । ततः ।
"अग्निं प्रज्वलितं वन्दे जातवेदं
हुताशनम् ।
सुवर्णवर्णममलं समिद्धं विश्वतोमुखम्
॥"
इत्युपतिष्ठेत् ॥
ततो अग्ने त्वममुकनामासीति नाम
कृत्वा ॐ
वेखानरं जातवेद इहावह लोहिताक्ष
सर्व्व-
कर्म्माणि साधय स्वाहा ।
अनेनार्घ्यादिभिः
संपूज्य ॐ
अग्नेर्हिरण्यादिसप्तजिह्वाभ्यो नमः ।
ॐ सहस्रार्च्चिषे हृदयाय नमः
इत्यादि अग्नि-
षडङ्गेभ्यो नमः । ॐ अग्नये
जातवेदसे इत्या-
द्यष्टमूर्त्तिभ्यो नमः । तद्वाह्ये ॐ
ब्राह्म्याद्यष्ट-
शक्तिभ्यो नमः । तद्बहिः ॐ
पद्माद्यष्टनिधिभ्यो
नमः । तद्वाह्ये ॐ
इन्द्रादिलोकपालेभ्यो नमः ।
तद्वाह्ये ॐ वज्राद्यस्त्रेभ्यो नमः । ततः
प्रादेश-

कुण्डम् । तत्पर्य्यायः । हवनी २ । इति
त्रिकाण्ड-
शेषः ॥ अस्य विवरणं कुण्डशब्दे
द्रष्टव्यम् ॥

**होमधान्यं**, क्ली, (होमोपयुक्तं धान्यम् ।) तिलः ।
इति राजनिर्घण्टः ॥

**होमधूमः**, पुं, (होमजातः धूमः ।) होमीयाग्नि-
धूमः । तत्पर्य्यायः । निगणः २ । इति
हेमचन्द्रः ॥

**होमभस्म**, [न्] क्ली, होमजातं भस्म । तत्-
पर्य्यायः । वैष्टुतम् २ । इति हेमचन्द्रः ॥

**होमाग्निः**, पुं, (होमस्य अग्निः ।) यज्ञवह्निः ।
तत्पर्य्यायः । महाज्वालः २ महावीरः
३
प्रवर्गः ४ । इति हेमचन्द्रः ॥

**होमिः**, पुं, (हूयते अस्मिन्निति । हु + इन् ।
मुट् च ।) अग्निः । (हूयते अनेनेति । इन्
मुट् च ।) घृतम् । इति मेदिनी ॥ जलम्
।
इति शब्दरत्नावली ॥

**होमी**, [न्] पुं, (होमः अस्यातीति । इन् ।)
होमकर्त्ता । यथा, तिथ्यादितत्त्वे ।
"तिलोद्वर्त्ती तिलस्नायी तिलहोमी
तिलप्रदः ।
तिलभुक् तिलवापी च षट्तिली
नावसीदति ॥"
(जुहोतीति । हु + "उल्मुकदर्व्विहोमिनः
।"
उणा ०३ । ८४ । इति मिनिः ।
निपातितश्च ।
यजमानः । इत्युणादिवृतौ उज्ज्वलदत्तः
॥)

**होम्यं**, क्ली, (होमाय हितम् । यत् ।) घृतम् ।
इति राजनिर्घण्टः ॥ होमीयद्रव्यमात्रे,
त्रि ॥

संज्ञायां कन् टाप् ।) वसन्तोत्सवः । होली
इति भाषा । इति दायभागटीका ॥ तदधि-
करणन्यायो यथा । अथ होलाकाधिकरणम् ।
प्रतीच्यानां होलाकाचारदर्शनेन तदर्था होलाका
आचरणीया इति सामान्यविधिः कल्प्यते ।
न तु प्राच्यानामनाचरणात् प्रतीच्यैरिति तत्र
पदं देयं सामान्यविधिनैव प्रतीच्याचारोपपत्तेः ।
प्राच्यानामनाचारस्य इच्छाविरहेणैव उपपत्तेः ।
इच्छाविरहश्च तद्देशीयपूर्ब्बपूर्ब्बनाचारदर्शनात् ।
प्रतीच्यानामुल्कादानाद्याचारविरहवत् । न
ह्यनाचारार्थं वेदः कल्प्यते । तथा च यत्र
सामान्यश्रुत्या उपपत्तिस्तत्र विशेषविधिर्न
कल्प्यते गुरुरनुगन्तव्यः सदेतिवत् । न हि
कर्म्मकाले तदसम्भवात् तदन्यकाले इति विशेष-
णीयम् । इति अधिकरणकौमुदी ॥ * ॥ अन्यच्च ।
यथा होलाकाधिकरणे प्राच्यकर्त्तृकहोलाकानु
ष्ठानोपपत्तये होलाका कर्त्तव्येत्येव श्रुतिः
कल्पिता । तावतैव तदुपपत्तेः न तु प्राच्यादिः
पदवती कल्पनागौरवात् तद्वदत्रापि अर्ज्जको
अंशद्वयं गृह्णीयादिति श्रुतिः कल्पनीया न तु
पित्रादिपदवती तदयुक्तं तत्र प्राच्यकर्त्तृकानु-
ष्ठानस्यावश्यकल्पनीयसामान्यश्रुत्यैवोपपत्तेः । न
चाप्राच्यानामननुष्ठानार्थं प्राच्यपदवती कल्प्यता-
मिति वाच्यम् । तेषामननुष्ठानस्यानाचाररूपस्य
श्रुतिकल्पनानिमित्तत्वानुपपत्तेः । इति दाय-
भागः ॥

**हौ**, व्य, (हूयते अनेनेति । ह्वे + डौ ।) सम्बो
धनम् । आह्वानम् । इति मेदिनी ॥

**हौड**, ऋ ङ गतौ, अनादरे । इति कविकल्पद्रुमः ॥
(भ्वा०-आत्म०-सक०-सेट् ।) चतुर्द्दशस्वरी ।
ऋ, अजुहौडत् । ङ, हौडते । इति दुर्गादासः ॥

**हौतृकः**, त्रि, (होतुरागतम् । "ऋतष्ठञ् ।" ४ ॥
३ । ७८ । इति ठञ्) होतृसम्बन्धीयः । इति
होतृशब्दात् कण्प्रत्ययेन निष्पन्नः ॥

**हौम्यं**, क्ली, (होमाय अर्हं । यत् ।) घृतम् । इति
राजनिर्घण्टः ॥ होमीयद्रव्ये, त्रि ॥

मात्रं कुशपत्रद्वयं घृतमध्ये निक्षिप्य
सव्यासव्य-
मध्याभागेषु इडां पिङ्गलां सुषुम्नां
ध्यात्वा होमं
कुर्य्यात् । स्रुवेण दक्षिणभागादाज्यं
गृहीत्वा
ॐ अग्नये स्वाहा इति अग्नेर्दक्षिणनेत्रे
जुहु-
यात् । तथा वामभागादाज्यं गृहीत्वा
ॐ
सोमाय खाहा इति वामनेत्रे जुहुयात्
। ततो
मध्यभागादाज्यं गृहीत्वा ॐ
अग्निसोमाभ्यां
स्वाहा इत्यग्नेर्ललाटनेत्रे जुहुयात् ।
पुनर्दक्षि-
णतः नम इति घृतं गृहीत्वा ॐ अग्नये
स्विष्टिकृते स्वाहा इत्यग्निमुखे । ततो
महा-
व्याहृतिहोमः । ॐ भूः स्वाहा ॐ
भुवः स्वाहा
ॐ स्वः स्वाहा ॐ वैस्वानर जातवेद
इहावह
लोहिताक्ष सर्व्वकर्म्माणि साधय
स्वाहा इत्यनेन
त्रिवारं जुहुयात् । ततः अग्नौ मूलेन
पीठ-
पूर्ब्बकं देवतां संपूज्य तन्मुखे घृतेन
मूलमन्त्रेण
पञ्चविंशतिवारं जुहुयात् ।
वह्निदेवतयोरा-
त्मना सह ऐक्यं विभाव्य मूलमन्त्रेण
एकादशा-
हुतीर्जुहुयात् । ततो मूलमन्त्रस्य
अङ्गदेव-
ताभ्यः स्वाहा शक्तश्चेत्
प्रत्येकमेकैकाहुतिं
जुहुयात् । ततः सङ्कल्पं विधाय
तत्तत्कल्पोक्त-
द्रव्येण होमं कुर्य्यात् । ततो
मूलमन्त्रेण पूर्णाहुतिं

(यथा, हरिवंशे भविष्यपर्व्वणि २५१
अध्याये ।
“होता पोता हन्ता नेता मन्ता
होम्यहोता-
परात्परस्त्वम् ॥”)

**होरा**, स्त्री, (होलति हुल्यते वेति । हुल हिंसा-

सम्बरणयोः + अच् । घञ् वा ।
रलयोरैक्यम्
टाप् ।) लग्नम् । राश्यर्द्धम् । रेखा ।
शास्त्र-
भेदः । इति मेदिनी ॥ द्बितीयार्थस्य
विशेषो
यथा, ज्योतिस्तत्त्वे ।
“विषमर्क्षेषु प्रथमहोराः
स्युश्चण्डरोचिषः ।
द्बितीयाः शशिनो युक्षु व्यत्ययाद्गणयेत्
सदा ॥”
सार्द्धदण्डद्वयात्मककालः । स तु
इंरेजानां आउ-
यार इति ख्यातः । यथा, वह्निपुराणे
गणभेदाध्याये ।
“चतुर्विंशतिवेलाभिरहोरात्रं प्रचक्षते ।
पश्चिमादर्द्धरात्रादिहोराणांविद्यते क्रमः
॥”

**होलकः**, पुं, (हु + विच् । लक्यते आस्वाद्यते इति ।

लक् + अप् ।)
तृणाग्निभृष्टार्द्धपक्वशमीधान्यम्।
होरा इति हिन्दी भाषा । यथा,
भावप्रकाशे ।
“अर्द्धपक्वैः शमीधान्यैस्तृणभृष्टैश्च
होलकः ।
होलकोऽल्पानिलो
मेदःकफदोषश्रमापहः ॥
भवेद्यो होलको यस्य स च तत्तद्गुणो
भवेत् ॥”

**होलाकः**, पुं, स्वेदविशेषः । यथा, चरकसूत्रस्थाने ।

“धीतीकान्तु करीषाणां यथोक्तानां
प्रदीपयेत् ।

**हौम्यधान्यं**, क्ली, (हौम्यञ्च तत् धान्यञ्च ।)

तिलः । इति राजनिर्घण्टः ॥ इति केचित् ॥

**ह्नु**, ङ लु चौर्य्ये । इति कविकल्पद्रुमः ॥ (अदा०-

आत्म०-सक०-अनिट् ।) ङ लु, ह्नुते । इति
दुर्गादासः ॥

**ह्मल**, म चाले । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-

अक०-सेट् ।) म, प्रह्मलयति । मित्वेऽप्यस्य ञौ
ज्वलह्वलह्मल इत्यादिना केवलस्य ह्रस्वविकल्व-
नात् सोपसर्गस्यैव नित्यं ह्रस्वः । ह्मालयति
ह्मलयति । चालश्चलनम् । इति दुर्गादासः ॥

**ह्यः**, [स्] व्य, (गतमहः । ह्यो निपातितः ।) गत-

दिनम् । इत्यमरः । ३ । ४ । २२ ॥ यथा,
राजतरङ्गिण्याम् । ६ । ४६ ।
“त्वयि राजनि निश्चौरैरध्वभिर्विशतः सुखम् ।
ह्योऽभवल्लवणोत्से मे दिनान्तेश्राम्यतः स्थितिः
॥”)

**ह्यस्तनं**, त्रि, (ह्यो भवम् । ह्यस् + “ऐषमोह्यः-

दत्त्वा संहारमुद्रया स्वेष्टदेवता हृदये समानीय
क्षमस्वेति विसृज्य दक्षिणां दत्त्वा अच्छिद्राव-
धारणं कुर्य्यात् । इति तन्त्रसारः ॥ बृहद्धोम-
प्रयोगस्तु तत्रैव द्रष्टव्यः ॥

**होमकः**, पुं, (होम + संज्ञायां कन् ।) होता ।

यथा, मात्स्ये ९३ । १२८ -- १२९ श्लोकौ ।
"पूर्ब्बद्वारे च संस्थाप्य बह्वृचं वेदपारगम् ।
यजुर्व्विदं तथा याम्ये पश्चिमे सामवेदिनम् ॥
अथर्व्ववेदिनं तद्वदुत्तरे स्थापयेद्बुधः ॥
अष्टौ तु होमकाः कार्य्या वेदवेदाङ्गवेदिनः ॥"

**होमकुण्डं**, क्ली, (होमार्थं कुण्डम् ।) होमार्थ-

शयनान्तःप्रमाणेन शय्यामुपरि तत्र च ।
सुदग्धायां विधूमायां यथोक्तामुपकल्पयेत् ॥
स्ववच्छिन्नः मुखं तत्राभ्यक्तः स्विद्यति ना सुखम् ।
होलाकस्वेद इत्येष सुखप्रोक्तो महर्षिणा ॥"
धीतीका शुष्कगोमयकृतोऽग्निविशेषः ॥

**होलाका**, स्त्री, (हु + विच् । तं लाति । ला +

असोऽन्यतरस्याम् ।” ४ । २ । १०५ ।
इति पक्षे
ट्युट्यूलौ ।) ह्योभवम् । गतदिवसीयम् ।
इति
शब्दमाला ॥ (यथा, महाभारते । ५ ।
१८६ । ४ ।
“ह्यस्तनेन च कोपेन शक्तिं वै
प्राहिणोन्मयि ॥”)

**ह्यस्त्यः** त्रि, (ह्यो भव इति । ह्यस् + “ऐषमोह्यः-

श्वसोऽन्यतरस्याम् ।” ४ । २ । १०५ ।
इति त्यप् ।
ह्यस्तनम् । इति शब्दमाला ॥

**ह्मग**, म ए संवरणे । इति कविदल्पद्रुमः ॥ (भ्वा०-

पर०-सक०-सेट् ।) रेफमध्यः । म,
ह्मयति ।
ए, अह्मगीत् । इति दुर्गादासः ॥

**ह्मणिया**, स्त्री, (ह्निणीया । पृषोदरादित्वात्

साधुः ।) ह्निणीया । इत्यमरटीकायां भरतः
॥

**ह्रदः**, पुं, (ह्रादते इति ह्राद अव्यक्तशब्दे + अच् ।

पृषोदरादित्वात् ह्रस्वः) अगाधजलाशयः ।
इत्यमरः । १ । १० । २५ ॥
तज्जलगुणाः ।
ह्रदवारि वह्निजननं मधुरं कफवातहारि
पथ्यञ्च । इति राजनिर्घण्टः ॥ किरणः ।
इत्यमरटीकायां रामाश्रमः ॥

**ह्रदग्रहः**, पुं, (ह्रदस्य ग्रहः ।) कुम्भीरः ॥ इति

त्रिकाण्डशेषः ॥

**ह्रदिनी**, स्त्री, (ह्रदोऽस्यामस्तीति । इनि । ङीप् ।)

नदी । इत्यमरः । १ । १९ । २५ । (यथा,
भागवते । २ । ७ । २८ ।
“तच्छुद्धयेति विषवीर्य्यविलोलजिह्व-
मुच्चाटयिष्यदुरगं विहरन् ह्रदिन्याम् ॥”)

**ह्रप**, क भाषणे । (चुरा०-पर०-सक०-सेट् ।)

रेफयुक्तादिरित्येके । क, ह्रापयति । भाषणं
इत्यमरभरतौ । २ । ६ । ४६ ॥ नोचकः
५ नीचः
६ । इति शब्दरत्नावली ॥ अकर्त्तनः ७ ।
इति
जटाधरः ॥ एकमात्रवर्णे, पुं, । यथा, --
“एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ
उच्यते ।
त्रिमात्रस्तु प्लूतो ज्ञेयो व्यञ्जनं
चार्द्धमात्रकम् ॥”
इति मुग्धबोधटीकायां दुर्गादासः ॥
मुग्धबोधमते अस्य स्व-संज्ञा । यथा ।
आवत्-
स्वर्घप्लु । अ-आ-अ इति वर्णत्रयं क्रमेण
स्व-
र्घप्लू-संज्ञं-स्यात् । वच्छब्दाद इ-ई-इ
इत्या-
दिषु च । तन्मते अस्य घुसंज्ञापि । यथा ।
स्वर्घौ घुरू । स्वर्घुसंज्ञो र्घोरुसंज्ञः स्यात्
। इति
वोपदेवः ॥ मेषवृषकुम्भमीनराशयः । यथा
।
अस्वास्तिमिगोऽविघटाः । इति
ज्योतिस्तत्त्वम् ॥

**अस्वः**, त्रि, (अस + वन्) क्षुद्रवस्तुमात्रम् ।

तत्पर्य्यायः । वामनः २ न्यङ् ३ नीचः ४
खर्व्वः
५ । इत्यमरः । ३ । १ । ७० । नीचैः ६ ।
इति शब्दरत्नावली ॥ अनुच्चः ७ । इति
जटा-
धर ॥ तद्वैदिकपर्य्यायः । ऋहन् १ ह्रस्वः
२
निघृष्वः ३ माषुकः ४ प्रतिष्ठा ५ कृधु ६
वम्रकः ७ दभ्रम् ८ अर्भकः ९ क्षुल्लकः १०
अल्पः ११ । इत्येकादश ह्रस्वनामानि ।
इति
वेदनिर्घण्टौ ३ अध्यायः ॥

**ह्रस्वकुशः**, पुं, (ह्रस्वश्चासौ कुशश्चेति ।
नित्यकर्म्म-

**ह्रस्वशाखाशिफः**, पुं, (शाखा च शिफा शाखाशिफे ।

ह्रस्वे शाखाशिफे यस्य ।) क्षुपः । इत्यमरः
॥

**ह्रस्वा**, स्त्री, मुद्गपर्णी । नागवला । भूमिजम्बूः ।

इति राजनिर्घण्टः ॥ वामनी च ॥

**ह्रस्वाग्निः**, पुं, (ह्रस्वोऽग्निरस्मात् ।) अर्कवृक्षः ।

इति शब्दचन्द्रिका ॥

**ह्रस्वाङ्गः**, पुं, (ह्रस्वमङ्गमस्य ।) जीवकौषधम् ।

इत्यमरः । २ । ४ । १४२ ॥ वामनश्च ॥

**ह्राद**, ङ स्वने । इति कविकल्पद्रुमः ॥ (भ्वा०-

आत्म०-अक०-सेट् ।) रेफयुक्तो
द्वितीयस्वरी ।
ङ, ह्रादते । इति दुर्गादासः ॥

**ह्रादः**, पुं, (ह्राद + घञ् ।) शब्दः । इति हेम-

चन्द्रः ॥ (यथा, महाभारते । ७ । ८० ।
२९ ।
“ह्रादेन गजघण्टानां शङ्खानां निनदेन च
॥”)
हिरण्यकशिपुपुत्त्रः । यथा, --
“हिरण्यकशिपोः पुत्राश्चत्वारः
सुमहाबलाः ।
प्रह्लादः पूर्ब्बजस्तेषामनुह्लादस्तथैव च ॥
संह्रादश्चैव ह्रादश्च ह्रादपुत्त्रान् शृशुष्व तान्
।
ह्रादस्य पुत्त्रौ द्वावास्तां हिण्डिभो मूक एव
च ॥”
इति वह्निपुराणे कश्यपीयप्रजासर्गः ॥

**ह्रादिनी**, स्त्री, (ह्रादते शब्दायते इति । ह्राद +

णिनिः । ङीप् ।) विद्युत् । (यथा, महाभारते
।
९ । ११ । २६ ।
“ह्रादिन्य इव मेघेभ्यः शल्यस्य न्यपतन्
शराः ॥”)
वज्रम् । इत्यमरः । १ । ३ । ९ ; १ । १ ।
५१ ॥ नदी ।

कथनम् । इति कविकल्पद्रुमटीकायां ह्रूपधातु-
कथने दुर्गादासः ॥

**ह्रस**, रवे । इति कविकल्पद्रुमः । (भ्वा०-पर०-अक०-
सेट् ।) रेफयुक्तः । ह्रसति । इति दुर्सादासः ॥

**ह्रसिमा**, [न्] पुं, (ह्रस्वस्य भावः । "पृथ्वादिभ्य-
इमनिज् वा ।" ५ । १ । १२१ । इति इमनिज् ।
"स्थूलदूरयुवह्रस्वक्षिप्रेति ।" ६ । ४ । १५६ ।
इति ह्रसादेशः ।) ह्रस्वता । ह्रस्वब्दशात्
इमन्प्रत्ययेन निष्पन्नः ॥

**ह्रसिष्ठः**, त्रि, (अतिशयेन ह्रस्वः । इष्ठन् । "स्थूल-
दूरयुवह्रस्वेति ।" ६ । ४ । १५६ । इति ह्रसा-
देशः ।) अतिशयह्रस्वः । इत्यमरः । ३ । १ ।
११२ ॥ ह्रस्वशब्दात् इष्ठप्रत्ययेन निष्पन्नः ॥

**ह्रसीयान्**, [स्] त्रि, (ह्रस्व + ईयसुन् । ह्रसा-
देशश्च ।) अतिशयह्रस्वः ॥

**ह्रस्वं**, क्ली, ("सर्व्वनिघृष्वरिष्वेति ।" उणा ०१ । १५३
इत्यत्र "ह्रमशब्दे बाहुलकात् ततोऽपि वन् ।"
इत्युज्ज्वलदत्तोक्तेर्व्वन् ।) परिमाणविशेषः । यथा,
"अनु दीर्घं महध्रस्वमिति तद्भेद ईरितिः ।"
इति भाषापरिच्छेदः ॥
गीरसुवर्णशाकम् । पुष्पकासीसम् इति राज-
निर्घण्टः ॥

**ह्रस्वः**, पुं, स्त्री, (ह्रस + वन् ।) प्रकृतपुरुषप्रमा-
णात्न्यूनमनुष्यः । वाउने इति भाषा । तत्-
पर्य्यायः । खर्व्वः २ वामनः ३ वामनी ४ ।
धारयः ।) श्वेतकुशः । इति राजनिर्घण्टः ॥

**ह्रस्वगर्भः**, पुं, (ह्रस्वो गर्भोऽस्य ।) कुशः । इति
रत्नमाला ॥

**ह्रस्वगवेधुका**, स्त्री, (ह्रस्वा गवेधुका । नित्यकर्म्म-
धारयः ।) गाङ्गेरुकी । इत्यमरः । ३ । ४ । ११७ ॥
अस्याः पर्य्यायगुणा नागवलाशब्दे द्रष्टव्याः ॥

**ह्रस्वजम्बुः**, पुं, (ह्रस्वो जम्बुः ।) क्षुद्रजम्बुः । इति
रत्नमाला ॥

**ह्रस्वतण्डुलः**, पुं, (ह्रस्वः तण्डुलः ।) राजान्नम् ।
इति राजनिर्घण्टः ॥

**ह्रस्वदर्भः**, पुं, (ह्रस्वो दर्भः ।) श्वेतकुशः । इति
राजनिर्घण्टे ह्रस्वकुशशब्ददर्शनात् ॥

**ह्रस्वदा**, स्त्री, (ह्रस्वैरपि दीयते छिद्यते इति ।
दो + कः ।) शल्लकी । इति राजनिर्घण्टः ॥

**ह्रस्वपत्रकः**, पुं, (ह्रस्वानि पत्राणि यस्य । कप् ।)
गिरिजमधूकवृक्षः । इति जटाधरः ॥

**ह्रस्वपत्रिका**, स्त्री, (ह्रस्वानि पत्राण्यस्याः । कप् ।
टाप् अत इत्वम् ।) अश्वत्थी । इति राजनिर्घण्टः ॥

**ह्रस्वप्लक्षः**, पुं, (ह्रस्वश्चासौ प्लक्षश्चेति ।) क्षुद्रप्लक्ष-
वृक्षः । तत्पर्य्यायः । सुशीतः २ शीतवीर्य्यकः ३
पुण्ड्रः ४ महावरोहः ५ ह्रस्वपर्णः ६ पीपरिः ७
भिदुरः ८ मङ्गलच्छायः ९ । अस्य गुणाः ।
"प्लक्षः कटुः कषायश्च शिशिरो रक्तदोषजित् ।
मूर्च्छाभ्रमप्रलापघ्नो ह्रस्वप्लक्षो विशेषतः ॥"
इति राजनिर्घण्टः ॥
इति भरतः राजनिर्घण्टश्च ॥ शल्लकी । इति
शब्दरत्नावली ॥

**ह्रादी**, [न्] त्रि, (ह्रदोऽस्यास्तीति । ह्राद + इनि ।)
शब्दविशिष्टः । (यथा, महाभारते । ८ । ५१ । ५१ ।
"रथाः पञ्चशताश्चान्ये ह्रादिनश्च सुवर्म्मिणः ॥")

**ह्रासः**, पुं, (ह्रस रवे + घञ् ।) शब्दः । इति
त्रिकाण्डशेषः ॥ क्षयः । यथा, तिथ्यादितत्त्वे ।
"ह्रासवृद्धो च सततं दिनरात्र्योर्यथाक्रमम् ।
सन्ध्या मुहूर्त्तमाख्याता ह्रासे वृद्धौ समा स्मृता ॥"

**ह्रिणाया**, स्त्री, लज्जा । इत्यमरटीकायां भरतः ॥
अस्य रूपान्तरम् । ह्रणिया ह्रणीया च ॥

**ह्रितः**, त्रि, (ह्रीतः । पृषोदरादित्वात् साधुः ।)
लज्जितः । विभक्तः । नीतः । इति केचित् ॥
अंशे, क्ली ॥

**ह्रितिः**, स्त्री, (हृतिः । पृषोदरादित्वात् साधुः ।)
हृतिः । हरणम् । इति केचित् ॥

**ह्रिवेरं**, क्ली, (ह्रिये लज्जायै वेरमङ्गमस्य । पृषो-
दरादित्वात् ह्रस्वः ।) ह्रीवेरम् । इति भरत-
द्विरूपकोषः शब्दरत्नावली च ॥

**ह्री**, लि लज्जे । इति कविकल्पद्रुमः ॥ (ह्वा०-
पर०-अक०-अनिट् ।) लि, जिह्रेति नीच-
सङ्गत्या यः । इति दुर्गादासः ॥

**ह्री**, स्त्री, (ह्री लज्जायां + सम्पदादित्वात् क्विप्)
लज्जा । इत्यमरः । १ । ७ । २३ ॥ (यथा,
मार्कण्डेयपुराणे । १२९ । २२ ।
"नाहं तात ! करिष्यामि पृथिव्याः परिपालनम् ।
नापैति ह्रीर्मे मनसो राज्येऽन्यं त्वं नियोजय ॥")

**ह्रस्वफला**, स्त्री, (ह्रस्वं फलं यस्याः ।) भूमिजम्बु ।

इति राजनिर्घण्टः ॥

**ह्रस्वमूलः**, पुं, (ह्रस्वं मूलं यस्य ।) रक्तेक्षुः । इति ।

राजनिर्घण्टः ॥

**ह्रीका**, स्त्री, (ह्री + “ह्रियो रश्च लो वा ।” उणा ०
१ । ४८ । इति कन् । टाप् ।) त्रासः । इत्यु-
णादिकोषः ॥ लज्जा । इति सिद्धान्तकौमुद्या-
मुणादिवृत्तिः ॥

**ह्रीकुः**, त्रि, (ह्री + “ह्रियः कुक् रश्च लो वा ।”
उणा० ३ । ८५ । इति कुक् ।) लज्जितः ।
सलज्जः । इत्युणादिकोषः ॥

**ह्रीकुः**, पुं, (ह्री + कुक् ।) जतुकः । त्रपुः । इत्यु-
णादिकोषः ॥

**ह्रीच्छ**, लज्जे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
अक०-सेट् ।) रेफयुक्तादिचतुर्थस्वरी । ह्रीच्छति
बधूः । इति दुर्गादासः ॥

**ह्रीजितः**, त्रि, (ह्रिया जितः ।) लज्जाशीलः ।
इति जटाधरः ॥

**ह्रीणः**, त्रि, (ह्री + क्तः । तस्य वा न ।)
लज्जितः । इत्यमरः । ३ । १ । ९१ ॥

**ह्रीतः** त्रि, (ह्री + क्तः । तस्य वा न ।)
लज्जितः । इत्यमरः । ३ । १ । ९१ ॥
(यथा, महाभारते । ३ । २३ । ८ ।
“हा नाथ ! हा धर्म्म इति ब्रुवाणा
ह्रीताश्च सर्व्वेऽश्रुमुखाश्च राजन् ! ॥”
यथा च नैषधे । ३ । ६७ ।
“इतीरिता पत्त्ररथेन तेन
ह्रीणा च हृष्टा च बभाण भैमी ॥”)

**ह्रीवेरं**, क्ली, (ह्रियै लज्जायै वेरमङ्गमस्य ।
क्षुद्रत्वात् ।) बालकम् । इत्यमरः । २ ।
४ । १२२ ॥
वाला इति भाषा । अस्य गुणाः
राजवल्लभे ।

इति गणकृतानित्यत्वात् । वस्तुतस्तु पचादित्वा-
दनि ह्रेषा इवाचरन्तीति क्वौ साध्यम् । इति
दुर्गादासः ॥

**ह्रेषा**, स्त्री, (ह्रेष + भावे अः ।) अश्वानां कण्ठा-
द्विनिर्गतशब्दः । इत्यमरः । २ । ८ ।
४७ ॥

**ह्रौड**, ऋ ङ गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-
आत्म०-सक०-सेट् ।) ऋ, अजुह्रौडत् । ह्रौडते ।
इति दुर्गादासः ॥

**ह्लग**, म ए संवरणे । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् ।) म, ह्लगयति अह्लगीत् ।
इति दुर्गादासः ॥

**ह्लप**, क भाषणे । इति कविकल्पद्रुमः ॥ (चुरा०-
पर०-सक०-सेट् ।) क, ह्लापयति । रेफयुक्तादि-
रित्येके । ह्रापयति । अन्तःस्थतृतीययुक्तः कण्ठ्य-
वर्गाद्यादिरिति दुर्गसिंहादयः । क्लापयति अचि-
क्लपत् । भाषणं कथनम् । इति
दुर्गादासः ॥

**ह्लस**, रवे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
अक०-सेट् ।) ह्लसति । इति दुर्गादासः
॥

**ह्लाद**, ई ङ मोदने । स्वने । इति कविकल्पद्रुःम
॥
(भ्वा०-आत्म०-अक०-मोदने सक०-सेट् । निष्ठा-
यामनिट् ।) मोदनं हृष्टीकरणं
हृष्टीभावश्च ।

**ह्लीकुः**, पुं, (ह्री + कुक् । रस्य लः ।) जतु त्रपु ।
इत्युणादिकोषः ॥

**ह्लेषा**, स्त्री, (ह्रेषा । रस्य लः ।) ह्रेषा । इत्य-
मरटीकायां नीलकण्ठः ॥

**ह्वल**, म चाले । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-सेट् ।) म, प्रह्वलयति । मित्वेऽप्यस्य ञौ
ज्वलह्वल इत्यादिना केवलस्य ह्रस्वविकल्पनात्
सोपसर्गस्य नित्यं ह्रस्वः । ह्वलयति ह्वालयति ।
चालश्चलनम् । इति दुर्गादासः ॥

**ह्वृ**, कौटिल्ये । लति कविकल्पद्रुमः ॥ (भ्वा०-पर०-
सक०-अनिट् ।) ह्वरति लतां वायुः । इति
दुर्गादासः ॥

**ह्वे**, ञ ऐ स्पर्द्धे । शब्दे । इति कविकल्पद्रुमः ॥
(भ्वा०-उभ०-शब्दे अक०-स्तर्द्धे-सक०-अनिट् ।)
स्पर्द्धः पराभिभवेच्छा । इति वोपदेवः ॥ ञ,
ह्वयति ह्वयते मल्लो मल्लमभिभवितुमिच्छति ॥
ह्वयति जनं लोकः । आह्वयतीत्यर्थः । ऐ हूयात्
।
गोविन्दभट्टस्तु स्पर्द्धाविषये व्यक्तवाक्येऽयमि-
त्याह । इति दुर्गादासः ॥

## ल

**ळ**, शेषलकारः । गौडदेशे अस्याकारोच्चारणयो-
र्भेदो नास्ति । किन्त्वस्याध एकबिन्दुमात्रचिह्नं
क्रियते । वेदे अस्य उच्चारणस्थाणं जिह्वामूलम्
।
देवनागरवर्णमालायां अस्याकारः एवं प्रकारः
ळ । अस्य प्रयगः । अग्निमीले । हे इन्द्र
वोलु चित् । इत्यादि ऋग्वेदः ॥ * ॥ तन्त्रे वर्ण-
मालाजपे अस्य प्रयोजनम् । यथा, --
“अनुलोमविलोमेन कॢप्तया वर्णमालया ।
आदिलान्त लादि आन्तक्रमेण परमेश्वरि ! ।
क्षकारं मेरुरूपञ्च लङ्घयेन्न कदाचन ॥”
इति मुण्डमालातन्त्रम् ॥

"ह्रीवेरं छर्द्दिहृल्लासतृष्णातीसारनाशनम् ।"
अन्यत् ह्रवेरशब्दे द्रष्टव्यम् ॥

**ह्रीवेलं**, क्ली, (ह्रीवेर + पृषोदरादित्वात् रस्य लः । पक्षे ह्रीवेल + स्वार्थे कन् ।) ह्रीवेरम् । इत्यमरटीकायां भरतः ॥

**ह्रीवेलकं**, क्ली, (ह्रीवेर + पृषोदरादित्वात् रस्य लः । पक्षे ह्रीवेल + स्वार्थे कन् ।) ह्रीवेरम् । इत्यमरटीकायां भरतः ॥

**ह्रुड**, ऋ ङ गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट् ।) ऋ, अजहूडत् । अजुह्रोडत् । ङ, ह्रूडते । ह्रोडते । इति दुर्गादासः ॥

**ह्रूड**, ऋ ङ गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट् ।) ऋ, अजहूडत् । अजुह्रोडत् । ङ, ह्रूडते । ह्रोडते । इति दुर्गादासः ॥

**ह्रेप**, ऋ ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सफ०-सेट् ।) ऋ, अजिह्रेपत् । ङ, ह्रेपते जिह्रेपे । इति दुर्गादासः ॥

**ह्रेष**, ऋ ङ सर्पणे । अश्वस्वने । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-अश्वशब्दे अक०-सर्पणे सक०-सेट् ।) रेफयुक्ताद्यः । ऋ, अजिह्रेषत् । ङ, ह्रेषतेजिह्रेषे । ङ, हेषृ च स्वनेऽश्वानाम् । ङ, हेषते घोटकः जिहेषे । ऋ, अजिहेषत् । चकारात् ह्रेषृ ङ च । मधुरमधुपं ह्रेषन्त्येते । ई, ह्लन्नः । ङ, ह्लादते चन्दनो गात्रम् । बलात् प्रह्लादते मनः । इति किराते । इति दुर्गादासः

**ह्लादः**, पुं, (ह्लाद + घञ् ।) आह्लादः । इति हेमचन्द्रः ॥ (यथा, मार्कण्डेये । १५ । ५३ ।
"ततस्तद्गात्रसंसर्गी पवनो ह्लाददायकः ।
पापकर्म्मकृतो राजन् ! यातना न प्रवाधते ॥"
हिरण्यकशिपोः पुत्त्रभेदः । यथा, विष्णुपुराणे । १ । १५ । १४२ ।
"अनुह्लादश्च ह्लादश्च प्रह्लादश्चैव बुद्धिमान् ।
संह्लादश्च महावीर्य्या दैत्यवंशविवर्द्धनाः ॥")

**ह्लादिनी**, स्त्री, (ह्रादिनी रलयोरैख्यात् रस्य लः ।) विद्युत् । वज्रम् । इत्यमरः । २ । ४ । १२४ ॥ (ह्लादयते इति । ह्लादि + णिनि । ङीप् ।) शक्तिविशेषः । यथा, --
"ह्लादिन्या सम्बिदाश्लिष्टः सच्चिदानन्द ईश्वरः ।
स्वाविद्यासंवृतो जीवः संक्लेशनिकराकरः ॥"
इति श्रीभागवते ७ । १ । ७ टीकायां श्रीधरस्वामी ॥

**ह्लीका**, स्त्री, (ह्री लज्जायाम् + "ह्रियोरश्च लो वा ।" उणा० ३ । ४८ । इति कन् । पक्षे रस्य लः ।) लज्जा । इति सिद्धान्तकौमुद्यासुणादिवृत्तिः ॥

**ह्लीकुः**, स्त्री, (ह्री + "ह्रियः‍ः कुक् रश्च लो वा ।" इति मातृकान्यासेऽपि अस्य प्रयोजनम् । तत्प्रमाणं मातृकाशब्दे द्रष्टव्यम् ॥ * ॥ तस्य नामानि यथा,
"लः पृथ्वी विमला मेघो अनन्तोऽव्यवहासिता ।
व्यापिनी शिवदा केतुर्ज्जगत्सारतरं हठः ॥
ग्लौर्मृडानी च वेदार्थसारो नारायणः स्वयम् ।
जठरो नकुलिः पीता शिवेशोऽनङ्गमालिनी ॥"
इति श्रीनन्दनभट्टाचार्य्यविरचितवर्णाभिधानम् ॥
अपि च ।
"लकारो विमलो जीवः शिवमूमिर्व्वरानने ! ॥"
इति श्रीरुद्रयामले ८ पटले मन्त्राभिधानम् ॥

कोषः श्रीवरदाप्रसादवसुना श्रीशब्दकल्पद्रुमो
यश्च श्रीहरिपूर्ब्बकेण चरणेनाकल्पितो यत्नतः ।
सोऽयं कोविदवारिदैर्ब्बहुगुणैः संसेचितः सन्ततं
सन्तोषं नयतु क्षितौ बुधगणान् पेयूषगर्भैः फलैः ॥
रसेन्दुनागोडुपतिप्रमाणे शाके शुभेऽस्मिन् भगवत्प्रसादात् ।
नीतः समप्तिं बहुलप्रयासैः स शब्दकल्पद्रुम एष कोषः ॥

**समाप्तोऽयं शब्दकल्पद्रुमः ।**

